वैराग्यप्रकरणं प्रथमम् ।

प्रथमः सर्गः १

श्रीमहागणपतिचरणारविन्दाभ्यां नमः ।

ॐ नमो ब्रह्मणे ब्रह्मविद्भ्यो ब्रह्मविद्यासंप्रदायकर्तृभ्यो
वसिष्ठविश्वामित्रव्यासवाल्मीकिशुकादिभ्यः श्रीरामभद्राय च ।
अजमजरमनाद्यनन्तमन्तर्निजसुखबोधसदद्वितीयपूर्णम् ।
शिवमखिलहृदि स्फुरत्स्वमायाविकसितविश्वविलासमानताः स्मः ॥ १ ॥

स्मृतिफलितसमस्ताभीष्टमुद्यद्दिनेश##-
कमपि शिवभवान्योरङ्कसौभाग्यमन्तः
सुरमणिमवलम्बे चारु लम्बोदराख्यम् ॥ २ ॥

मुग्धस्मिताञ्चितमनोज्ञमुखेन्दुबिम्बं
स्निग्धामृतप्रतिमचारुकृपाकटाक्षम् ।
अग्रेसरैरनुसृतं मुनिभिर्मुनीनां
न्यग्रोधमूलवसतिं गुरुमाश्रयामः ॥ ३ ॥

त्रिभुवनावनकृत्यकृतोदयः सदभयामलबोधसुखाद्वयः
[सुखोदयः] ।
सुजनहृद्गिरिगह्वरकेसरी शरणमस्तु सदा नरकेसरी ॥ ४ ॥

दक्षे वराक्षवलयावभयं च वामे
या पुस्तकं च दधती विधिनेत्रपेया ।
सा शारदाब्जनयना शरदिन्दुशोभा
भासा स्वया हरतु मे हृदयान्धकारम् ॥ ५ ॥

ये नेत्राणि हरस्य यैर्जगदिदं प्रद्योतितं चेष्टते
यत्रैवायतते [वापतते] श्रुतिस्मृतिनुतो धर्मः सशर्मोदयः ।
येकालं कलयन्ति ये च परमस्वज्योतिरात्मोपमा-
स्तेसूर्येन्द्वनला भवन्तु हृदि मे बोधाब्जिनीभानवः ॥ ६ ॥

वक्रेन्दुभिर्दिक्षु तमो हरद्भिर्वेदार्थसारामृतमुद्गिरन्तम् ।
वाणीभुजाशिष्टमभीष्टसिद्ध्यै तं ब्रह्मविद्यादिगुरुं प्रपद्ये ॥ ७ ॥

यद्वाक्यामृतपायिनां प्रतिपदं सत्यं सुधा नीरसा
यद्वाक्यार्थविचारणादभिमतः स्वर्गोऽपि कारागृहम् ।
यद्वाणीविशदात्मपूर्णमनसां तुच्छं जगत्तूलव-
त्तस्मै श्रीगुरवे वसिष्ठमुनये नित्यं नमस्कूर्महे ॥ ८ ॥

[यस्यार्षप्रथिता; यशार्धप्रथिता] यस्यार्षं प्रथिता जगत्त्रयहिता
सा वेदमाता परा
यश्चक्रे तपसा वशे सुरगणानन्य [नन्यान्सिसृक्षुः] त्सिसृक्षुर्जगत्
।
तं बोधाम्बुनिधिं तपस्विमुकुटालंकारचिन्तामणिं
विश्वामित्रमुनिं शरण्यमनघं भूयो [नमस्यामहे]
नमस्याम्यहम् ॥ ९ ॥

53
54 श्रुत्या ब्रह्मैव रामः प्रकटितमहिमा येन तस्मै वसिष्ठो
55 यः सीतां ब्रह्मविधामिव सदसि पुनः सत्यशुद्धां किलादात् |
56 यद्वाणी मोहमूलं शमयति जगदानन्दसंदोहदोग्ध्री
57 तस्मै वाल्मीकये श्रीगुरुतमगुरवे भूरिभावैर्नताः स्मः || १० ||
58
59 पूर्णानन्दस्वभावः स्वजनहितकृते माययोपात्तकायः
60 कारुण्यादुद्दिधीर्षुर्जनमनवरतं मोहपङ्के निमग्नम् |
61 आविश्यान्तर्वसिष्ठं बहिरपि कलयञ्शिष्यभावं वितेने
62 यः संवादेन शास्त्रामृतजलधिमनुं रामचन्द्रं प्रपद्ये || ११ ||
63
64 विद्याभिः सह विश्रुता श्रितवती येषां मुखं भारती
65 सत्त्वोत्कर्षसमाधिभिः स्थिरमहो तद्ब्रह्म येषां हृदि |
66 पादाम्भोरुहमाश्रिताश्च सततं तीर्थैः समं संपदः
67 श्रीसर्वज्ञसरस्वतीति विदिताञ्श्रीमद्गुरूंस्तान्भजे || १२ ||
68
69 श्रीः संश्रितैव चरणौ हृदयं च राम-
70 श्चन्द्रो मुखं गुणभरेण सरस्वती च |
71 येषामतस्तदभिधाङ्कितनामधेयान्
72 श्रीमद्गुरून्गुरुतरान्प्रणतोऽस्मि नित्यम् || १३ ||
73
74 तापध्वस्तिव्यापृतकारुण्यकटाक्षान्
75 व्याख्यावाणीनिर्वृतसर्वाङ्घ्रिशरण्यान् |
76 श्रीमद्रामानन्दमुनीनद्भुतचर्या-
77 नार्यान्नित्यं देशिकवर्यान्प्रणतोऽस्मि || १४ ||
78
79 विश्वेशोऽपि हरिः शरण्यचरणो यान्मानयन्सौहृदा-
80 च्छान्तान्नित्यमनुव्रजामि रजसा पूयेय चेत्यब्रवीत् |
81 यत्पूजां विदधे श्रुतिर्मतिमतां सर्वेष्टसिद्ध्यै सदा
82 जीवन्मुक्तसुखात्मपूर्णमनसस्तान्ब्रह्मनिष्ठान्भजे || १५ ||
83
84 कृतिभिरसुकराः क्व नु प्रबन्धाः क्व च बत बालिशबुद्धिरेष जन्तुः |
85 तदपि विरचनेऽत्र सद्गुरुणां सदयनीक्षणमेव मेऽवलम्बः || १६ ||
86
87 अशेषविद्याम्बुधिपारगाणामपास्तरागादिमनोमलानाम् |
88 कृपानिधीनां कृतिनां ममास्मिन्सतां पदाब्जस्मरणं सहायः || १७ ||
89
90 यत्कृपालेशमात्रेण तीर्णोऽस्मि भवसागरम् |
91 श्रीमद्गङ्गाधरेन्द्राख्यान्श्रीगुरूंस्तान्सदा भजे || १८ ||
92
93 आनन्दबोद्ययतिना श्रीमद्गुरुवचोमृतैः |
94 वासिष्ठार्थप्रकाशोऽयं यथामति वितन्यते || १९ ||
95
96 प्रशंसन्तु स्वैरं मतिभिरथ निन्दन्तु सुधियः
97 प्रवृत्तिर्मे यस्मान्न भवति जनाराधनकृते |
98 अनेन व्याजेनामृतरसवसिष्ठोक्तिभरिते
99 विहर्तुं वाञ्छामि प्रतिदिवसमानन्दजलधौ || २० ||
100
101 यथामति बुभुत्सुभ्यः साहाय्यं संकटेष्विव |
102 दुरूहश्लोकभावेषु दर्शयिष्ये परिश्रमम् || २१ ||
103
104 स्थितमेकरसे युक्त्या नानारसविजृम्भणम् |

105 वासिष्ठं रोचयत्वेतत्सुभोज्यं लवणं यथा || २२ ||
106
107 अप्यल्पमतिदुर्बोधं स्फुटं व्याख्यास्यते पदम् |
108 द्विस्त्रिर्व्याख्यातपूर्वं तु दुरूहमपि मोक्ष्यते || २३ ||
109
110 अनन्यपूर्वव्याख्यातं ग्रन्थं मे व्याचिकीर्षतः |
111 सन्तः श्रमज्ञाः कृपया क्षमध्वं स्खलितं क्वचित् || २४ ||
112
113 श्रीः | यतः सर्वाणि भूतानि प्रतिभान्ति स्थितानि च |
114 यत्रैवोपशमं यान्ति तस्मै सत्यात्मने नमः || १ ||
115
116 अथ जगदिदमनादिमहामोहनिशासुप्तमनवरतदुःस्वप्नभ्रमपरम्परा##-
117 ग्रहातिग्रहव्याघ्रभीषणे तापत्रितयदावानलज्वालमालाकुले
118 [ज्वालामाला] षडूर्भिजालेऽरिषड्वषव्याध [बाध्यमान्]
119 बध्यमानप्राणिनिकाये संसार महारण्ये मोमुह्यमानं विवेकान्धं
120 प्रबोधोपायदौर्लभ्या-द्विषीदत्समुद्दिक्ष्य शास्त्रभानुदयेन
121 तत्प्रबोधनाय भगवतः पद्मजन्मनह् शासनात्स्वतश्च प्रवर्तमानः
122 परमकारुणिको भगवान्वालिमीकिः प्रारिप्सितस्य महतः शास्त्रस्य
123 निर्विघ्नपरिसमाप्ति-प्रचयगमनादिसिद्धये
124 वक्ष्यमाणाश्रुतिस्मृतिसदाचारप्रापितं सर्व-विघ्नमूलोच्छेदक्षमं
125 सच्चिदानन्दाद्वयप्रत्यगात्मपरब्रह्मप्रणति-लक्षणं
126 मङ्गलमाचरन्नर्थाच्छास्त्रस्य विषयप्रयोजने तटस्थस्वरूप##-
127 जाअयन्ते | येन जातानि जीवन्ति | यत्प्रयन्त्यभिसंविशन्ति | तद्विजिज्ञासस्व |
128 तद्ब्रह्मेति इति श्रुत्युक्ततटस्थलक्षणसिद्धसदद्वयस्वभावं तत्पदार्थं
129 नमस्यति - यत इति | यतो यस्मात्परमार्थसदद्वितीयात्मवस्तुनः
130 प्रकृतिभूतात्सर्वाण्याकाशादीनि महाभूतानि भौतिकानि च सर्गादिकाले
131 यत्सत्तयैव सत्तां प्रतिलभ्य भान्ति प्रथन्ते आविर्भवन्तीत्यर्थः | तथा
132 स्थितिकाले च यत्सत्तयैव स्थितानि तथा प्रलयकालेऽपि यत्रैव
133 यत्सत्तामात्रपरिशेषेणोपशमं तिरोभावं यान्ति तस्मै सत्यात्मने
134 स्वाध्यारोपितसर्वभावानां पारमार्थिकस्वरूपभूताय सर्वप्राणिनां
135 वास्तवात्मभूताय च परब्रह्मणे नमः | तन्नमस्कारे च यत्र देवाः सर्व
136 एकं [एकीभवन्ति] भवन्ति इति श्रेतेरनमस्मृतस्य
137 देवतान्तरस्यापरिशेषात्सर्वनमस्कारसिद्ध्यास्य मङ्गलस्य
138 सर्वोत्कर्षात्सर्वविघ्नोच्छेदादिफलसिद्धिः || अत्र यतोभूतानीति पदाभ्यां यतो
139 वा इमानि भूतानि जायन्ते जन्माद्यस्य यतः इति
140 तद्घटितश्रुतिसूत्रोक्तलक्षणप्रत्यभिज्ञानादस्य तन्मूलकत्वमिति न
141 सांख्यादिकल्पितमहदादिकारणेषु यास्कोपदर्शितावान्तरकारणेषु
142 चातिव्याप्तिः | अत्र प्रकृतिपञ्चम्यैवोपादानत्वलाभास्त्रितयोअपादानं
143 लक्षणत्रयप्रदर्शनायेति केचित् | निमित्तेऽपि
144 पञ्चमीदर्शनाल्लयाधारत्वोक्तिरूपादानत्वलाभाय | स्थितिहेतुत्वोक्तिस्तु
145 चेतनानामेव पालकस्त्वदर्शनाच्चेतनत्वालाभेन कर्त्रन्तरनिरासायेति
146 त्रितयलब्धमभिन्ननिमित्तोपादानत्वमेकमेव लक्षणमितन्ये | वस्तुतस्तु सत्यं
147 ज्ञानमनन्तं ब्रह्म सदेव सोम्येदमग्र आसीत् इति श्रुतौ
148 ज्ञेयत्वेनोपक्रान्ताद्वितीयसन्मात्रवस्तुपरिचयाय तस्माद्वा एतस्मादात्मन
149 आकाशः संभूतः तत्तेजोऽसृजत इत्यादिना तटस्थलक्षणावतारात् सर्वं
150 खल्विदं ब्रम तज्जलानिति शान्त उपासीत इति
151 श्रुत्युपदर्शितदिशोत्पत्त्यादिकालत्रयेऽपि सदव्यभिचारात्कार्यस्य
152 कारणव्यतिरिक्तसत्त्वानुपलम्भाच्च कारणतत्त्वमेव ब्रह्म
153 वस्तुसत्यमित्यध्यारोपापवादाभ्याम्
154 निष्प्रपञ्चविषयप्रयोजनसिद्धिप्रतिपादनाय त्रितयघटितलक्षणोपादानम् |
155 नह्येकैकोपादाने कार्यस्य विवर्तत्वसिद्धिरिति | अतएव हि श्रुतौ जायन्ते -
156 अभिसंविशन्तीति पदे प्रतिभानाप्रतिभानलक्षणाविर्भावतिरोभावपरे न

157 विकारपरे इति सूचनाय प्रतिभान्त्युपशमं यान्तीत्युक्तम् |
158 वृद्धिविपरिणामयोराविर्भा-वेऽपैषयस्य च तिरोभावेऽन्तर्भावात्
159 स्थितेश्चाधिष्ठानसत्तानुवेधमात्ररूपत्वान्नाध्यारोपातिरिक्तविकार##-
160 || १ ||
161
162 ज्ञाता ज्ञानं तथा ज्ञेयं द्रष्टा दर्शनदृश्यभूः |
163 कर्ता हेतुः क्रिया यस्मात्तस्मै ज्ञप्त्यात्मने नमः || २ ||
164
165 प्रतिभान्तीति सामान्यतः सूचितं तस्य चिदेकरसत्वं
166 सर्वानुभवसिद्धत्वेनोपपादयंस्त्वंपदार्थतत्त्वभूतं तमेव
167 पुनर्नमस्यति - ज्ञातेति | अनेन जीवेनात्मनानुप्रविश्य नामरूपे
168 व्याकरवाणि इति श्रुतेर्यस्माद्बिम्बभूतात्कूटस्थचिदेकरसात्सतः स्वयमेव
169 प्रतिमिम्बभावेन समस्टिव्यष्टिविज्ञानमनोमयकोशद्वयात्मकान्तःकर##-
170 तज्जाड्यमभिभूय तदभिज्वलयन् ज्ञाता | विस्फुलिङ्गानिव
171 तद्वृत्तीरभिज्वलयन् ज्ञानम् | वृत्तौ विषयाकारापन्नायां स्वयमपि
172 दद्द्वारा तदाकारस्तद्भावमिवापन्नो ज्ञेयम् | परोक्षसाधार।येनोक्त##-
173 ज्ञानेन्द्रियाण्यु-पादाय दृष्टा | तत्संप्रयोगजन्यवृत्तीरुपादाय
174 दर्शनम् | तत्फलात्मना विषयान्व्याप्य ताद्रूप्यानुरञ्जनात्स्वयमपि दृश्य
175 एव भवतीति दृश्यभुः | तथा स एव कर्मेन्द्रियप्राणशरीराण्युपादाय कर्ता
176 | फलभोक्तृभावेन क्रियोत्पादननिमित्तत्वाद्धेदुः |
177 क्रियासाकल्यवैकल्ययोरहमेव सकलो विकल इति क्रियाभिमानाच्च क्रिया | एष हि
178 द्रष्टा श्रोता मन्ता कर्ता बोद्धा विज्ञानात्मा पुरुषः प्राणन्नेन प्राणो
179 नाम भवति वदन्वाक्पश्यंश्चक्षुः इत्यादि श्रुतेः | एवं सर्वव्यवहारेषु
180 प्रतिचः स्वपरस्फूर्तिनिर्वाहकत्वाच्चिद्रूपतया सर्वानुभवसिद्धोऽपि
181 विचित्रोपाध्य-नुरञ्जनव्यामोहाच्चित्रपटे प्रभाशौक्ल्यमिव न
182 विविच्यानुभूयत इति पृथक्करणाय यस्मादिति निमित्तपञ्चम्या निर्देशः |
183 यत्संनिधान-निमित्तकमेव कर्तादिस्फुरनं नतु यत्स्वभावभूतं
184 व्यभिचारित्वाद्दृशो दृश्यस्वभावत्वानुपपत्तेश्चेति भावः | अतस्तस्मै
185 ज्ञात्रादिसाक्षिणे परमार्थतो ज्ञप्त्यात्मने ज्ञप्तिमात्रत्वेन परिशिष्टाय
186 प्रत्यगात्मने नम इत्यर्थः || २ ||
187
188 स्फुरन्ति सीकरा यस्मादानन्दस्याम्बरेऽवनौ |
189 सर्वेषां जीवनं तस्मै ब्रह्मानन्दात्मने नमः || ३ ||
190
191 एवं पदार्थौ परिशोध्य तटस्थलक्षणपर्यवसानस्थानं आनन्दोब्रह्मेति
192 व्यजानात् इति श्रुतिदर्शितनिरतिशयानन्दरूपं परमपुरुषार्थभूतम##-
193 ब्रह्मलोकान्ते स्वर्गे देवेष्विति यावत् | तथा अवनौ भूमौ मनुष्यादिस्तम्ब##-
194 [वैषम्य]
195 शद्यतारतम्येनावरणाभिभवतारतम्यात्सरोमुकुरमण्यादिषु गिरिप्रतिबिम्बा
196 इवौपाधिकभेदतारतम्येन विभाव्यमानत्वादानन्दस्य सीकराः कणा इव
197 सीकराः स्फुरन्ति | सर्वैर्भ्रान्त्या अनात्मत्वेनात्म-शेषत्वेन
198 परिच्छेदभेदवैचित्र्यदुःखसंभेदक्षयिष्णुत्वादिभिश्चानु-भूयन्त इति
199 यावत् | परमार्थतस्तु न तथा किंतु तदेव निष्।कृष्तोपाधिभेदं सर्वेषां
200 ब्रह्मादिस्तम्बपर्यन्तानां जीव्यते अनेनेति जीवन। म्सारभूत-मात्मतत्त्वम्
201 | न प्राणेन नापानेन मर्त्यो जीवति कश्चन | इतरेण तु जीवन्ति
202 यस्मिन्नेतावुपाश्रितौ इतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति को
203 ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात् इति श्रुतेः | अतएव
204 भेदकाभावात्स्वरूपलक्षणैक्याच्च स एव यतो वाचो निर्वर्तन्ते अप्राप्य मनसा
205 सह आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन इति श्रुति
206 प्रसिद्धापरिच्छिन्नब्रह्मानन्द आत्मा च | नान्य आत्मा नाम कश्चिदस्ति
207 नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति विज्ञाता इत्यादिश्रुतेः | तस्मै ब्रह्मानन्दाद्मने
208 परमपुरुषार्थरूपाय नम इत्यर्थः | इह मङ्गलाचरणं

209 शास्त्रनिर्माणारम्भार्थमुत्तरसर्गे तु
210 शिष्येभ्यस्तदुपदेशस्यारम्भार्थमिति न पौनरुक्त्यम् || ३ ||
211
212 सूतीक्ष्णो ब्राह्मणः कश्चित्संशयाकृष्टमानसः |
213 अगस्तेराश्रमं गत्वा मुनिं पप्रच्छ सादरम् || ४ ||
214
215 अत्रार्षदैवसंवादः संप्रदायविशुद्धये |
216 रामाज्ञाननिमित्तं चाप्युपोद्धाताय वर्ण्यते ||
217
218 इत्थं मङ्गलविषयादिप्रदर्शनमुखेन शास्त्रार्थं सुप्रबोधाय
219 संक्षेपतः प्रदर्श्य सहसाधनोपपत्त्यादिभिर्विस्तरेण तमेवार्थं
220 व्युत्पादयितुं शास्त्रमारभमाणस्तस्मिन् श्रोतृणां विश्वासदार्ढ्याय
221 बहुतरब्रह्मविन्मूर्धन्यमहर्षिजुष्टब्रह्मादिसंप्रदायप्राप्त##-
222 इत्यादिना | सुतीक्ष्णः तपःकर्मोपासनाशोधितत्वाच्छोभना दुरूहार्थ##-
223 ब्राह्मणग्रहणं ब्राह्मणानामेव ब्रह्मविद्यायां मुखाधिकार इति
224 द्योतनार्थम् | संशयेन जिज्ञासायै आकृष्टं मानसं यस्येति
225 जिज्ञासुरित्यर्थः | सादरं विध्युक्तसमित्पाणित्वप्रणिपातप्रपत्त्याद्या##-
226
227 सुतीक्ष्ण उवाच |
228
229 भगवन्धर्मतत्त्वज्ञ सर्वशास्त्रविनिश्चित |
230 संशयोऽस्ति महानेकस्त्वमेतं कृपया वद || ५ ||
231
232 धर्म तत्त्वं च जानासीति धर्मतत्त्वज्ञ | सर्वेषु शास्त्रेषु विशिष्टं निश्चितं
233 निश्चयो यस्य स तथा | परस्परविरुद्धार्थनिकश्रुतिस्मृतिवादि##-
234
235 मोक्षस्य कारणं कर्म ज्ञानं वा मोक्षसाधनम् |
236 उभयं वा विनिश्चित्य एकं कथय कारणम् || ६ ||
237
238 कारणमुत्पादकम् | साधनं व्यञ्जकम् | अत्र मोक्षो हि परमपुरुषार्थ##-
239 दुःखेन सं भिन्नं न च ग्रस्तमनन्तरम् | अभिलाषोपनीतं च तत्सुखं
240 सःपदास्पदम् || इति श्रुत्या स स्वर्गः स्यात्सर्वान्प्रत्यविशिष्टत्वात् इति
241 जैमिनिवचनाच्च तस्य तथात्वसिद्धेः | नच जन्यत्वेन नाशानुमानम् |
242 श्रुतिविरुद्धेऽर्थे अनुमानानुदयात् तस्याजन्यत्वे साधनोपदेशानर्थक्य##-
243 कल्पः | न कर्मणा न प्रजया प्लवा ह्येते अदृढा यज्ञरूपाः इत्यादि##-
244 पन्था विमुक्तये इत्यादिश्रुत्या मुक्तौ ज्ञानातिरिक्तसाधननिषेधाज्ज्ञानस्य च
245 प्रमाणजन्यस्य वस्त्वभिव्यक्त्यतिरिक्तफलाप्रसिद्धेरित्यौपनिषदमतमव##-
246 जिजीविषयेच्छत& समाः इति यावज्जीवानुष्ठेयत्वेन कर्म असुर्या नाम ते लोका
247 अन्धेन तमसा वृताः इत्यादिना अविद्वन्निन्दापूर्वक। म्ब्रह्मविद्यां च
248 प्रस्तुत्य तयोरेकैकस्य मोक्षसाधनताम् अन्धं तमः प्रविशन्ति
249 येऽविद्यामुपासते [अविद्यामग्निहोत्रादिलक्षनं कर्मेति महीधरः] |
250 ततो भूय इव ते तमो य उ विद्याया& रताः इति निन्दित्वा विद्यां चाविद्यां च
251 यस्तद्वेदोभय& सह | अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते इति
252 समुच्चितयोरात्यन्तिकानर्थनिवृत्तिनिरतिशयानन्दावाप्तिलक्षणमोक्षहेतु##-
253 निर्णयकारणं कथयेत्यर्थः || ६ ||
254
255 अगस्तिरुवाच |
256
257 उभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणां गतिः |
258 तथैव ज्ञानकर्मभ्यां जायते परमं पदम् || ७ ||
259
260 यन्न दुःखेन इति श्रुतेर्बहुतरश्रुत्यादिविरोधेनापेक्षिकनित्यत्वपरत्वात्तेषु

261 प्रथमकल्पस्यासंभवं द्वितीयतृतीयकल्पयोः कर्मणां चित्तशुद्धि##-
262 प्रतिवचनमुवाच - उमाभ्यामित्यादिना | यथा खे आकाशे पक्षिणामु##-
263 तद्विष्णोः परमं पदम् इति श्रुतिप्रसिद्धं संसाराध्वनः पारं कैवल्य##-
264 पूर्वभावस्तु प्रवृत्तिनिवृत्त्योर्युगपदसंभवाद्विरुद्धाधिकारिविशेष##-
265 प्रतिबिम्बोदये मार्जनालोकौ द्वाप्यावश्यकौ तद्वत्कर्मकृतचित्तशुद्धिः
266 प्रमाणजन्यवृत्तिश्चाविद्यानिवृत्तावावश्यके अशुद्धचित्तैः शतशः
267 श्रुतेऽपि ज्ञानफलादर्शनादिति भावः || ७ ||
268
269 केवलात्कर्मणो ज्ञानान्नहि मोक्षोऽभिजायते |
270 किंतुभाभ्यां भवेन्मोक्षः साधनं तूभयं विदुः || ८ ||
271
272 तदेव द्रढयन्पुनराह - केवलादिति | साधनं व्यञ्जकं विदुः |
273 ब्रह्मविद इति शेषः | तथाच विदुषामनुभवसिद्धे नत्र विप्रतिपत्तव्यमिति
274 भावः | विद्यां चाविद्यां च इति श्रुतिस्तूपासनकर्मसमुच्चयपरा न
275 ब्रह्मविद्यायाः कर्मसमुच्चयपरा | तदङ्गत्वेनोपक्रमे तेन त्यक्तेन
276 भुञ्जीथाः इति संन्यासविधिविरोधादिति प्रपञ्चितं भाष्यकृभिरिति न
277 कश्चिद्विरोधः | नत्वत्र यथाश्रुतमापाततो गृहीत्वा
278 ज्ञानकर्मसमुच्चय-पक्ष एवैतद्ग्रन्धाभिमत इति भ्रमितव्यम् |
279 अलब्धज्ञानदृष्टीनां क्रियामात्रं [क्रियामुत्र] परायणम् | यस्य
280 नास्त्यम्बरं पट्टं कम्बलं किं त्यजत्यसौ || इत्यादिना मणिकाचोपाख्यानेन
281 चोत्तरत्र केवलज्ञानेनैव मुक्तिरिति व्यवस्थापनेन पूर्वोत्तरविरोधापत्तेः || ८ ||
282
283 अस्मिन्नर्थे पुरावृत्तमितिहासं वदामि ते |
284 कारुण्याख्यः पुरा कश्चिद्ब्राह्मणोऽधीतवेदकः || ९ ||
285
286 अग्निवेश्यस्य पुत्रोऽभूद्वेदवेदाङ्गपारगः |
287 गुरोरधीतविद्यः सन्नाजगाम गृहं प्रति || १० ||
288
289 तस्थावकर्मकृत्तूष्णीं संशयानो गृहे तदा |
290 अग्निवेश्यो विलोक्याथ पुत्रं कर्मविवर्जितम् || ११ ||
291
292 अग्निवेश्य उवाच |
293
294 किमेतत्पुत्र कुरुषे पालनं न स्वकर्मणः || १२ ||
295
296 प्राह एतदित्यसंधिः संहिताया अनित्यत्वात् | निन्द्यमविधिना
297 कर्मपरित्यागान्निन्दार्हं पुत्रम् || १२ ||
298
299 अकर्मनिरतः सिद्धिं कथं प्राप्स्यसि तद्वद |
300 कर्मणोऽस्मान्निवृत्तेः किं कारणं तन्निवेद्यताम् || १३ ||
301
302 सिद्धिं प्रत्यवायपहिराहं स्वर्गं मोक्षं वा || १३ ||
303
304 कारुण्य उवाच |
305
306 यावज्जिवमग्निहोत्रं नित्यं संध्यामुपासयेत् |
307 प्रवृत्तिरूपो धर्मोऽयं श्रुत्या स्मृत्या च चोदितः || १४ ||
308
309 अग्निहोत्रं जुहोति इति वाक्यशेषः | चोदितो विहितः || १४ ||
310
311 न धनेन भवेन्मोक्षः कर्मणा प्रजया न वा |
312 त्यागमात्रेण किंत्वेके यतयोऽश्नन्ति चामृतम् || १५ ||

313
314 एके मुख्याः। चकारोऽनर्थनिवृत्तिसमुच्चयार्थः॥ १५॥
315
316 इति श्रुत्योर्द्वयोर्मध्ये किं कर्तव्यं मया गुरो।
317 इति संदिग्धतां गत्वा तूष्णींभूतोऽस्मि कर्मणि॥ १६॥
318
319 द्वयोर्विरुद्धार्थयोरिति यावत्। संदिग्धतां संदिहानताम्। अकर्मकत्वात्
320 गत्यर्थाकर्मक इति कर्तरि क्तः॥ १६॥
321
322 अगस्तिरुवाच।
323
324 इत्युक्त्वा तात विप्रोऽसौ कारुण्यो मौनमागतः।
325 तथाविधं सुतं दृष्ट्वा पुनः प्राह गुरुः सुतम्॥ १७॥
326
327 अग्निवेश्य उवाच।
328
329 शृणु पुत्र कथामेकां तदर्थं हृदयेऽखिलम्।
330 मत्तोऽवधार्य पुत्र त्वं यथेच्छसि तथा कुरु॥ १८॥
331
332 एकां सर्वसंदेहमूलाज्ञानोच्छेदित्वान्मुख्यां कथां वक्ष्यमाण##-
333
334 ज्ञानं न त्वात्मनो धर्मो न गुणो वा कथंचन।
335 ज्ञान-स्वरूप एवात्मा नित्यः सर्वगतः शिवः॥
336 अहमात्मा समस्तानां भूतानां परमेश्वरः।
337 एक एव पदार्थाश्च कल्पिता मयि षण्मुख॥
338 विज्ञानमेतदखिलं विश्वाकारमबुद्धयः।
339 पश्यन्तिज्ञानिनस्त्वेकमात्मरूपमिदं जगत्॥
340 दुर्विज्ञेयं वसिष्ठेन रामाय कथितं पुरा॥
341
342 इति षण्मुखं प्रति शिवेनाविद्यास्वरूपं ब्रह्मतत्त्वं च विस्तरेणोपदिश्य
343 स्ववाक्ये विश्वासदार्ढ्याय विश्वसनीयतमत्वेन प्रसिद्धस्य ब्रह्मविद्या##-
344 संबोधनं कथार्थलक्षणपितृधनग्रहणयोग्यत्वद्योतनार्थम्॥ १८॥
345
346 सुरुचिर्नाम काचित्स्त्री अप्सरोगणौत्तमा।
347 उपविष्टा हिमवतः शिखरे शिखिसंवृते॥ १९॥
348
349 उत्तमा ब्रह्मविद्याधिकारिविशेषणसंपन्नत्वाच्छ्रेष्ठा॥ १९॥
350
351 रमन्ते कामसंतप्ताः किन्नर्यो यत्र किन्नरैः।
352 स्वर्धुन्योधेन संसृष्टे महाघौघविनाशिना॥ २०॥
353
354 दूतमिन्द्रस्य गच्छन्तमन्तरिक्षे ददर्श सा।
355 तमुवाच महाभागा सुरुचिश्चाप्सरोवरा॥ २१॥
356
357 ज्ञानोपदेशफलभागिनीत्वान्महाभागा। चकारो न केवलं नाम्नैव किंतु
358 शोभनायां ब्रह्मविद्यायां रुचिः संजाता अस्या इत्यर्थगोऽपि सुरुचिरिति
359 समुच्चयार्थः। दिव्यदृशा दूतब्रह्मवित्त्वपरिज्ञानसमर्थ##-
360
361 सुरुचिरुवाच।
362
363 देवदूत महाभाग कुत आगम्यते त्वया।
364 अधुना कुत्र गन्तासि तत्सर्वं कृपया वद॥ २२॥

सुरुचिरुवाचेति | अर्थाद्योग्यतयाभ्युत्थानाभिवादनयोपायनाहरणपूजनो##-
द्योतनाय महाभागेति संबोधनम् | प्रकृतोपयोगयोग्योऽन्योऽपि क्वैष
तदाभूत्कुत एतदागादितो मुच्यमानः क्व गमिष्यसि इति श्रौतप्रश्नसा##-
कस्मिन्स्वरूपे गन्तासि त्वमिति सर्वाधिष्ठानब्रह्मतत्त्वविषय एव
पर्श्नोऽभिप्रेत इति गम्यते | तत्सर्वं पूर्णं वदेति पदस्वारस्यादप्ययमेव
प्रश्नार्थ इति गम्यते || २२ ||

देवदूत उवाच |

साधु पृष्टं त्वया सुभ्रु यथावत्कथयामि ते |
अरिष्टनेमी राजर्षिर्दत्त्वा राज्यं सुताय वै || २३ ||

गूढाभिसंधिर्महान्प्रश्नार्थो भ्रूविलासेन सुचितः स्वेन परिज्ञात इति
स्वाभिप्रायं सूचयंस्तथैव संबोधयति - सुभ्र्विति | यथावत्
यथावृत्तं यथार्थमात्मतत्त्वं च || २३ ||

वीतरागह् स धर्मात्मा निर्ययौ तपसे वनम् |
तपश्चरत्यसौ राजा पर्वते गन्धमादने || २४ ||

कार्यं कृत्वा मया तत्र तत आगम्यतेऽधुना |
गन्तास्मि पार्श्वे शक्रस्य तं वृत्तान्तं निवेदितुम् || २५ ||

कार्यमवश्यसंपाद्यमात्मज्ञानेन कृतार्थत्वं तस्य स्वस्य च कृत्वा
संपाद्य | वृत्तः संपन्नः अन्तः संसारसीमा यस्य तं तथाभूतं
राजानमिति चार्थः || २५ ||

अप्सरा उवाच |

वृत्तान्तः कोऽभवत्तत्र कथयस्व मम प्रभो |
प्रष्टुकामा विनीतास्मि नोद्वेगं कर्तुमर्हसि || २६ ||

देवदूत उवाच |

अतएव हि तत्तथाविधं जिज्ञासमाना सोवाच | वृत्तन्तः प्राप्तसंसारान्तः स
राजा कोऽभवत् कीदृक्स्वरूपेण स्थित इति निगूढः प्रश्नः | बह्वत्र वक्तव्यं
नाल्पेन तदसंभावनादिदोषशान्तिरित्यनुद्वेगप्रार्थना | देवानां
परोक्षप्रियत्वाच्च स्फुटोक्त्या प्रश्नोत्तरयोः स्वायत्तयोरपि निगूढोक्त्यात्र
उच्यते || २६ ||

शृणु भद्रे यथावृत्तं विस्तरेण वदामि ते |
तस्मिन्राज्ञि वने तत्र तपश्चरति दुस्तरम् || २७ ||

इत्यहं देवराजेन सुभ्रूराज्ञापितस्तदा |
दूतं त्वं तत्र गच्छाशु गृहीत्वेदं विमानकम् || २८ ||

इति वक्ष्यमाणप्रकारेण | तत्र गन्धमादने | विरक्तश्चेत्तत्तद्दृष्ट्याल्पं
कुत्सितं चेत्युपेक्षार्हमिति सूचनाय विमानकमिति [कन्प्रत्ययः]
कन्प्रयुक्तः || २८ ||

अप्सरोगणसंयुक्तं नानावादित्रशोभितम् |
गन्धर्वसिद्धयक्षैश्च किन्नराद्यैश्च शोभितम् || २९ ||

शोभितान्तानि विमानविशेषणानि ॥ २९ ॥

तालवेणुमृदङ्गादि पर्वते गन्धमादने ।
नानावृक्षसमाकीर्णे गत्वा तस्मिन्गिरौ शुभे ॥ ३० ॥

विमानाद्बहिरपि सैनिकैस्तालवेणुमृदङ्गादि गृहीत्वेत्यनुषङ्गः ॥ ३० ॥

अरिष्टनेमि राजानं दूतारोप्य विमानके ।
आनय स्वर्गभोगाय नगरीममरावतीम् ॥ ३१ ॥

दूत उवाच ।

इत्याज्ञां प्राप्य शक्रस्य गृहीत्वा तद्विमानकम् ।
सर्वोपस्करसंयुक्तं तस्मिन्नद्रावहं ययौ ॥ ३२ ॥

उपस्कराणि गुणवत्तयोपकल्पितानि भोगसाधनानि । उपात्प्रतियत्न - इति सुट् ।
संप्रति स्वस्य तत्त्वज्ञत्वादज्ञदृशाभिमते देहादिद्वारके स्वगमने
उन्मादादिकृत इव पारोक्ष्यारोपान्मत्तोऽहं किल विललापेतिवद्ययाविति लिट् ॥ ३२ ॥

आगत्य पर्वते तस्मिन्राज्ञो गत्वाश्रमं मया ।
निवेदिता महेन्द्रस्य सर्वाज्ञाऽरिष्टनेमये ॥ ३३ ॥

इति मद्वचन। म् श्रुत्वा संशयानोऽवदच्छुभे ।

राजोवाच ।

प्रष्टुमिच्छामि दूत त्वां तन्मे त्वं वक्तुमर्हसि ॥ ३४ ॥

गुणा दोषाश्च के तत्र स्वर्गे वद ममाग्रतः ।
ज्ञात्वा स्थितिं तु तत्रत्यां करिष्येऽहं यथारुचि ॥ ३५ ॥

स्थितिं गुणदोषन्यूनाधिक्यव्यवस्थितिम् । तत्रत्यां स्वर्गस्थाम् ॥ ३५ ॥

दूत उवाच ।

स्वर्गे पुण्यस्य सामग्र्या भुज्यते परमं सुखम् ।
उत्तमेन तु पुण्येन प्राप्नोति स्वर्गमुत्तमम् ॥ ३६ ॥

सामग्र्या समग्रतया । क्षुद्रपुण्यानामपि प्राचुर्येणेत्यर्थः । परम##-
सुखं लभ्यमित्याह - उत्तमेनेति ॥ ३६ ॥

मध्यमेन तथा मध्यः स्वर्गो भवति नान्यथा ।
कनिष्ठेन तु पुण्येन स्वर्गो भवति तादृशः ॥ ३७ ॥

एवं मध्यमकनिष्ठत्वे अपि प्राचुर्योत्कृष्टत्वाभ्यां बोध्ये ॥ ३७ ॥

परोत्कर्षासहिष्णुत्वं स्पर्धा चैव समैश्च तैः ।
कनिष्ठेषु च संतोषो यावत्पुण्यक्षयो भवेत् ॥ ३८ ॥

अनुत्तमपुण्यफलेषु दोषान्तराण्याह - परेति । तैरुत्कृष्टैः
स्पर्धमानैश्च सहेति शेषः । तथाच तत्प्रयुक्तं दुःखं दुःसहमिति

भावः। यावदिति सर्वसाधारणमिदम्॥ ३८॥

क्षीणे पुण्ये विशन्त्येतं मर्त्यलोकं च मानवाः।
इत्यादिगुणदोषाश्च स्वर्गे राजन्नवस्थिताः॥ ३९॥

मानवाश्च भवन्ति रमणीयकर्माविशेषे। तच्च दुर्लभमिति सूचनाय चकारः
॥ ३९॥

इति श्रुत्वा वचो भद्रे स राजा प्रत्यभाषत।

राजोवाच।

नेच्छामि देवदुताहं स्वर्गमीदृग्विधं फलम्॥ ४०॥

स्वर्ग फलमित्यभेदान्वयः॥ ४०॥

ततः परं [महोग्रं तु] महोग्रं च तपः कृत्वा कलेवरम्।
त्यक्ष्याम्यहमशुद्धं हि जीर्णां त्वचमिवोरगः॥ ४१॥

पापानां तपसा निःशेषं क्षपणात् सुकृतानामसति रागे जन्मा##-

देवदूतं विमानेदं गृहीत्वा त्वं यथागतः।
तथा गच्छ महेन्द्रस्य संनिधौ त्वं नमोऽस्तु ते॥ ४२॥

विमानं च तदिदं चेति कर्मधारयः। अथवा स्वागमनप्रताख्यानेन विगतो
मानोऽयस्येति देवदूतविशेषणम्। विमानेति पृथक्पदम्। अत एव
तत्क्षमापनाय नमोऽस्तु ते इत्युक्तिः ॥ ४२॥

देवदूत उवाच।

इत्युक्तो गतो भद्रे शक्रस्याग्रे निवेदितुम्।
यथावृत्तं निवेद्याथ महदाश्चर्यतां गतः॥ ४३॥

महतां शक्रसभागतानामाश्चर्यतां विस्मयहेतुताम्॥ ४३॥

पुनः प्राह महेन्द्रो मां श्लक्ष्णं मधुरया गिरा।

इन्द्र उवाच।

दूत गच्छ पुनस्तत्र तं राजानं नयाश्रमम्॥ ४४॥

अविषयनियोगदुःखितदूताश्वासनाय मधुरया। आश्रमं
वाल्मीकेरित्युत्तरेणान्वयः॥ ४४॥

वाल्मीकेर्ज्ञाततत्त्वस्य स्वबोधार्थं विरागिणम्।
संदेशं मम वाल्मीकेर्महर्षेस्त्वं निवेदय॥ ४५॥

स्वबोधार्थमात्मतत्त्वज्ञानाय। स्वपदे श्लेषात्तवापि स्वात्मबोधो भावीति
ध्वनितम्। संदेशं वाचिकम्॥ ४५॥

अहर्षे त्वं विनीताय राज्ञेऽस्मै वीतरागिणे।
नस्वर्गमिच्छ्यते तत्त्वं प्रबोधय महामुने॥ ४६॥

[रागिणो राग] वीतरागिणे | रागमूलाः काम्यप्रवृत्तयो
रागापगमादेव वीता गता यस्येथर्थः | स्वर्गं नेच्छयते || ४६ ||

तेन संसारदुःखार्तो मोक्षमेष्यति च क्रमात् |
इत्युक्त्वा देवराजेन प्रेषितोऽहं तदन्तिके || ४७ ||

तेन तत्त्वबोधनेन | [उपदेशक्रमा]  क्रमादुपदिष्टार्थस्य चित्ते
संक्रमात् मनोनाशान्तमननादिक्रमाद्वा || ४७ ||

मयागत्य पुनस्तत्र राजा वल्मीकजन्मने |
निवेदितो महेन्द्रस्य राज्ञा मोक्षस्य साधनम् || ४८ ||

मया महेन्द्रस्य संदेशेन सह राजा निवेदितः | राज्ञा स्वमोक्षस्य साधनं
स्वाभिलषितं निवेदितमिति विपरिणामेन संबन्धः || ४८ ||

ततो वल्मीकजन्मासौ राजानं समपृच्छत |
अनामयमतिप्रीत्या कुशलप्रश्नवार्तया || ४९ ||

देशकोशपुत्रतपः प्रभृतीनां कुशलप्रश्नवार्तयैवार्थादनामयं
समपृच्छतेत्यर्थः || ४९ ||

राजोवाच |

भगवन्धर्मतत्त्वज्ञ ज्ञातज्ञेय विदांवर |
कृतार्थोऽहं भवद्दृष्ट्या तदेव कुशलं मम || ५० ||

आद्येन विशेषणेन कर्मकाण्डरहस्यज्ञता द्वितीयेन ब्रह्मतत्त्वज्ञता
तृतीयेन लोकतत्त्वज्ञता च दर्शिता | भवद्दृष्ट्या भवतो दर्शनेन
भवदीयकृपादृष्ट्या च | तत् भवद्दृष्टिप्रयुक्तं [कार्तार्थ्यं
कृतकृत्यत्वम्] कार्तार्थ्यमेव || ५० ||

भगवन्प्रष्टुमिच्छामि तदविघ्नेन मे वद |
संसारबन्धदुःखार्तेः कथं मुञ्चामि तद्वद || ५१ ||

प्रष्टुमिछामीति दूतसंदेशादेव प्रश्नविषयपरिज्ञानेऽपि नाऽपृष्टः
कस्यचिद्ब्रूयात् इति प्रसक्तोपेक्ष्यतावारणाय | तत् तत्र श्रेओरूपे | श्रेयांसि
बहुविघ्नानि इतिप्रवादप्रसक्तां विघ्नसंभावनां निवारयति -
अविघ्नेनेति | तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विद्युः इति श्रुतेः |
देवानां प्रातिकुल्ये हि विघ्नसंभावना स्यान्नतु तदस्ति देवराजाज्ञयैवाहं
यतः पृच्छामीति भावः | संसारबन्धप्रौक्तदुःखैरार्तिः
पुनःपुनर्नाशस्त-स्मान्मुञ्चामि मुक्तो भवामि | आद्यो मोक्षस्वरूपस्य
प्रश्नो द्वितीयो मोक्षसाधनस्य || ५१ ||

वाल्मीकिरुवाच |

शृणु राजन्प्रवक्ष्यामि रामायणमखण्डितम् |
श्रुत्वावधार्य यत्नेन जीवन्मुक्तो भविष्यसि || ५२ ||

कैकेयीवरापदेशात्स्वस्थानप्रच्युतस्य रामस्य राक्षसान्विजित्य पुनः
स्वस्थानायनाभ्युदयप्राप्तिवच्छापापदेशात्स्वरूपात्प्रच्युतस्य तस्य
वसिष्ठोपदेशादज्ञानादिराक्षसान्निहत्य पुनः स्वस्वरूपावाप्त्यभ्यु##-

573 प्रमाणासंभावनां मननेन त्ववधार्य प्रमेया-संभावणां
574 यत्नेन निदिध्यासनेन विपरीतभावनां च निरस्य। साक्षात्कारेणेति शेषः॥ ५२॥
575
576 वसिष्ठरामसंवादं मोक्षोपायकथां शुभाम्।
577 ज्ञातस्वभावो राजेन्द्र वदामि श्रूयतां बुध॥ ५३॥
578
579 वसिष्ठरामयोः संवादरूपेण प्रवृत्तं मोक्षोपायानां कथम्। न
580 नरेणावरेण प्रोक्त एष सुविज्ञेयो बहुधा चिन्त्यमानः इति श्रुतेर्नातत्त्व##-
581 ज्ञातस्वभाव इति॥ ५३॥
582
583 राजोवाच।
584
585 को रामः कीदृशः कस्य बद्धो वा मुक्त एव वा।
586 एतन्मे निश्चितं ब्रूहि ज्ञानं तत्त्वविदां वर॥ ५४॥
587
588 वसिष्ठरामसंवादमित्यत्र द्वन्द्वेऽल्पाचोऽपि परनिपाताद्रामस्य शिष्यता
589 सूचिता सा त्वज्ञस्यैव संभवति नेश्वरस्य। रामस्तु भगवदवतारत्वात्##-
590 कश्चिद्राम-नामा उत प्रसिद्धो नित्यमुक्तो विष्णुरित्यर्थः। ज्ञायतेऽनेनेति
591 ज्ञानं निश्चयकारणमितर्थः॥ ५४॥
592
593 वाल्मीकिरुवाच।
594
595 शापव्याजवशादेव राजवेषधरो हरिः।
596 आहृताज्ञानसंपन्नः किंचिज्ज्ञोऽसौ भवत्प्रभुः॥ ५५॥
597
598 तदेवाह - शापेति। व्याजोऽपदेशः। आहृतेन
599 स्वभक्तवाक्यसत्यतासंपा-दनायेच्छया स्वीकृतेनाज्ञानेनाज्ञप्रायः
600 संपन्नः भवत् अभवत्। अडभावश्छान्दसः॥ ५५॥
601
602 राजोवाच।
603
604 चिदानन्दस्वरूपे हि रामे चैतन्यविग्रहे।
605 शापस्य कारणं ब्रूहि कः [कः शशापेति] शप्ता चेति मे वद॥
606 ५६॥
607
608 महर्षिभिरपराधिनो हि शप्यन्ते अपराधो ह्यपूर्णकामस्याज्ञस्य स्यात्
609 नचानावृतचिदानन्द स्वरूपत्वादथाभूतस्य रामस्य तत्संभवः
610 शापादेव तदुक्तौ त्वनोन्याश्रय इत्यभिप्रेत्याह - चिदानन्देति।
611 परमार्थ-तश्चिदभिन्नानन्दस्वरूपे [श्चिदानन्दस्वरूपे]।
612 व्यवहारेऽपि चैतन्यमेव भक्तानुकम्पया विग्रहात्मना परिणतं यस तस्मिन्।
613 ५६॥
614
615 वाल्मीकिरुवाच।
616
617 सनत्कुमारो निष्काम अवसद्ब्रह्मसद्मनि।
618 वैकुण्ठादागतो विष्णुस्त्रैलोक्याधिपतिः प्रभुः॥ ५७॥
619
620 निष्काम अवसदिति च्छान्दसं यत्वम्। निर्गताः कामा रागादयो यत्रेति निष्कामे
621 [निष्कामे] ब्रह्मसद्मनीति वा॥ ५७॥
622
623 ब्रह्मणा पूजितस्तत्र सत्यलोकनिवासिभिः।
624 विना कुमारं तं दृष्ट्वा ह्युवाच प्रभुरीश्वरः॥ ५८॥

625
626 कुमारं सनत्कुमारं विनान्यैः सत्यलोकनिवासिभिः पूजित इत्यनुषङ्गः ॥ ५८ ॥
627
628 सनत्कुमार स्तब्धोऽसि निष्कामो गर्वचेष्टया ।
629 अतस्त्वं भव कामार्तः शरजन्मेति नामतः ॥ ५९ ॥
630
631 कामेन ऋतो व्याप्तः । ऋते च तृतीयासमासे इति वृद्धिः ॥ ५९ ॥
632
633 तेनापि शापितो विष्णुः सर्वज्ञत्वं तवास्ति यत् ।
634 किंचित्कालं हि त्यक्त्वा त्वमज्ञानी भविष्यसि ॥ ६० ॥
635
636 किंचित्कालमिति कर्मधारयः । कालाध्वनोरत्यन्तसंयोगे इति द्वितीया ॥ ६० ॥
637
638 भृगुर्भार्यां हतां दृष्ट्वा ह्युवाच क्रोधमूर्च्छितः ।
639 विष्णो तवापि भार्याया वियोगो हि भविष्यति ॥ ६१ ॥
640
641 क्रोधेन मूर्छितो मोहितः समुच्छ्रितश्च ॥ ६१ ॥
642
643 वृन्दया शापितो विष्णुश्छलनं यत्त्वया कृतम् ।
644 अतस्त्वं स्त्रीवियोगं ति वचनान्मम यास्यस्य् ॥ ६२ ॥
645
646 वृन्दया जलन्धर भार्यया । छलनं पतिवेषेण मोहयित्वा
647 पातिवृत्यभङ्ग-रूपं वञ्चनम् । शापितः शप्तः । अध्यारोपित##-
648
649 भार्या हि देवदत्तस्य पयोष्णीतीरसंस्थिता ।
650 नृसिंहवेषधृग्विष्णुं दृष्ट्वा पञ्चत्वमागता ॥ ६३ ॥
651
652 वेषधृग्विष्णुमिति कर्मधारयः ॥ ६३ ॥
653
654 तेन शप्तो हि हृहरिर्दुःखार्तः स्त्रीवियोगतः ।
655 तवापि भार्यया सार्धं वियोगो हि भविष्यति ॥ ६४ ॥
656
657 दुःखैर्दुःखसाध्यैः सुकृतैः ऋतः साक्षात्कृतोऽपि नृहरिस्तेन शप्तः ॥
658 ६४ ॥
659
660 भृगुणैवं कुमारेण शापितो देवशर्मणा ।
661 वृन्दया शापितो विष्णुस्तेन मानुष्यतां गतः ॥ ६५ ॥
662
663 आद्यशापेन साक्षादितरैराक्षेपादज्ञानप्राप्तिः । अतएव हि रामस्य त्रिः
664 सीतावियोगो रावणापहारेण मिथ्यापवादेन भूतलप्रवेशेन् चेति । न चिरं त्वयि
665 वत्स्यतीति ताराया वचनं त्वधिक्षेपमात्रं न शापः । तस्या जीवत्यपि वालिनि
666 सुग्रीवेणोपमुक्तत्वस्य धर्मतो मातरं यस्तु स्वीकरोति जुहुप्सितः
667 इत्यङ्गदवाक्येन प्रसिद्धत्वात्पातिवृत्यभङ्गेन निकृष्टयोइतया
668 चोत्कृस्ताय रामाय शापपरदाने असामर्थ्यात् मानुष्यतां मनुष्य एव
669 मानुष्यस्तद्-भावम् ॥ ६५ ॥
670
671 एतत्ते कथितं सर्वं शापव्याजस्य कारणम् ।
672 इदानीं वच्मि तत्सर्वं सावधानमतिः शृणु ॥ ६६ ॥
673
674 तत् पूर्वपृष्टं मोक्षसाधनम् । सर्वं सानुबन्धनम् । तत् महारा##-
675
676 इत्यार्षे श्रीमद्वासिष्ठमहारामायणे वाल्मीकीये देवदूतोक्ते मोक्षोपाये

677 द्वात्रिंशत्साहस्र्यां सम्हितायां वैराग्यप्रकरणे सूत्रपातनको नाम
678 प्रथमः सर्गः ॥ १ ॥
679
680 इति वासिष्ठमाहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरेणे प्रथमः
681 सगरः ॥ १ ॥
682
683 द्वितीयः सर्गः २
684
685 दिवि भुमौ तथाकाशे बहिरन्तश्च मे विभुः ।
686 यो विभात्यवभासात्मा तस्मै सर्वात्मने नमः ॥ १ ॥
687
688 अथ प्रारिप्सितस्य महतः शास्त्रस्य निर्विघ्नपरिसमाप्तिप्रचयगमनादि##-
689 वीरपुरुषकाण्यायुष्मत्पुरुषकाणि च भवन्ति इति महाभाष्योपदर्शित##-
690 दर्शयति - दिवीति । दिवि द्युलोके भूमौ भूलोके तथा आकाशे अन्तरिक्षलोके
691 बहिरधिभूतं [अन्तरमध्यात्म] अन्तराध्यात्मं चकारादधिदैवं
692 च मे मम यो विभुर्विभाति विविधरूपेण प्रथते स्वाविद्यया ।
693 परमार्थतस्त्ववभा-सात्मा निर्विकारचिन्मात्रस्वभावस्तस्मै
694 सर्वेषामात्मने नम इत्यर्थः । अथवा पृथिवी पूर्वरूपं द्यौरुत्तररूपम
695 इति श्रुत्वाविवात्रापि दिवि ब्रह्माण्डस्योर्ध्वकपाले स्वर्णमये
696 भूमावधःकपाले रजतमये आकाशे तयोः संधौ सूक्ष्माकाशे
697 ब्रह्माण्डाद्बहिरन्तश्च यो विशेषेण सूर्यश्चन्द्राग्निवागादिभ्योऽप्यतिशयेन
698 स्वप्रकाशाअपरिच्छिन्नस्वभा-वत्वाद्भाति । तत्कुतः यतोऽयमवभासात्मा
699 सूर्यादीनामप्यवभासक आत्मा च । येन सूर्यस्तपति तेजसेद्धः आत्मैवास्य
700 ज्योतिर्भवति ज्योतिषामपि तज्ज्योतिः इत्यादिश्रुतिस्मृतिभ्यः । तस्मै सर्वात्मने
701 सर्ववस्तूनां पारमार्थिकस्वरूपभूताय नम इत्यर्थः । अथवा दिवि
702 द्योतनैकरसे भूमानन्दात्मके तुर्यस्वरूपे तथा
703 अवस्थाद्वयोत्पत्तिभूमावव्या-कृताकाशे बहिर्बहिःप्रज्ञभोग्ये
704 जागरेऽन्तः अन्तःप्रज्ञभोग्ये स्वप्ने चकारात्तत्संधौ
705 मरणमूर्छाद्यवस्थासु च यो विविधो भाति स्थूल##-
706 अवभासात्मेति । चिन्मात्रस्वभाव इत्यर्थः । तस्मै दृश्यस्य दृग्वव्यतिरे##-
707 इत्यर्थः । अथवा दिवि सार्वज्ञ्यादिसंपन्नत्वाद्द्योतमाने कारणोपाधौ तथा
708 भूमौ कर्मबीजोद्भवबूमौ कार्योपाधौ तथाकाशे अन्तराले
709 आसमन्तात्काशते इति व्युत्पत्या स्वरूपप्रकाशबहुले वा जीवन्मुक्तिदशायां
710 बहिर्निरुपाधिस्वरूपेऽन्तः कार्यकारणोपाध्यन्तर्गतमायान्तःकरणवृत्ति##-
711 सर्वोपाधिनिष्कृष्टायात्-मने नम इत्यर्थः । अथवा दिवि द्योतनात्मके
712 तेजसि भूमौ पृथिव्यामाकाशे व्योम्नि अन्तः आन्तरालिकयोः
713 सलिलपवनयोर्बहिर्बहिर्भूते व्याकृते चकारान्नि##-
714 पूर्णानन्दस्वरूपाय मे मह्यं नम इत्यर्थः । अथवा दिवि देवलोके
715 बहिस्तटस्थतया पूज्यदेवतेश्वराद्यात्मना भूमौ भूलोके अन्तः
716 देहान्तर्वर्तितया पूजकात्मना आकाशे अन्तराले च क्रियाफलसाधना##-
717 य। स।प्रति तत्त्वदृष्ट्युदयात्स्पष्टमवभासमानात्मा
718 विभुस्त्रिविधपरिच्छेदशून्यो विस्पष्टं भाति तस्मै सर्वात्मने । सर्वशब्दः
719 पूर्णपरस्तस्मात्तत्सर्वमभवदिवत्पूर्णानन्दस्वरूपाय नम इत्यर्थः ।
720 अथवा दिवि उपरिष्टाद्भूमावधस्तादाकाशेऽन्तराले बहिः प्रागादिदिक्षु च अन्तः
721 शरीरान्तः चकारात्तत्पूर्वोत्तरकालयोर्यः अवबासात्मा चिदेकरसो विभाति
722 तत्त्वदृशो मम । आत्मैवाधस्तादात्मोपरिष्टात् इत्यादिश्रुतेः । तस्मै
723 सर्वात्मने आत्मैवेदं सर्वमिति सर्वप्रपञ्चबाधेन परिशेषिताय
724 परमात्मने नम इत्यर्थः एवमर्थान्तराण्यपि यथाबुद्धिवैभवमू##-
725 ज्ञानात्तद्भावस्थितिश्च परमनिर्वाणरूपं प्रयोजनमिति सूचितम् ।
726 उत्तरत्राप्येतदेव स्पष्टं दर्शयिषते ।
727
728 अधिकारि कथोपायसंबन्धो धातृशासनात् ।

निर्माणमस्य ग्रन्थस्य मुक्तचर्या च कीर्त्यते ॥ १ ॥

वाल्मीकिरुवाच ।

अहं बद्धो विमुक्तः स्यामिति यस्यास्ति निश्चयः ।
नात्यन्तमज्ञो [नो तज्ज्ञः] नोत ज्ञः सोऽस्मिञ्छास्त्रेऽधिकारवान्
॥ २ ॥

अथास्मिन ग्रन्थेकोऽधिकारी किमज्ञ उत ज्ञः । नाद्यः । तस्य देहादावात्म##-
नच विषयदोषदर्शनाज्जन-नमरणादिःखदर्शनाच्च तस्यै
वैराग्योदयेच्छया मुमुक्षासंपत्ताव-धिकार इति वाच्यम् ।
रागिणामुत्कटविषयरिरक्षिषा-दर्शनेन सत्स्वेव विषयेषु
तद्दोषनिर्हरणोपायोन्वेषितया [अन्वेषणतया] विशिष्टविषयान्वेषितया
चैहिकामुष्मिकत-दुपायेच्छुतया प्रवृत्तेः । नापि ज्ञः । तस्य
कृतकृततया ग्रन्थसाध्यप्रयो-जनालिप्सुतया ग्रन्थे
प्रवृत्त्यनुपपत्तेरित्याशङ्क्य विशिष्टाधिकारिणं दर्शयति - अहमिति ।
उतेत्यप्यर्थे । सत्यं नात्यन्तमज्ञो नापि ज्ञोऽस्मिञ्-शास्त्रेऽधिकारि । किन्तु
यस्याहं बद्धोस्मिन् संसारेऽनादिकालादारभ्य कारानिगडादिबद्ध इव
परिच्छेदपारवश्यजन्मजरामरणादिदुःखमनु-भवञ्शोचामि ।
आत्यन्तिकशोकतरणे चात्मज्ञानमेवोपायः । तरति शोकमात्मवित् इति श्रुतेः ।
तेनात्मज्ञानेनाहं विमुक्तः स्यामित्युत्कट-जिज्ञासासहितो निश्चयोऽस्ति स
विनयोपायनादिना गुरुमुपगतोऽस्मिञ्छास्त्रेऽ-धिकारवान् ।
शास्त्रश्रवणादिफलभागिअत्यर्थः । तथाचाज्ञस्यैव बहुतरसुकृतैः
क्षीणरागादिदोषस्य विवेकोदयाज्जिज्ञासोरधिकार इति भावः ॥ २ ॥

कथोपायान्विचार्यादौ मोक्षोपायानिमानथ ।
यो विचारयति प्राज्ञो न स भूयोऽभिजायते ॥ ३ ॥

ननु क्षीणरागादिदोषस्त्रैवर्णिकश्चेत्स संन्यासपूर्वकवेदान्तश्रवण
एवाधिकारी । पूर्वकाण्डार्थानुष्ठानस्य चित्तशुद्धिद्वारोत्तरकाण्डाधि##-
त्रैवर्णिकस्य त्रेताग्निसाध्ये कर्मण्यधिकारेऽप्यनाहिताग्निसाधारणः
स्मार्तकर्माधिकारोऽस्मन्नपि ग्रन्थेऽस्त्यधिकारः । अज्ञानावधिकश्च । अस्यापि
स्मृतिवद्वेदोपबृंहणत्वात् । तथाचोक्तम् - वेदवेद्ये परे पुषि जाते
दशरथात्मजे । वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना । इति । तत्र
पूर्वकाण्डस्य रामचरितकथाव्याजेनोपबृंहणं षट्काण्डम् सोत्तरं
पूर्वरामायणम् उत्तरकाण्डस्य षट्प्रकर्णमिदं सोत्तरमिति । यथाच
केषुचित्स्मार्तकर्मसु स्त्रीशुद्रसाधारणोऽधिकारस्तथास्यापि श्रवणे पुराणवात्
। श्रावयेच्चतुरो वर्णान्कृत्वा ब्राह्मणमग्रतः जनश्च शुद्रोऽपि
महत्त्वमीयात् इत्यादिवचनलिल्गात् । नावेदविन्मनुते तं बृहन्तं तं
त्वौपनिषदं पुरुषं पृच्छामि इत्यादिवचनं त्ववेदविदः
श्रौतज्ञानानधिकारपरमिति केचित् । अपरोक्षज्ञानापर्यवसानपरमित्यन्ये ।
वेदपूर्वकत्वप्राशस्त्यपरमित्यपरे । सर्वथाप्यस्त्येवान्येषामपि
पौराणिकसाधारणे ज्ञानेऽधिकारः स हि सर्वैर्विजिज्ञास्य आत्मा
वर्णैस्तथाश्रमैः इत्यादिवचनेभ्यः । तत्र श्रौतज्ञाने पूर्वकाण्डोक्त##-
हेतुरिति पूर्वोत्तररामाअणयोर्हेतुहेतुमद्भावसंगतिं दर्शयन्सर्वानर्थ##-
धर्मतत्त्वज्ञा-नानुष्ठानेश्वरप्रपत्तिषु ज्ञानाधिकारप्रापकेषूपायो
यस्मिन् ग्रन्थे स पूर्वारामायणग्रन्थः कथोपायः । काण्डाभेदाभिप्रायं
बहुवचनम् । तानादौ विचार्य तदर्थानुष्ठानप्राप्ताधिकारः
सन्योऽधिकारीमान्व-क्ष्यमाणषट्प्रकरणरूपान्मोक्षोपायान्विचारयति
प्राज्ञः प्रज्ञाप्लुष्ट-कामकर्मवासनाऽज्ञानबीजः स भूयो नाभिजायते
जन्मादिदुःखभाङ् न भवति । विमुच्यत इत्यर्थः ॥ ३ ॥

781 अस्मिन्रामायणे रामकथोपायान्महाबलान् |
782 एतांस्तु प्रथमं कृत्वा पुराहमरिमर्दन || ४ ||
783
784 अस्मिन्सांप्रतिके षट्पञ्चाशत्सहस्रसंमिते रामायणे अनादिकालाभ्यस्त##-
785
786 शिष्यायास्मि [शिष्यायास्मै] विनीताय भरद्वाजाय धीमते |
787 एकाग्रो दत्तवांस्तस्मै मणिमब्धिरिवार्थिने || ५ ||
788
789 शिष्यविशेषणान्यधिकारसंपत्तिद्योतकानि | एक एवाग्रो [एवाग्रं]
790 ग्रहणधारणप्रचारपटुः प्रधानशिष्यो यस्य स तथा | अनुग्रहप्रेम##-
791
792 तत एते कथोपाया भरद्वाजेन धीमता |
793 कस्मिंश्चिन्मेरुगहने ब्रह्मणोऽग्र उदाहृताः || ६ ||
794
795 एते मत्तः प्राप्ताः पूर्वरामायणरूपाः | उदाहृताः कीर्तिताः || ६ ||
796
797 अथास्य तुष्टो भगवान्ब्रह्मा लोकपितामहः |
798 वरं पुत्र गृहाणेति तमुवाच महाशयः || ७ ||
799
800 वरव्याजेन जगदुद्धारसाधनं मोक्षशास्त्रं करणीयमिति
801 महानाशयोऽभिप्रायोयस्य स तथा || ७ ||
802
803 भरद्वाज उवाच |
804
805 भगवन्भूतभव्येश वरोऽयं मेऽद्य रोचते |
806 येनेयं जनता दुःखान्मुच्यते तदुदाहर || ८ ||
807
808 भूतं पूर्वमुत्पन्नम | भवमुत्पत्स्यमानम् | अद्य पूर्वरामाणार्थानु##-
809
810 श्रीब्रह्मोवाच |
811
812 गुरुं वाल्मीकिमत्राशु प्रार्थयस्व प्रयत्नतः |
813 तेनेदं यत्समारब्धं रामायणमनिन्दितम् || ९ ||
814
815 अत्रास्मिन् पृष्टेऽर्थे | यद्यस्मात्समारब्धं नतु कृत्स्नं कृतम् || ९ ||
816
817 तस्मिञ्छ्रुते नरो मोहात्समग्रात्संतरिष्यति |
818 सेतुनेवाम्बुधेः पारमपारगुणशालिना || १० ||
819
820 श्रुते अर्थात्कृत्स्नसिद्ध्यनन्तरमिति गम्यते | सेतुं दृष्ट्वा समुद्रस्य
821 ब्रह्महत्यां व्यपोहति इत्यादिस्मृतिप्रसिद्धानन्तगुणशालिना || १० ||
822
823 श्रीवाल्मीकिरुवाच |
824
825 इत्युक्त्वा स भरद्वाजं परमेष्ठी मदाश्रमम् |
826 अभ्यागच्छत्समं तेन भरद्वाजेन भूतकृत् || ११ ||
827
828 तूर्णं संपूजितो देवः सोऽर्घ्यपाद्यादिना मया |
829 अवोचन्मां महासत्त्वः सर्वभूतहिते रतः || १२ ||
830
831 यद्यपि सृष्टौ रजः प्रधानस्तथापि जगदुद्धारोद्भूतकरुणत्वान्महा##-
832

833 रामस्वभावकथनादस्माद्वरमुने त्वया |
834 नोद्वेगात्स परित्याज्य आसमाप्तेरनिन्दितात् || १३ ||
835
836 ल्यब्लोपे पञ्चमी | रामस्वभावकथनं प्रस्तुत्येत्यर्थः | उद्वेगाद्विस्तृत##-
837 समग्रो निर्मातव्य इति यावत् || १३ ||
838
839 ग्रन्थेनानेन लोकोऽयमस्मात्संसारसंकटात् |
840 समुत्तरिष्यति क्षिप्रं पोतेनेवाशु सागरात् || १४ ||
841
842 संसारसंकटादित्यपादानपञ्चम्या समुत्तीर्णस्यात्यन्तिकं संसार##-
843 प्रथमा | अन्यथा आशुपदेन पुनरुक्त्यापत्तेः | क्षिप्रपोतेन इति पाठश्चेन्न
844 कापि चिन्ता | आशु ज्ञानोदयसमकालमेव | ननु पोतेन सागरसमुत्तरणमे##-
845 पोतेनोद्धरणमेवात्र समुत्तरणं विवक्षितं आशुपदस्वारस्यात् |
846 अतएवापादानपञ्चम्यमेव कृतेति || १४ ||
847
848 वक्तुं तदेवमेवार्थमहमागतवानयम् |
849 कुरु लोकहितार्थं त्वं शास्त्रमित्युक्तवानजः || १५ ||
850
851 तत्तस्माद्धेतोर्भरद्वाजद्वारा आज्ञासंदेशसंभवेऽप्येवमर्थं
852 वक्तुमयं जगन्मान्योऽहमेवागतवानिति संबन्दः || १५ ||
853
854 मम पुण्याश्रमात्तस्मात्क्षणादन्तर्द्धिमागतः |
855 मुहूर्तभ्युत्थितः प्रोच्चैस्तरङ्ग इव वारिणः || १६ ||
856
857 ब्रह्मपादस्पर्शेन पुण्यतमवमाश्रमस्य || १६ ||
858
859 तस्मिन्प्रयाते भगवत्यहं विस्मयमागतः |
860 पुनस्तत्र भरद्वाजमपृच्छं स्वस्थया धिया || १७ ||
861
862 स्वस्थया धियेत्युक्तेः पुर्वं प्रब्मागमनहर्षविष्मयव्यत्रचित्तत्वाद्ग##-
863
864 किमेतद्ब्रह्मणा प्रोक्तं भरद्वाज वदाशु मे |
865 इत्युक्तेन पुनः प्रोक्तं भरद्वाजेन तेन मे || १८ ||
866
867 भरद्वाज उवाच |
868
869 एतदुक्तं भगवता यथा रामायणं कुरु |
870 सर्वलोकहितार्थाय संसार्णवतारकम् || १९ ||
871
872 यथा पूर्वं कथोपायरामायणं कृतं तथा मोक्षोपायरामायणमिति
873 शेषः || १९ ||
874
875 मह्यं च भगवन्ब्रूहि कथं संसारसंकटे |
876 रामो व्यवहृतो ह्यस्मिन्भरतश्च महामनाः || २० ||
877
878 राम कथं व्यवहृतो व्यवहृतवान् किमज्ञः शोचन्नितरवदुत
879 जीवन्मुक्तवत् || २० ||
880
881 शत्रुघ्नो लक्ष्मणश्चापि सीता चापि यशस्विनी |
882 रामानुयायिनस्ते वा मन्त्रिपुत्रा महाधियः || २१ ||
883
884 चकाराद्दशरथपरिग्रहः | चकारोऽपिशब्दद्वयं च तत्परिवारसमुच्च##-

885
886 [निर्दुःखतां यथैते तु] निर्दुःखितां यथैते नु
887 प्राप्तास्तद्ब्रूहि मे स्फुटम् ।
888 तथैवाहं भविष्यामि ततो जनतया सह ॥ २२ ॥
889
890 स्फुटं मद्बोधपर्यवसितम् । जनतया त्वदुपदेशश्रवणकृतार्थजन##-
891
892 भरद्वाजेन राजेन्द्र वदेत्युक्तोऽस्मि सादरम् ।
893 तदा कर्तुं विभोराज्ञामहं वक्तुं प्रवृत्तवान् ॥ २३ ॥
894
895 सादरमुपायनाहरणोपगमनप्रणतिप्राथनाद्यादरसहितम् ॥ २३ ॥
896
897 शृणु वत्स भरद्वाज यथापृष्टं वदामि ते ।
898 श्रुतेन येन संमोहमलं दूरे करिष्यसि ॥ २४ ॥
899
900 संमोह आत्मतत्त्वापरिज्ञानं तद्रूपं मलं पङ्कम् । अलमिति वा छेदः ॥
901 २४ ॥
902
903 तथा व्यवहर प्राज्ञ यथा व्यवहृतः सुखी ।
904 सर्वासंसक्तया बुद्ध्या रामो राजीवलोचनः ॥ २५ ॥
905
906 असंसक्तया मिथ्येति निश्चयादनभिनिविष्टया ॥ २५ ॥
907
908 लक्ष्मणो भरतश्चैव शत्रुघ्नश्च महामनाः ।
909 कौसल्या च सुमित्रा च सीता दशरथस्तथा ॥ २६ ॥
910
911 महामना अपरिच्छिन्नावस्तुनिवेशातथाविधचित्तः । चकाराः पूर्ववत् ॥ २६ ॥
912
913 कृतास्त्रश्चाऽविरोधश्च बोधपारमुपागताः ।
914 वसिष्ठो वामदेवश्च मन्त्रिणोऽष्टौ तथेतरे ॥ २७ ॥
915
916 कृतास्त्राविरोधौ रामसखायौ । बोधपारं चरमं बोधं यदुत्तरं
917 बोद्धव्यान्तरापरिशेषः ॥ २७ ॥
918
919 धृष्टिर्जयन्तो भासश्च सत्यो विजय एव च ।
920 विभीषणः सुषेणश्च हनुमानिन्द्रजित्तथा ॥ २८ ॥
921
922 सत्यो यथार्थवक्ता । इन्द्रजिदयमन्य एव सुग्रीवामात्य ॥ २८ ॥
923
924 एतेऽष्टौ मन्त्रिणः प्रोक्ताः समनीरागचेतसः ।
925 जीवन्मुक्ता महात्मानो यथाप्राप्तानुवर्तिनः ॥ २९ ॥
926
927 अन्तः समनीरागचेतसो बहिस्तु यथाप्रारब्धं राप्तमनुवर्तमानाः ॥ २९ ॥
928
929 एतैर्यथा हुतं दत्तं ह्रहीतमुषितं स्मृतम् ।
930 तथा चेद्वर्तसे पुत्र मुक्त एवासि संकटात् ॥ ३० ॥
931
932 हुतं दत्तमिति श्रौतस्मार्तकर्मोपलक्षणम् । स्मृतमित्युभयगोचरपूर्वा##-
933
934 अपारसंसारसमुद्रपाती [समुद्रमध्ये] लब्ध्वा परां
935 युक्तिमुदारसत्त्वः ।
936 न शोकमायाति न दैन्यमेति गतज्वरस्तिष्ठति नित्यतृप्तः ॥ ३१ ॥

युक्तिं तत्त्वनिश्चयादन्तः समरसत्वम् | उदारसत्त्वो दृढिकृतोत्कृष्ट
ज्ञानबलः | इष्टवियोगजं दुःखं शोकः दीनः कृपणस्तद्भावो दैन्यम्
तयोर्मूलमभिमानज्वरः स गतो यस्य | निरतिशयानन्दात्मना स्थितः
सानित्यतृपतः || ३१ ||

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे
सूत्रपातनको नाम द्वितीयः सर्गः || २ ||

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे सुत्रपातनको
नाम द्वीतियः सर्गः || २ ||

तृतीय सर्गः ३

भरद्वाज उवाच |

जीवन्मुक्तस्थितिं ब्रह्मन्कृत्वा राघवमादितः |
क्रमात्कथय मे नित्यं भविष्यामि सुखी यथा || १ ||

दृश्यसंमार्जनोपायो वासनाभेदलक्षणम् |
रामस्य तीर्थयात्रा च विस्तरेणात्र वर्ण्यते ||

यथा रामादयो जीवन्मुक्ता व्यवहृतवन्तस्तथा त्वं व्यवहरेत्युक्तो
जीवन्मुक्तस्थितिप्राप्त्युपायं रामस्य तत्प्राप्तिक्रमोपवर्नश्रवणद्वारैव
जिज्ञासमानो भरद्वाजः पृच्छति - जीवन्मुक्तेति | राघवमादितः कृत्वा
वर्ण्यत्वेन प्रधानीकृत्य जीवन्मुक्तस्थितिं कथयेति संबन्धः | अथवा
राघवं क्रमाज्जीवन्मुक्तस्थितिं जीवन्मुक्तावस्थं कृत्वा कल्पयित्वा मे
आदितः कथय | यथा येन क्रमेणाहं नित्यं सुखी भविष्यामीति संबन्धः |
अथवा राघवं संवादकथायामादितः प्रष्टृत्वेन वसिष्ठं च
वक्तृत्वेन कृत्वेत्यर्थः | तथाच जनकयाज्ञवल्क्यौ कल्पयित्वा यथा श्रुतिः
स्वयमेव संवादकथया तत्त्वं बोधयति तथा त्वमपि बोधयेत्यर्थः |
तथाचात्र तत्वज्ञत्वेन कल्पितानां दरशथादीनां पूर्वरामायणे
मूढचर्यामुक्त्यभावर्दशने नित्यमुक्तस्य च रामस्य तस्य ह न देवश्च
नाभूत्या ईशते इत्यादिश्रुतिविरुद्धशापनिमित्ताज्ञत्वा-दिवर्णने च न
क्षतिः अनादेर्जीवस्य ब्रह्माभेदबोधनाय श्रुतौ ब्रह्मण एव
कार्योपाधिप्रवेशेनागन्तुकजीवभावकल्पनवदविरोधोपपत्तेः || १ ||

श्रीवाल्मीकिरुवाच |

भ्रमस्य जागतस्यास्य जातस्याकाशवर्णवत् |
अपुनःस्मरणं मन्ये साधो विस्मरनं वरम् || २ ||

एवं वाल्मीकिः पृष्टो लक्षणस्वरूपसाधनफलैर्जीवन्मुक्तिस्थितिं विस्तरेण
विवक्षुः प्रथमं सुखप्रतिपत्तये संक्षिप्य मुक्तिलक्षणस्वरूपे दर्शयति
- भ्रमस्येति | हे साधो आकाशे नैल्यवदत्यन्तासंभावितस्य कल्पनया
जातस्य जागतस्य जगतः संबन्दिनोऽध्यासलक्षणस्य ब्रमस्य
तन्मूलाविद्यावास-नोच्चेदेनापुनःस्मरणं यथा भवति तथा
विस्मरणं यत्तदेव वरं सर्वोत्कृटं मुक्तिलक्षणं स्वरूपं च मन्ये |
प्रमानानुभवाभ्यां निश्चितवानस्मीत्यर्थः | यद्यपि परोक्षज्ञानिनोऽपि
सुषुप्तौ निर्विकल्प-समाधौ च दृश्यविस्मरणमस्ति तथापि
तनापुनःस्मरणम् | अथवा पुनः स्मर्यते येनान्तःकरणेन तत्पुनःस्मरणं
न विद्यते यस्मिंस्तत्तथा विस्मरणं स्मरनाभावं |

989 द्वैतप्रतिभासमात्राभावोपलक्षणमेतत् | अथवा विस्मरणमिव विस्मरणम् |
990 यथा विस्मृतविषयस्य सत्येवानुभवितर्य-प्रतीतिस्तथा सत्येव चैतन्ये
991 दृश्याप्रतीतिरित्यर्थः | तर्हि किं परमार्थ-सत्यस्यैव दृश्यस्य
992 सांख्याभिमतमुक्ताविवाप्रतीतिमात्रं तन्नेत्याह- भ्रमस्येति |
993 अधस्तसेत्यर्थः | कथं तस्य भ्रमत्वं संस्काराजन्यत्वादि##-
994 पूर्वपूर्वजगद्व्यवहारजन्यसंस्कारपरि-निष्ठितस्येत्यर्थः | ननु तर्हि
995 दोषजत्वाभावान्निरधिष्ठानत्वाच्च न भ्रमत्वमित्याशङ्क्याह -
996 आकाशवर्णवज्जातस्येति | यथा दूरत्वाविमर्श##-
997 जगद्भ्रमैत्यर्थः | तथा चान्त्यन्तिकदृश्योच्छेदस्तल्लक्षणं
998 तदुपलक्षितचिन्मात्रावस्थितः स्वरूपमित्यर्थः || २ ||
999
1000 दृश्यात्यन्ताभावबोधं विना तन्नानुभूयते |
1001 कदाचित्केनचिन्नाम स्वबोधोऽन्विष्यतामतः || ३ ||
1002
1003 मन्ये इत्यनेन तयोः स्वानुभवसिद्धत्वं दर्शितम् | तर्ह्यस्माभिस्तत्कुतो
1004 नानुभूयते तत्राह - दृश्येति | दृश्यस्यात्यन्ताभावबोधो बाधस्त्वं
1005 विना | तत् उक्तं लक्षणं स्वरूपं च | अननुभवस्य कालतो देशतश्च
1006 व्यापकत्व-प्रदर्शनाय कदाचित्केनचिदिति | दृश्यबाधस्तर्हि केन हेतुना
1007 तमाह - स्वबोध इति |
1008 सर्वजगदधिष्टानप्रत्यगभिन्नात्मतत्त्वसाक्षात्कारादेव स इत्यतस्तत्सा##-
1009
1010 स चेह संभवत्येव तदर्थ मिदमाततम् |
1011 शास्त्रमाकर्णयसि चेत्तत्त्वमाप्स्यसि नान्यथा || ४ ||
1012
1013 तर्हि तस्य क उपायस्तत्राह - स चेति | इहास्मिनञ्चशास्त्रे अधिगते सतीति शेषः
1014 | आकर्षनयसि चेत् | यावत्तत्त्वनिर्णयमिति शेषः || ४ ||
1015
1016 जगद्भ्रमोऽयं दृश्योऽपि नास्त्येवेत्यनुभूयते |
1017 वर्णो व्योम्न इवाखेदाद्विचारेणामुनाऽनघ || ५ ||
1018
1019 उक्तमर्थमेव स्फुटतरमाह - जगदिति द्वाभ्याम् | अमुना
1020 एतद्ग्रन्थोपदर्शितेन || ५ ||
1021
1022 दृश्यं नास्तीति बोधेन मनसो दृश्यमार्जनम् |
1023 संपन्नं चेत्तदुत्पन्ना परा निर्वाणनिर्वृतिः || ६ ||
1024
1025 अनुभूयत इत्युक्तोऽनुभवः किमात्मचैतनमेवोतान्यः | न तावदन्यः |
1026 चिद्व्यतिरिक्तस्य जडतया विषयतया चानुभवत्वायोगात् | आत्मैव चेत्स
1027 पूर्वमेवास्तीति किं शास्त्रेणेत्याशङ्क्याह - दृश्यमिति |
1028 सत्यमात्मैवानु-भवस्तथाप्यसौ दृश्यसहकृतो न तदनुभवः
1029 किंतु मनसो वृत्तिरूपेणात्म##-
1030 दृश्यं कालत्रयेऽपि नास्तीत्येवंरूपं संपन्नं चेन्नित्यसिद्धात्मरूपापि
1031 परा निव्राणनिर्वृतिस्तस्मात्तत्त्वज्ञानादुत्पन्नेव भवतीति केवलस्तद्वारा
1032 स्वरूप-भूतोऽप्यनुभवः शास्त्रफलमित्यर्थः || ६ ||
1033
1034 अन्यथा शास्त्रगर्तेषु लुठतां भवतामिह |
1035 भवत्यकृत्रिमाज्ञानां कल्पैरपि न निर्वृतिः || ७ ||
1036
1037 ननु शास्त्रान्तरोपदर्शितोपायैरेव मुक्तिः किं न स्यात्तत्राह - अन्यथेति |
1038 उक्तोपायापरिग्रहे अकृतिमा अजन्या अनादिरज्ञा अज्ञानं येषां अनात्म##-
1039 पुनःपुनरिह संसारे भवतां जन्म गृह्णतां पुरुषापसदानामन्तैर्##-
1040 ज्ञानातिरिक्त-साधनसहस्रैरप्यनिवृत्तेरिति भावः || ७ ||

अशेषेण परित्यागो वासनानां य उत्तमः |
मोक्ष इत्युच्यते ब्रह्मन्स एव विमलक्रमः || ८ ||

ननु उपासनाद्युपायान्तरसाध्याः सालोक्यादयोऽन्येऽपि मोक्षाः प्रसिद्धा##-
जन्मबीजानाम-शेषेण यः परित्यागो मूलोच्छेदेनात्यन्तोछेदह् स मुख्यो
मोक्षः | मुचधातोर्बन्धनिवृत्तौ रूढत्वासनानामेव
मुख्यबन्धत्वात्सालोक्यादौ तदभावान्मोक्षशब्दो गौण इति स मुख्य एव
विमलैर्विगताविद्यादिमलैह् क्रम्यते नान्यैः | कर्मभिरुपासनैः
श्रवणादिभिश्च दिनेदिने चित्तवैमल्य-मेव सर्ववासनाक्षयान्तं
साधनक्रमो यस्य तथाविध इति वार्थः || ८ ||

क्षीणायां वासनायां तु चेतो गलति सत्वरम् |
क्षीणायां शीतसंतत्यां ब्रह्मन्हिमकणो यथा || ९ ||

ननु वासनापगमेऽपि तद्धेतोर्मनसः सत्त्वात्पुनर्वासना उत्पत्स्यन्ते ततो
बन्धोऽपि स्यादित्याशङ्क्याह - क्षीणायामिति | मनसो
वासनापुञ्जरूपत्वा-दित्यार्थः || ९ ||

अयं वासनया देहो ध्रियते भूतपञ्जरः |
तनुनान्तर्निविष्टेन मुक्तौघस्तन्तुना यथा || १० ||

मनसि नष्टेऽपि स्थूलदेह एव बन्धः स्थास्यतीत्याशङ्क्याह - अयमिति |
भूतपञ्जरो भूतसमुदायारब्धः भूतानां प्राणिपक्षिणां
पञ्चरस्थानीयो वा | तथाच वासनाक्षये [सर्ववासनाक्षये] सोऽपि
निवर्तत इत्यर्थः || १० ||

वासना द्विविधा प्रोक्ता शुद्धा च मलिना तथा |
मलिना जन्मनो हेतुः शुद्धा जन्मविनाशिनी || ११ ||

एवमुपोद्धातेन परां मुक्तिमुपवर्ण्य प्रस्तुतां जीवन्मुक्तिं
विवक्षुस्तदर्थं वासनाद्वैविध्यमाह - वासनेति || ११ ||

अज्ञानसुघनाकारा घनाहंकारशालिनी |
पुनर्जन्मकरी प्रोक्ता मलिना वासना बुधैः || १२ ||

तत्र मलिनां लक्षयति - अज्ञानेति | वसनाबीजानां प्ररोहे अज्ञानं
सुक्षेत्रं तस्मिन्सुघनाकारा विषयानुसंधानाभ्यासोपचिताकारा वासना
बीजम् | रागद्वेषादिभुरुपचितत्वात् घनो निबिडोऽहंकार उपसेचकः क्षेत्रिकस्तेन
हि सा वर्थ्यमाना संतन्यमाना च शालते शोभते || १२ ||

पुनर्जन्माङ्कुरं त्यक्त्वास्थिता संभृस्टबीजवत् |
देहार्थं ध्रियते [म्रियते] ज्ञातज्ञेया शुद्धेति चोच्यते || १३ ||

शुद्धां [शुद्धां तां लक्षयति] लक्षयति - पुनरिति | यथा
बीजान्तः सूक्ष्माअङ्कुराः सन्त एव कालजलादिसंबन्धादाविर्भवन्ति तथा
वासनान्तर्भाविजन्मपरम्पराः सत्य एव
कामकर्मादिनिमित्तवशादाविर्भवन्ति | अत्यन्तासतो जन्मायोगात्तत्र
तत्त्वज्ञानेनाविद्याक्षेत्रदाहेनान्तर्गतजन्माङ्कुरनाशेऽपि स्वपरप्रा##-
शिष्यते सा शुद्धेत्यर्थः || १३ ||

अपुनर्जन्मकरणी जीवन्मुक्तेषु देहिषु |

1093 वासना विद्यते शुद्धा देहे चक्र इव भ्रमः ॥ १४ ॥
1094
1095 उक्तमेवार्थं स्फुटयति - अनुपनरिति । देहिष्विति । देहधारणकार्येण
1096 तेष्वपि वासनासद्भावोऽनुमीयत इति भावः ॥ १४ ॥
1097
1098 ये शुद्धवासना भूयो न जन्मानर्थभाजनम् ।
1099 ज्ञातज्ञेयास्त उच्यन्ते जीवन्मुक्ता महाधियः ॥ १५ ॥
1100
1101 फलेन सह प्रस्तुतां जीवन्मुक्तिमाश्रयेण लक्षयति - य इति । तथा च
1102 तत्त्वज्ञानप्लुष्टजन्माङ्कुरशक्तिकवासनामात्रदृतशरीरत्वं
1103 [शक्तिकत्वाद्वासना] जीवन्मुक्तलक्षणं फलितम् ॥ १५ ॥
1104
1105 जीवन्मुक्तिपदं [मुक्तिपद] प्राप्तो यथा रामो महामतिः ।
1106 तत्तेऽहं शृणु वक्ष्यामि जरामरणशान्तये ॥ १६ ॥
1107
1108 तत्साधननिरूपणं प्रतिजानीते - जीवन्मुक्तीति । तथाविधं जीवन्मुक्तिपदं
1109 रामो यथा येन साधनक्रमेण प्राप्तस्तद्वक्ष्यामि । जरामरणोपलक्षित##-
1110
1111 भरद्वाज महाबुद्धे रामक्रममिमं शुभम् ।
1112 शृणु वक्ष्यामि तेनैव सर्वं ज्ञास्यसि सर्वदा ॥ १७ ॥
1113
1114 उक्तार्थमेव स्फुटयन्फलान्तरमाह - भरद्वाजेति । एकविज्ञानेन
1115 सर्वविज्ञनमपि तत्फलमित्यर्थः ॥ १७ ॥
1116
1117 विद्यागृहाद्विनिष्क्रम्य रामो राजीवलोचनः ।
1118 दिवसाननयद्गेहे लीलाभिरकुतोभयः ॥ १८ ॥
1119
1120 विद्यागृहाद्ब्रह्मचर्याश्रमोचितगुरुकुलवासाद्विनिष्क्रम्येत्यर्थात्सर्व##-
1121 । ।
1122
1123 अथ गच्छति काले तु पालयत्यवनिं नृपे ।
1124 प्रजासु वीतशोकासु स्थितासु विगतज्वरम् ॥ १९ ॥
1125
1126 विगतज्वरमिति सौराज्यात्प्रजानां ज्वरादिपीडापि नास्ति किं वाचमन्याः पीडा न
1127 सन्तीति द्योतनार्थम् ॥ १९ ॥
1128
1129 तीर्थपुण्याश्रमश्रेणीर्द्रष्टुमुत्कण्ठितं मनः ।
1130 रामस्याभूद्भृशं तत्र कदाचिद्गुणशालिनः ॥ २० ॥
1131
1132 रामस्य मनस्तीर्थपुण्याश्रमश्रेणीर्द्रष्टुमुत्कण्ठितमभूदिति संबन्धः
1133 । पूर्वशोकस्थसप्तम्यन्तानामप्यत्रैवान्वयः ॥ २० ॥
1134
1135 राघवश्चिन्तयित्वैवमुपेत्य चरणौ पितुः ।
1136 हंसः पद्मानिव नवौ जग्राह नखकेसरौ ॥ २१ ॥
1137
1138 नन्वध्यात्मशास्त्रेऽस्मिंस्तीर्थयात्रोपवर्णनस्य वक्ष्यमाणमृगयोप##-
1139 रामजन्मादेरप्यत्रैव वर्णनीयत्वापत्तेः पूर्वरामायणवैयर्थ्याच्चेति
1140 चेदत्रोच्यते । कथोपायान्विचार्येत्यत्र स्वस्ववर्णोचितयज्ञादिकर्मजन्या
1141 चित्तशुद्धिर्ब्रह्मविद्याधिकारे उपयुज्यत इत्युक्तम् । यस्तु वयोविद्याद्यस।पत्त्या
1142 यज्ञाद्यनुष्ठातुमक्षमस्तस्य तीर्थयात्रादिनापि यज्ञादिफलचित्त##-
1143 यज्ञास्तीर्थरूपेण निर्मिताः इति वचनादिति सूचनाय तीर्थयात्रोपवर्णनम् ।
1144 अतएव हि न रामं वृद्धवयस्कं परिकल्प्यात्मजिज्ञासोपवर्णं

1145 कृतमुक्तार्थसूचनाना-पत्तेः | मृगयोपवर्णं तु
1146 दृष्टकौतुकदर्शनोत्कण्ठाया अप्यात्मजिज्ञासा-प्रतिबन्धकत्वात् यदि
1147 तत्कुतुकानुभवमन्तरेण सोत्कण्ठा नापैति तर्हि तदनुभूयैव वा
1148 तदसारतानिश्चयेन तदुत्कण्ढामपोह्य निष्प्रत्यहं श्रवणादिप्रतिष्ठो
1149 भवेदिति विशेषबोधनार्थमिति सर्वं समञ्जसम् | राघव एवमुक्तमर्थं
1150 चिन्तयित्वा पितुश्चरणौ जग्राह | जीवत्पितृकस्य पितृसंनिधौ
1151 पित्राज्ञापूर्वमेव धर्माधिकारादिति भावः || २१ ||
1152
1153 श्रीरम उवाच |
1154
1155 तीर्थानि देवसद्मानि वनान्यायतनानि च |
1156 द्रष्टुमुत्कण्ठितं तात ममेदं नाथ मानसम् || २२ ||
1157
1158 नाथेति स्वस्य पारतन्त्र्यसूचनार्थम् || २२ ||
1159
1160 तदेतामर्थितां पूर्वां सफलां कर्तुमर्हसि |
1161 न सोऽस्ति भुवने नाथ त्वया योऽर्थी न मानितः || २३ ||
1162
1163 पूर्वां प्राथमिकीम् | न मानितः अभिलषितार्थसंपादनेन न संतोषितः || २३ ||
1164
1165 इति संप्रार्थितो राजा वसिष्ठेन समं तदा |
1166 विचार्यामुञ्चदेवैनं रामं प्रथममर्थिनम् || २४ ||
1167
1168 अमुञ्चदेव न पुत्रविश्लेषदुःखान्नानुमेने || २४ ||
1169
1170 शुभे नक्षत्रदिवसे भ्रातृभ्यां सह राघवः |
1171 मङ्गलालंकृतवपुः कृतस्वस्त्ययनो द्विजैः || २५ ||
1172
1173 वसिष्ठप्रहितैर्विप्रैः शास्त्रज्ञैश्च समन्वितः |
1174 स्निग्धैः कतिअयैरेव राजपुत्रवरैः सह || २६ ||
1175
1176 अम्बाभिर्विहिताशीर्भिरालिङ्ग्यालिङ्ग्य भूषितः |
1177 निरगात्स्वगृहात्तस्मात्तीर्थयात्रार्थमुद्यतः || २७ ||
1178
1179 निर्गतः स्वपुरात्पौरैस्तूर्यघोषेण वादितः |
1180 पीयमानः पुरस्त्रीणां नेत्रैर्भृङ्गौघभङ्गुरैः || २८ ||
1181
1182 भृङ्गौघ्भङ्गुरैर्भ्रमरसमूहवच्चञ्चलैः | अर्थात्कुसुमेष्विति गम्यते
1183 || २८ ||
1184
1185 ग्रामीणललनालोलहस्तपद्मापनोदितैः |
1186 जालवर्षैर्विकीर्णात्मा हिमैरिव हिमाचलः || २९ ||
1187
1188 अपनोदितैः प्रेरितैः || २९ ||
1189
1190 आवर्जयन्विप्रगणान्परिशृण्वन्प्रजाशिषः |
1191 आलोकयन्दिगतांश परिचक्राम जाङ्गलान् || ३० ||
1192
1193 आवर्जयन्दानमानादिना वशीकुर्वन् | जाङ्गलान्येव जाङ्गलान् जीर्णारण्यानि ||
1194 ३० ||
1195
1196 अथारभ्य स्वकात्तस्माद्ग्रामात्कोशमण्डलात् |

1197 स्नानदानतपोध्यानपूर्वकं स ददर्श ह ॥ ३१ ॥
1198
1199 ददर्शेत्यस्य पावनानाश्रमाञ्छुभानित्यन्ते सर्वत्र संबन्धः ॥ ३१ ॥
1200
1201 नदीतीराणि पुण्यानि वनान्यायतनानि च ।
1202 जङ्गलानि जनान्तेषु तटान्यब्धिमहीभृताम् ॥ ३२ ॥
1203
1204 आयतनानि देवमुन्यायतनानि । जनान्तेषु लक्षणया जनपदान्तेषु ॥ ३२ ॥
1205
1206 मन्दाकिनीमिन्दुनिभां कालिन्दीं चोत्पलामलाम् ।
1207 सरस्वतीं शतद्रूं च चन्द्रभागामिर्वावतीम् ॥ ३३ ॥
1208
1209 वेणीं च कृष्णवेणीं च निर्विन्ध्यां सरयूं तथा ।
1210 चर्मण्वतीं वितस्तां च विपाशां बाहुदामपि ॥ ३४ ॥
1211
1212 वेणीं केवलाम् । कृष्णवेणीं कृष्णया संभिन्नां ताम् ॥ ३४ ॥
1213
1214 प्रयागं नैमिषं चैव धर्मारण्यं गयां तथा ।
1215 वाराणसीं श्रीगिरिं च केदारं पुष्करं तथा ॥ ३५ ॥
1216
1217 श्रीगिरिं श्रीशैलम् ॥ ३५ ॥
1218
1219 मानसं च क्रमसरस्तथैवोत्तरमानसम् ।
1220 वडवावदनं चैव तीर्थवृन्दं स सादरम् ॥ ३६ ॥
1221
1222 क्रमप्राप्तं सरं । वडवावदनं हयग्रीवतीर्थं ॥ ३६ ॥
1223
1224 अग्नितीर्थं महातीर्थमिन्द्रद्युम्नसरस्तथा ।
1225 सरांसि सरितश्चैव तथा नदह्रदावलीम् ॥ ३७ ॥
1226
1227 महातीर्थमितीन्द्रद्युम्नसरोविशेषणम् ॥ ३७ ॥
1228
1229 स्वामिनं कार्तिकेयं च शालग्रामं हरिं तथ ।
1230 स्थानानि च चतुःषष्टिं हरेरथ हरस्य च ॥ ३८ ॥
1231
1232 नानाश्चर्यविचित्राणि चतुरब्धितटानि च ।
1233 विन्ध्यमन्दरकुञ्जांश्च कुलशैलस्थलानि च ॥ ३९ ॥
1234
1235 कुञ्जा&ल्लतागृहान् । कुलशैला हिमवदादयः ॥ ३९ ॥
1236
1237 राजर्षिणां च महतां ब्रह्मर्षिणां तथैव च ।
1238 देवानां ब्राह्मणानां च पावनानाश्रमाञ्छुभान् ॥ ४० ॥
1239
1240 चकारोऽनुक्ततत्तत्स्थानसमुच्चयार्थः ॥ ४० ॥
1241
1242 भूयोभूयः स बभ्राम भ्रातृभ्यां सह मानदः ।
1243 चतुर्ष्वपि दिगन्तेषु सर्वानेव महीतटान् ॥ ४१ ॥
1244
1245 भूयोभूय इति पूर्वदृष्टानामपि परावृत्तौ संनिहितानां
1246 कौतुकान्महिमातिशयप्रकटनाय वा भूयो गमनम् ॥ ४१ ॥
1247
1248 अमरकिन्नरमानवमानितः समवलोक्य महीमखिलामिमाम् ।

उपययौ स्वगृहं रघुनन्दनो विहृतदिक् शिवलोकमिवेश्वरः ॥ ४२ ॥

तत्रतत्र संनिहितैरमरादिभिर्मानितः पूजितो रथुनन्दनोऽखिलां
जम्बूद्वीपात्मिकां महीं सम्यगवलोक्य स्वगृहमयोध्यामुपययाविति
संबन्धः । ईश्वरः शिवः ॥ ४२ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे
तीर्थयात्राकरणं नाम तृतीयः सर्गः ॥ ३ ॥

इति श्रीवासिड्ठमारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे
तीर्थयात्राकरणं नाम तृतीयः सर्गः ॥ ३ ॥

चतुर्थः सर्गः ४

श्रीवाल्मीकिरुवाच ।

रामः पुष्पाञ्जलिव्रातैर्विकीर्णः पुरवासिभिः ।
प्रविवेश गृहं श्रीमाञ्जयन्तो विष्टपं यथा ॥ १ ॥

तीर्थयात्रागतस्यात्र सुहृदानन्दनं गृहे ।
रामस्याखेटकचर्यादिव्यवहारश्च वर्ण्यते ॥

राम इति । व्रातैः समूहैर्मङ्गलाचारार्थं विकीर्णः । विष्टपं त्रिविष्टपम् ।
नामैकदेशे नामग्रहणात् ॥ १ ॥

प्रणनामाथ पितरं वसिष्ठं भ्रातृबान्धवान् ।
ब्राह्मणान्कुलवृद्धांश्च राघवः प्रथमागतः ॥ २ ॥

प्रथामगतः प्रथमप्रवासदागतः ॥ ५ ॥

सुहृद्भिर्भ्रातृभिश्चैव [र्मातृभिश्चैव] पित्रा द्विजगणेन
च ।
मुहुरालिङ्गिताचारो राघवो न ममौ मुदा ॥ ३ ॥

मुहुः आलिङ्गितस्य तेषु समुचितमभिवादप्रियाभिलापाद्याचरणं यस्य स
तथोक्तः । न ममौ स्वदेह इति शेषः । हर्षेणोत्फुल्ल इति भावः ॥ ३ ॥

तस्मिन्गृहे दाशरथेः प्रियप्रकथनैर्मिथः ।
जुघूर्णुर्मधुरैराशा मृदुवंशस्वनैरिव ॥ ४ ॥

तस्मिन् दशरथगृहे । दशरथेः रामस्य । प्रियकथनैः प्रियवाक्यैः ।
आनन्दिता जना इति शेषः । मिथोऽन्योन्यं दिशो जुघूर्णुर्बभ्रमुर्दिशिदिशि
भ्रान्तवन्तः । हर्षकृतव्यामोहाद्दिग्भ्रमं प्रापुरिति वार्थः ।
दृष्टान्तेऽप्येवम् । अथवा दिक्शब्देन तत्रस्था जना लक्ष्यन्ते । दाशरथेः
प्रियकथाभिरुपकषिता मिथः समवेता उत्सवविशेषे मृदुवंशस्वनैः
क्रीडन्त इव बभ्रमुरित्यर्थः ॥ ४ ॥

बभूवाथ दिनान्यष्टौ रामागमन उत्सवः ।
सुखं मत्तजनोन्मुक्तकलकोलाहलाकुलः ॥ ५ ॥

मत्तैर्हृष्टैर्जनैरुत्कृष्टतया मुक्तः कलो गम्भीरो यः कोलाहलस्तेन आकुलो
व्याप्तः ॥ ५ ॥

उवास स सुखं गेहे ततः प्रभृति राघवः।
वर्णयन्विविधाकारान्देशाचारानितस्ततः॥ ६॥

सुमुखवासेत्यन्वयः॥ ६॥

प्रातरुत्थाय रामोऽसौ कृत्वा संध्यां यथाविधि।
सभासंस्थं ददर्शेन्द्रसमं स्वपितरं तथा॥ ७॥

प्रातरित्यादि वीप्साभिप्रायम्। तथेति पूर्वश्लोकोक्तसमुच्चयार्थम्॥ ७॥

कथाभिः सुविचित्राभिः स वसिष्ठादिभिः सह।
स्थित्वा दिनचतुर्भागं ज्ञानगर्भाभिरादृतः॥ ८॥

स रामो वसिष्ठादिभिः सह स्थित्वा अनुरूपाभिः कथाभिरादृतः सन्
दिनचतुर्भागम्। अत्यन्तसंयोगे द्वितीया। दिनस्य चतुर्थभागे इत्यर्थः।
आखेटकेच्छया वनं जगामेत्युत्तरेणान्वयः॥ ८॥

जगाम पित्रानुज्ञातो महत्या सेनया वृतः।
वराजमहिषाकीर्णं वनमाखेतकेच्छया॥ ९॥

आखेटकं मृगया॥ ९॥

तत आगतुअ सदने कृत्वा स्नानादिकं क्रमम्।
समित्रबान्धवो भुक्त्वा निनाय ससुहृन्निशाम्॥ १०॥

एवंप्रायदिनाचारो भ्रातृभ्यां सह राघवः।
आगत्य तीर्थयात्रायाः समुवास पितुर्गृहे॥ ११॥

मृगयादीनामनित्यत्वद्योतनाय प्रायेति। भ्रातृभ्यां
लक्ष्मणशत्रुघ्नाभ्याम्॥ ११॥

नृपतिसंव्यवहारमनोज्ञया सुजनचेतसि चन्द्रिकयानया।
परिनिनाय दिनानि स चेष्टया स्तुतसुधारसपेशलयाऽनघ॥ १२॥

हे अनघेति राज्ञो भरद्वाजस्य वा संबोधनम्। स रामो नृपतीनां राज्ञां
समुचितेन व्यवहारेण मनोज्ञया मनोहरया सुजनानां चेतसि
चन्द्रिकावदाह्लादिकया अतएव स्तुता प्रशस्ता सुधारसवत्पेशला चतुरा च या
तथाविधया। स्नुतेति स्नुतेति वा पाठे क्षरिता या सुधा तद्वद्रसेन माधुर्येण
पेशलयाऽनया पूर्वोक्तया चेष्टया दिनानि परिनिनायाति-वाहयामास॥ १२॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे
दिवसव्यवहारनिरूपणं नाम चतुर्थः सर्गः॥ ४॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे
दिवसव्यवहारनिरूपणं नाम् चतुर्थः सर्गः॥ ४॥

पञ्चमः सर्गः ५

वाल्मीकिरुवाच।

अथोनषोडशे वर्षे वर्तमाने रघूद्वहे।

1353 रामानुयायिनि तथा शत्रुघ्ने लक्ष्मणेऽपि च ॥ १ ॥
1354
1355 रामस्य काये कार्श्यादि निर्वेदादिह [दादीह] वर्ण्यते ।
1356 राज्ञस्तद्धेतुजिज्ञासा [जिज्ञासोर्वसिष्ठोक्तेः] वसिष्ठोक्तेरुपक्रमः ॥
1357
1358 इत्थं श्रीरामस्य चित्तशुद्ध्युपायानुष्ठानचर्यामुपवर्ण्य तत्फल
1359 वैराग्यादिसाधनसंपत्तिं विवक्षुरुपक्रमते - अथेति । ऊने चतुर्थांशेन
1360 षोडशे वर्षे वर्तमाने रामः कार्श्यं जगामेति चतुर्थेन संबन्धः ।
1361 रघूद्वहे इति व्यवहितस्य राज्ञः संनिहितस्य शत्रुघ्नस्य लक्ष्मणस्य वा
1362 विशेषणं नतु रामपरामर्शि । रामः कार्श्यं जगामेत्यनेनानन्वया##-
1363 भावान्तरालक्षकत्वे भावलक्षणसप्तम्यनुपपत्तेः ॥ १ ॥
1364
1365 भरते संस्थिते नित्यं मातामहगृहे सुखम् ।
1366 पालयत्यवनिं राज्ञि यथावदखिलामिमाम् ॥ २ ॥
1367
1368 भरति इति । इत एव पूर्वरामायणानुक्तमपि विना शत्रुघ्नं भरतस्य
1369 मातामहगृहगमनं विवाहात्प्रागागमनं च कल्प्यते । नित्यमित्यनेनापि
1370 पूर्वमपि बहुवारं तत्र भरतगमनमवथानं चासीदिति गम्यते ॥ २ ॥
1371
1372 जन्यत्रार्थं च पुत्राणां प्रत्यहं सह मन्त्रिभिः ।
1373 कृतमन्त्रे महाप्राज्ञे तज्ज्ञे दशरथे नृपे ॥ ३ ॥
1374
1375 जर्नी वधुं वहन्तीति जन्यास्तांश्रायते वस्त्रालंकारादिभिरिति जन्यत्रो
1376 विवाहस्तदर्थम् ॥ ३ ॥
1377
1378 कृतायां तीर्थयात्रायां रामो निजगृहे स्थितः ।
1379 जगामानुदिनं कार्श्यं शरदीवामलं सरः ॥ ४ ॥
1380
1381 कार्श्यादीनि निर्वेदचिन्तादुःखलिङ्गानि वर्ण्यन्ते ॥ ४ ॥
1382
1383 कुमारस्य विशालाक्षं पाण्डुतां मुखमाददे ।
1384 पापफूल्लदलं शुक्लं सालिमालमिवाम्बुजम् ॥ ५ ॥
1385
1386 विशालाक्षत्वविशिष्टस्योपमानाय सालिमालमिति ॥ ५ ॥
1387
1388 कपोलतलसंलीनपाणिः पद्मासनस्थितः ।
1389 चिन्तापरवशस्तूष्णीमव्यापारो बभूव ह ॥ ६ ॥
1390
1391 अव्यापारो निश्चेष्टः ॥ ६ ॥
1392
1393 कृशाङ्गश्चिन्तया युक्तः खेदी परमदुर्मनाः ।
1394 नोवाच कस्यचित्किंचिल्लिपिकर्मार्पितोपमः ॥ ७ ॥
1395
1396 लिपिकर्मार्पितश्चित्रलिखित उपमा यस्य ॥ ७ ॥
1397
1398 खेदात्परिजनेनासौ प्रार्थ्यमानः पुनः पुनः ।
1399 चकाराह्निकमाचारं परिम्लानमुखाम्बुजः ॥ ८ ॥
1400
1401 आह्निक। महन्यवश्यकर्तव्यम् ॥ ८ ॥
1402
1403 एवंगुणविशिष्टं तं रामं गुणगणाकरम् ।
1404 आलोक्य भ्रातरावस्य तामेवाययतुर्दशाम् [तामेवावापतुः] ॥ ९ ॥

1405
1406 गुणगणाकरं तं रामदेवं पूर्वोक्तचिन्तादिभिर्गुणैर्विशेषनैर्विशिष्ट##-
1407
1408 तथा तेषु तनूजेषु खेदवत्सु कृशेषु च ।
1409 सपत्नीको महीपालश्चिन्ताविवशतां ययौ ॥ १० ॥
1410
1411 का ते पुत्र घना चिन्तेत्येवं रामं पुनः पुनः ।
1412 अपृच्छत्स्निग्धया वाचा नैवाकथयदस्य सः ॥ ११ ॥
1413
1414 नाकथयदेव । कथनप्रयोजनासिद्धिनिश्चयादिति भावः ॥ ११ ॥
1415
1416 न किंचित्तात मे दुःखमित्युक्त्वा पितुरङ्कगः ।
1417 रामो राजीवपत्राक्षस्तूष्णीमेव स्म तिष्ठति ॥ १२ ॥
1418
1419 न [नेति क्वचिन्न लभ्यते] दुःखं त्वया परिहर्तुं शक्यमित्याशय इति
1420 नानृतवादिता । तिष्ठति स्म तस्थौ । स्मयोगाल्लिड्विषये लट् ॥ १२ ॥
1421
1422 ततो दशरथो राजा रामः किं खेदवानिति ।
1423 अपृच्छत्सर्वकार्यज्ञं वसिष्ठं वदतां वरम् ॥ १३ ॥
1424
1425 किंनिमित्तमिति शेषः ॥ १३ ॥
1426
1427 इत्युक्तश्चिन्तयित्वा स वसिष्ठमुनिना नृपः ।
1428 अस्त्यत्र कारणं श्रीमन्मा राजन्दुःखमस्तु ते ॥ १४ ॥
1429
1430 इति पृष्टेन वसिष्ठमुनिना स नृप इति एवं प्रकारेण उक्तः । तदेवाह -
1431 अस्त्यत्रेत्यादिनार्धेनोत्तरश्लोकसहितेन । रामचिन्तायाः शुभोदर्कत्व##-
1432
1433 कोपं विषादकलनां विततं च हर्षं
1434 नाल्पेन कारणवशेन वहन्ति सन्तः ।
1435 सर्गेण संहृतिजवेन विना जगत्यां
1436 भूतानि भूप न महान्ति विकारवन्ति ॥ १५ ॥
1437
1438 सन्तः अल्पेन कारणवशेन कोपं विषादकलनां च न वहन्ति । यथा महान्ति
1439 भूतानि पृथिव्यादीनि सर्गेण सृष्टिफलवशेन संहारवेगेन च विना न
1440 विकारवन्ति नोपचयापक्षयविकारं भजन्ते ॥ १५ ॥
1441
1442 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे
1443 कार्श्यनिवेदनं नाम पञ्चमः सर्गः ॥ ५ ॥
1444
1445 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे
1446 कार्श्यनिवेदनं नाम् पञ्चमः सर्गः ॥ ५ ॥
1447
1448 षष्ठः सर्गः ६
1449
1450 वाल्मीकिरुवाच ।
1451
1452 इत्युक्ते मुनिनाथेन संदेहवति पार्थिवे ।
1453 खेदवत्यास्थिते मौनं किंचित्कालप्रतीक्षणे ॥ १ ॥
1454
1455 विश्वामित्रागमो राज्ञा विधिवत्पूजनं मुनेः ।
1456 राज्ञः प्रहर्षात्कार्यस्य प्रतिज्ञा चात्र वर्ण्यते ॥

मुनिनाथेन वसिष्ःएन | इति उक्तप्रकारेण | सामान्याकारेणेत्यर्थः | अतएव
पार्थिवे विशेषेण संदेहवति सति [सतीति क्वचिन्न लभ्यते] निर्णयाय
कश्चित्कालो यस्य तत्किंचित्कालं प्रतीक्षणं यस्य तथाभूते सति || १ ||

परिखिन्नासु सर्वासु राज्ञीषु नृपसद्मसु |
स्थितासु सावधानासु रामचेष्टासु सर्वतः || २ ||

राज्ञीषु नृपसद्मसु स्थितास्विति संबन्धः | राज्ञीभेदात्सद्मभेदः
प्रसिद्ध इति बहुवचनम् | चेष्टाविशेषलिङ्गैर्निर्वेदकारणपरिज्ञानाय
सावधानासु || २ ||

एतस्मिन्नेव काले तु विश्वामित्र इति श्रुतः |
महर्षिरभ्यगाद्द्रष्टुं तमयोध्यानराधिपम् || ३ ||

एतस्मिन्निति | यद्यपि भावलक्षणसप्तमीभिरेव कालविशेषो लभ्यते तथापि
लोकद्दष्ट्या अनवसरे विश्वामित्रागमनमिति सूचनाय विशिष्य काले
इत्युपादानम् | श्रुतो विश्रुतः || ३ ||

तस्य यज्ञोऽथ रक्षोभिस्तथा विलुलुपे किल |
मायावीर्यबलोन्मत्तैर्धर्मकार्यस्य धीमतः || ४ ||

धर्म एव कार्योऽवश्यकर्तव्यो यस्य तथाभूतस्य यज्ञस्तथा विलुलुपे यथा स
तं नराधिपमभ्यगादिति पूर्वेण पार्थिवं द्रष्टुमैच्छदित्युत्तरेण वा
संबन्धः || ४ ||

रक्षार्थं तस्य यज्ञस्य द्रष्टुमैच्छत्स पार्थिवम् |
नहि शक्नोत्यविघ्नेन समाप्तुं स मुनिः क्रतुम् || ५ ||

समाप्तुं समापयितुं सम्यगासमाप्तेः प्राप्तुं वा || ५ ||

ततस्तेस्।आं विनाशार्थमुद्यतस्तपसां निधिः |
विश्वामित्रो महातेजा अयोध्यामभ्यगात्पुरीम् || ६ ||

उद्यत उद्युक्तः || ६ ||

स राज्ञो दर्शनाकाङ्क्षी द्वाराध्यक्षानुवाच ह |
शीघ्रमाख्यात मां प्राप्तं कौशिकं गाधिनः सुतम् || ७ ||

आख्यात | राज्ञे इति शेषः || ७ ||

तस्य तद्वचनं श्रुत्वा द्वास्था राजगृहं ययुः |
संभ्रान्तमनसः सर्वे तेन वाक्येन चोदिताः || ८ ||

विलम्बे शापभयात्संभ्रान्तमनसः || ८ ||

ते गत्वा राजसदनं विश्वामित्रमृषिं ततः |
प्राप्तमावेदयामासुः प्रतीहाराः पतेस्तदा || ९ ||

सीदति निषीदत्यस्मिन्निति सदनं सभास्थानम् | प्रतीहारा द्वारपालाः |
पतेर्बहिर्द्वास्थस्य स्वस्वामिनः सभाद्वास्थस्य वा याष्टीकस्य | गतिबुध्दि ##-

1509 अथास्थानगतं भूपं राजमण्डलमालिनम् ।
1510 समुपेत्य त्वरायुक्तो याष्टीकोऽसौ व्यजिज्ञपत् ॥ १० ॥
1511
1512 असौ द्वास्थैर्निवेदितार्थो याष्टीको यष्टिप्रहरणः । शक्तियष्ट्योरीकक् ॥ १० ॥
1513
1514 देव द्वारि महातेजा बालभास्करभासुरः ।
1515 ज्वालारुणजटाजुटः पुमाञ्छ्रीमानवस्थितः ॥ ११ ॥
1516
1517 महातेजा महाप्रभावः । कान्त्या तु बालभास्कर इव भासुर । तदुपपादनाय
1518 ज्वालारुणेति । श्रीमांस्तपोलंस्मीवान् ॥ ११ ॥
1519
1520 सम्हासुरपताकान्तं साश्वेभपुरुषायुधम् ।
1521 कृतवांस्तं प्रदेशं यस्तेजोभिः कीर्णकाञ्चनम् ॥ १२ ॥
1522
1523 तं राजद्वारप्रदेशमूर्ध्वतः सभासुरपताकान्तं परितश्च
1524 साश्वेभपुरुषायुधम् । कीर्णकाञ्चनं व्याप्तसौवर्णमिव पिङ्गलम् ॥ १२ ॥
1525
1526 वीक्ष्यमाणे तु याष्टीके निवेदयति राजनि ।
1527 विश्वामित्रो मुनिः प्राप्त इत्यनुद्धतया गिरा ॥ १३ ॥
1528
1529 विश्वामित्रो मुनिः प्राप्त इत्यनुद्धतया गिरा राजनि राजानं प्रति निवेदयति
1530 विज्ञापनं कुर्वाणे याष्टीके वीक्ष्यमाणे तु दृष्टमात्रे सति स राजसत्तमः
1531 प्रोत्तस्थावित्युत्तरेण संबन्धः ॥ १३ ॥
1532
1533 इति याष्टीकवचनमाकर्ण्य नृपसत्तमः ।
1534 स समन्त्री ससामन्तः प्रोत्तस्थौ हेमविष्टरात् ॥ १४ ॥
1535
1536 किमनवधार्यैव नेत्याह - इति याष्टीकवचनमाकर्ण्येति । सामन्ता
1537 अल्पदेशाधीश्वराः । विष्टरात्सिंहासनात् ॥ १४ ॥
1538
1539 पदातिरेव सहसा राज्ञां वृन्देन मालितः ।
1540 वसिष्ठवामदेवाभ्यां सह सामन्तसंस्तुतः ॥ १५ ॥
1541
1542 मालितो वेष्टितः । स राजसत्तमो वसिष्ठवामदेवाभ्यां सह
1543 जगामेत्युत्तरेणान्वयः ॥ १५ ॥
1544
1545 जगाम [यत्र तत्रासौ] तत्र यत्रासौ विश्वामित्रो महामुनिः ।
1546 ददर्श मुनिशार्दूलं द्वारभूमाववस्थितम् ॥ १६ ॥
1547
1548 यत्र द्विश्वामित्रो महामुनिस्तत्रासौ जगामेति संबन्धः ॥ १६ ॥
1549
1550 केनापि कारणेनोर्वीतलमर्कमुपागतम् ।
1551 ब्राह्मेण तेजसाक्रान्तं क्षात्रेण च महौजसा ॥ १७ ॥
1552
1553 तपःपराक्रमाभिव्यञ्जकवैलक्षण्याम्भ्यामोजस्तेजसोर्भेदः ॥ १७ ॥
1554
1555 जराजरठया नित्यं तपःप्रसररूक्षया ।
1556 जटावल्या वृतस्कन्धं ससंध्याभ्रमिवाचलम् ॥ १८ ॥
1557
1558 जराजरठया वयःप्रकर्षपलितया ॥ १८ ॥
1559
1560 उपशान्तं च कान्तं च दीप्तमप्रतिघाति च ।

1561 निभृतं चोर्जिताकारं दधानं भास्वरं वपुः ॥ १९ ॥
1562
1563 दीप्तं तेजःप्रकर्षाद्दुर्दर्शम् । उपशान्तं सौम्यम् । अप्रतिघाति
1564 अपऋधृष्यम् । कान्तं प्रियदर्शनम् । ऊर्जितः प्रगल्भ
1565 आकारोऽवयसंनिवेशो यस्य तत्तथोक्तम् । निभृतं विनयोपपन्नम् । भास्वरं
1566 कान्तिमत् । भास्करमिति पाठे सूर्यसदृशम् । देवपथादित्वात्कनो लुप् ।
1567 विशेषणान्युभयत्र योज्यानि ॥ १९ ॥
1568
1569 पेशलेनातिभीमेन प्रसन्नेनाकुलेन च ।
1570 गम्भीरेणातिपूर्णेन तेजसा रञ्जितप्रभम् ॥ २० ॥
1571
1572 पेशलेन दृष्टिमनःप्रीणचतुरेण । अतिभीमेन भयानकेन । आकुलेन
1573 प्रकर्षाच्चलता । गम्भीरेण अनाकलनीयेन । अतिपुर्णेनापरिच्छेद्येन ।
1574 आश्रयंसंवलितं तेजः बहिःप्रसृता प्रभा । तेजःप्रकर्षवैलक्षण्यानु##-
1575 तथोक्तिः ॥ २० ॥
1576
1577 अनन्तजीवितदशासखीमेकामनिन्दिताम् ।
1578 धारयन्तं करे श्लक्ष्णां कुण्डीमम्लानमानसम् ॥ २१ ॥
1579
1580 अनन्तजीवितदशा चिरजीवितदशा तस्याः सखीं चिरपरिगृहीतामित्यर्थः ।
1581 श्लक्ष्णां स्निग्धाम् । कुण्डीं कमण्डलुम् । अम्लानं प्रसन्नं मानसं मनो
1582 यस्य ॥ २१ ॥
1583
1584 करुणाक्रान्तचेतस्त्वात्प्रसन्नैर्मधुराक्षरैः ।
1585 वीक्षणैरमृतेनेव संसिञ्चन्तमिमाः रजाः ॥ २२ ॥
1586
1587 मधुराणक्षराणि संभाषणानि येषु । मधुराभाषणसैतैरित्यर्थः ॥ २२ ॥
1588
1589 युक्तयज्ञोपवीताङ्गं धवलप्रोन्नतभ्रुवम् ।
1590 अनन्तं विष्मयं चान्तः प्रयच्छन्तमिवेक्षितुः ॥ २३ ॥
1591
1592 युक्तानि वयःप्रकर्षानुरूपाणि यज्ञोपवीतानङ्गे यस्य तम् ॥ २३ ॥
1593
1594 मुनिमालोक्य भूपालो दूरादेवानताकृतिः ।
1595 प्रणनाम गलन्मौलिमणिमानितभूतलम् ॥ २४ ॥
1596
1597 दुरादालोक्य पूर्वमेवानताकृतिर्भूपालो मुनिं प्रणनामेति संबन्धः ।
1598 अन्त्यं पदं क्रियाविशेषणम् ॥ २४ ॥
1599
1600 मुनिरप्यवनीनाथं भास्वानिव शतक्रतुम् ।
1601 तत्राभिवादयांचक्रे मधुरोदारया गिरा ॥ २५ ॥
1602
1603 अभिवादयांचक्रे सप्लुतमाशीर्भिः प्रत्यभिवादयामासेत्यर्थः ॥ २५ ॥
1604
1605 ततो वसिष्ठप्रमुखाः सर्व एव द्विजातयः ।
1606 स्वागतादिक्रमेणैनं पूजयामासुरादृताः ॥ २६ ॥
1607
1608 पूजयामासुः प्रशशंसुः । आदृता आदरयुक्ताः ॥ २६ ॥
1609
1610 दशरथ उवाच ।
1611
1612 अशङ्कितोपनीतेन भास्वता दर्शनेन ते ।

1613 साधो स्वनुगृहीताः स्मो रविणेवाम्बुजाकराः ॥ २७ ॥
1614
1615 अशङ्कितोपनीतेनावितर्कितोपगतेन। ते इति कर्मणि कर्तरि वा षष्ठी ॥ २७ ॥
1616
1617 उअदनादि अदक्षुण्णं यदपायविवर्जितम्।
1618 तदानन्दसुखं प्राप्तं मया त्वद्दर्शनान्मुने ॥ २८ ॥
1619
1620 अनुग्रहमेव भाविभाग्यानुरूपं रूपयन्निरूपयति - यदिति।
1621 अनादिकारण-रहितम्। अनेनोत्पत्तिवृद्धिविपरिणामानां निरासः।
1622 अक्षुण्णमनपक्षयम्। अपायेन विनाशेन च विवर्जितम्। औपाधिकैः
1623 स्वांशसुखलवैः सर्वानानन्दयतीत्यानन्दं यत्परमपुरुषार्थसुखं
1624 प्रसिद्धं तदेव प्राप्तमित्यर्थः ॥ २८ ॥
1625
1626 अद्य वर्तामहे नूनं धन्यानां धुरि धर्मतः।
1627 भवदागमनस्येमे यद्वयं लक्ष्यमागताः ॥ २९ ॥
1628
1629 धन्यानां कृतार्थानां धुरि अग्रस्थाने। लक्ष्यम्। भावप्रधानो निर्देशः।
1630 लक्ष्यताम् ॥ २९ ॥
1631
1632 एवं प्रकथयन्तोऽत्र राजानोऽथ महर्षयः।
1633 आसनेषु सभास्थानमासाद्य समुपाविशन् ॥ ३० ॥
1634
1635 एवं दशरथोक्तप्रकारेणैव राजानो महर्षयश्च प्रकथयन्तः अथ
1636 सभास्थानमासाद्य आसनेषु समुपाविशन्नित्यन्वयः ॥ ३० ॥
1637
1638 स दृष्ट्वा मालितं लक्ष्म्या भीतस्तमृषिसत्तमम्।
1639 प्रहृष्टवदनो राजा स्वयमर्घ्यं न्यवेदयत् ॥ ३१ ॥
1640
1641 लक्ष्म्या तपोलक्ष्म्या भीतः अर्घ्यार्थस्योदकस्याप्यन्यद्वारा
1642 आहरणेऽपराधशङ्कया स्वयमेवाहृत्यार्घ्यं न्यवेदयदित्यर्थः ॥ ३१ ॥
1643
1644 स राज्ञः प्रतिगृह्यार्घ्यं शास्त्रदृष्टेन कर्मणा।
1645 प्रदक्षिणं प्रकुर्वन्तं राजानं पर्यपूजयत् ॥ ३२ ॥
1646
1647 पर्यपूजयत्प्रशशंस ॥ ३२ ॥
1648
1649 स राज्ञा पूजितस्तेन प्रहृष्टवदनस्तदा।
1650 कुशलं चाव्ययं चैव पर्यपृच्छन्नराधिपम् ॥ ३३ ॥
1651
1652 कुशलं देहमन्त्रिभूत्यादिषु। अव्ययं कोशेषु ॥ ३३ ॥
1653
1654 वसिष्ठेन समागम्य प्रहस्य मुनिपुंगवः।
1655 यथार्हं चार्चयित्वैनं प्रपच्छानामयं ततः ॥ ३४ ॥
1656
1657 एवं वसिष्ठमर्चयित्वा यथार्हं शिष्यग्र्।गपक्ष्यादिष्वनामयं
1658 पप्रच्छेत्यथः ॥ ३४ ॥
1659
1660 क्षणं यथार्हमन्योन्यं पूजयित्वा समेत्य च।
1661 ते सर्वे हृष्टमनसो महाराजनिवेशने ॥ ३५ ॥
1662
1663 अन्योन्यं समेत्य पूजयित्वा च यथोचितासनगताः सण्तोऽनामयं
1664 पप्रच्छुरित्युत्तरेण संबन्ध। ॥ ३५ ॥

1665
1666 यथोचितासनगता मिथः संवृद्धतेजसः ।
1667 परस्परेण पप्रच्छुः सर्वेऽनामयमादरात् ॥ ३६ ॥
1668
1669 उपविष्टाय तस्मै स विश्वामित्राय धीमते ।
1670 पाद्यमर्घ्यं च गां चैव भूयोभूयो न्यवेदयत् ॥ ३७ ॥
1671
1672 आद्येन चकारेणानुक्तगन्धपुष्पवस्त्रालंकारादेः समुच्चयः । द्वितीयेन
1673 दक्षिणाफलताम्बूलादेः । तेषां च बहुविधत्वाद्भूयोभूय इति ॥ ३७ ॥
1674
1675 अर्चयित्वा तु विधिवद्विश्वामित्रमभाषत ।
1676 प्राञ्जलिः प्रयतो वाक्यमिदं प्रीतमना नृपः ॥ ३८ ॥
1677
1678 प्रयतः पवित्रः । इदं वक्ष्यमाणम् ॥ ३८ ॥
1679
1680 यथाऽमृतस्य संप्राप्तिर्यथा वर्षमवर्षके ।
1681 यथान्धस्येक्षणप्राप्तिर्भवदागमनं तथा ॥ ३९ ॥
1682
1683 यथायोगं मर्त्यस्य कर्षकस्येति च शेषः ॥ ३९ ॥
1684
1685 यथेष्टदारसंपर्कात्पुत्रजन्माऽप्रजावतः ।
1686 स्वप्नदृष्टार्थलाभश्च भवदागमनं तथा ॥ ४० ॥
1687
1688 अर्थलाभो दरिद्रस्येति शेषः ॥ ४० ॥
1689
1690 यथेप्सितेन संयोग इष्टस्यागमनं यथा ।
1691 प्रणष्टस्य यथा लाभो भवदागमनं तथा ॥ ४१ ॥
1692
1693 ईप्सितेन चिराभिलषितेन मणिमन्त्राभ्युदयादिना । इष्टस्य प्रियतमस्य
1694 पुत्रभ्रात्रादेः । दुरादिति शेषः ॥ ४१ ॥
1695
1696 यथा हर्षो नभोगत्या मृतस्य पुनरागमात् ।
1697 तथा त्वदागमाद्ब्रह्मन्स्वागतं ते महामुने ॥ ४२ ॥
1698
1699 त्वदागमाद्धर्ष इत्यनुषज्यते ॥ ४२ ॥
1700
1701 ब्रह्मलोकनिवासो हि कस्य न प्रीतिमावहेत् ।
1702 मुने तवागमस्तद्वत्सत्यमेव ब्रवीमि ते ॥ ४३ ॥
1703
1704 कश्च ते परमः कामः किं च ते करवाण्यहम् ।
1705 पात्रभूतोऽसि मे विप्र प्राप्तः परमधार्मिकः ॥ ४४ ॥
1706
1707 प्रथमः प्रश्नः प्रदेयविषयः । द्वितीयः कर्तव्यसेवाविषयः ॥ ४४ ॥
1708
1709 पूर्वं राजर्षिशब्देन तपसा द्योतितप्रभः ।
1710 ब्रह्मर्षित्वमनुप्राप्तः पूज्योऽसि भगवन्मया ॥ ४५ ॥
1711
1712 पूजापात्रत्वमेवोपपादयति - पूर्वमिति । तपसा ब्रह्मर्षित्वमनुप्राप्त इति
1713 संबन्धः ॥ ४५ ॥
1714
1715 गङ्गाजलाभिषेकेण यथा प्रीतिर्भवेन्मम ।
1716 तथा त्वद्दर्शनात्प्रीतिरन्तः शीतयतीव माम् ॥ ४६ ॥

शीतयति तापशान्त्या सुखयति । मुख्यार्थभेदोत्प्रेक्षार्थ इवशब्दः ॥ ४६ ॥

विगतेच्छाभयक्रोधो वीतरागो निरामयः ।
इदमत्यद्भुतं ब्रह्मन्यद्भवान्मामुपागतः ॥ ४७ ॥

इच्छादीनां परोपसर्पणहेतुत्वं प्रसिद्धम् । विषयस्नेहातिशयो विषयाकारेण
चित्तस्य रञ्जनाद्रागः ॥ ४७ ॥

शुभक्षेत्रगतं चाहमात्मानमपकल्मसम् ।
चन्द्रबिम्ब इवोन्मग्नं वेदवेद्य विदांवर ॥ ४८ ॥

देवर्षिजुष्टस्थानानामेव क्षेत्रत्वात्त्वत्संनिधानाद्गृहमपि तथेति भावः ।
अतेवापकल्मषमपगतपापं अतएव
धर्मोत्कर्षादमृतमयचन्द्रमण्डल-प्राप्त्या तत्रोन्मग्नमित्युत्प्रेक्षा ॥
४८ ॥

साक्षादिव ब्रह्मणो मे तवाभ्यागमनं मतम् ।
पूतोऽस्म्यनुगृहीतश्च तवाभ्यागमनान्मुने ॥ ४९ ॥

धर्मेण पूतः यशोभ्युदयाभ्यामनुगृहीतः ॥ ४९ ॥

त्वदागमनपुण्येन साधो यदनुरञ्जितम् ।
अद्य मे सफलं जन्म जीवितं तत्सुजीवितम् ॥ ५० ॥

तदेव स्फुटयति - त्वदिति ॥ ५० ॥

त्वामिहाभ्यागतं दृष्ट्वा प्रतिपूज्य प्रणम्य च ।
आत्मन्येव नमाम्यन्तर्हृष्ट्वेन्दुं जलधिर्यथा ॥ ५१ ॥

पुण्यहर्षाभ्यामभिवृद्धत्वादात्मनि शरीरे प्रस्थान्तः कारीव न
संमामीत्यर्थः । जलधिर्वेलासीम्नोरिति शेषः ॥ ५१ ॥

यत्कार्यं येन वार्थेन प्राप्तोऽसि मुनिपुङ्गव ।
कृतमित्येव तद्विद्धि मान्योऽसीति सदा मम ॥ ५२ ॥

सदा मान्योऽसीति हेतोस्तदुभयम् कृतमित्येव विद्धि ॥ ५२ ॥

स्वकार्ये न विमर्शं त्वं कर्तुमर्हसि कौशिक ।
भगवन्नास्त्यदेयं मे त्वयि यत्प्रतिपद्यते ॥ ५३ ॥

अन्यैः कर्तुमशक्यमपि करिष्याम्येव दातुमशक्यमपि दास्यामेव ।
यद्यस्माद्दीयमानं वस्तु त्वयि त्वादृशे सत्पात्रे प्रतिपद्यते ।
प्रतिपत्तिलाभेन सार्थकं भवतीति भावः ॥ ५३ ॥

कार्यस्य न विचारं त्वं कर्तुमर्हसि धर्मतः ।
कर्ता चाहमशेषं ते दैवतं परमं भवान् ॥ ५४ ॥

उत्साहातिशयात्पूर्वार्धोक्तमेव पुनराह - कार्यस्येति । लोभादिहेतुकत्वं
वारयति - धर्मतः कर्तेति ॥ ५४ ॥

इदमतिमधुरं निशम्य वाक्यं श्रुसुखमात्मविदा विनीतमुक्तम् ।

प्रथितगुनयशा गुणैर्विशिष्टं मुनिवृषभः परमं जगाम
हर्षम् ॥ ५५ ॥

आत्मविदा स्वतपःप्रभावाभिज्ञेन । गुणैर्विशिष्टमिति वाक्यविशेषणम् ॥ ५५ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे
विश्वामित्राभ्यागमनं नाम षष्थः सर्गः ॥ ६ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे
विश्वामित्राभ्यागमनं नाम् षष्ठः सर्गः ॥ ६ ॥

सप्तमः सर्गः ७

श्रीवाल्मीकिरुवाच ।

तच्छ्रुत्वा राजसिंहस्य वाक्यमद्भुतविस्तरम् ।
हृष्टरोमा महातेजा विश्वामित्रोऽभ्यभाषत ॥ १ ॥

राज्ञः प्रशंसाथ मुनेर्यज्ञविघ्ननिवेदनम् ।
रक्षोवधाय रामस्य यात्वा चात्रिओअवर्ण्यते ॥

अद्भुतविस्तरं आश्चर्यार्थविस्तारयुक्तम् ॥ १ ॥

सदृशं राजशार्दूल तवैवैतन्महीतले ।
महावंशप्रसूतस्य वसिष्ठवशवर्तिनः ॥ २ ॥

सदृशं युक्तम् । तत्र हेतुगर्भे विशेषणे । वंशप्रभावाद्गुरुप्रभावा##-

यत्तु मे हृद्गतं वाक्यं तस्य कार्यविनिर्णयम् ।
कुरु त्वं राजशार्दूल धर्मं समनुपालय ॥ ३ ॥

हृद्गतं विवक्षितं तस्य कार्यविनिर्णयं तत्संबन्धिकर्तव्यार्थनिश्चयं
कुरु प्रथममिति शेषः । तत्कदाचिदधर्म्यं चेदशक्यमित्याशङ्क्याह -
धर्ममिति ॥ ३ ॥

अहं धर्मं समातिष्ठे सिद्ध्यर्थं पुरुषर्षभ ।
तस्य विघ्नकरा घोरा राक्षसा मम संस्तिथाः ॥ ४ ॥

तदेवाह - अहमित्यादिना । धर्मं यज्ञं । समातिष्ठे आरभे ॥ ४ ॥

यदा यदा तु यज्ञेन यजेऽहं विबुधव्रजान् ।
तदा तदा तु मे यज्ञं विनिघ्नन्ति निशाचराः ॥ ५ ॥

विबुधव्रजान्देवसङ्घान् ॥ ५ ॥

बहुशो विहिते तस्मिन्मया राक्षसनायकाः ।
अकिरंस्ते महीं यागे मांसेन रुधिरेण च ॥ ६ ॥

विहितेऽनुष्ठिते ॥ ६ ॥

अवधूते तथाभूते तस्मिन्यागकदम्बके ।
कृतश्रमो निरुत्साहस्तस्माद्देशादुपागतः ॥ ७ ॥

1821
1822 अवधूते विघ्नैर्निरस्ते। यागकदम्बके यज्ञसमूहे॥ ७॥
1823
1824 न च मे क्रोधमुत्स्रष्टुं बुद्धिर्भवति पार्थिव।
1825 तथाभूतं हि तत्कर्म न शापस्तस्य विद्यते॥ ८॥
1826
1827 ननु शापेनैव ते कुतो न निरस्तास्तत्राह - नचेति॥ ८॥
1828
1829 ईदृशी यज्ञदीक्षा सा मम तस्मिन्महाक्रतौ।
1830 त्वत्प्रसादादविघ्नेन प्रापयेयं महाफलम्॥ ९॥
1831
1832 ईदृशी क्रोधशापाद्ययोरया। प्रापयेयम्। स्वार्थे णिच। प्राप्नुयाम्॥ ९॥
1833
1834 त्रातुर्महसि मामार्तं शरणार्थिनमागतम्।
1835 अर्थिनां यन्निराशत्वं सत्तमेऽभिभवो हि सः॥ १०॥
1836
1837 सत्तमे साधुतमे। सत्तम् इति पाठे तु संबोधनम्। अभिभवस्तिरस्कारः
1838 अर्थात्सत्तमानाम्। ऐकपद्यं वा॥ १०॥
1839
1840 तवास्ति तनयः श्रीमान्दृप्तशार्दूलविक्रमः।
1841 महेन्द्रसदृशो वीर्ये रामो रक्षोविदारणः॥ ११॥
1842
1843 उत्तरत्र तमिति दर्शनादत्र य इत्यध्याहार्यम्। विशेषणानि विवक्षितार्थोप##-
1844
1845 तं पुत्रं राजशार्दूल रामं सत्यपराक्रमम्।
1846 काकपक्षधरं शूरं ज्येष्ठं मे दातुर्महसि॥ १२॥
1847
1848 सत्यपराक्रममोघपराक्रमम्। काकपक्षौ कर्णमूलशिखे
1849 क्षत्रियाचारसिद्धे॥ १२॥
1850
1851 शक्तो ह्येष मया गुप्तो दिव्येन द्वेन तेजसा।
1852 राक्षसा येऽपकर्तारस्तेषां मूर्धविनिग्रहे॥ १३॥
1853
1854 नन्वकृतास्त्रो बालोऽयं कथं शक्तस्तत्राह - शक्त इति। गुप्तो रक्षितः।
1855 अपकर्तारो यज्ञस्य लोकस्येति वा शेषः। मूर्धविनिग्रहे शिरश्छेदे॥ १३॥
1856
1857 श्रेयश्चास्य करिष्यामि बहुरूपमनन्तकम्।
1858 त्रयाणामपि लोकानां येन पूज्यो भविष्यति॥ १४॥
1859
1860 श्रेयोऽस्त्रविद्याप्रदानरूपम्। अस्त्रभेदाद्बहुरूपं प्रभावस्त्वनन्तकम##-
1861
1862 न च ते राममासाद्य स्थातुं शक्ता निशाचराः।
1863 क्रुद्धं केसरिणम् दृष्ट्वा [वनेरिणे वनोद्भूते ईरिणाख्ये]
1864 वनेरण इवैणकाः॥ १५॥
1865
1866 स्थातुम्। पुर इति शेषः। [वनेरिण] वनेरणे वनोद्भूते ईरणाख्ये
1867 तृणे। तस्य पेलवतया मृगत्राणाक्षमत्वात्। रणे इति वा छेदः॥ १५॥
1868
1869 तेषां न चान्यः काकुत्स्थाद्योद्धुमुत्सहते पुमान्।
1870 ऋते केसरिणः क्रुद्धान्मत्तानां करिणामिव॥ १६॥
1871
1872 ननु मद्भृत्यैर्मया वा ते निग्राह्या इति राजाभिसंधिमालक्ष्याह -

1873 तेषां चेति । काकुत्स्थात्प्रकृताद्रामात् ॥ १६ ॥
1874
1875 वीर्योत्सिक्ता हि ते पापाः कालकूटोपमा रणे ।
1876 करदूषणयोर्भृत्याः कृतान्ताः कुपिता इव ॥ १७ ॥
1877
1878 तत्कुतस्तत्राह - वीर्येति । उत्सिक्ता गर्विताः । न केवलं स्वबलेनैव किंतु
1879 स्वामिबलेनापीत्याह - खरेति ॥ १७ ॥
1880
1881 रामस्य राजशार्दूल सहिष्यन्ते न सायकान् ।
1882 अमारतगता धारा जलदस्येव पांसवः ॥ १८ ॥
1883
1884 तर्हि रामस्यापि ते कथं साध्यास्तत्राह - रामस्येति । अनारतगता
1885 अविरतनिर्गताः । यथा दृष्ट्यभिभवे क्षमा अपि पांसवो न वृष्ट्यभिभवे
1886 क्षमास्तद्वदित्यर्थः ॥ १८ ॥
1887
1888 न च पुत्रकृतऽम् स्नेहं कर्तुमर्हसि पार्थिव ।
1889 न तदस्ति जगत्यस्मिन्यन्न देयं महात्मनाम् ॥ १९ ॥
1890
1891 भवतु तथा तथापि पुत्रो दुस्त्यजः पितृभिरित्याशङ्क्याह - नचेति । मम
1892 पुत्रोऽयमिति प्राकृतं स्नेहमनुरागम् । तत्कुतस्तत्राह - न तदिति । तथाहि ।
1893 शिबिदधिच्यलर्कप्रभृतयः स्वदेहचक्षुराद्यपि ददुरिति भावः ॥ १९ ॥
1894
1895 हन्त नूनं विजानामि हतांस्तान्विद्धि राक्षसान् ।
1896 नह्यस्मदादयह् प्राज्ञाः संदिग्धे संप्रवृत्तयः ॥ २० ॥
1897
1898 नात्रापायशङ्कापि किन्तु विजयाभ्युदय एवेत्याह - हन्तेति । नूनमिति
1899 निश्चये । विजानामि तपसेति शेषः । त्वमपि विद्धि । मद्वचसेति शेषः । तदेव
1900 द्रढयति - नहीति ॥ २० ॥
1901
1902 अहं वेद्मि महात्मानं रामं राजीवलोचनम् ।
1903 वसिष्ठश्च महातेजा ये चान्ये दीर्घदर्शिनः ॥ २१ ॥
1904
1905 महान्तं जीवोपाध्यपरिच्छिन्नमात्मानम् । ईश्वरमित्यर्थः । प्रभावतो वा
1906 महात्मानम् । वसिष्ठश्च वेत्तिति विपरिणामेनानुषङ्गः । एवमुत्तरत्रापि ।
1907 दीर्घदर्शिनो योगसिद्ध्या व्यवहितविप्रकृस्टदर्शनशीलाः ॥ २१ ॥
1908
1909 यदि धर्मो महत्त्वं च यशस्ते मनसि स्थितम् ।
1910 तन्मह्यं समभिप्रेतमात्मजं दातुमर्हसि ॥ २२ ॥
1911
1912 धर्मो महत्त्वं यशश्च रक्ष्यमिति मनसि ते स्थितं यदि तत्तर्हि ।
1913 समभिप्रेतं प्रियतममित्यात्मजविशेषणं सम्यगभिप्रेतमध्यवसितं
1914 यथा भवतीति क्रियाविशेषणं वा ॥ २२ ॥
1915
1916 दशरात्रश्च मे यज्ञो अस्मिन्रामेण राक्षसाः ।
1917 हन्तव्या विघ्नकर्तारो मम यज्ञस्य वैरिणः ॥ २३ ॥
1918
1919 दशरात्रो दशाहोरात्रसाध्यः ॥ २३ ॥
1920
1921 अत्राप्यनुज्ञां काकुत्स्थ ददतां तव मन्त्रिणः ।
1922 वसिष्ठप्रमुखाह् सर्वे तेन रामं विसर्जय ॥ २४ ॥
1923
1924 अत्रास्मिन्नर्थे तव मन्त्रिणः सर्वे वसिष्ठप्रमुखा अपीति संबन्धः । तेन

तेषामनुज्ञादानेन ॥ २४ ॥

नात्येति कालः कालज्ञ यथायं मम राघव।
तथा कुरुष्व भद्रं ते मा च शोके मनः कृथाः ॥ २५ ॥

कालो यज्ञाङ्गभूतो वसन्तादिर्यथा नात्येतीति संबन्धः ॥ २५ ॥

कार्यमण्वपि काले तु कृतमेत्युपकारताम्।
महदप्युपकारोऽपि रिक्ततामेत्यकालतः ॥ २६ ॥

अभिलषितसाधनानुग्रह उपकारस्तद्भावम्। महद्बहुवित्तव्ययायास##-
प्रीतिरिक्ततामेतीत्यर्थः ॥ २६ ॥

इत्येवमुक्त्वा धर्मात्मा धर्मार्थसहितं वचः।
विरराम महातेजा विश्वामित्रो मुनीश्वरः ॥ २७ ॥

मुनिवाक्यमुपसंहरति - इत्येवमिति ॥ २७ ॥

श्रुत्वावचो मुनिवरस्य महानुभाव-
स्तूष्णीमतिष्ठदुपपन्नपदं स वक्तुम्।
नो युक्तियुक्तकथनेन विनैति तोषं
धीमानपूरितमनोऽभिमतश्च लोकः ॥ २८ ॥

उपपन्नानि युक्तियुक्तानि पदानि प्रसिद्धानि वचनार्हवस्तूनि वा यस्मिन्कर्मणि
तत्तथा। ननु शक्यमुच्यतां किमुपपत्तिचिन्तयेति तत्राह - धीमानिति। लोको
मनोरथपूर्त्यापि तुष्यति धीमांस्तु तत्पूर्तावपि युक्तियुक्तकथनेन विना न
तुष्यतीति युक्तोपपत्तिचिन्तेति भावः ॥ २८ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे
विश्वामित्रवाक्यं नाम सप्तमः सर्गः ॥ ७ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे
विश्वामित्रवाक्यं नाम् सप्तमः सर्गः ॥ ७ ॥

अष्टमः सर्गः ८

वाल्मीकिरुवाच।

तच्छ्रुत्वा राजशार्दूलो विश्वामित्रस्य भाषितम्।
मुहूर्तमासीन्निश्चेष्टः सदैन्यं चेदमब्रवीत् ॥ १ ॥

स्नेहाद्राज्ञोऽत्र रामस्य युधायोग्यत्ववर्णनम्।
रावणादिबलं ज्ञात्वा विषादश्चोपवर्ण्यते ॥ १ ॥

उपपन्नतरोत्तरालाभान्निश्चेष्टः। पूर्वोक्तरामदशानुसंधानात्प्रति##-
वक्ष्यमाणम् ॥ १ ॥

ऊनषोडशवर्षोऽयं रामो राजीवलोचनः।
न युद्धयोग्यतामस्य पश्यामि सह राक्षसैः ॥ २ ॥

किंचिदूनः षोडशो वर्षोऽस्येति त्रिपदबहुर्व्रीहिः। युद्धयोग्यतैव नास्ति
राक्षसैः सह तु सुतरामिति भावः ॥ २ ॥

इयमक्षौहिणी पूर्णा यस्याः पतिरहं प्रभो ।
तया परिवृतो युद्धं दास्यामि पिशिताशिनाम् ॥ ३ ॥

तर्हि किं व्यर्थः प्रयासो नेत्याह - इयमिति । अक्षौहिणीलक्षणं तु
एकेभैकरथा त्र्यक्षा पत्तिः पञ्चपदातिका । पत्त्यङ्गैस्त्रिगुणैः सर्वैः
यथोत्तरम् । सेनामुखं गुल्मगणौ वाहिनी पृतना चमुः । अनीकिनी
दशाकिनिक्य(न्यो?)क्षौहिणी इत्यमरसिंहेनैव
भारतादिप्रसिद्धं संगृह्योक्तम् ॥ ३ ॥

इमे हि शूरा विक्रान्ता भृत्या मन्त्रविशारदाः ।
[अत्र] अहं चैषां धनुस्पाणिर्गोप्ता समरमूर्धनि ॥ ४ ॥

अत्र युद्धे । गोप्ता रक्षकः ॥ ४ ॥

एभिः सहैव वीराणां महेन्द्रमहतामपि ।
ददामि युद्धं मत्तानां करिणामिव केसरी ॥ ५ ॥

महेन्द्रादपि महताम् ॥ ५ ॥

बालो रामस्त्वनीकेषु न जानाति बलाबलम् ।
अन्तःपुराद्दते दृष्टा नानेनान्या रणावनिः ॥ ६ ॥

नन्वनेन रणावनिर्न दृष्टेत्येव वक्तव्ये अन्येति विशेषणवैयर्थ्यम् । एवं
तर्हि पुरस्यान्तरन्तःपुरमित्यव्ययीभावः । पुरमध्ये खुरलीक्रीडार्थ##-

न शस्त्रैः परमैर्युक्तो न च युद्धविशारदः ।
नवास्त्रैः शूरकोटीनां तज्ज्ञः समरभूमिषु ॥ ७ ॥

धृत्वा यैः प्रह्रियते तानि शस्त्राणि । क्षिप्त्वा यैः प्रह्रियते तान्यस्त्राणि ।
शूरकोटीनां समरभूमिष्विति संबन्धः । तज्ज्ञो युद्धज्ञः । वैशारद्यं
दूरे ज्ञानमप्यस्य नास्तीति भावः ॥ ७ ॥

केवलं पुष्पखण्डेषु नगरोपवनेषु च ।
उद्यानवनकुञ्जेषु सदैव परिशीलनम् ॥ ८ ॥

परिशीलनम् । अस्येति शेषः । पुंलिङ्गपाठे तु परिमितं शीलनमस्येति
बहुव्रीहिः ॥ ८ ॥

विहर्तुमेष जानाति सह राजकुमारकैः ।
कीर्णपुष्पोपहारासु स्वकास्वजिरभूमिषु ॥ ९ ॥

कीर्णपुष्पाण्येवोपहाराः पूजा यासु । स्वकासु स्वीयासु । अजिरभूमिषु
चत्वरस्थलेषु ॥ ९ ॥

अद्य त्वतितरां ब्रह्मन्मम भाग्यविपर्ययात् ।
हिमेनेव हि पद्माभः संपन्नो हरिणः कृशः ॥ १० ॥

अतितरामित्यस्य पञ्चम्यन्तेन हरिणः कृश इत्याभ्यां च संबन्धः ।
हरिणः पण्डुरः । तत्र दृष्टान्तः । पद्मैः पद्मया वा आभातीति
पद्माभस्तदाकारः । आतश्चोपसर्गे इति कः । सः । हिमेन तुषारेणेव ॥ १० ॥

2029 नात्तुमन्नानि शक्नोति न विहर्तुं गृहावनिम् ।
2030 अन्तःखेदपरीतात्मा तूष्णीं तिष्ठति केवलम् ॥ ११ ॥
2031
2032 विहर्तुं संचरितुम् । क्रीडितुमिति तु न । अकर्मकत्वापत्तेः ॥ ११ ॥
2033
2034 सदारः सहभृत्योऽहं तत्कृते मुनिनायक ।
2035 शरदीव पयोवाहो नूनं निःसारतां गतः ॥ १२ ॥
2036
2037 तत्कृते तन्निमितम् । निःसारतां निरुत्साहबलतां निःसुखतां वा ॥ १२ ॥
2038
2039 ईदृशोऽसौ सुतो बाल आधिनाऽथ वशीकृतः ।
2040 कथं ददामि तं तुभ्यं योद्धुं सह निशाचरैः ॥ १३ ॥
2041
2042 ईदृश इति शरीरेण बाल इति वयसा, आधिना वशीकृत इति बुद्ध्यादिना च
2043 तस्याशक्रता प्रेषणानर्हता च दर्शिता । तत्रापि योद्धुं तदपि निशाचरैः सह
2044 सुतरामयुक्त इति भावः ॥ १३ ॥
2045
2046 अपि बालाङ्गनासङ्गादपि साधो सुधारसात् ।
2047 राज्यादपि सुखायैव पुत्रस्नेहो महामते ॥ १४ ॥
2048
2049 ननु धर्मलिप्सोस्तव किं तद्विरोधिना पुत्रस्नेहेनेत्याशङ्क्याह - अपीति ।
2050 उक्तसुखान्येव हि धर्मफलं तानि पुत्रसुखं नातिशेरत इति भावः ॥ १४ ॥
2051
2052 ये दुरन्ता महारम्भास्त्रिषु लोकेषु खेददाः ।
2053 पुत्रस्नेहेन सन्तोऽपि कुर्वते तानसंशयम् ॥ १५ ॥
2054
2055 दुरन्गाश्चिरसाध्यास्तपःक्लेशास्तान् । सन्तो धार्मिका अपि ॥ १५ ॥
2056
2057 असवोऽथ धनं दारास्त्यज्यन्ते मानवैः सुखम् ।
2058 न पुत्रो मुनिशार्दूल स्वभावो ह्येष जन्तुषु ॥ १६ ॥
2059
2060 सुखं त्यज्यत इति विपरिणामेनानुषङ्गः ॥ १६ ॥
2061
2062 राक्षसाः क्रूरकर्माणः कूटयुद्धविशारदाः ।
2063 रामस्तान्योधयत्वित्थं युक्तिरेवातिदुःसहा ॥ १७ ॥
2064
2065 इत्थं पूर्वोक्तप्रकारेण स्थितो रामः इत्थमीदृशी युक्तिरिति वा ॥ १७ ॥
2066
2067 वोप्रयुक्तो हि रामेण मुहूर्तमपि नोत्सहे ।
2068 जीवितुं जीविताकाङ्क्षी न रामं नेतुमर्हसि ॥ १८ ॥
2069
2070 रामे नीते राक्षवधो न संभावितः प्रत्युत सपुत्रस्य ममैव वधस्तव्या
2071 संपादितः स्यादित्याह चतुर्भिः - विप्रयुक्त इति । तथा च
2072 यज्ञधर्मापेक्षया तव महानधर्मः स्यादिति भावः ॥ १८ ॥
2073
2074 नववर्षहस्राणि मम जातस्य कौशिक ।
2075 दुःखेनोत्पादितास्त्वेते चत्वारः पुत्रका मया ॥ १९ ॥
2076
2077 ननु षष्टिवर्षसहस्राणि जातस्य मम कौशिक इति पूर्वरामायणे उक्तं कथं
2078 तद्विरुद्धत्रोच्यते । सत्यम् । अतो न यथाश्रुतोऽन्वयः किंतु नववर्ष##-
2079 दुःखसाध्येनाश्वमेधपुत्रेष्ट्यादिना चत्वार उत्पादिता इति ॥ १९ ॥
2080

2081 प्रधानभूतस्तेष्वेव रामः कमललोचनः।
2082 तं विनेह त्रयोऽप्यन्ये धारयन्ति न जीवितम्॥ २०॥
2083
2084 तेषु राम एव प्रधानभूतो यथा शरीरेषु प्राणः। अतएव तेषऽम् प्रियतमः।
2085 किं ततस्तत्राह - तं विनेति॥ २०॥
2086
2087 स एव रामो भवता नीयते राक्षसान्प्रति।
2088 यदि तत्पुत्रहीनं त्वं मृतमेवाशु विद्धि माम्॥ २१॥
2089
2090 यस्य नयने त्रयाणामन्येषामपि मरणं स तादृशोराम एव
2091 मृत्युरूपात्राक्षसान्प्रति नीयते भवतेति चतुर्भिरपि हीनं मां मृतमेव
2092 विधीत्यर्थः॥ २१॥
2093
2094 चतुर्णामात्मजानां हि प्रीतिरत्रैव मे परा।
2095 ज्येष्ठं धर्ममयं तस्मान्न रामं नेतुमर्हसि॥ २२॥
2096
2097 चतुर्णां मरणादिति किं वाच्यम् एकस्य रामस्य नयनमात्रेणापि स्वमृत्युः
2098 संभावित इत्यभिप्रेत्याह - चतुर्णामिति। धर्ममयं धर्मप्रचुरम्॥ २२॥
2099
2100 निशाचरबलं हन्तुं मुने यदि तवेप्सितम्।
2101 चतुरङ्गसमायुक्तं मया सह बलं नय॥ २३॥
2102
2103 यदि रामं न नयामि तदा कथं कारसिद्धिस्तत्राह - निशाचरेति।
2104 हस्त्यश्वरथपादातैश्चतुरङ्गं बलं सैन्यम्॥ २३॥
2105
2106 किंवीर्या राक्षसास्ते तु कस्य पुत्राः कथं च ते।
2107 कियत्प्रमाणाः के चैव इति वर्णय मे स्फुटम्॥ २४॥
2108
2109 अपरिज्ञाय नास्कन्देदिति परबलं जिज्ञासुः पृच्छति - किंवीर्या इति।
2110 कथं च ते वर्तन्त इति शेषः। कियत्प्रमाणाः संख्यापरिमाणेन। के चैव
2111 नामतः॥ २४॥
2112
2113 कथं तेन प्रकर्तव्यं तेषां रामेण रक्षसाम्।
2114 मामकैर्बालकैर्ब्रह्मन्मया वा कूटयोधिनाम्॥ २५॥
2115
2116 प्रकर्तव्यं प्रतिकर्तव्यम्। प्रहर्तव्यम् इति पाठे स्पष्टम्॥ २५॥
2117
2118 सर्वं मे शंस भगवन्यथा तेषां महारणे।
2119 स्थातव्यं दुष्टभाग्यानां वीर्योत्सिक्ता हि राक्षसाः॥ २६॥
2120
2121 वीर्येणोत्सिक्ता ऊर्जिताः। हि प्रसिद्धाः॥ २६॥
2122
2123 श्रूयते हि महावीर्यो रावणो नाम राक्षसः।
2124 साक्षाद्वैश्रवणभ्राता पुत्रो विश्रवसो मुनेः॥ २७॥
2125
2126 तदेव स्फुटयति - श्रूयत इति॥ २७॥
2127
2128 स चेत्तव मखे विघ्नं करोति किल दुर्मतिः।
2129 तत्संग्रामे न शक्ताः स्मो वयं तस्य दुरात्मनः॥ २८॥
2130
2131 किलेति संभावने। स चेत् शंसेति संबन्धः। तत्तर्हि॥ २८॥
2132

2133 काले काले पृथग्ब्रह्मन्भूरिवीर्यविभूतयः ।
2134 भूतेष्वभ्युदयं यान्ति प्रलीयन्ते च कालतः ॥ २९ ॥
2135
2136 तत्कुतस्तत्राह - काले इति । पृथगिति । कदाचित्केषुचिदेवेति व्यवस्थयेत्यर्थः ।
2137 वीर्याणि विभूतयश्चेति द्वन्द्वगर्भकर्मधारयः ॥ २९ ॥
2138
2139 अद्यास्मिंस्तु वयं काले रावणादिषु शत्रुषु ।
2140 न समर्थाः पुरः स्थातुं नियतेरेष निश्चयः ॥ ३० ॥
2141
2142 किं ततस्तत्राह - अद्येति । अस्मिन्काले न समर्थास्तत्राप्यद्य
2143 सुतरामित्याशयः । नियतेर्दैवस्य । ईश्वरस्येति यावत् ॥ ३० ॥
2144
2145 तस्मात्प्रसादं धर्मज्ञ कुरु त्वं मम पुत्रके ।
2146 मम चैवाल्पभाग्यस्य भवान्हि परदैवतम् ॥ ३१ ॥
2147
2148 अनुकम्प्यः पुत्रः पुत्रकस्तस्मिन् । अर्थिमनोरथसमर्थनासमर्थत्वादल्प##-
2149
2150 देवदानवगन्धर्वा यक्षाः पतगपन्नगाः ।
2151 न शक्ता रावणं योद्‌धुं किं पुनः पुरुषा युधि ॥ ३२ ॥
2152
2153 ननु कुतस्तवेदृशमधर्यं तत्राह - देवेति । पुरुषा मनुष्याः ॥ ३२ ॥
2154
2155 महावीर्यवतां वीर्यमादत्ते युधि राक्षसः ।
2156 तेन सार्धं न शक्ताः स्म संयुगे तस्य बालकैः ॥ ३३ ॥
2157
2158 महतां पूज्यतमानां वीर्यवतामिन्द्रादीनामपि आदत्ते अपहरतीव । राक्षसो
2159 रावणः । संयुगे योद्‌धुमिति शेषः । येन सह वयं न शक्ताः स्म तस्य
2160 बालकैः किं शक्यमिति शेषः । अथवा तस्य बालकैरिन्द्रजित्प्रभृतिभिः सहापि
2161 न शक्ताः स्म इति पूर्वेण संबन्धः ॥ ३३ ॥
2162
2163 अयमन्यतमः कालः पेलवीकृतसज्जनः ।
2164 राघवोऽपि गतो दैन्यं यतो वार्धकजर्जरः ॥ ३४ ॥
2165
2166 अशक्तौ हेत्वन्तरमाह - अयमिति । पेलवीकृता निर्बलीकृताः सज्जना येन
2167 सः । राघवः स्वयमेव वार्धकेन यतो जर्जरः शिथिलः । अथवा राघवो रामो
2168 वृद्धक एव वर्धकः स एव जर्जरः ॥ ३४ ॥
2169
2170 अथवा लवणं ब्रह्मन्यज्ञघ्नं तं मधोः सुतम् ।
2171 कथयत्वसुरप्रख्यं नैव मोक्ष्यामि पुत्रकम् ॥ ३५ ॥
2172
2173 अथवेति कल्पान्तरे । जज्ञघ्नं तवेति शेषः । कथयतु भवानिति शेषः ।
2174 असुरप्रख्यं दैत्यसदृशं दैत्याद्राक्षस्यामुत्पन्नत्वात् । शैवशूलबलेन
2175 तस्याजय्यत्वान्मान्धातृमृत्युत्वाच्च नैवेत्यवधारणम् ॥ ३५ ॥
2176
2177 सुन्दोपसुन्दयोश्चैव पुत्रौ वैवस्वतोपमौ ।
2178 यज्ञविघ्नकरौ ब्रूहि न ते दास्यामि पुत्रकम् ॥ ३६ ॥
2179
2180 अथवेत्यनुषज्यते । सुन्दोपसुन्दपुत्रौ मारीचसुबाहू ॥ ३६ ॥
2181
2182 अथ नेष्यसि चेद्ब्रह्मंस्तद्धतोऽस्म्यहमेव ते ।
2183 अन्यथा तु न पश्यामि शाश्वतं जयमात्मनः ॥ ३७ ॥
2184

2185 अदत्तमपि रामं तपोबलान्नेष्याम्येवेति चेत्तत्राह - अथेति | ते त्वया | तर्त्तर्हि
2186 उक्तकल्पे | कर्तुरिव शेषत्वविवक्षया षष्ठी | एवकारो राक्षसव्यावृत्त्यर्थः |
2187 अन्यथा अमृत्वा तु | शाश्वतं निश्चितम् || ३७ ||
2188
2189 इत्युक्त्वा मृदु वचनं रघूद्वहोऽसौ
2190 कल्लोले मुनिमतसंशये निमग्नः |
2191 नाज्ञासीत्क्षणमपि निश्चयं महात्मा
2192 प्रोद्वीचाविव जलधौ स मुह्यमानः || ३८ ||
2193
2194 असौ रघूद्वहो दशरथो मुनेरभिमते रामप्रेषणे राक्षसवधे च संशये
2195 कर्तव्यमथवा न कर्तव्यं सेत्स्यथवा न सेत्स्यतीत्यादिरूपे कल्लोले महोर्मिजाले
2196 निमग्न इव क्षणं सुखं निश्चयमपि नाज्ञासीत् | यतः स प्रोद्वीचौ जलधौ
2197 मुह्यमान इवासीदिति शेषः || ३८ ||
2198
2199 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे
2200 दशरथवाक्यं नामाष्टमः सर्गः || ८ ||
2201
2202 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे
2203 दशरथवाक्यं नामाष्टमः सर्गः || ८ ||
2204
2205 नवमः सर्गः ९
2206
2207 वाल्मीकिरुवाच |
2208
2209 तच्छ्रुत्वा वचनं तस्य स्नेहपर्याकुलेक्षणम् |
2210 समन्युः कौशिको वाक्यं प्रत्युवाच महीपतिम् || १ ||
2211
2212 विश्वामित्रस्य कोपोऽत्र तत्तपोस्त्रबलोक्तिभिः |
2213 वसिष्ठेन शनै राज्ञः समाधानं च वर्ण्यते ||
2214
2215 स्नेहेन पर्याकुले व्याकुले ईक्षणे नेत्रे यस्मिंस्तुल्यकालतया तत्तथाभूतं
2216 वचनं श्रुत्वेत्यर्थः || १ ||
2217
2218 करिष्यामीति संश्रुत्य प्रतिज्ञां हातुमर्हसि |
2219 स भवान्केसरी भूत्वा मृगतामिव वाञ्छसि || २ ||
2220
2221 संश्रुत्य अङ्गीकृत्य | स प्रसिद्धो भावन्पूज्यः त्वमित्यध्याहार्यम् |
2222 अन्यथा मध्यमपुरुषद्वयानुपपत्तेः || २ ||
2223
2224 राघवाणामयुक्तोऽयं कुलस्यास्य विपर्ययः |
2225 न कदाचन जायन्ते शीतांशोरुष्णरश्मयः || ३ ||
2226
2227 राघवाणां कुलस्यायं विपर्ययोऽनृतवादलक्षणोऽयुक्तः | तदेव
2228 व्यतिरेकन्यासेन समर्थयति - नेति || ३ ||
2229
2230 यदि त्वं न क्षमो राजन्गमिष्यामि यथागतम् |
2231 हीनप्रतिज्ञ काकुत्स्थ सुखी भव सबान्धवः || ४ ||
2232
2233 न क्षमो न समर्थः || ४ ||
2234
2235 वाल्मीकिरुवाच |
2236

2237 तस्मिन्कोपपरीतेऽथ विश्वामित्रे महात्मनि |
2238 चचाल वसुध कृत्स्ना सुरांश्च भयमाविशत् || ५ ||
2239
2240 परीते व्याप्ते | महात्मनि तपोमाहात्म्यशालिनि | पत्युरपराधादपराधि##-
2241 तपसा रावणादिहन्तारं स्रक्ष्यति स चास्मानपि जेष्यतीति सुरान्भयमाविशत् |
2242 चादन्यानपि || ५ ||
2243
2244 क्रोधाभिभूतं विज्ञाय जगन्मित्रं महामुनिम् |
2245 धृतिमान्सुव्रतो धीमान्वसिष्ठो वाक्यमब्रवीत् || ६ ||
2246
2247 जगन्मित्रं विश्वामित्रम् | विश्वस्य मित्रं विश्वामित्र मिति [विश्वस्य ह वै
2248 मित्रं विश्वामित्र आस] तन्नामार्थप्रसिद्धेः | मित्रे चर्षौ इति पूर्वपदस्य
2249 दीर्घः | यद्यपि वसिष्ठोऽपि कोपेनैव तत्कोपप्रतीकारे समर्थस्तथापि न
2250 चुक्रोध | यतोऽसौ धृत्यादिमानिति भावः || ६ ||
2251
2252 वसिष्ठ उवाच |
2253
2254 इक्ष्वाकूणां कुले जातः साक्षाद्धर्म इवापरः |
2255 भवान्दशरथः श्रीमांस्त्रैलोक्यगुणभूषितः || ७ ||
2256
2257 त्रैलोक्येऽपि ये गुणवतां गुणाः प्रसिद्धास्तैः सर्वैर्भूषितः || ७ ||
2258
2259 धृतिमान्सुव्रतो भूत्वा न धर्मं हातुमर्हसि |
2260 त्रिषु लोकेषु विख्यातो धर्मेण यशसा युतः || ८ ||
2261
2262 प्रतिज्ञापालनं व्रतं तच्छोभनं यस्य तथाविध एतावन्तं कालं
2263 भूत्वेत्यर्थः | भवच्छब्दमध्यमपुरुषौ पूर्ववत् | धर्मेण यशसा च
2264 युत इति त्रिषु लोकेषु विख्यातः || ८ ||
2265
2266 स्वधर्मं प्रतिपद्यस्व न धर्मं हातुमर्हसि |
2267 मुनेस्त्रिभुवनेशस्य वचनं कर्तुमर्हसि || ९ ||
2268
2269 स्वस्य स्वानां च धर्म प्रतिज्ञापालन। प्रतिपद्यस्व | त्रिष्वपि भुवनेष्वभि##-
2270
2271 करिष्यामीति संश्रुत्य तत्ते राजन्नकुर्वतः |
2272 इष्टापूर्तं हरेद्धर्मं तस्माद्रामं विसर्जय || १० ||
2273
2274 तत् हरेदित्यन्वयः || १० ||
2275
2276 इक्ष्वाकुवंशजातोऽपि स्वयं दशरथोऽपि सन् |
2277 न पालयसि चेद्वाक्यं कोऽपरः पालयिष्यति || ११ ||
2278
2279 यद्वृत्ताः सन्ति राजानस्तद्वृत्ताः सन्ति हि प्रजाः इति न्यायात्प्रजामर्यादा##-
2280 पालयस्यनृतीकरोषि चेत् || ११ ||
2281
2282 युष्मदादिप्रणीतेन व्यवहारेण जन्तवः |
2283 मर्यादां न विमुञ्चन्ति तां न हातुं त्वमर्हसि || १२ ||
2284
2285 प्रणीतेन प्रवर्तितेन | जन्तवो जन्तुसदृशा अज्ञा अपि || १२ ||
2286
2287 गुप्तं पुरुषसिंहेन ज्वलनेनामृतं यथा |
2288 कृतास्त्रमकृतास्त्रं वा नैनं शक्ष्यन्ति राक्षसाः || १३ ||

2289
2290 पुरुषसिंहेन पुरुषश्रेष्ठेन विश्वामित्रेण | ज्वलनेनेति |
2291 इन्द्रनिलयेऽवस्थितममृतं परितः प्राकारभूतेनाग्निना रक्ष्यत इति प्रसिद्धम्
2292 | कृतास्त्रं शिक्षितास्त्रम् | शक्ष्यन्ति धर्षयितुमिति शेषः || १३ ||
2293
2294 एष विग्रहवान्धर्म एष वीर्यवतां वरः |
2295 एष बुद्ध्याऽधिको लोके तपसां च परायणम् || १४ ||
2296
2297 उक्तार्थोपपत्तये विश्वामित्रप्रभावं प्रपञ्चयति - एष इति | परं अयनं
2298 स्थानम् || १४ ||
2299
2300 एषोऽस्त्रं विविधं वेत्ति त्रैलोक्ये स्चराचरे |
2301 नैतदन्यः पुमान्वेत्ति न च वेत्स्यति कश्चन || १५ ||
2302
2303 सचराचरे प्रसिद्धमिति शेषः सचराचरे अन्यो न वेत्तित्युत्तरान्वयि वा || १५ ||
2304
2305 न देवा नर्षयः केचिन्नासुरा न च राक्षसाः |
2306 न नागा यक्षगन्धर्वाः समेताः सदृशा मुनेः || १६ ||
2307
2308 न सदृशाः प्रभावेणेति शेषः | नन्विदं कथं संगच्छतां
2309 भृग्विङ्गिरोऽगस्त्यप्रभृतीनां महर्षीणां ब्रह्मादीनां देवानां च
2310 प्रत्येकमपि न्यूनप्रभावत्वानुपपत्तेरिति चेदेवं तर्हि तत्त्वदृशाऽस्य
2311 ब्रह्मभावमन्येषामाभिमानिकं परिच्छिन्नभावमभिप्रेत्येदमुच्यत
2312 इत्यदोषः | नच ब्रमभावेनापि तेषामेतत्साहृश्यम् | तत्र भेदाभावेन
2313 तद्घटितस्य तस्यायोगात् | तथाच श्रुतिः - तस्य ह न देवाश्च नाभूत्या
2314 ईशते आत्मा ह्येषां स भवति इति || १६ ||
2315
2316 अस्त्रमस्मै कृशाश्वेन परैः परमदुर्जयम् |
2317 कौशिकाय पुरा दत्तं यदा राज्यं समन्वगात् || १७ ||
2318
2319 दृशाश्वेन जनितमिति शेषः | दत्तं तपसा तोषितेन रुद्रेणेति शेषः |
2320 प्रसिद्धमिदं पूर्वरामायणे || १७ ||
2321
2322 ते हि पुत्राः कृशाश्वस्य प्रजापतिसुतोपमाः |
2323 एनमन्वचरन्वीरा दीप्तिमन्तो महौजसः || १८ ||
2324
2325 ते अस्त्रदेवाः | प्रजापतिसुतो रुद्रस्तदुपमाः संहारे | वीर विक्रान्ताः | ओजः
2326 शत्रुनिर्जयसामर्थ्यम् | एनं विश्वामित्रं तपःप्रभावेण
2327 वशीकृतत्वादन्वचरन्ननुचरवृत्त्सेवन्ते | भूतकालो न विवक्षितः || १८ ||
2328
2329 जया च सुप्रभा चैव दाक्षायण्यौ सुमध्यमे |
2330 तयोस्तु यान्यपत्यानि शतं परमदुर्जयम् || १९ ||
2331
2332 तेषु प्रधानानाह - जयेत्यादिना | दाक्षायण्यौ दक्षकन्ये || १९ ||
2333
2334 पञ्चाशतं सुताञ्जज्ञे जया लब्धवरा पुरा |
2335 वधार्थं सुरसैन्यानां ते क्षमाः कामचारिणः || २० ||
2336
2337 तान्विभज्य दर्शयति - पञ्चाशतमिति | लब्धवरा पतिशुश्रूषयेति शेषः |
2338 सुरसैन्यानामिति कर्तरि षष्ठी | अतो योग्यतया असुरवध एव लभ्यते || २० ||
2339
2340 सुप्रभा जनयामास पुत्रान्पञ्चाशतं परान् |

संघषान्नाम दुर्धर्षान्दुराकारान्बलीयसः ॥ २१ ॥

संघर्षान्परास्त्राभिभवनशीलत्वात्तदाख्यान् । दुराकारांस्तीक्षा-कारान् ॥ २१ ॥

एवंवीर्यो महातेजा विश्वामित्रो जगन्मुनिः ।
न रामगमने बुद्धिं विक्लवां कर्तुमर्हसि ॥ २२ ॥

जगत्सर्वं मनुते योगबलात्साक्षात्पश्यति तच्छीलो जगन्मुनिः । अतएव रामविजयमपि भाविनं दृष्टैव समागत इति न बुद्धिवैक्लव्यं युक्तमिति भावः ॥ २२ ॥

अस्मिन्महासत्त्वतमे मुनीन्द्रे स्थिते समीपे पुरुषस्य साधो ।
प्राप्तेऽपि मृत्यावमरत्वमेति मा दीनतां गच्छ यथा विमूढः ॥ २३ ॥

तदेव द्रढयन्नाह - अस्मिन्निति । सत्त्वं प्रभावः । पुरुषस्य साधारण-स्यापि । अमरत्वमेति अर्थात्स पुरुषः । तथाच साधारणपुरुषस्याप्येतत्सं-निधानमात्रेणापि यत्र प्राप्तादपि मृत्योर्न भयं प्रत्युतामरत्वप्राप्ति-स्तत्र महाप्रभावस्य रामस्य गोप्तरि तस्मिन्क्षुद्रेभ्यो राक्षसेभ्यो भयम-त्यन्तमसंभावितमिति मूढवन्मा विषीदेत्यर्थः ॥ २३ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे वसिष्ठसमाश्वासनं नाम नवमः सर्गः ॥ ९ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे वसिष्ठसमाश्वासनं नाम् नवमः सर्गः ॥ ९ ॥

दशमः सर्गः १०

वाल्मीकिरुवाच ।

तथा वसिष्ठे ब्रुवति राजा दशरथः सुतम् ।
संप्रहृष्टमना राममाजुहाव सलक्ष्मणम् ॥ १ ॥

राज्ञात्र प्रहितो गत्वा याष्टीको रामचेष्टितम् ।
विज्ञाय पुनरागत्य राज्ञे कृत्स्नं न्यवेदयत् ॥

तथेति । उक्तिफलस्य संप्रहर्षस्य परगामित्वाद्ब्रूञः परस्मैपदम् । हेतौ शता ॥ १ ॥

दशरथ उवाच ।

प्रतिहारं महाबाहुं रामं सत्यपराक्रमम् ।
सलक्ष्मणमविघ्नेन पुण्यार्थं शीघ्रमानय ॥ २ ॥

अविघ्नेन पुण्यार्थं निर्विघ्नं मुनेर्यज्ञसिद्ध्यर्थं । अथवा सत्यवचन##-मा भूदित्यभिप्रेत्यैवमुक्तम् । शीघ्रपदेनाप्येतदेव द्योत्यते ॥ २ ॥

इति राज्ञा विसृष्टोऽसौ गत्वान्तःपुरमन्दिरम् ।
मुहूर्तमात्रेणागत्य समुवाच महीपतिम् ॥ ३ ॥

2393 विसृष्टः प्रेषितः। अन्तःपुरान्तस्थं राममन्दिरम्॥ ३॥
2394
2395 देव दोर्दलिताशेषरिपो रामः स्वमन्दिरे।
2396 विमनाः संस्थितो रात्रौ षट्पदः कमले यथा॥ ४॥
2397
2398 विमनाः विषण्णमनाः॥ ४॥
2399
2400 आगच्छामि क्षणेनेति वक्ति ध्यायति चैकतः।
2401 न कस्यचिच्च निकटे स्थातुमिच्छति खिन्नधीः॥ ५॥
2402
2403 क्षणो घटिकायाः पृष्ठो भागः। एकत इति वक्तीत्यनेनापि संबध्यते।
2404 उक्तिर्वाङ्मात्रेण न मनःपूर्वकं मुख्यं तु ध्यायत्येवेति भाअः॥ ५॥
2405
2406 इत्युक्तस्तेन भूपालस्तं रामानुचरं जनम्।
2407 सर्वमाश्वासयामास पप्रच्छ च यथाक्रमम्॥ ६॥
2408
2409 तं प्रतीहारेण सह रामसमाचारनिवेदनायागतं रामानुचरं
2410 जनमनाश्वस्ता न सम्यङ्विवेदयेयुरित्याश्वासयामास॥ ६॥
2411
2412 कथं कीदृग्विधो राम इति पृष्टो महीभृता।
2413 रामभृत्यजनः खिन्नो वाक्यमाह महीपतिम्॥ ७॥
2414
2415 एकः क्रियायाः प्रश्नः अपरः कार्श्यविषादाद्यवस्थानाम्॥ ७॥
2416
2417 देयहष्टिमिमां देव धारयन्त इमे वयम्।
2418 खिन्नाः खेदे परिम्लानतनौ रामे सुते तव॥ ८॥
2419
2420 यष्टिमिव कृश्ऽम् देहं देहयष्टिम्। खिन्ना दुःखिताः। तछाच
2421 यद्दृष्टृणामप्येतादृशे खेदकार्श्ये तस्य ते किं वाच्ये इति भावः॥ ८॥
2422
2423 रामो राजीवपत्राक्षो यतःप्रभृति चागतः।
2424 सविप्रस्तीर्थयात्रायास्ततःप्रभृति दुर्मनाः॥ ९॥
2425
2426 राजीवं कमलम्। यतो यस्माद्दिनात्प्रभृत्यागतस्तिष्ठतीति पदमध्या##-
2427 आगतस्ततः-प्रभृतीत्येतावतैव सिद्धेः। स्थितेस्तु
2428 प्रात्यहिकत्वाद्दौर्मनस्यवदस्त्येवाधि##-
2429
2430 यत्नप्रार्थनयास्माकं निजव्यापारमाह्निकम्।
2431 सोऽयमाम्लानवदनः [सायमम्लान] करोति न करोति वा॥ १०॥
2432
2433 आह्निकं निजव्यापारं भोजनादि। न करोति वेत्यनास्थाद्योतनाय॥ १०॥
2434
2435 स्नानदेवार्चनादानभोजनादिषु दुर्मनाः।
2436 प्रार्थितोऽपि हे नातृप्तेरश्नात्यशनमीश्वरः॥ ११॥
2437
2438 देवार्चना च दानं चेति वा देवार्चनं च आदानं चेति वा विग्रहः॥ ११॥
2439
2440 लोलान्तःपुरनारीभिः कृतदोलाभिरङ्गणे।
2441 नच क्रीडति लीलाभिर्धाराभिरिव चातकः॥ १२॥
2442
2443 नारीभिः सहेति शेषः। दोला प्रेङ्खोलिका। अङ्गणे क्रीडाचत्वरे। यथा
2444 वर्षधाराभिः सह ता उपभुञ्जानश्चातकः क्रीडति तथा न क्रीडति

2445 चेत्यन्वयः ॥ १२ ॥
2446
2447 माणिक्यमुकुलप्रोता केयूरकटकावलिः ।
2448 नानन्दयति तं राजन्द्यौः पातविषयं यथा ॥ १३ ॥
2449
2450 मुकुलाकारैर्माणिक्यैः प्रोता खचिता । द्यौः स्वर्गः । पातविषयमासन्न##-
2451
2452 क्रीडद्वधूविलोकेषु वहत्कुसुमवायुषु ।
2453 लतावलयगेहेषु भवत्यतिविषादवान् ॥ १४ ॥
2454
2455 क्रीडन्तीभिर्वधूभिर्विलोक्यन्त इति वा क्रीडन्तीनां वधूनां विविधं लोकनानि
2456 लोका यत्रेति वा पदभेदे । क्रीडद्वधूनां विलोका एवेषवो बाणास्त इव वहन्तः
2457 कुसुमवायवो यत्रेत्यैकपद्ये विग्रहः । लतानां वलयनं वेष्टनं
2458 वलयस्तत्संबन्धिषु गेहेषु । कुञ्जेष्वित्यर्थः ॥ १४ ॥
2459
2460 यद्द्रव्यमुचितं स्वादु पेशलं चित्तहारि च ।
2461 बाष्पपूर्णेक्षण इव तेनैव परिखिद्यते ॥ १५ ॥
2462
2463 उचितमुपभोगे लोकशास्त्राविरुद्धम् । पेशलं चतुरम् । चित्तहारि मनोहरम् ॥ १५
2464 । ।
2465
2466 किमिमा दुःखदायिन्यः प्रस्फूरन्तीः पुराङ्गनाः ।
2467 इति [नृत्यविलासेषु] नृत्तविलासेषु कामिनीः परिनिन्दति ॥ १६ ॥
2468
2469 प्रस्फुरन्तीर्हावभावलावण्यविलासादिभिः शोभमाना नृत्यन्तीर्वा दृष्ट्वा
2470 किं यतो दुःखदायिन्य इति निन्दतीति योजना । प्रस्फूरन्ति इति पाठ ऋजुः ॥ १६ ॥
2471
2472 भोजनं शयनं यानं विलासं स्नानमासनम् ।
2473 उन्मत्तचेष्टित इव नाभिनन्दत्यनिन्दितम् ॥ १७ ॥
2474
2475 शयनमासनमित्यधिकरणे ल्युटौ अन्ये करणे ल्युतः । विलसन्ति येन यस्मिन्वा
2476 तम् । अनिन्दितं निर्दोषम् । इदं सर्वविशेषणम् ॥ १७ ॥
2477
2478 किं संपदा किं विपदा किं गेहेन किमिङ्गितैः ।
2479 सर्वमेवासदित्युक्त्वा [त्युक्त्या] तूष्णीमेकोऽवतिष्ठते ॥ १८ ॥
2480
2481 इङ्गितैर्मनोरथैः । असत् असारम् ॥ १८ ॥
2482
2483 नोदेति परिहासेषु न भोगेषु निमज्जति ।
2484 न च तिष्ठति कार्येषु मौनमेवावलम्बते ॥ १९ ॥
2485
2486 उदेति हृष्यति । निमज्जति सज्जते । कार्येष्वारम्भेषु न तिष्ठत्यास्थां न करोति ॥
2487 १९ ॥
2488
2489 विलोलालकवल्लर्यो हेलावलितलोचनाः ।
2490 नानन्दयन्ति तं नार्यो मृग्यो वनतरुं यथा ॥ २० ॥
2491
2492 अलकेषु वल्लर्यः पुष्परत्नादिमञ्जर्यो विलोला यासां ताः । हेलाः
2493 शृङ्गारभावजाश्चेष्टाः । मृगीपक्षे अलका इव पुष्पमञ्जर्यः । हेलयेव
2494 चलितलोचनाश्चपलेक्षणाः ॥ २० ॥
2495
2496 एकान्तेषु दिगन्तेषु तीरेषु विपिनेषु च ।

2497 रतिमायात्यरण्येषु विक्रीत इव जन्तुषु ॥ २१ ॥
2498
2499 विपिनेष्वरण्येषु । जन्तुषु जन्तुसदृशेषु पामरेषु । दैवाद्विक्रीतो मनुष्यो
2500 यथा एकान्तादिष्वेव रतिं बध्नाति तद्वत् ॥ २१ ॥
2501
2502 वस्त्रपानाशनादानपराङ्मुखतया तया ।
2503 परिव्राड्धर्मिणं भूपं सोऽनुयाति तपस्विनम् ॥ २२ ॥
2504
2505 तया प्रसिद्धया । परिव्राजां ये धर्मा अपरिग्रहादयस्तद्वत्तं परिव्राजमेव
2506 अनुयाति अनुकरोति ॥ २२ ॥
2507
2508 एक एव वसन्देशे जनशून्ये जनेश्वर ।
2509 न हसत्येकया बुद्ध्या न गायति न रोदिति ॥ २३ ॥
2510
2511 एकया मुख्यया ॥ २३ ॥
2512
2513 बद्धपद्मासनः शून्यमना वामकरस्थले ।
2514 कपोलतलमाधाय केवलं परितिष्ठति ॥ २४ ॥
2515
2516 तर्हि तत्र किं करोति तत्राह - बद्धेति । शून्यं परमार्थालम्बनेन मनो
2517 यस्य सः परितिष्ठति । ध्यायन्नित्यर्थाल्लभ्यते ॥ २४ ॥
2518
2519 नाभिमानमुपादत्ते नच वाञ्छति राजताम् ।
2520 नोदेति नास्तमायाति सुखदुःखानुवृत्तिषु ॥ २५ ॥
2521
2522 उदयास्तमयावत्र प्रसादविषादौ । सुखदुःखानुवृत्तिष्विष्टानिष्ट##-
2523
2524 न विद्मः किमसौ याति किं करोति किमीहते ।
2525 किं ध्यायति किमायाति कथं किमनुधावति ॥ २६ ॥
2526
2527 ईहते इच्छति । अनुधावत्यनुसरति ॥ २६ ॥
2528
2529 प्रत्यह। कृशतामेति प्रत्यहं याति पाण्डुताम् ।
2530 विरागं प्रत्यहं याति शरदन्त इव द्रुमः ॥ २७ ॥
2531
2532 विरागं वैराग्यम् । द्रुमपक्षे वैवर्ण्यं रूपतामिति यावत् ॥ २७ ॥
2533
2534 अनुयातौ तथैवैतौ राजञ्छत्रुघ्नलक्ष्मणौ ।
2535 तादृशावेव तस्यैव प्रतिबिम्बाविव स्थितौ ॥ २८ ॥
2536
2537 अनुयातौ स्नेहादनुसृतौ । अर्थाद्राममिति गम्यते । तादृशावेव यादृशो
2538 रामः ॥ २८ ॥
2539
2540 भृत्यै राजभिरम्बाभिः संपृष्टोऽपि पुनः पुनः ।
2541 उक्त्वा न किंचिदेवेति तूष्णीमास्ते निरीहितः ॥ २९ ॥
2542
2543 न किंचिदित्युक्तेस्तैः परिहर्तुं शक्यं किंचिन्नास्तीति रामाशयः । निरीहितः
2544 स्वाभिप्रायव्यञ्जकचेस्टाशून्यः ॥ २९ ॥
2545
2546 आपातमात्रहृद्येषु मा भोगेषु मनः कृथाः ।
2547 इति पार्श्वगतं भव्यमनु"आस्ति सुहृज्जनम् ॥ ३० ॥
2548

2549 आपतनमापातो विषयेन्द्रियसंयोगः। मात्रपदात्परिणामकटुता द्योत्यते।
2550 भवतीति भव्यो विवेकी तं नतु सर्वम्॥ ३०॥
2551
2552 नानाविभवरम्यासु स्त्रीषु गोष्ठीगतासु च।
2553 पुरस्थितमिवास्नेहो नाशमेवानुपश्यति॥ ३१॥
2554
2555 गोष्ठी विलासस्थानम्॥ ३१॥
2556
2557 नीतमायुरनायासपदप्राप्तिविवर्जितैः।
2558 चेष्टितैरिति काकल्या भूयोभूयः प्रगायति॥ ३२॥
2559
2560 प्राप्तिविवर्जितैह् पुरुषैः। चेष्टितैर्बहिःप्रवृत्तिभिः। नीतं वृथेति शेषः।
2561 प्राप्तिविवर्जितैश्चेष्टितैरिति सामानाधिकरण्यं वा। अस्मिन्कल्पे नीतं मयेति
2562 शेषः। काकल्या मधुरास्फुटया वाचा॥ ३२॥
2563
2564 सम्राड्भवेति पार्श्वस्थं वदन्तमनुजीविनम्।
2565 प्रलपन्तमिवोन्मत्तं हसत्यन्यमना मुनिः॥ ३३॥
2566
2567 येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः। शास्ति यश्चाज्ञया राज्ञः स
2568 सम्राट्। अन्यमना इति। सम्यक्स्वप्रकाशतया राजत इति सम्राट्
2569 परमात्मेत्यर्थान्तरे मनो यस्येत्यर्थः। तस्य चापरिज्ञान्मुनिस्तत्पर्यालो##-
2570
2571 न प्रोक्तमाकर्णयति ईक्षते न पुरोगतम्।
2572 करोत्यवज्ञां सर्वत्र सुसमेत्यापि वस्तुनि॥ ३४॥
2573
2574 सर्वत्र वस्तुनि सुसमेत्य गुणतः फलतश्च शोभनं स्वानुरूपं तत्प्राप्यापि
2575 ॥ ३४॥
2576
2577 अप्याकाशसरोजिन्या अप्याकाशमहावने।
2578 इत्थमेतन्मन इति विस्मयोऽस्य न जायते॥ ३५॥
2579
2580 ननु गुणाद्युत्कर्षाद्विस्मययोग्ये वस्तुनि विस्मय एवोचितः कथं तत्रावज्ञा
2581 तत्राह - अपीति। यस्मिन्मनसि बाह्यवस्तुगोचरो विस्मयः स्यात्तन्मन एव
2582 इत्थम्। ईदृशविस्मयास्पदमित्यर्थः। कथम्। यत आकाशरूपे आकाशस्थिते वा
2583 महारण्ये तादृशकमलिन्या सदृशमिति शेषः।
2584 द्वावैशब्दावसंभाव-नाद्वयद्योतकौ। यथा आकाशेऽरण्यमरण्ये च
2585 कमलिन्यत्यन्तमसंभा-विता तथा आत्मनि मनो मनसि च विस्मय इति
2586 निश्चयादस्य बाह्यवस्तुनि विस्मयो न जायत इति भावः॥ ३५॥
2587
2588 कान्तामध्यगतस्यापि मनोऽस्य मदनेषवः।
2589 न भेदयन्ति दुर्भेद्यं धारा इव महोपलम्॥ ३६॥
2590
2591 न भेदयन्ति न भिन्दन्ति। प्रेषणाध्यारोपाण्णिच्। धारा जलधाराः॥ ३६॥
2592
2593 आपदामेकमावासमभिवाञ्छसि किं धनम्।
2594 अनुशिष्येति सर्वस्वमर्थिने संप्रयच्छति॥ ३७॥
2595
2596 आवासं निवासस्थानम्। अर्थिने याचकाय॥ ३७॥
2597
2598 इयमापदियं संपदित्येवं कल्पनामयः।
2599 मनसोऽभ्युदितो मोह इति श्लोकान्प्रगायति॥ ३८॥
2600

2601 कल्पनामयः कल्पनाप्रचुरः। मोहो भ्रमः॥ ३८॥
2602
2603 हा हतोऽहमनाथोऽहमित्याक्रन्दपरोऽपि सन्।
2604 न जनो याति वैराग्यं चित्रमित्येव वक्त्यसौ॥ ३९॥
2605
2606 आक्रन्दपरः। इष्टवियोगादिति शेषः। तथा चान्वयव्यतिरेकाभ्यां
2607 रागादिदुःखमिति पश्यन्नपीति भावः॥ ३९॥
2608
2609 रघुकाननशालेन रामेण रिपुघातिना।
2610 भृशमित्थं स्थितेनैव वयं खेदमुपागताः॥ ४०॥
2611
2612 रघुपदेन रघुवंशो लक्ष्यते। शालो वृक्षविशेषः प्रसिद्धः। एवकारो
2613 हेत्वन्तरव्यावृत्तये॥ ४०॥
2614
2615 न विद्मः किं महाबाहो तस्य तादृशचेतसः।
2616 कुर्मः कमलपत्राक्ष गतिरत्र हि नो भवान्॥ ४१॥
2617
2618 किं कुर्मः शोकापनाअर्थमिति शेषः॥ ४१॥
2619
2620 राजानमथवा विप्रमुपदेष्टारमग्रतः।
2621 हसत्यज्ञमिवाव्यग्रः सोऽवधीरयति प्रभो॥ ४२॥
2622
2623 ननु नीतिज्ञैः संव्यवहारोपदेशेनास्य मोहोऽपनीयतां तत्राह -
2624 राजानमिति। उपदेष्टारं राजनीतिव्यवहारानिति शेषः। अवधीरयत्य##-
2625
2626 यदेवेदमिदं स्फारं जगन्नाम यदुत्थितम्।
2627 नैतद्वस्तु नचैवाहमिति निर्णीय संस्थितः॥ ४३॥
2628
2629 यातीति यत् गत्वरम्। नश्वरमेवेत्यर्थः। इदमिदं बहुविधं
2630 बहिर्दृष्टिगम्यम्। स्फारं विस्तीर्णम्। वसतीति वस्तु सदैकरूपम्। अहमिति
2631 बुद्धिगम्यं च नैवं वस्तु किंत्वन्यादृशमेवेति निर्णीय तज्जिज्ञासुः
2632 संस्थितः॥ ४३॥
2633
2634 नारौ नात्मनि नो मित्रे न राज्ये न च मातरि।
2635 न संपदा न विपदा तशास्था न विभो बहिः॥ ४४॥
2636
2637 विषये पञ्च सप्तम्यः। विषयस्यैव हेतुत्वविवक्षया द्वे तृतीये। बहिः
2638 शब्देन सामान्योक्तस्यैव पूर्वः प्रपञ्चः॥ ४४॥
2639
2640 निरस्तास्थो निराशोऽसौ निरीहोऽसौ निरास्पदः।
2641 न मूढो न च मुक्तोऽसौ तेन तप्यामहे भृशम्॥ ४५॥
2642
2643 स्वपराधीनविषयत्वाभ्यामास्थाशयोर्भेदः। विशेषाभावादेव निरीहो
2644 निरिच्छः बाह्यविषये चेत् अन्तर्हि दुःखहेत्वभावात्कुतोऽसौ दुःखी तत्राह-
2645 निरास्पद इति। यतोऽव्यमऽब्धात्मविश्रान्तिरित्यर्थः। न मूढो विवेकित्वात्। नच
2646 मुक्तो विश्रान्त्यनुदयात्॥ ४५॥
2647
2648 किं धनेन किमम्बाभिः किं राज्येन किमीहया।
2649 इति निश्चयवानन्तः प्राणत्यागपरः स्थितः॥ ४६॥
2650
2651 प्राणत्यागपर इति। रागादिदोषाणामेव जन्मबीजत्वात्तद्रहितस्य मम
2652 प्राणापगमादेव मुक्तिः सेत्स्यतीति तदाशय इति भावः॥ ४६॥

भोगेऽप्यायुषि राज्येषु मित्रे पितरि मातरि।
परमुद्वेगमायातश्चातकोऽवग्रहे यथा॥ ४७॥

अवग्रहे वर्षप्रतिबन्धे॥ ४७॥

इति तोके समायातां शाखाप्रसरशालिनीम्।
आपत्तामलमुद्धर्तुं समुदेतु दयापरः॥ ४८॥

तोके पुत्रे चिन्दाकार्श्यादिशाखानां प्रसरेण प्रतानेन शालिनीं विस्तीर्णां।
आपत्तामापल्लताम्। आर्षत्वाल्लकारलोपः। यद्वा आपद्यत् इत्यापत्
आपन्नस्तद्भावम्। अथवा आपत् तां इति च्छेदः। इति तोके आपदिति व्यवहितेन
संबन्धः। द्वितीयान्तानि पूर्वाणि तामित्यस्य विशेषणानि।
उद्धर्तुमुन्मूलयितुं समुदेतु सम्यगुद्युक्तोऽस्तु भवानिति शेषः॥ ४८॥

तस्य तादृक्स्वभावस्य समग्रविभवान्वितम्।
संसारजालमाभोगि प्रभो प्रतिविषायते॥ ४९॥

आभोगि कृत्रिमवेषवत्। वेषः कृत्रिम आभोगः। प्रतिविषायते
प्रतिकूलविषवदाचरति॥ ४९॥

ईदृशः स्यान्महासत्त्वः क इवास्मिन्महीतले।
प्रकृते व्यवहारे तं यो निवेशयितुं क्षमः॥ ५०॥

एवंभूतं तं यः प्रकृते व्यवहारे निवेशयितुं क्षमः स ईदृशो
महासत्त्वो महाबलः क एव स्यात्। न कोऽपीत्यर्थः। एवेत्यनर्थको निपातः।
अथवा त्वां विनेति शेषः। त्वमिव यो भवति स एव क्षमः स्यादिति भावः॥ ५०॥

मनसि मोहमपास्य महामनाः सकलमार्तितमः किल साधुताम्।
सफलतां नयतीह तमो हरन् दिनकरो भुवि भास्करतामिव॥ ५१॥

आर्तिलक्षणानि तमांसि विवेकप्रतिरोधकानि यस्मात्तथाविधं सकलं मोहं
[मोहशब्दस्य नपुंसकत्वं चिन्त्यम्] रामस्य मनसि अपास्य इहास्मिन्
रामे विषये स्वीयां साधुतामुपदेशसमर्थतां यः सफलतां नयति स
तादृशो महामनाः क एव स्यादिति पूर्वेण संबन्धः। तत्र दृष्टान्तः ##-
नयति तद्वत्॥ ५१॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे
राघवविषादो नाम दशमः सर्गः॥ १०॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे राघवविषादो
नाम् दशमः सर्गः॥ १०॥

एकादशः सर्गः ११

विश्वामित्र उवाच।

एवं चेत्तन्महाप्राज्ञा भवन्तो रघुनन्दनम्।
इहानयन्तु त्वरिता हरिणं हरिणा इव॥ १॥

विश्वामित्राज्ञया रामस्यानीतस्य सभान्तरे।
राज्ञाश्वासनमाध्यादिबीजप्रश्नश्च वर्ण्यते॥

2705
2706 एवमुक्तप्रकारेण निर्विण्णो दुःखितो मोहितश्चेत्तस्मिन्विषये महाप्राज्ञाः
2707 परीक्षणकुशला भवन्तः | हरिणं यूथपतिं | हरिणास्तदनुयायिनो मृगाः
2708 || १ ||
2709
2710 एष मोहो रघुपतेर्नापद्भ्यो न च रागतः |
2711 विवेकवैराग्यवतो बोध एव महोदयः || २ ||
2712
2713 आपद्भ्यो रागतो वा यो जडीभावः स एव मोहः | अयं तु विवेकादिमतो
2714 बोधफलत्वाद्बोध एवेति महोदय एवेत्यर्थः || २ ||
2715
2716 इहायातु क्षणाद्राम इह चैव वयं क्षणात् |
2717 मोहं तस्यापनेष्यामो मारुतोऽद्रेर्घनं यथा || ३ ||
2718
2719 क्षणशब्दौ शीघ्रमित्यर्थे | इहैव चेत्यन्वयः | द्वितीय इहशब्द आगमनदेश
2720 एव मोहापनयनद्योतनार्थः | घनं मेघम् || ३ ||
2721
2722 एतस्मिन्मार्जिते युक्त्या मोहे स रघुनन्दनः |
2723 विश्रान्तिमेष्यति पदे तस्मिन्वयमिवोत्तमे || ४ ||
2724
2725 ननु मोहेऽपनीतेऽपि तस्य का सिद्धिस्तत्राह - एतस्मिन्निति | तस्मिन्नुपस्थिते
2726 तद्विष्णोः परमं पदम् इति श्रुतिप्रसिद्धे उत्तमे पदे स्वात्मनि || ४ ||
2727
2728 सत्यतां मुदितां प्रज्ञां विश्रान्तिमपतापताम् |
2729 पीनतां वरवर्णत्वं पीतामृत इवैष्यति || ५ ||
2730
2731 सत्यतामबाधितवस्तुताम् | मुदितां मुदितताम् | तलोपश्छान्दसः |
2732 परमानन्दरूपताम् | प्रज्ञां अपरिच्छिन्नज्ञानरूपताम् | मुदि
2733 आनन्दाविर्भावे सति तां प्रसिद्धां प्रज्ञामिति वा | पीतामृतपक्षे
2734 श्रुत्युक्तस्य धर्मफलस्य प्रत्यक्षीकरणाद्यथार्थतां स्वर्गसुखितां
2735 दैवज्ञानसंपन्नतां चेति क्रमादर्थः | पीनतां वरवर्णत्वं शरीरे || ५ ||
2736
2737 निजां च प्रकृतामेव व्यवहारपरम्पराम् |
2738 परिपूर्णमना मान्य आचरिष्यत्यखण्डितम् || ६ ||
2739
2740 ननु व्यवहारस्याविद्यकत्वप्रसिद्धेश्छत्रापाये छायापाय इव तदपायोऽपि
2741 स्यात् स त्वनिष्टः प्रजानां तत्राह - निजामिति | निजां स्ववर्णाश्रमोचिताम् |
2742 प्रकृतामुपक्रान्ताम् | यद्यपि परिपूर्णकामस्तथापि जीवता सर्वव्यवहारस्य
2743 दुस्त्यजत्वादवश्यमुपादेये व्यवहारे प्रकृतत्यागेऽन्योपादाने च
2744 हेत्वभावात्स्वचरितग्राहिजनानुग्राहकत्वाच्च निजामेव
2745 व्यवहारपरम्परामविच्छिन्नमाचरिष्यतीत्यर्थः || ६ ||
2746
2747 भविष्यति महासत्त्वो ज्ञातलोकपरावरः |
2748 सुखदुःखशाहीनः समलोष्टाश्मकाञ्चनः || ७ ||
2749
2750 ननु तामाचरंस्तत्रासज्जेत ततः पूर्ववत्सुखदुःखदशावानपि स्यान्नेत्याह
2751 - भविष्यतीति | सत्त्वं मननादिजं ज्ञानदार्ढ्यबलम् | परं
2752 कारणतत्त्वमवरं कार्यतत्त्वम् | लोके तदुभयं ज्ञातं येन | अथवा
2753 लोकानां प्राणिनां परं परमपुरुषार्थरूपमवरं सांसारिक##-
2754 परमव्याकृतं अवरं हिरण्यगर्भाख्यं च परमार्थतो ब्रह्मैव न
2755 पृथगस्तीति ज्ञातं येन | अतएवानासक्तौ समलोष्टाश्मकाञ्चनः
2756 सुखदुःखादिहीनश्चेत्यर्थः || ७ ||

2757
2758 इत्युक्ते मुनिनाथेन राजा संपूर्णमानसः ।
2759 प्राहिणोद्राममानेतुं भूयो दूतपरम्पराम् ॥ ८ ॥
2760
2761 भूय इत्युक्ते वसिष्ठवचनात्प्राक् प्रतीहारादन्येऽपि दूताः प्रेषिता एवेति गम्यते ॥
2762 ८ ॥
2763
2764 एतावताथ कालेन रामो निजगृहासनात् ।
2765 पितुः सकाशमागन्तुमुत्थितोऽर्क इवाचलात् ॥ ९ ॥
2766
2767 अथ प्रतीहारागमनानन्तरं निजगृहासनादुत्थितो राम एतावता
2768 मुनिसंवादपरिमितेन कालेन स्वपितुः स्थानं जगामेत्युत्तरेण संबन्दः ॥ ९ ॥
2769
2770 वृतः कतिपयैर्भृत्यैर्भ्रातृभ्यां च जगाम ह ।
2771 तत्पुण्यं स्वपितुः स्थानं स्वर्गं सुरपतेरिव ॥ १० ॥
2772
2773 वसिष्ठविश्वामित्रादिमहर्षिजुष्टत्वात्पुण्यम् ॥ १० ॥
2774
2775 दूरादेव ददर्शासौ रामो दशरथं तदा ।
2776 वृतं राजसमूहेन देवौघेनेव वासवम् ॥ ११ ॥
2777
2778 वसिष्ठविश्वामित्राभ्यां सेवितं पार्श्वयोर्द्वयोः ।
2779 सर्वशास्त्रार्थतज्ज्ञेन मन्त्रिवृन्देन मालितम् ॥ १२ ॥
2780
2781 सेवितं प्रियहितमधुरोक्तिभिर्लालितम् । सर्वाञ्शास्त्रार्थांस्तन्वन्ति लोके
2782 विस्तारयन्तीति सर्वशास्त्रार्थततस्तथाविधाश्च ते [ज्ञाश्चेत्यस्याग्रे तेषां
2783 इना] ज्ञाश्च ये मन्त्रिणस्तेषां वृन्देन ॥ १२ ॥
2784
2785 चारुचामरहस्ताभिः कान्ताभिः समुपासितम् ।
2786 ककुब्भिरिव मूर्ताभिः संस्थिताभिर्यथोचितम् ॥ १३ ॥
2787
2788 ककुब्भिर्दिग्भिः ॥ १३ ॥
2789
2790 वसिष्ठविश्वामित्राद्यास्तथा दशरथादयः ।
2791 ददृशु राघवं दूरादुपायान्तं गुहोपमम् ॥ १४ ॥
2792
2793 उप समीपे आयान्तम् । गुहः कार्तिकेयः ॥ १४ ॥
2794
2795 सत्त्वावष्टब्धगर्भेण शैत्येनेव हिमाचलम् ।
2796 श्रितं सकलसेव्येन गम्भीरेण स्फुटेन च ॥ १५ ॥
2797
2798 कीदृशं ददृशुस्तदाह - सत्त्वेत्यादिपञ्चभिः ।
2799 शीतस्तापोपशमनेनाल्हाद-कस्तुषारश्च तद्भावः शैत्यं तेन
2800 हिमाचलमिव श्रितम् । शैत्यस्यैव सत्त्वेत्यादीनि चत्वारि श्लिष्टानि विशेषणानि ।
2801 सत्त्वेन शान्तिविवेकहेतुना सत्त्वगुणेन प्राणिनिकायेन च व्याप्तान्तरेण ।
2802 सकलैः पूर्णैः कला-सहितचन्द्रेण च सिवेतुं योग्येन ।
2803 गम्भीरेणानवगाह्यान्तेन स्फुटेन चेति यथोचितं संबन्धः ॥ १५ ॥
2804
2805 सौम्यं समं शुभाकारं विनयोदारमानसम् ।
2806 कान्तोपशान्तवपुषं परस्यार्थस्य भाजनम् ॥ १६ ॥
2807
2808 सौम्यं प्रियदर्शनम् । सममन्यूनानतिरिक्ताङ्गम् । कान्तं मनोहरम् ।

2809 उपशान्तमनुग्रम् | परस्यार्थस्य पुरुषार्थस्य || १६ ||
2810
2811 समुद्यद्यौवनारम्भं वृद्धोपशमशोभनम् |
2812 अनुद्विग्नमनानन्दं पूर्णप्रायमनोरथम् || १७ ||
2813
2814 सम्यगुद्यन्यौवनारम्भो यस्य तम् | वृद्धवदुपशमेन शोभनम् |
2815 अनुद्विग्नमविवेकापगमात् | अनानन्दमप्राप्तपरमानन्दम् || १७ ||
2816
2817 विचारितजगद्यात्रं पवित्रगुणगोचरम् |
2818 महासत्त्वैकलोभेन गुणैरिव समाश्रितम् || १८ ||
2819
2820 जगद्यात्रा संसारगतिः | पवित्राणां गुणानां पवित्रगुणानां पुरुषाणां
2821 वा गोचरं विषयम् | गुणैः सर्वैर्महासत्त्विकलोभेनैव सम्यगाश्रितम् || १८ ||
2822
2823 उदारमार्यमापूर्णमन्तःकरणकोटरम् |
2824 अविक्षुभितया वृत्त्या दर्शयन्तमनुत्तमम् || १९ ||
2825
2826 अविक्षुभितया वृत्त्या स्थित्या सर्वसाधनसंपत्तावपि तत्त्वबोधविश्रान्त्य##-
2827 दर्शयन्तं सूचयन्तम् | अनुत्तममिति रामविशेषणं वा || १९ ||
2828
2829 एवङ्गुणगणाकीर्णो दूरादेव रघूद्वहः |
2830 परिमेयस्मिताच्छाच्छस्वहाराम्बरपल्लवः || २० ||
2831
2832 रघूद्वहः प्रणनामेत्युत्तरेणान्वयः | अम्बरमेव पल्लवोऽम्बरपल्लवः
2833 परिमेयौ स्मितमिवाच्छादच्छौ स्वीयौ हाराम्बरपल्लवौ यस्य यः || २० ||
2834
2835 प्रणनाम चलच्चारुचूडामणिमरीचिना |
2836 शिरसा वसुधाकम्पलोलदेवाचलश्रिया || २१ ||
2837
2838 चूडामणिः शिरोरत्नम् | देवाचलः सुमेरुः || २१ ||
2839
2840 एवं मुनीन्द्रे ब्रुवति पितुः पादाभिवन्दनम् |
2841 कर्तुमभ्याजगामाथ रामः कमललोचनह् || २२ ||
2842
2843 एवं सर्गादिश्लोकसप्तकोक्तप्रकारेण मुनीन्द्रे विश्वामित्रे ब्रुवति सति अथ
2844 रामः पितुः पादाभिवन्दनं कर्तुमभ्याजगामेति संबन्धः || २२ ||
2845
2846 प्रथमं पितरं पश्चान्मुनी मान्यैकमानितौ |
2847 ततो विप्रांस्ततो बन्धूंस्ततो गुरुगणान्सुहृत् || २३ ||
2848
2849 मुनी वसिष्ठविश्वामित्रौ | मान्यैरपि मुख्यतया मानितौ | सुहृत्
2850 शोभनहृदयो रामः || २३ ||
2851
2852 जग्राह च ततो दृष्ट्या मनाङ्मूर्ध्ना तथा गिरा |
2853 राजलोकेन विहितां तां प्रणामपरम्पराम् || २४ ||
2854
2855 मनाङ्नम्रेण मूर्ध्नेति तदुचितेषु विनयसूचनाय || २४ ||
2856
2857 विहिताशीर्मुनिभ्यां तु रामः सुसममानसः |
2858 आससाद पितुः पुण्यं समीपं सुरसुन्दरः || २५ ||
2859
2860 सुसममानसः आशीरर्थलाभालाभयोः || २५ ||

2861
2862 पादाभिवन्दनपरं तमथासौ महीपतिः |
2863 शिरस्यभ्यालिलिङ्गाशु चुचुम्ब च पुनःपुनः || २६ ||
2864
2865 शिरसि आघ्रायेति शेषः | अभ्यालिलिङ्ग अभिमुखमालिङ्गितवान् || २६ ||
2866
2867 शत्रुघ्नं लक्ष्मणं चैव तथैव परवीरहा |
2868 आलिलिङ्ग घनस्नेहो राजहंसोऽम्बुजे यथा || २७ ||
2869
2870 यथा रामं तथैव | राजहंसोऽम्बुजे यथेति चुम्बने दृष्टान्तः || २७ ||
2871
2872 उत्सङ्गे पुत्र तिष्ठेति वदत्यथ महीपतौ |
2873 भूमौ परिजनास्तीर्णे सोंऽशुकेऽथ न्यविक्षत || २८ ||
2874
2875 उत्सङ्गे अङ्के | अंशुके वस्त्रे | न्यविक्षत उपाविशत् || २८ ||
2876
2877 राजोवाच |
2878
2879 पुत्र प्राप्तविवेकस्त्वं कल्याणानां च भाजनम् |
2880 जडवज्जीर्णया बुद्ध्या खेदायात्मा न दीयताम् || २९ ||
2881
2882 जडवदविवेकिवत् | जीर्णया शिथिलया | खेदाय दैन्याय | आत्मा जीवः || २९ ||
2883
2884 वृद्धविप्रगुरुप्रोक्तं त्वादृशेनानुतिष्ठता |
2885 पदमासाद्यते पुण्यं न मोहमनुधावता || ३० ||
2886
2887 वृद्धैः पित्रादिभिः | गुरुभिराचार्यैः | प्रजापालनधर्मसाधनत्वात्##-
2888
2889 तावदेवाऽऽपदो दूरे तिष्ठन्ति परिपेलवाः |
2890 यावदेव न मोहस्य प्रसरः पुत्र दीयते || ३१ ||
2891
2892 असन्निहिता दूरे तिष्ठन्ति नोपसर्पन्ति | सन्निहितास्तु परिपेलवाः सर्वतो
2893 लधीयस्यस्तिष्ठन्ति न कार्यक्षमा इत्यर्थः | मोहस्य प्रसरे तु तद्विपरीता
2894 भवन्तीत्यर्थः || ३१ ||
2895
2896 श्रीवसिष्ठ उवाच |
2897
2898 राजपुत्र महाबाहो शूरस्त्वं विजितास्त्वया |
2899 दुरुच्छेदा दुरारम्भा अप्यमी विषयारयः || ३२ ||
2900
2901 त्वमेव शूरो यतस्त्वया विषयारयो विजिताः | प्रसिद्धा अरयो दुरुच्छेदा एव न ते
2902 स्वेन दुःखेनारभ्यन्ते | विषयारयस्तु स्वेनैव संपादिता सुःखान्तरपर##-
2903
2904 किमतज्ज्ञ इवाज्ञानां योग्ये व्यामोहसागरे |
2905 विनिमज्जसि कल्लोलबहुले जाड्यशालिनि || ३३ ||
2906
2907 एवंभूतोऽपि त्वमज्ञानां योग्ये व्यामोहसागरे अतज्ज्ञ इवानात्मज्ञ इव किं
2908 निमज्जसि | कल्लोला बृहत्तरङ्गा विक्षेपकाः | जाड्यं मौढ्यमावरणम् || ३३
2909 | |
2910
2911 विश्वामित्र उवाच |
2912

चलन्निलोत्पलव्यूहसमलोचनलोलताम् ।
ब्रूहि चेतःकृतां त्यक्त्वा हेतुना केन मुह्यसि ॥ ३४ ॥

चलता नीलोत्पलसमूहेन समां लोचनयोर्लोलतां चञ्चलताम् । चेतो व्यग्रचित्तं तेन कृताम् । केन हेतुना विमुह्यसि भ्राम्यसि । तव भ्रान्तिहेतुः क इत्यर्थः ॥ ३४ ॥

किंनिष्ठाः के च ते केन कियन्तः कारणेन ते ।
आधयः प्रविलुम्पन्ति मनो गेहमिवाखवः ॥ ३५ ॥

आधयो मानसव्यथा मनः परिलुम्पन्ति विषादयन्ति । कस्मिन्निष्ठा समाप्तिर्येषां ते । कस्मिन्कामे संपन्ने शामन्तीत्यर्थः । अथवा किमाश्रिताः के चेति तत्स्वरूपप्रश्नः । केनेति तन्निमित्तप्रश्नः । कियन्त इति तद्विभागप्रश्नः । कारणेनेति केनेत्यनेन संबध्यते । गेहं गृहं आखनन्तीत्याखवो मूषकाः ॥ ३५ ॥

मन्ये नानुचितानां त्वमाधीनां पदमुत्तमम् ।
आपत्सु चाऽप्रयोज्यं ते निहीना अपि चाधयः ॥ ३६ ॥

नन्वाधिहेत्वादयो जगति प्रसिद्धा एव ते कुतः पृच्छ्यन्ते तत्राह - मन्य इति । सत्यं प्रसिद्धाः त्वं तु तेषामनुचितानामुत्तममुचितं पदं स्थानं न भवसि । आपन्नो दरिद्रो वा तत्पदं स्यात् । ते तव च आपत्सु अप्रयोज्यं प्रतीकार्यं नास्ति । पितृप्रभावेणैव सर्वापदां निरस्तत्वात् । अपिच ते आधयो निहीनाः स्वत एव निरस्ताः । सर्वसौभाग्यसंपन्नतया पूर्णत्वादिति भावः ॥ ३६ ॥

यथाभिमतमाशु त्वं ब्रूहि प्राप्स्यसि चानघ ।
सर्वमेव पुनर्येन भेत्स्यन्ते त्वां तु नाधयः ॥ ३७ ॥

अभिमतमनतिक्रम्य यथाभिमतम् । अभिमतार्थमप्रच्छाद्येत्यर्थः । अनघेति हेतुगर्भम् । सर्वमेवाभिमतं प्रप्स्यसीति संबन्धः । येनाभिमतलाभेन पुनराधयस्त्वां न भेत्सन्ते ॥ ३७ ॥

इत्युक्तमस्य सुमते रघुवंशकेतु-
राकर्ण्य वाक्यमुचितार्थविलासगर्भम् ।
तत्याज खेदमभिगर्जति वारिवाहे
बर्ही यथा त्वनुमिताभिमतार्थसिद्धिः ॥ ३८ ॥

सुमतेर्विश्वामित्रस्य इति उक्तमुचितानां स्वाभिलाषानुरूपाणामर्थानां विलासः प्रकाशो गर्भे तात्पर्ये यस्य तथाविधं वाक्यं निशम्य रघुवंशकेतुः श्रीमः अनुमिताभिमतार्थसिद्धिः सन् खेदं तत्याजेति संबन्धः । वारिवाहे मेघे । बर्हीं मयूरः ॥ ३८ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे राघवसमाश्वासनं नामैकादशः सर्गः ॥ ११ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे राघवसमाश्वासनं नामैकादशः सर्गः ॥ ११ ॥

द्वादशः सर्गः १२

वाल्मीकिरुवाच ।

2965 इति पृष्टो मुनीन्द्रेण समाश्वस्य च राघवः।
2966 उवाच वचनं चारु परिपूर्णार्थमन्थरम्॥ १॥
2967
2968 भोगानां दुःखस्वरूपत्वं विषयादेरसत्यता।
2969 संपदामप्यनर्थत्वमित्याद्यत्रोपवर्ण्यते॥
2970
2971 समाश्वस्य सम्यगाश्वास। म्प्राप्य। परुपूर्णार्थगौरवादिव मन्थरं
2972 मन्दप्रवृत्तमतएव चारु॥ १॥
2973
2974 श्रीराम उवाच।
2975
2976 भगवन्भवता पृष्टो यथावदधुनाऽखिलम्।
2977 कथयाम्यहमज्ञोऽपि को लङ्घयति सद्वचः॥ २॥
2978
2979 को लङ्घयतीति। तथा च भवदाज्ञापरिपालनाय वदामि नतु घाष्ट्येंनेति
2980 भावः॥ २॥
2981
2982 अहं तावदयं जातो निजेऽस्मिन्पितृसद्मनि।
2983 क्रेमण वृद्धिं संप्राप्तः प्राप्तविद्यश्च संस्थितः॥ ३॥
2984
2985 इत्थं विनयोक्त्या मुनिं वशिकृत्य स्ववृत्तानुवादव्याजेन
2986 धर्मानुष्ठान-जन्यचित्तशुद्ध्या विवेकवैराग्याभ्यां विचारोदयं
2987 स्वस्य दर्शयति - अहं तावदित्यादिचतुर्भिः॥ ३॥
2988
2989 ततः सदाचारपरो भूत्वाहं मुनिनायक।
2990 विहृतस्तीर्थयात्रार्थमुर्वीमम्बुधिमेखलाम्॥ ४॥
2991
2992 विहृतः संचरितवान्। गत्यर्थत्वात्कर्तरि क्तः॥ ४॥
2993
2994 एतावताथ कालेन संसारास्थामिमां हरन्।
2995 समुद्भूतो मनसि मे विचारः सोऽयमीदृशः॥ ५॥
2996
2997 ईदृशो वक्ष्यमाणलक्षणः॥ ५॥
2998
2999 विवेकेन परीतात्मा तेनाहं तदनु स्वयम्।
3000 भोगनीरसया बुद्ध्या प्रविचारितवानिदम्॥ ६॥
3001
3002 भोगेषु रसो रागस्तच्छून्यया॥ ६॥
3003
3004 किंनामेदं बत सुखं येयं संसारसंततिः।
3005 जायते मृतये लोको म्रियते जननाय च॥ ७॥
3006
3007 किंनाम सुखम्। न किंचिदित्यर्थः। संततिर्विस्तारः। असुखत्वमेवोप##-
3008 वचनादिति भावः॥ ७॥
3009
3010 अस्थिराः सर्व एवेमे सचराचरचेष्टिताः।
3011 आपदां पतयः पापा भावा विभवभूमयः॥ ८॥
3012
3013 नन्वस्तु तथा तथाप्यन्तराले विभवभूमिषु सुखमनुभूयत एवेति तत्राह ##-
3014 दैवोपपन्नसाधनायत्तेत्युभयविधा [साधनोपपन्नेत्युभय]
3015 भोगप्रवृत्तिस्तल्लक्षणचेष्टितसहिता अपि विभवभूमयो
3016 वैभवसमयमात्रस्थितिका भावा विषयाः स्रक्चन्दनान्नपानादयो न

3017 सुखदाः यतोऽस्थिराः। अलाभवियोगकालयोर्दुःखदा इत्यर्थः।
3018 तवाप्युंपभोगकाले तेभ्यः सुखमाशङ्क्याह - आपदां पतय इति।
3019 पतयः स्वामिनः। श्रेष्ठा इति यावत्। रागादिदोषोपजननेन
3020 परमापत्प्रापकत्वात्तद्रूपा एवेत्यर्थः। अनिषिद्धा एवं निषिद्धास्तु पापा अपि
3021 पापजकत्वात्। तथाच विषसंपृक्तान्नसदृश-त्वान्न तद्भोगे सुखमिति
3022 नास्ति संसारे सुखमिति सिद्धमिति भावः॥ ८॥
3023
3024 अयःशलाकासदृशाः परस्परमसङ्गिनः।
3025 श्लिष्यन्ते केवलं भावा मनःकल्पनया स्वया॥ ९॥
3026
3027 यदि न ते सुखदास्तर्हि कथं सुखकारकत्वेन परस्परं संबध्यन्ते तत्राह
3028 - अय इति। सर्वेऽपि भावाः स्वतो लोहशलाकाः सूच्यादय इव
3029 परस्परमसङ्गिनः संबन्धशुन्या एव परंतु अनया ममेदं
3030 भोगसाधनमनेनेत्थमिदं करिष्यामीत्यादिमनःकल्पनया केवलं
3031 क्रियाकारकादिभावेन श्लिष्यन्ते संबन्ध्यन्ते। तथैवान्वयव्यतिरेक##-
3032
3033 मनः समायत्तमिदं जगदाभोगि दृश्यते।
3034 मनश्चासदिवाभाति केन [केन स्मः] स्म परिमोहिताः॥ १०॥
3035
3036 न केवलं भावानां संबन्धमात्रं मनोधीनं किंतु जन्मस्थिति##-
3037 तर्हि मन एव सुखसाधनमस्तु नेत्याह - मन इति। असच्छुन्यमिव विवेके
3038 आभाति। तथाच न ततोऽपि सुखसिद्धिरिति व्यमेतावन्तं कालं केन सुखं स्यादिति
3039 मोहिताः स्मः॥ १०॥
3040
3041 असतैव वयं कष्टं विकृष्टा मूढबुद्धयः।
3042 मृगतृष्णाम्भसा दूरे वने मुग्धमृगा इव॥ ११॥
3043
3044 अतः परिशेषाद्भ्रान्तिरेवेयमिति दर्शयति - असतैवेति। संसारे
3045 सौखतत्साध-नयोरसत्वादेवेत्यर्थः। कष्टं यथा स्यात्तथा विकृष्टा
3046 आकृष्टाः। दार्ष्टान्तिके मृगतृष्णाम्भःसदृश्या सुखाशयेति गम्यते
3047 । मुग्धमृगा मूढहरिणाः॥ ११॥
3048
3049 न केनचिच्च विक्रीता विक्रीता इव संस्थिताः।
3050 बत मूढा वयं सर्वे जानानां अपि शाम्बरम्॥ १२॥
3051
3052 संस्थिताः [पारवश्यादित्यर्थः] परवशा इत्यर्थः। जाअनाना
3053 अभिज्ञंमन्या अपि वयं मूढा एव। शाम्बरं शम्बरसंबन्धि।
3054 मायेयमिति भावः॥ १२॥
3055
3056 किमेतेषु प्रपञ्चेषु भोगा नाम सुदुर्भगाः।
3057 मुधैव हि वयं मोहात्संस्थिता बद्धभावनाः॥ १३॥
3058
3059 भोगा विषयसुखलवाः किंनाम। दृष्टनष्टस्वभावत्वाद्दुरन्तदुःख##-
3060 व्यर्थमेव बद्धा इति भावना भ्रान्तिर्येषां ते तथाभूताः संस्थिताः॥ १३॥
3061
3062 आ ज्ञातं बहुकालेन व्यर्थमेव वयं वने।
3063 मोहे निपतिता मुग्धाः श्वभ्रे मुग्धा मृगा इव॥ १४॥
3064
3065 आ इति स्मरणाभिलापे। बहुकालेन ज्ञातम्। किं तदाह - व्यर्थमेव मोहे
3066 निपतिता इति। वने श्वभ्रे वनान्तर्गतगर्ते॥ १४॥
3067
3068 किं मे राज्येन किं भिगैः कोऽहं किमिदमागतम्।

3069 यन्मिथ्यैवास्तु तन्मिथ्या कस्य नाम किमागतम् ॥ १५ ॥
3070
3071 कोऽहम् इदं दृश्यजातं किंस्वरूपम् किमर्थं चागतम् राज्येन च मे किम्
3072 भोगैश्च किम् किमिदं सर्वं मिथ्यैवोत किंचित्सत्यमपि । तत्र किं दृष्टिः
3073 सत्योत [सत्योत असत्या] दृश्यम् । तर यन्मिथ्यैअ तदेव मिथ्यास्तु नतु
3074 वैपरीत्यम् । तस्य मित्यात्वे कस्य किमागतम् । न कापि क्षतिरिति भावः ॥ १५ ॥
3075
3076 एवं विमृशतो ब्रह्मन्सर्वेष्वेव ततो मम ।
3077 भावेष्वरतिरायाता पथिकस्य मरुष्विव ॥ १६ ॥
3078
3079 एवं किंनामेदमित्यादिनवश्लोकोक्तप्रकारेण विमृशतो विचारयतः ।
3080 अरतिर्वैरस्यम् । मरुषु निर्जलभूमिषु ॥ १६ ॥
3081
3082 तदेतद्भगवन्ब्रूहि किमिदं परिणश्यति ।
3083 किमिदं जायते भूयः किमिदं परिवर्धते ॥ १७ ॥
3084
3085 एवं स्वस्य विचारोत्पत्तिप्रकारमुपवर्ण्य प्रष्टव्यांश। म्दर्शयति -
3086 तदेतदित्यादिपञ्चभिः । तत्तस्माद्विमर्शे असारत्वात्तत्रादौ विनाशोत्पत्ति##-
3087 मिमिदमित्यादिना । इदं सत्यतया सर्वानुभवप्रमाणसिद्धं दृश्यं
3088 परिणश्यति सर्वात्मना असदिवापद्यते तत्किं सतोऽसत्त्वविरोधात् यद्यसदेवेति
3089 कश्चिद्ब्रूयात्तर्हि भूयो जायते सत्त्वमापद्यते तदिदं किं
3090 सत्त्वासत्त्वबहिर्भूतान्वृद्ध्यादि-विकारांश्चेदं भजते तदपि यदि
3091 पूर्वावस्थं नश्यत्यवस्थान्तर-वच्चोत्पद्यते तर्हि प्रत्यभिज्ञाविरोधो
3092 वृद्ध्यादिव्यवहारानुपपत्तिश्च । यदि पूर्वावस्थं न नश्यति तर्हि
3093 युगपदुभयावस्थत्वप्रसङ्गः अवस्थान्तर##-
3094 भिद्येरंस्तर्हि तासामभावत्वम् अभेदे च [अवस्थायिनि अवस्था चेति अनयोः
3095 पर्यायवृत्तिता स्यात्] स्थायिन्यवस्थावति पर्यायवृत्ति##-
3096 प्रश्नत्रयस्योत्तरार्थमुत्पत्तिस्थित्युपशमप्रक-रणानि । अथवा इदं
3097 शरीरं किं नश्यति । पुनः किं जायते किं वर्धते । न कश्चिदस्य
3098 जन्मादिनार्थ इत्यर्थः ॥ १७ ॥
3099
3100 जरामरणमापच्च जननं संपदस्तथा ।
3101 आविर्भावतिरोभावैर्विवर्धन्ते [विवर्धन्ति] पुनः पुनः ॥ १८ ॥
3102
3103 अर्थो नास्तीत्येतावदेव न प्रत्युतानर्थपरम्पराप्यस्तीत्याह - जरेति ।
3104 संपदामप्यनर्थहेतुत्वादनर्थेषु गणनम् ॥ १८ ॥
3105
3106 भोगैस्तैरेव तैरेव तुच्छैर्वयममी किल ।
3107 पश्य जर्जरतां नीता वातैरिव गिरिद्रुमाः ॥ १९ ॥
3108
3109 ननु भोगहेतुत्वाद्देहस्यार्थो।प्यस्तीत्याशङ्क्याह - भोगैरिति । तैरेव
3110 तैरेवेति तेषामपूर्वत्वाभावात्पिष्टपेषणवद्वैरस्यद्योतनाय । अमी
3111 भोगलम्पटाः । जर्जरतां शैथिल्यम् । तथाच भोगानामप्यनर्थत्वमेवेति
3112 भावः ॥ १९ ॥
3113
3114 अचेतना इव जनाः पवनैः प्राणनामभिः ।
3115 ध्वनन्तः संस्थिता व्यर्थं यथा कीचकवेणवः ॥ २० ॥
3116
3117 प्रज्ञावतामप्यात्यन्तिकदुःखोपशमनोपायासंपादने वृथैव सा
3118 प्रज्ञेत्यचेतनप्रायास्त इत्यभिप्रेत्याह - अचेतना इति । व्यर्थं
3119 पुरुषार्थोपयोगं विना । वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः ॥ २० ॥
3120

3121 शाम्यतीदं कथं दुःखमिति तप्तोऽस्मि चिन्तया |
3122 जरद्द्रुम इवोग्रेण कोटरस्थेन वह्निना || २१ ||
3123
3124 हेतुना केन मुह्यसीति प्रश्नस्योत्तरमाह - शाम्यतीति || २१ ||
3125
3126 संसारदुःखपाषाणनीरन्ध्रहृदयोऽप्यहम् |
3127 निजलोकभयादेव गलद्बाष्पं न रोदिमि || २२ ||
3128
3129 संसारदुःखैः पाषाण इव नीरन्ध्रं निश्छिद्रं निबिडपूरितं हृदयं
3130 यस्येत्यर्थः | निजलोकाः स्वजनास्तेऽपि मदर्थं [मारोदिषुरिति] रुद्युरिति
3131 भयादेव || २२ ||
3132
3133 शून्या मन्मुखवृत्तीस्ताः शुष्करोदननीरसाः |
3134 विवेक एव हृत्संस्थो ममैकान्तेषु पश्यति || २३ ||
3135
3136 शुष्केणानश्रुणा रोदनेन नीरसाः प्रीतिशून्या अतएव स्वहेतुहर्षादि##-
3137 कृत्रिमस्मिताभिलापादिवृत्तिर्मम विवेक एव पश्यतीत्यर्थः || २३ ||
3138
3139 भृशं मुह्यामि संस्मृत्य भावाभावमयीं स्थितिम् |
3140 दारिद्र्येणेव सुभगो दूरे संसारचेष्टया || २४ ||
3141
3142 भावानां प्रियतमविषयाणामभावो विनाशस्तत्प्रचुराम् | अथवा भावः
3143 सर्वदुःखोपशमनोपलक्षितपरमानन्दभावस्तदभावोऽज्ञानं
3144 तद्विकारभूतां स्थितिं संस्मृत्य विचार्य संसारचेष्टया भृशं
3145 मुह्यामि | सुभगो धनादिसंपन्नो दूरे अर्थात्सौभाग्यात्परतो दैवात्प्राप्तेन
3146 दारिद्र्येण पूर्वदशां संस्मृत्य यथा मुह्यति तद्वत् || २४ ||
3147
3148 मोहयन्ति मनोवृत्तिं खण्डयन्ति गुणावलिम् |
3149 दुःखजालं प्रयच्छन्ति विप्रलम्भपराः श्रियः || २५ ||
3150
3151 ननु श्रीभिरेव त्वदभिमतोऽर्थः सेत्स्यति श्रीमतां किं नु दुर्लभम् इति
3152 प्रवादात्तत्राह - मोहयन्तीति | विप्रलम्भो वञ्चनम् || २५ ||
3153
3154 चिन्तानिचयचक्राणि नानन्दाय धनानि मे |
3155 संप्रसूतकलत्राणि गृहाण्युग्रापदामिव || २६ ||
3156
3157 तदेव प्रपञ्चयति - चिन्तेति | धनिनश्चिन्ताधाराभिस्तिलशः खण्डनेन
3158 निचयाय राशीकरणाय प्रवृत्तानि चक्राणि | उग्रापदां दारिद्र्यशत्रु##-
3159
3160 विविधदोषदशापरिचिन्तनैर्वितितभङ्गुरकारणकल्पितैः |
3161 मम न निर्वृतिमेति मनो मुने निगडितस्य यथा वनदन्तिनः || २७ ||
3162
3163 देहादिभावानां संततसंभावितभङ्गुरत्वहेतुसमर्थितैर्विविधानां
3164 दृष्टादृष्टदोषाणां दुर्दशानां च परिचिन्तनैर्हेतुभिर्मम मनो
3165 नोर्वृतिं सुखं नैति | दन्तिपक्षे
3166 विस्ताररहितगर्तपिधानभङ्गुरकाष्ठादि-दुर्दशानां च
3167 परिचिन्तनैरित्यर्थः || २७ ||
3168
3169 खलाः कालेकाले निशि निशितमोहैकमिहिका-
3170 गतालोके लोके विषयशतचौराः सुचतुराः |
3171 प्रवृताः प्रोद्युक्ता दिशिदिशि विवेकैकहरणे
3172 रणे शक्तास्तेषां क इव विदुषः प्रोज्झ्य सुभटाः || २८ ||

3173

3174 अज्ञानलक्षणायां निशि लोके जने मोहोऽविचारस्तल्लक्षणाभिर्मिहिकाभिस्तु##-

3175 सुचतुरा विषयशतचौराः कालेकाले सर्वदा दिशिदिशि सर्वदिक्षु विवेकलक्षण##-

3176 वर्तन्त इति शेषः। रणे युद्धे तेषां वधाय विदुषः प्रोज्झ्य

3177 तत्त्वज्ञानविहायान्ये के सुभटाः शक्ताः। न केऽपीत्यर्थः।

3178 इवकारस्तत्सदृशानामपि दौर्लभ्यद्योतनार्थः। विना तमोनाशं

3179 तद्वधासंभवादिति भावः॥ २८॥

3180

3181 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे

3182 प्रथमपरितापो नाम द्वादशः सर्गः॥ १२॥

3183

3184 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे

3185 प्रथमपरितापो नाम द्वादशः सर्गः॥ १२॥

3186

3187 त्रयोदशः सर्गः १३

3188

3189 श्रीराम उवाच।

3190

3191 इयमस्मिन्स्थितोदारा संसारे परिकल्पिता।

3192 श्रीर्मुने परिमोहाय सापि नूनं कदर्थदा॥ १॥

3193

3194 या प्रिया सर्वमूढानां या भोगानर्थदा सदा।

3195 दोषैर्बहुविधैः सा श्रीरासर्गान्तं विनिन्द्यते॥

3196

3197 इत्थं विषयाणामसारानर्थतां प्रतिपाद्य विषयसंपादनमूलश्रियोऽपि

3198 तथाविधतां प्रतिपादयितुमुपक्रमते - इयमित्यादिना। अस्मिन्संसारे स्थिता

3199 अनपगता सती बहुतरसुखहेतुत्वादुदारा उत्कृष्टेति परिकल्पिता। मूढजनैरिति

3200 शेषः। वस्तुतस्तु सापि परिमोहायैव नूनम्। यतो वधबन्धनरकादिक##-

3201 परिमोहायाप्राप्ता वियुक्ता वा कदर्थदेति वा कुत्सितानर्थान् धनानि ददाति न

3202 विवेकमिति वा कदर्थदा॥ १॥

3203

3204 उल्लासबहुलानन्तकल्लोलानलमाकुलान्।

3205 जडान्प्रवहति स्फारान्प्रावृषीव तरङ्गिणी॥ २॥

3206

3207 उल्लासैरुत्साहैर्बहुला अनन्ताः कल्लोला मनोरथपरम्परा येषां तान्

3208 स्फारान्बहून् जडान्मूर्खान् प्रवहति पारवश्यमापाद्याकर्षति।

3209 तरङ्गिणीपक्षे ऊर्ध्वं लासो नाट्यं तेन बहुलानुपचिताननन्तान्##-

3210

3211 चिन्तादुहितरो बह्व्यो भूरिदुर्ललितैधिताः।

3212 चञ्चलाः प्रभवन्त्यस्यास्तरङ्गाः सरितो यथा॥ ३॥

3213

3214 अस्याः श्रियश्चिन्तालक्षणा दुहितरः पुत्र्यः प्रभवन्ति।

3215 दुर्ललितैर्दुष्टचेष्टितैरेधिता वर्धिताः॥ ३॥

3216

3217 एषा हि पदमेकत्र न निबध्नाति दुर्भगा।

3218 दग्धेवानियताचारमितश्चेतश्च धावति॥ ४॥

3219

3220 यथा काचिद्दुर्भगा मोहाद्वह्निं पदा आस्कन्द्य दग्धा सती एकत्र पदं न

3221 निबध्नाति पादं न स्थापयति किंत्वनियतचेष्टं यथा स्यात्तथा इतश्चेतश्च

3222 धावति तथा श्रीरपि पदं स्थानं अनियताचारं शास्त्र##-

3223

3224 जनयन्ती परं दाहं [परिक्षीणाङ्गका सती]

3225 परामृष्टाङ्गिका सती।
3226 विनाशमेव धत्तेऽन्तर्दीपलेखेव कज्जलम्॥ ५॥
3227
3228 व्ययापहारादिना परामृष्टैकदेशा परं दाहं जनयन्ती श्रीमत इत्यर्थः
3229 । अन्तः मध्ये। अकाण्ड एवेत्यर्थः। विनाशं स्वस्याः स्वोपभोक्तुर्वा।
3230 दीपलेखापक्षे परामृष्टाङ्गिका स्पृष्टावयवा। विनाशस्य
3231 तमोनिष्ठत्वद्योतनाय कज्जलदृष्टान्तः॥ ५॥
3232
3233 गुणागुणविचारेण विनैव किल पार्श्वगम्।
3234 राजप्रकृतिवन्मूढा दुरारूढाऽवलम्बते॥ ६॥
3235
3236 दुरारुढा दुःखेन संपादितापि न गुणवतां धार्मिकाणामेवोप##-
3237 [सकामपुण्यवशाद्यं कचित्] कंचित्संनिहितमवलम्बते। यथा
3238 राज्ञां प्रकृतिः स्वभावः। बहुधा मूढा राजानो न
3239 धार्मिकैर्गुणवद्भिः सह स्निह्यन्ति किंतु येनकेनचित्संनिहितेन सहेति
3240 प्रसिद्धम्॥ ६॥
3241
3242 कर्मणा [तेनैव] तेनतेनैषा विस्तारमनुगच्छति।
3243 दोषाशीविषवेगस्य यत्क्षीरं विस्तरायते॥ ७॥
3244
3245 यस्य कर्मणः क्षीरं फलं
3246 धनराज्यलाभादिलोभहिंसानृतादिदोषसर्प-वेगानां विस्ताराय भवति
3247 तेनतेनैव युद्धद्यूतवाणिज्यादिकर्मणैषा श्रीर्विस्तारमधिगच्छति न
3248 यागदानादिना। प्रत्युत तेषां व्ययहेतुत्वादित्यर्थः॥ ७॥
3249
3250 तावच्छीतमृदुस्पर्शाः परे स्वे च जने [जनः] जनाः।
3251 वात्ययेव हिमं यावच्छ्रिया न परुषीकृताः [परुषीकृतः]॥ ८
3252 ।।
3253
3254 शीतमृदुस्पर्शपदेन दयादाक्षिण्यस्नेहाद्युपलक्ष्यते। वातसमूहो वात्या।
3255 परुषीकृता [कृतः इत्युभयत्रैकवचनं क्वचित्] दुःसहीकृताः॥ ८
3256 ।।
3257
3258 प्राज्ञाः शूराः कृतज्ञाश्च पेशला मृदवश्च ये।
3259 पांसुमुष्ट्येव मणयः श्रिया ते मलिनीकृताः॥ ९॥
3260
3261 तदेव स्पष्टयति - प्राज्ञा इति। स्पष्टम्॥ ९॥
3262
3263 न श्रीः सुखाय भगवन्दुःखायैव हि वर्धते।
3264 गुप्ता विनाशनं धत्ते मृतिं विषलता यथा॥ १०॥
3265
3266 गुप्ता रक्षिता विनाशनं विनाशसाधनं धत्ते संपादयति। मृतिं
3267 मरणम्॥ १०॥
3268
3269 श्रीमानजननिन्द्यश्च शूरश्चाप्यविकत्थनः।
3270 समदृष्टिः प्रभुश्चैव दुर्लभाः पुरुषास्त्रयः॥ ११॥
3271
3272 ननु श्रीमन्तोऽपि धार्मिका यशस्विनश्च केचिद्दृश्यन्ते तत्राह -
3273 श्रीमानिति। स्पष्टम्॥ ११॥
3274
3275 एषा हि विषमा दुःखभोगिनां गहना गुहा।
3276 घनमोहगजेन्द्राणां विन्ध्यशैलमहातटी॥ १२॥

सुःखलक्षणानां भोगिनां सर्पाणाम् ‖ १२ ‖

सत्कार्यपद्मरजनी दुःखकैरवचन्द्रिका [कैरवं
शुभ्रकमलम्] ।
सुदृष्टिदीपिकावात्या कल्लोलौघतरङ्गिणी ‖ १३ ‖

सत्कार्याणि पुण्यकर्माणि तल्लक्षणपद्मानां रजनी रात्रिः ।
संकोचहेतुरित्यर्थः । एवं दुःखकैरवाणां चन्द्रिका विकासहेतुः ।
सुदृष्टिर्दयादृष्टिः परमार्थदृष्टिर्वा तद्रूपदीपिकाया वात्या
वातसमूहः । कल्लोलौघयुक्ता तरङ्गिणीव । अस्या अपि दीपप्रशमन##-

संभ्रमाभ्रादिपदवी विषादविषवर्धिनी ।
केदारिका विकल्पानां खेदायभयभोगिनी ‖ १४ ‖

संभ्रमो भयं भ्रान्तिश्च तद्रूपाणामभ्राणामादिपदवी प्रथममार्गः
पुरोवातादिः । केदारिका क्षेत्रभक्तिर्विकल्पसस्यानाम् । खेदः आयो लाभो यस्य
तथाविधस्य भयस्य जनने भोगिनी सर्पिणी भयभागवती । खेदायेति
पृथक्पदं वा ‖ १४ ‖

हिमं वैराग्यवल्लिनां विकारोलूकयामिनी ।
राहुदंष्ट्रा विवेकेन्दोः सौजन्याम्भोजचन्द्रिका ‖ १५ ‖

विकाराश्चित्तविकाराः कामादयः ‖ १५ ‖

इन्द्रायुधवदालोलनानारागमनोहरा ।
लोला तडिदिवोत्पन्नध्वंसिनी च जडाश्रया ‖ १६ ‖

इन्द्रायुधं शक्रधनुस्तद्वत् । चन्द्रायुधमिति पाठेऽप्यर्धचन्द्रवद्व##-
मूर्खाः । त एव प्रायः श्रीमन्तो दृश्यते ‖ १६ ‖

चापलावजितारण्यनकुली नकुलीनजा ।
विप्रलम्भनतात्पर्यजितोग्रमृगतृष्णिका ‖ १७ ‖

चापलेनावमत्य जिता अरण्यनकुल्यो यया । नकुलीनजा दौष्कुलेया । नशब्दोऽयं
नतु नञ् । विप्रलम्भनतात्पर्यं प्रतारणानुकूल्यम् । मृगतृष्णाया उग्रता
ग्रीष्मे प्रसिद्धा ‖ १७ ‖

लहरीवैकरूपेण पदं क्षणमकूर्वती ।
चला दीपशिखेवातिदुर्ज्ञेयगतिगोचरा ‖ १८ ‖

एकरूपेण क्षणमपि पदं स्थानकार्यमवस्थानमकुर्वती । सदा
क्षयवृद्धिस्वभावत्वात् । दुर्ज्ञेया गतिरतर्कितदुर्दशा गोचरो यस्याः ‖ १८ ‖

सिंहीव विग्रहव्यग्रकरीन्द्रकुलपोथिनी [पातिनी] ।
खड्गधारेव शिशिरा तीक्ष्णतीक्ष्णाशयाश्रया ‖ १९ ‖

विग्रव्यग्रा युद्धोत्सुकजनास्त एव करीन्द्राः । स्वयं च तीक्ष्णा
तीक्ष्णाशयान्क्रूरहृदयानाश्रयते च । कर्मधारये पूर्वतीक्ष्णापदस्य
पुंवद्भावः ‖ १९ ‖

नानयापहृतार्थिन्या दुराधिपरिलीनया ।

3329 पश्याम्यभव्यया लक्ष्म्या किंचिद्दुःखाद्दते [द्दते यथा]
3330 सुखम् ॥ २० ॥
3331
3332 अपहृतैः परस्वैरर्थवत्या अपहृतान्वा मृत्युना अर्थयते वाञ्छति
3333 तच्छीलया । दुराधयः परिलीनाः प्रच्छन्नाश्चोरवद्यस्याम् । आहिता##-
3334
3335 दूरेणोत्सारिताऽलक्ष्म्या पुनरेव तमादरात् ।
3336 अहो बताश्लिष्यतीव निर्लज्जा दुर्जना सदा ॥ २१ ॥
3337
3338 तमिति परामर्शाद्यस्येति लभ्यते । तथाच यस्य पुरुषस्य अलक्ष्म्या सपत्न्येव
3339 स्वयं दूरेणोत्सारिता तमेव चिरं सपत्न्योपभुक्तं पुनरादरादाश्लिष्य##-
3340
3341 मनोरमा कर्षति चित्तवृत्तिं कदर्थसाध्या क्षणभङ्गुरा च ।
3342 व्यालावलीगात्रविवृत्तदेहा श्वभ्रोत्थिता पुष्पलतेव लक्ष्मीः ॥ २२ ॥
3343
3344 कुत्सितोऽर्थः पतनमरणादिर्यस्मादिति कदर्थः साहसं तेन साध्या लभ्या ।
3345 व्यालावलीगात्रैर्विवृत्तदेहा वेष्टितशरीरा । श्वभ्रे जीर्णकूपादिगर्ते ॥ २२ ॥
3346
3347 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे
3348 लक्ष्मीनिराकरणं नाम त्रयोदशः सर्गः ॥ १३ ॥
3349
3350 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे
3351 लक्ष्मीनिराकरणं नाम त्रयोदशः सर्गः ॥ १३ ॥
3352
3353 चतुर्दशः सर्गः १४
3354
3355 श्रीराम उवाच ।
3356
3357 आयुः पल्लवकोणाग्रलम्बाम्बुकणभङ्गुरम् ।
3358 उन्मत्तमिव संत्यज्य यात्यकाण्डे शरीरकम् ॥ १ ॥
3359
3360 व्याधिरोगजराग्रस्तं कामादिकलुषीकृतम् ।
3361 जीवितं यौवनं चायुरिह मूर्खस्य निन्द्यते ॥
3362
3363 श्रीरिवायुरपि न सुखायेत्याह - आयुरित्यादिना । पल्लवस्य कोणः
3364 प्रान्तभागस्तस्याप्यग्रे लम्बमानोऽम्बुकणो हिमजलबिन्दुरिव
3365 भङ्गुरमस्थिरम् । उन्मत्तमिति प्रथमान्तमायुरुपमानं द्वितीयान्तं
3366 शरीरोपमानं वा । अकाण्डेऽनवसरे । कुत्सायामनुकम्पायां च कन् ॥ १ ॥
3367
3368 विषयाशीविषासङ्गपरिजर्जरचेतसाम् ।
3369 अप्रौढात्मविवेकानामायुरायासकारणम् ॥ २ ॥
3370
3371 विषयलक्षणैः सर्पैरासङ्गेन सर्वतः शिथिलितचित्तानाम् । न विद्यते प्रौढ
3372 आत्मनि विवेको येषां पुरुषाणाम् ॥ २ ॥
3373
3374 ये तु विज्ञातविज्ञेया विश्रान्ता वितते पदे ।
3375 भावाभावसमाश्वासमायुस्तेषां सुखायते ॥ ३ ॥
3376
3377 किं ब्रह्मविदामप्येवं नेत्याह - ये त्विति । वितते पदे अपरिच्छिन्ने वस्तुनि ।
3378 भावाभावयोर्लाभालाभयोः सम आश्वासश्चित्तसमाधानं यस्य तत् ॥ ३ ॥
3379
3380 वयं परिमिताकारपरिनिष्ठितनिश्चयाः ।

3381 संसाराभ्रतडित्पुञ्जे मुने नायुषि निर्वृताः ॥ ४ ॥
3382
3383 परिमिताकारे देहादौ परिनिष्ठित एतावदेवात्मरूपमिति सिद्धो निश्चयो येषाम् ।
3384 निर्वृताः सुखिताः ॥ ४ ॥
3385
3386 युज्यते वेष्टनं वायोराकाशस्य च खण्डनम् ।
3387 ग्रथनं च गरङ्गाणामास्था [मास्थायुषि न युज्यते] नायुषि
3388 युज्यते ॥ ५ ॥
3389
3390 आस्था विश्वासः ॥ ५ ॥
3391
3392 पेलवं शरदीवाभ्रमस्नेह इव दीपकः ।
3393 तरङ्गक इवालोलं गतमेवोपलक्ष्यते ॥ ६ ॥
3394
3395 पेलवमल्पम् । अस्नेहो निस्तैलः । आयुरिति विपरिणामेन [व्यवहितं वा]
3396 व्यवहितेन वा संबध्यते ॥ ६ ॥
3397
3398 तरङ्गं प्रतिबिम्बेन्दुं तडित्पुञ्जं नभोम्बुजम् ।
3399 ग्रहीतुमास्थां बध्नामि न त्वायुषि हतस्थितौ ॥ ७ ॥
3400
3401 हतस्थितौ अस्थिरे ॥ ७ ॥
3402
3403 अविश्रान्तमनाः शून्यमायुराततमीहते ।
3404 दुःखायैव विमूढोऽन्तर्गर्भमश्वतरी यथा ॥ ८ ॥
3405
3406 आत्यन्तिकतृष्णोपरमो मनसो विश्रान्तिः । [न्यं सुखेन व्यर्थ]
3407 शून्यं व्यर्थमित्यर्थः । आततं विस्तीर्णम् । ईहते इच्छति ।
3408 अश्वाद्गर्दभ्यामुत्पन्ना अश्वतरी । तस्या उदरविदारणेनैव गर्भनिर्गमनं
3409 प्रसिद्धम् ॥ ८ ॥
3410
3411 संसारसंसृतावस्यां फेनोऽस्मिन्सर्गसागरे ।
3412 कायवल्ल्याम्भसो ब्रह्मञ्जीवितं मे न रोचते ॥ ९ ॥
3413
3414 अस्यां संसारसंसृतौ संसारसंभ्रमणे प्रसिद्धा कायवल्ली देहलता
3415 सर्गसागरे आम्भसो जलविकारभूतः फेन एव अत्यन्तास्थिरत्वात् । अतोऽस्मिन् जीवितं
3416 जीवनं मे न रोचत इत्यर्थः ॥ ९ ॥
3417
3418 प्राप्यं संप्राप्यते येन भूयो येन न शोच्यते ।
3419 पराया निर्वृतेः स्थानं यत्तज्जीवितमुच्यते ॥ १० ॥
3420
3421 प्राप्यमवश्यं प्राप्तुं योग्यं परमपुरुषार्थरूपम् ।
3422 निर्वृतेर्जीवन्मुक्तिसुखस्य ॥ १० ॥
3423
3424 तरवोऽपि हि जीवन्ति जीवन्ति मृगपक्षिणः ।
3425 स जीवति मनो यस्य मननेन न जीवति ॥ ११ ॥
3426
3427 मननेन मननफलेन तत्त्वबोधेन वासनाक्षयेण वा न जीवति तुच्छीभवति ॥
3428 ११ ॥
3429
3430 जातास्त एव जगति जन्तवः साधुजीविताः ।
3431 ये पुनर्नेह जायन्ते शेषा जरठगर्दभाः ॥ १२ ॥
3432

3433 त एव साधुजीविताः प्रशस्यजीवना जाता इति संबन्धः। जरठाश्विरजीविनोऽपि
3434 गर्दभवदप्रशस्यजीवनाः। अशुचिदेहात्मबुधेरिति भावः॥ १२॥
3435
3436 भारोऽविवेकिनः शास्त्रं भारो ज्ञानं च रागिणः।
3437 अशान्तस्य मनो भारो भारोऽनात्मविदो वपुः॥ १३॥
3438
3439 भारो भार इव व्यर्थश्रमहेतुः। ज्ञानं च ज्ञानमपि यत्सर्वश्रम##-
3440
3441 रूपमायुर्मनो बुद्धिरहंकारस्तथेहितम्।
3442 भारो भारधरस्येव सर्वं दुःखाय दुर्धियः॥ १४॥
3443
3444 ईहितं चेष्टितम्। भारशब्दार्थं स्वयमेवाह - भारधरस्येवेत्यादिना॥
3445 १४॥
3446
3447 अविश्रान्तमनापूर्णमापदां परमास्पदम्।
3448 नीडं रोगविहङ्गानामायुरायासनं दृढम्॥ १५॥
3449
3450 विश्रान्तिः सर्वश्रमनिवृत्तिः। आपूर्तिः पूर्णकामता। आयासनं
3451 श्रमसाधनम्॥ १५॥
3452
3453 प्रत्यहं खेदमुत्सृज्य शनैरलमनारतम्।
3454 आखुनेव जरच्छ्वभ्रं कालेन विनिहन्यते॥ १६॥
3455
3456 प्रत्यहमित्यस्य खेदमुत्सृज्येत्यनेनैव निराकाङ्क्षीकरणादनारतमित्यस्य
3457 न वैयर्थ्यम्। विनिहन्यते आयुरित्यर्थः॥ १६॥
3458
3459 शरीरबिलविश्रान्तैर्विषदाहप्रदायिभिः।
3460 रोगैरापीयते रौद्रैर्व्यालैरिव वनानिलः॥ १७॥
3461
3462 विषवद्दाहप्रदानशीलैः। आपीयते आयुरिति शेषः। व्यालैः सर्पैः॥ १७॥
3463
3464 प्रस्नुवानैरविच्छेदं तुच्छैरन्तरवासिभिः।
3465 दुःखैरावृश्च्यते [राधृष्यते] क्रूरैर्घुणैरिव
3466 जरद्द्रुमः॥ १८॥
3467
3468 प्रस्नुवानैः क्षरद्भिः पूरक्तमलादि। धुणपक्षे रजांसि। दुःखै
3469 रोगादिदुःखैः आसमन्तादवृश्च्यते च्छिद्यते। आघृष्यत इति
3470 पाठेऽप्ययमेवार्थः। घुणाः काष्ठकीटकाः॥ १८॥
3471
3472 नूनं निगरणायाशु घनगर्धमनारतम्।
3473 आखुर्मार्जारकेणेव मरणेनावलोक्यते॥ १९॥
3474
3475 निगरणं ग्रसनम्। घनगर्धं प्रचुराभिलाषं यथा स्यात्तथा॥ १९॥
3476
3477 गन्धादिगुणगर्भिण्या शून्ययाऽशक्तिवेश्यया।
3478 अन्नं महाशनेनेव [जरसा] जरया परिजीर्यते॥ २०॥
3479
3480 जरया वेश्यया अशक्ति क्षीणबलं यथा स्यात्तथा परिजीर्यते आयुः पुरुषो वा।
3481 तत्र दृष्टान्तः। महाशनेन बह्वाशिनान्नमिवेति॥ २०॥
3482
3483 दिनैः कतिपयैरेव परिज्ञाय गतादरम्।
3484 दुर्जनः सुजनेनेव यौवनेनावमुच्यते॥ २१॥

यौवनस्यादरः पुरुषार्थोपयोजनं तद्द्रहितं परिज्ञाय | गतादरमिति
क्रियाविशेषणं वा | दुर्जन इति यावन्न परिज्ञायते तावदेव सुजनैराद्रियत इति
प्रसिद्धम् || २१ ||

विनाशसुहृदा नित्यं जरामरणबन्धुना |
रूपं खिङ्गवरेणेव कृतान्तेनाभिलष्यते || २२ ||

किङ्गवरो विटश्रेष्ठः | रूपं सौन्दर्यमिव | अभिलष्यते आयुः पुरुषो वा || २२
| |

स्थिरतया सुखभासितया तया सततमुज्झितमुत्तमफल्गु च |
जगति नास्ति तथा गुणवर्जितं मरणभाजनमायुरिदं यथा || २३ ||

तया जीवन्मुक्तप्रसिद्धया सुखभासितया स्थिरतया च सततमुज्झितं
त्यक्तमुत्तमफल्गु अतितुच्छं गुणवर्जितं च यथेदमायुस्तथा
जगत्यन्यन्नास्तीति संबन्धः || २३ ||

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे जीवितगर्हा
नाम चतुर्दशः सर्गः || १४ ||

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे जीवितगर्हा
नाम चतुर्दशः सर्गः || १४ ||

पञ्चदशः सर्गः १५

श्रीराम उवाच |

मुधैवाभ्युत्थितो मोहान्मुधैव परिवर्धते |
मिथ्यामयेन भीतोऽस्मि दुरहंकारशत्रुणा || १ ||

सर्वानर्थसमारम्भमूलस्तम्भोऽत्र निन्द्यते |
ममताव्रततेर्मूलमहंकारो विशेषतः ||

एवमहंकारस्यापि न सुखहेतुता प्रत्युत सर्वदोषाणामभिमानमूल##-
मोहादज्ञाना-न्निमित्तान्मुधा व्यर्थमेवाहंकारोऽभ्युत्थितो व्यर्थमेव
च परितो वर्धते न ततः पुरुषार्थोऽस्तीत्यर्थः | तस्योपादानमपि मोह एवेति
दर्शयति - मिथ्यामयेनेति | आमयेनेति वा च्छेदः | अहंकाराख्येन
शत्रुणा शातनशीलेन रोगेणेति तदर्थः || १ ||

अहंकारवशादेव दोषकोशकदर्थताम् |
ददाति दीनदीनानां संसारो विविधाकृतिः || २ ||

विविधाः साध्यसाधनफलवृत्तिलक्षणा आकारा यस्य स तथाविधः
संसारः [कालमारभ्य] अनादिकालादारभ्य
जन्ममरणनरकाद्यनन्तदुःखपरम्परामनुभूयापि
पुनःपुनस्तद्धेतून्सुखलवानायाससहस्रैरपि लिप्समानत्वाद्दीनेभ्योऽपि
दीनानां विषयलंपटानां [दुर्वासनादि]
रागद्वेषदुर्व्यसनादिदोषलक्षणेषु कोशगृहेषु सद्व्यवहारानुप##-

अहंकारवशादापदहंकाराद्दुराधयः |
अहंकारवशादीहा [नाहंकारात्परो रिपुः] त्वहंकारो

ममामयः ॥ ३ ॥

तत्फलमेव दिक्प्रदर्शनेन प्रपञ्चयति - अहंकारवशादिति। आपत्
शारीरदुःखम्। आधयो मानसदुःखानि। ईहा रागो दुश्चेष्टा वा। मम आमयो
रोगः। मनोमय इति पाठेऽपि लुप्तैकदेशः मनस आमयो मनोविकार इति वार्थः
॥ ३ ॥

तमहंकारमाश्रित्य परमं चिरवैरिणम्।
न भुजे न पिबाम्यम्भः किमु भोगान्भुजे मुने ॥ ४ ॥

भुजे भुञ्जे। विकरणलोपश्छान्दसः। भजे इति वा पाठः ॥ ४ ॥

संसाररजनी दीर्घा माया मनसि मोहिनी।
ततोऽहंकारदोषेण किरातेनेव वागुरा ॥ ५ ॥

संसारलक्षणतमिस्रायां दीर्घा आयता वागुरा मृगबन्धनी ॥ ५ ॥

यानि दुःखानि दीर्घाणि विषमाणि महान्ति च।
अहंकारात्प्रसूतानि तान्यगात्खदिरा इव ॥ ६ ॥

विषमाणि दुरुत्तराणि। अगात्पर्वतात्। खदिरा वृक्षविशेषाः ॥ ६ ॥

शमेन्दुसैंहिकेयास्यं [सिंहिकेयास्यमिति; सिहिकेयो=राहुः;
वृद्ध्यभावश्छान्दसः] गुणपद्महिमाशनिम्।
साम्यमेघशरत्कालमहंकारं त्यजाम्यहम् ॥ ७ ॥

सैंहिकेयो राहुः। हिममशनिरिवेत्युपमितसमासः। साम्यं समदर्शिता स
एव सर्वभूतेषु दयावर्षित्वान्मेघः ॥ ७ ॥

नाहं रामो न मे वाञ्छा भावेषु न च मे मनः।
शान्त आसितुमिच्छामि स्वात्मनीव जिनो यथा ॥ ८ ॥

अहंकारत्यागे देहाभिमानममतादयः स्वयमेव शाम्यन्तीति दर्शयति -
नाहमिति। शान्तो निर्वैरः। स्वात्मनीव आत्मौपम्येन सर्वभूतानि
पश्यन्नित्यर्थः। जिनो बुद्धः। स यथा अहिंसापरस्तद्वत्। निन्द्येष्वपि गुणो
ग्राह्यः इति न्यायेन जिनोदाहरणम्। जित इति वा पाठः ॥ ८ ॥

अहंकारवशाद्यद्यन्मया भुक्तं हुतं कृतम्।
सर्वं तत्तदवस्त्वेव वस्त्वहंकाररिक्तता ॥ ९ ॥

अवस्तु तुच्छमसारं वा ॥ ९ ॥

अहमित्यस्ति चेद्ब्रह्मन्नहमापदि दुःखितः।
नास्ति चेत्सुखितस्तस्मादनहंकारिता [वरा] वरम् ॥ १० ॥

अहंकारं परित्यज्य मुने शान्तमनस्तया।
अवतिष्ठे गतोद्वेगो भोगौघो भङ्गुरास्पदः ॥ ११ ॥

उद्वेगानामशान्तमनोमूलत्वात्तच्छान्त्या गदोद्वेगः। ननु
भोगसंपत्तिभिरेव कुतो न तथा स्यात्तत्राह - भोगौघ इति। भङ्गुरो
देहेन्द्रियविषयाद्यधीनः। तथाच तत्तदेकैकभङ्गेऽद्वेगप्रसक्तिर्दुर्वरिति
भावः ॥ ११ ॥

3589
3590 ब्रह्मन्यावदहंकारवारिदः परिजृम्भते ।
3591 तावद्विकासमायाति तृष्णाकुटजमञ्जरी ॥ १२ ॥
3592
3593 अहंकार एव [एवेति क्वचिन्नोपलभ्यते]
3594 विवेकज्योतिर्गणतिरोधायकत्वाद्वारिदः । परितो जृम्भते गात्राणि विस्तारयति ॥ १२
3595 । ।
3596
3597 अहंकारघने शान्ते तृष्णा नवतडिल्लता ।
3598 शान्तदीपशिखावृत्त्या क्वापि यात्यतिसत्वरम् ॥ १३ ॥
3599
3600 वृत्तिरत्र तुल्यशीलता ॥ १३ ॥
3601
3602 अहंकारमहाविन्ध्ये मनोमत्तमहागजः ।
3603 विस्फूर्जति घनास्फोटैः स्तनितैरिव वारिदः ॥ १४ ॥
3604
3605 स्तब्धत्वदुर्विनामत्वाभ्यां विन्ध्यसाम्यम् । विस्फूर्जति गर्जति ।
3606 घनैरास्फोतैर्युद्धोत्साहैः घनानां निबिडशिलादीनामास्फोटन##-
3607
3608 इह देहमहारण्ये घनाहंकारकेसरी ।
3609 योऽयमुल्लसति स्फारस्तेनेदं जगदाततम् ॥ १५ ॥
3610
3611 स्फारस्तैस्तैर्गर्वहेतुभिरुपचितः । जगदाततं सुकृतदुष्कृतादिबीजोपचयेन
3612 विस्तारितम् । सहीदमन्नं धियाधिया जनयते कर्मभिः इति श्रुतेरिति भावः ॥ १५ ॥
3613
3614 तृष्णातन्तुलवप्रोता बहुजन्मपरम्परा ।
3615 अहंकारोग्रखिङ्गेन कण्ठे मुक्तावली कृता ॥ १६ ॥
3616
3617 लव एकदेशः । जन्मपरम्परा देहपरम्परा । खिङ्गो विटः ॥ १६ ॥
3618
3619 पुत्रमित्रकलत्रादितन्त्रमन्त्रविवर्जितम् ।
3620 प्रसारितमनेनेह मुनेऽहंकारवैरिणा ॥ १७ ॥
3621
3622 पुत्रमित्रादिरूपं तन्त्रमन्त्रविवर्जितं वशीकरणोन्मादादिसाधनमिति शेषः ।
3623 लौकिकयौक्तिकोपायस्तन्त्रम् ॥ १७ ॥
3624
3625 प्रमार्जितेऽहमित्यस्मिन्पदे स्वयमपि द्रुतम् ।
3626 प्रमार्जिता भवन्त्येते सर्व एव दुराधयः ॥ १८ ॥
3627
3628 प्रमार्जिते मूलोच्छेदेन निरस्ते ॥ १८ ॥
3629
3630 अहमित्यम्बुदे शान्ते शनैश्च शमशातिनी ।
3631 मनोगगनसंमोहमिहिका क्वापि गच्छति ॥ १९ ॥
3632
3633 अहंकारोच्छेदस्य मन्दाधिकारिणां चिरसाधनाभ्यासुप्रबोधसाध्य##-
3634 शमशातनी शान्तिनिकृन्तनी । मनोगगनस्था मोहमिहिका महाभ्रान्तिनीहा##-
3635
3636 निरहंकारवृत्तेर्मे मौर्ख्याच्छोकेन सीदतः ।
3637 यत्किंचिदुचितं ब्रह्मंस्तदाख्यातुमिहार्हसि ॥ २० ॥
3638
3639 सर्वापदां निलयमध्रुवमन्तरस्थ-
3640 मुन्मुक्तमुत्तमगुणेन न संश्रयामि ।

3641 यन्नादहंकृतिपदं परितोऽतिदुःखं
3642 शेषेण मां समनुशाधि महानुभाव ॥ २१ ॥
3643
3644 एवमहंकारं तत्प्रयुक्तानर्थं तदुच्छेदफलं चोपवर्ण्य स्वस्य
3645 तत्यागप्रयुक्तां श्रवणाधिकारसंपत्तिं वदन्नुपदेशं प्रार्थयते -
3646 सर्वापदामिति | अन्तरस्थं हृदयस्थम् | उत्तमगुणेन शान्त्यादिनोन्मुक्तम् |
3647 अहंकृतिरूपं पदं लक्ष्म लाञ्छनमित्यर्थः | पदं व्यवसितत्राण##-
3648 शेषेणावशिष्टेन संपाद्येन सह मामनुशाध्युपदिश | आत्मतत्त्वमिति
3649 शेषः || २१ ||
3650
3651 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे
3652 अहंकारजुगुप्सा नाम पञ्चदशः सर्गः || १५ ||
3653
3654 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे
3655 अहंकारजुगुप्सा नाम पञ्चदशः सर्गः || १५ ||
3656
3657 षोडशः सर्गः १६
3658
3659 श्रीराम उवाच |
3660
3661 दोषैर्जर्जरतां याति सत्कार्यादार्यसेवनात् |
3662 वातान्तःपिच्छलववच्चेतश्चलति चञ्चलम् || १ ||
3663
3664 इह चित्तमनोदोषा विस्तरेणोपपत्तिभिः |
3665 रामेण सम्प्रकाश्यन्ते दृष्टान्तैश्चापि भूरिभिः || १ ||
3666
3667 अहंकारवच्चितमनसोरपि न सुखहेतुता किंतु दुःखहेतुतैवेत्याह -
3668 दोषैरित्यादिना | ल्यब्लोपे पञ्चम्यौ | महत्सेवां द्वारमाहुर्विमुक्तेः इति
3669 वचनात्सद्भिर्मुमुक्षुभिरवश्यं कर्तव्यमार्यसेवनं विहायेत्यर्थः |
3670 दोषैः कामादिभिर्जर्जरतां शैथिल्यं पुरुषार्थसाधनापटुत्वमिति यावत् |
3671 वातान्तर्वायुप्रवाहमध्ये पिच्छलववद्बर्हाप्रवच्चलति | यतश्चञ्चलम्
3672 चपलस्वभावमित्यर्थः | मनसोऽपि प्राणवाताधीनं चलनमिति वक्ष्यति || १ ||
3673
3674 इतश्चेतश्च सुव्यग्रं व्यर्थमेवाभिधावति |
3675 दूराद्दूरतरं दीनं ग्रामे कौलेयको यथा || २ ||
3676
3677 तदेव सदृष्टान्तं दर्शयति - इतश्चेति |
3678 युक्तायुक्तविमर्शमन्तरेणेत्यर्थः | सुव्यग्रमतिव्याकुलम् | क्वापि
3679 स्वपूर्तिहेत्वलाभाद्दीनम् | कौलेयकः सारमेयः || २ ||
3680
3681 न प्राप्नोति क्वचित्किंचित्प्राप्तैरपि महाधनैः |
3682 नान्तः संपूर्णतामेति करण्डक इवाम्बुभिः || ३ ||
3683
3684 वंशवेत्रादिशलाकारचितो वस्त्राद्याधानपात्रविशेषः करण्डकः || ३ ||
3685
3686 नित्यमेव मुने शून्यं कदाशावागुरावृतम् |
3687 न मनो निर्वृतिं याति मृगो यूथादिव च्युतः || ४ ||
3688
3689 शून्यं स्वतो विषयतश्च | सजातीयानां तिरश्चां समूहो यूथः || ४ ||
3690
3691 तरङ्गतरलां वृत्तिं दधदालूनशीर्णताम् [दीर्घता] |
3692 परित्यज्य क्षणमपि हृदये याति न स्थितिम् || ५ ||

3693
3694 स्थूलावयवानां विभाग आलूनता। सूक्ष्माणां तु स [दीर्घता]
3695 शीर्णता। कर्मधारयात्तल्॥ ५॥
3696
3697 मनो मननविक्षुब्धं दिशो दश विधावति।
3698 मन्दराहननोद्धूतं क्षीरार्णवपयो यथा॥ ६॥
3699
3700 मननैर्विषयानुसंधानैर्विक्षुब्धं विविधक्षोभं प्राप्तम्॥ ६॥
3701
3702 कल्लोलकलितावर्तं मायामकरमालितम्।
3703 न निरोद्धुं समर्थोऽस्मि मनोमयमहार्णवम्॥ ७॥
3704
3705 कल्लोलसदृशैर्भोगलाभोत्साहैः कलितावर्तं संपादितमज्जनानुकूल##-
3706
3707 भोगदूर्वाङ्कुराकाङ्क्षी श्वभ्रपातमचिन्तयन्।
3708 मनोहरिणको ब्रह्मन्दूरं विपरिधावति॥ ८॥
3709
3710 श्वभ्रपातं नरकगर्तपातम्॥ ८॥
3711
3712 न कदाचन मे चेतः स्वामालूनविशीर्णताम्।
3713 त्यजत्याकुलया वृत्त्या चञ्चलत्वमिवार्णवः॥ ९॥
3714
3715 आलूनविशीर्णता व्याख्याता॥ ९॥
3716
3717 चेतश्चञ्चलया वृत्त्या चिन्तानिचयचञ्चुरम्।
3718 धृतिं बध्नाति नैकत्र पञ्जरे केसरी यथा॥ १०॥
3719
3720 चञ्चुरमतिचपलम्। चरतेर्यङन्तात्पचाद्यचि यङोऽचि च इति यङ्लुकि
3721 चरफलोश्च इत्यभ्यासस्य नुक् उत्परस्यातः इत्युत्वम्। धृतिं धैर्यम्। स्वत
3722 एव चपलस्वभावं चिन्तानिचयेन चालमानं तु सुतरामिति
3723 बलान्निरुध्यमान-मपि धैर्यं न बध्नातीत्यर्थः॥ १०॥
3724
3725 मनो मोहरथारूढं शरीरात्समतासुखम्।
3726 हरत्यपहतोद्वेगं हंसः क्षीरमिवाम्भसः॥ ११॥
3727
3728 उत्कर्षापकर्षयोरुपाधिकल्पितत्वात्परमार्थतः सर्वभूतेष्वात्मन एकरूपता।
3729 सैव तथा जीवन्मुक्तैरनुभूयमाना समता सुखमित्युच्यते। सा च मनसो
3730 मोहरथानारोहणे नित्यसिद्धत्वादस्मिन्नेव शरीरे प्राप्तापि मोहरथारूढेन
3731 मनसा ग्रस्तत्वादसारदेहमात्रात्मभावः परिशिष्यत इति भावः॥ ११॥
3732
3733 अनल्पकल्पनातल्पे विलीनाश्चित्तवृत्तयः।
3734 मुनीन्द्र न प्रबुध्यन्ते तेन तप्येऽहमाकुलः॥ १२॥
3735
3736 चित्तस्य प्रत्यक्प्रवणवृत्तयो [प्रवृत्तय]
3737 बहुतरद्वैतविषयासक्तिकल्पना-लक्षणशय्यायां विलीनाः सुप्तप्रायाः
3738 प्रबोधकशास्त्राचार्योपदेश-मन्तरेण
3739 केवलस्वबुद्धिकृतविचारसहस्रेणापि न प्रबुध्यन्ते। तेन तदप्रबोधेनाहं
3740 तप्ये॥ १२॥
3741
3742 क्रोडीकृतदृढग्रन्थितृष्णासूत्रे स्थितात्मना।
3743 विहगो जालकेनेव ब्रह्मन्बद्धोऽस्मि चेतसा॥ १३॥
3744

3745 क्रोडीकृता अन्तर्निवेशिता अहमिदं ममेदमित्यन्योन्यतादात्म्यसंसर्गा##-
3746 स्थितात्मनेति जालकविशेषणम् | आमिषतृष्णासूत्रे स्थितात्मना व्याधेन कर्त्रा
3747 जालकेन करणेनेति वार्थः || १३ ||
3748
3749 संततामर्षधूमेन चिन्ताज्वालाकुलेन च |
3750 वह्निनेव तृणं शुष्कं मुने दग्धोऽस्मि चेतसा || १४ ||
3751
3752 संततो विस्तारितः अमर्षः क्रोध एव धूमो यस्य | चिन्तैव ज्वाला तया आकुलेनेति
3753 रूपकसंपादितधूमादिसंपत्त्या वह्निसादृश्यमेव विवक्ष्यते न
3754 वह्नित्वमिति न रूपकोपमानविरोधः | उपमानविशेषणत्वपक्षे न मृष्यते
3755 सह्यत इत्यमर्षो दुःसहस्तथाविधेन धूमेन | चिन्त्यते दग्धैरिति चिन्ता ज्वालेति
3756 व्याख्येयम् | एवमन्यत्रापि || १४ ||
3757
3758 क्रूरेण जडतां यातस्तृष्णाभार्यानुगामिना |
3759 शवं कौलेयकेनेव ब्रह्मन्भुक्तोऽस्मि चेतसा || १५ ||
3760
3761 जडतामज्ञतां यातः प्राप्तोऽहमिति शेषः | क्रूरेण निष्ठुरेण | तृष्णा
3762 भार्येवेत्युपमितसमासो रूपकं वा | अन्यत्र तृष्णावत्सदाऽपूर्णोदरी भार्या
3763 शुनी तदनुगामिना कौलेयकेन शुना जडतां भारतां प्राप्तं शवं
3764 कुणप इवेति संबन्धः || १५ ||
3765
3766 तरङ्गतरलास्फालवृत्तिना जडरूपिणा |
3767 तटवृक्ष इवौघेन ब्रह्मन्नीतोऽस्मि चेतसा || १६ ||
3768
3769 तरङ्गवत्तरला आस्फालाः अलभ्यविषये प्रतिहन्यमाना वृत्तयो यस्येति
3770 चेतःपक्षे | अन्यत्र तरङ्गास्तरला आस्फालवृत्तयो यस्मिंस्तेन डलयोर##-
3771
3772 अवान्तरनिपाताय शून्ये वा भ्रमणाय च |
3773 तृणं चण्डानिलेनेव [दूरं नीतोऽस्मि] दूरे नीतोऽस्मि चेतसा || १७ ||
3774
3775 धर्मप्रवृत्त्या स्वर्गारोहे अकाण्डनिपाताय तदभावे सुखलेशशून्ये इहैव
3776 कीटपतङ्गादिजन्मभिर्भ्रमणाय | तथाच श्रुतिः एतमेवाध्वानं
3777 पुनर्निवर्तन्ते इति अथैतयोः पथोर्न कतरेण च न तानीमानि क्षुद्राण्य##-
3778 उपमानपक्षे स्पष्टम् || १७ ||
3779
3780 संसारजलधेरस्मान्नित्यमुत्तरणोन्मुखः |
3781 सेतुनेव पयःपूरो रोधितोऽस्मि कुचेतसा || १८ ||
3782
3783 संसारजलधेरुत्तरणोन्मुखो निर्गमनोद्युक्तः | जलधौ ह्यस्मादिति
3784 सप्तमीपाठे उत्तरणोन्मुखोऽहं संसारजलधावेव निरुध्य
3785 स्थापितोऽस्मीत्यर्थः | यथा सेतुना क्षुद्रनदीपयःपूरो रुध्यते तद्वत् || १८ ||
3786
3787 पातालाद्गच्छता पृथ्वीं पृथ्व्याः पातालगामिना |
3788 कूपकाष्ठं कुदाम्नेव वेष्टितोऽस्मि कुचेतसा || १९ ||
3789
3790 पृथ्वीपातालशब्दाभ्यां तत्सदृशावूर्ध्वाधोदेशौ लक्ष्येते | रज्ज्वा
3791 जलादिभाराकर्षणायैकतो बद्धभारं त्रियक्काष्ठप्रोतवलयाकार##-
3792
3793 मिथ्यैव स्फाररूपेण विचाराद्विशरारुणा |
3794 बालो वेतालकेनेव गृहीतोऽस्मि कुचेतसा || २० ||
3795
3796 बालबिभीषिकार्थं कल्पितवेतालको यथा बालबुद्ध्या स्फारतां प्राप्तस्तस्येव

3797 बाल्यापगमे विचारादसत्त्वमापद्यते तथाऽज्ञबुद्ध्या दुर्जयं मनो विवेके तु
3798 निःस्वरूपमेवेत्यर्थः ॥ २० ॥
3799
3800 वह्नेरुष्णतरः शैलादपि कष्टतरक्रमः ।
3801 वज्रादपि दृढो ब्रह्मन्दुर्निग्रहमनोग्रहः ॥ २१ ॥
3802
3803 दुःखेनापि ग्रतीतुमशक्यो मनोलक्षणे गृह्णातीति ग्रहः पिशाच उष्णतरः
3804 सदासन्तापकत्वात् । कष्टतरः क्रमः अतिक्रमणं वशीकार इति यावत् ।
3805 वज्राद्धीरकादपि दृढो दुर्भेदः । अशनेरपि निष्ठुर इति वा ॥ २१ ॥
3806
3807 चेतः पतति कार्येषु विहगः सामिषेष्विव ।
3808 क्षणेन विरतिं याति बालः क्रीडनकादिव ॥ २२ ॥
3809
3810 कार्येषु विषयेषु पतति झटित्येवासज्जते । विरतिं निवृत्तिम् । चिराभ्यस्तेभ्योऽपि
3811 सद्व्यापारेभ्य इति शेषः । यथा बालः कदाचिदपि प्राप्ताक्रीडनकान्निमित्ता##-
3812
3813 जडप्रकृतिरालोलो वितताावर्तवृत्तिमान् ।
3814 मनोऽब्धिरहितव्यालो दूरं नयति तात् माम् ॥ २३ ॥
3815
3816 सर्वाणि विशेषणान्यब्धिमनसोस्तुल्यानि स्पष्टानि । अहिताः कामाद्यरयः षट् त
3817 एव व्यालाः सर्पा यस्मिन् ॥ २३ ॥
3818
3819 अप्यब्धिपानान्महतः सुमेरून्मूलनादपि ।
3820 अपि वह्न्यशनात्साधो विषमश्चित्तनिग्रहः ॥ २४ ॥
3821
3822 विषमः कष्टतरः ॥ २४ ॥
3823
3824 चित्तं कारणमर्थानां तस्मिन्सति जगत्त्रयम् ।
3825 तस्मिन्क्षीणे जगत्क्षीणं तच्चिकित्स्यं प्रयत्नतः ॥ २५ ॥
3826
3827 चिकित्स्यं रोगवदवश्यमपनेयम् ॥ २५ ॥
3828
3829 चित्तादिमानि सुखदुःखशतानि नून-
3830 मभ्यागतान्यगवरादिव काननानि ।
3831 तस्मिन्विवेकवशतस्तनुतां प्रयाते
3832 मन्ये मुने निपुणमेव गलन्ति तानि ॥ २६ ॥
3833
3834 उक्तमेव दृष्टान्तेन स्पष्टयति - चित्तादिति । नूनमिति वितर्के । अभ्यागतानि
3835 प्ररूढानि । अगवराद्गिरिश्रेष्ठाद्विन्ध्यादेः । तनुतां सूक्ष्मताम् ।
3836 निर्वासनतया भर्जितबीजप्रायतामिति यावत् ॥ २६ ॥
3837
3838 सकलगुणजयाशा यत्र बद्धा महद्भि-
3839 स्तमरिमिह विजेतुं चित्तमभ्युत्थितोऽहम् ।
3840 विगतरतितयान्तर्नाभिनन्दामि लक्ष्मीं
3841 जडमलिनविलासां मेघलेखामिवेन्दुः ॥ २७ ॥
3842
3843 महद्भिर्मुमुक्षुभिर्यत्र यस्मिंश्चित्ते जिते सति सकलानां शान्तिदान्त्यादि##-
3844 गुणा आनन्दलवा यस्मिन्निरतिशयानन्दे तस्य जयः प्राप्तिस्तस्य वा ।
3845 आशानिबद्धेत्यर्थः । इह अस्मिन्नेव शरीरे । इह चेदवेदीदथ सत्यमस्ति न
3846 चेदिहावेदीन्महती विनष्टिः इति श्रुतेः । अभ्युद्यत उद्युक्तोऽस्मि । विगतरतितया
3847 वैराग्यसंपत्त्या अन्तर्मनसि जडान्मूर्खान्मलिनानशुद्धांश्च
3848 विलासयत्युत्साहयति शोभयति वा । जडो मोहहेतुर्मलिनः पापहेतुर्विलासो यस्या

3849 वा ताम् | मेघलेखापक्षे जलेन मलिना नीला विलसतीत्यर्थः || २७ ||
3850
3851 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे
3852 वैराग्यचित्तदौरात्म्यं नाम षोदशः सर्गः || १६ ||
3853
3854 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे
3855 वैराग्यचित्तदौरात्म्यं नाम षोदशः सर्गः || १६ ||
3856
3857 सप्तदशः सर्गः १७
3858
3859 श्रीराम उवाच |
3860
3861 हार्दान्धिकारशर्वया तृष्णयेह दुरन्तया |
3862 स्फुरन्ति चेतनाकाशे [दोषाः कौशिक] दोषकौशिकपङ्क्तयः || १
3863 | |
3864
3865 सर्वपापौघजननी दैन्यकार्पण्यमृत्युदा |
3866 भ्रमयन्ती जगत्कृत्स्नं तृष्णैकात्र विनिन्द्यते ||
3867
3868 हार्दस्य परमप्रेमास्पदस्य आत्मतत्त्वस्य हृदयोद्भवस्य विवेकादेश्च
3869 तिरोधाने अन्धकारशर्वया तमिस्रया | दुरन्तया दुरुच्छेदया | इह चेतनाकाशे
3870 जीवे | रागादिदोषलक्षणाः कौशिकपङ्क्तय उलुकश्रेणयः || १ ||
3871
3872 अन्तर्दाहप्रदायिन्या समूढरसमार्दवः |
3873 पङ्क आदित्यदीप्त्येव शोषं नीतोऽस्मि चिन्तया || २ ||
3874
3875 समूढे अपहृते रसमार्दवे स्नेहदये दाक्षिण्यविनयौ वा यस्य | शोषं
3876 नैष्ठुर्यम् | प्रसिद्धे वा रसमार्दवे पङ्कसाधारणे | अथवा | सम्यगूढे
3877 प्राप्ते रसमार्दवे येन तथाविधोऽहं संप्रति शोषं तच्छून्यतां नीत
3878 इत्यर्थः || २ ||
3879
3880 मम चित्तमहारण्ये व्यामोहतिमिराकुले |
3881 शून्ये ताण्डविनी जाता भृशमाशापिशाचिका || ३ ||
3882
3883 शून्ये विचारेण | अरण्यपक्षे जनैः || ३ ||
3884
3885 वचोरचितनीहारा काञ्चनोपवनोज्ज्वला |
3886 नूनं विकासमायाति चिन्ताचणकमञ्जरी || ४ ||
3887
3888 तत्तदार्तिविलापवचोभिर्विरचिताश्रुनीहारजलकणा | काञ्चनस्य स्वर्णदिरुप
3889 समीपे वनं वननं मनोभिलाषातिशयस्तेन पाण्डुतापादनादुज्ज्वला | अन्यत्र
3890 नीहारजलेनैव चणका वर्धन्त इति वचोभङ्ग्या निशारचिता नीहारजलकणा
3891 यस्याम् | समीपस्थेन धतूरवनेनोज्ज्वलाशोभमाना चिन्तालक्षणा
3892 चणकसस्यानां मञ्जरी अर्थात्तृष्णा क्षेत्रे विकासमायाति | नूनमित्युत्प्रेक्षा
3893 || ४ ||
3894
3895 अलमन्तर्भ्रमायैव तृष्णातरलिताशया |
3896 आयाता विषमोल्लासमूर्मिरम्बुनिधाविव || ५ ||
3897
3898 तरलिताशया विक्षोभितचित्ता | अन्यत्र चञ्चलितमध्यभागा | तृष्णा
3899 अम्बुनिधावूर्मिरिव अलमत्यर्थमन्तर्भ्रमायैव विषमोल्लासं कष्टबहलं
3900 धनार्जनोत्साहं आयाता प्रापितवती [प्राप्तवती] | अन्यत्र भ्रमणायैव

3901 विसदृशमूर्ध्वनाट्यं प्राप्तेत्यर्थः ॥ ५ ॥
3902
3903 उद्दामकल्लोलरवा देहाद्रौ वहतीह मे ।
3904 तरङ्गतरलाकारा तरत्तृष्णातरङ्गिणी ॥ ६ ॥
3905
3906 उद्दामा उच्छ्रिताः अधिक्षेपानृतभाषणादयः प्रवृत्तिकल्लोलरवा यस्याः ।
3907 अतएव उक्ततरङ्गैस्तरलाकारा तरन्ती विषयाद्विषयान्तरं प्लवमाना या
3908 तृष्णा तल्लक्षणा तरङ्गिणी नदी मे देहपर्वते वहति प्रवहति ॥ ६ ॥
3909
3910 वेगं संरोद्धुमुदितो वात्ययेव जरत्तृणम् ।
3911 नीतः कलुषया क्वापि तृष्णया चित्तचातकः ॥ ७ ॥
3912
3913 वेगं स्वचापल्यम् । उदित उद्युक्तः । धर्ममेघाख्यसमाधिरसपानाये##-
3914 वातसमूहेन क्वापि अयोग्ये विषये नीतः ॥ ७ ॥
3915
3916 यां यामहमतीवास्थां संश्रयामि गुणश्रियाम् ।
3917 तां तां कृन्तति मे तृष्णा तन्त्रीमिव कुमूषिका ॥ ८ ॥
3918
3919 गुणश्रियां विवेकवैराग्यादिगुणसंपदां विषये यां यामास्थामुत्##-
3920
3921 पयसीव जरत्पर्णं वायाविव जरत्तृणम् ।
3922 नभसीव शरन्मेघश्चिन्ताचक्रे भ्रमाम्यहम् ॥ ९ ॥
3923
3924 पयसि आवर्तजले ॥ ९ ॥
3925
3926 गन्तुमास्पदमात्मीयमसमर्थधियो वयम् ।
3927 चिन्ताजाले विमुह्यामो जाले शकुनयो यथा ॥ १० ॥
3928
3929 आत्मीयं स्वीयमास्पदं प्रतिष्ठाम् । पारमार्थिकं रूपमिति यावत् । गन्तुं
3930 प्राप्तुम् ॥ १० ॥
3931
3932 तृष्णाभिधानया तात दग्धोऽस्मि ज्वालया तथा ।
3933 यथा दाहोपशमनमाशङ्के नामृतैरपि ॥ ११ ॥
3934
3935 आशङ्के संभावयामि ॥ ११ ॥
3936
3937 दूरं दूरमितो गत्वा समेत्य च पुनः पुनः ।
3938 भ्रमत्याशु दिगन्तेषु तृष्णोन्मत्ता तुरङ्गमी ॥ १२ ॥
3939
3940 द्विरुक्तिर्व्यवहितविप्रकृष्टविषयलाभाय ॥ १२ ॥
3941
3942 जडसंसर्गिणी तृष्णा कृतोर्ध्वाधोगमागमा ।
3943 क्षुब्धा ग्रन्थिमती नित्यमारघट्टाग्ररज्जुवत् ॥ १३ ॥
3944
3945 धर्माधर्मरूपविषयानुसारात् कृतौ संपादितौ स्वर्गनरकयोर्गमागमौ
3946 गमनागमने यया । क्षुब्धा संचलिता । भोक्तृभोग्यतादात्म्यसंसर्गा##-
3947 चत्वारि विषेषणानि प्रसिद्धान्येव ॥ १३ ॥
3948
3949 अन्तर्ग्रथितया देहे सर्वदुश्छेदयाऽनया ।
3950 रज्ज्वेवाशु बलीवर्दस्तृष्णया वाह्यते जनः ॥ १४ ॥
3951
3952 देहे अन्तर्मनसि [ग्रन्थितयेति क्वचित्] ग्रथितया प्रोतया बलीवर्दरज्जुपक्षे

3953 नासादिप्रदेशे प्रोतया। वाह्यते ऐहिकामुष्मिकसाधनसहस्रभारमित्यर्थः॥
3954 १४॥
3955
3956 पुत्रमित्रकलत्रदितृष्णया नित्यकृष्टया।
3957 खगेष्विव किरात्येदं जालं लोकेषु रच्यते॥ १५॥
3958
3959 नित्यं कृष्टमाकर्षणं यस्याह् स्वभावस्तथाभूतया तृष्णया किरात्या
3960 खगेषु जालमिव इदं प्रसिद्धं पुत्रमित्रकलत्रादिजालं लोकेषु जनेषु रच्यते॥
3961 १५॥
3962
3963 भीषयत्यपि धीरं मामन्धयत्यपि सेक्षणम्।
3964 खेदयत्यपि सानन्दं तृष्णा कृष्नेव शर्वरी॥ १६॥
3965
3966 धीरं प्राज्ञं धैर्यवन्तं च। सेक्षणं विवेकचक्षुष्मन्तं प्रसिद्धं च।
3967 शर्वरी रात्रिः॥ १६॥
3968
3969 कुटिला कोमलस्पर्शा विषवैषम्यशंसिनी।
3970 दशत्यपि मनाक्षृष्टा तृष्ना कृष्णेव भोगिनी॥ १७॥
3971
3972 कौटिल्यसहस्रवती। कोमलः सुखलवोन्मुखः स्पर्शो विषयलाभो यस्याः।
3973 परिणामे तु विषयसदृशं यद्वैषम्यं वैरबन्धवधादि
3974 तच्छंसनशीला। दशतीव मोहयति। भोगिनीपक्षे स्पष्टोऽर्थः॥ १७॥
3975
3976 भिन्दती हृदयं पुंसां मायामयविधायिनी।
3977 दौर्भाग्यदायिनी दीना तृष्णा कृष्णेव राक्षसी॥ १८॥
3978
3979 मायाश्च आमया रोगाश्च तेषां मायाकार्यवञ्चनादीनां सर्वस्यैव वा
3980 मायाकार्यप्रपञ्चस्य उत्पादनशीला। दौर्भाग्यं हतभाग्यता। दीना
3981 दैन्यवती॥ १८॥
3982
3983 तन्द्रीतन्त्रीगणैः कोशं दधाना परिवेष्टितम्।
3984 नानन्दे राजते ब्रह्मंस्तृष्णा जर्जरवल्लकी॥ १९॥
3985
3986 तन्द्रीभिः प्रमीलाभिस्तन्त्रीगणैर्नाडीसमूहैश्च परिवेष्टितं कोशं शरीरं
3987 दधाना। जर्जरवल्लकी जीर्णस्फुटितालाबुका वीणा। सापि हि तन्द्र्या
3988 अलाब्वन्तरसंपादनालस्येन विच्छिन्नतन्त्रीभिः सीवनेन वेष्टितमलाबु##-
3989 ष्णापि तृष्णाक्षयलभ्ये निर्विक्षेपनिरतिशयानन्दे न राजते। तथाचोक्तम्
3990 यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम्। तृष्णाक्षयसुखस्यैते
3991 नार्हतः षोडशीं कलाम्॥ इति॥ १९॥
3992
3993 नित्यमेवातिमलिना कटुकोन्माददायिनी।
3994 दीर्घतन्त्री घनस्नेहा तृष्णा गह्वरवल्लरी॥ २०॥
3995
3996 कटुकः परिणामदुःखो य उन्मादस्तद्दानशीला। शेषं स्पष्टम्।
3997 गह्वरवल्लरी पर्वतगुहोत्पन्ना लता। सापि हि सूर्यरश्म्यसंस्पर्शान्नित्य##-
3998 घनस्नेहा बहुनिर्यासा चेति तद्दर्शिनां प्रसिद्धम्॥ २०॥
3999
4000 अनानन्दकरी शून्या निष्फला व्यर्थमुन्नता।
4001 अमङ्गलकरी क्रूरा तृष्णा क्षीणेव मञ्जरी॥ २१॥
4002
4003 तृष्णापक्षे स्पष्टोऽर्थः। अन्यत्र शून्या पुष्पैः। उन्नता
4004 आम्रादेरूर्ध्वशाखासु स्थिता क्रूरा शुष्कत्वात्कण्टकप्राया॥ २१॥

अनावर्जितचित्तापि सर्वमेवानुधावति।
न चाप्नोति फलं किंचित्तृष्णा जीर्णेव कामिनी॥ २२॥

अनावर्जितमवशीकृतं चित्तं यया। फलं लाभं भोगं वा। जीर्णा कामिनी
वृद्धवेश्या॥ २२॥

संसारवृन्दे महति नानारससमाकुले।
भुवनाभोगरङ्गेषु तृष्णा जरठनर्तकी॥ २३॥

नानारसैः शोकमोहादिभिः नर्तकीपक्षे करुणहास्यबीभत्सादिभिः। रङ्गेषु
नृत्यशालासु॥ २३॥

जराकुसुमितारूढा पातोत्पातफलावलिः।
संसरजंगले दीर्घे तृष्णा विषलता तता॥ २४॥

जंगले जीर्णारण्ये। तता विस्तीर्णा॥ २४॥

यन्न शक्नोति तत्रापि धत्ते ताण्डवितां गतिम्।
न्त्यत्यानन्दरहितं तृष्णा जीर्णेव नर्तकी॥ २५॥

न शक्नोति साधयितुमिति शेषः। अन्यत्र यद्यत्र गन्तुमिति शेषः। आनन्दरहितं
नैर्बल्येन निरुत्साहत्वात्॥ २५॥

भृशं स्फुरति नीहारे शाम्यत्यालोक आगते।
दुर्लङ्घ्येषु पदं धत्ते चिन्ता चपलबर्हिणी॥ २६॥

नीहारे वर्षावश्याये तत्सदृशमोहावरणे च स्फूरति नृत्यति। आलोके
विवेकप्रकाशे प्रकाशोपलक्षिते शरदि च। दुरलङ्घ्येषु असाध्यदुर्गमेषु।
पदं व्यवसायं नीडं च॥ २६॥

जडकल्लोलबहुला चिरं शून्यान्तरान्तरा।
क्षणमुल्लासमायाति तृष्णा प्रावृट्तरङ्गिणी॥ २७॥

फलजलान्यकाले चिरम् शून्या। तत्कालेऽपि अन्तरान्तरामध्ये मध्ये शून्या।
उल्लासं फलजलसंपत्त्योपचयम्। प्रावृट्तरङ्गिणी वर्षर्तुमात्रप्रवहा
नदी॥ २७॥

नष्टमुत्सृज्य तिष्ठन्तं तृष्णा वृक्षमिवापरम्।
पुरुषात्पुरुषं याति तृष्णा लोलेव पक्षिणी॥ २८॥

नष्टं नष्टफलम्। तृष्णालोला क्षुत्तड्व्याकुला॥ २८॥

पदं करोत्यलङ्घ्येऽपि तृप्तापि फलमीहते।
चिरं तिष्ठति नैकत्र तृष्णा चपलमर्कटी॥ २९॥

अलङ्घ्ये दुष्प्रापे दुर्लङ्घ्ये च। पदं व्यवसितं पादन्यासं च। फलं
लाभं शलाटुं च॥ २९॥

इदं कृत्वेदमायाति सर्वमेवासमञ्जसम्।
अनारतं च यतते तृष्णा चेष्टेव दैविकी॥ ३०॥

4057 इदं शुभमुचितं वा कृत्वा आरभ्य तदपरिसमाप्यैव
4058 इदमशुभमनुचितं च असमञ्जसं प्रक्रमविरुद्धं सर्वमेव कार्यं
4059 सहसैवायात्यनुसरति तथापि नोपरमते किंतु अनारतं सर्वदैव यतते
4060 शुभाशुभफलाय। यथा प्राणिकर्मानुसारिणो देवस्य विधातुश्चेष्टा तद्वत्
4061 ॥ ३० ॥
4062
4063 क्षणमायाति पातालं क्षणं याति नभस्थलम्।
4064 क्षणं भ्रमति दिक्कुञ्जे तृष्णा हृपद्मषट्पदी ॥ ३१ ॥
4065
4066 हृत्पद्मे षट्पदी भ्रमरिका। शेषं प्राग्व्याख्यातप्रायम् ॥ ३१ ॥
4067
4068 सर्वसंसारदोषाणां तृष्णैका दीर्घदुःखदा।
4069 अन्तःपुरस्थमपि या योजयत्यतिसंकटे ॥ ३२ ॥
4070
4071 दीर्घसुःखदा चिरदुःखदा। दीर्घबडिशरज्जुरिव वधकसंनिधावाकृष्य
4072 मरणादिदुःखदा। तदेवोपपादयति - अन्तःपुरस्थमपीति ॥ ३२ ॥
4073
4074 पयच्छति परं जाड्यं परमालोकरोधिनी।
4075 मोहनीहारगहना तृष्णा जलदमालिका ॥ ३३ ॥
4076
4077 जाड्यं मौर्ख्यं शैत्यं वा। परमालोकः परं ज्योतिरात्मा सूर्यश्च।
4078 मोहयति पूर्वापरं दिग्विभागं चेति मोहोऽविवेकस्तद्रूपेण नीहारेण गहना
4079 दुर्गमा ॥ ३३ ॥
4080
4081 सर्वेषां जन्तुजातानां संसारव्यवहारिणाम्।
4082 परिप्रोतमनोमाला तृष्णा बन्धनरज्जुवत् ॥ ३४ ॥
4083
4084 यथा बहुनां पशूनां कण्ठदामभिः प्रोता मालोपमाना तिर्यग्दीर्घ##-
4085
4086 विचित्रवर्णा विगुणा दीर्घा मलिनसंस्थितिः।
4087 शून्या शून्यपदा तृष्णा शक्रकार्मुकधरिणी ॥ ३५ ॥
4088
4089 विचित्रविषयानुरञ्जितत्वाद्विचित्रवर्णा विविधविस्मयहेतुरूपवती च। विगुणा
4090 असद्गुणा ज्याशून्या च। मलिनः पुरुषो मेघश्च संस्थितिराधारो यस्याः
4091 स्वतस्तुच्छत्वाच्छून्या अवस्तुः मनोनभोधिष्ठितत्वाच्छून्यपदा।
4092 शक्रकार्मुकमिन्द्रायुधम् ॥ ३५ ॥
4093
4094 अशनिर्गुनसस्यानां फलिता शरदापदाम्।
4095 हिमं संवित्सरोजानां तमसां दीर्घयामिनी ॥ ३६ ॥
4096
4097 गुणलक्षणसस्यानां अशनिः। संवित्सरोजानां बोधपद्मानां हिमं
4098 विघातिकेत्यर्थः। आपदां तु फलिता फलितसस्या शरद्वर्धिकेत्यर्थह्। एवं
4099 तमसामपि हेमन्तरात्रिः ॥ ३६ ॥
4100
4101 संसारनाटकनटी कार्यालयविहंगमी।
4102 मानसारण्यहरिणी स्मरसंगीतवल्लकी ॥ ३७ ॥
4103
4104 कार्यालयस्य प्रवृत्तिलक्षणनीडस्य गृहविटङ्कस्य वा। मानसा
4105 मनोरथाः। वल्लकी वीणा ॥ ३७ ॥
4106
4107 व्यवहाराब्धिलहरी मोहमातङ्गशृङ्खला।
4108 सर्गन्यग्रोधसुलता दुःखकैरवचन्द्रिका ॥ ३८ ॥

4109
4110 न्यग्रोहतीति न्यग्रोधो वटस्तस्य सुलता प्ररोहवल्ली | कैरवाणां कुमुदानाम् ||
4111 ३८ ||
4112
4113 जरामरणदुःखानामेका रत्नसमुद्रिका |
4114 आधिव्याधिविलासानां नित्यं मत्ता विलासिनी || ३९ ||
4115
4116 समुद्रिका संपुटिका || ३९ ||
4117
4118 क्षणमालोकविमला [आलोकविषया] सान्धकारलवा क्षणम् |
4119 व्योमवीथ्युपमा तृष्णा नीहारगहना क्षणम् || ४० ||
4120
4121 आलोक ईषद्विवेकप्रकाशः | व्योमैव वीथी तदुपमा | नीहारसद्दशैर्व्या##-
4122
4123 गच्छत्युपशमं तृष्णा कायव्यायामशान्तये |
4124 तमी घनतमःकृष्णा यथा रक्षोनिवृत्तये || ४१ ||
4125
4126 एवं तृष्णामुपवर्ण्य तदुपशान्तिफलमाह - गच्छतीत्यादिना |
4127 कायव्यायामो देहप्रयुक्तश्रमस्तस्य शान्तये | मुक्तय इति यावत् | तमी
4128 कृष्णपक्षरात्रिः | घनतमो मेघान्धकारस्तेन कृष्णा | सा यथा
4129 रक्षोनिवृत्तये नक्तंचरप्रचाराभावाय उपशमं विनाशं गच्छति तद्वत्
4130 || ४१ ||
4131
4132 तावन्मुह्यत्ययं मूको लोको विलुलिताशयः |
4133 यावदेवानुसंधत्ते तृष्णा विषविषूचिका || ४२ ||
4134
4135 मूकः अध्यात्मशास्त्रकथाशून्यः | लोको जनः | विलुलिताशयो व्याकुलचित्तः |
4136 विषविशेषप्रयुक्तविषूचिकारोगवन्मृत्युहेतुस्तृष्णा यावदेवानुसरन्ती
4137 संधत्ते सम्यग्धारयति | न संत्यजतीत्यर्थः || ४२ ||
4138
4139 लोकोऽयमखिलं दुःखं चिन्तयोज्झितयोज्झति |
4140 तृष्णाविषूचिकामन्त्रश्चिन्तात्यागो हि कथ्यते || ४३ ||
4141
4142 तर्हि तत्यागे क उपायस्तत्राह - लोक इति | चिन्तात्र विषयानुस्मरणम् | उज्झितया
4143 त्यक्तया | तथाच भगवद्वाक्यम् - ध्यायतो विषयान्पुंसः
4144 सङ्गस्तेषुप-जायते इति || ४३ ||
4145
4146 तृणपाषाणकाष्ठादिसर्वमामिषशङ्कया |
4147 आददाना स्फुरत्यन्ते तृष्णा मत्सी ह्रदे यथा || ४४ ||
4148
4149 आमिषशङ्कया भक्ष्यमिति संभावनया | सा यथा अन्ते बडिशमप्यादा##-
4150
4151 रोगार्तिरङ्गनातृष्णा गम्भीरमपि मानवम् |
4152 उत्तानतां नयन्त्याशु सूर्यांशव इवाम्बुजम् || ४५ ||
4153
4154 रोगपीडा स्त्रीतृष्णा च | गम्भीरं धीरम् | उत्तानतां अधीरताम्
4155 ऊर्ध्वविकासितां च || ४५ ||
4156
4157 अन्तःशून्या ग्रन्थिमत्यो दीर्घस्वाङ्कुरकण्टकाः |
4158 मुक्तामणिप्रिया नित्यं तृष्णा वेणुलता इव || ४६ ||
4159
4160 ग्रन्थयो दृढाभिनिवेशाः पर्वाणि च | तृष्णाया अङ्कुरा"चिन्ताः | कण्टका

4161 दुःखानि | मुक्तामणयश्च प्रिया यासाम् | वेणुलतापक्षे तासां मुक्ताकर##-
4162
4163 अहो बत महच्चित्रं तृष्णामपि महाधियः |
4164 दुश्छेदामपि कृन्तन्ति विवेकेनामलासिना || ४७ ||
4165
4166 विवेकोऽपि तदुच्छेदहेतुरिति दर्शयति - अहो इति || ४७ ||
4167
4168 नासिधारा न वज्रार्चिर्न तप्तायःकणार्चिषः |
4169 तथा तीक्ष्णा यथा भ्रमंस्तृष्णेयं हृदि संस्थिता || ४८ ||
4170
4171 असिधारादयो बाह्यत्वात्कदाचिदेवानर्थः तृष्णा तु हृदि स्थितत्वात् सदैवेति
4172 तेभ्योऽप्याधिक्यमिति भावः || ४८ ||
4173
4174 उज्ज्वलाऽसिततीक्ष्णाग्रा स्नेहदीर्घदशा परा |
4175 प्रकाशा दाहदुःस्पर्शा तृष्णा दीपशिखा इव || ४९ ||
4176
4177 मध्ये भोगविभवोज्ज्वला अन्ते तु असितं तीक्ष्णं चाग्रं यस्याः सा |
4178 तमोमृत्युपर्यवसानेत्यर्थः | मातृभार्यापुत्रस्नेहैर्दीर्घा
4179 बाल्ययौवनवार्धकदशाः परा उत्कृष्टा यस्याः | प्रकाशा प्रत्यक्षा |
4180 इष्टवियोगप्रयुक्तैरन्तर्दाहैर्दुःस्पर्शा असह्या | दीपशिखापक्षे स्नेहस्तैलम् |
4181 दशा वर्तिः | शिष्टं स्पष्टम् || ४९ ||
4182
4183 अपि मेरुसमं प्राज्ञमपि शूरमपि स्थिरम् |
4184 तृणीकरोति तृष्णैका निमेषेण नरोत्तमम् || ५० ||
4185
4186 मेरुसमं गौरवेण | स्थिरं अपरिग्रहव्रतेन तृणीकरोति याञ्चादैन्यमा##-
4187 तृणाल्लघुतरस्तूलस्तूला-दपि च याचकः | वायुना किं न नीतोऽसौ
4188 मामयं याचयिष्यति || इति || ५० ||
4189
4190 संस्तीर्णगहना भीमा घनजालरजोमयी |
4191 सान्धकारोग्रनीहारा तृष्णा विन्ध्यमहातटी || ५१ ||
4192
4193 संस्तीर्णानि विस्तीर्णानि गहनानि साहसकार्याण्यरण्यानि च यस्याम् | अथवा
4194 एकैव तृष्णा आशा कामलोभलाम्पट्यादिभावैश्चतुर्दशसु लोकेषु विस्तीर्णा
4195 चासौ गहना दुर्लक्ष्या चेति कर्मधारयः | एवं निबिडजालबद्धन्धन##-
4196 निबिडताजालधूलिप्रचुरा च | शिष्टं स्पष्टम् || ५१ ||
4197
4198 एकैव सर्वभुवनान्तरलब्धलक्ष्या
4199 दुर्लक्ष्यतामुपगतैव वपुःस्थितैव |
4200 तृष्णा स्थिता जगति चञ्चलवीचिमाले
4201 क्षीरोदकाम्बुतरले मधुरेव शक्तिः || ५२ ||
4202
4203 कथं विस्तीर्णा कथं च गहना कथं चैका | आश्रयविषयशब्दादिभेदे##-
4204 दृष्टान्तेनोपपाद-यति - एकैवेति | अपुःस्थितैव तृष्णा एकैव
4205 सर्वभुवनानामान्तरेषु भोग्येषु लब्धलक्ष्या प्राप्तविषया सती जगति
4206 व्यवहारभूमौ दुर्लक्ष्यतामुपगतैव स्थिता देहतृष्णैव
4207 सर्वतृष्णात्वमाशाकामादिभावं च प्राप्तेति न स्पष्टं विभाव्यत् इत्यर्थः
4208 | यथा रसनेन्द्रियात्मना वपुःस्थिता एकैव माधुर्यशक्तिः सर्वेषां
4209 भुवनानां जलानामान्तरे जलसामान्ये लब्धप्रतिष्ठा चञ्चलवीचिमाले
4210 नदीसमुद्रादौ क्षरणात्क्षीरमुन्दनात् क्लेदनादुदकमम्भनात्
4211 शब्दनादम्ब्वति क्रियाशब्दभेदेन तरले अव्यवस्थिते जले शिता
4212 दुर्लक्ष्यतामुपगता एकैवेति न विभाव्यते तद्वत् | जीवनं भुवनं वनम्

4213 नीरक्षीराम्बुशम्बरम् इत्यमरः ॥ ५२ ॥
4214
4215 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे
4216 तृष्णाभङ्गो नाम सप्तदशः सर्गः ॥ १७ ॥
4217
4218 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे
4219 तृष्णाभङ्गो नाम सप्तदशः सर्गः ॥ १७ ॥
4220
4221 अष्टादशः सर्गः १८
4222
4223 श्रीराम उवाच ।
4224
4225 आर्द्रान्त्रतन्त्रीगहनो विकारी परिपातवान् ।
4226 देहः स्फुरति संसारे सोऽपि दुःखाय केवलम् ॥ १ ॥
4227
4228 आधिव्याधिबहुक्लेशजरामरणभङ्गुरः ।
4229 निदानं मानतृष्णादेर्देह एवात्र निन्द्यते ॥
4230
4231 अस्तु तृष्णा दुःखहेतुस्तथापि जीवन्भद्राणि पश्यति इति न्यायाद्देहस्य
4232 सुखभोगायतनत्वप्रसिद्धेः सर्वेषां तत्र प्रीत्यतिशयदर्शनाच्च
4233 सुखहेतुत्वमित्याशङ्क्य तस्यापि दुःखहेतुत्वमेवेत्युपपादयति -
4234 आर्द्रेत्यादिना । आन्त्राण्युदरस्थमलमूत्रादिभस्त्राः । तन्त्र्यो नाड्यः । परितः
4235 पातः पतनोपघातो मरणं च ॥ १ ॥
4236
4237 अज्ञोऽपि तज्ज्ञसदृशो वलितात्मचमत्कृतिः ।
4238 युक्त्या भव्योऽप्यभव्योऽपि न जडो नापि चेतनः ॥ २ ॥
4239
4240 अज्ञो जडोऽपि तज्जडं जानातीति तज्ज्ञ आत्मा तत्सदृशस्तत्प्रायः । स्वतस्ता##-
4241 आत्मचमत्कृतिरध्यस्तचित्तादात्म्यं यस्मिन् । भव्यो मोक्षाधिकारसंपत्तौ ।
4242 न जडो नेतरजडतुल्यः ॥ २ ॥
4243
4244 जडाजडदृशोर्मध्ये दोलायितदुराशयः ।
4245 अविवेकी विमूढात्मा मोहमेव प्रयच्छति ॥ ३ ॥
4246
4247 अतएव चिज्जडदृष्ट्योर्मध्ये किमयमात्मकोटौ स्यादुतानात्मकोटाविति
4248 संशये दोलायितोऽनिर्णयदुष्ट आशयो मनो यस्मिन् । विवेकः शोधस्तच्छुन्य##-
4249 अजडदृग्विवेकी तयोराद्योऽस्मिन्देहे आत्मबुद्ध्या मोहं संसारमेव
4250 प्रपश्यति न पुरुषार्थम् । यतोऽसौ दोलायितदुराशयः । चञ्चलाशुद्धचित्त
4251 इत्यर्थः ॥ ३ ॥
4252
4253 स्तोकेनानन्दमायाति स्तोकेनायाति खेदिताम् ।
4254 नास्ति देहसमः शोच्यो नीचो गुणबहिष्कृतः ॥ ४ ॥
4255
4256 स्तोकेनाल्पेनान्नपानादिना शीतातपादिना च । नीचोअधमोऽशुचिरिति यावत् ॥ ४ ॥
4257
4258 आगमापायिना नित्यं दन्तकेसरशालिना ।
4259 विकासस्मितपुष्पेण प्रतिक्षणमलंकृतः ॥ ५ ॥
4260
4261 उपेक्षार्हतां वक्तुं वृक्षत्वेन रूपयति [रूपयति चतुर्भिः] -
4262 आगमेत्यादिचतुर्भिः । प्रतिक्षणं प्रतिहर्षलवं प्रत्यार्तवं च ॥ ५ ॥
4263
4264 भुजशाखो घनस्कन्धो द्विजस्तम्भशुभस्थितिः ।

4265 लोचनालिबिलाक्रान्तः शिरः पीठबृहत्फलः ॥ ६ ॥
4266
4267 घन उन्नतः स्कन्धोंऽसः शाखा मूलं च। द्विजा दन्तास्त एव श्लेषात्प##-
4268
4269 श्रवदन्तरसग्रस्तो हस्तपादसुपल्लवः।
4270 गुल्मवान्कार्यसंघातो विहङ्गमकृतास्पदः [ततास्पद] ॥ ७ ॥
4271
4272 श्रवौ कर्णौ तावेव दन्तेन रसयत इति दन्तरसौ काष्ठकुट्टकाख्यौ
4273 पक्षिणौ ताभ्यां ग्रस्तश्चञ्चुप्रहारैः कुट्टित इव सच्छिद्रः। गुल्मं
4274 रोगविशेषो मूलप्ररोहाश्च तद्वान्। कार्यः कर्तुं शक्यः सम्यक् घात##-
4275 मन्त्रप्रसिद्धौ जीवेश्वरौ बुद्धिजीवौ वा ताभ्यां दृतहृदयनीडः ॥ ७ ॥
4276
4277 सच्छायो देहवृक्षोऽयं जीवपान्थगणास्पदः।
4278 कस्यात्मीयः कस्य पर आस्थानास्थे [आस्थानास्था] किलात्र के ॥ ८ ॥
4279
4280 छाया कान्तिः प्रसिद्धच्छाया च। परः शत्रुः। आस्था प्रीतिरनास्था
4281 द्वेषशात्रास्मिन्देहतरौ के अयुक्ते इत्युपेक्ष्य इति भावः ॥ ८ ॥
4282
4283 तात संतरणार्थेन गृहीतायां पुनः पुनः।
4284 नावि देहलतायां च कस्य स्यादात्मभावना ॥ ९ ॥
4285
4286 नन्वात्मत्वेन सर्वजनप्रसिद्धोऽयं कथमुपेक्ष्यस्तत्राह - तातेति।
4287 संतरणमायुर्नद्याः संसाराम्बुधेर्वा परतीरगमनम्। नावि नौकायाम् ॥ ९
4288 । ।
4289
4290 देहनाम्नि वने शून्ये बहुगर्तसमाकुले।
4291 तनुरुहासंख्यतरौ विश्वासं कोऽधिगच्छति ॥ १० ॥
4292
4293 विश्वासं निःशङ्कचिरावस्थानयोग्यताप्रत्ययम् ॥ १० ॥
4294
4295 मांसस्नाय्वस्थिवलिते शरीरपटहेऽदृढे।
4296 मार्जारवदहं तात तिष्ठाम्यत्र गतध्वनौ ॥ ११ ॥
4297
4298 स्नायवः शिराः। पटहो वाद्यविशेषः। अदृढे असारे सच्छिद्रे च।
4299 गतध्वनौ अप्राप्तिनिर्गमनोपायोपदेशशब्दे ॥ ११ ॥
4300
4301 संसारारण्यसंरूढो विलसच्चित्तमर्कटः।
4302 चिन्तामञ्जरिताकारो दीर्घदुःखघुणक्षतः ॥ १२ ॥
4303
4304 देहमेव पुनः षड्भिः प्लक्षत्वेन रूपयति - संसारेत्यादिना। घुणाः
4305 काष्ठकीटास्तैः क्षतश्छिद्रितः ॥ १२ ॥
4306
4307 तृष्णाभुजङ्गमीगेह। कोपकाककृतालयः।
4308 स्मितपुण्योद्गमः श्रीमाञ्छुभाशुभमहाफलः ॥ १३ ॥
4309
4310 प्लक्षस्य त्वक्पल्लवादेर्माङ्गलिकत्वेन पुण्योद्गमहेतुत्वात्स्थितपुण्योद्गमः।
4311 पुष्पोद्गम इति वा पाठः ॥ १३ ॥
4312
4313 सुरस्कन्धौघलताजालो हस्तस्तबकसुन्दरः।
4314 पवनस्पन्तिताशेषस्वाङ्गावयवपल्लवः ॥ १४ ॥
4315
4316 स्कन्धशब्देन बाहू लक्ष्येते। लते शाखे। समे शास्त्रालते इत्यमरः।

4317 ओघजालशब्दौ शरीरभेदेन नेयौ | जात्यैक्येनैव प्लक्षत्वरूपणात्
4318 [निरूपणात्] | पवनोऽत्र प्राणः || १४ ||
4319
4320 सर्वेन्द्रियखगाधारः सुजानुस्तम्भ उन्नतः |
4321 सरसच्छायया युक्तः कामपान्थनिषेवितः || १५ ||
4322
4323 शोभने जानुनी मध्यमपर्वणी यस्य स तथाविधोऽधःकाय  एव
4324 स्तम्भसदृशो भागो यस्य | स यावत्सरसच्छायया यौवनकान्त्या
4325 शीतलच्छायया च युक्तस्तावत्कामपान्थनिषेवितः इत्यर्थः || १५ ||
4326
4327 मूर्धसंजनिताऽऽदीर्घशिरोरुहतृणावलिः |
4328 अहंकारगृध्रकृतकुलायः सुषिरोदरः || १६ ||
4329
4330 आदीर्घेति छेदः | प्लक्षोपर्यपि क्वचित्तृणोत्पत्तिः प्रसिद्धा || १६ ||
4331
4332 विच्छिन्नवासनाजालमूलत्वाद्दुर्लवाकृतिः |
4333 व्यायामविरसः कायप्लक्षोऽयं न सुखाय मे || १७ ||
4334
4335 विभक्तवासनालक्षणप्ररोहजटाजालवेष्टितमूलत्वाद्दुर्लवा दुरुच्छेदा
4336 आकृतिः स्वरूपं यस्य | व्यायामः श्रमः स एव विविध आयामो
4337 विटपदैर्घ्यं तेन विरसः प्रियसंस्पर्शहीनो रूक्षश्च || १७ ||
4338
4339 कलेवरमहंकारगृहस्थस्य महागृहम् |
4340 लुठत्वभ्येतु वा स्थैर्यं किमनेन मुने मम || १८ ||
4341
4342 लुठतु भूमौ पतित्वा परिवर्तताम् || १८ ||
4343
4344 पङ्क्तिबद्धेन्द्रियपशुं बलत्तृष्णागृहाङ्गनम् |
4345 रागरञ्जितसर्वाङ्गं नेष्टं देहगृहं मम || १९ ||
4346
4347 वलन्ती मुहुः प्रसरन्ती तृष्णालक्षणा गृहस्वामिनी यस्मिन् | अतएव रागेण
4348 कामेन गैरिकादिरञ्जकद्रव्येण च रञ्जितानि सर्वाङ्गानि यस्मिन् || १९ ||
4349
4350 पृष्ठास्थिकाष्ठसंघट्टपरिसंकटकोटरम् |
4351 आन्त्ररज्जुभिराबद्धं नेष्टं देहगृहं मम || २० ||
4352
4353 पृष्ठास्थिलक्षणकाष्ठानां संघट्टनेन परितः संकटः
4354 संकुचितावकाशः कोटरो यस्य | [अन्त्राणि] आन्त्राणि
4355 मलमूत्रान्नरसादि-प्रसारार्था दीर्घपेश्यः || २० ||
4356
4357 प्रसृतस्नायुतन्त्रीकं रक्ताम्बुकृतकर्दमम् |
4358 जरामङ्कोलधवलं नेष्टं देहगृहं मम || २१ ||
4359
4360 स्नायवः शिरास्ता एव तन्त्र्यो वीणादिसूत्राणि बन्धनरज्जवो वा यस्मिन् |
4361 अस्वाङ्गत्वात् नाडीतन्त्र्योः स्वाङ्गे इति न कन्निषेढः | मङ्कोलं चूर्णम् || २१
4362 | |
4363
4364 चित्तभृत्यकृतानन्तचेष्टावष्टब्धसंस्थिति |
4365 मिथ्यामोहमहास्थूणं नेष्टं देहगृहं मम || २२ ||
4366
4367 अवष्टम्भः पतनप्रतिविधानम् | मिथ्या अनृतं मोहोऽज्ञानं च स्थूणे
4368 आधारस्थम्भौ | कर्मधारयो वा || २२ ||

4369
4370 दुःखार्भककृताक्रन्दं सुखशय्यामनोरमम् ।
4371 दुरीहादग्धदासीकं नेष्टं देहगृहं मम ॥ २३ ॥
4372
4373 दुरीहा दुश्चेष्टा सैव दग्धा दाहव्रणपीडिता दासी यस्मिन् ॥ २३ ॥
4374
4375 मलाढ्यविषयव्यूहभाण्डोपस्करसंकटम् ।
4376 अज्ञानक्षारवलितं नेष्टं देहगृहं मम ॥ २४ ॥
4377
4378 अतएव मलाढ्यैर्दोषबहुलैरनिर्णिक्तैश्च विषयव्यूहलक्षणैर्भाण्डैरूप##-
4379
4380 गुल्फगुग्गुलुविश्रान्तजानूर्ध्वस्तम्भमस्तकम् ।
4381 दीर्घदोर्दारुसुदृढं नेष्टं देहगृहं मम ॥ २५ ॥
4382
4383 जङ्घास्तम्भस्य गुल्फो गुग्गुलुः आधारकाष्ठस्थानीयस्तत्र विश्रान्तस्य
4384 प्रतिष्ठितस्यार्थात् जङ्घास्तम्भस्य जानु मस्तकं तदपि स्वाधाराधारे
4385 परम्पर्या प्रतिष्ठितमेव । मूलशैथिल्ये सर्वशैथिल्यापत्तेः । दोषौ बाहू ॥ २५
4386 । ।
4387
4388 प्रकटाक्षगवाक्षान्तः क्रीडत्प्रज्ञागृहाङ्गनम् ।
4389 चिन्तादुहितृकं ब्रह्मन्नेष्टं देहगृहं मम ॥ २६ ॥
4390
4391 प्रकटाण्यक्षाणि ज्ञानेन्द्रियाणि । प्रज्ञा बुद्धिः । प्रकटेति तद्विशेषेणं
4392 क्रियाविशेषणं वा ॥ २६ ॥
4393
4394 मूर्धजाच्छादनछन्नकर्णश्रीचन्द्रशालिकम् ।
4395 आदीर्घाङ्गुलिनिर्व्यूहं नेष्टं देहगृहं मम ॥ २७ ॥
4396
4397 मूर्धजाः केशास्त एव च्छादनं छदिः । कर्णाविव कुण्डलमुक्तादि##-
4398
4399 सर्वाङ्गकुड्यसंघातघनरोमयवाङ्कुरम् ।
4400 संशून्यपेटविवरं नेष्टं देहगृहं मम ॥ २८ ॥
4401
4402 पेटविवरमुदरच्छिद्रम् ॥ २८ ॥
4403
4404 नखोर्णनाभिनिलयं सरमारनितान्तरम् ।
4405 भाङ्कारकारिपवनं नेष्टं देहगृहं मम ॥ २९ ॥
4406
4407 सरमा शुनीव भ्रमणदैन्यकलहादिकारिणी क्षुत्तया रणितान्तरम् । भाङ्कारो
4408 भीषणध्वनिः ॥ २९ ॥
4409
4410 प्रवेशनिर्गमव्यग्रवातवेगमनारतम् ।
4411 वितताक्षगवाक्षं तन्नेष्टं देहगृहं मम ॥ ३० ॥
4412
4413 जिह्वामर्कटिकाक्रान्तवदनद्वारभीषणम् ।
4414 दृष्टदन्तास्थिशकलं नेष्टं देहगृहं मम ॥ ३१ ॥
4415
4416 मर्कटिका प्रसिद्धा कवाटविष्कम्भकाष्ठं वा ॥ ३१ ॥
4417
4418 त्वक्सुधालेपमसृणं यन्त्रसंचारचञ्चलम् ।
4419 मनः सदाखुनोत्खातं नेष्टं देहगृहं मम ॥ ३२ ॥
4420

4421 सुधा चूर्णम् | त्वगेव सुधालेपस्तेन मसृणं स्निग्धम् | यन्त्राणि
4422 घरट्टशकटादीनि तेषामिव सन्धीनां संचारो भ्रमणादिस्तेषामेव
4423 संचारो वा | मन एव सदातन आखुर्मूषकस्तेनोत्खातमिव शैथिल्य##-
4424
4425 स्मितदीपप्रभोद्भासि क्षणमानन्दसुन्दरम् |
4426 क्षणं व्याप्तं तमःपूरैर्नेष्टं देहगृहं मम || ३३ ||
4427
4428 स्मितानि ईषद्धसितान्येव दीपाः | तमःपूरैरज्ञानान्धकारप्रवाहैः || ३३ ||
4429
4430 समस्तरोगायतनं वलीपलितपत्तनम् |
4431 [सर्वातिसार] सर्वाधिसारगहनं नेष्टं देहगृहं मम || ३४
4432 | |
4433
4434 वली त्वक्शैथिल्यम् | पत्तनं नगरं निवासस्थानमिति यावत् | आधयो
4435 मानसदुःखानि तान्येव सारः प्राधान्येन भोग्यत्वात्तैर्गहनं
4436 दुर्गममरण्यायमानं वा || ३४ ||
4437
4438 अक्षर्क्षक्षोभविषमा शून्या निःसारकोटरा |
4439 तमोगहनदिक्कुञ्जा नेष्टा देहाटवी मम || ३५ ||
4440
4441 अक्षाणीन्द्रियाण्येव ऋक्षा बल्लुकाः || ३५ ||
4442
4443 देहालयं धारयितुं न शक्नोमि मुनीश्वर |
4444 पङ्कमग्नं समुद्धर्तुं गजमल्पबलो यथा || ३६ ||
4445
4446 किं श्रिया किं च राज्येन किं कायेन किमीहितैः |
4447 दिनैः कतिपयैरेव कालः सर्वं निकृन्तति || ३७ ||
4448
4449 ईहितैश्चेष्टितैर्मनोरथैर्वा | निकृन्तति छिनत्ति || ३७ ||
4450
4451 रक्तमांसमयस्यास्य सबाह्याभ्यन्तरं मुने |
4452 नाशैकधर्मिणो ब्रूहि कैव कायस्य रम्यता || ३८ ||
4453
4454 सबाह्याभ्यन्तरं विमृश्येति शेषः || ३८ ||
4455
4456 मरणावसरे काया जीवं नानुसरन्ति ये |
4457 तेषु तात कृतघ्नेषु कैवास्था वद धीमताम् || ३९ ||
4458
4459 नानुसरन्ति नानुगच्छन्ति | कृतं पालनपोषणाद्युपकारं घ्नन्ति प्रत्युप##-
4460
4461 मत्तेभकर्णाग्रचलः कायो लम्बाम्बुभङ्गुरः |
4462 न संत्यजति मां यावत्तावदेनं त्यजाम्यहम् || ४० ||
4463
4464 चलश्चपलः | लम्बं लम्बमानं यदम्बु जलकणः | संनिधानान्मत्तेभ##-
4465
4466 पवनस्पन्दतरलः पेलवः कायपल्लवः |
4467 जर्जरस्तनुवृत्तश्च नेष्टो मे कटुनीरसः || ४१ ||
4468
4469 आधिव्याधिकण्टकशतक्षतत्वाज्जर्जरः शिथिलः | तनुवृत्तः क्षुद्रस्वभावः
4470 || ४१ ||
4471
4472 भुक्त्वा पीत्वा चिरं कालं बालपल्लवपेलवाम् |

4473 तनुतामेत्य यत्नेन विनाशमनुधावति ॥ ४२ ॥
4474
4475 बालपल्लवमिव पेलवां मृद्वीं तनुतां कार्श्यम् । पेलवमिति पाठे
4476 क्रियाविशेषणम् । आश्रयद्वारा उभयत्रापि योग्यता ॥ ४२ ॥
4477
4478 तान्येव सुखदुःखानि भावाभावमयान्यसौ ।
4479 भूयोऽप्यनुभवन्कायः प्राकृतो हि न लज्जते ॥ ४३ ॥
4480
4481 तानि पुनः पुनः पूर्वोपभुक्तान्येव । वीप्सितार्थस्यैव बुद्ध्यारूढस्य
4482 सर्वनाम्ना परामर्शाद्विनापि द्विर्वचनं [र्वचनं वा लभ्यते]
4483 वीप्सा लभ्यते । प्राकृतः पामरः ॥ ४३ ॥
4484
4485 सुचिरं प्रभुतां कृत्वा संसेव्य विभवश्रियम् ।
4486 नोच्छ्रायमेति न स्थैर्यं कायः किमिति पाल्यते ॥ ४४ ॥
4487
4488 संसेव्य संप्राप्य । उच्छ्रायमुपचयमुत्कर्षं वा । स्थैर्यमविनाशिताम् ॥ ४४
4489 । ।
4490
4491 जराकाले जरामेति मृत्युकाले तथा मृतिम् ।
4492 सम एवाविशेषज्ञः कायो भोगिदरिद्रयोः ॥ ४५ ॥
4493
4494 संसाराम्भोधिजठरे तृष्णाकुहरकान्तरे ।
4495 सुप्तस्तिष्ठति मुक्तेहो मूकोऽयं कायकच्छपः ॥ ४६ ॥
4496
4497 तृष्णैव कुहरकमल्पच्छिद्रम् । सुप्तः सुप्त इव मूढः । अतएव मुक्तेह
4498 आत्मोद्धारानुकूलेच्छाचेष्टाविधुरोऽतएव मूको गुरूपसर्पणेन
4499 तत्प्रश्नादिवाग्विकलश्च । कच्छोपलक्षितदुरिन्द्रियैर्दुर्विषयकर्दमरसा##-
4500
4501 दहनैकार्थयोग्यानि कायकाष्ठानि भूरिशः ।
4502 संसाराब्धाविहोह्यन्ते कंचित्तेषु नरं विदुः ॥ ४७ ॥
4503
4504 दहनमेवैकोऽर्थो मुख्यं प्रयोजनं तद्योग्यानि । तेषु तेषां मध्ये ॥ ४७ ॥
4505
4506 दीर्घदौरात्म्यवलया निपातफलपातया ।
4507 न देहलतया कार्यं किंचिदस्ति विवेकिनः ॥ ४८ ॥
4508
4509 वलनं वलः प्रतानवेष्टनम् । निपातोऽधोगतिस्तत्फलस्तत्पर्यवसितः पातो
4510 मरणं यस्याः । निपातफलैर्दुश्चरितैः पातो यस्या इति वा ॥ ४८ ॥
4511
4512 मज्जन्कर्दमकोशेषु झटित्येव जरां गतः ।
4513 न ज्ञायते यात्यचिरात्कः कथं देहदर्दुरः ॥ ४९ ॥
4514
4515 कर्दमकोशेषु पङ्काधारेषु विषयपल्वलेषु । कथं कैर्दुर्दशाप्रकारैः ।
4516 दुर्दुरो मेकः ॥ ४९ ॥
4517
4518 निःसारसकलारम्भाः कायाश्चपलवायवः ।
4519 रजोमार्गेण गच्छन्तो दृश्यन्ते नेह केनचित् ॥ ५० ॥
4520
4521 निःसारा नीरसाः । काया एव चपला वायवो झंझापवनाः । रजोमार्गेण
4522 राजसप्रवृत्त्या धूलिमात्रपरिशेषेण वा धूलिसहितेनाकाशमार्गेणान्यत्र ॥
4523 ५० ॥
4524

4525 वायोर्दीपस्य मनसो गच्छतो ज्ञायते गतिः |
4526 आगच्छतश्च भगवञ्छरीरस्य कदाचन || ५१ ||
4527
4528 अत्र दीपशरीरयोर्गत्यागती विनाशोत्पत्ति पूर्वश्लोकादनुकृष्य शरीरस्य नेह
4529 केनचिज्ज्ञायत इति संबन्धः || ५१ ||
4530
4531 बद्धास्था ये शरीरेषु बद्धास्था ये जगत्स्थितौ |
4532 तान्मोहमदिरोन्मत्तान्धिग्धिगस्तु पुनः पुनः || ५२ ||
4533
4534 आस्था सारत्वचिरस्थायित्वसत्यत्वाद्यभिमानः | कण्ठोक्तेऽपि पौनःपुन्ये
4535 द्विर्वचनमतिशयार्थम् || ५२ ||
4536
4537 नाहं देहस्य नो देहो मम नायमहं तथा |
4538 इति विश्रान्तचित्ता ये ते मुने पुरुषोत्तमाः || ५३ ||
4539
4540 अयमिदंत्वेन घटादिवज्जडो देहोऽहं नेति विचार्य विश्रान्तचित्तः |
4541 परमात्मनीति शेषः | पुरुषोत्तमाः पुरुषश्रेष्ठाः विष्णुस्वरूपा एवेति वा ||
4542 ५३ ||
4543
4544 मानावमानबहुला बहुलाभमनोरमाः |
4545 शरीरमात्रबद्धास्थं घ्नन्ति दोषदृशो नरम् || ५४ ||
4546
4547 दोषदृशो दुर्दृष्टयो विशेष्याः | घ्नन्ति मृत्युवशं नयन्ति || ५४ ||
4548
4549 शरीरश्वभ्रशायिन्या पिशाच्या पेशलाङ्गया |
4550 अहंकारचमत्कृत्या छलेन छलिता वयम् || ५५ ||
4551
4552 अहंकारस्य चमत्कृतिर्भोगतृष्णादिः सैव पिशाची | छलेन कपटेन छलिता
4553 असारे सारतामापाद्य सारापहारेण प्रतारिताः || ५५ ||
4554
4555 प्रज्ञा वराकी सर्वैव कायबद्धास्थयानया |
4556 मिथ्याज्ञानकुराक्षस्या छलिता कष्टमेकिका || ५६ ||
4557
4558 प्रज्ञा सद्बुद्धिः | वराकी दीना | मिथ्याज्ञानमेव कुराक्षसी | एकिका
4559 विवेकादिस्वसहायशून्या || ५६ ||
4560
4561 न किंचिदपि दृश्येऽस्मिन्सत्यं तेन हतात्मना |
4562 चित्रं दग्धशरीरेण जनता विप्रलभ्यते || ५७ ||
4563
4564 यदा दृश्यवर्गे न किंचिदपि सत्यं तदा तदन्तःपाति शरीरमपि तथैवेति
4565 स्वत एव दग्धप्रायेणासतापि शरीरेण जीवसमूहः प्रतार्यते
4566 चित्रमाश्चर्यमेतदित्यर्थः || ५७ ||
4567
4568 दिनैः कतिपयैरेव निर्झराम्बुकणो यथा |
4569 पतत्ययमयत्नेन जरठः कायपल्लवः || ५८ ||
4570
4571 यदि जनताविप्रलम्भेन कायस्य किंचित्प्रयोजनं स्यात्तदा युज्येतापि तदपि
4572 नास्तीत्याह द्वाभ्याम् || ५८ ||
4573
4574 कायोऽयमचिरापायो बुद्बुदोऽम्बुनिधाविव |
4575 व्यर्थं कार्यपरावर्ते परिस्फूरति निष्फलः || ५९ ||
4576

कार्याणि सांसारिकधावनान्येव पर आवर्तोऽम्भसां भ्रमः। व्यर्थं
स्वार्थशून्यं यथा स्यात्तथा निष्फलः। परार्थशून्योऽपीत्यर्थः॥ ५९॥

मिथ्याज्ञानविकारेऽस्मिन्स्वप्नसंभ्रमपत्तने।
काये स्फुटतरापाये क्षणमास्था न मे द्विज॥ ६०॥

कुतः कायादिदृश्यवर्गस्यासत्यत्वं तत्राह - मिथ्येति। यतो
मिथ्याभूतस्याज्ञानस्य विकार इत्यर्थः। स्वप्नसंभ्रमनगरतुल्ये। अथवा
स्वाप्नभ्रान्तीनामाधारे। शरीरे एव स्वप्नदर्शनात्। स्वे शरीरे यथाकामं
परिवर्तत इति श्रुतेः। नगरस्य नागरिकव्यापारतुल्यसत्ताक-त्वादित्यर्थः॥
६०॥

तडित्सु शरदभ्रेषु गन्धर्वनगरेषु च।
स्थैर्यं येन विनिर्णीतं स विश्वसितु विग्रहे॥ ६१॥

विश्वसितु विश्वासं करोतु। विग्रहे देहे॥ ६१॥

सततभङ्गुरकार्यपरम्परा विजयिजातजयं हठवृत्तिषु।
प्रबलदोषमिदं तु कलेवरं तृणमिवाहमपोह्य सुखं स्थितः॥ ६२॥

हठवृत्तिषु भङ्गुरताशैघ्र्ये स्वस्वोत्कर्षख्यापनाय बलात्प्रवृत्तेषु
पदार्थेषु मध्य् सततभङ्गुरकार्यसमूहविजयिनो ये ये तडिच्छरदभ्रा##-
नाशहेतुदोषसामग्रीबाहुल्यादित्यर्थः। अपोह्य तुछबुद्ध्या निरस्य॥ ६२॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे
कायजुगुप्सानामष्टादशः सर्गः॥ १८॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे
कायजुगुप्सानामष्टादशः सर्गः॥ १८॥

एकोनविंशः सर्गः १९

श्रीरम उवाच।

लब्ध्वापि तरलाकारे कार्यभारतरङ्गिणि।
संसारसागरे जन्म बाल्यं दुःखाय केवलम्॥ १॥

अज्ञानक्षुत्तृषारोगाशौचचापलदूषितम्।
तिर्यग्जन्तुसमावस्थं बाल्यमप्यत्र निन्द्यते॥

ननु न देहस्य सर्वा अवस्था दुःखरूपास्तद्बाल्यस्य सर्वजनस्पृहणीयतया
रम्यतरत्वात् तद्यथा महाराजो वा महाब्राह्मणो वा महाकुमारो वा
अतिघ्नीमानन्दस्य गत्वा शयीत इति श्रुत्यापि बाल्यस्यानन्दबहुलत्वप्रति##-
- लब्ध्वापीति। कार्यभारैर्नानाकर्तव्याभिनिवैशैः।
प्रकृत्यादित्वात्तृतीया। धान्येन धनवातिवत्तद्धितप्रकृत्यर्थे
अभेदेनान्वयः। तरला अस्थिरा आकाराश्चतुर्विधशरीराणि यस्मिन्। अन्यत्र
चञ्चलस्वभावे संसारसागरे जन्म मनुष्यजन्म। बाल्यं केवलं
दुःखायैव लभते जन्तुरिति शेषः। अपिना मनुष्यजन्मनोऽतिदौर्लभ्यं द्योत्यते
। तथाच श्रुतिः ततो वै तद्दुर्निष्प्रपतरम् इति॥ १॥

अशक्तिरापदस्तृष्णा मूकता मूढबुद्धिता।
गृध्नुता लोलता दैन्यं सर्वं बाल्ये प्रवर्तते॥ २॥

4629
4630 प्रतिज्ञातार्थं प्रपञ्चयति - अशक्तिरित्यादिना | गृध्नुता साभिलाषता |
4631 तृष्णा भक्षणादिविषये | गृध्नुता क्रीडाकौतुकादिविषये तदलाभे
4632 दैन्यमिति भेदः || २ ||
4633
4634 रोषरोदनरौद्रासु दैन्यजर्जरितासु च |
4635 दशासु बन्धनं बाल्यमालानं करिणामिव || ३ ||
4636
4637 चकारोऽनुक्तानन्तदुर्दशासमुच्चयार्थः | बन्धनम् | अधिकरणे ल्युट् | आलानं
4638 गजबन्धनस्तम्भः || ३ ||
4639
4640 न मृतौ न जरारोगे न चापदि न यौवने |
4641 ताश्चिन्ताः [विनिकृन्तति] परिकृन्तन्ति हृदयं शैशवेषु याः
4642 || ४ ||
4643
4644 जरारोगे | समाहारद्वन्द्वे एकवद्भावः | तास्तादृश्यः | परितः कृन्तन्ति
4645 छिन्दन्तीव पीडयन्ति | या यादृश्यः || ४ ||
4646
4647 तिर्यग्जातिसमारम्भः सर्वैरेवावधीरितः |
4648 लोलो बालसमाचारो मरणादपि दुःखदः || ५ ||
4649
4650 तिर्यग्जातयः पश्वादयस्तैः सम आरम्भो यस्य | अवधीरितो भर्त्सितः || ५ ||
4651
4652 प्रतिबिम्बघनाज्ञानं नानासंकल्पपेलवम् |
4653 बाल्यमालूनसंशीर्णमनः [संशीर्णं मन] कस्य
4654 सुखावहम् || ६ ||
4655
4656 पुरःस्थितं प्रतिबिम्बमिव स्फुटं घनं निबिडं अज्ञानं प्रतिक्षणं चित्ते
4657 तत्तद्विषयप्रतिबिम्बनैर्वा घनानि बहुलानि भ्रान्तिज्ञानानि यस्मिन् | अतएव
4658 नानासंकल्पैः पेलवं मृदु | तुच्छमिति यावत् | तत्तत्संकल्पित##-
4659 यस्मिन् || ६ ||
4660
4661 जलवह्न्यनिलाजस्रजातभीत्या पदे पदे |
4662 यद्भयं शैशवेऽबुद्ध्या कस्यापदि हि तद्भवेत् || ७ ||
4663
4664 भयं लक्षणया दुःखं मुख्यमेव वा भयादपि भयान्तरोत्पत्तेः |
4665 अबुद्ध्याऽज्ञानेन | हिशब्दोऽप्यर्थे || ७ ||
4666
4667 लीलासु दुर्विलासेषु दुरीहासु दुराशये |
4668 परमं मोहमाधत्ते बालो बलवदापतन् || ८ ||
4669
4670 सामान्यविशेषाभ्यां बुद्ध्यबुद्धिपूर्वकत्वाभ्यां [कायिकत्वेनेति
4671 क्वचिन्न] कायिकत्वेन मानसत्वेन च लीलादीनां भेदः | मोहं
4672 सारताभ्रमम् || ८ ||
4673
4674 विकल्पकल्पितारम्भं दुर्विलासं दुरास्पदम् |
4675 शैशवं शासनायैव पुरुषस्य न शान्तये || ९ ||
4676
4677 निष्फलेऽपि कर्मणि बालप्रमत्तादिवचनादपि कौतुहलेन कल्पितमहारम्भम् |
4678 दुरास्पदं दुष्प्रतिष्ठम् | शासनाय गुर्वादिकृतकशाताडनादिदुःखा##-
4679
4680 ये दोषा ये दुराचारा दुष्क्रमा ये दुराधयः |

ते सर्वे संस्थिता बाल्ये [दुर्गते इव] दुर्गर्त इव कौशिकाः ॥ १० ॥

दुष्क्रमा दुरुत्तराः। कौशिका वायसारात्यः ॥ १० ॥

बाल्यं रम्यमिति व्यर्थबुद्धयः कल्पयन्ति ये।
तान्मूर्खपुरुषान्ब्रह्मन्धिगस्तु हतचेतसः ॥ ११ ॥

यच्छङ्कितं बाल्यं रम्यतरमिति तत्राह - बाल्यमिति। श्रुतिस्तु रागादि##-

यत्र दोलाकृति मनः परिस्फुरति वृत्तिषु।
त्रैलोक्याऽभव्यमप्पि तत्कथं भवति तुष्टये ॥ १२ ॥

तदरम्यतामेवोपपादयति - यत्रेत्यादिना। त्रैलोक्ये अभव्यममङ्गलं
तदपीत्यन्वयः ॥ १२ ॥

सर्वेषामेव सत्त्वानां सर्वावस्थाभ्य एव हि।
मनश्चञ्चलतामेति बाल्ये दशगुणं मुने ॥ १३ ॥

न केवलं मनुष्याणामेवाभव्यमपि तु सर्वजन्तूनामित्याह - सर्वेषामिति
। मनश्चाञ्चल्यातिशयस्य दुःखातिशयहेतुता प्रसिद्धैवेति भावः ॥ १३ ॥

मनः प्रकृत्यैव चलं बाल्यं च चलतां वरम्।
तयोः संश्लिष्ट्यतोस्त्राता क इवान्तः कुचापले ॥ १४ ॥

संश्लिष्यतोर्मिलतोः। कुचापले तत्प्रयुक्तानर्थे ॥ १४ ॥

स्त्रीलोचनैस्तडित्पुञ्जैर्ज्वालाजालैस्तरङ्गकैः।
चापलं शिक्षितं ब्रह्मञ्छैशवाक्रान्तचेतसः ॥ १५ ॥

शैशवेनाक्रान्ताच्चेतसश्चित्तात्सकाशात् शिक्षितमभ्यस्तं नूनमित्युत्प्रेक्षा ॥
१५ ॥

शैशवं च मनश्चैव सर्वास्वेव हि वृत्तिषु।
भ्रातराविव लक्ष्येते सततं भङ्गुरास्थिती ॥ १६ ॥

भङ्गुरस्थिती। नुमभावश्छान्दसः। चपलस्वभावे ॥ १६ ॥

सर्वाणि दुःखभूतानि सर्वे दोषा दुराधयः।
[बाल्यमेव] बालमेवोपजीवन्ति श्रिमन्तमिव मानवाः ॥ १७ ॥

दु।खभूतानि प्रभूतदुःखानि दुर्व्यसनादीनि ॥ १७ ॥

नवं नवं प्रीतिकरं न शिशुः प्रत्यहं यदि।
प्राप्नोति तदसौ याति विषयैषम्यमूर्छनाम् ॥ १८ ॥

तत्तदा विषयद्दुःसहेन वैषम्येण चित्तविकारेण। मूर्छनां मूर्छाम् ॥ १८ ॥

स्तोकेन वशमायाति स्तोकेनैति विकारिताम्।
अमेध्य एव रमते बालः कौलेयको यथा ॥ १९ ॥

कौलेयकः श्वा। विशेषणानि साधारणानि ॥ १९ ॥

4733 अजस्रबाष्पवदनः कर्दमाक्तो जडाशयः।
4734 वर्षोक्षितस्य तप्तस्य स्थलस्य सदृशः शिशुः॥ २०॥
4735
4736 बाष्पमश्रु ऊष्मोद्गमश्च। जडाशयोऽज्ञबुद्धिरचेतनश्च।
4737 वर्षोक्षिततप्तभूमावपि बाष्पादयः प्रसिद्धाः॥ २०॥
4738
4739 भयाहारपरं दीनं दृष्टादृष्टाभिलाषि च।
4740 लोलबुद्धि वपुर्धत्ते बाल्यं दुःखाय केवलम्॥ २१॥
4741
4742 भयं च आहारश्च भयाहारौ। दृष्टं संनिहितम्। अदृष्टमसंनिहितम्।
4743 लोले बुद्धिवपुषी यस्य॥ २१॥
4744
4745 स्वसंकल्पाभिलषितान्भावानप्राप्य तप्तधीः।
4746 दुःखमेत्यबलो बालो [विनिष्कृत] विनिष्कृत्त इवाशये॥ २२॥
4747
4748 भावान्पदार्थान्। विनिष्कृत्तश्छिन्नः॥ २२॥
4749
4750 दुरीहालब्धलक्षाणि [लक्ष्याणि] बहुवक्रोल्बणानि च।
4751 [बाल्यस्य] बालस्य यानि दुःखानि मुने तानि न कस्यचित्॥ २३॥
4752
4753 दुरीहाभिर्दुश्चेष्टाभिर्दुष्टमनोरथैर्वा लब्धलक्षाणि प्राप्तास्पदानि।
4754 बहुभिर्वक्रैरनृजुभिर्वञ्चनोपायैरुल्बणानि क्रूराणि॥ २३॥
4755
4756 बालो बलवता स्वेन मनोरथविलासिना।
4757 मनसा तप्यते नित्यं ग्रीष्मेणेव वनस्थली॥ २४॥
4758
4759 विद्यागृहगतो बालो परामेति कदर्थनाम्।
4760 आलान इव नागेन्द्रो विषवैषम्यभीषणाम्॥ २५॥
4761
4762 अपरां प्रागुक्तादन्यामपि कदर्थनां पारवश्यकशाघाद्यनिष्ट##-
4763
4764 नानामनोरथमयी मिथ्याकल्पितकल्पना।
4765 दुःखायात्यन्तदीर्घाय बालता पेलवाशया॥ २६॥
4766
4767 मिथ्यावस्तुष्वेव कल्पिता कल्पना सत्यताबुद्धिर्यस्याम्॥ २६॥
4768
4769 संहृष्टो भुवनं भोक्तुमिन्दुमादातुमम्बरात्।
4770 वाञ्छते येन मौर्ख्येण तत्सुखाय कथं भवेत्॥ २७॥
4771
4772 कदाचिद्भोजनेच्छया रुदन्बालो भुवनं ते भोजनं दास्यामीति प्रतारणेन
4773 संहृष्टस्तदेव भोक्तुं वाञ्छते वाञ्छतीति प्रसिद्धम्॥ २७॥
4774
4775 अन्तश्चित्तेरशक्तस्य शीतातपनिवारणे।
4776 को विशेषो [महाबाहो] महाबुद्धे बालस्योर्वीरुहस्तथा॥ २८॥
4777
4778 अन्तर्मनै चित्तिः शीतातपादिदुःखसंवेदनं यस्य। उर्वीरुहोवृक्षस्य॥ २८॥
4779
4780 उड्डीतुमभिवाञ्छन्ति पक्षाभ्यां क्षुत्परायणाः।
4781 भयाहारपरा नित्यं बाला विहगधर्मिणः॥ २९॥
4782
4783 उड्डीतुमुड्डयितुम्। इङ्गुणाभावश्छान्दसः। पक्षाभ्यां लक्षणया
4784 बाहुभ्याम्। विहगधर्मिणः पक्षिसमाः॥ २९॥

4785
4786 शैशवे गुरुतो भीतिर्मातृतः पितृतस्तथा।
4787 जनतो ज्येष्ठबालाच्च शैशवं भयमन्दिरम्॥ ३०॥
4788
4789 सकलदोषदशाविहताशयं शरणमप्यविवेकविलासिनः।
4790 इह न कस्यचिदेव महामुने भवति बाल्यमलं परितुष्टये॥ ३१॥
4791
4792 सकलाभिर्दोषदशाभिर्विहताशयं दूषितान्तःकरणम्। अविवेकलक्षणस्य
4793 विलासिनो निरङ्कुशविहारशीलस्य शरणं गृहम्। चिदिति निपातोऽप्यर्थे।
4794 एवकारो भिन्नक्रमः। कस्यापि परितुष्टये सुखाय अलमत्यर्थे नैव
4795 भवतीत्यर्थः॥ ३१॥
4796
4797 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे
4798 बाल्यजुगुप्सानामैकोनविंशः सर्गः॥ १९॥
4799
4800 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे
4801 बाल्यजुगुप्सानामैकोनविंशः सर्गः॥ १९॥
4802
4803 विंशः सर्गः २०
4804
4805 श्रीराम उवाच।
4806
4807 बाल्यानर्थमथ त्यक्त्वा पुमानभिहताशयः।
4808 आरोहति निपाताय यौवनं संभ्रमेण तु॥ १॥
4809
4810 लोभद्वेषमदासूयामानमात्सर्यदूषितम्।
4811 कामाद्यनर्थसदनं यौवनं चात्र निन्द्यते॥
4812
4813 अस्तु बाल्यमतिमौर्ख्याशक्तिपारतन्त्र्येभ्यो दुःखबहुलम् यौवनं तु
4814 तदभावान्नानाभोगरसरञ्जितत्वाच्च सुखहेतुरेवेति स्पृहणीयमेवे##-
4815 बाल्यानर्थ-मित्यादिना। संभ्रमेण भोगोत्साहेन भ्रान्त्या
4816 वक्ष्यमाणकामपिशाचा-दिना वा अभिहताशयो दूषितान्तःकरणः।
4817 आचतुर्दशवर्षं माण्डव्येन मर्यादाकरणान्न तथा बाल्यं निपाताय
4818 यौवनं तु निपातायैवेति भावः॥ १॥
4819
4820 तत्रानन्तविलासस्य लोलस्य स्वस्य चेतसः।
4821 वृत्तिरनुभवन्याति दुःखाद्दुःखान्तरं जडः॥ २॥
4822
4823 तत्र यौवने। अनन्ता विलासाश्चेष्टा यस्य। वृत्ति रागद्वेषादिपरिणामान्। जडो
4824 मूर्खः॥ २॥
4825
4826 स्वचित्तबिलसंस्थेन नानासंभ्रमकारिणा।
4827 बलात्कामपिशाचेन विवशः परिभूयते॥ ३॥
4828
4829 परिभूयते विवेकं तिरस्कृत्य वशीक्रियते॥ ३॥
4830
4831 चिन्तानां लोलवृत्तीनां ललनानामिवाऽवृतीः।
4832 अर्पयत्यवशं चेतो बालानामञ्जनं यथा॥ ४॥
4833
4834 अतएवाऽवशमस्वतन्त्रं चेतो ललनानां युवतीनामिव लोलवृत्तीनां
4835 चञ्चलस्थितिकानां चिन्तानां अवृत्तिः वरणं वृतिस्तिरोधानं तदभावान्।
4836 स्वैरप्रसरानिति यावत्। अर्पयति प्रयच्छति। यथा निध्यादिदर्शनाय बालानां

4837 करतलेऽर्पितं सिद्धाञ्जनं लोलवृत्तीनां तन्नयनप्रभाणां अवृतीः
4838 अनावरणानि। भूमिशिलादिव्यवधानतिरस्कारेण स्वैरं
4839 निधिदर्शनसमर्थतामिति यावत्॥ ४॥
4840
4841 ते ते दोषा दुरारम्भास्तत्र तं तादृशाशयम्।
4842 तद्रूपं प्रतिलुम्पन्ति दुष्टास्तेनैव ये मुने॥ ५॥
4843
4844 तत्र यौवने तादृशाशयं कामचिन्तादिवशीकृतचित्तमतएव तद्रूपं
4845 तत्प्रायं तं पुरुषं नरकादिहेतुत्वाद्व्ययक्लेशसाध्यत्वाच्च दुष्टा
4846 आरम्भाः स्त्रीद्यूतकलहादिव्यसनारम्भा येभ्यस्ते तथाविधास्ते ते प्रसिद्धा
4847 रागलोभादिदोषाः प्रतिलुम्पन्ति विनाशयन्ति। ये दोषास्तेन यौवनेनैव दुष्टाः।
4848 अतिशयं नीता इत्यर्थः॥ ५॥
4849
4850 महानरकबीजेन संततभ्रमदायिना।
4851 यौवनेन न ये नष्टा नष्टा नान्येन ते जनाः॥ ६॥
4852
4853 अतएव महानवरकेति। स्पष्टम्॥ ६॥
4854
4855 नानारसमयी चित्रवृत्तान्तनिचयोम्भिता।
4856 भीमा यौवनभूर्येन तीर्णा धीरः स उच्यते॥ ७॥
4857
4858 रसाः शृङ्गारादयः कट्वादयो विषयाभिलाषा दुस्तरजलानि च। प्राचुर्ये
4859 मयट्। रागलोभादीनां चोरव्याघ्रसर्पादीनां च चैत्रैराश्चर्यहेतु##-
4860
4861 [भास्वराकार] निमेषभासुराकारमालोलघनगर्जितम्।
4862 विद्युत्प्रकाशमिवं यौवनं मे न रोचते॥ ८॥
4863
4864 घनानि बहुलानि गर्जितानीव साभिमानोक्तयो घनानां मेघानां गर्जितानि च
4865 यस्मिन्। अतएव विद्युदिव प्रकाशमानम्॥ ८॥
4866
4867 मधुरं स्वादु तिक्तं च दूषणं दोषभूषणम्।
4868 सुराकल्लोलसदृशं यौवनं मे न रोचते॥ ९॥
4869
4870 भोगकाले मधुरमतएव स्वादु हृद्यं तिक्तं परिणामतः दूषणं
4871 निन्दाहेतुदोषाणां भूषणमलंकारायमाणम्। सुरायाः कल्लोला
4872 मदविलासाः॥ ९॥
4873
4874 असत्यं सत्यसंकाशमचिराद्विप्रलम्भदम्।
4875 स्वप्नाङ्गनासङ्गसमं यौवनं मे न रोचते॥ १०॥
4876
4877 विप्रलम्भदं वञ्चनप्रदम्॥ १०॥
4878
4879 सर्वस्याग्रे सर्वपुंसः क्षणमात्रमनोहरम्।
4880 गन्धर्वनगरप्रख्यं यौवनं मे न रोचते॥ ११॥
4881
4882 सर्वस्य क्षणमनोहरस्य वस्तुजातस्य मध्ये अग्रे अग्रेसरं श्रेष्ठमित्यर्थः।
4883 गन्धर्वनगरदर्शनस्य मरणचिह्नत्वात्तत्पक्षे सर्वस्य वयसोऽग्रे अन्ते
4884 इत्यर्थः॥ ११॥
4885
4886 इषुप्रपातमात्रं हि सुखदं दुःखभासुरम्।
4887 दाहपोषप्रदं नित्यं यौवनं मे न रोचते॥ १२॥
4888

ज्यामुक्त इषुर्यावता कालेन लक्ष्यं प्रपतति तावत्कालं सुखदम् ॥ १२ ॥

आपातमात्ररमणं सद्भावरहितान्तरम् ।
वेश्यास्त्रीसंगमप्रख्यं यौवनं मे न रोचते ॥ १३ ॥

रमणं रमणीयम् । सद्भावः शुभचित्तता ॥ १३ ॥

ये केचन समारम्भास्ते सर्वे सर्वदुःखदाः ।
तारुण्ये संनिधिं यान्ति महोत्पाता इव क्षये ॥ १४ ॥

सर्वेषां दुःखदा ये केचन समारम्भास्ते सर्वे इत्यन्वयः । क्षये प्रलये ॥ १४
। ।

हार्दान्धकारकारिण्या भैरवाकारवानपि ।
यौवनाज्ञानयामिन्या बिभेति भगवानपि [ज्ञानवानपि] ॥ १५ ॥

भैरवाकारवान् भगवानीश्वरोऽपि यौवनयुक्ताज्ञानरात्रेर्नूनं बिभेति
कथमन्यथा सदैव विवेकज्ञानचन्द्रं धारयतीति भावः ॥ १५ ॥

सुविस्मृतशुभाचारं बुद्धिवैधुर्यदायिनम् ।
ददात्यतितरामेष भ्रमं यौवनसंभ्रमः ॥ १६ ॥

भ्रमं भ्रान्तिम् । संभ्रमो मोहः ॥ १६ ॥

कान्तावियोगजातेन हृदि दुःस्पर्शवह्निना ।
यौवने दह्यते जन्तुस्तरुर्दावाग्निना यथा ॥ १७ ॥

दुःस्पर्"अः स्प्रष्टुमशक्यः शोकवह्निस्तेन हृदि चित्ते दह्यते ॥ १७ ॥

सुनिर्मलापि विस्तीर्णा पावन्यपि हि यौवने ।
मतिः कलुषतामेति प्रावृषीव तरङ्गिणी ॥ १८ ॥

दोषमार्जनेन निर्मला । औदार्येण । विस्तीर्णा । गुणाधानैः
[गुणाधानेन] पावनी । चकारः
शैत्यमाधुर्याद्यनुक्तसमुच्चयार्थः ॥ १८ ॥

शक्यते घनकल्लोला भीमा लङ्घयितुं नदी ।
न तु तारुण्यतरला तृष्णातरलितान्तरा ॥ १९ ॥

तारुण्येन तरला चञ्चला चित्तवृत्तिः । भोगतृष्णया तरलितानि
आन्तराणीन्द्रियाणि यस्याम् ॥ १९ ॥

सा कान्ता तौ स्तनौ पीनौ ते विलासास्तदाननम् ।
तारुण्य इति चिन्ताभिर्याति जर्जरतां जनः ॥ २० ॥

जर्जरतां शैथिल्यम् ॥ २० ॥

नरं तरलतृष्णार्तिं युवानमिह साधवः ।
पूजयन्ति न तु च्छिन्नं जरत्तृणलवं यथा ॥ २१ ॥

तरलास्तृष्णार्तयो यस्मिन् । न [नेति क्वचिन्न लभ्यते] केवलं न
पूजयन्ति किंत्ववमन्यन्तेऽपीति द्योतनाय तु शब्दः ॥ २१ ॥

4941
4942 नाशायैव मदार्तस्य दोषमौक्तिकधारिणः।
4943 अभिमानमहेभस्य नित्यालानं हि यौवनम्॥ २२॥
4944
4945 मानभङ्गस्तु मनस्विनां मरणोपम इत्यभिप्रेत्याह - नाशायैवेति।
4946 अभिमान एव महेभस्तस्य अथवा अभिमानैर्महेभवत्स्तब्धस्याविवेकि##-
4947 ॥ २२॥
4948
4949 मनोविपुलमूलानां दोषाशीविषधारिणाम्।
4950 शोषरोदनवृक्षाणां यौवनं बत काननम्॥ २३॥
4951
4952 इष्टालाभवियोगाभ्यामन्तर्दाहाच्छोषस्तद्युक्तरोदनान्येव वृक्षाः। दोषा
4953 एवाशीविषाः सर्पाः। बतेति खेदे॥ २३॥
4954
4955 रसकेसरसंबाधं कुविकल्पदलाकुलम्।
4956 दुश्चिन्ताचञ्चरीकाणां पुष्करं विद्धि यौवनम्॥ २४॥
4957
4958 रस्यते इति रसः सुखलवमकरन्दस्तेन के सुखे विषये सरन्ति प्रसरन्तीति
4959 रागादय एव केसरास्तैश्च संबाधं निबिडितम्। दलानि पत्राणि। चञ्चरीका
4960 भ्रमारः। पुष्करं पद्मम्॥ २४॥
4961
4962 कृताकृतकुपक्षाणां हृत्सरस्तीरचारिणाम्।
4963 आधिव्याधिविहंगानामालयो नवयौवनम्॥ २५॥
4964
4965 कृतं पापमकृतं पुण्यं लौकिककार्याणि वा कृताकृतानि
4966 पतनहेतुत्वात्कु-पक्षाः। आलयो नीडम्॥ २५॥
4967
4968 जडानां गतसंख्यानां कल्लोलानां विलासिनाम्।
4969 अमपेक्षितमर्यादो वारिधिर्नवयौवनम्॥ २६॥
4970
4971 असंख्यत्वादेव गतसंख्यानां कल्लोलानां विकल्पतरङ्गाणाम्। विलासिनां
4972 विलसनशीलानाम्। अनपेक्षितमर्यादोऽनवधिः। अनपेक्षित-मनिष्टं
4973 जरादिदुःखमेव मर्यादा पर्यवसानभूर्यस्येति वा॥ २६॥
4974
4975 सर्वेषां गुणसर्गाणां परिरूढरजस्तमाः।
4976 अपनेतुं स्थितिं दक्षो विषमो यौवनानिलः॥ २७॥
4977
4978 चिताकाशे प्रसादप्रकाशविवेकदृक्प्रसरादीनां सर्वेषां गुणानां
4979 सृज्यन्ते साधुसंगमसच्छास्त्रप्रयत्नादिभिरुत्पाद्यन्त इति सर्गास्तेषाम्।
4980 विशेष्यविशेषणभावे कामचारात्परनिपातः। प्रयत्नसहस्रसाधितानामपि
4981 [साध्यानामपि] सद्गुणानामिति यावत्। स्थितिं स्थैर्यमपनेतुं दक्षः
4982 समर्थः। अनिलपक्षे गुणसर्गाणां लूतासृष्टतन्तूनां च॥ २७॥
4983
4984 नयन्ति पाण्डुतां वक्रमाकुलावकरोत्कटाः।
4985 आरोहन्ति परां कोटिं रूक्षा यौवनपांसवः॥ २८॥
4986
4987 पाण्डुतामिति। विषयवासनोत्थरोगैरित्यर्थः। आकुलैश्चालितैरवकरैरुत्करा##-
4988 दोषोत्कर्ष-मूर्ध्वदेशं च॥ २८॥
4989
4990 उद्बोधयति दोषालिं [विकृन्नति] निकृन्तति गुणावलिम्।
4991 नराणां यौवनोल्लासो विलासो दुष्कृतश्रियाम्॥ २९॥
4992

4993 दोषाणामालिं समूहम् | दुष्कृतश्रियां पापसंपदां
4994 विलासहेतुत्वाद्विलासः || २९ ||
4995
4996 शरीरपङ्कजरजश्चञ्चलां मतिषट्पदीम् |
4997 निबन्धन्मोहयत्येष नवयौवनचन्द्रमाः || ३० ||
4998
4999 रजोगुणपरागनिरुद्धविवेकपक्षत्वाद्देहपङ्कज एव चञ्चलां मतिषट्पदीं
5000 बुद्धिभ्रमरीमर्थात्तदभिमानकोशे निबध्नन्मोहयति || ३० ||
5001
5002 शरीरखण्डकोद्भूता रम्या यौवनवल्लरी |
5003 लग्नमेव मनोभृङ्गं मदयत्युन्नतिं गता || ३१ ||
5004
5005 शरीरलक्षणे खण्डके अल्पे वनखण्डे कुञ्जे वा | वल्लरी पुष्पमञ्जरी |
5006 मदयति मोहयति | उन्नतिमुत्कर्षमूर्ध्वदेशं च || ३१ ||
5007
5008 शरीरमरुतापोत्थां युवतामृगतृष्णिकाम् |
5009 मनोमृगाः प्रधावन्तः पतन्ति विषयावटे || ३२ ||
5010
5011 शरीरमेव मरुभूमिस्तत्र कामातपतापेनोत्थां प्रतिभातां युवता यौवनं
5012 सैव मृगतृष्णिका तां प्रति धावन्तः | विषयलक्षणे अवटे गर्ते || ३२ ||
5013
5014 शरीरशर्वरीज्योत्स्ना चित्तकेसरिणः सटा |
5015 लहरी जीविताम्भोधेर्युवता मे न तुष्टये || ३३ ||
5016
5017 शरीरमेव शर्वरी रात्रिस्तस्या ज्योत्स्ना चन्द्रिका | चित्तलक्षणस्य केसरिणः
5018 सटास्कन्धलोम | तेन हि स शोभते | लहरी वीचिमाला || ३३ ||
5019
5020 दिनानि कतिचिद्येयं फलिता देहजङ्गले |
5021 युवता शरदस्यां हि न समाश्वासमर्हथ || ३४ ||
5022
5023 येयं युवता सेयं हि यस्माद्देहजङ्गले कतिचिद्दिनानि फलिता संजातफला
5024 शरत् शरत्कालः | अचिरादेव क्षयमेष्यतीति भावः | अतोऽस्यां समाश्वासं
5025 नार्हथेति स्वजनान्प्रत्युक्तिः || ३४ ||
5026
5027 झटित्येव प्रयात्येव शरीराद्युवताखगः |
5028 क्षणेनैवाल्पभाग्यस्य हस्ताच्चिन्तामणिर्यथा || ३५ ||
5029
5030 उक्तमेव प्रपञ्चयति - झटितीत्यादिभिः षड्भिः || ३५ ||
5031
5032 यदा यदा परां कोटिमध्यारोहति यौवनम् |
5033 वल्गन्ति सज्वराः कामास्तदा नाशाय केवलम् || ३६ ||
5034
5035 परां कोटिमुत्कर्षकाष्ठाम् | वल्गन्ति गच्छन्ति | वृद्धिमिति यावत् | सज्वराः
5036 ससंतापाः | पूर्वत्र वीप्सादर्शनात्तदातदेति परिणेयम् || ३६ ||
5037
5038 तावदेव विवल्गन्ति रागद्वेषपिशाचकाः |
5039 नास्तमेति समस्तैषा यावद्युवनयामिनी || ३७ ||
5040
5041 विवल्गन्ति विशेषेण संचरन्ति | यामिनी रात्रिः || ३७ ||
5042
5043 नानाविकारबहुले वराके क्षणनाशिनि |
5044 कारुण्यं कुरु तारुण्ये म्रियमाणे सुते यथा || ३८ ||

5045
5046 विकाराश्चित्तविकारा बाललीलाश्च ॥ ३८ ॥
5047
5048 हर्षमायाति यो मोहात्पुरुषः क्षणभङ्गिना ।
5049 यौवनेन महामुग्धः स वै नरमृगः स्मृतः ॥ ३९ ॥
5050
5051 क्षणभङ्गिना यौवनेन मोहाद्यो हर्षमायाति स नरमृगो मनुष्यः
5052 सन्नपि पशुरेव । यतोऽसौ महामुग्धः ॥ ३९ ॥
5053
5054 मानमोहान्मदोन्मत्तं यौवनं योऽभिलष्यति ।
5055 अचिरेण स दुर्बुद्धिः पश्चात्तापेन युज्यते ॥ ४० ॥
5056
5057 मानमोहादभिमानसहितादज्ञानात् । अभिलष्यति सारबुद्ध्या सज्जते ॥ ४० ॥
5058
5059 ते पूज्यास्ते महात्मानस्त एव पुरुषा भुवि ।
5060 ये सुखेन समुत्तिर्णाः साधो यौवनसंकटात् ॥ ४१ ॥
5061
5062 सुखेन अहिंसासत्यास्तेयब्रह्मचर्याद्यनुपक्षयेण ॥ ४१ ॥
5063
5064 सुखेन तीर्यतेऽम्भोधिरुत्कृष्टमकराकरः ।
5065 न कल्लोलबलोल्लासि सदोषं हतयौवनम् ॥ ४२ ॥
5066
5067 उत्कृष्टानां महतां मकराणां ग्राहाणामाकरः खनिः ।
5068 रागादिकल्लोलानां बलेनोल्लसनशीलम् । हतं निन्दितम् । कुत्सितानि कुत्सनैः इति
5069 तत्पुरुषः ॥ ४२ ॥
5070
5071 विनयभूषितमार्यजनास्पदं करुणयोज्ज्वलमावलितं गुणैः ।
5072 इह हि दुर्लभमङ्ग सुयौवनं जगति काननमम्बरगं यथा ॥ ४३ ॥
5073
5074 ननु बाल्यवार्थकयोर्मौर्ख्याशक्तिभ्यां [मौग्ध्याशक्तिभ्यां]
5075 पुरुषार्थसाधनायोग्यत्वाद्यौवनस्यापि दोषबहुलत्वान्नास्ति कदापि पुरुषस्य
5076 साधनसंपत्त्या [पुरुषार्थं प्रत्याशेति]
5077 पुरुषार्थप्रत्याशेत्याशङ्क्य न सर्वं यौवनं निन्द्यते किंतु
5078 दुर्यौवनमेव सुयौवनं तु पुरुषार्थपर्यवसितमेवेति
5079 लक्षणैस्तद्दर्शयंस्तस्य दुर्लभतामाह - विनयेति । आर्याः पूज्या जना
5080 मुनिजना आस्पदं स्थानं यस्य आर्यजनानां
5081 साधुनामास्पदमावासस्थानवद्विश्रान्तिदमिति वा । गुणैः
5082 शान्तिदान्त्यादिभिः । जगति संसारे । हिशब्दोऽप्यर्थे । इहास्मिन्मनुष्यजन्मन्यपि
5083 सुदुर्लभं किमन्यत्रेत्यर्थः । अम्बरगं काननं नन्दनवनम् । तत्पक्षे वीन्
5084 पक्षिणो नयन्ति प्रापयन्ति स्वसंनिधिमिति विनयाः कल्पवृक्षास्तैर्भूषितम् ।
5085 आर्यजना देवास्तेषामास्पदम् । अतएव करुणया दयया ऊर्जितम् । गुणैः
5086 फलपुष्पसमृद्ध्यादिभिः कल्पलतागुणैरावलितं वेष्टितमिति वा । इह भुवि
5087 सुदुर्लभमिति योज्यम् ॥ ४३ ॥
5088
5089 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे
5090 यौवनगर्हा नाम विंशतितमः सर्गः ॥ २० ॥
5091
5092 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे यौवनगर्हा
5093 नाम विंशतितमः सर्गः ॥ २० ॥
5094
5095 एकविंशः सर्गः २१
5096

श्रीराम उवाच।

मांसपाञ्चलिकायास्तु यन्त्रलोलेऽङ्गपञ्जरे।
स्नाय्वस्थिग्रन्थिशालिन्याः स्त्रियाः किमिव शोभनं॥ १॥

प्रत्यक्षनरकव्रातनिष्पन्ननिखिलाङ्गिकाः।
स्त्रियोऽप्यत्र विनिन्द्यन्ते पुंसां नरकजन्मदाः॥

येषु स्त्रीपिण्डेषु यूनां रमणीयताभ्रमस्तेषां स्वरूपं विविच्य
दर्शयितुमुपक्रमते - मांसेत्यादिना। स्नायवः शिराः। ग्रथनं
ग्रन्थिस्तेन शालिन्याः शोभनाया मांसमय्याः पाञ्चालिकायाः प्रतिमायाः
स्त्रियाः शकटादियन्त्रमिव लोले चञ्चले अङ्गपञ्जरे शोभनमिव यन्मन्यन्ते
तत्किम्। न किंचिदित्यर्थः॥ १॥

त्वङ्वांसरक्तबाष्पाम्बु पृथक्कृत्वा विलोचनम्।
समालोकय रम्यं चेत्किं मुधा परिमुह्यसि॥ २॥

उक्तमेव प्रपञ्चयिष्यन्प्रथमं यूनां यत्र नेत्रे विलासविभ्रमस्तत्र विवेके
अशोभनतां दर्शयति - त्वगिति। समाहारद्वन्द्वः। रम्यं चेत्सज्जस्व
[सज्जस्वेति फलितार्थकथनम्]। किं मुधेति। नोचेदिति शेषः। मुधा
व्यर्थम्॥ २॥

इतः केशा इतो रक्तमितीयं प्रमदातनुः।
किमेतया निन्दितया करोति विपुलाशयः॥ ३॥

विपुलाशयो विवेकविस्तीर्णबुद्धिः॥ ३॥

वासोविलेपनैर्यानि लालितानि पुनः पुनः।
तान्यङ्गान्यङ्ग लुण्ठन्ति क्रव्यादाः सर्वदेहिनाम्॥ ४॥

अङ्गेति कोमलामन्त्रणे। लुण्ठन्ति उपघ्नन्ति। क्रव्यादा मांसाशिनो
गृध्रगोमाय्वादयः॥ ४॥

मेरुशृङ्गतटोल्लासिगङ्गाजलरयोपमा।
दृष्टा यस्मिन्स्तने मुक्ताहारस्योल्लासशालिता॥ ५॥

रयः प्रवाहः। मुक्ताहारस्य उल्लासशालिता शोभा यस्मिन्स्तने दृष्टा स एव
ललनास्तन इत्युत्तरेण संबन्धः॥ ५॥

श्मशानेषु दिगन्तेषु स एव ललनास्तनः।
श्वभिरास्वाद्यते काले लघुपिण्ड इवान्धसः॥ ६॥

आस्वाद्यते रुच्या भक्ष्यते। अन्धस ओदनस्य॥ ६॥

रक्तमांसास्थिदिग्धानि करभस्य यथा वने।
तथैवाङ्गानि कामिन्यास्तां प्रत्यपि हि को ग्रहः॥ ७॥

दिग्धान्युपचितानि करभस्य खरस्योष्ट्रस्य वा। ग्रह आग्रहः। आशातिशय इति
यावत्॥ ७॥

आपातरमणीयत्वं [कल्प्यते केवलं स्त्रियः] कल्पते केवलं
स्त्रियाः।

5149 मन्ये तदपि नास्त्यत्र मुने मोहैककारणम् ॥ ८ ॥
5150
5151 अविचारजं ज्ञानमापातं पतनावधीति वा । कल्पते युज्यते । यतो
5152 मोहैककारणं चित्तविभ्रमैकनिमित्तकं तत् । नहि तथाविधं
5153 शुक्तिरजताद्यस्तीति भावः ॥ ८ ॥
5154
5155 विपुलोल्लासदायिन्या मदमन्मथपूर्वकम् ।
5156 को विशेषो विकारिण्या मदिरायाः [स्त्रियस्तथा] स्त्रियास्तथा ॥ ९ ॥
5157
5158 विकारिण्याः स्वतः कामकिण्वादिविकारवत्याः स्खलनकलहादिविकारिण्या
5159 [विकारकारिण्या] वा ॥ ९ ॥
5160
5161 ललनालानसंलीना मुने मानवदन्तिनः ।
5162 प्रबोधं नाधिगच्छन्ति दृधैरपि शमाङ्कुशैः ॥ १० ॥
5163
5164 सम्यग्लीना मदमोहात्सुप्तप्रायाः । प्रबोधं विवेकजागरणम् ॥ १० ॥
5165
5166 केशकज्जलधारिण्यो दुःस्पर्शा लोचनप्रियाः ।
5167 दुष्कृताग्निशिखा नार्यो दहन्ति तृणवन्नरम् ॥ ११ ॥
5168
5169 नार्यः स्त्रियः दुष्कृताग्नीनां शिखा ज्वालाः । तदेव तद्धर्मैःरुपपादयति
5170 - केशेति । केशा एव कज्जलानि केशान्कज्जलानि च धारयितुं शीलं यासाम् ।
5171 दुःस्पर्शाः स्प्रष्टुमशक्याः । लोचनप्रियाः प्रियदर्शनाः । अतएव हि नरं
5172 तृणवद्दहन्ति ॥ ११ ॥
5173
5174 ज्वलतामतिदूरेऽपि सरसा अपि नीरसाः ।
5175 स्त्रियो हि नरकाग्नीनामिन्धनं चारु दारुणम् ॥ १२ ॥
5176
5177 अतिदूरे संयमिन्यां दारुणं यथा स्यात्तथा ज्वलतामपि नरकाग्नीना##-
5178 स्वतश्च विरोधाभासः । अथवा दारुणमित्यपीन्धनविशेषणमेव । तथाच
5179 तत्रापि स्वत एव विरोधाभासः । परिहारस्तु वासनादुष्टत्वात् सरसाः आपाततः
5180 नीरसाः परमार्थतः । एवं चारु आपाततः दारुणं फलत इति ॥ १२ ॥
5181
5182 विकीर्णाकारकबरी तरत्तारकलोचना ।
5183 पुर्णेन्दुबिम्बवदना कुसुमोत्करहासिनी ॥ १३ ॥
5184
5185 यामिन्या आकारोऽन्धकारः स एव स इव वा कबरी केशपाशो यस्याः । तरन्त्यो
5186 भ्रमन्त्यस्तारका नक्षत्राण्येव लोचनानि तानीव च तरत्तारके चलत्कनीनिके वा
5187 लोचने यस्याः । एवमिन्दुबिम्बमेव इन्दुबिम्बमिव वा वदनं यस्याः ।
5188 कुसुमोत्कर एव कुसुमोत्कर इव वा हासोऽस्या अस्तीति विग्रहः ॥ १३ ॥
5189
5190 लीलाविलोलपुरुषा कार्यसंहारकारिणी ।
5191 परं विमोहनं बुद्धेः कामिनी दीर्घयामिनी ॥ १४ ॥
5192
5193 शृङ्गारलीलाभिर्विलोलाः पुरुषायस्याम् । अतएव तेषां कार्याणामवश्य##-
5194 व्यर्थमायुर्विनाशायेति भावः ॥ १४ ॥
5195
5196 पुष्पाभिराममधुरा करपल्लवशालिनी ।
5197 भ्रमराक्षिविलासाढ्या स्तनस्तबकधारिणी ॥ १५ ॥
5198
5199 न केवलं पुरुषार्थविघातिता अपित्वनर्थहेतुतापीत्याह - पुष्पेत्यादि##-
5200 स्तनावेव स्तनाविव ॥ १५ ॥

5201
5202 पुष्पकेषरगौराङ्गी नरमारणतत्परा |
5203 ददात्युन्मत्तवैवशं कान्ता विषलता यथा || १६ ||
5204
5205 पुष्पकेसरैः पुष्पकेसराणीव वा | उन्मत्तानां कामोन्मादात्स्वसेविनां
5206 मूर्खाणां मूर्छामरणादिवैवश्यं ददाति || १६ ||
5207
5208 सत्कार्योच्छ्वासमात्रेण भुजङ्गदलनोत्कया |
5209 कान्तयोद्ध्रियते जन्तुः करभ्येवोरगो बिलात् || १७ ||
5210
5211 करभ्यत्र भल्लुकी | सा हि बिलस्थान्सर्पादीन्श्वासबलेनाकृष्य भक्षयतीति
5212 प्रसिद्धम् | तथा सत्कार्यैरलीकसत्कारैरुच्छ्वास आश्वासनं तावन्मात्रेण
5213 भुजङ्गानां विटानां दलने वित्तचित्तापहारेण विनाशे सोत्कण्ठया कान्तया
5214 जन्तुरुद्ध्रियते | वशीक्रियत इत्यर्थः || १७ ||
5215
5216 कामनाम्ना किरातेन विकीर्णा मुग्धचेतसाम् |
5217 नार्यो नरविहंगानामङ्गबन्धनवागुराः || १८ ||
5218
5219 विकीर्णाः प्रसारिताः | वागुरा जालानि || १८ ||
5220
5221 ललनाविपुलालाने मनोमत्तमतंगजः |
5222 रतिशृङ्खलया ब्रह्मन्बद्धस्तिष्ठति मूकवत् || १९ ||
5223
5224 जन्मपल्वलमत्स्यानां [वित्तकर्दम] चित्तकर्दमचारिणाम् |
5225 पुंसां दुर्वासनारज्जुर्नारी बडिशपिण्डिका || २० ||
5226
5227 बडिशं मत्स्यवेधनकण्टकस्तत्रत्या पिष्टपिण्डिका || २० ||
5228
5229 कन्दुरं च तुरङ्गाणामालानमिव दन्तिनाम् |
5230 पुंसां मन्त्र इवाहीनां बन्धनं वामलोचना || २१ ||
5231
5232 मन्दुरं मन्दुरा वाजिशाला || २१ ||
5233
5234 नानारसवती चित्रा भोगभूमिरियं मुने |
5235 स्त्रियमाश्रित्य संयाता परामिह हि संस्थितिम् || २२ ||
5236
5237 इयं भोगभूमिर्ब्रह्माण्डलक्षणा इह संसारे परां दृढां संस्थितिं
5238 चिरस्थितिं संयाता प्राप्ता || २२ ||
5239
5240 सर्वेषां दोषरत्नानां सुसमुद्गिकयाऽनया |
5241 दुःखशृङ्खलया नित्यमलमस्तु मम स्त्रिया || २३ ||
5242
5243 सुसमुद्गिकया दृढसंपुटिकया | अलं पर्याप्तम् | प्रयोजनं नास्तीत्यर्थः ||
5244 २३ ||
5245
5246 किं स्तनेन किमक्ष्णा वा किं नितम्बेन किं भुवा |
5247 मांसमात्रैकसारेण करोम्यहमवस्तुना || २४ ||
5248
5249 अवस्तुना तुच्छेन || २४ ||
5250
5251 इति मांसमितो रक्तमितोऽस्थीनीति वासरैः |
5252 ब्रह्मन्कतिपयैरेव याति स्त्री विशरारुताम् || २५ ||

5253
5254 विशरारुतां विशीर्णताम् ॥ २५ ॥
5255
5256 यास्तात् पुरुषैः स्थूलैर्ललिता मनुजैः प्रियाः ।
5257 ता मुने प्रविभक्ताङ्ग्यः स्वपन्ति पितृभूइषु ॥ २६ ॥
5258
5259 स्थूलैरसूक्ष्मदर्शिभिः । ललिता लालिताः । पितृभूमिषु श्मशानेषु ॥ २६ ॥
5260
5261 यस्मिन्घनतरस्नेहं मुखे पत्राङ्कुराः स्त्रियः ।
5262 कान्तेन रचिता ब्रह्मन्पीयते तेन जङ्गले ॥ २७ ॥
5263
5264 कर्पूरगोरोचनचन्दनादिकृतास्तिलकरचनाविशेषाः पत्राङ्कुराः । पीयते
5265 शुष्यते । पै शोषणे । अकर्मत्वाद्भावे लः ॥ २७ ॥
5266
5267 केशाः श्मशानवृक्षेषु यान्ति चामरलेखिकाम् ।
5268 अस्थीन्युडुवदाभान्ति दिनैरवनिमण्डले ॥ २८ ॥
5269
5270 स्त्रियः केशाः लेख उल्लेख उत्प्रेक्षा सैव लेखिका ताम् । भस्मधूसरत्वा##-
5271
5272 पिबन्ति पांसवो रक्तं क्रव्यादाश्चाप्यनेकशः ।
5273 चर्माणि च शिवा भुङ्क्ते खं यान्ति प्राणवायवः ॥ २९ ॥
5274
5275 पिबन्ति शोषयन्ति । पांसवो धूलयः । क्रव्यं मांसमदन्तीति क्रव्यादा
5276 अनेकशः सन्तीति शेषः । शिवा सृगाली ॥ २९ ॥
5277
5278 इत्येषा ललनाङ्गानामचिरेणैव भाविनी ।
5279 स्थिर्मया वः कथिता किं भ्रान्तिमनुधावथ ॥ ३० ॥
5280
5281 स्थितिः परिणतिः ॥ ३० ॥
5282
5283 भूतपञ्चकसंघट्टसंस्थानं ललनाभिधम् ।
5284 रसादभिपतत्वेतकथं नाम धियान्वितः ॥ ३१ ॥
5285
5286 संघट्टनं संघट्टस्तकृतं संस्थानं संनिवेशम् ।
5287 रसाद्रागाद्धियान्वितो बुद्धिमान्कथमभिपततु । अर्हे कृत्यतृचश्च इति
5288 चकारेण लोडपि समुच्चीयत इति केचित् ॥ ३१ ॥
5289
5290 शाख्याप्रतानगहना कट्वम्लफलमालिनी ।
5291 सुतालोत्तालतामेति चिन्ता कान्तानुसारिणी ॥ ३२ ॥
5292
5293 पारलौकिकं दुःखं कटुफलमैहिकशोकरागादिकं त्वीषत्सुखलवमिश्र##-
5294 वानानामम्लता । उत्तालतामूर्ध्वविस्तीर्णताम् ॥ ३२ ॥
5295
5296 कान्दिग्भूततया चेतो घनगर्धान्धमाकुलम् ।
5297 परं मोहमुपादत्ते यूथभ्रष्टमृगो यथा ॥ ३३ ॥
5298
5299 आकुलमुक्तचिन्तयेति गम्यते । अतएव घनेन निबिडेन गर्धेन
5300 धनाभिलाषेणान्धम् । कां दिशं गमिष्यामि क्व धनं
5301 लप्स्यामीत्येवंभूततया चेतोमोहमुपादत्ते ॥ ३३ ॥
5302
5303 शोच्यतां परमां याति तरुणस्तरुणीपरः ।
5304 निबद्धः करिणीलोलो विन्ध्यखाते यथा गजः ॥ ३४ ॥

खाते गर्ते ॥ ३४ ॥

यस्य स्त्री तस्य भोगेच्छा निःस्त्रीकस्य क्व भोगभूः ।
स्त्रियं त्यक्त्वा जतत्यक्तं जतत्यकत्वा सुखी भवेत् ॥ ३५ ॥

भवनं भूः संभवः ॥ ३५ ॥

आपातमात्ररमणेषु सुदुस्तरेषु
भोगेषु नाहमलिपक्षतिचञ्चलेषु ।
ब्रह्मन्रमे मरणरोगजरादिभीत्या
शाम्याम्यहं परमुपैमि पदं प्रयत्नात् ॥ ३६ ॥

पक्षतिः पक्षमूलम् । मरणजन्मजरादिभीत्या भोगेष्वहं न रमे इति
संबन्धः । शाम्याम्युपरतोऽस्मि । उपैमीति वर्तमानसामीप्ये वर्तमानवत् ॥ ३६
। ।

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे
स्त्रीजुगुप्सा नामैकविंशतितमः सर्गः ॥ २१ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे स्त्रीजुगुप्सा
नामैकविंशतितमः सर्गः ॥ २१ ॥

द्वाविंशः सर्गः २२

श्रीराम उवाच ।

अपर्याप्तं हि बालत्वं बलात्पिबति यौवनम् ।
यौवनं च जरा पश्चात्पश्य कर्कशतां मिथः ॥ १ ॥

शोकमोहवियोगार्तिविषादगदसंकुलम् ।
चिन्तापरिभवस्थानं वृद्धत्वमिह निन्द्यते ॥

ननु कामादिदोषप्राबल्यान्मास्तु यौवने सुखम् वृद्धावस्थायां तु
तदुपशान्तौ विनीतैः पुत्रपौत्रादिभिर्गृहे सेव्यमानस्य बहुतरं सुखं
भविष्यतीत्याशङ्क्य तत्र दुःखस्थानामानन्त्यं विस्तरेण विवक्षुः
प्रथमं स्वकुलग्रासिसर्पाणां दया परकुले कुतः इति न्यायेन कर्क##-
१ ॥

हिमाशनिरिवाम्भोजं वात्येव शरदम्बुकम् [दम्बुजं] ।
देहं जरा नाशयति नदी तीरतरुं यथा ॥ २ ॥

पामराणां परमप्रेमास्पदसुखायतनस्य देहस्यैव शिथिलीकरणे क्व तत्र
सुखप्रत्याशेत्याह - हिमाशनिरिवेत्यादिना । हिममशनिर्वज्रमिवेति
हिमाशनिः । [दम्बुजं] अम्बुकमम्बुकणं तृणाग्रस्थमिति यावत् ॥
२ ॥

जर्जरीकृतसर्वाङ्गी जरा जरठरूपिणी ।
विरूपतां नयत्याशु देहं विषलवो यथा ॥ ३ ॥

जरठरूपिणीत्यौत्प्रेक्षिकम् । यदि स्वयं तथा न स्यात्कथमन्यांस्तथा
कुर्यादिति । विषलवो भुक्त इति शेषः ॥ ३ ॥

5357
5358 [दीर्घसर्वाङ्गं] शिथिलादीर्णसर्वाङ्गं जराजीर्णकलेवरम् ।
5359 समं पश्यन्ति कामिन्यः पुरुषं करभं यथा ॥ ४ ॥
5360
5361 समशब्दोऽत्र सर्वपर्यायः । कामिन्यो जराजीर्णकलेवरं सर्वं पुरुषं
5362 करभं उष्ट्रं यथा तथा पश्यन्ति । तदेवोपपादयति - शिथिलेति ।
5363 शिथिलान्यादीर्णानि सर्वाङ्गानि यस्य तम् ॥ ४ ॥
5364
5365 अनायासकदर्थिन्या गृहीते जरसा जने ।
5366 पलाय्य गच्छति प्रज्ञा सपत्न्येवाहताङ्गना ॥ ५ ॥
5367
5368 अनायासेन विनैवायासम् । कदर्थयितुं दैन्यं प्रापयितुं शीलं यस्याः ।
5369 आहता परिभूता ॥ ५ ॥
5370
5371 दासाः पुत्राः स्त्रियश्चैव बान्धवाः सुहृदस्तथा ।
5372 हसन्त्युन्मत्तकमिव नरं वार्धककम्पितम् ॥ ६ ॥
5373
5374 उन्मत्तकमिति कुत्सायां कन् ॥ ६ ॥
5375
5376 दुष्प्रेक्ष्यं जरठं दीनं हीनं गुणपराक्रमैः ।
5377 गृधो वृक्षमिवादीर्घं गर्धो ह्यभ्येति वृद्धकम् ॥ ७ ॥
5378
5379 आदीर्घमतिदीर्घम् । गर्धोऽभिलाषातिशयः । वृक्षपक्षे सफलशाखा##-
5380
5381 दैन्यदोषमयी दीर्घा हृदि दाहप्रदायिनी ।
5382 सर्वापदामेकसखी वार्धके वर्धते स्पृहा ॥ ८ ॥
5383
5384 दैन्यदोषप्रचुरा ॥ ८ ॥
5385
5386 कर्तव्यं किं मया कष्टं परत्रेत्यतिदारुणम् ।
5387 अप्रतीकारयोग्यं हि वर्धते वार्धके भयम् ॥ ९ ॥
5388
5389 कष्टमिति दौर्मनस्यद्योतको निपातः ॥ ९ ॥
5390
5391 कोऽहं वराकः किमिव करोमि कथमेव च ।
5392 तिष्ठामि कौनमेवेति दीनतोदेति वार्धके ॥ १० ॥
5393
5394 कोऽहमित्यादिर्दीनताया एवोल्लेखः । किंकथंशब्दौ साध्यसाधनचिन्ता##-
5395
5396 कथं कदा मे किमिव स्वादु स्याद्भोजनं [जनादिति] जनात् ।
5397 इत्यजस्रं जरा चैषा चेतो दहति वार्धके ॥ ११ ॥
5398
5399 वार्धके जनान्प्राप्य । एषा उक्तलक्षणा अपरापि जरा चेतो दहतीति संबन्धः । इह
5400 पूर्वश्लोके च इवशब्दो विषयविसंवादद्योतनार्थः ॥ ११ ॥
5401
5402 गर्धोऽभ्युदेति सोल्लासमुपभोक्तुं न शक्यते ।
5403 हृदयं दह्यते नूनं शक्तिदौस्थ्येन वार्धके ॥ १२ ॥
5404
5405 भोक्तुं शक्तौ जरणाशक्तिस्तच्छक्तौ भोक्तुमशक्तिरित्यादिशक्तिदौस्थ्यम् ॥ १२
5406 । ।
5407
5408 जराजीर्णबकी यावत्कायक्लेशापकारिणी ।

5409 रौति रोगोरगाकीर्णा कायद्रुमशिरःस्थिता ॥ १३ ॥
5410
5411 कायस्य क्लेशैः पीडनैरपकारिणी। बक्या अपि स्वाश्रयद्रुमपीडकत्वं
5412 [पिडिकात्वं] प्रसिद्धम्। रोगलक्षणेनोरगेणाकीर्णा ग्रस्ता यावद्रौति
5413 रोदिति तावन्मरणकौशिकः कुतोऽप्यागत एव दृश्यत इति संबन्धः ॥ १३ ॥
5414
5415 तावदागत एवाशु कुतोऽपि परिदृश्यते।
5416 घनान्ध्यतिमिराकाङ्क्षी मुने मरणकौशिकः ॥ १४ ॥
5417
5418 घनमान्ध्यं मूर्च्छा तदेव तिमिरमन्धकारः ॥ १४ ॥
5419
5420 सायंसंध्यां प्रजातां वै तमः समनुधावति।
5421 जरां वपुषि दृष्ट्वैव मृतिः समनुधावति ॥ १५ ॥
5422
5423 पूर्वार्थार्थो दृष्टान्तः। प्रजातां संभूताम् ॥ १५ ॥
5424
5425 जराकुसुमितं देहद्रुमं दृष्ट्वैव दूरतः।
5426 अध्यापतति वेगेन मुने मरणमर्कटः ॥ १६ ॥
5427
5428 अधि उपर्यापतति तद्विनाशायेति भावः ॥ १६ ॥
5429
5430 शून्यं नगरमाभाति भाति च्छिन्नलतो द्रुमः।
5431 भात्यनावृष्टिमान्देशो न जराजर्जरं वपुः ॥ १७ ॥
5432
5433 आभाति ईषच्छोभतेऽपि ॥ १७ ॥
5434
5435 क्षणान्निगरणायैव कासक्वणितकारिणी।
5436 गृध्रीवामिषमादत्ते तरसैव नरं जरा ॥ १८ ॥
5437
5438 कास एव क्वणितं ध्वनिस्तत्करणशीला। गृध्री आमिषमिव नरं तरसा वेगेन
5439 निगरणायैवादत्त इत्यन्वयः ॥ १८ ॥
5440
5441 दृष्ट्वैव सोत्सुकेवाशु प्रगृह्य शिरसि क्षणम्।
5442 प्रलुनाति जरा देहं कुमारी कैरवं यथा ॥ १९ ॥
5443
5444 प्रलुनाति विनाशयति। कुमारी बालिका। कैरवं कुमुदम् ॥ १९ ॥
5445
5446 सीत्कारकारिणी पांसुपरुषा परिजर्जरम्।
5447 शरीरं शातयत्येषा वात्येव तरुपल्लवम् ॥ २० ॥
5448
5449 वात्यात्र शिशिरर्तुवायुसमूहः। सा हि सीत्कारादि कारयति शरीरं तरुपल्लवं च
5450 पांसुध्वस्तं कृत्वा विदारयत्येवं जरापि ॥ २० ॥
5451
5452 जरसोपहतो देहो धत्ते जर्जरतां गतः।
5453 तुषारनिकराकीर्णपरिम्लानाम्बुजश्रियम् ॥ २१ ॥
5454
5455 परिम्लानाम्बुजस्य श्रियं साम्यम् ॥ २१ ॥
5456
5457 जरा ज्योत्स्नोदितैवेयं शिरःशिखरिपृष्ठतः।
5458 विकासयति संरब्धं वातकासकुमुद्वती ॥ २२ ॥
5459
5460 जरैव ज्योत्स्ना कौमुदी। शिर एव शिखरिपृष्ठं पर्वतोर्ध्वदेशः।

5461 वातकासौ रोगौ तावेव कुमुद्वतीं कुमुदलतां संरब्धं सोद्योगं
5462 विकासयति ॥ २२ ॥
5463
5464 परिपक्कं समालोक्य जराक्षारविधूसरम् ।
5465 [कूश्माण्डेत्युभयत्र] शिरःकूष्माण्डकं भुङ्क्ते पुंसां
5466 कालः किलेश्वरः ॥ २३ ॥
5467
5468 जरैव क्षारो लवणादिचूर्णं तेन विधूसरमुपस्कृतमिति यावत् । ईश्वरः
5469 स्वामी शिरःकुष्माण्डस्य [कूश्माण्डेत्युभयत्र] । तेनैवोत्पाद्य
5470 वर्धितत्वात् ॥ २३ ॥
5471
5472 जराजह्नुसुतोद्युक्ता मूलान्यस्य निकृन्तति ।
5473 शरीरतीरवृक्षस्य चलत्यायुषि सत्वरम् ॥ २४ ॥
5474
5475 जह्नुसुत गङ्गा । अविरामादुद्युक्तेव । आयुषि आयुःप्रवाहे सत्वरं चलति सति ॥ २४
5476 । ।
5477
5478 जरामार्जारिका भुङ्क्ते यौवनाखुं तथोद्धता ।
5479 परमुल्लासमायाति शरीरामिषगर्धिनी ॥ २५ ॥
5480
5481 यौवनमेवाखनति विषयबिलमित्याखुस्तं भुङ्क्ते तथा शरीराभिषस्य
5482 गर्धिनी भक्षणेच्छुः ॥ २५ ॥
5483
5484 काचिदस्ति जगत्यस्मिन्नाम"गलकरी तथा ।
5485 यथा जराक्रोशकरी देहजङ्गलजम्बुकी ॥ २६ ॥
5486
5487 जरैव देहजङ्गले तम्बुकी शिवा । आक्रोशो रोदनमारावश्च ॥ २६ ॥
5488
5489 कासश्वासससीत्कारा दुःखधूमतमोमयी ।
5490 जराज्वाला ज्वलत्येषा यस्यासौ दग्ध एव हि ॥ २७ ॥
5491
5492 आर्द्रकाष्ठे दह्यमाने ज्वालायामपि सीत्कारः प्रसिद्धह् ॥ २७ ॥
5493
5494 जरसा वक्रतामेति शुक्लावयवपल्लवा ।
5495 तात तन्वी तनुर्नृणां लता पुष्पानता यथा ॥ २८ ॥
5496
5497 तन्वी अल्पा । तनुः शरीरम् ॥ २८ ॥
5498
5499 जराकर्पूरधवलं देहकर्पूरपादपम् ।
5500 मुने मरणमातङ्गो नूनमुद्धरति क्षणात् ॥ २९ ॥
5501
5502 कर्पूरपादपं कदलीतरुम् । उद्धरति उन्मूलयति ॥ २९ ॥
5503
5504 मरणस्य मुने राज्ञो जराधवलचामरा ।
5505 आगच्छतोऽग्रे निर्याति स्वाधिव्याधिपताकिनी ॥ ३० ॥
5506
5507 आगच्छत आगमिष्यतः । वर्तमानसामीप्ये वर्तमानवत् । जरा धवलचामरं
5508 यस्याः । स्वा स्वीया आधिव्याधीनां पताकिनी सेना ॥ ३० ॥
5509
5510 न जिताः शत्रुभिः संख्ये प्रविष्टा येऽद्रिकोटरे ।
5511 ते जराजीर्णराक्षस्या पश्याशु विजिता मुने ॥ ३१ ॥
5512

5513 अद्रिकोटरे दुष्प्रवेशे पर्वतविवरेऽपि ये धैर्येण प्रविष्टाः ‖ ३१ ‖
5514
5515 जरातुषारवलिते शरीरसदनान्तरे ।
5516 शक्नुवन्त्यक्षशिशवः स्पन्दितुं न मनागपि ‖ ३२ ‖
5517
5518 तुषारो हिमं तेन बलिते संकोचिते । अक्षाणीन्द्रियाण्येव शिशवो बालाः ‖ ३२ ‖
5519
5520 दण्डतृतीयपादेन प्रस्खलन्ती मुहुर्मुहुः ।
5521 कासाधोवायुमुरजा जरा योषित्प्रनृत्यति ‖ ३३ ‖
5522
5523 दण्डोऽवलम्बनयष्टिस्तद्रूपेण तृतीयपादेनोपलक्षिता । कासाधोवायू मुरजो
5524 वाद्यविशेषो यस्याः ‖ ३३ ‖
5525
5526 संसारसंसृतेरस्या गन्धकुट्यां शिरोगता ।
5527 देहयष्ट्यां जरानाम्नी चामरश्रीर्विराजते ‖ ३४ ‖
5528
5529 अस्याः प्रसिद्धायाः । संसाराख्यस्य [संसाराख्यराज्ञः] राज्ञः
5530 संसृतेर्व्यवहारस्य संबन्धिनी । गन्धयति रागादिभिर्वासयति चित्तं सभां
5531 चेति गन्धो विषयभोगः कस्तूर्यादिगन्धद्रव्यं च तस्य कुट्यां
5532 आश्रयभूतायां देहयष्ट्यां शिरोगता जरानाम्नी चामरश्रीर्विराजते ।
5533 सौन्दर्यसौरभ्यमन्दवायुप्रसरादिभिरित्यर्थः ‖ ३४ ‖
5534
5535 जराचन्द्रोदयसिते शरीरनगरे स्थिते ।
5536 क्षणाद्विकासमायाति मुने मरणकैरवम् ‖ ३५ ‖
5537
5538 स्थिते जीविताशासरसीति शेषः ‖ ३५ ‖
5539
5540 जरासुधालेपसिते शरीरान्तःपुरान्तरे ।
5541 अशक्तिरार्तिरापच्च तिष्ठन्ति सुखमङ्गनाः ‖ ३६ ‖
5542
5543 सुधा चूर्णम् ‖ ३६ ‖
5544
5545 अभावोऽग्रेसरी यत्र जरा जयति जन्तुषु ।
5546 कस्तत्रेह समाश्वासो मम मन्दमतेर्मुने ‖ ३७ ‖
5547
5548 यत्र येषु जन्तुषु चतुर्विधशरीरेषु प्रथमं जरा जयत्यभिभवति । अग्रे च
5549 अभावो मृत्युः सरणं सरः सरोऽस्यास्तीति सरी । अवश्यमागन्तेत्यर्थः ।
5550 अभावाग्रेसरीति पाठश्चेत्स्पष्टः । तत्र तेषु शरीरेषु मध्ये इहास्मिन् शरीरे
5551 मम कः समाश्वासो विस्रम्भः । ननु वसिष्ठादीनामपि तुल्यमेतदित्या##-
5552
5553 किं तेन दुर्जीवितदुर्ग्रहेण जरागतेनापि हि जीव्यते यत् ।
5554 जराजगत्यामजिता जनानां सर्वैषणास्तात् तिरस्करोति ‖ ३८ ‖
5555
5556 दुर्जीविते दुःखजीवने दुर्ग्रहो दुराग्रहस्तेन किम् । व्यर्थमित्यर्थः ।
5557 सर्वैषणाः सर्वानभिलाषान् ‖ ३८ ‖
5558
5559 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे
5560 जराजुगुप्सा नाम द्वाविंशतितमः सर्गः ‖ २२ ‖
5561
5562 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे जराजुगुप्सा
5563 नाम द्वाविंशतितमः सर्गः ‖ २२ ‖
5564

5565 त्रयोविंशः सर्गः २३
5566
5567 श्रीराम उवाच।
5568
5569 विकल्पकल्पनानल्पजल्पितैरल्पबुद्धिभिः।
5570 भेदैरुद्धुरतां नीतः संसारकुहरे भ्रमः॥ १॥
5571
5572 रमयन्स्वविलासौघैः सर्वप्राणिक्रियाप्रियाम् [क्रियापराम्]।
5573 गुणदोषबलोत्कर्षैः काल एकोऽत्र वर्ण्यते॥
5574
5575 इत्थं भोग्यायाः श्रियो भोगतृष्णाया भोगावसरभूतबाल्याद्यव##-
5576 स्थस्येहामुत्रार्थफलभोगविरागो दर्शितः। संप्रति कामादिस्वभाव##-
5577 विकल्पेति। ममेदं भोग्यम् अहमस्य भोक्ता इमानि च तत्साधनानि
5578 अनेनेदमित्थं संपाद्य चिरं भोक्ष्यामि इदमद्य मया लब्धमिमं प्राप्स्ये
5579 मनोरथम् इत्याद्यनन्तमनोविकल्पकल्पनैरनल्पानि जल्पितानि व्यवहारवचनानि
5580 येषां तैः। स्ल्पे देहे आत्मबुद्धिरल्पेषु सुखलवेषु परमपुरुषार्थबुद्धिश्च
5581 येषां तैर्मूढजनैः। शत्रुमित्रोदासीनादि##-
5582 संसरत्यस्मिन्निति संसारो ब्रह्माण्डं तस्य कुहरे छिद्रे भ्रमोऽन्यथा##-
5583
5584 सतां कथमिवास्थेह जायते जालपञ्जरे।
5585 बाला एवात्तुमिच्छन्ति फलं मुकुरबिम्बितम्॥ २॥
5586
5587 जालमिव दूरादप्याकृष्य बन्धका विषयाः पञ्जरमिव परिच्छिद्य बन्धको
5588 देहस्तयोः समाहारे। भ्रान्तिसिद्धत्वादेवावस्तुभूते इह संसारे सतां
5589 विवेकिनामास्था कथमिव जायते। तत्प्रकारे दृष्टान्तोऽप्यप्रसिद्ध इति
5590 सूचनायेवकारः। तदेव दृष्टान्तेन द्रढयति - बाला एवेति। मुकुरे
5591 दर्पणे॥ २॥
5592
5593 इहापि विद्यते येषां पेलवा सुखभावना।
5594 आखुस्तन्तुमिवाशेषं कालस्तामपि कृन्तति॥ ३॥
5595
5596 इह ईदृशेऽपि संसारे येषां पेलवा क्षुद्रा सुखभावना सुखाशा
5597 तामाखुर्बिलतृणाग्रात्कूपे लम्बमानं तन्मात्रावलम्बजिजीविषुकीटा##-
5598
5599 न तदस्तीह यदयं कालः सकलघस्मरः।
5600 ग्रसते तज्जगज्जातं प्रोत्थाब्धिमिव वाडवः॥ ४॥
5601
5602 इहास्यां व्यवहारभूमौ जगति जातमुत्पन्नं तत्तादृशं वस्तु नास्ति यत्कालो
5603 न ग्रसत इति नञ आवृत्त्या संबन्धः। घस्मरो भक्षकः।
5604 चन्द्रोदादिनिमित्तैः प्रोत्थमुपचितमब्धिं वाडवो वडवानलः॥ ४॥
5605
5606 समस्तसामान्यतया भीमः कालो महेश्वरः।
5607 दृश्यसत्तामिमां सर्वां कवलीकर्तुमुद्यतः॥ ५॥
5608
5609 समस्तसामान्यतया सर्वपदार्थसाधारण्येन। काल एव महेश्वरः
5610 संहाररुद्रः॥ ५॥
5611
5612 महतामपि नो देवः प्रतिपालयति क्षणम्।
5613 कालः कवलितानन्तविश्वो विश्वात्मतां गतः॥ ६॥
5614
5615 महतामपीति कर्मण एव शेषत्वविवक्षया षष्ठी। बलबुद्धिवैभवादिना
5616 महान्त्यपि भूतानि क्षणमपि न प्रतिपालयति न प्रतीक्षते। सद्य एव

5617 निहन्तीत्यर्थः ॥ ६ ॥
5618
5619 युगवत्सरकल्पाख्यैः किंचित्प्रकटतां गतः।
5620 रूपैरलक्ष्यरूपात्मा सर्वमाक्रम्य तिष्ठति ॥ ७ ॥
5621
5622 आक्रम्य वशीकृत्य ॥ ७ ॥
5623
5624 ये रम्या ये शुभारम्भाः सुमेरुगुरवोऽपि ये।
5625 कालेन विनिगीर्णास्ते गरुडेनेव पन्नगाः ॥ ८ ॥
5626
5627 निर्दयः कठिनः क्रूरः कर्कशः कृपणोऽधमः।
5628 न तदस्ति यदद्यापि न कालो निगिरत्ययम् ॥ ९ ॥
5629
5630 पाषाणादिवत्कठिनः व्याघ्रादिवत्क्रूरः क्रकचादिवत्कर्कश इति भेदः।
5631 निगिरति ग्रसति ॥ ९ ॥
5632
5633 कालः कवलनैकान्तमतिरत्ति गिरन्नपि।
5634 अनन्तैरपि लोकोघैर्नायं तृप्तो महाशनः ॥ १० ॥
5635
5636 कवलनविषय एवैकान्तमतिर्नियतचित्तः। एकं गिरन्नपरमति। गिरीनपीति पाठे
5637 स्पष्टम् ॥ १० ॥
5638
5639 हरत्ययं नाशयति करोत्यत्ति निहन्ति च।
5640 कालः संसारनृत्तं हि नानारूपं यथा नटः ॥ ११ ॥
5641
5642 हरणादि यत्किंचिद्धनादौ प्रसिद्धं तत्सर्वं तत्तत्कर्तृरूपेण स्थितः काल
5643 एव करोत्तिति भावः ॥ ११ ॥
5644
5645 भिनत्ति प्रविभागस्थ भूतबीजान्यनारतम्।
5646 जगत्यसत्तया बन्धाद्दाडिमानि यथा शुकः ॥ १२ ॥
5647
5648 प्रविभागो व्याकृतावस्था तत्स्थान्यण्डजादिचतुर्विधभूतबीजानि असत्तया
5649 बन्धात् नाशेन असत्त्वापादनात् भिनत्ति विदार्य भक्षयत्तित्युत्प्रेक्षा।
5650 दृष्टान्तः स्पष्टः ॥ १२ ॥
5651
5652 शुभाशुभविषाणाग्रविलूनजनपल्लवः।
5653 स्फूर्जति स्फीतजनताजीवराजीवनीगजः ॥ १३ ॥
5654
5655 स्फीता अभिमानाद्युपचिता या जनता जनसमूहास्तेषां जीवराजी जीवसमूहः
5656 सैव वनी महद्वनं तत्रत्यो गजः कालः। राजीविनीति पाठे तु कमलिनी तस्या
5657 विनाशने गज इत्यर्थः। तदनुरूपं विशिनष्टि - शुभाशुभेति। स्फूर्जति
5658 गर्जति ॥ १३ ॥
5659
5660 विरिञ्चिमूलब्रह्माण्डबृहद्देवफलद्रुमम्।
5661 ब्रह्मकाननमाभोगि परमावृत्य तिष्ठति ॥ १४ ॥
5662
5663 विरिञ्चिरपञ्चीकृतभूतात्मा मूलं येषां तथाविधा ब्रह्माण्डा एव
5664 [मूलस्थबृहच्छब्दपर्याया महान्त] महान्तो
5665 देवतारूपफलविशिष्टा द्रुमा यस्मिंस्तथाभूतम्। वेषः कृत्रिम आभोगो
5666 मायिकं जगद्रूपं तदस्यास्तीत्याभोगि। द्वे वाव ब्रह्मणो रूपे मूर्त
5667 चैवामूर्तं च इति श्रुतेः सप्रपञ्चमित्यर्थः। ब्रह्मैव काननं
5668 दुस्तरत्वादरण्यं परमत्यर्थमावृत्य सर्वतो व्याप्य कालस्तिष्ठति।

5669 कालोदर एव सर्ववस्तूनामुत्पत्तिस्थितिविनाशदर्शनादिति भावः ।
5670 विरिञ्चिमजब्रह्माण्डं महद्दिवफलद्रुतम् इति पाठस्यैव सार्वत्रिकत्वे तु
5671 विरिञ्चिमुक्तब्रह्माण्डकारणं मायाशबलमिति यावत् । अजाश्चतुर्मुखाः
5672 प्रतिब्रह्माण्डं तस्यैव लीलाविग्रहास्तत्सहितं ब्रह्माण्डम् । जातावेकवचनम् ।
5673 तदेव महत् । दिवा देवाः । गुणाभावश्छान्दसः ।
5674 तदुपलक्षितचतुर्विधभूतान्येव तत्तत्कर्मफलयुक्ता द्रुमा
5675 यस्मिंस्तथाविधम् । आभोगि कृत्रिमवेषवत् ईषद्भोगयुक्तं सर्वतः
5676 सर्पवाप्तप्रायं वा ब्रह्मकाननमावृत्य तिष्ठतीत्यर्थः ॥ १४ ॥
5677
5678 यामिनी भ्रमरापूर्णा रचयन्दिनमञ्जरीः ।
5679 वर्षकल्पकलावल्लीर्न कदाचन खिद्यते ॥ १५ ॥
5680
5681 यामिन्यो रात्रयस्तद्रूपैर्भ्रमरैरापूर्णाः । दिनान्यहान्येव म~जर्यो यासु
5682 ताः । वर्षः संवत्सरः कल्पो ब्रह्माहः कलास्त्रिंशत्काष्ठा##-
5683 खेदाद्विरमतीति यावत् ॥ १५ ॥
5684
5685 भिद्यते [न च भग्नोऽपि] नावभग्नोऽपि दग्धोऽपि हि न दह्यते ।
5686 दृश्यते नापि दृश्योऽपि धुर्तचूडामणिर्मुने ॥ १६ ॥
5687
5688 तत्तत्कार्यात्मना अवभग्नो दग्धो दृश्योऽपि वा स्वरूपेण न भङ्गादि
5689 प्राप्नोतीत्यर्थः ॥ १६ ॥
5690
5691 एकेनैव निमेषेण किंचिदुत्थापयत्यलम् ।
5692 किंचिद्विनाशयत्युच्चैर्मनोराज्यवदाततः ॥ १७ ॥
5693
5694 दुर्विलासविलासिन्या चेष्टया कष्टपुष्टया ।
5695 द्रविअय्करूपकृद्रूपं जनमावर्तयन्स्थितः ॥ १८ ॥
5696
5697  तत्तद्युगानुरूपचेष्टैव स्वकीयदुर्विलासेषु विलासिनी प्राणिनां कष्टेनैव
5698 पुष्टा कालस्य भार्या तया द्रव्यैर्भौतिकदेहेन्द्रियादिभिस्तादात्म्याध्या##-
5699 स्वर्गनरकादिस्वावर्तयन्स्थितः ॥ १८ ॥
5700
5701 तृणं पांसुं महेन्द्रं च सुमेरुं पर्णमर्णवम् ।
5702 आत्मंभरितया सर्वमात्मसात्कर्तुमुद्यतः ॥ १९ ॥
5703
5704 आत्मंभरितया स्वकुक्षिपूरणमात्रस्वभावेन । आत्मसात्स्वाधीनं कर्तुम् ।
5705 ग्रसितुमिति यावत् ॥ १९ ॥
5706
5707 क्रौर्यमत्रिव पर्याप्तं लुब्धतात्रैव संस्थिता ।
5708 सर्वदौर्भाग्यमत्रैव चापलं [चापि] वापि दुःसहम् ॥ २० ॥
5709
5710 पर्याप्तं समग्रम् । अत्रास्मिन्काले ॥ २० ॥
5711
5712 प्रेरय&ल्लीलयार्केन्दू क्रीडतीव नभस्तले ।
5713 निक्षिप्तलीलायुगलो निजे बाल इवाङ्गणे ॥ २१ ॥
5714
5715 निक्षिप्तं पुनःपुनरास्फालितं लीलार्थं कन्दुकयुगलं येन ॥ २१ ॥
5716
5717 सर्वभूतास्थिमालाभिरापादवलिताकृतिः ।
5718 विलसत्येव कल्पान्ते कालः कलितकल्पनः ॥ २२ ॥
5719
5720 कलितकल्पनो नाशितप्राणिविभागः ॥ २२ ॥

5721
5722 अस्योड्डामरवृत्तस्य कल्पान्तेऽङ्गविनिर्गतैः ।
5723 प्रस्फुरत्यम्बरे मेरुर्भूर्जत्वगिव वायुभिः ॥ २३ ॥
5724
5725 उड्डामरं निरङ्कुशं वृत्तं चरित्रं यस्य । अङ्गेभ्यो
5726 विनिर्गतैर्वायुभिर्मेरुर्भूर्जत्वगिव सर्वतो विशीर्यमाणः ॥ २३ ॥
5727
5728 रुद्रो भूत्वा भवत्येष महेन्द्रोऽथ पितामहः ।
5729 शक्रो वैश्रवणश्चापि पुनरेव न किंचन ॥ २४ ॥
5730
5731 धत्तेऽजस्रोत्थितोद्ध्वस्तान्सर्गानमितभास्वरान् ।
5732 अन्यान्दधद्दिवानक्तं वीचीरब्धिरिवात्मनि ॥ २५ ॥
5733
5734 अन्यान्सर्गान्दधद्धारयन्नैवार्थादन्यानजस्रमुत्थितानुद्ध्वस्तांश्च
5735 सर्गान्धत्ते । अजस्रोत्थितो नित्योद्युक्त इति कालविशेषणं वा । वीचीस्तरङ्गान् ॥ २५ ॥
5736
5737 महाकल्पाभिधानेभ्यो वृक्षेभ्यः परिशातयन् ।
5738 देवासुरगणान्पक्वान्फलभारानिव स्थितः ॥ २६ ॥
5739
5740 शातयन् पातयन् ॥ २६ ॥
5741
5742 कालोऽयं भूतमशकघुंघुमानां प्रपातिनाम् ।
5743 ब्रह्माण्डोदुम्बरौघानां वृहत्पादपतां गतः ॥ २७ ॥
5744
5745 भूतानि प्राणिन एव मशकास्तैर्घुघुमानां घुंघुमिति ध्वनतां
5746 ब्रह्माण्डोदुम्बरफलौघानाम् ॥ २७ ॥
5747
5748 सत्तामात्रकुमुद्वत्या चिज्ज्योत्स्नापरिफुल्लया ।
5749 वपुर्विनोदयत्येकं क्रियाप्रियतमान्वितः ॥ २८ ॥
5750
5751 चित् सर्वाधिष्ठानचैतन्यमेव ज्योत्स्ना चन्द्रिका तत्संनिधानमात्रेण परितः
5752 फुल्लया व्यक्ततां प्राप्तया जगत्सत्तासामान्यलक्षणया कुमुद्वत्या
5753 कुमुदिन्या विनोदहेतुभूतया तत्तत्प्राणिशुभाशुभक्रियालक्षण##-
5754 [विहारकौतुकैः] व्यवहारकौतुकैः कालक्षेपस्तत्र कालस्य विहर्तुः
5755 कालान्तराप्रसिद्धेः स्ववपुरेव विनोदयतीति भावः ॥ २८ ॥
5756
5757 अनन्तापारपर्यन्तबद्धपीठ निजं वपुः ।
5758 महाशैलवदुत्तुङ्गमवलम्ब्य व्यवस्थितः ॥ २९ ॥
5759
5760 अनन्तेऽपरिच्छिन्ने अनन्तायां भुवि च अतएवापारपर्यन्ते पूर्वोत्तरावधिशुन्ये
5761 ब्रह्मणि प्रदेशे च बद्धपीठं प्रतिष्ठितम् ॥ २९ ॥
5762
5763 क्वचिच्छ्यामतमःश्यामं क्वचित्कान्तियुतं ततम् ।
5764 द्वयेनापि क्वचिद्रिक्तं स्वभावं भावयन् स्थितः ॥ ३० ॥
5765
5766 क्वचिन्निशीथाञ्जनादौ श्यामैस्तमोभिस्तम इव वा श्यामम् । स्वभावं
5767 स्वकार्यम् ॥ ३० ॥
5768
5769 संलीनासंख्यसंसारसारया स्वात्मसत्तया ।
5770 उर्व्येव भारघनया निबद्धपदतां गतः ॥ ३१ ॥
5771
5772 संलीनानामसंख्यप्राणिसंसाराणां सारवत्परिशिष्टया स्वात्मसत्तया

5773 स्वरूपस्थित्या सर्वाधारत्वाद्धारघनया निबद्धपदः प्रतिष्ठितस्तद्भावम्
5774 ॥ ३१ ॥
5775
5776 न खिद्यते नाद्रियते नायाति न च गच्छति ।
5777 नास्तमेति न चोदेति महाकल्पशतैरपि ॥ ३२ ॥
5778
5779 केवलं जगदारम्भलीलया घनहेलया ।
5780 पालयत्यात्मनात्मानमनहंकारमाततम् ॥ ३३ ॥
5781
5782 [घनेति] घनहेलया अनास्थया । पालयति न विनाशयति । अनहंकारं
5783 निरभिमानं यथा स्यात्तथा आततं विस्तीर्णम् ॥ ३३ ॥
5784
5785 यामिनीपङ्ककलितां दिनकोकनदावलीम् ।
5786 [भ्रमरिकां स्वात्म]
5787 मेघभ्रमरिकामात्मसरस्यारोपयन्स्थितः ॥ ३४ ॥
5788
5789 यामिनी रात्रिः सैव मालिन्यात्पङ्कस्तस्मात्कलितामुद्गताम् । दिनान्येव
5790 कोकनदावली रक्तोत्पलसमूहः स्वात्मा कालस्वरूपमेव सरस्तस्मिन् ॥ ३४ ॥
5791
5792 गृहीत्वा कृपणः कृष्णां रजनीं जीर्णमार्जनीम् ।
5793 आलोककनकक्षोदानाहरत्यभितो गिरिम् ॥ ३५ ॥
5794
5795 कृपणो लुब्धोऽत एव नूतनसंमार्जन्यन्तरसंपादनासमर्थः ।
5796 सकृन्मार्जनेन बहुतरकनकलाभेऽप्यसंतुष्टश्चेति भावः । गिरिं
5797 कनकाचलम् । अतएव कनकक्षोदान् गिरेः शीर्णानिति गम्यते ॥ ३५ ॥
5798
5799 संआरयन्क्रियाङ्गुल्या कोणकेष्वर्कदीपिकाम् ।
5800 जगत्सद्मनि कार्पण्यात्क किमस्तीति वीक्षते ॥ ३६ ॥
5801
5802 प्रकारान्तरेण तस्य कार्पण्यमाह - संचारयन्निति । कोणकेषु दिक्कोणेषु ॥
5803 ३६ ॥
5804
5805 प्रेक्ष्याहर्विनिमेषेण सूर्याक्ष्णा पाकवन्त्यलम् ।
5806 लोकपालफलान्यत्ति जगज्जीर्णवनादयम् ॥ ३७ ॥
5807
5808 सूर्याक्ष्णोऽनुरूपोऽहरेव विनिमेषस्तेन ॥ ३७ ॥
5809
5810 जगज्जीर्णकुटीकीर्णानर्पयत्युग्रकोटरे ।
5811 क्रमेण गुणवल्लोकमणीन्मृत्युसमुद्गके ॥ ३८ ॥
5812
5813 जगदेव जीर्णा कुटी तृणगृहं तत्र कीर्णान्प्रमादात्पतितान् । मृत्युरेव
5814 समुद्गकः संपुटकस्तस्मिन् ॥ ३८ ॥
5815
5816 गुणैरापूर्यते यैव लोकरत्नावली भृशम् ।
5817 भूषार्थमिव तामङ्गे कृत्वा भूयो निकृन्तन्ति ॥ ३९ ॥
5818
5819 गुणैस्तन्तुभिर्विद्याविनयादिभिश्च । लोको जनः अङ्गे स्वावयवे कृतत्रेतादौ ।
5820 यद्यपि सर्वं निकृन्तति तथापि गुणवतां विनाश एव प्रसिद्धिमायातीति
5821 श्लोकद्वये तदुक्तिः ॥ ३९ ॥
5822
5823 दिनहंसानुसृतया निशेन्दीवरमालया ।
5824 तारकेसरयाजस्रं चपलो वलयत्यलम् ॥ ४० ॥

5825
5826 ताराणि दीर्घाणि नक्स्ऽत्राण्येव वा केसराणि यस्यामुत्पलमालायाम्।
5827 हंसनिवेशस्यानौचित्यद्योगनाय चपल इति। वलयति वलयवद्धारयति।
5828 पञ्चर्त्वङ्गुलिकवत्सरकरप्रकोष्ठे इति शेषः॥ ४०॥
5829
5830 शैलार्णद्युधराशृङ्गजगदूर्णायुसौनिकः।
5831 प्रत्यहं पिबते प्रेक्ष्य तारारक्तकणानपि॥ ४१॥
5832
5833 अर्णा अर्णवाः। द्यौर्लोकः। शैलादयश्चत्वारः प्रधानत्वाच्छृङ्गाणि
5834 येषां जगल्लक्षणानामूर्णायूनां मेषाणां सूना हिंसास्थानं तत्र
5835 भवः सौनिको हिंसकः कालो नभोङ्गणविकीर्णांस्तारा नक्षत्राण्येव
5836 रक्तकणास्तानपि प्रेक्ष्य प्रत्यहमहन्यहनि पिबते लेढीत्युत्प्रेक्षा।
5837 आत्मनेपदं छान्दसम्॥ ४१॥
5838
5839 तारुण्यनलिनीसोम आयुर्मातङ्गकेसरी।
5840 न तदस्ति न यस्यायं तुच्छातुच्छस्य तस्करः॥ ४२॥
5841
5842 तुच्छस्य न क्षुद्रस्यातुच्छस्य महतश्च वस्तुजातस्य मध्ये यस्यायं तस्करो
5843 न भवति तन्नास्तीति संबन्धः॥ ४२॥
5844
5845 कल्पकेलिविलासेन पिष्टपातितजन्तुना।
5846 अभावो भावभासेन रमते स्वात्मनात्मनि॥ ४३॥
5847
5848 पिष्टाः संचूर्णिता मृत्युमुखे पातिताश्च जन्तवो येन तथाभूतेन। कल्पः
5849 संवर्तस्तद्रूपेण केलिविलासेन। न विद्यन्ते भावा यस्य तथाभूतः सन्
5850 सुषुप्ताविव भावरूपज्ञानावभासकेन स्वात्मना स्वाधिष्ठानब्रह्म##-
5851 इत्यर्थः॥ ४३॥
5852
5853 कर्ता भोक्ताथ संहर्ता स्मर्ता सर्वपदं गतः॥ ४४॥
5854
5855 एवं प्रलये विश्रम्याथ पुनः सर्गकाले विश्वस्य कर्ता भोक्ता संहर्ता
5856 स्मर्तेत्यादिसर्ववस्तुभावं गतः स्वयमेव भवतीति शेषः॥ ४४॥
5857
5858 सकलमप्यकलाकलितान्तरं सुभगदुर्भगरूपधरं वपुः।
5859 प्रकटयन्सहसैव च गोपयन् विलसतीह हि कालबलं नृषु॥ ४५॥
5860
5861 न कलाभिर्बुद्धिकौशलैः कलितं केनापि निश्चितमान्तरं रहस्यं यस्य तत्।
5862 तथा सुभगं पुण्यफलभोगानुरूपं तद्विपरीतं दुर्भगं यद्रूपं तस्य
5863 धर्ऽम् सकलमपि वपुः प्रकटयन् गोपयन्नुपसंहरंश्च विलसति। काल इति
5864 शेषः। हीति प्रसिद्धौ। इह जगति कालस्य बलं नृषु प्रसिद्धमेवेत्यर्थः॥ ४५
5865 ।।
5866
5867 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे
5868 कालापवादो नाम त्रयोविंशतितमः सर्गः॥ २३॥
5869
5870 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे कालापवादो
5871 नाम त्रयोविंशतितमः सर्गः॥ २३॥
5872
5873 चतुर्विंशः सर्गः २४
5874
5875 श्रीराम उवाच।
5876

5877 अस्योड्डामरलीलस्य दूरास्तसकलापदः |
5878 संसारे राजपुत्रस्य कालस्याकलितौजसः || १ ||
5879
5880 स एव वर्ण्यते कालश्चण्डीप्रियतमान्वितः |
5881 मृगयाकौतुकाविष्टराजपुत्रतयाधुना ||
5882
5883 सांप्रतं तमेव कालं मृगयाकौतुकविहारिमहाराजपुत्रभावेन
5884 रूपयितुं प्रतिजानीते - अस्येति | उड्डामरा उद्भटा लीला यस्य | दूरे अस्ता
5885 निरस्ताः सकलापदो यस्य | अकलितौजसः अचिन्त्यपराक्रमस्य | राजते प्रसिद्ध##-
5886 पुत्रस्य कालस्य [मृगया वर्ण्यते] चरित्रं वर्ण्यत इति शेषः || १ ||
5887
5888 अस्यैवाचरतो दीनैर्मुग्धैर्भूतमृगव्रजैः |
5889 आखेटकं जर्जरिते जगज्जङ्गलजालके || २ ||
5890
5891 अस्यैव कल्पकालमहार्णवः क्रीडापुष्करिणीकृत इत्युत्तरत्र संबन्धः |
5892 मुग्धैरज्ञैः | भूतान्येव मृगव्रजास्तैः | वध्यानामपि वधकविनोद##-
5893
5894 एकदेशोल्लसच्चारुवडवानलपङ्कजा |
5895 क्रीडापुष्करणी रम्या कल्पकालमहार्णवः || ३ ||
5896
5897 अर्थाज्जगज्जङ्गलस्यैकदेशे || ३ ||
5898
5899 कटुतिक्ताम्लभूताद्यैः सदधिक्षीरसागरैः |
5900 तैरेव तैः पर्युषितैर्जगद्भिः कल्यवर्तनम् || ४ ||
5901
5902 भूतपदं प्रत्येकं संबध्यते | दधिक्षीरादिसागरसहितैस्तैरेव
5903 प्रत्यहमेकरूपैः पर्युषितैश्चिरस्थितैर्जगद्भिः कल्यवर्तनं प्रातरशनं
5904 तस्येत्यनुषज्यते | कटुतिक्तदध्यादिसहितपर्युषितप्रातराशो द्रविडेषु प्रसिद्धः
5905 || ४ ||
5906
5907 चण्डी चतुरसंचारा सर्वमातृगणान्विता |
5908 संसारवनविन्यस्ता व्याघ्री भूतौघघातिनी || ५ ||
5909
5910 तस्यानुरूपां प्रियामाह - चण्डीति | व्याघ्रीव भूतौघघातिनी
5911 संसारवने विन्यस्ता विहर्तुं विनियुक्ता चण्डी कालरात्रिस्तस्य प्रियेति शेषः || ५ ||
5912
5913 पृथ्वी करतले पृथ्वी पानपात्री रसान्विता |
5914 कमलोत्पलकल्हारलोलजालकमालिता || ६ ||
5915
5916 तस्य् पानपात्रीमाह - पृथ्वीति | पृथ्वी भूरेव तस्य करतले पृथ्वी महती
5917 पानपात्री | आसवसौगन्ध्यशोभाद्यर्थं पानपात्र्या अपि कमलोत्पलादि##-
5918
5919 विरावी विकटास्फोटो नृसिंहो भुजपञ्जरे |
5920 सटाविकटपीनांसः कृतः क्रीडाशकुन्तकः || ७ ||
5921
5922 तस्य भुजावष्टब्धे पञ्जरे नृसिंहोऽवतारो दानवादिवधक्रीडार्थं
5923 वाजाख्यः शकुन्तकः पक्षी कृतः | स कीदृक् | विरावी गर्जनशीलः | विकटो
5924 दुःसह आस्फोटो भुजास्फालनध्वनिर्यस्य | सटाभिः केसरैर्विकटो दुर्दर्शः
5925 पीनोंऽसः स्कन्धो यस्य || ७ ||
5926
5927 अलाबुवीणामधुरः शरद्व्योमलसच्छविः |
5928 देवः किल महाकालो लीलाकोकिलबालकः || ८ ||

5929
5930 महाकालः पाषाणाख्यायिकायां वक्ष्यमाणः संहारभैरवो लीलार्थं
5931 कोकिलबालकः कृतः। सोऽपि कीदृक्। तस्य ब्रह्माण्डमालाधा##-
5932 तत्स्वरूपध्वनी अन्येषां भीषणौ तथापि ततोऽप्युग्रशीलानां दृष्ट्या
5933 मधुर एवेति तथोक्तिः। शरद्व्योमेव श्यामलस्वच्छकान्तिः॥ ८॥
5934
5935 अजस्र स्फूर्जिताकारो वान्तदुःखशरावलिः।
5936 अभावनामकोदण्डः परिस्फुरति सर्वतः॥ ९॥
5937
5938 स्फूर्जितं टंकारध्वनिः। वान्ता निःसारिता दुःखशरावलिर्येन तस्य
5939 अभावः संहारस्तन्नामा कोदण्डो धनुः सर्वतः परिस्फूरति॥ ९॥
5940
5941 अनुत्तमस्त्वधिकविलासपण्डितो भ्रमच्चलन्परिविलसन्विदारयन्।
5942 जरज्जगज्जनितविलोलमर्कटः परिस्फूरद्वपुरिह काल ईहते॥ १०॥
5943
5944 भ्रमत्स्वपि लक्ष्येषु स्वयं चलन्नप्यमोघबाणत्वाल्लक्ष्यं विदारयन्नत एव
5945 सर्वेभ्यो लक्ष्यवेधिभ्यः परि उपरि विलसन्नत एव जरति जगति जनिताः संपादिता
5946 विलोला व्याकुला मर्कटा मर्कटवच्चपलवृत्तयो विषयलम्पट-जना येन
5947 स तथाविधः कालो राजकुमारः परिस्फुरद्वपुर्विराजमानशरीर ईहते
5948 मृगयाविहारेण चेष्टते। मर्कटत्वेन रूपणं तु प्रक्रमविशेषणा##-
5949
5950 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे कालविलासो
5951 नाम चतुर्विंशतितमः सर्गः॥ २४॥
5952
5953 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे कालविलासो
5954 नाम चतुर्विंशतितमः सर्गः॥ २४॥
5955
5956 पञ्चविंशः सर्गः २५
5957
5958 श्रीरम उवाच।
5959
5960 अत्रैव दुर्विलासानां चूडामणिरिहापरः।
5961 करोत्यत्तीति लोकेऽस्मिन्दैवं कालश्च कथ्यते॥ १॥
5962
5963 [अपरस्यात्र] अपारस्यात्र कालस्य क्रियाततफलरूपिणः।
5964 चित्रो नियतिकान्तस्य नृत्यविस्तर ईर्यते॥
5965
5966 एवं महाकालं राजपुत्रत्वेनोपवर्ण्य तदुपाधिभूतं क्रियात्मक कालं
5967 तद्विनोदाय द्वैरूप्येण नर्तकत्वेन परिकल्प्य वर्णयितुमुपक्रमते -
5968 अत्रैवेत्यादिना। दुष्टो विलासो येषां तेषु चूडामणिरिव श्रेष्ठः। अपरः
5969 पूर्वोक्तादन्यः। दीव्यति व्यवहरति प्राणिनां कर्मफलदानेनेति दैवं
5970 फलावस्थः कृतान्तः। कलयत्यवश्यं फलं संपादयतीति क्रिया काल
5971 इत्येक एव पूर्वोत्तरावस्थाभेदेन द्वेधा कथ्यत इत्यर्थः॥ १॥
5972
5973 क्रियामात्राद्दते यस्य स्वपरिस्पन्दरूपिणः।
5974 नान्यदालक्ष्यते रूपं न कर्म न समीहितम्॥ २॥
5975
5976 तत्र द्वितीयं सूचीकटाहन्यायेन प्रथमं वर्णयति - क्रियेति। क्रियात्र
5977 फलसिद्धिः। समीहितमभिलषितम्॥ २॥
5978
5979 तेनेयमखिला भूतसंततिः परिपेलवा।
5980 तापेन हिममालेव नीता विधुरतां भृशम्॥ ३॥

5981
5982 भूतसंततिः प्राणिनिकायः। तापेनातपेन। हिममाला नीहारपटली। विधुरतां
5983 विनाशितां। सर्वस्याप्यनर्थस्य स्वकर्मकृतत्वादिति भावः॥ ३॥
5984
5985 यदिदं दृश्यते किंचिज्जगदाभोगि मण्डलं।
5986 तत्तस्य नर्तनागारमिहासावतिनृत्यति॥ ४॥
5987
5988 आभोगि विस्तीर्णं जगन्मण्डलं नर्तनागारं नृत्यशाला। रागद्वेषादि##-
5989 वर्ण्यते॥ ४॥
5990
5991 तृतीयं च कृतान्तेति नाम बिभ्रत्सुदारुणम्।
5992 कापालिकवपुर्मत्तं [वपुर्भूतं] दैवं जगति नृत्यति॥ ५॥
5993
5994 आद्यं शास्त्रैकगम्यत्वाद्विश्वासदार्ढ्याय विस्तरेण वर्णयितुमुपक्रमते
5995 - तृतीयमित्यादिना। पूर्वसर्गोक्तापेक्षया तृतीयम्। कापालिकवपुः
5996 कापालिक-वेषम्॥ ५॥
5997
5998 नृत्यतो हि कृतान्तस्य नितान्तमिव रागिणः।
5999 नित्यं नियतिकान्तायां मुने परमकामिता॥ ६॥
6000
6001 नियतिः कृतस्य कर्मणः फलावश्यंभावनियमस्तस्यामतिरागिणः।
6002 अवश्यं फलं प्रयच्छत इत्यर्थः॥ ६॥
6003
6004 शेषः शशिकलाशुभ्रो गङ्गावाहश्च तौ त्रिधा।
6005 उपवीते अवीते च उभौ संसारवक्षसि॥ ७॥
6006
6007 तस्याङ्गेषु भूषणान्याह - शेष इति। त्रिधा प्रसिद्धो गङ्गावाहो
6008 गङ्गाप्रवाहः। चकारेण समुच्चितयोरेकशेषेण ताविति परामर्शः। अवीते
6009 प्राचीनावीते। संसरत्यस्मिन्निति संसारस्त्रैलोक्यं तदेव वक्षः॥ ७॥
6010
6011 चन्द्रार्कमण्डले हेमकटकौ करमूलयोः।
6012 लीलासरसिजं हस्ते ब्रह्मन्ब्रमाण्डकर्णिका॥ ८॥
6013
6014 करमूलयोः प्रकोष्ठयोः। ब्रह्माण्डकर्णिका मेरुः॥ ८॥
6015
6016 ताराबिन्दुचितं लोलपुष्करावर्तपल्लवम्।
6017 एकार्णवपयोधौ तमेकमम्बरमम्बरम्॥ ९॥
6018
6019 बिन्दवश्चित्रबिन्दवः। पुष्करावतौ संवर्तमेघौ पल्लवौ दशे यस्य।
6020 धौतं क्षालितमम्बरमाकाशमेवाम्बरं वस्त्रम्। कापालिकानां
6021 मध्यच्छिद्रकण्ठावसक्तैककन्थाम्बरधारणप्रसिद्धेः॥ ९॥
6022
6023 एवंरूपस्य तस्याग्रे नियतिर्नित्यकामिनी।
6024 अनस्तमितसंरम्भमारम्भैः परिनृत्यति॥ १०॥
6025
6026 अनस्तमितसंरम्भमविरतप्रयत्नम्। प्राणिसभ्यभोगानुकूलकार्या##-
6027
6028 तस्या नर्तनलोलया जगन्मण्डपकोटरे [न्मण्डलकोटरे]।
6029 अरुद्धस्पन्दरूपाया आगमापायचञ्चुरे॥ ११॥
6030
6031 अरुद्धस्पन्दरूपायाः अप्रतिबद्धक्रियाशक्तेः। नृत्यद्रष्टृप्राणिनामा##-
6032 इत्यभ्यासस्य नुक् उत्परस्यातः इत्युत्वम्॥ ११॥

6033
6034 चारुभूषणमङ्गेषु देवलोकान्तरावली।
6035 आपातालं नभोलम्बं कबरीमण्डलं बृहत्॥ १२॥
6036
6037 देवसहिता लोकान्तराणां भुवनभेदानामावलिस्तस्या नियतेरङ्गेषु चारु
6038 भूषणं भवतीति प्रतिवाक्यं कल्प्यम्। आपातालं पातापपर्यन्तं
6039 नभस्तस्यालम्बं लम्बमानं कबरीमण्डलं श्यामत्वात्॥ १२॥
6040
6041 नरकाली च मञ्जीरामाला कलकलोज्ज्वला।
6042 प्रोता दुष्कृतसूत्रेण पातालचरणे स्थिता॥ १३॥
6043
6044 कलकलै रोदनकोलाहलैरुज्ज्वला नरकाग्निभिर्दीप्यमाना या नरकाली तस्याः
6045 पातालक्षणे चरणे स्थिता मञ्जरीमाला। मञ्जरीशब्देन पादकिङ्किण्यो
6046 लक्ष्यन्ते। अन्यथा सूत्रप्रोतत्वानुपपत्तेः॥ १३॥
6047
6048 कस्तूरिकातिलककं क्रियासंख्योपकल्पितम्।
6049 चित्रितं चित्रगुप्तेन यमे वदनपट्टके॥ १४॥
6050
6051 प्राणिकर्मसौरभ्यप्रकटनहेतुत्वात्कस्तूरीभूतेन चित्रगुप्तेन करणेन
6052 यमरूपे वदनावयवभूते पट्टके फलकेललाटे इति यावत्। यमे हि चित्रगुप्तो
6053 विराजते। पादललाटयोराद्यन्तावयवयोः क्लृप्त्यैव
6054 तद्वदितिरावयवक्लृप्तिर्य-थायोगमर्थाद्बोध्या॥ १४॥
6055
6056 कालास्यं समुपादाय कल्पान्तेषु किलाकुला।
6057 नृत्यत्येषा पुनर्देवी स्फुटच्छैलघनारवम्॥ १५॥
6058
6059 कालस्य पत्युः आस्यं लक्षणया मुखविलासभ्रूभङ्गकटाक्षादिसूचित##-
6060 तत्तथा॥ १५॥
6061
6062 पश्चात्प्रालम्बविभ्रान्तकौमारभृतबर्हिभिः।
6063 नेत्रत्रयबृहद्रन्ध्रभूरिभाङ्कारभीषणैः॥ १६॥
6064
6065 तस्या नृत्यप्रकारमेव प्रपञ्चयति षड्भिः। पश्चात्पृष्ठतः।
6066 बर्हिभ्रमयूरैः। सर्वेषां तृतीयान्तानां राजते इति पञ्चमस्थेन
6067 संबन्धः। बीषणैरित्यन्तस्य हरमूर्धभिरित्युत्तरेणान्वयः। भाङ्कारो
6068 ध्वनिविशेषः॥ १६॥
6069
6070 लम्बलोलजटाचन्द्रविकीर्णहरमूर्धभिः।
6071 उच्चरच्चारुमन्दारगौरीकबरचामरैः॥ १७॥
6072
6073 चन्द्रान्तबहुर्व्रीहिघटितः कर्मधारयः। कबराः केशास्तद्रूपैश्चा##-
6074
6075 उत्ताण्डवाचलाकारभैरवोदरतुम्बकैः।
6076 रणत्सशतरन्ध्रेन्द्रदेहभिक्षाकपालकैः॥ १८॥
6077
6078 अचलाः पर्वतास्तदाकारैस्तुम्बकैरलाबुपात्रैः। तैः कापालिकव्यवहारस्य
6079 प्रसिद्धत्वात्। शतशब्दस्य कृतैकशेषस्य बहुवचनान्तस्य बहुव्रीहिस्तेन
6080 [इन्द्रदेहस्य सहस्राक्षत्वेन सप्ताधिकसहस्राच्छिद्रत्वान्नवच्छिद्रत्वेन
6081 प्रसिद्धेभ्यो देहेभ्यो वैलक्षण्यं ज्ञेयम्] सप्तोत्तरसहस्रलाभः॥ १८॥
6082
6083 शुष्कशारीरखट्वाङ्गभरैरापूरिताम्बरम्।
6084 भीषयत्यात्मनात्मानं सर्वसंहारकारिणी॥ १९॥

6085
6086 शारीरं शरीरावयवभूतं पृष्ठास्थि। भीषयति भापयतीव अन्येषां
6087 भयार्थम्॥ १९॥
6088
6089 विश्वरूपशिरश्चक्रचारुपुष्करमालया।
6090 ताण्डवेषु विवल्गन्त्या महाकल्पेषु राजते॥ २०॥
6091
6092 विश्वरूपाणि नानाकाराणि यानि शिरश्चक्राणि मस्तकवृन्दानि तान्येव
6093 पुष्करमाला तया विविधं वल्गन्त्या भ्रमन्त्या॥ २०॥
6094
6095 प्रमत्तपुष्करावर्तडमरोड्डामरारवैः।
6096 तस्याः किल पलायन्ते कल्पान्ते [तुम्बरादयः] तुम्बुरादयः॥ २१॥
6097
6098 पुष्करावर्ताख्याः संवर्तमेघा एव डमरो डमरुकं तस्योड्डामरार##-
6099
6100 नृत्यतोऽन्तः कृतान्तस्य चन्द्रमण्डलभासिनः।
6101 तारकाचन्द्रिकाचारुव्योमपिच्छावचूलिनः॥ २२॥
6102
6103 इत्थं नियतेः सपरिकरं नृत्यमुपवर्ण्य तद्भर्तुरपि
6104 तद्वर्णयन्भूषणा-न्याह - नृत्यत इत्यादिना। अन्तः
6105 प्रागुक्तनृत्यशालान्तः। चन्द्रमण्डलेन वक्ष्यमाणकुण्डलभूतेन
6106 भासिनः शोभमानस्य। तारकाभिश्चन्द्रिकया च
6107 तारकालक्षणचन्द्रप्रतिकृतिभिश्च चारु मनोहरं व्योमैव पिच्छं
6108 तेनावचूलिनो भूषितकेशस्य कृतान्तस्य श्रवणे इत्युत्तरेणान्वयः॥ २२॥
6109
6110 एकस्मिञ्छ्रवणे दीप्ता हिमवानस्थिमुद्रिका।
6111 अपरे च महामेरुः कान्ता काञ्चनकर्णिका॥ २३॥
6112
6113 एकस्मिन्दक्षिणे श्रवणे कर्णे। अस्थिमयी मुद्रिका मुद्राकाकारं कुण्डलं
6114 कापालिकानुरूपम्। अपरे वामे। कर्णिका कर्णभूषणं कुण्डलमिति यावत्॥ २३॥
6115
6116 अत्रैव कुण्डले लोले चन्द्रार्कौ गण्डमण्डले।
6117 लोकालोकाचलश्रेणी सर्वतः कटिमेखला॥ २४॥
6118
6119 अत्र अनयोरेव कर्णयोः। श्रेणीति शृङ्गबाहु।यात् कल्पब्रह्माण्डभेदाद्वा॥
6120 २४॥
6121
6122 इतश्चेतश्च गच्छन्ती विद्युद्वलयकर्णिका।
6123 अनिलान्दोलिता भाति नीरदांशुकपट्टिका॥ २५॥
6124
6125 विद्युद्वलयकर्णिका कर्णिकाकृति कङ्कणम्। नीरदा मेघा एव
6126 नानावर्णत्वाद्वस्त्रपट्टादिपटच्चरघटिता कन्था॥ २५॥
6127
6128 मुसलैः पट्टिशैः प्रासैः शूलैस्तोमरमुद्गरैः।
6129 तीक्ष्णैः [जगद्वातकृतान्त] क्षीणजगद्वान्तकृतान्तैरिव
6130 संभृतैः॥ २६॥
6131
6132 क्षीणेभ्यो जगद्भ्यः पूर्वसर्गेभ्यो वान्तैर्निर्गतैः कृतान्तरिमृत्युभिः
6133 संभृतैर्मिलितैरिव स्थितैर्मुसलादिभिर्विरचिता अस्य माला शोभते इत्युत्त##-
6134
6135 संसारबन्धानादीर्घे पाशे कालकरच्युते।
6136 शेषभोगमहासूत्रप्रोते मालास्य शोभते॥ २७॥

शेषस्य नागराजस्य भोगः शरीरम् । आयुधभृच्छरीरसामान्योपलक्षण##-
प्रोत इव संबद्धे कालस्य पूर्वोक्तराजपुत्रस्य कराद्वैवाच्च्युते संसरण##-
इत्यादिफलितोऽर्थः] आमुक्ते पाशे ग्रथिता माला अस्य कृतान्तस्य कण्ठे
शोभते ॥ २७ ॥

जीवोल्लसन्मकरिकारत्नतेजोभिरुज्ज्वला ।
सप्ताब्धिकङ्कणश्रेणी भुजयोरस्य भूषणम् ॥ २८ ॥

मकरिकादिलाञ्छनान्यन्येषां कङ्कणेषु निर्जीवानि प्रसिद्धानि
तद्वैलक्षण्यार्थं जीवोल्लसदिति ॥ २८ ॥

व्यवहारमहावर्ता सुखदुःखपरम्परा ।
रजःपूर्णतमःश्यामा रोमाली तस्य राजते ॥ २९ ॥

व्यवहाराः शास्त्रीयाः स्वाभाविकाश्च त एव महान्तो लक्षणभूता
रोमावर्ताः । रजस्तमसी प्रकृतिगुणौ ॥ २९ ॥

एवंप्रायः स कल्पान्ते कृतान्तस्ताण्डवोद्भवाम् ।
उपसंहृत्य नृत्येहां सृष्ट्वा सह [महेश्वरैः]
महेश्वरम् ॥ ३० ॥

ताण्डवस्योद्भवो यशास्तथाविधां नृत्येहां गात्रविक्षेपेच्छामुप##-
सृष्ट्वा इमां नृत्यलीलां तनोतीत्युत्तरेण संबन्धः ॥ ३० ॥

पुनर्लास्यमयीं नृत्यलीलां सर्गस्वरूपिणीम् ।
तनोतीमां जराशोकदुःखाभिभवभूषिताम् ॥ ३१ ॥

लास्यमयीमभिनयप्रचुराम् ॥ ३१ ॥

भूयः करोति भुवनानि वनान्तराणि
लोकान्तराणि जनजालककल्पनां च ।
आचारचारुकलनामचलां चलां च
पङ्क्ताद्यथार्भकजनो रचनामखिन्नः ॥ ३२ ॥

आचाराणां श्रौतस्मार्तादिसत्कर्मणां चारुकलनां सम्यक्प्रवृत्तिम् ।
अचलां कृतत्रेतयोः चलां कलिद्वापरयोः । रचनां क्रीडापुत्रिकादिरूपाम् ॥ ३२
॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे
कृतान्तविलसितं नाम पञ्चविंशतितमः सर्गः ॥ २५ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे
कृतान्तविलसितं नाम पञ्चविंशतितमः सर्गः ॥ २५ ॥

षड्विंशः सर्गः २६

श्रीराम उवाच ।

वृत्तेऽस्मिन्नेवमेतेषां कालादीनां महामुने ।
संसारनाम्नि कैवास्था मादृशानां [भवत्विह] वदत्विह ॥ १ ॥

6189 इह प्रपञ्च्यते दोषैर्भूरिसंसारदुर्दशा।
6190 कालादिपारतन्त्र्येण वैराग्यस्योपपत्तये॥
6191
6192 करोत्वेव कालः किं ते तत इत्याशङ्क्य कालादिसर्ववस्तुषु स्वस्य दोषदर्शनं
6193 प्रपञ्चयिष्यंस्तत्फलं वैराग्यरूपानास्थासंपत्तिं दर्शयति - वृत्त
6194 इत्यादिना। एवमुक्तरूपे। वृत्ते चरित्रे। आस्था आश्वासः॥ १॥
6195
6196 विक्रीता इव तिष्ठाम इतैर्दैवादिभिर्वयम्।
6197 मुने प्रपञ्चरजनैर्मुग्धा वनमृगा इव॥ २॥
6198
6199 दैवं प्राक्तनं कर्म आदिः प्रधानं येषां तैरेतैः प्रागुक्तैश्चतुर्भिः
6200 शब्दादिविषयप्रपञ्चरचनैर्मुग्धा मोहिताः॥ २॥
6201
6202 एषोऽनार्यसमाम्नायः कालः कवलनोन्मुखः।
6203 जगत्यविरतं लोकं पातयत्यापदर्णवे॥ ३॥
6204
6205 अनार्यैः सम आम्नायश्चरित्राभ्यासो यस्य। अविरतमसमाप्तभोगजीवितादि##-
6206 समाम्नायो बौद्धाद्यसच्छास्त्रोपदेशो यस्य। कवलनोन्मुख
6207 उदरभरणमात्रपरः। कालनामा धूर्तः असन्मार्गप्रवर्तनेन लोकं
6208 जनमित्यर्थान्तरमपि गम्यते॥ ३॥
6209
6210 दहत्यन्तर्दुराशाभिर्देवो दारुणचेष्टया।
6211 लोकमुष्णप्रकाशाभिर्ज्वालाभिर्दहनो यथा॥ ४॥
6212
6213 दुराशाभिरन्तर्दहन्ति। दारुणचेष्टया दुश्चारित्र्येण बहिरपीति शेषः। तथा
6214 दृष्टान्तेऽपि योज्यम्॥ ४॥
6215
6216 धृतिं विधुरयत्येषा मर्यादारूपवल्लभा।
6217 स्त्रीत्वात्स्वभावचपला नियतिर्नियतोन्मुखी॥ ५॥
6218
6219 कालमर्यादारूपकृतान्तस्य वल्लभा प्रिया इन्द्रियाणां
6220 पराक्प्रवृत्तिनियम-लक्षणा नियतिर्नियतेषु समाधिपरेषु उन्मुखी
6221 उद्युक्ता तेषां धृतिं धैर्यं विधूरयति वियोजयति। तत्र हेतुः -
6222 स्त्रीत्वादिति॥ ५॥
6223
6224 ग्रसतेऽविरतं भूतजालं सर्प इवानिलम्।
6225 कृतान्तः कर्कशाचारो जरां नीत्वाऽजरं वपुः॥ ६॥
6226
6227 अजरं तरुणं वपुर्जरां नीत्वा प्रापय्य॥ ६॥
6228
6229 यमो निर्घृणराजेन्द्रो नार्तं नामानुकम्पते।
6230 सर्वभूतदयोदारो जनो दुर्लभतां गतः॥ ७॥
6231
6232 निर्दयराजानामिन्द्रः स्वामी। अतिनिर्दय इति यावत्॥ ७॥
6233
6234 सर्वा एव मुने फल्गुविभवा भूतजातयः।
6235 दुःखाइअव दुरन्ताय दारुणा भोगभूमयः॥ ८॥
6236
6237 सर्वा ब्रह्मान्ता अपि भूतजातयः प्राणिजातयो विरक्तदशा फल्गुविभवास्तु##-
6238
6239 आयुरत्यन्तचपलं मृत्युरेकान्तनिष्ठुरः।
6240 तारुण्यं चातितरलं बाल्यं जडतया हृतम्॥ ९॥

जडतया मोहेन। ह्रतमपनीतम्॥ ९॥

कलाकलङ्कितो लोको बन्धवो भवबन्धनम्।
भोगा भवमहारोगास्तृष्णाश्च मृगतृष्णिकाः॥ १०॥

कलनं कला विषयानुसंधानम्॥ १०॥

शत्रवश्चेन्द्रियाण्येव सत्यं यातमसत्यताम्।
प्रहरत्यात्मनैवात्मा मनसैव मनो रिपुः॥ ११॥

सत्यं परमार्थत आत्मेति गृहीतं देहादि। तस्य विवेके असत्यतां
अपरमार्थात्मताम्। यद्वा सत्यं सत्यज्ञानादिलक्षणं वस्तु असत्यताम्। मन
एव बन्धहेतुत्वाद्रिपुर्यस्य तथाभूत आत्मा मनोभिमानान्मनोभूत
आत्मानं मनसैवात्मना प्रहरतीव दुःखीकरोति॥ ११॥

अहंकारः कलङ्काय बुद्धयः परिपेलवाः।
क्रिया दुष्फलदायिन्यो लीलाः स्त्रीनिष्ठतां गताः॥ १२॥

अहंकारोऽभिमानप्रधानमन्तःकरणं कलङ्काय लाञ्छनाय।
स्वरूपदूषणायेति यावत्। बुद्धयोऽध्यवसायात्मिकास्तद्वृत्तयो
बहिर्मुखत्वात्परिपेलवा मृदवः स्वरूपनिष्ठा दार्ढ्यशून्याः। क्रियाः
प्रवृत्तयः शारीराः। लीला मानसविलासाः॥ १२॥

वाञ्छाविषयशालिन्यः सच्चमत्कृतयः क्षताः।
नार्यो दोषपताकिन्यो रसा नीरसतां गताः॥ १३॥

सच्चमत्कृतय आत्मस्फूर्तिचमत्काराः। दोषाणां पताकिन्यो ध्वजिन्यः। रसा
अनुरागाः। नीरसतामनुरागशून्यताम्। विषया अस्पृहणीयतामिति वा॥ १३॥

वस्त्ववस्तुतया ज्ञातं दत्तं चित्तमहंकृतौ।
अभाववेधिता भावा भावान्तो नाधिगम्यते॥ १४॥

वस्तु अलौकिकं कार्यकारणसंघातात्मना ज्ञातम्। चित्तं दत्तम्।
अभिनिवेशितमिति यावत्। अभाववेधिता नाशग्रस्ताः। भावानामनित्य##-

तप्यते केवलं साधो मतिराकुलितान्तरा।
रागरोगो विलसति विरागो नोपगच्छति॥ १५॥

नोपगच्छतीत्यादिर्लोके अतिदौर्लभ्योक्तिर्नतु स्वस्य प्रक्रमविरोधात्॥ १५॥

रजोगुणहता दृष्टिस्तमः संपरिवर्धते।
न चाधिगम्यते सत्त्वं तत्त्वमत्यन्तदूरतः॥ १६॥

अधिगम्यते लभ्यते॥ १६॥

स्थितिरस्थिरतां याता मृतिरागमनोन्मुखी।
धृतिर्वैधुर्यमायाता रतिर्नित्यमवस्तुनि॥ १७॥

स्थितिर्जीवनम्। अवस्तुनि फल्गुविषये॥ १७॥

मतिर्मान्द्येन मलिना पातैकपरमं वपुः।

6293 ज्वलतीव जरा देहे प्रतिस्फुरति दुष्कृतम् ॥ १८ ॥
6294
6295 मान्द्येन मौर्ख्येण । पातैकपरमं नाशैकपर्यवसितम् ॥ १८ ॥
6296
6297 यत्नेन याति युवता दूरे सज्जनसंगतिः ।
6298 गतिर्न विद्यते काचित्क्वचिन्नोदेति सत्यता ॥ १९ ॥
6299
6300 ननु धार्मिकस्य तव कथं गतिर्न विद्यते तत्राह - क्वचिदिति ।
6301 स्वर्गादिगतेरप्य-नित्यतया स्वप्न सुखप्रायत्वादिति भावः ॥ १९ ॥
6302
6303 मनो विमुह्यतीवान्तर्मुदिता दूरतां गता ।
6304 नोज्ज्वला करुणोदेति दूरादायाति नीचता ॥ २० ॥
6305
6306 मुदिता परसुखदर्शनसंतोषः । नीचताशब्देन तद्धेतुरसूयादिर्गृह्यते ॥
6307 २० ॥
6308
6309 धीरताऽधीरतामेति पातोत्पातपरो जनः ।
6310 सुलभो दुर्जनाश्लेषो दुर्लभः सत्समागमः ॥ २१ ॥
6311
6312 अधीरतामस्थिरताम् । पातोत्पातौ मरणजन्मनी ऊर्ध्वाधोगमने वा । आश्लेषः
6313 सङ्गः ॥ २१ ॥
6314
6315 आगमापायिनो भावा भावना भवबन्धनी ।
6316 नीयते केवलं क्वापि नित्यं भूतपरम्परा ॥ २२ ॥
6317
6318 भावना वासना । भावेष्वपगतेष्वपि सा नापैतीति भवे बन्धनी बन्धहेतुः
6319 भूतपरम्परा प्राणिनिकायः । कालेनेति शेषः ॥ २२ ॥
6320
6321 दिशोऽपि हि न दृश्यन्ते देशोऽप्यन्यापदेशभाक् ।
6322 शैला अपि विशीर्यन्ते कैवास्था मादृशे जने ॥ २३ ॥
6323
6324 दिशो यासु कालाद्धयं नास्ति तादृश्यः । तदेव प्रपञ्चयति - देश इति ।
6325 देशः सद्यवहारोपदेशः । यद्वा - दिशति प्रयच्छति
6326 प्राणिभ्योऽवकाशमिति देश इति । व्यपदेशादन्यं विरुद्धमपदेशं
6327 व्यवहारम् । स्वस्यैव निरवका-शत्वमिति यावत् ॥ २३ ॥
6328
6329 अद्यते सत्तयापि द्यौर्भुवनं चापि भुज्यते ।
6330 धरापि याति वैधुर्यं कैवास्था मादृशे जने ॥ २४ ॥
6331
6332 दौराकाशोऽपि सत्तया सन्मात्रस्वभावेनेश्वरेणाद्यते ॥ २४ ॥
6333
6334 शुष्यन्त्यपि समुद्राश्च श्रीयन्ते तारका अपि ।
6335 सिद्धा अपि विनश्यन्ति कैवास्था मादृशे जने ॥ २५ ॥
6336
6337 सिद्धा ज्ञातिरिक्तैर्योगमन्त्ररसायनादिभिः ॥ २५ ॥
6338
6339 दानवा अपि दीर्यन्ते ध्रुवोऽप्यध्रुवजीवितः ।
6340 अमरा अपि मार्यन्ते कैवास्था मादृशे जने ॥ २६ ॥
6341
6342 शक्रोऽप्याक्रम्यते वक्त्रैर्यमोऽपि हि नियम्यते ।
6343 वायुरप्येत्यवायुत्वं कैवास्था मादृशे जने ॥ २७ ॥
6344

6345 वक्त्रैराक्रम्यते चर्व्यते। नितरां यम्यते उपरमं प्राप्यते॥ २७॥
6346
6347 सोमोऽपि व्योमतां याति मार्तण्डोऽप्येति खण्डताम्।
6348 मग्नतामग्निरप्येति कैवास्था मादृशे जने॥ २८॥
6349
6350 व्योमतां शून्यताम्॥ २८॥
6351
6352 परमेष्ठ्यपि निष्ठावान्ह्रियते हरिरप्यजः।
6353 भवोऽप्यभावमायाति कैवास्था मादृशे जने॥ २९॥
6354
6355 निष्ठा परिसमाप्तिः। ह्रियते संह्रियते॥ २९॥
6356
6357 कालः संकाल्यते येन नियतिश्चापि नीयते।
6358 खमप्यालीयतेऽनन्तं कैवास्था मादृशे जने॥ ३०॥
6359
6360 कालः प्रागुक्तस्त्रिविधः। खमत्र बहिरावणाकाशः॥ ३०॥
6361
6362 अश्राव्यावाच्यदुर्दर्शतत्त्वेनाज्ञातमूर्तिना।
6363 भुवनानि विडम्ब्यन्ते केनचिद्भ्रमदायिना॥ ३१॥
6364
6365 अश्राव्यं श्रोत्रेन्द्रियाविषयः। अवाच्यं वागगम्यं दुर्दर्शं
6366 चक्षुराद्यगम्यं च तत्त्वं सूक्ष्मं रूपं यस्य। मूर्तिः स्थूलं रूपम्।
6367 विडम्ब्यन्ते स्वात्मन्येव मायया प्रदर्श्यन्ते। तत्त्वमाच्छाद्य कल्पितमेव
6368 प्रदर्शयत्तित्यर्थः॥ ३१॥
6369
6370 अहंकारकलामेत्य सर्वत्रान्तरवासिना।
6371 न सोऽस्ति त्रिषु लोकेषु यस्तेनेह न बाध्यते॥ ३२॥
6372
6373 अहंकारकलामभिमानांशमेत्य प्राप्य स्थितेषु मध्ये इति शेषः॥ ३२॥
6374
6375 शिलाशैलकवप्रेषु साश्वभूतो दिवाकरः।
6376 वनपाषाणवन्नित्यमवशः परिचोद्यते॥ ३३॥
6377
6378 सर्वबाधकत्वोपपादनाय तस्य निरङ्कुशं स्वातन्त्र्यमाह -
6379 शिलेत्यादित्रिभिः। साश्वोऽश्वसहितो रथस्तद्भावं प्राप्तः। य आदित्ये तिष्ठन्
6380 इत्यादिश्रुतेः। स्वाधिरूढेनेश्वरेण प्रेर्यमाणः शिलाशैलवप्रादिदुर्गम##-
6381 वनं जलं योग्यतया पर्वतशिखराद्वेगेन प्रवहत्तेन यथा वर्तुलाः
6382 स्फतिकादिपाषाणा अधोधः प्रेर्यन्ते तद्वदवशोऽस्वतन्त्रः। सूर्यादी##-
6383
6384 धरागोलकमन्तस्थसुरासुरगणास्पदम्।
6385 वेष्ट्यते धिष्ण्यचक्रेण पक्वाक्षोटमिव त्वचा॥ ३४॥
6386
6387 धरा भूमिः सैव गोलकम्। ज्योतिःशास्त्रे तथा प्रसिद्धेः। धिष्ण्यं
6388 देवानामायतनभूतं चक्रं ज्योतिश्चक्रं तेन वेष्ट्यते परितो व्याप्यते।
6389 अक्षोटं फलविशेषः। युगावर्तेषु भूमेर्दाहप्लवनादिविकारेऽप्याकल्पं
6390 ज्योतिश्चक्रस्याविनाशाद्दाढर्यसूचनाय पक्वेति विशेषणम्॥ ३४॥
6391
6392 दिवि देवा भुवि नराः पातालेषु च भोगिनः।
6393 कल्पिताः कल्पमात्रेण नीयन्ते जर्जरां दशाम्॥ ३५॥
6394
6395 कल्पमात्रेण संकल्पमात्रेण। तथाचात्यन्तपारवश्यमपि जगतो महान् दोष
6396 इति भावः॥ ३५॥

6397
6398 कामश्च जगदीशानरणलब्धपराक्रमः।
6399 अक्रमेणैव विक्रान्तो लोकमाक्रम्य वल्गति॥ ३६॥
6400
6401 दोषान्तराण्यप्याह - काम इत्यादिना। अक्रमेण अनुचितप्रकारेण। आक्रम्य
6402 वशीकृत्य। नियन्तुरीश्वराद्बिभेति चेन्न विशृङ्खलः स्यात्। नासौ तथेत्याह
6403 - जगदीशानेति॥ ३६॥
6404
6405 वसन्तो मत्तमागङ्गो मदैः कुसुमवर्षणैः।
6406 आमोदितककुप्चक्रश्चेतो नयति चापलम्॥ ३७॥
6407
6408 वसन्त एव मत्तमातङ्गः कुसुमवर्षणमेव मदवर्षणमिति व्यस्तरूपकम्।
6409 चापलमिति भयोन्मादभावद्वयसंभेदः॥ ३७॥
6410
6411 अनुरक्ताङ्गनालोललोचनालोकिताकृति।
6412 स्वस्थीकर्तुं मनः शक्तो न विवेको महानपि॥ ३८॥
6413
6414 परोपकारकारिण्या परार्तिपरितप्तया।
6415 बुद्ध एव सुखी मन्ये स्वात्मशीतलया धिया॥ ३९॥
6416
6417 बुद्धः प्रबुद्धतत्त्वः पुरुषः। बोधश्चातिदुर्लभ इति भावः॥ ३९॥
6418
6419 उत्पन्नध्वंसिनः कालवडवानलपातिनः।
6420 संक्यातुं केन शक्यन्ते कल्लोला जीविताम्बुधौ॥ ४०॥
6421
6422 ध्वंसित्वे हेतुः - कालेति। भावा इति शेषः॥ ४०॥
6423
6424 सर्व एव नरा मोहाद्दुराशापाशपाशिनः।
6425 दोषगुल्मकसारङ्गा विशीर्णा जन्मजङ्गले॥ ४१॥
6426
6427 पूर्वोक्तदोषलक्षणेषु गुल्मकेषु स्थिताः सारङ्गाः मृगाः पक्षिणो वा
6428 दुराशापाशेन पाशिनो बधाः सन्तो जन्मजङ्गले विशीर्णा इति संबन्धः॥ ४१
6429 ।।
6430
6431 संक्षीयते जगति जन्मपरम्परासु
6432 लोकस्य तैरिह कुकर्मभिरायुरेतत्।
6433 आकाशपादपलताकृतपाशकल्पं
6434 येषां फलं नहि विचारविदोऽपि विद्मः॥ ४२॥
6435
6436 [] तैरुक्तदोषप्रयुक्तैः कुकर्मभिः काम्यनिषिद्धाचरणैरायुः
6437 संक्षीयते। फलं स्वर्गनरकादि। आकाशे चेत्पादपस्तत्र लतापि
6438 स्यात्कृतकण्ठपाशोल्ल-म्बनसदृशमसारं इरालम्बनदुःखं
6439 पतनावसानस्थितिकमित्यर्थः। आस्तां तन्निवृत्त्युपायो दूरे तच्चिन्दापि
6440 दुर्लभेत्याह - नहीति॥ ४२॥
6441
6442 अद्योत्सवोऽयमृतुरेष तथेह यत्रा
6443 ते बन्धवः सुखमिदं सविशेषभोगम्।
6444 इत्थं मुधैव कलयन्सुविकल्पजाल-
6445 मालोलपेलवमतिर्गलतीह लोकः॥ ४३॥
6446
6447 तत्प्रमोषसामग्री तु प्रतिक्षणमतिसुलभेत्याह - अद्येति। गलति विशीर्यते॥ ४३
6448 ।।

6449
6450 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे
6451 दैवदुर्विलासवर्णनं नाम षड्विंशतितमः सर्गः ॥ २६ ॥
6452
6453 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे
6454 दैवदुर्विलासवर्णनं नाम षड्विंशतितमः सर्गः ॥ २६ ॥
6455
6456 सप्तविंशः सर्गः २७
6457
6458 श्रीरम उवाच ।
6459
6460 अन्यच्च तातातितरामरम्ये मनोरमे चेह जगत्स्वरूपे ।
6461 न किंचिदायाति तदर्थजातं येनातिविश्रान्तिमुपैति चेतः ॥ १ ॥
6462
6463 उक्तानुक्तेषु भावेषु निःश्रेयसविरोधिषु ।
6464 विस्तरेण पुनर्दोषा वैराग्यायेह कीर्तिताः ॥
6465
6466 प्रत्येकमुक्तेष्वनुक्तेषु च भावेषु समुच्चित्य दोषान्तराणि प्रपञ्चयन्स्व##-
6467 शेषः । आपाततो मनोरमे वस्तुतस्त्वरम्ये जगत्स्वरूपे येन लब्धेन
6468 चेतोऽतिविश्रान्तिं पूर्णकामतामुपैति तत्तादृशं किंचिदप्यर्थजातं नायाति
6469 चेतसि ततोऽन्यच्च तत्त्वं नायाति न लभ्यत इति वार्थः ॥ १ ॥
6470
6471 बाल्ये गते कल्पितकेलिलोले मनोमृगे दादरीषु जीर्णे ।
6472 शरीरके जर्जरतां प्रयाते विदूयते केवलमेव लोकः ॥ २ ॥
6473
6474 दारा एव दर्यो गिरिगुहाः । विशेषेण दूयते उपतप्यते । केवलं पुरुषार्थ##-
6475
6476 जरातुषाराभिहतां शरीरसरोजिनीं दूरतरे विमुच्य ।
6477 क्षणाद्गते जीवितचञ्चरीके जनस्य संसारसरोऽवशुष्कम् ॥ ३ ॥
6478
6479 जीवितं जीवनं स एव चञ्चरीको भ्रमरः । संसारोऽत्रैहिकसमारम्भस्त##-
6480
6481 यदा यदा पाकमुपैति नूनं तदा तदेयं रतिमातनोति ।
6482 जराभराऽनल्पनवप्रसूना विजर्जरा कालयता नराणाम् ॥ ४ ॥
6483
6484 रतिं प्रीतिमातनोति । मृत्योरिति शेषः । नराणां काय एव लता वल्लि ॥ ४ ॥
6485
6486 तृष्णानदी सारतरप्रवाहग्रस्ताखिलानन्तपदार्थजाता ।
6487 तटस्थसंदोषसुवृक्षमूलनिकाषदक्षा वहतीह लोके ॥ ५ ॥
6488
6489 सारतरो वेगवत्तरो बलवत्तरो वा मूलनिकाषो वप्रनिकृन्तनं तत्र दक्षा
6490 समर्थाः ॥ ५ ॥
6491
6492 शारीरनौश्चर्मनिबन्धबद्धा भवाम्बुधावालुलिता भ्रमन्ती ।
6493 प्रलोड्यते पञ्चभिरिन्द्रियाख्यैरधोभवन्ती मकरैरधीरा ॥ ६ ॥
6494
6495 सर्मणा निबन्धनेन आछादनेन बद्धा । चर्ममयी तरिर्दक्सिणदेशे प्रसिद्धा
6496 । ऊर्मिभिरालुलिता व्याकुलिता स्वतश्च लघुत्वाद्भ्रमन्ती अतएवाधोभवन्ती
6497 मज्जनोन्मुखी इन्द्रियग्राहैरपि प्रलोड्यते । यतोऽधीरा न विद्यन्ते धीरा
6498 विवेकधीमन्तो वैराग्यधरियशालिनो वा जीवा यस्यां तथाविधा ॥ ६ ॥
6499
6500 तृष्णालताकाननचारिणोऽमी शाखाशतं काममहीरुहेषु ।

6501 परिभ्रमन्तः क्षपयन्ति कालं मनोमृगा नो फलमाप्नुवन्ति ॥ ७ ॥
6502
6503 लताप्रधानं काननं लताकाननम् । शाख्याशतं परिभ्रमन्त इति
6504 विशेषणान्मृगाः अत्र शाखामृगाः कालमायुः क्षपयन्ति ॥ ७ ॥
6505
6506 कृच्छ्रेषु दूरास्तविषादमोहाः स्वास्थ्येषु नोत्सिक्तमनोभिरामाः ।
6507 सुदुर्लभाः संप्रति सुन्दरीभिरनाहतान्तःकरणा महान्तः ॥ ८ ॥
6508
6509 कृच्छ्रेषु आपत्सु । स्वास्थ्येषु संपत्सु । नोत्सिक्तेनागर्वितेन मनसा अभिरामाः
6510 । नञर्थको नशब्दोऽप्यस्ति तस्य समासः ॥ ८ ॥
6511
6512 तरन्ति मागङ्गघटातरङ्गं रणाम्बुधिं ये मयि ते न शूराः ।
6513 शूरास्त एवेह मनस्तरङ्गं देहेन्द्रियाम्बोधिमिमं तरन्ति ॥ ९ ॥
6514
6515 घटाः समूहास्त एव तरङ्गा यस्मिन् । ये तरन्ति ते मयि शौर्योत्कर्षविमर्श##-
6516 भावः ॥ ९ ॥
6517
6518 अक्लिष्टपर्यन्तफलाभिरामा न दृश्यते कस्यचिदेव काचित् ।
6519 क्रियादुराशाहतचित्तवृत्तिर्यामेत्य विश्रान्तिमुपैति लोकः ॥ १० ॥
6520
6521 ननु कर्मैव तत्रोपायोऽस्तु तत्राह - अक्लिष्टेति । अप्यर्थ एवकारः ।
6522 कस्यचित्काचि-दपि क्रिया अक्लिष्टं क्लेशेन नाशेन वा रहितं पर्यन्तः
6523 संसारावसानं तद्रूपं यत्फलं तेन अभिरामा न दृश्यते । तद्यथेह
6524 कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयत इत्यादिश्रुतेः ।
6525 कृतकफलस्य नाशनियमादिष्टनाशस्य दुःखपर्यवसितत्वाच्चेति भावः ।
6526 यां क्रियामेत्य आश्रित्य । विश्रान्तिं स्वास्थ्यम् ॥ १० ॥
6527
6528 कीर्त्या जगद्दिक्कुहरं प्रतापैः श्रिया गृहं सत्त्वबलेन लक्ष्मीम् ।
6529 ये पूरयन्त्यक्षतधैर्यबन्धा न ते जगत्यां सुलभा महान्तः ॥ ११ ॥
6530
6531 यत्र असति भाग्योदये कीर्तिप्रतापलक्ष्म्याद्यल्पफलानामपि धैर्यादिक्षति##-
6532 मोक्षस्येत्यभिप्रेत्याह - कीर्त्येति । श्रिया संपदा । गृहमर्थिगृहम् ।
6533 सत्त्वबलेन सात्त्विकक्षमाविनयौदार्यादिबलेन लक्ष्मीम् । तेन हि सा पुर्णेव
6534 राजते ॥ ११ ॥
6535
6536 अप्यन्तरस्थं गिरिशैलभित्तेर्वज्रालयाभ्यन्तरसंस्थितं वा ।
6537 सर्वं समायान्ति ससिद्धिवेगाः सर्वाः श्रियः सन्ततमापदश्च ॥ १२ ॥
6538
6539 सति तु भाग्योदये सर्वस्य सर्वत्र सर्वाभिलषितप्राप्तिः सुलभेति
6540 पुरुषप्रयत्न-वैयर्थ्यमभिप्रेत्याह - अप्यन्तरस्थमिति । गिरेः शैली
6541 शिलामयी या भित्तिः । कर्मधारयनिमित्तः पुंवद्भावः । तन्मध्ये स्थितमपि
6542 वज्रनिर्मितत्वाद-भेद्यस्यालयस्याभ्यन्तरे संस्थितमपि वा सर्वं
6543 सभाग्यजनमिति शेषः । सिद्धयोऽणिमादयस्तेषां वेगैस्त्वराभिः सहिताः ।
6544 आपद्ग्रहनं दृष्टान्तार्थम् ॥ १२ ॥
6545
6546 पुत्राश्च दाराश्च धनं च बुद्ध्या प्रकल्प्यते तात रसायनाभम् ।
6547 सर्वं तु तन्नोपकरोत्यथान्ते यत्रातिरम्या विषमूर्छनैव ॥ १३ ॥
6548
6549 अक्लिष्टपर्यन्तेत्यनुपदोक्तमेव प्रपञ्चयति - पुत्राश्चेत्यादिना । प्रकल्प्यते
6550 भ्रान्त्येति शेषः । अन्ते मृत्युकाले । अतिरम्या अपि भोगविषया यत्र
6551 विषमूर्छ-नावद्दुःखायैव ॥ १३ ॥
6552

6553 विषादयुक्तो विषमामवस्था मुपागतः कायवयोवसाने |
6554 भावान्स्मरन्स्वानिह धर्मरिक्तान् जन्तुर्जरावानिह दह्यतेऽन्तः || १४ ||
6555
6556 धर्मरिक्तान् पुण्यसंग्रहशून्यान् || १४ ||
6557
6558 कामार्थधर्माप्तिकृतान्तराभिः क्रियाभिरादौ दिवसानि नीत्वा |
6559 चेतश्चलद्बर्हिणपिच्छलोलं विश्रान्तिमागच्छतु केन पुंसः || १५ ||
6560
6561 आदौ धनार्जनभोगतृष्णाप्राबल्यात्कामार्थाभ्यामेव धर्मावाप्तौ
6562 कृतान्तराभिराक्रान्तावकाशाभिर्लौकिकक्रियाभिः | बर्हिणो मयूरस्तस्य
6563 पिच्छं बर्हमिव लोलम् | कायवयोवसाने इत्येतदत्राप्यनुषज्यते || १५ ||
6564
6565 पुरोगतैरप्यनवाप्तरूपैस्तरङ्गिणीतुङ्गतरङ्गकल्पैः |
6566 क्रियाफलैर्दैववशादुपेतैर्विडम्ब्यते भिन्नरुचिर्हि लोकः || १६ ||
6567
6568 ननु मास्तु धर्मार्जनशुन्यानां चेतसि विश्रान्तिस्तदर्जनवतां भवदादीनां
6569 तत्फललाभात्कुतो न सेत्याशङ्क्य धर्मफलस्वर्गपुत्रादे##-
6570 तरङ्गवद्भङ्गुरैरतएवानवाप्तरूपैर-प्राप्तप्रायैः | हि यस्माद्भिन्ने
6571 अनात्मनि रुचिर्यस्य स लोको जनो विडम्ब्यते वञ्च्यते | अयं भावः - स एव हि
6572 लाभ इत्युच्यते यल्लब्धं नापैति अनर्थे वा न पर्यवस्यति | अन्यस्तु लाभो
6573 विडम्बनमात्रम् | यथा अल्पायुःपुत्रलाभो यथा वा मत्स्यस्य
6574 बडिशामिषलाभः | तथाच श्रुतिः स योऽन्यदात्मनः प्रियंब्रुवाणं
6575 ब्रूयात्प्रियं रोत्स्यति इति | तथाच न तल्लाभादाश्वास इति || १६ ||
6576
6577 इमान्यमूनीति विभावितानि कार्याण्यपर्यन्तमनोरमाणि |
6578 जनस्य जायाजनरञ्जनेन जवाज्जरान्तं जरयन्ति चेतः || १७ ||
6579
6580 उक्तमेवार्थमासुरसंपद्विस्तारप्रदर्शनेन प्रपञ्चयति - इमानीत्यादिना
6581 | इमानि संनिहितानि सद्यः कर्तव्यान्यमूनि विप्रकृस्टानि देशकालान्तरे
6582 कर्तव्यानीति विभावितानि निरन्तरं चिन्तितान्यपर्यन्तमनोरमाणि |
6583 परिणामेऽनर्थरूपाणि | जायानां जनानां च रञ्जनेन प्रियाचरणेन
6584 देहजरान्तं चेतोऽपि जरयन्ति | विवेकाद्भ्रंशयन्तीति यावत् || १७ ||
6585
6586 पर्णानि जीर्णानि यथा तरूणां समेत्य जन्माशु लयं प्रयान्ति |
6587 तथैव लोकाः स्वविवेकहीनाः समेत्य गच्छन्ति कुतोऽप्यहोभिः || १८ ||
6588
6589 कुतोऽप्यहोभिः कतिपयैरेव दिनैः || १८ ||
6590
6591 इतस्ततो दूरतरं विहृत्य प्रविश्य गेहं दिवसावसाने |
6592 विवेकिलोकाश्रयसाधुकर्म रिक्तेऽह्नि रात्रौ क उपैति निद्राम् || १९ ||
6593
6594 अह्नि दिवसे विवेकिजनानामनुसरणेन सत्कर्मभिश्च रहिते सति को निद्रामुपैति
6595 विना मूढमिति शेषः || १९ ||
6596
6597 विद्राविते शत्रुजने समस्ते समागतायामभितश्च लक्ष्म्याम् |
6598 सेव्यन्त एतानि सुखानि यावत्तावत्समायाति कुतोऽपि मृत्युः || २० ||
6599
6600 कुतोऽपि संवर्धिततुच्छरूपैर्भावैरमीभिः क्षणनष्टदृष्टैः |
6601 विलोड्यमाना जनता जगत्यां नवेत्युपायातमहो न पातम् || २१ ||
6602
6603 कुतोऽप्यनिर्धारिततत्त्वाद्धेतोः संवर्धितैः भावैर्विषयैर्विलोड्यमाना
6604 भ्राम्यमाणा | पातं मृत्युम् | यातमिति पाठे उपायातमागतं यातं गतं

6605 च अहो न वेत्ति ॥ २१ ॥
6606
6607 प्रियासुभिः कालमुखं क्रियन्ते जनैडकास्ते हतकर्मबद्धाः ।
6608 यैः पीनतामेव बलादुपेत्य शरीरबाधेन न ते भवन्ति ॥ २२ ॥
6609
6610 सर्वप्राणिनां प्रियत्वेन प्रसिद्धैरसुभिः प्राणैर्यजमानैस्त एव जनैडका
6611 नरमेषाः पशवः । हतशब्दः कुत्सायाम् । कुत्सितकर्मलक्षणेषु यूपेषु
6612 बद्धाः सन्तो दोषाज्ञनैः कालवर्णं मुखं यथा स्यात्तथा क्रियन्ते
6613 संस्क्रियन्ते । ते के । यैर्विषयासक्तिदेहपोषणादिबलात्पीनतामेवोपेत्य स्थितं न
6614 विवेकवैराग्याद्यभ्यस्तमित्यर्थः । अत एव हि ते रोगर्त्विग्भिः संज्ञपन##-
6615 भवन्तीत्युत्प्रेक्षा । असन्नेव स भवति असद्ब्रह्मेति वेद चेत् इति श्रुतेः । यज्ञ##-
6616 लक्षणा । अथवा यैरेव जनैडकैः पोषकैः स्वयं पीनतामुपेत्य स्थितास्त एव
6617 क्रियन्ते उपह्रियन्ते । अतएव कृतघ्ना असवः शरीरबाधेन हेतुना ते प्रियासवो
6618 न भवन्ति किंत्वप्रियाः शत्रवः । तथाच न प्राणपोषणमात्र-परेण
6619 भाव्यमिति भावः । अथवा असुपोषणपरा अपि न मूढजनाः प्रियासवः ।
6620 तेषां मृत्युमुखप्रवेशोपायाचरणेन प्रत्युत प्राणविघात-कत्वात् ।
6621 किंतु तत्त्वज्ञा एवेह प्रियासवः । प्राणानां तत्त्वदृशा नित्यात्म##-
6622 मूढजनैडकाः कालमुखमिव क्रियन्ते । नाद्रियन्त इति यावत् ।
6623 कस्तेष्वतिशयस्तत्राह - यैष्तत्त्वज्ञानबलाच्छरीरत्रयबाधेन
6624 पीनतामपरि-च्छिन्नतामेवोपेत्य स्थितमिति हेतोस्ते
6625 जनैडकवद्देहात्ममतयो न भवन्तीत्ययमेवातिशय इत्यर्थः ॥ २२ ॥
6626
6627 अजस्रमागच्छति सत्वरैवमनारतं गच्छति सत्वरैव ।
6628 कुतोऽपि लोला जनता जगत्यां तरङ्गमाला क्षणभङ्गुरेव ॥ २३ ॥
6629
6630 यथा आगच्छति एवं सत्वरैव गच्छति । कुतोऽपीत्युक्त्या यत आगच्छति यत्र च
6631 गछति तज्जिज्ञासितमिति सूचितम् ॥ २३ ॥
6632
6633 प्राणापहारैकपरा नराणां मनो मनोहारितया हरन्ति ।
6634 रक्तच्छदाश्चञ्चलषट्पदाक्ष्यो विषद्रुमालोललताः स्त्रियश्च ॥ २४ ॥
6635
6636 रक्तच्छदा रक्तौष्ठ्यो रक्तवस्त्रा वा रक्तपल्लवाश्च । षट्पदा इव षट्पदा एव
6637 चाक्षीणि यासाम् । विषद्रुमेष्वालोला लता विषलताः ॥ २४ ॥
6638
6639 इतोऽन्यतश्चोपगता मुधैव समानसंकेतनिबद्धभावा ।
6640 यात्रासमासंगसमा नराणां कलत्रमित्रव्यवहारमाया ॥ २५ ॥
6641
6642 इतो मनुष्यलोकादन्यतः स्वर्गनरकादिभ्यश्च । मुधा व्यर्थमेव ।
6643 इहास्माभिर्मिलितव्यमिति परस्पराभिप्रायनिबन्धनः संकेतस्तेन
6644 संपादितस्वरूपा । देवोत्सवादियात्रायां समासङ्गः समाजमेलनम् ॥ २५ ॥
6645
6646 प्रदीपशान्तिष्विव भुक्तभूरिदशास्वतिस्नेहनिबन्धनीषु ।
6647 संसारमालासु चलाचलासु न ज्ञायते तत्त्वमतात्त्विकीषु ॥ २६ ॥
6648
6649 संसारा जन्ममरणपरम्परास्तेषां मालासु प्रदीपानां शान्तिषु
6650 क्षणिकज्वालोपरमप्रवाहेष्विव तत्त्वं पारमार्थिकं वस्तु न ज्ञायते इति
6651 संबन्धः । सर्वाणि विशेषणान्युभयसाधारणानि । दशा बाल्यादयो
6652 वर्तिकाश्च । स्नेहो रागस्तैलं च । चलाचलासु चञ्चलासु । अतात्त्विकीषु
6653 मिथ्याभूतासु ॥ २६ ॥
6654
6655 संसारसंरम्भकुचक्रिकेयं प्रावृट्पयोबुद्बुदभङ्गुरापि ।
6656 असावधानस्य जनस्य बुद्धौ चिरस्थिरप्रत्ययमातनोति ॥ २७ ॥

यथा कुलालचक्रिका भ्रमन्त्यप्यसावधानपुरुषबुद्धौ चिरं स्थिरैवेयं न
भ्रमतीति प्रतीतिं जनयति एवमियं [प्रवृत्तिकुचक्रिका]
संसारप्रवृत्ति-रूपा कुचक्रिका वार्षिकलजबुद्बुद्वदनित्यापि
चिरस्थायिताप्रतीतिं जनयतीत्यर्थः ॥ २७ ॥

शोभोज्ज्वला दैववशाद्विनष्टा गुणाः स्थिताः संप्रति जर्जरत्वे ।
आश्वासनादूरतरं प्रयाता जनस्य हेमन्त इवाम्बुजस्य ॥ २८ ॥

जनस्य अम्बुजस्येव संप्रति यौवने शरदि च ये सौन्दर्यसौगन्ध्यादयो गुणाः
शोभोज्ज्वलाः स्थितास्त एव गुणा वार्धकेन जर्जरत्वे हेमन्ते च
दैववशाद्विनष्टाः सन्त आश्वासनायाश्चित्तसमाधानस्य आघ्राणस्य च
दूरतरं प्रयाता दुर्लभा भविष्यन्तीति न तेषु विश्वास इति भावः ॥ २८ ॥

पुनःपुनर्दैववशादुपेत्य स्वदेहभारेण कृतोपकारः ।
विलूयते यत्र तरुः कुठारैराश्वासने तत्र हि कः प्रसङ्गः ॥ २९ ॥

यत्र संसारे भूजलपवनादि दैववशात्पुरुषोपकारमनपेक्ष्यैवेति यावत् ।
जन्माभिवृद्धिफलपुष्पादिसमृद्धिमुपेत्य स्वदेहस्य भारेण धारणेन
पुनःपुनर्जनेभ्यश्छायापत्रपुष्पफलादिभिः कृतोपकारोऽनपराध्यपि
तरुर्वृक्षः कुठारैर्विलूयते छिद्यते । तत्र संसारे । तत्र प्रतिपदप्रसक्ता##-
मृत्युरनपकारिणमपि हनिष्यत्येवेति भावः ॥ २९ ॥

मनोरमस्याप्यतिदोषवृत्तेरन्तर्विघाताय समुत्थितस्य ।
विषद्रुमस्येव जनस्य सङ्गादासाद्यते संप्रति मूर्छनैव ॥ ३० ॥

नन्वस्त्वन्यत्र दोषस्तथापि हितैषिषु स्वजनेषु को दोषस्तत्राह -
मनोरमस्येति । अतिशयितदोषाः स्नेहभोगादिवृत्तयो
दाहभ्रमणादिवृत्तयश्च यस्मात् । अन्तरुपशमस्य जीवितस्य च
विघातायोद्युक्तस्योत्पन्नस्य च मूर्च्छना मूढता कश्मलं वा आसाद्यत
इत्ययमेव दोष इति भावः ॥ ३० ॥

कास्ता दृशो यासु न सन्ति दोषाः
कास्ता दिशो यासु न दुःखदाहः ।
कास्ताः प्रजा यासु न भङ्गुरत्वं
कास्ताः क्रिया यासु न नाम माया ॥ ३१ ॥

संसारदृष्टिषु कास्ता दृशो दृष्टयः । क्रिया लौकिक्यः । माया छलम् ॥
३१ ॥

कल्पाभिधानक्षणजीविनो हि कल्पौघसंख्याकलने [विरिञ्च्या]
विरिञ्च्याः ।
अतः कलाशालिनि कालजाले लघुत्वदीर्घत्वधियोऽप्यसत्याः ॥ ३२ ॥

नन्वन्यासां प्रजानां भङ्गुरत्वेऽपि विरिञ्चिसालोक्यं प्राप्तानां प्रजानां
कल्पायुषां न भङ्गुरत्वमित्याशङ्क्याह - कल्पेति ।
कल्पौघानामतीतानागतानन्तकल्पानां संख्याया अकलने अपरिज्ञाने
आनन्त्याविशेषात्कल्पा अपि विष्णुरुद्रादिदृशा क्षणा एवेति विरिञ्च्या अपि
कल्पाभिधानक्षणजीविन एव । अतोऽवयवशालिनि कालसमूहे लघुत्वदीर्घ##-
तुल्यन्यायेन ब्रह्माण्डा अप्यनन्तकोटिब्रह्माण्डदृशां दृशा अणव
एवेत्यणुमहत्त्वादिबुद्धयोऽप्यसत्या बोध्याः ॥ ३२ ॥

6709 सर्वत्र पाषाणमया महीध्रा मृदा मही दारुभिरेव वृक्षाः।
6710 मांसैर्जनाः पौरुषबद्धभावा नापूर्वमस्तीह विकारहीनम् ॥३३॥
6711
6712 एवं प्रकृतिदृष्टौ विकारजातमप्यसत्यमेव प्रतिभातीताह - सर्वत्रेति।
6713 स्वार्थे मयट्। प्रकृत्या चारुरित्यादिवदभेदे तृतीया। महीध्रा वस्तुतः
6714 पाषाणा एव। मही मृदेव। जना मांसादीन्येव। कथं तर्हि पर्वतादि##-
6715 पुरुषकृतैर्नामरूपसंकेतैः प्रतिनियतस्वभावा इत्यर्थः। परमार्थतस्तु
6716 अपूर्व पूर्वसिद्धकारणाद-न्यन्नास्ति। तथाच सर्वत्र
6717 न्यायसाम्याद्विकारहीनं परित्यक्तविकारं सर्वं जगत्प्रकृतिभूतमेकमेव
6718 परमार्थवस्त्वस्तीति युक्त्या संभाव्यत इत्यर्थः। अथवा अस्तु
6719 पर्वतादिविकाराणामसत्यत्वं तत्प्रकृतीनां पाषाण-मृदादीनां तु
6720 तत्कुतस्तत्राह - नापूर्वमिति। तेषामपि स्वकारणमहाभूत##-
6721 एवेत्यर्थः ॥ ३३ ॥
6722
6723 आलोक्यते चेतनयाऽनुविद्धा पयोनुबद्धोऽस्तनयो नभः स्थाः।
6724 पृथग्विभागेन पदार्थलक्ष्म्या एतज्जगन्नेतरदस्ति किंचित् ॥ ३४ ॥
6725
6726 पाषाणमृदादीनां महाबूतमात्रत्वमुक्तं स्फुटयति - आलोक्यत इति।
6727 अनुवित् हा इति च्छेदः। पयो जलं तदनुबद्धस्तत्कारणत्वेन तदिन्धनत्वेन वा
6728 तत्संबद्धो वह्निः। यद्यपि भौमो वह्निः पार्थिवेन्धनस्तथापि काष्ठा##-
6729 सूर्यचन्द्राप्न्युदकादीनीत्यस्तनयो वायुः। नभ आकाशः। तिष्ठति न चलतीति
6730 स्थाः पृथिवी। इत्येतन्महाभूतपञ्चकमेवानुविध्यते पर्स्परं संबध्यत
6731 इत्यनुवित् मिलितं सत् गोघटादिनानापदार्थलक्ष्म्या एतज्जगच्चेतनया बुद्ध्या
6732 आलोक्यते अविवेकिभिः। हा इति खेदावद्योतको निपातः। विवेकदृशा
6733 पृथग्विभागेन प्रयालोचने तु इतरत्पञ्चभूतातिरिक्तं न किंचिदस्तीत्यर्थः।
6734 तथाच श्रुतिः - यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां
6735 यत्कृष्णं तदन्नस्य। अपागामदग्नेरग्नित्वं वाचारम्भणं विकारो
6736 नामधेयं त्रीणि रूपाणीत्येव सत्यम् इति ॥ ३४ ॥
6737
6738 चमत्कृतिश्चेह मनस्विलोकचेतश्चमत्कारकरी नराणाम्।
6739 स्वप्नेऽपि साधो विषयं कदाचित्केषांचिदभ्येति न चित्ररूपा ॥ ३५ ॥
6740
6741 नन्वेवं पदार्थानामसत्यत्वे कथं जनानां व्यवहारभोगचमत्कारः नहि
6742 शुक्तिरजतेन कङ्कणं कर्तुं शक्यमित्याशङ्क्याह - चमत्कृतिरिति। इह
6743 मिथ्याभूतेऽपि पदार्थजाते व्यवहारकुशलतया मनस्विनां प्रिक्षावता##-
6744 चित्ररूपा नाश्चर्यभूता। यतस्तथाविधा चमत्कृतिः कदाचित्केषांचिन्न##-
6745 यावत्। यद्यपि सर्वेषामपि स्वप्ने भोगाः प्रसिद्धास्तथापि सुखदुःखाति##-
6746 चिरभोगचमत्कृतिर्यथा हरिश्चन्द्रस्य स्वर्गनरकभोगयोरिति सूचनाय
6747 कदाचित्केषांचिदित्युक्तम् ॥ ३५ ॥
6748
6749 अद्यापि यातिऽपि च कल्पनाया आकाशवल्लीफलवन्महत्त्वे।
6750 उदेति नो लोभलवाहतानामुदारवृत्तान्तमयी कथैव ॥ ३६ ॥
6751
6752 ननु यद्यस्ति भोगचमत्कृतिस्तर्हि किमधुनैव विरज्यसे। भोगान्भुक्त्वोत्तरे
6753 वयसि विरज्यात्मविचारस्य कर्तुं युक्तत्वादित्याशङ्क्य भोगासक्तौ वैराग्यस्य
6754 विचारस्य च सदैव दौर्लभ्यमित्याह - अद्येति। अद्याधुनातने पूर्वे वयसि
6755 यातेऽस्मिन्नुत्तरेऽपि च वयसि आकाशवल्लिफलवन्मिथ्याभूताया अपि
6756 भोगासक्तिकल्पनाया अविचारान्महत्त्वे सति भोगतत्साधनादिलोभलवेना##-
6757 सर्वोत्कृष्टस्य परमात्मनो यो वृत्तान्तः स्वरूपनिरूपणवार्ता तत्प्रचुरा
6758 कथैव नोदेति। निरन्तरं तद्विचारस्तु दूरनिरस्त इति भावः ॥ ३६ ॥
6759
6760 आदातुमिच्छन्पदमुत्तमानां स्वचेतसैवापहतोऽद्य लोकः।

6761 पतत्यशङ्कं पशुरद्रिकूटादानीलवल्लीफलवाञ्छयैव ॥ ३७ ॥
6762
6763 आसक्तौ न केवलं पुरुषार्थहानिः प्रत्युत महाननर्थोऽपीत्याह - आदातु##-
6764 अमुमर्थमर्थान्तरन्यासेन दृअढयति - पशुरित्यादिना ।
6765 पशुश्छागादिः पततीत्यनुषज्यते । आनीला हरिता वल्लि अर्थाद्विषमस्था
6766 करीरादिवल्ली गृह्यते ॥ ३७ ॥
6767
6768 अवान्तरन्यस्तनिरर्थकांशच्छायालतापत्रफलप्रसूनाः ।
6769 शरीर एव क्षतसंपदश्च श्वभ्रद्रुमा अद्यतना नराश्च ॥ ३८ ॥
6770
6771 अवान्तरे दुर्गमे गर्तोदर एव न्यस्तान्यतएव निरर्थकांशानि अंशतोऽपि
6772 प्राणिभिरनुपभोग्यत्वाद्व्यर्थानीति यावत् । छायादीनि येषां तथाविधाः
6773 श्वभ्रद्रुमाः शरीरे स्वशरीरपोषणायैवोपयोगात्क्षता व्यर्थं नाशिता
6774 विद्याविनयधनादिसंपदो यैस्तथाविधा नराश्च तुल्या एव । व्यर्थजन्म##-
6775
6776 क्वचिज्जना मार्दवसुन्दरेषु क्वचित्कठोरेषु च संचरन्ति ।
6777 देशान्तरालेषु निरन्तरेषु वनान्तखण्डेष्विव कृष्णसाराः ॥ ३९ ॥
6778
6779 यद्यपि क्वचिद्धार्मिका अपि सन्ति तथापि विवेकिनो दुर्लभा इति वक्तुं जनद्वै##-
6780 प्रकृतानुसाराच्चित्तभूमयो गृह्यन्ते । मार्दवं
6781 दयादाक्षिण्यक्षमादिसौन्दर्यं विद्याविनयादि च तद्वत्सु । कठोरेषु
6782 क्रोधलोभनैष्ठुर्यशालिषु [तैक्ष्ण्यशालिषु] । वनमध्यभागानां
6783 खण्डेष्ववयवेषु ॥ ३९ ॥
6784
6785 धातुर्नवानि दिवसं प्रति भीषणानि
6786 रम्याणि वा विलुलितान्ततमाकुलानि ।
6787 कार्याणि कष्टफलपाकहतोदयानि
6788 विस्मापयन्ति न शवस्य मनांसि केषाम् ॥ ४० ॥
6789
6790 जनानां दुर्दशां दृष्ट्वा दुःखितस्तन्निमित्तं दैवं निन्दति - धातुरिति
6791 । शवस्य अचेतनत्वान्मृतकल्पस्य धातुर्दैवस्य । यदि जीवन्स्यात्रेदृशो
6792 निर्दयः स्यादित्यभिप्रायः । दिवसं प्रति दिने दिने । कर्मप्रवचनीयेनैव
6793 वीप्साद्योत-नान्न द्विवचनं कृतम् । फलसो भीषणान्यापाततो रम्याणि ।
6794 वाशब्दः समुच्चये । विलुलितान्ततमैः रागादिभिरत्यन्तवाकुलितचित्तैराकुलानि ।
6795 परिणामे कष्टफलपाकेन दूषितारम्भाभ्युदयानि नवानि कार्याणि केषां
6796 विवेकिनां मनांसि न विस्मापयन्ति ॥ ४० ॥
6797
6798 जनः कामासक्तो विविधकुकलाचेष्टनपरः
6799 स तु स्वप्नेऽप्यस्मिञ्जगति सुलभो नाद्य सुजनः ।
6800 क्रिया दुःखासङ्गाऽविधुरविधुरा नूनमखिला
6801 न जाने नेतव्या कथमिव दशा जीवितमयी ॥ ४१ ॥
6802
6803 उक्तमर्थमनूद्योपसंहरंस्तन्निमित्तं स्वस्योद्वेगं दर्शयति - जन इति ।
6804 कुकलाभिः कौटिल्य चातुर्यैः । सुजनो विवेकी । दुःखैरसङ्गोऽसंबन्धस्तद##-
6805 रहिता । अवश्यं दुःखानुबन्धिन्येवेति यावत् ॥ ४१ ॥
6806
6807 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे
6808 निःश्रेयसविरोधिभावानित्यताप्रतिपादनं नं नाम सप्तविंशतितमः
6809 सर्गः ॥ २७ ॥
6810
6811 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे
6812 निःश्रेयसविरोधिभावानित्यताप्रतिपादनं नं नाम सप्तविंशतितमः सर्गः

॥ २७ ॥

अष्टाविंशः सर्गः २८

श्रीराम उवाच ।

यच्चेदं दृश्यते किंचिज्जगत्स्थावरजंगमम् ।
तत्सर्वमस्थिरं ब्रह्मन्स्वप्नसंगमसंनिभम् ॥ १ ॥

इह सर्वेषु भोग्येषु वैरस्यप्रतिपत्तये ।
वर्ण्यते सर्वभावानां विपर्यासिस्वभावता ॥

सर्वभावानामविरतविपर्यासस्वभावतादर्शनादपि न तेष्वाश्वास इत्याहः
- यच्चेदमित्यादिना । स्वप्ने संगमः समाजमेलनम् ॥ १ ॥

शुष्कसागरसंकाशो निखातो योऽद्य दृश्यते ।
स प्रातरभ्रसंवीतो नगः संपद्यते मुने ॥ २ ॥

निखातो गर्तः । प्रातर्ग्रहणं कालान्तरोपलक्षणम् ॥ २ ॥

यो वनव्यूहविस्तीर्णो विलीढगगनो महान् [गगनोऽचलः] ।
दिनैरेव स यात्युर्वीसमतां कूपतां च वा ॥ ३ ॥

वनव्यूहेन वनसमुदायेन । विलीढगगनश्चुम्बितनभस्तलः । उन्नत इति यावत्
। महान्परिणाहतः । दिनैः कैश्चिदेव ॥ ३ ॥

यदङ्गमद्य संवीतं कौशेयस्रग्विलेपनैः ।
दिगम्बरं तदेव श्वो दूरे विशरिताऽवटे ॥ ४ ॥

अवटे गर्ते । विशरिता विशीर्णं भविता । लुट् ॥ ४ ॥

यत्राद्य नगरं दृष्टं विचित्राचारचङ्चलम् ।
तत्रैवोदेति दिवसैः संशून्यारण्यधर्मता ॥ ५ ॥

चञ्चलं पुनः पुनश्चरत् ॥ ५ ॥

यः पुमानद्य तेजस्वी मण्डलान्यधितिष्ठति ।
स भस्मकूटतां राजन्दिवसैरधिगच्छति ॥ ६ ॥

अधिगच्छति प्राप्नोति ॥ ६ ॥

अरण्यानि महाभीमा या नभोमण्डलोपमा ।
पताकाच्छादिताकाशा सैव संपद्यते पुरी ॥ ७ ॥

महारण्यमरण्यानी । विस्तीर्णतया नीलतया च नभोमण्डलोपमा ॥ ७ ॥

या लतावलिता भीमा भात्यद्य विपिनावली ।
दिवसैरेव सा याति पुनर्मरुमहीपदम् ॥ ८ ॥

लताभिर्वलिता संवृत्ता । मरुमह्याः पदं लक्षणं निर्वृक्षजलताम् ॥ ८ ॥

सलिलं स्थलतां याति स्थलीभवति वारिभूः ।

6865 विपर्यस्यति सर्वं हि सकाष्ठाम्बुतृणं जगत् ॥ ९ ॥
6866
6867 वारिभूरुदकस्थानम् । विपर्यस्यति विपरीतावस्थामापद्यते ॥ ९ ॥
6868
6869 अनित्यं यौवनं बाल्यं शरीरं द्रव्यसंचयाः ।
6870 भावाद्भावान्तरं यान्ति तरङ्गवदनारतम् ॥ १० ॥
6871
6872 पूर्वस्वभावात्स्वभावान्तरम् ॥ १० ॥
6873
6874 वातान्तर्दीपकशिखालोलं जगति जीवितम् ।
6875 तडित्स्फुरणसंकाशा पदार्थश्रीर्जगत्त्रये ॥ ११ ॥
6876
6877 अल्पो दीपो दीपकः ॥ ११ ॥
6878
6879 विपर्यासमियं याति भूरिभूतपरम्परा ।
6880 बीजराशिरिवाजस्त्रं पूर्यमाणः पुनःपुनः ॥ १२ ॥
6881
6882 यथा कुसूलादावजस्रं पुनःपुनः पूर्यमाणो धान्यादिबीजराशिर्व्ययेन
6883 विपर्यासं क्षेत्रे उप्तो जलेन पूर्यमाणो वोच्छूनताङ्कुरसस्यादिभावेन
6884 विपर्यासमित्यर्थः ॥ १२ ॥
6885
6886 मनःपवनपर्यस्तभूरिभूतरजःपटा ।
6887 पातोत्पातपरावर्तपराभिनयभूषिता ॥ १३ ॥
6888
6889 इयं जागती स्थितिरेव संसारस्य [स्वकौशलातिश्याप्रकटनाय प्राणिनां
6890 जन्ममृत्युसंसरणलक्षणायामारभट्यां नटी वंशनटी । भटीनटीति
6891 समुदायो वा तद्वाचकः] कर्तृभोक्तृतासंतानलक्षणा या आरभटी
6892 आडम्बरातिशयः सैव नटी नर्तकी स्वकौशलातिशयप्रकटनाय नृत्ते
6893 आवेशेन विवृत्ता परिवर्तनमानेव जनितभ्रमा आलक्ष्यते इति संबन्धः ।
6894 तदनुरूपं विशिनष्टि । मन एव पवनस्तेन पर्यस्तमुद्भूतं भूरिभूतं
6895 प्राणिलक्षणं रजोवृन्दमेव पटो यस्याः । अतएव प्राणिनां पातो
6896 नरकादावुत्पातः स्वर्गे परावर्तो मध्यमलोकेऽत एव परा उत्कृष्टा
6897 अभिनयाभावव्यञ्जकचेष्टास्ताभिर्भूषिता ॥ १३ ॥
6898
6899 आलक्ष्यते स्थितिरियं जागती जनितभ्रमा ।
6900 नृत्तावेशविवृत्तेव संसारारभटीनटी ॥ १४ ॥
6901
6902 गन्धर्वनगराकारविपर्यासविधायिनी ।
6903 अपाङ्गभङ्गुरोदारव्यवहारमनोरमा ॥ १५ ॥
6904
6905 तामेव वर्णयति द्वाभ्याम् - गन्धर्वेति । विपर्यासो भ्रान्तिः
6906 वंशनटीनां नेत्रपिधानगारुडविद्या प्रसिद्धा । अपाङ्गाविव
6907 भङ्गुरैश्चपलैरपाङ्ग-पातैश्च भङ्गुरैर्व्यवहारैर्मनोरमा ॥ १५
6908 । ।
6909
6910 तडित्तरलमामोलमातन्वाना पुनःपुनः ।
6911 संसाररचना राजन्नृत्तसक्तेव राजते ॥ १६ ॥
6912
6913 तडितमेव तडितमिव च तरलं आलोकं आलोकनम् ॥ १६ ॥
6914
6915 दिवासास्ते महान्तस्ते संपदस्ताः क्रियाश्च ताः ।
6916 सर्वं स्मृतिपथं यातं यामो वयमपि क्षणात् ॥ १७ ॥

6917
6918 ते उत्सवविभवशालिनः ॥ १७ ॥
6919
6920 प्रत्यहं क्षयमायाति प्रत्यहं जायते पुनः ।
6921 अद्यापि हतरूपाया नान्तोऽस्या दग्धसंसृतेः ॥ १८ ॥
6922
6923 हतदग्धशब्दौ निन्दावचनौ ॥ १८ ॥
6924
6925 त्रियक्त्वं पुरुषा यान्ति तिर्यञ्चो नरतामपि ।
6926 देवाश्चादेवतां यान्ति किमिवेह विभो स्थिरम् ॥ १९ ॥
6927
6928 तिर्यक्त्वं पश्वादिजन्म ॥ १९ ॥
6929
6930 रचयन्रश्मिजालेन रात्र्यहानि पुनःपुनः ।
6931 अतिबाह्य रविः कालो विनाशवधिमीक्षते ॥ २० ॥
6932
6933 कालः कालत्मा रविः सूर्यः । रचयन् । भूतजातमिति शेषः । रात्र्यहानि अतिबाह्य
6934 विनाशावधिं स्वरचितस्य भूतजातस्येति शेषः ॥ २० ॥
6935
6936 ब्रह्माविष्णुश्च रुद्रश्च सर्वा वा भूतजातयः ।
6937 नाशमेवानुधावन्ति सलिलानीव वाडवम् ॥ २१ ॥
6938
6939 अनुधावन्त्यनुसरन्ति । वाडवं वडवानलम् ॥ २१ ॥
6940
6941 द्यौः क्षमा वायुराकाशं पर्वताः सरितो दिशः ।
6942 विनाशवाडवस्यैतत्सर्वं संशुष्कमिन्धनम् ॥ २२ ॥
6943
6944 वाडवस्य भागलक्षणया वह्नेः । प्रसिद्धस्य वाडवस्याबिन्धनत्वेन
6945 संशुष्कविशेषणानुपयोगात् ॥ २२ ॥
6946
6947 धनानि बान्धवा भृत्या मित्राणि विभवाश्च ये ।
6948 विनाशभयभीतस्य सर्वं नीरसतां गतम् ॥ २३ ॥
6949
6950 स्वदन्ते तावदेवैते भावा जगति धीमते ।
6951 यावत्स्मृतिपथं याति न विनाशकुराक्षसः ॥ २४ ॥
6952
6953 स्वदन्ते रोचन्ते ॥ २४ ॥
6954
6955 क्षणमैश्वर्यमायाति क्षणमेति दरिद्रताम् ।
6956 क्षणं विगतरोगत्वं क्षणमागतरोगताम् ॥ २५ ॥
6957
6958 क्षणमल्पकालम् । जन इति शेषः ॥ २५ ॥
6959
6960 प्रतिक्षणविपर्यासदायिना निहतात्मना ।
6961 जगद्भ्रमेण के नाम धीमन्तो हि न मोहिताः ॥ २६ ॥
6962
6963 निहगशब्दो निन्दावचनो नश्वरवचनो वा ॥ २६ ॥
6964
6965 तमःपङ्कसमालब्धं क्षणमाकाशमण्डलम् ।
6966 क्षणं कनकनिष्यन्दकोमलालोकसुन्दरम् ॥ २७ ॥
6967
6968 अनियतस्थितिमेवोदाहरणेन प्रपञ्चयति - तम इत्यादित्रिभिः ।

आकाशमण्डलो-दाहरणम् दृष्टान्तार्थम् | तमोलक्षणेन पङ्केन
सम्यगालब्धं स्पृष्टम् | कनकस्य निष्यन्दो द्रव इव रम्येण कोमलेन
सुखस्पर्शेन चन्द्राद्यालोकेन || २७ ||

क्षणं जलदनीलाब्जमालावलितकोटरम् |
क्षणमुड्डामररवं क्षणं मूकमिव [मूकमवस्थितम्]
स्थितम् || २८ ||

जलदा एव नीलाब्जमालास्ताभिर्वेष्टितोदरम् | उड्डामरस्तारः || २८ ||

क्षणं ताराविरचितं क्षणमर्केण भूषितम् |
क्षणमिन्दुकृताह्लादं क्षणं सर्वबहिष्कृतम् || २९ ||

आलोकातिरिक्तैः पर्यायेण वा पूर्वोक्तैः सर्वैर्बहिष्कृतं रहितम् || २९ ||

आगमापायपरया क्षणसंस्थितिनाशया |
न बिभेति हि संसारे धीरोऽपि [ऽधिक इव] क इवानया || ३० ||

इवशब्दोऽनर्थको दृष्टान्तदौर्लभ्यार्थो वा | एवमूत्तरत्रापि | अनया
जगत्स्थित्या || ३० ||

आपदः क्षणमायान्ति क्षणमायान्ति संपदः |
क्षणं जन्म क्षणं मृत्युर्मुने किमिव न क्षणम् || ३१ ||

प्रागासीदन्य एवेह जातस्त्वन्यो नरो दिनैः |
सदैकरूपं भगवन्किंचिदस्ति न सुस्थिरम् || ३२ ||

इह सदैकरूपं सुस्थिरं न किंचिदस्तीति संबन्धः || ३२ ||

घटस्य पटता दृष्टा पटस्यापि घटस्थितिः |
न तदस्ति न यद्दृष्टं विपर्यस्यति संसृतौ || ३३ ||

घटस्य कार्पासक्षेत्रे विशीर्णस्य कार्पासपरिणामक्रमेण पटता
दृष्टेत्यर्थः || ३३ ||

तनोत्युत्पादयत्यत्ति निहत्यासृजति क्रमात् |
सततं रात्र्यहानीव निवर्तते नरं प्रति || ३४ ||

वृद्धिविपरिणामापक्षयविनाशपुनर्जन्माख्याः पञ्च
भावविकारास्तनो-त्यादिभिरुच्यन्ते | तान्क्रमेण प्राप्नुवानं नरं
देहाभिमानिनं प्रति ते भावविकारा निवर्तन्ते न चिरं तिष्ठन्तीति तेऽपि
विपर्यस्यन्तीत्यर्थः | यद्यप्यस्तीति सतापि भावविकारेषु यास्केन पठ्यते तथापि
साधिष्ठान-ब्रह्मसत्तानुवेधो न विकार इति भावः || ३४ ||

अशूरेण हतः शूर एकेनापि हतं शतम् |
प्राकृताः प्रभुतां याताः सर्वमावर्त्यते जगत् || ३५ ||

आवर्त्यते विपर्यस्यते || ३५ ||

जनतेयं विपर्यासमजस्रमनुगच्छति |
जडस्पन्दपरामर्शात्तरङ्गाणामिवावली || ३६ ||

जनता चेतनसमूहः जडस्याचेतनस्य प्राणकरणादेः। डलयोरभेदा##-

बाल्यमल्पदिनैरेव यौवनश्रीस्ततो जरा।
देहेऽपि नैकरूपत्वं कास्था बाह्येषु वस्तुषु॥ ३७॥

अल्पदिनैर्यातीति शेषः॥ ३७॥

क्षणमानन्दितामेति क्षणमेति विषादिताम्।
क्षणं सौम्यत्वमायाति सर्वस्मिन्नटवन्मनः॥ ३८॥

नटो यथा हर्षविषादाद्यभिनयति तद्वत्॥ ३८॥

इतश्चान्यदितश्चान्यदितश्चान्यदयं विधिः।
रचयन्वस्तुनायाति खेदं लीलास्विवार्भकः॥ ३९॥

त्रिभिरित आदिशब्दैर्हर्षविषादमोहहेतवो विचित्रा उच्यन्ते॥ ३९॥

चिनोत्युत्पादयत्यत्ति निहत्यासृजति क्रमात्।
सततं रात्र्यहानीव निवर्तन्ते नरं प्रति॥ ४०॥

चिनोति व्रीह्यादीनिव संचयेनोपचयं नयति तैरन्यानुत्पादयति तांश्च
निहत्यात्ति भक्षयति ततो लब्धास्वादस्तथैव निरन्तरं भोक्तुमन्यानपि
जन्तूनासृजति विधिः। सृष्टं च नरं प्रति हर्षविषादादयो रात्र्यहानीव
सदा प्राप्य निवर्तन्त इत्यर्थः॥ ४०॥

आविर्भावतिरोभावभागिनो भवभातिनः।
जनस्य स्थिरतां यान्ति नापदो न च संपदः॥ ४१॥

तदेव हेत्वस्थैर्येण विशदयति - आविर्भावेति॥ ४१॥

कालः क्रीडत्ययं प्रायः सर्वमापदि पातयन्।
हेलाविचलिताशेषचतुराचारचञ्चुरः॥ ४२॥

हेलया अनादरेणैव विचलिताः परिवर्तिता अशेषाश्चतुराः समर्था अपि येन
तथाविधे आचरणे चञ्चुरः कुशलः॥ ४२॥

समविषमविपाकतो विभिन्नास्त्रिभुवनभूतपरम्पराफलौघाः।
समयपवनपातिताः पतन्ति प्रतिदिनमाततसंसृतिद्रुमेभ्यः॥ ४३॥

कर्मणां रसानां च समविषमविपाकतो नानाविधास्त्रैलोक्यप्राणि##-
भिन्नास्तल्लक्षणेभ्यो द्रुमेभ्यः समयः कालस्तल्लक्षणेन पवनेन पातिताः
प्रतिदिनं पतन्ति। तथाच पतनपर्यवसितं सर्वं दुष्टमेवेति न क्वचिदास्था
युक्तेति भावः॥ ४३॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे
सर्वभावाऽविरतविपर्यासप्रतिपादनं नामाष्टाविंशः सर्गः॥ २८॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे
सर्वभावाऽविरतविपर्यासप्रतिपादनं नामाष्टाविंशः सर्गः॥ २८॥

## एकोनत्रिंशः सर्गः २९

7073 श्रीराम उवाच |
7074
7075 इति मे दोषदावाग्निदग्धे महति चेतसि |
7076 प्रस्फुरन्ति न भोगाशा मृगतृष्णाः सरःस्विव || १ ||
7077
7078 दोषाणां दर्शनात्सर्वनिर्वेदः स्वस्य वर्ण्यते |
7079 रामेण तत्प्रशान्त्यर्थमुपदेशस्तथार्थ्यते ||
7080
7081 इत्थं दोषदर्शनात्स्वचित्ते तत्त्वबुभूत्सापर्यवसितं निर्वेदं दर्शयति -
7082 इतीत्यादिना | दोषपदेन तद्दर्शनं लक्ष्यते | दोषाणामेव वा विवेक##-
7083 महति विवेकविपुले | मरुष्वेव हि मृगदृष्णाः स्फुरन्ति न सरःसु || १ ||
7084
7085 प्रत्यहं याति कटुतामेषा संसारसंस्थितिः |
7086 कालपाकवशाल्लोला रसा निम्बलता यथा || २ ||
7087
7088 एषेति पाठे स्पष्टम् | इतीति पाठे तु प्रत्यहमहन्यहनि याति सति संसार##-
7089 पाकप्रकर्षवशादल्पकटुकटुतरमित्येवमवस्थाभेदैर्लोलाः कटुरसा यथा
7090 निम्बानां लताः बालवृक्षान्यान्ति तद्वत् || २ ||
7091
7092 वृद्धिमायाति दौर्जन्यं सौजन्यं याति तानवम् |
7093 करञ्जकर्कशे राजन्प्रत्यहं जनचेतसि || ३ ||
7094
7095 वैराग्याभावे भोगाशास्फुरणे त्वनर्थमाह - वृद्धिमिति | करञ्जः
7096 कण्टकवृक्षः | प्रत्यहं धर्मपादापचयादधर्मपादोपचयाच्चेति
7097 भावः || ३ ||
7098
7099 भज्यते भुवि मर्यादा झटित्येव दिनं प्रति |
7100 शुष्केव माषशिम्बीका टङ्कारकरवं विना || ४ ||
7101
7102 दिनं प्रति प्रतिदिनम् | ननु वीप्सायां द्विर्वचनाभावेऽवश्यं नित्येना##-
7103 मर्यादा तु तं विनेत्येतावान्विशेषः इत्यर्थः || ४ ||
7104
7105 राज्येभ्यो भोगपूगेभ्यश्चिन्तावद्भ्यो मुनीश्वर |
7106 निरस्तचिन्ताकलिता वरमेकान्तशीलता || ५ ||
7107
7108 आकलिता स्विकृता | एकान्त ऐकाग्र्यम् || ५ ||
7109
7110 नानन्दाय ममोद्यानं न सुखाय मम स्त्रियः |
7111 न हर्षाय ममार्थाशा शाम्यामि मनसा सह || ६ ||
7112
7113 अर्थाशा लक्षणया धनप्राप्तिः || ६ ||
7114
7115 अनित्यश्चासुखो लोकस्तृष्णा तात दुरुद्वहा |
7116 चापलोपहगं चेतः कथं यास्यामि निर्वृतिम् || ७ ||
7117
7118 शान्तिं विना मान्यो निर्वृतिहेतुरस्तीत्याह - अनित्यश्चेति || ७ ||
7119
7120 नाभिनन्दामि मरणं नाभिनन्दामि जीवितम् |
7121 यथा तिष्ठामि तिष्ठामि तथैव विगतज्वरम् || ८ ||
7122
7123 किं मे राज्येन किं भोगैः किमर्थेन किमीहितैः |
7124 अहंकारवशादेतत्स एव गलितो मम || ९ ||

7125
7126 ईहितै राजादिविषयैरभिलाषैश्चेष्टितैर्वा । एतद्राज्यादि ॥ ९ ॥
7127
7128 जन्मावलिवरत्रायामिन्द्रियग्रन्थयो दृढाः ।
7129 ये बद्धास्तद्विमोक्षार्थं यतन्ते ये त उत्तमाः ॥ १० ॥
7130
7131 इन्द्रियाण्येव ग्रन्थयो दृढा विषयाशङ्गस्य दुस्त्यजत्वात् । तैर्ग्रन्थिभिर्ये
7132 जन्मावलीलक्षणायां वरत्रायां चर्मरज्जौ बद्धा जीवास्तेषां मध्ये ये
7133 तद्विमोक्षार्थं यतन्ते त एवोत्तमा इति संबन्धः ॥ १० ॥
7134
7135 मथितं मानिनीलोकैर्मनो मकरकेतुना ।
7136 कोमलं कुरनिष्पेषैः कमलं करिणा यथा ॥ ११ ॥
7137
7138 मकरकेतुना कर्त्रा मानिनीलोकैः करणैर्मथितं हिंसितम् ॥ ११ ॥
7139
7140 अद्य चेत्स्वच्छया बुद्ध्या मुनीन्द्र न चिकित्स्यते ।
7141 भूयश्चित्तचिकित्सायास्तत्किलावसरः कुतः ॥ १२ ॥
7142
7143 अद्यास्मिन्बाल्ये वयसि । तत्तर्हि पेलवः सूद्धरो वृक्षो रूढस्कन्धो दुरुद्धर
7144 इति न्यायादिति भावः ॥ १२ ॥
7145
7146 विषं विषयवैषम्यं न विषं विषमुच्यते ।
7147 जन्मान्तरघ्ना विषया एकदेहहरं विषम् ॥ १३ ॥
7148
7149 विषयलक्षणं वैषम्यमनार्जवम् । जन्मान्तरेष्वपि घ्नन्ति मृत्युं
7150 प्रापयन्तीति जन्मान्तरघ्नाः ॥ १३ ॥
7151
7152 न सुखानि न दुःखानि न मित्राणि न बान्धवाः ।
7153 न जीवितं न मरणं बन्धाय ज्ञस्य चेतसः ॥ १४ ॥
7154
7155 ननु तत्त्वज्ञा अपि विषयान्भुञ्जानाः सुखादिभागिनो दृश्यन्ते तथाच तेषु
7156 को विशेषस्तत्राह - नेति । ज्ञस्यात्मज्ञस्य ॥ १४ ॥
7157
7158 तद्भवामि यथा ब्रह्मन्पूर्वापरविदां वर ।
7159 वीतशोकाभयायासो ज्ञस्तथोपदिशाशु मे ॥ १५ ॥
7160
7161 सर्वदुःखासङ्गमूलोच्छेदित्वात् ज्ञत्वमेव महान्पुरुषार्थ इति
7162 तदर्थमुपदेशं प्रार्थयते - तदिति । तत्तस्मादुक्तहेतोर्यथाऽहं ज्ञः सन्
7163 वीतशोकभयायासो भवामि शीघ्रं भविष्यामि । वर्तमानसामिप्ये लट् ।
7164 तथैव आशु उपदिशेति संबन्धः ॥ १५ ॥
7165
7166 वासनाजालवलिता दुःखकण्टकसंकुला [संकटसंकुला] ।
7167 निपातोत्पातबहुला भीमरूपाऽज्ञताटवी ॥ १६ ॥
7168
7169 उपदेशाविलम्बाय स्वस्य दुःखातिशयासहिष्णुतानिर्वेदुत्कण्ठ्ये दर्शयति ##-
7170 वेष्टिता । निपतन्त्युत्पतन्ति चानयोरिति निपातोत्पातौ निम्नोन्नतप्रदेशौ
7171 विपत्संपदौ निरयस्वर्गौ वा । अज्ञतैवाटवी अरण्यम् ॥ १६ ॥
7172
7173 क्रकचाग्रविनिष्पेषं सोढुं शक्नोम्यहं मुने ।
7174 संसारव्यवहारोत्थं नाशाविषयवैशसम् ॥ १७ ॥
7175
7176 क्रकचस्याग्रैर्दशनैर्विनिष्पेषं घर्षणम् । आशाविषयाभ्यां ततं

7177 वैशसं विशसनम् ॥ १७ ॥
7178
7179 इदं नास्तीदमस्तीति व्यवहाराञ्जनभ्रमः ।
7180 धुनोतीदं चलं चेतो रजोराशिमिवानिलः ॥ १८ ॥
7181
7182 इदमनिष्टमस्तीति तन्निवारणे इदमिष्टं नास्तीति तत्संपादने च
7183 प्रवृत्तिनिवृ-त्यादिव्यवहाररूपोऽविद्याञ्जनप्रयुक्तो भ्रमः स्वभावत
7184 एव चलं चेतः रजोराशिमनिलो वायुरिव धुनोति कम्पयति ।
7185 हर्षविषादचिन्तादिभिर्विशारयती-त्यर्थः । तूलराशिमिवानलः इति पाठे तु
7186 दाहो लक्ष्यते ॥ १८ ॥
7187
7188 तृष्णातन्तुलवप्रोतं जीवसंचयमौक्तिकम् ।
7189 चिदच्छाङ्गतया नित्यं विकसच्चित्तनायकम् ॥ १९ ॥
7190
7191 तृष्णैव तन्तुलवः सूक्ष्मतन्तुस्तत्र प्रोतं गुम्भितम् । जीवसंचया
7192 जीवसमूहा एव मौक्तिकानि यस्मिन् । साक्षिचिद्व्याप्त्या तैजसत्वेन स्वच्छ##-
7193 शिखामणिर्यस्मिंस्तथाविधम् ॥ १९ ॥
7194
7195 संसारहारमरतिः कालव्यालविभूषणम् ।
7196 त्रोटयाम्यहमक्रूरं वागुरामिव केसरी ॥ २० ॥
7197
7198 कालो मृत्युः स एव व्यालः षिङ्गस्तस्य विभूषणमलंकारभूतं
7199 संसारलक्षणं हारं [मुक्तासरं] मुक्ताहारमरतिर्वैराग्यादि##-
7200 स्यात्तथा वागुरां केसरीव त्रोटयामि । भवदुपदेशजन्यज्ञानेनेति भावः ॥
7201 २० ॥
7202
7203 नीहारं हृदयाटव्यां मनस्तिमिरमाशु मे ।
7204 केन विज्ञानदीपेन भिन्धि तत्त्वविदांवर ॥ २१ ॥
7205
7206 हृदयं हृत्पुण्डरीकस्थानं तदेव दुष्प्रवेशत्वादटवी । तस्य जाड्या##-
7207 मनसस्तिमिरमिव विवेकनेत्रपिधायकमज्ञानं केन सुखकरेण शिर इव
7208 प्रधानेन वा विज्ञायते अनेनेति विज्ञानमुपदेशः स एव दीपयति दिश इति दीपः
7209 सूर्यस्तेन भिन्धि विदारय ॥ २१ ॥
7210
7211 विद्यन्त एवेह न ते महात्मन् दुराधयो न क्षयमाप्नुवन्ति ।
7212 ये सङ्गमेनोत्तममानसानां निशातमांसीव निशाकरेण ॥ २२ ॥
7213
7214 ये उत्तममानसानां सङ्गेन तत्फलेनोपदेशेन क्षयं नाप्नुवन्ति ते तथा##-
7215
7216 आयुर्वायुविघट्टिताभ्रपटलीलम्बाम्बुवद्भङ्गुरं
7217 भोगा मेघवितानमध्यविलसत्सौदामिनीचञ्चलाः ।
7218 लोलायौवनलालनाजलरयश्चेत्याकलय्य द्रुतं
7219 मुद्रैवाद्य दृढार्पिता ननु मया चित्ते चिरं शान्तये ॥ २३ ॥
7220
7221 ननु शान्त्यादिदार्ढ्यशून्ये बाले त्वयि कृतोऽप्युपदेशः कथं फलिष्यती##-
7222 बहुष्वधिकारलिप्सुषु सत्सु येषु लोभकातरतादिदोषै राष्ट्रे पीडापराक्रम##-
7223 तृष्णाचापलादिदोषैश्चित्तदुःखनाशाद्यनर्थमाकलय्य तानि विहाय
7224 सर्वदोषरहितायै समर्थायै च शान्तये प्रशमायैव दृढा
7225 [अचञ्चला] अचला चित्ते विषये अधिकारमुद्रा अर्पितेत्यर्थः ।
7226 वायुविघट्टितायामभ्रपटल्यां लम्बमानं यदम्बु तद्वद्भङ्गुरम् ।
7227 मेघानां वितानो विस्तारो वितानमिव विस्तृता वा मेघास्तेषां मध्ये विलसन्ती
7228 सौदामिनी विद्युदिव चञ्चलाः यौवनसंबन्धिन्यो लालनाश्चित्तविनोदाः ।

7229 इवार्थे च शब्दः। जलस्य रयो वेग इव लोलाः। तुल्ययोरेवोत्सर्गतः समुच्चयो
7230 दृष्ट इत्यर्थाद्वा इवार्थलाभः। द्रुतं शीघ्रमाकलय्य विचार्य॥ २३॥
7231
7232 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे
7233 सकलपदार्थानास्थाप्रतिपादनं नामैकोनत्रिंशः सर्गः॥ २९॥
7234
7235 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे
7236 सकलपदार्थानास्थाप्रतिपादनं नामैकोनत्रिंशः सर्गः॥ २९॥
7237
7238 त्रिंशः सर्गः ३०
7239
7240 श्रीराम उवाच।
7241
7242 एवमभ्युत्थितानर्थशतसंकटकोटरे।
7243 जगदालोक्य निर्मग्नं मनो मननकर्गमे॥ १॥
7244
7245 स्वचित्तोद्वेगमेवेह हेतुभिः संप्रकाशयन्।
7246 तन्निरासाय विश्रान्त्यै प्रार्थयत्युपदेशनम्॥
7247
7248 स्वचित्तोद्वेगमेव हेतुभिः प्रपञ्चयन्विश्रान्तिहेतुतत्त्वोपदेशमेव विस्तरेण
7249 प्रार्थयति - एवमित्यादिना। एवमुक्तप्रकारैरनर्थशतैः संकटे निबिडिते
7250 अर्थात्संसारान्धकूपस्य कोटरे छिद्रे जगज्जीवजातं निर्मग्नमालोक्य मनो
7251 मननमत्र चिन्ता तल्लक्षणे कर्दमे निमग्नं ममेति शेषः॥ १॥
7252
7253 मनो मे भ्रमतीवेदं संभ्रमश्चोपजायते।
7254 गात्राणि परिकम्पन्ते पत्राणीव जरत्तरोः॥ २॥
7255
7256 संभ्रमो भयम्। जरत्तरोर्जीर्णवृक्षस्य॥ २॥
7257
7258 अनाप्तोत्तमसंदोषधैर्योत्सङ्गाकुला मतिः।
7259 शून्यास्पदा बिभेतीह बालेवाल्पबलेश्वरा॥ ३॥
7260
7261 न आप्त उत्तमसंतोषो धैर्यलक्षणो मातुरुत्सङ्गो यया सा मतिः शिशुस्था##-
7262 यथारण्यादौ बिभेति तद्वत्॥ ३॥
7263
7264 विकल्पेभ्यो लुठन्त्येताश्चान्तःकरणवृत्तयः।
7265 श्वभ्रेभ्य इव सारङ्गास्तुच्छालम्बविडम्बिताः॥ ४॥
7266
7267 तुच्छैरालम्बैर्विषयैर्विडम्बिता वञ्चिता अन्तःकरणवृत्तयो विकल्पेभ्यो
7268 विक्षेपदुःखेभ्यो विक्षेपदुःखानि प्राप्तुम्। क्रियार्थोपपदस्य च कर्मणि
7269 स्थानिनः इति कर्मणि चतुर्थी। लुठन्ति गच्छन्ति। दुःखगर्ते पतन्तीति यावत्।
7270 यथा सारङ्गा मृगास्तुच्छलम्बमानतृणादिवञ्चिताः श्वभ्रेषु पतन्ति
7271 तद्वत्॥ ४॥
7272
7273 अविवेकास्पदा भ्रष्टाः कष्टे रूढा न सत्पदे।
7274 अन्धकूपमिवापन्ना [अवकारा] वराकाश्चक्षुरादयः॥ ५॥
7275
7276 तत्र हेतुमाह - अविवेकेति। न विद्यते विवेको येषां पुरुषाणां
7277 तदास्पदास्त-दाश्रिताश्चक्षुरादयो यतः कष्टे संसारस्थान एव
7278 रूढाश्चिरपरिचयेन दृढवासिता नतु सत्पदे परमार्थवस्तुनीत्यर्थः॥ ५॥
7279
7280 नावस्थितिमुपायाति न च याति यथेप्सितम्।

7281 चिन्ता जीवेश्वरायत्ता [श्वरायाता] कान्तेव प्रियसद्मनि ॥ ६ ॥
7282
7283 जीव एवेश्वरः पतिस्तस्मिन्नायत्ता निबद्धा। अवस्थितिमुपरमम्। यथेप्सितं
7284 विषयं देशं च। याति प्राप्नोति ॥ ६ ॥
7285
7286 जर्जरीकृत्य वस्तूनि त्यजन्ती बिभ्रती तथा।
7287 मार्गशीर्षान्तवल्लीव धृतिर्विधुरताम् गता ॥ ७ ॥
7288
7289 वस्तूनि विषयान् पर्णादींश्च विवेकहिमोपघातात्त्यजन्ती रसावशेषात्कानि##-
7290
7291 अपहस्तितसर्वार्थमनवस्थितिरास्थिता।
7292 गृहीत्वोत्सृज्य चात्मानं भवस्थितिरवस्थिता ॥ ८ ॥
7293
7294 तामन्तरालावस्थामेव क्लेशावहां स्वस्य प्रपञ्चयति - अपहस्तितेति। उक्ता
7295 चित्तस्यानवस्थितिरस्थिरता। हस्तादपगमिताः सर्वे सांसारिकाः पारमार्थि##-
7296 स्वविवेकमात्रेणार्धप्रबोधादर्धमुत्सृज्यार्धं च गृहीत्वाऽव##-
7297
7298 चलिताचलितेनान्तरवष्टम्भेन मे मतिः।
7299 दरिद्रा छिन्नवृक्षस्य मूलेनेव विडम्ब्यते ॥ ९ ॥
7300
7301 अन्तरवष्टम्भ आत्मतत्त्वनिश्चयावलम्बनं तेन दरिद्रा तद्रहिता।
7302 आत्मतत्त्वनिश्चये संशयितेति यावत्। मे मतिश्छिन्नवृक्षस्य मूलेन
7303 स्थाणुना कर्त्रा यथा [मदान्धकारे] महान्धकारे स्थाणुर्वा चोरो
7304 वेति सत्यासत्यकोटित्वाच्चलिताचलितेन संशयेन हेतुना मतिर्विडम्ब्यते
7305 तद्वदिदं तत्त्वं स्यादिदं वा तत्त्वमिति संशयेन विडम्ब्यत इत्यर्थः।
7306 अथवा उक्तलक्षणा मे
7307 मतिर्दोषदर्शनजन्यवैराग्यदार्ढ्याद्रागेभ्यश्चलितेन
7308 [द्भोगेभ्यः] अपगतसंशयेन मूलाज्ञानानुच्छेदादचलितेन च
7309 वासनाप्ररोहेण हेतुना छिन्नवृक्षस्य मूलेन मूलानुच्छेदात्पुनः
7310 प्ररोहोन्मुखेन वोडम्ब्यते अनुक्रियत इवेत्यर्थः ॥ ९ ॥
7311
7312 चेतश्चञ्चलमाभोगि भुवनान्तर्विहारि च।
7313 न संभ्रमं जहातीदं स्वविमानमिवामराः ॥ १० ॥
7314
7315 स्वत एव चञ्चलमाभोगि नानाभोगवासनाविस्तीर्णं भुवनान्तर्विहरणेन च
7316 दृढाभ्यस्तचापलमतो बलान्निगृह्यमाणमपि तत्त्वज्ञानावष्टम्भा##-
7317
7318 अतोऽतुच्छमनायासमनुपाधि गतभ्रमम्।
7319 किं तत्स्थितिपदं साधो यत्र शोको न विद्यते ॥ ११ ॥
7320
7321 अतुच्छं परमार्थसत्यम्। जन्ममरणायासरहितं देहाद्युपाधिशून्यम्।
7322 भ्रमहेतूच्छेदाद्गतभ्रमम्। स्थितिपदं विश्रान्तिस्थानम्। यत्र गत्वा
7323 यत्प्राप्य ॥ ११ ॥
7324
7325 सर्वारम्भसमारुढाः सुजना जनकादयः।
7326 व्यवहारपरा एव कथमुत्तमतां गताः ॥ १२ ॥
7327
7328 वयमिव सर्वेषु दृष्टादृष्टफलारम्भेषु। परास्तत्पराः।
7329 तदनुकूललौकि-कवैदिकव्यवहारपरा एवेत्यर्थः ॥ १२ ॥
7330
7331 लग्नेनापि किलाङ्गेषु बहुधा बहुमानद।
7332 कथं संसारपङ्केन पुमानिह न लिप्यते ॥ १३ ॥

7333
7334 संसारपङ्केन पुण्यपापरूपेण शोकमोहादिना च || १३ ||
7335
7336 कां दृष्टिं समुपाश्रित्य भवन्तो वीतकल्मषाः |
7337 महान्तो विचरन्तीह जीवन्मुक्ता महाशयाः || १४ ||
7338
7339 लोभयन्तो भयायैव विषयाभोगभोतिनः |
7340 भङ्गुराकारविभवाः कथमायान्ति भव्यताम् || १५ ||
7341
7342 विषयाभोगा विषयवेषा भोगिनः सर्पाः | भङ्गुरौ नश्वरौ कुडिलौ
7343 चाकारविभवौ येषाम् | सर्पपक्षे विभवो विषसामर्थ्यम् | भव्यतां
7344 मङ्गलताम् || १५ ||
7345
7346 मोहमातङ्गमृदिता कलङ्ककलितान्तरा |
7347 परं प्रसादमायाति शेमुषीसरसी कथम् || १६ ||
7348
7349 मृदिता विलोडिता | कलङ्काः कामादयः कर्दमशैवलादयश्च | प्रसादं
7350 नैर्मल्यम् | शेमुषी प्रज्ञा सैव सरसी महत्सरः | दक्षिणापथे महान्ति
7351 सरांसि सरस्य इत्युच्यन्ते इति महाभाष्योक्तेः || १६ ||
7352
7353 संसार एव निवहे जनो व्यवहरन्नपि |
7354 न बन्धं कथमाप्नोति पद्मपत्रे पयो यथा || १७ ||
7355
7356 निवहे प्रवाहरूपे || १७ ||
7357
7358 आत्मवत्तृणवच्चेदं सकलं कलयञ्जनः |
7359 कथमुत्तमतामेति मनोमन्मथमस्पृशन् || १८ ||
7360
7361 परदुःखादावात्मवत्स्वदुःखादौ तृणवत् | अन्तर्दृष्ट्या आत्मवत्
7362 बहिर्दृष्ट्या तृणवत् | कलयन्पश्यन् | मनसो मन्मथं कामादिवृत्तिम् ||
7363 १८ ||
7364
7365 कं महापुरुषं [उपयातं] पारमुपायातं महोदधेः |
7366 आचारेणानुसंस्मृत्य जनो याति न दुःखिताम् || १९ ||
7367
7368 महापुरुषं जीवन्मुक्तम् | महदत्राज्ञानं तल्लक्षणादुदधेः | आचारेण
7369 चरित्रेणानु लक्षीकृत्य स्मृत्वा तद्वदेव स्मृत्वा आचर्येत्यर्थः || १९ ||
7370
7371 किं तस्यादुचितं श्रेयः किं तस्यादुचितं फलम् |
7372 वर्तितव्यं च संसारे कथं नामासमञ्जसे || २० ||
7373
7374 उचितमनश्वरत्वात्प्राप्तुं योग्यम् | श्रेयो मोक्षः | फलं कर्मोपासनादेः ||
7375 २० ||
7376
7377 तत्त्वं कथय मे किंचिद्येनास्य जगतः प्रभो |
7378 वेद्मि पूर्वापरं धातुश्चेष्टितस्यानवस्थितेः || २१ ||
7379
7380 येन उपदेशेन | अनवस्थितेः अव्यवस्थितस्य | असमस्थितेः इति पाठे विषमस्थितेः
7381 | धातुश्चेष्टितस्य जगतः | पूर्वापरमाद्यन्तयोरविशिष्टं वस्तु || २१ ||
7382
7383 हृदयाकाशशशिनश्चेतसो मलमार्जनम् |
7384 यथा मे जायते ब्रह्मंस्तथा निर्विघ्नमाचर || २२ ||

चेतसः साभासान्तःकरणस्य। मलमज्ञानम्॥ २२॥

किमिह स्यादुपादेयं किंवा हेयमथेतरत्।
कथं विश्रान्तिमायातु चेतश्चपलमद्रिवत्॥ २३॥

इतरत् अहेयमनुपादेयं च॥ २३॥

केन पावनमन्त्रेण दुःसंसृतिविषूचिका।
शाम्यतीयमनायासमायासशतकारिणी॥ २४॥

रोगाणां पापमूलत्वात्तन्निरासद्वारा पावनेन पवनदोषोपशमन##-

कथं शीतलतामन्तरानन्दतरुमञ्जरीम्।
पूर्णचन्द्र इवाक्षीणां [भृशं साक्षाद्द्या]
भृशमासादयाम्यहम्॥ २५॥

आनन्दतरोर्मञ्जरीमिव स्थितां शीतलताम्। भृशं दैशिकपरिच्छेद##-

प्राप्यान्तः पूर्णतां पूर्णो न शोचामि यथा पुनः।
सन्तो भवन्तस्तत्त्वज्ञास्तथेहोपदिशन्तु माम्॥ २६॥

अनुत्तमानन्दपदप्रधानविश्रान्तिरिक्तं सततं महात्मन्।
कदर्थयन्तीह भृशं विकल्पाः श्वानो वने देहमिवाल्पजीवम्
[आत्मजीवं]॥ २७॥

आनन्दपदे प्रधानविश्रान्तिरात्यन्तिकं स्थैर्यं तेन रिक्तं शून्यम्।
कदर्थयन्ति पीडयन्ति॥ २७॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे
प्रयोजनकथनं नाम त्रिंशः सर्गः॥ ३०॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे
प्रयोजनकथनं नाम त्रिंशः सर्गः॥ ३०॥

एकत्रिंशः सर्गः ३१

श्रीराम उवाच।

प्रोच्चवृक्षचलत्पत्रलम्बाम्बुलवभङ्गुरे।
आयुषीशानशीतांशुकलामृदुनि देहके॥ १॥

संसारे जीवितं प्रावृड्घनदुर्जीवितोपमम्।
येन सौख्यपदं याति स उपायोऽत्र पृच्छ्यते॥

करिष्यमाणप्रश्नोपोद्घातत्वेन संसारे जीवितं प्रावृड्घनत्वेन कल्पयति
- प्रोच्चेत्यादिषड्भिः। सर्वेषां सप्तम्यन्तानां क उपाय इत्यादिभिः
संबन्धः। प्रोच्चः प्रांशुः। लम्बो लम्बमानोऽम्बुकण इव भङ्गुरे।
यद्यपि हेमन्तेऽप्येतदस्ति तथापि वर्षास्वासारपातादाशुतरभङ्गुरतेति
विशेषः। ईशानः शिवस्तद्भूषणशीतांशुः कलामात्रशेष इव मृदुन्यल्पे
। दुर्लक्ष्य इति यावत्। वर्षासु चन्द्र एव दुर्लक्ष्यस्तत्रापि कलामात्रशेषः
सुतरामिति भावः। इदमप्यायुष एव विशेषणम्। कुत्सितेऽल्पे वा देहके [देहे

7437 इति क्वचिन्न पठ्यते] देहे ॥ १ ॥
7438
7439 केदारविरटद्भेककण्ठत्वक्कोणभङ्गुरे ।
7440 वागुरावलये जन्तोः सुहृत्सुजनसंगमे ॥ २ ॥
7441
7442 केदारेषु शालिक्षेत्रेषु । कोणोऽत्र मध्यभागः स इव भङ्गुरे अस्थिरे देहके इति
7443 पूर्वेण संबन्धः । सुहृदां मित्राणां सुजनानां आप्तबन्धु##-
7444
7445 वासनावातवलिते कदाशातडिति स्फुटे ।
7446 मोहोग्रमिहिकामेघे घनं स्फूर्जति गर्जति ॥ ३ ॥
7447
7448 वासनालक्षणेन पुरोवातेन वलिते आवेष्टिते मोहोग्रमिहिकामेघे इत्यन्वयः ।
7449 मिहिकातुषारो मे घानामारम्भावस्था । घनं निरन्तरम् । गर्जनं
7450 सामान्यतः स्फूर्जनं त्वशनिपातपर्यन्तमित्यपौनरुक्त्यम् ॥ ३ ॥
7451
7452 नृत्यत्युत्ताण्डवं चण्डे लोले लोभकलापिनि ।
7453 सुविकासिनि सास्फोटे ह्यनर्थकुटजद्रुमे ॥ ४ ॥
7454
7455 लोले चञ्चले । कलापिनि मयूरे । आस्फोटः कलहः कलिकाः पुटभेदश्च ॥ ४ ॥
7456
7457 क्रूरे कृतान्तमाजरि सर्वभूताखुहारिणि ।
7458 अश्रान्तस्यन्दसंचारे [स्पन्द] कुतोऽप्युपरिपातिनि ॥ ५ ॥
7459
7460 सर्वभूतान्येवाखवः । वर्षासु बहुजन्तुभक्षणान्मार्जाराणां बलातिशयः
7461 प्रसिद्धः । स्यन्दो जलप्रवाहः । कुतो भूमितः ऐ शब्दान्न-भस्तश्च
7462 कुतोऽप्यतर्कितस्थानादिति वा ॥ ५ ॥
7463
7464 क उपायो गतिः का वा का चिन्ता कः समाश्रयः ।
7465 केनेयमशुभोदर्का न भवेज्जीविताटवी ॥ ६ ॥
7466
7467 आरण्यकवातवर्षादिपीडानिवृत्तौ छत्रच्छदिः कटादिरुपायाः ।
7468 रसगुटिकौ-षधलेपादिना द्रुतं निर्दिष्टदूरदेशे गतिः ।
7469 संकटोत्तरकमन्त्रदेवता-देश्चिन्ता । गिरिगुहादेः समाश्रयो वा
7470 साधनानि यथा लोके प्रसिद्धानि तथा अत्रापि पृच्छ्यन्ते । अशुभमेवोदर्कं
7471 औत्तरकालिकं फलं यस्यास्तथाविधा न भवेत् ॥ ६ ॥
7472
7473 न तदस्ति पृथिव्यां वा दिवि देवेषु वा क्वचित् ।
7474 सुधियस्तुच्छमप्येतद्यन्नयन्ति न रम्यताम् ॥ ७ ॥
7475
7476 सुधियस्तपोज्ञानशक्त्यूर्जितबुद्ध्यो भवादृश्यास्तुच्छमतिफल्ग्वपि
7477 यद्वस्तु रम्यतां न नयन्ति । नेतुमसमर्था इति यावत् । तदेतत्पृथिव्यां
7478 मनुष्यादिषु दिवि देवेषु वा नास्ति । यतस्त्रिशङ्कोस्तादृशो
7479 गुरुशापोऽप्याकल्पभोग्यस्वर्ग-परिणतः शुनःशेपस्य च
7480 मृत्युर्दीर्घायुषि [दीर्घायुष्यपर्यवसित] पर्यवसित इति भावः ॥ ७ ॥
7481
7482 अयं हि दग्धसंसारो नीरन्ध्रकलनाकुलः ।
7483 कथं सुस्वादुतामेति नीरसो मूढतां विना ॥ ८ ॥
7484
7485 नीरन्ध्रं निरन्तरं दुःखकलनया आकुलः अतएव नीरसः । सुस्वादुतां
7486 सरसताम् । मूढतां विना मूढतानिरासद्वारा । कथं केनोपायेन
7487 सुस्वादुतामेतीत्यर्थः ॥ ८ ॥
7488

7489 आशाप्रतिविपाकेन क्षीरस्नानेन रम्यताम् |
7490 उपैति पुष्पशुभ्रेण मधुनेव वसुंधरा || ९ ||
7491
7492 सर्वदुःखनिदानभूताया आशायाः प्रसिद्धस्वभावप्रतिकूलो विपाकः
7493 पूर्णकामता स एव क्षीरस्नानम् | उपैति संसार इति शेषः | पुष्पैः शुभ्रेण
7494 रम्येण मधुना वसन्तेन || ९ ||
7495
7496 अपमृष्टमलोदेति क्षालनेनामृतद्युतिः |
7497 मनश्चन्द्रमसः केन तेन कामकलङ्कितात् || १० ||
7498
7499 कामेन कलङ्कितान्मनश्चन्द्रमसः | तेन विद्वदनभवप्रसिद्धेन केन
7500 क्षालनेनापकृष्टकामादिमला अमृतद्युतिराह्लादचन्द्रिका उदेतीत्यन्वयः ||
7501 १० ||
7502
7503 दृष्टसंसारगतिना दृष्टादृष्टविनाशिना |
7504 केनेव व्यवहर्तव्यं संसारवनवीथिषु || ११ ||
7505
7506 दृष्टा संसारस्य गतिरनर्थपर्यवसानलक्षणा येन | दृष्टादृष्टे
7507 ऐहिकामुष्मिकभोगौ [विवेकेति क्वचिन्न]
7508 विवेकवैराग्यबोधदार्ढ्याभ्यां विनाशितवता केन महापुरुषेणेव
7509 व्यवहर्तव्यमस्माभिस्तमुदाहरेति शेषः | केनैव इति पाठे व्यवहारेणेति
7510 शेषः || ११ ||
7511
7512 रागद्वेषमहारोगा भोगपूगा विभूतयः |
7513 कथं जन्तुं न बाधन्ते संसाराणवचारिणम् || १२ ||
7514
7515 कथं च धीरवर्याग्नौ पततापि न दह्यते |
7516 पावके पारदेनेव रसेन रसशालिना || १३ ||
7517
7518 धीर्वर्येति संबोधनम् | अग्नौ अग्निवद्दाहके संसारे | रसो ज्ञानामृतं तेन
7519 शालिना || १३ ||
7520
7521 यस्मात्किल जगत्यस्मिन्व्यवहारक्रिया [क्रियां विना] विना |
7522 न स्थितिः संभवत्यब्धौ पतितस्याजला यथा || १४ ||
7523
7524 ननु यदि व्यवहारद्दुःखं तर्हि संत्यज्यतां तत्राह - यस्मादिति |
7525 व्यवहाराणां क्रियाः संपादनानि विना | अब्धौ पतितस्य जातस्य
7526 मत्स्यादेर्यथा अजला स्थितिर्न संभवति तद्वत् || १४ ||
7527
7528 रागद्वेषविनिर्मुक्ता सुखदुःखविवर्जिता |
7529 कृशानोर्दाहहीनेव शिखा नास्तीह सत्क्रिया || १५ ||
7530
7531 नन्वस्तु दुर्व्यवहारे दुःखं सत्क्रियायां तु न तत्संभावनेत्या##-
7532
7533 मनोमननशालिन्याः सत्ताया भुवनत्रये |
7534 क्षयो युक्तिं विना नास्ति ब्रूत तामलमुत्तमाम् || १६ ||
7535
7536 तिष्ठतु बाह्यव्यवहारो मनश्चाञ्चल्यमेव परं दुःखम् अतस्तच्चिकित्सैव
7537 वक्तव्येत्याह - मन इति | मनसो मननं विषयावलम्बस्तच्छालिन्येव
7538 सता-विषयावलम्बक्षय एव | मनःसत्ताक्षयः स च
7539 सर्वविषयबाधकतत्त्व-बोधहेतुयुक्त्युपदेशं विना नास्ति | अतस्तां
7540 युक्तिमलमत्यर्थं यावद्-दोधोदयं ब्रूत | उपदिशन्त्वित्यर्थः || १६ ||

7541
7542 व्यवहारवतो युक्त्या दुःखं नायाति मे यया।
7543 अथवा व्यवहारस्य ब्रूत तां युक्तिमुत्तमाम् ॥ १७ ॥
7544
7545 तत्कथं केन वा किं वा कृतमुत्तमचेतसा।
7546 पूर्वं येनैति विश्रामं परमं पावनं मनः ॥ १८ ॥
7547
7548 तत् युक्त्या मोहनिरसनं केन वा पूर्वं कृतं कथं केन प्रकारेण कृतं
7549 तेन किं वा प्राप्तं तत्त्वं यथा जानासि तथा ब्रूहीत्युत्तरेण संबन्धः ॥ १८ ॥
7550
7551 यथा जानासि भगवंस्तथा मोहनिवृत्तये।
7552 ब्रूहि मे साधवो येन नूनं निर्दुःखतां गताः ॥ १९ ॥
7553
7554 अथवा तादृशी युक्तिर्यदि ब्रह्मन्न विद्यते।
7555 न वक्ति मम वा कश्चिद्विद्यमानामपि स्फुटम् ॥ २० ॥
7556
7557 तादृशयुक्त्यलाभे स्वस्य देहत्यागान्तं प्रायोपवेशनमेव न
7558 जीवनव्यवहारादय इत्याह - अथवेत्यादिसप्तभिः ॥ २० ॥
7559
7560 स्वयं चैव न चाप्नोमि तां विश्रान्तिमनुत्तमाम्।
7561 तदहं त्यक्तसर्वेहो निरहंकारतां गतः ॥ २१ ॥
7562
7563 स्वयमेव विचार्य वा नाप्नोमि चेत्तर्हि ॥ २१ ॥
7564
7565 न भोक्ष्ये न पिबाम्यम्बु नाहं परिदधेऽम्बरम्।
7566 करोमि नाहं व्यापारं स्नानदानाशनादिकम् ॥ २२ ॥
7567
7568 न च तिष्ठामि कार्येषु संपत्स्वापद्दशासु [संपत्स्वापत्सु चैव
7569 हि]   च।
7570 न किंचिदपि वाञ्छामि देहत्यागादृते मुने ॥ २३ ॥
7571
7572 केवलं विगताशङ्को निर्ममो गतमत्सरः।
7573 मौन एवेह तिष्ठामि लिपिकर्मस्विवार्पितः ॥ २४ ॥
7574
7575 मौने वागादिसर्वव्यवहाराभावे। लिपिकर्मसु चित्रक्रियासु। अर्पितो          लिखितः ॥
7576 २४ ॥
7577
7578 अथ क्रमेण संत्यज्य प्रश्वासोच्छ्वाससंविदः।
7579 संनिवेशं त्यजामीममनर्थं देहनामकम् ॥ २५ ॥
7580
7581 संनिवेशमवयवसंस्थानरूपम् ॥ २५ ॥
7582
7583 नाहमस्य न मे नान्यः शाम्याम्यस्नेहदीपवत्।
7584 सर्वमेव परित्यज्य त्यजामीदं कलेवरम् ॥ २६ ॥
7585
7586 न मे इदमिति शेषः। अन्योऽपि न मे। अस्नेहो निस्तैलः ॥ २६ ॥
7587
7588 वाल्मीकिरुवाच।
7589
7590 इत्युक्तवानमलशीतकराभिरामो
7591 रामो महत्तरविचारविकासिचेताः।
7592 रूष्णीं बभूव पुरतो महतां घनानां

केकारवं श्रमवशादिव नीलकण्ठः ॥ २७ ॥

शीतकरश्चन्द्रः । इति उक्तवान्सन् महतां गुरूणां वसिष्ठादीनां
पुरतस्तूष्णीं बभूव । यथा केकारवमुक्तवान्नीलकण्ठो मयुरो घंनानां
पुरतस्तूष्णीं भवति तद्वत् ॥ २७ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे
राघवप्रश्नो नामैकत्रिंशः सर्गः ॥ ३१ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे
राघवप्रश्नो नामैकत्रिंशः सर्गः ॥ ३१ ॥

द्वात्रिंशः सर्गः ३२

श्रीवाल्मीइरुवाच ।

वदत्येवं मनोमोहविनिवृत्तिकरं वचः ।
रामे राजीवपत्राक्षे तस्मिन्राजकुमारके ॥ १ ॥

रामवाक्यं श्रुतवतां वर्ण्यते भूरिविस्मयः ।
नराणाममराणां च पुष्पवर्षश्च स्वाङ्युतः ॥

स्वविवेकसम्यग्विचारमूलमिदं श्रीरामवचनजातं स्वतो विचारा##-
न्यायसिद्धं देवादीनामपि वक्ष्यमाणब्रह्मविद्याधिकारं दर्शयितुं
तत्कृतां श्रीरामवाक्यप्रशंसां तत्समागममहोत्सवं च वर्णयितु##-
वक्ष्यमाणविष्मयरोमाञ्चादिविशिष्टा बभूवुरित्युत्तरत्रान्वयः ॥ १ ॥

सर्वे बभूवुस्तत्रस्था विस्मयोत्फुल्ललोचनाः ।
भिन्नाम्बरा देहरुहैर्गिरः श्रोतुमिवोद्धुरैः ॥ २ ॥

उक्ता रामगिरः श्रोतुमुद्धुरैरुत्सारितजाड्यभारैरुत्थितैरिति यावत् । देहरुहै
रोमभिर्भिन्नाम्बराश्छिद्रितवस्त्रा इवेत्युत्प्रेक्षा ॥ २ ॥

विरागवासनापास्तसमस्तभववासनाः ।
मुहूर्तममृताम्भोधिवीचीविलुलिता इव ॥ ३ ॥

विरागवासनया अपास्ता समस्ता भवहेतुरागद्वेषादिवासना येषाम् ॥ ३ ॥

ता गिरो रामभद्रस्य तस्य चित्रार्पितैरिव ।
संश्रुता शृणुकैरन्तरानन्दपदपीवरैः ॥ ४ ॥

शृणुकैः श्रवणसमर्तैः । आनन्दस्य पदेन लक्ष्मणा पीवरैः पुष्टैः ॥ ४
। ।

वसिष्ठविश्वामित्राद्यैर्मुनिभिः संसदि स्थितैः ।
जयन्तधृष्टिप्रमुखैर्मन्त्रिभिर्मन्त्रकोविदैः ॥ ५ ॥

नृपैर्दशरथप्रख्यैः पौरैः पारशवादिभिः ।
सामन्तै राजपुत्रैश्च ब्राह्मणैर्ब्रह्मवादिभिः ॥ ६ ॥

[पर्श्वादय इति । पर्श्वादिगणे
परशुशब्दस्याभावात्तस्याकृतिगणत्वा-भावाच्चेदं विचारणीयम्]

पर्श्वादयो देशविशेषास्तद्राजादयः पारशवादयः। पर्श्वादित्वादण्॥ ६॥

तथा भृत्यैरमात्यैश्च पञ्जरस्थैश्च पक्षिभिः।
क्रीडामृगैर्गतस्पन्दैस्तुरङ्गैस्त्यक्तचर्वणैः॥ ७॥

कौसल्याप्रमुखैश्चैव निजवातायनस्थितैः।
संशान्तभूषणारावैरस्पन्दैर्वनितागणैः॥ ८॥

वातायनं गवाक्षः॥ ८॥

उद्यानवल्लिनिलयैर्विटङ्कनिलयैरपि।
अक्षुब्धपक्षततिभिर्विहङ्गैर्विरतारवैः॥ ९॥

विटङ्कः सौधाग्रकपोतपालिका॥ ९॥

सिद्धैर्नभश्चरैश्चैव तथा गन्धर्वकिन्नरैः।
नारदव्यासपुलहप्रमुखैर्मुनिपुङ्गवैः॥ १०॥

अन्यैश्च देवदेवेशविद्याधरमहोरगैः।
रामस्य ता विचित्रार्था महोदारा गिरः श्रुताः॥ ११॥

देवेशा दिक्पतयः। श्रुता इति सर्वत्र संबध्यते॥ ११॥

अथ तूष्णीं स्थितवति रामे राजीवलोचने।
तस्मिन्रघुकुलाकाशशशाङ्के शशिसुन्दरे॥ १२॥

रघुकुलमेवाकाशो निर्मलत्वात्तस्य शशाङ्के पूर्णचन्द्रे। पूर्णे हि शशौ
लक्ष्यते तर्हि कलङ्किताापि स्यादित्याशङ्क्याह - शशिसुन्दरे इति।
सौन्दर्याति-शयलाभाय पूर्णतोपलक्षणार्थं शशोपादानं न
स्वार्थमिति भावः॥ १२॥

साधुवादगिरा सार्धं सिद्धसार्थसमीरिता।
वितानकसमा व्योम्नः पौष्पी वृस्टिः पपात ह॥ १३॥

सिद्धग्रहणं मुमुक्षुदेवयोनिमात्रोपलक्षणम्। स्वार्थः सङ्घः॥ १३॥

मन्दारकोशविश्रान्तभ्रमद्वन्द्वनादिनी।
मधुरामोदसौन्दर्यमुदितोन्मदमानवा॥ १४॥

द्वन्द्व मिथुनम्। मुदिताः संतुष्टाः। उन्मदा अस्वाधीनचित्ताः॥ १४॥

व्योमवातविनुन्नेव तारकाणां परम्परा।
पतितमेव धरापीठे स्वर्गस्त्रीहसितच्छटा॥ १५॥

निनुन्ना पातिता। हसितच्छटा हास्यकान्तिः॥ १५॥

[वृष्टमूक] वृष्यमूककचन्मेघलवावलिरिव च्युता।
हैयंगवीनपिण्डानामीरितेव परम्परा॥ १६॥

वृष्या वर्षणशीला मूका गर्जनवर्जिता विदयुद्भिः कचन्तो दीप्ता ये
मेघास्तेषां लवावलिर्लेशसमूहः॥ १६॥

7697 हिमवृष्टिरिवोदारा मुक्ताहारचयोपमा।
7698 ऐन्दवी रश्मिमालेव क्षीरोर्मीणामिवाततिः॥ १७॥
7699
7700 किञ्जल्काम्भोजवलिता भ्रमद्भृङ्गकदम्बका।
7701 सीत्कारगायदामोदिमधुरानिललोलिता॥ १८॥
7702
7703 किञ्जल्कः केसरस्तत्प्रधानैरम्भोजैर्वलिता सहिता। जनानां स्पर्शसुखाभि##-
7704 ईषच्चालिता॥ १८॥
7705
7706 प्रभ्रमत्केतकीव्यूहा प्रस्फुरत्कैरवोत्करा।
7707 प्रपतत्कुन्दवलया चलत्कुवलयालया॥ १९॥
7708
7709 व्यूहादयः समूहार्थाः॥ १९॥
7710
7711 आपूरिताङ्गणरसा गृहाच्छादनचत्वरा।
7712 उग्द्रीवपुरवास्तव्यनरनारीविलोकिता॥ २०॥
7713
7714 रसा भूमिः। आपूरितानि चत्वरान्तानि यया। पुरवास्तव्यैः पुरवासिभिः॥ २०॥
7715
7716 निरभ्रोत्पलसंकाशव्योमवृष्टिरनाकुला।
7717 अदृष्टपूर्वा सर्वस्य जनस्य जनितस्मया॥ २१॥
7718
7719 निरभ्रमत एवोत्पलसंकाशं यद्व्योम ततः पतिता वृष्टिर्वर्णि (र्षि##?
7720
7721 अदृश्याम्बरसिद्धौघकरोत्करसमीरिता।
7722 सा मुहूर्तचतुर्भागं पुष्पवृष्टिः पपात ह॥ २२॥
7723
7724 मुहूर्तस्य चतुर्थभागोऽर्धघटिका तावत्कालं पपात। ह किल॥ २२॥
7725
7726 आपूरितसभालोके शान्ते कुसुमवर्षणे।
7727 इमं सिद्धगणालापं शुश्रुवुस्ते सभागताः॥ २३॥
7728
7729 आपूरिताः सभा तद्गता लोकाश्च येन। शान्ते उपरते सति॥ २३॥
7730
7731 आकल्पं सिद्धसेनासु भ्रमद्भिरभितोदिवम्।
7732 अपूर्वमिदमस्माभिः श्रुतं श्रुतिरसायनम्॥ २४॥
7733
7734 दिवमभितः स्वर्गस्य सर्वप्रदेशेषु श्रुतिरसायनं श्रोत्रामृतं
7735 वेदसारभूतं वा॥ २४॥
7736
7737 यदनेन किलोदारमुक्तं रघुकुलेन्दुना।
7738 वीतरागतया तद्धि वाक्पतेरप्यगोचरम्॥ २५॥
7739
7740 न गोचरा अर्था यस्मिंस्तथाविधम्॥ २५॥
7741
7742 अहो बत महत्पुण्यमद्यास्माभिरिदं श्रुतम्।
7743 वचो राममुखोद्भूतं महाह्लादकरं धियः॥ २६॥
7744
7745 बतेत्येताद्दशवाक्यश्रवणहीनं जन्म व्यर्थमिति खेदे॥ २६॥
7746
7747 उपशमामृतसुन्दरमादरादधिगतोत्तमतापदमेष यत्।
7748 कथितवानुचितं रघुनन्दनः सपदि तेन व्ययं प्रतिबोधिताः॥ २७॥

7749
7750 अधिगतायाः प्राप्तायाः जातिकुलचारित्र्यधर्माभिज्ञतादिभिरुत्तमतायाः
7751 सार्तह्क्यापादनात्पदं त्राणं लक्षणभूतं वा यद्वाक्यजातं कथित##-
7752
7753 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे
7754 नभश्चरसाधुवादो नाम द्वात्रिंशः सर्गः ॥ ३२ ॥
7755
7756 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे
7757 नभश्चरसाधुवादो नाम द्वात्रिंशः सर्गः ॥ ३२ ॥
7758
7759 त्रयस्त्रिंशः सर्गः ३३
7760
7761 सिद्धा ऊचुः ।
7762
7763 पावनस्यास्य वचसः प्रोक्तस्य रघुकेतुना ।
7764 निर्णयं श्रोतुमुचितं वक्ष्यमाणं महर्षिभिः ॥ १ ॥
7765
7766 अवतारोऽत्र सिद्धानां सभायामुपवर्ण्यते ।
7767 यथोचितोपविष्टैस्तै रामवाक्यप्रशंसनम् ॥
7768
7769 सिद्धैः कृतां रामवाक्यादिप्रशंसामेव महीकुर्वंस्तेषां प्रश्न##-
7770 सिद्धा ऊचुरित्यादिना । रघुशब्देन तद्वंशो लक्ष्यते तस्य
7771 केतुवत्प्रख्यापके-नेत्यर्थः ॥ १ ॥
7772
7773 नारदव्यासपुलहप्रमुखा मुनिपुङ्गवाः ।
7774 आगच्छताश्वविघ्नेन सर्व एव महर्षयः ॥ २ ॥
7775
7776 आशु आगच्छत अविघ्नेन । श्रोतुमिति शेषः । श्रेयांसि बहुविघ्नानि इति न
7777 विलम्बनमुचितमिति भावः ॥ २ ॥
7778
7779 [यतामः] पतामः परितः पुण्यामेतां दाशरथीं सभाम् ।
7780 नीरन्ध्रां कनकोद्द्योतां पद्मिनीमिव षट्पदाः ॥ ३ ॥
7781
7782 नीरन्ध्रां पूर्णामर्थात्संपदेति गम्यते । अतएव
7783 कनकैरुद्द्योतामुत्कृष्ट-प्रकाशाम् । पद्मिनीपक्षे केसरश्रिया
7784 कनकैरिवोद्द्योतमानाम् ॥ ३ ॥
7785
7786 श्रीवाल्मीकिरुवाच ।
7787
7788 [इत्युक्ता सिद्धैरिति शेषः] इत्युक्ता सा समस्तैव व्योमवासनिवासिनी ।
7789 तां पपात सभां तत्र दिव्या मुनिपरम्परा ॥ ४ ॥
7790
7791 व्योम वासो निवासस्थानं येषां विमानानां तेषु निवासिनी । विस्तीर्णयां
7792 सभायां यत्र प्रदेशे रामादयस्तत्र ॥ ४ ॥
7793
7794 अग्रस्थितमनुत्सृष्टरणद्वीणं मुनीश्वरम् ।
7795 पयःपीनघनश्यामं व्यासमेव किलान्तरा ॥ ५ ॥
7796
7797 तामेव वर्णयत्यष्टभिः । अग्रे प्रमुखस्थाने स्थितम् । न उत्सृष्टा रणद्वीणा
7798 येन तं मुनीश्वरं नारदम् । पयसा जलेन पीनः पूर्णो घन इव श्यामं
7799 व्यासमेव च अन्तरा । तयोरन्तराले इत्यर्थः । अन्तरान्तरेण युक्ते इति षष्ठ्यर्थे
7800 द्वितीया । भृग्वङ्गिरः पुलस्त्यादिमुनिनायकैर्मण्डिता भूषितेत्युत्तरेण

7801 संबन्धः ॥ ५ ॥
7802
7803 भृग्विङ्गरः पुलस्त्यादिमुनिनायकमण्डिता।
7804 च्यवनोद्दालकोशीरशरलोमादिमालिता ॥ ६ ॥
7805
7806 भृग्वादीनि तेषां नामानि ॥ ६ ॥
7807
7808 परस्परपरामर्शदुःसंस्थानमृगाजिना।
7809 लोलाक्षमालावलया सुकमण्डलुधारिणी ॥ ७ ॥
7810
7811 परामर्शेन संघर्षणेन दुःसंस्थानानि विसंष्ठुलानि मृगाजिनानि
7812 यस्याः ॥ ७ ॥
7813
7814 तारावलिरिव व्योम्नि तेजः प्रसरपाटला।
7815 सूर्यावलिरिवान्योन्यं भासिताननमण्डना ॥ ८ ॥
7816
7817 तेजःप्रसरेण पाटला श्वेतरक्ता ॥ ८ ॥
7818
7819 रत्नावलिरिवान्योन्यं नानावर्णकृताङ्गिका।
7820 मुक्तावलिरिवान्योन्यं कृतशोभातिशायिनी ॥ ९ ॥
7821
7822 कौमुतीवृष्टिरन्येव द्वितीयेवार्कमण्डली।
7823 संभृतेवातिकालेन पूर्णचन्द्रपरम्परा ॥ १० ॥
7824
7825 अन्या प्रसिद्धविलक्षणा। अतिकालेन चिरेण संभृता एकत्र संचिता ॥ १० ॥
7826
7827 ताराजाल इवाम्भोदो [अम्भोधौ] व्यासो यत्र विराजते।
7828 तारौघ इव शीतांशुर्नारदोऽत्र विराजते ॥ ११ ॥
7829
7830 व्यास एकतः नारदोऽन्यत इति शेषः ॥ ११ ॥
7831
7832 देवेष्विव सुराधीशः पुलस्त्योऽत्र विराजते।
7833 आदित्य इव देवानामङ्गिरास्तु विराजते ॥ १२ ॥
7834
7835 अस्थास्यां सिद्धसेनायां पतन्त्यां नभसो रसाम्।
7836 उत्तस्थौ मुनिसंपूर्णा तदा दाशरथी सभा ॥ १३ ॥
7837
7838 रसां [सीमाभूमिम्] सभाभूमिम्। पतन्त्यां प्रविशन्त्याम् ॥ १३ ॥
7839
7840 मिश्रीभूता विरेजुस्ते नभश्चरमहीचराः।
7841 परस्परवृताङ्गाभा भासयन्तो दिशो दश ॥ १४ ॥
7842
7843 परस्परं वृताभिर्मिश्रिताभिरङ्गानामाभाभिः कान्तिभिः ॥ १४ ॥
7844
7845 वेणुदण्डावृतकरा लीलाकमलधारिणः।
7846 दुर्वाङ्कुराक्रान्तशिखाः सचूडामणिमूर्धजाः ॥ १५ ॥
7847
7848 लीलाकमलधारिणः केचिदिति यथायोग्यं शेषः ॥ १५ ॥
7849
7850 जटाजूटैश्च कपिला मौलिमालितमस्तकाः।
7851 प्रकोष्ठगाक्षवलया मल्लिकावलयान्विताः ॥ १६ ॥
7852

7853 मौलावग्रभागो मालितं मालाभिर्वेष्टितं मस्तकं शिरो येषाम् | प्रकोष्ठः
7854 करमूलम् || १६ ||
7855
7856 चीरवल्कलसंवीताः स्रक्कौशैयावगुण्ठिताः |
7857 विलोलमेखलापाशाश्चलन्मुक्ताकलापिनः || १७ ||
7858
7859 चीरवल्कलयोरवान्तरजात्या भेदः | कलापिनो भूषिताः | कर्मधारयाद##-
7860
7861 वसिष्ठविश्वामित्रौ तान्पूजयामासतुः क्रमात् |
7862 अर्घ्यैः पाद्यैर्वचोभिश्च सर्वानेव नभश्चरान् || १८ ||
7863
7864 वसिष्ठविश्वामित्रौ ते पूजयामासुरादरात् |
7865 अर्थ्यैः पाद्यैर्वचोभिश्च नभश्चरमहागणाः || १९ ||
7866
7867 सर्वादरेण सिद्धौघं पूजयामास भूपतिः |
7868 सिद्धौघो भूपतिं चैव कुशलप्रश्नवार्तया || २० ||
7869
7870 कुशलप्रश्नसहितया वार्तया तत्कालोचितकथया || २० ||
7871
7872 तैस्तैः प्रणयसंरम्भैरन्योन्यं प्राप्तसत्क्रियाः |
7873 उपाविशन्विष्टरेषु नभश्चरमहीचराः || २१ ||
7874
7875 प्रणयः प्रीतिस्तदुचितैर्दानमानादिसंरम्भैः | सत्क्रिया पूजा |
7876 विष्टरेष्वासनेषु || २१ ||
7877
7878 वचोभिः पुष्पवर्षेण साधुवादेन चाभितः |
7879 रामं ते पूजयामासुः पुरः प्रणतमास्थितम् || २२ ||
7880
7881 वचोभिरुचितकथालापैः | साधुवादेन प्रशंसनेन || २२ ||
7882
7883 आसांचक्रे च तत्रासौ राज्यलक्ष्मीविराजितः |
7884 विश्वामित्रो वसिष्ठश्च वामदेवोऽथ मन्त्रिणः || २३ ||
7885
7886 तत्र तेषां मध्ये | असौ रामः | विश्वामित्रादयः अथ आस्थिता उपविष्टा इति
7887 [सप्तमेन श्लोकार्धेनेति ज्ञेयम्] सप्तमेन संबन्धः || २३ ||
7888
7889 नारदो देवपुत्रश्च व्यासश्च मुनिपुङ्गवः |
7890 मरीचिरथ दुर्वासा मुनिराङ्गिरसस्तथा || २४ ||
7891
7892 क्रतुः पुलस्त्यः पुलहः शरलोमा मुनीश्वरः |
7893 वात्स्यायनो भरद्वाजो वाल्मीकिर्मुनिपुङ्गवः || २५ ||
7894
7895 उद्दालक ऋचीकश्च शर्यातिश्च्यवनस्तथा || २६ ||
7896
7897 एते चान्ये च बहवो वेदवेदाङ्गपारगाः |
7898 ज्ञातज्ञेया महात्मान आस्थितास्तत्र नायकाः || २७ ||
7899
7900 ज्ञातमवश्यं ज्ञेयमात्मतत्त्वं ज्ञेयमात्रं वा यैः | नायकाः
7901 श्रेष्ठाः || २७ ||
7902
7903 वसिष्ठविश्वामित्राभ्यां सह ते नारदादयः |
7904 इदमूचुरनूचाना राममानमिताननम् || २८ ||

7905
7906 अनूचाना आचार्याद्विधिवदधीतसाङ्गवेदाः। आनमिताननं विनयेन॥ २८॥
7907
7908 अहो बत कुमारेण कल्याणगुणशालिनी।
7909 वागुक्ता परमोदारा वैराग्यरसगर्भिणी॥ २९॥
7910
7911 तदुक्तीरेव प्रपञ्चयति अहो इत्यादिभिरष्टादशभिः। कल्याणैर्वक्ष्यमाण##-
7912
7913 परिनिष्ठितवक्तव्यं सबोधमुचितं स्फुटम्।
7914 उदारं प्रियमार्यार्हमविह्वलमपि स्फुटम्॥ ३०॥
7915
7916 विचार्येत्थमेवेति व्यवस्थापिताः परिनिष्ठिता वक्तव्यार्था यस्मिन्। सबोधं
7917 पदार्थतत्त्वबोधसहितं न कल्पनामात्रव्यवस्थापितार्थमिति यावत्। अतएव
7918 विद्वत्सभोचितम्। स्फूटं व्यक्तवर्णम्। उदारमुत्कृष्टबह्वाशयगर्भम्।
7919 प्रियं हृदयानन्दनम्। आर्याणां पूज्यानामर्हमुचितम्। अविह्वलं चित्त##-
7920
7921 अभिव्यक्तपदं स्पष्टमिष्टं स्पष्टं च तुष्टिमत्।
7922 करोति राघवप्रोक्तं वचः कस्य न विस्मयम्॥ ३१॥
7923
7924 अभिव्यक्तानि व्याकरणपरिशोधितानि पदानि यस्मिन्। इष्टं हितम्। स्पष्टं
7925 ग्रस्तादिदोषरहितम्। सुष्टिमत् तृष्णाक्षयप्रयुक्तासंतोषवत्॥ ३१॥
7926
7927 शतादेकतमस्यैव सर्वोदारचमत्कृतिः।
7928 ईप्सितार्थार्पणैकान्तदक्षा भवति भारती॥ ३२॥
7929
7930 सर्वेभ्यो वक्तृभ्यः सर्वांम्शेऽपि वा उदारा उत्कृष्टा चमत्कृतिः
7931 सहृदया-स्वादनीयं सौष्ठवं यस्यास्तथाविधा अतएव
7932 ईप्सितस्याभिप्रेतस्यार्थ-स्यार्पणे बोधने एकान्तदक्षा नियमेन समर्था
7933 भारती वाणी वाग्मि-शतादपि मुख्येषु मुख्यतमस्यैव विकासं
7934 स्फूर्तिमायाति न सर्वेषाम्। पञ्चमी विभक्ते इति शताद्विभज्य निर्धारितेषु
7935 तमपा निर्धारणान्तरप्रत्य-यात्सर्वोदारतोपपत्तिः॥ ३२॥
7936
7937 कुमर त्वां विना कस्य विवेकफलशालिनी।
7938 परं विकासमायाति प्रज्ञाशरलतातता॥ ३३॥
7939
7940 प्रज्ञा शर इव सूक्ष्मार्थभेदिनी प्रज्ञाशरः सैव लता वल्ली। विकासं
7941 विचारवैराग्यपुष्पपल्लवाभ्यामुपचयम्। शकारपाठे प्रकाशम्॥ ३३॥
7942
7943 प्रज्ञादीपशिखा यस्य रामस्येव हृदि स्थिता।
7944 प्रज्वलत्यसमालोककारिणी स पुमान्स्मृतः॥ ३४॥
7945
7946 असममनन्यसाधारणमालोकं पदार्थतत्त्वप्रकाशं करोति असमस्या##-
7947 पुमान्। अन्यस्तु पुरुषार्थासमर्थः स्त्रीप्राय इति भावः॥ ३४॥
7948
7949 रक्तमांसास्थियन्त्राणि बहून्यतितराणि च।
7950 पदार्थानभिकर्षन्ति नास्ति तेषु सचेतनः॥ ३५॥
7951
7952 उक्तप्रज्ञाहीनाजना रक्तादियन्त्रात्मकदेहात्मबुद्धित्वात्तान्येव
7953 शब्दस्पर्शादिपदार्थाननुकर्षन्त्युपभुञ्जते। अन्यश्च सचेतन आत्मा नास्तीति
7954 चार्वाकतैवमेतेषां फलितेति भावः। अथवा यदि तेषु सचेतनः स्यादवश्यं
7955 पुरुषार्थे यतेतैव यतो न यतन्ते तस्माद्धटकुड्यादिवद-चेतना एव ते इति
7956 निन्दार्थमपह्नवः॥ ३५॥

7957
7958 जन्ममृत्युजरादुःखमनुयान्ति पुनःपुनः ।
7959 विमृशन्ति न संसारं पशवः परिमोहिताः ॥ ३६ ॥
7960
7961 ये न विमृशन्ति ते पशवः ॥ ३६ ॥
7962
7963 कथंचित्क्वचिदेवैको दृश्यते विमलाशयः ।
7964 पूर्वापरविचारार्हो यथायमरिमर्दनः ॥ ३७ ॥
7965
7966 अयं रामः । अरयः कामादयस्तेषां मर्दनः ॥ ३७ ॥
7967
7968 अनुत्तमचमत्कारफलाः सुभगमूर्तयः ।
7969 भव्या हि विरला लोके सहकारद्रुमा इव ॥ ३८ ॥
7970
7971 अनुत्तमः सर्वोत्कृष्टश्चमत्कारो माधुर्यविशेषो येषां तथाविधानि
7972 तत्त्वसाक्षात्कारफलानि येषु । सहकारद्रुमा आम्रवृक्षाः ॥ ३८ ॥
7973
7974 सम्यग्दृष्टजगद्यात्रा स्वविवेकचमत्कृतिः ।
7975 अस्मिन्मान्यमतावन्तरियमद्यैव दृश्यते ॥ ३९ ॥
7976
7977 स्वबुद्धिकृतेनैव विवेकेन तत्त्वदर्शनपर्यन्ता चमत्कृतिः । अद्यास्मिन्नेव
7978 वयसि । तच्चाश्चर्यमिति भावः ॥ ३९ ॥
7979
7980 सुभगाः सुलभारोहाः फलपल्लवशालिनः ।
7981 जायन्ते तरवो देशे न तु चन्दनपादपाः ॥ ४० ॥
7982
7983 औभगाः सुन्दराः देशे सर्वत्रेति शेषः ॥ ४० ॥
7984
7985 वृक्षाः प्रतिवनं सन्ति नित्यं सफलपल्लवाः ।
7986 नत्वपूर्वचमत्कारो लवङ्गः सुलभः सदा ॥ ४१ ॥
7987
7988 ज्योत्स्नेव शीता शशिनः सुतरोरिव मञ्जरी ।
7989 पुष्पादामोदलेखेव दृष्टा रामाच्चमत्कृतिः ॥ ४२ ॥
7990
7991 आमोदलेखा परिमलपङ्क्तिः ॥ ४२ ॥
7992
7993 अस्मिन्नुद्दामदौरात्म्यदैवनिर्माणनिर्मिते ।
7994 द्विजेन्द्रा दग्धसंसारे सारो ह्यत्यन्तदुर्लभः ॥ ४३ ॥
7995
7996 उद्दामं दौरात्म्यं यस्य तथाविधस्य दैवस्य प्राक्तनकर्मणस्तदनु##-
7997 विवेकेनात्मलाभः ॥ ४३ ॥
7998
7999 यतन्ते सारसंप्राप्तौ ये यशोनिधयो धियः ।
8000 धन्या धुरि सतां गण्यास्त एव पुरुषोत्तमाः ॥ ४४ ॥
8001
8002 ध्यायन्तीति धियः सदा तत्त्वचिन्तनपराः सन्तो ये यतन्ते ते धन्याः सतां धुरि
8003 गण्याः ॥ ४४ ॥
8004
8005 न रामेण समोऽस्तीह दृष्टो लोकेषु कश्चन ।
8006 विवेकवानुदारात्मा न भावी चेति नो मतिः ॥ ४५ ॥
8007
8008 इह सांप्रतं नास्ति प्राङ्न दृष्टोऽग्रे च न भावी ॥ ४५ ॥

8009
8010 सकललोकचमत्कृतिकारिणोऽप्यभिमतं यदि राघवचेतसः।
8011 फलति नो तदिमे वयमेव हि स्फुटतरं मुनयो हतबुद्धयः॥ ४६॥
8012
8013 राममनोरथसंपत्तेरवश्यकर्तव्यतां तत्प्रशंसनेनोत्तमाधिकार##-
8014 समुचितप्रष्टव्य-रहस्योद्घाटनेन चानन्दस्तत्कारिणो
8015 राघवचेतसोऽप्यभिमतं तत्त्वजिज्ञा-सालक्षणो मनोरथो यदि नो फलति
8016 अस्मदाद्यभिज्ञोपदेशेनेति शेषः। नो इति नञ्पर्यायो निपातः। तत्तर्हि
8017 हतबुद्धयो दुर्बुद्धयः। अभिज्ञता निष्फलैव स्यादिति भावः।
8018 तस्मादवश्यमुपदेष्टव्यमिति सिद्धम्॥ ४६॥
8019
8020 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वैराग्यप्रकरणे
8021 नभश्चरमहीचरसंमेलनं नाम त्रयस्त्रिंशः सर्गः॥ ३३॥
8022
8023 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे वैराग्यप्रकरणे
8024 नभश्चरमहीचरसंमेलनं नाम त्रयस्त्रिंशः सर्गः॥ ३३॥
8025
8026 समाप्तमिदं वैराग्यप्रकरणम्।
8027
8028
8029
8030
8031
8032
8033
8034
8035
8036
8037 मुमुक्षुव्यवहारप्रकरणं द्वितीयम्।
8038
8039 प्रथमः सर्गः १
8040
8041 वाल्मीकिरुवाच।
8042
8043 इति नादेन महता वचस्युक्ते सभागतैः।
8044 राममग्रगतं प्रीत्या विश्वामित्रोऽभ्यभाषत॥ १॥
8045
8046 अजमजरमनाद्यमेकं निजसौख्यलवाञ्छिताखिलानन्दम्।
8047 हृदि निहितमात्मसारं निगमान्तामृतरसायनं वन्दे॥
8048
8049 श्रीरामादिवचनमुखेन वर्णितापि साधनसंपन्नमुमुक्षिभिः केन क्रमेण
8050 व्यवहरद्भिः संपाद्या कथं च तया तत्त्वविश्रान्तिलाभ इति प्रत्येकं विविच्य
8051 तेषामुपदेशाय द्वितीयं प्रकरणमारभमाणः श्रीवाल्मीकि-रुवाच ##-
8052
8053 स्वयं विचारात्संबुद्धे पित्रा चोक्तेऽप्यविश्वसन्।
8054 जनकोक्त्या शुकस्तत्त्वे विश्रान्त इति कीर्त्यते॥
8055
8056 तत्रादौ मन्दवैराग्यादिसाधनानां सहसैवाधिकारसंपत्तिभ्रमेण
8057 श्रवणादौ प्रवृत्तिर्मा भूदिति शुखाख्यायिकया तत्परिपाकलक्षणानि
8058 दर्शयन् आचार्याद्धैव विद्या विदिता साशिष्ठं प्रापत् इति श्रुतेः कुलाचार्यं
8059 विषिष्ठं श्रीरामस्योपदेशनाय पूर्ववृत्तन्तस्मारण##-
8060 त्वरमाणो विश्वामित्र एव प्रथममभ्यभाषतेत्याह - इतीति।

8061 सभायामा-गतैः सिद्धैः अग्रगतं पुरःस्थितम् अधिकारसीम्नि स्थितं च |
8062 मुख्याधि-कारिणां दौर्लभ्याद्रामे
8063 रसज्ञतमत्वाद्वर्तिष्यमाणब्रह्मचर्चायां च प्रीत्या || १ ||
8064
8065 न राघव तवास्त्यन्यज्ज्ञेयं ज्ञानवतां वर |
8066 स्वयैव सूक्ष्मया बुद्ध्या सर्वं विज्ञातवानसि || २ ||
8067
8068 ज्ञेयमज्ञातत्वादवश्यज्ञातव्यम् | सर्वं हेयोपादेयरहस्यम् | तथाच
8069 सारासारविवेचनपरया बुद्ध्या परमार्थसारभूतमखण्डाद्वयचिन्##-
8070
8071 केवलं मार्जनामात्रं मनागेवोपयुज्यते |
8072 स्वभावविमले नित्यं स्वबुद्धिमुकुरे तव || ३ ||
8073
8074 तर्हि कुतो न विश्रान्तिस्तत्राह - केवलमिति | मार्जना
8075 अविश्वाससंदेहमालिन्य-निराकारणं तावन्मात्रम् | स्वबुद्ध्या विदितेऽपि
8076 प्रमाणाचार्यादिसंवाद-मन्तरेण विश्वासाभावादित्यर्थः | तथाचाहुः
8077 बलवदपि शिक्षितानामा-त्मन्यप्रत्ययं चेतः इति || ३ ||
8078
8079 भगवद्व्यासपूत्रस्य शुकस्येव मतिस्तव |
8080 विश्रान्तिमात्रमेवान्तर्ज्ञातज्ञेयाप्यपेक्षते || ४ ||
8081
8082 भगवतो व्यासस्य | अत्र व्यासशुकौ प्राक्तनद्वापरान्तजातौ गृह्येते |
8083 प्रतिद्वापरान्तं व्यासावतारभेदप्रसिद्धेः || ४ ||
8084
8085 श्रीराम उवाच |
8086
8087 भगवद्व्यासपुत्रस्य शुकस्य भगवन्कथम् |
8088 ज्ञेयेऽप्यादौ न विश्रान्तं विश्रान्तं च धिया पुनः || ५ ||
8089
8090 ज्ञेये स्वेनैव विचारेण ज्ञातुं शक्येऽपि तत्त्वे | धिया गुरूपदेशसंवा##-
8091
8092 विश्वामित्र उवाच |
8093
8094 आत्मोदन्तसमं राम कथ्यमानमिदं मया |
8095 शृणु व्यासात्मजोदन्तं जन्मनामन्तकारणम् || ६ ||
8096
8097 आत्मोदन्तसमं स्ववृत्तान्तसदृशम् | जन्मनामन्तो मोक्षः || ६ ||
8098
8099 योऽयमञ्जनशैलाभो निविष्टो हेमविष्टरे |
8100 पार्श्वे तव पितुर्व्यासो भगवान्भास्करद्युतिः || ७ ||
8101
8102 अञ्जनशैलो नीलाद्रिरिति प्रसिद्धो वर्षपर्वतः | निविष्ट उपविष्टः | विष्टरे आसने
8103 || ७ ||
8104
8105 अस्याभूदिन्दुवदनस्तनयो नयकोविदः |
8106 शुको नाम महाप्राज्ञो यज्ञो मूर्त्येव सुस्थितः || ८ ||
8107
8108 नयकोविदः सर्वशास्त्रज्ञः | मूर्त्या शरीरेण युक्तो यज्ञ इव सुस्थितः || ८ ||
8109
8110 प्रविचारयतो लोकयात्रामलमिमां हृदि |
8111 तवेव किल तस्यापि विवेक उदभूदयम् || ९ ||
8112

8113 विवेको विचारः। अयमीदृशः ॥ ९ ॥
8114
8115 तेनासौ स्वविवेकेन स्वयमेव महामनाः।
8116 प्रविचार्य चिरं चारु यत्सत्यं तदवाप्तवान् ॥ १० ॥
8117
8118 यत्परमार्थसत्यमात्मतत्त्वद्वितीयचिन्मात्ररूपं तदवाप्तवाञ्ज्ञातवान्।
8119 ज्ञानस्यैव तल्लाभत्वात् ॥ १० ॥
8120
8121 स्वयं प्राप्ते परे वस्तुन्यविश्रान्तमनाः स्थितः।
8122 इदं वस्त्विति विश्वासं नासावात्मन्युपाययौ ॥ ११ ॥
8123
8124 अविश्रान्तौ हेतुरविश्वासः ॥ ११ ॥
8125
8126 केवलं विररामास्य चेतो विगतचापलम्।
8127 भोगेभ्यो भूरिभङ्गेभ्यो धाराभ्य इव चातकः ॥ १२ ॥
8128
8129 विरराम उपरतम्। विरक्तमिति यावत्। भूरिभङ्गेभ्यो बहुतरविनाशदुःख##-
8130
8131 एकदा सोऽमलप्रज्ञो मेरावेकान्तसुस्थितम्।
8132 पप्रच्छ पितरं भक्त्या कृष्णद्वैपायनं मुनिम् ॥ १३ ॥
8133
8134 कृष्णद्वैपायानं व्यासम् ॥ १३ ॥
8135
8136 संसाराडम्बरमिदं कथमभ्युत्थितं मुने।
8137 कथं च प्रशमं याति कियत्कस्य कदेति वा ॥ १४ ॥
8138
8139 परवञ्चनार्थं कृत्रिमचेष्टितमाडम्बरं कथं केन क्रमेण अभुत्थित##-
8140 कस्य संसारः किं देहस्य उत इन्द्रियाणामुत मनसः प्राणस्य वा उत
8141 संघातस्य उत तदन्यस्य विकारिणो निर्विकारचिन्मात्रस्य वेति पप्रच्छेति
8142 पूर्वेणान्वयः ॥ १४ ॥
8143
8144 इति पृष्टेन मुनिना व्यासेनाखिलमात्मजे।
8145 यथावदमलं प्रोक्तं वक्तव्यं विदितात्मना ॥ १५ ॥
8146
8147 विदितात्मना व्यासेन अखिलं वक्तव्यं यथावत्प्रोक्तमित्यन्वयः ॥ १५ ॥
8148
8149 आऽज्ञासिषं पूर्वमेतदहमित्यथ तत्पितुः।
8150 स शुकः शुभया बुद्ध्या न वाक्यं बह्वमन्यत ॥ १६ ॥
8151
8152 आ अज्ञासिषमिति च्छेदः। ननु यद्यत्र प्राक् स्वविचारेणैव ज्ञातस्य
8153 स्मरणार्थोऽयं आ इति निपातस्तर्हि वाक्यस्मरणयोरङित् इत्यनाङ्त्वात् निपात
8154 एकाजनाङ् इति प्रगृह्यत्वे प्रकृतिभावो न्याय्यः। सत्यम्। तथापि पूर्वं
8155 आसमन्ताद्विशिष्याज्ञासिषमिति धात्वर्थातिशद्योतकतया क्रियायोगस्यापि
8156 विवक्षितत्वात्तत्रैकशेषादिना आङोऽपि संग्रहात् निपात् एकाजनाङ् इत्यत्र
8157 आङ्वर्ज्य इति प्रसज्यप्रतिषेधपक्षस्वीकारात् प्रतिषेधाश्च बलीयांसो भवन्ति इति
8158 महाभाष्योक्तेः प्रगृह्यसंज्ञानिषेधात्संधिः साधुरेव। अथ
8159 उपदेशानन्तरं शुकस्तत्पितुर्वाक्यं आज्ञासिषमित्यनपूर्वार्थतया श्भया
8160 बुद्ध्या न बह्वम्यतेत्यन्वयः ॥ १६ ॥
8161
8162 व्यासोऽपि भगवान्बुद्ध्वा पुत्राभिप्रायमीदृशम्।
8163 प्रत्युवाच पुनः पुत्रं नाहं जानामि तत्त्वतः ॥ १७ ॥
8164

8165 जनको नाम भूपालो विद्यते वसुधातले।
8166 यथावद्वेत्त्यसौ वेद्यं तस्मात्सर्वमवाप्स्यसि ॥ १८ ॥
8167
8168 पुत्राभिप्रायं बुद्ध्वा तद्बुद्धिमेवानुसरन् प्रत्युवाच नाहं जानामि।
8169 उक्तादन्यदिति भावः ॥ १७ ॥ १८ ॥
8170
8171 पित्रेत्युक्ते शुकः प्रायात्सुमेरोर्वसुधातले।
8172 विदेहनगरीं प्राप जनकेनाभिपालिताम् ॥ १९ ॥
8173
8174 विदेहा नाम जनपदास्तेषां नगरीं मिथिलाम् ॥ १९ ॥
8175
8176 आवेदितोऽसौ याष्टीकैर्जनकाय महात्मने।
8177 द्वारि व्याससुतो राजञ्शुकोऽत्र स्थितवानिति ॥ २० ॥
8178
8179 याष्टीकैर्द्वास्थैर्यष्टिधरैः ॥ २० ॥
8180
8181 जिज्ञासार्थं [शुकस्याज्ञायास्तां]
8182 शुकस्यासावास्तामेवेत्यवज्ञया।
8183 उक्त्वा बभूव जनकस्तूष्णीं सप्त दिनान्यथ ॥ २१ ॥
8184
8185 जनकोऽपि विदितशुकवृत्तन्तः सहसैवोपदेशे व्यासवचनवदवहेलनया
8186 तस्याकृतार्थता मा भूदिति शुकस्य वैराग्यादिसाधनानां विश्वासस्य
8187 स्थैर्यस्य च जिज्ञासार्थम्। अवज्ञया उपेक्षया ॥ २१ ॥
8188
8189 ततः प्रवेशयामास जनकः शुकमङ्गणम्।
8190 तत्राहानि स सप्तैव तथैवावसदुन्मनाः ॥ २२ ॥
8191
8192 अङ्गणं गृहान्तश्चत्वरम्। उन्मनाः तत्त्वजिज्ञासोत्कण्ठाविस्मृतानादर
8193 इति यावत् ॥ २२ ॥
8194
8195 अथ प्रवेशयामास जनकोऽन्तःपुरं शुकम्।
8196 राजा न दृश्यते तावदिति सप्त दिनानि च ॥ २३ ॥
8197
8198 तत्रोन्मदाभिः कान्ताभिर्भोजनैर्भोगसंचयैः।
8199 जनको लालयामास शुकं शशिसमाननम् ॥ २४ ॥
8200
8201 यावद्भोजनादिभिस्त्वं न पूज्यसे तावद्राजा न दृश्यते इति वादनमिषेण
8202 तत्रान्तःपुरे सप्त दिनानि भोगसंचयैर्लालयामासेत्युत्तरेण संबन्धः ॥ २३ ॥
8203 २४ ॥
8204
8205 ते भोगास्तानि दुःखानि वासपुत्रस्य तन्मनः।
8206 नाजह्रुर्मन्दपवना बद्धपीठमिवाचलम् ॥ २५ ॥
8207
8208 नाजर्ह्नुर्न विचक्रुः। बद्धपीठं दृढमूलम् ॥ २५ ॥
8209
8210 केवलं सुसमः स्वस्थो मौनी मुदितमानसः।
8211 अतिष्ठत्स शुकस्तत्र संपूर्ण इव चन्द्रमाः ॥ २६ ॥
8212
8213 केवलमित्यवधारणे। भोगानादरयोः सुसमोऽतएव स्वस्थः। तत्र हेतुः##-
8214
8215 परिज्ञातस्वभावं तं शुकं स जनको नृपः।
8216 आनीतं मुदितात्मानमवलोक्य ननाम ह ॥ २७ ॥

8217
8218 इत्थं परीक्षणेन परिज्ञातस्तत्त्वदर्शनपर्यन्तप्रतिष्ठितो विचारवैराग्यादि##-
8219
8220 निःशेषितजगत्कार्य प्राप्ताखिलमनोरथ।
8221 किमीप्सितं तवेत्याशु कृतस्वागतमाह तम्॥ २८॥
8222
8223 निःशेषितानि निरवशेषं कृतानि जगति प्रसिद्धानि कार्याण्यवश्यकर्तव्यानि
8224 परमपुरुषार्थसाधनानि येन तथाविध। हे कृतकृत्येत्यर्थः।
8225 सर्वसुखल-वानामात्मसुखेऽन्तर्भावात्तत्प्राप्त्यैव प्राप्ताखिलमनोरथ॥
8226 २८॥
8227
8228 श्रीशुक उवाच।
8229
8230 संसाराडम्बरमिदं कथमभ्युत्थितं गुरो।
8231 कथं प्रशममायाति यथावत्कथयाशु मे॥ २९॥
8232
8233 संसारेति प्राग्व्याख्यातम्॥ २९॥
8234
8235 विश्वामित्र उवाच।
8236
8237 जनकेनेति पृष्टेन शुकस्य कथितं तदा।
8238 तदेव यत्पुरा प्रोक्तं तस्य पित्रा महात्मना॥ ३०॥
8239
8240 इति पृष्टेन जनकेन तस्य शुकस्य पित्रा पुरा पूर्वं यत्प्रोक्तं तदेव
8241 कथितमित्यन्वयः॥ ३०॥
8242
8243 श्रीशुक उवाच।
8244
8245 स्वयमेव मया पूर्वमेतज्ज्ञातं विवेकतः।
8246 एतदेव च पृष्टेन पित्रा मे समुदाहृतम्॥ ३१॥
8247
8248 समुदाहृतं सम्यगुदाहरणोपपत्तिभिर्व्याख्यातम्॥ ३१॥
8249
8250 भवताप्येष एवार्थः कथितो वाग्विदां वर।
8251 एष एव च वाक्यार्थः शास्त्रेषु परिदृश्यते॥ ३२॥
8252
8253 व्यक्यार्थः सर्वोपनिषद्गतमहावाक्यानामर्थः। तत्तात्पर्यनिर्णायक##-
8254
8255 यथायं स्वविकल्पोत्थः स्वविकल्पपरिक्षयात्।
8256 क्षीयते दग्धसंसारो निःसार इति निश्चयः॥ ३३॥
8257
8258 स्वस्मिन्नज्ञानोपहिते आत्मनि विविधं कल्पयतीति विकल्पोऽनन्तकामकर्मवा##-
8259 समष्टिव्यष्टिसंस्कारपरिशेषेणाव्या-कृते
8260 लीनमनादिजीवभावोपाधिभूतमन्तःकरणं तस्मात्प्रलयक्रमविप##-
8261 वर्तते। स च कर्मोपासनसमुच्चयमात्रानुष्ठानेनाध्यात्मिकव्यष्टिभाव##-
8262 श्रवणादिपरिपाकजन्यतत्त्वसाक्षात्कारेण सवासनकार्यकारणाविद्या##-
8263 दग्धशब्दो निन्दायाम्। अथवा स्वप्रकाशात्मनि दुःस्थितत्वान्मिथ्यात्वाच्च
8264 पूर्वमेव दग्धप्रायोऽतएव निःसारः स भूयः साक्षात्कारप्रलयानल##-
8265 पुनःपुनः प्ररोहशङ्कावारणाय वा निःसार इति निश्चयः। तत्त्वविदामिति
8266 शेषः॥ ३३॥
8267
8268 तत्किमेतन्महाबाहो सत्यं ब्रूहि ममाचलम्।

त्वत्तो विश्रान्तिमाप्नोमि चेतसा भ्रमता जगत् || ३४ ||

एतत् मया स्वयमेव पूर्व विचारेण परिज्ञातं यत् तदेव सत्यं किं तर्हि
तदचलमसंदिग्धं हृदि यथा भवति तथा ब्रूहि | जगत् नानाविषयानिदं
वा तत्त्वं स्यादन्यद्वेत्यविश्वासेन भ्रमता चेतसा भ्राम्यमाणोऽहं त्वत्तः |
त्वद्वचनविश्वासादिति यावत् | विश्रान्तिं तत्रैव स्थैर्यमाप्नोमि || ३४ ||

जनक उवाच |

नातः परतरः कश्चिन्निश्चयोऽस्त्यपरो मुने |
स्वयमेव त्वया ज्ञातं गुरुतश्च पुनः श्रुतम् || ३५ ||

अतोऽस्मात्त्वया परिज्ञातात् | निश्चयो निश्चेतव्योऽर्थः || ३५ ||

अविच्छिन्नचिदात्मैकः पुमानस्तीह नेतरत् |
स्वसंकल्पवशाद्बद्धो निःसंकल्पश्च मुच्यते || ३६ ||

तमेव दृढनिशयाय पुनराह - अविच्छिन्नेति || ३६ ||

तेन त्वया स्फुटं ज्ञातं ज्ञेयं यस्य महात्मनः |
भोगेभ्यो विरतिर्जाता [दृश्याद्वा] ड्श्यात्प्राक्सकलादिह || ३७ ||

महात्मनस्तवेति शेषः | प्राक् भोगेभ्यः | इहास्यां निश्चयदशायाम् |
दृश्यात् दृश्यमात्रात् || ३७ ||

तव बाल महावीर मतिर्विरतिमागता |
भोगेभ्यो दीर्घरोगेभ्यः किमन्यच्छ्रोतुमिच्छसि || ३८ ||

बालोऽपि विषयत्यागशूरत्वान्महावीर || ३८ ||

न तथा पूर्णता जाता सर्वज्ञानमहानिधेः |
तिष्ठतस्तपसि स्फारे पितुस्तव यथा तव || ३९ ||

यथा तव पूर्णता जाता तथा तव पितुर्नेति दाढ्यर्थं प्रशंसा |
एवमुत्तरत्रापि || ३९ ||

व्यासादधिक एवाहं व्यासशिष्योऽसि तत्सुतः |
भोगेच्छातानवेनेह मत्तोऽप्यत्यधिको भवान् || ४० ||

प्राप्तं प्राप्तव्यमखिलं भवता पूर्णचेतसा |
न दृश्ये पतसि ब्रह्मन्मुक्तस्त्वं भ्रान्तिमुत्सृज || ४१ ||

दृश्ये बाह्यविषये न पतसि दृश्यदर्शनस्यैव संसारपातत्वात् |
उदरमन्तरं कुरुते अथ तस्य भयं भवति इति श्रुतेः | भ्रान्तिं
ज्ञेयान्तरसद्भावभ्रमं दृश्यदर्शनभ्रमं वा || ४१ ||

अनुशिष्टः स इत्येवं जनकेन महात्मना |
अतिष्ठत्स शुकस्तूष्णीं स्वच्छे परमवस्तुनि || ४२ ||

स पूर्वोक्तोऽविच्छिन्नचिदात्मैकस्त्वमित्येवमनुशिष्टः स शुकः | स्वच्छे
दृश्यमालिन्यशून्ये || ४२ ||

8321 वीतशोकभयायासो निरीहश्छिन्नसंशयः ।
8322 जगाम शिखरं मेरोः समाध्यर्थमनिन्दितम् ॥ ४३ ॥
8323
8324 सात्त्विकदेवाधिष्ठितत्वेन विक्षेपहेत्वभावादनिन्दितम् । समाध्यनुकूलमिति
8325 यावत् ॥ ४३ ॥
8326
8327 तत्र वर्षसहस्राणि निर्विकल्पसमाधिना ।
8328 दश स्थित्वा शशामासावात्मन्यस्नेहदीपवत् ॥ ४४ ॥
8329
8330 शशाम विदेहमुक्तोऽभूत् ॥ ४४ ॥
8331
8332 व्यपगतकलनाकलङ्कशुद्धः स्वयममलात्मनि पावने पदेऽसौ ।
8333 सलिलकण एवाम्बुधौ महात्मा विगलितवासनमेकतां जगाम ॥ ४५ ॥
8334
8335 कलना दृश्योनमुखता कलङ्कस्तन्मूलमज्ञानं तदुभयापगमा##-
8336 परमात्मवस्तुनि । सलिलकणपक्षे कलना पृथग्भावः । कलङ्को नीलमेघ##-
8337 चोक्तं विष्णुपुराणे - विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते । आत्मनो
8338 ब्रह्मणो भेदमसन्तं कः करिष्यति ॥ इति ॥ ४५ ॥
8339
8340 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये [मोक्षोपाये]
8341 मुमुक्षु-व्यवहारप्रकरणे शुकनिर्याणं नाम प्रथमः सर्गः ॥
8342 १ ॥
8343
8344 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे मुमुक्षुव्यवहारप्रकरणे
8345 शुकनिर्याणं नाम प्रथमः सर्गः ॥ १ ॥
8346
8347 द्वितीयः सर्गः २
8348
8349 विश्वामित्र उवाच ।
8350
8351 तस्य व्यासतनूजस्य मलमात्रोपमार्जनम् ।
8352 यथोपयुक्तं ते राम तावदेवोपयुज्यते ॥ १ ॥
8353
8354 इह रामोपदेशार्थं विश्वामित्रेण धीमता ।
8355 प्रार्थितस्य विषिष्ठस्य तदुत्साहः प्रकीर्त्यते ॥
8356
8357 शुकाख्यायिकां प्रकृते योजयन् रामोपदेशाय वसिष्ठं प्रवर्तयितुमा##-
8358 यावत्प्रकारमुपयुक्त्य-मुपपत्तियुक्तमुपदेशनमुपयुज्यते तावदेव ते
8359 तवापि उपयुक्तं युज्यत इति संबन्धः । उपयुक्तमभूदिति
8360 पूर्ववाक्यमात्रशेषतया तु न व्याख्येयम् । समानवाक्ये
8361 युष्मदस्मदादेशविधानेन विरोधात् ॥ १ ॥
8362
8363 ज्ञेयमेतेन विज्ञातमशेषेण मुनीश्वराः ।
8364 स्वदन्तेऽस्मै न यद्भोगा रोगा इव सुमेधसे ॥ २ ॥
8365
8366 उक्तमर्थं सर्वमुनिसंमत्या समर्थयितुं मुनीश्वरा इति तेषां संबोधनम् ।
8367 स्वदन्ते रोचन्ते । अस्मै रामाय । रुच्यर्थानां प्रीयमाणः इति
8368 संप्रदानत्वाच्चतुर्थी ॥ २ ॥
8369
8370 ज्ञातज्ञेयस्य मनसो नूनमेतद्धि लक्षणम् ।
8371 न स्वदन्ते समग्राणि भोगवृन्दानि यत्पुनः ॥ ३ ॥
8372

8373 भोगभावनया याति बन्धो दार्ढ्यमवस्तुजः |
8374 तयोपशान्तया याति बन्धो जगति तानवम् || ४ ||
8375
8376 भावनया वासनया | तानवमल्पताम् || ४ ||
8377
8378 वासनातानवं राम मोक्ष इत्युच्यते बुधैः |
8379 पदार्थवासनादार्ढ्यं बन्ध इत्यभिधीयते || ५ ||
8380
8381 यावद्विषयावासना क्षीयते तावता मुच्यते | सर्वथा क्षये तु सर्वतो मुक्तिरिति
8382 भावः || ५ ||
8383
8384 स्वात्मतत्त्वाभिगमनं भवति प्रायशो नृणाम् |
8385 मुने विषयवैरस्यं कदर्थादुपजायते || ६ ||
8386
8387 अभिगमनमापातज्ञानम् | प्रायशः अल्पश्रवणाद्यायासेनापि | अपरोक्ष##-
8388 कदर्थात्क्लेशात् || ६ ||
8389
8390 सम्यक्पश्यति यस्तज्ज्ञो ज्ञातज्ञेयः स पण्डितः |
8391 न स्वदन्ते बलादेव तस्मै भोगा महात्मने || ७ ||
8392
8393 तर्ह्यलं तावता किं वैराग्येण तत्राह - सम्यगिति | सम्यक्
8394 रागाद्यप्रतिहतं यथा स्यात्तथा यः पश्यति स एव
8395 तज्ज्ञस्तत्त्वज्ञानजन्याविद्योच्छेदफल-भागिति ज्ञातज्ञेयः पण्डितश्च
8396 | आपातदर्शी तु मौर्ख्यानपगमान्न तथेति भावः || ७ ||
8397
8398 यशःप्रभृतिना यस्मै हेतुनैव विना पुनः |
8399 भुवि भोगा न रोचन्ते स जीवन्मुक्त उच्यते || ८ ||
8400
8401 प्रभृतिग्रहणेन पूजालाभादयो गृह्यन्ते | हेतुना उद्देश्येन फलेन विनैव
8402 | तथाच न दाम्भिकभोगत्यागादिष्टसिद्धिरित्यर्थः || ८ ||
8403
8404 ज्ञेयं यावन्न विज्ञातं तावत्तावन्न जायते |
8405 विषयेष्वरतिर्जन्तोर्मरुभूमौ लता यथा || ९ ||
8406
8407 वैराग्यबोधोपरमाणामभिवृद्धौ परस्परसहायत्वाज्ज्ञानपरिपाकाति##-
8408 यावद्यावन्न विज्ञात। म्तावत्तावद्विषयेष्वरतिर्न जायत इति
8409 व्यतिरेकप्रकर्षादन्वय-प्रकर्षो लक्ष्यते | रसोऽप्यस्य परं दृष्ट्वा
8410 निवर्तते इति भगवद्वचनादिति भावः || ९ ||
8411
8412 अतएव हि विज्ञातज्ञेयं [विज्ञातं ज्ञेयं] विद्धि रघूद्वहम् |
8413 [येनेदं] यदेनं रञ्जयन्त्येता न रम्या भोगभूमयः || १० ||
8414
8415 भोगभूमयो विषयाः || १० ||
8416
8417 रामो यदन्तर्जानाति तद्वस्त्वित्येव सन्मुखात् |
8418 आकर्ण्य चित्तविश्रान्तिमाप्नोत्येव मुनीश्वराः || ११ ||
8419
8420 यदि रामस्तत्त्वज्ञस्तर्हि किमर्थमुपदेशार्थं वक्ष्यमाणा
8421 वसिष्ठप्रार्थना तत्राह - राम इति | सतो वसिष्ठस्य मुकात् | आप्नोत्येव
8422 अन्योऽप्यधिकारीति शेषः | तथा च सर्वोपकारायोपदेशप्रार्थनेत्यर्थः | अथवा
8423 रामो यदन्तस्तत्त्वं जानाति तद्राम एव विश्वासदार्ढ्याभावाद##-
8424

8425 केवलं केवलीभावविश्रान्तिं समपेक्षते।
8426 रामबुद्धिः शरल्लक्ष्मीः खलु विश्रमणं यथा॥ १२॥
8427
8428 तदेव स्फुटमाह - केवलमिति। केवलीभावविश्रान्तिं द्वैतनिरासे
8429 अद्वितीय-चिन्मात्रपरिशेषम्। खल्विति निश्चयेन। विश्वासेनेत्यर्थः॥ १२॥
8430
8431 अत्रास्य चित्तविश्रान्त्यै राघवस्य महात्मनः।
8432 युक्तिं कथयतु श्रीमान्वसिष्ठो भगवानयम्॥ १३॥
8433
8434 रघूणामेष सर्वेषां प्रभुः कुलगुरुः सदा।
8435 सर्वज्ञः सर्वसाक्षी च त्रिकालामलदर्शनः॥ १४॥
8436
8437 ननु त्वयैव कुतो नोपदिश्यते तत्राह - रघूणामिति। रघूपलक्षितानामि##-
8438 साक्षी तत्त्वतो योगबलेन विभागशश्च साक्षाद्द्रष्टा। साक्षाद्द्रष्टरि
8439 संज्ञायाम् इतीनिः। तत्र हेतुः त्रिष्वपि कालेष्वमलं मोहातिरस्कृतं
8440 दर्शनसाधनं मनो यस्य॥ १४॥
8441
8442 वसिष्ठ भगवन्पूर्वं कच्चित्स्मरसि यत्स्वयम्।
8443 आवयोर्वैरशान्त्यर्थं श्रेयसे च महाधियाम्॥ १५॥
8444
8445 कच्चिदिति हितप्रश्ने। महाधियां मुनीनामित्युत्तरेणान्वयः॥ १५॥
8446
8447 निषधाद्रेर्मुनीनां च सानौ सरलसंकुले।
8448 उपदिष्टं भगवता ज्ञानं पद्मभुवा बहु॥ १६॥
8449
8450 सानौ प्रस्थदेशे। सरला वृक्षविशेषाः। बहुश्रेष्ठमुपपत्तितो वा
8451 बहु॥ १६॥
8452
8453 येन युक्तिमता ब्रह्मन्ज्ञानेनेयं हि वासना।
8454 सांसारी नूनमायाति शमं श्यामेव भास्वता॥ १७॥
8455
8456 येन ज्ञानेन। युक्तिरुपपत्तिस्तदेकतानता च॥ १७॥
8457
8458 तदेव युक्तिमज्ज्ञेयं रामायान्तेनिवासिने।
8459 ब्रह्मन्नुपदिशाशु त्वं येन विश्रान्तिमेष्यति॥ १८॥
8460
8461 कदर्थना च नैवैषा रामो हि गतकल्पषः।
8462 निर्मले मुकुरे वक्रमयत्नेनैव बिम्बति॥ १९॥
8463
8464 अल्पफलो बहुप्रयासः कदर्थना॥ १९॥
8465
8466 तज्ज्ञानं स च शास्त्रार्थस्त्वद्वैदग्ध्यमनिन्दितम्।
8467 सच्छिष्याय विरक्ताय [यत्किंचिदुपदिश्यते] साधो यदुपदिश्यते॥
8468 २०॥
8469
8470 नेयं कदर्थना प्रत्युताभिज्ञतादयादिसार्थक्यापादनादभ्युदय एवेत्याह
8471 - तदिति। विदग्धः पण्डितस्तद्भावो वैदग्ध्यम्। अनिन्दितं प्रशस्तम्।
8472 पात्रेष्वप्रतिपत्तौ वैयर्थ्यान्निन्दितमेव स्यादिति भावः॥ २०॥
8473
8474 अशिष्यायाविरक्ताय यत्किंचिदुपदिश्यते।
8475 तत्प्रयात्यपवित्रत्वं गोक्षीरं श्वदृताविव॥ २१॥
8476

8477 द्दतिश्चर्मभस्त्रा ॥ २१ ॥
8478
8479 वीतरागभयक्रोधा निर्माना गलितैनसः ।
8480 वदन्ति त्वाद्दशा यत्र तत्र विश्राम्यतीह धीः ॥ २२ ॥
8481
8482 रागादीनामविद्यामूलकत्वात्तदुच्छेदादेव वीतरागादयः । गलितैनसो
8483 निष्पापाः । इहास्यामुपदेशदशायामेव । अस्मिन्नित्यपरोक्षे आत्मतत्त्वे वा ॥ २२ ॥
8484
8485 इत्युक्ते गाधिपुत्रेण व्यासनारदपूर्वकाः ।
8486 मुनयस्ते तमेवार्थं साधुसाध्वित्यपूजयन् ॥ २३ ॥
8487
8488 गाधिपुत्रेण विश्वामित्रेण । अपूजयन् प्राशंसन् ॥ २३ ॥
8489
8490 अथोवाच महातेजा राज्ञः पार्श्वे व्यवस्थितः ।
8491 ब्रह्मेव ब्रह्मणः पुत्रो वसिष्ठो भगवान्मुनिः ॥ २४ ॥
8492
8493 यतोऽयं ब्रह्मणः पुत्रो ब्रह्मेव महातेजस्त्वादिगुणविशिष्टोऽतो दिव्यानामपि
8494 महर्षीणां पुरतो ब्रह्मेवोवाचेति भावः ॥ २४ ॥
8495
8496 श्रीवसिष्ठ उवाच ।
8497
8498 मुने यदादिशसि मे तदविघ्नं करोम्यहम् ।
8499 कः समर्थः समर्थोऽपि सतां लङ्घयितुं वचः ॥ २५ ॥
8500
8501 तत्त्वज्ञानां लक्षणभूतानमानित्वादिगुणान्स्वाचरितैः शिक्षयन्निव
8502 विनयोक्तिभिः प्रार्थितार्थनिरूपणं प्रतिजानीते - मुने इत्यादिना । आदिशसि
8503 आज्ञापयसि ॥ २५ ॥
8504
8505 अहं हि राजपुत्राणां रामादीनां मनस्तमः ।
8506 ज्ञानेनापनयाम्याशु दीपेनेव निशातमः ॥ २६ ॥
8507
8508 ज्ञानोदये अज्ञाननिवृत्तौ न विलम्ब इति द्योतनायाश्विति ॥ २६ ॥
8509
8510 स्मराम्यखण्डितं सर्वं संसारभ्रमशान्तये ।
8511 निषधाद्रौ पुरा प्रोक्तं यज्ज्ञानं पद्मजन्मना ॥ २७ ॥
8512
8513 यज्ज्ञानं पुरा पद्मजन्मना प्रोक्तं तत्सर्वमखण्डितमविच्छिन्नं
8514 ग्रन्थतोऽर्थतश्च स्मरामि । अथवा अखण्डितं निरन्तरं स्मरामि अनुसंदधे
8515 ॥ २७ ॥
8516
8517 वाल्मीकिरुवाच ।
8518
8519 इति निगदितवानसौ महात्मा परिकरबन्धगृहीतवक्तृतेजाः ।
8520 अकथयदिदमज्ञतोपशान्त्यै परमपदैकविबोधनं वसिष्ठः ॥ २८ ॥
8521
8522 असौ महात्मा वसिष्ठ इति निगदितवान्व्यक्तं प्रतिज्ञातवान्सन् यथा शूरो नटो
8523 वा भूषणाच्छादनायुधादिपरिकरबन्धनेनोद्युक्तः शोभते तथैव
8524 शिष्यप्रबोधानुरञ्जनोपायदृष्टान्तोपाख्यानप्रमाणतर्काद्यनुसंधानो
8525 त्साहादिपरिकरबन्धनेन गृहीतं स्वीकृत्ऽम् वक्तॄणां व्याख्यातॄणां
8526 तेजः शोभाविशेषो येन तथाविधः सन् सर्वेषां जगतामज्ञताया उपशान्त्यै
8527 मूलोच्छेदायेदं वक्ष्यमाणं परमपदस्यैकं मुख्यं वोबोध्यते एन
8528 तद्विबोधनं शास्त्रमकथयत् ॥ २८ ॥

8529
8530 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मुमुक्षुव्यवहार##-
8531
8532 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे मुमुक्षुव्यवहारप्रकरणे
8533 विश्वामित्रवाक्यं नाम द्वितीयः सर्गः ॥ २ ॥
8534
8535 तृतीयः सर्गः ३
8536
8537 श्रीवसिष्ठ उवाच ।
8538
8539 पूर्वमुक्तं भगवता यज्ज्ञानं पद्मजन्मना ।
8540 सर्गादौ लोकशान्त्यर्थं तदिदं कथयाम्यहम् ॥ १ ॥
8541
8542 स्थूलादिजगदारोपनिरासाभ्यां प्रसाध्यते ।
8543 प्रत्यक्चिदात्मा विषयो रामशङ्काह्नुतिच्छलात् ॥
8544
8545 इत्थं प्राक्तनं सर्वं प्रतिसंधाय विस्तरेण तद्वक्तुकामः सद्गुरुस्मर##-
8546 सर्वसंसारदुः-खोपशान्तिस्तदर्थं यज्ज्ञानं ज्ञानसाधनं
8547 शास्त्रमुक्तं तदेवेदं कथयामि नान्यदिति संप्रदायशुद्धिरुक्ता ॥ १ ॥
8548
8549 श्रीराम उवाच ।
8550
8551 कथयिष्यसि विस्तीर्णां भगवन्मोक्षसंहिताम् ।
8552 इमं तावत्क्षणं जातं संशयं मे निवारय ॥ २ ॥
8553
8554 इत्थं प्रतिज्ञया अवधापितो रामः [सत्यासत्यजिज्ञासायां]
8555 सत्यामन्य-जिज्ञासायां तदवधानायोगात् सूचीकटाहन्यायेन
8556 प्रथममुत्पन्नः संशयस्तदपनोदं प्रार्थयमान उवाच -
8557 कथयिष्यसीति । एतत्संशय-निवृत्त्यनन्तरमिति भावः । इमं व्यासस्य
8558 शिष्टलोकवत् जीवदर्शनाच्छुकस्य च विदेहमुक्तिश्रवणात्संजातम् ॥ २ ॥
8559
8560 पिता शुकस्य सर्वज्ञो गुरुर्व्यासो महामतिः ।
8561 विदेहमुक्तो न कथं कथं मुक्तः सुतोऽस्य सः ॥ ३ ॥
8562
8563 [तमेव] दर्शयति - पितेति । नन्वघटितोऽयं संशयः । न ।
8564 आत्यन्तिकदुःखो##-
8565 -##मुक्तिरेव ज्ञानफलं तच्चेत्सर्वज्ञस्यापि व्यासस्य न संपन्नं
8566 ज्ञास्या-नित्यफलत्वं प्राप्तम् । किंच यदि ज्ञानेनाज्ञानं
8567 निःशेषमुच्छिन्नं तर्हि भृग्वादिवज्जीवनासंभवः उपादाननाशे
8568 कार्यावस्थानायोगात् अजीवने च
8569 ब्रह्मविद्याप्रवर्तकाभावात्संप्रदायोच्छेदः । अथ नोच्छिन्नं तर्हीनिर्##-
8570 [फलत्यविधेयत्वादिति] फलति तस्य कालत्रयेऽप्यखण्डात्मनाव##-
8571
8572 श्रीवसिष्ठ उवाच ।
8573
8574 परमार्कप्रकाशान्तस्त्रिजगत्रसरेणवः ।
8575 उत्पत्योत्पत्य लीना ये न संख्यामुपयान्ति ते ॥ ४ ॥
8576
8577 इति पृष्टे भगवान्वसिष्ठो यावद्रामो बन्धस्याविद्यकत्वमविद्यास्वरूपं
8578 तत्साक्ष्यपरिच्छिन्नसर्वाधारचित्स्वरूपं च न जानाति तावज्जिवन्मुक्तौ न
8579 विश्वसितीति प्रथमं तदुपपाद्य पश्चात्समाधास्यामीति मन्यमानस्त##-
8580 स्थूलप्रपञ्च-परम्पराध्यारोपं दर्शयति -

8581 परमार्केत्यादिशोकत्रयेण। न तत्र सूर्यो भाति न चन्द्रतारकं येन
8582 सूर्यस्तपति तेजसेद्धः इत्यादिश्रुतेः सूर्यादि-सर्वगजदवभासकत्वात्##-
8583 त्रिजगदुपक्षिता-नन्तकोटिब्रह्माण्डलक्षणास्त्रसरेणव उत्पत्योत्पत्य
8584 स्थित्वा स्थित्वा लीनास्ते संख्यां नोपयान्ति। संख्यातुं न शक्यन्त इत्यर्थः।
8585 एतेन व्यासादयोऽप्य संख्याता तुपद्यन्त इति सूचितम्॥ ४॥
8586
8587 वर्तमानाश्च याः सन्ति त्रैलोक्यगणकोटयः।
8588 शक्यन्ते ताश्च संख्यातुं नैव काश्चन केनचित्॥ ५॥
8589
8590 वर्तमानाः सन्तीति। आरब्धापरिसमाप्तत्वं वर्तमानता
8591 उक्तिकालसंबन्धोऽस्तितेति न पौनरुक्त्यम्॥ ५॥
8592
8593 भविष्यन्ति पराम्बोधौ जगत्सर्गतरङ्गकाः।
8594 तांश्च वै परिसंख्यातुं सा कथैव न विद्यते॥ ६॥
8595
8596 परः परमात्मा स एवाम्बोधिः। ये भविष्यन्ति तान्। सा प्रसिद्धा। कथा
8597 वाक्प्रवृत्तिः। अनेन त्रैकालिकजतदुत्पत्त्याद्याधारभूते परमात्मनि
8598 जगदध्यारोपो दर्शितः॥ ६॥
8599
8600 श्रीराम उवाच।
8601
8602 या भूता या भविष्यन्त्यो जगत्सर्गपरम्पराः।
8603 तासां विचारणा युक्ता वर्तमानास्तु का इव॥ ७॥
8604
8605 पृष्टमर्थमुपेक्ष्यान्यद्वदतो गुरोर्निगूढाशयः स्वेन सम्यग्विदित इति
8606 गोरोरुत्साहाय स्वकौशलं सूचयन् रामस्तेषु सर्गेषु स्वयं कंचिद्विशेष##-
8607 प्रातिस्विकरूपेणासंख्येयास्त-थापि ते कालतः
8608 कूलद्वयदर्शनाद्भूतभविष्यत्सर्गापेक्षया न्यून-संख्या इति विदिता
8609 एवेति भावः। का इव किंभूता इवोत भविष्यन्त इव। नोभयसाम्यमपीति न
8610 तत्पङ्क्तावेषां विचारणा युक्तेत्यर्थः। तथा-चानन्तानामागन्तुनां
8611 तेषामुपादानमात्मतत्त्वमनन्तमेकमना-गन्तुकं चिद्रूपं त्वया
8612 दर्शितमिति मया विदितमिति भावः॥ ७॥
8613
8614 श्रीवसिष्ठ उवाच।
8615
8616 तिर्यक्पुरुषदेवादेर्यो नाम स विनश्यति।
8617 यस्मिन्नेव प्रदेशेऽसौ तदैवेदं प्रपश्यति॥ ८॥
8618
8619 एवं निगूढाशयपरिज्ञानेन तत्र विशेषोक्त्या प्रोत्साहितः पूर्वोक्तस्थूल##-
8620 स्थूलीभावावभासात्सूक्ष्मप्रपञ्चमात्रतेति दर्शयिष्यन् श्रीवसिष्ठ उवाच
8621 - तिर्यगिति। तिर्यञ्चः पशुपक्ष्यादयः पुरुषा मनुष्या देवाः प्रसिद्धा
8622 आदिः प्रधानो यस्य प्राणिनिकायस्य तस्य मध्ये यो यस्मिन्नेव प्रदेशे यदैव
8623 विनश्यति म्रियते सोऽसौ प्रत्यगात्मा तस्मिन्नेव प्रदेशे तदैवेदं
8624 वक्ष्यमाणं जगत्रयं प्रपश्यति नान्यत्र न वाचिरेणेत्यर्थः॥ ८॥
8625
8626 आतिवाहिकनाम्नान्तः स्वहृद्येव जगत्रयम्।
8627 व्योम्नि चित्तशरीरेण व्योमात्मानुभवत्यजः॥ ९॥
8628
8629 स किमुपकरणः किंस्वरूपश्च पश्यति तत्राह - आतिवाहिकेति।
8630 अतिवहनमति-वाहो धूमार्चिरादिमार्गाभिमानिदेवैः परलोकप्रापणं
8631 तत्र साधुराति-वाहिकस्तन्नाम्ना वासनामयेन सूक्ष्मशरीरेण
8632 स्वहृद्येवान्तर्व्योम्नि दहराकाशे जगत्रयं वासनामयमेवानुभवति

8633 भ्रान्त्या वासनामय-तत्तच्छरीराणि वा प्राप्नोति क्रमशः। वस्तुतस्तु स
8634 व्योमात्मा प्रागुक्तचिदा-काशस्वरूपः अतएवाजो
8635 जन्मादिविक्रियारहितश्चेत्यर्थः। ननु तेन प्रद्योते-नैष आत्मा निष्क्रामति
8636 चक्षिषो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्य-स्तमुत्क्रामन्तं
8637 प्राणोऽनूत्क्रामति उत्क्रामन्तं स्थितं वापि इत्याद्यनेक##-
8638 कथमुच्यत इति चेत्। सत्यम्। कर्मोपासनानुरूपव्यवहारदृष्ट्या ते
8639 श्रुतिस्मृतिवादाः। इह तु  परमार्थदृष्ट्या अस्मिन्द्यावापृथिवी अन्तरेव
8640 [समाहिते कल्पिते] समाहिते इति श्रुतिवाद-वद्धृद्येव
8641 परलोककल्पनमुच्यते। आत्मनो वैपुल्याद्धृदयस्या##-
8642 हृदयपरिच्छेदं निवार्य निष्क्रियत्वं प्रपञ्चस्य वासनामात्रमयत्वं च
8643 व्युत्पादयितुं परलो-कवदुत्-क्रमणगमनादेरपि तत्रैव
8644 कल्पनामात्रेणाप्युपपत्तेरित्यभि-प्रेत्येत्यविरोधः॥ ९॥
8645
8646 एवं मृता म्रियन्ते च मरिष्यन्ति च कोटयः।
8647 भूतानां यां जगन्त्याशामुदितानि पृथक्पृथक्॥ १०॥
8648
8649 एकत्र व्युत्पादितं न्यायं सर्वत्र दर्शयति - एवमिति। भूतानां कोटय
8650 इत्यन्वयः। जगन्ति दृश्यजातानि मरणकाले तेषां जगतां वासनासु लीनानि
8651 यानि यां आशां वासनां यस्यां यस्यां वासनायां कर्मपरिपाका##-
8652 स्फुरन्ति तानि तान्येव प्राप्नुवन्तीति शेषः। यद्यद्भवन्ति तदाभवन्ति यं यं
8653 वापि स्मरन्भावम् इत्यादिश्रुतिस्मृतिभ्य इति भावः॥ १०॥
8654
8655 संकल्पनिर्माणमिव मनोराज्यविलासवत्।
8656 इन्द्रजालामाल इव कथार्थप्रतिभासवत्॥ ११॥
8657
8658 इत्थं वासनामयत्वे जगतो यत्फलितं परमार्थदृष्ट्या भ्रमरूपत्वं
8659 तदाह - संकल्पेत्यादिषड्भिः। संकल्पे मानसपूजादौ
8660 रत्नमयप्रासादा-देर्यत्नेन निर्माणं मनोराज्ये त्वयत्नेनेति भेदः।
8661 निर्वाणम् इति पाठे निर्वृतिर्निर्वाणं सुखं
8662 सांकल्पिकाङ्गनापरिष्वङ्गादिजम्। इन्द्रजालान्या-रचिता
8663 [इन्द्रजालेनारचिता] मालेव यस्मिन्भ्रमे स एव॥ ११॥
8664
8665 दुर्वातभूकम्प इव त्रस्तबालपीशाचवत्।
8666 मुक्तालीवामले व्योम्नि नौष्पन्दतरुयानवत्॥ १२॥
8667
8668 दुर्वातो वातरोगविशेषस्तेन भूकम्पभ्रमः। बालस्य भीषणार्थं कल्पितः
8669 पिशाचस्तद्वत्। मुक्ताली मौक्तिकसमूहः। नौकारूढानां नौष्पन्दे
8670 तीरस्थतरूणां यानं गमनं भ्रान्त्या प्रसिद्धम्॥ १२॥
8671
8672 स्वप्नसंवित्तिपुरवत्स्मृतिजातखपुष्पवत्।
8673 जगत्संसरणं स्वान्तर्मृतोऽनुभवति स्वयम्॥ १३॥
8674
8675 संवित्तिर्दर्शनम्। स्मृतेः स्मरणाज्जातं कल्पितं खे पुष्पं तद्वत्।
8676 जगत्संसरणमिति प्रथमान्तं प्रथमान्तप्राक्तनदृष्टान्तान्वयानु##-
8677 जातस्याप्युपलक्षणम्॥ १३॥
8678
8679 तत्रातिपरिणामेन तदेव घनतां गतम्।
8680 इहलोकोऽयमित्येव जीवाकाशे विजृम्भते॥ १४॥
8681
8682 तर्हि कथं वैधर्म्याच्च न स्वप्नादिवत् इति भगवतो बादरायणस्य सूत्रम्
8683 भोक्तुश्चिरं तत्र वैधर्म्येण नियतव्यवहारादिः सत्यताप्रत्ययश्च तत्राह
8684 - तत्रेति। अतिपरिणामश्चिरपरिचयः। घनतां पञ्चीकरणेन दृढताम्।

8685 तथा च तत्कृत एव वैधर्म्यादिव्यवहार इति भावः ॥ १४ ॥
8686
8687 पुनस्तत्रैव जन्मेहामरणाद्यनुभूतिमान् ।
8688 परं लोकं कल्पयति मृतस्तत्र तथा पुनः ॥ १५ ॥
8689
8690 अनवस्थितस्वभावत्वादपि जगतो मिथ्यात्वमिति दर्शयितुमाह - पुनरिति । ईहा
8691 जन्मोत्तरं मरणपर्यन्तं चेष्टा ॥ १५ ॥
8692
8693 तदन्तरन्ये पुरुषास्तेषामन्तस्तथेतरे [तथा परे] ।
8694 संसार इति भान्तीमे कदलीदलपीठवत् ॥ १६ ॥
8695
8696 वासनाया अन्तः अन्तरे अन्ये पुरुषा देहाः । पुरुषा इति पश्वादीनामप्युप##-
8697
8698 न पृथ्व्यादिमहाभूतगणा न च जगत्क्रमाः ।
8699 मृतानां सन्ति तत्रापि तथाप्येषां जगद्भ्रमाः ॥ १७ ॥
8700
8701 एवं मिथ्यात्वे सिद्धे तदपवादेनात्मपरिशेषसिद्धिरित्यभिप्रेत्याह - न
8702 पृथ्व्यादीति । ज्ञानं विना नोच्छिद्यन्ते इति शेषः । एवं प्रपञ्चापवादेन
8703 परिशिष्टात्मसिद्धिः ॥ १७ ॥
8704
8705 अविद्यैव ह्यनन्तेयं नानाप्रसरशालिनी ।
8706 जडानां सरिदादीर्घा तरत्सर्गतरङ्गिणी ॥ १८ ॥
8707
8708 मूलोच्छेदं विना नापलापमात्रेण
8709 तन्निवृत्तिसिद्धिरित्यभिप्रेत्याविद्योच्छेद्य-त्वमाह - अविद्यैवेति ।
8710 जडानां भूढानां आदीर्घा दुष्तरेति यावत् । तरद्भिश्चलद्भिः
8711 सर्गैस्तरङ्गिणी तरङ्गवती ॥ १८ ॥
8712
8713 परमार्थाम्बुधौ स्फारे राम सर्गतरङ्गकाः ।
8714 भूयोभूयोऽनुवर्तन्ते त एवान्ये च भूरिशः ॥ १९ ॥
8715
8716 अविद्यादिसर्वकल्पनाधिष्ठानं दर्शयति - परमार्थेति । ते प्राक्तना
8717 अभिनवाश्च ॥ १९ ॥
8718
8719 सर्वतः सदृशाः केचित्कुलक्रममनोगुणैः ।
8720 केचिदर्धेन सदृशाः केचिच्चातिविलक्षणाः ॥ २० ॥
8721
8722 इमं व्यासमुनिं तत्र द्वात्रिंशं संस्मराम्यहम् ।
8723 यथासंभवविज्ञानदृशा संदृश्यमानया ॥ २१ ॥
8724
8725 प्रकृतशङ्कासमाधानोपोद्घातेन जगद्व्यवस्थितिं
8726 प्रकृतशास्त्रविषयं च व्युत्पाद्य शङ्कासमाधानमुपक्रमते -
8727 इममित्यादिना । पुराणभारता-दिनिर्माणकारैः संदृश्यमानया
8728 प्रसिद्धया । यथोचितेन संभवेन जन्मना विज्ञानेन शास्त्रादिज्ञानेन
8729 दृशा ब्रह्मविद्यया चोपलक्षितेषु । तत्र तेषु व्याससर्गतरङ्गकेषु । इमं
8730 द्वात्रिंशं संस्मरामीति संबन्धः ॥ २१ ॥
8731
8732 द्वादशाल्पधियस्तत्र कुलाकारेहितैः समाः ।
8733 दश सर्वे समाकाराः शिष्टाः कुलविलक्षणाः ॥ २२ ॥
8734
8735 तेष्वप्यवान्तरविशेषमाह - द्वादशेति । अल्पधियो ब्रह्मविद्ब्रह्मविद्वरो
8736 ब्रह्मविद्वरीयान् ब्रह्मविद्वरिष्ठ इति प्रसिद्धेषु चतुर्थस्थानाविश्रान्तेरल्प##-

8737
8738 अद्याप्यन्ये भविष्यन्ति व्यासवाल्मीकयस्तथा।
8739 भृग्विङ्गरःपुलस्त्याश्च तथैवाप्यन्यथैव च॥ २३॥
8740
8741 तथैव पूर्वसदृशा अन्यथैव तद्विलक्षणाश्चेत्यर्थः॥ २३॥
8742
8743 नराः सुरर्षिदेवानां गणाः संभूय भूरिशः।
8744 उत्पद्यन्ते विलीयन्ते कदाचिच्च पृथक्पृथक्॥ २४॥
8745
8746 ब्राह्मी द्वासप्ततिस्त्रेता आसीदस्ति भविष्यति।
8747 स एवान्यश्च लोकाश्च त्वं चाहं चेति वेद्म्यहम्॥ २५॥
8748
8749 ब्राह्मी ब्राह्मकल्पावयवभूता त्रेता सांप्रतमस्ति प्रतिकल्पं चासीद्##-
8750 २५॥
8751
8752 क्रमेणास्य मुनेरित्थं व्यासस्याद्भुतकर्मणः।
8753 संलक्ष्यतेऽवतारोऽयं दशमो दीर्घदर्शिनः॥ २६॥
8754
8755 अस्य पुरोवर्तिनो व्यासस्य व्यासजीवस्य॥ २६॥
8756
8757 अभूम व्यासवाल्मीकियुक्ता वयमनेकशः।
8758 अभूम वयमेवेमे बहुशश्च पृथक्पृथक्॥ २७॥
8759
8760 अभूम वयमेवेमे सदृशा इतरे विदः।
8761 अभूम वयमेवेमे नानाकाराः समाशयाः॥ २८॥
8762
8763 इतरे विसदृशाः। विदः अभिज्ञाः॥ २८॥
8764
8765 भाव्यमद्याप्यनेनेह ननु स्वाराष्टकं पुनः।
8766 भूयोऽपि भारतं नाम सेतिहासं करिष्यति॥ २९॥
8767
8768 करिष्यति अयमिति शेषः॥ २९॥
8769
8770 कृत्वा वेदविभागं च नीत्वानेन कुलप्रथाम्।
8771 ब्रह्मत्वं च तथा कृत्वा भाव्यं वैदेहमोक्षणम्॥ ३०॥
8772
8773 कुलस्य स्ववंशस्य भरतवंशस्य वा प्रथां प्रख्यातिम। ब्रह्मत्वं
8774 [हिरण्यगमाधिकारं] हैरण्यगर्भाधिकारम्। वैदेहमोक्षणं
8775 विदेहमुक्ततां प्राप्तेन शेषः। भाव्यमिति भावे कृत्यः। अथवा
8776 वैदेहमोक्षणं भाव्यं प्राप्तव्यम्। भू प्राप्तावात्मनेपदी तस्मात्कर्मणि
8777 कृत्यः॥ ३०॥
8778
8779 वीतशोकभयः शान्तनिर्वाणो गतकल्पनः।
8780 जीवन्मुक्तो जितमना व्यासोऽयमिति वर्णितः॥ ३१॥
8781
8782 तस्य सांप्रतं जीवन्मुक्ततां दर्शयति - वीतेति। निर्वाणो निर्गतो
8783 मोहबन्ध-नात्। गत्यर्थत्वात्कर्तरि क्तः। निर्वाणो वाते इति निष्ठानत्वम्।
8784 शान्तश्चासौ निर्वाणश्चेति कर्मधारयः। अतएव गता
8785 अहंममेत्यध्यासकल्पना यस्य। अतएव च वीतशोकभयः॥ ३१॥
8786
8787 वित्तबन्धुवयःकर्मविद्याविज्ञानचेष्टितैः।
8788 समानि सन्ति भूतानि कदाचिन्नतु तानि तु॥ ३२॥

द्वचित्तु तानि न समानीत्यन्वयः ॥ ३२ ॥

[क्वचिदिति पूर्वोत्तरान्वयि] द्वचित्सर्गशतैस्तानि भवन्ति न भवन्ति
वा ।
कदाचिदपि मायेयमित्थमन्तविवर्जिता ॥ ३३ ॥

क्वचित्कदाचिदपि भवन्ति ॥ ३३ ॥

यच्छतीयं विपर्यासम् भूरिभूतपरम्परा ।
बीजराशिरिवाजस्रं पूर्यमाणः पुनःपुनः ॥ ३४ ॥

भूतपरम्परा प्राणिनिकायः । यथा धान्यादिबीजराशिर्मानाय पुनः पुनः
प्रस्थादौ पूर्यमाणः पुना राशिकृतो न पूर्वक्रमसंनिविष्टबीजो भवति
किंतु विपर्यासं [गच्छति] यच्छति तद्वत् ॥ ३४ ॥

तेनैव संनिवेशेन तथान्येन पुनःपुनः ।
सर्गाकाराः प्रवर्तन्ते तरङ्गाः कालवारिधेः ॥ ३५ ॥

संनिवेशोऽवयवसंस्थानविशेषः क्रमो वा ॥ ३६ ॥

आश्वस्तान्तःकरणः शान्तविकल्पः स्वरूपसारमयः ।
परमशमामृततृप्तस्तिष्ठति विद्वान्निरावरणः ॥ ३६ ॥

जीवन्मुक्तस्य योगबलादाधिकारिकनानाशरीरपरिग्रहेऽपि न मुक्तिस्वरूप##-
सर्वस्योप-पादको हेतुर्निरावरण इति ।
अनाश्वासविकल्पासारदेहादिमयत्वाशान्ततृप्त्या##-
ज्ञानफलं सा च न पाक्षिकीति भावः ॥ ३६ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मुमुक्षुव्यवहार##-

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे मुमुक्षुव्यवहारप्रकरणे
भूयोभूयःसर्गानुवर्णनं नाम तृतीयः सर्गः ॥ ३ ॥

चतुर्थः सर्गः ४

श्रीवसिष्ठ उवाच ।

सौम्याम्बुत्वे तरङ्गत्वे सलिलस्याम्बुता यथा ।
समैवाब्धौ तथाडेहसदेहमुनिमुक्तता ॥ १ ॥

मुक्तानुभवतो मुक्त्योरविशेषोऽत्र कीर्त्यते ।
मूलदार्ढ्याय शास्त्रीयं पौरुषं च प्रशस्यते ॥

आत्मनो नित्यमुक्तस्वभावस्याज्ञानावरणमेव बन्धः । ज्ञानेन तन्नाश
एव मुक्तिः । नष्टे त्वज्ञाने परिज्ञातश्चित्रव्याघ्र इव दृश्यमानोऽपि
व्यवहारः कौतुकायैव नानर्थायेति न जीवन्मुक्तविदेहमुक्तयोर्विशेष इति
पूर्वशङ्कां समाधाय प्रस्तुतमात्मतत्त्वं विस्तरेणोपदेष्टुकामः
प्रथमं मूलदार्ढ्याय पुरुषप्रयत्नं समर्थयति - सौम्येत्यादिना । हे
सौम्य प्रियदर्शन अम्बुत्वे निश्चलाम्बुत्वे । समैव न विषमा । तथैव अदेह##-

सदेहा वास्त्वदेहा वा मुक्तता विषये न च ।

8841 अनास्वादितभोगस्य कुतो भोज्यानुभूतयः ॥ २ ॥
8842
8843 विषये न च विषयाधीना तु न। यदि मुक्तिः स्वर्गादिरिव विषयाधीना स्यात्तर्हि
8844 तथैव विषयवैषम्याद्विषमास्यादिति भावः। ननु तथापि
8845 भोक्तृत्वाभोक्तृ-त्वकृतो विशेषोऽस्त्येव भोगार्थत्वाद्देहस्थितेस्तत्राह
8846 - अनास्वादितेति। भोगेषु सत्यबुद्ध्या भोक्तृत्वाभिमानेन। भोगास्वादने
8847 हि भोगकृतो विशेषः स्यान्न त्वसङ्गोदासीनात्मैकत्वदर्शिनः स इति भावः ॥
8848 २ ॥
8849
8850 जीवन्मुक्तं मुनिश्रेष्ठं केवलं हि पदार्थवत्।
8851 पश्यामः पुरतो नास्य पुनर्विघ्नोऽन्तराशयम् ॥ ३ ॥
8852
8853 तर्हि कथमस्य सदेहत्वं तत्राह - जीवन्मुक्तमिति। मुनिश्रेष्ठं व्यासं
8854 पदार्थवत्सदेहवत्पुरतः पश्यामः। स्वकल्पनयेति शेषः। अन्तराशय##-
8855 इति भावः ॥ ३ ॥
8856
8857 सदेहादेहमुक्तानां भेदः को बोधरूपिणाम्।
8858 यदेवाम्बुतरङ्गत्वे सौम्यत्वेऽपि तदेव तत् ॥ ४ ॥
8859
8860 अबोध एव हि भेदकस्तदपगमे बोधमात्रपरिशेषे को भेदक इत्यर्थः।
8861 सौम्यत्वे निश्चलतया प्रसन्नत्वे। तत् अम्बु। तदेव अम्ब्वेव ॥ ४ ॥
8862
8863 न मनागपि भेदोऽस्ति सदेहादेहमुक्तयोः।
8864 सस्पन्दोऽप्यथवाऽस्पन्दो वायुरेव यथानिलः ॥ ५ ॥
8865
8866 अम्बुनि कदाचिदस्वच्छत्वादिकृतो विशेषोऽपि स्यादिति दृष्टान्तान्तरेणोक्तं
8867 समर्थयते - न मनागिति ॥ ५ ॥
8868
8869 सदेहा वा विदेहा वा मुक्तता न प्रमास्पदम्।
8870 अस्माकमपि तस्यास्ति स्वैकतास्त्यविभागिनी ॥ ६ ॥
8871
8872 अत्र क्वचित्पुष्तकेषु -
8873
8874 मयोक्तं केवलीभावं तत्तत्स्मरणजीवनम्।
8875 सदेहस्य विदेहस्य समतैव [समा शिवा] सदा शिवा ॥
8876
8877 इति श्लोकोऽधिकः पठ्यते तस्यायमर्थः - ननु वायुः सस्पन्दः
8878 शिशिरस्तरु-तरङ्गादिकम्पहेतुस्त्वगिन्द्रियवेद्यश्च। अस्पन्दस्तु तद्विपरीत
8879 इति तत्रापि इति तत्रापि भेदोऽस्त्येवेति कथं तदभावेऽसौ दृष्टान्तस्तत्राह -
8880 मयेति। हे राम त्वं सर्वत्र उक्तं विवक्षितं तत्तद्दृष्टान्तस्मरणस्य
8881 जीवनं सारभूतं केवलीभावं वस्तुनः स्वरूपाप्रच्युतिलक्षणं मय
8882 उपमिनु नत्वविवक्षि-तं [विवक्षितकार्यकृतं भ्देअं
8883 कल्पयेत्ययं] कार्यभेदकृतं कार्यभेदकृतं वैलक्षण्यं
8884 कल्पयेत्यर्थः। तथाचैकांशे [चैकांशेन दृष्टान्त] दृष्टान्तो
8885 न सर्वांशे इति भावः। अत्र सदेहादेहमुक्तै-क्यमुपमेयं उक्तं
8886 विवक्षितं तत्सादृश्यार्थं स्मर्यते तत्स्मरणं
8887 सस्पन्दास्पन्दानिलैक्यमुपमानं तस्य जीवनं उपमेयसादृश्योल्लासा##-
8888 किंच सदेहविदेहबन्धमोक्षादिव्यवहारोऽप्यज्ञदृशा कल्पनयैव न
8889 परमार्थ-दृशेत्याह - सदेहेति (?)। अस्माकं
8890 वसिष्ठस्य तस्य व्यासस्यापि सदेहा विदेहा वा मुक्तता प्रमायाः
8891 परमार्थदृष्टेरास्पदं विषयो नास्ति किंतु अविभा-गिनी द्वैतशून्या
8892 स्वात्मैकतैवास्तीति तल्लाभरूपे ज्ञानफले विशेषा-भावान्न

8893 ज्ञानस्यानित्यफलतादोषशङ्कावकाशः नापि ज्ञानोदये देहपातापत्तिः।
8894 स्वविरोध्यंशस्यैव ज्ञानेन बाधाद्देहधारणस्य च प्रारब्धफलत्वेन
8895 ज्ञानतुल्यत्वेनोपजीव्यत्वेन च ज्ञानाविरुद्धत्वादुपा-दाननिद्रानाशेऽपि
8896 स्वप्नसंस्कारस्य कंचित्कालमनुवृत्तिवदविद्योच्छेदेऽपि यावत्प्रारब्धं
8897 देहादिप्रतिभासोपपत्तेरिति भावः॥ ६॥
8898
8899 तस्मात्प्रकृतमेवेदं शृणु श्रवणभूषणम्।
8900 मयोपदिश्यमानं त्वं ज्ञानमज्ञान्ध्यनाशनम्॥ ७॥
8901
8902 इत्थं निरस्ते संशये प्रकृतस्यावसरं दर्शयति - तस्मादिति।
8903 अज्ञानमज्ञा सैवान्ध्यं तस्य नाशनम्॥ ७॥
8904
8905 सर्वमेवेह हि सदा संसारे रघुनन्दन।
8906 सम्यक्प्रयुक्तात्सर्वेण पौरुषात्समवाप्यते॥ ८॥
8907
8908 ननु शुक्रादीनां शमदमादीसाधनसंपन्नानां श्रवणं पलितं
8909 कथमन्येषामाधुनिकानां तत्फलिष्यति साधनानां दुःसंपादत्वादि##-
8910 सदा सर्वमेवावाप्यते तर्हि कथं क्वचिद्यत्नवैफल्यदर्शनं तत्राह -
8911 सम्यगिति। अनुपरम् एव सम्यद्प्रयोगः। समवाप्यते संप्राप्यते॥ ८॥
8912
8913 इह हीन्दोरिवोदेति शीतलाह्लादनं हृदि।
8914 परिस्पन्दफलप्राप्तौ पौरुषादेव नान्यतः॥ ९॥
8915
8916 परिस्पन्दः शास्त्रविहितकायवाक्चित्तचलनरूपं कर्म तस्य फलं
8917 चित्तशुद्धिद्वारा ज्ञानं तत्प्राप्तौ सत्यां हृति शीतलं कामक्रोधादि##-
8918 ब्रह्मण आनन्दः। श्रोत्रियस्य चाकामहतस्य इति। स्मृतिश्च यच्च कामसुखं
8919 लोके यच्च दिव्यं महत्सुखम्। तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं
8920 कलाम्। इति तत्तु सर्व पौरुषादेव भवति नान्यत इति पुरुषप्रयत्न एव निर्भरः
8921 कार्य इति भावः॥ ९॥
8922
8923 पौरुषं स्पन्दफलवद्दृष्टं प्रत्यक्षतो नयत्।
8924 कल्पितं मोहितैर्मन्दैर्दैवं किंचिन्न विद्यते॥ १०॥
8925
8926 ननु दैवप्रातिकूल्ये पौरुषं व्यर्थं दृश्यते। तथाच श्रेयांसि
8927 बहुविघ्नानि इति प्रवादान्न तत्फलाश्वास इत्याशङ्क्य दैवस्य
8928 पौरुषेऽन्तर्भावं दौर्बल्यं च वक्ष्यमाणमभिप्रेत्य स्वतन्त्रं तन्निरस्यति
8929 - पौरुषमिति। गमनभोजनादिपौरुषं स्पन्दद्वारा देशान्तरं तृप्त्यादि
8930 वा नयत्प्रापयत् प्रत्यक्षतो दृष्तमिति नयत्पदस्य पूर्वत्र वा, यद्दैवं
8931 न दृष्टं तत् न विद्यत इति पदभङ्गेनोत्तरत्र वान्वयः॥ १०॥
8932
8933 साधूपदिष्टमार्गेण यन्मनोङ्गविचेष्टितम्।
8934 तत्पौरुषं [तत्साफल्यम्] तत्सफलमन्यदुन्मत्तचेष्टितम्॥ ११॥
8935
8936 किं तत्पौरुषं यत्प्रशस्यते तदाह - साध्विति। अङ्गग्रहणं
8937 वाचोप्युपलक्षणम्॥ ११॥
8938
8939 यो यमर्थं प्रार्थयते तदर्थं चेहते क्रमात्।
8940 अवश्यं स तमाप्नोति न चेदर्धान्निवर्तते॥ १२॥
8941
8942 ईहते चेष्टते। क्वचिद्विघ्नैः प्रतिघातः शास्त्रोक्तक्रमभ्रंशादेवेति
8943 सूचनाय क्रमादित्युक्तम्। साङ्गात्कर्मणः फलावश्यंभावनियमादिति
8944 भावः॥ १२॥

8945

8946 पौरुषेण प्रयत्नेन त्रैलोक्यैश्वर्यसुन्दराम् |
8947 कश्चित्प्राणिविशेषो हि [वृषतां, वृषा=इन्द्रः] शक्रतां
8948 समुपागतः || १३ ||
8949

8950 तमेव नियमं बहुशः संवादेन द्रढयति - पौरुषेणेत्यादिचतुर्भिः ||
8951 १३ ||
8952

8953 पौरुषेणैव यत्नेन सहसाम्भोरुहास्पदम् |
8954 कश्चिदेव चिदुल्लासो ब्रह्मतामधितिष्ठति || १४ ||
8955

8956 अम्भोरुहास्पदं पद्मासनं अधिष्ठायेति शेषः | ब्रह्मतां
8957 हिरण्यगर्भतां गुणमूर्तिसारुप्यमुक्तिं वा | एवमुत्तरयोरपि || १४ ||
8958

8959 सारेण पुरुषार्थेन स्वेनैव गरुडध्वजः |
8960 कश्चिदेव पुमानेव पुरुषोत्तमतां गतः || १५ ||
8961

8962 पौरुषेणैव यत्नेन ललनावलिताकृतिः [वलिताकृतिम्] |
8963 शरीरी कश्चिदेवेह गतश्चन्द्रार्धचूडताम् || १६ ||
8964

8965 प्राक्तनं चैहिकं चेति द्विविधं विद्धि पौरुषम् |
8966 प्राक्तनोऽद्यतनेनाशु पुरुषार्थेन जीयते || १७ ||
8967

8968 पुरुषार्थेन पौरुषेण जीयतेऽभिभूयते || १७ ||
8969

8970 यत्नवद्भिर्दृढाभ्यासैः [प्रजोत्साह] प्रज्ञोत्साहसमन्वितैः
8971 |
8972 मेरवोऽपि निगीर्यन्ते कैव प्राक्पौरुषे कथा || १८ ||
8973

8974 नन्वनन्तकोटिकल्पार्जितानामनन्तानां प्राक्तनकर्मणां कथमल्पेनाद्य##-
8975 प्रलयाधिकारिदेवता-भावं प्राप्तैः पुरुषैरित्यर्थः | यद्यप्यनन्तानि
8976 कर्माणि तथापि तेषऽम् मूलैक्यात्तन्नाशेन जयः सुकर इत्यभिप्रेत्याह -
8977 कैवेति || १८ ||
8978

8979 शास्त्रनियन्त्रितपौरुषपरमा पुरुषस्य पुरुषता या स्यात् |
8980 अभिमतफलभरसिद्ध्यै भवति हि सैवान्यथा त्वनर्थाय || १९ ||
8981

8982 उक्तमर्थमुपसंहरंस्तद्भ्रंशेऽनर्थमाह - शास्त्रेति | शास्त्रैः
8983 श्रुत्यादिभिर्नियन्त्रितं नियमितं यत्पौरुषं तदेव परममवश्य##-
8984 स्यात्सैवाभिमतफलभरस्य सिद्ध्यै भवति हि | अन्यथा अशास्त्रीया
8985 त्वनर्थायेत्यर्थः || १९ ||
8986

8987 कस्यांचित्स्वयमात्मदुःस्थितिवशात्पुंसो दशायां
8988 शनैरङ्गुल्यग्रनिपीडितैकचुलुकादावापबिन्दुर्बहुः |
8989 कस्यांचिज्जलराशिपर्वतपुरद्वीपान्तरालीकृता
8990 भर्तव्योचितसंविभागकरणे पृथ्वी न पृथ्वी भवेत् || २० ||
8991

8992 नन्वल्पधनबलबुद्धीनां कथं महाधनबलबुद्धिसाध्यपौरुषफल##-
8993 जन्मान्तरे वा महाधनादिसंपत्त्या तल्लाभः सिध्यति | नहि पुरुषस्य दुर्दशा
8994 सुदशा वा सदैव भवतीत्यभिप्रेत्य शास्त्रीयप्रयत्नतच्छैथिल्ययोः फलतो
8995 महदन्तरं दर्शयति - कस्यांचिदिति | पुंसः शास्त्रीयप्रयत्न##-
8996 स्वहस्तादेरप्य-स्वाधीनत्वादङ्गुल्यप्राणां निपीडितेन पीडासाध्येनापि

8997 निकुञ्चनेन संपाद्यादेकचुलुकात्करसंमितसलिलात् मुखे आ उप्यते क्षिप्यत
8998 इत्यावाप-स्तथाविधो बिन्दुरपि दुर्लभत्वाद्बहुमतो भवति। तस्यैव
8999 शास्त्रीययत्न-दार्ढ्ये
9000 धर्मोत्कर्षात्कस्यांचित्प्रियव्रतादिवत्सप्तद्वीपाधिपत्यदशायां
9001 भर्तव्येभ्यः पुत्रादिभ्य उचितो दायादिसंविभागस्तत्करणे जलराश्याद##-
9002 पृथ्वी न महती भवेत्। न न बहुमता भवेदित्यर्थः। तथाहि प्रसिद्धं
9003 पुराणे प्रियव्रतोत्तानपादौ तावेवावां स्नुहीतरू इति॥ २०॥
9004
9005 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मुमुक्षुव्यवहार##-
9006
9007 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे मुमुक्षुव्यवहारप्रकरणे
9008 पौरुषप्रकरणं नाम चतुर्थः सर्गः॥ ४॥
9009
9010 पञ्चमः सर्गः ५
9011
9012 श्रीवसिष्ठ उवाच।
9013
9014 प्रवृत्तिरेव प्रथमं यथाशास्त्रविहारिणाम्।
9015 प्रभेव वर्णभेदानां साधनी सर्वकर्मणाम्॥ १॥
9016
9017 प्राबल्ये पौरुषस्यात्राप्यवश्यं फलसंगमे।
9018 दैवस्याव्यतिरेके च युक्तिदृष्टान्त ईर्यते॥
9019
9020 यत्पूर्वमुक्तं पौरुषातिरेकेण दैवस्यासत्त्वं दैवात्पौरुषस्य प्राबल्यं
9021 पौरुषादेव पुरुषार्थसिद्धिरिति च तत्सर्वमुपपत्तिभिः समर्थयितुं प्रतिजानीते
9022 - प्रवृत्तिरेवेति। शास्त्रमनतिक्रम्य विहारिणां वाङ्मनः##-
9023 पुरुषार्थानां सिद्धौ प्रथमं प्रवृत्तिरेव कारणं यथा नीलपीतादि##-
9024 प्रमाणं ते कार्याकार्यव्यवस्थितौ आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते
9025 इत्यादिस्मृतेरिति भावः॥ १॥
9026
9027 मनसा वाञ्छ्यते यच्च यथाशास्त्रं न कर्मणा।
9028 साध्यते मत्तलीलासौ मोहनी नार्थसाधनी॥ २॥
9029
9030 ननु तृप्त्यादिवद्दृष्टफलत्वाद्विद्यायाः कस्तत्साधने
9031 शास्त्रीयनियमस्योप-योगस्तत्राह - मनसेति। असौ मत्तलीला
9032 उन्मत्तचेष्टैव। साध्यते तेनेति शेषः। अतएव न पुरुषार्थसाधनी प्रत्युत
9033 मोहनी। दृष्तफलत्वेऽप्यशास्त्रीयोपाय##-
9034
9035 यथा संयतते [संयत्यते] येन तथा तेनानुभूयते।
9036 स्वकर्मैवेति चास्तेऽन्या व्यतिरिक्ता न दैवदृक्॥ ३॥
9037
9038 शास्त्रीयस्य यत्नस्य शास्त्रीयमेव फलमशास्त्रीयस्य चाशास्त्रीयमेवेत्यौ##-
9039 दिअवादुभयवैपरीत्यमपि स्यात्तत्राह - यथेति। ननु
9040 दैवादुभयवैपरित्यमपि स्यात्तत्राह - आस्तेऽन्या व्यतिरिक्ता न दैवदृगिति।
9041 प्राक्तनकर्मैव फलावस्थं दैवमित्युच्यते न ततोऽतिरिक्तं दैवं दृश्यत
9042 इत्यर्थः॥ ३॥
9043
9044 उच्छास्त्रं शास्त्रितं चेति द्विविधं पौरुषं स्मृतम्।
9045 तत्रिच्छास्त्रमनर्थाय परमार्थाय शास्त्रितम्॥ ४॥
9046
9047 उक्तमर्थमेव स्फुटयति - उच्छास्त्रमिति। शास्त्रितं शास्त्रनियतम्।
9048 प्रातिपदिकाद्धात्वर्थे णिचि क्तः॥ ४॥

9049
9050 द्वौ हुडाविव युध्येते पुरुषार्थौ समासमौ ।
9051 प्राक्तनश्चैहिकश्चैव शाम्यत्यत्राल्पवीर्यवान् ॥ ५ ॥
9052
9053 हुडौ मेषौ । कदाचित्समौ कदाचिदसमौ । अत्र अनयोर्मध्ये ॥ ५ ॥
9054
9055 अतः पुरुषयत्नेन यतितव्यं यथा तथा ।
9056 पुंसा तन्त्रेण सद्योगाद्येनाश्वद्यतनो जयेत् ॥ ६ ॥
9057
9058 तन्त्रेण शास्त्रीयनियमेन । अतन्द्रेण इति पाठे निरालस्येन पुंसा ॥ ६ ॥
9059
9060 द्वौ हुडाविव युध्येते पुरुषार्थौ समासमौ ।
9061 आत्मीयश्चान्यदीयश्च जयत्यतिबलस्तयोः ॥ ७ ॥
9062
9063 ननु मनुष्याणां त्रिभिर्ऋणवा [ऋणवान्] जायते इति श्रुतौ
9064 देवादिऋणित्वश्रवणात् तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विद्युः इति
9065 श्रवणाच्च तरस्यावश्यंविघ्नाचरणे कृतोऽपि यत्नो विफलः
9066 स्यादित्याशङ्क्याह - द्वाविति । दोषेषु सत्स्वेव देवानां विघ्नशक्तेः
9067 स्वप्रयत्नेन दोषजये तेषां विघ्नशक्तिः कुण्ठीभवतीति भावः ॥ ७ ॥
9068
9069 अनर्थः प्राप्यते यत्र शास्त्रितादपि पौरुषात् ।
9070 अनर्थकर्तृ बलवत्तत्र ज्ञेयं स्वपुरुषम् ॥ ८ ॥
9071
9072 ननु शास्त्रीयमार्गे यतमानानामपि क्वचिद्रोगाद्यनर्थः कथं दृश्यते
9073 तत्राह - अनर्थ इति । तथाच तदपि जय्यमेवेति भावः ॥ ८ ॥
9074
9075 परं परुषमाश्रित्य दन्तैर्दन्तान्विचूर्णयन् ।
9076 शुभेनाऽशुभमुद्युक्तं प्राक्तनं पौरुषं जयेत् ॥ ९ ॥
9077
9078 शुभेनाद्यतनपौरुषेण । उद्युक्तं विघ्नाचरणायेत्यर्थः ॥ ९ ॥
9079
9080 प्राक्तनः पुरुषार्थोऽसौ मां नियोजयतीति धीः ।
9081 बलादद्पदीकार्या प्रत्यक्षादधिका न सा ॥ १० ॥
9082
9083 पुरुषार्थः कर्मफलम् । अधस्पदीकार्या पादेनाक्रमणीया । विनाशनीयेति
9084 यावत् । अधःशिरसी पदे इति सत्वम् ॥ १० ॥
9085
9086 तावत्तावत्प्रयत्नेन यतितव्यं सुपौरुषम् ।
9087 प्राक्तनं पौरुषं यावदशुभं शाम्यति स्वयम् ॥ ११ ॥
9088
9089 सुपौरुषमिति क्रियाविशेषणम् । स्वयमिति निःशेषतालाभाय विशेषणं परतः
9090 शान्तौ तदपगमे पुनरुद्भवो मा भूदिति ॥ ११ ॥
9091
9092 दोषः शाम्यत्यसंदेहं प्राक्तनोऽद्यतनैर्गुणैः ।
9093 दृष्टान्तोऽत्र ह्यस्तनस्य दोषस्याद्य गुणैः क्षयः ॥ १२ ॥
9094
9095 प्राक्तन एव प्रबलः किं न स्यात्तत्राह - दोष इति । ह्यस्तनस्य
9096 पूर्वेद्युस्तनस्य दोषस्याजीर्णादेः । गुणैर्लङ्घनादिभिः ॥ १२ ॥
9097
9098 असद्दैवमधःकृत्वा नित्यमुद्रिक्तया धिया ।
9099 संसारोत्तरणं भूत्यै यतेताऽऽधातुमात्मनि ॥ १३ ॥
9100

9101 असद्दैवं प्राक्तनदुरदृष्टमद्यतनसुकृतैरुद्रिक्तया धिया अधःकृत्वा
9102 परिभूय आत्मनि संसारोत्तरणमाधातुं संपादयितुं भूत्यै
9103 शमदमश्रवणादिसंपदे यतेत॥ १३॥
9104
9105 न गन्तव्यमनुद्योगैः साम्यं पुरुषगर्दभैः।
9106 उद्योगस्तु यथाशास्त्रं लोकद्वितयसिद्धये॥ १४॥
9107
9108 लोकद्वितयं स्वर्गापवर्गौ॥ १४॥
9109
9110 संसारकुहरादस्मान्निर्गन्तव्यं स्वयं बलात्।
9111 पौरुषं यत्नमाश्रित्य हरिणेवारिपञ्जरात्॥ १५॥
9112
9113 हरिणा सिंहेन अरिभिर्मनुष्यैः कृताद्बन्धनपञ्जरादिव। विष्णुना असुरैः
9114 प्रयुक्तान्मायापञ्जरादिवेति वा॥ १५॥
9115
9116 प्रत्यहं प्रत्यवेक्षेत देहं न"वरमात्मनः।
9117 संत्यजेत्पशुभिस्तुल्यं श्रयेत्सत्पुरुषोचितम्॥ १६॥
9118
9119 तुल्यं तुल्यताम्। भावप्रधानो निर्देशः। सत्पुरुषोचितं
9120 साधुसंगमसच्छास्त्रादि श्रयेत्॥ १६॥
9121
9122 किंचित्कान्तान्नपानादिकलिलं कोमलम् गृहे।
9123 व्रणे कीट इवास्वाद्य वयः कार्यं न भस्मसात्॥ १७॥
9124
9125 कलिलं द्रवपिच्छिलम्। वयः सर्वपुरुषार्थसाधनं यौवनम्।
9126 भस्मसाद्भस्मप्रायम्।व्यर्थमिति यावत्॥ १७॥
9127
9128 शुभेन पौरुषेणाशु शुभमासाद्यते फलम्।
9129 अशुभेनाशुभं नित्यं दैवं नाम न किंचन॥ १८॥
9130
9131 न किंचन प्राक्तनशुभाशुभातिरिक्तमित्यर्थः॥ १८॥
9132
9133 प्रत्यक्षमानमुत्सृज्य योऽनुमानमुपैत्यसौ।
9134 स्वभुजाभ्यामिमौ सर्पाविति प्रेक्ष्य पलायते॥ १९॥
9135
9136 अद्यतनयोरदृष्टरूपयोः शुभाशुभयोः प्रत्यक्षमानं श्रुतिः
9137 दृष्टयोस्त्वन्वयव्यतिरेकसहकृतं चक्षुरादि तत्सिद्धमद्यतनशुभ##-
9138 प्रत्यक्षश्रुतिप्रमाणं प्रभुसंमितमुत्सृज्य पौरुषप्रयत्नफल##-
9139 इत्यपादानता॥ १९॥
9140
9141 दैवं संप्रेरयति मामिति दग्धधियां मुखम्।
9142 अदृष्टश्रेष्ठदृष्टीनां दृष्ट्वा लक्ष्मीर्निवर्तते॥ २०॥
9143
9144 न दृष्टा श्रेष्ठानां पौरुषेणैव पुरुषार्थं प्राप्तानां
9145 विश्वामित्रादीनां दृष्टिर्यैस्तेषाम्॥ २०॥
9146
9147 तस्मात्पुरुषयत्नेन विवेकं पूर्वमाश्रयेत्।
9148 आत्मज्ञानमहार्थानि शास्त्राणि प्रविचारयेत्॥ २१॥
9149
9150 विवेकं नित्यानित्यादिविवेकोपलक्षितसाधनचतुष्टयम्॥ २१॥
9151
9152 चित्ते चिन्तयतामर्थं यथाशास्त्रं निजेहितैः।

असंसाधयतामेव मूढाना। म्धिग्दुरीप्सितम् || २२ ||

श्रवणादिप्रवणतां स्थिरीकर्तुमन्यचेष्टां निन्दति - चित्ते इति |
यथाशास्त्रं निजैरीहितैः श्रवणमननादिचेष्टाभिरर्थं
परमार्थभूतमात्मतत्त्वम-चिन्तयतामत एव तं
पुरुषार्थमसंसाधयतामेव मूढानां दुरन्त##-
एवकारो योग्यजन्मलाभेऽपि तदसाधने पुनस्तद्दौर्लभ्यद्योतनार्थः | तथा च
श्रुतिः इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः इति || २२ ||

पौरुषं च नवानन्तं न यत्नमभिवाच्छ्यते |
न यत्नेनापि महता प्राप्यते रत्नमश्मतः [तैलमश्मनः] || २३
| |

नन्वियन्तं कालं पौरुषं कार्यमित्यवध्यवगमेन तस्यानन्त्यात्परि##-
तत्पौरुषम-नन्तमनवधिकं न | साक्षात्कारोदयस्यैवावधित्वात् | यत्नं
परिश्रम-मभिलक्ष्य च न वाञ्छ्यते नापेक्ष्यते | प्रत्यक्षावगमं
धर्म्यं सुसुखं कर्तुमव्ययम् इति भगवद्वचनादिति भावः | नन्विदं
पूर्णाहुत्या सर्वान्कामानवाप्नोति इतिवत्प्ररोचनामात्रं श्रमाधिक्ये सत्येवं
फलाधिक्यनियमादित्याशङ्क्यान्वयव्यभिचारमाह - नेति | रत्नतत्त्व##-
[व्यतिरेकेऽभिचारो] व्यभिचारोऽपि बोध्यः || २३ ||

यथा घटः परिमितो यथा परिमितः पटः |
नियतः परिमाणस्थः पुरुषार्थस्तथैव च || २४ ||

पूर्वार्धोक्तं दृष्टान्तेन दृअधयति - यथेति | घटो जले
यत्रापरिच्छेदकत्वेन पटस्तु दैर्घ्यादिना परिमितः प्रमाणैर्निश्चितस्तथैव
पुरुषार्थः पौरुषयत्नोऽपि परिमाणे साक्षात्कारफलावधौ तिष्ठतीति
परिमाणस्थो नियत एव || २४ ||

स च सच्छास्त्रसत्सङ्गसदाचारैर्निजं फलम् |
ददातीति स्वभावोऽयमन्यथा नार्थसिद्धये || २५ ||

स पौरुषयत्नः सदाचारैः सहित इति शेषः || २५ ||

स्वरूपं पौरुषस्यैतदेवं व्यवहरन्नरः |
याति निष्फलयत्नत्वं न कदाचन कश्चन || २६ ||

स्वरूपं पौरुषस्यैतदित्युक्तोपसंहारः | तादृशस्य फलाव्यभिचारमाह
- एवमिति || २६ ||

दैन्यदारिद्र्यदुःखार्ता अप्यन्ये पुरुषोत्तमाः |
पौरुषेणैव यत्नेन याता देवेन्द्रतुल्यताम् || २७ ||

उक्तं द्रढयितुमन्यत्रापि [मन्यत्राप्यस्य] न्याय्यस्य पौरुषस्य
फलाव्यभिचारं दर्शयति - दैन्येति | अन्ये नलहरिश्चन्द्रादयः || २७ ||

आबाल्यादलमभ्यस्तैः शास्त्रसत्सङ्गमादिभिः |
गुणैः पुरुषयत्नेन स्वार्थः संप्राप्यते यतः || २८ ||

यदि न श्रमापेक्षा तर्ह्यन्ते तत्करिष्यामः किमधुनैव तेनेत्याशङ्क्याह ##-
कोमलकण्टकायमानै-रित्यर्थः || २८ ||

9205 इति प्रत्यक्षतो दृष्टमनुभूतं श्रुतं कृतम् ।
9206 [दैवोत्थमिति] दैवात्तमिति मन्यन्ते ये हतास्ते कुबुद्धयः ॥ २९ ॥
9207
9208 प्रत्यक्षतो दृष्टमस्मदादिभिर्जीवन्मुक्तैरित्यर्थः । कृतं साधनतः ॥ २९ ॥
9209
9210 आलस्यं यदि न भवेज्जगत्यनर्थः
9211 को न स्याद्बहुधनको बहुश्रुतो वा ।
9212 आलस्यादियमवनिः ससागरान्ता
9213 संपूर्णा नरपशुभिश्च निर्धनैश्च ॥ ३० ॥
9214
9215 यद्येवं तर्हि न कुतः सर्वे यतन्ते - तत्राह - आलस्यमिति ।
9216 अनर्थहेतुत्वादर्थ-विघातकत्वाच्चानर्थः । बहुधनकः संपन्नतमः ।
9217 शेषाद्विभाषा इति कपू । बहुशुतः पण्डितः । सागरान्तैः समुद्रान्तैः सहिता
9218 अवनिर्भूमिः । तस्मादालस्यमुत्सृज्य बाल्यात्प्रभृति सत्संगमादिपरेण
9219 भाव्यमिति मुख्यः पक्ष इति भावः ॥ ३० ॥
9220
9221 बाल्ये गतेऽविरतकल्पितकेलिलोले
9222 दोर्दण्डमण्डितवयः [मण्डनवयः] प्रभृति प्रयत्नात् ।
9223 सत्सङ्गमैः पदपदार्थविशुद्धबुद्धिः
9224 कुर्यान्नरः [सुगुण] स्वगुणदोषविचारणानि ॥ ३१ ॥
9225
9226 यत्यप्यत्यन्तबाल्यप्रभृति कर्तुं न शक्यते तर्हि यौवनमारभ्य वा
9227 यतितव्यमित्याह - बाल्य इति । नरः अविरतैश्चपलैर्बालैः कल्पिताभिः
9228 क्रीडाभिर्लोले बाल्ये गते सति दोर्दण्डाभ्यां दुरुशुश्रूषादिसमर्था##-
9229 पदपदार्थविशुद्धबुद्धिः पदतदर्थतत्परीक्षाकुशलः
9230 [तत्त्वपरीक्षा] । व्युत्पन्नः सन्नित्यर्थः ।
9231 गुरुसतीर्थ्याभिज्ञतमादिसत्संगमैः । स्वस्य आत्मनो गुणानां
9232 शान्त्यादीनां दोषाणां रागादीनां चार्थानर्थपर्य##-
9233
9234 वाल्मीकिरुवाच ।
9235
9236 इत्युक्तवत्यथ मुनौ दिवसो जगाम
9237 सायंतनाय विधयेऽस्तमिनो जगाम ।
9238 स्नातुं सभा कृतनमस्करणा जगाम
9239 श्यामाक्षये रविकरेण [रविकरैश्च] सहाजगाम ॥ ३२ ॥
9240
9241 श्रीवाल्मीकिरुवाचारिस्।टनेमिनं प्रतीति देवदूतोक्तिः । मुनौ वाल्मीकौ इति
9242 उक्तप्रकारेण वसिष्ठोक्तं भरद्वाजं प्रत्युक्तवति सति दिवसो जगाम । इनः
9243 सूर्यश्चास्तं जगाम । भरद्वाजादिमुनिसभा च वाल्मीकये कृतनमस्करणा
9244 सायंतनाय संध्योपास्त्यग्निहोत्रादिविधये स्नातुं जगाम । अथ श्यामाया
9245 रात्रेः क्षये सति प्रातः रविकरेण आतपेन सह आजगाम ।
9246 पुनर्वाल्मीकिसंनिधिमित्यर्थः । उत्तरत्रापि सर्वत्रायं श्लोक एवमेव
9247 व्याख्येयो नतु मुनौ वसिष्ठे इत्युक्तवतीति । उत्तरत्र विस्तरेण तत्र तत्र
9248 दशरथसभोत्थानवर्णनस्याह्निकशेषानुष्ठानस्य रात्रौ रामादिभिः
9249 श्रुतार्थचिन्तनस्योषःकालसूर्योदयादेश्च वर्णनविस्तरस्याकाण्डप्रस्तुत##-
9250
9251 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मुमुक्षुव्यवहार##-
9252
9253 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे मुमुक्षुव्यवहारप्रकरणे
9254 पौरुषस्थापनं नाम पञ्चमः सर्गः ॥ ५ ॥
9255
9256 प्रथमो दिवसः ।

षष्ठः सर्गः ६

श्रीवसिष्ठ उवाच।

तस्मात्प्राक्पौरुषाद्दैवं नान्यत्तत्प्रोज्झस्य दूरतः।
साधुसंगमसच्छास्त्रैर्जीवमुत्तारयेद्बलात्॥ १॥

यत्रास्ति प्रबलं दैवं तत्रापि परपौरुषम्।
प्रोच्यते बलवद्दैवं प्राक्तनं वा स्वपौरुषम्॥

उक्तमेवार्थं प्रतिष्ठापयिष्यन्वसिष्ठ उवाच - तस्मादिति।
तस्मात्स्वतन्त्रस्य दुर्वचत्वात्प्राक्तनपौरुषादन्यद्दैवं नास्ति। तद्दैवं
तदधीनोऽहं न स्वतन्त्र इति दैष्टिकतामिति यावत्। दूरतः प्रोज्झ्यत्यक्त्वा।
उत्तारयेत्। संसारादिति शेषः॥ १॥

यथा यथा प्रयत्नः स्याद्भवेदाशु फलं तथा।
इति पौरुषमेवास्ति दैवमस्तु तदेव च॥ २॥

किं तद्बलं तद्दर्शयति - यथेति॥ २॥

दुःखाद्यथा दुःखाके हा कष्टमिति कथ्यते।
हाकष्टशब्दपर्यायस्तथा हा दैवमित्यपि॥ ३॥

हा कष्टमिति दुःखरूपेण परिणतं प्राक्तनं कर्मोच्यते तदेव
दैवमित्यर्थः॥ ३॥

प्राक्स्वकर्मेतराकारं [प्राक्सकर्म] दैवं नाम न विद्यते।
बालः प्रबलपुंसेव तज्जेतुमिह शक्यते॥ ४॥

इतराकारं स्वरूपान्तरवत्। अस्तु प्राक्तनकर्मैव दैवं किं ततस्तत्राह -
बाल इति॥ ४॥

ह्यस्तनो दुष्ट आचार आचारेणाद्य चारुणा।
यथाशु शुभतामेति प्राक्तनं कर्म तत्तथा॥ ५॥

चारुणा आचारेण प्रायश्चित्तादिना। शुभतामशुभाक्षमताम्॥ ५॥

तज्जयाय यतन्ते ये न लोभलवलम्पटाः।
ते दीनाः प्राकृता मूढाः स्थिता दैवपरायणाः॥ ६॥

लोभयन्तीति लोभा विषयसुखलवास्तेषु लम्पटाः सन्तो ये न यतन्ते ते दीनाः
प्राकृताः पामराः॥ ६॥

पौरुषेण कृतं कर्म दैवाद्यदभिनश्यति [द्यदपि]।
तत्र नाशयितुर्ज्ञेयं पौरुषं बलवत्तरम्॥ ७॥

यत्रापि दैवप्राबल्यप्रसिद्धिस्तत्रापि पौरुषस्यैव प्राबल्यमिति दर्शयति -
पौरुषेणेति॥ ७॥

यदेकवृन्तफलयोरथैकं शून्यकोटरम्।
तत्र प्रयत्नः स्फुरितस्तथा तद्रससंविदः॥ ८॥

9309
9310 नन्वस्तु पुरुषतन्त्रेष्वेवम् अपुरुषतन्त्रेषु तु दैवमेव शरणं स्यात्तत्राह ##-
9311 शेषः | तद्रसं संवेत्त्युपभुङ्क्ते [सेवन्त्युप] यः पुरुषः
9312 कीटादिर्वा तस्य प्राक्तन ऐहिको वा प्रयत्न एव तद्रसवि-घाताय स्फुरितः || ८
9313 | |
9314
9315 यत्प्रयान्ति जगद्भावाः संसिद्धा अपि संक्षयम् |
9316 क्षयकारकयत्नस्य ह्यत्र ज्ञेयं महद्बलम् || ९ ||
9317
9318 एकत्रोक्तं न्यायमन्यत्रापि दर्शयति - यदित्यादिना | यत् यत्र | जगति
9319 प्रसिद्धा भावाः पदार्थाः || ९ ||
9320
9321 द्वौ हुडाविव युध्येते पुरुषार्थौ परस्परम् |
9322 य एव बलवांस्तत्र स एव जयति क्षणात् || १० ||
9323
9324 तत्रोक्तं स्मारयति - द्वाविति || १० ||
9325
9326 भिक्षुको मङ्गलेभेन नृपो यत्क्रियते बलात् |
9327 तदमात्येभपौराणां प्रयत्नस्य बलं महत् || ११ ||
9328
9329 राजवंशाभावे पौरामात्यविसृष्टेन मङ्गलालंकृतेनेमेन गजेन यः
9330 कश्चिद्भिक्षुकोऽपि नृपः क्रियते इति प्रसिद्धं यत्तदिति संबन्धः || ११ ||
9331
9332 पौरुषेणान्नमाक्रम्य यथा दन्तेन चूर्ण्यते |
9333 अन्यः पौरुषमाश्रित्य तथा शूरेण चूर्ण्यते || १२ ||
9334
9335 अन्नमदनार्हं चर्वणयोग्यमिति यावत् | आत्तम् इति पाठे मुखेन गृहीतं
9336 तदेव | आक्रम्य निष्पीड्य | अन्यो दुर्बलः शूरेण प्रबलेन || १२ ||
9337
9338 अन्नभूता हि महतां लघवो यत्नशालिनाम् |
9339 यथेष्टं विनियोज्यन्ते तेन कर्मसु लोष्टवत् || १३ ||
9340
9341 हि यस्माद्धेतोः | अन्नभूता उपभोग्यभूताः | लघवोऽल्पबलाः | तेन हेतुना |
9342 लोष्टं शुष्कमृत्पिण्डः || १३ ||
9343
9344 शक्तस्य पौरुषं दृश्यमदृश्यं वापि यद्भवेत् |
9345 तद्दैवमित्यशक्तेन बुद्धमात्मन्यबुद्धिना || १४ ||
9346
9347 आत्मनि स्वस्मिन् | अबुद्धिना मुधेन || १४ ||
9348
9349 भूतानां बलवद्भूतं यन्न दैवमिति स्थितम् |
9350 तत्तेषामप्यधिष्ठातृ सतामेतत्स्फुटं मिथः || १५ ||
9351
9352 तेषां शक्तानामपि भूतानां बलवद्भूतं यत्तदधिष्ठातृ
9353 [यत्तत्तेषामधिष्ठातृ] नियन्तृ एतत्सतां विद्यमानप्राणिनां
9354 मिथः परस्परं स्फुटं व्यक्तं नतु दैवं स्थितमित्यन्वयः | यत्नस्तेनेति
9355 पाठे तु केन हेतुना यत्न एव स्थितो न दैवं स्थितमिति भित्त्वा व्याख्येयम् || १५ ||
9356
9357 शास्त्रामात्येभपौराणामविकल्पा स्वभावधीः |
9358 या सा भिक्षुकाराज्यस्य कर्तृ धर्तृ प्रजास्थितेः || १६ ||
9359
9360 अविकल्पा ऐकमत्यापन्नेति यावत् | स्वभावधीः स्वारसिकी बुद्धिर्या सैव

9361 भिक्षुकराजभावस्य कर्तृ कर्त्री प्रजास्थितेश्च धर्तृधारयित्री
9362 पदसंस्कार-पक्षेऽन्तरङ्गं सामान्ये नपुंसकं बहिरङ्गेण
9363 विशेष्यसंबन्धेन न बाध्यते। तथाच महाभाष्ये शास्त्रेण धर्मनियमः
9364 इति वार्तिकशेषप्र-सङ्गेन प्रयोगः शक्यं चानेन श्वमांसादिभिरपि
9365 क्षुत्प्रतिहन्तुं अतः शास्त्रेण नियमः क्रियते पञ्चपञ्चनखा भक्ष्याः इतीति
9366 ॥ १६ ॥
9367
9368 भिक्षुको मङ्गलेभेन नृपो यत्क्रियते क्वचित्।
9369 प्राक्तनं पौरुषं तत्र बलवद्वापि कारणम्॥ १७ ॥
9370
9371 अन्यपौरुषेणान्यस्य फलभोगे अतिप्रसङ्गमाशङ्क्य पक्षान्तरमाह -
9372 भिक्षुक इति। तत्र प्राक्तनं बलवत्पौरुषं वा कारणमित्यन्वयः॥ १७ ॥
9373
9374 ऐहिकः प्राक्तनं हन्ति प्राक्तनोऽद्यतनं बलात्।
9375 सर्वदा पुरुषस्पन्दस्तत्रानुद्वेगवाञ्जयी॥ १८ ॥
9376
9377 पुरुषं स्पन्दयतीति पुरुषस्पन्दो यत्नः। अनुद्वेगवानुद्वेगादुपरतः। तथा##-
9378 भावः॥ १८ ॥
9379
9380 द्वयोरद्यतनस्विअ प्रत्यक्षाद्बलिता भवेत्।
9381 दैवं जेतुं [जेतुमतः] यतो यत्नैर्बालो यूनेव शक्यते॥ १९ ॥
9382
9383 तमेव स्पष्टमाह - द्वयोरिति॥ १९ ॥
9384
9385 मेघेन नीयते यद्वद्वत्सरोपार्जिता कृषिः।
9386 मेघस्य पुरुषार्थोऽसौ जयत्यधिकयत्नवान्॥ २० ॥
9387
9388 ननु करकादिनिपातेन कृषिफलविघातादौ वैपरीत्यमेव
9389 दृष्टमित्याशङ्क्य सोऽप्यस्मदिष्टसाधक एव दृष्टान्त इत्याह -
9390 मेघेनेति। नीयते अपनीयते विनाश्यत इत्यर्थः। मेघस्य
9391 मेघाभिमानिपुरुषस्यासौ पुरुषार्थो यद्वत्तद्वदन्यत्रापि बोध्यमित्यर्थः।
9392 अभ्युपेत्य चेदम्। वस्तुतस्तु तत्रापि प्राक्तनं स्वस्य पौरुषमेवादृष्टद्वारा
9393 हेतुः॥ २० ॥
9394
9395 क्रमेणोपार्जितेऽप्यर्थे नष्टे कार्या न खेदिता।
9396 न बलं यत्र मे शक्तं तत्र का परिदेवना॥ २१ ॥
9397
9398 अस्तु वा क्वचित्पौरुषवैफल्यं तथापि न खेदो युक्तः किंतु पुनरुद्योग एव
9399 युक्त इत्याह - क्रमेणेत्यादिचतुर्भिः॥ २१ ॥
9400
9401 यन्न शक्नोमि तस्यार्थे यदि दुःखं करोम्यहम्।
9402 तदमारितमृत्योर्मे युक्तं प्रत्यहरोदनम्॥ २२ ॥
9403
9404 देशकालक्रियाद्रव्यवशतो विस्फुरन्त्यमी।
9405 सर्व एव जगद्भावा जयत्यधिकयत्नवान्॥ २३ ॥
9406
9407 देशेति। तथाच यत्र देशे काले वा स्वयत्नो विफलोऽभूत्तद्विहाय देशान्तरे
9408 कालान्तरेण क्रियान्तरेण द्रव्यान्तरेण वा यतितव्यमेव। प्रागादिदिक्षु
9409 विघ्नितस्यापि विश्वामित्रतपस उत्तरदिशि सिद्धिदर्शनादिति भावः॥ २३ ॥
9410
9411 तस्मात्पौरुषमाश्रित्य सच्छास्त्रैः सत्समागमैः।
9412 प्रज्ञाममलतां नीत्वा संसारजलधिं तरेत्॥ २४ ॥

प्राक्तनश्चैहिकश्चेमौ पुरुषार्थौ फलद्‌द्रुमौ।
संजातौ पुरुषारण्ये जयत्यभ्यधिकस्तयोः॥ २५॥

फलन्तौ फलजननसमर्थौ तथाविधौ च तौ द्रुमौ फलद्‌द्रुमौ संजातौ
पुरुषारण्ये। एकस्य मूलच्छेदेन शोषो परस्य प्ररोहोऽत्र जयः॥ २५॥

कर्म यः प्राक्तनं तुच्छं न निहन्ति शुभेहितैः।
अज्ञो जन्तुरनीशोऽसावात्मनः सुखदुःखयोः॥ २६॥

उक्तार्थानभ्युपगमे अनिष्टं दर्शयन्नीश्वराधीनतावादं निराचष्टे -
कर्मेत्यादिना। यो न निहन्ति अनीशोऽस्वतन्त्रो यं जन्तुरीश्वरप्रेरितः सन्स्वर्गं
नरकमेव वा गच्छेद्विनापि पुण्यपापाभ्यामित्यर्थः॥ २६॥

ईश्वरप्रेरितो गच्छेत्स्वर्गं नरकमेव वा।
स सदैव पराधीनः पशुरेव न संशयः॥ २७॥

तथा चानिर्मोक्षप्रसङ्ग इत्याह - स इति॥ २७॥

यस्तूदारचमत्कारः सदाचारविहारवान्।
स निर्याति जगन्मोहान्मृगेन्द्रः पञ्जरादिव॥ २८॥

स्वपक्षे तु नायं दोष इत्याह - यस्त्विति। प्रयत्नकौशलमत्र चमत्कारः॥
२८॥

कश्चिन्मां प्रेरयत्येवमित्यनर्थकुकल्पने।
यः [स्थितो दृष्टं] स्थितोऽदृष्टमुत्सृज्य त्याज्योऽसौ
दूरतोऽधमः॥ २९॥

ईश्वरस्वातन्त्र्यनिरासमुपसंहरति - कश्चिदिति। ननु एष ह्येव साधु कर्म
कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते य आत्मनि तिष्ठन्नात्मानमन्तरो
यमयति ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति इत्यादिश्रुतिस्मृति##-
यथाकारी यथाचारी तथा भवति साधुकारी साधुर्भवति पापकारी पापो भवति
यजेत् जुहुयाद्दद्यात् कर्ता शास्त्रार्थवत्त्वात् न कर्तृत्वं न कर्माणि लोकस्य
सृजति प्रभुः इत्याद्यनेकश्रुतिसूत्रस्मृत्यनुभवविरुद्धं जीवस्य
पारतन्त्र्यमुच्यते। नह्यस्वतन्त्रो जीवः कर्ता भवति। स्वतन्त्रः कर्ता
इत्यनुशासनविरोधात्। न वा बलवत्तरेश्वरायत्तोऽयं विधिशतेन निषेध##-
ब्रह्मवधादौ प्रवर्तितोऽयमपराधी स्यात्। कथं वा विषमेषु स्वयमेव
कांश्चित्प्रवर्त्य तान्नरकादिभागिनः कुर्वाणस्येश्वरस्य
वैषम्यनैर्घृ-ण्यदोषौ न स्याताम्। कथं वा
अन्तर्यामिब्राह्मणवाक्यशेषे नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता नान्योऽस्तोऽस्ति
मन्ता इत्यादिना जीवापलापेनेश्व-रैकस्वातन्त्र्यसमर्थनं च
संगछताम्। यदि तु क्वलाज्ञपुरुषदृष्टिम-वलम्ब्य
कर्मकाण्डप्रवृत्तेर्जीवस्वातन्त्र्यवादः तच्छैथिल्यापादनेन
सर्वभूतेष्वैकात्म्यव्युत्पादनाय प्रवृत्तां विवेकदृष्टिमवलम्ब्येश्व##-
तदेतद्-ब्रह्मापूर्वमनपरमनन्तरमबाह्ममयमात्मा ब्रह्म
सर्वानुभूः न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः
इत्यादिश्रुतिस्मृतिवादाः। यथा स्वप्नदर्पणादौ दारुहस्तिधावनस्य
हस्तिदृष्ट्या दर्शने हस्ती धावति न दारु। दारुदृशा दर्शने तु दार्वेव
धावति न हस्ती। परमार्थदृशा तु न हस्ती न वा दारु न वा
धावत्यविकृतं पुरुषदर्पणादिस्वरूपमेवास्ते इति वादास्तद्वदित्यविरोधं
ब्रूषे तर्हि मोक्षोपायप्रवर्तकवसिष्ठवचनस्या-प्यज्ञविषयत्वाद्युक्त

9465 एवात्रेश्वरस्वातन्त्र्यनिरासः। तथाच भगवत्पा-दीयं भाष्यम्
9466 तमेतमविद्याख्यमात्मानात्मनोरितरेतराध्यासं पुरस्कृत्य सर्वे
9467 प्रमाणप्रमेयव्यवहारा लौकिकाः प्रवृत्ताः सर्वाणि च शास्त्राणि
9468 विधिनिषेधमोक्षपराणि इति। एवं चाज्ञदृष्टिसिद्धजीवस्वातन्त्र्य##-
9469 वैषम्यनैर्घृण्यादिप्रसक्ति-रपीति भावः॥ २९॥
9470
9471 व्यवहारसहस्राणि यानुपायान्ति यान्ति च।
9472 यथाशास्त्रं विहर्तव्यं तेषु त्यक्त्वा सुखासुखे॥ ३०॥
9473
9474 उपायान्ति लाभादिफलेन। यान्ति तद्विघातेन। तेषु प्रियाप्रिये रागद्वेषौ त्यक्त्वा
9475 यथाशास्त्रमेव व्यवहर्तव्यमित्यर्थः॥ ३०॥
9476
9477 यथाशास्त्रमनुच्छिन्नां मर्यादां स्वामनुज्झतः।
9478 उपतिष्ठन्ति सर्वाणि रत्नान्यम्बुनिधाविव॥ ३१॥
9479
9480 सर्वाणि अभीष्टानीति शेषः॥ ३१॥
9481
9482 स्वार्थप्रापककार्यैकप्रयत्नपरता बुधैः।
9483 प्रोक्ता पौरुषशब्देन सा सिद्ध्यै शास्त्रयन्त्रिता॥ ३२॥
9484
9485 पौरुषशब्दार्थमाह - स्वार्थेति। स्वार्थः सुखं दुःखनिवृत्तिश्च
9486 तत्प्रापकाणि यान्यवश्यकर्तव्यानि साधनानि तदेकप्रयत्नतत्परतेत्यर्थः। सा
9487 सिद्ध्यै परमपुरुषार्थाय॥ ३२॥
9488
9489 क्रियया स्पन्दधर्मिण्या स्वार्थसाधकता स्वयम्।
9490 साधुसंगमसच्छास्त्रतीक्ष्णयोन्नियते धिया॥ ३३॥
9491
9492 स्पन्दो देहादिचलनं तद्धर्मिण्या तत्परम्परारुपया शुश्रूषया
9493 श्रवणादिक्रियया साधुसंगमेन सच्छास्त्रैश्चासंभावनादि##-
9494 स्वार्थसाधकतेत्यर्थः॥ ३३॥
9495
9496 अनन्तं समतानन्दं परमार्थं विदुर्बुधाः।
9497 स येभ्यः प्राप्यते नित्यं ते सेव्याः शास्त्रसाधवः॥ ३४॥
9498
9499 साधुसच्छास्त्रयोर्लक्षणमाह - अनन्तमिति। समता
9500 अज्ञानकृतवैषम्य-निवृत्तिः॥ ३४॥
9501
9502 देवलोकादिहागत्य लोकद्वयहितं भवेत्।
9503 प्राक्तनं पौरुषं तद्वै दैवशब्देन कथ्यते॥ ३५॥
9504
9505 यल्लोकद्वयहितं पौरुषं भवेत्तदेव देवलोकभुक्तशिष्टं
9506 देवलोकादिहागत्य स्थितस्य दैवशब्देन कथ्यत इत्यर्थः॥ ३५॥
9507
9508 तद्युक्तमेतदेतस्मिन्नास्ति नापवदामहे।
9509 मूढैः प्रकल्पितं दैवं मन्यन्ते ये क्षयं गताः॥ ३६॥
9510
9511 तदेतद्युक्तमेतस्मिन्नास्ति संदेह इति शेषः। तन्नापवदामहे न निन्दामः।
9512 किं तर्हि निन्द्यते तदाह - मूढैरिति। ते क्षयं गता इत्यपवदामहे इति
9513 शेषः॥ ३६॥
9514
9515 नित्यं स्वपुरुषादेव लोकद्वयहितं भवेत्।
9516 ह्यस्तनी दुष्क्रियाभ्येति शोभां सत्क्रियया यथा॥ ३७॥

9517
9518 ननु प्राग्देवलोकावाप्तिरपि दैवादेव किं न स्यात्तत्राह - नित्यमिति।
9519 प्रसाधितं फलेनोपसंहरति - ह्यस्तनीत्यादिना॥ ३७॥
9520
9521 अद्यैवं प्राक्तनी तस्माद्यत्नाद्यः कार्यवान्भवेत्।
9522 करामलकवद्दृष्टं पौरुषादेव तत्फलम्॥
9523 मूढः प्रत्यक्षमुत्सृज्य दैवमोहे निमज्जति॥ ३८॥
9524
9525 एवं अद्य [क्वचित् अद्य इति न लभ्यते] अद्यतन्या प्राक्तनी शोभामभ्येतीति
9526 पूर्वेणान्वयः। नन्वस्तु प्राक्तनजयः पुरुषार्थसिद्धिस्तु कुतस्तत्राह -
9527 तस्मादिति। यः कार्यवान्भवेत्तस्य तत्फलं करामलकद्दृष्टमित्यन्वयः॥
9528 ३८॥
9529
9530 सकलकारणकार्यविवर्जितं
9531 निजविकल्पबलादुपकल्पितम्।
9532 तदनपेक्ष्य हि दैवमसन्मयं
9533 श्रय शुभाशय पौरुषमात्मनः॥ ३९॥
9534
9535 हे शुभाशय तत्तस्मात्कारणान्निजस्य स्वस्य विकल्पोऽथशून्या
9536 चित्तवृत्तिस्तद्-वशादुपकल्पितमत एवासन्मयम्। स्वार्थे मयट्। तत्र हेतुः
9537 - सकलैः कारणैः कार्यैः प्रयोजनैश्च विवर्जितमिति। तथाविधं
9538 दैवमनपेक्ष्य पौरुषं श्रय स्वीकुरु॥ ३९॥
9539
9540 शास्त्रैः सदाचरविजृम्भितदेशधर्मैर्य-
9541 त्कल्पितं फलमतीव चिरप्ररूढम्।
9542 तस्मिन्हृदि स्फुरति चोपनमेति चित्त-
9543 मङ्गावली तदनु पौरुषमेतदाहुः॥ ४०॥
9544
9545 किं तत्पौरुषं यच्छ्रयेत्युच्यते तदाह - शास्त्रैरिति। वेदस्मृत्यादिभिः
9546 शास्त्रैः सतामाचरणं सदाचरः। घञर्थे कविधानम् इति कः। तेन
9547 विजृम्भिता विस्तीर्णा ये देशधर्मास्तत्तद्देशनियताचारास्तैश्च यच्चित्त##-
9548 प्ररूढं प्रसिद्धं च तस्मिन् हृदि बुद्धौ स्फुरति अभिलषिते सति
9549 तत्साधना-चरणेच्छया चित्तं चोपनं स्पन्दम्। चुप मन्दायां गतौ
9550 ल्युट्। एति प्राप्नोति तदनुसारेण अङ्गावली इन्द्रियहस्तपादादिश्चोपनमेति
9551 श्रवणादिना व्यवहरति एतदेव पौरुषमित्याहुः शिष्टा इत्यर्थः॥ ४०॥
9552
9553 बुद्ध्वैव पौरुषफलं पुरुषत्वमेत-
9554 दात्मप्रयत्नपरतैव सदैव कार्या।
9555 नेया ततः सफलतां परमामथासौ
9556 सच्छास्त्रसाधुजनपण्डितसेवनेन॥ ४१॥
9557
9558 एतत्पुरुषत्वमधिकारिपुंजन्मपौरुषफलं पुरुषार्थसिद्धावेव सफलं
9559 नान्यथेति बुद्ध्वा सदैव आत्मप्रयत्नपरतैव कार्या। अथासौ प्रयत्नपरता
9560 सच्छास्त्राणां साधुजनानां सेवनेन तदनुगतविचारेणात्मज्ञानफल##-
9561 द्वितीया॥ ४१॥
9562
9563 दैवपौरुषविचारचारुभि-
9564 श्चेदमाचरितमात्मपौरुषम्।
9565 नित्यमेअ जयतीति भावितैः
9566 कार्य आर्यजनसेवयोद्यमः॥ ४२॥
9567
9568 इदमात्मपौरुषं नित्यमाचरितं सद्दैवं जयत्येवेति दैवपौरुषयोर्बला##-

9569 नित्यं भावितैः श्रवणादिभिरुद्यमः कार्यस्तत्त्वज्ञायेत्यर्थः ॥ ४२ ॥
9570
9571 जन्मप्रबन्धमयमामयमेष जीवो
9572 बुद्ध्वैहिकं सहजपौरुषमेव सिद्ध्यै ।
9573 शान्तिं नयत्ववितथेन वरौषधेन
9574 मृष्टेन तुष्टपरपण्डितसेवनेन ॥ ४३ ॥
9575
9576 एष जीव ऐहिकमिहास्मिन्नधिकारिजन्मनि संपाद्यमानं सहजं शास्त्र##-
9577 परमपुरुषार्थलाभायेति बुद्ध्वा नित्यसंतुष्टानां पराणां सर्वोत्##-
9578 जन्मपरम्परा तन्मयं तत्प्रचुरमामयं शान्तिं नयतु । अधीष्टे लोट् ।
9579 अतिसुलभोपाये सति किमर्थमवसीदतीत्यर्थः ॥ ४३ ॥
9580
9581 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मुमुक्षुव्यवहार##-
9582
9583 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे मुमुक्षुव्यवहारप्रकरणे
9584 दैवनिराकरणं नाम षष्ठः सर्गः ॥ ६ ॥
9585
9586 सप्तमः सर्गः ७
9587
9588 श्रीवसिष्ठ उवाच ।
9589
9590 प्राप्य व्याधिविनिर्मुक्तं देहमल्पाधिवेदनम् ।
9591 तथात्मनि समादध्याद्यथा भूयो न जायते ॥ १ ॥
9592
9593 पौरुषैकप्रधानत्वौदाहरणविस्तरैः ।
9594 प्रत्युदाहरणिअश्चात्र युक्तिभिश्च समर्थ्यते ॥ १ ॥
9595
9596 कृतमेव दैवनिरासेन
9597 पौरुषप्राधान्यसमर्थनमुदाहरणप्रत्युदाहरणैर्दृढीकरिष्यन्नधिका
9598 रिणो हितोपदेशोपपत्तिभिः पुरुषार्थे अवतारयति - प्राप्येति । अल्पा आधिवेदना
9599 मानसदुःखभोगा यस्मिन् । समादध्याच्चित्तसमाधानाय प्रयतेत ॥ १ ॥
9600
9601
9602 दैवं पुरुषकारेण यो निवर्तितुमिच्छति ।
9603 इह वामुत्र जगति स संपूर्णाभिवाञ्छितः ॥ २ ॥
9604
9605 अनिच्छतः कथं यत्नः स्यादिति तत्रेच्छावश्यकत्वमाह - दैवमिति ।
9606 संपूर्णाभिवाञ्छितो भवतीति शेषः ॥ २ ॥
9607
9608 ये समुद्योगमुत्सृज्य स्थिता दैवपरायणाः ।
9609 ते धर्मार्थं कामं च नाशयन्त्यात्मविद्विषः ॥ ३ ॥
9610
9611 अन्वयमुखेनोक्तमर्थं व्यतिरेकमुखेनापि समर्थयति - ये इति ।
9612 आत्मविद्विषः स्वात्मशत्रवः ॥ ३ ॥
9613
9614 संवित्स्पन्दो मनःस्पन्द ऐन्द्रियस्पन्द एव च ।
9615 एतानि पुरुषार्थस्य रूपाण्येभ्यः फलोदयः ॥ ४ ॥
9616
9617 प्रत्यक्षपौरुषविरुद्धं दैवं प्रत्याचिख्यासुः पौरुषस्य प्रत्यक्षसिद्धं
9618 स्वरूपमाह - संवित्स्पन्द इत्यादिना । संवित्स्पन्दः
9619 पुरुषार्थतत्साधनस्फूर्तिस्तेन तत्साधनेच्छायत्नो मनः स्पन्दस्तेन
9620 कर्मेन्द्रियाणामङ्गचालनाय प्रवृत्तिरैन्द्रियस्पन्दः । एव

9621 कारचकाराभ्यां तत्प्रयुक्तकायबाह्योपकरणस्पन्दोऽपि संगृह्यते। एतानि
9622 पुरुषार्थस्य पौरुषस्य रूपाणि क्रमिकविभेदाः। एतेभ्यो निरन्तरवृत्तेभ्यः
9623 फलोदयोऽभिलषितार्थसिद्धिः प्रसिद्धेत्यर्थः॥ ४॥
9624
9625 प्। ८८)
9626
9627 यथा संवेदनं चेतस्तथा [चैतत्तथा इति पाठः]
9628 तत्स्पन्दमृच्छति।
9629 तथैव कायश्चलति तथैव फलभोक्तृता॥ ५॥
9630
9631 उक्तमर्थं विवृणोति - यथेति। यथा संवेदनं साक्षिणि यादृशी
9632 विषयस्फूर्तिः पूर्वं भवति ततो मनस्तादृशं स्पन्दमृच्छति गच्छति।
9633 तथैव कर्मेन्द्रियस्पन्देन कायश्चलति। क्रियानुसारिणी च फलसिद्धिरित्यर्थः॥ ५
9634 ।।
9635
9636 आबालमेतत्संसिद्धं यत्र यत्र यथा यथा।
9637 दैवं तु न क्वचिद्दृष्टमतो जगति पौरुषम्॥ ६॥
9638
9639 यत्र यत्र फले लौकिके वैदिके वा यथा यथा पौरुषमुपयुज्यते ध्यानादौ
9640 मानसमेव प्रधानमासनमौने तदङ्गे। स्तवनादौ वाचिकमेव
9641 प्रधानमैकाप्यसांमुख्ये तदङ्गे। यात्रादौ तु कायिकमेव प्रधानं
9642 वाङ्गनोनियमौ तदङ्गे। क्वचित्तु द्वयोर्द्वयोः प्राधान्यं
9643 क्वचित्त्रयाणामिति तत्र तत्र तथा तथा तत्पौरुषमाबालं बालानभिव्याप्य
9644 संसिद्धं प्रत्यक्षसिद्धं दैवं तु न क्वचिद्दृष्टमित्यसदेवेत्यर्थः॥ ६॥
9645
9646 पुरुषार्थेन देवानां गुरुरेव बृहस्पतिः।
9647 शुक्रो दैत्येन्द्रगुरुतां पुरुषार्थेन चास्थितः॥ ७॥
9648
9649 उक्तमर्थमुदाहरणैः स्फुटयति - पुरुषार्थेनेत्यादिचतुर्भिः॥ ७॥
9650
9651 दैन्यदारिद्र्यदुःखार्ता अपि साधो नरोत्तमाः।
9652 पौरुषेणैव यत्नेन याता देवेन्द्रतुल्यताम्॥ ८॥
9653
9654 महान्तो विभवास्वादैर्नानाश्चर्यसमाश्रयाः।
9655 पौरुषेणैव दोषेण नरकातिथितां गताः॥ ९॥
9656
9657 नानाविधनामाश्चर्यरूपाणां विभावानां [विभवानां इति
9658 पाठः] समाश्रया नहुषादयः॥ ९॥
9659
9660 भावाभावसहस्रेषु दशासु विविधासु च।
9661 स्वपौरुषवशादेव निवृत्ता भूतजातयः॥ १०॥
9662
9663 भावा विभवा अभावा विपदस्तेषां सहस्रेषु। निवृत्ता अतिक्रान्ताः॥ १०॥
9664
9665 शास्त्रतो गुरुतश्चैव स्वतश्चेति त्रिसिद्धयः।
9666 सर्वत्र पुरुषार्थस्य न दैवस्य कदाचन॥ ११॥
9667
9668 लौकिकाःस् वत एव यागादयः स्वतः शास्त्रतश्च ज्ञानं तु स्वतः शास्त्रतो
9669 गुरुतश्चेति त्रिसिद्धयः। ननु [ननु दैवासिद्धौ यमहानिः इति
9670 मुद्रितपुस्तकपाठः] दैवस्य त्रिसिद्धयो निर्व्यापारदैवदुर्ग्रहवादिनां
9671 मतावलम्बने सर्वविधीनामुच्छेदप्रसङ्गः। सोमेन यजेत
9672 इत्यादिवाक्यबोधितयागानां व्यापारजन्यत्वाद्भावनानां च

9673 पुरुषप्रवृत्तिनिमितत्वात्प्रवृत्तेश्च परिस्पन्दरूपत्वात् ॥ ११ ॥
9674
9675 अशुभेषु समाविष्टं शुभेष्वेवावतारयेत् ।
9676 प्रयत्नाच्चित्तमित्येष सर्वशास्त्रार्थसंग्रहः ॥ १२ ॥
9677
9678 तेषु प्रस्तुतोपयोगिसारं दर्शयति - अशुभेष्विति ॥ १२ ॥
9679
9680 यच्छ्रेयो यदतुच्छं च यदपायविवर्जितम् ।
9681 तत्तदाचर यत्नेन पुत्रेति गुरवः स्थिताः ॥ १३ ॥
9682
9683 श्रेयः सर्वोत्कृष्टम् । अतुच्छं परमार्थसत्यम् । अपायविवर्जितं नित्यम् ।
9684 फलओ यद्यदीदृशं तत्तदाचर ॥ १३ ॥
9685
9686 यथा यथा प्रयत्नो मे फलमाशु तथा तथा ।
9687 इत्यहं पौरुषादेव फलभाङ् नतु दैवतः ॥ १४ ॥
9688
9689 आशु शीघ्रं भवतीति शेषः । इति निश्चित्य ॥ १४ ॥
9690
9691 पौरुषाद्दृश्यते सिद्धिः पौरुषाद्धीमतां क्रमः ।
9692 दैवमाश्वासनामात्रं [दुःखपेलव इति पाठः] दुःखे
9693 पेलवबुद्धिषु ॥ १५ ॥
9694
9695 क्रम आचरणम् । दुःखे रुदत्सु पेलवबुद्धिषु
9696 आश्वासनामात्रमश्रुमार्जनतुल्यम् ॥ १५ ॥
9697
9698 प्रत्यक्षप्रमुखैर्नित्यं प्रमाणैः पौरुषक्रमः ।
9699 फलितो दृश्यते लोके देशानतरगमादिकः ॥ १६ ॥
9700
9701 देशान्तरे गमनं गमः ॥ १६ ॥
9702
9703 भोक्ता तृप्यति नाभोक्ता गन्ता गच्छति नागतिः ।
9704 वक्ता वक्ति न चावक्ता पौरुषं सफलं नृणाम् ॥ १७ ॥
9705
9706 इति सफलं दृष्टमिति शेषः ॥ १७ ॥
9707
9708 पौरुषेण दुरन्तेभ्यः संकटेभ्यः सुबुद्धयः ।
9709 समुत्तरन्त्ययत्नेन न तु मोघतयानया ॥ १८ ॥
9710
9711 मोघतया निर्व्यापाररूपया [रूपतया इति पाठः] । अनया
9712 दैवदृष्ट्या ॥ १८ ॥
9713
9714 यो यो यथा प्रयतते स स तत्तत्फलैकभाक् ।
9715 न तु तूष्णीं स्थितेनेह केनचित्प्राप्यते फलम् ॥ १९ ॥
9716
9717 एकभाक् नियतं भाजनम् ॥ १९ ॥
9718
9719 शुभेन पुरुषार्थेन शुभमासाद्यते फलम् ।
9720 अशुभेनाशुभं राम यथेच्छसि तथा कुरु ॥ २० ॥
9721
9722 पुरुषार्थात्फलप्राप्तिर्देशकालवशादिह ।
9723 प्राप्ता चिरेण शीघ्रं वा यासौ दैवमिति स्मृता ॥ २१ ॥
9724

यदि दैवे महती भक्तिस्तर्हि पौरुषमेव दैवबुद्ध्यावलम्ब्यतां
नत्वसत्कल्पनमन्यदित्यभिप्रेत्याह - पुरुषार्थादित्यादिना। फलप्राप्तिः
फलसंपत्॥ २१॥

न दैवं दृश्यते दृष्ट्या न च लोकान्तरे स्थितम्।
उक्तं दैवाभिधानेन स्वर्लोके कर्मणः फलम्॥ २२॥

ननु स्वर्गादिलोकस्थं दैवमिहादर्शनेन नापलपितुं शक्यं तत्राह -
नेति। स्वर्लोके स्वर्गलोके॥ २२॥

पुरुषो जायते लोके वर्धते जीर्यते पुनः।
न तत्र दृश्यते दैवं जरायौवनबाल्यवत्॥ २३॥

तत्र पुरुषे॥ २३॥

अर्थप्रापककार्यैकप्रयत्नपरता बुधैः।
प्रोक्ता पौरुषशब्देन सर्वमासाद्यतेऽनया॥ २४॥

सदसत्पौरुषयोर्विभागमाह - अर्थेत्यादिना॥ २४॥

देशाद्देशान्तरप्राप्तिर्हस्तस्य द्रव्यधारणम्।
व्यापारश्च तथाङ्गानां पौरुषेण न दैवतः॥ २५॥

देशान्तरप्राप्तिः पदयोः पौरुषेण। अन्यो व्यापारश्चाङ्गान्तराणां
पौरुषेणैव न दैवतो दृष्ट इत्यर्थः॥ २५॥

प्। ८९)

अनर्थप्राप्तिकार्यैकप्रयत्नपरता तु या।
प्रोक्ता प्रोन्मत्तचेष्टेति न किंचित्प्राप्यतेऽनया॥ २६॥

अनर्थस्य प्राप्तिर्यस्मादिति व्यधिकरणपदबहुव्रीहिः। कर्मणि क्तिनि
समानाधिकरणपदो वा। न किंचिच्छुभमिति शेषः। अशुभं तु प्राप्यत एव
॥ २६॥

क्रियया स्पन्दधर्मिण्या स्वार्थसाधकता स्वयम्।
साधुसंगमसच्छास्त्रतीक्ष्णयोन्नीयते धिया॥ २७॥

अधिकविवक्षयोक्तमेव पुनराह - क्रिययेत्यादिना। क्रिययेति
तृतीयान्तपाठः प्राग्व्याख्यातः। क्वचित्तु क्रियायाः स्पन्दधर्मिण्याः इति
पाठस्तत्र क्रियायाः स्वार्थसाधकता प्रसिद्धेति तत्फलभूतया धिया
स्वयमुन्नीयते उद्ध्रियत इत्यर्थः॥ २७॥

अनन्तसमतानन्दं परमार्थं स्वकं विदुः।
स येभ्यः प्राप्यते यत्नात्सेव्यास्ते शास्त्रसाधवः॥ २८॥

समता अज्ञानकृतवैषम्यनिवृत्तिस्तदुपलक्षितमानन्दं ये विदुः स
चानन्दो येभ्यः प्राप्यते ते सव्याः
प्रणिपातपरिप्रश्नशुश्रूषादिभिरभ्यासेन चावर्जनीयाः॥ २८॥

सच्छास्त्रादिगुणो मत्या सच्छास्त्रादिगुणान्मतिः।
विवर्धेते मिथोऽभ्यासात्सरोब्जाविव कालतः॥ २९॥

यद्विवक्षयोक्तमपि पुनरुक्तं तदाह - सच्छास्त्रेति |
आदिपदात्साधुसंगमपरिग्रहः | तत्र साधुसंगमाभ्यासस्य
गुणस्तत्समशीलताप्राप्तिः | शास्त्राभ्यासस्य गुणः शास्त्रतात्पर्यज्ञानम् |
मतिस्तत्त्वबोधः | यथा यथायं गुरुशुश्रूषाशास्त्राभ्यासपरो भवति तथा
तथास्य बोधो विवर्धते | यथा यथा च बोधाभिवृद्धिस्तथा तथा
गुरुशास्त्रविश्वासवृद्धिस्तद्गुणवृद्ध्या
सुखादिवृद्ध्योत्तरोत्तरभूमिकामारोहति | कालतश्चिरकालतो वर्षाकालतश्च ||
२९ ||

आबाल्यादलमभ्यस्तैः शास्त्रसत्संगमादिभिः |
गुणैः पुरुषयतेन स्वार्थः संपद्यते हितः || ३० ||

तथा तद्विवृद्धये चिरं यत्नः कार्य इति वक्तुमुक्तमेव पुनराह -
आबाल्यादिति || ३० ||

पौरुषेण जिता दैत्याः स्थापिता भुवनक्रियाः |
रचितानि जगन्तीह विष्णुना न च दैवतः || ३१ ||

जगति पुरुषकारकारणेऽस्मिन्
कुरु रघुनाथ चिरं तथा प्रयत्नम् |
व्रजसि तरुसरीसृपाभिधानां
सुभग यथा न दशामशङ्क एव || ३२ ||

पुरुषकारः पौरुषं तदेव पुरुषार्थकारणं यस्मिंस्तथाविधे जगति |
रघुनाथेत्यधिकृतकुलश्रेष्ठत्वद्योतनाय संबोधनम् | सरीसृपः सर्पः
|| ३२ ||

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मुमुक्षुव्यवहारप्रकरणे
[२] पौरुषप्राधान्यसमर्थनं नाम सप्तमः सर्गः || ७ ||

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे मुमुक्षुव्यवहारप्रकरणे
पौरुषप्राधान्यसमर्थनं नाम सप्तमः सर्गः || ७ ||

अष्टमः सर्गः ८

श्रीवसिष्ठ उवाच |

नाकृतिर्न च कर्माणि न स्पन्दो न पराक्रमः |
तन्मिथ्याज्ञानवद्रूढं दैवं नाम किमुच्यते || १ ||

वर्णितं दैवमिथ्यात्वमुदाहरणविस्तरैः |
उपजीव्यविरोधादियुक्तिभिश्च समर्थ्यते || १ ||

इत्थं दैवं निरस्य पौरुषस्वातन्त्र्यसमर्थितेप्यनाश्वासेन
[स्वातन्त्र्यैक्यसमर्थिते इति पाठः] मोमुह्यमानं
प्राग्वैराग्यप्रकरणे पञ्चविंशे सर्गे अत्रैव दुर्विलासानां
चूडामणिरिहापरः | करोत्यत्तिति लोकेऽस्मिन्दैवं कालश्च कथ्यते || तेनेयमखिला
भूतसंततिः परिपेलवा | तापेन हिममालेव नीता विधुरतां भृशम् ||
नृत्यतो हि कृतान्तस्य नितान्तमिव रागिणः | नित्यं नियतिकान्तायां मुने
परमकामिता || इत्यादिना स्वेन विस्तरेणोपवर्णितं
बहुतरश्रुतिस्मृतिपुराणैतिह्येषु [पुराणेतिहासेषु इति पाठः]

परमस्वतन्त्रतया प्रसिद्धं दैवं दुरपह्नवमिति मन्यमानं श्रीरामं
लिङ्गैरुपलक्ष्य यावदस्य दैवस्वातन्त्र्ये [स्वातन्त्र्यैक्य उपजीव्य इति
पाठः] उपजीव्यविरोधो न प्रदर्शितस्तावन्न विश्वसिष्यतीति तं
दिदर्शयिषुः श्रीवसिष्ठ उवाच - नाकृतिरित्यादिना।
आकृतिर्जातिरनुगतसंस्थानं च। कर्मस्पन्दपराक्रमाणां
मानसशारीरफलोपधानैः सामान्यविशेषतद्विशेषभावेन वा भेदः।
यस्यैते न सन्ति तद्दैवं किंस्वरूपमिति न तत्त्वतो निर्णीय जनैरुच्यते। यतो
दुर्वचं तत्तस्मान्मिथ्याज्ञानवदेव रूढमित्यर्थः। मिथोऽज्ञानवदिति
पाठेऽपि अज्ञानं भ्रान्तिज्ञानं तद्वदेव मिथोऽन्योन्यं व्यवहारे
रूढमित्यर्थः॥ १॥

स्वकर्मफलसंप्राप्ताविदमित्थमितीति याः।
गिरस्ता दैवनाम्नैताः र्पसिद्धिं समुपागताः॥ २॥

किमधिष्ठाना भ्रान्तिरिति चेत्तद्दर्शयन् मिथोव्यवहारं स्फुटयति -
स्वकर्मेति। इदं कर्म इत्थमनेन क्रमेणानुष्ठितमिति
एवंरूपफलसंपन्नमिति या गिरो वाग्व्यवहारास्ताः लक्षणया तद्विषया
इत्यर्थः॥ २॥

तत्रैव मूढमतिभिर्दैवमस्तीति निश्चयः।
आत्तो दुरवबोधेन रज्ज्वामिव भुजंगमः॥ ३॥

तत्र तेषु। दुरवबोधेन भ्रान्त्या। आत्तो गृहीतः॥ ३॥

ह्यस्तनी दुष्क्रियाभ्येति शोभां सत्क्रियया यथा।
अद्यैवं प्राक्तनी तस्माद्यत्नात्सत्कार्यवान्भवेत्॥ ४॥

तथाच मदुक्तमेव फलितमित्याह - ह्यस्तनीति॥ ४॥

मूढानुमानसंसिद्धं दैवं यस्यास्ति दुर्मतेः।
दैवाद्दाहोऽस्ति नैवेति गन्तव्यं तेन पावके॥ ५॥

उपजीव्यप्रमाणविरोधं विवक्षुः प्रथमं प्रत्यक्षस्वक्रियाविरोधमाह ##-

प्। ९०)

दैवमेवेह चेत्कर्तृ पुंसः किमिव चेष्टया।
स्नानदानासनोच्चारान्दैवमेव करिष्यति॥ ६॥

उच्चारान् दानाद्यङ्गमन्त्राद्युच्चारणानि॥ ६॥

किंवा शास्त्रोपदेशेन मूकोऽयं पुरुषः किल।
संचार्यते तु दैवेन किं कस्येहोपदिश्यते॥ ७॥

तथाच वेदादिप्रामाण्यविरोध इत्याह - किमिति। मूको
वाग्व्यापारेऽप्यस्वतन्त्रः॥ ७॥

न च निस्पन्दता लोके दृष्टेह शवतां विना।
स्पन्दाच्च फलसंप्राप्तिस्तस्माद्दैवं निरर्थकम्॥ ८॥

दृष्टविरोधोऽपीत्याह - न चेति॥ ८॥

9881 न चामूर्तेन दैवेन मूर्तस्य सहकर्तृता।
9882 पुंसः संदृश्यते काचित्तस्माद्दैवं निरर्थकम्॥ ९॥
9883
9884 ननु देहादिस्पन्दः कर्त्रन्तरसमुच्चयकर्तृकः क्रियात्वात्
9885 शिबिकोद्वहनवदित्यनुमाने मूर्तकर्त्रन्तरस्य प्रत्यक्षबाधे अमूर्तः
9886 सहकारिकर्ता सेत्स्यति तदेव दैवं नः सिद्धमित्याशङ्क्याह - न चेति।
9887 तथा च मूर्तसमुच्चितकर्तृकत्वं दृश्यसमुच्चितकर्तृकत्वं
9888 चोपाधिरित्यर्थः। तथाच पक्षे उपाध्यभावाभावेन साध्याभावः सिद्ध
9889 इत्याह - तस्मादिति॥ ९॥
9890
9891 मिथोऽङ्गानि समासाद्य द्वयोरेकैककर्तृता।
9892 हस्तादीनां हतत्वे ह न दैवेन क्वचित्कृतम्॥ १०॥
9893
9894 क्वचिल्लेखनवपनादौ मिथः परस्परं लेखनीक्षुराद्यङ्गानि समासाद्य
9895 प्राप्तयोर्द्वयोर्मध्ये द्वितीयस्य प्रत्याख्यानमेकैकस्य कर्तृता च
9896 संदृश्यत इत्यनुषज्यते। क्वचित्तु पुस्तके पुंसः संदृश्यत इत्यर्धं
9897 पुनः पठ्यते। एतेन हस्तपादमनोबुद्ध्यादिवत्क्रियोपकरणत्वेनापि
9898 दैवकल्पनाशा निरस्तेत्याह - हस्तादीनामिति। तत्र हस्तादौ सति तेन
9899 दैवस्यान्यथासिद्धेः करणत्वायोगाद्वातरोगादिना हतत्वे नष्टत्वे सतीत्युक्तम्।
9900 ह इति किलर्थे॥ १०॥
9901
9902 मनोबुद्धिवदप्येतद्दैवं नेहानुभूयते।
9903 आगोपालं कृतप्रज्ञैस्तेन दैवमसत्सदा॥ ११॥
9904
9905 पृथक्चेद्बुद्धिरन्योऽर्थः सैव चेत्कान्यता तयोः।
9906 कल्पनायां प्रमाणं चेत्पौरुषं किं न कल्प्यते॥ १२॥
9907
9908 किंच दैवसिद्धौ कर्त्रादिकारकबुद्धिरेव मानं तत्पृथग्भूतबुद्धिर्वा।
9909 द्वितीये क्रियायामनुपयुक्तोऽन्य एव दैवमिति निरर्थकोऽर्थः कल्पितः स्यात्। आद्ये
9910 प्रसिद्धकर्त्रादिरेव दैवशब्देनोक्तः स्यादित्याह - पृथगिति। ननु
9911 समानपाण्डित्यादिफलमीहमानानामधीयानानां केचिदेव तत्फलेन युज्यन्ते
9912 न सर्वे तत्रावश्यं वैषम्ये निमित्तं कल्प्यम् कार्यवैषम्यलिङ्गस्य
9913 कल्पनाप्रमाणत्वादितिचेत्तत्राह - कल्पनायामिति। तत्रापि
9914 दृष्टसजातीयपौरुषमेव प्राक्तनं कल्प्यते नाप्रसिद्धं दैवमित्यर्थः॥ १२
9915 ॥
9916
9917 नामूर्तस्तेन सङ्गोऽस्ति नभसेव वपुष्मतः।
9918 मूर्तं च दृश्यते लग्नं तस्माद्दैवं न विद्यते॥ १३॥
9919
9920 कारकान्तरसहकारित्वायोग्यत्वादपि न तत्कल्पना युक्तेत्याह - नेति। तेन
9921 कारकान्तरेण। सङ्गः संयोगः। वपुष्मतोऽस्मदादेः। चकारोऽवधारणे।
9922 यस्मान्मूर्तमेव लग्नं परस्परसंयुक्तं दृश्यते तस्मात्॥ १३॥
9923
9924 विनियोक्त्रथ भूतानामस्त्यन्यच्चेज्जगल्लये।
9925 शेरते भूतवृन्दानि दैवं सर्वं करिष्यति॥ १४॥
9926
9927 शेरते शयीरन्। व्यत्ययेन लिङर्थे लट्॥ १४॥
9928
9929 दैवेन त्वभियुक्तोऽहं तत्करोमीदृशं स्थितम्।
9930 समाश्वासनवागेषा न दैवं परमार्थतः॥ १५॥
9931
9932 अभियुक्तः प्रेरितः। स्थितं दैवसंकल्पसिद्धम्॥ १५॥

9933
9934 मूढैः प्रकल्पितं दैवं तत्परास्ते क्षयं गताः ।
9935 प्राज्ञास्तु पौरुषार्थेन पदमुत्तमतां गताः ॥ १६ ॥
9936
9937 ये शूरा ये च विक्रान्ता ये प्राज्ञा ये च पण्डिताः ।
9938 तैस्तैः किमिव लोकेऽस्मिन्वद दैवं प्रतीक्ष्यते ॥ १७ ॥
9939
9940 किमिति काकुः प्रश्नच्छलेनाक्षेपे ॥ १७ ॥
9941
9942 कालविद्भिर्विनिर्णीता यस्यातिचिरजीविता ।
9943 स चेज्जीवति संछिन्नशिरास्तद्दैवमुत्तमम् ॥ १८ ॥
9944
9945 ननु दैवज्ञा ग्रहान् निवेदयन्ति तदेव दैवमित्याशङ्क्य तेषां
9946 लिङ्गविदयाचारभेदेन पौरुषतत्फलसूचकत्वमेव न कारणतेत्यभिप्रेत्याह
9947 - कालविद्भिरिति ॥ १८ ॥
9948
9949 कालविद्भिर्विनिर्णीतं पाण्डित्यं यस्य राघव ।
9950 अनध्यापित एवासौ तज्ज्ञश्चेद्दैवमुत्तमम् ॥ १९ ॥
9951
9952 उत्तमं श्रेष्ठं कारणं सिद्ध्येदिति शेषः ॥ १९ ॥
9953
9954 विश्वामित्रेण मुनिना दैवमुत्सृज्य दूरतः ।
9955 पौरुषेणैव संप्राप्तं ब्राह्मण्यं राम नान्यथा ॥ २० ॥
9956
9957 अस्माभिरपरै राअम पुरुषैर्मुनितां गतैः ।
9958 पौरुषेणैव संप्राप्ता चिरं गगनगामिता ॥ २१ ॥
9959
9960 विश्वासदार्ढ्याय पुरोगतेष्वेव पौरुषफलमुदाहरति - विश्वाब्मितेणेति ॥
9961 २० ॥ २१ ॥
9962
9963 उत्साद्य देवसंघातं चक्रुस्त्रिभुवनोदरे ।
9964 पौरुषेणैव यत्नेन साम्राज्यं दानवेश्वराः ॥ २२ ॥
9965
9966 यत्तु प्रसिद्धमिन्द्रादिदैवं तदपि पौरुषेण पराजितं प्रसिद्ध्मित्याह -
9967 उत्साद्येति ॥ २२ ॥
9968
9969 आलूनशीर्णमाभोगि जगदाजह्नुरोजसा ।
9970 पौरुषेणैव यत्नेन दानवेभ्यः सुरेश्वराः ॥ २३ ॥
9971
9972 योऽपि तस्य जयः सोऽपि पौरुषादेव न स्वत इत्याह - आलूनेति । आभोगि विस्तीर्णं
9973 जगत् आलूनं छिन्नं शीर्णं जर्जरीकृतं च शत्रुसैन्यं यस्मिन्
9974 युद्धादिकर्मणि तद्यथा स्यात्तथा आजह्नुः प्रत्याजह्नुः । तथाच दैवस्यापि
9975 दैवं पौरुषमेवेति भावः ॥ २३ ॥
9976
9977 राम पौरुषयुक्त्या च सलिलं धार्यतेऽनया ।
9978 चिरं करण्डके चारु न दैव तत्र कारणं ॥ २४ ॥
9979
9980 अनया रालमधूच्छिष्टादिलेपनादिरूपेण प्रसिद्धया पौरुषयुक्त्या ।
9981 करण्डके वंशसंपुटके ॥ २४ ॥
9982
9983 भरणादानसंरम्भविभ्रमश्रमभूमिषु ।
9984 शक्तता दृश्यते राम न दैवस्यौषधेरिव ॥ २५ ॥

भरणं स्वजनपोषणं। आदानं बलात्परराष्ट्रदेः। संरम्भः क्रोधेन
परनिग्रहः। विभ्रमा भोगविलासाः। अन्येऽपि ये श्रमभूमयः कष्टसाध्याः
पुरुषार्थास्तेषु दैवस्य शक्तता न दृश्यते। ओषधिग्रहणं
मणिमन्त्राद्युपलक्षणं तस्यैव॥ २५॥

प्। ९१)

सकलकारणकार्यविवर्जितं
निजविकल्पवशादुपकल्पितम्।
त्वमनपेक्ष्य हि दैवमसन्मयं
श्रय शुभाशय पौरुषमुत्तमम्॥ २६॥

हे शुभाशय त्वं निजः स्वीयो विकल्पो भ्रमस्तस्मादुपकल्पितमिवासन्मयं
तुच्छप्रायं दैवमनपेक्ष्य पौरुषं श्रय आश्रय॥ २६॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मुमुक्षुव्यवहारप्रकरणे
दैवनिराकरणं नामाष्टमः सर्गः॥ ८॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे मुमुक्षुव्यवहारप्रकरणे
दैवनिराकरणं नामाष्टमः सर्गः॥ ८॥
नवमः सर्गः ९

श्रीराम उवाच॥

भगवन्सर्वधर्मज्ञ प्रतिष्ठामलमागतम्।
यल्लोके तद्वद ब्रह्मन्दैवं नाम किमुच्यते॥ १॥

दैवापलापसिद्ध्यर्थं मनोमान्त्रत्वमुच्यते।
कर्मणः सफलस्यात्र मनसश्च चिदात्मता॥ १॥

पूर्व पौरुषस्वातन्त्र्यसिद्धये क्वचिद्दैवमसदेव नास्त्येवेत्यपलपितम्।
क्वचित्तु प्राक्तनप्रयत्नजन्यकरैव दैवं पौरुषमेव वा दैवमित्युक्तम्। तत्र
प्रथमकल्पे दृढतरलोकवेदप्रसिद्धेर्निरालम्बनत्वापत्तिमसति दुर्बले
[दुर्बले तत्सापेक्ष इति पाठः] तत्सापेक्षपौरुषप्राबल्योक्तिविरोधं च
द्वितीये तु असद्दैवमिति प्रतिज्ञानुपपत्तिमाधुनिकप्रवृत्तीनामपि
पूर्वकर्मफलतया तदनुगुणतयैवोत्पत्तौ तद्विरोधित्वाभावेन
ताभिस्तज्जयोक्तिविरोधं तत्पारतन्त्र्येऽपि पुरुषस्वातन्त्र्यविघातं चाक्षेप्स्यामीति
गूढाभिसंधिः श्रीरामस्तदर्थं गुरोः कतरस्मिन्कल्पे निर्भर इति
जिज्ञासुरुवाच - भगवन्निति। प्रतिष्ठां प्रसिद्धिमलमत्यन्तमागतं
प्राप्तं यद्दैवं तत्किमसदुत सदेवेत्यर्थः॥ १॥

श्रीवसिष्ठ उवाच॥

पौरुषं सर्वकार्याणां कर्तृ राघव नेतरत्।
फलभोक्तृ च सर्वत्र न दैवं तत्र कारणम्॥ २॥

एवं पृष्टो ज्ञातरामाभिप्रायः श्रीवसिष्ठोऽपि दैवापलापोपपत्त्यैव
जगदपलापेनाद्वितीयमात्मतत्त्वं बुबोधयिषुः कल्पयोः फलतो नास्ति भेद इति
गूढाभिप्रायः। प्रथमकल्पमेवावलम्ब्योक्तमेवोवाच - पौरुषमिति।
वस्तुत उदासीनत्वादात्मनो न कर्तृत्वं न वा भोक्तृत्वमिति द्योतनाय
करणेऽपि पौरुषे तत्कर्तृताव्यपदेशः॥ २॥

10037
10038 दैवं न किंचित्कुरुते न भुङ्क्ते न च विद्यते |
10039 न दृश्यते नाद्रियते केवलं कल्पनेदृशी || ३ ||
10040
10041 विवेकिभिर्नाद्रियते | कल्पनानिरूढभ्रान्तिर्लोकानामित्यर्थः || ३ ||
10042
10043 सिद्धस्य पौरुषेणेह फलस्य फलशालिना |
10044 शुभाशुभार्थसंपत्तिर्दैवशब्देन कथ्यते || ४ ||
10045
10046 निरालम्बनत्वानुपपत्तिं परिहरति - सिद्धस्येति | फलशालिना अवश्यं
10047 फलवता पौरुषेण सिद्धस्य वनितापिण्डादेर्भर्तृसपत्न्यादिभिः
10048 शुभाशुभं यत्प्राप्यते तदेवालम्ब्य दैवमिति व्यवह्रियत इत्यर्थः || ४ ||
10049
10050 पौरुषोपनता नित्यमिष्टानिष्टस्य वस्तुनः |
10051 प्राप्तिरिष्टाप्यनिष्टा वा दैवशब्देन कथ्यते || ५ ||
10052
10053 प्रथममिष्टस्य पश्चादनिष्टापि प्राप्तिर्भवति कदाचित्प्रथममनिष्टस्य
10054 पश्चादिष्टापीति तथोक्तिः कथ्यते | लोकैरिति शेषः || ५ ||
10055
10056 भावी [भावी पौरुषजः] त्ववश्यमेवार्थः
10057 पुरुषार्थैकसाधनः |
10058 यः सोऽस्मि&ल्लोकसंघाते दैवशब्देन कथ्यते || ६ ||
10059
10060 लोकायतिकानां मतमाह - भावीति | पुरुषार्थोऽत्र भोगः || ६ ||
10061
10062 ननु राघव लोकस्य कस्यचित्किंचिदेव हि |
10063 दैवमाकाशरूपं हि करोति न करोति च || ७ ||
10064
10065 सिद्धान्तमाह - नन्विति | कस्यचित्किंचिदेव दैवमाकाशरूपं
10066 शून्यकल्पं नभोनैल्यसदृशं वा करोति भ्रान्तदृशा | न करोति
10067 विवेकिदृशा || ७ ||
10068
10069 पुरुषार्थस्य सिद्धस्य शुभाशुभफलोदये |
10070 इदमित्थं स्थितमिति योक्तिस्तद्दैवमुच्यते || ८ ||
10071
10072 इदं फलमित्थमेतद्बीजात्मना प्राक् स्थितम् || ८ ||
10073
10074 इत्थं ममाभवद्बुद्धिरित्थं मे निश्चयो ह्यभूत् |
10075 इति कर्मफलप्राप्तौ योक्तिस्तद्दैवमुच्यते || ९ ||
10076
10077 इष्टानिष्टफलप्राप्ताविदमित्यस्य वाचकम् |
10078 आश्वासनामात्रवचो दैवमित्येव कथ्यते || १० ||
10079
10080 इष्टानिष्टफलयोः प्राप्तौ सत्यामिदं प्राक्तनं कर्म इत्थमेवं
10081 प्रकारमित्यस्यार्थस्य सर्वकल्पनानां पौरुषे एवान्तर्भावः || १० ||
10082
10083 श्रीराम उवाच |
10084
10085 भगवन्सर्वधर्मज्ञ यत्प्राक्कर्मोपसंचितम् |
10086 तद्दैवं [तदेतद्दैवमित्युक्तं इति पाठः]
10087 दैवमित्युक्तमपमृष्टं कथं त्वया || ११ ||
10088

10089 कल्पद्वयाभेदोक्त्याऽशयमप्रतिपद्यमानः प्रथमकल्पेनोपक्रम्य
10090 द्वितीयकल्पेनोपसंहारे विरोधं मन्यमानः स्वाभिसंधिं प्रकाशयन्
10091 श्रीराम उवाच - भगवन्निति। यत्प्राक्तनं कर्म तदेव पुनःपुनर्दैवमिति
10092 यद्युक्तं तर्हि तद्विद्यत एव न विद्यते इति त्वया कथमपमृष्टमपलपितम्।
10093 अपलापवचनस्य कोऽभिप्राय इत्यर्थः॥ ११।
10094
10095 श्रीवसिष्ठ उवाच॥
10096
10097 साधु राघव जानासि शृणु वक्ष्यामि तेऽखिलम्।
10098 दैवं नास्तीति ते येन स्थिरा बुद्धिर्भविष्यति॥ १२॥
10099
10100 स्वाभिसंधिं प्रकटयन् श्रीवसिष्ठ उवाच - साध्विति। जानासि विरोधं
10101 कल्पद्वयेऽपि दोषांश्चेति भावः। स्थिरा दोषाशङ्कानुपहता॥ १२॥
10102
10103 प्। ९२)
10104
10105 या मनोवासना पूर्वं बभूव किल भूरिशः।
10106 सैवेयं कर्मभावेन नृणां परिणतिं गता॥ १३॥
10107
10108 कर्मभावेन कायिकवाचिककर्मभावेन। यद्धि मनसा ध्यायति तद्वाचा वदति
10109 तत्कर्मणा करोति इति श्रुतेस्तथैवानुभवाच्चेति भावः॥ १३॥
10110
10111 जन्तुर्यद्वासनो राम तत्कर्ता [तत्कर्मा इति पाठः] भवति क्षणात्
10112 ।
10113 अन्यकर्मान्यभावश्चेत्येतन्नैवोपपद्यते॥ १४॥
10114
10115 तदेवान्वयव्यतिरेकोपदर्शनेनोपपादयति - जन्तुरिति॥ १४॥
10116
10117 ग्रामगो ग्राममाप्नोति पत्तनार्थी च पत्तनम्।
10118 यो यो यद्वासनस्तत्र स स प्रयतते सदा॥ १५॥
10119
10120 विशेषे सहचारदर्शनात्सामान्ये व्याप्तिः सिद्धेत्याह - ग्रामग इति।
10121 ग्रामगो ग्रामगमनगोचरोद्भूतवासनः॥ १५॥
10122
10123 यदेव तीव्रसंवेगाद्दृढं कर्म कृतं पुरा।
10124 तदेव दैवशब्देन पर्यायेणेह कथ्यते॥ १६॥
10125
10126 तीव्रसंवेगात् फलाभिलाषातिशयात्। कर्मप्रयत्नप्राबल्येन कृतं यत्॥ १६॥
10127
10128 एवं कर्मस्थकर्माणि कर्मप्रौढा स्ववासना।
10129 वासना मनसो नान्या मनो हि पुरुषः स्मृतः॥ १७॥
10130
10131 कर्मसु तिष्ठन्तीति कर्मस्थाः कर्तारस्तेषां सर्वाणि कर्माण्येवमुक्तरीत्यैव
10132 भवन्ति। कर्म च प्रौढा उपचिता स्ववासनैव। वासना च स्वकारणान्मनसो
10133 नान्या वाचारम्भणं विकारो नामधेयम् इति श्रुत्युक्तन्यायात्। यद्यपि
10134 वाक्काययोरपि कर्म दृश्यते तथापि तयोरपि विमर्शे मनोवासनामात्रत्वं
10135 वक्ष्यमाणमभिप्रेत्यैवमुक्तम्। मनश्च पुरुषः पूर्णात्मैव न ततो
10136 व्यतिरिच्यते। तन्मनोऽकुरुत आत्मन्वी स्याम् इतीत्यादिश्रुतेर्मनसः
10137 पुरुषविवर्तत्वादिति भावः॥ १७॥
10138
10139 यद्दैवं तानि कर्माणि कर्म साधो मनो हि तत्।
10140 मनो हि पुरुषस्तस्माद्दैवं नास्तीति निश्चयः॥ १८॥

10141
10142 पुरुषस्य च परमार्थतो निर्विकारचिन्मात्ररूपत्वान्मनसोऽसत्त्वे
10143 कर्मासत्त्वात्तदात्मकदैवासत्त्वं [कर्मासत्त्वमतस्तदात्मक इति
10144 पाठः] फलितमित्याह - यदिति ॥ १८ ॥
10145
10146 एष एव मनोजन्तुर्यद्यत्प्रयतते हितम् ।
10147 कृतं तत्तदवाप्नोति स्वत एव हि दैवतः ॥ १९ ॥
10148
10149 प्राणन्नेव प्राणो नाम भवति वदन् वाक्पश्यंश्चक्षुः शृण्वञ्श्रोत्रं
10150 मन्वानो मनः इति श्रुतेरात्मन एवाध्यासान्मन आदिभावेन स्थितस्य
10151 कर्मतत्फलभावेनाप्यवस्थितिरिति स एव दैवमिति यद्युच्यते तर्ह्यस्तु नाम न
10152 तेन पुरुषस्वातन्त्र्यविधात इत्याशयेनाह - एष एवेति । मनः मन
10153 आदिभावं प्राप्तः ॥ १९ ॥
10154
10155 मनश्चित्तं वासना च कर्म दैवं च निश्चयः ।
10156 राम दुर्निश्चयस्यैताः संज्ञाः सद्भिरुदाहृताह् ॥ २० ॥
10157
10158 यद्यत्यन्तासदेव मनस्तर्हि कथं तेन व्यवहारसिद्धिर्वन्ध्यापुत्रादिना
10159 तददर्शनादित्याशङ्क्ययौक्तिकदृशा तस्यानिर्वचनीयतां दर्शयन्
10160 तदेतद्धृदयं मनश्चैतत्संज्ञानमाज्ञानं विज्ञानं प्रज्ञानम्
10161 इत्यादिश्रुतिमनुरुध्य मनस एव दैवादिसंज्ञाभेदा इत्याह - मन इति ।
10162 दुर्निश्चयस्य सत्त्वासत्त्वचिज्जडत्वभेदाभेदादिना तत्त्वतो निश्चेतुमशक्यस्य
10163 मिथ्याभूतस्य मनसस्तदात्मतापन्नस्य पुरुषस्येति यावत् ॥ २० ॥
10164
10165 एवंनामा हि पुरुषो दृढभावनया यथा ।
10166 नित्यं प्रयतते राम फलमाप्नोत्यलं तथा ॥ २१ ॥
10167
10168 तथाच पुरुषस्वातन्त्र्यं सिद्धमित्याह - एवंनामेति । एवं
10169 पूर्वोक्तविधानि नामानि यस्य ॥ २१ ॥
10170
10171 एवं पुरुषकारेण सर्वमेव रघूद्वह ।
10172 प्राप्यते नेतरेणेह [नचिरेणेह इति पाठः] तस्मात्स शुभदोऽस्तु ते
10173 ॥ २२ ॥
10174
10175 स पुरुषकारः ॥ २२ ॥
10176
10177 श्रीराम उवाच ॥
10178
10179 प्राक्तनं वासनाजालं नियोजयति मां यथा ।
10180 मुने तथैव तिष्ठामि कृपणः किं करोम्यहम् ॥ २३ ॥
10181
10182 एवमपि प्राक्तनवासनापरवशस्य नेदानीं स्वातन्त्र्यसिद्धिरिति रामः
10183 शङ्कते - प्राक्तनमिति । कृपणो दीनः । परवश इति यावत् ॥ २३ ॥
10184
10185 श्रीवसिष्ठ उवाच ।
10186
10187 अत एव हि राम त्वं श्रेयः प्राप्नोषि शाश्वतम् ।
10188 स्वप्रयत्नोपनीतेन पौरुषेणैव नान्यथा ॥ २४ ॥
10189
10190 अस्त्विदानीं फले अस्वातन्त्र्यं औत्तरकालिकफलानुकूले यत्ने तु
10191 स्वातन्त्र्यमस्त्येव । सद्विद्यासंपन्नजन्मानुमितसत्प्रयत्नप्रारब्धफलायाः
10192 पूर्ववासनायाः स्वविरुद्धफलमात्रप्रतिरोधकत्वात्तदधिकृतजन्मन्यपि

10193 तत्प्रवृत्त्यस्वातन्त्र्ये
10194 कर्मब्रह्मविद्यापरशास्त्रवैयर्थ्यप्रसङ्गादित्यभिप्रेत्य श्रीवसिष्ठ उवाच
10195 - अत एव हीति । अतः अधिकृतजन्महेतुवासनानुगुण्यादेव ।
10196 वासनानुगुण्यस्य जन्मविवेकसंपद्विशेषेणानुमानादिति भावः । प्राप्नोषि
10197 प्राप्स्यसि । वर्तमानसामीप्ये वर्तमानवद्यपदेशः ॥ २४ ॥
10198
10199 द्विविधो वासनाव्यूहः शुभश्चैवाशुभश्च ते ।
10200 प्राक्तनो विद्यते राम द्वयोरेकतरोऽथ वा ॥ २५ ॥
10201
10202 उक्तमेवार्थं समर्थयितुं वासनां विभज्य पृच्छति - द्विविध इति ॥ २५ ॥
10203
10204 वासनौघेन शुद्धेन तत्र चेदद्य नीयसे ।
10205 तत्क्रमेण शुभेनैव पदं प्राप्स्यसि शाश्वतम् ॥ २६ ॥
10206
10207 तत्राद्ये तावदाह - वासनौघेनेति ॥ २६ ॥
10208
10209 अथ चेदशुभो भावस्त्वां योजयति संकटे ।
10210 प्राक्तनस्तदसौ यत्नाज्जेतव्यो भवता बलात् ॥ २७ ॥
10211
10212 द्वितीयेऽप्याह - अथेति । न स्वातन्त्र्येण वासनानामुद्बोधः ।
10213 किंतूद्बोधकानुसारेण । यद्यसत्समागमादिना दैवादेका
10214 अशुभवासनोद्भवेत्सापि तद्विरोधिसाधुसंगमसच्छास्त्रसेवनेन
10215 विरोधिवासनामुद्भाव्योत्पाद्य वा झटिति तिरस्कार्येत्यर्थः ॥ २७ ॥
10216
10217 प्राज्ञश्चेतनमात्रस्त्वं न देहस्त्वं जडात्मकः ।
10218 अन्येन चेतसा [चेत्यसे तत्त्वं इति पाठः] तत्ते चेत्यत्वं क्वेव
10219 विद्यते ॥ २८ ॥
10220
10221 ननु यो मनसि तिष्ठन्मनसोन्तरो यं मनो न वेद इति मनसः प्रेरकः
10222 प्राज्ञात्मान्यः श्रूयते तदधीने मनोवासनोद्भवे कथं मम
10223 सद्वासनोद्भवस्वातन्त्र्यमित्याशङ्क्याह - प्राज्ञ इति ।
10224 यश्चेतनमात्रश्चिन्मात्रस्वभावः प्राज्ञः श्रुतः स एव त्वं न जडात्मकः
10225 सूक्ष्मः स्थूलो वा देहस्त्वं येनान्यः स्याः । नान्योऽतोऽस्ति द्रष्टा तत्त्वमसि
10226 इत्यादिश्रुतेः । तत्तस्मादेवं चिन्मात्रस्वरूपस्य तव अन्येन चेतसा चेतनेन
10227 चेत्यात्वं भास्यत्वं क्व विद्यते । यदि प्राज्ञस्त्वदन्यः स्यात्तर्हि
10228 चितश्चिदन्तरेण प्रकाशायोगात्त्वामपश्यन्न सर्वज्ञ एव स स्यादतस्त्वमेव
10229 स इति व्यतिहारेणैक्यं सिद्धमिति भावः । पाठान्तरे [पाठान्तरं अन्येन
10230 चेत्यसे चेत्ते चेतस्त्वं क्वेव विद्यते इति] अन्येन त्वं चेत् यदि चेत्यसे भास्यसे
10231 तर्हि ते तव चेतस्त्वं चेतनत्वं क्व विद्यते । चिद्भास्यस्य
10232 जडत्वापत्तेर्दुर्वारत्वादित्यर्थः ॥ २८ ॥
10233
10234 प्। ९३)
10235
10236 अन्यस्त्वां चेतयति चेत्तं चेतयति कोऽपरः ।
10237 क इमं चेतयेत्तस्मादनवस्था न वास्तवी ॥ २९ ॥
10238
10239 चितश्चिदन्तरवेद्यत्वे तदप्यन्यवेद्यमित्यनवस्थापि स्यादित्याह - अन्य इति ।
10240 इमं तच्चेतयितारं कश्चेतयेत् । तस्याप्यन्यश्चेदनवस्था स्यात् सा च न वास्तवी
10241 वस्तुसिद्धिकरीति तव सद्वासनोद्बोधयत्ने स्वातन्त्र्यमव्याहतमिति भावः ॥ २९
10242 । ।
10243
10244 शुभाशुभाभ्यां मार्गाभ्यां वहन्ती वासनासरित् ।

पौरुषेण प्रयत्नेन योजनीया शुभे पथि ॥ ३० ॥

पुरुषस्वातन्त्र्यप्रसाधनस्य फलमाह - शुभाशुभाभ्यामिति ॥ ३० ॥

अशुभेषु समाविष्टं शुभेष्वेवावतारय ।
स्वं मनः पुरुषार्थेन बलेन बलिनां वर ॥ ३१ ॥

अशुभाच्चालितं याति शुभं तस्मादपीतरत् ।
जन्तोश्चित्तं तु शिशुवत्तस्मात्तच्चालयेद्बलात् ॥ ३२ ॥

चित्तनदी हि द्वेधा प्रवहति पुण्याय च पापाय च तत्रैकस्रोतोनिरोधे अपरत्र
द्विगुणं वहतीति योगशास्त्रोक्तिमनुसृत्याह - अशुभादिति । चालितं
निवारितम् । तस्माच्छुभादपि चालितमितरदशुभम् । चालयेदशुभादिति शेषः ॥
३२ ॥

समता सांत्वनेनाशु न द्रागिति शनैः शनैः ।
पौरुषेणैव यत्नेन पालयेच्चित्तबालकम् ॥ ३३ ॥

इति उक्तक्रमेण चित्तबालकमाशु शीघ्रमेव रागादिवैषम्यत्याजनेन
स्वाभाविक्यां समतायां सांत्वनेन निर्दोषतामापाद्य
शनैःशनैरात्मस्वरूपे निरोधलक्षणेन पौरुषेण प्रयत्नेन पालयेन्नतु
द्रागेव हठान्निरुध्यादुद्वेगात् समाधानभ्रंशो मा भूदिति । तथाच
भगवद्वचनं शनैःशनैरुपरमेद्बुद्ध्या धृतिगृहीतया इत्यादि ॥ ३३ ॥

वासनौघस्त्वया पूर्वमभ्यासेन घनीकृतः ।
शुभो वाप्यशुभो वापि शुभमद्य घनीकुरु ॥ ३४ ॥

त्वया शुभो वा अशुभो वा घनीकृतोऽस्तु नाम तथाप्यद्य शुभमेव
घनीकुरु । प्रथमे फलशैघ्र्याय द्वितीये तु विरोधिनिरासाय
तस्यावश्यकत्वादिति भावः ॥ ३४ ॥

प्रागभ्यासवशाद्याता यदा ते वासनोदयम् ।
तदाभ्यासस्य साफल्यं विद्धि त्वमरिमर्दन ॥ ३५ ॥

न च वासनाभ्यासस्य वैफल्यं शङ्क्यं पूर्ववासनाभ्यासेषु प्रत्यक्षतः
फलक्लृप्तेरित्याह - प्रागिति । उदयमुद्भवं घनीभावमित्यर्थः ॥ ३५ ॥

इदानीमपि ते याति घनतां वासनानघ ।
अभ्यासवशतस्तस्माच्छुभाभ्यासमुपाहर ॥ ३६ ॥

इदानीमपीति । तद्वदेवेति भावः ॥ ३६ ॥

पूर्वं चेद्घनतां याता नाभ्यासात्तव वासना ।
वर्धिष्यते तु नेदानीमपि तात सुखी भव ॥ ३७ ॥

प्राक्तनवासनाघनीभावेऽपि संदिहानं प्रत्याह - पूर्वमिति । तथाच
यथोचितं सुखेन व्यवहर्तव्यमिति न
दुर्वासनावृद्धिप्रयुक्तानर्थसंभावनेन विषादस्ते युक्त इति भावः ॥ ३७ ॥

संदिग्धायामपि भृशं शुभामेव समाहर ।
अस्यां तु वासनावृद्धौ शुभाद्दोषो न कश्चन ॥ ३८ ॥

10297 तर्हि किमिति शुभवासनावर्धने मां प्रवर्तयसि तत्राह -
10298 संदिग्धायामपीति | समाहर उपचिनु | शुभादाचरणादस्यां शुभायां
10299 वासनावृद्धौ तु न कश्चन दोषः | शुभाशुभफलारम्भे संदिग्धेऽपि
10300 शुभं चरेत् | यदि न स्यात्तदा किं स्याद्यदि स्यान्नास्तिको हतः || इति न्यायादिति
10301 भावः || ३८ ||
10302
10303 यद्यदभ्यस्यते लोके तन्मयेनैव भूयते |
10304 इत्याकुमारं प्राज्ञेषु दृष्टं संदेहवर्जितम् || ३९ ||
10305
10306 वस्तुतस्तु न संदेहसंभावना |
10307 अन्यत्राप्यभ्यासस्याभ्यस्यमानदार्ढ्यहेतुत्वक्लृप्तेरित्याह - यद्यदिति ||
10308 ३९ ||
10309
10310 शुभवासनया युक्तस्तदत्र भव भूतये |
10311 परं पौरुषमाश्रित्य विजित्येन्द्रियपञ्चकम् || ४० ||
10312
10313 अव्युत्पन्नमना यावद्भवानज्ञाततत्पदः |
10314 गुरुशास्त्रप्रमाणैस्तु निर्णीतं तावदाचर || ४१ ||
10315
10316 तर्हि कियत्कालं शुभवासना अभ्यसनीया तत्राह - अव्युत्पन्नेति |
10317 तत्त्वज्ञानपर्यन्तमित्यर्थः | प्रमाणानि युक्त्यनुभवादीनि || ४१ ||
10318
10319 ततः पक्वकषायेण नूनं विज्ञातवस्तुना |
10320 शुभोप्यसौ त्वया त्याज्यो वासनौघो निराधिना || ४२ ||
10321
10322 पक्वा वस्त्रादिलग्नमलभागाः क्षारपाकेनेव शिथिलिता रागादिवासनाकषाया
10323 यस्य तेन | ततस्तदनन्तरं विज्ञातात्मवस्तुना | तथाच स्मृतिः - कषाये
10324 कर्मभिः पक्वे ततो ज्ञानं प्रजायते इति | अत एव निराधिना
10325 अपगतमासदुःखेन पूर्णेनेति यावत् || ४२ ||
10326
10327 यदतिसुभगमार्यसेवितं त-
10328 च्छुभमनुसृत्य मनोज्ञभावबुद्ध्या |
10329 अधिगमय पदं सदा विशोकं
10330 तदनु तदप्यवमुच्य साधु तिष्ठ || ४३ ||
10331
10332 उक्तमेवार्थं संक्षिप्योपसंहरन्नाचरणीयं शुभं लक्षयति - यदिति |
10333 मनोज्ञभावाः शुभवासनास्तत्संपन्नया बुद्ध्या पदं परमार्थवस्तु
10334 अधिगमय साक्षात्कुरु | तच्छुभवासनानुसरणमप्यवमुच्यसाधुरूपे तिष्ठ
10335 || ४३ ||
10336
10337 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मुमुक्षुव्यवहारप्रकरणे
10338 कर्मविचरो नाम नवमः सर्गः || ९ ||
10339
10340 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे मुमुक्षुव्यवहारप्रकरणे
10341 कर्मविचारो नाम नवमः सर्गः || ९ ||
10342
10343 दशमः सर्गः १०
10344
10345 श्रीवसिष्ठ उवाच
10346
10347 यथास्थितं ब्रह्मतत्त्वं सत्तानियतिरुच्यते |
10348 सा विनेतुर्विनेतृत्वं सा विनेयविनेयता || १ ||

10349
10350 धातुः स्वस्य च जन्मात्र समस्तजनमुक्तये |
10351 स्वोपदेश इति प्रोक्तो ज्ञानावतरणक्रमः || १ ||
10352
10353 नन्वस्तु दैवं नाम प्राक्तनं पौरुषमेवेति तदाधुनिकेन शुभाचरणेन
10354 जय्यम् नियतिस्तु दुर्जयैव | या हि कृतान्तस्य कान्तेति वर्णिता वैराग्यप्रकरणे
10355 तां हि भाविपदार्थानामवश्यंभावलक्षणां
10356 भवितव्यतापरपर्यायामप्रतीकार्यामाहुरभियुक्ताः -
10357 अवश्यंभाविभावानां प्रतीकारो भवेद्यदि | तदा दुःखैर्न
10358 लिप्येरन्नलरामयुधिष्ठिराः || इति | तथाच तन्नियम्यत्वेऽपि पुरुषस्य न
10359 स्वातन्त्र्यमिति शङ्कापरिजिहीर्षुः श्रीवसिष्ठ उवाच - यथास्थितमिति |
10360 ब्रह्मतत्त्वं यथास्थितं सच्चिदानन्दस्वप्रकाशात्मना सर्वत्र समतया
10361 सर्वानुकूल्येन स्थितं तत्संबन्धिनी सर्वपदार्थानां सत्तैव
10362 भविष्यत्कालसंबन्धेन व्यपदिश्यमाना भवितव्यताख्या नियतिरुच्यते | सत्ता
10363 च स सर्वत्र यथास्थितं ब्रह्मतत्त्वम् | तदेव हि
10364 कारणकार्ययोर्नियामकनियम्यरूपेणावतिष्ठते | कारणे सत्यवश्यं
10365 कार्येण भाव्यं कार्ये सत्यवश्यं कारणेन भाव्यमिति नियतिर्नियमः | सा च
10366 विनेतुर्नियन्तुः कारणादेर्विनेतृत्वं कार्यादिनियामकत्वम् | विनेयस्य
10367 नियम्यस्य च कायदिर्विनेयता नियम्यता | नियतपूर्वकालसत्ताकारणता
10368 नियतपश्चात्कालसत्ताकार्यतेति
10369 तयोर्देशकालविशेषितसत्तामात्ररूपत्वादित्यर्थः | पूर्वोक्तनियतिरपि
10370 सर्वकारणभूतब्रह्मसत्तारूपकालशक्तिरिति भावः || १ ||
10371
10372 अतः परुषमाश्रित्य श्रेयसे नित्यबान्धवम् |
10373 एकाग्रं कुरु तच्चित्तं शृणु चोक्तमिदं मम || २ ||
10374
10375 अतः सर्वानुकूलब्रह्मसत्तारूपत्वात्पौरुषसाफल्येऽप्यनुकूलैव नियतिर्न
10376 प्रतिकूलेत्यत उक्तं वचनं वक्ष्यमाणमिदमेकाग्रकरणोपायबोधकं
10377 प्रथमं तदेव वचनमाह - पौरुषमित्यादिना || २ ||
10378
10379 अवान्तरनिपातीनि स्वारूढानि मनोरथम् |
10380 पौरुषेणेन्द्रियाण्याशु संयम्य समतां नय || ३ ||
10381
10382 इन्द्रियाणि मनोरथं विषयाभिलाषं स्वारूढानि सन्ति अवान्तरे मुक्तेरर्वाक्तने
10383 ऐहिकस्वर्गादिसुखे निपातनशीलानि [निपतन इति पाठ] भवन्त्यतस्तानि
10384 यथा मनोरथं नारोहन्ति तथा पौरुषेण प्रयत्नेन संयम्य मनः समतां
10385 नयेत्यर्थः || ३ ||
10386
10387 इहामुत्र च सिद्ध्यर्थं पुरुषार्थफलप्रदाम् |
10388 मोक्षोपायमयीं वक्ष्ये संहितां सारनिर्मिताम् || ४ ||
10389
10390 तदनन्तरं यत्कार्यं तदाह - इहेत्यादिना | इह सिद्धिर्जीवन्मुक्तता अमुत्र
10391 सिद्धिर्विदेहमुक्तता | इह मनुष्यलोके अमुत्र स्वर्गादिलोकेषु चाधिकारिणां
10392 ज्ञानसिद्ध्यर्थमिति वा | मोक्षोपायमयीं मोक्षसाधनोपदेशप्रचुराम् |
10393 यां संहितां वक्ष्ये तां स्वीकुर्विति शेषः || ४ ||
10394
10395 अपुनर्ग्रहणायान्तस्त्यक्त्वा संसारवासनाम् |
10396 संपूर्णौ शमसंतोषावादायोदारया धिया || ५ ||
10397
10398 तच्छ्रवणे मन्दविरक्तस्यापि नाधिकार इति द्यतनायापुनर्ग्रहणायेति |
10399 शमसंतोषौ शान्तिवतृष्ण्यसुखे || ५ ||
10400

10401 सपूर्वापरवाक्यार्थविचारविषयाहृतम् ।
10402 मनः समरसं कृत्वा सानुसंधानमात्मनि ॥ ६ ॥
10403
10404 कर्मकाण्डश्रुतयः पूर्ववाक्यानि । उपासनापरश्रुतय उत्तरवाक्यानि ।
10405 अर्थविचारो ज्ञानसाधकत्वम् । पूर्वापरवाक्यार्थविचारसहितं च
10406 तद्विषयैरहतं चेति विग्रहः । आत्मनि सानुसंधानं समरसं
10407 गुरुशास्त्रोपदिष्टप्रकारस्य स्वानुभवस्य चैकरस्यापादनसहितमिति यावत् ॥ ६
10408 । ।
10409
10410 सुखदुःखक्षयकरं महानन्दैककारणम् ।
10411 मोक्षोपायमिमं राम वक्ष्यमाणं मया शृणु ॥ ७ ॥
10412
10413 इमां मोक्षकथां श्रुत्वा सह सर्वैर्विवेकिभिः ।
10414 परं यास्यसि निर्दुःखं नाशो यत्र न विद्यते ॥ ८ ॥
10415
10416 अविवेकिनां श्रवणशालाप्रवेशम्पि वारयितुं सर्वैर्विवेकिभिरित्युक्तिः ॥ ८ ॥
10417
10418 इदमुक्तं पुराकल्पे ब्रह्मणा परमेष्ठिना ।
10419 सर्वदुःखक्षयकरं परमाश्वासनं धियः ॥ ९ ॥
10420
10421 इत्थं साङ्गं श्रवणमवतार्य श्रोतव्यशास्त्रादेरसिद्धये [शास्त्रादेः
10422 सिद्धये इति पाठः] तदवतारप्रकारं विवक्षुराह - इदमिति । पुराकल्पे
10423 कल्पादौ ॥ ९ ॥
10424
10425 श्रीराम उवाच ।
10426
10427 केनोक्तं कारणेनेदं ब्रह्मन्पूर्वं स्वयंभुवा ।
10428 कथं च भवता प्राप्तमेतत्कथय मे प्रभो ॥ १० ॥
10429
10430 वसिष्ठाभिप्रायानुरूपं जिज्ञासुः श्रीराम उवाच - केनेति ॥ १० ॥
10431
10432 श्रीवसिष्ठ उवाच ।
10433
10434 अस्त्यनन्तविलासात्मा सर्वगः सर्वसंश्रयः ।
10435 चिदाकाशोऽविनाशात्मा प्रदीपः सर्वजन्तुषु ॥ ११ ॥
10436
10437 तत्रादौ परमेष्ठिनो जन्म वक्तुं तन्मूलकारणमाह - अस्तीति । अनन्तानां
10438 मायिकविलासानामधिष्ठानभूत आत्मा अस्ति । सर्वगः सर्वान्तरः
10439 सर्वसंश्रयः सर्वाधार इति तस्य मायातत्कार्यातिरेकद्योतनायोक्तम् ।
10440 सर्वजन्तुषु प्रदीप इति प्रत्यक्चिद्रूपत्वेन [प्रत्यक्त्वेन इति पाठः]
10441 नित्यापरोक्षतालाभाय ॥ ११ ॥
10442
10443 स्पन्दास्पन्दसमाकारात्ततो विष्णुरजायत ।
10444 स्यन्दमानरसापूरात्तरङ्गः सागरादिव ॥ १२ ॥
10445
10446 मायातत्कार्याणां स्पन्दे अस्पन्दे च सम एक आकारः स्वभावो यस्य
10447 तस्मान्निर्विकारादित्यर्थः । विष्णुः सर्वकार्यव्यापनशीलो ब्रह्माण्डात्मा
10448 विराट् सूक्ष्मभूतसृष्टिक्रमेणाजायत । स्यन्दमानस्य रसस्य जलस्य
10449 आपूरात्स्पन्दास्पन्दयोरप्यप्रच्युतजलैकस्वभावात्सागरात्तरङ्ग इव । अनेन
10450 निर्विकाराज्जगदुत्पत्तिर्विवर्तरूपैव न परिणाम इति ध्वन्यते ॥ १२ ॥
10451
10452 प्। ९५)

10453
10454 सुमेरुकर्णिकात्तस्य दिग्दलाद्धृदयाम्बुजात् ।
10455 तारकाकेसरवतः परमेष्ठी व्यजायत ॥ १३ ॥
10456
10457 तस्य विराजः सुमेरुः कर्णिका यस्य दिशो दलानि यस्य तादृशात्तरकाकेसरवतो
10458 हृदयाम्बुजात् ॥ १३ ॥
10459
10460 वेदवेदार्थविद्देवमुनिमण्डलमण्डितः ।
10461 सोऽसृजत्सकलं सर्वं विकल्पौघं यथा मनः ॥ १४ ॥
10462
10463 देवानां मुनीनां च मण्डलैः समूहैः । सर्गं प्राणिनिकायम् ॥ १४ ॥
10464
10465 जम्बूद्विपस्य कोणेऽस्मिन्वर्षे भारतनामनि ।
10466 ससर्ज जनसर्गौघं ह्याधिव्याधिपरिप्लुतम् ॥ १५ ॥
10467
10468 भावाभावविषण्णाङ्गमुत्पातध्वंसतत्परम् ।
10469 सर्गेऽस्मिन्भूतजातीनां [सर्वभूतानां इति पाठः]
10470 नानाव्यसनसंकुलम् ॥ १६ ॥
10471
10472 भावाभावौ लाभालाभौ ताभ्यां विषण्णमङ्गं मनो यस्य ।
10473 उत्पत्तिरुत्पातस्तत्संनिहितो ध्वंसो मरणं तत्र तत्परम् । अल्पजीवितमिति यावत् ।
10474 एतस्मिन्भूतजातीनां सर्गे नानाविधैर्विषयभोगव्यसनैः संकुलं जनस्य
10475 दुःखं दृष्ट्वेत्युत्तरत्रान्वयः ॥ १६ ॥
10476
10477 जनस्यैतस्य दुःखं तद्दृष्ट्वा सकललोककृत् ।
10478 जगाम करुणामीशः पुत्रदुःखात्पिता यथा ॥ १७ ॥
10479
10480 ईशस्तद्दुःखनिवारणसमर्थः ॥ १७ ॥
10481
10482 क एतेषां हताशानां दुःखस्यान्तो हतायुषाम् ।
10483 स्यादिति क्षणमेकाग्रं चिन्तयामास भूतये ॥ १८ ॥
10484
10485 अन्तयति नाशयतीत्यन्तः क उपायः स्यादिति चिन्तयामास ॥ १८ ॥
10486
10487 इति संचिन्त्य भगवान्ससर्ज स्वयमीश्वरः ।
10488 तपो धर्मं च दानं च सत्यं तीर्थानिच् चैव हि ॥ १९ ॥
10489
10490 प्रथमं शुद्धिसाधनसर्गमाह - इतीति ॥ १९ ॥
10491
10492 एतत्सृट्वा पुनर्देवश्चिन्तयामास भूतकृत् ।
10493 पुंसां नानेन सर्वस्य दुःखस्यान्त इति स्वयम् ॥ २० ॥
10494
10495 सर्गस्य सृष्टेः संबन्धिनां पुंसां । स्वसृष्टानामिति यावत् । अन्तो मूलतो
10496 निवृत्तिः ॥ २० ॥
10497
10498 निर्वाणं नाम परमं सुखं येन पुनर्जनः ।
10499 न जायते न म्रियते तज्ज्ञानादेव लभ्यते ॥ २१ ॥
10500
10501 जनो जीवः पुनर्न जायते न म्रियते तन्निर्वाणम् ॥ २१ ॥
10502
10503 संसारोत्तरणे जन्तोरुपायो ज्ञानमेव हि ।
10504 तपो दानं तथा तीर्थमनुपायाः प्रकीर्तिताः ॥ २२ ॥

10505
10506 अनुपाया असाधनानि प्रकीर्तिताः न कर्मणा न प्रजया धनेन प्लवा ह्येते
10507 अदृढा यज्ञरूपाः इत्यादिश्रुतिषु ॥ २२ ॥
10508
10509 तत्तावद्दुःखमोक्षार्थे जनस्यास्य हतात्मनः [महात्मनः इति
10510 पाठः] ।
10511 प्रत्यग्रं तरणोपायमाशु प्रकटयाम्यहम् ॥ २३ ॥
10512
10513 प्रत्यग्रं नवम् । दृढमिति यावत् ॥ २३ ॥
10514
10515 इति संचिन्त्य भगवान्ब्रह्मा कमलसंस्थितः ।
10516 मनसा परिसंकल्प्य मामुत्पादितवानिमम् ॥ २४ ॥
10517
10518 इमं त्वत्पुरःस्थं माम् ॥ २४ ॥
10519
10520 कुतोऽप्युत्पन्न एवाशु ततोऽहं समुपस्थितः ।
10521 पितुस्तस्य पुनः शीघ्रमूर्मिरूर्मेरिवानघ [मूर्तिरूर्मेः इति
10522 पाठः] ॥ २५ ॥
10523
10524 कुतोऽपि अनिर्वचनीयमायावशादेवोपाध्युत्पत्त्योत्पन्नः सन्नाशु समुपस्थितः
10525 पितुः पितरमित्यर्थः ॥ २५ ॥
10526
10527 कमण्डलुधरो नाथः सकमण्डलुना मया ।
10528 साक्षमालः साक्षमालं स प्रण्म्याभिवादितः ॥ २६ ॥
10529
10530 साक्षमालं यथा स्यात्तथा प्रणम्य नम्रीभूयाभिवादितो नमस्कृतः ॥ २६ ॥
10531
10532 एहि पुत्रेति मामुक्त्वा स स्वाब्जस्योत्तरे दले ।
10533 शुक्लाभ्र इव शीतांशुं योजयामास पाणिना ॥ २७ ॥
10534
10535 योजयामास संयोजयामास । उपवेशितवानिति यावत् ॥ २७ ॥
10536
10537 मृगकृत्तिपरीधानो मृगकृत्तिनिजाम्बरम् ।
10538 मामुवाच पिता ब्रह्मा सुहंसः सारसं यथा ॥ २८ ॥
10539
10540 मुहूर्तमात्रं ते पुत्र चेतो वानरचञ्चलम् ।
10541 अज्ञानमभ्याविशतु शशः शशधरं यथा ॥ २९ ॥
10542
10543 वानरजातिरिव चञ्चलं चापलहेतुरज्ञानं कर्तृ ते चेतः कर्म अभ्याविशतु
10544 प्रविशतु । शशः कलङ्कः ॥ २९ ॥
10545
10546 इति तेनाशु शप्तः सन्विचारसमनन्तरम् ।
10547 अहं विस्मृतवान्सर्वं स्वरूपममलं किल ॥ ३० ॥
10548
10549 विचारः परमेष्ठिनः संकल्पस्तत्समनन्तरम् । सर्वं पूर्णम् । किलेत्याश्चर्ये
10550 ॥ ३० ॥
10551
10552 अथाहं दीनतां यातः स्थितोऽसंबुद्धया धिया ।
10553 दुःखशोकाभिसंतप्तो जातो जन इवाधनः ॥ ३१ ॥
10554
10555 दीनतां अपहृतधन इव कार्पण्यम् ॥ ३१ ॥
10556

10557 कष्टं संसारनामायं दोषः कथमिहागतः ।
10558 इति चिन्तितवानन्तस्तूष्णीमेव व्यवस्थितः ॥ ३२ ॥
10559
10560 तृष्णीं निर्व्यापारो व्यवस्थितः ॥ ३२ ॥
10561
10562 अथाभ्यधात्स मां तातः पुत्र किं दुःखवानसि ।
10563 दुःखोपघातं मां पृच्छ सुखी नित्यं भविष्यसि ॥ ३३ ॥
10564
10565 दुःखमुपहन्तीति दुःखोपघात उपायस्तम् । कर्मण्यण् ॥ ३३ ॥
10566
10567 ततः पृष्टः स भगवान्मया सकललोककृत् ।
10568 हेमपद्मदलस्थेन संसारव्याधिभेषजम् ॥ ३४ ॥
10569
10570 कथं नाथ महादुःखमयः संसार आगतः ।
10571 कथं च क्षीयते जन्तोरिति पृष्टेन तेन मे ॥ ३५ ॥
10572
10573 तेन मे प्रोक्तमित्युत्तरेणान्वयः ॥ ३५ ॥
10574
10575 तज्ज्ञानं सुबहु प्रोक्तं यज्ज्ञात्वा पावनं परम् ।
10576 अहं पितुरभिप्रायः किलाधिक इव स्थितः ॥ ३६ ॥
10577
10578 पितुरधिकः सर्वोत्कृष्टोऽभिप्रायस्तत्त्वावबोध इव निर्मलः
10579 परिपूर्णस्वभावः स्थितः । किलेत्याश्चर्ये ॥ ३६ ॥
10580
10581 ततो विदितवेद्यं मां निजां प्रकृतिमास्थितम् ।
10582 स उवाच जगत्कर्ता वक्ता सकलकारणं ॥ ३७ ॥
10583
10584 स वक्ता उपदेष्टा पिता मामुवाच ॥ ३७ ॥
10585
10586 शापेनाज्ञपदं नीत्वा पृच्छकस्त्वं मया कृतः ।
10587 पुत्रास्य ज्ञानसारस्य समस्तजनसिद्धये ॥ ३८ ॥
10588
10589 समस्तानामधिकारिजनानां ज्ञानसिद्धये ॥ ३८ ॥
10590
10591 प्। ९६)
10592
10593 इदानीं शान्तशापस्त्वं परं बोधमुपागतः ।
10594 संस्थितोऽहमिवैकात्माऽकनकं कनकादिवत् ॥ ३९ ॥
10595
10596 यथा कनकं चिरं मालिन्यसंसर्गादकनकभावमिवापन्नं पुनः
10597 शोधनेनादिकास्थितशुद्धकनकभावेनावतिष्ठते तद्वत् ॥ ३९ ॥
10598
10599 गच्छेदानीं महीपृष्ठे जम्बूद्विपान्तरस्थितम् ।
10600 साधो भरतवर्षं त्वं लोकानुग्रहहेतुना ॥ ४० ॥
10601
10602 फलमपि प्राग्बुद्ध्युपारूढं [रूढक्रियाहेतुः इति पाठः]
10603 क्रियाहेतुरिति हेतुनेत्युच्यते ॥ ४० ॥
10604
10605 तत्र क्रियाकाण्डपरास्त्वया पुत्र महाधिया ।
10606 उपदेश्याः क्रियाकाण्डक्रमेण क्रमशालिना ॥ ४१ ॥
10607
10608 तत्रेति । न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् इति न्यायादिति भावः ॥

10609 ४१ ॥
10610
10611 विरक्तचित्ताश्च तथा महाप्राज्ञा विचारिणः ।
10612 उपदेश्यास्त्वया साधो ज्ञानेनानन्ददायिना ॥ ४२ ॥
10613
10614 महाप्राज्ञाः सूक्ष्मार्थग्रहणपटवः विचारिणो विमर्शशीलाः ॥ ४२ ॥
10615
10616 इति तेन नियुक्तोऽहं पित्रा कमलयोनिना ।
10617 इह राघव तिष्ठामि यावद्भूतपरम्परा ॥ ४३ ॥
10618
10619 भूतपरम्परा अधिकारिजनप्रवाहो यावत्स्थास्यति तावत् ॥ ४३ ॥
10620
10621 कर्तव्यमस्ति न ममेह हि किंचिदेव
10622 स्थातव्यमित्यतिमना भुवि संस्थितोऽस्मि ।
10623 संशान्तया सततसुप्तधियेह वृत्त्या
10624 कार्यं करोमि न च किंचिदहं करोमि ॥ ४४ ॥
10625
10626 कर्तव्यं क्रियाप्रयोजनम् । मनोऽतिक्रान्तोऽतिमना निर्मनस्कः । अत एव सततं
10627 सुप्तेव निरभिमाना धीर्यस्यां तया वृत्त्या कार्यं यथाप्राप्तानुवर्तनं
10628 करोमि । अथवा संशान्तया वृत्त्या स्थितोऽहं सततसुप्ता अज्ञास्तेषां धिया
10629 कार्यं करोति स्वधिया तु न किंचित्करोमित्यर्थः ॥ ४४ ॥
10630
10631 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मुमुक्षुव्यवहारप्रकरणे
10632 ज्ञानावतरणं नाम दशमः सर्गः ॥ १० ॥
10633
10634 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे मुमुक्षुव्यवहारप्रकरणे
10635 ज्ञानावतरणं नाम दशमः सर्गः ॥ १० ॥
10636
10637 एकादशः सर्गः ११
10638
10639 श्रीवसिष्ठ उवाच ॥
10640
10641 एतत्ते कथितं सर्वं ज्ञानावतरणं भुवि ।
10642 मया स्वमीहितं चैव कमलोद्भवचेष्टितम् ॥ १ ॥
10643
10644 ज्ञानावतारविस्तारो राम वराग्यसंस्तवः ।
10645 वकृत्प्रच्छकलक्ष्मादि प्राधान्येनात्र वर्ण्यते ॥ १ ॥
10646
10647 पुनर्विस्तरेण ज्ञानावतारप्रकारं वक्तृप्रच्छकलक्षणं च
10648 वर्णयिष्यंस्तदवतारायोक्तमुपसंहरति - एतदिति । मम
10649 एतावज्ज्ञानावतरणं स्वं स्वीयं ईहितं जन्मादि चेष्टितं कमलोद्भवस्य
10650 मत्पितुश्चेष्टितं चैव ते कथितमित्यन्वयः ॥ १ ॥
10651
10652 तदिदं परमं ज्ञानं श्रोतुमद्य [श्रोतु मम इति पाठः]
10653 तवानघ ।
10654 भृशमुत्कण्ठितं चेतो महतः सुकृतोदयात् ॥ २ ॥
10655
10656 सुकृतोदयात्पुण्यपरिपाकात् ॥ २ ॥
10657
10658 श्रीराम उवाच ॥
10659
10660 कथं ब्रह्मन्भवतो लोके ज्ञानावतारणे ।

10661 सर्गादनन्तरं बुद्धिः प्रवृत्ता परमेष्ठिनः ॥ ३ ॥
10662
10663 तादृशसुकृतोदयः कीदृग्विधलक्षणैः परिज्ञेयः कीदृशाश्च
10664 तल्लक्ष्यवस्तूपदेशप्रकार इति प्राक्तनकथाविस्तरश्रवणमुखेन जिज्ञासुः
10665 श्रीराम उवाच - कथमिति । कथं केन प्रकारेण । तं प्रकारं विस्तरेण
10666 वर्णयेत्यर्थः ॥ ३ ॥
10667
10668 श्रीवसिष्ठ उवाच ॥
10669
10670 परमे ब्रह्मणि ब्रह्मा स्वभाववशतः स्वयम् ।
10671 जातः स्पन्दमयो नित्यमूर्मिरम्बुनिधाविव ॥ ४ ॥
10672
10673 स्वस्य भावः प्राक्तनविद्याकर्मवासनाप्रचयस्तद्वशतः । स्वयमेव
10674 तदनुरूपोपाध्यात्मा जातः । स्पन्दमयः क्रियाशक्तिप्रचुरः । नित्यमभीक्ष्णम्
10675 ॥ ४ ॥
10676
10677 दृष्ट्वैवमातुरं सर्गं सर्गस्य सकलां गतिम् ।
10678 भूतभव्यभविष्यस्थां ददर्श परमेश्वरः ॥ ५ ॥
10679
10680 स च भुवनभूतग्रामसर्गानन्तरं सर्गं सृष्टजनमेवं
10681 जन्मरजामृत्युनरकादिप्रकारेण स्वाज्ञानवशादातुरं दुःखितं
10682 दृष्ट्वा तद्दृष्टान्तेनैव भूतभव्यभविष्यत्कालस्थामपि सर्गस्य सकलां
10683 गतिं ददर्श ॥ ५ ॥
10684
10685 सक्रियाक्रमकालस्य कृतादेः क्षय आगते ।
10686 मोहमालोच्य लोकानां कारुण्यमगमत्प्रभुः ॥ ६ ॥
10687
10688 विशेषेण च स्वर्गापवर्गसाधनानुष्ठानयोग्यकालस्य कृतयुगादेः क्षये
10689 आगते लोकस्य भाविनं मोहमालोच्य ॥ ६ ॥
10690
10691 ततो मामीश्वरः सृष्ट्वा ज्ञानेनायोज्य चसकृत् ।
10692 विससर्ज महीपीठं लोकस्याज्ञानशान्तये ॥ ७ ॥
10693
10694 असकृदुपदेशेन ज्ञानेनायोज्य संयोज्य ॥ ७ ॥
10695
10696 यथाहं प्रहितस्तेन तथान्ये च महर्षयः ।
10697 सनत्कुमारप्रमुखा नारदाद्याश्च भूरिशः ॥ ८ ॥
10698
10699 क्रियाक्रमेण पुण्येन तथा ज्ञानक्रमेण च ।
10700 मनोमोहामयोन्नद्धमुद्धर्तुं लोकमीरिताः ॥ ९ ॥
10701
10702 क्रिया कर्म तदुपदेशक्रमेण । चादुपासनोपदेशक्रमेण । मनश्च
10703 मोहोऽज्ञानं च तावेव वा तद्युक्तो वा आमयः संसाररोगस्तेनोन्नद्धं
10704 बद्धं वशीकृतमिति यावत् । ईरिताः प्रेरिताः ॥ ९ ॥
10705
10706 महर्षिभिस्ततस्तैस्तैः क्षीणे कृतयुगे पुरा ।
10707 क्रमात्क्रियाक्रमे शुद्धे पृथिव्यां तनुतां गते ॥ १० ॥
10708
10709 महर्षिभिर्भूपालाः परिकल्पिता इत्युत्तरेणान्वयः । शुद्धे वैदिके
10710 रागलोभाद्यनुपहते वा ॥ १० ॥
10711
10712 क्रियाक्रमविधानार्थं मर्यादानियमाय च ।

10713 पृथग्देशविभागेन भूपालाः परिकल्पिताः ॥ ११ ॥
10714
10715 विधानार्थं प्रवर्तनार्थम् ॥ ११ ॥
10716
10717 प्। ९७)
10718
10719 बहूनि स्मृतिशास्त्राणि यज्ञशास्त्राणि चावनौ ।
10720 धर्मकामार्थसिद्ध्यर्थं कल्पितान्युचितान्यथ ॥ १२ ॥
10721
10722 अथ राजकल्पनानन्तरं राज्ञां प्रजानां च स्वस्वधर्मनियमनोचितानि
10723 स्मृतिशास्त्राणि कल्पितानि ॥ १२ ॥
10724
10725 कालचक्रे वहत्यस्मिंस्ततो विगलिते क्रमे ।
10726 प्रत्यहं भोजनपरे जने शाल्यर्जनोन्मुखे ॥ १३ ॥
10727
10728 भोजनग्रहणं भोगमात्रस्योपलक्षणं शालिग्रहणं च विषयमात्रस्य ॥ १३
10729 ॥
10730
10731 द्वन्द्वानि संप्रवृत्तानि विषयार्थं महीभुजाम् ।
10732 दण्ड्यतां संप्रयातानि भूतानि भुवि भूरिशः ॥ १४ ॥
10733
10734 द्वन्द्वानि लक्षणया तन्निष्ठानि वैराणि । विषयार्थं देशार्थं भोग्यार्थं
10735 वा । यद्वा द्वन्द्वानि शीतोष्णादीनि । विषयार्थं
10736 तत्परिहारोपायविषयसंपादनार्थम् । ततश्च
10737 विषयसिद्धेर्धनमलत्वाद्धनार्थं भूतानि परभूजुजां दण्ड्यतां
10738 दण्डनीयतां संप्रयातानि ॥ १४ ॥
10739
10740 ततो युद्धं विना भूपा महीं पालयितुं क्षमाः ।
10741 न समर्थास्तदा याताः प्रजाभिः सह दैन्यताम् ॥ १५ ॥
10742
10743 पूर्वं क्षमाः समर्था अपि ततस्तदनन्तरं न समर्थाः सन्तो दीना एव
10744 दैन्यास्तद्भावं याताः । देहे आत्मताबुद्ध्या युद्धादौ देहनाशे
10745 आत्मनाशभयादित्यर्थः ॥ १५ ॥
10746
10747 तेषां दैन्यापनोदार्थं सम्यग्दृष्टिक्रमाय च ।
10748 ततोऽस्मदादिभिः प्रोक्ता महत्यो ज्ञानदृष्टयः ॥ १६ ॥
10749
10750 सम्यग्दृष्टिरात्मतत्त्वज्ञानं तस्य क्रमणं क्रमो लोके प्रचारस्तस्मै ॥ १६ ॥
10751
10752 अध्यात्मविद्या तेनेयं पूर्वं राजसु वर्णिता ।
10753 तदनु प्रसृता लोके राजविद्येत्युदाहृता ॥ १७ ॥
10754
10755 तेनोक्तहेतुना । राजविद्येत्युदाहृता व्यासादिभिः ॥ १७ ॥
10756
10757 राजविद्या राजगुह्यमध्यात्मज्ञानमुत्तमम् ।
10758 ज्ञात्वा राघव राजानः परां निर्दुःखतां गताः ॥ १८ ॥
10759
10760 अथ राजस्वतीतेषु बहुष्वमलकीर्तिषु ।
10761 अस्माद्दशरथाद्राम जातोऽद्य त्वमिहावनौ ॥ १९ ॥
10762
10763 तव चातिप्रसन्नेऽस्मिञ्जातं मनसि पावनम् ।
10764 निर्निमित्तमिदं चारु वैराग्यमरिमर्दन ॥ २० ॥

10765
10766 अतिप्रसन्ने अत्यन्तं निर्मले। निर्निमित्तं श्मशानमापदं दैन्यमिति
10767 वक्ष्यमाणदृष्टनिमित्तरहितम्॥ २०॥
10768
10769 सर्वस्यैव हि सर्वस्य साधोरपि विवेकिनः।
10770 निमित्तपूर्वं वैराग्यं जायते राम राजसम्॥ २१॥
10771
10772 सर्वस्य विवेकिनः पुरुषसार्थस्य [पुरुषार्थस्य इति क्वाचित्कः पाठः]
10773 मध्ये साधोरुत्तमत्वेन प्रसिद्धस्यापि सर्वस्य बहुतरजनस्य सर्वस्य
10774 विषयस्य संबन्धीति वा। रजोगुणकार्यदृष्टदुःखानुभवनिमित्तमत एव
10775 राजसम्॥ २१॥
10776
10777 इदं त्वपूर्वमुत्पन्नं चमत्कारकरं सताम्।
10778 तवानिमित्तं वैराग्यं सात्त्विकं स्वविवेकजम्॥ २२॥
10779
10780 सत्त्वात्सुखं च ज्ञानं चेत्यादिस्मृतेर्विवेकज्ञानमात्रजत्वात्सात्त्विकम्॥ २२॥
10781
10782 बीभत्सं विषयं दृष्ट्वा को नाम न विरज्यते।
10783 सतामुत्तमवैराग्यं विवेकादेव जायते॥ २३॥
10784
10785 उक्तमेव व्यनक्ति - बीभत्समिति॥ २३॥
10786
10787 ते महान्तो महाप्राज्ञा निमित्तेन विनैव हि।
10788 वैराग्यं जायते येषां तेषां ह्यमलमानसम्॥ २४॥
10789
10790 स्वविवेकचमत्कारपरामर्शविरक्तया।
10791 राजते हि धिया जन्तुर्युवेव वरमालया॥ २५॥
10792
10793 स्वविवेकवशादेव यश्चमत्कारपरामर्शस्तत्त्वाभिमुख्यं
10794 तेनेतरविषयेभ्यो विरक्तया॥ २५॥
10795
10796 परामृश्य विवेकेन संसाररचनाभिमाम्।
10797 वैराग्यं येऽधिगच्छन्ति त एव पुरुषोत्तमाः॥ २६॥
10798
10799 स्वविवेकवशादेव विचार्येदं पुनः पुनः।
10800 इन्द्रजालं परित्याज्यं सबाह्याभ्यन्तरं बलात्॥ २७॥
10801
10802 इदं दृश्यजातमिन्द्रजालमिवेन्द्रजालम्। मायिकमिति यावत्। न बाह्यमेव
10803 किंतु बाह्यसहितमाभ्यन्तरं देहेन्द्रियप्राणमनोबुद्ध्यविद्यान्तमपि॥ २७॥
10804
10805 श्मशानमापदं दैन्यं दृष्ट्वा को न विरज्यते।
10806 तद्वैराग्यं परं श्रेयः स्वतो यदभिजायते॥ २८॥
10807
10808 अकृत्रिमविरागत्वं महत्त्वमलमागतः।
10809 योग्योऽसि ज्ञानसारस्य बीजस्येव मृदुस्थलम्॥ २९॥
10810
10811 अलमत्यन्तमागतः प्राप्तवान्॥ ज्ञानानां विद्यानां सार आत्मविद्या तस्य॥ २९
10812 ।।
10813
10814 प्रसादात्परमेशस्य नाथस्य परमात्मनः।
10815 त्वादृशस्य शुभा बुद्धिर्विवेकमनुधावति॥ ३०॥
10816

10817 तपःप्रभावाद्देवप्रसादाच्च | यस्य देवे परा भक्तिः ईश्वरानुग्रहादेव
10818 पुंसामद्वैतवासना | प्रसादादेव रुद्रस्य भवानिसहितस्य तु ||
10819 अध्यात्मविषयं ज्ञानं जायते बहुजन्मभिः ||
10820 इत्यादिश्रुतिस्मृत्याद्यनुसरन्नाह - प्रसादादिति || ३० ||
10821
10822 क्रियाक्रमेण महता तपसा नियमेन च |
10823 दानेन तीर्थयात्राभिश्चिरकालं विवेकतः || ३१ ||
10824
10825 तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन
10826 इत्यादिश्रुतिमनुसृत्याह - क्रियाक्रमेणेति | क्रियाक्रमश्च
10827 गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनचौलोपन
10828 यनं चत्वारि वेदव्रतानि स्नानं सहधर्मचारिणीसंयोगः पञ्चानां
10829 यज्ञानामनुष्ठानमष्टका [देवमनुष्यभूतब्रह्मणामेतेषां च इति
10830 पाठः] पार्वणं श्राद्धं श्रावण्याग्रयणी चैत्र्याश्वयुजीति सप्त
10831 पाकसंस्था अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासौ
10832 चातुर्मास्यन्याग्रयणेष्टिर्निरूढपशुबन्धः सौत्रामणीति सप्त
10833 हविर्यज्ञसंस्थाः अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोलशी वाजपेयोऽतिरात्र
10834 आप्तोर्याम इति सप्त सोमयज्ञसंस्था इत्येते चत्वारिंशत्संस्कारा
10835 अष्टावात्मगुणा दया सर्वभूतेषु क्षान्तिरनसूया शौचमनायासो
10836 माङ्गल्यमकार्पण्यमस्पृहेति यस्यैते चत्वारिंशत्संस्कारा
10837 अष्टावात्मगुणाश्च स ब्रह्मणः सायुज्यं प्राप्नोतीति गौतमस्मृतौ
10838 दर्शितः | नियमेनेन्द्रियप्राणमनोनियमनेन || ३१ ||
10839
10840 दुष्कृते क्षयमापन्ने परमार्थविचारणे |
10841 काकतालीययोगेन बुद्धिर्जन्तोः प्रवर्तते || ३२ ||
10842
10843 काकागमनमिव तालपतनमिव संपन्नेन योगेन साधनसमूहमेलनेन |
10844 समासाच्च तद्विषयात् इत्युपमानविषयात्समासादुपमानान्तरे छः | तथाच
10845 ब्रह्मजिज्ञासाप्रयोजकविचारोदय एव दुर्लभ इति भावः || ३२ ||
10846
10847 प्। ९८)
10848
10849 क्रिअयापरास्तावदलं चक्रावर्तिभिरावृताः |
10850 भ्रमन्तीह जना यावन्न पश्यन्ति परं पदम् || ३३ ||
10851
10852 तत्कुतः | यावत्परं पदं न पश्यन्ति तावच्चक्रभिवावर्तयन्ति भ्रामयन्ति
10853 पुरुषं तच्छीलै रागादिभिरावृताः सन्तः
10854 सर्वेऽप्यैहिकामुष्मिकभोगसाधनक्रियापरा एवेह संसारे भ्रमन्ति |
10855 अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितंमन्यमानाः |
10856 दन्द्रम्यमाणाः परियन्ति मूढा अन्धेनेव नीयमाना यथान्धाः
10857 इत्यादिश्रुतेरिति भावः || ३३ ||
10858
10859 यथाभूतमिदं दृष्ट्वा संसारं तन्मयीं धियम् |
10860 परित्यज्य परं यान्ति निरालाना गजा इव || ३४ ||
10861
10862 यथाभूतं यथास्थितं परमार्थभूतमित्यर्थः | इदं नित्यापरोक्षं
10863 ब्रह्मतत्त्वं परं च तदेव | यद्वा | इदं दृश्यजातं यथाभूतं
10864 परमार्थतः असदसारं दुःखभूतं विवेकबुद्ध्या दृष्ट्वेत्यर्थः | परं
10865 ब्रह्म यान्ति ज्ञानेन प्राप्नुवन्ति | आलानं बन्धनस्तम्भस्तस्मान्निर्गताः || ३४
10866 | |
10867
10868 विषमेयमनन्तेह राम संसारसंसृतिः |

10869 देहयुक्तो महाजन्तुर्विना ज्ञानं न पश्यति ॥ ३५ ॥
10870
10871 देहेन तादात्म्याध्यासाद्युक्त एकीभूत इव मिलितः। अत एव महानपि जन्तुः
10872 कृमिकीटादिप्रायः ॥ ३५ ॥
10873
10874 ज्ञानयुक्तिप्लवेनैव संसाराब्धिं सुदुस्तरम्।
10875 महाधियः समुत्तीर्णा निमेषेण रघूद्वह ॥ ३६ ॥
10876
10877 महाधियो विवेकिनः ॥ ३६ ॥
10878
10879 तामिमां ज्ञानयुक्तिं त्वं संसाराम्भोधितारिणीम्।
10880 शृणुष्वावहितो बुद्ध्या नित्यावहितया तया ॥ ३७ ॥
10881
10882 नित्यमवहितया विचाराभ्यासपरया। तया विवेकवैराग्यादिसंपत्त्या
10883 प्रसिद्धया बुद्ध्या। अवहित एकाग्रः सन् ॥ ३७ ॥
10884
10885 यस्मादनन्तसंरम्भा जागत्यो दुःखभीतयः।
10886 चिरायान्तर्दहन्त्येता विना युक्तिमनिन्दिताम् ॥ ३८ ॥
10887
10888 संरम्भो विक्षेपवेगः। वाचो वेगं मनसः क्रोधवेगं
10889 जिह्वावेगमुदरोपस्थवेगम् इत्यादिप्रसिद्धः ॥ ३८ ॥
10890
10891 शीतवातातपादीनि द्वन्द्वदुःखानि राघव।
10892 ज्ञानशक्तिं विना केन सह्यतां यान्ति साधुषु ॥ ३९ ॥
10893
10894 आपतन्ति प्रतिपदं यथाकालं दहन्ति च।
10895 दुःखिन्ता नरं मूढं तृणमग्निशिखा इव ॥ ४० ॥
10896
10897 प्राज्ञं विज्ञातविज्ञेयं सम्यगदर्शनमाधयः।
10898 न दहन्ति वनं वर्षासिक्तमग्निशिखा इव ॥ ४१ ॥
10899
10900 विज्ञातानि विज्ञेयानि विचार्य ज्ञातुं योग्यान्यध्यात्मशास्त्राणि येन अत एव
10901 सम्यगदर्शनं ब्रह्म तत्त्वसाक्षात्कारो यस्य तम्। आधयो मानसव्यथाः ॥
10902 ४१ ॥
10903
10904 आधिव्याधिपरावर्ते संसारमरुमारुते।
10905 क्षुभितेऽपि न तत्त्वज्ञो भज्यते कल्पवृक्षवत् ॥ ४२ ॥
10906
10907 आधिव्याधय एव परा उत्कृष्टा आवर्ताश्चक्रवाता यस्मिन्संसाररूपे
10908 मरुदेशप्रसिद्धे मारुते क्षुभिते संचलितेऽपि भज्यते आमर्द्यते पीड्यते
10909 इत्यर्थः ॥ ४२ ॥
10910
10911 तत्त्वं ज्ञातुमतो यत्नाद्धीमानेव हि धीमता।
10912 प्रामाणिकः प्रबुद्धात्मा प्रष्टव्यः प्रणयान्वितम् ॥ ४३ ॥
10913
10914 यत्नादुपगमनप्रणिपातसेवादिप्रयत्नात्। प्रामाणिकः
10915 श्रुत्यादिप्रमाणकुशलः ॥ ४३ ॥
10916
10917 प्रामाणिकस्य पृष्टस्य वक्तुरुत्तमचेतसः।
10918 यतेन वचनं ग्राह्यमंशुकेनेव कुङ्कुमम् ॥ ४४ ॥
10919
10920 यथा कुङ्कुमद्रवे रञ्जनाय निमज्जितेनांशुकेन वस्त्रेण कुङ्कुमं

10921 तद्भावानुरञ्जनेनानपायि गृह्यते तद्वद्ग्राह्यम् ॥ ४४ ॥
10922
10923 अतत्त्वज्ञमनादेयवचनं वाग्विदां वर ।
10924 यः पृच्छति नरं तस्मान्नास्ति मूढतरोऽपरः ॥ ४५ ॥
10925
10926 तदर्थं वक्तृप्रच्छकलक्षणं विवक्षुरपरीक्षकं निन्दति -
10927 अतत्त्वज्ञमिति । न आदेयं ग्राह्यं वचनं यस्य ॥ ४५ ॥
10928
10929 प्रामाणिकस्य तज्ज्ञस्य वक्तुः पृष्टस्य यत्नतः ।
10930 नानुतिष्ठति यो वाक्यं नान्यस्तस्मान्नराधमः ॥ ४६ ॥
10931
10932 अज्ञातातज्ज्ञते पूर्वं वक्तुर्निर्णीय कार्यतः ।
10933 यः करोति नरः प्रश्नं प्रच्छकः स महामतिः ॥ ४७ ॥
10934
10935 कार्यतो व्यवहारलिङ्गतः ॥ ४७ ॥
10936
10937 अनिर्णीय प्रवक्तारं बालः प्रश्नं करोति यः ।
10938 अधमः प्रच्छकः स स्यान्न महार्थस्य भाजनम् ॥ ४८ ॥
10939
10940 परीक्षणेन प्रकृष्टवक्तारमनिर्णीय । बालो मूर्खः ॥ ४८ ॥
10941
10942 पूर्वापरसमाधानक्षमबुद्धावनिन्दिते ।
10943 पृष्टं प्राज्ञेन वक्तव्यं नाधमे पशुधर्मिणि ॥ ४९ ॥
10944
10945 पूर्वापरयोरुक्तानुक्तयोः समाधाने विविच्यावधारणे क्षमा समर्था
10946 बुद्धिर्यस्य ॥ ४९ ॥
10947
10948 प्रामाणिकार्थयोग्यत्वं प्रच्छकस्याविचार्य च ।
10949 यो वक्ति तमिह प्राज्ञाः प्राहुर्मूढतरं नरम् ॥ ५० ॥
10950
10951 एवमपरीक्ष्य वक्तारमपि निन्दति - प्रामाणिकेति ॥ ५० ॥
10952
10953 त्वमतीव गुणश्लाघी प्रच्छको रघुनन्दन ।
10954 अहं च वक्तुं जानामि समो योगोऽयमावयोः ॥ ५१ ॥
10955
10956 वक्तृप्रच्छकलक्षणोक्तेः प्रकृतोपयोगं दर्शयति - त्वमिति ॥ ५१ ॥
10957
10958 यदहं वच्मि तद्यत्नात्त्वया शब्दार्थकोविद ।
10959 एतद्वस्त्विति निर्णीय हृदि कार्यमखण्डितम् ॥ ५२ ॥
10960
10961 महानसि विरक्तोऽसि तत्त्वज्ञोऽसि जनस्थितौ ।
10962 त्वयि चोक्तं लगत्यन्तः कुङ्कुमाम्बु यथांशुके ॥ ५३ ॥
10963
10964 कुलेन गुणैः सदाचारादिभिश्च महान् ॥ ५३ ॥
10965
10966 उक्तावधानपरमा परमार्थविवेचिनी ।
10967 विशत्यर्थं तव प्रज्ञा जलमध्यमिवार्कभाः ॥ ५४ ॥
10968
10969 मेधाप्रतिभाशालिनीत्वं विशेषणद्वयेन लभ्यते । अर्कभाः सूर्यप्रभा ॥ ५४
10970 ॥
10971
10972 यद्यद्वच्मि तदादेयं हृदि कार्यं प्रयत्नतः ।

10973 नोचेत्प्रष्टव्य एवाहं न त्वयेह निरर्थकम् || ५५ ||
10974
10975 आदरदृढीकरणायाह - यद्यदिति | प्रयत्नतश्चिराभ्यासादिप्रयत्नेन || ५५
10976 | |
10977
10978 मनो हि चपलं राम संसारवनमर्कटम् |
10979 संशोध्य हृदि यत्नेन श्रोतव्या परमार्थगीः || ५६ ||
10980
10981 प्रयत्नान्तरमप्याह - मन इति || ५६ ||
10982
10983 प्। ९९)
10984
10985 अविवेकिनमज्ञानमसज्जनरतिं जनम् |
10986 चिरं दूरतरे कृत्वा पूजनीया हि साधवः || ५७ ||
10987
10988 तत्र प्रथमोपदेष्टव्यार्थमाह - अविवेकिनमिति | न विद्यते ज्ञानं
10989 शास्त्रोत्थं यस्य तम् | दूरतरे अतिदूरे || ५७ ||
10990
10991 नित्यं सज्जनसंपर्काद्विवेक उपजायते |
10992 विवेकपादपस्यैव भोगमोक्षौ फले स्मृतौ || ५८ ||
10993
10994 तत्फलमाह - नित्यमिति || ५८ ||
10995
10996 मोक्षद्वारे द्वारपालाश्चत्वारः परिकीर्तिताः |
10997 शमो विचारः संतोषश्चतुर्थः साधुसंगमः || ५९ ||
10998
10999 एते सेव्याः प्रयत्नेन चत्वारो द्वौ त्रयोऽथवा |
11000 द्वारमुद्घाटयन्त्येते मोक्षराजगृहे तथा || ६० ||
11001
11002 अशक्तौ त्रयस्तदशक्तौ द्वौ वा || ६० ||
11003
11004 एकं वा सर्वयत्नेन प्राणांस्त्यक्त्वा समाश्रयेत् |
11005 एकस्मिन्वशगे यान्ति चत्वारोऽपि वशं यतः || ६१ ||
11006
11007 प्राणांस्त्यक्त्वेत्यादरणीयत्वातिशयोक्तिः || ६१ ||
11008
11009 सविवेको हि शास्त्रस्य ज्ञानस्य तपमः श्रुतेः |
11010 भाजनं भूषणाकारो भास्करस्तेजसामिव || ६२ ||
11011
11012 विवेकेन सहितः सविवेकः पुरुषः शास्त्रस्य श्रुतेः श्रवणस्य
11013 तपसस्तदर्थालोचनस्य च भाजनं योग्यः | भूषणाकारः शिरोभूषणमिव
11014 श्रैष्ठ्येनादरणीयः [श्रेष्ठो इति पाठः] | तेजसां मध्ये भास्कर
11015 इव || ६२ ||
11016
11017 घनतामुपयातं हि प्रज्ञामान्द्यमचेतसाम् |
11018 याति स्थावरतामम्बु जाड्यात्पाषाणतामिव || ६३ ||
11019
11020 प्रज्ञामान्द्यं मौर्ख्यम् | घनतामभेद्यताम् | स्थावरतामद्रवतां
11021 काठिन्यमिति यावत् | जाड्याच्छीतातिशयात् | प्रसिद्धं हीदं हिमकरकादौ || ६३ ||
11022
11023 त्वं तु राघव सौजन्यगुणशास्त्रार्थदृष्टिभिः |
11024 विकासितान्तःकरणः स्थितः पद्म इवोदये || ६४ ||

11025
11026 उन्मुखीकरणाय पुना रामं प्रशंसति - त्वं त्विति || ६४ ||
11027
11028 इमां ज्ञानगिरं श्रोतुमवबोद्धुं च सन्मते |
11029 अर्हस्युद्धतकर्णस्त्वं जन्तुर्वीणास्वनं यथा || ६५ ||
11030
11031 अवबोद्धुं मन्तुम् | उद्धतौ ऊर्ध्वीकृतौ कर्णौ येन तथाविधो
11032 जन्तुर्भृंगादिरिव || ६५ ||
11033
11034 वैराग्याभ्यासयोगेन समसौजन्यसंपदाम् [शमसौजन्य] |
11035 अर्जनां कुरुतां राम यत्र नाशो न विद्यते || ६६ ||
11036
11037 सुजनानां धर्मः सौजन्यं विनयादि तद्रूपाणां संपदाम् || ६६ ||
11038
11039 शास्त्रसज्जनसंसर्गपूर्वकैः सतपोदमैः |
11040 आदौ संसारमुक्त्यर्थं प्रज्ञामेवाभिवर्धयेत् || ६७ ||
11041
11042 प्रज्ञां विवेकग्रहणधारणपटीयसीं बुद्धिं || ६७ ||
11043
11044 एतदेवास्य मौर्ख्यस्य परमं विद्धि नाशनम् |
11045 यदिदं प्रेक्ष्यते शास्त्रं किंचित्संस्कृतया धिया || ६८ ||
11046
11047 तद्वृद्धावप्येतद्ग्रन्थपरिशीलनमेवोपाय इत्यभिप्रेत्याह - एतदिति || ६८ ||
11048
11049 संसारविषवृक्षोऽयमेकमास्पदमापदाम् |
11050 अज्ञं संमोहयेन्नित्यं मौर्ख्यं यत्नेन नाशयेत् || ६९ ||
11051
11052 आस्पदं प्रतिष्ठा | यतः संमोहयेत्तस्मादिति शेषः | मौर्ख्यमज्ञानम् || ६९
11053 | |
11054
11055 दुराशासर्पगत्येन मौर्ख्येण हृदि वल्गता |
11056 चेतः संकोचमायाति चर्माग्राविव योजितम् || ७० ||
11057
11058 दुराशया सर्पगतिं कुटिलगतिं वहतीति सर्पगत्येन हृदि हृद्गतेन
11059 [हृद्गते प्रतीचि इति पाठः] प्रतीचि वल्गता विक्षेपसहस्रात्मना चलता |
11060 चेतो बुद्धिश्चिदात्मा वा | संकोचं संकुचितपद्मवदप्रसन्नताम् |
11061 मालिन्यमिति यावत् || ७० ||
11062
11063 प्राज्ञे यथार्थभूतेयं वस्तुदृष्टिः प्रसीदति |
11064 दृगिवेन्दौ निरम्भोदे सकलामलमण्डले || ७१ ||
11065
11066 क्व तर्हि प्रसीदति तमाह - प्राज्ञे इति | इयं प्रागुक्ता वस्तु परमार्थरूपं
11067 दृश्यते यया सा वस्तुदृष्टिः सूक्ष्मबुद्धिः | दृश्यते त्वग्र्यया बुद्ध्या
11068 सूक्ष्मया सूक्ष्मदर्शिभिः इति श्रुतेः | यथार्थभूता
11069 यथार्थवस्त्वैकरस्यमापन्ना | अथवा वस्तुभूता दृष्टिश्चिदात्मा प्राज्ञे
11070 उपदेष्टरि सति प्रसीदत्यज्ञानमालिन्यमपास्य स्फुरति || ७१ ||
11071
11072 पूर्वापरविचारार्थचारुचातुर्यशालिनी |
11073 सविकाल्सा मतिर्यस्य स पुमानिह कथ्यते || ७२ ||
11074
11075 मतिविकासलक्षणमाचक्षाणस्तद्वन्तं प्रशंसति - पूर्वेति |
11076 पूर्वपरविचारेण सूक्ष्मतमार्थग्रहणपटीयसी चातुर्येण च शोभमाना

मतिः सविकासेत्यर्थः। पुमान् पुरुषार्थसंपादनेन
सार्थकीकृतपुंजन्मेत्यर्थः॥ ७२॥

विकसितेन सितेन तमोमुचा
वरविचारणशीतलरोचिषा।
गुणवता हृदयेन विराजसे
त्वममलेन नभः शशिना यथा॥ ७३॥

स्वमतिस्तर्हि सविकासा न वेति संदिहानं राममाश्वासयन्नाह -
विकसितेनेति। तमोऽज्ञानं मुञ्चता अत एव सितेन स्वच्छेन गुणवता
शान्त्यादिगुणशालिना हृदयेन प्रागुक्तबुद्ध्या त्वं विराजसे॥ ७३॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मुमुक्षुव्यवहारप्रकरणे
वक्तृप्रच्छकलक्षणं नामैकादशः सर्गः॥ ११॥

इति श्रीवासिष्ठमहारामायणतार्पर्यप्रकाशेमुमुक्षुव्यवहारप्रकरणे
वक्तृप्रच्छकलक्षणं नामैकदशः सर्गः॥ ११॥

द्वादशः सर्गः १२

श्रीवसिष्ठ उवाच॥

परिपूर्णमना मान्यः प्रष्टुं जानासि राघव।
वेत्सि चोक्तं च तेनाहं प्रवृत्तो वक्तुमादरात्॥ १॥

अनर्थता भवगतेर्ज्ञानमाहात्म्यमुत्तमम्।
रामे च प्रच्छकगुणसमृद्धिरिह वर्ण्यते॥ १॥

अन्येषामपि विवेकवैराग्यदार्ढ्याय संसारगतेरनर्थरूपतां
ज्ञानमाहात्म्यं च विवक्षुस्तत्प्ररोचनाय न केवलं त्वयि सविकासा बुद्धिरेव
अपित्वन्येऽपि बहवो गुणाः प्रच्छकलक्षणं च समग्रमस्तीति प्रशंसनेन
रामं प्रोत्साहयन् श्रीवसिष्ठ उवाच - परिपूर्णमना इति।
उक्तवक्ष्यमाणैर्गुणैः परिपूर्णं मनो यस्य। उक्तं च सामान्योक्तिसूचितमपि
वेत्सि विशिष्यावधारयसि॥ १॥

प्। १००)

रजस्तमोभ्यां रहितां शुद्धसत्त्वानुपातिनीम्।
मतिमात्मनि संस्थाप्य ज्ञानं श्रोतुं स्थिरो भव॥ २॥

रजसा मतेश्चापलं स्यात्तमसा त्वावरणमतस्तद्रहितामत एव
शुद्धसत्त्वगुणे परमात्मनि चानुपातिनीम्। आत्मनि संस्थाप्य स्वस्थीकृत्य।
स्थिर उद्युक्तः॥ २॥

विद्यते त्वयि सर्वैव प्रच्छकस्य गुणावली।
वक्तुर्गुणाश्चैव [गुणावली च मयि इति मुद्रितपुस्तके पाठः] मयि
रत्नश्रीर्जलधौ यथा॥ ३॥

रत्नानां श्रीः संपत् रत्नसहिता श्रीर्लक्ष्मीश्च॥ ३॥

आप्तवानसि वैराग्यं विवेकासङ्गजं सुत।
चन्द्रकान्त इवार्द्रत्वं लग्नचन्द्रकरोत्करः॥ ४॥

11129
11130 शिष्यांश्च पुत्रवत्पश्येत् इति न्यायात्सुतेति संबोधनम् | आर्द्रत्वं सद्रवताम् |
11131 लग्नश्चन्द्रकराणामुतकरो यस्मिन् || ४ ||
11132
11133 चिरमाशैशवादेव तवाभ्यासोऽस्ति सद्गुणैः |
11134 शुद्धैः शुद्धस्य दीर्घैश्च पद्मस्येवातिसंततैः || ५ ||
11135
11136 अभ्यासः परिशीलनम् | संबन्ध इति यावत् | शुद्धस्य तव | दीर्घैः
11137 सर्वदिक्प्रसृतैः | संततैरविच्छिन्नैः | पद्मपक्षे गुणैस्तन्तुभिः
11138 सौरभ्यादिभिश्च || ५ ||
11139
11140 अतः शृणु कथां वक्ष्ये त्वमेवास्या हि भाजनम् |
11141 न हि चन्द्रं विना शुद्धा सविकासा कुमुद्वती || ६ ||
11142
11143 भाजनं श्रवणफलप्रबोधाधारः | शुद्धा शुभ्रा | सविकासा
11144 चन्द्रकृतप्रबोधाधारः | यथा चन्द्र एव कुमुद्वती सविकासा तथेयं कथा
11145 त्वय्येव सविकासेति वार्थः || ६ ||
11146
11147 ये केचन समारम्भा याश्च काश्चन दृष्टयः |
11148 ते च ताश्च पदे दृष्टे निःशेषं यान्ति वै शमम् || ७ ||
11149
11150 नन्वस्य कथाश्रवणसमारम्भस्य कोऽवधिरिति
11151 चेत्परमपददर्शनविश्रान्तिरेवेत्यभिप्रेत्याह - ये केचनेति | ते सर्वे
11152 समारम्भास्ताः सर्वाः प्रमाणप्रमेयदृष्टयः | नन्विह पुमान्स्त्रिया
11153 इत्येकशेषेण भाव्यम् न हि द्वन्द्व इवैकशेषो वैकल्पिक इति चेत्सत्यम् |तथापि
11154 महाभाष्याद्यभियुक्तप्रयोगेष्वेकशेषवृत्तेः
11155 स्वपदविग्रहवाक्यप्रयोगदर्शनाददोषः || ७ ||
11156
11157 यदि विज्ञानविश्रान्तिर्न भवेद्भव्यचेतसः |
11158 तदस्यां संसृतौ साधुश्चिन्तामौढ्यं सहेत कः || ८ ||
11159
11160 उक्तविश्रान्तावनाश्वासं वारयति - यदीति | साधुर्विवेकी कः सहेत |
11161 तदसहनात्त्वरितं [त्वमिह देह इति पाठः] देहत्यागोद्युक्तः स्यादिति
11162 भावः || ८ ||
11163
11164 परं प्राप्य विलीयन्ते सर्वा मननवृत्तयः |
11165 कल्पान्तार्कगणासङ्गात्कुलशैलशिला इव || ९ ||
11166
11167 न केवलं बाह्यदृष्टय एव विलीयन्तेऽपि तु मानसा [मानस्योऽपीति
11168 पाठः] अपीत्याह - परमिति | तथाच श्रुतिः - भिद्यते
11169 हृदयग्रन्थिश्छिद्यन्ते सर्वसंशया | क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे
11170 परावरे इति | दृष्टान्तपक्षे हिरण्यगर्भस्यायुरन्तम् || ९ ||
11171
11172 दुःसहा राम संसारविषावेशविषूचिका |
11173 योगगारुडमन्त्रेण पावनेन प्रशाम्यति || १० ||
11174
11175 लोके विषसंबन्धादपि विषूचिका प्रसिद्धा | योगो जीवस्य ब्रह्मैक्यबोधः स एव
11176 गारुडमन्त्रस्तेन | पावनेन विषशोधनेन || १० ||
11177
11178 स च योगः सज्जनेन सह शास्त्रविचारणात् |
11179 परमार्थज्ञानमन्त्रो नूनं लभ्यत एव च || ११ ||
11180

11181 सज्जनेन गुरुसतीर्थ्यादिना सह। चकारात्फलति च॥ ११॥
11182
11183 अवश्यमिह हि विचारे कृते सकलदुःखपरिक्षयो भवतीति मन्तव्यं नातो
11184 विचारदृष्टयोऽवहेलया द्रष्टव्याः॥ १२॥
11185
11186 पद्योक्तमर्थं गद्यैः प्रपञ्चयति - अवश्यमित्यादिना।
11187 इहास्मिन्नधिकारिजन्मनि अवश्यं भवतीत्यन्वयः। अवहेलया अनादरेण न
11188 द्रष्टव्याः॥ १२॥
11189
11190 विचारवता [विचारवशतः इति पाठः] पुरुषेण
11191 सकलमिदमाधिपञ्जरं [मायिपञ्जरं इति पाठः] सर्पेण
11192 त्वचमिव परिपक्वां संत्यज्य विगतज्वरेण शीतलान्तःकरणेन
11193 विनोदादिन्द्रजालमिव जगदखिलमालोक्यते सम्यग्दर्शनवता
11194 असम्यगदर्शनवतो हि परं दुःखमिदम्॥ १३॥
11195
11196 विचारवता सम्यग्दर्शनवता अत एव शीतलान्तःकरणेन पुरुषेण। वशतः इति
11197 पाठे तु विचारस्य वशोऽपरोक्षबोधस्ततः। सर्पेण परिपक्वां जीर्णां
11198 त्वचमिव सर्वमाधिपञ्जरं संत्यज्याखिलमिदं जगदिन्द्रजालमिव कौतुकं
11199 सुखरूपमवलोक्यते। परमित्यवधारणे निपातः। परमुत्कृष्टं दुःखमिति
11200 वा॥ १३॥
11201
11202 विषमो ह्यतितरां संसाररागो [संसारोरग इति पाठः] भोगीव
11203 दशति असिरिव च्छिनत्ति कुन्त इव वेधयति रज्जुरिवावेष्टयति पावक इएव
11204 दहति रात्रिरिवान्धयति अशङ्कितपरिपतितपुरुषान्पाषाण इव विवशीकरोति
11205 हरति प्रज्ञां नाशयति स्थितिं पातयति मोहान्धकूपे तृष्णा
11206 जर्जरीकरोति न तदस्ति किंचिद्दुःखं संसारी यन्न प्राप्नोति॥ १४॥
11207
11208 प्रतिज्ञातं वैषम्यमेव दृष्टान्तैः प्रपञ्चयति - भोगीवेत्यादिना।
11209 मोहान्धकूपे इत्यन्ते सर्वत्र संसाररागस्यैव [रोगस्यैव इति पाठः]
11210 कर्तृत्वेनान्वयः। विवशीकरोतीत्यन्ते सर्वत्र अशङ्कितपरिपतितपुरुषानित्यस्य
11211 कर्मतयान्वयः। अशङ्कितमनाशङ्कितमनर्थशङ्कां विनैव
11212 मोहाद्विषयेषु परिपतितान्पुरुषानिति तदर्थः। शिरसि पतितः पाषाण इव
11213 विवशीकरोति मूर्च्छयति। प्रज्ञां विवेकदृष्टिम्। स्थितिं मर्यादाम्। पातयति
11214 पुरुषानित्यनुषज्जते। मोहलक्षणे अन्धकार युक्तकूपे। अन्धकूपो नरकविशेषो
11215 वा। जर्जरीकरोत्यभिषवेण सोममिव शिथिलीकरोति पुरुषानित्येव। किं
11216 बहुनेत्येकोक्त्याप्याह - न तदस्तीति॥ १४॥
11217
11218 प्। १०१)
11219
11220 दुरन्तेयं किल विषयविषूचिका यदि न चिकित्स्यते तन्नितरां
11221 नरकनगरनिकरफलानुबन्धिनी तत्तत्करोति॥ १५॥
11222
11223 नरकाणां मलमूत्रादीनां नगराणीव शरीराणि तेषां निकरः
11224 स्वस्वजनपोष्यवर्गादिसमूहस्तत्रानुरागेण पुरुषमनुबध्नाति
11225 [मूलानुरोधेनैतट्टीकायोजनं विचारणीयम्] तच्छीला विषयलक्षणा
11226 विषूचिका यदि न चिकित्स्यते तत्तर्हि नितरां तत्तद्वक्ष्यमाणं
11227 नरकदुर्दशासहस्रं करोति॥ १५॥
11228
11229 यत्र शिलाशितासिशातः पात उपलताडनमग्निदाहो
11230 हिमावसेकोऽङ्गावकर्तनं चन्दनचर्चातरुवनानि
11231 घुणवृत्तान्तःपरिवेषोऽङ्गपरिमार्जनमनवरतानलविचलितसमरनार्
11232 आचनिपातो निदाघविनोदनं धारागृहसीकरवर्षणं शिरश्छेदः

11233 सुखनिद्रामूकीकरणमाननमुद्राबान्धुर्यं महानुपचयः ॥ १६ ॥
11234

11235 यत्र शिलाशिता पाषाणभक्षकता । असिभिः शातः खण्डनम् । पातः
11236 पर्वताग्रेभ्यः पातनम् । उपलघनैस्ताडनम् । अग्निना दाहः । हिमेनावसेकः
11237 सदा आर्द्रता । अङ्गानामकर्तनं छेदनं कुठाकर्तर्यादिभिः ।
11238 चन्दनकाष्ठस्येव चर्चा घर्षणं शिलाफलकेषु । असिपत्रतरूणां वनानि
11239 तेषु धावनमिति यावत् । घुणाः काष्ठान्तःकीटकास्तेषामिव वृत्तान्तः
11240 सर्वाङ्गे काष्ठयन्त्रनिपीडनम् । परिवेषस्तप्तायःकटकशृङ्खलाभिः
11241 परितो वेष्टनम् । अङ्गानां कण्टकमार्जनीभिः परिमार्जनं निस्त्वचनमिति
11242 यावत् । अनवरतमनलविचलितान्यग्निज्वालानिःसरणानि येभ्यस्तथाविधानां
11243 समरनाराचानां युद्धप्रक्षिप्तबाणानां धारावदविच्छेदेन निपतनं
11244 निपातः । निदाघस्य ग्रीष्मकालस्य विनोदोऽतिवाहनम् । विनैव
11245 च्छायापानीयाभ्यामिति शेषः । तथा शिशिरे धारागृहेषु सीकरवर्षणम् ।
11246 शिरसंच्छिन्नप्ररूढस्य पुनःपुनश्छेदः । सुखनिद्राविषये तु
11247 मूकीकरणं वार्तापि नास्तीत्यर्थः । आननस्य मुद्रा पिधानेन
11248 निरुच्छ्वासत्वापादनम् । बान्धुर्यं निम्नोन्नतभावोऽङ्गानाम् ।
11249 विसंष्ठुलत्वाद्व्यवहाराक्षमतेति यावत् । पर्वतवन्महानुपचयो
11250 देहस्यैकैकाङ्गस्य वेत्यर्थः । अथवा यत्र शिलाशितादिचतुष्टयं
11251 हिमावसेकवत्सोढव्यम् । अङ्गावकर्तनं चन्दनलेपवत् ।
11252 तरुवनादित्रयमङ्गपरिमार्जनवद्देहसंस्कारवत् ।
11253 विशिष्टशरधारानिपातस्तु निदाघविनोदनार्थधारागृहसीकरवर्षणवत् ।
11254 शिरश्छेदप्रयुक्तं मरणं सुखनिद्रावत् । मुखपिधानेन
11255 बलान्मूकीकरणं च सहजवृत्त्या आननमुद्रावत् बान्धुर्यं च
11256 महासंपदुपचयवदवश्यं सोढव्यमित्यर्थः ॥ १६ ॥
11257

11258 तदेवंविधकष्टचेष्टासहस्रदारुणे संसारचलयन्त्रेऽस्मिन् राघव
11259 नावहेलना कर्तव्या अवश्यमेवं विचारणीयमेवं चावबोद्धव्यं यथा
11260 किल शास्त्रविचाराच्छ्रेयो भवतीति ॥ १७ ॥
11261

11262 दुःखस्थानानामानन्त्याद्दिक्प्रदर्शनमात्रं ह्येतदिति
11263 प्रदर्श्योपसंहरंस्तद्वर्णनस्य प्रकृतोपयोगमाह - तदेवमिति ।
11264 चलैर्नश्वरैर्देहैर्यन्त्रणं यन्त्रं संकोचः परिच्छेदः पारवश्यं च
11265 तस्मिन् । एवं वक्ष्यमाणरीत्या । तमेवाह - यथेति ॥ १७ ॥
11266

11267 अन्यच्च रघुकुलेन्दो यदि चैते महामुनयो महर्षयश्च विप्राश्च
11268 राजानश्च ज्ञानकवचेनावगुण्ठितशरीरास्ते कथमदुःखक्षमा अपि
11269 दुःखकरीं तां तां वृत्तिपूर्विकां संसारकदर्थनामनुभवन्तः
11270 सततमेव मुदितमनसस्तिष्ठन्ति ॥ १८ ॥
11271

11272 ननु कथं शास्त्रविचाराच्छ्रेयो भवतीति निश्चयस्तत्पराणामपि
11273 माण्डव्यादीनां दुर्दशासहस्रदर्शनादित्याशङ्कां परिहरन्विद्याया
11274 दृष्टफलतां दर्शयति-अन्यच्चेति । ज्ञानकवचेनावगुण्ठितशरीरा अत
11275 एवादुःखार्हा अप्येते पूर्वोक्तमुन्यादयोऽज्ञवन्मनोवृत्तिपूर्विकां
11276 दुःखकरीं तां तां संसारकदर्थनामनुभवन्तस्तिष्ठन्तीति यदि मन्यसे
11277 तर्हि ते कथं सततमेव मुदितमनसस्तिष्ठन्तीत्येवमन्वयः । मुनयो
11278 ध्यानपराः । ऋषयो मन्त्रजपपराः । विप्राः कर्मपराः । राजानो
11279 जनकादयः ॥ १८ ॥
11280

11281 इह हि ।
11282

11283 विकौतुका विगतविकल्पविप्लवा
11284 यथा स्थिता हरिहरपद्मजादयः ।

11285 नरोत्तमाः समधिगतात्मदीपका-
11286 स्तथा स्थिता जगति विशुद्धबुद्धयः ॥ १९ ॥
11287
11288 इह हीत्यस्य देहलीदीपन्यायेन पूर्वत्रोत्तरश्लोके चान्वयः। तर्हि कीदृशी तेषां
11289 स्थितिस्तामाह - विकौतुका इति। अपूर्वविषयदर्शनोपभोगोत्साहः कौतुकं
11290 तद्रहिताः। विकल्पैर्विप्लवो विक्षेपस्तद्रहिताः ॥ १९ ॥
11291
11292 परिक्षीणे मोहे विगलति [विगलितघने इति पाठः] घने ज्ञानजलदे
11293 परिज्ञाते तत्त्वे समधिगत आत्मन्यतितते।
11294 विचार्यार्यैः सार्धं चलितवपुषो वै सदृशतो
11295 धिया दृष्टे तत्त्वे रमणमटनं जागतमिदम् ॥ २० ॥
11296
11297 यदि ब्रह्मादिदेववदेते पूर्णकामास्तर्हि कथं तेषां
11298 संसारेष्वटनदर्शनमित्याशङ्कां परिहरन्
11299 विचारादेर्जीवन्मुक्तिविहरणफलतां दर्शयति - परिक्षीणे इति।
11300 आर्यैर्गुर्वादिभिः सार्धं विचार्य पदार्थपरिशोधने
11301 सदृशतस्तादात्म्याध्यासप्रसक्तात्मसादृश्याच्चलितान्यनात्मभावेन
11302 निरस्तानि वपूंषि स्थूलादिशरीराणि येन तस्याधिकारिणः प्रथमं
11303 वाक्यात्तत्त्वे परिज्ञाते मननेन च अतितते अपरिच्छिन्ने आत्मनि
11304 सम्यगसंभावनानिरासेनाधिगते। धिया निदिध्यासननिरस्तविपरीतभावनया
11305 बुद्ध्या च तस्य भावस्तत्त्वं ब्रह्मभावस्तस्मिन्दृष्टे साक्षात्कृते सति
11306 मोहे परिक्षीणे तत्कार्यनिबिडभ्रान्तिज्ञानमेधे च विगलति सतीदं
11307 जागतमटनं भ्रमणं रमणं क्रीडनमेव न पीडनमित्यर्थः ॥ २० ॥
11308
11309 प्। १०२)
11310
11311 अन्यच्च राघव।
11312
11313 प्रसन्ने चित्तत्त्वे हृदि शमभवे वल्गति परे
11314 शमाभोगीभूतास्वखिलकलनादृष्टिषु पुरः।
11315 समं याति स्वान्तःकरणघटनास्वादितरसं
11316 धिया दृष्टे तत्त्वे रमणमटनं जागतमिदम् ॥ २१ ॥
11317
11318 रमणत्वमेवोपपादयति - प्रसन्ने इति। चित्तत्त्वे चैतन्यमात्रस्वभावे
11319 परमार्थवस्तुनि प्रसन्ने सति परे उत्कृष्टे शमभवे शान्त्याविर्भवे वल्गति
11320 प्राप्ते अखिलकलनादृष्टिषु समस्तबुद्धिवृत्तिषु शमाभोगीभूतासु
11321 शान्तिरसास्वादरूपासु सतीषु [प्रतीतिषु इति पाठः]
11322 स्वान्तःकरणघटना आस्वादितब्रह्मरसं यथा स्यात्तथा समं
11323 वैषम्यशून्यस्वभावं याति गच्छति। अतो युक्तं रमणत्वमित्यर्थः ॥ २१ ॥
11324
11325 अन्यच्च।
11326
11327 रथः स्थाणुर्देहस्तुरगरचना चेन्द्रियगतिः
11328 परिस्पन्दो वातो वहनकलितानन्दविषयः।
11329 परोऽणुर्वा देही जगति विहरामीत्यनघया
11330 धिया दृष्टे तत्त्वे रमणमटनं जागतमिदम् ॥ २२ ॥
11331
11332 आत्मानं रथिनं विद्धि शरीरं रथमेव तु इत्यादिरूपकदृष्ट्या वा
11333 रमणमुपपन्नमित्याह - रथ इति। स्थाणुश्छिन्नतरुरिवाचेतनो देहो रथः
11334 इन्द्रियाणां विषयाभिमुखी गतिस्तुरगाणां रचनागतिचातुरी परितः
11335 स्पन्दश्चालनं येन स प्रग्रहो वातः प्राणप्रधानं मनः
11336 अर्थाद्रथादिभिर्वहनेन प्रापणेन कलिताः प्राप्ता आनन्दरूपा विषया येन

11337 तथाविधो देही आत्मा समाधौ परः परमात्मैव व्यवहारकाले
11338 बुद्ध्युपाधिपरिच्छेदादणुः सूक्ष्मो वा रथीति शेषः। एवंभूतोऽहं जगति
11339 विहरामीति धियापि रमणमेवेत्यर्थः ॥ २२ ॥
11340
11341 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मुमुक्षुव्यवहारप्रकरणे
11342 तत्त्वमाहात्म्यवर्णनं नाम द्वादशः सर्गः ॥ १२ ॥
11343
11344 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे मुमुक्षुव्यवहारप्रकरणे
11345 तत्त्वमाहात्म्यवर्णनं नाम द्वादशः सर्गः ॥ १२ ॥
11346
11347 त्रयोदशः सर्गः १३ ॥
11348
11349 श्रीवसिष्ठ उवाच।
11350
11351 एतां दृष्टिमवष्टभ्य दृष्टात्मानः सुबुद्धयः।
11352 विचरन्तीह संसारे महान्तोऽभ्युदिता इव ॥ १ ॥
11353
11354 वर्णिता इह बाहुल्याद्वैराग्यादिगुणोदयाः।
11355 जीवन्मुक्तिफलोन्नद्धा विशेषेण शमः पुनः ॥ १ ॥
11356
11357 वैराग्यशान्त्यादिसाधनानि वर्णयिष्यन्प्रस्तुतां जीवन्मुक्ति स्थितिमेव वर्णयति
11358 - एतामिति। अभ्युदिताः साम्राज्याभ्युदयं प्राप्ता इव ॥ १ ॥
11359
11360 न शोचन्ति न वाञ्छन्ति न याचन्ते शुभाशुभम्।
11361 सर्वमेव च कुर्वन्ति न कुर्वन्तीह किंचन ॥ २ ॥
11362
11363 यतः शुभाशुभमुपादातुं हातुं वा न वाञ्छन्ति अत एव तत्साधनानि न
11364 याचन्ते ॥ २ ॥
11365
11366 स्वच्छमेवावतिष्ठन्ते स्वच्छं कुर्वन्ति यान्ति हि।
11367 हेयोपादेयतापक्षरहिताः स्वात्मनि स्थिताः ॥ ३ ॥
11368
11369 असङ्गात्मदर्शनात्स्वच्छं निर्लेपम्। कुर्वन्ति शास्त्रीयम्। गच्छन्ति
11370 लौकिकसन्मार्गम् ॥ ३ ॥
11371
11372 आयान्ति च न चायान्ति प्रयान्ति च न यान्ति च।
11373 कुर्वन्त्यपि न कुर्वन्ति न वदन्ति वदन्ति च ॥ ४ ॥
11374
11375 आयान्ति प्रयान्त्यन्यदृशा। स्वदृशा तु न। सचक्षुरचक्षुरिव सकर्णोऽकर्ण
11376 इव समना अमना इव इत्यादिश्रुतेरिति भावः ॥ ४ ॥
11377
11378 ये केचन समारम्भा याश्च काश्चन दृष्टयः।
11379 हेयोपादेयतस्तास्ताः क्षीयन्तेऽधिगते पदे ॥ ५ ॥
11380
11381 क्षीयन्ते प्रयोजकद्वेषरागयोः [प्रयोजकदोषगुणयोः इति पाठः]
11382 क्षयात्तद्विषयसत्यताबुद्धिक्षयाच्चेति भावः ॥ ५ ॥
11383
11384 परित्यक्तसमस्तेहं मनोमधुरवृत्तिमत्।
11385 सर्वतः सुखमभ्येति चन्द्रबिम्ब इव स्थितम् ॥ ६ ॥
11386
11387 ईहा इच्छा चेष्टा च मधुरवृत्तिः शान्तिर्ब्रह्माकारता च। सुखं कर्तृ।
11388 मनः कर्म। चन्द्रबिम्बे स्थितं स्वर्गिणमिव मनः कर्तृ चन्द्रबिम्बे

स्थितमिवेत्युत्प्रेक्षा वा ॥ ६ ॥

अपि निर्मननारम्भमव्यस्ताखिलकौतुकम् ।
आत्मन्येव न मात्यन्तरिन्दाविव रसायनम् ॥ ७ ॥

विषयमननकौतुकयोरेव विक्षेपहेतुत्वात्तदभावे निर्विक्षेपं
सुखमित्यनुषज्जयते । सुखात्मतापन्नं मन इत्यर्थः । न माति न परिच्छिद्यते
। इन्दौ पूर्णचन्द्रे । रसायनममृतम् ॥ ७ ॥

न करोतीन्द्रजालानि नानुधावति वासनाम् ।
बालचापलमुत्सृज्य पूर्वमेव विराजते ॥ ८ ॥

इन्द्रजालानि मायिकविक्षेपान् । वासनां तद्धेतुम् । बालानामिव भ्रान्तिप्रसक्तं
चापलमुत्सृज्य पूर्वमनादिसिद्धमात्मसुखमेव विराजते ॥ ८ ॥

एवंविधा हि वृत्तय आत्मतत्त्वावलोकनाल्लभ्यन्ते नान्यथा ॥ ९ ॥

प्रयोजनप्रपञ्चनस्य प्रस्तुतोपयोगं पुनर्गद्येनोपसंहरति - एवमिति ।
वृत्तयः स्थितयः ॥ ९ ॥

तस्माद्विचारेणात्मैवान्वेष्टव्य उपासनीयो ज्ञातव्यो यावज्जीवं पुरुषेण
नेतरदिति ॥ १० ॥

अन्वेषणं श्रवणमननाभ्यासः । उपासनं निदिध्यासनम् ॥ १० ॥

स्वानुभूतेश्च शास्त्रस्य गुरोश्चैवैकवाक्यता ।
यस्याभ्यासेन तेनात्मा सन्ततेनावलोक्यते ॥ ११ ॥

एकवाक्यता एकार्थनिष्ठता निश्चयः यस्याधिकारिणः श्रवणादेरभ्यासेन ॥
११ ॥

अवहेलितशास्त्रार्थैरवज्ञातमहाजनैः ।
कष्टामप्यापदं प्राप्तो न मूढैः समतामियात् ॥ १२ ॥

अवहेलितौ शास्त्रतदर्थौ यैः । अवज्ञाता उपेक्षिता महान्तः पूज्या
जनास्तत्त्वज्ञा यैः ॥ १२ ॥

प्। १०३)

न व्याधिर्न विषं नापत्तथा नाधिश्च भूतले ।
खेदाय स्वशरीरस्थं मौर्ख्यमेकं यथा नृणाम् ॥ १३ ॥

किंचित्संस्कृतबुद्धीनां श्रुतं शास्त्रमिदं यथा ।
मौर्ख्यापहं तथा शास्त्रमन्यदस्ति न किंचन ॥ १४ ॥

दुरधिगमानि शास्त्राणि कथं मौर्ख्यनिवृत्तिः स्यात्तत्राह - किंचिदिति ।
ईषद्व्युत्पन्नानामपीत्यर्थः ॥ १४ ॥

इदं श्राव्यं सुखकरं यथा दृष्टान्तसुन्दरम् ।
अविरुद्धमशेषेण शास्त्रं वाक्यार्थबन्धुना ॥ १५ ॥

यथोचितैर्दृष्टान्तैः । वाक्यार्थः परमात्मा बन्धुः प्रियतमोऽवश्यं

लब्धुमिष्टो यस्य तेन। श्राव्यमवश्यं श्रोतव्यम् ॥ १५ ॥

आपदो या दुरुत्तारा याश्च तुच्छाः कुयोनयः।
तास्ता मौर्ख्यात्प्रसूयन्ते खदिरादिव कण्टकाः ॥ १६ ॥

तुच्छा अधमाः ॥ १६ ॥

वरं शरावहस्तस्य चाण्डालागारवीथिषु।
भिक्षार्थमटनं राम न मौर्ख्यहतजीवितम् ॥ १७ ॥

सर्वदुर्दशाहेत्वपेक्षया एकैका दुर्दशापि वरमित्याह द्वाभ्याम् ॥ १७ ॥

वरं घोरान्धकूपेषु कोटरेष्वेव भूरुहाम्।
अन्धकीटत्वमेकान्ते न मौर्ख्यमतिदुःखदम् ॥ १८ ॥

कोटरेष्वेव वा ॥ १८ ॥

इममालोकमासाद्य मोक्षोपायमयं जनः।
अन्धतामेति न पुनः कश्चिन्मोहतमस्यपि ॥ १९ ॥

मोहो मूर्च्छा मृत्युद्वारं तल्लक्षणेऽपि तमसि नान्धतामेति
किमन्यत्रेत्यर्थः ॥ १९ ॥

तावन्नयति संकोचं तृष्णा वै मानवाम्बुजम्।
यावद्विवेकसूर्यस्य नोदिता विमला प्रभा ॥ २० ॥

ननु तृष्णात्यागे उपायं न पश्यामस्तत्राह - तावदिति।
मानवमेवाम्बुजं पद्मम् ॥ २० ॥

संसारदुःखमोक्षार्थं [मोक्षोर्थमीदृशैः इति पाठः]
मादृशैः सह बन्धुभिः।
स्वरूपमात्मनो ज्ञात्वा गुरुशास्त्रप्रमाणतः ॥ २१ ॥

ज्ञात्वा विहरेत्युत्तरेणान्वयः ॥ २१ ॥

जीवन्मुक्ताश्चरन्तीह यथा हरिहरादयः।
यथा ब्रह्मर्षयश्चान्ये तथा विहर राघव ॥ २२ ॥

अनन्तानीह दुःखानि सुखं तृणलवोपमम्।
नातः सुखेषु बध्नीयाद्दृष्टिं दुःखानुबन्धिषु ॥ २३ ॥

दृष्टिमास्थाम् ॥ २३ ॥

यदनन्तमनायासं तत्पदं सारसिद्धये।
साधनीयं प्रयत्नेन पुरुषेण विजानता ॥ २४ ॥

तदात्मतत्त्वं पद्यते प्राप्यते येन तज्ज्ञानं तत्पदं
परमपुरुषार्थसिद्धये साधनीयम् ॥ २४ ॥

त एव पुरुषार्थस्य भाजनं पुरुषोत्तमाः।
अनुत्तमपदालम्बि मनो येषां गतज्वरम् ॥ २५ ॥

न विद्यते उत्तममुत्कृष्टतममन्यद्यस्मात्तथाविधं पदं वस्तु तदालम्बि
॥ २५ ॥

संभोगाशनमात्रेण राज्यादिषु सुखेषु ये ।
संतुष्टा दुष्टमनसो विद्धि तानन्धदर्दुरान् ॥ २६ ॥

दर्दुरान्भेकान् । स हि कूपस्थो न बहिः पश्यति तत्राप्यन्धश्चेत्सुतरामिति
भावः ॥ २६ ॥

ये शठेषु दुरन्तेषु दुष्कृतारम्भशालिषु ।
द्विपत्सु मित्ररूपेषु भक्ता वै भोगभोगिषु ॥ २७ ॥

शठेषु वञ्चकेषु दुरन्तेषु दुरुच्छेदेषु प्रबलेष्विति यावत् । भक्ताः सक्ता ये ते
यान्तीत्युत्तरेणान्वयः ॥ २७ ॥

ते यान्ति दुर्गमादुर्गं दुःखादुःखं भयाद्भयम् ।
नरकान्नरकं मूढा मोहमन्थरबुद्धयः ॥ २८ ॥

दुर्गमात्संकटात् । मन्थरबुद्धयो मन्दबुद्धयः ॥ २८ ॥

परस्परविनाशोक्तेः श्रेयःस्थो न कदाचन ।
सुखदुःखदशे राम तडित्प्रसरभङ्गुरे [तडित्प्रासरभङ्गुरे
इति पाठः] ॥ २९ ॥

सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् । घटीयन्त्रवदश्रान्तं
भ्रमन्याति पुनः पुनः ॥ इत्यादिवाक्यैः सुखदुःखदशयोः
परस्परविनाशोक्तेरयं कदापि श्रेयसि तिष्ठतीति श्रेयःस्थो विश्रान्तिभाङ्
भवति । प्रत्यक्षतोऽपि तयोर्भङ्गुरता प्रसिद्धेत्याह - सुखदुःखेति ॥ २९ ॥

ये विरक्ता महात्मानः सुविविक्ता भवादृशाः ।
पुरुषान्विद्धि तान्वन्द्यान्भोगमोक्षैकभाजनान् ॥ ३० ॥

सुविविक्ताः सम्यग्विवेकिनः ॥ ३० ॥

विवेकं परमाश्रित्य वैराग्याभ्यासयोगतः ।
संसारसरितं घोराभिमामापदमुत्तरेत् ॥ ३१ ॥

संसारसरिद्रूपामिमामापदम् ॥ ३१ ॥

न स्वप्तव्यं च संसारमायास्विह विजानत ।
विषमूर्च्छनसंमोहदायिनीषु विवेकिना ॥ ३२ ॥

विषवन्मूर्च्छनेन समुच्छ्रवेण संमोहं कश्मलं दातुं शीलं यासां
तासु संसाराख्यमायासु मिथ्यावञ्चनोपायेषु ॥ ३२ ॥

संसारभिममासाद्य यस्तिष्ठत्यवहेलया ।
ज्वलितस्य गृहस्योच्चैः शेते तार्णस्य संस्तरे ॥ ३३ ॥

तार्णस्य तृणविकारय । राहोः शिर इतिवत्संस्तराद्भेदकल्पनया षष्ठी ॥ ३३ ॥

यत्प्राप्य न निवर्तन्ते यदासाद्य न शोचति ।
तत्पदं शेमुषीलभ्यमस्त्येवात्र न संशयः ॥ ३४ ॥

11545
11546 ननु संसारात्परमन्यन्नास्त्येव तत्र किमवलम्ब्य संसारे क्षरति
11547 कार्येस्याशंक्याह - यदिति। शेमुषीलभ्यं ज्ञानमात्रेण प्राप्तुं
11548 शक्यमस्त्येव। न नास्ति। तदसत्त्वे जगदान्ध्यप्रसङ्गादात्मापलापायोगाच्चेति
11549 भावः। तथाचोक्तं पुराणेषु - असत्यस्मिन्नगन्नाथे अन्धीभूतमिदं
11550 भवेत्। सूर्येणेव विहीनत्वान्निरालोकं जगद्यथा॥ इति श्रुतिश्च असन्नेव स
11551 भवति असद्ब्रह्मेति वेद चेत्। अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः इति॥ ३४॥
11552
11553 नास्ति चेत्तद्विचारेण दोषः को भवतां भवेत्।
11554 अस्ति चेत्तत्समुत्तीर्णा भविष्यथ भवार्णवात्॥ ३५॥
11555
11556 संदिग्धे परलोकेऽपि वरं श्रुतिपथाश्रयः। यदि न स्यात्तदा किं स्याद्यै
11557 स्यान्नास्तिको हतः॥ इति न्यायेन संदिहानं प्रत्यप्याह - नास्ति चेदिति।
11558 संदेहेऽपि महाफलस्योपेक्षानर्हत्वाचेति भावः॥ ३५॥
11559
11560 प। १०४)
11561
11562 प्रवृत्तिः पुरुषस्येह मोक्षोपायविचारणे।
11563 यदा भवत्याशु तदा मोक्षभागी स उच्यते॥ ३६॥
11564
11565 तर्हि कथं न सर्वे प्रवर्तन्त इत्याशङ्क्य यावन्नानुग्रहः साक्षाज्जायते
11566 परमेशितुः। तावन्न सद्गुरुं कश्चित्सच्छास्त्रं वापि विन्दति॥ इति
11567 वचनादीश्वरानुग्रहलभ्यमोक्षभागिताशालिन इव मोक्षसाधने प्रवृत्तिर्न
11568 सर्वेषामित्याह - प्रवृत्तिरिति। प्रवृत्तिफलं लिङ्गानुमेयं
11569 मोक्षभागित्वमिति भावः॥ ३६॥
11570
11571 अनपायि निराशङ्कं स्वास्थ्यं विगतविभ्रमम्।
11572 न विना केवलीभावाद्विद्यते भुवनत्रये॥ ३७॥
11573
11574 ननु देहेन्द्रियविषयशून्यकेवलीभावहेतुना किमनेन शास्त्रेण सत्स्वेव
11575 देहादिषूपायान्तरेणापि स्वर्गादिसुखस्य संभवादित्याशङ्क्याह -
11576 अनपायीति। स्वर्गादि अपायपतनाशङ्काऽस्वास्थ्यादिग्रस्तमेवेति केवलीभाव एव
11577 पुरुषार्थ इति भावः॥ ३७॥
11578
11579 तत्प्राप्तावुत्तमप्राप्तौ न क्लेश उपजायते।
11580 न धनान्युपकुर्वन्ति न मित्राणि न बान्धवाः॥ ३८॥
11581
11582 तदिति योग्यत्वाद्व्यवहितविचारप्रवृत्तिपरामर्शः। तस्याः प्राप्तौ
11583 सत्यामुत्तमस्य कैवल्यस्य प्राप्तौ क्लेशो नोपजायते। ननु धनादिभिरेव
11584 केवलीभावोऽस्तु किं विचारेण तत्राह - नेति॥ ३८॥
11585
11586 न हस्तपादचलनं न देशान्तरसंगमः।
11587 न कायक्लेशवैधुर्यं न तीर्थायतनाश्रयाः॥ ३९॥
11588
11589 हस्तपादचलनं कायिकनमस्कारादौ। देशान्तरसंगमो यात्रादौ।
11590 उपवासादौ कायक्लेशेन बलोत्साहनिद्रादिवैधुर्यम्। तीर्थायतनानि क्षेत्राणि
11591 तत्र निवासाः॥ ३९॥
11592
11593 पुरुषार्थैकसाध्येन वासनैकार्थकर्मणा।
11594 केवलं तन्मनोमात्रजयेनासाद्यते पदम्॥ ४०॥
11595
11596 केन तर्हि तत्प्राप्यते तत्राह - पुरुषार्थेति। पुरुषार्थः

11597 श्रवणमनननिदिध्यासनपौरुषं तदेकसाध्येन।
11598 द्वैतवासनाविरोधिब्रह्माकारदृढवासनाया एकार्थेन तुल्यविषयेण
11599 कर्मणा साध्येन साक्षात्कारेणेत्यर्थः। मनोमात्रस्य द्वैतस्य
11600 मूलोच्छेदलक्षणेन जयेन। यथाहुः - एवं निरन्तरकृता ब्रह्मैवास्मीति
11601 वासना। हरत्यविद्याविक्षेपान् रोगानिव रसायनम्॥ इति॥ ४०॥
11602
11603 विवेकमात्रसाध्यं तद्विचारैकान्तनिश्चयम्।
11604 त्यजता दुःखजालानि नरेणैतदवाप्यते॥ ४१॥
11605
11606 विवेको देहेन्द्रियादेरात्मनः पृथक्करणम्। विचारश्च
11607 श्रवणमनननिदिध्यासनैरसंभावनादिनिरासः एकान्त ऐकाग्र्यं च
11608 ताभ्यां निश्चेतुं शक्यम्। दुःखजालानि विषयान्॥ ४१॥
11609
11610 सुखसेव्यासनस्थेन तद्विचारयता स्वयम्।
11611 न शोच्यते पदं प्राप्य न स भूयो हि जायते॥ ४२॥
11612
11613 स प्राप्तपदः॥ ४२॥
11614
11615 तत्समस्तसुखासारसीमान्तं साधवो विदुः।
11616 तदनुत्तमनिष्पन्दं परमाहू रसायनम्॥ ४३॥
11617
11618 संसारे सारत्वेन प्रसिद्धसुखानामुत्कर्षे इतरेषामसाराणां सत्तस्फूर्त्योः
11619 सीमान्तं परमावधिम्। सुखस्य आसाराणां मेघस्थानीयमवधिमिति वा।
11620 एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति सा काष्ठा सा परा गतिः
11621 इत्यादिश्रुतेरिति भावः। अनुत्तमा निष्पन्दा आनन्दरसाविर्भावा ध्यानिनां
11622 यस्मात्॥ ४३॥
11623
11624 क्षयित्वात्सर्वभावानां स्वर्गमानुष्ययोर्द्वयोः।
11625 सुखं नास्त्येव सलिलं मृततृष्णास्विवैतयोः॥ ४४॥
11626
11627 अतो मनोजयश्चिन्त्यः शमसंतोषसाधनः।
11628 अनन्तसमसंयोगस्तस्मादानन्द आप्यते॥ ४५॥
11629
11630 अनन्ते समः संयोग ऐकरस्यलक्षणः॥ ४५॥
11631
11632 तिष्ठता गच्छता चैव पतता भ्रमता तथा।
11633 रक्षसा दानवेनापि देवेन पुरुषेण वा॥ ४६॥
11634
11635 शारीरपरिश्रमो मनुष्याधिकारनियमश्च नास्तीत्याह - तिष्ठतेत्यादिना॥
11636 ४६॥
11637
11638 मनः प्रशमनोद्भूतं तत्प्राप्यं परमं सुखम्।
11639 विकासिशमपुष्पस्य विवेकोच्चतरोः फलम्॥ ४७॥
11640
11641 विकासी शमः पुष्पं यस्य उच्चस्योत्कृष्टस्य तरोः कल्पवृक्षस्य फलं
11642 परं सुखम्॥ ४७॥
11643
11644 व्यवहारपरेणापि कार्यवृन्दमविन्दता।
11645 भानुनेवाम्बरस्थेन नोज्झ्यते न च वाञ्छयते॥ ४८॥
11646
11647 ननु तत्प्राप्तमपि पुनर्व्यवहारप्रसक्तावपैष्यतीत्याशङ्क्याह -
11648 व्यवहारेति। नोज्झ्यते नोत्सृज्यते पूर्णत्वेनाहेयत्वादत एव न वाञ्छयते॥ ४८

| |

मनःप्रशान्तमत्यच्छं विश्रान्तं विगतभ्रमम् |
अनीहं विगताभीष्टं नाभिवाञ्छति नोज्झति || ४९ ||

सति मनसि कथं न वाञ्छा स्यात्तत्राह - मन इति || ४९ ||

मोक्षद्वारे द्वारपालानिमाञ्छृणु यथाक्रमम् |
येषामेकतमासक्त्या मोक्षद्वारं प्रविश्यते || ५० ||

प्रागनुक्रान्तानपि [एकादशसर्गे मोक्षद्वारे द्वारपाला इत्यादिना]
विस्तरेण वर्ण्यमानाच्छृणु || ५० ||

सुखदोषदशादीर्घा संसारमरुमण्डली |
जन्तोः शीतलतामेति शीररश्मेः समप्रभा || ५१ ||

तत्रासर्गसमाप्तेः शमं प्रस्तोतुमुपक्रमते - सुखेति | सुखशब्देन
तदाशा लक्ष्यते | सैवाध्वगस्य तृषातापसमा दोषदशा तया दीर्घा
दुरतिक्रमा शीतलतामेति शमेनेत्यपकृष्यते | समप्रभा प्रभासमा |
पदव्यत्यासश्छान्दसः | यथा चन्द्रस्य स्वीया प्रभा तद्वत् |
शीतरश्मिसमप्रभेति पाठे स्पष्टम् || ५१ ||

शमेनासाद्यते श्रेयः शमो हि परमं पदम् |
शमः शिवः शमः शान्तिः शमो भ्रान्तिनिवारणम् || ५२ ||

हि यस्माच्छमेन श्रेय आसाद्यते अत
आयुर्घृतमितिवदमेदोपचारात्तत्परमं पदं तद्विष्णोः परमं पदम् इति
श्रुतिप्रसिद्धं [प्रसिद्धः इति पाठः] शम एव | एवं न सन्न
चासञ्छिव एव केवलः इति श्रुतिप्रसिद्धः शिवोऽपि शम एव | एवं तरति
शोकमात्मवित् इत्यादिश्रुतिसिद्धा सर्वदुःखोपशान्तिरपि शम एवेत्यर्थः || ५२ ||

पुंसः प्रशमतृप्तस्य शीतलाच्छतरात्मनः |
शमभूषितचित्तस्य शत्रुरप्येति मित्रताम् || ५३ ||

रागद्वेषाद्यतापितत्वाच्छीतलो निर्मोहत्वादच्छतरश्च आत्मा विज्ञानात्मा
यस्य || ५३ ||

प्। १०५)

शमचन्द्रमसा येषामाशयः समलंकृतं |
क्षीरोदानामिवोदेति तेषां परमशुद्धता || ५४ ||

आशयश्चित्तम् | ज्ञाक्नलब्धा स्वाभाविकशुद्धता शमेन
द्विगुणीभवन्तीवाभिवर्धत इव | यथा क्षीरोदानां शुभ्रता
चन्द्रोदयेनेत्यर्थः || ५४ ||

हृत्कुशेशयकोशेषु येषां शमकुशेशयम् |
सतां विकसितं ते हि द्विहृत्पद्माः समा हरेः || ५५ ||

कुशेशयं पद्मम् | हरेः समा हरिणा तुल्याः | हरेर्हृत्पद्मस्यैव
बहिर्ब्रह्मासनपद्मतया द्वैधीभावादिति भावः || ५५ ||

11701 शमश्रीः शोभते येषां मुखेन्दावकलङ्किते।
11702 ते कुलीनेन्दवो वन्द्याः सौन्दर्यविजितेन्द्रियाः॥ ५६॥
11703
11704 कुलीनाः सत्कुलास्त एवेन्दवः स्वपरकुलोद्योतपापोपशमहेतुत्वात्। विजितेन्दव इति
11705 पाठे स्पष्टम्। पाठान्तरे तु सौन्दर्येण गुणैर्विजितानि वशीकृतानि
11706 परेषामपि चक्षुर्मनः प्रभृतीनीन्द्रियाणि यैः॥ ५६॥
11707
11708 त्रैलोक्योदरवर्तिन्यो नानन्दाय तथा श्रियः।
11709 साम्राज्यसंपत्प्रतिमा यथा [यथाश्रम इति पाठः]
11710 शमविभूतयः॥ ५७॥
11711
11712 साम्राज्यसंपत्प्रतिमेवाकारमात्रेण सदृशी यासां नतु गुणान्तरैरित्यर्थः
11713 ॥ ५७॥
11714
11715 यानि दुःखानि या तृष्णा दुःसहा ये दुराधयः।
11716 तत्सर्वं शान्तचेतःसु तमोऽर्केष्विव नश्यति॥ ५८॥
11717
11718 तत्सर्वमिति नपुंसकमनपुंसकेन इत्येकशेषैकवद्भावः॥ ५८॥
11719
11720 मनो हि सर्वभूतानां प्रसादमधिगच्छति [मनुगच्छति इति
11721 पाठः]।
11722 न तथेन्दोर्यथा शान्ते जने जनितकौतुकम्॥ ५९॥
11723
11724 इन्दोश्चन्द्रान्निमित्तभूतात्। विषयस्यापि निमित्तत्वविवक्षया पञ्चमी। जनितं
11725 कौतुकं स्वात्मानुभवचमत्कारो यस्मिंस्तथाभूतं सद्यथा
11726 प्रसादमधिगच्छतीति संबन्धः॥ ५९॥
11727
11728 शमशालिनि सौहार्दवति सर्वेषु जन्तुषु।
11729 सुजने परमं तत्त्वं स्वयमेव प्रसीदति॥ ६०॥
11730
11731 स्वयमेवेत्यनायासोक्तिः॥ ६०॥
11732
11733 मातरीव परं यान्ति विषमाणि मृदूनि च।
11734 विश्वासमिह भूतानि सर्वाणि शमशालिनि॥ ६१॥
11735
11736 विषमाणि क्रूरकुटिलाशयानि। मृदूनि तद्विपरीतानि॥ ६१॥
11737
11738 न रसायनपानेन न लक्ष्म्यालिङ्गनेन च।
11739 तथा सुखमवाप्नोति शमेनान्तर्यथा मनः॥ ६२॥
11740
11741 इन्द्रपदे अमृतरसायनपानेन। विष्णुपदे लक्ष्म्यालिङ्गनेन॥ ६२॥
11742
11743 सर्वाधिव्याधिचलितं [व्याधिवलितं] क्रान्तं तृष्णावरत्रया।
11744 मनः शमामृतासेकैः समाश्वासय राघव॥ ६३॥
11745
11746 चलितं भीषणेन कम्पितम्। वरत्रया चर्मरज्ज्वाक्रान्तमितस्तत आकृष्टम्।
11747 श्रान्तमिति यावत्॥ ६३॥
11748
11749 यत्करोषि यदश्नासि शमशीतलया धिया।
11750 तत्रातिस्वदते स्वादु [साधु इति पाठः] नेतरत्तात मानसे॥ ६४॥
11751
11752 स्वादु मधुरं यथा स्यात्तथा तत्र तत् मानसेऽतिस्वदते रोचते॥ ६४॥

शमामृतरसाच्छन्नं मनो यामेति निर्वृतिम् |
छिन्नान्यपि तयाङ्गानि मन्ये रोहन्ति राघव || ६५ ||

निर्वृतिं सुखम् | तया निर्वृत्या | रोहन्ति पुनः प्रादुर्भवन्ति | मन्ये
इत्युत्प्रेक्षा || ६५ ||

न पिशाचा न रक्षांसि न दैत्या न च शत्रवः |
न च व्याघ्रभुजङ्गा वा द्विषन्ति शमशालिनम् || ६६ ||

सुसंनद्धसमस्ताङ्गं प्रशमामृतवर्मणा |
वेधयन्ति न दुःखानि शरा वज्रशिलामिव || ६७ ||

सुसंनद्धानि सम्यग्गुप्तानि समस्तान्यङ्गानि यस्य तम् | अमृतरूपेण
वर्मणा कवचेन | वेधयन्ति पीडयन्ति | दुःखानि दुःखनिमित्तानि || ६७ ||

न तथा शोभते राजा अप्यन्तःपुरसंस्थितः |
समया स्वच्छया बुद्ध्या यथोपशमशीलया || ६८ ||

यथा पुरुष इति शेषः || ६८ ||

प्राणात्प्रियतरं दृष्ट्वा तुष्टिमेति न वै जनः |
यामायाति जनः शान्तिमवलोक्य शमाशयम् || ६९ ||

जनस्तां तुष्टिं नैतीत्यर्थः | शमयुक्तः आशयो यस्य तम् || ६९ ||

समया शमशालिन्या वृत्त्या यः साधु वर्तते |
अभिनन्दितया लोके जीवतीह स नेतरः || ७० ||

जीवति सफलजीवनो भवति || ७० ||

अनुद्धतमनाः शान्तः साधुः कर्म करोति यत् |
तत्सर्वमभिनन्दन्ति तस्येमा भूतजातयः || ७१ ||

अनुद्धतं विनीतं मनो यस्य साधुः [साधुसंमतः इति पाठः]
शान्तो यत्प्रमादादपराधमपीति यावत् || ७१ ||

श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च भुक्त्वा घ्रात्वा [स्नात्वा इति
पाठः] शुभाशुभम् |
न हृष्यति ग्लायति यः स शान्त इति कथ्यते || ७२ ||

इदानीं दाम्भिकसात्त्विकपरीक्षणाय शान्तलक्षणान्याह - श्रुत्वेत्यादिना |
शुभाशुभं प्रियाप्रियम् || ७२ ||

यः समः सर्वभूतेषु भावि काङ्क्षति नोज्झति |
जित्वेन्द्रियाणि यत्नेन स शान्त इति कथ्यते || ७३ ||

भाविसुखादि न काङ्क्षति प्रारब्धप्रापितं च नोज्झति || ७३ ||

स्पृष्ट्वाऽवदातया बुद्ध्या यथैवान्तस्तथा बहिः |
दृश्यन्ते यत्र कार्याणि स शान्त इति कथ्यते || ७४ ||

11805 आर्जवमपि तल्लक्षणमित्याह - स्पृष्ट्वेति | स्पृष्ट्वा ज्ञात्वापि
11806 परकौटिल्यादीनीति शेषः | मोक्षोपायतया कर्तव्यानि कार्याणि || ७४ ||
11807
11808 तुषारकरबिम्बाभं मनो यस्य निराकुलम् |
11809 मरणोत्सवयुद्धेषु स शान्त इति कथ्यते || ७५ ||
11810
11811 मरणोत्सवयुद्धेषु भयरागक्रोधैर्निराकुलमसंतप्तमत एव
11812 तुषारकरश्चन्द्रस्तद्बिम्बाभम् || ७५ ||
11813
11814 स्थितोऽपि न स्थित इव न हृष्यति न कुप्यति |
11815 यः सुषुप्तसमः स्वस्थः स शान्त इति कथ्यते || ७६ ||
11816
11817 हर्षकोपनिमित्तवत्प्रदेशे स्थितोऽपि || ७६ ||
11818
11819 अमृतस्यन्दसुभगा यस्य सर्वजनं प्रति |
11820 दृष्टिः प्रसरति प्रीता स शान्त इति कथ्यते || ७७ ||
11821
11822 अमृतस्यन्दोऽमृतप्रवाह इव सुभगा सुखदा || ७७ ||
11823
11824 प्। १०६)
11825
11826 योऽन्तः शीतलतां यातो यो भावेषु न मज्जति |
11827 व्यवहारी न संमूढः स शान्त इति कथ्यते || ७८ ||
11828
11829 भावेषु विषयेषु व्यवहारी सन्नपि न मज्जति नासज्जते || ७८ ||
11830
11831 अप्यापत्सु दुरन्तासु कल्पान्तेषु महत्स्वपि |
11832 तुच्छेऽहं न मनो यस्य स शान्त इति कथ्यते || ७९ ||
11833
11834 महत्सु चिरकालिकेषु | तुच्छे मिथ्याभूते नश्वरे देहादौ यस्याहमिति मनो
11835 नास्ति || ७९ ||
11836
11837 आकाशसदृशी यस्य पुंसः संव्यवहारिणः |
11838 कलङ्कमेति न मतिः स शान्त इति कथ्यते || ८० ||
11839
11840 परमाकाशेन ब्रह्मणा सदृशी समरसा प्रसिद्धाकाशवदविकार्या वा |
11841 कलङ्कं रागादिलेपम् || ८० ||
11842
11843 तपस्विषु बहुज्ञेषु याजकेषु नृपेषु च |
11844 बलवत्सु गुणाढ्येषु शमवानेव राजते || ८१ ||
11845
11846 लोकेऽपि सर्वगुनश्रैष्ठ्येन शमः प्रसिद्ध इत्याह - तपस्विष्विति || ८१ ||
11847
11848 शमसंसक्तमनसां महतां गुणशालिनाम् |
11849 उदेति निर्वृतिश्चित्ताज्ज्योत्स्नेव सितरोचिषः || ८२ ||
11850
11851 सीमान्तो [सीमन्तः इति पाठः] गुणपूगानां
11852 पौरुषैकान्तभूषणम् |
11853 संकटेषु भयस्थाने शमः श्रीमान्विराजते || ८३ ||
11854
11855 गुणानां पूगानां समूहानां सीमान्तोऽवधिः | एकान्तभूषणं
11856 मुख्यभूषणम् | श्रीमान् सर्वगुणसंपत्तिमान् शमो विराजते || ८३ ||

शमममृतमहार्यमार्यगुप्तं
परमवलम्ब्य परं पदं प्रयाताः।
रघुतनय यथा महानुभावाः
क्रममनुपालय सिद्धये तमेव॥ ८४॥

अहार्यं परैरपहर्तुमशक्यमार्यैः पूज्यैर्गुप्तं सावधानतया रक्षितं
परमुत्कृष्टं साधनमवलम्ब्य महानुभावा यथा येन क्रमेण परं
पदं प्रयाताः प्राप्तास्तमेव क्रममनुपालय अवलम्ब्य रक्षस्वेत्यर्थः॥ ८४
।।

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मुमुक्षुव्यवहारप्रकरणे
शमनिरूपणं नाम त्रयोदशः सर्गः॥ १३॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे मुमुक्षुव्यवहारप्रकरणे
शमनिरूपणं नाम त्रयोदशः सर्गः॥ १३॥

चतुर्दशः सर्गः १४

श्रीवसिष्ठ उवाच।

शास्त्रावबोधामलया धिया परमपूतया।
कर्तव्यः कारणज्ञेन विचारोऽनिशमात्मनः॥ १॥

साधुसंगमसच्छास्त्रभावशुद्ध्युपबृंहितः।
शमसंतोषयोर्हेतुर्विचारोऽत्र प्रशस्यते॥ १॥

इत्थं मोक्षद्वारपालं शमाख्यमाद्यमुपवर्ण्य द्वितीयं विचारं
वर्णयिष्यन् वसिष्ठ उवाच - शास्त्रेति। तत्रार्थानर्थानुबन्धविचारः
सारासारविचारो हेयोपादेयविचारः प्रमाणतात्पर्यविचारः आत्मतत्त्वपरीक्षा
चेति विचारः पञ्चविधः। तत्र स्वाभाविकप्रवृत्तेर्विषयाणां
चानर्थानुबन्धिता शास्त्रीयप्रवृत्तेर्वैराग्यादेश्च
पुरुषार्थानुबन्धितेत्यन्वयव्यतिरेकादिना परीक्षात्मक आद्यः।
स्त्रीपुत्रस्वदेहादिषु स्वतो बीजतः
परिणामतश्चाशुचिविण्मूत्राद्यमङ्गलत्वपरीक्षात्मा
ब्रह्मलोकान्तसुखानामनित्यत्वदुःखसंभिन्नत्वादिपरीक्षात्मा च द्वितीयः।
एतौ वैराग्यमुमुक्षाहेतू। मुमुक्षोत्तरमपि मोक्षसाधनं कर्म
वोपासनमेव वा ते अपि किं समुच्चिते उत ज्ञानसमुच्चिते उत ज्ञानमेवेति
परीक्षात्मा तृतीयः। यदापि ज्ञानमेव तदापि तत्किं
सांख्यवैशेषिकाद्यभिमतं कपिलगौतमोक्ततत्तच्छास्त्रप्रमाणकं
श्रौतमेव वा यदापि श्रौतं तदापि किं श्रुतीनां द्वैते उताद्वैते सविशेषे उत
निर्विशेषे आत्मन्यनात्मनि वा तात्पर्यमिति परीक्षात्मा चतुर्थः। स च
श्रवणमित्युच्यते। श्रुत्यादिप्रमाणानामप्यद्वितीये सच्चिदानन्दब्रह्मात्मनि
तात्पर्यावधारणेऽपि स्वात्मनि परमार्थतस्तथात्वं संभवति न वेति
रत्नपरीक्षान्यायेनानुभवनिष्ठगुरुसतीर्थ्यादिसंवादेन
जीवेश्वरजगत्तत्त्वपरिशोधनेन च यावदवधारणं परीक्षणात्मा
पञ्चमः। तत्राद्यानां त्रयाणां फलं साधनचतुष्टयसंपत्तिः
अन्त्ययोस्तु क्रमात्प्रमाणप्रमेयासंभावनानिवृत्तिः। तत्राद्या यद्यपि
भाग्यवशतः स्वतोऽपि च भवन्ति तथापि स्वप्रत्ययदृढीकाराय
पुनर्गुरुशास्त्रपुरःसरं कर्तव्याः। अन्त्यौ तु गुरुशास्त्राभ्यामेव भवत इति
सर्वसाधारण्येन शास्त्रावबोधामलया धियेत्युक्तम्। कारणज्ञेन
विषयविशयपूर्वपक्षसिद्धान्तप्रयोजनविभागज्ञानवता [विशयः =

संशयः] पुंसा प्रमाणप्रमेयतत्त्वप्रतिपादनोपायकुशलेन गुरुणा
सहेति वार्थः। तत्र चित्तशुद्धेरप्युपयोगं दर्शयति - परमपूतयेति ॥ १ ॥

विचारात्तीक्ष्णतामेत्य धीः पश्यति परं पदम्।
दीर्घसंसाररोगस्य विचारो हि महौषधम् ॥ २ ॥

तीक्ष्णतां सूक्ष्मतत्त्वावगाहनकुशलताम् ॥ २ ॥

आपद्वनमनन्तेहापरिपल्लविताकृति।
विचारक्रकचच्छिन्नं नैव भूयः प्ररोहति ॥ ३ ॥

आपदेव दुरुत्तरत्वाद्वनम्। अनन्ताभिरीहाभिः प्रवृत्तिभिः परितः पल्लवितेव
रागादिभिर्विवृद्धा आकृतिः संनिवेशो यस्य। क्रकचं काष्ठदारणम् ॥ ३ ॥

मोहेन बन्धुनाशेषु संकटेषु शमेषु [भ्रमेषु च इति पाठः]
च।
सर्वं व्याप्तं महाप्राज्ञ विचारो हि सतां गतिः ॥ ४ ॥

बन्धुनाशादिषु दुःखस्थानेषु यदुचितं कर्तव्यं येन चोपायेन
दुःखोत्तरणं चित्तसमाधानं च तत्सर्वं मोहेन वैचित्त्येन व्याप्तं न
स्फुरतीति यावत्। तत्र विचार एव गतिस्तत्प्रसंधाने हेतुरित्यर्थः ॥ ४ ॥

प्। १०७)

न विचारं विना कश्चिदुपायोऽस्ति विपश्चिताम्।
विचारादशुभं त्यक्त्वा शुभमायाति धीः सताम् ॥ ५ ॥

तदेवाह - नेति ॥ ५ ॥

बलं बुद्धिश्च तेजश्च प्रतिपत्तिः क्रियाफलम्।
फलन्त्येतानि सर्वाणि विचारेणैव धीमताम् ॥ ६ ॥

तेजः सामर्थ्यम्। प्रतिपत्तिस्तत्तत्कालोचिता स्फूर्तिः। क्रिया तदनुष्ठानं
तत्फलं च। फलन्ति निष्पद्यन्ते सफलीभवन्ति वा ॥ ६ ॥

युक्तायुक्तमहादीपमभिवाञ्छितसाधकम्।
स्फारं विचारमाश्रित्य संसारजलधिं तरेत् ॥ ७ ॥

युक्तमुचितमुपादेयमयुक्तमनुचितं हेयं तयोः प्रकाशने महादीपम्।
स्फारमनल्पम् ॥ ७ ॥

आलूनहृदयाम्भोजान्महामोहमतङ्गजान्।
विदारयति शुद्धात्मा विचारो नाम केसरी ॥ ८ ॥

आलूनानि हृदयस्थानि आलूनानि हृदयस्थानि विवेकाम्भोजानियैस्तान्।
शुद्धात्मा जल्पच्छलजात्यादिदोषशून्यः ॥ ८ ॥

मूढाः कालवशेनेह यद्गताः परमं पदम्।
तद्विचारप्रदीपस्य विजृम्भितमनुत्तमम् ॥ ९ ॥

मूढास्तरणोपायमार्गव्यामूढाः। विजृम्भितं
तादृशमार्गप्रकाशनस्य फलम् ॥ ९ ॥

11961
11962 राज्यानि संपदः स्फारा भोगो मोक्षश्च शाश्वतः |
11963 विचारकल्पवृक्षस्य फलान्येतानि राघव || १० ||
11964
11965 या विवेकविकासिन्यो मतयो महतामिह |
11966 न ता विपदि मज्जन्ति तुम्बकानीव वारिणि || ११ ||
11967
11968 विवेकोऽत्र विचारस्तेन विकासिन्यो या मतयस्ता न मज्जन्ति न विषीदन्ति | तुम्बकानि
11969 शुष्कालाबुकानि || ११ ||
11970
11971 विचारोदयकारिण्या धिया व्यवहरन्ति ये |
11972 फलानामत्युदाराणां भाजनं हि भवन्ति ते || १२ ||
11973
11974 विचारवती धीर्विवेकोदयकारिणी तया ये व्यवहरन्ति | उदाराणां श्रेष्ठानाम् ||
11975 १२ ||
11976
11977 मूर्खहृत्काननस्थानामाशाप्रथमरोधिनाम् |
11978 अविचारकरञ्जानां मञ्जर्यो दुःखरीतयः || १३ ||
11979
11980 मूर्खाणां हृन्मन एव काननं वनं तत्स्थानाम् | पुरुषार्थविषये
11981 आशां मुमुक्षां प्रथमं रुन्धन्ति तच्छीलानाम् | करञ्जानां
11982 कुबेराक्षवल्लीनाम् | तत्पक्षे आशा दिशः | ते हि वृतिभावेन दिशो रुन्धन्ति |
11983 मञ्जर्यः फलकोशमञ्जर्यो दुःखव्यवहाराडम्बरभूतास्ता हि
11984 सकण्टकाः कटुकफलगर्भाः प्रसिद्धाः || १३ ||
11985
11986 कज्जलक्षोदमलिना मदिरामदधर्मिणी |
11987 अविचारमयी निद्रा यातु ते राघव क्षयम् || १४ ||
11988
11989 क्षोदश्चूर्णमिव मलिना | मदिरामदधर्मा भ्रान्तिस्खलनादयस्तद्वती |
11990 क्षयं यातु विचारेणेति शेषः || १४ ||
11991
11992 महापदतिदीर्घेषु सद्विचारपरो नरः |
11993 न निमज्जति मोहेषु तेजोराशिस्तमः स्विव || १५ ||
11994
11995 महत्य आपदो येषु ते च ते अतिदीर्घाश्च तेषु | मोहेषु अज्ञानेषु | तेजोराशिः
11996 सूर्यः || १५ ||
11997
11998 मानसे सरसि स्वच्छे विचारकमलोत्करः |
11999 नूनं विकसितो यस्य हिमवानिव भाति सः || १६ ||
12000
12001 मानसं मन एव सरस्तदेव हिमवत्कुक्षौ प्रसिद्धं मानसं सरः |
12002 शैत्यौन्नत्यस्थैर्यादिगुणैर्हिमवानिव || १६ ||
12003
12004 विचारविकला यस्य मतिर्मान्द्यमुपेयुषः |
12005 तस्योदेत्यशनिश्चन्द्रान्मुधा यक्षः शिशोरिव || १७ ||
12006
12007 मान्द्यं मौर्ख्यम् | चन्द्रदैवत्ये चन्द्रवद्विवेकप्रकाशयोग्ये च मनसि
12008 चन्द्रिकासदृश ज्ञानसुखाविर्भाव एवोचितस्तस्माद्यस्य मूर्खस्य
12009 शोकदुःखाद्युद्रवस्तस्य चन्द्रादप्यशनिर्वज्रमुदेति | यथा शिशोर्बालस्य
12010 मौर्ख्याद्यक्षः प्रागुक्तवेताल उदेति तद्वत् || १७ ||
12011
12012 दुःखखण्डकमस्थूलं विपन्नवलतामधुः |

राम दूरे परित्याज्यो निर्विवेको नराधमः ॥ १८ ॥

निर्विवेको नराधमो दुःखबीजानामेव निरन्तरभरणाय निर्मितं खण्डकं
भूकुसुलम् । न विद्यते स्थूलं यस्मात्तथाविधम् । अतिस्थूलमित्यर्थः ।
विपल्लक्षणानां नवलतानां मधुर्वसन्त उल्लासहेतुरित्यर्थः ॥ १८ ॥

ये केचन दुरारम्भा दुराचारा दुराधयः ।
अविचारेण ते भान्ति वेतालास्तमसा यथा ॥ १९ ॥

दुरारम्भाः स्वपरदुःखानुकूलकर्माणि । दुराचारा निषिद्धाचरणानि । भान्ति
आविर्भवन्ति ॥ १९ ॥

अविचारिणमेकान्तवनद्रुमसधर्मकम् ।
अक्षमं साधुकार्येषु दूरे कुरु रघूद्वह ॥ २० ॥

एकान्तेन नियमेन वनद्रुमसमानधर्माणम् । एकान्ते मनुष्यासेव्यस्थाने वा
विद्यमानेन वनद्रुमेण सधर्माणम् । अत एव साधूनामध्वगानां
छायाश्रयदानादिकार्येषु साधुषु पुरुषार्थोपयोगिषु कार्येषु
वाऽक्षममसमर्थम् ॥ २० ॥

विविक्तं हि मनो जन्तोराशावैवश्यवर्जितम् ।
परां निर्वृतिमभ्येति पूर्णचन्द्र इवात्मनि ॥ २१ ॥

विविक्तं विचारवत् । आशाया वैवश्येन पारवश्येन वर्जितम् । निर्वृतिं
विश्रान्तिसुखम् ॥ २१ ॥

विवेकितोदिता देहे सर्वं शीतलयत्यलम् ।
अलंकरोति चात्यन्तं ज्योत्स्नेव भुवनं यथा ॥ २२ ॥

ज्योत्स्ना चन्द्रिकेव । भुवनं जलं यथा तापार्तं सर्वं जनं शीतलयति
तृषार्तं च अलं तृप्तं करोति तद्वत् ॥ २२ ॥

परमार्थपताकाया धियो धवलचामरम् ।
विचारो राजते जन्तो रजन्यामिव चन्द्रमाः ॥ २३ ॥

जन्तोरधिकारिजन्मवतः पुरुषस्य
परमार्थस्योत्कृष्टपुरुषार्थलक्षणराजभावप्राप्तेः सूचकत्वात्पताकाया
धियः शुद्धबुद्धेः संबन्धिविचारो धवलचामरमिवासाधारणं
राजचिह्नं राजते । रूपितपताकाचामरयो रजनीचन्द्रमसावुपमाने । तत्र
रजन्या वैयधिकरण्येनोपमानत्वम् ॥ २३ ॥

विचारचारवो जीवा भासयन्तो दिशो दश ।
भान्ति भास्करवन्नूनं भूयो भवभयापहाः ॥ २४ ॥

जीवा विचारेणैव क्रमाचारवो जीवन्मुक्तभूताः सन्तो भूयसां प्राणिनां
विचारप्रकाशेन भवभयलक्षणं तमोऽपघ्नन्तो [तमोऽपहरन्तो इति
पाठः] भास्करवद्भान्ति ॥ २४ ॥

प्। १०८)

बालस्य स्वमनोमोहकल्पितः प्राणहारकः ।
रात्रौ नभसि वेतालो विचारेण विलीयते ॥ २५ ॥

12065
12066 ननु विचारेण भयनिवृत्तिः क्व दृष्टा तत्राह - बालस्येति | निशि
12067 बहिर्गमनप्रतिबन्धार्थं कल्पितो वेतालस्तथा संसारो विलीयते || २५ ||
12068
12069 सर्व एव जगद्भावा अविचारेण चारवः |
12070 अविद्यमानसद्भावा विचारविशरारवः || २६ ||
12071
12072 अस्तु तत्र तथा प्रकृते कथं भयनिवृत्तिरित्याशङ्क्य भयहेतोर्जगतो
12073 विचारेण मिथ्यात्वनिर्णयादित्याह - सर्व एवेति | चारवः सत्यवद्रमणीयाः |
12074 विशरारवः शिलास्फालितलोष्टादिवद्विशरणशीलाः | असारा मिथ्याभूता इति
12075 यावत् || २६ ||
12076
12077 पुंसो निजमनोमोहकल्पितोऽनल्पदुःखदः |
12078 संसारचिरवेतालो विचारेण विलीयते || २७ ||
12079
12080 उक्तमेव स्पष्टयति - पुंस इति || २७ ||
12081
12082 समं सुखं निराबाधमनन्तमनपाश्रयम् |
12083 विद्धीमं केवलीभावं विचारोच्चतरोः [विचारोऽस्य तरोः इति
12084 पाठः] फलम् || २८ ||
12085
12086 न भयनिवृत्तिरेव किंतु निरतिशयानन्दावाप्तिरपि तत्फलमित्याह -
12087 सममिति | समं जगद्वैषम्यशून्यम् | अनपाश्रयमनन्याधीनम् |
12088 केवलीभावं कैवल्यम् || २८ ||
12089
12090 अचलस्थितितोदारा प्रकटाभोगतेजसा |
12091 तेन निष्कामतोदेति शीततेवेन्दुनोदिता || २९ ||
12092
12093 तद्विच्छेदशङ्कां वारयति - अचलेति | तेन विचारेण प्रकटस्याभोगस्य
12094 निरतिशयानन्दस्य तेजसा सामर्थ्येन चाञ्चल्यहेत्वज्ञाने नष्टे अचलस्थिततया
12095 उदारा आनन्दपूर्णतालक्षणा निष्कामता उदेति || २९ ||
12096
12097 स्वविचारमहौषध्या साधुश्चित्तनिषण्णया |
12098 तयोत्तमत्वप्रदया नाभिवाञ्छति नोज्झति || ३० ||
12099
12100 अचलस्थितिरेवोत्तमत्वं तत्प्रदया पूर्वोक्तया विचारलक्षणया महौषध्या
12101 सिद्धः पुरुषो नाभिवाञ्छत्यप्राप्तं प्राप्तं च नोज्झति | कृतकृत्यो
12102 भवतीत्यर्थः || ३० ||
12103
12104 तत्पदालम्बनं चेतः स्फारमाभासमागतम् |
12105 नास्तमेति न चोदेति खमिवातिततान्तरम् [गतान्तरम् इति पाठः] || ३१
12106 ||
12107
12108 ननु चित्तं यदि विचारजन्यज्ञानेन नश्येत्तर्हि जीवनासंभवः यदि न
12109 नश्येत्तर्हि पुनर्विक्षेपाञ्जनयेदेवेति कथं कृतकृत्यतेत्याशङ्क्याह ##-
12110 तद्वदाभासतां गतं चित्तमपि
12111 खमाकाशमिवातिततमतिविस्तीर्णब्रह्मभावं प्राप्तमान्तरं
12112 विक्षेपबीजवासनाजालं यस्य | नास्तं विनाशमेति येन जीवनं न स्यात् नापि
12113 रागद्वेषादिवृत्तिभिरुदेति येन विक्षेपः स्यादित्यर्थः | यद्वा चेतः आभासं
12114 भर्जितबीजमिव नोदेति येन विक्षेपः स्यात् | अनादिवासनया स्फारतां गतं
12115 दृढं विषय संस्कारवशान्न विनाशमेति || ३१ ||
12116

12117 न ददाति न चादत्ते न चोन्नमति शाम्यति ।
12118 केवलं साक्षिवत्पश्यञ्जगदाभोगि तिष्ठति ॥ ३२ ॥
12119
12120 तत्कुतः । यतो जगद्विषयानयं केवलं साक्षिवदौदासीन्येन पश्यंस्तेषु
12121 रागितया मनो न ददाति सत्यतया पुरुषार्थबुद्ध्या च नादत्ते नोपभुङ्क्ते ॥ ३२
12122 । ।
12123
12124 न च शाम्यति नाप्यन्तर्नापि बाह्येऽवतिष्ठति ।
12125 न च नैष्कर्म्यमादत्ते न च कर्मणि मज्जति ॥ ३३ ॥
12126
12127 न सुषुप्ताविवोपाधिशान्त्या शाम्यति नापि स्वप्नवदान्तरवासनामये निमज्जति
12128 न वा मूढजनजाग्रद्वद्बह्येऽवसन्नस्तिष्ठति ॥ ३३ ॥
12129
12130 उपेक्षते गतं वस्तु संप्राप्तमनुवर्तते ।
12131 न क्षुब्धो न च वाऽक्षुब्धो भाति पूर्ण इवार्णवः ॥ ३४ ॥
12132
12133 अर्णवपक्षे गतं लक्ष्मीकौस्तुभादिवस्तु उपेक्षते न तत्प्राप्त्यै यतते । क्षुब्धो
12134 मर्यादात्यागपर्यन्तं क्षोभवान् । अक्षुब्धः स्तिमितः । स्वाभाविकं
12135 व्यवहारं त्यजन्निति यावत् । क्षोभादिफलाभावसमुच्चयार्थश्चकारः ॥ ३४ ॥
12136
12137 एवं पूर्णेन मनसा महात्मानो महाशयाः ।
12138 जीवन्मुक्ता जगत्यस्मिन्विहरन्तीह योगिनः ॥ ३५ ॥
12139
12140 इहास्मिञ्शरीर एवानुभूयमानो जीवब्रह्मैक्यलक्षणो योगो येषामस्ति ते ॥ ३५ ॥
12141
12142 उषित्वा सुचिरं कालं धीरास्ते यावदीप्सितम् ।
12143 ते तमन्ते परित्यज्य यान्ति केवलतां तताम् ॥ ३६ ॥
12144
12145 तमुपाध्याभासम् । ततामपरिच्छिन्नां केवलतां विदेहकैवल्यम् ॥ ३६ ॥
12146
12147 कोऽहं कस्य च संसार इत्यापद्यपि धीमता ।
12148 चिन्तनीयं प्रयत्नेन सप्रतीकारमात्मना ॥ ३७ ॥
12149
12150 आपद्यपि कुटुम्बादिव्यापृतायामपि । सप्रतीकारं
12151 तत्प्रतीकारश्रवणाद्यनुष्ठानसहितं यथा स्यात्तथा । आत्मना स्वेनैव ॥ ३७ ॥
12152
12153 कार्यसंकटसंदेहं राजा जानाति राघव ।
12154 निष्फलं सफलं वापि विचारेणैव नान्यथा ॥ ३८ ॥
12155
12156 कार्योऽवश्यकर्तव्यः संकटेष्वर्थकृच्छ्रेषु संदिह्यत इति संदेहः
12157 संधिविग्रहादिस्तं जानाति निश्चिनोति ॥ ३८ ॥
12158
12159 वेदवेदान्तसिद्धान्तस्थितयः स्थितिकारणम् ।
12160 निर्णीयन्ते विचारेण दीपेन च भुवो निशि ॥ ३९ ॥
12161
12162 वेदानां कर्मकाण्डानां वेदान्तानां च सिद्धान्तस्थितयो
12163 धर्मब्रह्मतत्त्वलक्षणास्तात्पर्यविश्रान्तिभूमयः स्थितेः
12164 पुरुषार्थप्रतिष्ठायाः कारणं प्रापिका इति यावत् । दीपेन चेति तुल्ययोरेव
12165 [तुल्ययोगे समुच्चयः इति पाठः] समुच्चय
12166 इत्यौत्सर्गिकनियमात्सादृश्यं गम्यते ॥ ३९ ॥
12167
12168 अनष्टमन्धकरेषु बहुतेजः [तेजस्सु जिह्मितं इति टीकाकारसम्मतः

12169 पाठः] स्वजिह्मितम् |
12170 पश्यत्यपि व्यवहितं विचारश्चारुलोचनम् || ४० ||
12171
12172 प्रसिद्धलोचनमन्धकारे नष्टमिव बहुतेजःसु सूर्यादिषु जिह्मितं प्रतिहतं
12173 व्यवहितविप्रकृष्टग्रहणेष्वसमर्थं च विचारलक्षणं लोचनं तु न
12174 तथेत्यर्थः || ४० ||
12175
12176 विवेकान्धो हि जात्यन्धः शोच्यः सर्वस्य दुर्मतिः |
12177 दिव्यचक्षुर्विवेकात्मा जयत्यखिलवस्तुषु || ४१ ||
12178
12179 विवेको विचार आत्मेव प्रियः प्रधानो वा यस्य स पुरुषो दिव्यचक्षुर्जयति
12180 अभिभवत्यापदो विनाशयति प्राप्नोति वा पुरुषार्थम् || ४१ ||
12181
12182 प्। १०९)
12183
12184 परमात्ममयी मान्या महानन्दैकसाधिनी |
12185 क्षणमेकं परित्याज्या न विचारचमत्कृतिः || ४२ ||
12186
12187 विचारेष्वपि यः सारभूतस्तमाह - परमात्मेति | स्त्रीमयो जाल्मः
12188 इतिवदत्यासक्त्या तत्प्रायताद्योतनाय मयट् | क्षणं क्षणमपि | उदरमन्तरं
12189 कुरुते अथ तस्य भयं भवति इति श्रुतेः | सा हानिस्तन्महाछिद्रं सान्धता सा
12190 च मूकता | यत्क्षणं वा मुहूर्तं वा शिवमेकं न चिन्तयेत् इति
12191 लैङ्गवचनाच्चेति भावः || ४२ ||
12192
12193 विचारचारुपुरुषो महतामपि रोचते |
12194 परिपक्वचमत्कारं सहकारफलं यथा || ४३ ||
12195
12196 महतां विदिततत्त्वानां किं पुनर्विविदिषूणामिति द्योतनार्थमपिशब्दः |
12197 परिपक्वः परिपाकनिष्पन्नश्चमत्कारो माधुर्यातिशयो यस्मिन् |
12198 सहकारस्याम्रस्य फलम् || ४३ ||
12199
12200 विचारकान्तमतयो नानेकेषु पुनः पुनः |
12201 लुठन्ति दुःखश्वभ्रेषु ज्ञाताध्वगतयो नराः || ४४ ||
12202
12203 विचारेणैव ज्ञाता अनुभवाध्वनि गतिर्यैः | समासोक्त्या
12204 लौकिकाध्वगवृत्तान्तोऽपि गम्यते || ४४ ||
12205
12206 नच रौति तथा रोगी नानर्थशतजर्जरः |
12207 अविचारविनष्टात्मा यथाऽज्ञः परिरोदिति || ४५ ||
12208
12209 विषशस्त्रधाताद्यनर्थशतैर्जर्जरः शिथिलाङ्गोऽपि तथा नच रौति यथा
12210 अविचारेण विनष्टो विनाशितप्राय आत्मा येन सोऽज्ञः परितो जन्मपरम्परासु
12211 रोदिति || ४५ ||
12212
12213 वरं कर्दममेकत्वं मलकीटकता वरम् |
12214 वरमन्धगुहाहित्वं न नरस्याविचारिता || ४६ ||
12215
12216 सर्वानर्थनिजावासं सर्वसाधुतिरस्कृतम् |
12217 सर्वदौस्थित्यसीमान्तमविचारं [१] परित्यजेत् || ४७ ||
12218
12219 नित्यं विचारयुक्तेन भवितव्यं महात्मना |
12220 तथान्धकूपे पततां विचारो ह्यवलम्बनम् || ४८ ||

12221
12222 तथाहि प्रसिद्धम् | अन्धयतीत्यन्धस्तथाविधः कूपो रागादिः फलाभेदेनोच्यते
12223 || ४८ ||
12224
12225 स्वयमेवात्मनात्मानमवष्टभ्य विचारतः |
12226 संसारमोहजलधेस्तारयेत्स्वमनोमृगम् || ४९ ||
12227
12228 अवष्टभ्य रागादिप्रवाहाकृष्टमपि बलात्स्थिरीकृत्य || ४९ ||
12229
12230 कोऽहं कथमयं दोषः संसाराख्य उपागतः |
12231 न्यायेनेति परामर्शो विचार इति कथ्यते || ५० ||
12232
12233 विचारस्वरूपमेव दर्शयति - कोऽहमिति | किं देहादिरेवाहमुत तद्विलक्षण
12234 इति त्वंपदार्थविचारः | संसारः कथं केन हेतुना अधिष्ठाने आगत इति
12235 तत्पदार्थविचारः | श्रुतिमुन्याचार्यसांप्रदायिकदर्शितेन न्यायेन || ५० ||
12236
12237 अन्धान्धमोहसुघनं चिरं दुःखाय केवलम् |
12238 कृतं शिलाया हृदयं दुर्मतेश्चाविचारिणः || ५१ ||
12239
12240 शिलाया दुर्मतेश्च हृदयं मन आन्तरावयवश्च | दुःखाय पीडायै |
12241 टङ्कच्छेदादिकष्टनिष्पाद्यत्वाद्दुष्टाय खाय च्छिद्रायैव च कृतं
12242 धात्रा | नान्यत्र तस्योपयोग इत्यर्थः | सादृश्यलाभः प्राग्वत् |
12243 यतस्तदन्धादचक्षुषोऽप्यन्धं मोहेन च सुघनमतिनिबिडम् | अन्धो
12244 ह्यदृष्ट्वा कूपे पतति मनस्तु दृष्ट्वापि मोहान्नरकेष्वपि पततीति |
12245 शिलाहृदयपक्षे अन्धादप्यन्धं जडत्वान्मोहादपि सुघनं
12246 कठोरत्वादित्यर्थः | अथवा यो दुर्मतिरविचारी च पुरुषस्तस्य हृदयं
12247 शिलायाः सकाशात् कृतमित्युत्प्रेक्षा | यतोऽन्धादन्धं मोहेन सुघनं च |
12248 अतस्तच्चिरं केवलं दुःखायैवेत्यर्थः || ५१ ||
12249
12250 भावाभावग्रहोत्सर्गदृशामिह हि राघव |
12251 न विचारादृते तत्त्वं ज्ञायते साधु किंचन || ५२ ||
12252
12253 भावः सत्यस्तस्य ग्रह उपादानं अभावोऽस्त्यस्तस्योत्सर्गस्त्यागस्तौ पश्यतां
12254 प्रेक्षावतामिह व्यवहारभूमौ साधु सम्यक् तत्त्वं विचारं विना न ज्ञायते
12255 || ५२ ||
12256
12257 विचाराज्ज्ञायते तत्त्वं तत्त्वाद्विश्रान्तिरात्मनि |
12258 अतो मनसि शान्तत्वं सर्वदुःखपरिक्षयः || ५३ ||
12259
12260 तत्त्वं वस्तुनो नित्यत्वं तत्त्वज्ञानाद्विश्रान्तिर्मनोनैश्चल्यम् | अतो विश्रान्तेः
12261 शान्तत्वमेव सर्वदुःखपरिक्षयः || ५३ ||
12262
12263 सफलतां फलते भुवि कर्मणां
12264 प्रकटतां किल गच्छति उत्तमाम् |
12265 स्फुटविचारदृशैव विचारिता
12266 शमवते भवते च विरोचताम् || ५४ ||
12267
12268 विस्तरोक्तं संक्षिप्योपसंहरति - सफलतामिति | यतः सर्वोपि जनः
12269 स्फुटविचारदृशैव लौकिकवैदिककर्मणां सफलतां फलते निष्पादयति
12270 आत्मतत्त्वस्य उत्तमां वक्ष्यमाणसप्तमभूमिकांतामुत्कृष्यमाणां
12271 प्रकटतां च गाच्छति प्राप्नोति | अतः शमादिसाधनसंपत्तिमते [२]
12272 भवते च तादृशी विचारिता रोचताम् | गच्छति उत्तमामित्यसंधिर्वाक्ये

12273 संहिताया अनित्यत्वात् ॥ ५४ ॥
12274
12275 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मुमुक्षुव्यवहारप्रकरणे
12276 विचारनिरूपणं नाम चतुर्दशः सर्गः ॥ १४ ॥
12277
12278 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे मुमुक्षुव्यवहारप्रकरणे
12279 विचारनिरूपणं नाम चतुर्दशः सर्गः ॥ १४ ॥
12280
12281
12282 पञ्चदशः सर्गः १५
12283
12284 श्रीवसिष्ठ उवाच ।
12285
12286 संतोषो हि परं श्रेयः संतोषः सुखमुच्यते ।
12287 संतुष्टः परमभ्येति विश्राममरिसूदन ॥ १ ॥
12288
12289 वैराग्यकल्पवृक्षस्य च्छायेव सुखशीतलः ।
12290 तृतीयो द्वारपालोऽत्र संतोष उपवर्ण्यते ॥ १ ॥
12291
12292 क्रमप्राप्तं तृतीयद्वारपालं संतोषं वर्णयति - संतोष इत्यादिना ।
12293 वक्ष्यमाणलक्षणः सन्तोष एव परं श्रेयो मोक्षः सुखमितरदपि ।
12294 आयुर्घृतमितिवत्साधने फलाभेदारोपेण स्तुतिः ।
12295 विश्रममात्यन्तिकदुःखविक्षेपनिवृत्तिम् ॥ १ ॥
12296
12297 प। ११०)
12298
12299 संतोषैश्वर्यसुखिनां चिरविश्रान्तचेतसाम् ।
12300 साम्राज्यमपि शान्तानां जरत्तृणलवायते ॥ २ ॥
12301
12302 संतोषलक्षणेनैश्वर्येण प्रभावेन सुखिनाम् । चिरं विश्रान्तमाश्वस्तं
12303 चेतो येषाम् । जरतो जीर्णस्य तृणस्य लवो लेशः स इवाचरति । तुच्छीभवतीत्यर्थः
12304 ॥ २ ॥
12305
12306 संतोषशालिनी बुद्धी राम संसारवृत्तिषु ।
12307 विषमास्वप्यनुद्विग्ना न कदाचन हीयते ॥ ३ ॥
12308
12309 विषमासु दारिद्र्यवियोगादिवैषम्यवतीष्वपि संसारस्थितिषु दैवात्प्रसक्तासु
12310 संतोषशालिनी बुद्धिर्न हीयते । सुखेन न वियुज्यत इत्यर्थः ॥ ३ ॥
12311
12312 संतोषामृतपानेन ये शान्तास्तृप्तिमागताः ।
12313 भोगश्रीरतुला तेषामेषा प्रतिविषायते ॥ ४ ॥
12314
12315 प्रतिकूलविषवदाचरति । तथा भातीत्यर्थः ॥ ४ ॥
12316
12317 न तथा सुखयन्त्येताः पीयूषरसवीचयः ।
12318 यथातिमधुरास्वादः संतोषो दोषनाशनः ॥ ५ ॥
12319
12320 अतिमधुर आनन्दप्रचुर आस्वादोऽनुभवो यस्य । आशादैन्यादिदोषनाशनः ॥ ५ ॥
12321
12322 अप्राप्तवाञ्छामुत्सृज्य संप्राप्ते समतां गतः ।
12323 अदृष्टखेदाखेदो यः स संतुष्ट इहोच्यते ॥ ६ ॥
12324

12325 संतोषमाश्रयलक्षणेन लक्षयति - अप्राप्तेति | प्राप्तेऽपि विषये
12326 मिथ्यात्वादप्राप्तसमतां तत्प्राप्तिनिमित्तहर्षादिराहित्येन
12327 पूर्वावस्थासमतां वा गतः | तत्र हेतुमाह - अदृष्टेति || ६ ||
12328
12329 आत्मनात्मनि संतोषं यावद्याति न मानसम् |
12330 उद्भवन्त्यापदस्तावल्लता इव मनोबिलात् || ७ ||
12331
12332 आत्मना स्वेनैव न निमित्तान्तरेण | आत्मन्येव न विषयान्तरे || ७ ||
12333
12334 संतोषशीतलं चेतः शुद्धविज्ञानदृष्टिभिः |
12335 भृशं विकासमायाति सूर्यांशुभिरिवाम्बुजम् || ८ ||
12336
12337 अम्बुजपक्षे सम्यक् तोषस्तृषानिवृत्तिर्येन तेन जलेन शीतलमाप्यायितम् || ८ ||
12338
12339 आशावैवश्यविवशे चित्ते संतोषवर्जिते |
12340 म्लाने वक्त्रमिवादर्शे न ज्ञानं प्रतिबिम्बति || ९ ||
12341
12342 वैवश्यं पारवश्यं तेन विवशे व्याकुले | म्लाने आदर्शे वक्त्रमिव न
12343 प्रतिबिम्बति व्यक्तीभवति | उपदिष्टमपीत्यर्थः || ९ ||
12344
12345 अज्ञानघनयामिन्या संकोचं न नराम्बुजम् |
12346 यात्यसावुदितो यस्य नित्यं संतोषभास्करः || १० ||
12347
12348 यस्य नराम्बुजस्य विकासायासौ प्रागुक्तः संतोषभास्कर
12349 उदितस्तन्नराम्बुजमज्ञानलक्षणया गाढान्धकाररात्र्या संकोचं न याति ||
12350 १० ||
12351
12352 अकिंचनोऽप्यसौ जन्तुः साम्राज्यसुखमश्नुते |
12353 आधिव्याधिविनिर्मुक्तं संतुष्टं यस्य मानसम् || ११ ||
12354
12355 नाभिवाञ्छत्यसंप्राप्तं भुङ्क्ते यथाक्रमम् |
12356 यः सुसौम्यसमाचारः संतुष्ट इति कथ्यते || १२ ||
12357
12358 प्रागुक्त लक्षणमनूद्य लक्षणान्तरमप्याह - नेति | यथाक्रमं प्राप्तं
12359 सुखं दुःखं च | सौम्यो जगदानन्दनः सम्यगाचार आचरणं यस्य || १२ ||
12360
12361 संतुष्टिपरतृप्तस्य महतः पूर्णचेतसः |
12362 क्षीराब्धेरिव शुद्धस्य मुखे लक्ष्मीर्विराजते || १३ ||
12363
12364 मुखकान्तिविशेषोऽपि तल्लक्षणमित्याह - संतुष्टीति || १३ ||
12365
12366 पूर्णतामलमाश्रित्य स्वात्मन्येवात्मना स्वयम् |
12367 पौरुषेण प्रयत्नेन तृष्णां सर्वत्र वर्जयेत् || १४ ||
12368
12369 स्वात्मन्यात्मनैव पूर्णतां
12370 निरतिशयानन्दरूपतामाश्रित्यानुभवेनावलम्ब्य || १४ ||
12371
12372 संतोषामृतपूर्णस्य शान्तशीतलया धिया |
12373 स्वयं स्थैर्यं मनो याति शीतांशोरिव शाश्वतम् || १५ ||
12374
12375 शीतांशोरिव संतोषलक्षणेनामृतेन पूर्णस्य पुंसः
12376 क्रोधसंतापहेत्वभावाच्छान्ता शीतला च या धीस्तया निमित्तभूतया मनः

शाश्वतं स्थैर्यं याति ॥ १५ ॥

संतोषपुष्टमनसं भृत्या इव महर्द्धयः ।
राजानमुपतिष्ठन्ति किंकरत्वमुपागताः ॥ १६ ॥

विनैव विषयार्जनं संतोषमात्रेण कथं देहयात्रासिद्धिस्तत्राह -
संतोषेति । भृत्या राजानमिव महत्य ऋद्धयः संपद उपतिष्ठन्ति ।
तथाचाहुः - आशाया दासा ये दासास्ते सर्वलोकस्य । आशा दासी येषां
तेषां दासायते लोकः ॥ इति ॥ १६ ॥

आत्मनैवात्मनि स्वस्थे संतुष्टे पुरुषे स्थिते ।
प्रशाम्यन्त्याधयः सर्वे प्रावृषीवाशु पांशवः ॥ १७ ॥

नन्वस्त्वेवं देहयात्रा तथापि देवानामिव मानसं दुःखं दुश्चिकित्स्यं
तत्राह - आत्मनैवेति । पांशवो धूलयः । तालव्या अपि दन्त्याश्च
शम्बशूकरपांशवः इति ॥ १७ ॥

नित्यं शीतलया राम कलङ्कपरिभिन्नया ।
पुरुषः शुद्धया वृत्त्या भाति पूर्णतयेन्दुवत् ॥ १८ ॥

तथापि कारणकलङ्कावरणेन दुःखबीजेन यद्दुःखं तत्स्यादेवेति तत्राह
- नित्यमिति । यथा अमायां क्षीणेन्दुः
कलङ्काद्भेदेनाविभाव्यमानत्वात्कलङ्कमग्न इव भवति
सूर्यसन्निधानाच्च न शीतलया वृत्त्या वर्तते स एव पौर्णमास्यां
कलापूर्णतया कलङ्कस्यापि भासकत्वात्तद्विविक्तया शुद्धया वृत्त्या भाति
तद्वत्पुरुषोऽप्यसंतोषे मोहकलङ्कमग्न इव तापत्रयेण दह्यमान इव भवति
संतोषामृतकलापूर्णस्त्वज्ञानकलङ्कसाक्षित्वात्तदसंस्पृष्टया
स्वात्मसुखशीतलया वृत्त्या भातीत्यर्थः ॥ १८ ॥

समतासुन्दरं वक्त्रं पुरुषस्यावलोकयन् ।
तोषमेति यथा लोको न तथा धनसंचयैः ॥ १९ ॥

समता सर्वत्र संतोषादवैषम्यबुद्धिः ॥ १९ ॥

समतया मतया गुणशालिनां
पुरुषराडिह यः समलंकृतः ।
तमसलं प्रणमन्ति नभश्चरा
अपि महामुनयो रघुनन्दन ॥ २० ॥

तस्य सर्वोत्कृष्टतामाह - समतयेति । नभश्चरा देवा महान्तो मुनयोऽपि
प्रणमन्ति नमस्यन्ति ॥ २० ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मुमुक्षुव्यवहारप्रकरणे
संतोषनिरूपणं नाम पञ्चदशः सर्गः ॥ १५ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे मुमुक्षुव्यवहारप्रकरणे
सन्तोषनिरूपणं नाम पञ्चदशः सर्गः ॥ १५ ॥

प्। १११)

षोडशः सर्गः १६

12429 विशेषण महाबुद्धे संसारोत्तरणे नृणाम्।
12430 सर्वत्रोपकरोतीह साधुः साधुसमागमः ॥ १ ॥
12431
12432 चतुर्थो द्वारपालोऽत्र वर्ण्यते साधुसंगमः।
12433 चतुर्ष्वेकैकसेवापि [कैकमेवापि पुरुषार्थफलेत्यपि इति पाठः]
12434 पुरुषार्थे [पुरुषार्थफलेत्यपि इति पाठः] फलत्यपि ॥ १ ॥
12435
12436 चतुर्थमपि द्वारपालं साधुसमागममुपवर्णयंश्चतुर्ष्वेकैकविषये
12437 पौरुषस्य पुरुषार्थपर्यवसानं दर्शयिष्यन् वसिष्ठ उवाच - विशेषेणेति
12438 । सर्वत्र सर्वावस्थासु ॥ १ ॥
12439
12440 साधुसङ्गतरोर्जातं विवेककुसुमं सितम्।
12441 रक्षन्ति ये महात्मानो भाजनं ते फलश्रियः ॥ २ ॥
12442
12443 फलश्रियो मोक्षफलसंपदो भाजनं भवन्तीति शेषः ॥ २ ॥
12444
12445 शून्यमाकीर्णतामेति मृतिरप्युत्सवायते।
12446 आपत्संपदिवाभाति विद्वज्जनसमागमे ॥ ३ ॥
12447
12448 शून्यं स्वजनधनादिशून्यम्। दुःखस्थानमाकीर्णतां तद्व्याप्तताम् ॥ ३ ॥
12449
12450 हिममापत्सरोजिन्या मोहनीहारमारुतः।
12451 जयत्येको जगत्यस्मिन्साधुः साधुसमागमः ॥ ४ ॥
12452
12453 आपल्लक्षणायाः सरोजिन्याः कमलिन्या हिमं प्रालेयम्। साधुः प्रशस्तः ॥ ४ ॥
12454
12455 परं विवर्धनं बुद्धेरज्ञानतरुशातनम्
12456 [अज्ञानज्वरनाशनम् इति पाठः]।
12457 समुत्सारणमाधीनां विद्धि साधुसमागमम् ॥ ५ ॥
12458
12459 बुद्धेर्विवेकज्ञानस्य विशेषेण वर्धनम्। शातनं विशरणकरणम् ॥ ५ ॥
12460
12461 विवेकः परमो दीपो जायते साधुसंगमात्।
12462 मनोहारोज्ज्वलो नूनमासेकादिव गुच्छकः ॥ ६ ॥
12463
12464 मनोहरश्चासावुज्ज्वलो निर्मलश्च। आरामासेकाद्गुच्छकः पुष्पफलगुच्छः
12465 ॥ ६ ॥
12466
12467 निरपायां निराबाधां निर्वृतिं नित्यपीवरीम्।
12468 अनुत्तमां प्रयच्छन्ति साधुसङ्गविभूतयः ॥ ७ ॥
12469
12470 नित्यपीवरीं नित्यं वर्धमानां नित्यामपरिच्छिन्नामिति वा। निर्वृतिं सुखम्
12471 ॥ ७ ॥
12472
12473 अपि कष्टतरां प्राप्तैर्दशां विवशतां गतैः।
12474 मनागपि न संत्याज्या मानवैः साधुसंगतिः ॥ ८ ॥
12475
12476 मनाक् ईषदपि। क्षणमपीति यावत् ॥ ८ ॥
12477
12478 साधुसंगतयो लोके सन्मार्गस्य च दीपिकाः।
12479 हार्दान्धिकारहारिण्यो भासो ज्ञानविवस्वतः ॥ ९ ॥
12480

12481 सन्मार्गस्य सदाचारस्य दीपिका यावदज्ञाननिशानुवृत्तिस्तावत् ।
12482 तदुत्तरकालं तु ज्ञानरूपस्य सूर्यस्य भासः प्रकाशाः ॥ ९ ॥
12483
12484 यः स्नातः शीतसितया साधुसंगतिगङ्गया ।
12485 किं तस्य दानैः किं तीर्थैः किं तपिभिः किमध्वरैः ॥ १० ॥
12486
12487 शीतसितयेति तापमालिन्यक्षयलाभाय विशेषणे । अध्वरैर्यज्ञैः ॥ १० ॥
12488
12489 नीरागाश्छिन्नसंदेहा गलितग्रन्थयोऽनघ ।
12490 साधवो यदि विद्यन्ते किं तपस्तीर्थसंग्रहैः ॥ ११ ॥
12491
12492 ग्रन्थिः अन्तःकरणतद्धर्मतादात्म्यसंसर्गाध्यासलक्षणश्चिदचिद्ग्रन्थिः
12493 ॥ ११ ॥
12494
12495 विश्रान्तमनसो धन्याः प्रयत्नेन परेण हि ।
12496 दरिद्रेणेव मणयः प्रेक्षणीया हि साधवः ॥ १२ ॥
12497
12498 अलभ्यलाभतया मणय इव ॥ १२ ॥
12499
12500 सत्समागमसौन्दर्यशालिनी धीमतां मतिः ।
12501 कमलेवाप्सरोवृन्दे सर्वदैव विराजते ॥ १३ ॥
12502
12503 कमला लक्ष्मीस्तत्पक्षे सता विष्णुना समागमः सर्वोत्कृष्टं सौन्दर्यं च ।
12504 नह्येते तत्सोदर्याणामप्यप्सरसां [महत्सोदर्याणां इति पाठः] स्तः
12505 ॥ १३ ॥
12506
12507 तेनामलविचारस्य पदस्याग्रावचूलिता ।
12508 प्रथिता येन धन्येन न त्यक्ता साधुसंगतिः ॥ १४ ॥
12509
12510 पदस्य ब्रह्मात्मवस्तुनश्चूडामणिस्थानीयस्य बहूनां तत्प्राप्त्यै
12511 यतमानानां मध्ये अग्रावचूलिता प्रथमं तत्प्राप्त्या शिरोभूषणीकरणम् ।
12512 प्रथिता प्रख्यापिता । चूडायामवतंसनमवचूडः ।
12513 मयूरव्यसकादित्वात्समासस्तत्करोतीति णिचि ताच्छीलिकणिन्यन्ताद्भावे तल् ।
12514 डलयोरभेदाल्लत्वम् ॥ १४ ॥
12515
12516 विच्छिन्नग्रन्थयस्तज्ज्ञाः साधवः सर्वसंमताः ।
12517 सर्वोपायेन संसेव्यास्ते ह्युपाया भवाम्बुधौ ॥ १५ ॥
12518
12519 सर्वोपायेन दानमानसेवनादिसर्वप्रयत्नेन । उपायास्तरणोपायाः ॥ १५ ॥
12520
12521 त एते नरकाग्नीनां संशुष्केन्धनतां गताः ।
12522 यैर्दृष्टा हेलया सन्तो नरकानलवारिदाः ॥ १६ ॥
12523
12524 यैः सन्तो हेलयापि न दृष्टास्ते नरकाग्नीनामिन्धनानि पोषका भवन्ति ।
12525 हेलया अनादरेण । नरकलक्षणस्यानलस्य वारिदा मेघा इव प्रशमनहेतवः
12526 ॥ १६ ॥
12527
12528 दारिद्र्यं मरणं दुःखमित्यादिविषयो भ्रमः ।
12529 संप्रशाम्यत्यशेषेण साधुसंगमभेषजैः ॥ १७ ॥
12530
12531 भ्रमः सन्निपातः । अशेषेण मूलोच्छेदेन ॥ १७ ॥
12532

संतोषः साधुसङ्गश्च विचारोऽथ शमस्तथा |
एत एव भवाम्भोधावुपायास्तरणे नृणाम् || १८ ||

सर्वान्द्वारपालान्युगपत्प्रशिशंसिषुरनुवदति - संतोष इति || १८ ||

संतोषः परमो लाभः सत्सङ्गः परमा गतिः |
विचारः परमं ज्ञानं शमो हि परमं सुखम् || १९ ||

सर्वत्र फलाभेदारोपः || १९ ||

चत्वार एते विमला उपाया भवभेदने |
यैरभ्यस्तास्त उत्तीर्णा मोहवारिभवार्णवात् || २० ||

मोह एव वारि यस्मिंस्तथाविधद्भवार्णवात् || २० ||

एकस्मिन्नेव वै तेषामभ्यस्ते विमलोदये |

सर्वाभ्यासासामर्थ्ये

फ़ोलिओ ११२ - ११३ इस् उन्क्लेअर्

प्। ११४)

दधात्येवं जगच्छब्दरूपार्थमसदात्मकम् |
तरङ्गोत्पलमालाभं दृष्टनृत्यमिवोत्थितम् || २४ ||

असदात्मकं सत् जगच्छब्दस्य गच्छति विचारे न तिष्ठतीति जगदित्यनुरूपार्थं
धत्ते संपादयति | तरङ्गेषु उत्पलमाला भ्रान्तिकल्पिता | पूर्वदृष्टं
नृत्यं स्मर्यमाणं मनस्युत्थितमिव || २४ ||

चक्रचीत्कारपूर्णस्य जलराशिमिवोद्यतम् |
शीर्णपत्रं भ्रष्टनष्टं ग्रीष्मे वनमिवारसम् || २५ ||

चक्रश्चक्रवाकः | मुखसंबन्धिवायुयुक्तस्तुषारसमूहश्चीत्कारः | यथा
उत्तानशायिनः पुरुषस्य कवेर्वा चक्रवाकचीत्कारेण पूर्णस्य नभसो दर्शने
उद्यतं उत्प्रेक्षितं जलराशिं सर इव | शीर्णपत्रमरसं शुष्कं निःसारं च
| अत एव भ्रष्टं छायाशोभादिभिर्नष्टं फलादिसमृद्धिरहितम् || २५ ||

मरणव्यग्रचित्ताभं शिलागृहगुहास्पदम् |
अन्धकारगुहैकैकनृत्तमुन्मत्तचेष्टितम् || २६ ||

मरणे व्यग्राणां चित्तं भ्रान्तिमूर्च्छोन्मुखमस्थिरं च प्रसिद्धम् |
शिलानां गृहाः पर्वतास्तेषां गुहास्थानमिव सान्धकारशून्यभीषणम् |
सान्धकारगुहास्वेकैकनृत्तमिवोन्मत्तचेष्टितप्रायम् || २६ ||

प्रशान्ताज्ञाननीहारं विज्ञानशरदम्बरम् |
समुत्कीर्णमिव स्तम्भे चितं [चित्तभित्ताविव इति पाठः]
भित्ताविवोदितम् || २७ ||

परमार्थतस्तु प्रशान्ता ज्ञाननीहारं विज्ञानशरदम्बरं च |
सम्यगुत्कीर्णं टङ्कच्छेदादिना कल्पितं प्रतिमाद्याकारमिव || २७ ||

12585 पङ्कादिवाभिरचितं सचेतनमचेतनम् |
12586 ततः स्थितिप्रकरणं चतुर्थं परिकल्पितम् || २८ ||
12587
12588 मृत्पङ्काभिरचितचेतनाचेतनाकारं परमार्थतो
12589 मृन्मात्रस्वभावमिवाधिष्ठानपृथक्सत्ताशून्यं जगदुत्पन्नमिति
12590 बुध्यते श्रोत्रेत्यर्थः [श्रोतेत्यर्थः इति पाठः] |
12591 ततस्तस्मादुत्पत्तिप्रकरणादनन्तरम् || २८ ||
12592
12593 त्रीणि ग्रन्थसहस्राणि व्याख्यानाख्यायिकामयम् |
12594 इत्थं जगदहंभावरूपस्थितिमुपागतम् || २९ ||
12595
12596 व्याख्यानं प्रपञ्चतदधिष्ठानतत्त्वस्थितिव्युत्पादनमाख्यायिकाः
12597 कथास्तत्प्रचुरम् | तदेवाह - इत्थमित्यादिभिश्चतुर्भिरर्धैः | ब्रह्मैव
12598 द्रष्टृदृश्यक्रमं प्रकर्षेण रूढं स्वीकुर्वत्सत् इत्थं
12599 वर्ण्यमानप्रकारेण जगद्भावरूपेणाहंभावरूपेण च
12600 भोक्तृभोग्यलक्षणेन कर्तृत्वसंतानितेन स्थितिमुपागतमिति अत्र
12601 स्थितिप्रकरणे कीर्तितमित्युत्तरेणान्वयः || २९ ||
12602
12603 द्रष्टृदृश्यक्रमं प्रौढमित्यत्र परिकीर्तितम् |
12604 दशदिङ्मण्डलाभोगभासुरोऽयं जगद्भ्रमः || ३० ||
12605
12606 इत्थमभ्यागतो वृद्धिमिति तत्रोच्यते चिरम् |
12607 उपशान्तिप्रकरणं ततः पञ्चसहस्रकम् || ३१ ||
12608
12609 वृद्धिग्रहणं विपरिणामस्याप्युपलक्षणम् |
12610 चिरमनादिकालादारभ्याऽभ्यागतोऽस्ति || ३१ ||
12611
12612 पञ्चमं पावनं प्रोक्तं युक्तिसंततिसुन्दरम् [मुनिसंतति इति
12613 पाठः] |
12614 इदं जगदहं त्वं च स इति भ्रान्तिरुत्थिता || ३२ ||
12615
12616 इत्थं संशाम्यतीत्यस्मिन्कथ्यते श्लोकसंग्रहैः |
12617 उपशान्तिप्रकरणे श्रुते शाम्यति संसृतिः || ३३ ||
12618
12619 संशाम्यति जीवन्मुक्तिक्रमेणोपक्षीणं सल्लेशतोऽवशिष्यत
12620 इत्यस्मिन्नुपशान्तिप्रकरणे कथ्यते | लेशतोऽवशेषमेव
12621 तच्छ्रवणफलकीर्तनमुखेन [फलानुकीर्तन इति पाठः] स्फुटयति
12622 - उपशान्तीत्यादि - सौम्यवारिसरित्समेत्यन्तेन || ३३ ||
12623
12624 प्रभ्रष्टचित्रसेनेव किंचिल्लभ्योपलम्भना |
12625 शतांशशिष्टा भवति संशान्तभ्रान्तरूपिणी [भ्रान्तिरूपिणी इति
12626 पाठः] || ३४ ||
12627
12628 प्रभ्रष्टा विशीर्णप्राया चित्रलिकितसेनेव || ३४ ||
12629
12630 अन्यसंकल्पचित्तस्था नगरश्रीरिवासती |
12631 अलभ्यवस्तुपार्श्वस्थस्वप्नयुद्धचिरारवा || ३५ ||
12632
12633 तत्राप्युत्तरोत्तरभूमिकाजये अपक्षयप्रकर्षाल्लक्ष्यालक्ष्यसंस्कारमात्रेण
12634 परिशेषं दृष्टान्तैराह - अन्येत्यादिना |
12635 परकीयसंकल्पनिर्मितत्वात्तच्चित्तस्था | न लभ्यं वस्तु धनादि याभ्यां
12636 तथाविधौ संकल्पयितृपुरुषपार्श्वस्थपुरुषान्तरस्य स्वप्नयुद्धचिरारवौ

12637 यस्यां तथाविधा नगरश्रीरिव। मिथ्यात्वेन तुल्ययोरपि
12638 परकीयक्रियाशब्दयोरविषयीभूतेति यावत्। सा यथा स्वप्नद्रष्टृदृशा
12639 किंचित्स्फुटलक्ष्या संकल्पयितुर्दृशा तु ईषल्लक्ष्याप्यसती स्वत एव शाम्यति
12640 तद्वदित्यर्थः॥ ३५॥
12641
12642 शान्तसंकल्पमत्ताभ्रभीषणाशनिशब्दवत्।
12643 विस्मृतस्वप्नसंकल्पनिर्माणनगरोपमा॥ ३६॥
12644
12645 ततोऽप्युपशान्तिप्रकरणे अलक्ष्यावस्थया परिशेषे शान्तेत्यादि नव
12646 दृष्टान्ताः। शान्त उपरतो यह् संकल्पस्तेन कल्पितस्य
12647 मत्तगजवन्निरङ्कुशस्याभ्रस्य भीषणः अशनिशब्दः स्फूर्जथुस्तद्वत्।
12648 विस्मृतं स्वप्नेन संकल्पेन वा निर्माणं यस्य नगरस्य तदुपमा॥ ३६॥
12649
12650 भविष्यन्नगरोद्यानप्रसूवन्ध्यामलाङ्गिका
12651 [नगरोद्यानसोत्सवश्यामलात्मिकाः इति पाठः]।
12652 तस्या [नश्यज्जिह्वोच्यमान इति पाठः]
12653 जिह्वोच्यमानोग्रकथार्थानुभवोपमा॥ ३७॥
12654
12655 भविष्यतो नगरस्योद्याने प्रसूयते या वन्ध्या तद्वदमलं निर्मलं
12656 शून्यमेवाङ्गं स्वरूपं यस्यास्तस्या वन्ध्याया जिह्वया उच्यमाना ये उग्रा
12657 वीररसाद्युपेताः स्वपुत्रयुद्धादिकथार्थाः॥ ३७॥
12658
12659 अनुल्लिखितचित्रस्य चित्रव्याप्तेव भित्तिभूः।
12660 परिविस्मर्यमाणार्थकल्पनानगरीनिभा॥ ३८॥
12661
12662 सर्वर्तुमदनुत्पन्नवनस्पन्दास्फुटाकृतिः।
12663 भाविपुष्पवनाकारवसन्तरसरञ्जना॥ ३९॥
12664
12665 अनुत्पन्नवनस्पन्द [स्पंदन इति पाठः] इव
12666 अस्फुटाकृतिरलक्ष्याकारा। वसन्तेनेव रसरञ्जना यस्याः॥ ३९॥
12667
12668 अन्तर्लीनतरङ्गौघसौम्यवारिसरित्समा।
12669 निर्वाणाख्यं प्रकरणं ततः षष्ठमुदाहृतम्॥ ४०॥
12670
12671 सौम्यं निश्चलत्वात्प्रसन्नम्॥ ४०॥
12672
12673 शिष्टो ग्रन्थः परीमाणं तस्य ज्ञानमहार्थदः।
12674 बुद्धे तस्मिन्भवेच्छ्रेयो निर्वाणं शान्तकल्पनम्॥ ४१॥
12675
12676 शिष्टः द्वात्रिंशत्सहस्रमध्ये परिगणितसार्धसप्तदशसहस्रावशिष्टः।
12677 सार्धचतुर्दशसहस्रमिति यावत्। मूलाविद्योच्छेदाच्छान्ताः सर्वकल्पना
12678 यस्मिन्॥ ४१॥
12679
12680 प्। ११५)
12681
12682 अचेत्यचित्प्रकाशात्मा विज्ञानात्मा निरामयः।
12683 परमाकाशकोशाच्छः शान्तसर्वभवभ्रमः॥ ४२॥
12684
12685 श्रोता अकलेवर इत्यन्तेन वर्ण्यमानस्वभावो भवेदित्यन्वयः। अचेत्यो
12686 निर्विषयः। अत एव निरामयः॥ ४२॥
12687
12688 निर्वापितजगद्यात्रः कृतकर्तव्यसुस्थितः।

समस्तजनतारम्भवज्रस्तम्भो नभोनिभः ॥ ४३ ॥

यथा वज्रमणिस्तम्भः स्वप्रतिबिम्बितसमस्तजनतामविकृत एवारभते
जनतातत्समारम्भाणां चाधारस्तद्वत् ॥ ४३ ॥

विनिगीर्णयथासंख्यजगज्जालातितृप्तिमान् ।
आकाशीभूतनिःशेषरूपालोकमनस्कृतिः ॥ ४४ ॥

विनिगीर्णैर्यथाप्रसिद्धसंख्यैर्जगज्जालैरिव अतितृप्तिमानित्युत्प्रेक्षा ।
रूपालोको बाह्येन्द्रियैर्भोगः मनस्कृतिर्मानसः ॥ ४४ ॥

कार्यकारणकर्तृत्वहेयादेयदृशोज्झितः ।
सदेह इवनिर्देहः ससंसारोऽप्यसंसृतिः ॥ ४५ ॥

कार्यकारणकर्तृत्वे आधिभूताध्यात्मिकाधिदैवरूपे
स्वीकारपरित्यागदृशा ॥ ४५ ॥

चिन्मयो घनपाषाणजठरापीवरोपमः ।
चिदादित्यस्त&ल्लोकानन्धकारोपरोपमम् ॥ ४६ ॥

घनं पाषाणजठरमिवापीवरं निश्छिद्रं पूर्णमन्यदप्युपमा यस्य ।
चिदादित्यः स्वाज्ञानपरिकल्पितान् लोकान् स्वाकारवृत्तीद्धेन स्वालोकेन तपन्
परप्रकाशरूपोऽपि दृश्याभावादेव तत्प्रथाविषये अन्धकारोपरोपमं
रलयोरभेदाद्धनीभूतान्धकारोपलसदृशं परमान्ध्यमिवागत इति
परेणान्वयः ॥ ४६ ॥

परप्रकाशरूपोऽपि परमान्ध्यमिवागतः ।
रुद्धसंसृतिदुर्लीलः प्रक्षीणाशाविषूचिकः ॥ ४७ ॥

नष्टाहंकारवेतालो देहवानकलेवरः ।
कस्मिंश्चिद्रोमकोट्यग्रे तस्येयमवतिष्ठते ।
जगल्लक्ष्मीर्महामेरोः पुष्पे क्वचिदिवालिनी ॥ ४८ ॥

देहवानकलेवर इति । तथाच श्रुतिः अशरीरं शरीरेष्वनवस्थेष्ववस्थितम् ।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति इति ।
जगतस्तत्साक्षात्कारबाध्यत्वमुक्तं संभावयितुं तस्य
जगत्कल्पनाधिष्ठानत्वेनापरिच्छिन्नत्वमाह - कस्मिंश्चिदित्यादिना ।
रोमकोटिवत्परिच्छिन्नाविद्याया अप्यग्रे एकदेशे जगल्लक्ष्मीरवतिष्ठते । तथाच
श्रुतिः पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि इति । स्मृतिश्च
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितोजगत् इति ॥ ४८ ॥

परमाणौ परमाणौ चिदाकाशः स्वकोटरे ।
जगल्लक्ष्मीसहस्राणि धत्ते कृत्वाथ पश्यति ॥ ४९ ॥

नन्वविस्तृतदेशे कथमतिविस्तृतजगद्धानमित्याशङ्का दर्पणोदरे
साभ्रग्रहनक्षत्रव्योमसमावेशदर्शनान्नाज्ञानस्यास्ति
दुष्करमित्यभिप्रेत्याह - परमाणाविति । स्वकोटरे स्वान्तःकल्पिताकाशे ।
चिदाकाशस्य इति पाठे अर्थाच्चिदाकाश एव धत्ते पश्यति च । अथशब्दः
समुच्चये ॥ ४९ ॥

विततता हृदयस्य महामते-
र्हरिहराञ्जजलक्षशतैरपि ।

तुलनमेति न मुक्तिमतो यतः
प्रविततास्ति निरुत्तमवस्तुनः ॥ ५० ॥

महामतेर्जीवन्मुक्तस्य हृदयं परमात्मैव तस्य वितता विस्तीर्णता
हरिहरादीनां लक्षशतैरपि तुलनमियत्तापरिच्छेदं [इयत्तां परिच्छेदं
इति पाठः] नैति। तत्किं तेषामसामर्थ्यात्। न। यतो यस्माद्धेतोर्न विद्यते
उत्तममुत्कृष्टतमं सत्तया आनन्त्येनानन्दस्वाभाव्येन च
यस्मात्तथाविधस्यात्मवस्तुनः सा प्रवितता अपरिच्छिन्नता परमार्थत एवास्ति
न त्वाकाशादीनामिव द्रष्टृपुरुषाशक्तिकल्पितेत्यर्थः ॥ ५० ॥

इत्यार्षे श्रीवसिष्ठमहारामायणे वाल्मीकीये मुमुक्षुव्यवहारप्रकरणे
ग्रन्थसंख्यादिवर्णनं नाम सप्तदशः सर्गः ॥ १७ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे मुमुक्षुव्यवहारप्रकरणे
ग्रन्थसंख्यादिवर्णनं नाम सप्तदशः सर्गः ॥ १७ ॥


अष्टादशः सर्गः १८

श्रीवसिष्ठ उवाच।
अस्यां वा चित्तमात्रायां प्रबोधः संप्रवर्तते।
बीजादिव सतो व्युप्तादवश्यंभावि सत्फलम् ॥ १ ॥

एतद्ग्रन्थगुणा मुख्यामुख्यैरप्यानुषङ्गिकैः।
फलैः सह निरूप्यन्ते ग्राह्यांशाश्चोपमास्विह ॥ १ ॥

इत्थं प्रकरणभेदं विषयप्रयोजनाभ्यामुपवर्ण्य
समग्रग्रन्थगुणान्वर्णयंस्तत्र तत्र दृष्टान्तोपन्यासेषु ग्राह्यांशं
तात्पर्यं च ग्रंथशैलीपरिज्ञानाय वक्तुमुपक्रमते - अस्यामित्यादिना।
अस्यां षट्प्रकरणीरूपायां मोक्षोपायसंहितायां
सतोऽनुपहतशक्तेर्व्युप्ताद्विशिष्टक्षेत्रकाले उप्तादवश्यंभावि सत्फलं
यथा प्रवर्तते तद्वत् ॥ १ ॥

अपि पौरुषमादेयं शास्त्रं चेद्युक्तिबोधकम्।
अन्यत्त्वार्षमपि त्याज्यं भाव्यं न्याय्यैकसेविना ॥ २ ॥

ननु सतीष्वनेकशाखाभेदभिन्नासु श्रुतिषु ता विहाय
पुरुषबुद्धिविरचितमिदमेवोपादेयतया किमर्थमुच्यते तत्राह - अपीति।
युक्तिभिर्बोधकं तत्त्वनिर्णायकम्। ऋषिर्वेदस्तत्र भवमार्षम्।
न्यायादनपेतं न्याय्यं तदेव मुख्यमित्यनुसरता भाव्यम् पुरुषेणेत्यर्थः
। यद्यपि श्रुतयोऽभ्यर्हितास्तथापि गूढाभिसंधित्वात्सहसा नानुभवायालमिति
न साधारणाधिकारिभिरुपादेयाः। तत्साराभिज्ञानुभवमूलकयुक्तिघटितं
त्विदं शास्त्रं स्फुटाभिसन्धित्वा

फ़ोलिओ ११६ - ११७ इन् उन्क्लेअर्

प्। ११८)

यथेदं श्रूयते चास्त्रं तामापातनिकां शृणु।
विचार्यते यथार्थोऽयं यथा च परिभाषया ॥ ४९ ॥

आपातनं शास्त्रवतारस्तदुपायोऽवधारणरूप आपातनिका ताम्। यथा येन

12793 दृष्टान्तेन। परिभाषया उपक्रमोपसंहारादिरूपया
12794 [आदिग्रहणादभ्यासोऽपूर्वताफलं अर्थवाद उपपत्तिश्च ग्राह्याः]
12795 तत्तद्बोधोपयोगिसंकेतेन च यथा श्रूयते ताम्॥ ४९॥
12796
12797 येनेहाननुभूतेऽर्थे दृष्टेनार्थेन बोधनम्।
12798 बोधोपकारफलदं तं दृष्टान्तं विदुर्बुधाः॥ ५०॥
12799
12800 तत्र दृष्टान्तस्य लक्षणमाह - येनेति। दृष्टेनार्थेन साधर्म्येण
12801 बोध्यते येन तद्बोधनम्। तदेव विवृणोति - बोधोपकारफलदमिति।
12802 दृष्टः अन्तः सादृश्यबलेन प्रकृतार्थनिर्णयो येन स दृष्टान्त इति
12803 तदर्थज्ञा बुधाः॥ ५०॥
12804
12805 दृष्टान्तेन विना राम नापूर्वार्थोऽवबुध्यते।
12806 यथा दीपं विना रात्रौ भाण्डोपस्करणं गृहे॥ ५१॥
12807
12808 अपूर्वार्थोऽदृष्टार्थोऽद्भुतार्थो वा। उपस्करणं गुणवदुपकरणम्।
12809 उपात्प्रतियत्न -इति सुट्॥ ५१॥
12810
12811 यैर्यैः काकुत्स्थ दृष्टान्तैस्त्वं मयेहावबोध्यसे।
12812 सर्वे सकारणास्ते हि प्राप्यन्तु सदकारणम्॥ ५२॥
12813
12814 दृष्टान्तेषु विवक्षितसादृश्यविवेकाय हेयांशं दर्शयति - यैरिति।
12815 सकारणा जन्या अत एवानृताश्च। ज्ञेयं तु सत्परमार्थसत्यमकारणं
12816 नित्यम्। मिथ्याभूतैरेव मृत्सुवर्णाद्युपादानैर्दृष्टान्तैः सद्ब्रह्म
12817 कारणं बोध्यते। तथाच जन्यत्वानृतत्वादयो दृष्टान्तधर्मा हेया
12818 इत्यर्थः॥ ५२॥
12819
12820 उपमानोपमेयानां कार्यकारणतोदिता।
12821 वर्जयित्वा परं ब्रह्म सर्वेषामेव विद्यते॥ ५३॥
12822
12823 परब्रह्मदृष्टान्तेष्वेवायं नियमो नान्यदृष्टान्तेष्वित्याह -
12824 उपमानेति। कार्यकारणता कार्यत्वकारणत्वादिना सादृश्यमुदिता पूर्वोक्ता।
12825 अयमर्थः - यथा विचारादिभिर्बिम्बग्राहकं ज्ञानमुत्पद्यत इत्युच्यते
12826 तथा ज्ञानाद्बिम्बमुत्पद्यते इति न वक्तव्यं ब्रह्मण
12827 उत्पत्तेर्वक्तुमशक्यत्वात्॥ ५३॥
12828
12829 ब्रह्मोपदेशे दृष्टान्तो यस्तवेह हि कथ्यते।
12830 एकदेशसधर्मत्वं तत्रान्तः परिगृह्यते॥ ५४॥
12831
12832 वर्जयित्वा परं ब्रह्मेत्युक्तं विस्पष्टयति - ब्रह्मेति।
12833 एकदेशसधर्मत्वमादाय तत्रान्तःप्रकृतनिर्णयः। अयं भावः -
12834 जगद्विवर्तब्रह्माधिष्ठानबोधने
12835 भुजङ्गविवर्ताधिष्ठानबोधकरज्जुदृष्टान्तस्याधिष्ठानविवर्तांशमात्र्
12836 एण दृष्टान्तत्वं न तु दार्ष्टान्तिकनित्यत्वसुखित्वादिसर्वांशेन॥ ५४॥
12837
12838 यो यो नामेह दृष्टान्तो ब्रह्मतत्त्वावबोधने।
12839 दीयते स स बोद्धव्यः स्वप्नजातो [स्वप्नदृष्टजगतः]
12840 जगद्गतः॥ ५५॥
12841
12842 ननु किमित्येकदेशे स दृष्टान्त एवोपादियत इति चेत्
12843 सर्वांशसादृश्याप्रसिद्धेरेवेत्यभिप्रेत्याह - यो य इति। स्वप्नजात इव
12844 मिथ्याभूतो जगदन्तर्गत एव न वास्तवः।

12845 द्वितीयपरमार्थसच्चिदानन्दवस्त्वप्रसिद्धेरिति भावः ॥ ५५ ॥
12846
12847 एवं सति निराकारे ब्रह्मण्याकारवान्कथम् ।
12848 दृष्टान्त इति नोद्यन्ति मूर्खवैकल्पिकोक्तयः ॥ ५६ ॥
12849
12850 वैकल्पिका विकल्पोद्भूता उक्तयः । ब्रह्म सद्वितीयमद्वितीयं वा । सद्वितीयं
12851 चेदपसिद्धान्तः । अद्वितीयं चेद्गुरुशास्त्राद्यभावाज्ज्ञानानुत्पत्तिः । एवं
12852 विकल्पोक्तयो नोद्यन्ति ॥ ५६ ॥
12853
12854 अन्यासिद्धविरुद्धादिदृग्दृष्टान्तप्रदूषणैः ।
12855 स्वप्नोपमत्वाज्जगतः समुदेति न किंचन ॥ ५७ ॥
12856
12857 एतेन दृष्टान्तोपन्यासस्यानुमानोन्नयनेन बोधकत्वे
12858 दृष्टान्तहेतुव्याप्त्यादेरनृतत्वे व्याप्यत्वासिद्धिः स्वरूपासिद्धिरित्यादयः
12859 प्रापञ्चिकैर्हेतुभिः सत्यत्वादिसाधने विरुद्धत्वादयश्च
12860 हेत्वाभासताप्रयोजकदोषाः स्युरिति तार्किकप्रत्यवस्थानस्याप्यवसरो निरस्त
12861 इत्याह - अन्येति । अन्येषामसिद्धविरुद्धादिदोषदृशां तार्किकाणां
12862 दृष्टान्तप्रदूषणैर्दूष्यस्य हेत्वादेर्जगतः स्वप्नोपमत्वाद्वस्तुनि न
12863 किंचिद्दूषणं समुदेतीत्यर्थः । साध्यसिद्धिपर्यन्तं
12864 बोध्यबोधकव्यवहारस्तु व्यावहारिकसत्यतामात्रेणाप्युपपन्न इति भावः ॥
12865 ५७ ॥
12866
12867 अवस्तु पूर्वापरयोर्वर्तमाने विचारितम् ।
12868 यथा जाग्रत्तथा स्वप्नः सिद्धमाबालमागतम् ॥ ५८ ॥
12869
12870 उक्तं स्वप्नोपमत्वं तत्साधर्म्यप्रदर्शनेनोपपादयति - अवस्त्विति ।
12871 पूर्वापरयोरुत्पत्तिविनाशपूर्वोत्तरकालयोरवस्तु अभावग्रस्तं
12872 वर्तमानकालेऽपि उपादानाद्भेदाभेदसत्तया अविचारितं विचार्य
12873 वादिसहस्रेणापि निर्णेतुमशक्यम् । वर्तमानकाले तु विचारितं सदवस्त्विति वा ।
12874 यथा जाग्रद्वस्तु तथा स्वप्नोऽपीति मिथ्यात्वेन साम्यमित्यर्थः ॥ ५८ ॥
12875
12876 स्वप्नसंकल्पनाध्यानवरशापौषधादिभिः ।
12877 यथार्था इह दृष्टान्तास्तद्रूपत्वाज्जगत्स्थितेः ॥ ५९ ॥
12878
12879 ननु प्रातिभासिकसत्तावता स्वप्नेन कथं व्यावहारिकसत्तातुल्यतेति
12880 चेत्परस्परहेतुफलभावदर्शनाल्लौकिकाचाराच्च तुल्यतेत्याह - स्वप्नेति ।
12881 जाग्रति कार्याकार्यत्वेन संदिग्धयात्रादौ देवताप्रार्थनादिना शयानस्य
12882 स्वप्ने कार्यमिति संकल्पोदये तथा चिन्तने
12883 चिन्तनोपलक्षितचिरकालपूजामन्त्रजपस्तुत्यादिना तदनुकूलवरलाभे शत्रूणां
12884 मुनिशापादिदर्शनेन वा प्रातर्यात्रादिकरणे [करणेन इति पाठः]
12885 शत्रुजयादिदर्शनात् स्वाप्नौषधलाभेन जागरे रोगशान्तिदर्शनाच्च
12886 तत्साम्येन सर्वजगत्स्थितेरपि तद्रूपत्वात्स्वप्नदृष्टान्ता यथार्थाः ॥ ५९ ॥
12887
12888 मोक्षोपायकृता ग्रन्थकारेणान्येऽपि ये कृताः ।
12889 ग्रन्थास्तेष्वियमेवैका व्यवस्था बोध्यबोधने ॥ ६० ॥
12890
12891 मोक्षोपायकृता वाल्मीकिना अन्येऽपि पूर्वरामायणादयो ये ग्रन्थाः
12892 कृतास्तेष्वपि दृष्टान्तानां संभवदंशसाम्यबोधने व्यवस्था
12893 प्रसिद्धेत्यर्थः ॥ ६० ॥
12894
12895 स्वप्नाभत्वं च जगतः श्रुते शास्त्रेऽवबोध्यते ।
12896 शीघ्रं न पार्यते वक्तुं वाक्किल क्रमवर्तिनी ॥ ६१ ॥

ननु तर्हि श्रोतारः स्वप्नसाम्यमुक्तं कुतः सहसैव न बुध्यन्ते कुतो वा
विप्रतिपद्यन्ते इत्याशङ्क्याध्यात्मशास्त्रश्रवणसंस्काराभावेन
जगत्सत्यताभ्रमादित्याह - स्वप्नाभत्वमिति। वक्तुं बोधयितुम्। पार्यते
शक्यते। श्रोतृणां विरोधिसंस्कारोच्छेदस्य चिरसाध्यत्वादिति भावः॥ ६१॥

प्। ११९)

स्वप्नसंकल्पनाध्याननगराद्युपमं जगत्।
यतस्त एव दृष्टान्तास्तस्मात्सन्तीह नेतरे॥ ६२॥

ध्यानेऽपि नगरकल्पनं मानसपूजायां प्रसिद्धम्॥ ६२॥

अकारणे कारणता यद्बोधायोपमीयते।
न तत्र सर्वसाधर्म्यं संभवत्युपमाश्रमैः॥ ६३॥

यदि जगति स्वप्नाद्युपमाने सर्वांशेऽपि साधर्म्यं विवक्षितं तर्हि
ब्रह्मण्यपि कटकमुकुटाद्युपादानस्वर्णदृष्टान्ते तद्वदेव परिणामिता
कुतो न विवक्ष्यते तत्राह - अकारणे इति। तदेतद्ब्रह्मापूर्वमनपरं
एकमेवाद्वितीयम् इत्यादिश्रुतिभिश्चितिशक्तिरपरिणामिन्यप्रतिसंक्रमाशुद्धा
चानन्ता च। अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते
इत्यादिस्मृतिभिरसङ्गोदासीनस्य परिणामहेतुत्वासंस्पर्शाच्चितो
जाड्याकाराघटनाच्चेत्यादियुक्तिभिश्च परिणामाघटनादकारणे अपरिणामिनि
यत् यत्र परिणामि स्वर्णादिवत् करणतोपमीयते तत्रोपमाप्रयुक्तैः श्रमैः
प्रयत्नैरपि सर्वांशे साधर्म्यं न लब्धुं शक्यमित्यर्थः॥ ६३॥

उपमेयस्योपमानादेकांशेन सधर्मता।
अङ्गीकार्यावबोधाय धीमता निर्विवादिना॥ ६४॥

तदेव स्पष्टमाह - उपमेयस्येति॥ ६४॥

अर्थावलोकने दीपादाभामात्राद्दते किल।
न स्थानतैलवर्त्यादि किंचिदव्युपयुज्यते॥ ६५॥

लोकेऽपि मणिर्दीप इवेक्ष्यत इत्यादौ नाविवक्षितांशसादृश्यबोधो दृष्ट
इत्याह - अर्थेति द्वाभ्याम्। श्लोकद्वयस्य यथाश्रुतार्थो वा स्पष्टः।
आभामात्रात्प्रकाशमात्रात्॥ ६५॥

एकदेशसमर्थत्वादुपमेयावबोधनम्।
उपमानं करोत्यङ्ग दीपऽर्थप्रभया यथा॥ ६६॥

दृष्टान्तस्यांशमात्रेण बोध्यबोधोदये सति।
उपादेयतया ग्राह्यो महावाक्यार्थनिश्चयः॥ ६७॥

एतच्छास्त्रीयसर्वदृष्टान्तानामुपयोगमाह - दृष्टान्तस्येति। जगतः
स्वप्नादिदृष्टान्तैर्मिथ्यात्वे प्रतीच आकाशसवित्रादिदृष्टान्तस्य ब्रह्मणो
मृल्लोहादिदृष्टान्तस्य च पदार्थपरिशोधनेन बोध्यलक्ष्यार्थं तस्य
बोधोदये सति सकार्याविद्योच्छेदार्थमवश्योपादेयतया
सर्वश्रुतिशास्त्रमहातात्पर्यविषयोऽहं ब्रह्मास्मीति महावाक्यार्थनिश्चयो
ग्राह्य इत्यर्थः॥ ६७॥

न कुतार्किकतामेत्य नाशनीया प्रबुद्धता।

12949 अनुभूत्यपलापान्तैरपवित्रैर्विकल्पितैः ॥ ६८ ॥
12950

12951 नन्वहं गौरः स्थूल
12952 इत्यादिप्रत्यक्षेणौषधपानारोग्यलाभादिप्रवृत्तिफलदर्शनलिङ्गेन
12953 परव्यवहारसाम्योपमानेन सर्वव्यावहारिकमहाजनवाक्यैः ब्राह्मणो
12954 यजेत इत्यादिश्रुत्या स्मृत्या धर्मशास्त्रैरनेकतार्किकादियुक्तिभिश्च
12955 देहस्तदन्यो वा कर्तृभोक्तृत्वादिस्वभाव आत्मावगम्यते तत्कथं
12956 प्रत्यक्षाद्यनेकप्रमाणविरुद्धोऽर्थो महावाक्यमात्रादुपादेय
12957 इत्याशङ्क्याह - नेति। अनुभूतिर्विद्वत्प्रत्यक्षं
12958 तदपलापपर्यवसितैरपवित्रदेहाद्यात्मभावविषयत्वादपवित्रशुनकसूकराद्
12959 इजन्मफलत्वाच्चापवित्रैर्विकल्पितैर्ब्रह्म सप्रमाणमप्रमाणं वा
12960 सप्रमाणं चेद्वैतहानिः अप्रमाणं चेत्प्रमेयहानिरित्यादिर्विकल्पैः
12961 परमपुरुषार्थानुबन्धिनी प्रबुद्धता र्पबोधयोग्याभिज्ञता न नाशनीया।
12962 यथा च देहादेरात्मत्वासंभवस्तथवक्ष्यत इति भावः ॥ ६८ ॥
12963

12964 विचारणादनुभवकारिवैरिणोऽपि
12965 वाङ्मयं त्वनुगतमस्मदादिषु।
12966 स्त्रियोक्तमप्यपपरमार्थवैदिकं
12967 वचो वचःप्रलपनमेव नागमः ॥ ६९ ॥
12968

12969 ननु सर्वजनस्य निरुपाधिकस्वेच्छाविहारसुखार्थित्वाद्यालोराप्ततमस्य
12970 चार्वाकादेर्भार्यापुत्रमित्रादेश्च
12971 दृष्टबहुतरविचित्रभोगसुखानुबन्धिस्वाभाविकस्वप्रीतिविषये प्रवर्तकं
12972 संसारसारतादिवचनं कथं हेयं वा
12973 तपःक्लेशसंयमवित्तव्ययायासानुबन्धीष्टपुत्रवित्तभार्यादिवियोजकसंन्या
12974 सभिक्षाटनाइदृष्टानर्थसहस्रपर्यवसितं
12975 निर्विषयात्ममात्रपरिशेषात्मकपरमदारिद्र्यलक्षणमोक्षफलानुषङ्गिब्रह्
12976 मात्मैकत्वबोधकत्वाद्वैरिवाक्यकल्पमचेतनं श्रौतं
12977 महावाक्यमुपादेयमित्याशङ्क्याह - विचारणादिति।
12978 सत्यमविचारणादेवमेव विचारणात्तु वैरिणो वैरित्वेन ज्ञातस्यापि वाङ्मयं
12979 नित्यनिरतिशयानन्दात्मरूपपरमपुरुषार्थानुभवकारीति
12980 अस्मदादिष्वनुभवनिष्ठेषु परमाप्ततमं
12981 सर्वप्रमाणमूर्धन्यमित्यनुगतमेव। अपगतं परमार्थभूतं वैदिकं
12982 पुरुषार्थतत्त्वं यस्मात्तथाविधं वचो वाक्यं स्त्रिया परमप्रेयस्योक्तमपि
12983 मृत्युनरकाद्यनर्थपरम्परानुबन्धित्वाद्वचःप्रलपनं
12984 वाक्प्रलापमात्रमेव न आगमो नाप्तवचनं न वा प्रमाणमित्यर्थः ॥ ६९ ॥
12985

12986 अस्माकमस्ति मतिरङ्ग तयेति सर्व-
12987 शास्त्रैकवाक्यकरणं फलितं यतो यः।
12988 प्रातीतिकार्थमपशास्त्रनिजाङ्गपुष्टा-
12989 त्संवेदनादितरदस्ति ततः प्रमाणम् ॥ ७० ॥
12990

12991 ननु तर्हि कपिलकणादजैमिनिप्रभृतयो वेदार्थज्ञा अपि कथमन्यथैव
12992 पुरुषार्थतदुपायतत्त्वं निरूपितवन्तः भवन्तस्त्वन्यथा निरूपयन्ति तत्र
12993 भवदुक्तौ को विशेषस्तत्राह - अस्माकमिति। हे अङ्ग अस्माकं यतो यस्या
12994 मतेः सकाशादयस्तत्त्वसाक्षात्कारजीवन्मुक्तिलक्षणः शुभावहो
12995 विधिस्तादृशी मतिरस्ति तया इतिपूर्वोक्तप्रकारेण
12996 प्रातीतिकोऽपरोक्षानुभवयोग्योऽर्थः परमपुरुषार्थो यस्मात्तथाविधं
12997 सर्वशास्त्राणां
12998 सकलश्रुत्यध्यात्मशास्त्राणामेकवाक्यकरणमेकमहावाक्यार्थपर्यवसान
12999 ं फलितम्। ततः अपशास्त्रं श्रुतितात्पर्याविषयीभूतं
13000 निजाङ्गैस्तर्कादिभिरेव पुष्टंयत्सांख्यकणादादिसंवेदनं

13001 तस्मादितरन्महावाक्यार्थरूपं प्रातीतिकार्थमपरोक्षानुभवयोग्यार्थकं
13002 प्रमाणमस्माकमस्ति नतु तेषाम्। कुतर्कोपहतमतित्वेन
13003 श्रुतितात्पर्यावधारणयोग्यमतिशून्यत्वादित्यर्थः॥ ७०॥
13004
13005 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मुमुक्षुव्यवहारप्रकरणे
13006 दृष्टान्तनिरूपणं नामाष्टादशः सर्गः॥ १८॥
13007
13008 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे मुमुक्षुव्यवहारप्रकरणे
13009 दृष्टान्तनिरूपणं नाम अष्टादशः सर्गः॥ १८॥
13010
13011 फ़ोलिओ १२० - १२१ इस् उन्च्लेअर्
13012
13013 प्। १२२)
13014
13015 रूपालोकमनस्कारपदार्थव्याकुलं जगत्।
13016 विद्यते वेदनस्यान्तर्वातान्तः स्पन्दनं यथा॥ २८॥
13017
13018 ननु मनश्चलने निर्विषयवेदनस्य हेतुत्वायोगात्सविषय तद्वाच्यम्। तत्र
13019 मनश्चलनादपि पूर्वसिद्धो विषयो वाच्यः। तथा विषयाणां मनोमयत्वस्य
13020 प्रागुक्तत्वाद्विषयसिद्धेः प्राङ्मनःसिद्धिर्वाच्येत्यन्योन्याश्रय
13021 इत्याशङ्क्य सर्वसंस्काररूपेण मायाशबलचिदन्तरधिष्ठानसत्तया
13022 सदेवाविर्भवतीत्याह - रूपेति। बहिरिन्द्रियैर्विषयग्रहो रूपालोको मनसा
13023 विषयानुसंधानं मनस्कारस्तदुभयविषयाः पदार्थाश्च तैर्व्याकुलम्॥
13024 २८॥
13025
13026 सर्वात्मवेदनं शुद्धं यथोदेति तदात्मकम्।
13027 भाति प्रसृतदिक्कालबाह्यान्तारूपदेहकम्॥ २९॥
13028
13029 ननु तर्हि कथं कादाचित्कतदुत्पत्त्यादिव्यवस्था स्यात्तत्राह - सर्वेति। उदेति
13030 कर्मपरिपाकव्यवस्थया यादृशं प्राणिकर्मभोगायाविर्भवति
13031 तदात्मकमुत्पन्नमिव प्रसृतदिक्कालबाह्याभ्यन्तरपदार्थविषं भाति
13032 [परमार्थतस्त्वरूपदेहकमेव]। अन्तारूपेति द्वलोपे इति दीर्घः॥ २९॥
13033
13034 दृष्ट्वैव दृश्यताभासं स्वरूपं धारयन्स्थितः।
13035 स्वं यथा यत्र यद्रूपं प्रतिभाति तथैव तत्॥ ३०॥
13036
13037 तर्हि [तर्हीत्यारभ्य चरममित्यन्तं क्वचिन्नास्ति] स विचारश्चरमं
13038 स्वं देहादिदृश्यताभासं दृष्ट्वैव तदेव मे स्वरूपमिति मोहाद्धारयन्
13039 सर्वात्मा जीवभावेन स्थित इत्यर्थः। युक्तं चैतदित्याह - स्वमिति॥ ३०॥
13040
13041 स सर्वात्मा यथा यत्र समुल्लासमुपागतः।
13042 तिष्ठत्याशु तथा तत्र तद्रूप इव राजते॥ ३१॥
13043
13044 तदेव स्फुटमाह - स इति॥ ३१॥
13045
13046 सर्वात्मकतया द्रष्टुर्दृश्यत्वमिव युज्यते।
13047 दृश्यत्वंद्रष्टृसद्भावे दृश्यतापि न वास्तवी॥ ३२॥
13048
13049 इवकारसूचितं दृश्यमिथ्यात्वमुपपादयति - दृश्यत्वमिति।
13050 दृक्स्वरूपो द्रष्टा यदि दृक्स्वरूपात्प्रच्युतो दृश्यत्वमापद्येत तत् तर्हि
13051 निर्द्रष्टृकदृश्यसिद्धिरेव न स्यात्। यद्यप्रच्युतस्तर्हि दृश्यतास्य
13052 विवर्तमात्रं रज्जुस्वभावादप्रच्युतस्य सर्पभाववदिति मिथ्यात्वमेवेत्यर्थः

॥ ३२ ॥

अकारणकएवातो ब्रह्म सिद्धमिदं स्थितम् ।
प्रत्यक्षमेव निर्मातृ तस्यांशास्त्वनुमादयः ॥ ३३ ॥

अतः कार्यमिथ्यात्वे तत्सापेक्षकारणभावस्यापि मिथ्यात्वादकारणकं
सिद्धम् । इत्थं प्रत्यक्षतत्त्वविमर्शे ब्रह्मैवाद्वयं सिद्धमित्युपसंहरति
- इदं स्थितं प्रत्यक्षमेवेति । अनुमानादयस्तु
प्रत्यक्षपूर्वकत्वात्तत्पर्यवसितत्वाच्च तदंशा एवेति
सर्वप्रमाणतत्त्वमात्मैवेत्यर्थः ॥ ३३ ॥

स्वयत्नमात्रे यदुपासको य-
स्तद्दैवशब्दार्थमपास्य दूरे ।
शूरेण साधो पदमुत्तमं तत्
स्वपौरुषेणैव हि लभ्यतेऽन्तः ॥ ३४ ॥

सिंहावलोकनन्यायेन दैवनिरासं स्मारयन् पौरुषस्यैवैतत्फलमित्याह -
स्वेति । परमार्थतः स्वकीयप्राक्तनप्रयत्नमात्रं दैवमिति कल्पयित्वा
तदधीनोऽहमिति तदुपासनपरो यः पुरुषस्तत्कल्पितं दैवशब्दार्थं दूरे
अपास्येन्द्रियादिजये शूरेणाधिकारिणा स्वपौरुषेणैव तत्परमपदं
अन्तर्हृद्येवासाद्यते प्राप्यते ॥ ३४ ॥

विचारयाचार्यपरम्पराणां
मतेन सत्येन [सत्त्वेन इति मूलव्याख्ययोः क्वाचित्कः पाठः]
सितेन तावत् ।
यावद्विशुद्धं स्वयमेव बुद्ध्या
ह्यनन्तरूपं परमभ्युपैषि ॥ ३५ ॥

सत्येन [सत्त्वेन इति मूलव्याख्ययोः क्वाचित्कः पाठः]
परमार्थनिष्ठेन । सितेन प्रमाणपरिशुद्धेन तावद्विचारय यावत्स्वयमेव
स्वबुद्ध्या त्रिविधपरिच्छेदशून्यं पदमभ्युपैषि साक्षात्कारेण प्राप्नोषि ॥
३५ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मुमुक्षुव्यवहारप्रकरणे
प्रमाणनिरूपणं नामैकोनविंशः सर्गः ॥ १९ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे मुमुक्षुव्यवहारप्रकरणे
प्रमाणनिरूपणं नामैकोनविंशतितमः सर्गः ॥ १९ ॥

## विंशः सर्गः २०

श्रीवसिष्ठ उवाच ॥

आर्यसंगमयुक्त्यादौ प्रज्ञां वृद्धिं नयेद्बलात् ।
ततो महापुरुषतां महापुरुषलक्षणैः ॥ १ ॥

प्रज्ञाबुद्धिप्रकारोऽत्र महापुरुषलक्षणम् ।
सदाचारक्रमाश्चोक्ताः परस्परविवर्धनाः ॥ १ ॥

उक्तं ज्ञानं महापुरुषेष्वेव प्रतितिष्ठति नान्येषु । महापुरुषता च
वक्ष्यमाणसदाचारेण सिद्ध्यतीति सदाचारं वर्णयितुमुपक्रममाणः

13105 श्रीवसिष्ठ उवाच - आर्येति। आदौ आर्याणां
13106 संगमैस्तदुपदेशाचरणशिक्षणयुक्त्या प्रज्ञां वृद्धिं नयेत्। ततः
13107 स्वं महापुरुषलक्षणैर्वक्ष्यमाणैर्महापुरुषतां नयेत्॥ १॥
13108
13109 यो यो येन गुणेनेह पुरुषः प्रविराजते।
13110 शिष्यते तं तमेवाशु तस्माद्बुद्धिं विवर्धयेत्॥ २॥
13111
13112 तत्र यदि सर्वे गुणा एकस्मिन् पुरुषे न लभ्येरंस्तर्हि यो यः पुरुषो येन येन
13113 गुणेन प्रभूतो विज्ञायते स तेनैवेतरेभ्यः शिष्यते विशिष्यते
13114 तस्मात्पुरुषात्तं तमेवाशु शिक्षित्वा स्वबुद्धिं विवर्धयेत्। शिक्षेत इति पाठे
13115 तु स्पष्टम्॥ २॥
13116
13117 महापुरुषता ह्येषा शमादिगुणशालिनी।
13118 सम्यग्ज्ञानं विना राम सिद्धिमेति न कांचन॥ ३॥
13119
13120 एषा शमादिगुणप्रज्ञाशालितैव महापुरुषता॥ ३॥
13121
13122 प्। १२३)
13123
13124 ज्ञानाच्छमादयो यान्ति वृद्धिं सत्पुरुषक्रमाः।
13125 श्लाघनीयाः फलेनान्तर्वृष्टेरिव नवाङ्कुराः॥ ४॥
13126
13127 सत्पुरुषैः क्रम्यन्त आचर्यन्त इति सत्पुरुषक्रमाः सदाचारा अमानित्वादयश्च
13128 अन्तःफलेनात्मसुखाविर्भाविन श्लाघनीयाः प्रशस्याः॥ ४॥
13129
13130 शमादिभ्यो गुणेभ्यश्च वर्धते ज्ञानमुत्तमम्।
13131 अन्नात्मकेभ्यो यज्ञेभ्यः शालिवृष्टिरिवोत्तमा॥ ५॥
13132
13133 शाल्याद्यन्नोत्पत्तिहेतुभूता वृष्टिरिव। तथाच स्मृतिः अग्नौ प्रास्ताहुतिः
13134 सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः॥
13135 इति॥ ५॥
13136
13137 गुणाः शमादयो ज्ञानाच्छमादिभ्यस्तथा ज्ञता।
13138 परस्परं विवर्धन्ते ते अब्जसरसी इव॥ ६॥
13139
13140 युगपत्परस्परवृद्ध्यनुरूपदृष्टान्तोपन्यासायोक्तमेव पुनराह -
13141 गुणा इति। ते अब्जसरसी इवेत्युभयत्रापि प्रगृह्यत्वादसंधिः अब्जैः सरसः
13142 शैत्यसौगन्ध्यशोभादिगुणैर्वृद्धिरत्र विवक्षिता॥ ६॥
13143
13144 ज्ञानं सत्पुरुषाचाराज्ज्ञानात्सत्पुरुषक्रमः।
13145 परस्परं गतौ वृद्धिं ज्ञानसत्पुरुषक्रमौ॥ ७॥
13146
13147 एवं ज्ञानसदाचारयोरपि परस्परवृद्धिहेतुतेत्याह - ज्ञानमिति॥ ७॥
13148
13149 शमप्रज्ञादिनिपुणपुरुषाथक्रमेण च।
13150 अभ्यसेत्पुरुषो धीमाञ्ज्ञानसत्पुरुषक्रमौ॥ ८॥
13151
13152 शमेन प्रज्ञामहापुरुषतादिना च निपुणो यः पुरुषार्थः
13153 श्रवणादिप्रयत्नस्तत्क्रमेण ज्ञानसदाचारावभ्यसेत्॥ ८॥
13154
13155 न यावत्सममभ्यस्तौ ज्ञानसत्पुरुषक्रमौ।
13156 एकोऽपि नैतयोस्तात पुरुषस्येह सिध्यति॥ ९॥

यथा कलमरक्षिण्या गीत्या वितततालया ।
खगोत्सादेन सहितं गीतानन्दः प्रसाध्यते ॥ १० ॥

विवृद्धिफलमपि तयोस्तुल्यकालमेव भवतीति सदृष्टान्तमाह - यथेति
द्वाभ्याम् । पक्वशालिक्षेत्ररक्षिण्याः स्त्रियाः खगोत्सादनांशे
व्यापारान्तराकर्त्र्या अपि विततकरतालध्वनियुक्तया गीत्या
आनुषङ्गिकखगोत्सादेन तुल्यकालो गीतानन्दः प्रवर्तते [१] ॥ १० ॥

ज्ञानसत्पुरुषेहाभ्यामकर्त्रा कर्तृरूपिणा ।
तथा पुंसा निरिच्छेन सममासाद्यते पदम् ॥ ११ ॥

तथा ज्ञानविघ्नरागमानादिनिरासांशे निरिच्छेन । अत एवाकर्त्रापि
ज्ञानसाधनश्रवणसदाचाराभ्यामनुष्ठिताभ्यां
तन्मात्रकर्तृरूपिणां पुंसां आनुषङ्गिकविघ्ननिरासेन समं
परमपदमासाद्यते ॥ ११ ॥

सदाचारक्रमः प्रोक्तो मयैवं रघुनन्दन ।
तथोपदिश्यते सम्यगेवं ज्ञानक्रमोऽधुना ॥ १२ ॥

यथा एवंप्रकारोऽयं सदाचारक्रमो मया प्रोक्तस्तथा अधुना उत्तरप्रकरणे
ज्ञानक्रम उपदिश्यते इति वक्ष्यमाणप्रतिज्ञा ॥ १२ ॥

इदं यशस्यमायुष्यं पुरुषार्थफलप्रदम् ।
तज्ज्ञादाप्ताच्च सच्छास्त्रं श्रोतव्यं किल धीमता ॥ १३ ॥

साधनकलापोपदेशं फलकीर्तनोपसंहरति - इदमित्यादिना । किलेति
सांप्रदायिकार्थप्रसिद्धौ ॥ १३ ॥

श्रुत्वा त्वं बुद्धिनैर्मल्याद्बलाद्यास्यसि तत्पदम् ।
यथा कतकसंश्लेषात्प्रसादं कलुषं पयः ॥ १४ ॥

बलादिति साधनप्रभावोक्तिः । प्रसादं नैर्मल्यम् ॥ १४ ॥

विदितवेद्यमिदं हि मनो मुने-
र्विवशमेव हि याति परं पदम् ।
यदवबुद्धमखण्डितमुत्तमं
तदवबोधवशान्न जहाति हि ॥ १५ ॥

मुनेः प्रकृतसाधनसंपत्त्या मननशीलस्य मनो विदितवेद्यं
सत्तद्बलाद्विवशं परं पदमनिच्छदपि याति । न केवलं
साधनप्राबल्यादेवैवं किंतु वेद्यतत्त्वस्वभावादपीत्याह - यदिति ।
अवबोधवशादवबोधाधीनत्वात् । अवबोधात्मकचरमवृत्तीद्धत्वादिति यावत् ।
अवधूयाज्ञानतत्कार्यं बुद्धं जागरूकमखण्डितमुत्तमं यत्पदं
तन्मनो न जहाति । अज्ञानतत्कार्यान्तरैः समं भाधत एवेत्यर्थः । हीति
विद्वत्प्रसिद्धौ । तथाचाहुः देहात्मज्ञानवज्ज्ञानं देहात्मज्ञानबाधकम्
। आत्मन्येव भवेद्यस्य स नेच्छन्नपि मुच्यते ॥ १५ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे द्वात्रिंशत्साहस्र्यां संहितायां
वाल्मीकीये मोक्षोपाये मुमुक्षुव्यवहारप्रकरणे सदाचारनिरूपणं
नाम विंशतितमः सर्गः ॥ २० ॥

13209 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे मुमुक्षुव्यवहारप्रकरणे
13210 सदाचारनिरूपणं नाम विंशतितमः सर्गः ॥ २० ॥
13211
13212 समाप्तमिदं मुमुक्षुव्यवहारप्रकरणम् ।
13213
13214
13215
13216
13217
13218
13219
13220
13221
13222
13223 उत्पत्तिप्रकरणं तृतीयम् ।
13224
13225 प्रथमः सर्गः १
13226
13227 वाग्भाभिर्ब्रह्मविद्ब्रह्म भाति स्वप्न इवात्मनि ।
13228 यदिदंतत्स्वशब्दोत्थैर्यो यद्वेत्ति स वेत्ति तत् ॥ १ ॥
13229
13230 सत्यं ज्ञानमनन्तमेकमजरं नित्यं विभुं शाश्वतं
13231 प्रत्यग्ब्रह्मरसायनं सुखघनं पूर्णं परं पावनम् ।
13232 स्वात्मज्योतिरनादिमध्यनिधनं मायाविलासैर्मुहु-
13233 र्विश्वाकारमपास्तमायमभयं वन्दे विशुद्धं पदम् ॥ १ ॥
13234
13235 ज्ञानादेवात्मनो मोक्षो न तु कर्मसमाधिभिः ।
13236 अज्ञातोऽसौ स्वसद्दृश्यं [स्वयं दृश्यं इति पाठः] सृजत्येवेति
13237 कीर्त्यते ॥ १ ॥
13238
13239 अथ [स्वयं दृश्यं इति पाठः]
13240 यथोक्तसाधनसंपन्नस्याधिकारिणः - तावद्विचारयेत्प्राज्ञो
13241 यावद्विश्रान्तिमात्मनि । संप्रयात्यपुनर्नाशां शान्तिं तुर्यपदाभिधाम् ॥
13242 यावत्तत्त्वापरोक्षावधारणं कर्तव्यतया विहितं विचारप्रकारं
13243 प्रकरणद्वयोपवर्णितसमस्तसाधनसंपन्नायाधिकारिमूर्धन्याय
13244 श्रीरामाय अथोपदिश्यते सम्यगेवं ज्ञानक्रमोऽधुना इति
13245 प्रतिज्ञानपूर्वकमुत्तरग्रन्थेन विस्तरेण वर्णयितुं प्रवृत्तो भगवान्
13246 श्रीवसिष्ठः सृष्टिप्रकारोपवर्णनमुखेन ब्रह्माद्वैतं प्रतिपादयितुं
13247 प्रवृत्तस्योत्पत्तिप्रकरणस्य सुखप्रबोधाय प्रथमं संक्षिप्य तात्पर्यं
13248 दिदर्शयिषुः तद्धेदं तर्ह्यव्याकृतमासीत्
13249 इत्यादिसृष्टिप्रदर्शकश्रौतसंदर्भस्य अहं ब्रह्मास्मि
13250 इत्यादिमहावाक्यार्थबोध् इवात्रापि [भावरूपं इति पाठः]
13251 दृष्टान्तस्यैकदेशेन बोध्यबोधोदये सति । उपादेयतया ग्राह्यो
13252 महावाक्यार्थनिर्णयः इति प्रागुक्तरीत्या पर्यवसानमिति दर्शयति -
13253 वाग्भाभिरित्यादिना । ब्रह्मैव
13254 वाग्भाभिर्महावाक्यजाखण्डाकारवृत्तीद्धस्वात्मप्रकाशैर्ब्रह्मवित्
13255 स्वतत्त्वं साक्षात्कृतवत्सद्भाति पारमार्थिकनित्यमुक्तपूर्णस्वरूपेण
13256 प्रकाशते । स्वमुक्तौ वाक्यजन्यवृत्त्यतिरिक्तं नापेक्षत इति भावः । तत्कुतः ।
13257 यतो यदिदं देहेन्द्रियादि वियदादि च दृश्यं बन्धरूपमात्मनि
13258 प्रत्यगात्मभूते ब्रह्मण्येव स्वप्न इवाविर्भूतं भाति । नहि
13259 स्वाप्नबन्धनिवृत्तिः प्रबोधातिरिक्तं साधनमपेक्षत इति भावः । तथाच
13260 श्रुतौ यद्ब्रह्मविद्यया भविष्यन्तो मनुष्या मन्यन्ते किमु

13261 तद्ब्रह्मावेद्यस्मात्तत्सर्वमभवत् इत्याक्षिप्योत्तरमुक्तं ब्रह्म वा इदमग्र
13262 आसीत्तदात्मानमेवावेदाहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवत् इति। सर्वं
13263 पूर्णम् असंसारिभूमानन्दैकस्वभावमित्यर्थः। अस्यां श्रुतौ ब्रह्म
13264 स्वयं स्वतत्त्वबोधान्मुक्तबन्धं पूर्णमभूदित्युक्तेस्तदेव प्राक्
13265 स्वतत्त्वप्रतिबोधात्स्वप्न इव द्वैतप्रियाप्रियदर्शनपरिच्छेदलक्षणं
13266 बन्धमनुभवतीवेति बन्धस्य मिथ्यात्वं प्रतीच एव ब्रह्मत्वं च
13267 स्फुटतरमवगम्यते। तत्र यथा तदुपपादकार्थवादभूतानां
13268 तन्नामरूपाभ्यामेव व्याक्रियते स एष इह प्रविष्ट आनखाग्रेभ्यः
13269 इत्यादिप्राक्तनसृष्टिप्रवेशादिवाक्यानां
13270 जगज्जिवभावयोरज्ञातब्रह्ममात्रोपादानकयोरुत्पत्त्यादिकालत्रयेऽपि
13271 ब्रह्मव्यतिरिक्तसत्ताऽसंभवान्मिथ्यात्वमेवेत्युपपादनेन
13272 स्वप्रधानमहावाक्यतात्पर्यविषयब्रह्माद्वैते पर्यवसानं तद्वदत्रापि
13273 बोध्यमिति भावः। भवतु तथा किं न नस्तेनेति तत्राह - तदित्यादिना।
13274 तद्ब्रह्म इदानींतनोऽस्मदादिरपि योऽधिकारी स्वशब्दोत्थैः
13275 श्रवणाद्युपायैर्यत् यादृशं तत्त्वतस्तथा वेत्ति अहमेव ब्रह्मेति
13276 साक्षात्करोति स तत् प्रायुक्तं पूर्णनित्यमुक्तब्रह्म भारूपं
13277 [भावरूपं इति पाठः] मोक्षफलमपि वेत्ति जीवन्नेव
13278 साक्षादनुभवति। तथाच श्रुतिः तद्यो यो देवानां प्रत्यबुध्यत स एव
13279 तदभवत्तद्यथर्षीणां तथा मनुष्याणां तद्धैतत्पश्यन् ऋषिर्वामदेवः
13280 प्रतिपेदेऽहं मनुरभवं सूर्यश्च इति॥ अथवा [इवास्यापि प्रकरणस्य इति
13281 पाठः] यन्मुमुक्षूणामज्ञातत्वाज्जिज्ञासितमिदं
13282 सर्वजनानामात्मत्वेन प्रत्यक्षं ब्रह्मवचनं वाक् वाचकशब्दप्रपञ्चो
13283 भातीति भास्तत्प्रकाश्यार्थप्रपञ्चश्च ताभिः त्रयं वा इदं नामरूपं
13284 कर्म इति श्रुतिदर्शितद्वैतप्रपञ्चभावैरविविक्ततया
13285
13286 प। १२६)
13287
13288 ब्रह्मवित् स्वं पश्यत्सदात्मनि स्वस्मिन् स्वप्न इव
13289 वधबन्धशोकमोहादिदुःखिस्वभावं भाति तत्तथा भातमपि ब्रह्म
13290 योऽधिकारी स्वशब्दोत्थैः स्वात्ममात्रपरिशेषक नेतिनेति
13291 इत्यादिवाक्यकृतैर्द्वैतनिषेधैर्यत् यादृशं परिशिष्टं वेत्ति स एव
13292 तद्ब्रह्म तत्त्वतोवेत्ति नत्वध्यारोपितनामरूपादिसंवलितदर्शीत्यर्थः॥ अथवा
13293 [३] वागिति वचनादिक्रियाशक्तिप्रधानानि कर्मेन्द्रियाण्युपलक्ष्यन्ते।
13294 भा इति प्रकाशप्रधानानि ज्ञानेन्द्रियाणि। तैद्वारैर्यो ब्रह्मविद्वस्तुतो
13295 ब्रह्मापि पश्यति स ब्रह्म सन्नप्यात्मनि स्वप्न इवाब्रह्मभूतोऽन्यथा भाति।
13296 बहिर्मुखस्य तत्त्वदर्शनासिद्धेः। पराञ्चि खानि
13297 व्यतृणत्स्वयंभूस्तस्मात्पराङ् पश्यति नान्तरात्मन् इत्यादिश्रुतेः।
13298 यस्त्वधिकारी यत्प्रसिद्धमिदं प्रपञ्चरूपमपि स्वशब्दोत्थैः ब्रह्मैवेदं
13299 सर्वम् आत्मैवेदं सर्वं
13300 इत्यादिपरमार्थपरवाक्यजन्यबोधैर्यत्सर्वाधिष्ठानसन्मात्रं वेत्ति स
13301 व्यावृत्तबाह्येन्द्रियप्रसरः प्रत्यङ्मुखस्तद्ब्रह्म वेत्ति। तथाच
13302 बाह्यदृष्ट्या ब्रह्मापि दृष्टमनर्थ एव प्रामाणिकप्रत्यग्दृष्ट्या तु
13303 जगदपि दृष्टं प्रुषार्थायेति सृष्टिप्रपञ्चनव्याजेन
13304 प्रत्यग्दृष्टिव्युत्पादनेऽस्य प्रकरणस्य तात्पर्यमित्यर्थः। अथवा [४]
13305 वक्ष्यमाणाभिरुपदेशवाग्भिर्भाभिर्दृष्टान्ताख्यानोपपत्तिप्रकाशैश्चेत्
13306 अदुच्यत इति शेषः। यद्ब्रह्मविदेव परमार्थतो ब्रह्म न
13307 ब्रह्मनामकमर्थान्तरं व्यवहितविप्रकृष्टदेशे स्वात्मनोऽन्यदेवास्तीति
13308 भ्रमितव्यमिति। यदिदं दृश्यप्रपञ्चरूपं तत्स्वप्न इवात्मन्येवाध्यस्तं
13309 भाति न तदपि परमार्थसत्यमन्यदस्तीति भ्रमितव्यमिति। तत्र
13310 चोक्तब्रह्मभावजगद्भावद्वये यो विवेक्यविवेकी वा यदेव
13311 स्वशब्दोत्थैर्ब्राह्मणोऽहं क्षत्रियोऽहं देवदत्तोऽहमिति
13312 स्वाभाविकलौकिकप्रसिद्धमिथ्यास्वशब्दजन्यैर्वा ब्रह्मैवाहं

13313 चिदेवाहमित्यादिशास्त्रीयसत्यार्थस्वशब्दजन्यैर्वा प्रत्ययैर्यद्यादृशं
13314 स्वरूपं स्वस्य वेत्ति स तदेव वेत्ति पुनःपुनरनुभवति। संसार्यात्मदर्शिनः
13315 संसार एव फलति ब्रह्मात्मदर्शिनस्तु ब्रह्मभाव एवेति तद्दर्शिनैव
13316 भाव्यमिति भावः॥ अथवा [५] ननु प्रागुपदिष्टमेव ब्रह्म
13317 यथास्थितं ब्रह्मतत्त्वं सत्तानियतिरुच्यते अस्त्यनन्तविलासात्मा सर्वगः
13318 सर्वसंश्रयः इत्यादिना तत्रोपदिष्टे ब्रह्मणि शमाद्यभावाच्चित्तास्थैर्ये
13319 प्राप्ते शमादिसाधनानि तद्दृढीकाराय पौरुषप्रयत्नश्चोपदिष्ट इति
13320 नोपदेष्टव्यान्तरमवशिष्यते। यदि सकृदुपदिष्टवाक्यार्थप्रकाशैर्ब्रह्म
13321 न भाति तर्हि शतकृत्वोऽप्युपदिश्यमानं तथैवेति किमस्यैव
13322 पुनःपुनरुपदेशेन पिष्टपेषणप्रायेणेत्याशङ्क्याह - वाग्भाभिरिति।
13323 यो ब्रह्मवित् ब्रह्मवेत्ता श्रोता वाग्भाभिः
13324 सकृदुपदेशवाक्यार्थप्रकाशैर्हेतुभिर्यद्ब्रह्म स्वयमेवेति भाति प्रथते
13325 तत्स्वप्न इव भादितप्रायं न दृढतरं भवति
13326 निद्रावशोऽनिरूढनाक्षत्रादिस्वनामघटितोपांशुप्रबोधकवाक्यमिव न
13327 सम्यगवधारयतीति वार्थः। स एव हे देवदत्त हे
13328 यज्ञदत्तेत्यादिचिरव्यवहारनिरूढस्वनामसंबोधनोत्थैरिव
13329 बहुकालाभ्यस्तश्रवणाद्यभ्यासदृढपरिचितमहावाक्योत्थप्रत्ययैर्यद्वेत्
13330 ति स एव तद्वेत्ति। तादृशासंदिग्धस्वात्मबोध एवाविद्योच्छेदहेतुरित्यर्थः।
13331 तथाच तादृशदृढनिश्चयापरोक्षानुभवाय
13332 पुनःपुनरुपपत्तिभिरुपदेशो [पुनःपुनरुपदेशो इति पाठः]
13333 यावत्फलोदयमभ्यसनीय इत्युत्तरग्रन्थोपपत्तिरिति भावः। तथाच सूत्रम्
13334 आवृत्तिरसकृदुपदेशात् इति॥ अथवा [६] यथा
13335 अब्रह्मविज्जाग्रद्धयादिचिरवासनावासितः स्वप्ने अविद्यया
13336 कुत्सनभर्त्सनभीषणादिवाग्भिर्भयकम्पपलायनगर्तपतनादिप्रतिभाभिश्चो
13337 पलक्षितो दुःखी भाति यथा वा उपासको जाग्रद्देवभाववासनावासितः स्वप्ने
13338 देव इव राजेव
13339 स्तुतिप्रशंसनादिवाग्भिर्जक्षणक्रीडनविमानारोहनभोविहारादिप्रतिभाभिश्च्
13340 ओपलक्षितो [वाग्भा इति पाठः] भाति तथा ब्रह्मविदपि
13341 चिराभ्यस्तश्रवणादिवासितः स्वप्ने ब्रह्मैवेदं सर्वमात्मैवेदं सर्वं
13342 अहमेवेदं सर्वोऽस्मीति
13343 परमार्थप्रतिपादकवाग्भिर्वास्तवब्रह्मभावप्रतिभाभिश्च भाति। तथा
13344 फलावस्थायामपि स्वप्नवत्परलोकफलस्यापि
13345 दृढाभ्यस्तवासनानुसारित्वस्य लीलोपाख्यानादौ व्युत्पादयिष्यमाणत्वात्।
13346 नन्वत्र किं प्रमाणं तत्राह - यदिति। यदिदं स्वप्नवत्परलोकस्यापि
13347 वासनानुसारित्वं तत्स्वयमेव शब्दयन्ति बोधयन्ति नतु मूलसापेक्षतयेति
13348 स्वशब्दाः श्रुतयस्तदुत्थैः प्रत्ययैः स्वतःप्रमाणभूतैरध्यवसीयते।
13349 अथ यत्रैनं घ्नन्तीव जिनन्तीव हस्तीव विच्छादयति गर्तमिव पतति यदेव
13350 जाग्रद्भयं पश्यति तदत्राविद्यया मन्यतेऽथो यत्र देव इव राजेवाहमेवेदं
13351 सर्वोऽस्मीति मन्यते सोऽस्य परमो लोकः। तद्य इह व्याघ्रो वा सिंहो वा
13352 यद्यद्भवन्ति तदाभवन्ति। यच्चित्तस्तन्मयो भवति गुह्यमेतत्सनातनं मनो
13353 कृतेनायात्यस्मिन् शरीरे इत्यादिश्रुतिभ्यः। यं यं वापि स्मरन्भावं
13354 त्यजत्यन्ते कलेवरम्। तं तमेवैति कौन्तेय सदा तद्भावभावितः॥
13355 तस्मात्सर्वेषु कालेषु मामनुस्मर इत्यादिस्मृतिभ्यश्चेत्यर्थः।
13356 तथाचाभ्यासदशायां यो यद्वेत्ति संसार्यात्मानं ब्रह्मात्मभावं वा
13357 सफलावस्थायामपि तद्वेत्त्यनुभवतीति निरन्तरं ब्रह्मानुभववासनैव
13358 दृढीकार्येत्युत्पत्तिप्रकरणतात्पर्यार्थ इति भावः॥ अथवा [७]
13359 वाग्भिः श्रुतिस्मृत्यादिशब्दप्रमाणैर्भाभिर्विद्वदनुभवप्रकाशैश्च
13360 ब्रह्मविद्ब्रह्मैव।
13361 यदिदमस्याज्ञानदशाप्रसिद्धमब्रह्मत्वमवस्थात्रयं च तदात्मनि स्वप्न
13362 इव भाति। तस्य त्रय आवसथास्त्रयः स्वप्नाः इति श्रुतेः
13363 तस्मात्संभावनामात्रः संसारः प्रत्यगात्मनि। उक्तेऽर्थे
13364 संशयश्चेत्यात्प्रत्यग्दृष्ट्या निरीक्ष्यताम्॥ इति

13365 वार्तिकादिप्रसिद्धविद्वदनुभवाच्च। तदुक्तार्थद्वयं योऽधिकारि स्वः स्वीयः
13366 करतलामलकवदपरोक्षीकृतात्मतत्त्व उपदेशकुशल
13367 आचार्यस्तस्योपदेशशब्दोत्थैरनुभवानुकूलैरूहापोहाद्युपायैर्यद्यादृश
13368 ं वेत्ति स एव स्वानुभवतोऽपि तद्वेत्ति। आचार्यवान्पुरुषो वेद। आचार्याद्धैव
13369 विद्या विदिता साधिष्ठं प्रापत्। आचार्यो ज्ञाता कुशलानुशिष्टः
13370 इत्यादिश्रुतेरित्यर्थः॥ अथवा [८] ब्रह्मविदामनुभवसिद्धं ब्रह्म
13371 व्यवहारे वाग्भाभिस्तुल्यं भाति यथा वा घटादिशब्दाः
13372 संकेतात्स्वानुरञ्जितमर्थं प्रकाशयन्ति तद्भावापन्नेव स्वयं प्रथते
13373 यथा भा आलोकोऽपि तथा प्रथते एवं ब्रह्मापि भास्यानुरञ्जितं
13374 तदविविक्तस्वप्रकाशं प्रथत इत्यर्थः। नन्वसङ्गाद्वितीयस्य कथं
13375 परानुरञ्जनेन प्रथनं तत्राह - यदिति।
13376 यद्यस्मात्कारणादात्मन्यध्यासेन स्वप्न इव इदं तनोतीतिदंतत्।
13377
13378 प्। १२७)
13379
13380 सर्वप्रपञ्चविवर्तोपादानमित्यर्थः। तथाच कारणस्य कार्यानुरञ्जनं
13381 युक्तमेव। कार्यमिथ्यात्वाच्च नासङ्गाद्वितीयताविरोध इति भावः।
13382 तत्तथाभूतं ब्रह्म
13383 स्वशब्दोत्थैरनुगतस्वयंरूपमात्रपरामर्शात्मादिशब्दनिकृष्टबोधैर्य्
13384 ओ वेत्ति स तदसङ्गोदासीनस्वप्रकाशचिन्मात्रस्वभावं वेत्ति न
13385 विशेषनामरूपसंवलितदर्शीत्यर्थः॥ अथवा [९] ब्रह्म
13386 स्वप्रकाशत्वाद्ब्रह्मवित्स्वप्रथायामन्यनिरपेक्षमपि वाग्भाभिः वागेवास्य
13387 ज्योतिर्भवति आदित्य एवास्य ज्योतिर्भवति इति श्रुत्युक्तेर्ज्योतिरन्तरैर्व्यामोहात्स्वप्न
13388 इवात्मनि ज्योतिरन्तरासंकीर्णदशायामेव समाध्यादौ निष्कृष्टं भाति न
13389 संसारजागरे। श्रुत्या तत्रैव आत्मैवास्य ज्योतिर्भवत्यात्मनैवायं ज्योतिषास्ते
13390 पल्ययते कर्म कुरुते इति स्वयंज्योतिष्ट्वास्फुटीभावप्रदर्शनात्। इत्थं स्वप्ने
13391 व्युत्पादितस्य स्वयंज्योतिरात्मनो जागरेऽप्यनुभवे उपायमाह - यदिति।
13392 इदमिति तदिति स्वमिति च
13393 शब्दैरुत्थैराधिभौतिकाधिदैविकाध्यात्मिकविषयप्रत्ययैर्भोक्तारं प्रति एति
13394 आगच्छतीति यत्तथाविधं यद्विषयजातं तद्यो वेत्ति स तद्ब्रह्मैव सन्वेत्ति नतु
13395 कल्पितोपाध्यात्मा सन्वेत्ति। जडात्मनो वेदनशक्त्यभावात् नान्योऽतोऽस्ति द्रष्टा
13396 नान्योऽतोऽस्ति श्रोता इति द्रष्टश्रोत्रन्तरप्रतिषेधाच्चेति भावः। तथाच
13397 बहिरर्थप्रकाशे ज्योतिरन्तरसंकीर्णत्वेऽपि नान्तरुपनीतार्थप्रथायां
13398 तत्संकर इति जागरेऽपि स्वयं ज्योतिरात्मा विवेकिभिः सुबोध इति सदैव
13399 तद्विमर्शपरेण भाव्यमित्याशयः॥ अथवा [१०] यदिदमिहलोकरूपं
13400 कर्मस्थानं तत्स्वर्गादिरूपं तत्फलस्थानं स्वं स्वयं तत्फलभोक्ता चेति
13401 त्रितयप्रतिपादककर्मकाण्डशब्दोत्थैः प्रत्ययैर्यद्भाति
13402 यच्चोपनिषद्वाग्भिर्मननादिप्रकाशैश्चाहं ब्रह्मविद्ब्रह्मेति वा भाति
13403 तत्सर्वं स्वप्न इवाप्रबुद्ध एवात्मनि भाति न भूमात्मनि। यत्र नान्यत्पश्यति
13404 नान्यच्छृणोति नान्यद्विजानाति स भूमा इति श्रुतेः। सर्वाणि च शास्त्राणि
13405 विधिनिषेधमोक्षपराण्यविद्यावद्विषयत्वं नातिवर्तन्ते इति भाष्याच्च। तदिदं
13406 रहस्यं योगस्तद्वेदेति श्रुतिं विडम्बयन्नह - यो यद्वेत्तीति।
13407 विद्वदनुभवैकसिद्धमिदमित्यर्थः॥ दुरूहस्यास्य पद्यस्य सुधीभिरपि
13408 दुर्गमाः। इमे गुरुप्रसादेन दशार्थाः संप्रकाशिताः॥ १॥
13409
13410 न्यायेनानेन लोकेऽस्मिन्सर्गे ब्रह्माम्बरे सति।
13411 किमिदं कस्य कुत्रेति चोद्यमूचे निराकृतम्॥ २॥
13412
13413 इत्थं प्रकरणार्थसंक्षेपोपदर्शनमुखेनावान्तरविषये प्रदर्शिते
13414 प्रपञ्चमिथ्यात्वज्ञानलक्षणावान्तरप्रयोजनानुबन्धी
13415 प्राक्तनचोद्यपरिहारोऽप्यर्थात्सिद्ध इत्याह - न्यायेनेति। अनेन संक्षेपतो
13416 दर्शितेन विस्तरतो

वक्ष्यमाणेनाध्यस्तस्याधिष्ठानात्पृथगसत्त्वन्यायेनाध्यारोपापवादन्‍
आयेन वा ब्रह्माम्बरेऽध्यासक्रमेणास्मिन्परिदृश्यमाने सर्गे प्रपञ्चरूपे
सति सर्गे वाऽपवाद क्रमेण लोकेऽवलोक्यमाने ब्रह्माम्बरे ब्रह्माकाशमात्रे
सति तदेतद्भगवन्ब्रूहि किमिदं परिणश्यति। किमिदं जायते भूयः किमिदं
परिवर्धते॥ इत्यादिना भवान् प्राग्यत्सतो नाशाद्यसंभवचोद्यमूचे तत्स्वतो
निराकृतमेवोचे। सतो नाशाद्यनभ्युपगमान्नश्वरस्य
सत्त्वानभ्युपगमाच्चोद्यविषयाभावादित्यर्थः॥ २॥

अहं तावद्यथाज्ञानं यथावस्तु यथाक्रमम्।
यथास्वभावं तत्सर्वं वच्मीदं श्रूयतां बुध॥ ३॥

इत्थमवान्तरविषयफले प्रदर्श्य विस्तरोक्तिं प्रतिजानीते - अहमिति। इदं
संक्षिप्य दर्शितमर्थजातं वच्मि विस्तरेणेत्यर्थः। प्रमाणतोऽनुभवतश्च
यथाज्ञानं परीक्षणतो यथावस्तु साधनोपपत्तिनिरूपणतो यथाक्रमं
श्रोतृबुद्धिपरिपाकानुसारतश्च यथास्वभावम्। सर्वत्र
पदार्थानतिवृत्तावव्ययीभावः। अथवा यथावस्त्विति सर्गपूर्वावस्थोक्तिस्तदा
सर्वजगतः सन्मात्ररूपत्वात् यथाज्ञानमिति सर्गारम्भकलनोन्मुखत्वोक्तिः।
यथाक्रममिति स्थूलीभावेन सृष्टिक्रमोक्तिः। यथास्वभावमिति
जगदारोपदशयामप्यविकृतस्वभावोक्तिः। सर्वमिति
ज्ञानप्राप्यपूर्णभावोक्तिः। तस्मात्तत्सर्वमभवत् इति श्रुतौ पूर्णभावे
सर्वशब्ददर्शनात्। बुधेत्युत्तमाधिकारस्मारणं श्रवणादरोत्पादनार्थम्
॥ ३॥

स्वप्नवत्पश्यति जगच्चिन्नभोदेहवित्स्वयम् [चिन्मयं इति पाठः]।
स्वप्नसंसारदृष्टान्त एवाहंत्वंसमन्वितम्॥ ४॥

स्वप्नवदात्मनीति यदुक्तं तस्य तात्पर्यं विशदयति - स्वप्नवदिति।
चिन्नभोदेहविज्जीवभावापन्नं सद्यज्जगत्पश्यति तत्स्वप्नवत्पश्यति। यथा
स्वप्नदर्शनं विषयबाधेऽपि न बाध्यते तद्वज्जगद्दर्शनमपीति। दृशेः
सत्यत्वे तात्पर्यमिति भावः। एवमहमिति प्रत्यगात्मतादात्म्येन त्वमिति
पराग्भावेन च भासमानं प्रपञ्चरूपमपि स्वप्नसंसारदृष्टान्ते
दार्ष्टान्तिकत्वेन् समन्वितं सम्यक्संबद्धम्। तस्य मिथ्यात्वे तात्पर्यमिति
भावः। अथवा ननु प्रमाणजस्य कथमप्रमाणजं स्वप्नदर्शनं
दृष्टान्तस्तत्राह - देहविदिति। यद्यपि बाह्यं जगत्प्रमाणैः पश्यत
तथापि कार्यकरणसघातात्मकव्यष्टिसमष्टिदेहभासकः
[कारणसंघाता इति पाठः] स्वयमेव न बाह्यप्रमाणसापेक्ष
इत्यर्थः। ननु रूपादिमत्त्वाद्देहोऽपि चक्षुरादिनैव भासतां तत्राह -
अहंत्वमिति। यदि चक्षुरादिना स भासेत तर्हीदभित्येव भासेत। तद्विषये
सर्वत्रेदंत्वदर्शनात्। अहंत्वं तु तत्र भासमानं
स्वप्नसंसारदृष्टान्त एव समन्वितं युक्तमित्यर्थः। अथवा अस्तु देहस्य
स्वप्नसाम्यं तथापि कथं बाह्यनामरूपात्मकजगन्मात्रस्य तथात्वं
तत्राह - अहंत्वंसमन्वितमिति। न बाह्यरूपादितावन्मात्रं निष्कृष्टं
भासते किंतु रूपमहं पश्यामीति
त्रिपुटीभूतमहमर्थसंवलितत्वमर्थरूपम् तत्तु
साक्षिमात्रगम्यत्वात्स्वप्नसंसारदृष्टान्ते दार्ष्टान्तिकं भवत्येवेति
शेषः। नह्यध्यस्तगोचरज्ञाने सत्यार्थो विषयो भवति। अध्यस्तमेव हि
परिस्फुरति भ्रमेषु नान्यत्कथंचन परिस्फुरति भ्रमेषु इति
सिद्धान्तद्वाह्यप्रमाणानां व्यवहारेष्वर्थाविसंवादमात्रेणापि
व्यावहारिकप्रामाण्याविघातादिति भावः॥ ४॥

प्। १२८)

13469 मुमुक्षुव्यवहारोक्तिमयात्प्रकरणात्प्रकरणात्परम् ।
13470 अथोत्पत्तिप्रकरणं मयेदं परिकथ्यते ॥ ५ ॥
13471
13472 अथेत्यानन्तर्येण हेतुतासंगतिर्दर्शिता ॥ ५ ॥
13473
13474 बन्धोऽयं दृश्यसद्भावाद्दृश्याभावेन बन्धनम् [सद्भावो
13475 दृश्याभावेन इति पाठः] ।
13476 न संभवति दृश्यं तु यथेदं तच्छृणु क्रमात् ॥ ६ ॥
13477
13478 ननु बन्धनिरासोपायार्थिनो मम किमनेन
13479 दृश्यमिथ्यात्वपरोत्पत्तिप्रकरणश्रवणेनेत्यत्राह - बन्ध इति ॥ ६ ॥
13480
13481 उत्पद्यते यो जगति स एव किल वर्धते ।
13482 स एव मोक्षमाप्नोति स्वर्गं वा नरकं च वा ॥ ७ ॥
13483
13484 ननु न दृश्यासंभवमात्रेण बन्धनिवृत्तिः
13485 उत्पत्तिवृद्धिनाशस्वर्गनरकादेर्बन्धस्य
13486 द्रष्टृधर्मताप्रत्ययेनात्मकोऽत्यन्तःपातेन दृश्यनिवृत्तावपि
13487 तदनिवृत्तेरित्याशङ्क्याह - उत्पद्यत इति द्वाभ्याम् । सत्यमुत्पद्यते यः स
13488 एव वृद्ध्यपक्षयस्वर्गनरकादीन् बन्धमोक्षौ चानुभवेन्न त्वात्मा
13489 उत्पत्त्यादिस्वभावः । स्वस्वरूपानवबोधेनैव
13490 तस्योत्पत्त्यादिभ्रमविभावनादित्यर्थः ॥ ७ ॥
13491
13492 अतस्ते स्वावबोधार्थं तत्तावत्कथयाम्यहम् ।
13493 उत्पत्तिः संसृतावेति पूर्वमेव हि यो यथा ॥ ८ ॥
13494
13495 यतः स्वानवबोधादेव बन्धोऽतः स्वावबोधार्थं तद्दृश्यासंभवं
13496 तावद्वक्ष्यमाणप्रकारं कथयामि । यथा उत्पत्त्यादिसंबन्धः संसृतौ
13497 दृश्यसंसारकोटौ एति नात्मकोटौ । आत्मा तु दृश्योत्पत्तेः पूर्वं यथा
13498 तथैव नाणुमात्रमपि विक्रियत इत्यर्थः । तथाच श्रुतिः न निरोधो न चोत्पत्तिर्न
13499 बद्धो न च साधकः । न मुमुक्षुर्न वै मुक्तिरित्येषा [मुक्त इत्येषा इति
13500 पाठः] परमार्थता इति ॥ ८ ॥
13501
13502 इदं प्रकरणार्थं त्वं संक्षेपाच्छृणु राघव ।
13503 ततः संकथयिष्यामि विस्तरं ते यथेप्सितम् ॥ ९ ॥
13504
13505 अयमेवास्य प्रकरणस्यार्थ इति वक्ष्यमाणविस्तरोपोद्घाततयास्मिन्सर्गे
13506 संक्षेपतः प्रपश्यत इत्याह - इदमिति । अयं चासौ प्रकरणार्थश्चेति
13507 कर्मधारयः । प्रकरणार्थमुत्पत्तिप्रकरणोपोद्घाताय
13508 इदमेतत्सगप्रपाद्यमिति वा ॥ ९ ॥
13509
13510 यदिदं दृश्यते सर्वं जगत्स्थावरजंगमम् ।
13511 तत्सुषुप्ताविव स्वप्नः कल्पान्ते प्रविनश्यति ॥ १० ॥
13512
13513 पूर्वमेव हि यो यथेत्युक्तार्थस्योपपादनाय
13514 प्रलयावस्थापरिशिष्टात्मस्वरूपं वक्तुं पूर्वसर्गस्य कारणे लयप्रकारं
13515 दृष्टान्तेनाह - यदिदमिति ।
13516 सांख्यनैयायिकाद्यभिमतप्रधानपरमाण्वादिपरिशेषात्मकप्रलयवैधर्
13517 म्यार्थं दृष्टान्तोक्तिः ॥ १० ॥
13518
13519 ततः स्तिमितगम्भीरं न तेजो न तमस्ततम् ।
13520 अनाख्यमनभिव्यक्तं सत्किंचिदवशिष्यते ॥ ११ ॥

13521
13522 स्तिमितमक्रियममूर्तत्वात्। गम्भीरमपरिच्छेद्यत्वात्। अरूपत्वान्न तेजः।
13523 भारूपत्वान्न तमः। निर्धर्मकत्वादनाख्यम्।
13524 अज्ञानावृतत्वादनभिव्यक्तं प्रपञ्चसंस्काराधारत्वाद्वा अनभिव्यक्तम्
13525 ॥ ११ ॥
13526
13527 ऋतमात्मा परं ब्रह्म सत्यमित्यादिका बुधैः।
13528 कल्पिता व्यवहारार्थं तस्य संज्ञा महात्मनः ॥ १२ ॥
13529
13530 उत्कृष्टप्रमाणश्रुतिगम्यत्वादृतम्। यच्चाप्नोति यदादत्ते यच्चात्ति
13531 विषयानिह। यच्चास्य संततो भावस्तस्मादात्मेति शब्द्यते ॥ इति व्यासोक्तरीत्या
13532 आत्मा। सत्यतोत्कर्षावधित्वात्परम्। बृहत्त्वाज्जगदाकारबृंहकत्वाद्वा
13533 ब्रह्म। यथाशास्त्रं विद्वद्भिरनुभूयमानं सत्यम्। व्यवहार
13534 उपदेश्योपदेशस्तदर्थम् ॥ १२ ॥
13535
13536 स तथाभूत एवात्मा स्वयमन्य इवोल्लसन्।
13537 जीवतामुपयातीव भाविनाम्ना [भाविनाम इति पाठः] कदर्थिताम्
13538 ॥ १३ ॥
13539
13540 सर्गादौ तस्यानृतं समष्टिजीवभावमाह - स इति।
13541 तथाभूतश्चित्स्वभावेन स्थित एव मोहादन्यो जड
13542 आकाशादिक्रमोद्भूतलिङ्गसमष्ट्यात्मा तदनुप्रवेशात्तदभिमानेन स
13543 इवोल्लसंस्तदन्तर्गतप्राणधारणोपाधिना
13544 देहनिष्पत्त्युत्तरभाविवागभिव्यक्त्यधीनत्वाद्भाविना जीवनाम्ना कदर्थितां
13545 कुत्सितार्थत्वेन संपादितां जीवतां एतीव [सेतीव इति पाठः] भ्रान्त्या।
13546 वस्तुतस्तु नैत्येवेत्यर्थः ॥ १३ ॥
13547
13548 ततः स जीवशब्दार्थकलनाकुलतां गतः।
13549 मनो भवति भूतात्मा मननान्मन्थरीभवन् ॥ १४ ॥
13550
13551 इत्थं ज्ञानशक्तिमात्रसाध्यं सर्गमुक्त्वा क्रियाशक्तिसहकृततत्साध्यं
13552 तमाह - तत इति। जीवशब्दार्थः क्रियाशक्तिप्रधानप्राणधृतिस्तत्कलनेन
13553 आकुलतां चञ्चलताम्। भूतात्मा भौतिकलिङ्गात्मा।
13554 संकल्पविकल्पमननान्मन्थरीभवन् जाड्येन मन्दीभवन् ॥ १४ ॥
13555
13556 मनः संपद्यते तेन महतः परमात्मनः।
13557 सुस्थिरादस्थिराकारस्तरङ्ग इव वारिधेः ॥ १५ ॥
13558
13559 तेन मनोभावेन। महतः परमात्मन इति ल्यब्लोपे पञ्चम्यौ।
13560 तादृशपरमात्मभावं विस्मृत्येत्यर्थः। मनः संपद्यते
13561 मनोधर्मसंकल्पादीनात्मन इति मन्यते ॥ १५ ॥
13562
13563 तत्स्वयं स्वैरमेवाशु संकल्पयति नित्यशः।
13564 तेनेत्थमिन्द्रजालश्रीर्विततेयं वितन्यते ॥ १६ ॥
13565
13566 तदेवं समष्टिमनोभावमापन्नं हिरण्यगर्भाख्यं ब्रह्म
13567 स्वयमन्येनाबोधितमपि पूर्ववासनानुरोधाद्विराड्भावं भुवनादिभावं
13568 तत्र चतुर्विधभूतग्रामभावमिति नित्यं स्वैरमेव संकल्पयतीत्यर्थः। तेन
13569 सत्यसंकल्पेन ॥ १६ ॥
13570
13571 यथा कटकशब्दार्थः पृथक्त्वार्हो न काञ्चनात्।
13572 न हेम कटकात्तद्वज्जगच्छब्दार्थता परे ॥ १७ ॥

इत्थमध्यारोपसहस्रेणापि नाधिष्ठानस्य पारमार्थिकस्थितिभङ्ग इति
दर्शयितुं दृष्टान्तमाह - यथेति।
हेमकटकरूपात्काञ्चनात्कटकशब्दार्थो यथा पृथक्त्वार्हो नेत्यन्वयः।
परे ब्रह्मणि प्रतिभाता जगच्छब्दार्थतापि ततः पृथक्त्वार्हा नेत्यर्थः॥ १७
।।

ब्रह्मण्येवास्त्यनन्तात्म यथास्थितमिदं जगत्।
न जगच्छब्दकार्थेऽस्ति हेम्नीव कटकात्मता॥ १८॥

द्वयोः पृथक्त्वानर्हत्वेनैकसत्ताकता सिद्धा सा चानागन्तुकब्रह्मभावे
स्वतो जगद्भावे तु तदधीना न स्वत इत्याह - ब्रह्मण्येवेति। इदं जगत्
अनन्तात्मपरित्यक्तपरिच्छेदस्वभावं ब्रह्मस्वभाव एवास्ति
जगच्छब्दकार्थे अन्तवदात्मस्वभावे तु नास्ति कटकात्मता यथा
हेमस्वभावेऽस्ति न कटकस्वभावे तद्वत्॥ १८॥

प्। १२९)

सती वाप्यसती तापनद्येव लहरी चला।
मनसेहेन्द्रजालश्रीर्जागती प्रवितन्यते॥ १९॥

यदि स्वतो नास्ति कथं सतीव भाति तत्राह - सतीति। तापो
मरुमरीचिस्तत्कल्पितनद्या लहरीव जागती इन्द्रजालश्रीरसत्यपि सतीव प्रवितन्यत
इत्यन्वयः॥ १९॥

अविद्या संसृतिर्बन्धो माया मोहो महत्तमः।
कल्पितानीति नामानि यस्याः सकलवेदिभिः॥ २०॥

तस्या असत्त्वं तु आविद्यकत्वेनाविद्यात्मकत्वादित्यभिप्रेत्य
तदनुरूपनामभिरविद्यां दर्शयति - अविद्येति। विद्यापोद्यत्वादविद्या।
ऊर्ध्वाधस्तिर्यक्संसरणहेतुत्वात्संसृतिः। अस्वातन्त्र्यप्रयोजकत्वाद्बन्धः।
मिथ्यात्वान्माया। भ्रमहेतुत्वान्मोहः। दुस्तरत्वान्महत्।
स्वरूपावरकत्वात्तम इत्यादीनि नामानि॥ २०॥

बन्धस्य तावद्रूपं त्वं कथ्यमानमिदं शृणु।
ततः स्वरूपं मोक्षस्य ज्ञास्यसीन्दुनिभानन॥ २१॥

द्रष्टुर्दृश्यस्य सत्ताङ्ग बन्ध इत्यभिधीयते।
द्रष्टा दृश्यबलाद्बद्धो [वशाद्बद्ध इति पाठः]
दृश्याभावे विमुच्यते॥ २२॥

ज्ञानेन बाधितुं प्राप्तुं च योग्यं बन्धमोक्षयोः स्वरूपमाह -
द्रष्टुरिति। अङ्गेति प्रियसंबोधने॥ २२॥

जगत्त्वमहमित्यादिर्मिथ्यात्मा दृश्यमुच्यते।
यावदेतत्संभवति तावन्मोक्षो न विद्यते॥ २३॥

नेदं नेदमिति व्यर्थप्रलापैर्नोपशाम्यति।
संकल्पजनकैर्दृश्यव्याधिः प्रत्युत वर्धते॥ २४॥

ननु यदि दृश्यासंभव एव मोक्षस्तर्हि तदा तदोपस्थितस्य दृश्यस्य
नेदं नेदमिति निरासेनैव रोगनिरासेनारोग्यमिव स सेत्स्यतीति किं

13625 तत्त्वज्ञानायासेनेत्यत आह - नेदमिति। नेदमिति प्रलापो हि सति दृश्ये
13626 बाधितार्थत्वात्तद्विरोधि दृश्यान्तरोत्पादनसंकल्पेन [त्पादनेन
13627 संकल्पेन इति पाठः] तदुत्पादनेन पूर्वदृश्यनिरासको वाच्यः तथा
13628 सत्येकदृश्यनिरासाय दृश्यद्वयजननाद्वर्धत इत्यर्थः॥ २४॥
13629
13630 न च तर्कभरक्षोदैर्न तीर्थनियमादिभिः।
13631 सतो दृश्यस्य जगतो यस्मादेति विचारकाः [विचारक इति पाठः]॥
13632 २५॥
13633
13634 हे विचारकाः दृश्यस्य सतः दृश्ये सति तर्कातिशयादिना दृश्यव्याधिर्न
13635 शाम्यतीत्येतावदेव न किंत्वन्योऽप्येति आगच्छतीत्यर्थः। षष्ठी चानादरे इति
13636 भावलक्षणे षष्ठी। दृश्यसत्ता नानादरादुपेक्ष्या किंतु विचारेण
13637 बाध्येत्यर्थः॥ २५॥
13638
13639 जगद्दृश्यं तु यद्यस्ति न शाम्यत्येव कस्यचित्।
13640 नासतो विद्यते भावो नाभावो विद्यते सतः॥ २६॥
13641
13642 किंच दृश्यस्य स्वतः सत्तभ्युपगमे सतो बाधायोगादनिर्मोक्षः
13643 स्यादित्याह - जगदिति॥ २६॥
13644
13645 अचेत्यचित्स्वरूपात्मा यत्र यत्रैव तिष्ठति।
13646 द्रष्टा तत्रास्य दृश्यश्रीः समुदेत्यप्यणूदरे॥ २७॥
13647
13648 नन्वयं द्रष्टा तपोध्यानादिबलाद्दृश्यनिर्मुक्ते
13649 दृश्यसमावेशायोग्यपरमाणूदरादौ वा गत्वा तिष्ठन् दृश्यनिर्मुक्तो
13650 भविष्यतीति कथमनिर्मोक्षस्तत्राह - अचेत्येति। तप आदिना अचेत्यो
13651 बोद्धुमशक्यः अज्ञातचिद्रूप [चिद्रूपेति पदं क्वचिन्न पठ्यते]
13652 आत्मा यस्य स द्रष्टा तादृशात्मन एव दृश्यबीजत्वादणूदरेऽपि भ्रान्त्या
13653 वैपुल्यप्रतिभासाविरोद्धात्तत्रापि दृश्यबन्धो दुर्वार इति भावः॥ २७॥
13654
13655 तस्मादस्ति जगद्दृश्यं तत्प्रसृष्टमिदं मया।
13656 त्यक्तं तपोध्यानजपैरिति काञ्जिकतृप्तिवत्॥ २८॥
13657
13658 उक्तमुपसंहरति - तस्मादिति। स्वस्थाने प्रमृष्टं देशान्तरप्राप्त्या
13659 त्यक्तं चेत्यर्थः। काञ्जिकं पर्युषितौदनोदकं सुराविशेषो वा॥ २८॥
13660
13661 यदि राम जगद्दृश्यमस्ति तत्प्रतिबिम्बति।
13662 परमाणूदरेऽप्यस्मिंश्चिदादर्शे तथैव हि॥ २९॥
13663
13664 परमाणूदरेऽप्यात्मनि ब्रह्माण्डसमावेशसंभावनार्थमादर्शे इति।
13665 यथा विपुलप्रदेशे तथैव न संकोचेनेत्यर्थः॥ २९॥
13666
13667 यत्र तत्र स्थिते यद्वद्दर्पणे प्रतिबिम्बति।
13668 अद्न्यब्ध्युर्वीनदीवारि चिदादर्शे तथैव हि॥ ३०॥
13669
13670 ततस्तत्र पुनर्दुःखं जरा मरणजन्मनी।
13671 भावाभावग्रहोत्सर्गः स्थूलसूक्ष्मचलाचलः॥ ३१॥
13672
13673 स्थूलो जागरे सूक्ष्मः स्वप्ने भावाभावग्रहः सुषुप्तौ तूत्सर्ग इति।
13674 चलाचलोऽस्थिरः॥ ३१॥
13675
13676 इदं प्रमार्जितं दृश्यं मया चात्राहमास्थितः।

13677 एतदेवाक्षयं बीजं समाधौ संसृतिस्मृतेः || ३२ ||
13678
13679 ज्ञाननिरपेक्षसविकल्पकसमाधिना दृश्यमार्जनमाशङ्क्याह
13680 [मार्जनस्यासंभवमाह इति पाठः] - इदमिति | अस्मृतस्य
13681 प्रमार्जनायोगात्तत्स्मृतौ तु समाधिभङ्गादिति भावः || ३२ ||
13682
13683 सति त्वस्मिन्कुतो [ज्गद्दृश्ये इति पाठः] दृश्ये
13684 निर्विकल्पसमाधिता |
13685 समाधौ चेतनत्वं तु तुर्यं चाप्युपपद्यते || ३३ ||
13686
13687 अत एव न निर्विकल्पकसमाधिनापि तन्मार्जनमित्याह - सतीति | सति तु
13688 निर्विकल्पकसमाधौ चित्तसत्त्वे चेतनत्वं तद्बाधे तुर्यत्वं चोपपद्यते |
13689 दृश्ये सति तु निर्विकल्पसमाधितैव कुत इत्यन्वयः | न चाक्षयसुषुप्तात्वं
13690 तुर्यं चापीति पाठे तु स्पष्टम् || ३३ ||
13691
13692 व्युत्थाने हि समाधानात्सुषुप्तान्त इवाखिलम् |
13693 जगद्दुःखमिदं भाति यथास्थितमखण्डितम् || ३४ ||
13694
13695 अस्तु वा समाधिस्तथापि संसारो दुर्वार इत्याह - व्युत्थान इति | भाति
13696 भासमाने प्रतीचि प्राप्तं भवतीत्युत्तरेणान्वयः || ३४ ||
13697
13698 प्राप्तं भवति हे राम तत्किं नाम समाधिभिः |
13699 भूयोऽनर्थनिपाते हि क्षणसाम्ये हि किं सुखम् || ३५ ||
13700
13701 भूयोऽप्यनर्थनिपाते संभाविते सति क्षणमात्रसमाधानेन किं सुखम् |
13702 किमित्याक्षेपे | सुखं नास्तीत्यर्थः || ३५ ||
13703
13704 यदि वापि समाधाने निर्विकल्पे स्थितिं व्रजेत् |
13705 तदक्षयसुषुप्ताभं तन्मन्येतामलं पदम् || ३६ ||
13706
13707 यदि निर्विकल्पे स्थितिं कदाप्यव्युत्थानं व्रजेत्तर्ह्यक्षयसुखं विनापि
13708 ज्ञानं प्राप्तमिति यदि मन्येतेति पराभिप्रायानुवादः | अक्षयसुषुप्ताभमिति
13709 मौढ्यानुच्छेदादपुरुषार्थता सूचिता || ३६ ||
13710
13711 प्। १३०)
13712
13713 प्राप्यते सति दृश्येऽस्मिन्न च किंनाम केनचित् |
13714 यत्र यत्र किलायाति चित्ततास्य जगद्भ्रमः || ३७ ||
13715
13716 उत्तरमाह - प्राप्यत इति | अस्मिन्मनोलक्षणे दृश्ये सति
13717 केनचित्समाधियत्नवतापि किंनाम दृश्यं न प्राप्यते | यतोऽस्य चित्तता
13718 यत्रयत्र विषये आयाति तत्र तत्र तदनुबन्धी जगद्भ्रमो दुर्निवार इत्यर्थः || ३७ ||
13719
13720 द्रष्टाथ यदि पाषाणरूपतां भावयन्बलात् |
13721 किलास्ते तत्तदन्तेऽपि भूयोऽस्योदेति दृश्यता || ३८ ||
13722
13723 किंचायमज्ञत्वादनात्मानमेव पाषाणादिसमाधौ भावयेत् तदस्य तदन्ते
13724 फलकालेऽपि दृश्यतामेति न दृङ्मात्रपरिशेषसमाधिसिद्धिरित्याह -
13725 द्रष्टेति || ३८ ||
13726
13727 न च पाषाणतातुल्या निर्विकल्पसमाधयः |
13728 केषांचित्स्थितिमायान्ति सर्वैरित्यनुभूयते || ३९ ||

13729
13730 समाधिबललब्धनिर्दुःखपाषाणभावेऽपि न स्थैर्यं [स्थैर्यप्रत्याशा
13731 इति पाठः] प्रत्याशेत्याह - न चेति। इत्ययमर्थः सर्वैः
13732 समाधिनिष्ठैरनुभूयते॥ ३९॥
13733
13734 न च पाषाणतातुल्या रूढिं [वृद्धिं याताः इति पाठः] याताः
13735 समाधयः।
13736 भवन्त्यग्रपदं शान्तं चिद्रूपमजमक्षयम्॥ ४०॥
13737
13738 मा भूदनिरूढानां स्थैर्यं तद्भावापत्तिपर्यन्तनिरूढसमाधीनां तु
13739 स्थैर्यं स्यात्तत्राह - न चेति। रूढिं याता अप्यचेतना
13740 नित्यपाषाणतादितुल्याः समाधयः सर्वसंसारशान्त्युपलक्षितमग्रपदं
13741 मोक्षरूपं न भवन्ति॥ ४०॥
13742
13743 तस्माद्यदीदं सद्दृश्यं तन्न शाम्येत्कदाचन।
13744 शाम्येत्तपोजपध्यानैर्दृश्यमित्यज्ञकल्पना॥ ४१॥
13745
13746 अतः प्रागुक्तमेव सिद्धमित्याह - तस्मादिति॥ ४१॥
13747
13748 आलीनवल्लरीरूपं यथा पद्माक्षकोटरे।
13749 आस्ते कमलिनीबीजं तथा द्रष्टरि दृश्यधीः॥ ४२॥
13750
13751 साविद्ये द्रष्टरि दृश्यसद्भावं दृष्टान्तैः साधयति -
13752 आलीनेत्यादिचतुर्भिः। पद्माक्षकोटरे भाविकमलिनीवल्ल्या
13753 बीजमुपादानभूतमालीनं सूक्ष्मीभूतं पद्मवल्लरीरूपं यथा आस्ते असत
13754 उत्पत्त्ययोगात्तथा द्रष्टरि दृश्यसहिता धीरस्त्येवेत्यर्थः॥ ४२॥
13755
13756 यथा रसः पदार्थेषु यथा तैलं तिलादिषु।
13757 कुसुमेषु यथाऽमोदस्तथा द्रष्टरि दृश्यधीः॥ ४३॥
13758
13759 यत्र यत्र स्थितस्यापि कर्पूरादेः सुगन्धिता।
13760 यथोदेति तथा दृश्यं चिद्धातोरुदरे जगत्॥ ४४॥
13761
13762 सतश्चोद्भवोऽपि दुर्वार इत्यत्रापि दृष्टान्तमाह - यत्रेति॥ ४४॥
13763
13764 यथा चात्र तव स्वप्नः संकल्पश्चित्तराज्यधीः।
13765 स्वानुभूत्यैव दृष्तान्तस्तथा हृद्यस्ति दृश्यभूः॥ ४५॥
13766
13767 यदुक्तं परमाणूदरेऽपीति तत्रापि तमाह - यथेति। यथा तव हृदि
13768 अन्तर्मनोराज्यधीः स्वानुभूत्यैव दृष्टा। स्वप्नः संकल्पश्च दृष्ट इति
13769 विपरिणामः॥ ४५॥
13770
13771 तस्माच्चित्तविकल्पस्थपिशाचो बालकं यथा।
13772 विनिहन्त्येवमप्येतं द्रष्टारं दृश्यरूपिका॥ ४६॥
13773
13774 एवमुक्तदृष्टान्तवत् एतं द्रष्टारमपि दृश्य लक्षणा रूपिका निहन्ति।
13775 स्त्रीवेषेण मोहयित्वा पुरुषान्निघ्नन्त्यः पिशाच्यो रूपिका इत्युच्यन्ते॥ ४६॥
13776
13777 यथाङ्कुरोऽन्तर्बीजस्य संस्थितो देशकालतः।
13778 करोति भासुरं देहं तनोत्येवं हि दृश्यधीः॥ ४७॥
13779
13780 यदि सर्वं दृश्यं हृद्यस्ति तर्ह्यधुनैव सर्वैः कुतो नानुभूयते तत्राह

13781 - यथेति। देशकालकर्मपरिपाका अपि तदाविर्भावसहकारिण इति भावः॥ ४७
13782 ॥
13783
13784 द्रव्यस्य हृद्येव चमत्कृतिर्यथा
13785 सदोदितास्त्यस्तमितोज्झितोदरे।
13786 द्रव्यस्य चिन्मात्रशरीरिणस्तथा
13787 स्वभावभूतास्त्युदरे जगत्स्थितिः॥ ४८॥
13788
13789 अतर्क्याकार्यवैचित्र्यशक्तिश्चमत्कृतिः सा यथा बीजादिद्रव्यस्योदरे कोटरे
13790 हृदि सारभागे एवास्ति तथा चिन्मात्रस्वभावस्य
13791 विद्याशरीरिणोऽप्यात्मद्रव्यस्याप्युदरेऽन्तश्चिदचित्संवलनस्वभावभूता
13792 जगत्स्थितिरतीतानागतजगत्सत्तास्तीत्युक्तार्थनिगमनम्॥ ४८॥
13793
13794 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे
13795 बन्धहेतुवर्णनं नाम प्रथमः सर्गः॥ १॥
13796
13797 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
13798 बन्धहेतुवर्णनं नाम प्रथमः सर्गः॥ १॥
13799
13800 द्वितीयः सर्गः २
13801
13802 श्रीवसिष्ठ उवाच।
13803
13804 इदमाकाशजाख्यानं शृणु श्रवणभूषणम्।
13805 उत्पत्त्याख्यं प्रकरणं येन राघव बुध्यसे [बुध्यते इति
13806 पाठः]॥ १॥
13807
13808 अज्ञो भौतिकदेहात्मा मृत्युभक्षो न तत्त्ववित्।
13809 आकाशजो द्विज इव चिन्मात्रात्मेति कीर्त्यते॥ १॥
13810
13811 कामकर्मवासनासंभृताविद्योपहित आत्मैव जगद्बीजं मृत्युबीजं च।
13812 विद्यया तद्बीजशक्तिदाहे तु मृत्युवशो भवतीति प्रागुक्तार्थे विशेषं
13813 दर्शयितुं जगदाद्यस्रष्टृतत्त्वशोधनेन
13814 वक्ष्यमाणार्थोपोद्घातसंगतामाख्यायिकां वर्णयिष्यन् श्रीवसिष्ठ उवाच
13815 - इदमिति। आकाशादध्यस्ता विद्या नैल्याधारत्वेनाकाशसदृशाद-
13816 विद्यावृतत्वादीषत्प्रकाशाद्वा ब्रह्मणो जात आकाशजो लिङ्गसमष्ट्यात्मा
13817 हिरण्यगर्भस्तस्याख्यानम्॥ १॥
13818
13819 अस्ति ह्याकाशजो नाम द्विजः परमधार्मिकः।
13820 ध्यानैकनिष्ठः सततं प्रजानां च हिते रतः॥ २॥
13821
13822 तद्यथा कृताय विजितायाधरेयाः संयन्ति इत्यादिश्रुत्या
13823 हैरण्यगर्भपदप्रापकसंवर्गविद्यादिधर्मे
13824 सर्वप्रजाकृतधर्माणामन्तर्भाववर्णनात्परमधार्मिकः।
13825 ध्यानमात्मचिन्तनं तदेकनिष्ठः॥ २॥
13826
13827 प्। १३१)
13828
13829 स चिरं जीवति यदा तदा मृत्युरचिन्तयत्।
13830 सर्वाण्येव क्रमेणाहं भूतान्यद्मि किलाक्षयः॥ ३॥
13831
13832 चिरं जीवति मृत्युवशो न भवति यदा तदेत्यर्थः॥ ३॥

13833
13834 एनमाकाशजं विप्रं न कस्माद्भक्षयाम्यहम् ।
13835 अत्र मे कुण्ठिता शक्तिः खड्गधारा इवोपले ॥ ४ ॥
13836
13837 इति संचिन्त्य तं हन्तुमगच्छत्तत्पुरं तदा ।
13838 त्यजन्त्युद्यममुद्युक्ता न स्वकर्माणि केचन ॥ ५ ॥
13839
13840 तत्पुरं मेरुमध्ये प्रसिद्धम् । सत्यलोके मृत्योरप्रवेशात् । उद्युक्ता
13841 उद्योगयुक्ताः समर्थाः ॥ ५ ॥
13842
13843 ततस्तत्सदनं यावन्मृत्युः प्रविशति स्वयम् ।
13844 तावदेनं दहत्यग्निः कल्पान्तज्वलनोपमः ॥ ६ ॥
13845
13846 समाधिविघातकप्रतिरोधाय पूर्वमेव ब्रह्मणा प्राकारतया संकल्पितोऽग्निः ।
13847 एनं मृत्युम् ॥ ६ ॥
13848
13849 अग्निज्वालामहामालां विदार्यान्तर्गतो ह्यसौ ।
13850 द्विजं दृष्ट्वा समदातुं हस्तेनैच्छत्प्रयत्नतः ॥ ७ ॥
13851
13852 अग्निज्वालानां महतीं मालां वलयं विदार्य ॥ ७ ॥
13853
13854 नचाशकत्पुरो दृष्टमपि हस्तशतैर्द्विजम् ।
13855 बलवानप्यवष्टब्धुं संकल्पपुरुषं यथा ॥ ८ ॥
13856
13857 अवष्टब्धुं स्प्रष्टुम् ॥ ८ ॥
13858
13859 अथागत्य यमं मृत्युरपृच्छत्संशयच्छिदम् ।
13860 किमित्यहं न शक्नोमि भोक्तुमाकाशजं विभो ॥ ९ ॥
13861
13862 यम उवाच ।
13863
13864 मृत्युओ न किंचिच्छक्तस्त्वमेको मारयितुं बलात् ।
13865 मारणीयस्य कर्माणि तत्कर्तॄणीति नेतरत् ॥ १० ॥
13866
13867 एकः असहायः । तत्कर्तॄणि मारणकर्तॄणि । इति एतस्मान्नेतरत्त्वदशक्तौ
13868 कारणमिति शेषः ॥ १० ॥
13869
13870 तस्मादेतस्य विप्रस्य मारणीयस्य यत्नतः ।
13871 कर्माण्यन्विष्य तेषां त्वं साहाय्येनैनमत्स्यसि ॥ ११ ॥
13872
13873 अन्विष्य गवेषणं कुरु । एष गतौ श्यन् लोट् हिः । साहाय्येन आनुकूल्येन ॥ ११ ॥
13874
13875 ततः स मृत्युर्बभ्राम तत्कर्मान्वेषणादृतः ।
13876 मण्डलानि दिगन्तांश्च सरांसि सरितो दिशः ॥ १२ ॥
13877
13878 कस्मिन्देशेऽयं प्राक्किं कर्म कृतवानिति सप्रणिधानं पर्यालोचनमेव
13879 चिरयत्ननिष्पाद्यत्वाद्बभ्रामेत्युच्यते न देशसंचरणम् ।
13880 कर्तृलिङ्गसमवायिनामदृष्टानां बहिरन्वेषणाप्रसक्तेः ॥ १२ ॥
13881
13882 वनजङ्गलजालानि शैलानब्धितटानि च ।
13883 द्वीपान्तराण्यरण्यानि नगराणि पुराणि च ॥ १३ ॥
13884

13885 पुराणि महानगरोपकण्ठे शाखानगराणि ||१३ ||
13886
13887 ग्रामाण्यखिलराष्ट्राणि देशान्तर्गहनानि च |
13888 एवं भूमण्डलं भ्रान्त्वा न कुतश्चित्स कानिचित् || १४ ||
13889
13890 तान्याकाशजकर्माणि लब्धवान्मृत्युरुद्यतः |
13891 वन्ध्यापुत्रमिव प्राज्ञः संकल्पाद्रिमिवापरः || १५ ||
13892
13893 लब्धवानुपलब्धवान् | अपरः संकल्पयितुरन्यः पुरुषः || १५ ||
13894
13895 समपृच्छदथागत्य यमं सर्वार्थकोविदम् |
13896 परायणं हि प्रभवः संदेहेष्वनुजीविनाम् || १६ ||
13897
13898 अनुजीविनां भृत्यानाम् || १६ ||
13899
13900 मृत्युरुवाच |
13901
13902 आकाशजस्य कर्माणि क्व स्थितानि वद प्रभो |
13903 धर्मराजोऽथ संचिन्त्य सुचिरं प्रोक्तवानिदम् || १७ ||
13904
13905 धर्मराज उवाच |
13906
13907 आकाशजस्य कर्माणि मृत्यो सन्ति न कानिचित् |
13908 एष आकाशजो विप्रो जातः खादेव केवलात् || १८ ||
13909
13910 प्रारब्धाधिकारफलानां फलारम्भेनैव विनाशात्संचितानां ज्ञानेन
13911 बाधादागामिनां बीजाभावान्न सन्त्येवेत्युक्तिः || १८ ||
13912
13913 आकाशादेव यो जातः स व्योमैवामलं भवेत् |
13914 सहकारीणि नो सन्ति न कर्माण्यस्य कानिचित् || १९ ||
13915
13916 सहकारिण्यभिमानरागादीनि मृत्योर्मारणे वा सहकारीणि
13917 कर्माण्यद्यतनानीति शेषः || १९ ||
13918
13919 संबन्धः प्राक्तनेनास्य न मनागपि कर्मणा |
13920 अस्ति वन्ध्यासुतस्येव तथाऽजाताकृतेरिव || २० ||
13921
13922 संबन्ध इति | तथाच सूत्रम् - तदधिगम उत्तरपूर्वाधयोरश्लेषविनाशौ
13923 इति | अजाताकृतेरनुत्पन्नाकारस्येव || २० ||
13924
13925 कारणानामभावेन तस्मादाकाशमेव सः |
13926 नैतस्य पूर्वकर्मास्ति नभसीव महाद्रुमः || २१ ||
13927
13928 कारणानामविद्यादीनां निर्विकारस्य विकारहेतूनां वा | तस्माद्विकारायोगात् ||
13929 २१ ||
13930
13931 नैतदस्यावशं चित्तमभावात्पूर्वकर्मणाम् |
13932 अद्य तावदनेनाद्यं [अनेनान्यत्र किंचित् इति पाठः] न
13933 किंचित्कर्म संचितम् || २२ ||
13934
13935 मास्तु शारीरं मानसं तु स्यात्तत्राह - नैतदिति |
13936 पूर्वदेहस्पन्दवासनावशो हि चित्तस्पन्दः तदभावादेवाद्यतनं शारीरमपि

आद्यमदनार्हं मृत्योः कर्म न संचितम् ॥ २२ ॥

एवमाकाशकोशात्मा विशदाकाशरूपिणि ।
स्वकारणे स्थितो नित्यः [नित्यं कर्माण्यस्य न कानिचित् इति पाठः]
कारणानि न कानिचित् ॥ २३ ॥

एवंच सत्ययं परब्रह्मस्वभाव एव स्थितो न दृश्यस्वभाव इत्याह -
एवमिति ॥ २३ ॥

प्राक्तनानि न सन्त्यस्य कर्माण्यद्य करोति नो ।
किंचिदप्येवमेषोऽत्र विज्ञानाकाशमात्रकः ॥ २४ ॥

तद्भावे तु प्राक्तनकर्मादिप्रसक्तिरेव नास्तीत्याह - प्राक्तनानीति ॥ २४ ॥

प्राणस्पन्दोऽस्य यत्कर्म लक्ष्यते चास्मदादिभिः ।
दृश्यतेऽस्माभिरेवं [रेवैतत् इति पाठः] तन्न त्वस्यास्त्यत्र
कर्मधीः ॥ २५ ॥

ननु तर्हि कथमयमस्माभिः प्राणदेहादिक्रियावान्दृश्यते तत्राह -
प्राणेति । तदस्माभिः स्वाविद्यया भ्रान्त्या दृश्यते नत्वस्य तत्र
सत्यताधीरस्तीत्यर्थः ॥ २५ ॥

संस्थिता भावयन्तीव चिद्रूपैव परात्पदात् ।
भिन्नमाकारमात्मीयं चित्स्तम्भे शालभञ्जिका ॥ २६ ॥

कथं तर्हि तस्य देहादिधीस्तामाह - संस्थितेति । चित्स्तम्भे चिद्रूपैव
शालभञ्जिका प्रतिमा आत्मीयं भिन्नं चिद्विलक्षणमाकारं भावयन्तीव
स्थिता । तथाच भावनामात्ररूपं तन्न वास्तवमित्यस्य धीरित्यर्थः ॥ २६ ॥

प। १३२)

तथैव परमार्थात्सखात्मभूतः [परमार्थन्तः स्वात्मभूत इति
पाठः] स्थितो द्विजः ।
यथा द्रवत्वं पयसि शून्यत्वं च यथाम्बरे ॥ २७ ॥

क्वचित्त्वस्य दृष्टान्तर्थमनुत्कीर्णा यथा स्तम्भे संस्थिता
शालभञ्जिकेत्यर्धमधिकं पठ्यते ॥ २७ ॥

स्पन्दत्वं च यथा वायोस्तथैष परमे पदे ।
कर्माण्यद्यतनान्यस्य संचितानि न सन्ति हि ॥ २८ ॥

न पूर्वाण्येष तेनेह न संसारवशं गतः ।
सहकारिकारणानामभावे यः प्रजायते ॥ २९ ॥

उपपादितप्रकारेण कर्मासंभवानुवादस्य फलकीर्तनं न संसारवशं
गत इति । प्रसिद्धरजतकारणाजन्यशुक्तिरजतस्येव तदीयदेहादेर्मिथ्यात्वनिर्णये
तत्प्रयुक्तकर्तृत्वादिबाधान्न मृत्वाक्रमणप्रसक्तिरित्याह -
सहकारीत्यादिना वदेत्यन्तेन ॥ २९ ॥

नासौ स्वकारणाद्भिन्नो भवतीत्यनुभूयते ।
कारणानामभावेन तस्मादेष स्वयंभवः ॥ ३० ॥

13989 कर्ता न पूर्वं नाप्यद्य कथमाक्रम्यते वद।
13990 यदैष कल्पनां बुद्ध्या मृतिनाम्नीं करिष्यति॥ ३१॥
13991
13992 ननु जीवान्तराणामप्येतद्यष्टित्वात्कथं ते वा मृत्युना गृह्यन्ते तत्राह
13993 - यदैष इति। यस्य जीवस्य पृथ्व्यादिमान् देह एवाहमिति निश्चयोऽस्ति स
13994 मूढः पार्थिवदेह एव भवति तस्य एष ब्रह्मा यदा सत्यसंकल्पबुद्ध्या
13995 मृतिनाम्नीं कल्पनां करिष्यति तदा स त्वया ग्रहीतुं शक्यत इत्यर्थः॥ ३१॥
13996
13997 पृथ्व्यादिमानयमहमिति यस्य च निश्चयः।
13998 स पार्थिवो भवत्याशु ग्रहीतुं स च शक्यते॥ ३२॥
13999
14000 पृथ्व्यादिकलनाभावादेष विप्रो न रूपवान्।
14001 दृढरज्ज्वेव गगनं ग्रहीतुं नैव युज्यते॥ ३३॥
14002
14003 पृथ्व्यादिमयदेहकलनाया अभावान्न रूपवान्नाकारवान्॥ ३३॥
14004
14005 मृत्युरुवाच।
14006
14007 भगवञ्जायते शून्यात्कथं नाम वदेति मे।
14008 पृथ्व्यादयः कथं सन्ति न सन्ति वद वा कथम्॥ ३४॥
14009
14010 निर्विकारस्य शून्यस्य विकारमजस्य जन्म सतां पृथ्व्यादीनामसत्त्वं
14011 चोक्तमसंभावयन्मृत्युरुवाच - भगवन्निति॥ ३४॥
14012
14013 यम उवाच।
14014
14015 न कदाचन जातोऽसौ न च नास्ति कदाचन।
14016 द्विजः केवलविज्ञानभामात्रं तत्तथा स्थितः॥ ३५॥
14017
14018 परस्याकाशत्वोक्तिः पृथ्व्यादीनामसत्त्वोक्तिश्च न शून्यत्वाभिप्रायेण किंतु
14019 कार्यस्य कारणपृथक्सत्ताशून्यत्वाभिप्रायेण एवमजस्य
14020 जन्मोक्तिर्विवर्ताभिप्रायेण न परिणामाभिप्रायेणेत्याशयं सूचयन् यम
14021 उवाच - न कदाचनेति। यतोऽयं द्विजः परमार्थतः केवलं
14022 विज्ञानभामात्रं तत्ततो हेतोस्तथैव सदा स्थितो न विकृत इत्यर्थः॥ ३५॥
14023
14024 महाप्रलयसंपत्तौ न किंचिदवशिष्यते।
14025 ब्रह्मास्ते शान्तमजरमनन्तात्मैव केवलम्॥ ३६॥
14026
14027 आद्यन्तयोस्तन्मात्रपरिशेषात्तदेवास्य स्वाभाविकं सत्यं रूपमित्याशयेनाह
14028 - महाप्रलयेति सार्धेन॥ ३६॥
14029
14030 शून्यं नित्योदितं सूक्ष्मं निरुपाधि परं स्थितम्।
14031 तदा तदनु येनास्य निकटेऽद्रिनिभं महः॥ ३७॥
14032
14033 तदा प्रलये स्थितमित्यन्वयः। यदुक्तं दृश्यतेऽस्माभिरेवं तदिति
14034 तदुपपादयति - तदन्वित्यादिना। तदनु सर्गारम्भकाले येन
14035 वासनादृष्टसंभृतजीवाविद्याहेतुना अस्य संविन्मात्रस्वभावत्वान्निकटे
14036 पुरोविषयभावेन अद्रिनिभं पर्वतवदनिवार्यं विराडरूपं चतुर्मुखं वा
14037 देहोऽहमित्यभिलापार्हं महः स्थूलं रूपं चेतति ईषत्स्फुरति तदा तेनैव
14038 तादृशविद्याहेतुना काकतालीयवदकस्मात्स्वप्न इव भ्रान्तं मिथ्याभूतं
14039 तमाकारं पश्यति। अस्मदादिजन इत्यर्थः॥ ३७॥
14040

14041 संविन्मात्रस्वभावत्वाद्देहोऽहमिति चेतति |
14042 काकतालीयवद्भ्रान्तमाकारं तेन पश्यति || ३८ ||
14043
14044 स एष ब्राह्मणस्तस्मिन्सर्गादावम्बरोदरे |
14045 निर्विकल्पश्चिदाकाशरूपमास्थाय संस्थितः || ३९ ||
14046
14047 तथाच परदृष्ट्यध्यस्तदेहादिना नास्य निर्विकल्पतादिक्षतिरिति
14048 प्रागुक्तमव्याहतमित्याशयेनाह - स एष इत्यादि || ३९ ||
14049
14050 नास्य देहो न कर्माणि न कर्तृत्वं न वासना |
14051 एष शुद्धचिदाकाशो विज्ञानघन आततः || ४० ||
14052
14053 प्राक्तनंवासनाजालं किंचिदस्य न विद्यते |
14054 केवलं व्योमरूपस्य भारूपस्येव तेजसः || ४१ ||
14055
14056 वेदनामात्रसंशान्तावीदृशोऽपि न दृश्यते |
14057 तस्माद्यथा चिदाकाशस्तथा तत्प्रतिपत्तयः || ४२ ||
14058
14059 वेदना बहिर्मुखचित्प्रवृत्तिस्तन्मात्रसंशान्तौ ईदृशः प्रातिभासिकरूपोऽपि
14060 | वेदनाशान्तिस्तर्हि कथं तत्राह - तस्मादिति | अधिष्ठानतत्त्वपरिचयेन
14061 विषयबाधे तत्प्रतिपत्तयो वेदना अपि यथा चिदाकाशस्तथैव
14062 तद्भावादवतिष्ठन्त इत्यर्थः || ४२ ||
14063
14064 कुतः किलात्र पृथ्व्यादेः कीदृशः संभवः कथम् |
14065 एतदाक्रमणे मृत्यो तस्मान्मा यत्नवान्भव || ४३ ||
14066
14067 यत्र चित्स्वभावानां वेदनानामप्यसहनं तत्र दूरे
14068 पृथ्व्यादिसहनसंभावनेति तव नाक्रमणं प्रत्याशेत्याशयेनाह -
14069 कुत इति || ४३ ||
14070
14071 ग्रहीतुं युज्यते व्योम न कदाचन केनचित् |
14072 श्रुत्वैतद्विस्मितो मृत्युर्जगाम निजमन्दिरम् || ४४ ||
14073
14074 श्रीराम उवाच |
14075
14076 ब्रह्मैष कथितो देवस्त्वया मे प्रपितामहः |
14077 स्वयंभूरज एकात्मा विज्ञानात्मेति मे मतिः || ४५ ||
14078
14079 आकाशजद्विज इति नामान्तरप्रतिपादितो ब्रह्मैव मया आख्यायिकातात्पर्यार्थो
14080 जगन्मिथ्यात्वमपि परिज्ञातमिति सूचनेन गुरुं प्रहर्षयन् श्रीराम उवाच ##-
14081
14082 प्। १३३)
14083
14084 श्रीवसिष्ठ उवाच |
14085
14086 एवमेतन्मया राम ब्रह्मैष कथितस्तव |
14087 विवादमकरोन्मृत्युर्यमेनैतत्कृते पुरा || ४६ ||
14088
14089 विवादं संवादम् || ४६ ||
14090
14091 मन्वन्तरे सर्वभक्षो यदा मृत्युर्हरन्प्रजाः |
14092 बलमेत्यब्जजाक्रान्तावारम्भमकरोत्स्वयम् || ४७ ||

मन्वोः अन्तरे संधिकाले। अब्जजस्याक्रान्तौ मारणे। आरम्भमुद्योगम्॥ ४७॥

तदैव धर्मराजेन यएम्नाश्वनुशासितः।
यदेव क्रियते नित्यं रतिस्तत्रैव जायते॥ ४८॥

कथमशक्येऽपि मृत्योः पुनःपुनरुद्योग इति चेद्व्सनितयेत्याह - यदेवेति
॥ ४८॥

ब्रह्मा किल पराकाशवपुराक्रम्यते कथम्।
मनोमात्रं च संकल्पः पृथ्व्यादिरहिताकृतिः॥ ४९॥

आख्यायिकामुखोक्तार्थं कण्ठतोऽपि वदंस्तच्छरीरादेर्मनोमात्रत्वमाह
- ब्रह्मेति॥ ४९॥

यश्चिद्व्योमचमत्कारः किलाकारानुभूतिमान्।
स चिद्व्योमैव नो तस्य कारणत्वं न कार्यता॥ ५०॥

आकाशस्फुरदाकारः संकल्पपुरुषो यथा।
पृथ्व्यादिरहितो भाति स्वयंभूर्भासते तथा॥ ५१॥

आकाशे यथा अवाङ्मुखेन्द्रनीलमहाकटहाकारः पृथ्व्यादिरहितो भाति
तथेत्यर्थः॥ ५१॥

निर्मले व्योम्नि मुक्तालीसंकल्पस्वप्नयोः पुरम्।
अपृत्व्यादि यथा भाति स्वयंभुर्भासते तथा॥ ५२॥

न दृश्यमस्ति न द्रष्टा परमात्मनि केवले।
स्वयंचित्ता तथाप्येष स्वयंभूरिति भासते॥ ५३॥

स्वयंचित्ता चिन्मात्रस्वभावतैव अस्ति॥ ५३॥

संकल्पमात्रमेवैतन्मनो ब्रह्मेति कथ्यते।
संकल्पाकाशपुरुषो नास्य पृत्व्यादि विद्यते॥ ५४॥

संकल्पमात्रमेव मनोरूपं न पृथ्व्यादिघटितं स एव ब्रह्मा पद्मज
इत्यर्थः॥ ५४॥

यथा चित्रकृदन्तःस्था निर्देहा भाति पुत्रिका।
तथैव भासते ब्रह्मा चिदाकाशाच्छरञ्जनम्॥ ५५॥

निराकारस्य संकल्पस्य कथं पुरुषाकारता तत्राह - यथेति। चित्रकृतो हि
लेख्यप्रतिमाकारमन्तः संकल्पेन विधाय तथैव बहिर्लिखतोऽन्तःस्था पुत्रिका
चित्रप्रतिमा यथा निर्देहापि तदाकारा भाति तथैव चिदाकाशस्याच्छं
स्वच्छं यद्रञ्जनं प्रतिबिम्बग्राहकं मनस्तद्ब्रह्मा
प्रजापतिशरीराकारं भाति॥ ५५॥

चिद्व्योमकेवलमनन्तमनादिमध्यं
ब्रह्मेति भाति निजचित्तवशात्स्वयंभूः।
आकारवानिव पुमानिव वस्तुतस्तु
वन्ध्यातनूज इव तस्य तु नास्ति देहः॥ ५६॥

14145 तत्र मनसस्तदाकारकल्पनापरिणामो न वास्तवः किंतु शुद्धं
14146 ब्रह्मैवाज्ञानात्तथा विवर्तत इत्याह - चिद्व्योमेति। ब्रह्मा
14147 स्वयंभूरित्याकारवानिवेत्यन्वयः॥ ५६॥
14148
14149 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे
14150 आद्यसृष्टिकर्तृवर्णनं नाम द्वितीयः सर्गः॥ २॥
14151
14152 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
14153 आद्यसृष्टिकर्तृवर्णनं नाम द्वितीयः सर्गः॥ २॥
14154
14155 तृतीयः सर्गः ३
14156
14157 श्रीराम उवाच।
14158
14159 एवमेव मनः शुद्धं पृथ्व्यादिरहितं त्वया।
14160 मनो ब्रह्मेति कथितं सत्यं पृथ्व्यादिवर्जितम्॥ १॥
14161
14162 मनोरूपो यतो ब्रह्मा तत्संकल्पमयं जगत्।
14163 मनोराज्यवदेवेदमसदित्यत्र कीर्त्यते॥ १॥
14164
14165 मनोमात्रं च संकल्पः पृथ्व्यादिरहिताकृतिः इति प्रागुक्तरीत्या ब्रह्मणो
14166 मनोरूपत्वाभ्युपगमे मनसो वासनाजालरूपत्वात्प्राक्तनं वासनाजालं
14167 किंचिदस्य न विद्यत इत्युक्तिरयुक्तेति मन्यमानः श्रीराम उवाच - एवमेवेति
14168 द्वाभ्याम्। मनः शुद्धं पृथ्व्यादिरहितम् एवमेव प्रसिद्धम्। उत्तरत्र
14169 तर्हीत्यर्थे तदिति प्रयोगात्तदाकाङ्क्षितमत्र यदीत्यध्याहार्यम्॥ १॥
14170
14171 तदत्र प्राक्तनी ब्रह्मन्स्मृतिः कस्मान्न कारणम्।
14172 यथा मम तवान्यस्य भूतानां चेति मे वद॥ २॥
14173
14174 अत्रास्मिन्ब्रह्मणः शरीरे प्राक्तनीपूर्वशरीरत्यागकालोद्भूता स्मृतिस्तव
14175 मम अन्यस्य वा पुरुषस्य भूतानां पश्वादीनां च शरीरे प्राक्तनी
14176 स्मृतिर्यथा कारणं तथा कस्मात्कारणं न यं यं वापि स्मरन्भावम्
14177 इत्यादिस्मृतेः। यदि प्राक्तनी स्मृतिरस्ति तर्हि
14178 तदुद्भवाधारसंस्कारदेहादिकमपि प्राक्तनं दुर्वारमिति भावः॥ २॥
14179
14180 श्रीवसिष्ठ उवाच।
14181
14182 पूर्वदेहोऽस्ति यस्याद्य पूर्वकर्मसमन्वितः।
14183 तस्य स्मृतिः संभवति कारणं संसृतिस्थितेः॥ ३॥
14184
14185 सत्यं पूर्वदेहादिसिद्धौ तदनुभूतगोचरा स्मृतिः कारणं
14186 स्यात्तदेवासिद्धमिति श्रीवसिष्ठ उवाच - पूर्वमिति द्वाभ्याम्। ननु
14187 तद्धैतल्लोकजिदेव इत्यादिश्रुतिभिस्तत्क्रतुन्यायेन च हैरण्यगर्भपदस्य
14188 कर्मोपासनसमुच्चयफलत्वप्रसिद्धेः कथं प्राग्देहवासनाद्यसत्त्वोक्तिः
14189 कथं वा मनोमयस्य तद्देहस्यापृथ्व्यादिमयत्वोक्तिर्मनसः अन्नमयं हि
14190 सौम्य मनः
14191 इत्यन्नविकारत्वपरश्रुतिविरोधादपञ्चीकृतभूतकार्यत्वसिद्धान्तविरोधाच्चेत्
14192 इ चेत्। सत्यम्। अज्ञदृशैवं यन्मदन्यन्नास्ति कस्मान्नु विभेमीति सह सिद्धं
14193 चतुष्टयम् इति श्रुतिस्मृतिसिद्धतदीयतत्त्वदृशा तु त्रैकालिकप्रपञ्चस्यापि
14194 नासीदस्ति भविष्यतीति त्रैकालिकबाधान्न पूर्वदेहवासनादिसत्त्वमिति तथोक्तिः।
14195 बाधितानुवृत्तौ तु मनसि तद्देहे च दग्धपटे तान्तवत्वमिव न
14196 पृथ्व्यादिमयत्वं यथापूर्वमस्तीति न कश्चिद्विरोधः।

यत्राबाधिताज्ञमनःसंकल्पनगरादेरपि न सत्यत्वं भौतिकत्वं वा तत्र
किं वाच्यं तत्त्वज्ञानबाधितानुवृत्तवेरिञ्च्यमनःसंकल्पजस्य विश्वस्य
तथात्वमित्यभिप्रत्य
वक्ष्यमाणजगन्मिथ्यात्वोपयिकत्वात्तत्त्वदृष्टिमेवावष्टभ्य
पूर्वदेहवासनाद्यपलापो नाज्ञदृष्ट्यनुवादयुपास्तिफलश्रुतिपुरस्कारेणेति
॥ ३ ॥

प। १३४)

ब्रह्मणः प्राक्तनं कर्म यदा किंचिन्न विद्यते।
प्राक्तनी संस्मृतिस्तस्य तदोदेति कुतः कथम्॥ ४॥

तस्मादकारण भाति वा स्वचित्तैककारणम्।
स्वकारणादनन्यात्मा स्वयंभूः स्वयमात्मवान्॥ ५॥

स्वचित्तं देहद्रष्टृचित्तं तदेकं कारणमिति तस्य स्वतश्चित्ताभावोक्तिः॥ ५॥

आतिवाहिक एवासौ देहोऽस्त्यस्य स्वयंभुवः।
न त्वाधिभौतिको राम देहोऽजस्योपपद्यते॥ ६॥

आतवहनमर्चिर्धूमादिमार्गेण लोकान्तरप्रापणं तत्र
साधूरस्मदादिलिङ्गदेह इवातिवाहिकः। सूक्ष्म इति यावत्। आधिभौतिकः
स्थूलभूतजः॥ ६॥

श्रीराम उवाच॥

आतिवाहिक एकोऽस्ति देहोऽन्यस्त्वाधिभौतिकः।
सर्वासां भूतजातीनां ब्रह्मणोऽस्त्येक एव किम्॥ ७॥

श्रीवसिष्ठ उवाच॥

सर्वेषामेव देहौ द्वौ भूतानां कारणात्मनाम्।
अजस्य कारणाभावादेक एवातिवाहिकः॥ ८॥

कारणात्मनां
चक्षुरादिव्यावहारिकप्रमाणवद्यपञ्चीकृतभूतरूपकारणात्मनाम्।
कारणाभावात्
अविद्याऽपञ्चीकृतभूतानामनन्यपरश्रुतिचक्षुराद्यवेद्यत्वेन
साक्षिवेद्यत्वेन च प्रातिभासिकत्वेन व्यावहारिकसत्यत्वाभावात्प्रागुक्तरीत्या वा
कारणाभावादित्यर्थः॥ ८॥

सर्वासां भूतजातीनामेकोऽजः कारणं परम्।
अजस्य कारणं नास्ति तेनासावेकदेहवान्॥ ९॥

प्रकारान्तरेणाप्याह - सर्वासामिति॥ ९॥

नास्त्येव भौतिको देहः प्रथमस्य प्रजापतेः।
आकाशात्मा च भात्येष आतिवाहिकदेहवान्॥ १०॥

आकाशात्मा चिदाकाशमात्ररूपः। आरोपितस्याधिष्ठानातिरिक्तस्वरूपाभावात्॥
१०॥

14249 चित्तमात्रशरीरोऽसौ न पृथ्व्यादिक्रमात्मकः।
14250 आद्यः प्रजापतिर्व्योमवपुः प्रतनुते प्रजाः॥ ११॥
14251
14252 इत्थं च तत्संकल्पकल्पितजगतोऽपि तदधिष्ठानचिन्मात्रता फलितेति विवक्षुराह
14253 - वित्तेति॥ ११॥
14254
14255 ताश्च विद्योमरूपिण्यो विनान्यैः कारणान्तरैः।
14256 यद्यतस्तत्तदेवति सर्वैरेवानुभूयते॥ १२॥
14257
14258 अन्यैस्तत्संकल्पव्यतिरिक्तैः कारणान्तरैः कारणभेदैः। यतो
14259 यस्मादुपादानाज्जातमिति शेषः। अनुभूयते कनककुण्डलादौ। तथा च जगतो
14260 ब्रह्ममात्रता सिद्धेति भावः॥ १२॥
14261
14262 निर्वाणमात्रं पुरुषः परो बोधः स एव च।
14263 चित्तमात्रं तदेवास्ते नायाति वसुधादिताम्॥ १३॥
14264
14265 तेन जीवस्यापि तन्मात्रता सिद्धेत्याह - निर्वाणमात्रमिति। यतः स
14266 चित्तोपाधिश्चित्तभ्रान्त्या चित्तमात्रभूतोऽपि परमार्थतः स चिदाकाश एवास्ते न
14267 भौतिकपुरुषादिभावमायातीत्यर्थः॥ १३॥
14268
14269 सर्वेषां भूतजातानां संसारव्यवहारिणाम्।
14270 प्रथमोऽसौ प्रतिस्पन्दश्चित्तदेहः स्वतोदयः॥ १४॥
14271
14272 स्वता अहंभावस्तस्योदयः॥ १४॥
14273
14274 अस्मात्पूर्वात्प्रतिस्पन्दादनन्यैतत्स्वरूपिणी।
14275 इयं प्रविसृता सृष्टिः स्पन्दसृष्टिरिवानिलात्॥ १५॥
14276
14277 एतदुपादानकस्थूलस्यैतन्मात्रत्वादनन्यैतत्स्वरूपिणी॥ १५॥
14278
14279 प्रतिभानाकृतेरस्मात्प्रतिभामात्ररूपधृक्।
14280 विभात्येवमयं सर्गः सत्यानुभववान्स्थितः॥ १६॥
14281
14282 अध्यस्तमनोविकारस्य जगतोऽप्यध्यस्ततैव फलितेत्याह - प्रतिभानेति।
14283 प्रतिभानं प्रतिभासस्तन्मात्रसिद्धाकृतेः प्रातिभासिकाकारादित्यर्थः।
14284 अथवा परमार्थचिन्मात्राकाराच्चिन्मात्ररूपधृगपि सर्ग एवं
14285 परिदृश्यमानाऽचिदाकारेण विभातीत्यर्थः॥ १६॥
14286
14287 दृष्टान्तोऽत्र भवत्स्वप्नपुरस्त्रीसुरतं [स्वप्नस्वप्नस्त्री इति
14288 मुद्रितपुस्तके पाठः] यथा।
14289 असदप्यर्थसंपत्त्या सत्यानुभवभासुरम्॥ १७॥
14290
14291 स्वप्ने योऽन्यः स्वप्नस्तत्रत्यस्त्रीसुरतमिति
14292 सूक्ष्मकल्पनान्तर्गतस्थूलकल्पनादृष्टान्तत्वोपपत्त्यर्थम्। अर्थसंपत्त्या
14293 व्यवहारप्रयोजननिष्पत्त्या॥ १७॥
14294
14295 अपृथ्व्यादिमयो भाति व्योमाकृतिरदेहकः।
14296 सदेह इव भूतेशः स्वात्मभूः पुरुषाकृतिः॥ १८॥
14297
14298 तथाच प्रागुक्तं नासंभावितमित्याह - अपृथ्व्यादीति॥ १८॥
14299
14300 संवित्संकल्परूपत्वान्नोदेति समुदेति च।

14301 स्वायत्तत्वात्स्वभावस्य नोदेति न च शाम्यति ॥ १९ ॥
14302
14303 नोदेति परमार्थतः समुदेति भ्रान्त्या तत्राद्यमुपपादयति - स्वायत्तत्वादिति
14304 । जगद्भाववदविद्याद्यधीनत्वाभावादिति भावः । स्वभावस्य स्वरूपस्थितेः ॥
14305 १९ ॥
14306
14307 ब्रह्मा संकल्पपुरुषः पृथ्व्यादिरहिताकृतिः ।
14308 केवलं चित्तमात्रात्मा कारणं त्रिजगत्स्थितेः ॥ २० ॥
14309
14310 संकल्प एष कचति यथा नाम स्वयंभुवः ।
14311 व्योमात्मैष तथा भाति भवत्संकल्पशैलवत् ॥ २१ ॥
14312
14313 यथा यादृशप्राणिकर्मानुरोधेन येन येन प्रकारेण कचति विकसति । तथा
14314 तेन प्रकारेण ॥ २१ ॥
14315
14316 आतिवाहिकमेवान्तर्विस्मृत्या दृढरूपया ।
14317 आधिभौतिकबोधेन मुधा भाति पिशाचवत् ॥ २२ ॥
14318
14319 तर्हि कथं सर्वेषां
14320 संकल्पशैलविलक्षणाधिभौतिकत्वार्थक्रियासामर्थ्याद्यनुभवस्तत्राह ##-
14321
14322 प्। १३५)
14323
14324 इदं प्रथमतोद्योगसंप्रबुद्धं महाचितेः ।
14325 नोदेति शुद्धसंवित्त्वादातिवाहिकविस्मृतिः ॥ २३ ॥
14326
14327 तर्हि विरिञ्चेरप्यस्मदादिवदातिवाहिकभावविस्मृतिः किं न स्यात्तत्राह -
14328 इदमिति । इदं वैरिञ्चं रूपं महाचितेर्मायाशबलब्रह्मणः प्रथमता
14329 सर्वस्थूलप्रपञ्चापेक्षया कारणीभूतसूक्ष्मभूतात्मकतेति यावत् । तत्र
14330 उद्योगेन संकल्पेन सत्यसंकल्पत्वात्तथैव संप्रबुद्धं
14331 प्रत्यक्षमाविर्भूतमतस्तमोऽनाच्छादितत्वेन विरिञ्चेः
14332 शुद्धसंवित्त्वान्नातिवाहिकस्मृतिरुदेतीत्यर्थः ॥ २३ ॥
14333
14334 आधिभौतिकजातेन नास्योदेति पशाचिका ।
14335 असत्या मृगतृष्णेव मिथ्या जाड्यभ्रमप्रदा ॥ २४ ॥
14336
14337 मनोमात्रं यदा [यथा ब्रह्मा इति पाठः] ब्रह्मा न
14338 पृथ्व्यादिमयात्मकः ।
14339 मनोमात्रमतो विश्वं यद्यज्जातं तदेव हि ॥ २५ ॥
14340
14341 यदा यस्मिन्कल्पे यत इति वार्थः । यस्माज्जातं यजातम् ॥ २५ ॥
14342
14343 अजस्य सहकारीणि कारणानि न सन्ति यत् ।
14344 तज्जस्यापि न सन्त्येव तानि तस्मात्तु कानिचित् ॥ २६ ॥
14345
14346 इत्थं च अन्नेन सोम्य शुङ्गेनापोमूलमन्विच्छ इति श्रुतिदर्शितन्यायेन जगतो
14347 मनोमात्रत्वं मनसश्च ब्रह्ममात्रतेति ब्रह्माद्वैतं फलितमित्याह -
14348 अजस्येत्यादित्रिभिः ॥ २६ ॥
14349
14350 कारणात्कार्यवैचित्र्यं तेन नात्रास्ति किंचन ।
14351 यादृशं कारणं शुद्धं कार्यं तादृगिति स्थितम् ॥ २७ ॥
14352

14353 कार्यकारणता ह्यत्र न किंचिदुपपद्यते |
14354 यादृगेव परं ब्रह्म तादृगेव जगत्त्रयम् || २८ ||
14355
14356 इत्थं च भेदकाभावात्कार्यकारणभावायोगाज्जगद्ब्रह्मैव
14357 संपन्नमित्याह - कार्येति || २८ ||
14358
14359 मनस्तामिव यातेन ब्रह्मणा तन्यते जगत् |
14360 अनन्यादात्मनः [अनन्यत् इति पाठः] शुद्धाद्द्रवत्वमिव
14361 वारिणः || २९ ||
14362
14363 मनसा तन्यते सर्वमसदेवेदमाततम् |
14364 यथा संकल्पनगरं यथा गन्धर्वपत्तनम् || ३० ||
14365
14366 आधिभौतिकता नास्ति रज्ज्वामिव भुजङ्गता |
14367 ब्रह्मादयः प्रबुद्धास्तु कथं तिष्ठन्ति तत्र ते || ३१ ||
14368
14369 इत्थं च तत्त्वज्ञानां जगत एव बाधे देहादौ
14370 नाधिभौतिकताप्रत्ययसंभव इत्याह - आधिभौतिकतेति || ३१ ||
14371
14372 आतिवाहिक एवास्ति न प्रबुद्धमतेः किल |
14373 आधिभौतिकदेहस्य वाचो [चरचैवात्र इति पाठः] वात्र कुतः
14374 कथम् || ३२ ||
14375
14376 कैमुतिकन्यायेनाप्युक्तमर्थं द्रढयति - आतिवाहिकेति | आतिवाहिकः
14377 प्रातिभासिकः सोऽपि नास्त्येव तत्राधिभौतिकस्य वाचः कुतो हेतोः कथं केन
14378 प्रकारेण || ३२ ||
14379
14380 मनोनाम्नो मनुष्यस्य विरिञ्च्याकारधारिणः |
14381 मनोराज्यं जगदिति सत्यरूपमिव स्थितम् || ३३ ||
14382
14383 मनुष्यस्येति प्राक्तनोपासकावस्थां स्मृत्वोक्तिः || ३३ ||
14384
14385 मन एव विरिञ्चित्वं तद्धि संकल्पनात्मकम् |
14386 स्ववपुः स्फारतां नीत्वा मनसेदं वितन्यते || ३४ ||
14387
14388 विरिञ्चित्वं सर्वस्रष्टृत्वम् | हि यस्मात्तद्विरिञ्चित्वं विरिञ्चेः
14389 संकल्पनात्मकं न बाह्योपकरणाधीनम् | स्फारतां विपुलताम् | इदं
14390 विश्वम् || ३४ ||
14391
14392 विरिञ्चो मनसो रूपं विरिञ्चस्य मनो वपुः |
14393 पृथ्व्यादि विद्यते नात्र तेन पृथ्व्यादि कल्पितम् || ३५ ||
14394
14395 अत्र मनसि | तेन हेतुना मनसा वा कल्पितमध्यस्तमात्मनीति शेषः || ३५ ||
14396
14397 पद्माक्षे पद्मिनीवान्तर्मनो हृद्यस्ति दृश्यता |
14398 मनोदृश्यदृशौ भिन्ने न कदाचन केनचित् || ३६ ||
14399
14400 मनो हृदि | मनोन्तः दृश्यता लक्षणया दृश्यवर्गः | ननु कथं
14401 विरुद्धमिदमुच्यते | पृथ्व्यादि विद्यते नात्र मनो हृद्यस्ति दृश्यते
14402 इतिचेत्तत्राह - मनोदृश्येति | यतो मनश्च दृश्यं च तयोः समाहारो
14403 मनोदृश्यं तदुभयदृक् साक्ष्यात्मा च ते उभे केनचित्कदाचन न भिन्ने न
14404 विवेचिते | यावत्ते न विवेचिते तावदज्ञानानुच्छेदादस्त्येवेत्युक्तमिति भावः |

अथवा मनश्च दृश्यदृक् दृश्यदर्शनं च तेन भिन्ने। तथाच मनस
उच्छेद एव दृश्यदर्शनोच्छेद इति भावः॥ ३६॥

यथा चात्र तव स्वप्नः संकल्पश्चित्तराज्यधीः।
स्वानुभूत्यैव दृष्टान्तस्तस्माद्धृद्यस्ति दृश्यभूः॥ ३७॥

तत्रान्वयव्यतिरेकसिद्धदृष्टान्तान्वदन्निगमयति - यथेति॥ ३७॥

तस्माच्चित्तविकल्पस्थपिशाचो बालकं यथा।
विनिहन्त्येवमेषान्तर्द्रष्टारं दृश्यरूपिका॥ ३८॥

यथाङ्कुरोऽन्तर्बीजस्य संस्थितो देशकालतः।
करोति भासुरं देहं तनोत्येवं हि दृश्यधीः॥ ३९॥

दृश्यधीर्मनः॥ ३९॥

सच्चेन्न शाम्यति कदाचन दृश्यदुःखं
दृश्ये त्वशाम्यति न बोद्धरि केवलत्वम्।
दृश्ये त्वसंभवति बोद्धरि बोद्धृभावः
शाम्येत्स्थितोऽपि हि तदस्य विमोक्षमाहुः॥ ४०॥

ननु किमर्थं महता यत्नेन दृश्यमिथ्यात्वं साध्यते तस्य सत्यत्वे का
क्षतिस्तत्राह - सच्चेदिति। स्थितोऽपि शाम्येत्किं पुनर्मिथ्याभूत इत्यर्थः।
तत्केवलत्वमेव विमोक्षमाहुः॥ ४०॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे
बन्धहेतुवर्णनं नाम तृतीयः सर्गः॥ ३॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
बन्धहेतुवर्णनं नाम तृतीयः सर्गः॥ ३॥

प्। १३६)

चतुर्थः सर्गः ४

श्रीवाल्मीकिरुवाच।

कथयत्येवमुद्दामवचने मुनिनायके।
श्रोतुमेकरसे जाते जने मौन्मुपस्थिते॥ १॥

श्रुत्वोपदेशं प्रथममुत्थानादिनिशाक्रमः।
प्रातरागमनं चित्रस्वभावश्चात्र [चित्तस्वभावश्च इति पाठः]
वर्ण्यते॥ १॥

एकरसे एकाग्रे॥ १॥

शान्तेषु किङ्किणीजालरवेषु स्पन्दनं विना।
पञ्जरान्तरहारीतशुकेष्वप्यस्तकेलिषु॥ २॥

एकरसतामेव लिङ्गैर्दर्शयति - शान्तेष्वित्यादिना। हारीताः पक्षिविशेषाः॥
२॥

14457 सुविस्मृतविलासासु स्थितासु ललनास्वपि |
14458 चितभित्ताविव न्यस्ते समस्ते राजसद्मनि || ३ ||
14459
14460 राजसद्मनि लक्षणया राजसद्मस्थप्राणिनिकाये चित्रभित्तौ न्यस्ते चित्र इव स्थिते
14461 इति विपरिणामेनानुषङ्गः || ३ ||
14462
14463 मुहूर्तशेषमभवद्दिवसं मधुरातपम् |
14464 व्यवहारा रविकरैः सह तानवमाययुः || ४ ||
14465
14466 तानवमल्पताम् || ४ ||
14467
14468 ववुरुत्फुल्लकमलप्रकरामोदमांसलाः |
14469 वायवो मधुरस्पन्दाः श्रवणार्थमिवागताः || ५ ||
14470
14471 आमोदेन मांसलाः पुष्टाः | मधुरो मन्दत्वात्सुखकरः स्पन्दो येषाम् |
14472 सर्वत्र विशेषणानि साधारणानि | उपमानमुत्प्रेक्षा वा || ५ ||
14473
14474 श्रुतं चिन्तयितुं भानुरिवाहोरचनाभ्रमम् |
14475 तत्याजैकान्तमगमच्छून्यमस्तगिरेस्तटम् || ६ ||
14476
14477 भानुः श्रुतं श्रवणावधृतमर्थं चिन्तयितुं मननेन
14478 दृढीकर्तुमिवेत्युत्प्रेक्षा | शून्यं जनशून्यम् || ६ ||
14479
14480 उत्तस्थुर्मिहिकारम्भसमता वनभूमिषु |
14481 विज्ञानश्रवणादन्तःशीतलाः शान्तता इव || ७ ||
14482
14483 मिहिकानां तुषाराणामारम्भेण समता अविषमताः | अन्तःशीतला इति
14484 साधारणं विशेषणम् || ७ ||
14485
14486 बभूवुरल्पसंचारा जना दशसु दिक्ष्वपि |
14487 सावधानतया श्रोतुमिव संत्यक्तचेष्टिताः || ८ ||
14488
14489 संत्यक्तानि चेष्टितानि व्यापारान्तराणि यैः || ८ ||
14490
14491 छाया दीर्घत्वमाजग्मुर्वासिष्ठं वचनक्रमम् |
14492 इव श्रोतुमशेषाणां वस्तूनां दीर्घकन्धराः || ९ ||
14493
14494 अशेषाणां वस्तूनां छाया अशेषाणां श्रोतृणां दीर्घाः कन्धराः
14495 कण्ठा वचनक्रमं श्रोतुमिव दीर्घत्वमाजग्मुः | असमासश्छान्दसः || ९ ||
14496
14497 प्रतीहारः पुरः प्रह्वो भूत्वाह वसुधाधिपम् |
14498 देव स्नानद्विजार्चासु कालो व्यतिगतो भृशम् || १० ||
14499
14500 प्रतीहारो द्वारपालः | प्रह्वो नम्रो भूत्वा || १० ||
14501
14502 ततो वसिष्ठो भगवान्संहृत्य मधुरां गिरम् |
14503 अद्य तावन्महाराज श्रुतमेतावदस्तु वः || ११ ||
14504
14505 संहृत्योपसंहृत्य || ११ ||
14506
14507 प्रातरन्यद्वदिष्यामि इत्युक्त्वा मौनवानभूत् |
14508 इत्याकर्णैवमस्तूक्त्वा भूपतिर्भूतिवृद्धये || १२ ||

एवमस्तु इत्युक्त्वा ॥ १२ ॥

पुष्पपाद्यार्घसन्मानदक्षिणादानपूजया ।
सदेवर्षिमुनीन्विप्रान्पूजयामास सादरम् ॥ १३ ॥

अथोत्तस्थौ सभा सर्वा सराजमुनिमण्डला ।
मण्डलाकीर्णरत्नौघपरिवेषावृतानना ॥ १४ ॥

सभाशब्दो जनवचनः । निःस्पृहैर्मुनिभी
राजदत्तरत्नानामुपेक्षणान्मण्डलाकारेण कीर्णानां रत्नौघानां
प्रभापरिवेषेऽन आवृतजनानना ॥ १४ ॥

परस्पराङ्गसंघट्टरणत्केयूरकङ्कणा ।
हारभाराहृतस्वर्णपट्टाभोरुस्तनान्तरा ॥ १५ ॥

हृता अपहृता स्वर्णजटितपट्टवस्त्राणां आभाकान्तिर्यैस्तथाविधानि
ऊरुस्तनान्तराणि यस्याम् ॥ १५ ॥

शेखरोत्सङ्गविश्रान्तप्रबुद्धमधुपस्वनैः ।
सघुंघुमशिरोभारा वदद्भिरिव मूर्धजैः ॥ १६ ॥

शेखरस्य शिरोग्रस्य उत्सङ्गवद्विस्तृतभागे
घुंघुमेत्यव्यक्तध्वन्यनुकरणम् ॥ १६ ॥

काञ्चनाभरणोद्द्योतकनकीकृतदिङ्मुखाः ।
बुद्धिस्थमुनिवागर्थसंशान्तेन्द्रियवृत्तयः ॥ १७ ॥

जग्मुर्नभश्चरा व्योम भूचरा भूमिमण्डलम् ।
चक्रुर्दिनसमाचारं सर्वे ते स्वेषु सद्मसु ॥ १८ ॥

एतस्मिन्नन्तरे श्यामा यामिनी समदृश्यत ।
जनसङ्गाद्विनिर्मुक्ता [जनसङ्घात् इति पाठः] गृहे
बालाङ्गना यथा ॥ १९ ॥

श्यामा कृष्णा । बालाङ्गना । पक्षे यौवनमध्यस्था ।
संभवादुपमानदर्शनस्यापि तत्कालता गम्यते ॥ १९ ॥

देशान्तरं भासयितुं ययौ दिवसनायकः ।
सर्वत्रालोककर्तृत्वमेव सत्पुरुषव्रतम् ॥ २० ॥

सद्ब्रह्म तदात्मा पुरुषो ब्रह्म तन्निष्ठश्च तयोर्व्रतम् ॥ २० ॥

उदभूदभितः संध्या तारानिकरधारिणी ।
उत्फुल्लकिंशुकवना वसन्तश्रीरिवोदिता ॥ २१ ॥

चूतनीपकदम्बाग्रग्रामचैत्यगृहोदरे ।
निलिल्यिरे खगाश्चित्तेऽवदाता वृत्तयो यथा ॥ २२ ॥

अवदाता निर्मलाः । चित्ते अर्थान्निद्रावृते इति गम्यते ॥ २२ ॥

भानोर्भासा भूषितैर्मेघलेशैः

किंचित्किंचित्कुङ्कुमच्छाययेव |
पाश्चात्त्योऽद्रिः पीतवासाः समेघै-
स्ताराहारः श्रीयुतः खवं समेतः || २३ ||

किंचित्किंचित्कुङ्कुमच्छाययेव विचित्रया भानोर्भासा भूषितैर्मेघैः
पीतवासाः | तारालक्षणहारेण श्रिया च युक्तः | स प्रागुक्तः
पाश्चात्त्योऽस्ताद्रिर्भानोर्भासा भूषितैर्मेघलेशैरुपलक्षितमर्थात्ताराहारं
श्रीयुतं चेति समानधर्मकं स्वं आकाशं च समेतः प्रविष्टः | यथा
पीतवासा विष्णुरुक्तधर्मा श्रीयुतो निरावरणं स्वानुरूपं ध्यायिनां
हृदयाकाशं प्रविशति तद्वत् | संध्यासु हि भगवद्ध्यानं प्रशस्तमिति
समासोक्त्या गम्यते || २३ ||

प्। १३७)

पूजामादाय संध्यायां प्रगतायां यथागतम् |
अन्धकाराः समुत्तस्थुर्वेताला वपुषा यथा || २४ ||

संध्यायां देव्यां पूजामादाय गतायां तद्गणा वेताला वपुषा यथा
समुत्तिष्ठन्ति तद्वत् || २४ ||

अवश्यायकणास्पन्दी हेलाविद्युतपल्लवः |
कोमलः कुमुदाशंसी ववावाशीतलोऽनिलः || २५ ||

कलिकाविकासात्कुमुदान्यासमन्ताच्छंसत्यनुमापयति तच्छीलः |
विशेषणत्रयानुसारादाशीतलग्रहणं मान्द्यसौरभ्ययोरप्युपलक्षणम् || २५
||

परमान्ध्यमुपाजग्मुर्दिशोऽविस्फुटतारकाः |
लम्बदीर्घतमःकेश्यो विधवा इव योषितः || २६ ||

नीहारपटावृतत्वादविस्फुटास्तारका नक्षत्राणि कनीनिकाश्च यासां ताः |
धवस्य भानोरस्तमयाद्विधवा इव || २६ ||

आययौ भुवनं तेजः क्षीरपूरेण पूरयन् |
रसायनमयाकारः शशिक्षीरार्णवो [क्षीरार्णवोपमः इति
पाठः] नभः || २७ ||

तेजोलक्षणेन दुग्धप्रवाहेण पूरयन् | रसायनममृतं तन्मयाकारः || २७
||

जग्मुस्तिमिरसंघाताः पलाय्य क्वाप्यदृश्यताम् |
श्रुतज्ञानगिरश्चित्तान्महीपानामिवाज्ञताः || २८ ||

श्रुता ज्ञानगिरो येन तथाविधान्महीपानां चित्तात् || २८ ||

ऋषयो भूमिपालाश्च मुनयो ब्राह्मणास्तथा |
चेतसीव विचित्रार्थाः स्वास्पदेषु विशश्रमुः || २९ ||

विचित्राः वसिष्ठोपदिष्टा अर्थाः स्वचेतसीव स्वेषामास्पदेषु प्रतिष्ठासु
विशश्रमुर्विश्रान्ताः || २९ ||

यमकायोपमाश्यामा ययौ तिमिरमांसला |

14613 आययौ मिहिकास्फारा तत्र तेषामुषः शनैः ॥ ३० ॥
14614
14615 श्यामा रात्रिः। उषः प्रत्यूषः ॥ ३० ॥
14616
14617 अन्तर्धानमुपाजग्मुस्तारा नभसि भासुराः।
14618 प्रभातपवनेनेव हृताः कुसुमवृष्टयः ॥ ३१ ॥
14619
14620 हृता अपनीताः। कुसुमवृष्टयो वृष्टिनिपतितकुसुमानीवेत्यत्र तात्पर्यम् ॥ ३१
14621 ॥
14622
14623 दृश्यतामाजगामार्कः प्रभोन्मीलितलोचनः।
14624 विवेकवृत्तिर्महतां मनसीव नवोदिता ॥ ३२ ॥
14625
14626 प्रभाभिरुन्मीलितानि जनलोचनानि येन ॥ ३२ ॥
14627
14628 भानोर्भासा भूषितैर्मेघलेशैः
14629 किंचित्किंचित्कुङ्कुमच्छाययेव।
14630 पूर्वक्ष्माभृत्पीतवासाः समेघै-[स्तमोघ्नैः इति पाठः]
14631 स्ताराहारः श्रीयुतः खं समेतः ॥ ३३ ॥
14632
14633 तमोघ्नैः इति पाठे तमोविघातकैः काञ्चनभृङ्गैरित्यर्थः ॥ ३३ ॥
14634
14635 सभां पुनरुपाजग्मुर्नभश्चरमहीचराः।
14636 ह्यस्तनेन क्रमेणैव कृतप्रातस्तनक्रमाः ॥ ३४ ॥
14637
14638 ह्यस्तनेन पूर्वेद्युस्तनेन ॥ ३४ ॥
14639
14640 पूर्ववत्संनिवेशेन विवेश सकला सभा।
14641 बभूवास्पन्दिताकारा वातमुक्तेव पद्मिनी ॥ ३५ ॥
14642
14643 वातमुक्ता निर्वाता पद्मिनी पद्मवती सरसीव ॥ ३५ ॥
14644
14645 अथ प्रसङ्गमासाद्य रामो मधुरया गिरा।
14646 उवाच मुनिशार्दूलं वसिष्ठं वदतां वरम् ॥ ३६ ॥
14647
14648 प्रसङ्गं प्रस्तावम् ॥ ३६ ॥
14649
14650 श्रीराम उवाच।
14651
14652 भगवन्मनसो रूपं कीदृशं वद मे स्फुटम्।
14653 यस्मात्तेनेयमखिला तन्यते लोकमञ्जरी ॥ ३७ ॥
14654
14655 रूपं तात्त्विकस्वरूपम्। यद्रूपं मनो वक्ष्यति जगतोऽपि तदेव रूपमिति न
14656 निस्तत्त्वतालक्षणं मिथ्यात्वं सेत्स्यतीति रामाशयः ॥ ३७ ॥
14657
14658 श्रीवसिष्ठ उवाच।
14659
14660 रामास्य मनसो रूपं न किंचिदपि दृश्यते।
14661 नाममात्रादृते व्योम्नो यथा शून्यजडाकृतेः ॥ ३८ ॥
14662
14663 नाममात्रादिति। अत एव तत्कार्येषु वाचारम्भणं विकारो नामधेयम्
14664 इतिश्रुतमिथ्यात्वोपपत्तिरिति भावः। शून्यजडाकृतेरिति भूतव्योम्नो मनसश्च

साधारणम् ॥ ३८ ॥

न बाह्ये नापि हृदये सद्रूपं विद्यते मनः ।
सर्वत्रैव स्थितं चैतद्विद्धि राम यथा नभः ॥ ३९ ॥

नभःसाम्यमेवोपपादयति - नेति ॥ ३९ ॥

इदमस्मात्समुत्पन्नं मृगतृष्णाम्बुसंनिभम् ।
रूपं तु क्षणसंकल्पाद्द्वितीयेन्दुभ्रमोपमम् ॥ ४० ॥

इदं जगदस्मान्मनसः भ्रमः । तद्विषयोऽध्यस्त इति यावत् । तदुपमम् ॥ ४० ॥

मध्ये यदेतदर्थस्य प्रतिभानं प्रथां गतम् ।
सतो वाप्यसतो वापि तन्मनो विद्धि नेतरत् ॥ ४१ ॥

यद्यपि मनो नाम परमार्थतो नास्त्येव तथापि शास्त्रीयव्यवहारोपयुक्तं
कल्पितं तद्रूपमाह - मध्ये इति । प्रत्यक्षे पुरः सतः स्मृत्यादि परोक्षे
त्वसतो वाऽर्थस्य मध्ये यदेतत्तदाकारप्रतिभानं प्रथां गतं
सर्वजनानां तन्मन इत्यर्थः ॥ ४१ ॥

यदर्थप्रतिभानं तन्मन इत्यभिधीयते ।
अन्यत्र किंचिदप्यस्ति मनो नाम कदाचन ॥ ४२ ॥

तदेव संक्षिप्याह - यदिति । निराकारचितो योऽर्थाकाराध्यासस्तन्मन
इत्यर्थः ॥ ४२ ॥

संकल्पनं मनो विद्धि संकल्पात्तत्र भिद्यते ।
यथा द्रवत्वात्सलिलं तथा स्पन्दो यथानिलात् ॥ ४३ ॥

एवं वृत्तिसामान्यैस्तल्लक्षणमुक्त्वा असाधारणवृत्त्याप्याह -
संकल्पनमिति ॥ ४३ ॥

यत्र संकल्पनं तत्र तन्मनोऽङ्ग तथा स्थितम् ।
संकल्पमनसी भिन्ने न कदाचन केचन ॥ ४४ ॥

तदेव विषयभेदव्यवस्थितिप्रदर्शनेन द्रढयति - यत्रेति ॥ ४४ ॥

सत्यमस्त्वथवाऽसत्यं पदार्थप्रतिभासनम् ।
तावन्मात्रं मनो विद्धि तद्ब्रह्मैव पितामहः ॥ ४५ ॥

ननु चित्संवलितैव वृत्तिः पदार्थप्रतिभासनमित्युच्यते तत्र चितः सत्यत्वे
कथं तद्घटितमनसो मिथ्यात्वं तत्राह - सत्यमिति ।
मिथ्याविषयाकारान्मिथ्या वा सत्यचित्संवलनात्सत्यं यथाविवक्षमस्तु न
तत्राग्रहः यादृशं मनस्तत्समष्टिरपि तन्मात्रस्वभावा सैव
विरिञ्चिरित्येतत्तु न व्याहतमित्याह - असत्यमिति ॥ ४५ ॥

प्। १३८)

आतिवाहिकदेहात्मा मन इत्यभिधीयते ।
आधिभौतिकबुद्धिं तु स आधत्ते चिरस्थितेः ॥ ४६ ॥

यदि सर्वाकारमनोदेहोऽसौ तर्हि तस्य किमन्यत्सृज्यं तत्राह - आतिवाहिकेति ।

14717 सूक्ष्माणामेव चिरं मिलितावस्थितेर्मिश्रणात्पञ्चीकरणे
14718 स्थूलपृथ्व्यादिबुद्धिं स एव धत्ते तदेवास्य स्रष्ट्टत्वमित्यर्थः ॥ ४६ ॥
14719
14720 अविद्या संसृतिश्चित्तं मनो बन्धो मलस्तमः ।
14721 इति पर्यायनामानि दृश्यस्य विदुरुत्तमाः ॥ ४७ ॥
14722
14723 मन आदिप्रपञ्चः सर्वोऽप्यविद्याविलासत्वादविद्यैव तस्या एवोत्तरोत्तरं
14724 नामानीत्याह - अविद्येति ॥ ४७ ॥
14725
14726 नहि दृश्यादृते किंचिन्मनसो रूपमस्ति हि ।
14727 दृश्यं चोत्पन्नमेवैतन्नेति वक्ष्याम्यहं पुनः ॥ ४८ ॥
14728
14729 यद्युत्पन्नस्य दृश्यस्याविद्यात्वं मनस्त्वं वा तर्हि कथं
14730 तयोरनादित्वप्रसिद्धिस्तत्राह - दृश्यं चेति ॥ ४८ ॥
14731
14732 यथा कमलबीजान्तः स्थिता कमलवल्लरी ।
14733 महाचित्परमाण्वन्तस्तथा दृश्यं जगत्स्थितम् ॥ ४९ ॥
14734
14735 तथा च चित्यविद्यास्थितिरेव जगत्स्थितिरिति फलितमित्याशयेनाह - यथेति ॥ ४९ ॥
14736
14737 प्रकाशस्य यथाऽलोको यथा वातस्य चापलम् ।
14738 यथा द्रवत्वं पयसि दृश्यत्वं द्रष्टरीदृशम् ॥ ५० ॥
14739
14740 साविद्यचितो दृश्याव्यभिचाराद्दृश्यस्य तत्स्वभावता फलितेत्याह -
14741 प्रकाशस्येति । ईदृशमेवंप्रकारम् । स्वभाव इति यावत् ॥ ५० ॥
14742
14743 अङ्गदत्वं यथा हेम्नि मृगनद्यां यथा जलम् ।
14744 भित्तिर्यथा स्वप्नपुरे तथा द्रष्टरि दृश्यधीः ॥ ५१ ॥
14745
14746 तत्स्वभावत्वे तदपृथक्सत्ता फलितेत्याह - अङ्गदत्वमिति ॥ ५१ ॥
14747
14748 एवं द्रष्टरि दृश्यत्वमनन्यदिव यत्स्थितम् ।
14749 तदप्युन्मार्जयाम्याशु त्वच्चित्तादर्शतो मलम् ॥ ५२ ॥
14750
14751 यद्द्रष्टुरस्याद्रष्टृत्वं दृश्याभावे भवेद्बलात् ।
14752 तद्विद्धि केवलीभावं तत एवासतः सतः ॥ ५३ ॥
14753
14754 यदिति । दृश्यस्य द्रष्टृपृथक्सत्तापगमे अन्यसत्तयान्यस्य सत्त्वायोगात्
14755 दृश्याभावे तद्बलादस्य द्रष्टुश्चिन्मात्रस्य यदद्रष्टृत्वं भवेत्तत
14756 एवासतो बाधितादृश्यात्सतः सन्मात्रचिद्रूपेण
14757 परिशिष्टस्यात्मनस्तत्केवलीभावं विद्धित्यर्थः ॥ ५३ ॥
14758
14759 तत्तामुपगते भावे रागद्वेषादिवासनाः ।
14760 शाम्यन्त्यस्पन्दिते वाते स्पन्दनक्षुब्धता यथा ॥ ५४ ॥
14761
14762 अस्त्वेवं तथापि कथं प्रतिज्ञातं मच्चित्तादर्शे दृश्यमलमार्जनं
14763 सिद्ध्यति तत्राह - तत्तामिति । भावे चित्ते तत्तां कैवल्यबोधेन तद्भावम् ।
14764 वातस्पन्दनप्रयुक्तवनजलाशयादिक्षुब्धताः ॥ ५४ ॥
14765
14766 असंभवति सर्वस्मिन्दिग्भूम्याकाशरूपिणि ।
14767 प्रकाश्ये यादृशं रूपं प्रकाशस्यामलं भवेत् ॥ ५५ ॥
14768

14769 निर्विषयज्ञानस्थितिमसंभावयन्तं दृष्टान्तेनानुभावयति -
14770 असंभवतीत्यादिभिः ॥ ५५ ॥
14771
14772 त्रिजगत्त्वमहं चेति दृश्येऽसत्तामुपागते ।
14773 द्रष्टुः स्यात्केवलीभावस्तादृशो विमलात्मनः ॥ ५६ ॥
14774
14775 असत्तामिति च्छेदः ॥ ५६ ॥
14776
14777 अनाप्ताखिलशैलादि प्रतिबिम्बे हि यादृशी ।
14778 स्याद्दर्पणे दर्पणता केवलात्मस्वरूपिणी ॥ ५७ ॥
14779
14780 केवलदर्पणात्मस्वरूपिणी ॥ ५७ ॥
14781
14782 अहं त्वं जगदित्यादौ प्रशान्ते दृश्यसंभ्रमे ।
14783 स्यात्तादृशी केवलता स्थिते द्रष्टर्यवीक्षणे ॥ ५८ ॥
14784
14785 चितो दृश्योन्मुखत्वं वीक्षणं तच्छून्ये ॥ ५८ ॥
14786
14787 श्रीराम उवाच ।
14788
14789 सच्चेन्न शाम्यत्येवेदं नाभावो विद्यते सतः ।
14790 असत्तां च न विद्मोऽस्मिन्दृश्ये दोषप्रदायिनि ॥ ५९ ॥
14791
14792 दृश्यस्यासत्त्वे त्वदुक्तः केवलीभावः स्यात्तदेवानुभवविरुद्धं
14793 सत्सदित्येव दृश्यानुभवादिति परिणामवादमभिप्रेत्य श्रीरामः शङ्कते
14794 - सच्चेदिति द्वाभ्याम् ॥ ५९ ॥
14795
14796 तस्मात्कथमियं शाम्येद्ब्रह्मन्दृश्यविषूचिका ।
14797 मनोभवभ्रमकरी दुःखसंततिदायिनी ॥ ६० ॥
14798
14799 मनसा भवो जन्मादिस्तद्भ्रमकरी ॥ ६० ॥
14800
14801 श्रीवसिष्ठ उवाच ।
14802
14803 अस्य दृश्यपिशाचस्य शान्त्यै मन्त्रमिमं शृणु ।
14804 रामात्यन्तमयं येन मृतिमेष्यति नङ्क्ष्यति ॥ ६१ ॥
14805
14806 असतोऽप्यविद्यया सदनुबोधाद्दृश्यस्य सत्ताभ्रमः
14807 केवलीभावसाक्षात्कारेणाविद्यानाशे तु नायं भ्रमः समुदेतीति
14808 गूढाभिसन्धिः । प्रथमं जीवन्मुक्तदर्शनलिङ्गेनानिर्मोक्षप्रसङ्गनेन
14809 च दृश्ये सत्यताविश्वासं वारयन् विवर्तवादमाश्रित्य श्रीवसिष्ठ उवाच ##-
14810 नङ्क्ष्यतीति बाध एव द्वेधोक्तः ॥ ६१ ॥
14811
14812 यदस्ति तस्य नाशोऽस्ति न कदाचन राघव ।
14813 तस्मात्तन्नष्टमप्यन्तर्बीजभूतं [बीजरूपं इति पाठः]
14814 भवेद्धृदि ॥ ६२ ॥
14815
14816 परिणामवादे दोषमाह - यदिति । अयं भावः - परिणामवादे
14817 ह्युत्तरोत्तरावस्थाभिः पूर्वपूर्वावस्थातिरोभावमात्रं नोच्छेदः
14818 सतोऽसत्त्वायोगात् तथाच नाशलक्षणषष्ठविकारेणापि तिरोहितस्य द्वैतस्य चित्ते
14819 प्रकृतौ वा स्थितस्य कामकर्मवासनाबीजात्पुनरुद्भवो दुर्वार
14820 इत्यनिर्मोक्षप्रसङ्ग इति ॥ ६२ ॥

स्मृतिबीजाच्चिदाकाशे पुनरुद्भूय दृश्यधीः ।
लोकशैलाम्बराकारं दोषं वितनुतेऽतनुम् ॥ ६३ ॥

स्मृतिग्रहणं भोगोपयुक्तान्तःकरणवृत्तिप्रमुखजगन्मात्रोपलक्षणम् ॥
६३ ॥

इत्यनिर्मोक्षदोषः स्यान्न च तस्येह संभवः ।
यस्माद्देवर्षिमुनयो दृश्यन्ते मुक्तिभाजनम् ॥ ६४ ॥

मुक्तिभाजनं जीवन्मुक्ताः ॥ ६४ ॥

यदि स्याज्जगदादीदं तस्मान्मोक्षो न कस्यचित् ।
बाह्यस्थमस्तु हृत्स्थं वा दृश्यं नाशाय केवलम् ॥ ६५ ॥

ननु चिदात्मायं स्वबाह्यप्रधानस्थमेव दृश्यं
बुद्ध्यविवेकात्स्वहृत्स्थतया पश्यति सोऽयं संसारः
विवेकज्ञानोदयात्तदविवेकाभिमाननिवृत्तौ सत्यपि बहिस्तस्मिंस्ततो मोक्षः
स्यादिति सांख्यरीतिमाशङ्क्याह - यदीति ॥ ६५ ॥

प। १३९)

तस्मादिमां प्रतिज्ञां त्वं शृणु रामातिभीषणाम् ।
यामुत्तरेण ग्रन्थेन नूनं त्वमवबुध्यसे ॥ ६६ ॥

तस्माद्विवर्तवाद एव परिशिष्यत इत्याशयेनाह - तस्मादित्यादिना ।
विषयरागिणामारम्भादिवादिनां च भीषणाम् । यथाहुर्गौडपादाचार्याः
- अस्पर्शयोगो नामैष दुर्दर्शः सर्वयोगिनाम् । योगिनो बिभ्यति
यस्मादभये भयदर्शिनः ॥ इति ॥ ६६ ॥

अयमाकाशभूतादिरूपोऽहं चेति लक्षितः ।
जगच्छब्दस्य नामार्थो ननु नास्त्येव कश्चन ॥ ६७ ॥

यदिदं दृश्यते किंचिद्दृश्यजातं पुरोगतम् ।
परं ब्रह्मैव तत्सर्वमजरामरमव्ययम् ॥ ६८ ॥

पूर्णे पूर्णं प्रसरति शान्ते शान्तं [परं स्थितं इति पाठः]
व्यवस्थितम् ।
व्योमन्येवोदितं व्योम ब्रह्मणि ब्रह्म तिष्ठति ॥ ६९ ॥

प्रतीचो यद्ब्रह्मैक्यं तत् पूर्णे पूर्णं प्रसरति । यतस्तच्छान्तावस्थात्रये
शान्तं वियदादि द्वैतं व्यवस्थितम् । यतश्च व्योमन्येव
घटाद्युपाधित्यागाद्व्योमेवोदितम् । अतो ब्रह्मण्येव ब्रह्म तिष्ठति
नाणुमात्रमपि तद्विकृतमित्यर्थः । यत्र हि यदध्यासस्तत्कृतेन गुणेन
दोषेण वा अणुमात्रेणापि स न संबध्यत इति ॥ ६९ ॥

न दृश्यमस्ति सद्रूपं न द्रष्टा न च दर्शनम् ।
न शून्यं न जडं नो चिच्छान्तमेवेदमाततम् ॥ ७० ॥

चित् बुद्धिप्रतिबिम्बचैतन्यम् ॥ ७० ॥

श्रीराम उवाच ।

14873
14874 वन्ध्यापुत्रेण पिष्टोऽद्रिः शशशृङ्गं प्रगायति।
14875 प्रसार्य भुजसंपातं शिला नृत्यति ताण्डवम्॥ ७१॥
14876
14877 उक्ते विवर्तवादे पामराणामसंभावनामुद्घाटयन् श्रीराम उवाच -
14878 वन्ध्यापुत्रेणेत्यादिना। अत्र प्रायः
14879 पदार्थवाक्यार्थोभयासंभवप्रदर्शनाय तथा दृष्टान्ताः॥ ७१॥
14880
14881 स्रवन्ति सिकतास्तैलं पठन्त्युपलपुत्रिकाः।
14882 गर्जन्ति चित्रजलदा इतीवेदं वचः प्रभो॥ ७२॥
14883
14884 इत्येतानि वचांसीव प्रतिभान्तीति शेषः॥ ७२॥
14885
14886 जरामरणदुःखादिशैलाकाशमयं जगत्।
14887 नास्तीति किमिदं नाम भवताऽपि ममोच्यते॥ ७३॥
14888
14889 भवता प्रामाणिकमूर्धन्येनापि ममविवेकशालिनोऽप्रतार्यस्यापीति
14890 पामराशयसर्वस्वोक्तिः॥ ७३॥
14891
14892 यथेदं न स्थितं विश्वं नोत्पन्नं न च विद्यते।
14893 तथा कथय मे ब्रह्मन्येनैतन्निश्चितं भवेत्॥ ७४॥
14894
14895 इदानीं स्वाशयानुरूपमाह - यथेति॥ ७४॥
14896
14897 श्रीवसिष्ठ उवाच।
14898
14899 नासमन्वितवागस्मि शृणु राघव कथ्यते।
14900 यथेदमसदाभाति वन्ध्यापुत्र इवाऽरवी॥ ७५॥
14901
14902 उक्तदोषं परिहृत्यासतोऽपि सत्यवद्भानं स्वप्नदृष्टान्तेन
14903 संभावयिष्यन् श्रीवसिष्ठ उवाच - नेत्यादिना। आरवी ध्वनिमान्॥ ७५॥
14904
14905 इदमादावनुत्पन्नं सर्गादौ तेन नास्त्यलम्।
14906 इदं हि मनसो भाति स्वप्नादौ पत्तनं यथा॥ ७६॥
14907
14908 मन एव च सर्गादावनुत्पन्नमसद्वपुः।
14909 तदेतच्छृणु वक्ष्यामि यथैवमनुभूयते॥ ७७॥
14910
14911 मनोदृश्यमयं दोषं तनोतीमं क्षयात्मकम्।
14912 असदेव सदाकारं स्वप्नः स्वप्नान्तरं यथा॥ ७८॥
14913
14914 तत्स्वयं स्वैरमेवाशु संकल्पयति देहकम्।
14915 तेनेयमिन्द्रजालश्रीर्विततेन वितन्यते॥ ७९॥
14916
14917 विततेन चिरं भावनाविपुलेन॥ ७९॥
14918
14919 स्फुरति वल्गति गच्छति याचते
14920 भ्रमति मज्जति संहरति स्वयम्।
14921 अपरतामुपयात्यपि केवलं
14922 चलति चञ्चलशक्तितया मनः॥ ८०॥
14923
14924 केवलं मन एव चञ्चलशक्तितया यच्चलति तत्रैव

स्फुरतीत्यादिभ्रमविभावनमिति भावः। अपरतां
सांसारिकदशाप्रयुक्तमपकर्षं केवलं कैवल्यलक्षणोत्कर्षं चोपयाति ॥
८० ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे
उत्पत्तिप्रकरणार्थकल्पनं नाम चतुर्थः सर्गः ॥ ४ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
उत्पत्तिप्रकरणार्थकल्पनं नाम चतुर्थः सर्गः ॥ ४ ॥

पञ्चमः सर्गः ५

श्रीराम उवाच।

भगवन्मुनिशार्दूल किमिवेह मनोभ्रमे।
विद्यते कथमुत्पन्नं मनो मायामयं कुतः ॥ १ ॥

विश्वस्य मूलं हि मनस्तस्य मूलमिहोच्यते।
तदेव मनसस्तत्त्वं विश्वस्येति च वर्ण्यते ॥ १ ॥

एवं मनोमिथ्यात्ववर्णनेन प्रकरणार्थे कॢप्ते तदधिष्ठानतत्त्वं
तदारोपप्रकारं तस्य मिथ्यात्वे कारणं च विस्तरेण जिज्ञासमानः श्रीराम
उवाच - भगवन्निति। किं विद्यते। मनो भ्रमे परमार्थभूतं मूलं
किमित्यर्थः ॥ १ ॥

उत्पत्तिमादाविति मे समासेन वद प्रभो।
प्रवक्ष्यसि ततः शिष्टं वक्तव्यं वदतां वर ॥ २ ॥

सर्वजगदुत्पत्तिमूलमपहाय मनोमूलमात्रप्रश्ने बीजमाह - आदाविति।
आद्यस्य मूलपरिज्ञाने नैव संक्षेपतः सर्वमूलपरिज्ञानोपपत्तेरित्याशयः
॥ २ ॥

प। १४०)

श्रीवसिष्ठ उवाच।

महाप्रलयसंपत्तावसतां समुपागते।
अशेषदृश्यसर्गादौ शान्तमेवावशिष्यते ॥ ३ ॥

तत्राद्यप्रश्नोत्तरं मुख्यत्वाद्विस्तरेणासर्गसमाप्तेर्वसिष्ठ उवाच -
महाप्रलयेति। अर्थाज्जगति। असत्तां सूक्ष्मीभावादर्थक्रियाऽसमर्थताम्।
भाविनोऽशेषदृश्यसर्गस्य आदौ। शान्तं निर्विक्षेपम् ॥ ३ ॥

आस्तेऽनस्तमितो भास्वानजो देवो निरामयः।
सर्वदा सर्वकृत्सर्वः परमात्मा महेश्वरः ॥ ४ ॥

सर्वकृत्सर्वक्रियाशक्तिसंपन्नः ॥ ४ ॥

यतो वाचो निवर्तन्ते यो मुक्तैरवगम्यते।
यस्य चात्मादिकाः संज्ञाः कल्पिता न स्वभावजाः ॥ ५ ॥

मुक्तैर्जीवन्मुक्तैरवगम्यते प्रत्यक्षमनुभूयते। स्वो भावः अनारोपितरूपं

14977 तज्ज्ञा न किंत्वारोपितधर्मजाः ॥ ५ ॥
14978
14979 यः पुमान्सांख्यदृष्टीनां ब्रह्म वेदान्तवादिनाम् ।
14980 विज्ञानमात्रं विज्ञानविदामेकान्तनिर्मलम् ॥ ६ ॥
14981
14982 सर्ववादिनामपि स एव तत्तद्बुद्धिकल्पितविशेषैः सिद्धान्तविषय इत्यविवादः
14983 सर्वाधिष्ठाने तस्मिन्नित्याह - य इति । विज्ञानमात्रं
14984 क्षणिकविज्ञानमात्रम् ॥ ६ ॥
14985
14986 यः शून्यवादिनां शून्यो भासको योऽर्कतेजसाम् ।
14987 वक्ता मन्ता ऋतं भोक्ता द्रष्टा कर्ता सदैव सः ॥ ७ ॥
14988
14989 सर्वेषां प्रत्यगात्मापि स एवेत्याह - वक्तेति । ऋतं सत्यम् ॥ ७ ॥
14990
14991 सन्नप्यसद्यो जगति यो देहस्थोऽपि दूरगः ।
14992 चित्प्रकाशो ह्ययं यस्मादालोक इव भास्वतः ॥ ८ ॥
14993
14994 असत्त्वापादकाविद्यावृतत्वात्पामरदृशा असत् । अत एव दूरगः ॥ ८ ॥
14995
14996 यस्माद्विष्ण्वादयो देवाः सूर्यादिव मरीचयः ।
14997 यस्माज्जगन्त्यनन्तानि बुद्बुदा जलधेरिव ॥ ९ ॥
14998
14999 देवाः प्रकाशप्राधान्यान्मरीचय इव । अचेतनत्वात् जगन्ति तु बुद्बुदानीव
15000 जायन्त इति शेषः ॥ ९ ॥
15001
15002 यं यान्ति दृश्यवृन्दानि पयांसीव महार्णवम् ।
15003 य आत्मानं पदार्थं च प्रकाशयति दीपवत् ॥ १० ॥
15004
15005 यान्ति प्रलयेनापियन्ति । तस्यैव स्वप्रकाशत्वात्स्वपरप्रथानिर्वाहकत्वमाह ##-
15006
15007 य आकाशे शरीरे च दृषत्स्वप्सु लतासु च ।
15008 पांसुष्वद्रिषु वातेषु पातालेषु च संस्थितः ॥ ११ ॥
15009
15010 तस्यैव सर्वान्तरत्वेन सर्वगतत्वमाह - य इति ॥ ११ ॥
15011
15012 यः प्लावयति संरब्धं पुर्यष्टकमितस्ततः ।
15013 येन मूकीकृता मूढाः शिला ध्यानमिवास्थिताः ॥ १२ ॥
15014
15015 संरब्धं स्वस्वव्यापारेषूद्युक्तं कर्मेन्द्रियाणि ज्ञानेन्द्रियाणि
15016 भूतसूक्ष्माणि प्राणा अविद्याकामकर्मान्तःकरणमिति
15017 पुर्यष्टकमितस्ततोऽन्तर्बहिश्च स्वचिद्व्याप्त्या प्लावयति । चेतनानां चेतनता
15018 यत्प्रयुक्तेत्यर्थः । एवमचेतनानामपि वैचित्र्ये स एव हेतुरित्याह -
15019 येनेत्यादिना ॥ १२ ॥
15020
15021 व्योम येन कृतं शून्यं शैला येन घनीकृताः ।
15022 आपो द्रुताः कृता येन दीपो यस्य वशो रविः ॥ १३ ॥
15023
15024 यस्य वशः सन् रविर्दीपो दीप्तिस्वभावः । प्रकाशक इति यावत् । येन सूर्यस्तपति
15025 तेजसेद्धः इति श्रुतेः ॥ १३ ॥
15026
15027 प्रसरन्ति यतश्चित्राः संसारासारवृष्टयः [दृष्टय इति
15028 पाठः] ।

15029 अक्षयामृतसंपूर्णादम्भोदादिव वृष्टयः ॥ १४ ॥
15030
15031 संसारलक्षणा असारदृष्टय एव आसारवृष्टयः। अक्षयेण नित्येन बहलेन
15032 चामृतेन सुखेन जलेन च संपूर्णादिति यथायोगमुभयविशेषणम् ॥ १४ ॥
15033
15034 आविर्भावतिरोभावमयास्त्रिभुवनोर्मयः।
15035 स्फुरन्त्यतितते यस्मिन्मराविव मरीचयः ॥ १५ ॥
15036
15037 प्राचुर्ये मयट्।अतितते ऽत्यन्तविस्तीर्णे। मरीचयस्तदुदकानि ॥ १५ ॥
15038
15039 नाशरूपो विनाशात्मा योऽन्तःस्थः सर्वजन्तुषु।
15040 गुप्तो योऽप्यतिरिक्तोऽपि सर्वभावेषु संस्थितः ॥ १६ ॥
15041
15042 प्रपञ्चात्मना नाशरूपः। स्वरूपेण त्वविनाशात्मा।
15043 सूक्ष्मतमत्वादन्तर्गुप्तः। महत्तमत्वात्सर्वतोऽप्यतिरिक्तः।
15044 निष्प्रपञ्चतयावशिष्टः। तथाच श्रुतिः पादोऽस्य सर्वा भूतानि
15045 त्रिपादस्यामृतं दिवि इति ॥ १६ ॥
15046
15047 प्रकृतिव्रततिर्व्योम्नि जाता ब्रह्माण्डसत्फला।
15048 चित्तमूलेन्द्रियदला येन नृत्यति वायुना ॥ १७ ॥
15049
15050 प्रकृतिर्माया सैव व्रततिर्लता। व्योम्नि शुद्धचिति। येनेश्वरेण ॥ १७ ॥
15051
15052 यश्चिन्मणिः प्रकचति प्रतिदेहसमुद्गके।
15053 यस्मिन्निन्दौ स्फुरन्त्येता जगज्जालमरीचयः ॥ १८ ॥
15054
15055 समुद्गके संपुटके ॥ १८ ॥
15056
15057 प्रशान्ते चिद्घने यस्मिन्फुरन्त्यमृतवर्षिणि।
15058 धाराजलानि भूतानि सृष्टयस्तडितः स्फुटाः ॥ १९ ॥
15059
15060 भूतानि जाड्यप्राधान्याद्धाराजलानि। स्फुटाश्चित्प्रकाशप्रधानाः
15061 सृष्टयस्तडितः ॥ १९ ॥
15062
15063 चमत्कुर्वन्ति वस्तूनि यदालोकतया मिथः।
15064 असज्जातमसद्येन येन सत्सत्त्वमागतम् ॥ २० ॥
15065
15066 चमत्कुर्वन्ति विचित्रकार्याणि कुर्वते ॥ २० ॥
15067
15068 चलतीदमनिच्छस्य कायो यो यस्य संनिधौ।
15069 जडं परमरक्तस्य शान्तमात्मनि तिष्ठतः ॥ २१ ॥
15070
15071 यः प्रसिद्धो देवनरतिर्यगादिकायः अरक्तस्यासङ्गस्यानिच्छतश्च यस्य
15072 संनिधौ इदं दृश्यभूतमत एव परमत्यन्तं जडमपि चलति।
15073 पदसंस्कारपक्षाश्रयणात्सामान्ये नपुंसकम् ॥ २१ ॥
15074
15075 नियतिर्देशकालौ च चलनं स्पन्दनं क्रिया।
15076 इति येन गताः सत्तां सर्वसत्तातिगामिना ॥ २२ ॥
15077
15078 सर्गकालेऽवश्यं सृष्ट्या भाव्यं प्रलयकाले च प्रलयेनेत्यादिनियमो
15079 नियतिस्तदवच्छेदकौ देशकालौ। तत्राप्यौ बीजाद्यन्तर्गतकार्यस्य
15080 बीजोच्छूनतया चलनम्। बीजपुटं भित्त्वाङ्कुरादिनिर्गमनेन स्पन्दनम्। ततः

15081 काण्डपत्रशाखादिक्रमेण फलावसानो व्यापारः क्रिया। इत्येवं क्रमेण
15082 सर्वभावा येन सत्तां व्यवहारार्थक्रियासमर्थतां गताः।
15083 सर्वसत्तातिगामिनेति तस्य जगद्विलक्षणपारमार्थिकसत्तोक्ता॥ २२॥
15084
15085 प्। १४१)
15086
15087 शुद्धसंविन्मयत्वाद्यः खं भवेद्व्योमचिन्तया।
15088 पदार्थचिन्तयार्थत्वमिव तिष्ठत्यधिष्ठितः॥ २३॥
15089
15090 अथवा स एव मायिकव्योमादिभावचिन्तया व्योमादिभावेन संपन्नो न
15091 ततोऽन्यद्व्योमादिशब्दभागस्तीत्याह - शुद्धेति। तथाच श्रुतिः सर्वाणि
15092 रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन्यदास्ते इति।
15093 चमत्कुर्वन्तीत्याद्येतदन्तेन श्लोकचतुष्टयेन
15094 जगदारोपप्रकारप्रश्नस्याप्युत्तरमुक्तम्॥ २३॥
15095
15096 कुर्वन्नपीह जगतां महतामनन्त-
15097 वृन्दं न किंचन करोति न काश्चनापि।
15098 स्वात्मन्यनस्तमयसंविदि निर्विकारे
15099 त्यक्तोदयस्थितिमति स्थित एक एव॥ २४॥
15100
15101 संप्रति तस्य मिथ्यात्वे कारणमाह - कुर्वन्नपीति। निर्विकारे अत एव
15102 त्यक्तस्वजातीयाद्युदयादिमति यतोऽयं स्थितस्ततोऽयं महतां जगतां
15103 ब्रह्माण्डानां वृन्दं तत्र विचित्रलीलाश्च कुर्वन्नपि न किंचन कार्यं न
15104 काश्चन क्रियाः करोतीति निर्विकारोपादानकत्वमेव कार्यमिथ्यात्वे हेतुरित्यर्थः
15105 ॥ २४॥
15106
15107 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे
15108 मूलकारणदेवस्वरूपवर्णनं नाम पञ्चमः सर्गः॥ ५॥
15109
15110 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
15111 मूलकारणदेवस्वरूपवर्णनं नाम पञ्चमः सर्गः॥ ५॥
15112
15113 षष्ठः सर्गः ६
15114
15115 श्रीवसिष्ठ उवाच।
15116
15117 अस्य देवाधिदेवस्य परस्य परमात्मनः।
15118 ज्ञानादेव परा सिद्धिर्न त्वनुष्ठानदुःखतः॥ १॥
15119
15120 इत्थं जगन्मूलकारणं देवस्वरूपमुपवर्ण्य
15121 तत्प्राप्त्युपायज्ञानसाधनान्युपदिदिक्षुः श्रीवसिष्ठ उवाच - अस्येत्यादि।
15122 देवस्य हिरण्यगर्भस्यादिकारणत्वात्तदधिदेवस्य
15123 द्योतकत्वाद्देवानामिन्द्रियमनसामपि साक्षितया
15124 प्रकाशकत्वात्तेषामधिदेवस्येति वा॥ १॥
15125
15126 अत्र ज्ञानमनुष्ठानं नत्वन्यदुपयुज्यते।
15127 मृगतृष्णाजलभ्रान्तिशान्तौ चेदं निरूपितम्॥ २॥
15128
15129 अनुष्ठानमिव वक्ष्यमाणप्रयत्नसंपाद्यत्वाज्ज्ञानमपि
15130 गौण्यानुष्ठानमुच्यते। कर्मकोटिभिरपि दुर्भेद्यस्य ज्ञानमात्रेण
15131 निवृत्तावनुरूपं दृष्टान्तमाह - मृगतृष्णेति। निरूपितं दृष्टम्
15132 ॥ २॥

नह्येष दूरे नाभ्याशे नालभ्यो विषमे न च।
स्वानन्दाभासरूपोऽसौ स्वदेहादेव लभ्यते॥ ३॥

नातिदूरे नातिसंनिहिते क्रियामन्तरेणालभ्ये विषमादिस्थे च फले क्रिया सफला
स्यादात्मा तु न तथेति तस्य न क्रियालभ्यतेत्याह - नहीति।
विस्मृतकण्ठचामीकरवज्ज्ञानलभ्यता त्वस्य सुलभेत्याह - स्वानन्देति॥
३॥

किंचिन्नोपकरोत्यत्र तपोदानव्रतादिकम्।
स्वभावमात्रे विश्रान्तिमृते नात्रास्ति साधनम्॥ ४॥

अत्रास्यां प्रागुक्तदेवप्राप्तौ॥ ४॥

साधुसंगमसच्छास्त्रपरतैवात्र कारणम्।
साधनं बाधनं मोहजालस्य यदकृत्रिमम्॥ ५॥

अत्र तत्प्राप्तिसाधने ज्ञानेऽपि कुतः सर्वथा कर्मनिरपेक्षता तत्राह -
साधनमिति। यद्यतो मोहजालस्य बाधनमकृत्रिमं नित्यसिद्धं ब्रह्मैव
चरमसाक्षात्कारवृत्त्यारूढं सद्बाधनं भादे कारणं नान्यदित्यर्थः
॥ ५॥

अयं सदेव इत्येव संपरिज्ञानमात्रतः।
जन्तोर्न जायते दुःखं जीवन्मुक्तत्वमेति च॥ ६॥

दुःखनिवृत्तौ जीवन्मुक्तौ वा तर्हि साधनान्तरं स्यात्तत्राह - अयमिति॥ ६
।।

श्रीराम उवाच।

संपरिज्ञातमात्रेण किलानेनात्मनात्मना [मात्मनः इति पाठः]
।
पुनर्दोषा न बाधन्ते मरणाद्याः कदाचन [कथंचन इति
पाठः]॥ ७॥

तमेतं वेदानुवचनेन इति प्रत्यक्षं यज्ञदानतपसां
ज्ञानसाधनत्वश्रवणात्किंचिन्नोपकरोतीत्याद्युक्तिः साधारणतप आदिविषया
तीव्रतरतप आदिविधित्सयेति मन्यमानः श्रीराम उवाच - संपरीति॥ ७॥

देवदेवो महानेष कुतो दूरादवाप्यते।
तपसा केन तीव्रेण क्लेशेन कियताथवा॥ ८॥

अदूराच्छीघ्रमवाप्यते ज्ञानेन प्राप्यते। शीघ्रं तज्ज्ञानं केनोपायेन
सिद्ध्यतीत्यर्थः॥ ८॥

श्रीवसिष्ठ उवाच।

स्वपौरुषप्रयत्नेन विवेकेन विकासिना।
स देवो ज्ञायते राम न तपःस्नानकर्मभिः॥ ९॥

विविदिषार्थं विहितानां निष्कामकर्मणां जन्मान्तरानुष्ठितसाधारणानां
विविदिषोत्पत्तावेवोपक्षयात्सत्यामुत्कटविविदिषायां श्रवणादिप्रयत्न

15185 एवोपयुज्यते न तप आदीति मन्यमानः श्रीवसिष्ठ उवाच -
15186 स्वपौरुषेत्यादिना ॥ ९ ॥
15187
15188 रागद्वेषतमःक्रोधमदमात्सर्यवर्जनम् ।
15189 विना राम तपोदानं क्लेश एव न वास्तवम् ॥ १० ॥
15190
15191 न वास्तवं साधनमिति शेषः ॥ १० ॥
15192
15193 रागाद्युपहृते [द्युपगते इति पाठः] चित्ते वञ्चयित्वा परं
15194 धनम् ।
15195 यदर्ज्यते तस्य दानाद्यस्यार्थास्तस्य तत्फलम् ॥ ११ ॥
15196
15197 तत्कुतस्तत्राह - रागादीति । सति रागादौ धनार्जने
15198 परवञ्चनाद्यवश्यंभावाच्चित्तशुद्धेरेव दौर्लभ्याद्दानादेः काम्यं
15199 फलमपि दुर्लभं दूरे ततो ज्ञानमोक्ष [मोक्षप्रत्या इति पाठः]
15200 प्रत्याशेत्याशयेनाह - रागादीति द्वाभ्याम् ॥ ११ ॥
15201
15202 प्। १४२)
15203
15204 रागाद्युपहते चित्ते व्रतादि क्रियते च यत् ।
15205 तद्दम्भः प्रोच्यते तस्य फलमस्ति मनाङ्ग च ॥ १२ ॥
15206
15207 तस्मात्पुरुषयत्नेन मुख्यमौषधमाहरेत् ।
15208 सच्छास्त्रसज्जनासङ्गौ संसृतिव्याधिनाशनौ ॥ १३ ॥
15209
15210 मुख्यमौषधमेवादौ द्विधा दर्शयति - सच्छास्त्रेति ॥ १३ ॥
15211
15212 अत्रैकं पौरुषं यत्नं वर्जयित्वेतरा गतिः ।
15213 सर्वदुःखक्षयप्राप्तौ न काचिदुपपद्यते ॥ १४ ॥
15214
15215 इतरा गतिरुपायान्तरम् ॥ १४ ॥
15216
15217 शृणु तत्पौरुषं कीदृगात्मज्ञानस्य लब्धये ।
15218 येन शाम्यत्यशेषेण रागद्वेषविषूचिका ॥ १५ ॥
15219
15220 यथासंभवया वृत्त्या लोकशास्त्राविरुद्धया ।
15221 संतोषसंतुष्टमना भोगगन्धं परित्यजेत् ॥ १६ ॥
15222
15223 वृत्त्या जीवनसाधनसंपत्त्या । भोगगन्धं भोगवासनाम् ।
15224 तदभिनिवेशमिति यावत् ॥ १६ ॥
15225
15226 यथासंभवमुद्योगादनुद्विग्नतया स्वया ।
15227 साधुसंगमसच्छास्त्रपरतां प्रथमं श्रयेत् ॥ १७ ॥
15228
15229 अनुद्विग्नतया अशक्यमिदमिति निर्वेद उद्विग्नता तद्वर्जनेन । स्वया आत्मीयया ।
15230 हितयेति यावत् ॥ १७ ॥
15231
15232 यथाप्राप्तार्थसंतुष्टो यो गर्हितमुपेक्षते ।
15233 साधुसंगमसच्छास्त्रपरः शीघ्रं स मुच्यते ॥ १८ ॥
15234
15235 गर्हितं शास्त्रशिष्टेषु निन्दितम् ॥ १८ ॥
15236

विचारेण परिज्ञातस्वभावस्य महामतेः |
अनुकम्प्या भवन्त्येते ब्रह्मविष्णिवन्द्रशंकराः || १९ ||

परिज्ञातः स्वभाव आत्मतत्त्वं येन तस्य || १९ ||

देशे यं सुजनप्राया लोकाः साधुं प्रचक्षते |
स विशिष्टः स साधुः स्यात्तं प्रयत्नेन संश्रयेत् || २० ||

साधुं लक्षयति - देश इति | सुजनाः
श्रुतिस्मृत्याचारनिष्ठास्तत्प्रायास्तत्प्रचुरा लोका जनां यं प्रचक्षते स
चेद्विशिष्टैर्ज्ञानवैराग्यादिगुणैः सहितः स्यात्तर्हि स साधुः स्यादित्यर्थः ||
२० ||

अध्यात्मविद्या विद्यानां प्रधानं तत्कथाश्रयम् |
शास्त्रं सच्छास्त्रमित्याहुर्मुच्यते तद्विचारणात् || २१ ||

आत्मानमधिकृत्य प्रवृत्ता विद्या ज्ञानमध्यात्मविद्या
तदुत्पत्त्यनुकूलविचारात्मककथाया आश्रयं
शास्त्रमुपनिषत्सूत्रभाष्यैतद्ग्रन्थादि || २१ ||

सच्छास्त्रसत्संगमजैर्विवेकै-
स्तथा विनश्यन्ति बलादविद्याः |
यथा जलानां कतकानुषङ्गा-
द्यथा जनानां मतयोऽपि [मतयश्च इति पाठः] योगात् || २२ ||

ननु सत्स्वनेकेषूपायेषु कुतः साधुसंगमसच्छास्त्रे एव प्रशयेते तत्राह
- सच्छास्त्रेति | अविद्या मोहाः विद्याविरोधिनो रागादयश्च | जलानां पङ्का
इति शेषः | मतयो बाह्यमनोवृत्तयो योगाभ्यासाद्विनश्यन्ति || २२ ||

इत्यार्षे श्रीवासिष्ठमहारामायणे मोक्षोपाये उत्पत्तिप्रकरणे
मुमुक्षुप्रयत्नोपदेशो नाम षष्ठः सर्गः || ६ ||

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
मुमुक्षुप्रयत्नोपदेशो नाम षष्ठः सर्गः || ६ ||

सप्तमः सर्गः ७

श्रीराम उवाच |

य एष देवः कथितो यस्मिञ्ज्ञाते विमुच्यते |
वद क्वासौ स्थितो ब्रह्मन्कथमेनमहं लभे || १ |

विरिञ्च्यादिजगन्मूलं यो देवः प्राङ्निरूपितः |
निरस्तनिखिलोपाधेस्तस्य तत्त्वमोहोच्यते || १ ||

प्रसङ्गजिज्ञासिते साधने परिज्ञाते प्रस्तुतजगत्कारणस्य वास्तवं रूपं
जिज्ञासुः श्रीराम उवाच - य इति | यो विरिञ्च्यादिकारणभूत एष
प्रत्यगात्मभूतो देवः प्राक्कथितः असौ क्व
कस्मिन्नुपाधावनावरणेनाभिव्यक्तः | कीदृशे वा तत्त्वे स्थितः | कथं लभे
इत्यौत्सुक्योक्तिः साधनानां पूर्वमुक्तत्वादन्तरङ्गोपायान्तरप्रश्नो वा || १ ||

श्रीवसिष्ठ उवाच |

य एष देवः कथितो नैष दूरेऽवतिष्ठते।
शरीरे संस्थितो नित्यं चिन्मात्रमिति विश्रुतः॥ २॥

तत्रादौ प्रथमप्रश्नोत्तरमाह - य इति। नैष दूरेऽवतिष्ठत
इत्यौत्सुक्यपरिहारार्थमुक्तिः। शरीरे सामान्याभिव्यक्त्या
तदन्तर्हृदयपुण्डरीके तु विशेषतः सम्यगभिव्यक्तः। स्थित इत्यर्थः॥ २॥

एष सर्वमिदं विश्वं न विश्वं चैष सर्वगः।
विद्यते ह्येष एवैको न तु विश्वाभिधास्ति दृक्॥ ३॥

तर्हि किं देहपरिच्छिन्न एव सः नेत्याह - एष इति। तर्हि किं
दृश्यविश्वाकार एव नेत्याह - नेति। सर्वाधिष्ठानभावेन
सर्वगतत्वप्रतिपादनाय विश्वात्मत्वोक्तिरिति भावः॥ ३॥

चिन्मात्रमेष शशिभृच्चिन्मात्रं गरुडेश्वरः।
चिन्मात्रमेव तपनश्चिन्मात्रं कमलोद्भवः॥ ४॥

न केवलं कार्यात्मकं विश्वमेव तद्व्यतिरेकेण नास्ति किंतु तत्कारणमायापि
सहतद्गुणाभिमानिदेवैरित्याशयेनाह - चिन्मात्रमेष इति। गरुडस्येश्वरो
नियन्ता विष्णुः। तपनस्य त्रिमूर्त्यात्मत्वप्रसिद्धेस्तत्पङ्क्तावुक्तिः॥ ४॥

श्रीराम उवाच।

बाला अपि वदन्त्येतद्यदि चेतनमात्रकम्।
जगदित्येव केवात्र नाम स्यादुपदेशता॥ ५॥

चिन्मात्रमित्यत्र कर्तरि क्विबन्तान्मात्रचि चेतनमात्रं विश्वमित्यर्थो लभ्यते।
तच्च लोके आबालगोपालं प्रसिद्धं पुरुषार्थापर्यवसितं चेति नोपदेशार्हमिति
मन्यमानानामाशयमुद्घाटयन् रामः शङ्कते - बाला अपीति॥ ५॥

प। १४३)

श्रीवसिष्ठ उवाच।

चिन्मात्रं चेतनं विश्वमिति यज्ज्ञातवानसि।
न किंचिदेव विज्ञातं भवता भवनाशनम्॥ ६॥

नासौ कर्तरि क्विप् अपितु भावे। तथाच नोक्तदोष इति मन्यमानो वसिष्ठः
प्रागुक्तकल्पं निन्दति - चिन्मात्रमिति। किंचिदल्पमपि न विज्ञातम्।
भ्रान्तेरज्ञानलेशस्याप्यनिवृत्तेरिति भावः॥ ६॥

चेतनं राम संसारो जीव एष पशुः स्मृतः।
एतस्मादेव निर्यान्ति जरामरणभीतयः॥ ७॥

कुतो न विज्ञातं तत्राह - चेतनमिति। कर्तरि क्विबन्तत्वे चिच्चेतनशब्दौ
तुल्यार्थौ स्याताम्। नन्द्यादिल्युप्रत्ययस्यापि कर्तर्येव
विधानाच्चितिकर्तृतदर्थः [कर्तरितृ इति पाठः] स्यात्। नच नित्यचितेः
कर्तृत्वसंभव इत्यनित्यमनोवृत्तिप्रतिफलनचित्परिग्रहे
तदाश्रयभूतमन्तःकरणमेवात्मतया गृह्णंस्तदात्मा जीव उक्तः स्यात्। स
च बहिर्मुखतया विषयानेव सारतया पश्यन्पशुः। एतस्मादेव
देहेन्द्रियविषयवासनानुसारात्तत्तद्देहपरिग्रहे जरामरणादयोऽन्तस्था

15341 निर्यान्तीवाविर्भवन्तीत्यर्थः ॥ ७ ॥
15342

15343 पशुरज्ञो ह्यमूर्तोऽपि दुःखस्यैवैष भाजनम् ।
15344 चेतनत्वाच्चेतनीयं मनोऽनर्थः स्वयं स्थितः ॥ ८ ॥
15345

15346 ननु मूर्तस्थूलशरीरातिरिक्ततया तज्ज्ञानादेव जरामरणादिप्रत्ययः सिद्धः
15347 अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः इति श्रुतेरित्याशङ्क्याह -
15348 पशुरिति । अमूर्तस्थूलदेहशून्योऽप्यसौ न कृतार्थो यतोऽज्ञः अज्ञानवान्
15349 चेतनीयं यन्मनस्तद्रूपोऽनर्थश्च स्वयं भूत्वा स्थितोऽतो दुःखस्यैव
15350 भाजनम् । अशरीरमित्यादिश्रुतेस्तु स्थूलसूक्ष्मकारणाख्यदेहत्रयरहितं
15351 प्रियाप्रिये न स्पृशत इत्यर्थो न स्थूलदेहमात्ररहितमिति । तथात्वेऽपि स्वप्ने
15352 प्रियाप्रियदर्शनादिति भावः ॥ ८ ॥
15353

15354 चेत्यनिर्मुक्तता या स्यादचेत्योन्मुखताथवा ।
15355 अस्य सा भरितावस्था [भवितावस्था इति पाठः] तां ज्ञात्वा
15356 नानुशोचति ॥ ९ ॥
15357

15358 कीदृशस्य तर्हि तस्य ज्ञानात्कृतकृत्यता तत्राह - चेत्येति ।
15359 चेत्यनिर्मुक्तता मुक्तौ अचेत्योन्मुखता तु समाधौ प्रसिद्धा ॥ ९ ॥
15360

15361 भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
15362 क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥ १० ॥
15363

15364 तत्र श्रुतिं प्रमाणयति - भिद्यत इति ।
15365 मूलाज्ञाननाशात्तत्कार्यान्तःकरणतादात्म्याध्यासलक्षणो
15366 हृदयग्रन्थिर्भिद्यते नश्यति तन्नाशादेव तन्मूलकसंशयादयोऽपीत्यर्थः
15367 । परं कारणमप्यवरं यस्मात्तथाविधे ॥ १० ॥
15368

15369 तस्य चेत्योन्मुखत्वं तु चेत्यासंभवनं विना ।
15370 रोद्धुं न शक्यते दृश्यं चेत्यं शाम्यति वै कथम् ॥ ११ ॥
15371

15372 ननु तर्हि चित्तनिरोधलक्षणयोगेनैव चेत्योन्मुखत्वस्य रोद्धुं शक्यत्वात्किं
15373 ज्ञानप्रयासेन तत्राह - तस्येति । चेत्यस्य दृश्यस्यासंभवनं ज्ञानेन
15374 मूलतो बाधम् । शाम्यति वै कथम् विना ज्ञानमिति शेषः । तथाच विना
15375 ज्ञानं तादृशस्वरूपसमाधिरेव न सिद्ध्यतीत्यर्थः ॥ ११ ॥
15376

15377 अचेत्यचित्स्वरूपं यत्तच्चासंभवनं विना ।
15378 क्व स्वरूपोन्मुखत्वं हि केवलं चेत्यरोधतः ॥ १२ ॥
15379

15380 एवं मोक्षोऽपि ज्ञानमन्तरेण दुर्लभ इत्याह - अचेत्येति ।
15381 यन्मोक्षाख्यमचेत्यचित्स्वरूपं तच्च असंभवनं
15382 प्रागुक्तचेत्यासंभवनं विना क्व । हि यस्मात्समाधौ केवलं
15383 स्वरूपोन्मुखत्वमपि चेत्यरोधतो दृश्यबाधादेव भवति तत्र किं वाच्यं
15384 मोक्षे तदावश्यकत्वमिति भावः ॥ १२ ॥
15385

15386 श्रीराम उवाच ।
15387

15388 यस्मिञ्जीवे हि विज्ञाते न विनश्यति संसृतिः ।
15389 व्योमरूपी पशुस्त्वज्ञः स ब्रह्मन्कुत्र कीदृशः ॥ १३ ॥
15390

15391 यस्मिन्निति । ननु रामस्येदं प्रश्नश्लोकद्वयमप्यसंगतं चेतनं राम
15392 संसारो जीव एष पशुः स्मृतः इति जीवस्वरूपस्य तदाधारस्य

15393 मनोमूलकारणस्य च प्रागुक्तत्वेनाद्यश्लोकानुत्थानात् [प्राक्तनत्वेन इति
15394 पाठः] | ब्रह्मस्वरूपस्य च सर्गाद्यश्लोके पृष्ठत्वेन
15395 पुनःप्रश्नानर्हत्वादिति चेत् | एवं तर्हि न यथाश्रुतप्रश्नो रामाभिप्रेतः
15396 किंत्वाक्षेपः | तथाहि | ननु जीव एव संसार इति व्याहृतं तस्य ब्रह्मप्राप्तौ
15397 ब्रह्मणोऽपि संसारित्वप्रसङ्गात् | तदप्राप्तौ तु
15398 तत्साधनज्ञानशास्त्रादिवैयर्थ्यम् | तस्मादन्यदेव जैवं रूपं वाच्यम् |
15399 तथा तदाधारोऽपि किं ब्रह्मैव उतान्यत् | आद्ये ज्ञानेन
15400 ब्रह्माध्यस्तसर्वद्वैतेन सह बाधापत्तौ वरघातन्यायापत्तिः | द्वितीये
15401 ब्रह्माद्वैतव्याघात इति मन्यमानः श्रीरामः पृच्छति - यस्मिन्निति |
15402 व्योमेव रूपी कल्पितरूपवान् | कुत्र कस्मिन्नाधारे तिष्ठति कीदृशः किं
15403 संसारकोटावुतात्मकोटावित्यर्थः [उतान्यकोटौ इति पाठः] || १३ ||
15404
15405 साधुसंगमसच्छास्त्रैः [भवितावस्था इति पाठः]
15406 संसारार्णवतारकः |
15407 दृश्यते परमात्मा यः स ब्रह्मन्वद कीदृशः || १४ ||
15408
15409 किंच यदि जीवः संसारकोटावेव तर्हि तस्य संसारार्णवतारको यः
15410 शास्त्रैरुपदिश्यते स कीदृशः | नहि जलधिमेव जलधेः कश्चित्तारयति |
15411 तस्माद्व्याहतं जीवस्य संसारित्ववचनमिति || १४ ||
15412
15413 श्रीवसिष्ठ उवाच |
15414
15415 यदेतच्चेतनं जीवो [जीवे विशीर्णे इति पाठः] विशीर्णो जन्मजङ्गले
15416 |
15417 एतमात्मानमिच्छन्ति ये तेऽज्ञाः पण्डिता अपि || १५ ||
15418
15419 स्यादेतदेवं यदि जीव एव संसरेज्जीव एव स्वज्ञानान्मुच्येत जीव एव वा तात्त्विक
15420 आत्मा स्यात् | नत्वेवम् | ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदहं
15421 ब्रह्मास्मीति तस्मात्तत्सर्वमभवत् इति श्रुतौ ब्रह्मण एव स्वाज्ञानात्संसारः
15422 स्वज्ञानान्मुक्तिरिति प्रतिपादनविरोधात् | नान्योऽतोऽस्ति द्रष्टा
15423 इत्यादिचेतनधात्वन्तरप्रतिषेधविरोधाच्च | यदा तु ब्रह्मैव अनेन जीवेनात्मना
15424 इति श्रुतेरिदंकारास्पदत्वात्कल्पितत्वाच्चानात्मभूतेन
15425 संसारकोट्यन्तर्भूतेनैव जीवेनात्मतया भ्रान्त्या गृहीतेन
15426 तद्धर्मैर्जीवोऽहमिति मन्यमानः संसरति तदा जीवस्यैव संसारित्वं
15427 पर्यवसन्नमिति तद्बाधेऽपि न वरघातन्यायापातादिदोष इत्यभिप्रेत्य
15428 स्वोक्तमेव द्रढयन् श्रीवसिष्ठ उवाच - यदेतदित्यादिना | जन्मग्रहणं
15429 शरीरसंघोपलक्षणं || १५ ||
15430
15431 प्। १४४)
15432
15433 जीव एव हि संसारश्चेतना दुःखसंततिः [संततेः इति पाठः] |
15434 अस्मिञ्ज्ञाते न विज्ञातं किंचिद्भवति कुत्रचित् || १६ ||
15435
15436 ज्ञायते परमात्मा चेद्राम दुःखस्य संततिः |
15437 क्षयमेति विषावेशशान्ताविव विषूचिका || १७ ||
15438
15439 श्रीराम उवाच |
15440
15441 रूपं कथय मे ब्रह्मन्यथावत्परमात्मनः |
15442 यस्मिन्दृष्टे मनो मोहान्समग्रान्संतरिष्यति || १८ ||
15443
15444 एवं समाहितो रामः सर्गोपक्रमपृष्टार्थमेव प्रासङ्गिकोक्तिव्यवहितमिति

15445 पुनः स्पष्टं पृच्छति - रूपमिति। कार्यबाहुल्यान्मोहानिति बहुवचनम्॥
15446 १८॥
15447
15448 श्रीवसिष्ठ उवाच।
15449
15450 देशाद्देशान्तरं दूरं प्राप्तायाः संविदो वपुः।
15451 निमिषेणैव [निमेषेणैव इति पाठः] यन्मध्ये तद्रूपं
15452 परमात्मनः॥ १९॥
15453
15454 तत्र लोके निर्विषयज्ञानाप्रसिद्धेर्निर्विषयानावृतापरोक्षचिद्रूपं
15455 [नावृत्त्या इति पाठः] तदित्युक्तेऽप्यनुभवपथानारोहाद्यथा
15456 तत्तमारोहति तथाह - देशादिति। शाखाग्रचन्द्रदर्शने चक्षुर्द्वारा
15457 निःसृतान्तःकरणाभिव्यक्तापरोक्षसंविदः शाखादेशाद्दूरं
15458 चन्द्रदेशं निमिषान्तरमात्रेण प्राप्तायाः
15459 शाखाचन्द्रयोर्युगपद्ग्रहणान्यथानुपपत्त्या शाखाप्रदेशमारभ्य
15460 चन्द्रपर्यन्तमनुस्यूतता अवश्यं वाच्या। अन्तराले विच्छेदे
15461 कारणानुभवयोरभावात्। तत्र तस्याः शाखाचन्द्रप्रदेशयोः सविषयत्वेऽपि
15462 मध्ये यद्वपुः स्वरूपं तदेव निर्विषयापरोक्षचिद्रूपं प्रसिद्धमिति
15463 परमात्मनोऽपि तद्रूपं ज्ञेयमित्यर्थः॥ १९॥
15464
15465 अत्यन्ताभाव एवास्ति संसारस्य यथास्थितेः [जगत्स्थितेः इति
15466 पाठः]।
15467 यस्मिन्बोधमहाम्भोधौ तद्रूपं परमात्मनः॥ २०॥
15468
15469 यथास्थितेः नाशादिविकारमन्तरेणैव स्वस्थाने [स्वाधिष्ठाने इति
15470 पाठः] मिथ्यात्वमापन्नस्येति यावत्। जगत्स्थितेः [निमेषेणैव इति
15471 पाठः] इति पाठेऽपि गच्छति बाधमिति जगदिति व्युत्पत्त्या अयमेवार्थः॥ २०
15472 ॥
15473
15474 द्रष्टृदृश्यक्रमो यत्र स्थितोऽप्यस्तमयं गतः।
15475 यदनाकाशमाकाशं तद्रूपं परमात्मनः॥ २१॥
15476
15477 तदेव स्पष्टमाह - द्रष्टृिति। आकाशबाधेऽप्यपरिच्छिन्नत्वेन
15478 विपुलत्वादाकाशम्॥ २१॥
15479
15480 अशून्यमिव यच्छून्यं यस्मिन्शून्यं जगत्स्थितम्।
15481 सर्गौघे सति यच्छून्यं तद्रूपं परमात्मनः॥ २२॥
15482
15483 जगत्स्वभावशून्यमपि यत्सर्ववस्तुयाथात्म्यभूतस्वरूपेण
15484 पूर्णत्वादणुमातेणाप्यशून्यमिव शून्यमसदपि जगद्यस्मिन् स्थितं
15485 सद्भावमापन्नमित्यर्थः। सर्गलक्षणा ओघा यस्य तथाविधे अज्ञाने सति
15486 यत्सदप्यनुपयोगाच्छून्यमिव शून्यम्॥ २२॥
15487
15488 यन्महाचिन्मयमपि बृहत्पाषाणवत्स्थितम्।
15489 जडं वा जडमेवान्तस्तद्रूपं परमात्मनः॥ २३॥
15490
15491 महाचित्प्रचुरत्वादस्थूलादिधर्मकमप्यज्ञदृशा
15492 पाषाणवद्बृहत्स्थूलमन्तरजडमेव जडं वा। इवार्थे वाशब्दः। जडमिव
15493 स्थितमित्यर्थः॥ २३॥
15494
15495 सबाह्याभ्यन्तरं येन सर्वं संप्राप्य संगमम्।
15496 स्वरूपसत्तामाप्नोति तद्रूपं परमात्मनः॥ २४॥

15497
15498 बाह्यमधिभूताधिदैवमाभ्यन्तरमध्यात्मं च यत्प्रसिद्धं तत्सहितं
15499 सर्वं जगद्येन संगमाध्यासिकतादात्म्यं संप्राप्य सत्सदिति
15500 व्यवहारयोग्यतालक्षणां स्वरूपसत्तामाप्नोतीत्यर्थः ॥ २४ ॥
15501
15502 प्रकाशस्य यथालोकः शून्यत्वं नभसो यथा ।
15503 तथेदं संस्थितं यत्र तद्रूपं परमात्मनः ॥ २५ ॥
15504
15505 प्रकाशादेरालोकादि यथा आत्मतया संस्थितं तथेति लोकदृष्ट्या
15506 दृष्टान्तोक्तिः । वस्तुतस्त्वान्त्यात्कार्यादनुगतं ब्रह्मैव
15507 सर्वभावानामात्मा नत्वान्तरालिकाः प्रकाशादय इति ॥ २५ ॥
15508
15509 श्रीराम उवाच ।
15510
15511 सद्रूपं परमात्मेति कथं नाम हि बुध्यते ।
15512 इयतोऽस्य जगन्नाम्नो दृश्यस्यासंभवः कथम् ॥ २६ ॥
15513
15514 यत् खलु प्रमाणैर्यथावगम्यते तत्तथैव सत् न रूपान्तरेण । ब्रह्म च
15515 नावगम्यते तत्कथं सद्रूपं निश्चेतुं शक्यम् जगच्च तथावगम्यमानं
15516 कथमसदिति रामः शङ्कते - सद्रूपमिति । इयतः इदंप्रमाणस्य
15517 विपुलस्य बहुप्रमाणसिद्धस्य चेत्यर्थः ॥ २६ ॥
15518
15519 श्रीवसिष्ठ उवाच ।
15520
15521 भ्रमस्य जागतस्यास्य जातस्याकाशवर्णवत् ।
15522 अत्यन्ताभावसंबोधे यदि रूढिरलं भवेत् ॥ २७ ॥
15523
15524 ब्रह्म प्रमाणैर्नावगम्यत इत्यसिद्धम् । असति प्रतिबन्धके
15525 महावाक्यैस्तदवगमात् । प्रतिबन्धनिरासस्तु
15526 तदध्यस्तद्वैतमिथ्यात्वबोधेनैव । नहि सर्पादिकमप्रत्याख्याय रज्जुतत्त्वं
15527 बोधयितुं शक्यमित्यभिप्रेत्य श्रीवसिष्ठ उवाच - भ्रमस्येत्यादिना ॥ २७ ॥
15528
15529 तज्ज्ञातं ब्रह्मणो रूपं भवेन्नान्येन कर्मणा ।
15530 दृश्यात्यन्ताभावतस्तु ऋते नान्या शुभा गतिः ॥ २८ ॥
15531
15532 अत्यन्ताभावसंपत्तौ दृश्यस्यास्य यथा स्थितेः ।
15533 शिष्यते परमार्थोऽसौ बुध्यते जायते ततः ॥ २९ ॥
15534
15535 यः शिष्यते स बुध्यते यो बुध्यते स ततो बोधात् बोद्धुरात्मैव जायत इत्यर्थः
15536 ॥ २९ ॥
15537
15538 न विदः प्रतिबिम्बोऽस्ति दृश्याभावादृते क्वचित् ।
15539 क्वचिन्नाप्रतिबिम्बेन किलादर्शोऽवतिष्ठते ॥ ३० ॥
15540
15541 उक्तेऽर्थे उपपत्तिमाह - नेति । विदो ब्रह्मणः प्रतिबिम्बो नास्ति बुद्धाविति
15542 शेषः । बुद्धौ प्रतिबिम्बितं हि ब्रह्म स्वावरकमज्ञानं दहत्तत्त्वतः
15543 प्रतीयेत । न चाध्यस्तसत्यताबुद्धौ ब्रह्म प्रतिबिम्बति ।
15544 विरोधिद्वैताक्रान्तबुद्धावद्वैतप्रतिबिम्बानुदयादित्यर्थः । ननु
15545 द्वैतप्रतिबिम्बशून्यतादशायां ब्रह्म प्रतिबिम्बतां तत्राह - क्वचिदिति ।
15546 यथा आदर्शः क्वचिदपि किंचित्प्रतिबिम्बग्रहणं विना नावतिष्ठते
15547 तद्वद्बुद्धिरपि द्वैतप्रतिबिम्बग्रहणं विनेत्यर्थः ॥ ३० ॥
15548

15549 प। १४५)
15550
15551 जगन्नाम्नोऽस्य दृश्यस्य स्वसत्तासंभवं विना।
15552 बुध्यते परमं तत्त्वं न कदाचन केनचित्॥ ३१॥
15553
15554 अनयोपपत्त्यापि प्रागुक्तं सिद्धमित्याह - जगदिति। स्वसत्ताऽसंभवं
15555 मिथ्यात्वम्। तन्निश्चयमिति यावत्॥ ३१॥
15556
15557 श्रीराम उवाच।
15558
15559 इयतो दृश्यजातस्य ब्रह्माण्डस्य जगत्स्थितेः।
15560 मुने कथमसत्तास्ति क्व मेरुः सर्षपोदरे॥ ३२॥
15561
15562 रामः किंचिदधिकं विशेषमभिप्रेत्य द्वितीयं प्रश्नमुत्थापयति - इयत
15563 इति। भवेदेवं यदि ब्रह्मणि जगदध्यस्तं स्यात्तदेव त्वसंभवि।
15564 चिन्मात्ररूपत्वात्परमसूक्ष्मे ब्रह्मणि इयतो
15565 ब्रह्माण्डविस्तृतस्थूलप्रपञ्चस्याध्यासाघटनात्तदेतदाह - क्व
15566 मेरुरिति॥ ३२॥
15567
15568 श्रीवसिष्ठ उवाच।
15569
15570 दिनानि कतिचिद्राम यदि तिष्ठस्यखिन्नधीः।
15571 साधुसंगमसच्छास्त्रपरमस्तदहं क्षणात्॥ ३३॥
15572
15573 भवेदेवं यदि जगति स्थूलता विमर्शसहा स्यान्नतु सा तथा। स्थूलताप्रत्यय
15574 एव यदा तवास्माभिः कालेनोपपत्तिभिः शिथिलीकरिष्यते तदा
15575 त्वमस्मदुक्तमवधारयिष्यसीत्यभिप्रेत्य श्रीवसिष्ठ उवाच -
15576 दिनानीत्यादिना। अखिन्नधीरनुद्विग्नचित्तः॥ ३३॥
15577
15578 प्रमार्जयामि ते दृश्यं बोधे मृगजलं यथा।
15579 दृश्याभावे द्रष्टृता च शाम्येद्बोधोऽवशिष्यते॥ ३४॥
15580
15581 द्रष्टृत्वं सति दृश्येऽस्मिन्दृश्यत्वं सत्यथेक्षके।
15582 एकत्वं सति हि द्वित्वे द्वित्वं चैकत्वयोजने॥ ३५॥
15583
15584 दृश्यद्वैताभावे न केवलं द्रष्टुरेवाभावः किंतु
15585 द्वित्वैकत्वयोरपीत्युपपादयति - द्रष्टृत्वमिति। सति ईक्षके द्रष्टरीत्यर्थः।
15586 एकत्वं हि द्वित्वादावन्यत्र प्रसिद्धे सति तद्व्यावृत्तये कल्प्यते न
15587 व्यावर्त्याप्रसिद्धावित्यर्थः॥ ३५॥
15588
15589 एकाभावे द्वयोरेव सिद्धिर्भवति नात्र हि।
15590 द्वित्वैक्यद्रष्टृदृश्यत्वक्षये सदवशिष्यते॥ ३६॥
15591
15592 इत्थं द्वैतैक्यवर्जितं सन्मात्रं परिशिष्यत इत्याह - द्वित्वैक्येति॥ ३६॥
15593
15594 अहंतादिजगद्दृश्यं सर्वं ते मार्जयाम्यहम्।
15595 अत्यन्ताभावसंवित्त्या मनोमुकुरतो मलम्॥ ३७॥
15596
15597 प्रकारान्तरेणापि दृश्यमार्जनं प्रतिजानीते - अहंतादीति॥ ३७॥
15598
15599 नासतो विद्यते भावो नाभावो विद्यते सतः।
15600 यत्तु नास्ति स्वभावेन कः क्लेशस्तस्य मार्जने॥ ३८॥

15601
15602 असतो हि सत्ताविकारो विवर्तः स्वरूपं वोच्येत न त्रयमपि। खपुष्पादौ
15603 त्रयस्याप्यदर्शनादेवं सतोऽप्यसत्त्वं
15604 स्वरूपव्याघातादेवासंभवीत्यनिर्वचनीयतासिद्धौ न तस्य मार्जने क्लेश
15605 इत्यर्थः ॥ ३८ ॥
15606
15607 जगदादावनुत्पन्नं यच्चेदं दृश्यते ततम्।
15608 तत्स्वात्मन्येव विमले ब्रह्मचित्त्वात्स्वबृंहितम् ॥ ३९ ॥
15609
15610 एवमुत्पत्तिरपि सती व्यर्था असतस्त्वसंभविनीति हेम्नि कल्पितं कटकत्वं
15611 हेमदृष्ट्येव सुबाधमित्याह - जगदिति द्वाभ्याम् ॥ ३९ ॥
15612
15613 जगन्नाम्ना न चोत्पन्नं न चास्ति न च दृश्यते।
15614 हेम्नीव कटकादित्वं किमेतन्मार्जने श्रमः ॥ ४० ॥
15615
15616 तथैतद्विस्तरेणाहं वक्ष्यामि बहुयुक्तिभिः।
15617 अबाधितं यथा तत्त्वं स्वयमेवानुभूयते ॥ ४१ ॥
15618
15619 वक्ष्यमाणप्रकारान्तरोक्तीरपि प्रसङ्गात्प्रतिजानीते - तथेति ॥ ४१ ॥
15620
15621 आदावेव हि नोत्पन्नं यत्तस्येहास्तिता कुतः।
15622 कुतो मरौ जलसरिद्द्वितीयेन्दौ कुतो ग्रहः ॥ ४२ ॥
15623
15624 अनुत्पन्नस्य सत्तेव [सत्त्वेन इति पाठः] ग्रहणमप्यसदेवेत्याह -
15625 आदाविति ॥ ४२ ॥
15626
15627 यथा वन्ध्यासुतो नास्ति यथा नास्ति मरौ जलम्।
15628 यथा नास्ति नभोयक्षस्तथा [नभोवृक्षः इति पाठः] नास्ति
15629 जगद्भ्रमः ॥ ४३ ॥
15630
15631 एवंच भ्रान्तितद्विषययोरुभयोरप्यसत्ता सिद्धेति सदृष्टान्तमाह -
15632 यथेति ॥ ४३ ॥
15633
15634 यदिदं दृश्यते राम तद्ब्रह्मैव निरामयम्।
15635 एतत्पुरस्ताद्वक्ष्यामि युक्तितो न गिरैव च ॥ ४४ ॥
15636
15637 किं तर्हि दर्शनाभासेषु परमार्थतोऽस्ति तदाह - यदिदमिति। युक्तित
15638 आख्यानाद्युपपत्तितः ॥ ४४ ॥
15639
15640 यन्नाम युक्तिभिरिह प्रवदन्ति तज्ज्ञास्तत्रावहेलनमयुक्तमुदारबुद्धे।
15641 यो युक्तियुक्तमवमत्य विमूढबुद्धिः
15642 कष्टाग्रहो भवति तं विदुरज्ञमेव ॥ ४५ ॥
15643
15644 अनुभवपथानारोहे किं युक्तिसहस्रेणापि
15645 लक्ष्यापराद्धेषोर्धानुष्कस्येवेत्यवहेलनामाशङ्क्याह - यदिति।
15646 तज्ज्ञास्तत्त्वज्ञाः। अवमत्य अनादृत्य। कष्टे निर्युक्तिके आग्रहोऽभिनिवेशो यस्य
15647 तथाविधो यो भवति तमज्ञमेव विदुः। प्राज्ञा इति शेषः ॥ ४५ ॥
15648
15649 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे
15650 जगदादिदृश्यासत्ताप्रतिज्ञा नाम सप्तमः सर्गः ॥ ७ ॥
15651
15652 इति श्रीवासिष्टमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे

15653 जगदादिदृश्यासत्ताप्रतिज्ञा नाम सप्तमः सर्गः ॥ ७ ॥
15654
15655 अष्टमः सर्गः ८
15656
15657 श्रीराम उवाच ।
15658
15659 कयैतज्ज्ञायते युक्त्या कथमेतत्प्रसिध्यति ।
15660 न्यायानुभूत एतस्मिन्न ज्ञेयमवशिष्यते ॥ १ ॥
15661
15662 प्रागुक्ततत्त्वविज्ञानं सच्छास्त्रेभ्यो न चान्यतः ।
15663 सच्छास्त्रेष्वप्ययं ग्रन्थः सद्यः फल इतीर्यते ॥ १ ॥
15664
15665 वक्ष्यामि युक्तित इति यत्प्रतिज्ञातं गुरुणा तत् श्रीरामः पृच्छति -
15666 कयैतदिति । यदिदं दृश्यते राम रद्ब्रह्मैव निरामयमिति यदुक्तमेतत् ।
15667 एतस्मिन्नित्यनेनाप्यस्यैव परामर्शः ॥ १ ॥
15668
15669 प्। १४६)
15670
15671 श्रीवसिष्ठ उवाच ।
15672
15673 बहुकालमियं रूढा मिथ्याज्ञानविषूचिका ।
15674 जगन्नाम्न्यविचाराख्या विना ज्ञानं न शाम्यति ॥ २ ॥
15675
15676 वदाम्याख्यायिका राम या इमा बोधसिद्धये ।
15677 ताश्चेच्छृणोषि तत्साधो मुक्त एवासि बुद्धिमान् ॥ ३ ॥
15678
15679 वदामि वक्ष्यामि । इमास्त्वत्पृष्टयुक्तिप्रधानाः सन्निहिताः ॥ ३ ॥
15680
15681 नो चेदुद्वेगशीलत्वादर्धादुत्थाय गच्छसि ।
15682 तत्तिर्यग्धर्मिणस्तेऽद्य न किंचिदपि सेत्स्यति ॥ ४ ॥
15683
15684 नो चेत् न शृणोषि चेत् । अश्रवणे हेतुमाह - उद्वेगेति । तर्त्तर्हि तिरश्चां
15685 पश्वादीनां धर्मः सच्छास्त्रश्रवणायोग्यता तद्वतः ॥ ४ ॥
15686
15687 योऽयमर्थं प्रार्थयते तदर्थं यतते तथा ।
15688 सोऽवश्यं तदवाप्नोति न चेच्छ्रान्तो निवर्तते ॥ ५ ॥
15689
15690 ननु महतामपि दुर्लभमिदं कथं मादृशेन लभ्येतेति
15691 मन्दमतेरनाश्वासमाशङ्क्याह - य इति । निवर्तते अर्धप्रयत्नादिति
15692 शेषः ॥ ५ ॥
15693
15694 साधुसंगमसच्छास्त्रपरो भवसि राम चेत् ।
15695 तद्दिनैरेव नो मासैः प्राप्नोषि परमं पदम् ॥ ६ ॥
15696
15697 श्रीराम उवाच ।
15698
15699 आत्मज्ञानप्रबोधाय शास्त्रं शास्त्रविदां वर ।
15700 किं नाम तत्प्रधानं स्याद्यस्मिञ्ज्ञाते न शोच्यते ॥ ७ ॥
15701
15702 श्रीवसिष्ठ उवाच ।
15703
15704 आत्मज्ञानप्रधानानामिदमेव महामते ।

शास्त्राणां परमं शास्त्रं महारामायणं शुभम् ॥ ८ ॥

इतिहासोत्तमादस्माच्छ्रुताद्बोधः प्रवर्तते ।
सर्वेषामितिहासानामयं सार उदाहृतः ॥ ९ ॥

कुतोऽस्योत्तमत्वं तत्राह - सर्वेषामिति ॥ ९ ॥

श्रुतेऽस्मिन्वाङ्मये यस्माज्जिवन्मुक्तत्वमक्षयम् ।
उदेति स्वयमेवात इदमेवातिपावनम् ॥ १० ॥

वाङ्मये वाक्यसंदर्भात्मके ग्रन्थे ॥ १० ॥

स्थितमेवास्तमायाति जगद्दृश्यं विचारणात् ।
यथा स्वप्ने परिज्ञाते स्वप्नादावेव भावना ॥ ११ ॥

यथा स्वप्नादौ स्थिते एव स्वप्नोऽयमिति परिज्ञाते स्वप्नसत्यत्वभावना
अस्तमभ्येति तद्वत् ॥ ११ ॥

यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित् ।
इमं समस्तविज्ञानशास्त्रकोशं विदुर्बुधाः ॥ १२ ॥

अन्यत्र ग्रन्थान्तरे । यद्बोधोपयुक्तयुक्तिजातम् । विज्ञानशास्त्रधनानां
कोशगृहम् ॥ १२ ॥

य इदं शृणुयान्नित्यं तस्योदारचमत्कृतेः ।
बोधस्यापि परं बोधं बुद्धिरेति न संशयः ॥ १३ ॥

बोधस्येतरग्रन्थजन्यबोधस्यापि परमुत्कृष्टं बोधम् । पञ्चम्यर्थे
षष्ठी ॥ १३ ॥

यस्मै नेदं त्वरुचये रोचते दुष्कृतोदयात् ।
विचारयतु यत्किंचित्सच्छास्त्रं ज्ञानवाङ्मयम् ॥ १४ ॥

यस्मै एतन्न रोचते सोऽन्यत्सच्छास्त्रं विचारयतु नास्माकं तत्र प्रद्वेष
इत्यर्थः ॥ १४ ॥

जीवन्मुक्तत्वमस्मिंस्तु श्रुते समनुभूयते ।
स्वयमेव यथा पीते नीरोगत्वं वरौषधे ॥ १५ ॥

कस्तर्ह्यस्यातिशये हेतुस्तमाह - जीवन्मुक्तत्वमिति ॥ १५ ॥

श्रूयमाणे हि शास्त्रेऽस्मिञ्छ्रोता वेत्त्येतदात्मना ।
यथावदिदमस्माभिर्ननूक्तं वरशापवत् ॥ १६ ॥

एतज्जीवन्मुक्तत्वमात्मना स्वयमेव वेत्त्यनुभवति । इदमस्माभिरुक्तं वरवत्
शापवद्वा यथावत् यथार्थमेव भवति नान्यथेत्यर्थः ॥ १६ ॥

नश्यति संसृतिदुःखमिदं ते
स्वात्मविचारणया कथयैव ।
नो धनदानतपःश्रुतवेदै-
स्तत्कथनोदितयत्नशतेन ॥ १७ ॥

स्वात्मविचारणात्मिकया प्रकृतग्रन्थकथयैव नश्यति।
धनैर्दानैस्तपोभिः श्रुतैर्द्वैतशास्त्रश्रवणैः कर्मकाण्डरूपैर्वेदैश्च
द्वैतवेदशास्त्रलक्षणेन कथनेन वाक्यप्रबन्धेन
उदितयागहोमादियत्नशतेन च ते संसृतिदुःखं नो नश्यतीत्यर्थः॥ १७॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे
सच्छास्त्रनिरूपणं नामाष्टमः सर्गः॥ ८॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
सच्छास्त्रनिरूपणं नामाष्टमः सर्गः॥ ८॥

नवमः सर्गः ९

श्रीवसिष्ठ उवाच।

तच्चित्तास्तद्गतप्राणा बोधयन्तः परस्परम्।
कथयन्तश्च तन्नित्यं तुष्यन्ति च रमन्ति च॥ १॥

जीवन्मुक्तस्य लक्ष्माणि तस्य सर्वात्मता तथा।
जगत्प्रलयशिष्टात्मस्वरूपं चेह कीर्त्यते॥ १॥

आत्मविचारोऽपि यावदवधारणं तदेकप्रवणतालक्षण एवापेक्ष्यते न
कादाचित्को व्यापारान्तरव्यवहितावृतो वा। आत्मक्रीड आत्मरतिः क्रियावानेष
ब्रह्मविदां वरिष्ठः। ब्रह्मसंस्थोऽमृतत्वमेति इत्यादिश्रुतेरित्यभिप्रेत्य
श्रीवसिष्ठ उवाच - तच्चित्ता इति। तस्मिन्नात्मन्येव चित्तं येषाम्।
तद्गतास्तत्प्राप्तावेवोद्युक्ताः प्राणा जीवनव्यापारा येषाम्॥ १॥

तेषां ज्ञानैकनिष्ठानामात्मज्ञानविचारिणाम्।
सा जीवन्मुक्ततोदेति विदेहान्मुक्ततैव या॥ २॥

ज्ञाने ज्ञानसाधनश्रवणादौ एका निष्ठा अनन्यव्यापारतालक्षणा
स्थितिर्येषां। विदेहाद्देहविगमाद्या शुद्धा मुक्ततैव नान्येत्यर्थः॥ २॥

प्। १४७)

श्रीराम उवाच।

ब्रह्मन्विदेहमुक्तस्य जीवन्मुक्तस्य लक्षणम्।
ब्रूहि येन तथैवाहं यते शास्त्रदृशा धिया॥ ३॥

श्रवणादिफलोक्तिप्रसञ्जिते जीवन्मुक्तविदेहमुक्तलक्षणे जिज्ञासुः श्रीराम
उवाच - ब्रह्मन्निति। शास्त्रलक्षणया दृशा चक्षुषोत्पादितया धिया॥ ३॥

श्रीवसिष्ठ उवाच।

यथास्थितमिदं यस्य व्यवहारवतोऽपि च।
अस्तं गतं स्थितं व्योम जीवन्मुक्तः स उच्यते॥ ४॥

विदेहमुक्तेर्जीवन्मुक्तिपूर्वकत्वात्पाठक्रमादर्थक्रमो बलीयानिति न्यायेन
प्रश्नक्रममुल्लङ्घ्य प्रथमं जीवन्मुक्तलक्षणं श्रीवसिष्ठ उवाच -
यथेति। शास्त्रानिषिद्धव्यवहारवतोऽपि यस्य विश्वं परमार्थदृशा
भादादस्तं गतं सद्व्योम आकाशमिव शून्यं स्थितं दर्पणनगरमिव

15809 प्रतीयमानमपि नास्त्येवेत्यर्थः ॥ ४ ॥
15810
15811 बोधैकनिष्ठतां यातो जाग्रत्येव सुषुप्तवत् ।
15812 या आस्ते व्यवहर्तैव जीवन्मुक्तः स उच्यते ॥ ५ ॥
15813
15814 यो व्यवहर्ता सन्नपि नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित् इति
15815 भगवदुक्तदिशा जाग्रत्यपि सुप्तवन्निर्विकार आस्ते ॥ ५ ॥
15816
15817 नोदेति नास्तमायाति सुखे दुःखे मुखप्रभा ।
15818 यथाप्राप्तस्थितेर्यस्य जीवन्मुक्तः स उच्यते ॥ ६ ॥
15819
15820 यो जागर्ति सुषुप्तस्थो यस्य जाग्रन्न विद्यते ।
15821 यस्य निर्वासनो बोधः स जीवन्मुक्त उच्यते ॥ ७ ॥
15822
15823 निर्विकारे स्वात्मनि सुषुप्त इव तिष्ठतीति सुषुप्तस्तथाभूतोऽपि
15824 योऽविद्यानिद्राक्षयात्स्वात्मनि जागर्ति ।
15825 देहेन्द्रियादिभाधादिन्द्रियैरर्थोपलब्धिलक्षणा जाग्रद्यस्य न विद्यते । यस्य
15826 बोधो निर्वासन इति जाग्रद्वासनोद्भवनिमित्तः स्वप्नोऽपि यस्य न विद्यत इति
15827 भावः ॥ ७ ॥
15828
15829 रागद्वेषभयादीनामनुरूपं चरन्नपि ।
15830 योऽन्तर्व्योमवदच्छस्थः स जीवन्मुक्त उच्यते ॥ ८ ॥
15831
15832 अनुरूपं यथोचितं नट इवानुकाराभिनयमिति वा । अच्छे निरावरणात्मनि
15833 तिष्ठतीत्यच्छस्थः । सुपि स्थः इति कः ॥ ८ ॥
15834
15835 यस्य नाहंकृतो भावो यस्य बुद्धिर्न लिप्यते ।
15836 कुर्वतोऽकुर्वतो वापि स जीवन्मुक्त उच्यते ॥ ९ ॥
15837
15838 न लिप्यते कर्तृत्वाकर्तृत्वाभिमानाभ्यामित्यर्थः ॥ ९ ॥
15839
15840 यस्योन्मेषनिमेषार्धाद्विदः प्रल्यसंभवौ ।
15841 पश्येत्त्रिलोक्याः स्वसमः स जीवन्मुक्त उच्यते ॥ १० ॥
15842
15843 यस्य विदश्चिदात्मन उन्मेषादावरणविघटनात् त्रिलोक्याः प्रलयं
15844 निमेषादावरणाच्च प्राक् संभवं यः पश्येदित्यर्थः । विदेहमुक्तावेव
15845 निःशेषोन्मेषात्साक्षिणीश्वरे चावरणाभावाचोभयत्राप्यर्धादित्युक्तिः ॥ १० ॥
15846
15847 यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।
15848 हर्षामर्षभयोन्मुक्तः स जीवन्मुक्त उच्यते ॥ ११ ॥
15849
15850 नोद्विजते न बिभेति । लोको जनः । यतोऽसौ
15851 हर्षामर्षभयहेत्वज्ञानाभिमानोन्मुक्तः ॥ ११ ॥
15852
15853 शान्तसंसारकलनः कलावानपि निष्कलः ।
15854 यः सचित्तोऽपि निश्चित्तः स जीवन्मुक्त उच्यते ॥ १२ ॥
15855
15856 यतोऽसौ सचित्तः सचेतनोऽपि निश्चित्तो निर्मनस्कः । शान्ता संसारस्य कलना
15857 सत्यतामतिर्यस्य सः । परदृष्ट्या कलावान्देहावयववानपि निष्कलो
15858 निरवयवः ॥ १२ ॥
15859
15860 यः समस्तार्थजातेषु व्यवहार्यपि शीतलः ।

15861 पदार्थेष्वपि पूर्णात्मा स जीवन्मुक्त उच्यते ॥ १३ ॥
15862
15863 शीतलो रागाद्यतापितः । यतोऽयं रागादिविषयेष्वपि पदार्थेषु
15864 पूर्णस्तेषामप्यात्मा । नह्यहेयोपादेये स्वात्मनि तदध्यस्ते मिथ्यात्वेन निश्चिते
15865 वार्थे रागादिसंभव इति भावः ॥ १३ ॥
15866
15867 जीवन्मुक्तपदं त्यक्त्वा देहे कालवशीकृते ।
15868 विशत्यदेहमुक्तत्वं पवनोऽस्पन्दतामिव ॥ १४ ॥
15869
15870 इदानीं प्रथमपृष्टं विदेहमुक्तलक्षणं वक्तुमुपक्रमते -
15871 जीवन्मुक्तेति । कालेन वशीकृते ग्रस्ते । प्रारब्धक्षये सतीति यावत् ॥ १४ ॥
15872
15873 विदेहमुक्तो नोदेति नास्तमेति न शाम्यति ।
15874 न सन्नासन्न दूरस्थो न चाहं न च नेतरः ॥ १५ ॥
15875
15876 तस्यादौ विद्वदनुभवसिद्धं स्वरूपलक्षणमाह - विदेहमुक्त इति ।
15877 उदयास्तमयौ वृद्ध्यपक्षयौ । सन्व्यक्तः । असन्नव्यक्तः । न च अहं अहं
15878 नेति च न । न च इतरः ॥ १५ ॥
15879
15880 सूर्यो भूत्वा प्रतपति विष्णुः पाति जगत्त्रयम् ।
15881 रुद्रः सर्वान्संहरति सर्गान्सृजति पद्मजः ॥ १६ ॥
15882
15883 तस्य लोकदृष्ट्या सार्वात्म्यलक्षणं तटस्थलक्षणमाह - सूर्य
15884 इत्यादिना ॥ १६ ॥
15885
15886 खं भूत्वा पवनस्कन्धं धत्ते सर्षिसुरासुरम् ।
15887 कुलाचलगतो भूत्वा लोकपालपुरास्पदः ॥ १७ ॥
15888
15889 कुलाचलो मेरुर्मानसोत्तरश्च । तयोरेव लोकपालपुरप्रसिद्धेः ॥ १७ ॥
15890
15891 भूमिर्भूत्वा बिभर्तीमां लोकस्थितिमखण्डिताम् ।
15892 तृणगुल्मलता भूत्वा ददाति फलसंततिम् ॥ १८ ॥
15893
15894 लोकस्थितिं जनमर्यादाम् ॥ १८ ॥
15895
15896 बिभ्रज्ज्वलानलाकारं ज्वलति द्रवति द्रुतम् ।
15897 चन्द्रोऽमृतं प्रसवति मृतं हालाहलं विषम् ॥ १९ ॥
15898
15899 हालाहलसंज्ञं विषं भूत्वा मृतं मरणं प्रसवतीति च्छान्दसो
15900 विकरणव्यत्ययः ॥ १९ ॥
15901
15902 तेजः प्रकटयत्याशास्तनोत्यान्ध्यं तमो भवत् ।
15903 शून्यं सद्व्योमतामेति गिरिः सन् रोधयत्यलम् ॥ २० ॥
15904
15905 तेजो भवत् प्रकटयत्याशा दिशः ॥ २० ॥
15906
15907 करोति जंगमं चित्तः स्थावरं स्थावराकृतिः ।
15908 भूत्वार्णवो बलयति भूस्त्रियं वलयो यथा ॥ २१ ॥
15909
15910 चित्तः स्फुटान्तःकरणाभिव्यक्तचैतन्यतः । स्थावराकृतिः
15911 अस्फुटचित्तत्वाज्जडप्रायाकृतिः । भूरेव स्त्री ताम् ॥ २१ ॥
15912

15913 परमार्कवपुर्भूत्वा प्रकाशान्तं विअसारयन् |
15914 त्रिजगत्त्रसरेण्वोघं [त्रिजगत्त्रसरेण्वन्तं इति पाठः]
15915 शान्तमेवावतिष्ठते || २२ ||
15916
15917 परमार्कवपुरनावरणचिदात्मा प्रकाशान्तं तत्प्रकाशव्याप्तं त्रिजगदादि
15918 त्रसरेण्वन्तं पदार्थौघं विसारयन्विस्तारयन्नपि स्वयं शान्तं
15919 निर्विकारमेवावतिष्ठते || २२ ||
15920
15921 प्। १४८)
15922
15923 यत्किंचिदिदमाभाति भातं भानमुपैष्यति |
15924 कालत्रयगतं दृश्यं तदसौ सर्वमेव च || २३ ||
15925
15926 श्रीराम उवाच |
15927
15928 कथमेवं वद ब्रह्मन्भूयते विषमा हि मे |
15929 दृष्टिरेषाथ दुष्प्राप्या दुराक्रम्येति निश्चयः || २४ ||
15930
15931 प्रतिबन्धबाहुल्येन समदृष्टिर्दौर्लभ्यान्मुक्तेर्दौर्लभ्यं
15932 मन्यमानस्तत्प्राप्त्युपायसोत्कण्ठः श्रीराम उवाच - कथमिति | हि
15933 यस्माद्विषमा दृष्टिः | एषा मुक्तिर्दुष्प्राप्या | अथ कथंचित्प्राप्तापि तत्र
15934 चित्तस्थैर्यस्य दुष्करत्वाद्दुरारोहेति मे निश्चय इत्यन्वयः || २४ ||
15935
15936 श्रीवसिष्ठ उवाच |
15937
15938 मुक्तिरेषोच्यते राम ब्रह्मैतत्समुदाहृतम् |
15939 निर्वाणमेतत्कथितं शृणु तत्प्राप्यते कथम् || २५ ||
15940
15941 एवं सोत्कण्ठं रामं तत्प्राप्त्युपायोपदेशेनाश्वासयन् वसिष्ठ उवाच ##-
15942
15943 यदिदं दृश्यते दृश्यमहन्त्वन्तादिसंयुतम् [त्वन्त्वादि इति
15944 क्वचित्] |
15945 सतोऽप्यस्यात्यनुत्पत्त्या बुद्ध्यैतदवाप्यते || २६ ||
15946
15947 अनात्मन्यारोपितप्रत्यक्तमहन्त्वम् | पराक्चेतनत्वं त्वन्त्वम् | सतः सदिति
15948 भासमानस्याप्यस्य वन्ध्यापुत्रस्येवात्यन्तमनुत्पत्त्या [मनुत्पन्न इति
15949 पाठः] || २६ ||
15950
15951 श्रीराम उवाच |
15952
15953 विदेहमुक्तास्त्रैलोक्यं संपद्यन्ते यदा तदा |
15954 मन्येते सर्गतामेव गता वेद्यविदांवर || २७ ||
15955
15956 ब्रह्मणः सार्वात्म्यश्रवणाद्ब्रह्मप्राप्तौ तद्भावेन संसारप्राप्तिरेव किं
15957 न स्यादिति रामः शङ्कते - विदेहेति | ते विदेहमुक्ताः सर्गतां
15958 संसारभावमेव गता इति मन्ये || २७ ||
15959
15960 श्रीवसिठ उवाच |
15961
15962 विद्यते चेत्त्रिभुवनं तत्तत्तां संप्रयान्तु ते |
15963 यत्र त्रैलोक्यशब्दार्थो न संभवति कश्चन || २८ ||
15964

15965 प्रागुक्तात्यन्तानुत्पत्तिमेवावलम्ब्य वसिष्ठः परिहरति - विद्यते चेदिति |
15966 तत्तर्हि तत्तांतत्तत्सर्गरूपताम् | ते मुक्ताः यत्र न संभवन्ति तत्र उक्तार्थधीः
15967 कुत इत्युत्तरेणान्वयः || २८ ||
15968
15969 एतत्त्रिलोकतां यातं ब्रह्मेत्युक्तार्थधीः कुतः |
15970 तस्मान्नो संभवत्येषा जगच्छब्दार्थकल्पना || २९ ||
15971
15972 उक्तार्थधीस्त्वच्छङ्कितार्थबुद्धिः तस्मादित्युपसंहारः || २९ ||
15973
15974 अनन्यच्छान्तमाभासमात्रमाकाशनिर्मलम् |
15975 ब्रह्मैव जगदित्येतत्सर्वं सत्त्वावबोधतः || ३० ||
15976
15977 अनन्यदद्वयम् | आभासमात्रं चिन्मात्रम् | सत्त्वं
15978 सन्मात्रभावस्तदवबोधतः || ३० ||
15979
15980 अहं हि हेमकटके विचार्यापि न दृष्टवान् |
15981 कटकत्वं क्वचिन्नाम ऋते निर्मलहाटकात् || ३१ ||
15982
15983 प्रत्यग्दृष्ट्या पर्यालोचने तदध्यस्तस्यासत्त्वं दृष्टान्तैरनुभावयति ##-
15984
15985 जलादृते पयोवीचौ नाहं पश्यामि किंचन |
15986 वीचित्वं तादृशं दृष्टं यत्र नास्त्येव तत्र हि || ३२ ||
15987
15988 स्पन्दत्वं पवनादन्यन्न कदाचन कुत्रचित् |
15989 स्पन्द एव सदा वायुर्जगत्तस्मान्न भिद्यते || ३३ ||
15990
15991 यथा शून्यत्वमाकाशे ताप एव मरौ जलम् |
15992 तेज एव सदा लोके ब्रह्मैव त्रिजगत्तथा || ३४ ||
15993
15994 श्रीराम उवाच |
15995
15996 अत्यन्ताभावसंपत्त्या जगद्दृश्यस्य मुक्तता |
15997 ययोदेति मुने युक्त्या तां ममोपदिशोत्तमम् || ३५ ||
15998
15999 एवं दर्शितदृष्टान्तान्पर्यालोच्य गुरूक्तार्थं श्लोकद्वयेन
16000 संभवयंस्तत्र
16001 विपरीतभावनाविक्षेपात्पुनरसंभावनाविकल्पोदयैरप्रतिष्ठितेन
16002 मनसावधारयितुमशक्नुवन्निव तदवधारणोपायं पृच्छति -
16003 अत्यन्तेत्यादिना | जगद्दृश्यस्यात्यन्ताभावसंपत्तिर्बाधस्तया || ३५ ||
16004
16005 मिथःसंपन्नयोर्द्रष्टृदृश्ययोरेकसंख्ययोः |
16006 द्वयाभावे स्थितिं याते [याति इति पाठः] निर्वाणमवशिष्यते || ३६ ||
16007
16008 मुथः एकसंख्ययोः
16009 संपन्नयोर्बाधपरिशिष्टस्वप्रकाशात्मभावापन्नयोरिति यावत् || ३६ ||
16010
16011 दृश्यस्य जगतस्तस्मादत्यन्तासंभवो यथा |
16012 ब्रह्मैवेत्थं स्वभावस्थं बुध्यते वद मे तथा || ३७ ||
16013
16014 कयैतज्ज्ञायते युक्त्या कथमेतत्प्रसिद्ध्यति |
16015 एतस्मिंस्तु मुने सिद्धे न साध्यमवशिष्यते || ३८ ||
16016

16017 श्रीवसिष्ठ उवाच।
16018
16019 बहुकालमियं रूढा मिथ्याज्ञानविषूचिका।
16020 नूनं विचारमन्त्रेण निर्मूलमुपशाम्यति॥ ३९॥
16021
16022 श्रुतार्थस्य सकृत्संभावनोदये पुनःपुनश्चिरमनाभ्यास एव
16023 तत्प्रतिष्ठावधारणोपाय इति श्रीवसिष्ठ उवाच - बहुकालमित्यादिना॥ ३९॥
16024
16025 न शक्यते झटित्येषा समुत्सादयितुं क्षणात्।
16026 समप्रपतने ह्यद्रौ समरोहावरोहणे॥ ४०॥
16027
16028 शिखरारूढस्य पुंसः सर्वतः सममधः प्रपतनं यस्मात्तथाविधेऽद्रौ
16029 समे तुल्यकाले आरोहावरोहणे यथा झटित्येव कर्तुं न श्येते तद्वत्॥ ४०॥
16030
16031 तस्मादभ्यासयोगेन युक्त्या न्यायोपपत्तिभिः।
16032 जगद्भ्रान्तिर्यथा शाम्येत्तवेदं कथ्यते शृणु॥ ४१॥
16033
16034 वक्ष्याम्याख्यायिकां राम यामिमां बोधसिद्धये।
16035 तां चेच्छृणोषि तत्साधो मुक्त एवासि बोधवान्॥ ४२॥
16036
16037 वक्ष्यमाणजगत्प्रलयाख्यायिकाम्॥ ४२॥
16038
16039 अथोत्पत्तिप्रकरणं मयेदं तव कथ्यते।
16040 यत्किलोत्पद्यते राम तेन मुक्तेन भूयते॥ ४३॥
16041
16042 अथ प्रलयाख्यायिकानन्तरम्। उत्पत्तिप्रकरणं जगदुत्पत्तिप्रक्रमः। स च
16043 निर्विकारोपादानको विवर्त एव पर्यवस्यतीति बन्धमिथ्यात्वे स्वतः सिद्ध एव
16044 मोक्ष इति तद्वर्णनाशय इत्याह - यदित्यादिना। यद्यदुत्पद्यते इति
16045 प्रतिपाद्यते तेन तेन मुक्तेन तत्तद्बन्धशून्येन स्वेन भूयते स्थीयत इत्यर्थः
16046 ॥ ४३॥
16047
16048 इयमित्थं जगद्भ्रान्तिर्भात्यजातैव खात्मिका।
16049 इत्युत्पत्तिप्रकरणे कथ्यतेऽस्मिन्मयाधुना॥ ४४॥
16050
16051 प्। १४९)
16052
16053 यदिदं दृश्यते किंचिज्जगत्स्थावरजङ्गमम्।
16054 सर्वं सर्वप्रकाराढ्यं ससुरासुरकिन्नरम्॥ ४५॥
16055
16056 अजातैव खात्मिका भातीत्युक्तमर्थं प्रलयाख्यायिकया
16057 समर्थयितुमुपक्रमते - यदिदमिति। यदिदं जगद्दृश्यते तत्प्रलये
16058 असद्भवतीत्युत्तरेणान्वयः॥ ४५॥
16059
16060 तन्महाप्रलये प्राप्ते रुद्रादिपरिणामिनि।
16061 भवत्यसदृश्यात्म क्वापि याति विनश्यति॥ ४६॥
16062
16063 महाप्रलये प्राकृते। रुद्रदीनां परिणामिनि तिरोभावयितरि। विनश्यतीत्यस्य
16064 व्याख्या असदृश्यात्मेति॥ ४६॥
16065
16066 ततः स्तिमितगम्भीरं न तेजो न तमस्ततम्।
16067 अनाख्यमनभिव्यक्तं सत्किंचिदवशिष्यते॥ ४७॥
16068

16069 किं शून्यान्तं नश्यति नेत्याह - तत इति | अनाख्यमनभिव्यक्तमिति
16070 नामरूपप्रतिषेढः || ४७ ||
16071
16072 न शून्यं नापि चाकारं न दृश्यं न च दर्शनम् |
16073 न च भूतपदार्थौघो यदनन्ततया स्थितम् || ४८ ||
16074
16075 तत्प्रतिषेधे नामरूपशून्यवस्तुनो जगत्यत्यन्ताप्रसिद्धेः
16076 शून्यतामाशङ्क्याह - नेति | तर्हि
16077 तस्याशून्यस्याकारदृश्यदर्शनादिभावः परिशेषात्स्यात्तत्राह -
16078 नापीत्यादिना | आकारमिति च्छान्दसं मत्वर्थी याजन्तं वा || ४८ ||
16079
16080 किमप्यव्यपदेशात्म पूर्णात्पूर्णतराकृति |
16081 न सन्नासन्न सदसन्न भावो भवनं न च || ४९ ||
16082
16083 अनाख्यत्वादेवाव्यपदेशात्म | अव्यपदेश्यतामेव प्रपञ्चयति - न
16084 सदित्यादिना | भवनं कालसंबन्ध उत्पत्तिर्वा तद्वान्भावः || ४९ ||
16085
16086 चिन्मात्रं चेत्यरहितमनन्तमजरं शिवम् |
16087 अनादिमध्यपर्यन्तं यदनादि निरामयम् || ५० ||
16088
16089 न विद्यते आदिः कारणं यस्य तदनादि || ५० ||
16090
16091 यस्मिञ्जगत्प्रस्फुरति दृष्टमौक्तिकहंसवत् |
16092 यश्चेदं यश्च नैवेदं देवः सदसदात्मकः || ५१ ||
16093
16094 मुक्ताभुजां हंसानां तत्परिणामत्वात्पूर्वं मुक्तात्मना
16095 पश्चाद्धंसात्मना च
16096 दृष्टतदुभयानुगतद्रव्यवच्चित्रभ्रान्त्यादिदृष्टमुक्तामयहंसवद्वा |
16097 यश्चेदमध्यारोपदृशा | नैवेदमपवाददृशा | सदसदात्मको
16098 व्यक्ताव्यक्तावस्थाद्वयानुगतः || ५१ ||
16099
16100 अकर्णजिह्वानासात्वङ्नेत्रः सर्वत्र सर्वदा |
16101 शृणोत्यास्वादयति यो जिघ्रेत्स्पृशति पश्यति || ५२ ||
16102
16103 कर्णनासाद्यभावेऽपि श्रवणादिकमस्य स्वप्ने प्रत्यक्षम् | तथाच श्रुतिः
16104 अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः इति || ५२ ||
16105
16106 स एव सदसद्रूपं येनालोकेन लक्ष्यते |
16107 सर्गचित्रमनाद्यन्तं स्वरूपं चाप्य रञ्जनम् || ५३ ||
16108
16109 येनालोकेन प्रागुक्तसदसद्रूपं लक्ष्यते स चिदालोकोऽपि स एव | तथा
16110 अज्ञानसत्त्वे सर्गचित्रमज्ञाननिवृत्तौ त्वनाद्यन्तं स्वरूपं चाप्य प्राप्य
16111 रञ्जनं प्रथनं स एवेत्यर्थः || ५३ ||
16112
16113 अर्धोन्मीलितदृश्यभ्रूमध्ये तारकवज्जगत् |
16114 व्योमात्मैव सदाभासं स्वरूपं योऽभिपश्यति || ५४ ||
16115
16116 एवं जीवन्मुक्तदशायां बाधितजगदाभासदर्शनमपि स एवेत्याह -
16117 अर्धेति | यथा योगिनः खेचरमुद्रायां भ्रूमध्ये दृष्टिनिवेशे
16118 अर्धोन्मीलितचक्षुर्दृश्यभ्रूमध्ये निविष्टं
16119 कृष्णतारकमस्फुटत्वात्सदाभासं जगत्पश्यन्ति तद्वद्यो व्योमात्मैव
16120 सदाभासं स्वरूपं पश्यति सोऽपि स एवेत्यर्थः | खेचरमुद्रायास्तु

16121 लक्षणमुक्तं योगशास्त्रे - कपालकुहरे जिह्वा प्रविष्टा विपरीतगा।
16122 भ्रुवोरन्तर्गता दृष्टिर्मुद्रा भवति खेचरी॥ न पीड्यते स रोगेण न च लिप्येत
16123 कर्मणा। बाध्यते न स कालेन यो मुद्रां वेत्ति खेचरीम्॥ इति॥ ५४॥
16124
16125 यस्यान्यदस्ति न विभोः कारणं शशशृङ्गवत्।
16126 यस्येदं च जगत्कार्यं तरङ्गौघ इवाम्भसः॥ ५५॥
16127
16128 ज्वलतः सर्वतोऽजस्रं चित्तस्थानेषु तिष्ठतः।
16129 यस्य चिन्मात्रदीपस्य भासा भाति जगत्त्रयम्॥ ५६॥
16130
16131 एवं सर्वलयाधारतत्पदार्थरूपं प्रदर्श्य त्वंपदार्थरूपेणापि तं
16132 दर्शयितुमुपक्रमते - ज्वलत इत्यादिना। सर्वतः सामान्यतो ज्वलतो
16133 दीप्यमानस्य चित्रस्थानेषु त्वनावृतत्वादजस्रं विशेषाभिव्यक्त्या
16134 ज्वलतस्तिष्ठतः॥ ५६॥
16135
16136 यं विनाऽर्कादयोऽप्येते प्रकाशास्तिमिरोपमाः।
16137 सति यस्मिन्प्रवर्तन्ते त्रिजगन्मृगतृष्णिकाः॥ ५७॥
16138
16139 यथान्धस्य दिनजातमप्यप्रकाशरूपं तथा दृग्रूपं यं विना
16140 तिमिरोपमाः॥ ५७॥
16141
16142 सस्पन्दे समुदेतीव निःस्पन्दान्तर्गते न च।
16143 इयं यस्मिञ्जगल्लक्ष्मीरलात इव चक्रता॥ ५८॥
16144
16145 यस्मिन्मनोभावेन सस्पन्दे जगल्लक्ष्मीः समुदेतीव। निःस्पन्दे अन्तः
16146 प्रत्यक्तत्वं गते प्राप्ते तु न च समुदेति। चोऽवधारणे। अलाते ज्वलदुल्मुके निशि
16147 भ्राम्यमाणे चक्राकारता प्रसिद्धा॥ ५८॥
16148
16149 जगन्निर्माणविलयविलासो व्यापको महान्।
16150 स्पन्दास्पन्दात्मको यस्य स्वभावो निर्मलोऽक्षयः॥ ५९॥
16151
16152 उक्तमेव स्पष्टमाह - जगदिति। यस्य स्वभावः पारमार्थिकरूपं तु
16153 निर्मलोऽक्षयः॥ ५९॥
16154
16155 स्पन्दास्पन्दमयी यस्य पवनस्येव सर्वगा।
16156 सत्ता नाम्नैव भिन्नेव व्यवहारान्न वस्तुतः॥ ६०॥
16157
16158 उक्तस्पन्दास्पन्दयोः
16159 सद्रूपपूर्णतयोरनन्यथाभावात्तद्व्यतिरिक्तान्यथाभावस्य
16160 विवर्ततापर्यवसाना नाम्नैव भिन्ना न वस्तुत इत्यर्थः॥ ६०॥
16161
16162 सर्वदैव प्रबुद्धो यः सुप्तो यः सर्वदैव च।
16163 न सुप्तो न प्रबुद्धश्च यः सर्वत्रैव सर्वदा॥ ६१॥
16164
16165 तस्य प्रबुद्धाज्ज्ञमुक्तदृक्प्रसिद्धं त्रैविध्यमाह - सर्वदैवेति॥ ६१॥
16166
16167 यदस्पन्दं शिवं शान्तं यत्स्पन्दं त्रिजगत्स्थितिः।
16168 स्पन्दास्पन्दविलासात्मा य एको भरिताकृतिः [भरतावनिः इति
16169 पाठः]॥ ६२॥
16170
16171 मुमुक्षुहेयोपादेयताप्रयोजकमपि तस्योक्तरूपद्वयमेवेत्याशयेनाह -
16172 यदिति॥ ६२॥

16173
16174 प्। १५०)
16175
16176 आमोद इव पुष्पेषु न नश्यति विनाशिषु।
16177 प्रत्यक्षस्थोऽप्यथाग्राह्यः शौक्ल्यं शुक्लपटे यथा॥ ६३॥
16178
16179 आमोद इव सार इति शेषः। सर्ववस्तुप्रत्यक्षवृत्तिषु प्रथारूपेण स्थितोऽपि
16180 वृत्तिविषयनिष्कर्षेणाग्राह्यो [संनिकर्षग्राह्यो इति पाठः]
16181 ग्रहीतुमशक्यः॥ ६३॥
16182
16183 मूकोपमोऽपि योऽमूको मन्ता योऽप्युपलोपमः।
16184 यो भोक्ता नित्यतृप्तोऽपि कर्ता यश्चाप्यकिंचनः॥ ६४॥
16185
16186 वागिन्द्रियाभावान्मूकोपमोऽपि सर्ववाक्प्रवृत्तिनिमित्तत्वादमूकः। एवं
16187 मननविकारहीनत्वादुपलोपमोऽपि मन्तेत्यादि बोध्यम्। नास्ति किञ्चन
16188 क्रियादिनिमित्तं यस्य सोऽकिञ्चनः॥ ६४॥
16189
16190 योऽनङ्गोऽपि समस्ताङ्गः सहस्रकरलोचनः।
16191 न किंचित्संस्थितेनापि येन व्याप्तमिदं जगत्॥ ६५॥
16192
16193 समस्तानामङ्गान्येवाङ्गानि यस्य अत एव सहस्राण्यनन्तानि करलोचनादीनि
16194 यस्य॥ ६५॥
16195
16196 निरिन्द्रियबलस्यापि यस्याशेषेन्द्रियक्रियाः।
16197 यस्य निर्मननस्यैता मनोनिर्माणरीतयः॥ ६६॥
16198
16199 एताः प्रसिद्धजगद्रूपाः॥ ६६॥
16200
16201 यदनालोकनाद्भ्रान्तिसंसारोरगभीतयः।
16202 यस्मिन्दृष्टे पलायन्ते सर्वाशाः सर्वभीतयः॥ ६७॥
16203
16204 आशाः कामाः दिशः प्रतीति वा॥ ६७॥
16205
16206 साक्षिणि स्फार आभासे ध्रुवे दीप इव क्रियाः।
16207 सति यस्मिन्प्रवर्तन्ते चित्तेहाः स्पन्दपूर्विकाः॥ ६८॥
16208
16209 दीपे सति नाट्यादिक्रिया इव स्फारे अपरिच्छिन्ने आभासे प्रकाशरूपे अत एव
16210 साक्षिणि। यस्मिन्सति चित्तस्येहाश्चेष्टाः प्रवर्तन्ते॥ ६८॥
16211
16212 यस्माद्घटपटाकारपदार्थशतपङ्क्तयः।
16213 तरङ्गगणकल्लोलवीचयो वारिधेरिव॥ ६९॥
16214
16215 वारिधेरिव प्रवर्तन्ते इत्यनुषज्यते॥ ६९॥
16216
16217 स एवान्यतयोदेति यत्पदार्थशतभ्रमैः।
16218 कटकाङ्गदकेयूरनूपुरैरिव काञ्चनम्॥ ७०॥
16219
16220 स चिदात्मैवान्यतया जडप्रपञ्चात्मना। ये प्रसिद्धाश्च ते
16221 पदार्थशतभ्रमाश्चेति कर्मधारयादित्थंभावे तृतीया॥ ७०॥
16222
16223 यस्त्वमेकोऽवभासात्मा योऽहमेते जनाश्च ये।
16224 यश्च न त्वमबुद्धात्मा नाहं नैते जनाश्च [जनाश्च ये इति

16225 पाठः] यः ॥ ७१ ॥
16226
16227 यः अवभासत इत्यवभासस्त्वया साक्षात्कृत आत्मा सन् त्वमेवैकः। एवं
16228 मया जनैर्वा साक्षात्कृतस्तत्तदात्मैवैकः। अबुद्धात्मा तु तद्विपरीत
16229 इत्यर्थः ॥ ७१ ॥
16230
16231 अन्येवाप्यतिरिक्तेव सैवासेव च भङ्गुरा।
16232 पयसीव तरङ्गाली यस्मात्फुरति दृश्यभूः ॥ ७२ ॥
16233
16234 असौ अनन्याप्यन्येव। अनतिरिक्ताप्यतिरिक्तेव। अतिरेकोऽत्र [अतिरिक्तत्वं
16235 पृथक्त्वं इति पाठः] पृथक्त्वमिति न पौनरुक्त्यम्। सा
16236 प्राक्सिद्धैवासेवोत्पत्तिसिद्धेव ॥ ७२ ॥
16237
16238 यतः कालस्य कलना यतो दृश्यस्य दृश्यता।
16239 मानसी कलना येन यस्य भासा विभासनम् ॥ ७३ ॥
16240
16241 कालस्य कलनाः षड्भावविकाराः दृश्यस्य दृश्यता दर्शनफलव्याप्तिः।
16242 मानसी कलना इष्टानिष्टप्राप्तिपरिहारविषया मनोरथविकल्पा येन निमित्तेन।
16243 क्रमाद्यदीयसच्चिदानन्दरूपतानिर्वाह्या इति यावत्। तच्च त्रयं यस्य भासा
16244 जगद्विभासनमेव नान्यत्। अज्ञातसाधारणी सर्वव्याप्तिः सत्ता।
16245 अनावृतमात्रव्याप्तिर्दर्शनं।
16246 तत्रानुकूलवेदनीयमात्रव्याप्तिरानन्दतेत्यवान्तरौपाधिकवैलक्षण्येऽपि
16247 भारूपव्याप्तेरेकत्वादिति भावः ॥ ७३ ॥
16248
16249 क्रियां रूपं रसं गन्धं शब्दं स्पर्शं च चेतनम्।
16250 यद्वेत्सि तदसौ देवो येन वेत्सि तदप्यसौ ॥ ७४ ॥
16251
16252 देहकर्मेन्द्रियोपाधौ क्रियाम् ज्ञानेन्द्रियोपाधौ रूपादि अन्तःकरणोपाधौ
16253 चेतनम् प्रमातारं च यत्स्वरूपः सन् वेत्सि तत्प्रमातृ
16254 निष्कृष्टचिद्रूपमसौ। येन विषयव्याप्तवृत्तिनिष्कृष्टचिद्रूपेण वेत्सि
16255 तदप्यसौ देव इत्यर्थः ॥ ७४ ॥
16256
16257 द्रष्टृदर्शनदृश्यानां मध्ये यद्दर्शनं स्थितम्।
16258 साधो तदवधानेन स्वात्मानमवबुध्यसे ॥ ७५ ॥
16259
16260 तथाच त्रिपुटीसाक्षी स इति फलितमित्याह - द्रष्ट्रिति। अवधानमेकाग्रेण
16261 मनसा उपाधिभ्यो निष्कृष्य दर्शनम् ॥ ७५ ॥
16262
16263 अजमजरमनाद्यं शाश्वतं ब्रह्म नित्यं
16264 शिवमममलममोघं वन्द्यमुच्चैरनिन्द्यम्।
16265 सकलकलनशून्यं कारणं कारणाना-
16266 मनुभवनमवेद्यं वेदनं विश्वमन्तः ॥ ७६ ॥
16267
16268 इत्थं तत्त्वंपदार्थौ निर्दिश्य वाक्यार्थमन्ते दर्शयति - अजमिति।
16269 कारणं कारणानामिति तत्पदवाच्यार्थस्य [वाक्यार्थस्य इति पाठः]
16270 निर्देशः। शून्यमित्यन्तस्तत्पदलक्ष्यार्थस्य। विश्वं कृत्स्नं
16271 वेदनमित्यवस्थात्रयद्रष्टृत्वंपदवाच्यस्य। अवेद्यं वेदनमिति
16272 वेद्यावस्थात्रयनिर्मुक्तत्वंपदलक्ष्यस्य।
16273 समभिव्याहाराच्चाखण्डवाक्यार्थोपदेश इति ॥ ७६ ॥
16274
16275 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे
16276 परमकारणवर्णनं नाम नवमः सर्गः ॥ ९ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
परमकारणवर्णनं नाम नवमः सर्गः ॥ ९ ॥

प्। १५१)

दशमः सर्गः १०

श्रीराम उवाच।

महाप्रलयसंपत्तौ यदेतदवशिष्यते।
भवत्येतदनाकारं नाम नास्त्यत्र संशयः ॥ १ ॥

विरोधमिव संभाव्य प्रागुक्ते ब्रह्मलक्षणे।
क्रमात्तत्परिहारेण तात्पर्यमिह वर्ण्यते ॥ १ ॥

महाप्रलये यत्स्किंचिदवशिष्यते तत् न तेजो न तम
इत्यादिविरुद्धरूपसंभावितं मन्यमानस्तथोक्तेस्तात्पर्यं जिज्ञासुः
श्रीराम एकतरार्थसंभावनोपन्यासेन प्रश्नभूमिकां रचयति -
महाप्रलयेति। आकारविलये अनाकारताप्रसिद्धेः संभावितमिदमिति द्योतनाय
नामेति निपातः ॥ १ ॥

न शून्यं कथमेतत्स्यान्न प्रकाशः कथं भवेत्।
कथं वा न तमोरूपं कथं वा नैव भास्वरम् ॥ २ ॥

इदानीं प्रष्टव्यार्थं दर्शयति - नेत्यादिन। नष्टस्याशून्यता दुर्लभा
तेजस्तमसोरन्यतरनाशेऽन्यतरापरिशेषोऽप्यप्रसिद्ध इत्यर्थः।
प्रकाश्यविलयात्तदानीं परप्रकाशरूपत्वाभावेऽपि
खद्योतवत्स्वमात्रप्रकाशेन भास्वरं कथं न भवेदित्यर्थः ॥ २ ॥

कथं वा नैव चिद्रूपं जीवो वा न कथं भवेत्।
कथं न बुद्धितत्त्वं स्यात्कथं वा न मनो भवेत् ॥ ३ ॥

दृश्यातिरिक्तस्य दर्शनत्वप्रसिद्धेर्न दृश्यं न च
दर्शनमित्युक्तिव्याघातमभिप्रेत्याह - कथं वेति। यदि तु
दृश्यदर्शनातिरिक्तो द्रष्टैव प्रसिद्ध इत्युच्येत तर्हि जीवो बुद्धितत्त्वं मनो
वा कथं न भवेत्तेषामेवमतभेदेन द्रष्टृप्रसिद्धेस्तथाच तेषामेव लोके
प्राणिवाचकभूतशब्दाभिलप्यत्वान्न [शब्दाभिधेयत्वात् इति पाठः]
च भूतपदार्थौघ इत्युक्तिव्याघात इति भावः ॥ ३ ॥

कथं वा नैव किंचित्स्यात्कथं वा सर्वमित्यपि।
अनयैव वचोभङ्ग्या मम मोह इवोदितः ॥ ४ ॥

यच्चोक्तं यस्त्वमेकोऽवभासात्मा योऽहमेते जनाश्च ये। यश्च न
त्वमबुद्धात्मा नाहं नैते जनाश्च ये ॥ इति तदपि स्वोक्तिव्याहतमित्यभिप्रेत्याह
- कथं वेति। किंचित्त्वमहमादि ॥ ४ ॥

श्रीवसिष्ठ उवाच।

विषमोऽयमतिप्रश्नो भवता समुदाहृतः।
भेत्तास्म्यहं त्वयत्नेन नैशं तम इवांशुमान् ॥ ५ ॥

मदाशयमतिक्रम्य प्रश्नोऽतिप्रश्नः | भेत्ता छेत्ता तत्प्रश्नबीजं संशयं
स्वाशयोद्घाटनेनेति शेषः | अंशुमान् सूर्यः || ५ ||

महाकल्पान्तसंपत्तौ यत्तत्सदवशिष्यते |
तद्राम न यथा शून्यं तदिदं शृणु कथ्यते || ६ ||

अनुत्कीर्णा यथा स्तम्भे संस्थिता शालभञ्जिका |
तथा विश्वं स्थितं तत्र तेन शून्यं न तत्पदम् || ७ ||

स्तम्भोत्कीर्णप्रतिमायाः स्तम्भसत्तातिरिक्तसत्ताभावात्तत्सत्तया
स्थितेरनुत्कीर्णदशायामप्यनपायादिति भावः || ७ ||

अयमित्थं महाभोगो जगदाख्योऽवभासते |
सत्यो भवत्वसत्यो वा यत्र तत्र त्वशून्यता || ८ ||

अयं प्रपञ्चो व्यवहारतः सत्यो वा परमार्थतोऽसत्यो वा भवतु | यत्र
यस्मिन्नधिष्ठानेऽवभासते तत्रास्य न शून्यता |
शून्यस्यारोपाधिष्ठानत्वायोगादित्यर्थः || ८ ||

यथा न पुत्रिकाशून्यः स्तम्भोऽनुत्कीर्णपुत्रिकः |
तथा भातं [मासं इति पाठः] जगद्ब्रह्म तेन शून्यं न
तत्पदम् || ९ ||

अन्वयमुखसमर्थितमर्थं व्यतिरेकमुखेनापि समर्थयते - यथेति |
तथा तत्पदं जगच्छून्यं नेति संबन्धः | यतो ब्रह्मैव प्राग्जगद्भातं
तेन हेतुनेत्यर्थः || ९ ||

सौम्याम्भसि यथा वीचिर्न चास्ति नच नास्ति च |
तथा जगद्ब्रह्मणीदं शून्याशून्यपदं गतम् || १० ||

ननु तदा यदि जगदस्ति तर्हि प्रलयानुपपत्तिर्यदि नास्ति तर्हि प्राप्तैव
तच्छून्यतेति सत्त्वसत्त्वव्याघातं दृष्टान्तेन वारयति - सौम्येति |
वीचिलीनेति शेषः | शून्याशून्यपदं अनिर्वचनीयतां
शून्याशून्योभयकल्पनाधिष्ठानं परमार्थवस्तुप्राप्तमिति वा || १० ||

देशकालादि शान्तत्वात्पुत्रिकारचनं द्रुमे |
संभवत्ययथाऽतो वै तेनानन्ते विमुह्यते || ११ ||

यदि स्तम्भपुत्रिकावदेव प्रलये जगदस्ति तर्हि कथं वादिभिस्तत्र विमुह्यते न
स्तम्भपुत्रिकायां तत्राह - देशेति |
पुत्रिकारचनयोग्यकर्तृकर्माधारदेशस्य अहरादिकालस्य
आदिपदात्कर्तृकरणोपकरणादेश्च विषये
शान्तत्वान्निराकाङ्क्षत्वात्सर्वसामग्रीसंपत्तेरित्यर्थः | द्रुमे
द्रुमविकारस्तम्भे पुत्रिकारचनं संभवति तेन तत्र तत्सत्ता संभावयितुं
शक्यत इत्यर्थः | अनन्ते त्रिविधपरिच्छेदशून्ये ब्रह्मणि तु अयथा
यथोक्तसामग्र्यदर्शनमित्यर्थः | वै इति निश्चये | अतस्तेन प्रसिद्धेन
वादिजनेन विमुह्यते मोहः प्राप्यत इत्यर्थः || ११ ||

तत्स्तम्भपुत्रिकाद्येतत्परमार्थे जगत्स्थितेः |
एकदेशेन सदृशमुपमानं न सर्वथा [सर्वतः इति पाठः] ||
१२ ||

यद्युक्तरीत्या वैषम्यं कथं तर्हि स्तम्भपुत्रिकादृष्टान्तस्तत्राह -
तदिति। तदेतत्प्रागुक्तं स्तम्भपुत्रिकादि परमार्थे ब्रह्मणि एकदेशेन
तत्सत्तानुच्छेदांशेन [तत्सत आधारसत्तानुच्छेदांशेन इति पाठः]
॥ १२ ॥

न कदाचिदुदेतीदं परस्मान्न च शाम्यति।
इत्थं स्थितं केवलं सद्ब्रह्म स्वात्मनि संस्थितम् ॥ १३ ॥

नन्वस्तूक्तरीत्या जगत्सत्ता तदुदयास्तमययोर्विरुद्धयोस्तु तत्र युगपत्कथं
सत्तेत्याशङ्क्य तयोः
स्वधर्मिव्यतिरिक्तसत्तानभ्युपगमाद्धर्मिपृथक्सत्तानिरासे संभावनैव
नास्तीत्याशयेनाह - न कदाचिदिति ॥ १३ ॥

अशून्यापेक्षया शून्यशब्दार्थपरिकल्पना।
अशून्यत्वात्संभवतः शून्यताशून्यते कुतः ॥ १४ ॥

नन्वशून्यत्वेनोदेति न शाम्यतीति शून्योर्थकनञा [अशून्यार्थकनञः
इति पाठः] कथमुल्लेखस्तत्राह - अशून्येति। प्रतियोगिन्यशून्यत्वं
सिद्धवत्कृत्य तदपेक्षया वस्त्वन्तरे तच्छून्यता कल्प्यते कल्पितां च
शून्यतामपेक्ष्य प्रतियोगिन्यशून्यत्वमिति परस्परसापेक्षकल्पने
शून्यताशून्यते कुतः संभवतः इत्यर्थः ॥ १४ ॥

प्। १५२)

ब्रह्मण्ययं प्रकाशो हि न संभवति भूतजः।
सूर्यानलेन्दुतारादिः कुतस्तत्र किलाव्यये ॥ १५ ॥

इत्थं प्रथमप्रश्नपदं [प्रश्ने पदं इति पाठः] व्यवस्थाप्य
द्वितीयमपि समाधत्ते - ब्रह्मणीत्यादिना। अबिन्धनस्य पार्थिवेन्धनस्य
वाव्ययेन हि सूर्यानलादेः संभवः। अव्यये तु ब्रह्मणि स कुत इति न प्रकाश
इत्युक्तिरिति भावः। एतेन कथं वा नैव भास्वरमित्यस्याप्युत्तरमुक्तमेव ॥ १५ ॥

महाभूतप्रकाशानामभावस्तम उच्यते।
महाभूताभावजं तु तेनात्र न तमः क्वचित् ॥ १६ ॥

कथं वा न तमोरूपमित्येतत्समाधत्ते - महाभूतेति।
सूर्यामहाताभावजं तु तमः [तत्तमः इति पाठः]
पृथ्व्यादिमहाभूतप्रकाशानां अभावो विरोधी सन् परप्रकाश्येषु
पृथ्व्यादिष्वेव तम इत्युच्यते न स्वप्रकाशे तेनात्र न तम इत्यर्थः। तु शब्दो
मायातमोव्यावृत्त्यर्थः ॥ १६ ॥

स्वानुभूतिः प्रकाशोऽस्य [प्रकाशोऽयं इति पाठः] केवलं
व्योमरूपिणः।
योऽन्तरस्ति स तेनैव नत्वन्येनानुभूयते ॥ १७ ॥

स्वप्रकाशतामनुभवेन साधयति - स्वानुभूतिरिति। यद्यपि
बुद्ध्यादयोऽन्येनानुभूयन्ते तथापि तेषामन्तर्योऽस्ति स तेनैवानुभूयते
स्वातिरिक्तानुभवं नापेक्षते। अन्यथा अनवस्थापत्तेरित्यर्थः ॥ १७ ॥

मुक्तं तमःप्रकाशाभ्यामित्येतदजरं पदम्।
आकाशकोशमेवेदं विद्धि कोशं जगत्स्थितेः ॥ १८ ॥

16433 द्वितीयतृतीयप्रश्नोत्तरमुपपादितमुपसंहरति - मुक्तमिति | इति
16434 उक्तविधया बोध्यमिति शेषः | जगत्स्थितेर्धनस्थानीयायाः
16435 कोशगृहस्थानीयं ब्रह्म आकाशोदरस्वच्छं विद्धीत्यर्थः || १८ ||
16436
16437 बिल्वस्य बिल्वमध्यस्य यथा भेदो न कश्चन |
16438 तथास्ति ब्रह्मजगतोर्न मनागपि भिन्नता || १९ ||
16439
16440 अन्त्योपान्त्यप्रश्नोत्तरमाह - बिल्वस्येति | मध्यस्योदरस्य || १९ ||
16441
16442 सलिलान्तर्यथा वीचिर्मृदन्तर्घटको [मृदोन्तः इति मुद्रितपुस्तके
16443 पाठः] यथा |
16444 तथा यत्र जगत्सत्ता तत्कथं खात्मकं भवेत् || २० ||
16445
16446 अल्पो घटो घटकः | सिंहावलोकनन्यायेनाह - तत्कथमिति | खात्मकं
16447 शून्यम् || २० ||
16448
16449 भूर्जलाद्युपमानश्रीः साकारान्ता समानसा |
16450 ब्रह्म त्वाकाशविशदं तस्यान्तस्थं तथैव तत् || २१ ||
16451
16452 ननु जलान्तःस्थिताया भुवो घटाद्यन्तर्गतजलादेर्वा
16453 आधारस्वभावत्वादर्शनात्कथं ब्रह्मान्तर्गतजगतस्तदा ब्रह्मस्वभावता
16454 तत्राह - भूजलादीति | त्वदुक्ता भूजलाद्युपमानश्रीर्न समा | यतः
16455 साकारमन्तोऽवसानं दर्शनावधिर्यस्यास्तथाविधा | तस्य निराकारस्य
16456 ब्रह्मणोऽन्तस्थं तज्जगत्तु विलीनत्वान्निराकारमेवेति तथैवेत्यर्थः || २१ ||
16457
16458 तस्माद्याद्दक्चिदाकाशमाकाशादपि निर्मलम् |
16459 तदन्तस्थं ताद्दगेव जगच्छब्दार्थभागपि || २२ ||
16460
16461 उक्तमेवार्थं स्फुटमाह - तस्मादिति || २२ ||
16462
16463 मरीचेऽन्तर्यथा तैक्ष्ण्यमृते भोक्तुर्न लक्ष्यते |
16464 चिन्मात्रत्वं चिदाकाशे तथा चेत्यकलां विना || २३ ||
16465
16466 अत एव चतुर्थप्रश्नोऽपि निराकृत इत्याह - मरीच इति | सत्यं
16467 द्दश्यातिरिक्तमेव दर्शनत्वेन प्रसिद्धं तत्तु द्दश्याभावेन
16468 दर्शनत्वव्यवहारार्हमिति भावः || २३ ||
16469
16470 तस्माच्चिदप्यचिद्रूपं चेत्यरिक्तं तदात्मनि |
16471 जगत्ता ताद्दगेवेयं तावन्मात्रात्मतावशात् [ताद्दङ्मात्र इति
16472 पाठः] || २४ ||
16473
16474 तस्मादिति | अत एव चिदादिशब्दाः प्रतीचि लक्षणयैव प्रवर्तन्ते न
16475 मुख्यवृत्त्येति भावः | यथा जगल्लये चितस्तद्विषयतालक्षणा चित्ता निवर्तते
16476 एवं चिद्विषयत्वलक्षणा जगतो जगत्तापीत्याह - जगत्तेति |
16477 तावन्मात्रात्मतावशाद्बहीरूपालोका अन्तर्मनस्काराश्च तन्मया इत्युत्तरेण
16478 संबन्धः || २४ ||
16479
16480 रूपालोकमनस्कारास्तन्मया एव नेतरत् |
16481 यथास्थितमतो विश्वं सुषुप्तं तुर्यमेव वा || २५ ||
16482
16483 वक्ष्यमाणासु सप्तसु पञ्चम्यन्तभूमिकागतानां सुषुप्तमुत्तरयोस्तुर्यम् ||
16484 २५ ||

16485
16486 तेन योगी सुषुप्तात्मा व्यवहार्यपि शान्तधीः।
16487 आस्ते ब्रह्म निराभासं सर्वाभाससमुद्गकः॥ २६॥
16488
16489 उक्तार्थमेव पूर्वोत्तरार्धाभ्यां स्पष्टमाह - तेनेति। सर्वाभासानां
16490 संस्काराणां समुद्गकः संपुटकः॥ २६॥
16491
16492 आकारिणि यथा सौम्ये स्थितास्तोये महोर्मयः।
16493 अनाकृतौ तथा विश्वं स्थितं तत्सदृशं परे॥ २७॥
16494
16495 अनाकारब्रह्मात्मना कथं साकारजगत्सत्तेत्याशङ्क्य यथा
16496 नानाकाराणामूर्मीणामेकाकारजलात्मनेत्यविरोध इत्यभिप्रेत्याह -
16497 आकारिणीति। सौम्ये निश्चलत्वात्प्रसन्ने॥ २७॥
16498
16499 पूर्णात्पूर्णं प्रसरति यत्तत्पूर्णं निराकृति।
16500 ब्रह्मणो विश्वमाभातं [विश्वभानं तत्तद्धि स्वार्थं इति
16501 पाठः] तद्धि स्वार्थं विचक्षितम्॥ २८॥
16502
16503 एवमुपाधिभूतस्य जगतः कारणाव्यतिरेकमुक्त्वा तदुपाधिकजीवस्यापि तमाह
16504 - पूर्णादिति। यत्पूर्णाद्ब्रह्मणः सकाशादौपाधिकभेदेन जीवभावेन
16505 प्रसरति तत्परमार्थतः पूर्णमेव। तत्र साकारस्य पूर्णत्वायोगाद्यत्पूर्णं
16506 तन्निराकृति। यदि पूर्णं तर्हि किमर्थं विश्वात्मना जीवभावेन चाभातं
16507 तत्राह - यदिति। यद्विश्वात्मना भातं तद्धि स्वार्थं
16508 स्वस्वरूपलाभप्रयोजनसिद्धये विचक्षितं दिदृक्षितम्।
16509 क्रमादधिकारिशरीरप्राप्त्या
16510 स्वतत्त्वसाक्षात्कारेणाज्ञानतिरोहितस्वात्मलाभार्थं जगज्जीवभावेन
16511 प्रसरतीत्यर्थः। तछाच श्रुतिः रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं
16512 प्रतिचक्षणाय इति॥ २८॥
16513
16514 पूर्णात्पूर्नं प्रसरति संस्थितं पूर्णमेव तत्।
16515 अतो विश्वमनुत्पन्नं यच्चोत्पन्नं तदेव तत्॥ २९॥
16516
16517 कथं तद्दिदृक्षितं तदाह - पूर्णादिति। उक्तार्थम्॥ २९॥
16518
16519 चेत्यासंभवतस्तस्मिन्यदेका जगदर्थता।
16520 आस्वादका संभवतो मरीचे कैव तीक्ष्णता॥ ३०॥
16521
16522 यद्यस्मात्कारणाज्जगच्छब्दार्थता एका एकरसा संपन्नेत्यर्थः। पदे इति
16523 पाठे का इत्यपह्नवे॥ ३०॥
16524
16525 प्। १५३)
16526
16527 सत्येवेयमसत्यैष चित्तचेत्यादिता परे।
16528 तद्भावात्प्रतिबिम्बस्य प्रतिबिम्बार्हता कुतः॥ ३१॥
16529
16530 एकरसत्वादेव चित्तचेत्यादिनानारसताऽसत्यैव सत्येव प्रतिभासतः इत्यर्थः।
16531 एवं चोपाध्यभावे प्रतिबिम्बजीवभावार्हतो कुतो नास्त्येवेति जीवो वा न कथं
16532 भवेदिति शङ्कापि निरस्तेति भावः॥ ३१॥
16533
16534 परमाणोरपि परं तदणीयो ह्यणीयसः।
16535 शुद्धं सूक्ष्मं परं शान्तं तदाकाशोदरादपि॥ ३२॥
16536

16537 दिक्कालाद्यनवच्छिन्नरूपत्वादतिविस्तृतम् ।
16538 तदनाद्यन्तमाभासं भासनीयविवर्जितम् ॥ ३३ ॥
16539
16540 जीवो हि अणुर्मध्यमपरिमाणो वा पुण्यपापादिदूषितत्वादशुद्धः
16541 स्वभासनीयविषयभोक्ता प्रसिद्धस्तत्तु तद्विपरीतमित्याह - परमाणोरपीति
16542 द्वाभ्याम् ॥ ३२ ॥ ३३ ॥
16543
16544 चिद्रूपमेव नो यत्र लभ्यते तत्र जीवता ।
16545 कथं स्याच्चित्तताकारा वासना नित्यरूपिणी [ऽनिलरूपिणी इति पाठः]
16546 ॥ ३४ ॥
16547
16548 यद्विषयप्रथात्वलक्षणं [विषयप्रत्याय्यत्वलक्षणं इति पाठः]
16549 चिद्रूपत्वमेव न सहते तदनुकूलप्रतिकूलविषयभोक्तृतालक्षणं जीवत्वं
16550 सुतरामित्याह - चिद्रूपमिति । एतेन कथं न बुद्धितत्त्वं स्यात्कथं वा न
16551 मनो भवेदिति शङ्कापि प्रत्युक्तेत्याह - कथमिति ॥ ३४ ॥
16552
16553 चिद्रूपानुदयादेव तत्र नास्त्येव जीवता ।
16554 न बुद्धिता चित्तता वा नेन्द्रियत्वं न वासना ॥ ३५ ॥
16555
16556 उक्तमेव स्पष्टयति - चिद्रूपेति ॥ ३५ ॥
16557
16558 एवमित्थं महारम्भपूर्णमप्यजरं पदम् ।
16559 अस्मद्दृष्ट्या स्थितं शान्तं शून्यमाकाशतोऽधिकम् ॥ ३६ ॥
16560
16561 सर्वप्रश्नसमाधाने फलितमुपसंहरति - एवमिति ॥ ३६ ॥
16562
16563 श्रीराम उवाच ।
16564
16565 परमार्थस्य किं रूपं तस्यानन्तचिदाकृतेः ।
16566 पुनरेतन्ममाचक्ष्व निपुणं बोधवृद्धये ॥ ३७ ॥
16567
16568 एवं समाहिते चेतसि येन रूपेण तदपरोक्षमनुभवितुं शक्यं
16569 तदसाधारणं रूपं परिचेतुकामः पुनः पृच्छति - परमार्थस्येति ॥
16570 ३७ ॥
16571
16572 श्रीवसिष्ठ उवाच ।
16573
16574 महाप्रलयसंपत्तौ सर्वकारणकारणम् ।
16575 शिष्यते परमं ब्रह्म तदिदं वर्ण्यते शृणु ॥ ३८ ॥
16576
16577 तदिदमपरोक्षम् ॥ ३८ ॥
16578
16579 नाशयित्वा स्वमात्मानं मनसो वृत्तिसंक्षये ।
16580 सद्रूपं यदनाख्येयं तद्रूपं तस्य वस्तुनः ॥ ३९ ॥
16581
16582 यथा समाधौ निरोधेन वृत्तिसंक्षये सति निरिन्धनाग्निवन्मनसः
16583 स्वमात्मानं मनःस्वरूपमपि नाशयित्वा यदनाख्येयं
16584 स्वप्रकाशसद्रूपमवशिष्यते तदित्यर्थः ॥ ३९ ॥
16585
16586 नास्ति दृश्यं जगद्द्रष्टा दृश्याभावाद्विलीनवत् ।
16587 भातीति भासनं यत्स्यात्तद्रूपं तस्य वस्तुनः ॥ ४० ॥
16588

16589 एवं निर्विकल्पसमाध्यारम्भे दृश्याभावाद्रष्टा प्रमातापि
16590 विलीनवद्भातीति त्रिपुटीलयभासनं साक्षिरूपं तदित्यर्थः ॥ ४० ॥
16591
16592 चितेर्जीवस्वभावाया यदचेत्योन्मुखं वपुः ।
16593 चिन्मात्रं विमलं शान्तं तद्रूपं परमात्मनः ॥ ४१ ॥
16594
16595 एवं समाधिव्युत्थानप्राक्काले भाविजीवस्वभावायाश्चितेरचेत्योन्मुखं
16596 यद्वपुः स्वरूपं तदित्यर्थः । यद्यपि समाधिमध्यकालेऽपि
16597 स्फुरत्परमात्मरूपमेव तथापि तदपि [तदतिसूक्ष्मत्वात् इति पाठः]
16598 सूक्ष्मत्वान्नारुरुक्षुणाभ्यासदशायां लक्षयितुं
16599 शक्यमित्याद्यन्तप्रदर्शनम् ॥ ४१ ॥
16600
16601 अङ्गलग्नेऽपि वातादौ स्पर्शाद्यनुभवं विना ।
16602 जीवतश्चेतसो रूपं यत्तद्वै परमात्मनः ॥ ४२ ॥
16603
16604 इदानीमारूढानुभवसिद्धतन्मध्यस्फुरद्रूपेणापि तद्दर्शयति -
16605 अङ्गेति । ब्रह्माकाराविच्छिन्नापरोक्षवृत्तिमत्त्वाच्चेतसो जीवत एव चित्ते जीवत्येव
16606 सति क्षीरोदकवद्ब्रह्मण्यैकरस्येन तिरोभूतत्वाच्चित्तमनादृत्येत्यर्थः ।
16607 षष्ठी चानादरे इति भावलक्षणे षष्ठी । वातादौ अङ्गलग्नेऽपि
16608 तत्स्पर्शाद्यनुभवं विना स्फुरद्यद्रूपं तदेव तद्रूपमित्यर्थः । क्वचित्तु
16609 पुस्तके एतत्पूर्वार्धस्थाने अङ्गुष्ठस्याथवाङ्गुल्या वाताद्यस्पर्शने सति इति
16610 पठ्यते तत्राङ्गुष्ठस्य तथाङ्गुल्याश्च ये वातादयो
16611 नोदनादिव्यापारास्तेषामस्पर्शने स्पर्शाप्रतिसंधाने सतीत्यर्थः । वा
16612 गतिगन्धनयोः भावे क्तः ॥ ४२ ॥
16613
16614 अस्वप्नाया अनन्ताया अजडाया मनःस्थितेः ।
16615 यद्रूपं चिरनिद्रायास्तत्तदानघ शिष्यते ॥ ४३ ॥
16616
16617 इदानीं योगाभ्यासविधुराणामप्यनुभवपथं यथारोहति तथाह -
16618 अस्वप्नाया इति । स्वप्नदर्शनशून्या मशकमत्कुणाद्यविच्छिना
16619 मनोविश्रान्तिहेतुर्या सुषुप्तिः सैव चेतसो जाड्यहीना चिरं संभाव्येत
16620 तद्रूपं प्रलयेऽवशिष्यत इत्यर्थः ॥ ४३ ॥
16621
16622 यद्व्योम्नो हृदयं यद्वा शिलायाः पवनस्य च ।
16623 तस्याचेत्यस्य चिद्व्योम्नस्तद्रूपं परमात्मनः ॥ ४४ ॥
16624
16625 व्योम्नो हृदयं रहस्यं शून्यत्वं पवनस्य
16626 हृदयमन्तर्बहिःपूर्णत्वं शिलायास्तु घनत्वं तस्यैवाचेत्यस्य
16627 चेत्यभिन्नस्य चेत्यरहितस्य च चिद्व्योम्नः सतो यद्रूपं भवेत्तत्तदित्यर्थः ॥ ४४
16628 ॥
16629
16630 अचेत्यस्यामनस्कस्य जीवतो या स्वभावतः ।
16631 स्यात्स्थितिः सा परा शान्ता सत्ता तस्याद्यवस्तुनः ॥ ४५ ॥
16632
16633 किं बहुना सर्वस्यापि जीवतश्चेत्यचित्तपरित्यागे या स्थितिः परिशिष्यते सा
16634 तद्रूपमित्याह - अचेत्यस्येति ॥ ४५ ॥
16635
16636 चित्प्रकाशस्य यन्मध्यं प्रकाशस्यापि खस्य वा ।
16637 दर्शनस्य च यन्मध्यं तद्रूपं ब्रह्मणो विदुः ॥ ४६ ॥
16638
16639 यत् द्रष्टृकोटौ अन्नमयान्ते आत्मतया प्रसृतस्य
16640 चित्प्रकाशस्यैकैककोशविवेकेन

16641 पर्यालोच्यमानस्यानन्दमयकोशस्याप्यान्तरत्वान्मध्यं दृश्यकोटौ च
16642 मूर्तप्रपञ्चसारभूतादित्यात्मकप्रकाशस्यामूर्तप्रपञ्चसारभूतस्य
16643 खस्याकाशस्य लिङ्गसमष्ट्यात्मनोऽव्याकृताकाशस्य वा
16644 आन्तरत्वाद्यन्मध्यं दर्शनस्य चाक्षुषादिवृत्तिरूपस्य
16645 चान्तःस्फुरणरूपत्वाद्यन्मध्यं क्रमादानन्दसच्चिद्रूपं प्रसिद्धं
16646 तदित्यर्थः। तथा च तैत्तिरियाणामुपनिषदि अन्नमयादीनां
16647 कोशानामान्तरमानन्दमयकोशं प्रदर्श्य तस्य प्रियमेव शिरः। मोदो
16648 दक्षिणः पक्षः। प्रमोद उत्तरः पक्षः। आनन्द आत्मा। ब्रह्मपुच्छं
16649 प्रतिष्ठा इति तस्याप्यान्तरं ब्रह्म दर्शितम्। बृहदारण्यके च द्वे वाव
16650 ब्रह्मणो रूपे मूर्तं चैवामूर्तं च इति प्रस्तुत्य तस्यैतस्य मूर्तस्यैष रसो य
16651 एष तपति तस्यैतस्यामूर्तस्यैष रसो य एष एतस्मिन्मण्डले पुरुषः इति
16652 तदुभयसारं प्रदर्श्य अथात आदेशो नेति नेतीति मूर्तामूर्तारोपाधिष्ठानं
16653 तदान्तरं ब्रह्म तन्निषेधेन दर्शितम्। प्रतिबोधविदितं मतमिति
16654 तलबकारिणामुपनिषदि ब्रह्मणः सर्वबुद्धिवृत्त्यान्तरत्वमुक्तमिति॥ ४६॥
16655
16656 प्। १५४)
16657
16658 वेदनस्य प्रकाशस्य दृश्यस्य तमसस्तथा।
16659 वेदनं यदनाद्यन्तं तद्रूपं परमात्मनः॥ ४७॥
16660
16661 बुद्धिवृत्तेरर्थस्फुरणस्य विषयस्याज्ञानस्य च यत्साक्षिभूतं वेदनं
16662 तेषामाद्यन्तप्रथात्वादनाद्यन्तं तदित्यर्थः॥ ४७॥
16663
16664 यतो जगदुदेतीव नित्यानुदितरूप्यपि।
16665 विभिन्नवदिवाभिन्नं तद्रूपं परमार्थकम्॥ ४८॥
16666
16667 व्यवहारपरस्यापि यत्पाषाणवदासनम्।
16668 अव्योम्न एव व्योमत्वं तद्रूपं परमात्मनः॥ ४९॥
16669
16670 मायिकव्यवहारपरस्यापि ज्ञस्येश्वरस्य वा यत् पाषाणवदचलमासनम्।
16671 अच्छिद्रस्यैव सर्वजगदवकाशदातृत्वाद्व्योमत्वं यस्येति शेषस्तदित्यर्थः
16672 ॥ ४९॥
16673
16674 वेद्यवेदनवेत्तृत्वरूपत्रयमिदं पुरः।
16675 यत्रोदेत्यस्तमायाति तत्तत्परमदुर्लभम्॥ ५०॥
16676
16677 वेद्यादित्रिपुटीजन्मादिनिमित्तं यत्सच्चिदात्मरूपं तदेव तदित्याह - वेद्येति
16678 ॥ ५०॥
16679
16680 वेद्यवेदनवेत्तृत्वं यत्रेदं प्रतिबिम्बति।
16681 अबुद्ध्यादौ महादर्शे तद्रूपं परमं स्मृतम्॥ ५१॥
16682
16683 निमित्ततापि न परिणामेन किंतु विवर्तभावेनेत्याह - वेद्येति॥ ५१॥
16684
16685 मनः स्वप्नेन्द्रियैर्मुक्तं यद्रूपं स्यान्महाचितेः।
16686 जङ्गमे स्थावरे वापि तत्सर्वान्तेऽवशिष्यते॥ ५२॥
16687
16688 स्वप्नैरिन्द्रियोपलक्षितजागरैश्च मुक्तं मनो यत्सुषुप्तात्मरूपं स्यात्तदेव
16689 स्थावरे जङ्गमे च दृश्यप्रलयकालेऽवशिष्यते॥ ५२॥
16690
16691 स्थावराणां हि यद्रूपं तच्चेद्बोधमयं भवेत्।
16692 मनोबुद्ध्यादिनिर्मुक्तं तत्परेणोपमीयते॥ ५३॥

16693
16694 स्थावराणां रूपमचलस्वभावः | परेण परमात्मना || ५३ ||
16695
16696 ब्रह्मार्कविष्णुहरशक्रसदाशिवादि
16697 शान्तौ शिवं परममेतदिहैकमास्ते |
16698 सर्वोपधिव्ययवशादविकल्परूपं
16699 चैतन्यमात्रमयमुज्झितविश्वसङ्गम् || ५४ ||
16700
16701 उक्तं प्रलयात्मतत्त्वावस्थानमुपसंहरति - ब्रह्मेति |
16702 एतत्सर्वानुभवसिद्धप्रत्यगात्मभूतम् | इहास्मिन् जगति | सर्वोपधिव्ययः
16703 सर्वोपाधिलयः | मायासंवलानात्प्राचुर्ये मयट् || ५४ ||
16704
16705 इत्यार्षे श्रीवासिष्ठमहारामायणे मोक्षोपाये उत्पत्तिप्रकरणे
16706 महाकल्पान्तावशिष्टपरमभाववर्णनं नाम दशमः सर्गः || १० ||
16707
16708 इति श्रीवासिष्ठ महारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
16709 महाकल्पान्तावशिष्ठपरमभाववर्णनं नाम दशमः सर्गः || १० ||
16710
16711 एकादशः सर्गः ११
16712
16713 श्रीराम उवाच |
16714
16715 इदं [इत्थंरूपं इति पाठः] रूपमिदं दृश्यं जगन्नास्तीति
16716 भासुरम् |
16717 महाप्रलयसंप्राप्तौ भो ब्रह्मन्क्वेव तिष्ठति [गच्छति इति
16718 पाठः] || १ ||
16719
16720 सदधिष्ठानतः सत्ता प्रलयेऽपि न वार्यते |
16721 स्वतस्तु सत्ता जगतः सर्गेऽप्यत्र निवार्यते || १ ||
16722
16723 नन्वस्तु प्रलये जगत्सत्तासामान्यात्मकब्रह्ममात्रपरिशेषात्प्रातिस्विकसत्तया
16724 जगतो निवृत्तावपि ताद्रूप्येण सत्ता सर्गे तु प्रलयवैलक्षण्यस्य
16725 सर्वानुभवसिद्धत्वात्स्वतन्त्रसत्ताप्यपरा वाच्या | तथाच तयोपेतं
16726 जगद्ब्रह्मणि निवर्तमानमन्यत्र तिष्ठतीत्येव संभाव्यते | नाभावो विद्यते
16727 सतः इति सतोऽसत्त्वस्य त्वयैव वारितत्वात् | तथाच यत्र तिष्ठति तदेव जगतः
16728 परायणमुपदिश्यतामितिमन्यमानः श्रीराम उवाच - इदमिति |
16729 इदमेवंविधं चतुर्दशभुवनदेवनरासुरतिर्यगाद्यनन्तविस्ताररूपं यस्य
16730 इदमित्थं भासुरं स्फुटतरं दृश्यं प्रत्यक्षादिदृढीकृतं जगत्
16731 महाप्रलयसंप्राप्तौ क्वेव तिष्ठति तद्वदेति शेषः | गच्छतीति पाठेऽपि
16732 प्राप्त्यर्थस्य गमेरुक्त एवार्थः || १ ||
16733
16734 श्रीवसिष्ठ उवाच |
16735
16736 कुत आयाति कीदृग्वा वन्ध्यापुत्रः क्व गच्छति |
16737 क्व याति कुत आयाति वद वा व्योमकाननम् || २ ||
16738
16739 सर्वपदार्थानामुत्पत्तिकाले यदि पृथक्सत्तया कुतश्चिदागमनं स्यात्तर्हि
16740 तस्य प्रलयेऽन्यत्र गमनं तत्र क्सत्तया कुतश्चिदागमनं स्यात्तर्हि तस्य
16741 प्रलयेऽन्यत्र गमनं तत्र स्थितिश्च स्यात्तदेव तावद्वन्ध्यापुत्रवदस्य
16742 नास्तीत्याशयेन वसिष्ठ उवाच - कुत इति || २ ||
16743
16744 श्रीराम उवाच |

16745
16746 वन्ध्यापुत्रो व्योमवनं नैवास्ति न भविष्यति |
16747 कीदृशी दृश्यता तस्य कीदृशी तस्य नास्तिता || ३ ||
16748
16749 रामो दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यं शङ्कते - वन्ध्येति |
16750 तात्कालिकस्वसत्ता भविष्यत्कालिकसत्ताप्रत्यक्षवेद्यता च तयोर्नास्तीति वैषम्यमिति
16751 प्रतियोग्यस्तित्वाप्रसिद्धौ नास्तितापि तयोर्दुर्वचेत्यर्थः || ३ ||
16752
16753 श्रीवसिष्ठ उवाच |
16754
16755 वन्ध्यापुत्रव्योमवने यथा न स्तः कदाचन |
16756 जगदाद्यखिलं दृश्यं तथा नास्ति कदाचन || ४ ||
16757
16758 यद्येवं तर्हि जगदपि स्वसत्तया नास्ति न भविष्यति न दृश्यमपीति तस्य
16759 तत्साम्यमेवेति वसिष्ठ आह - वन्ध्येति || ४ ||
16760
16761 प्। १५५)
16762
16763 न चोत्पन्नं न च ध्वंसि यत्किलादौ न विद्यते |
16764 उत्पत्तिः कीदृशी तस्य नाशशब्दस्य का कथा || ५ ||
16765
16766 सत्ताभावे उत्पत्त्याद्यपि जगतो न सिद्ध्यतीत्याह - न चेति || ५ ||
16767
16768 श्रीराम उवाच |
16769
16770 वन्ध्यापुत्रनभोवृक्षकल्पना तावदस्ति हि |
16771 सा यथा नाशजन्माढ्या तथैवेदं न किं भवेत् || ६ ||
16772
16773 ननु प्रत्यक्षसिद्धोत्पत्त्यादिमतो जगतो न वन्ध्यापुत्रादिरुपमानम् | अत्यन्तासत
16774 उपमानत्वादर्शनाच्च | अतः परिशेषाद्विकल्परूपस्तत्प्रत्यय एवोपमानं
16775 जन्मनाशादिमत्त्वेन तस्य जगत्साधर्म्यसंभवादिति रामः शङ्कते -
16776 वन्ध्येति || ६ ||
16777
16778 श्रीवसिष्ठ उवाच |
16779
16780 तुल्यस्यातुलदुःस्थस्य भावकैः किल तोलनम् |
16781 निरन्वया यथैवोक्तिर्जगत्सत्ता तथैव हि || ७ ||
16782
16783 स्यात्तस्योपमानता यद्युपमेयजगदन्तःपातो न स्यात् | तदन्तःपाते तु तस्य
16784 नोपमानतासंभव इत्यपरमार्थसतो जगतो मदुक्त एव दृष्टान्तः
16785 परिशिष्यत इत्याशयेन वसिष्ठ उवाच - तुल्यस्येति | तुल्यस्योपमातुमिष्टस्य
16786 दृश्यस्योपमेयबहिर्भूततुलाऽलाभेन
16787 दुःस्थस्योपमातुमशक्यस्योपमेयकोटिप्रविष्टैर्भावकैर्यत्तोलनमुपमावच्
16788 अनं तत् निरन्वया अनन्वयालंकारोदाहरणभूता यथा उक्तिस्तथैव | यथा
16789 गगनं गगनाकारं सागरः सागरोपमः इत्युक्तिरनुपमत्वे पर्यवस्यति
16790 तथैव स्यादिति न विकल्पकल्पनादृष्टान्तः | अतो जगतः पृथक्सत्ता यथा
16791 मदुक्तवन्ध्यापुत्रादिसत्ता तथैवेत्यर्थः | असतः
16792 सद्दृष्टान्तत्वादर्शनेऽप्यसद्दृष्टान्तता न विरुध्यते | वन्ध्यापुत्र इव
16793 खपुष्पमसदित्युक्तिदर्शनादिति भावः || ७ ||
16794
16795 यथा सौवर्णकटके दृश्यमानमिदं स्फुटम् |
16796 कटकत्वं तु नैवास्ति जगत्त्वं न तथा परे || ८ ||

ननु प्रत्यक्षमुपलभ्यमानस्य कथमसत्त्वमित्याशङ्क्य तथाविधस्यापि
सम्यग्दर्शने बाधदृष्टेरसत्त्वं बहुतरदृष्टान्तेषु प्रसिद्धमित्याह
- कटकत्वमित्यादिपञ्चभिः ॥ ८ ॥

आकाशे च यथा नास्ति शून्यत्वं व्यतिरेकवत् ।
जगत्त्वं ब्रह्मणि तथा नास्त्येवाप्युपलब्ध्मत् ॥ ९ ॥

व्यतिरेको भेदस्तद्वत् । उपलब्धिमदुपलभ्यमानमपि ॥ ९ ॥

कज्जलान्न यथा कार्ष्ण्यं शैत्यं च न यथा हिमात् ।
पृथगेवं भवेद्बुद्धं जगन्नास्ति परे पदे ॥ १० ॥

यथा शैत्यं न शशिनो न हिमाद्व्यतिरिच्यते ।
ब्रह्मणो न तथा सर्गो विद्यते व्यतिरेकवान् ॥ ११ ॥

मरुनद्यां यथा तोयं द्वितीयेन्दौ यथेन्दुता ।
नास्त्येवेह जगन्नाम दृष्टमप्यमलात्मनि ॥ १२ ॥

दृष्टं अनुभूयमानमपि ॥ १२ ॥

आदावेव हि यन्नास्ति कारणासंभवात्स्वयम् ।
वर्तमानेऽपि तन्नास्ति नाशः स्यात्तत्र कीदृशः ॥ १३ ॥

क्वासंभवद्भूतजाड्यं पृथ्व्यादेर्जडवस्तुनः ।
कारणं भवितुं शक्तं छायायाश्चातपो यथा ॥ १४ ॥

कथं कारणासंभवस्तमाह - क्वेति । पृथ्व्यादेर्जडवस्तुनो हि
जडमेव कारणं भवितुं शक्तं तत्त्वसंभवद्भूतजाड्यं ब्रह्म ।
क्वचिदपि स्वविरुद्धपरिणामादर्शनादिति भावः ॥ १४ ॥

कारणाभावतः कार्यं नेदं तत्किंचनोदितम् ।
यत्तत्कारणमेवास्ति तदेवेत्थमवस्थितम् ॥ १५ ॥

परिणामदृष्ट्या नेदं किंचिदुदितम् विवर्तदृष्ट्या तु यद्यपि
विरुद्धारोपोऽपि संभवति तथापि तत्कारणमेवेत्थं जगद्भावेनावस्थितं न
पृथक्कार्यसत्तास्तीत्यर्थः ॥ १५ ॥

अज्ञानमेव यद्भाति संविदाभासमेव तत् ।
यज्जगद्दृश्यते स्वप्ने संवित्कचनमेव तत् ॥ १६ ॥

नन्वज्ञानमेव तर्हि परिणामिकारणमस्तीति कथं कारणाभावस्तत्राह -
अज्ञानमेवेति । यदज्ञानमेव [यज्ज्ञानेति क्वचित्] जगदाकारपरिणतं
भातीत्युच्यते तत्संविदं जगदात्मना आभासयतीति संविदाभासम् ।
संविदमेव जगदात्मना विवर्तयतीत्यर्थः । अज्ञानपरिणामस्य
संविद्विवर्तत्वमेव स्वप्ने प्रसिद्धमित्याह - यदिति ॥ १६ ॥

संवित्कचनमेवान्तर्यथा स्वप्ने जगद्भ्रमः ।
सर्गादौ ब्रह्मणि तथा जगत्कचनमाततम् ॥ १७ ॥

तदेव स्पष्टमाह - संविदिति ॥ १७ ॥

16849 यदिदं दृश्यते किंचित्सदैवात्मनि संस्थितम् ।
16850 नास्तमेति न चोदेति जगत्किंचित्कदाचन ॥ १८ ॥
16851
16852 तथाच जगतो ब्रह्ममात्रत्वं यत्प्रतिज्ञातं तत्सिद्धमित्याह - यदिदमिति ।
16853 आत्मनि परमार्थस्वभावे ॥ १८ ॥
16854
16855 यथा द्रवत्वं सलिलं स्पन्दनं पवनो यथा ।
16856 यथा प्रकाश आभासो ब्रह्मैव त्रिजगत्तथा ॥ १९ ॥
16857
16858 यथा पुरमिवास्तेऽन्तर्विदेव [ऽन्तश्चिदेव इति पाठः]
16859 स्वप्नसंविदः ।
16860 तथा जगदिवाभाति स्वात्मैव परमात्मनि ॥ २० ॥
16861
16862 स्वप्नसंविदः स्वप्नद्रष्टुरन्तर्गता वित् चैतन्यमेव पुरमिव यथा आस्ते ॥ २० ॥
16863
16864 श्रीराम उवाच ।
16865
16866 एवं चेत्तत्कथं ब्रह्मन्सुघनप्रत्ययं वद ।
16867 इदं दृश्यविषं जातमसत्स्वप्नानुभूतिवत् ॥ २१ ॥
16868
16869 जगत्प्रत्ययस्य सुघनत्वेन स्वप्नस्य च कार्त्स्न्येनानभिव्यक्ततया पेलवत्वेन
16870 वैषम्यं द्रष्टृदृश्यसंबन्धस्य च
16871 स्वाभाविकत्वेनानिवार्यत्वान्मुक्त्यसंभवं च रामः शङ्कते - एवं
16872 चेदित्यादिना । इदं दृश्यविषमेवमुक्तरीत्या
16873 स्वप्नानुभूतिवदसच्चेदाकल्पान्तं व्यवहाराविसंवादार्हं सुघनं
16874 दृढमिति प्रत्ययो यस्मिंस्तथाविधं कथं जातमित्यर्थः ।
16875 स्वप्नानुभूतिमत् इति पाठेऽपि स्वदृष्टान्ततया
16876 स्वप्नानुभूतिमत्तत्सदृशमित्येवार्थः ॥ २१ ॥
16877
16878 सति दृश्य किल द्रष्टा सति द्रष्टरि दृश्यता ।
16879 एकसत्त्वे द्वयोर्बन्धो मुक्तिरेकक्षये द्वयोः ॥ २२ ॥
16880
16881 दृअष्टा दुर्वार इति शेषः । एवमुत्तरवाक्ययोरपि । द्वयोर्मध्ये एकस्य क्षये हि
16882 मुक्तिः स्यात्स एव दुर्घट इति भावः ॥ २२ ॥
16883
16884 प्। १५६)
16885
16886 अत्यन्तासंभवो यावद्बुद्धो दृश्यस्य न क्षयः ।
16887 तावद्द्रष्टरि दृश्यत्वं न संभवति मोक्षधीः ॥ २३ ॥
16888
16889 कुतो दुर्घटस्तत्राह - अत्यन्तेति । अत्यन्तं मूलपरिशेषणासंभवो यस्य ।
16890 मूलाविद्याबाधेनात्यन्तिक इत्यर्थः । दृश्यत्वमपरिहार्यमिति शेषः । अतो
16891 मोक्षधीर्न संभवतीत्यर्थः ॥ २३ ॥
16892
16893 दृश्यं चेत्संभवत्यादौ पश्चात्क्षयमुपालभेत् ।
16894 तद्दृश्यस्मरणानर्थरूपो बन्धो न शाम्यति ॥ २४ ॥
16895
16896 मास्त्वत्यन्तासंभवबोधः संभूतस्यैव विद्यया क्षयोऽस्तु तत्राह -
16897 दृश्यमिति । तत्तर्हि स्मर्णमिव स्मरणं संस्कारात्मना स्थितस्य
16898 पुनरुद्भवः स एवानर्थः ॥ २४ ॥
16899
16900 यत्र क्वचन संस्थस्य स्वादर्शस्येव चिद्गतेः ।

16901 प्रतिबिम्बो लगत्येव सर्वस्मृतिमयो ह्यलम् ॥ २५ ॥
16902
16903 दृश्यप्रदेशपरिहाणेनैव दृश्यासंभवोपपत्तिशङ्कायास्तु
16904 परिहारस्त्वयैव प्रागुक्त इत्याह - यत्रेति ॥ २५ ॥
16905
16906 आदावेव हि नोत्पन्नं दृश्यं नास्त्येव चेत्स्वयम् ।
16907 द्रष्टुर्दृश्यस्वभावत्वात्तत्संभवति मुक्तता ॥ २६ ॥
16908
16909 यद्यनुत्पन्नं स्यात्तदा द्रष्टुश्चैतन्यस्य दृश्यस्वभावत्वान्मुक्तता
16910 संभवेत् । नत्वनुत्पन्नमनुभूयते अतो न द्रष्टुः स्वभावनिर्मुक्तिरिति भावः
16911 ॥ २६ ॥
16912
16913 तस्मादसंभवन्मुक्तेर्मम प्रोत्सार्य युक्तिभिः ।
16914 अत्यन्तासंभवो यावत्कथयात्मविदां वर ॥ २७ ॥
16915
16916 तस्मान्मम असंभवन्मुक्तेर्मुक्त्यसंभवस्य शङ्कामिति शेषः ।
16917 यावन्निरुढः स्यात्तवात्कथय ॥ २७ ॥
16918
16919 श्रीवसिष्ठ उवाच ।
16920
16921 असदेव सदा भाति जगत्सर्वात्मकं यथा ।
16922 शृण्वहं कथया राम दीर्घया कथयामि ते ॥ २८ ॥
16923
16924 यच्छङ्कितं स्वप्नवैषम्यं तस्य वक्ष्यमाणसृष्ट्याख्यायिकया
16925 समाधानं वसिष्ठः प्रतिजानीते - असदिति । दीर्घया
16926 मण्डपोपाख्यानादिविस्तारितया यद्यपि सुघनप्रत्ययं तथाप्यसदेव
16927 सदात्मनावभातीत्यंशे स्वप्नसाम्यमस्त्येव सुघनप्रत्ययता तु
16928 चिरानुवृत्त्येति भावः ॥ २८ ॥
16929
16930 व्यवसायकथावक्यैर्यावत्तत्रानुवर्णितम् ।
16931 न विश्राम्यति ते तावद्धृदि पांसुर्यथा ह्रदे ॥ २९ ॥
16932
16933 व्यवसायः पूर्वेषां व्यवहारस्तत्कथावाक्यैः ॥ २९ ॥
16934
16935 अत्यन्ताभावमस्यास्त्वं जगत्सर्गभ्रमस्थितेः ।
16936 युद्ध्वैकध्याननिष्ठात्मा व्यवहारं करिष्यसि ॥ ३० ॥
16937
16938 तेनैव ते द्वितीयशङ्कानिरासस्तत्त्वे विश्रान्तिर्लोकव्यवहारश्च सेत्स्यतीत्याह ##-
16939
16940 भावाभावग्रहोत्सर्गस्थूलसूक्ष्मचलाचलाः ।
16941 दृशस्त्वां वेधयिष्यन्ति न महाद्रिमिवेपवः ॥ ३१ ॥
16942
16943 प्रयोजनादिभावे गृह्यन्त इति ग्रहाः प्रयोजनाभावे नूत्सृज्यन्त इत्युत्सर्गाः ।
16944 स्थूलसूक्ष्मादिविषयेषु चलाचलास्तदनुरूपा दृशो व्यवहारदृष्टयो न
16945 वेधयिष्यन्ति । रागाद्युद्भवेन न पीडयिष्यन्तीत्यर्थः । प्राग्व्याख्यातो वार्थो
16946 ग्राह्यः ॥ ३१ ॥
16947
16948 स एषोऽस्त्येक एवात्मा न द्वितीयास्ति कल्पना ।
16949 जगदत्र यथोत्पन्नं तत्ते वक्ष्यामि राघव ॥ ३२ ॥
16950
16951 अत्र द्वितीयकल्पनारहितेऽप्यात्मनि ॥ ३२ ॥
16952

16953 तस्मादिमानि सकलानि विजृम्भितानि
16954 सोऽपीदमङ्ग सकलासकलं महात्मा।
16955 रूपावलोकनमनोमननप्रकारा
16956 कारास्पदं स्वयमुदेति विलीयते च॥ ३३॥
16957
16958 हे अङ्ग इमानि जगन्ति तस्मादात्मनः सकाशाद्विजृम्भितानि आविर्भूतानि। किं
16959 तटस्थेश्वरादिव भेदेन नेत्याह - स इति। स महात्मापि सकलासकलं
16960 समष्टिव्यष्टिरूपं इदं बहिरिन्द्रियैर्दृश्यमानं
16961 रूपावलोकनप्रकारास्पदमन्तस्तु मनो मननप्रकाराकारास्पदं भूत्वा
16962 स्वयमेवोदेति विलीयते च। उदयविलयभावेन भ्रान्त्या विभाव्यत इत्यर्थः॥ ३३॥
16963
16964 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे
16965 परमार्थवर्णनं नामैकादशः सर्गः॥ ११॥
16966
16967 इति श्रीवासिष्ठमहारामायण उत्पत्तिप्रकरणे
16968 परमार्थवर्णनंनामैकादशः सर्गः॥ ११॥
16969
16970 द्वादशः सर्गः १२
16971
16972 श्रीवसिष्ठ उवाच।
16973
16974 एतस्मात्परमाच्छान्तात्पदात्परमपावनात्।
16975 यथेदमुत्थितं विश्वं तच्छृणूत्तमया धिया॥ १॥
16976
16977 अत्यन्तासंभवं वक्तुमपवादेन कृत्स्नशः।
16978 सर्गस्तदनुरूपोऽस्मिन्नध्यारोपः प्रपश्यते॥ १॥
16979
16980 प्रतिज्ञातार्थं वक्तुमुपक्रममाणः श्रीवसिष्ठ उवाच - एतस्मादिति॥ १॥
16981
16982 सुषुप्तं स्वप्नवद्भाति भाति ब्रह्मैव सर्गवत्।
16983 सर्वात्मकं च तत्स्थानं तत्र तावत्क्रमं शृणु॥ २॥
16984
16985 यथा प्रतिपुरुषं सुषुप्तात्मरूपमेव स्वप्नवद्विवर्तते तथा ब्रह्मापीति
16986 दृष्टानुसारिणीयं कल्पनेत्यर्थः। तत्रैकपुरुषवासनामात्रकार्यत्वात्स्वप्नो
16987 न सुघनप्रत्ययः सर्ववासनाकार्यत्वाच्च प्रपञ्चः सुघनप्रत्यय इति
16988 पूर्वशङ्कापरिहारमभिप्रेत्याह - सर्वात्मकं चेति। सर्वात्मकत्वं च
16989 आत्मा वा इदमेक एवाग्र आसीत् इति श्रुतौ सर्ववाचीदंपदसामानाधिकरण्यात्।
16990 तत्स्थानं सर्वसुषुप्तसमष्टिप्रलयावस्थं ब्रह्म॥ २॥
16991
16992 तस्यानन्तप्रकाशात्मरूपस्यानन्तचिन्मणेः।
16993 सत्तामात्रात्मकं विश्वं यदजस्रं स्वभावतः॥ ३॥
16994
16995 यद्यस्मात्कारणाद्विश्वं चिन्मणे सत्तामात्रमात्मा परमार्थरूपं यस्य
16996 तथाविधं तत्तस्माचेत्यतामिव गच्छतीत्युत्तरेण संबन्धः॥ ३॥
16997
16998 प्। १५७)
16999
17000 तदात्मनि स्वयं किंचिच्चेत्यतामिव गच्छति।
17001 अगृहीतात्मकं संविदहंमर्शनपूर्वकम्॥ ४॥
17002
17003 तस्य प्रथमं स ईक्षत लोकान्न सृजा इति श्रुतिसिद्धमीक्षणभावं दर्शयति
17004 - तदित्यादित्रिभिः। संविदा

17005 अहंमर्शनपूर्वकमगृहीतात्मकमहंकाराध्यासं विनेति यावत् ।
17006 आकाशादणु शुद्धं च यद्बोधनं तत्सर्वस्मिन्सृज्यविषये
17007 भाविनामरूपानुसंधानैः किंचिदुहितानि रूपकाणि यस्मिंस्तथा विधं
17008 सच्चेत्यतामिव गच्छतीत्यन्वयः ॥ ४ ॥
17009

17010 भाविनामार्थकलनैः किंचिदूहितरूपकम् ।
17011 आकाशादणु शुद्धं च सर्वस्मिन्भाति बोधनम् ॥ ५ ॥
17012

17013 ततः सा परमा सत्ता सचेतश्चेतनोन्मुखी ।
17014 चिन्नामयोग्या भवति किंचिल्लभ्यतया तथा ॥ ६ ॥
17015

17016 तस्येक्षणवृत्तितद्विषयोपाधिभ्यामीश्वरजीवभावो दर्शयति - तत इति ।
17017 चेत-ईक्षणात्मिका वृत्तिस्तत्सहिता चेतना तदभिव्यक्तचेतन्यं तदुन्मुखी
17018 तत्प्रधाना सती चेतयतीति चित्सर्वज्ञेश्वरस्तन्नामयोग्येत्यर्थः ।
17019 वाक्प्रवृत्तिविषयधर्मवत्त्वेन वाग्व्यवहारलभ्यतया ॥ ६ ॥
17020

17021 घनसंवेदना पश्चाद्भाविजीवादिनामिका ।
17022 संभवत्यात्तकलना यदोज्झति परं पदम् ॥ ७ ॥
17023

17024 चिरानुवृत्त्या घना दृढीभूता ईक्षणसंवेदना यस्यास्तथाविधा सती
17025 भाता गृहीता कलना
17026 तद्विषयसूक्ष्मप्रपञ्चात्मभावलक्षणपरिच्छेदकलना यथा अत एव परं
17027 पदमपरिच्छिन्नभूमात्मभावं [सदैव काल इति पाठः]
17028 विस्मरणेनोज्झति तदा भाविप्राणधारणोपाधिकजीवहिरण्यगर्भादिनामिका
17029 संभवतीत्यर्थः ॥ ७ ॥
17030

17031 सत्तैव भावनामात्रसारा संसरणोन्मुखी ।
17032 तदा वस्तुस्वभावेन त्वनुत्तिष्ठति ताभिमाम् ॥ ८ ॥
17033

17034 तथा भावेऽपि न ब्रह्मसत्ताया स्वरूपक्षतिरित्याह - सत्तेति । तदा
17035 ब्रह्मसत्तैव भावनामात्रसारा संसरणोन्मुखी भवति न
17036 विकारादिक्रियासारेत्यर्थः । तत्कुतस्तत्राह - वस्तुस्वभावेनेति । कथं तर्हि
17037 जीवभावस्तत्राहमन्विति । तामिमांसत्तमेवानुसृत्य रजौ सर्प इव जीवभाव
17038 उत्तिष्ठतीत्यर्थः ॥ ८ ॥
17039

17040 समनन्तरमेवास्याः [भेदस्याः इति पाठः] स्वसत्तोदेति शून्यता ।
17041 शब्दादिगुणबीजं सा भविष्यदभिधार्थदा ॥ ९ ॥
17042

17043 इदानीं महाभूतसर्ग विवक्षुः प्रथममाकाशसर्गमाह -
17044 समनन्तरमिति । अस्या जीवसत्तायाः समनन्तरमेव स्वसत्ता
17045 इतरभूतावकाशदत्वाच्छऊन्यताप्राया उदेति । सूर्यादिसर्गोत्तरं
17046 भविष्यन्तीनामाकाशाद्यभिधानामासमन्प्रपद्यते प्रकाशत इत्याद्यर्यदा ॥
17047 ९ ॥
17048

17049 अहंतोदेति तदनु सह [भूतायथार्थ(?) इति पाठः]
17050 वै कालसत्तया ।
17051 भविष्यदभिधार्थेन बीजं मुख्यजगत्स्थितेः ॥ १० ॥
17052

17053 तत्र प्रागुक्तजीवस्याद्दंताभिमानं तदाप्रभृति द्विपरार्थपरिमिततदायुः
17054 का * * प्तिं चाह - अहंतेति । भविष्यदित्यादि पूर्ववत् ॥ १० ॥
17055

17056 तस्याः शक्तेः परायास्तु स्वसंवेदनमात्रकम् ।

17057 एतज्जालमसद्रूपं सदिषोदेति विस्फुरत् ॥ ११ ॥
17058
17059 इयमाकाशार्दकारकान्सृष्टिर्न हिरण्यगर्भदिव किंतु
17060 तद्वेषोपहितपरमात्मसत्ताया एव तस्या एव सर्वकारणत्वादित्याह - तस्या
17061 इति। शक्तिशब्देमात्र परवृत्तेबोध्यते। तस्या अविकृतातद्योतनाय
17062 स्वसंवेदनमात्रकमिति ॥ ११ ॥
17063
17064 एवंप्रायात्मिका संविद्वीजं संकल्पशाखिनः।
17065 भवत्यहंकारकणस्ततः स्पन्दतया मरुत् ॥ १२ ॥
17066
17067 एवंप्राथात्मिका विवदहंकारेण विकारभाव(?) आत्मा स्वरूपं
17068 यस्यास्तथाविधा स।विद्वियत्कार्यगोचरसंकल्पवृक्षस्य बीजमित्यर्थः। अत एव
17069 तस्याहंकारस्य कण एकदेश इव परि * *##?
17070 आविर्भवतीत्यर्थः ॥ १२ ॥
17071
17072 चिदहं तावती व्योमशब्दतन्मात्रभावनात्।
17073 स्वतो घनीभूय शनैः स्वतन्मात्रं भवत्यलम् ॥ १३ ॥
17074
17075 तस्या एव वियदहन्तोपहितपरसत्तायाः सर्व * *? बीजभूतशब्दता
17076 आकाशभावादतिसूक्ष्मा* *?द्धनीभूय स्वतन्मात्रं
17077 शब्दतन्मात्रं भवतीत्यर्थः। यद्यपि सांख्यदर्शनपुराणादिषु तन्मात्रतो
17078 भूतोत्पत्तिः प्रसिद्धा(?) तथा आत्मन आकाशः संभूतः
17079 तत्तेजोभ्युजत इत्यादिश्रुतिषु वियदादीनां साक्षाद्द्र * *?
17080 दानकत्वश्रवणात् तद्यथा दुन्दुभेर्दग्धमानस्य इत्यादौ शब्दसामान्यस्य
17081 तद्विशेषोभावानत्वश्रवणाचाकाशादेव शब्दसामान्याकतान्मात्रोत्पत्ति
17082
17083 भाविनामार्थरूपं तद्वीजं शब्दोघशाखिनः।
17084 पदवाक्यप्रमाणाख्यं वेदवृन्दं विकासितम् ॥ १४ ॥
17085
17086 शब्दतन्मात्रस्य वेदादिसर्व * *? विशेषोपादानात्वमाह -
17087 भावीति ॥ १४ ॥
17088
17089 तस्मादुदेप्यत्यखिला जगच्छ्रीः परमात्मनः।
17090 शब्दौघनिर्मितार्थौघपरिणामविसारिणः ॥ १५ ॥
17091
17092 तस्माद्वेदभावा * *? परमात्मनो जग * * * *
17093 प्रजापतिर्देवानस्रजत अ * *? मिति मनुष्याविन्दव इति प्तृन्
17094 इत्यादिश्रुतेरित्यर्थः ॥ १५ ॥
17095
17096 चिदेवंपरिवारा सा जीवशब्देन कथ्यते।
17097 भाविशब्दार्थजालेन बीजं रुपोपशाखिनः ॥ १६ ॥
17098
17099 यदुक्तं भाविजीवादिनामिवेति तद्वा * *? त्तं तस्यैव प्रा *
17100 पाठः] यस्यः सा। तस्याः सर्वमूर्त्याकारहेतुतामाह - बीजमिति।
17101 रूपमत्र मूर्द्धाकारा ॥ १६ ॥
17102
17103 चतुर्दशविधं भूतजालमावलितान्तरम्।
17104 जगज्जटरगर्तौघं प्रसरष्यति वै ततः ॥ १७ ॥
17105
17106 तस्य * *? प्राणभावेनाध्या * * * *?
17107 क्रियाहेतुत्वमाह - चतुर्दशेति। चतुर्दशभुवनभेदाचतुर्दशविधं
17108 प्राणिजातं तत * *? प्राणवायोर्निमित्तात्वेन * * *

17109 गर्तोयं प्रसरिष्यति पंचरिष्यति ॥ १७ ॥
17110
17111 असंप्राप्तामिवाचारा चिज्जवात्प्रस्फुरद्वपुः ।
17112 सा चैव स्पर्शतन्मात्रं भावनाद्भवति क्षणात् ॥ १८ ॥
17113
17114 तस्येव * * *?भिमानोपहितचैतन्यस्य
17115 सर्वस्पर्शविशेषोपादानस्पर्शतन्मात्रभावमावहप्रवहाद्येकोनपञ्चाश
17116 त्पवनस्कन्धविभागेन सर्वपदार्थक्रियास्पन्दनिमित्तत्वं चाह -
17117 असंप्राप्तेति द्वाभ्याम् । प्रागसंप्राप्ताभिधाचारापि
17118 वायुभावाभिमानजवात्प्रस्फुरद्वपुः ॥ १८ ॥
17119
17120 प्। १५८)
17121
17122 पवनस्कन्धविस्तारं बीजं स्पर्शौघशाखिनः ।
17123 सर्वभूतक्रियास्पन्दस्तस्मात्संप्रसरिष्यति ॥ १९ ॥
17124
17125 तत्रैव चिद्विलासेन प्रकाशोऽनुभवाद्भवेत् ।
17126 तेजस्तन्मात्रकं तत्तु भविष्यदभिधार्थकम् ॥ २० ॥
17127
17128 ततस्तेजस उत्पत्तिमाह - तत्रेति । चिद्विलासः प्रकाशात्मकत्वभावना । शेषं
17129 पूर्ववत् । तेजस्तन्मात्रकं रूपतन्मात्रकम् ॥ २० ॥
17130
17131 तत्सूर्याग्निविजृम्भादिबीजमालोकशाखिनः ।
17132 तस्माद्रूपविभेदेन संसारः प्रसरिष्यति ॥ २१ ॥
17133
17134 तत्तेजः । विजृम्भेव क्षणव्यादाना विद्युत् । आदिपदाच्चन्द्रनक्षत्रादि ॥ २१ ॥
17135
17136 भावयंस्तनुतामेव रसस्कन्ध इवाम्भसः ।
17137 स्वदनं तस्य सङ्घस्य रसतन्मात्रमुच्यते ॥ २२ ॥
17138
17139 ततो जलोत्पत्तिमाह - भावयन्निति । स तेजोभूत आत्मा अम्भसो रसस्कन्ध
17140 इवाहमस्मीति तनुतां तच्छरीरतां परिच्छिन्नतां वा भावयन्
17141 संस्तद्भावमापद्यत इति शेषः । तस्य जलात्मकस्य सङ्घस्य मूर्तद्रव्यस्य
17142 जिह्वया आस्वादने मधुरमिदमिति यत्स्वदनं
17143 तद्रसविशेषोपादानसामान्यरूपत्वाद्रसतन्मात्रमुच्यत इत्यर्थः ॥ २२ ॥
17144
17145 भाविवारिविलासात्मा तद्बीजं रसशाखिनः ।
17146 अन्योन्यस्वदने तस्मात्संसारः प्रसरिष्यति ॥ २३ ॥
17147
17148 तस्यैव रसस्येन्द्रियविषयभावेनान्योन्यस्वदने तद्विषयरागाद्युद्भवेन
17149 पुनःपुनर्विषयार्जनप्रवृत्त्यात्मा संसारः प्रसरिष्यतीत्यर्थः । एवं
17150 पूर्वत्रापि ॥ २३ ॥
17151
17152 भविष्यद्रूपसंकल्पनामासौ कल्पनात्मकः ।
17153 संकल्पात्मगुणैर्गन्धतन्मात्रत्वं प्रपश्यति ॥ २४ ॥
17154
17155 ततः पृथिवीसर्गमाह - भविष्यदिति । असौ जलभावापन्नः परमात्मा
17156 पृथिव्येवाहमिति संकल्पनात्मकः सन् भविष्यद्रूपसंकल्पनामा
17157 [भविष्यतद्रूप इति पाठः] भूत्वा गन्धसंकल्पात्मगुणैः स्वस्य
17158 गन्धतन्मात्रत्वं प्रपश्यतीत्यर्थः ॥ २४ ॥
17159
17160 भाविभूगोलकत्वेन बीजमाकृतिशाखिनः ।

17161 सर्वाधारात्मनस्तस्मात्संसारः प्रसरिष्यति ॥ २५ ॥
17162

17163 तस्योपयोगमाह - भावीति । भूगोलकत्वेन ब्रह्माण्डगोलकत्वेन
17164 ज्योतिषप्रसिद्धभूगोलकत्वेन वा । आकृतिर्मनुष्याद्याकारः ॥ २५ ॥
17165

17166 चिता विभाव्यमानानि तन्मात्राणि परस्परम् ।
17167 स्वयं परिणतान्यन्तरम्बुनीव निरन्तरम् ॥ २६ ॥
17168

17169 एवमुत्पन्नानां भूतानां मिश्रणेन ब्रह्माण्डाकारपरिणतिमाह -
17170 चितेति । पूर्वोक्तभूताहंभावापन्नया चिता ब्रह्माण्डाकारेण
17171 विभाव्यमानानि अन्तर्दशगुणोत्तरस्वावरणान्तरम्बुनि बुद्बुदानीव
17172 ब्रह्माण्डात्मना परिणतानीत्यर्थः ॥ २६ ॥
17173

17174 तथैतानि विमिश्राणि विविक्तानि पुनर्यथा ।
17175 न शुद्धान्युपलभ्यन्ते सर्वनाशान्तमेव हि ॥ २७ ॥
17176

17177 कियत्कालं तेषां विमिश्रभावेनावस्थानं तदाह - तथेति । एतानि भूतानि
17178 तथा विमिश्राणि यथा पुनः सर्वनाशपर्यन्तं न विविक्तानि
17179 शुद्धान्युपलभ्यन्ते ॥ २७ ॥
17180

17181 संवित्तिमात्ररूपाणि स्थितानि गगनोदरे ।
17182 भवन्ति वटजालानि यथा बीजकणान्तरे ॥ २८ ॥
17183

17184 ब्रह्मसत्तया प्राक् सत्तामेव स्थूलात्मनाविर्भाव इति सदृष्टान्तमाह -
17185 संवित्तीति । गगनमत्राव्याकृताकाशः ॥ २८ ॥
17186

17187 प्रसवं परिपश्यन्ति शतशाखं स्फुरन्ति च ।
17188 परमाण्वन्तरे भान्ति क्षणात्कल्पीभवन्ति च ॥ २९ ॥
17189

17190 ननु सूक्ष्मतमत्वादनवकाशेषु तन्मात्रेषु स्थूलावस्थितिर्विरुद्धा तत्राह ##-
17191 मायिकप्रसवादिदर्शनमात्रं तच्च परमाण्वाद्यन्तरेऽपि संभवति । स्वप्ने
17192 सूक्ष्मतमनाडीच्छिद्रेष्वपि विशालतमजगद्दर्शनादिति भावः ॥ २९ ॥
17193

17194 विवर्तमेव धावन्ति निर्विवर्तानि सन्ति च ।
17195 चिद्वेधितानि सर्वाणि क्षणात्पिण्डीभवन्ति च ॥ ३० ॥
17196

17197 तेषां स्थूलभावेऽपि न स्वरूपसौक्ष्म्यापायो विवर्तस्याविकारकत्वादित्याह ##-
17198 अत एव न विलम्ब इत्याह - क्षणादिति । परिणामपक्षे हि कूश्माणोद्पचय इव
17199 विलम्बः स्यात् ॥ ३० ॥
17200

17201 तन्मात्रगणमेतत्स्यात्सा संकल्पात्मिका चितिः ।
17202 वेदनात्रसरेण्वाभमनाकारैव पश्यति ॥ ३१ ॥
17203

17204 उक्तार्थस्मारणेनोपसंहरति - तन्मात्रेति । एतदुक्तप्रकारम् । छान्दसि
17205 क्लीबता ॥ ३१ ॥
17206

17207 बीजं जगत्सु ननु पञ्चकमात्रमेव
17208 बीजं पराव्यवहितस्थितिशक्तिराद्या ।
17209 बीजं तदेव भवतीति सदानुभूतं
17210 चिन्मात्रमेवमजमाद्यमतो जगच्छ्रीः ॥ ३२ ॥
17211

17212 इत्थं च यदुक्तं ब्रह्मैव जगदाकारं भवतीति तत्सिद्धमित्याह - बीजमिति

17213 | जगतस्तन्मात्रपञ्चकं बीजं कारणं तस्य च बीजं परेण परमात्मना
17214 अव्यवहिता साक्षात्संबधा जगत्स्थितिहेतुर्मायाशक्तिरेव | इत्यांच
17215 तत्परमात्मतत्त्वमेव मायाशक्त्या बीजं भवन्मायापगमे तदेव भवतीति
17216 प्रतिज्ञातार्थसिद्धिरित्यर्थः || ३२ ||
17217
17218 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे
17219 जगदुत्पत्तिवर्णनं नाम द्वादशः सर्गः || १२ ||
17220
17221 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
17222 जगदुत्पत्तिवर्णनं नाम द्वादशः सर्गः || १२ ||
17223
17224 प्। १५९)
17225
17226 त्रयोदशः सर्गः
17227
17228 श्रीवसिष्ठ उवाच |
17229
17230 परमे ब्रह्मणि स्फारे समे राम समस्थिते |
17231 अनुत्पन्ननभस्तेजस्तमःसत्ता चिदात्मनि || १ ||
17232
17233 सर्गोक्त्या प्राग्जगद्भावो वर्णितो ब्रह्मणोऽनृतः |
17234 जीवभावोऽधुना तस्य देहाद्याप्तिश्च वर्ण्यते ||
17235
17236 प्रलये सुषुप्ताविव विलयेन मायाशबलब्रह्मभावं प्राप्तानां
17237 जीवोपाधीनां पुनराविर्भावक्रमं सहेतुकं श्रीवसिष्ठ उवाच - परम
17238 इत्यादिपञ्चभिः | विकारकृतवैषम्यशून्यमायाशबलत्वात्समेऽसमे
17239 चाधिष्ठाने स्थिते अनुत्पन्नानां नभस्तेजस्तम आदीनां या कारणात्मना सत्ता
17240 तद्रूपे चिदात्मनि || १ ||
17241
17242 पूर्वं चेत्यत्वकलनं सतश्चेत्यांशचेतनात् |
17243 उदेति चित्तकलनं चितिशक्तित्वचेतनात् || २ ||
17244
17245 चितश्चेतयितृभावलक्षणजीवत्वस्य विषयकरणसिद्धिपूर्वकत्वात्तदध्यासं
17246 प्रथमं दर्शयति - पूर्वमिति | कलनं कल्पनम् | तत्र हेतुः
17247 सद्वस्तुनस्तत्प्रथा स्वभावतैव | एवमुत्तरत्रापि | यदेवाध्यस्यते
17248 तत्प्रथास्वभावतायाश्चिति पूर्वसिद्धत्वात्सर्वत्र निमित्तता || २ ||
17249
17250 ततो जीवत्वकलनं चेत्यसंयोगचेतनात् |
17251 ततोऽस्य [ततोऽहंभावकलनं इति पाठः] मायाकलनं
17252 चेत्यैकपरतावशात् || ३ ||
17253
17254 मायात्राहंभावः | अहंभावकलनम् इति पाठे तु स्पष्टम् | सा हि
17255 जीवभावस्य निरूढावस्था एकपरता तावन्मात्रोऽहमित्यभिमानः || ३ ||
17256
17257 ततो बुद्धित्वकलनमहन्तापरिणामतः |
17258 एतदेव मनस्तादिशब्दतन्मात्रकादिमत् || ४ ||
17259
17260 परिणामत उपचयतः | इत्थं धर्मसिद्धौ शब्दादिविषयमात्राणां
17261 वासनात्मना स्वान्तर्गतानां स्वप्न इव मननात्तद्घटितं मनोरूपमेतदेव
17262 संपद्यत इत्यर्थः || ४ ||
17263
17264 उच्छूनादन्यतन्मात्रभावनाद्भूतरूपिणः [भावनोद्भूत इति

17265 पाठः] |
17266 अयमित्थं महागुल्मो जगदादिर्विलोक्यते || ५ ||
17267
17268 तस्य स्थूलदेहभावापत्तिमाह - उच्छूनादिति | वासनात्मनां
17269 शब्दतन्मात्राणामन्यैः
17270 स्पर्शादितन्मात्रैर्भावनान्मेलनात्पञ्चीकृतभावेनोच्छूनादाध्यात्मिकम
17271 हाभूतरूपिणः | स्थूलदेहभावापन्नान्मनस इति यावत् || ५ ||
17272
17273 झटित्येवं क्रमेणेति स्वप्ने पुरमिवाकृतम् |
17274 महाकाशमहाटव्यामुद्भूयोद्भूय नश्यति || ६ ||
17275
17276 उक्तमुपसंहरति - झटितीत्यादिना | अकृतमनिच्छासंपन्नम् || ६ ||
17277
17278 जगत्करञ्जकुञ्जानां बीजमेतद्वापजम् |
17279 नापेक्षते किंचिदपि क्षितिवार्यनलादिकम् || ७ ||
17280
17281 एतच्चिदात्मकं पश्चात्किलोर्व्यादि करिष्यति |
17282 स्वं स्वप्नवित्पुरमिव चिन्मात्रामकमेव यत् || ८ ||
17283
17284 पश्चादुत्तरकाले | स्वप्नवित्स्वप्नद्रष्टा | स्वं स्वानुभूयमानम् | वस्तुतस्तु
17285 तदसङ्गमेवेत्याह - चिन्मात्रात्मकमेवेति | यच्चिन्मात्रात्मकं तत्
17286 यत्रतत्रस्थमपि जगदाद्यङ्कुरं मुञ्चत्येवेत्युत्तरेणान्वयः || ८ ||
17287
17288 जगदाद्यङ्कुरं यत्र तत्रस्थमपि मुञ्चति |
17289 जगतः पञ्चकं बीजं पञ्चकस्य चिदव्यया || ९ ||
17290
17291 पञ्चकं तन्मात्राणाम् || ९ ||
17292
17293 यद्बीजं तत्फलं विद्धि तस्माद्ब्रह्ममयं जगत् |
17294 एवमेष महाकाशे सर्गादौ पञ्चको गणः || १० ||
17295
17296 एवमित्यादेः सर्वस्योत्तरान्वयः || १० ||
17297
17298 चिच्छक्त्या स्वाङ्गभूतात्मा कल्पितोस्ति न वास्तवः |
17299 अनेनोच्छूनतामेत्य यदपीदं वितन्यते || ११ ||
17300
17301 चिच्छक्त्या चेत्यप्रथनशक्त्या स्वाङ्गभूतात्मा स्वशरीरमिव
17302 संपन्नस्वरूपः | अनेन पञ्चकगणेन | इदं स्थूलम् || ११ ||
17303
17304 तदप्याकाशरूपात्मकल्पनात्मनि सन्मयम् |
17305 क्वचिन्न नाम तत्सिद्धं यदसिद्धेन साध्यते || १२ ||
17306
17307 आकाशरूपमिव स्वकल्पनाधिष्ठानात्मनि स्थितत्वात्सन्मयं न स्वत इत्यर्थः |
17308 तदेवोपपादयति - क्वचिदिति || १२ ||
17309
17310 स्वरूपं यद्विकल्पात्म कथं तत्सत्यतामियात् |
17311 अथ चेत्पञ्चकं ब्रह्म ब्रह्मात्मकतया धिया || १३ ||
17312
17313 ननु पञ्चकगणस्य ब्रह्मण्यध्यस्तस्यास्तु ब्रह्ममात्रता तत्कार्यस्य तु सा
17314 कथं तत्राह - अथेति || १३ ||
17315
17316 तत्पञ्चकं विद्धि प्रौढो ब्रह्मैव त्रिजगत्क्रमः |

यथा स्फुरति सर्गादावेष पञ्चकसंभवः || १४ ||

तत्पञ्चकं तत्कार्यस्थूलभूतपञ्चकमपि चिद्ब्रह्मैव | हीति
कारणकार्ययोरेकत्वप्रसिद्धेर्हेतोरित्यर्थः | तथाच प्रौढो रूढजगत्क्रमो
ब्रह्मैवेति सिद्धमित्यर्थः | कथं तर्ह्यभिन्ने
कार्यकारणत्वव्यवहारस्तत्राह [कार्येति पदं क्वचिन्न लभ्यते] -
यथेति || १४ ||

तथैवाद्येह भूतत्वे याति कारणतां स्वयम् |
एवं न जायते किंचिज्जगज्जातं [जातं तु इति पाठः] न लक्ष्यते ||
१५ ||

भूतत्वे पौर्वकालिकत्वे | स्वयं औत्तरकालिकं स्वं प्रत्येवेति शेषः |
उपसंहरति - एवमिति || १५ ||

स्वप्नसंकल्पपुरवदसत्सदनुभूयते |
ब्रह्माकाशपराकाशे जीवाकाशत्वमात्मनि || १६ ||

तदुपाधिकजीवभावोऽप्यसन्नेवेति दर्शयन्नसतः सत्त्वानुभावसंभावनां
दृष्टान्तेनापनुदति - स्वप्नेति | ब्रह्माकाशरूपे पराकाशे
परमप्रकाशे आत्मनि जीवाकाशत्वं असत्सदिवानुभूयते || १६ ||

इति चित्यवदातात्मा पृथ्व्यादीनामसंभवात् |
इत्येष जीवः कथितो व्योम्नि खात्मा इवोदितः || १७ ||

अवदातात्मा प्रपश्यतीत्यध्याहृत्यान्वयः | वस्तुतः पृथ्व्यादीनां
परिच्छेदोपाधीनामसंभवाद्व्योम्नि
गन्धर्वनगरगृहघटादिपरिच्छिन्नः खादेव कल्पनया उदितः |
खात्मैवैष जीवः कथित इत्यर्थः || १७ ||

प्। १६०)

जीवाकाशस्त्विमं देहं यथा विन्दति तच्छृणु |
जीवाकाशः स्वमेवासौ तस्मिंस्तु परमेश्वरे || १८ ||

एवं सामान्याभिमानेन ब्रह्मणः समष्टिजीवभावमुक्त्वा
विशेषाभिमानेन व्यष्टतद्भावेन स्थूलदेहान्ततादात्म्यारोपक्रमं
प्रपञ्चयितुमारभते - जीवाकाश इत्यादिना | तत्रादौ भावनयैव
समष्ट्युपाधेर्व्यष्ट्यन्तःकरणाङ्कुरारम्भं दर्शयति - जीवाकाश
इत्यादिना तस्मिन्परमेश्वरे कल्पितः समष्टिजीवाकाशो विस्तृतमपि स्वं
अणुरल्पतरः स्फुलिङ्गवत्तेजःकणोऽस्मीति चिन्तया तथैवात्मानं
चेतत्यनुभवतीत्युत्तरेणान्वयः | एतदेवाभिप्रेत्याह श्रुतिः यथाऽग्नेः
क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्व एत आत्मानो
व्युच्चरन्ति इति || १८ ||

अणुतेजःकणोऽस्मीति स्वयं चेतति चिन्तया |
यत्तदेवोच्छूनमिव [उच्छून्यभावं इति पाठः]
भावयत्यात्मनाम्बरे || १९ ||

तस्याभावनोपचयादुपचयमाह - यदित्यादिना | यच्चेतति
तदेवोच्छूनमिव भावयति || १९ ||

17369 असदेव सदाकारं संकल्पेन्दुर्यथा न सन् |
17370 तमेव भावयन् द्रष्टृदृश्यरूपतया स्थितः ‖ २० ‖
17371
17372 यद्भावयति तत्संकल्पेन्दुर्यथा न सन् तथा असदेवेत्यर्थः |
17373 तद्भावनफलमाह - तमेवेति ‖ २० ‖
17374
17375 एक एव द्वितामेति स्वप्ने स्वमृतिबोधवत् |
17376 किंचित्स्थौल्यमिवादत्ते ततस्तारकतां विअन् ‖ २१ ‖
17377
17378 द्रष्टृदृश्यभावसंवलने तस्योपचयं दर्शयति - किंचिदिति |
17379 अणुतेजःकणभावमपहाय तारकासादृश्यं विदन् किंचित्स्थौल्यमादत्त इव
17380 | अयमेवास्य भूतमात्रासंवलितलिङ्गात्मभावः ‖ २१ ‖
17381
17382 यथाभावितमात्रार्थभावितात्द्विश्वरूपतः [भावित्वाद्यत्स्वरूपतः
17383 इति पाठः] |
17384 स एव स्वात्मा सततोऽप्ययं सोहमिति स्वयम् ‖ २२ ‖
17385
17386 अयं जीवस्ततस्तादृशवेदनात्सतारकाकार एव स्वात्मा आस बभूव | तत्र
17387 हेतुद्वयमाह - यथाभावितेति सोऽहमिति तद्भावाभिनयः ‖ २२ ‖
17388
17389 चित्तात्प्रत्ययमाधत्ते स्वप्ने स्वामिव पान्थताम् |
17390 तारकाकारमाकारं भाविदेहाभिधं तथा ‖ २३ ‖
17391
17392 अयं लिङ्गदेहप्रत्ययो भाविस्थूलदेहप्रत्ययश्च चित्तकल्पनावशादेवेत्याह
17393 - चित्तादिति | तारकाकारं प्रागुक्तलिङ्गाकारम् ‖ २३ ‖
17394
17395 भावयत्येति [भावयन्याति इति पाठः] तद्भावं चित्तं
17396 चेत्यार्थतामिव |
17397 परित्यज्यैव तद्वाह्यं ततस्तारककोटरे ‖ २४ ‖
17398
17399 तत्र दृष्टान्तश्चित्तं चेत्यार्थतां विषयाकारतामिवेति | वस्तुनः
17400 सर्वोपाधिवात्यस्यापि मोहात्तद्भावपरित्यागेनोपाध्यन्तर्भानं
17401 सदृष्टान्तमुपपादयंस्तस्य स्वप्नादिवासनामयसंसारमाह -
17402 परित्यज्यैवेत्यादिना | तारककोटरे उपाध्यन्तःकल्पिताकाशे ‖ २४ ‖
17403
17404 अन्तर्भाति बहिष्ठोऽपि पर्वतो मुकुरे यथा |
17405 कूपसंस्थो यथा देहः समुद्गकगतं वचः ‖ २५ ‖
17406
17407 यथा सर्वत्र व्यवहारसमर्थो देहः कूपसंस्थस्तन्मात्रव्यवहारी भाति |
17408 यथा वा पूराच्छ्रवणयोग्यमप्याक्रोशादिवचः समुद्गकगतः
17409 संपुटकावरुद्धमबहिःप्रसारि ‖ २५ ‖
17410
17411 स्वप्नसंकल्पयोः संविद्वेत्त्येतज्जिवकोऽणुके [वेत्त्येवं जीवक इति
17412 पाठः] |
17413 स्वरूपतारकान्तस्थो जीवोऽयं चेतति स्वयम् ‖ २६ ‖
17414
17415 यथा वा स्वप्नसंकल्पयोः संविद्देहान्तरेव स्वप्नादि पश्यति तथा अणुके
17416 प्रागुक्तस्फुलिङ्गसदृशोपाधौ स्वरूपतया कल्पिततारकान्तस्थो
17417 वासनामयदेहादिव्यवहारं चेततीत्यर्थः | चित्तं चेत्यार्थतामिवेति
17418 दृष्टान्तपक्षेऽपि परित्यज्येत्यादिसार्धश्लोकद्वयमेव योज्यम् |
17419 स्वप्नसंकल्पयोर्बहिष्ठोऽपि विषयस्तद्वाह्यरूपं परित्यज्यैव अन्तर्भाति यथा
17420 कूपजलप्रतिबिम्बितो देहो यथा वा गुहादिसंपुटगतं प्रतिध्वनिवचस्तथा

जीवक एतद्वासनामयं वेद्यं वेत्ति। शिष्टं प्राग्वत्॥ २६॥

तदेतद्बुद्धिचित्तादिज्ञानसत्तादिरूपकम्।
जीवाकाशः [जीवाकाशस्ततस्तत्रेति पाठः] स्वतस्तत्र
तारकाकाशकोशगम्॥ २७॥

तदेतद्वासनामयदेहादिव्यवहारदृशा निष्कर्षे
बुद्धिचित्तादिपरिणामत्वात्तत्तद्रूपकं परमार्थदृशा विमर्शे तु
ज्ञानसत्तानन्दरूपकमेव। तत्तत्स्थूलदेहभावनया तद्भावापन्नस्य
चक्षुरादिकल्पनया जाग्रद्व्यवहारसंसारं प्रपञ्चयति - जीवाकाश
इत्यादिना॥ २७॥

प्रेक्षेऽहमिति भावेन द्रष्टुं प्रसरतीव खे।
ततो रन्ध्रद्वयेनैव भाविबाह्याभिधं पुनः॥ २८॥

येन पश्यति तन्नेत्रयुगं नाम्ना भविष्यति।
येन स्पृशति सा वै त्वग्यच्छृणोति श्रुतिस्तु सा॥ २९॥

येन जिघ्रति तद्घ्राणं स स्वमात्मनि पश्यति।
तत्तस्य स्वदनं पश्चाद्रसना चोल्लसिष्यति॥ ३०॥

स्वदनं रसनेन्द्रियम्॥ ३०॥

स्पन्दते यत्स तद्वायुश्चेष्टा कर्मेन्द्रियव्रजम्।
रूपालोकमनस्कारजातमित्यपि भावयत्॥ ३१॥

यत्स्पन्दते तद्वायुः प्राणादिवृत्तिः॥ ३१॥

आतिवाहिकदेहात्मा तिष्ठत्यम्बरमम्बरे।
एवमुच्छूनतां तस्मिन्भावयंस्तेजसः [भाववत्तेजसः इति
पाठः] कणे॥ ३२॥

भावयत् अध्यस्यत् आस्ते ब्रह्म॥ ३२॥

असत्यां सत्यसंकाशां ब्रह्मास्ते जीवशब्दवत्।
इत्थं स जीवशब्दार्थः कलनाकुलतां गतः॥ ३३॥

आतिवाहिकदेहात्मा चित्तदेहाम्बराकृतिः।
स्वकल्पनान्त आकारमण्डं संस्थं प्रपश्यति॥ ३४॥

चित्तदेहाम्बरमेव स्थौल्येन स्थूलदेहाकृतिर्यस्य।
स्फुलिङ्गाकारादिबाह्यविषयान्तस्वकल्पनाकारं ब्रह्म तदन्ते संस्थं
आवरणादिसंस्थायुक्तमण्डं ब्रह्माण्डं प्रपश्यतीत्यर्थः॥ ३४॥

कश्चिज्जलगतं वेत्ति कश्चित्सम्राट्स्वरूपिणम्।
भाविब्रह्माण्डकलनां पश्यत्यनुभवत्यपि॥ ३५॥

तस्यैव जलान्तर्गतब्रह्माण्डशरीराहंभाववेदनं
तदन्तश्चतुर्मुखशरीराहंभाववेदनं चेति द्वैविध्यमाह - कश्चिदिति॥
३५॥

प्। १६१)

17473
17474 आत्मगर्भगृहं चित्ताद्यथासंकल्पमात्मनः ।
17475 देशकालक्रियाद्रव्यकल्पनावेदनं स तत् ॥ ३६ ॥
17476
17477 आत्मन आत्मत्वेनाभिमताच्चित्तादेव निमित्ताद्यथासंकल्पमात्मनो
17478 गर्भगृहवासनिमित्तत्वाद्गर्भगृहं देशादिकल्पनावेदनं
17479 भावयन्नामादिनिर्मातिश्वर एव तत्तच्छब्दैस्तांस्तानर्थानात्मानं च
17480 बद्गातीत्युत्तरेणान्वयः ॥ ३६ ॥
17481
17482 भावयञ्छब्दनिर्माता शब्दैर्बध्नाति कल्पितैः ।
17483 आतिवाहिकदेहोऽसावित्यसत्यजगद्भ्रमे ॥ ३७ ॥
17484
17485 असत्य एव कचति स्वप्ने खोड्डयनं यथा ।
17486 इत्यनुत्पन्न एवासौ स्वयंभुः स्वयमुत्थितः ॥ ३८ ॥
17487
17488 उपपादिताया उत्पत्त्याख्यायिकायाः प्रस्तुतोपयोगमाह - इत्यनुत्पन्न इति ॥ ३८
17489 । ।
17490
17491 आतिवाहिकदेहात्मा प्रभुराद्यः प्रजापतिः ।
17492 एतस्मिन्नपि संपन्ने ब्रह्माण्डाकारिणि भ्रमे ॥ ३९ ॥
17493
17494 न किंचिदपि संपन्नं न च जातं न दृश्यते ।
17495 तद्ब्रह्माकाशमाकाशमेव स्थितमनन्तकम् ॥ ४० ॥
17496
17497 संकल्पनगराकारमेतत्सदपि नैव सत् ।
17498 अनिर्मितमरागं च एतद्वै [एतत् खे चित्रं इति पाठः]
17499 चित्रमुत्थितम् ॥ ४१ ॥
17500
17501 अरागं रङ्गद्रव्यशून्यम् ॥ ४१ ॥
17502
17503 अकृतं चानुभूतं च न सत्यं सत्यवत्स्थितम् ।
17504 महाकल्पे विमुक्तत्वाद्ब्रह्मादीनामसंशयम् ॥ ४२ ॥
17505
17506 बाह्यसामग्र्या अनिर्मितमान्तरप्रयत्नेन त्वकृतमिति भेदः । ननु
17507 तर्ह्यदृष्टसंस्कारादिसामग्रीजन्यमेव जगत्किं न स्यात्तत्राह -
17508 महाकल्पे इति । अयं भावः । ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे ।
17509 परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥
17510 यावदधिकारमवस्थितिराधिकारिकाणाम् इत्यादिस्मृतिसूत्रोपदर्शितन्यायेन
17511 महाकल्पान्ते प्राक्तनानां ब्रह्मादीनां मुक्तत्वावधारणान्न
17512 तदीयादृष्टसंस्कारेणाग्रिमजगन्निर्माणम् । यस्तूपासकः कल्पादौ
17513 हिरण्यगर्भादिपदं लभते न तेन कदापि प्राग्विचित्रं जगत्
17514 सृष्टमित्यनुभवाभावे तत्संस्कारासंभवाज्जगतो न संकारजत्वमिति
17515 स्वप्नेन्द्रजालवदकस्मादेवाविद्ययैवोद्भूतत्वान्मिथ्यात्वमेवेति ॥ ४२ ॥
17516
17517 स्मृतिर्न प्राक्तनी काचित्कारणं वा स्वयंभुवः ।
17518 तेन यादृक्स्वयंभूः स्यात्तादृक्तज्जमिदं स्मृतम् ॥ ४३ ॥
17519
17520 अनाद्यनुभवस्त्वित्थं योऽत्रास्ति [योऽवास्त्यवनिकादिके इति पाठः]
17521 वनिकादिके ।
17522 स्वप्नानुभूतं पृथ्व्यादि प्रबोधे यादृशं भवेत् ॥ ४४ ॥
17523
17524 ननु तर्ह्यनादिसाक्ष्यनुभवादेव तत्संस्कारोऽस्तु तज्जश्च प्रपञ्चोऽस्तु तत्राह

- अनादीति। अवनिकादिके पृथ्व्यादिसर्गविषये। यादृशं तादृशं
भवेदिति शेषः। साक्षिवेद्यस्वप्नादेर्मिथ्यात्वदृष्टेस्तज्जनितसंस्कारजस्यापि
मिथ्यात्वमेव स्यादिति भावः॥ ४४॥

स्मृतः स व्योममात्रात्मा सर्वदैव स्मृतं जगत्।
यत्र यत्र यथा तोये द्रवत्वं नाम भिद्यते॥ ४५॥

यादृक्स्वयंभूस्तादृक्तज्जमिति यदुक्तं तद्विवृणोति - स्मृत इति। स
स्वयंभूः स्मृत इव स्मृतः स्मर्यमाणातीतपदार्थवद्व्योममात्रात्मा
शून्यमात्रस्वभावस्तथा जगदपीत्यर्थः। यत्र यत्र देशे काले च यथा तोये
द्रवत्वं न भिद्यत इत्यग्रिमनञोऽत्रापि संबन्धः। नामेति प्रसिद्धौ॥ ४५॥

तत्र तत्र तथा नान्यः सर्गोऽस्ति परमात्मनि।
सृष्टिरेवमियं प्रौढा सम एव त्वयं स्थितः॥ ४६॥

प्रौढा भाति। परमार्थतस्तु समो जगद्वैषम्यशून्य एव स्थितः॥ ४६॥

भात्येवं नाम ब्रह्माण्डं व्योमात्मेवातिनिर्मलम्।
दृश्यमेवमिदं शान्तं स्वात्मनिर्मितविभ्रमम्॥ ४७॥

उक्तमेव विवृणोति - भातीत्यादिना॥ ४७॥

निराधारं निराधेयमद्वैतं चैक्यवर्जितम्।
जगत्संविदि जातायामपि जातं न किंचन॥ ४८॥

द्वैतव्यवहाराभावे व्यावर्त्याभावादेकत्वसंख्ययापि वर्जितम्। संविदि
भ्रान्तौ॥ ४८॥

परमाकाशमाशून्यमच्छमेव व्यवस्थितम्।
सर्वसंसारता नास्ति यदेव तदवस्थितम्॥ ४९॥

सर्वः संसारो यस्मिंस्तद्भावो नास्ति॥ ४९॥

नाधेयं तत्र नाधारो न दृश्यं न च द्रष्टृता।
ब्रह्माण्डं नास्ति न ब्रह्मा न च वैतण्डिका क्वचित्॥ ५०॥

वैतण्डिका मोहमदान्धजनवेतण्डघटा। जगद्विमर्शे
स्थाप्यपक्षाभावात्प्रसक्ता वादिनो वैतण्डिकता वा॥ ५०॥

न जगन्नापि जगती शान्तमेवाखिलं स्थितम्।
ब्रह्मैव कचति स्वच्छमित्थमात्मात्मनात्मनि॥ ५१॥

चित्त्वाद्द्रवत्वात्सलिलमिवावर्ततयात्मनि।
असदेवेदमाभाति सदिवेहानुभूयते॥ ५२॥

विनश्यत्यसदेवान्ते स्वप्ने स्वमरणं यथा।
अथवा स्वस्वरूपत्वात्सदेवेदमनामयम्।
अखण्डितमनाद्यन्तं ज्ञानमात्राम्बरोदरम्॥ ५३॥

इत्थमपवाददृष्ट्या स्वतो जगतः शून्यत्वमुक्त्वा अधिष्ठानदृष्ट्या
त्वाह - अथवेति॥ ५३॥

17577 आकाश एव परमे प्रथमः प्रजेशो
17578 नित्यं स्वयं कचति शून्यतया समो यः ।
17579 स ह्यातिवाहिकवपुर्नतु भूतरूपी
17580 पृथ्व्यादि तेन न सदस्ति यथा [तथा न इति पाठः] न जातम् ॥ ५४ ॥
17581
17582 सिंहावलोकनन्यायेन प्रागुक्तं सर्वमनुसंधायोपसंहरति - आकाश
17583 एवेति । परमे ब्रह्मणि प्रजेशः स्वयंभूराकाशः शून्यमेव । यः समः
17584 परमात्मा स एव शून्यप्रजेशाद्यात्मना कचति प्रथते । हि यस्मात्स प्रजेश
17585 आतिवाहिकवपुर्मनोमयशरीरो न पाञ्चभौतिकः । तेन
17586 तत्संकल्पमात्ररूपत्वेन पृथ्व्यादि न सत् सत्यम् । यथा न जातमनुत्पन्नं
17587 शशशृङ्गादि नास्ति तद्वदित्यर्थः । यथा न जातं नास्ति च तथोपवर्णितमिति
17588 शेषो वा ॥ ५४ ॥
17589
17590 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे
17591 स्वयंभूत्पत्तिवर्णनं नाम त्रयोदशः सर्गः ॥ १३ ॥
17592
17593 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
17594 स्वयंभूत्पत्तिवर्णनं नाम त्रयोदशः सर्गः ॥ १३ ॥
17595
17596 प्। १६२)
17597
17598 श्रीवसिष्ठ उवाच ।
17599
17600 इत्थं जगदहंतादिदृश्यजातं न किंचन ।
17601 अजातत्वाच्च नास्त्येव यच्चास्ति परमेव तत् ॥ १ ॥
17602
17603 प्राग्वर्णिते जीवभावे परिच्छेदादिसंशयान् ।
17604 युक्त्या निरस्य ब्रह्मैक्यं शिष्टमत्रानुवर्ण्यते ॥ १ ॥
17605
17606 तत्रादौ समष्टिविराड्जीवपरिच्छेदनिरासाय वृत्तानुवादेन भूमिकां रचयति
17607 - इत्थमित्यादिना ॥ १ ॥
17608
17609 परमाकाशमेवादौ जीवतां चेतति स्वयम् ।
17610 निःस्पन्दाम्भोधिकुहरे सलिलं स्पन्दतामिव ॥ २ ॥
17611
17612 तदनुगुणां विराड् [विराड्विग्रहकल्पनां इति पाठः] देहकल्पनां
17613 विवक्षुस्तदर्थं समष्टिजीवभावसिद्धिमाह - परमेति ॥ २ ॥
17614
17615 आकाशरूपमजहदेवं वेत्तीव हृद्यताम् ।
17616 स्वप्नसंकल्पशलादाविव चिद्वृत्तिरान्तरी ॥ ३ ॥
17617
17618 आकाशरूपमजहदित्येतत्पूर्वान्वयि । आन्तरी संकल्पात्मिका चिद्वृत्तिरेवं
17619 वक्ष्यमाणविराडुपाधिविषयां हृद्यतां आत्मताभ्रान्त्या प्रेमास्पदतां
17620 वेत्तीव ॥ ३ ॥
17621
17622 पृथ्व्यादिरहितो देहो यो विराडात्मको महान् ।
17623 आतिवाहिक एवासौ चिन्मात्राच्छनभोमयः ॥ ४ ॥
17624
17625 संकल्पजत्वोक्तेः फलं दर्शयति - पृथ्व्यादीति ॥ ४ ॥
17626
17627 अक्षयः स्वप्नशैलाभः स्थिरस्वप्नपुरोपमः ।
17628 चित्रक्त्स्थिरचित्तस्थचित्रसैन्यसमाकृतिः ॥ ५ ॥

17629
17630 क्षयो निवासस्तद्रहितः। स्थिरं चिरस्थायि स्वप्नपुरं यदि स्यात्तदा तदुपमः।
17631 चित्रकृतः स्थिरं निश्चलं यदि चित्रं स्यात्तदा
17632 तद्वासनात्मकचित्रसैन्यसमाकृतिः ॥ ५ ॥
17633
17634 अनिखातमहास्तम्भपुत्रिकौघसमोपमः।
17635 ब्रह्माकाशेऽनिखातात्मा सुस्तम्भे शालभञ्जिका ॥ ६ ॥
17636
17637 अनिखाता अनुत्कीर्णा ये महास्तम्भपुत्रिकौघास्तत्समाश्च येऽन्ये ते
17638 सर्वेऽप्युपमा यस्य। ब्रह्माकाशलक्षणे सुस्तम्भे अनिखातात्मा
17639 अनुत्कीर्णस्वरूपा शालभञ्जिकेति रूपकम् ॥ ६ ॥
17640
17641 आद्यः प्रजापतिः पूर्वं स्वयंभूरिति विश्रुतः।
17642 प्राकनानां स्वकार्याणामभावादप्यकारणः ॥ ७ ॥
17643
17644 आधिभौतिकं रूपं मिथ्येत्युक्त्वा तस्याधिदैविकमपि तत्तथैवेत्याह -
17645 आद्य इत्यादिना। तत्र हेतून्प्राग्वर्णितानेव स्मारयति -
17646 प्राक्तनानामित्यादिसार्धेन। स्वकार्याणां स्वकर्मणाम् ॥ ७ ॥
17647
17648 महाप्रलयपर्यन्तेष्वाद्यकालपितामहाः [ष्वाद्या किल इति पाठः]
17649 ।
17650 मुच्यन्ते सर्व एवातः प्राक्तनं कर्म तेषु किम् ॥ ८ ॥
17651
17652 सोऽकुड्य एव कुड्यात्मा दृश्यादृश्यः स्वयंस्थितः।
17653 न च दृश्यं न च द्रष्टा न स्रष्टा सर्वमेव च ॥ ९ ॥
17654
17655 अकुड्ये दर्पणादौ प्रतिबिम्बकुड्यात्मेव दृश्योऽप्यसत्त्वान्न दर्शनार्हः।
17656 असत्त्वमुपपादयितुमसङ्गनिर्विकारचिति द्रष्टा दृश्यं दर्शनं स्रष्टा
17657 सृष्टिः सर्जनं भोक्ता भोग्यं भोग इति त्रिपुटीत्रयासंभवमाह - न
17658 चेति। सर्वमित्यनुक्तषट्कपरिग्रहः ॥ ९ ॥
17659
17660 प्रतिशब्दपदार्थानां सर्वेषामेष एव सः।
17661 तस्मादुदेति जीवाली दीपाली दीपकादिव ॥ १० ॥
17662
17663 एवं सर्वनिषेधेऽपि न प्रतिशब्दार्थानां शून्यता। यस्मादेष प्रत्यगात्मैव
17664 प्रतिशब्दपदार्थानां स आत्मा स्थितः ॥ १० ॥
17665
17666 संकल्प एव संकल्पात्किलेति क्ष्मादिवर्जितः।
17667 आदिमादिव निःशून्यः स्वप्नात्स्वप्नान्तरं यथा ॥ ११ ॥
17668
17669 घनसंकल्पात्मकविराट्कार्यत्वाद्व्यष्टिदेहिनामपि संकल्पमात्रमयत्वं न
17670 सत्यपृथ्व्यादिघटितत्वमित्याह - संकल्प इति। यथा आदिमात्
17671 हिरण्यगर्भान्मिथ्यात्वान्नितरां शून्यो विराडुत्पन्नस्तद्वद्विराजो
17672 व्यष्ट्यात्मापीत्यर्थः [दृश्यात्मापि इति पाठः] ॥ ११ ॥
17673
17674 अस्मादेकप्रतिस्पन्दाज्जीवाः संप्रसरन्ति ये।
17675 सहकारिकारणानामभावाच्च स एव ते ॥ १२ ॥
17676
17677 एकस्वभावत्वेनैव व्यष्टिसमष्ट्योरेकत्वं प्रसाध्य तेन ब्रह्मैक्यपरिशेषः
17678 सिद्ध इत्याह - अस्मादित्यादिना। ये व्यष्टिजीवाः
17679 सहकारिकारणानामभावादेकोऽसहाय एव परिस्पन्दते
17680 तथाविधादस्माद्विराजः प्रसरन्ति ते स एव नान्ये।

17681 तथाविधाद्वृक्षात्प्रसृतानां शाखादीनां ततो भेदादर्शनादिति भावः
17682 ॥ १२ ॥
17683
17684 सहकारिकारणानामभावे कार्यकारणम् ।
17685 एकमेतदतो नान्यः परस्मात्सर्गविभ्रमः ॥ १३ ॥
17686
17687 ब्रह्मवाद्यो विराडात्मा विराडात्मेव सर्गता ।
17688 जीवाकाशः स एवेत्थं स्थितः पृथ्व्याद्यसद्यतः ॥ १४ ॥
17689
17690 श्रीराम उवाच ।
17691
17692 किं स्यात्परिमितो जीवो राशिराहो अनन्तकः ।
17693 आहोस्विदस्त्यनन्तात्मा जीवपिण्डोऽचलोपमः ॥ १५ ॥
17694
17695 व्यष्टिसमष्टितन्मूलानामेकत्वे व्यष्टिसमष्ट्योरवास्तवत्वं तन्मूलस्यैव
17696 वस्तुतेति कुतः मूलसमष्ट्योरवास्तवत्वं व्यष्टिविभागस्यैव
17697 प्रत्यक्षादिप्रमाणसिद्धस्य वास्तवत्वं किं न स्यात्सेनासमाजादौ
17698 समष्ट्यपगमेऽपि व्यष्टिपरिशेषेण तस्याः सत्यत्वक्लृप्तेरिति मन्यमानः
17699 श्रीराम उवाच - किं स्यादिति । व्यष्टिमात्रसत्यत्वे व्यष्टिजीव
17700 एवैकबुद्धिपरिमितत्वादेकदेशावस्थितेर्वा
17701 परस्परसंश्लेषेणैकपिण्डात्मतापत्तेर्वा कल्पितसमष्ट्यात्मा संभाव्यत इति
17702 भावः ॥ १५ ॥
17703
17704 धाराः पयोमुच इव शीकरा इव वारिधेः ।
17705 कणास्तप्तायस इव कस्मान्निर्यान्ति जीवकाः ॥ १६ ॥
17706
17707 अवश्यं चैवमभ्युपेयमन्यथा वृष्टिवारिधि जलकणवद्विस्फुलिङ्गवद्वा
17708 समष्टेरुद्भवे अनित्यत्वापत्त्या कृतहानाकृताभ्यागमः
17709 स्यादित्याशयेनाह - धारा इति । कस्मादिति । यस्मान्निर्यान्ति तत्र
17710 संभावयितुं शक्यमित्यर्थः ॥ १६ ॥
17711
17712 प। १६३)
17713
17714 इति मे भगवन्ब्रूहि जीवजालविनिर्णयम् ।
17715 ज्ञातमेतन्मया प्रायस्तदेव प्रकटीकुरु ॥ १७ ॥
17716
17717 विशेषजिज्ञासया वैपरीत्यापादनं न दुर्मेधस्तया
17718 त्वदाशयानवबोधादित्याह - ज्ञातमिति ॥ १७ ॥
17719
17720 श्रीवसिष्ठ उवाच ।
17721
17722 एक एव न जीवोऽस्ति राशीनां संभवः कुतः ।
17723 शशशृङ्गं समुड्डीय प्रयातीवे हि ते वचः ॥ १८ ॥
17724
17725 प्रयोजनवद्ब्रह्मात्मैकत्वसिद्धये एकाधिष्ठाना अनेककल्पना लघीयसीति
17726 समष्टिजीवं परिकल्प्य तदुपहितव्यष्टिकल्पना मयोक्ता न
17727 व्यष्टिसमष्ट्योरन्यतरसत्यत्वाय जीवोत्पत्त्यादिप्रतिपादनाय वा तत्र च न
17728 त्वदाशङ्काप्रसर इत्याशयेन श्रीवसिष्ठ उवाच - एक इति । अप्यर्थे
17729 एवकारः ॥ १८ ॥
17730
17731 न जीवोऽस्ति न जीवानां राशयः सन्ति राघव ।
17732 न चैकः पर्वतप्रख्यो जीवपिण्डोऽस्ति कश्चन ॥ १९ ॥

17733
17734 जीवशब्दार्थकलनाः समस्तकलनान्विताः।
17735 नेह काश्चन सन्तीति निश्चयोऽस्तु तवाचलः॥ २०॥
17736
17737 कलनाः प्रतिभासाः॥ २०॥
17738
17739 शुद्धचिन्मात्रममलं ब्रह्मास्तीह हि सर्वगम्।
17740 तद्यथा सर्वशक्तित्वाद्विन्दते याः स्वयं कलाः॥ २१॥
17741
17742 कलाः कल्पनाकौशलानि विन्दते लभते। अनुसंधत इति यावत्॥ २१॥
17743
17744 चिन्मात्रानुक्रमेणैव संप्रफुल्ललतामिव।
17745 ननु मूर्तामूर्तां वा तामेवाशु प्रपश्यति॥ २२॥
17746
17747 तत्तत्संकल्पवृत्तिक्रमानुसारिणां चितो
17748 मात्राणामाभासानामनुप्रवेशेनैव निमित्तेन तामेव कलां
17749 कूर्तामूर्तस्वरूपेणाविर्भूतां प्रपश्यति। यथा लताक्रमेण स्वां
17750 कोरकितामथ संप्रफुल्लतां च पश्यति तद्वत्॥ २२॥
17751
17752 जीवो बुद्धिः क्रियास्पन्दो मनोद्वित्वैक्यमित्यपि।
17753 स्वसत्तां प्रकचन्तीं तां नियोजयति वेदने॥ २३॥
17754
17755 दर्शनप्राकरमेव विषयप्रपञ्चनेन विशदयति - जीव इति। तद्ब्रह्मैव
17756 वेदने नियोजयति। विषयीकरोतीति यावत्॥ २३॥
17757
17758 साऽबुद्धैव भवत्येवं भवेद्ब्रह्मैव बोधतः [बोधिता इति
17759 पाठः]।
17760 अबोधः प्रेक्षया याति नाशं न तु प्रबुध्यते॥ २४॥
17761
17762 तथा प्रकचनं चास्याविद्ययैव तदपगमे तु
17763 निर्विक्षेपस्वरूपमात्रावस्थितिरित्याह - सेति। अबुद्धा
17764 अज्ञानावृतैवैवमुक्तरूपा भवति। प्रेक्षयात्मप्रबोधेन। प्रबोध एव
17765 दुर्लभ इत्याह - नत्विति॥ २४॥
17766
17767 यथान्धकारो दीपेन प्रेक्ष्यमाणः प्रणश्यति।
17768 न चास्य ज्ञायते तत्त्वमबोधस्यैवमेव हि॥ २५॥
17769
17770 निवर्तितस्याबोधस्य तर्हि किमात्मना परिशेषः। न तावद्बोधात्मना तस्य
17771 तदकरणत्वाद्विरोधाच्च। नाप्यन्यात्मनान्यपरिशेषादित्याशङ्क्याह -
17772 यथेति॥ २५॥
17773
17774 एवं ब्रह्मैव जीवात्मा निर्विभागो निरन्तरः।
17775 सर्वशक्तिरनाद्यन्तो महाचित्साररूपवान्॥ २६॥
17776
17777 उपपादितमुपसंहरति - एवमिति। चेदेव सारोऽबाध्यांशस्तेनैव
17778 परमार्थरूपेण रूपवान्॥ २६॥
17779
17780 सर्वानणुतया त्वस्य न क्वचिद्भेदकल्पना।
17781 विद्यते या हि कलना सा तदेवानुभूतितः॥ २७॥
17782
17783 सर्वतोऽप्यनणुतया अपरिच्छिन्नतया विषयभेदापगमे तत्कलनभेदोऽपि
17784 [अपीति क्वचिन्न पठ्यते] वनच्छेदे वनातपभेद इवापगत इति

ब्रह्ममात्रपरिशेष इत्याह - विद्यत इति ॥ २७ ॥

श्रीराम उवाच ।

एवमेतत्कथं ब्रह्मन्नेकजीवेच्छयाखिलाः ।
जगज्जीवा न युज्यन्ते महाजीवैकतावशात् ॥ २८ ॥

उक्तमभ्युपगम्य श्रीरामः प्रागुक्ते व्यष्टिसमष्टिजीवयोरभेदे
व्यष्टिजीवेच्छादेरपि समष्टिधर्मत्वेनामोघत्वापत्त्या
भोगमोक्षाव्यवस्थां शङ्कते - एवमिति ।
एतत्प्राग्वर्णितमेवमेवेत्यभ्युपगमः । जगज्जीवा अन्ये सर्वे जीवाः ॥ २८ ॥

श्रीवसिष्ठ उवाच ।

महाजीवात्म तद्ब्रह्म सर्वशक्तिमयात्मकम् ।
स्थितं तथेच्छमेवेह निर्विभागं निरन्तरम् ॥ २९ ॥

ब्रह्म प्रथमं सत्यसंकल्पसमष्टिजीवभावापन्नं
सत्स्वसंकल्पाधीनवृत्तिव्यष्टिजीवभावमापद्यते । तत्र
पूर्वसंकल्पविरुद्धेऽर्थे न व्यष्टीनां सत्यसंकल्पतासिद्धिरिति परिहरन्
श्रीवसिष्ठ उवाच - महाजीवेति । यथा जगद्व्यवस्था सिद्ध्यति तथेच्छं
अहमेव सर्वदा सर्वेषु सत्यसंकल्पः स्यामितीच्छावदिति यावत् । निर्विभागं
व्यष्टिविघागात्पूर्वं तच्छून्यम् । निरन्तरमित्युत्तरान्वयि ॥ २९ ॥

यदेवेच्छति तत्तस्य भवत्याशु महात्मनः ।
पूर्वं तेनेष्टमिच्छादि ततो द्वित्वमुदेति यत् ॥ ३० ॥

इच्छा सत्यसंकल्पः । आदिपदात्तेनेतरेच्छाप्रतिरोधः । द्वित्वं व्यष्टिविभागः
॥ ३० ॥

पश्चाद्द्वित्वविभक्तानां स्वशक्तीनां प्रकल्पितः ।
अनेनेत्थं हि भवतीत्येवं तेन क्रियाक्रमः ॥ ३१ ॥

स्वशक्तीनां स्वांशजीवानाम् । अनेन दण्डचक्रादिबाह्योपकरणेनेत्थं
भ्रमणादिना घटादि भवतीति क्रियाक्रमो न संकल्पमात्रादित्यर्थः ॥ ३१ ॥

तं विनानुदये त्वासां प्रधानेच्छैव रोहति ।
शक्त्या ह्यजातया ब्राह्मा नियमोऽयं प्रकल्पितः ॥ ३२ ॥

ननु तर्हि कथमन्येषामपि महर्षीणां क्रियाक्रमं विनापि संकल्पादेव
कार्यदर्शनं तत्राह - तमिति । एवं तं क्रियाक्रमं विना कार्यानुदये
नियते सति यत्कचिदासां महर्ष्यादिव्यष्टिशक्तीनां क्रियाक्रमं विना इच्छा
रोहति तत्प्रधानस्य समष्टेरिच्छैव रोहति । अस्यायं संकल्पः सिद्ध्यत्विति
प्रधानस्यैव तत्रेच्छा कल्प्यत इत्यर्थः ॥ ३२ ॥

यस्या जीवाभिधानायाः शक्त्यपेक्षा फलत्यसौ ।
प्रधानशक्तिनियमानुष्ठानेन विना न तु ॥ ३३ ॥

उक्तार्थमेव स्पष्टयति - यस्या इति । असौ फलति ॥ ३३ ॥

प्। १६४)

17837 प्रधानशक्तिनियमः सुप्रतिष्ठो न [भवेद्भवेत् इति पाठः]
17838 चेद्भवेत् ।
17839 तत्फलं शक्त्यधीनत्वान्नेहितानां क्वचिद्भवेत् ॥ ३४ ॥
17840
17841 क्रियाक्रमस्यापि फलसिद्धिः प्रधानसंकल्पाधीनैवेत्याह - प्रधानेति ।
17842 सुप्रतिष्ठः सम्यक्फलसिद्ध्यनुगुणो यदि भवेत्तदा ईहितानां
17843 कार्यादिचेष्टानामपि फलं न भवेदिति संबन्धः ॥ ३४ ॥
17844
17845 एवं ब्रह्म महाजीवो विद्यतेऽन्तादिवर्जितः ।
17846 जीवकोटि महाकोटि भवत्यथ न किंचन ॥ ३५ ॥
17847
17848 एवंच निष्कर्षे ब्रह्मैव महाजीवः स एव व्यष्टिसमष्टिकोटिद्वयं भवतीति
17849 फलितमित्युपसंहरति - एवमिति ॥ ३५ ॥
17850
17851 चेत्यसंवेदनाज्जीवो भवत्यायाति संसृतिम् ।
17852 तदसंवेदनाद्रूपं समायाति समं पुनः ॥ ३६ ॥
17853
17854 विस्तरोक्तं बोधसौकर्याय संक्षिप्य दर्शयति - चेत्येति । सममविषमं
17855 ब्रह्मस्वरूपम् ॥ ३६ ॥
17856
17857 एवं कनिष्ठजीवानां ज्येष्ठजीवक्रमाक्रमैः ।
17858 समुदेत्यात्मजीवत्वं ताम्राणामिव हेमता ॥ ३७ ॥
17859
17860 ब्रह्मभावो जीवानामुपासनेन समष्टिभावप्राप्तिक्रमेण वा अत्रैव ज्ञानेन
17861 साक्षाद्वा समुदेतीत्याह - एवमिति । आत्मजीवत्वं
17862 प्रागुक्तब्रह्मभावमहाजीवत्वम् । यथा ताम्राणां हेमता रसौषधैः
17863 पाकक्रमेण वा स्पर्शसंयोगे अक्रमेण वा भवति तद्वत् ॥ ३७ ॥
17864
17865 अत्रान्तरे महाकाश इत्थमेष गणोऽप्यसन् ।
17866 स्वात्मैव सदिवोदेति चिच्चमत्करणात्मकः ॥ ३८ ॥
17867
17868 जीवजगद्भावौ विमर्शे चिच्चमत्कारमात्रं न वस्त्वन्तरमित्याह - अत्रेति ।
17869 आन्तरे प्रत्यग्रूपे महाकाशे ॥ ३८ ॥
17870
17871 स्वयमेव चमत्कारो यः समापद्यते चितः ।
17872 भविष्यन्नामदेहादि तदहंभावनं विदुः ॥ ३९ ॥
17873
17874 चितो यस्माच्चिदालेहस्तन्मयत्वादनन्तकः ।
17875 स एष भुवनाभोग इति तस्यां प्रबिम्बति ॥ ४० ॥
17876
17877 कोऽसौ चिच्चमत्कारस्तमाह - चित इति ।
17878 जगत्संस्कारसंस्कृतमायाप्रतिफलनेन तदैकरस्येन स्वात्मा
17879 स्वादश्चिदालेहः तस्यामात्मचिति प्रबिम्बति स्फुरति ॥ ४० ॥
17880
17881 परिणामविकारादिशब्दैः सैव चिदव्यया ।
17882 तादृग्रूपादभेद्यापि स्वशक्त्यैव विबुध्यते ॥ ४१ ॥
17883
17884 सा चिदालीढा चिद्वास्तवचिद्रूपाद्भेत्तुमशक्यापि परिणामादिशब्दैर्भिन्नेव
17885 विबुध्यते ॥ ४१ ॥
17886
17887 अविच्छिन्नविलासात्म स्वतो यत्स्वदनं चितः ।
17888 चेत्यस्य च प्रकाशस्य जगदित्येव तत्स्थितम् ॥ ४२ ॥

17889
17890 चितस्तदधीनप्रकाशस्य चेत्यस्य च स्वतः स्वाभाविकं यदविच्छिन्नविलासात्म
17891 अविविक्तस्वभावापन्नं स्वदनं तदेव जगदिति भ्रान्त्या स्थितमित्यर्थः ॥ ४२ ॥
17892
17893 आकाशादपि सूक्ष्मैषा या शक्तिर्विंतता चितः ।
17894 सा स्वभावत एवैतामहंतां परिपश्यति ॥ ४३ ॥
17895
17896 तत्राप्यहंतादर्शनं पूर्वं तत्कृतं च
17897 परिच्छिन्नजगद्रूपदर्शनमित्याह - आकाशादिति द्वाभ्याम् ॥ ४३ ॥
17898
17899 आत्मन्यात्मात्मनैवास्या यत्प्रस्फुरति वारिवत् ।
17900 जगदन्तमहंताणुं तदैषा संप्रपश्यति ॥ ४४ ॥
17901
17902 बहिर्बहिः स्थौल्योत्कर्षणपरंपरायां जगद्ब्रह्माणोऽन्ते यस्य
17903 तथाविधमहंताणुम् ॥ ४४ ॥
17904
17905 चमत्कारकरी चारु यच्चमत्कुरुते चितिः ।
17906 स्वयं स्वात्मनि तस्यैव जगन्नाम कृतं ततः ॥ ४५ ॥
17907
17908 तथाच चिच्चमत्कृतेरेव जगदिति नामकरणं न जगत्पृथगस्तीति
17909 फलितमित्याह - चमत्कारेति ॥ ४५ ॥
17910
17911 चितश्चेत्यमहंकारः सैव राघव कल्पना ।
17912 तन्मात्रादि चिदेवातो द्वित्वैकत्वे क्व संस्थिते ॥ ४६ ॥
17913
17914 चिदधीनमहंकारकल्पनं तदधीनं तन्मात्रादिजगत्कल्पनमिति स्थिते
17915 यदधीनमन्यकल्पनं तदेव परिशिष्टमित्याह - चित इति ॥ ४६ ॥
17916
17917 जीवहेत्वादिसंत्यागे त्वं चाहं चेति संत्यज ।
17918 शेषः सदसतोर्मध्ये भवत्यर्थात्मको भवेत् ॥ ४७ ॥
17919
17920 सदसतोः सत्यानृतयोः कल्पनयोर्मध्ये त्वं चाहं चेति
17921 चेतनपरिच्छेदकल्पनैव दुस्त्यजा तत्त्यागे कृते शेषः स्वत एव
17922 विकल्पकाभावात्सन्मात्ररूपः संपद्यत इत्याह - जीवेति । भावप्रधानो
17923 निर्देशः । जीवभावं प्रति हेतुर्निमित्तं वासनाकर्मादि ।
17924 आदिपदादुपादानपरिग्रहः । भवत्यर्थः सत्ता तदात्मकः ॥ ४७ ॥
17925
17926 चिता यथादौ कलिता स्वसत्ता सा तथोदिता ।
17927 अभिन्ना दृश्यते व्योम्नः सत्तासत्ते न विद्महे ॥ ४८ ॥
17928
17929 ज्ञानेन दृश्यतत्संवलितसत्तापाये पूर्वसिद्धाधिष्ठानसत्ता यथा
17930 स्थितैवोदिता मेधापाये निर्मलव्योमसत्तावदित्याह - चितेति ॥ ४८ ॥
17931
17932 विश्वंखं जगदीहाख्यं खमस्ति विबुधालयः ।
17933 साकारश्चिच्चमत्काररूपत्वान्नान्यदस्ति हि ॥ ४९ ॥
17934
17935 अनुभावितं निष्प्रपञ्चत्वमनुमानेनापि द्रढयति - विश्वमिति ।
17936 ईहाख्यं मनश्चेष्टारूपं सूक्ष्मं जगत् खं शून्यमेव । तथा
17937 विबुधानामिन्द्रियतदधिष्ठातृदेवानामालयः साकारः स्थूलश्च
17938 विश्वविराड्रूप इति द्विविधमपि विश्वं खं शून्यमेवास्ति
17939 चिच्चमत्काररूपत्वादित्यर्थः ॥ ४९ ॥
17940

17941 यो यद्विलासस्तस्मात्स न कदाचन भिद्यते।
17942 अपि सावयवं तस्मात्कैवानवयवे कथा ॥ ५० ॥
17943
17944 तत्र व्याप्त्यादिसिद्धये उदाहरणादि दर्शयति - यो यदिति।
17945 सावयवजलादिकार्ये तरङ्गादावपि तथा दृष्टं निरवयवचित्कार्ये कैव
17946 कथेत्यर्थः ॥ ५० ॥
17947
17948 चितेर्नित्यमचेत्याया निर्नाम्न्या वितताकृतेः।
17949 यद्रूपं जगतो रूपं तत्तत्स्फुरणरूपिणः ॥ ५१ ॥
17950
17951 इत्थं च नामरूपनिष्कृष्टापरिच्छिन्नचिद्रूपमेव जगतस्तात्त्विकं रूपं
17952 फलितमित्याह - चितेरिति ॥ ५१ ॥
17953
17954 मनो बुद्धिरहंकारो भूतानि गिरयो दिशः।
17955 इति या यास्तु रचनाश्चितस्तत्त्वाज्जगत्स्थितेः ॥ ५२ ॥
17956
17957 वैपरीत्यदर्शनेऽपि जगद्रचना चिद्रचनैवेति फलितमित्याह - मन इति ॥ ५२ ॥
17958
17959 चितेश्चित्त्वं जगद्विद्धि नाजगच्चित्त्वमस्ति हि।
17960 अजगत्त्वादचिच्चित्त्वाद्भानाद्भेदो जगत्कुतः ॥ ५३ ॥
17961
17962 एवं जगतश्चिन्मयत्वे सति चिद्धर्मतैव फलितेत्याह - चित इति। चिच्चित्वयोश्च
17963 [त्विच्चेत्ययोश्च इति पाठः] कल्पनरूपभानाद्भेदो न वस्तुत इति
17964 जगत्कुतः ॥ ५३ ॥
17965
17966 प्। १६५)
17967
17968 चितेर्मरीचिबीजस्य निजा यान्तश्चमत्कृतिः।
17969 सा चैषा जीवतन्मात्रमात्रं जगदिति स्थिता ॥ ५४ ॥
17970
17971 वर्णितां जगतश्चिन्मात्रतामुक्तिवैचित्र्यैर्दृढं व्युत्पादयितुमुपक्रमते
17972 - चितेरित्यादिना। चितेरर्थप्रथनशक्तिरेव जीवतदुपाधिभूततन्मात्रमात्रं
17973 सज्जगदिति वेष्।एण [विशेषेण इति पाठः] स्थितेत्यर्थः ॥ ५४ ॥
17974
17975 चित्तात्स्वशक्तिकचनं [चित्तादिति मूले टीकायां च पाठः]
17976 यदहंभावनं चितः।
17977 जीवः स्पन्दनकर्मात्मा भविष्यदभिधो ह्यसौ ॥ ५५ ॥
17978
17979 ततश्चित्तादहंकारशक्तिस्फुरणमेव स्पन्दनकर्मप्राणसंवलने
17980 जीवशब्दवाच्यं भविष्यईत्याह - चित्तादिति ॥ ५५ ॥
17981
17982 यच्चिच्चित्त्वेन कचनं स्वसंपाद्याभिधात्मकम्।
17983 स्वविकारैर्व्यवच्छेद्यं भिद्यते नो न विद्यते ॥ ५६ ॥
17984
17985 तथा भावेऽपि न चित्स्वभावभेद इत्याह - यदिति। यत् यद्यपि चितश्चित्त्वेन
17986 कचनं स्वविकाररैहंतादिभिर्व्यवच्छेद्यं
17987 सत्स्वसंपाद्यजीवाद्यभिधात्मकं संपन्नं तथापि
17988 तद्यवच्छिन्नरूपमुपाधिमिथ्यात्वान्न विद्यत इति नो भिद्यते नैव
17989 भेदप्रसक्तिरित्यर्थः ॥ ५६ ॥
17990
17991 चित्स्पन्दरूपिणोरस्ति न भेदः कर्तृकर्मणोः।
17992 स्पन्दमात्रं भवेत्कर्म स एव पुरुषः स्मृतः ॥ ५७ ॥

17993
17994 चित्स्पन्दशक्तिभेदादहंकारप्राणोपहितजीवभेदमाशङ्क्याह - चिदिति।
17995 चित्प्रधानोऽहंकारः कर्ता स्पन्दप्रधानः प्राणः क्रिया। नहि स्वक्रियया
17996 कर्ता भिद्यते अतः स चित्स्पन्दसंवलित एव पुरुषो जीव इत्यर्थः॥ ५७॥
17997
17998 जीवश्चित्तपरिस्पन्दः पुंसां चित्तं स एव च।
17999 मनस्त्विन्द्रियरूपं सत्सत्तां नानेव गच्छति॥ ५८॥
18000
18001 एवं चित्तमन-इन्द्रियादिभावेऽपि न जीवभेदः। जीवोपाधिमनस एव
18002 गोलकभेदेनेन्द्रियभावेनावस्थानादित्याह - जीव इति॥ ५८॥
18003
18004 शान्ताशेषविशेषं हि चित्प्रकाशच्छटा जगत्।
18005 कार्यकारणकादित्वं तस्मादन्यन्न विद्यते॥ ५९॥
18006
18007 एवं जगज्जीवभेदनिरासे फलितमुपसंहरति - शान्तेति। हि
18008 यस्मात्तुच्छतरकार्यकारणादिभावस्वभावं जगत्प्रागुक्तरीत्या
18009 चित्प्रकाशस्य छटाप्रान्त इव तदभिन्नसत्तस्फूर्तिकं तस्माद्धेतोरन्यत्र
18010 विद्यते इति शान्ताशेषविशेषं प्रत्यगात्मरूपमेव संपन्नमित्यर्थः॥ ५९॥
18011
18012 अच्छेद्योऽहमदाह्योऽहमक्लेद्योऽशोष्य एव च।
18013 नित्यः सर्वगतः स्थाणुरचलोऽहमिति स्थितम्॥ ६०॥
18014
18015 तत्र सर्वानर्थनिवृत्तिं दर्शयति - अच्छेद्य इति॥ ६०॥
18016
18017 ववदन्ते तथा ह्यत्र विवदन्तो यथा भ्रमैः।
18018 भ्रमयन्तो वयं त्वेते जाता विगतविभ्रमाः॥ ६१॥
18019
18020 एतदपरिज्ञानादेव द्वैतवादिनां विवादभेदो नास्माकमित्याह - विवदन्त
18021 इति। स्वस्वभ्रमैरन्यान्भ्रमयन्तो यथा तद्वत्॥ ६१॥
18022
18023 दृश्ये मूर्ते ज्ञसंरूढे विकारादि पृथग्भवेत्।
18024 नामूर्ते तज्ज्ञकचिते चित्खे सदसदात्मनि॥ ६२॥
18025
18026 अज्ञतज्ज्ञयोर्दृश्ये मूर्तामूर्तभावनाकृत एव
18027 सत्यमिथ्यात्वप्रयुक्तद्वैताद्वैतविभाग इत्याह - दृश्य इति॥ ६२॥
18028
18029 चित्तरौ चेत्यरसतः शक्तिः कालादिनामिकाम्।
18030 तनोत्याकाशविशदां चिन्मधुश्रीः स्वमञ्जरीम्॥ ६३॥
18031
18032 चेत्ये रस आसक्तिस्तद्रूपजलसेकाच्चिद्वसन्तश्रीरूपा शक्तिर्मायाकालादिनामिकां
18033 स्वमञ्जरीं तनोति। आकाशे प्रथमभूते ऊर्ध्वदेशे च विशदाम्॥ ६३॥
18034
18035 स्वयं विचित्रं स्फुरति चिदण्डकमनाहतम्।
18036 स्वयं विलक्षणस्पन्दं चिद्वायुरण्डजात्मकः [रण्डजात्मकम् इति
18037 पाठः]॥ ६४॥
18038
18039 यथा ब्रह्म स्वाधीनकल्पनाक्रमैर्जगज्जीवभावं प्राप्तं तथा स्वाधीनैरेव
18040 बोधक्रमैः स्वरूपेऽवतिष्ठत इत्याह - स्वयमित्यादिसार्धचतुर्भिः।
18041 चित्स्वयमेवानाहतमच्छिन्नगर्भमेव सत् प्रथममाकाशकल्पने
18042 सच्छिद्रत्वादण्डकमण्डसदृशं ब्रह्माण्डरूपं वा स्फुरति।
18043 ततोऽण्डजात्मको वायुः सूत्रात्मा वातस्कन्धरूपो वा स्फुरतीति
18044 सर्वत्रानुषङ्गः॥ ६४॥

18045
18046 स्वयं विचित्रं कचनं चिद्वारि न निखातगम् |
18047 स्वयं विचित्रधातुत्वं श्रेष्ठाङ्गमपि निर्मितम् || ६५ ||
18048
18049 ततो वक्ष्यमाणतेजोजन्मानन्तरं वारि अप्तत्त्वं भूत्वा स्फुरति | तच्च न
18050 तडागादिनिखातगं भूसर्गात्प्राक्तदयोगात् | सा चित्स्वयं विचित्राः
18051 स्वर्णरजतादिधातवो यस्यां पृथिव्यां तद्भावं श्रेष्ठानां
18052 देवासुरमनुष्याणामङ्गं देहादिभावमपि निर्माणेन प्रापितम् || ६५ ||
18053
18054 स्वविचित्ररसोल्लासा चिज्ज्योत्स्ना सततोदिता |
18055 स्वयं चिदेव प्रकटश्चिदालोको महात्मकः || ६६ ||
18056
18057 जगदाप्यायकचन्द्रात्मनापि स्वयमेवाभूदित्याह - स्वयमिति |
18058 भौमोषधिरसभेदानामपि चन्द्राधीनत्वात्स्वविचित्रेत्युक्तम् | अत्र तेजःसर्गः
18059 पाठक्रमादार्थक्रमो बलीयानिति प्रागुक्तवायुसर्गानन्तरं बोध्यः |
18060 चिदण्डकमित्यादिसमस्तं सर्वत्र रूपकं वा बोध्यम् || ६६ ||
18061
18062 स्वयमस्तं गते बाह्ये स्वज्ञानादुदिता चितिः |
18063 स्वयं जडेषु जाड्येन पदं सौषुप्तमागता || ६७ ||
18064
18065 स्वज्ञानादेव बाह्ये दृश्येऽस्तं गते सति उदिता आविर्भूतपूर्णभावा
18066 अवतिष्ठत इति शेषः | जडेषु स्थावरादिषु || ६७ ||
18067
18068 स्वयं स्पन्दितयास्पन्दिचित्त्वाच्चिति महानभः |
18069 चित्प्रकाशप्रकाशो हि जगदस्ति च नास्ति च || ६८ ||
18070
18071 उक्तमेवार्थं संक्षिप्याहार्धेन - स्वयमिति | अविचारे
18072 स्पन्दस्वभावप्राणाद्यात्मभावकल्पने स्पन्दि संसार्येव भवति |
18073 स्वविचाराविर्भूतचित्त्वात्तु चित्येव स्वस्वभावेऽवतिष्ठत इत्यर्थः | तदवस्थस्य
18074 किं जगदस्ति उत नास्ति सत्त्वे संसारापत्तिरसत्त्वे त्वसद्व्याप्तिप्रसङ्ग
18075 इत्याशङ्क्य सर्वदा जगतो ब्रह्मसत्तया सत्त्वमेव स्वसत्तया
18076 त्वसत्त्वमेवेत्याह - चित्प्रकाश इत्याद्यर्धषट्केन | सर्वत्र
18077 चित्सत्तोपजीवित्वप्रदर्शनाय प्रकाशादिभावरूपि तत्तद्धर्मतोक्तिः| प्रकाशस्य
18078 तेजसः प्रकाशो भास्वररूपम् || ६८ ||
18079
18080 चिदाकाशैकशून्यत्वं जगदस्ति च नास्ति च |
18081 चिदालोकमहारूपं जगदस्ति च नास्ति च || ६९ ||
18082
18083 प्। १६६)
18084
18085 चिन्मारुतपरिस्पन्दो जगदस्ति च नास्ति च |
18086 चिद्घनध्वान्तकृष्णत्वं जगदस्ति च नास्ति च || ७० ||
18087
18088 चिदर्कालोकदिवसो जगदस्ति च नास्ति च |
18089 चित्कज्जलरजस्तैलपरमाणुर्जगत्क्रमः [जगद्भ्रमः इति पाठः]
18090 || ७१ ||
18091
18092 तैलदाहे कज्जलस्येव जगद्बाधे चिदवशेषात्कज्जलत्वोक्तिर्न कार्यत्वाभिप्रायेण
18093 || ७१ ||
18094
18095 चिदग्न्यौष्ण्यं जगल्लेखा जगच्चिच्छङ्खशुक्लता |
18096 जगच्चिच्छैलजठरं चिज्जलद्रवता जगत् || ७२ ||

18097
18098 जगच्चिदिक्षुमाधुर्यं चित्क्षीरस्निग्धता जगत् |
18099 जगच्चिद्धिमशीतत्वं चिज्ज्वालाज्वलनं जगत् || ७३ ||
18100
18101 जगच्चित्सर्षपस्नेहो वीचिश्चित्सरितो जगत् |
18102 जगच्चित्क्षुद्रमाधुर्यं जगच्चित्कनकाङ्गदम् || ७४ ||
18103
18104 जगच्चित्पुष्पसौगन्ध्यं चिल्लताग्रफलं जगत् |
18105 चित्सत्तैव जगत्सत्ता जगत्सत्तैव चिद्वपुः || ७५ ||
18106
18107 सर्वत्र चिदपृथक्सत्त्वादेव जगतश्चिद्धर्मत्वमभिप्रेतमिति स्फुटमाह ##-
18108
18109 अत्र भेदविकारादि नखे मलमिव स्थितम् |
18110 इतीदं दन्मयत्वेन सदसद्भुवनत्रयम् || ७६ ||
18111
18112 खे मलं नैल्यमिव प्रतीतमपि न स्थितम् | असदपि भुवनत्रयमित्युक्तविधया
18113 सन्मयत्वेन सदित्यर्थः || ७६ ||
18114
18115 अविकल्पतदात्मत्वात्सत्तासत्तैकतैव च |
18116 अवयवावयविता शब्दार्थौ शशशृङ्गवत् || ७७ ||
18117
18118 जगदसत्ता तर्हि वस्त्वन्तरं स्यात्तत्राह - अविकल्पेति |
18119 कल्पितनिरूपितसत्तासत्तयोरधिष्ठानातिरेकादर्शनादित्यर्थः |
18120 सावयवनिरवयवयोः कथमपृथक्सत्त्वमिति
18121 वदस्तार्किकान्विद्वदनुभवापलापिनो धिक्करोति - अवयवेति || ७७ ||
18122
18123 अनुभूत्यपलापाय कल्पितो यैर्धिगस्तु तान् |
18124 न विद्यते जगद्यत्र साद्यब्ध्युवीनदीश्वरम् || ७८ ||
18125
18126 तत्र युक्तिविरोधमाह - न विद्यत इति |
18127 अद्यब्धिभिरुर्व्यादिभिस्तत्तदीश्वरैश्च सहितं जगत् || ७८ ||
18128
18129 चिदेकत्वात्प्रसङ्गः स्यात्कस्तत्रेतरविभ्रमः |
18130 शिलाहृदयपीनापि स्वाकाशे विशदैव चित् || ७९ ||
18131
18132 प्रसज्यत इति प्रसङ्गः | कर्मणि घञ् | तत्र इतरस्यावयवादेर्विभ्रमः कः
18133 प्रसक्तः स्यादित्यर्थः | विशदा स्वच्छा || ७९ ||
18134
18135 धत्तेऽन्तरखिलं शान्तं संनिवेशं यथा शिला |
18136 पदार्थनिकराकाशे त्वयमाकाशजो मलः || ८० ||
18137
18138 शान्तं मिथ्यात्वादसदेवाखिलं यथा
18139 स्फटिकशिलाप्रतिबिम्बनगरसंनिवेशं धत्ते तद्वत् | कुतोऽखिलस्य शान्तत्वं
18140 तत्राह - पदार्थेति | सर्वपदार्थाधिष्ठाने चिदाकाशेऽयं भूताकाशजो
18141 मलो वाय्वादिः सावयवप्रपञ्चः | तत्र भूताकाशेऽप्यसङ्गस्वभावे यदि
18142 तत्कार्यश्लेषा न सन्ति तदा चिदाकाशे सत्तासत्ताद्याः श्लेषाः सुतरां न
18143 सन्तीत्यर्थः || ८० ||
18144
18145 सत्तासत्तात्मतात्वत्तामत्ताश्लेषा न सन्ति ते |
18146 पल्लवान्तरलेखौघसंनिवेशवदाततम् || ८१ ||
18147
18148 तर्हि चित्यसतो जगत्संनिवेशस्य कथं भानं तत्राह - पल्लवेति | यथा

18149 पल्लवं शिरारेखौघसंनिवेशं पल्लवात्पृथगनिरूढत्वादसदेव
18150 तदन्यानन्यात्मकतया स्थितं धत्ते चिदपि तथा जगदित्यर्थः ॥ ८१ ॥
18151
18152 अन्यानन्यात्मकमिदं धत्तेऽन्तश्चित्स्वभावतः ।
18153 समस्तकारणौघानां कारणादि पितामहः ॥ ८२ ॥
18154
18155 निर्विकाराकाशोपादानकत्वाज्जगद्विकारस्य मिथ्यात्वमुक्तं संप्रति
18156 मिथ्याविकल्पसहस्रात्मकचित्तसमष्ट्यात्मकहिरण्यगर्भनिदानकत्वादपि
18157 जगतो मिथ्यात्वमित्याह - समस्तेति ॥ ८२ ॥
18158
18159 स्वभावतो कारणात्म चित्तं चिद्ध्यनुभूतितः ।
18160 न चासत्त्वमचेत्यायाश्चितो वाचापि सिद्ध्यति ॥ ८३ ॥
18161
18162 चित्तकार्यमानोरथिकविकल्पानामसत्त्वादेव चित्तमकारणात्म तदेव पितामह
18163 इत्यर्थः । चेत्यासत्त्वे चितोऽप्यसत्त्वं तस्यास्तदव्यभिचारदर्शनादिति वाचपि
18164 चितोऽसत्त्वं न सिद्ध्यति । हि यस्माच्चिदनुभूतितः सिद्धा । अनुभवविरुद्धे च न
18165 वाचः प्रामाण्यमित्यर्थः ॥ ८३ ॥
18166
18167 यदस्ति तदुदेतीति दृष्टं बीजादिवाङ्कुरः ॥ ८४ ॥
18168
18169 यदि जगत्स्वतः सत्स्यात्तदा ज्ञानाद्युपायसहस्रैरप्यनुच्छेद्यमेव स्यात्सत
18170 आत्यन्तिकोच्छेदासंभवेन पुनराविर्भावावर्जनादनिर्मोक्षप्रसङ्गः
18171 स्यादित्याशयेनाह - यदिति ॥ ८४ ॥
18172
18173 गगन इव सुशून्यभेदमस्ति
18174 त्रिभुवनमङ्ग महाचितोऽन्तरस्याः ।
18175 परमपदमयं समस्तदृश्यं
18176 त्विदमिति निश्चयवान्भवानुभूतेः ॥ ८५ ॥
18177
18178 यदि दृश्यस्य सत्तायां महानाग्रहस्तर्हि अनुभवेन भेदं निरस्य
18179 परमपदात्मकच्चिन्मयत्वेन तत्सत्तयैव सा स्वीकार्येत्याह - गगन इति ॥ ८५ ॥
18180
18181 इत्युक्तवत्यथ मुनौ दिवसो जगाम
18182 सायंतनाय विधयेऽस्तमिनो [मितो इति क्वचित्] जगाम ।
18183 स्नातुं सभा कृतनमस्करणा जगाम
18184 श्यामाक्षये रविकरैश्च सहाजगाम ॥ ८६ ॥
18185
18186 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे
18187 ब्रह्मप्रतिपादनं नाम चतुर्दशः सर्गः ॥ १४ ॥
18188
18189 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
18190 ब्रह्मप्रतिपादनं नाम चतुर्दशः सर्गः ॥ १४ ॥
18191
18192 तृतीयो दिवसः ।
18193
18194 प्। १६७)
18195
18196 पञ्चदशः सर्गः १५
18197
18198 जगदाकाशमेवेदं यथा हि व्योम्नि मौक्तिकम् ।
18199 विमले भाति स्वात्मैव जग्चिद्गगनं यथा ॥ १ ॥
18200

18201 शश्वद्दृष्टान्तयुक्त्योधैरुक्तार्थमनुभावयन् |
18202 विस्तृतं मण्डपाख्यानमत्रोपक्रमते मुनिः || १ ||
18203
18204 जगच्चिदाकाशमेवेति प्रतिज्ञा | कथं तर्हि पृथग्भाति तत्राह - यथेति |
18205 यथा विमले व्योम्नि भ्रान्त्या मुक्तानां संघो मौक्तिकं भाति तद्वत् |
18206 चिद्गगनं स्वात्मैव यथा जगत्तथा दृष्टान्तः श्रूयतामिति शेषः || १ ||
18207
18208 अनुत्कीर्णैव भातीव त्रिजगच्छालभञ्जिका |
18209 चित्स्तम्भेनैव सोत्कीर्णा नचोत्कर्तात्र विद्यते || २ ||
18210
18211 नचोत्कर्तेति |
18212 तदुत्कर्तृचेतनान्तराप्रसिद्धेर्निर्विकारासङ्गस्योत्कर्तनासंभवाच्चेति
18213 भावः || २ ||
18214
18215 समुद्रेऽन्तर्जलस्पन्दाः स्वभावादच्युता अपि |
18216 वीचिवेगा भवन्तीव परे दृश्यविदस्तथा || ३ ||
18217
18218 दृश्यविदो जगत्प्रत्ययाः || ३ ||
18219
18220 जालान्तर्गतसूर्याभा जालाकाररजांस्यपि |
18221 जगद्भानं प्रति स्थूलान्यणुं प्रति यथाचलाः || ४ ||
18222
18223 जगदतिमहत्त्वेन मूढैरवगतमपि विद्वद्दृष्ट्या वस्तुतो
18224 जालसूर्यमरीच्यणुकादप्यतिफल्विवत्याह - जालेति | सूर्याभाया यो
18225 जालच्छिद्रप्रयुक्तो दण्डमुसलाद्याकारस्तदन्तर्गतानि रजांसि |
18226 अपिशब्दादन्येषां स्थूलतमत्वं किं वाच्यमित्याशयः | अथवा
18227 जगदवभासकसाक्षिचित्प्रकाशस्य
18228 सूर्यालोकादिप्रकाशात्तदन्तर्गतपरमाण्वादिभ्योऽप्यतिसूक्ष्मत्वमित्याह -
18229 जालेति || ४ ||
18230
18231 जगद्भानं न भातीदं ब्रह्मणो व्यतिरेकतः |
18232 जालसूर्यांशुजालं तु व्यतिरेकानुभूतिदम् || ५ ||
18233
18234 तदेवोपपादयितुं मरीचितदणुवैधर्म्यं चिति दर्शयति - जगदिति || ५ ||
18235
18236 अनुभूतान्यपीमानि जगन्ति व्योमरूपिणि |
18237 पृथ्व्यादीनि न सन्त्येव स्वप्नसंकल्पयोरिव || ६ ||
18238
18239 व्यतिरेकतो न भातीत्युक्तेरनुभवविरोधं परिहरति - अनुभूतान्यपीति || ६ ||
18240
18241 पिण्डग्रहो जगत्यस्मिन्विज्ञानाकाशरूपिणि |
18242 मरुनद्यां जलमिव न संभवति कुत्रचित् || ७ ||
18243
18244 अनेकदिनावस्थाभिन्नस्य कथं स्वप्नसंकल्पसाम्यं तत्राह - पिण्डेति |
18245 पिण्डग्रहो मूर्ततास्वीकारः || ७ ||
18246
18247 जगत्यपिण्डग्राहेऽस्मिन्संकल्पनगरोपमे |
18248 मरौ सरिदिवाभाति दृश्यता भ्रान्तिरूपिणी || ८ ||
18249
18250 स्वप्नाद्दृश्येव जगतां तुलादेशेन केन च |
18251 तुलिता कलनोन्मुक्ता दृश्यश्रीर्व्योम जृम्भते || ९ ||
18252

18253 जगतां दृश्यश्रीर्दृशि साक्षिचैतन्य एवैकतः स्वप्नमारोप्य केन च
18254 सारासारविवेचकबुद्धिलक्षणेन तुलामध्यकण्टकप्रदेशेन तुलिता
18255 साम्येनावधारिता चेत्सैव जागरे स्वप्न इव कलनोन्मुक्ता सती व्योम शून्यं
18256 ब्रह्मैव वा जृम्भते प्रथते ॥ ९ ॥
18257
18258 वर्जयित्वा ज्ञविज्ञानं जगच्छब्दार्थभाजनम् ।
18259 जगद्ब्रह्मस्वशब्दानामर्थे नास्त्येव भिन्नता ॥ १० ॥
18260
18261 तथाचाविवेकिदृशैव ब्रह्मादिशब्दार्थाज्जगच्छब्दार्थभेदो न
18262 तत्त्वज्ञदृशेत्याह - वर्जयित्वेति ॥ १० ॥
18263
18264 इदं त्वचेत्यचिन्मात्रं भानोर्भातं नभः प्रति ।
18265 तथा सूक्ष्मं यथा मेघं प्रति संकल्पवारिदः ॥ ११ ॥
18266
18267 कथं तर्हि तत्त्वज्ञदृशां जगत्प्रति तत्साक्षिदर्शनमित्युक्ते
18268 शून्यात्मकनभः प्रति तदालोकस्य प्रकाशत्वदर्शनमिवेत्याह - इदमिति ।
18269 साक्षिचैतन्यं प्रति जगद्दर्शनं तर्हि कथं तत्राप्याह - तथेति ॥ ११ ॥
18270
18271 यथा स्वप्नपुरं स्वच्छं जाग्रत्पुरवरं प्रति ।
18272 तथा जगदिदं स्वच्छं सांकल्पिकजगत्प्रति ॥ १२ ॥
18273
18274 कथमत्यन्तमलिनस्य दृश्यस्य स्वच्छतमचिन्मात्रतेत्याशङ्क्य
18275 प्रतीतिकालिकैव बाह्यमानसदृश्ययोर्मलिनता तिरोभावकाले तु
18276 परस्परापेक्षया स्वच्छतमतैव परिशिष्यत इत्याह - यथेति ।
18277 जगज्जाग्रत्प्रपञ्चः । सांकल्पकग्रहऽनं स्वाप्नस्याप्युपलक्षणम् ॥ १२ ॥
18278
18279 तस्मादचेत्यचिद्रूपं जगद्व्योमैव केवलम् ।
18280 शून्यौ व्योमजगच्छब्दौ पर्यायौ विद्धि चिन्मयौ ॥ १३ ॥
18281
18282 उपसंहरति - तस्मादित्यादिना । शून्यौ शून्यार्थावर्थशून्यौ वा ॥ १३ ॥
18283
18284 तस्मान्न किंचिदुत्पन्नं जगदादीह दृश्यकम् ।
18285 अनाख्यमनभिव्यक्तं यथास्थितमवस्थितम् ॥ १४ ॥
18286
18287 जगदेवं महाकाशे चिदाकाशमभित्तिमत् ।
18288 तद्देशस्याणुमात्रस्य तुलायाश्चाप्रपूरकम् ॥ १५ ॥
18289
18290 एवमुक्तरीत्या महाकाशे मायाकाशे स्थितं जगदभित्तिमन्निरावरणं
18291 चिदाकाशमेव । परिच्छिन्नजगदभेदे चितोऽपि तावन्मात्रतां वारयति -
18292 तद्देशस्येति । तद्देशस्य चित्प्रदेशस्याणुमात्रस्याल्पतरस्यापि
18293 अल्पान्तःकरणवृत्तितद्वासनापरिच्छिन्नाणुतमचिद्भागेऽपि
18294 सर्वजगत्परिच्छेदभानेन तदन्तर्भाव्यस्य जगतस्तदप्रपूरकत्वे दूरनिरस्ता
18295 ब्रह्मचैतन्यस्य तावन्मात्रतेति भावः ॥ १५ ॥
18296
18297 आकाशरूपमेवाच्छं पिण्डग्रहविवर्जितम् ।
18298 व्योम्नि व्योममयं चित्रं संकल्पपुरवत्स्थितम् ॥ १६ ॥
18299
18300 कथं व्योमवच्छून्यप्रायचित्तवृत्तितद्वासनान्तर्भूता
18301 विपुरतमजगदवस्थितिस्तत्राह - आकाशेति । पिण्डग्रहो मूर्तिस्वीकारः ।
18302 तत्रानुभवारोहाय दृष्टान्तमाह - संकल्पेति ॥ १६ ॥
18303
18304 अत्रेदं मण्डपाख्यानं शृणु श्रवणभूषणम् ।

18305 निःसंदेहो यथैषोऽर्थश्चित्ते विश्रान्तिमेष्यति ॥ १७ ॥
18306
18307 उक्तेऽर्थे रामस्य संदेहव्यामोहानवधारणानि लिङ्गैरुपलक्ष्य
18308 श्रीवसिष्ठस्तदपनोदाय तदुपपत्तिसहस्रकथानुरञ्जनान्वितं विस्तृतं
18309 मण्डपोपाख्यानं श्रावयितुं प्रतिजानीते - अत्रेति ॥ १७ ॥
18310
18311 प्। १६८)
18312
18313 श्रीराम उवाच ।
18314
18315 सद्बोधवृद्धये ब्रह्मन्समासेन वदाशु मे ।
18316 मण्डपाख्यानमखिलं येन बोधो विवर्धते ॥ १८ ॥
18317
18318 समासेनानुपयुक्तार्थे संक्षेपेण ।
18319 पूर्वतरप्रतिज्ञायामिवोक्तिविलम्बमाशङ्क्याह - आश्विति ॥ १८ ॥
18320
18321 श्रीवसिष्ठ उवाच ।
18322
18323 अभूदस्मिन्महीपीठे कुलपद्मो विकाशवान् ।
18324 पद्मो नाम नृपः श्रीमान्बहुपुत्रो विवेकवान् ॥ १९ ॥
18325
18326 कुलस्य वंशस्य पद्म इव यशःसौरभ्यहेतुत्वात्पद्मः ॥ १९ ॥
18327
18328 मर्यादापालनाम्भोधिर्द्विषत्तिमिरभास्करः ।
18329 कान्ताकुमुदिनीचन्द्रो दोषतृणहुताशनः ॥ २० ॥
18330
18331 वर्णाश्रममर्यादा वेला द्वीपमर्यादा च ॥ २० ॥
18332
18333 मेरुर्विबुधवृन्दानां यशश्चन्द्रो भवार्णवे ।
18334 सरः सद्गुणहंसानां कमलामलभास्करः ॥ २१ ॥
18335
18336 विबुधा विद्वांसो देवाश्च तद्वृन्दानाम् । कमलाः
18337 संपदस्तल्लक्षणकमलानां भास्करः ॥ २१ ॥
18338
18339 संग्रामवीरुत्पवनो मनोमातङ्गकेसरी ।
18340 समस्तविद्यादयितः सर्वाश्चर्यगुणाकरः ॥ २२ ॥
18341
18342
18343 संग्रामे वीरुत्प्रायाणां परेषां पवन इव प्रकम्पयिता अत एव
18344 मानोर्जिततन्मनोलक्षणमातङ्गानां केसरी शतून्मानभङ्गेन नमयिता न
18345 हन्तेत्याशयः । दयितः प्रियः ॥ २२ ॥
18346
18347 सुरारिसागरक्षोभविलसन्मन्दराचलः ।
18348 विलासपुष्पौघमधुः सौभाग्यकुसुमायुधः ॥ २३ ॥
18349
18350 तस्येन्द्रशत्रुजेतृत्वमाह - सुरारीति । मधुर्वसन्तः ॥ २३ ॥
18351
18352 लीलालतालास्यमरुत्साहसोत्साहकेशवः ।
18353 सौजन्यकैरवशशी दुर्लीलावल्लिकानलः ॥ २४ ॥
18354
18355 सर्वासाध्यधरण्युद्धारादिसाधनोद्योगः साहसम् ।
18356 दुश्चेष्टाविषवल्लीनामनल इव दाहकः । कुत्सायां कन् ॥ २४ ॥

तस्यास्ति सुभगा भार्या लीला नाम विलासिनी ।
सर्वसौभाग्यवलिता कमलेवोदिताऽवनौ ॥ २५ ॥

वलिता वेष्टिता । कमला लक्ष्मीः ॥ २५ ॥

सर्वानुवृत्तिललिता लीला मधुरभाषिणी ।
सानन्दमन्दचलिता द्वितीयेन्दूदयस्मिता ॥ २६ ॥

सर्वास्वनुवृत्तिषु भर्तृसेवाप्रकारेषु सर्वेषां परिजनानां वा
अनुवृत्तिष्वनुकूलाचरणेषु ललिता ॥ २६ ॥

अलकालिमनोहारिवदनाम्भोजशालिनी ।
सिताङ्गी कर्णिकागौरी जङ्गमेव सरोजिनी ॥ २७ ॥

अलका एव अलयो भ्रमराः । सिताङ्गी निर्मलाङ्गी । कर्णिकेव कर्णिकया च गौरी ।
एवमग्रेऽप्युपमानसाधारणविशेषणानि योज्यानि ॥ २७ ॥

लतविलासकुन्दौघभासिनी रसशालिनी ।
प्रवालहस्ता पुष्पाभा मधुश्रीरिव देहिनी ॥ २८ ॥

रसः प्रेमा मकरन्दश्च ॥ २८ ॥

अवदाततनुः पुण्या स्पर्शनाह्लादकारिणी ।
गङ्गेव गां गता देहवती हंसविलासिनी ॥ २९ ॥

अवदाततनुः स्वच्छदेहा ॥ २९ ॥

तस्य भूतलपुष्पेषोः सकलाह्लाददायिनः ।
परिचर्यां चिरं कर्तुमन्या रतिरिवोदिता ॥ ३० ॥

उद्विग्ने प्रोद्विग्ना
मुदिते मुदिता समाकुलाकुलिते ।
प्रतिबिम्बसमा कान्ता
संक्रुद्धे केवलं भीता ॥ ३१ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे
मण्डपोपाख्याने राजवर्णनं नाम पञ्चदशः सर्गः ॥ १५ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे राजवर्णनं
नाम पञ्चदशः सर्गः ॥ १५ ॥

षोडशः सर्गः १६

श्रीवसिष्ठ उवाच ।

भूतलाप्सरसा सार्धमनन्यदयितापतिः ।
अकृत्रिमप्रेमरसं स रेमे कान्तया तया ॥ १ ॥

अतृप्तिः कामभोगेभ्यो भूयो दुःखावसानता ।
देवैरप्यन्यथाकर्तुमशक्येत्यत्र कीर्त्यते ॥ १ ॥

18409 अनन्यदयितापतिरिति प्रेमरसस्याकृत्रिमत्वे हेतुः ॥ १ ॥
18410
18411 उद्यानवनगुल्मेषु तमालगहनेषु च ।
18412 पुष्पमण्डपरम्येषु लतावलयसद्मसु ॥ २ ॥
18413
18414 उद्यानवनगुल्मेष्वित्यादीनां रेमे इत्यत्रैवान्वयः ॥ २ ॥
18415
18416 पुष्पान्तःपुरशय्यासु पुष्पसंभारवीथिषु ।
18417 वसन्तोद्यानदोलासु क्रीडापुष्करिणीषु च ॥ ३ ॥
18418
18419 चन्दनद्रुमशैलेषु संतानकतलेषु च ।
18420 कदम्बनीपगेहेषु पारिभद्रोदरेषु च ॥ ४ ॥
18421
18422 संतानकाः कल्पवृक्षविशेषाः स्वप्रभावादिन्द्रप्रसादाद्वा प्राप्तास्तेषां
18423 तलेषु ॥ ४ ॥
18424
18425 विकसत्कुन्दमन्दारमकरन्दसुगन्धिषु ।
18426 वसन्तवनजालेषु कूजत्कोकिलपक्षिषु ॥ ५ ॥
18427
18428 नानारण्यतृणानां च स्थलेषु मृदुदीप्तिषु ।
18429 निझरिषु तरत्तारसीकरासारवर्षिषु ॥ ६ ॥
18430
18431 तरतां प्लवमानानां तारसीकराणामासारो धारासंपातः ॥ ६ ॥
18432
18433 शैलानां मणिमाणिक्यशिलानां फलकेषु च ।
18434 देवर्षिमुनिगेहेषु दूरपुण्याश्रमेषु च ॥ ७ ॥
18435
18436 देवर्षिमुनिगेहेषु सहयात्रारूपं रमणम् ॥ ७ ॥
18437
18438 प्। १६९)
18439
18440 कुमुद्वतीषु फुल्लासु स्मेरासु नलिनीषु च ।
18441 वनस्थलीषु कृष्णासु फुल्लासु फलिनीषु च ॥ ८ ॥
18442
18443 कुमुद्वतीषु निशि नलिनीषु दिवा ॥ ८ ॥
18444
18445 सुरतैः सुरतारुण्यैः सुन्दरः सुन्दरेहितैः ।
18446 ईहितैः पेशलान्योन्यघनप्रेमरसाधिकैः ॥ ९ ॥
18447
18448 सुरसदृशैस्तारुण्यैः । सुन्दराणां विषयाणामीहितैरीप्सितैः ।
18449 ईहितैर्विलासचेष्टितैः ॥ ९ ॥
18450
18451 प्रहेलिकाभिराख्यानैस्तथा चाक्षरमुष्टिभिः ।
18452 अष्टापदैर्बहुद्यूतैस्तथा गूढचतुर्थकैः ॥ १० ॥
18453
18454 प्रहेलिकाः लौकिकपरिहासकथाः । आख्यानानि पौराणिकानि । अक्षरमुष्ट्यादयो
18455 द्यूतविशेषाः ॥ १० ॥
18456
18457 नाटिकाख्यायिकाभिश्च श्लोकैर्विन्दुमतिक्रमैः ।
18458 देशकालविभागैश्च नगरग्रामचेष्टितैः ॥ ११ ॥
18459
18460 नाट्यदृश्यार्थाः प्रबन्धा नाटिकाः ।

18461 श्रवणमात्रास्वाद्यकाव्यनिबन्धकथा आख्यायिकाः। विन्दूनां विदुषां
18462 मतिभिः क्रम्यन्ते अवगम्यन्त इति विन्दुमतिक्रमैर्गूढाशयश्लोकैः।
18463 नगरग्रामचेष्टितैरनुकृतैरिति यावत्॥ ११॥
18464
18465 स्रग्दाममालावलितैर्नानाभरणयोजनैः।
18466 लीलाविलोलचलनैर्विचित्ररसभोजनैः॥ १२॥
18467
18468 वलितैर्वेष्टनैः॥ १२॥
18469
18470 आर्द्रकुङ्कुमकर्पूरताम्बूलीदलचर्वणैः।
18471 फुल्लपुष्पलतागुञ्जादेहगोपनखव्रणैः॥ १३॥
18472
18473 फुल्लैः पुष्पैर्लताभिर्गुञ्जाभिर्वा देहस्य गोपनं पिधानं येषु
18474 तथाविधैर्नखव्रणैर्नखक्षतैः॥ १३॥
18475
18476 समालम्भनलीलाभिर्मालाप्रहरणक्रमैः।
18477 गृहे कुसुमदोलाभिरन्योन्यं दोलनक्रमैः॥ १४॥
18478
18479 अनुधावनेन स्पर्शः समालम्भनं तत्प्रधानलीलाभिः॥ १४॥
18480
18481 नौयानयुग्महस्त्यश्वदान्तोष्ट्रादिगमागमैः।
18482 जलकेलिविलासेन परस्परसमुक्षणैः॥ १५॥
18483
18484 नौभिर्यानं जलेषु। युग्मभूतहस्त्यश्वानां दान्तानां दमनेन
18485 शिक्षितानामुष्ट्रादीनां च गमागमैश्चंक्रमणपरिवर्तनैः॥ १५॥
18486
18487 नृत्यगीतकलालास्यतालताण्डवमण्डनैः।
18488 संगीतकैः संकथनिर्वीणामुरजवादनैः॥ १६॥
18489
18490 गीतिकथालापाः संकथनानि॥ १६॥
18491
18492 उद्यानेषु सरित्तीरवृक्षेषु वरवीथिषु।
18493 अन्तःपुरेषु हर्म्येषु फुल्लदोलावदोलनैः॥ १७॥
18494
18495 सा तथा सुखसंवृद्धा तस्य प्रणयिनी प्रिया।
18496 एकदा चिन्तयामास सुभ्रूः संकल्पशालिनी॥ १८॥
18497
18498 प्राणेभ्योऽपि प्रियो भर्ता ममैष जगतीपतिः।
18499 यौवनोल्लासवाञ्श्रीमान्कथं स्यादजरामरः॥ १९॥
18500
18501 भर्त्रानेन सहोत्तुङ्गस्तनी कुसुमसद्मसु।
18502 कथं स्वैरं चिरं कान्ता रमे युगशतान्यहम्॥ २०॥
18503
18504 तथा यते यत्नमतस्तपोजपयमेहितैः।
18505 रजनीशमुखो राजा यथा स्यादजरामरः॥ २१॥
18506
18507 यमेहितैर्नियमानुष्ठानैः॥ २१॥
18508
18509 ज्ञानवृद्धांस्तपोवृद्धान्विद्यावृद्धानहं द्विजान्।
18510 पृच्छामि तावन्मरणं कथं न स्यान्नृणामिति॥ २२॥
18511
18512 इत्यानीयाथ संपूज्य द्विजान्पप्रच्छ सा नता।

18513 अमरत्वं कथं विप्रा भवेदिति पुनःपुनः ॥ २३ ॥
18514
18515 इति चिन्तयामासेति पूर्वतनेनान्वयः । अमरत्वं भर्तुः स्वस्य चेति शेषः ॥ २३ ॥
18516
18517 विप्रा ऊचुः ।
18518
18519 तपोजपयमैर्देवि समस्ताः सिद्धसिद्धयः ।
18520 संप्राप्यन्तेऽमरत्वं तु न कदाचन लभ्यते ॥ २४ ॥
18521
18522 इत्याकर्ण्य द्विजमुखाच्चिन्तयामास सा पुनः ।
18523 इदं स्वप्रज्ञयैवाशु भीता प्रियवियोगतः ॥ २५ ॥
18524
18525 स्वप्रज्ञयैव इदं वक्ष्यमाणं चिन्तयामास ॥ २५ ॥
18526
18527 मरणं भर्तुरग्रे मे यदि दैवाद्भविष्यति ।
18528 तत्सर्वदुःखनिर्मुक्ता संस्थास्ये सुखमात्मनि ॥ २६ ॥
18529
18530 आत्मनि सर्वदुःखनिर्मुक्ता । परलोके एतज्जन्मस्मरणाभावेन
18531 भर्तृवियोगदुःखाप्रसक्तेरिति भावः ॥ २६ ॥
18532
18533 अथ वर्षसहस्रेण भर्तादौ चेन्मरिष्यति ।
18534 तत्करिष्ये तथा येन जीवो गेहान्न यास्यति ॥ २७ ॥
18535
18536 तद्भ्रमद्भर्तृजीवेऽस्मिन्निजे शुद्धान्तमण्डपे ।
18537 भर्त्रा विलोकिता नित्यं निवत्स्यामि यथासुखम् ॥ २८ ॥
18538
18539 शुद्धान्तस्यान्तःपुरस्य मण्डपे ॥ २८ ॥
18540
18541 अद्यैवारभ्यैतदर्थं देवीं ज्ञप्तिं सरस्वतीम् ।
18542 जपोपवासनियमैरातोषं पूजयाम्यहम् ॥ २९ ॥
18543
18544 ज्ञप्तिं चिद्रूपम् ॥ २९ ॥
18545
18546 इति निश्चित्य सा नाथमनुक्त्वैव वराङ्गना ।
18547 यथाशास्त्रं चचारोग्रं तथा नियममास्थिता ॥ ३० ॥
18548
18549 नाथमनुक्त्वेति । ननु या स्त्री भर्त्राऽननुज्ञाता उपवासव्रतं चरेत् । आयुष्यं
18550 हरते भर्तुर्मृता नरकमृच्छति ॥ इति निन्दितमिदं कथं यथाशास्त्रमिति
18551 चेत् । प्रत्यक्षं वा परोक्षं वा सदा भर्तृहितं चरेत् ।
18552 व्रतोपवासनियमैरुपचारैश्च लौकिकैः ॥ इति शास्त्रनिन्दाया
18553 भर्तृहितातिरिक्तस्वकाम्योपवासादिविषयत्वाददोषः ॥ ३० ॥
18554
18555 त्रिरात्रस्य त्रिरात्रस्य पर्यन्ते कृतपारणा ।
18556 देवद्विजगुरुप्राज्ञविद्वत्पूजापरायणा ॥ ३१ ॥
18557
18558 स्नानदानतपोध्याननित्योद्युक्तशरीरिका ।
18559 सर्वास्तिक्यसदाचारकारिणी क्लेशहारिणी ॥ ३२ ॥
18560
18561 सर्वस्मिन् शास्त्रार्थे अस्त्यवश्यं फलमिति बुद्धिः सर्वास्तिक्यम् ॥ ३२ ॥
18562
18563 यथाकालं यथोद्योगं यथाशास्त्रं यथाक्रमम् ।
18564 तोषयामास भर्तारमपरिज्ञातसंस्थितिः ॥ ३३ ॥

18565
18566 त्रिरात्रशतमेवं सा बाला नियमशालिनी।
18567 अनारतं तपोनिष्ठामतिष्ठत्कष्टचेष्टया॥ ३४॥
18568
18569 अतिष्ठत् अनुष्ठितवती॥ ३४॥
18570
18571 प्। १७०)
18572
18573 त्रिरात्राणां शते चाथ पूजिता प्रतिमानिता।
18574 तुष्टा भगवती गौरी वागीशा समुवाच ताम्॥ ३५॥
18575
18576 बाह्योपचारैः पूजिता भावोपचारैः प्रतिमानिता॥ ३५॥
18577
18578 श्रीसरस्वत्युवाच।
18579
18580 निरन्तरेण तपसा भर्तृभक्त्यतिशालिना।
18581 परितुष्टास्मि ते वत्से गृहाण वरमीप्सितम्॥ ३६॥
18582
18583 श्रीराज्ञ्युवाच।
18584
18585 जय जन्मजराज्वालादाहदोषशशिप्रभे।
18586 जय हार्दान्धिकारौघनिवारणरविप्रभे॥ ३७॥
18587
18588 भाविभर्तृजीवनब्रह्मविद्याप्राप्तिं भाग्यानुरूपामेव स्तुतिं
18589 दैवाद्राज्ञ्युवाच - जयेति॥ ३७॥
18590
18591 अम्ब मातर्जगन्मातस्त्रायस्व कृपणामिमाम्।
18592 इदं वरद्वयं देहि यदहं प्रार्थये शुभे॥ ३८॥
18593
18594 इमां मामिति शेषः॥ ३८॥
18595
18596 एकं तावद्विदेहस्य भर्तुर्जीवो ममाम्बिके।
18597 अस्मादेव हि मा यासीन्निजान्तःपुरमण्डपात्॥ ३९॥
18598
18599 द्वितीयं त्वां महादेवि प्रार्थयेऽहं यदा यदा।
18600 दर्शनाय वरार्थाय तदा मे देहि दर्शनम्॥ ४०॥
18601
18602 यदा यदा वरार्थाय दर्शनाय प्रार्थये तदा दर्शनं देहीत्यन्वयः॥ ४०॥
18603
18604 इत्याकर्ण्य जगन्माता तवास्त्वेवमिति स्वयम्।
18605 उक्त्वान्तर्धानमगमत्प्रोत्थायोर्मिरिवार्णवे॥ ४१॥
18606
18607 अथ सा राजमहिषी परितुष्टेष्टदेवता।
18608 श्रुतगीतेव हरिणी बभूवानन्दधारिणी॥ ४२॥
18609
18610 पक्षमासर्तुकटके दिनारे वर्षदण्डके।
18611 क्षणनाभौ स्पन्दमये कालचक्रे वहत्यथ॥ ४३॥
18612
18613 पक्षा नेमिकटका मासा मध्यकटका ऋतवो नाभिकटका यस्य। त्रिनाभि
18614 चक्रमजरम् इति श्रुतेः। त्रतयानुस्यूतानि दिनान्यरास्तिर्यगनुप्रोतशङ्कवः
18615 केसरप्राया यस्य। वर्षः संवत्सरोऽक्षदण्डको यस्य।
18616 क्षणस्त्रिंशत्कलात्मको नाभिर्मध्यच्छिद्रं यस्य तथाविधे

18617 सूर्यादिस्पन्दमये ॥ ४३ ॥
18618

18619 अन्तर्धिमाजगामास्याः पत्युस्तच्चेतनं तनौ ।
18620 संदृश्यमानमेवाशु शुष्कपत्त्ररसो यथा ॥ ४४ ॥
18621

18622 रणखण्डितदेहस्येत्युत्तराल्लभ्यते [देहस्य इति षष्ठ्येकवचनान्तं
18623 पदमेतत् ४५ तमश्लोकगतरणखण्डितदेहे इति सप्तम्येकवचननिर्देशकमिति
18624 भाति] । पत्युस्तत्प्राणनादिलिङ्गैः प्रत्यक्षप्रायं चेतनं तनौ लिङ्गदेहे
18625 अन्तर्धिं तिरोभावमाययौ ॥ ४४ ॥
18626

18627 रणखण्डितदेहेऽस्मिन्मृतेऽन्तःपुरमण्डपे ।
18628 निर्जला नलिनीवासौ परां म्लानिमुपाययौ ॥ ४५ ॥
18629

18630 नलिनी पद्मिनी ॥ ४५ ॥
18631

18632 विषोष्णश्वसनध्वस्तसकलाधरपल्लवा ।
18633 प्राप सा मरणावस्थां सशल्येव मृगी यथा ॥ ४६ ॥
18634

18635 विषवदुष्णेन निःश्वसनेन ध्वस्तो विवर्णीकृतः । सशल्येवेत्युत्प्रेक्षा ।
18636 मृगी यथेत्युपमेति न यथाशब्दपौनरुक्त्यम् । सशल्येति मृग्या अपि
18637 विशेषणम् ॥ ४६ ॥
18638

18639 प्राप सा तमसान्धत्वं तस्मिन्मरणमागते ।
18640 दीपज्वालालवे क्षीणे सद्मश्रीरिव भूषिता ॥ ४७ ॥
18641

18642 सद्मश्रीर्गृहशोभा । भूषिता प्राग्दीपेनालंकृता ॥ ४७ ॥
18643

18644 कार्श्यमाप क्षणेनासौ बाला विरसतां गता ।
18645 यथा स्रोतस्विनी स्रोतःक्षये क्षारविधूसरा ॥ ४८ ॥
18646

18647 स्रोतसः प्रवाहस्य क्षये शोषे क्षारेणोषेण विधूसरा ॥ ४८ ॥
18648

18649 क्षिप्रमाक्रन्दिनी क्षिप्रं मौनमूका वियोगिनी ।
18650 बभूव चक्रवाक्रीव मानिनी मरणोन्मुखी ॥ ४९ ॥
18651

18652 मानिनी प्राग्भर्तृमन्मानवती तत्क्षयान्मरणोन्मुखी ॥ ४९ ॥
18653

18654 अथ तामतिमात्रविह्वलां
18655 सकृपाकाशभवा सरस्वती ।
18656 शफरीं ह्रदशोषविह्वलां
18657 प्रथमा वृष्टिरिवान्वकम्पतः ॥ ५० ॥
18658

18659 सकृपा प्राग्बहुजन्मस्वाराधितत्वात्तत्त्वज्ञानदानपर्यवसितकृपावती ।
18660 आकाशभवा अशरीरिणीति यावत् । अन्वकम्पतेत्यनुकम्पाफलमाश्वासनं
18661 लक्ष्यते ॥ ५० ॥
18662

18663 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे
18664 मण्डपोपाख्याने राज्ञीपरिदेवनं नाम षोडशः सर्गः ॥ १६ ॥
18665

18666 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
18667 राज्ञीपरिदेवनं नाम षोडशः सर्गः ॥ १६ ॥
18668

18669 सप्तदशः सर्गः १७
18670
18671 श्रीसरस्वत्युवाच ।
18672
18673 शवीभूतमिमं वत्से भर्तारं पुष्पपुञ्जके ।
18674 आच्छाद्य स्थापयैनं त्वं पुनर्भर्तारमेष्यसि ॥ १ ॥
18675
18676 अन्वयव्यतिरेकाभ्यां नव्यप्राक्तनसर्गयोः ।
18677 मनोमात्रविलासत्वात्तुल्यत्वमिह बोध्यते ॥ १ ॥
18678
18679 अशरीरिण्येवाश्वासनवरप्रदानाभ्यामनुकम्पमाना श्रीसरस्वत्युवाच -
18680 शवीभूतमिति । पुष्पपुञ्जके पुष्पराशौ ॥ १ ॥
18681
18682 पुष्पाणि म्लानिमेष्यन्ति नो नचैष विनङ्क्ष्यति ।
18683 भूयश्च तव भर्तृत्वमचिरेण करिष्यति ॥ २ ॥
18684
18685 नो इति निषेधार्थो निपातः पूर्वान्वयी ॥ २ ॥
18686
18687 एतदीयश्च जीवोऽसावाकाशविशदस्तव ।
18688 न निर्गमिष्यति क्षिप्रमितोऽन्तःपुरमण्डपात् ॥ ३ ॥
18689
18690 प्राक्तनवरस्यासत्यताशङ्कां वारयति - एतदीय इति ॥ ३ ॥
18691
18692 षट्पदश्रेणिनयना समाकर्ण्येति बन्धुभिः ।
18693 सा समाश्वासितागत्य पयोभिरिव पद्मिनी ॥ ४ ॥
18694
18695 यथा पयःशोषाच्छुष्यन्ती पद्मिनी पयोभिरागत्याश्वास्यते तद्वत् ॥ ४ ॥
18696
18697 पतिं संस्थाप्य तत्रैव पुष्पपूरप्रगोपितम् ।
18698 किंचिदाश्वासिताऽतिष्ठद्दरिद्रेव निधानिनी ॥ ५ ॥
18699
18700 प्। १७१)
18701
18702 तस्मिन्नेव दिने सैषा तस्मिञ्छुद्धान्तमण्डपे ।
18703 अर्धरात्रे परिजने सर्वस्मिन्निद्रया हृते ॥ ६ ॥
18704
18705 शुद्धान्तोऽवरोधः ॥ ६ ॥
18706
18707 ज्ञप्तिं भगवतीं देवीं शुद्धध्यानमहाधिया ।
18708 दुःखादाह्वाययामास सोवाच समुपेत्य ताम् ॥ ७ ॥
18709
18710 शुद्धध्यानसहितमहाधिया आहूतेवागतेत्याह्वाययामासेत्युत्प्रेक्षा । अर्तिह्री
18711 - इत्येतदपवादेन शाच्छासाह्वा - इत्यादिना युक् । सा सरस्वती ॥ ७ ॥
18712
18713 किं स्मृतास्मि त्वया वत्से धत्से किमिति शोकिताम् ।
18714 संसारभ्रान्तयो भान्ति मृगतृष्णाम्बुवन्मुधा ॥ ८ ॥
18715
18716 तत्रादौ शोकापनयाय तद्धेतूनां मिथ्यात्वमाह - संसारेति ॥ ८ ॥
18717
18718 लीलोवाच ।
18719
18720 क्व ममावस्थितो भर्ता किं करोत्यथ कीदृशः ।

18721 समीपं नय मां तस्य नैका शक्नोपि जीवितुम् ॥ ९ ॥
18722
18723 श्रीदेव्युवाच ।
18724
18725 चित्ताकाशं चिदाकाशमाकाशं च तृतीयकम् ।
18726 द्वाभ्यां शून्यतरं विद्धि चिदाकाशं वरानने ॥ १० ॥
18727
18728 इहलोकवत्परलोककल्पनाया अपि चिन्मात्राधिष्ठानकत्वं दर्शयितुं
18729 चिदाकाशं विविच्य दर्शयति - चित्तेति । वासनामयं चित्ताकाशं निरूढं
18730 व्यावहारिकं तृतीयकं उभयसंधावुभयशून्यं चिदाकाशं
18731 सुलक्ष्यमिति भावः ॥ १० ॥
18732
18733 तच्चिदाकाशकोशात्म चिदाकाशैकभावनात् ।
18734 अविद्यमानमप्याशु दृश्यतेऽथानुभूयते ॥ ११ ॥
18735
18736 चिदाकाशमेव स्वावरणाज्ञानाविविक्तं स्फुरदसज्जगदात्मना सद्यो
18737 दृश्यते तेन च दुःखाद्यनुभूयत इत्याह - तदिति । तत्
18738 पृथगविद्यमानमपि चिदाकाशस्यैकाग्रचिन्तनात् आशु इत एव दृश्यते अथ
18739 तत्र गत्वा अनुभूयते चेत्यर्थः ॥ ११ ॥
18740
18741 देशाद्देशान्तरप्राप्तौ संविदो मध्यमेव यत् ।
18742 निमिषेण चिदाकाशं तद्विद्धि वरवर्णिनि ॥ १२ ॥
18743
18744 तदर्थं चिदाकाशं परिचाययति - देशादिति ।
18745 क्रमिकविषयद्वयाभाससंधौ तदुभयशून्यचिदाकाशः सुलक्ष्य इत्यर्थः
18746 ॥ १२ ॥
18747
18748 तस्मिन्निरस्तनिःशेषसंकल्पा स्थितिमेषि चेत् ।
18749 सर्वात्मकं पदं तत्त्वं त्वं तदाप्रोष्यसंशयम् ॥ १३ ॥
18750
18751 अतस्तव तत्प्राप्तिरेव तद्भावस्थितभर्तृसमीपे प्राप्तिस्तत्रैव
18752 भर्तृपरलोककल्पनादित्याशयेनाह - तस्मिन्निति ॥ १३ ॥
18753
18754 अत्यन्ताभावसंपत्त्या जगतश्चैतदाप्यते ।
18755 नान्यथा मद्वरेणाशु त्वं तु प्राप्स्यसि सुन्दरि ॥ १४ ॥
18756
18757 कथं तर्हि तत्प्राप्तिस्तत्रोपायमाह - अत्यन्तेति । तत्त्वदर्शनेनाविद्याक्षये
18758 द्वैतानुदय एवात्यन्ताभावसंपत्तिः । तत्र नान्यः पन्था इति
18759 श्रुतिर्मानमित्यभिप्रेत्याह - नान्यथेति । मम तर्हि कथं
18760 ज्ञानप्राप्तिस्तत्राह - मद्वरेणेति ॥ १४ ॥
18761
18762 श्रीवसिष्ठ उवाच ।
18763
18764 इत्युक्त्वा सा ययौ देवी दिव्यमात्मीयमास्पदम् ।
18765 लीला तु लीलयैवासीन्निर्विकल्पसमाधिभाक् ॥ १५ ॥
18766
18767 लीलया वरप्रभावाद्दिनैवाभ्यासश्रमम् ॥ १५ ॥
18768
18769 तत्तत्याज निमेषेण सान्तःकरणपञ्जरम् ।
18770 स्वदेहं खमिवोड्डीना मुक्तनीडा विहंगमी ॥ १६ ॥
18771
18772 लोहपञ्जरवद्दुर्भेद्यान्तःकरणसहितं स्थूलदेहम् । स्थिरीकृतचेतसा

18773 अभिमानत्याग एवात्र विवक्षितो नतु मरणवद्बहिर्निर्गमनम् ॥ १६ ॥
18774
18775 ददर्श खस्था भर्तारं तस्मिन्नेवालयाम्बरे ।
18776 संस्थितं पृथ्वीपालमास्थाने बहुराजनि ॥ १७ ॥
18777
18778 खमत्र चिदाकाशस्तत्स्था सती आलयाम्बरे
18779 आविर्भूतस्ववासनाकर्मानुरूपदेहगेहादिसंपत्त्या संस्थितम् ॥ १७ ॥
18780
18781 सिंहासने समारूढं जयजीवेति संस्तुतम् ।
18782 प्रस्तुतं मण्डलानीककार्यमाहर्तुमादृतम् ॥ १८ ॥
18783
18784 प्रस्तुतमुपस्थितं कार्यमाहर्तुं संपादयितुम् ॥ १८ ॥
18785
18786 पताकामञ्जरीकीर्णराजधानीगृहस्थितम् ।
18787 पूर्वद्वारस्थितासंख्यमुनिविप्रर्षिमण्डलम् ॥ १९ ॥
18788
18789 पताकामण्डलैर्व्याप्ताया राजधान्याः प्रधानगृहे स्थितम् । इत आरभ्य
18790 बहुपदबहुव्रीहयः सर्वे ॥ १९ ॥
18791
18792 दक्षिणद्वारगासंख्यराजराजेशमण्डलम् ।
18793 पश्चिमद्वारगासंख्यललनालोकमण्डलम् ॥ २० ॥
18794
18795 ललनालोकाः स्त्रीजनाः ॥ २० ॥
18796
18797 उत्तरद्वारगासंख्यरथहस्त्यश्वसंकुलम् ।
18798 एकभृत्यविनिर्णीतदक्षिणापथविग्रह्म ॥ २१ ॥
18799
18800 एकभृत्यवचसा विनिर्णीतो दक्षिणापथे विग्रहो युद्धप्रसङ्गो येन ॥ २१ ॥
18801
18802 कर्णाटनाथरचितपूर्वदेशक्रियाक्रमम् ।
18803 सुराष्ट्राधिपनिर्णीतसर्वम्लेच्छोत्तरापथम् ॥ २२ ॥
18804
18805 सर्वदेशराजानां तद्वश्यतां दर्शयति - कर्णाटेति । क्रियाक्रमो
18806 व्यवहारमर्यादास्थापनम् । निर्णीताः निगृह्य वशीकृताः ॥ २२ ॥
18807
18808 मालदेशसमाक्रान्तसर्वपाश्चात्यतङ्गणम् ।
18809 दक्षिणाब्धितटायातलङ्कादूतविनोदितम् ॥ २३ ॥
18810
18811 मालदानामीशेन राज्ञा सम्यगाक्रान्तास्तङ्गणा देशविशेषाः ॥ २३ ॥
18812
18813 पूर्वाब्धितटमाहेन्द्रसिद्धोक्तगगनापगम् ।
18814 उत्तराब्धितटायातदूतवर्णितगुह्यकम् ॥ २४ ॥
18815
18816 महेन्द्रपर्वते भवो माहेन्द्रः सिद्धस्तपस्वी तेनोक्ता वर्णिता
18817 सहस्रमुखविस्तारादिविचित्रा गगनापगा गङ्गा यस्मै ॥ २४ ॥
18818
18819 पश्चिमाब्धितटालोकवर्णितास्तमयक्रमम् ।
18820 असंख्यबद्धभूपालकलाकीर्णाखिलाजिरम् ॥ २५ ॥
18821
18822 अब्धितटमालोकितवानित्यब्धितटालोको दूतस्तेन वर्णितः । असंख्यानां
18823 श्रेणीबद्धानां भूपालानां कलाभिः कान्तिभिः ॥ २५ ॥
18824

18825 यज्ञवाटपठद्विप्रजिततूर्याग्रनिःस्वनम् ।
18826 बन्दिकोलाहलोल्लासप्रतिश्रुद्वनकुञ्जरम् ॥ २६ ॥
18827
18828 तुर्याग्रं वाद्यश्रेष्ठम् । वन्दिकोलाहलोल्लासस्य प्रतिश्रुतः प्रतिध्वनिकरा
18829 वनकुञ्जरा यस्य ॥ २६ ॥
18830
18831 प्। १७२)
18832
18833 गेयवाद्योतध्वानप्रध्वनद्गानान्तरम् ।
18834 हयहस्तिरथाराजिरजोमेघघनाम्बरम् ॥ २७ ॥
18835
18836 गेयेभ्यो वाद्येभ्यश्चोद्यतैर्ध्वनैः प्रध्वनद्गगनमध्यं यस्य ।
18837 हयादीनां आ सर्वतो राजयो यत्र ॥ २७ ॥
18838
18839 पुष्पकर्पूरधूपाढ्यं गन्धामोदितपर्वतम् ।
18840 सर्वमण्डलसंभाररचितानेकशासनम् ॥ २८ ॥
18841
18842 पर्वतशब्देन पर्वतसदृशाः प्रासादा उच्यन्ते । सर्वेभ्यो मण्डलेभ्य
18843 आहृत्योपायनादि संभरन्ति पूरयन्ति गृहं ये
18844 मृत्यास्तेभ्योरचितानेकशासनम् ॥ २८ ॥
18845
18846 यशःकर्पूरजलदसुशुभ्राम्बरपर्वतम् ।
18847 रोदसीस्तम्भभूतैकस्वप्रतापजितार्ककम् ॥ २९ ॥
18848
18849 स्वयशःकर्पूरराश्युपमाना जलदलक्षणाः सुशुभ्रा अम्बरोद्भूतपर्वता
18850 यस्य ॥ २९ ॥
18851
18852 आरम्भमन्थरोदारकार्यसंव्यग्रभूमिपम् ।
18853 नानानगरनिर्माणसोद्योगस्थपतीश्वरम् ॥ ३० ॥
18854
18855 आरम्भमन्थरेषु गुरुतरारम्भेषूदारकार्येषु संव्यग्रा भूमिपाः
18856 सामन्ता यस्य । स्थपतयः शिल्पिकुलपतयः ॥ ३० ॥
18857
18858 पपाताथ महारम्भा सा तां नरपतेः सभाम् ।
18859 व्योमात्मिका व्योममयीं मिहिकेवाम्बराटवीम् ॥ ३१ ॥
18860
18861 पपात प्रविवेश । सा लीला । वासनामात्ररूपत्वादुभयोर्व्योमरूपता । मिहिका
18862 नीहारपटली ॥ ३१ ॥
18863
18864 भ्रमन्तीं तत्र तामग्रे ददृशुस्ते न केचन ।
18865 संकल्पमात्ररचितां पुरुषाः कामिनीमिव ॥ ३२ ॥
18866
18867 संकल्पमात्ररचितामित्युभयान्वयि ॥ ३२ ॥
18868
18869 तथा ते तां न ददृशुः संचरन्तीं पुरोगताम् ।
18870 अन्यसंकल्परचितामन्येन नगरीं यथा ॥ ३३ ॥
18871
18872 प्राक्तनानेव तान्सर्वान्स्वान्ददर्श सभागतान् ।
18873 भूभृतेव सुसंप्राप्तान्नगरान्नगरान्तरम् ॥ ३४ ॥
18874
18875 स्वान्स्वीयान् । भूमृता सहेति शेषः ॥ ३४ ॥
18876

18877 तद्देशांस्तत्समाचारांस्तथा तानेव बालकान् |
18878 ता एव बालवनितास्तांस्तानेव च मन्त्रिणः || ३५ ||
18879
18880 तैः स्वदेशीयैः सम आचारो येषां तन् || ३५ ||
18881
18882 तानेव भूमिपालांश्च तांस्तानेव च पण्डितान् |
18883 तानेव नर्मसचिवान्भृत्यांस्तानेव तादृशान् || ३६ ||
18884
18885 नर्मसचिवान् रहस्यविचारसहायान् || ३६ ||
18886
18887 अथान्यानप्यपूर्वांश्च पण्डितान्सुहृदस्तथा |
18888 व्यवहारांस्तथान्यांश्च पौरानन्यांस्तथैव च || ३७ ||
18889
18890 वासनामये स्वाप्न इव न पूर्वसादृश्यनियम इत्याह - अथेति || ३७ ||
18891
18892 मध्याह्नकाले दिवसे घनदावाकुला दिशः |
18893 अन्तरिक्षं सचन्द्रार्कं साम्भोदपवनध्वनि || ३८ ||
18894
18895 घनैर्निबिडैर्दावैररण्यैः || ३८ ||
18896
18897 महीरुहनदीशैलपुरपत्तनमण्डितम् |
18898 नानानगरविन्यासजङ्गलग्रामसंकुलम् || ३९ ||
18899
18900 द्विरष्टवर्षं भूपालं प्राक्तन्या जरसोज्झितम् |
18901 प्राक्तनीं जनतां सर्वां समस्स्तान्ग्रामवासिनः || ४० ||
18902
18903 सा तानालोक्य ललना चिन्तापरवशाभवत् |
18904 तस्मिन्नगरवास्तव्याः किं ते सर्वे मृता [मृता अपि इति पाठः]
18905 इति || ४१ ||
18906
18907 तस्मिन्वासनानगरे आलोक्य नगरवास्तव्याः प्राक्तननगरस्थाः || ४१ ||
18908
18909 पुनः प्रज्ञप्तिबोधेन प्राक्तनान्तःपुरं गता |
18910 क्षणेन च ददर्शात्र सार्धरात्रे तथैव तान् || ४२ ||
18911
18912 प्रज्ञप्तिः सरस्वती तत्प्रसादजेन बोधेन समाधिव्युत्थानेन | तथैव
18913 पूर्ववदेव स्थितानिति शेषः || ४२ ||
18914
18915 अथ सोत्थापयामास निद्राक्रान्तं सखीजनम् |
18916 आह चातीव मे दुःखमास्थानं दीयतामिति || ४३ ||
18917
18918 आस्थानं सभायां संनिधानम् || ४३ ||
18919
18920 भर्तुः सिंहासनस्यास्य पार्श्वे तिष्ठाम्यहं यदि |
18921 पश्यामि [पश्यन्ती इति पाठः] स्वभ्यसंघातं तत्प्रजीवामि
18922 नान्यथा || ४४ ||
18923
18924 स राजपरिवारोऽथ तयेत्युक्ते [तयेत्युक्तो इति पाठः] यथाक्रमम् |
18925 आसीद्विनिद्रः संव्यग्रः [संविग्नः इति पाठः] सर्वः
18926 सर्वस्वकर्मणि || ४५ ||
18927
18928 यथाक्रमं यथोचितं सर्वस्मिन्स्वस्वोचितकर्मणि || ४५ ||

18929
18930 पौरान्सभ्यान्समानेतुं [सर्वान्सभ्यान् इति पाठः]
18931 ययुर्याष्टिकपङ्क्तयः |
18932 व्यवहारं कलयितुमुर्व्यामर्ककरा इव || ४६ ||
18933
18934 आस्थानभूमिं भृत्याश्च मार्जयामासुराद्दताः |
18935 प्रावृट्योदमलिनं खं शरद्वासरा इव || ४७ ||
18936
18937 अङ्गणं प्रति दीपौघास्तस्थुः पीततमोम्भसः |
18938 आश्चर्यदर्शनायेव संप्राप्ता ऋक्षपङ्क्तयः || ४८ ||
18939
18940 ऋक्षपङ्क्तयो नक्षत्रसमूहाः || ४८ ||
18941
18942 जनताः पूरयामासुः पूरैरजिरभूमिकाः |
18943 अब्धीन्प्रलयसंशुष्कान्पुरासर्ग इवाम्भसा || ४९ ||
18944
18945 पूरैः पूरवत्प्रवृत्तैः सङ्घैः | पुरासर्गो जनसृष्टिप्राक्कालः || ४९ ||
18946
18947 आजग्मुर्मन्त्रिसामन्ताः स्वस्वं स्थानमनिन्दिताः |
18948 त्रैलोक्ये पुनरुत्पन्ने लोकपाला यथा दिशः || ५० ||
18949
18950 ववुराकीर्णकर्पूरसान्द्रावश्यायशीतलाः |
18951 उत्फुल्लकुसुमोद्वान्तमांसलामोदितानिलाः || ५१ ||
18952
18953 अवश्यायो हिमम् | धावल्यशैत्याभ्यां
18954 तत्साद्दश्योपपादनायाकीर्णकपूरीति | कुसुमोद्वान्तर्मकरन्दैर्मांसलः
18955 पुष्ट आमोदः संजातो येषाम् | तारकादित्वादितच् || ५१ ||
18956
18957 पर्यन्तेषु प्रतीहारास्तस्थुर्धवलवाससः |
18958 ऋष्यमूकार्कतापार्तमेघमाला इवाद्रिषु || ५२ ||
18959
18960 पर्यन्तेष्वास्थानप्रान्तेषु | ऋष्यमूकः सुग्रीवालयस्तत्र
18961 सुग्रीवानुग्रहायार्कस्य विशेषसंनिधानात्तत्तापार्ताः | अद्रिषु हिमवदादिषु ||
18962 ५२ ||
18963
18964 प्रभापीततमःपुञ्जाः पेतुः पुष्पोत्करा भुवि |
18965 चण्डमारुतविध्वस्तास्तारकानिकरा इव || ५३ ||
18966
18967 चण्डमारुतोऽत्र प्रलयमारुतः || ५३ ||
18968
18969 प्। १७३)
18970
18971 आस्थानं पूरयामासुर्महीपालानुयायिनः |
18972 उत्फुल्लकमलोत्कीर्णं हंसा इव सरोवरम् || ५४ ||
18973
18974 सोंहासनसमीपस्थे हैमचित्रासने नवे |
18975 उपाविशदसौ लीला लीलैव स्मरचेतसि || ५५ ||
18976
18977 स्मरस्य चेतसि लीला रतिरिव स्मरविकृते चेतसि लीला शृङ्गारचेष्टेव वा || ५५ ||
18978
18979 ददर्श तान्नृपान्सर्वान्पूर्वानिव यथास्थितान् |
18980 गुरूनार्यान्सखीन्सभ्यान्सुहृत्संबन्धिबान्धवान् || ५६ ||

आर्यान्मान्यान् ॥ ५६ ॥

सकलमेव हि पूर्ववदेव सा
समवलोक्य मुदं परमां ययौ ।
नृपतिराष्ट्रजनं खलु जीवना-
भ्युदितया च बभौ शशिवच्छ्रिया ॥ ५७ ॥

खलु जीवनं निश्चितं जीवनं तदभ्युदितया ॥ ५७ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलोपाख्याने
संदेहराष्ट्रवर्णनं नाम सप्तदशः सर्गः ॥ १७ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
सन्देहराष्ट्रवर्णनं नाम सप्तदशः सर्गः ॥ १७ ॥

अष्टादशः सर्गः १८

श्रीवसिष्ठ उवाच ।

इत्थं विनोदयामीदं दुःखदं चित्तमित्यलम् ।
बोधयित्वेङ्गितैर्भूपानास्थानादुत्थिताथ सा ॥ १ ॥

समाधिदृष्टसर्गस्य पूर्वसर्गस्य चाधुना ।
दृश्यत्वात्तुल्यमिथ्यात्वे चिन्मात्रस्थितिरुच्यते ॥ १ ॥

इत्थमास्थानदर्शनादिना
विनोदयाम्याश्वासयामीतिङ्गितैरभिप्रायसूचकचेष्टाभिर्भूपान्बोध##-

प्रविश्यान्तःपुरं भर्तुः पार्श्वेऽन्तःपुरमण्डपे ।
विवेश पुष्पगुप्तस्य चिन्तयामास चेतसा ॥ २ ॥

पुष्पैर्गुप्तस्य च्छन्नस्य भर्तुः पार्श्वे उपविश्येति शेषः ॥ २ ॥

अहो विचित्रा मायेयमेतेऽस्मत्पुरमानवाः ।
बहिरन्तरवद्देशे तत्र चेह च संस्थिताः ॥ ३ ॥

तत्र समाधिदृष्टेऽन्तरवत्यवकाशवति देशे इहास्मत्पुरे च ॥ ३ ॥

तालीतमालर्हितालमालिता गिरयोऽप्यमी ।
यथा तत्र तथेहापि वत मायेयमातता ॥ ४ ॥

तथेहापि संस्थिता इत्यनुषज्यते ॥ ४ ॥

आदर्शेऽन्तर्बहिश्चैव यथा शैलोऽनुभूयते ।
बहिरन्तश्चिदादर्शे तथा सर्गोऽनुभूयते ॥ ५ ॥

मायात्वमेव दृष्टान्तेन संभावयति - आदर्श इति ॥ ५ ॥

तत्र भ्रान्तिमयः सर्गः कः स्यात्कः पारमार्थिकः ।
इति पृच्छामि वागीशामभ्यर्च्योक्तमसंशयम् ॥ ६ ॥

19033 तर्हि दृष्टान्तवदेवान्यतरस्यैव मिथ्यात्वं न द्वयोरपीति
19034 संभावनात्संदेहं दर्शयति - तत्रेति। वागीशामभ्यर्च्य तदग्रे
19035 स्वेनोक्तं संशयमसंशयं यथा स्यात्तथा पृच्छामि॥ ६॥
19036
19037 इति निश्चित्य तां देवीं पूजयामास सा तदा।
19038 ददर्श च पुरः प्राप्तां कुमारीरूपधारिणीम्॥ ७॥
19039
19040 भद्रासनगतां देवीमुपविश्य पुरोगता।
19041 परमार्थमहाशक्तिं लीलाऽपृच्छद्भुवि स्थिता॥ ८॥
19042
19043 भुवि स्थिता लीला पुरोगता भूत्वोपविश्यापृच्छदित्यन्वयः॥ ८॥
19044
19045 लीलोवाच।
19046
19047 अनुकम्प्यस्य नो देवि भजन्त्युद्वेगमुत्तमाः।
19048 त्वयैवं किल सर्गादौ स्थापिता स्थितिरुत्तमा॥ ९॥
19049
19050 अनुकम्प्यस्य दयोचितस्य विषये इति शेषः। स्थितिर्मर्यादा॥ ९॥
19051
19052 तदिदं यत्पुरः प्रह्वा पृच्छामि परमेश्वरि।
19053 तद्ब्रूहि त्वत्कृतो नूनं सफलो मेऽस्त्वनुग्रहः॥ १०॥
19054
19055 तत्तस्मादिदं पृच्छामि तद्ब्रूहि॥ १०॥
19056
19057 अस्यादर्शो जगन्नाम्नः खादप्यधिकनिर्मलः।
19058 यस्य योजनकोटीनां कोटयोऽवयवो मनाक्॥ ११॥
19059
19060 संशयबीजोद्घाटनायोपोद्घातेन समाध्यनुभूतमात्मस्वरूपं
19061 प्रथममनुवदति - अस्येत्यादित्रिभिः। मनाक् अल्पः॥ ११॥
19062
19063 निःसंधितवचोज्योतिर्घनो मृदुसुशीतलः।
19064 अचेत्यचिदिति ख्यातो नाम्ना निर्भित्तिरग्रतः॥ १२॥
19065
19066 निःसंधितानि संसर्गागोचराणि। अखण्डार्थानीति यावत्। वचांसि
19067 यस्मिंस्तथाविधः प्रज्ञानज्योतिर्घनः अमूर्तत्वान्मृदुरकठिनो
19068 निःशेषतापोपशमाच्छीतलो निर्भित्तिर्निरावरणो निर्भेदो वा
19069 सर्वव्यवहारेष्वग्रतः स्फुरन्निति शेषः॥ १२॥
19070
19071 दिक्कालकलनाकाशप्रकाशनियतिक्रमाः।
19072 यत्रेमे प्रतिबिम्बन्ति परां परिणतिं गताः॥ १३॥
19073
19074 यत्रात्मादर्शे दिक्कालौ तदन्तश्च सर्वकार्याणां कलना
19075 उत्पत्तिरुत्पन्नानामाकाशेऽवकाशप्राप्तिस्तेजोनयनादिभिः प्रकाशः
19076 प्रकाशितानां
19077 चार्थक्रियास्वनेनेदमित्थमेवोपपादितमीदृशव्यवहारोपयुक्तमिति
19078 नियतिक्रमाः परां देशकालविस्तीर्णा परिणतिं विकारवैचित्र्यं गताः प्राप्ताः
19079 प्रतिबिम्बवदन्तः स्फुरन्ति॥ १३॥
19080
19081 त्रिजगत्प्रतिबिम्बश्रीर्बहिरन्तश्च संस्थिता।
19082 तत्र वै कृत्रिमा का स्यात्कासौ वा स्यादकृत्रिमा॥ १४॥
19083
19084 औपोद्घातिकप्रसञ्जितं प्रस्तुतं पृच्छति - त्रिजगदिति। तत्र तयोर्मध्ये।

कृत्रिमा काल्पनिकी। मिथ्येति यावत्॥ १४॥

श्रीदेव्युवाच।

अकृत्रिमत्वं सर्गस्य कीदृशं वद सुन्दरि।
कीदृशं कृत्रिमत्वं स्याद्यथावत्कथयेति मे॥ १५॥

तत्त्वदृशा जगत्यकृत्रिमत्वं नास्त्येवेत्याशयेन संशयबीजं निरसिष्यन्ती
देवी पृच्छति - अकृत्रिमत्वमिति॥ १५॥

प्। १७४)

लीलोवाच।

यथाहमिह तिष्ठामि त्वं च देवि स्थिताम्बिके।
असावकृत्रिमः सर्ग इति देवेशि वेद्म्यहम्॥ १६॥

विपुलत्वेन प्रमितस्य तदपर्याप्तदेशकालपरिच्छेदो मिथ्यात्वव्याप्यो
गिरिप्रतिबिम्बादौ दृष्टः सच भर्तृप्रपञ्च एव दृश्यते नास्मिन्निति
वैधर्म्यदर्शिनी लीलोवाच - यथेत्यादि द्वाभ्याम् वेद्मि संभावयामि॥ १६
॥

यत्राधुना स भर्ता मे स्थितः सर्गः स कृत्रिमः।
अहं मन्ये यतः शून्यो देशकालाद्यपूरकः॥ १७॥

शून्यो मिथ्याभूतो यतः स्वावस्थित्यपर्याप्तस्याल्पस्यापि
देशकालव्यवहारादेरपूरकः प्रतिबिम्बस्वप्नपर्वतादिस्तथा दृष्ट
इत्यर्थः॥ १७॥

श्रीदेव्युवाच।

कृत्रिमोऽकृत्रिमात्सर्गान्न कदाचन जायते।
नहि कारणतः कार्यमुदेत्यसदृशं क्वचित्॥ १८॥

भर्तृसर्गो निर्हेतुकः सहेतुको वा। नाद्यः। अनुत्पत्तिप्रसङ्गात्। द्वितीये
कृत्रिमहेतुकोऽकृत्रिमहेतुको वा। तदाऽद्येपि एतत्सर्गहेतुकोऽन्यहेतुको वा।
तत्रान्यस्याप्रसिद्धेराद्यकल्पपरिशेषे कृत्रिमहेतोरस्यापि सर्गस्य
कृत्रिमत्वप्रसङ्गः। भिन्नसत्तकयोर्हेतुफलभावादर्शनादिति न
सर्गयोर्वैधर्म्यमित्याशयेन देव्युत्तरमाह - कृत्रिम इति॥ १८॥

लीलोवाच।

दृश्यते कारणात्कार्यं सुविलक्षणमम्बिके।
अम्ब्वादातुमशक्ता मृद्घटस्तज्जस्तदास्पदम्॥ १९॥

उक्तनियमे लीला व्यभिचारं शङ्कमानाह - दृश्यत इति। पिण्डभूता
मृत् अम्बु जलमादातुमन्तर्धारयितुमशक्ता। तज्जो घटस्तु तस्याम्बुन
आस्पदं धारणसमर्थो दृश्यते। तथाच समशक्तितानियमवन्न
समसत्तानियमोऽपि संभवतीति भावः॥ १९॥

श्रीदेव्युवाच।

19137 संपद्यते हि यत्कार्यं कारणैः सहकारिभिः।
19138 मुख्यकारणवैचित्र्यं किंचित्तत्रावलोक्यते॥ २०॥
19139
19140 उपादानवैचित्यात्सहकारिनिमित्तवैचित्र्याद्वा पिण्डघटयोर्वैचित्र्यमस्तु यत्खलु
19141 तुल्योपादाननिमित्तकं यथा दीपाद्दीपान्तरं न तत्र वैचित्र्यं दृश्यते।
19142 प्रकृतसर्गयोरपि तथात्वमेवेत्याशयेन देवी समाधत्ते - संपद्यत इति।
19143 मुख्यमसाधारणं दण्डचक्रादि॥ २०॥
19144
19145 वद तद्भर्तृसर्गस्य किं पृथ्व्यादिषु कारणम्।
19146 तद्भूमण्डलतो भ्हुतिर्जाता तत्र वरानने॥ २१॥
19147
19148 त्वद्भर्तृसर्गस्य तु नासाधारणकारणवैचित्र्यं
19149 शक्यमुभयोर्मायाकामकर्मवासनामात्रमूलकत्वाविशेषादित्याशयेनाह
19150 - वदेति। एतत्सर्गान्तर्गतपृथ्व्यादिषु मध्ये त्वद्भर्तृसर्गस्य किं
19151 कारणं येन वैचित्र्यं स्यात्। भौतिकेष्वपि यथा एतद्भूमण्डलतो
19152 भूतिरुत्पत्तिर्जाता तथा तद्भूमण्डलतस्तत्रेति न वैषम्यमित्यर्थः॥ २१॥
19153
19154 गतं [स्मृतेस्तत् इति पाठः] चेदित उड्डीय कुतः स्यादिह भूतलम्
19155 ।
19156 सहकारीणि कानीव कारणान्यत्र कारणे॥ २२॥
19157
19158 अत्रत्यभूम्यादेरेव तत्रत्यभूम्याद्युत्पत्तिरस्त्विति चेत्तत्राह - गतमिति।
19159 अगतेन तत्र कार्यजननायोगादिति भावः॥ २२॥
19160
19161 कारणानामभावेऽपि योदेति सहकारिता।
19162 तत्पूर्वकारणान्नान्यत्सर्वेणेत्यनुभूयते॥ २३॥
19163
19164 तस्मादत्रत्यसहकारिकारणानामभावेऽपि या सामग्रीलक्षणा सहकारिता उदेति
19165 कार्यान्यथानुपपत्त्या कल्प्यते सा
19166 तत्पूर्वसर्गकारणात्कामकर्मवासनाविद्यात्मकादन्यदन्या न। छान्दसी
19167 क्लीबता। तथाच न वैलक्षण्यसिद्धिरित्यर्थः॥ २३॥
19168
19169 लीलोवाच।
19170
19171 स्मृतिः सा देवि मद्भर्तुस्तथा स्फारत्वमागता।
19172 स्मृतिस्तत्कारणं वेद्मि सर्गोऽयमिति निश्चयः॥ २४॥
19173
19174 सत्यैतत्सर्गानुभवजन्यसंस्कारजः प्रमुष्टसत्ताकस्मृतितुल्यः स्वप्न इव
19175 मद्भर्तुः सर्गोऽस्त्विति विधान्तरेण वैधर्म्यं लीला शङ्कते - स्मृतिरिति॥
19176 २४॥
19177
19178 श्रीदेव्युवाच।
19179
19180 स्मृतिराकाशरूपा च यथा तज्जस्तथैव ते।
19181 भर्तुः सर्गोऽनुभूतोऽपि स व्योमैव तथाबले॥ २५॥
19182
19183 तर्हि तज्जस्तस्मात्पूर्वदृष्टसर्गात्संस्कारद्वारा जातस्ते भर्तुः सर्गो यथा
19184 स्मृतिराकाशरूपा स्मृतिरिव पुरोवर्तिविषयशून्यत्वादाकाशरूपस्तथा
19185 अनुभूतः संस्कारहेत्वनुभवविषयः पूर्वसर्गोऽपि व्योमैव। यतः सोऽपि तथा
19186 तत्पूर्वसर्गसंस्कारज इत्यर्थः॥ २५॥
19187
19188 लीलोवाच।

19189
19190 स्मृत्याकाशमयः सर्गो यथा भर्तुर्ममोदितः।
19191 तथैवेममहं मन्ये स सर्गोऽत्र निदर्शनम्॥ २६॥
19192
19193 उक्तमर्थं विमृश्याभ्युपगतवती लीला देव्याशयानुरूपमेवाह -
19194 स्मृतीति॥ २६॥
19195
19196 श्रीदेव्युवाच।
19197
19198 एवमेतदसत्सर्गो भर्तुस्तैर्भाति भासुरः।
19199 तथैवायमिहाभाति पश्याम्येतदहं सुते॥ २७॥
19200
19201 लीलोक्तिमनुमोदमाना देव्युवाच - एवमिति। सर्वथा असन्सर्गो यस्मिन्स
19202 आत्मैव भर्तुस्तैस्तैः सर्गभावैर्भाति॥ २७॥
19203
19204 लीलोवाच।
19205
19206 यथा पत्युरमूर्तोऽस्मात्सर्गात्सर्गो भ्रमात्मकः।
19207 जातस्तथा कथय मे जगद्भ्रमनिवृत्तये॥ २८॥
19208
19209 श्रीदेव्युवाच।
19210
19211 प्राक्स्मृतेर्भ्रान्तिमात्रात्मा सर्गोऽयमुदितो यथा।
19212 स्वप्नभ्रमात्मको भाति तथेदं कथ्यते शृणु॥ २९॥
19213
19214 अस्यापि सर्गस्य
19215 पूर्वसर्गगोचरसंस्कारजन्यभ्रान्तित्वमेवेत्युक्तार्थस्योपपादनाय
19216 मण्डपोपाख्यानारम्भं प्रतिजानीते - प्रागिति॥ २९॥
19217
19218 प्। १७५)
19219
19220 अस्ति क्वचिच्चिदाकाशे क्वचित्संसारमण्डपः।
19221 आकाशकाचदलवत्संस्थानाच्छादिताकृतिः॥ ३०॥
19222
19223 तदुपयोगितया संसारं जीर्णमण्डपत्वेन वर्णयति - अस्तीत्यादिना।
19224 क्वचिदज्ञानावृतांशे तत्रापि क्वचित्स्रष्टृन्तःकरणभागे। कश्चित् इति पाठे
19225 स्पष्टम्। आकाशरूपं यत्काचखण्डवन्नीलमूर्ध्वावयवसंस्थानं
19226 तेनाच्छादिताकृतिः॥ ३०॥
19227
19228 मेरुस्तम्भस्थलोकेशपुरन्ध्रीशालभञ्जिकः।
19229 चतुर्दशापवरकस्त्रिगर्तो भानुदीपकः॥ ३१॥
19230
19231 लोकपालतत्पुरन्ध्रीलक्षणाः प्रतिमा यस्मिन्। चतुर्दशभुवनरूपा अपवरका
19232 अन्तर्गृहा यस्मिन्। त्रिभुवनान्तरालानि गर्ता यस्मिन्॥ ३१॥
19233
19234 कोणस्थभूतवल्मीकव्याप्तपर्वतलोष्टकः।
19235 अनेकपुत्रजरठप्रजेशब्राह्मणास्पदम्॥ ३२॥
19236
19237 भूतवम्रीणां वल्मीकप्रायनगरादिव्याप्ताः पर्वतमृत्खण्डा यस्मिन्।
19238 प्रजेशो ब्रह्मा स एव ब्राह्मणः॥ ३२॥
19239
19240 जीवौघकोशकाराढ्यो व्योमोर्ध्वतलकालिमा।

19241 नभोनिवाससिद्धौघमशकाहितघुंगुमः ॥ ३३ ॥
19242
19243 कोशकाराः स्वबन्धनकोशनिर्मातृकृमिविशेषाः । घुंघुमेति
19244 ध्वन्यनुकरणम् ॥ ३३ ॥
19245
19246 पयोदगृहधूमोग्रजालावलितकोणकः ।
19247 वातमार्गमहावंशस्थितवैमानकीटकः ॥ ३४ ॥
19248
19249 वातमार्गौघः स एव महावंशः । मधुविद्यायां द्यौरेव तिरश्चीनवंश
19250 इत्युक्तेः ॥ ३४ ॥
19251
19252 सुरासुरादिदुर्बाललीलाकलकलाकुलः ।
19253 लोकान्तरपुरग्रामभाण्डोपस्करनिर्भरः ॥ ३५ ॥
19254
19255 लोकानां भ्वादीनां आन्तराः पुरग्रामा एव
19256 मण्डपान्तर्गतभाण्डोपस्करातिशयाः ॥ ३५ ॥
19257
19258 सरःस्रोतोब्धिसरसीजलोक्षितमहीतलः ।
19259 पातालभूतलस्वर्गभागभासुरकोटरः ॥ ३६ ॥
19260
19261 तत्र कस्मिंश्चिदेकस्मिन्कोणेष्वम्बरकोटरे ।
19262 शैललोष्टतलेष्वेको गिरिग्रामकगर्तकः ॥ ३७ ॥
19263
19264 तत्र तस्मिन्मण्डपे । कोणलोष्टतलयोर्बहुत्वं पाशबहुत्ववदविवक्षितम् । अल्पो
19265 ग्रामो ग्रामकः स एव गर्तकः ॥ ३७ ॥
19266
19267 तस्मिन्नदीशैलवनोपगूढे
19268 साग्निः सदारः सुतवानरोगः ।
19269 गोक्षीरवान् राजभयाद्विमुक्तः
19270 सर्वातिथिर्धर्मपरो द्विजोऽभूत् ॥ ३८ ॥
19271
19272 गोमत्त्वेनैव क्षीरवत्त्वलाभे पश्वन्तरसपत्तेरपि द्योतनाय क्षीरवानित्युक्तिः ।
19273 सर्वेऽपि वर्णाश्रमा अतिथयः पूज्याः पोष्याश्च यस्य ॥ ३८ ॥
19274
19275 इत्यार्षे श्रीवासिष्ठमहारामायणे मोक्षोपाये उत्पत्तिप्रकरणे लीलो०
19276 जगद्भ्रान्तिप्रतिपादनं नामाष्टादशः सर्गः ॥ १८ ॥
19277
19278 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
19279 जगद्भ्रान्तिप्रतिपादनं नामाष्टादशः सर्गः ॥ १८ ॥
19280
19281 एकोनविंशः सर्गः १९
19282
19283 श्रीदेव्युवाच ।
19284
19285 वित्तवेषवयःकर्मविद्याविभवचेष्टितैः ।
19286 वसिष्ठस्यैव सदृशो ननु वासिष्ठचेष्टितः ॥ १ ॥
19287
19288 राजदर्शनराज्येच्छाद्दृढसंकल्पतो जनिः ।
19289 पाद्मस्यास्यापि सर्गस्य प्राग्जन्मोक्त्यात्र वर्ण्यते ॥ १ ॥
19290
19291 वित्तं दैवं मानुषं च । वासिष्ठानि
19292 चेष्टितानीक्ष्वाकुवंशपौरोहित्यरामोपदेशादीनि तद्रहितः ॥ १ ॥

वसिष्ठ इति नाम्नासौ तस्याभूदिन्दुसुन्दरी।
नाम्ना त्वरुन्धती भार्या भूमिव्योमन्यरुन्धती॥ २॥

प्रसिद्धारुन्धतीस्वर्व्योमनि इयं तु भूमिव्योमनीति विशेषः॥ २॥

वित्तवेषवयःकर्मविद्याविभवचेष्टितैः।
समैव साप्यरुन्धत्या नतु चेतनसत्तया॥ ३॥

चेतनो जीवस्तत्सत्तया तत्स्वरूपस्थित्या। प्रसिद्धारुन्धतीवसिष्ठयोस्तत्त्वज्ञतया
जीवन्मुक्तत्वात्तयोस्तूत्तरजन्मभाविज्ञानत्वेन तदानीमज्ञतया
बद्धत्वादित्यर्थः॥ ३॥

अकृत्रिमप्रेमरसा विलासालसगामिनी।
सास्य संसारसर्वस्वमासीत्कुमुदहासिनी॥ ४॥

स विप्रस्तस्य शैलस्य सानौ सरलशाद्वले।
कदाचिदुपविष्टः सन्ददर्शादो महीपतिम्॥ ५॥

सानौ प्रस्थदेशे। सरलाः समाः शाद्वला हरिततृणभूमयो यस्मिन्॥ ५॥

समग्रपरिवारेण यान्तमाखेटकेच्छया।
महता सैन्यघोषेण मेरोरिव बिभित्सया॥ ६॥

आखेटकं मृगया। बिभित्सया विदारणसंभावनया। आशङ्कायां
सन्वक्तव्यः इति सन्॥ ६॥

चामरैः कीर्णचन्द्रांशुपताकाभिर्लतावनम्।
कुर्वाणं खं सितच्छत्रमण्डलै रूप्यकुट्टिमम्॥ ७॥

लतावनं चामरैः पताकाभिश्च कीर्णचन्द्रांशु कुर्वाणं तथा खं
सितच्छत्रमण्डलै रूप्यसौधं कुर्वाणम्। उभयत्र तत्सदृशमित्यर्थः॥ ७
॥

अश्वपादूस्वनत्क्ष्माजरेणुपूरावृताम्बरम्।
हास्तिकोत्तम्भितकरवाताट्टालकगोपितम्॥ ८॥

अश्वानां पादूभिः खुरत्राणलोहैः खनन्त्यां मृदुत्वात्खनने
अनुकूलीभवन्त्यां क्ष्मायां जातै रेणुभिः पूरिताकाशम्। आरोहति
हस्तीतिवत्कर्मणोऽप्यानुकूल्याचरणविवक्षया कर्तृत्वाच्छतृप्रत्ययः। तर्हि
किं राजाऽपि रजोभिः कीर्णो नेत्याह - हास्तिकेति। हस्तिनां समूहो हास्तिकम्।
अचित्तहस्तिधेनोष्ठक् इति ठक्। तत्पृष्ठस्थैरुत्तम्भिता निरुद्धाः कराः
सूर्यरश्मयो वाताश्च यैस्तथाविधैरट्टालकैः
स्वर्णरजतमुक्तामण्डपैर्गोपितं रक्षितम्॥ ८॥

प्। १७६)

महाकलकलावर्तद्रवद्दिग्भूतमण्डलम्।
कचत्काञ्चनमाणिक्यहारकेयूरमण्डलम्॥ ९॥

कलकलाः कोलाहलास्तैर्दिग्भ्रमादावर्तवत् द्रवन्ति दशदिशां
मृगादिभूतमण्डलानि यस्य तम्॥ ९॥

19345
19346 तमालोक्य महीपालमिदं चिन्तितवानसौ |
19347 अहो नु रम्या नृपता सर्वसौभाग्यभासिता || १० ||
19348
19349 चिन्तितवान् चिन्तापूर्वकं संकल्पितवान् || १० ||
19350
19351 पदातिरथहस्त्यश्वपताकाच्छत्रचामरैः |
19352 कदा स्यां दशदिक्कुञ्जपूरकोऽहं महीपतिः || ११ ||
19353
19354 कदा मे वायवः कुन्दमकरन्दसुगन्धयः |
19355 पास्यन्त्यन्तःपुरस्त्रीणां सुरतश्रमसीकरान् || १२ ||
19356
19357 कर्पूरेण पुरन्ध्रीणां पूर्णेन यशसा दिशाम् |
19358 इन्दूदयावदातानि कदा कुर्यां मुखान्यहम् || १३ ||
19359
19360 सुचरित्राचरणशिक्षणैः पुरं धारयन्तीति पुरन्ध्रयस्तासां दिशां च
19361 मुखानि कर्पूरमिश्रचन्दनेन यशसा च क्रमादिन्दूदयेनेवावदातानि
19362 सप्रकाशानि कदा कुर्याम् || १३ ||
19363
19364 इत्थं ततःप्रभृत्येष विप्रः संकल्पवानभूत् |
19365 स्वधर्मनिरतो नित्यं यावज्जीवमतन्द्रितः || १४ ||
19366
19367 एवमिच्छामुपवर्ण्येष्टविषये संकल्पमाह - इत्थमिति || १४ ||
19368
19369 हिमाशनिरिवाम्भोजं जर्जरीकर्तुमाद्दता |
19370 जले जर्जरितेवाथ जरा द्विजमुपाययौ || १५ ||
19371
19372 हिमात्मिका अशनिर्वज्रमम्भोजमिव सरोजले जर्जरः सेतुशैथिल्यं तद्वत्तेव
19373 चेत्यर्थः || १५ ||
19374
19375 आसन्नमरणस्याथ भार्या म्लानिमुपाययौ |
19376 तस्य शाम्यति पुष्पर्तौ लतेव ग्रीष्मभीतितः || १६ ||
19377
19378 पुष्पर्तौ वसन्ते || १६ ||
19379
19380 मामथाराधितवती सा ततस्त्वमिवाङ्गना |
19381 अमरत्वं सुदुष्प्रापं बुद्ध्वेमं सावृणोद्वरम् || १७ ||
19382
19383 देवि स्वमण्डपादेव जीवो भर्तुर्मृतस्य मे |
19384 मायासीदित्यतस्तस्याः स एवाङ्गीकृतो मया || १८ ||
19385
19386 स्वमण्डपाद्बहिरिति शेषः | मायासीदेवेत्यन्वयः | अतः प्रार्थनात्स
19387 प्रार्थितोऽर्थोङ्गीकृतो दत्त इति यावत् || १८ ||
19388
19389 अथ कालवशाद्विप्रः स पञ्चत्वमुपाययौ |
19390 तस्मिन्नेव गृहाकाशे जीवाकाशतया स्थितः || १९ ||
19391
19392 पञ्चत्वं मरणम् | अन्तःकरणवासनावच्छिन्नं ब्रह्म
19393 जीवाकाशस्तद्भावेन स्थितः || १९ ||
19394
19395 संपन्नः प्राक्तनानल्पसंकल्पवशतः स्वयम् |
19396 आकाशवपुरेवैष पतिः परमशक्तिमान् || २० ||

19397
19398 नृपः संपन्न इत्युत्तरत्रान्वयः। परमशक्तिमान्
19399 दैवमानुषशक्तिविशिष्टः॥ २०॥
19400
19401 प्रभावजितभूपीठः प्रतापाक्रान्तविष्टपः।
19402 कृपापालितपातालस्त्रिलोकविजयी नृपः॥ २१॥
19403
19404 ते एव शक्ती प्रभावप्रतापशब्दाभ्यां विभज्योक्तेः। विष्टपोऽत्र त्रिविष्टपं
19405 भूपातालयोः पृथग्ग्रहणात्॥ २१॥
19406
19407 कल्पाग्निररिवृक्षाणां स्त्रीणां मकरकेतनः।
19408 मेरुर्विषयवायूनां साध्वब्जानां दिवाकरः॥ २२॥
19409
19410 दावाग्नौ पुनः प्ररोहसंभावनापि स्यान्नतु कल्पाग्नौ। विषया एव
19411 वायवश्चापलहेतुत्वात्तेषां मेरुरिवाप्रकम्प्यो विष्टम्भकश्च॥ २२॥
19412
19413 आदर्शः सर्वशास्त्राणामर्थिनां कल्पपादपः।
19414 पादपीठं द्विजाग्र्याणां राकाधर्मामृतत्विषः॥ २३॥
19415
19416 धर्मलक्षणस्यामृतत्विषश्चन्द्रस्य राका पौर्णिमा॥ २३॥
19417
19418 स्वगृहाभ्यन्तराकाशे चित्ताकाशमयात्मनि।
19419 तस्मिन्द्विजे शवीभूते भूताकाशशरीरिणि॥ २४॥
19420
19421 चित्तसंस्कारावच्छिन्नब्रह्माकाशप्रचुरात्मनि। अत एव आकाशशरीरिणि।
19422 शवीभूते मृते सति॥ २४॥
19423
19424 सा तस्य ब्राह्मणी भार्या शोकेनात्यन्तकर्शिता।
19425 शुष्केव माषशिम्बीका हृदयेन द्विधाभवत्॥ २५॥
19426
19427 भर्त्रा सह शवीभूता देहमुत्सृज्य दूरतः।
19428 आतिवाहिकदेहेन भर्तारं समुपाययौ॥ २६॥
19429
19430 परलोकातिवहनयोग्येन मानसेन देहेन॥ २६॥
19431
19432 नदीनिखातमिव तं भर्तारमनुसृत्य सा।
19433 आजगाम विशोकत्वं सा वासन्तीव मञ्जरी॥ २७॥
19434
19435 निखातं निम्नदेशम्। सा प्रसिद्धा। वासन्ती वसन्तकालप्ररूढा॥ २७॥
19436
19437 तत्रास्य विप्रस्य गृहाणि सन्ति
19438 भूस्थावरादीनि धनानि सन्ति।
19439 अद्याष्टमं वासरमाप्तमृत्यो-
19440 र्जीवो गिरिग्रामककन्दरस्थः॥ २८॥
19441
19442 तत्र गिरिग्रामे। वासरं वर्तत इति शेषः। कंदरशब्देन गृहमण्डपो
19443 गौण्युओच्यते॥ २८॥
19444
19445 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलो०
19446 ब्राह्मणमरणं नामैकोनविंशः सर्गः॥ १९॥
19447
19448 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे

ब्राह्मणमरणं नामैकोनविंशः सर्गः ॥ १९ ॥

विंशः सर्गः २०

श्रीदेव्युवाच।

स ते भर्ताद्य संपन्नो द्विजो भूपत्वमागतः।
या सावरुन्धती नाम ब्राह्मणी सा त्वमङ्गने ॥ १ ॥

श्रुते प्राग्जन्मचरितेऽप्यसंभावनकातरा।
लीलात्र बोध्यते देव्या दृष्टान्तैश्चोपपत्तिभिः ॥ १ ॥

स द्विजोऽद्य भूपत्वमागतः संस्ते भर्ता संपन्नः ॥ १ ॥

इहेमौ कुरुतो राज्यं तौ भवन्तौ सुदम्पती।
चक्रवाकाविव नवौ भुवि जातौ शिवाविव ॥ २ ॥

शिवश्च शिवा च शिवौ ॥ २ ॥

प्। १७७)

एष ते कथितः सर्वः प्राक्तनः संसृतिक्रमः।
भ्रान्तिमात्रकमाकाशमेवं जीवस्वरूपधृक् ॥ ३ ॥

उक्तां कथामुपसंहरन्ती सर्गद्वयवत्प्राक्तनोऽपि सर्गो भ्रम एवेत्याह -
एष इति। तत्र ब्रह्माकाशस्य जीवभावभ्रम एव मूलमित्याह - भ्रान्तीति ॥ ३
॥

भ्रमादस्माच्चिदाकाशे भ्रमोऽयं प्रतिबिम्बितः।
असत्य एव वा सत्यो भवतोर्भवभङ्गदः ॥ ४ ॥

उत्तरोत्तरभ्रमे पूर्वपूर्वभ्रमो हेतुरिति दर्शयति - भ्रमादिति।
स्वदृष्ट्या असत्य एव अधिष्ठानदृष्ट्या सत्यो वा ॥ ४ ॥

तस्माद्भ्रान्तिमयः कः स्यात्को वा भ्रान्त्युज्झितो भवेत्।
सर्गो निरर्गलानर्थबोधान्नान्यो विजृम्भते ॥ ५ ॥

एवं च मिथ्यानर्थबोधत्वेन सर्वसर्गाणां तुल्यतैवेत्याह - तस्मादिति ॥ ५
॥

श्रीवसिष्ठ उवाच।

इत्याकर्ण्य चिरं चारु विस्मयोत्फुल्ललोचना।
भूत्वोवाच वचो लीला लीलालसपदाक्षरम् ॥ ६ ॥

असंभावनया चिरं विस्मयोत्फुल्ललोचना भूत्वा ॥ ६ ॥

लीलोवाच।

देवि भोस्त्वद्वचो मिथ्या कथं संपन्नमीदृशम्।
क्व विप्रजीवः स्वगृहे क्वेमे वयमिह स्थिताः ॥ ७ ॥

19501 मिथ्या अनृतमथवा त्वद्वचस्त्वमिथ्या ईदृशं विरुद्धमिदं कथं
19502 संपन्नमित्यर्थः। इहासिन्विपुले देशे ॥ ७ ॥
19503
19504 तादृग्लोकान्तरं सा भूस्ते शैलास्ता दिशो दश।
19505 कथं भान्ति गृहस्यान्तर्मद्भर्ता येष्ववस्थितः ॥ ८ ॥
19506
19507 समाधिदृष्टभर्तृसर्गोऽपि स्वगृहे असंभावित इत्याह - तादृगिति ॥ ८ ॥
19508
19509 मत्त ऐरावतो बद्धः सर्षपस्येव कोटरे।
19510 मशकेन कृतं युद्धं सिंहौघैरणुकोटरे ॥ ९ ॥
19511
19512 असंभावनापुष्टये देव्युक्तार्थे दृष्टान्तैरसमञ्जसतामुपपादयति -
19513 मत्त इत्यादित्रिभिः ॥ ९ ॥
19514
19515 पद्माक्षे स्थापितो मेरुर्निर्गिर्णो भृङ्गसूनुना।
19516 स्वप्नाब्दगर्जितं श्रुत्वा चित्रं नृत्यन्ति बर्हिणः ॥ १० ॥
19517
19518 असमंजसमेवैतद्यथा सर्वेश्वरेश्वरि।
19519 तथा गृहान्तः पृथ्वी शैलाश्चेत्यसमञ्जसम् ॥ ११ ॥
19520
19521 यथावदेतद्देवेशि कथयामलया धिया।
19522 प्रसादानुगृहीते हि नोद्विजन्ते महौजसः ॥ १२ ॥
19523
19524 यथावत् यथैतदुपपद्यते तथेत्यर्थः ॥ १२ ॥
19525
19526 श्रीदेव्युवाच।
19527
19528 नाहं मिथ्या वदामीदं यथावच्छृणु सुन्दरि।
19529 भेदनं नियतीनां हि क्रियते नास्मदादिभिः ॥ १३ ॥
19530
19531 असामञ्जस्योपपादनसंभावितमनृतवदनं परिहरन्ती देव्याह -
19532 नाहमिति द्वाभ्याम्। नियतीनां नानृतं वदेत् इत्यादिश्रौतनियमानाम् ॥ १३ ॥
19533
19534 विभिद्यमानामन्येन स्थापयाम्यहमेव याम्।
19535 मर्यादां तां मया भिन्नां कोऽपरः पालयिष्यति ॥ १४ ॥
19536
19537 सग्रामद्विजजीवात्मा तस्मिन्नेव स्वसद्मनि।
19538 व्योम्न्येवेदं महाराष्ट्रं व्योमात्मैव प्रपश्यति ॥ १५ ॥
19539
19540 राजवासनोपहितचिद्व्योमात्मैव ॥ १५ ॥
19541
19542 प्राक्तनी सा स्मृतिर्लुप्ता [स्मृतिर्नष्टा इति पाठः]
19543 युवयोरुदितान्यथा।
19544 स्वप्ने जाग्रत्स्मृतिर्यद्वदेतन्मरणमङ्गने ॥ १६ ॥
19545
19546 तावेवावां चेत्कुतो न प्रत्यभिजानीवो मरणस्य वा किं रूपं तत्राह -
19547 प्राक्तनीति ॥ १६ ॥
19548
19549 यथा स्वप्ने त्रिभुवनं संकल्पे त्रिजगद्यथा।
19550 यथा कथार्थसंग्रामो मरुभूमौ जलं यथा ॥ १७ ॥
19551
19552 तस्य ब्राह्मणगेहस्य सशैलवनपत्तना।

इयमन्तः स्थिताः भूमिः संकल्पादर्शयोरिव ॥ १८ ॥

अस्त्यैवेयमाभाति सत्येव घनसर्गता ।
तस्मात्सत्यावभासस्य चिद्व्योम्नः कोशकोटरे ॥ १९ ॥

असत्यस्यापि सत्यवद्भाने निमित्तमाह - तस्मादिति ।
पञ्चकोशान्तर्गतसत्यचिद्व्योम्नो निमितादित्यर्थः ॥ १९ ॥

असत्याद्यत्समुत्पन्नं स्मृत्या नाम तदप्यसत् ।
मृततृष्णातरङ्गिण्यां तरङ्गोऽपि न सद्यतः ॥ २० ॥

प्राक्सर्गस्यासत्यत्वेऽस्य सर्गस्य किं तत्राह - असत्यादिति ॥ २० ॥

इदं त्वदीयं सदनं तद्देहाकाशकोशगम् ।
विद्धि मां त्वां च सर्वं च तच्चिद्व्योमैव केवलम् ॥ २१ ॥

स्वप्नसंभ्रमसंकल्पस्वानुभूतिपरम्पराः ।
प्रमाणान्यत्र मुख्यानि संबोधाय प्रदीपवत् ॥ २२ ॥

सर्वप्रपञ्चमिथ्यात्वे चिन्मात्रपरिशेषे
चानुभवसिद्धदृष्टान्तमुखेनानुमानप्रमाणान्याह - स्वप्नेति ॥ २२ ॥

स्थितो ब्राह्मणगेहान्तर्द्विजजीवस्तदम्बरे ।
ससमुद्रवना पृथ्वी स्थिताब्ज इव षट्पदः ॥ २३ ॥

अनेन सर्गेण न केवलं गेहाकाश एव न पूर्यते किंतु
तदेकदेशस्थजीवाकाशैकदेशोऽपि । अतो मिथ्यात्वमित्याह - स्थित इति
द्वाभ्याम् ॥ २३ ॥

तस्याः कस्मिंश्चिदेकस्मिन्पेलवे कोणकोटरे ।
इदं पत्तनदेहादि केशोण्ड्रक इवाम्बरे ॥ २४ ॥

निर्मले नभसि कुण्डलितकेशाकारभ्रमः केशोण्ड्रकः ॥ २४ ॥

तस्मिन्नस्मिन्पुरे तन्वि तदेव सदनं स्थितम् ।
तस्मात्किं त्रसरेण्वन्तर्जगद्वृन्दमिव स्थितम् ॥ २५ ॥

एवंच विप्रसदनस्य विपुरलसर्गान्तःप्ररोहेणाश्वतरीकुक्षेर्गर्भेणेव न
विनाशशङ्कापीत्याह - तस्मिन्निति । एवकारो भिन्नक्रमः ।
तस्मिन्सदनेऽस्मिन्सर्गे पुरे चान्तर्निरूढेऽपीति शेषः । तद्विप्रसदनं स्थितमेव
न विदीर्णमित्यर्थः । एवं च तस्माद्विप्रसदनादुदाहृतात्किमाश्चर्यं
यतस्त्रसरेण्वन्तरेऽपि जगद्वृन्दं स्थितम् । इवकारो
मिथ्यात्वेनासामञ्जस्यपरिहारद्योतनार्थः ॥ २५ ॥

परमाणौ परमाणौ सन्ति वत्से चिदात्मनि ।
अन्तरन्तर्जगन्तीति किंत्वेतन्नाम शङ्क्यते ॥ २६ ॥

आकाशादिजगत्सर्गेण [सर्गे न इति पाठः] ण्ववच्छिन्नचिदात्मन्यपि
तत्संभवे निरालम्बैवासंभवाशङ्केत्याह - परमाणाविति ॥ २६ ॥

प्। १७८)

लीलोवाच।

अष्टमे दिवसे विप्रः स मृतः परमेश्वरि।
गतो वर्षगणोऽस्माकं मातः कथमिदं भवेत्॥ २७॥

श्रीदेव्युवाच।

देशदैर्घ्यं यथा नास्ति कालदैर्घ्यं तथाङ्गने।
नास्त्येवेति यथान्यायं कथ्यमानं मया शृणु॥ २८॥

यथैतत्प्रतिभामात्रं जगत्सर्गावभासनम्।
तथैतत्प्रतिभामात्रं क्षणकल्पावभासनम्॥ २९॥

क्षणकल्पं जगत्सर्वं त्वत्तामत्तात्मजन्मनाम्।
यथावत्प्रतिभासस्य् वक्ष्ये क्रममिमं शृणु॥ ३०॥

प्रतिभामात्रत्वं कुतस्तत्राह - क्षणेति। यतः क्षणकल्पादि सर्वं
जगत्त्वत्तामत्ताध्यासाधीनात्मजन्मभ्रमवतामेव प्रतिभासते इति शेषः।
तत्प्रतिभासक्रमं वक्तुं प्रतिजानीते - यथावदिति॥ ३०॥

अनुभूय क्षणं जीवो मिथ्यामरणमूर्च्छनम्।
विस्मृत्य प्राक्तनं भावमन्यं पश्यति सुव्रते॥ ३१॥

तदेवोन्मेषमात्रेण व्योम्न्येव व्योमरूप्यपि।
आधेयोऽयमिहाधारे स्थितोऽहमिति चेतति [चेतसि इति सर्वत्र पाठः]॥
३२॥

व्योमेवाधारदेहादिशून्योऽपि चेतति [चेतसि इति सर्वत्र पाठः] स्मरति।
संस्कार उद्भवतीति यावत्॥ ३२॥

हस्तपादादिमान्देहो ममायमिति पश्यति।
यदेव चेतति [चेतसि इति सर्वत्र पाठः] वपुस्तदेवेदं स पश्यति॥
३३॥

एतस्याहं पितुः पुत्रो वर्षाण्येतानि सन्ति मे।
इमे मे बान्धवा रम्या ममेदं रम्यमास्पदम्॥ ३४॥

आस्पदं गृहम्॥ ३४॥

जातोऽहमभवं बालो वृद्धिं यातोऽहमीदृशः।
बान्धवाश्चास्य मे सर्वे तथैव विचरन्त्यमी॥ ३५॥

चित्ताकाशघनैकत्वात्स्वेऽप्यन्येऽपि भवन्ति ते।
एवं नामोदितेऽप्यस्य चित्ते संसारखण्डके॥ ३६॥

ननु बान्धवानां देहसंबन्धित्वेन कल्पनात्तदीयत्वेऽपि कथं स्वीयत्वं
तत्राह - चित्तेति। देहभावापन्नचित्तस्यात्माकाशस्य च
दृढतरैक्याध्यासात्ते वस्तुतोऽन्येऽपि स्वे स्वीया अपि भवन्तीत्यर्थः। एवं
नामैवं सति देहभावापन्ने॥ ३६॥

न किंचिदप्यभ्युदितं स्थितं व्योमैव निर्मलम्।
स्वप्ने द्रष्टरि यद्वच्चित्तद्वद्दृश्ये चिदेव सा॥ ३७॥

सर्वगैकतया यस्मात्सा स्वप्ने दृष्टदर्शना ।
यथा स्वप्ने तथोदेति परलोकदृगादिभिः ॥ ३८ ॥

स्वप्ने सर्वत्र सर्वेषु द्रष्टृदृश्यभावेन कल्पितभेदेष्वदर्शनानुगता
चित्तदुभयबाधे एकतया दृष्टदर्शना भूयो दृष्टा यस्मात्तस्मान्न
किंचिदप्यभ्युदितमिति पूर्वत्रान्वयः ॥ ३८ ॥

परलोके यथोदेति तथैवेहाभ्युदेति सा ।
तत्स्वप्नपरलोकेहलोकानामसतां सताम् ॥ ३९ ॥

असतामेव भ्रान्त्या सताम् ॥ ३९ ॥

न मनागपि भेदोऽस्ति वीचीनामिव वारिणि ।
अतो जातमिदं विश्वमजातत्वादनाशि च ॥ ४० ॥

स्वरूपत्वात्तु नास्त्येव यच्च भाति चिदेव सा ।
यथैव [तथैव इति पाठः] चेत्यनिर्हीणा परमव्योमरूपिणी ॥ ४१ ॥

स्वं आत्मैव पारमार्थिकं रूपं यस्य तत्त्वाज्जगद्रूपेण नास्त्येव । किं तर्हि
प्रत्यक्षादिप्रमाणैर्भाति तत्राह - यच्चेति । अधिष्ठानचैतन्यमेव
सर्वप्रमाणैर्भाति तस्यैवाज्ञातत्वेन अबाध्यत्वेन च प्रमाणयोग्यत्वान्नतु
जडं तत्रावरणकृत्याभावेन प्रमाणप्रवृत्तिफलाभावादिति भावः ॥ ४१
॥

सचेत्यापि तथैवैषा परमव्योमरूपिणी ।
तस्माच्चेत्यमतो नान्यद्वीचित्वादीव वारितः ॥ ४२ ॥

सचेत्येति । आरोपितचेत्येनाधिष्ठानादूषणादिति भावः । अतोऽस्याश्चितः ॥ ४२ ॥

वीचित्वं च रसे नास्ति शशशृङ्गवदेव हि ।
सैव चेत्यमिवापन्ना स्वभावादच्युताप्यलम् [स्वभावादत्युताप्यलम्
इति पाठः] ॥ ४३ ॥

रसतन्मात्रमेव हि जलस्य तत्त्वं नच तत्र वीचित्वम् । रसनयानुपलम्भात् । यत्तु
चक्षुषा तथा ग्रहणं तद्भूतान्तरसंसर्गोपाधिकमिति भावः ॥ ४३ ॥

तस्मान्नास्त्येव दृश्योऽर्थः कुतोऽतो द्रष्टृदृश्यधीः ।
निमिषेणैव जीवस्य मृतिमोहादनन्तरम् ॥ ४४ ॥

त्रिजगद्दृश्यसर्गश्रीः प्रतिभामुपगच्छति ।
यथादेशं यथाकालं यथारम्भं यथाक्रमम् ॥ ४५ ॥

वासनानां प्रतिनियतदेशकालादिविषयत्वात्तत्प्रयुक्तप्रतिभापि तथैवेत्याह ##-

यथोत्पादं यथामातृ यथापितृ यथौरसम् ।
यथावयो यथासंविद्यथास्थानं यथेहितम् ॥ ४६ ॥

यथाबन्धु यथाभृत्यं यथेहास्तमयोदयम् ।
अजात एव जातोऽहमिति चेतति [चेतसि इति सर्वत्र पाठः] चिद्वपुः ॥ ४७ ॥

देशकालक्रियाद्रव्यमनोबुद्धीन्द्रियादि च ।

झटित्येव मृतेरन्ते वपुः पश्यति यौवने ॥ ४८ ॥

राक्षसयोनौ शंभोर्वरात् मातृसमानवयःप्राप्त्या प्रथमं यौवने
प्राप्तेऽपि कल्पितबाल्यादिस्मृतिमयः क्रमः पश्चादुदेतीति परेण संबन्धः ॥
४८ ॥

एषा माता पिता ह्येष बालोऽभूवमहं त्विति ।
नानुभूतोऽनुभूतो वा यः स्यात्स्मृतिमयः क्रमः ॥ ४९ ॥

पश्चादुदेत्यसौ तस्य पुष्पस्येव फलोदयः ।
निमिषेणैव मे कल्पो गत इत्यनुभूयते ॥ ५० ॥

रात्रिर्द्वादशवर्षाणि हरिश्चन्द्रे तथा ह्यभूत् ।
कान्ताविरहिणामेकं वासरं वत्सरायते ॥ ५१ ॥

प्रसिद्धं चेदं मार्कण्डेयादिपुराणेषु । लोके चेत्याह - रात्रिरिति ॥ ५१ ॥

मृतो जातोऽहमन्यो मे पितेति स्वप्नतास्विव ।
अभुक्तस्यैव भोगस्य भुक्तधीरुपजायते ॥ ५२ ॥

प। १७९)

भुक्तेऽप्यभुक्तधीर्दृष्टमित्यलङ्घितवादिषु ।
शून्यमाकीर्णतामेति तुल्यं व्यसनमुत्सवैः ।
विप्रलम्भोऽपि लाभश्च मदस्वप्नादिसंविदि ॥ ५३ ॥

लकि लक्षणे । अलङ्घितं प्रमाणैरलक्षितं वदन्ति तच्छीलेष्वलङ्घितवादिषु
मुग्धजनेषु इति एतत्पूर्वोक्तं सर्वं दृष्टम् । अविद्यया न केवलमसद्भानं
किंतु सद्विरुद्धभानमपि प्रसिद्धमित्याह - शून्यमिति । आकीर्णतां
जनसमाजव्याप्तताम् ॥ ५३ ॥

तैक्ष्ण्यं यथा मरिचबीजकणे स्थितं स्वं
स्तम्भेषु चारचितपुत्रकजालमन्तः ।
दृश्यं त्वनन्यदिदमेवमजेऽस्ति शान्तं
तस्यास्तिबन्धनविमोक्षदृशः कुतः काः ॥ ५४ ॥

मरिचबीजकणे तैक्ष्ण्यं स्तम्भेषु अरचितप्रतिमाजालं च यथा
स्थितमेवंयस्मिन्नजे इदं दृश्यमनन्यत्सत्तयैवास्ति । तस्यात्मनः
अस्तिबन्धनविमोक्षदृशः । अस्तीति तिङन्तप्रतिरूपकमव्ययम् ।
सत्यबन्धमोक्षदृष्टय इत्यर्थः । कुतो निमित्तात्काः किंरूपाः स्युः ।
सर्वथाप्यसंभाविता इत्यर्थः ॥ ५४ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलोपाख्याने
परमार्थवर्णनं नाम विंशः सर्गः ॥ २० ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
परमार्थवर्णनं नाम विंशः सर्गः ॥ २० ॥

## एकविंशः सर्गः २१

श्रीदेव्युवाच ।

19761
19762 प्रतिभान्ति जगन्त्याशु मृतिमोहादनन्तरम् ।
19763 जीवस्योन्मीलनादक्षणो रूपाणीवाखिलान्यलम् ॥ १ ॥
19764
19765 स्थूलं विचारतः सूक्ष्मं तदविद्याविचारतः ।
19766 सापि चिन्मात्रमेवेति देव्या लीलात्र बोध्यते ॥ १ ॥
19767
19768 उक्तमेवार्थं विशेषं वक्तुं पुनः प्रपञ्चयन्त्याह - प्रतिभान्तीति ॥ १ ॥
19769
19770 दिक्कालकलनाकाशधर्मकर्ममयानि च ।
19771 परिस्फुरन्त्यनन्तानि कल्पान्तस्थैर्यवन्ति च ॥ २ ॥
19772
19773 धर्ममयानि स्वर्गादीनि । कर्ममयानि गृहादीनि । कल्पान्तपर्यन्तं
19774 स्थैर्यवन्ति पृथ्व्यादीनि ॥ २ ॥
19775
19776 नानुभूतं न यद्दृष्टं तन्मया कृतमित्यपि ।
19777 तत्क्षणात्स्मृतितामेति स्वप्ने स्वमरणं यथा ॥ ३ ॥
19778
19779 मायिकस्मृत्यनुभवाभासयोः प्रसिद्धस्मृत्यनुभववैधर्म्यमाह ##-
19780
19781 भ्रान्तिरेवमनन्तेयं चिद्व्योमव्योम्नि भासुरा ।
19782 अपकुड्या जगन्नाम्नी नगरी कल्पनात्मिका ॥ ४ ॥
19783
19784 चिद्व्योम्नो व्योम्नि मायाकाशे ॥ ४ ॥
19785
19786 इदं जगदयं सर्गः स्मृतिरेवेति जृम्भते ।
19787 दूरकल्पक्षणाभ्यासविपर्यासैकरूपिणी ॥ ५ ॥
19788
19789 षड्विधविकारेष्वाद्यत्रयप्राधान्येन सर्गः । अन्त्यत्रयप्राधान्येन जगत् ।
19790 स्मृतिरिति तद्धेतुर्वासनोच्यते । सा हि संनिहिते सांप्रतिकेऽपि दूरकल्पश्चेति
19791 देशकालविप्रकर्षात्मना शाश्वते निष्क्रिये च
19792 क्षणतदभ्यासात्मकघटिकामुहूर्तदिनपक्षाद्यात्मना च यो विपर्यासो
19793 भ्रमस्तदेकरूपिणी ॥ ५ ॥
19794
19795 नानुभूतानुभूता च ज्ञप्तिरित्थं द्विरूपिणी ।
19796 पूर्वकारणरिक्तैव चिद्रूपैव प्रवर्तते ॥ ६ ॥
19797
19798 उक्तमुपसंहरति - नानुभूतेति ॥ ६ ॥
19799
19800 नानुभूतेऽनुभूतत्वसंविदन्तरुदेत्यपि ।
19801 स्वप्नभ्रमादावन्त्यस्मिन्पितरीव पितुः स्मृतिः ॥ ७ ॥
19802
19803 नन्वननुभूते अनुभूतत्वभ्रमः क्व दृष्टस्तत्राह - नानुभूत इति ॥ ७ ॥
19804
19805 कदाचित्स्मृतितां त्यक्त्वा प्रतिभामात्रमेव सत् ।
19806 भाति प्रथमसर्गेषु रूपेण तदनुक्रमात् ॥ ८ ॥
19807
19808 नन्वनादौ संसारे सर्वमेवानुभूतमिति स्मृतिरैक्यं प्रमुष्टतत्ताकास्तु न
19809 भ्रान्तिस्तत्राह - कदाचिदिति । प्रतिभाऽनुभवः । प्रजापतेः
19810 प्रहमसर्गेष्वित्यर्थः । रूपेण स्मृतिरूपेण ॥ ८ ॥
19811
19812 दृश्यं त्रिभुवनादीदमनुभूतं स्मृतौ स्थितम् ।

19813 केषांचित्तन्वि केषांचिन्नानुभूतं स्मृतौ स्थितम् ॥ ९ ॥
19814
19815 तथाच अनुभूतमेव प्रतिभासत इति न नियम इत्याह - दृश्यमिति ॥ ९ ॥
19816
19817 प्रतिभासत एवेदं केषांचित्स्मरणं विना ।
19818 चिदणूनां प्रजेशत्वं काकतालीयवद्यतः ॥ १० ॥
19819
19820 प्रजेशत्वं प्राङ्नानुभूतमेव । सह सिद्धं चतुष्टयमिति स्मृत्या तत्र
19821 ज्ञानोदयावश्यंभावे पुनर्जन्मायोगादिति भावः ॥ १० ॥
19822
19823 अत्यन्तविस्मृतं विश्वं मोक्ष इत्यभिधीयते ।
19824 ईप्सितानीप्सिते तत्र न स्तःकाचन कस्यचित् ॥ ११ ॥
19825
19826 यतो वासनापुञ्जात्मकचित्तमयः
19827 संसारस्ततस्तदुच्छेदादात्यन्तिकनिर्वासनात्मिका विस्मृतिरेव मोक्षः फलित
19828 इत्याह - अत्यन्तेति । ईप्सितानीप्सिते प्रियाप्रिये । अशरीरं वाव सन्तं न प्रियाप्रिये
19829 स्पृशतः इति श्रुतेः । कुतो न स्तस्तत्राह - काचनेति । या मोक्षे काचन
19830 चित्परिशिष्यते सा कस्य विषयस्य भोक्तुर्वा यत्प्रयुक्ते प्रियाप्रिये स्यातामित्यर्थः
19831 ॥ तथाच श्रुतिः यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत् इत्याद्या ।
19832 केचन इति पाठे तु स्पष्टम् ॥ ११ ॥
19833
19834 अत्यन्ताभावसंपत्तिं विनाहन्ताजगत्स्थितेः ।
19835 अनुत्पादमयी ह्येषा नोदेत्येव विमुक्तता ॥ १२ ॥
19836
19837 अहन्ताजगतोः स्थितिः प्रतिष्ठा अविद्या तस्या अत्यन्ताभावसंपतीर्बाधः ॥ १२ ॥
19838
19839 रज्ज्वां सर्पभ्रमः सर्पशब्दार्थासंभवं स्थितम् ।
19840 अनुत्पादमयं त्यक्त्वा शान्तोऽपि हि न शाम्यति ॥ १३ ॥
19841
19842 सर्पशब्दार्थयोरसंभवमभावं रज्ज्वात्मना स्थितं त्यक्त्वा उपेक्ष्य ।
19843 अबुद्ध्वेति यावत् ॥ १३ ॥
19844
19845 प्। १८०)
19846
19847 अर्धशान्तो न शान्तोऽसौ समेत्यर्थतया पुनः ।
19848 उदेत्येकपिशाचान्ते पिशाचोऽन्यो ह्यधीमतः ॥ १४ ॥
19849
19850 ननु योगेन मनोवृत्तिप्रशमादेव स शाम्यतु किं ज्ञानेन तत्राह -
19851 अर्धेति । तेन विक्षेपांशशान्त्या अर्धशान्तोऽप्यसौ न शान्तः यतो व्युत्थाने
19852 पुनर्विक्षेपार्थतया उदेति । अधीर्मूढता तद्वतः ॥ १४ ॥
19853
19854 संसारश्चायमाभोगी परमेवेति निश्चयः ।
19855 कारणाभावतो भाति यदिहाभातमेव तत् ॥ १५ ॥
19856
19857 तथाच ज्ञानेनैव निस्तार इत्याह - संसार इति । कारणाभावतः
19858 अविद्याबाधाद्यद्यदि भाति तत्तर्हि आभातमेव न
19859 पुनरावरणादिशङ्कास्तीत्यर्थः ॥ १५ ॥
19860
19861 लीलोवाच ।
19862
19863 ब्राह्मणब्राह्मणीरूपे सर्गे कारणसंस्मृतिः ।
19864 कथमभ्युत्थिता सास्य स्मरणीयमिदं विना ॥ १६ ॥

19865
19866 यत्प्रागुक्तमस्य सर्गस्य ब्राह्मणब्रह्मणीसर्गाभ्यस्तवासनाकार्यत्वं
19867 तत्रानुपपत्तिं लीला शङ्कते - ब्राह्मणेति | एतत्सर्गे कारणभूता
19868 संस्मृतिरत्र सर्वत्र संस्कारः | स्मरणीयं स्मरणयोग्यं
19869 प्रागनुभूतमिति यावत् | इदं एतत्कालदृश्यं विना | इदानींतनस्य
19870 प्रागसत्त्वेन तदनुभवाभावान्न संस्कारलक्षणवासना तदानीं
19871 संभवतीत्यर्थः || १६ ||
19872
19873 श्रीदेव्युवाच |
19874
19875 पितामहस्मृतिस्तत्र कारणं तस्य न स्मृतिः |
19876 पूर्वं न संभवत्येव मुक्तत्वात्पूर्वजन्मनः [पद्मजन्मन इति
19877 पाठः] || १७ ||
19878
19879 न संस्कार एव वासना | द्वितीयाया अपि वक्ष्यामाणत्वात् | यदि तु संस्कारमपि
19880 तत्रावश्यकं मन्यसे तर्हि पितामहस्य सर्वज्ञतया
19881 भाव्यर्थेऽप्यनुभवसंभवात्तदीयसंस्कार एव तत्र कारणम् | तद्देहादिसर्गे
19882 तु तस्यापि संस्कारो न हेतुः | नच पूर्वपितामहसंस्कारो हेतुः तस्य
19883 पूर्वकल्पान्ते मुक्तत्वादित्यर्थः || १७ ||
19884
19885 पूर्वं न संभवत्येव स्मरणीयमिति स्वयम् |
19886 पद्मजादित्वमायाति चैतन्यस्य तथास्थितेः || १८ ||
19887
19888 स्मरणीयाभावप्रयुक्तोऽपि स्मृत्यसंभवस्तत्रास्तीत्याह - पूर्वमिति |
19889 तस्मात्पूर्वपद्मजदेहादिवासनाच्चितमायोपहितचैतन्यस्य तथास्थितेस्तदेव
19890 स्वयं इति एवंविधेन अपूर्वपद्मजात्मना विवर्तत इत्यर्थः || १८ ||
19891
19892 अभूवमहमित्यन्यः प्रजानाथः प्रजापतेः |
19893 काकतालीयवत्कश्चिद्भवति प्रतिभामयः || १९ ||
19894
19895 पूर्वपद्मजवासनाञ्चिताविद्यायास्तदीयतत्त्वज्ञानेन बाधालोचने त्वाह -
19896 अभूवमिति || १९ ||
19897
19898 एवमभ्युदिते लोके न किंचिन्न कदाचन |
19899 क्वचिदभ्युदितं नाम केवलं चिन्नभः स्थितम् || २० ||
19900
19901 प्रतिभामयत्वादेव हि तस्य तत्सर्गस्य च बाध उपपन्न इत्याशयेनाह -
19902 एवमिति || २० ||
19903
19904 द्विविधायाः स्मृतेरस्याः कारणं परमं पदम् |
19905 कार्यकारणभावोऽसावेक एव चिदम्बरे || २१ ||
19906
19907 द्विविधायाः पूर्वानुभवजन्यसंस्कारजाया
19908 अनाद्यविद्याशक्तिरूपवासनान्तरजायाश्च हैरण्यगर्भ्या अन्यदीयायाश्च वा |
19909 परमं पदमत्र मायाशबलं ब्रह्म | शुद्धे तु न
19910 कार्यकारणभावादिभेदगन्धोऽप्यस्तीत्याह - कार्येति || २१ ||
19911
19912 कार्यं च कारणं चैव कारणैः सहकारिभिः |
19913 कार्यकारणयोरैक्यात्तदभावान्न शाम्यति || २२ ||
19914
19915 अविमर्शात्मकमायाकृतः कार्यकारणविकल्पो विमर्शे बाध्यत इति
19916 दर्शयितुं विमृशति - कार्यमिति | पटः कार्यं तन्तवः कारणमिति

19917 तुरीवेमादिसहकारिभिः कारणैः स्यात्तत्रोपकारमकुर्वाणानां
19918 सहकारित्वायोगादुपकाररूपमपि कार्यं तथाविधैरेव
19919 वाच्यमित्यनवस्थापत्तेस्तस्योपकारस्याभावात्कार्यकारणभावभाधे
19920 तत्कल्पनाधिष्ठानतन्ताद्यैक्यं न शाम्यति भेदकारणाभावादित्यर्थः ॥ २२
19921 । ।
19922

19923 महाचिद्रूपमेव त्वं स्मरणं विद्धि वेदनम् ।
19924 कार्यकारणता तेन स शब्दो न च वास्तवः ॥ २३ ॥
19925

19926 नन्वस्तु युक्त्यैवं अनुभवारूढं त्विदं कथं स्यादिति तदर्थं
19927 प्रत्यग्दृष्टिं व्युत्पादयति - महाचिद्रूपमिति । स्मर्यते येन तत्स्मरणं
19928 चित्संवलितं व्यष्टिसमष्ट्यन्तःकरणं तदेव वेदनं तद्धि
19929 मायाशबलस्येश्वरस्य कार्यम् । तत्र मायोपाधेरन्तःकरणाकारोपाधेश्च
19930 भेदे परामृश्यमाने तदुपहिताधिष्ठानसन्मात्रेऽपि
19931 भेदकल्पनात्कार्यसत्ता कारणसताधीनजन्मेति भ्रान्त्या पूर्वावस्थं
19932 सत्कारणं उत्तरावस्थं सत्कार्यमिति वेत्सि तन्न तथा विद्याः किंतु
19933 मायातत्कार्याकारावुपेक्ष्य तदुभयानुगतसन्मात्रात्मकमहाचिद्रूपमेव
19934 स्मरणं विद्धि । तेन यथोक्तलक्षणेन प्रत्यग्दर्शनेन बाधिता
19935 कार्यकारणता स कार्यकारणशब्द एव परिशेक्ष्यते सोऽप्यनया दृशा
19936 दृष्टो न वास्तव इति । इयं प्रत्यग्दृष्टिः स्फुटतरमुपपादितास्माभिः
19937 स्वाराज्यसिद्धौ - पिण्डावस्था घटत्वे मनसि कलयतो हेतुकार्यत्वधीः
19938 स्यान्मृन्मात्रं यद्वदेकं स्फुटमभिमृशतो नैव हेतुर्न कार्यम् ।
19939 तद्वन्मायिप्रपञ्चौ झटिति कलयतो ब्रह्म विश्वस्य हेतुः सन्मात्रं
19940 त्वेकरूपं पटु परिमृशतो नैव मायी न विश्वम् ॥ इति वार्तिके चोक्तम् -
19941 तस्मात्संभावनामात्रः संसारः प्रत्यगात्मनि । उक्तेऽर्थे
19942 संशयश्चेत्स्यात्प्रत्यग्दृष्ट्या निरीक्ष्यताम् ॥ इति ॥ २३ ॥
19943

19944 एवं न किंचिदुत्पन्नं दृश्यं चिज्जगदाद्यपि ।
19945 चिदाकाशे चिदाकाशं केवलं स्वात्मनि स्थितम् ॥ २४ ॥
19946

19947 इत्थंच निष्प्रपञ्चत्वं प्रतिष्ठितमित्युपसंहरति - एवमिति । चिदाकाश इति ।
19948 स्वे महिम्नि प्रतिष्ठितः इति श्रुतेरिति भावः ॥ २४ ॥
19949

19950 लीलोवाच ।
19951

19952 अहो नु परमा दृष्टिर्दर्शिता देवि मे त्वया ।
19953 रूपश्रीर्जगती प्रातः प्रभयेवेक्षणद्युतिः ॥ २५ ॥
19954

19955 तया दृष्ट्या प्रतिबुद्धा लीलोवाच - अहो इति । ईक्षणेन द्योत्यते प्रकाश्यत
19956 इतीक्षणद्युतिः स्फुटेति यावत् ॥ २५ ॥
19957

19958 इदानीमहमेतस्यां यावत्परिणता दृशि ।
19959 नाभ्यासेन विना तावद्भिन्धीदं देवि कौतुकम् ॥ २६ ॥
19960

19961 परिणतिर्व्युत्पत्तिदार्ढ्यम् । इदं वक्ष्यमाणं कौतुकमुत्कण्ठां
19962 भिन्धिनाशय ॥ २६ ॥
19963

19964 प्। १८१)
19965

19966 यत्रासौ ब्राह्मणो गेहे ब्राह्मण्या सहितोऽभवत् ।
19967 तं सर्गं तं गिरिग्रामं नय मां तं विलोकये ॥ २७ ॥
19968

19969 श्रीदेव्युवाच।
19970
19971 अचेत्यचिद्रूपमयी परमां पावनीं दृशम्।
19972 अवलम्ब्येममाकारमवमुच्य भवामला॥ २८॥
19973
19974 तदवलोकने पूर्ववत्समाधिनैतद्देहविस्मरणमावश्यकमित्याह -
19975 अचेत्येति। चिद्रूपमयीं। प्राचुर्ये मयट्। कारणब्रह्मरूपतामिति यावत्॥ २८॥
19976
19977 ततः प्राप्स्यस्यसंदेहं व्योमात्मानं नभःस्थितम्।
19978 भूमिष्ठनरसंकल्पो गगनान्तः पुरं यथा॥ २९॥
19979
19980 चिन्नभःस्थितं मायाव्योमात्मानं तं सर्गम्॥ २९॥
19981
19982 एवं स्थिते तं पश्यावः सह सर्गमनर्गलम्।
19983 अयं तद्दर्शनद्वारे देहो हि परमार्गलम्॥ ३०॥
19984
19985 सह पश्यावो द्रक्ष्यावः। अर्गलं विष्कम्भः। प्रतिरोधक इति यावत्॥ ३०॥
19986
19987 लीलोवाच।
19988
19989 अमुना देवि देहेन जगदन्यदवाप्यते।
19990 न कस्मादत्र मे युक्तिं कथयानुग्रहाग्रहात्॥ ३१॥
19991
19992 अनुग्रहप्रयुक्तादाग्रहादभिनिवेशात्॥ ३१॥
19993
19994 श्रीदेव्युवाच।
19995
19996 जगन्तीमान्यमूर्तानि मूर्तिमन्ति मुधाग्रहात्।
19997 भवद्भिरवबुद्धानि हेमानीवोर्मिकाधिया॥ ३२॥
19998
19999 मायामात्रत्वादमूर्तानि। मुधाग्रहान्मिथ्याज्ञानात्। ऊर्मिकाङ्गुलिमुद्रिका॥
20000 ३२॥
20001
20002 हेम्न्यूर्मिकारूपधरेऽप्यूर्मिकात्वं न विद्यते।
20003 यथा तथा जगद्रूपे जगन्नास्ति च ब्रह्मणि॥ ३३॥
20004
20005 ऊर्मिकात्वमहेमरूपमित्यर्थः॥ ३३॥
20006
20007 जगदाकाशमेवेदं ब्रह्मैवेह तु दृश्यते।
20008 दृश्यते काचिदप्यत्र धूलिरम्बुनिधाविव॥ ३४॥
20009
20010 काचिन्माया। धूलिविरोधिन्यम्बुनिधौ प्रतिबिम्बधूलिरिव॥ ३४॥
20011
20012 अयं प्रपञ्चो मिथ्यैव सत्यं ब्रह्माहमद्वयम्।
20013 अत्र प्रमाणं वेदान्ता गुरवोऽनुभवस्तथा॥ ३५॥
20014
20015 उक्तेऽर्थे प्रमाणासंभावनामूलोच्छेदाय दृढतराणि प्रमाणानि
20016 दर्शयति - अयमिति। मुख्यं प्रमाणं वेदान्ताः
20017 तत्तत्पर्यार्थस्यानुभवारोपणाय गुरवः। स्वानुभवस्तु फलीभूतं
20018 प्रमाणमित्यर्थः॥ ३५॥
20019
20020 ब्रह्मैव पश्यति ब्रह्म नाब्रह्म ब्रह्म पश्यति।

20021 सर्गादिनाम्ना प्रथितः स्वभावोऽस्यैव चेदृशः ॥ ३६ ॥
20022
20023 स्वभाव आवृतसत्ता ॥ ३६ ॥
20024
20025 न ब्रह्मजगतामस्ति कार्यकारणतोदयः ।
20026 कारणानामभावेन सर्वेषां सहकारिणाम् ॥ ३७ ॥
20027
20028 यावदभ्यासयोगेन न शान्ता भेदधीस्तव ।
20029 नूनं तावदतद्रूपा न ब्रह्म परिपश्यसि ॥ ३८ ॥
20030
20031 अतद्रूपा अब्रह्मदेहाद्यात्मबुद्धित्वात्तद्रूपा । नूनमिति वितर्के ॥ ३८ ॥
20032
20033 तत्र रूढिमुपायाता य इमे त्वस्मदादयः ।
20034 अभ्यासाद्ब्रह्मसंपत्तेः पश्यामस्ते हि तत्परम् ॥ ३९ ॥
20035
20036 ये रूढिं दृढव्युत्पत्तिम् । त इमे पश्यामः ॥ ३९ ॥
20037
20038 संकल्पनगरस्यैव ममाकाशमयं वपुः ।
20039 ब्रह्मैव चान्तः पश्यामि देहेनानेन तत्पदम् ॥ ४० ॥
20040
20041 आकाशमयं शुद्धचित्ताकाशमयम् ॥ ४० ॥
20042
20043 विशुद्धाज्ञानदेहार्हास्तथैते पद्मजादयः ।
20044 ब्रह्मात्मजगदादीनामंशे संस्थानमङ्गने ॥ ४१ ॥
20045
20046 ज्ञायतेऽनेनेति ज्ञानं चित्तं विशुद्धेन तेन अर्हाः सदा
20047 ब्रह्मदर्शनयोग्याः । वस्तुतो ब्रह्मात्मकानां जगत्तद्व्यवहाराणामंशे
20048 लेशे संस्थानमवस्थितिं पश्यन्तीति विपरिणमय्यानुषज्यते । पादोऽस्य विश्वा
20049 भूतानि त्रिपादस्यामृतं दिवि इत्यादिश्रुतेरित्यर्थः ॥ ४१ ॥
20050
20051 तवाभ्यासं विना बाले नाकारो ब्रह्मतां गतः ।
20052 स्थितः कलनरूपात्मा तेन तन्नानुपश्यसि ॥ ४२ ॥
20053
20054 कलनमन्तःकरणे चिदाभासस्तद्रूपात्मा । तद्ब्रह्म प्रागनुक्रान्तं
20055 गिरिग्रामकं च ॥ ४२ ॥
20056
20057 यत्र स्वसंकल्पपुरं स्वदेहेन न लभ्यते ।
20058 तत्रान्यसंकल्पपुरं देहोऽन्यो लभते कथम् ॥ ४३ ॥
20059
20060 अनेन देहेनानुपलम्भे सांकल्पिकत्वमेव हेतुरिति कैमुतिकन्यायेन द्रढयति
20061 - यत्रेति ॥ ४३ ॥
20062
20063 तस्मादेनं परित्यज्य देहं चिद्व्योमरूपिणी ।
20064 यत्पश्यसि [तपश्यसि इति पाठः] तदेवाशु कुरु कार्यविदांवरे ॥
20065 ४४ ॥
20066
20067 पश्यसि द्रक्ष्यसि । वर्तमानसामीप्याद्वर्तमानवन्निर्देशः ॥ ४४ ॥
20068
20069 संकल्पनगरं सत्यं यथासंकल्पितं प्रति ।
20070 संदेहं वा विदेहं वा नेतरं प्रति किंचन ॥ ४५ ॥
20071
20072 सदेहं देहसाध्यं विदेहं वा संकल्पितं तन्नगरव्यवहारोपभोगं प्रति ।

सत्यमर्थक्रियासमर्थम् । इतरं व्यवहारं प्रति तु न किंचन तुच्छमिति यावत्
॥ ४५ ॥

आदिसर्गे जगद्भ्रान्तिर्यथेयं स्थितिमागता ।
तथा तदाप्रभृत्येवं नियतिः प्रौढिमागता ॥ ४६ ॥

धातृसांकल्पिकस्यास्य जगतोऽस्मत्सांकल्पिकस्य च सांकल्पिकत्वाविशेषेऽपि
कुतोऽवान्तरवैलक्षण्यमिति
चेदनादिनियतिरूपेश्वरेच्छालक्षणमायाशक्तिवशादेवेत्याह - आदिसर्ग इति
॥ ४६ ॥

लीलोवाच ।

त्वयोक्तं देवि गच्छावो ब्राह्मणब्राह्मणी जगत् ।
सहेतीदमिदं वच्मि कथं गन्तव्यमम्ब हे ॥ ४७ ॥

इमं देहमिहास्थाप्य शुद्धसत्वानुपातिना ।
चेतसा तं परं यामि लोकं त्वं कथमेषि तत् ॥ ४८ ॥

त्वं कथमेषि स्वेन देहेनेति शेषः ॥ ४८ ॥

श्रीदेव्युवाच ।

संकल्पव्योमवृक्षस्ते यथा सन्नपि स्वात्मकः ।
न कुड्यात्मा न कुड्येन रोध्यते नापि कुड्यहा ॥ ४९ ॥

सांकल्पिकसत्तया सन्नपि वास्तवसत्तया खात्मकः । न कुड्यात्मेव मूर्तः
कुड्यहा कुड्यभेदकः ॥ ४९ ॥

प। १८२)

शुद्धैकसत्त्वनिर्माणं चिद्रूपस्यैव तत्किल ।
प्रतिभानमतस्तस्मात्परस्माद्भिद्यते मनाक् ॥ ५० ॥

यच्छुद्धस्यैव सत्त्वगुणस्य निर्माणं कार्यमस्मद्देहादि तच्चिद्रूपस्यैव
किल तथा प्रतिभानमतो हेतोस्तस्मात् परस्माद्ब्रह्मणो मनागल्पमेव भिद्यते ।
यथा दग्धपटे पटाकारो वस्तुतस्तद्भस्मैव तद्वदिति भावः ॥ ५० ॥

सोऽयमेतादृशो देहो नैनं [नैवं इति पाठः] संत्यज्य
याम्यहम् ।
अनेनैव तमाप्नोमि देशं गन्धमिवानिलः ॥ ५१ ॥

यथा जलं जलेनाग्निरग्निना वायुनानिलः ।
मिलत्येवमतो देहो देहैरन्यैर्मनोमयैः ॥ ५२ ॥

तर्ह्यस्मद्भर्तृसांकल्पिकसर्गेणास्य कथं योगस्तत्राह - यथेति ।
मनोमयैर्देहैरन्यैश्च वस्तुभिरित्यर्थः ॥ ५२ ॥

नहि पार्थिवतासंविदेत्य पार्थिवसंविदा ।
एकत्वं कल्पनाशैलशैलयोः क्वाहतिर्मिथः ॥ ५३ ॥

तर्हि मद्देहोऽपि वस्तुतो मनोमात्रत्वेन त्वद्देहसाजात्यात्त्वद्देहेनैकीभावेन

संयोगेन वा मिलितः संस्तत्रैतु तत्राह - नहीति । पृथिव्या विकारः
पार्थिवस्तद्भावेन संवेद्यत इति
पार्थिवतासंवित्त्वद्देहस्तद्विरुद्धचिन्मात्रसंविदा मद्देहेनैकत्वं
संयोगं वा नहि एति । आहतिरभिघातः ॥ ५३ ॥

आतिवाहिक एवायं त्वादृशैश्चित्तदेहकः ।
आधिभौतिकताबुद्ध्या गृहीतश्चिरभावनात् ॥ ५४ ॥

नन्वस्यापि मानसत्वे कथं पार्थिवत्वं तत्राह - आतिवाहिक इति ॥ ५४ ॥

यथा स्वप्ने यथा दीर्घकालध्याने यथा भ्रमे ।
यथाच सति संकल्पे यथ गन्धर्वपत्तने ॥ ५५ ॥

वासनातानवं नूनं यदा ते स्थितिमेष्यति ।
तदातिवाहिको भावः पुनरेष्यति देहके ॥ ५६ ॥

कदा तर्ह्यस्य पार्थिवभावनिवृत्तिस्तत्राह - वासनेति ।
तनोर्भावस्तानवमल्पता एष्यति । समाध्यभ्यासेनेति भावः ॥ ५६ ॥

लीलोवाच ।

आतिवाहिकदेहत्वप्रत्यये घनतां गते ।
तामवाप्नोत्ययं देहो दशामाहो विनश्यति ॥ ५७ ॥

अन्येषां स्थूलदेहस्य नाशदर्शनाज्जीवन्मुक्तयोगिदेहस्यापि नाश एव
संभावितो नातिवाहिकभाव इति संभावयन्ती लीला पृच्छति - आतिवाहिकेति ।
घनतां दार्ढ्यं गते । समाध्यभ्यासेनेति शेषः ॥ ५७ ॥

श्रीदेव्युवाच ।

यदस्ति नाम तत्रैव नाशानाशक्रमो भवेत् ।
वस्तुतो यच्च नास्त्येव नाशः स्यात्तस्य कीदृशः ॥ ५८ ॥

तत्त्वविद्देहो ज्ञानबाधितत्वाद्दग्धपटवन्नास्त्येव प्राग्वासनामात्राच्च
पटाभासवत्प्रतिभासमानोऽपि वासनातानवे ततोऽपि
सौक्ष्म्यादातिवाहिकभावमेवापद्यते । न नाशमित्याशयेन देव्युत्तरमाह
- यदित्यादिना ॥ ५८ ॥

रज्ज्वां सर्पभ्रमे नष्टे सत्यबोधवशात्सुते [सुते इति लीलायाः
संबोधनम्] ।
सर्पो न नष्ट उन्नष्टो वेत्येवं कैव सा कथा ॥ ५९ ॥

उत् अपि ॥ ५९ ॥

यथा सत्यपरिज्ञानाद्रज्ज्वां सर्पो न दृश्यते ।
तथातिवाहिकज्ञानाद्दृश्यते नाधिभौतिकः ॥ ६० ॥

आतिवाहिकत्वनिमित्तं ब्रह्मज्ञानमातिवाहिकज्ञानम् ॥ ६० ॥

कल्पनापि निवर्तेत कल्पिता यदि केनचित् ।
सा शिला समपास्तैव या नेहास्ति कदाचन ॥ ६१ ॥

20177 कल्पितः प्रपञ्चः प्रागभूत् ज्ञानेन तु समूलं स निवर्तित इति
20178 व्यवहारकल्पनाप्यापातदृशैव । तत्त्वदृशा तु तस्या अपि संभावना
20179 नास्तीत्याह - कल्पनेति । कल्पिता समर्थिता । तथाचोक्तं गौडपादैः -
20180 प्रपञ्चो विनिवर्तेत कल्पितो यदि केनचित् । उपदेशादयं वादो ज्ञाते द्वैतं न
20181 विद्यते ॥ इति ॥ ६१ ॥
20182
20183 परं परे परापूर्णमिदं देहादिकं स्थितम् ।
20184 इति सत्यं वयं भद्रे पश्यामो नाभिपश्यसि ॥ ६२ ॥
20185
20186 कथं तर्हि यूयं स्वदेहादि पश्यथ तत्राह - परमिति । परेण ब्रह्मणा
20187 आपूर्णमिदं देहादिकोशपञ्चकं यदेकैकान्तःप्रवेशेन स्थितं तत्परं
20188 ब्रह्मैव स्वे महिम्नि परे स्थितमिति वयं सत्यमबाधितं पश्यामः । त्वं
20189 त्वप्ररूढबोधत्वान्नाभिपश्यसि ॥ ६२ ॥
20190
20191 आदिसर्गे भवेच्चित्त्वं कल्पनाकल्पितं यदा ।
20192 तदा ततः प्रभृत्येकसत्त्वं दृश्यमवेक्षते ॥ ६३ ॥
20193
20194 नन्वदृश्या चित्कथं दृश्यसत्त्वात्मतामापन्ना तत्राह - आदीति ।
20195 आदेर्लिङ्गात्मनः सर्गे तं गोचरयन्त्याश्चितश्चित्त्वं नाम धर्मो भवेत् ।
20196 यदा तु पञ्चीकरणेन कल्पनया स्थूलं रूपं कल्पितं तदा
20197 ततःप्रभृत्येकमनुगतं सत्त्वं दृश्यानुरोधात्स्वयमपि दृश्यभूतं
20198 स्वयमवेक्षते भ्रान्त्येत्यर्थः ॥ ६३ ॥
20199
20200 लीलोवाच ।
20201
20202 एकस्मिन्नेव संशान्ते दिक्कालाद्यविभागिनि ।
20203 विद्यमाने परे तत्त्वे कलनावसरः कुतः ॥ ६४ ॥
20204
20205 यत्प्रागुक्तं कलनाधीना सर्वकल्पनेति तत्र लीलानुपपत्तिं शङ्कते -
20206 एकस्मिन्निति । पौर्वकालिकं दुग्धमौत्तरकालिकदध्याद्याकारेण परिणमते ।
20207 दधिभावे च दुग्धमविद्यमानं भवति । कालसंबन्धरहिते नित्यं
20208 विद्यमाने ब्रह्मणि कलनाख्यप्रथमविकारस्यैव नावसर इत्यर्थः ॥ ६४ ॥
20209
20210 श्रीदेव्युवाच ।
20211
20212 कटकत्वं यथा हेम्नि तरङ्गत्वं यथाम्भसि ।
20213 सत्यत्वं च यथा स्वप्नसंकल्पनगरादिषु ॥ ६५ ॥
20214
20215 सत्ये हि विकारेऽभ्युपगते त्वदुक्तदोषः स्यान्न मिथ्याभूत इति देवी परिहरति ##-
20216
20217 नास्त्येव सत्यनुभवे तथा नास्त्येव ब्रह्मणि ।
20218 कल्पनाव्यतिरिक्तात्मतत्स्वभावादनामयात् ॥ ६६ ॥
20219
20220 यथा नास्त्यम्बरे पांसुः परे नास्ति तथा कला ।
20221 अकलाकलनं शान्तमिदमेकमजं ततम् ॥ ६७ ॥
20222
20223 कलाकलनं विषयः ॥ ६७ ॥
20224
20225 प। १८३)
20226
20227 यदिदं भासते किंचित्तत्तस्येव निरामयम् ।
20228 कचनं काचकस्येव कान्तस्याऽतिमणेरिव ॥ ६८ ॥

20229
20230 कचनं आपातप्रतिभासः । अतिशयितो मणिरतिमणिस्तस्येव ॥ ६८ ॥
20231
20232 लीलोवाच ।
20233
20234 एतावन्तं चिरं कालमेते देवि वयं वद ।
20235 भ्रामिताः केन नामापि द्वैताद्वैतविकल्पनैः ॥ ६९ ॥
20236
20237 उक्तभ्रान्तेर्हेतुं लीला पृच्छति - एतावन्तमिति ॥ ६९ ॥
20238
20239 श्रीदेव्युवाच ।
20240
20241 अविचारेण तरले भ्रान्तासि चिरमाकुला ।
20242 अविचारः स्वभावोत्थः स विचाराद्विनश्यति ॥ ७० ॥
20243
20244 विचारबाध्यत्वादविचारशब्दितो मोह एव तद्धेतुरिति देव्याह - अविचारेणेति ॥
20245 ७० ॥
20246
20247 अविचारो विचारेण निमेषादेव नश्यति ।
20248 एषा सत्तैव तेनान्तरविद्यैषा न विद्यते ॥ ७१ ॥
20249
20250 एषा अविचारलक्षणा अविद्या विचारबाधिता ब्रह्मसत्तैव संपद्यत इति शेषः ॥
20251 ७१ ॥
20252
20253 तस्मान्नैवाविचारोऽस्ति नाविद्यास्ति न बन्धनम् ।
20254 न मोक्षोऽस्ति निराबाधं शुद्धबोधमिदं जगत् ॥ ७२ ॥
20255
20256 तद्बाधस्य त्रैकालिकत्वमाह - तस्मादिति । बन्धाभावान्मोक्षोऽपि नास्ति ॥ ७२
20257 ॥
20258
20259 एतावन्तं यदाकालं त्वयैतन्न विचारितम् ।
20260 तदा न संप्रबुद्धा त्वं भ्रान्तैवाभव [भ्रान्तेवार्णव आकुला इति
20261 पाठः] आकुला ॥ ७३ ॥
20262
20263 अद्यप्रभृति बुद्धासि विमुक्तासि विवेकिनी ।
20264 वासनातानवं बीजं पतितं तव चेतसि ॥ ७४ ॥
20265
20266 ज्ञानेन द्वैतवासनाबाधे तत्त्ववासनाशेषो वासनातानवं तदेव मुक्तिबीजम्
20267 ॥ ७४ ॥
20268
20269 आदावेव हि नोत्पन्नं दृश्यं संसारनामकम् ।
20270 यदा तदा कथं तेन वास्यन्ते वासनापि का ॥ ७५ ॥
20271
20272 पुनर्द्वैतवासनाप्ररोहमाशङ्क्याह - आदावित्यादिना ॥ ७५ ॥
20273
20274 अत्यन्ताभावसंपत्तौ द्रष्टृदृश्यदृशां मनः ।
20275 एकध्याने परे रूढे निर्विकल्पसमाधिनि ॥ ७६ ॥
20276
20277 मनः रूढे अधिरूढे सति ॥ ७६ ॥
20278
20279 वासनाक्षयबीजेऽस्मिन्किंचिदङ्कुरिते हृदि ।
20280 क्रमान्नोदयमेष्यन्ति रागद्वेषादिका दृशः ॥ ७७ ॥

20281
20282 संसारसंभवश्चायं निर्मूलत्वमुपैष्यति।
20283 निर्विकल्पसमाधानं प्रतिष्ठामलमेष्यति॥ ७८॥
20284
20285 विगतकलनकालिमाकलङ्का
20286 गगनकलान्तरनिर्मलाम्बनेन।
20287 सकलकलनकार्यकारणान्तः
20288 कतिपयकालवशाद्भविष्यसीति॥ ७९॥
20289
20290 इति एवंविधया निर्विकल्पसमाधिप्रतिष्ठया कतिपयकालवशाद्गगनस्य
20291 मायाकाशस्य तत्कलानां तत्कार्याणां चान्तरस्याधिष्ठानभूतस्य
20292 निर्मलस्यात्मनः अम्बनेन अवलम्बनेन विगतो भ्रान्तिकलनलक्षणः कालिमा
20293 यस्या अत एवाकलङ्का तत्संस्कारकलङ्कनिर्मुक्ता सती सकलप्राणिनां
20294 कलनानां भ्रान्तीनां तत्कार्यवासनानां तत्कारणाविद्यायाश्च अन्तो
20295 बाधावधिभूतो यो मोक्षाख्यः परमपुरुषार्थः स त्वमेव
20296 भविष्यसीत्यर्थः॥ ७९॥
20297
20298 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे
20299 विश्रान्त्युपदेशो नामैकविंशः सर्गः॥ २१॥
20300
20301 इति श्रीवासिष्ठमहारामायणे तात्पर्यप्रकाशे उत्पत्तिप्रकरणे
20302 विश्रान्त्युपदेशो नामैकविंशः सर्गः॥ २१॥
20303
20304
20305 द्वाविंशः सर्गः २२
20306
20307 श्रीदेव्युवाच।
20308
20309 यथा स्वप्नपरिज्ञानात्स्वप्नदेहो न वास्तवः।
20310 अनुभूतोऽप्ययं तद्वद्वासनातानवादसन्॥ १॥
20311
20312 अवस्थातुर्यलक्ष्मात्र जीवन्मुक्तस्थितिस्तथा।
20313 वासनातानवोपायस्तदभ्यासश्च कीर्त्यते॥ १॥
20314
20315 प्रागुक्तां ज्ञानदार्ढ्यात्स्थूलदेहभावनिवृत्तिमातिवाहिकभावप्राप्तिं च
20316 दृष्टान्तैर्बोधयितुं देव्युपक्रमते - यथेति। अयं स्थूलदेहः॥ १॥
20317
20318 यथा स्वप्नपरिज्ञानात्स्वप्नदेहः प्रशाम्यति।
20319 वासनातानवात्तद्वज्जाग्रद्देहोऽपि शाम्यति॥ २॥
20320
20321 स्वप्नसंकल्पदेहान्ते देहोऽयं चेत्यते यथा।
20322 तथा जाग्रद्भावनान्ते उदेत्येवातिवाहिकः॥ ३॥
20323
20324 जाग्रद्भावना स्थूलदेहाहंभावना तस्या अन्ते। मूलोच्छेदादुच्छेदे
20325 सतीत्यर्थः॥ ३॥
20326
20327 स्वप्ने निर्वासनाबीजे यथोदेति सुषुप्तता।
20328 जाग्रत्यवासनाबीजे तथोदेति विमुक्तता॥ ४॥
20329
20330 निर्वासनाबीजे अनुद्भूत वासनाबीजे नतृच्छिन्नवासनाबीज इत्यर्थः। पुनः
20331 स्वप्नानापत्तेः। अवासनाबीजे बाधितसर्ववासनाबीजे। विमुक्तता जीवन्मुक्तिः॥ ४॥
20332

येयं तु जीवन्मुक्तानां वासना सा न वासना।
शुद्धसत्त्वाभिधानं तत्सत्तासामान्यमुच्यते॥ ५॥

ननु जीवन्मुक्तानामपि वासनास्त्येव अन्यथा व्यवहारानुपपत्तेस्तत्राह -
येयमिति। न वासना किंतु शुद्धसर्ववासनाबाधावधेरधिष्ठानसत्त्वस्यैव
शुद्धवासनेत्यभिधानं यथा दग्धपट इति भस्मन एवाभिधानम्।
तत्पूर्वतनं सर्ववासनानुगतसत्तासामान्यमेव तथोच्यत इत्यर्थः॥ ५॥

प्। १८४)

या सुप्तवासना निद्रा सा सुषुप्तिरिति स्मृता।
यत्सुप्तवासनं जाग्रद्घनोऽसौ मोह उच्यते॥ ६॥

मूर्च्छासुषुप्त्योरवान्तरभेदं दर्शयति - येति। वासनानां
सुप्तिरमुद्भवोऽभिभवश्च। तथाचानु
तद्भूवासनानिद्रासुषुप्तिरभिभूतवासनं जाग्रन्मोहो मूर्च्छेत्यर्थः।
जाग्रति घनतरोद्भूतवासनानां सहसोत्पन्नदुःखातिशयेन
प्रसह्याभिभवाद्घनत्वमपरित्यज्यैव मोहभावापत्तिस्तदेति सूचनाय घन
इति मोहविशेषणम्॥ ६॥

प्रक्षीणवासना निद्रा तुर्यशब्देन कथ्यते।
जाग्रत्यपि भवत्येव विदिते [विहिते परमे इति पाठः] परमे पदे॥ ७
।।

निद्रेत्यविवक्षितं यतो जाग्रत्यपि ज्ञानात्समूलवासनाक्षये तुर्यं
भवत्येवेत्यर्थः॥ ७॥

प्रक्षीणवासना येह जीवतां जीवनस्थितिः।
अमुक्तैरपरिज्ञाता सा जीवन्मुक्ततोच्यते॥ ८॥

तदेव जीवतो जीवन्मुक्तिरित्याह - प्रक्षीणेति॥ ८॥

शुद्धसत्वानुपतितं चेतः प्रतनुवासनम्।
आतिवाहिकतामेति हिमं तापादिवाम्बुताम्॥ ९॥

प्राग्व्याख्याते शुद्धसत्त्वे सनुपतितं समाधिपाटवाच्चिरप्रतिष्ठितम्॥ ९॥

आतिवाहिकतां यातं बुद्धं चित्तान्तरैर्मनः।
सर्गजन्मान्तरगतैः सिद्धैर्मिलति नेतरत्॥ १०॥

बुद्धं व्युत्थानव्यवहारकालेऽप्यात्मप्रबोधवन्मनः
सर्गान्तरगतैर्जन्मान्तरगतैश्च चित्तान्तरैः सिद्धैश्च
देवयोग्यादिशरीरैरेकिभावेन मिलति॥ १०॥

यदा तेऽयमहंभावः स्वभ्यासाच्छान्तिमेष्यति [स्वाभ्यासात्
पाठः]।
तदोदेष्यति ते स्फारा दृश्यान्ता [दृश्यान्ते बोधता इति पाठः]
बोधता स्वयम्॥ ११॥

दृश्यप्रपञ्चस्यान्ता चरमावधिभूता बोधता स्वाभाविकचिद्रूपता॥ ११॥

आतिवाहिकताज्ञानं स्थितिमेष्यति शाश्वतीम्।

यदा तदा ह्यसंकल्पा&ल्लोकान्द्रक्ष्यसि पावनान् ॥ १२ ॥

असंकल्पान्संकल्पादूषितानत एव पावनान् ॥ १२ ॥

वासनातानवे तस्मात्कुरु यत्नमनिन्दिते ।
तस्मिन्प्रौढिमुपायाते जीवन्मुक्ता भविष्यसि ॥ १३ ॥

यावन्न पूरितस्त्वेष शीतलो बोधचन्द्रमाः ।
तावद्देहमवस्थाप्य लोकान्तरमवेक्ष्यताम् ॥ १४ ॥

गिरिग्रामकदिद्दक्षाप्रतिबद्धचेतसि बोधपूर्तिर्वासनातानवाभ्यासो वा न
संभवतीत्याशयेनाह - यावदिति ॥ १४ ॥

मांसदेहो मांसदेहेनैव संश्लेषमेष्यति ।
नतु चित्तशरीरेण व्यवहारेषु कर्मसु ॥ १५ ॥

ननु किमर्थं मद्देहावस्थापनं त्वद्देहसंश्लेषादस्यापि गमनशक्तिः
किं न स्यात्तत्राह - मांसदेह इति ॥ १५ ॥

यथानुभवमेवैतद्यथास्थितमुदाहृतम् ।
आबालसिद्धसंसिद्धं न नाम वरशापवत् ॥ १६ ॥

किं वरवच्छापवद्वा त्वद्वचनादेव संश्लेषमेष्यति नेत्याह - यथेति ।
मूढतमेषु बालानभिज्ञतमेषु सिद्धांश्च मर्यादीकृत्य
सर्वानुभवसिद्धोऽर्थो मयानूदितो नापूर्वार्थो बलात्संपादित इत्यर्थः ॥ १६ ॥

अवबोधघनाभ्यासाद्देहस्यास्यैव जायते ।
संसारवासनाकार्श्ये नूनं चित्तशरीरता ॥ १७ ॥

यदि लोकसिद्धवस्तुस्वभावो न विपर्यस्यति तर्हि वासनातानवेऽप्यस्य
देहस्यातिवाहिकभावो न संभावयितुं शक्य इत्याशङ्क्याह - अवबोधेति ।
चित्तशरीरता आतिवाहिकशरीरता ॥ १७ ॥

उदेष्यन्ती च सैवात्र केनचिन्नोपलक्ष्यते ।
केवलं तु जनैर्देहो म्रियमाणोऽवलोक्यते ॥ १८ ॥

ननु जीवानां परलोकगमनमप्यातिवाहिकदेहेन प्रसिद्धं स्थूलदेहस्य तु
मृतस्यात्रैवावस्थानं दृश्यते तत्कथमेकस्यातिवाहिकभावेन जीवनं
स्थूलभावेन मरणं चैकदेत्याशङ्क्याह - उदेष्यन्ती चेति । सा
आतिवाहिकता च मरणकाले अत्रास्मिन्नेव शरीरे उदेष्यन्ती केनचिन्म्रियमाणेन
जीवता वा नोपलक्ष्यते । तद्यथा पेशस्करी इत्यादिश्रुतेः ।
पारलौकिकदेहनिर्माणाय म्रियमाणस्य
स्वाज्ञानकल्पितदेहारभकभूतमात्रांशसंवलितस्यैव परलोके
गमनात्तासां मात्राणां तेनानुपलक्षितानामप्यातिवाहिकभावाविरोधात् ।
यस्त्वन्याज्ञानकल्पितभूतमात्रांशोऽज्ञानदेहः
सोऽन्यैर्जनैर्म्रियमाणोऽवलोक्यत इत्यर्थः ॥ १८ ॥

देहस्त्वयं न म्रियते न च जीवति किंच ते ।
के किल [कोकिलस्वप्न पाठः] स्वप्नसंकल्पभ्रान्तौ मरणजीविते ॥
१९ ॥

किंचावास्तवोऽयं देहो न म्रियते न च जीवति ते जीवनमरणे च किं न

20437 किंचिद्वस्त्विति नात्र विरोधशङ्का युक्तेत्यर्थः ॥ १९ ॥
20438
20439 जीवितं मरणं चैव संकल्पपुरुषे यथा।
20440 असत्यमेव भात्येवं तस्मिन्पुत्रि शरीरके ॥ २० ॥
20441
20442 लीलोवाच।
20443
20444 तदेतदुपदिष्टं मे ज्ञानं देवि त्वयाऽमलम्।
20445 यस्मिञ्श्रुतिगते शान्तिमेति दृश्यविषूचिका ॥ २१ ॥
20446
20447 लीलाप्रश्नश्लोकौ स्पष्टौ ॥ २१ ॥
20448
20449 अत्रोपकुरु मे ब्रूहि कोऽभ्यासः कीदृशोऽथवा।
20450 स कथं पोषमायाति पुष्टे तस्मिंश्च किं भवेत् ॥ २२ ॥
20451
20452 श्रीदेव्युवाच।
20453
20454 यद्येन [यदैव क्रियते पाठः] क्रियते किंचिद्येन येन यदा यदा।
20455 विनाभ्यासेन तन्नेह सिद्धिमेति कदाचन ॥ २३ ॥
20456
20457 तच्चिन्तनं तत्कथनमन्योन्यं तत्प्रबोधनम्।
20458 एतदेकपरत्वं च तदभ्यासं विदुर्बुधाः ॥ २४ ॥
20459
20460 तत्रादावभ्यासस्वरूपमाह - तच्चिन्तनमिति। असंदिग्धं
20461 स्वबुद्ध्यारोहाय चिन्तनं अभिज्ञबुद्ध्यन्तरसंवादाय कथनं
20462 परस्पराज्ञातांशप्रबोधायान्योन्यप्रबोधनमित्येतैरुपायैरसंभावनानि
20463 वृत्तिरेतदेकपरत्वेन च विपरीतभावनानिवृत्तिरिति फलानि ॥ २४ ॥
20464
20465 ये विरक्ता महात्मानो भोगभावनतानवम्।
20466 भावयन्त्यभवायान्तर्भव्या भुवि जयन्ति ते ॥ २५ ॥
20467
20468 दृढवैराग्यादीन्येव तल्लक्षणानीति विरक्तस्तुतिमुखेन दर्शयति - ये इति।
20469 भोगभावनानि विषयवासनास्तेषां तानवमपक्षयं भावयन्ति
20470 यत्नेनोत्पादयन्ति ॥ २५ ॥
20471
20472 प्। १८५)
20473
20474 उदितौदार्यसौन्दर्यवैराग्यरसरञ्जिता [रसगर्भिणी इति पाठः]।
20475 आनन्दस्पन्दिनी येषां मतिस्तेऽभ्यासिनः परे ॥ २६ ॥
20476
20477 औदार्यं सर्वपरिग्रहत्यागस्तल्लक्षणसौन्दर्येण वैराग्यरसेन च रञ्जिता।
20478 परे उत्कृष्टाः ॥ २६ ॥
20479
20480 अत्यन्ताभावसंपत्तौ ज्ञातृज्ञेयस्य वस्तुनः।
20481 युक्त्या शास्त्रैर्यतन्ते ये ते ब्रह्माभ्यासिनः स्थिताः ॥ २७ ॥
20482
20483 श्रवणादिपरत्वमपि तदभ्यासलक्षणमित्याह - अत्यन्तेति। युक्त्या
20484 प्रमाणतत्त्वावधारणानुकूलया प्रमेयतत्त्वावधारणानुकूलया च।
20485 शास्त्रैरध्यात्मशास्त्रैः ॥ २७ ॥
20486
20487 सर्गादावेव नोत्पन्नं दृश्यं नास्त्येव तत्सदा।
20488 इदं जगदहं चेति बोधाभ्यास [बोधाभ्यासं विदुः परे इति

पाठः] उदाहृतः ॥ २८ ॥

त्रैकालिकदृश्यबाधदर्शनावृत्तिरपि तदभ्यास इत्याह - सर्गादाविति ॥
२८ ॥

दृश्यासंभवबोधेन रागद्वेषादितानवे ।
रतिर्बलोदिता यासौ ब्रह्माभ्यास उदाहृतः ॥ २९ ॥

बलं मननजन्यविद्यावासनादार्ढ्यं तदुदिता रतिरात्मरतिः ॥ २९ ॥

दृश्यासंभवबोधेन विना द्वेषादितानवम् ।
तप इत्युच्यते तस्मान्न ज्ञानं तच्च दुःखतत् ॥ ३० ॥

दृश्यमिथ्यात्वदार्ढ्यकृतरागाद्युच्छेदे एव प्राग्ज्ञानोपयोगीति तदा
तदभ्यासलक्षणं नान्यादृशमित्याह - दृश्येति । तत्तपो
वृथाद्वेषादिनिरोधदुःखं तनोति विस्तारयतीति दुःखतत् ॥ ३० ॥

दृश्यासंभवबोधो हि ज्ञानं ज्ञेयं च कथ्यते ।
तदभ्यासेन निर्वाणमित्यभ्यासो महोदयः ॥ ३१ ॥

तत्र हेतुमुक्त्वाभ्यासफलं दर्शयन्नुपसंहरति - दृश्येति द्वाभ्याम् ।
हि यस्माच्चरमसाक्षात्कारात्मकं ज्ञानं तज्ज्ञेयं ब्रह्म च
दृश्यस्यासंभवो यस्माद्यस्मिन्वा तथाविधो बोध इति कथ्यते इत्यर्थः ॥ ३१ ॥

भवबहुलनिशानितान्तनिद्रा-
सततविवेकविबोधवारिसेकैः ।
प्रगलति हिमशीतलैरशेषा [रशेषं शरदि इति पाठः]
शरदि महामिहिकेव चेतसीति ॥ ३२ ॥

चेतसि चित्ते इत्येवमभ्यस्तैः सर्वतापोपशमहेतुत्वाद्धिमशीतलैः
सततविवेकविबोधवारिसेकैर्भवः संसारस्तल्लक्षणायां बहुलनिशायां
कृष्णपक्षरात्रौ प्रवृत्ता मोहलक्षणा नितान्तनिद्रा
अशेषसंस्कारात्मनाप्यपरिशिष्यमाणा प्रगलति विशीर्यते । महती मिहिका
नीहारपटली ॥ ३२ ॥

इत्युक्तवत्यथ मुनौ दिवसो जगाम
सायंतनाय विधयेऽस्तमिनो जगाम ।
स्नातुं सभा कृतनमस्करणा जगाम
श्यामाक्षये रविकरैश्च सहाजगाम ॥ ३३ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे
विज्ञानाभ्यासवर्णनं नाम द्वाविंशः सर्गः ॥ २२ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
विज्ञानाभ्यासवर्णनं नाम द्वाविंशः सर्गः ॥ २२ ॥

चतुर्थो दिवसः ।

त्रयोविंशः सर्गः २३

श्रीवसिष्ठ उवाच ।

20541 इति संकथनं कृत्वा तस्यां निशि वराङ्गने।
20542 सुप्ते परिजने नूनमथान्तःपुरमण्डपे॥ १॥
20543
20544 योगात्स्थूलतनुं त्यक्त्वा गिरिग्रामदिदृक्षया।
20545 गृहे व्योम्नि गतिः स्फारे वर्ण्यते ज्ञप्तिलीलयोः॥ १॥
20546
20547 परिजने अनूनमपरिशेषं सुप्ते सत्यथ वराङ्गने ज्ञप्तिलीले
20548 समाधिस्थानकं गत्वा तस्थतुरिति चतुर्थस्थेनान्वयः॥ १॥
20549
20550 दृढाखिलार्गलद्वारगवाक्षे दक्षचेतसि।
20551 पुष्पप्रकरनिष्ठ्यूतमांसलामोदमन्थरे [पुष्पप्राकार इति
20552 पाठः]॥ २॥
20553
20554 दक्षचेतसीति प्राक्तनपरिजनविशेषणं गौणं [मण्डपविशेषणत्वे एव
20555 गौणमित्यर्थः] वा। दृढाः अखिलाः सर्वाः। बहुविधा इति यावत्।
20556 अर्गलाः कपाटविष्कम्भा येषु तथाविधा द्वारगवाक्षा यस्मिन्।
20557 पुष्पप्रकरैर्निष्ठ्यूतैर्निरस्तैर्मांसलैः पुष्टैरामोदैर्मन्थरे। भरिते इति
20558 यावत्॥ २॥
20559
20560 अम्लानमालावसनशवपार्श्वासनस्थिते।
20561 सकलामलपूर्णेन्दुवदनद्योतितास्पदे॥ ३॥
20562
20563 सकलं समग्रममलमकलङ्कं च यथा स्यात्तथा पूर्ण इन्दुरिव ये वदने
20564 इति विग्रहो नतु सकलः कलासहितः पूर्णेन्दुरिवेति। व्यर्थविशेषणत्वापत्तेः॥ ३॥
20565
20566 समाधिस्थानकं गत्वा तस्थतुर्निश्चलाङ्गिके।
20567 रत्नस्तम्भादिवोत्कीर्णे चित्रे भित्ताविवार्पिते॥ ४॥
20568
20569 उत्कीर्णे पुत्रिके इति शेषः। चित्रे चित्रलिखितप्रतिमे॥ ४॥
20570
20571 सर्वास्तत्यजतुश्चिन्ताः संकोचं समुपागते।
20572 दिवसान्त इवाब्जिन्यौ प्रसृतामोदलेखिके॥ ५॥
20573
20574 संकोचं सर्वेन्द्रियप्रत्याहारलक्षणम्। परितः प्रसृता आमोदलेखाः
20575 परिमलभागा ययोस्ते॥ ५॥
20576
20577 बभूवतुर्भृशं शान्ते शुद्धे स्पन्दविवर्जिते।
20578 गिरौ शरदि निर्वात इव भ्रष्टाभ्रमालिके॥ ६॥
20579
20580 निर्वाते शरदि गिरौ भ्रष्टे अवतीर्णे अभ्रमालिके यथा शुद्धे शुभे
20581 शान्तशीतले स्पन्दविवर्जिते च तद्वत्॥ ६॥
20582
20583 प्। १८६)
20584
20585 निर्विकल्पसमाधानाज्जहतुर्बाह्यसंविदम्।
20586 यथा कल्पलते कान्ते पूर्वमृत्वन्तरे रसम्॥ ७॥
20587
20588 बाह्यां देहाद्यनात्मवस्तुतद्गोचरां संविदं प्रतिसंधाअम्। यथा
20589 ऋत्वन्तरे वसन्तादावुपस्थिते पूर्वं रसं त्यजतः।
20590 पुराणपत्रशोषादिदर्शनादित्यर्थः॥ ७॥
20591
20592 अहं जगदिति भ्रान्तिदृश्यस्यादावनुद्भवः।

20593 यदा ताभ्यामवगतस्त्वत्यन्ताभावनात्मकः ॥ ८ ॥
20594
20595 आत्यन्तिकदृश्योपशमेन निर्विकल्पसमाधिप्रतिष्ठायां तत्त्वसाक्षात्कारेण
20596 समूलत्रैकालिकदृश्यबाध एव परिनिष्ठितो हेतुरित्याह -
20597 अहमित्यादिसार्धेन ॥ ८ ॥
20598
20599 तदा दृश्यपिशाचोऽयमलमस्तं गतो द्वयोः ।
20600 असत्त्वादेव चास्माकं शशशृङ्गमिवानघ ॥ ९ ॥
20601
20602 समाधाविव सर्वदापि त्रैकालिकदृश्यबाधोऽस्माकमनुभवसिद्ध इति
20603 वसिष्ठो रामं संबोध्याह - असत्त्वादित्यादिन सार्धेन । अस्माकं दृशा
20604 जगद्भातं मृगतृष्णाम्बुवदभातं शशशृङ्गमिव । यतो
20605 यदादावेव नास्ति तद्वर्तमानेऽपि तथेत्यन्वयः ॥ ९ ॥
20606
20607 आदावेव हि यन्नास्ति वर्तमानेऽपि तत्तथा ।
20608 भातं वाऽभातमेवातो मृगतृष्णाम्बुवज्जगत् ॥ १० ॥
20609
20610 स्वभावकेवलं शान्तं स्त्रीद्वयं तद्बभूव ह ।
20611 चन्द्रार्कापदार्थौघैर्दूरमुक्तमिवाम्बरम् ॥ ११ ॥
20612
20613 दृश्यास्तमये ते कथं बभूवतुस्तदाह - स्वभावेति । चन्द्रार्कादिभिः
20614 सर्वपदार्थौघैर्दूरे मुक्तमम्बरं सर्गादौ वायूत्पत्तेः
20615 प्राग्वाय्वन्तप्रलये च प्रसिद्धं तदिव ॥ ११ ॥
20616
20617 तेनैव ज्ञानदेहेन चचार ज्ञप्तिदेवता ।
20618 मानुषी त्वितरेणाशु ध्यानज्ञानानुरूपिणा
20619 [ज्ञानाज्ञानानुरूपिणी] ॥ १२ ॥
20620
20621 वक्ष्यमाणव्योमगमने तयोर्देहवैलक्षण्यमाह - तेनेति ॥ १२ ॥
20622
20623 गेहान्तरेव प्रादेशमात्रमारुह्य संविदा ।
20624 बभूवतुश्चिदाकाशरूपिण्यौ व्योमगाकृती ॥ १३ ॥
20625
20626 तच्च दूरनभोगमनकल्पनं स्वगृहमण्डपाकाशप्रादेशमात्र एव
20627 वृत्तं न बहिरित्याह - गेहान्तरिति । देहान्तः इति पाठे
20628 हृदयात्कण्ठपर्यन्तं प्रादेशमात्रं नाडीमार्गमारुह्येत्यर्थः ।
20629 संविदा उद्भुद्धपूर्वसंकल्पसंस्कारसंविदा ॥ १३ ॥
20630
20631 अथ ते ललने लीलालोले ललितलोचने ।
20632 स्वभावाच्चेत्यसंवित्तेर्नभो दूरमितो गते ॥ १४ ॥
20633
20634 चेत्या विषयास्तत्संवित्तेः स्वभावो विषयानुरूपव्यवहारकल्पना
20635 तद्वशादित्यर्थः ॥ १४ ॥
20636
20637 तत्रस्थे वाथ चिद्वृत्त्या पुप्लुवाते नभस्थलम् ।
20638 कोटियोजनविस्तीर्णं दूराद्दूरतरान्तरम् ॥ १५ ॥
20639
20640 तत्रस्थे गेहस्थे । वाशब्दोऽवधारणे । चिद्वृत्त्या आकाशमावां प्लवावहे
20641 इत्येवंरूपया चित्प्रधानमानसकल्पनावृत्त्या ॥ १५ ॥
20642
20643 दृश्यानुसन्धाननिजस्वभावा-
20644 दाकाशदेहे अपि ते मिथोऽत्र ।

20645 परस्पराकारविलोकनेन
20646 बभूवतुः स्नेहपरे वयस्ये ॥ १६ ॥
20647
20648 वस्तुतश्चिदाकाशदेहे अपि
20649 प्राक्संकल्पितदृश्यानुसंधानसहितचित्तात्मतापन्नान्निजस्वभावात् । वयस्ये
20650 सख्यौ ॥ १६ ॥
20651
20652 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे
20653 लीलाप्रज्ञादेव्योर्ज्ञानदेहाकाशगमनं नाम त्रयोविंशः सर्गः ॥ २३
20654 । ।
20655
20656 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
20657 लीलाप्रज्ञादेव्योर्ज्ञानदेहाकाशगमनं नाम त्रयोविंशः सर्गः ॥ २३ ॥
20658
20659
20660 चतुर्विंशः सर्गः २४
20661
20662 श्रीवसिष्ठ उवाच ।
20663
20664 दूराद्दूरमभिप्लुत्य शनैरुच्चैः पदं गते ।
20665 हस्तं हस्ते समालम्ब्य यान्त्यौ ददृशतुर्नभः ॥ १ ॥
20666
20667 अनन्तविश्ववैचित्र्यविलासैः संभृतान्तरम् ।
20668 नभोऽत्र वर्ण्यते पन्थाः प्रयान्त्योर्ज्ञप्तिलीलयोः ॥ १ ॥
20669
20670 उच्चैः पदमूर्ध्वस्थानम् ॥ १ ॥
20671
20672 एकार्णवमिवोच्छूनं गम्भीरं निर्मलान्तरम् ।
20673 कोमलं कोमलमरुदासङ्गसुखभोगदम् ॥ २ ॥
20674
20675 उच्छूनं विवृद्धम् । गम्भीरमेकार्णवमिव । कोमलमिव कोमलं
20676 स्निगधम् । कोमलमरुतांमन्दमारुतानामासङ्गेन संश्लेषेऽन
20677 सुखभोदम् ॥ २ ॥
20678
20679 आह्लादकमलं सौम्यं शून्यताम्भोनिमज्जनात् ।
20680 अत्यन्तशुद्धं गम्भीरं प्रसन्नमपि सज्जनात् ॥ ३ ॥
20681
20682 शून्यतालक्षणे अम्भसि निमज्जनादवगाहनादलमत्यन्तमाह्लादकम् । अथवा
20683 जगच्छून्यतालक्षणे ब्रह्माम्भसि प्रथमं
20684 निमज्जनान्निर्गमनात्प्राणिभ्रमराणामाह्लादहेतुभूतं कमलम् । अत्र
20685 गम्भीरमिति साक्षाद्विशेषणं पूर्वं तु दृष्टान्तस्येति न पौनरुक्त्यम् ।
20686 सज्जनादपि प्रसन्नं प्रसन्नतरम् ॥ ३ ॥
20687
20688 शृङ्गस्थनिर्मलाम्भोदपीनोदरसुधालये ।
20689 विशश्रमतुराशासु पूर्णचन्द्रोदरामले ॥ ४ ॥
20690
20691 आशासु दिक्षु मेर्वादिशृङ्गस्थे निर्मलाम्भोदपीनोदरलक्षणे
20692 पीनोदरान्तर्निविष्टे वा सुधालये सौधे ॥ ४ ॥
20693
20694 सिद्धगन्धर्वमन्दारमालामोदमनोहरे ।
20695 चन्द्रमण्डलनिष्क्रान्ते रेमाते मधुरानिले ॥ ५ ॥
20696

20697 क्वचिच्चन्द्रमण्डलसंनिधौ चन्द्रमण्डलान्निष्क्रान्ते। शैत्यसौरभ्ययोः
20698 पूर्वविशेषणाभ्यां लाभान्मधुरशब्दो मान्द्यसुखस्पर्शपरः॥ ५॥
20699
20700 सस्नतुर्भूरिघर्मान्ते तडिद्रक्ताब्जसंकुले।
20701 सरसीव जलापूरमन्थरे मेघमण्डले॥ ६॥
20702
20703 घर्मोऽर्कतापस्तस्यान्ते अवसानभूते। तडितैव रक्ताब्जानि सरःपक्षे। तडितो
20704 रक्ताब्जानीव मेघमण्डलपक्षे॥ ६॥
20705
20706 प्। १८७)
20707
20708 भूतलौघमहाशैलमृणालाङ्कुरकोटिषु।
20709 दिक्षु बभ्रमतुः स्वैरं भ्रमर्यौ सरसीष्विव॥ ७॥
20710
20711 तत्तद्भूतलौघस्था महाशैला हिमवत्कैलासादयो
20712 मृणालानामब्जकन्दानामङ्कुरकोटय इव यासु॥ ७॥
20713
20714 धारागृहधिया धीरगङ्गानिर्झरधारिणि।
20715 भ्रेमतुर्वातविक्षुब्धमेघमण्डलमण्डपे॥ ८॥
20716
20717 निर्झरशब्देन तच्छीकरा लक्ष्यन्ते॥ ८॥
20718
20719 ततो मधुरगामिन्यौ विश्राम्यन्त्यौ स्वशक्तितः।
20720 शून्ये ददृशतुर्व्योम महारम्भातिमन्थरम्॥ ९॥
20721
20722 महद्भिरारम्भैर्भुवनतज्जननिर्माणैरतिमन्थरं संक्लिष्टम्॥ ९॥
20723
20724 अदृष्टपूर्वमन्योन्यं सर्वसंकटकोटरम्।
20725 अपूर्यमाणमाशून्यं जगत्कोटिशतैरपि॥ १०॥
20726
20727 यद्यपि प्रज्ञप्त्या प्राग्दृष्टमेव तथाप्यन्योन्यं परस्परसाहित्येन
20728 पूर्वमदृष्टम्। सर्वे संकटकोटरा गर्भच्छिद्रादयोंऽशा यस्य।
20729 सर्वप्राणिभवदुःखानामाश्रयभूतं छिद्रमिति वार्थः।
20730 आशून्यत्वमपूर्यमाणत्वे हेतुः॥ १०॥
20731
20732 उपर्युपर्युपर्युच्चैरन्यैरन्यैर्वृतं पृथक्।
20733 विचित्राभरणाकारैर्भूतलैः सुविमानकैः॥ ११॥
20734
20735 विचित्राभरणप्रख्यैर्भूतलैर्लक्षणया भुवनतलैः। शोभनानि विमानानि
20736 येषु तैः॥ ११॥
20737
20738 परितः पूरितव्योम्नां मेर्वादिकुलभूभृताम्।
20739 पद्मरागतटोद्द्योतैः कल्पज्वालोपमोदरम्॥ १२॥
20740
20741 पद्मरागमणिमयानां तटानां पार्श्वानामुद्द्योतैः प्रकाशैः॥ १२॥
20742
20743 मुक्ताशिखरभापूरैर्हिमवत्सानुसुन्दरम्।
20744 काञ्चनाद्रिस्थलार्चिर्भिः काञ्चनस्थलभासुरम्॥ १३॥
20745
20746 तेषामेव भूभृतानं मुक्तामयशिखराणां भापूरैः
20747 प्रभाप्रवाहैर्हिमवतः सानुः प्रस्थदेशस्तद्वद्भासुरम्॥ १३॥
20748

20749 महामरकताभाभिः शाद्वलस्थलनीलिमम् ।
20750 द्रष्टृदृश्यक्षयासक्तजातध्वान्तोत्थकालिमम् ॥ १४ ॥
20751
20752 तथा तेषामेव भूभृतां महामरकतानां महार्हहरिन्मणीनां
20753 प्रभाभिर्घासहरितस्थलस्य नीलिमेव नीलिमा यस्य । तथा क्वचिद्रष्टॄणां
20754 सचक्षु।आं रूपभेदानां क्षये आसक्तस्तत्परः सन् जात उत्पन्नो
20755 ध्वान्तोत्थकालिमा यस्मिंस्तथाविधम् ॥ १४ ॥
20756
20757 पारिजातलतालोलविमानगणकेतनम् ।
20758 अतो मञ्जरिकाकारमिव वैदूर्यभूतलम् ॥ १५ ॥
20759
20760 क्वचित्तु यतः पारिजातकल्पलतावनोपरि आलोलविमानगणानां केतनं
20761 स्थानमतः समीपस्थदृष्ट्या तद्वनमञ्जरिकाकारमिव दूरस्थदृष्ट्या तु
20762 वैदूर्यमयभूतलमिव स्थितमित्यर्थः ॥ १५ ॥
20763
20764 मनोवेगमहासिद्धजितवातगमागमम् ।
20765 विमानगृहदेवस्त्रीगेयवाद्यसघुंघुमम् ॥ १६ ॥
20766
20767 मनोवेगैर्महासिद्धैर्वातगमागमो वायुसंचारवेगः स जितो यस्मिन् ।
20768 घुंघुममिति ध्वन्यनुकरणम् ॥ १६ ॥
20769
20770 त्रैलोक्यवरभूतौघसंचाराविरलान्तरम् [संचारविरलां इति
20771 पाठः] ।
20772 अन्योन्यादृष्टसंचारसुरासुरकुलाकुलम् ॥ १७ ॥
20773
20774 पर्यन्तस्थितकूष्माण्डरक्षःपैशाचमण्डलम् ।
20775 वातस्कन्धमहावेगवहद्वैमानिकव्रजम् ॥ १८ ॥
20776
20777 वातस्कन्धा आवहप्रवहादयो वायुभेदाः ॥ १८ ॥
20778
20779 वहद्विमानसीत्कारमुष्टिग्राह्यघनध्वनि ।
20780 ग्रहर्क्षघनसंचारात्प्रचलद्वातयन्त्रकम् ॥ १९ ॥
20781
20782 विमानसीत्कारो विमानवेगध्वनिस्तस्य मोषणं मुष्टिरभिभवस्तेन ग्राह्या
20783 घनध्वनयो मेघशब्दा यस्मिन् । वातयन्त्रकं
20784 वायुविष्टम्भमययन्त्ररूपं ज्योतिश्चक्रम् ॥ १९ ॥
20785
20786 निकटातपदग्धाल्पसिद्धसिद्धोज्झितास्पदम् ।
20787 अर्काश्वमुखवातास्तदग्धमुग्धविमानकम् ॥ २० ॥
20788
20789 क्वचित्सूर्यसंनिहितदेशनिकटातपेन दग्धैः संतप्तैस्तपोयोगरसायनादिना
20790 अल्पसिद्धैः सिद्धाख्यदेवयोनिविशेषैश्चोज्झितावस्थानम् । अर्केण
20791 तदीयाश्वमुखवातैश्च यथायोगमस्ताः क्षिप्ता दग्धाश्चाल्पा विमाना
20792 विमानका यस्मिन् ॥ २० ॥
20793
20794 लोकपालाप्सरोवृन्दसंचाराचारचञ्चलम् ।
20795 देव्यन्तःपुरिकादग्धधूपधूमाम्बुदाम्बरम् ॥ २१ ॥
20796
20797 पद्भ्यां संचारा इतरैरङ्गैस्तत्तदुचिताचरणान्याचारास्तैश्चञ्चलमिव
20798 चञ्चलम् । धूपधूमैरम्बुदव्याप्ताम्बरमिव स्थितम् । विष्णुना सदृशो
20799 वीर्य इति राम इव कल्पितभेदादुपमेयता ॥ २१ ॥
20800

20801 स्वस्वर्गाहूतदेवस्त्रीस्वाङ्गविभ्रष्टभूषणम् ।
20802 सामान्यसिद्धसङ्घोग्रतेजःपुञ्जतमोबलम् ॥ २२ ॥
20803
20804 इन्द्रचन्द्रादिभिः स्वर्गशब्दितस्वस्वलोकायाहूतानामत
20805 एवान्यानुपेक्ष्याहंपूर्विकया धावन्तीनां देवस्त्रीणामप्सरसां
20806 स्वाङ्गेभ्यो विभ्रष्टानि भूषणानि यस्मिंस्तथाविधं यतः अतस्ताः
20807 समीहमानानां
20808 सामान्यसिद्धानामिन्द्रादिवदणिमादिविशेषसिद्धिशून्यानां
20809 स्वर्ग्यन्तराणां यः संघस्तदीयोग्रतेजःपुञ्जस्य क्रोधासूयादिना
20810 तिरोभावकं तमोबलं तमोगुणप्राबल्यमिव नीलं स्थितमित्यर्थः ॥ २२ ॥
20811
20812 बलवत्सिद्धसंघट्टगमागमविघट्टितैः ।
20813 घनैः सांशुकपार्श्वस्थहिमवन्मेरुमन्दरम् ॥ २३ ॥
20814
20815 तथा बलवतां सिद्धानां देवयोनिविशेषाणां संघट्टः
20816 संमर्दस्तद्युक्तगमनाभ्यां
20817 विघट्टितैश्चूर्णितैर्घनैर्मेघैस्तद्वयादिव
20818 पार्श्वस्थहिमवदाद्यधित्यकाश्रयणात्सांशुकाः स्वस्त्रा इव संपन्ना
20819 हिमवन्मेरुमन्दरा यस्मिन् ॥ २३ ॥
20820
20821 काकोलूकैर्गृध्रभासै राशिभूतैश्चलैर्वृतम् ।
20822 नृत्यद्भिर्डाकिनीसङ्घैस्तरङ्गैरिव वारिधिम् ॥ २४ ॥
20823
20824 उलूकादयः पक्षिभेदाः ॥ २४ ॥
20825
20826 प्रवृत्तैर्योगिनीसङ्घैः श्वकाकोष्ट्रस्वराननैः ।
20827 निरर्थं योजनशतं गत्वागच्छद्भिरावृतम् ॥ २५ ॥
20828
20829 योगिनीनामणिमादिसिद्विधिमत्त्वात्स्वस्थान एवेप्सितलाभेऽपि व्यर्थं दूरं गत्वा
20830 आगच्छद्भिरित्यर्थः ॥ २५ ॥
20831
20832 प्। १८८)
20833
20834 लोकपालपुरोध्वान्तधूमधूम्रेऽभ्रमन्दिरे [धूम्राभ्रमन्दिरं
20835 इति पाठः] ।
20836 सिद्धगन्धर्वमिथुनप्रारब्धसुरतोत्सवम् ॥ २६ ॥
20837
20838 दिगन्तविश्रान्तत्वात्तत्तद्दिगधिष्ठातृलोकपालानां पुरोग्रत इव स्थिते
20839 ध्वान्तवद्दृष्टिप्रसरनिरोधिनि धूमधूम्रेऽभ्ररूपे मन्दिरे ॥ २६ ॥
20840
20841 स्वर्गगीतस्तवोन्मत्तमदनाक्रान्तमार्गगम् ।
20842 अनारतवहद्धिष्ण्यचक्रलक्षितपक्षकम् ॥ २७ ॥
20843
20844 स्वर्गे गीयमानैर्दिव्यगीतैर्दिव्यस्तवैश्चोद्दीपकैरुन्मत्ता मदनाक्रान्ताश्च
20845 नभोमार्गगा यस्मिन् । अनारतं वहति नक्षत्रधिष्ण्यभूते ज्योतिश्चक्रे
20846 सूर्यादिगत्या लक्षितः शुक्लकृष्णपक्षादिकालविभागो यस्मिन् ॥ २७ ॥
20847
20848 वातस्कन्धनिखातान्तर्वहल्लिपथगाजलम् ।
20849 आश्चर्यालोकनव्यग्रसंचरल्लिदशार्भकम् ॥ २८ ॥
20850
20851 वातस्कन्धभेदरूपे तस्मिन्नेव चक्रे कल्पितो निखातो
20852 निम्नदेशस्तदन्तःप्रवहल्लिपथगाजलं यस्मिन् ॥ २८ ॥

20853
20854 सदेहसंचरद्वज्रचक्रशूलासिशक्तिमत् ।
20855 क्वचिन्निर्भित्ति भवनं गायन्नारदतुम्बुरु ॥ २९ ॥
20856
20857 वज्रचक्रादिशब्दैस्तदधिष्ठात्र्यो देवता उच्यन्ते अतः सदेहत्वोपपत्तिः ॥ २९ ॥
20858
20859 मेघमार्गमहामेघमहारम्भाकुलं क्वचित् ।
20860 चित्रन्यस्तसमाकारमूककल्पान्तवारिदम् ॥ ३० ॥
20861
20862 मेघमार्गप्रदेशे महामेघानां पुष्करावर्तकादीनां महता
20863 प्रलयवृष्ट्यारम्भेणाकुलं क्वचित्तु चित्रन्यस्तवन्निर्व्यापारा मूका
20864 निःशब्दाश्च कल्पान्तवारिदा यस्मिन् ॥ ३० ॥
20865
20866 उत्पतत्कज्जलाद्रीन्द्रसुन्दराम्भोधरं क्वचित् ।
20867 क्वचित्कनकनिष्पन्दकान्ततापान्तवारिदम् ॥ ३१ ॥
20868
20869 कनकस्य निस्पन्दो द्रव इव कान्तस्तपो ग्रीष्मः स एव तापस्तदन्तः
20870 प्रावृडादिः ॥ ३१ ॥
20871
20872 क्वचिद्दिग्दाहतापाढ्यमृष्यमूकाम्बुदांशुकम् ।
20873 क्वचिन्निष्पवनाम्भोधिसंरम्भं शून्यताजलम् ॥ ३२ ॥
20874
20875 ऋष्यमूके गिरौ पूर्वरामायणावर्णितप्रकारेणेव वर्षन्तोऽम्बुदा
20876 एवांशुकानि यस्य । विष्पवनो निश्चल इति यावत् ॥ ३२ ॥
20877
20878 क्वचिद्वातनदीप्रौढविमानतृणपल्लवम् ।
20879 क्वचिच्चलदलिव्रातपृष्ठत्वक्कान्तिनिर्मलम् ॥ ३३ ॥
20880
20881 वातनद्यां वायुप्रवाहे प्रौढविमानान्येव
20882 प्रवाह्यमानतृणपल्लवस्थाने यस्मिन् ॥ ३३ ॥
20883
20884 क्वचिन्मेरुनदीकल्पवातधूलिविधूसरम् ।
20885 क्वचिद्विमानगीर्वाणप्रभाचित्रब्लाङ्गकम् ॥ ३४ ॥
20886
20887 मेरुनद्यो लक्षणया
20888 वार्षिकगिरिणद्यस्तत्कल्पैस्तत्सवर्णैर्वातधूलिप्रवाहैर्विधूसरम् । चित्रेण
20889 बलं शबलमङ्गकं यस्य ॥ ३४ ॥
20890
20891 क्वचिन्निरम्बरोन्नृत्तमातृमण्डलमालितम् [निरन्तरोन्नृत्त इति
20892 पाठः] ।
20893 क्वचिन्नित्यं नवक्षीबक्षुब्धयोगीश्वरीगणम् ॥ ३५ ॥
20894
20895 क्वचिच्छान्तसमाधिस्थविश्रान्तमुनिमालितम् ।
20896 समं दूरास्तसंरम्भसाधुचित्तमनोहरम् ॥ ३६ ॥
20897
20898 दूरेऽस्ताः संरम्भाः क्रोधादयो येन साधुचित्तेन ॥ ३६ ॥
20899
20900 गायत्किन्नरगन्धर्वसुरस्त्रीमण्डलं क्वचित् ।
20901 क्वचित्स्तब्धपुराकीर्णं वहत्पुरवरं क्वचित् ॥ ३७ ॥
20902
20903 स्तब्धैर्निश्चलैः पुरैराकीर्णम् । वहन्ति भ्रमन्ति त्रिपुरादिपुरवराणि यस्मिन् ॥
20904 ३७ ॥

20905
20906 क्वचिद्रुद्रपुरापूर्णं क्वचिद्ब्रह्ममहापुरम् ।
20907 क्वचिन्मायाकृतपुरं क्वचिदागामिपत्तनम् ॥ ३८ ॥
20908
20909 क्वचिद्भ्रमच्चन्द्रसरः क्वचित्स्तब्धमयंसरः ।
20910 क्वचित्सरत्सिद्धगणं क्वचिदिन्दुकृतोदयम् ॥ ३९ ॥
20911
20912 भ्रमच्चन्द्र एवामृतपूर्णत्वाच्चन्द्रसदृशं वा मायासरो यस्मिन् ।
20913 स्तब्धमयं देवशक्त्या घनीभूतं जलमयं सरो यस्मिन् ।
20914 विभक्त्यलुक्छान्दसः ॥ ३९ ॥
20915
20916 क्वचित्सूर्योदयमयं क्वचिद्रात्रितमोमयम् ।
20917 क्वचित्संध्यांशुकपिलं क्वचिन्नीहारधूसरम् ॥ ४० ॥
20918
20919 क्वचिद्धिमाभ्रधवलं क्वचिद्वर्षत्पयोधरम् ।
20920 क्वचित्स्थल इवाकाश एव विश्रान्तलोकपम् ॥ ४१ ॥
20921
20922 आकाश एव विश्रान्तलोकपमिति विश्रान्तिक्रियाया अधिकरणसापेक्षतया
20923 नित्यत्वात्संबन्धिशब्दत्वाच्च न सापेक्षमसमर्थं
20924 भवतीत्यसमर्थसमासता । तथाचोक्तम् - संबन्धिशब्दः सापेक्षो नित्यं
20925 सर्वः समस्यते । वाक्यवत्सा व्यपेक्षा हि वृत्तावपि न हीयते ॥ इति ॥ ४१ ॥
20926
20927 ऊर्ध्वाधोगमनव्यग्रसुरासुरगणं क्वचित् ।
20928 पूर्वापरोत्तरायाम्यदिक्संचाराकुलं क्वचित् ॥ ४२ ॥
20929
20930 अपराशब्दः प्रतीचीपरः परिशेषात् । उत्तरा याम्येति सर्वनाम्नो
20931 वृत्तावपुंवद्भावश्छान्दसः । दिशः संचरन्तीति दिक्संचारास्तैराकुलम् ॥
20932 ४२ ॥
20933
20934 अपि योजनलक्षाणि क्वचिद्दुष्प्रापभूधरम् ।
20935 अविनाशितमःपूर्णं दृषद्गर्भोपमं क्वचित् ॥ ४३ ॥
20936
20937 क्वचिल्लोकालोकगिरेः परतः ॥ ४३ ॥
20938
20939 अविनाशिबृहत्तेजः क्वचिदर्कानलोपमम् ।
20940 हिमानीजठराशीतं क्वचिच्चन्द्रादिसमसु ॥ ४४ ॥
20941
20942 हिमानी हिमसंहतिस्तज्जठरवदाशीतम् ॥ ४४ ॥
20943
20944 क्वचिद्वहत्पुरोवृत्तकल्पवृक्षलतावनम् ।
20945 क्वचिद्दैत्यहतोत्तुङ्गप्रपतद्देवपत्तनम् ॥ ४५ ॥
20946
20947 क्वचिद्दैत्यभयादुत्पाट्य वहद्भिर्देवानुचरैः पुरोवृत्तं पुरस्कृतं
20948 कल्पवृक्षलतावनं यस्मिन् ॥ ४५ ॥
20949
20950 वैमानिकनिपातेन वह्निलेखाङ्कितं क्वचित् ।
20951 क्वचित्केतुशतोत्पातमिथःसंघट्टपट्टितम् ॥ ४६ ॥
20952
20953 क्वचिद्वैमानिकानां स्वर्गिणां निपातेन दीर्घीभूततत्तेजसा
20954 पतदुल्कावह्निरेखयेवाङ्कितं चिह्नितम् । पट्टितं पट्टवन्निविडितम् ॥ ४६ ॥
20955
20956 क्वचिच्छुभग्रहगणप्रगृहीताग्र्यमण्डलम् ।

20957 क्वचिद्रात्रितमोव्याप्तं क्वचिद्दिवसभास्वरम् ॥ ४७ ॥
20958
20959 अग्र्यं श्रेष्ठं ऊर्ध्वभागमण्डलं यस्य ॥ ४७ ॥
20960
20961 क्वचिदुद्गर्जदम्भोदं क्वचिन्मूकामलाम्बुदम् ।
20962 वातावकीर्णशुक्लाभ्रखण्डपुष्पोत्तरं क्वचित् ॥ ४८ ॥
20963
20964 अभ्रखण्डा एव पुष्पोत्तराः पुष्पास्तरा यस्य ॥ ४८ ॥
20965
20966 प्। १८९)
20967
20968 क्वचिदत्यन्तनिःशून्यमवदातमनन्तरम् ।
20969 आनन्दमृदुशान्ताच्छं ज्ञस्येव हृदयं ततम् ॥ ४९ ॥
20970
20971 नितरां दृश्यपदार्थशून्यम् । अवदातं स्वच्छम् ।
20972 अनन्तरमज्ञानमेघान्तरायरहितम् । अच्छं नीरजस्कम् ॥ ४९ ॥
20973
20974 शुक्रवाहनभेकौघैः क्वचिद्गलकृतारवम् ।
20975 शून्यतावारिवलितं क्षेत्रमाकाशवासिनाम् ॥ ५० ॥
20976
20977 शुक्रोपलक्षितसर्वनभश्चरवाहनान्येव भेकौघास्तैः । शून्यतावारिणा
20978 वलितं पूर्णम् । क्षेत्रं केदारम् ॥ ५० ॥
20979
20980 मयूरहेमचूडादिपक्षिभिः क्वचिदावृतम् ।
20981 विद्याधरीणां देवीनां वाहनैर्विहितास्पदैः ॥ ५१ ॥
20982
20983 क्वचिदभ्रान्तरोन्नृत्यद्गुहमायूरमण्डलम् ।
20984 क्वचिदग्निशुकैः श्यामं शाद्वलानामिव स्थलम् ॥ ५२ ॥
20985
20986 गुहः स्कन्दः । अग्नेर्वाहनैः शुकैः । यद्यपि मेषवाहनत्वमग्नेः
20987 प्रसिद्धं तथाप्यत्रोक्तेः शुकवाहनत्वमपि बोध्यम् ॥ ५२ ॥
20988
20989 क्वचित्प्रेतेशमहिषमहिम्ना वामनाम्बुदम् ।
20990 क्वचिदश्वैस्तृणग्रामशङ्काग्रस्तासिताम्बुदम्
20991 [ग्रस्तामिताम्बुदं इति पाठः] ॥ ५३ ॥
20992
20993 प्रेतेशो यमस्तन्महिषस्य महिम्ना बृहत्कायत्वेन । तृणग्रामशङ्का
20994 तृणराशिभ्रमः ॥ ५३ ॥
20995
20996 क्वचिद्देवपुरव्याप्तं क्वचिद्दैत्यपुरान्वितम् ।
20997 अन्योन्याप्राप्यनगरं नगरन्ध्रकरानिलम् ॥ ५४ ॥
20998
20999 अन्योन्यैरप्राप्ये प्राप्तुमशक्ये नगरे यस्मिन् । तत्र हेतुः - अन्तराले
21000 नगानां पर्वतानामपि रन्ध्रकरणसमर्थो बलवत्तरोऽनिलो यस्मिन्निति ॥ ५४ ॥
21001
21002 क्वचित्कुलाचलाकारनृत्यद्भैरवभासुरम् ।
21003 क्वचित्सपक्षशैलेन्द्रसमनृत्यद्विनायकम् ॥ ५५ ॥
21004
21005 क्वचिद्घर्घरवातौघपक्षप्रोड्डीनपर्वतम् ।
21006 क्वचिद्गन्धर्वनगरसुरस्त्रीवृन्दबन्धुरम् ॥ ५६ ॥
21007
21008 घर्घरवातौघं यथा स्यात्तथा पक्षैः प्रोड्डीनाः पर्वता यस्मिन् ॥ ५६ ॥

21009
21010 क्वचिद्वहद्गिरिध्वस्तवृक्षलक्षोच्छ्रिताम्बुदम् ।
21011 क्वचिन्मायाकृताकाशनलिनीजलशीतलम् ॥ ५७ ॥
21012
21013 वहद्भिरुड्डीय गच्छद्भिर्गिरिभिर्ध्वस्ताश्चूर्णिता
21014 वृक्षलक्षैश्छत्रवदुच्छ्रिताश्चाम्बुदा यस्मिन् । अम्बुधिम् इति
21015 पाठेऽप्यम्बूनि धीयन्ते येष्विति व्युत्पत्त्याट्राम्बुदा एवोच्यन्ते ॥ ५७ ॥
21016
21017 क्वचिदिन्दुकराकृष्टिशीतलाह्लादमारुतम् ।
21018 क्वचित्तप्तानिलादग्धद्रुमपर्वतवारिदम् ॥ ५८ ॥
21019
21020 क्वचिदत्यन्तसंशान्तवातादेकान्तनिर्ध्वनि ।
21021 क्वचित्पर्वततुल्याभ्रशिखाकूटशतोदयम् ॥ ५९ ॥
21022
21023 एकान्तं नितान्तं निर्ध्वनि ॥ ५९ ॥
21024
21025 क्वचित्प्रावृड्भवोन्मत्तघनाभ्ररवघर्घरम् ।
21026 क्वचित्सुरासुरगणप्रवृत्तरणदुर्गमम् ॥ ६० ॥
21027
21028 क्वचिद्व्योमाब्जिनीहंसीस्वनाहूताब्जवाहनम् ।
21029 क्वचिन्मन्दाकिनीतीरनलिनीलुण्ठकानिलम् ॥ ६१ ॥
21030
21031 अब्जवाहनपदे छन्दसो जलोपः । नलिनीनां लुण्ठकः सौरभ्यापहारी ॥ ६१ ॥
21032
21033 स्वशरीरेण गङ्गादिसरितां सन्निधानतः ।
21034 प्रोड्डीनमत्स्यमकरकुलीराम्बुजकूर्मकम् ॥ ६२ ॥
21035
21036 स्वशरीरेण देवताशरीरेण । प्रोड्डीनेत्यादेरुत्प्रेक्षितोक्तिः ॥ ६२ ॥
21037
21038 पातालगार्कजनितभूच्छायाकाकचोपनैः ।
21039 क्वचित्क्वचिन्मण्डलेषु ग्रस्तचन्द्रार्कमण्डलम् ॥ ६३ ॥
21040
21041 ज्यौतिषिकप्रक्रियामाश्रित्याह - पातालेति । भूगोलं परितो भ्रमत्यादित्ये
21042 भूच्छायामपि परितो भ्रमन्ती पातालगेऽर्के ऊर्ध्व प्रसरति सैव
21043 श्यामत्वात्काकस्तस्य चोपनैः । चुप मन्दगतौ । आक्रमणैरिति यावत् । सेयं
21044 चन्द्रग्रासे उपपत्तिः । अर्कग्रासे तु नेयमुपपत्तिरिति श्लेषादर्थान्तरमुच्यते ।
21045 पातालशब्देन लक्षणया चन्द्रस्य व्यवहितः पश्चाद्भागस्तद्गतेऽर्के सति
21046 चन्द्रमण्डले जनिता या भुवश्छाय प्रतिबिम्बस्तेन श्यामत्वापादनात्काकवत्
21047 संपन्नश्चन्द्रस्तेन चोपनैरिति ॥ ६३ ॥
21048
21049 क्वचित्सर्गानिलाधूतमायाकुसुमकाननम् ।
21050 पतत्पुष्पहिमासारत्रसद्वैमानिकाङ्गनम् ॥ ६४ ॥
21051
21052 वैमानिकैरेव स्वाङ्गनाविस्मयार्थनिर्मितमायासर्गानिलैराधूतं
21053 मायाकुसुमकाननं यस्मिन्नित्यर्थः ॥ ६४ ॥
21054
21055 उदुम्बरोदरमशकक्रमभ्रम-
21056 ज्जगल्लयान्तरगतभूतसंचयम् ।
21057 विलङ्घ्य तद्वरललने खमुच्चकै-
21058 र्महीतलं पुनरपि गन्तुमुद्यते ॥ ६५ ॥
21059
21060 इत्थं नभसि वर्णिते नभश्चरवैभवे रागो मा भूदिति तांस्तुच्छीकुर्वन्नाह

21061 - उदुम्बरेति। मशकक्रमो मशकमर्यादा तद्वदिति यावत्॥ ६५॥
21062
21063 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपाये उत्पत्तिप्रकरणे
21064 लीलाप्रज्ञादेव्योर्गमनवर्णनं नाम चतुर्विंशः सर्गः॥ २४॥
21065
21066 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
21067 लीलाप्रज्ञादेव्योर्गमनवर्णनं नाम चतुर्विंशः सर्गः॥ २४॥
21068
21069
21070 पञ्चविंशः सर्गः २५
21071
21072 श्रीवसिष्ठ उवाच।
21073
21074 नभःस्थलाद्गिरिग्रामं गच्छन्त्यौ कंचिदेव ते।
21075 ज्ञप्तिचित्तस्थितं भूमितलं ददृशतुः स्त्रियौ॥ १॥
21076
21077 सप्ताब्धिद्वीपसंवीतं ब्रह्माण्डावरणैर्युतम्।
21078 अपूर्वं भुवनं ताभ्यां दृष्टमत्रोपवर्ण्यते॥ १॥
21079
21080 कंचित् अपूर्वं ज्ञप्तिचित्तस्थितं ज्ञप्त्या लीलायै प्रदर्शयितुमभि प्रेतमिति
21081 यावत्॥ १॥
21082
21083 प्। १९०)
21084
21085 ब्रह्माण्डनरहृत्पद्मं दिगष्टकदलं बृहत्।
21086 गिरिकेसरसंबाधं स्वामोदभरसुन्दरम्॥ २॥
21087
21088 तदेव भूमितलं ब्रह्माण्डपुरुषस्य हृत्पद्मतया वर्णयति -
21089 ब्रह्माण्डेत्यादिना॥ २॥
21090
21091 सरित्केसरिकानालमध्येऽवश्यायबिन्दुकम्।
21092 शर्वरिभ्रमरीभ्रान्तं भूतौघमशकाकुलम्॥ ३॥
21093
21094 गिरिकेसरेभ्यः प्रवृत्तत्वात्सरितः केसरिकाः केसरावान्तरशाखाः।
21095 अवश्याया हिमकणा एव मकरन्दबिन्दवो यस्मिन्॥ ३॥
21096
21097 अन्तर्गुणगणाकीर्णं सुरन्ध्रैः सुषिरैर्वृतम्।
21098 उह्यमानपयःपूरैर्दिवसालोककान्तिमत्॥ ४॥
21099
21100 अन्तर्नालान्तर्गुणास्तन्तवो भोग्यवस्तुगुणाश्च। शोभननालरन्ध्रायमाणैः
21101 पातालादिसुषिरैः। उद्यमानपयःपूरैरिति सुषिराणां विशेषणम्।
21102 दिवसस्यालोकः प्रकाशस्तेन कान्तिमत्॥ ४॥
21103
21104 रसार्द्रं खे भ्रमद्धंसं रात्रिसंकोचभाजनम्।
21105 पातालपङ्कनिर्मग्ननागनाथमृणालकम् [नागराज इति
21106 पाठः]॥ ५॥
21107
21108 रसैर्मकरन्दैः शृङ्गारादिभिश्च। हंसः सूर्यः प्रसिद्धहंसाश्च॥ ५॥
21109
21110 कदाचिदास्पदाम्भोधिकम्पकम्पितदिग्दलम्।
21111 अधोनालगतानन्तदैत्यदानवकण्टकम्॥ ६॥
21112

21113 तद्यदपां शर आसीत्तत्समहन्यत सा पृथिव्यभवत् इति श्रुतेः। पुराणेषु
21114 वराहेणोद्धृत्य जलोपरि स्थापितत्वप्रसिद्धेश्च भूमेरास्पदभूतो यो
21115 महाम्भोध्स्तत्कम्पे भूकम्पात्कम्पितदिग्दलम्॥ ६॥
21116
21117 असुरस्त्रैणवल्लर्या संभोगसुकुमारया।
21118 प्राप्य भूभृन्महाबीजहृदयं भूतबीजया॥ ७॥
21119
21120 अधस्ताद्भूतबीजया स्वसंततिभूतप्राणिबीजभूतया। असुराणां स्त्रीणां
21121 समूहः स्त्रैणं तल्लक्षणया मृणालकलिकादिवल्लर्या प्राप्यं प्राप्तुं
21122 शक्यं भूभृतां मेर्वादीनां महाबीजस्थानीयानां हृदयं
21123 हृदयवज्जीवननिमित्तं नालमूलं यस्य॥ ७॥
21124
21125 जम्बुद्वीप इति ख्यातां विपुलां तत्र कर्णिकाम्।
21126 सरित्केसरिकानालां नगरग्रामकेसराम्॥ ८॥
21127
21128 तत्र भूपद्मे कर्णिकां ददृशतुरित्यनुषज्यते॥ ८॥
21129
21130 कुलशैलेश्वरोत्तुङ्गबीजसप्तकसुन्दरीम्।
21131 मध्यस्थोच्चमहामेरुबीजाक्रान्तनभस्थलीम्॥ ९॥
21132
21133 सरःप्रालेयकणिकां वनजङ्गलधूलिकाम्।
21134 स्थलेष्वामण्डलान्तस्थजनजालालिमण्डलाम् [स्थलेषु मण्डलां इति
21135 पाठः]॥ १०॥
21136
21137 सरांस्येव प्रालेयकणिका हिमबिन्दवो यस्याम्। धूलिकाः परागाः।
21138 कर्णिकापर्यन्तस्थलेषु आसमन्तात् मण्डलान्तस्थानि जनजालान्यलिमण्डलानि
21139 यस्याः॥ १०॥
21140
21141 तां योजनशताकारैः प्रतिराकं प्रबोधिभिः।
21142 सागरैर्भ्रमरैर्व्याप्तां दिक्चतुष्टयशालिभिः॥ ११॥
21143
21144 दिग्दलाष्टकविश्रान्तससुराम्भोधिषट्पदाम्।
21145 भ्रातृभिर्नवभिर्भूपैर्नवधा परिकल्पिताम्॥ १२॥
21146
21147 सुरैर्दिक्पालैरष्टभिः सहिता अम्भोधयः षट्पदा यस्याम्। पूर्वमेकस्यैव
21148 समुद्रस्य दिक्चतुष्टयोपाधिभिश्चतुःसमुद्रभ्रमरकल्पना इह तु
21149 अष्टदिक्पालोपाधिभिर्दलेष्वष्टसमुद्रभ्रमरकल्पनेति भेदः।
21150 नवभिर्भद्राश्वकेतुमालादिभिः॥ १२॥
21151
21152 लक्षयोजनविस्तीर्णामाकीर्णां च रजोलवैः।
21153 नानाजनपदव्यूहस्थिरावश्यायसीकराम्॥ १३॥
21154
21155 द्वीपात्तु द्विगुणं मानं लवणार्णवलेखया।
21156 दधत्या वलितां बाह्ये प्रकोष्ठमिव कम्बुना॥ १४॥
21157
21158 द्वीपाद्द्विगुणमित्यादिपौराणिकप्रक्रियाविरुद्धोक्तेर्ब्रह्माण्डान्तरविषयत्वान्म्
21159 आयिकत्वे तात्पर्याच्चदोषत्वं बोध्यम्। प्रकोष्ठं करमूलम्। कम्बुना
21160 शङ्खवलयेन॥ १४॥
21161
21162 ततोऽपि द्विगुणं देहं दधत्या वलयाकृतिम्।
21163 जगद्भूतलताव्याप्तां शाकाख्यद्वीपलेखया॥ १५॥
21164

21165 वलयाकृतिं देहं संस्थानं दधत्या शाकाख्यद्वीपलेखया जगद्भूतया
21166 पद्मलतयेव व्याप्ताम् ॥ १५ ॥
21167
21168 ततोऽपि द्विगुऽनाकारं धारयन्त्या च वेष्टिताम् ।
21169 प्रत्यग्रक्षीरपूर्णाब्धिलेखया स्वादुशीतया ॥ १६ ॥
21170
21171 ततोऽपि द्विगुणाकारं धारयन्त्योपवेष्टिताम् ।
21172 नानाजनालंकृतया कुशाख्यद्वीपलेखया ॥ १७ ॥
21173
21174 ततोऽपि द्विगुणाकारं धारयन्त्या च वेष्टिताम् ।
21175 दध्यब्धिलेखया नित्यसंतर्पितसुरौघया ॥ १८ ॥
21176
21177 ततः क्रौञ्चाभिधद्वीपलेखयैवंप्रमाणया ।
21178 वेष्टितां खातरचया नवां नृपपुरीमिव ॥ १९ ॥
21179
21180 एवंप्रमाणया पूर्ववद्द्विगुणप्रमाणया खातस्य रचनं खातरचा
21181 परिखा तया । भिदादित्वकल्पनादङ् ॥ १९ ॥
21182
21183 ततोऽपि च घृताम्भोधिलेखयिवंप्रमाणया ।
21184 ततोऽपि शाल्मलीद्वीपलेखया मलपूर्णया ॥ २० ॥
21185
21186 मलपूर्णया सुराम्भोधिवेष्टत्वात्पापपूर्णया ॥ २० ॥
21187
21188 ततः सुरामहाम्भोधिलेखया पुष्पशुभ्रया ।
21189 शेषस्य देहलतया हरिमूर्तिमिवावृताम् ॥ २१ ॥
21190
21191 ततो गोमेदकद्वीपलेखयैवंप्रमाणया ।
21192 इक्ष्वब्धिलेखयाप्येवं हिमवत्सानुशुद्धया ॥ २२ ॥
21193
21194 इक्ष्वब्धिरिक्षुरसाब्धिः । गोमेदका मणिविशेषास्तत्प्रधानो द्वीपः
21195 परिशेषात्प्लक्षद्वीपः ॥ २२ ॥
21196
21197 ततोऽपि पुष्करद्वीपलेखया द्विगुणस्थया ।
21198 अन्ते स्वादूदकाम्भोधिलेखयैवंप्रमाणया ॥ २३ ॥
21199
21200 ततो दशगुणेनाथ पातालतलगामिना ।
21201 निखातवलयेनोच्चैः श्वभ्रसंभाररूपिणा ॥ २४ ॥
21202
21203 निखातो निम्नदेशस्तद्वलयेन । श्वभ्रं गर्तस्तस्य संभारः
21204 समूहस्तद्रूपिणा । पुराणेषु पूर्वद्विगुणविस्तारया काञ्चनभूम्येत्युक्तं
21205 तद्विरोधपरिहारः प्रागुक्तरीत्या बोध्यः । तथाचोक्तं श्रीधराचार्यैः -
21206 क्वचित्क्वचित्पुराणादौ विरोधो यदि लक्ष्यते । कल्पभेदादिभिस्तत्र व्यवस्था
21207 सद्भिरिष्यते ॥ इति ॥ २४ ॥
21208
21209 प्। १९१)
21210
21211 पातालगामिमार्गेण वलितां भयदात्मना ।
21212 एतस्मात्खलु सर्वस्मात्ततो दशगुणोच्चया ॥ २५ ॥
21213
21214 आव्योमसुचतुर्दिक्षु श्वभ्रसंभारभीषया ।
21215 अर्धोन्म्लानतमोरूपलग्ननीलोत्पलस्रजा ॥ २६ ॥
21216

21217 आव्योमसूर्ध्वं व्योममर्यादासु संनिहितेनोक्तश्वभ्रसंभारेण भीषया
21218 भीषणया। अर्धे परपार्श्वे उन्म्लाना ऊर्ध्वभागे
21219 सूर्यप्रकाशसंभेदादवतमसभावापत्त्या म्लानप्राया
21220 तमोरूपवलयाकारेण लग्ना नीलोत्पलस्रग्यस्यास्तया ॥ २६ ॥
21221
21222 नानामाणिक्यशिखरकह्लारकुमुदाब्जया।
21223 लोकालोकाचलोत्तालविपुलोद्दाममालया ॥ २७ ॥
21224
21225 नानाविधमाणिक्यशिखरसरोरूढकह्लारकुमुदान्येवाब्जानि यस्यास्तया
21226 लोकालोकाचललक्षणया औन्नत्येनोत्तालया परिणाहेन विपुलया
21227 गुणैश्चोद्दामया मालया वलितामिवेत्युत्तरेणान्वयः ॥ २७ ॥
21228
21229 वलितां त्रिजगल्लक्ष्मीधम्मिल्लवलनामिव।
21230 एतस्मादेव सर्वस्मात्ततो दशगुणात्मना ॥ २८ ॥
21231
21232 धम्मिल्लाः संयताः कचाः ॥ २८ ॥
21233
21234 अज्ञातभूतसंचारनाम्नारण्येन मालिताम्।
21235 एतस्मादेव सर्वस्मात्ततो दशगुणात्मना ॥ २९ ॥
21236
21237 सर्वपुराणानुरोधात्पाठक्रमादार्थक्रमस्य बलीयस्त्वाच्च अथ
21238 योजनकोटीनामित्यन्ते वक्ष्यमाणा ब्रह्माण्डकुड्यव्याप्तिरत्रैव बोध्या।
21239 तद्बहिर्जलाद्यावरणान्याह - एतस्मादेवेत्यादिना ॥ २९ ॥
21240
21241 नभसेव चतुर्दिक्कं व्याप्तामतुलवारिणा [ममलवारिणा इति
21242 पाठः]।
21243 एतस्मादेव सर्वस्मात्ततो दशगुणात्मना ॥ ३० ॥
21244
21245 मेर्वादिद्रावणोल्केन ज्वालाजालेन मालिताम्।
21246 एतस्मादथ सर्वस्मात्ततो दशगुणात्मना ॥ ३१ ॥
21247
21248 मेर्वादिर्द्रावणं द्रवीकरणम्। प्रलय इति यावत्। तत्रोल्केनोत्कण्ठितेनेव
21249 मलितं ब्रह्माण्डमिति विशेष्यमत्राग्रेऽप्यध्याहार्यम् ॥ ३१ ॥
21250
21251 मेर्वाद्यचलसङ्घातं नयता तृणपांसुवत्।
21252 वहताद्रीन्द्रविस्फोटकारिणा जवहारिणा ॥ ३२ ॥
21253
21254 नयतेत्यादिसामर्थ्योक्तिः। भूतान्तराणां जवहारिणां ॥ ३२ ॥
21255
21256 निःशून्यत्वादशब्देन मरुता परितो वृतम्।
21257 एतस्मादथ सर्वस्मात्ततो दशगुणात्मना ॥ ३३ ॥
21258
21259 नितरां मूर्तप्रतिघातशून्यत्वादशब्देन ॥ ३३ ॥
21260
21261 परितो वलितं व्योम्ना निःशून्येनैकरूपिणा।
21262 अथ योजनकोटीनां शतेन घनरूपिणा।
21263 व्याप्तं ब्रह्माण्डकुड्येन हैमेनापि द्विपर्वणा ॥ ३४ ॥
21264
21265 इति जलधिमहाद्रिलोकपाल-
21266 त्रिदशपुराम्बरभूतलैः परीतम्।
21267 जगदुदरमवेक्ष्य मानुषी द्राग्भुवि निजमन्दिरकोटरं ददर्श ॥ ३५ ॥
21268

21269 मानुषी लीला। निजमन्दिरकोटरं स्वमन्दिराधारं गिरिग्रामावकाशम्॥ ३५॥
21270
21271 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलो०
21272 भूलोकवर्णनं नाम पञ्चविंशः सर्गः॥ २५॥
21273
21274 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
21275 भूलोकवर्णनं नाम पञ्चविंशः सर्गः॥ २५॥
21276
21277 षड्विंशः सर्गः २६
21278
21279 श्रीवसिष्ठ उवाच।
21280
21281 इति ते वरवर्णिन्यौ ततो ब्रह्माण्डमण्डलात्।
21282 निर्गत्यान्यदनुप्राप्ते यत्र तद्ब्राह्मणास्पदम्॥ १॥
21283
21284 स्वगृहे स्वजनान्दृष्ट्वा श्रुत्वैषां परिदेवितम्।
21285 अनुग्रहोऽत्र लीलाया जगत्तत्त्वं च वर्ण्यते॥ १॥
21286
21287 वक्ष्यमाणकथासंबन्धप्रतिपत्तये उक्तमनुवदति - इतीति।
21288 तस्मात्पद्मभूपालाधारब्रह्माण्डमण्डलादन्यद्ब्रह्माण्डमण्डलं इति
21289 वर्णितप्रकारमनुप्राप्ते॥ १॥
21290
21291 ततो ददृशतुः सद्म स्वमेवं सिद्धयोषितौ।
21292 अदृश्ये एव लोकस्य मण्डपं ब्राह्मणास्पदम्॥ २॥
21293
21294 स्वं सद्म गृहम्॥ २॥
21295
21296 चिन्ताविधुरदासीकं बाष्पक्लिन्नाङ्गनामुखम्।
21297 विध्वस्तप्रायवदनं शीर्णपर्णाम्बुजोपमम्॥ ३॥
21298
21299 चिन्तया विधुरा विह्वला दास्यो यत्र।
21300 अश्रुधूल्यादिमलिनत्वात्परिहृतभूषणतिलकत्वाद्विध्वस्तप्रायाणि
21301 जनवदनानि यस्मिन्॥ ३॥
21302
21303 नष्टोत्सवपुरप्रायमगस्त्यात्तमिवार्णवम्।
21304 ग्रीष्मदग्धमिवोद्यानं विद्युद्दग्धमिव द्रुमम्॥ ४॥
21305
21306 अगस्त्येन आत्तं पीतम्। ग्रीष्मेण दग्धं शुष्कम्॥ ४॥
21307
21308 वातच्छिन्नमिवाम्भोदं हिमदग्धमिवाम्बुजम्।
21309 अल्पस्नेहदशं दीपमिवालोकनभेदनम्॥ ५॥
21310
21311 स्नेहस्तैलादिर्दशा वर्तिः। आलोक्यते येन तदालोकनं चक्षुस्तस्य भेदनम्।
21312 दुर्दर्शमिति यावत्॥ ५॥
21313
21314 आसन्नमृत्युकरुणाकुलवक्त्रकान्ति-
21315 संशीर्णजीर्णतरुपर्णवनोपमानम्।
21316 वृष्टिव्यपायपरिधूसरदेशरूक्षं
21317 जातं गृहेश्वरवियोगहतं गृहं तत्॥ ६॥
21318
21319 करुणाशोकोद्दीपको भावविशेषो रसो वा तया आकुला। निरस्तेति यावत्।
21320 वक्त्रकान्तिर्यस्य। अत एवासन्नमृत्यव स्थितम्। संशीर्णानि जीर्णतरुपर्णानि

21321 यस्मिंस्तथाविधं वनमुपमानं यस्य। वृष्टिव्यापायोऽनावृष्टिः॥ ६॥
21322
21323 प्। १९२)
21324
21325 श्रीवसिष्ठ उवाच।
21326
21327 अथ सा निर्मलज्ञानचिराभ्यासेन सुन्दरी।
21328 संपन्ना सत्यसंकल्पा सत्यकामा च देववत्॥ ७॥
21329
21330 सा लीला॥ ७॥
21331
21332 चिन्तयामास मामेते देवीं चेमां स्वबन्धवः।
21333 पश्यन्तु तावत्सामान्यललनारूपधारणीम्॥ ८॥
21334
21335 ततो गृहजनस्तत्र स ददर्शाङ्गनाद्वयम्।
21336 लक्ष्मीगौर्योर्युगमिव समुद्भासितमन्दिरम्॥ ९॥
21337
21338 आपादविविधाम्लानमालावसनसुन्दरम्।
21339 वसन्तलक्ष्म्योर्युगलमिवामोदितकाननम्॥ १०॥
21340
21341 आपादेत्याद्यष्टश्लोक्याङ्गनाद्वयं वर्णयति।
21342 आपादग्रहणमामस्तकत्वस्याप्युपलक्षणम्। विविधानामम्लानानां
21343 मालानां वलनैर्व्यापनैः॥ १०॥
21344
21345 सर्वौषधिवनग्रामं पूरयन्त्यौ रसायनैः।
21346 शीतलाह्लादसुखदं चन्द्रद्वयमिवोदितम्॥ ११॥
21347
21348 ओषध्यः फलपाकान्ताः पूरयन्त्यौ पूरयत्।
21349 नपुंसकैकविशेष्योपक्रमाल्लिङ्गवचनव्यत्ययश्छान्दसः।
21350 रसायनैश्चन्द्रिकामृतैः॥ ११॥
21351
21352 लम्बालकलतालोललोचनालिविलोकनैः।
21353 किरत्कुवलयोन्मिश्रमालतीकुसुमोत्करान्॥ १२॥
21354
21355 अलकलतानां संनिधावालोलत्वादलित्वेन परिणतैर्लोचनैरिति यावत्।
21356 कटाक्षाणां
21357 नीलोन्मिश्रधवलच्छवित्वात्कुवलयोन्मिश्रमालतीकुसुमोच्चयत्वेनोत्प्रेक्षा॥ १२॥
21358
21359 द्रुतहेमरसापूरसरित्सरणहारिणा।
21360 देहप्रभाप्रवाहेण [प्रभविन इति पाठः] कनकीकृतकाननम्
21361 ॥ १३॥
21362
21363 द्रवीकृतस्वर्णरसप्रवाहायाः सरितः सरणं वेग इव मनोहारिणा॥ १३॥
21364
21365 सहजाया वपुर्लक्ष्म्या लीलादोलाविलासिनः।
21366 त एते च तरङ्गाढ्या निजलावण्यवारिधेः॥ १४॥
21367
21368 वपुःकान्तिलक्षणाया लक्ष्म्या लीलार्थं क्लृप्ता दोलाः प्रेङ्खोलिका इव
21369 विलासिनो विलसनशीला ये निजलावण्यस्य स्वभावसुन्दरब्रह्मात्मकस्य
21370 स्वसौन्दर्यलक्षणस्य वा वारिधेस्तरङ्गाढ्यास्तरङ्गश्रेष्ठाः
21371 प्रसिद्धास्ते एते अङ्गने एवेत्युत्प्रेक्षया प्रत्यभिज्ञायमानमिति शेषः॥ १४॥
21372

21373 विलोलबाहुलतिकायुगेनारुणपाणिना |
21374 किरन्नवनवं हैमं कल्पवृक्षलतावनम् || १५ ||
21375
21376 प्रत्येकं बाहुलतिकयोररुणपाण्योश्च विलोलत्वेन विशेषणात्प्रतिक्षणं
21377 विन्यासभेदेन समुदाये कल्पितवनसंस्थानभेदान्नवान्नवं
21378 कल्पवृक्षलतावनं किरद्विक्षिपत् | कल्पयदिति यावत् || १५ ||
21379
21380 पादैरमृदिताम्लानपुष्पकोमलपल्लवैः [पुष्पपल्लवकोमलैः इति
21381 पाठः] |
21382 स्थलाब्जदलमालाभैरस्पृशद्भूतलं पुनः || १६ ||
21383
21384 अमृदितान्यम्लानानि च यानि पुष्पाणि कोमलपल्लवानि वा तद्रूपैः पादैः |
21385 पल्लवकोमलैः इति पाठे तु स्पष्टम् | अब्जसादृश्यस्य पुष्पत्वरूपकादेव
21386 लाभादपौनरुक्त्याय दलमालाभैरित्युक्तम् || १६ ||
21387
21388 तालीतमालखण्डानां शुष्काणां शुचिशोचिषाम् |
21389 आलोकनामृतासेकैर्जनयद्बालपल्लवान् || १७ ||
21390
21391 शुचिशोचिषां पाण्डुरवर्णानाम् || १७ ||
21392
21393 नमोऽस्तु वनदेवीभ्यामित्युक्त्वा कुसुमाञ्जलिम् |
21394 तत्याज ज्येष्ठशर्माथ सार्धं गृहजनेन सः || १८ ||
21395
21396 ज्येष्ठशर्माख्यो ज्येष्ठपुत्रः || १८ ||
21397
21398 पपात पादयोर्गेहे तयोर्वै कुसुमाञ्जलिः |
21399 प्रालेयसीकरासारः पद्मिन्या इव पद्मयोः || १९ ||
21400
21401 प्रालेयसीकरासारो हिमम्बुकणवर्षः | पद्मिन्याः पद्मवल्ल्याः || १९ ||
21402
21403 जयतमिति लोण्मध्यमपुरुषद्विवचनम् || २० ||
21404
21405 ज्येष्ठशर्मादय ऊचुः |
21406
21407 जयतं वनदेव्यौ नो दुःखनाशार्थमागते |
21408 प्रायः परपरित्राणमेव कर्म निजं सताम् || २० ||
21409
21410 इति तद्वचनान्ते ते देव्यावूचतुरादरात् |
21411 आख्यात दुःखं येनायं लक्ष्यते दुःखितो जनः || २१ ||
21412
21413 ज्येष्ठशर्मादयस्ते ते देव्यौ प्रति यथाक्रमम् |
21414 निजं तद्दुःखमाचख्युर्दम्पतिव्यसनात्मकम् || २२ ||
21415
21416 दम्पत्योर्व्यसनं विपत्तिस्तदात्मकम् || २२ ||
21417
21418 ज्येष्ठशर्मादय ऊचुः |
21419
21420 देव्यावभवतां स्निग्धाविह ब्राह्मणदम्पती |
21421 सर्वातिथी कुलकरौ स्तम्भाभूतौ द्विजस्थितेः || २३ ||
21422
21423 हे देव्यौ कुलं संततिः द्विजानां स्थितेर्मर्यादायाः स्तम्भवदाधारभूतौ
21424 || २३ ||

तावद्य गृहमुत्सृज्य सपुत्रपशुबान्धवम् |
स्वर्गं गतौ नः पितरौ तेन शून्यं जगत्त्रयम् || २४ ||

अद्येत्यचिरत्वलक्षणार्थम् | शून्यं शून्यमिव || २४ ||

पक्षिणो गृहमारुह्य विक्षिपन्तः प्रतिक्षणम् |
देहं शून्ये मृतं भक्त्या शोचन्ति मधुरैः स्वरैः || २५ ||

पूर्णः पूर्णं जगत्पश्येत्कामुकः कामुकं जगत् | आर्तोप्यार्तिमयं विश्वं
लुब्धो लुब्धं स्वचित्तवत् || इति न्यायेनाहुः - पक्षिण इत्यादिना | शून्ये
आकाशे स्वदेहं विक्षिपन्तः || २५ ||

गुहागुरुगुरारावप्रलापलपनाकुलः |
सरित्स्थूलाश्रुधाराभिः परिरोदिति पर्वतः || २६ ||

गुहारूपाणि यानि गुरुगुरारावप्रलापानि लपनानि मुखानि तैरकुलो व्याप्तो
व्याकुलश्च || २६ ||

निर्जराक्रन्दकारिण्यो मुक्ताम्बरपयोधराः |
तप्तनिःश्वासविध्वस्ताः परं कार्श्यमिता दिशः || २७ ||

मुक्ताम्बरास्त्यक्ताकाशास्त्यक्तवस्त्राश्च पयोधरा मेघाः स्तनाश्च यासाम् |
दिवपक्षे वाष्पधूसरा वायवो निःश्वाससाम्यान्निःश्वासाः |
कार्श्यमपुष्टिम् || २७ ||

क्षतविक्षतसर्वाङ्गः करुणाक्रन्दकर्कशः |
उपवासरतो ग्रामो दीनो मृतिपरः स्थितः || २८ ||

भूपरिलुठनाभिहननादिना क्षतविक्षतसर्वाङ्गः | ग्रामशब्दो जनपरः
मृतिपरो मर्तुकामः || २८ ||

प्। १९३)

दिवसं प्रति वृक्षाणामवश्यायाश्रुबिन्दवः |
गुच्छलोचनकोशेभ्यस्तापोष्णानि पतन्त्यधः || २९ ||

दिवसं प्रति लक्षणीकृत्य | लक्षणेत्थंभूत इति कर्मप्रवचनीययुक्ते द्वितीया |
ताप आतपः शोकाग्निश्च || २९ ||

प्रशान्तजनसंचारा रथ्या क्षारविधूसरा |
विधवाविगतानन्दा संशून्यहृदया स्थिता || ३० ||

क्षार ऊषरस्तेन विधूसरा रथ्या विधवेव विगतानन्दा स्थिता || ३० ||

कोकिलालिप्रलापिन्यो वृष्टिबाष्पहृता लताः |
उष्णोष्णश्वसना देहं घ्नन्ति पल्लवपाणिभिः || ३१ ||

कोकिलैरलिभिश्च प्रलापिन्यः || ३१ ||

आत्मानं शतधा कर्तुं बृहच्छुभ्रशिलातले |
निर्झराः प्रपतन्त्येते तापतप्तशरीरकाः || ३२ ||

21477
21478 शतधा कर्तुम् | चूर्णयितुमिति यावत् | श्वभ्रं गर्तस्तत्रत्ये शिलातले | शुभ्रे इति
21479 पाठे स्फटिकशिलातले || ३२ ||
21480
21481 निःशङ्कया गतश्रीका मूका विलुलिताशयाः |
21482 अन्धेन तमसा पूर्णा गृहा गहनतां गताः || ३३ ||
21483
21484 मूकाः हर्षवार्ताविधुराः | विलुलिता आशया इवान्तरा भाण्डोपस्करादयो
21485 [भाण्डोपस्कारादयः इति पाठः] येषु | यत एवंरूपा अतो
21486 निःशङ्कया असंशयं गतश्रीकाः सन्तो गहनतामरण्यताम् || ३३ ||
21487
21488 उद्यानपुष्पखण्डेभ्यो रुदद्भ्यो भ्रमरारवैः |
21489 पूतिगन्धो विनिर्याति स्वामोदापरनामकः || ३४ ||
21490
21491 स्वामोदोऽपि शोकार्तैर्घ्राणपीडकत्वात्पूतिरिति निन्द्यते || ३४ ||
21492
21493 चैत्रद्रुमविलासिन्यो विरसाः प्रतिवासरम् |
21494 लताः कृशा विलीयन्ते संकुचद्गुच्छलोचनाः || ३५ ||
21495
21496 चैत्रद्रुमान्विलासयन्ति तच्छीलाः | चैत्य इति पाठे स्पष्टम् | विलीयन्ते विशीर्यन्ते ||
21497 ३५ ||
21498
21499 प्रक्षेप्तुमम्बुधौ देहं प्रवृत्ता गन्तुमाकुलाः |
21500 कुल्याः कलकलालोलं दोलयन्त्यस्तनुं भुवि || ३६ ||
21501
21502 कुल्याग्रहणं सरिन्मात्रोपलक्षणम् || ३६ ||
21503
21504 अशङ्कमशकापातस्पन्दमप्यतिचापलम् |
21505 कलयन्त्यः स्थिता वाप्यो निस्पन्दानन्दमात्मनि || ३७ ||
21506
21507 प्राग्जनव्यवहारादतिचापलमपि कलयन्त्यो वाप्यः सांप्रतमशङ्कः
21508 असंभावितो मशकापातप्रयुक्तस्पन्दोऽपि यत्र तद्यथा स्यात्तथा आत्मनि
21509 स्वस्वरूपे समाधिनिष्ठा इव निस्पन्दानन्दं स्थिताः || ३७ ||
21510
21511 गायत्किन्नरगन्धर्वविद्याधरसुराङ्गनम् |
21512 नूनमद्य नभो जातमस्मत्ताताभ्यलंकृतम् || ३८ ||
21513
21514 तातग्रहणं मातुरप्युपलक्षणम् || ३८ ||
21515
21516 तद्देव्यौ क्रियतां तावदस्माकं शोकनाशनम् |
21517 महतां दर्शनं नाम न कदाचन निष्फलम् || ३९ ||
21518
21519 एवं शोकमुपवर्ण्य विवक्षितमर्थमाहुः - तदिति | तत्तस्माद्धेतोः || ३९ ||
21520
21521 इत्युक्तवन्तं सा पुत्रं मूर्ध्नि पस्पर्श पाणिना |
21522 पल्लवेनानता नम्रं मूलग्रन्थिमिवाब्जिनी || ४० ||
21523
21524 पल्लवेन स्वसंतानमूलग्रन्थिमिव अर्थाज्जलापाये इति लभ्यते || ४० ||
21525
21526 तस्याः स्पर्शेन तेनासौ दुःखदौर्भाग्यसंकटम् |
21527 जहौ प्रावृड्घनासङ्गाद्ग्रीष्मतापमिवाचलः || ४१ ||
21528

21529 सर्वो गृहजनः सोऽथ तयोर्देव्योर्विलोकनात्।
21530 लक्ष्मीवान्दुःखनिर्मुक्तो बभूवामृतपो यथा॥ ४२॥
21531
21532 श्रीराम उवाच।
21533
21534 तयास्य लीलया मात्रा पुत्रस्य ज्येष्ठशर्मणः।
21535 कस्मान्न दर्शनं दत्तं मोहं तावन्निराकुरु॥ ४३॥
21536
21537 लीलायाः सत्यसंकल्पत्वात्पूर्वतनमातृशरीरेणैव पुत्रस्याश्वासनाय
21538 दर्शनं कुतो न दत्तमिति रामः शङ्कते - तयेति। मात्रा मातृशरीरेण।
21539 मोहमिति। मोहापगमे तत्कार्यसंशयः स्वयमेव गमिष्यतीत्याशयः॥ ४३॥
21540
21541 श्रीवसिष्ठ उवाच।
21542
21543 बुद्धः पृथ्व्यादिबोधेन येन पृथ्व्यादिसङ्घकः।
21544 तस्य पिण्डात्मतां धत्ते व्योमैवान्यस्य केवलम्॥ ४४॥
21545
21546 लीलायाः पुत्रगेहागमनस्य प्रपञ्चमिथ्यात्वपरीक्षार्थत्वेन
21547 पुत्रस्नेहप्रयुक्तत्वाभावात्पुत्रादिप्रपञ्चे मिथ्यात्वनिश्चये च
21548 पुत्रस्नेहाभावात्तत्त्वज्ञानेन मूलबाधोत्तरं
21549 वर्तमानशरीरातिरिक्तभौतिकशरीरधारणायोगाच्च न पूर्वशरीरधारणमिति
21550 सोपपत्तिकमुत्तरयितुं वसिष्ठ उपक्रमते - बुद्ध इत्यादिना। येनाज्ञेन
21551 मिथ्यापृत्व्याादिसंघको देहः सत्यपृथ्व्यादिबोधेन बुद्धस्तस्य वस्तुतः
21552 केवलमद्वितीयं चिद्व्योमैव भ्रान्त्या पिण्डात्मतां धत्ते। अन्यस्य
21553 तत्त्वज्ञस्य तु तद्वेत्वज्ञानाभावात्केवलमद्वितीयं चिद्व्योमैवावतिष्ठत
21554 इत्यर्थः॥ ४४॥
21555
21556 असदेवाङ्ग सदिव भाति पृथ्व्यादिवेदनात्।
21557 यथा बालस्य वेतालो नाभाति तदवेदनात्॥ ४५॥
21558
21559 बालस्य भ्रान्त्या ना पुरुषस्तदवेदनाद्वेतालो भाति॥ ४५॥
21560
21561 यथा पृथ्व्यादिना भातमपृथ्व्यादि भवेत्क्षणात्।
21562 स्वप्ने स्वप्नपरिज्ञानात्तथा जाग्रत्यपि स्फुटम्॥ ४६॥
21563
21564 स्वप्नपरिज्ञानात्स्वप्नत्वपरिज्ञानात्॥ ४६॥
21565
21566 पृथ्व्यादि खतया बुद्धं खमित्येवानुभूयते।
21567 तथाहि क्षुब्धधातूनां कुड्येषु ख इवोद्यमः॥ ४७॥
21568
21569 क्षुब्धपित्तादिधातूनाम्। विक्षिप्तानामिति यावत्। द्वाराभासस्फटिकादिकुड्येषु
21570 ॥ ४७॥
21571
21572 स्वप्ने नगरमुर्वीं [ऊर्वी इत्युभयत्र पाठः] वा शून्यं
21573 खातं च बुध्यते।
21574 स्वप्नाङ्गना च कुरुते शून्याप्यर्थक्रियां नृणाम्॥ ४८॥
21575
21576 नगरं शून्यमूर्वी [ऊर्वी इत्युभयत्र पाठः] समभुवं खातं
21577 बुध्यते। पादसंवाहनाद्यर्थक्रियाम्॥ ४८॥
21578
21579 खं पृथ्व्यादितया बुद्धं पृथ्व्यादि भवति क्षणात्।
21580 मूर्च्छायां परलोकोऽपि प्रत्यक्षमनुभूयते॥ ४९॥

21581
21582 परमार्थवस्तु यथाबोधं विवर्तत इति सर्वानुभवसिद्धमित्याह -
21583 स्वमित्यादिना। अनुभूयते कैश्चिदिति शेषः॥ ४९॥
21584
21585 बालो व्योमैव वेतालं म्रियमाणोऽम्बरे वनम्।
21586 केशोण्ड्रकं खमन्यस्तु खमन्यो वेत्ति मौक्तिकम्॥ ५०॥
21587
21588 त्रस्तक्षीबार्धनिद्राश्च नौयानाश्च सदैव खे।
21589 वेतालवनवृक्षादि पश्यन्त्यनुभवन्ति च॥ ५१॥
21590
21591 त्रस्ता भीताः क्षिबा मत्ताः अर्धनिद्रा अर्धजागरूकाः। अनुभवन्ति तत्प्रयुक्तं
21592 पलायनादिकार्यमित्यर्थः॥ ५१॥
21593
21594 प्। १९४)
21595
21596 यथाभावितमेतेषां पदार्थानामतो वपुः।
21597 अभ्यासजनितं भाति नास्त्येकं परमार्थतः॥ ५२॥
21598
21599 एकं नियतम्॥ ५२॥
21600
21601 लीलया तु यथावस्तु बुद्धा पृथ्व्यादिनास्तिता।
21602 आकाशमेव संवित्या भाति भ्रान्तितयोदितम्॥ ५३॥
21603
21604 कथं बुद्धा तदाह - आकाशमेवेति। भ्रान्तितया मिथ्याप्रपञ्चतया॥ ५३
21605 ॥
21606
21607 ब्रह्मात्मैकचिदाकाशमात्रबोधवतो मुनेः।
21608 पुत्रमित्रकलत्राणि कथं कानि कदा कुतः॥ ५४॥
21609
21610 चतुर्भिः किंवृत्तैः प्रकारप्रकारिकालनिमित्तन्याक्षिप्यन्ते॥ ५४॥
21611
21612 दृश्यमादावनुत्पन्नं यच्च भात्यजमेव तत्।
21613 सम्यग्ज्ञानवतामेवं रागद्वेषदृशो कुतः॥ ५५॥
21614
21615 हस्तः शिरसि यद्दत्तो लीलया ज्येष्ठशर्मणः।
21616 तत्प्रभावस्थितारम्भसंबोधायाश्चितेः फलम्॥ ५६॥
21617
21618 ननु पुत्रस्नेहाद्यभावे लीलया कुतः शिरसि हस्तो दत्तस्तत्राह - हस्त इति।
21619 हस्तः शिरसि दत्त इति यत्तन्न पुत्रस्नेहफलं किंतु तस्य ज्येष्ठशर्मणः
21620 प्रभावाय भाविशुभार्थं स्थितौ आरम्भसंबोधौ
21621 प्राक्तनसुकृतोपक्रमतत्फलप्रदेश्वरबोधौ यस्यां तथाविधायाः
21622 सर्वाधिष्ठानचितेरेव विवर्तरूपं फलमित्यर्थः॥ ५६॥
21623
21624 बोधो हि चेतति यथैव तथा शुभानि
21625 सूक्ष्मस्तु खादपि तथातितरां विशुद्धः।
21626 सर्वत्र राघव स एव पदार्थजालं
21627 स्वप्नेषु कल्पितपुरेष्वनुभूतमेतत्॥ ५७॥
21628
21629 सर्गसारार्थमनुवदन्नुपसंहरति - बोध इति। यथैव प्राक् चेतति चिन्तयति॥
21630 ५७॥
21631
21632 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलोपाख्याने

सिद्धदर्शनहेतुकथनं नाम षड्विंशः सर्गः ॥ २६ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
सिद्धदर्शनहेतुकथनं नाम षड्विंशः सर्गः ॥ २६ ॥

## सप्तविंशः सर्गः २७

श्रीवसिष्ठ उवाच ।

तस्मिन् गिरितटे ग्रामे तस्य मण्डपकोटरे ।
अन्तर्धिमाश्वाययतुस्तत्रस्थे [अन्तर्धिमापतुर्दृङ्गा ततस्ते
सिद्धयोषितौ इति पाठः] एव ते स्त्रियौ ॥ १ ॥

लीलात्र विस्मिता भूयो भर्तृदर्शनलालसा ।
ज्ञप्त्या प्रबोधिता स्मृत्वा स्वजन्मान्याह भूरिशः ॥ १ ॥

तस्य द्विजसद्मनो मण्डपकोटरे मण्डपाकाशे । तत्रस्थे ज्येष्ठशर्मादीनां
पुरोदेशस्थे एवान्तर्धिमन्तर्धानं आययतुः प्रापतुः ॥ १ ॥

अस्माकं वनदेवीभ्यां प्रसादः कृत इत्यथ ।
शान्तदुःखे गृहजने स्वव्यापारपरे [परस्थिते इति पाठः]
स्थिते ॥ २ ॥

स्वव्यापारः स्वगृहकृत्यं तत्परे ॥ २ ॥

मण्डपाकाशसंलीनां लीलामाह सरस्वती ।
व्योमरूपा व्योमरूपां स्मयात्तूष्णीमिव [तूष्णीं व्यवस्थिताम् इति
पाठः] स्थिताम् ॥ ३ ॥

संलीनां इतरजनदृष्ट्या अन्तर्हिताम् । तर्हि ते किं वस्तुतः सदेहे नेत्याह -
व्योमरूपेति । शून्यात्मकसंकल्पशरीरा । तादृशीमिति यावत् । स्मयाद्विस्मयात्
॥ ३ ॥

संकल्पस्वप्नयोर्येषां यत्र संकथनं मिथः ।
यथेहार्थक्रियां धत्ते तयोः सा संकथा तथा ॥ ४ ॥

ननु अन्योन्यसांकल्पिकस्यान्योन्यादृश्यत्वात्कथं तयोः संवादोपपत्तिरिति
रामस्य शङ्कां लिङ्गैरुपलक्ष्य स्वयमेव वसिष्ठः समाधत्ते -
संकल्पेति । लोके येषां देवतानुग्रहादिना उषानिरुद्धयोरिव तुल्य एव
परस्परसंवादिसंकल्पः स्वप्नो वा जातस्तेषां तत्र मिथः संकथन यथा
औत्तरकालिकीमर्थक्रियां धत्ते तयोर्ज्ञप्तिलीलयोः संकथा संवादोऽपि
तथेत्यर्थः ॥ ४ ॥

पृथ्व्यादिनाडीप्राणादि-ऋतेऽप्यभ्युदिता तयोः ।
सा संकथनसंवित्तिः स्वप्नसंकल्पयोरिव ॥ ५ ॥

अधिभूतं पृथ्व्यादि अध्यात्मं नाडीप्राणाद्युपलक्षितशरीरमपि ऋते विना
॥ ५ ॥

श्रीसरस्वत्युवाच ।

21685 ज्ञेयं ज्ञातमशेषेण दृष्टादृष्टार्थसंविदः
21686 [द्रष्टव्यसंविदः इति पाठः]।
21687 ईदृशीयं ब्रह्मसत्ता किमन्यद्वद पृच्छसि॥ ६॥
21688
21689 इत्थमुक्ताशङ्कां समाधाय प्रस्तुतकथामनुसरति - श्रीसरस्वत्युवाचेति
21690 ॥ ६॥
21691
21692 लीलोवाच।
21693
21694 मृतस्य भर्तुर्जीवोऽसौ यत्र राज्यं करोति मे।
21695 तत्राहं किं न तेर्दृष्टा दृष्टास्मीह सुतेन किम्॥ ७॥
21696
21697 किंकारणं न दृष्टेत्यर्थः॥ ७॥
21698
21699 श्रीसरस्वत्युवाच।
21700
21701 अभ्यासेन विना वत्से तदा ते द्वैतनिश्चयः।
21702 नूनमस्तंगतो नाभून्निःशेषं वरवर्णिनि॥ ८॥
21703
21704 अभ्यासेन विना अभ्यासाभावादित्यर्थः। द्वैतनिश्चयः
21705 प्रपञ्चसत्यतानिश्चयः॥ ८॥
21706
21707 अद्वैतं यो न यातोऽसौ कथमद्वैतकर्मभिः।
21708 युज्यते तापसंस्थस्य च्छायाङ्गानुभवः कुतः॥ ९॥
21709
21710 न यातो भेदकाऽविद्योच्छेदेन न प्राप्तः। अद्वैतकर्मभिः
21711 सत्यसंकल्पत्वाद्यर्थक्रियाभिः। छायाया अङ्गं गुणः शैत्यं
21712 तदनुभवः। छायोपविष्टाङ्गस्य पुंसो योऽनुभवः स वा॥ ९॥
21713
21714 लीलास्मीति विनाभ्यासं तव नास्तगतोऽभवत्।
21715 यदा भावस्तदा सत्यसंकल्पत्वमभून्न ते॥ १०॥
21716
21717 लीलादेह एवाहमस्मीति भावो दृढसंस्कारः॥ १०॥
21718
21719 अद्यासि सत्यसंकल्पा संपन्ना तेन मां सुतः।
21720 संपश्यत्वित्यभिमतं फलितं तव सुन्दरि॥ ११॥
21721
21722 अद्य सत्यसंक्लपा संपन्नासि। सुतो मां पश्यत्वित्यभिमतमीप्सितम्॥ ११॥
21723
21724 प्। १९५)
21725
21726 इदानीं तस्य भर्तुस्त्वं समीपं यदि गच्छसि।
21727 तत्तेन व्यवहारस्ते पूर्ववत्संप्रवर्तते॥ १२॥
21728
21729 लीलोवाच।
21730
21731 इहैव मन्दिराकाशे पतिर्विप्रो ममाभवत्।
21732 इहैव स मृतो भूत्वा संपन्नो वसुधाधिपः॥ १३॥
21733
21734 एवं प्रत्यक्षमुपदर्शनेनोपदेशेन च प्रश्नोक्तार्थे
21735 निवृत्तासंभवाशङ्का मण्डपाकाशान्तरेव भर्तृपरलोकद्वयस्य
21736 ब्रह्माण्डसहस्राणां च संभवमनुवदन्ती लीला पुनः

21737 स्वभर्तृमण्डलदर्शनं प्रार्थयते - इहेत्यादिना ॥ १३ ॥
21738
21739 इहैव तस्य संसारे तस्मिन्भूमण्डलान्तरे ।
21740 राजधानीपुरे तस्मिन्पुरन्ध्र्यस्मि [पुरतोऽस्मिन्व्यवस्थिता इति
21741 पाठः] व्यवस्थिता ॥ १४ ॥
21742
21743 पुरन्ध्री राजमहिषी । व्यवस्थिता वसुधाधिपस्येत्यनुषज्यते ॥ १४ ॥
21744
21745 इहैवान्तःपुरे तस्मिन्स मृतो मम भूपतिः ।
21746 इहैवान्तःपुराकाशे तस्मिन्नेव पुरे नृपः ॥ १५ ॥
21747
21748 संपन्नो वसुधापीठे नानाजनपदेश्वरः ।
21749 सर्वार्जवजवीभाव इहैवैवं व्यवस्थितः ॥ १६ ॥
21750
21751 सर्ववस्तूनां आर्जवमकापट्यं कूटस्थं पारमार्थिकं ब्रह्म
21752 तस्मिन्कल्पितो जवीभावो मायिकचलनादिविकारः एवं उक्तदृष्टश्रुतलक्षण
21753 इहैव मण्डपाकाशे व्यवस्थितः ॥ १६ ॥
21754
21755 अस्मिन्नेव गृहाकाशे सर्वा ब्रह्माण्डभूमयः ।
21756 स्थिताः समुद्गके मन्ये यथान्तः सर्षपोत्कराः ॥ १७ ॥
21757
21758 समुद्गके संपुटके ॥ १७ ॥
21759
21760 सदाऽदूरमहं मन्ये तद्भर्तुर्मम मण्डलम् ।
21761 क्वचित्पार्श्वे स्थितमिह यथा पश्यामि तत्कुरु ॥ १८ ॥
21762
21763 अदूरमतिसंनिहितम् ॥ १८ ॥
21764
21765 श्रीदेव्युवाच ।
21766
21767 भूतलारुन्धतिसुते भर्तारस्तव संप्रति ।
21768 त्रयो नामाथवाभूवन्बहवः शतसंमताः ॥ १९ ॥
21769
21770 न केवलं सांप्रतिकमेवैतन्मण्डपाकाशे अस्ति किंत्वतीतानागतं सर्वमपि
21771 तत्र तेऽनेकजन्मसंबन्धिष्वनेकभर्तृशब्दवाच्यशरीरेषु सर्वेषां
21772 दर्शनायोगात्संनिहितेषु त्रिषु कतममण्डलं प्रदर्श्यतामित्याशयेनाह ##-
21773
21774 नेदीयसां त्रयाणां तु द्विजस्ते भस्मतां गतः ।
21775 राजा माल्यान्तरगतः संस्थितोऽन्तःपुरे शवः ॥ २० ॥
21776
21777 नेदीयसामन्तिकतमानां मध्ये । इष्ठनो विषये ईयसुन् छान्दसः ॥ २० ॥
21778
21779 संसारमण्डले ह्यस्मिंस्तृतीयो वसुधाधिपः ।
21780 महासंसारजलधिं पतितो भ्रममागतः ॥ २१ ॥
21781
21782 पतितः प्रविष्टः ॥ २१ ॥
21783
21784 भोगकल्लोलकलनाविकलो मलचेतनः ।
21785 जाड्यजर्जरचिद्वृत्तिः संसाराम्भोधिकच्छपः ॥ २२ ॥
21786
21787 भोगलक्षणानां कल्लोलानां कलनाभिर्विकलो विक्षिप्तः । तत एव मलयुक्ता
21788 चेतना बुद्धिर्यस्य । अत एतदन्तः प्रतिफलिता चिद्वृत्तिरपि तज्जाड्येनैव जर्जरा

शिथिलप्राया यस्य ॥ २२ ॥

चित्राणि राजकार्याणि कुर्वन्नप्याकुलान्यपि ।
सुप्तः स्थितो जडतया न जागर्ति भवभ्रमे ॥ २३ ॥

ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्सुखी ।
इत्यनर्थमहारज्ज्वा वलितो वशतां गतः ॥ २४ ॥

अवशतामस्वतन्त्रताम् ॥ २४ ॥

तत्कस्य वद भर्तुस्त्वां समीपं वरवर्णिनि ।
वात्या वनान्तरं गन्धलेखामिव वनान्नये ॥ २५ ॥

वातसमूहो वात्या । पाशादिभ्यो यः ॥ २५ ॥

अन्य एव हि संसारः सोऽन्यो ब्रह्माण्डमण्डपः ।
अन्या एव तता वत्से व्यवहारपरम्पराः ॥ २६ ॥

तता विस्तृताः ॥ २६ ॥

संसारमण्डलानीह तानि पार्श्वे स्थितान्यपि ।
दूरं योजनकोटीनां कोटयस्तेष्विहान्तरम् ॥ २७ ॥

इहास्मिन्मण्डपाकाशे । अधिष्ठानचिद्दृष्ट्या पार्श्वे अन्तः । संनिधाविति
यावत् । अपि यद्यपि तथापि । इह सांसारिकदृष्टौ । दूरमन्तरं ।
व्यवधानमित्यर्थः ॥ २७ ॥

आकाशमात्रमेतेषामिदं पश्य वपुः [पुनः पुनः इति पाठः]
पुनः ।
मेरुमन्दरकोटीनां कोटयस्तेष्ववस्थिताः ॥ २८ ॥

परमार्थदृष्ट्या त्वाह - आकाशमात्रमिति । एतेषां
संसारमण्डलानां इदं पारमार्थिकं वपुः स्वरूपं
मण्डपान्तस्थचिदाकाशमात्रम् । तेष्वेतेषु ॥ २८ ॥

परमाणौ परमाणौ सर्ववर्गानिरर्गलम् ।
महाचितेः स्फुरन्त्यर्करुचीव त्रसरेणवः ॥ २९ ॥

अर्कस्य रुचिजालान्तरस्थमरीचौ ॥ २९ ॥

महारम्भगुरूण्येवमपि ब्रह्माण्डकानि हि ।
तुलया धानकामात्रमपि तानि भवन्ति नो ॥ ३० ॥

एवं दर्शितब्रह्माण्डवदेव तानि
महद्भिर्द्वीपसमुद्रभुवनाद्यारम्भैर्गुरूणि महान्त्यपि चिद्दृष्टितुलया
दृष्टानि [दृष्टाभिधानका इति पाठः] धानका वटबीजानि
तावन्मात्रमपि न भवन्तीत्यर्थः ॥ ३० ॥

नानारत्नामलोद्द्योतो वनवद्भाति खे यथा ।
पृथ्व्यादिभूतरहिता जगच्चिद्भाति चिन्तया ॥ ३१ ॥

वस्तुतः पृथ्व्यादिभेदरहितैव चिज्जगद्भाति । चिन्तया

आविद्यकदृढवासनया ॥ ३१ ॥

कचति ज्ञप्तिरेवेदं जगदित्यादि नात्मनि ।
नतु पृथ्व्यादि संपन्नं सर्गादावेव किंचन ॥ ३२ ॥

भ्रान्त्या जगद्भानेऽपि न वस्तुनि कदाचिदपि किंचित्संपन्नमित्याह - कचतीति
॥ ३२ ॥

यथा तरङ्गः सरसि भूत्वा भूत्वा पुनर्भवेत् ।
विचित्राकारकालाङ्गदेशाज्ञप्तावलं तथा ॥ ३३ ॥

विचित्राकाराः कालाः कालाङ्गानि दिनरात्र्यादीनि ब्रह्माण्डा भुवनादिदेशाश्च
ज्ञप्तौ महाचिति भूत्वा भूत्वा भवन्तीत्यर्थः ॥ ३३ ॥

लीलोवाच ।

एवमेतज्जगन्मातर्मया स्मृतमिहाधुना ।
ममेदं राजसं जन्म न तमो न च सात्त्विकम् ॥ ३४ ॥

इदं लीलाजन्म राजसं रजःकार्यं दुःखसंतापबाहुल्यात् मध्ये तिष्ठन्ति
राजसाः इति मर्त्यजन्मनां राजसत्वस्मृतेश्चेत्यर्थः ॥ ३४ ॥

प्। १९६)

ब्रह्मणस्त्ववतीर्णाया अष्टौ जन्मशतानि मे ।
नानायोनीन्वतीतानि पश्यामीवाधुना पुनः ॥ ३५ ॥

ब्रह्मणो हिरण्यगर्भादितत्कल्पादावन्तःकरणोपाध्युत्पत्त्या प्रतिबिम्बतया
तत्रावतीर्णायाः । पश्यामीव स्फुटं स्मरामीति यावत् ॥ ३५ ॥

संसारमण्डले देवि कस्मिंश्चिदभवं पुरा ।
लोकान्तराब्जभ्रमरी विद्याधरवराङ्गना ॥ ३६ ॥

लोकान्तरं विद्याधरलोकस्तदेवाब्जम् ॥ ३६ ॥

दुर्वासनाकलुषिता ततोऽहं मानुषी स्थिता ।
संसारमण्डलेऽन्यस्मिन्पन्नगेश्वरकामिनी ॥ ३७ ॥

मानुषी भूत्वा स्थिता । ततः पन्नगेश्वरकामिनी अभवमित्यनुषङ्गः ॥ ३७ ॥

कदम्बकुन्दजम्बीरकरञ्जवनवासिनी ।
पत्राम्बरधरा श्यामा शवर्यहमथाभवम् ॥ ३८ ॥

वनवासनया मुग्धा संपन्नाहमथोद्भता ।
गुलुच्छनयना पत्रहस्ता वनविलासिनी ॥ ३९ ॥

वासनया इति पाठे स्पष्टम् । वासतया इति पाठे तु वने वासो यस्यास्तद्भावेन
मुग्धा मूढा । धर्ममर्यादानभिज्ञेति यावत् । अत एवोद्भता
दुष्कर्मसंचयात् । गुलुच्छशब्दस्तत्पुष्पगुच्छपरः । वनविलासिनी लता जाता
अर्थाद्गुलुच्छलतेति गम्यते ॥ ३९ ॥

पुण्याश्रमलता साहं मुनिसङ्गपवित्रिता ।

21893 वनाग्निदग्धा तस्यैव कन्याभूवं महामुनेः ॥ ४० ॥
21894
21895 अस्त्रीत्वफलदातृणां कर्मणां परिणामतः ।
21896 राजाहमभवं श्रीमान्सुराष्ट्रेषु समा शतम् ॥ ४१ ॥
21897
21898 अस्त्रीत्वं पुंस्त्वं तत्प्रयुक्तस्य राज्यादिभोगफलस्य दातृणां
21899 प्राक्संचितकर्मणाम् । समाः संवत्सरान् ॥ ४१ ॥
21900
21901 तालीनां तलकच्छेषु राजदुष्कृतदोषतः ।
21902 नकुली नववर्षाणि कुष्ठनष्टाङ्गिकाभवम् ॥ ४२ ॥
21903
21904 कच्छा जलप्रायदेशाः । राजदुष्कृतदोषः परस्वापहारादिः ॥ ४२ ॥
21905
21906 वर्षाण्यष्टौ सुराष्ट्रेषु देवि गोत्वं कृतं मया ।
21907 मोहाद्दुर्जनदुष्टाज्ञबालगोपाललीलया ॥ ४३ ॥
21908
21909 सुराष्ट्रा देशविशेषाः । गोत्वं कृतम् । गोजन्मानुभूतमिति यावत् । दुर्जना
21910 दुष्टा अज्ञा बालाश्च ये गोपालास्तेषां ताडनानुधावनादिलीलया ॥ ४३ ॥
21911
21912 विहंग्या वैरविन्यस्ता वागुरा विपिनावनौ ।
21913 क्लेशेन महता च्छिन्ना अधमा वासना इव ॥ ४४ ॥
21914
21915 विहङ्ग्या विहङ्गीजन्मप्राप्तया मया निष्कारणवैरादेव व्याधैर्विन्यस्ता
21916 वागुराः । अधमा वासनाः द्वैतवासनाः ॥ ४४ ॥
21917
21918 कर्णिकाक्रोडशयासु विश्रान्तमलिना सह ।
21919 पद्मकुड्मलकोशेषु भुक्तकिंजल्कया रहः ॥ ४५ ॥
21920
21921 कर्णिकाक्रोडाः किंजल्कमध्यानि त एव शय्याः । कुड्मला मुकुलाः । अलिना
21922 सहेत्यर्थादलिनीजन्मप्राप्तयेति गम्यते ॥ ४५ ॥
21923
21924 भ्रान्तमुत्तुङ्गशृङ्गासु हरिण्या हारिनेत्रया ।
21925 वनस्थलीषु रम्यासु किराताहतमर्मया ॥ ४६ ॥
21926
21927 हरिण्या मृग्या मया । हारिनेत्रया रम्येक्षणया ॥ ४६ ॥
21928
21929 दृष्टं नष्टासु दिक्ष्वब्धिकल्लोलैरुह्यमानया ।
21930 मत्स्याम्बुकच्छपाच्छोडे मोघमाननताडनम् ॥ ४७ ॥
21931
21932 अब्धिकल्लोलैरुह्यमानया मत्स्या मया सूर्यतिष्यागस्त्यमत्स्यानां य
21933 उपधायाः इति यलोपः । दिक्षु नष्टासु दिग्भ्रमे सति भ्रान्त्या । कैवर्तसविधं
21934 प्राप्तयेति यावत् । कैवर्तैर्यष्ट्यादिना कृतमाननप्रदेशे ताडनं दवोपनीते
21935 अम्बुनि बृहत्तरङ्गजले कच्छपाच्छोडे कूर्मपृष्ठास्थनि च
21936 निपतनान्मोघं व्यर्थं जातं दृष्टमित्यर्थः ॥ ४७ ॥
21937
21938 पीतं चर्मण्वतीतीरे गायन्त्या मधुरस्वरम् ।
21939 पुलिन्द्या [पुलिन्दसुरतान्तेषु इति पाठस्तत्र पुलिन्द्येत्यर्थः]
21940 सुरतान्तेषु नालिकेररसासवम् ॥ ४८ ॥
21941
21942 पीतं पुलिन्द्या मयेति शेषः ॥ ४८ ॥
21943
21944 सारसीसरसालिन्या [सरसी इति पाठः] सीत्कारमधुरस्वरम् ।

सारसः सुरतैः स्वैरं सामन्तश्चारुरञ्जितः ॥ ४९ ॥

सारस्यां पद्मिन्यां सरसा सप्रेमा अलिनी भ्रमरीव निश्चलं स्थितयेति यावत् ।
मया सीत्कारेण सुरतकूजितेन मधुरस्वरं यथा स्यात्तथा सामन्तः
अधीश्वरः । पतिरिति यावत् । सारसो रञ्जितः प्रीणितः ॥ ४९ ॥

तालीतमालकुञ्जेषु तरलाननेत्रया ।
क्षीबप्रेक्षणविक्षोभैः कृतं कान्तावलोकनम् ॥ ५० ॥

क्षीबप्रेक्षणं समदनिरीक्षणं तत्कृतैर्मन्मथविक्षोभैः
कान्तस्यावलोकनं मया कृतम् । अनेन तद्योग्यं जन्मान्तरमुक्तम् ॥ ५० ॥

कनकस्यन्दसंदोहसुन्दरैरङ्गपञ्जरैः ।
स्वर्गेऽप्सरोम्बुजिन्याशु तोषिताः सुरषट्पदाः ॥ ५१ ॥

स्यन्दो द्रवः । अप्सरोलक्षणया अम्बुजिन्या सुरा एव षट्पदा
अधरमधुपानादिना तोषिताः ॥ ५१ ॥

मणिकाञ्चनमाणिक्यमुक्तानिकरभूतले ।
कल्पद्रुमवने मेरौ यूना सह रतं कृतम् ॥ ५२ ॥

तस्मिन्नेव जन्मनि देवयूना ॥ ५२ ॥

कल्लोलाकुलकच्छासु लसद्गुच्छलतासु च ।
वेलावनगुहास्वब्धेश्चिरं कूर्मतया स्थितम् ॥ ५३ ॥

कूर्मतया कच्छपीत्वेन ॥ ५३ ॥

तरत्तारतङ्गासु दोलनं सरसालिनाम् ।
चलच्छदपटालीषु राजहंस्यं मया कृतम् ॥ ५४ ॥

चलत्तारतरङ्गासु सरसीषु मया स्वीयेषु चलेषु च्छदेषु पटानां पटवत्
शुभ्रपक्षाणां आलीषु पङ्क्तिषु पद्मभ्रान्त्योपविष्टानां सरसानामलिनां
भ्रमराणां दोलनमान्दोलनसाधनं राजहंस्यं राजहंसीत्वं कृतम् ।
अनुभूतमिति यावत् । नलिनीनालदोलासु इति पाठे स्पष्टम् ॥ ५४ ॥

शाल्मलीदललोलानामान्दोलनदरिद्रताम् ।
मशकस्य मयालोक्य दीनं मशकया स्थितम् ॥ ५५ ॥

दोलायमाने एकस्मिञ्शाल्मलीदले लोलानां बहूनां मशकानां मध्ये ततः
प्रच्युतस्य कस्यचिन्मशकस्य
तत्रोपवेष्टुमसामर्थ्यादान्दोलनदरिद्रतामालोक्य तत्संस्कारेणैव
मृतयाहंस्या मयापि मशकतया भूत्वा दीनं स्थितम् । यं यं वापि
स्मरन्भावम् इति स्मृतेरिति भावः ॥ ५५ ॥

प। १९७)

तरत्तारतरङ्गासु चञ्चद्वीच्यग्रचिम्बनैः ।
भ्रान्तं शैलस्रवन्तीषु जलवञ्जुललीलया ॥ ५६ ॥

शैलस्रवन्तीषु गिरिणदीषु जलवञ्जुला वेतसास्तल्लीलया । तज्जन्मनेति यावत् ॥ ५६ ॥

21997 गन्धमादनमन्दारमन्दिरे मदनातुराः।
21998 पातिताः पादयोः पूर्वं विद्याधरकुमारकाः॥ ५७॥
21999
22000 स्थावरान्ताधमयोनिजन्मान्युक्त्वोत्तमजन्मान्यप्याह - गन्धमादनेति॥
22001 ५७॥
22002
22003 कीर्णकर्पूरपूरेषु तल्पेषु व्यसनातुरा।
22004 चिरं विलुलितास्मीन्दुबिम्बेष्विव शशिप्रभा॥ ५८॥
22005
22006 तत्रापि दुःखबाहुल्यं दर्शयति - कीर्णेति। व्यसनं तद्वियोगदुःखं
22007 तेनातुरा॥ ५८॥
22008
22009 योनिष्वनेकविधदुःखशतान्वितासु
22010 भ्रान्तं मयोन्नमनसन्नमनाकुलाङ्ग्या।
22011 संसारदीर्घसरितश्चलया लहर्या
22012 दुर्वारवातहरिणीसरणक्रमेण॥ ५९॥
22013
22014 उक्तं संक्षिप्योपसंहरति - योनिष्विति। तुलाकोटेरिवोन्नमनमूर्ध्वगतिः
22015 सन्नमनमधोगतिस्ताभ्यामाकुलाङ्ग्या व्याकुलचित्तया। वातहरिणी वातप्रमीः
22016 । सा हि स्वभावाद्वायुप्रवाहानुसारिणी उच्चावचदेशान्सरतीति प्रसिद्धम्॥ ५९॥
22017
22018 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे
22019 जन्मान्तरवर्णनं नाम सप्तविंशः सर्गः॥ २७॥
22020
22021 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
22022 जन्मान्तरवर्णनं नाम सप्तविंशः सर्गः॥ २७॥
22023
22024 अष्टाविंशः सर्गः २८
22025
22026 श्रीराम उवाच।
22027
22028 वज्राङ्गसाराद्ब्रह्माण्डकुड्यान्निबिडमण्डलात्।
22029 कोटियोजनसंपुष्टात्कथं ते निर्गतेऽबले॥ १॥
22030
22031 दृष्टप्रपञ्चमिथ्यात्वाच्चिदाकाशस्य सत्यता।
22032 पर्वतो विस्तरेणात्र गिरिग्रामश्च वर्ण्यते॥ १॥
22033
22034 वज्राङ्गमिव सारादृढात्। पूर्वोक्तरीत्यानेककोटियोजनं सम्यक् पुष्टं
22035 अन्तर्घनं यस्य तथाभूतात्। मिथ्याभूतकुड्यादेरपि स्वप्ने
22036 गतिनिरोधकत्वदर्शनान्निर्गमनानुपपत्तिरिति शङ्कितुराशयः॥ १॥
22037
22038 श्रीवसिष्ठ उवाच।
22039
22040 क्व ब्रह्माण्डं क्व तद्भित्तिः क्वात्रासौ वज्रसारता।
22041 किलावश्यं स्थिते देव्यावन्तःपुरवराम्बरे॥ २॥
22042
22043 अबाधितावस्थमस्तु निरोधकं न बाधितं स्वप्नेऽपि तददर्शनादित्याशयेन
22044 वसिष्ठः परिहरति - क्व ब्रह्माण्डमित्यादिना। अवश्यं वस्तुतः।
22045 देव्याविति राजवाचकदेवशब्दनिष्पन्नदेवीशब्दस्यान्यस्य चैकशेषः॥ २॥
22046
22047 तस्मिन्नेव गिरिग्रामे तस्मिन्नेवालयाम्बरे।
22048 ब्राह्मणः स वसिष्ठाख्य आस्वादयति राजताम्॥ ३॥

22049
22050 आस्वादयत्यनुभवति विदूरथः सन् ॥ ३ ॥
22051
22052 तमेव मण्डपाकाशकोणकं शून्यमात्रकम् ।
22053 चतुःसमुद्रपर्यन्तं भूतलं सोऽनुभूतवान् ॥ ४ ॥
22054
22055 अनुभूतवान् पद्मभूपालः सन् ॥ ४ ॥
22056
22057 आकाशात्मनि भूपीठं तस्मिंस्तद्राजपत्तनम् ।
22058 राजसद्मानुभवति स च सा चाप्यरुन्धती ॥ ५ ॥
22059
22060 पत्तनं नगरं तस्मिन् राजसद्म । सा चानुभवतीति वर्तमानसामीप्ये
22061 वर्तमानवन्निर्देशः । विदूरथवासनाजन्यवक्ष्यमाणलीलान्तरात्मतां
22062 प्राप्ता वा सा अरुन्धती अनुभवतीति मुख्यवर्तमानोपपत्तिः ॥ ५ ॥
22063
22064 लीलाभिधाना स जाता तया च ज्ञप्तिरर्चिता ।
22065 ज्ञप्त्या सह समुल्लङ्घ्य खमाश्चर्यमनोहरम् ॥ ६ ॥
22066
22067 प्रादेशमात्रे [प्रदेशमात्रे इति पाठः] नभसि सा तत्रैव
22068 गृहोदरे ।
22069 ब्रह्माण्डान्तरमासाद्य गिरिग्रामकमन्दिरे ॥ ७ ॥
22070
22071 ब्रह्माण्डात्परिनिर्गत्य स्वगृहे स्थितिमाययौ ।
22072 स्वप्नात्स्वप्नान्तरं प्राप्य यथा तल्पगतः पुमान् ॥ ८ ॥
22073
22074 प्रतिभामात्रमेवैतत्सर्वमाकाशमात्रकम् ।
22075 न ब्रह्माण्डं न संसारो न कुड्यादि न दूरता ॥ ९ ॥
22076
22077 प्रतिभा भ्रान्तिस्तन्मात्रम् ॥ ९ ॥
22078
22079 स्वचित्तमेव कचति तयोस्तादृङ्मनोहरम् ।
22080 वासनामात्रसोल्लेखं क्व ब्रह्माण्डं क्व संसृतिः ॥ १० ॥
22081
22082 वासनामात्रेण सोल्लेखं तत्तत्पदार्थव्यवहारोल्लेखसहितम् । तयोः
22083 स्वचित्तमेव तथा कचति प्रथते ॥ १० ॥
22084
22085 निरावरणमेवेदं ज्ञप्त्याकाशमनन्तकम् ।
22086 किंचित्स्वचित्तेनोन्नीतं स्पन्दयुक्त्येव मारुतः ॥ ११ ॥
22087
22088 ज्ञप्त्याकाशं चिदाकाशमेव ताभ्यां स्वचित्ते न
22089 किंचिद्ब्रह्माण्डरूपमुन्नीतं कल्पितम् । यथा आकाशमेव स्पन्दयोगेन
22090 मारुत इति कल्प्यते तद्वत् ॥ ११ ॥
22091
22092 चिदाकाशमजं शान्तं सर्वत्रैव हि सर्वदा ।
22093 चित्त्वाज्जगदिवाभाति स्वयमेवात्मनात्मनि ॥ १२ ॥
22094
22095 जगदिवाभाति । येन न बुद्धं तद्दृशेति शेषः ॥ १२ ॥
22096
22097 येन बुद्धं तु तस्यैतदाकाशादपि शून्यकम् ।
22098 न बुद्धं येन तस्यैतद्वज्रसाराचलोपमम् ॥ १३ ॥
22099
22100 येन बुद्धं तस्य दृशा तु नास्त्येवेत्याह - येनेति । कथं तर्ह्यन्योऽपि

22101 ब्रह्माण्डकुड्याद्बहिर्न निःसरति तत्राह - न बुद्धमिति ॥ १३ ॥
22102
22103 गृह एव यथा स्वप्ने नगरं भाति भासुरम् ।
22104 तथैतदसदेवान्तश्चिद्धातौ भाति भास्वरम् ॥ १४ ॥
22105
22106 प्। १९८)
22107
22108 यथ मरौ जलं बुद्धं कटकत्वं च हेमनि ।
22109 असत्सदिव भातीदं तथा दृश्यत्वमात्मनि ॥ १५ ॥
22110
22111 दृश्यत्वं दृश्यप्रपञ्चरूपत्वम् ॥ १५ ॥
22112
22113 एवमाकथयन्त्यौ ते ललने ललिताकृती ।
22114 गृहान्निर्ययतुर्बाह्यं चारुचंक्रमणक्रमैः ॥ १६ ॥
22115
22116 बाह्यं देशम् । चंक्रमणं गतिः ॥ १६ ॥
22117
22118 आदृश्ये ग्रामलोकेन प्रेक्षमाणे पुरोगिरिम् ।
22119 चुम्बिताकाशकुहरं संस्पृष्टादित्यमण्डलम् ॥ १७ ॥
22120
22121 आकाशस्य कुहरंमध्यच्छिद्रम् । राहोः शिर इतिवद्भेदकल्पना ।
22122 संस्पृष्टादित्यमण्डलमित्यतिशयोक्तिः ॥ १७ ॥
22123
22124 नानावर्णाखिलोत्फुल्लविचित्रवननिर्मलम् ।
22125 नानानिर्झरनिर्ह्लादकूजद्वनविहंगमम् ॥ १८ ॥
22126
22127 विचित्रमञ्जरीपुञ्जपिञ्जराम्बुदमण्डलम् ।
22128 स्वभ्रमच्छगुलुच्छाग्रविश्रान्तखगसारसम् ॥ १९ ॥
22129
22130 मञ्जरीपुञ्जपिञ्जराणि अत एव विचित्राण्यम्बुदमण्डलानि यस्येति
22131 वृक्षौन्नत्योक्तिः । अत एव स्वभ्रं शोभनाभ्रयुक्तम् । गुलुच्छा
22132 लताविशेषाः ॥ १९ ॥
22133
22134 सारवञ्जुलविस्तारगुप्ताखिलसरित्तटम् ।
22135 असमाप्तशिलाश्वभ्रलतावर्तनमारुतम् ॥ २० ॥
22136
22137 सारैर्बलवद्भिर्वञ्जुलानामतिमुक्तकानामम्बुवेतसानां वा
22138 मूलविस्तारैर्गुप्तानि पतनाद्रक्षितानि सरित्तटानि यत्र । न सम्यगाप्ताः प्राप्ता
22139 वृक्षावलम्बनं याः शिलाश्वभ्रोत्पन्नलतास्तासामावर्तनः परिवर्तनो
22140 मारुतो यस्मिन् ॥ २० ॥
22141
22142 पुष्पाग्रपिहिताकाशकोशकुड्यकवारिदम् ।
22143 पतद्दीर्घसरित्स्रोतःस्फुरन्मुक्ताकलापकम् ॥ २१ ॥
22144
22145 पुष्पाण्यग्रे येषं तैः शिखरद्रुमैः पिहिता आकाशकोशस्य कुड्यकाः
22146 कुड्यप्रतिकृतिभूता वारिदा यस्य । सरित्स्रोतांस्येव स्फुरन्मुक्तामाला यस्य ॥
22147 २१ ॥
22148
22149 चलद्वृक्षवनव्यूहवातवेल्लिसरित्तटम् ।
22150 नानावनाकुलोपान्तच्छायासततशीतलम् ॥ २२ ॥
22151
22152 चलद्वृक्षा वनव्यूहा येषु अत एव वातेन वेल्लिनो वेष्टनशीलाः सरित्तटा

22153 यस्मिन् ॥ २२ ॥
22154
22155 अथ ते ललने तत्र तदा ददृशतुः स्वयम् ।
22156 तं गिरिग्रामकं व्योम्नः स्वर्गखण्डमिव च्युतम् ॥ २३ ॥
22157
22158 गिरिमभिवर्ण्य गिरिग्रामं वर्णयितुमाह - अथेति ॥ २३ ॥
22159
22160 रटत्प्रणालीपटलं पूर्णपुष्करिणीगणम् ।
22161 द्विजैः कुचकुचैः कूजत्स्वलीलाश्वभ्रकच्छकम् ॥ २४ ॥
22162
22163 रटदिति विशेषणाद्घटीयन्त्रादिप्रणाल्यो ग्राह्याः । कुचकुचैरिति
22164 शब्दानुकरणेन ताद्रूप्यारोपोक्तिः । तथाविधर्द्विजैः पक्षिभिः कूजन्तः
22165 स्वस्य ग्रामस्य लीलार्थाः श्वभ्रकच्छा यस्मिन् ॥ २४ ॥
22166
22167 गच्छद्गोवृन्दहुंकारकरालाखिलकुञ्जकम् ।
22168 कुञ्जगुल्मकखण्डाढ्यं सच्छायघनशाद्वलम् ॥ २५ ॥
22169
22170 तत्र गोसंपत्तिमाह - गच्छदिति । गवां यवसच्छायादिसमृद्धिमाह
22171 - कुञ्जेति ॥ २५ ॥
22172
22173 दुष्प्रवेशार्ककिरणं दृशन्नीहारधूसरम् ।
22174 उदग्रमञ्जरीपुञ्जजटालं विशिखान्तरम् ॥ २६ ॥
22175
22176 दृषद्भिः शिलाभिर्नीहारैश्च धूसरं भस्मोद्धूलितमिव ।
22177 उन्नम्राग्रैर्मञ्जरीपुञ्जैर्जटा इव लम्बीनि शिखान्तराणि कतिपयशिखा यस्य ॥
22178 २६ ॥
22179
22180 शिलाकुहरवाःस्फालप्रोच्चलन्मुक्तनिर्झरैः [रवाःस्फार इति
22181 पाठः] ।
22182 स्मारिताचलनिर्धूतक्षीरोदकजलश्रियम् ॥ २७ ॥
22183
22184 शिलाच्छिद्रेषु वारां आस्फालात् प्रोच्चलन्तो मुक्तासदृशबिन्दवो येषां
22185 तथाविधैर्निर्झरैः स्मारिता मन्थाचलनिर्धूतक्षीरोदकजलश्रीर्यत्र ॥ २७ ॥
22186
22187 फलमाल्यमहाभारभासुरैरजिरद्रुमैः ।
22188 आनीय पुष्पसंभारं तिष्ठद्भिरिव संकुलम् ॥ २८ ॥
22189
22190 अजिरमङ्गणम् ॥ २८ ॥
22191
22192 तरत्तरङ्गझांकारकारिमारुतकम्पितैः ।
22193 कीर्णपु।पसमावृष्टं द्रुमैरपि रसाकुलैः ॥ २९ ॥
22194
22195 रसो मकरन्दः प्रेमातिशयश्च तेनाकुलितैर्द्रुमैरपि अर्थिषु सम्यगावृष्टं
22196 किं पुनर्नरैरित्यर्थः ॥ २९ ॥
22197
22198 अशङ्कितशिलाकूटस्रवदब्बिन्दुटंकृतैः ।
22199 किंचित्कृतरवं गुप्तैरशङ्कैः शङ्कितैः खगैः ॥ ३० ॥
22200
22201 अशङ्कैः शङ्काऽयोग्यैरपि अशङ्कितं यथा स्यात्तथा शिलाकूटात्स्रवतां
22202 निपततामब्बिन्दूनां
22203 टकृतैर्हेतुभिर्गुटिकाधनुर्ध्वानसाम्याच्छङ्कितैरत एव गुप्तैर्निलीनैः
22204 खगैः ॥ ३० ॥

22205
22206 उत्फाललहरीश्रान्तसीकरास्वादनाकुअलैह् |
22207 नद्यामुडुपरावर्तवृत्तिभिर्विहगैर्वृतम् || ३१ ||
22208
22209 श्रान्तत्वं सीकरास्वादने हेतुः | उडूनां नक्षत्राणां परावर्तः
22210 परिवर्तनमिव वृत्तिः परिवृत्तिर्येषां तैर्विहङ्गैर्हंसैः || ३१ ||
22211
22212 उत्तालतालविश्रान्तकाकालोकनशङ्कितैः |
22213 बालैः प्रगोपितामिक्षाखण्डं जीर्णस्वभुक्तकैः || ३२ ||
22214
22215 काकग्रहणं मार्जारादीनामप्युपलक्षणम् |
22216 जीर्णप्रातस्तनस्वभुक्तकैरस्माभिर्भक्षणीयमिति बुद्ध्या प्रगोपिताः
22217 संवृतदेशे रक्षिता आमिक्षाखण्डा यत्र | घनीकृतं पय आमिक्षा || ३२ ||
22218
22219 पुष्पशेखरसंभारवसनग्रामबालकम् |
22220 खर्जूरनिम्बजम्बीरगहनोपान्तशीतलम् || ३३ ||
22221
22222 पुष्पाण्येव शेखरसंभारः शिरोभूषणादिर्वसनानि च येषां तथाविधा
22223 ग्रामबालका यत्र || ३३ ||
22224
22225 क्षौमाग्रहस्ताम्बरया मञ्जरीपूर्णकर्णया |
22226 क्षुत्क्षीणयाक्रान्तरथ्यं ग्रामकीटककान्तया || ३४ ||
22227
22228 तत्र भिल्लादिदरिद्रवधूर्वर्णयति - क्षौमेति | क्षुमाऽतसी तस्या अवयवाः
22229 क्षौमाण्यग्राणि शाखास्तान्येव हस्तप्राप्याण्यम्बराणि यस्याः | ग्रामे
22230 कीटका इवोपेक्ष्या दरिद्रनीचालसास्तेषां कान्तया वधूजनेन || ३४ ||
22231
22232 सरित्तरङ्गसंघट्टसंरावाश्रुतसंकथम् |
22233 कर्मजाड्यघनत्रासवाञ्छितैकान्तसंस्थितम् || ३५ ||
22234
22235 संरावैस्तारध्वनिभिरभिभवादश्रुताः संकथाः संलापा यत्र |
22236 कर्मकरणे जाड्यादकौशलाद्घनस्त्रासो येषां मुग्धालसानां
22237 तैर्वाञ्छिता एकान्तसंस्थिर्यत्र || ३५ ||
22238
22239 दधिलिप्तास्यहस्तांसैः स्निग्घपुष्पलताधरैः |
22240 नग्नैर्गोमयपङ्काङ्कैर्बालैराकुलचत्वरम् || ३६ ||
22241
22242 प्। १९९)
22243
22244 तीरशाद्वलवल्लीनां दोलान्दोलनकारिभिः |
22245 तरङ्गैर्वाह्यमानस्य लेखिकाङ्कितसैकतम् || ३७ ||
22246
22247 तीरशाद्वलेत्यादिपूर्वोक्तबालानां विशेषणं चेद्दोलास्वान्दोलनकारिभिः
22248 तरङ्गविशेषणत्वे तु दोलावदान्दोलनकारिभिः वाह्यमानस्य जलस्य लेखिका
22249 रेखास्ताभिरङ्कितसैकतम् || ३७ ||
22250
22251 दधिक्षीरघनामोदमत्तमन्थरमक्षिकम् |
22252 कामभुक्तार्थतोद्वाष्पजर्जराबलबालकम् || ३८ ||
22253
22254 कामभुक्तार्थतायै यथाभिलाषभक्षणाय रोदनादुद्गतबाष्पैर्जर्जरा
22255 अबलाः कृशा अस्वतन्त्रा वा बालका यत्र || ३८ ||
22256

22257 गोमयासिक्तवलयकरनारी कृतक्रुधम् ।
22258 धम्मिल्लवलनाव्यग्रत्रस्तस्त्रीविहसज्जनम् ॥ ३९ ॥
22259
22260 गोमयासिक्तवलयकरत्वादितरनारीषु कृतक्रोधं यथा स्यात्तथा
22261 मुक्तधम्मिल्लवलनासु व्यग्रास्त्रास्ताश्च स्त्रियो दृष्ट्वा विहसन्तो जना यत्र ॥
22262 ३९ ॥
22263
22264 दान्तपुष्पच्छदोत्सन्नपतत्ककुदवायसम् ।
22265 गृहरथ्यागणद्वारकीर्णक्रूरकुरण्टकम् ॥ ४० ॥
22266
22267 दान्तैर्जितक्रोधैर्मुनिभिः पुष्पैश्छदैः पत्रैर्वा उत्सन्ना उत्सारिता नतु
22268 काष्ठलोष्टादिना कदाचिदभिघातो मा भूदिति । बलिकर्माक्षतादिभक्षणाय
22269 पतन्तः ककुदानां गिरिशिखराणां वायसा यत्र । सकण्टकत्वात्क्रूराः
22270 कुरण्टकाः प्रसिद्धा गुल्मभेदा यत्र ॥ ४० ॥
22271
22272 गृहपार्श्वस्थितश्वभ्रकुञ्जैः कुसुमितप्रभैः ।
22273 प्रत्यहं प्रातरागुल्पमाकीर्णकुसुमाजिरम् ॥ ४१ ॥
22274
22275 चरच्चमरसारङ्गजालजङ्गलखण्डकम् [खण्डकैः इति
22276 पाठः] ।
22277 गुञ्जानिकुञ्जसंजातशष्पसुप्तमृगार्भकम् ॥ ४२ ॥
22278
22279 चरन्तः शष्पादिभक्षयन्तश्चमरा मृगाः सारङ्गा मृगा पक्षिणश्च ।
22280 निकुञ्जे लतागृहे संजातेषु शष्पेषु बालतृणेषु । ग्रामशब्दस्य ससीमके
22281 सस्थण्डिलकेऽपि वृत्तेर्महाभाष्यादौ
22282 प्रसिद्धत्वात्तदन्तर्जङ्गलकुञ्जादिवर्णनेऽपि न विरोधः ॥ ४२ ॥
22283
22284 एकान्तसुप्तवत्सैककर्णस्पन्दास्तमक्षिकम् ।
22285 गोपोच्छिष्टीकृतदधिस्वसृक्किस्पन्दिमक्षिकम् ॥ ४३ ॥
22286
22287 गोपानामुच्छिष्टिकृतदधिषु सृक्किषु वक्रपार्श्वेषु ॥ ४३ ॥
22288
22289 समस्तसद्मसंक्षीणमक्षिकाक्षिप्तमाक्षिकम् ।
22290 फुल्लाशोकद्रुमोद्यानकृतलाक्षिकमन्दिरम् ॥ ४४ ॥
22291
22292 समस्तेषु सद्मसु संक्षीणमधुमक्षिकं यथा स्यात्तथा आक्षिप्तं संचितं
22293 माक्षिकं मधु यस्मिन् । लाक्षिकानि लाक्षारञ्जितकाष्ठमयानि क्रीडामन्दिराणि
22294 यस्मिन् ॥ ४४ ॥
22295
22296 सीकरासारमरुता नित्यार्द्रविकचद्रुमम् ।
22297 कदम्बमुकुलप्रोतसमस्तच्छादनतृणम् ॥ ४५ ॥
22298
22299 नित्यार्द्रत्वादेव विकचाः प्रोत्फुल्लाः । समस्तेति विशेषणमतिशयोक्त्यर्थम् ॥ ४५
22300 ॥
22301
22302 प्रतिकृत्तलताफुल्लकेतकोत्करपाण्डुरम् ।
22303 वहत्प्राणालपटलीरणद्गुरुगुरारवम् ॥ ४६ ॥
22304
22305 प्रतिकूलत्वादेव कृत्ताभिश्छिन्नाभिर्लताभिरप्रतिबन्धात्फुल्लैः ॥ ४६ ॥
22306
22307 वातायनगुहानिर्यत्सौधविश्रान्तवारिदम् ।
22308 पूर्णपुष्करिणीपङ्क्तिपूर्णराजपृथूत्तरम् ॥ ४७ ॥

22309
22310 पुष्करिणीपङ्क्तिषु पूर्णराजाः पूर्णचन्द्रा इव यानि फुल्लपद्मानि तैः
22311 पृथूत्तरं बहूत्कृष्टतरम् | पृथुभिः प्रांशुभिरुत्तीर्यत इति
22312 पृथूत्तरमिति वा || ४७ ||
22313
22314 नीरन्ध्रविटपिच्छायाशीतलामलशाद्वलम् |
22315 सर्वशष्पाग्रवार्बिन्दुप्रतिबिम्बिततारकम् || ४८ ||
22316
22317 अनारतपतत्फुल्लहिमवर्षसितालयम् |
22318 विचित्रमञ्जरीपुष्पपत्रसत्फलपादपम् || ४९ ||
22319
22320 फुल्लैः पुष्परिहिमवर्षैश्च सिताः शुभ्राः || ४९ ||
22321
22322 गृहकक्षान्तरालीनमेघसुप्तचिरण्टिकम् |
22323 सौधस्थमेघविद्युद्भिरनादेयप्रदीपकम् || ५० ||
22324
22325 सुप्ताश्चिरण्टिकाः सुवासिन्यो यत्र | अनादेयाः अन्यतः कार्यसिद्धेरनुपादेयाः ||
22326 ५० ||
22327
22328 कन्दरानिलभांकारघनघुंघुममण्डपम् |
22329 चरच्चकोरहारीतहरिणीहारिमन्दिरम् || ५१ ||
22330
22331 घनाः प्रतिध्वनिभिर्निबिडिता घुंघुमा येषु तथाविधा मण्डपा यत्र |
22332 घना इव घुंघुमाः गर्जन्तो वा चकोरहारीतौ पक्षिभेदौ | हारीणि सुन्दराणि ||
22333 ५१ ||
22334
22335 उन्निद्रकन्दलोद्वान्तमांसलामोदमन्थरैः |
22336 मरुद्भिर्मन्दमायातुमारब्धैर्लोलपल्लवम् || ५२ ||
22337
22338 कन्दलैः कन्दलीपुष्पैः | उद्वान्तैरिव निःसृतैरामोदैर्मन्थरैर्भरितैः || ५२ ||
22339
22340 लावकालापलीलायामालीनललनागणम् |
22341 कोककोकिलकाकोलकोलाहलसमाकुलम् || ५३ ||
22342
22343 लावकाग्रहणं शुकसारिकादीनामप्युपलक्षणम् | काकोला द्रोणकाकाः || ५३ ||
22344
22345 शालतालतमालाब्जनीलतत्फलमालिनम् |
22346 वल्लीवलयविन्यासविलासवलितद्रुमम् || ५४ ||
22347
22348 आलोलपल्लवलतावलितायनाना-
22349 मुत्फुल्लकन्दलशिलीन्ध्रसुगन्धितानाम् |
22350 तालीतमालदलताण्डवमण्डपाना-
22351 मारामफुल्लकुसुमद्रुमशीतलानाम् || ५५ ||
22352
22353 आलोलपल्लवलतानां वलयो वेष्टनान्यावलयः पङ्क्तयो वा तासां तायनानां
22354 संतानाधिकरणानाम् | लताभिर्वलितानि रुद्धान्ययनानि परितो मार्गा येषामिति
22355 वा | सर्वाणि सर्गान्त्यश्लोकस्थस्य गिरिमन्दिराणामित्यस्य विशेषणानि || ५५ ||
22356
22357 सारावावारिचलनाकुलगोकुलाना-
22358 मानीलसस्यकुसुमस्थलशोभितानाम् |
22359 तीरद्रुमप्रकरगुप्तसरिद्रयाणां
22360 नीरन्ध्रपुष्पितलताग्रवितानकानाम् || ५६ ||

22361
22362 सारावाणि सहंभारवाणि वारिचलनेषु जलोत्तरणेष्वाकुलानि गोकुलानि येषाम्।
22363 गुप्त आच्छन्नः सरिद्रयो नदीप्रवाहो येषु॥ ५६॥
22364
22365 प्। २००)
22366
22367 उद्यानकुन्दमकरन्दसुगन्धितानां
22368 गन्धान्धषट्पदकुलान्तरिताम्बुजानाम्।
22369 सौन्दर्यतर्जितपुरन्दरमन्दिराणां
22370 राजीवराजिरजसारुणिताम्बराणाम्॥ ५७॥
22371
22372 गन्धान्धैः षट्पदकुलैरन्तरितानि तिरोहितान्यम्बुजानि येषु। रजसा
22373 वायून्नीतेनेत्याशयः॥ ५७॥
22374
22375 रंहोवहद्गिरिनदीरवघर्घराणां
22376 कुन्दावदातजलदद्युतिभासुराणाम्।
22377 सौधस्थितोल्लसितफुल्ललतालयानां
22378 लीलावलोलकलकण्ठविहङ्गमानाम्॥ ५८॥
22379
22380 रंहसा वेगेन वहन्तीनाम्। कुन्दवदवदातैः
22381 शुभैर्जलदद्युतिभिर्भासुराणाम्। कलकण्ठा मधुरकण्ठाः।
22382 कण्ठशब्देन तद्ध्वनिर्लक्ष्यते॥ ५८॥
22383
22384 उल्लासिकौसुमदलास्तरणस्थयूना-[दलातरणस्थ इति पाठः]
22385 मापादमावलितमाल्यविलासिनीनाम्।
22386 सर्वत्र सुन्दरनवाङ्कुरदन्तुराणां
22387 शोभोल्लसद्वरलताकुलमार्गणानाम्॥ ५९॥
22388
22389 आपादमावलितानि माल्यानि याभिस्तथाविधा विलासिन्यः स्त्रियो येषु।
22390 वरलताभिराकुला व्याप्ता मार्गणाः शरस्तम्बा याचका वा येषु॥ ५९॥
22391
22392 संजातकोमललतोत्पलसंकुलानां
22393 तिष्ठत्पयोदपटसंवलितालयानाम्।
22394 नीहारहारहरितस्थलविश्रुतानां
22395 सौधस्थमेघतडिदाकुलिताङ्गनानाम्॥ ६०॥
22396
22397 नीहारशब्देन तज्जलबिन्दुपङ्क्तयो लक्ष्यन्ते। ता एव हारा मुक्तावह्न्यो येषु
22398 तथाविधैर्हरितस्थलैर्विश्रुतानाम्॥ ६०॥
22399
22400 नीलोत्पलोल्लसितसौरभसुन्दराणां
22401 हुंकारहारिहरितोन्मुखगोकुलानाम्।
22402 विश्रब्धमुग्धमृगसारगृहाजिराणा-
22403 मुन्नृत्यबर्हिघनसीकरनिर्झराणाम्॥ ६१॥
22404
22405 हुंकारैर्हारीणि मनोहराणि हरितोन्मुखानि हरिततृणोन्मुखानि गोकुलानि येषु
22406 । विस्रब्धा विश्वस्ता मुग्धा मृगाः सरन्त्यस्मिन्नित्यधिकरणे
22407 बाहुलकाद्धञ्। निर्झराणां घनसीकरत्वं वृष्टिभ्रान्त्या
22408 बर्हिणानामुन्नृत्ये हेतुः॥ ६१॥
22409
22410 सौगन्ध्यमत्तपवनाहतविक्लवानां
22411 वप्रौषधिज्वलनविस्मृतदीपकानाम्।
22412 कोलाहलाकुलकुलायकुलाकुलानां

कुल्याकुलाकलकलाश्रुतसंकथानाम् ॥ ६२ ॥

सौगन्ध्येन मत्तवद्भ्रान्तेन पवनेनाहता निरस्ताः । विक्लवशब्दो
वैक्लव्यपरः । वप्रेष्वौषध्यो ज्योतिर्लता एव ज्वलनाः । कोलाहलोऽत्र पक्षिरवः ।
कुलायो नीडम् । कुल्याशब्देन गिरिनिर्झरा
ग्राह्यास्तत्कुलानामासमन्तात्कलकलैर्ध्वनिभिरश्रुतास्तिरस्कृता इति यावत् ।
संकथाः संवादा येषु ॥ ६२ ॥

मुक्ताफलप्रकरसुन्दरबिन्दुपात-
शीताखिलद्रुमलतातृणपल्लवानाम् ।
लक्ष्मीमनस्तमितपुष्पविकासभाजां
शक्नोति कः कलयितुं गिरिमन्दिराणाम् ॥ ६३ ॥

लक्ष्मीं शोभां कलयितुं संख्यातुम् । गिरिमन्दिराणां गिरिग्रामस्येति यावत् ॥
६३ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पतीप्रकरणे लीलोपाख्याने
गिरिग्रामवर्णनं नामाष्टविंशः सर्गः ॥ २८ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
गिरिग्रामवर्णनं नामाष्टाविंशः सर्गः ॥ २८ ॥

एकोनत्रिंशः सर्गः २९

श्रीवसिष्ठ उवाच ।

तत्र ते तेततुर्देव्यौ ग्रामेऽन्तःशीतलात्मनि ।
भोगमोक्षश्रियौ शान्ते पुंसीव विदितात्मनि ॥ १ ॥

लीलायाः प्राक्चरित्राणां प्रत्यभिज्ञात्र वर्ण्यते ।
तथा प्रतिप्रयाणं च व्योम्नि लोकौघमण्डिते ॥ १ ॥

शान्ते शान्त्यादिसाधनसंपन्ने ॥ १ ॥

कालेनैतावता लीला तेनाभ्यासेन साभवत् ।
शुद्धज्ञानैकदेहत्वात्त्रिकालामलदर्शिनी ॥ २ ॥

अथ सस्मार सर्वास्ताः प्राक्तनीः संसृतेर्गतीः ।
सा स्वयं स्वरसेनैव प्राग्जन्ममरणादिकाः ॥ ३ ॥

स्वरसेन अप्रयत्नेनैवेति यावत् ॥ ३ ॥

लीलोवाच ।

देवि देशमिमं दृष्ट्वा त्वत्प्रसादात्स्मराम्यहम् ।
इह तत्प्राक्तनं सर्वं चेष्टितं चेष्टितान्तरम् ॥ ४ ॥

चेष्टितान्तरं तत्प्राक्तनजन्मपरम्पराचेष्टितमपि ॥ ४ ॥

इहाभूवमहं जीर्णा शिरालाङ्गी कृशा सिता ।
ब्राह्मणी शुष्कदर्भाग्रभेदरूक्षकरोदरा ॥ ५ ॥

22465 जीर्णा वृद्धा। शुष्कदर्भाणामग्रैस्तीक्ष्णभागैर्भेदैर्विदरणै रूक्षं
22466 करोदरं यस्याः सा॥ ५॥
22467
22468 भर्तुः कुलकरी भार्या दोहमन्थानशालिनी।
22469 माता सकलपुत्राणामतिथीनां प्रियंकरी॥ ६॥
22470
22471 मन्थानो दधिमन्थदण्डः॥ ६॥
22472
22473 देवद्विजसतां भक्ता सिक्ताङ्गी घृतगोरसैः।
22474 भर्जनी चरुकुम्भादिभाण्डोपस्करशोधिनी॥ ७॥
22475
22476 भर्जनी भर्जनपिठरी चरुश्चरुश्रपणस्थाली। भाण्डानामुपस्करान्तराणां
22477 च मार्जनादिना शोधनशीला॥ ७॥
22478
22479 प्। २०१)
22480
22481 नित्यमन्नलवाक्तैककाचकम्बुप्रकोष्ठका।
22482 जामातृदुहितृभ्रातृपितृमातृप्रपूजनी॥ ८॥
22483
22484 एकं काचकम्बु काचवलयं। बहूनां धारणे कर्मत्वरयाभिघाते
22485 भङ्गापत्तेः॥ ८॥
22486
22487 आदेहं सद्मभृत्यैव प्रक्षीणदिनयाइनी।
22488 वाचं चिरं चिरमिति वादिन्यनिशमाकुला॥ ९॥
22489
22490 देहपदेन तत्पातो लक्ष्यते। सद्मभृतिर्गृहपोषणम्।
22491 पुत्रस्नुषाभृत्यवर्गान्प्रति कर्मत्वरार्थं चिरं त्वया स्नातं चिरं त्वया
22492 विलम्बितं किं चिरायसे इत्यादिवदनशीला। आकुला व्यग्रा॥ ९॥
22493
22494 काहं क इव संसार इति स्वप्नेऽप्यसंकथा।
22495 जाया श्रोत्रियमूढस्य तादृशस्यैव दुर्धियः॥ १०॥
22496
22497 तादृशस्य ममेवात्यन्तगृहकर्मासक्तस्येति यावत्। दुर्धियः
22498 अविशुद्धबुद्धः॥ १०॥
22499
22500 एकनिष्ठा समिच्छाकगोमयेन्धनसंचये।
22501 म्लानकम्बलसंवीतशिरालकृशगात्रिका॥ ११॥
22502
22503 समिदादिसंचयविषये एकनिष्ठा एकाग्रचित्ता। सावधानेति यावत्॥ ११॥
22504
22505 तर्णकीकर्णजाहस्थकृमिनिष्कासतत्परा।
22506 गृहशाकायनासेकसत्वराहूतकर्परा॥ १२॥
22507
22508 तर्णकी वत्सा तस्याः कर्णजाहे कर्णमूले स्थितानां कृमीणां निष्कासनं
22509 निष्कासस्तत्र तत्परा। तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ इति जाहच्
22510 । गृहे कृतं शाकायनं शाककेदारस्तस्यासेकायाहूतानि
22511 सेकसाधनकर्पराणि यया। कर्परपदेन तत्पाणयो भृत्या लक्षणयोच्यन्ते॥
22512 १२॥
22513
22514 नीलनीरतरङ्गान्ततृणतर्पिततर्णिका।
22515 प्रतिक्षणं गृहद्वारकृतलेपनवर्णका॥ १३॥
22516

22517 नीलैर्नीरतरङ्गाणामन्तोऽवधिः कूलं तत्रत्यतृणैः
22518 स्नेहात्स्वयमाहृतैस्तर्पितास्तर्णिकाः बालवत्सा यया। गृहद्वारे
22519 कृतालेपनं तत्र वर्णका रङ्गवल्लीरचनाश्च यया॥ १३॥
22520
22521 नीत्यर्थं गृहभृत्यानामादीनकृतवाच्यता।
22522 मर्यादानियमादब्धेर्वेलेवानिशमच्युता॥ १४॥
22523
22524 नीतिर्विनयाचारादिशिक्षणं तदर्थम्। आदीनभीषद्दैन्ययुक्तं यथा स्यात्तथा
22525 कृताः प्रकाशिता वाच्यता जनवचनीयता ईदृशानां गृहे कथमेवंशीला
22526 अविनीता भृत्यास्तिष्ठन्तीत्येवं वक्ष्यन्ति जना-इत्येवमादिरूपा यया।
22527 स्वचरित्रेणापि तन्मर्यादाशिक्षकत्वमाह - मर्यदिति॥ १४॥
22528
22529 जीर्णपर्णसवर्णैककर्णदोलाधिरूढया।
22530 काष्ठताड्यजराभीतजीववृत्त्येव चिह्निता॥ १५॥
22531
22532 एवं चिरं स्थितायाः स्वस्या जराप्रकर्षेण वामकर्णबाधिर्ये शिरःप्रकम्पे
22533 कुब्जात्वे यष्ट्यवलम्बनाधीने च संचारे या जीवनदशा तां वर्णयति -
22534 जीर्णेति। जीर्णपर्णसमानवर्णस्य देहस्यैको दक्षिणो यः कर्णः स एव
22535 शिरःकम्पेन कम्पमानत्वाद्दोला तदधिरूढयेव
22536 तदधीनश्रवणव्यवहारया अत एवावलम्बनकाष्ठस्योन्नयने
22537 तत्ताडनार्हयेव जरायाः सकाशाद्भीतयेव चरमजीवनवृत्त्या
22538 चिह्नितेवात्रासमित्यर्थः॥ १५॥
22539
22540 श्रीवसिष्ठ उवाच।
22541
22542 इत्युक्त्वा संचरन्ती सा शिखरिग्रामकोटरे।
22543 संचरन्त्याः सरस्वत्या दर्शयामास सस्मयम्॥ १६॥
22544
22545 संचरन्ती भ्रमन्ती। स्मयोऽत्र विस्मयः॥ १६॥
22546
22547 इयं मे पाटलाखण्डमण्डिता पुष्पवाटिका।
22548 इयं मे पुष्पितोद्यानमण्डपाशोकवाटिका [शोकपेटिका इति
22549 पाठः]॥ १७॥
22550
22551 पाटलैर्गुल्मैरखण्डमखण्डितं मण्डिता॥ १७॥
22552
22553 इयं पुष्करिणीतीरद्रुमाऽग्रन्थिततर्णका।
22554 इयं सा कर्णिकानाम्नी तर्णिका मुक्तपर्णिका॥ १८॥
22555
22556 आग्रन्थिता ईषद्ग्रन्थिनिबद्धास्वर्णका यस्याः मुक्तपर्णिका
22557 मद्वियोगदुःखादित्यार्थिकं लभ्यते॥ १८॥
22558
22559 इयं सा मेऽलसाकीर्णा वराकी जलहारिका।
22560 अद्याष्टमं दिनं वाष्पक्लिन्नाक्षी परिरोदिति॥ १९॥
22561
22562 अलसा दुःखात्स्वकार्याक्षमेति यावत्। कीर्णा रजोभिरिति शेषः॥ १९॥
22563
22564 इह देवि मया भुक्तमिहोपितमिह स्थितम्।
22565 इह सुप्तमिहापीतमिह दत्तमिहाहृतम्॥ २०॥
22566
22567 आहृतमानीतं फलधान्यादि॥ २०॥
22568

22569 एष मे ज्येष्ठशर्माख्यः पुत्रो रोदिति मन्दिरे।
22570 एषा मे जङ्गले धेनुर्दोग्ध्री चरति शाद्वलम्॥ २१॥
22571
22572 गृहे वसन्तदाहाय रूक्षक्षारविधूसरम्।
22573 स्वदेहमिव पञ्चाक्षं पश्येमं प्रघणं मम॥ २२॥
22574
22575 वसन्तारम्भे होलिकादाहाय कृतमिति शेषः। क्षारेण भस्मना विधूसरम्।
22576 स्वदेहमिव मम प्रियमिति शेषः। पञ्चाक्षा गवाक्षा यस्मिन् देहपक्षे
22577 अक्षाणि ज्ञानेन्द्रियाणि। प्रपणं बहिर्द्वारप्रकोष्ठम्॥ २२॥
22578
22579 तुम्बीलताभिरुग्राभिः पुष्टाभिरिव वेष्टितम्।
22580 महानसस्थानमिदं मम देहमिवापरम्॥ २३॥
22581
22582 तुम्बीलताभिरलादुवल्लीभिः उग्राभिः कटुभिः पुष्टाभिः स्वेनारोप्य
22583 पोषिताभिरिव वेष्टितं योग्यतया छदिप्रदेशे इति गम्यते। महानसस्थानं
22584 पाकस्थानम्॥ २३॥
22585
22586 एते रोदनताम्राक्स्।आ बन्धवो भुव बन्धनम्।
22587 अङ्गदार्पितरुद्राक्षा आहरन्त्यनलेन्धनम्॥ २४॥
22588
22589 बन्धनं प्रत्यक्षबन्धनभूता बन्धवः॥ २४॥
22590
22591 अनारतं शिलाकच्छे गुच्छाच्छोटनकारिभिः।
22592 तरङ्गैः स्थगिताकारं स्पृष्टतीरलतादलैः॥ २५॥
22593
22594 शिलाप्रचुरे कच्छे आच्छोटनमास्फालनम्।
22595 उत्पलसीकरैरित्यन्तविशेषितैस्तरंगेः साधनैः स्थगिताकारं
22596 तिरस्कृतस्वरूपं यथा स्यात्तथा तुषारीकृताः मध्याह्नदिवाकरकरोत्करा
22597 यैस्तथाविधैस्तटद्रुमैर्व्याप्तया ग्रामकुल्यया वेष्टितोऽयं गृहमण्डप
22598 आलक्ष्यते इत्युत्तरैरन्वयः॥ २५॥
22599
22600 सीकराकीर्णपर्यन्तशाद्वलस्थलसल्लतैः।
22601 शिलाफलहकास्फालफेनिलोत्पलसीकरैः॥ २६॥
22602
22603 सीकरव्याप्ताग्राः शाद्वलस्थलस्थाः सङ्कता येषाम्। फलहकानि फलकानि
22604 तेष्वास्फालनमास्फालस्तेन फेनिला उत्पलवासितसीकरा येषाम्॥ २६॥
22605
22606 प्। २०२)
22607
22608 तुषारीकृतमध्याह्नदिवाकरकरोत्करैः।
22609 फुल्लपुष्पोत्करासारप्रनादोत्कतटद्रुमैः॥ २७॥
22610
22611 फुल्लपुष्पोत्करानासरन्ति आगच्छन्तीति फुल्लपुष्पोत्करासारा
22612 भ्रमरास्तत्प्रणादैरुत्कैरुत्कण्ठितैरिव स्थितैस्तटद्रुमैः॥ २७॥
22613
22614 विद्रुमैरिव संक्रान्तफुल्लकिंशुककान्तिभिः।
22615 व्याप्तया पुष्पराशीनां समुल्लासनकारिभिः॥ २८॥
22616
22617 प्रतिबिम्बेन संक्रान्तानामन्तर्निविष्टानां फुल्लकिंशुकानां पलाशानां
22618 कान्तिभिर्विद्रुमैः प्रवालैरिव पुष्पराशीनां समुल्लासनं मण्डनं
22619 तत्कारिभिर्द्रुमैर्व्याप्तया॥ २८॥
22620

22621 उह्यमानफलापूरसुव्यग्रग्रामबालया।
22622 महाकलकलावर्तमत्तया ग्रामकुल्यया ॥ २९ ॥
22623
22624 प्रवाहैरुह्यमाने आम्रादिफलानामापूरे तृष्णाभयाभ्यां सुव्यग्रा
22625 ग्रामबाला यस्याम्। महाकलकलैर्बहुकोलाहलैरावर्तैर्मत्तयेव ॥ २९ ॥
22626
22627 वेष्टितस्तरलास्फालजलधौततलोपलः।
22628 घनपत्रतरुच्छन्नच्छायासततशीतलः ॥ ३० ॥
22629
22630 अयमालक्ष्यते फूल्ललतावलनसुन्दरः।
22631 दलद्गुलुच्छकाच्छन्नगवाक्षो गृहमण्डपः ॥ ३१ ॥
22632
22633 वलनं वेष्टनं तेन सुन्दरः। गलद्भिर्विशीर्यमाणैर्गुलुच्छकैः
22634 फलपुष्पगुच्छैश्छन्नगवाक्षः ॥ ३१ ॥
22635
22636 अत्र मे संस्थितो भर्ता जीवाकाशतयाऽकृतिः।
22637 चतुःसमुद्रपर्यन्तमेखलाया भुवः पतिः ॥ ३२ ॥
22638
22639 जीवाकाशतया हेतुना अकृतिरक्रियोऽपि भुवः पतिर्भूत्वा संस्थितः ॥ ३२ ॥
22640
22641 आ स्मृतं पूर्वमेतेन किलासीदभिवाञ्छितम्।
22642 शीघ्रं स्यामेव राजेति तीव्रसंवेगधर्मिणा ॥ ३३ ॥
22643
22644 आ इति निपातो नत्वाङ्। स्मरणे ङित्वाभावात्। तीव्रसंवेगो दृढाध्यवसायः
22645 ॥ ३३ ॥
22646
22647 दिनैरष्टभिरेवासौ तेन राज्यं समृद्धिमत्।
22648 चिरकालप्रत्ययदं प्राप्तवान्परमेश्वरि ॥ ३४ ॥
22649
22650 अत्रासौ भर्तृजीवो मे स्थितो व्योम्नि गृहे नृपः।
22651 अदृश्यः खे यथा वायुरामोदो वानिले यथा ॥ ३५ ॥
22652
22653 इहैवाङ्गुष्ठमात्रान्ते तद्व्योम्न्येव पदं स्थितम्।
22654 मद्भर्तृराज्यं समवगतं योजनकोटिभाक् ॥ ३६ ॥
22655
22656 स्थितं पदं परमार्थवस्तुयोजनकोटिभाक् समधिगतं भ्रान्त्येत्यर्थः ॥ ३६
22657 ।।
22658
22659 आवां खमेव खस्थं च भर्तृराज्यं ममेश्वरि।
22660 पूर्णं सहस्रैः शैलानां महामायेयमातता ॥ ३७ ॥
22661
22662 खमत्र चिदाकाशम् ॥ ३७ ॥
22663
22664 तद्देवि भर्तृनगरं पुनर्गन्तुं ममेप्सितम्।
22665 तदेहि तत्र गच्छावः किं दूरं व्यवसायिनाम् ॥ ३८ ॥
22666
22667 श्रीवसिष्ठ उवाच।
22668
22669 इत्युक्त्वा प्रणता देवीं सा प्रविश्याशु मण्डपम्।
22670 विहंगीव तया साकं पुप्लुवे सिनिभं [सितिभं इति पाठः] नमः
22671 ॥ ३९ ॥
22672

22673 नभो मण्डपान्तःकल्पितं महाकाशं पुप्लुवे उदडीयत ॥ ३९ ॥
22674
22675 भिन्नाञ्जनचयप्रख्यं सौम्यैकार्णवसुन्दरम् ।
22676 नारायणाङ्गसदृशं भृङ्गपृष्ठामलच्छवि ॥ ४० ॥
22677
22678 सौम्येनाक्षुब्धेन । निश्चलेनेति यावत् । एकार्णवेन संनिभं तुल्यम् ॥ ४० ॥
22679
22680 मेघमार्गमतिक्रम्य वातस्कन्धावनिं तथा ।
22681 सौरमार्गमथाक्रम्य चन्द्रमार्गमतीत्य च ॥ ४१ ॥
22682
22683 अवनिशब्दः प्रदेशपरः ॥ ४१ ॥
22684
22685 ध्रुवमार्गोत्तरं गत्वा साध्यानां मार्गमेत्य च ।
22686 सिद्धानां समतीत्योर्वीमुल्लङ्घ्य स्वर्गमण्डलम् ॥ ४२ ॥
22687
22688 मार्गशब्दो लोकपरो ध्रुवस्य मार्गाभावात् । एवमुर्वीपदमपि ॥ ४२ ॥
22689
22690 ब्रह्मलोकोत्तरं गत्वा तुषितानां च मण्डलम् ।
22691 गोलोकं शिवलोकं च पितृलोकमतीत्य च ॥ ४३ ॥
22692
22693 तुषितानां नित्यसंतुष्टानां मण्डलं वैकुण्ठम् । जगतः पितरौ शिवौ
22694 लोक्येते यत्रेति पितृभ्यां वालोक्यत इति पितृलोकोऽत्र शिवलोक एव ।
22695 कव्यवाडादिपितृदेवाधिष्ठितलोकस्य दूरमध एवावस्थानादत्राप्रसक्तेः ॥
22696 ४३ ॥
22697
22698 विदेहानां सदेहानां लोकानुत्तीर्य [लोकमुत्तिर्य इति पाठः]
22699 दूरगम् ।
22700 दूराद्दूरमथो गत्वा किंचिद्बुद्धा बभूव सा ॥ ४४ ॥
22701
22702 पुराणेषु सदेहाश्च विदेहाश्च भवन्त्यात्मेच्छया पुनः इति
22703 शिवसारूप्यमुक्तिं प्राप्तानां द्वेधावस्थानोक्तेस्तेषां लोकम् ।
22704 अपरिच्छिन्नस्वरूपविस्मरणात्किंचिद्बुद्धा ॥ ४४ ॥
22705
22706 पश्चादालोकयामास समतीतं नभस्थलम् ।
22707 यावन्न किंचिच्चन्द्रार्कताराद्यालक्ष्यते ह्यधः ॥ ४५ ॥
22708
22709 यावत्कालं यावद्दूरं च न किंचिदालक्ष्यते तमश्च स्थितं
22710 तावत्पश्चादालोकयामासेति पूर्वेणान्वयः ॥ ४५ ॥
22711
22712 तमस्तिमितगम्भीरमाशाकुहरपूरकम् ।
22713 एकार्णवोदरप्रख्यं शिलोदरघनं स्थितम् ॥ ४६ ॥
22714
22715 आशा दशदिशस्तत्कुहराणां छिद्राणां पूरकम् ॥ ४६ ॥
22716
22717 लीलोवाच ।
22718
22719 तद्देवि भास्करादीनां क्वाधस्तेजो गतं वद ।
22720 शिलाजठरनिष्पन्दं मुष्टिग्राह्यं तमः कुतः ॥ ४७ ॥
22721
22722 तत्तत्र । घनत्वान्मुष्टिग्राहमिव मुष्टिग्राह्यम् । कुतः प्राप्तमिति शेषः ॥ ४७ ॥
22723
22724 श्रीदेव्युवाच ।

22725
22726 एतावतीमिमां व्योम्नः पदवीमागतासि भोः।
22727 अर्कादीन्यपि तेजांसि यतो दृश्यन्त एव नो ॥ ४८ ॥
22728
22729 यथा महान्धकूपाधः खद्योतो नावलोक्यते।
22730 पृष्ठगेन तथेहातो नाधः सूर्योऽवलोक्यते ॥ ४९ ॥
22731
22732 खं द्योतयति खे द्योतत इति वा खद्योतो ज्योतिरिङ्गणः पृष्ठगेन
22733 दूरोर्ध्वदेशस्थितेन नावलोक्यते तथेत्यर्थः ॥ ४९ ॥
22734
22735 लीलोवाच।
22736
22737 अहो नु पदवीं दूरमावामेतामुपागते।
22738 सूर्योऽप्यधोणुकणवन्न मनागपि लक्ष्यते ॥ ५० ॥
22739
22740 पदवीं पन्थानम्। अणोस्त्र्यणुकस्य कणः परमाणुस्तद्वत् ॥ ५० ॥
22741
22742 प्। २०३)
22743
22744 इत उत्तरमन्या स्यात्पदवी का नु कीदृशी।
22745 कथं च मातरेतव्या कथ्यतामिति देवि मे ॥ ५१ ॥
22746
22747 एतव्या गन्तव्या ॥ ५१ ॥
22748
22749 श्रीदेव्युवाच।
22750
22751 इत उत्तरमग्रे ते ब्रह्माण्डपुटकर्परम्।
22752 यस्य चन्द्रादयो नाम धूलिलेशाः समुत्थिताः ॥ ५२ ॥
22753
22754 पुटस्य संपुटस्य कर्परमूर्ध्वखर्परम्। धूलिलेशा इव ॥ ५२ ॥
22755
22756 श्रीवसिष्ठ उवाच।
22757
22758 इति प्रकथयन्त्यौ ते प्राप्ते ब्रह्माण्डकर्परम्।
22759 भ्रमर्याविव शैलस्य कुड्यं निबिडमण्डपम् ॥ ५३ ॥
22760
22761 निबिडमण्डपं निश्छिद्रगर्भमिति यावत् ॥ ५३ ॥
22762
22763 अक्लेशेनैव ते तस्मान्निर्गते गगनादिव।
22764 निश्चयस्थं हि यद्वस्तु तद्वज्रगुरु नेतरत् ॥ ५४ ॥
22765
22766 निश्चयः सत्यताध्यवसायस्तत्स्थम्। कल्पितकुड्यादिवस्तु।
22767 इतरन्मिथ्यात्वबुद्धिभाधितम् ॥ ५४ ॥
22768
22769 निरावरणविज्ञाना सा ददर्श ततस्ततम्।
22770 जलाद्यावरणं पारे ब्रह्माण्डस्यातिभासुरम् ॥ ५५ ॥
22771
22772 ब्रह्माण्डाद्दशगुणतस्तोयं तत्र व्यवस्थितम्।
22773 आस्थितं वेष्टयित्वा तु त्वगिवाक्षोटपृष्ठगा ॥ ५६ ॥
22774
22775 आक्षोटबीजकर्परपृष्ठगा ॥ ५६ ॥
22776

22777 तस्माद्दशगुणो वह्निस्तमाद्दशगुणोऽनिलः।
22778 ततो दशगुणं व्योम ततः परमम्बरम्॥ ५७॥
22779
22780 परमं शुद्धम्। अम्बरं चिदाकाशः। अविद्याया
22781 नष्टत्वेनाव्याकृताकाशपरिशेषात्॥ ५७॥
22782
22783 तस्मिन्परमके व्योम्नि मध्याद्यन्तविकल्पनाः।
22784 न काश्चन समुद्यन्ति वन्ध्यापुत्रकथा इव॥ ५८॥
22785
22786 तस्यापरिच्छिन्नतामाह - तस्मिन्निति॥ ५८॥
22787
22788 केवलं विततं शान्तं तदनादि गतभ्रमम्।
22789 आद्यन्तमध्यरहितं महत्यात्मनि तिष्ठति॥ ५९॥
22790
22791 महत्यात्मनि तिष्ठति। स्वे महिम्नि प्रतिष्ठितः इति श्रुतेरित्यर्थः॥ ५९॥
22792
22793 आकल्पमुत्तमबलेन शिला पतेच्चे-
22794 त्तस्मिन्बलात्पतगराडपि चोत्पतेच्चेत्।
22795 तद्योजनं न लभते विमलेऽम्बरेऽन्त-
22796 र्माकल्पमेकजवगोऽप्यथ मारुतोऽपि॥ ६०॥
22797
22798 तस्मिन्विमलेऽम्बरे। ऊर्ध्वदेशादाकल्पं शिला उत्तमवलेनातिजवेन
22799 पतेच्चेदधोदेशाद्गरुडराडप्याकल्पमुत्पतेच्चेत् अथ तयोरन्तः अन्तराले
22800 मानं मा तत्कल्पं तत्समर्थं यथा स्यात्तथा उभयत एकजवगोऽपि
22801 मारुतस्तयोर्योजनं मेलनं न लभते किं पुनः परितोऽन्तमिति
22802 सर्वतोऽप्यपरिच्छिन्नं तदित्यर्थः॥ ६०॥
22803
22804 इत्यार्षे श्रीवासिस्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलो॰
22805 परमाकाशवर्णनं नामैकोनत्रिंशः सर्गः॥ २९॥
22806
22807 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
22808 परमाकाशवर्णनं नामैकोनत्रिंशः सर्गः॥ २९॥
22809
22810 त्रिंशः सर्गः ३०
22811
22812 श्रीवसिष्ठ उवाच।
22813
22814 पृथिव्यप्तेजसां तत्र नभस्वन्नभसोरपि।
22815 यथोत्तरं दशगुणानतीत्यावरणान्क्षणात्॥ १॥
22816
22817 तादृशास्तद्विचित्राश्च ब्रह्माण्डानन्तकोटयः।
22818 चिद्व्योम्नि रेणुवद्दृष्टा लीलयेत्यत्र वर्ण्यते॥ १॥
22819
22820 नभस्वन्नभसोर्वाय्वाकाशयोः॥ १॥
22821
22822 ददर्श परमाकाशं तत्प्रमाणविवर्जितम्।
22823 तथा ततं जगदिदं यथा तत्राण्डमात्रकम्॥ २॥
22824
22825 तत् प्रागुक्तं प्रमाकाशं अविद्याशबलं चिदाकाशं यथा तत्राकाशे इदं
22826 वर्णितब्रह्माण्डलक्षणं जगत्ततं विस्तृतं तथा अण्डमात्रकं सर्व
22827 ब्रह्माण्डजातमपि ददर्शेत्यर्थः॥ २॥
22828

ताद्दशावरणान्सर्गान्ब्रह्माण्डेषु ददर्श सा।
कोटिशः स्फुरितान्व्योम्नि त्रसरेणूनिवातपे॥ ३॥

तदेव स्पष्टयति - ताद्दशेति। स्फुरितान् स्वप्राकाशाधिष्ठानचैतन्येन
भासितान्॥ ३॥

महाकाशमहाम्भोधौ महाशून्यत्ववारिणि।
महाचिद्द्रवभावोत्थान्बुद्बुदानर्बुदप्रभान्॥ ४॥

महाशून्यत्वमविद्या सैव वारि यत्र। अर्बुदग्रहणमसंख्यत्वपरम्॥ ४॥

कांश्चिदापततोऽधस्तात्कांश्चिच्चोपरि गच्छतः।
कांश्चित्तिर्यग्गतीनन्यान्स्थितांस्तब्धान्स्वसंविदा॥ ५॥

इतीद्दशानामण्डानां कोट्यो ज्ञेयाः सहस्रशः। सर्वगत्वात्प्रधानस्य
तिर्यगूर्ध्वमधस्थिताः॥ इति पुराणोक्तिमनुरुध्याह - कांश्चिदिति।
स्वसंविदा तत्तद्ब्रह्माण्डाभिमानिजीवसंविदनुसारेणेत्यर्थः॥ ५॥

यत्र यत्रोदिता संविद्येषां येषां यथा यथा।
तत्र तत्रोदितं रूपं तेषां तेषां तथा तथा॥ ६॥

इदानींतनक्रियावैचित्र्याद्रूपवचित्र्येणोत्पत्तिरपि [वैचित्र्याद्भूपवत्वित्र्येण
इति पाठः] प्राक्तनोपासनासंविदनुसारेणैवेत्याह - यत्रेति॥ ६॥

नेहैव तत्र नामोर्ध्वं नाधो नच गमागमाः।
अन्यदेव पदं किंचित्तस्माद्देहागमं हि तत्॥ ७॥

इदं च तदनु भवितृद्दष्ट्योक्तं परमार्थतस्तु तत्र चिदाकाशे इह
एतद्ब्रह्माण्डदेशेऽपि नैव किंचिदस्ति ऊर्ध्वमपि नामेत्यत्यन्तनिवारणार्थम्।
तेषामण्डानांगमनागमनान्यपि नच किंत्वन्यदेव
किंचिदवाङ्मानसगोचरं दिग्विभागादिसर्वद्वैतशून्यं पदं वस्त्वस्ति
तस्माद्ब्रह्माण्डजातं वर्णितं तद्देहागमं
देहप्राप्तिमज्ञद्दशाभिप्रेत्य तत्तथोक्तमित्यर्थः॥ ७॥

उत्पद्योत्पद्यते तत्र स्वयं संवित्स्वभावतः।
स्वसंकल्पैः शमं याति बालसंकल्पजालवत्॥ ८॥

यदि धर्म्येव नास्ति क्व तर्ह्युत्पत्त्यादिकल्पनेति चेत्तदधिष्ठानसंविद्येवेत्याह
- उत्पद्येति। स्वभावोऽत्र स्वाविद्या ततस्तत्प्रभवैः स्वसंकल्पैरुत्पद्यत इव
। शमं यातीवेत्यर्थः॥ ८॥

प। २०४)

श्रीराम उवाच।

किमधः स्यात्किमूर्ध्वं स्यात्किं तिर्यक्तत्र भूअसुरे।
इति ब्रूहि मम ब्रह्मन्निहैव यदि न स्थितम्॥ ९॥

ननु यद्यधिष्ठाने दिग्विभागो नास्ति तर्ह्यध्यस्तेऽपि न स्यात्।
अध्यस्तस्याधिष्ठानदिङ्मात्रनिष्ठत्वनियमादित्याशयेन रामः शङ्कते
- किमध इति। इहाधिष्ठान एव यदि प्राङ्न स्थितं तर्हि तत्र कल्पनया
भासुरे जगति किमधः स्यादित्यर्थः॥ ९॥

22881
22882 श्रीवसिष्ठ उवाच।
22883
22884 ससर्वावरणा एते महत्यन्तविवर्जिते।
22885 ब्रह्माण्डा भान्ति दुर्दृष्टेर्व्योम्नि केशोण्ड्रको यथा॥ १०॥
22886
22887 मायिके प्रपञ्चे नैतादृशनियमव्यभिचारो दोषायेत्याशयेन
22888 प्रथममुत्तरमाह वसिष्ठः - ससर्वेति। दुर्दृष्टेस्तिमिरदूषितदृष्टेः॥
22889 १०॥
22890
22891 अस्वातन्त्र्यात्प्रधावन्ति पदार्थाः सर्व एव यत्।
22892 ब्रह्माण्डे पार्थिवो भागस्तदधस्तूर्ध्वमन्यथा॥ ११॥
22893
22894 सर्ववस्तूनामीश्वरेच्छापारतन्त्र्याद्वा नियमातिक्रमो न दोष इत्याशयेनाह
22895 -अस्वातन्त्र्यादिति। यथा कदम्बकेसराणामाधारकर्णिकागोलकमपेक्ष्यैव
22896 मूलदेशकल्पना तथा ब्रह्माण्डेषु सर्वभावनां
22897 पृथिवीमपेक्ष्याधोदेशकल्पना। नच
22898 वस्तवाधोदिगभावेवृन्तमुक्तस्यफलस्य गुरुत्वादधःपतने
22899 विनिगमनाविरहः स्यादिति वाच्यम्। गुरुत्वं हि विषयाणां
22900 स्वस्वेन्द्रियाकर्षणशक्तिरिव स्वशक्यसंबद्धपृथिव्यादेः
22901 स्वांशाकर्षणशक्तिरेव न गुणान्तरम्। अत एव हि
22902 बहिर्दिग्विभागाभावादगुरुतमानामपि ब्रह्माण्डानां न पतनादिप्रसक्तिर्न
22903 वा तदावरणजलादेस्तद्विश्लेषप्रसक्तिरिति नाधिष्ठानचिति
22904 दिग्विभागापेक्षेत्याशयेन समाध्यन्तरमाह - ब्रह्माण्डे इति। पार्थिवो
22905 महापृथ्वीरूपो ब्रह्माण्डभागस्तस्य सार्वभौतिकपदार्थस्याधः।
22906 अन्यथा तदन्यो नभोभाग ऊर्ध्वमिति कल्पनेत्यर्थः॥ ११॥
22907
22908 पिपीलिकानां महतां व्योम्नि वर्तुललोष्टके।
22909 दशदिक्कमधः पादाः पृष्ठमूर्ध्वमुदाहृतम्॥ १२॥
22910
22911 अयं प्रकारो भूगोलं सर्वतः खगोलेन ज्योतिश्चक्राधारेण
22912 वेष्टितमित्यभ्युपगच्छतां ज्योतिःशास्त्रकृतामपि संमत इत्याशयेन
22913 तदुदाहृतं दृष्टान्तमाह- पिपीलिकानामिति। लोष्टके मृत्पिण्डे।
22914 दशसु दिक्षु दशदिक्कं लग्नानां पादा अध एव पृष्ठं तु ऊर्ध्वमिति
22915 महतां सूर्यादीनामुदाहृतं तत्सिद्धान्ते प्रसिद्धमित्यर्थः॥ १२॥
22916
22917 वृक्षवल्मीकजालेन केषांचिद्धृदि भूतलम्।
22918 ससुरानरदैत्येन वेष्टितं व्योम निर्मलम्॥ १३॥
22919
22920 इत्थं शङ्कां समाधाय प्रस्तुतब्रह्माण्डानां वैचित्र्यं वर्णयितुं
22921 प्रक्रमते - वृक्षेत्यादिना। केषांचिद्ब्रह्माण्डानां हृदि
22922 अन्तर्भूतलं वृक्षवल्मीकजालेन वेष्टितं न मनुष्यैः। व्योम तु
22923 सुरैरनरैर्नरभिन्नैर्नरसदृशैः किंपुरुषैर्दैत्यैश्च
22924 सहितैस्तैस्तैर्लोकैर्वेष्टितमित्यर्थः॥ १३॥
22925
22926 संभूतं सह भूतेन सग्रामपुरपर्वतम्।
22927 इदं कल्पनभूतेन पक्वाक्षोटमिवत्वचा॥ १४॥
22928
22929 किंचित्तु ब्रह्माण्डजातं भूतेन इदं कल्पनभूतेन सद्यः कल्पनात्मकेन
22930 चतुर्विधप्राणिवर्गेण सहैव संभूतमुत्पन्नम्। आक्षोटं
22931 कंदरालद्रुमफलम्॥ १४॥
22932

22933 यथा विन्ध्यवनाभोगे प्रस्फुरन्ति करेणवः |
22934 तथा तस्मिन्पराभोगे ब्रह्माण्डत्रसरेणवः || १५ ||
22935
22936 विन्ध्याचलस्य वनलक्षणे आभोगे कल्पितसंस्थाने करेणवः करिण्यः | परस्य
22937 परमात्मन आभोगे मायाशबलसंस्थाने | गजा इति वाच्ये करेणुग्रहणं
22938 यमकार्थम् || १५ ||
22939
22940 तस्मिन्सर्वं ततः सर्वं तत्सर्वं सर्वतश्च यत् |
22941 तच्च सर्वमयो नित्यं तथा तदणुकं प्रति || १६ ||
22942
22943 ननु यथा ब्रह्माण्डाश्चिदाकाशं प्रत्यणवस्तथा चिदाकाशमपि
22944 कंचित्पदार्थं प्रत्यणु किं न स्यात्तत्राह - तस्मिन्निति | स्थितौ तस्मिन्सर्वं
22945 उत्पत्तौ ततः सर्वं प्रलये तत्सर्वम् | यद्यस्मादेवं तस्मात्सर्वतः सर्वदिक्षु
22946 सर्वकालेषु सर्ववस्तुषु च तदेव | तच्च तद्यदिदंअमयोऽदोमयः सर्वमयः इति
22947 श्रुतिप्रसिद्ध आत्मैव तथाभूतं च तत्कं प्रत्यणु स्यान्न कंचित्प्रतीत्यर्थः
22948 || १६ ||
22949
22950 शुद्धबोधमये तस्मिन्परमालोकवार्दिधौ |
22951 अजस्रमेत्य गच्छन्ति ब्रह्माण्डाख्यास्तरङ्गकाः || १७ ||
22952
22953 शुद्धबोधमये | स्वार्थे मयट् || १७ ||
22954
22955 अन्तःशून्याः स्थिताः केचित्संकल्पक्षयरात्रयः |
22956 तरङ्गा इव तोयेऽब्धौ प्रोह्यन्ते शून्यतार्णवे || १८ ||
22957
22958 तत्र केचिद्ब्रह्माण्डा अव्याकृता एवान्तः सन्तीत्याह - अन्तरिति |
22959 पूर्वकल्पीयसर्वसंकल्पबीजलिङ्गोपाधिक्षये सति रात्रयस्तमोरूपाः सुषुप्त
22960 इवेति यावत् | असद्वा इदमग्र आसीत् इति श्रुतावसच्छब्देनेव
22961 शून्यताशब्देनाव्याकृतमुच्यते | तल्लक्षणे अर्णवे अम्बुधौ प्रकर्षेण
22962 ऊह्यन्ते तर्क्यन्ते | कथमसतः सज्जायेत इति श्रुत्यौक्तयुक्त्या सन्तीति तर्क्यन्त
22963 इत्यर्थः || १८ ||
22964
22965 केषांचिदन्तःकल्पान्तः प्रवृत्तो घर्घरारवः |
22966 न श्रुतोऽन्यैर्न च ज्ञातः स्वभावेन रसाकुलैः || १९ ||
22967
22968 स्वभावेन स्वाभाविकेन मोहेन रसो विषयरागस्तदाकुलैरन्यैर्नच ज्ञातो नैव
22969 ज्ञातः || १९ ||
22970
22971 अन्येषां प्रथमारम्भे शुद्धभूषु विजृम्भते |
22972 सर्गः संसिक्तबीजानां कोशेऽङ्कुरकला यथा || २० ||
22973
22974 अन्येषां ब्रह्माण्डानां प्रथमारम्भे प्राथमिककल्पयुगाद्यारम्भे
22975 पूर्वोत्पन्नप्राणिभिरदूषितत्वाच्छुद्धासु भूषु भुवनेषु सर्गः प्रवर्तत
22976 इत्यर्थः | कोशे बीजपुटे अङ्कुर एव शुभ्रत्वात्कला || २० ||
22977
22978 महाप्रलयसंपत्तौ सूर्याचिर्विद्युतोऽद्रयः |
22979 प्रवृत्ता गलितुं केचित्तापे हिमकणा इव || २१ ||
22980
22981 केषुचिद्ब्रह्माण्डेषु महाप्रलयस्य संपत्तौ विभवे | विजृम्भणकाल इति
22982 यावत् | सूर्यादयः प्रथमं भुवनं दग्ध्वा स्वयमपि गलितुं प्रवृत्ता
22983 इत्यर्थः || २१ ||
22984

आकल्पं निपतन्त्येव केचिदप्राप्तभूमयः ।
यावद्विशीर्य जायन्ते तथा संविन्मयाः किल ॥ २२ ॥

केचिद्ब्रह्माण्डा अप्राप्ता भूमिराधारो यैः । ननु पतनासंभवः
प्रागुक्तस्तस्य का गतिस्तत्राह - तथेति । पतनसंविन्मयेषु पतनं न
विरुध्यत इत्यर्थः ॥ २२ ॥

प। २०५)

स्तब्धा इव स्थिताः केचित्केशोण्ड्रकमिवाम्बरे ।
वायोः स्पन्दा इवाभान्ति तथा प्रोदितसंविदः ॥ २३ ॥

स्तब्धा निश्चला अन्ये तथा प्रोदितसंविदः । स्पन्दात्मसंविद्वासनाप्रभवा इति
यावत् ॥ २३ ॥

आचाराद्वेदशास्त्राणामाद्य एवान्यथोदिते ।
आरम्भोऽपि तथान्येषामनित्यः संस्थितः क्रमः ॥ २४ ॥

ननु धाता यथापूर्वमकल्पयत् इति श्रुत्या सर्गाणामैकरूप्यं प्रतिपादितं
तद्विरुद्धमिदं कथं वैचित्र्यमुच्यते तत्राह - आचारादिति । तया श्रुत्या
पूर्वकल्पे यादृशी धातुः सृष्टिस्तादृश्येव द्वितीयादिरिति प्रतिपाद्यते । तत्र
वेदशास्त्राणां संबन्धिनः
प्राग्भवीयकर्मज्ञानानुष्ठानलक्षणादाचाराद्धातृभावं प्राप्तस्य
आद्ये प्राथमिके एव सर्गे अन्यथा इतरधातृसर्गवैलक्षण्येनोदिते सति अन्येषां
तदुत्तरकल्पीयसर्गाणामारम्भोऽपि तथा पूर्ववदस्तु नाम तथापि
धात्रन्तरसर्गापेक्षया अस्य क्रमोऽनित्योऽनियत एव संस्थित इति
वैचित्र्यसिद्धिरित्यर्थः ॥ २४ ॥

केचिद्ब्रह्मादिपुरुषाः केचिद्विष्ण्वादिसर्गपाः ।
केचिच्चान्यप्रजानाथाः केचिन्निर्नाथजन्तवः ॥ २५ ॥

तपसा तोषयित्वा तु पितरं परमेश्वरम् । परस्परस्माज्जायन्ते
परस्परजयैषिणः ॥ इति पुराणेषु ब्रह्मविष्णुरुद्राणां कल्पभेदेन
परस्परस्मादुत्पत्त्यभिधानादुत्पादकप्राधान्ये तेषां गुणभेदात्सर्गस्य
सत्त्वादिगुणप्राधान्यप्रयुक्तवैचित्र्यमपि दुर्वारमित्याशयेनाह -
केचिदित्यादिना । केचिद्ब्रह्माण्डा ब्रह्मा चतुर्मुख एवादिपुरुषो येषां
तथाविधाः । विष्णुरेवादिः सर्गपः सर्गाधिनाथो येषां । अन्ये
रुद्रभैरवदुर्गाविनायकादयः प्रजानाथा येषाम् ।
तत्तन्माहात्म्यप्रतिपादकपुराणादिषु तेषामपि ब्रह्मादिनियन्तृताश्रवणात् ।
निर्नाथा नियन्तृशून्या मृगपक्ष्यादिजन्तवो येषु ॥ २५ ॥

केचिद्विचित्रसर्गेशाः केचित्तिर्यङ्ङ्यान्तराः ।
केचिदेकार्णवापूर्णा इतरे जनिवर्जिताः ॥ २६ ॥

ब्रह्मादीनां समप्राधान्ये विचित्रसर्गेशाः । इत्थं च
प्राणिकर्मवासनावैचित्र्यात्स्रष्टॄणामिच्छाबोधादिवैचित्र्याच्च यथेच्छं
ब्रह्माण्डवैचित्र्यं सुकल्पमित्याशयेनाह - तिर्यङ्ङ्यान्तरा इत्यादिना ॥
२६ ॥

केचिच्छिलाङ्गनिष्पिण्डाः केचित्कृमिमयान्तराः ।
केचिद्देवमया एव केचिन्नरमयान्तराः ॥ २७ ॥

23037 निष्पिण्डा नितरां पिण्डिता निबिडा इति यावत् ॥ २७ ॥
23038
23039 केचिन्नित्यान्धकाराढ्यास्तथा शीलितजन्तवः ।
23040 केचिन्नित्यप्रकाशाढ्यास्तथा शीलितजन्तवः ॥ २८ ॥
23041
23042 तथा शीलितादृष्टाः जन्तवः प्राणिनो येषु । पेचकादीनामन्धकारेऽपि
23043 दर्शनदर्शनादिति भावः ॥ २८ ॥
23044
23045 केचिन्मशकसंपूर्णा उदुम्बरफलश्रियः ।
23046 नित्यं शून्यान्तराः केचिच्छून्यस्पन्दात्मजन्तवः ॥ २९ ॥
23047
23048 सर्गेण तादृशेनान्ये पूर्णा येऽन्तर्धियामिह ।
23049 कल्पनामपि नायान्ति व्योमपूर्णाचलो यथा ॥ ३० ॥
23050
23051 तादृशेन सर्गेण पूर्णा ये सर्गा अन्तर्धियां योगिनां केऽपि
23052 स्फुटव्यवहारकल्पनां सविकल्पकज्ञानविषयतां नायान्ति । अस्माद्धियाम् इति
23053 पाठेऽप्यस्माकं धीरिव धीर्येषां योगिनामित्येवार्थः ॥ ३० ॥
23054
23055 तादृगम्बरमेतेषां महाकाशं ततं स्थितम् ।
23056 आजीवितं प्रगच्छद्भिर्विस्&वाद्यैर्यन्न मीयते ॥ ३१ ॥
23057
23058 तादृगिति पदं देहलीदीपकन्यायेन पूर्वेणोत्तरेण च संबध्यते । तथाच
23059 व्योमपूर्णाचलो यथा यादृशस्तादृगम्बरमाकाशः । अशून्यस्वभाव इति
23060 यावत् । महाकाश महाप्रकाशं तु तादृक्तथा ततं विस्तृतं यथा
23061 आजीवितं स्वजीवनकालमभिव्याप्य प्रगच्छद्भिर्धावद्भिरपि
23062 विष्ण्वाद्यैर्यन्न मीयते । इयदिति न परिमीयत इत्यर्थः ॥ ३१ ॥
23063
23064 प्रत्येकस्याण्डगोलस्य स्थितः कटकरत्नवत् ।
23065 भूताकृष्टिकरो भावः पार्थिवः स्वस्वभावतः ॥ ३२ ॥
23066
23067 नन्वस्तु ब्रह्माण्डानन्त्यं तद्वैचित्र्यं च तथापि बाह्यजलाद्यावरणानां
23068 विधारकाभावात्कथं न विश्लेष इत्याशङ्क्य
23069 प्रागस्मदुक्तामाकर्षणशक्तिमाश्रित्य समाधत्ते - प्रत्येकस्येति ।
23070 भूतानामाकृष्टिराकर्षणं तत्करो भावः शक्तिविशेषः
23071 कटकरत्नवत्परितो व्याप्तः स्थितः ॥ ३२ ॥
23072
23073 यः सर्वविभवोऽस्माकं धियां न विषयं ततः ।
23074 तज्जगत्कथने शक्तिर्न [शक्तिर्मम नास्ति इति पाठः] ममास्ति
23075 महामते ॥ ३३ ॥
23076
23077 जगद्विस्तारवर्णनं तदशक्तिख्यापनव्याजेनोपसंहरति - य इति । अस्माकं
23078 धियां जगद्वर्णनविषये यः सर्वविभवः स दर्शित इति शेषः । ततः परं
23079 यज्जगद्धियां न विषयं विषयः । विषयशब्दे क्लीबता छान्दसी । तत्कथने
23080 मम शक्तिर्नास्तीत्यर्थः ॥ ३३ ॥
23081
23082 भीमान्धकारगहने सुमहत्यरण्ये
23083 नृत्यन्त्यदर्शितपरस्परमेव मत्ताः ।
23084 यक्षा यथा प्रवितते परमाम्बरेऽन्त-
23085 रेवं स्फुरन्ति सुबहूनि महाजगन्ति ॥ ३४ ॥
23086
23087 न मदीयवर्णनाशक्त्या इयन्त्येव जगन्तीति मन्तव्यं किंतु
23088 परैरलक्षितान्यप्यनन्तानि सन्ति मायायां सर्गशक्त्यानन्त्यादिति

सदृष्टान्तमाह - भीमेति। न दर्शितं परस्परं स्वरूपं यथा
स्यात्तथा यक्षा भूतगणा यथा नृत्यन्ति एवं सुबहूनि जगन्त्यविद्यावृते
ब्रह्मणि शुरन्तीत्यर्थः॥ ३४॥

इत्यार्षे श्रीवासिष्ठमहारामायणे मोक्षोपाये उत्पत्तिप्रकरणे लीलो०
विचित्रब्रह्माण्डकोटिवर्णनं नाम त्रिंशः सर्गः॥ ३०॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
विचित्रब्रह्माण्डकोटिवर्णनं नाम त्रिंशः सर्गः॥ ३०॥

प्। २०६)

एकत्रिंशः सर्गः ३१

श्रीवसिष्ठ उवाच

एवमाकलयन्त्यौ ते निर्गत्य जगतो निजात्।
अन्तःपुरं ददृशतुर्झटित्येव विनिर्गते॥ १॥

पुनरन्तःपुरप्रेक्षा ब्रह्माण्डान्तरदर्शनम्।
शूरादिलक्ष्मसन्नद्धसैन्यप्रेक्षात्र वर्ण्यते॥ १॥

निजात्प्राग्भवीयाज्जगतो
निर्गत्यैवमुक्तप्रकारमनन्तकोटिब्रह्माण्डवैचित्र्यमाकलयन्त्यौ पश्यन्त्यौ
ते तेषु किंचिद्ब्रह्माण्डं झटित्येव प्रविश्यान्तःपुरं ददृशतुस्तत्र च न
चिरमूषतुः किंतु झटित्येव विनिर्गते इति वक्ष्यमाणानुवादः॥ १॥

स्थितपुष्पभरापूर्णमहाराजमहाशवम्।
शवपार्श्वोपविष्टान्तश्चित्तलीलाशरीरकम्॥ २॥

स्थितेत्यादिबहुव्रीहयोऽन्तःपुरविशेषणानि। अन्तःसमाध्यारूढं चित्तं
यस्मिंस्तथाविधं लीलाशरीरं यस्मिन्॥ २॥

घनरात्रितयाल्पाल्पमहानिद्राजनाकुलम्।
धूपचन्दनकर्पूरकुङ्कुमामोदमन्थरम्॥ ३॥

घनशब्देन शोकप्रयुक्तदैर्घ्यं लक्ष्यते। अल्पाल्पया महानिद्रया सुषुप्त्या
युक्तैर्जनैराकुलम्॥ ३॥

तमालोक्यापरं भर्तुः संसारं गन्तुमादृता।
पपात लीला संकल्पदेहेनात्रैव तन्नभः॥ ४॥

अत्रैवान्तःपुर एव तन्नभः प्रागुक्तमण्डपाकाशम्॥ ४॥

विवेश भर्तुः संकल्पसंसारं किंचिदाततम्।
संसारावरणं भित्त्वा भित्त्वा ब्रह्माण्डकर्परम्॥ ५॥

प्राप सार्धं तया देव्या पुनरावरणान्वितम्।
ब्रह्माण्डमण्डपं स्फारं तं प्रविश्य तथा जवात्॥ ६॥

स्फारं विस्तीर्णम्॥ ६॥

23141
23142 ददर्श भर्तुः संकल्पजगज्जम्बालपल्वलम् ।
23143 सिंहीव शैलकुहरं तमो जलदपङ्किलम् ॥ ७ ॥
23144
23145 जम्बालस्य पङ्कस्य पल्वलं वेशन्तमिव स्थितम् । तमोजलदाभ्यां पङ्किलं
23146 सपङ्कमिव स्थितम् ॥ ७ ॥
23147
23148 देव्यो विविशतुस्तत्ते व्योम व्योमात्मिके जगत् ।
23149 ब्रह्माण्डेऽन्तर्यथा पक्वं मृदुबिल्वं पिपीलिके ॥ ८ ॥
23150
23151 तत्र लोकान्तराण्यद्रीनन्तरिक्षमतीत्य ते ।
23152 प्रापतुर्भूतलं शैलमण्डलाम्भोधिसंकुलम् ॥ ९ ॥
23153
23154 मेरुणालंकृतं जम्बूद्वीपं नवदलोदरम् ।
23155 गवाथ भारते वर्षे लीलानाथस्य मण्डलम् ॥ १० ॥
23156
23157 नवदलानि नवखण्डाः । लीलानाथस्य मण्डलं राज्यं ददर्शेत्यन्वयः ॥ १०
23158 । ।
23159
23160 एतस्मिन्नन्तरे तस्मिन्मण्डले मण्डितावनौ ।
23161 चक्रेऽवस्कन्दनं कश्चित्सामन्तोद्रिक्तभूमिपः ॥ ११ ॥
23162
23163 अवस्कन्दनं सेनया आक्रमणम् । सामन्तैर्मण्डलेश्वरैः स्वसहायैरुद्रिक्तो
23164 विवृद्धो भूमिपः सिन्धुराजः ॥ ११ ॥
23165
23166 तेन संग्रामसंरम्भे प्रेक्षार्थं समुपागतैः ।
23167 त्रैलोक्यभूतैस्तद्व्योम बभूवात्यन्तसंकटम् ॥ १२ ॥
23168
23169 तेन सह संग्रामसंरम्भे प्रसक्ते सतीति शेषः । त्रैलोक्यस्थैर्भूतैः
23170 प्राणिभिः संकटं निबिडितम् ॥ १२ ॥
23171
23172 अशङ्कितागते तत्ते देव्यौ ददृशतुर्नभः ।
23173 नभश्चरगणाक्रान्तमम्बुदैरिव मालितम् ॥ १३ ॥
23174
23175 मिथ्यात्व निश्चयादन्तर्धानादिकुशलत्वाच्चाशङ्कितं भयशङ्कारहितं
23176 यथा स्यात्तथा आगते । नभश्चरेत्यादीन्यारामप्रश्नान्नभसो विशेषणानि ॥
23177 १३ ॥
23178
23179 सिद्धचारणगन्धर्वगणविद्याधरान्वितम् ।
23180 शूरग्रहणसंरब्धस्वर्गलोकाप्सरोवृतम् ॥ १४ ॥
23181
23182 रक्तमांसोन्मुखोन्मत्तभूतरक्षःपिशाचकम् ।
23183 पुष्पवृष्टिभिरापूर्णहस्तविद्याधराङ्गनम् ॥ १५ ॥
23184
23185 इत आरभ्य यथायोगं बहवो बहुव्रीहिसमासाः ॥ १५ ॥
23186
23187 वेतालयक्षकुश्माण्डैर्द्वन्द्वालोकनसादरैः ।
23188 आयुधापातरक्षार्थं गृहीताद्रितटैर्वृतम् ॥ १६ ॥
23189
23190 वेतालादयो भूतजातिभेदाः । द्वन्द्वपदेन तत्कार्यं युद्धं लक्ष्यते ।
23191 आयुधानां आसमन्तात्पातेभ्य आत्मनो रक्षार्थं
23192 गृहीतान्याश्रितान्यद्रितटानि यैः ॥ १६ ॥

23193
23194 अस्त्रमार्गनभोभागविद्रवद्भूतमण्डलम् |
23195 आहोपुरुषिकाक्षुब्धप्रेक्षकामोदनोद्भटम् || १७ ||
23196
23197 अस्त्राणां मार्गभूतात् संनिहितान्नभोभागात् | अहो अहं पुरुष इत्यभिमान
23198 आहोपुरुषिका || १७ ||
23199
23200 आसन्नभीमसंग्रामकिंवदन्तीपरस्परम् |
23201 लीलाहासविलासोत्कसुन्दरीधृतचामरम् || १८ ||
23202
23203 किंवदन्ती जनश्रुतिः | लीलासु हासविलासयोश्चोत्काभिरुत्कण्ठिताभिः || १८ ||
23204
23205 धर्माप्रेक्ष्यप्रयुक्ताग्र्यमुनिस्वस्त्ययनस्तवम् |
23206 संपन्नानेकलोकेशवनितावसरस्तवम् || १९ ||
23207
23208 धर्मातिशयेनान्यैरप्रेक्ष्याणां प्रेक्षितुमशक्यानां प्रयुक्तेन योगबलेन
23209 चाग्र्याणां श्रेष्ठानां मुनीनां जगत्स्वस्त्ययनार्थं पठ्यमाना
23210 देवतास्तवा यस्मिन् | संपन्ना अनेकेषां गन्धर्वादिलोकपालानां
23211 वनिताविषयास्तदवसरोचिताः स्तवा यस्मिन् | अप्सरसः
23212 स्वानुपेक्ष्याभिनवान्कान्तान्नोपगच्छेयुरिति [स्वनुपेक्ष्याभिनवान् इति
23213 पाठः] लोकेशास्ताः स्तुवन्तीत्यर्थः || १९ ||
23214
23215 स्वर्गार्हशूरानयनव्यग्रेन्द्रभटभासुरम् |
23216 शूरार्थालंकृतोत्तुङ्गलोकपालाख्यवारणम् || २० ||
23217
23218 स्वर्गार्हाः स्वर्गालंकरणत्वात्स्वर्गयोग्याह् | लोकपालाख्या वारणा
23219 ऐरावतादयः || २० ||
23220
23221 आगच्छच्छूरसन्मानोन्मुखगन्धर्वचारणम् |
23222 शूरोन्मुखामरस्त्रैणकटाक्षेक्षितसद्भटम् || २१ ||
23223
23224 अमराणां स्त्रैणेन स्त्रीसमूहेन || २१ ||
23225
23226 वीरदोर्दण्डकाश्लेषलम्पटस्त्रीगणाकरम् |
23227 शुक्लेन शूरयशसा चन्द्रीकृतदिवाकरम् || २२ ||
23228
23229 यशःशैत्येनाभिभूतौष्ण्यत्वाच्चन्द्रीकृतः || २२ ||
23230
23231 प्| २०७)
23232
23233 श्रीराम उवाच |
23234
23235 भगवञ्छूरशब्देन कीदृशः प्रोच्यते भटः |
23236 स्वर्गालंकरणं कः स्यात्को वा डिम्भाहवो भवेत् || २३ ||
23237
23238 प्रसङ्गाच्छूरादिलक्षणं जिज्ञासू रामः पृच्छति - भगवन्निति |
23239 अनुक्तासूचितस्यापि डिम्भाहवस्यात्र लक्षणप्रशन्ः
23240 शूरस्वर्गालंकरणत्वव्यतिरेकात्मकत्वात्तत्प्रासङ्गिको बोध्यः || २३ ||
23241
23242 श्रीवसिष्ठ उवाच |
23243
23244 शास्त्रोक्ताचारयुक्तस्य प्रभोरर्थेन यो रणे |

23245 मृतो वाथ जयी वा स्यात्स शूरः शूरलोकभाक् ॥ २४ ॥
23246
23247 रणे युधयत इति शेषः ॥ २४ ॥
23248
23249 अन्यथा प्राणिकृत्ताङ्गो रणे यो मृतिमाप्नुयात् ।
23250 डिम्भाहवहतः प्रोक्तः स नरो नरकास्पदम् ॥ २५ ॥
23251
23252 अयथाशास्त्रसंचारवृत्तेरर्थेन युध्यते ।
23253 यो नरस्तस्य संग्रामे मृतस्य निरयोऽक्षयः ॥ २६ ॥
23254
23255 पूर्वोक्तमेव स्पष्टीकुर्वन्नाह - अयथाशास्त्रेत्यादिना ॥ २६ ॥
23256
23257 यथासंभवशास्त्रार्थलोकाचारानुवृत्तिमान् ।
23258 युध्यते तादृशश्चैव भक्तः शूरः स उच्यते ॥ २७ ॥
23259
23260 गोरर्थे ब्राह्मणस्यार्थे मित्रस्यार्थे च सन्मते ।
23261 शरणागतयत्नेन स मृतः स्वर्गभूषणम् ॥ २८ ॥
23262
23263 शरणागतस्य रक्षणार्थेन युद्धप्रयत्नेन ॥ २८ ॥
23264
23265 परिपाल्यस्वदेशैकपालने यः स्थितः सदा ।
23266 राजा मृतास्तदर्थं ये ते वीरा वीरलोकिनः ॥ २९ ॥
23267
23268 परिपाल्यस्यावश्यंपरिपालनार्हस्य स्वदेशस्य एकपालने मुख्यवृत्त्या
23269 रक्षणे । स्थित उद्युक्तः ॥ २९ ॥
23270
23271 प्रजोपद्रवनिष्ठस्य राज्ञोऽराज्ञोऽथ वा प्रभोः ।
23272 अर्थेन ये मृता युद्धे ते वै निरयगामिनः ॥ ३० ॥
23273
23274 ये हि राज्ञामराज्ञां वाप्ययथाशास्त्रकारिणाम् ।
23275 रणे म्रियन्ते छिन्नाङ्गास्ते वै निरयगामिनः ॥ ३१ ॥
23276
23277 अयथाशास्त्रकारिसमाश्रय एव नरकाय किंपुनः प्रजोपद्रवकारिसमाश्रय
23278 इत्याशयेन पुनराह - ये हीति । अयथाशास्त्रकारिणामर्थे इति शेषः ॥ ३१ ॥
23279
23280 धर्म्यं यथा तथा युद्धं यदि स्यात्तर्हि संस्थितिः ।
23281 नाशयेयुरलं मत्तः परलोकभयोज्झिताः ॥ ३२ ॥
23282
23283 धार्मिकाश्रितस्याप्यधर्मेण युध्यतो हतस्य न स्वर्ग इत्याह - धर्म्यमिति
23284 । धर्मादनपेतं धर्म्यम् । संस्थितिः स्वर्गे [स्वर्गस्थितिः इति पाठः]
23285 स्थितिः । अधर्म्येणापि युद्धेन यदि हतस्य स्वर्गः स्यात्तर्हि परलोकस्य
23286 निर्भयाः सन्तः अलमत्यर्थं अधर्मयुद्धेनापि मत्ताः
23287 परान्नाशयेयुरित्यर्थः ॥ ३२ ॥
23288
23289 यत्र यत्र हतः शूरः स्वर्ग इत्यवशोक्तयः ।
23290 धर्मे योद्धा भवेच्छूर इत्येवं शास्त्रनिश्चयः ॥ ३३ ॥
23291
23292 परप्राणान्निजप्राणैः पणिकृत्योद्यतायुधः । यत्र यत्र हतः शूरः
23293 स्वर्गस्तत्र पदे पदे ॥ इत्यादिसामान्यप्रवादानां तर्हि का गतिस्तत्राह -
23294 यत्रेति ॥ ३३ ॥
23295
23296 सदाचारवतामर्थे खड्गधारां सहन्ति ये ।

23297 ते शूरा इति कथ्यन्ते शेषा डिम्भाहवाहताः ॥ ३४ ॥
23298
23299 तेषामर्थे रणे व्योम्नि तिष्ठन्त्युत्कण्ठिताशयाः ।
23300 शूरीभूतमहासत्त्वदयितोक्तिसुराङ्गनाः ॥ ३५ ॥
23301
23302 शूरीभूतानां महासत्त्वानां महाबलानां दयिता
23303 वयमित्युक्तिर्यस्मिन्कर्मणि तद्यथा स्यात्तथा तिष्ठन्ति । प्रतीक्षन्त इति यावत् ॥ ३५ ॥
23304
23305 विद्याधरीमधुरमन्थरगीतिगर्भं
23306 मन्दारमाल्यवलनाकुलकामिनीकम् ।
23307 विश्रान्तकान्तसुरसिद्धविमानपङ्क्ति
23308 व्योमोत्सवोच्चरितशोभमिवोल्ललास ॥ ३६ ॥
23309
23310 मन्दारमाल्यानां बलना शूरोरसि प्रदानाय ग्रथनं स्वकबरीषु वेष्टनं
23311 वा तत्राकुला व्यग्राः कामिन्यो यस्मिन् । उत्सवार्थमुच्चरिता ऊर्ध्वगता शोभा
23312 यस्य तथाविधमिवेत्युत्प्रेक्षा ॥ ३६ ॥
23313
23314 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे
23315 युद्धप्रेक्षिकास्थिताम्बरवर्णनं नामैकत्रिंशः सर्गः ॥ ३१ ॥
23316
23317 इति श्रीवासिष्ठमहारामायणे तात्पर्यप्रकाशे उत्पत्तिप्रकरणे
23318 युद्धप्रेक्षिकास्थिताम्बरवर्णनं नामैकत्रिंशः सर्गः ॥ ३१ ॥
23319
23320
23321 द्वात्रिंशः सर्गः ३२
23322
23323 श्रीवसिष्ठ उवाच ।
23324
23325 अथ वीरवरोत्कण्ठनृत्यदप्सरसि [वरात्कण्ठा इति पाठः]
23326 स्थिता ।
23327 लीलावलोकयामास व्योम्नि विद्यान्वितावनौ ॥ १ ॥
23328
23329 सांकल्पिकविमानस्थज्ञप्तिलीलावलोकितम् ।
23330 संनद्धसेनाद्वितयं युयुत्स्वत्रोपवर्ण्यते ॥ १ ॥
23331
23332 विद्या सरस्वती तदन्विता लीला अवनौ सेनाद्वितयमवलोकयामासेति संबन्धः ॥ १
23333 ॥
23334
23335 स्वराष्ट्रमण्डले भर्तृपालिते बलमालिते ।
23336 कस्मिंश्चिद्विततारण्ये द्वितीयाकाशभीषणे ॥ २ ॥
23337
23338 बलेन चतुरङ्गसैन्येन मालिते वेष्टिते ।
23339 सिंहवृश्चिकरक्षःपिशाचाधारत्वाद्द्वितीयाकाशभीषणे ॥ २ ॥
23340
23341 सेनाद्वितयमाक्षुब्धं सौम्याब्धिद्वितयोपमम् ।
23342 महरम्भघनं मत्तं स्थितं राजद्वयान्वितम् ॥ ३ ॥
23343
23344 महद्भिरारम्भैः कार्योद्योगैः ॥ ३ ॥
23345
23346 युद्धसज्जं सुसंनद्धमिद्धमग्निमिवाद्भुतम् ।
23347 पूर्वप्रहारसंपातप्रेक्षाक्षुब्धाक्षिलक्षितम् ॥ ४ ॥
23348

23349 उद्यतामलनिस्त्रिंशधारासारवहज्जनम् ।
23350 कचत्परश्वधप्रासभिन्दिपालर्ष्टिमुद्गरम् ॥ ५ ॥
23351
23352 निस्त्रिंशानां खड्गानां धारा एवासारा जलधारास्तान्वहन्तो जना यत्र ।
23353 परश्वधं परशुः । भिन्दिपालादय आयुधविशेषाः ॥ ५ ॥
23354
23355 प्। २०८)
23356
23357 गरुत्मत्पक्षविक्षुब्धवनसंपातकम्पितम् ।
23358 उद्यद्दिनकरालोकचञ्चत्कनककङ्कटम् ॥ ६ ॥
23359
23360 कङ्कटं वर्म ॥ ६ ॥
23361
23362 परस्परमुखालोककोपप्रोद्दामितायुधम् ।
23363 अन्योन्यबद्धदृष्टित्वाच्चित्रं भित्ताविवार्पितम् ॥ ७ ॥
23364
23365 कोपात्प्रोद्दामितानि प्रोद्यतानि ॥ ७ ॥
23366
23367 लेखामर्यादया दीर्घबद्धया स्थापितस्थिति ।
23368 अनिवार्यमहासैन्यझांकाराश्रुतसंकथम् ॥ ८ ॥
23369
23370 सर्पादिनिरोधाय मान्त्रिकोल्लिखितरेखासदृश्या
23371 सेनाद्वयमध्यकृतरेखालक्षणया वा मर्यादया ।
23372 झांकारैर्ध्वनिभिरभिभूतत्वादश्रुताः संकथा मिथोवार्ता यत्र ॥ ८ ॥
23373
23374 पूर्वप्रहारस्मयतश्चिरं संशान्तदुन्दुभि ।
23375 निबद्धयोधसंस्थाननिखिलानीकमन्थरम् ॥ ९ ॥
23376
23377 राजाज्ञातः पूर्वं प्रहारो मा भूदिति स्मयोऽत्र शङ्का ततो
23378 निमित्तान्निबद्धप्रायेण योधा एव संस्थानानि प्रधानावयवसंनिवेशा
23379 यस्य तथाविधेन निखिलानीकेन मन्थरम् ॥ ९ ॥
23380
23381 धनुर्द्वितयमात्रात्मशून्यमध्यैकसेतुना ।
23382 विभक्तं कल्पवातेन मत्तमेकार्णवं यथा ॥ १० ॥
23383
23384 धनुर्द्वितयप्रमाणं जनशून्यात्मकं यन्मध्यं तल्लक्षणेनैकसेतुना ॥
23385 १० ॥
23386
23387 काये [कार्यसंकर इति पाठः]
23388 संकटसंरम्भचिन्तापरवशेश्वरम् ।
23389 विरटड्भेककण्ठत्वग्भङ्गुरातुरहृद्गुहम् ॥ ११ ॥
23390
23391 ईश्वरौ राजानौ । भयाद्भेककण्ठत्वगिव भङ्गुरा कम्पमाना आतुराणां
23392 भीरूणां हृद्गुहा यत्र ॥ ११ ॥
23393
23394 प्राणसर्वस्वसंत्यागसोद्योगासंख्यसैनिकम् ।
23395 कर्णाकृष्टशरौघौघत्यागोन्मुखधनुर्धरम् ॥ १२ ॥
23396
23397 शरौघलक्षणस्यौघस्य प्रवाहस्य ॥ १२ ॥
23398
23399 प्रहारपातसंप्रेक्षानिष्पन्दासंख्यसैनिकम् ।
23400 अन्योन्योत्कण्ठकाठिन्यभरभ्रुकुटिसंकटम् ॥ १३ ॥

23401
23402 युद्धोत्कण्ठया काठिन्यं निर्दयता। क्रोध इति यावत्।
23403 तद्भरप्रयुक्तभ्रुकुटिभिः संकटं दुष्प्रेक्ष्यम्॥ १३॥
23404
23405 परस्परसुसंघट्टकटुटङ्कारकङ्कटम्।
23406 वीरयोधमुखादग्धभीरुप्रेप्सितकोटरम्॥ १४॥
23407
23408 सुसंघट्टोऽभिघातस्तेन कटुटंकाराः कङ्कटा वारबाणा यत्र।
23409 वीरयोधमुखाग्निना आदग्धैरिव श्यामीकृतमुखैर्भीरुभिर्निलयनाय
23410 प्रेप्सिता गिरिकोटरा यत्र॥ १४॥
23411
23412 मिथःसंस्थानकालोकमात्रासंदिग्धजीवितम्।
23413 समस्ताङ्गरुहासक्तप्रांशुवृद्धेभमानवम्॥ १५॥
23414
23415 संस्थानकं युद्धं तदालोकनपर्यन्तं असंदिग्धं जीवितं यस्य।
23416 सम्यगस्तैरुदञ्चितैरङ्गरुहैरासक्ता अत एवोर्ध्वं प्रांशवस्तिर्यक्च
23417 वृद्धा उपचिता इभा मानवाश्च यत्र॥ १५॥
23418
23419 पूर्वप्रहारसंप्रेक्षाव्यग्रप्राणतया तया।
23420 संशान्तकल्लोलरवं निद्रामुद्रपुरोपमम्॥ १६॥
23421
23422 प्राणशब्देन तद्वशं चित्तं लक्ष्यते॥ १६॥
23423
23424 संशान्तशङ्खसंघाततूर्यनिर्ह्राददुन्दुभि।
23425 भूतलाकाशसंलीनसर्वपांसुपयोधरम्॥ १७॥
23426
23427 पांसुपयोधरयोर्यथाक्रमं संबन्धः॥ १७॥
23428
23429 पलायनपरैः पश्चात्यक्तमङ्गुलमण्डलम् [मङ्गलमण्डलं
23430 इति पाठः]।
23431 विसारिमकरव्यूहमत्स्यसंख्याब्धिभासुरम्॥ १८॥
23432
23433 मङ्गुलाः सेनामण्डनभूताः शूराः। मकरव्यूहानां मत्स्यानां च
23434 संख्यं युद्धं यस्मिंस्तथाविधाब्धिरिव भासुरम्॥ १८॥
23435
23436 पताकामञ्जरीपुञ्जविजिताकाशतारकम्।
23437 हास्तिकोत्तम्भितकरकाननीकृतखान्तरम्॥ १९॥
23438
23439 हास्तिकानां हस्त्यारोहाणामुत्तम्भितैरूर्ध्वीकृतैः करैः काननमिव
23440 संपद्यमानं कृतं खान्तरं नभोवकाशो यस्मिन्॥ १९॥
23441
23442 तरत्तरलभापूरसपक्षसकलायुधम्।
23443 धमद्धमितिशब्दैश्च श्वासोत्थैर्ध्मातखान्तरम्॥ २०॥
23444
23445 तरद्भिः प्लवद्भिस्तरलैर्भापूरैः सपक्षाणीव संवृत्तानि सकलायुधानि
23446 यस्मिन् दुन्दुभ्यादीनां धमद्धमितिशब्दैः श्वासोत्थैः
23447 शङ्खकाहलादिशब्दैश्च ध्मातं शब्दायमानं कृतम्॥ २०॥
23448
23449 चक्रव्यूहकराक्रान्तदुर्वृत्तसुरभासुरम्।
23450 गरुडव्यूहसंरम्भविद्रवन्नागसंचयम्॥ २१॥
23451
23452 सांप्रतं सेनयोः प्रदेशभेदेन व्यूहरचनाभेदं वर्णयन्विशिनष्टि -

23453 चक्रेति। क्वचिच्चक्रव्यूहस्य करैर्निर्मातृभिः पुरुषैराक्रान्ता दुर्वृत्ता
23454 दानवा यैस्तथाविधैः सुरैरिव भासुरम्।
23455 नागशब्दश्लेषभित्तिकाभेदारोपेण [श्लेषनिमित्तक इति पाठः]
23456 सर्पात्मतया गजा उच्यन्ते॥ २१॥
23457
23458 श्येनव्यूहविभिन्नाग्रसंनिवेशोत्तमध्वनि।
23459 अन्योन्यास्फोटनिःशेषप्रपतद्भूरिवृन्दकम्॥ २२॥
23460
23461 क्वचित्तु श्येनव्यूहेन विभिन्नो विभक्तो यः प्रतिसैन्यसंनिवेशस्तेन हेतुना
23462 उत्तमस्तारतमो ध्वनिर्यस्मिन्। क्वचित्तु अन्योन्यं प्रतिभुजास्फोटेन
23463 संरम्भान्निःशेषं कृत्स्नशः प्रपतन्तो भूरिवृन्दकाः समूहा यस्मिन्॥
23464 २२॥
23465
23466 विविधव्यूहविन्यासवान्तवीरवरारवम्।
23467 करप्रतोलनोल्लासमत्तमुद्गरमण्डलम्॥ २३॥
23468
23469 व्यूहविन्यासाद्वान्तानां पुरोनिर्गतानां वीराणां वर आरवो यस्मिन्। करेण
23470 प्रतोलनमुद्यमनं तत्कृतेनोल्लासेन मत्तानीव भ्रमन्ति मुद्गरमण्डलानि
23471 यस्मिन्॥ २३॥
23472
23473 कृष्णायुधांशुजलदश्यामीकृतदिवाकरम्।
23474 अनिलाधूतपल्यूलसूत्कृताभशरध्वनि॥ २४॥
23475
23476 कृष्णानां श्यामानामायुधानामंशुभिरिवोत्थितैर्जलदैः
23477 श्यामीकृतस्तिरोहित इति यावत्। पल्यूलास्तृणविशेषास्तेषां सूत्कृतमिति
23478 वायुसंघट्टनजन्यशब्दानुकरणम्॥ २४॥
23479
23480 अनेककल्पकल्पाग्रसवृन्दमिव संस्थितम्।
23481 प्रलयानिलसंक्षुब्धमेकार्णवमिवोत्थितम्॥ २५॥
23482
23483 कल्पाय प्रलयाय कल्पन्ते समर्था भवन्तीति कल्पकल्पाः
23484 पुष्करावर्तकादिमेघाः। अनेकैस्तैरग्रे सवृन्दं संघीभूतमिव॥ २५॥
23485
23486 सद्यश्छिन्नं महामेरोः पक्षद्वयमिव स्फुरत्।
23487 क्षुब्धमारुतनिर्धूतमिव कज्जलपर्वतम्॥ २६॥
23488
23489 कज्जलपर्वतोऽञ्जनाद्रिः। श्यामतमगजादिबाहुल्यात्तत्साम्योक्तिः॥ २६॥
23490
23491 प्। २०९)
23492
23493 पातालकुहरात्क्षुब्धमन्धकारमिवोत्थितम्।
23494 लोकालोकमिवोन्मत्तनृत्यलोललसत्तटम्।
23495 महानरकसंघातं भित्त्वावनिमिवोत्थितम्॥ २७॥
23496
23497 उन्मत्तनृत्येन लोला लसन्तश्च तटा वप्राणि यस्य॥ २७॥
23498
23499 आलोलकुन्तमुसलासिपरश्वधांशु-
23500 श्यामायमानदिवसातपवारिपूरैः।
23501 एकार्णवं भुवनकोशमिवाचिरेण
23502 कर्तुं समुद्यतमगाधमनन्तपूरैः॥ २८॥
23503
23504 कुन्ताद्यायुधानामंशवः किरणास्तल्लक्षणैः श्यामायमानो दिवसातपो

23505 येभ्यस्तथाविधैर्वारिभिः पूर्यन्त इति वा वारिभिः पूरयन्ति जगदिति वा
23506 वारिपूरा मेघास्तैर्भुवनकोशमनन्तैः पूरैः प्रवाहैरगाधमेकार्णवं
23507 कर्तुं समुद्यतमिवेत्यर्थः ॥ २८ ॥
23508
23509 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलोपाख्याने
23510 आहवारम्भणं नाम द्वात्रिंशः सर्गः ॥ ३२ ॥
23511
23512 इति श्रीवासिष्ठमहारामायणे तात्पर्यप्रकाशे उत्पत्तिप्रकरणे
23513 आहवारम्भणं नाम द्वात्रिंशः सर्गः ॥ ३२ ॥
23514
23515
23516 त्रयस्त्रिंशः सर्गः ३३
23517
23518 श्रीराम उवाच ।
23519
23520 भगवन्युद्धमेतन्मे समासेन मनाग्वद ।
23521 श्रुतिराह्लाद्यते श्रोतुर्यस्मादेताभिरुक्तिभिः ॥ १ ॥
23522
23523 सांकल्पिकविमानस्थप्रज्ञालीलासमीक्षितः ।
23524 अथ प्रवृत्तः संग्रामः सेनयोरत्र वर्ण्यते ॥ १ ॥
23525
23526 श्रुतिः श्रोत्रमाह्लाद्यते
23527 तत्त्वोपदेशग्रहणप्रतिरोधिजामितादोषनिवारणेनेत्यर्थः ॥ १ ॥
23528
23529 श्रीवसिष्ठ उवाच ।
23530
23531 अथ तत्रैव ते देव्यौ संग्रामं तमवेक्षितुम् ।
23532 विमाने कल्पिते कान्ते रुद्धे रुरुहतुः स्थिरे ॥ २ ॥
23533
23534 सत्यसंकल्पेन कल्पिते कान्ते रमणीये नभसि रुद्धे निश्चलीकृते अत एव स्थिरे
23535 विमाने आरुरुहतुः ॥ २ ॥
23536
23537 एतस्मिन्नन्तरे तत्र लीलेशः प्रतिपक्षतः ।
23538 तमुत्सोढुमशक्तः सन्मुखव्यतिकरे रणे ॥ ३ ॥
23539
23540 तत्र तयोः सेनयोर्मुखव्यतिकरे परस्परमुखसंघट्टने प्रसक्ते सति
23541 प्रतिपक्षतः शत्रुसैन्यात्प्रलयार्णवकल्लोल इवोत्पत्त्य निर्गत्य उद्भये निर्भये
23542 कस्मिंश्चिद्भटे प्रहर्तुकामे सति लीलेशो विदूरथस्तमुत्सोढुं
23543 क्षान्तुमशक्तः संस्तस्य भटस्योरसि मुद्गरं जहौ प्रहृतवानिति
23544 परेणान्वयः ॥ ३ ॥
23545
23546 प्रलयार्णवकल्लोल इवोत्पत्त्योद्भये भटे ।
23547 जहौ सानाविव शिलां भटस्योरसि मुद्गरम् ॥ ४ ॥
23548
23549 अथ प्रवृत्तः प्रसभं प्रलयार्णवरंहसा ।
23550 सेनयोः शस्त्रसंपातः किरन्ननलविद्युतः ॥ ५ ॥
23551
23552 अथ राजप्रवृत्त्यनन्तरम् । अनलपदेन तत्सदृशानि शस्त्राणि विद्युत्पदेन
23553 तत्प्रभाश्च लक्ष्यन्ते ॥ ५ ॥
23554
23555 तरत्तरलधाराग्ररेखाङ्कितनभस्तलः ।
23556 ध्वनत्कणकणाशब्दमध्यलक्षितटांकृतिः ॥ ६ ॥

23557
23558 इतः प्रभृति सर्वाणि सर्गान्त्यश्लोकस्थरणसंभ्रमविशेषणानि। तरतां
23559 प्लवमानानां शस्त्राणां तरलधाराग्रै रेखाङ्कितमित्यौत्प्रेक्षिकम्॥ ६॥
23560
23561 धीरहुंकारमिश्रिष्मघर्घरारवघस्मरः।
23562 प्रवृत्तशरधाराग्रभास्करार्चिर्वितानकः॥ ७॥
23563
23564 हुंकारमिश्रत्वेन तरतमत्वादुष्मणो ग्रीष्मान्तस्य घनघर्घरारावाणां
23565 घस्मरो भक्षकः। तिरस्कर्तेति यावत्। शरधाराप्रतिफलितभास्करार्चीष्येव
23566 वितानं यस्य॥ ७॥
23567
23568 नदत्कङ्कटटङ्कारप्रोड्डीनकणपावकः।
23569 परस्पराहतिच्छिन्नहेतिखण्डखगाम्बरः॥ ८॥
23570
23571 शरखड्गादिप्रहारान्नदद्भ्यः कङ्कटेभ्यो वर्मभ्यष्टङ्कारेण
23572 प्रोड्डीनाः कणपावकाः स्फुलिङ्गा यस्मिन्। हेतिखण्डाः खड्गशकलान्येव
23573 प्रोड्डीयमानत्वात्खगा यस्मिंस्तथाविधमम्बरमाकाशं यत्र॥ ८॥
23574
23575 वीरदोर्द्रुमसंचारवहद्वननभस्थलः।
23576 कोदण्डचक्रक्रेङ्कारद्रवद्वैमानिकाङ्गनः॥ ९॥
23577
23578 दोर्द्रुमाणां संचारैर्वहत्संचरद्वनं यस्मिंस्तथाविधं नभस्थलं
23579 यत्र॥ ९॥
23580
23581 महाहलहलारावभृङ्गीकृतघनध्वनिः।
23582 निर्विकल्पसमाधिस्थ इवैकघनतावशात्॥ १०॥
23583
23584 भृङ्गपदेन ध्वनिर्लक्ष्यते।
23585 हलहलारावैरभिभवाद्भृङ्गध्वनिवदल्पीकृतो मेघध्वनिर्यत्र।
23586 तद्यथा सैन्धवघनोऽनन्तरो बाह्यः कृत्स्नो रसघन एवं वा अरेऽयमात्मा
23587 विज्ञानघन एव इति श्रुतिदर्शित एकघनः परमात्मा तद्भाववशाद्यथा
23588 निर्विकल्पसमाधिस्थो बाह्यशब्दादीन्नानुभवति तद्वदित्यर्थः। तथाचोक्तम् ##-
23589 स्यान्निर्विकल्पस्ततः परः॥ इति॥ १०॥
23590
23591 नाराचासारधाराग्रलूनशूरशिरस्करः।
23592 परस्परांससंघट्टरणत्कङ्कटसंकटः॥ ११॥
23593
23594 हुंकारहतहेत्युग्रसंघट्टकटुटांकृतः।
23595 तरद्धारातरङ्गाभ्रदन्तुराशेषदिङ्मुखः॥ १२॥
23596
23597 खड्गधारातरङ्गैरभ्रैर्दन्तुराण्युन्नतदन्तानीव दिङ्मुखानि यत्र॥ १२॥
23598
23599 हेतिसंघट्टविक्षोभमुष्टिग्राह्यझणज्झणः।
23600 चिरमास्फोटकास्फोटलुठच्चटचटारवः॥ १३॥
23601
23602 खड्गप्रहारेण शत्रोर्विक्षोभे तच्छिरोग्रहणाय प्रवृत्तस्य हस्तस्य
23603 तदलाभाज्झणज्झणशब्द एव मुष्टिग्राह्य इव संपन्नो यत्र।
23604 बाह्वास्फोटकानां शूराणामास्फोटैर्लुठन्त इव चटचटारवा यत्र॥ १३॥
23605
23606 प्। २१०)
23607
23608 प्रवहत्खड्गसीत्कारज्वलत्कणसणध्वनिः।

23609 सरच्छरभराध्वान्तशरत्खखरारवः ॥ १४ ॥
23610
23611 त्वरया कोशात्प्रवहतां निर्गच्छतां खड्गानां
23612 लोहसंघर्षसीत्कारसहितो ज्वलत्कणानां सणसण इति ध्वनिर्यत्र । सरतां
23613 शरभराणामध्वान्ते मार्गावधौ । लक्ष्यदेश इति यावत् । शरतां
23614 विशरारूणां खरखरारवो यत्र ॥ १४ ॥
23615
23616 धगद्धगितिविच्छिन्नकण्ठोत्थप्राणलोहितः ।
23617 छिन्नबाहुशिरःखड्गखण्डनिर्विवराम्बरः ॥ १५ ॥
23618
23619 धगद्धगिति शब्देन सह विच्छिन्नकण्ठादुत्थाः प्राणा लोहितानि च यत्र ॥ १५ ॥
23620
23621 कङ्कटोत्थस्फुरद्वह्निसटास्पृष्टशिरोरुहः ।
23622 रणत्पतदसिव्रातमत्तपीनझणज्झणः ॥ १६ ॥
23623
23624 वह्नेः सटाभिर्जटासदृशज्वालाभिः स्पृष्टाः शिरोरुहाः केशा यत्र ।
23625 असिव्रातानां मत्ता हर्षपरवशचित्ताः संपन्नाः पीना रणोत्साहोत्फुल्लदेहाः
23626 शूरा येन तथाविधो झणज्झणरवो यत्र ॥ १६ ॥
23627
23628 कुन्तकुण्ठितमातङ्गतरङ्गोत्तुङ्गलोहितः ।
23629 दन्तिदन्तविनिष्पेषतारचीत्कारकर्कशः ॥ १७ ॥
23630
23631 कुन्तैरायुधभेदैः कुण्ठितानां मातङ्गानां तरङ्गोत्तुङ्गो
23632 लोहितप्रवाहो यत्र ॥ १७ ॥
23633
23634 महामुसलसंपातपिष्टकष्टोद्धुरस्वरः ।
23635 तरच्छूरशिरःपद्मप्रकराच्छादिताम्बरः ॥ १८ ॥
23636
23637 व्योमन्यस्तभुजाहीन्द्रः पूर्णधूलिमयाम्बुदः ।
23638 छिन्नहेतिनरारब्धकेशाकेशिप्रतिक्रियः ॥ १९ ॥
23639
23640 केशेषु केशेषु गृहीत्वा प्रवृत्तं युद्धं केशाकेशि तदेव
23641 हेतिच्छेदनापराधप्रतीकारो यत्र ॥ १९ ॥
23642
23643 नखानखिनिकृत्ताक्षिकर्णनासोष्ठकन्धरः ।
23644 छिन्नायुधमहामल्लहेलोल्लालनलब्धभूः ॥ २० ॥
23645
23646 छिन्नायुधैर्महामल्लानां हेलया तिरस्कारेण उल्लालनेन
23647 उत्कृष्टबाहुयुद्धक्रीडया लब्धा भूर्ययस्थानं यत्र ॥ २० ॥
23648
23649 पतत्समदमातङ्गकम्पितोर्वीलुठद्रयः ।
23650 रणद्रथरयोत्पन्नक्षरद्रक्तसरित्पथः ॥ २१ ॥
23651
23652 मातङ्गेन कम्पितानां अत एव धावितुमशक्त्या उर्व्या लुठतां रयो यत्र ॥ २१
23653 । ।
23654
23655 रजोरचितनीहारः कचत्प्रवहदायुधः ।
23656 एकीकृतघनक्षोभसैन्यसागरगर्जितः ॥ २२ ॥
23657
23658 मत्तहासविलासेन मृत्युना परिचर्वितः ।
23659 गर्विताद्रीन्द्रनागेन्द्रखर्विताम्भोदगर्जितः ॥ २३ ॥
23660

23661 चर्वितो भक्षितः। चर्चितः इति पाठे हिंसितो भर्त्सितो वा। नागेन्द्रैर्गजश्रेष्ठैः
23662 खर्वितानि औन्नत्येन गर्जितेन चाल्पीकृतान्यम्भोदास्तद्गर्जितानि च यत्र ॥ २३ ॥
23663
23664 वृक्षश्वभ्रतटीच्छन्नचक्रशक्त्यृष्टिमुद्गरः।
23665 शरोर्णातन्तुनीरन्ध्रघृष्टियोधाद्रिमेखलः ॥ २४ ॥
23666
23667 वृक्षश्वभ्राद्याश्रयेण प्रहरतां वधाय क्षिप्तास्तत्र
23668 च्छन्नाश्चक्रादयो यत्र। शरलक्षणोर्णातन्तुभिर्नीरन्ध्रधृष्टयो
23669 निरन्तरानुस्यूता नानावर्णा योधलक्षणा अद्रिमेखलाः पर्वतनितम्बा यत्र ॥
23670 २४ ॥
23671
23672 मेघविश्रान्तविच्छिन्नपताकापटचामरः।
23673 यन्त्रपाषाणचक्रौघदूरविद्रुतखेचरः ॥ २५ ॥
23674
23675 मेघानां विश्रान्तैराक्रमणैर्मेघेषु वा विश्रान्तैर्विद्युदादिभिर्विच्छिन्नाः
23676 क्षेपणाख्ययन्त्रनिर्मुक्तपाषाणैश्चक्रौघैश्च दूरं विद्रुताः खेचराः
23677 पक्ष्यादयो यत्र ॥ २५ ॥
23678
23679 मरणव्यग्रकृत्ताङ्गयोधाक्रन्दातिघर्घरः।
23680 कुठाराघातसंघातविदलन्मस्तकव्रजः ॥ २६ ॥
23681
23682 दूरोड्डीनकचत्खड्गखण्डतारकिताम्बरः।
23683 शक्तिनिर्मुक्तशक्त्यौघविभिन्नेभावृतावनिः ॥ २७ ॥
23684
23685 खड्गखण्डैस्तारकितं संजाततारकमिवाम्बरं यत्र। शक्त्या बलेन
23686 निर्मुक्तैः शक्त्यायुधौघैः ॥ २७ ॥
23687
23688 सैन्यव्याकुलवेतालललनोन्मुक्तमुद्गरः [द्धूतमुद्गरः इति
23689 पाठः]।
23690 गगनोत्तम्भितोत्तुङ्गशूरतोमरतोरणः ॥ २८ ॥
23691
23692 गगने उत्तम्भितान्युत्तुङ्गानि शूरतोमराण्येव तोरणस्रगिव यत्र ॥ २८ ॥
23693
23694 भुशुण्डीभग्नखड्गौघखण्डालीव्योमकुन्तलः।
23695 कुन्तवेणुवनन्यस्ततापाम्बरकचच्छविः ॥ २९ ॥
23696
23697 खड्गखण्डालिरेव व्योम्नः कुन्तलाः केशा यत्र। कुन्तसमूहलक्षणे
23698 वेणुवने न्यस्तः क्षिप्तस्तापो दावाग्निरिवाम्बरे कचन्ती छविः कुन्तकान्तिर्यत्र ॥
23699 २९ ॥
23700
23701 खड्गर्ष्टिवृष्टिसंपुष्टराजपूजितसैनिकः।
23702 शूलोत्तम्भितसच्छूरग्रहणोद्यमिताप्सराः ॥ ३० ॥
23703
23704 संपुष्टैः संतोषितैस्तत्स्वामिराजैः ॥ ३० ॥
23705
23706 गदातुषारविगलत्स्फुरिताङ्गददिङ्मुखः।
23707 प्रासप्रसभसंपिष्टकष्टचेष्टतयोत्कटः ॥ ३१ ॥
23708
23709 गदालक्षणैस्तुषारैर्हिमैर्विगलन्ति पद्मानीव स्फुरिताङ्गददिशां भटानां
23710 मुखानि यत्र ॥ ३१ ॥
23711
23712 चक्रक्रकचसंचारच्छिन्नाश्वनरवारणः।

23713 परशुव्रातसंपातपतत्समदवारणः ॥ ३२ ॥
23714
23715 लकुटोल्लोडनोड्डीनप्रोड्डामरचटद्भटः ।
23716 यन्त्रपाषाणसंपातपिष्टकेतुरथद्रुमः ॥ ३३ ॥
23717
23718 तटाकश्च तडागः स्यान्मञ्चको मञ्चकस्तथा । मण्डपो मण्टपश्च
23719 स्याल्लकुटो लगुटोऽपि च ॥ इति द्विरूपोक्तेर्लकुटैर्बृहद्यष्टिभिरुल्लोडनं
23720 गवामिव प्रकालनं तेनोड्डीना इवादर्शनं गताः प्रोड्डामरा
23721 उत्पतनशीलाश्चटन्तो वृक्षकुड्यचर्मादिनात्मानमावृण्वानाश्च भटा
23722 यत्र चटे आवरणे ॥ ३३ ॥
23723
23724 करवालविलूनाग्रच्छत्रपङ्कजपाण्डुरः ।
23725 क्षेपणक्षोभसंक्षीणसैन्यक्षोभोऽप्यलक्षणः ॥ ३४ ॥
23726
23727 पङ्कजैरुत्तंसपद्मैः पाण्डुरः । न लक्षयतीत्यलक्षणः सैन्यक्षोभं न
23728 गणयतीति यावत् ॥ ३४ ॥
23729
23730 कबन्धबन्धसंनेतृपातसंपिष्टपार्श्वगः ।
23731 साङ्कुशाङ्क्तसंख्यस्थवीरवारितवारणः ॥ ३५ ॥
23732
23733 उत्प्लुत्य रथिकान् जीवग्राहं जिघृक्षतामन्तरा शिरश्छेदे कबन्धानां
23734 छिन्नशिरस्कदेहानां बन्धैराश्लेषबन्धनैः सन्नेतृणां
23735 जीवद्रथनायकानां पातेनोत्पथप्रवृत्तरथादिभिः संपिष्टाः पार्श्वगा
23736 यत्र । साङ्कुशानां हस्तिपकानामङ्कुशाघातेनाङ्कितैरपि
23737 संख्यस्थैर्युद्धे प्रहारिभिः शूरैर्वारिता निरस्ता वारणा यत्र ॥ ३५ ॥
23738
23739 प। २११)
23740
23741 परशुव्रातसंपातपतत्समदवारणः ।
23742 पाशापाशिविशेषज्ञवीरातिपरिदेवनः ॥ ३६ ॥
23743
23744 वीराणामतिशयितं परितो देवनं प्राणद्यूतं यत्र ॥ ३६ ॥
23745
23746 क्षुरिकाकुक्षिनिर्भेदगलत्पद्मपतज्जनः ।
23747 त्रिशूलवलनोन्मत्तशूरसंकरनर्ततः ॥ ३७ ॥
23748
23749 पद्मं हृदयपद्मम् । शूरसंकराः शूरबहुला योधास्तेषां नर्ततो
23750 गात्रविक्षेपात् ॥ ३७ ॥
23751
23752 धावद्धानुष्कसंपूर्णकुलकूजितकाकलिः [कृतकूजित इति
23753 पाठः] ।
23754 भिन्दिपालसटाटोपहुंकारारभटीनटः ॥ ३८ ॥
23755
23756 धनुः प्रहरणं येषां ते धानुष्काः । काकलिर्मधुरास्फुटध्वनिः ।
23757 सटाटोपः केसराडम्बरः आरभटीसाहंकारनादः ताभ्यां
23758 नृसिंहवेषनटा इव भटा यत्र ॥ ३८ ॥
23759
23760 वज्रमुष्टिविनिष्पिष्टपिष्टसद्भटसंकटः ।
23761 श्येनवद्व्योमपदवीप्रोत्पतत्पटुपट्टिशः ॥ ३९ ॥
23762
23763 वज्रमुष्टिर्मल्लानां प्रसिद्धा तद्विनिष्पिष्टैः पिष्टा येऽन्ये सद्भटास्तैः
23764 संकटः । प्रोत्पतत्पटुपट्टिश इत्यसमर्थसमासश्छान्दसः ॥ ३९ ॥

अङ्कुशाकृष्टशूरेशरथेभहयकेतनः।
हलाहलिहतालूनहेलाकुलकुलाचलः॥ ४०॥

शूरादिद्वन्द्वगर्भो बहुव्रीहिः। केतनानि पताकाः। हलप्रहरणं युद्धं
हलाहलि तत्र हतालूनानां हेलावहेलनं तत्राकुलाः कुलाचलवदुन्नताः
शत्रुकुले अचला निष्कम्पा वा शूरा यत्र॥ ४०॥

सुतालोत्तालकुद्दालनिखातवनभूतलः।
धनुर्द्विगुणमात्रास्तलूनलोकशिलावलिः॥ ४१॥

सुतालवदुन्नतपुरुषैरुत्तालकुद्दालैरुद्यतखनित्रैः
करणैर्निखातान्युन्मूलितानि समीकृतानि च। धनुःशब्देनेषुप्रक्षेपदेशो
लक्ष्यते। तद्द्विगुणमात्रदेशे युद्धसंचारसौकर्याय अस्ता लूनाश्छिन्ना
लोका जनाः शिलावलयश्च यत्र॥ ४१॥

क्रकचोभयपार्श्वभिच्छिन्नमत्तमतङ्गजः।
संग्रामोलूखलक्षुण्णलोकतण्डुलमौसली॥ ४२॥

अत्रोलूखलादिरूपकोपपादितं मौसलं श्लेषादवघाताभेदेन विवक्षितं
मुसलयुद्धं तदत्रास्तीति मौसली॥ ४२॥

अस्त्राभाशृङ्खलाजालबद्धसेनाविहङ्गमः।
लोलासिवीरनिस्त्रिंशनीतवादिगृहाङ्गणः॥ ४३॥

युद्धे लोलासयो ये वीरास्तदीयनिस्त्रिंशैः खड्गविशेषैः। वादिरत्र
वकारादिनामा वैवस्वतः। अर्थात्स एव व्याधादिपतिरिति कल्प्यते। अन्यथा
बद्धसेनाविहंगमानां तदङ्गणे नीतत्वायोगात्॥ ४३॥

गणशो नीयमानाग्र्यश्वापदारावनिर्भरः।
नखाङ्गुष्ठखनत्पुङ्खप्रेङ्खारणरणारवैः॥ ४४॥

नीयमाना अग्र्याः युद्धनिपतितभटश्रेष्ठा यैस्तथाविधानां
श्वापदानां व्याघ्रवृकादीनाम्। नखप्रधानैरङ्गुष्ठैः खनन्त
उद्ध्रियमाणाः। आरोहति हस्तीतिवत्कर्मव्यापारांशे कर्मणः
स्वातन्त्र्यविवक्षणाच्छतृप्रत्ययः। ये पुङ्खोपलक्षितशरास्तेषां
प्रेङ्खा वेगः॥ ४४॥

मरिचैर्व्यञ्जनानीव रञ्जयन्सकलारवान्।
सैन्यनिक्षिप्तकुम्भाग्निदग्धयोधेरितायुधः [सैनिकक्षिप्त इति
पाठः]।
सैन्यनिक्षिप्तकुम्भाग्निदग्धयोधोज्झितायुधः [ग्निमृतयोधो
जितायुधः मृतयाधेरितायुधः इति पाठौ]॥ ४५॥

रञ्जयन् मिश्रणेन रोचयन्। कुम्भाग्निः प्रसिद्धः॥ ४५॥

सैन्यनिक्षिप्तकुम्भस्ततप्ताङ्गारहतेक्षणः।
सैन्यनिक्षिप्तकुम्भस्थविषवारिदलज्जनः॥ ४६॥

विषवारिभ्रदलन्तो विशीर्णाः॥ ४६॥

नाराचवर्षवरवारिदवीरपूर-

23817 मत्ताभ्रसंभ्रमसनृत्तकबन्धवर्ही।
23818 कल्पान्तकाल इव वेगविवर्तमान-
23819 मातङ्गशैलवलितो रणसंभ्रमोऽभूत्॥ ४७॥
23820
23821 नाराचवर्षलक्षणं वरवारि ददति तथाविधानि वीरपूरलक्षणमत्ताभ्राणि
23822 तेषां संभ्रमेणविलासेन प्रनृत्तः कबन्धलक्षणा बर्हिणो यत्र। वेगेन
23823 विवर्तमानैर्भ्रमद्भिर्मातङ्गलक्षणैः शैलैर्वलितो वेष्टितः॥ ४७॥
23824
23825 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे सेनयोः
23826 प्रथमपातवर्णनं नाम त्रयस्त्रिंशः सर्गः॥ ३३॥
23827
23828 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
23829 प्रथमपातवर्णनं नाम त्रयस्त्रिंशत्तमः सर्गः॥ ३३॥
23830
23831 चतुस्त्रिंशः सर्गः ३४
23832
23833 श्रीवसिष्ठ उवाच।
23834
23835 अथ राज्ञां युयुत्सूनां भटानां मन्त्रिणामपि।
23836 नभसः प्रेक्षकाणां च तत्रेमाः प्रोदगुर्गिरः॥ १॥
23837
23838 वर्ण्यतेऽत्र विशेषेण विचित्रार्थनिबन्धनैः।
23839 रणप्रेक्षकवक्रेण युद्धस्यैव चमत्कृतिः॥ १॥
23840
23841 नभसः सकाशात्प्रेक्षकाणां देवगन्धर्वादीनाम्। प्रोदगुः
23842 प्रादुर्बभूवुः॥ १॥
23843
23844 चलत्पद्मं सर इव वहद्विहगमेव च।
23845 नभः शूरशिरःकीर्णं भाति तारकिताकृति॥ २॥
23846
23847 वहद्विहगमिति नभःसरसोः साधारणं विशेषणम्।
23848 तारकितस्याकृतिरिवाकृतिर्यस्येति विशेषणभेदाद्भेदकल्पनयोपमानता॥ २॥
23849
23850 पश्य रक्तपृषत्पूरसिन्दूरारुणमारुतैः।
23851 सांध्या इव विभान्त्येते मध्याह्नेऽम्बुदभानवः॥ ३॥
23852
23853 रक्तपृषतां रुधिरसीकराणां पूरैर्निकरैः
23854 सिन्दूरेणेवारुणैर्मारुतैर्हेतुभिः। सांध्याः संध्यासंबन्धिनः। अम्बुदा
23855 भानवः सूर्यकराश्च॥ ३॥
23856
23857 प्। २१२)
23858
23859 किमिदं भगवन्व्योम पलालभरितं स्थितम्।
23860 नेदं पलालं वीराणामेते शरभराम्बुदाः॥ ४॥
23861
23862 दूराच्छरोत्करेषु पलालभ्रान्त्या कश्चित्स्वमान्यं पृच्छति - किमिदमिति।
23863 स प्रत्याह - नेदमिति॥ ४॥
23864
23865 यावन्तो भुवि सिच्यन्ते रुधिरै रणरेणवः।
23866 तावन्त्यब्दसहस्राणि भटानामास्पदं दिवि॥ ५॥
23867
23868 मा भैष्ट नैते निस्त्रिंशा नीलत्पलदलत्विषः।

23869 अमी वीरावलोकिन्या लक्ष्म्या नयनविभ्रमाः ‖ ६ ‖
23870
23871 लक्ष्म्याः स्वर्गलक्ष्म्या जयलक्ष्म्या वा ‖ ६ ‖
23872
23873 वीरालिङ्गनलोलानां नितम्बे सुरयोषिताम् ।
23874 मेखलाः शिथिलीकर्तुं प्रवृत्तः कुसुमायुधः ‖ ७ ‖
23875
23876 नभश्चरोक्तिर्वीरेति ‖ ७ ‖
23877
23878 लसद्भुजलतालोला रक्तपल्लवपाणयः ।
23879 मञ्जरीमत्तनयना मध्वामोदसुगन्धयः ‖ ८ ‖
23880
23881 वीरस्य वीरान्तरं प्रत्युक्तिर्लसद्गुजेति द्वाभ्याम् ‖ ८ ‖
23882
23883 गायन्त्यो मधुरालापैर्नन्दनोद्यानदेवताः ।
23884 तवागमनमाशङ्क्य प्रवृत्तः परिनर्तितुम् ‖ ९ ‖
23885
23886 प्रत्यनीकं भिनत्त्यन्तः कुठारैः कठिनैरियम् ।
23887 सेना ग्राम्येव वनिता दयितं दृष्टिचेष्टितैः ‖ १० ‖
23888
23889 दृष्टिचेष्टितैर्दृग्विलासैः ‖ १० ‖
23890
23891 हा पितुर्मम भल्लेन शिरो ज्वलितकुण्डलम् ।
23892 सूर्यस्य निकटं नीतं कालेनेवाष्टमो ग्रहः ‖ ११ ‖
23893
23894 कालेन सूर्योपरागकालेनेव । अष्टमो ग्रहो राहुः ‖ ११ ‖
23895
23896 आपादशृङ्खलाप्रोतभ्रमत्स्थूलोपलद्वयम् ।
23897 भ्रामयंश्चित्रदण्डाख्यं चक्रमूर्ध्वभुजो जवात् ‖ १२ ‖
23898
23899 भीरोर्भीरुं प्रत्युक्तिरापादेति द्वाभ्याम् । आपादलम्बिन्यां
23900 यन्त्रशृङ्खलायां प्रोतं चक्रं चक्रोपलयन्त्रम् ‖ १२ ‖
23901
23902 योधो यम इवाभाति याम्यादायाति दिक्तटात् ।
23903 सर्वतः संहरन्सेनामेहि यामो यथागतम् ‖ १३ ‖
23904
23905 याम्याद्दक्षिणात् । संहरन्निति योधयमयोर्विशेषणम् ‖ १३ ‖
23906
23907 सद्यश्छिन्नशिरःश्वभ्रमज्जत्कङ्ककुलाकुलाः ।
23908 कबन्धाः परिनृत्यन्ति तालोत्ताला रणाङ्गणे ‖ १४ ‖
23909
23910 श्वभ्रेषु कण्ठच्छिद्रेषु मज्जद्भिः कङ्ककुलैराकुलाः ।
23911 तालैर्युद्धवादित्रतालैरुत्ताला उच्छलन्तः ‖ १४ ‖
23912
23913 गीर्वाणगणगोष्ठीषु प्रवृत्ताः संकथा मिथः ।
23914 कदा लोकान्तरं धीराः कथं यास्यन्ति के कुतः ‖ १५ ‖
23915
23916 चतुर्भिः किंवृत्तैः कालप्रकारपुरुषनिमित्तानि पृच्छ्यन्ते ‖ १५ ‖
23917
23918 निगिरत्यागताः सेनाः स्रवन्तीरिव सागरः ।
23919 समत्स्यमकरव्यूहा अहो नु विषमो भटः ‖ १६ ‖
23920

23921 स्रवन्तीर्नदीः । समत्स्यमकरव्यूहा इति स्रवन्तीसेनयोर्विशेषणम् ॥ १६ ॥
23922
23923 कटेषु करिणां कीर्णा धारानाराचराजयः ।
23924 पतिता इव संपूर्णाः शृङ्गसंघेषु वृष्टयः ॥ १७ ॥
23925
23926 गिरिशृङ्गसङ्घेषु पतिताः संपूर्णवृष्टय इव राजन्त इति शेषः ॥ १७ ॥
23927
23928 हा कुन्तेन शिरो नीतं ममेत्येवं विवक्षतः ।
23929 शिरसाऽजीवमित्येवं खे खगेनेव वाशितम् ॥ १८ ॥
23930
23931 शिरश्छेदस्य दुःखताबुद्ध्या तथा विवक्षतश्छिन्नेनोड्डीनेन शिरसा
23932 स्वर्गारोहणोत्सवदर्शनादजीवमहं नतु मृत इति हर्षेण खे यद्भाषितं
23933 तत्खगेन पक्षिणा वाशितमिव जनैः श्रुतमिति शेषः । तिरश्चां कूजितं
23934 वाशितम् ॥ १८ ॥
23935
23936 यन्त्रपाषाणवर्षेण यैषास्मान्परिषिञ्चति ।
23937 सेनानुशृङ्खलाजालवलना क्रियतां बलात् ॥ १९ ॥
23938
23939 या सेना सिञ्चति एषा अनुशृङ्खलाजालेन वलिता वेष्टिता क्रियतामिति सैनिकोक्तिः
23940 ॥ १९ ॥
23941
23942 वलीपलितनिर्मुक्तं पूर्वभार्याप्सराः सती ।
23943 अङ्गीकरोति भर्तारं परिज्ञाय रणे हतम् ॥ २० ॥
23944
23945 पूर्वभार्या प्रागेव मृता अप्सराः सती स्थिता युद्धे मृतं स्वभर्तारं
23946 वलीपलितनिर्मुक्तं देवभूतं परिज्ञायाङ्गीकरोतीति देवोप्क्तिः ॥ २० ॥
23947
23948 आदिवं रचिताकाराः कुन्तकाननकान्तयः ।
23949 वीराणां स्वर्गमारोढुमिव सोपानपङ्क्तयः ॥ २१ ॥
23950
23951 कुन्तायुधानां काननं समूहस्तेषां कान्तय आदिवं स्वर्गपर्यन्तं
23952 रचितवत्प्रसृताः सोपानपङ्क्तय इत्युत्प्रेक्ष्यन्ते ॥ २१ ॥
23953
23954 कान्तकाञ्चनकान्ताङ्गे भटस्योरसि कामिनी ।
23955 दृष्टा देवपुरन्ध्रीयं भर्तुरन्वेषणान्विता ॥ २२ ॥
23956
23957 या भटस्य कामिनी स्वतः काञ्चनैश्च कान्तान्यङ्गानि करचरणादीनि यस्य
23958 तथाविधे भटस्योरसि मृता दृष्टा सेयं देवपुरन्ध्री भूत्वा
23959 भर्तुरन्वेषणान्विता दृश्यत इति शेषः ॥ २२ ॥
23960
23961 हा हतं सैन्यमस्माकं भटरुद्धतमुष्टिभिः ।
23962 महाप्रलयकल्लोलैः सुरशैलस्थलं यथा ॥ २३ ॥
23963
23964 हा हतमिति कातरस्योक्तिः ॥ २३ ॥
23965
23966 युध्यध्वमग्रतो मूढा नयतार्धमृतान्नरान् ।
23967 निजान्पादप्रहारेण मैतान्दारयताधमाः ॥ २४ ॥
23968
23969 निजान्स्वीयान् ॥ २४ ॥
23970
23971 धम्मिल्लवलनाव्यग्रे घनोत्कण्ठेऽप्सरोगणे ।
23972 भटो दिव्यशरीरेण पार्श्वप्राप्तो निरीक्ष्यताम् ॥ २५ ॥

धम्मिल्लवलना केशसंग्रथनम् ॥ २५ ॥

फुल्लहेमारविन्दासु च्छायाशीतजलानिलैः ।
स्वर्गनद्यास्तटीष्वेनं दूरायातं विनोदय ॥ २६ ॥

स्वर्गनद्या गङ्गायाः विनोदय विश्रामयेत्यप्सरःसख्युक्तिः ॥ २६ ॥

विविधायुधसंघट्टखण्डितोग्रास्थिकोटयः ।
खे कवन्त्यः कण्ट्कारैः प्रसृतास्तारका इव ॥ २७ ॥

कोटिशब्दोऽसंख्येयपरः । कणत्कारैः कवन्त्यो रणन्त्यः ॥ २७ ॥

व्योम्नि जीवनदीवाहे वहत्सायकवारिणि ।
चक्रावर्तिनि गच्छन्ति गिरयोऽप्यणुपङ्कताम् ॥ २८ ॥

चक्रैरावर्तिन्यावर्तवति । अणवो रेणवस्तल्लक्षणां पङ्कताम् ।
कल्पितपूरानुरूपः कल्पित एव पङ्कः ॥ २८ ॥

भ्रमद्भिर्ग्रहमार्गेषु शिरोभिर्वीरभूभृताम् ।
आयुधांशुलतानाललग्नासिदलकण्टकैः ॥ २९ ॥

ग्रहमार्गेषु भ्रमद्भिर्वीरभूभृतां शिरोभिर्नभः पद्मसरः
कृतमित्युत्तरेणान्वयः । तदुपपत्तये विशिनष्टि - आयुधांश्वित्यादिना ।
आयुधानामंशवः किरणा एव पद्मलतानालानि तेषु लग्ना असयः दलानि
विदलनसाधनशूलकुन्तादीनि च कण्टका येषाम् ॥ २९ ॥

प। २१३)

केतुपट्टमृणालाङ्गदलैर्लब्धशिलीमुखैः ।
अवहद्वातचलत्पद्मं नभः पद्मसरः कृतम् ॥ ३० ॥

केतुपट्टाः पताकापटास्त एव मृणालस्यावयवभूतपर्णानि येषाम् ।
लब्धाः शिलीमुखाः श्लेषाद्बाणलक्षणभ्रमरा यैः ॥ ३० ॥

मृतमातङ्गसंघाते गिराविव पिपीलिकाः ।
भीरवः परिलीयन्ते [परिहीयन्ते इति पाठः] स्त्रियः पुंवक्षसीव च
॥ ३१ ॥

चकार उपमानद्वयसमुच्चयार्थः ॥ ३१ ॥

अपूर्वोत्तमसौन्दर्यकान्तसंगमशंसिनः ।
वान्ति विद्याधरस्त्रीणामलकोल्लासिनोऽनिलाः ॥ ३२ ॥

गृहादागच्छन्तीनामलकोल्लासितयानुकूलत्वेन
शकुनरूपत्वान्मनोरथसिद्धिशंसिन इति भावः ॥ ३२ ॥

छत्रेषूड्डियमानेषु स्थितेषु व्योम्नि चन्द्रता ।
इन्दुनेव यशोमूर्त्या कृता शुभ्रातपत्रता ॥ ३३ ॥

इवकारः पूर्वत्रापि संबध्यते । तेन च्छत्रेषु व्योम्नि स्थितेषु तैश्चन्द्रता
कृतेव । यशोमूर्त्या इन्दुना भुवि शुभ्रातपत्रता कृतेवेत्युप्रेक्षाद्वयं

लभ्यते ॥ ३३ ॥

भटो मरणमूर्च्छान्ते निमेषेणामरं वपुः ।
स्वकर्मशिल्पिरचितं प्राप्तः स्वप्नपुरं यथा ॥ ३४ ॥

शूलशक्त्यृष्टिचक्राणां वृष्टयो मुक्ततुष्टयः ।
व्योमाब्धौ मत्स्यमकरसंकुलावयवाः स्थिताः ॥ ३५ ॥

मुक्ततुष्टयः असंतोषशीला इव व्यग्रा मत्स्यमकररूपाः [शेफा इति
पाठः] संकुलावयवा इव स्थिताः ।
अब्धिस्थमत्स्यादीनामब्ध्यवयवत्वं काल्पनिकम् ॥ ३५ ॥

शरोत्कृत्तसितच्छत्रकलहंसैर्नभःस्थलम् ।
भाति संचितपूर्णेन्दुबिम्बलक्षैरिवावृतम् ॥ ३६ ॥

क्रियते गगनोड्डीनैश्चामरैश्चारुघर्घरैः ।
वातावधूतसंरोधतरङ्गनिकरद्युतिः ॥ ३७ ॥

वातेनावधूतः संरोधः स्थैर्यं येषां तरङ्गाणाम् ॥ ३७ ॥

दृश्यन्ते हेतिदलिताश्छत्रचामरकेतवः ।
आकाशक्षेत्रविक्षिप्ता यशःशालिलता इव ॥ ३८ ॥

वहद्भिर्व्योम्नि सक्षेम पश्य नीता क्षयं शरैः ।
शक्तिवृष्टिरुपायान्ती सस्यश्रीः शलभैरिव ॥ ३९ ॥

सक्षेमेति श्रोतृसंबोधनम् । उपायान्ती समुपसर्पन्ती आसन्नफला च ॥ ३९ ॥

एषा प्रसृतदोर्दण्डभटखड्गच्छटात्कृतिः ।
कठिनात्कंकटाज्जाता मृत्योरेवोग्रहुंकृतिः ॥ ४० ॥

छटात्कृतिरिति खड्गपातध्वन्यनुकरणम् । सैव
मृत्योर्हुंकृतिरित्युत्प्रेक्षा ॥ ४० ॥

हेतिकल्पानिलक्षुण्णा दन्तनिर्झरवारयः ।
जनताक्षयकालेऽस्मिन्भग्ना नागा नगा इव ॥ ४१ ॥

हेतयः खड्गाद्यायुधान्येव कल्पानिलास्तैः क्षुण्णाः । दन्ता एव
निर्झरवारीणि शुभ्रत्वबहिर्निःसृतत्वसाम्याद्येषां ते । नागा गजा नगा
गिरय इव ॥ ४१ ॥

सचक्रनाथसूताश्वं व्यूढं रक्तमहाह्रदे ।
हाहाभिभूतगतिकं [महाभिभूत इति पाठः] चेष्टते
रथपत्तनम् ॥ ४२ ॥

व्यूढं संनद्धम् । रक्तमहाह्रदे अभिभूता
चक्रविष्टम्भात्तिरोभूतागतिर्यस्य तथाभूतं सच्चेष्टते स्पन्दते । हाहेति खेदे
॥ ४२ ॥

करकंकटकुट्यङ्कखड्गसंघट्टटांकृतैः ।
कालरात्र्या प्रनृत्यन्त्या रणवीणेव वाद्यते ॥ ४३ ॥

24077 वीरहस्त्यादिकराः कंकटानि च कुट्यङ्कास्तन्त्रीपदानि तेषु
24078 खड्गसंघट्टकृतैष्टाकृतैर्वादनशब्दैः ॥ ४३ ॥
24079
24080 नरेभखरवाजिभ्यो ये च्युता रक्तनिर्झराः ।
24081 पश्य तद्बिन्दुसिक्तेन वायुनारुणिता दिशः ॥ ४४ ॥
24082
24083 शस्त्रांशुजलदे व्योम्नि कालीचिकुरमेचके ।
24084 शरकोरकभारस्रङ्मेघे विद्युदिवोदिता ॥ ४५ ॥
24085
24086 चिकुराः केशा इव मेचके श्यामे । शरा एव कोरकाः कलिकास्तेषां भारः
24087 प्रचयस्तल्लक्षणा स्रक् । जलदे इति जातिशब्दः । मेघे मिह सेचने तत्प्रधाने इति
24088 तद्विशेषणम् ॥ ४५ ॥
24089
24090 अनन्तरक्तसंसक्तसन्नावनितलायुधैः ।
24091 भुवनं भात्यभिज्वालमग्निलोक इवाकुलम् ॥ ४६ ॥
24092
24093 अनन्तैः रक्तसंसक्तैः सन्नैर्विशीर्णैरवनितलैरायुधैश्च आकुलं भुवनं
24094 अग्नेर्लोक इव भातीति शेषः । अग्निशोक इव इति पाठे अग्निप्रयुक्ते
24095 नगरादिदाहशोके आकुलमिवेति व्याख्येयम् ॥ ४६ ॥
24096
24097 भुशुण्डीशक्तिशूलासिमुसलप्रासवृष्टयः ।
24098 अन्योन्यच्छेदभेदाभ्यां करप्रकरतोऽपतन् ॥ ४७ ॥
24099
24100 अक्षोभैकप्रहरणाद्यातुधान्योऽन्यचेष्टितम् ।
24101 संरम्भावेक्षणप्रज्ञं रणं स्वप्नमिव स्थितम् ॥ ४८ ॥
24102
24103 अक्षोभेषु संचलितुमसमर्थेष्वनकेष्वेकेन शूरतमेन स्वलाघवातिशयेन
24104 प्रहरणात् । यातुधानानां रक्षसां माया यातुधानी तया उन्यं उन्नेयं
24105 उपमेयं शूरचेष्टितं यत्र । नयतेष्टिलोपश्छान्दसः । संरम्भेण
24106 क्रोधेनावेक्ष्यते यया सा संरम्भावेक्षणि तथाविधा प्रज्ञा
24107 योद्धृबुद्धिर्यत्र । स्वप्नपक्षे अक्षोभेषु
24108 विनाशानुकूलच्छेदभेदादिसंचलनशून्येषु स्वाप्नपदार्थेष्वेकेन
24109 जागरमात्रेण प्रहरणाद्बाधाद्यातुधानमायोपमेयमिथ्याचेष्टितम् ।
24110 संरम्भेण आवेशेनावेक्षणी प्रज्ञा स्वयंज्योतिरात्मप्रज्ञा यत्र ।
24111 स्वप्नमिव स्थितं रणं पुरःस्थितं स्वप्नमिव पश्यामीति शेषः ॥ ४८ ॥
24112
24113 अनन्यशब्दाविरतहताहतिरणज्झणैः ।
24114 गायतीव क्षतक्षोभमुदितो रणभैरवः ॥ ४९ ॥
24115
24116 अविरतं निरन्तरं या हताहतिरन्योन्यप्रहारस्तदुद्भवै
24117 रणज्झणैर्ध्वनिविशेषैः ॥ ४९ ॥
24118
24119 अन्योन्यरणहेत्युग्रचूर्णपूर्णो रणार्णवः ।
24120 वालुकामय एवाभूच्छिन्नच्छत्रतरङ्गकः ॥ ५० ॥
24121
24122 वालुकामयः सैकतप्रचुरः ॥ ५० ॥
24123
24124 सरभसरसवद्विसारितूर्य-
24125 प्रतिरवपूरितलोकपाललोकः ।
24126 रणगिरिरयमुग्रपक्षदक्ष- [रवमुग्र इति पाठः]
24127 प्रतिसृतिवृत्त इवाम्बरे युगान्ते ॥ ५१ ॥
24128

24129 सरभसं रसवद्भिर्मधुरैर्विसारिभिः प्रसृमरैस्तूर्याणां वाद्यानां
24130 प्रतिरवैः प्रतिध्वनिभिः पूरिता लोकपालानां दिक्पतीनां लोका येन।
24131 तूर्यरवैरुड्डयनोद्योगेन गर्जन्निवेति यावत्। अयं दृश्यमानो रणलक्षणो
24132 रणसंनिहितो वा गिरिः पर्वतो युगान्ते अम्बरे नभसि उग्रयोर्युद्धकर्कशयोः
24133 सैन्यद्वयलक्षणयोः पक्षयोर्दक्षया समर्थया प्रतिसृत्या
24134 परस्परप्रतिकूलचलनेन वृत्त उड्डयने प्रवृत्त इवावभतीत्यर्थः॥ ५१॥
24135
24136 प। २१४)
24137
24138 हा हा धिक्प्रविकटकङ्कटाननोद्य-
24139 त्प्रोड्डीनप्रकटतडिच्छटाप्रतप्ताः।
24140 क्रेङ्कारस्फुरितगुणेरिता रणन्तो
24141 नाराचाः शिखरिशिलागणं वहन्ति॥ ५२॥
24142
24143 समर्थानपि कठनकङ्कटेषु मोघान्स्वशराननुशोचन्तो वीरा आहुर्हाहेति।
24144 प्रविकटानतिकठिनान्कङ्कटान् अनोद्याभित्त्वैव तदभिघातप्रोड्डीनाभिः
24145 प्रकटतडिच्छटासदृशीभिर्ज्वालाभिः प्रतप्तानाराचाः शराः शिखरिणः
24146 सन्निहितपर्वतस्य शिलागणं छित्त्वा वहन्ति। हाहेति खेदे। अभिमतकार्ये
24147 प्रेरितस्य तदकृत्वा अनभिमतमहाकार्यकारिणोऽपि धिक्कार्यतैवेति भावः।
24148 अरणीतः इति पाठे स्फुरितगुणं यद्धनुस्तल्लक्षणाया ईरितायाः
24149 कर्षणोन्मथिताया अरणीतः अरण्याः सकाशात् नाराचाः शराग्नय इति
24150 व्याख्येयम्॥ ५२॥
24151
24152 छिन्नेच्छाच्छमिति न यावदङ्गभङ्गं
24153 कुर्वन्तो ज्वलदनलोज्ज्वलाः पृषत्काः।
24154 तावद्राग्द्रुतमित एहि मित्र यामो
24155 यामोऽयं प्रवहति वासरश्चतुर्थः॥ ५३॥
24156
24157 अथ युद्धश्रान्तस्य तादृशं कंचित्प्रत्युक्तिः। हे छिन्नेच्छ
24158 श्रमविच्छिन्ना युद्धेच्छा यस्य तथाविध हे मित्र अच्छं स्वच्छं निर्दोषं
24159 इति वक्ष्यामाणं हितं शृण्विति शेषः। ज्वलदनलोज्ज्वलाः पृषत्का बाणा
24160 अस्माकमङ्गानां हस्तपादादीनां भङ्गं विच्छेदं कुर्वन्तो यावन्न
24161 भवन्ति तावदेव द्राक् शीघ्रमेव द्रुतं पलायितं यथा स्यात्तथा इति यामः
24162 अपगच्छामः। यतोऽयं चतुर्थो यामः प्रहरः यामो यमसंबन्धी वासरः।
24163 नियताशनदिनमिव जनक्षयाय प्रवहति। परिवर्तत इत्यर्थः।
24164 छिन्नेच्छाछ्रं इति पाठे तु छिन्नवर्मादौ छाछ्रं इति शब्देन
24165 नाङ्गभङ्गं कुर्वन्त इति योज्यम्॥ ५३॥
24166
24167 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलोपाख्याने
24168 रणप्रेक्षकजनोक्तिवर्णनं नाम चतुस्त्रिंशः सर्गः॥ ३४॥
24169
24170 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
24171 रणप्रेक्षकजनोक्तिवर्णनं नाम चतुस्त्रिंशः सर्गः॥ ३४॥
24172
24173
24174 पञ्चत्रिंशः सर्गः ३५
24175
24176 श्रीवसिष्ठ उवाच।
24177
24178 अथ प्रोड्डयनोद्युक्ततुरङ्गमतरङ्गकः।
24179 उत्ताण्डव इवोन्मत्तो बभूव स रणार्णवः॥ १॥
24180

24181 समुद्रवनकल्पान्तनानारूपकविस्तरैः |
24182 संग्रामश्चतुरङ्गाणां विस्तरेणात्र वर्ण्यते || १ ||
24183
24184 तत्रादौ त्रयोदशश्लोकैरर्णवात्मना निरूपयिष्यन्नाह - अथेत्यादिना || १ ||
24185
24186 छत्रडिण्डीरविश्रान्तसितेषुशफरोत्करः |
24187 अश्वसैन्योल्लसल्लोलकल्लोलाकुलकोटरः || २ ||
24188
24189 डिण्डीरेषु फेनकूटेषु विश्रान्ताः सिता इषवः शफराः
24190 क्षुद्रमत्स्यजातिभेदाः अश्वसादिसैन्यान्येवोच्छलनशीलत्वात्कल्लोलाः || २ ||
24191
24192 नानायुधनदीनीतसैन्यावर्तविवृत्तिमान् |
24193 मत्तहस्तिघटापीठचलाचलकुलाचलः || ३ ||
24194
24195 विवृत्तिर्भ्रमणं तद्वान् | घटा समूहस्तल्लक्षणा
24196 आपीठमामूलाच्चलाचलाश्चञ्चलाः कुलाचला मन्दरादयो यत्र | बलाबल इति
24197 पाठे बलाबलपरीक्षार्थं युध्यन्तः कुलाचला इवेति क्लेशेन योज्यम् || ३ ||
24198
24199 कचच्चक्रशतावर्तवृत्तिभ्रान्तशिरस्तृणः |
24200 धूलीजलधरापीतभ्रमत्खड्गप्रभाजलः || ४ ||
24201
24202 आवर्तानां वृत्तिः परिभ्रमस्तेन भ्रान्तानि तच्छिन्नशिरस्तृणानि यत्र |
24203 खड्गप्रभाणां धूलिभिराच्छादनं पानत्वेन कल्प्यते || ४ ||
24204
24205 मकरव्यूहविस्तारभग्नाभग्नभटौघनौ |
24206 महागुडुगुडावर्तप्रतिश्रुद्घनकन्दरः || ५ ||
24207
24208 सेनापक्षे मकराकारस्य व्यूहस्य सेनासंनिवेशस्य | प्रतिश्रुतः
24209 प्रतिध्वनन्त्यो घनानां मेघानां कन्दराश्छिद्राणि घनाः कन्दराः
24210 पर्वतगुहा वा यत्र || ५ ||
24211
24212 मीनव्यूहविनिष्क्रान्तशरबीजौघसर्षपः |
24213 हेतिवीचीवरालूनपताकावीचिमण्डलः || ६ ||
24214
24215 मीनाः प्रमीणा मृतजनास्तद्व्यूहेभ्यो विभिद्य निष्क्रान्ताः शरा एव क्षेत्रे
24216 फलिताः बीजौघशिम्बीशिरस्काः सर्षपा इव यत्र | अर्णवपक्षे मीनानां
24217 मत्स्यानां व्यूहेभ्यो निष्क्रान्ताः प्रसूताः काशबीजौघा इव शुभ्रा
24218 अण्डसर्षपा यत्र | वीचीवरैः प्रबलवीचिभिः || ६ ||
24219
24220 शस्त्रवारिकृताम्भोदसदृशावर्तकुण्डलः |
24221 संरम्भघनसंचारसेनातिमितिमिङ्गिलः || ७ ||
24222
24223 अम्भोदसदृशा मेघवदस्थिरा आवर्ता एव कुण्डलानीव यस्य | संरम्भः
24224 क्रोधस्तेन घनसंचारा सेनैव तिमयस्तिमिङ्गिलाश्च महामत्स्यजातिभेदा
24225 यत्र || ७ ||
24226
24227 कृष्णायसपरिधानवलत्सेनाम्बुभीषणः |
24228 कबन्धावर्तलेखान्तर्बद्धसैन्यादिभूषणः || ८ ||
24229
24230 कृष्णायसमयः सारस्तन्मयानि परीधानानि कवचानि यस्य तथाविधेन
24231 वलता परिवर्तमानेन सैन्याम्बुना | कबन्धं जलममूर्धकायश्च
24232 तदावतरिखाया अन्तर्मध्ये बद्धानि निविष्टानि सैन्यादीनां भूषणानि यत्र |

समुद्रपक्षे सैन्यान्यदन्ति भक्षयन्तीति सैन्यादीनि रक्षांसि तान्येव
भूषणानीव यस्य ॥ ८ ॥

प्। २१५)

शरसीकरनीहारसान्धकारककुब्गणः ।
निर्घोषाशोषिताशेषशब्दैकघनभुंघुमः ॥ ९ ॥

निर्घोषेण आशोषिता इवासंवेद्याः कृता अशेषशब्दा येन । अत
एवैकघनघुंघुमः ॥ ९ ॥

पतनोत्पतनव्यग्रशिरःशकलसीकरः ।
आवर्तचक्रव्यूहेषु प्रभ्रमद्भटकाष्ठकः ॥ १० ॥

कष्टटाङ्कारकोदण्डकुण्डलोन्मथनोद्भटः ।
अशङ्कमेव पातालादिवोद्यत्सैनिकोर्मिमान् ॥ ११ ॥

कोदण्डान्येव कुण्डलानि सर्पशरीराणि तेषामुन्मथने च्छेदने ॥ ११ ॥

गमागमपरानन्तपताकाच्छत्रफेनिलः ।
वहद्रक्तनदीरंहःप्रोह्यमानरथद्रुमः ॥ १२ ॥

गजप्रतिमसंपन्नमहारुधिरबुद्बुदः ।
सैन्यप्रवाहविचलद्धयहस्तिजलेचरः ॥ १३ ॥

हयहस्तिन एव जलेचरा यादांसि यत्र ॥ १३ ॥

ससंग्रामोऽम्बरग्राम इवाश्चर्यकरो नृणाम् ।
अभूत्प्रलयभूकम्पकम्पिताचलचञ्चलः ॥ १४ ॥

अम्बरग्रामो गन्धर्वनगरम् । सांप्रतं तमेव समरं कल्पान्तत्वेन
वर्णयति - अभूदित्यादिना ॥ १४ ॥

तरत्तरङ्गविहगः पतत्करिघटातटः ।
त्रस्तभीरुमृगानीकस्फूर्जद्घुरुघुरारवः ॥ १५ ॥

तरत्तरङ्गा इव विहगा यत्र ॥ १५ ॥

सरच्छरालीशलभशतभङ्गुरसैनिकः ।
तरत्तुरङ्गशरभः शरभारवनावनिः ॥ १६ ॥

तुरङ्गा एव शरभा यत्र । शराणां भाराः शरान् बिभ्रति ये ते वा
वनावनिर्वनभूमिर्यत्र ॥ १६ ॥

चलद्द्विरेफनिर्ह्रादो [जलद्विरेफ इति पाठः] रसत्तूर्यगुहागुरुः
।
चिरात्स सैन्यजलदो लुठद्भटमृगाधिपः ॥ १७ ॥

चिरादित्यस्योत्तरत्राभूदित्यनेनान्वयः
[विंशतितमश्लोकगतेनेत्यर्थः] । ससैन्या गजादयो जलदा इव यत्र ॥ १७
। ।

24285 प्रसरद्धूलिजलदो विगलत्सैन्यसानुमान् |
24286 पतद्रथवराढ्याङ्गः प्रतपत्खड्गमण्डलः || १८ ||
24287
24288 पतन्ति रथवराढ्यानां महारथानामङ्गानि यत्र | खड्गा मृगविशेषा
24289 निस्त्रिंशाश्च || १८ ||
24290
24291 प्रोत्पतत्पदपुष्पौघः पताकाच्छत्रवारिदः |
24292 वहद्रक्तनदीपूरपतत्सारावचारणः || १९ ||
24293
24294 पदान्यङ्घ्र्यङ्का एव पुष्पौघाः || १९ ||
24295
24296 सोऽभूत्समरकल्पान्तो जगत्कवलनाकुलः |
24297 पर्यस्तसध्वजच्छत्रपताकारथपत्तनः || २० ||
24298
24299 पतद्विमलहेत्यौघभूरिभास्वरभास्करः |
24300 कठिनप्राणसंतापतापिताखिलमानसः || २१ ||
24301
24302 कठिनेन प्राणसंतापेन || २१ ||
24303
24304 कोदण्डपुष्करावर्तशरधारानिरन्तरः |
24305 वहत्खड्गशिलालेखाविद्युद्वलयिताम्बरः || २२ ||
24306
24307 कोदण्डा धनूंषि तल्लक्षणानां पुष्करावर्ताख्यप्रलयाम्बुदानां
24308 खड्गानां शिलालेखाः शिलासंस्कृतधारा एव विद्युतः || २२ ||
24309
24310 उच्छिन्नरक्तजलधिपतितेभकुलाचलः |
24311 नभोविकीर्णनिपतद्युत्तारकणतारकः || २३ ||
24312
24313 नभसि विकीर्णाः प्रसृताः निपतद्भिश्च युवन्ति मिश्रीभवन्ति अत एव ताराः
24314 स्थूला ये रुधिरकणास्त एव तारका इव यत्र || २३ ||
24315
24316 चक्रकुल्याम्बुदावर्तपूर्णव्योमशिराम्बुदः |
24317 अस्त्रकल्पाग्निनिर्दग्धसैन्यलोकान्तरक्रमः || २४ ||
24318
24319 चक्रकुल्याभिश्चक्रपरम्परासरिद्भिरम्बुदप्रदेशे भ्रमणे
24320 तदावर्तप्रायाभिः पूर्णा व्योमशिरा नभोनाड्योऽम्बुदाश्च यत्र |
24321 लोकान्तरक्रमः परलोकाक्रमणम् || २४ ||
24322
24323 हेतिवर्षाशनिच्छन्नभूतलामलभूधरः |
24324 गजराजगिरिव्रातपातपिष्टजनव्रजः || २५ ||
24325
24326 शरधाराघनानीकमेघच्छन्नमहीनभाः |
24327 महानीकार्णवक्षोभसंघट्टघटिताद्रवः || २६ ||
24328
24329 शरधाराभिर्घनैर्निबिडैरनीकमेघैः || २६ ||
24330
24331 व्याप्त उग्रानिलोद्धूतैर्जलव्यालैरिवाचलः |
24332 अन्योन्यदलनव्यग्रैः शस्त्रोत्पात इवोत्थितैः || २७ ||
24333
24334 जलव्यालैर्लडुण्डुभैः | अचलः अर्थात्समुद्रान्तर्गत इति लभ्यते | अन्योन्यदलने
24335 व्यग्रैः शस्त्रैरिति शेषः | शस्त्रवर्षिणि संवर्तोत्पाते उत्थितैरिवेत्युत्प्रेक्षा || २७
24336 | |

24337
24338 शूलासिचक्रशरशक्तिगदाभुशुण्डी-
24339 प्रासादयो विदलनेन मिथो ध्वनन्तः ।
24340 दीप्ता अधुर्दशदिशः शतशो भ्रमन्तः
24341 कल्पान्तवातपरिवृत्तपदार्थलीलाम् ॥ २८ ॥
24342
24343 दीप्ताः शूलादयो मिथो विदलनेन ध्वनन्तो दिशो भ्रमन्तः सन्तः
24344 कल्पान्तवातेन परिवृत्तानां भ्राम्यमाणानां शिलावृक्षशस्त्रादीनां
24345 पदार्थानां लीलां विलासं अधुः । अधारयन्नित्यर्थः ॥ २८ ॥
24346
24347 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे
24348 रणवर्णनं नाम पञ्चत्रिंशः सर्गः ॥ ३५ ॥
24349
24350 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे रणवर्णनं
24351 नाम पञ्चत्रिंशः सर्गः ॥ ३५ ॥
24352
24353
24354 प्। २१६)
24355
24356 षट्त्रिंशः सर्गः ३६
24357
24358 श्रीवसिष्ठ उवाच ।
24359
24360 अथ शृङ्गोपमानेषु स्थितेषु शरराशिषु ।
24361 सर्वभीरुषु भग्नेषु विद्रुतेषु दिशो दश ॥ १ ॥
24362
24363 समायुधद्वन्द्वयुद्धं सहायाश्चात्र वर्णिताः ।
24364 प्राच्यादिभिर्जनपदैः समं जनपदेश्वराः ॥ १ ॥
24365
24366 मातङ्गशवशैलेषु स्थितेषु शरराशिषु शृङ्गोपमानेषु सत्स्विति परेण
24367 सहान्वयः ॥ १ ॥
24368
24369 मातङ्गशवशैलेषु विश्रान्ताम्बुदपङ्क्तिषु ।
24370 यक्षरक्षःपिशाचेषु क्रीडत्सु रुधिरार्णवे ॥ २ ॥
24371
24372 महतां धर्मनिष्ठानां शीलौजःसत्त्वशालिनाम् ।
24373 शुद्धानां कुलपद्मानां वीराणामनिवर्तिनाम् ॥ ३ ॥
24374
24375 शीलं सुचारित्र्यम् । सत्त्वं बलम् । कुलपद्मानां स्वकुलं
24376 पद्मवत्स्वयशःसौरभैः सुरभीकुर्वाणानामित्यर्थः ॥ ३ ॥
24377
24378 द्वन्द्वयुद्धानि जातानि मेघानामिव गर्जताम् ।
24379 मिथोनिगरणोत्कानि मिलन्त्यापगपूरवत् ॥ ४ ॥
24380
24381 मिथोऽन्योन्ययुद्धतो निगरणं ग्रसनं तत्रोत्कान्युत्कण्ठितानीवेति
24382 द्वन्द्वयुद्धविशेषणम् । मिलन्ति वीरा इति शेषः ॥ ४ ॥
24383
24384 पञ्जरः पञ्जरेणेव गजौघेन गजोच्चयः ।
24385 सवनः सवनेनाद्रिरद्रिणेवामिलद्बलात् ॥ ५ ॥
24386
24387 वनेन सह वर्तमानः सवनोऽद्रिस्तद्दशेनाद्रिणेव ॥ ५ ॥
24388

24389 अश्वौघो मिलदश्वानां वृन्देनाराविरंहसा।
24390 तरङ्गौघेन घोषेण तरङ्गौघ इवार्णवे॥ ६॥
24391
24392 नरानीकं नरानीकः समायुधमयोधयत्।
24393 वेण्वोघमिव वेण्वोघो मरुल्लोलो मरुद्वलम्॥ ७॥
24394
24395 मरुता वलति चलतीति मरुद्वलस्तम्॥ ७॥
24396
24397 रथौघश्च रथौघेन निष्पिपेषाखिलं वपुः।
24398 नगरं नगरेणेव दैवेनोड्डीनमासुरम्॥ ८॥
24399
24400 वपुः परस्परसंस्थानम्॥ ८॥
24401
24402 सरच्छरभरासाररचितापूर्ववारिदम्।
24403 युयुधे स्थगिताकाशा धनुर्धरपताकिनी॥ ९॥
24404
24405 रचितः संपादितः अपूर्वोऽभिनवो वारिदो यस्मिन्कर्मणि यथा युयुधे।
24406 स्थगिताकाशा आच्छादिताकाशा॥ ९॥
24407
24408 विषमायुधयुद्धेषु योद्धारः पेलवाशयाः।
24409 यदा युक्त्या पलायन्ते रणकल्पानले तदा॥ १०॥
24410
24411 पेलवाशया भीरुचित्ताः॥ १०॥
24412
24413 मिलिताश्चक्रिणश्चक्रैर्धनुधरैर्धनुर्धराः।
24414 खड्गिभिः खड्गयोद्धारो भुशुण्डीभिर्भुशुण्डयः॥ ११॥
24415
24416 अत्र प्रकरणे तृतीयान्तायुधनामभिः सर्वत्र तद्धारिणो लक्ष्यन्ते।
24417 भुशुण्डीशब्देन भुशुण्डीधरा लक्षणयोच्यन्ते॥ ११॥
24418
24419 मुसलैर्मुसलोदाराः कुन्तिनः कुन्तिधारिभिः।
24420 ऋष्ट्यायुधा ऋष्टिधरैः प्रासिभिः प्रासपाणयः॥ १२॥
24421
24422 समुद्गरा मुद्गरिभिः सगदैर्विलसद्गदाः।
24423 शाक्तिकैः शक्तियोद्धारः शूलैः शूलविशारदाः॥ १३॥
24424
24425 प्रासासनविदः प्रासैः परशूक्ताः परश्वधैः।
24426 लकुटोद्यैर्लकुटिनश्चोपलैरुपलायुधाः॥ १४॥
24427
24428 प्रासानामसनं क्षेपणं तद्विदः। परशुभिरुक्ताः। विख्याता इति यावत्।
24429 लकुटा वेणुदण्डा उद्या उद्यता येषां ते लकुटोद्यास्तैः॥ १४॥
24430
24431 पाशिभिः पाशधारिण्यः शङ्कुभिः शङ्कुधारिणः।
24432 क्षुरिकाभिस्तु क्षुरिका भिन्दिपालैश्च तद्गताः॥ १५॥
24433
24434 पाशधारिण्यः सेनाः। शङ्कुक्षुरिके क्षुद्रायुधविशेषौ।
24435 तद्गतास्तत्संगताः॥ १५॥
24436
24437 वज्रमुष्टिधरा वज्रैरङ्कुशैरङ्कुशोद्धताः।
24438 हलैर्हलनिकाषज्ञास्त्रिशूलैश्च त्रिशूलिनः॥ १६॥
24439
24440 वज्रैर्मुष्टिगतैः वज्रमुष्टिभिरिति यावत्। वज्रमुष्टिशब्देन मल्लानां

24441 सलोहकीला मुष्टिबन्धा उच्यन्ते। निकाषो निघर्षः॥ १६॥
24442
24443 शृङ्खलाजालिनि जालैः शृङ्खलैरलिकोमलैः।
24444 क्षुभिताकल्पविक्षुब्धसागरोर्मिघटा इव॥ १७॥
24445
24446 शृङ्खलाजालमिति कङ्कटजातिभेदस्तद्वन्तः सादिनः शृङ्खलाजालिनः।
24447 कोमलशब्दः स्निग्धश्यामपरः। मिलिता इति सर्वत्रानुषङ्गः। दृष्टान्तोऽपि
24448 प्राक्तनसर्वसाधारणः॥ १७॥
24449
24450 क्षुब्धचक्रदलावर्तः शरसीकरमारुतः।
24451 प्रभ्रमद्धेतिमकरो व्योमैकार्णव आबभौ॥ १८॥
24452
24453 क्षुब्धानि भ्रमन्ति दलानीव चक्राणि चक्रदलानि तान्यावर्ता यस्मिन्॥ १८॥
24454
24455 उत्फुल्लायुधकल्लोलशिराकुलजलेचरः।
24456 रोदोरन्ध्रसमुद्रोऽसौ बभूवामरदुस्तरः॥ १९॥
24457
24458 उत्फुल्ला आयुधलक्षणाः कल्लोलशिरास्तरङ्गनाड्यः। रोदस्योर्द्यावापृथिव्यो
24459 रन्ध्रमन्तरालं स एव समुद्रः। अमरैर्जीविद्भिर्दुस्तरः॥ १९॥
24460
24461 दिव्याष्टकजनानीकं पक्षद्वयतया तया।
24462 अर्धानार्धेन कुपितं भूपालाभ्यां तथा स्थितम्॥ २०॥
24463
24464 विद्या बुद्धिर्बलं शौर्यमस्त्राण्यश्वा रथो धनुरिति प्रसिद्धं
24465 दिव्यमप्रतिहतमष्टकं यस्य तथाविधं योधनानीकं तया प्रागुक्तया
24466 द्वन्द्वशो मिलितया पक्षद्वयतया सैन्यद्वयेऽप्यर्धेनार्धेन कुपितं स्थितम्।
24467 तत्कुतः। यतो भूपालाभ्यां सिन्धुराजविदूरथाभ्यां तथा तदनुकूलतया
24468 स्थितमित्यर्थः। अथवा यक्षा रक्षांसि पिशाचा असुरा इत्येकतो देवा गन्धर्वाः
24469 किन्नरा विद्याधरा इत्येकत इति दिव्याष्टकजनानीकं तया
24470 भाविजयपराजयानुसारिण्या पक्षद्वयतया सैन्यस्यार्धेनार्धेन कुपितं
24471 स्थितं यतो भूपालाभ्यामपि तथा तदनुरूपादृष्टशालितया स्थितमित्यर्थः
24472 ॥ २०॥
24473
24474 मध्यदेशादिसंख्याने प्राग्दिभ्योऽभ्यागतानिमान्।
24475 लीलानाथस्य पद्मस्य पक्षे जनपदाञ्छृणु॥ २१॥
24476
24477 इदानीं पद्मसिन्धुराजयोः सहायभूतान् जनान्
24478 प्राच्यादिदिग्भेदतत्तद्देशभेदैः क्रमेण वर्णयितुं वसिष्ठः प्रतिजानीते ##-
24479
24480 प्। २१७)
24481
24482 पूर्वस्यां कोसलाः काशिमागधा मिथिलोत्कलाः।
24483 मेखलाः कर्करा मुद्रास्तथा संग्रामशौण्डकाः॥ २२॥
24484
24485 देशनामानि स्पष्टानि। मार्कण्डेयादिपुराणोक्तदेशनाम्नामत्रत्यानां च
24486 क्वचिद्यद्यपि वैलक्षण्यं व्यत्यासश्च दृश्यते तथापि
24487 ब्रह्माण्डान्तरत्वान्न दोषः। प्राच्यां देशाः २४ पर्वताः ७॥ २२॥
24488
24489 मुख्या हिमा रुद्रमुख्यास्ताम्रलिप्तास्तथैव च।
24490 प्राग्ज्योतिषा वाजिमुखा अम्बष्ठाः पुरुषादकाः॥ २३॥
24491
24492 वर्णकोष्ठाः सविश्वोत्रा आममीनाशनास्तथा।

24493 व्याघ्रवक्राः किराताश्च सौवीरा एकपादकाः ॥ २४ ॥
24494
24495 माल्यवान्नाम शैलोऽत्र शिबिराञ्जन एव च ।
24496 वृषलध्वजपद्माद्यास्तथोदयकरो गिरिः ॥ २५ ॥
24497
24498 अथ प्राग्दक्षिणायां तु इमे विन्ध्यादिवासिनः ।
24499 चेदयो वत्सदाशार्णा अङ्गवङ्गोपवङ्गकाः ॥ २६ ॥
24500
24501 प्राची च दक्षिणा चानयोरन्तरालं दिक्प्राग्दक्षिणा । दिङ्नामान्यन्तराले इति
24502 बहुव्रीहिः । अत्रापि देशाः २७ ॥ २६ ॥
24503
24504 कलिङ्गपुण्ड्रजठरा विदर्भा मेखलास्तथा ।
24505 शबराननवर्णाश्च कर्णात्रिपुरपूरकाः ॥ २७ ॥
24506
24507 कण्टकस्थलनामानः पृथग्दीपककोमलाः ।
24508 कर्णान्ध्राश्चौलिकाश्चैव तथा चार्मण्वता अपि ॥ २८ ॥
24509
24510 काकका हेमकुड्याश्च तथा श्मश्रुधरा अपि ।
24511 बलिग्रीवमहाग्रीवाः किष्किन्धा नालिकेरिणः ॥ २९ ॥
24512
24513 अथ लीलापतेरस्य दक्षिणस्यामिमे नृपाः ।
24514 विन्ध्योऽथ कुसुमापीडो महेन्द्रो दर्दुरस्तथा ॥ ३० ॥
24515
24516 दक्षिणस्यां पर्वताः ६ देशाः ६३ ॥ ३० ॥
24517
24518 मलयः सूर्यवांश्चैव गणा राज्यसमृद्धकाः ।
24519 अवन्तीरिति विख्यातास्तथा शाम्बवतीति च ॥ ३१ ॥
24520
24521 दशपूरकथाचक्रारेषिकातुरकच्छपाः ।
24522 वनवासोपगिरयस्ते भद्रगिरयस्तथा ॥ ३२ ॥
24523
24524 नागरा दण्डकाश्चैव गणराष्ट्रनृराष्ट्रकाः ।
24525 साहा शैवार्ष्यमूकाश्च कर्कोटा वनबिम्बलाः ॥ ३३ ॥
24526
24527 पम्पानिवासिनश्चैव कैरकाः कर्कवीरकाः ।
24528 स्वेरिका यासिकाश्चैव धर्मपत्तनपञ्जिकाः ॥ ३४ ॥
24529
24530 काशिकास्तृष्णखल्लूला यादास्ते ताम्रपर्णकाः ।
24531 गोनर्दाः कनकाश्चैव दीनपत्तनमामकाः ॥ ३५ ॥
24532
24533 ताम्रीका [ताम्रीकदंभराकीर्णा इति पाठः] दम्भराकीर्णाः
24534 सहकारैणकास्तथा ।
24535 वैतुण्डकास्तुम्बवनालाजिनद्वीपकर्णिकाः ॥ ३६ ॥
24536
24537 कर्णिकाभाश्च शिवयः कौङ्कणाश्चित्रकूटकाः ।
24538 कर्णाटमण्टवटका महाकटकिकास्तथा ॥ ३७ ॥
24539
24540 आन्द्राश्च कोलगिरयश्चावन्तिकविचेरिकाः ।
24541 चण्डायत्ता देवनकाः क्रौञ्चा वाहास्तथैव च ॥ ३८ ॥
24542
24543 शिलाक्षारोदभोनन्दमर्दना मलयाभिधाः ।
24544 ते चित्रकूटशिखरा लङ्कारक्षोगणाः स्मृताः ॥ ३९ ॥

24545
24546 अथ प्रत्यग्दक्षिणस्यां महाराज्यसुराष्ट्रकाः ।
24547 सिन्धुसौवीरशूद्राख्या आभीरा द्रविडास्तथा ॥ ४० ॥
24548
24549 प्रत्यग्दक्षिणस्यां पर्वताः ४ देशाः १९ ॥ ४० ॥
24550
24551 कीकटाः सिद्धखण्डाख्यास्तथा कालिरुहा अपि ।
24552 अत्र हेमगिरिः शैलस्तथा रैवतको गिरिः ॥ ४१ ॥
24553
24554 जयकच्छो मयवरो यवनास्तत्र [पटनास्तत्र इति पाठः]
24555 जन्तवः ।
24556 बाह्लीका मार्गणावन्ता धूम्रास्तुम्बकनामकाः ॥ ४२ ॥
24557
24558 तथा लाजगणाश्चैव तथात्र गिरिवासिनः ।
24559 ततोऽब्धितोकनियुता एते लीलापतेर्जनाः ॥ ४३ ॥
24560
24561 अथ तत्प्रतिपक्षस्थानिमाञ्जनपदाञ्शृणु ।
24562 पश्चिमायां दिशि प्रौढा इमे तावन्महाद्रयः ॥ ४४ ॥
24563
24564 पश्चिमायां पर्वताः ९ देशाः १८ ॥ ४४ ॥
24565
24566 मणिमान्नाम शैलेन्द्रः कुरार्पणगिरिस्तथा ।
24567 वनोऽर्कहो मेघभवश्चक्रवानस्तपर्वतः ॥ ४५ ॥
24568
24569 जनाः पञ्चजना नाम काशब्रह्मचयान्तकाः ।
24570 तथैव भारक्षतथाः पारकाः शान्तिकास्तथा ॥ ४६ ॥
24571
24572 काशानां ब्रह्मणचयानां चान्तका इति पञ्चजनानां विशेषणम् ॥ ४६ ॥
24573
24574 शैब्यारमरकायाच्छा [करछायामहुला नियमास्तथा] गुहुत्वा
24575 नियमास्तथा ।
24576 हैहयाः सुह्मगायाश्च ताजिका हूणकास्तथा ॥ ४७ ॥
24577
24578 पार्श्वेकतकयोः कर्का गिरिपर्णावमास्तथा ।
24579 संत्यक्तधर्ममर्यादास्ते वर्णा म्लेच्छजातयः ॥ ४८ ॥
24580
24581 दक्षिणोत्तरकतकदेशयोः पार्श्वे कर्काः ॥ ४८ ॥
24582
24583 ततोऽजनपदा भूमिर्योजनानां शतद्वयम् ।
24584 ततो महेन्द्रशिखरी मुक्तामणिमयावनिः ॥ ४९ ॥
24585
24586 अजनपदेति च्छेदः ॥ ४९ ॥
24587
24588 युते महीधरशतैरथाश्वो नाम पर्वतः ।
24589 ततो महार्णवो भीमः पारियात्रगिरिस्तटे ॥ ५० ॥
24590
24591 तटे अर्थान्महार्णवतटे ॥ ५० ॥
24592
24593 पश्चिमोत्तरदिग्भागे देशो गिरिमति स्थितः ।
24594 तथा वेणुपतिश्चैव ततो नरपतिर्मही ॥ ५१ ॥
24595
24596 पश्चिमोत्तरस्यां देशाः १९ वेणुपतिर्नरपतिरिति देशः स्थितः । मही

24597 नित्योत्सववान् ॥ ५१ ॥
24598
24599 तथा फल्गुणकाश्चैव माण्डव्यानेकनेत्रकाः ।
24600 पुरुकुन्दाश्च पाराश्च भानुमण्डलभावनाः ॥ ५२ ॥
24601
24602 वन्मिला नलिना दीर्घा दीर्घकेशाङ्गबाहवः ।
24603 रङ्गाश्च स्तनिकाश्चान्या गुरुहाश्चलुहास्तथा [च्लहास्तथा इति
24604 पाठः] ॥ ५३ ॥
24605
24606 यतो दीर्घकेशाङ्गबाहवः अतो दीर्घाख्या इत्यर्थः ॥ ५३ ॥
24607
24608 प्। २१८)
24609
24610 ततः स्त्रीराष्ट्रमतुलं गोवृषापत्यभोजनम् ।
24611 अथोत्तरस्यां हिमवान्क्रौञ्चोऽथ मधुमान्गिरिः ॥ ५४ ॥
24612
24613 उत्तरस्यां पर्वताः ६ पादेषु प्रत्यन्तपर्वतेषु देशाः ४४ ॥ ५४ ॥
24614
24615 कैलासो वसुमान्मेरुस्तत्पादेषु जना उभे ।
24616 मद्रावारेवयौधेया मालवाः शूरसेनिकाः ॥ ५५ ॥
24617
24618 राजन्याश्च तथा ज्ञेया अर्जुनातनयस्तथा ।
24619 त्रिगर्त एकपात्क्षुद्रामबलास्वस्तवासिनः ॥ ५६ ॥
24620
24621 अबलाः प्रखलाः शाकाः क्षेमधूर्तय एव च ।
24622 दशदानागावसन्यदण्डाहन्यसनास्तथा ॥ ५७ ॥
24623
24624 धानदाः सरकाश्चैव वाटधानास्तथैव च ।
24625 अन्तरद्वीपगान्धारास्तथावन्तिसुरास्तथा ॥ ५८ ॥
24626
24627 अथ तक्षशिला नाम ततो वीलवगोधनी ।
24628 पुष्करावर्तदेशस्य यशोवतिमही ततः ॥ ५९ ॥
24629
24630 ततो नाभिमतिर्भूमिस्तिक्षा कालवरास्तथा ।
24631 काहकं नगरं चैव सुरभूतिपुरं तथा ॥ ६० ॥
24632
24633 तथैव रतिकादर्शा अन्तरादर्श एव च ।
24634 ततः पिङ्गलपाण्डव्यं यामुने यातुधानकाः ॥ ६१ ॥
24635
24636 मानवा नांगना हेमतालाः स्वस्वमुखास्तथा ।
24637 हिमवान्वसुमान्क्रौञ्चकैलासावित्यगास्तथा ॥ ६२ ॥
24638
24639 ततोऽजनपदा भूमिरशीतिशतयोजना ।
24640 अथ प्रागुत्तरस्यां तु क्रमाज्जनपदाञ्छृणु ॥ ६३ ॥
24641
24642 प्रागुत्तरस्यां देशाः २४ पर्वतः १ ॥ ६३ ॥
24643
24644 कालुता ब्रह्मपुत्राश्च कुणिदाः खदिनास्तथा ।
24645 मालवा रन्ध्रराज्याश्च वना राष्ट्रास्तथैव च ॥ ६४ ॥
24646
24647 केडवस्ताः सिंहपुत्रास्तथा वामनतां गताः ।
24648 सावाकच्चापलवहाः कामिरा दरदास्तथा ॥ ६५ ॥

अभिसासदजार्वाकाः पलोलकुविकौतुकाः।
किराताय़ामुपाताश्च दीनाः स्वर्णमही ततः॥ ६६॥

देवस्थलोपवनभूस्तदनूदितश्री-
र्विश्वावसोस्तदनु मन्दिरमुत्तमं च।
कैलासभूस्तदनु मञ्जुवनश्चशैलो
विद्याधरामरविमानसमानभूमिः॥ ६७॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलो॰
जनपदवर्णनं नाम षट्त्रिंशः सर्गः॥ ३६॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
जनपदवर्णनं नाम षट्त्रिंशः सर्गः॥ ३६॥

सप्तत्रिंशः सर्गः ३७

श्रीवसिष्ठ उवाच।

रणे रभसनिर्लूननरवारणदारुणे।
अहंपूर्वमहंपूर्वमिति वृन्दानुपातिनि॥ १॥

कीर्त्यन्ते मध्यदेशीया जना जनपदाख्यया।
तथा जानपदानां च द्वन्द्वयुद्धजयाजयाः॥ १॥

वृन्दशो वृन्देषु वा अनुपातिनि अनुसृत्य पतनशीले॥ १॥

एते चान्ये च बहवस्तत्र भस्मत्वमागताः।
प्रविशन्तः प्रयत्नेन शलभा इव पावके॥ २॥

अत्रान्ये मध्यदेशीया जना नोदाहृता मया।
तानिमाञ्छृणु वक्ष्यामि पक्षाश्च्लीलामहीभृतः॥ ३॥

मध्यदेशजनपदाः २९॥ ३॥

तद्देहिकाः शूरसेना गुडा अश्वघनायकाः।
उत्तमज्योतिभद्राणि मदमध्यमिकादयः॥ ४॥

सालूकाकोद्यमालास्या [सालूसाकेद्य इति पाठः] दौर्ज्ञेयाः
पिप्पलायनाः।
माण्डव्याः पाण्डुनगराः सौग्रीवाद्या गुरुग्रहाः॥ ५॥

पारियात्राः कुराष्ट्राश्च यामुनोदुम्बरा अपि।
राज्याह्वा उज्जिहानाश्च कालकोटिकमाथुराः॥ ६॥

पाञ्चाला धर्मारण्याश्च तथैवोत्तरदक्षिणाः।
पाञ्चालकाः कुरुक्षेत्रास्तथा सारस्वता जनाः॥ ७॥

अवन्तीस्यन्दनश्रेणीकुन्तिपाञ्चनदेरितैः।
स्पन्दमाना विद्रवन्ती निपपात महाभृगौ॥ ८॥

24701 एते चान्ये च रणे भस्मत्वमागता इति यदुक्तं तत्प्रकारमेव
24702 जनपदनामभिर्विभज्यासर्गसमाप्तेराचष्टे - अवन्तीत्यादिना | अवन्ती उज्जयिनी
24703 मालवेषु प्रसिद्धा तत्रत्यानां स्यन्दनश्रेणी रथपङ्क्तिः कुन्तिदेशस्थानां
24704 पाञ्चनदानां च ईरितैह् प्रेरणैः | युद्धरभसैरिति यावत् | ईरितैः क्षिप्तैः
24705 शस्त्रैरिति वा | स्पन्दमाना भयात्कम्पमाना द्रवन्ती पलायमाना महति
24706 भृगौ गिरिप्रपाते निपपात | एवमुत्तरत्रापि प्रथमान्तदेशवाचिवाच्यानां
24707 तृतीयान्तदेशवाचिवाच्यैः पराजयो बोध्यः || ८ ||
24708
24709 कोशब्रह्मावसानाश्च च्छिन्ना [छिन्नाः शस्त्र इति पाठः]
24710 वस्त्रवतीजनैः |
24711 भूमौ निपतिताः सन्तो मिलिता मत्तवारणैः || ९ ||
24712
24713 मिलिताः संगताः | विमर्दिता इति यावत् || ९ ||
24714
24715 शूरा दाशपुराः शस्त्रनिकृत्तोदरकन्धराः |
24716 बाणक्षितिभिराक्रम्य योजिता योजने ह्रदे || १० ||
24717
24718 बाणक्षितिभिर्बाणभूमिष्ठैः | तद्देश्यैरिति यावत् | आक्रम्य पराजित्यानुधाव्य
24719 योजने पलायिता दैवात्प्राप्ते ह्रदे योजिता निमज्जिताः || १० ||
24720
24721 प्। २१९)
24722
24723 दीर्णोदरविनिर्यातस्वान्त्रतन्त्रीनियन्त्रिताः |
24724 शान्तिकाः शान्तसंचाराः पिशाच्चैश्चर्विता निशि || ११ ||
24725
24726 नियन्त्रिता निरुद्धा अत एव शान्तसंचाराः || ११ ||
24727
24728 उद्रवैर्भद्रगिरिभिः संग्रामाध्वरदीक्षितैः |
24729 क्षोणिगर्तेषु निक्षिप्ता मरगाः कमठा इव || १२ ||
24730
24731 उत् उत्कृष्टो द्रवो वेगो रवो ध्वनिर्वा येषां तैः | क्षोणिगर्तेषु पल्वलादिषु || १२
24732 | |
24733
24734 प्रद्रुता विद्रवद्रक्ता विद्रावितमहारयः |
24735 दण्डिकास्थानिलोद्धूता हैहयैर्हरिणा इव || १३ ||
24736
24737 दण्डिका नगरी तत्स्थाः | अनिलोद्धूता इति हरिणविशेषणम् | संधिरार्षः |
24738 हैहयैर्विद्राविता इत्यर्थाद्गम्यते | हरिणा वातप्रम्यः || १३ ||
24739
24740 दन्तिदन्तविनिर्भिन्ना ददा दलितारयः |
24741 नीता रक्तमहानद्या द्रुमाणां पल्लवा इव || १४ ||
24742
24743 नाराचैश्चर्विताश्चीना जीर्णा जर्जरजीविताः |
24744 जहुर्जलनिधौ देहान्भारभूतानिव स्थितान् || १५ ||
24745
24746 कर्णाटसुभटोड्डीनकुन्ताकलितकन्धराः |
24747 भग्ना नलदशूराश्च तारकानिकरा इव || १६ ||
24748
24749 उड्डीनकुन्तैराकलिता आच्छिन्नाः कंधराः कण्ठा येषाम् | भग्ना विशीर्णाः
24750 || १६ ||
24751
24752 करीन्द्रमकरव्यूहरंहःसंहतहेतयः |

24753 केशाकेशिकृतारम्भा विनेदुर्दाशकाः शकाः ॥ १७ ॥
24754
24755 दाशकाः शकाश्च युध्यमाना दैवात्करीन्द्रैर्मकरव्यूहेनेव रंहसा
24756 संहतहेतयो विनाशितायुधाः केशेषु केशेषु गृहीत्वा प्रवृत्तं युद्धं
24757 केशाकेशि तदर्थं कृतारम्भाः सन्तो विनेदुः ॥ १७ ॥
24758
24759 दशार्णाः पाशनिर्मुक्तशृङ्खला जालभीरवः ।
24760 निलीना रक्तजम्बाले वैतसास्तिमयो यथा ॥ १८ ॥
24761
24762 पाशदेशीयैर्निर्मुक्तेभ्यः शृङ्खलाजालेभ्यो भीरवः । जम्बाले पङ्के ।
24763 वैतसा वेतसमूलाश्रयास्तिमयो मत्स्यभेदाः ॥ १८ ॥
24764
24765 गुर्जरानीकनाशेन गुर्जरीकेशलुञ्चनम् ।
24766 विहितं तङ्गणोत्तुङ्गनासिशङ्कुशतै रणे ॥ १९ ॥
24767
24768 तङ्गणानां उत् ऊर्ध्व तुङ्गनमुच्छलनं येषां तथाविधैरसिभिः
24769 शङ्कुशतैश्च विहितं कारितम् ॥ १९ ॥
24770
24771 सिषिचुः शस्त्रकर्णौघाद्बिन्दुभ्यो निगडा गुहान् ।
24772 शरधारावनानीव वीरहेतिप्रभाम्बुदाः ॥ २० ॥
24773
24774 शस्त्रकर्णानां कर्णवदूर्ध्वीकृतशस्त्रत्वात्तथा
24775 प्रसिद्धानामोघात्संघान्निर्गता वीरहेतिप्रभाविद्युद्भिरम्बुदायमाना
24776 निगडा जानपदा गुहान् जानपदान्प्रति शरधाराः सिषुचुरक्षरन् । यथा
24777 वीरहेतिसदृशप्रभा अम्बुदाः स्वबिन्दुभ्यो हेतुभ्यो वनानि सिंचन्ति तद्वत् ॥ २०
24778 । ।
24779
24780 भुशुण्डीमण्डलोद्द्योतश्यामार्कोत्पातभीरुषु ।
24781 आभीरेष्वरयः पेतुर्गोगणा हरितेष्विव ॥ २१ ॥
24782
24783 भुशुण्डीमण्डलानामुद्द्योतैः श्यामो नीलीकृतौ योऽर्कः सूर्यः
24784 भुशुण्डीमण्डललक्षणो वा उद्द्योतेन श्यामोऽर्कस्तल्लक्षणेनोत्पातेन ।
24785 उक्तंच - यदि चन्द्र इवादित्यः सच्छिद्रो रश्मिमण्डलः ।
24786 कृष्णरक्तान्तपर्यन्तस्तज्जनक्षयलक्षणम् ॥ इति ॥ २१ ॥
24787
24788 कान्तकाञ्चनकान्तासीत्ताम्रसंग्रामवाहिनी ।
24789 भुता गौडभटेनाङ्ग नखकेशनिकर्षणैः ॥ २२ ॥
24790
24791 ताम्रा यवनभेदास्तेषां संग्रामोद्युक्ता वाहिनी सैव नायिका गौडभटेन
24792 नायकेन भुक्ता उपभुक्ता । अङ्गेति रामसंबोधनम् ॥ २२ ॥
24793
24794 रणे नगनयासंख्यकवच्चक्रनिकृन्तनैः ।
24795 तङ्गणाः कणशः कीर्णाः कङ्कगृध्रेषुभासकैः ॥ २३ ॥
24796
24797 नगान्वृक्षशैलानपि नयन्त्यपाकुर्वन्ति तथाविधैरनन्तैह्
24798 कवद्भिर्ध्वनद्भिश्चक्रैर्निकृन्तनैश्छेदनैः । भासकैर्जानपदैः ॥ २३ ॥
24799
24800 लगुडालोडनोड्डीनं गौडं गुडुगुडारवम् ।
24801 श्रुत्वा गान्धारगावोऽग्रे दुद्रुवुर्द्रविडा इव ॥ २४ ॥
24802
24803 लगुडानामालोडनेन भ्रमणेनोपलक्षितमुड्डीनमुद्गतं
24804 गौडभटसंबन्धि गुडुगुडारवमव्यक्तभाषणध्वनिम् । गान्धारा गाव

इवेत्युपमितसमासः। टजभावश्छान्दसः॥ २४॥

आकाशगार्णवप्रख्यो वहच्छककदम्बकः।
अकरोत्पारसीकानां घननैशतमोभ्रमम्॥ २५॥

वहतां नदीवत्पर्वतेभ्योऽवतरतां शकानां कदम्बकः स्तोमः। प्रायः
शका नीलाम्बरा इति गम्यते। पारसीकास्तु धवलाम्बरा इति॥ २५॥

मन्दराहननोड्डीनस्वच्छक्षीरार्णवोदरे।
वनानीवायुधान्यासञ्छत्त्रप्रालेयसानुनि॥ २६॥

अत एवाह - मन्दरेति। तत्र युध्यतामायुधानि क्षीरार्णवोदरे मन्दरस्य
वनानीव प्रेक्षकाणां तु प्रालेयाचलसानुनि तद्वनानीवेति बोध्यम्॥ २६॥

यदम्बुदैरिवोड्डीनं शस्त्रवृन्दैर्नभोङ्गणे।
तद्दृष्टं वीचिवलनैर्लोलैः प्लुतमिवार्णवे॥ २७॥

उड्डीनमिति भावे क्तः। ल्वादिभ्य इति नत्वम्। वलनैः
संवलनैर्वीच्यन्तरसंवलितवीचिभिरिति यावत्।
भूमिष्ठदृष्ट्याम्बुदोड्डीनमिव दृष्टमपि नभश्चरैर्वीचिप्लवनमिव
दृष्टमिति भावः॥ २७॥

शतचन्द्रं सितच्छत्रैः शरैः शलभनिर्भरम्।
शक्तिभिः किल नीरन्ध्रं दृष्टमाकाशकाननम्॥ २८॥

शलभैः पतङ्गैर्निर्भरं भृशं व्याप्तम्। नीरन्ध्रं निरवकाशम्॥ २८
। ।

वीरासवसमाक्रन्दकारिणः केकयैः कृताः।
कङ्कैः कङ्ककुलाक्रान्तव्योमोद्धूलितमस्तकाः॥ २९॥

कृताः शत्रव इति देहलीदीपन्यायेनोभयत्र शेषः॥ २९॥

किरातसैन्यकन्यानां कामं कलकलारवैः।
अङ्गैरनङ्गतां नीत्वा भैरवैरिव गर्जितम् [गर्जितैः इति
पाठः]॥ ३०॥

किरातसैन्यान्येव कन्यास्तासाम्। अङ्गैर्जनपदैः। अनङ्गतां विदेहतां
मन्मथोद्रेकं च॥ ३०॥

काशैस्तद्देहकाः क्रांता अदृश्यैर्मायया खगैः।
निर्धूतपक्षैः क्षुभितैः पवनैरिव पांसवः॥ ३१॥

काशैः सामुद्रैर्नरभेदैः। मायया खगैः पक्षिभूतैः॥ ३१॥

उन्मत्ताः सुविनिर्धूतास्त्यक्तहेतिरणाम्बराः।
नार्मदा नर्मनिर्मातृ ननृतुर्जहसुर्जगुः॥ ३२॥

उन्मत्ता युद्धोन्मत्ताः। नर्म लीला तन्निर्मातृ इति क्रियाविशेषणम्॥ ३२॥

प्। २२०)

प्रक्कणत्किंकिणीजालं शक्तिवर्षमुपागतम् ।
साल्वबाणानिलोद्भूतमगमत्पृषदाकृति ॥ ३३ ॥

पृषदाकृतिं बिन्द्वाकारम् । विशीर्णतामिति यावत् ॥ ३३ ॥

शैब्यास्तु खण्डिताः कौन्तैर्भ्रमत्कुन्तैर्विघट्टिताः ।
शवीभूता दिवं नीता दृष्टा विद्याधरा इव ॥ ३४ ॥

कौन्तैः कुन्तिदेशजैः ॥ ३४ ॥

धराधरणधर्मिण्या धीरया हीनसेनया ।
लुण्ठिताः पाण्डुनगराश्चलनोल्लासमात्रतः ॥ ३५ ॥

धराया युद्धभूमेर्धरणमाक्रमणं तद्धर्मिण्या अहीना
जानपदास्तेषां सेनया ॥ ३५ ॥

तं देहकाः पाञ्चनदैर्दलिता मत्तकाशिभिः ।
कुन्तदन्तद्रुमोद्दामा नगा इव मतङ्गजैः ॥ ३६ ॥

कुन्तैर्गजदन्तैर्द्रुमैश्च प्रहरणैरुद्दामा युद्धदक्षाः । नगा वृक्षाः ॥
३६ ॥

ब्रह्मावत्सनका नीपैश्चक्रैः कृत्ता गता महीम् ।
सहयाः क्रकचोत्कृत्ता वृक्षाः कुसुमिता इव ॥ ३७ ॥

ब्रह्मावत्सनका जानपदा नीपैर्जानपदैः ॥ ३७ ॥

श्वेतकाकाननं लूनं कुठारैर्जठरेरितैः ।
एतद्ददाह पार्श्वस्थो भद्रेशः शरवह्निना ॥ ३८ ॥

श्वेतकाकानां जानपदानामाननं मुखं शिर इति यावत् । जठरैर्जानपदैः
। एतज्जठरबलम् ॥ ३८ ॥

काष्ठयोधे निरालानं मग्ना जीर्णा मतङ्गजाः ।
लयमाजग्मुरायुद्धमिद्धेग्नाविन्धनं यथा ॥ ३९ ॥

काष्ठयोधलक्षणपङ्केषु निरालनं विनैव बन्धनस्तम्भं मग्नाः सन्तो
जीर्णा मतङ्गदेशजा एव श्लेषाद्गजाः ॥ ३९ ॥

मित्रगर्तास्त्रिगर्तात्ता भ्रमित्वोर्ध्वं तृणोपमम् ।
विविशुर्व्यस्तमूर्धानः पातालान्तं पलायितुम् ॥ ४० ॥

त्रिगर्तैरात्ता गृहीताः ॥ ४० ॥

मन्दानिलचलाम्भोधिभासुरे मागधे बले ।
निर्मग्ना वनिला मन्दाः पङ्के जीर्णगजा इव ॥ ४१ ॥

वनिला जानपदाः ॥ ४१ ॥

चेदयश्चेतनां जहुस्तङ्गणानां रणाङ्गणे ।
पुष्पाणां पथि शीर्णानां सौकुमार्यमिवातपाः ॥ ४२ ॥

24909 चेतनां विवेकबुद्धिं जीवं वा || ४२ ||
24910
24911 कौसलाः पौरवारावमसहन्तोऽन्तका इव |
24912 तैरुन्मुक्तगदाप्रासशरशक्त्यतिवृष्टयः || ४३ ||
24913
24914 कौसलाः कोसलदेशजा अन्तका इव निघ्नन्त इति शेषः | तैः पौरवैरुन्मुक्ता
24915 गदादिवृष्टयो येषु तथाविधा बभूवुरित्यपकृष्यते || ४३ ||
24916
24917 बभूवुर्भल्लकृत्ताङ्गाऽविस्मया विद्रुमद्रुमाः |
24918 इवाद्रौ विद्रवन्त्यार्द्रसान्द्रासृक्सूर्यमूर्तयः || ४४ ||
24919
24920 तेषु ये भल्लकृताङ्गा अप्यविस्मयाः परपराक्रमे आश्चर्यबुद्धिरहिताः अत
24921 एवार्द्रसान्द्रासृग्भिर्बालसूर्यसदृशमूर्तयः सन्तः अद्रौ पर्वते
24922 विद्रुमद्रुमाः प्रवालवृक्षा एव विद्रवन्ति परिधावन्तीव बभूवुः || ४४ ||
24923
24924 नाराचौघमहाहेतिमारुताधूतमूर्तयः |
24925 बभ्रमुर्भ्रमरानीकभासुरा जलदा इव || ४५ ||
24926
24927 शरधाराधरा मेघाः शरोर्णापूर्णमेषकाः |
24928 शरपत्रावृता वृक्षा भ्रेमुस्तद्गर्जनागजाः || ४६ ||
24929
24930 तेषां कोसलानां गर्जनोपलक्षिता गजाः शराणां धारोर्णा यत्र |
24931 सदृशकाण्डगरुच्छल्यभागाकीर्णत्वात्क्रमान्मेघमेषवृक्षात्मना
24932 उत्प्रेक्ष्यन्ते || ४६ ||
24933
24934 वनराज्यजराजीर्णाः कन्दाकस्थलजन्तवः [कण्टकस्थल इति
24935 पाठः] |
24936 अत्रुटन्परमाकृष्टाः पेलवा इव तन्तवः || ४७ ||
24937
24938 कन्दाकस्थलोद्भवा जन्तवो मनुष्यहस्त्यादयो वनराज्या
24939 जानपदास्तल्लक्षणया जरया जीर्णा निर्बलीकृताः सन्तः परमाकृष्टाः
24940 पेलवास्तन्तव इवात्रुटन् छिन्नाः || ४७ ||
24941
24942 रथेषु ध्वस्तचक्रेषु निखातेऽमुत्र मूर्धसु |
24943 निपेतुर्जनसंघाता मेघा इव वनाद्रिषु || ४८ ||
24944
24945 निखातगर्ते निरोधाद्रथेषु ध्वस्तचक्रेषु सत्सु अमुत्र अमीषु रथमूर्धसु
24946 प्रहरिष्यन्तः शत्रुजनसंघाता निपेतुः || ४८ ||
24947
24948 शालतालवनं प्राप्य जनतावलनं वनम् |
24949 भुजावकर्तनं चासीदुत्तालं स्थाणुकाननम् || ४९ ||
24950
24951 शालवनं तालवनं च युद्धे परस्परं जनतयोर्जनसमूहयोर्वलनं
24952 मेलनं अत एव वनं महावनत्वेन संपन्नं युद्धस्थानं प्राप्य तत्र
24953 भुजावकर्तनं चकाराच्छिरोवकर्तनं च प्राप्य
24954 यथाक्रममुत्तालमूर्ध्वीभूततालवृक्षप्रायं स्थाणुकाननं चासीत् |
24955 शालानां परितः शाखाच्छेदने तालप्रायता तालानां तु शिरःकर्तने
24956 स्थाणुतैव परिशिष्यत इति युक्तमेव संपन्नमिति भावः || ४९ ||
24957
24958 ननर्दुर्नन्दनोद्यानसुन्दर्यो मत्तयौवनाः |
24959 वनोपवनदेशेषु मेरोर्वीरवराश्रिताः || ५० ||
24960

तावत्तारारवं रेजे सैन्यकाननमुत्तमम् ।
यावन्न परपक्षेण प्राप्तं कल्पानलार्चिषा ॥ ५१ ॥

तारः आरवो यस्मिन् । सैन्यमेव काननम् ॥ ५१ ॥

छिन्नाः पिशाचसंयुक्ता भूतापहृतहेतयः ।
पातयित्वा ययुः कर्णान्दशार्णास्तर्णका इव ॥ ५२ ॥

पिशाचैः पिशाचप्रधानैः कामरूपादिजानपदैः सह युद्धाय संयुक्ता
दशार्णा भूतैरपहृतायुधाः सन्तस्तर्णका इव पलायमानाः पथि
कर्णान्पातयित्वा ययुः । तर्णकपक्षे कर्णपदेन कर्णवदुद्भूतद्वित्रिपत्राणि
गुल्मान्युच्यन्ते ॥ ५२ ॥

जहुर्भग्नेश्वराः कान्तिं तां जिगीषवनौजसा ।
कासयः [काशयः इति पाठः] कमलानीव शुष्कस्रोतस्विनौजसा ॥
५३ ॥

भग्नेश्वरा हतस्वामिकाः । तां जिगीषवनानां जानपदानाम् । शुष्काः
स्रोतस्विनः सरःपूरकनिर्झरा येन तथाविधेन ग्रीष्मौजसा ॥ ५३ ॥

तुषाका मेसलैः [मेखलैः इति पाठः] कीर्णाः
शरशक्त्यसिमुद्गरैः ।
विद्रुता नरकैः क्षिप्ताः कटकच्छलना अपि ॥ ५४ ॥

नरकैर्जानपदैः । क्षिप्ता निरस्ताः कटकच्छलना अपि विद्रुताः पलायिताः ॥ ५४ ॥

प्। २२१)

कौन्तक्षेत्राः प्रस्थवासैः स्थित्वा योधिभिरावृताः ।
गुणा इव खलाक्रान्ता गता व्यक्तमशक्तताम् ॥ ५५ ॥

स्वस्थान एव स्थित्वा योधिभिर्युद्धशीलैर्धीरैरित्यर्थः । आवृताः परिक्षिप्ताः
॥ ५५ ॥

द्विपयो बाहुधानानां क्षणेनादाय मस्तकम् ।
भल्लैः पलाय्याशु गता विलूनकमला इव ॥ ५६ ॥

विलूनानि कमलानि यैस्ते विलूनकमलाः पुरुषा इव ॥ ५६ ॥

मिथः सारस्वता नीत्वा आदिनान्तं कृताजयः ।
पण्डिता इव वादेषु नोद्विग्ना न पराजिताः ॥ ५७ ॥

सारस्वताः सरस्वतीतीरोद्भवा मिथः कृताजयः कृतयुद्धः सन्त
आदिनान्तं दिनावसानावधिं नीत्वा नोद्विग्नाः ॥ ५७ ॥

खर्वगाः खदिताः क्षुद्रा यातुधानैः परावृताः ।
तेजः परममाजग्मुः शान्ताग्नय इवेन्धनैः ॥ ५८ ॥

खदिता विद्राविता अपि यातुधानैर्लङ्कास्थैः सहायैः परावृताः
परावर्तिताः ॥ ५८ ॥

कियदाख्यायत एत-

25013 ज्जिह्वानिचयैः किलालमाकुलितः।
25014 वासुकिरपि वर्णयितुं
25015 न समर्थो रणवरं राम॥ ५९॥
25016
25017 प्रकृतं रणवर्णनमुपसंहरति - क्रियदिति।
25018 जिह्वानिचयैर्द्विसहस्रजिह्वाभिरलमत्यर्थं वर्णयितुमाकुलितो व्यग्रो वासुकिः
25019 शेषोऽपि॥ ५९॥
25020
25021 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे मो० लीलो०
25022 जनपदवर्णनं नाम सप्तत्रिंशः सर्गः॥ ३७॥
25023
25024 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
25025 जनपदवर्णनं नाम सप्तत्रिंशः सर्गः॥ ३७॥
25026
25027 अष्टत्रिंशः सर्गः ३८
25028
25029 श्रीवसिष्ठ उवाच।
25030
25031 एवमत्याकुले युद्धे सास्फोटभयसंकुले।
25032 आदित्ये तमसा वृद्धे चटत्कठिनकङ्कटे॥ १॥
25033
25034 दिनान्ते सेनयोर्युद्धात्परावृत्तौ रणक्षितिः।
25035 पिशाचभीमबीभत्सा विस्तरेणात्र वर्ण्यते॥ १॥
25036
25037 जितकाशिभिः सास्फोटैः पराजितानां भयेन च संकुले। चटति
25038 रुधिरोद्गममावृणोति तथाविधे कठिनकङ्कटे अम्बु तद्रुधिरक्लेदजलं
25039 वहति प्रक्षरति सतीति परेणान्वयः॥ १॥
25040
25041 वहत्यम्बूत्पतन्तीषु पतन्तीष्वश्मवृष्टिषु।
25042 नदीषु क्षेपणाच्छासु वरकेष्वब्जपङ्क्तिषु॥ २॥
25043
25044 क्षेपणपाषाणकरकैरच्छासु शुभ्रास्वश्मवृष्टिष्वेकत्रोत्पतन्तीष्वन्यत्र
25045 पतन्तीषु। नदीष्वब्जपङ्क्तिषु वरकेषु संवरकेषु संकुचन्तीषु सतीषु।
25046 लिङ्गव्यत्ययश्छान्दसः॥ २॥
25047
25048 मिथः फलाग्रकाटोत्थवह्निसीकरिणीषु च।
25049 आयान्तीषु प्रयान्तीषु दूरं शरनदीषु च॥ ३॥
25050
25051 शरफलाग्रयोर्मिथः काटेन संघट्टनेनोत्थैर्वह्निकणैः सीकरिणीषु
25052 शरनदीषु॥ ३॥
25053
25054 वहल्लूनशिरःपद्मचक्रावर्तैस्तरङ्गितैः।
25055 खार्णवे पूरिते हेतिवृन्दमन्दाकिनीगणैः॥ ४॥
25056
25057 वहन्ति प्रवहन्ति लूनशिरांस्येव पद्मानि येषु तथाविधाश्चक्राण्येवावर्ता
25058 येषु तथाविधैर्हेतिवृन्दमन्दाकिनीगणैः खार्णवे आकाशलक्षणे समुद्रे
25059 पूरिते सति॥ ४॥
25060
25061 समीरणरणत्काणशस्त्रपूर्णघनैर्घनैः।
25062 संदेहान्तेषु सिद्धेषु कपिकच्छव्यथाप्रदैः॥ ५॥
25063
25064 समीरणवद्रणत्काणैः शस्त्रैः पूर्णत्वादेव घनैर्निबिडैर्घनैर्मेघैरत

25065 एव वर्षर्त्वारम्भशङ्कया कपीनां कच्छप्रदेशे
25066 शोणतोपचयात्कामव्यथाप्रदैः | मेघान्तरितेषु सिद्धेषु संदिह्यते इति
25067 संदेहः अन्तः प्रलयो यैस्तथाविधेषु सत्सु || ५ ||
25068
25069 अष्टभागदशाशेषप्रतापमधुराकृति |
25070 शस्त्रघातौजसा वीर इवाहस्तनुतां ययौ || ६ ||
25071
25072 शस्त्राघातप्रयुक्तेनौजसा शोणकान्त्या वीरः शूर इव || ६ ||
25073
25074 श्रान्ताश्वेभाः प्रभग्नाश्च हेतिसंघातदीप्तयः |
25075 दिवसेन समं सेना ययुर्मन्दप्रतापताम् || ७ ||
25076
25077 अथसेनाधिनाथाभ्यां विचार्य सहमन्त्रिभिः |
25078 दूताः परस्परं वृत्ता युद्धं संह्रियतामिति || ८ ||
25079
25080 वृत्ताः प्रवर्तिताः || ८ ||
25081
25082 तत्र श्रमवशान्मन्दयन्त्रशस्त्रपराक्रमैः |
25083 रणसंहरणं काले सर्वैरेवोररीकृतम् || ९ ||
25084
25085 मन्दैर्मन्दीकृतैर्यन्त्रशस्त्रपराक्रमैः | बहुव्रीहिर्वा |
25086 संहरणमुपसंहारः || ९ ||
25087
25088 ततो महारथोत्तुङ्गकेतुप्रान्तकृतास्पदम् |
25089 बलयोरारुहोहैक एको योधो ध्रुवो यथा || १० ||
25090
25091 महतो रथस्योत्तुङ्गे केतुप्रान्ते कृतास्पदं कृताधारं
25092 दीर्घवंशस्तम्भद्वयमिति शेषः | नन्वेक एक इति द्विर्वचनं
25093 चेद्वीप्साविवक्षायाम् | एकं बहुव्रीहिवदिति बहुव्रीहिवद्भावे एकैक इति स्यात्
25094 तदविवक्षायां तु सरूपैकशेषः स्यादिति चेन्नात्र वीप्सा |
25095 व्याप्यानेकविवक्षाभावात् | नाप्येकशेषः | सह विवक्षाभावात् |
25096 संख्यावाच्येकशब्दस्य द्विवचनानर्हत्वादेकवचनेन सेनयोः
25097 पुरुषभेदप्रत्यायनायोगाच्च | तस्मात्परस्परानपेक्षयोरेव
25098 पुरुषयोस्तन्त्रेणारोहणक्रियासंबन्धविवक्षणान्न कश्चिद्दोष इति || १० ||
25099
25100 सोंऽशुकं भ्रामयामास सर्वदिङ्मण्डले सितम् |
25101 श्यामेव दीर्घशुद्धांशुं युद्धं संह्रियतामिति || ११ ||
25102
25103 श्यामा रात्रिरंशुभिर्दीर्घशुद्धांशुं चन्द्रमिव || ११ ||
25104
25105 ततो दुन्दुभयो नेदुः प्रतिध्वनितदिङ्मुखाः |
25106 महाप्रलयसंशान्तौ पुष्करावर्तका इव || १२ ||
25107
25108 शरादिहेतिसरितो विस्तीर्णे गगने स्थिते |
25109 प्रवृत्तः सुखमागन्तुं सरसः सरितो यथा || १३ ||
25110
25111 सुखमप्रतिबन्धमागन्तुं पतितुम् | सरसो मानसादेः सरितः सरय्वादयो
25112 यथा || १३ ||
25113
25114 प। २२२)
25115
25116 योधदोर्द्रुमसंचारस्तनुतामाययौ शनैः |

25117 भूकम्पान्ते वनस्पन्द इवाभ्रान्त इवार्णवः ॥ १४ ॥
25118
25119 अभ्रान्ते शरदि ॥ १४ ॥
25120
25121 विनिर्गन्तुं प्रववृते रणादथ बलद्वय।
25122 वारिपूरश्चतुर्दिक्षु प्रलयैकार्णवादिव ॥ १४ ॥
25123
25124 वारिपूर इति। अर्थात्प्रलयान्ते इति गम्यते ॥ १५ ॥
25125
25126 उत्क्षिप्तमन्दरक्षीरसमुद्रवदनाकुलम्।
25127 सैन्यं प्रशाम्यदावर्तं शनैः साम्यमुपाययौ ॥ १६ ॥
25128
25129 उत्क्षिप्तो बहिर्निष्कासितो मन्दरो यस्मात्तथाविधक्षीरसमुद्रवत्।
25130 साम्यमव्याकुलताम् ॥ १६ ॥
25131
25132 क्रमेणासीन्मुहूर्तेन विकटोदरभीषणम्।
25133 अगस्त्यपीतार्णववच्छून्यमेव रणाङ्गणम् ॥ १७ ॥
25134
25135 जननिर्गमनक्रमेण। विकटा पूतनेश्वरी तस्या उदरमिव भीषणम् ॥ १७ ॥
25136
25137 शवसन्ततिसंपूर्णं वहद्रक्तनदाकुलम्।
25138 परिकूजनझङ्कारपूर्णझिल्लिवनोपमम् [झिल्ली इति पाठः] ॥ १८ ॥
25139
25140 झिल्लयो वनपतङ्गभेदाः ॥ १८ ॥
25141
25142 बहद्रक्तसरित्स्रोतस्तरङ्गारवघर्घरम्।
25143 साक्रन्दार्धमृताहूतसप्राणव्यग्रमानवम् ॥ १९ ॥
25144
25145 मृतार्धमृतदेहौघसृतासृक्प्लुतनिर्झरम्।
25146 सजीवनरपृष्ठस्थशवस्पन्दनभ्रान्तिदम् ॥ २० ॥
25147
25148 शवानां स्पन्दनेन जीवनभ्रान्तिदम् ॥ २० ॥
25149
25150 करीन्द्रशवराश्यग्रविश्रान्ताम्बुदखण्डकम्।
25151 विशीर्णरथसंघातं वातच्छिन्नमहावनम् ॥ २१ ॥
25152
25153 शवराशीनामग्रेषु शिखरेषु विश्रान्ता अम्बुदखण्डा यत्रेत्यतिशयोक्तिः।
25154 वातच्छिन्नमहावनमिवेति शेषः ॥ २१ ॥
25155
25156 वहद्रक्तनदीरंहःप्रोह्यमानहयद्विपम्।
25157 शरशक्त्यृष्टिमुसलगदाप्रासासिसंकुलम् ॥ २२ ॥
25158
25159 पर्याणावनसंनाहकवचावृतभूतलम्।
25160 केतुचामरपट्टौघगुप्तं शवशरीरकम् ॥ २३ ॥
25161
25162 पर्याणैः पल्याणैरवनैरङ्गरक्षकैश्चर्मादिभिः सन्नाहैः
25163 कवचैश्चावृतं भूतलं यत्र गुप्तमाच्छन्नं शवशरीरकं यत्र ॥ २३ ॥
25164
25165 फणास्फुटकतूणीरकुञ्जकूजत्समीरणम्।
25166 शवराशिपलालौघतल्पसुप्तपिशाचकम् ॥ २४ ॥
25167
25168 फणावदुच्छ्रिताग्रेष्वास्फुटकेषु छिद्रीकृतेषु तूणीरेषु कीचककुञ्जेष्विव

25169 कूजन्समीरणो वायुर्यत्र ॥ २४ ॥
25170

25171 मौलिहाराङ्गदद्योतशक्रचापवनावृतम् ।
25172 श्वशृगालकराकृष्टसान्द्रान्त्रादीर्घरज्जुअकम् ॥ २५ ॥
25173

25174 मौलिना ह्यन्त इति मौलिहाराश्चूडामणयः अङ्गदानि च तेषां द्योतैः
25175 शक्रचापानां वनेन समूहेनेवावृतं व्याप्तम् ॥ २५ ॥
25176

25177 रक्तक्षेत्रक्वणत्किंचिच्छेषजीवनृदन्तुरम् ।
25178 रक्तकर्दमनिर्मग्नसजीवनरदर्दुरम् ॥ २६ ॥
25179

25180 रक्तपूर्णे क्षेत्रे क्वणन्तो घर्घरस्वरेण कूजन्तो नृदन्तुरा उद्घाटितदन्ताः
25181 पुरुषा यत्र । सजीवनरा एव दर्दुरा भेका यत्र ॥ २६ ॥
25182

25183 वराङ्गकवचप्रख्यनिर्गताक्षिशतोच्चयम् ।
25184 वहद्भुजोरुकाष्ठौघघोररक्तसरिच्छतम् ॥ २७ ॥
25185

25186 वराङ्गकवचं चित्रकञ्चुकम् ॥ २७ ॥
25187

25188 साक्रन्दबन्धुवलितं मृतार्धमृतमानवम् ।
25189 शरायुधरथाश्वेभपर्याणासंवरान्तरम् ॥ २८ ॥
25190

25191 पर्याणान्तैरासंवरमाच्छन्नमन्तरं मध्यं यस्य ॥ २८ ॥
25192

25193 नृत्यत्कबन्धदोर्दण्डमण्डलानमिताम्बरम् ।
25194 मदमेदोवसागन्धपीडार्द्रघ्राणकोटरम् ॥ २९ ॥
25195

25196 आनमितमुच्छ्रयादधरीकृतमिति यावत् ॥ २९ ॥
25197

25198 उत्ताल्वर्धमृतेभाश्ववार्यमाणाल्पजीवितम् [मार्थमाण इति
25199 पाठः] ।
25200 वहद्रक्तनदीवीचिप्रहारहतदुन्दुभि ॥ ३० ॥
25201

25202 उत्तालुभिरूर्ध्वीकृततालुभिः ॥ ३० ॥
25203

25204 उह्यमानमृतेभाश्वमकरासृक्सरिच्छतम् ।
25205 म्रियमाणनरानीकफूत्कृतासृक्प्रणालिकम् ॥ ३१ ॥
25206

25207 फुत्कृता फुत्कारेण निरस्यमाना मुखप्रदेशप्रसृता असृक्प्रणालिका
25208 यत्र ॥ ३१ ॥
25209

25210 स्वल्पजीवशरापूर्णमुखढक्कान्वितस्वनम् ।
25211 पिण्डभार्यावसागन्धवातान्तोत्पीठलोहितम् ॥ ३२ ॥
25212

25213 स्वल्पजीवैः शरापूर्णमुखढक्कैश्च नरैरन्विता निबद्धा आक्रन्दस्वना
25214 यत्र । अति अदि बन्धने । वामकुक्षिस्थो मांसग्रन्थिविशेषः पिण्डभार्येत्युच्यते
25215 । तस्या वसायाश्च गन्धेनोपलक्षितं वातान्तेन वायुसंस्पर्शेन उत्पीठमिव
25216 घनीभूतं लोहितं यत्र ॥ ३२ ॥
25217

25218 उन्नासार्धमृतेभेन्द्रकराक्रान्तकबन्धकम् ।
25219 निरधिष्ठितहस्त्यश्वपातितोच्चकबन्धकम् ॥ ३३ ॥
25220

25221 सादिमरणान्निरधिष्ठितैरनियन्त्रितैः ॥ ३३ ॥
25222
25223 रुदत्क्रन्दत्परिभ्रष्टश्वक्षुब्धासृगुद्धति ।
25224 मृतभर्तृगले शस्त्रत्यक्तप्राणकुलाङ्गनम् ॥ ३४ ॥
25225
25226 रुदद्भिः क्रन्दद्भिः परिभ्रष्टैः पतद्भिः शवैश्च क्षुब्धा
25227 असृगुद्धतिर्लोहितोच्छलनं यत्र । मृतस्य भर्तुर्गले आलिङ्ग्येति शेषः ।
25228 दैवोपनीतेन शस्त्राघातेन त्यक्तप्राणा कुलाङ्गना यत्र । बुद्धिपूर्वकं
25229 शस्त्रघातेन भर्तृसहगमनं तु न शास्त्रार्थः ॥ ३४ ॥
25230
25231 सेनोत्क्रान्तततक्।इप्रबहुपान्थपरीक्षणम् ।
25232 शवहारकराकृष्टसप्राणानुचराकुलम् ॥ ३५ ॥
25233
25234 संस्कार्यशवानयनाय स्वाम्याज्ञप्तायाः शिबिरनिविष्टसेनायाः
25235 सकाशादुत्क्रान्तैर्निर्गतैः प्रत्येकं रणभूप्रवेशभीरुत्वात्ततैः संततैः
25236 क्षिप्रैः शीघ्रप्रवृत्तैर्बहुभिः पान्थैः कृतंस्वस्वजनशवपरीक्षणं
25237 यत्र । शवान् हरन्तीति शवहारास्तेषां स्वाभिलषितशवान्वेषणत्वरया
25238 कराकुष्टसप्राणनरैरनुचरैर्भृत्यैराकुलम् ॥ ३५ ॥
25239
25240 केशशैवालवक्राब्जचक्रावर्तनदीशतम् ।
25241 तरत्तुङ्गतरङ्गाढ्यवहद्रक्तमहानदम् ॥ ३६ ॥
25242
25243 केशाः शैवालानि वक्राण्यब्जानि चक्राण्यावर्ता येषु तथाविधं
25244 रक्तनदीशतं यत्र ॥ ३६ ॥
25245
25246 अङ्गलग्नायुधोद्धारव्यग्रार्धमृतमानवम् ।
25247 विदेशमृतसाक्रन्दहुताङ्गगजवाजिनम् ॥ ३७ ॥
25248
25249 विदेशे मृतानां शोकात्साक्रन्दं हुता दत्तास्तदङ्गभूषणादयो गजा
25250 वाजिनश्च यत्र । क्लीबे सुब्लुक् छान्दसः ॥ ३७ ॥
25251
25252 प्। २२३)
25253
25254 प्राणान्तस्मृतपुत्रेष्टमातृदेवपराभिधम् ।
25255 हाहाहीहीतिकथितमर्मच्छेदनवेदनम् ॥ ३८ ॥
25256
25257 परोऽन्यः परमेश्वरो वा । तेषां अभिधा नामानि ॥ ३८ ॥
25258
25259 म्रियमाणमथौजिष्ठद्विष्टप्रारब्धसंचयम् ।
25260 दन्तियुद्धासमर्थाग्रमृतदेहेष्टदैवतम् ॥ ३९ ॥
25261
25262 पराक्रममकृत्वैव
25263 म्रियमाणैर्मथैर्देवोन्मथितैरोजिष्ठैर्बलवत्तरैर्द्विष्टो निन्दितः
25264 स्वप्रारब्धकर्मसंचयो यत्र । दन्तियुद्धेष्वसमर्थैर्दन्त्यग्रे
25265 मृतप्रायदेहैर्विमर्दभयादिष्टानि प्रार्थितानि दैवतानि यत्र ॥ ३९ ॥
25266
25267 म्रियमाणमहावज्ञाशूराश्रितपलायनम् ।
25268 अशङ्कितासृगावर्तभीमास्पदगमोत्सुकम् ॥ ४० ॥
25269
25270 म्रियमाणेषु महत्या पादाघाताद्यवज्ञया अपराधेन अशूरैराश्रितं
25271 पलायनं यत्र । अत एवाशङ्किता निःशङ्का असृगावर्तभयानकस्थानेष्वपि
25272 गमनोत्सुका गमनोन्मुखा यत्र ॥ ४० ॥

25273
25274 मर्मच्छेदशराघातव्यथाविदितदुष्कृति।
25275 कबन्धबन्धप्रारब्धवेतालवदनाक्रमम्॥ ४१॥
25276
25277 मर्मच्छेदिन्या शराघातव्यथया विदितानुमिता जन्मान्तरस्वदुष्कृतिर्यत्र।
25278 पलायमानकबन्धानां बन्धनेन रुधिरपानाय प्रारब्धा
25279 वेतालवदनाक्रमा यत्र॥ ४१॥
25280
25281 उह्यमानध्वजच्छत्रचारुचामरपङ्कजम्।
25282 किरत्संध्यारुणं दिक्षु तेजस्कं रक्तपङ्कजम्॥ ४२॥
25283
25284 रक्तह्रदेषूह्यमानानि ध्वजच्छत्रचामराणि पङ्कजानि सिताम्भोजानि यत्र।
25285 रक्तह्रदेषु संध्यारागप्रतिफलनादरुणं तजस्कं तेजःसमूहलक्षणं
25286 रक्तपङ्कजं कोकनदं दिक्षु किरत् विक्षिपत्॥ ४२॥
25287
25288 रथचक्रधरावर्तं रक्तार्णवमिवाष्टमम्।
25289 पताकाफेनपुञ्जाढ्यं चारुचामरबुद्बुदम्॥ ४३॥
25290
25291 रथास्तच्चक्राणि च क्रमाद्धराः पर्वता आवर्ताश्च यत्र तथाविधाम्।
25292 प्रसिद्धार्णवसप्तकाधिक्यादष्टमं रक्तार्णवमिव स्थितम्॥ ४३॥
25293
25294 विपर्यस्तरथं भूमिपङ्कमग्नपुरोपमम्।
25295 उत्पातवातनिर्धूतद्रुमं वनमिवाततम्॥ ४४॥
25296
25297 कल्पदग्धजगत्प्रख्यं मुनिपीतार्णवोपमम्।
25298 अतिवृष्टिहतं देशमिव प्रोज्झितमानवम्॥ ४५॥
25299
25300 हतो देश इति प्रथमान्तपाठश्छान्दसः॥ ४५॥
25301
25302 कलापकुन्तवलितं भुशुण्डीमण्डलाकुलम्।
25303 मत्तनागशताकारशवतोमरमुद्गरम्॥ ४६॥
25304
25305 कलापैर्भूषणैः शरैश्च वलितं व्याप्तम्। नागा गजास्तदाकाराः शवाः
25306 नागा सर्पास्तदाकारास्तोमरमुद्गराश्च यत्र॥ ४६॥
25307
25308 शिलाशिखरसंजाततालजालमिवाततम्।
25309 तरद्रक्तनदीतीरजातकुन्तोन्नतद्रुमम्॥ ४७॥
25310
25311 पूर्वार्धोक्तार्थे उत्तरार्धोक्तोऽर्थो हेतुः॥ ४७॥
25312
25313 नागांसस्यूतहेत्योघवृक्षांशुकुसुमाकुलम्।
25314 कङ्ककृष्टान्त्ररसनावृन्दजालकिताम्बरम्॥ ४८॥
25315
25316 नागानां गजानामङ्गेषु स्यूताः प्रोता हेत्योघा एव वृक्षास्तेषामंशवः
25317 किरणास्तल्लक्षणैः कुसुमैराकुलम्। जालकितं संजातजालकमिव कृतम्॥ ४८॥
25318
25319 असृक्सरित्तीरजातकुन्तोन्नतवनद्रुमम्।
25320 असृक्सरोवरोर्ध्वस्थपताकानलिनीगणम्॥ ४९॥
25321
25322 रक्तकर्दमनिर्मग्ननराहूतसुहृज्जनम्।
25323 करीन्द्रकुणपापातनिर्यद्भग्नजनेक्षितम् [तिर्यग्भग्न इति
25324 पाठः]॥ ५०॥

25325
25326 करीन्द्राणां कुणपेभ्यः शवेभ्य
25327 आपातनिर्यद्भिरीषन्निर्गतैर्भग्नकट्यादिजनैरीक्षितम् ॥ ५० ॥
25328
25329 हेतिलूनलतैर्वृक्षैः संदिग्धार्धकबन्धकम् ।
25330 असृङ्नदीवहद्धस्तिकटकर्पटनौगणम् ॥ ५१ ॥
25331
25332 असृङ्नदीषु वहन्तः प्लवमाना हस्तिनां कटा गण्डाः कर्पटानि
25333 पल्याणवस्त्राणि च नौगाणा औकासमूहा यत्र ॥ ५१ ॥
25334
25335 रक्तस्रोतःस्फुरच्छुक्लवस्त्रडिण्डीरपिण्डकम् ।
25336 संचारनियतक्षिप्रभृत्यविच्छिन्नमानवम् ॥ ५२ ॥
25337
25338 डिण्डीरः फेनः । संचाराय नियतैराज्ञप्तैः क्षिप्रैः
25339 शीघ्रकारिभिर्भृत्यैर्विच्छिन्ना विवेचिताः ॥ ५२ ॥
25340
25341 इतश्चेतश्च निपतत्कबन्धरवदानवम् [नवदानवं इति पाठः]
25342 ।
25343 ऊर्ध्वस्थूलाक्षचक्रौघच्छिन्नसैन्यद्रवज्जनम् ॥ ५३ ॥
25344
25345 ऊर्ध्वीभूतैः स्थूलाक्षैर्बृहच्छिद्रैश्चक्रौघैः ॥ ५३ ॥
25346
25347 रक्तनिःस्वनभाङ्कारफेत्कारार्धमृतारवम् ।
25348 शिलामुखललद्रक्तधाराधूतरजःखगम् ॥ ५४ ॥
25349
25350 रक्तनिःस्वनसहिता भाङ्कारफेत्काररूपा अर्धमृतप्राण्यारवा यत्र ।
25351 शिलामुखेषु ललन्त्याः स्रवन्त्या रक्तधारायाः पानाय निरालम्बेन
25352 पक्षविधूननेनोद्धूतरजसः कङ्कादिखगा यत्र ॥ ५४ ॥
25353
25354 सुतालोत्तालवेतालतालताण्डवसंकटम् ।
25355 पर्यस्तरथदार्वन्तरर्धन्तरितसद्भटम् ॥ ५५ ॥
25356
25357 सद्भटा जीवद्भटाः ॥ ५५ ॥
25358
25359 अन्तस्थसज्जीवभटस्पन्दिस्पन्दनभीतिदम् ।
25360 रक्तकर्दमपूर्णास्यकिंचिज्जीवकृपाच्छवम् ॥ ५६ ॥
25361
25362 किंचिज्जीवत्वात्कृपां अन्ततः प्राप्नुवन्तः शवा यत्र ॥ ५६ ॥
25363
25364 किंचिज्जिवनरोद्ग्रीवदुःखदृष्टश्ववायसम् ।
25365 एकामिषोत्कक्रव्यादयुद्धकोलाहलाकुलम् ।
25366 एकामिषार्थयुद्धेहामृतक्रव्यादसंकुलम् ॥ ५७ ॥
25367
25368 युद्धेहाभिर्युद्धचेष्टाभिः ॥ ५७ ॥
25369
25370 विवृत्तासंख्याश्वद्विरदपुरुषाधीश्वररथ-
25371 प्रकृत्तोष्ट्रग्रीवाप्रसृतरुधिरोद्गारसुसरित् ।
25372 रणोद्यानं मृत्योस्तदभवदशुष्कायुधलतं
25373 सशैलं कल्पान्ते जगदिव विपर्यस्तमखिलम् ॥ ५८ ॥
25374
25375 विशेषेण वृत्तानां मृतानां परिवर्तितानां चासंख्यानामश्वादीनां
25376 प्रकृत्ताभ्यश्छिन्नाभ्य उष्ट्रग्रीवाभ्यश्च प्रसृता रुधिरोद्गारैः

25377 शोभनाः सरितो यत्र। अशुष्का रक्तसेकपल्लविता आयुधलता यत्र तथाविधं
25378 रणभूमिलक्षणं मृत्योरुद्यानमुपवनमासीत्॥ ५८॥
25379
25380 इत्यार्षे श्रीवासिष्ठमहारामायणे मोक्षोपाये उत्पत्तिप्रकरणे लीलो॰
25381 आहववर्णनं नामाष्टत्रिंशः सर्गः॥ ३८॥
25382
25383 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे आहववर्णनं
25384 नामाष्टत्रिंशः सर्गः॥ ३८॥
25385
25386
25387 एकोनचत्वारिंशः सर्गः ३९
25388
25389 श्रीवसिष्ठ उवाच।
25390
25391 अथ वीर इवारक्तः कालेनास्तमितो रविः।
25392 अस्त्रतेजःपरिम्लानप्रतापोऽब्धौ समुज्झितः॥ १॥
25393
25394 सूर्यस्यास्तमयः संध्या रक्षोवेतालसंकुला।
25395 बीभत्सबहलं रात्रौ रणस्थानं च वर्ण्यते॥ १॥
25396
25397 सूर्यपक्षे अस्त्रतेजसि स्वच्छे नभसि परिम्लानप्रतापो मन्दरश्मिः।
25398 समुज्झितस्त्यक्तः पातित इति यावत्॥ १॥
25399
25400 रणरक्तरुचिर्व्योमदर्पणप्रतिबिम्बिता।
25401 जहौ सूर्यशिरश्छेदे संध्यालेखोदभूत्क्षणम्॥ २॥
25402
25403 सूर्यलक्षणस्य सादिनः शिरसश्छेदे पातने सति प्राग्व्योमदर्पणे प्रतिबिम्बिता
25404 रक्तरुचिर्व्योम जहौ। क्षणमल्पकालम्॥ २॥
25405
25406 भूपातालनभोदिग्भ्यः प्रलयाब्धिजलौघवत्।
25407 समाजग्मुस्तनत्ताला वेताला वलया इव॥ ३॥
25408
25409 सर्वदिग्वलयनाद्वलयाकाराः स्तनन्तो ध्वनन्तस्तालाः करताला येषां स्तनन्तो
25410 ध्वनन्तस्ताला इव दीर्घा वा वेतालाः॥ ३॥
25411
25412 मृष्टध्वान्तासिवलिते दिननागेन्द्रमस्तके।
25413 संध्यारागारुणं कीर्णं तारानिकरमौक्तिकम्॥ ४॥
25414
25415 दिनलक्षणस्य नागेन्द्रस्य गजश्रेष्ठस्य मस्तके मृष्टेन
25416 शाणनिघृष्टेन ध्वान्तासिना वलिते खण्डिते सति रागो रक्तं तेनारुणं
25417 तारानिकरलक्षणं गजमौक्तिकं विकीर्णमित्युत्प्रेक्षा॥ ४॥
25418
25419 निःसत्त्वेषु तमोन्धेषु रसनारसशालिषु।
25420 संकोचमाययुः पद्मामृतानां हृदयेष्विव॥ ५॥
25421
25422 निह्सत्त्वेषु निर्गतहंसादिजन्तुषु निष्प्राणेषु च। तमसान्धकारेण मोहेन
25423 चान्धेषु। रसशालिषु सरःसु प्राग्जीवनप्रेमवत्सु च। रसनाः
25424 प्राग्भ्रमरादिभिः प्राणैश्च ध्वनन्तः॥ ५॥
25425
25426 मीलत्पक्षाः क्षणात्सुप्ताः कृच्छ्रप्रोच्छ्रितकन्धराः।
25427 कुलायेषु खगा आसञ्छवाङ्गेष्विव हेतयः॥ ६॥
25428

25429 हेतिपक्षे कृच्छ्रेण मरणदुःखेन प्रोच्छ्रिता उन्नामिताः कन्धराः कण्ठा
25430 यैः ॥ ६ ॥
25431
25432 आसन्नचन्द्रसुभगा लोकाः कुसुमपङ्क्तयः ।
25433 उल्लसद्धृदया जाता वीरपक्षेष्विव श्रियः ॥ ७ ॥
25434
25435 आसन्नस्य चन्द्रस्य सुभगालोकलक्षणास्तत्सदृशाश्च
25436 कुमुदादिकुसुमपङ्क्तयः ॥ ७ ॥
25437
25438 रक्तवारिमयी सायमङ्गगुप्तशिलीमुखा ।
25439 संकुचद्वक्रपद्माभूद्रणभूमिरिवाब्जिनी ॥ ८ ॥
25440
25441 अब्जिनीपक्षे संध्यारागप्रतिफलाद्रक्तसदृशवारिप्रचुराः । शिलीमुखा
25442 बाणा भ्रमराश्च । वक्राण्येव वक्राणीव वा पद्मानि यस्याः ॥ ८ ॥
25443
25444 उपर्यभूद्व्योमसरस्ताराकुमुदमण्डितम् ।
25445 अधस्त्वभूद्वारिसरः स्फुरत्कुमुदतारकम् ॥ ९ ॥
25446
25447 तमस्यपेतभीतानि भूतानि मिलितान्यलम् ।
25448 पयांसीव विसेतूनि प्रसृतानि दिशं प्रति ॥ १० ॥
25449
25450 प्रागपेतानि वियुक्तानि पश्चान्मिलितान्यप्यपरिचयात्परस्परस्माद्भीतानीत्यर्थः
25451 ॥ १० ॥
25452
25453 आसीद्रणाङ्गणं गायद्वेतालकुलसंकुलम् ।
25454 क्वणत्कङ्कालकाङ्कस्थकङ्ककाकोलकेलिमत् ॥ ११ ॥
25455
25456 कङ्कालकानां शवानामङ्के उत्सङ्गे ॥ ११ ॥
25457
25458 अथ काष्ठचिताज्वालसताराम्बरभास्वरम् ।
25459 पचत्पचपचाशब्दिमेदोमांसमयानलम् ॥ १२ ॥
25460
25461 अथ रणाङ्गणं वक्ष्यमाणविशेषणमासीदित्यासर्गान्तमनुवर्तते ॥ १२ ॥
25462
25463 सर्वाङ्गास्थिस्फुटास्फोटस्फुटच्चितिचयोन्मुखम् ।
25464 वेतालललनारब्धजललीलातिरोहितम् ॥ १३ ॥
25465
25466 अस्थ्नां स्फुटैरासमन्तात्स्फोटैः स्फुटन्तश्चितिचया एव वीरवदुन्मुखाः
25467 प्राधान्येन प्रकाशमाना यत्र । वेतालललनाभिरारब्धं जललीला जलक्रीडा
25468 तस्यामिव चिताग्निषु तिरोहितमन्तर्धानं यत्र ॥ १३ ॥
25469
25470 श्वकाकयक्षवेतालतालकोलाहलोल्बणम् ।
25471 गमागमेन भूतानां समुड्डीनवनोपमम् ॥ १४ ॥
25472
25473 रक्तमांसवसामेदोहरणव्यग्रडाकिनि ।
25474 चर्वितासृग्वसामांसस्रवत्सृक्किपिशाचकम् ॥ १५ ॥
25475
25476 स्रवन्त्यौ सृक्किणी ओष्ठप्रान्तौ येषां तथाविधाः पिशाचका यत्र ॥ १५ ॥
25477
25478 मध्यमध्यचितालोकप्रकटासृक्शवव्रजम् ।
25479 विरूपिकानीयमानस्वांसन्यस्तमहाशवम् ॥ १६ ॥
25480

मध्यमध्यचितासु आलोकाः पिशाचैरालोक्यमानाः प्रकटासृजः शवव्रजा
यत्र। विरूपिकाः पूतनाः॥ १६॥

उत्ताण्डवोग्रकुम्भाण्डमण्डलोड्डामरोदरम्।
छमिच्छमितिप्रलापान्तं मेदोसृग्बाष्पसाम्बुदम्॥ १७॥

कुम्भाण्डाः पिचण्डिलाः पिशाचजातिभेदाः। छमिच्छमिदिति प्रलापा इव
शववक्रान्ते ज्वालाशब्दा यत्र। मेदोसृजां वाष्पैः सार्द्रधूमैः
साम्बुदमिव॥ १७॥

वहद्रक्तनदीरंहोरूढभूचररूपिकम्।
वेतालकुलकङ्कालकर्षणाकुलकाकलम्॥ १८॥

रक्तनदीरंहसि रूढा निखातपादा अत एव भूचरीव लक्ष्यमाणा रूपिका यत्र।
वेतालकुलानां कङ्कालानां शवानां कर्षणासु कुलोचितानि काकलानि
हर्षकलकूजितानि यत्र॥ १८॥

मृतेभोदरमञ्जूषासुप्तवेतालबालकम्।
विविक्तैकरणोद्देशपानक्रीडास्थराक्षसम्॥ १९॥

मत्तवेतालकलहचितालातरणोज्ज्वलम्।
वहद्रक्तवसामिश्रगन्धबन्धुरमारुतम्॥ २०॥

चितानामलातैर्ज्वलदुल्मुकैर्यो रणस्तेनोज्ज्वलं दीप्रम्॥ २०॥

प्। २२५)

रूपिकापेटिकावान्तारणद्रटरटारवम्।
अर्धपक्वशवास्वादलुब्धयक्षोल्लसत्कलि॥ २१॥

रूपिकाणां पूतनाभेदानां पेटिका करण्डास्तासामेव प्रसिद्धाः।
यक्षाणां उल्लसन्कलिः कलहो यत्र॥ २१॥

तुङ्गवङ्गकलिङ्गाङ्गतङ्गणाङ्गलगत्खगम्।
तारापातोपमहसत्संमुखज्वालरूपिकम्॥ २२॥

तुङ्गेषु वङ्गादिवेशजानामङ्गेषु लगन्तो निशाचरखगा यत्र।
तारापातोपमैर्दशनैर्हसन्त्यः संमुखीकृतज्वालारूपिका यत्र॥ २२॥

पतद्वेतालसोल्लासमध्यस्थासृग्विरूपिकम्।
पिशाचाकर्णिताभ्यर्णयोगिनीगणनायकम्॥ २३॥

असृक्पिच्छिले पतत्सु वेतालेषु हासादिसोल्लासा असृक्प्रधाना विरूपिका यत्र॥ २३॥

प्रसृतान्त्रमहातन्त्रीप्रायसंपन्नवादनम्।
पिशाचवासनोत्क्रान्तपिशाचीभूतमानवम्॥ २४॥

आन्त्रमहातन्त्रीभिः प्रायेण संपन्नानि वादनानि यत्र॥ २४॥

रूपिकालोकनापूर्वत्रासार्धमृतसद्भटम्।
क्वचिद्वेतालरक्षोभिरपरीपूर्णमद्रकम्॥ २५॥

25533 रूपिकाणामालोकनादपूर्वत्रास आकस्मिकं भयं तस्मात् | मद्रकं
25534 कल्याणोत्सवः || २५ ||
25535
25536 स्वरूपिकास्कन्धपतच्छवत्रस्तनिशाचरम् |
25537 नभःसंघट्टितापूर्वभूतपेटकसंकटम् || २६ ||
25538
25539 नभसि संघट्टितैरपूर्वैः प्रसिद्धविलक्षणैर्भूतपेटकैः संकटं
25540 निरन्तरम् || २६ ||
25541
25542 अतिप्रयत्नापहृतम्रियमाणनरामिषम् |
25543 स्वभक्ष्यापेक्षपक्षेषु विक्षिप्तशवराशिवत् || २७ ||
25544
25545 स्वेषु स्वीयेषु भक्ष्यापेक्षेषु पक्षेषु || २७ ||
25546
25547 शिवामुखानलशिखाखण्डोत्थमितिरक्तगैः |
25548 समुड्डीननवाशोकपुष्पगुच्छमिवाभितः || २८ ||
25549
25550 शिवा
25551 जम्बुकास्तन्मुखानलज्वालाभिरखण्डमनुच्छेदमुत्थमितिभिर्मूर्च्छान्तःप्
25552 राप्तसंज्ञैः रक्तगै रक्तव्याप्तैर्नरैश्च || २८ ||
25553
25554 कबन्धकन्धराबन्धव्यग्रवेतालबालकम् |
25555 यक्षरक्षःपिशाचादिकचदाकाशगोल्मुकम् || २९ ||
25556
25557 कबन्धकन्धरासु च्छिन्नशिरोबन्धनक्रीडासु व्यग्रा वेतालबालका यत्र |
25558 यक्षादीनां कचन्तो दीप्यमाना आकाशगा उल्मुका ज्वलदलातानि यत्र || २९ ||
25559
25560 आकाशभूधरनिकुञ्जगुहान्तराल-
25561 पिण्डोपमण्डिततमोम्बुदपीठपूरम् |
25562 व्यालोलभूतरभसाकुलकल्पवात-
25563 व्याधूतलोककरकाण्डकपेटकल्पम् || ३० ||
25564
25565 आकाशभूधरेषु तदीयनिकुञ्जानां गुहानां चान्तरालेषु च
25566 पिण्डवन्निबिडतया उपमण्डितस्तमोलक्षणः अम्बुदपीठानां
25567 पीठवत्प्रतिष्ठिताम्बुदानां पूरः समूहो यत्र | व्यालोलानां भूतानां
25568 रभसेन वेगेन आकुलं कल्पवातैर्व्याधूता लोका जनास्तदीय
25569 करकादिसंभाराश्च यत्र तथाविधं यदण्डकपेटं ब्रह्माण्डोदरं
25570 तत्कल्पं रणाङ्गणमासीदित्यर्थः || ३० ||
25571
25572 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे ली०
25573 निशाचराकुलरात्रिरणाङ्गणवर्णनं नामैकोनचत्वारिंशः सर्गः ||
25574 ३९ ||
25575
25576 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
25577 निशाचराकुलरात्रिरणाङ्गणवर्णनं नामैकोनचत्वारिंशः सर्गः || ३९ ||
25578
25579
25580 चत्वारिंशः सर्गः ४०
25581
25582 श्रीवसिष्ठ उवाच |
25583
25584 एवं निशाचराचारचिरघोरे रणाङ्गणे |

अहनीव जनाचारे स्थिते यामावरेहिते ॥ १ ॥

सुप्ते विदूरथे वेश्मप्रवेशो ज्ञप्तिलीलयोः ।
आतिवाहिकदेहस्य तत्त्वं चात्र निरूप्यते ॥ १ ॥

निशाचराणामाचारेण चिरं घोरे भयानके रणाङ्गणे । यामानां
यमसंबन्धिनां दूतानामवराणां निकृष्टानां पिशाचादीनां च ईहिते
चेष्टिते । अहनि जनानां यथोचिताचारवत् एवं वर्णितप्रकारेण स्थिते सतीत्यर्थः
॥ १ ॥

हस्तहार्यतमःपिण्डस्फुटकुड्ये निशागृहे ।
लाभोच्छदोच्चलचते भूतसङ्घे प्रवल्गति ॥ २ ॥

हस्तेन हर्तुं शक्यैरिव निबिडैस्तमःपिण्डैः स्फुटानि प्रकटीभूतानि
कुड्यानि यत्र तथाविधे निशालक्षणे गृहे भक्ष्यसमृद्धिलाभे उच्छदं
उद्गतवस्त्रं उच्चलं पलायमानं च तं याल्वादैन्यं यस्मात्तथाविधे
भूतसङ्घे प्रवल्गति क्रीडति सति । चते याचने । घञर्थे कविधानमिति भावे
कः ॥ २ ॥

निःशब्दे ध्वान्तसंचारे निद्रारुद्धककुब्गणे ।
लीलापतिरुदारात्मा किंचित्खिन्नमना इव ॥ ३ ॥

रणाङ्गणस्थितिमुक्त्वा नगरस्थितिमाह - निःशब्द इति । ककुब्गणशब्देन
दिक्समूहस्थितप्राणिनो लक्ष्यन्ते ॥ ३ ॥

प्रातःकार्यं विचार्याशु मन्त्रिभिर्मन्त्रकोविदैः ।
दीर्घचन्द्रसमाकारे शयने हिमशीतले ॥ ४ ॥

चन्द्रोदरनिभे चारुगृहे शिशिरकोटरे ।
निद्रां मुहूर्तमगमन्मुद्रितेक्षणपुष्करः ॥ ५ ॥

अगमत्प्राप ॥ ५ ॥

अथ ते ललने व्योम तत्परित्यज्य तद्गृहम् ।
रन्ध्रैर्विविशतुर्वातलेखेऽब्जमुकुलं यथा ॥ ६ ॥

ते ललने ज्ञप्तिलीले ॥ ६ ॥

श्रीराम उवाच ।

कियन्मात्रमिदं स्थूलं शरीरं वाग्विदांवर ।
रन्ध्रेण तन्तुतनुना कथमाश्वाविशत्प्रभो ॥ ७ ॥

सूक्ष्मतमब्रह्माण्डच्छिद्रान्निर्गमने प्राक्पृष्टमेवार्थं रामः
पुनर्दृढीकारायाधिक जिज्ञासया पृच्छति - कियदिति । कियन्मात्रं
चतुर्हस्तप्रमाणदैर्घ्यमिति यावत् ॥ ७ ॥

प। २२६)

श्रीवसिष्ठ उवाच ।

आधिभौतिकदेहोऽहमिति यस्य मतिभ्रमः ।

25637 तस्यासावणुरन्ध्रेण गन्तुं शक्नोति नानघ ॥ ८ ॥
25638
25639 असौ स्थूलदेहः । अणुरन्ध्रेण सूक्ष्मच्छिद्रेण ॥ ८ ॥
25640
25641 रोधितोऽहमनेनेति न माम्यत्रेति यस्य धीः ।
25642 अनुभूतानुभवति भवतीत्यनुभूयते ॥ ९ ॥
25643
25644 तत्कुतस्तत्राह - रोधित इति । रोधितो निरुद्धः अत्रास्मिञ्छिद्रे न मामि मातुं
25645 न शक्नोमि नरदेहस्वभावत्वादिति यस्य धीः पूर्वं शतशोऽनुभूतमेव
25646 स्थूलदेहस्वरूपत्वमात्मनोऽनुभवति भवति ।
25647 शप्श्यनोर्नित्यवचनान्नुमभावश्छान्दसः । तेन इति एवंरीत्या
25648 अगमनमेवानुभूयते इत्यर्थः ॥ ९ ॥
25649
25650 येनानुभूतं पूर्वार्धं गच्छामीति स तत्क्रियः ।
25651 कथं भवति पश्चार्धं गमनोन्मुखचेतनः ॥ १० ॥
25652
25653 येन तु स्थूलनरदेहतादात्म्यबुद्ध्यभावादातिवाहिकदेहमात्रत्वनिश्चयाच्च
25654 पूर्वार्धपौर्वकालिकदृढवासनासमृद्धं सूक्ष्मतमेऽपि च्छिद्रे
25655 गच्छामि गमनसमर्थोऽस्मीत्येवं शतशोऽनुभूतं स
25656 तादृशगमनस्वभावोन्मुखात्मचेतनांशस्वभावः पुरुषः पश्चार्धं
25657 उत्तरकाले तत्क्रियः स्थूलदेहानुरूपनिरोधादिक्रियाविशिष्टः कथं भवति ।
25658 प्रागाविर्भूतशक्तिस्वभावस्यान्यथात्वायोगादिति भावः ॥ १० ॥
25659
25660 नहि वार्यूर्ध्वमायाति नाधो गच्छति पावकः ।
25661 या यथैव प्रवृत्ता चित्सा तथैव प्रतिष्ठिता ॥ ११ ॥
25662
25663 बहिरपि वस्तुशक्तिस्वभावस्तथैव नियतो दृष्ट इत्याह - नहीति । प्रवृत्ता
25664 प्रागाविर्भूतशक्तिः ॥ ११ ॥
25665
25666 छायायामुपविष्टस्य कुतस्तापानुभूतयः ।
25667 यस्य संवेदनेऽन्योऽर्थः केनचिन्नानुभूयते ॥ १२ ॥
25668
25669 स्थूलदेहात्मबुद्धिरहितयोगिपिशाचादीनामपि निरोधदुःखाभावे
25670 द्वैतमात्राध्यासरहितानां तत्त्वज्ञानां तद्दुःखं नास्तीति किं
25671 वक्तव्यमित्याशयेनाह - छायायामिति । यस्य परमात्मनः सम्यग्वेदने
25672 साक्षात्कारे सति ॥ १२ ॥
25673
25674 यथा संवित्तथा चित्तं सा तथावस्थितिं गता ।
25675 परमेण प्रयत्नेन नीयतेऽन्यदशां पुनः ॥ १३ ॥
25676
25677 नन्वधिष्ठाने संविदि स्थौल्यसौक्ष्म्यादिशक्त्याविर्भावेऽपि चित्तस्य
25678 तदनुविधायित्वं कुतस्तत्राह - यथेति । कथं तर्ह्यन्यथाभावस्तत्राह
25679 - परमेणेति । योगज्ञानाभ्यासादिप्रयत्नेनेत्यर्थः ॥ १३ ॥
25680
25681 सर्पैकप्रत्ययो रज्ज्वामसर्पप्रत्यये बलात् ।
25682 निवर्ततेऽन्यथा त्वेष तिष्ठत्येव यथास्थितः ॥ १४ ॥
25683
25684 तत्र ज्ञानप्रयत्नेनान्यथाभावमुदाहरति - सर्पेति । असर्पप्रत्यये
25685 रज्जुतत्त्वनिर्णये सति ॥ १४ ॥
25686
25687 यथा संवित्तथा चित्तं यथा चित्तं तथेहितम् ।
25688 बालं प्रत्यपि संसिद्धमेतत्को नानुभूतवान् ॥ १५ ॥

25689
25690 चित्तस्य संविच्छक्त्यनुसारित्वमिव चेष्टायाश्चित्तानुसारित्वमपि
25691 प्रसिद्धतरमित्याह - यथेति ॥ १५ ॥
25692
25693 यः पुनः स्वप्नसंकल्पपुरुषः प्रतिमाकृतिः ।
25694 आकाशमात्रकाकारः स कथं केन रोध्यते ॥ १६ ॥
25695
25696 ननु स्थूलदेहवदातिवाहिकं चित्तशरीरमपि कुतो न रोध्यते तत्राह - य इति ॥
25697 १६ ॥
25698
25699 चित्तमात्रं शरीरं तु सर्वस्यैव हि सर्वतः ।
25700 विद्यते वेदनाच्चैतत्क्वचिदेतीव हृद्गतात् ॥ १७ ॥
25701
25702 ननु भौतिकस्यास्य देहस्य ज्ञानबलाद्वा कथं चित्तशरीरत्वप्राप्तिस्तत्राह ##-
25703 तथाच न भूतानि चित्तात्पृथक्सन्तीति भावः ॥ १७ ॥
25704
25705 यथाभिमतमेवास्य भवत्यस्तमयोदयम् ।
25706 आदिसर्गे स्वभावोत्थं पश्चाद्द्वैतैक्यकारणम् ॥ १८ ॥
25707
25708 भूतानां चित्तादपृथक्सत्तामुपपादयति - यथाभिमतमिति । अस्य
25709 परमात्मनः अभिमतं चित्तवृत्तिस्तदनतिक्रम्येति यथाभिमतम् । अस्य
25710 भूतजातस्य । अस्तमयोदयमिति समाहारद्वन्द्वः । स्वभावः
25711 स्वाभाविकमज्ञानं कर्म वा तदुत्थम् । स्थूलानि भूतानि भौतिकानि च
25712 द्वैतं तेषां मेलनेनैकदेहभावेनैक्यं च तत्र कारणं पञ्चीकरणं
25713 पश्चाद्भवतीत्यर्थः ॥ १८ ॥
25714
25715 चित्ताकाशं चिदाकाशमाकाशं च तृतीयकम् ।
25716 विद्ध्येतन्त्रयमेकं त्वमविनाभावनावशात् ॥ १९ ॥
25717
25718 एवं चित्ताव्यक्तयोरपि न शुद्धचितः पृथक्सत्तेत्याह - चित्ताकाशमिति ।
25719 अविनाभावना अधिष्ठानसत्ताव्यतिरेकेणास्फुरणं तद्वशात् ॥ १९ ॥
25720
25721 एतच्चित्तशरीरत्वं विद्धि सर्वगतोदयम् ।
25722 यथासंवेदनेच्छत्वाद्यथासंवेदनोदयम् ॥ २० ॥
25723
25724 एवमधिष्ठानसत्ताधीनसत्तासाम्येऽपि स्थूलात्सूक्ष्मे
25725 अनिरोधहेतुर्विशेषोऽस्तीत्याह - एतदिति । सर्ववस्तुषु गतः प्राप्त उदयः
25726 स्वैरमाविर्भावशक्तिर्यस्य तत्तथाविधं विद्धि । तत्कुतः । यतो
25727 यथासंवेदनोदयं संवेदनं
25728 पूर्ववासनाकर्मानुसारिपदार्थस्फूर्तिस्तदनतिक्रम्योदयो यस्य
25729 तथास्वभावं न बाह्यवस्तुशक्त्यनुसारिस्वभावम् । तदपि कुतः ।
25730 यथासंवेदनेच्छत्वात् । यतः शुक्तिमपि रजतात्मना संविदितामिच्छति न
25731 शुक्तिशक्तिमनुसृत्योपेक्षते । तथाच स्थूलस्य बाह्यवस्त्वनुसारित्वान्निरोधेऽपि
25732 न संवेदनेच्छामात्रानुसारिणश्चित्तशरीरस्य निरोध इति भावः ॥ २० ॥
25733
25734 वसति त्रसरेण्वन्तर्ध्रियते गगनोदरे ।
25735 लीयतेऽङ्कुरकोशेषु रसीभवति पल्लवे ॥ २१ ॥
25736
25737 सर्वगतोदयत्वं प्रपञ्चयति - वसतीत्यादिना ॥ २१ ॥
25738
25739 उल्लसत्यम्बुवीचित्वे प्रनृत्यति शिलोदरे ।
25740 प्रवर्षत्यम्बुदो भूत्वा शिलीभूयावतिष्ठते ॥ २२ ॥

यथेच्छमम्बरे याति जठरेऽपि च भूभृताम्।
अनन्तराकाशवपुर्धत्तेऽथ परमाणुताम्॥ २३॥

न विद्यतेऽन्तः आकाशवपुरवकाशस्वरूपं यत्र तथाविधं सत्परमाणुतां
धत्ते॥ २३॥

भवत्यद्रिर्धराधारो बद्धपीठो नभः शिराः।
देहस्यान्तर्बहिरपि दधद्वनतनूरुहम्॥ २४॥

वनलक्षणं तनूरुहं दधत् सत् अद्रिर्भवति। बद्धपीठो दृढमूलः।
देहस्यान्तरद्र्यादिभावः स्वप्ने प्रसिद्धो बहिस्त्विन्द्रजालादौ॥ २४॥

प्। २२७)

भवत्याकाशमाधत्ते कोटीः पद्मजसद्मनाम्।
अनन्याः स्वात्मनोऽम्भोधिरावर्तरचना इव॥ २५॥

स्वात्मनाश्चित्तस्वरूपादनन्या अभिन्नाः पद्मजसद्मनां ब्रह्माण्डानां
कोटीः आसमन्ताद्धत्ते॥ २५॥

अनुद्विग्नप्रबोधोऽसौ सर्गादौ चित्तदेहकः।
आकाशात्मा महान्भूत्वा वेत्ति प्रकृततां ततः॥ २६॥

अनुद्विग्नः उद्वेगादविपर्यस्तः कर्मानुसारी प्रबोधो यस्य। आकाशात्मा
आकाशादिक्रमेण महान् ब्रह्माण्डात्मा भूत्वा प्रकृततां प्रस्तुततां
प्रारब्धकर्मानुसारिप्रवृत्तिम्॥ २६॥

असत्यमेव वारित्वं बुद्ध्योदेतीव तत्तथा।
वन्ध्यापुत्रोऽयमस्तीति यथा स्वप्ने भ्रमो नरः॥ २७॥

वारित्वं मृतगृष्णादौ यथेति शेषः। वन्ध्यापुत्रोऽयं नरोऽस्तीति यथा
स्वप्ने भ्रम उदेतीत्यन्वयः॥ २७॥

श्रीराम उवाच।

किं चित्तमेतद्भवति किंवा भवति नो कथम्।
कथमेव न सद्रूपं नान्यद्भवति वीक्षणात्॥ २८॥

सूक्ष्मतमं चित्तमेव सर्वजगत्सर्वशक्तिमत् तदेवापरिज्ञाततत्त्वं
स्थूलमिव भूत्वा परतन्त्रं भवति। परिज्ञाततत्त्वं तु व्यवहारे
सर्वत्राप्रतिहतं स्वतन्त्रमित्युक्तं तत्र किमस्मादिचित्तं
प्रत्येकमेवंशक्तिकं भवत्युत न। आद्ये प्रतिचित्तं
विचित्रसर्वभेदसत्त्वप्रसङ्गः। द्वितीये तु चित्ताजन्यं चित्तादन्यदेव
जगद्रूपं स्यात्तथैव सर्वैर्वीक्षणात्तथा च ज्ञानेन चित्तनाशेऽपि
जगदनुवृत्तिरेव स्यादित्याशयेन श्रीरामः पृच्छति - किमिति।
एतदस्मदादिसंबन्धि चित्तं एतदुक्तशक्तिकं भवति किंवा नो भवति। आद्ये
प्रतिचित्तं भिन्नं जगत्सद्रूपं कथं न। द्वितीये तु अन्यत्कथं न भवतीति
कथंशब्दद्वयस्य प्रत्येकमन्वयः॥ २८॥

श्रीवसिष्ठ उवाच।

25793 प्रत्येकमेव यच्चित्तं तदेवंरूपशक्तिकम् ।
25794 पृथक्प्रत्येकमुदितः प्रतिचित्तं जगद्भ्रमः ॥ २९ ॥
25795
25796 तत्राद्यकल्पमेवाभ्युपगम्य वसिष्ठ उत्तरमाह - प्रत्येकमिति ॥ २९ ॥
25797
25798 क्षणकल्पजगत्सङ्घाः समुद्यन्ति गलन्ति च ।
25799 निमेषात्कस्यचित्कल्पात्कस्यचिच्च क्रमं शृणु ॥ ३० ॥
25800
25801 मरणादिमयी मूर्च्छा प्रत्येकेनानुभूयते ।
25802 यैषा तां विद्धि सुमते महाप्रलययामिनीम् ॥ ३१ ॥
25803
25804 कथं तर्हि महाप्रलयानन्तरं सृष्टिप्रवादस्तत्राह - मरणेति ।
25805 व्यष्टिकृतसर्गे प्राक्तनमरणमेव महाप्रलय इत्यर्थः ॥ ३१ ॥
25806
25807 तदन्ते तनुते सर्गं सर्व एव पृथक्पृथक् ।
25808 सहजस्वप्नसंकल्पान्संभ्रमाचलनृत्यवत् ॥ ३२ ॥
25809
25810 सहजान्स्वाभाविकाविद्योत्थानवस्थात्रयस्वप्नसंकल्पान् । तस्य त्रय
25811 आवसथास्त्रयः स्वप्नाः इति श्रुतेः । संभ्रमश्चित्तमोहः ॥ ३२ ॥
25812
25813 महाप्रलयरात्र्यन्ते चिरादात्ममनोवपुः ।
25814 यथेदं तनुते तद्वत्प्रत्येकं मृत्यनन्तरम् ॥ ३३ ॥
25815
25816 आत्मनः परब्रह्मणः समष्टिमनोवपुर्हिरण्यगर्भः सत्यसंकल्पात्तनुते
25817 तथैव न तदतिक्रम्येति न प्रतिचित्तं जाग्रत्प्रपञ्चवैचित्र्यप्रसक्तिः । स्वप्नादौ
25818 तु वैचित्र्यं दृष्टत्वादिष्टमेवेति भावः । अथवायं दृष्टान्तः -
25819 यथा समष्टिमनोवपुर्हिरण्यगर्भः समष्टिभोग्यं प्रपञ्चं तनुते तथा
25820 व्यष्टिमनोमात्रो जीवोऽपि स्वस्वभोग्यं स्वप्नादिव्यष्टिप्रपञ्चमिति ॥ ३३ ॥
25821
25822 श्रीराम उवाच ।
25823
25824 मृतेरनन्तरं सर्गो यथा स्मृत्यानुभूयते ।
25825 चिरात्तथानुभवति नातो विश्वमकारणम् ॥ ३४ ॥
25826
25827 ननु यद्धि मनसा ध्यायति तद्वाचा वदति तत्कर्मणा करोति इति श्रुत्या
25828 सर्वानुभवाच्च स्मृतिवक्क्रियाणामेकवस्तुविषयत्वं निश्चितं स्मृतिश्च
25829 स्वकारणानुभवस्य सत्यार्थत्वे यथार्था असत्यार्थत्वे त्वयथार्था ।
25830 तत्रास्माकं भ्रान्तिबहुलत्वादसत्यसंकल्पत्वाच्चास्मत्स्मृतेरयथार्थत्वे
25831 तज्जन्यकतिपयस्वप्नादिप्रपञ्चस्यासत्यतास्तु । हिरण्यगर्भस्य तु
25832 सर्वज्ञत्वेनाभ्रान्तत्वात्सत्यसंकल्पत्वाच्च तत्स्मृतेरयथार्थत्वायोगेन
25833 तत्सृष्टप्रपञ्चस्य न मिथ्यात्वप्रसक्तिरित्याशयेन रामः शङ्कते -
25834 मृतेरिति । यथा व्यष्टिजीवैर्मृतेरव्यवहितोत्तरकाले स्मृत्या
25835 स्वकृतसर्गोऽनुभूयते तथा समष्टिरपि चिरान्महाप्रलयादनन्तरं
25836 स्वकीयया यथार्थस्मृत्या सृष्टं प्रपञ्चमनुभवति अतस्तत्स्मृत्या
25837 रूढप्राक्तनसत्यार्थानामेवैतत्कल्पीयसत्यविश्वकारणत्वसंभवाद्विश्वम्
25838 अकारणं ब्रह्मातिरिक्तसत्यकारणताशून्यमिति यत्प्राक्प्रतिज्ञातं
25839 तन्मतव्याघात इत्यर्थः ॥ ३४ ॥
25840
25841 श्रीवसिष्ठ उवाच ।
25842
25843 महति प्रलये राम सर्वे हरिहरादयः ।
25844 विदेहमुक्ततां यान्ति स्मृतेः क इव संभवः ॥ ३५ ॥

25845
25846 भवेदेवं यद्यादिसर्गे यथार्थानुभवजन्या सर्गहेतुः स्मृतिस्तस्य
25847 संभवेत्। नहि सा प्रथमं हिरण्यगर्भपदप्राप्तस्योपासकस्य संभवति
25848 तस्य हि स्मृतिरुपासनोपनीतसंस्कारजन्या न यथार्थानुभवजन्या। उपासना
25849 च प्राक्तनी व्यष्टेरेव समष्टिभावचिन्तनं न यथार्थानुभव
25850 इत्ययथार्थोपासनासंस्कारजस्मृतिजन्यत्वान्नादिसर्गस्य सत्यताप्रसक्तिः।
25851 नहि प्राक्तनाः केचिदन्ये सर्वज्ञास्तदानीं सन्ति। सर्वेषां प्रागेव मुक्तत्वात्।
25852 द्वितीयकल्पादिसर्गहेतुस्मृतेस्तु पूर्वसर्गानुभूतमिथ्यार्थविषयतैवेति न
25853 क्वापि सर्गसत्यताप्रसक्तिरित्याशयेन वसिष्ठः समाधत्ते - महतीत्यादिना॥
25854 ३५॥
25855
25856 अस्मदादिः प्रबुद्धात्मा किलावश्यं विमुच्यते।
25857 कथं भवन्तु नो मुक्ता विदेहाः पद्मजादयः॥ ३६॥
25858
25859 प्रबुद्धात्मा तत्त्ववित्॥ ३६॥
25860
25861 अन्ये त्वमिव [त्वपि च इति पाठः] ये जीवास्तेषां मरणजन्मसु।
25862 स्मृतिः कारणतामेति मोक्षाभाववशादिह॥ ३७॥
25863
25864 मरणजन्मसु मरणजन्मप्रयोजकसर्गेषु स्मृतिः
25865 प्राक्तनमिथ्यार्थानुभववासनाजन्यैवेत्याशयः॥ ३७॥
25866
25867 प्। २२८)
25868
25869 जीवो हि मृतिमूर्च्छान्ते यदन्तः प्रोन्मिषन्निव।
25870 अनुन्मिषित एवास्ते तत्प्रधानमुदाहृतम्॥ ३८॥
25871
25872 ननु हैरण्यगर्भी सृष्टिः प्रधानान्महदहंकारादिक्रमेण पुराणादिषु
25873 श्रूयते जैवी तु सा सहसैव जायते तत्र कथं तत्सृष्टिसाम्यं
25874 जैवसृष्टेरित्याशङ्क्य तत्रापि प्रधानमहदादिक्रममुपपादयति - जीवो
25875 हीत्यादिना। अनुन्मिषितो बहिरिति शेषः। तत्तादवस्थ्यं प्रधानं
25876 मूलप्रकृतिरित्युदाहृतं पुराणादावित्यर्थः॥ ३८॥
25877
25878 तद्व्योमप्रकृतिः प्रोक्ता तदव्यक्तं जडाजडम्।
25879 संस्मृतेरस्मृतेश्चैव क्रम एष भवोदये॥ ३९॥
25880
25881 आकाश इव तदोतं च प्रोतं च इत्यादिश्रुतेर्व्योमादिशब्दानामपि तत्र
25882 प्रसिद्धिमाह - तदिति। चित्प्रतिबिम्बग्रहाज्जडाजडम्। संस्मृतेः सर्गस्य
25883 अस्मृतेः प्रलयस्य च क्रमः आद्यन्तावधिरेष इत्यर्थः॥ ३९॥
25884
25885 बोधोन्मुखत्वे हि महत्तत्प्रबुद्धं यदा भवेत्।
25886 तदा तन्मात्रदिक्कालक्रिया भूताद्युदेति खात्॥ ४०॥
25887
25888 तदेव बोधोन्मुखत्वे महत्तत्त्वं प्रबुद्धं सदहंकाराख्यं यदा
25889 भवेत्तदा तदवस्थात् खात्
25890 प्रागुक्तावकाशात्तन्मात्रादिभूतभौतिकान्तमुदेतीत्यन्वयः॥ ४०॥
25891
25892 तदेवोच्छूनमाबुद्धं भवतीन्द्रियपञ्चकम्।
25893 तदेव बुध्यते देहः स एषोऽस्यातिवाहिकः॥ ४१॥
25894
25895 आ उच्छूनमीषदुच्छूनं सूक्ष्मावस्थमित्यर्थः। बुध्यते स्वप्नजागरयोः॥
25896 ४१॥

25897
25898 चिरकालप्रत्ययतः कल्पनापरिपीवरः |
25899 आधिभौतिकताबोधमाधत्ते चैष बालवत् || ४२ ||
25900
25901 आधिभौतिकताबोधं भौतिकस्थूलदेहाहंभावम् || ४२ ||
25902
25903 ततो दिक्कालकलनास्तदाधारतया स्थिताः |
25904 उद्यन्त्यनुदिता एव वायोः स्पन्दक्रिया इव || ४३ ||
25905
25906 दिक्कालपदेन तदाश्रितपदार्था लक्ष्यन्ते | तदाधारतया
25907 स्थूलदेहाश्रितचक्षुराद्यधीनतया स्थितास्तत्तद्देशकालगतपदार्थकलनाः
25908 उद्यन्ति प्रादुर्भवन्तीत्यर्थः || ४३ ||
25909
25910 वृद्धिमित्थमयं यातो मुधैव भुवनभ्रमः |
25911 स्वप्नाङ्गनासङ्गसमस्त्वनुभूतोऽप्यसन्मयः || ४४ ||
25912
25913 यत्रैव म्रियते जन्तुः पश्यत्याशु तदेव सः |
25914 तत्रैव भुवनाभोगमिममित्थमिव स्थितम् || ४५ ||
25915
25916 व्योमैवानुभवत्यच्छमहं जगदिति भ्रमम् |
25917 व्योमरूपं व्योमरूपी जीवो जात इवात्मवान् || ४६ ||
25918
25919 आगन्तुकदेहाद्यात्मना आत्मवान् जात इव सन् अहमिति जगदिति च
25920 भ्रममनुभवतीत्यर्थः || ४६ ||
25921
25922 [पूर्वत्र व्योमैवानुभवतीति षट्चत्वारिंशत्तमश्लोके इति भावः]
25923
25924 सुरपत्तनशैलार्कतारानिकरसुन्दरम् |
25925 जरामरणवैक्लव्यव्याधिसंकटकोटरम् || ४७ ||
25926
25927 जगद्भ्रममेव विशेषणैः प्रपञ्चयति - सुरेत्यादिना | इन्द्रादयः सुराः
25928 अमरावत्यादीनि तत्पत्तनानि मेर्वादयस्तदाधारशैलास्तान्प्रदक्षिणीकुर्वाणा
25929 अर्कतारानिकरास्तैः सुन्दरम् | कोटरमत्र मर्त्यलोकादिच्छिद्रम् || ४७ ||
25930
25931 स्वभावाभावसंरम्भस्थूलसूक्ष्मचराचरम् |
25932 साब्ध्यद्र्युर्वीनदीशाहोरात्रिकल्पक्षणक्षयम् || ४८ ||
25933
25934 स्वानुकूलानां भावः संपादनं प्रतिकूलानां चाभावो निवारणं
25935 तद्विषये संरम्भेणोद्योगेन युक्ताः स्थूलाः सूक्ष्माश्चरा अचराश्च प्राणिनो
25936 यत्र | अचराणामपि लतानां सालम्बनदेशे प्रसरस्य
25937 निरालम्बनप्रदेशपरिहारस्य च दर्शनादचरसाधारण्योक्तिः | अब्धयश्च
25938 अद्रयश्च उर्वी च नद्यश्च ईशास्तत्तदधिपतयश्च तैः सहिता अहोरात्र्यादयो
25939 यत्र || ४८ ||
25940
25941 अहं जातोऽमुना पित्रा किलात्रेत्याप्तनिश्चयम् |
25942 इयं माता धनमिदं ममेत्युदितवासनम् || ४९ ||
25943
25944 सुकृतं दुष्कृतं चेदं ममेति कृतकल्पनम् |
25945 बालोऽभूवमहं त्वद्य युवेति विलसद्धृदि || ५० ||
25946
25947 हृदि विलसत् स्फुरन्तं जगद्भ्रमं पश्यतीति पूर्वत्र संबन्धः |
25948 पुंलिङ्गविशेषणस्य क्लीबता पदसंस्कारपक्षाश्रयणात् || ५० ||

25949
25950 प्रत्येकमेवमुदितः संसारवनखण्डकः ।
25951 ताराकुसुमितो नीलमेघचञ्चलपल्लवः ॥ ५१ ॥
25952
25953 इदानीं तमेव प्रत्येकं जीवसंसारं वनखण्डत्वेन वर्णयति -
25954 प्रत्येकमित्यादिना । ताराभिः कुसुमितः संजातपुष्पः ॥ ५१ ॥
25955
25956 चरन्नरमृगानीकः सुरासुरविहंगमः ।
25957 आलोककौसुमरजाः श्यामागहनकुञ्जकः ॥ ५२ ॥
25958
25959 नरा एव मृगानीकानि यत्र । आलोकप्रधानान्यहानि कौसुमरजांसि यत्र ।
25960 श्यामा रात्रय एव गहना दुष्प्रवेशाः कुञ्जका लतागृहाणि यत्र ॥ ५२ ॥
25961
25962 अब्धिपुष्करिणीपूर्णो मेवाद्यचललोष्टकः ।
25963 चित्तपुष्करबीजान्तर्निलीनानुभवाङ्कुरः ॥ ५३ ॥
25964
25965 निलीनाः संस्कारात्मना स्थिता अनुभवाश्चित्तवृत्तयोऽङ्कुरा यत्र ॥ ५३ ॥
25966
25967 यत्रैष म्रियते जीवस्तत्रैवं पश्यति क्षणात् ।
25968 प्रत्येकमुदितेष्वेवं जगत्खण्डेषु भूरिशः ॥ ५४ ॥
25969
25970 पश्यति वर्णितवनखण्डकमिति शेषः ॥ ५४ ॥
25971
25972 कोटयो ब्रह्मरुद्रेन्द्रमरुद्विष्णुविवस्वताम् ।
25973 गिर्यब्धिमण्डलद्वीपलोकान्तरदृशां गताः ॥ ५५ ॥
25974
25975 मरुतो देवाः । लोकान्तान्यान्तराणि ब्रह्माण्डगर्भस्थानि पश्यन्तीति
25976 तद्दृशस्तेषां ब्रह्मादीनां कोटयो गताः ॥ ५५ ॥
25977
25978 याता यास्यन्ति यान्त्येता दृष्टयो नष्टरूपिणीः ।
25979 या ब्रह्मण्युपबृंहाढ्यास्ताः के गणयितुं क्षमाः ॥ ५६ ॥
25980
25981 नष्टरूपिणीः असत्स्वरूपाः । छान्दसो विभक्तिव्यत्ययः ।
25982 उपबृहणमुपबृंह आविर्भावस्तदाढ्याः । घञर्थे कः ॥ ५६ ॥
25983
25984 एवं कुड्यमयं विश्वं नास्त्येव मननादृते ।
25985 मनने चलमेवान्तस्तदिदानीं विचारय ॥ ५७ ॥
25986
25987 एवं प्रपञ्चस्यारोपक्रममुपवर्ण्यापवादं क्रमेणाह - एवमित्यादिना
25988 । कुड्यमयं भित्तिवत्स्थूलं विश्वं
25989 मननान्मनःसंकल्पलक्षणात्सूक्ष्मादृते तद्व्यतिरेकेण नास्त्येव । त्रीणि
25990 रूपाणीत्येव सत्यम् इत्यादिश्रुतेः । ननु स्थूलं स्थिरस्वभावं मनस्तु
25991 चलस्वभावं तत्कथमस्य मनोमात्रता तत्राह - मनने इति । यद्यपि
25992 बहिर्विश्वं स्थिरं भाति तथापि मननेन मनसा यथेच्छं विभाव्यमानं
25993 चलमस्थिरस्वभावमेवानुभूयते । भ्राम्यति मनसि भ्रमदिव प्रसन्ने
25994 प्रसन्नमिव मलिने मलिनमिव मनोरथादौ उत्पाद्यान्यत्रारोप्यमाणमिव
25995 सर्वैरनुभूयते तदिदानीं त्वं स्वानुभवेनैव विचारयेत्यर्थः ॥ ५७ ॥
25996
25997 प्। २२९)
25998
25999 यदेव तच्चिदाकाशं तदेव मननं स्मृतम् ।
26000 यदेव च चिदाकाशं तदेव परमं पदम् ॥ ५८ ॥

26001
26002 मनसश्च विमर्शे तत्साक्षिमात्रत्वं साक्षिणश्च ब्रह्ममात्रतेति
26003 पूर्णैकचिन्मात्रपरिशेष इत्याह - यदेवेति । मननं यच्चिदाकाशं तदेवेति
26004 संबन्धः ॥ ५८ ॥
26005
26006 यदेवाम्बु स आवर्तो नत्वस्यावर्त वस्तु सन् ।
26007 द्रष्टैवास्ते दृश्यमिव दृश्यं नत्वस्ति वस्तु सत् ॥ ५९ ॥
26008
26009 उक्तमर्थं दृष्टान्तेनोपपादयति - यदेवेति । आवर्त इति
26010 विभक्तिलोपश्छान्दसः ॥ ५९ ॥
26011
26012 चिद्व्योम्नो भूतनभसि कचनं यन्मणेरिव ।
26013 तज्जगद्भाविनानासत्तत्त्वं श्वभ्रमिवाम्बरे ॥ ६० ॥
26014
26015 अभूते असत्ये अनादौ वा मायानभसि सूक्ष्मभूतकार्यचित्तनभसि वा कचनं
26016 जीवभावेन स्फुरणं यत्तदेव नामरूपात्मना भावि नानाभवनशीलं
26017 सज्जगदित्युच्यते । यथा ऐन्द्रजालिकमणेरम्बरे कचनं
26018 बहुविधगन्धर्वनगरच्छिद्रमिव भवति तच्चिद्व्योमैव तत्त्वं परमार्थ
26019 इत्यर्थः ॥ ६० ॥
26020
26021 मद्बुद्ध्यार्थो जगच्छब्दो विद्यते परमामृतम् ।
26022 त्वद्बुद्ध्यार्थस्तु नास्त्येव त्वमहंशब्दकादपि [त्वमहंशब्दौ
26023 कायतीति विचारणीयोंऽशः] ॥ ६१ ॥
26024
26025 मद्बुद्ध्यार्थोऽधिष्ठानसन्मात्रम् । त्वद्बुद्ध्यार्थ आरोपितसत्ता । एवं
26026 त्वमहंशब्दौ कायति अभिलपति यः स त्वमहंशब्दकात् जगत्प्रमाता सोऽपि
26027 मद्बुद्धः साक्षिचिन्मात्रस्वभाव एवास्ति न त्वद्बुद्धजीवस्वभाव इत्यर्थः ॥
26028 ६१ ॥
26029
26030 तस्माल्लीलासरस्वत्यावाकाशवपुषौ स्थिते ।
26031 सर्वगे परमात्माच्छे सर्वत्राप्रतिघेऽनघे ॥ ६२ ॥
26032
26033 उक्तमुपसंहृत्य प्रस्तुते योजयति - तस्मादिति । आकाशवपुषौ
26034 सत्यसंकल्पचित्ताकाशमात्रशरीरे । अप्रतिघे सूक्ष्मतमेऽपि च्छिद्रे
26035 प्रवेशप्रतिघातरहिते ॥ ६२ ॥
26036
26037 यत्र यत्र सदा [महाव्योम्नि इति पाठः] व्योम्नि यथाकामं
26038 यथेप्सितम् ।
26039 उदयं कुरुतस्तेन तद्गेहेऽस्ति गतिस्तयोः ॥ ६३ ॥
26040
26041 अप्राप्तप्राप्तीच्छा ईप्सा । प्राप्तोपभोगेच्छा काम इति भेदः । उदयमाविर्भावम्
26042 । तेन हेतुना । तद्गेहे विदूरथगृहे ॥ ६३ ॥
26043
26044 सर्वत्र संभवति चिद्गगनं तदत्र
26045 सद्वेदनं कलनमामननं [वलनं इति कतिपयपुस्तकेषु
26046 पठ्यते] विसारि ।
26047 तच्चातिवाहिकमिहाहुरकुड्यमेव
26048 देहं कथं क इव तं वद किं रुणद्धि ॥ ६४ ॥
26049
26050 चिद्गगनं सर्वत्र संभवति । न प्रतिहन्यत इति यावत् । तदेव कलनं सत्
26051 आमननं मानसविषयावधारणपर्यन्तं विसारि बहिःप्रसरणस्वभावं
26052 सद्वेदनं यथार्थज्ञानं भवति । अकुड्यमस्थूलं सूक्ष्ममेवाहुः । को

26053 रुणद्धि किं निमित्तं कथं केन प्रकारेण वा। न कथंचिदपि तस्य
26054 रोधसंभावनेत्यर्थः॥ ६४॥
26055
26056 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलोपाख्याने
26057 समरसमनन्तरसंस्मृत्यनुभववर्णनं नाम चत्वारिंशः सर्गः
26058 ॥ ४०॥
26059
26060 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
26061 समरसमनन्तरसंस्मृत्यनुभववर्णनं नाम चत्वारिंशः सर्गः॥ ४०॥
26062
26063 एकचत्वारिंशः सर्गः ४१
26064
26065 श्रीवसिष्ठ उवाच।
26066
26067 तयोः प्रविष्टयोर्देव्योः पद्मसद्म बभूव तत्।
26068 चन्द्रद्वयोदयोद्योतधवलोदरसुन्दरम्॥ १॥
26069
26070 प्रविष्टयोस्तयो राज्ञा सुप्तबुद्धेन पूजनम्।
26071 राज्ञोऽन्वयः स्मृतिर्ज्ञप्त्यात्मोपदेशश्च वर्ण्यते॥ १॥
26072
26073 चन्द्रद्वयोदय इव उद्द्योतधवलेनोदरेण सुन्दरं शोभमानम्॥ १॥
26074
26075 कोमलामलसौगन्ध्यमृदुमन्दारमारुतम्।
26076 तत्प्रभावेन निद्रालुनृपेतरनराङ्गनम्॥ २॥
26077
26078 कोमलाः सुखस्पर्शा अमलसौगन्ध्या मृदवः
26079 सांकल्पिकमन्दारपुष्पमारुता यत्र। तयोर्देव्योः प्रभावेन कारणेन।
26080 संबन्धिशब्दस्य नित्यसापेक्षत्वेन सामर्थ्याविघातात्समासः॥ २॥
26081
26082 सौभाग्यनन्दनोद्यानं विद्रुतव्याधिवेदनम्।
26083 सवसन्तं वनमिव फुल्लं प्रातरिवाम्बुजम्॥ ३॥
26084
26085 सौभाग्येन नन्दनोद्यानमिव॥ ३॥
26086
26087 तयोर्देहप्रभापूरैः शशिनिस्यन्दशीतलैः।
26088 आह्लादितोऽसौ बुबुधे राजोक्षित इवामृतैः॥ ४॥
26089
26090 उक्षितः सिक्त इव॥ ४॥
26091
26092 आसनद्वयविश्रान्तं स ददर्शाप्सरोद्वयम्।
26093 मेरुशृङ्गद्वये चन्द्रबिम्बद्वयमिवोदितम्॥ ५॥
26094
26095 सांकल्पिके आसनद्वये विश्रान्तमुपविष्टम्। अप्सरोद्वयं दिव्यस्त्रीद्वयम्॥ ५॥
26096
26097 निमेषमिव संचिन्त्य स विस्मितमना नृपः।
26098 उत्तस्थौ शयनाच्छेषादिव चक्रगदाधरः॥ ६॥
26099
26100 निमेषमल्पकालं संचिन्त्यान्तर्विमृश्य। चिरं विमर्शे
26101 पूजादिविलम्बेनापराधापत्तेः। अत एवाल्पविमर्शस्यापि
26102 निगूहनद्योतनायेवकारः॥ ६॥
26103
26104 परिसंयमितालम्बिमाल्यहाराधराम्बरः।

26105 पुष्पाहार इवोत्फुल्लं जग्राह कुसुमाञ्जलिम् ॥ ७ ॥
26106
26107 निद्राकाले व्यत्यस्तानि परितः संयमितानि स्वस्वोचितस्थानं प्रापितानि अत एव
26108 कण्ठाद्यालम्बीनि माल्यादीनि यस्य तथाविधः सन् । पुष्पाण्याहरतीति
26109 पुष्पाहारो भृत्य इव ॥ ७ ॥
26110
26111 प्। २३०)
26112
26113 उपधानप्रदेशस्थात्स्वयं पटलकोटरात् ।
26114 बद्धपद्मासनो भूमौ भूत्वोवाचेदमानतः ॥ ८ ॥
26115
26116 पटलं पुष्पकरण्डम् ॥ ८ ॥
26117
26118 जयतां जन्मदौस्थित्यदाहदोषशशिप्रभे ।
26119 देव्यौ वाह्यान्तरतमोविद्रावणरविप्रभे ॥ ९ ॥
26120
26121 दौस्थित्यं दुःखजीवनम् । दाहस्त्रिविधसंतापः ॥ ९ ॥
26122
26123 तयोरुक्त्वेति तत्याज पादयोः कुसुमाञ्जलिम् ।
26124 तीरद्रुमो विकसितः पद्मिन्योः पद्मयोरिव ॥ १० ॥
26125
26126 इत्युक्त्वा तयोः पादयोः कुसुमाञ्जलिं तत्याजेत्यन्वयः ॥ १० ॥
26127
26128 लीलायै भूपजन्माथ वक्तुं मन्त्रिणमीश्वरी ।
26129 बोधयामास पार्श्वस्थं संकल्पेन सरस्वती ॥ ११ ॥
26130
26131 प्रबुद्धोप्सरसौ दृष्ट्वा प्रणम्य कुसुमाञ्जलिम् ।
26132 तयोः पादेषु संत्यज्य विवेश पुरतो नतः ॥ १२ ॥
26133
26134 उवाच देवी हे राजन्कस्त्वं कस्य सुतः कदा ।
26135 इह जात इति श्रुत्वा स मन्त्री वाक्यमब्रवीत् ॥ १३ ॥
26136
26137 इति प्रश्नं स मन्त्री श्रुत्वा ॥ १३ ॥
26138
26139 देव्यौ युष्मत्प्रसादोऽयं भवत्योरपि यत्पुरः ।
26140 वक्तुं शक्नोमि तद्देव्यौ [तदिदं इति पाठः] श्रूयेतां जन्म
26141 मत्प्रभोः ॥ १४ ॥
26142
26143 आसीदिक्ष्वाकुवंशोत्थो राजा राजीवलोचनः ।
26144 श्रीमान्कुन्दरथो नाम दोश्छायाच्छादितावनिः ॥ १५ ॥
26145
26146 दोश्छायया आच्छादितेव शत्रुदारिद्र्यादिसंतापनिवारणेन पालिता अवनिर्येन ॥
26147 १५ ॥
26148
26149 तस्याभूदिन्दुवदनः पुत्रो भद्ररथाभिधः ।
26150 तस्य विश्वरथः पुत्रस्तस्य पुत्रो बृहद्रथः ॥ १६ ॥
26151
26152 तस्य सिन्धुरथः पुत्रस्तस्य शैलरथः सुतः ।
26153 तस्य कामरथः पुत्रस्तस्य पुत्रो महारथः ॥ १७ ॥
26154
26155 तस्य विष्णुरथः पुत्रस्तस्य पुत्रो नभोरथः ।
26156 अयमस्त्प्रभुस्तस्य पुत्रः पूर्णामलाकृतिः ॥ १८ ॥

26157
26158 तस्य नभोरथस्य पुण्यसंभारैर्जातः ॥ १८ ॥
26159
26160 अमृतापूरितजनः क्षीरोदस्येव चन्द्रमाः ।
26161 महद्भिः पुण्यसंभारैर्विदूरथ इति श्रुतः ॥ १९ ॥
26162
26163 अमृतसदृशैः स्नेहमाधुर्यौदार्यादिगुणैरापूरिता जना येन ।
26164 पुण्यसंभारैरित्येतद्देहलीदीपकन्यायेन मात्रापि संबध्यते ॥ १९ ॥
26165
26166 जातो मातुः सुमित्राया गौर्या गुह इवापरः ।
26167 पितास्य दशवर्षस्य दत्त्वा राज्यं वनं गतः ॥ २० ॥
26168
26169 अस्य दशवर्षस्येति षष्ठी चानादरे इति भावलक्षणे षष्ठी
26170 वैराग्यातिशयाद्राज्ये पुत्रे चानादरद्योतनार्था ॥ २० ॥
26171
26172 पालयत्येष भूपीठं ततः प्रभृति धर्मतः ।
26173 भवत्यावद्यसंप्राप्ते फलिते सुकृतद्रुमे ॥ २१ ॥
26174
26175 अस्माकं सुकृतद्रुमे फलिते सति अद्य संप्राप्ते ॥ २१ ॥
26176
26177 देव्यौ दीर्घतपःक्लेशशतैर्दुष्प्रापदर्शने ।
26178 इत्ययं वसुधाधीशो विदूरथ इति श्रुतः ॥ २२ ॥
26179
26180 अद्य युष्मत्प्रसादेन परां पावनतां गतः ।
26181 इत्युक्त्वा संस्थिते तूष्णीं मन्त्रिण्यवनिपे तथा ॥ २३ ॥
26182
26183 कृताञ्जलौ नतमुखे बद्धपद्मासनेऽवनौ ।
26184 राजन्स्मर विवेकेन पूर्वजातिमिति स्वयम् ॥ २४ ॥
26185
26186 इति वदन्ती सरस्वती मूर्ध्नि पस्पर्शेति परेणान्वयः ॥ २४ ॥
26187
26188 वदन्ती मूर्ध्नि पस्पर्श तं करेण सरस्वती ।
26189 अथ हार्दं तमो मायापद्मस्य क्षयमाययौ ॥ २५ ॥
26190
26191 हार्दं हृदयाकाशस्थजीवावरकम् ॥ २५ ॥
26192
26193 सुविकासं च हृदयं ज्ञप्तिस्पर्शोदयेऽभवत् ।
26194 सस्मार पूर्ववृत्तान्तमन्तः स्फुरदिव स्थितम् ॥ २६ ॥
26195
26196 हृदयं मनः सुविकासं सान्तःप्रकाशम् ॥ २६ ॥
26197
26198 त्यक्तदेहैकराज्यत्वं लीलाविलसितान्वितम् ।
26199 ज्ञात्वा प्रज्ञप्तिवृत्तान्तं लीलायास्तु विजृम्भितम् ॥ २७ ॥
26200
26201 एक एव राजा यस्य भुवनस्य तदेकराट् तद्भाव ऐकराज्यं देहश्च ऐकराज्यं
26202 च देहैकराज्ये त्यक्ते देहैकराज्ये येन स त्यक्तदेहैकराज्यस्तस्य
26203 भावस्त्यक्तदेहैकराज्यत्वम् । ज्ञप्त्यनुग्रहबलादननुभूतमपि
26204 ज्ञातवानित्याह - ज्ञात्वेति ॥ २७ ॥
26205
26206 आत्मोदन्तं बभूवासावुह्यमान इवार्णवे ।
26207 उवाचात्मनि संसारे बत मायेयमातता ॥ २८ ॥
26208

26209 आत्मोदन्तं स्वपूर्ववृत्तान्तम् | आत्मनि स्वमनसि || २८ ||
26210
26211 परिज्ञाता प्रसादेन देव्योरिह मयाधुना |
26212
26213 राजोवाच |
26214
26215 हे देव्यौ किमिदं नाम दिनमेकं मृतस्य मे || २९ ||
26216
26217 गतमद्येह जातानि वयो वर्षाणि सप्ततिः |
26218 स्मराम्यनेककार्याणि स्मरामि प्रपितामहम् || ३० ||
26219
26220 स्मरामि बाल्यं तारुण्यं मित्रं बन्धुपरिच्छदम् |
26221
26222 ज्ञप्तिरुवाच |
26223
26224 राजन्मृतिमहामोहमूर्च्छायाः समनन्तरम् || ३१ ||
26225
26226 परिच्छदं परीवारम् | यत्स्मरामि तदिदं किमिति तत्तत्त्वजिज्ञासया प्रश्नः |
26227 स्वरूपत्वमधिष्ठानचिन्मात्रमेव सर्वप्रपञ्चतत्त्वमितरत्तु मायामात्रमिति
26228 तत्त्वमुपदेष्टुं प्रथमं विप्रकृष्टदेशकालस्थितं
26229 लोकान्तरागमनभ्रमं वारयन्ती ज्ञप्तिरुवाच - राजन्नित्यादिना || ३१ ||
26230
26231 तस्मि&ल्लोकान्तरेऽतीते तस्मिन्नेव मुहूर्तके |
26232 तस्मिन्नेव गृहे चास्मिन्नेव व्योम्न्यपि सद्मनि || ३२ ||
26233
26234 अस्मिन्नेव त्वत्सद्मनि तदधिष्ठानचिद्व्योमनि अतीते मायावरणतिरोहिते
26235 गिरिग्रामकविप्रस्य गृहेऽन्तःस्थिते तस्मिन्पाद्मे लोकान्तरे तस्मिन्नेव राजगृहे
26236 तत्रापि प्रधानगृहस्यान्तर्व्योमन्येवायं ब्रह्माण्डमण्डपः किलास्तीति
26237 प्राक्तनकथाक्रमानुरोधादन्वयः || ३२ ||
26238
26239 अयं तस्य गृहस्यान्तर्व्योमन्येव किल स्थिते |
26240 गिरिग्रामकविप्रस्य गृहेऽन्तर्भूप मण्डपः || ३३ ||
26241
26242 तस्यान्तरेऽयमाभाति प्रत्येकं च जगद्गृहम् |
26243 किल ब्राह्मणगेहान्तर्जीवस्ते मदुपास्थितः || ३४ ||
26244
26245 तस्य ब्रह्माण्डमण्डपस्यान्तरे अयं परिदृश्यमानस्त्वदीयजन्मादिराभाति
26246 आपाततः प्रथते तर्हि किं तदेव ब्राह्मणजगदित्थं भाति नेत्याह -
26247 प्रत्येकमिति | भिन्नभिन्नमित्यर्थः | प्रत्येकतामेवोपपादयन्त्याह -
26248 किलेत्यादिना | मां उपास्थितो मदुपास्थितः मद्भक्त इत्यर्थः || ३४ ||
26249
26250 प्। २३१)
26251
26252 तत्रैव तस्य भूपीठं तस्मिंश्च किल मण्डपे |
26253 तस्यैव च गृहस्यान्तरिदं संसारमण्डलम् || ३५ ||
26254
26255 इदं संनिहितं पाद्मसंसारमण्डलम् || ३५ ||
26256
26257 तत्रैवेदं तव गृहं स्थितमारम्भमन्थरम् |
26258 तत्रैव चेतसि तव निर्मलाकाशनिर्मले || ३६ ||
26259
26260 तत्र पाद्मगृहमण्डपे एव | प्रपञ्चत्रयस्यापि

26261 चित्तविकारमात्रत्वमित्याशयेनाह - तत्रैव चेतसीति।
26262 नैर्मल्योक्तिश्चित्प्रतिबिम्बोपपत्त्यर्था॥ ३६॥
26263
26264 प्रतिभामागतम्दं व्यवहारभ्रमाततम्।
26265 यथेदं नाम मे जन्म तथेक्ष्वाकुकुलं मम॥ ३७॥
26266
26267 व्यवहारभ्रमाततत्वमनुभूतमुल्लिख्य प्रपञ्चयति - यथेत्यादिना।
26268 नामेति किलार्थे॥ ३७॥
26269
26270 एवंनामान एते मे पुराभूवन्पितामहाः।
26271 जातोऽहमभवं बालो दशवर्षस्य मे पिता॥ ३८॥
26272
26273 परिव्राड्विपिनं यात इह राज्येऽभिषिच्य माम्।
26274 ततो दिग्विजयं कृत्वा कृत्वा राज्यमकण्टकम्॥ ३९॥
26275
26276 अमीभिर्मन्त्रिभिः पौरैः पालयामि वसुन्धराम्।
26277 यज्ञक्रियाक्रमवतो धर्मे पालयतः प्रजाः॥ ४०॥
26278
26279 मन्त्रिभिः पौरैः सहेति शेषः॥ ४०॥
26280
26281 वयसः समतीतानि मम वर्षाणि सप्ततिः।
26282 इदं परबलं प्राप्तं मम दारुणविग्रहः॥ ४१॥
26283
26284 दारुणो विग्रहः संग्रामः प्राप्त इति विपरिणामेनानुषज्यते॥ ४१॥
26285
26286 युद्धं कृत्वेदमायातो गृहमस्मिन्यथास्थितम्।
26287 इमे देव्यौ गृहे प्राप्ते ममैते पूजयाम्यहम्॥ ४२॥
26288
26289 अस्मिन्गृहे यथापूर्वं स्थितं मयेति शेषः॥ ४२॥
26290
26291 पूजिता हि प्रयच्छन्ति देवताः स्वसमीहितम्।
26292 ममेयमेतयोरेका ज्ञानं जातिस्मृतिप्रदम्॥ ४३॥
26293
26294 एतयोर्देव्योर्मध्ये एका॥ ४३॥
26295
26296 इह दत्तवती देवी भाब्जस्येव विकासनम्।
26297 इदानीं कृतकृत्योऽस्मि जातोऽस्मि गतसंशयः॥ ४४॥
26298
26299 शाम्यामि परिनिर्वामि सुखमासे च केवलम्।
26300 इतीयमातता भ्रान्तिर्भवतो भूरिसंभ्रमा॥ ४५॥
26301
26302 सर्वदुःखोपशमाच्छाम्यामि। निरतिशयसुखसमृद्ध्या परिनिर्वामि।
26303 केवलं एकरसं सुखमेवाहं भूत्वा आसे तिष्ठामि॥ ४५॥
26304
26305 नानाचारविहाराढ्या सलोकान्तरसंचरा।
26306 यस्मिन्नेव मुहूर्ते त्वं मृतिमभ्यागतः पुरा॥ ४६॥
26307
26308 लोकान्तरसंचराः सिद्धा अस्मदादयस्तत्सहिता॥ ४६॥
26309
26310 तदैव प्रतिभैषा ते स्वयमेवोदिता हृदि।
26311 एकामावर्तचलनां त्यक्त्वा दत्ते यथाऽपराम् [यथा पुरा इति
26312 पाठः]॥ ४७॥

क्षिप्रमेव नदीवाहो वित्प्रवाहस्तथैव च |
आवर्तान्तरसंमिश्रो [संसिद्धो इति पाठः] यथावर्तः प्रवर्तते
|| ४८ ||

वेत्तीति विच्वितं तत्प्रवाहः || ४८ ||

कदाचिदेवं सर्गश्रीर्मिश्राऽमिश्रा च वर्धते |
तस्मिन्प्रतिमुहूर्ते ते प्रतिभानमुपागतम् || ४९ ||

मिश्रा जीवान्तरसर्गसंवलिता जाग्रति | अमिश्रा स्वप्ने | चिद्धानोस्ते
प्रतिभानमुपागतमिति संबन्धः || ४९ ||

एतज्जालमसद्रूपं चिद्धानोः समुपस्थितम् |
यथा स्वप्नमुहूर्तेऽन्तः संवत्सरशतभ्रमः || ५० ||

यथा संकल्पनिर्माणे जीवनं मरणं पुनः |
यथा गन्धर्वनगरे कुड्यमण्डनवेदनम् || ५१ ||

कुड्यानां तन्मण्डनचित्रादीनां च वेदनं दर्शनम् || ५१ ||

यथा नौयानसंरम्भे वृक्षपर्वतवेपनम् |
यथा स्वधातुसंक्षोभे पूर्वपर्वतनर्तनम् || ५२ ||

वेपनं कम्पनम् | स्वस्य धातूनां वातपित्तश्लेष्मणां संक्षोभे सन्निपाते
अपूर्वं पर्वतनर्तनम् || ५२ ||

यथा समञ्जसं स्वप्ने स्वशिरःप्रविकर्तनम् |
मिथ्यैवैवमियं प्रौढा भ्रान्तिराततरूपिणी || ५३ ||

असमञ्जसं व्यवहारे अननुरूपं मथ्यैव तथएति शेषः || ५३ ||

वस्तुतस्तु न जातोऽसि न मृतोऽसि कदाचन |
शुद्धविज्ञानरूपस्त्वं शान्त आत्मनि तिष्ठसि || ५४ ||

तर्हि कः परमार्थसत्यस्तत्राह - वस्तुतस्त्विति || ५४ ||

पश्यसीवैतदखिलं न च पश्यसि किंचन |
सर्वात्मकतया नित्यं प्रकचस्यात्मनात्मनि || ५५ ||

दृश्यमिथ्यात्वे तत्संवलितचिदाभासलक्षणं तद्दर्शनमपि मिथ्यैवेति
निर्विषयचिन्मात्रपरिशेष इत्याशयेनाह - पश्यसीवेति | प्रकचसि प्रदीप्यसे ||
५५ ||

महामणिरिवोदार आलोक इव भास्वरः |
वस्तुतस्तु न भूपीठमिदं न च भवानयम् || ५६ ||

आलोकः सूर्यादिः | भवान् अयं विदूरथदेहः || ५६ ||

न चेमे गिरयो ग्रामा न चैते न च वै वयम् |
गिरिग्रामकविप्रस्य मण्डपाकाशके किल || ५७ ||

26365 एते तव परिजनाः शत्रवश्च। अल्पतरे महत्तरस्यासंमाननमेव
26366 मिथ्यात्वकारणमित्याशयेनाह - गिरिग्रामकेत्यादिना ॥ ५७ ॥
26367
26368 तल्लीलाभर्तृदाराढ्यं जगदाभाति भास्वरम्।
26369 तत्र लीलाराजधानी मण्डपामण्डिताकृतिः ॥ ५८ ॥
26370
26371 मण्डपैः शालाभिरासमन्तान्मण्डिता आकृतिः संस्थानं यस्याः ॥ ५८ ॥
26372
26373 भाति तस्योदरे व्योम्नि तदेवं विदितं जगत्।
26374 तस्मिञ्जगति गेहेऽन्तर्यस्मिन्वयमिह स्थिताः ॥ ५९ ॥
26375
26376 यस्मिन्गृहे इह सांप्रतं वयं स्थितास्तद्भातीत्यर्थः ॥ ५९ ॥
26377
26378 एवं तेषां मण्डपानां व्योमाव्योमैव निर्मलम्।
26379 तथैव मण्डपेष्वस्ति न मही न च पत्तनम् ॥ ६० ॥
26380
26381 तेषां मण्डपानां यद्व्योम तदव्योम आकाशादिशून्यं ब्रह्मैव ॥ ६० ॥
26382
26383 प्। २३२)
26384
26385 न वनानि न शैलौघा न मेघसरिदर्णवाः।
26386 केवलं तत्र निःशून्ये विहरन्ति गृहे जनाः ॥ ६१ ॥
26387
26388 निःशून्ये चिन्मात्रपूर्णे तत्र ब्रह्मणि मिथ्यागृहे मिथ्याजना
26389 विहरन्तीत्यर्थः ॥ ६१ ॥
26390
26391 न पश्यन्ति जना नापि पार्थिवा न च भूधराः।
26392
26393 विदूरथ उवाच।
26394
26395 एवं चेत्तत्कथं देवि ममेहानुचरा इमे ॥ ६२ ॥
26396
26397 जना न पश्यन्तीत्युक्त्यां मन्त्रिभृत्यादीनां
26398 स्वप्नदृष्टसामाजिकजनसाम्यं प्राप्तं तदसंभावयन् राजा पृच्छति
26399 - एवं चेदित्यादिना ॥ ६२ ॥
26400
26401 संपन्ना आत्मना सन्ति ते किमात्मनि नोऽथवा।
26402 जगत्स्वप्नार्थवद्भाति तस्य स्वप्ननरादयः ॥ ६३ ॥
26403
26404 आत्मना जीवेन संपन्ना युक्ताः सन्ति। अहमिवात्मनि सत्स्वभावे।
26405 स्वशङ्काबीजमाह - जगदिति। तस्य ममेत्यर्थः ॥ ६३ ॥
26406
26407 कथमात्मनि सत्याः स्युर्न सत्या वेति मे वद।
26408
26409 श्रीसरस्वत्युवाच।
26410
26411 राजन्विदितवेद्येषु शुद्धबोधैकरूपिषु ॥ ६४ ॥
26412
26413 कथं सत्याः स्युस्त्वदुक्तकल्पे इत्यर्थः। अज्ञदृशा जीवभावेन तेषां यदि
26414 सत्यतां पृच्छसि तर्हि सा तवापि नास्ति। तत्त्वदृशा
26415 अधिष्ठानचिन्मात्रभावेन चेत्तेषामपि सास्त्येवेत्याशयेन देव्युत्तरमाह -
26416 राजन्नित्यादिना ॥ ६४ ॥

26417
26418 न किंचिदेतत्सद्रूपंचिद्व्योमात्मसु जागतम् |
26419 शुद्धबोधात्मनो भाति कृतो नाम जगद्भ्रमः || ६५ ||
26420
26421 रज्ज्वां सर्पभ्रमे शान्ते पुनः सर्पभ्रमः कुतः |
26422 असद्भावे परिज्ञाए कुतः सत्ता जगद्भ्रमे || ६६ ||
26423
26424 परिज्ञाते मृगजले पुनर्जलमतिः कुतः |
26425 स्वप्नकाले परिज्ञाते स्वे स्वप्नमरणं कुतः |
26426 स्वस्वप्ने स्वप्नमृतिभीरमृतस्यैव जायते || ६७ ||
26427
26428 स्वप्नकाले स्वे जीवस्वरूपे प्रबोधेन परिज्ञाते सति स्वप्नमरणं कुतः कथं
26429 सत्यमित्यर्थः || ६७ ||
26430
26431 बुद्धस्य शुद्धस्य शरन्नभःश्रीः
26432 स्वच्छावदातातितताशयस्य |
26433 अहं जगच्चेति कुशब्दकार्थो
26434 न वस्तुतः सोऽङ्ग हि वाचिकं तत् || ६८ ||
26435
26436 बोधेनाज्ञानमेधावरणापाये शरन्नभःश्रीरिव स्वच्छो निर्मलः
26437 स्फुरदात्मभाभिरवदातो धवलीकृतस्तदैकरस्याप्त्या अतिततः अतिविस्तारं
26438 पूर्णतालक्षणं प्राप्त आशयो यस्य बुद्धस्य तत्त्वविदः सः अज्ञदृशा
26439 प्रसिद्धः अहमिति जगदिति च कुत्सितस्याल्पस्यं शब्दस्यार्थो वस्तुतो नास्त्येव |
26440 अङ्गेति कोमलामन्त्रणे | हि यस्मात्तद्वाचिकं वाचारम्भणमात्रम् |
26441 वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् इत्यादिश्रुतेरिति
26442 भावः || ६८ ||
26443
26444 इत्युक्तवत्यथ मुनौ दिवसो जगाम
26445 सायंतनाय विधयेऽस्तमिनो जगाम |
26446 स्नातुं सभा कृतनमस्करणा जगाम
26447 श्यामाक्षये रविकरैश्च सहाजगाम || ६९ ||
26448
26449 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलोपाख्याने
26450 भ्रान्तिविचारवर्णनं नामैकचत्वारिंशः सर्गः || ४१ ||
26451
26452 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
26453 भ्रान्तिविचारवर्णनं नामैकचत्वारिंशः सर्गः || ४१ ||
26454
26455 पञ्चमदिनम् |
26456
26457 द्विचत्वारिंशः सर्गः ४२
26458
26459 श्रीवसिष्ठ उवाच |
26460
26461 यस्त्वबुद्धमतिर्मूढो रूढो न वितते पदे |
26462 वज्रसारमिदं तस्य जगदस्त्यसदेव सत् || १ ||
26463
26464 सत्यत्वं जगतोऽज्ञाने स्वप्नस्यापि प्रपञ्च्यते |
26465 अत्रान्ते तु कथाशेषो वरदानान्त ईर्यते || १ ||
26466
26467 विद्वद्दृशा जगतो मिथ्यात्वं विस्तरेणोपवर्ण्य
26468 तद्दृढीकारायाज्ञदृशा तस्यात्यन्तदृढसत्यतामाह - यस्त्विति |

रूढो दृढव्युत्पन्नो न वज्रस्य सारो दार्ढ्यमिव सारो यस्य तत्तथाविधं
परमार्थसदस्ति। लोके अर्थक्रियाकारित्वस्यैव सत्यत्वेन प्रसिद्धेरिति भावः ॥ १॥

यथा बालस्य वेतालो मृतिपर्यन्तदुःखदः।
असदेव सदाकारं तथा मूढमतेर्जगत् ॥ २॥

असतोऽज्ञं प्रत्यर्थक्रियाकारित्वलक्षणं सत्त्वं(त्यं?) क्व
दृष्टं तत्राह - यथेति ॥ २॥

ताप एव यथा वारि मृगाणां भ्रमकारणम्।
असत्यमेव सत्याभं तथा मूढमतेर्जगत् ॥ ३॥

यथा तापो मरुभूम्यातप एवाज्ञमृगदृशा सत्यवारि सत् मृगाणां
भ्रमकारणम् ॥ ३॥

यथा स्वप्नमृतिर्जन्तोरसत्या सत्यरूपिणी।
अर्थक्रियाकरी भाति तथा मूढधियां जगत् ॥ ४॥

शोकरोदनाद्यर्थक्रियाकरि ॥ ४॥

अव्युत्पन्नस्य कनके कानके कटके यथा।
कटकज्ञप्तिरेवास्ति न मनागपि हेमधीः ॥ ५॥

कनके अव्युत्पन्नस्य अनुगतकनकस्वरूपानभिज्ञस्येत्यर्थः ॥ ५॥

तथाऽज्ञस्य पुरागारनगनागेन्द्रभासुरा [भास्वरा इति पाठः]।
इयं दृश्यदृगेवास्ति नत्वन्या परमार्थदृक् ॥ ६॥

अगाराणि गृहाः नगाः पर्वता वृक्षाश्च नागेन्द्रा गजाः सर्पा वा
तैर्भासुरा परमार्थदृक् सर्वानुगतैकसद्ब्रह्मदृष्टिः ॥ ६॥

यथा नभसि मुक्तालीपिच्छकेशोण्ड्रकादयः।
असत्याः सत्यतां याता भात्येवं दुर्दृशां जगत् ॥ ७॥

मुक्ताली मौक्तिकमाला। पिच्छानि वर्हाणि ॥ ७॥

प्। २३३)

दीर्घस्वनमिदं विश्वं विद्ध्यहन्तादिसंयुतम्।
अत्रान्ये स्वप्नपुरुषा यथा सत्यास्तथा शृणु ॥ ८॥

अन्ये स्वातिरिक्तसत्यजनाः स्वप्नपुरुषाः स्वप्नदृष्टपुरुषान्तरप्रायाः। तर्हि
ते कथं शास्त्रीययाजनप्रतिग्रहोपदेशाद्यर्थक्रियाक्षमाः सत्या इति
शास्त्रेऽभ्युपगतास्तत्राह - यथा सत्यास्तथा शृण्विति ॥ ८॥

अस्ति सर्वगतं शान्तं परमार्थघनं शुचि।
अचेत्यचिन्मात्रवपुः परमाकाशमाततम् ॥ ९॥

सर्वगतं सर्वाधिष्ठानम्। परमार्थघनं निरतिशयसत्यम्। प्राप्त वै
सत्यं तेषामेष सत्यम् इत्यादिश्रुतेः ॥ ९॥

तत्सर्वगं सर्वशक्ति सर्वं सर्वात्मकं स्वयम्।

26521 यत्र यत्र यथोदेति तथास्ते तत्र तत्र वै ॥ १० ॥
26522
26523 तस्य मायाशबलं रूपमाह - तत्सर्वगमिति । मायया यत्र यत्र यथा
26524 यथा यादृशार्थक्रियायोग्यमाविर्भवति तत्र तत्र तथा आस्ते ॥ १० ॥
26525
26526 तेन स्वप्नपुरे द्रष्टा यान्वेत्ति पुरवासिनः ।
26527 नरानिति नरा एव क्षणात्तस्य भवन्ति ते ॥ ११ ॥
26528
26529 तथा जागरे शास्त्रीयार्थक्रियायोग्यं तदाविर्भूतं न स्वप्ने
26530 इत्यवान्तरविशेषेऽपि न सद्रूपे विशेष इत्याशयेनाह - तेनेति ॥ ११ ॥
26531
26532 यद्द्रष्टुश्चित्स्वरूपं तत्स्वप्नाकाशान्तरस्थितम् ।
26533 स्वप्नाकाशचित्ताभं हि नरानामेति भावितम् ॥ १२ ॥
26534
26535 स्वप्रकाशो विकाशः सूक्ष्मतमनाडीच्छिद्रं तदन्तःस्थितं
26536 स्वप्नाध्यस्तविपुलाकाशपरिवर्तिचित्ताभं चित्तवासनानुसारेण
26537 विवर्तमानमित्यर्थः ॥ १२ ॥
26538
26539 वेदितृत्वैक्यवशतो नरतेवावबुध्यते ।
26540 आत्मन्यतश्चिद्बलेन द्वयोरप्येति सत्यता ॥ १३ ॥
26541
26542 स्वप्नजागरयोर्द्वयोरपि आत्मनि नरताद्यवबोधे अध्यस्ते सत्यतावबोधे
26543 चान्योन्यतादात्म्यसंसर्गाध्यास एव हेतुरित्याह - वेदितृत्वेति ।
26544 वेदितुर्भावो वेदितृत्वं सत्यस्वप्रकाशापरोक्षचैतन्यं तदैक्यं
26545 तत्तादात्म्याध्यासस्तद्वशः संसर्गाध्यासस्तस्मादित्यर्थः । द्वयोः
26546 स्वप्नजागरयोरध्यस्ततद्धर्मयोर्वा सत्यता एति प्रथते ॥ १३ ॥
26547
26548 श्रीराम उवाच ।
26549
26550 स्वप्नेऽपि स्वप्नपुरुषा न सत्याः स्युर्मुने यदि ।
26551 वद तत्को भवेद्दोषो मायामात्रशरीरिणि ॥ १४ ॥
26552
26553 तदेवं स्वप्नजाग्रद्दृश्यपदार्थानां
26554 मिथुनीभूतमायातदधिष्ठानलक्षणसत्यानृतोभयशरीरतोक्ता । तत्र
26555 रामः स्वप्नस्यानृतमायामात्रशरीरत्वमस्तु किं सत्यांशानुप्रवेशेनेति
26556 शङ्कते - स्वप्ने इति । यदि जाग्रत्पुरुषा अधिष्ठानसत्तया सत्या न स्युस्तर्हि
26557 व्यवहारविसंवादः कर्मशास्त्राप्रामाण्यं च दोषः स्यादिति तेषां
26558 तथात्वमस्तु । यदि सत्यासंवलितमायामात्रशरीरिणि [सत्याः संवलित इति
26559 पाठः] स्वप्नेऽपि कल्पिताः स्वप्नपुरुषास्तथा सत्या न स्युस्तदा को दोषः ।
26560 मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् इति भगवत व्यासेन स्वप्नस्य
26561 मायामात्रत्वोक्तेः । तथाच कथं स्वजगतः स्वप्नसाम्यमिति भावः ॥ १४ ॥
26562
26563 श्रीवसिष्ठ उवाच ।
26564
26565 स्वप्ने न पुरवास्तव्या वस्तुतः सत्यरूपिणः ।
26566 प्रमाणमत्र शृणु मे प्रत्यक्षं नाम नेतरत् ॥ १५ ॥
26567
26568 स्वाप्नार्था ब्रह्मवद्वस्तुतः सत्या न भवन्तीत्येतावदेव शक्यं वक्तुं न
26569 निरधिष्ठानत्वादधिष्ठानसत्तयापि सत्या न भवन्तीति ।
26570 प्रत्यक्षप्रमाणविरोधादित्याशयेन वसिष्ठ उवाच - स्वप्ने इति । नेतरदिति
26571 प्रमाणान्तरस्यानादरार्थमुक्तं न प्रतिषेधार्थम् । नह्यत्यन्तासतः
26572 प्रत्यक्षं नामोपपद्यते वन्ध्यापुत्रादावदर्शनादित्याशयः ॥ १५ ॥

26573
26574 सर्गादावात्मभूर्भाति स्वप्नाभानुभवात्मकः।
26575 तत्संकल्पकलं [कलाविश्वं इति पाठः] विश्वमेवं
26576 स्वप्नाभमेव तत्॥ १६॥
26577
26578 किंच स्वप्नस्यात्यन्तासत्त्वे जाग्रत्प्रपञ्चस्यापि तद्दुर्वारम् तस्यापि
26579 हैरण्यगर्भस्वप्नरूपत्वादित्याशयेनाह - सर्गादाविति॥ १६॥
26580
26581 एवं विश्वमिदं स्वप्नस्तत्र सत्यं भवान्मम।
26582 यथैव त्वं तथैवान्ये स्वप्ने स्वप्नवरा नृणाम्॥ १७॥
26583
26584 तथाच जगतः स्वप्नसाम्यं प्रागुक्तसत्यता च सिद्धेत्याह - एवमिति। तत्र
26585 स्वप्ने भवान्मम सत्यं त्वत्सत्यतायास्त्वया अपलपितुमशक्यत्वात्। यथैव
26586 त्वं तथैवान्येऽपि त्वद्दृशा मद्दृशा च सत्याः। एवमन्येषामपि
26587 नृणां स्वस्वानुभवानुसारात्स्वप्नसत्यता सिद्धेत्यर्थः॥ १७॥
26588
26589 स्वप्ने नगरवास्तव्याः सत्या न स्युरिमे यदि।
26590 तदिहापि तदाकारे न सत्यं मे मनागपि॥ १८॥
26591
26592 उक्तमेवार्थं पुनः स्पष्टमाह - स्वप्ने इत्यादिना। नगरस्य वास्तुनि
26593 वेश्मभुवि भवा नगरवास्तव्याः नगरे वसन्तीति वा नगरवास्तव्याः।
26594 वसेस्तव्यत्कर्तरि णिच्च इति वचनात्॥ १८॥
26595
26596 यथाहं तव सत्यात्मा सत्यं सर्वं भवेन्मम।
26597 स्वप्नोपलम्भे संसारे मिथः सिद्ध्यै प्रमेदृशी॥ १९॥
26598
26599 संसारे विपुले स्वप्ने यथा सत्यमहं तव।
26600 यथा त्वमपि मे सत्यं सर्वं स्वप्नेष्विति क्रमः॥ २०॥
26601
26602 श्रीराम उवाच।
26603
26604 स्वप्नद्रष्टरि निर्निद्रे तद्द्रष्टुः स्वप्नपत्तनम्।
26605 सद्रूपत्वात्तथैवास्ते ममेति भगवन्मतिः॥ २१॥
26606
26607 एवं चेत्तर्हि स्वप्नद्रष्टुर्जागरणे जातेऽपि स्वप्नप्रपञ्चस्य
26608 जाग्रत्प्रपञ्चवदवस्थानं स्यादिति रामः शङ्कते - स्वप्नेति। इति
26609 मतिर्मम त्वद्वचनात्संपन्नेति शेषः॥ २१॥
26610
26611 श्रीवसिष्ठ उवाच।
26612
26613 एवमेतत्तथैवास्ते सत्यत्वात्स्वप्नपत्तनम्।
26614 स्वप्नद्रष्टरि निर्निद्रेऽप्याकाशविशदाकृति॥ २२॥
26615
26616 इष्टापत्त्या वसिष्ठः परिहरति - एवमेतदिति। आकाशविशदाकृति
26617 अधिष्ठानसन्मात्रस्वभावं सत्यमेवेत्यर्थः॥ २२॥
26618
26619 एतदास्तामिदं तावद्यज्जाग्रदिव मन्यसे।
26620 विद्धि तत्स्वप्नमेवान्तर्देशकालाद्यपूरकम्॥ २३॥
26621
26622 एवं तर्हि जाग्रदर्थवत्स्वप्नस्यापि स्वप्नान्तरे व्यवहारसंवादः स्यादिति
26623 रामस्य विवक्षामालक्ष्य देशान्तरकालान्तराननुवृत्तिकृतोऽसंवादो
26624 जाग्रत्पदार्थेष्वपि बहुष्वस्ति।

26625 पृथिव्याकाशनामजात्यादिकतिपयपदार्थानुवृत्तिसंवादः स्वप्नेऽप्यस्तीति
26626 न विशेष उपपादयितुं शक्य इत्याशयेन प्रौढिमादर्शयन्नाह -
26627 एतदास्तामिति। अथवा यदि स्वाप्नार्थाः सत्यास्तर्हि जागरेऽप्यनुवर्तेरन्निति
26628 रामस्याशङ्कामालाक्ष्याह वसिष्ठः - एतदिदिति। स्वाप्नस्य
26629 जाग्रद्वाह्यदेशकालाद्यननुवृत्त्या यद्यलीकत्वंमन्यसे तर्हि यज्जाग्रदिति
26630 मन्यसे तदपि अन्तः स्वाप्नदेशकालाद्यपूरकमिति तुल्यमिति द्वयोः
26631 स्वप्नतैवेत्यर्थः॥ २३॥
26632
26633 प्। २३४)
26634
26635 एवं सर्वमिदं भाति न सत्यं सत्यवस्थितम्।
26636 रञ्जयत्यपि मिथ्यैव स्वप्नस्त्रीसुरतोपमम्॥ २४॥
26637
26638 एवमधिष्ठानसत्तया सत्यत्वेऽपि सर्वदेशकालाद्यपूरकत्वान्न स्वतस्तथेति
26639 मिथ्यात्वमुभयोः सममित्याह - एवमिति। रञ्जयति स्वासक्त्या मोहयति॥ २४
26640 ।।
26641
26642 सर्वत्र विद्यते सर्वं देहस्यान्तर्बहिस्तथा।
26643 यत्तु वेत्ति यथा संवित्तत्तथा स्वैव पश्यति॥ २५॥
26644
26645 संविदस्तु सर्वदेशकालादिपूरकत्वात्सत्यत्वं सर्वत्र मायाशक्त्या
26646 सर्वभावेन स्फुरणसामर्थ्यं चेत्याह - सर्वत्रेति। स्वैव स्वयमेव॥ २५॥
26647
26648 यत्कोशे विद्यते द्रव्यं तद्द्रष्ट्रा लभ्यते यथा।
26649 तथास्ति सर्वं चिद्व्योम्नि चेत्यते तत्त्वनेन वै॥ २६॥
26650
26651 कोशे धनागारे। द्रव्यं धनम्। अनेन चिद्व्योम्ना॥ २६॥
26652
26653 अनन्तरमुवाचेदं देवी ज्ञप्तिर्विदूरथम्।
26654 कृत्वा बोधामृतासेकैर्विवेकाङ्कुरसुन्दरम्॥ २७॥
26655
26656 एवमुक्तथं रामं समाधाय प्रस्तुतकथामालम्ब्याह - अनन्तरमिति॥ २७
26657 ।।
26658
26659 एतदेव मया राज&ल्लीलार्थमुपवर्णितम्।
26660 स्वस्ति तेऽस्तु गमिष्यावो दृष्टा दृष्टान्तदृष्टयः॥ २८॥
26661
26662 एतत्प्रागुक्तं तत्त्वम्। लीलार्थं लीलाप्रीत्यर्थम्। स्वस्ति अभिलषितार्थसिद्धिरस्तु।
26663 जगन्मिथ्यात्वस्योक्तस्य दृष्टान्तदृष्टयो
26664 मण्डपान्तस्त्वदीयब्रह्माण्डकल्पनालक्षणा दृष्टा लीलयेति शेषः॥ २८॥
26665
26666 श्रीवसिष्ठ उवाच।
26667
26668 इति प्रोक्ते सरस्वत्या गिरा मधुरवर्णया।
26669 उवाच वचनं धीमान्भूमिपालो विदूरथः॥ २९॥
26670
26671 धीमान्स्वस्ति तेऽस्त्वित्युक्तेस्तात्पर्यं विद्वान्॥ २९॥
26672
26673 विदूरथ उवाच।
26674
26675 ममापि दर्शनं देवि मोघं भवति नार्थिनि।
26676 महाफलप्रदायास्तु कथं तव भविष्यति॥ ३०॥

मम मनुष्यमात्रस्याल्पदानसमर्थस्यापीत्याशयः ॥ ३० ॥

अहं देहं समुत्सृज्य लोकान्तरमितोऽपरम् ।
निजमायामि हे देवि स्वप्नात्स्वप्नान्तरं यथा ॥ ३१ ॥

निजं प्राक्तनम् । आयामि अविलम्बेनागमिष्यामि ॥ ३१ ॥

पश्यादिशाशु मां मातः प्रपन्नं शरणागतम् ।
भक्तेऽवहेला वरदे महतां न विराजते ॥ ३२ ॥

पश्य कृपादृष्ट्या । आदिश प्रयच्छ मत्प्रार्थितमुपदेशोत्तरकार्यं च ॥
३२ ॥

यं प्रदेशमहं यामि तमेवायात्वयं मम ।
मन्त्री कुमारी चैवेयं बालेति कुरु मे दयाम् ॥ ३३ ॥

प्रार्थनीयार्थमाह - यमिति । कुमारी अनूढा कन्या ॥ ३३ ॥

श्रीसरस्वत्युवाच ।

आगच्छ राज्यमुचितार्थविलासचारु
प्राग्जन्ममण्डलपते कुरु निर्विशङ्कम् ।
अस्माभिरर्थिजनकामनिराकृतिर्हि
दृष्टा न काचन कदाचिदपीति विद्धि ॥ ३४ ॥

लीलाभक्तिभाग्योचितैरर्थविलासैश्चारु राज्यं कुरु । अस्माभिर्निराकृतिः
प्रत्याख्यानं कदाचिदपि न कृतेति शेषः । केनचिदपि न दृष्टेत्यर्थः ॥ ३४ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलो०
स्वप्नपुरुषसत्यत्वनिरूपणं नाम द्विचत्वारिंशः सर्गः ॥ ४२ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
स्वप्नपुरुषसत्यत्वनिरूपणं नाम द्विचत्वारिंशः सर्गः ॥ ४२ ॥

त्रिचत्वारिंशः सर्गः ४३

श्रीसरस्वत्युवाच ।

अस्मिन् रणवरे राजन्मर्तव्यं भवताधुना ।
प्राप्तव्यं प्राक्तनं राज्यं सर्वं प्रत्यक्षमेव ते ॥ १ ॥

अभीष्टवरदानं च पुरस्याक्रमदीपनम् ।
वर्ण्यते दह्यमानानां चेष्टा च पुरवासिनाम् ॥ १ ॥

देवी तज्जिज्ञासितं भाव्यर्थमपि स्पष्टमाचक्षाणा वरशेषमपि दातुमाह
- अस्मिन्निति । सर्वं ते प्रत्यक्षमेव भविष्यतीति शेषः ॥ १ ॥

कुमार्या मन्त्रिणा चैव त्वया च प्राक्तनं पुरम् ।
आगन्तव्यं शवीभूतं प्राप्तव्यं तच्छरीरकम् ॥ २ ॥

त्वया च प्राक्तनं शवीभूतं तच्छरीरकं प्राप्तव्यमिति संबन्धः ॥ २ ॥

आवां यावो यथायातं वातरूपेण च त्वया ।
आगन्तव्यः स देशस्तु कुमार्या मन्त्रिणापि च ॥ ३ ॥

मृत्वा वायुरूपिणा आतिवाहिकदेशरूपेण त्वया स प्राक्तनो देश आगन्तव्यः ॥
३ ॥

अन्यैव गतिरश्वस्य गतिरन्या खरोष्ट्रयोः ।
मदस्विन्नकपोलस्य गतिरन्यैव दन्तिनः ॥ ४ ॥

इयमातिवाहिकदेहगतिर्मानोरथिकगतिवन्मण्डपान्तःसंवृताकाशेऽपि
सुदूरमिव संभवति नाश्वादिगतिवद्दैशवैपुल्यं प्राक्सिद्धमपेक्षत
इत्याशयेनाह - अन्यैवेति ॥ ४ ॥

प्रस्तुतेति कथा यावन्मिथो मधुरभाषिणोः ।
तावत्प्रविश्य संभ्रान्त उवाचोर्ध्वस्थितो नरः ॥ ५ ॥

ऊर्ध्वस्थितः प्रासादाग्राद्युन्नतप्रदेशमारुह्य निशि
बाह्यपुरवृत्तान्तदर्शी पुरुषो राजसन्निधिं प्रविश्योवाच ॥ ५ ॥

प्। २३५)

देव सायकचक्रासिगदापरिघवृष्टिमत् ।
महत्परबलं प्राप्तमेकार्णव इवोद्धतः ॥ ६ ॥

देवेति राजसंबोधनम् ॥ ६ ॥

कल्पकालानिलोद्धूतकुलाचलशिलोपमम् ।
गदाशक्तिभुशुण्डीनां वृष्टिं मुञ्चति तुष्टिमत् ॥ ७ ॥

तुष्टिमत् उत्साहप्रहृष्टं परबलम् ॥ ७ ॥

नगरे नगसंकाशे लग्नोऽग्निर्व्याप्तदिक्तटः ।
दहंश्चटचटास्फोटैः पातयत्युत्तमां पुरीम् ॥ ८ ॥

उन्नतप्रासादशिखरैस्तृणकाष्ठादिसमृद्ध्या च नगसंकाशे
पर्वतसदृशे ॥ ८ ॥

कल्पाम्बुदघटातुल्या व्योम्नि धूममहाद्रयः ।
बलात्प्रोड्डयनं कर्तुं प्रवृत्ता गरुडा इव ॥ ९ ॥

कल्पाम्बुदानां संवर्तमेघानां घटाभिः समूहैस्तुल्याः ॥ ९ ॥

श्रीवसिष्ठ उवाच ।

ससंभ्रमं वदत्येवं पुरुषे परुषारवः ।
उदभूत्पूरयन्नाशा बहिः कोलाहलो महान् ॥ १० ॥

ससंभ्रमं सभयम् । परुषा निष्ठुरभाषणरूपा आरवा यत्र तथाविधः
कोलाहलः । आशा दिशः ॥ १० ॥

26781 बलादाकर्णकृष्टानां धनुषां शरवर्षिणाम् ।
26782 बृंहतामतिमत्तानां कुञ्जराणां तरस्विनाम् ॥ ११ ॥
26783
26784 कोलाहलमेव संबन्धिभेदैर्विशिष्य वर्णयति - बलादित्यादिना ॥ ११ ॥
26785
26786 पुरे चटचटास्फोटैर्दहतां जातवेदसाम् ।
26787 पौराणां दग्धदाराणां महाहलहलारवैः ॥ १२ ॥
26788
26789 महाहलहलारवैह् कथित इत्युत्तरत्रान्वयः [पौराणामिति
26790 द्वादशश्लोकोत्तरार्धेन इति भावः] ॥ १२ ॥
26791
26792 तरतामग्निखण्डानां टांकारः कथितो रवैः ।
26793 ज्वलितानां परिस्पन्दाद्धगद्धगिति चार्चिषाम् ॥ १३ ॥
26794
26795 अर्चिषां धगद्धगिति रवैः सह जनैः कथितष्टांकार उदभूदित्यनुकृष्यते
26796 ॥ १३ ॥
26797
26798 अथ वातायनाद्देव्यौ मन्त्री राजा विदूरथः ।
26799 ददृशुः प्रोल्लसन्नादं महानिशि महापुरम् ॥ १४ ॥
26800
26801 वातायनात्प्रासादगवाक्षात् ॥ १४ ॥
26802
26803 प्रलयानलसंक्षुब्धपूर्णैकार्णवरंहसा ।
26804 पूर्णं परबलेनोग्रहेतिमेघतरङ्गिणा ॥ १५ ॥
26805
26806 उग्रैर्हेतिभिर्मेघतरङ्गोभयवता ॥ १५ ॥
26807
26808 कल्पान्तवह्निविगलन्मेरुभूधरभासुरैः ।
26809 दह्यमानं महाज्वालाज्वालैरम्बरपूरकैः ॥ १६ ॥
26810
26811 महाज्वालानां ज्वालैः शिखाभिः । जालैः इति पाठे स्पष्टम् ॥ १६ ॥
26812
26813 मुष्टिग्राह्यमहामेघगर्जासंतर्जितोर्जितैः ।
26814 घोरं कलकलारावैर्मांसलैर्दस्युजल्पितैः ॥ १७ ॥
26815
26816 मोषणं मुष्टिः परलुण्ठनं तद्वाह्यविषये परभीषणाय
26817 महामेघगर्जासदृशैः संतर्जितैर्भर्त्सनैरूर्जितैः प्रबलैर्मांसलैः
26818 पुष्टैर्दस्यवश्चोरास्तज्जल्पितैर्घोरम् ॥ १७ ॥
26819
26820 पुष्करावर्तसंकाशधूम्राभ्रपिहिताम्बरम् ।
26821 प्रोड्डीनहेमाग्रनिभैर्ज्वालापुञ्जैर्निरन्तरम् ॥ १८ ॥
26822
26823 पुष्करावर्ताः प्रलयमेघाः । निरन्तरं निरवकाशम् ॥ १८ ॥
26824
26825 तरदुल्मुकखण्डोग्रतारातरलिताम्बरम् ।
26826 अन्योन्यदेशसद्मौघप्रज्वलज्ज्वलनाचलम् ॥ १९ ॥
26827
26828 उल्मुकानां ज्वलत्काष्ठानां खण्डा एवोग्रा औत्पातिका रक्तास्ताराः
26829 ज्वालापरिवर्तेन अन्योन्यदेशविनिमयेन प्रज्वलन्तो ज्वलनाचला यत्र ॥ १९ ॥
26830
26831 हतसैन्यपुरापातं द्रुताङ्गाराभ्रकोटरैः ।
26832 कर्कशाक्रन्दनिर्दग्धलोकपूगोग्रगर्जितम् ॥ २० ॥

26833
26834 हतावशिष्टसैन्यानां पुरापातो नगरप्रवेशो यत्र। द्रुताः प्रसृता अङ्गारा
26835 येषु तथाविधैरभ्रकोटरैर्मेघच्छिद्रैरुपलक्षितमित्यर्थः।
26836 कर्कशाक्रन्दं यथा स्यात्तथा निर्दग्धजनसमूहैः शत्रुभिरुग्रगर्जितं
26837 यत्र॥ २०॥
26838
26839 कृशानुकणनाराचनिरन्तरतराम्बरम्।
26840 बहुहेतिशिलाजाललुटद्दग्धपुरोत्करम्॥ २१॥
26841
26842 कृशानुकणैर्नाराचैश्च निरन्तरतरमत्यन्तनिरवकाशमम्बरं यत्र।
26843 हेतिभिः शिलाजालैश्च लुठन्तो निपतन्तः। पुरशब्देन पुरजना उच्यन्ते।
26844 लुठन्तः प्रधावन्तो दग्धं पुरं यैस्तथाविधा उत्करा ऊर्ध्वीकृतहस्ताः
26845 शत्रवो यत्रेति वा॥ २१॥
26846
26847 रणद्द्विरदसंघट्टकुट्टितोद्भटसद्भटम्।
26848 विद्रवत्तस्करच्छेदमार्गकीर्णमहाधनम्॥ २२॥
26849
26850 अङ्गारराशिनिपतन्नरनार्युग्ररोदनम्।
26851 स्फुटच्चटचटाशब्दप्रलुठत्स्फुटकाष्ठकम्॥ २३॥
26852
26853 रणे द्विरदानां संघट्टैः कुट्टिताश्चूर्णिता उद्भटाः शूरतराः
26854 सद्भटा यत्र। तस्कराणां शिरश्छेदेन॥ २२॥ २३॥
26855
26856 विपुलालातचक्रौघशतसूर्यनभस्तलम्।
26857 अङ्गारशिखिराकीर्णसमस्तवसुधातलम्॥ २४॥
26858
26859 अलातानि ज्वलदुल्मुकानि। शिखिरैरग्निभिराकीर्णानि॥ २४॥
26860
26861 दग्धाग्निकाष्ठक्रेंकाररणज्ज्वलनवैणवम्।
26862 दग्धजन्तुघनाक्रन्दरुदत्सकलसैनिकम्॥ २५॥
26863
26864 दग्धैरग्निकाष्ठैः सहक्रेंकारेण रणत्प्रज्वलनयुक्तं वैणवं
26865 वेणुकाष्ठं यत्र॥ २५॥
26866
26867 पांसुशेषात्तराजश्रीवृद्धतृप्तहुताशनम्।
26868 सकलग्रसनारम्भसोद्योगाग्निमहाशनम्॥ २६॥
26869
26870 पांसव एव शिष्यन्ते यथा तथा आत्तायां दग्धायां राजश्रियि वृद्धः
26871 प्रवृद्धस्तृप्तश्च हुताशनो यत्र। अग्निलक्षणो महाशनो घस्मरो यत्र॥
26872 २६॥
26873
26874 यदृच्छात्कारडात्कारकठिनाग्निरटद्गृहम्।
26875 अनन्तजन्तुभोज्यान्नवह्निभुक्तेन्धनस्पृहम्॥ २७॥
26876
26877 यदृच्छया अकस्मादेव दैवोपपादिताभ्यां सर्वस्वादानमात्कारो निशि
26878 सुप्तेषु दस्युभिः प्रहरणं डात्कारस्ताभ्यां कठिनेन कुवरिणाग्निना च
26879 रटन्तो गृहा यत्र। अनन्तानां जन्तूनां भोज्येषु भोजनार्हेष्वन्नेषु
26880 धान्यराशिषु वह्निना भुक्तेषु अवशिष्टेन्धनमात्रे केषांचित्स्पृहा यत्र॥
26881 २७॥
26882
26883 अथ शुश्राव तत्रासौ गिरो राजा विदूरथः।
26884 योधानां दग्धदाराणां पश्यताम्भिधावताम्॥ २८॥

दारग्रहणं सर्वस्वोपलक्षणम् ॥ २८ ॥

प्। २३६)

हा मत्तमरुदूर्ध्वस्थानङ्गार गृहपादपान् ।
रणत्खरखरं नीरजालामातपपन्थिनः ॥ २९ ॥

अङ्ग आर इति च्छेदः । अङ्गेति कश्चित्कंचित्संबोध्याह - नीरजालेन
रसातिशयेन आमान् हरितानत एवातपस्य संतापस्य पन्थिनः परिपन्थिनो
निवारकान् ऊर्ध्वस्थान् औन्नत्ये स्थितान्
अस्मद्गृहलक्षणानस्मद्गृहसंवृद्धांश्च पादपान् वृक्षान्
उन्मूलयितुं मत्तः प्रचण्डो मरुत् विपल्लक्षणो वायुर्वा रणत्खरखरं
[१] यथा स्यात्तथा आर आजगाम । हा इति खेदे ॥ २९ ॥

हा दग्धदाराः प्रालेयशीता देहेषु दन्तिनाम् ।
मग्ना मनस्सु महतामिव विज्ञानसूक्तयः ॥ ३० ॥

प्राक्प्रालेयशीता दग्धाः संतप्ता दारा दन्तिनां मृतानां देहेषु लीनाः
प्रच्छन्नाः सूक्तिपक्षे ज्ञानाग्निना दग्धाः स्थूलादिदेहा याभिः ।
त्रिविधतापोपशमनात्प्रालेयादपि शीतलाः ॥ ३० ॥

हा तात हेतयो लग्नास्तरुणीकबरीतृणे ।
ज्वलन्ति शुष्कपर्णौघा इव वीरानिलेरिताः ॥ ३१ ॥

हेतयः शस्त्राग्नयो विविधास्तज्ज्वाला वा । कवर्यः केशास्तल्लक्षणे तृणे ।
ज्वलन्ति दीप्यन्ते ॥ ३१ ॥

आवर्तननदीदीर्घा वहत्यूर्ध्वतरङ्गिणी ।
पश्येयं धूमयमुना व्योमगङ्गां प्रधावति ॥ ३२ ॥

आवर्तनैरावर्तैर्नदीसदृशप्रवाहभेदैश्च दीर्घा । व्योमलक्षणां
गङ्गां मन्दाकिनीं वा ॥ ३२ ॥

वहदुल्मुककाष्ठोर्ध्वगामिनी धूमनिम्नगा ।
वैमानिकानन्धयति पश्याग्निकणबुद्बुदा ॥ ३३ ॥

वहन्ति प्रवहन्ति उल्मुककाष्ठानि यस्यां सा । अग्निकणा एव बुद्बुदा यस्याम् ॥
३३ ॥

अस्या माता पिता भ्राता जामाता स्तनपाः सुते ।
अस्मिन्सद्मनि निर्दग्धा दग्धैवासत्समिन्धने ॥ ३४ ॥

स्तनपाः स्तनधयाः । सुते कन्ये । पुत्रीसंबोधनं वा । इयमपि
तद्विरहलक्षणे असत्समिन्धने अविद्यमानेऽप्यग्नौ दग्धैव ॥ ३४ ॥

हा हा हागच्छ ते शीघ्रमेतदङ्गारमन्दिरम् ।
इतः प्रवृत्तं पतितुं सुमेरुः प्रलये यथा ॥ ३५ ॥

शीघ्रं आगच्छ निर्गच्छ ते तव एतदङ्गारवज्ज्वलितं मन्दिरं इतः
स्वस्थानाच्चलनेन पतितुं प्रवृत्तम् ॥ ३५ ॥

26937 अहो शरशिलाशक्तिकुन्तप्रासासिहेतयः ।
26938 जालसंध्याभ्रपटलं विशन्ति शलभा इव ॥ ३६ ॥
26939
26940 वातायनजालकलक्षणं संध्याभ्रपटलम् ॥ ३६ ॥
26941
26942 हेतिप्रवाहा ज्वलनं नभस्यन्त्यां विशन्त्यहो ।
26943 वडवानलमुज्ज्वालमर्णः [कतिपयादर्शान्तरैरप्यत्र रणादित्येव
26944 पठ्यते परन्त्वेतत्पाठो मूलानुगत्वात्सुवच इति स एव
26945 सङ्गृहीतोऽस्माभिः] पूरा इवार्णवात् ॥ ३७ ॥
26946
26947 नभस्यान्त्यां भयान्नभ उत्पतितुमिच्छन्त्यां पुर्याम् । अर्णःपूरा
26948 [अर्णपूराः इति पाठः] जलप्रवाहाः ॥ ३७ ॥
26949
26950 धूमायन्ति महाभ्राणि ज्वालाः शिखरिकोटिषु ।
26951 सरसान्यपि शुष्यन्ति हृदयानीव रागिणाम् ॥ ३८ ॥
26952
26953 शिखरिणां शृङ्गवतां प्रासादानां कोटिष्वग्रभागेषु । सरसानि सजलानि
26954 वाप्यादीनि उद्यानानि च ॥ ३८ ॥
26955
26956 आलानत्वरुषेवैता दन्तिभिर्वृक्षपङ्क्तयः ।
26957 स्फुरत्कटकटारावं पात्यन्ते कृतचीत्कृतैः ॥ ३९ ॥
26958
26959 आलानं बन्धनस्तम्भस्तज्जातीयत्वप्रयुक्तया रुषा ॥ ३९ ॥
26960
26961 पुष्टपुष्पफलस्कन्धा गतश्रीका गृहद्रुमाः ।
26962 गता निर्दग्धसर्वस्वा गृहस्था इव दीनताम् ॥ ४० ॥
26963
26964 मातापितृविनिर्मुक्ता बालकास्तिमिरावलीम् ।
26965 मग्नन्तोऽङ्गेषुरथ्यासु कुड्यपातेन हा हताः ॥ ४१ ॥
26966
26967 तिमिरावलीं निलयनाय मग्नन्तः शोधयन्तः । मृगयन्त इति यावत् । मस्जेः
26968 शोधनार्थाच्छतरि च्छान्दसे कुत्वनत्वे । अङ्गेत्यामन्त्रणे । इषुकीर्णासु
26969 रथ्यासु । कुड्यपातेन भित्तिपतनेन ॥ ४१ ॥
26970
26971 वातविद्रावितात्त्रस्यन्करिण्यो रणमूर्धनि ।
26972 पतदङ्गारकागारभारिणः कटुकूजितम् ॥ ४२ ॥
26973
26974 वातेन विद्रावितात् प्रोड्डायितात् । पतन्तः अङ्गारका यस्मात्तथाविधात् । अगारं
26975 भर्तु वर्षातपादिभ्यस्त्रातुं शीलमस्येत्यगारभारि
26976 च्छदिस्तस्मात्करिण्योऽभ्रम्बः कटुकूजितं यथा स्यात्तथा त्रस्यन् । त्रसेर्लङि
26977 वा भ्राशभ्लाश इति श्यन् । अडभावश्छान्दसः ॥ ४२ ॥
26978
26979 हा कष्टमसिनिर्भिन्ने स्कन्धे सन्नद्दढोल्मुके ।
26980 पतितो यन्त्रपाषाणः पुरुषस्याशनिर्यथा ॥ ४३ ॥
26981
26982 गवाश्वमहिषेभोष्ट्रश्वशृगालैडकैरहो ।
26983 घोरै रणमिवारब्धं मार्गरोधकमाकुलैः ॥ ४४ ॥
26984
26985 एडकैर्मेषैः गन्तृणां मार्गनिरोधकं रणं युद्धमारब्धमिव
26986 पश्यन्त्विति शेषः ॥ ४४ ॥
26987
26988 पटैः पटपटाशब्दजलजालालिमालितैः ।

26989 आक्रन्दन्त्यः स्त्रियो यान्ति स्थलपद्माचिता इव || ४५ ||
26990
26991 अग्निशिखास्कन्दनभयादार्द्रपटान्परिधाय निर्गच्छन्तीः स्त्रियो वर्णयति ##-
26992 परिवृतैर्हस्तपादवक्रलक्षणैः स्थलपद्मैराचिता घटिता इव || ४५ ||
26993
26994 स्त्रीणां ज्वालालवाः पश्य लिहन्त्यलकवल्लरीः |
26995 कुर्वन्तोऽशोकपुष्पाभां करभा इव पन्नगीः || ४६ ||
26996
26997 करभा उष्ट्राः | पन्नं पतितं यथा स्यात्तथा गच्छन्त्यः पन्नग्यः
26998 प्रलम्बिततरुशाखाः दैवात्तदालम्बिसर्पिणीर्वा || ४६ ||
26999
27000 हा हा हरिणशावाक्ष्याः पक्ष्मलक्षणपक्ष्मसु |
27001 कुमार्गेष्विव विश्रान्तिमेति कार्शानिवि शिखा || ४७ ||
27002
27003 पक्ष्मलक्षणेषु भ्रमरपक्षसदृशेष्वक्षिपक्ष्मसु |
27004 कृशानुरग्निस्तत्संबन्धिनी कार्शानवी शिखा ज्वाला || ४७ ||
27005
27006 दह्यमानो विनिर्याति न कलत्रं विना नरः |
27007 अहो बत दुरुच्छेदाः प्राणिनां स्नेहवागुराः || ४८ ||
27008
27009 स्वयं दह्यमानोऽपि || ४८ ||
27010
27011 करी रभसनिर्लूनज्वलदङ्गारपादपः |
27012 प्लुष्टपुष्करकः कोपान्मग्नः पुष्करदं सरः || ४९ ||
27013
27014 रभसेन बलवेगेन निर्लूनो भग्नो ज्वलदङ्गारमिश्र आलानपादपो येन | अत
27015 एव तदाकर्षणकाले प्लुष्टो दग्धः पुष्करः शुण्डाग्रं यस्य तथाविधः
27016 करी पलाय्य जनेभ्यः पुष्करदं पद्मदं सरः प्राप्य तत्र मग्नः |
27017 दग्धपुष्करस्य पुनर्लाभेच्छयेवेति श्लेषमूला उत्प्रेक्षा || ४९ ||
27018
27019 प्। २३७)
27020
27021 धूमोऽम्बुदपदं प्राप्य विलोलान्तस्तडिल्लतः |
27022 ज्वलदङ्गारनाराचनिकरं परिवर्षति || ५० ||
27023
27024 अम्बुदानां पदं वृष्ट्यधिकारनिर्वाहकमाकाशस्थानं प्राप्य
27025 विलोलवह्निज्वालालक्षणा अन्तर्गतास्तडिल्लता यस्य | ज्वलतामङ्गाराणां
27026 नाराचानां शराणां च निकरं स्वानुरूपं परितो वर्षतीत्युत्प्रेक्षा || ५० ||
27027
27028 देव धूमस्फुरद्वह्निकण आवर्तवृत्तिमान् |
27029 स्थित आपीडवान्व्योम्नि रत्नपूर्ण इवार्णवः || ५१ ||
27030
27031 देवेति राजानं संबोध्य कस्यचिदुक्तिः | धूमो व्योम्नि अर्णव इव स्थितः |
27032 आपीडवान् शिखातरङ्गवान् || ५१ ||
27033
27034 गौरमम्बरमाभाति ज्वालाशिखरतेजसा |
27035 मृत्युनेवोत्सवे दत्तः कुङ्कुमाक्तकरण्डकः || ५२ ||
27036
27037 गौरं पीतमम्बरमाकाशः | कुङ्कुमैः अक्तो रञ्जितः करण्डकः
27038 संपुटको दत्तः | अर्थाद्दिग्वधूभ्य इति गम्यते || ५२ ||
27039
27040 अहो नु विषमं चेदं वर्तते वृत्तवर्जितम् |

27041 ध्रियन्ते राजनार्योऽपि वैरिवीरैरुदायुधैः ॥ ५३ ॥
27042
27043 वृत्तं सच्चरितं तेन वर्जितं बहिष्कृतम् ॥ ५३ ॥
27044
27045 लोलस्रगदामकुसुमैर्मार्गप्राकारकारकैः ।
27046 अर्धनिर्दग्धकबरीकीर्णवक्षस्थलस्तनाः ॥ ५४ ॥
27047
27048 आसर्गसंमाप्ते राजनारीरेव विशिनष्टि - लोलेत्यादिना । मार्गे प्र आकिरणं
27049 प्राकारस्तस्य कारकैर्लोलैः स्रग्दामभिः कुसुमैश्चोपलक्षिताः ॥ ५४ ॥
27050
27051 आलोलाम्बरसंलक्ष्यनितम्बजघनस्थलाः ।
27052 पतन्माणिक्यवलयवलितावनिमण्डलाः ॥ ५५ ॥
27053
27054 पतद्भिर्माणिक्यैर्वलयैश्च माणिक्यखचितैर्वलयैर्वा वलितानि
27055 संवृतान्यवनिमण्डलानि याभिः ॥ ५५ ॥
27056
27057 छिन्नहारलताजालविकीर्णामलमौक्तिकाः ।
27058 दृष्टादृष्टस्तनश्रेणीपार्श्वोद्यत्कनकप्रभाः ॥ ५६ ॥
27059
27060 कुररीकर्कशाक्रन्दमन्दीकृतरणारवाः ।
27061 धारावाहास्रुताराविभिन्नपार्श्वविचेतनाः ॥ ५७ ॥
27062
27063 कुररीशब्दवत्कर्कशैर्दुःश्रवैराक्रन्दैर्मन्दीकृतोऽभिभूतो रणारवो
27064 याभिः । धारावाहमविच्छिन्नधारं यथा स्यात्तथा
27065 आस्रुतैर्निर्गतैराक्रन्दारावैर्भिन्नानि विदारितानीव पीडितानि कुक्षिपार्श्वानि
27066 यासाम् । अत एव विचेतनाः कर्तव्यार्थचेतनाशून्याः ॥ ५७ ॥
27067
27068 रक्तकर्दमबाष्पाम्बुक्लिन्नग्रन्थितवाससः ।
27069 भुजमूलार्पितभुजैर्नीयमाना बलान्नृभिः ॥ ५८ ॥
27070
27071 पलायनशङ्कया परस्परं ग्रन्थितवाससः ॥ ५८ ॥
27072
27073 क इवास्मिन्परित्राता स्यादित्यादीनवीक्षितैः ।
27074 उत्पलालीव वर्षद्भिः परिरोदितसैनिकाः ॥ ५९ ॥
27075
27076 दीनैर्वीक्षितैर्वीक्षणैः । परितो दयया रोदिताः रोदनशीलाः कृताः
27077 स्वपक्षसैनिका याभिस्ताः ॥ ५९ ॥
27078
27079 मृणालकोमलाच्छोरुमूलजालैः सुनिर्मलैः ।
27080 स्वच्छाम्बरतलालक्ष्यैराकाशनलिनीनिभाः ॥ ६० ॥
27081
27082 स्वच्छेष्वम्बरतलेषु वस्त्रान्तःप्रदेशेष्वालक्ष्यैः ।
27083 अम्बरपदश्लेषादाकाशनलिनीनिभाः ॥ ६० ॥
27084
27085 आलोलमाल्यवसनाभरणाङ्गरागा
27086 बाष्पाकुलाततचलालकवल्लरीकाः ।
27087 आनन्दमन्दरनिरन्तरमथ्यमाना-
27088 त्कामार्णवात्समुदिता इव राजलक्ष्म्यः ॥ ६१ ॥
27089
27090 आतता दीर्घाश्चलाश्चालकवल्लर्यो यासां ताः । आनन्दोऽत्र विषयसुखं
27091 तल्लक्षणेन मन्दरेण मथ्यमानात् । राज्ञां मूर्तिभूता लक्ष्म्यः संपदो
27092 राजा चन्द्रस्तद्घटिता लक्ष्म्यः श्रियो वा ॥ ६१ ॥

27093
27094 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलो०
27095 अग्निदग्धगृहादिवर्णनं नाम त्रिचत्वारिंशः सर्गः ॥ ४३ ॥
27096
27097 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
27098 अग्निदग्धगृहादिवर्णनं नाम त्रिचत्वारिंशः सर्गः ॥ ४३ ॥
27099
27100
27101 चतुश्चत्वारिंशः सर्गः ४४
27102
27103 श्रीवसिष्ठ उवाच ।
27104
27105 एतस्मिन्नन्तरे राजमहिषी मत्तयौवना ।
27106 तद्विवेश गृहं लक्ष्मीरिव पङ्कजकोटरम् ॥ १ ॥
27107
27108 भीतां विलोक्य महिषीं श्रुत्वान्तःपुरधर्षणम् ।
27109 युद्धाय राज्ञो निर्याणं लीलातत्त्वं च वर्ण्यते ॥ १ ॥
27110
27111 मत्तमिव विघूर्णमानं यौवनं यस्याम् । तल्लीलाप्रज्ञाधिष्ठितं राज्ञो
27112 गृहम् ॥ १ ॥
27113
27114 आलोलमाल्यवसना भिन्नहारलताकुला ।
27115 अनुयाता वयस्याभिर्दासीभिर्भयविह्वला ॥ २ ॥
27116
27117 चन्द्राननावदाताङ्गी श्वासोत्कम्पिपयोधरा ।
27118 तारकाकारदशना स्थिता द्यौरिव रूपिणी ॥ ३ ॥
27119
27120 चन्द्र इव चन्द्र एव च आननं यस्याः । अवदातानि गौराणि स्वच्छानि चाङ्गानि
27121 यस्याः ॥ ३ ॥
27122
27123 अथ तस्या वयस्यैका राजानं तं व्यजिज्ञपत् ।
27124 भूतसंग्रामसंरब्धममरेन्द्रमिवाप्सराः ॥ ४ ॥
27125
27126 देव देवी सहास्माभिः पलाय्यान्तःपुरान्तरात् ।
27127 शरणं देवमायाता वातार्तेव लता द्रुमम् ॥ ५ ॥
27128
27129 देवी कृताभिषेका प्रधानमहिषी ॥ ५ ॥
27130
27131 राजन्दारा हृतास्तास्ते बलवद्भिरुदायुधैः ।
27132 ऊर्मिजालैर्महाब्धीनां तीरद्रुमलता इव ॥ ६ ॥
27133
27134 दाराः अन्या भोगिन्यः ॥ ६ ॥
27135
27136 अन्तःपुराधिपाः सर्वे पिष्टाः शत्रुभिरुद्धतैः ।
27137 अशङ्किताभिपतितैर्वातैरिव वरद्रुमाः ॥ ७ ॥
27138
27139 पिष्टाः संचूर्णिताः ॥ ७ ॥
27140
27141 दूरेणाशङ्कमायातैः परैर्नः पुरमाहृतम् ।
27142 रात्रौ वर्षास्विवोद्घोषैः कमलानीव वारिभिः ॥ ८ ॥
27143
27144 दूरेण दूरात् । दूरान्तिकार्थेभ्यो द्वितीया च इति चात्तृतीया । आहृतमास्कन्दितम् ॥

27145 ८ ॥
27146
27147 प्। २३८)
27148
27149 धूमं वर्षद्भिरुन्नादैर्लेलिहानोग्रहेतिभिः ।
27150 वह्निभिर्नः पुरं प्राप्तं परयोधैश्च भूरिभिः ॥ ९ ॥
27151
27152 धूमं वर्षद्भिः किरद्भिः । उन्नादैर्ध्वनद्भिः । धूमवर्मभिः इति पाठे
27153 स्पष्टम् । उन्मादैः इति पाठे उत्कृष्टो मादो हर्षो ग्लेपनं च येषां तैः ।
27154 लेलिहाना इव चलन्त उग्रा हेतयः खड्गा ज्वालाश्च येषाम् ॥ ९ ॥
27155
27156 परिवारैर्विलासिन्यो देव्य आहृत्य मूर्धजैः ।
27157 आक्रन्दन्त्यो बलान्नीताः कुरर्य इव धीवरैः ॥ १० ॥
27158
27159 परिवारैः शत्रुसैनिकैः । कुरर्यो मृग्यः पक्षिण्यश्च । धीवरैर्लुब्धकैः ॥
27160 १० ॥
27161
27162 इति नो येयमायाता शाखा प्रसरशालिनी ।
27163 आपत्तामलमुद्धर्तुं देवस्यैवास्ति शक्तता ॥ ११ ॥
27164
27165 आपत् विपत् । तामलमत्यर्थमुद्धर्तुं निवारयितुम् ॥ ११ ॥
27166
27167 इत्याकर्ण्यावलोक्यासौ देव्यौ युद्धाय याम्यतः ।
27168 क्षम्यतां मम भार्येयं युष्मत्पादाब्जषट्पदी ॥ १२ ॥
27169
27170 असौ राजा इति वाक्यमाकर्ण्य देव्यौ विलोक्य उवाचेति शेषः । हे देव्यौ अहं
27171 युद्धाय यामि गच्छामि क्षम्यताम् । आज्ञां विनैवान्तराले
27172 निर्गमनापराधः । युष्मत्पादाब्जषट्पदीति युवाभ्यां रक्षणीयेत्याशयः ॥
27173 १२ ॥
27174
27175 इत्युक्त्वा निर्ययौ राजा कोपारुणितलोचनः ।
27176 मत्तेभनिर्भिन्नवनः कन्दरादिव केसरी ॥ १३ ॥
27177
27178 लीला लीलां ददर्शाथ स्वाकारसदृशाकृतिम् ।
27179 प्रतिबिम्बमिवायातामादर्शे चारुदर्शनाम् ॥ १४ ॥
27180
27181 लीला प्रबुद्धलीला ॥ १४ ॥
27182
27183 प्रबुद्धलीलोवाच ।
27184
27185 किमिदं देवि हे ब्रूहि [मे ब्रूहीति पाठः] कस्मादियमहं स्थिता ।
27186 या साऽभवमहं पूर्वं कथं सेयमहं स्थिता ॥ १५ ॥
27187
27188 सेयं भूत्वेति शेषः । या अहं सा इयं कथम् । या प्रथमवयस्का अभवं सा
27189 तथैव स्थिता कथम् । स्वस्या अन्यत्वायोगादतीतावस्थायाश्च स्थित्यसंभवादिति
27190 भावः ॥ १५ ॥
27191
27192 मन्त्रिप्रभृतयः पौरा योधाः सबलवाहनाः ।
27193 सर्व एव त एवेमे स्थितास्तत्र तथैव ते ॥ १६ ॥
27194
27195 किंच मन्त्र्यादिष्वपि भेदप्रत्यभिज्ञे विरुद्धे इत्याह - मन्त्रिप्रभृतय
27196 इति ॥ १६ ॥

27197
27198 तत्रापीह च हे देवि सर्वे कथमवस्थिताः।
27199 बहिरन्तश्च मुकुरे इवैते किं प्रचेतनाः ॥ १७ ॥
27200
27201 प्रचेतनाः सचेतनाः किम् ॥ १७ ॥
27202
27203 श्रीदेव्युवाच।
27204
27205 यथा ज्ञप्तिरुदेत्यन्तस्तथानुभवति क्षणात्।
27206 चितिश्चेत्यार्थतामेति चित्तं चित्तार्थतामिव ॥ १८ ॥
27207
27208 चितिशक्तीनामतर्क्यत्वात्तुल्यकर्मोद्बोधितानां तुल्य एवाविर्भावः
27209 क्वचिद्भवतीति देवी दृष्टिसृष्टिवादमालम्ब्य समाधत्ते - यथेति।
27210 चेत्यार्थतां अध्यासेन चेत्याकारताम्। यथा चित्तं मनः स्वप्नादौ
27211 चित्तानुभूतजाग्रदर्थाकारतामित्यर्थः ॥ १८ ॥
27212
27213 यादृगर्थं जगद्रूपं तत्रैवोदेति तत्क्षणात्।
27214 न देशकालदीर्घत्वं न वैचित्र्यं पदार्थजम् ॥ १९ ॥
27215
27216 यादृक् यदाकारोऽर्थो यस्मिंस्तथाविधं संस्कारात्मकं जगद्रूपं तत्र
27217 चित्ते चिति च अस्ति तादृगेवोदेति। भोजकादृष्टोद्बोधिता
27218 मायासंबलितचिच्छक्तिरघटितमपि घटयितुं समर्थेत्यर्थः। एवंच
27219 देशकालाल्पतावैपुल्यविरोधोऽपि परिहृत इत्याशयेनाह - नेति। यदि
27220 पदार्थजं स्यात्तर्हि तत्स्वभावविरुद्धं न घटेत नतु तथेति भावः ॥ १९ ॥
27221
27222 बाह्यमाभ्यन्तरं भाति स्वप्नार्थोऽत्र निदर्शनम्।
27223 यदन्तः स्वप्नसंकल्पपुरं च कचनं चितेः ॥ २० ॥
27224
27225 चैतन्ये अध्यस्तत्वात्तदाभ्यन्तरं जगद्बाह्यं बहिर्भवमिव भाति ॥ २० ॥
27226
27227 तदेतद्बाह्यनाम्नैव स्वभ्यासात्सत्स्फुटं स्थितम्।
27228 यादृग्भावो भृतो भर्ता तव तस्मिंस्तदा पुरे ॥ २१ ॥
27229
27230 स्वभ्यासाच्चिराभ्यासात् स्फुटं व्यक्तं सत्सत्यमिव स्थितम्। यादृक् भावो
27231 वासना यस्य स तथाविधः सन् मृतः ॥ २१ ॥
27232
27233 तादृग्भावस्तमेवार्थं तत्रैव समुपागतः।
27234 अन्य एव ह्यमी भूतास्तेभ्यस्तास्तादृशा अपि ॥ २२ ॥
27235
27236 समुपागतः प्राप्तवान्। समानकर्मवासनोद्बोधितत्वादाकारसाम्येऽप्येते
27237 मन्त्र्यादिजीवा न त एव किंत्वन्ये इत्याह - अन्य एवेति। त एवेति प्रत्यभिज्ञया
27238 अभ्यस्ताः पुनःपुनरनुभूता अपि तादृशा अन्ये एव ॥ २२ ॥
27239
27240 सद्रूपा एव चैतस्य स्वप्नसंकल्पसैन्यवत्।
27241 अविसंवादि सर्वार्थरूपं यदनुभूयते ॥ २३ ॥
27242
27243 एतस्य राज्ञश्चित्सत्तया सद्रूपा एव। एतावदेव स्वाप्नाज्जाग्रद्वस्तुनो
27244 वैलक्षण्यं यदविसंवादि सर्वपुरुषसाधारणार्थत्वं नैतावन्मात्रेण
27245 सत्यतासिद्धिरित्याह - अविसंवादीति। चन्द्रप्रादेशिकत्वेन्द्रजालादावपि
27246 अविसंवादि सर्वार्थत्वदर्शनादिति भावः ॥ २३ ॥
27247
27248 तस्य तावद्वद कथं कीदृशी वापि सत्यता।

27249 अथवोत्तरकाले तु भङ्गुरत्वादवस्तु तत् ॥ २४ ॥
27250

27251 उत्तरकाले बाध्यत्वात्स्वप्नस्यासत्यत्वं चेज्जाग्रत्यपि समानं
27252 नाशबाधयोर्वस्तुनि विशेषाभावादित्याशयेनाह - अथवेति । तत्स्वाप्नम् ॥
27253 २४ ॥
27254

27255 ईदृक्च सर्वमेवेदं तत्र का नास्तिताधिका ।
27256 स्वप्ने जाग्रदसद्रूपा स्वप्नो जाग्रत्यसन्मयः ॥ २५ ॥
27257

27258 अधिका जाग्रदर्थेष्वित्यर्थः । परस्परकालासत्त्वमप्यविशिष्टमित्याह -
27259 स्वप्ने इति ॥ २५ ॥
27260

27261 मृतिर्जन्मन्यसद्रूपा मृत्यां जन्माप्यसन्मयम् ।
27262 विशरेद्विशरारुत्वादनुभूतेश्च राघव ॥ २६ ॥
27263

27264 नाशेऽपि बाधवत्परस्परकालासत्त्वं तुल्यमित्याह - मृतिरिति । नाशे
27265 अवयवानां विशरारुत्वाद्द्रव्यं विशरेन्नश्येत् । बाधे
27266 त्वनुभूतेरनुभवबलाद्विशरेत् । इति निमित्तभेदेऽपि न विशरणे विशेष इत्यर्थः ॥
27267 २६ ॥
27268

27269 एवं न सन्नासदिदं भ्रान्तिमात्रं विभासते ।
27270 महाकल्पान्तसंपत्तावप्यद्याथ युगेऽनघ ॥ २७ ॥
27271

27272 प्राक् सत्यतोपपादिता इह त्वसत्यतेत्यनिर्वचनीयता द्वयोरपि समेत्याह -
27273 एवमिति । एवं च सृष्टिकाले प्रलयकाले चाविशिष्टं सद्रूपं ब्रह्म
27274 सिद्धमित्याह - महाकल्पान्तेति । महाकल्पान्तसंपत्तावपि अद्यापि
27275 अथानन्तरमतीतानागतयुगभेदेऽपि कदाचन कदापि यन्नास्ति तत्स्वरूपेण न
27276 किंतु तत्कल्पनाधिष्ठानं ब्रह्मैवास्ति अतस्तदेव जगन्नतु
27277 भासमानमब्रह्मरूपं जगदित्यर्थः ॥ २७ ॥
27278

27279 प्। २३९)
27280

27281 न कदाचन यन्नास्ति तद्ब्रह्मैवास्ति तज्जगत् ।
27282 तस्मिन्मध्ये कचन्तीमा भ्रान्तयः सृष्टिनामिकाः ॥ २८ ॥
27283

27284 व्योम्नि केशोण्ड्रकानीव न कचन्तीव वस्तुतः ।
27285 यथा तरङ्गा जलधौ तथेमाः सृष्टयः परे ॥ २९ ॥
27286

27287 न कचन्त्येवेति वक्तव्ये इवकारः प्रपञ्चवत्तदभावस्यापि ब्रह्मातिरिक्तस्य
27288 मिथ्यात्वद्योतनार्थः ॥ २९ ॥
27289

27290 उत्पत्त्योत्पत्त्य लीयन्ते रजांसीव महानिले ।
27291 तस्माद्भ्रान्तिमयाभासे मिथ्यात्वमहमात्मनि ॥ ३० ॥
27292

27293 मिथ्यैव त्वं अहं इत्येवंविभागात्मनि ॥ ३० ॥
27294

27295 मृगतृष्णाजलचये कैवास्था सर्गभस्मनि ।
27296 भ्रान्तयश्च न तत्रान्यास्तास्तदेव परं पदम् ॥ ३१ ॥
27297

27298 सर्गभस्मनि दग्धपटभस्मप्राये प्रपञ्चे । ननु विषयबाधेऽपि
27299 भ्रान्तिज्ञानस्वरूपाबाधात्तैरेव द्वैतं स्यात्तत्राह - भ्रान्तयश्चेति ।
27300 निर्विषयज्ञानानां परस्परं ब्रह्मतश्च

27301 भेदकाभावाद्ब्रह्ममात्रत्वमित्यर्थः ॥ ३१ ॥
27302
27303 घने तमसि यक्षाभास्तम एव न यक्षकः ।
27304 तस्माज्जन्ममृतिर्मोहो व्यामोहत्वमिदं ततम् ॥ ३२ ॥
27305
27306 यक्षाभाः बालस्य यक्षभ्रान्तयः । व्यामोहोऽज्ञानं तस्य भावो
27307 व्यामोहत्वं तदीयावरणविक्षेपशक्तिस्तदेवेदं जगद्रूपं ततम् ॥ ३२ ॥
27308
27309 सर्वं तत्समहाकल्पं शान्तौ यदवशिष्यते ।
27310 नातः सत्यमिदं दृश्यं न चासत्यं कदाचन ॥ ३३ ॥
27311
27312 महाकल्पो ब्रह्मज्ञानेन सर्वबाधलक्षणो वैज्ञानिकः प्रलयस्तेन सहितं
27313 बाध्यमित्यर्थः । अधिष्ठानब्रह्मसत्तैव दृश्यस्य
27314 सत्त्वासत्वादिसर्वपक्षान्निरुणद्धीत्याह - शान्तावित्यादिना । सर्वशान्तौ
27315 यदवशिष्यते ब्रह्म अतो ब्रह्मतः सत्यं नेत्यादिसंबन्धः ॥ ३३ ॥
27316
27317 द्वयमेवैतदथवा ब्रह्म तत्रैव संभवात् ।
27318 आकाशे परमाण्वन्तर्द्रव्यादेरणुकेऽपि च ॥ ३४ ॥
27319
27320 द्वयं सत्यासत्योभयरूपं तु नैव । एकस्य
27321 विरुद्धोभयरूपत्वासंभवादित्यर्थः । तत्र त्रिष्वपि विरुद्धेषु
27322 कल्पेष्वविरोधेन संभवाद्ब्रह्मैवेति कल्पः श्रेयानित्याह - ब्रह्मेति ।
27323 कल्पनामात्रत्वं प्रपञ्चस्य सर्वत्र संभवतीत्याह - आकाशे इति ।
27324 द्रव्यगुणादेरणुके अल्पतरेऽप्यन्तर्भागे ॥ ३४ ॥
27325
27326 जीवाणुर्यत्र तत्रेदं जगद्वेत्ति निजं वपुः ।
27327 अग्निरौष्ण्यं यथा वेत्ति निजभावक्रमोदितम् ॥ ३५ ॥
27328
27329 वासनाबलेनात्मन्यनात्माध्यासे दृष्टान्तमाह - अग्निरिति ।
27330 पूर्वमनग्निरेवोपासकोऽहमेवाग्निरित्युपासनात्मकनिजभावना##-
27331
27332 पश्यतीदं तथैवात्मा स्वात्मभूतं विशुद्धचित् ।
27333 यथा सूर्योदये गेहे भ्रमन्ति त्रसरेणवः ॥ ३६ ॥
27334
27335 तथेमे परमाकाशे ब्रह्माण्डत्रसरेणवः ।
27336 यथा वायौ स्थितः स्पन्द आमोदः शून्यमम्बरे ॥ ३७ ॥
27337
27338 स्पन्द आमोदश्च वायौ यथा स्थितः । शून्यं शून्यत्वम् ॥ ३७ ॥
27339
27340 पिण्डग्रहविनिर्मुक्तं यथा विश्वं स्थितं परे ।
27341 भावाभावग्रहोत्सर्गस्थूलसूक्ष्मचराचराः ॥ ३८ ॥
27342
27343 पिण्डग्रहः स्थौल्यम् । भावाभावौ आविर्भावतिरोभावौ । ग्रह उपादानम् ।
27344 उत्सर्गस्त्यागः । क्रियामात्रोपलक्षणमेतत् ॥ ३८ ॥
27345
27346 विवर्जितस्यावयवैर्भागा ब्रह्मण ईदृशाः ।
27347 साकारस्यावबोधाय विज्ञेया भवताधुना ॥ ३९ ॥
27348
27349 भागाः कल्पितविभागाः । भवतेति पुंस्त्वाद्रामं प्रति वसिष्ठोक्तिः । ते च
27350 साकारस्य तस्य विश्वस्य निराकारत्वावबोधाय तादृशस्वात्मनोऽनन्या
27351 अनवयवा इव विज्ञेयाः । इवकारः सावयवतावन्निरवयवताया अपि
27352 मिथ्यात्वद्योतनार्थः ॥ ३९ ॥

अनन्याः स्वात्मनस्तस्य तेनानवयवा इव ।
यथास्थितमिदं विश्वं निजभावक्रमोदितम् ॥ ४० ॥

एवमनवयवत्वेन निजभावनाक्रमेण पारमार्थिकरूपेणाविर्भूतं
यथास्थितमेव विश्वशब्दार्थै रिक्तं शून्यं न भविष्यति । विश्वशब्दस्य
पूर्णार्थत्वपर्यवसानात्पूर्णस्य च रिक्तत्वायोगादिति भावः ॥ ४० ॥

रिक्तं न विश्वशब्दार्थैरनन्यद्ब्रह्मणि स्थितम् ।
न तत्सत्यं न चासत्यं रज्जुसर्पभ्रमो यथा ॥ ४१ ॥

तत्र हेतुः - अनन्यदिति । तर्हि यत्सावयवं विश्वं भासते तत्किं तत्राह ##-

मिथ्यानुभूतितः सत्यमसत्यं सत्परीक्षितम् ।
परमं कारणं चित्त्वाज्जीवत्वमिति चेत्यलम् ॥ ४२ ॥

तत्र हेतुमाह - मिथ्येति । नहि भ्रान्तिज्ञानानुभूतं सत्यं भवति न वा
वस्तुतत्त्वपरीक्षणात्मकं तद्बाधकज्ञानं सत्यमपह्नुते येनासत्यं
स्यादिति भावः । चित्त्वात् मायापिहितस्वरूपचित्त्वात् ॥ ४२ ॥

ततस्तथैवानुभवाज्जीवत्वं विन्दति स्फुटम् ।
सत्यं भवत्वसत्यं वा खे विभातमिदं जगत् ॥ ४३ ॥

अनुभवाच्चिरसंवेदनदृढानुभवात् । संसारस्य च जैवी भोगेच्छा
हेतुर्विषयरञ्जनैवोपयुज्यते न सत्यत्वमसत्यत्वं वेत्याह - सत्यमिति ॥ ४३
। ।

रञ्जयत्येव जीवाणुः स्वेच्छाभिरनुभूतिभिः ।
अनुभूयन्त एवाशु काश्चित्पूर्वानुभूतितः ॥ ४४ ॥

औपोद्घातिकमुक्त्वा प्रस्तुतप्रश्नसमाधानमाह - अनुभूयन्त इत्यादिना ।
पूर्वानुभूतितः पूर्वानुभूत्या समा असमाश्च केचिदपूर्वानुभवा
अनुभूयन्त इत्यन्वयः ॥ ४४ ॥

अपूर्वानुभवाः काश्चित्समाश्चैवासमास्तथा ।
क्वचित्कदाचित्ता एव क्वचिदर्धसमा अपि ॥ ४५ ॥

सर्वतद्वासनोद्भवे भेदाग्रहात्ता एवेति कचन्ति । अर्धवासनोद्भवे अर्धसमा
अपि ॥ ४५ ॥

प्। २४०)

कचन्त्यसत्याः सत्याभा जीवाकाशेऽनुभूतयः ।
तत्कुलास्तत्समाचारास्तज्जन्मानस्तदीहिताः ॥ ४६ ॥

तयोः प्रथमोऽयं प्रकार इत्याह - तत्कुला इत्यादिना ॥ ४६ ॥

त एव मन्त्रिणः पौराः प्रतिभाने भवन्ति च ।
ते चैवात्मन्यलं सत्या देशकालेहितैः समाः ॥ ४७ ॥

तेषामधिष्ठानदृष्ट्या परमार्थतः प्राक्तनाभेदः अध्यस्तदृष्ट्या तु
साम्यं पर्यवस्यतीत्याह - ते चेति । आत्मनि पारमार्थिकस्वरूपे अलमत्यन्तं

27405 त एवेति सत्याः स्वस्वदेशकालेहितदृष्ट्या तु समास्तुल्याः ॥ ४७ ॥
27406
27407 सर्वगात्मस्वरूपायाः प्रतिभाया इति स्थितिः ।
27408 यथा राजात्मनि व्योम्नि प्रतिभोदेति सन्मयी ॥ ४८ ॥
27409
27410 सर्वत्रैवमेव चैतन्यस्थितिरित्याह - सर्वगेति । नन्वीश्वरस्य
27411 प्रतिभानुसार्यर्थनिर्मातृत्वं श्रुतं जीवस्य त्वर्थानुसार्येव प्रतिभोदयः ।
27412 अन्यथा मानोरथिकस्यापि सत्यत्वसाधारण्ययोरापत्तेस्तत्कथं
27413 राजप्रतिभामात्रादर्थानां सिद्धिरितरजीवसाधारणव्यवहारयोग्यता
27414 चेत्याशङ्क्याह - यथेति । राजात्मनि यथा यादृशी सन्मयी
27415 सर्वसाधारणसत्यार्था प्रतिभा उदेति तथा तदग्रगा ततः पूर्वभाविनी
27416 साधारणभोजकादृष्टवशात् सच्छब्दवाच्ये अम्बरे अव्याकृताकाशरूपे
27417 ईश्वरे सत्यसंकल्परूपा प्रतिभा उदेत्येव । तथाच नोक्तदोष इति भावः ॥ ४८ ॥
27418
27419 तथा तदग्रगोदेति सत्येव प्रतिभाम्बरे ।
27420 त्वच्छीला त्वत्समाचारा त्वत्कुला त्वद्वपुर्मयी ॥ ४९ ॥
27421
27422 इति लीलेयमाभाति प्रतिभाप्रतिबिम्बजा ।
27423 सर्वगे संविदादर्शे प्रतिभा प्रतिबिम्बति ॥ ५० ॥
27424
27425 इति उक्तदिशा आभाति । सर्वत्रेयमेव रीतिरित्याह - सर्वगे इति ॥ ५० ॥
27426
27427 यादृशी यत्र सा तत्र तथोदेति निरन्तरम् ।
27428 जीवाकाशस्य यान्तस्था प्रतिभा कुरुते स्वयम् ।
27429 सा बहिश्च चिदादर्शे प्रतिबिम्बादियं स्थिता ॥ ५१ ॥
27430
27431 अन्तस्था अन्तर्यामीश्वरप्रतिभासा बहिश्च कुरुते । तथाच बाह्यत्वेन
27432 साधारणदृश्यत्वोपपत्तिरिति भावः ॥ ५१ ॥
27433
27434 एषा त्वमम्बरमहं भुवनं धरा च
27435 राजेति सर्वमहमेव विभातमात्रम् ।
27436 चिद्व्योमबिल्वजठरं विदुरङ्ग विद्धि
27437 त्वं तेन शान्तमलमास्स्व यथास्थितेह ॥ ५२ ॥
27438
27439 अम्बरमाकाशं तदन्तर्गतं भुवनं तदन्तर्गता धरा तदन्तर्गता त्वं
27440 अहं राजा चेति सर्वं विभातमात्रं चिन्मात्रस्वभावं अहं प्रत्यग्रूपमेव ।
27441 एवमेवान्ये तत्त्वज्ञाः सर्व चिद्व्योमलक्षणबिल्वस्य जठरं तत्सत्तामात्रं
27442 बीजगर्भं विदुः । हे अङ्ग लीले त्वमपि तथा विद्धि । तेन यथास्थिता
27443 स्वभावस्था शान्तं निर्विक्षेपमास्स्व ॥ ५२ ॥
27444
27445 इत्यार्षे श्रीवासिष्ठमहारामायणे मोक्षोपाये उत्पत्तिप्रकरणे लीलो॰
27446 अग्निदाहरात्रियुद्धे जगद्ब्रह्मवर्णनं नाम चतुश्चत्वारिंशः सर्गः
27447 ॥ ४४ ॥
27448
27449 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
27450 जगद्ब्रह्मवर्णनं नाम चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥
27451
27452
27453 पञ्चचत्वारिंशः सर्गः ४५
27454
27455 श्रीसरस्वत्युवाच ।
27456

27457 विदूरथस्ते भर्तैष तनुं त्यक्त्वा रणाङ्गणे।
27458 तदेवान्तःपुरं प्राप्य तादृगात्मा भविष्यति॥ १॥
27459
27460 वरो द्वितीयलीलायाः पद्मप्राप्तिरिहोच्यते।
27461 जीवानां फललाभश्च स्वसंकल्पानुसारतः॥ १॥
27462
27463 तादृगात्मा पद्मभूपालात्मा॥ १॥
27464
27465 श्रीवसिष्ठ उवाच।
27466
27467 इत्याकर्ण्य वचो देव्या लीला सा तत्पुरास्पदा।
27468 पुरः प्रह्वा स्थितोवाच वचनं विहिताञ्जलिः॥ २॥
27469
27470 प्रह्वा भक्तिनम्रा पुरः स्थिता। विहिताञ्जलिः॥ २॥
27471
27472 द्वितीयलीलोवाच।
27473
27474 देवी भगवती ज्ञप्तिर्नित्यमेवार्चिता मया।
27475 स्वप्ने संदर्शनं [स्वमित्यपि पाठः] देवी सा ददाति निशासु मे
27476 ॥ ३॥
27477
27478 सा यादृश्येव देवेशि तादृश्येव त्वमम्बिके।
27479 तन्मे कृपणकारुण्याद्वरं देहि वरानने॥ ४॥
27480
27481 त्वं तादृश्येव दृश्यसे अतः सैव त्वमित्याशयः॥ ४॥
27482
27483 श्रीवसिष्ठ उवाच।
27484
27485 इत्युक्ता सा तदा ज्ञप्तिः स्मृत्वा तद्भक्तिभावनम्।
27486 इदं प्रसन्ना प्रोवाच तां लीलां तत्पुरास्पदाम्॥ ५॥
27487
27488 भक्त्या भावनं चिन्तनं पूजनं च॥ ५॥
27489
27490 श्रीदेव्युवाच।
27491
27492 अनन्यया भावनया यावज्जीवमजीर्णया।
27493 परितुष्टास्मि ते वत्से गृहाणाभिमतं वरम्॥ ६॥
27494
27495 तद्देशलीलोवाच।
27496
27497 रणाद्देहं परित्यज्य यत्र तिष्ठति मे पतिः।
27498 अनेनैव शरीरेण तत्र स्यामेतदङ्गना॥ ७॥
27499
27500 तिष्ठति स्थास्यति। वर्तमानसामीप्ये वर्तमानवत्॥ ७॥
27501
27502 श्रीदेव्युवाच।
27503
27504 एवमस्तु त्वयाऽविघ्नं पूजितास्मि सुते चिरम्।
27505 अनन्यभावया भूरि पुष्पधूपसपर्यया॥ ८॥
27506
27507 अविघ्नमिति कर्मसाङ्गतामाह। अनन्यभावया असाधारण्या॥ ८॥
27508

श्रीवसिष्ठ उवाच।

अथ तद्देशलीलायां फुल्लायां तद्वरोदयात्।
पूर्वलीलाब्रवीद्देवीं संदेहलुलिताशया॥ ९॥

फुल्लायां संतोषेण विकासितायां सत्याम्। तस्याः स्थूलशरीरेण
भर्तृलोकप्राप्तिः स्वस्य तु देहं त्यक्त्वेति कुतो विशेष इति संदेहेन लुलितो लोलः
कृत आशयो यस्याः सा॥ ९॥

प। २४१)

पूर्वलीलोवाच।

ये सत्यकामाः सन्त्येवंसंकल्पा ब्रह्मरूपिणः।
त्वादृशाः सर्वमेवाशु तेषां सिद्ध्यत्यभीप्सितम्॥ १०॥

तत्रादौ संदेहबीजमाह - ये इति॥ १०॥

तत्तेनैव शरीरेण किमर्थं नाहमीश्वरि।
लोकान्तरमिदं नीता तं गिरिग्रामकं वद॥ ११॥

तत्तस्मात्सत्यकामताबलात्॥ ११॥

श्रीदेव्युवाच।

न किंचित्कस्यचिदहं करोमि वरवर्णिनि।
सर्वं संपादयत्याशु स्वयं जीवः स्वमीहितम्॥ १२॥

स्वस्य न स्वतः कामनास्ति पूर्णकामत्वात्। प्राणिकर्मानुसारिणी तु सा
तद्व्यवस्थयैव व्यवस्थितेत्याशयेन ज्ञप्तिः समाधत्ते - न
किंचिदित्यादिना॥ १२॥

अहं हितं रटे ज्ञप्तिः संविन्मात्राधिदेवता।
प्रत्येकमस्ति चिच्छक्तिर्जीवशक्तिस्वरूपिणी॥ १३॥

हितं प्राण्यभिलषितं भाविशुभं रटे वरदानेन प्रकाशयामि।
फलोत्पादने च जीवानां प्रत्येकं
प्राक्तनकामकर्मवासनावच्छिन्नचिदात्मकजीवशक्तिस्वरूपिणी
तत्तत्कार्यबीजभूता मायासंवलितचिच्छक्तिरस्ति॥ १३॥

जीवस्योदेति या शक्तिर्यस्य यस्य यथा यथा।
भाति तत्फलदा नित्यं तस्य तस्य तथा तथा॥ १४॥

अतस्तदनुसारेणैवाहं फलप्रदेत्याह - जीवस्येति। भाति
कर्मानुष्ठानहेतुकामनाविषयतया स्फुरति॥ १४॥

मां समाराधयन्त्यास्तु जीवशक्तिस्तवोदिता।
तदा भवद्यदीह स्यां मुक्तास्मीति चिरं तदा॥ १५॥

अस्मीत्यहंशब्दपर्यायं तिङन्तप्रतिरूपकमव्ययम्। अहं मुक्ता स्यां इति
भाविकर्मतत्फलसूक्ष्मावस्थानगर्भकामनावच्छिन्नचिद्रूपा जीवशक्तिः॥
१५॥

27561
27562 तेन तेन प्रकारेण त्वं मया संप्रबोधिता।
27563 तया युक्त्यामलं भावं नीतासि वरवर्णिनि ॥ १६ ॥
27564
27565 बोधनिरस्ताज्ञानावरणनिर्मलात्मावस्थितिलक्षणममलं भावम् ॥ १६ ॥
27566
27567 अनयैवं भावनया बोधितासि चिरं तदा।
27568 तमेवार्थं प्राप्तवती सदा स्वचितिशक्तितः ॥ १७ ॥
27569
27570 मुक्ता स्यामित्येवंभावनया चिरं युक्ता त्वमनया प्राग्दर्शितयुक्त्या
27571 बोधितासि। तं भावितमेवार्थम् ॥ १७ ॥
27572
27573 यस्य यस्य यथोदेति स्वचित्प्रयतनं चिरम्।
27574 फलं ददाति कालेन तस्य तस्य तथा तथा ॥ १८ ॥
27575
27576 स्वचिदवच्छिन्नं प्रयतनं पुरुषप्रयत्नः ॥ १८ ॥
27577
27578 तपो वा देवता वापि भूत्वा स्वैव चिदन्यथा।
27579 फलं ददात्यथ स्वैरं नभःफलनिपातवत् ॥ १९ ॥
27580
27581 नभःफलनिपातवन्मिथ्याभूतमित्यर्थः ॥ १९ ॥
27582
27583 स्वसंविद्यतनादन्यन्न किंचिच्च कदाचन।
27584 फलं ददाति तेनाशु यथेच्छसि तथा कुरु ॥ २० ॥
27585
27586 यथा यादृशं फलमिच्छसि तथा तदनुरूपं कर्म कुरु ॥ २० ॥
27587
27588 चिद्भाव एव ननु सर्गगतोऽन्तरात्मा [सर्वगतः इति पाठः]
27589 यच्चेतति प्रयतते च तदैति तच्छ्रीः।
27590 रम्यं ह्यरम्यमथवेति विचारयस्व
27591 यत्पावनं तदवबुध्य तदन्तरास्स्व ॥ २१ ॥
27592
27593 चिद्भावश्चित्सत्ता। नन्विति निश्चये। तदा प्राक्काले रम्यं विहितमथवा अरम्यं
27594 निषिद्धं यत्कर्म चेतति प्रयतते च उत्तरकालं तस्यैव फलरूपा श्रीः एति उदेति
27595 इति विचारयस्व। विचारेण च यत्पावनं पदं तदवबुध्य तदन्तः आस्स्व तिष्ठ
27596 ॥ २१ ॥
27597
27598 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे ली०
27599 सत्यकामसत्यसङ्कल्पास्तिता नाम पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥
27600
27601 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
27602 सत्यकामसत्यसङ्कल्पास्तिता नाम पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥
27603
27604
27605 षट्चत्वारिंशः सर्गः ४६
27606
27607 श्रीराम उवाच।
27608
27609 एवं संकथयन्तीषु तासु तस्मिन्गृहोदरे।
27610 विदूरथः किमकरोन्निर्गत्य कुपितो गृहात् ॥ १ ॥
27611
27612 विदूरथस्य युद्धार्थं निर्गमः सैन्यसंभ्रमैः।

27613 रणभूमिप्रवेशेन युद्धारम्भश्च वर्ण्यते ॥ १ ॥
27614
27615 श्रीवसिष्ठ उवाच ।
27616
27617 विदूरथः स्वसदनान्निर्गतः परिवारितः ।
27618 परिवारेण महता ऋक्षौघेणेव चन्द्रमाः ॥ २ ॥
27619
27620 ऋक्षौघेण नक्षत्रगणेन ॥ २ ॥
27621
27622 सन्नद्धसर्वावयवो लग्नहारविभूषणः ।
27623 महाजयजयारावैः सुरेन्द्र इव निर्गतः ॥ ३ ॥
27624
27625 वर्मायुधादिना सन्नद्धसर्वावयवः । लग्नानि स्वस्वोचितस्थानेष्वासक्तानि
27626 हारविभूषणानि यस्य ॥ ३ ॥
27627
27628 समादिशन्योधगणं शृण्वन्मण्डलसंस्थितिम् ।
27629 आलोकयन्वीरगणानारुरोह नृपो रथम् ॥ ४ ॥
27630
27631 समादिशन् तत्तदुचितकार्येष्वाज्ञापयन् । मन्त्रिभिरुक्तां मण्डलस्य
27632 व्यूहरचनाविशेषस्य संस्थितिं जनपद व्यवस्थां वा ॥ ४ ॥
27633
27634 कूटाकारसमाकारं मुक्तामाणिक्यमण्डितम् ।
27635 पताकापञ्चभिर्व्याप्तं द्युविमानमिवोत्तमम् ॥ ५ ॥
27636
27637 कूटस्य मेर्वादिशिखरस्याकारेण सम आकारो यस्य । द्युविमानं स्वर्गे
27638 प्रसिद्धं विमानम् ॥ ५ ॥
27639
27640 प्। २४२)
27641
27642 चक्रभित्तिपरिप्रोतप्रकचत्काञ्चनाङ्कुरम् ।
27643 मुक्ताजालरणत्कारचारुविक्रमकूबरम् ॥ ६ ॥
27644
27645 चक्रेषु भित्तिषु च परिप्रोता निखाताः प्रकचन्तः काञ्चनाङ्कुराः स्वर्णकीला
27646 यत्र । विक्रमकूबरं दीर्घाग्रभागम् ॥ ६ ॥
27647
27648 सुग्रीवैर्लक्षणोपेतैः प्रशस्तैः प्रचलैः कृशैः ।
27649 जवोड्डयनवेगेन प्रवहद्भिः सुरानिव ॥ ७ ॥
27650
27651 प्रशस्तैरुत्तमजातिजैः । सुरानिवान्तरिक्षे प्रवहद्भिरित्यतिशयोक्तिः ॥ ७ ॥
27652
27653 वायुं जवेन सहसा असहद्भिर्गतिक्रमैः ।
27654 प्रोह्यद्भिरिव पश्चार्धमापिबद्भिरिवाम्बरम् ॥ ८ ॥
27655
27656 पूर्वकायगतिक्रमैः पश्चार्धं प्रोह्यद्भिर्वहद्भिरिव । छान्दसो
27657 विकरणव्यत्ययः ॥ ८ ॥
27658
27659 योजितैरिव संपूर्णैश्चन्द्रैश्चामरदीप्तिभिः ।
27660 अश्वैरष्टभिराबद्धमाशापूरकहेषितैः ॥ ९ ॥
27661
27662 चामरदीप्तिभिः संपूर्णैश्चन्द्रैर्योजितैरिवेति सर्वत्रोत्प्रेक्षा ॥ ९ ॥
27663
27664 अथोदपतदुद्दामनागाभ्रवनिर्भरः ।

27665 शैलभित्तिप्रतिध्वानदारुणो दुन्दुभिध्वनिः ॥ १० ॥
27666
27667 नागा गजास्तल्लक्षणानामभ्राणां रवेण निर्भरोऽतिशयितः। शैलानां
27668 भित्तिषु वप्रेषु प्रतिध्वानेन दारुणो भीरुभीषणः॥ १० ॥
27669
27670 मत्तसैनिकनिर्मुक्तैर्व्याप्तं कलकलारवैः।
27671 किंकिणीजालनिर्ध्वानैर्हेतिसंघट्टघट्टितैः॥ ११ ॥
27672
27673 हेतीनामायुधानां संघट्टेन संघट्टनशब्देन घट्टितैर्निबिडितैः॥ ११
27674 ॥
27675
27676 धनुश्चटचटाशब्दैः शरसीत्कारगायनैः।
27677 परस्पराङ्गनिष्पिष्टकवचौघझण्ज्झणैः॥ १२ ॥
27678
27679 ज्वलदग्निटणत्कारैरार्तिमत्क्रन्दनारवैः।
27680 परस्परभटाह्वानैर्बन्दिविक्षुब्धरोदनैः॥ १३ ॥
27681
27682 बन्दिभिर्वीरोत्साहायाधिक्षेपेण विक्षुब्धानामयुद्धक्षतपीडितानां
27683 कातराणां रोदनैः॥ १३ ॥
27684
27685 शिलाघनीकृताशेषब्रह्माण्डकुहरो ध्वनिः।
27686 हस्तग्राह्योऽभवद्भीमो दशाशाकुञ्जपूरकः॥ १४ ॥
27687
27688 स्वपूरणेन शिलावद्घनीकृतं निरन्तरीकृतमशेषं ब्रह्माण्डकुहरं
27689 येन। घनत्वादेव हस्तग्राह्य इत्युत्प्रेक्षा॥ १४ ॥
27690
27691 अथोदपतदादित्यपथपीवररोधकम्।
27692 रजोनिभेन भूपीठमम्बरोड्डयनोन्मुखम्॥ १५ ॥
27693
27694 आदित्यपथस्य पीवरं सत् रोधं कामयते इति रोधकम्। कमेः क्विप्। रजोनिभेन
27695 वेषेण भूपीठमेव अम्बरोड्डयनोन्मुखं भूत्वा उदतिष्ठदित्युत्प्रेक्षा॥ १५
27696 ॥
27697
27698 गर्भवासमिवापन्नं तेनासीत्तन्महापुरम्।
27699 मूढत्वं यौवनेनेव घनतामाययौ तमः॥ १६ ॥
27700
27701 तेज रजसा। मूढत्वं स्वाभाविकमज्ञानम्। रजोधिकेन यौवनेनेव।
27702 तमोन्धकारो घनतां निबिडताम्॥ १६ ॥
27703
27704 प्रययुः क्वापि दीपौघा दिवसेनेव तारकाः।
27705 आययुर्बलमालोला नैशभूतप्रम्पराः॥ १७ ॥
27706
27707 बलं वीर्यं आययुः प्रापुः॥ १७ ॥
27708
27709 ददृशुस्तन्महायुद्धं द्वे लीले सा कुमारिका।
27710 प्रस्फुटद्धृदयेनेव देवीदत्तमहादृशौ॥ १८ ॥
27711
27712 देव्या ज्ञप्त्या दत्ता महादृशो दिव्यदृष्टयो ययोस्ते। सा विदूरथस्य
27713 कुमारिका कन्या च देवीदत्तमहादृगिति विपरिणामेन संबध्यते॥ १८ ॥
27714
27715 प्रशेमुरथ हेतीषु प्रोद्यत्कटकटारवाः।
27716 एकार्णवपयःपूरैर्वालवा इव वह्नयः॥ १९ ॥

27717
27718 अथ विदूरथनिर्गमनानन्तरं नगरलुण्टाकानां सैन्धवानां
27719 हेतीनामिषूणां च प्रोद्यन्तः कटकटारवाः प्रशेमुः प्रलये
27720 एकार्णवपयःपूरैर्वालवा वाडवा वह्नय इव। लडयोरभेदात् ॥ १९ ॥
27721
27722 शनैः सेनां समाकर्षन्नाज्ञायत बलान्तरम्।
27723 विवेशपक्षप्रोड्डीनो मेरुरेकमिवार्णवम् ॥ २० ॥
27724
27725 सेनां समाकर्षन्स विदूरथः सैन्धवानां बलस्य स्वबलस्य च अन्तरं
27726 तारतम्यं न अज्ञायत। अविज्ञायैव एकं सांवर्तमर्णवं मेरुरिव विवेश
27727 परबलमिति शेषः ॥ २० ॥
27728
27729 अथोदभूद्गुणध्वानं चटच्चटदिति स्फुटम्।
27730 रचितांशुमयाम्भोदाश्चेरुः परपरम्पराः ॥ २१ ॥
27731
27732 गुणध्वानं ज्यासिंजितम्। रचिताः स्वायुधांशुमया अम्भोदा मेघा
27733 याभिस्ताः परेषां शत्रूणां परम्पराश्चेरुः ॥ २१ ॥
27734
27735 ययुरम्बरमाश्रित्य नानाहेतिविहंगमाः।
27736 प्रसभ्रुरलमात्तासुमलिनाः शस्त्रदीप्तयः ॥ २२ ॥
27737
27738 आत्तासवओ गृहीतपरप्राणा अत एव पापेनेव मलिनाः श्यामाः। प्रसस्रुः
27739 प्रसृताः ॥ २२ ॥
27740
27741 जज्वलुः शस्त्रसंघट्टज्वलना उल्मुकाग्निवत्।
27742 जगर्जुः शरधारौघान्वर्षन्तो वीरवारिदाः ॥ २३ ॥
27743
27744 विविशुः क्रकचक्रूरा वीराङ्गेषु च हेतयः।
27745 पेतुः पटपटारावं हेतिनिष्पिष्टयोऽम्बरे ॥ २४ ॥
27746
27747 हेतिनिष्पिष्टयः खड्गप्रहारा एव पटपटारावात्मना अम्बरे पेतुरुत्पेतुः ॥ २४
27748 ||
27749
27750 जग्मुः शमं तमांस्याशु शस्त्रकानलदीपकैः।
27751 बभूवुरखिला सेना नवनाराचरोमशाः ॥ २५ ॥
27752
27753 उत्तस्थुर्यमयात्रायां कबन्धनटपङ्क्तयः।
27754 जगुरुच्चै रणोद्रेकं पिशाच्यो रणदारिकाः ॥ २६ ॥
27755
27756 यमयात्रायां यमाराधनयात्रोत्सवे इति यावत्। नटास्तदनुरूपा
27757 रणोत्सवालंकारभूता दारिका बालिकास्तरुण्य इति यावत् ॥ २६ ॥
27758
27759 उदगुर्दन्तसंघट्टटंकारा दन्तिनां बलात्।
27760 ऊहुः क्षेपणपाषाणमहानद्यो नभस्तले ॥ २७ ॥
27761
27762 उत् ऊर्ध्वमगुः ॥ २७ ॥
27763
27764 पेतुः शवा निवातास्तसंशुष्कवनपर्णवत्।
27765 निर्ययुर्लोहिता नद्यो रणाद्रेर्मृतिवर्षिणः ॥ २८ ॥
27766
27767 नितरां वातेनास्तैः क्षिप्तैः संशुष्कैर्वनपर्णैस्तुल्यं तद्वन्निपेतुः।
27768 मृतिः प्राणिमरणं तेन वर्षिणो वृष्टिप्लाविताद्रणलक्षणादद्रेः सकाशात्

॥ २८ ॥

प्। २४३)

प्रशेमुः पांसवो रक्तैस्तमांस्यायुधवह्निभिः।
युद्धैकध्यानतः शब्दा भयानि मृतिनिश्चयैः ॥ २९ ॥

प्रशेमुरिति सर्वत्र संबध्यते। शब्दा वाक्प्रसराः ॥ २९ ॥

अभवत्केवलं युद्धमपशब्दमसंभ्रमम्।
अनाकुलाम्बुवाहाभं खड्गवीचिसटाकृतम् ॥ ३० ॥

अपशब्दमपगतशब्दम्। वाय्वाद्यनाकुलवर्षदम्बुवाहाभम्। वीचयोऽत्र
विद्युत्तरङ्गास्तैः सटांकृतम् ॥ ३० ॥

खदखदरवसंवहच्छरौघं
टकटककितारवसंपतद्भुशुण्डि।
झणझणरवसंमिलन्महास्त्रं
तिमितिमिवद्रणमास दुस्तरं तत् ॥ ३१ ॥

तिमितिमीत्युक्तशस्त्रातिरिक्तप्रहरणध्वन्यनुकरणम्। तद्वत् रणं युद्धं
दुस्तरं आस। भीरूणामिति शेषः ॥ ३१ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलोपाख्याने
विदूरथनिर्याणं नाम षट्चत्वारिंशः सर्गः ॥ ४६ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
विदूरथनिर्याणं नाम षट्चत्वारिंशः सर्गः ४६ ॥

सप्तचत्वारिंशः सर्गः ४७

श्रीवसिष्ठ उवाच।

एतस्मिन्वर्तमाने तु घोरे समरसंगमे।
लीलाद्वयमुवाचेदं ज्ञप्तिं भगवतीं पुनः ॥ १ ॥

सिन्धोः शत्रुजये हेतुः सूर्योदयरणक्रमः।
युद्धं च द्वैरथं राज्ञोर्मन्त्रास्त्रैरिह कीर्त्यते ॥ १ ॥

पुनःशब्देन वक्ष्यमाणप्रश्नोत्तरयोः प्रागुक्तयुक्तिभिरेव गतार्थत्वात्
पुनरुक्तप्रायतया उक्तार्थस्फुटीकारमात्रप्रयोजनतां दर्शयति ॥ १ ॥

लीलाद्वयमुवाच।

देवि कस्मादकस्मान्नौ भर्ता जयति नो रणे।
वद त्वय्यपि तुष्टायामस्मिन्विद्रुतवारणे ॥ २ ॥

विद्रुताः प्रधाविता वारणा यस्मिंस्तथाविधे रणे नौ आवयोर्भर्ता विदूरथः
॥ २ ॥

श्रीसरस्वत्युवाच।

27821
27822 चिरमाराधितानेन विदूरथनृपारिणा |
27823 अहं पुत्रि जयार्थेन न विदूरथभूभृता || ३ ||
27824
27825 आराधिता जयकामनयेति शेषः || ३ ||
27826
27827 तेनासावेव जयति जीयते च विदूरथः |
27828 ज्ञप्तिरन्तर्गता संविदेतां मां यो यदा यथा || ४ ||
27829
27830 अन्तर्गता सर्वप्राणिमनोन्तर्गता संवित्संवेदनमहमिति शेषः || ४ ||
27831
27832 प्रेरयत्याशु तत्तस्य तदा संपादयाम्यहम् |
27833 यो यथा प्रेरयति मां तस्य तिष्ठामि तत्फला || ५ ||
27834
27835 प्रेरयति कामकर्मवासनाबलात्फलदानोन्मुखीकरोति | संपादनं च स्वस्य
27836 तत्तत्फलभावेन विवर्त एवेत्युक्तार्थस्फुटीकारेणाह - य इति || ५ ||
27837
27838 न स्वभावोऽन्यतां धत्ते वह्नेरौष्ण्यमिवैष मे |
27839 अनेन मुक्त एव स्यामहमित्यस्मि भाविता || ६ ||
27840
27841 अनेन विदूरथेन || ६ ||
27842
27843 प्रतिभारूपिणी तेन बाले मुक्तो भविष्यति |
27844 एतदीयः स्वयं शत्रुः सिन्धुर्नाम महीपतिः || ७ ||
27845
27846 बाले इत्यप्रबुद्धलीलासंबोधनम् | प्रबुद्धलीलायाः प्रागेव समाहितत्वात् || ७ ||
27847
27848 जयाम्यहं स्यां संग्राम इत्यनेनास्मि पूजिता |
27849 तस्माद्विदूरथो देहं तत्प्राप्य सह भार्यया || ८ ||
27850
27851 जयेन आमयति पीडयति शत्रूनिति जयामी अहं स्यां इति संकल्पेन | स्यामिति
27852 सामान्यस्य जयामीति क्रियाविशेषेण पचतिभवतीतिवदभेदान्वयो वा || ८ ||
27853
27854 त्वयानया च कालेन बाले मुक्तो भविष्यति |
27855 एतदीयः स्वयं शत्रुः सिन्धुर्नाम महीपतिः || ९ ||
27856
27857 त्वया अनया च भार्यया सह || ९ ||
27858
27859 हत्वैनं वसुधापीठे जयी राज्यं करिष्यति [भविष्यति इति पाठः]
27860 |
27861
27862 श्रीवसिष्ठ उवाच |
27863
27864 एवं देव्यां वदन्त्यां तु बलयोर्युध्यमानयोः || १० ||
27865
27866 रविर्द्रष्टुमिवाश्चर्यमाजगामोदयाचलम् |
27867 चेलुस्तिमिरसंघाता बलानीवारिरूपिणः || ११ ||
27868
27869 विदूरथस्यारिरूपिणो ये तिमिरसंघाता रात्रौ रक्षःपिशाचादीन् जीवसङ्घान्
27870 बलानि स्वसैन्यानीव असृजन् आविश्चक्रुरित्युत्प्रेक्षा | संध्यायां तारका इवेति
27871 तस्योपमानम् || ११ ||
27872

असृजन्जीवसङ्घान्ये संध्यायां तारका इव |
शनैः प्रकटतां जग्मुर्नीलाकाशाद्रिभूमयः [बिलाकाशाद्रि इति
मुद्रितपुस्तके पाठः] || १२ ||

भुवनं कज्जलाम्भोधेरिवोत्क्षिप्तमराजत |
पेतुः कनकनिःस्यन्दसुन्दरा रविरश्मयः || १३ ||

उत्क्षिप्तं पर्यानीतम् || १३ ||

शैलेषु वरवीरेषु रणे रक्तच्छटा इव |
अदृश्यत ततो व्योम तथा रणमहीतलम् || १४ ||

रणमहीतलं वीरबाहुभिर्भ्रान्तभुजगमिव व्योम तु सूर्यस्य बाहुभिरिव
किरणैः || १४ ||

बाहुभिर्भ्रान्तभुजगं प्रभाभिः कीर्णकाञ्चनम् |
कुण्डलैः कीर्णरत्नौघं शिरोभिर्दृष्टपङ्कजम् || १५ ||

उभयमुभयप्रभाभिः कीर्णकाञ्चनमिवादृश्यतेत्यर्थः |
एवमग्रेऽप्युत्प्रेक्षयोभयवर्णनं बोध्यम् | उत्पतद्भिः पतितैश्च कुण्डलैः
कीर्णरत्नौघं शिरोभिश्च दृष्टपङ्कजं सर इव || १५ ||

आयुधैः खड्गनीरन्ध्रं शरैः शलभनिर्भरम् |
रक्ताभास्थिरसंध्याढ्यं ससिद्धपुरुषं शवैः || १६ ||

खड्गैर्मृगजातिभिर्नीरन्ध्रं निबिडितमिव | रक्ताभाभिः रक्तकान्तिभिः
स्थिरसंध्याढ्यमिव | एवं सर्वत्र || १६ ||

प्। २४२)

चक्रभित्तिपरिप्रोतप्रकचत्काञ्चनाङ्कुरम् |
मुक्ताजालरणत्कारचारुविक्रमकूबरम् || ६ ||

चक्रेषु भित्तिषु च परिप्रोता निखाताः प्रकचन्तः काञ्चनाङ्कुराः स्वर्णकीला
यत्र | विक्रमकूबरं दीर्घाग्रभागम् || ६ ||

सुग्रीवैर्लक्षणोपेतैः प्रशस्तैः प्रचलैः कृशैः |
जवोड्डयनवेगेन प्रवहद्भिः सुरानिव || ७ ||

प्रशस्तैरुत्तमजातिजैः | सुरानिवान्तरिक्षे प्रवहद्भिरित्यतिशयोक्तिः || ७ ||

वायुं जवेन सहसा असहद्भिर्गतिक्रमैः |
प्रोह्यद्भिरिव पश्चार्धमापिवद्भिरिवाम्बरम् || ८ ||

पूर्वकायगतिक्रमैः पश्चार्धं प्रोह्यद्भिर्वहद्भिरिव | छान्दसो
विकरणव्यत्ययः || ८ ||

योजितैरिव संपूर्णैश्चन्द्रैश्चामरदीप्तिभिः |
अश्वैरष्टभिराबद्धमाशापूरकहेषितैः || ९ ||

चामरदीप्तिभिः संपूर्णैश्चन्द्रैर्योजितैरिवेति सर्वत्रोत्प्रेक्षा || ९ ||

27925 अथोदपतदुद्दामनागाभ्ररवनिर्भरः ।
27926 शैलभित्तिप्रतिध्वानदारुणो दुन्दुभिध्वनिः ॥ १० ॥
27927
27928 नागा गजास्तल्लक्षणानामभ्राणां रवेण निर्भरोऽतिशयितः । शैलानां
27929 भित्तिषु वप्रेषु प्रतिध्वानेन दारुणो भीरुभीषणः ॥ १० ॥
27930
27931 मत्तसैनिकनिर्मुक्तैर्व्याप्तं कलकलारवैः ।
27932 किंकिणीजालनिर्ध्वानैर्हेतिसंघट्टघट्टितैः ॥ ११ ॥
27933
27934 हेतीनामायुधानां संघट्टेन संघट्टनशब्देन घट्टितैर्निबिडितैः ॥ ११
27935 ॥
27936
27937 धनुश्चटचटाशब्दैः शरसीत्कारगायनैः ।
27938 परस्पराङ्गनिष्पिष्टकवचौघझणज्झणैः ॥ १२ ॥
27939
27940 ज्वलदग्निटणत्कारैरार्तिमत्क्रन्दनारवैः ।
27941 परस्परभटाह्वानैर्वन्दिविक्षुब्धरोदनैः ॥ १३ ॥
27942
27943 बन्दिभिर्वीरोत्साहायाधिक्षेपेण विक्षुब्धानामयुद्धक्षतपीडितानां
27944 कातराणां रोदनैः ॥ १३ ॥
27945
27946 शिलाघनीकृताशेषब्रह्माण्डकुहरो ध्वनिः ।
27947 हस्तग्राह्योऽभवद्भीमो दशाशाकुञ्जपूरकः ॥ १४ ॥
27948
27949 स्वपूरणेन शिलावद्घनीकृतं निरन्तरीकृतमशेषं ब्रह्माण्डकुहरं
27950 येन । घनत्वादेव हस्तग्राह्य इत्युत्प्रेक्षा ॥ १४ ॥
27951
27952 अथोदपतदादित्यपथपीवररोधकम् ।
27953 रजोनिभेन भूपीठमम्बरोड्डयनोन्मुखम् ॥ १५ ॥
27954
27955 आदित्यपथस्य पीवरं सत् रोधं कामयते इति रोधकम् । कमेः क्विप् । रजोनिभेन
27956 वेषेण भूपीठमेव अम्बरोड्डयनोन्मुखं भूत्वा उदतिष्ठदित्युत्प्रेक्षा ॥ १५
27957 ॥
27958
27959 गर्भवासमिवापन्नं तेनासीत्तन्महापुरम् ।
27960 मूढत्वं यौवनेनेव घनतामाययौ तमः ॥ १६ ॥
27961
27962 तेन रजसा । मूढत्वं स्वाभाविकमज्ञानम् । रजोधिकेन यौवनेनेव ।
27963 तमोन्धकारो घनतां निबिडताम् ॥ १६ ॥
27964
27965 प्रययुः क्वापि दीपौघा दिवसेनेव तारकाः ।
27966 आययुर्बलमालोला नैशभूतपरम्पराः ॥ १७ ॥
27967
27968 बलं वीर्यं आययुः प्रापुः ॥ १७ ॥
27969
27970 ददृशुस्तन्महायुद्धं द्वे लीले सा कुमारिका ।
27971 प्रस्फुटद्धृदयेनेव देवीदत्तमहादृशौ ॥ १८ ॥
27972
27973 देव्या ज्ञप्त्या दत्ता महादृशो दिव्यदृष्टयो ययोस्ते । सा विदूरथस्य
27974 कुमारिका कन्या च देवीदत्तमहादृगिति विपरिणामेन संबध्यते ॥ १८ ॥
27975
27976 प्रशेमुरथ हेतीषु प्रोद्यत्कटकटारवाः ।

27977 एकार्णवपयःपूरैर्वालवा इव वह्नयः ॥ १९ ॥
27978
27979 अथ विदूरथनिर्गमनानन्तरं नगरलुण्टाकानां सैन्धवानां
27980 हेतीनामिषूणां च प्रोद्यन्तः कटकटारवाः प्रशेमुः प्रलये
27981 एकार्णवपयःपूरैर्वालवा वाडवा वह्नय इव । लडयोरभेदात् ॥ १९ ॥
27982
27983 शनैः सेनां समाकर्षन्नाज्ञायत बलान्तरम् ।
27984 विवेशपक्षप्रोड्डीनो मेरुरेकमिवार्णवम् ॥ २० ॥
27985
27986 सेनां समाकर्षन्स विदूरथः सैन्धवानां बलस्य स्वबलस्य च अन्तरं
27987 तारतम्यं न आज्ञायत । अविज्ञायैव एकं सांवर्तमर्णवं मेरुरिव विवेश
27988 परबलमिति शेषः ॥ २० ॥
27989
27990 अथोदभूद्गुणध्वानं चटच्चटदिति स्फुटम् ।
27991 रचितांशुमयाम्भोदाश्चेरुः परपरमपराः ॥ २१ ॥
27992
27993 गुणध्वानं ज्यासिंजितम् । रचिताः स्वायुधांशुमया अम्भोदा मेघा
27994 याभिस्ताः परेषां शत्रूणां परम्पराश्चेरुः ॥ २१ ॥
27995
27996 ययुरम्बरमाश्रित्य नानाहेतिविहंगमाः ।
27997 प्रसभ्रुरलमात्तासुमलिनाः शस्त्रदीप्तयः ॥ २२ ॥
27998
27999 आत्तासवो गृहीतपरप्राणा अत एव पापेनेव मलिनाः श्यामाः । प्रसस्रुः
28000 प्रसृताः ॥ २२ ॥
28001
28002 जज्वलुः शस्त्रसंघट्टज्वलना उल्मुकाग्निवत् ।
28003 जगर्जुः शरधारौघान्वर्षन्तो वीरवारिदाः ॥ २३ ॥
28004
28005 विविशुः क्रकचक्रूरा वीराङ्गेषु च हेतयः ।
28006 पेतुः पटपटारावं हेतिनिष्पिष्टयोऽम्बरे ॥ २४ ॥
28007
28008 हेतिनिष्पिष्टयः खड्गप्रहारा एव पटपटारावात्मना अम्बरे पेतुरुत्पेतुः ॥ २४
28009 । ।
28010
28011 जग्मुः शमं तमांस्याशु शस्त्रकानलदीपकैः ।
28012 बभूवुरखिला सेना नवनाराचरोमशाः ॥ २५ ॥
28013
28014 उत्तस्थुर्यमयात्रायां कबन्धनटपङ्क्तयः ।
28015 जगुरुच्चै रणोद्रेकं पिशाच्यो रणदारिकाः ॥ २६ ॥
28016
28017 यमयात्रायां यमाराधनयात्रोत्सवे इति यावत् । नटास्तदनुरूपा
28018 रणोत्सवालंकारभूता दारिका बालिकास्तरुण्य इति यावत् ॥ २६ ॥
28019
28020 उदगुर्दन्तसंघट्टटंकारा दन्तिनां बलात् ।
28021 ऊहुः क्षेपणपाषाणमहानद्यो नभस्तले ॥ २७ ॥
28022
28023 उत् ऊर्ध्वमगुः ॥ २७ ॥
28024
28025 पेतुः शवा निवातास्तसंशुष्कवनपर्णवत् ।
28026 निर्ययुर्लोहिता नद्यो रणाद्रेर्मृतिवर्षिणः ॥ २८ ॥
28027
28028 नितरां वातेनास्तैः क्षिप्तैः संशुष्कैर्वनपर्णैस्तुल्यं तद्वन्निपेतुः ।

मृतिः प्राणिमरणं तेन वर्षिणो वृष्टिप्लाविताद्रणलक्षणादद्रेः सकाशात्
॥ २८ ॥

प्। २४३)

प्रशेमुः पांसवो रक्तैस्तमांस्यायुधवह्निभिः।
युद्धैकध्यानतः शब्दा भयानि मृतिनिश्चयैः॥ २९ ॥

प्रशेमुरिति सर्वत्र संबध्यते। शब्दा वाक्प्रसराः॥ २९ ॥

अभवत्केवलं युद्धमपशब्दमसंभ्रमम्।
अनाकुलाम्बुवाहाभं खड्गवीचिसटांकृतम्॥ ३० ॥

अपशब्दमपगतशब्दम्। वाय्वाद्यनाकुलवर्षदम्बुवाहाभम्। वीचयोऽत्र
विद्युत्तरङ्गास्तैः सटांकृतम्॥ ३० ॥

खदखदरवसंवहच्छरौघं
टकटकितारवसंपतद्भुशुण्डि।
झणझणरवसंमिलन्महास्त्रं
तिमितिमिवद्रणमास दुस्तरं तत्॥ ३१ ॥

तिमितिमीत्युक्तशस्त्रातिरिक्तप्रहरणध्वन्यनुकरणम्। तद्वत् रणं युद्धं
दुस्तरं आस। भीरूणामिति शेषः॥ ३१ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलोपाख्याने
विदूरथनिर्याणं नाम षट्चत्वारिंशः सर्गः॥ ४६ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
विदूरथनिर्याणं नाम षट्चत्वारिंशः सर्गः॥ ४६ ॥

सप्तचत्वारिंशः सर्गः ४७

श्रीवसिष्ठ उवाच।

एतस्मिन्वर्तमाने तु घोरे समरसंगमे।
लीलाद्वयमुवाचेदं ज्ञप्तिं भगवतीं पुनः॥ १ ॥

सिन्धोः शत्रुजये हेतुः सूर्योदयरणक्रमः।
युद्धं च द्वैरथं राज्ञोर्मन्त्रास्त्रैरिह कीर्त्यते॥ १ ॥

पुनःशब्देन वक्ष्यमाणप्रश्नोत्तरयोः प्रागुक्तयुक्तिभिरेव गतार्थत्वात्
पुनरुक्तप्रायतया उक्तार्थस्फुटीकारमात्रप्रयोजनतां दर्शयति॥ १ ॥

लीलाद्वयमुवाच।

देवि कस्मादकस्मान्नौ भर्ता जयति नो रणे।
वद त्वय्यपि तुष्टायामस्मिन्विद्रुतवारणे॥ २ ॥

विद्रुताः प्रधाविता वारणा यस्मिंस्तथाविधे रणे नौ आवयोर्भर्ता विदूरथः
॥ २ ॥

28081 श्रीसरस्वत्युवाच।
28082
28083 चिरमाराधितानेन विदूरथनृपारिणा।
28084 अहं पुत्रि जयार्थेन न विदूरथभूभृता॥ ३॥
28085
28086 आराधिता जयकामनयेति शेषः॥ ३॥
28087
28088 तेनासावेव जयति जीयते च विदूरथः।
28089 ज्ञप्तिरन्तर्गता संविदेतां मां यो यदा यथा॥ ४॥
28090
28091 अन्तर्गता सर्वप्राणिमनोन्तर्गता संवित्संवेदनमहमिति शेषः॥ ४॥
28092
28093 प्रेरयत्याशु तत्तस्य तदा संपादयाम्यहम्।
28094 यो यथा प्रेरयति मां तस्य तिष्ठामि तत्फला॥ ५॥
28095
28096 प्रेरयति कामकर्मवासनाबलात्फलदानोन्मुखीकरोति। संपादनं च स्वस्य
28097 तत्तत्फलभावेन विवर्त एवेत्युक्तार्थस्फुटीकारेणाह - य इति॥ ५॥
28098
28099 न स्वभावोऽन्यतां धत्ते वह्नेरौष्ण्यमिवैष मे।
28100 अनेन मुक्त एव स्यामहमित्यस्मि भाविता॥ ६॥
28101
28102 अनेन विदूरथेन॥ ६॥
28103
28104 प्रतिभारूपिणी तेन बाले मुक्तो भविष्यति।
28105 एतदीयः स्वयं शत्रुः सिन्धुर्नाम महीपतिः॥ ७॥
28106
28107 बाले इत्यप्रबुद्धलीलासंबोधनम्। प्रबुद्धलीलायाः प्रागेव समाहितत्वात्॥ ७॥
28108
28109 जयाम्यहं स्यां संग्राम इत्यनेनास्मि पूजिता।
28110 तस्माद्विदूरथो देहं तत्प्राप्य सह भार्यया॥ ८॥
28111
28112 जयेन आमयति पीडयति शत्रूनिति जयामी अहं स्यां इति संकल्पेन। स्यामिति
28113 सामान्यस्य जयामीति क्रियाविशेषेण पचतिभवतीतिवदभेदान्वयो वा॥ ८॥
28114
28115 त्वयानया च कालेन वाले मुक्तो भविष्यति।
28116 एतदीयः स्वयं शत्रुः सिन्धुर्नाम महीपतिः॥ ९॥
28117
28118 त्वया अनया च भार्यया सह॥ ९॥
28119
28120 हत्वैनं वसुधापीठे जयी राज्यं करिष्यति [भविष्यति इति पाठः]
28121 ।
28122
28123 श्रीवसिष्ठ उवाच।
28124
28125 एवं देव्यां वदन्त्यां तु बलयोर्युध्यमानयोः॥ १०॥
28126
28127 रविर्द्रष्टुमिवाश्चर्यमाजगामोदयाचलम्।
28128 चेलुस्तिमिरसंघाता बलानीवारिरूपिणः॥ ११॥
28129
28130 विदूरथस्यारिरूपिणो ये तिमिरसंघाता रात्रौ रक्षःपिशाचादीन् जीवसङ्घान्
28131 बलानि स्वसैन्यानीव असृजन् आविश्चकुरित्युत्प्रेक्षा। संध्यायां तारका इवेति
28132 तस्योपमानम्॥ ११॥

28133
28134 असृजन्जीवसङ्घान्ये संध्यायां तारका इव।
28135 शनैः प्रकटतां जग्मुर्नीलाकाशाद्रिभूमयः [बिलाकाशाद्रि इति
28136 मुद्रितपुस्तके पाठः] ॥ १२ ॥
28137
28138 भुवनं कज्जलाम्भोधेरिवोत्क्षिप्तमराजत।
28139 पेतुः कनकनिःस्यन्दसुन्दरा रविरश्मयः ॥ १३ ॥
28140
28141 उत्क्षिप्तं पर्यानीतम् ॥ १३ ॥
28142
28143 शैलेषु वरवीरेषु रणे रक्तच्छटा इव।
28144 अदृश्यत ततो व्योम तथा रणमहीतलम् ॥ १४ ॥
28145
28146 रणमहीतलं वीरबाहुभिर्भ्रान्तभुजगमिव व्योम तु सूर्यस्य बाहुभिरिव
28147 किरणैः ॥ १४ ॥
28148
28149 बाहुभिर्भ्रान्तभुजगं प्रभाभिः कीर्णकाञ्चनम्।
28150 कुण्डलैः कीर्णरत्नौघं शिरोभिर्दृष्टपङ्कजम् ॥ १५ ॥
28151
28152 उभयमुभयप्रभाभिः कीर्णकाञ्चनमिवादृश्यतेत्यर्थः।
28153 एवमग्रेऽप्युत्प्रेक्षयोभयवर्णनं बोध्यम्। उत्पतद्भिः पतितैश्च कुण्डलैः
28154 कीर्णरत्नौघं शिरोभिश्च दृष्टपङ्कजं सर इव ॥ १५ ॥
28155
28156 आयुधैः खड्गनीरन्ध्रं शरैः शलभनिर्भरम्।
28157 रक्ताभास्थिरसंध्याढ्यं ससिद्धपुरुषं शवैः ॥ १६ ॥
28158
28159 खड्गैर्मृगजातिभिर्नीरन्ध्रं निबिडितमिव। रक्ताभाभिः रक्तकान्तिभिः
28160 स्थिरसंध्याढ्यमिव। एवं सर्वत्र ॥ १६ ॥
28161
28162 प्। २४४) १४७
28163
28164 हारैः ससर्पनिर्मोकं कटैरिद्धं सुसंकुलम्।
28165 लसल्लतं पताकाभिरुरुभिः कृततोरणम् ॥ १७ ॥
28166
28167 कटैः कंकटैः ॥ १७ ॥
28168
28169 हस्तैः पादैः पल्लवितं शरैः शरवणोपमम्।
28170 शस्त्रांशुशाद्वलश्यामं शस्त्रपूरैः सकैतकम् ॥ १८ ॥
28171
28172 कीर्णमायुधमालाभिरुन्मत्तमिव भैरवम्।
28173 फुल्लाशोकवनाकारं शस्त्रसंघट्टवह्निभिः ॥ १९ ॥
28174
28175 उदघुंघुमहाशब्दैर्विद्रवत्सिद्धनायकैः।
28176 सौवर्णनगराकारं बालार्ककचितायुधैः ॥ २० ॥
28177
28178 उदधिवद्घुंघुमहाशब्दैः। उदधिशब्दस्य च्छान्दसो धिलोपः।
28179 सौवर्णनगरं त्रिपुरे प्रसिद्धं तदाकारम् ॥ २० ॥
28180
28181 प्रासासिशक्तिचक्रर्ष्टिमुद्गरारणिताम्बरम्।
28182 वहद्रक्तनदीरंहःप्रोह्यमानशवोत्करम् ॥ २१ ॥
28183
28184 भुशुण्डीशक्तिकुन्तासिशूलपाषाणसंकुलम्।

28185 शूलशस्त्राहतिच्छन्नकबन्धपतनान्वितम् ॥ २२ ॥
28186

28187 कालताण्डववेतालकुलारब्धहलारवम् ।
28188 शून्ये रणाङ्गणे दीप्तौ पद्मसिन्ध्वो रथौ चलौ ॥ २३ ॥
28189

28190 इत्थं व्योमरणमहीतले वर्णयित्वा सिन्धुविदूरथयोर्द्वैरथं युद्धं
28191 रथादिद्वारा वर्णयति - शून्ये इत्यादिना । शून्ये परिवारयोधानां
28192 परस्परं युद्धेन क्षयादिति भावः ॥ २३ ॥
28193

28194 अदृश्येतां नभश्चिह्नौ चन्द्रसूर्यौ दिवीव तौ ।
28195 चक्रशूलभुशुण्ड्यृष्टिप्रासायुधसमाकुलौ ॥ २४ ॥
28196

28197 नभसश्चिह्नौ लक्षणभूतौ । दिवि स्वर्गे ॥ २४ ॥
28198

28199 सहस्रेण सहस्रेण वीराणां परिवारितौ ।
28200 विचरन्तौ यथाकामं मण्डलैर्विततारवैः ॥ २५ ॥
28201

28202 सचीत्कारमहाचक्रपिष्टानेकमृतामृतौ ।
28203 तरन्तौ रक्तसरितौ मत्तवारणलीलया ॥ २६ ॥
28204

28205 रक्तसरितौ अन्योन्यसंपादिते तरन्तौ ॥ २६ ॥
28206

28207 केशशैवलसंपन्ने चक्रचक्रजलेन्दुके ।
28208 वहच्चक्राहतिक्षोभपातिताकुलवारणौ ॥ २७ ॥
28209

28210 चक्राण्येव चक्राश्चक्रवाका जलप्रतिबिम्बितेन्दुकाश्च ययोस्तथाविधे
28211 रक्तसरितौ ॥ २७ ॥
28212

28213 मणिमुक्ताझणत्काररणत्कूबरकारवौ ।
28214 वाताहतपताकाग्रपटत्पटपटारवौ ॥ २८ ॥
28215

28216 झणत्कारलक्षणा रणतां रणप्रवृत्तानां वा रथकूबरकाणामारवा
28217 ध्वनयो ययोस्तौ ॥ २८ ॥
28218

28219 अनुयातौ महावीरैर्भूरिभिर्भीरुसैनिकैः ।
28220 धारा वमद्भिः कुन्तानां शराणां धनुषामपि ॥ २९ ॥
28221

28222 भीरवः सैनिका येषां तथाविधैर्भूरिभिर्महावीरैरनुयातौ । धनुषां
28223 संबन्धिनां शराणां शक्त्यादीनामपि धारा वमद्भिः । क्षिपद्भिरिति यावत्
28224 ॥ २९ ॥
28225

28226 शक्तीनां प्रासशङ्कूनां चक्राणां कचतां रणे ।
28227 तत्र तौ क्षणमावृत्य मण्डले भूमिकुण्डले ॥ ३० ॥
28228

28229 रणभूमेः कुण्डले इवालंकारभूते रथयोः परिवर्तनरूपे मण्डले
28230 क्षणमावृत्य ॥ ३० ॥
28231

28232 उभौ व्यतिबभूवाते संमुखावायुधावुभौ ।
28233 नाराचधारानिकरविक्षेपकरकध्वनौ ॥ ३१ ॥
28234

28235 आयोधनमायुधिर्युद्धं तस्मिन्नुभौ व्यतिबभूवाते परस्परक्रियाव्यत्यासेन
28236 बभूवतुः । व्यतिशब्दौ कर्मव्यतिहारद्योतनार्थौ । कर्तरि कर्मव्यतिहारे

28237 इत्यात्मनेपदम् | व्यतिहृतक्रियां दर्शयति - नाराचेति | नाराच एव
28238 जलधारानिकराः | विक्षिप्यन्त इति विक्षेपाः प्रासकुन्तादयस्त एव करका
28239 वर्षोपलास्तत्पातनसहनप्रयुक्तध्वनौ विषये अब्धिजलदाविव पुनःपुनः
28240 पर्यायेणैको जलद इव ववर्ष अपरोऽब्धिरिव सेहे | तत्र च ध्वनिमात्रं वृत्तं
28241 न क्षतादिफलान्तरमिति द्योतनाय ध्वनावित्युक्तिः || ३१ ||
28242
28243 अन्योन्यमपि गर्जन्तौ मत्तब्धिजलदाविव |
28244 तयोः प्रहरतोर्बाणा वसुधानरसिंहयोः || ३२ ||
28245
28246 पाषाणमुसलाकारा व्योमविस्तारिणोऽभवन् |
28247 करवालमुखाः केचिन्मुद्गराननकाः परे || ३३ ||
28248
28249 तयोः शराणां वैचित्र्यं वर्णयति - पाषाणेत्यादिना | व्योम्नि विस्तारिणः
28250 अभवन्निति सर्वत्र संबध्यते || ३३ ||
28251
28252 शितचक्रमुखाः केचित्केचित्परशुवक्त्रकाः |
28253 केचिच्छक्तिमुखाः केचित्केचिच्छूलशिलामुखाः |
28254 त्रिशूलवदनाः केचित्स्थूला इव महाशिलाः || ३४ ||
28255
28256 केचित्केचिदिति वीप्साविवक्षया द्विरुक्तिः || ३४ ||
28257
28258 प्रलयपवनपातिताः शिलौघा
28259 इव निपतन्ति शिलीमुखास्तदा स्म |
28260 प्रमिलितमभवत्तयोस्तदानीं
28261 प्रलयविजृम्भितसिन्धुसंभ्रमेण || ३५ ||
28262
28263 शिलीमुखा बाणाः तयोः सिन्धुविदूरथयोः प्रमिलितमन्योन्यमेलनं
28264 प्रलयार्थं विजृम्भितयोर्विवृद्धयोः सिन्ध्वोः समुद्रयोः संभ्रमेण
28265 परस्परमेलनविलासेन अभवत् तुल्यमिति शेषः || ३५ ||
28266
28267 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे ली०
28268 विदूरथसिन्धुसमागमो नाम सप्तचत्वारिंशः सर्गः || ४७ ||
28269
28270 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
28271 विदूरथसिन्धुसमागमो नाम सप्तचत्वारिंशः सर्गः || ४७ ||
28272
28273 प्। २४५) १४७
28274
28275 अष्टचत्वारिंशः सर्गः ४८
28276
28277 श्रीवसिष्ठ उवाच |
28278
28279 प्राप्य राजा पुरः प्राप्तं सिन्धुमुद्धुरकन्धरम् |
28280 मध्याह्नतपनान्तेन कोपेन विततोऽभवत् || १ ||
28281
28282 विचित्रमायाजननैर्मन्त्रास्त्रैर्विश्वमोहनः |
28283 वर्ण्यते विस्तरेणात्र समरः सिन्धुपद्मयोः || १ ||
28284
28285 मध्याह्नतपनं अन्तयति सादृश्येन बध्नातीति मध्याह्नतपनान्तस्तेन |
28286 तत्सदृशेनेति यावत् | अति बन्धने कर्मण्यण् || १ ||
28287
28288 धनुरास्फालयामास चिराराविततदिङ्मुखम् |

28289 कल्पान्तपवनास्फोटैव मेरुगिरेस्तटम् ॥ २ ॥
28290
28291 आस्फालयामास विस्फारयामास ॥ २ ॥
28292
28293 विससर्जोर्जितो राजा प्रलयार्कः करानिव ।
28294 तूणीररजनीबद्धाः शिलीमुखपरम्पराः ॥ ३ ॥
28295
28296 रजनीपदेन तत्स्थानि मुकुलितपद्मानि लक्ष्यन्ते । तेषु बद्धाः शिलीमुखा बाणा
28297 भ्रमराश्च तत्परम्पराः ॥ ३ ॥
28298
28299 एक एव विनिर्याति गुणात्तस्य शिलीमुखः ।
28300 सहस्रं भवति व्योम्नि गच्छन्पतति लक्षशः ॥ ४ ॥
28301
28302 यदा विनिर्याति तदैक एव ॥ ४ ॥
28303
28304 सिन्धोरपि तथैवासीच्छक्तिर्लाघवमेव च ।
28305 वरेण वरदस्यैवं विष्णोर्धानुष्कता तयोः ॥ ५ ॥
28306
28307 कुत ईदृशं युद्धकौशलं तयोरिति तत्राह - वरेणेति । विष्णोस्तपसा
28308 आराधितस्येति गम्यते । धानुष्कता धनुर्युद्धकुशलता ॥ ५ ॥
28309
28310 मुसला नाम ते बाणा मुसलाकृतयोऽम्बरम् ।
28311 छादयामासुरुन्नादाः कल्पान्ताशनयो यथा ॥ ६ ॥
28312
28313 उन्नादा महाध्वनयः ॥ ६ ॥
28314
28315 रेजुः कनकनाराचराजयो व्योम्नि सस्वनाः ।
28316 रसन्त्यः कल्पवातार्ताः पतन्त्य इव तारकाः ॥ ७ ॥
28317
28318 कनकरञ्जिता नाराचा बाणाः । रसन्त्यो ध्वनन्त्यः ॥ ७ ॥
28319
28320 विदूरथाच्छरासारा अजस्रमभिनिर्ययुः ।
28321 अब्धेरिव पयःपूराः सूर्यादिव मरीचयः ॥ ८ ॥
28322
28323 प्रचण्डपवनोद्धूतात्पुष्पाणीव महातरोः ।
28324 अयःपिण्डादिवोत्तप्तात्ताडितात्कणपङ्क्तयः ॥ ९ ॥
28325
28326 धारा वर्षमुच इव सीकरा इव निर्झरात् ।
28327 तत्पुराग्निमहादाहात्स्फुलिङ्गा इव भासुराः ॥ १० ॥
28328
28329 वर्षाणि वृष्टीर्मुञ्चतीति वर्षमुक् तस्माद्वर्षमुचो धारा इव । तत्पुरस्य
28330 विदुरथनगरस्य । प्रागुक्तादग्निमहादाहात् ॥ १० ॥
28331
28332 तयोश्चटचटास्फोटं शृण्वत्कोदण्डयोर्द्वयोः ।
28333 बलद्वयमभूत्प्रेक्षामूकं शान्त इवाम्बुधिः ॥ ११ ॥
28334
28335 बलद्वयं सेनाद्वयम् ॥ ११ ॥
28336
28337 वहन्ति स्म शरापूरा गङ्गापूरा इवाम्बरे ।
28338 सिन्धोरभिमुखं युद्धे घर्घरारावरंहसः ॥ १२ ॥
28339
28340 सिन्धो राज्ञः समुद्रस्य च । घर्घरारावयुक्तानि रंहांसि वेगा येषाम् ॥ १२ ॥

28341
28342 कचत्कनकनाराचशरवर्षा अनारतम् ।
28343 वहच्छवशवाशब्दं निर्ययुर्धनुरम्बुदात् ॥ १३ ॥
28344
28345 बाणमन्दाकिनीपूरं व्रजन्तं सिन्धुपूरणे ।
28346 वातायनात्तमालोक्य लीला तत्पुरवासिनी ॥ १४ ॥
28347
28348 तेन बाणसमूहेन जयमाशङ्क्य भर्तरि ।
28349 उवाच वाक्यमानन्दविकसन्मुखपङ्कजा ॥ १५ ॥
28350
28351 जय देवि जयत्येष नाथोऽस्माकं विलोकय ।
28352 किंचानेन शरौघेण मेरुरप्येति चूर्णताम् ॥ १६ ॥
28353
28354 तस्यामेवं वदन्त्यां तु घनस्नेहरवाकुलम् ।
28355 प्रेक्षणव्यग्रयोर्देव्योर्हसन्त्योर्मानुषीं हृदा ॥ १७ ॥
28356
28357 मानुषीं मनुष्यदेहात्मबुद्धिम् । अप्रबुद्धामिति यावत् ॥ १७ ॥
28358
28359 तच्छरार्णवमामत्तमपिबत्सिन्धुवाडवः ।
28360 शरोष्मणा ह्यगस्त्येन जह्नुर्मन्दाकिनीमिव ॥ १८ ॥
28361
28362 अगस्त्येनागस्त्यीभूतेन शरोष्मणा करणेनापिवत् । उपसंहृतवानिति यावत् ॥ १८
28363 ॥
28364
28365 बाणवर्षेण कणशस्तं सायकमहाघनम् ।
28366 छित्त्वा तनुरजः कृत्वा चिक्षेप गगनार्णवे ॥ १९ ॥
28367
28368 तनुरजः कृत्वा धूलीकृत्येत्यर्थः ॥ १९ ॥
28369
28370 यथा दीपस्य शान्तस्य न परिज्ञायते गतिः ।
28371 तस्य सायकसङ्घस्य न विज्ञाता तथा गतिः ॥ २० ॥
28372
28373 तं छित्त्वा सायकासारं शरीराम्बुधरं घनम् ।
28374 व्योम्नि प्रसारयामास रसाच्छवशतान्वितम् [रसात् युद्धविषये
28375 रागात्] ॥ २१ ॥
28376
28377 शरीरलक्षणानामम्बूनां धरम् । तस्योपपत्तिः शवशतान्वितमिति ॥ २१ ॥
28378
28379 विदूरथस्तमप्याशु व्यधमत्सायकोत्तमैः ।
28380 सामान्यजलदं मत्तं कल्पान्तपवनो यथा ॥ २२ ॥
28381
28382 कृतप्रतिकृतैरेवं बाणवर्षैर्महीपती ।
28383 व्यर्थीकृतैरनयतां प्रहारमविचारणैः ॥ २३ ॥
28384
28385 प्रहारं बाणाभिघातं अविचारणैर्लक्षीकरणैरनयतां अत्यवाहयताम् ।
28386 यद्वा प्रहारं छान्दसो दीर्घः । प्रहरमितं कालं
28387 कृतप्रतिकृतैरनयताम् ॥ २३ ॥
28388
28389 अथादधे मोहनास्त्रं सिन्धुर्गन्धर्वसौहृदात् ।
28390 प्राप्तं तेन ययुर्लोका विना मोहं विदूरथात् ॥ २४ ॥
28391
28392 गन्धर्वस्य सौहृदान्मैत्रीवशात्प्राप्तम् । विदूरथाद्विना विदूरथमेकं

28393 वर्जयित्वा अन्ये परिवारलोका मोहं ययुः।
28394 पृथग्विनानानाभिस्तृतीयान्यतरस्याम् इति सूत्रे अपादाने पञ्चमीत्यतः
28395 पञ्चम्यप्यनुवर्तत इति मतेन पञ्चमी॥ २४॥
28396
28397 व्यस्तशस्त्राम्बरा मूका विषण्णवदनेक्षणाः।
28398 मृता इवाभवन्योधाश्चित्रन्यस्ता इवाथवा॥ २५॥
28399
28400 मोहप्रकारमेव वर्णयति - व्यस्तेति॥ २५॥
28401
28402 यावद्विदूरथादन्यं मोहो नयति मन्दताम्।
28403 तावद्विदूरथो राजा प्रबोधास्त्रमथाददे॥ २६॥
28404
28405 अन्यं जनम्॥ २६॥
28406
28407 प्। २४६) १४८
28408
28409 ततः प्रबोधमापन्नाः प्रजाः प्रातरिवाब्जिनी।
28410 विदूरथे भवत्सिन्धुः क्रुद्धोऽर्क इव राक्षसे॥ २७॥
28411
28412 विदूरथे विषये। राक्षसे मन्देहाख्येऽर्क इव क्रुद्धो लोहितोऽभूदित्यर्थः॥ २७॥
28413
28414 नागास्त्रमाददे भीमं पाशबन्धनखेददम्।
28415 तेनाभवन्नभो व्याप्तं भोगिभिः पर्वतोपमैः॥ २८॥
28416
28417 भोगिभिः सर्पैः॥ २८॥
28418
28419 सर्पैर्विलसिता भूमिर्मृणालैः सरसी यथा।
28420 संपन्ना गिरयः सर्वे कृष्णपन्नगकम्बलाः॥ २९॥
28421
28422 तत्र भूः पाण्डुरैः सर्पैर्व्याप्ता पर्वतास्तु कृष्णैरिति वैचित्र्यमाह -
28423 सर्पैरिति॥ २९॥
28424
28425 पदार्थाः सर्व एवेमे विषोष्मखिन्नतां ययुः।
28426 सपर्वतवनाभोगा ययौ विवशतां मही॥ ३०॥
28427
28428 विषोष्मणा खिन्नतामिव म्लानताम्। विवशतां व्याकुलताम्॥ ३०॥
28429
28430 पूताङ्गारसमाकीर्णं विषवैषम्यशंसिनः।
28431 ववू रूक्षोष्णनीहारवाता ज्वलनरेणवः॥ ३१॥
28432
28433 रुक्षा उष्णाश्च नीहारा हिमाः स्निग्धशीतला अपि पदार्था यैस्तथाविधा ये
28434 वातास्तल्लक्षणा ज्वलनरेणवः पूतैर्भस्मनो विवेचितैरङ्गारैः समाकीर्णं
28435 यथा स्यात्तथा ववुः॥ ३१॥
28436
28437 विदूरथोऽथ सौपर्णमाददेऽस्त्रं महास्त्रवित्।
28438 उदगुर्गरुडास्त्रेण सौपर्णाः पर्वता इव॥ ३२॥
28439
28440 उदगुर्निर्ययुः। सुपर्णा एव सौपर्णाः॥ ३२॥
28441
28442 काञ्चनीकृतसर्वाशाः सर्वाशापरिपूरकाः।
28443 पक्षपर्वतसंरम्भजनितप्रलयानिलाः॥ ३३॥
28444

28445 पक्षैः सपक्षपर्वतसदृशेनोड्डयनसंरम्भेण जनितप्रलयानिलाः ॥ ३३ ॥
28446
28447 घोणानिलजवाकृष्टश्वसद्भुजगमण्डलाः ।
28448 महाघुरघुरारावपूरिताम्भोधिखण्डकाः ॥ ३४ ॥
28449
28450 घोणा नासास्तदनिलजवेन श्वासवेगेन ॥ ३४ ॥
28451
28452 स सुपर्णघनोऽपात्तं सर्पौघं भूप्रपूरकम् ।
28453 कष्टं शलशलायन्तमगस्त्य इव वारिधिम् ॥ ३५ ॥
28454
28455 सः सुपर्णलक्षणो घनो मेघस्तं सर्पलक्षणमोघं प्रवाहं अपात् अपिबत् ।
28456 पिबतेर्लुङि गातिस्था इति सिचो लुक् । विशेषणान्योघवारिध्योः साधारण्येन
28457 योज्यानि ॥ ३५ ॥
28458
28459 सर्पकम्बलनिर्मुक्तं भूमण्डलमराजत ।
28460 चिरात्तमवनीरन्ध्रमिव निर्वारिराशि च ॥ ३६ ॥
28461
28462 चिराद्वराहेण आत्तमुद्धृतमत एव निर्गतं वारिराशेरिति निर्वारिराशि च ।
28463 अवनीरन्ध्रं भूम्यवकाशमिव ॥ ३६ ॥
28464
28465 ततस्तद्गरुडानीकं क्वाप्यगच्छददृश्यताम् ।
28466 दीपौघ इव वातेन शरदेवाब्दमण्डलम् ॥ ३७ ॥
28467
28468 वज्रभीत्येव पक्षौघपर्वतप्रकरः पुरः ।
28469 स्वप्नदृष्टं जगदिव संकल्पपुरपूरवत् ॥ ३८ ॥
28470
28471 पक्षौघयुक्तमैनाकादिपर्वतप्रकर इव । संकल्पकल्पितं पुरं पूरश्च
28472 तद्वत् ॥ ३८ ॥
28473
28474 ततस्तमोऽस्त्रमसृजत्सिन्धुरन्धान्धकारदम् ।
28475 तेनान्धकारो [तेनान्धकारः कृष्णोऽभूद्भुबिले जठरोपमः इति
28476 पाठ तत्र भूबिले पाताले यज्जठरं मध्यं तदुपम इत्यर्थः]
28477 ववृधे कृष्णो भूजठरोपमः ॥ ३९ ॥
28478
28479 जठरं मध्यम् ॥ ३९ ॥
28480
28481 रोदोरन्ध्रे प्रविसृत एकार्णव इवाभवत् ।
28482 मत्स्या इवाभवन्सेनास्ताराश्च मणयोऽभवन् ॥ ४० ॥
28483
28484 रोदस्योर्द्यावाभूम्योः रन्ध्रेऽन्तराले । एकार्णवसाम्योपपादनायाह -
28485 मत्स्या इवेति । मणय इवेत्यत्रापि संबध्यते ॥ ४० ॥
28486
28487 अन्धकारप्रवृत्तेन मषीपङ्कार्णवोपमम् ।
28488 कज्जलाचलसंभारोद्भूतकल्पानिलैरिव ॥ ४१ ॥
28489
28490 अन्धकारस्य प्रवृत्तेन प्रवृत्त्या । भावे क्तः । मषीपङ्कार्णवोपमं
28491 अभूज्जगदिति शेषः । कज्जलाचलस्याञ्जनगिरेः संभारैः उपादानभूतै
28492 रेणुभिः सह उद्भूतैः कल्पानिलैः प्रलयवायुभिरिव व्याप्तमिति शेषः ॥ ४१ ॥
28493
28494 अन्धकूपे निपतिता इवासन्सकलाः प्रजाः ।
28495 कल्पान्त इव संशेमुर्व्यवहारा दिशं प्रति ॥ ४२ ॥
28496

28497 दिशं [दिशः इति पाठः] प्रति प्रतिदिशम् || असमासश्छान्दसः || ४२ ||
28498
28499 विदूरथोऽथ मार्तण्डं दीपं ब्रह्माण्डमण्डपे |
28500 अस्त्रं मन्त्रविदां श्रेष्ठः सृष्ट्वा मन्त्रो व्यचेष्टयत् || ४३ ||
28501
28502 अमन्त्रः मन्त्रणं मन्त्रो गुप्तविचारस्तदनपेक्ष एव व्यचेष्टयज्जगदित्यर्थः
28503 || ४३ ||
28504
28505 अथोदिततमोम्भोधिमर्कागस्त्यो गभस्तिभिः |
28506 अपिबत्कृष्णमम्भोदं शरत्काल इवामलः || ४४ ||
28507
28508 अन्धकाराम्बरोन्मुक्ता विरेजुरमला दिशः |
28509 भूपतेः पुरतः कान्ता इव रम्यपयोधराः || ४५ ||
28510
28511 अन्धकारलक्षणेनाम्बरेण वस्त्रेण | पयोधरा मेघाः स्तनाश्च || ४५ ||
28512
28513 ययुः प्रकटतामन्तरखिला वनराजयः |
28514 लोभकज्जलजालेन मुक्ता इव सतां धियः || ४६ ||
28515
28516 अथ कोपाकुलः सिन्धु राक्षसास्त्रं महाभयम् |
28517 क्षणादुदीरयामास मन्त्रोदीर्णशरात्मकम् || ४७ ||
28518
28519 उदगुर्भीषणा दिग्भ्यः परुषा वनराक्षसाः |
28520 पातालगजफुत्कारक्षुब्धा इव महार्णवाः || ४८ ||
28521
28522 उदगुर्निर्जग्मुः | पातालस्था गजा दिग्गजाः || ४८ ||
28523
28524 कपिलोर्ध्वजटाधूम्राः स्फुटच्चटचटारवाः |
28525 अग्नयो लेलिहानोग्रजिह्वा आर्द्रेन्धना इव || ४९ ||
28526
28527 आर्द्रं इन्धनं येषां तथाविधा अग्नय इव धूम्राः | अग्निपक्षे काली कराली च
28528 मनोजवा च सुलोहिता या च सुधूम्रवर्णा | स्फुलिङ्गिनी विश्वरुची च देवी
28529 लेलायमाना इति सप्त जिह्वाः इति श्रुतिप्रसिद्धा जिह्वाः || ४९ ||
28530
28531 सावर्तवृत्तयो व्योम्नि भीमचीत्कारटांकृताः |
28532 अग्निदाहा महाधूमविलोला इव सोल्मुकाः || ५० ||
28533
28534 आवर्तानां वृत्तिर्भ्रमणं तत्सहिताः || ५० ||
28535
28536 दंष्ट्राबिसाङ्कुराक्रान्तमुखपङ्काक्षदेहकाः |
28537 उदिता लोमजम्बाला दुष्पल्वलतटा इव || ५१ ||
28538
28539 दंष्ट्रालक्षणैर्बिसाङ्कुरैर्मृणालैराक्रान्तैर्मुखैः
28540 पङ्कैर्मलिनैरक्षैश्चक्षुरादिभिः कर्दमैः पद्मबीजैश्चोपलक्षितदेहकाः |
28541 लोमान्येव जम्बालानि शैवला येषाम् || ५१ ||
28542
28543 प्। २४७) १४८
28544
28545 निगिरन्तः प्रधावन्तो गर्जन्तः सर्जिता इव |
28546 जटाजालतडित्पुञ्जा जलदाः सजला इव || ५२ ||
28547
28548 निगिरन्तो जनान् जलदपक्षे ज्योतीषि | जगन्निगरणार्थमेव सर्जिताः सृष्टा इव |

28549 निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिच् ॥ ५२ ॥
28550
28551 एतस्मिन्नन्तरे तस्मिङ्ल्लीलानाथो विदूरथः ।
28552 नारायणास्त्रं प्रददे दुष्टभूतनिवारणम् ॥ ५३ ॥
28553
28554 तस्मिन्युद्धे । प्रददे प्रयोक्तुमाददे ॥ ५३ ॥
28555
28556 उदीर्यमाण एवास्मिन्मन्त्रराजेऽस्त्रराजयः ।
28557 राक्षसानां प्रशेमुस्ता अन्धकार इवोदये ॥ ५४ ॥
28558
28559 प्रमुष्टराक्षसानीकमभवद्भुवनत्रयम् ।
28560 शरदीव गताम्भोदं व्योम निर्मलमाबभौ ॥ ५५ ॥
28561
28562 अथ सिन्धुर्मुमोचास्त्रमाग्नेयं ज्वलिताम्बरम् ।
28563 जज्वलुः ककुभस्तेन कल्पाग्निज्वलिता इव ॥ ५६ ॥
28564
28565 ककुभो दिशः ॥ ५६ ॥
28566
28567 धूमाम्बुदभराच्छन्ना बभूवुः सकला दिशः ।
28568 गगने प्रोतपातालतिमिराकुलिता इव ॥ ५७ ॥
28569
28570 गगने प्रोतेन पातालसंबन्धिना तिमिरेणाकुलिता व्याकुलीकृताः ॥ ५७ ॥
28571
28572 बभूवुर्ज्वलिताकारा गिरयः काञ्चना इव ।
28573 प्रफुल्लवननीरन्ध्रचम्पकौघवना इव ॥ ५८ ॥
28574
28575 ययुर्व्योमाद्रिदिक्कुञ्जा ज्वालाजालजटालताम् ।
28576 कुङ्कुमेनोत्सवे मृत्योः समालब्धा इव स्रजः ॥ ५९ ॥
28577
28578 ज्वालाजालैर्जटालतां जटिलताम् । मृत्योः क्ष्वेलिकासेचनोत्सवे कुङ्कुमेन
28579 समालब्धाः सिक्ताः स्रज इव ॥ ५९ ॥
28580
28581 ज्वलिता जनता चैकशङ्किनी सा नभःस्पृशा ।
28582 सहस्राकृतिनौवेगचलितेनेव सागरात् ॥ ६० ॥
28583
28584 सागरात् सहस्राकृतिभिर्नावां वेगैश्चलितेन आगतेन वडवाग्निनेव जनता
28585 एकशङ्किनी वह्न्यद्वैतमेव जगतः संभावयन्ती सती ज्वलिता ॥ ६० ॥
28586
28587 जित्वा रिपुं पुनरसौ यथा प्रहरते तथा ।
28588 वारुणं विससर्जास्त्रं पूजयित्वा विदूरथः ॥ ६१ ॥
28589
28590 असौ वक्ष्यमाणास्त्रविशेषः । आग्नेयमस्त्रं जित्वा । अप्यर्थे पुनःशब्दः ।
28591 रिपुं सिन्धुमपि यथा प्रहरते तथा वारुणं अस्त्रं पूजयित्वा विससर्ज ॥ ६१ ॥
28592
28593 आययुः सलिलापूरास्तमःपूरा इवाभितः ।
28594 अधस्तादूर्ध्वतो दिग्भ्यो द्रवरूपा इवाद्रयः ॥ ६२ ॥
28595
28596 भागा इव शरव्योम्नि धृतयाना इवाम्बुदाः ।
28597 महार्णवा इवोच्चस्थाः कुलशैलशिला इव ॥ ६३ ॥
28598
28599 शरव्योम्नि शरमार्गावकाशे तदीयभागा अवयवा इव । धृतयाना
28600 निबद्धगतयः । उच्चस्था ऊर्ध्वदेशाद्विलुठिताः कुलशैलानां बृहच्छिला

28601 इव ॥ ६३ ॥
28602
28603 तमालौघा इवोड्डीनाह् संधिता इव रात्रयः।
28604 कज्जलौघा इवोद्भूता लोकालोकतटादिव ॥ ६४ ॥
28605
28606 लोकालोकस्य गिरेस्तटान्धकारकज्जलौघा इव ॥ ६४ ॥
28607
28608 रसतलगुहाभोगा इव व्योमदिद्दक्षवः।
28609 महाघुरघुरारावरंहोबृंहितमूर्तयः ॥ ६५ ॥
28610
28611 व्योम ऊर्ध्वाकाशं दिद्दक्षव इवेत्युत्प्रेक्षा। सूर्मयः इति पाठे सूर्मिः
28612 प्रतिमा मूर्तिरिवेत्येवार्थः ॥ ६५ ॥
28613
28614 तामग्निसंततिं मत्तामाचचामाम्बुसंततिः।
28615 भुवनव्यापिनी संध्यामाशु कृष्णेव यामिनी ॥ ६६ ॥
28616
28617 तामग्निसंततिं पीत्वा पूरयामास भूतलम्।
28618 जलश्रीर्जटितं देहं निद्रेव व्यक्तिमेयुषी ॥ ६७ ॥
28619
28620 एवंविधानस्त्रमोहान्विदधुर्धावनेतरे।
28621 मिथोमायामयानग्रे पश्यन्त्यनुभवन्ति च ॥ ६८ ॥
28622
28623 धावनाह् पूर्वास्त्रकृतमालिन्यविशोधकास्तदितरे
28624 तद्विरुद्धाश्चान्येऽयस्त्रविदः। विभाषा जसि इति वैकल्पिकी सर्वनामता।
28625 मिथ्याभूतानामप्यस्त्रमोहानामर्थक्रियासामर्थ्यं दर्शयति - मिथ इति
28626 । अनुभवन्ति शत्रुविध्वंसादिफलमुखेनापि जना इति शेषः ॥ ६८ ॥
28627
28628 हेतिभारवराः सिन्धोश्चक्ररक्षास्ततोऽम्भसा।
28629 तृणानीव गताः प्रोह्य रथश्चास्याभवत्प्लुतः ॥ ६९ ॥
28630
28631 चक्रं स्वबलं रक्षन्तीति चक्ररक्षाः हेतीनामायुधानां भारावराः
28632 श्रेष्ठा योधाश्च ॥ ६९ ॥
28633
28634 एतस्मिन्नन्तरे सिन्धुरस्त्रं सस्मार शोषणम्।
28635 आपल्लाणकरं दैवं ददौ च शररूपिणम् ॥ ७० ॥
28636
28637 शररूपिणं शोषणास्त्रं ददौ। धनुषि संदधे इत्यर्थः ॥ ७० ॥
28638
28639 शशामाम्बुमयी माया तेन यामेव भास्वता।
28640 ये मृतास्ते मृता एव बभूवुः शोषिता भुवः ॥ ७१ ॥
28641
28642 नामैकदेशे नामग्रहणाद्यामा त्रियामा रात्रिरिव। भास्वता सूर्येण। भुवो
28643 भूप्रदेशाः शोषिता बभूवुः ॥ ७१ ॥
28644
28645 अथ मूर्खरुषा तुल्यस्तापः संतापयन्प्रजाः।
28646 जजृम्भे झर्झराकीर्णवनविस्तारकर्कशः ॥ ७२ ॥
28647
28648 तापस्तीव्रातपः। झर्झरैः शुष्कपर्णैराकीर्णैर्वनविस्तारैः कर्कशः ॥ ७२ ॥
28649
28650 कचत्कनकनिःस्यन्दसुन्दराङ्गच्छविर्दिशाम्।
28651 आसीद्राजवरस्त्रीणामिवालेपोऽङ्गसंगतः ॥ ७३ ॥
28652

28653 दिशामालेपोऽङ्गराग इव आसीत् ‖ ७३ ‖
28654
28655 तेन घर्ममयीं मूर्च्छामाजग्मुस्तद्विरोधिनः ।
28656 ग्रीष्मदावानलोत्तप्ता मृदवः पल्लवा इव ‖ ७४ ‖
28657
28658 विदूरथो रणोद्रेके तावत्क्रेंकारमाततम् ।
28659 कोदण्डं कुण्डलीकृत्य पर्जन्यास्त्रमथाददे ‖ ७५ ‖
28660
28661 क्रेंकारो ज्यास्वनस्तस्य मा श्रीस्तया ततम् ‖ ७५ ‖
28662
28663 उदगुः पङ्क्तयोऽब्दानां यामिन्य इव संचिताः ।
28664 तमालविपिनोड्डीनसंरम्भादम्बुमन्थराः ‖ ७६ ‖
28665
28666 तमालविपिनस्य यदुड्डीनमाकाशे गमनं तदिव संरम्भाद्विभ्रमात् ।
28667 उदगुः उद्ययुः ‖ ७६ ‖
28668
28669 वामना वारिपूरेण गर्जनोद्दामसंचराः ।
28670 महिम्नामन्थराशेषककुम्मण्डलकुण्डलाः ‖ ७७ ‖
28671
28672 वारिपूरेण नम्रत्वाद्वामना अप्रांशवः । महिम्ना तिर्यग्विस्तारेण
28673 अमन्थराणि स्वाभाविकविस्तारे कुण्ठितगतीनीव संकुचितानि
28674 अशेषदिङ्गण्डलानि कुण्डलानीव संपन्नानि येषाम् ‖ ७७ ‖
28675
28676 प्। २४८) १४९
28677
28678 ववुरावलितासारा मेघडम्बरभेदिनः ।
28679 कीर्णसीकरनीहारभारोदाराः समीरणाः ‖ ७८ ‖
28680
28681 कीर्णैः शीकरैरम्बुकणैर्नीहारभारेण शैत्योत्कर्षेण उदाराः सुखदाः
28682 समीरणा वायवो ववुः ‖ ७८ ‖
28683
28684 प्रपुस्फुरुः सुसौवर्णसर्पापत्सरणोपमाः ।
28685 विद्युतो दिवि दैव्यस्त्रीकटाक्षवलना इव ‖ ७९ ‖
28686
28687 सौवर्णानां सर्पाणां प्रागुक्तसंतापलक्षणाया आपदः सकाशात्सरणं
28688 बहिर्निःसरणं यत्पर्वतादौ प्रसिद्धं तदेव उपमा यासाम् । दैव्यो
28689 देवविषयिण्यः । अर्थाद्दिव्यस्त्रीकटाक्षा इति गम्यते ‖ ७९ ‖
28690
28691 जुघूर्णुर्गर्जनोच्छूनप्रतिशुद्धनकन्दराः ।
28692 दिशश्चलितमातङ्गसिंहर्क्षरवघर्घराः ‖ ८० ‖
28693
28694 उच्छूनैः प्रबृद्धैः प्रतिश्रुद्भिः प्रतिध्वनिभिर्घना निबिडिता गिरिकन्दरा
28695 यासु । रोषाच्चलितानामभिमुखप्रस्थितानां मातङ्गादीनां
28696 प्रतिगर्जितरवैर्घर्घरा मुखराः ‖ ८० ‖
28697
28698 महामुसलधाराभिः पेतुरासारवृष्टयः ।
28699 कष्टटंकारकठिनाः कृतान्तस्येव दृष्टयः ‖ ८१ ‖
28700
28701 कष्टैष्टंकारैः करकनिपातध्वनिभिर्मर्मशिराभेदनध्वनिभिश्च
28702 कठिनाः ‖ ८१ ‖
28703
28704 उदभूत्प्रथमं वाष्प उष्णोऽनलनिभो भुवः ।

पातालादभ्रवृन्दानां युद्धायेवात्तविभ्रमः ॥ ८२ ॥

अभ्रवृन्दानां संबन्धिने युद्धाय आत्तः स्वीकृतो विभ्रमः शौर्यविलासो
येन तथाविध इवेत्युत्प्रेक्षा ॥ ८२ ॥

ततो निमेषमात्रेण प्रशेमुर्मृगतृष्णिकाः ।
परबोधरसापूरैर्यथा संसारवासनाः ॥ ८३ ॥

मृगतृष्णिकाशब्देन तद्वेतव आतपा लक्ष्यन्ते । परस्यात्मनो बोधः
साक्षात्कारस्तल्लक्षणैर्निरतिशयानन्दरसापूरैः ॥ ८३ ॥

आसीत्पङ्काङ्कमखिलं भूमण्डलमसंचरम् ।
पूरितः पूर्णधाराभिः सिन्धुः सिन्धुरिवाम्बुना ॥ ८४ ॥

असंचरं संचाराक्षमम् । सिन्धुः राजा सिन्धुः समुद्र इव पूरितः ॥ ८४ ॥

वायव्यमस्त्रमसृजत्पूरिताकाशकोटरम् ।
कल्पान्तनृत्तसंमत्तरटद्भैरवभीषणम् ॥ ८५ ॥

ववुरशनिनिपातपीडिताङ्गा
दलितशिलाशकलाः ककुम्मुखेषु ।
प्रलयसमयसूचका भटानां
कृतपटुतांकृतटङ्किनः समीराः ॥ ८६ ॥

अशनिनिपातेनेव पीडितानि प्राणिनामङ्गानि यैः भटानां प्रतियोद्धृभिरिव
कृतैः पटुभिष्टांकृतैः शिलाद्यभिघातध्वनिभिष्टङ्कैः
पाषाणदारणायुधविशेषस्तद्वन्त इव समीरा वायवः ककुभां दिशां
मुखेषु ववुः ॥ ८६ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे मोक्षोपाये उत्पत्तिप्रकरणे लीलो०
आयुधवर्णनं नामाष्टचत्वारिंशः सर्गः ॥ ४८ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे आयुधवर्णनं
नामाष्टचत्वारिंशः सर्गः ॥ ४८ ॥

## एकोनपञ्चाशः सर्गः ४९

श्रीवसिष्ठ उवाच ।

ववुर्वलितनीहारा विकीर्णवनपल्लवाः ।
वायवो धूतवृक्षौघाः सल्लीलापीडपांसवः ॥ १ ॥

पर्वतास्त्रं च वज्रास्त्रं ब्रह्मास्त्रं चात्र वर्ण्यते ।
विस्तरेण पिशाचास्त्रं पिशाचचरितान्वितम् ॥ १ ॥

सतां मूर्तिमतां लीलया आपीडाः शिरोभूषणीकृताः पांसवो यैः ॥ १ ॥

पक्षिवद्भ्रान्तवृक्षौघाः पतनोत्पातनोद्भटाः ।
विकुट्टिताट्टालखण्डाश्चाभ्रभित्तिविभेदिनः ॥ २ ॥

पक्षिवद्भ्रान्ता भ्रमिता वृक्षौघा यैः । विकुट्टिताश्चूर्णिताः ॥ २ ॥

तेनातिभीमवातेन विदूरथरथोऽप्यथ |
उह्यमानोऽभवन्नद्या यथा जर्जरपल्लवः || ३ ||

उह्यमानः प्रवाह्यमाणः || ३ ||

विदूरथोऽथ तत्याज पार्वतास्त्रं महास्त्रवित् |
व्योमापि घनतोयेन समादातुम्वोद्यतम् || ४ ||

घनतोयेन मेघोदकेन समं व्योमापि समादातुं ग्रसितुमिवोद्यतमुद्युक्तम्
|| ४ ||

तेन शैलास्त्रघातेन विराट् प्राणसमीरणः |
शमं चैतन्यशान्त्येव प्रययौ वायुराततः || ५ ||

तत्त्वावबोधाच्चैतन्यस्य मायालक्षणकारणशान्त्या तत्कार्यभूतो विराट्
प्राणसमीरणः सूत्रात्मेव वायुः शमं ययौ || ५ ||

अन्तरिक्षगता वृक्षपङ्क्तयः पतिता भुवि |
नानाजनशवव्यूहे काकानामिव कोटयः || ६ ||

शेमुः सूत्कारडात्कारभांकारोत्कारका दिशाम् |
प्रलापा इव विध्वस्ताः पूर्ग्रामवनवीरुधाम् || ७ ||

निःश्वासशब्दाः सूत्कारा डात्कारा लुण्ठनारवाः | भांकारा भीषणाः
शब्दा उत्कारा उद्भटारवाः || पुरां ग्रामाणां वनानां वीरुधां वल्लीनां
च प्रलापा निरर्थकवर्णनवाक्यानीव || ७ ||

गिरीनपश्यन्नभसः पततः पत्त्रवर्णवत् |
सिन्धुः सिन्धुरिवोत्पक्षान्मैनाकादीनितस्ततः || ८ ||

सिन्धुः राजा | सिन्धुः समुद्रः स्वस्मिन्नुत्पततो मैनाकादीनिव || ८ ||

वज्रास्त्रमसृजद्दीप्तं चेरुर्वज्रगणास्ततः |
पिबन्तोऽद्रीन्द्रतिमिरमग्निदाहमिवाग्नयः || ९ ||

अग्निभिर्दह्यत इत्यग्निदाहं इन्धनम् || ९ ||

ते गिरीणां तथा क्षिप्ताः कोटितुण्डावखण्डनैः |
शिरांसि पातयामासुः फलानीवोल्बणानिलाह् || १० ||

कोटयः अग्रभागास्तल्लक्षणैस्तुण्डैश्चञ्चुभिरवखण्डनैश्छेदनैः |
गिरीणां शिरांसि शिखराणि || १० ||

विदूरथोऽथ वज्रास्त्रशन्त्यै ब्रह्मास्त्रमत्यगात् |
ततो ब्रह्मास्त्रवज्रास्त्रे समं प्रशममागते || ११ ||

अत्यगात् इतरास्त्राण्यतिक्रम्य प्रयोक्तुं अगात्प्रापत् | समं एककालम् || ११ ||

प्। २४९)

श्यामाश्यामं पिशाचास्त्रमथ सिन्धुरचोदयत् |

28809 तेनोदगुः पिशाचानां पङ्क्तयोऽत्यन्तभीतिदाः ॥ १२ ॥
28810
28811 श्यामा तमिस्रेव श्यामम् ॥ १२ ॥
28812
28813 संध्यायामथ भीत्येव दिवसः श्यामतां ययौ।
28814 पिशाचा भुवनं जग्मुरन्धकारभरा इव ॥ १३ ॥
28815
28816 इवकार आवृत्त्योभयत्र संबध्यते। तेन संध्यायामिवेत्युपमा। भीत्येवेति
28817 हेतूत्प्रेक्षा। जग्मुः आजग्मुः ॥ १३ ॥
28818
28819 भस्मनःस्तम्भसदृशास्तालोत्तालविलासिनः।
28820 दृश्यमानमहाकारा मुष्टिग्राह्या न किंचन ॥ १४ ॥
28821
28822 भस्मनः संबन्धी स्तम्भो दग्धस्तम्भ इति यावत्।
28823 असमर्थसमासश्छान्दसः। मुष्टिग्राह्या हस्तप्राप्याः ॥ १४ ॥
28824
28825 ऊर्ध्वकेशाः कृशाङ्गाश्चकेचिच्च श्मश्रुला अपि।
28826 कृष्णाङ्गा मलिनाङ्गाश्च ग्राम्या इव नभश्चराः ॥ १५ ॥
28827
28828 ग्राम्याः ग्रामीणा दरिद्रजना इव। नभश्चरा आकाशसंचारिणः ॥ १५ ॥
28829
28830 सभया मूढदृष्टाश्च यत्किंचनकराश्चलाः।
28831 दीना वज्रासिनः क्रूरा दीना ग्राम्यजना इव ॥ १६ ॥
28832
28833 मूढैर्मुर्खैरशुच्यनाचारैर्दृष्टाः। यत्किंचनास्थिकपालादि करे येषाम्।
28834 वज्रं चासिश्चोभयोः समाहारो वज्रासि तस्मादपि क्रूरा निष्ठुराः।
28835 समाहारनपुंसकत्वे इकोऽचि विभक्तौ इति नुम् ॥ १६ ॥
28836
28837 तरुकर्दमरथ्यान्तःशून्यगेहगृहाश्चलाः।
28838 लेलिहानाः प्रेतरूपाः कृष्णाङ्गाश्चपला इव ॥ १७ ॥
28839
28840 लेलिहानाः सृक्किणी। चपला विद्युत इव दृश्यादृश्यस्वभावाः ॥ १७ ॥
28841
28842 जगृहुस्ते तदा मत्ता हतशिष्टमरेर्बलम्।
28843 आसंस्तत्सैनिकास्तत्र भिन्नास्त्रक्षुब्धचेतनाः ॥ १८ ॥
28844
28845 तत्सैनिका विदूरथसैनिकाः ॥ १८ ॥
28846
28847 त्यक्तायुधतनुत्राणास्त्रस्तप्राणाः स्खलद्भ्रमाः।
28848 नेत्रैरङ्गैर्मुखैः पादैर्विकारभरकारिणः ॥ १९ ॥
28849
28850 विकारभरा भूताविष्टचेष्टाः ॥ १९ ॥
28851
28852 त्यक्तकौपीनवसना निमग्नावसनोत्तराः।
28853 विष्ठां मूत्रं च कुर्वन्तः स्थिरमारब्धनर्तनाः ॥ २० ॥
28854
28855 ता एव दर्शयति - त्यक्तेति। निमग्नानि
28856 संकुचितान्यवसनान्युत्तराण्यधराङ्गानि येषाम् ॥ २० ॥
28857
28858 पिशाचराजी राजानं तस्य यावद्विदूरथम्।
28859 समाक्रामति तावत्तां मायां स बुबुधे बुधः ॥ २१ ॥
28860

28861 पिशाचानां राजिः पङ्क्तिः ‖ २१ ‖
28862
28863 पिशाचसंग्रामकरीं मायां वेत्ति स भूमिपः ।
28864 तया पिशाचसैन्यं तत्परसैन्ये न्ययोजयत् ‖ २२ ‖
28865
28866 परप्रयुक्तानां पिशाचानां स्ववशीकारेण परसैन्यसंग्रामकरीम् ‖ २२ ‖
28867
28868 ततः स्वसैनिकाः स्वस्थाः परयोधाः पिशाचिनः ।
28869 तस्याशु रूपिकास्त्वं च ददावन्यदसौ रुषा ‖ २३ ‖
28870
28871 तस्य पिशाचसैन्यस्य सहायभूतम् । रूपिकाः पूतनाभेदाः । असौ विदूरथः ‖
28872 २३ ‖
28873
28874 उदगुर्भूतलाद्व्योम्नो रूपिका ऊर्ध्वमूर्धजाः ।
28875 निर्मग्नविकरालाक्ष्यश्चलच्छ्रोणिपयोधराः ‖ २४ ‖
28876
28877 उद्भिन्नयौवना वृद्धाः पीवराङ्ग्योऽथ जर्जराः ।
28878 स्वरूपारूपजघना [स्वरूपेण स्वरूपतः अरूपाणि निराकाराणि
28879 जघनानि यासां तथाविधाः दुर्लक्ष्यजघना इत्यर्थः] दुर्नाभ्यो
28880 विकसद्भगाः ‖ २५ ‖
28881
28882 नररक्तशिरोहस्ताः संध्याभ्रारुणगात्रिकाः ।
28883 अर्धचर्वितमांसासृक्स्रवत्सृक्क्याकुलाननाः ‖ २६ ‖
28884
28885 रक्तपदेन तत्पूर्णकपालानि लक्ष्यन्ते । स्रवद्भ्यां
28886 सृक्किभ्यामोष्ठप्रान्ताभ्यामाकुलाननाः ‖ २६ ‖
28887
28888 नानाङ्गवलना नानानमन्नमनसत्तमाः ।
28889 शिलाभुजगवक्रोरुकटिपार्श्वकराङ्गिकाः ‖ २७ ‖
28890
28891 नानाविधान्यङ्गवलनान्यवयवचेष्टा यासाम् ।
28892 नानाविधानामनमतामुत्तब्धानामपि नमने प्रह्वीकरणे सत्तमाः
28893 समर्थाः । शिला इव कठिना भुजगा इव वक्राश्च वक्रादयो यासाम् ‖ २७ ‖
28894
28895 नारीकृतार्भकशवा हस्ताकृष्टान्त्ररज्जवः ।
28896 श्वकाकोलूकवदना निम्नवक्रहनूदराः ‖ २८ ‖
28897
28898 नराणामियं नारी नरमाला तथाकृताः अर्भकशवा याभिः ‖ २८ ‖
28899
28900 जगृहुस्तान्पिशाचांस्ता दुर्बलान्दुःशिशूनिव ।
28901 पिशाचरूपिकासैन्यं तदासीदेकतां गतम् ‖ २९ ‖
28902
28903 जगृहुः पतित्वेन स्वीचक्रुः । दुष्कृतकारिशिशूनिव । उपभोग्यतांशे
28904 साम्याद्दृष्टान्तः ‖ २९ ‖
28905
28906 निर्मग्ननर्तनोत्तानवदनाङ्गविलोचनम् ।
28907 परस्पराक्रान्तिकरं प्रधावच्च परस्परम् ‖ ३० ‖
28908
28909 एकतां गतं तद्वर्णयति - निर्मग्नेत्यादिना । क्रीडारसावेशे नितरां
28910 मग्नम् ‖ ३० ‖
28911
28912 निस्कासितमहाजिह्वं नानामुखविकारदम् ।

28913 शरभाराढ्यमन्योन्यं [न्योन्यह्रियमाण इति पाठः]
28914 ह्रियमाणशवाङ्गकम् ॥ ३१ ॥
28915
28916 शरो रुधिरमण्डस्तद्धाराढ्यम् । अन्योन्यप्रीतये ह्रियमाणानि शवाङ्गानि
28917 येन ॥ ३१ ॥
28918
28919 रुधिराम्भसि मज्जं तदुन्मज्जद्धृल्लसत्तनु ।
28920 लम्बोदरं लम्बभुजं लम्बकर्णोष्ठनासिकम् ॥ ३२ ॥
28921
28922 मज्जं उन्मज्जत् । पुनःपुनर्निमज्ज्योन्मज्जत् । आभीक्ष्ण्ये णमुलि
28923 द्विर्वचनाभावश्चान्दसः । घृत् क्षरद्रक्तं तेन लसत्तनु ॥ ३२ ॥
28924
28925 रक्तमांसमहापङ्केष्वन्योन्यं वेल्लनाभ्यसत् ।
28926 मन्दरोद्धूतदुग्धाब्धिलसत्कलकलाकुलम् ॥ ३३ ॥
28927
28928 वेल्लनान्यालिङ्गनान्यभ्यसत् आवर्तयत् । मन्दरेणोद्भूतस्य मथ्यमानस्य
28929 दुग्धाब्धेरिव लसता कलकलेन कोलाहलेन आकुलम् ॥ ३३ ॥
28930
28931 यथैव मायासंचारस्तेन तस्य कृतः पुरा ।
28932 तेनापि तस्याशु तथा कृतो बुद्ध्वा स लाघवात् ॥ ३४ ॥
28933
28934 मायायाः संचारः परावृत्य प्रेषणम् । तेन विदूरथेन । तस्य सिन्धोः । सः
28935 मायासंचारः कृतः ॥ ३४ ॥
28936
28937 वेतालास्त्रं ततो दत्ते तेनोत्तस्थुः शवव्रजाः ।
28938 अमूर्धनः समूर्धानो वेताला वेशवल्लिताः ॥ ३५ ॥
28939
28940 ततस्तत्सहायार्थं दत्ते ददाविति यावत् । वेशेन परमर्दनावेशेन वल्लिताः
28941 संचलिताः । वल वल्ल संवरणे संचलने च ॥ ३५ ॥
28942
28943 प्। २५०) १५०
28944
28945 ततः पिशाचवेतालरूपिकोग्रकबन्धवत् ।
28946 तद्बभूव बलं भीममुर्वीनिगरणक्षमम् ॥ ३६ ॥
28947
28948 अथेतरोऽपि भूपालो मायां संचार्य तां गुरौ ।
28949 राक्षसास्त्रं ससर्जाथ त्रैलोक्यग्रहणोन्मुखम् ॥ ३७ ॥
28950
28951 इतरो विदूरथः । गुरौ पूर्वप्रयोगेणोपदेष्टरीव सिन्धौ ॥ ३७ ॥
28952
28953 उदगुः पर्वताकाराः सर्वतः स्थूलराक्षसाः ।
28954 देहमाश्रित्य निष्क्रान्ताः पातालान्नरका इव ॥ ३८ ॥
28955
28956 अथोदभूद्बलं भीमं ससुरासुरभीतिदम् ।
28957 गर्जद्रक्षोमहानादवाद्यनृत्यत्कबन्धकम् ॥ ३९ ॥
28958
28959 मेदोमांसोपदंशाढ्यं रुधिरासवसुन्दरम् ।
28960 क्षीबकूश्माण्डवेतालयक्षताण्डवसुन्दरम् ॥ ४० ॥
28961
28962 क्षीबाणां मत्तानाम् ॥ ४० ॥
28963
28964 कूश्माण्डकोत्ताण्डवदण्डपाद-

28965 क्षुब्धासृगुत्क्षिप्ततरङ्गसिक्तैः |
28966 संध्याभ्ररागोत्करकोटिकान्ति
28967 भूतैरसृक्स्रोतसि दत्तसेतु || ४१ ||
28968
28969 दण्डपादो नाट्यशास्त्रप्रसिद्धः पादाघातविशेषः | सिक्तैर्भूतैः | दत्तसेतु
28970 निबद्धसेतु | बलं उदभूदिति पूर्वेणान्वयः || ४१ ||
28971
28972 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलो०
28973 तृतीयास्त्रयुद्धं नामैकोनपञ्चाशः सर्गः || ४९ ||
28974
28975 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
28976 तृतीयास्त्रयुद्धं नामैकोनपञ्चाशः सर्गः || ४९ ||
28977
28978
28979 पञ्चाशः सर्गः ५०
28980
28981 श्रीवसिष्ठ उवाच |
28982
28983 तस्मिंस्तदा वर्तमाने घोरे समरविभ्रमे |
28984 सर्वारिसैन्यनाशार्थमेकं स्वबलशान्तये || १ ||
28985
28986 अत्रास्त्रयोर्वैष्णवयोर्युद्धं विरथता द्वयोः |
28987 मृतिर्विदूरथस्यापि गृहानीतस्य वर्ण्यते || १ ||
28988
28989 एकमसाधारणम् | स्वबलस्य स्वसैन्यस्य शान्तये रक्षःपिशाचपीडाशान्तये ||
28990 १ ||
28991
28992 सस्मार स्मृतिमानन्तो महोदाराधिधैर्यभृत् |
28993 अस्त्रमस्त्रेश्वरं श्रीमद्वैष्णवं शंकरोपमम् || २ ||
28994
28995 अन्तः कालोचितप्रतिभावतामवधिभूतः सिन्धुः महोदारः
28996 सन्नधिकधैर्यमृदधिकधैर्यवान् | शंकरोपमं
28997 कालरुद्रवत्संहारकम् || २ ||
28998
28999 अथ योऽसौ शरस्तेन वैष्णवास्त्राभिमन्त्रितः |
29000 मुक्तस्तस्य फलप्रान्तादुल्मुका दिवि निर्ययौ || ३ ||
29001
29002 फलप्रान्तात् शल्यप्रदेशात् || ३ ||
29003
29004 पङ्क्तयः स्फारचक्राणां शतार्कीकृतदिक्तटाः |
29005 गदानामभियान्तीनां शतवंशीकृताम्बराः || ४ ||
29006
29007 उल्मुकादीत्युक्तमादिशब्दार्थं प्रपञ्चयति - पङ्क्तय इत्यादिना | त्रिषु
29008 श्लोकेषु पङ्क्तय एव विशेष्याः | वंशपदेन गदाकाराणि वंशकरीराणि
29009 गृह्यन्ते || ४ ||
29010
29011 वज्राणां शतधाराणां तृणराजीकृताम्बराः
29012 [तरच्छृङ्गीकृताम्बरा इति पाठः] |
29013 पट्टिशानां सपद्मानां दीनवृक्षीकृताम्बराः || ५ ||
29014
29015 सपद्मानां पद्मदलमुकुलाकारानेकशाखाशालिनां पट्टिशानां
29016 पङ्क्तयः | दीना लूना ये वृक्षास्तद्व्याप्तप्रायं कृतमम्बरं

29017 याभिरित्यर्थः। ल्वादिभ्यः इति निष्ठानत्वम्॥ ५॥
29018

29019 शराणां शितधाराणां पुष्पजालीकृताम्बराः
29020 [तृणजालीकृताम्बरा इति पाठः]।
29021 खड्गानां श्यामलाङ्गानां पत्रराशीकृताम्बराः॥ ६॥
29022

29023 अथ राजा द्वितीयोऽपि वैष्णवास्त्रस्य शान्तये।
29024 ददौ वैष्णवमेवास्त्रं शत्रुनिष्ठावपूरकम्॥ ७॥
29025

29026 द्वितीयो राजा विदूरथः शत्रोर्निष्ठा पराक्रमस्थितिस्तस्या अवपूरकं
29027 पूर्तिकरम्। तदनुरूपमिति यावत्॥ ७॥
29028

29029 ततोऽपि निर्ययुर्नद्यो हेतीनां हतहेतयः।
29030 शरशक्तिगदाप्रासपट्टिशादिपयोमयाः॥ ८॥
29031

29032 हताश्छिन्नाः पूर्वास्त्रप्रयुक्तहेतयो याभिस्ताः॥ ८॥
29033

29034 शस्त्रास्त्रसरितां तासां व्योम्नि युद्धमवर्तत।
29035 रोदोरन्ध्रक्षयकरं कुलशैलेन्द्रदारणम्॥ ९॥
29036

29037 शरपातितशूलासिखड्गकुट्टितपट्टिशम् [शरापतित इति
29038 टीकाकारसम्मतः पाठः]।
29039 मुसलप्रतनाप्रासशूलशातितशक्तिकम्॥ १०॥
29040

29041 शस्त्रास्त्रसरितां युद्धमेव विस्तराद्वर्णयति - शरेत्यादिना। शरेभ्य
29042 आपतितैर्निर्गतैः शूलादिभिः कुट्टितानि चूर्णितानि पट्टिशानि यत्र।
29043 असिखड्गयोरवान्तरजातिभेदविवक्षया पृथग्ग्रहणम्। मुसलानां
29044 प्रतननं प्रतना विस्तारः। भिदादित्वादङ्। तया प्रासादिभिश्च शातिताः
29045 खण्डिताः शक्तयो यत्र॥ १०॥
29046

29047 शराम्बुराशिमथनमत्तमुद्गरमन्दरम्।
29048 गदावदनतो युक्तं दुर्वारास्त्रिनिभासिनि॥ ११॥
29049

29050 शरलक्षणस्याम्बुराशेर्मथने मत्तः प्रहृष्टाः। समर्था इति यावत्।
29051 मुद्गरा एव मन्दरपर्वता यत्र। गदानां वदनतः। सार्वविभक्तिकस्तसिः।
29052 मुखसदृशैरग्रभागैर्युक्तं संघट्टितम्। दुर्वाराः अस्त्रं येषामस्ति
29053 तेऽस्त्रिणः प्रतियोद्धारस्तन्निभास्तत्समानप्रमाणप्रभावा असिन्यः
29054 खड्गजातिभेदा यत्र। गोस्त्रियोरुपसर्जनस्य इति ङीपो ह्रस्वः॥ ११॥
29055

29056 रिष्टारिष्टप्रशमनभ्रमत्कुन्तेन्दुमण्डलम्।
29057 प्रासप्रसरसंरब्धप्रोद्यतान्तकृतान्तकम्॥ १२॥
29058

29059 रिष्टम्। रिष हिंसायां भावे क्तः। स्वस्वसैन्यहिंसनं
29060 तल्लक्षणस्यारिष्टस्याशुभतमसः प्रशमनाय भ्रमन्ति
29061 कुन्तलक्षणानिन्दुमण्डलानि यत्र। प्रासानां प्रसरैः संरब्धः कुपितः अत
29062 एव प्रोद्यतान्तह् प्रारब्धजनविनाश एव कृतान्तो यमो यत्र॥ १२॥
29063

29064 प्। २५१) १५०
29065

29066 चक्रावकुण्ठितोर्ध्वास्त्रं सर्वायुधक्षयंकरम्।
29067 शब्दस्फुटद्गिरिब्राण्डं घातभग्नकुलाचलम्॥ १३॥
29068

धारानिकृत्तशस्त्रौघमस्त्रयोर्युध्यमानयोः |
मदस्त्रवारणेनेव वज्राविजरपर्वतम् || १४ ||

मत्कृतेन विश्वामित्रास्त्रनिवारणेनेव
परस्परप्रतिबद्धकार्ययोर्युध्यमानयोर्नारायणास्त्रयोः
संबन्धिभिर्वज्रैः अविजरा जरयितुमशक्याः पर्वता यत्र |
असमर्थसमासश्छान्दसः || १४ ||

शङ्कुशङ्कितसूत्कारकाशिशूलशिलाशतम् |
भुशुण्डीनिर्जितोद्दण्डभिन्दिपालोग्रमण्डलम् || १५ ||

शङ्कवः कीलानीव कार्याच्छङ्कितानि संभावितानि
सूत्कारशब्दमात्रकाशीनि शूलानि शिलाशतानि च यत्र || १५ ||

परशूलकराभैकपरशूलैकलम्पितम् |
वहदुच्छिन्नचञ्चूरचारणं शत्रुवारणम् || १६ ||

पर उत्कृष्टः सर्वसंहारसमर्थः शूलकरो रुद्रस्तदाभं
एकैकमायुधं परं श्रेष्ठं यद्रुद्रशूलं तत्सदृशेनैकैकेन
लम्पितं कुण्ठितं यत्र | वहतां निःसरतामेवोच्छिन्नानां
खण्डितानामायुधानां चञ्चूराणि कुटिलविषमगतिफलानि च चारणानि
प्रवर्तनानि यत्र | चरतेः नित्यं कौटिल्ये गतौ इति यङि पचाद्यचि यङोऽचि च इति
लुकि उत्परस्यातः इत्युत्वे छान्दसो दीर्घः || १६ ||

स्फुटच्चटचटास्फोटरुद्धत्त्रिपथगारयम् [रुद्धत्रिपथगा इति
पाठः] |
हेत्यस्त्रीचूर्णसंभारमहाधूमवितानकम् || १७ ||

हेतीनामस्त्राणां च समाहारो हेत्यस्त्री | स्त्रीत्वं छान्दसम् || १७ ||

अन्योन्यशस्त्रसंघट्टाद्भ्रमज्ज्वालोल्लसत्तडित् |
शब्दस्फुटद्विरिञ्चाण्डं धातमग्नकुलाचलम् || १८ ||

भ्रमत् जालमानाय इवोल्लसन्त्यस्तडितो यत्र || १८ ||

धारानिकृत्तशस्त्रौघमस्त्रयोर्युध्यमानयोः |
मदस्त्रवारणेनैव कालोपायोऽचलात्मनः || १९ ||

पुनरुक्तं श्लोकार्धद्वयं व्याख्यातम् | अचलात्मनः युद्धे
अचलवज्जडीभूतस्य विदूरथस्य मदीयास्त्रनिवारणमात्रेणावस्थितिरियं
कालस्य कालक्षेपमात्रस्य उपायः || १९ ||

अयं कियद्बल इति सिन्धौ तिष्ठति हेलया |
विदूरथोऽस्त्रमाग्नेयं तत्याजाशनिशब्दवत् || २० ||

अयं तु मदग्रे कियद्बल इति हेलया अवज्ञाबुद्ध्या सिन्धौ तिष्ठति सति || २० ||

ज्वालयामास स रथं सिन्धोः कक्षमिवारसम् |
एतस्मिन्नन्तरे व्योम्नि हेतिनिर्विवरोदरे || २१ ||

कक्षं तृणगुच्छम् | अरसं शुष्कम् || २१ ||

29121 ससन्नाह इव प्रावृट्पयोदतटिनीव यः।
29122 अस्त्रे राज्ञोः क्षणं कृत्वा युद्धं परमदारुणम् ॥ २२ ॥
29123
29124 यो राजा स सन्नाहः प्रावृडिव यश्चान्यो राजा पयोदवर्धिता तटिनी नदीव
29125 शरान्वर्षति वहति च। तयो राज्ञोः अस्त्रे प्राक् प्रयुक्ते द्वे नारायणास्त्रे ॥ २२ ॥
29126
29127 अन्योन्यं शममायाते सवीर्ये सुभटाविव।
29128 एतस्मिन्नन्तरे सोऽग्नी रथं कृत्वा तु भस्मसात् ॥ २३ ॥
29129
29130 स आग्नेयास्त्रसंबन्धी अग्निः ॥ २३ ॥
29131
29132 प्राप दग्ध्वा वनं सिन्धुं मृगेन्द्रमिव कन्दरात्।
29133 सिन्धुरभ्यासतोऽग्न्यस्त्रं वारुणास्त्रेण शामयन् ॥ २४ ॥
29134
29135 वनं दग्ध्वा। वनकन्दरान्निर्गतं मृगेन्द्रमिव ॥ २४ ॥
29136
29137 रथं त्यक्त्वावनिं प्राप्य खड्गास्फोटकवानभूत्।
29138 अक्ष्णोर्निमेषमात्रेण रथाश्वानां रिपोः खुरान् ॥ २५ ॥
29139
29140 आस्फोटकं चर्म तद्वान् अभूत् ॥ २५ ॥
29141
29142 लुलाव करवालेन मृणालानीव लाघवात्।
29143 विदूरथोऽपि विरथो बभूवास्फोटकासिमान् ॥ २६ ॥
29144
29145 समायुधौ समोत्साहौ चेरतुर्मण्डलानि तौ।
29146 खड्गौ क्रकचतां यातौ मिथः प्रहरतोस्तयोः ॥ २७ ॥
29147
29148 क्रकचतां क्रकचवत्कठिनतरचर्मादिविदारणसमर्थतां यातौ प्राप्तौ ॥ २७
29149 ।।
29150
29151 दन्तमालेयमस्येव बले चर्वयतः प्रजाः।
29152 शक्तिमादाय चिक्षेप खड्गं त्यक्त्वा विदूरथः ॥ २८ ॥
29153
29154 बले सैन्यद्वये ॥ २८ ॥
29155
29156 सिन्ध्वम्बुघर्घरारावो महोत्पात इवाशनिः।
29157 अविच्छिन्ना समायाता पतिता सास्य वक्षसि ॥ २९ ॥
29158
29159 सिन्धोः समुद्रस्याम्बु जलमिव घर्घरारावः महाप्रलयादिसूचक उत्पातः
29160 सा शक्तिरस्य सिन्धोर्वक्षसि ॥ २९ ॥
29161
29162 अप्रियस्य यथा भर्तुरनिच्छन्ती स्वकामिनी।
29163 तेन शक्तिप्रहारेण नासौ मरणमाप्तवान् ॥ ३० ॥
29164
29165 केवलं रुधिरव्रातं नागो जलमिवात्यजत्।
29166 तद्देशलीला तं दृष्ट्वा भग्नं तम इवेन्दुना ॥ ३१ ॥
29167
29168 नागो गजो जलं मदजलमिवात्यजत् अस्रवत् ॥ ३१ ॥
29169
29170 सविकासघनानन्दा पूर्वलीलामुवाच ह।
29171 देवि पश्य नृसिंहेन हतो भर्त्रायमावयोः ॥ ३२ ॥
29172

आवयोर्भर्त्रा नृसिंहेन सिन्धुर्दैत्यो हिरण्यकशिपुर्हत इति व्यस्तरूपकम् ॥ ३२
। ।

शक्तिकोटिनखैर्दैत्यः सिन्धुरुद्धुरकन्धरः ।
सरःस्थलस्थनागेन्द्रकरफूत्कृतवारिवत् ॥ ३३ ॥

पिष्टो रसोऽस्य निर्याति रक्तं चुलचुलारवैः ।
हा कष्टं रथमानीतं सिन्धुरारोढुमुद्यतः ॥ ३४ ॥

पिष्टात्संचूर्णितात् उरसः सकाशात् । रक्तं सरःस्थलस्थस्य सरोमध्यस्थस्य
गजेन्द्रस्य करात् पूत्कृतं वारीव निर्यातीति पूर्वेणान्वयः ॥ ३४ ॥

सौवर्णं मैरवं शृङ्गं पुष्करावर्तको यथा ।
पश्य देवि रथोऽस्यासौ मुद्गरेण विचूर्णितः ॥ ३५ ॥

मैरवं मेरोः संबन्धि शृङ्गम् । पुष्करावर्तको मेघराजः । अस्य सिन्धो
रथः ॥ ३५ ॥

भ्रम्त्पार्थनिपातेन सौवर्णं नगरं यथा ।
प्रवृत्तो रथमारोढुमानीतं पतिरेष मे ॥ ३६ ॥

पार्थस्यार्जुनस्य शरनिपातेन भ्रमन्निपातकवचानां सौवर्णं नगरं
यथा तथा भ्रमन्तमर्थात्तं रथं पश्येत्यर्थः । तद्ब्रह्माण्डेऽपि
पार्थादिजन्मसंभवान्नाप्रसिद्धोपमा ॥ ३६ ॥

प। २५२) १५१

कष्टं वज्रमिवेन्द्रेण मुसलं सिन्धुनेक्षितम् ।
जवात्पतिः प्रयातो मे सैन्धवं मुसलायुधम् ॥ ३७ ॥

ईक्षितं प्रहरणार्थमिति शेषः । सैन्धवं वञ्चयित्वा ॥ ३७ ॥

वञ्चयित्वा विलासेन रथमारुह्य लाघवात् ।
हा धिक्कष्टमसौ सिन्धुरार्यपुत्ररथं रयात् ॥ ३८ ॥

हरिश्वभ्रमिवारूढं प्लवेनोर्ध्वमिव द्रुमम् ।
क्रीडित्वा पीडयामास शरवर्षिर्विदूरथम् ॥ ३९ ॥

ध्वजलाञ्छितत्वात् प्लवेन पक्षिविशेषेण उपलक्षितम् । शैवलादिना हरि
हरितवर्णं श्वभ्रं पल्वलमिव । तथाविधमूर्ध्वमुच्छ्रितं द्रुममिव वा
स्थितं रथमारूढमार्यपुत्रं स्वभर्तारं विदूरथं पीडयामासेति
संबन्धः ॥ ३९ ॥

छिन्नध्वजं छिन्नरथं छिन्नाश्वं छिन्नसारथिम् ।
छिन्नकार्मुकवर्माणं भिन्नसर्वाङ्गमाकुलम् ॥ ४० ॥

हृदि स्फोटशिलापट्टदृढे पीवरमूर्धनि ।
भित्त्वा वज्रसमैर्बाणैः पातयत्येष भूतले ॥ ४१ ॥

स्फोटे स्फोटनविषये शिलापट्टवद्दृढे । अशक्यस्फोटने इति यावत् । पीवरे
स्थूले मूर्धनि च भित्त्वा ॥ ४१ ॥

29225 अथान्यं रथमानीतं कृच्छ्रेण प्राप्य चेतनाम् ।
29226 खड्गेनारोहतोऽस्यांसं छिन्नं भर्तुर्विलोकय ॥ ४२ ॥
29227
29228 रथं कृच्छ्रेणारोहतोऽस्य मे भर्तुः सिन्धुना छिन्नमंसं स्कन्धदेशं
29229 विलोकय ॥ ४२ ॥
29230
29231 पद्मरागगिरिद्योतमिवर्द्धासृग्विमुञ्चति ।
29232 हा हा धिक्कष्टमेतेन सिन्धुना खड्गधारया ॥ ४३ ॥
29233
29234 अत एव भर्तारं भिन्नस्य पद्मरागगिरेर्निःसृतं
29235 द्योतमारक्तप्रभामिवर्द्धं समृद्धमसृग्रक्तं विमुञ्चति ।
29236 पश्येत्यत्राप्यनुकृष्यते ॥ ४३ ॥
29237
29238 जङ्घयोर्मे पतिश्छिन्नः क्रकचेनेव पादपः ।
29239 हा हा हतास्मि दग्धास्मि मृतास्म्युपहतास्मि च ॥ ४४ ॥
29240
29241 हता हननव्यापारविषयीकृता मृता तत्फलमरणभागिनीति भेदः ॥ ४४ ॥
29242
29243 मृणाले इव पत्युर्मे लूने द्वे अपि जानुनी ।
29244 इत्युक्त्वा सा तदालोक्य भर्तुर्भावभयातुरा ॥ ४५ ॥
29245
29246 भर्तुर्विषये भावः स्नेहातिशयस्तेन भयेन चातुरा । सीदतीति सा ।
29247 सदेर्डप्रत्यये टाप् ॥ ४५ ॥
29248
29249 लता परशुकृत्तेव मूर्च्छिता भुवि सापतत् ।
29250 विदूरथोऽपि निर्जानुः प्रहरन्नेव विद्विषि ॥ ४६ ॥
29251
29252 पपात स्यन्दनस्याधश्छिन्नमूल इव द्रुमः ।
29253 पतन्नेवैष सूतेन रथेनैवापवाहितः ॥ ४७ ॥
29254
29255 पपात पतनोन्मुखो बभूवेत्यर्थः । पतन् पतनोन्मुख एवैष सूतेन विष्टभ्य
29256 रथेनैवापवाहितो गृहं प्रतीति शेषः । द्वाविमौ पुरुषौ लोके
29257 सूर्यमण्डलभेदिनौ । परिव्राड्योगयुक्तश्च रणे चाभिमुखो हतः । इति
29258 स्मृतेः । रणे अभिमुखमरणे सूर्यमण्डलमेदिनो ब्रह्मलोकावाप्तौ
29259 विरक्तस्य । ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे । परस्यान्ते
29260 कृतात्मानः प्रविशन्ति परं पदम् ॥ इति वचनात्क्रममुक्तिप्रसक्तौ अविरक्तस्य
29261 इमं मानवमावर्तं नावर्तन्ते इति श्रुतेः कल्पान्तरे पुनरावृत्तौ वा
29262 प्राक्तनपद्मशरीरेण
29263 प्रारब्धशेषभोगासिद्धेस्तदनुगुणसरस्वतीसंकल्पवरदानबलादेव सूतस्य
29264 राजयशःश्रेयोविनाशे अपवाहने प्रवृत्तिरासीदिति बोध्यम् ॥ ४७ ॥
29265
29266 यदा तदाहतिं तस्य कण्ठेऽदात्सिन्धुरुद्धतः ।
29267 अर्धविच्छिन्नकण्ठऽसावनुयातोऽथ सिन्धुना ॥ ४८ ॥
29268
29269 यदा अपवाहितस्तदा आहतिं खड्गाघातं अदात् । अपवाह्यमाने असंमुखे
29270 शत्रौ प्रहारः शूरविगर्हितः कृत इति सूचयन्विशिनष्टि - उद्धत इति ॥ ४८ ॥
29271
29272 स्यन्दनेनाविशत्सद्म पद्मं रविकरो यथा ।
29273 सरस्वत्याः प्रभावाढ्यं तत्प्रवेष्टुमसौ गृहम् ।
29274 नाशकन्मशको मत्तो महाज्वालोदरं यथा ॥ ४९ ॥
29275
29276 असौ सिन्धुः पद्मगृहं प्रवेष्टुं नाशकत् ॥ ४९ ॥

खड्गावकृत्तगलगर्तगलत्सवात-
रक्तच्छटाछुरितवस्त्रतनुत्रगात्रम् ।
तत्याज तं भगवतीमभितो गृहान्तः
सूतः प्रवेश्य मृतितल्पतले गतोऽरिः ॥ ५० ॥

खड्गेन अवकृत्तस्य गलस्य गर्ताच्छिद्रात् गलद्भिः सवाताभिः रक्तस्य
च्छटाभिर्धाराभिश्छुरितानि सिक्तानि वस्त्रादीनि यस्य तथाविधं तं
विदूरथं सूतो गृहं प्रवेश्य गृहान्तर्भगवतीं सरस्वतीमभितः
अभिमुखे मृतितल्पतले सुखमरणयोग्यमृद्वास्तरणोपरि तत्याज ।
अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि इति षष्ठ्यर्थे द्वितीया । अरिः शत्रुः
सिन्धुश्च गृहप्रवेशासामर्थ्याद्गतः परावृत्त इत्यर्थः ॥ ५० ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलो०
विदूरथमरणवर्णनं नाम पञ्चाशः सर्गः ॥ ५० ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
विदूरथमरणवर्णनं नाम पञ्चाशः सर्गः ॥ ५० ॥

## एकपञ्चाशः सर्गः ५१

श्रीवसिष्ठ उवाच ।

हतो राजा हतो राजा प्रतिराजेन संयुगे ।
इतिशब्दे समुद्भूते राष्ट्रमासीद्भयाकुलम् ॥ १ ॥

अथ राजवधोदन्ताद्वर्ण्यते राष्ट्रविड्वरः ।
सिन्धौ प्रतिष्ठिते भूयो देशस्वास्थ्यं च विस्तरात् ॥ १ ॥

राजा विदूरथः । प्रतिराजेन सिन्धुना । संयुगे युद्धे ॥ १ ॥

भाण्डोपस्करभाराढ्यं विद्रवच्छकटव्रजम् ।
साक्रन्द्रार्तकलत्राढ्यं द्रवन्नागरदुर्गमम् ॥ २ ॥

पलायमानसाक्रन्दं मार्गाहृतवधूगणम् ।
अन्योन्यलुण्ठनव्यग्रलोकलग्नमहाभयम् ॥ ३ ॥

पराराष्ट्रजनानीकताण्डवोल्लाससारवम् ।
निरधिष्ठितमातङ्गहयवीरपतज्जनम् ॥ ४ ॥

शत्रुराष्ट्रजनान्तराणां सिन्ध्वनीकस्य च जयताण्डवोल्लासेन सारवं
सशब्दम् ॥ ४ ॥

प्। २५३) १५१

कपाटपाटनोड्डीनकोशान्तरवघर्घरम् ।
लुण्ठितासंख्यकौशेयप्रावृताभिभटोद्भटम् ॥ ५ ॥

कपाटानां पाटनेन उड्डीन इव बहिराकाशे निर्गतो यः कोशगृहस्यान्ते
विनाशे रवस्तेन घर्घरम् । कौशेयप्रावृता अभिभूतकोशपालभटा
उद्भटा यत्र ॥ ५ ॥

29329
29330 क्षुरिकोत्पाटितार्द्रान्त्रमृतराजगृहाङ्गनम् |
29331 राजान्तःपुरविश्रान्तचण्डालश्वपचोत्करम् || ६ ||
29332
29333 चौरैः क्षुरिकाभिः शस्त्रीभिरुत्पाटितैरार्द्रैरान्त्रैरुपलक्षिता मृता
29334 राजगृहाङ्गना यत्र || ६ ||
29335
29336 गृहापहृतभोज्यान्नभोजनोन्मुखपामरम् |
29337 सहेमहारवीरौघपादाहतरुदच्छिशु || ७ ||
29338
29339 भोज्यानां राजभोजनयोग्यानामन्नानां भोजने उन्मुखाः पामराः
29340 पृथग्जना यत्र || ७ ||
29341
29342 अपूर्वतरुणाक्रान्तकेशान्तःपुरिकाङ्गनम् |
29343 चोरहस्तच्युतानर्घ्यरत्नदन्तुरमार्गगम् || ८ ||
29344
29345 रत्नैर्दन्तुरा उन्नतदन्ता इव धवलिता मार्गगा यत्र || ८ ||
29346
29347 हयेभरथसंघट्टव्यग्रसामन्तमण्डलम् |
29348 अभिषेकोद्यमादेशपरमन्त्रिपुरःसरम् [द्यमादेशं परं इत्यपि
29349 आदर्शान्तरे पाठो लभ्यते तथाप्येतत्पाठस्य
29350 सुसङ्गतत्वाट्टीकाकारसंमतत्वाच्चैष एवास्माभिरादृतः] || ९ ||
29351
29352 संघट्टनं संघट्टः अपहृत्य मेलनं तत्र व्यग्रं सामन्तमण्डलं
29353 यत्र | सिन्धुसुतपट्टाभिषेकोद्यमस्य आदेशे आज्ञापने परास्तत्पराः | ९ ||
29354
29355 राजधानीविनिर्माणसारम्भस्थपतीश्वरम् |
29356 कृतवातायनश्वभ्रनिपतद्राजवल्लभम् || १० ||
29357
29358 स्थपतीश्वराः कारुश्रेष्ठाः | कारुकृतेषु वातायनश्वभ्रेषु
29359 अपूर्वनगरसौन्दर्यदर्शनाय निपतन्त्यः प्रविशन्त्यः सिन्धुराजवल्लभा
29360 यत्र || १० ||
29361
29362 जयशब्दशतोद्घोषसिन्धुराजन्यनिर्भरम् |
29363 असंख्यनिजराजौघधृतसिन्धुकृतास्थिति || ११ ||
29364
29365 जयशब्दशतोद्घोषैः प्रवेशितस्य सिन्धुराजन्यस्य सिन्धुराजपुत्रस्य
29366 अभिषिक्तस्य निर्भरः प्रभावातिशयो यत्र | निजैः स्वपक्षीयै राजौघैः शिरसा
29367 धृता सिन्धुना कृता स्थिती राष्ट्रमर्यादा यत्र || ११ ||
29368
29369 ग्रामान्तरसमाक्रान्तविद्रवद्राजवल्लभम् |
29370 मण्डलान्तरसंजातनगरग्रामलुण्ठनम् || १२ ||
29371
29372 ग्रामान्तरप्रच्छन्नाः परैः परिज्ञातास्ततोऽपि विद्रवन्तः
29373 पूर्वराजवल्लभजना यत्र || १२ ||
29374
29375 अनन्तचोरमोषार्थरुद्धमार्गगमागमम् |
29376 महानुभाववैधुर्यसनीहारदिनातपम् || १३ ||
29377
29378 अनन्तैश्चौरैर्मोषार्थं रुद्धा मार्गेषु गमागमा जनसंचारा यत्र |
29379 महानुभावो विदूरथस्तद्वैधुर्येण सनीहारा दिनेषु आतपा यत्र || १३ ||
29380

29381 मृतबन्धुजनाक्रन्दैर्मृततूर्यरवैरपि ।
29382 हयेभरथशब्दैश्च पिण्डग्राह्यघनध्वनि ॥ १४ ॥
29383
29384 पिण्डवत्करे ग्रहीतुं शक्या इत्यौत्प्रेक्षिकम् । घना ध्वनयो यत्र ॥ १४ ॥
29385
29386 सिन्धुदेवो जयत्येकच्छत्रभूमण्डलाधिअपः ।
29387 इत्यनन्तरमारेभे भेर्यः प्रतिपुरं तदा ॥ १५ ॥
29388
29389 इति उद्घोषयन् भेर्यः भेरीः । छान्दसः सुव्यत्ययः । वादयितुमारेभे जन इति
29390 शेषः ॥ १५ ॥
29391
29392 राजधानीं विवेशाथ सिन्धुरुद्धुरकन्धरः ।
29393 प्रजाः स्रष्टुं युगस्यान्ते मनुर्जगदिवापरः ॥ १६ ॥
29394
29395 अथ पुत्रस्य राज्याभिषेकानन्तरम् । सिन्धुः स्वराजधानीं विवेश ॥ १६ ॥
29396
29397 प्रवृत्ता दशदिग्भ्योऽथ प्रवेष्टुं सैन्धवं पुरम् ।
29398 कराः करिहयाकारै रत्नपूरा इवाम्बुधिम् ॥ १७ ॥
29399
29400 निबन्धनानि चिह्नानि शासनानि दिशं प्रति ।
29401 क्षणान्निवेशयामासुर्मण्डलं प्रति मन्त्रिणः ॥ १८ ॥
29402
29403 निबन्धनानि मर्यादाः । चिह्नानि मुद्रादिषु सिन्धु नामाङ्कनानि ॥ १८ ॥
29404
29405 उदभूदचिरेणैव देशे देशे पुरे पुरे ।
29406 जीविते मरणे माने नियमोऽयमतो यथा ॥ १९ ॥
29407
29408 अथ शेमुर्निमेषेण देशोपप्लवविभ्रमाः ।
29409 प्रशान्तोत्पातपवनाः पदार्थावृत्तयो यथा ॥ २० ॥
29410
29411 पवने शान्ते पवनकृतास्तृणपर्णधूल्यादिपदार्थानामावृत्तयो
29412 भ्रमणानि यथा शाम्यन्ति तद्वत् ॥ २० ॥
29413
29414 सौम्यतामाजगामाशु देशो दशदिगन्वितः ।
29415 क्षीरोदः क्षुभितावर्तो द्रागिवोद्धृतमन्दरः ॥ २१ ॥
29416
29417 ववुरलकचयान्विलोलयन्तो
29418 मुखकमलालिकुलानि सैन्धवीनाम् ।
29419 जललववलनाकुलाः समीरा
29420 अशिवगुणानिव सर्वतः क्षणेन ॥ २२ ॥
29421
29422 समीरा वायवः सैन्धवीनां मुखकमले अलिकुलानि
29423 भ्रमरपङ्क्तिभूतानलकचयान्विलोलयन्तः । तन्मधुप्रायाणां
29424 तत्स्वेदजललवानां वलनेन मत्ता इव मन्दगतित्वादाकुलाः
29425 सन्तस्तच्छैत्यसौरभ्यादिमङ्गलगुणैः सर्वदेशतः
29426 संतापदौर्गन्ध्याद्यशिवगुणान्विलोलयन्तो डलयोरभेदाद्विलोडयन्त
29427 उपघन्त इव ववुः ॥ २२ ॥
29428
29429 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलो०
29430 सिंदुराष्ट्रवर्णनं नामैकपञ्चाशः सर्गः ॥ ५१ ॥
29431
29432 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे

सिन्धुराष्ट्रवर्णनं नामैकपञ्चाशः सर्गः ॥ ५१ ॥

प्। २५४) १५२

द्विपञ्चाशः सर्गः ५२

श्रीवसिष्ठ उवाच।

एतस्मिन्नन्तरे राम लीलोवाच सरस्वतीम्।
श्वासावशेषमालोक्य मूढं भर्तारमग्रगम् ॥ १ ॥

राज्ञोऽत्र मरणं तस्य संसारस्य मृषात्मता।
तथा तत्पुरलीलाया वर्ण्यते वासनात्मता ॥ १ ॥

मूढं मूर्च्छितम् ॥ १ ॥

प्रवृत्तो देहमुत्स्रष्टुं मद्भर्तायमिहाम्बिके।

ज्ञप्तिरुवाच।

एवंरूपमहारम्भे संग्रामे राष्ट्रसंभ्रमे ॥ २ ॥

संपन्नेऽपि स्थितेऽप्युच्चैर्विचित्रारम्भमन्थरे।
न किंचिदपि संपन्नं राष्ट्रं न च महीतलम् ॥ ३ ॥

संपन्ने उत्पन्ने स्थिते अपिशब्दाद्विनष्टेऽपि क्वचन क्वचिदपि।
क्वचनेत्यखण्डमव्ययम्। न संपन्नं न स्थितं न नष्टं चेत्यर्थः।
तन्मण्डपस्य प्राग्दृष्टाद्दशाल्पतरमण्डपस्यान्तः पद्मशवस्य ॥ ३ ॥

न स्थितं क्वचनाप्येवं स्वप्नात्मकमिदं जगत्।
तस्य तन्मण्डपस्यान्तः शवस्य निकटाम्बरे ॥ ४ ॥

इदं भूराष्ट्रमाभाति भर्तृजीवस्य तेऽनघे।
अन्तःपुरगृहान्ते तदिदं राष्ट्रान्वितोदरम् ॥ ५ ॥

तद्विदूरथब्रह्माण्डं पद्मान्तःपुरगृहान्ते स्थितं
राष्ट्रैरन्वितमुदरं यस्य तथाभूतमिदं पाद्मब्रह्माण्डं
वसिष्ठविप्रगेहेन्तःस्थितमित्यन्वयः ॥ ५ ॥

वसिष्ठविप्रगेहेऽन्तर्विन्ध्याद्रिग्रामके स्थितम्।
वसिष्ठविप्रगेहेन्तः शवगेहजगत्स्थितम् ॥ ६ ॥

उक्तमेव व्यतिहारेण द्रढयति - वसिष्ठेति ॥ ६ ॥

शवगेहजगत्कुक्षाविदं गेहजगत्स्थितम्।
एवमेष महारम्भो जगत्त्रयमयो भ्रमः ॥ ७ ॥

त्वया मयाऽनयाऽनेन संयुक्तः सार्णवावनिः।
गिरिग्रामकदेहान्तर्मध्ये गगनकोशके ॥ ८ ॥

अनया द्वितीयलीलया। अनेन त्वद्भर्त्रा ॥ ८ ॥

29485
29486 स्वात्मैव कचति व्यर्थो न कचत्येव वा क्वचित् |
29487 तत्पदं परमं विद्धि नाशोत्पादविवर्जितम् || ९ ||
29488
29489 एकैकान्तरपरमुत्पन्नमित्यपि कल्पनैव | वस्तुततश्चैतन्य एव नाकाशे |
29490 आकाशादिसहितत्रितयाध्यासादित्याशयेनाह - स्वात्मैवेति | विषयमिथ्यात्वे
29491 चिति तत्संवलितरूपमपि नास्त्येवेत्याशयेनाह - न कचत्येवेति | तथाच
29492 निर्विषयचिन्मात्रमेवावशिष्यते तदेव मुख्यं ज्ञेयमित्याह - तदिति || ९ ||
29493
29494 स्वयं कचितमाभातं शान्तं परमनामयम् |
29495 किल मण्डपगेहेन्तः स्वस्वभावोदितात्मनि || १० ||
29496
29497 स्वयं कचितं स्वप्रकाशं तदेव मण्डपगेहान्तः स्वेन
29498 चिन्मात्रस्वभावेनोदिते स्वात्मनि आभातं न वस्त्वन्तरमित्यर्थः | किलेति
29499 विद्वत्प्रसिद्धौ || १० ||
29500
29501 एवमारम्भघनयोरपि मण्डपयोस्तयोः |
29502 उदरे शून्यमाकाशमेवास्ति न जगद्भ्रमः || ११ ||
29503
29504 मण्डपान्तर्गते भूताकाशेऽपि न जगदष्ति किं वाच्यं शुद्धचिदाकाश
29505 इत्याशयेनाह - एवमिति || ११ ||
29506
29507 भ्रमद्रष्टुरभावे हि कीदृशी भ्रमता भ्रमे |
29508 नास्त्येव भ्रमसत्तातो यदस्ति तदजं पदम् || १२ ||
29509
29510 नन्वल्पान्ते बृहतोऽसमावेशात्तत्प्रत्ययो यदि भ्रमस्तर्ह्यतिबृहतो ब्रह्मणो
29511 मण्डपहृदयाद्याकाशेष्वसमावेशात्तत्र
29512 शास्त्राचार्योपदेशात्तत्प्रत्ययोऽपि भ्रमः किं न स्यादित्या
29513 शङ्क्योपजीव्यविरोधान्मैवमित्याह - भ्रमद्रष्टुरिति || १२ ||
29514
29515 भ्रमो दृश्यमसत्तस्य द्रष्टृदृश्यदशा कुतः |
29516 द्रष्टृदृश्यक्रमाभावादद्वयं सहजं हि तत् || १३ ||
29517
29518 ननु तर्हि भ्रम एव भ्रमं पश्यतु नान्यस्तत्राह - भ्रम इति |
29519 द्रष्टृव्यापारफलाधारो हि दृश्यः | न च स्वात्मनि केनचिद्व्यापारितुं
29520 शक्यते एकत्र कर्तृकर्मताविरोधात् | न च द्रष्टर्यसति दृश्यस्य सत्तास्फूर्ती
29521 सिध्यत इति भावः | अयं द्रष्टृदृश्यक्रमाभावो द्वैतस्यैव दूषणम् |
29522 अद्वैतस्य तु सहजस्य भूषणमेवेत्याशयेनाह - द्रष्ट्रिति || १३ ||
29523
29524 तत्पदं परमं विद्धि नाशोत्पादविवर्जितम् |
29525 स्वयं कचितमाभातं शान्तमाद्यमनामयम् || १४ ||
29526
29527 किल मण्डपगेहान्तः स्वस्वभावोदितात्मनि |
29528 विहरन्ति जनास्तत्र स्वगेहे स्वव्यवस्थया || १५ ||
29529
29530 एवमल्पतरे बृहत्तरासमावेशोऽपि दृश्यस्यैव दूषणं न
29531 सर्वाधिष्ठानचैतन्यस्येत्याशयेनाह - किलेत्यादिना |
29532 स्वस्वव्यवहारानुकूलदेशवैपुल्यव्यवस्थया विहरन्ति संचरन्ति |
29533 किलेत्याश्चर्ये || १५ ||
29534
29535 न जगत्तत्र नो सर्गः कश्चिदप्यनुभूयते [क्वचित् इति पाठः] |
29536 तेनाहमजमाकाशं जगदित्येव वर्तते || १६ ||

29537
29538 अनुभूयते तत्त्वज्ञैरित्यर्थः ।
29539 तेनानुभवात्मकप्रत्यक्षप्रमाणेनाहंकारसाक्षिभूतं यच्चिदाकाशं
29540 तदेकाज्ञदृशा जगदिति रूपेण वर्तत इति निश्चितमित्यर्थः ॥ १६ ॥
29541
29542 सर्वं शून्यात्मविज्ञानं मेर्वादिगिरिजालकम् ।
29543 नेदं कुड्यमयं किंचिद्यथा स्वप्ने महापुरम् ॥ १७ ॥
29544
29545 एवमनुमानेनापि तन्निश्चयं साधयति - सर्वमिति ।
29546 मेर्वादिगिरिजालकोपलक्षितं सर्वमिदं दृश्यं
29547 शून्यात्मस्वरूपज्ञानमात्रमेव न कुड्यमयं न
29548 यथादृष्टस्थूलस्वभावम् । तत्समावेशायोग्ये अल्पप्रदेशे प्रतीतत्वात् ।
29549 देहान्तः स्वप्नदृष्टमहापुरवदित्यर्थः ॥ १७ ॥
29550
29551 देशे प्रादेशमात्रेऽपि गिरिजालमयान्यपि ।
29552 वज्रसाराणि स्वान्येव लक्षाणि जगतो विदुः ॥ १८ ॥
29553
29554 स्वप्ने सर्वानुभवसिद्धां व्याप्तिं दर्शयति - देशे इति । कण्ठे स्वप्नः
29555 समाविशेदिति श्रुतेः कण्ठादिहृदयान्ते प्रादेशमात्रे खानि
29556 तत्प्रदेशावच्छिन्नात्मचैतन्यान्येव । औपाधिकं बहुवचनम् । गिरिजालमयानि
29557 विदुः पश्यन्ति सर्वे स्वप्ने ॥ १८ ॥
29558
29559 प्। २५५) १५२
29560
29561 जगन्ति सुबहून्येव संभवन्त्यणुकेऽपि च ।
29562 कदलीपल्लवानीव संनिवेशेन भूरिशः ॥ १९ ॥
29563
29564 तथा दार्ष्टान्तिकेऽपि संभवमुपनयेन दर्शयति - जगन्तीति ॥ १९ ॥
29565
29566 त्रिजगच्चिदणावन्तरस्ति स्वप्नपुरं यथा ।
29567 तस्याप्यन्तश्चिदणवस्तेष्वप्येकैकशो जगत् ॥ २० ॥
29568
29569 निगमनेन प्रसाधितं द्रढयति - त्रिजगदिति ॥ २० ॥
29570
29571 तेषां यस्मिञ्जगत्येष पद्मो राजा शवः स्थितः ।
29572 लीला तव सपत्नीयं प्राप्ता पूर्वतरा शुभे ॥ २१ ॥
29573
29574 पृष्टं समाधाय तत्पुरलीलातत्त्वं वक्तुकामा प्रस्तुतकथामादत्ते -
29575 तेषामित्यादिना । पूर्वराजगमनापेक्षया पूर्वतरा ॥ २१ ॥
29576
29577 यदैव मूर्च्छामायाता लीलेयं पुरतस्तव ।
29578 तदैव भर्तुः पद्मस्य शवस्य निकटे स्थिता ॥ २२ ॥
29579
29580 लीलोवाच ।
29581
29582 कथमेषा पुरा देवि संपन्ना तत्र देहिनी ।
29583 कथं च तत्सपत्नीकभावमाप्तवती स्थिता ॥ २३ ॥
29584
29585 सा सपत्नी यस्य भावस्य स्थितेस्तं तत्सपत्नीकं भावम् ॥ २३ ॥
29586
29587 ते चास्या वद किं रूपं पश्यन्त्यथ वदन्ति किम् ।
29588 तद्गेहवरवास्तव्याः समासेनेति मे वद ॥ २४ ॥

29589
29590 तस्य पद्मस्य वरगेहलक्षणे वास्तुनि भवा वास्तव्यास्ते जना अस्याः किं रूपं
29591 पश्यन्ति अथवा किं वदन्ति इत्येतत्सर्वं समासेन संक्षेपेण वद ॥ २४ ॥
29592
29593 श्रीदेव्युवाच ।
29594
29595 शृणु सर्वं समासेन यथापृष्टं वदामि ते ।
29596 लीले लीलास्ववृत्तान्तमन्तदं दृश्यदुर्दशम् ॥ २५ ॥
29597
29598 लीलान्तरभूतायाः स्वस्या एव वृत्तान्तम् । अन्तं निर्णयं ददातीत्यन्तदम् ।
29599 दृश्याः सम्यग् द्रष्टुं शक्या मरणपरलोकगमनादिदुर्दशा येन तम् ॥
29600 २५ ॥
29601
29602 पद्मस्तव स भर्तैष भ्रान्तिं तावत्ततामिमाम् ।
29603 इयं जगन्मयी तस्मिन्नेव सद्मनि पश्यति ॥ २६ ॥
29604
29605 इयमेतन्नगरादिभावेन दृश्यमाना जगन्मयी भ्रान्तिस्तां भ्रान्तिमेष
29606 विदूरथभूतस्तव स पद्मो भर्ता तस्मिन्नेव शवाश्रये सद्मनि
29607 पश्यतीत्यन्वयः ॥ २६ ॥
29608
29609 भ्रान्तियुद्धमिदं युद्धमेषा भ्रान्तिर्जनोऽजनः ।
29610 भ्रान्त्यैवास्तीह मरणमेष चैवं भ्रमात्मकः ॥ २७ ॥
29611
29612 इदं त्वया दृष्टं युद्धं स्वाप्नयुद्धवद्भ्रान्तियुद्धमेव । एषा
29613 त्वत्पृष्टलीलापि भ्रान्तिरेव । एष जनश्चाऽजनो जन्मादिविक्रियारहितात्मैव । एष
29614 संसारः ॥ २७ ॥
29615
29616 भ्रमक्रमेणानेनैव लीलास्य दयिता स्थिता ।
29617 त्वं चैषा च वरारोहे स्वप्नमात्रं वराङ्गने ॥ २८ ॥
29618
29619 यथा भवत्यावेतस्य स्वप्नमात्रं वराङ्गने ।
29620 तथा भवत्योर्भर्तैष तथैवाहमपि स्वयम् ॥ २९ ॥
29621
29622 जगच्छोभैवेदृशीयं दृश्यमेतदिहोच्यते ।
29623 एतदेव परिज्ञातं दृश्यशब्दार्थमुज्झति ॥ ३० ॥
29624
29625 दृश्यशब्दस्यार्थं दृशि कर्मतामुज्झति त्यजति ॥ ३० ॥
29626
29627 एवमेषा त्वमेषा च संपन्नैवमसौ नृपः ।
29628 अहं चात्मनि सत्यत्वं गता सर्वतयात्मनः ॥ ३१ ॥
29629
29630 एषा संसारस्थितिः । एवं भ्रान्तिरूपैव । आत्मनः सर्वतया पूर्णतया ॥ ३१ ॥
29631
29632 इमे वयमिहान्योन्यं सपन्नाश्चोदिता इति ।
29633 इत्थं सर्वात्मकतया महाचिद्घनसंस्थितेः ॥ ३२ ॥
29634
29635 इमे नृपादयो वयमन्योन्यमनुग्राह्यानुग्राहकभावेन चोदिताः प्रेरिता
29636 इतीत्थं महाचिद्घनस्य संस्थितेर्मिथ्याकल्पनास्थितेर्यथा संपन्ना
29637 एवमेषापि राज्ञी संपन्ना स्थितेत्यन्वयः ॥ ३२ ॥
29638
29639 एवमेषा स्थिता राज्ञी हारिहासविलासिनी ।
29640 लीला विलोलवदना नवयौवनशालिनी ॥ ३३ ॥

पेशलाचारमधुरा मधुरोदारभाषिणी |
कोकिलास्वरसंकाशा मदमन्मथमन्थरा || ३४ ||

पेशला दक्षा | आचारेण मधुरा हृद्या | कोकिलायाः स्वरेण संकाशा
सदृशस्वरा || ३४ ||

असितोत्पलपत्राक्षी वृत्तपीनपयोधरा |
कान्ता काञ्चनगौराङ्गी पक्वबिम्बफलाधरा || ३५ ||

त्वत्संकल्पात्मकस्यैषा यदा भर्तुर्मनःकला |
तदा त्वत्सदृशाकारा स्थितैषा चिच्चमत्कृतौ || ३६ ||

मनःकला मनोवृत्तिस्तद्वासना च जातेति शेषः || ३६ ||

त्वद्भर्तुर्मरणे क्षिप्रं समनन्तरमेव हि |
त्वद्भर्त्रैषा पुरो दृष्टा त्वत्संकल्पात्मनामुना || ३७ ||

यदाधिभौतिकं भावं चेतोऽनुभवति स्वयम् |
चेत्यं सन्मयमेवात आतिवाहिककल्पनम् || ३८ ||

यदि वासनामयीयं कथं तर्हि सत्यतया तेनानुभूता तत्राह - यदेति |
वस्तुत आतिवाहिककल्पनं प्रातिभासिकमेव | चेत्यं दृश्यम् | तत्र चेतश्चित्तं
यदाभ्यासदृढवासनया आधिभौतिकं व्यावहारिकं भावमनुभवति
तदा अतोऽनुभवाच्चेत्यं सन्मयं परमार्थसत्यमित्येव भवतीत्यर्थः || ३८ ||

यदाधिभौतिकं भावं चेतो वेत्ति न सन्मयम् |
आतिवाहिकसंकल्पस्तदा सत्योपजायते || ३९ ||

यदा तु विवेकज्ञानाभ्यासेनाधिभौतिकं भावं न सन्मयं अनृतं वेत्ति
तदा सत्या दृढया तद्वासनया प्रपञ्चे आतिवाहिकसंकल्पः
प्रातिभासिकनिर्णय उपजायते || ३९ ||

अथो मरणसंवित्त्या पुनर्जन्ममये भ्रमे |
त्वं हि संविदितानेन त्वया च गत एव सः || ४० ||

वासनामयलीलान्तररूपया त्वया गतः संगत एव || ४० ||

इत्थं त्वां दृष्टवानेष दृष्टश्चैष त्वयेति च |
त्वमप्यात्मनि संपन्ना सर्वगत्वाच्चिदात्मनः || ४१ ||

त्वयाप्यसौ स्ववासनामय एव दृष्ट इति प्राग्दर्शितब्रह्माण्डत्रयतया
परिणता | सर्वगत्वात्सर्ववासनानुगतत्वात्सर्वाकारविवर्तोपपत्तेरित्यर्थः || ४१ ||

ब्रह्म सर्वगतं यस्माद्यथा यत्र यदोदितम् |
भवत्याशु तथा तत्र स्वप्नशक्त्यैव पश्यति || ४२ ||

तदेव स्पष्टमाह - ब्रह्मेति | स्वप्नशक्त्या विक्षेपशक्त्या | स्वस्वशक्त्या
इति पाठे तत्तद्वासनाशक्त्या || ४२ ||

प्। २५६) १५३

29693 सर्वत्र सर्वशक्तित्वाद्यत्र या शक्तिरुन्नयेत् ।
29694 आस्ते तत्र तथा भाति तीव्रसंवेगहेतुतः ॥ ४३ ॥
29695
29696 यथा यथा यद्यद्रूपेण उन्नयेद्भोजकादृष्टबलादाविर्भावयेत् ।
29697 तीव्रसंवेगो दृढाभिनिवेशवासना तस्माद्धेतोः ॥ ४३ ॥
29698
29699 मृतिमोहक्षणेनैव यदैतौ दंपती स्थितौ ।
29700 तदैवाभ्यामिदं बुद्धं प्रतिभासवशाद्धृदि ॥ ४४ ॥
29701
29702 मृतिमोहः स्वस्वमरणानुकूलमूर्च्छा तत्क्षणेनोपलक्षितौ यदा स्थितौ
29703 तदैवाभ्यामिदं वक्ष्यमाणं सर्वं बुद्धं स्वकल्पनयाऽनुभूतम् ।
29704 प्रतिभासो वासनोद्बोधस्तद्वशात् ॥ ४४ ॥
29705
29706 आवयोः पितरावेताविमे वै चापि मातरौ ।
29707 देश एष धनं चेदं कर्मेदं पूर्वमीदृशम् ॥ ४५ ॥
29708
29709 पूर्वं ईदृशं कर्म कृतमिति शेषः ॥ ४५ ॥
29710
29711 आवां विवाहितावेवमेवं नामैकतां गतौ ।
29712 एतयोः सापि जनता याता तत्रैव सत्यताम् ॥ ४६ ॥
29713
29714 सा कल्पनात्मिकापि जनता भोजकादृष्टबलात्सत्यतामर्थक्रियासमर्थतां
29715 याता ॥ ४६ ॥
29716
29717 तथैवात्रास्ति दृष्टान्तः प्रत्यक्षं स्वप्नवेदनम् ।
29718 इत्येवंभावया लीले लीलयाहमथार्चिता ॥ ४७ ॥
29719
29720 यत्पृष्टं पूर्वं तत्र कथं प्राप्तेति तस्योत्तरमाह - इत्येवमिति । इति एवं
29721 वक्ष्यमाणप्रकारो भावोऽभिसंधिर्यस्याः सा तया ॥ ४७ ॥
29722
29723 नाहं स्यां विधवेत्येवं वरो दत्तो मयाप्यसौ ।
29724 इत्यर्थेन मृता पूर्वमेवेह खलु बालिका ॥ ४८ ॥
29725
29726 इत्यर्थेनैतस्माद्धेतोः पूर्वमेव मृता ॥ ४८ ॥
29727
29728 भवतां चेतनांशानामहं चेतनधर्मिणी ।
29729 कुलदेवी सदा पूज्या स्वत एव करोम्यहम् ॥ ४९ ॥
29730
29731 अस्या मम च त्वदाराधने त्वत्प्रसादे च को हेतुस्तत्राह - भवतामिति ।
29732 चेतनांशानां व्यष्टिचेतनानां चेतनधर्मिणी हैरण्यगर्भचेतना
29733 त्वत्समष्टिचेतनात्मिका ॥ ४९ ॥
29734
29735 अथास्या जीवको देहात्प्राणमारुतरूपधृक् ।
29736 मनसा चलतां प्राप्तो मुखाग्रत्यक्तदेहकः ॥ ५० ॥
29737
29738 पुरा कथं प्राप्तेत्यस्य प्रश्नांशस्योत्तरमुक्त्वा देहिनी कथं संपन्नेति
29739 तदंशस्योत्तरमाह - अथेत्यादिना । अथ देहादुच्चिक्रमिषुरस्या
29740 अङ्गुष्ठपरिमितलिङ्गदेहमात्रत्वादल्पो जीवो जीवकः प्राणस्तेजसा युक्तः
29741 सहात्मना यथासंकल्पितं लोकं नयतीति श्रुतेरुत्क्रमणस्य प्राणाधीनत्वात्
29742 प्राणं तर्हि वागप्येति इत्यादिश्रुत्या सर्वकरणानां प्राणेऽप्ययाच्च
29743 प्राणमारुतरूपधृग् बभूवेत्यर्थः । यथासंकल्पितं लोकं नयति इति
29744 श्रुतेः यं यं वापि स्मरन्भावम् इत्यादिस्मृतेश्च

29745 भाव्यर्थसंकल्पप्रधानेन मनसा चलतां तत्तदर्थप्राप्त्युत्सुकतां तस्य
29746 हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा
29747 मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्य इति श्रुत्युक्तक्रमेण नाडीमार्गेण
29748 त्यक्तदेहकः अभूदिति शेषः ॥ ५० ॥
29749
29750 ततो मरणमूर्च्छान्ते गृहेऽस्मिन्नेव चैतया।
29751 बुद्धौ भावित आकाशे दृष्टो जीवात्मना ततः ॥ ५१ ॥
29752
29753 ततस्तदनन्तरं जीवात्मना अनया अस्मिन्नेव गृहे ब्रह्माकाशे भूताकाशे वा
29754 बुद्धौ भावितः संकल्पितो वक्ष्यमाणशरीरगमनकुमारीप्राप्त्यादिरूपोऽर्थो
29755 दृष्टः ॥ ५१ ॥
29756
29757 संपन्नैषा हरिणनयना चन्द्रबिम्बाननश्री-
29758 र्मानोन्नद्धा दयितललिता कान्तमाभोक्तुकामा।
29759 पूर्वस्मृत्या सरभसमुखी संयुता मण्डलान्तः
29760 स्वप्नान्ते वाऽप्रकृतिविभवा पद्मिनी चोदितेव ॥ ५२ ॥
29761
29762 ततो भावनावशात्पूर्वदेहस्मृत्या स्वप्नान्ते स्वप्नमध्ये इव। इवार्थेऽत्र
29763 वशब्दो वाशब्दो वा बोध्यः। रविकरैश्चोदिता पद्मिनीवविकासितवासनामुकुला
29764 एषा लीला दयितस्य स्वयं ललिता उपभोगयोग्या स्वयं च कान्तं मनोहरं
29765 भर्तारमाभोक्तुमनुभवितुं कामो यस्यास्तथाविधा। तुं काममनसोरपि इति
29766 तुमुनो मलोपः। सरभसं लावण्यकान्तवेगसहितं मुखं यस्यास्तथाविधा
29767 सती पद्मब्रह्माण्डमण्डलान्तर्गत्वा भर्त्रा संयुता संपन्नेत्यर्थह् ॥ ५२ ॥
29768
29769 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये लीलोपाख्याने०
29770 मरणसमनन्तरदेहप्रतिभाववर्णनं नाम द्विपञ्चाशः सर्गः ॥
29771 ५२ ॥
29772
29773 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
29774 मरणसमनन्तरदेहप्रतिभावर्णनं नाम द्विपञ्चाशः सर्गः ॥ ५२ ॥
29775
29776
29777 त्रिपञ्चाशः सर्गः ५३
29778
29779 श्रीवसिष्ठ उवाच।
29780
29781 अथ लब्धवरा देहेनानेनैव महीपतिम्।
29782 पतिमाप्तुं प्रयात्येषा नभोमार्गेण विष्टपम् ॥ १ ॥
29783
29784 गतिमार्गोऽत्र लीलाया भर्तृप्राप्तिश्च वर्ण्यते।
29785 अज्ञानयोगसिद्धानामगतिश्च नभःपथि ॥ १ ॥
29786
29787 अनेन प्राग्वर्णितवासनामयेनैव देहेन। विष्टपं वक्ष्यमाणभुवनानि।
29788 जातावेकवचनम् ॥ १ ॥
29789
29790 इति संचिन्त्य सानन्दमुद्गममकरध्वजा।
29791 पुप्लुवे पेलवाकारा पक्षिणीव नभस्तले ॥ २ ॥
29792
29793 इति उक्तप्रकारेण संचिन्त्य स्मरणेन देहादिभावं संपद्य पतिप्राप्त्युत्साहेन
29794 सानन्दं यथा स्यात्तथा पुप्लुवे। पेलवाकारा लघुशरीरा ॥ २ ॥
29795
29796 कुमारीं तत्र सा प्राप ज्ञप्त्यैव प्रहितां हिताम्।

स्वसंकल्पमहादर्शात्पुरतो निर्गतामिव ॥ ३ ॥

कुमारीं स्वकन्याम् ॥ ३ ॥

कुमार्युवाच ।

दुहितास्मि सखि ज्ञप्तेः स्वागतं तेऽस्तु सुन्दरि ।
प्रतीक्षमाणा त्वामेव स्थितास्मीह नभःपथि ॥ ४ ॥

हे ज्ञप्तेः सखि इति मातुः संबोधनम् ॥ ४ ॥

प्। २५७) १६१

लीलोवाच ।

देवि भर्तुः समीपं मां नय नीरजलोचने ।
महतां दर्शनं यस्मान्न कदाचन निष्फलम् ॥ ५ ॥

पूर्वमागमनान्मार्गाभिज्ञतां तस्या निश्चित्य लीलोवाच - देवीति । देवि
देवताशरीरं प्राप्ते । मम भर्तुस्त्वत्पितुः । ननु तवेव कान्तार्थिन्या मम किं
पितृसमीपगमनेन तत्राह - महतामिति । तथाच मत्प्रियार्थं मदुक्तं
संपादयेत्यर्थः ॥ ५ ॥

श्रीवसिष्ठ उवाच ।

एहि तत्रैव गच्छाव इत्युक्त्वा सा कुमारिका ।
पुरस्तस्याः स्थिता व्योम्नि मार्गदर्शनतत्परा ॥ ६ ॥

ततस्तदनुयाता सा प्राप कोटरमम्बरम् ।
निर्मलं करमालाग्रं यथा लक्षणलेखिका ॥ ७ ॥

कोटरं ब्रह्माण्डच्छिद्रभूतम् । करमालानां प्राणिहस्तसमूहानामग्रं
तलं यथा भाविशुभाशुभलक्षणभूता विधातृकृता लेखिका रेखा ॥ ७ ॥

मेघमार्गमथोल्लङ्घ्य वातस्कन्धान्तरे गता ।
सूर्यमार्गादभिगता तारामार्गमतीत्य च ॥ ८ ॥

अभिगता निर्गता ॥ ८ ॥

वाय्विन्द्रसुरसिद्धानां लोकानुल्लङ्घ्य लाघवात् ।
ब्रह्मविष्णुमहेशानां प्राप ब्रह्माण्डखर्परम् ॥ ९ ॥

ब्रह्मविष्णुमहेशानां लोकांश्चोल्लङ्घ्येत्यर्थः ॥ ९ ॥

हिमशैत्यं यथान्तस्थं कुम्भेऽभिन्ने बहिर्भवेत् ।
तथा संकल्पसिद्धा सा ब्रह्माण्डान्निर्गता बहिः ॥ १० ॥

हिमस्य जलस्य शैत्यं अभिन्ने अच्छिद्रेऽपि कुम्भे यथा बहिर्भवेन्निःसरेत् ॥ १० ॥

स्वचित्तमात्रदेहैषा स्वसंकल्पस्वभावजम् ।
अन्तरेवानुभवति किलैवं नाम विभ्रमम् ॥ ११ ॥

29849 इदं च गमनं चित्तकल्पनामात्रमिति स्मारयति - स्वचित्तेति ॥ ११ ॥
29850
29851 ब्रह्मादिस्थानमाक्रम्य प्राप्य ब्रह्माण्डखर्परम् ।
29852 ततो ब्रह्माण्डपारस्था जलाद्यावरणानि च ॥ १२ ॥
29853
29854 श्लोकार्धमनुवादः ॥ १२ ॥
29855
29856 समुल्लङ्घ्य पुरः प्राप महाचिद्गगनान्तरम् ।
29857 अदृष्टपारपर्यन्तमतिवेगेन धावता ।
29858 सर्वतो गरुडेनापि कल्पकोटिशतैरपि ॥ १३ ॥
29859
29860 चिद्गगनं मायासंवलितचिदाकाशः । अतिवेगेन धावता गरुडेनापि सर्वतः ।
29861 अदृष्टपारपर्यन्तमित्यन्वयः ॥ १३ ॥
29862
29863 तत्र ब्रह्माण्डलक्षाणि सन्त्यसंख्यानि भूरिशः ।
29864 तान्यन्योन्यमदृष्टानि फलानीव महावने ॥ १४ ॥
29865
29866 तत्रैकस्मिन्पुरःसंस्थे वितताावरणान्विते ।
29867 वेधयित्वा विवेशान्तर्बदरं कृमिको यथा ॥ १५ ॥
29868
29869 वेधयित्वा छिद्रीकृत्येवेत्यौत्प्रेक्षिकम् । वास्तवच्छिद्रानपेक्षणात् ॥ १५ ॥
29870
29871 पुनर्ब्रह्मेन्द्रविष्ण्वादिलोकानुल्लङ्घ्य भास्वरान् ।
29872 तन्महीमण्डलं श्रीमत्प्राप तारापथादधः ॥ १६ ॥
29873
29874 तारापथान्नभसः अधस्तस्य पद्मस्य महीमण्डलम् ॥ १६ ॥
29875
29876 तत्र तन्मण्डलं प्राप्य तत्पुरं तच्च मण्डपम् ।
29877 प्रविश्य पुष्पगुप्तस्य शवस्य निकटे स्थिता ॥ १७ ॥
29878
29879 एतस्मिन्नन्तरे सा च न ददर्श कुमारिकाम् ।
29880 मायामिव परिज्ञातां क्वापि यातां वरानना ॥ १८ ॥
29881
29882 मुखमालोक्य सा तस्य स्वभर्तुः शवरूपिणः ।
29883 इदं बुद्धवती सत्यं प्रतिभावशतः स्वतः ॥ १९ ॥
29884
29885 स्वतः प्रतिभावशतः स्वतर्कतः ॥ १९ ॥
29886
29887 अयं स भर्ता संग्रामे निहतो मम सिन्धुना ।
29888 वीरलोकानिमान्प्राप्य क्षणं शेते यथासुखम् ॥ २० ॥
29889
29890 अहं देव्याः प्रसादेन सशरीरैवमीदृशम् ।
29891 इह प्राप्तवती धन्या मत्समा नास्ति काचन ॥ २१ ॥
29892
29893 प्राप्तवती भर्तारमिति शेषः ॥ २१ ॥
29894
29895 इति संचिन्त्य सा हस्ते गृहीत्वा चारु चामरम् ।
29896 बीजयामास चन्द्रेण द्यौरिवावनिमण्डलम् ॥ २२ ॥
29897
29898 प्रबुद्धलीलोवाच ।
29899
29900 ते भृत्यास्ताश्च वै दास्यः स राजा च प्रबुद्धवान् ।

29901 वक्ष्यन्ति वदतां देवि किं कयैव कथं धिया ॥ २३ ॥
29902

29903 पूर्वप्रश्नशेषसहितं पुनः पृच्छति - ते भृत्या इति । कया धिया किं
29904 वक्ष्यन्ति तच्च कथमुपपद्यते । राज्ञः पूर्ववृत्तान्तस्य विस्मरणे केयं
29905 कस्येयमिति शङ्कया स्मरणेऽपि शिष्टलोकविगर्हिततया तत्परिग्रहासिद्धेरिति
29906 भावः । तां कथां वद ॥ २३ ॥
29907

29908 श्रीदेव्युवाच ।
29909

29910 स राजा सा च ते भृत्याः सर्व एव परस्परम् ।
29911 चिदाकाशैकतावेशादावयोश्च प्रभावतः ॥ २४ ॥
29912

29913 अपूर्वा काचिदियमिति सर्वेषां प्रतीतौ हि उक्तदोषः स्यात् सैव
29914 तावत्सत्यसंकल्पास्मदादिप्रभावान्न भविष्यतीति देवी समाधत्ते - स
29915 राजेत्यादिना । राजादयः सर्व एवान्योन्यमैकमत्येन परस्परमेवं
29916 वक्ष्यमाणप्रकारेण पश्यन्तीत्यन्वयः । ऐकमत्ये हेतवश्चिदाकाशेत्यादयः
29917 । मिथः स्वस्वबुद्धौ संप्रतिबिम्बितात् प्रतिबिम्बवदन्तर्निविष्टात्
29918 साक्षिचिदाकाशस्यैकतयैकमत्यानुगुण्येन आवेशात्स्फुरणात् ।
29919 महाचिद्ब्रह्मचैतन्यं तत्प्रतिभासत्वाद्भोजकादृष्टानुगुणतद्विवर्तत्वात्
29920 महानियतिरनेनेत्थमेव
29921 भाव्यमितीश्वरसंकल्पस्तत्संश्रयात्तदधीनत्वाच्चेत्यर्थः ॥ २४ ॥
29922

29923 महाचित्प्रतिभासत्वान्महानियतिनिश्चयात् ।
29924 अन्योन्यमेव पश्यन्ति मिथः संप्रतिबिम्बितात् ॥ २५ ॥
29925

29926 इयं मे सहजा भार्या ममेयं सहजा सखी ।
29927 ममेयं सहजा राज्ञी भृत्योऽयं सहजो मम ॥ २६ ॥
29928

29929 केवलं त्वमहं सा च यथावृत्तमखण्डितम् ।
29930 ज्ञास्याम इदमाश्चर्यं नतु कश्चिदपीतरः ॥ २७ ॥
29931

29932 सा विदूरथलीला च । इतरः नतु ज्ञास्यतीत्यर्थः ॥ २७ ॥
29933

29934 प्रबुद्धलीलोवाच ।
29935

29936 अमुनैव शरीरेण किमर्थं न गता पतिम् ।
29937 एषा वरेण संप्राप्ता लीला ललितवादिनी ॥ २८ ॥
29938

29939 पतिं संप्राप्तेति वर्णिता एषा लीला त्वद्वरबलेनामुना स्थूलेन शरीरेण किमर्थं
29940 न गतेत्यन्वयः ॥ २८ ॥
29941

29942 प्। २५८) १६२
29943

29944 श्रीदेव्युवाच ।
29945

29946 अप्रबुद्धधियः सिद्धलोकान्पुण्यवशोदितान् ।
29947 न समर्थाः स्वदेहेन प्राप्तुं छाया इवातपान् ॥ २९ ॥
29948

29949 अप्रबुद्धधियः अस्थूलात्मप्रबोधहीनाः ॥ २९ ॥
29950

29951 आदिसर्गे च नियतिः स्थापितेति प्रबोधिभिः ।
29952 यथा सत्यमलीकेन न मिलत्येव किंचन ॥ ३० ॥

प्रबोधिभिः सत्यसंकल्पैरीश्वरहिरण्यगर्भादिभिरिति नियतिर्मर्यादा स्थापिता।
तत्र दृष्टान्तः - यथेति। तथाच भाष्यम् - यत्र हि
यदध्यासस्तत्कृतेन गुणेन दोषेण वा अणुमात्रेणापि स न संबध्यते इति॥ ३०
॥

यावद्वेतालसंकल्पो बालस्य किल विद्यते।
निर्वेतालधियस्तावदुदयस्तस्य कः कथम्॥ ३१॥

नन्वस्यास्त्वद्वरादस्थूलात्मनिश्चयः कुतो नाभूत्तत्राह - यावदित्यादिना
॥ ३१॥

अविवेकज्वरोष्णत्वं विद्यते यावदात्मनि।
तावद्विवेकशीतांशुशैत्यं कुत उदेत्यलम्॥ ३२॥

अहं पृथ्व्यादिदेहः खे गतिर्नास्ति ममोत्तमा।
इति निश्चयवान्योऽन्तः कथं स्यात्सोऽन्यनिश्चयः॥ ३३॥

अतो ज्ञानविवेकेन पुण्येनाथ वरेण च।
पुण्यदेहेन गच्छन्ति परं लोकमनेन तु॥ ३४॥

अनेन त्वद्देहसदृशेन॥ ३४॥

शुष्कपर्णं किलाङ्गारे एतदेवाशु [पतदेवाशु इति पाठः
क्वचिल्लभ्यते] दह्यते।
अयं देहमहंदेहः प्राप्त एव विशीर्यते॥ ३५॥

आतिवाहिकदेहप्राप्तौ वा कथं स्थूलाहंभावनिवृत्तिस्तत्राह - शुष्केति।
अङ्गारे ज्वलदग्नौ पतद्दह्यते एतदेव निदर्शनमिति। अयं स्थूलो देहः
अहंदेहं अहंकारवासनामात्रमयमातिवाहिकदेहं प्राप्त एव सन् विशीर्यते
॥ ३५॥

एतावदेव भवति वरशापविजृम्भितैः।
यथा संचिन्त्य एवाहं तथा स्मृत इति स्मृतिः॥ ३६॥

वरशापावपि प्राक्तनवासनाकर्मानुसारिणावेव तदुद्बोधकतया
प्राणिभिर्लभ्येते इति स्मृतिदृष्टान्तेनाह - एतावदेवेति। यथा
प्रागभ्यस्तेऽपि झटिति संस्कारानुद्बोधात्संचिन्त्ये चिरचिन्तनयोग्ये
अनुवाकाद्यर्थे केनचित्प्रतीकोदाहरणेन स्मारिते सति यथा त्वयाहं
स्मारितस्तथा स स्मृत इति स्मृतिर्भवति तद्वदित्यर्थः॥ ३६॥

यः सर्पप्रत्ययो रज्ज्वां स कथं सर्पकार्यकृत्।
आत्मन्येव हि यो नास्ति तस्य का कार्यकारिता॥ ३७॥

नन्वर्थक्रियाकारी स्थूलो देहः कथं तत्त्वबोधेन बाध्यते इत्याशङ्क्य
तत्त्वदृशा अर्थक्रियैव नास्तीत्याह - य इति। आत्मनि स्वस्वरूपे॥ ३७॥

यस्त्वेतन्मृत इत्येव मिथ्या समनुभूयते।
प्रागभ्यासस्य पुष्टस्य नामैतत्प्रविजृम्भते॥ ३८॥

यद्यसन्नेव देहस्तर्हि कथं मृतोऽयं देह इति सर्वानुभवस्तत्राह -
यस्त्विति। यस्तु भ्रमो मिथ्या मिथ्यार्थः समनुभूयते एतदनुभवनं

30005 पुष्टस्योपचितस्य प्राक्तनाभ्यासस्य संस्कारात् प्रविजृम्भते इत्यर्थः ॥ ३८ ॥
30006
30007 स्वानुभूते जगज्जाले सुगमाः संस्मृतिभ्रमाः ।
30008 नान्यसंकल्पितो नाम सर्गाद्यभ्यास ईदृशः ॥ ३९ ॥
30009
30010 अन्येन वरशापादिप्रदेन हिरण्यगर्भेणेश्वरेण वा सम्यक्कल्पितः
30011 अस्मद्वासनादिनिर्पेक्षतयैव रचित इति न ॥ ३९ ॥
30012
30013 अन्तरनुभूयमानाः
30014 संसृतयो बाह्यभूतजालानाम् ।
30015 अविदितवेद्यद्दशामपि
30016 दूरे पुंसामिवैन्दवं बिम्बम् ॥ ४० ॥
30017
30018 ननु संसारस्यान्तरवासनामयत्वे कथं बाह्यताप्रत्यय इत्याशङ्क्य
30019 दृष्टान्तेन समाधत्ते - अन्तरिति । अविदिततत्त्वदृशामज्ञानामप्यन्तरेव
30020 संसृतयो न बहिः अध्यस्तं द्वितीयमैन्दवं बिम्बं दूरे भासमानमपि
30021 यथा आन्तरभ्रान्तिकल्प्यत्वादान्तरमेव तद्वदित्यर्थः ॥ ४० ॥
30022
30023 इत्यार्षे श्रीवासिष्ठमहारामायणे मोक्षोपाये उत्पत्तिप्रकरणे लीलो०
30024 संसृतिविदितवेद्यं नाम त्रिपञ्चाशः सर्गः ॥ ५३ ॥
30025
30026 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
30027 संसृतिविदितवेद्यं नाम त्रिपञ्चाशः सर्गः ॥ ५३ ॥
30028
30029
30030 चतुःपञ्चाशः सर्गः ५४
30031
30032 श्रिदेव्युवाच ।
30033
30034 तस्माद्ये वेद्यवेत्तारो ये वा धर्मं परं श्रिताः ।
30035 आतिवाहिकलोकांस्ते प्राप्नुवन्तीह नेतरे ॥ १ ॥
30036
30037 नियतिः सर्वभावानां तथात्र मरणक्रमः ।
30038 भोगः कर्मगुणाचारादायुर्मानं च वर्ण्यते ॥ १ ॥
30039
30040 प्रस्तुतप्रश्नोत्तरमुक्तानुवादेनोपसंहरति - तस्मादित्यादिना ।
30041 वेद्यवेत्तारस्तत्त्वज्ञाः । परं योगाभ्यासजम् ॥ १ ॥
30042
30043 आधिभौतिकदेहत्वं मिथ्याभ्रममयात्मकम् ।
30044 कथं सत्ये स्थितिं याति च्छायास्ते कथमातपे ॥ २ ॥
30045
30046 नन्वातिवाहिकब्रह्मादिलोकेष्वप्यत्रेव चिराभ्यासादाधिकदेहत्वोदयः किं न
30047 स्यात्तत्राह - आधिभौतिकेति । अपागादग्नेरग्नित्वं त्रीणि रूपाणीत्येव सत्यं
30048 प्राणा वै सत्यं तेषामेष सत्यः इत्यादिश्रुतिषु स्थूलस्य सूक्ष्मे
30049 त्रिवृत्करणादिना अध्यस्तत्वोक्तेः स्थूलापेक्षया सत्यं आतिवाहिकभावे
30050 पुण्योत्कर्षात्प्राप्ते सतीत्यर्थः ॥ २ ॥
30051
30052 लीला विदितवेद्या नो परमं धर्ममाश्रिता ।
30053 केवलं तेन सा भर्तुः कल्पितं नगरं गता ॥ ३ ॥
30054
30055 ननु तर्हि लीलायाः कथं पद्मप्राप्त्युत्तरमाधिभौतिकदेहत्वोद्भवस्तत्राह
30056 - लीलेति । नो इति नञर्थकमव्ययं देहलीदीपकन्यायेनोभयतः संबध्यते ।

परमं योगजम् ॥ ३ ॥

प्। २५९)

प्रबुद्धलीलोवाच।

एवमेषा प्रयाताऽस्तु भर्ता पश्य ममाम्बिके।
प्रवृत्तः प्राणसंत्यागे कर्तव्यं किमिहाधुना ॥ ४ ॥

देव्युक्तमभ्युपगम्य राजमरणदर्शनसूचितां
जीवननियत्यनियतिमनुपपद्यमानां मन्यमाना लीलोवाच - एवमित्यादिना।
एषा प्रयातेति यदुपवर्णितं तदेवं त्वदुक्तरीत्या अस्तु उपपद्यताम्। भर्ता
प्राणसंत्यागे प्रवृत्तः प्रत्यक्षं पश्य। इहास्मिन्विषये तु अधुना किं
कर्तव्यम्। कात्रोपपत्तिरिति यावत्। मया इदानीं किं कर्तव्यमिति तु न
प्रश्नाशयः प्रश्नान्तरैरसंगतेः उत्तरे कर्तव्यकार्यानुपदेशाच्च ॥ ४ ॥

भावाभावेषु भावानां कथं नियतिरागता।
कथं भूयोऽप्यनियतिर्मृतिजन्मादिसूचिता ॥ ५ ॥

भावानां देहादीनां जीवनसौख्यादिभावेषु दुःखदौर्भाग्याद्यभावेषु
च पूर्वं कथं नियतिरागता भूयः पुनरनियतिरप्यागता कथम् ॥ ५ ॥

कथं स्वभावसंसिद्धिः कथं सत्ता पदार्थगा।
कथमग्न्यादिषूष्णत्वं पृथ्व्यादौ स्थिरता कथम् ॥ ६ ॥

ननु मास्तु नियतिरनियम एवास्तु तत्राह - कथमिति। स्वभावो जलस्य
शैत्यमग्नेरौष्ण्यमेवेत्यादिः। घटादिपदार्थगा सत्ता भावरूपतानियमः ॥
६ ॥

हिमादिषु कथं शैत्यं का सत्ता कालखादिषु।
भावाभावग्रहोत्सर्गस्थूलसूक्ष्मदृशः कथम् ॥ ७ ॥

भावस्य सत्यरजतादेर्ग्रहः संग्रहः अभावस्य शुक्तिरजतादेरुत्सर्गः
भूम्यादेः स्थूलता मन इन्द्रियादेः सूक्ष्मतैवेत्यादिनियमस्य दृशो
दर्शनानि कथम् ॥ ७ ॥

कथमत्यन्तमुच्छ्रायं तृणगुल्मनरादिकम्।
वस्तु नायात्यनिष्टेऽपि स्थिते स्वोच्छ्रायकारणे ॥ ८ ॥

शालतालादिवदत्यन्तमुच्छ्रायमूर्ध्वदैर्घ्यम्। स्वोच्छ्रायकारणे स्थितेऽपि
इष्टे अनिष्टेऽपि सर्वत्रानियमात्सर्ववस्तुष्वनाश्वास एव किं न स्यादिति भावः ॥ ८
।।

श्रीदेव्युवाच।

महाप्रलयसंपत्तौ सर्वार्थास्तमये सति।
अनन्ताकाशमाशान्तं सद्ब्रह्मैवावतिष्ठते ॥ ९ ॥

भवेत्सर्वत्रैवंरूपैव नियतिर्यदि जगत्सत्यैकस्वभावं स्याद्भवेद्वा
अत्यन्तानियतिर्यद्यनृतं मायामात्रप्रकृतिकं
स्यात्सत्यानृतसंवलिताव्यक्तप्रकृतिकत्वात्तु सत्यानृतस्वभावा
भोजकादृष्टानुगुणचिद्विवर्तव्यवस्थयैव व्यवतिष्ठत इति समाधित्सुर्देवी

30109 तदर्थं शुद्धचिद्विवर्तक्रममाह - महाप्रलयेत्यादिना ॥ ९ ॥
30110
30111 तच्चिद्रूपतया तेजःकणोऽहमिति चेतति ।
30112 स्वप्ने संविद्यथा हि त्वमाकाशगमनादि च ॥ १० ॥
30113
30114 तेजःकणशब्देन शुद्धचिद्याप्तत्वाद्भास्वराणि सूक्ष्मभूतान्युच्यन्ते ।
30115 चेतत्यनुभवति ॥ १० ॥
30116
30117 तेजःकणोऽसौ स्थूलत्वमात्मनात्मनि विन्दति ।
30118 असत्यमेव सत्याभं ब्रह्माण्डं तदिदं स्मृतम् ॥ ११ ॥
30119
30120 तेजःकणभूतश्चासावात्मा अनात्मनि आत्मभिन्नत्वेन कल्पिते
30121 जलाद्यावरणेऽन्तःस्थूलत्वं विन्दति कल्पनया लभते तद्यत्स्थूलं तदेवेदं
30122 परिदृश्यमानं ब्रह्माण्डमित्यर्थः ॥ ११ ॥
30123
30124 तत्रान्तर्ब्रह्म तद्वेत्ति ब्रह्मायमहमित्यथ ।
30125 मनोराज्यं स कुरुते स्वात्मैवं तदिदं जगत् ॥ १२ ॥
30126
30127 तत्र ब्रह्माण्डेऽन्तःस्थितं हिरण्यगर्भाख्यं तद्ब्रह्म सह सिद्धं
30128 चतुष्टयमिति प्रागुक्तस्मृतेरन्तर्मुखांशेन ब्रह्माहमिति वेत्ति
30129 बाह्यवासनादूषितांशेनैवं प्राणिकर्मानुगुणसृष्टिसंकल्परूपेण
30130 मनोराज्यं च कुरुते तदेव सत्यसंकल्पं मनोराज्यमिदं जगदित्यर्थः ॥ १२ ॥
30131
30132 तस्मिन्प्रथमतः सर्गे या यथा यत्र संविदः ।
30133 कचितास्तास्तथा तत्र स्थिता अद्यापि निश्चलाः ॥ १३ ॥
30134
30135 संविदः संकल्पवृत्तयो या यथा यादृशनियमानियमरूपाः कचिता
30136 अद्यापि तथैव निश्चला अव्यत्यस्ताः स्थिताः ॥ १३ ॥
30137
30138 यद्यथा स्फुरितं चित्तं तत्तथा ह्यात्मचिद्भवेत् ।
30139 स्वयमेवानियमतस्तत्तत्स्यान्नेह किंचन ॥ १४ ॥
30140
30141 ननु मनसो वैचित्र्याकारवासनामयत्वात्तथा संकल्पोदयेऽप्यात्मचैतन्यस्य
30142 तदनुसारी विवर्तः कुतस्तत्राह - यदिति । स्वयमेवेति । आत्मचितः
30143 स्वच्छोपाध्यनुविधायित्वस्वाभाव्यात् । अतो न किंचिदनियतस्वभावमुत्पद्यत
30144 इत्यर्थः ॥ १४ ॥
30145
30146 न च नाम नकिंचित्त्वं युज्यते विश्वरूपिणः ।
30147 त्यक्त्वा समस्तसंस्थानं हेम तिष्ठति वै कथम् ॥ १५ ॥
30148
30149 मायाशबले ब्रह्मणि अनादिनियतरूपेण स्थितस्यैव विश्वस्य आविर्भावादपि
30150 नियतिसिद्धिरित्याशयेनाह - न चेति । नकिंचित्त्वं सर्ववस्तुशून्यत्वं न
30151 युज्यते प्रलयेऽपीति शेषः । तथा सति कारणत्वव्याघात इत्यर्थान्तरन्यासेन
30152 दर्शयति - त्यक्त्वेति । कटकरुचकपिण्डत्वादिसमस्तसंस्थानं त्यक्त्वा
30153 हेम कथं तिष्ठति सर्वसंस्थानानां तत्रान्तर्भावेन कस्यापि
30154 त्यक्तुमशक्यत्वादित्यर्थः ॥ १५ ॥
30155
30156 सर्गादौ स्वयमेवान्तश्चिद्यथा कचितात्मनि ।
30157 हिमाग्र्यादितयाद्यापि सा तथास्ते स्वसत्तया ॥ १६ ॥
30158
30159 यथा शैत्यौष्ण्यादिस्वभावेन कचिता आविर्भूता सा चित्तथा तेन स्वभावेन
30160 नियता अद्याप्यास्ते इत्यर्थः ॥ १६ ॥

30161
30162 तस्मात्स्वसत्तासंत्यागः सतः कर्तुं न युज्यते ।
30163 यदा चिदास्ते तेनेयं नियतिर्न विनश्यति ॥ १७ ॥
30164
30165 किंच मायाशबलं ब्रह्म यदि स्वाधिष्ठानसत्तां जह्यात्तदा
30166 मायान्तर्गतनियतीनामसत्त्वं भवेत् । तत्त्वशक्यमेवेति दर्शयन्नुपसंहरति
30167 - तस्मादिति । सतो मायाशबलब्रह्मणः । न विनश्यति । नापह्नोतुं शक्येति
30168 यावत् ॥ १७ ॥
30169
30170 यद्यथा कचितं यत्र व्योमरूप्यपि पार्थिवम् ।
30171 सर्गादौ तस्य चलितुमद्ययावन्न युज्यते ॥ १८ ॥
30172
30173 नियत्यविपर्यासे पृथिव्यादिस्थितिरेव निदर्शनमित्याशयेनाह - यदिति ॥ १८ ॥
30174
30175 या यथा चित्प्रकचिता प्रतिपक्षविदं [प्रतिपक्षचितं इत्युभयत्र]
30176 विना ।
30177 न सा ततः प्रचलति वेदनाभ्यासतः स्वयम् ॥ १९ ॥
30178
30179 जीवननियतेर्मरणनियत्या विपर्यासदर्शनादाह - प्रतिपक्षविदं
30180 [१] विनेति ॥ १९ ॥
30181
30182 प्। २६०)
30183
30184 जगदादावनुत्पन्नं यच्चेदमनुभूयते ।
30185 तत्संविद्व्योमकचनं स्वप्नस्त्रीसुरतं यथा ॥ २० ॥
30186
30187 इदं च सर्वं मायिकदृशोक्तं परमार्थदृशा तु जगदेव नास्तीति क्व
30188 नियत्याक्षेप इत्याशयेनाह - जगदिति ॥ २० ॥
30189
30190 असत्यमेव सत्याभं प्रतिभानमिदं स्थितम् ।
30191 इति स्वभावसंपत्तिरिति भूतानुभूतयः ॥ २१ ॥
30192
30193 इतिनिश्चया एव स्वभावसंपत्तिः स्वरूपावाप्तिः । भूतानुभूतयो
30194 यथास्थितबोधा इत्यर्थः । अथवा इति प्राग्वर्णितरीत्या नियतिः
30195 स्वभावसंपत्तिर्भूतानुभूतयो जीवनमरणादिपदार्थानुभवाश्चेत्यर्थः ॥
30196 २१ ॥
30197
30198 सर्गादौ या यथा रूढा संवित्कचनसंततिः ।
30199 साद्याप्यचलितान्येन स्थिता नियतिरुच्यते ॥ २२ ॥
30200
30201 नियतिशब्दार्थपर्यालोचनेऽप्ययमेवार्थः प्रसिद्ध्यतीत्याशयेनाह -
30202 सर्गादाविति । अन्येन विरोधिना । अचलिता अविपर्यस्ता । आवलिता इति पाठे अन्येन
30203 पदार्थान्तरेण आवलिता मिलिता । यथा जन्मजीवने मरणेन मिलिते एव नियते न
30204 स्वातन्त्र्येण । यथा शैत्योष्ण्ये विरोधित्वेनैव मिलिते । क्रियाकारके
30205 साध्यसाधनभावेनेवेत्यर्थः ॥ २२ ॥
30206
30207 गृहीतव्योमसंवित्तिचिद्व्योम व्योमतां गतम् ।
30208 गृहीतकालतासंविच्चिन्नभः कालतां गतम् ॥ २३ ॥
30209
30210 उक्तमर्थमुदाहृत्य दर्शयति - गृहीतेति । गृहीता सर्गादौ स्वीकृता
30211 व्योमसंवित्तिर्व्योमाकारेण कचनं येन चिद्व्योम्ना तत्तथोक्तम् । एवमग्रेऽपि ॥
30212 २३ ॥

गृहीतजलसंवित्तिचिद्व्योम वारिवत्स्थितम् |
स्वप्ने यथा हि पुरुषः पश्यत्यात्मनि वारिताम् || २४ ||

द्रष्ट्रात्मनि दृश्यकल्पना स्वात्मन्येव प्रसिद्धेत्याह - स्वप्ने इति || २४ ||

स्वप्नचित्संविदाभाति भवत्येषा यथास्थिता |
चिच्चमत्कारचातुर्यादसदेतत्समूहते || २५ ||

तथाभावेऽपि यथास्थिता स्वरूपादप्रच्युतैव भवति | तत्कुतः | चिच्चमत्कारः
असङ्गस्वभावता तल्लक्षणाच्चातुर्यात् अथवा चिच्चमत्कारो माया
तच्चातुर्यादसदेव यस्मात्समूहते सत्यतया वितर्कयतीत्यर्थः || २५ ||

खत्वं जलत्वमुर्वीत्वमग्निवायुत्वमप्यसत् |
वेत्त्यन्तः स्वप्नसंकल्पध्यानेष्विव चितिः स्वयम् || २६ ||

मरणानन्तरं कर्मफलानुभवनक्रमम् |
सर्वसंदेहशान्त्यर्थं मृतिश्रेयस्करं शृणु || २७ ||

इत्थमितरनियतीर्व्यवस्थाप्य जीवननियतिरपि कर्मानुसारेण युगभेदेन च
कालविशेषपरिच्छिन्नैवेश्वरसंकल्पेन क्लृप्तेति न मरणेन तद्भङ्ग इति
वक्तुं कर्मफलानुभवक्रमनिरूपणं प्रतिजानीते - मरणानन्तरमिति |
यावन्मरणं प्रारब्धफलैः प्रतिबन्धान्न तद्देहसंचितकर्माणि
फलारम्भाय क्षमन्ते मरणे तु सति प्रतिबन्धकापगमाद्यथायोगं
फलारम्भायोपक्रमन्त इति सूचनाय मरणानन्तरमित्युक्तिः | एतच्छ्रवणं
तव सर्वसंदेहशान्त्यर्थ त्वन्मुखेन लोके विख्यातं
सदन्येषामप्यास्तिक्यबुद्धिजननान्मृतौ श्रेयस्करम् || २७ ||

रूढादिसर्गे नियतिर्यैकद्वित्रिचतुःशता |
पूर्वादिष्वायुषः पुंसां तस्या मे नियतिं शृणु || २८ ||

पूर्वं कृतयुगं तदादिषु युगेषु कलावेकशतं द्वापरे द्विशतं त्रेतायां
त्रिशतं कृते चतुःशतमिति संख्याता पुंसामायुषो या नियतिः सा आदिसर्गे
रूढा तस्या न्यूनाधिकभावेऽप्यावान्तरनियतिं शृण्वित्यर्थः || २८ ||

देशकालक्रियाद्रव्यशुद्ध्यशुद्धी स्वकर्मणाम् |
न्यूनत्वे चाधिकत्वे च नृणां कारणमायुषः || २९ ||

आयुर्निमित्तभूतानां कर्मणां देशाद्यशुद्ध्या वैगुण्ये फलस्य
न्यूनताशुद्ध्यतिशयेन फलाधिक्यमित्यर्थः || २९ ||

स्वकर्मधर्मे ह्रसति ह्रसत्यायुर्नृणामिह |
वृद्धे वृद्धिमुपायाति सममेव भवेत्समे || ३० ||

एवं विहितकर्माननुष्ठानमप्यायुःक्षयहेतुरित्याह - स्वकर्मेति | समं
तत्तद्युगनियतसंख्यम् || ३० ||

बालमृत्युप्रदैर्बालो युवा यौवनमृत्युदैः |
वृद्धमृत्युप्रदैर्वृद्धः कर्मभिर्मृतिमृच्छति || ३१ ||

विहिताकरणमिव निषिद्धाचरणमप्यायुःक्षयहेतुरित्याहवालेति || ३१ ||

यो यथाशास्त्रमारब्धं स्वधर्मनुमतिष्ठति।
भाजनं भवति श्रीमान्स यथाशास्त्रमायुषः॥ ३२॥

एवं कर्मानुसारेण जन्तुरन्त्यां दशामितः।
भवन्त्यन्तं गतवतो दृङ्मर्मच्छेदवेदनाः॥ ३३॥

अन्तमायुःसमाप्तिं गतवतः प्राप्तवतः पुरुषस्य दृश्यन्ते
प्रत्यक्षमनुभूयन्त इति दृशस्तथाविधा मर्मच्छेदवेदना भवन्ति।
सर्वशरीरनाडीभ्यः प्राणानां हृद्युपसंहारकाले
सहस्रवृश्चिकदंशवेदनासमं दुःखं भवतीति पुराणेषु प्रसिद्धम्॥
३३॥

प्रबुद्धलीलोवाच।

मरणं मे समासेन कथयेन्दुसमानने।
किं सुखं मरणं किं वा दुःखं मृत्वा च किं भवेत्॥ ३४॥

वर्णितं मरणदुःखं किं सर्वेषां सममुत केषांचित्सुखमप्यस्ति
मरणोत्तरं च किं सर्वेषां तुल्या गतिरुत योगिनां विशिष्टेति प्रश्नाशयः॥
३४॥

श्रीदेव्युवाच।

त्रिविधाः पुरुषाः सन्ति देहस्यान्ते मुमूर्षवः।
मूर्खोऽथ धारणाभ्यासी युक्तिमान्पुरुषस्तथा॥ ३५॥

प्रश्नाशयानुरूपमेवोत्तरं वक्तुं पुरुषान्विभजते - त्रिविधा इति।
प्राणमनसोर्नाभिहृदयकण्ठभ्रूमध्ये ब्रह्मरन्ध्रान्तेषु नियतकालं
निरोधो धारणा तदभ्यासी। युक्तिमान् स्वेच्छोत्क्रमणे परकायप्रवेशे
स्वाभिमतलोकप्राप्तिमार्गभूतनाडीद्वारा विशेषनिर्गमनप्रवेशादौ
चाभ्यस्तकौशलो योगी॥ ३५॥

अभ्यस्य धारणानिष्ठो देहं त्यक्त्वा यथासुखम्।
प्रयाति धारणाभ्यासी युक्तियुक्तस्तथैव च॥ ३६॥

तत्र धारणानिष्ठो मध्यमः क्रमेण युक्तिमभ्यस्य सुखं प्रयाति।
युक्तियुक्तस्तु तथैव स्थितः सुखं प्रयातीति विशेष इत्यर्थः॥ ३६॥

प। २६१)

धारणा यस्य नाभ्यासं प्राप्ता नैव च युक्तिमान्।
मूर्खः स्वमृतिकालेऽसौ दुःखमेत्यवशाशयः॥ ३७॥

मूर्खं लक्षयंस्तस्य दुःखमाह - धारणेति॥ ३७॥

वासनावेशवैवश्यं भावयन्विषयाशयः।
दीनतां परमामेति परिलूनमिवाम्बुजम्॥ ३८॥

वासनावेशेन वैवश्यमस्वाधीनचित्ततां प्राप्तः अत एव विषयाशयो न
परमार्थाशयः॥ ३८॥

अशास्त्रसंस्कृतमतिरसज्जनपरायणः।

30317 मृतावनुभवत्यन्तर्दाहमग्नाविव च्युतः ॥ ३९ ॥
30318
30319 तत्रापि विहिताकर्तुर्दुःखातिशयमाह - अशास्त्रेति ॥ ३९ ॥
30320
30321 यदा घर्घरकण्ठत्वं वैरूप्यं दृष्टिवर्णजम् ।
30322 गच्छत्येषोऽविवेकात्मा तदा भवति दीनधीः ॥ ४० ॥
30323
30324 तादृशदुःखकालोपलक्षकलिङ्गान्याह - यदेति ॥ ४० ॥
30325
30326 परमान्ध्यमनालोको दिवाप्युदिततारकः ।
30327 साभ्रदिग्मण्डलाभोगो घनमेचकिताम्बरः ॥ ४१ ॥
30328
30329 परमान्ध्यं प्राप्य दिवाप्युदितास्तारका यस्य तथाविधोऽनालोको निष्प्रकाशोऽत
30330 एव घनं मेचकितं श्यामीभूतमम्बरमाकाशं यस्य तथाविधः । साभ्रो
30331 दिङ्गण्डलाभोगो यस्य तथाविध इव भवतीति सर्वत्र शेषः ॥ ४१ ॥
30332
30333 मर्मव्यथाविच्छुरितः प्रभ्रमद्दृष्टिमण्डलः ।
30334 आकाशीभूतवसुधो वसुधाभूतखान्तरः ॥ ४२ ॥
30335
30336 विच्छुरितो व्याप्तः ॥ ४२ ॥
30337
30338 परिवृत्तककुप्चक्र उह्यमान इवार्णवे ।
30339 नीयमान इवाकाशे घननिद्रोन्मुखाशयः ॥ ४३ ॥
30340
30341 परिवृत्तं भ्रमत्ककुप्चक्रं दिङ्गण्डलं यस्य ॥ ४३ ॥
30342
30343 अन्धकूप इवापन्नः शिलान्तरिव योजितः ।
30344 स्वयं जडीभवद्वर्णो विनिकृत्त इवाशये ॥ ४४ ॥
30345
30346 आपन्नः पतितः । योजितः प्रवेशितः । स्वदुःखं वक्तुकामोऽपि
30347 वाक्स्तम्भाज्जडीभवन्त उच्चरितुमशक्या वर्णा अक्षराणि यस्य । आशये
30348 हृदये विनिकृत्तश्छिन्न इव ॥ ४४ ॥
30349
30350 पततीव नभोमार्गात्तृणावर्त इवार्पितः ।
30351 रथे द्रुत इवारूढो हिमवद्गलनोन्मुखः ॥ ४५ ॥
30352
30353 तृणान्यावर्तयतीति तृणावर्तो वात्या तत्रार्पित इव । हिमं तुषारशिला
30354 तद्वद्गलने विलीनतायामुन्मुखः ॥ ४५ ॥
30355
30356 व्याकुर्वन्निव संसारं वान्धवानस्पृशन्निव ।
30357 भ्रमितक्षेपणेनेव वातयन्त्र इवास्थितः ॥ ४६ ॥
30358
30359 संसारशब्देन तद्दुःखं लक्ष्यते । तद्व्याकुर्वन्
30360 स्वात्मानमुदाहृत्यान्येभ्यः प्रख्यापयन्निव । क्षेपणेन
30361 शिलाप्रक्षेपयन्त्रेण ॥ ४६ ॥
30362
30363 भ्रमितो वा भ्रम इव कृष्टो रसनयेव वा ।
30364 भ्रमन्निव जलावर्ते शस्त्रयन्त्र इवार्पितः ॥ ४७ ॥
30365
30366 भ्रमे भ्रमियन्त्रे । रसनया रज्वा कृष्ट आकृष्ट इव ॥ ४७ ॥
30367
30368 प्रोह्यमानस्तृणमिव वहत्पर्जन्यमारुते ।

आरुह्य वारिपूरेण निपतन्निव चार्णवे ॥ ४८ ॥

वहति पर्जन्यमारुते आरुह्य वारिपूरेण सह अर्णवे निपतन्निव ॥ ४८ ॥

अनन्तगगने श्वभ्रे चक्रावर्ते पतन्निव ।
अब्धुर्वीविपर्यासदशामनुभवन्स्थितः ॥ ४९ ॥

उर्वीविपर्यासदृशामनुभवन्नब्धिरिवानवरतं पतन्नित्यौत्प्रेक्षिकोपमा ॥
४९ ॥

पतन्निवानवरतं प्रोत्पतन्निव चाभितः ।
सूत्काराकर्णनोद्भ्रान्तपूर्णसर्वेन्द्रियव्रणः ॥ ५० ॥

सूत्कारो निःश्वासध्वनिः ॥ ५० ॥

क्रमाच्छ्यामलतां यान्ति तस्य सर्वाक्षसंविदः ।
यथास्तं [यथा ह्यस्तंगतरवौ इति पाठः] गच्छति रवौ
मन्दालोकतया दिशः ॥ ५१ ॥

तस्य मूर्च्छोपक्रमे चक्षुराद्युपरममाह - क्रमादिति । तस्य मुमूर्षोः
सर्वा अक्षसंविदः । श्यामलतां मालिन्यम् ॥ ५१ ॥

पूर्वापरं न जानाति स्मृतिस्तानवमागता ।
यथा पाश्चात्यसंध्यान्ते नष्टा दृष्टिर्दिगष्टके ॥ ५२ ॥

तानवं कृशताम् ॥ ५२ ॥

मनः कल्पनसामर्थ्यं त्यजत्यस्य विमोहतः ।
अविवेकेन तेनासौ महामोहे निमज्जति ॥ ५३ ॥

यदैवामोहमादत्ते नादत्ते पवनस्तदा ।
नत्वादत्ते यदा प्राणान्मोहमयात्यलं तदा ॥ ५४ ॥

आमोहमीषन्मूर्च्छाम् । पवनः प्राणो नादत्ते न गृह्णाति । अङ्गानि न
विष्टम्भयतीत्यर्थः । यदा प्राणानप्यसौ नत्वादत्ते न चालयितुं शक्नोति तदा
मोहं गाढमूर्च्छाम् ॥ ५४ ॥

अन्योन्यपुष्टतां यातैर्मोहसंवेदनभ्रमैः ।
जन्तुः पाषाणतामेति स्थितमित्यादिसर्गतः ॥ ५५ ॥

मोहः स्वरूपापरिचयः संवेदनानि विषयवासनाः भ्रमा
अन्यथाप्रतिभासास्तैः । पाषाणतां पाषाणवज्जडताम् । आदिसर्गत आरभ्य इति
एवं नियतं सर्वं [सर्वं स्थितं इति क्वचित्कः पाठः]
स्थितमित्यर्थः ॥ ५५ ॥

प्रबुद्धलीलोवाच ।

व्यथां विमोहं मूर्च्छान्तं भ्रमं व्याधिमचेतनम् ।
किमर्थमयमायाति देहो ह्यष्टाङ्गवानपि ॥ ५६ ॥

शिरःपाणिपादगुह्यनाभिहृदयान्यष्टाङ्गानि तद्वानपि ॥ ५६ ॥

30421 श्रीदेव्युवाच।
30422
30423 एवं संविहितं कर्म सर्गादौ स्पन्दसंविदा।
30424 यद्यस्मिन्समये दुःखं कालेनैतावतेदृशम्॥ ५७॥
30425
30426 स्पन्दसंविदा क्रियाशक्तिप्रधानेनेश्वरेण एवं वक्ष्यमाणरूपं
30427 संकल्पलक्षणं कर्म संविहितम्। यद्यस्मिन्समये बाल्ये यौवने वृद्धत्वे
30428 वा एतावता कालेन भोग्यमीदृशं दुःखं मे मदभिन्नस्य जीवस्य स्यादिति
30429 परेणान्वयः॥ ५७॥
30430
30431 स्यान्मे इत्येव संविश्य गुल्मवत्तत्स्वभावजम्।
30432 वेत्ति चित्तविजृम्भोत्थं नान्यदत्रास्ति कारणम्॥ ५८॥
30433
30434 तत्स्वसंकल्पस्वभावजमेव चित्तपरिकल्पिततरुगुल्मवच्चित्तविजृम्भोत्थं
30435 दुःखं स्वयमेव जीवभावेनोपाधौ संविश्य वेत्ति भुङ्क्ते इत्यर्थः॥ ५८॥
30436
30437 यदा व्यथावशान्नाड्यः स्वसंकोचविकासनैः।
30438 गृह्णन्ति मारुतो देहे तदोज्झति निजां स्थितिम्॥ ५९॥
30439
30440 पृष्टं समाधाय प्रतुतमेवाह - यदेत्यादिना। नाड्यः
30441 प्रतप्तपित्तादिरसपूरितत्वाद्यथासंचलनं
30442 तद्वशात्स्वसंकोचविकासनैर्भुक्तान्नपानरसं वैषम्येण गृह्णन्ति तदा
30443 मारुतः समानवायुर्निजां भुक्तान्नपानादिसमीकरणस्थितिमुज्झत्युत्सृजति॥
30444 ५९॥
30445
30446 प्। २६२)
30447
30448 प्रविष्टा न विनिर्यान्ति गताः संप्रविशन्ति नो।
30449 यदा वाता विनाडीत्वात्तदा स्पन्दात्स्मृतिर्भवेत्॥ ६०॥
30450
30451 यदा नाडीद्वारेषु प्रविष्टा वाता न विनिर्यान्ति निर्गताश्च न प्रविशन्ति तदा
30452 नाडीव्यापारोपरमे विनाडीत्वाच्चक्षुरादेरस्पन्दात्
30453 स्मृतिरेवान्तर्भवेन्नैन्द्रियकं ज्ञानमित्यर्थः॥ ६०॥
30454
30455 न विशत्येव वातो न निर्याति पवनो यदा।
30456 शरीरनाडीवैधुर्यान्मृत इत्युच्यते तदा॥ ६१॥
30457
30458 तच्च नाडीवैधुर्यं प्राणसंचाररोधेन मरणे हेतुरित्याह - न
30459 विशत्येवेति। वातः अपानो देहेन विशत्येव। यदा पवनः प्राणश्च
30460 मुखनासिकाभ्यां न निर्याति तदाऽवश्यं लिङ्गस्योत्क्रमणान्मृत इत्युच्यत
30461 इत्यर्थः॥ ६१॥
30462
30463 आगन्तव्यो मया नाशः कालेनैतावतेति या।
30464 पूर्वसंविदिता संविद्याति तच्चोदिता मृतिम्॥ ६२॥
30465
30466 तत्रापि प्राक्तनचित्संकल्परूपा नियतिरेव हेतुरित्याह - आगन्तव्य इति।
30467 पूर्वसंविदिता प्राक्तनसंकल्पवती। तच्चोदिता। तादृशनियतिप्रेरिता॥ ६२॥
30468
30469 ईदृशेन मयेहेत्थं भाव्यमित्यादि सर्गजा।
30470 संविद्बीजकला नाशं न कदाचन गच्छन्ति॥ ६३॥
30471
30472 ननु तस्या नियतेर्नाशे जगद्व्यवस्था भज्येत तत्राह - संविदिति।

30473 सत्यसंकल्पसंविदो बीजकला तत्संस्कारवती माया सा कदाचिदपि काले न
30474 नश्यति मुक्तौ कालेन सहैव तन्निवृत्तेरिति भावः ॥ ६३ ॥
30475
30476 संविदो वेदनं नाम स्वभावोऽव्यतिरेकवान् ।
30477 तस्मात्स्वभावसंवित्तेर्नान्ये मरणजन्मनी ॥ ६४ ॥
30478
30479 आविद्यकजीवसंवित्स्वरूपपर्यालोचनेऽपि यावन्मोक्षं
30480 जन्ममरणाद्यनिवृत्तिरेवेत्याशयेनाह - संविद इति । अव्यतिरेकवान्
30481 व्यतिरेको विश्लेषस्तदभाववान् ॥ ६४ ॥
30482
30483 क्वचिदावृतिमत्सौम्यं क्वचिन्नद्यां जलं यथा ।
30484 क्वचित्सौम्यं क्वचिज्जीवधर्मेदं चेतनं तथा ॥ ६५ ॥
30485
30486 सांसारिकजीवसंवित्प्रवाहं वर्णयति - क्वचिदिति । यथा नद्यां जलं
30487 क्वचिदावृतिमत् कालुष्यवत् क्वचित्तु सौम्यं स्थिरनिर्मलं तथा इदं
30488 चेतनमपि क्वचित्सौम्यं क्वचित्तु जीवधर्मरागद्वेषादिकलुषमित्यर्थः ॥ ६५ ॥
30489
30490 यथा लतायाः पर्वाणि दीर्घाया मध्यमध्यतः ।
30491 तथा चेतनसत्ताया जन्मानि मरणानि च ॥ ६६ ॥
30492
30493 दूर्वादिलतायाः पर्वाणि ग्रन्थयः ॥ ६६ ॥
30494
30495 न जायते न म्रियते चेतनः [चेतनं पुरुषे क्वचित् इति पाठः]
30496 पुरुषः क्वचित् ।
30497 स्वप्नसंभ्रमवद्भ्रान्तमेतत्पश्यति केवलम् ॥ ६७ ॥
30498
30499 इदं च सर्वमाविद्यकदृशा । परमार्थदृशा त्वाह - न जायत इति । न
30500 जायते म्रियते वा विपश्चित् इत्यादिश्रुतेरित्यर्थः ॥ ६७ ॥
30501
30502 पुरुषश्चेतनामात्रं स [स कदाचिन्न नश्यति इत्यपि पाठः] कदा
30503 क्वेव नश्यति ।
30504 चेतनव्यतिरिक्तत्वे वदान्यत्किं पुमान्भवेत् ॥ ६८ ॥
30505
30506 अमरणधर्मतां तस्य युक्त्याप्युपपादयति - पुरुष इत्यादिना ।
30507 चेतनव्यतिरिक्त एव पुरुष इति पक्षे अन्यत्किं देहः पुरुषो भवेदुत प्राण
30508 उतेन्द्रियाणि किंवा मन उत बुद्धिरुताहंकारचित्ते उत तत्तदधिष्ठातृदेवता
30509 उताविद्या । सर्वेष्वपि पक्षेषु जडैः
30510 पुरुषकार्यप्रकाशाधीनसर्वव्यवहारानिर्वाहात्परिशेषाच्चेतनामात्रमेव
30511 पुरुष इति पक्षः स्थित इत्यर्थः ॥ ६८ ॥
30512
30513 कोऽद्ययावन्मृतं ब्रूहि चेतनं कस्य किं कथम् ।
30514 म्रियन्ते देहलक्षाणि चेतनं स्थितमक्षयम् ॥ ६९ ॥
30515
30516 चेतनस्य तु मरणं न सिध्यति निःसाक्षिकमरणासिद्धेरित्याशयेनाह -
30517 कोऽद्येति । अद्ययावदद्यतनावधिके अनादिसंसारे चेतनं मृतं को
30518 दृष्टवानिति शेषः । एवं किं तन्मरणं विनाश उत देहान्तरप्राप्तिः ।
30519 आद्येऽपि कथं चेतनस्य नाशः किं स्वत उत परतः । नाद्यः । स्वात्मनि
30520 विरोधाभावात् । असङ्गस्य परतस्तदप्रसक्तेरित्यर्थः । द्वितीये त्वाह -
30521 म्रियन्त इति ॥ ६९ ॥
30522
30523 अमरिष्यन्न वै चित्तमेकस्मिन्नेव तन्मृते ।
30524 अभविष्यत्सर्वभावमृतिरेकमृताविह ॥ ७० ॥

अनिष्टप्रसङ्गनेनापि चेतनमरणं वारयति - अमरिष्यदिति। प्रतिदेहं
चेतनभेदे मानाभावात् एको देवः सर्वभूतेषु गूढः
इत्यादिश्रुतेश्चैकस्मिंस्तत् तस्मिंश्चेतने मृते सति तदधीनसत्तास्फूर्तिकं
समष्टिव्यष्टिचित्तं नामरिष्यद्वै। किमर्थे काक्वावैशब्दः
नामरिष्यत्किमित्यर्थः। तस्मिंश्च मृते सति
निरुपादानजगत्सत्ताऽयोगादेकमृतौ सर्वभावमृतिदोषो
नाभविष्यत्किमित्यर्थह्॥ ७०॥

वासनामात्रवैचित्र्यं यज्जीवोऽनुभवेत्स्वयम्।
तस्यैव जीवमरणे नामनी परिकल्पिते॥ ७१॥

के तर्हि प्रतीयमाने जीवनमरणे तत्राह - वासनेति। जीवो जीवनम्॥ ७१॥

एवं न कश्चिन्म्रियते जायते न च कश्चन।
वासनावर्तगर्तेषु जीव लुठति केवलम्॥ ७२॥

उपपादितमुपसंहरति - एवमिति॥ ७२॥

अत्यन्तासंभवादेव दृश्यस्यासौ च वासना।
नास्त्येवेति विचारेण दृढज्ञातैव नश्यति॥ ७३॥

अभिमानेन दृढतरो ज्ञाता अन्तःकरणात्मा नश्यत्येवेत्यर्थः॥ ७३॥

अनुदितमुदितं जगत्प्रबन्धं
भवभयतोऽभ्यसनैर्विलोक्य सम्यक्।
अलमनुदितवासनो हि जीवो
भवति विमुक्त इतीह सत्यवस्तु॥ ७४॥

भवभयतो वैराग्यादिसाधनसंपन्नोऽधिकारिजीवो
गुरुपूर्वकश्रवणाद्यभ्यसनैर्भ्रान्त्या उदितं जगत्प्रबन्धं
परमार्थतोऽनुदितमेवेति सम्यक्तत्त्वदर्शनतो विलोक्य
मूलोच्छेदादलमत्यन्तमनुदितद्वैतवासनः सन् विमुक्तो भवतीति
विमुक्तात्मस्वरूपमेवेह सत्यवस्तु नान्यदित्यर्थः॥ ७४॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलो॰
मरणविचारो नाम चतुःपञ्चाशः सर्गः॥ ५४॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे मरणविचारो
नाम चतुष्पञ्चाशः सर्गः॥ ५४॥

प्। २६३) १६४

पञ्चपञ्चाशः सर्गः ५५

प्रबुद्धलीलोवाच।

यथैव जन्तुर्म्रियते जायते च यथा पुनः।
तन्मे कथय देवेशि पुनर्बोधविवृद्धये॥ १॥

इह जीवस्य संसारगतिवैचित्र्यमुच्यते।
आदिसर्गात्तथेशस्य तत्कर्मानुगुणा स्थितिः॥ १॥

30577
30578 कथितमेव पुनर्विस्तरेण कथयेत्यर्थः। तत्फलं वैराग्यातिशयेन
30579 बोधविवृद्धिः ॥ १ ॥
30580
30581 श्रीदेव्युवाच।
30582
30583 नाडीप्रवाहे विधुरे यदा वातविसंस्थितिम्।
30584 जन्तुः प्राप्नोति हि तदा शाम्यतीवास्य चेतना ॥ २ ॥
30585
30586 प्राणवातानां विसंस्थितिं चलनस्वभावविरुद्धां संस्थितिम्। प्रशान्तिमिति
30587 यावत्। व्यञ्जकान्तःकरणोपाधिविलयाच्छाम्यतीव। एतेभ्यो भूतेभ्यः
30588 समुत्थाय तान्येवानु विनश्यति न प्रेत्य संज्ञास्ति इति श्रुतेरिति भावः ॥ २ ॥
30589
30590 शुद्धं हि चेतनं नित्यं नोदेति न च शाम्यति।
30591 स्थावरे जङ्गमे व्योम्नि शैलेऽग्नौ पवने स्थितम् ॥ ३ ॥
30592
30593 वस्तुतस्तु न क्वापि शाम्यतीत्याह - शुद्धमिति। अविनाशी वा अरे अयमात्मा
30594 अनुच्छित्तिधर्मा इति श्रुतेरिति भावः ॥ ३ ॥
30595
30596 केवलं वातसंरोधाद्यदा स्पन्दः प्रशाम्यति।
30597 मृत इत्युच्यते देहस्तदासौ जडनामकः ॥ ४ ॥
30598
30599 एवं च देहधर्म एव मरणं नात्मधर्म इत्याह - केवलमिति ॥ ४ ॥
30600
30601 तस्मिन्देहे शवीभूते वाते चानिलतां गते।
30602 चेतनं वासनामुक्तं स्वात्मतत्त्वेऽवतिष्ठति ॥ ५ ॥
30603
30604 वाते शरीरवायौ अनिलतां स्वप्रकृतिमहावायुताम्। प्राणस्तु सहतेजसा
30605 प्राज्ञात्मन्येव लीयते। उपाधिविलये जीवोऽपि सह वासनाभिः
30606 परमात्मभावेऽवतिष्ठत इत्याह - चेतनमिति। तथाच श्रुतिः अथास्य प्रयतो
30607 वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम् इति ॥
30608 ५ ॥
30609
30610 जीव इत्युच्यते तस्य नामाणोर्वासनावतः।
30611 तत्रैवास्ते स च शवागारे गगनके तथा ॥ ६ ॥
30612
30613 ननु यदि स्वात्मतत्त्वेऽवतिष्ठते तर्हि मुक्तो ब्रह्मैव स्यादसौ न जीवस्तत्राह ##-
30614 तत्परिच्छिन्नस्य तस्य जीव इति नाम उच्यते नतु वस्तुतो जीवो नाम
30615 ब्रह्मान्योऽस्तीत्यर्थः। अत एव तस्य वासनावशात्स्वस्थान एव
30616 परलोकगमनाद्यध्यासो न वास्तवं गमनाद्यस्तीत्याशयेन
30617 मण्डपाकाशन्यायं स्मारयति - तत्रैवास्त इति ॥ ६ ॥
30618
30619 ततोऽसौ प्रेतशब्देन प्रोच्यते व्यवहारिभिः।
30620 चेतनं वासनामिश्रमामोदानिलवत्स्थितम् ॥ ७ ॥
30621
30622 ततो देहमरणादेव। नन्वसङ्गे कथं वासनास्थितिस्तत्राह - चेतनमिति।
30623 यथा सूक्ष्मतरपुष्परेणुनिष्ठ एवामोदः अनिलस्तु
30624 तत्तादात्म्यसंसर्गाध्यासादामोदमिश्रः स्थितस्तद्वदित्यर्थः ॥ ७ ॥
30625
30626 इदं दृश्यं परित्यज्य यदास्ते दर्शनान्तरे।
30627 स स्वप्न इव संकल्प इव नानकृतिस्तदा ॥ ८ ॥
30628

30629 इदं प्राक्तनं देहादिदृश्यं परित्यज्य देहान्तरादिदर्शनान्तरे यदा आस्ते
30630 तदा स जीवः स्वप्न इव स्वयमेव
30631 स्ववासनामयगमनपरलोकतत्रत्यभोग्यादिनानाकृतिर्भवतीत्यर्थः ॥ ८ ॥
30632
30633 तस्मिंन्नेव प्रदेशेऽन्तः पूर्ववत्स्मृतिमान्भवेत् ।
30634 तदैव मृतिमूर्च्छान्ते पश्यत्यन्यशरीरकम् ॥ ९ ॥
30635
30636 तमेवाध्यासं क्रमेण वक्तुमुपक्रमते - तस्मिन्नेवेति ।
30637 पूर्ववत्प्राग्जन्मवत् ॥ ९ ॥
30638
30639 आत्मन्यस्ति घटापुष्टमन्यस्य व्योम केवलम् ।
30640 आकाशभूतले साकं साकाशशशिवासरम् [शशिचामरम् इति
30641 पाठः] ॥ १० ॥
30642
30643 ननु तस्मिन्नल्पतरे मरणप्रदेशे देहान्तरकल्पनघटनेऽपि कथं
30644 दूरगमनविस्तृतपरलोकादिसमावेशघटनं तत्राह - आत्मनीति ।
30645 पुष्टं विपुलं केवलं व्योम एकं आकाशभूतले द्वे वा
30646 साकाशशशिवासरं ब्रह्माण्डकोटिलक्षं वा साकं युगपदेवान्तर्निविशतु
30647 तथापि आत्मन्यन्यस्य सर्वस्य प्रपञ्चस्य घटा घटनमस्त्येव ।
30648 आत्मनोऽनन्तत्वान्मायायाश्चाघटितघटनासामर्थ्यसत्त्वादित्यर्थः ।
30649 तथाचात्मस्वरूपपर्यालोचनया अल्पप्रदेशेऽपि जगदन्तरसमावेश उक्तो न
30650 तत्प्रदेशमात्रमपेक्ष्येति भावः । अथवा यदि तस्मिन्प्रदेशे
30651 मार्गपरलोकादिकमस्ति तर्ह्यन्येनापि कुतो नोपलभ्यते तत्राह - आत्मनीति ।
30652 आकाशभूतले द्वे साकाशशशिवासरं सर्व जगच्च मृतपुरुषस्यात्मनि
30653 मेघघटेव पुष्टमस्ति अन्यस्य दृशा तु केवलं व्योम
30654 गृहाकाशमेवास्तीति [आस्तीति न दर्शनप्रसक्तिरिति क्वचित्]
30655 दर्शनप्रसक्तिरित्यर्थः ॥ १० ॥
30656
30657 भवन्ति षड्विधाः प्रेतास्तेषां भेदमिमं शृणु ।
30658 सामान्यपापिनो मध्यपापिनः स्थूलपापिनः ॥ ११ ॥
30659
30660 गतिभेदान्वक्तुं प्रेतान्विभजते - भवन्तीति ॥ ११ ॥
30661
30662 सामान्यधर्मा [छन्दोभङ्गोऽत्र आर्षः] मध्यमधर्मा
30663 चोत्तमधर्मवान् ।
30664 एतेषां कस्यचिद्भेदो द्वौ त्रयोऽप्यथ कस्यचित् ॥ १२ ॥
30665
30666 एतेषां मध्ये कस्यचिद्भेदो विशेषः । स कः । कस्यचिद्द्वौ भेदौ । यथा
30667 कंचित्कालं सामान्यपापी तदुत्तरमध्यमपाप्यतिपापी वेति उक्तरीत्या
30668 कस्यचित्त्रयोऽपि क्रमेण व्युत्क्रमेण वा भेदाः ॥ १२ ॥
30669
30670 कश्चिन्महापातकवान्वत्सरं स्मृतिमूर्छनम् ।
30671 विमूढोऽनुभवत्यन्तः पाषाणहृदयोपमः ॥ १३ ॥
30672
30673 तत्र प्रथमं तृतीयस्य गतिमाह - कश्चिदिति । वत्सरं संवत्सरमात्रम् ॥
30674 १३ ॥
30675
30676 ततः कालेन संबुद्धो वासनाजठरोदितम् ।
30677 अनुभूय चिरं कालं नारकं दुःखमक्षयम् ॥ १४ ॥
30678
30679 भुक्त्वा योनिशतान्युच्चैर्दुःखाद्दुःखान्तरं गतः ।
30680 कदाचिच्छममायाति संसारस्वप्नसंभ्रमे ॥ १५ ॥

30681
30682 भुक्त्वेति। तथाच श्रुतिः अथ य इह कपूयचरणा अभ्याशो हयत्ते कपूयां
30683 योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा इति। शमं
30684 महापापफलोपरमम्॥ १५॥
30685
30686 प्। २६४) १६५
30687
30688 अथवा मृतिमोहान्ते जडदुःखशताकुलाम्।
30689 क्षणाद्वृक्षादितामेव हृत्स्थामनुभवन्ति [तत्स्थाम् इति
30690 पाठः] ते॥ १६॥
30691
30692 क्षणादिति। इदं चान्यदृशा॥ १६॥
30693
30694 स्ववासनानुरूपाणि दुःखानि नरके पुनः।
30695 अनुभूयाथ योनीषु जायन्ते भूतले चिरात्॥ १७॥
30696
30697 अथ मध्यमपापो यो मृतिमोहादनन्तरम्।
30698 सशिलाजठरं जाड्यं कंचित्कालं प्रपश्यति॥ १८॥
30699
30700 द्वितीयस्य गतिमाह - अथेति। शिला जठरमिव शिलाजठरम्। जाड्यं
30701 मूर्च्छाम्॥ १८॥
30702
30703 ततः प्रबुद्धः कालेन केनचिद्वा तदैव वा।
30704 तिर्यगादिक्रमैर्भुक्त्वा योनीः संसारमेष्यति॥ १९॥
30705
30706 तदैवेति परदृष्ट्युक्तिः॥ १९॥
30707
30708 मृत एवानुभवति कश्चित्सामान्यपातकी।
30709 स्ववासनानुसारेण देहं संपन्नमक्षतम्॥ २०॥
30710
30711 प्रथमस्य गतिमाह - मृत इति। देहं मनुष्यादिशरीरम्। उभाभ्यामेव
30712 मनुष्यलोकमिति श्रुतेः॥ २०॥
30713
30714 स स्वप्न इव संकल्प इव चेतति तादृशम्।
30715 तस्मिन्नेव क्षणे तस्य स्मृतिरित्थमुदेति च॥ २१॥
30716
30717 चेतति अनुभवति। इत्थं प्रागुक्तदिशा॥ २१॥
30718
30719 ये तूत्तममहापुण्या मृतिमोहादनन्तरम्।
30720 स्वर्गविद्याधरपुरं स्मृत्या स्वनुभवन्ति ते॥ २२॥
30721
30722 षष्ठस्य गतिमाह - ये त्विति। स्मृत्या पुण्यवासनोद्बोधेन॥ २२॥
30723
30724 ततोऽन्यकर्मसदृशं भुक्त्वान्यत्र फलं निजम्।
30725 जायन्ते मानुषे लोके सश्रीके सज्जनास्पदे॥ २३॥
30726
30727 ततो महापुण्यभोगानन्तरम्। अन्यत्किंचिदल्पं पुण्यं पापं वा
30728 संभावितं तत्सदृशं तदनुरूपं फलम्। अन्यत्र
30729 इलावृतकिंपुरुषादिवर्षेषु॥ २३॥
30730
30731 ये च मध्यमधर्माणो मृतिमोहादनन्तरम्।
30732 ते व्योमवायुवलिताः प्रयान्त्योषधिपल्लवम्॥ २४॥

30733
30734 पञ्चमस्य गतिमाह - ये चेति। ओषधिपल्लवं ओषधिपल्लवप्रधानं
30735 नन्दनचैत्ररथादिवनं किन्नरकिंपुरुषयक्षादिशरीरेण प्रयान्तीत्यर्थः ॥ २४
30736 ।।
30737
30738 तत्र चारुफलं भुक्त्वा प्रविश्य हृदयं नृणाम्।
30739 रेतसामधितिष्ठन्ति गर्भे जातिक्रमोचिते ॥ २५ ॥
30740
30741 चारु स्वकर्मफलं भुक्त्वान्ते वायुवृष्ट्यादिद्वारा भूमौ व्रीहियवादिषु
30742 प्रविश्यान्नभूता नृणां ब्राह्मणादीनां हृदयं प्रविश्य रेतसां
30743 निषेके तद्द्वारा स्त्रीणां गर्भे अधितिष्ठन्तीत्यर्थः। अथ य इह रमणीयचरणा
30744 अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन्ब्राह्मणयोनिं वा क्षत्रिययोनिं
30745 वा वैश्ययोनिं वा इति श्रुतेः ॥ २५ ॥
30746
30747 स्ववासनानुसारेण प्रेता एतां व्यवस्थितिम्।
30748 मूर्च्छान्तेऽनुभवन्त्यन्तः क्रमेणैवाक्रमेण च ॥ २६ ॥
30749
30750 एतेन चतुर्थस्यापि गतिरुक्तप्रायैवेति मन्यमान उपसंहरति - स्ववासनेति ॥
30751 २६ ॥
30752
30753 आदौ मृता वयमिति बुध्यन्ते तदनुक्रमात्।
30754 बन्धुपिण्डादिदानेन प्रोत्पन्ना इति वेदिनः ॥ २७ ॥
30755
30756 इदानीं मरणप्रभृति तेषामारोपक्रमं विशिष्य दर्शयति -
30757 आदावित्यादिना। तदनुक्रमाद्दाहदशाहकृत्यक्रमात्प्रोत्पन्ना
30758 निष्पन्नशरीरा इति बुध्यन्त इति सर्वत्रानुषज्यते ॥ २७ ॥
30759
30760 ततो यमभटा एते कालपाशान्विता इति।
30761 नीयमानः प्रयाम्येभिः क्रमाद्यमपुरं त्विति ॥ २८ ॥
30762
30763 एभिर्यमभटैः क्रमात्पाथेयश्राद्धतर्पितः संवत्सरेण यमपुरं
30764 प्रयामीति ॥ २८ ॥
30765
30766 उद्यानानि विमानानि शोभनानि पुनःपुनः।
30767 स्वकर्मभिरुपात्तानि दिव्यानीत्येव पुण्यवान् ॥ २९ ॥
30768
30769 पुण्यवानुत्तमपुण्यवान् ॥ २९ ॥
30770
30771 हिमानीकण्टकश्वभ्रशस्त्रपत्रवनानि च।
30772 स्वकर्मदुष्कृतोत्थानि संप्राप्तानीति पापवान् ॥ ३० ॥
30773
30774 इयं मे सौम्यसंपाता सरणिः शीतशाद्वला।
30775 स्निग्धच्छाया सवापीका पुरःसंस्थेति मध्यमः ॥ ३१ ॥
30776
30777 सौम्यसंपाता पद्भ्यां सुखेन गन्तुं योग्येत्यर्थः। सरणिर्मार्गः।
30778 मध्यमः पुण्यवान् इति बुध्यते ॥ ३१ ॥
30779
30780 अयं प्राप्तो यमपुरमहमेष स भूतपः।
30781 अयं कर्मविचारोऽत्र कृत इत्यनुभूतिमान् ॥ ३२ ॥
30782
30783 अयमहं यमपुरं प्राप्तः। स सर्वलोकप्रसिद्धो यमः। एष पुरःस्थः। अत्र
30784 यमसभायां चित्रगुप्तादिभिर्मम कर्मविचारः कृतः ॥ ३२ ॥

30785

30786 इति प्रत्येकमभ्येति पृथुः संसारखण्डकः |
30787 यथासंस्थितनिःशेषपदार्थाचारभासुरः || ३३ ||
30788

30789 अयं चारोपक्रमः प्रतिपुरुषं स्वप्नवद्भिन्न इत्याह - इतीति | यथा
30790 प्रतीयन्ते तथैव संस्थिताः सत्या इव ये
30791 निःशेषपदार्थास्तदाचारास्तत्तदर्थक्रियाश्च तैर्भासुरः || ३३ ||
30792

30793 आकाश इव निःशून्ये शून्यात्मैव विबोधवान् |
30794 देशकालक्रियादैर्घ्यभासुरोऽपि न किंचन || ३४ ||
30795

30796 स्वरूपदृष्ट्यावलोकने तु न किंचिदात्मातिरिक्तमस्तीत्याह - आकाश इवेति |
30797 निःशून्ये निःस्वरूपे स्थितः प्रपञ्चो देशकालादिदैर्घ्येण भासमानोऽपि न
30798 किंचन किंतु सर्वारोपशून्य आत्मैवेत्यर्थः || ३४ ||
30799

30800 इतिऽयमहमादिष्टः स्वकर्मफलभोजने |
30801 गच्छाम्याशु शुभं स्वर्गमितो नरकमेव च || ३५ ||
30802

30803 अहं यमेन स्वकर्मफलभोजने इतोऽस्यां दिशि आदिष्ट आज्ञप्तः | इतो
30804 यमसभातः || ३५ ||
30805

30806 यः स्वर्गोऽयं मया भुक्तो भुक्तोऽयं नरकोऽथ वा |
30807 इमास्ता योनयो भुक्ता जायेऽहं संसृतौ पुनः || ३६ ||
30808

30809 यो यमेन निर्दिष्टः स्वर्गः अयं मया भुक्तः | ता यमनिर्दिष्टाः
30810 पश्वादियोनय इमाः प्रत्यक्षा मया भुक्ताः | अहं संसृतौ
30811 मनुष्यसंसारे पुनर्जाये सांप्रतं प्रादुर्भवामि || ३६ ||
30812

30813 अयं शालिरहं जातः क्रमात्फलमहं स्थितः |
30814 इत्युदर्कप्रबोधेन बुध्यमानो भविष्यति || ३७ ||
30815

30816 तत्क्रममाह - अयमिति | शालिः शाल्यङ्कुरः |
30817 काण्डपत्रगर्भमञ्जरीक्रमात्फलं भूत्वा अहं स्थितः | ननु
30818 स्वर्गनरकनानायोनिभोग इव व्रीह्यादिभावोऽपि किमस्याऽनुभवसिद्धो नेत्याह
30819 - इत्युदर्केति | उदर्के औत्तरकालिके मनुष्यशरीरे
30820 श्रुतिपुराणादिजन्यप्रबोधेन बुद्ध्यमानोऽयं भविष्यतीत्यर्थः || ३७ ||
30821

30822 प्। २६५) १६५
30823

30824 संसुप्तकरणस्त्वेवं बीजतां यात्यसौ नरे |
30825 तद्बीजं योनिगलितं गर्भो भवति मातरि || ३८ ||
30826

30827 कुतस्तदानीमसौ व्रीह्यादिभावं नानुभवति तत्राह - संसुप्तकरण इति |
30828 शरीराभावात्संमूर्च्छितबाह्यान्तःकरणः | तुशब्द एतद्विशेषसूचनाय |
30829 एवमेवासौ नरे पितृशरीरे भुक्तान्नद्वारा प्रविष्टो बीजतां रेतोभावं याति ||
30830 ३८ ||
30831

30832 स गर्भो जायते लोके पूर्वकर्मानुसारतः |
30833 भव्यो भवत्यभव्यो वा बालको ललिताकृतिः || ३९ ||
30834

30835 पूर्वकर्मानुसारमेव प्रपञ्चयति - भव्य इति | भव्यः
30836 सुखसौभाग्यरोग्यसाधुवृत्तसंपन्नस्तद्विपरीतोऽभव्यः || ३९ ||

30837
30838 ततोऽनुभवतीन्द्वाभं यौवनं मदनोन्मुखम् ।
30839 ततो जरां पद्ममुखे हिमाशनिमिव च्युतम् [च्युताम् इति पाठः] ॥
30840 ४० ॥
30841
30842 इन्द्वाभं चन्द्रवदुपचयापच्यधर्मिणं चलं कान्तं च ॥ ४० ॥
30843
30844 ततोऽपि व्याधिमरणं पुनर्मरणमूर्च्छनाम् ।
30845 पुनः स्वप्नवदायातं पिण्डैर्देहपरिग्रहम् ॥ ४१ ॥
30846
30847 बन्धुदत्तैरौर्ध्वदेहिकपिण्डैः ॥ ४१ ॥
30848
30849 याम्यं याति पुनर्लोकं पुनरेव भ्रमक्रमम् ।
30850 भूयो भूयोऽनुभवति नानायोन्यन्तरोदये ॥ ४२ ॥
30851
30852 इत्याजवं जवीभावमामोक्षमतिभासुरम् ।
30853 भूयो भूयोऽनुभवति व्योम्न्येव व्योमरूपवान् ॥ ४३ ॥
30854
30855 इति उक्तप्रकारं आजवं जवीभावं परिवर्तनम् । जु गतौ इति
30856 धातोराङ्पूर्वात्पचाद्यचि च्विः द्वित्वनुकौ तु
30857 बाहुलकात्पृषोदरादित्वाच्छान्दसत्वाद्वा बोध्यौ ॥ ४३ ॥
30858
30859 प्रबुद्धलीलोवाच ।
30860
30861 आदिसर्गे यथा देवि भ्रम एष प्रवर्तते ।
30862 तथा कथय मे भूयः प्रसादाद्बोधवृद्धये ॥ ४४ ॥
30863
30864 नन्वस्तु त्वंपदार्थे जीवे भ्रान्तिसंभवादयमध्यारोपक्रमस्तत्पदार्थे
30865 त्वीश्वरे भ्रान्त्ययोगात्कथं जगदध्यारोपक्रम इति तत्परिशुद्धिज्ञानाय लीला
30866 पृच्छति - आदिसर्गे इति ॥ ४४ ॥
30867
30868 श्रीदेव्युवाच ।
30869
30870 परमाथघनं शैलाः परमार्थघनं द्रुमाः ।
30871 परमार्थघनं पृथ्वी परमार्थघनं नभः ॥ ४५ ॥
30872
30873 नेश्वरस्य भ्रान्त्या जगदध्यारोपः किंतु स्वतः परमार्थघनरूपस्यैव
30874 स्वतो मायाध्यारोपितरूपेण विवर्तः । अनावृतस्वचैतन्येनाध्यस्तभानं न
30875 च भ्रमः किंतु सत्यत्वेनासत्यप्रतिभासः । ईश्वरस्य सर्वदा
30876 सर्वज्ञत्वात्सर्वार्थप्रतिभासेऽपि स्वरूपाप्रच्युतिबोधबाधितत्वान्न जगति
30877 सत्यताप्रतिभास इति न कश्चिद्दोष इत्यभिप्रेत्य देवी
30878 तत्पदार्थेऽध्यारोपमुपपादयितुमाह - परमार्थघनमित्यादिना ॥ ४५ ॥
30879
30880 सर्वात्मकत्वात्स यतो यथोदेति चिदीश्वरः ।
30881 परमाकाशशुद्धात्मा तत्र तत्र भवेत् तथा ॥ ४६ ॥
30882
30883 उदेति विवर्तते । तथा भवति अस्मद्दृशा न स्वदृशा ॥ ४६ ॥
30884
30885 सर्गादौ स्वप्नपुरुषन्यायेनादिप्रजापतिः ।
30886 यथा स्फुटं प्रकचितस्तथाद्यापि स्थिता स्थितिः ॥ ४७ ॥
30887
30888 स ईश्वर एव स्वप्नकल्पयितृपुरुषन्यायेन जीवसमष्ट्यात्मा

30889 आदिप्रजापतिर्भूत्वा सृज्यसंकल्पात्मना यथा भूरादिलोकात्मना विवर्तेन
30890 प्रकचति तथैवाद्यापि तादृशस्थितिसंकल्पसत्तया स्थितिर्व्यवस्था स्थिता ॥ ४७ ॥
30891
30892 प्रथमोऽसौ प्रतिस्पन्दः पदार्थानां हि बिम्बकम् ।
30893 प्रतिबिम्बितमेतस्माद्यत्तदद्यापि संस्थितम् ॥ ४८ ॥
30894
30895 सांकल्पिकजगत्सत्ताया इयं जगत्सत्ता भिन्नेति पक्षेऽपि
30896 तत्प्रतिबिम्बतुल्यत्वान्मिथ्यैवेत्याह - प्रथममिति । असौ
30897 सांकल्पिकप्रकचनरूपः परिस्पन्दो विवर्तः ॥ ४८ ॥
30898
30899 यन्नाम सुषिरं स्थानं देहानां तद्गतोऽनिलः ।
30900 करोत्यङ्गपरिस्पन्दं जीवतीत्युच्यते ततः ॥ ४९ ॥
30901
30902 तत्र स्थावरजंगमविभागे निमित्तमाह - यन्नामेति द्वाभ्याम् ॥ ४९ ॥
30903
30904 सर्गादावेवमेवैषा जङ्गमेषु स्थिता स्थितिः ।
30905 चेतना अपि निःस्पन्दास्तेनैते पादपादयः ॥ ५० ॥
30906
30907 निःस्पन्दा निश्चेष्टाः ॥ ५० ॥
30908
30909 चिदाकाशोऽयमेवांशं कुरुते चेतनोदितम् ।
30910 स एव संविद्भवति शेषं भवति नैव तत् ॥ ५१ ॥
30911
30912 एवं चेतनाचेतनविभागकल्पनेऽपि निमित्तमाह - चिदाकाश इति । अयं
30913 चिदाकाश ईश्वर एव चेतनाबुद्ध्युपाधिसूत्रावच्छेदात्प्रतिबिम्बनाद्वा
30914 उदितमाविर्भूतमंशमिवांशमौपाधिकं जीवविभागं कुरुते स एवांशः
30915 संविच्चेतनं भवति शेषं त्वध्यारोपितं तच्चेतनं न भवति
30916 किंत्वचेतनमेवेत्यर्थः ॥ ५१ ॥
30917
30918 नरोपाधिपुरं प्राप्तं चेतत्यक्षिपुटं नयत् ।
30919 तत्तस्या नाक्षिचिज्जीवं नो जीवत्येव सर्गतः ॥ ५२ ॥
30920
30921 तस्य बुद्धिद्वारैव स्थूलानुप्रवेशं तत्र चक्षुरादिप्राप्त्या
30922 बाह्यव्यवहारयोग्यतां चाह - नरेति । तद्बुद्ध्यनुप्रविष्टचिदाकाशं
30923 तस्याः बुद्धेर्निमित्तान्नरशरीरादिरूपं द्वितीयं सोपाधिभूतं पुरं
30924 नगरं प्राप्तं प्रविष्टं सत्स्वाधिरूढां बुद्धिमक्षिपुटं
30925 चक्षुरादिगोलकस्थानं नयत् प्रापयत्सच्चाक्षुषादिबुद्धिवृत्तिद्वारा
30926 बाह्यार्थांश्चेतति । ननु चक्षुराद्येव साक्षाच्चिदध्यस्तत्वेन चित्त्वाज्जीवभूतं
30927 शरीरमधिष्ठाय व्यवहरतु किं बुद्ध्युपाधिकजीवकल्पनया नेत्याह -
30928 नाक्षीति । अक्षि चक्षुरुपलक्षितमिन्द्रियजातं स्वयमेव चिच्चेतनं जीवभूतं न ।
30929 कुतः । यतः सर्गतः चित्यध्यारोपमात्रत एव किंचिदपि न जीवति । तथा सति
30930 घटादीनामपि जीवनप्रसङ्गादिति भावः ॥ ५२ ॥
30931
30932 तथा खं खं तथा भूमिर्भूमित्वेनाप्त्ववज्जलम् ।
30933 यद्यथा चेतति स्वैरं तद्वेत्त्येव तथा वपुः ॥ ५३ ॥
30934
30935 बुद्धेरेव जीवोपाधिता नान्यस्येति नियमे तु
30936 सर्ववस्तुशक्तिव्यवस्थापकचित्संकल्प एव हेतुरित्याशयं स्फुटयन्त्याह ##-
30937 सर्वधारणशक्त्या स्थिता । जलं च अप्त्ववत्
30938 सर्वाप्यायनशक्तिमत्स्थितमित्यर्थः । चेतति संकल्पयति ॥ ५३ ॥
30939
30940 प्। २६६) १६६

30941
30942 इति सर्वशरीरेण जंगमत्वेन जंगमम् ।
30943 स्थावरं स्थावरत्वेन सर्वात्मा भावयन् स्थितः ॥ ५४ ॥
30944
30945 भावयन्संकल्पयन्संस्तत्कालमेव तथा निवृत्तः [विवृत्तः इति
30946 पाठः] स्थितः ॥ ५४ ॥
30947
30948 तस्माद्यज्जङ्गमं नाम तत्स्वबोधनरूपवत् ।
30949 तेन बुद्धं ततस्तद्वत्तदेवाद्यापि संस्थितम् ॥ ५५ ॥
30950
30951 यथा भावनसिद्धं तदद्याप्यनुवर्तत एवेत्याह - तस्मादिति द्वाभ्याम् ॥
30952 ५५ ॥
30953
30954 यद्वृक्षाभिधमाबुद्धं स्थावरत्वेन वै पुनः ।
30955 जडमद्यापि संसिद्धं शिलातरुतृणादि च ॥ ५६ ॥
30956
30957 न तु जाड्यं पृथक्किंचिदस्ति नापि च चेतनम् ।
30958 नात्र भेदोऽस्ति सर्गादौ सत्तासामान्यकेन च ॥ ५७ ॥
30959
30960 इत्थं तत्त्वंपदार्थयोरध्यारोपितभेदजातमपवदन्नाह - न त्वित्यादिना ।
30961 चेतनं चिद्विशिष्टं जडम् । अत्र पदार्थजाते सर्ग उत्पत्तिः । आदिपदात्स्थितिनाशौ
30962 तेषु भेदो नास्ति । असतो भेदाश्रयत्वायोगात् । अस्तु तर्ह्यनुगते सद्वस्तुनि स
30963 नेत्याह - सत्तासामान्यके इति ॥ ५७ ॥
30964
30965 वृक्षाणामुपलानां या नामान्तःस्थाः स्वसंविदः ।
30966 बुद्ध्यादिविहितान्येव तानि तेषामिति स्थितिः ॥ ५८ ॥
30967
30968 ननु यदि चिदेकरसमेव सर्वं तर्हि कथं तत्रैव
30969 तद्विरुधजाड्यरूपनामभेदानुभवः सर्वेषामित्याशङ्क्य
30970 तत्तदान्तरप्रत्यक्संविदि अविद्याध्यस्तबुद्धिकृतकल्पनावशादेवेति रहस्यं
30971 प्रथमं स्थावरेषु दर्शयति - वृक्षाणामिति । उपलानां शैलानाम् ।
30972 तानि जाड्यभेदनामरूपाणि । तेषां वृक्षादीनाम् । बुद्ध्यादिभिरेव विहितानि
30973 कल्पितानि न वस्तुत इति परमार्थस्थितिरित्यर्थः ॥ ५८ ॥
30974
30975 विदोन्तःस्थावरादेर्यास्तस्या बुद्ध्यास्तथा स्थितेः ।
30976 अन्याभिधानास्थानार्थाः संकेतैरपरैः स्थिताः ॥ ५९ ॥
30977
30978 उक्तार्थमेव स्पष्टं पुनराह - विद इति । विदः प्रत्यक्संविदः ।
30979 उपाधिकृतभेदाद्बहुवचनम् । तस्याः स्थावरादिबुद्धेस्तथा
30980 स्थावरोऽहमित्यादिव्यवस्थितरूपेणैव स्थितत्वाच्चरेभ्योऽन्ये इत्यभिधानस्य
30981 तथा आस्थानस्य अभिमानस्य च अर्था विषयभूताः सन्तोऽपरैरन्यैर्वृक्षाः
30982 पर्वता इत्यादिशब्दसंकेतैः स्थिताः ॥ ५९ ॥
30983
30984 कृमिकीटपतङ्गानां या नामान्तःस्वसंविदः ।
30985 तान्येव तेषां बुद्ध्यादीन्यभिधार्थानि कानिचित् ॥ ६० ॥
30986
30987 एवं जङ्गमेष्वप्युक्तं रहस्यं दर्शयति - कृमिकीटेति । याः
30988 स्वसंविदस्तान्येव बुद्ध्यादीन्यभिधार्थानि शब्दार्थभूतानि तत्तदन्यानि
30989 जातानीत्यर्थः ॥ ६० ॥
30990
30991 यथोत्तराब्धिजनता दक्षिणाब्धिजनं स्थितम् ।
30992 न किंचिदपि जानाति निजसंवेदनादृते ॥ ६१ ॥

चिति वक्ष्यमाणजाड्यकल्पनस्योक्तार्थस्य चोपपादकं दृष्टान्तमाह -
यथेति। उत्तराब्धितीरस्था जनता जनसमूहः॥ ६१॥

स्वसंज्ञानुभवे लीनास्तथा स्थावरजङ्गमाः।
परस्परं यदा सर्वे स्वसंकेतपरायणाः॥ ६२॥

यथायं दृष्टान्तस्तथा सर्वे स्थावरजङ्गमाः स्वप्रत्यक्साक्षिके अनुभवे
लीनाः पर्यवसन्ना नान्यबुद्धिकल्पितं जानन्तीत्यर्थः। अत एव
समुदितव्यवहारे परस्परसंकेतमपेक्षन्त इत्याह - परस्परमिति॥ ६२॥

यथा शिलान्तःसंस्थानां बहिष्ठानां च वेदनम्।
असज्जडं च भेकानां मिथोऽन्तस्तस्थुषां तथा॥ ६३॥

अत एव सच्चिद्रूपे
ब्रह्मण्यसत्त्वजाड्यवाय्वाकाशादिकल्पनमप्युपपन्नमित्येतदपि
दृष्टान्तेन दर्शयति - यथेति॥ ६३॥

सर्वं सर्वगतं चित्तं चिद्व्योम्ना यत्प्रचेतितम्।
सर्गादौ चोपनं वायुः स इहाद्यापि संस्थितः॥ ६४॥

यथायं दृष्टान्तस्तथा प्रलयकाले मायान्तर्लीनं सर्वात्मकं सर्वगतं
च समष्टिचित्तं जगतः सूक्ष्मावस्थारूपं सर्वप्रत्यग्भूतेन चिद्व्योम्ना
सर्गादौ यद्यद्यथा प्रचेतितं तत्तत्तथा अद्यापि स्थितमित्यर्थः। तदेव
प्रपञ्चयति - चोपनं वायुरित्यादिना। चोपनं स्पन्दनम्॥ ६४॥

चेतितं यत्तु सौषिर्यं तन्नभस्तत्र मारुतः।
स्पन्दात्मेत्यादिसर्गेहाः पदार्थेष्विव चोपनम्॥ ६५॥

सुषिरमेव सौषिर्यं छिद्रम्। तत्र स्पन्दात्मा सर्वक्रियाशक्तिरूपो मारुतः
स्थित इत्यर्थः। इति उक्तलक्षणेन वायुना सर्ववस्तूनां ईहाश्चलनानि। यथा
शुष्कतृणपर्णादिपदार्थेष्वनिलेन चोपनं तद्वत्॥ ६५॥

चित्तं तु परमार्थेन स्थावरे जंगमे स्थितम्।
चोपनान्यनिलैरेव भवन्ति न भवन्ति च॥ ६६॥

अत एव स्थावरजङ्गमयोर्वस्तुतश्चित्तसाम्येऽपि वायुकृतचोपनाचोपनाभ्यां
विशेष इत्याह - चित्तं त्विति। जङ्गमे भवन्ति स्थावरे न भवन्ति च॥ ६६॥

एवं भ्रान्तिमये विश्वे पदार्थाः संविदंशवः।
सर्गादिषु यथैवासंस्तथैवाद्यापि संस्थिताः॥ ६७॥

अस्मिन्नपि नियमे प्राक्तनी नियतिरेव हेतुरित्याह - एवमिति। सर्गादौ आदिसर्गे।
एवं सक्रियत्वेनाक्रियत्वेन वा संविदि अंशवः किरणा इव स्फुरिता अद्यापि
तथैव संस्थिताः॥ ६७॥

यथा विश्वपदार्थानां स्वभावस्य विजृम्भितम्।
असत्यमेव सत्याभं तदेतत्कथितं तव॥ ६८॥

प्रस्तुतं वक्तुं पृष्टप्रसङ्गागतं तत्त्वावबोधनमुपसंहरति -
यथेति॥ ६८॥

31045 अयमस्तं गतः प्रायः पश्य राजा विदूरथः।
31046 मालाशवस्य पद्मस्य पत्युस्ते याति हृद्गतम्॥ ६९॥
31047
31048 प्राय इति वितर्के। अस्तं गतो मृतः सन् पुष्पमालापिहितय शवभूतस्य
31049 पद्मस्य हृद्गतं पद्मकोशं विविक्षुर्याति गच्छति॥ ६९॥
31050
31051 प्रबुद्धलीलोवाच।
31052
31053 केन मार्गेण देवेशि यात्येष शवमण्डपम्।
31054 एनमेवाशु पश्यन्त्यावावां गच्छाव उत्तमे॥ ७०॥
31055
31056 एनं पश्यन्त्यावेव आवां आशु गच्छावो गमिष्यावः॥ ७०॥
31057
31058 श्रीदेव्युवाच।
31059
31060 मनुष्यवासनान्तस्थं मार्गमाश्रित्य गच्छति।
31061 एषोऽहमपरं लोकं दूरं यामीति चिन्मयः॥ ७१॥
31062
31063 मनुष्यवासना पद्मशरीराहंवासना। अन्यथा तत्प्राप्त्ययोगादिति भावः॥ ७१
31064 ।।
31065
31066 मार्गेणैवमनेनैव यावस्तेयेन (?) संमतम्।
31067 परस्परेच्छाविच्छित्तिर्न हि सौहार्दबन्धनी॥ ७२॥
31068
31069 सौहार्द स्नेहस्तेन बन्धनी संबन्धहेतुः॥ ७२॥
31070
31071 प्। २६७) १६६
31072
31073 श्रीवसिष्ठ उवाच।
31074
31075 इति विहितकथागतक्लमायां
31076 परमदृशि प्रसृते विबोधभानौ।
31077 नृपतिवरसुतामनस्युदारे
31078 विगलितचित्तजडो विदूरथोऽभूत्॥ ७३॥
31079
31080 नृपतिवरसुताया लीलाया उदारे विशुद्धे मनसि परमदृशि
31081 परमार्थदृग्रूपे स्वतत्त्वे इति विहितया कथया गतक्लमायां
31082 निरस्तसर्वसंतापे सति विबोधलक्षणे भानौ सूर्ये प्रसृते आविर्भूते सति
31083 विदूरथो विगलितेन कारणे प्राज्ञात्मनि विलीनेन चित्तेन जडः
31084 प्रतिसंधानशून्यो मरणाय मूर्च्छितोऽभूदित्यर्थः॥ ७३॥
31085
31086 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपायेषुत्पत्तिप्रकरणे
31087 लीलो० संसारमरणावस्थावर्णनं नाम पञ्चपञ्चाशः सर्गः॥ ५५॥
31088
31089 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
31090 संसारमरणावस्थावर्णनं नाम पञ्चपञ्चाशः सर्गः॥ ५५॥
31091
31092
31093 षट्पञ्चाशः सर्गः ५६
31094
31095 श्रीवसिष्ठ उवाच।
31096

31097 एतस्मिन्नन्तरे राजा परिवृत्ताक्षितारकः।
31098 बभूवैकतनुप्राणशेषः शुष्कसिताधरः॥ १॥
31099
31100 इह तन्नृपजीवस्य वाअना यमपूर्गतिः।
31101 तयोरनुगमः पूर्वपुरप्राप्तिश्च वर्ण्यते॥ १॥
31102
31103 सर्वेषु करणेषु मूर्च्छितेष्वेकतनुः सूक्ष्मः प्राण एव शेषो देहेऽवशिष्टो
31104 यस्य स तथाविधो बभूव॥ १॥
31105
31106 जीर्णपर्णसवर्णाभः क्षीणपाण्डुमुखच्छविः।
31107 भृङ्गध्वनितसच्छायश्वासकूजाविकूणितः॥ २॥
31108
31109 भृङ्गस्य ध्वनितं ध्वनिस्तत्सच्छायया श्वासकूजया विकूणितो ध्वनितः॥
31110 २॥
31111
31112 महामरणमूर्च्छान्धकूपे निपतिताशयः।
31113 अन्तर्निलीननिःशेषनेत्रादीन्द्रियवृत्तिमान्॥ ३॥
31114
31115 महति मरणमूर्च्छालक्षणे अन्धकूपे निपतित इव निमग्न आशयो मनो यस्य॥
31116 ३॥
31117
31118 चित्रन्यस्त इवाकारमात्रदृश्यो विचेतनः।
31119 निःस्पन्दसर्वावयवः समुत्कीर्ण इवोपले॥ ४॥
31120
31121 तदुत्तरावस्थामाह - चित्रेति। उपले समुत्कीर्णः प्रतिमादिरिव॥ ४॥
31122
31123 बहुनात्र किमुक्तेन तनुदेशेन तं जहौ।
31124 प्राणः पिपतिषुं वृक्षं स्वं पक्षीवान्तरिक्षगः॥ ५॥
31125
31126 तनुदेशेन अल्पेनैव प्रदेशेनोत्क्रान्त्यर्थमाश्रितेन। तं राजदेहं प्राणो
31127 जहौ। स्वं स्वालयभूतं वृक्षम्॥ ५॥
31128
31129 ते तं ददृशतुर्बाले दिव्यदृष्टी नभोगतम्।
31130 जीवं प्राणमयी संविद्गन्धलेशमिवानिले॥ ६॥
31131
31132 ते बाले नभोगतं तं जीवं ददृशतुः। प्राणमयी घ्राणजवृत्त्युपहिता
31133 संवित् अनिले स्थितं गन्धलेशं सूक्ष्मगन्धमिव॥ ६॥
31134
31135 सा जिवसंविद्गगने वातेन मिलिता सती।
31136 खे दूरं गन्तुमारेभे वासनानुविधायिनी॥ ७॥
31137
31138 वातेन आतिवाहिकप्राणेन॥ ७॥
31139
31140 तामेवानुससाराथ स्त्रीद्वयं जीवसंविदम्।
31141 भ्रमरीयुगलं वातलग्नां गन्धकलामिव॥ ८॥
31142
31143 ततो मुहूर्तमात्रेण शान्ते मरणमूर्च्छने।
31144 अम्बरे बुबुधे संविद्गन्धलेखेन वायुना॥ ९॥
31145
31146 संवित् जीवसंवित्। वासनामयदेहेन स्वप्न इव बुबुधे॥ ९॥
31147
31148 अपश्यत्पुरुषान्याम्यान्नीयमानं च तैर्वपुः।

31149 बन्धिपिण्डप्रदानेन शरीरं जातमात्मनः ॥ १० ॥
31150
31151 वपुर्वासनादेहम् । शरीरं स्थूलदेहं और्ध्वदेहिकेन बन्धुपिण्डप्रदानेन
31152 जातमिवापश्यत् ॥ १० ॥
31153
31154 मार्गे कर्मफलोल्लासमतिदूरतरे स्थितम् ।
31155 वैवस्वतपुरं प्राप जन्तुभिः परिवेष्टितम् ॥ ११ ॥
31156
31157 अतिदूरतरे संवत्सरगम्ये दक्षिणमार्गे स्थितं प्राणिकर्मफलान्युल्लासयति
31158 प्रकटयतीति कर्मफलोल्लासं वैवस्वतपुरं यमनगरं प्राप ॥ ११ ॥
31159
31160 प्राप्तं वैवस्वतपुरमादिदेश ततो यमः ।
31161 अस्य कर्माण्यशुभ्राणि नैव सन्ति कदाचन ॥ १२ ॥
31162
31163 आदिदेश आज्ञप्तवान् कर्माणि विमृश्येत्यर्थाद्गम्यते । अशुभ्राणि श्यामानि
31164 । पापानीति यावत् ॥ १२ ॥
31165
31166 नित्यमेवावदातानां कर्तायं शुभकर्मणाम् ।
31167 भावत्याः सरस्वत्या वरेणायं विवर्धितः ॥ १३ ॥
31168
31169 अवदातानां लोभादिदोषाकलुषाणाम् ॥ १३ ॥
31170
31171 प्राक्तनोऽस्य शवीभूतो देहोऽस्ति कुसुमाम्बरे ।
31172 प्रविशत्वेष तं गत्वा त्यज्यतामिति चेतसा ॥ १४ ॥
31173
31174 इति मदुक्तप्रकारानुसारिणा चेतसा चित्तेन भटैरेष त्यज्यताम् । अत्र
31175 लीलासरस्वत्यावन्तर्हिते यमपुरं प्रविष्टे बहिरेव वा तदागमनप्रतीक्षे स्थिते
31176 इत्यर्थाद्गम्यते ॥ १४ ॥
31177
31178 ततस्त्यक्तो नभोमार्गे यन्त्रोपल इव च्युतः ।
31179 अथ जीवकला लीला ज्ञप्तिश्चेति त्रयं नभः ॥ १५ ॥
31180
31181 क्षेपणीयन्त्राच्च्युतो यन्त्रोपल इव नभोमार्गे त्यक्तः ॥ १५ ॥
31182
31183 पुप्लुवे जीवलेखा तु रूपिण्यौ ते न पश्यति ।
31184 तामेवानुसरन्त्यौ ते समुल्लङ्घ्य नभस्तलम् ॥ १६ ॥
31185
31186 राज्ञो जीवलेखारूपिण्यौ रूपवत्यावपि ते ज्ञप्तिलीले न पश्यति । ते तु तां
31187 पश्यत एवेति तुशब्दाल्लभ्यते ॥ १६ ॥
31188
31189 लोअकान्तराण्यतीत्याशु विनिर्गत्य जगद्गृहात् ।
31190 द्वितीयं जगदासाद्य भूमण्डलमुपेत्य च ॥ १७ ॥
31191
31192 जगद्गृहं ब्रह्माण्डं तस्माद्विनिर्गत्य द्वितीयं जगद्ब्रह्माण्डमासाद्य ॥
31193 १७ ॥
31194
31195 ते द्वे संकल्परूपिण्यौ संगते जीवलेखया ।
31196 पद्मराजपुरं प्राप्य लीलान्तःपुरमण्डपम् ॥ १८ ॥
31197
31198 प्। २६८) १६७
31199
31200 क्षणाद्विविशतुः स्वैरं वातलेखा यथाम्बुजम् ।

31201 सूर्यभासो यथाम्भोजं सुरभिः पवनं यथा ॥ १९ ॥
31202
31203 अम्बुजमम्भोजमिति प्रवेशकर्मणः शब्दमात्रभेदेऽपि
31204 प्रवेशकर्त्रोर्वातलेखासूर्यभासोर्भेदादुपमानभेदेन मालोपमेयम् ॥ १९ ॥
31205
31206 श्रीराम उवाच ।
31207
31208 ब्रह्मन्प्राप्तः कथमसौ शवस्य निकटं गृहम् ।
31209 कथं तेन परिज्ञातो मार्गो मृतशरीरिणा ॥ २० ॥
31210
31211 विदूरथलीलाजीवस्य दुहित्रा मार्गप्रदर्शनं प्रागुक्तं राजजीवस्य तु नोक्तमिति
31212 तस्य मार्गपरिज्ञाने संदिहानो रामः पृच्छति - ब्रह्मन्निति ॥ २० ॥
31213
31214 श्रीवसिष्ठ उवाच ।
31215
31216 तस्य स्ववासनान्तःस्थशवस्य किल राघव ।
31217 तत्सर्वं हृद्गतं कस्मान्नासौ प्राप्नोति तद्गृहम् ॥ २१ ॥
31218
31219 पूर्वशरीरवासनायामनपगतायामेव बलवता प्रारब्धेन मध्ये
31220 जन्मान्तरविभावनाद्भोगेन तत्क्षये
31221 पूर्ववासनोद्भवाद्यथागतमार्गास्फुरणोपपत्तिरित्याशयेनाह वसिष्ठः ##-
31222 तथाविधस्य तस्य जीवस्य तन्मार्गादि सर्वं हृद्गतं हृदि स्फुरितम् ॥ २१ ॥
31223
31224 भ्रान्तिमात्रसंख्येयं जगज्जीवकणोदरे ।
31225 वटधानातरुमिव स्थितं को वा न पश्यति ॥ २२ ॥
31226
31227 जीवकणस्य जीवोपाधेः सूक्ष्मस्यान्तःकरणस्योदरे आविर्भूतवासनात्मना
31228 स्थितम् । यथा जीववद्वटधानाभूजलाद्यङ्कुरोदयसामग्रीप्राप्तौ स्वतः
31229 अङ्कुरात्मना जायमानं वटतरुं पश्यति स्वान्तरेवानुभवति तद्वत् ॥ २२ ॥
31230
31231 यथा जीवद्वपुर्बीजमङ्कुरं हृदि पश्यति ।
31232 स्वभावभूतं चिदणुस्त्रैलोक्यनिचयं तथा ॥ २३ ॥
31233
31234 उक्तं दृष्टानं विवृण्वंस्तदेव स्फुटमाह - यथेति ।
31235 त्रैलोक्यनिचयमिति । ज्ञानाज्ञानान्यतरव्यवधानेन सर्वस्य जगतः
31236 साक्षिभास्यत्वमितिसिद्धान्तरहस्यमिति भावः ॥ २३ ॥
31237
31238 नरो यथैकदेशस्थो दूरदेशान्तरस्थितम् ।
31239 संपश्यति निधानं स्वं मनसानारतं सदा ॥ २४ ॥
31240
31241 स्वं स्वीयं निधानं निखातधनं सदा पश्यति मनसा अनारतं
31242 भावयन्निति शेषः । तथाच
31243 विधुरपरिभावितकामिनीसाक्षात्कारवद्भावनाप्रचयबलादपि
31244 तद्दर्शनसिद्धिरिति भावः ॥ २४ ॥
31245
31246 तथा स्ववासनान्तस्थमभीष्टं परिपश्यति ।
31247 जीवो जातिशताढ्योऽपि भ्रमे परिगतोऽपि सन् ॥ २५ ॥
31248
31249 श्रीराम उवाच ।
31250
31251 भगवन्पिण्डदानादिवासनारहिताकृतिः ।
31252 कीदृक्संपद्यते जीवः पिण्डो यस्मै न दीयते ॥ २६ ॥

यत्प्रागुक्तं बन्धुपिण्डप्रदानेन शरीरं जातमात्मनः अपश्यदिति
तस्यासार्वत्रिकत्वं रामः शङ्कते - भगवन्निति। यस्मै पिण्डो न दीयते
तस्य तद्वासनाहेत्वभावात्स वासनारहिताकृतिर्जीवः कीदृक्कथं सशरीरः
संपद्यत इत्यर्थः॥ २६॥

श्रीवसिष्ठ उवाच।

पिण्डोऽथ दीयते मावा पिण्डो दत्तो मयेति चित्।
वासना हृदि संरूढा तत्पिण्डफलभाङ्नरः॥ २७॥

तत्पिण्डफलं शरीरसिद्धिस्तद्भाक्। पिण्डदानादिविधिस्तु बन्धुकृत्यबोधको
वस्तुतो बन्धुफलहेतुरपि मृतवासनाफलसंवादादुभयगामिफलः
प्रसिद्ध इति भावः॥ २७॥

यच्चित्तं तन्मयो जन्तुर्भवतीत्यनुभूतयः।
सदेहेषु विदेहेषु न भवत्यन्यथा क्वचित्॥ २८॥

चित्तमेव हि संसारस्तच्च यत्नेन शोधयेत्। यच्चित्तस्तन्मयो भवति
गुह्यमेतत्सनातनमित्यादिप्रत्यक्षश्रुतयो विद्वदनुभवाश्चेत्यर्थः। सदेहेषु
च योगिषु प्रसिद्धाः। अथवा सदेहेषु जीवत्सु विदेहेषु मृतेषु च जीवेषु
क्वचिदपि अयं नियमोऽन्यथा न भवतीत्यर्थः॥ २८॥

सपिण्डोस्मीति संवित्या निष्पिण्डोपि सपिण्डवान्।
निष्पिण्डोस्मीति संवित्या सपिण्डोपि नपिण्डवान्॥ २९॥

यथाभावनमेतेषां पदार्थानां हि सत्यता।
भावना च पदार्थेभ्यः कारणेभ्य उदेति हि॥ ३०॥

एतावांस्तु शास्त्रकृतो विशेषः। बन्धुभिः पिण्डेषु दत्तेष्ववश्यं
मृतस्य पिण्डदानवासना उद्भवत्येवेत्याशयेनाह - भावना चेति॥ ३०॥

यथा वासनया जन्तोर्विषमप्यमृतायते।
असत्यः सत्यतामेति पदार्थो भावनात्तथा॥ ३१॥

सर्पादिविषमपि गरुडोपासकस्य गरुडाहं भावनया अमृतायते। जीर्यतीति
यावत्। कण्टकादिवेधे सर्पदंशभ्रान्तावसत्योऽपि स तथा सत्यतया भावनात्
सत्यतां मरणाद्यर्थक्रियाकारितां गच्छति॥ ३१॥

कारणेन विनोदेति न कदाचन कस्यचित्।
भावना काचिदपि नो इति निश्चयवान्भव॥ ३२॥

कारणसत्यत्वे हि कार्यसत्यता स्यात्। भावना तु न वस्तुसतीति सत्यकारणेन विना
जातं कार्य नास्त्येवेति शुद्धं ब्रह्मैव वस्तुतोऽस्तीति निश्चयवान्भवेत्यर्थः॥
३२॥

कारणेन विना कार्यमा महाप्रलयं क्वचित्।
न दृष्टं न श्रुतं किंचित्स्वयं त्वेकोदयादृते॥ ३३॥

कारणासत्त्वेऽपि कार्योद्भवः किं न स्यात्तत्राह - कारणेनेति। सर्वथा
कार्यसत्तायाः कारणसत्ताधीनत्वस्यैव प्रमाणैः सिद्धेरित्यर्थः।
ब्रह्मसत्तापि तर्हि किं कारणाधीना नेत्याह - स्वयं त्विति। स्वयं स्वतो

31305 यदेकोदयं नित्यस्वप्रकाशं ब्रह्म तस्माद्दते | अनित्यसत्तायामेव
31306 कारणसत्तापेक्षणादिति भावः || ३३ ||
31307
31308 चिदेव वासना सैव धत्ते स्वप्न इवार्थताम् |
31309 कार्यकारणतां याति सैवागत्येव तिष्ठति || ३४ ||
31310
31311 एवं च शुद्धचिन्मात्रमेव भ्रान्त्या वासना वासनादिजगद्रूपेण भासते इति
31312 यः सिद्धन्तः स प्रतिष्ठित इत्याह - चिदेवेति || ३४ ||
31313
31314 श्रीराम उवाच |
31315
31316 धर्मो नास्ति ममेत्येव यः प्रेतो वासनान्वितः |
31317 तस्य चेत्सुहृदा भूरिधर्मः कृत्वा समर्पितः || ३५ ||
31318
31319 सपिण्डोऽस्मीति संवित्त्येति यत्प्रागुक्तं प्रेतवासनानुसार्येव प्रेतस्य
31320 शरीरारम्भादिफलमिति तत्र करिष्य माणाक्षेपोपयोगितया रामः पृच्छति
31321 - धर्म इति || ३५ ||
31322
31323 प्। २६९) १६७
31324
31325 तत्तदात्र स किं धर्मो नष्टः स्यादुत वा न वा |
31326 सत्यार्था वाप्यसत्यार्था भावना किं बलाधिका || ३६ ||
31327
31328 नष्टः प्रेतवासनाविरोधान्निष्फलः स्याद्वा उत सुहृद्वासनाप्राबल्यान्न वा
31329 निष्फल इत्यर्थः | तत्र सुहृद्वासनाधर्मसत्वात्सत्यार्था |
31330 प्रेतवासनात्वसत्यार्था | तत्र वासनायां प्राबल्ये किं भोक्तृनिष्ठता
31331 प्रयोजिका उत सत्यार्थता | आद्ये कृतहानदोषः | द्वितीये त्वर्थसत्यता स्यादिति
31332 पूर्वोक्तव्याघात इत्युभयतस्पाशा रज्जुरित्याशयः || ३६ ||
31333
31334 श्रीवसिष्ठ उवाच |
31335
31336 देशकालक्रियाद्रव्यसंपत्त्योदेति भावना |
31337 यत्रैवाभ्युदिता सा स्यात्स द्वयोरधिको जयी || ३७ ||
31338
31339 शास्त्रोक्ते देशे काले यथोक्तानुष्ठानेन शास्त्रानुसारिणी सुहृद्वासना
31340 शास्त्रप्रामाण्यात्प्रबला | प्रेतवासना तु केवललौकिकत्वाद्दुर्बलेति शास्त्रमेव
31341 प्राबल्यप्रयोजकं नार्थसत्यत्वमिति गूढाभिसंधिर्वसिष्ठ समाधत्ते -
31342 दशेति | यत्रैव फलरूपे विषये सा अभ्युदिता स विषयो जयी | स एव भवतीत्यर्थः
31343 || ३७ ||
31344
31345 धर्मदातुः प्रवृत्ता चेद्वासना तत्तया क्रमात् |
31346 आपूर्यते प्रेतमतिर्न चेत्प्रेतधियाशुभा || ३८ ||
31347
31348 धर्मदानशास्त्रबलात्प्रेतान्तःकरणे वा तत्काले तादृशधर्मवानहमिति
31349 वासनोत्पत्तिः कल्प्यत इत्याह - धर्मदातुरिति | अवश्यं च शास्त्रबलादेव
31350 प्रेतस्य फललाभ इति वाच्यम् | पाषण्डस्य तस्य [तस्य इति पदं क्वचिन्न
31351 पठ्यते] वेदप्रद्वेषनास्तिकत्वाद्यशुभवासनादूषितधियः
31352 सुहृद्भिर्धर्मदानेऽपि तत्फलाप्राप्तेरित्याशयेनाह - न चेदिति |
31353 प्राबल्यस्यार्थसत्यत्वप्रयुक्तत्वे तस्यापि धर्मफलापत्तिरिति भावः || ३८ ||
31354
31355 एवं परस्परजयाज्जयत्यत्रातिवीर्यवान् |
31356 तस्माच्छुभेन यत्नेन शुभाभ्यासमुदाहरेत् || ३९ ||

31357
31358 अत एव प्रज्ञया पुरुषप्रयत्नप्राबल्यं प्रसाध्य शुभाभ्यास एव सदा
31359 कार्य इत्युक्तमित्याशयेनाह - एवमिति || ३९ ||
31360
31361 श्रीराम उवाच |
31362
31363 देशकालादिना ब्रह्मन्वासना समुदेति चेत् |
31364 तन्महाकल्पसर्गादौ देअशकालादयः कुतः || ४० ||
31365
31366 यदि देशकालादिकारणसहकारिसंपत्त्या धर्मतद्वासनोदयोऽभ्युपगम्यते
31367 तर्हि सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् इति श्रुतेरादिसर्गे
31368 देशकालादिसहकार्यभावाद्वासनोत्पत्त्ययोगात्तन्मयजगदुत्पत्तिरेव न
31369 स्यात्तथा च तदैक्षत बहु स्यां प्रजायेय इत्याद्युत्तरश्रुतिविरोध इत्याशयेन
31370 रामः शङ्कते - देशेति || ४० ||
31371
31372 कारणे समुदेतीदं तैस्तदा सहकारिभिः |
31373 सहकारिकारणानामभावे वासना कुतः || ४१ ||
31374
31375 तदा वासना कुतः | कारणे सति हि इदं वासनादिकार्यं समुदेति || ४१ ||
31376
31377 श्रीवसिष्ठ उवाच |
31378
31379 एवमेतन्महाबाहो सत्यात्मन्न कदाचन |
31380 महाप्रलयसर्गादौ देशकालौ न कौचन || ४२ ||
31381
31382 इष्टमेवेदं त्वया मां प्रत्यापादितम् | न निरोधो न चोत्पत्तिः
31383 तदेतद्ब्रह्मापूर्वमनपरमस्थूलमनण्वह्रस्वम् अथार आदेशो नेति नेति
31384 यत्तदद्रेश्यमग्राह्यम् यत्र नान्यत्पश्यति नान्यच्छृणोति इत्यादिश्रुतिशतस्य
31385 तत्रैव तात्पर्यदर्शनान्महता च प्रयत्नेनास्यैवार्थस्य बुबोधयिषितत्वाच्च
31386 सोऽकामयत इत्यादिसृष्टिश्रुतीनामपि
31387 प्रतीयमानद्वैतानृतत्वोपपादनेनोपक्रान्तभुक्तिफलकनिष्प्रपञ्चात्मव्युत्
31388 आदन एव तात्पर्येण सृष्ट्यादौ तात्पर्याभावादित्याशयेनानुमोदमानो
31389 वसिष्ठ उवाच - एवमेतदित्यादिना | महाप्रलयरूपे सर्गस्यादौ पूर्वभूते
31390 सत्यात्मन् परमार्थसत्ये आत्मनि | सुपां सुलुक् इति छान्दसे ङिलुकि न
31391 ङिसंबुद्ध्योः इति नलोपप्रतिषेधः || ४२ ||
31392
31393 सहकारिकारणानामभावे सति दृश्यधीः |
31394 नेयमस्ति न चोत्पन्ना न च स्फुरति काचन || ४३ ||
31395
31396 दृश्यस्यासंभवादेव किंचिद्यद्दृश्यते त्विदम् |
31397 तद्ब्रह्मैव स्वचिद्रूपं स्थितमित्थमनामयम् || ४४ ||
31398
31399 एतच्चाग्रे युक्तिशतैः कथयिष्याम एव ते |
31400 एतदर्थं प्रयत्नोऽयं वर्तमानकथां शृणु || ४५ ||
31401
31402 एवं ददृशतुः प्राप्ते मन्दिरं सुन्दरोदरम् |
31403 कीर्णं पुष्पोपहारेण वसन्तमिव शीतलम् || ४६ ||
31404
31405 एवं प्राग्वर्णितरीत्या पद्मनगरं प्राप्ते ज्ञप्तिलीले पद्ममन्दिरं
31406 ददृशतुः || ४६ ||
31407
31408 प्रशान्ताचारसंरम्भराजधान्या समन्वितम् |

मन्दारकुन्दमाल्यादिशवं तत्र समं स्थितम् ॥ ४७ ॥

प्रशान्तराजकार्याचरणसंरम्भया राजधान्या लक्षणया
राजधानीस्थजनेन तत्र गृहे तैर्जनैः समं साकं स्थितं
मन्दारकुन्दमाल्यादिपिहितं शवं च ददृशतुरित्यत्रोत्तरत्र चानुकृष्यते ॥
४७ ॥

मन्दारकुन्दस्रग्दामवृताम्बरबृहच्छवम् ।
शवशय्याशिरःस्थाग्र्यपूर्णकुम्भादिमङ्गलम् ॥ ४८ ॥

अनिवृत्तगृहद्वारगवाक्षकठिनार्गलम् ।
प्रशाम्यद्दीपकालोकश्यामलामलभित्तिकम् ।
गृहैकदेशसंसुप्तमुखश्वाससमीकृतम् ॥ ४९ ॥

पुनस्तद्गृहमेव वर्णयति - अनिवृत्तेत्यादिना । अनिवृत्तन्यनुद्घाटितानि
बृहद्द्वारगवाक्षाणां कठिनार्गलानि दृढविष्कम्भा यत्र ।
प्रशाम्यन्मलिनीभवन्यो दीपकानामालोकस्तेन श्यामला मलिना
वस्तुतस्त्वमला भित्तयो यस्य ॥ ४९ ॥

संपूर्णचन्द्रसकलोदयकान्तिकान्तं
सौन्दर्यनिर्जितपुरन्दरमन्दिरर्द्धि ।
वैरिञ्चपद्ममुकुलान्तरचारुशोभं
निःशब्दमन्दमिव निर्मलमिन्दुकान्तम् ॥ ५० ॥

बहिः संपूर्णचन्द्रस्य कलासहितेनोदयेन प्रकाशितत्वात्कान्तम् । अन्तस्तु
वैरिञ्चस्य विरिञ्चालयस्य भगवन्नाभिपद्ममुकुलस्य आन्तरं गर्भ इव
चारुशोभा यस्य । निःशब्दतया मन्दं मूकमिव स्थितम् । इन्दुरिव कान्तं
रम्यं गृहं ददृशतुरित्यर्थः ॥ ५० ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्र० लीलो०
मरणशयनानन्तरप्रेतव्यवस्था नाम षट्पञ्चाशः सर्गः ॥ ५६ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
मरणशयनानन्तरप्रेतव्यवस्था नाम षट्पञ्चाशः सर्गः ॥ ५६ ॥

प। २७०) १६८

सप्तपञ्चाशः सर्गः ५७

श्रीवसिष्ठ उवाच ।

ततो ददृशतुस्तत्र शवशय्यैकपार्श्वगाम् ।
लीलां विदूरथस्याग्रे मृतां ते प्रथमागताम् ॥ १ ॥

लीलान्तरेक्षा लीलाया देहमिथ्यात्वमुच्यते ।
योगिनां च शरीरस्य आतिवाहिकतोदयः ॥ १ ॥

अग्रे पूर्व मृतां विदूरथस्य लीलां ते ज्ञप्तिलीले ददृशतुः ॥ १ ॥

प्राग्वेषां प्राक्समाचारां प्राग्देहां प्राकसवासनाम् ।
प्राक्तनाकारसदृशीं सर्वरूपाङ्गसुन्दरीम् ॥ २ ॥

31461
31462 प्राग्वेषत्वादौ हेतुः - प्राक्सवासनामिति [स्ववासनां इति पाठः]
31463 ॥ २ ॥
31464
31465 प्राग्रूपावयवस्पन्दां प्रागम्बरपरीवृताम् ।
31466 प्रागभूषणभरच्छन्नां केवलं तत्र संस्थिताम् ॥ ३ ॥
31467
31468 केवलं तत्र पद्मगृहे संस्थिताम् । तत्र स्थितिमात्रमपूर्वमन्यत्सर्व
31469 पूर्वतनमेवेत्यर्थः ॥ ३ ॥
31470
31471 गृहीतचामरां चारु वीजयन्तीं महीपतिम् ।
31472 उद्यच्चन्द्रामिव दिवं भूषयन्तीं महीतलम् ॥ ४ ॥
31473
31474 मौनस्थां वामहस्तस्थवदनेन्दुतया नताम् ।
31475 भूषणांशुलतापुष्पैः फुल्लामिव वनस्थलीम् ॥ ५ ॥
31476
31477 भूषणानामंशुभिः किरणैः । पत्रलताभिः पुष्पैश्च फुल्लां
31478 वनस्थलीमिव स्थिताम् ॥ ५ ॥
31479
31480 कुर्वाणां वीक्षितैर्दिक्षु मालत्युत्पलवर्षणम् ।
31481 सृजन्तीमात्मलावण्यादिन्दुमिन्दुं नभोदितम् ॥ ६ ॥
31482
31483 इन्दुमिन्दुमिति वीप्सा । सर्वानिन्दून् आत्मलावण्यात्सृजन्तीमिवेत्युत्प्रेक्षा ।
31484 नभोदितमिति संधिरार्षः । नभसि दितं क्षयेण खण्डितं पुनः सृजन्तीमिति
31485 वा ॥ ६ ॥
31486
31487 नरपालात्मनो विष्णोर्लक्ष्मीमिव समागताम् ।
31488 उदितां पुष्पसंभारादिव पुष्पाकरश्रियम् ॥ ७ ॥
31489
31490 भर्तुर्वदनके न्यस्तदृष्टिमिष्टविचेष्टिताम् ।
31491 किंचित्प्रम्लानवदनां म्लानचन्द्रां निशामिव ॥ ८ ॥
31492
31493 ताभ्यां सा ललना दृष्टा तया ते तु न लक्षिते ।
31494 यस्मात्ते सत्यसंकल्पे सा न तावत्तथोदिता ॥ ९ ॥
31495
31496 तथा सत्यसंकल्पतया सा नोदिता नाविर्भूता ॥ ९ ॥
31497
31498 श्रीराम उवाच ।
31499
31500 तस्मिन्प्रदेशे सा पूर्वलीला संस्थाप्य देहकम् ।
31501 ध्यानेन ज्ञप्तिसहिता गताभूदिति वर्णितम् ॥ १० ॥
31502
31503 लीलाया आवश्यकं प्राक् त्यक्तस्वशरीरान्वेषणं विहाय
31504 विदूरथलीलादर्शनमेव प्रथमं कुतो वर्णितमिति संदेहाद्रामः पृच्छति
31505 - तस्मिन्निति ॥ १० ॥
31506
31507 किमिदानीं स लीलाया देहस्तत्र न वर्णितः ।
31508 किंसंपन्नः क्व वा यात इति मे कथय प्रभो ॥ ११ ॥
31509
31510 श्रीवसिष्ठ उवाच ।
31511
31512 क्वासील्लीलाशरीरं तत्कुतस्तस्यास्ति सत्यता ।

31513 केवला भ्रान्तिरेवाभूज्जलबुद्धिर्मराविव ॥ १२ ॥
31514
31515 आतिवाहिकताबुद्ध्युदयेन तत्त्वावबोधेन च बाधितत्वादेव लीलायाः
31516 स्वदेहदर्शनं नच वर्णितम् । येषां त्वज्ञानां दृष्ट्या न बाधितं
31517 तद्दृष्ट्योत्तरसर्गे तद्देहमरणदाहादि वक्ष्यते इति वक्ष्यमाणं निगूह्य
31518 तत्त्वावबोधनाय तन्मिथ्यात्वमेव प्रपञ्चयन् वसिष्ठ उवाच -
31519 क्वासीदित्यादिना ॥ १२ ॥
31520
31521 आत्मैवेदं जगत्सर्वं कुतो देहादिकल्पना ।
31522 ब्रह्मैवानन्दरूपं सद्यत्पश्यसि तदेव चित् ॥ १३ ॥
31523
31524 यथैव बोधे लीलासौ परिणाममिता [परिणाममुपागता इति
31525 पाठष्टीकानुगुणः स्यात्] क्रमात् ।
31526 परे तथैव तस्मात्तद्धिमवद्गलितं वपुः ॥ १४ ॥
31527
31528 यथा येन क्रमेणैव परिणामं परिपाकलक्षणं उपागता प्राप्ता तथा तेन
31529 क्रमेणैव । तस्माद्बोधात्परे ब्रह्मणि । गलितं बाधितम् ॥ १४ ॥
31530
31531 (आतिवाहिकदेहस्य [क्वाचित्कमिदं धनुशिह्नान्तर्गतं
31532 पद्यम्] कालेनाभ्युदितो भ्रमः ।
31533 आधिभौतिकदेहोऽहमिति रज्जुभुजंगवत् ॥ १ ॥)
31534
31535 आतिवाहिकदेहेन दृश्यं यदवलोकितम् ।
31536 भूम्यादि नाम तस्यैव कृतं तच्चाधिभौतिकम् ॥ १५ ॥
31537
31538 न केवलं स्वदेहस्याधिभौतिकत्वं गलितं किंतु भूम्यादिसर्ववस्तूनामपि ।
31539 अपागादग्नेरग्नित्वं त्रीणि रूपाणीत्येव सत्यम् इति श्रुत्या तेषामपि
31540 स्थौल्यबाधेन आतिवाहिकत्वपरिशेषणादित्याशयेनाह - आतिवाहिकेति ।
31541 आतिवाहिकताबुद्ध्या सूक्ष्मतमसमष्टिमनोमात्रत्वबुद्ध्या तत्त्वदृशा तया
31542 यद्दृश्यमवलोकितं तस्यैव प्राग्भ्रान्त्या भूम्यादिनामकृतं स्थितं
31543 तदेव आधिभौतिकम् ॥ १५ ॥
31544
31545 वास्तवेन तु रूपेण भूम्याद्यात्माधिभौतिकः ।
31546 न शब्देन न चार्थेन सत्यात्मा शशशृङ्गवत् ॥ १६ ॥
31547
31548 अतो न वस्तुत आधिभौतिकं नाम किंचिदस्तीत्याह - वास्तवेनेति ॥ १६ ॥
31549
31550 पुंसो हरिणकोऽस्मीति स्वप्ने यस्योदिता मतिः ।
31551 स किमन्विष्यति मृगं स्वमृगत्वपरिक्षये ॥ १७ ॥
31552
31553 तथाच बाधितस्यान्वेषणप्रसक्तिरेव नास्तीत्याह - पुंस इति ॥ १७ ॥
31554
31555 उदेत्यसत्यमेवाशु तथा सत्यं विलीयते ।
31556 भ्रान्तिर्भ्रमवतो रज्ज्वामपि सर्पभ्रमे गते ॥ १८ ॥
31557
31558 यथा भ्रमतः असत्यमेवोदेति लीयते च तथा भ्रमे गतेऽपि उदेति किमिति काक्वा
31559 योज्यम् ॥ १८ ॥
31560
31561 समस्तस्याप्रबुद्धस्य मनोजातस्य कस्यचित् ।
31562 बीजं विना मृषैवेयं मिथ्यारूढिमुपागता ॥ १९ ॥
31563
31564 तथाचाज्ञमनःसमष्टिकल्पित आधिभौतिकप्रपञ्च इति फलितमित्याह -

31565 समस्तस्येति। जातशब्दः समूहवचनः। इयमेतद्ब्रह्माण्डगतस्थूलभ्रान्तिः
31566 प्रतिब्रह्माण्डभिन्नानन्ताज्ञमनोजातानां मध्ये कस्यचिन्मनोजातस्य
31567 मिथ्यारूढिं वृथाप्रसिद्धिमुपागता मृषैवेत्यर्थः॥ १९॥
31568
31569 प्। २७१) १६८
31570
31571 स्वप्नोपलम्भं सर्गाख्यं स सर्वोऽनुभवन्स्थितः।
31572 चिरमावृत्तदेहात्मा भूचक्रभ्रमणं यथा॥ २०॥
31573
31574 स सर्वोऽज्ञश्चिरं आगमापायेन आवृत्तदेह एवात्मा यस्य स तथाविधः सन्
31575 बालो यथा भूचक्रभ्रमणमनुभवति तद्वत्॥ २०॥
31576
31577 श्रीराम उवाच।
31578
31579 ब्रह्म&ल्लोकैः पुरस्थस्य गच्छतो योगिनो निजम्।
31580 आतिवाहिकतां देहः कीदृशोऽयं विलोक्यते॥ २१॥
31581
31582 ननु योगिदेहस्याधिभौतिकत्वं यदि नास्ति तर्हि तस्य पुरस्थस्य जीवतो निजं
31583 स्वात्मरूपं गच्छतो मृतस्य वा आतिवाहिकतां प्राप्तो देहो
31584 लोकैर्जनैर्विलोक्यते अयं कीदृशः। नहि आतिवाहिको लोकैर्द्रष्टुं शक्यो
31585 मुक्तिकाले परिशिष्यते वेति रामप्रश्नार्थः॥ २१॥
31586
31587 श्रीवसिष्ठ उवाच।
31588
31589 देहाद्देहान्तरप्राप्तिः पूर्वदेहं विना सदा।
31590 आतिवाहिकदेहेऽस्मिन्स्वप्नेष्विव विनश्वरी॥ २२॥
31591
31592 योगिनां द्विविधं मरणम्। एकं प्रारब्धभोगायैच्छिकं
31593 नानादेहकल्पनम्। अपरं सर्वप्रारब्धक्षये विदेहकैवल्यम्। तत्राद्ये तावन्न
31594 पूर्वशेषोऽस्तीत्याह - देहादिति। यथा स्वप्नेषु आतिवाहिकदेहे एकं
31595 मृगादिभावं त्यक्त्वा अपरमनुष्यादिभावकल्पना पूर्वदेहपरिशेषं
31596 विनैव विनश्वरी अनित्या तद्वदित्यर्थः॥ २२॥
31597
31598 यथातपे हिमकणः शरद्व्योम्नि सितोऽम्बुदः।
31599 दृश्यमानोऽप्यदृश्यत्वमित्येवं योगिदेहकः॥ २३॥
31600
31601 द्वितीयेऽपि स नास्तीति सदृष्टान्तमाह - यथेति। तथाच
31602 शरन्मेघादिवन्मन्दं क्षीयमाणे तस्मिन्कंचित्कालं परिशेषभ्रम
31603 इत्यर्थः॥ २३॥
31604
31605 द्रागित्येवाथवा कश्चिद्योगिदेहो न लक्ष्यते।
31606 योगिभिश्च पुरो वेगात्प्रोड्डीन इव खे खगः॥ २४॥
31607
31608 मन्दं क्षीयते अवश्यं परैर्दृश्यते इत्यपि न नियमः केषांचित्सद्यो
31609 विनाशसंकल्पेन तथैव नाशसंभवादित्याह - द्रागिति। अन्यैर्योगिभिश्च
31610 न लक्ष्यते किं पुनह् पृथग्जनैरित्यर्थः। तथाच जीवद्दशायामपि
31611 जनैस्तद्देहदर्शनमेते मामित्थं पश्यन्त्विति तदीयसत्यसंकल्पवशादेव न
31612 देहस्याधिभौतिकत्ववशादिति भावः॥ २४॥
31613
31614 स्ववासनाभ्रमेणैव क्वचित्केचित्कदाचन।
31615 मृतोऽयमिति पश्यन्ति केचिद्योगिनमग्रगाः॥ २५॥
31616

31617 अथवा योगिनां स्वदृष्ट्या स्वदेहस्यातिवाहिकत्वानुभवेऽपि
31618 तदुपभोजकादृष्टसहकृताज्ञजनवासनया तस्य
31619 भौतिकत्वमरणादिकल्पनसंभवान्न कश्चिद्विरोध इत्याशयेनाह -
31620 स्ववासनेति। केचिदग्रगाः क्वचिन्मृतोऽयमिति पश्यन्ति क्वचित्तु केचिद्योगिनं
31621 जीवन्तं पश्यन्तीत्यर्थः। अत एव हि प्राग्विदेहमुक्तस्यापि शुकस्य
31622 परीक्षित्सभायां पुनर्दर्शनं भागवतोपदेशादिकं च न विरुध्यत इति
31623 बोध्यम्॥ २५॥
31624
31625 भ्रान्तिमात्रं तु देहात्मा तेषां तदुपशाम्यति।
31626 सत्यबोधेन रज्जूनां सर्पबुद्धिरिवात्मनि॥ २६॥
31627
31628 किंच योगिनां ज्ञानोदयकाले एव देहादेर्बाधान्न जीवनदशायामपि
31629 तद्दृष्ट्या देहोऽस्तीत्याह - भ्रान्तिमात्रमिति॥ २६॥
31630
31631 को देहः कस्य वा सत्ता कस्य नाशः कथं कुतः।
31632 स्थितं तदेव यदभूदबोधः केवलं गतः॥ २७॥
31633
31634 यदेव परमार्थतः स्थितं तदेव ज्ञानेनाभूत्॥ २७॥
31635
31636 श्रीराम उवाच।
31637
31638 आतिवाहिकतामेति आधिभौतिक एव किम्।
31639 उतान्य इति मे ब्रूहि येनोह्य इव भोः प्रभो॥ २८॥
31640
31641 ननु यदि योगिनां देहो बाध्यते तर्हि बाधितस्य
31642 परिणामायोगात्प्रारब्धभोगायातिवाहिकशरीरमन्यदेवोत्पद्यत इति स्यात्
31643 तथाच तस्य जन्मान्तरत्वाज्जीवन्मुक्तत्वानुपपत्तिः न स भूयोऽभिजायते
31644 इत्यादिशास्त्रविरोधश्चेति मन्यमानो रामः पृच्छति - आतिवाहिकतामिति।
31645 किं योगिन आधिभौतिकदेह एवातिवाहिकतामेत्युतान्य एवातिवाहिकदेह उत्पद्यते।
31646 आद्ये बाधितस्य परिणामान्तरं सर्वप्रमाणविरुद्धम्। द्वितीये तु ज्ञानस्य
31647 मुक्तिफलत्वहानिरित्युभयथाप्यनुपपत्तेः संशयप्रवाहे अहं उह्ये
31648 प्रवाह्यमान इव न स्थैर्य प्राप्नोमीत्यर्थः॥ २८॥
31649
31650 श्रीवसिष्ठ उवाच।
31651
31652 बहुशो ह्युक्तमेतत्ते न गृह्णासि किमुत्तम।
31653 आतिवाहिक एवास्ति नास्त्येवेहाधिभौतिकः॥ २९॥
31654
31655 नासौ परिणामः किंतु स्थूलबाधे प्रक्सिद्धतदधिष्ठानसूक्ष्मपरिशेष एव
31656 त्रिवृत्करणश्रुत्या सूक्ष्मदेहोपहिते ब्रह्मणि स्थूलाध्यासबोधनात्त्रिणि
31657 रूपाणीत्येव सत्यमिति स्थूलबाधेन सूक्ष्मपरिशेषोक्तेश्च नोक्तदोषावकाश इति
31658 प्रागुक्तस्मारणेन समाधत्ते - बहुश इत्यादिना॥ २९॥
31659
31660 तस्यैवाभ्यसतोऽप्येति [वाभ्यासतो इति पाठः] साधिभौतिकतामतिः
31661 ।
31662 यदा शाम्यति सैवास्य तदा पूर्वा प्रवर्तते॥ ३०॥
31663
31664 पूर्वा प्राक्तनी। सैव आतिवाहिकता॥ ३०॥
31665
31666 तदा गुरुत्वं काठिन्यमिति यश्च मुधा ग्रहः।
31667 शाम्येत्स्वप्ननरस्येव बोद्धुर्बोधान्निरामयात्॥ ३१॥
31668

ननु परिणामान्तरं विना देहस्य गुरुत्वकाठिन्यादेः कथं निवृत्तिस्तत्राह
- तदेति । स्वप्ननगरगुरुत्वकाठिन्यादय इव तेऽपि बाध्यन्त एवेत्यर्थः ॥ ३१ ॥

लघुतूलसमापत्तिस्ततः समुपजायते ।
स्वप्ने स्वप्नपरिज्ञानादिव देहस्य योगिनः ॥ ३२ ॥

स्वप्ने स्वप्नपरिज्ञानाद्यथा देहो लघुर्भवेत् ।
तथा बोधादयं देहः स्थूलवत्प्लुतिमान्भवेत् ॥ ३३ ॥

प्लुतिमान् आकाशगमनादियोग्यः ॥ ३३ ॥

अनेकदिनसंकल्पदेहे परिणतात्मनाम् ।
अस्मिन्देहे शवे दग्धे तत्रैवास्थितिमीयुषाम् ॥ ३४ ॥

यत्र दृढतरस्थूलवासनानामज्ञानां स्थूलदेहस्य शवीभावदाहादिना
कारणे तिरोभावलक्षणे नाशेऽपि प्राक्तनसूक्ष्मदेहप्राप्तिस्तत्र किं वाच्यं
ज्ञानिनां निर्वासनानां मूलोच्छेदनलक्षणे तद्बाधे जाते
स्वाभाविकसौक्ष्म्यप्राप्तिर्भवतीति कैमुतिकन्यायेनाह - अनेकेति द्वाभ्याम् ।
आस्थित्मास्थां दृढाभिमानलक्षणाम् ॥ ३४ ॥

प। २७२) १६९

लघुदेहानुभवनमवश्यं भावि वै तथा ।
प्रबोधातिशयादेति जीवतामपि योगिनाम् ॥ ३५ ॥

उदितायां स्मृतौ तत्र संकल्पात्माहमित्यलम् ।
यादृशः स भवेद्देहस्तादृशोऽयं प्रबोधतः ॥ ३६ ॥

तत्र स्वप्ने अहं संकल्पात्मैव न स्थूलात्मा इति स्मृतौ उदितायां सत्याम् ।
ईदृशी च स्मृतिः स्वप्ने ध्यायिनामनुभवसिद्धा न पामराणाम् ।
यादृशः स्वेच्छानभोविहारक्षमः ॥ ३६ ॥

भ्रान्तिरेवमियं भाति रज्ज्वामिव भुजङ्गता ।
किं नष्टमस्यां नष्टायां जातायां किं प्रजायते ॥ ३७ ॥

ननु सर्वजनप्रियस्य देहस्य बाधकं ज्ञानमनर्थ एव नेत्याह -
भ्रान्तिरिति । किं नष्टमिति । नहि शुक्तिरजतबाधे कश्चिच्छोचतीति भावः ॥ ३७ ॥

श्रीराम उवाच ।

अनन्तरं ये वास्तव्या लीलां पश्यन्ति ते यदि ।
तत्सत्यसंकल्पतया बुध्यन्ते किमतः प्रभो ॥ ३८ ॥

इत्थं प्रासङ्गिके निर्णीते प्रस्तुतकथाविषय एव रामः पृच्छति -
अनन्तरमिति । पूर्वलीलायां अभिनवलीलायाश्च पद्मगृहे समागमानन्तरं
ये पद्मगृहवास्तव्या जनास्तां लीलामातिवाहिकदेहत्वाद्द्रष्टुमशक्यामपि
इमे जना मां पश्यन्त्विति तस्याः सत्यसंकल्पतया हेतुना यदि पश्यन्ति तर्हि
किं बुध्यन्ते किं सैवेयमत्रैव स्थितेति किं वा अपूर्वा देवता काचिदियमागतेति
ज्येष्ठशर्मादिवत्सविस्मया इत्यर्थः ॥ ३८ ॥

श्रीवसिष्ठ उवाच ।

31721 एवं ज्ञास्यन्ति ते राज्ञी स्थितेयमिह दुःखिता।
31722 वयस्या काचिदन्येयं कुतोऽप्यस्या उपागता ॥ ३९ ॥
31723
31724 तत्राद्यमेव कल्पमाश्रित्य वसिष्ठ उवाच - एवमिति। द्वितीयलीलां तर्हि किं
31725 बुध्यन्ते तत्राह - वयस्येति ॥ ३९ ॥
31726
31727 संदेहः क इवात्रैषां पशवो ह्यविवेकिनः।
31728 यथादृष्टं विचेष्टन्ते कुत एषां विचारणा ॥ ४० ॥
31729
31730 ननु द्वितीयलीलाया अपूर्वत्वात्केयं कुत आयाता किं सुचारित्रोत पुंश्चली सत्या
31731 असत्या वेत्यादिसंदेहस्तेषां कुतो नाभूत्तत्राह - संदेह इति।
31732 दृष्टमनतिक्रम्य यथादृष्टं पुरा दृष्टपदार्थानुसारेणैव
31733 विचेष्टन्ते। व्यवहरन्तीत्यर्थः ॥ ४० ॥
31734
31735 यथा लोष्टो लुठद्वृक्षं वञ्चयित्वाशु गच्छति।
31736 अज्ञानत्वेऽजपशवस्तथा ह्यस्ति पुरादिकम् ॥ ४१ ॥
31737
31738 तेषां विचारानुदये को हेतुरिति
31739 चेत्स्थूलाभिनिविष्टतासारदार्ढ्यसौक्ष्म्यादिशून्यता च हेतुरिति दृष्टान्तेन
31740 सूचयन्नाह - यथेति। यथा बालेन [बलेन इत्यपि क्वचित्]
31741 वृक्षोपघाताय प्रक्षिप्तो लोष्टः शुष्कपांसुपिण्डो लुठन्तं
31742 स्वमुपघ्नन्तं वृक्षं वञ्चयित्वा प्राप्य न शरवदन्तर्निविशते न वा
31743 कर्दमपिण्डवत्संश्लिष्यते न वा अश्मवदीषत्क्षतं कृत्वा स्वयं वा
31744 पुनरुपघातक्षमोऽवतिष्ठते किंतु आशु शीघ्रमेव गच्छति विशीर्यते तथा ते
31745 जना अपि न विद्यते ज्ञानं येषां ते अज्ञानास्तद्भावे वस्तुतः अजा अपि पशव
31746 इवेत्यजपशवः पेलवत्वादन्तर्निवेशविचाराक्षमा इत्यर्थः। अथ योऽन्यां
31747 देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुः इति श्रुतेः। तेषां
31748 विचारानुदये न केवलमज्ञानमेव हेतुः किंतु तथा पुराणि शरीराणि
31749 आदिपदात्कामकर्मवासनादिकं चैषां तदा तदनुरूपमेव पशुवदेव
31750 वास्तीति युक्त एव विचारानुदय इत्यर्थः। अज्ञपशवः इति पाठे स्वयमज्ञा
31751 अज्ञानां देवानां पशवश्चेति व्याख्येयम् ॥ ४१ ॥
31752
31753 यथा स्वप्नवपुर्बोधान्न जाने क्वेव गच्छति।
31754 असत्यमेव तद्यस्मात्तथैवेहाधिभौतिकम् ॥ ४२ ॥
31755
31756 ये तु विचारयन्ति तेषां क्रमेण तत्त्वबोधोदयेन
31757 बाधितत्वात्तेष्वाधिभौतिकताप्रत्यय एव नास्ति दूरे
31758 संदेहादिप्रसक्तिरित्याशयेनोपसंहरति - यथेति। बोधाज्जागरणात् ॥ ४२ ॥
31759
31760 श्रीराम उवाच।
31761
31762 भगवन्स्वप्नशिखरी प्रबोधे क्वेव गच्छति।
31763 इति मे संशयं छिन्धि शरदभ्रमिवानिलः ॥ ४३ ॥
31764
31765 दृष्टान्तप्रसङ्गाद्रामः स्वाप्नविषयस्य
31766 मूलाज्ञानबाधमन्तरेणात्यन्तिकबाधासंभवात्क्वचित्तिरोहितस्यावस्थानमस्
31767 ति तत्क्वेति पृच्छति - भगवन्निति ॥ ४३ ॥
31768
31769 श्रीवसिष्ठ उवाच।
31770
31771 स्वप्नभ्रमेऽथ संकल्पे पदार्थाः पर्वतादयः।
31772 संविदोऽन्तर्मिलन्त्येते स्पन्दनान्यनिले यथा ॥ ४४ ॥

स्वाप्नस्य मानोरथिकस्य च प्रपञ्चस्य
जाग्रद्वासनासंभृताविद्योपहितजीवसंवित्कार्यत्वात्तत्रैव तिरोधानमिति
वसिष्ठः समाधत्ते - स्वप्नेति ॥ ४४ ॥

अस्पन्दस्य यथा वायोः सस्पन्दोऽन्तर्विशत्यलम् ।
अनन्यात्मा तथैवायां स्वप्नार्थः संविदो मलम् ॥ ४५ ॥

अनन्यात्मा तत्त्विकस्वरूपान्तरशून्यः । संविदो मलं
मलवदावरकमज्ञानमेव स्वोपादानं विशतीत्यर्थः ॥ ४५ ॥

स्वप्नाद्यर्थविभासेन संविदेव स्फुरत्यलम् ।
अस्फुरन्ती तु तेनैव यात्येकत्वं तदात्मिका ॥ ४६ ॥

इत्थं च संविदेवाज्ञाता कर्मवशात्कदाचित्स्वाप्नार्थात्मना स्फुरतीति
फलितमित्याह - स्वप्नेति ॥ ४६ ॥

संवित्स्वप्नार्थयोर्द्वित्वं न कदाचन लभ्यते ।
यथा द्रवत्वपयसोर्यथा वा स्पन्दवातयोः ॥ ४७ ॥

विवेके तु न स्वाप्नार्थो नाम संविदन्योऽस्तीत्याह - संविदिति ॥ ४७ ॥

यस्तत्र स्यादिवाबोधस्तदज्ञानमनुत्तमम् ।
सैषा संसृतिरित्युक्ता मिथ्याज्ञानात्मिकोदिता ॥ ४८ ॥

तत्रान्यदिव भासमानं तु केवलमविद्यैव सैव संसार इत्याह - य इति ॥ ४८
॥

सहकारिकारणानामभावे किल कीदृशी ।
संवित्स्वप्नपदार्थानां द्विता स्वप्ने निरर्थिका ॥ ४९ ॥

लोकप्रसिद्धदण्डचक्रादिसहकारिकारणाजन्यत्वादपि
स्वाप्नार्थनामसत्त्वमित्याह - सहकारीति ॥ ४९ ॥

प्। २७३) १६९

यथा स्वप्नस्तथा जाग्रदिदं नास्त्यत्र संशयः ।
स्वप्ने पुरमसद्भाति सर्गादौ भात्यसज्जगत् ॥ ५० ॥

ननु तर्हि सहकारिकारणवतो जाग्रत्प्रपञ्चस्य सत्यत्वं प्राप्तं नेत्याह -
यथेति । सर्गादाविति । यद्यपीदानीं सहकार्यादयः सन्ति तथाप्यादिसर्गे
अज्ञानोपहितहैरण्यगर्भसंविदतिरिक्तं नास्तीति स्वप्नसाम्यमेवेत्यर्थः ॥ ५०
॥

न चार्थो भवितुं शक्यः सत्यत्वे स्वप्नतोदितः ।
संविदो नित्यसत्यत्वं स्वप्नार्थानामसत्यता ॥ ५१ ॥

प्रपञ्चस्य सत्यत्वे संविद्वच्चित्त्वापत्त्या चिद्विष्यत्वव्याघातोऽपि स्यादित्याह ##-
संविदेत्यर्थस्तथा भवितुं संभावयितुं शक्यः । किंच संवित्सत्तां न
व्यभिचरति अर्थास्तु व्यभिचरन्तीति न सत्या इत्याह - संविद इति ॥ ५१ ॥

झटित्येव यथाकाशं भवति स्वप्नपर्वतः ।

क्रमेण वा तथा बोधे खं भवत्याधिभौतिकम् ॥ ५२ ॥

तत्त्वज्ञानबाध्यत्वादपि न सत्यतेत्याह - झटित्येवेति। आकाशं शून्यं
भवति नाणुमात्रमपि परिशिष्यत इत्यर्थः। बोधे जागरणे तत्त्वज्ञाने च।
बोधाभ्यासक्रमेण ईश्वराद्यनुग्रहात्सहसैव वा। खं
शून्यमसभवतीत्यर्थः ॥ ५२ ॥

उड्डीनोऽयं मृतो वेति पश्यन्ति निकटस्थिताः।
ज्ञमातिवाहिकीभूतं स्वस्वभावहता यतः ॥ ५३ ॥

कथं तर्हि लोकैः शुकस्योड्डीय सूर्यमण्डलगमनदर्शनं
दधीचिप्रभृतीनां मृतदेहदर्शनं च तत्राह - उड्डीन इति। ज्ञं
तत्त्वज्ञम्। आतिवाहिकीभूतं बाधिताधिभौतिकशरीरम्। स्वेषां स्वभावः
अनागन्तुकमज्ञानं तेन हता हिंसितप्राया जनाः। तथाच
स्वस्वाज्ञानकल्पितदेह एव तैर्दृश्यते न ज्ञानिदेहः स इत्यर्थः ॥ ५३ ॥

मिथ्यादृष्टय एवेमाः सृष्टयो मोहदृष्टयः।
मायामात्रदृशो भ्रान्तिः शून्याः स्वप्नानुभूतयः ॥ ५४ ॥

उक्तमर्थमनुमानेनापि द्रढयन्नुपसंहरति द्वाभ्याम्। इमा
द्वैतदृष्टयो मिथ्यादृष्टय एव। यतो मोहदृष्टयः। तथाहि
ऐन्द्रजालिकमायामात्रदृशो भ्रान्तिः प्रसिद्धा। अर्थशून्याः
स्वप्नानुभूतयश्च प्रसिद्धा इत्यर्थः ॥ ५४ ॥

स्वप्नानुभूतय इमा मरणान्तबोधे
भ्रान्त्येतरभ्रमदृशःस्फुटसर्गभासः।
भान्त्यातिवाहिकशरीरगताः समस्ता
मिथ्योदिता मृगनदीसरणक्रमेण ॥ ५५ ॥

इतरभ्रमदृशः पूर्वपूर्वभेदभ्रमदर्शिनः पुरुषस्य
दृढतरभेदसंस्कारोदयान्मरणान्तबोधे
प्राणोत्क्रमणपूर्वक्षणोत्पन्ने भाविभोगानुकूलार्थप्रतिभासे समस्ताः
स्वप्नानुभूतिसदृशा इमाः स्फुटसर्गभास आतिवाहिकशरीरगता
मनोमात्रनिष्ठा अपि भ्रान्त्या मृगनद्याः सरणं प्रवाहस्तत्क्रमेण
तद्रीत्यैव मिथ्योदिता बाह्या इव भान्ति न तु वस्तुतो मनसो बहिः सन्तीत्यर्थः ॥ ५५
। ।

इत्यार्षे श्रीवासिष्ठमहारामायणे मोक्षोपाये उत्पत्तिप्रकरणे लीलो॰
स्वप्नार्थस्य विचारो नाम सप्तपञ्चाशः सर्गः ॥ ५७ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे स्वप्नार्थस्य
विचारो नाम सप्तपञ्चाशः सर्गः ॥ ५७ ॥

अष्टपञ्चाशः सर्गः ५८

श्रीवसिष्ठ उवाच।

एतस्मिन्नन्तरे ज्ञप्तिर्जीवं वैदूरथं पुनः।
संकल्पेन रुरोधाशु मनसः स्पन्दनं यथा ॥ १ ॥

इह कालः समाधिस्थलीलादेहविनाशनम्।

31877 लीलासंभाषणं राज्ञो जीवनं चेति वर्ण्यते ॥ १ ॥
31878
31879 एवं रामप्रश्नान्समाधाय प्रस्तुतकथाशेषं वर्णयिष्यन्वसिष्ठः
31880 सर्गान्तवक्तव्यार्थे भूमिकां रचयति - एतस्मिन्निति । अमूर्तस्यापि
31881 संकल्पमात्रेण निरोधसंभावनाय दृष्टान्तमाह - मनस इति ॥ १ ॥
31882
31883 लीलोवाच ।
31884
31885 वद देवि कियान्कालो गतोऽस्यामिह मन्दिरे ।
31886 समाधौ मयि लीनायां महीपाले शवे स्थिते ॥ २ ॥
31887
31888 अस्यां पाद्मसृष्टौ ॥ २ ॥
31889
31890 ज्ञप्तिरुवाच ।
31891
31892 इह मासस्त्वतिक्रान्त इह दास्याविमे तव ।
31893 रक्षार्थं वासगृहके स्वपतोऽवहिते स्थिते ॥ ३ ॥
31894
31895 इहास्यां सृष्टौ इह वासगृहके तव त्वद्देहस्य रक्षार्थं दास्यौ स्थिते इमे
31896 इदानीं स्वपतः । इडभावश्छान्दसः ॥ ३ ॥
31897
31898 शृणु देहस्य किंवृत्तं तवेह वरवर्णिनि ।
31899 शरीरं तव पक्षेण तत्क्लिन्नं बाष्पतां गतम् ॥ ४ ॥
31900
31901 पूर्वं लीलायाः स्वाज्ञानकल्पितस्य स्वानुभवसिद्धस्य देहस्य तत्त्वज्ञानेन
31902 बाधितस्यापि प्रारब्धशेषभोगाय प्रतिभासमानस्यातिवाहिकभावो वर्णितः ।
31903 संप्रति परकीयाज्ञानकल्पितस्य परानुभवसिद्धस्य वृत्तान्तं श्रावयति ##-
31904 स्वेदार्द्रं सत् प्राणनिरोधप्रदीप्तजठराग्निना तप्यमानं बाष्पतां
31905 सार्द्रधूमतां गतं प्राप्तम् ॥ ४ ॥
31906
31907 निर्जीवं पतितं भूमौ संशुष्कमिव पल्लवम् ।
31908 काष्ठकुड्योपमो जातः शवस्तु हिमशीतलः ॥ ५ ॥
31909
31910 ततः क्रमेण शुष्कं निर्जीवं सत् शवो जातः ॥ ५ ॥
31911
31912 ततो मन्त्रिभिरागत्य मृतैवेयमिति स्वयम् ।
31913 क्लेदालोकाद्विनिर्णीय भूयो निष्कासितं गृहात् ॥ ६ ॥
31914
31915 भूयः क्लेदालोकाद्विशरणोन्मुखतादर्शनान्मृतेति निश्चित्य ॥ ६ ॥
31916
31917 बहुनात्र किमुक्तेन नीत्वा चन्दनदारुभिः ।
31918 चितौ संक्षिप्य सघृतं सहसा भस्मसात्कृतम् ॥ ७ ॥
31919
31920 प्। २७४) १७०
31921
31922 ततो राज्ञी मृतेत्युच्चैः कृत्वा रोदनमाकुलम् ।
31923 परिवारस्तवाशेषं कृतवानौर्ध्वदेहिकम् ॥ ८ ॥
31924
31925 राजशरीरस्य विकारानुदयस्तु ज्ञप्तिसंकल्पात्तदीयादृष्टवशाच्च बोध्यः ॥
31926 ८ ॥
31927
31928 इदानीं त्वामिहालोक्य सशरीरामुपागताम् ।

31929 परलोकादागतेति महच्चित्रं भविष्यति ॥ ९ ॥
31930
31931 चित्रमाश्चर्यं भविष्यति जनानामिति शेषः ॥ ९ ॥
31932
31933 त्वं तु तेन शरीरेण सत्यसंकल्पतः सुते ।
31934 दृश्यसे स्ववदातेन चित्रं तत्र तवोपरि ॥ १० ॥
31935
31936 त्वदीयदिव्यशरीरदर्शनादपि परमाश्चर्यं भविष्यतीत्याह - त्वं त्विति ।
31937 तेन आतिवाहिकेन स्ववदातेन स्वच्छतरेण मनुष्यैर्द्रष्टुमशक्येनापि
31938 दृश्यसे इति तदुपरि तव तत्र दर्शनविषये चित्तं भविष्यतीत्यनुषज्यते ॥ १० ॥
31939
31940 यद्वासना त्वमभवो देहं प्रति तदेव ते ।
31941 रूपमभ्युदितं बाले तेन प्राक्सदृशं तव ॥ ११ ॥
31942
31943 ननु दिव्यशरीरस्य पूर्वदेहाकारत्वाभावे तेषां
31944 प्रत्यभिज्ञायोगात्तदाकारमावश्यकं तत्र को हेतुस्तमाह - यदिति ।
31945 यद्वासना यादृशाकारवासना ॥ ११ ॥
31946
31947 स्ववासनानुसारेण सर्वः सर्वं हि पश्यति ।
31948 दृष्टान्तोऽत्राविसंवादी बालवेतालदर्शनम् ॥ १२ ॥
31949
31950 आतिवाहिकदेहासि संपन्ना सिद्धसुन्दरि ।
31951 विस्मृतस्त्वेव देहोऽसौ प्राक्तनोऽनपवासनः ॥ १३ ॥
31952
31953 ननु तद्देहवासनत्वे मया स एव देहो राज्ञेव कुतो न प्राप्तस्तत्राह -
31954 आतिवाहिकेति । सिद्धा तत्त्वज्ञानपरिनिष्ठिता सुन्दरी । यदि सर्वथा
31955 विस्मृतस्तर्ह्यातिवाहिकदेहे तदाकारत्वासिद्धिरित्यत उक्तमनपवासन इति ।
31956 नात्यन्तं तद्वासनोच्छिन्नेत्याशयः ॥ १३ ॥
31957
31958 रूढातिवाहिकदृशः प्रशाम्यत्याधिभौतिकः ।
31959 बुधस्य दृश्यमानोऽपि शरन्मेघ इवाम्बरे ॥ १४ ॥
31960
31961 तर्ह्यस्याधिभौतिकतापि कुतो नाभूत्तत्राह - रूढेति । परैराधिभौतिक इति
31962 दृश्यमानोऽपि ॥ १४ ॥
31963
31964 रूढातिवाहिकीभावः सर्वो भवति देहकः ।
31965 निर्जलाम्भोदसदृशो निर्गन्धकुसुमोपमः ॥ १५ ॥
31966
31967 सद्वासनस्य रूढायामातिवाहिकसंविदि ।
31968 देहो विस्मृतिमायाति गर्भसंस्थेव यौवने ॥ १६ ॥
31969
31970 वासनाया अत्यन्तोच्छेदे तु नातिवाहिकदेहकल्पनाप्यस्तीति सूचनाय
31971 सद्वासनस्येत्युक्तम् । देह आधिभौतिकः ॥ १६ ॥
31972
31973 एकत्रिंशेऽद्य दिवसे प्राप्ता वयमिहाम्बरे ।
31974 प्रभाते मोहिते दास्यौ मयैते निद्रयाधुना ॥ १७ ॥
31975
31976 तदेहि यावल्लीलायै लीले संकल्पलीलया ।
31977 आत्मानं दर्शयावोऽस्यै व्यवहारः प्रवर्तताम् ॥ १८ ॥
31978
31979 संकल्पलीलया सत्यसंकल्पविलासेन ॥ १८ ॥
31980

31981 श्रीवसिष्ठ उवाच।
31982
31983 आवां तावदिमे लीला पश्यत्वित्येव चिन्तिते।
31984 ज्ञप्त्या देव्या ततस्तत्र दृश्ये दीप्ते बभूवतुः॥ १९॥
31985
31986 इमे आवां विदूरथलीला पश्यतु इति ज्ञप्तया देव्या चिन्तिते सति दीप्ते प्रकाशमाने
31987 ज्ञप्तिलीले दृश्ये बभूवतुः॥ १९॥
31988
31989 सा विदूरथलीलाथ समाकुलविलोचना।
31990 गृहमालोकयामास तत्तेजःपुञ्जभास्वरम्॥ २०॥
31991
31992 चन्द्रबिम्बादिवोत्कीर्णं धौतं हेमद्रवैरिव।
31993 ज्वालाया द्रवशीतायास्तत्प्रभाद्रवभित्तिमत्॥ २१॥
31994
31995 द्रवशीताया ज्वालाया दीप्तेर्वशाच्चन्द्रबिम्बादुत्कीर्णमिव स्थितम्।
31996 तदङ्गप्रभाद्रवव्याप्तभित्तिमत्त्वाद्धेतोर्हेमद्रवैर्लिप्तमिव स्थितमित्यर्थः
31997 ॥ २१॥
31998
31999 गृहमालोक्य पुरतो लीलाज्ञप्ती विलोक्य ते।
32000 उत्थय संभ्रमवती तयोः पादेषु सापतत्॥ २२॥
32001
32002 संभ्रमोऽत्र हर्षनिर्भरः॥ २२॥
32003
32004 मज्जयायागते देव्यौ जयतां जीवनप्रदे।
32005 इह पूर्वमहं प्राप्ता भवत्योर्मार्गशोधिनी॥ २३॥
32006
32007 मम जयाय कल्याणोत्कर्षाय। मार्गशोधिनी परिचारिकेवेति यावत्॥ २३॥
32008
32009 इत्युक्तवत्यां तस्यां ता मानिन्यो मत्तयौवनाः।
32010 उपाविशन्विष्टरेषु लतामेरुशिरःस्विव॥ २४॥
32011
32012 ज्ञप्तिरुवाच।
32013
32014 सुते वद कथं प्राप्ता त्वमिमं देशमादितः।
32015 किं वृत्तं ते त्वया दृष्टं किमिवाध्वनि कुत्र वा॥ २५॥
32016
32017 आदित आरभ्य वद। ते कुत्र वा अध्वनि किं वा आश्चर्य वृत्तं तत्त्वया कुत्र वा
32018 दृष्टमित्यर्थः॥ २५॥
32019
32020 विदूरथलीलोवाच।
32021
32022 देवि तस्मिन्प्रदेशे सा जातमूर्च्छा तदाभवम्।
32023 द्वितीयेन्दोः कलेवाहं कल्पान्तज्वालया हता॥ २६॥
32024
32025 तस्मिन्विदूरथगृहप्रदेशे साहं द्वितीयातिथिस्तत्संबन्धिन इन्दोः कला
32026 कल्पान्तज्वालया हतेव मूर्च्छिता अभवम्॥ २६॥
32027
32028 न चेतितं मया किंचित्समं विषममेव च।
32029 ततस्तरलपक्ष्मान्ते विनिमील्य विलोचने॥ २७॥
32030
32031 विलोचने विनिमील्य मूर्च्छायां न चेतितं न किंचिज्ज्ञातम्। न
32032 चेतितमित्यननुभूतस्याभिलापायोगात्साक्षिभवेनाज्ञातं [नाज्ञानं

चेतितं इति पाठः] चेतितमेवेति न चिदात्मलोपाशङ्कावसरः ॥ २७ ॥

ततो मरणमूर्छान्ते पश्यामि परमेश्वरि ।
यावदभ्युदितास्म्याशु प्लुता च गगनोदरे ॥ २८ ॥

वासनापरिकल्पितपूर्वदेहसदृशदेहरूपेण यावदभ्युदिता
अध्यासेनाविर्भूतास्मि तावच्चिद्गगनोदरे भूताकाशे प्लुता उत्प्लुता चास्मि ॥ २८ ॥

भूताकाशेऽनिलरथं समारूढास्म्यहं ततः ।
आनीता गन्धलेखेव तेनाहमिममालयम् ॥ २९ ॥

अनिलः प्राणो वातस्कन्धो वा तद्रूपं रथम् । तेनानिलरथेन ॥ २९ ॥

देवि पश्यामि सदनं नायकेनाभ्यलंकृतम् ।
दीप्तदीपं विविक्तं च महार्हशयनान्वितम् ॥ ३० ॥

पतिमालोकयामीमं यावदेष विदूरथः ।
शेते कुसुमगुप्ताङ्गो मधु पुष्पवने यथा ॥ ३१ ॥

यावच्छेते तावत्प्रतीक्षमाणा आलोकयामीत्यर्थः । मधुर्वसन्तः ॥ ३१ ॥

प्। २७५) १७०

अथ संग्रामसंरम्भश्रमार्तोऽयं स्वपित्यलम् ।
इति निद्रा मया सेयं देवेश्वरि न वारिता ॥ ३२ ॥

अयं संग्रामश्रमार्तः स्वपितीत्यनेनाभिप्रायेण अथ मया अस्य निद्रा न
वारिता ॥ ३२ ॥

अनन्तरमिमं देशं प्राप्ते देव्याविमे त्विति ।
यथानुभूतं कथितं मदनुग्रहकारिणि ॥ ३३ ॥

देव्यौ युवां इमं देशं गृहं प्राप्ते इति मया यथानुभूतं कथितम् ॥ ३३
। ।

ज्ञप्तिरुवाच ।

हे हंसहारिगामिन्यौ लीले ललितलोचने ।
उत्थापयामो नृपतिं शवतल्पतलादिमम् ॥ ३४ ॥

इत्युक्त्वा मुमुचे जीवमामोदमिव पद्मिनी ।
ससमीरलताकारस्तन्नासानिकटं ययौ ॥ ३५ ॥

इत्युक्त्वा ज्ञप्तिः प्राक्संकल्पेन निरुद्धं राज्ञो जीवं मुमोच । स जीवः
समीरवददृश्योऽपि रागादिवासनापल्लवितत्वाल्लताकारः ॥ ३५ ॥

घ्राणकोशं विवेशान्तर्वंशरन्ध्रमिवानिलः ।
स्ववासनाशतान्यन्तर्दधदब्धिर्मणीनिव ॥ ३६ ॥

तदेवाह - स्ववासनाशतान्यन्तर्दधदिति ॥ ३६ ॥

अन्तस्थजीवं वदनं तस्य तत्कान्तिमाययौ ।

32085 पद्मस्यावग्रहे पद्मं सुवृष्ट इव वारिणि ॥ ३७ ॥
32086
32087 तस्य पद्मस्य। अवग्रहे वृष्टिप्रतिबन्धे म्लानं पद्मं वारिणि सुवृष्टे
32088 सतीव ॥ ३७ ॥
32089
32090 क्रमादङ्गानि सर्वाणि सरसानि चकाशिरे।
32091 तस्य पुष्पाकर इव लताजालानि भूभृतः ॥ ३८ ॥
32092
32093 पुष्पाकरे वसन्तकाले ॥ ३८ ॥
32094
32095 अथाबभौ कलापूर्णः स राकायामिवोडुराट्।
32096 भासयन्भुवनं भूरि वदनेन्दुमरीचिभिः ॥ ३९ ॥
32097
32098 स्फुरयामास सोऽङ्गानि रसवन्ति मृदूनि च।
32099 कनकोज्ज्वलकान्तीनि पल्लवानीव माधवः ॥ ४० ॥
32100
32101 स्फुरयामास संचालयामास। चिस्फुरोर्णौ इत्यात्वस्य गुणस्य
32102 चाभावश्छान्दसः ॥ ४० ॥
32103
32104 उन्मीलयामास दृशौ विमलालोलतारके।
32105 हारिण्यौ सुभगाभोगे चन्द्रार्कौ भुवनं यथा ॥ ४१ ॥
32106
32107 हारिण्यौ मनोहरे। सुभगाभोगे सौभग्यलक्षणशालिसंस्थानवत्यौ
32108 दृशौ। भुवनं सरभुवनात्मा विराट्स्वनेत्रभूतौ
32109 चन्द्रार्काविवोन्मीलयामास ॥ ४१ ॥
32110
32111 उत्तस्थौ प्रोल्लसत्कायो विन्ध्याद्रिर्वृद्धिमानिव।
32112 उवाच कः स्थित इति घनगम्भीरनिःस्वनम् ॥ ४२ ॥
32113
32114 लीलाद्वयमथास्याग्रे प्रोवाचादिश्यतामिति।
32115 स ददर्श पुरो नम्रं लीलाद्वयमवस्थितम् ॥ ४३ ॥
32116
32117 लीलाद्वयं कर्तृ आदिश्यतां आज्ञाप्यतां महाराजेनेत्युवाच ॥ ४३ ॥
32118
32119 समाचारं समाकारं समरूपं समस्थिति।
32120 समवाक्यं समोद्योगं समानन्दं समोदयम् ॥ ४४ ॥
32121
32122 का त्वं केयं कुतश्चेयमित्याह स विलोकयन्।
32123 तस्मै लीलाह हे देव श्रूयतां यद्वदाम्यहम् ॥ ४५ ॥
32124
32125 लीला पूर्वलीला आह ॥ ४५ ॥
32126
32127 महिला तव लीलाहं प्राक्तनी सहधर्मिणी।
32128 वागर्थस्येव संपृक्ता स्थिता संश्लेषशालिनी ॥ ४६ ॥
32129
32130 यथा वाक् शब्दोऽर्थस्य वाचकतया संपृक्ता तद्वत् ॥ ४६ ॥
32131
32132 इयं लीला द्वितीया ते महिला हेलया मया।
32133 उपार्जिता त्वदर्थेन प्रतिबिम्बमयी शुभा ॥ ४७ ॥
32134
32135 त्वदर्थेन त्वदुपभोगार्थम् ॥ ४७ ॥
32136

32137 शिरोभागोपविष्टेयं पाहि हैममहासने।
32138 एषा सरस्वती देव त्रैलोक्यजननी शिवा॥ ४८॥
32139
32140 अस्माकं पुण्यसंभारैरिह साक्षादुपागता।
32141 अनयेमे पराल्लोकादिहानीते महीपते॥ ४९॥
32142
32143 इमे आवां परााल्लोकाद्ब्रह्माण्डान्तरात्॥ ४९॥
32144
32145 इत्याकर्ण्य समुत्थाय राजा राजीवलोचनः।
32146 लम्बमाल्याम्बरधरः पपात ज्ञप्तिपादयोः॥ ५०॥
32147
32148 सरस्वति नमस्तुभ्यं देवि सर्वहितप्रदे।
32149 प्रयच्छ वरदे मेधां दीर्घमायुर्धनानि च॥ ५१॥
32150
32151 मेधां श्रुतपरमार्थधारणावतीं बुद्धिम्॥ ५१॥
32152
32153 इत्युक्तवन्तं हस्तेन पस्पर्श ज्ञप्तिदेवता।
32154
32155 सरस्वत्युवाच।
32156
32157 त्वं पुत्राभिमतार्थाढ्यो भवेति भवनान्वितः॥ ५२॥
32158
32159 ऐहिकेन दीर्घायुर्धनाद्यभिमतार्थेन आढ्यः संपन्नतमः।
32160 तत्त्वमेधाभिव्यक्तेन भवनेन पारमार्थिकात्मस्वस्वरूपस्थित्या चान्वितो
32161 भव॥ ५२॥
32162
32163 सर्वापदः सकलदुष्कृतदृष्टयश्च
32164 गच्छन्तु वः शममनन्तसुखानि सम्यक्।
32165 आयान्तु नित्यमुदिता जनता भवन्तु
32166 राष्ट्रे स्थिराश्च विलसन्तु सदैव लक्ष्म्यः॥ ५३॥
32167
32168 दुष्कृतदृष्टयः पापबुद्धयश्च शमं विनाशं गच्छन्तु।
32169 अनन्तान्यसंख्यान्यभ्युदयसुखानि आयान्तु। तथा वः राष्ट्रे जनता
32170 जनसमूहाः नित्यं मुदिता भवन्तु। लक्ष्म्यः संपदः सदैव
32171 विलसन्त्वित्याशिषि लोटः (?)॥ ५३॥
32172
32173 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलोपाख्याने
32174 पद्मजीवनं नामाष्टपञ्चाशः सर्गः॥ ५८॥
32175
32176 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे पद्मजीवनं
32177 नामाष्टपञ्चाशः सर्गः॥ ५८॥
32178
32179
32180 प्। २७६) १७१
32181
32182 एकोनषष्टितमः सर्गः ५९
32183
32184 श्रीवसिष्ठ उवाच।
32185
32186 सरस्वती तथेत्युक्त्वा तत्रैवान्तर्धिमाययौ।
32187 प्रभाते पङ्कजैः सार्धं बुबुधे सकलो जनः॥ १॥
32188

32189 राज्ञः संजीवनोद्धर्षात्ततपुरान्तःपुरोत्सवः |
32190 राज्यं च जीवन्मुक्तानां चिरं मुक्तिश्च वर्ण्यते || १ ||
32191
32192 सरस्वती इति उक्तप्रकारेण प्राग्यद्राज्ञा प्रार्थितं तत्तथास्त्वित्युक्त्वा तत्र
32193 राजगृहे एव अन्तर्धिमन्तर्धानमाययौ || १ ||
32194
32195 आलिलिङ्ग च तां लीलां लीला च दयितं क्रमात् |
32196 पुनःपुनर्महानन्दान्मृतं प्रोज्जीवितं पुनः || २ ||
32197
32198 लीला च प्राङ्मृतं पुनः प्रोज्जिवितं पुनःपुनर्महानन्दादालिलिङ्ग || २ ||
32199
32200 तदासीद्राजसदनं मदमन्मथमन्थरम् |
32201 आनन्दमत्तजनतं वाद्यगेयरवाकुअलम् || ३ ||
32202
32203 तदा राजसदनमानन्देन मत्ता परवशचित्ता जनता यस्मिंस्तथाविधमासीत् || ३
32204 | |
32205
32206 जयमङ्गलपुण्याहघोषघुंघुमघर्घरम् |
32207 तुष्टपुष्टजनापूर्णं राजलोकवृताङ्गणम् || ४ ||
32208
32209 राज्ञो लोकाः सेवकजनाः राजानं लोकयन्तीति राजलोकाः पौरजानपदाश्च
32210 तैर्वृताङ्गणम् || ४ ||
32211
32212 सिद्धविद्याधरोन्मुक्तपुष्पवर्षसहस्रभृत् |
32213 ध्वनन्मृदङ्गमुरजकाहलाशङ्खदुन्दुभि || ५ ||
32214
32215 काहलाशब्दः कार्णालसंज्ञकवाद्यविशेषार्थः || ५ ||
32216
32217 ऊर्ध्वीकृतबृहद्धस्तहास्तिकस्तनितोत्कटम् |
32218 उत्तालताण्डवस्त्रैणपूर्णाङ्गणलसद्ध्वनि || ६ ||
32219
32220 उत्तालताण्डवैः स्त्रैणैः स्त्रीसमूहैः पूर्णाङ्गणे
32221 लसंस्तौर्यत्रिकध्वनिर्यस्मिन् || ६ ||
32222
32223 मिथःसंघट्टनिपतज्जनोपायनदन्तुरम् |
32224 पुष्पशेखरसंभारमयसंसारसुन्दरम् || ७ ||
32225
32226 पुष्पशेखराणामौत्सविकसंभारप्रचुराणां नानाजनानां संसारेण
32227 संचारेण सुन्दरं शोभमानम् || ७ ||
32228
32229 विकीर्णापादितक्षौमं मन्त्रिसामन्तनागरैः |
32230 स्थूलपद्ममयं व्योम रक्तैस्ताण्डविनीकरैः || ८ ||
32231
32232 मन्त्रिभिः सामन्तैर्नागरैश्च विकीर्णैः कुसुमलाजमौक्तिकैः
32233 सर्वतश्छन्नत्वादापादितानि संपादितानि क्षौमाम्बराणीव यस्य तत् | व्योम्नि
32234 रक्तैस्ताण्डविनीनां नर्तकीनां करैः स्थूलपद्ममयं दीर्घपद्मप्रचुरं
32235 सर इव स्थितमित्याशयः || ८ ||
32236
32237 मत्तस्त्रिकन्धरावृत्तलीलान्दोलितकुण्डलम् |
32238 प्रवृत्तपादसंपातप्रोल्लसत्पुष्पकर्दमम् || ९ ||
32239
32240 मत्तानां हृष्टानां स्त्रीणां कंधराणां ग्रीवाणामावृत्तलीलाभिः

32241 परिवर्तनविलासैरान्दोलितानि कुण्डलानि यत्र ॥ ९ ॥
32242
32243 पट्टवासःशरन्मेघवितानकवितानकम् ।
32244 वराङ्गनामुखैर्नृत्यच्चन्द्रलक्षगृहाजिर ॥ १० ॥
32245
32246 पट्टवाससां शरन्मेघवितानकसदृशानि वितानकानि यत्र । नृत्यन्ति
32247 चन्द्रलक्षाणि यत्र तथाविधानि गृहाजिराणि यत्र ॥ १० ॥
32248
32249 परलोकादुपानीता राज्ञी सा पतिरेव च ।
32250 इति निर्वृत्तगाथाभिर्जगुर्देशान्तरे जनाः ॥ ११ ॥
32251
32252 सा राज्ञी द्वितीयलीला परलोकादुपानीता पूर्वलीलयेत्यर्थाद्गम्यते । पतिरेव च
32253 उपानीत इति प्रबन्धशतात्मना निर्वृत्ताभिर्गाथाभिर्जगुः ॥ ११ ॥
32254
32255 पद्मो भूमिपतिः श्रुत्वा वृत्तान्तं कथितं मनाक् ।
32256 चक्रे स्नानं समानीतैश्चतुःसागरवारिभिः ॥ १२ ॥
32257
32258 वृत्तान्तं स्वमरणादिकथां मनाक् संक्षेपेण कथितं श्रुत्वा ॥ १२ ॥
32259
32260 ततोऽभिषिषिचुर्विप्रा मन्त्रिणो भूभुजश्च तम् ।
32261 लब्धोदयमनन्तेहममरेन्द्रमिवामराः ॥ १३ ॥
32262
32263 चिरप्रवासादागतस्येव परलोकादागतस्य पुनः पदाभिषेको मङ्गलार्थः ।
32264 अमरेन्द्रपक्षे अनन्ता ईहाः स्वराज्यलाभप्रयत्ना यस्य तम् । अत एव
32265 नहुषनिपातेन पुनर्लब्धः स्वराज्योदयो येन तथाविधम् ॥ १३ ॥
32266
32267 लीला लीला च राजा च जीवन्मुक्तमहाधियः ।
32268 रेमिरे पूर्ववृत्तान्तकथनैः सुरतैरिव ॥ १४ ॥
32269
32270 ननु लीला लीला चेत्यत्र सरूपैकशेषः किं न स्यादिति चेद्रामश्च रामश्च रामौ
32271 इत्येकशेषविग्रहवाक्यवदिति गृहाण । न ह्येकशेषवृत्तेर्विग्रह एव नास्ति ।
32272 परस्परनिरपेक्षमेव संस्कारेण परिनिष्ठितयोः पश्चात्सहविवक्षायां तस्य
32273 निराबाधत्वात् । विभक्त्युत्पत्तेः प्रागेव प्रातिपदिकार्थद्वयस्य
32274 सहविवक्षायामेकशेषस्य सावकाशतया परिनिष्ठितपदद्वये
32275 प्रसक्त्यभावादिति ॥ १४ ॥
32276
32277 सरस्वत्याः प्रसादेन स्वपौरुषकृतेन तत् ।
32278 प्राप्तं लोकत्रयश्रेयः पद्मेनेति महीभुजा ॥ १५ ॥
32279
32280 ननु यदि राज्ञा सरस्वतीप्रसादेन तत्पुनर्जीवनं राज्यं च प्राप्तं तर्हि
32281 दैवेनैव तत्प्राप्तं न स्वपौरुषकृतेनेति रामाशङ्कां
32282 हृदिस्थामुपलक्ष्य तां परिहरन्नुपसंहरति - सरस्वत्या इति ।
32283 स्वपौरुषकृतेनेति । सरस्वत्याराधनादिस्वपौरुषकृत एव तत्प्रसादो
32284 नाकस्मिक इत्यर्थः । पद्मेन इति वर्णितरीत्या लोकत्रये श्रेयः प्रशस्यतमं
32285 पुनर्जीवनं राज्यं ज्ञानं च प्राप्तम् ॥ १५ ॥
32286
32287 स ज्ञप्तिज्ञानसंबुद्धो राजा लीलाद्वयान्वितः ।
32288 चक्रे वर्षायुतान्यष्टौ तत्र राज्यमनिन्दितः ॥ १६ ॥
32289
32290 ज्ञप्त्युपदिष्टेन ज्ञानेन संबुद्धः सम्यग्बुद्धात्मतत्त्वः स राजा अष्टौ
32291 वर्षाणामयुतान्यशीतिसहस्राणि राज्यं चक्रे । कालाध्वनोरत्यन्तसंयोगे इति
32292 द्वितीया ॥ १६ ॥

जीवन्मुक्तास्त इत्येवं राज्यं वर्षायुताष्टकम् ।
कृत्वा विदेहमुक्तत्वमासेदुः सिद्धसंविदः ॥ १७ ॥

सिद्धसंविदः अरिनिष्ठितप्रबोधाः ॥ १७ ॥

प्। २७७) १७१

यदुदयविशदं विदग्धमुग्धं
समुचितमात्महितं च पेशलं च ।
तदखिलजनतोषदं स्वराज्यं
चिरमनुपाल्य सुदंपती विमुक्तौ ॥ १८ ॥

यद्राज्यं प्रजानामुदयैर्नित्याभ्युदयैर्विशदं निर्दोषम् । विदग्धानां
विदुषां शास्त्रानुसारित्वान्मुग्धं मनोहरम् । कुलपरंपरायाः समुचितम् ।
आत्मनः स्वस्य भोगयशोधर्महेतुत्वाद्धितम् । जनानामनुरञ्जनेन पेशलं
चतुरं च । अत एवाखिलजनतोषदं तत्स्वराज्यं चिरमनुपाल्य सुदंपती
लीलापद्मौ प्रारब्धफलभोगान्ते विमुक्तौ विदेहकैवल्यं प्राप्तौ । ननु प्राक्
त्रयाणां जीवन्मुक्ततोक्ता कथमत्र द्वयोरेव मुक्तिरुपसंहृतेति
चेद्राजवासनामय्या द्वितीयलीलायाः पूर्वलीलाप्रतिबिम्बप्रायतया
तदन्तर्भावविवक्षणादिति ॥ १८ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये लीलोपाख्याने
पद्मनिर्वाणं नामैकोनषष्टितमः सर्गः ॥ ५९ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे पद्मनिर्वाणं
नामैकोनषष्टितमः सर्गः ॥ ५९ ॥


षष्टितमः सर्गः ६०

श्रीवसिष्ठ उवाच ।

एतत्ते कथितं राम दृश्यदोषनिवृत्तये ।
लीलोपाख्यानमनघं घनतां जगतस्त्यज ॥ १ ॥

विस्तराद्वर्ण्यतेऽत्रादौ लीलाख्यानप्रयोजनम् ।
कालादिसाम्यवैषम्यहेतुश्चात्र निगद्यते ॥ १ ॥

दृश्यदोषनिवृत्तये । तथाच दृश्यं नास्तीति बोधेन मनसो
दृश्यमार्जनं संपन्नं चेत्तदा प्राप्ता परा निर्वाणनिर्वृतिरिति
ग्रन्थोपक्रमे यत्प्रतिज्ञातं तत्सिद्धिरेवास्य प्रयोजनमिति भावः । घनतां
सत्यताम् ॥ १ ॥

शान्तैव दृश्यसत्तस्याः शमनं नोपयुज्यते ।
सतो हि मार्जनक्लेशो नासतस्तु कदाचन ॥ २ ॥

ननु सत्यतात्यागमात्रेण कथं दृश्यनिवृत्तिस्तत्राह - शान्तैवेति ।
यावत्सत्यताबुद्धिस्तावदेव मार्जनेनेति नेत्यपवादे क्लेशो
न्यायैर्मिथ्यात्वनिर्णये तु स नास्तीत्यर्थः ॥ २ ॥

ज्ञानेनाकाशरूपेण दृश्यं ज्ञेयस्वरूपकम् ।

32345 इत्येकीभूतमालोक्य ज्ञस्तिष्ठत्यम्बरोपमः ॥ ३ ॥
32346
32347 इति उक्तप्रकारेणापवादेनैकीभूतमखण्डैकरसतां प्राप्तम् । ज्ञस्तत्त्वज्ञः
32348 ॥ ३ ॥
32349
32350 पृथ्व्यादिरहितेनेदं चिद्भासैव स्वयंभुवा ।
32351 साधितं यदि सिद्धेन ततः स्वात्मनि साधितम् ॥ ४ ॥
32352
32353 ननु जडस्य दृश्यस्य कथं संविदैकरस्यमित्याशङ्क्य आदिसर्गे
32354 चिन्मात्ररूपेणैव स्वयंभुवा स्वात्मन्येव
32355 दृश्यविवर्तकल्पनात्करकाकाठिन्यस्य
32356 द्रवैकरस्याविरोधवदुपपत्तेरित्याशयेनाह - पृथ्व्यादिरहितेनेति ॥ ४ ॥
32357
32358 संइद्यथा या यतते तथा सैव व्यवस्थिता ।
32359 विसृष्टा सृष्टिविन्नद्यां यावद्यत्नान्न रोधिता ॥ ५ ॥
32360
32361 तर्हि विनैव प्रयत्नं करकाकाठिन्यवदेव दृश्यविलयः किं न स्यात्तत्राह
32362 - संविदिति । सृष्टिं वेत्तिति सृष्टिवित्स्वयंभूचैतन्यं तल्लक्षणायां
32363 नद्यां तदेकदेशभूता या जीवसंविद्यथा यादृशप्रवृत्तिप्रवाहेण
32364 यथा यादृशकार्यकरणफलभावाय यतते सा तथा
32365 तादृशकार्यकरणफलभावेन विसृष्टा सती स्वप्रयत्नानुसारात्तथैव
32366 व्यवस्थिता सा यावद्विरुद्धनिवृत्तिप्रयत्नान्न रोधिता तावन्न निवर्तत
32367 इत्यर्थः ॥ ५ ॥
32368
32369 चिदाकाशावभासोऽयं जगदित्यवबुध्यते ।
32370 चिद्व्योम्न्येवात्मनि स्वच्छे परमाणुकणं प्रति ॥ ६ ॥
32371
32372 ननु ब्रह्मसृष्टमिदं जगत्कथं जीवप्रयत्नेन विरुध्येत नहि
32373 महाराजाज्ञासिद्धं पृथग्जनप्रयत्नेन निवर्तयितुं
32374 शक्यमित्याशङ्क्याह - चिदाकाशेति । यद्यपि चिद्व्योम्न्येव स्वच्छे
32375 ब्रह्मात्मनि चिदाकाशस्य मायिकोऽयभासोऽयं जगदित्यवबुध्यते इति
32376 ब्रह्मसृष्टं जगत् तथापि तन्नापरिच्छिन्नब्रह्मभावं प्रति
32377 तथावबुध्यते किंतु
32378 बुद्ध्यादिपरिच्छिन्नोपाधिवशात्परमाणुकणमत्यन्तपरिच्छिन्नं जीवं प्रति ।
32379 तदीयप्रयत्नजन्यकर्मभोगार्थमेअ ब्रह्मणि तदारोपात् । तथाच
32380 तत्प्रयत्नजन्यबोधेन दृश्यमार्जनं संभवत्येवेति भावः ॥ ६ ॥
32381
32382 एवमस्या मुधाभ्रान्तेः का सत्ता केव वासना ।
32383 का वास्था का च नियतिः कावश्यंभावितोच्यताम् ॥ ७ ॥
32384
32385 एवंच सति सत्तनियतिवासनादिभिरपि न दृश्यत्राणप्रसक्तिरित्याशयेनाह ##-
32386
32387 सर्वं चैतद्यथादृष्टं स्थितमित्थमखण्डितम् ।
32388 मायैवेयमनन्तेयं न च मायास्ति काचन ॥ ८ ॥
32389
32390 मायादृष्टौ सर्वमेतद्यथादृष्टं स्थितमपि न परमार्थदृष्टौ
32391 संभवति । यतो मायाकार्यभूतेयं सृष्टिर्मायैव । न च माया
32392 वस्तुसतीत्यर्थः ॥ ८ ॥
32393
32394 श्रीराम उवाच ।
32395
32396 अहो नु परमा दृष्टिर्दर्शिता भगवंस्त्वया ।

32397 दावाग्निदग्धकक्षाणां दाहशान्तौ कलैन्दवी ॥ ९ ॥
32398
32399 दावाग्निना दग्धानां कक्षाणां तृणसंघानां दाहशान्तौ
32400 पुनर्हरिताङ्कुरप्ररोहाय ऐन्दवी कलेव संसारतापतप्तानां
32401 शान्तिविवेकप्ररोहायेयं दृष्टिरित्यर्थः ॥ ९ ॥
32402
32403 अहो नु सुचिरेणाद्य ज्ञातं ज्ञातव्यमक्षतम् ।
32404 मया यथेदं यच्चेदं यादृग् ज्ञेयं यतो यदा ॥ १० ॥
32405
32406 पञ्चभिर्यद्वृत्तैः
32407 क्रमात्प्रकारस्वरूपदृष्टान्तप्रमाणकालास्तत्त्वबोधोचिताः कीर्त्यन्ते ।
32408 यादृग्भिर्दृष्टान्तैरधिकारिभिर्वा ज्ञेयम् ॥ १० ॥
32409
32410 शाम्यामीव द्विजश्रेष्ठ निर्वामीव विकल्पयन् ।
32411 एतदाख्यानमाश्चर्यं व्याख्यानं शास्त्रदृष्टिषु ॥ ११ ॥
32412
32413 विकल्पयन् जगत्तत्त्वं विचारयन् । उपाधिशान्त्या शाम्यामिव ।
32414 नित्यनिर्वाणस्वरूपावाप्त्या निर्वामीव शास्त्राणि श्रुतयस्तत्प्रदर्शितासु
32415 दृष्टिषु ज्ञानेषु । व्याख्यानमुपबृंहणभूतम् ॥ ११ ॥
32416
32417 प्। २७८) १७२
32418
32419 इमं मे भगवन्ब्रूहि संशयं सर्वकोविद ।
32420 तव पातुं न तृप्तोऽस्मि श्रोत्रपात्रैर्वचोमृतम् ॥ १२ ॥
32421
32422 इमं वक्ष्यमाणम् ॥ १२ ॥
32423
32424 स सर्गत्रितये कालो लीलाभर्तुर्हि योगतः ।
32425 स क्वचित्किमहोरात्रः क्वचित्किं मासमात्रकः ॥ १३ ॥
32426
32427 स प्रागुक्तः सर्गत्रितये वासिष्ठपाद्मवैदूरथसर्गेषु यः कालो गतः स
32428 क्वचिद्गिरिग्रामे अहोरात्राष्टकात्मकः प्रागुक्तः पाद्मसर्गे तु मासमात्रको
32429 वैदूरथे तु बहुवर्षात्मक इति ब्रह्माण्डभेदः ॥ १३ ॥
32430
32431 क्वचित्किं बहुवर्षाणि कस्यचित्किमु पेलवः ।
32432 कस्यचित्किं महादीर्घः कस्यचित्किं क्षणः स्थितः ॥ १४ ॥
32433
32434 एकस्मिन्नपि ब्रह्माण्डे मनुष्याणां संवत्सरो देवानां दिनमिति पेलवः ।
32435 कस्यचित्क्षुद्रजन्तोः स एव महादीर्घः । कस्यचित्स्वयंभुवः क्षण इति एक एव
32436 कालो देशलोकादिभेदेन विरुद्धरूपः किं स्थितः । अर्थसत्तैकरूप्ये
32437 प्रतीतिवैषम्यं कथमित्याशयः । इति इमं संशयं मे ब्रूहीति संबन्धः ॥
32438 १४ ॥
32439
32440 इति मे भगवन्ब्रूहि त्वं यथावदनुग्रहात् ।
32441 सकृच्छ्रुतं न विश्रान्तिमेति लोष्टे यथा जलम् ॥ १५ ॥
32442
32443 ननु देशदैर्घ्यं यथा नास्ति कालदैर्घ्य तथैव हि इति
32444 प्रागेवास्योत्तरमुक्तप्रायं तत् किं पुनः पृच्छसि तत्राह - सकृदिति ।
32445 लोष्टे शुष्कमृत्पिण्डे । जलं जलबिन्दुः ॥ १५ ॥
32446
32447 श्रीवसिष्ठ उवाच ।
32448

32449 येन येन यथा यद्यद्यदा संवेद्यतेऽनघ ।
32450 तेन तेन तथा तत्तत्तदा समनुभूयते ॥ १६ ॥
32451
32452 यद्यर्थसत्तनुसारिणी प्रतीतिः स्यात्तदा स्यादयं विरोधः प्रतीत्यनुसारिण्यां
32453 त्वनिर्वचनीयार्थसत्तायां प्रतिद्रष्टृर्थभेदान्न कालवैषम्यं दोष
32454 इत्याशयेनोत्तरमाह - येन येनेति ॥ १६ ॥
32455
32456 अमृतत्वं विषं याति सदैवामृतवेदनात् ।
32457 शत्रुर्मित्रत्वमायाति मित्रसंवित्तिवेदनात् ॥ १७ ॥
32458
32459 तदेवोदाहरति - अमृतत्वमित्यादिना । अमृतत्वं अमृतवज्जिवनहेतुत्वम् ।
32460 अमृतवेदनाज्जीवनसाधनत्ववेदनात् । तथाहि ।
32461 तादृशदृढसंवेदनाविषकृमयो विषेणैव जीवन्ति । कथं तर्हि
32462 प्रमादाद्भोज्यबुद्ध्या विषं भुक्तवता मरणदर्शनमिति चेत्कृमिवत्तेषां
32463 विषे चिराभ्यस्तजीवनहेतुतादृढसंवेदनाभावाद्विषे
32464 मरणहेतुतानिश्चयसंस्कारसत्त्वाच्चेति ॥ १७ ॥
32465
32466 यथा भावितमेतेषां पदार्थानां निजं वपुः ।
32467 तदेव हि चिराभ्यासान्नियतेर्वशमायतम् ॥ १८ ॥
32468
32469 एतदेव स्पष्टयति - तदेव हीति । तथाच
32470 नियतिवशीकारपर्यन्तचिराभ्यस्तसंवेदनानुसारिणी पदार्थेष्वर्थक्रिया
32471 नियतिरिति भावः ॥ १८ ॥
32472
32473 कचनैकात्मिकैषा चिद्यथा कचति यादृशम् ।
32474 तथा तथाशु भवति तत्स्वभावैककारणात् ॥ १९ ॥
32475
32476 किंच संविदः स्फुरणं स्वभावः अर्थविशेषाकारता तु तस्या
32477 द्रष्टृसंस्कारानुरोधिनी । तथा चैकस्यामेव संविदि
32478 कस्यचित्संस्कारानुसारेण निमेषारोपः कस्यचित्कल्पाद्यारोपश्च न विरुध्यत
32479 इत्याह - कचनैकेति त्रिभिः ॥ १९ ॥
32480
32481 निमेषे यदि कल्पौघसंविदं परिविन्दति ।
32482 निमेष एव तत्कल्पो भवत्यत्र न संशयः ॥ २० ॥
32483
32484 कल्पे यदि निमेषत्वं वेत्ति कल्पोऽप्यसौ ततः ।
32485 निमेषीभवति क्षिप्रं तादृगूर्पात्मिका हि चित् ॥ २१ ॥
32486
32487 दुःखितस्य निशा कल्पः सुखितस्यैव च क्षणः ।
32488 क्षणः स्वप्ने भवेत्कल्पः कल्पश्च भवति क्षणः ॥ २२ ॥
32489
32490 लोकेऽप्ययं प्रकारः प्रसिद्ध एवेत्याह - दुःखितस्येति ॥ २२ ॥
32491
32492 यथा च मृत्वा जातोऽहं तरुणो यौवनस्थितः ।
32493 यातोऽस्मि योजनशतं स्वप्न इत्यनुभूयते ॥ २३ ॥
32494
32495 इति स्वप्नोऽनुभूयते कैश्चिदिति शेषः ॥ २३ ॥
32496
32497 रात्रिं द्वादशवर्षाणि हरिश्चन्द्रोऽनुभूतवान् ।
32498 लवणो भुक्तवानायुरेकरात्र्या समाः शतम् ॥ २४ ॥
32499
32500 तदेवोदाहरति - हरिश्चन्द्र इति । प्रसिद्धं चेदं मार्कण्डेयपुराणादौ

32501 लवणो राजा। इदं चाग्रे वक्ष्यति॥ २४॥
32502
32503 यन्मुहूर्तः प्रजेशस्य स मनोर्जीवितं मुनेः।
32504 जीवितं यद्विरिञ्चस्य तद्दिनं किल चक्रिणः॥ २५॥
32505
32506 मनोर्यज्जीवितमायुः स मुनेरात्ममननशीलस्य प्रजेशस्य मुहूर्तः
32507 मुनेरित्युत्तरेऽपि संबध्यते॥ २५॥
32508
32509 विष्णोर्यज्जीवितं राम रद्वृषाङ्कस्य वासरः।
32510 ध्यानप्रक्षीणचित्तस्य न दिनानि न रात्रयः॥ २६॥
32511
32512 निर्विकल्पसमाधौ तु दिनरात्रिभेद एव नास्तीत्याह - ध्यानेति॥ २६॥
32513
32514 न पदार्था न च जगत्सत्यमात्मनि योगिनः।
32515 मधुरं कटुतामेति कटुभावेन चिन्तितम्॥ २७॥
32516
32517 मधुरं प्रियं विषयजातम्। कटुतां अप्रियताम्। कतुभावेन
32518 वैराग्यवासनया॥ २७॥
32519
32520 कटु चायाति माधुर्यं मधुरत्वेन चिन्तितम्।
32521 मित्रबुद्ध्या द्विषन्मित्रं रिपुबुद्ध्या रिपुः सुहृत्॥ २८॥
32522
32523 कटु प्रागप्रियं इन्द्रियमनःप्राणनिरोधादिमाधुर्यमात्मसुखप्रसादेन
32524 प्रियतमताम्। विषयलम्पटतां द्विषद्गुरुशास्त्रादिमित्रबुद्ध्या
32525 आप्ततमत्वबुद्ध्या सेवितः सुहृत्परमाप्ततओ भवति। एवं प्राक्तनो
32526 विषयभोगसहायः सुहृन्मूढः स्वजनो रिपुबुद्ध्या पुरुषार्थविघातीति
32527 बुद्ध्या भावितस्तथैव भवतीति॥ २८॥
32528
32529 भातीति महाबाहो यथासंवेदनं जगत्।
32530 अनभ्यस्ताः पदार्था ये शास्त्रपाठजपादयः॥ २९॥
32531
32532 उक्तं न्यायं जपोपासनश्राणादिष्वपि दर्शयति - अनभ्यस्ता इति॥ २९॥
32533
32534 तेषां संवेदनाभ्यासान्नूनमभ्येति साम्यता।
32535 नौयायिनां भ्रमार्तानां वेदनाद्भूर्विवर्तते॥ ३०॥
32536
32537 सममेव साम्यं तद्भावः साम्यता अवैषम्यं स्वाधीनता अभ्येति प्राप्नोति।
32538 संपद्यत इति यावत्। भूर्विवर्तते चलति॥ ३०॥
32539
32540 अवेदनाभ्रमार्तानामपि नैषां विवर्तते।
32541 शून्यमाकीर्णतामेति वेदनात्स्वप्नदृक्ष्विव [स्वप्नदृष्टिवत् इति
32542 पाठः]॥ ३१॥
32543
32544 वेदनाभ्रमार्तिशून्यानामेषां तीरस्थानां तु दृष्ट्या न विवर्तते॥ ३१॥
32545
32546 प्। २७९) १७२
32547
32548 वेदनात्पीतमानीलं शुक्लं वाप्यनुभूयते।
32549 आपद्वदुत्सवः खेदं करोति परिमोहतः॥ ३२॥
32550
32551 अनुभूयते नभः परिमोहत इति। तथाहि बालाः स्वोत्सवेष्वपि क्वचिद्रुदन्तो
32552 दृश्यन्ते॥ ३२॥

कुड्येऽपि ख इवाचारो दृष्टो नन्वविचारिणः |
असद्यक्षो विमूढानां प्राणानप्यपकर्षति || ३३ ||

मिथ्याभूतार्थानामर्थक्रियासामर्थ्यमपि लोकप्रसिद्धमित्याह -
असद्यक्ष इत्यादिना || ३३ ||

वेदनात्स्वप्नवनिता जाग्रतीव रतिप्रदा |
यद्यथाभासमायातं तत्तथा स्थिरतां गतम् || ३४ ||

असदेव नभश्चैव नभ एव चिदात्मनि |
शतहस्ताम्बुदच्छायानटनृत्तमिवाततम् || ३५ ||

असदेवेति | नास्त्येवेत्यर्थः | तर्हि किमलीकं नेत्याह - नभश्चैवेति | कार्यस्य
कारणमात्रत्वादव्याकृताकाशमेवेत्यर्थः | तथाच तन्नभ एव
स्वाधिष्ठानचिदात्मनि शतहस्तस्य अम्बुदच्छायाकल्पितमिथ्यानटस्य
नृत्तमभिनयविशेष इव जगद्वैचित्र्यभावेनाततं विस्तीर्णमिति
कलितमित्यर्थः || ३५ ||

गगने [मूले गमने इति पाठः टीकायां च गगने इति भूलाननुगुणः
प्रतीको मुद्रितपुस्तके लभ्यते] मानसं स्पन्दं जगद्विद्धि न वस्तु
तत् |
मिथ्याज्ञानपिशाचस्य स्पन्ददर्शनमाकृति || ३६ ||

सर्वमनःसमष्टिव्यष्टिकार्यत्वादपि तस्यासत्यतैवेत्याशयेनाह - गगने
इति | बालस्य मिथ्याज्ञानकलिप्तपिशाचस्य यत्स्पन्ददर्शनं तन्मा तदुपमा
मनोमात्राकृतिर्यस्य तत् || ३६ ||

मायामात्रकमेवेदमरोधकमभित्तिमत् |
इदं भास्वरमाभातं स्वप्नसंदर्शनं स्थितम् || ३७ ||

वास्तवमूर्तत्वाभावात्स्वयमन्यस्यारोधकं
अभित्तिमत्स्वरोधकवस्त्वन्तरशून्यं च भास्वरं स्फुटमाभातमिदं जगत्
असुप्तस्य नरस्यापूर्वमेवोदितं स्वप्नसंदर्शनं विदुस्तत्त्वविद इति
परेणान्वयः || ३७ ||

अपूर्वमेवासुप्तस्य नरस्येवोदितं विदुः |
अचेता चेतति स्तम्भो यादृशं शालभञ्जिकाम् || ३८ ||

अचेता स्वस्फुरणानुकुल्लस्वव्यापारशून्यश्चेतति स्वात्मनि प्रथयति
शालभञ्जिकां प्रतिमारूपम् | स्वयं यादृशो यादृशं
यादृक्स्वरूपां सृष्टिं चेतति सर्गकाले पश्यति परमार्थमहास्तम्भः
सर्वाधिष्ठानचिदात्मापि तादृशो भूत्वा तादृशीं सृष्टिं सर्गकाले
पश्यतीत्यर्थः || ३८ ||

परमार्थमहास्तम्भः सृष्टिं चेतति तादृशम् |
यादृशो मे नरः पार्श्वे स्वप्ने क्षुब्धो महाभटैः || ३९ ||

स्वप्ने मे मम पार्श्वे महाभटैः क्षुब्धः क्षोभितो नरो बुद्धोऽपि
सुषुप्तवदज्ञानमात्रस्वभावो न वस्तुसन् ब्रह्मणः सर्गोऽपि तादृश एवेति
परेणान्वयः || ३९ ||

32605 ताद्दशो ब्रह्मणः स्वर्गो बुद्ध एव सुषुप्तवत् |
32606 तृणगुल्मलतायुक्तः शिशिरान्ते यथा रसः || ४० ||
32607
32608 शिशिरस्यान्ते वृक्षादीनां पत्रशातनकाले वासन्तः अग्रे वसन्ते
32609 पल्लवपुष्पाद्यात्मना आविर्भविष्यंस्तृणगुल्पलतायुक्तो रसो भूमौ
32610 उपादाने यथा संस्थितस्तथेत्यर्थः || ४० ||
32611
32612 वासन्तः संस्थितो भूमौ तथा सर्गः परे पदे |
32613 यथा द्रवत्वं कनके स्थितमन्तरनुन्मिषत् || ४१ ||
32614
32615 तथा स्थितः परे सर्ग आत्मवर्गादणावणौ |
32616 संनिवेशो यथाङ्गानामङ्गिनोऽनन्य आत्मनः || ४२ ||
32617
32618 आत्मवर्गाज्जीवसंघान्निमित्तादणावणौ तद्भोग्यः सर्गः परे स्थितः अस्ति
32619 भविष्यति चेत्यर्थः | अङ्गानामचयवानां संनिवेशः संस्थानभेदः
32620 अङ्गिन आत्मनः स्वस्मादनन्यः अव्यतिरेकतः | अपृथक्सत्ताक इति यावत् || ४२ ||
32621
32622 जगदेवमनङ्गस्य स्वात्मनो ब्रह्मणस्तथा |
32623 याद्दगेकनरः स्वप्ने युद्धमन्यं नरं प्रति || ४३ ||
32624
32625 तथा जगत्स्वात्माभिन्नब्रह्मणः सकाशात् एवं अव्यतिरेकत इत्यर्थः |
32626 समसत्ताकत्ववारणायानङ्गस्येत्युक्तिः | एकस्य नरस्य स्वप्ने अन्येन नरेण
32627 सह युद्धं तत्काले तं प्रति सद्रूपमन्यं प्रत्यसद्रूपमपि द्रष्टुः
32628 स्वात्मैव तथेदं मायाव्योमगं जगदपि मायिकद्दष्ट्या सदपि
32629 तदन्यशुद्धद्दष्ट्या असदेवेत्यर्थः || ४३ ||
32630
32631 ताद्दशं सदसद्रूपं स्वात्मेदं व्योमगं जगत् |
32632 महाकल्पान्तसर्गादौ चित्स्वभावमिदं जगत् [वपुः इति पाठः] ||
32633 ४४ ||
32634
32635 आद्यन्तकालयोः सद्ब्रह्ममात्राभावेन परिशेषादपि तन्मात्रस्वभावतेत्याह
32636 - महाकल्पान्तेति || ४४ ||
32637
32638 कारणत्वं मिथः पश्चादसदेति न वास्तवम् |
32639 मुक्तेऽस्मिन्ब्रह्मणि यदि ब्रह्मान्यः स्मृतिजो भवेत् |
32640 तत्स्मृतिज्ञप्तिजे सर्गे स्थितैव ज्ञप्तिमात्रता || ४५ ||
32641
32642 कारणत्वं कार्यविभागे सति मिथस्तत्सापेक्षकारणत्वकल्पनम् |
32643 सर्वजगदाकारपरिणतपूर्वपूर्वहिरण्यगर्भाहंभावकल्पनात्मकोपासनस
32644 ंस्कारजन्यस्मृतिकल्पितत्वादपि जगतोऽधिष्ठानसन्मात्रानतिरिक्ततेत्याह -
32645 मुक्ते इति || ४५ ||
32646
32647 श्रीराम उवाच |
32648
32649 पौराणां मन्त्रिमुख्यानां विदूरथकुलक्रमः |
32650 सममेव कथं तत्र सर्वेषां प्रतिभासितः || ४६ ||
32651
32652 ब्रह्माण्डान्तरस्थानामिवैकनगरस्थानामपि प्राणिनां प्रत्येकं
32653 वासनाकर्मादिवैचित्र्यात्स्वप्न इव जागरेऽपि क्रमवैचित्र्याद्यारोपः किं न
32654 स्यादित्याशयेन रामः पृच्छति - पौराणामिति | समं एकरूपमेव यथा
32655 स्यात्तथा कथं प्रतिभासितो भातः | तत्र को हेतुरित्यर्थः || ४६ ||
32656

32657 श्रीवसिष्ठ उवाच।
32658
32659 चितः समनुवर्तन्ते मुख्यायाः सर्वसंविदः।
32660 यथा विपुलवात्यायाः सामान्या वातलेखिकाः॥ ४७॥
32661
32662 स्रष्टृसंकल्पकृता इतरजीवसंविदां प्रधानजीवसंविदनुवृत्तिनियतिरेव
32663 तत्र हेतुरित्याशयेन वसिष्ठ उवाच - चित इत्यादिना। सामान्या अल्पाः॥ ४७॥
32664
32665 प्। २८०) १७३
32666
32667 परस्परानुसारेण तथारूपेण संविदः।
32668 कचितास्ताः प्रजापालप्रजावास्तव्यमन्त्रिणः॥ ४८॥
32669
32670 तदनुरूपफलोन्मुखभोजकादृष्टमेलनं च तत्र हेतुरित्याशयेनाह -
32671 परस्परेति। तथा ऐकरूप्येण रूपयति संपादयतीति तथारूपमदृष्टजातं
32672 तेन प्रजापालश्च प्रजाश्च वास्तव्याः पुरवासिनश्च मन्त्रिणश्च
32673 परस्परानुसारेण कचिताः॥ ४८॥
32674
32675 एवंरूपात्कुलाज्जातो राजास्माकमयं त्वसौ।
32676 कचिता इएव वास्तव्यविदो वैदूरथे पुरे॥ ४९॥
32677
32678 कचने वैचित्र्यं प्रपञ्चयंस्तस्य मिथ्यात्वमाह - एवंरूपादिति।
32679 वैदूरथे पुरे वास्तुषु वेश्मभूमिषु भवा वास्तव्याः
32680 पदार्थास्तद्विदस्तदुपभोगिनो जना इति कचिता इव॥ ४९॥
32681
32682 कचने चित्स्वभावस्य न च कारणमार्गणम्।
32683 युक्तं महामणेर्भासामिवान्यत्र स्वभावतः॥ ५०॥
32684
32685 ननूदासीनायाः संविदोऽध्यस्तविषयप्रथालक्षणे कचने को हेतुरितिचेन्नात्र
32686 हेतुचिन्ता युक्ता कचनस्यागन्तुकत्वादतोऽन्यत्र आगन्तुकविषयेष्वेव सा युक्ता।
32687 यथा उदासीनस्य चिन्तामणेर्भासां प्रसरे न हेत्वन्तरापेक्षा किंतु
32688 विचित्रार्थजनने चिन्तकजनमनोरथवैचित्र्यापेक्षा तद्वदित्याह - कचने इति॥
32689 ५०॥
32690
32691 अहमेवं कुलाचारे राजा स्यामेवमित्यपि।
32692 विदूरथविदो रत्नादुदिता प्रतिभा यथा॥ ५१॥
32693
32694 प्राक्तदनुकूलसंकल्पवैचित्र्योत्पत्तिरपि यथोक्तरीत्यैवेत्याह - अहमिति।
32695 विदूरथस्य विदो जीवचैतन्यान्निमित्तात्। तथाच चिन्तामणिरिव। चिन्मणिरपि
32696 यथामनोरथमेवार्थान् प्रसूते इति दर्शयति - रत्नादिति। प्रतिभा
32697 मनोरथः॥ ५१॥
32698
32699 यावन्तो जन्तवो यस्मिन्ये ये सर्गे यदा यदा।
32700 ते सर्वगत्वाच्चिद्धातोरन्योन्यादर्शतां [सर्गगत्वात् इति पाठः]
32701 गताः॥ ५२॥
32702
32703 अनेकेषु जीवचैतन्येषु तुल्यविषयारोपक्रमेण दर्पणानां
32704 परस्परान्तर्गतप्रतिबिम्बग्राहित्वमिव संपन्नमित्याह - यावन्त इति॥ ५२॥
32705
32706 तीव्रवेगवती या स्यात्तत्र संविदकम्पिता।
32707 सैवायाति परं स्थैर्यमामोक्षं त्वेकरूपिणी॥ ५३॥
32708

32709 नन्वेवं सति सतिबिम्बे प्रतिबिम्बोदयस्यावर्जनीयत्वात्कथं
32710 निर्विषयतालक्षणमोक्षप्राप्तिरित्याशङ्क्याह - तीव्रवेगवतीति | तत्र तासु
32711 जीवसंवित्सु मध्ये यैव जीवसंविद्ब्रह्माकारवृत्तिस्तीव्रवेगवती
32712 विषयदोषैरकम्पिता सती आमोक्षमेकरूपिणी भवति सैव परं सर्वोत्कृष्टं
32713 ब्रह्मभावेन स्थैर्यं मोक्षलक्षणमायाति नान्येत्यर्थः || ५३ ||
32714
32715 बलवच्चिद्विलासानामनुवृत्त्या परस्परम् |
32716 स्वभावाः प्रतिबिम्बन्ति चिदादर्शे स्वभावतः || ५४ ||
32717
32718 तां तथाच जगदाकारस्य ब्रह्माकारस्य वा जीवचितिप्रतिबिम्बने
32719 तीव्रवेगवत्तालक्षणबलवत्तत्तदाकारचिद्विलासा एव नियामकस्तथैव
32720 नियतिस्वभावत इत्याह - बलवदिति || ५४ ||
32721
32722 तत्रातियत्नाज्जयति सत्याः संविदः आत्मसात् |
32723 कुर्वन्ति सरिदम्भोधिगामिनी सरितो यथा || ५५ ||
32724
32725 नन्वेवं सति जगदुन्मुखत्वस्य चिराभ्यस्तत्वात्तत्रैव तीव्रवेगोदये न मोक्षं
32726 प्रत्याशेत्याशङ्क्याह - तत्रेति | अयत्नजवेगाद्यत्नजवेगस्य
32727 प्राबल्यदर्शनादतियत्नात्संपादितो ब्रह्माकारवेग एव जयति
32728 जगदाकारचिद्विलासवेगम् | किंच सत्यासत्यगोचरसंविदोः सत्यगोचराणां
32729 प्राबल्यदर्शनात्सत्या ब्रह्माकारसंविद एवैनमात्मसात् आत्माधीनं कुर्वन्ति
32730 | यथा अम्भोधिगामिनी महासरित्स्वमिलिताः क्षुद्रसरितः स्वाधीनवृत्तिः करोति
32731 तद्वदित्यर्थः || ५५ ||
32732
32733 ये समास्तत्र ते तावद्यतन्ते चित्स्वभावतः |
32734 यावदेको जयत्यत्र द्वितीयः स निमज्जति || ५६ ||
32735
32736 अस्तु ब्रह्माकारतायास्तीव्रवेगत्वे जयो यदा तु
32737 मन्दमध्यमाधिकाराच्चित्ताप्रतिष्ठितेर्विच्छिद्य विच्छिद्य ब्रह्माकारतोदयो
32738 बाह्याकारतोदयश्च तदा समत्वान्नैकतरजयं प्रत्याशेत्याशङ्क्याह -
32739 ये इति | येऽधिकारिण उक्तोभयाकारे समाः समवेगास्ते न तथैवावतिष्ठन्ते
32740 किंतु अत्र उक्ताकारद्वयमध्ये यावदेको ब्रह्माकारः प्रतिष्ठितः सन् जयति
32741 उत्कर्षकाष्ठां गच्छति द्वितीयः स बाह्याकारश्च निमज्जति तावद्यतन्ते
32742 श्रवणाद्यावृत्तिलक्षणं यत्नं कुर्वन्ति | तथा च
32743 तेषामप्यभ्यासक्रमात्तीव्रवेगोदयेनेतरजयसिद्धिरित्यर्थः || ५६ ||
32744
32745 जायमानेषु नश्यत्सु वर्तमानेषु भूरिशः |
32746 एवं सर्गसहस्रेषु परमाणुकणं प्रति || ५७ ||
32747
32748 एवं प्रासङ्गिकानिर्मोक्षप्रसङ्गनिरासमुपपाद्य प्रस्तुतं प्रतिजीवं
32749 समविषमसर्ववैचित्र्यमेवावलम्ब्याह - जायमानेष्वित्यादिना |
32750 औपाधिकपरिच्छेदारोपात्परमाणुकणं जीवजातं प्रति एवं उक्तप्रकारेषु
32751 समविषमेषु सर्गसहस्रेषु भ्रान्त्या जायमानेषु वर्तमानेषु नश्यत्सु च
32752 परमार्थतो न किंचित्केनचिज्जिवकणेन धावतापि प्राप्तं केनचिदुदासीनेनापि
32753 स्थितं न प्राप्तम् | अवस्तुनः प्राप्यप्राप्त्युभयायोग्यत्वादित्यर्थः || ५७ ||
32754
32755 न किंचित्केनचिद्व्याप्तं [केनचिद्याप्तं इति क्वाचित्कः पाठः] न
32756 किंचित्केनचित्स्थितम् |
32757 चिदाकाशमिदं शान्तमतः सर्वमभित्तिमत् || ५८ ||
32758
32759 अयमाभासते स्वप्नो निर्निद्रो दृष्टिवर्जितः |
32760 अवश्यंभाविबोधस्तु स्वनुभूतोऽप्यसन्मयः || ५९ ||

दृष्टिवर्जितो विवेकदृष्टिशून्यः। अवश्यंभावी बोधः
अधिष्ठान्मसाक्षात्कारो यस्य तथाविधस्तु सन्
प्रागनुभूतोऽप्यसन्मयोऽलीकसदृशः॥ ५९॥

पत्रपुष्पफलांशात्मा यथैकः स्वास्थितो द्रुमः।
अनन्तसर्वशक्त्यात्मा ह्येक एव तथा विभुः॥ ६०॥

शुद्धदृष्ट्या प्रपञ्चस्यापृथक्सत्त्वमुक्त्वा मायाशबलदृशाप्याह
- पत्रेति॥ ६०॥

मातृमेयप्रमाणादिमायात्मकमजं पदम्।
बुद्धं विस्मृतिमायाति न कदाचन कस्यचित्॥ ६१॥

जीवदृशापि आबोधं भिन्नरूपमपि बोधे
पुनर्विस्मृतिहेत्वज्ञानाभावादेकमेवावतिष्ठत इत्याह - मात्रिति॥ ६१॥

शून्योदयास्तमयवस्तु तमःप्रकाशं
दिक्कालरूप्यपि सदैकमनादिशुद्धम्।
आद्यन्तमध्यरहितं स्थितमच्छमम्बु
सौम्यत्ववीचिवलनाढ्यमिवैकमेव॥ ६२॥

मायावभासकत्वप्रयुक्ते नानात्वेऽपि शुद्धस्य न वास्तवैकरूप्यस्थितिविरोध
इत्याशयेनोपसंहरति - शून्येति। तमः प्रकाशयति साक्षिभावेनेति तमः
प्रकाशं तथाविधं सत्। दिक्कालरूप्यपि परमार्थतः सदा शुद्धम्।
शून्यौ सर्वविकारोदयास्तमयौ यत्र तथाविधमात्मवस्तु
आद्यन्तमध्यरहितं सदेकमेव स्थितम्। यथा अच्छं निर्मलमम्बु
सौम्यत्वाढ्यं वीचिवलनाढ्यं वा अम्बुस्वरूपैकरूप्यादेकमेव
तद्वदित्यर्थः॥ ६२॥

प। २८१) १७३

अहंत्वमित्यादिजगत्स्वरूपा
विशुद्धबोधैकविभा विभाति
आकाशकोशे निजशून्यतेव
द्वैतैक्यसंकल्पविकल्पनाच्च॥ ६३॥

विशुद्धबोधैकरूपस्य ब्रह्मणः स्वरूपभूता विभा प्रकाश एव
द्वैतैक्यगोचरसंकल्पविकल्पनरूपान्मनसो
निमित्ताच्चकारात्तन्मूलभूताविद्याकामकर्मवासनादिवशाच्चाहंममेत्याद्य्
अध्यस्तजगत्स्वरूपा विभाति। यथा आकाशलक्षणे कोशे निजा शून्यतैव
तलमालिन्यमौक्तिककेशोण्ड्रककटाहाद्याकारतया भाति तद्वदित्यर्थः॥ ६३॥

इत्यार्षे श्रीवासिस्।ठमहारामायणे वाल्मीकीये मोक्षोपायेषूत्पत्तिप्रकरणे
लीलो० प्रयोजनवर्णनं नाम षष्ठितमः सर्गः॥ ६०॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पतीप्रकरणे
प्रयोजनवर्णनं नाम षष्टितमः सर्गः॥ ६०॥

एकषष्टितमः सर्गः ६१

32813 श्रीराम उवाच।
32814
32815 अहं जगदिति भ्रान्तिः परस्मात्कारणं विना।
32816 यथोदेति तथा ब्रह्मन्भूयः कथय साधु मे॥ १॥
32817
32818 प्रयोजनप्रसिद्ध्यर्थं वैराग्यार्थं च संसृतेः।
32819 असारत्वमसत्त्वं च युक्तिभेदेन वर्ण्यते॥ १॥
32820
32821 अनहंभूतदेहादौ अहंभावकारणं विनाप्यहमिति भ्रान्तिः
32822 परमाणुक्षणोदरे वैपुल्यचिरभावलक्षणजगत्संनिवेशकारणं विनापि
32823 जगदिति भ्रान्तिर्यथा यादृशकल्पनाक्रमेण यादृशोपपत्त्या चोदेति तथा
32824 कथयेत्यर्थः। ननु महाकल्पान्तसर्गादौ चित्स्वभावमिदं वपुः इत्यादिना
32825 प्राक्कथितमेवेदं कथं पुनः पृच्छ्यते तत्राह - भूय इति। साधु
32826 याभिरुपपत्तिभिरनुभवमारोहति तादृशोपपत्तिपरिष्कृतं यथा स्यात्तथा
32827 कथयेत्यर्थः॥ १॥
32828
32829 श्रीवसिष्ठ उवाच।
32830
32831 समस्ताः समतैवान्ताः संविदो बुध्यते यतः।
32832 सर्वथा सर्वदा सर्वं सर्वात्मकमजस्ततः॥ २॥
32833
32834 तत्र सर्वभ्रान्तीनां संविदन्तःप्रथमानत्वमेव मुख्योपपतीरिति प्रथमं
32835 श्रीवसिष्ठ उवाच - समस्ता इति। यतः असौ बोद्धा सर्वथा सर्वप्रकाराः
32836 समस्ताः भ्रान्तीः संविदः स्वरूपचैतन्यस्यैव आन्ता अन्तर्निविष्टाः सर्वदा
32837 बुध्यते न कदाचिदपि काश्चिदपि तद्बहिर्भूताः ततः सर्वं सर्वात्मकं सा च
32838 समतैव। न हि सर्वस्य सर्वात्मकत्वे वैषम्यं परिशिष्यते। न हि तदभावे
32839 जन्मादिविक्रिया उपपद्यन्त इत्यजः परमात्मैव वस्तुतोऽस्तीति जगद्भ्रान्तिः
32840 कारणं विनैवेति यदुक्तं तदुपपन्नमित्यर्थः॥ २॥
32841
32842 सर्वा हि शब्दार्थदृशो ब्रह्मैवैताः पृथङ्न तत्।
32843 सर्वार्थशब्दार्थकलारूपमासां न विद्यते॥ ३॥
32844
32845 ननु चैतन्यान्तर्बुध्यमानत्वमात्रेण कथं सर्वस्य सर्वात्मतासिद्धिः।
32846 एकचित्तादात्म्यस्फुरणादिति चेन्न। विभिन्नविषयतादात्म्याद्घटज्ञानं
32847 पटज्ञानमिति चितोऽपि भेदानुभवेन भिन्नत्वादित्याशङ्क्याह - सर्वा हीति।
32848 न चितो भेदो यतः सर्वाः शब्दानामर्थानां च दृशो बोधा ब्रह्मैव। नहि
32849 ब्रह्मातिरिक्तचिद्धातुरस्ति। विषयभेदोपरागाद्धि चिति भेदो विभाव्यते
32850 विषयनिष्कर्षे तु तच्चिद्रूपान्न पृथक्। न भिद्यत इत्यर्थः। ननु
32851 विषयाकारतानुभवाद्विषयवद्भेदः किं स्यात्तत्राह - सर्वार्थेति। सर्वे ये
32852 अर्थ्यन्त इत्यर्था विषयभूताः शब्दार्थास्तत्कलास्तदंशभूतं
32853 यत्पृथुबुध्नोदराकाररूपं तदासां दृशां न विद्यते। चिति
32854 जडाकारसत्त्वे उपपत्त्यभावात्। यस्त्वनुभूयते आकारः स वृत्तेरेवेति भावः
32855 ॥ ३॥
32856
32857 कटकत्वं पृथग्घेम्नस्तरङ्गत्वं पृथग्जलात्।
32858 यथा न संभवत्येवं न जगत्पृथगीश्वरात्॥ ४॥
32859
32860 एवं चिद्भेदे निरस्ते जडभेदोऽपि तदपृथक्सत्तस्फूर्तिकत्वान्निरसितुं शक्य इति
32861 सदृष्टान्तमाह - कटकत्वमिति॥ ४॥
32862
32863 एष एव जगद्रूपं जगद्रूपं तु नेश्वरे।
32864 हेमैव कटकादित्वं कटकत्वं न हेमनि॥ ५॥

32865
32866 तथापि कथं कारणं विनोत्पन्नमित्युक्तेरुपपत्तिश्चित एव
32867 कनकवत्कारणत्वात्तत्राह - एष एवेति । सति हि जगतस्तस्माद्भेदे तत्प्रति
32868 कारणता स्यादत्यन्ताभेदे तु चितो न कारणत्वमित्यर्थः । तर्हि किं
32869 जगद्रूपमेव ब्रह्म नेत्याह - जगद्रूपं त्विति । नहि विवर्तः पृथक्
32870 सन्निर्त्याशयः । एवं च कटककुण्डलादयोऽपि हेमात्मकब्रह्मविवर्ता
32871 एवेत्याशयेनाह - हेमैवेति ॥ ५ ॥
32872
32873 यथावयविनो रूपमनेकावयवात्मकम् ।
32874 तथाऽनवयवायास्तु चितः सर्वात्मकं च यत् । ६ ॥
32875
32876 नन्वेकस्यानेकात्मताविरोध इत्याशङ्क्य यत्र
32877 समसत्ताकैरप्यनेकैरवयवैरेकस्यावयविनः समसत्ताकं तादात्म्यं लोके
32878 न विरुद्धं तत्र किं वाच्यं कल्पितैरनेकैर्वास्तवं
32879 ब्रह्मैक्यमविरुद्धमितीत्याशयेनाह - यथेति । किंचैकात्म्ये सर्वस्य
32880 सर्वात्मतालाभादनेकत्वापगमादप्यविरोध इत्याशयेनाह - सर्वात्मकं
32881 चेति ॥ ६ ॥
32882
32883 यत्तुल्यकालमखिलं तन्मात्रावेदनं परे ।
32884 अन्तस्थं तदिदं भाति जगदित्यहमित्यपि ॥ ७ ॥
32885
32886 किं तर्हि सर्वानुभवसिद्धं जगदित्यहमिति च नानात्वं तत्राह - यदिति ।
32887 परे ब्रह्मणि सर्वप्राणिनामन्तस्थं तुल्यकालं
32888 यद्ब्रह्ममात्रस्वरूपस्यावेदनमज्ञानं तदेव जगदित्यहमिति नानात्वेन
32889 भातीत्यर्थः ॥ ७ ॥
32890
32891 प्। २८२) १७४
32892
32893 लेखौघानां यथा भेदसंनिवेशः शिलोदरे ।
32894 तथानन्यज्जगदहं चेत्यन्तश्चिद्घने घनम् ॥ ८ ॥
32895
32896 लेखा राजयः यथा स्फटिकशिलोदरे अभेदेऽपि वनलेखौघानां
32897 प्रतिबिम्बानां संनिवेशोऽविरुद्धस्तद्वदत्रापीत्याह - लेखौघानामिति ॥ ८ ॥
32898
32899 स्थितास्तरङ्गाः सलिले यथान्तरतरङ्गिते ।
32900 सृष्टिशब्दार्थरहितास्तथान्तः सृष्टयः परे ॥ ९ ॥
32901
32902 न सर्गे तिष्ठति परं सर्गस्तिष्ठति नो परे ।
32903 अवयवावयविवत्सत्तानवयवैस्तयोः ॥ १० ॥
32904
32905 ननु लीनास्तरङ्गा यथा महाजले अवयवभावेन तिष्ठन्ति अवयवी वा
32906 समवायेनावयवेषु तिष्ठति किं तद्वद्ब्रह्मणि जगत्स्थितिर्नेत्याह - नेति ।
32907 वस्तुतस्तु अवयवावयविनोरप्यन्योन्याधारता नोपपत्तिमतीत्याह - सत्तेति ।
32908 तथाहि । अवयवेषु तिष्ठन्नवयवी किं प्रत्यवयवं कार्त्स्न्येन
32909 तिष्ठत्युतावयवैः । आद्ये प्रत्यवयवमवयविनानात्वापत्तिः । गोः
32910 कर्णादिप्रदेशेऽपि कृत्स्ना गौरस्तीति दोहनादिकार्यापत्तिः ।
32911 अवयवविश्लेषेऽप्यवयविनो जातिवन्नाशानापत्तिश्च । द्वितीये तु अनवस्थया
32912 अनन्तावयवत्वे मेरुसर्षपयोस्तुल्यपरिमाणापत्तिः । एवमवयवा अप्यवयविनि
32913 किमेकदेशे तिष्ठेयुरुत कृत्स्ने । आद्येऽनवस्था । द्वितीये
32914 अवयवान्तरस्यासमावेशादद्वयस्यावयवत्वायोगात्सर्वद्रव्याणां
32915 निरवयवत्वापत्तिरिति तयोरवयवावयविनोरनवयवैरेव सत्ता
32916 पर्यवस्यतीत्यर्थः ॥ १० ॥

चिद्रूपेण स्वसंवित्त्या स्वचिन्मात्रं विभाव्यते।
स्वमेव रूपहृदयं वातेन स्पन्दनं यथा॥ ११॥

दृष्टसृष्ट्युपपादनक्रमेणापि जगतश्चिदनन्यत्वमनुभावयिष्यन्
निष्क्रियस्यापि चैतन्यस्याविद्यान्तःप्रतिफलनेनान्यथा स्वविभावनं
प्रथममाह - चिद्रूपेणेति। परमार्थचिद्रूपेण ब्रह्मणा
प्रथममविद्याप्रतिफलितया दर्पणप्रतिहतनयनेन मुखमिव स्वसंवित्त्या
स्वचिन्मात्ररूपात्मकप्रपञ्चस्य हृदयं रहस्यभूतमज्ञानावृतं
स्वमेव विभाव्यते कल्प्यते। एवकारः
प्राक्तनपारमार्थिकस्वरूपविस्मरणद्योतनार्थः॥ ११॥

तत्कालमेष शब्दाणुश्चिच्चमत्काररूपधृक्।
चेतते स्वमिवैवान्तः संकल्प इव चेतसा॥ १२॥

तदानीमेव कारणे लीनस्य शब्दतन्मात्रस्याकाशात्मना आविर्भाव इत्याह -
तत्कालमिति। शब्दाणुः शब्दतन्मात्रम्। चिच्चमत्कारः
सर्वशक्तिमन्मायासंवलनं तद्रूपधृक् ब्रह्म खं चिद्रूपमिव चेत्यते
सैवाकाशोत्पत्तिरिति भावः॥ १२॥

तदेवानिलतां वेत्ति निजसत्तात्मिकां स्वयम्।
अन्तर्गतस्पर्शरसां पवनस्पन्दतामिव॥ १३॥

तदेवाकाशभूतं ब्रह्म अन्तर्गतस्पर्शरसां
स्वान्तरुन्मिषितस्पर्शतन्मात्रसंस्कारां स्वयं स्वात्मन्यनिलतां वेत्ति
अनुभवति। यथा स्थिरपवनः काले स्पन्दतामनुभवति तद्वत्॥ १३॥

तदेवाभासतामेति निजसत्तात्मिकां स्वयम्।
कोशस्थितालोकलवां तेजः प्रगटतामिव॥ १४॥

तद्वाय्वात्मतापन्नं ब्रह्मैव। आभासतां तेजस्ताम्। कोशे गर्भे स्थित
आलोकलवो रूपतन्मात्रं यस्यास्तथाविधाम्॥ १४॥

तदेवं जलतां याति निजसत्तात्मिकां स्वयम्।
अन्तःस्थितास्वादलवां सलिलं द्रवतामिव॥ १५॥

तत्तेजोभूतं ब्रह्मैव। आस्वादलवो रसतन्मात्रम्॥ १५॥

तदेदावनितां वेत्ति स्वचित्तैकात्मतामयीम्।
अन्तःस्थगन्धतन्मात्रामुर्वी स्थैर्यकलामिव॥ १६॥

तुल्यकालनिमेषांशलक्षभागप्रतीति यत्।
निजं विदः प्रकचनं तत्सर्गौघपरम्परा॥ १७॥

ननु चक्षुरुन्मेषक्षणे झटित्येव जगद्भानान्नात्रायमारोपक्रमो विभाव्यत
इति कथं दृष्टसृष्ट्युपपत्तिस्तत्राह - तुल्यकालेति। ईदृशोऽयं
चितश्चमत्कारो यत्तुल्ये तुलया संमिते इव दुर्लक्ष्ये इति यावत्। निमेषांशस्य
लक्षतमभागे प्रतीतिर्यस्य तादृशमपि विदो जगदाकारप्रकचनं
तत्कल्पकोटिविस्तृतकालानां सर्गौघानां परंपरा भवति। तथाच चित्कचने
कालापरिच्छेद्यतत्तन्निमेषांशलक्षतमभागारोपः कल्पकोट्यारोपो वा
मायिको न वस्तुतो विरुध्यत इति क्रमकल्पनोपपत्तिरित्यर्थः॥ १७॥

32969 शुद्धं सकृत्प्रभातान्तर्दृश्यमध्यमनामयम् ।
32970 उदयास्तमयोन्मुक्तं ब्रह्म तिष्ठत्यनिष्ठितम् ॥ १८ ॥
32971
32972 यद्धि अशुद्धं जडं देशकालतः परिच्छिन्नं सदोषमाद्यन्तवत् काले
32973 निष्ठितं तत्कालेन परिच्छिद्यते ब्रह्म तु न तथेत्याह - शुद्धमिति ।
32974 सकृत्प्रभातं न पुनःपुनर्विच्छिद्य प्रभातं नित्यस्वप्रकाशमिति यावत् ।
32975 अन्तर्गता दृश्याः सर्गा मध्याः प्रलयाश्च यस्य तत् । अनिष्ठितं अनाधारम्
32976 ॥ १८ ॥
32977
32978 बुद्धं सदपवर्गं तत्ससर्गमपि सत्समम् ।
32979 अबुद्धं सर्गरूपात्म विसर्गमपि तत्सदा ॥ १९ ॥
32980
32981 ननु यद्यन्तर्दृश्यमध्यं तत् तर्हि ससर्ग सप्रलयं वा नैकरूपापवर्गो
32982 भवितुमर्हति तत्राह - बुद्धं सदिति । सत् परमार्थसत्यम् । समं
32983 वैषम्यरहितम् । विसर्ग परमार्थतः सर्गशून्यमपि ॥ १९ ॥
32984
32985 चिद्ब्रह्म यद्यथा येन बुध्यते स्वात्मनात्मनि ।
32986 तत्तत्तथा नु भवति सर्वं सर्वाङ्गशक्तिमत् ॥ २० ॥
32987
32988 यथा यथा बोद्धृभिर्बुध्यते तथा तथा तत्तत्प्रकारविशिष्टं तत्तद्ब्रह्म
32989 आत्मनि भवति तत्तदाकारं मायया धत्त इत्यर्थः । नु इति खल्वर्थे । यतः
32990 सर्वाङ्गशक्तिमत् सर्वानुगुणमायाशक्तिमदित्यर्थः ॥ २० ॥
32991
32992 तत्सत्यं चिद्विलासत्वान्नित्यानुभवरूपतः ।
32993 तदसत्यं मनः षष्ठात्सर्वाख्या निगतं यतः ॥ २१ ॥
32994
32995 जगदपि शास्त्रीयचिद्विलासदृष्ट्या दृष्टं परमार्थसत्यं ब्रह्मैव ।
32996 ब्रह्मापि बहिर्मुखचक्षुरादिमनःषष्ठजन्यदृष्ट्या दृष्टमनृतं
32997 जगदेवेत्याह - तत्सत्यमिति । सत्यस्य कुतोऽसत्यता तत्राह - सर्वाख्या इति ।
32998 यतः सर्वाख्याः सर्वाणि नामानि नितरां गतं प्रापतम् । नहि वागगोचरस्य
32999 तद्गोचरं रूपं सत्यं भवितुमर्हतीत्यर्थः । सर्वार्थातिगतम् इति पाठे
33000 सर्वान् अर्थान् अतितरां गतं व्याप्तं तद्रूपापन्नं यत इत्यर्थः ॥ २१ ॥
33001
33002 यथैतत्सरणं वायौ तथा सर्गः स्थितः परे ।
33003 असत्कल्पेऽपि संकल्पः सत्येऽसत्य इवापि च ॥ २२ ॥
33004
33005 यथा वायौ सरणं प्राक्सरणादसत्कल्पेऽपि आविर्भावात्सत्कल्पम् । सरणकाले
33006 वायोः सत्त्वावगमात्सत्ये स्थैर्यमात्रादसत्यमिव । तथा सर्गोऽपि असत्कल्पेऽपि
33007 मूलाज्ञाने अधिष्ठानसत्तया सत्कल्पः । सत्येऽप्यधिष्ठाने
33008 असत्यमायात्मकत्वादसत्य इवेत्यर्थः ॥ २२ ॥
33009
33010 प्। २८३) १७४
33011
33012 अन्यरूपा यथानन्या तेजस्यालोकतोदरे ।
33013 तथा ब्रह्मणि विश्वश्रीः सत्यासत्यात्मिका चिति ॥ २३ ॥
33014
33015 तथाच दृष्टिभेदेन सत्यासत्यात्मत्वं विश्वस्येत्याह - अन्यरूपेति ।
33016 आलोकता भास्वरता । अन्यरूपेण दृष्टा असत्या अनन्यरूपेण दृष्टा सत्या
33017 स्थितेत्यर्थः ॥ २३ ॥
33018
33019 अनुत्कीर्णा यथा पङ्के पुत्रिका चाथ दारुणि ।
33020 यथा वर्णा मषीकल्के तथा सर्गाः स्थिताः परे ॥ २४ ॥

33021
33022 स्वप्नजाग्रदुपादानसौषुप्तात्मदृष्टान्तावाद्यौ
33023 विश्वसर्गोपादानब्रह्मदृष्टान्तस्तृतीयः ॥ २४ ॥
33024
33025 अनन्यान्येव कचति ब्रह्मतत्त्वमरुस्थले ।
33026 असत्यात्मनि सत्येव त्रिजगन्मृगतृष्णिका ॥ २५ ॥
33027
33028 ब्रह्मणा चिन्मयेनात्मा सर्गात्मैव विभाव्यते ।
33029 न भाव्यते चानन्यत्वाद्बीजेनान्तरिव द्रुमः ॥ २६ ॥
33030
33031 चिन्मयेन भ्रान्त्या चिदाभासलक्षणजीवभूतेन । तत्त्वदृशा तु
33032 परब्रह्मानन्यत्वान्न भाव्यते ॥ २६ ॥
33033
33034 यथा क्षीरस्य माधुर्यं तीक्ष्णत्वं मरिचस्य च ।
33035 द्रवत्वं पयसश्चैव स्पन्दनं पवनस्य च ॥ २७ ॥
33036
33037 स्थितोऽनन्यो यथान्यः सन्नास्ति तत्र तथात्मनि ।
33038 सर्गो निर्गलचिद्रूपः परमात्मात्मरूपभृत् ॥ २८ ॥
33039
33040 अनन्यः सन् स्थितः । अन्यः सन्नास्ति असन्नित्यर्थः । निर्गलीति निर्गलः
33041 प्रविलीनमात्रश्चिद्रूपः सन् परमात्ममात्रपरिशिष्टस्वरूपभृदित्यर्थः ॥
33042 २८ ॥
33043
33044 कचनं ब्रह्मरत्नस्य जगदित्येव यत्स्थितम् ।
33045 तदकारणकं यस्मात्तेन न व्यतिरिच्यते ॥ २९ ॥
33046
33047 अकारणोत्पन्नत्वमुपपादितमुपसंहरति - कचनमिति । यस्मात्तेन
33048 ब्रह्मणा न व्यतिरिच्यते तत्तस्मादकारणकमित्यर्थः ॥ २९ ॥
33049
33050 वासना चित्तजीवादिवेदनं वेदनोदितम् ।
33051 नोदेत्यवेदनादेव यतनादेव पौरुषात् ॥ ३० ॥
33052
33053 यद्यकारणकं तर्ह्यजातमेवेति कथं तद्वेदनानुभवस्तत्राह - वासनेति
33054 । वासना चित्तजीवादेर्यद्वेदनमनुभवस्तद्वेद्यतेऽनेनेति वेदनं
33055 मनस्तस्मादुदितम् । कस्तर्हि तदनुदये उपायस्तमाह - नोदेतीति ।
33056 अवेदनान्मनोनाशात् । तच्च कस्मात्तत्राह - यतनादेवेति ।
33057 ज्ञानयोगदृढाभ्यासलक्षणात्पुरुषयत्नादित्यर्थः ॥ ३० ॥
33058
33059 नास्तमेति न चोदेति क्वचित्किंचित्कदाचन ।
33060 सर्वं शान्तमजं ब्रह्म चिद्घनं सुशिलाघनम् ॥ ३१ ॥
33061
33062 कीदृशः स ज्ञानयोगस्तमभिनीयमाह - नास्तमेतीति ॥ ३१ ॥
33063
33064 पराणुं प्रति सर्गौघाश्चिताद्भ्रान्तिसहस्रशः ।
33065 तेष्वप्यणावणावन्तः कैवात्रावासना कथम् ॥ ३२ ॥
33066
33067 सति चित्ते परमाणूदरेऽपि सर्गपरम्परा दुर्वरित्याह - पराणुं प्रतीति । अत्र
33068 अण्वन्तः सर्गौघस्य आवसतिरावासना । ण्यन्ताद्भावे युच् । समावेशेन स्थितिः
33069 कैव कथं वा । न कापि न कथंचिदपि युक्तेति मिथ्यैवेत्यर्थः ॥ ३२ ॥
33070
33071 यथा जलान्त ऊर्म्याद्या गुप्तागुप्ताश्च शक्तयः ।
33072 जाग्रत्स्वप्नसुषुप्ताद्यास्तथा जीवेऽन्तरास्थिताः ॥ ३३ ॥

अनिर्वचनीयमायाशक्तिरूपेणावस्थानं तु ऊर्म्यादिदृष्टान्तेऽपि सममित्याह
- यथेति ॥ ३३ ॥

जाता चेदरतिर्जन्तोर्भोगान्प्रति मनागपि ।
तदसौ तावतैवोच्चैः पदं प्राप्त इति श्रुतिः ॥ ३४ ॥

तादृशपुरुषयत्ने च्द वैराग्यं हेतुरित्याशयेन श्रुतिमुदाहरति - जाता
चेदिति । तथा अन्यापि । कामान्यः कामयते मन्यमानः स कामभिर्जायते तत्र
तत्र । पर्याप्तकामस्य कृतात्मनश्च इहैव सर्वे प्रविलीयन्ति कामाः इति ॥ ३४ ॥

यतो यतो विरज्यते ततस्ततो विमुच्यते ।
अतोऽहमित्यसंविदन्क एति जन्मसंविदम् ॥ ३५ ॥

स्मृतिमप्युदाहरति - यत इति । निवर्तनाद्धि सर्वतो न वेत्ति दुःखमण्वपि इति
स्मृतिशेषो बोध्यः । अतो ज्ञानवैराग्यदार्ढ्यादहमिति
देहादिकमसंविदन्न पश्यन् को जन्मसंविदं जननमरणभ्रान्तिमेति
प्राप्नोति । न कश्चिदित्यर्थः ॥ ३५ ॥

चितिं परापरामजामरूपिकामनामिकाम् ।
चराचराऽधरामयीं विदन्ति ये जयन्ति ते ॥ ३६ ॥

तदेव ज्ञानं तत्त्वंपदार्थाखण्डैक्यगोचरं दर्शयति -चितिमिति ।
परामीश्वरचैतन्यात्मिकामपरां जीवचैतन्यात्मिकां च चितिं
क्राम्त्परामनामिकामरूपिकां
नामरूपात्मकजगत्कल्पनोपाधिशून्यामपरां तु चराचरदेहादिलक्षणां ये
अधरा निकृष्टोपाधयस्तन्मयताशून्याम् । मयडंतेन नञ्समासे
अचराचराधरमयीमिति वक्तव्ये नञो मयटः प्राङ्निवेशश्छान्दसः ।
तथाच शोधितत्वंपदलक्ष्यार्थभूतामजां जन्मादिविकारशून्यां
चितिमखण्डां ये गुरुशास्त्रस्वानुभवैर्विदन्ति ते जयन्ति संसारमित्यर्थः ।
चराचरात्मिका अधरा यास्तनवस्तन्मयीं तत्प्रायां
जीवभूतामनामिकामरूपिकां च ये विदुरिति वा ॥ ३६ ॥

परे चितिः स्वप्रकटाद्वितीया-
स्वावर्तलेखेव जले द्रवान्तः ।
साहं तयेमानि जगन्ति धत्ते
न सन्ति नासन्ति परात्मकानि ॥ ३७ ॥

अहंमयी पद्मजभावना चित्
संकल्पभेदाद्वितनोति विश्वम् ।
अन्तर्मुखैवानुभवत्यनन्त-
निमेषकोट्यंशविधौ युगान्तम् ॥ ३८ ॥

व्यष्टाविव समष्टावप्यहंकारसंकल्पोभयवशादेव
स्वान्तःसंसारकल्पनेति दर्शयन्नुपसंहरति - अहंमयीति । समष्टौ
व्यष्ट्यपेक्षया यो विशेषस्तमाह - अन्तर्मुखैवेति ।
नास्मदादिवद्बहिर्मुखेत्यर्थः । अनन्तस्य विष्णोर्निमेषस्य यः
कोट्यंशभूतो विदधातीति विधिः कालस्तस्मिन् युगान्तं
द्विसप्ततिसहस्रसहस्रसंख्याकदिव्ययुगान्तं स्वायुरनुभवति । अहो मायेति
भावः ॥ ३८ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे उत्पत्तिप्रकरणे लीलो०

जगत्स्वरूपवर्णनं नामैकषष्टितमः सर्गः ॥ ६१ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
जगत्स्वरूपवर्णनं नामैकषष्टितमः सर्गः ॥ ६१ ॥

प्। २८४) १७५

द्विषष्टितमः सर्गः ६२

श्रीवसिष्ठ उवाच।

परमाणुनिमेषाणां लक्षांशकलनास्वपि।
जगत्कल्पसहस्राणि सत्यानीव विभान्त्यलम् ॥ १ ॥

भ्रान्तिमात्रत्वमुदितं विश्वस्यादौ प्रपञ्चयते।
महानियतिशक्तिश्च जीवन्मुक्त्यादिसिद्धये ॥ १ ॥

परमाणोर्लक्षतमांशस्य कल्पनायां तत्र जगच्छब्दितब्रह्माण्डसहस्राणि
निमेषस्य लक्षांशकल्पनायां तत्र कल्पसहस्राणि च अलमन्त्यन्तं
दृश्यमानब्रह्माण्डवदेव सत्यानीव भान्तीति क्रमेण संबन्धः ॥ १ ॥

तेष्वप्यन्तस्तथैवान्तः परमाणुकणं प्रति।
भ्रान्तिरेवमनन्ताहो इयमित्यवभासते ॥ २ ॥

तेष्वपि प्रत्येकमेवंविधा कल्पना
संभवतीत्यनवस्थितस्वभावत्वाद्भ्रान्तिरेवेयमित्याह - तेष्वपीति ॥ २ ॥

वहन्तीमाः पराः सत्तः शान्ताः सर्गपरमपराः।
सलिलद्रवतेवान्तःस्फुटावर्तविवर्तिका ॥ ३ ॥

इमा वर्तमानाः परा आगामिन्यः शान्ता अतीताश्च सर्गपरम्परा अन्तःस्फुटा
आवर्तानां विवर्तिकाः परिवृत्तयो यस्यां तथाविधा सलिलद्रवतेव प्रातीतिकीः
सत्ता वहन्ति धारयन्ति प्रवहन्ति च ॥ ३ ॥

मिथ्यात्मिकैव सर्गश्रीर्भवतीह महामरौ।
तीरद्रुमलतोन्मुक्तपुष्पालीव तरङ्गिणी ॥ ४ ॥

तीरद्रुमैर्लताभिश्चोन्मुक्ता अभिवृष्टा पुष्पालिर्यस्यां तथा कल्पिता
तरङ्गिणी मृगतृष्णिका नदीव ॥ ४ ॥

स्वप्नेन्द्रजालपुरवत्संकथेहापुराद्रिवत्।
संकल्पवदसत्यैव भाति सर्गानुभूतिभूः ॥ ५ ॥

श्रीराम उवाच।

एकात्मैकतयैवं हि जाते सम्यग्विचारणात्।
निर्विकल्पात्मविज्ञाने परे ज्ञानवतां वर ॥ ६ ॥

तत्त्वज्ञानोदयेन सर्वभ्रान्तिनाशे विदुषां देहस्थित्यसंभवं रामः
शङ्कते - एकात्मेति। एवमुक्तप्रकारात्सम्यग्विचारणात्। एकोऽद्वितीय आत्मा
ब्रह्म तदेकतया तदभेदेन परे उत्कृष्टे निर्विकल्पात्मविज्ञाने जाते सति ॥ ६ ॥

33177
33178 किमर्थमिह तिष्ठन्ति देहास्तत्त्वविदामपि।
33179 दैवेनैव समाक्रान्ता दैवमत्र च किं भवेत्॥ ७॥
33180
33181 दैवेन सम्यगाक्रान्ता बलिप्रभृतय इव। अत्र तत्त्वज्ञविषये दैवं किं
33182 भवेत्। तस्य ह न देवाश्च नाभूत्या ईशत आत्मा ह्येषां स भवति। इति श्रुत्या
33183 तत्त्वविदि दैवस्यासामर्थ्योक्तेः किं तत्प्रबलतरं संभावितमित्यर्थः॥ ७॥
33184
33185 श्रीवसिष्ठ उवाच।
33186
33187 अस्तीह नियतिर्ब्राह्मी चिच्छक्तिः स्पन्दरूपिणी।
33188 अवश्यभवितव्यैकसत्ता सकलकल्पगा॥ ८॥
33189
33190 प्राण्यदृष्टवस्तु शक्तिसहकृतेश्वरसंकल्पलक्षणमहानियतिवशादेव
33191 सर्वव्यवहारव्यवस्थावद्विदुषां देहधारणमपीत्याशयेन वसिष्ठ
33192 उत्तरमाह - अस्तीत्यादिना। स्पन्दः सर्वजगद्व्यवस्थितव्यवहारस्तेन
33193 रूपिणीव स्फुटा॥ ८॥
33194
33195 आदिसर्गे हि नियतिर्भाववैचित्र्यमक्षयम्।
33196 अनेनेत्थं सदा भाव्यमिति संपद्यते परम्॥ ९॥
33197
33198 कदाप्रभृति सा किंरूपा वा तदाह - आदिसर्गे इति। अनेन वह्न्यादिना
33199 इत्थमौष्ण्योर्ध्वज्वलनादिस्वभावेन सदा भाव्यमिति परं ब्रह्म स्वयं
33200 संकल्पात्मकवृत्तिरूपमक्षयमप्रतिहतं संपद्यते॥ ९॥
33201
33202 महासत्तेति कथिता महाचितिरिति स्मृता।
33203 महाशक्तिरिति ख्याता महादृष्टिरिति स्थिता॥ १०॥
33204
33205 सर्वजगतां
33206 स्थितिप्रथासामर्थ्यविवेकनिर्माणजन्मार्थक्रियादिहेतुत्वात्क्रमेण
33207 महासत्तेत्यादिनामभिः ख्याता॥ १०॥
33208
33209 महाक्रियेति गदिता महोद्भव इति स्मृता।
33210 महास्पन्द इति प्रौढा महात्मैकतयोदिता॥ ११॥
33211
33212 तृणानीव जगन्त्येवमिति दैत्याः सुरा इति।
33213 इति नागा इति नगा इत्याकल्पं कृतास्थितिः॥ १२॥
33214
33215 जगन्ति एवं दृश्यमानविधया तृणानीव परिवर्तयन्तीति शेषः। दैत्या इति
33216 एवं क्रूरादिप्रकाराः सुरा देवा इति सौम्यादिप्रकारा इत्यादिरूपा आकल्पं
33217 कृता आस्थितिर्व्यवस्था यया॥ १२॥
33218
33219 कदाचिद्ब्रह्मसत्ताया व्यभिचारोऽनुमीयते।
33220 चित्रमाकाशकोशे च नान्यथा नियतेः स्थितिः॥ १३॥
33221
33222 परमार्थदृष्टौ ब्रह्मसत्तेव व्यवहारे साप्यव्यभिचरितेत्याह -
33223 कदाचिदिति। ब्रह्मसत्ताया व्यभिचार आकाशकोशे चित्रलेखनं
33224 चात्यन्तासंभावितमप्यनुमीयते नतु नियतेः स्थितिरन्यथा जातेत्यनुमातुं
33225 शक्यमित्यतिशयोक्तिः॥ १३॥
33226
33227 विरिञ्चयाद्यात्मभिर्बुद्धैर्बोधायाविदितात्मनाम्।
33228 ब्रह्मात्मैव सा नियतिः सर्गोऽयमिति कथ्यते॥ १४॥

इदं च व्यावहारिकदृशोक्तं तत्त्वज्ञदृशा तु न
ब्रह्मनियतिसर्गशब्दार्था भिद्यन्त इत्याशयेनाह - विरिञ्च्यादीति ।
बुद्धैस्तत्त्वज्ञैः ॥ १४ ॥

अचलं चलवद्दृष्टं ब्रह्मापूर्य व्यवस्थितः ।
अनादिमध्यपर्यन्तं सर्गो वृक्ष इवाम्बरे ॥ १५ ॥

नन्वलं ब्रह्म चलः सर्गः कथमनयोरैक्यं तत्राह - अचलमिति ।
अनादिमध्यपर्यन्तं ब्रह्म आपूर्य अज्ञदृशा आपूर्येव सर्गो व्यवस्थितः ॥
१५ ॥

पाषाणोदरलेखौघन्यायेनात्मनि तिष्ठता ।
ब्रह्मणा नियतिः सर्गो बुद्धोऽबोधवतेव खम् ॥ १६ ॥

नन्वियं नियतिर्हिरण्यगर्भेण कथं बुद्धा येन तदनुरूपमेव ससर्ज
तत्राह - पाषाणेति ।
स्फटिकपाषाणोदरप्रतिबिम्बितवनलेखौघन्यायेनात्मनि मायाशबले
ब्रह्मणि तिष्ठता ब्रह्मणा हिरण्यगर्भेण अबोधवता प्रसुप्तपुरुषेण आत्मनि
स्वाप्नकल्पनाश्रयं खमिव नियतिरेव भाविसर्गो बुद्धः ॥ १६ ॥

प्। २८५) १७५

देहे यथाङ्गिनोऽङ्गादि दृश्यते चित्स्वभावतः ।
ब्रह्मणा पद्मजत्वेन नियत्याद्यङ्गकं तथा ॥ १७ ॥

तथा नियत्यादिसर्गजातमङ्गकं स्वावयवभूतं दृष्टमिति शेषः ॥ १७ ॥

एषा दैवमिति प्रोक्ता सर्वं सकलकालगम् ।
पदार्थमलमाक्रम्य शुद्धा चिदिति संस्थिता ॥ १८ ॥

शुद्धा मोहानास्कन्दिता चित् ईश्वरसंकल्पचैतन्यम् । इति जगद्व्यवस्थारूपेण ॥
१८ ॥

स्पन्दितव्यं पदार्थेन भाव्यं वा भोकृतापदम् ।
अनेनेत्थमनेनेत्थमवश्यमिति दैवधीः ॥ १९ ॥

एषैव पुरुषस्पन्दस्तृणगुल्मादि चाखिलम् ।
एषैव सर्वभूतादि जगत्कालक्रियादि वा ॥ २० ॥

अनया पौरुषी सत्ता सत्तास्याः पौरुषेण च ।
लक्ष्यते भुवनं यावद्द्वे एकात्मतयैव हि ॥ २१ ॥

प्राण्यदृष्टनित्ययोः परस्परसहायतामाह - अनयेति । पौरुषी
पुरुषादृष्टसंबन्धिनी सत्ता फलावश्यंभावलक्षणा स्थितिर्लक्ष्यते । सत्ता
नियतिसत्ता । कियत्कालमेवं व्यवस्था तत्राह - भुवनमिति । भुवनं
त्रिभुवनं यावत्कालमस्ति तावदित्यर्थः । प्रलये तर्हि कथं तत्राह - द्वे
इति । द्वे एते सत्ते एकात्मतयैव तदा आसाते इत्यर्थः ॥ २१ ॥

नरेण पौरुषेणैव कार्ये सत्तात्मके उभे ।
ईदृश्येतेन नियतिरेवं नियतिपौरुषे ॥ २२ ॥

33281 द्वयोरपि पुरुषयत्नानुसारिता तथैव नित्यतिस्थितेरित्याह - नरेणेति | कार्ये
33282 निर्वाह्ये नियतिपौरुषे अपि एवं प्राण्यदृष्टनिर्वाह्ये | एतेन क्रमेण ईदृशी
33283 नियतिः स्थितेति शेषः || २२ ||
33284
33285 प्रष्टव्योऽहं त्वया राम दैवपौरुषनिर्णयः |
33286 मदुक्तं पौरुषं पाल्यं त्वयेति नियतिः स्थिता || २३ ||
33287
33288 किं बहुना तव शिष्यभावेन प्रष्टृत्वं मदुपदिष्टार्थानुष्ठातृत्वं च
33289 नियतिकृतमेवेत्याह - प्रष्टव्य इति | ननु गौणे कर्मणि दुह्यादेः प्रधाने
33290 नीहृकृष्वहाम् इति कात्यायनवचनात्प्रच्छेरकथिते गौणे कर्मणि
33291 तव्यप्रत्ययेन मुख्यस्य कर्मणोऽनभिहितत्वाद्दैवपौरुषनिर्णयमिति द्वितीयया
33292 भाव्यं तत्कथं प्रथमाप्रयोग इति चेत् | सत्यम् | त्वया अहं प्रष्टव्यस्तत्रापि
33293 दैवपौरुषनिर्णय एव प्रष्टव्य इत्यावृत्त्या नियतिद्वयबोधनाय तन्त्रेण
33294 कर्मद्वयस्यापि तव्यप्रत्ययेनाभिधानविवक्षोपपत्तेरिति || २३ ||
33295
33296 भोजयिष्यति मां दैवमिति दैवपरायणः |
33297 यत्तिष्ठत्यक्रियो मौनं नियतेरेष निश्चयः || २४ ||
33298
33299 यदपि कश्चिद्दैवमेवावलम्ब्य पौरुषप्रयत्नमकुर्वन्नाजगरं
33300 व्रतमास्थाय तिष्ठति तदपि
33301 तदनुगुणप्राक्तनकर्मोद्बोधितनियतिनिश्चयादेवेत्याह - भोजयिष्यतीति || २४
33302 | |
33303
33304 न स्याद्बुद्धिर्न कर्माणि न विकारादि नाकृतिः |
33305 केवलं त्वित्थमाकल्पं स्थित्या भाव्यमिति स्थिताः || २५ ||
33306
33307 प्रागपि पुरुषो यदि केवलमक्रिय एव स्यात्तर्हि बुद्धिस्तत्प्रयुक्तकर्म तत्प्रयुक्ता
33308 भूतभौतिकविकारा विकृतीनां च गवादिसंस्थानाकृतिश्चेत्येते न स्युः |
33309 तथाच श्रुतिः - यर्ह्येतन्न कुर्यात्क्षीयेत ह इति | इत्थं
33310 पुरुषक्रियामूलतयैव तु आकल्पव्यवहारस्थित्या भाव्यमिति नियतिवशादेव
33311 सर्वे भावास्तथा स्थिता इत्यर्थः || २५ ||
33312
33313 अवश्यंभवितव्यैषा त्विदमित्थमिति स्थितिः |
33314 न शक्यते लङ्घयितुमपि रुद्रादिबुद्धिभिः || २६ ||
33315
33316 इयं च नियतिरीश्वरैरपि दुरतिक्रमेत्याह - अवश्यमिति || २६ ||
33317
33318 पौरुषं न परित्याज्यमेतामाश्रित्य धीमता |
33319 पौरुषेणैव रूपेण नियतिर्हि नियामिका || २७ ||
33320
33321 एतां निश्चितिमिति शेषः || २७ ||
33322
33323 अपौरुषं हि नियतिः पौरुषं सैव सर्गगा |
33324 निष्फलाऽपौरुषाकारा सफला पौरुषात्मिका || २८ ||
33325
33326 इदानीं नियतिपौरुषशब्दार्थैक्यमेव उपाधिभेदादेव व्यवहारभेद इत्याह
33327 - अपौरुषमिति | अपौरुषं पुरुषप्रयत्नात्मना अविवक्षिता
33328 ईश्वरसंकल्पनामात्रेण नियतिरित्युच्यते | सैव तदात्मना सर्गगा
33329 सृष्टिफलोपहिता पौरुषमित्युच्यते | यतः अपौरुषा
33330 पुरुषयत्नाकारेणापरिणता नियतिर्निष्फला | पौरुषात्मिका सफलेति पौरुषादेव
33331 पुरुषार्थलाभ इत्यर्थः || २८ ||
33332

नियत्या मूकतामेत्य निष्पौरुषतयाऽक्रियम् ।
यस्तिष्ठति प्राणमरुत्स्पन्दस्तस्य क्व गच्छति ॥ २९ ॥

ननु तर्हि निष्पौरुषस्याप्यजगरवृत्तेस्तृप्त्यादिफललाभो दृष्टस्तत्राह ##-
नियत्या तृप्तिः सेत्स्यतीति मूकतां वागादिक्रियाप्रयत्नशून्यतामेत्य
निष्पौरुषतया अक्रियं ग्रसनादिक्रियारहितं यथा स्यात्तथा तिष्ठति न स
तृप्यति । यदपि स क्षुधितोऽपि कंचित्कालं जीवति तदपि
प्राणचलनानुकूलपुरुषयत्नादेवेत्याअह - प्राणेति ॥ २९ ॥

अथ प्राणक्रियारोधमपि कृत्वा विरामदम् ।
यदि तिष्ठति तत्साधुर्मुक्त एव किमुच्यते ॥ ३० ॥

यदि विरामदं निर्विकल्पसमाधौ चित्तविश्रान्तिदं प्राणनिरोधमधिकृत्वा
स तिष्ठति तत्तस्माद्यत्नात्साधुस्तत्त्वविच्चेन्मुक्तः
सर्वपौरुषफलावस्थालक्षणं मोक्षं प्राप्तो भवति तदपि
प्राणनिरोधादिपौरुषस्यैव फलमित्यपौरुषं फलं किमुच्यते न
किंचिदित्यर्थः ॥ ३० ॥

पौरुषैकात्मता श्रेयो मोक्षोऽत्यन्तमकर्तृता ।
आभ्यां तु सबलः पक्षो निर्दुःखैव महात्मनाम् ॥ ३१ ॥

तस्मात्पौरुषैकात्मता शास्त्रीयपौरुषैकपरता श्रेयोहेतुत्वात्साधनतः
श्रेयः । अत्यन्तकर्मतालक्षणो मोक्षस्तु फलतः श्रेयः । आभ्यां
साध्यसाधनश्रेयोभ्यां तु महात्मनां ज्ञानिनां पक्षः सबलः
सकार्याविद्योपघातसमर्थ इति निर्दुःखैव तेषां नियतिरित्यर्थः ॥ ३१ ॥

नियतिर्ब्रह्मसत्ताभा तस्यां चेत्परिणम्यते ।
नूनं परमशुद्धाख्यं तत्प्राप्तैव परागतिः ॥ ३२ ॥

या चेयं निर्दुःखा नियतिः सैव ब्रह्मसत्ताया आभा स्फूर्तिस्तस्यां चेद्यत्नेन
परिणम्यते स्थिरीभूयते तदेव परमशुद्धाख्यं पदं सा काष्ठा सा परा
गतिः इति श्रुतिप्रसिद्धा परमागतिरपि तत्तस्मात्प्राप्तैवेत्यर्थः ॥ ३२ ॥

प्। २८६) १७६

एतैर्नियत्यादिमहाविलासै-
र्ब्रह्मैव विस्फूर्जति सर्वगात्मा ।
तृणादिवल्लीतरुगुल्मजालैः
सत्तेव तोयस्य धरान्तरस्था ॥ ३३ ॥

एतैरुक्तप्रकारैर्महद्भिरप्रतिहतैर्विलासैर्ब्रह्मैव धरान्तरस्था तोयस्य सत्ता
द्रवता तृणकुशकाशादिभेदैर्वल्लीतरुगुल्मजालादिभावैश्च यथा
विस्फूर्जति स्फुरति तथा विस्फूर्जतीत्यर्थः ॥ ३३ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलो०
दैवशब्दार्थनिरूपणं नाम द्विषष्टितमः सर्गः ॥ ६२ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
दैवशब्दार्थनिरूपणं नाम द्विषष्टितमः सर्गः ॥ ६२ ॥

त्रिषष्टितमः सर्गः ६३

33385
33386 श्रीवसिष्ठ उवाव|
33387
33388 यदेतद्ब्रह्मतत्त्वं सर्वथा सर्वदैव सर्वत एव सर्वशक्ति सर्वाकारं
33389 सर्वेश्वरं सर्वगं सर्वमेवेति ॥ १ ॥
33390
33391 विस्फूर्जति यथा ब्रह्म सर्वतः सर्वरूपतः |
33392 मायाशक्तिविलासेन तथात्र प्रतिपाद्यते ॥ १ ॥
33393
33394 नियत्यादिविलासैर्ब्रह्मैव विस्फूर्जतीत्युक्तं तत्कस्य हेतोस्तत्राह - यदेतदिति |
33395 यद्यत एतन्मायाशबलं ब्रह्मतत्त्वं सर्वथा सर्ववस्तुतः सर्वदैव कालतः
33396 सर्वत एव देशतश्च सर्वशक्ति सर्वभावसमर्थमत एव सर्वाकारम्
33397 सर्वज्ञतया सर्वनियन्तुमीष्ट इति सर्वेश्वरम् | विप्रकर्षताटस्थ्ययोर्वारणाय
33398 सर्वगं सर्वमेवेति विशेषणे | इति अतो हेतोरित्यर्थः ॥ १ ॥
33399
33400 एष त्वात्मा सर्वशक्तित्वाच्च क्वचिच्चिच्छक्तिं प्रकटयति क्वचिच्छान्तिं
33401 क्वचिज्जडशक्तिं क्वचिदुल्लासं क्वचित्किंचिन्न किंचित्प्रकटयति ॥ २ ॥
33402
33403 कुतो न विप्रकर्षताटस्थ्ये तत्राह - एष त्वात्मेति | स तर्हि सर्वं सर्वत्र
33404 प्रकटयेन्नेत्याह - क्वचिदिति | क्वचिदन्तःकरणोपाधौ जीवभावेन
33405 प्रवेशाच्चिच्छक्तिं प्रकटयति सात्त्विकोपाधौ शान्तिम् तामसोपाधौ
33406 जडशक्तिम् राजसोपाधौ रागलोभप्रवृत्त्यादुयुल्लासम् किंचिन्मिश्रितं
33407 गुणकार्यत्वाद्विशेषतो दुर्वचम् सुषुप्तिप्रलययोस्तु न किंचित्प्रकटयति ॥ २ ॥
33408
33409 यत्र यदा यदेवासौ यथा भावयति तत्र तदा तदेवासौ प्रपश्यति ॥ ३ ॥
33410
33411 तत्र चास्य सत्यसंकल्पतैव हेतुरित्याह - यत्रेति ॥ ३ ॥
33412
33413 सर्वशक्तेर्हि या यैव यथोदेति तथैव सा ॥ ४ ॥
33414
33415 शक्तीनामाविर्भावानुगुणैव स्थितिवैचित्र्यं चेत्याह - सर्वशक्तेरिति | या
33416 येति वीप्सा ॥ ४ ॥
33417
33418 तदास्ति शक्तिर्नानारूपिणी सा स्वभावत इमाः शक्तयोऽयमात्मेति ॥ ५ ॥
33419
33420 शक्तिशक्तिमद्भेदकल्पनेयं व्यवहारदृशैव न परमार्थत इत्याह -
33421 इमा इति ॥ ५ ॥
33422
33423 एवं विकल्पजालं व्यवहारार्थं धीमद्भिः परिकल्पितं लोके नवात्मनि
33424 विद्यते भेदः ॥ ६ ॥
33425
33426 यथोर्मितरङ्गपयसां सागरे कटकाङ्गदकयूरैर्वा हेम्नः |
33427 अवयवावयविनोः संवित्काल्पनिकी द्विता न वास्तवी ॥ ७ ॥
33428
33429 नत्वात्मनि विद्यते भेद इत्यत्रार्थे दृष्टान्तत्रयप्रदर्शनपरो यथेत्यादिर्न
33430 वास्तवीत्यन्तो ग्रन्थः | संवित्काल्पनिकी व्युत्पादकबुद्धिपरिकल्पिता द्विता भिदा ॥
33431 ७ ॥
33432
33433 यथा यच्चेत्यते हि तथैव तन्न बाह्यतो नान्तरतश्चैतत्समुदेति हि ॥ ८ ॥
33434
33435 हि यस्माद्यद्रज्ज्वादि यथा सर्पादिप्रकारेण चेत्यते बुध्यते तत्तथैव
33436 विवर्ततो भवति न परमार्थतः | कुतः यत एतत्सर्पादि रज्ज्वादेर्न बाह्यं

समुदेति नाप्यन्तरतः ॥ ८ ॥

सर्वात्मत्वात्समाभासं क्वचित्किंचित्प्रपश्यति ॥ ९ ॥

समाभासं सर्वसाधारणप्रथारूपं साक्षिचैतन्यं
भोजकादृष्टोद्बुद्धं क्वचित्किंचिदेव भ्रान्त्या प्रपश्यति न सर्वत्र नापि
स्वरूपमित्यर्थः ॥ ९ ॥

सर्वाकारमयं ब्रह्मैवेदं ततं मिथ्याज्ञानवद्भिः
शक्तिशक्तिमत्त्वे अवयवावयविरूपे कल्पिते न पारमार्थिके ॥ १० ॥

परमार्थतस्तु ततं विस्तृतमिदं सर्वाकारमयं ब्रह्मैव। तत्किं
शक्तिविशिष्टं जगदवयवकं परमार्थतो ब्रह्म नेत्याह -
मिथ्याज्ञानवद्भिरिति ॥ १० ॥

सद्वा भवत्वसद्वा चिद्यत्संकल्पयत्यभिनिविशति तत्तत्पश्यति सकला
तत्सद्ब्रह्मैव चिद्भाति ॥ ११ ॥

एवंच मिथ्याज्ञानोपहिता चित्सत् शास्त्रानुगुणमसत् शास्त्रप्रतिकूलं वा
यदेव कर्तव्यतया संकल्पयति तदभिनिविशति तद्विषये उद्युक्तं च
भवतीत्यर्थः। अभिनिवेशेन च तत्तदनुरूपं विहितं निषिद्धं वा कृत्वा
फलभोगकालेऽपि तत्तत्पश्यतीति आद्यसर्गसंकल्पमारभ्य
भूतभौतिकदेहभोग्यादिसर्गेण पुरुषभोगान्तसकलप्रपञ्चरूपा
ब्रह्मचिदेव भाति विस्फूर्जति नान्यदिति ॥ ११ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलो०
चित्तविकारो नाम त्रिषष्टितमः सर्गः ॥ ६३ ॥

चिद्भावश्चित्ता तस्या अविकारः सर्गार्थः। इति
श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे चित्तविकारो नाम
त्रिषष्टितमः सर्गः ॥ ६३ ॥

प्। २८७) १७६

चतुःषष्टितमः सर्गः ६४

श्रीवसिष्ठ उवाच।

योऽयं सर्वगतो देवः परमात्मा महेश्वरः।
स्वच्छः स्वानुभवानन्दस्वरूपोऽन्तादिवर्जितः ॥ १ ॥

भोग्यस्य शक्तिवैचित्र्याद्याविर्भावो निरूपितः।
भोक्तुर्जीवत्वसंपत्तिक्रमोऽत्र प्रतिपाद्यते ॥ १ ॥

एतस्मात्परमानन्दाच्छुद्धचिन्मात्ररूपिणः।
जीवः संजायते पूर्वं स चित्तं चित्ततो जगत् ॥ २ ॥

अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि इति
श्रुतेर्नामरूपव्याकरणलक्षणजगत्सर्गात्पूर्वं
जीवोपाधिलिङ्गसमष्ट्युत्पत्त्या जीवः संजायते स एवोपाधिप्राधान्येन
चित्तमित्युच्यते ॥ २ ॥

33489
33490 श्रीराम उवाच।
33491
33492 स्वानुभूतिप्रमाणेऽस्मिन्ब्रह्मणि ब्रह्मबृंहिते।
33493 कथं सत्तामवाप्नोति जीवको द्वैतवर्जिते॥ ३॥
33494
33495 अखण्डाद्वितीयस्वप्रकाशे ब्रह्मणि सखण्डसद्वितीयजीवसत्तानुपपत्तिं रामः
33496 शङ्कते - स्वानुभूतीति। ब्रह्मणि ब्रह्मत्वादेव बृंहिते
33497 निरतिशयापरिच्छेदलक्षणां वृद्धिं प्राप्ते। अल्पो जीवो जीवकः सत्तं
33498 पूर्वसिद्धब्रह्मताविरोधिनीं पृथक्सत्तां कथमवाप्नोतीत्यर्थः॥ ३॥
33499
33500 श्रीवसिष्ठ उवाच।
33501
33502 असदाभासमच्छात्म ब्रह्मास्तीह प्रबृंहितम्।
33503 बृहच्चिद्भैरववपुरानन्दाभिधमव्ययम्॥ ४॥
33504
33505 सत्ये निरविद्ये ब्रह्मणि परमार्थदृशा न जीवसत्तासंभवः साविद्ये तु
33506 तत्संभवो न विरुध्यत इति विभज्य विवक्षुः प्रथमं साधारणं
33507 तत्स्वरूपमाह - असदिति। असन्त आभासा द्वैतप्रत्यया यत्र।
33508 प्रबृंहितमित्यस्यैव विवरणं बृहच्चिद्भैरववपुरिति। अनात्मयोगिनां
33509 भीषणत्वाद्भैरवं वपुः स्वरूपं यस्य। यथाहुर्वृद्धाः -
33510 अस्पर्शयोगो नामैष दुर्दर्शः सर्वयोगिनाम्। योगिनो बिभ्यति ह्यस्मादभये
33511 भयदर्शिनः॥ इति॥ ४॥
33512
33513 तस्य यत्सममापूर्णं शुद्धं सत्वमचिह्नितम्।
33514 तद्विदामप्यनिर्देश्यं तच्छन्तं परमं पदम्॥ ५॥
33515
33516 आद्यं दर्शयति - तस्येति॥ ५॥
33517
33518 तस्यैवोद्यदिवाशान्ति यत्सत्त्वं संविदात्मकम्।
33519 स्वभावात्स्पन्दनं तत्तु जीवशब्देन कथ्यते॥ ६॥
33520
33521 द्वितीयं दर्शयति - तस्यैवेति॥ आशान्ति आमोक्षं उद्भवबीजसत्त्वादुद्यदिव
33522 यद्रूपं तस्योपाधिस्वभावाद्यत्स्पन्दनं चलनशक्त्यात्मकप्राणधारणम्
33523 ॥ ६॥
33524
33525 तत्रेमाः परमादर्शे चिद्व्योम्न्यनुभवात्मिकाः।
33526 असंख्याः प्रतिबिम्बन्ति जगज्जालपरम्पराः॥ ७॥
33527
33528 तत्रैव सर्वनामरूपव्याकरणमित्याह - तत्रेति॥ ७॥
33529
33530 ब्रह्मणः स्फुरणं किंचिद्यदवाताम्बुधेरिव।
33531 दीपस्येवाप्यवातस्य तं जीवं विद्धि राघव॥ ८॥
33532
33533 जगद्वैचित्र्यकल्पनानुकूलक्रियाशक्तिप्रधानप्राणभाव एव जीवभावश्चित
33534 इत्यत्र दृष्टान्तमाह - ब्रह्मण इति॥ ८॥
33535
33536 शान्तत्वापगमेऽच्छस्य मनाक्संवेदनात्मकम्।
33537 स्वाभाविकं यत्स्फुरणं चिद्व्योम्नः सोऽङ्ग जीवकः॥ ९॥
33538
33539 अच्छस्य ब्रह्मणः प्राणाधीनचलनाध्यासे शान्तत्वस्य निष्क्रियत्वस्यापगमे
33540 तिरोधाने सति मनागल्पं यत्संवेदनं तदात्मकम्॥ ९॥

33541
33542 यथा वातस्य चलनं कृशानोरुष्णता यथा ।
33543 शीतता वा तुषारस्य तथा जीवत्वमात्मनः ॥ १० ॥
33544
33545 तच्च जीवत्वमामोक्षं जीवस्य स्वाभाविकमिवेत्याह - यथेति ॥ १० ॥
33546
33547 चिद्रूपस्यात्मतत्त्वस्य स्वभाववशतः स्वयम् ।
33548 मनाक्संवेदनमिव यत्तज्जीव इति स्मृतम् ॥ ११ ॥
33549
33550 स्वस्य अभावनमभावोऽज्ञानं तद्वशतो मनाक्संवेदनं
33551 ज्ञानस्वरूपस्य परिच्छेद इव यत्तत् ॥ ११ ॥
33552
33553 तदेव घनसंवित्त्या यात्यहंतामनुक्रमात् ।
33554 वह्न्यणुः स्वेन्धनाधिक्यात्स्वां प्रकाशकतामिव ॥ १२ ॥
33555
33556 तस्याहंकारात्मकरुद्रभावमाह - तदेवेति । घनसंवित्त्या
33557 वासनादार्ढ्येन । अहंतां अहंकारताम् । वह्न्यणुरग्निकणः स्वस्य
33558 इन्धनं दीपनं यद्धृततैलादि तदाधिक्यात् ॥ १२ ॥
33559
33560 यथा स्वतारकामार्गे व्योम्नः स्फुरति नीलिमा ।
33561 शून्यस्याप्यस्य जीवस्य तथाहंभावभावना ॥ १३ ॥
33562
33563 स्वस्य द्रष्टुस्तारका कनीनिकोपलक्षितं चक्षुस्तस्या मार्गे अविषये भागे व्योम्नि
33564 प्रसृतं हि चक्षुर्यावद्दूरं गन्तुं शक्नोति तावन्नीलिमानं न पश्यति ।
33565 यत्र तु गत्वाग्रे कुण्ठीभवति ततः प्रभृति तस्या मार्गस्तत्र नैल्यशून्येऽपि
33566 नीलिमा स्फुरति तथा अहंताशून्यस्याप्यस्य जीवस्य स्वाविषये
33567 स्वात्मन्यहंभावभावनेत्यर्थः ॥ १३ ॥
33568
33569 जीवोऽहंकृतिमादत्ते संकल्पकलयेद्धया ।
33570 स्वयैतया घनतया नीलिमानमिवाम्बरम् ॥ १४ ॥
33571
33572 संकल्पकला पूर्वसंकल्पसंस्कारस्तया इद्धया उद्बुद्धया स्वया
33573 स्वाध्यस्तया एतया प्रत्यक्षया घनतया स्निग्धेन्द्रनीलशिलाकल्पया निबिडतया
33574 ॥ १४ ॥
33575
33576 अहंभावो हि दिक्कालव्यवच्छेदी कृताकृतिः ।
33577 स्वयं संकल्पवशतो वातस्पन्द इव स्फुरन् ॥ १५ ॥
33578
33579 दिक्कालव्यवच्छेदी आत्मनो दैशिककालिकपरिच्छेदकारी । स्वयं
33580 संकल्पवशतः कृतदेहाद्याकृतिः ॥ १५ ॥
33581
33582 संकल्पोन्मुखतां यातस्त्वहंकाराभिधः स्थितः ।
33583 चित्तं जीवो मनो माया प्रकृतिश्चेति नामभिः ॥ १६ ॥
33584
33585 अहंभावाध्यासमूलाश्चित्तादिभेदा इत्याह - चित्तमित्यादिना । सोहंकारो
33586 रुद्रश्चित्तं विष्णुर्जीवो ब्रह्मा तेषामेव क्रमान्मनो माया प्रकृतिरिति
33587 क्रियानामानि ॥ १६ ॥
33588
33589 तत्संकल्पात्मकं चेतो भूततन्मात्रकल्पनम् ।
33590 कुर्वंस्ततो व्रजत्येव संकल्पाद्याति पञ्चताम् ॥ १७ ॥
33591
33592 तत्तत्र संकल्पात्मकं चेतो ब्रह्मा संकल्पाद्भूततन्मात्रकल्पनां

कुर्वस्ततश्चेतनात्मकपूर्वावस्थातो व्रजति प्रच्यवत एव जडां पञ्चतां च
याति ॥ १७ ॥

प्। २८८) १७७

तन्मात्रपञ्चकाकारं चित्तं तेजःकणो भवेत् ।
अजातजगति व्योम्नि तारका पेलवा यथा ॥ १८ ॥

तस्य पञ्चीकरणेन हैमाण्डप्रकृतितेजोभावमाह - तन्मात्रेति ।
ब्रह्मभावदृष्ट्या अल्पत्वात्कण इत्युक्तम् । पेलवा अस्फुटप्रकाशा ॥ १८ ॥

तेजःकणत्वमादत्ते चित्तं तन्मात्रकल्पनात् ।
शनैः स्वस्मात्परिस्पन्दाद्बीजमङ्कुरतामिव ॥ १९ ॥

उक्तमेव स्पष्टमाह - तेजःकणत्वमिति ॥ १९ ॥

असौ तेजःकनोऽण्डाख्यः कल्पनात्कश्चिदण्डताम् ।
प्रयात्यन्तःस्फुरद्ब्रह्मा जलमापिण्डतामिव ॥ २० ॥

तत्र पूर्वकल्पे विराडात्मोपासनसंस्कृतस्य
स्थूलसमष्टिविराड्भावस्तदन्यस्य
व्यष्टिस्थूलदेहाहंभावसंस्कारात्तद्भाव इति विशेषमाह -
असावित्यादिना । कल्पनात्प्राक्तनोपासनात्मकाण्डात्माहंभावकल्पनात् । तस्य
सह सिद्धं चतुष्टयमिति स्मृतिसिद्धमात्मज्ञानमित्याशयेन विशिनष्टि ##-
चतुर्मुखो यस्येत्यर्थः । आपिण्डतां करकादिघनीभावम् ॥ २० ॥

कश्चिद्द्रागिति देहादिकलनाद्याति देहताम् ।
भ्रान्तित्वं तदतद्रूपं गन्धर्वैश्च वसत्पुरम् ॥ २१ ॥

कश्चिदनुपासकस्तु पुण्यकृत् इति वक्ष्यमाणप्रकारेण दिव्यदेहादेः
कलनाद्द्राक् शीघ्रमेव देवादिदेहतां तत्र देहे अतद्रूपं अनहमि
अहंभावलक्षणभ्रान्तित्वं याति । गन्धर्वैश्चादन्यैर्वा देवैर्वसत् पालितं
पुरममरावत्यादि याति ॥ २१ ॥

कश्चित्स्थावरतामेति कश्चिज्जंगमतामपि ।
कश्चिद्याति खचार्यादिरूपं संकल्पतः स्वतः ॥ २२ ॥

कश्चित्पापकृत्तु स्थावरताम् । खचारिणः पक्षिणो रक्षःपिशाचादयश्च ।
आदिपदाज्जलचरा गृह्यन्ते ॥ २२ ॥

सर्गादावादिजो देहो जीवः संकल्पसंभवः [भावनः इति
पाठः] ।
क्रमेण पदमासाद्य वैरिञ्चं कुरुते जगत् ॥ २३ ॥

प्रथमजः सूक्ष्मदेहसमष्ट्युपाधिक एवात्मा विरिञ्चिजीवः
स्वसंकल्पादण्डान्तर्जगत्सृजतीत्यर्थः ॥ २३ ॥

आत्मभूकलनात्मासौ यत्संकल्पयति क्षणात् ।
तत्स्वभाववशादेव जातमेव प्रपश्यति ॥ २४ ॥

तस्य सत्यसंकल्पतायां पूर्वतनसत्यसंकल्पात्मभूतादात्मोपासना
हेतुरित्याशयेन विशिनष्टि - आत्मभूकलनात्मेति ॥ २४ ॥

33645
33646 चित्स्वभावात्समायातं ब्रह्मत्वं सर्वकारणम् ।
33647 संसृतौ कारणं पश्चात्कर्म निर्माय संस्थितम् ॥ २५ ॥
33648
33649 प्रथाचलनोभयधर्मकस्य जगतश्चिदात्मा प्रथमं प्रथायां
33650 हेतुश्चलनविकारादौ तु पश्चात्तनं कर्मेत्याह - चित्स्वभावादिति । आद्यः
33651 कारणशब्दो भावप्रधानः ॥ २५ ॥
33652
33653 चित्तं स्वभावात्स्फुरति चित्तः फेन इवाम्भसः ।
33654 कर्मभिर्बध्यते पश्चाड्डिण्डीरमिव रज्जुभिः ॥ २६ ॥
33655
33656 उक्तमेव मूलतः स्फुटयति - चित्तमिति । डिण्डीरं फेनपिण्डो
33657 नौकादिनिबन्धनरज्जिभिर्बध्यते निरुध्यते न जलं तद्वच्चित्तमेव
33658 देहनिबन्धनैः कर्मभिर्बध्यते न चिदात्मेति भावः ॥ २६ ॥
33659
33660 संकल्पः कलनाबीजं तदात्मैव हि जीवकः ।
33661 कर्म पश्चात्तनोत्युच्चैरुत्थायाकर्मतः क्रमात् ॥ २७ ॥
33662
33663 लोकेऽपि संकल्पपूर्वकं कर्मणा
33664 घटादिरचनदर्शनादुक्तक्रमसिद्धिरित्याशयेनाह - संकल्प इति ।
33665 अकर्मतः निष्क्रियात्मसंनिधानादिति यावत् ॥ २७ ॥
33666
33667 क्रोडीकृताङ्कुरं पूर्वं जीवो धत्ते स्वजीवितम् ।
33668 पश्चान्नानात्वमायाति पत्राङ्कुरफलक्रमैः ॥ २८ ॥
33669
33670 पश्चात्तनैरपि कर्मभिः प्राग्जीवे बीजान्तरङ्कुरवद्वासनात्मना
33671 स्थितमेवाविष्क्रियते नापूर्वमित्याशयेनाह - क्रोडीकृताङ्कुरमिति । यथा
33672 बीजस्थो जीवः पूर्वं क्रोडीकृतः सूक्ष्मतयान्तर्धृतः अङ्कुरो येन
33673 तथाविधं स्वजीवितं धत्ते
33674 पश्चात्त्वङ्कुरपत्रकाण्डशाखापल्लवपुष्पफलक्रमैर्नानात्वमायाति तथा
33675 हिरण्यगर्भजीवोऽपीत्यर्थः ॥ २८ ॥
33676
33677 अन्ये स्व एव ये जीवा एवमेवाकृतिं गताः ।
33678 पूर्वोत्पन्ने जगति ते यान्ति भूताश्रयां स्थितिम् ॥ २९ ॥
33679
33680 व्यष्टिजीवा अप्येवमेव स्वे स्वमिन् वासनात्मना स्थितामेवाकृतिं
33681 देहाद्याकारं गताः प्राप्ताः । एतावांस्तु विशेषः । ते
33682 हिरण्यगर्भजीवसंकल्पात्पूर्वोत्पन्ने जगति ब्रह्माणे
33683 मातापित्रादिरूपभूताश्रयां प्राणिनिमित्तां स्थितिं देहलाभं यान्तीति ॥ २९ ॥
33684
33685 स्वकर्मभिस्ततो जन्ममृतिकारणतां गतैः ।
33686 प्रयान्त्यूर्ध्वमधस्ताद्वा कर्म चित्स्पन्द उच्यते ॥ ३० ॥
33687
33688 कर्मशब्दं व्याचष्टे - चित्स्पन्द उच्यत इति ॥ ३० ॥
33689
33690 चित्स्पन्दनं भवति कर्म तदेव दैवं
33691 चित्तं तदेव मवतीह शुभाशुभादि ।
33692 तस्माज्जगन्ति भुवनानि भवन्ति पूर्वं
33693 भूत्वा निजाङ्गकुसुमानि तरोरिवाद्यात् ॥ ३१ ॥
33694
33695 कर्मशब्दार्थमेव विवृण्वन्
33696 सर्गद्वयवर्णितभोक्तृभोग्यसर्गमुपसंहरति - चित्स्पन्दनमिति ।

33697 तरोर्निजाङ्गानि शाखादीनि कुसुमानि च यथा प्राग्भूत्वा पुनर्भवन्ति तथा
33698 आद्यात्कारणाद्ब्रह्मणः
33699 साकाशात्तस्माच्चित्स्पन्दनलक्षणाच्छुभाशुभलक्षणात्कर्मणो
33700 निमित्ताज्जगन्ति भोक्तृप्राणिनिकायास्तदाधारतद्भोग्यभुवनानि च
33701 पुनःपुनर्भवन्तीत्यर्थः ॥ ३१ ॥
33702
33703 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलो०
33704 उत्पत्तिबीजाङ्कुरनिर्णयो नाम चतुःषष्ठितमः सर्गः ॥ ६४ ॥
33705
33706 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
33707 उत्पत्तिबीजाङ्कुरनिर्णयो नाम चतुःषष्ठितमः सर्गः ॥ ६४ ॥
33708
33709
33710 प। २८९) १७७
33711
33712 पञ्चषष्टितमः सर्गः ६५
33713
33714 श्रीवसिष्ठ उवाच ।
33715
33716 परस्मात्कारणादेव मनः प्रथममुत्थितम् ।
33717 मननात्मकमाभोगि तत्स्थमेव स्थितिं गतम् ॥ १ ॥
33718
33719 मनसो भोग्यवर्गस्य भोक्तुर्मूलस्य चाधुना ।
33720 विमृश्य तत्त्वं चिन्मात्रपरिशेषः प्रदर्श्यते ॥ १ ॥
33721
33722 तत्रादौ सर्वकल्पनानां चिदनतिरेकं वक्तुं मूलभूतस्य मनस
33723 उत्पत्तिस्थित्योः कारणानन्यसत्ताकत्वात्तन्मात्रत्वमाह - परस्मादिति ॥ १ ॥
33724
33725 भावाभावलसद्दोलं तेनायमवलोक्यते ।
33726 सर्गः सदसदाभासः पूर्वगन्ध इवेच्छया ॥ २ ॥
33727
33728 द्वैताभासस्य मनोधीनत्वमाह - भावाभावेति । इदमित्थं भवति इत्थं
33729 नेत्येवं भावाभावयोर्विषययोर्लसन्ती दोलेव परिवृत्तिर्यस्येति पूर्वान्वयि ।
33730 तेन चित्तेन पूर्वानुभूतो गन्धः स्मर्यमाणो यथा इच्छया
33731 मनोरथेनासन्नप्यवलोक्यते तद्वत् ॥ २ ॥
33732
33733 न कश्चिद्विद्यते भेदो द्वैतैक्यकलनात्मकः ।
33734 ब्रह्मजीवमनोमायाकर्तृकर्मजगद्दृशाम् ॥ ३ ॥
33735
33736 तथाच मनःकल्पितो भेदो मनोऽपगमादपगच्छतीत्याह - न कश्चिदिति ॥ ३ ॥
33737
33738 अपारावारविस्तारसंवित्सलिलवल्गनैः ।
33739 चिदेकार्णव एवायं स्वयमात्मा विजृम्भते ॥ ४ ॥
33740
33741 भेदापगमे शिष्टमात्मस्वरूपं दर्शयति - पारेति । संविल्लक्षणस्य
33742 सलिलस्य वल्गनैरपरिच्छेदेन प्रसारैः ॥ ४ ॥
33743
33744 असत्यमस्थैर्यवशात्सत्यं संप्रतिभासतः ।
33745 यथा स्वप्नस्तथा चित्तं जगत्सदसदात्मकम् ॥ ५ ॥
33746
33747 ननु चित्तजगतोर्बाधे कुतः सत्परिशेष इत्याशङ्क्य
33748 स्थिरास्थिरोभयसंवलितत्वेन जगतः सदसदात्मकत्वादस्थिरांशबाधे

33749 स्थिरपरिशेषोपपत्तिरित्याशयेनाह - असत्यमिति | स्वप्ने
33750 अस्थिरचिषयांशबाधेऽपि स्थिरतद्द्रऽष्टृपरिशेषदर्शनात्तद्वदित्यर्थः || ५ ||
33751
33752 न सन्नासन्न संजातश्चेतसो जगतो भ्रमः |
33753 अथ धीसमवायानामिन्द्रजालमिवोत्थितः || ६ ||
33754
33755 नन्वत्यन्तासतोऽपि न बाधो दृष्ट इत्याशङ्क्य
33756 तयोर्बाधयोग्यामनिर्वचनीयतामाह - न सदिति | ननु मिथ्यात्वे कथं
33757 बहूनामेकाकारता तत्राह - अथेति | अथेति तथापीत्यर्थे | तथापि
33758 सामाजिकधीसमूहानामिन्द्रजालमायाक्षुब्धानामेकाकारताभ्रमवदुत्थित
33759 इत्यर्थः || ६ ||
33760
33761 दीर्घः स्वप्नः स्थितिं यातः संसाराख्यो मनोबलात् |
33762 सम्यग्दर्शनात्स्थाणाविव पुंस्प्रत्ययो मुधा || ७ ||
33763
33764 कुतस्तर्हि चिरकालस्थायितास्य तत्राह - दीर्घ इति | मनोबलात्
33765 मनःकृतासक्तिबलात् || ७ ||
33766
33767 अनात्मालोकनाच्चित्तं चित्तत्वं नानुशोचति |
33768 वेतालकल्पनाद्बाल इव संकल्पिते भये || ८ ||
33769
33770 नन्वात्मा स्वपूर्णानन्दभावप्रच्युतिहेतुं सर्वदुःखनिदानं स्वस्य
33771 मनोभावमेव कुतो नानुशोचति तत्राह - अनात्मालोकनादिति | न
33772 आत्मालोकनमनात्मालोकनमात्मविषयकमज्ञानं अनात्मनामालोकनं
33773 दर्शनं च तस्मान्निमित्ताच्चित्तं चित्तभावमापन्नोऽप्यात्माचित्तत्वं
33774 चित्तभावकृतानर्थनानुशोचति यथा बालो वेतालकल्पनाद्भये सम्यक्कल्पिते
33775 सम्यङ्निरूढे सति तदभिनिविष्टचित्तत्वात्तद्धेतुं वेतालकल्पनां नानुशोचति
33776 तद्वदित्यर्थः || ८ ||
33777
33778 अनाख्यस्य स्वरूपस्य सर्वाशातिगतात्मनः |
33779 चेत्योन्मुखतया चित्तं चित्ताज्जीवत्वकल्पनम् || ९ ||
33780
33781 तथाच चितश्चेत्योन्मुखत्वस्वभाव एवानर्थपरम्परामूलमित्याह -
33782 अनाख्यस्येत्यादिना || ९ ||
33783
33784 जीवत्वादप्यहंभावस्त्वहंभावाच्च चित्तता |
33785 चित्तत्वादिन्द्रियादित्वं ततो देहादिविभ्रमाः || १० ||
33786
33787 देहादिमोहतः स्वर्गनरकौ मोक्षबन्धने |
33788 बीजाङ्कुरवदारम्भसंरूढे देहकर्मणोः || ११ ||
33789
33790 देहादौ मोहतोऽहंममेत्यभिमानतः || ११ ||
33791
33792 द्वैतं यथा नास्ति चिदात्मजीवयो-
33793 स्तथैव भेदोऽस्ति न जीवचित्तयोः |
33794 यथैव भेदोऽस्ति न जीवचित्तयो-
33795 स्तथैव भेदोऽस्ति न देहकर्मणोः || १२ ||
33796
33797 इयं सर्वाप्यनर्थपरंपरा जीवब्रह्मभेदभ्रममूलत्वात्तदैक्यबोधेन
33798 तद्भ्रमबाधे बाध्यत इत्याशयेन भेदमपवदति - द्वैतमिति चिदात्मा
33799 ब्रह्मजीवश्च तयोर्द्वैतं भेदः || १२ ||
33800

33801 कर्मैव देहो ननु देह एव
33802 चित्तं तदेवाहमितीह जीवः।
33803 स जीव एवेश्वरचित्स आत्मा
33804 सर्वः शिवस्त्वेकपदोक्तमेतत्॥ १३॥
33805
33806 सकलशास्त्रविचाररहस्यमेकोक्त्यैव संक्षिप्य स्फुटमाह - कर्मैवेति॥ १३
33807 ।।
33808
33809 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलोपाख्याने
33810 जीवविचारो नाम पञ्चषष्टितमः सर्गः॥ ६५॥
33811
33812 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे जीवविचारो नाम
33813 पञ्चषष्टितमः सर्गः॥ ६५॥
33814
33815
33816 प्। २९०) १७८
33817
33818 षट्षष्टितमः सर्गः ६६
33819
33820 श्रीवसिष्ठ उवाच।
33821
33822 एवमेकं परं वस्तु राम नानात्वमेत्यलम्।
33823 नानात्वमिव संजातं दीपाद्दीपशतं यथा॥ १॥
33824
33825 मनोमात्रविलासत्वं द्वैतस्यात्र प्रपञ्च्यते।
33826 इष्टस्यागात्प्रबोधाच्च साज्ञानमनसः क्षयः॥ १॥
33827
33828 एवं चेत्योन्मुखतया चित्तमित्यादिवर्णितक्रमेण। तत्र दृष्टान्तमाह -
33829 नानात्वमिति। नानात्वं संजातं संप्राप्तं दीपशतम्। अथवा न केवलं
33830 चेत्यस्यैव नानात्वं संजातं किंतु एवमुक्तदिशा चितोऽपि प्रत्युपाधिभेदं
33831 नानात्वमिव संजातम्। तत्र अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं
33832 प्रतिरूपो बभूव इति श्रुत्युक्तं दृष्टान्तमाह - दीपादिति॥ १॥
33833
33834 यथाभूतमसद्रूपमात्मानं यदि पश्यति।
33835 विचार्यतेऽन्तस्तदनुभावहीनं न शोचति॥ २॥
33836
33837 यथाऽस्य चित्तादीनजीवत्वकल्पनया बन्धः एवं चित्ताधीनाभ्यामेव
33838 विचारतत्त्वबोधाभ्यां मुक्तिरपीति गूढाशयेनाह - यथाभूतमिति। आदौ
33839 यदि विचार्यते तदनुभावो द्वैताभिनिवेशस्तद्धीनं अत एव यथाभूतं
33840 यथास्थितं असद्रूपम्। रूपग्रहणं नाम्नोऽप्युपलक्षणम्।
33841 नामरूपशून्यमित्यर्थः। तथाविधमात्मानं पश्यति तदा न शोचति। तरति
33842 शोकमात्मवित् इति श्रुतेरित्यर्थः॥ २॥
33843
33844 चित्तमात्रं नरस्तस्मिन्गते शान्तमिदं जगत्।
33845 उपानद्गूढपादस्य ननु चर्मास्तृतैव भूः॥ ३॥
33846
33847 ननु विचारेण चित्तोपशमेऽपि कथं सर्वद्वैतोपशमस्तत्राह -
33848 चित्तमात्रमिति। नरो जीवः। तस्य अचेत्यमानद्वैतसत्ताभावाच्चित्तोपरमे
33849 द्वैतोपरमसिद्धिरित्यर्थः॥ ३॥
33850
33851 पत्रमात्राद्दते नान्यत्कदल्या विद्यते यथा।
33852 भ्रममात्राद्दते नान्यज्जगतो विद्यते तथा॥ ४॥

33853
33854 चित्तभ्रमोपादानकस्य
33855 जगतस्तदतिरिक्तस्वरूपाभावादप्युपरमसिद्धिरित्याशयेनाह -
33856 पत्रमात्रादिति | पत्रग्रहणं त्वक्काण्डमूलानामप्युपलक्षणम् | अन्यत्
33857 स्वरूपमिति शेषः || ४ ||
33858
33859 जायते बालतामेति यौवनं वार्धकं ततः |
33860 मृतिं स्वर्गं च नरकं भ्रमाच्चेतो हि नृत्यति || ५ ||
33861
33862 उक्तमेव प्रपञ्चयति - जायत इति || ५ ||
33863
33864 विचित्रबुद्बुदोल्लासे स्वात्मनो व्यतिरेकिणि |
33865 यथा सुरायाः सामर्थ्यं तथा चित्तस्य संसृतौ || ६ ||
33866
33867 बुद्बुदोल्लासे नभसि अनेकसहस्रबुद्बुदाकारभ्रमजनने | तथा चित्तस्य
33868 ब्रह्माण्डबुद्बुदोल्लासे || ६ ||
33869
33870 यथा द्वित्वं शशाङ्कादौ पश्यत्यक्षिमलाविलम् |
33871 चिच्चेतनकलाक्रान्ता तथैव परमात्मनि || ७ ||
33872
33873 मलेन तिमिरेणाविलं कलुषमक्षि पश्यति | चेतनं चित्तं तस्य कला
33874 भ्रान्तिजननशक्तिस्तया आक्रान्ता परवशीकृता जीवचित् || ७ ||
33875
33876 यथा मदवशाद्भ्रान्तान्क्षीबः पश्यति पादपान् |
33877 तथा चेतनविक्षुब्धान्संसारांश्चित्प्रपश्यति || ८ ||
33878
33879 क्षीबो मदिरामत्तः || ८ ||
33880
33881 यथा लीलाभ्रमाद्बालाः कुम्भकृच्चक्रवज्जगत् |
33882 भ्रान्तं पश्यन्ति चित्तात्तु विद्धि दृश्यं तथैव हि || ९ ||
33883
33884 लीलया भ्रमाद्भ्रमणात् | कुम्भकृत्कुलालस्तदीयचक्रवत् || ९ ||
33885
33886 यदा चिच्चेतति द्वित्वं तदा द्वैतैक्यविभ्रमः |
33887 यदा न चेतति द्वैतं तदा द्वैतैक्ययोः क्षयः || १० ||
33888
33889 चित्ताधीनप्रतीतिकालिकैव द्वैतसत्ता चित्तोपरमे उपरमतीत्याह - यदेति || १० ||
33890
33891 यच्चेत्यते तदितरद्व्यतिरिक्तं चितोऽस्ति न |
33892 किंचिन्नास्तीति संशान्त्या चितः शाम्यति चेतनं || ११ ||
33893
33894 प्रतीतिकालेऽपि सा न पृथगस्तीत्याह - यदिति | तस्याश्चित इतरज्जडरूपम् |
33895 चित्तस्य तर्हि कुतः शान्तिस्तत्राह - किंचिदिति | विषयापह्नवे निरिन्धनाग्निरिव
33896 चित्तं स्वयमेव शाम्यतीत्यर्थः || ११ ||
33897
33898 चिद्घनेनैकतामेत्य यदा तिष्ठति निश्चलः |
33899 शाम्यन्व्यवहरन्वापि तदा संशान्त उच्यते || १२ ||
33900
33901 जीवन्मुक्तस्तर्हि कदा भवति तत्राह - चिद्घनेनेति | शाम्यन् समाधिलीनः ||
33902 १२ ||
33903
33904 तन्वी चेतयते चेत्यं घना चिन्नाङ्ग चेतति |

33905 अल्पक्षीबः क्षोभमेति घनक्षीबो हि शाम्यति ॥ १३ ॥
33906
33907 नन्वल्पज्ञचितश्चिद्घनैक्ये सर्वज्ञतैव स्यान्न निर्विषयतालक्षणा
33908 संशान्तिरिति चेत्तत्राह - तन्वीति। अङ्गेति संबोधने। घनक्षीबोऽत्यन्तमत्तः
33909 । शाम्यति निर्व्यापाओ भवति। अयं भावः - चितः सविषयता न
33910 केवलचित्त्वप्रयुक्ता किंत्वविद्याविक्षिप्तचित्त्वप्रयुक्ता। सा च
33911 ज्ञानसमाधिदार्ढ्याभिव्यक्तचिद्घनैक्येनाविद्याविक्षेपापगमे अपैत्येव।
33912 या त्वीश्वरादीनां सर्वज्ञता सापि मायिक्येव न वास्तवीति न कश्चिद्दोष इति ॥ १३ ॥
33913
33914 चिद्घनैकप्रपातस्य रूढस्य परमे पदे।
33915 नैरात्म्यशून्यवेद्याद्यैः पर्यायैः कथनं भवेत् ॥ १४ ॥
33916
33917 एतदेवाभिप्रेत्याह - चिद्घनैकेति। चिद्घनेन एकप्रपातोऽनन्यविषयता
33918 नैरन्तर्यं च यस्य तथाविधस्य अत एव परमे पदे तस्मिन् रूढस्येति
33919 निर्विकल्पसमाधिसाक्षात्कारावुक्तौ। तथाविधस्य चित्तस्य नैरात्म्यं
33920 स्वरूपशून्यता शून्यवेद्यं निर्विषयतेत्यादिपर्यायैः ॥ १४ ॥
33921
33922 चिच्चेतनेन चेत्यत्वमेत्येवं पश्यति भ्रमम्।
33923 जातो जीवामि पश्यामि संसरामित्यसन्मयम् ॥ १५ ॥
33924
33925 चिति चेत्यजडसंसरणक्रमरूपताकल्पनापि चित्तनिमित्तैवेति तदुपशमे
33926 तदपगमोपपत्तिरित्याशयेनाह - चिदिति ॥ १५ ॥
33927
33928 स्वभावाद्यतिरिक्तं तु न चित्तस्यास्ति चेतनम्।
33929 स्पन्दादृते यथा वायोरन्तः किं नाम चेत्यते ॥ १६ ॥
33930
33931 ननु चेतनं चित्तव्यापारः समाधिज्ञानाभ्यासादुपरमतु चित्तं
33932 त्वनुपरतमेवेत्याशङ्कायामाह - स्वभावादिति। औष्ण्योपरमे
33933 वह्निपरिशेषवद्व्यापारोपरमेन चित्तं परिशिष्यते न हि तदन्तर्गतं
33934 स्वरूपान्तरं केनचिदनुभूयत इत्याह - अन्तरिति ॥ १६ ॥
33935
33936 प्। २९१) १७८
33937
33938 चेत्यत्वं संभवत्येवं किंचिद्यच्चेत्यते चिता।
33939 रज्जुसर्पभ्रमाभासं तमविद्याभ्रमं विदुः ॥ १७ ॥
33940
33941 एवं चित्तापगमे चितिचेत्याप्रथनादप्रथमानस्य च
33942 साधकान्तराभावादसिद्धेश्च तदप्यपगतमेवेत्याशयेनाह -
33943 चेत्यत्वमिति। प्राक्तर्हि चेत्यप्रतिभासः कीदृक् तमाह - रज्ज्विति ॥ १७ ॥
33944
33945 संविन्मात्रचिकित्स्येऽस्मिन्व्याधौ संसारनामनि।
33946 चित्तमात्रपरिस्पन्दे संरम्भो न च किंचन ॥ १८ ॥
33947
33948 एवंच रज्जुसर्पस्पन्द इव चित्तस्पन्दात्मकः संसारो बोधमात्रेण चिकित्सितुं
33949 शक्य इत्याहसंविदिति। संरम्भ आयासः किंचन कश्चन ॥ १८ ॥
33950
33951 यदि सर्वं परित्यज्य तिष्ठस्युत्क्रान्तवासनः।
33952 अमुनैव निमेषेण तन्मुक्तोऽसि न संशयः ॥ १९ ॥
33953
33954 उत्क्रान्तवासनो वासनामयचित्तशून्यः ॥ १९ ॥
33955
33956 यथा रज्ज्वां भुजङ्गाभा विनश्यत्येव वीक्षणात्।

संविन्मात्रविवर्तेन नश्यत्येव हि संसृतिः ॥ २० ॥

संविन्मात्रस्य विवर्तः प्रत्यङ्मुखतया परावृत्य स्वतत्त्वदर्शनं तेन ॥
२० ॥

यत्राभिलाषस्तन्नूनं संत्यज्य स्थीयते यदि ।
प्राप्त एवाङ्ग तन्मोक्षः किमेतावति दुष्करम् ॥ २१ ॥

संवित्परावृत्तौ चेन्द्रियनिग्रहो हेतुस्तत्र च विषयाभिलाषत्यागो
हेतुरित्याशयेनाह - यत्राभिलाष इति ॥ २१ ॥

अपि प्राणांस्तृणमिव जयन्तीह महाशयाः ।
यत्राभिलाषस्तन्मात्रत्यागे कृपणता कथम् ॥ २२ ॥

विषयत्यागं प्ररोचयति - अपीति ॥ २२ ॥

यत्राभिलाषस्तत्त्यक्त्वा चेतसा निरवग्रहम् ।
प्राप्तं कर्मेन्द्रियैर्मूढांस्त्यजन्नष्टं च तिष्ठ भोः ॥ २३ ॥

निरवग्रहं निरासङ्गम् । कथं तर्हि जीवनं तत्राह - प्राप्तमिति । नष्टं
त्यजन् नानुशोचन्निति यावत् ॥ २३ ॥

यथा करतले बिल्वं यथा वा पर्वतः पुरः ।
प्रत्यक्षमेव तस्यालमजत्वं परमात्मनः ॥ २४ ॥

तस्य उक्तलक्षणस्य तत्त्वविदः अजत्वं जन्मादिविक्रियाशून्यब्रह्मत्वं
अलमत्यन्तं प्रत्यक्षमेव न तिरोहितमित्यर्थः ॥ २४ ॥

आत्मैव भाति जगदित्युदितस्तरङ्गैः
कल्पान्त एक इव वारिधिरप्रमेयः ।
ज्ञातः स एव हि ददाति विमोक्षसिद्धिं
त्वज्ञात एव मनसे चिरबन्धनाय ॥ २५ ॥

उक्तार्थत्रयं संक्षिप्योपसंहरति - आत्मैवेति । आत्मैवाज्ञदृशां
जगदिति वेषेण उदित आविर्भूतः सन् भाति । यथा
कल्पान्तवारिधिस्तरङ्गभेदैर्भाति तद्वत् । स एव ज्ञातो ज्ञानाभिव्यक्तः सन्
विमोक्षलक्षणां सिद्धिं पुरुषार्थं ददाति । अज्ञातस्तु प्रथमं मनसे
सर्वार्थनिदानमनोभावाय तत्प्रयुक्तचिरबन्धनाय च भवतीति शेषः ॥ २५ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलोपाख्याने
संसृतिपरमयोगो नाम षट्षष्टितमः सर्गः ॥ ६६ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
संसृतिपरमयोगो नाम सट्षष्टितमः सर्गः ॥ ६६ ॥

सप्तषष्टितमः सर्गः ६७

श्रीराम उवाच ।

मनस्त्वयोग्यो जीवोऽयं को भवेत्परमात्मनः ।
कथं वास्मिन्समुत्पन्नः को वायं वद मे पुनः ॥ १ ॥

34009
34010 भोक्ता यः कथितो जीवस्तत्स्वरूपमिहोच्यते।
34011 व्यष्टिप्राधान्यतस्तस्य करणादेश्च संभवः॥ १॥
34012
34013 समष्टिप्राधान्येनोक्तं जीवं व्यष्टिप्राधान्येन स्फुटं जिज्ञासुः
34014 श्रीरामः पुनः पृच्छति - मनस्त्वेति। मनः सृष्ट्वा तत्तादात्म्यस्य
34015 स्वस्मिन्नध्यासान्मनस्त्वयोग्यः परमात्मनः संबन्धी को भवेत्। किमंश
34016 उत कार्यमुत स एव। यदि स एव तर्हि कथं वास्मिन्समुत्पन्नः। किं
34017 परिणामेनोत विवर्तेन। आद्ये अनित्यता। द्वितीये बाध्यता। यद्यनुत्पन्नस्तर्हि
34018 भोक्तुरसिद्धिः। ब्रह्मणोऽशनायाद्यत्ययश्रुतेः। यद्यन्यस्तर्हि को वा।
34019 तत्सजातीय उत विजातीय इति विकल्पे नैकोऽपि पक्षो घटत इति संदेहपरिहाराय
34020 पुनर्वदेत्यर्थः॥ १॥
34021
34022 श्रीवसिष्ठ उवाच।
34023
34024 समस्तशक्तिखचितं ब्रह्म सर्वेश्वरं सदा।
34025 ययैव शक्त्या स्फुरति प्राप्तां तामेव पश्यति॥ २॥
34026
34027 अचिन्त्यानन्तशक्तिसंपन्नमायाशक्तिशबलं ब्रह्म परमार्थत
34028 आविष्कृतमभिन्नमपि स्वस्मिन्नेव मायया द्वितीयतामिवापन्ने
34029 औपाधिकविकारानारोप्यानन्तजीववेषेण सर्वज्ञेश्वरभावेन च क्रीडितुं
34030 समर्थमिति न कश्चिद्दोष इत्याशयेन वसिष्ठः समाधातुमुपक्रमते -
34031 समस्तेति। सर्वेश्वरं सर्वसमर्थम्॥ २॥
34032
34033 स्वयं यां वेत्ति सर्वात्मा चिरं चेतनरूपिणीम्।
34034 सा प्रोक्ता जीवशब्देन सैव संकल्पकारिणी॥ ३॥
34035
34036 चिरमनादिकालाच्चेतनरूपिणीं चित्तसंस्कारोपहितचिद्रूपाम्॥ ३॥
34037
34038 स्वभावात्कारणं द्वित्वं पूर्वसंकल्पचित्स्वयम्।
34039 नानाकारणतां पश्चाद्याति जन्ममृतिस्थितेः॥ ४॥
34040
34041 आत्मनि स्वाभाविकं द्वितीयत्वमेवोत्तरसंसारप्रवृत्तेर्मुख्यं कारणं
34042 पूर्वपूर्वसंकल्पवासनावासितजीवचैतन्यं तु
34043 पश्चात्तनवैचित्र्यमात्रहेतुरित्याह - स्वभावादिति॥ ४॥
34044
34045 श्रीराम उवाच।
34046
34047 एवं स्थिते मुनिश्रेष्ठ दैवं नाम किमुच्यते।
34048 किमुच्यते तथा कर्म कारणं च किमुच्यते॥ ५॥
34049
34050 एतावतैव प्रश्नशेषस्याप्युत्तरमुक्तप्रायमिति मन्यमानो राम उक्तजीवस्य
34051 जन्मादिनिमित्तदैवकर्मकारणानि तत्त्वतो जिज्ञासुः पृच्छति - एवमिति।
34052 एवमुक्तविधया जीवस्वरूपे स्थिते बुद्धौ प्रतिष्ठिते सति पृच्छामीति शेषः॥ ५
34053 ॥
34054
34055 प्। २९२) १७९
34056
34057 श्रीवसिष्ठ उवाच।
34058
34059 स्पन्दास्पन्दस्वभावं हि चिन्मात्रमिह विद्यते।
34060 खे वात इव तत्स्पन्दात्सोल्लासं शान्तमन्यथा॥ ६॥

34061
34062 स्पन्दस्वभावं रजःप्रधानमायोपहितम्। अस्पन्दस्वभावं शुद्धम्।
34063 सोल्लासं सृष्ट्युन्मुखं भवतीति शेषः। अन्यथा स्पन्दाभावे तु
34064 शान्तमेवावतिष्ठत इत्यर्थः॥ ६॥
34065
34066 चित्त्वं चित्तं भावितं सत्स्पन्द इत्युच्यते बुधैः।
34067 दृश्यत्वभावितं चैतदस्पन्दनमिति स्मृतम्॥ ७॥
34068
34069 तत्राद्यं विवृणोति - चित्त्वमिति। स्वीयं स्वाभाविकं चित्त्वमेव चित्तं
34070 चेत्याकारं स्वाविद्यया भावितं कल्पितं चेत्तदाकारं सत् स्पन्द इत्युच्यत
34071 इत्यर्थः। द्वितीयं विवृणोति - दृश्यत्वेति॥ ७॥
34072
34073 स्पन्दात्स्फुरति चित्सर्गो निःसप्न्दाद्ब्रह्म शाश्वतम्।
34074 जीवकारणकर्माद्या चित्स्पन्दस्याभिधा स्मृता॥ ८॥
34075
34076 स्पन्दास्पन्दाभ्यामेव चितः प्रपञ्चाप्रपञ्चात्मतेति निष्कर्षे स्पन्दस्यैव
34077 जीवकारणकर्मदैवादिनाम्ना व्यपदेश इति फलितमित्याह - स्पन्दादिति।
34078 चिदिति पृथक्पदम्। तत्र प्राणस्पन्दविवक्षया जीवः
34079 स्वान्तर्गतकार्याणामाविर्भावनलक्षणस्पन्दविवक्षया कारणं
34080 शरीरादिस्पन्दविवक्षया कर्म देव सूक्ष्मावस्थं चिरस्थितं
34081 फलारम्भोन्मुखं दैवमिति भेद इति भावः॥ ८॥
34082
34083 य एवानुभवत्मायं चित्स्पन्दोऽस्ति स एव हि।
34084 जीवकारणकर्माख्यो बीजमेतद्धि संसृतेः॥ ९॥
34085
34086 तेषां चानुभवसत्तालम्बनेनैव सत्ता स्वकार्यक्षमता चेत्याह - य एवेति॥
34087 ९॥
34088
34089 कृतद्वित्वचिदाभासवशाद्देहमुपस्थितम्।
34090 संकल्पाद्विविधार्थत्वं चित्स्पन्दो याति सृष्टिषु॥ १०॥
34091
34092 यत्पृष्टं कथं वास्मिन्समुत्पन्न इति तस्योत्तरमाह - कृतद्वित्वेति।
34093 तत्तत्कर्मानुसारेण प्राङ्मरणकाले बुद्धावुपस्थितं देवनरतिर्यगादिदेहं
34094 पूर्वसंकल्पानुसारिविविधभोग्यपदार्थभावं च याति प्राप्नोति॥ १०॥
34095
34096 नानाकारणतां यातश्चित्स्पन्दो मुच्यते चिरात्।
34097 कश्चिज्जन्मसहस्रेण कश्चिदेकेन जन्मना॥ ११॥
34098
34099 नानाविधानि योनिसहस्राणि कारणानि जन्महेतूनि यस्य तद्भावं चिराद्यातः
34100 सन् कश्चिन्मन्दशास्त्रीयप्रवृत्तिश्चित्स्पन्दश्चिरान्मुच्यते।
34101 संपन्नज्ञानाधिकारस्त्वेकेन जन्मना॥ ११॥
34102
34103 स्वभावात्कारणाद्वित्वं चित्समेत्याधिगच्छति।
34104 स्वर्गापवर्गनरकबन्धकारणतां शनैः॥ १२॥
34105
34106 यदुक्तं नानाकारणतां यात इति तत्प्रकारमाह - स्वभावादिति। चितः
34107 स्वभावो येनोपाधिना संबध्यते तद्रूपेण स्फुरणम्। यथा आलोको नीलपटे
34108 नीलरूपो रक्तपटे रक्तरूपः पीते तद्रूप इति। तादृशस्वभाववशादेव
34109 देहजन्मकारणैरन्नरसैस्तद्द्वारा पित्रादिशरीरैश्चाद्वित्वमैक्यं समेत्य
34110 संप्राप्य क्रमेण शुक्रशोणितादिरूपेण परिणतं शनैः
34111 स्वर्गमोक्षनरकवधबन्धादिकारणदेहतामधिगच्छति प्राप्नोतीत्यर्थः।
34112 अपगच्छति इति पाठे स्वर्गादिहेतुं देहभावं प्राप्तुं शुक्रादिरूपेण

34113 पितृदेहादपगच्छति निर्गच्छतीत्यर्थः ॥ १२ ॥
34114
34115 हेम्नीव कटकादित्वं काष्ठलोष्टसमस्थितौ ।
34116 देहे तिष्ठति नानात्वं जडे भावविकारजम् ॥ १३ ॥
34117
34118 तथा चोपाधीनां मेलनेनैक्ये पितापुत्रजीवयोर्भेदो न लक्ष्यते
34119 उपाधिपृथग्भावे तु भेदः प्रतीयत इति जीवानां परस्परभेद उपाधेरेव
34120 धर्मो न चैतन्यस्येत्याह - हेम्नीवेति । उपाधीनामपि
34121 भूतविकारत्वाद्भूतानां चोत्तरोत्तरं
34122 पूर्वपूर्वभूतविकारत्वादखण्डाकाशमात्रत्वेन सत्यभेदावकाश
34123 इत्याशयेन हेमकटकदृष्टान्तोपन्यासः । जन्मादयः
34124 षड्भावविकारास्तेभ्यो जातं नानात्वं भेदः ॥ १३ ॥
34125
34126 अजातमप्यसद्रूपं पश्यतीदं मनोभ्रमः ।
34127 जातः स्थितो मृतोऽस्मीति भ्रमार्तः पत्तनं यथा ॥ १४ ॥
34128
34129 एवं भेदस्य मृसात्वेऽपि जन्मादिभेदप्रतीतिर्मनोभ्रम एवेत्याह -
34130 अजातमपीति ॥ १४ ॥
34131
34132 अहंममेत्यसद्रूपमेव चेतः प्रपश्यति ।
34133 अदृष्टपरमार्थत्वादाशाविवशसंस्थिति ॥ १५ ॥
34134
34135 सर्वभेदप्रत्ययानामहंममेति भेदकल्पनामूलं तस्या अपि
34136 पूर्णात्मस्वरूपाज्ञानं भोगाशासंस्काराश्च क्रमेण
34137 मूलमित्याशयेनाह - अहमिति ॥ १५ ॥
34138
34139 मथुराधिपते राज्ञो यथा श्वपचसंभ्रमः ।
34140 आसीदेवं हि चित्तस्य स्फुरतीयं जगत्स्थितिः ॥ १६ ॥
34141
34142 उक्तेऽर्थे वक्ष्यमाणलवणोपाख्यानार्थो निदर्शनमित्याह - मथुरेति ॥ १६ ॥
34143
34144 सर्वमेव मनोमात्रभ्रान्त्युलासविजृम्भणम् ।
34145 इदं जगत्तया राम प्रस्फुरत्यम्बुभङ्गवत् ॥ १७ ॥
34146
34147 शिवात्प्राक्कारणात्पूर्वं चिच्चेत्यकलनोन्मुखी ।
34148 उदेति सौम्याज्जलधेः पयःस्पन्दो मनागिव ॥ १८ ॥
34149
34150 उक्तमेवारोपक्रमं पुनः प्रत्येकं दृष्टान्तैर्बोधयति -
34151 शिवादित्यादिना ॥ १८ ॥
34152
34153 स्फुरणाज्जीवचक्रत्वमेति चित्तोर्मितां दधत् ।
34154 चिद्वारिब्रह्मजलधौ कुरुते सर्गबुद्बुदान् ॥ १९ ॥
34155
34156 स्फुरणात् स्पन्दनात् । जीवचक्रत्वं जीवस्वरूपामावर्तताम् ॥ १९ ॥
34157
34158 स्वस्थः सौम्य समस्यैतद्यत्सिंहस्य विजृम्भणम् ।
34159 ब्रह्मणः संविदाभासस्तत्संचेत्यमिव स्वयम् ॥ २० ॥
34160
34161 हे सौम्य स्वबोधमात्रेण सिंहः मायाबन्धनं हन्तीति सिंहस्तथाविधस्य
34162 सिंहवदचिन्त्यशक्तिमतो वा ब्रह्मणो यन्मायया विजृम्भणं
34163 गात्रविनमनं स एव स्वात्मस्थः संविदाभासो जीव इव स्थितं तदेव
34164 संचेत्यं विषयरूपमिव स्थितं न पृथगस्तीत्यर्थः ॥ २० ॥

34165
34166 चित्संवित्त्योच्यते जीवः संकल्पात्स मनो भवेत्।
34167 बुद्धिश्चित्तमहंकारो मायेत्याद्यभिधं ततः॥ २१॥
34168
34169 कैरुपाधिभिस्तर्हि जीवमनोबुद्धिचित्ताहंकारादिशब्दभेदस्तानाह -
34170 चित्संवित्त्येति। चित्संवित्त्या चिदाभासात्मना अध्यवसायाद्बुद्धिः
34171 स्मरणाच्चित्तमभिमानादहंकारो विक्षेपशक्तित्वान्माया। आदिपदात्
34172 प्राणन्नेव प्राणो नाम भवति वदन्वाक्पश्यंश्चक्षुः
34173 इत्यादिश्रुत्युक्ताभिधासंग्रहः॥ २१॥
34174
34175 प्। २९३) १७९
34176
34177 तन्मात्रकल्पना पूर्वं तनोतीदं जगन्मनः।
34178 असत्यं सत्यसंकाशं गन्धर्वनगरं यथा॥ २२॥
34179
34180 तत्र संकल्पप्रधानस्य शब्दादिसूक्ष्मभूतकल्पनापूर्वकं
34181 जगत्कल्पकत्वमाह - तन्मात्रेति॥ २२॥
34182
34183 यथा शून्ये दृशः स्फारान्मुक्तावल्यादिदर्शनम्।
34184 यथा स्वप्ने भ्रमश्चैव तथा चित्तस्य संसृतिः॥ २३॥
34185
34186 मनःकल्पितस्य च मानोरथिकवस्तुवन्मिथ्यात्वमेवेत्याह - यथेति। शून्ये
34187 आकाशे दृशो दृष्टेः स्फाराद्विस्तारात्॥ २३॥
34188
34189 शुद्ध आत्मा नित्यतृप्त इव शान्तः समस्थितः।
34190 अपश्यन्पश्यतीवेमं चित्ताख्यं स्वप्नविभ्रमम्॥ २४॥
34191
34192 तत्साक्षिणस्तु नित्यशुद्धतैवेत्याह - शुद्ध इति।
34193 अशनायाद्यभावान्नित्यतृप्त इव॥ २४॥
34194
34195 संसृतिर्जाग्रदित्युक्तं स्वप्नं विदुरहंकृतिम्।
34196 चित्तं सुषुप्तभावः स्याच्चिन्मात्रं तुर्यमुच्यते॥ २५॥
34197
34198 तस्यैवेन्द्रियद्वारैर्बहिः संसृतिर्जाग्रत्। अन्तरहंभाववासितस्य
34199 हृदयात्कण्ठपर्यन्तं संसृतिः स्वप्नः। स्मृतिबीजवासनामात्रशेषेण
34200 हृदि स्थितिः सुषुप्तिस्तदतिक्रमस्तु तुर्यतेत्याह - संसृतिरिति॥ २५॥
34201
34202 अत्यन्तशुद्धे सन्मात्रे परिणामनिरामयम्।
34203 तुर्यातीतं पदं तत्स्यात्तत्स्थो भूयो न शोचति॥ २६॥
34204
34205 एवं शोधितस्य प्रत्यक्तत्त्वस्य ब्रह्मात्मनि परिणस्या निरामयं यथा
34206 स्यात्तथा स्थितिरेव तुर्यातीतत्वमित्याह - अत्यन्तेति॥ २६॥
34207
34208 तस्मिन्सर्वमुदेतीदं तस्मिन्नेव प्रलीयते।
34209 न चेदं न च तत्रेदं दृष्टौ मुक्तावली यथा॥ २७॥
34210
34211 अशोधिततत्पदार्थे प्रतिष्ठाशङ्कावारणाय तच्छोधनं तज्जलानिति शान्त
34212 उपासीत इति श्रुतिदर्शितदिशा दर्शयति - तमिन्निति। न चेदं तदिति शेषः।
34213 आद्यो ब्रह्मणि जगत्तादात्म्यस्य निषेधो द्वितीयस्तु संसर्गस्य॥ २७॥
34214
34215 अरोधकत्वात्खं हेतुर्यथा वृक्षसमुन्नतेः।
34216 अकर्तापि तथा कर्ता चेतनाब्धिर्जगत्स्थितेः॥ २८॥

34217
34218 यदि जगत्संबन्धशून्यस्तर्हि कथं जगद्धेतुरिति श्रुत्योक्तस्तत्राह -
34219 अरोधकत्वादिति। समुन्नतेरभिवृद्धेः। मायाकृतसर्गे अनिवारकत्वमात्रेण
34220 कर्तृत्वोपचार इत्यर्थः॥ २८॥
34221
34222 संनिधानाद्यथा लौहः प्रतिबिम्बस्य हेतुताम्।
34223 यात्यादर्शस्तथैवायं चिन्मयोऽप्यर्थवेदने॥ २९॥
34224
34225 लौहो लोहविकार आदर्शः॥ २९॥
34226
34227 बीजमङ्कुरपत्रादियुक्त्या यद्वत्फलं भवेत्।
34228 चिन्मात्रं चित्तजीवादियुक्त्या तद्वन्मनो भवेत्॥ ३०॥
34229
34230 कथं तर्हि सर्वं न युगपज्जायते तत्राह - बीजमिति। युक्तिरत्र क्रमः।
34231 तथैवानादिनियतिस्थितेरित्यर्थः॥ ३०॥
34232
34233 स्वतोबीजफला विप्रुड् यथा बीजं पुनर्भवेत्।
34234 तथा चिच्चेत्यचित्तादि त्यक्त्वा स्वस्था न तिष्ठति॥ ३१॥
34235
34236 ननु प्रलये सर्वविलये तथैव स्वस्था चित्सदा कुतो नावतिष्ठते तत्राह -
34237 यथेति। यथा अनुशयिजीवसंयुक्ता विप्रुड्
34238 वृष्टिजलबिन्दुर्वृक्षसस्याद्यनुप्रविश्य पुनर्बीजं भवत्येव नोदास्ते तथा
34239 जीववासनावासिता चिदपि चेत्यचित्तादिसर्गात्मना पुनर्भवत्येव न तत्यक्त्वा
34240 स्वस्था तिष्ठतीत्यर्थः॥ ३१॥
34241
34242 यद्यप्यबोधे बोधे वा बीजान्तस्तरुबीजयोः।
34243 इयान्भेदोऽस्ति न जगद्ब्रह्मणोरपि चित्तयोः॥ ३२॥
34244
34245 ननु बीजे सूक्ष्मतया स्थितस्य तरोस्तद्बीजस्य च अबोधे बोधे वा न
34246 तरुजननशक्तिरपैति तथा चित्तात्मतापन्नयोर्जगद्ब्रह्मणोरपि तत्त्वतो
34247 बोधाबोधयोर्विशेषो न स्यादिति बोधवैफल्यमित्याशङ्क्याह - यद्यपीति।
34248 इयान्परिदृश्यमानस्तरुजननशक्तिभेदोऽस्ति तथापि
34249 चित्तभूतयोर्जगद्ब्रह्मणोः स नास्त्येव। यतो बीजतरुबोधमात्रेण न
34250 तात्त्विकमखण्डितं रूपं व्यज्यते ब्रह्मबोधेन तु दीपेन रूपश्रीरिव
34251 तद्व्यज्यते इति इयान्भेदो वैलक्षण्यमस्तीत्यावृत्त्या परेण सह योज्यम्॥ ३२॥
34252
34253 तथापि व्यज्यते बोधे सत्यात्मकमखण्डितम्।
34254 रूपश्रीरिव दीपेन चिन्मात्रालोकरूपि यत्॥ ३३॥
34255
34256 यद्यन्निखन्यते भूमेर्यथा तत्तन्नभो भवेत्।
34257 या या विचार्यते विद्या तथा सा सा परं भवेत्॥ ३४॥
34258
34259 कुतो बोधस्येदृशसामर्थ्यमिति चेद्विचारजन्यत्वेन
34260 तत्त्वावगाहित्वादित्याशयेनाह - यद्यदिति। अविद्या आविद्यकं पटादि। परं
34261 अधिष्ठानसत्तामात्रम्॥ ३४॥
34262
34263 स्फटिकान्तःसन्निवेशः स्थाणुताऽवेदनाद्यथा।
34264 शुद्धेऽनानापि नानेव तथा ब्रह्मोदरे जगत्॥ ३५॥
34265
34266 स्फाटिकान्तर्वनादिसंनिवेशः स्थाणुता कौटस्थ्यं तदवेदनाद्यथा भवति
34267 तथा शुद्धे ब्रह्मोदरे अनानापि जगन्नानेव भातीति शेषः॥ ३५॥
34268

34269 ब्रह्म सर्वं जगद्वस्तु पिण्डमेकमखण्डितम् ।
34270 फलपत्रलतागुल्मपीठबीजमिव स्थितम् ॥ ३६ ॥
34271
34272 पिण्डं स्फटिकघनम् । स्वप्रतिबिम्बितवनफलपत्रलतादयस्तेषां
34273 पीठमाधारभूस्तदन्तर्गतं बीजं चेत्येवंरूपमिव ब्रह्म जगद्रूपं
34274 स्थितमित्यर्थः ॥ ३६ ॥
34275
34276 श्रीराम उवाच ।
34277
34278 अहो चित्रं जगदिदमसत्सदिव भासते ।
34279 अहो बृहदहो स्वस्थमहो स्फुटमहो तनु ॥ ३७ ॥
34280
34281 इत्थं वर्णितं जीवमनोबुद्धिचित्ताहंकारस्वरूपं तन्मात्रकल्पनान्तं
34282 प्रासङ्गिकं जगतो मायामात्रत्वं च श्रुत्वा विस्मितो गुरुवचनविश्वासाज्जगतो
34283 मायामात्रत्वमनुवादेनानुमोदमानस्तन्मात्राणां
34284 सेन्द्रियसमष्टिव्यष्टिस्थूलशरीरभावोत्पादक्रमं जिज्ञासुः पृच्छति -
34285 अहो इत्यादिना ॥ ३७ ॥
34286
34287 ब्रह्मणि प्रतिभासात्मा तन्मात्रगुणगोलकः ।
34288 अवश्यायकणाभासो यथा स्फुरति तच्छ्रृतम् ॥ ३८ ॥
34289
34290 यथाऽसौ याति अपुल्यं यथा भवति चात्मभूः ।
34291 यथा स्वभावसिद्धार्थात्तथा कथय मे प्रभो ॥ ३९ ॥
34292
34293 वैपुल्यं समष्टिव्यष्टिस्थूलदेहभावम् ।
34294 यथार्थस्वभावसिद्धादर्थादात्मवस्तुनः सकाशाद्यथा
34295 आत्मभूर्व्यष्टिसमष्टिस्थूलभूग्विश्ववैश्वानरात्मा यथा भवति तथा
34296 कथय मे इत्यर्थः ॥ ३९ ॥
34297
34298 प्। २९४) १८०
34299
34300 श्रीवसिष्ठ उवाच ।
34301
34302 अत्यन्तासंभवद्रूपमनन्यत्स्वस्वभावतः ।
34303 अत्यन्ताननुभूतं सत्स्वानुभूतमिवाग्रतः ॥ ४० ॥
34304
34305 उल्लासफुल्लो फुल्लाङ्ग इति बालहृदि स्फुटम् ।
34306 यथोदेति तथोदेति परे ब्रह्मणि जीवता ॥ ४१ ॥
34307
34308 पृष्टं वर्णयितुं
34309 प्रथममत्यन्तासंभावितानिर्वचनीयस्थूलतान्तसर्ववासनाविजृम्भितजीवभ्
34310 आवाविर्भावं सदृष्टान्तं दर्शयति - अत्यन्तेत्यादिद्वाभ्याम् ।
34311 जीवलक्षणमत्यन्तासंभवद्रूपमफुल्लाङ्गो वस्तुतः फुल्लाङ्गशून्योऽपि
34312 फुल्लाङ्गो वेतालो यथा बालहृदि स्फुटमुदेति तथोदेतीत्यन्वयः ॥ ४० ॥
34313
34314 मानमेयात्मिका शुद्धा सत्यैवासत्यवस्स्थिता ।
34315 भिन्नेव च न भिन्ना स्याद्ब्रह्मणो बृंहणात्मिका ॥ ४२ ॥
34316
34317 अननुभूतमननायोगादनुभवस्य च मानमेयाधीनत्वान्मनोभावनिमित्तं
34318 मानमेयवासनोद्भवमाह - मानेति ॥ ४२ ॥
34319
34320 यथा ब्रह्म भवत्याशु जीवः कलनजीवितः ।

34321 तथा जीवो भवत्याशु मनो मननवेदनात् ॥ ४३ ॥
34322
34323 मननवेदनान्मननवासनोद्भवाज्जीवो मनो भवति। मन्वानो मनः इति
34324 श्रुतेरित्यर्थः ॥ ४३ ॥
34325
34326 चित्तं तन्मात्रमननं पश्यत्याशु स्वरूपवत्।
34327 एष सद्योऽनिललवप्रख्यः स्फुरति खान्तरे ॥ ४४ ॥
34328
34329 तच्चित्तं मनस्तन्मात्रगोचरमननं स्वीयं स्वरूपवत्तन्मात्रात्मना
34330 आविर्भूतं पश्यतीत्यर्थः। अस्तनिमेषः अविच्छिन्नदृग्रूपः
34331 अनिललवप्रख्यः अतिसूक्ष्मः एष तन्मात्रात्मा खान्तरे चिदाकाशे स्फुरति।
34332 स्वतःप्रकाशमाने सति तत्स्फूर्त्या संवेदनात्मकं सृष्टिकालवशेन
34333 पञ्चीकरणद्वारोत्पादितं कान्तं हिरण्मयत्वात्सूर्यवत्प्रकाशमानं
34334 अपरिच्छिन्नचिद्दृष्ट्या अवश्यायकणोपमं ब्रह्माण्डरूपं
34335 मनुष्यादिदेहरूपं चात्मनि पश्यतीत्यनुषज्यते ॥ ४४ ॥
34336
34337 अस्तनिमेषोऽनुभवत्यवश्यायकणोपमम्।
34338 संवेदनात्मकं कालकलितं कान्तमात्मनि ॥ ४५ ॥
34339
34340 अहंकिमिति शब्दार्थवेदनाभोगसंविदम्।
34341 संविदं तत्त्वशब्दार्थं जीवः पश्यति सार्थकम् ॥ ४६ ॥
34342
34343 तस्मिन्प्रथमं शब्दार्थविभागास्फूर्त्या संमुग्धमहंताध्यासं ततः
34344 संसारतत्त्वस्मरणं चाह - अहमिति। अहं किमिति तत्त्वतो वा
34345 मनुष्याद्याकारतो वा विशिष्य वेदनां न भुङ्क्ते तां तथाविधां संविदं
34346 प्रथमं ततः सार्थकं पुरुषार्थविचारसहितं
34347 प्राक्तनजन्मसहस्रस्मृत्या गर्भे जगत्तत्त्वशब्दार्थं संविदं च
34348 पश्यतीत्यर्थः ॥ ४६ ॥
34349
34350 तादृक्षवेदनात्सोऽथ रसशब्दार्थवेदनम्।
34351 भाविजिह्वार्थनाम्नैकदेशेऽनुभवति क्षणात् ॥ ४७ ॥
34352
34353 तस्येन्द्रियकल्पनां क्रमेणाह - तादृक्षेत्यादिना। तादृक्षवेदनात्पिण्डे
34354 स्फुटाहंभाववेदनादिति सर्वत्रार्थः। जिह्वाशब्दो रसनेन्द्रियपरस्तदर्थस्य
34355 रसस्य नाम्ना उपलक्षितमिति शेषः। एकदेशे मुखविलादिप्रदेशे ॥ ४७ ॥
34356
34357 तादृक्षवेदनात्तेजःशब्दार्थोन्मुखतां गतः।
34358 भविष्यन्नेत्रनाम्नैकदेशे भवति भासनम् ॥ ४८ ॥
34359
34360 तादृक्षवेदनात्सोऽथ घ्राणं तद्वृष्टिवेदनात्।
34361 स्थितो यस्मिन्भवतीति तावद्दृश्यादिता स्थिता ॥ ४९ ॥
34362
34363 तद्दृष्टिर्घ्राणदृष्टिः। इति अनया रीत्या यस्मिन् श्रोत्रादिभावेऽपि यावत्कालं
34364 स्थितो भवति तावत्कालं शब्दादिदृश्यं अत्ति उपभुङ्क्ते तच्छीलता अस्य
34365 स्थितेत्यर्थः ॥ ४९ ॥
34366
34367 एवंप्रायः स जीवात्मा काकतालीयवच्छनैः।
34368 विशिष्टसंनिवेशत्वं भावितं पश्यति स्वतः ॥ ५० ॥
34369
34370 तस्य संघाताभिमानमाह - विशिष्टेति। भावितं प्राग्वासनाकल्पितम् ॥ ५०
34371 ॥
34372

34373 स तस्य संनिवेशस्य त्वसतोऽपि सतः सतः।
34374 शब्दभावैकदेशत्वं श्रवणार्थेन विन्दति॥ ५१॥
34375
34376 तस्य श्रोतादिभिः शब्दादिभोगे तत्तदिन्द्रियतादात्म्याध्यासमाह - स
34377 तस्येत्यादिना। असतोऽपि सतः सतः सत्त्वेन संपन्नस्य।
34378 श्रवणक्रियालक्षणेनार्थेन प्रयोजनेन शब्दान् भावयति ग्राहयतीति
34379 शब्दभावः श्रोत्रं तल्लक्षणं देहैकदेशत्वं विन्दति लभते॥ ५१॥
34380
34381 स्पर्शभावैकदेशत्वं त्वक्शब्दार्थेन विन्दति।
34382 रसभावैकदेशत्वं रसनात्वेन विन्दति॥ ५२॥
34383
34384 रूपभावैकदेशत्वं नेत्रार्थाकृति पश्यति।
34385 गन्धभावैकदेशत्वं नासिकात्वेन पश्यति॥ ५३॥
34386
34387 एवं भावमयैः सत्ताप्रकटीकरणक्षमम्।
34388 भविष्यदिन्द्रियाख्यं स रध्रं पश्यति देहके॥ ५४॥
34389
34390 एवमुक्तानुक्तेन्द्रियमयैर्बाह्यार्थसत्ताप्रकटीकरणक्षमं इन्द्रस्य
34391 परमात्मनो लिङ्गत्वेन भाविना भविष्यदिन्द्रियाख्यम्॥ ५४॥
34392
34393 इत्येवमादि जीवस्य राघवाद्यतनस्य च।
34394 उदेति प्रतिभासात्मा देह एवातिवाहिकः॥ ५५॥
34395
34396 जीवस्य समष्टिरूपस्याद्यतनस्य व्यष्टिरूपस्य च॥ ५५॥
34397
34398 अनाख्येयं परा सत्तास्यातिवाहिकतामिव।
34399 सा गच्छत्यप्यगच्छन्ती तादृक्सत्यात्मभावनात्॥ ५६॥
34400
34401 ब्रह्मण एवाज्ञानाद्विविधातिवाहिकदेहभावो ज्ञानात्तदपगमश्चेति
34402 दर्शयति - अनाख्येति। इयमिति च्छेदः॥ ५६॥
34403
34404 मातृमेयप्रमाणादि यदा ब्रह्मैव वेदनात्।
34405 तदातिवाहिकोक्तीनां कः प्रसङ्गस्तदेव तत्॥ ५७॥
34406
34407 आतिवाहिकदेहादिमुखेनाध्यारोपापवादकल्पनाप्यात्मव्युत्पादकव्यवहारदृ
34408 ^इशैव न परमार्थदृशेत्याशयेनाह - मात्रिति॥ ५७॥
34409
34410 अन्यत्ववेदनादन्यः परस्मादातिवाहिकः।
34411 ब्रह्मत्ववेदनाद्ब्रह्म सा संवित्तिर्हि नान्यजा॥ ५८॥
34412
34413 यदि यथावेदनमेव वस्तु तर्हि को विशेषस्तत्राह - सा संवित्तिरिति। सा
34414 ब्रह्मत्ववेदनाख्या संवित्तिर्नान्यजा न भ्रान्तिजेत्यर्थः॥ ५८॥
34415
34416 श्रीराम उवाच।
34417
34418 असंभवादसंवित्तेर्ब्रह्मात्मैकतयाथवा।
34419 को मोक्षः को विचारश्चेत्यलं भेदविकल्पनैः॥ ५९॥
34420
34421 यद्येवं तर्हि चिदेकरसे ब्रह्मण्यज्ञानस्यैवायोगात्तदभावे
34422 जीवभेदकल्पकाभावेन ब्रह्मात्मैकत्वस्य स्वतःसिद्धेर्वा
34423 स्वातिरिक्तमोक्षफलस्य तत्प्रापकविचारादेश्च संभव एव नास्तीति कथं
34424 तत्प्रवृत्तिरिति रामः शङ्कते - असंभवादिति॥ ५९॥

34425
34426 प्। २९५) १८०
34427
34428 श्रीवसिष्ठ उवाच।
34429
34430 सिद्धान्त एवैष प्रश्नस्ते राम राजते।
34431 अकालपुष्पमाला हि शोभनापि न शोभते॥ ६०॥
34432
34433 किमयं तत्त्वं बुद्ध्वा प्रश्न उताबुद्ध्वा। आद्ये विचारानर्थक्ये
34434 इष्टापत्तिर्द्वितीये तु नास्यावसर इत्याशयेन वसिष्ठः समाधत्ते -
34435 सिद्धान्तकाले इत्यादिना। न शोभते औत्पातिकानर्थशङ्काभयहेतुत्वादिति
34436 भावः॥ ६०॥
34437
34438 सार्थैवानर्थिकाऽकालमाला विलासिता यथा।
34439 तथैवाऽकालमिज्जन्तौ सर्वं काले हि शोभते॥ ६१॥
34440
34441 अर्थान्तरन्यासोक्तमर्थमुपमानेनापि स्पष्टमाह - सार्थैवेति। विलसिता
34442 शोभमानाप्यकालपुष्पमाला यथा तात्कालिकोपभोगेन सार्थैव सती
34443 औत्पातिकानर्थहेतुत्वेन जनहर्षाहेतुत्वादनर्थिका तथैव अपरिपाकदशापन्ने
34444 जन्तौ अकालोत्पन्ना मिनोत्यर्थ प्रमापयतीति मित् उक्तिरप्यनर्थिकेत्यर्थः॥ ६१॥
34445
34446 प्रतिबन्धाभ्यनुज्ञानां कालो दातेति दृश्यते।
34447 ननु सर्वपाअर्थानां कालेन फलयोगतः॥ ६२॥
34448
34449 तत्कुतस्तत्राह - प्रतिबन्धेति।
34450 हेमन्तादिकालशाल्याद्यङ्कुरोदयप्रतिबन्धस्य
34451 यवाद्यङ्कुरोदयाभ्यनुज्ञानस्य आनुकूल्यस्य च दातेत्यन्वयव्यतिरेकाभ्यां
34452 दृश्यते लोके। नन्वित्यवश्यमित्यर्थे॥ ६२॥
34453
34454 एवमेव स जीवात्मा स्वप्नात्मा समुपस्थितः।
34455 पितामहत्वमुच्छूनं पश्यन्नात्मनि कालतः॥ ६३॥
34456
34457 एवं रामस्य शङ्कां हेलनया समाधाय अनाख्येयं परं
34458 ब्रह्मास्यातिवाहिकतामिवेत्यन्तं यदुक्तं [वस्तुनो इति पाठः]
34459 तदेवानुसृत्यातिवाहिकदेहसमष्ट्युपहिते पितामहत्वकल्पनामाह -
34460 एवमेवेति। स्वप्नात्मा स्वप्नसमष्ट्यात्मा। उपासनापरिपाकेनोपास्यभावेन
34461 फलीभूतेन समुपस्थितः। कालतः कालेन तद्भावोचितेन॥ ६३॥
34462
34463 ओंमुच्चारणसंवित्तिवेदनाच्च प्रपश्यति।
34464 यत्करोति मनोराज्यं भवत्याशु स तन्मयः॥ ६४॥
34465
34466 तस्य प्रणवोच्चारणेन तदर्थसंवित्त्या सर्वप्रपञ्चस्रष्टृत्वं दर्शयति
34467 - ओंमुच्चारणेति॥ ६४॥
34468
34469 इदमेवमसत्सर्वमिव व्योम्नि ततात्मनि।
34470 पर्वतोच्चाकृतिर्व्योम जगद्व्योम्नि विजृम्भते॥ ६५॥
34471
34472 एवंच व्यष्टिमनोराज्यवत्समष्टिमनोराज्यभूतस्यास्य जगतः असत्त्वमेवेति
34473 फलितमित्याह - इदमेवमिति। व्योम्नि कल्पितं सर्वं तलमलिनत्वादीव।
34474 तथाच पर्वतानां मेर्वादीनामुच्चाकृतिरुन्नताकारोऽपि व्योमैव। किं
34475 पुनरन्यदल्पम्। यतो वाय्वादिक्रमेण जगद्व्योम्न्येवारोपेण विजृम्भते
34476 ततोऽस्य तलमालिन्यादिसाम्यमेवेत्यर्थः॥ ६५॥

34477
34478 नेह प्रजायते किंचिन्नेह किंचिद्विनश्यति।
34479 जगद्गन्धर्वनगररूपेण ब्रह्म जृम्भते॥ ६६॥
34480
34481 एवंच सृष्टिव्युत्पादनं प्रपञ्चमिथ्यात्वज्ञापनायैव न
34482 वास्तवसर्गप्रदर्शनायेत्यभिप्रेत्य न निरोधो न चोत्पत्तिः
34483 इत्यादिश्रुत्याशयमुद्घाटयति - नेहेति॥ ६६॥
34484
34485 यथैव पद्मजादीनां जीवानां सदसन्मयी।
34486 सत्ता तथैव सर्वेषामासरीसृपमासुरम्॥ ६७॥
34487
34488 जीवत्वमपि जगत्कोटावेवेति दर्शयितुं जगतो जीवसमसत्ताकत्वं दर्शयति -
34489 यथैवेति। यौक्तिकदृशा सदसन्मयी विचारासहा। अधः सासरीसृपं ऊर्ध्व
34490 आसुरं सुरानभिव्याप्येत्यर्थः॥ ६७॥
34491
34492 संवित्संभ्रम एवायमेवमभ्युत्थितोऽप्यसन्।
34493 आब्रह्मकीटसंवित्तेः सम्यक्संवेदनात्क्षयः॥ ६८॥
34494
34495 परमार्थदृशा त्वाह - संविदिति। आब्रह्मकीटं प्रसिद्धायाः
34496 संवित्तेरनुभवाभ्युत्थितोऽप्यसन्। कुतः यतोऽस्य सम्यक्संवेदनात्क्षयो बाध
34497 इत्यर्थः॥ ६८॥
34498
34499 यथा संपद्यते ब्रह्मा कीटः संपद्यते तथा।
34500 कीटस्तु रूढभूतौघवलनात्तुच्छकर्मकः॥ ६९॥
34501
34502 आब्रह्मकीटसंवित्तेरित्युक्तांशमुपपादयति - यथेति। तर्हि कथं कीटस्य
34503 क्षुद्रकर्मता तत्राह - कीटस्त्विति। भूतौघवलनात् चित्ते
34504 भौतिकमालिन्याधिक्यादिति यावत्॥ ६९॥
34505
34506 यदेव जीवनं जीवे चेत्योन्मुखचिदात्मकम्।
34507 तदेव पौरुषं तस्मिन्सारं कर्म तदेव च॥ ७०॥
34508
34509 उपाध्यनुसारिणी जीवता तदनुसारिपौरुषं तदेव फलपर्यवसितं कर्म तच्च
34510 तदेव पौरुषमेवेत्यर्थः॥ ७०॥
34511
34512 ब्रह्मणः सुकृतात्पापात्कीटकस्य समुत्थितेः।
34513 चित्तन्मात्रात्मिका [अज्ञाता या चित् तन्मात्रात्मिका पूर्वं
34514 षट्पञ्चाशश्लोके अनाख्येयं परा सत्ता इति मूले अत्रतु अनाख्येयं
34515 परं ब्रह्म इति वर्तते तत्र सदसद्विशैर्विचारणीयम्] भ्रान्तिः
34516 प्रेक्षामात्रं भवेत्क्षयः॥ ७१॥
34517
34518 तत्र सुकृतरूपसारोत्कर्षपरमावधिफलं ब्रह्मता
34519 दुष्कृतरूपसारोत्कर्षपरमावधिफलं कीटकतेति
34520 वैचित्र्यनिमित्तभेदेऽप्यज्ञातचिन्मात्रप्रयुक्ता
34521 द्वैतभ्रान्तिर्ज्ञानमात्रप्रयुक्तस्तदपगम इत्येतदुभयत्रापि तुल्यमेवेत्याह
34522 - ब्रह्मण इति॥ ७१॥
34523
34524 मातृमानप्रमेयाणि न चिन्मात्रेतरद्यतः।
34525 ततो द्वैतैक्यवादार्थः शशशृङ्गाब्जीसमः॥ ७२॥
34526
34527 ननु यावन्माता मानेन प्रमेयं द्वैतं वेत्ति तावद्द्वैतं तदपगमे
34528 त्वैक्यमेवेति क्रमिकद्वैतैक्यस्वभावत्वमेव वस्तुतो [वस्तुनो इति

34529 पाठः] वास्तवं किं न स्यात्तत्राह - मात्रिति | न द्वैतं
34530 मातृमानप्रमेयं मातृमानप्रमेयद्वैतस्यापि
34531 मातृमानान्तरापेक्षापत्त्या अनवस्थापातात् | अतस्तेषां चिन्मात्रत्वे
34532 द्वैतैक्यसाधकान्तराभावाद्द्वैतैक्यवादार्थः
34533 शशशृङ्गनभोब्जिनीसम इत्यर्थः || ७२ ||
34534
34535 भावदार्ढ्यात्मकं मिथ्या ब्रह्मानन्दो विभाव्यते |
34536 आत्मैव कोशकारेण लालादार्ढ्यात्मकं यथा || ७३ ||
34537
34538 यदि न द्वैतं मानसेयं तर्हि कथं
34539 कुद्दालकोटिदुर्भेदभुवनादिभावदार्ढ्यात्मकं प्रतीयते तत्राह -
34540 भावदार्ढ्यात्मकमिति | ब्रह्मानन्दात्मक आत्मैव
34541 बन्धकभुवनादिभावदार्ढ्यात्मकं द्वैतमिति भ्रान्त्यानुभूयते | यथा
34542 कोशकारकीटेन स्वलालादार्ढ्यात्मकं बन्धनमनुभूयते तद्वदित्यर्थः ||
34543 ७३ ||
34544
34545 प्। २९६) १८१
34546
34547 मनसा ब्रह्मणा यद्यद्यथा दृष्टं विभावितम् |
34548 तत्तथा दृश्यते तज्ज्ञैः स्वभावस्यैष निश्चयः || ७४ ||
34549
34550 यद्यात्मकल्पित एव बन्धस्तर्हि प्रतिपुरुषं यथाभिलषितकल्पनैव
34551 स्यान्नानिष्टकल्पनमित्याशङ्क्याह - मनसेति | सर्वमनःसमष्ट्यात्मना
34552 ब्रह्मणा भोक्तृकर्मानुसारेण यद्यद्वस्तु यथा स्रष्टव्यत्वेन दृष्टं
34553 यादृशकार्यार्थं विभावितं च तत्तत् अन्यैरपि तज्ज्ञैर्जीवैस्तथा दृश्यते |
34554 तत्कुतः | यतः स्वभावस्य नियतेरेष निश्चयो व्यवस्थित इत्यर्थः || ७४ ||
34555
34556 यथा यदुदितं वस्तु तत्तत्तन्न विना भवेत् |
34557 निमेषमपि कल्पं वा स्वभावस्यैष निश्चयः || ७५ ||
34558
34559 वटबीजादेव वटाङ्कुरो न कुटजबीजात् | बुद्बुदः कतिपयनिमेषं तिष्ठति
34560 ब्रह्माण्डं तु महाकल्पमिति हेतुफलादिनियतिबलादपि न यथेच्छं
34561 कल्पनप्रसक्तिरित्याह - यथेति || ७५ ||
34562
34563 अलीकमिदमुत्पन्नमलीकं च विवर्धते |
34564 अलीकमेव स्वदते तथालीकं विलीयते || ७६ ||
34565
34566 न चास्मदाद्यस्वातन्त्र्यबलान्नियतिकृतशक्तिकालादिव्यवस्थादर्शनाच्च
34567 सत्यमेवेदं जगदिति भ्रमितव्यमित्याह - अलीकमिति | अलीकशब्दो
34568 मिथ्यावचनः | स्वदते रोचते भोक्तृणां भोगकाले || ७६ ||
34569
34570 शुद्धं सर्वगतं ब्रह्मानन्तमद्वितीयं [१]
34571 दुःखबोधवशाद-
34572 शुद्धमिवासदिवानेकमिवासर्वगमिवावबुध्यते || ७७ ||
34573
34574 सर्गत्रयेण पद्यैर्विस्तरेणोक्तमर्थजातं गद्यैः संक्षिप्य दर्शयति -
34575 शुद्धमित्यादिना | दुरवबोधो भ्रान्तिस्तद्वशात् || ७७ ||
34576
34577 जलमन्यत्तरङ्गोऽन्य इति बालकुकल्पनया भेदः कल्प्यत
34578 एवमवास्तवस्तस्माद्यो योऽयमाभाति भेदः स केवलमतत्त्वविद्भिः
34579 परिकल्पितो रज्ज्वां सर्प इव एवं भेदाभेदशक्त्योररिमित्रयोरेव
34580 ब्रह्मण्येव संभवेत् || ७८ ||

34581
34582 यथा जलमन्यत्तरङ्गोऽन्य इति बालानां मूर्खाणां कुकल्पनयैवाऽवास्तवो
34583 भेद एवं जगद्भेदोऽप्यवास्तव एव कल्प्यते। जले तरङ्गभेदस्य
34584 परिणामत्वदृष्टौ न विवर्तता स्फुटेति दृष्टान्तान्तरमाह - रज्ज्वां
34585 सर्प इवेति। भेदाभेदशक्त्योः स्थितिरिति शेषः। अरिमित्रयोर्विरुद्धाविरुद्धयोरेव
34586 न कदाचिदपि तत्स्वभावत्यजोरित्येवकारार्थः॥ ७८॥
34587
34588 तेनात्मनाऽद्वितीयेनैव द्वित्वमिवाततं यथा सलिलेन तरंगकल्पनया
34589 सुवर्णेन कटककल्पनयैवमिति अतस्तेन स्वयमेवात्मनात्मान्य इव चेत्यते
34590 ॥ ७९॥
34591
34592 तेन ब्रह्मभूतेनात्मना प्रतीचा आततं विस्तारितम्॥ ७९॥
34593
34594 अतः कलना जाता सैव स्फारतां प्राप्य मनः संपन्नं
34595 तेनाहंभावः कल्पितो निर्विकल्पप्रत्यक्षरूपमेतत्प्रथमं
34596 तन्मनस्तदहं भवति क्षिप्रमहंशब्दार्थभावनात्॥ ८०॥
34597
34598 कलना निर्विकल्पकजगत्स्फूर्तिः। स्फारतां सविकल्पताम्। तथैव तद्व्याचष्टे।
34599 निर्विकल्पप्रत्यक्षरूपमेतत्प्रथमं तन्मनस्तदहं भवतीति
34600 अहंशब्दार्थभावनात्तदुभयगोचरसंस्कारोद्भवात्॥ ८०॥
34601
34602 ततो मनोहंकाराभ्यां स्मृतिरनुसंहिता
34603 तैस्त्रिभिस्तदनुभूततन्मात्राणि कल्पितानि तन्मात्रेषु जीवेन चित्तात्मना
34604 स्वयं काकतालीयवद्ब्रह्मोपादानादियान्संनिवेशः कल्पितो दृश्यते॥
34605 ८१॥
34606
34607 अनुसंहिता यथानुभवमुत्पादिता। तया स्मृत्या अनुभूतानि यथानुभवं
34608 स्मृतानि। कल्पितानि सृष्टानि। जीवेन ब्रह्मलक्षणादुपादानकारणादियान्
34609 ब्रह्माण्डविस्तृतो जगत्संनिवेशः कल्पितः। हस्तपादादिमान् इति पाठान्तरे
34610 स्पष्टम्॥ ८१॥
34611
34612 एवं यदेव मनः कल्पयति तदेव पश्यति।
34613 सद्वा भवत्वसद्वा चित्तं यत्कल्पयत्यभिनिविष्टम्।
34614 तत्तत्पश्यति यास्यति सदिव प्रतिभासमुपगतं सद्यः॥ ८२॥
34615
34616 उपवर्णितः सृष्टिक्रमो लोकेऽप्येवमेव स्वप्ने प्रसिद्ध इत्याह - यदेवेति।
34617 पश्यति स्वसंभ्रमादाविति शेषः। ननु स्वाप्नं प्रातिभासिकमसत् कथं सतो
34618 व्यावहारिकस्य दृष्टान्तस्तत्राह - सद्वेति। चित्तं मनः अभिनिविष्टं
34619 चिरं तद्भावनोपचितं सद्यदेव कल्पयति तदवश्यं पश्यति दर्शनेन
34620 सत्सत्यमिव प्रतिभासमागतं प्राप्तं सत्सद्यो यास्यति व्यवहारोपयोगितया
34621 प्राप्स्यति चेत्यर्थः॥ ८२॥
34622
34623 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपाये उत्पत्तिप्रकरणे
34624 सत्योपदेशो नाम सप्तसष्टितमः सर्गः॥ ६७॥
34625
34626 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे सत्योपदेशो
34627 नाम सप्तषष्टितमः सर्गः॥ ६७॥
34628
34629
34630 अष्टषष्टितमः सर्गः ६८
34631
34632 श्रीवसिष्ठ उवाच।

34633
34634 अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
34635 राक्षस्योक्तं महाप्रश्नजालमावलिताखिलम् ॥ १ ॥
34636
34637 वर्ण्यते विस्तरेणात्र कर्कटी नाम राक्षसी ।
34638 तस्याश्चोग्रं तपः सर्वजन्तुजालजिघांसया ॥ १ ॥
34639
34640 विस्तरसंक्षेपाभ्यां वर्णितेऽर्थे दृढीकाराय
34641 कर्कट्युपाख्यानाख्येतिहासमुखेन राक्षस्याः किरातराजमन्त्रिसंवादं
34642 विस्तरेण विवक्षुस्तमवतारयति - अत्रैवेति । आवलितं तत्त्वतो विमर्शेन
34643 व्याप्तमखिलं जगद्यत्र ॥ १ ॥
34644
34645 अस्ति कज्जलपङ्काद्रेरिवोग्रा शालभञ्जिका ।
34646 हिमाद्रेरुत्तरे पार्श्वे कर्कटी नाम राक्षसी ॥ २ ॥
34647
34648 कज्जलमयात्पङ्कादद्रेर्वा निर्मिता शालभञ्जिका प्रतिमेव वर्णतः ।
34649 कर्मतस्तूग्रा ॥ २ ॥
34650
34651 विषूचिकाभिधाना च नाम्नाप्यन्यायबाधिका ।
34652 विन्ध्याटवीव देहेन शुष्का कार्श्यमुपागता ॥ ३ ॥
34653
34654 तस्या द्वे नामनी अन्ये दर्शयति - विषूचिकेति ॥ ३ ॥
34655
34656 प्। २९७) १८१
34657
34658 महाबलाग्निनयना रोदोरन्ध्रार्धपूरणी ।
34659 नीलाम्बरधरा कृष्णा देहबद्धेव यामिनी ॥ ४ ॥
34660
34661 अग्निरिव प्रज्वलन्नयना । रोदस्योर्द्यावापृथ्व्यो रन्ध्रमन्तरालं
34662 तदर्धपूरणीति वैपुल्यातिशयोक्तिः ॥ ४ ॥
34663
34664 नीहारवसनच्छन्ना मेदुराभ्रशिरःपटा ।
34665 लम्बाभ्रबिम्बोल्लसिता नित्योत्थतिमिरोर्ध्वजा ॥ ५ ॥
34666
34667 नीहारैर्वसनेन परिधानीयेनेव च्छन्ना । मेदुराण्यभ्राण्येव शिरःपट
34668 उत्तरीयं यस्याः । लम्बमानमभ्रबिम्बमिव उल्लसिता । नित्योत्थं
34669 तिमिरमिवोर्ध्वजाः केशा यस्याः ॥ ५ ॥
34670
34671 स्थिरविद्युल्लतानेत्रा तमालतरुजानुका ।
34672 वैदूर्यशूर्पाग्रनखी भस्मनीहारहासिनी ॥ ६ ॥
34673
34674 वैदूर्यवर्णाः शूर्पाग्राकाराश्च नखा यस्याः ॥ ६ ॥
34675
34676 निर्मांसनरदेहौघपुष्पस्रग्दामभूषिता ।
34677 सर्वाङ्गोदात्तसंप्रोतशवमालाविराजिता ॥ ७ ॥
34678
34679 वेतालावेशविचलत्कालकङ्कालकुण्डला ।
34680 अर्कादानोत्कदीर्घाग्रभीमोग्रभुजमण्डला ॥ ८ ॥
34681
34682 वेतालैः सह आवेशो नर्तनाभिनिवेशस्तेन विचलती स्पन्दमाने कालवर्णे
34683 कङ्कालकुण्डले यस्याः । अर्कस्यादाने ग्रहणे उत्कमुत्कण्ठितमिव दीर्घाग्रम्
34684 ॥ ८ ॥

34685
34686 तस्या विपुलकायत्वाद्दुर्लभत्वान्निजान्धसः ।
34687 अतृप्तोऽर्णवलेखाया इवाभूज्जाठरोऽनलः ॥ ९ ॥
34688
34689 निजस्य स्वजात्युचितस्यान्धस ओदनस्य । आहारस्येति यावत् ॥ ९ ॥
34690
34691 न कदाचन सा तृप्तिमुपयाता महोदरी ।
34692 वडवानलजिह्वेव चिन्तयामास चैकदा ॥ १० ॥
34693
34694 जम्बूद्वीपगतान्सर्वान्निगिरामि जनान्यदि ।
34695 अनारतमनुश्वासं जलराशिमिवार्णवः ॥ ११ ॥
34696
34697 अनुश्वासं प्रतिश्वासम् ॥ ११ ॥
34698
34699 मेघेन मृगतृष्णेव तन्मे क्षुदुपशाम्यति ।
34700 अविरुद्धैव सा युक्तिर्ययापदि हि जीव्यते ॥ १२ ॥
34701
34702 मेघेन मृगतृष्णा स्वहेत्वातपनिवारणे कृते यथा शाम्यति तद्वत् । यया
34703 युक्त्या आपदि जीव्यते सा युक्तिर्हि अविरुद्धा संमता ॥ १२ ॥
34704
34705 मन्त्रौषधतपोदानदेवपूजादिरक्षितम् ।
34706 सममेव जनं सर्वं निर्बाधं कः प्रबाधते ॥ १३ ॥
34707
34708 युगपत्सर्वजनग्रसनयुक्तिस्तु अशक्यत्वाद्विरुद्धैवेत्याशयेनाह - मन्त्रेति
34709 । समं युगपत् ॥ १३ ॥
34710
34711 तपः करोमि परममखिन्नेनैव चेतसा ।
34712 तपसैव महोग्रेण यद्दुरापं तदाप्यते ॥ १४ ॥
34713
34714 तर्हि कथं सर्वजनग्रसनमनोरथसिद्धिस्तत्राह - तप इति ॥ १४ ॥
34715
34716 इति संचिन्त्य सा सर्वजन्तुजातजिघांसया ।
34717 तपोर्थमथ सस्मार पर्वतं भूतदुर्गमम् ॥ १५ ॥
34718
34719 पर्वतं हिमवन्तम् ॥ १५ ॥
34720
34721 आरुरोह च तच्छृङ्गं स्थिरविद्युद्विलोचना ।
34722 हस्तपादादिमद्देहा श्यामलेवाभ्रमण्डली ॥ १६ ॥
34723
34724 देहशब्दः स्वरूपपरः ॥ १६ ॥
34725
34726 तत्र गत्वाथ सा स्नात्वा तपः कर्तुं कृतस्थितिः ।
34727 अतिष्ठदेकपादेन चन्द्रार्कास्पन्दलोचना ॥ १७ ॥
34728
34729 चन्द्रार्काविव दीप्ते अस्पन्दे लोचने यस्याः ॥ १७ ॥
34730
34731 क्रमेण दिवसाः पक्षास्तस्या मासर्तवो ययुः ।
34732 शीतातपेषु लीनायाः कृताया इव शैलतः ॥ १८ ॥
34733
34734 शैलतः कृताया इवेति तपःक्लेशसहनादुत्प्रेक्षा ॥ १८ ॥
34735
34736 सा बभूवाभ्रमालायाः समासं स्तम्भिताकृतिः ।

34737 कृष्णोर्ध्वगोर्ध्वकेशी च खमाहर्तुमिवोद्गता ॥ १९ ॥
34738
34739 नैल्यादभ्रोपमा। आहर्तुं आहारं कर्तुं। ग्रसितुमिति यावत् ॥ १९ ॥
34740
34741 आलोक्य तां पवनजर्जरिताङ्गकत्वक्
34742 चीराङ्गणाकृतिरणत्पवनावधूतैः।
34743 ऊर्ध्वस्थमूर्धजतमःपटलैर्दधानां
34744 तारौघमौक्तिकमजः समुपाजगाम ॥ २० ॥
34745
34746 पवनैः शीतोष्णपांसुरुक्षवायुभिर्जर्जरितानां
34747 शिथिलीकृतानामङ्गकानां कृशाङ्गानां लम्बमाना त्वगेव चीरं
34748 वल्कलमिव यस्यास्तथाभूताम्। गणाः सेनास्तदाकृति। तद्वदिति यावत्।
34749 रणद्भिः पवनैरवधूतैः कम्पितैः
34750 ऊर्ध्वदिक्स्थैर्मूर्धजलक्षणैस्तमःपटलैस्तारा नक्षत्राणि तत्समूहरूपं
34751 मौक्तिकं दधाना तां कर्कटीलोक्य तस्यै वरं दातुमजो ब्रह्मा
34752 समुपाजगामेति वक्ष्यमाणस्य संक्षिप्योक्तिः ॥ २० ॥
34753
34754 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे लीलोपाख्याने
34755 राक्षसीवर्णनं नामाष्टषष्टितमः सर्गः ॥ ६८ ॥
34756
34757 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे राक्षसीवर्णनं
34758 नामाष्टषष्टितमः सर्गः ॥ ६८ ॥
34759
34760
34761 एकोनसप्ततितमः सर्गः ६९
34762
34763 श्रीवसिष्ठ उवाच।
34764
34765 अथ वर्षसहस्रेण तां पितामह आययौ।
34766 दारुणं हि तपः सिद्ध्यै विषाग्निरपि शीतलः ॥ १ ॥
34767
34768 दत्त्वात्र धातुः कर्कट्यै यथाभिलषितं वरम्।
34769 मन्त्रं च गुणिरक्षार्थं स्वलोके गतिरुच्यते ॥ १ ॥
34770
34771 कुतो दुर्वृत्तायामपि तस्यां दुर्लभतमो धातुः प्रसादस्तत्राह -
34772 दारुणमिति। सिद्ध्यै भवत्येवेति शेषः। यतस्तपःसिद्धौ विषसहितोऽग्निरपि
34773 शीतलो भवति। नासाध्यं तपसोऽस्तीति भावः ॥ १ ॥
34774
34775 मनसैव प्रणम्यैनं सा तथैव स्थिता सती।
34776 को वरः क्षुच्छमायालमिति चिन्तान्विताभवत् ॥ २ ॥
34777
34778 प्। २९८) १८२
34779
34780 आ स्मृतं प्रार्थयिष्येऽहं वरमेकमिमं विभुम्।
34781 अनायसी चायसी च स्यामहं जीवसूचिका ॥ ३ ॥
34782
34783 स्मरणेऽयमाकारो निपातो न त्वाङ्। अनायसी रोगरूपा। जीवयुक्ता सूचिका
34784 जीवसूचिका ॥ ३ ॥
34785
34786 अस्योक्त्या द्विविधा सूचिर्भूत्वा लक्ष्या विशाम्यहम्।
34787 प्राणिनां सह सर्वेषां हृदयं सुरभिर्यथा ॥ ४ ॥
34788

34789 अस्य ब्रह्मण उक्त्या वरेण सह युगपत् सुरभिर्घ्राणाकृष्टं सौगन्ध्यं
34790 यथा ॥ ४ ॥
34791
34792 यथाभिमतमेतेन ग्रसेयं सकलं जगत् ।
34793 क्रमेण क्षुद्विनाशाय क्षुद्विनाशः परं सुखम् ॥ ५ ॥
34794
34795 एतेन क्रमेण उपायेन ॥ ५ ॥
34796
34797 इति संचिन्तयन्तीं तामुवाच कमलालयः ।
34798 अन्यादृश्यास्तथा दृष्ट्वा स्तनिताभ्रारवोपमम् ॥ ६ ॥
34799
34800 शान्तिदान्तिदयादितपस्विधर्मविरुद्धलोकहिंसाभिलाषिणीत्वादन्या##-
34801
34802 ब्रह्मोवाच ।
34803
34804 पुत्रि कर्कटिके रक्षःकुलशैलाभ्रमालिके ।
34805 उत्तिष्ठ त्वं तु तुष्टोऽस्मि गृहाणाभिमतं वरम् ॥ ७ ॥
34806
34807 प्रशंसा भाविकल्याणद्योतनार्था ॥ ७ ॥
34808
34809 कर्कट्युवाच ।
34810
34811 भगवन्भूतभव्येश स्यामहं जीवसूचिका ।
34812 अनायसी चायसी च विधेऽर्पयसि चेद्वरम् ॥ ८ ॥
34813
34814 श्रीवसिष्ठ उवाच ।
34815
34816 एवमस्त्विति तामुक्त्वा पुनराह पितामहः ।
34817 सूचिका सोपसर्गा त्वं भविष्यसि विषूचिका ॥ ९ ॥
34818
34819 सूक्ष्मया मायया सर्वलोकहिंसां करिष्यसि ।
34820 दुर्भोजना दुरारम्भा मूर्खा दुःस्थितयश्च ये ॥ १० ॥
34821
34822 सूक्ष्मया जनैर्दुर्लक्ष्यया । दुर्भोजना निषिद्धापक्वाकालभोजना
34823 अतिभोजनाश्च । दुरारम्भाः परानिष्टारम्भकाः । दुःस्थितयः
34824 अशास्त्रीयमार्गस्थाः ॥ १० ॥
34825
34826 दुर्देशवासिनो दुष्टास्तेषां हिंसां करिष्यसि ।
34827 प्रविश्याऽहृदयं प्राणैः पद्मप्लीहादिबाधनात् ॥ ११ ॥
34828
34829 प्राणैः प्राणद्वारा आहृदयं अपानमारभ्य हृदयपर्यन्तं प्रविश्य
34830 हृदयपद्मस्य प्लीहस्य तत्संनिहितमांसग्रन्थेरादिपदाद्वस्तिशिरादीनां च
34831 बाधनात् पीडनात् ॥ ११ ॥
34832
34833 वातलेखात्मिका व्याधिर्भविष्यसि विषूचिका ।
34834 सगुणं विगुणं चैव जनमासादयिष्यसि ॥ १२ ॥
34835
34836 सगुणं शास्त्रसदाचारनिष्ठम् । तदन्यं विगुणम् ॥ १२ ॥
34837
34838 गुणान्वितचिकित्सार्थं मन्त्रोऽयं तु मयोच्यते ।
34839
34840 ब्रह्मोवाच ।

हिमाद्रेरुत्तरे पार्श्वे कर्कटी नाम राक्षसी ॥ १३ ॥

चिकित्सा रोगप्रतीकारस्तदर्थम् ॥ १३ ॥

विषूचिकाभिधाना सा नाम्नाप्यन्यायबाधिका ।

तस्या मन्त्रः ।

ॐ ह्रीं ह्रां रीं रां विष्णुशक्तये नमः । ॐ नमो भगवति
विष्णुशक्तिमेनां ॐ हरहर नयनय पचपच मथमथ उत्सादय दूरे
कुरु स्वाहा हिमवन्तं गच्छ जीव सः सः सः चन्द्रमण्डलगतोऽसि स्वाहा ।

इति मन्त्री महामन्त्रं न्यस्य वामकरोदरे ।
मार्जयेदातुराकारं तेन हस्तेन संयुतः ॥ १४ ॥

अन्याया न्यायपथातिवर्तिनस्तेषां बाधिका । द्विविधा हि विष्णुशक्तिराद्या माया
यदधीना अन्याः सर्वाः शक्तयः । अपरा तु तदधीना प्रतिवस्तुनियता
सात्त्विकादिभेदभिन्ना च । तत्र तामस्याः संहारशक्तेरंशाः
प्राणिदुष्कर्मफलजननशक्तिविशेषा रोगाः । अतस्तन्निवृत्तये आद्या
मायाशक्तिः प्रणवमायादिरहस्यबीजैः पञ्चभिः संबोध्य नमस्कृत्य
प्रार्थ्यते । ओंमिति चतुर्थ्यन्तम् । नमःशब्दयोगात् । परब्रह्मात्मिकायै नम
इत्यर्थः । भगो माहात्म्यं सर्वनियमनवीर्यं वा तद्वति आद्यविष्णुशक्ते
त्वं द्वितीयां एनां त्वदंशभूतां रोगात्मिकां विष्णुशक्तिं । ओंकारवाच्ये
कारणस्वरूपे हरहर भृशमुपसंहर । नित्यवीप्सयोः इति भृशार्थे
द्विर्वचनम् । नय स्वस्थानं प्रापय । पच पाकेनेव सद्यो मृदूकुरु । मथ
दधिवद्विलोडय । उत्सादय अस्मात्स्थानादन्यतो नय । उक्तैरन्यैर्वा प्रकारैर्दूरे
कुरु । स्वाहेति हविर्दानादिना पूज्यत्वद्योतनार्थम् । एवमादिशक्तिं संप्रार्थ्य
तदधीना रोगशक्तिः प्रार्थ्यते हिमवन्तं स्वस्थानं गच्छेति । ततो रोगिणं
प्रत्याह । सः प्राक्तनदुष्कर्मणाभिभूतः स रोगेणाभिभूतः स मृत्युना
वाकृष्यमाणस्त्वं मन्त्रसामर्थ्यान्मृतोज्जीवनसमर्थेनामृतेन
[र्थ्याज्जिवमृतोज्जीवन इति क्वचित्] संपूर्णं चन्द्रमण्डलं
मदीयभावनया गतः प्राप्तोऽसि । अन्ते स्वाहेति दीप्तेऽग्नौ हविष इव
पूर्णचन्द्रमण्डले रोगिणो भावनया प्रक्षेपः कार्य इति द्योतनार्थम् । इति
इमं मन्त्रं मन्त्री लिखित्वा वामकरस्योदरे तले न्यस्य ॥ १४ ॥

हिमशैलाभिमुख्येन विद्रुतां तां विचिन्तयेत् ।
कर्कटीं कर्कशाक्रन्दां मन्त्रमुद्गरमर्दिताम् ॥ १५ ॥

तां विषूचिकाम् । विद्रुतां पलायिताम् ॥ १५ ॥

आतुरं चिन्तयेच्चन्द्रे रसायनहृदि स्थितम् ।
अजरामरणं युक्तं मुक्तं सर्वाधिविभ्रमैः ॥ १६ ॥

रसायनहृदि अमृतगर्भे । युक्तं समाहितचित्तम् ॥ १६ ॥

साधको हि शुचिर्भूत्वा स्वाचान्तः सुसमाहितः ।
क्रमेणानेन सकलां प्रोच्छिनत्ति विषूचिकाम् ॥ १७ ॥

पाठक्रमादार्थक्रमबलीयस्त्वाच्छौचाचमनादिपूर्वमेव कार्यम् ॥
सुसमाहितः अव्यग्रचित्तः ॥ १७ ॥

34893 प्। २९९) १८२
34894
34895 इति गगनगतस्त्रिलोकनाथो
34896 गगनगसिद्धगृहीतसिद्धमन्त्रः।
34897 गत उपगतशक्रवन्द्यमानो
34898 निजपुरमक्षयमायमुज्ज्वलश्रीः॥ १८॥
34899
34900 त्रिलोकनाथो ब्रह्मा गगनगैः सिद्धैर्गृहीतः सिद्धोऽव्याहतो मन्त्रो यस्य
34901 तथाविधः सन् कार्यान्तरसिद्धये उपगतेन शक्रेण वन्द्यमानः सन् अक्षयाः
34902 परैरुपहन्तुमशक्या मायाः सत्यसंकल्पसिधाः
34903 परचित्तसांकल्पिकपितृमातृभ्रातृगन्धमाल्यादिलोकरूपा
34904 विचित्रभोग्यमाया यत्र तथाविधं निजपुरं सत्यलोकं गतः॥ १८॥
34905
34906 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्ति० सूच्युपाख्याने
34907 विषूचिकामन्त्रकथनं नामैकोनसप्ततितमः सर्गः॥ ६९॥
34908
34909 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
34910 विषूचिकामन्त्रकथनं नामैकोनसप्ततितमः सर्गः॥ ६९॥
34911
34912
34913 सप्ततितमः सर्गः ७०
34914
34915 श्रीवसिष्ठ उवाच।
34916
34917 अथ भूधरशृङ्गाभा सा महाकृष्णराक्षसी।
34918 कज्जलाम्बुदलेस्वेव तानवं गन्तुमुद्यता॥ १॥
34919
34920 क्रमशस्तनुतापूर्वं सूचिरूपद्वयं गतिः।
34921 सूच्याः प्राणिशरीरेषु प्रवेशश्चोपवर्ण्यते॥ १॥
34922
34923 तनु सूक्ष्मं तद्भावं तानवम्॥ १॥
34924
34925 बभूवाभ्रोपमाकारा ततो विटपरूपिणी।
34926 पुंस्प्रमाणा ततोऽप्यासीदथाभूद्धस्तमात्रिका॥ २॥
34927
34928 तदेव प्रपञ्चयति - बभूवेत्यादिना। विटपरूपिणी
34929 वृक्षशाखाप्रमाणा॥ २॥
34930
34931 ततः प्रादेशमात्रा सा ततोऽप्यङ्गुलिरूपिणी।
34932 ततो माषशमीतुल्या ततः सूची बभूव ह॥ ३॥
34933
34934 माषशमी माषशिम्बी। सूची स्थूलसूची॥ ३॥
34935
34936 ततः कौशेयसूचित्वं पद्मकेसरसुन्दरी।
34937 प्राप सा शिखराकारा संकल्पाद्रिरिवाणुताम्॥ ४॥
34938
34939 कौशेयसीवनयोग्या सूक्ष्मतमसूची तद्भावम्। अयंच स्थूलशरीरस्य
34940 क्रमेण सूक्ष्मीभावस्तस्याः स्वसंकल्पकल्पितस्यैव। पराविद्याकल्पितस्य
34941 त्वग्रे तत्रैव गलितत्वं वक्ष्यति॥ ४॥
34942
34943 रराज सूचिका कृष्णा सूक्ष्मायसमनायसी।
34944 पुर्यष्टकेन चलिता व्योमगा व्योमवासिनी॥ ५॥

34945
34946 सा सूक्ष्ममायसमयो विकारो भूत्वा कृष्णा सूचिका अनायसी जीवसूचिका च सती
34947 रराज।
34948 महाभूतकर्मेन्द्रियज्ञानेन्द्रियप्राणान्तःकरणाविद्याकामकर्मसंघातात्
34949 मकपुर्यष्टकेन॥ ५॥
34950
34951 सूची दृश्यत एवासौ नत्वयो नाम विद्यते।
34952 संविद्भ्रमकुले चैषा स्वल्पसूचीव लक्ष्यते॥ ६॥
34953
34954 इदं चास्याः सूचित्वं दृश्यभ्रान्तिकल्पितमेव न वास्तवम्।
34955 वरशापसहस्रैरपि वस्त्वन्यथाभावायोगादित्याशयेनाह - सूचीति।
34956 संविद्भ्रमाणां कुले समूहमध्ये एषाप्येका भ्रान्तिरित्यर्थः॥ ६॥
34957
34958 रत्नसूचीव मसृणा मनोमननसंयुता।
34959 वैदूर्यरश्मिलेखेव भानुसंतानसुन्दरी॥ ७॥
34960
34961 भानूनां सूर्यकिरणानां संतानेनान्तःप्रवेशेन सुन्दरी रत्नसूचीव
34962 वैदूर्यरश्मिलेखेव च लक्ष्यते। मनोमननसंयुतेत्यातावान्
34963 दृष्टान्ताद्विशेष इत्यर्थः॥ ७॥
34964
34965 कज्जलाम्भोदसंकल्कलतेव पवनाहृता।
34966 सूक्ष्मरन्ध्रेक्षणस्वच्छदृष्टज्योतिःकनीनिका॥ ८॥
34967
34968 सूर्यकिरणासंपर्के त्वाह - कज्जलेति। कज्जलमयोऽम्भोदो मेघस्तद्रूपस्य
34969 संकल्कस्य पिण्डस्य लताप्रतानो लेशः। पवनेनाहृता उपनीता। सूक्ष्मं
34970 यद्रन्ध्रं तत्र विशिष्टयोरीक्षणयोर्दृशोः स्वच्छदृष्टज्योतिषी इव
34971 कनीनिके कृष्णतारे यस्याः॥ ८॥
34972
34973 सुमुखग्राह्यरूपेण श्लक्ष्णपुच्छशिखाणुना।
34974 तदा वैपुल्यशान्त्यर्थं परं मौनव्रतं गता॥ ९॥
34975
34976 सूक्ष्मया पुच्छशिखया पुच्छाग्रेणाणुना परमाणुकल्पेन सुमुखं
34977 प्रसन्नवदनं यथा स्यात्तथा वरदानाद्ग्राह्येण अभीष्टतमेन सूचीरूपेण
34978 निमित्तेन पूर्वतनदेहवैपुल्यस्य शान्त्यर्थ तदा प्राक्काले मौनं
34979 मुनिसंबन्धि तपोव्रतं गता परं नूनं इत्युत्प्रेक्षा। अस्यास्तपोव्रतं
34980 स्ववैपुल्यशान्तावेव पर्यवसन्नं व्यर्थमिवासीदित्याशयः॥ ९॥
34981
34982 सुदूराद्दीपवद्दृष्टं खतन्मात्रत्वमागता।
34983 दूरादेव मनोज्ञेन प्रोद्गिरन्ती मुखेन खम्॥ १०॥
34984
34985 कीदृशं कथं च तत्सूचीरूपं सा प्राप्ता तदाह - सुदूरादिति।
34986 सुदूराद्वीक्षणे ज्वलन्नेत्रयोः संध्यदर्शनादेकदीपवद्दृष्टं
34987 सूचीशरीरस्यादर्शनात्स्वतन्मात्रत्वमाकाशसाम्यमागता प्राप्ता। देहे
34988 अन्तर्गतस्याकाशस्य सौक्ष्म्यप्राप्तौ बहिरवस्थानान्मनोज्ञेन
34989 वरप्राप्तिप्रसन्नेन मुखेन खं प्रोद्गिरन्ती वमन्तीवेत्युत्प्रेक्षा॥ १०॥
34990
34991 कुञ्चितेक्षणसंदृश्या दीर्घदीपांशुकोमला।
34992 सद्यःस्नातसमुत्सन्नबालवालविलासिनी॥ ११॥
34993
34994 पुनः सा कीदृशी तत्राह - कुञ्चितेत्यादिना। दीर्घा दूरप्रसृता
34995 दीपांशवो दीपकिरणा इव कोमला सूक्ष्मा। अत एवैकाग्र्याय
34996 कुञ्चितैरीक्षणैर्द्रष्टृदृष्टिभिः संदृश्या। सद्यःस्नातेन स्नानेन

34997 समुत्सन्नो बालानामर्भकाणां बालः केश इव विलासिनी विलसनशीला ॥ ११ ॥
34998
34999 तन्तुर्बिसादिवोड्डीना बाह्यसंचारकौतुकात् ।
35000 ब्रह्मनाडिरिवोद्युक्ता बहीरन्ध्रं सुसुन्दरी ॥ १२ ॥
35001
35002 बिसान्मृणालादुड्डीना ऊर्ध्वं निर्गता ब्रह्मनाडिः सुषुम्ना बहीरन्ध्रं
35003 ब्रह्मरन्ध्राद्बहिर्निर्गत्य उत् ऊर्ध्वं सूर्यमण्डलाभिमुखतया युक्ता ॥ १२ ॥
35004
35005 नियतेन्द्रियशक्तिः सा जीवेनैव बहिःस्थिता ।
35006 बौधतार्किकविज्ञानसंतानवदलक्षिता ॥ १३ ॥
35007
35008 नियताः प्रतिनियतस्थाननिवष्टाश्चक्षुरादीन्द्रियशक्तयो यस्याः । जीवेन
35009 लिङ्गदेहेनैव बहिःसूच्याकारापन्नेन स्थिता । यथा
35010 बौद्धानामालयविज्ञानसंतानः स्वमात्रगोचरोऽपि परैरलक्षितो यथा वा
35011 तार्किकाणां धाराबाहिकज्ञानसंतानः
35012 साक्ष्यनभ्युपगमादलक्षितस्तद्वत्परैरलक्षिता ॥ १३ ॥
35013
35014 प्। ३००) १८३
35015
35016 शून्यसिद्धार्थसविका रन्ध्रानीलमयाऽरवा ।
35017 अदृश्यया जीवसूच्या संततानुसृता स्थिता ॥ १४ ॥
35018
35019 अत्यन्तालक्ष्यत्वादेव शून्यवादिसिद्धार्थानां सविका प्रसवित्री वेत्युत्प्रेक्षा ।
35020 रन्ध्रस्य नभसो यदा नीलं नैल्यं तन्मया तत्प्राया । अरवा निःशब्दा ।
35021 मयटष्टित्वेऽपि ङीबभावश्छान्दसः । कर्मधारये पुंवद्भावो वा ।
35022 एवमायसीं सूचीमुपवर्ण्य अनायस्या जीवसूच्यास्तदनुसारित्वमाह -
35023 अदृश्ययेति ॥ १४ ॥
35024
35025 कलाकलनधर्मिण्या वासनामात्रसारया ।
35026 क्षीणदीपांशुसूचीवत्तीक्ष्णयानुपलभ्यया ॥ १५ ॥
35027
35028 कलास्तत्तद्वृत्तिषु प्रतिफलितचिदाभासास्तत्कलनधर्मिण्या । क्षीणस्य
35029 विनश्यदवस्थस्य दीपस्यांशूः किरणस्तल्लक्षणा सूची यथा
35030 चक्षुषाऽनुपलभ्यापि स्पृश्यमाना दाहकत्वात्तीक्ष्णा तादृश्या ॥ १५ ॥
35031
35032 ग्रासार्थं सूचितां याता सैवास्था नोपयुज्यते ।
35033 विचारितं तया नैतदहो मौर्ख्यविजृम्भितम् ॥ १६ ॥
35034
35035 इदानीं तस्याः सूचीभावलक्षणं तपःफलमिष्टानुपयोगादुपहसति -
35036 ग्रासार्थमित्यादिना । सा ग्रासास्थैव निरुदरायाः सूच्या नोपयुज्यते ॥ १६ ॥
35037
35038 साग्रा संचिन्तयामास न सूचीरूपतुच्छताम् ।
35039 चित्तमीहितमेवैकं पश्यन्त्यास्ते निरर्थकम् ॥ १७ ॥
35040
35041 अविचार्यैव सूचित्वं तया मूढधियाष्थितम् ।
35042 नानर्थबुद्धेः स्फुरति पूर्वापरविचारणा ॥ १८ ॥
35043
35044 आस्थितं अभिलषितम् । अनर्थबुद्धेर्निरर्थकबुद्धेर्जन्तोः ॥ १८ ॥
35045
35046 स्वार्थक्रियोग्रसामर्थ्याद्याति भावनयान्यताम् ।
35047 पदार्थोऽभिमतांशाढ्यो निःश्वासेनेव दर्पणः ॥ १९ ॥
35048

35049 विमर्शयोग्ये चित्ते कुतो न स्फुरति तत्राह - स्वार्थेति | अभिमते अभिलषितेऽशे
35050 विषये वाढ्योऽभिनिविष्टश्चित्तपदार्थः | स्वार्थक्रिया अभिमतार्थे
35051 दृढप्रयत्नस्तस्योग्रादनतिक्रमणीयात्सामर्थ्याद्भावनया
35052 तद्रागानुरञ्जनेनान्यतां पूर्वनैर्मल्यवैपरीत्यम् | कालुष्यमिति यावत् | याति |
35053 यथा निःश्वासेन दर्पणः || १९ ||
35054
35055 सूचीभावं प्रपन्नायास्त्यजन्त्याः पीवरं वपुः |
35056 महामरणमप्यस्या राक्षस्याः सुसुखं स्थितम् || २० ||
35057
35058 किंच स्वार्थदृढानुरागादस्या महादुःखमपि सुखायितमित्याह -
35059 सूचीति || २० ||
35060
35061 एकवस्त्वतिरागाणामहो नु विषमा गतिः |
35062 देहोऽपि तृणवत्त्यक्तो राक्षस्या निजयेच्छया || २१ ||
35063
35064 एकवस्त्वतिगन्धेन भ्रश्यन्त्यन्या हि संविदः |
35065 राक्षस्या ग्रासगन्धेन देहनाशोऽपि नेक्षितः || २२ ||
35066
35067 नाशोऽपि सुखयत्यङ्गमेकवस्त्वतिरागिणम् |
35068 सूचीभूता विदेहापि परितुष्टैव राक्षसी || २३ ||
35069
35070 अन्या बभूव लग्ना [आयससूच्या संलग्ना | लग्नाशा इति पाठः तत्र
35071 लग्ना आशा प्राणिग्रसनेच्छा यस्या इत्यर्थः] सा तथा जीवविषूचिका |
35072 व्योमात्मिका निराकारा व्योमवृत्तिशरीरका || २४ ||
35073
35074 प्रसङ्गान्नीतिमुपवर्ण्य प्रस्तुतमनुसरन् जीवसूच्याख्यव्याधिस्वरूपमाह
35075 - अन्येत्यादिना | व्योमवृत्ति आकाशवत्सूक्ष्मस्वभावं लिङ्गशरीरं
35076 यस्याः || २४ ||
35077
35078 तेजस्तनुप्रवाहाभा प्राणतन्तुमयात्मिका |
35079 मूलसंवेदनाकारा चन्द्रार्कांशुकसुन्दरी || २५ ||
35080
35081 मूलसंवेदनं कुण्डलिनीशक्तिस्तदाकारा | चन्द्रार्कयोरल्पा अंशवोंऽशुकानि
35082 तानीव सुन्दरी || २५ ||
35083
35084 पृथगेवासिधाराभा परमाण्ववलीय सा |
35085 कौसुमी गन्धलेखेव कला कलनरूपिणी || २६ ||
35086
35087 तस्याः कर्कट्याः पापात्मिका अत एव असिधाराभा क्रूरा मनोवृत्तिरयः
35088 सूच्याः पृथगेव तथा जीवसूचीरूपेण स्थितेति परेणान्वयः | कौसुमी
35089 गन्धलेखेव परमाणु परमसूक्ष्मं यथा स्यात्तथा
35090 प्राणिदेहेष्ववलीयान्तः प्रविश्य हिंसादिकलानां चातुरीणां यत्कलनं
35091 संपादनं तेन रूपिणी प्रकटा स्थिता || २६ ||
35092
35093 पापात्मिका मनोवृत्तिः सा हि तस्यास्तथा स्थिता |
35094 परप्राणवशादेव परमार्थपरायणा || २७ ||
35095
35096 तदेव स्पष्टमाह - परेति | परेषां प्राणिनां
35097 प्राणवशात्प्राणाननुसृत्य परमोऽर्थः स्वमनोरथसिद्धिस्तत्र परायणा
35098 उद्युक्ता || २७ ||
35099
35100 एवमस्यास्तनुर्जाता सूचीद्वयमयी हि सा |

35101 नीहारांशुकवत्तन्वी कार्पासांशुसुपेलवा ॥ २८ ॥
35102
35103 तनुद्वयवर्णनमुपसंहरति - एवमिति ॥ २८ ॥
35104
35105 तनुद्वयेन तेनासौ प्रविश्य हृदयं नृणाम् ।
35106 वेधयन्ती ततः क्रूरा प्रबभ्राम दिशो दश ॥ २९ ॥
35107
35108 अथ तस्याः संक्षेपतश्चरित्रमाह - तनुद्वयेनेति ॥ २९ ॥
35109
35110 सर्वः स्वसंकल्पवशाल्लाघुर्भवति वा गुरुः ।
35111 कर्कट्योग्रं वपुस्त्यक्त्वा सूचीत्वमुररीकृतम् ॥ ३० ॥
35112
35113 संकल्पस्याघटितघटनासामर्थ्ये इदमेव निदर्शनमित्याह - सर्व इति ॥
35114 ३० ॥
35115
35116 तुच्छोऽप्यर्थोऽल्पसत्त्वानां गच्छति प्रार्थनीयताम् ।
35117 सूचीवृत्तपिशाचीत्वं राक्षस्या तपसा स्थितम् ॥ ३१ ॥
35118
35119 अल्पसत्त्वानां क्षुद्रमनसाम् । सूच्या वृत्तमिव वृत्तं यस्मिंस्तथाविधं
35120 पिशाचीत्वम् ॥ ३१ ॥
35121
35122 अपि पुण्यशरीराणां जातिबन्धो न शाम्यति ।
35123 तनुसूचीपिशाचीत्वं राक्षस्या तपसार्जितम् ॥ ३२ ॥
35124
35125 ननु सा तपसा पूता पुण्यशरीरा संपन्ना तथाभूतायास्तस्याः
35126 परपीडाहेतुसूचीशरीरप्रार्थनं कथं युक्तं तत्राह - अपीति । जातिबन्धो
35127 जात्यनुसारी वासनानिबन्धः ॥ ३२ ॥
35128
35129 तस्यां दिगन्तभ्रमणे प्रवृत्तायां महानिलैः ।
35130 तत्रैव सा तनुः स्थूला गलिता शरदभ्रवत् ॥ ३३ ॥
35131
35132 सा स्थूला सर्वसाधारणाऽविद्याकल्पिता कर्कटीतनुर्महद्भिरनिलैर्वायुभिर्गलिता
35133 विशीर्णा ॥ ३३ ॥
35134
35135 प्। ३०१) १८३
35136
35137 कस्यचिद्विवशाङ्गस्य क्षीणस्य विपुलस्य च ।
35138 प्रविश्यान्तर्वातसूचिर्भवत्यतिविषूचिका ॥ ३४ ॥
35139
35140 अथ विषूच्याश्चरित्रं विस्तरेणाह - कस्यचिदित्यादिना । प्राग्रोगान्तरेण
35141 विवशाङ्गस्य । क्षीणस्य कृशाङ्गस्य । विपुलस्य पीनाङ्गस्य । वातलीना
35142 अयःसूचिरतिशयिता विषूचिकाप्रवृत्तिरोगो भवति ॥ ३४ ॥
35143
35144 कस्यचित्तनुदेहस्य स्वस्थस्य सुधियोऽपि वा ।
35145 प्रविश्य जीवसूचित्वे भवत्यन्तर्विषूचिका ॥ ३५ ॥
35146
35147 अन्तर्विषूचिका दुर्बुद्धिरूपा ॥ ३५ ॥
35148
35149 एवं क्वचित्तृप्यति सा दुर्बुद्धिहृदयास्थिता ।
35150 क्वचिदुच्छेद्यते पुण्यैर्मन्त्रौषधितपःक्रमैः ॥ ३६ ॥
35151
35152 क्वचित्कस्मिंश्चित्पुरुषे । उच्छेद्यते निवार्यते ॥ ३६ ॥

35153
35154 आसीद्बहूनि वर्षाणि भ्रमणैकपरायणा।
35155 देहद्वयेन गच्छन्ती व्योम्नि भूमितले तथा॥ ३७॥
35156
35157 रजस्तिरोहिता भूमौ हस्तेऽङ्गुलितिरोहिता।
35158 प्रभातिरोहिता व्योम्नि वस्त्रे सूत्रतिरोहिता॥ ३८॥
35159
35160 तस्यास्तिरोधानस्थलविशेषानाह - रज इत्यादिना॥ ३८॥
35161
35162 अन्तःस्थस्नायुसरिति दुर्भगे पांशुपाण्डुरे।
35163 शुष्करेखासरित्खाते सूक्ष्मरेखाजरत्तृणे॥ ३९॥
35164
35165 देहमध्येऽपि तानाह - अन्तःस्थेति। व्यभिचारादिदोषदुष्टे भगे
35166 उपस्थेन्द्रिये। पांशुभिरूषादिभूपांसुभिः पाण्डुरे धूसरावयवे। शुष्का
35167 रूक्षा या हस्तपादादिरेखास्तल्लक्षणे शुष्कसरित्खाते। सूक्ष्मा या
35168 रोमादिरेखास्तल्लक्षणे जरत्तृणे॥ ३९॥
35169
35170 अर्थहीने गतच्छाये शून्या उच्छ्वासकारिणी।
35171 मक्षिकावातहरिते श्रीवृक्षपरिवर्जिते॥ ४०॥
35172
35173 अर्थ्यते इत्यर्थः सौभाग्यलक्षणं तद्धीनेऽङ्गे। गतच्छाये नष्टकान्तौ।
35174 शून्या अन्तःसद्भावशून्या। उच्छ्वासः पीडितानामूर्ध्वनिःश्वासः।
35175 देहाद्बहिर्देशेऽपि मक्षिकाभिः रूक्षदुर्गन्धवातैश्च युक्ते
35176 हरिततृणाद्यावृतप्रदेशे। श्रिया वृक्षैश्च श्रीकरैर्वा
35177 बिल्वाम्रादिवृक्षैः परिवर्जिते॥ ४०॥
35178
35179 स्थूलास्थिग्रन्थिवलिते नित्यकम्पस्फुरत्तमे।
35180 अनात्मीयाच्छनीहारेऽशुद्धांशुककृतभ्रमे॥ ४१॥
35181
35182 स्थूलैः पशुनराद्यस्थिग्रन्थिभिर्वलिते। वात्यादिना नित्यं कम्पेन स्फुरत्तमे
35183 संचलत्तमे। आत्मीया आत्मनिष्ठास्त एव अच्छाः स्वच्छा
35184 नीहारवत्परसंतापहारिणः। न विद्यन्ते आत्मीयाच्छनीहारा यत्र।
35185 अशुद्धान्यंशुकानि येषां तथाविधैरशिष्टजनैः कृतसंचारे॥ ४१॥
35186
35187 किणस्थाण्वङ्गविश्रान्तमक्षिकापिकवायसे।
35188 रौक्षरूढरसद्वाते विलोलाङ्गुलिशाखिनि॥ ४२॥
35189
35190 किणेषु कोटरेषु स्थाण्वङ्गेषु च्छिन्नाग्रवृक्षेषु च क्रमाद्विश्रान्ता
35191 मधुमक्षिकाः पिकवायसाश्च यत्र। शीतातिशयेन रूक्ष एव रौक्षो रूढः
35192 प्रादुर्भूतो रसन् शब्दायमानो वातो यत्र। अत एव कम्पविलोलाङ्गुलिशाखिनि॥
35193 ४२॥
35194
35195 मालाभ्रलेखासंसारे स्वाङ्गुलिव्रणगर्तके।
35196 स्पन्दावश्यायपृषति पदवल्मीकपर्वते॥ ४३॥
35197
35198 मालाभूतानामभ्रलेखानां नीहारपटलानां संसारः संचारो यत्र।
35199 विदीर्णस्वाङ्गुलिव्रणानां जनानां गर्तप्राये निवासदेशे। स्पन्दमाना
35200 अवश्यायपृषतो हिमबिन्दवो यत्र। पदे पुरुषपादाङ्किते देशे वल्मीके
35201 वामलूरे पर्वते च। समाहारैकत्वम्॥ ४३॥
35202
35203 कचत्याशु जलभ्रान्तौ नखाजगरकर्कशे।
35204 क्वचित्कविसरद्भीतभीतयूककुपान्थके॥ ४४॥

आशु जलभ्रान्तौ कचति प्रकाशमाने मरुदेशे।
नखैर्नखप्रधानैर्व्याघ्रभल्लूकादिभिरजगरादिभिश्च कर्कशे
कठिनतमे अरण्ये। क्वचिद्द्रवाः क्वाचित्का विसरन्तः पलायमाना भीतेभ्योऽपि
भीता यूकाभिः कुत्सिताः पान्थाः पथिकजना यत्र॥ ४४॥

विरूपाशुष्कसंदष्टवीटिकापूतिपल्वले।
मध्यस्थलेखमार्गौघशीतश्वसनगोचरे॥ ४५॥

विरूपैराशुष्कैश्च पिशाचादिभिः संदष्टानि ताम्बूलवीटिकाप्रायाणि
शीर्णपर्णानि यत्र तथाविधे पूतिपल्वले दुर्गन्धजलगर्ते। मध्यस्था लेखाः
कुल्यादिखातानि येषु तथाविधमार्गौधानां शीतस्य श्वसनस्य गोचरे विषये
पान्थविश्रान्तिस्थाने॥ ४५॥

ग्रस्तयूकानरौघासृक्पूर्णसृक्किनखास्यताम्।
दधताङ्गुष्ठपक्षेण क्रान्ते सर्वत्र यायिनी॥ ४६॥

ग्रस्तानां चर्वितानां यूकानामुदरस्थनरौघासृग्भिः पूर्णे सृक्किणी
येषां तथाविधानां पामरनरवानरादीनां नखा एवास्यानि मुखानि यस्य
तद्भावं दधता अङ्गुष्ठपक्षेण अङ्गुष्ठपरिवारायितेनाङ्गुलिजालेन
क्रान्ते आक्रान्ते सर्वत्र देहप्रदेशे भूम्यादिप्रदेशे प्रागुक्तस्थानेषु च
यायिनी गमनशीला सा अभूदिति शेषः॥ ४६॥

नानाविरचनाचित्रपटपत्तनगामिनी।
गमागमपरिश्रान्ता तत्रात्यन्तचिराध्वगा॥ ४७॥

तथा नानाविधाभिर्गजतुरगादिविरचनाभिश्चित्राः पटा वस्त्राणि येषु
तथाविधेषु पत्तनेषु नगरेषु गमनशीला। तत्र गमागमैः संचारैः
परिश्रान्ता अभूदिति शेषः॥ ४७॥

नगरानगरे व्यस्तसूत्रभाण्डैकभारिणी।
तप्ते कलेवरारण्ये बलीवर्दापवर्तिनी॥ ४८॥

सूचीस्वभावादेव च नगरेष्वनगरेषु ग्रामेषु च व्यस्तानां
रथ्याप्रक्षिप्तानां कार्पासादिसूत्राणां तत्प्रोतानां काचमण्यादीनां
भाण्डानामलंकाराणां च एकं भर्तु शीलमस्याः
सौक्ष्म्येणान्यहरणाशक्तेः। किंच ज्वरादिना तप्ते प्राणिनां कलेवरारण्ये
बलीवर्दापवर्तिनी। यथा हृष्टो बलीवर्दः शृङ्गाभ्यां
वल्मीकाद्यपरिकरन्नपवर्तयति तद्वदियं सूच्यपि तच्छीलेत्यर्थः॥ ४८॥

गुप्ता विश्रमणायैव मनाक्करपरिच्युता।
तन्तुप्रोता मुखाकृष्टिः खिन्ना क्वापि विलीयते॥ ४९॥

केनचित्सीवनाय गृहीता चिरं सीवने तन्तुप्रोतमुखाकृष्टिः खिन्ना श्रान्ता
सती मनाक् तत्करपरिच्युता सती विश्रमणायैव क्वापि गुप्ता प्रच्छन्ना लीयते॥
४९॥

प्। ३०२) १८५

वेधनं कर्मसंश्लिष्टा कठिनापि न साकरोत्।
न हि तीक्ष्णो वह्निः कार्यो निजत्वं विजहाति चेत्॥ ५०॥

35257 ननु सा सीवनकर्तुः करवेधनं कुतो नाकरोदित्याशङ्क्याह - वेधनमिति
35258 | कठिना क्रूरापि सा स्वयोग्ये सीवनकर्मणि सूचीत्वादेव संश्लिष्टा
35259 कौतुकादासक्ता सती वेधनं नाकरोत् | कुतः | सा सूची निजत्वं निजस्वभावं
35260 सीवनं विजहाति त्यजति न प्रकटयति चेत्तत्तुल्ययोगत्वात्स्वीयस्तीक्ष्णः
35261 क्रौर्यस्वभावोऽपि न बहिः कार्यो बहिः प्रकटयितुं शक्यः | तस्यापि
35262 निजत्वाविशेषादित्यर्थः || ५० ||
35263
35264 सायःसूची मनःसूच्या वलिता विजहार ह |
35265 दिक्ष्वाशेव शिलागुर्वी नावाङ्गपलिता सती || ५१ ||
35266
35267 सा अयःसूची मनःसूच्या जीवसूच्या | गुर्वी शीला नावेव अङ्गपलितायां
35268 वृद्धायां सती स्थिता आशेव च दिक्षु विजहार बभ्राम | अङ्गेति संबोधनं
35269 वा || ५१ ||
35270
35271 विससार दिगन्तेषु सान्तःकरणसत्तया |
35272 तुषलेखेव पवनशक्त्या संसृतिरूपया || ५२ ||
35273
35274 संसृतिर्भ्रमणं रूपयति प्रकटयतीति संसृतिरूपा तया || ५२ ||
35275
35276 मुखेन सूक्ष्मसूत्रान्तं चरन्तीव परोम्भितम् |
35277 परपूरोद्यमेनाशु जातेव हृदयान्विता || ५३ ||
35278
35279 परैरुम्भितं गुम्फितं सूक्ष्मं सूत्रान्तं चरन्ती भक्षयन्तीव अत एव हि
35280 परप्रयुक्तेनैवोदरपूरणोद्यमेन हृदयान्विता स्वस्थचित्ता जातेवेत्युत्प्रेक्षा ||
35281 ५३ ||
35282
35283 परपूररसेनैव सूच्या हृत्सुविकासितम् |
35284 अनारतपतत्सूक्ष्मसूत्रान्त इव स्तम्भिता || ५४ ||
35285
35286 उचितैवेयमुत्प्रेक्षेत्याशयेनाह - परेति | यतः सूच्या प्रागपि
35287 परपूररसेनैव परवधप्रयुक्तोदरपूरणेच्छयैव तपःक्लेशितं स्वं
35288 मनः सुविकासितमुल्लासितमतः सा अनारतं मुखे पतति | सूक्ष्मसूत्रान्ते
35289 स्वाभिलषितप्राये स्तम्भिता निरुद्धेवेत्युत्प्रेक्षोचितैवेत्यर्थः || ५४ ||
35290
35291 तीक्ष्णैरपि चिरक्षीणं पूर्यते निर्विचारणा |
35292 दृष्टान्तोऽत्र क्षणात्सूच्या पूरितो जर्जरः पटः || ५५ ||
35293
35294 इदानीं सूच्या मौढ्याचरितं तपःसूत्रैः पटच्चरोदरपूरणायैव
35295 संपन्नं न स्वोदरपूरणायेत्युत्प्रेक्षितार्थो
35296 लोकप्रसिद्धसामान्योक्तिदृष्टान्तः संपन्नं इत्याह - तीक्ष्णैरपीति |
35297 चिराय क्षीणं दारिद्र्यकार्श्यादिपीडितं कुलं तीक्ष्णैः क्रूरैरपि पूर्यते
35298 दयया पोष्यते | निर्विचारणा नास्मिन्नर्थे विचारोऽस्ति | यतो दृष्टान्तोऽत्रार्थे
35299 सूच्या पूरितो जर्जरः पटः प्रत्यक्षं दृष्ट इत्यर्थः || ५५ ||
35300
35301 सूत्रांशुनिर्गमे योग्यं सूच्या हृदयमर्जितम् |
35302 परपूरणयैवाशु तेजश्च कवितार्करुक् || ५६ ||
35303
35304 कुतो न सूच्या स्वोदरपूरणं कृतं तत्राह - सूत्रेति | यतः सूच्या
35305 सूत्रस्यांशोरग्रभागस्य निर्गमे अन्तरप्रवेशे योग्यमच्छिद्रमेव
35306 हृदयं तपसा अर्जितं तथा तेजोबुद्धिप्रकाशोऽपि
35307 तत्त्वावबोधभाग्यशालित्वात्कविताया अभिज्ञताया अर्करुक् सूर्यकान्तिरिव
35308 प्रकाशस्वभावमपि परपूरणयैव पटादिसीवनेनैव आशु व्याप्तं ननु

35309 स्वभोगोपयुक्तमर्जितमित्यर्थः। आङ्पूर्वात् अशू व्याप्तौ इति धातोरौणादिक
35310 उप्रत्ययः॥ ५६॥
35311
35312 अकस्मात्तेन रूढेन क्षीणपूरेण रूपिणी।
35313 हृदये राक्षई सूचिः कर्मणा तप्यते च सा॥ ५७॥
35314
35315 अत एव तस्याः पश्चात्तापोऽभूदित्याह - अकस्मादिति। पूर्यत इति पूर उदरम्।
35316 क्षीणपूरेण तेन तपःकर्मणा अकस्माद्रूढेन प्रादुर्भूतेन तेन
35317 सूचीभावेन रूपिणी। सा सूचिः॥ ५७॥
35318
35319 वेधं पूररयेणेव करोति स्वं प्रचारिता।
35320 प्रकृतेन निजेनापि वेधाय व्यवहारिता॥ ५८॥
35321
35322 यदि पश्चात्तप्ता सा तर्हि किं प्राणिवेधनादुपरता नेत्याह - वेधमिति।
35323 तथापि सा पूररयेणेव नदीप्रवाहवेगसदृशेन निजेन राक्षसस्वभावेन
35324 प्रकृतेन सूचीस्वभावेनापि प्राणिवेधनाभिनिवेशेन वेधायैव स्वं
35325 स्वानुरूपं प्रचारिता प्रथममुद्योजिता पश्चाद्व्यवहारिता च सती वेधं
35326 करोत्येव॥ ५८॥
35327
35328 संचारयति वस्त्रेषु सूत्रं चतुरवेधनात्।
35329 आदीर्घवासनातन्तुः शरीरेष्विव चेतनाम्॥ ५९॥
35330
35331 अत एव केवलसूचीस्वभावप्रयुक्तं कार्यमपि करोतीति प्रागुक्तमर्थं
35332 सदृष्टान्तमाह - संचारयतीति। यथा पुत्रकलत्रादिविषयेष्वादीर्घो
35333 वासनारूपस्तन्तुर्मरणकाले उद्भूतस्तत्तद्वासनानुरूपस्त्र्यादिशरीरेषु
35334 जीवचेतनां संचारयति तद्वद्वस्त्रेषु सूत्रं संचारयतीत्यर्थः॥ ५९॥
35335
35336 संचार्यमाणवेधेन धावन्तीवाक्षिपातने।
35337 अदर्शितमुखा एव दुर्जना मर्मवेधिनः॥ ६०॥
35338
35339 अत एव तुन्नवायैः पटेषु वेधेन संचार्यमाणा तेषामक्षिपातने
35340 चक्षुःसंनिकर्षे मुखं पटे निगूह्य धावन्तीव बभूवेति शेषः।
35341 दुर्युक्तमेवेदं तया कृतमित्यर्थान्तरन्यासेन द्रढयति - अदर्शितेति।
35342 पिशुनचोरादयो हि दुर्जना अदर्शितस्वमुखा एव परमर्मभेदिनः प्रसिद्धा
35343 इत्यर्थः॥ ६०॥
35344
35345 कण्ठवस्त्रदलप्रोता वेधाक्ष्णा मुखमीक्षते।
35346 कथमेता भिनद्मीति तीक्ष्णानामेतदीप्सितम्॥ ६१॥
35347
35348 कदाचित्कण्ठसक्तस्योत्तरीयवस्त्रस्य गुणे प्रोता सती वेधाक्ष्णा
35349 स्वकीयच्छिद्रलक्षणेन नेत्रेण नारीणां मुखमीक्षते। केनाभिप्रायेणेति
35350 तमाह - कथमिति॥ ६१॥
35351
35352 सममेव च कौशेये क्षौमे च वसने सृता।
35353 जडः क इव वा नाम गुणागुणमपेक्षते॥ ६२॥
35354
35355 कौशेये मृदुस्निग्धत्वादिगुणवति पट्टवस्त्रे क्षौमे
35356 काठिन्यरूक्षत्वादिदोषवति क्षुमावल्कले च समं तुल्यवृत्त्यैव सृता
35357 प्रविष्टा। जडो मूर्खः। अगुणं दोषम्। अपेक्षते विमृशतीति यावत्॥ ६२॥
35358
35359 सा दधाना ततं सूत्रमङ्गुष्ठाङ्गुलिपीडिता।
35360 आन्त्रतन्तुमिवामान्तमुद्गिरन्ती निरीक्षते॥ ६३॥

35361
35362 सीवनकाले सूचीच्छिद्रात्तन्तुनिर्गमनं
35363 सीवकाङ्गुष्ठनिपीडितसूच्युदरान्तर्गतान्ततन्तूद्गमनत्वेनोत्प्रेक्षते -
35364 सेति | अमान्तं निरवकाशत्वादन्तःस्थितिमलभमानम् || ६३ ||
35365
35366 तीक्ष्णाप्यहृदयत्वेन सरसेष्वरसेष्ववित् |
35367 सूत्रितापि पदार्थेषु विशत्यरसगामिनी || ६४ ||
35368
35369 सूत्रिता सूत्रप्रोता तीक्ष्णापि सा सरसेष्वरसेष्वपि पदार्थेषु अहृदयत्वेन
35370 अन्तर्हृदयशून्यत्वेन अवित् विशेषानभिज्ञा अत एवारसगामिनी रसास्वादहीना
35371 सूची स्वभावादेव विशति || ६४ ||
35372
35373 प्। ३०३) १८५
35374
35375 अगर्दती मुखप्रोता सुतीक्ष्णापि च तापिधीः |
35376 सुवेधिताप्यहृदया राजपुत्र्यापि दुर्भगा || ६५ ||
35377
35378 अनपराधदण्डप्राप्तेरहो अस्या दुर्दशेत्याह - अगर्दतीति | नर्द गर्द शब्दे
35379 | अगर्दती निष्ठुरभाषणादिशब्दमकुर्वाणापि मुखे प्रोता सूत्रेण सुतीक्ष्णा
35380 परसंतापसमर्थापि स्वयमेव तापिनी संतापवती धीर्यस्याः | सुष्ठु वेधिता
35381 संजातच्छिद्रापि अहृदया अनुदरच्छिद्रा | यथा राजपुत्र्यापि दुर्भगा
35382 अभाग्या संपद्यते तद्वदियमपि संपन्नेत्यर्थः || ६५ ||
35383
35384 विना परापकारेण तीक्ष्णा मरणमीहते |
35385 वेदनाद्रोधिता सूची कर्मपाशे प्रलम्बते || ६६ ||
35386
35387 युक्तैवास्याः सा दुर्दशेत्याह - विनेति | यतः सा परेषां स्वापकारेण
35388 विनैव मरणं वधमीहते इच्छति अतस्तत्पापवशाद्वेदनात्स्वबुद्धिवशादेव
35389 सूत्रे रोधिता सती स्वकर्मपाशे एव प्रलम्बते इत्युत्प्रेक्षा || ६६ ||
35390
35391 शेते किंश्याममैत्र्येव दूरे करपरिच्युता |
35392 स्वरूपसदृशं मित्रं कस्मै नाम न रोचते || ६७ ||
35393
35394 दैवात्सीवकस्य करात्परिच्युता सती तस्यान्यस्य वा अङ्के [अङ्के इति
35395 निराधारशयनानुपपत्त्या आक्षिप्तं बोध्यम्] उत्सङ्गे दूरे
35396 करस्पर्शायोग्ये स्थाने किंश्यामैः कुत्सितश्यामवर्णैरधोरोमभिः सह
35397 मैत्र्येव मित्रत्ववशादिव तेषु शेते निद्राति | कुतोऽस्यास्तत्समागमो रोचते तत्राह
35398 - स्वरूपसदृशमिति || ६७ ||
35399
35400 मिश्रिता मूढचित्तानां वृत्तिभिः प्राकृते जने |
35401 तिष्ठत्यात्मसमां को हि संगतिं त्यक्तुमिच्छति || ६८ ||
35402
35403 अत एव मूर्खचित्तवृत्त्यापि सह संगतिस्तस्या रोचत इत्याह - मिश्रितेति || ६८ ||
35404
35405 भवत्ययस्कारवित्तौ संत्यज्यान्तर्धिगामिनी |
35406 भस्त्रावातैर्विचलिता गगनादुत्पतोन्मुखी || ६९ ||
35407
35408 नन्वेवं तस्या लोहसूच्यन्तरैः सहापि साम्यात्तन्मैत्र्या कदाचित्तैः सह
35409 दैवाल्लोहकारप्राप्तौ किं करोति तत्राह - भवतीति | अयस्काराणां वित्तौ
35410 प्राप्तौ सत्यां तैः संतापायाग्नौ न्यस्यमाना तदीयचर्मभस्त्रावातैर्विचलिता
35411 सती तान्संत्यज्यान्तर्धिगामिनी अन्तर्धानगता सती गगनादुत्पतोन्मुखी
35412 पलायनपरा भवतीत्यर्थः || ६९ ||

प्राणापानप्रवाहस्थहृत्पद्मान्तरचारिणी।
दुःखशक्तिर्महाघोरा जीवशक्तिरिवोदिता ॥ ७० ॥

तस्याः प्राणिनां प्राणादिद्वारा देहान्तःसंचारमाह - प्राणेत्यादिना।
दुःखप्रदा कर्मशक्तिरेव जीवशक्तिः सजीवा उदिता आविर्भूतेव ॥ ७० ॥

समानवैपरीत्येन समानसमगामिनी।
उदानविपरीतत्वादुदानसमगामिनी ॥ ७१ ॥

व्यानस्था व्याधिजननी सर्वाङ्गरसचारिणी।
हृत्कण्ठे शूलपवने वैवर्ण्योन्मादकारिणी ॥ ७२ ॥

शूलपवने शूलरोगात्मके वायौ प्रविश्येति शेषः ॥ ७२ ॥

प्रायशोऽविकहस्तस्था सुप्तोर्णागन्धकोटरे।
बालहस्ताङ्गुलीतल्पवेधनैकविलासिनी ॥ ७३ ॥

प्रायशः कम्बलादिसीवनकाले अविकानां अविपालानां हस्तस्था
कदाचित्तदीयोर्णानां गन्धस्य लेशस्य कोटरे सुप्ता कदाचित्तु बालानां
हस्ताङ्गुल्यादिलक्षणस्य स्वतल्पस्य वेधने एकविलासिनी मुख्यकौतुकवती
आसीदिति शेषः ॥ ७३ ॥

पादप्रविष्टा रुधिरपानोपार्जनविस्मिता।
तुष्यत्यतितरां गुच्छभोजना तुच्छभोजनैः ॥ ७४ ॥

पुष्पगुच्छमालाग्रथनकाले गुच्छभोजना तुच्छभोजनैरल्पभोजनैस्तुष्यति
तृप्यति ॥ ७४ ॥

शेते कर्दमकोशस्था चिरकालमधोमुखी।
इच्छानुरूपमासाद्य क इवास्पदमुज्झति ॥ ७५ ॥

कर्दमकोशो मलपङ्किलमूलाधारकोशः ॥ ७५ ॥

क्रौर्येणापहतात्मानं दर्शयत्युपवेधनैः।
उत्सवादपि नीचानां कलहोऽपि सुखायते ॥ ७६ ॥

अपहतं दूषितमात्मानं स्वाम्। उपवेधनैः
परप्राणापहारपर्यन्तैर्वेधनैः। स्वार्थाभावे कथं परमारणे तस्याः
प्रवृत्तिस्तत्राह - उत्सवादपीति। येषां परपीडाऽसामर्थ्येऽपि परैः सह
कलहोऽपि सुखायते तेषां परमारणं सुखायते इति किं वक्तव्यमिति भावः ॥
७६ ॥

कपर्दकार्धलाभेन कृपणो बहु मन्यते।
दुरुच्छेदा हि भूतानामहंकारचमत्कृतिः ॥ ७७ ॥

अल्पतररक्तकणास्वादलोभाद्वास्याः परमारणे प्रवृत्तिरुपपन्नेत्याह -
कपर्देकेति। राक्षसकुलोचितपरहिंसाविहाराभिमानाद्वा तदुपपत्तिरित्याह -
दुरुच्छेदेति ॥ ७७ ॥

सूचिकायुग्मलभ्येन मोहितेनात्मना नृणाम्।
मृतिमाशङ्कते चित्रा स्वार्थे नोदेति मूढता ॥ ७८ ॥

35465
35466 सा मोहितेन मूढेनात्मना क्रियमाणेन जीवसूचीलोहसूचीति
35467 स्वक्रियसूचिकाद्वयलभ्येन वेधनेन सर्वेषां नृणां मृतिमाशङ्कते
35468 तर्कयति। मूढानामावश्यके [मूढानां व्यर्थे इति पाठः]
35469 स्वार्थे मूढता नोदेति सा चित्रा आश्चर्यभूतेत्यर्थः॥ ७८॥
35470
35471 वस्त्रतन्तुविभेदेन परमारणमाशु मे।
35472 इदं संपद्यत इति भवत्यन्तर्हि निर्मला॥ ७९॥
35473
35474 इदानीं मे मम परमारणं प्राक् सीवनकाले वस्त्रतन्तुविभेदेनाभ्यस्तमिति
35475 हेतोराशु संपद्यत इति स्वकौशलानुसंधानेनान्तः अत्यन्तं निर्मला प्रसन्ना
35476 भवति। हृष्यतीति यावत्॥ ७९॥
35477
35478 स्थापिता मलमादत्ते यथा मृद्घर्षणं विना।
35479 परापराधविरहाद्व्याधिस्तस्याः प्रवर्तते॥ ८०॥
35480
35481 यथा लोके प्रसिद्धा सूचिः सीवनेन [सीवनेत्याद्यर्थलब्धम्] मृदो
35482 घर्षणं विना तूष्णी स्थापिता मलमनैर्मल्यमादत्ते स्वीकरोति। तथा तस्या अपि
35483 परापराधविरहाद्व्याधिर्दुःखं प्रवर्तत इत्यर्थः॥ ८०॥
35484
35485 सूक्ष्माऽदृश्या चैव दात्री क्षणाद्विस्मृतिमेति सा।
35486 तीक्ष्णभेदकरी क्रूरा सूची चेष्टेव दैविकी॥ ८१॥
35487
35488 अदृश्या दात्री खण्डयित्री। दैविकी औत्पातिकी चेष्टेव॥ ८१॥
35489
35490 प्। ३०४) १८६
35491
35492 तन्तुवेधनमात्रेण हतोऽन्य इति तोषिता।
35493 दुर्जनो येन तेनैव नाशितेनैति हृष्टताम्॥ ८२॥
35494
35495 मर्मस्थानाच्छादनोत्तरीयतन्तुवेधनमात्रकौशलेन॥ ८२॥
35496
35497 पङ्के मज्जति याति खं विहरति व्योमानिलैर्दिक्तटे
35498 शेते पांसुषु भूतलेष्विव वने पट्टे गृहेऽन्तःपुरे।
35499 हस्ते श्रोत्रसरोरुहेऽथ मृदुनि स्वेच्छोर्णिकाखण्डके
35500 रन्ध्रे काष्ठमृदां च माति हृदये द्रव्यात्मशक्त्यैव सा॥ ८३॥
35501
35502 विस्तरोक्तं सूचीचरित्रं संक्षिप्योपसंहरति - पङ्के इति। पल्वलादिपङ्के
35503 मज्जति। खमाकाशं याति। व्योमानिलैः सह दिक्तटे विहरति। इवकारो
35504 भिन्नक्रमः। अन्तःपुरे गृहे पट्टे पर्यङ्कपट्टास्तरण इव भूतले वने
35505 पांसुष्वपि शेते। तथा नराणां हस्ते श्रोत्रलक्षणे श्रोत्रस्थे वा सरोरुहे
35506 पद्मे स्वेच्छया ऊर्णिकानां मेषरोम्णां खण्डके राशौ च शेते।
35507 काष्ठानां मृदां कुड्यादीनां च रन्ध्रे अल्पतरेऽपि छिद्रे माति संमीयते
35508 तथा प्राणिनां हृदये च माति यथा मणिमन्त्रादिद्रव्यात्मशक्त्या मायावी
35509 योगी वा सर्वत्र यथेच्छं विहरति तद्वदित्यर्थः॥ ८३॥
35510
35511 श्रीवाल्मीकिरुवाच।
35512
35513 इत्युक्तवत्यथ मुनौ दिवसो जगाम
35514 सायंतनाय विधयेऽस्तमिनो जगाम।
35515 स्नातुं सभा कृतनमस्करणा जगाम्
35516 श्यामक्षये रविकरैश्च सहाजगाम॥ ८४॥

35517
35518 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे
35519 सूचिव्यवहारवर्णनं नाम सप्ततितमः सर्गः ॥ ७० ॥
35520
35521 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
35522 सूचिव्यवहारवर्णनं नाम सप्ततितमः सर्गः ॥ ७० ॥
35523
35524
35525 षष्ठो दिवसः ।
35526
35527 एकसप्ततितमः सर्गः ७१
35528
35529 श्रीवसिष्ठ उवाच ।
35530
35531 अथ सा बहुकालेन कर्कटी नाम राक्षसी ।
35532 सर्वेषां नरमांसानां नतु तृप्तिमुपाययौ ॥ १ ॥
35533
35534 कर्कट्याः सूचिभूतायाः पश्चात्तापोऽत्र वर्ण्यते ।
35535 स्मरन्त्याः प्राक्तनं देहं विस्तरात्परिदेवनम् ॥ १ ॥
35536
35537 सर्वेषां सर्वजातीयानां नराणां मांसानामास्वादनेऽपीति शेषः ।
35538 तृप्तिमलंबुद्धिम् ॥ १ ॥
35539
35540 पूर्वेणैव किलाह्ना सा तृप्ता रुधिरबिन्दुना ।
35541 सूच्याः किमिव मात्यन्तस्तृष्णासूची सुदुर्भरा ॥ २ ॥
35542
35543 तृप्ता अपगतक्षुधा ॥ २ ॥
35544
35545 चिन्तयामास हा कष्टं किमहं सूचितां गता ।
35546 सूक्ष्मास्मि हतशक्तिश्च अपि ग्रासो न माति च ॥ ३ ॥
35547
35548 हतशक्तिः कुण्ठितभक्षणसामर्थ्या । न माति । उदरे इति शेषः ॥ ३ ॥
35549
35550 क्व मे तानि विशालानि गतान्यङ्गानि दुर्धियः ।
35551 कालमेघविशालानि वने शीर्णानि पर्णवत् ॥ ४ ॥
35552
35553 तानि प्राक्तनानि । अङ्गानि हस्तपादादीनि ॥ ४ ॥
35554
35555 मय्यस्यां मन्दभाग्यायां मनागपि न माति हि ।
35556 स्वादुमांसरसग्रासो वसावासित आसयन् ॥ ५ ॥
35557
35558 अस्यामेतद्दशापन्नायाम् । वसया वासितः सुगन्धिः । आसनि आस्ये यन् प्रविशन् ।
35559 एतेः शतृप्रत्ययः । पद्दन् - इति सूत्रे प्रभृतिग्रहणस्य
35560 प्रकारार्थत्वादासन्नादेशः ॥ ५ ॥
35561
35562 पङ्कान्तर्विनिमज्जामि पतामि धरणीतले ।
35563 हस्तास्मि जनपादौघैः शुक्रेण मलिनास्मि च ॥ ६ ॥
35564
35565 पङ्कान्तर्मज्जनादि प्राक्सर्गे वर्णितम् । शुक्रेण चरमधातुना ॥ ६ ॥
35566
35567 हा हताहमनाथाहमनाश्वासा निरास्पदा ।
35568 दुःखाद्दुःखे निमज्जामि संकटात्संकटेऽपि च ॥ ७ ॥

अनाश्वासा सखिबन्ध्वाद्याश्वासनशून्या। संकटात्प्राणसंकटात्॥ ७॥

न सखी न च मे दासी न मे माता न मे पिता।
न मे बन्धुर्न मे भृत्या न मे भ्राता न मे सुतः॥ ८॥

तत्कुतस्तत्राह - नेति॥ ८॥

न मे देहो न मे स्थानं न मे कश्चित्समाश्रयः।
नैकस्थाने समावासो भ्राम्यामि वनपर्णवत्॥ ९॥

समाश्रय उपजीव्यः॥ ९॥

आपदां धुरि तिष्ठामि निविष्टास्मि सुदारुणे।
अभावमपि वाञ्छामि सोऽपि संपद्यते न मे॥ १०॥

अभावं मरणम्॥ १०॥

स्वको देहः परित्यक्तो मूढचेतनया मया।
काचबुद्ध्या विमूढेन हस्ताच्चिन्तामणिर्यथा॥ ११॥

आपतद्धि मनो मोहं पूर्वमापत्प्रयच्छति।
पश्चादनर्थविस्ताररूपेण परिजृम्भते॥ १२॥

इदं च दुःखं मोहाविष्टमनःकृतमेवेत्याह - आपतद्धीति। मनः
कर्तृ मोहमापतत्सत्पूर्वमापादयति दुःखसहस्रमित्यापद्दुर्बुद्धिस्ताम्।
व्यत्ययेन प्रथमा॥ १२॥

धूमेषु परितिष्ठामि मार्गे विलुलितास्मि च।
तृणेषु प्रेषितास्म्यन्तर्हा मे दुःखपरम्परा॥ १३॥

किंच कदाचिदहं कैश्चित्सूत्रे प्रोता धूमप्रदेशे बद्धा धूमेषु परि उपरि
तिष्ठामि। कदाचिन्मार्गे पतिता खरोष्ट्रादिभिर्विलुलिता उपमर्दिता।
कदाचित्कैश्चिन्नलिकादितृणेषु निधानायान्तः प्रेषिता प्रवेशितास्मि॥ १३॥

परप्रैषकरी नित्यं परसंचारचारिणी।
परं कार्पण्यमायाता जाता परवशास्म्यलम्॥ १४॥

भ्रान्तिं करोमि तुच्छे च सापि वेधनरूपिणी।
अहो ममाल्पभाग्याया दौर्भाग्यमपि दुर्भगम्॥ १५॥

तुच्छेष्वान्तररक्ताद्यास्वादविषयेषु भ्रान्तिमभिलाषम्। सा भ्रान्तिरपि
वेधनरूपिणी वेधनमात्रफला नास्वादनफला। निरुदरजिह्वत्वादित्यर्थः॥ १५
॥

प्। ३०५) १८६

उत्थितः स्फारवेतालः कुर्वत्याः शान्तिमद्य मे।
सर्वनाशोऽवदातेन प्रवृत्ताया ममोदिता॥ १६॥

सोऽयं वेतालशान्तिकर्मणि वेतालोदय इति लोकप्रसिद्ध आभाणकः स्वस्यां
संपन्न इत्याह - उत्थित इति। अवदातेन तपसा॥ १६॥

35621
35622 किं मन्दया मया तादृक्संत्यक्तं तन्महावपुः |
35623 यथा नाशेन वा भाव्यं तथोदेत्यशुभा मतिः || १७ ||
35624
35625 तत्प्राक्तनं महावपुः किंकारणं त्यक्तम् | वा अथवा येन प्रकारेण बुद्धौ
35626 सत्यां नाशेन भाव्यम् | आवश्यके कृत्यः || १७ ||
35627
35628 मामवान्तरनिर्मग्नां सूक्ष्मां कीटतनोरपि |
35629 उद्धरिष्यति को नाम पांसुराशिभिरावृताम् [हारितां
35630 पांसुराशिभिः इति पाठष्टीकानुगुणः] || १८ ||
35631
35632 नापूजयद्गणेशानं सूचीसृष्टौ स विश्वसृट् | नापसूत्रां ततः सूचीं
35633 नष्टां विन्दति मानवः || इत्याभाणकमनुसृत्याह-मामिति | अवान्तरे
35634 पथि दैवात्पांसुनिर्मग्नां को वा उद्धरिष्यति | दुर्लक्ष्यत्वान्न
35635 कश्चिदुद्धरिष्यतीत्यर्थः | हारितां हापिताम् | आवृताम् इति पाठे तु स्पष्टम् ||
35636 १८ ||
35637
35638 विविक्तमनसांबुद्धौ क्व स्फुरन्ति हताशयाः |
35639 ग्राममार्गतृणानीव गिरेरुपरिवासिनाम् || १९ ||
35640
35641 यद्यप्यसूक्ष्मदृश उद्धर्तुमशक्तास्तथापि विविक्तमनसः सूक्ष्मदर्शिनो
35642 योगिनस्त्वामुद्धरिष्यन्तीत्याशङ्क्याह - विविक्तेति | हताशया मादृशा इति
35643 शेषः || १९ ||
35644
35645 स्थिताया अज्ञताम्भोधौ क्व ममाभ्युदयो भवेत् |
35646 अन्धस्योदेति प्राकाश्यं नखद्योतानुसेविनः || २० ||
35647
35648 ननु त्वयैव स्वात्मोद्धर्तव्यस्तत्राह - स्थिताया इति | प्रकाशयतीति
35649 प्रकाशस्तद्भावः प्राकाश्यमर्थदर्शनम् || २० ||
35650
35651 अतः कियन्तं नो जाने कालमावलितापदम् |
35652 मयापच्छ्भ्रगर्तेषु लुठितव्यं हतेहया || २१ ||
35653
35654 आवलिता आपदा [आपदा इति टावन्तम्] यस्मिन्कर्मणि तद्यथा स्यात्तथा
35655 लुठितव्यम् || २१ ||
35656
35657 कदा स्यामञ्जनमहाशैलपुत्रकरूपिणी |
35658 द्यावापृथिव्योर्वैधुर्ये स्तम्भतामनुतिष्ठती || २२ ||
35659
35660 वैधुर्ये प्राणिसंहारेणावष्टम्भेन च भारोत्तारणे || २२ ||
35661
35662 मेघमालासमभुजा चिरं विद्युत्पदेक्षणा |
35663 नीहारजालवसना प्रोच्चकेशमिताम्बरा || २३ ||
35664
35665 विद्युत्पदे विद्युत्स्थानापन्ने ईक्षणे चक्षुषी यस्याः | प्रोच्चैः
35666 केशैर्मितमम्बरं यस्याः || २३ ||
35667
35668 लम्बोदराभ्रसंदर्शप्रनर्तितशिखण्डिनी |
35669 लम्बलोलस्तनी श्यामा देहवातद्रवत्स्तनी || २४ ||
35670
35671 उदरलक्षणस्याभ्रस्य संदर्शेन प्रेक्षणेन प्रनर्तिताः शिखण्डिनो मयूरा
35672 यया | देहवातेन श्वासेन द्रवन्तौ कम्पमानौ स्तनौ यस्याः || २४ ||

35673
35674 हासभस्मच्छटाच्छन्नसूर्यमण्डलरोधिनी ।
35675 कृतान्तग्रसनोद्युक्तकृत्यैकाकृतिधारिणी ॥ २५ ॥
35676
35677 हासेनाट्टहासबिलासेन भस्मच्छटाभिर्दग्धारण्यधूलिपटलैश्छन्नस्य
35678 आच्छादितस्य सूर्यमण्डलस्य रोधिनी पिधानशीला । कृतान्त इव
35679 सर्वप्राणिग्रसनमेव उद्युक्तमारब्धं कृत्यं यया तथाविधा या एका
35680 आकृतिर्भीषणाकारस्तद्धारिणी ॥ २५ ॥
35681
35682 कृशानूलूखलदृशा सूर्यस्रग्दामहारिणी ।
35683 पर्वतात्पर्वते शृङ्गे न्यस्य पादौ विहारिणी ॥ २६ ॥
35684
35685 कृशानुरिव ज्वलन्त्यौ उलूखलमिव निमग्ने दृशे नेत्रे यस्याः । आपं चैव
35686 हलन्तानाम् इति भागुरिमतेन दृशाशब्दः साधुः । कदा भविष्यामीति
35687 सर्वत्रानुषज्यते ॥ २६ ॥
35688
35689 कदा मे स्याद्गुरुश्वभ्रभासुरं तन्महोदरम् ।
35690 कदा मे स्याच्छरन्मेघमेदुरा नखरावली ॥ २७ ॥
35691
35692 नखरा नखास्तेषामावली पङ्क्ति ॥ २७ ॥
35693
35694 कदा मे स्यान्महारक्षोविद्रावणकरं स्मितम् ।
35695 स्वस्फिग्वाद्यैररण्यान्यां कदा नृत्येयमुन्मदा ॥ २८ ॥
35696
35697 महतां प्रौढानां रक्षसां हृदयविद्रावणकरं स्मितं ईषद्धसितम् ।
35698 स्फिग्वाद्यैः स्फिजो वादनैः । अरण्यान्यां महारण्ये । इन्द्रवरुण -
35699 इत्यादिना ङीष्यानुक् ॥ २८ ॥
35700
35701 वसासवमहाकुम्भैर्मृतमांसास्थिसंचयैः ।
35702 कदा करिष्येऽविरतं मेदुरोदरपूरणम् ॥ २९ ॥
35703
35704 कदा पीतमहालोकरुधिरा क्षीबतां गता ।
35705 भवेयं मुदिता दृप्ता मुद्रिता निद्रया ततः ॥ ३० ॥
35706
35707 मयैव कुतपोवह्नौ तदग्र्यं भासुरं वपुः ।
35708 भस्मत्वं कनकेनेव सूचित्वमुररीकृतम् ॥ ३१ ॥
35709
35710 दुःखफलपर्यवसितत्वात्कुत्सार्हे तपोवह्नौ तत्प्राक्तनं भासुरं
35711 वपुर्भस्मत्वं नीतमिति शेषः । यथा कनकेन स्वकनकत्वनाशकं
35712 भस्मत्वं लोहसूचित्वं वा उररीकृतं स्यात्ततुल्यम् ॥ ३१ ॥
35713
35714 क्व क्लिआञ्जनशैलाभं वपुर्भरितदिक्तटम् ।
35715 क्व प्राचिकाखुरसमं सूचित्वं तृणपेलवम् ॥ ३२ ॥
35716
35717 प्राचिका दीर्घपादलूता जातिस्तस्याः खुरः पादाग्रं तत्समम् ॥ ३२ ॥
35718
35719 त्यजत्याशु मृदित्यज्ञः प्राप्यापि कनकाङ्गदम् ।
35720 मया सूचित्वलोभेन संत्यक्तं भासुरं वपुः ॥ ३३ ॥
35721
35722 मृन्मलिनं कनकाङ्गदं प्राप्याप्यविचारेण मृदिति भ्रान्त्या त्यजति ॥ ३३ ॥
35723
35724 हा महोदर विन्ध्याद्रिसनीहारगुहोपम ।

35725 अद्य नान्तं करोषि त्वं कथं सिंहेन हस्तिनाम् || ३४ ||
35726
35727 इदानीमुदराद्यङ्गानि प्रत्येकं संबोध्यानुशोचत्याह - हा इत्यादिना |
35728 विन्ध्याद्रेः सनीहारगुहा उपमा यस्य तथाविध हे महोदर त्वं सिंहेन
35729 सिंहसदृशेन स्वाविर्भावेन हस्तिसदृशानां त्वद्वियोगदुःखानामन्तं
35730 नाशं कथं न करोषि || ३४ ||
35731
35732 हा भुजौ भरनिर्भग्नशिखरौ शशभृन्नखैः |
35733 पुरोडाशधिया चन्द्रं कथमद्य न बाधतः || ३५ ||
35734
35735 भरेणातिशयेन निर्भग्नगिरिशिखरौ |
35736 शशभृत्सदृशैर्नखैर्देवभोग्यत्वात्पुरोडाशमिव स्थितं चन्द्रं
35737 कथं न बाधत इति दैर्घ्यातिशयोक्तिः || ३५ ||
35738
35739 प्। ३०६) १८७
35740
35741 हा वक्षः काचवैधुर्यगिरीन्द्रतटसुन्दर |
35742 नाद्य सिंहादि यौकं तद्धृतं रोमवनं तथा || ३६ ||
35743
35744 काचमणिमालानां वैधुर्येऽपि स्वत एव गिरीन्द्रतटमिव सुन्दर हे वक्षः
35745 त्वया सिंहादय इव सिंहादय एव वा सिंहानत्तुं शीलमस्य तथाविधं वा
35746 यूकानां समूहो यौकं यत्र तथाविधं रोमवनं यथा पूर्वं धृतं
35747 तथाद्य न धृतमित्यर्थः || ३६ ||
35748
35749 हा नेत्रे कृष्णरजनीरजःशुष्केन्धनैजने |
35750 कस्मान्न मे भूषयतो दृग्ज्वालामालया दिशः || ३७ ||
35751
35752 कृष्णरजन्या कृष्णपक्षराज्या रज्यते आसज्ज्यत इति
35753 कृष्णरजनीरजोऽन्धकारस्तद्रूपशुष्केन्धनस्य एजने प्रदीपने | एजृ दीप्तौ
35754 ल्युः | हे मे नेत्रे दृक् दर्शनं तद्वक्षणया ज्वालामालया दिशः कस्मान्न
35755 भूषयतः || ३७ ||
35756
35757 हा स्कन्ध बन्धो नष्टोऽसि निषिद्धोऽसि महीतले |
35758 कालेन विनिपिष्टोऽसि निपृष्टोऽसि शिलातले || ३८ ||
35759
35760 निषिद्धः परिहृतः | परित्यक्त इति यावत् || ३८ ||
35761
35762 हा मुखेन्दो तपसि किं नाद्य त्वं मम रश्मिभिः |
35763 कल्पान्तदावसंशान्तचन्द्रबिम्बमनोहर || ३९ ||
35764
35765 कल्पान्ते दावेन दवाग्निना संशान्तं दग्धं चन्द्रबिम्बमिव
35766 श्यामत्वान्मनोहर || ३९ ||
35767
35768 हा हा हस्तौ महाकारौ तावद्य क्व गतौ मम |
35769 संपन्नास्मि महासूचिर्मक्षिकाखुरदोलिता || ४० ||
35770
35771 मक्षिकाणां खुरैः पादाग्रैरपि दोलिता चालिता | अतिक्षुद्रेत्यर्थः || ४० ||
35772
35773 हा [त्वां शोचामीत्यर्थः]
35774 भगोग्रकरञ्जाढ्यसत्कन्दश्वभ्रशोभन |
35775 विन्ध्याद्रेरेण्यविपुलनितम्बामलबिम्बक || ४१ ||
35776

सत् विद्यमानं कन्दं स्थूलतरुमूलं यस्मिंस्तथाविधं श्वभ्रं गर्त इव
शोभन ॥ ४१ ॥

क्काकारोऽम्बरपूरकः क्क च नवं तुच्छात्मसूचीवपू
रोदोरन्ध्रसमं क्क वास्य कुहरं क्केदं च सूचीमुखम् ।
क्क ग्रासो बहुमांसभारबहुलः क्काब्बिन्दुना भोजनं
सूक्ष्मास्म्येतदहो मयैव रचितं स्वात्मक्षये नाटकम् ॥ ४२ ॥

बहुभिर्मासभारैर्बहुलो विपुलो ग्रास आहारः ॥ ४२ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे मोक्षोपाये उत्पत्तिप्रकरणे क०
सूचिकापरिदेवनं नामैकसप्ततितमः सर्गः ॥ ७१ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
सूचिकापरिदेवनं नामैकसप्ततितमः सर्गः ॥ ७१ ॥

द्विसप्ततितमः सर्गः ७२

श्रीवसिष्ठ उवाच ।

सूची सा संभवद्वाणी चिन्तयित्वेत्यकम्पनम् ।
पुनस्तद्देहलाभाय भवाम्याशु तपस्विनी ॥ १ ॥

वर्ण्यतेऽत्र पुनः सूच्यास्तप उग्रं हिमाचले ।
तद्विस्मितस्य शक्रस्य नारदोक्त्या विनिश्चयः ॥ १ ॥

सा शोकपरायणा सूची असंभवद्वाणी मौनमास्थिता सती अकम्पनं
सैकाम्यनिश्चलं यथा स्यात्तथा इति प्रागुक्तरीत्या स्वदेहादिकं
वक्ष्यमाणप्रकारं च चिन्तयित्वा । तमेव प्रकारमाह - पुनरिति ॥ १ ॥

इति संचिन्त्य चित्तस्थं संहृत्य जनमारणम् ।
तदेव हिमवच्छृङ्गं जगाम तपसे स्थितम् ॥ २ ॥

तपसे [तपसे इति क्वचिन्न लभ्यते] जगाम । स्थितं प्रागास्थितम् ॥ २ ॥

अपश्यदेव सूचित्वं सा तन्मानसमात्मनि ।
प्राणवातात्मिका प्राणैः प्रविश्य हतमानसम् ॥ ३ ॥

कथं जगामेति तदाह - अपश्यदेवेति । प्रथममात्मनि मानसं
मनःकल्पितं सूचित्वमेवापश्यत् । क्रियाशक्तिशून्ये आत्मनि सूचित्वदर्शनेऽपि
कथं गमनसिद्धिस्तत्राह - प्राणेति । या प्राणवातात्मिका जीवसूचिः सा
स्वोपाधिभूतैः प्राणैः सूचित्वकल्पनाहतं मानसं प्रविश्य ।
मनःकल्पितां लोहसूचीं प्रविश्येति यावत् । हतमानवाम् इति पाठे हता मानवा
यया लोहसूच्या तां प्रविश्येत्यर्थः ॥ ३ ॥

अथात्मन्येव सूचित्वं पश्यत्येव मनोमयम् ।
प्राणवातशरीरासौ जगाम हिमवच्छिरः ॥ ४ ॥

अथ जीवसूच्यात्मन्येव मनोमयं लोहसूचिभावं पश्यत्येव । तथाच
लोहजीवसूच्योरन्योन्यतादात्म्याध्यासादसौ कर्कटी प्राणवाताऽभिन्नशरीरा सती
क्रियाशक्तिं प्राप्य हिमवच्छिरो जगाम । वक्ष्यमाणरीत्या गृध्रशरीरं

प्रविश्येत्यर्थः ॥ ४ ॥

दृढदावानले तत्र सर्वभूतविवर्जिते ।
महामहाशिलाभाभारूक्षे पांसुविधूसरे ॥ ५ ॥

महती विशाला या महाशिला गुणोत्कृष्टेन्द्रनीलशिला तदामेवाभा
कान्तिर्यस्याः । आभाभिरातपै रूक्षे इति वा ॥ ५ ॥

तस्थावभ्युदितेवासौ निस्तृणे विपुले स्थले ।
मरावकस्मात्संजातशुष्का तृणशिखा यथा ॥ ६ ॥

अभ्युदिता तत्रैवाङ्कुरितेव ॥ ६ ॥

सुसूक्ष्मस्यैकपादस्य सार्धेनैवाश्रितोर्वरा ।
स्वसंविदेकपादात्म तपः कर्तुं प्रचक्रमे ॥ ७ ॥

सुसूक्ष्मस्य सूच्यग्ररूपस्यैकपादस्यार्धेन लेशेनैव आश्रिता उर्वरा
भूमिर्यया । अत एव द्विपदामिवैकपादपरिहारेणैकपादात्मत्वासंभवेऽपि
स्वसंविदा स्वीयकल्पनयैव कल्पितभागद्वयमध्ये
अग्रार्धपरिहारेणैकपादात्म एकपादावस्थितिरूपं तपः ॥ ७ ॥

सूक्ष्मपादतलेनैषा वसुधारेणुसंकटी ।
निवार्य त्रिपदीं कृत्स्नाद्यत्नेनोर्ध्वमुखी स्थिता ॥ ८ ॥

पादतलेन निशिताग्रभागेन वसुधाया रेणुमपि संकटयति तुदतीति
वसुधारेणुसंकटी । संकटशब्दात् तत्करोति - इति णिचि कर्मण्यण् ।
अङ्गोपस्य स्थानिवद्भावान्नोपधावृद्धिः । त्रिपदीं
पुरःपार्श्वद्वयलक्षणत्रिभागप्रसृतां दृष्टिं
कृत्स्नाद्विषयान्निवार्य ॥ ८ ॥

प। ३०७) १८७

कृष्णत्वहिंस्रतातैक्ष्ण्यव्याप्त्यास्यपवनाशनैः ।
यत्नात्पदं निबध्नन्ती रेण्वणूपलसंकटे ॥ ९ ॥

ननु ऊर्ध्वमुखत्वे दृष्टेः सर्वतो निवारणे च रेण्वणूपलसंकटे कथं
तस्याः पादस्थैर्यं सिद्धं तत्राह - कृष्णत्वेति । दृढत्वादेव
स्थैर्यं सिद्धं दृढत्वं चास्याः कृष्णत्वेन कृष्णायसत्वेन
हिंस्रत्वेन तैक्ष्ण्येन तीक्ष्णाग्रत्वेन च सर्वाङ्गव्याप्त्या आस्येन
पवनस्याशनैर्ग्रसनैस्तद्विष्टम्भलक्षणयत्नाच्च सिद्धमित्यर्थः ॥ ९ ॥

अरण्ये क्षुभितां संपद्दूरालोकार्थमुत्थिताम् ।
पुच्छाकोटिस्थितां वातालोलामनुचकार सा ॥ १० ॥

सा सूची अरण्ये क्षुधाक्षुभितां अत एव सम्यक् पद्यन्ते समीपमुपसर्पन्तीति
संपदोऽरण्याध्वगास्तेषां
दूरादालोकनमालोकस्तदर्थमुत्थितामुर्ध्वीकृतमुस्वभागाम् । पुच्छेन
आकोटौ तृणपर्णाद्यग्रभागे स्थिताम् । पथिकव्यामोहाय
वातेनाप्यलोलामचनलाम् । अर्थात्तृनजलूकामनुचकार विडम्बितवती ।
दूरालोकायम् इति पाठे दूरादालोकाय आयं आयतं दीर्घं यथा स्यात्तथा
उत्थितामित्यर्थः ॥ १० ॥

35881 मुखरन्ध्रविनिष्क्रान्ता तस्या भास्करदीधितिः |
35882 सखी बभूव सूच्याभा पश्चाद्भागैकरक्षिणी || ११ ||
35883
35884 सूचीरन्ध्रनिःसृतातपस्यापि सूच्याकारत्वात्तत्सखीत्वमुत्प्रेक्षते - मुखेति
35885 द्वाभ्याम् || ११ ||
35886
35887 क्षुद्रेऽपि स्वजने भूतेऽप्येति वत्सलतां जनः |
35888 दीधीत्यापि सखीवृत्तं सूच्यां शुचितया भृतम् || १२ ||
35889
35890 बभूव तस्याः स्वच्छाया द्वितीया तापसी सखी |
35891 एवं सूचीव मलिना तया पश्चात्कृतेव सा || १३ ||
35892
35893 सूचीच्छायामपि तत्सख्यन्तरत्वेन कल्पयति - बभूवेति | एवं दीधितिवदेव |
35894 यो विशेषस्तमाह - सूचीवेति | तया सूच्या सा छायासूची पश्चात्कृता
35895 पृष्ठरक्षिका कृतेव || १३ ||
35896
35897 सूच्या तया सुनिर्गत्य सुपाताक्ष्यः स्म कूणितैः |
35898 पश्चात्सख्याभया साधुरन्योन्याचारकेवलम् || १४ ||
35899
35900 तासां तिसृणां सूचीनां परस्परशिरोमूलग्रन्थने
35901 परस्परविष्टम्भात्परस्परानुकूल्याचरणमिव वृत्तमित्युत्प्रेक्षते -
35902 सूच्येति | पश्चात्सख्या आभया सूर्यदीधित्या तया लोहसूच्या द्वारभूतया सुप्रु
35903 निर्गत्य सुपाताक्ष्या दीधीतिषुपात एव अक्षि नेत्रं यस्यास्तस्या छायासूच्या सह
35904 कूणितैर्ग्रथनैः | छायासूचीमूलग्रथनेन सह गणनाद्बहुत्वम् |
35905 अन्योन्याचारके परस्पराचरणीये स्थैर्यसाहाय्ये बलं दार्ढ्यं कृतमिति
35906 शेषः | स्म किल | अतः स आचारः साधुरित्यर्थः || १४ ||
35907
35908 सूच्याभिप्रेक्षिते याता मतिं द्रुमलतादयः |
35909 महातपस्विनीं सूचीं दृष्ट्वा नोत्कण्ठयन्ति के || १५ ||
35910
35911 एवं तपस्यन्त्याः सूच्याः अभिप्रेक्षिते पुरोदर्शनचिषये द्रुमलतादयोऽपि मतिं
35912 सद्बुद्धिं याताः प्राप्ताः | रतिम् इति पाठे स्पष्टम् || १५ ||
35913
35914 स्थिरबद्धपदामेनां स्वमनोवृत्तिमुत्थिताम् |
35915 अनिलं भोजयांचक्रुर्मुखनिर्गतभांकृतैः || १६ ||
35916
35917 तपोविषये स्थिरां स्वमनसो वृत्तिमिवोत्थितामेनां सूची द्रुमलतादयः
35918 स्वपुष्पफलादिवासितमनिलं वायुं भोजयांचकुरित्युत्प्रेक्षा |
35919 तस्यास्तद्भोजनसंभावने हेतुः - मुखनिर्गतभांकृतैरिति | सशब्दं
35920 हि भोजनं पामरेषु प्रसिद्धमिति भावः || १६ ||
35921
35922 प्रसूतानि भविष्याणि गीर्वाणान्यानि वा चिरम् |
35923 कौसुमानि रजांस्यस्या इत्यास्यं पर्यपूरयन् || १७ ||
35924
35925 दैवाद्द्रुमलताभिः कुसुमरजोभिः कृतं सूचीविलपिधानमुत्प्रेक्षते -
35926 प्रसूतानीति | यानि प्राक्प्रसूतानि यानि च भविष्याणि यानि गीर्वाणेभ्यो
35927 देवेभ्योऽन्यानि | अदेवतार्थानीत्यर्थः | तानि सर्वाणि कौसुमानि रजांसि अस्यै
35928 सूच्यै देयानीयु * * *? वेत्यर्थः || १७ ||
35929
35930 ततो महेन्द्रप्रहितं वातनुन्नामिषं रजः |
35931 तया त्वभ्रत्वव्याजेन न निगीर्णं मुखे विशत् || १८ ||
35932

35933 दैवाच्छिद्रे वातवुध्ना * * * * * *? रजसां
35934 प्रवेशं महेन्द्रकृतविघ्नत्वेन प्रविष्टानां यद्बहिर्निर्गमनं
35935 तत्तद्दियानि * * * *? न चोत्प्रेक्षते - तत इति द्वाभ्याम् |
35936 अभ्रत्वव्याजेन च्छिद्रत्वच्छ * *? स्थिते मुखे विशदपि तया न
35937
35938 न निगीर्णवती तानि रजांसि दृढनिश्चयात् |
35939 अन्तःसारतया कार्यं लघवोऽप्याप्नुवन्ति हि || १९ ||
35940
35941 कार्य तपोविघ्ननिवारणलक्षणं प्रयोजनम् || १९ ||
35942
35943 न पिबत्यास्यसंस्थानि तथा पुष्परजांस्यपि |
35944 विस्मयं पवनः प्राप सुमेरून्मूलनाधिकम् || २० ||
35945
35946 आशिरः पिहिता पङ्कैः पूरितापि महाजलैः |
35947 विधूतापि बृहद्वातैर्दग्धापि वनवह्निभिः || २१ ||
35948
35949 एवं विप्रान्तरैरपि सा न क्षुभितेत्याह - भाशिर इत्यादिना || २१ ||
35950
35951 भिन्नापि करकापातैर्भ्रामितापि तडिद्भ्रमैः |
35952 उद्वेजितापि जलदैः क्षोभिताप्यतिगर्जितैः || २२ ||
35953
35954 अपि वर्षसहस्रैः सा चित्तस्थदृढनिश्चया |
35955 पादाग्रं तु कुसुप्तेव नाकम्पत तपस्विनी || २३ ||
35956
35957 कुसुमा विषमूर्च्छादिषुवेव | पादार्थ सूच्यग्रमात्रम् | अणुमात्रमपीत्यर्थः
35958 | तुशब्दोऽप्यर्थे || २३ ||
35959
35960 निवृत्ताया बहिःस्पन्दाद्देशकाले वह्नौ गते |
35961 विचारयन्त्यास्तस्याः स्वमात्मा सत्यं सुचेतनम् || २४ ||
35962
35963 तपस्यन्त्यास्तस्याः पापक्षयाचिरं चित्तंकाभ्याच विचारपूर्वकं
35964 ज्ञानमुत्पन्नमित्याह - निवृत्ताया इत्यादिना | सत्यं शुचेतनं स्तं
35965 विचारयन्त्यस्तस्या आत्मैव ज्ञानां लोकस्तत्साक्षात्कारवृत्तिद्धबोधात्मा
35966 समुदभूदित्यर्थः || २४ ||
35967
35968 ज्ञानालोकः समुदभूत्सा परावरदर्शिनी |
35969 बभूव निर्मला सुच्चिर्विषूची पावनं परम् || २५ ||
35970
35971 जाता विदितवेद्या सा स्वयमेव तया धिया |
35972 तपसा दुष्कृते क्षीणे सूची स्वसुखसूचिनी || २६ ||
35973
35974 इति वर्षसहस्राणि साकरोद्दारुणं तपः |
35975 सप्तसप्तमहालोकसंतापकरमुन्मुखी || २७ ||
35976
35977 सप्तवर्षसहस्राणि सप्तसप्तानां चतुर्दशानां महतां भूरादिलोकानां
35978 संतापकरं तपः | उन्मुखी ऊर्ध्वमुखी || २७ ||
35979
35980 तस्याः कल्पाग्निभीमेन तपसा हि महागिरिः |
35981 बभूव तेन ज्वलितो जज्वालेव ततो जगत् || २८ ||
35982
35983 प्। ३०८) १८८
35984

35985 कस्येदं तपसाक्रान्तं जगदित्यथ वासवः।
35986 नारदं परिपप्रच्छ स तस्याकथयच्च तत्॥ २९॥
35987
35988 तत्सूचीतपः॥ २९॥
35989
35990 सप्तवर्षसहस्राणि सूची दीर्घतपस्विनी।
35991 महाविज्ञानदेहासौ तेनेदं ज्वलितं जगत्॥ ३०॥
35992
35993 नागाः श्वसन्ति विचलन्ति नगाः पतन्ति
35994 वैमानिका जलधिवारिधराः प्रयान्ति।
35995 शोषं दिशोऽर्कसहिता मलिनीभवन्ति
35996 सूच्याः सुरेन्द्र तपसा क्षयमाययेव॥ ३१॥
35997
35998 जलधयो वारिधराश्च शोषं प्रयान्ति॥ ३१॥
35999
36000 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे क०
36001 सूचीतपःप्रभावो नाम द्विसप्ततितमः सर्गः॥ ७२॥
36002
36003 इतिश्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे सूचीतपः
36004 प्रभावो नाम द्विसप्ततितमः सर्गः॥ ७२॥
36005
36006
36007 त्रसप्ततितमः सर्गः ७३
36008
36009 श्रीवसिष्ठ उवाच।
36010
36011 कर्कटीकटुवृत्तान्तं सर्वमाकर्ण्य वासवः।
36012 नारदं परिपप्रच्छ पुनर्जातकुतूहलः॥ १॥
36013
36014 जीवसूच्या इह पुनर्वर्ण्यते भोगविस्तरः।
36015 ततश्चान्वेषणं वायोः सर्वतः शक्रचोदनात्॥ १॥
36016
36017 कर्कट्याः कटुमप्रियं तपोवृत्तान्तम्। जीवसूचीभोगप्रकारश्रवणे
36018 जातकुतूहलः॥ १॥
36019
36020 शक्र उवाच।
36021
36022 सूचीवृत्तपिशाचत्वं तपसोपार्ज्य तत्तया।
36023 कर्कट्या हिममर्कट्या के भुक्ता विभवा मुने॥ २॥
36024
36025 सूचीव वृत्तं पिशाचत्वमिव अदृश्यं जीवसूचित्वम्। हिमसंबन्धादिव
36026 प्राप्तजाड्यबुद्ध्या मर्कटीव तुच्छभोगचपलया कर्कट्या॥ २॥
36027
36028 श्रीनारद उवाच।
36029
36030 जीवसूच्याः पिशाचत्वं गतायाः शक्र पेलवम्।
36031 आसीत्कार्ष्णायसी सूची तस्याः समवलम्बनम्॥ ३॥
36032
36033 समवलम्बनमाश्रयः॥ ३॥
36034
36035 तत्समालम्बनं त्यक्त्वा व्योमवातरथस्थया।
36036 प्राणमारुतमार्गेण तया देहप्रविष्टया॥ ४॥

36037
36038 कदाचित्तस्या लोहसूच्याः समालम्बनं त्यक्त्वा व्योमवात आकाशगो
36039 वायुस्तद्रूपरथारूढया तया ॥ ४ ॥
36040
36041 सर्वेषामान्त्रतन्त्रीणां स्नायुमेदोवसासृजाम् ।
36042 रन्ध्रेण पक्षिणेवान्तर्निलीनं मलिनात्मनाम् ॥ ५ ॥
36043
36044 तया जीवसूच्या मलिनात्मना पापिनामन्त्रतन्त्र्यादीनां रन्ध्रेण प्रविश्य
36045 देहान्तर्निलीनं चिरं निलीय स्थितमित्यर्थः ॥ ५ ॥
36046
36047 यस्यां नाड्यां नभोवायुर्माति तत्तामुपेतया ।
36048 तत्र शूलं कृतं स्थूलन्यग्रोधाय इवोत्कटम् ॥ ६ ॥
36049
36050 नाड्यां शिरायाम् । नभोवायुः रोगाश्रयबाह्यवायुर्माति संमितो भवति ।
36051 तत्तां तादृशप्रवहताम् । तत्र नाड्याम् । शूलं शूलाख्या वेदना । यथा
36052 स्थूलस्य श्रीदक्षिणामूर्तेर्न्यग्रोधस्य नाडीनामग्रे शैवं शूलं कृतं
36053 विषक्तं तद्वत् ॥ ६ ॥
36054
36055 तच्छरीरेन्द्रियैस्तानि तथान्यानि बहूनि च ।
36056 भुक्तानि नरमांसानि भोजनान्युचितानि च ॥ ७ ॥
36057
36058 तेषां प्राणिनां शरीरेन्द्रियैः तत्प्राण्युचितभोजनानि भुक्तानि ॥ ७ ॥
36059
36060 सुप्तं विवलितान्ल्पमालया मुग्धबालया ।
36061 कान्तवक्षःस्थलस्यूतसृष्टपत्रकपोलया ॥ ८ ॥
36062
36063 विवलिताः कान्ताश्लेषामृदिता अनल्पा मालाः स्रजो यस्यास्तया मुग्धबालया ।
36064 तद्भावापन्नयेत्यर्थः । कान्तवक्षःस्थले स्यूतं कृतं सृष्टं
36065 संक्रामितं पत्रं याभ्यां तथाविधौ कपोलौ यस्यास्तया । तथाच
36066 मुग्धबालासुखमप्यनुभूतमेवेति भावः ॥ ८ ॥
36067
36068 विद्रुतं वीतशोकासु विहङ्ग्या वनवीथिषु ।
36069 कल्पद्रुमौघपुष्पाग्रद्विगुणाम्भोजपङ्क्तिषु ॥ ९ ॥
36070
36071 विहङ्ग्या विहङ्गशरीरप्रविष्टया वनवीथिषु पद्मवनश्रेणिषु
36072 कल्पद्रुमपुष्पश्रेष्ठेभ्यो द्विगुणामोदादिशालिपद्मपङ्क्तिष्वित्यर्थः ॥ ९ ॥
36073
36074 पीत आमोदमन्दारमकरन्दकणासवः ।
36075 वनेष्वमर"ऐलानामलिन्यामलिलीलया ॥ १० ॥
36076
36077 अलिन्यां प्रविष्टयेति शेषः ॥ १० ॥
36078
36079 चर्वितानि शवाङ्गानि गृध्र्याऽगर्तानि वृद्धया ।
36080 खड्गपृष्ठ्येव संग्रामे वीराङ्गानि जवेद्धया ॥ ११ ॥
36081
36082 गृद्ध्या गृध्रदेहप्रविष्टया आगर्तान्यापादितगर्तानि शवाङ्गानि ।
36083 खड्गपृष्ठ्या खड्गधारया । खड्गयष्ट्येव इति पाठे स्पष्टम् ॥ ११ ॥
36084
36085 सर्वाङ्गकोशनाडीषु दिक्ष्विवानिललेखया ।
36086 उड्डीनमवडीनं च काचौघव्योमवीथिषु ॥ १२ ॥
36087
36088 काचौघनीलासु व्योमवीथिषु ॥ १२ ॥

36089
36090 विराडात्महृदि प्राणवातस्पन्दाः स्फुरन्ति तु।
36091 यथा तथा प्रस्फुरितं प्रतिदेहगृहं तया॥ १३॥
36092
36093 समष्टिप्राणवातस्पन्दा यथा स्वच्छन्दं स्फुरन्ति तथा प्रस्फुरितम्॥ १३॥
36094
36095 सर्वप्राणिशरीरेषु भान्ति चिच्छक्तयस्तथा।
36096 दीपप्रभाभासितया गृहिण्येव स्वसद्मसु॥ १४॥
36097
36098 ननु प्रतिदेहगृहं तया केन प्रकाशेन व्यवहृतं तदाह [तमाह इति
36099 पाठः] - सर्वप्राणीति। सर्वप्राणिशरीरेषु यथा प्राणवाताः स्पन्दन्ते
36100 तथा चिच्छक्तयोऽपि भान्ति। अन्तःकरणोपाधिभेदाद्बहुवचनम्।
36101 अर्थात्तादृशचिच्छक्तिप्रभाभासितया तया दीपप्रभाभासितया गृहिण्या
36102 स्वसद्मस्विव व्यवहृतमित्यर्थः॥ १४॥
36103
36104 विहृतं रुधिरेष्वन्तर्द्रवशक्त्येव वारिषु।
36105 अब्धिष्वावर्तवृत्त्येव जठरेषु विवल्गितम्॥ १५॥
36106
36107 सुप्तं मेदःसु शुभ्रेषु शेषाङ्गेष्विव शौरिणा।
36108 स्वादितश्चाङ्गगन्धोऽन्तः पीतशक्त्यामृतं यथा॥ १६॥
36109
36110 पीतशक्त्या पानशक्त्या॥ १६॥
36111
36112 प्। ३०९)
36113
36114 तरुगुल्मौषधादीनां हृदौजान्यनिलश्रिया।
36115 परिभुक्तान्यशुक्लानि हिंसयोधीकृतानि च॥ १७॥
36116
36117 हृदि ओजयन्ति बलारोग्यादि जनयन्तीति हृदौजानि रसनिर्यासादीनि। अनिलश्रिया
36118 वायुरूपया। अशुक्लानि शुक्लेतरवर्णानि॥ १७॥
36119
36120 अथो जीवमयी सूची स्यामिति स्थावरेण सा।
36121 संपन्ना तापसी सूची चेतना पावनी सिता॥ १८॥
36122
36123 सैवेयं स्वसंकल्पा तपसि स्थैर्येण तापसी सती परमपावनी संपन्नेत्याह ##-
36124
36125 अदृश्यया तया चेह मारुतोग्रतुरंगया।
36126 अयःसूच्याऽनिलतया वहन्त्या दिक्ष्वरुद्धया॥ १९॥
36127
36128 अयःसूच्या करणेन अनिलतया वायुवेगेन वहन्त्या गच्छन्त्या॥ १९॥
36129
36130 पीतं भुक्तं विलसितं दत्तं दापितमाहृतम्।
36131 नर्तितं गीतमुषितमनन्तैः प्राणिदेहकैः॥ २०॥
36132
36133 अदृश्ययाऽशरीरिण्या मनःपवनदेहया।
36134 कृतमाकाशरूपिण्या न तदस्ति न यत्तया॥ २१॥
36135
36136 जीवसूच्याः पारमार्थिकरूपं मनसि निधायाह - अदृश्ययेति।
36137 समष्टिव्यष्टिमनःपवनदेहया सर्वं जगदेव कृतमिति भावः॥ २१॥
36138
36139 मत्तया शक्तयास्वादरसाच्वलितमेतया।
36140 कालमालानमाश्रित्य करिण्येव विवल्गितम्॥ २२॥

36141
36142 यद्येवंप्रभावा सा तर्हि तया सूचीभावे सर्वेऽपि कुतो न हिंसितास्तत्राह -
36143 शक्तयेति | शक्तयापि तया कतिपयप्राणिरक्ताद्यास्वादरसादेव मत्तया
36144 प्राण्यायुर्नियतिलक्षणं कालमालानं बन्धनस्तम्भमाश्रित्य
36145 करिण्येवाल्पप्रदेशेष्वेव विवल्गितं भ्रान्तमित्यर्थः || २२ ||
36146
36147 कल्लोलबहुलाधूतदेहदृष्टनदीष्वलम् |
36148 वेगैर्वैधुर्यकारिण्या मत्तया मकरायितम् || २३ ||
36149
36150 देहरूपासु दृष्टनदीषु प्रत्यक्षनदीषु | वैधुर्यं प्राणिनां देहवैधुर्य
36151 तत्कारिण्या || २३ ||
36152
36153 अशक्तया निगिरितुं मेदोमांसं तथा हृदि |
36154 नूनं रुदितमर्थाढ्यवृद्धातुरधिया यथा || २४ ||
36155
36156 हृदि स्वमनसि | अर्थेन धनेन आढ्यानां वृद्धानामातुराणां च धिया
36157 यथा भोजनाशक्त्या रुदितं तद्वत् || २४ ||
36158
36159 अजोष्ट्रमृगहस्त्यश्वसिंहव्याघ्रादिनर्तितम् |
36160 नर्तक्येव चिरं रङ्गे वलयाङ्गदमङ्गके || २५ ||
36161
36162 यथा नर्तक्या स्वाङ्गके वलयाङ्गदादिनर्तितं तथा
36163 स्वपीडितमजोष्ट्राद्यप्यनया नर्तितमित्यर्थः || २५ ||
36164
36165 बहिरन्तश्च वायूनामेकत्वमनुजातया |
36166 गन्धलेखिकयेवान्तः स्थितं दुर्बलया तथा || २६ ||
36167
36168 बहिः वातस्कन्धेषु | अन्तः प्राणेषु | दुर्बलया | वायुगतिपरवशयेति यावत् || २६
36169 | |
36170
36171 मन्त्रौषधितपोदानदेवपूजादिभिर्हता |
36172 बहिर्गिरिनदीतुङ्गतरङ्गवदुपद्रुता || २७ ||
36173
36174 बहिः उप समीपदेशे द्रुता पलायिता || २७ ||
36175
36176 दीपप्रभेवाविज्ञातगतिर्गत्याशु लीयते |
36177 अयःसूच्यां मातरीव तत्र निर्वृतिमेति सा || २८ ||
36178
36179 गत्या अन्तर्धानशक्त्या अविज्ञातगतिः | अयः सूच्यां लीयते | निर्वृतिं
36180 विश्रान्तिसुखम् || २८ ||
36181
36182 स्ववासनानुसारेण सर्व आस्पदमीहते |
36183 सूचित्वमेव राक्षस्या सूचीत्वेनास्पदीकृतम् || २९ ||
36184
36185 सर्वा विहृत्यापि दिशः स्वमेवास्पदमापदि |
36186 जीवसूची लोहसूचीमिवायाति जडो जनः || ३० ||
36187
36188 एवं प्रयतमाना सा विहरन्ती दिशो दश |
36189 मानसीं तृप्तिमायाता न शारीरीं कदाचन || ३१ ||
36190
36191 सति धर्मिणि धर्मा हि संभवन्तीह नासति |
36192 शरीरं विद्यते यस्य तस्य तत्किल तृप्यति || ३२ ||

36193

36194 अथ तृप्तस्य देहस्य स्मरणात्प्राक्तनस्य सा।
36195 बभूव दुःखितस्वान्ता पूर्णोदरसुखार्थिनी ॥ ३३ ॥
36196
36197 पूर्णोदरजन्यं यत्तृप्तिसुखं तदर्थिनी ॥ ३३ ॥
36198
36199 ततः प्राक्तनदेहार्थं करिष्ये विपुलं तपः।
36200 इति संचिन्त्य तपसे देशं निर्णीय सात्मना ॥ ३४ ॥
36201
36202 वेवेशाकाशगृध्रस्य हृदयं तरुणस्य सा।
36203 प्राणमारुतमार्गेण खं खगीव विलेशया ॥ ३५ ॥
36204
36205 आकाशगामिनो गृध्रस्य। सा जीवसूचिः। केन मार्गेण विवेश तमाह -
36206 प्राणेति। खं नीडच्छिद्रम्। बिलेशया नीडबिलशायिनी ॥ ३५ ॥
36207
36208 गृध्रः स्वामयसूचित्वं कश्चिदेतत्समाश्रितः।
36209 नितान्तप्रेरितः सूच्या कर्तुं मन उपाददे ॥ ३६ ॥
36210
36211 स्वामयसूचित्वं स्वान्तर्गतरोगसूचिभावमाश्रितः कश्चित्प्रागुक्तगृध्रः
36212 स्वप्रविष्टसूच्यभिलषितं कर्म कर्तुं मन उपाददे ॥ ३६ ॥
36213
36214 सूचीमादाय गृध्रोऽसौ ययौ तच्चिन्तितं गिरिम्।
36215 अन्तःसूचिपिशाच्यन्ते नुन्नोऽब्द इव वायुना ॥ ३७ ॥
36216
36217 सूचीं लोहसूचीम्। अन्तर्गतसूचिपिशाच्या अन्ते निवृत्तिकाले उपस्थिते सति ॥ ३७ ॥
36218
36219 तत्राजने महारण्ये स्थापयामास तामसौ।
36220 सर्वसंकल्परहिते पदे योगीव चेतनाम् ॥ ३८ ॥
36221
36222 चेतनां बुद्धिवृत्तिम् ॥ ३८ ॥
36223
36224 एकेनैवाशु सा तेन पादप्रान्तेन सुस्थिता।
36225 संप्रतिष्ठापितेवद्रिमूर्ध्नि गृध्रेण देवता ॥ ३९ ॥
36226
36227 गृध्रेणाद्रिमूर्ध्नि संप्रतिष्ठापिता देवताप्रतिमेव सुस्थिता लोहसूची
36228 बभूवेत्यर्थः ॥ ३९ ॥
36229
36230 रजःकणगृहस्थाणुशिरस्येकेन सानुना।
36231 पादेनातिष्ठदुद्ग्रीवं शिखीव गिरिमूर्धनि ॥ ४० ॥
36232
36233 रजःकण एव गृहं तत्स्थस्याणोः शिरसि एकेन अणुना सूक्ष्मतमेन
36234 पादेनाग्रेण। शिखी अग्निरिव। उद्ग्रीवं शिखीव इति पाठे तु मयूर इव ॥ ४० ॥
36235
36236 [उज्जिह्वं शिखीव इति पाठः साधीयान्। शिखी अग्निरिव इति
36237 व्याख्यानुरोधात्]
36238
36239 प्। ३१०) १८९
36240
36241 उत्थितां स्थापितां सूचीं गृध्रेण जीवसूचिका।
36242 दृष्ट्वा बहिर्विनिर्गन्तुं खगदेहात्प्रचक्रमे ॥ ४१ ॥
36243
36244 खगदेहान्निर्जगाम सूची प्रोन्मुखचेतना।

36245 पवनाद्गन्धलेखेव घ्राणवातलवोन्मुखी ॥ ४२ ॥
36246
36247 प्रोन्मुखी निर्गमनोत्सुका चेतना बुद्धिर्यस्याः ॥ ४२ ॥
36248
36249 जगाम गृध्रः स्वं देशं भारं त्यक्त्वेव भारिकः ।
36250 निवृत्तव्याधिरिव स बभूवान्तरनाकुलः ॥ ४३ ॥
36251
36252 निवृत्तव्याधिः पुरुष इव अनाकुलः स्वस्थः ॥ ४३ ॥
36253
36254 अतः सूचिस्तयाधारस्तपसे परिकल्पिता ।
36255 दृढः सुसदृशोऽर्थानां विनियोगो हि राजते ॥ ४४ ॥
36256
36257 अतो वक्ष्यमाणहेतुतः । सूचिर्लोहसूचिः । तया जीवसूच्या ॥ ४४ ॥
36258
36259 न ह्यमूर्तस्य सिद्ध्यन्ति विनाधारं किल क्रियाः ।
36260 इत्याधारैकनिष्ठत्वमाश्रित्यासौ तपःस्थिता ॥ ४५ ॥
36261
36262 जीवसूची लोहसूचीं पिशाची शिंशपामिव ।
36263 सर्वतो वलयामास वात्येवामोदलेखिकाम् ॥ ४६ ॥
36264
36265 वलयामास व्याप्तवती ॥ ४६ ॥
36266
36267 ततस्ततः प्रभृत्येषा सूची दीर्घतपस्विनी ।
36268 अरण्यान्यां स्थिता शक्र तत्र वर्षगणान्बहून् ॥ ४७ ॥
36269
36270 तस्या वरार्थं यत्नं त्वं कुरु कर्तव्यकोविद ।
36271 चिरेण संभृतं लोकमलं दग्धुं हि तत्तपः ॥ ४८ ॥
36272
36273 वरार्थं तुच्छवरेण वञ्चनार्थम् ॥ ४८ ॥
36274
36275 श्रीवसिष्ठ उवाच ।
36276
36277 इति नारदतः श्रुत्वा शक्रः सूचीनिरीक्षणे ।
36278 मारुतं प्रेषयामास दशदिङ्मण्डलान्यथ ॥ ४९ ॥
36279
36280 जगामाथ मरुत्संविदात्मना तामवेक्षितुम् ।
36281 अथामुच्य नभोमार्गं विचचार त्वरान्वितः ॥ ५० ॥
36282
36283 मरुतः संवित् दिव्यदृष्टिलक्षणं ज्ञानं तामवेक्षितुं दिशो जगाम ।
36284 गन्तुं दिव्यदृशा दिशः पर्यालोचितवानित्यर्थः । नभोमार्गमामुच्य
36285 विचचार भूमाविति शेषः ॥ ५० ॥
36286
36287 सा तस्य संविक्षिप्रार्धेनैव सर्वगता सती ।
36288 परमार्चिरिवाविघ्नं सहसैव ददर्श ह ॥ ५१ ॥
36289
36290 क्षिप्रा त्वरावती । अर्धेनैकांशेनैव सर्वगता सर्वदिक्पर्यालोचनपरा सती
36291 परमं सर्वोत्कृष्टं अर्चिर्ब्रह्मज्योतिरिव । अविघ्नमप्रतिबन्धम् ॥ ५१ ॥
36292
36293 भूमेः सप्तसमुद्रान्ते निबद्धां विपुलस्थलीम् ।
36294 लोकालोकाद्रिरसनां ततो मणिमयोपमम् ॥ ५२ ॥
36295
36296 सर्वं ददर्शेत्युक्तमेव प्रपञ्चयति - भूमेरित्यादिना । विपुलस्थलीं

36297 प्राणिशून्यकाञ्चनभूमिम् | अत्र द्वीपाम्भोधिक्रमः प्रागुक्तक्रमेण वा
36298 ब्रह्माण्डान्तरत्वादत्रत्यक्रमेण वा बोध्यः || ५२ ||
36299
36300 स्वादूदकाब्धिवलयं सकोटरककुब्गणम् |
36301 पुष्करद्वीपवलयं तदन्तर्गिरिमण्डले || ५३ ||
36302
36303 कोटरशब्देन पर्वतसंधिस्था देशा उच्यन्ते || ५३ ||
36304
36305 मदिराम्भोधिवलयं तज्जलेचरसंस्थितम् |
36306 गोमेदद्वीपकटकं तन्मध्यविषयव्रजम् || ५४ ||
36307
36308 तज्जलेचरैः संस्थितमाश्रितम् | अनेन तत्रत्यप्राणिनां
36309 जलस्थलोभयसंचारसामर्थ्यं गम्यते || ५४ ||
36310
36311 इक्षूदकाब्धिपरिखं शान्तं गिरिगणान्तरम् |
36312 क्रौञ्चद्वीपोर्वरापीठं शान्तं गतगिरिक्रमम् || ५५ ||
36313
36314 शान्तं निरुपद्रवम् || ५५ ||
36315
36316 क्षीराब्धिमुक्तावलयं समध्यगतनायकम् |
36317 श्वेताख्यद्वीपवलयं सभूतप्रविभागकम् [संभूत इति
36318 पाठः] || ५६ ||
36319
36320 क्षीराब्धिरेव मुक्ताखचितवलयो यस्य तत् | मध्यगतेन त्रैलोक्यनायकेन
36321 विष्णुना सहितम् | प्रविभागा अवान्तरखण्डभेदाः || ५६ ||
36322
36323 ततो घृतोदवलयस्वान्तस्थपुरमन्दिरम् |
36324 कुशद्वीपवृतिव्याप्तं समहाशैलकोटरम् || ५७ ||
36325
36326 दध्यम्भोराशिरशनासान्ताम्बरपुरोदरम् |
36327 शाकद्विपोर्वराकारं सान्तस्थविषयान्तरम् || ५८ ||
36328
36329 रसनया सान्तं साबधिकमम्बरं पुरोदरं यस्य || ५८ ||
36330
36331 क्षाराम्भोराशिपरिधिं सान्तस्थविषयान्तरम् |
36332 जम्बूद्वीपे महामेरुं कुलपर्वतसंकुलम् || ५९ ||
36333
36334 विषयशब्देन तद्वासिनो जना लक्ष्यन्ते || ५९ ||
36335
36336 वातस्कन्धेभ्य एवादौ पतितानिलवेदना |
36337 क्रमेणानेन पर्यन्ते तेनैव प्रसृतोऽञ्जसा || ६० ||
36338
36339 पतिता अवतीर्णा प्रागुक्ता वायोः संवित् | अनेन स्वसंविदवतारक्रमेण
36340 प्रसृतोऽवतीर्णो वायुः || ६० ||
36341
36342 वायुरालोकयन्नद्धा जम्बूद्वीपं निरीक्ष्य च |
36343 तत्प्राप हिमवच्छृङ्गं यत्र सूची तपस्विनी || ६१ ||
36344
36345 यत्र सा तपस्विनी सूचीस्थिता तामरण्यानीं वायुरवाप | प्राणिकर्मभिः
36346 प्राणिसंचारैः || ६१ ||
36347
36348 शृङ्गमूर्ध्नि महत्युग्रे सारण्यानीमवाप ताम् |

36349 द्वितीयाकाशविततां वर्जितां प्राणिकर्मभिः ॥ ६२ ॥
36350

36351 असंजाततृणव्यूहां निकटत्वाद्विवस्वतः ।
36352 रजोमयीमेव ततां संसाररचनामिव ॥ ६३ ॥
36353

36354 निकटत्वादिति । अनेन शिखरौन्नत्यातिशयो गम्यते । रजोमयीं पांसुप्रचुरां
36355 रजोगुणविकारभूतां च । एवमन्ये अपि विशेषणे
36356 अरण्यानीसंसाररचनासाधारणे बोध्ये ॥ ६३ ॥
36357

36358 मृगतृष्णानदीसार्थपूरणीयाब्धितां गताम् ।
36359 शक्रकोदण्डसंकाशमृगतृष्णासरिच्छताम् ॥ ६४ ॥
36360

36361 अमितानन्तपर्यन्तां लोकपालेक्षितैरपि ।
36362 केवलं पवनस्पन्दप्रवहद्धूलिकुण्डलाम् ॥ ६५ ॥
36363

36364 लोकपालानामिन्द्रादीनामीक्षितैर्दृष्टिभिरप्यमिता इयत्तयानवधारिता अनन्ताः
36365 पर्यन्ता अवान्तरप्रदेशभेदा यस्याम् । पार्श्वद्वये वात्या पवनस्पन्देन
36366 प्रवहद्भूलिपटले एव कुण्डले यस्याः । एतदादिविशेषणैररण्यानी
36367 व्योमविलासिनीत्वेनोत्प्रेक्ष्यते ॥ ६५ ॥
36368

36369 सूर्यांशुकुङ्कुमालिप्तां लग्नचन्द्रांशुचन्दनाम् ।
36370 विलासिनीमिव व्योम्नो वातसूत्कारपायिनीम् ॥ ६६ ॥
36371

36372 कान्तालिङ्गनसुखव्यञ्जकोध्वनिः सूत्कारस्तं पाययति श्रावयति तच्छीलाम् ॥
36373 ६६ ॥
36374

36375 प्। ३११) १८९
36376

36377 सप्तद्वीपसमुद्रमुद्रणसमुच्छन्नैकदेशाश्रयं
36378 भूपीठं परितो विहृत्य पवनो दीर्घाध्वना जर्जरः ।
36379 तां प्राप्योग्रगिरिस्थलीमलिवपुर्व्योमाङ्गलग्नामिव
36380 व्याप्तानन्तदिगन्तपूरकबृहद्देहो विशश्राम सः ॥ ६७ ॥
36381

36382 व्याप्तानन्तदिगन्तपूरकबृहद्देहः स पवनः सप्तभिर्द्वीपैः ससमुद्रैश्च
36383 मुद्रणेन लाञ्छनेन सम्यक् उत् उपरिभागे छन्नस्य
36384 व्याप्तस्यैकदेशस्याश्रयं भूलक्षणं पीठं परितो विहृत्य
36385 दीर्घेणाध्वना जर्जरः श्रान्तः सन् अलिसदृशवपुषो व्योम्नः अङ्गे
36386 लग्नामिव स्थितां तामुग्रगिरिस्थलीं प्राप्य विशश्राम विश्रान्तिं
36387 प्रापेत्यर्थः ॥ ६७ ॥
36388

36389 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे
36390 सूचीतपोवर्णनं नाम त्रिसप्ततितमः सर्गः ॥ ७३ ॥
36391

36392 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे सूचीतपो
36393 वर्णनं नाम त्रिसप्ततितमः सर्गः ॥ ७३ ॥
36394

36395

36396 चतुःसप्ततितमः सर्गः ७४
36397

36398 श्रीवसिष्ठ उवाच ।
36399

36400 तस्य तत्रोर्ध्वशृङ्गस्य तस्यां भुवि महावनौ ।

36401 ददर्श मध्यमां सूचीं प्रोत्थितां सशिखामिव ॥ १ ॥
36402
36403 दृष्ट्वाअ तां तापसीं सूचीं वायोः शक्रान्तिके गतिः ।
36404 वरार्थं प्रार्थनं धातुर्ज्ञानं सूच्याश्च वर्ण्यते ॥ १ ॥
36405
36406 महती वनी प्राग्वर्णितारण्यानी यस्यां सा महावनिस्तथाविधायां भुवि ।
36407 गोस्त्रियोरुपसर्जनस्य इति ह्रस्वः । शृङ्गस्य मध्यमां शिखामिव ॥ १ ॥
36408
36409 एकपादं तपस्यन्तीं शुष्यन्तीं शिर-ऊष्मणा ।
36410 सततानशनां शुष्कपिण्डीभूतोदरत्वचम् ॥ २ ॥
36411
36412 स तत इति पाठे स ततो ददर्शेति पूर्वेणान्वयः । पिण्डीभूतोदरत्वचमिव ।
36413 सूच्या उदरत्वगसंभवात् ॥ २ ॥
36414
36415 सकृद्विकसितास्येन गृहीत्वेवातपानिलान् ।
36416 पश्चात्त्यजन्तीं हृदये मे न मान्तीत्यनारतम् ॥ ३ ॥
36417
36418 आतपाननिलांश्च । तेमयावेकवचनस्य इत्यत्र अपादादावित्यधिकारात्पादादौ
36419 मे इत्यादेशश्छान्दसः ॥ ३ ॥
36420
36421 शुष्कां चण्डांशुकिरणैर्जर्जरां वनवायुभिः ।
36422 अचलन्तीं निजात्स्थानात्स्नापितामिन्दुरश्मिभिः ॥ ४ ॥
36423
36424 पूर्वं रजोणुनैकेन संविष्टच्छन्नमस्तकाम् ।
36425 कृतार्थत्वं कथयतीं ददतान्यस्य नास्पदम् ॥ ५ ॥
36426
36427 सूचीमस्तके रजोन्तराऽसमावेशादन्यस्य रजोजातीयस्य रजोगुणस्य
36428 तत्सहचरिततमसोऽप्यास्पदं न ददता रजोणुना लिङ्गेन कृतार्थत्वं
36429 कथयतीमिवानुमापयन्तीम् ॥ ५ ॥
36430
36431 अरण्यान्येव दत्त्वार्थं चिरं जातशिखामिव ।
36432 मूर्ध्न्यवस्थापितप्राणजटाजूटवलीमिव ॥ ६ ॥
36433
36434 पूर्वोक्तया अरण्यान्या स्वीयतरुगुल्ममृगादिरूपमर्थं स्वविभवं
36435 अरण्यान्तरेभ्यो दत्त्वा चिरं तपसा सूच्यात्मना जातां जनितां शिखां
36436 चूडामिव स्थिताम् । ततोऽपि योगपरिपाकान्मूर्ध्नि अवस्थापितप्राणानां
36437 जटाजूटस्य वलीं संवलनामिव स्थिताम् । सूच्यास्तप उपक्रमे
36438 सूक्ष्मत्वादरण्यानीशिखात्वेनोत्प्रेक्षा । चिरेण तपस्तेजसो बहलीभावेन
36439 पुञ्जीभावविवक्षया तु तज्जटाजूटवलित्वेनोत्प्रेक्षेति बोध्यम् । आद्य इवशब्द
36440 उत्प्रेक्षाद्योतकः । इतरौ तु औत्प्रेक्षिकोपमानार्थौ ॥ ६ ॥
36441
36442 तां प्रेक्ष्य पवनः सूचीं विस्मयाकुलचेतनः ।
36443 प्रणम्यालोक्य सुचिरं भीतभीत इवागतः ॥ ७ ॥
36444
36445 देवानामपि ब्रह्मविदो वन्द्या इति द्योतनायोक्तं प्रणम्येति । भीतभीतो
36446 भृशं भीत इव ॥ ७ ॥
36447
36448 महातपस्विनी सूची किमर्थं तप्यते तपः ।
36449 नेति प्रष्टुं शशाकासौ तत्तेजोराशिनिर्जितः ॥ ८ ॥
36450
36451 इति प्रष्टुं न शशाकेति योजना ॥ ८ ॥
36452

भगवत्या महासूच्या अहो चित्रं महातपः।
इत्येव केवलं ध्यायन्मारुतो गगनं ययौ॥ ९॥

समुल्लङ्घ्याभ्रमार्गं तु वातस्कन्धानतीत्य च।
सिद्धवृन्दानधः कृत्वा सूर्यमार्गमुपेत्य च॥ १०॥

ऊर्ध्वमेत्य विमानेभ्यः प्राप शक्रपुरान्तरे।
सूचीदर्शनपुण्यं तमालिलिङ्ग पुरंदरः॥ ११॥

विमानेभ्यो वैमानिकप्रधाननक्षत्रलोकेभ्यः। सूचीदर्शनेन पुण्यं
पवित्रीभूतम्॥ ११॥

पृष्टश्च कथयामास दृष्टं सर्वं मयेत्यसौ।
सहदेवनिकायाय शक्रायास्थानवासिने॥ १२॥

वायुरुवाच।

जम्बूद्वीपेऽस्ति शैलेन्द्रो हिमवान्नाम सून्नतः।
जामाता यस्य भगवान्साक्षाच्छशिकलाधरः॥ १३॥

तस्योत्तरे महाशृङ्गपृष्ठे परमरूपिणी।
स्थिता तपस्विनी सूची तपश्चरति दारुणम्॥ १४॥

परमरूपिणी महातेजस्विनी॥ १४॥

बहुनात्र कुमुक्तेन वाताद्यशनशान्तये।
यया स्वोदरसौषिर्यं पिण्डीकृत्वा निवारितम्॥ १५॥

पिण्डीकृत्वा लोहघनतां संपाद्य। समासस्याविवक्षणान्न ल्यप्॥ १५॥

शान्तसंकोचसूक्ष्मार्थं विकास्यास्यं रजोणुना।
तयाद्य स्थगितं शीतवाताशननिवृत्तये॥ १६॥

तया शीतस्य वातस्याप्यशनस्य ग्रसनस्य निवृत्तये शान्तसंकोचं
निवारितसंकोचनं सूक्ष्मार्थं अत्यल्पच्छिद्रमास्यं विकास्य रजोणुना
स्थगितं पिहितम्॥ १६॥

तस्यास्तीव्रेण तपसा तुहिनाकरमुत्सृजन्।
अग्न्याकारमयो गृह्णन् देव दुःसेव्यतां गतः॥ १७॥

तुहिनाकरमिति भावप्रधानो निर्देशः।
तपोग्निद्रावितशिलानामयःपिण्डात्मतासंपत्तेरग्न्याकारं अयो गृह्णन्
सशपथं तुहिनाकरतां त्यजन्निति भावः। दुःसेव्यतां गतो हिमवानिति
शेषः। अगो गृह्णन् इति पाठे तु स्पष्टम्॥ १७॥

प्। ३१२) १९०

तदुत्तिष्ठाशु गच्छामः सर्व एव पितामहम्।
तद्वरार्थमनर्थाय विद्धि तत्सुमहत्तपः॥ १८॥

अनर्थाय उपेक्षितमिति शेषः॥ १८॥

इति वातेरितः शक्रः सहदेवगणेन सः ।
जगाम ब्रह्मणो लोकं प्रार्थयामास तं विभुम् ॥ १९ ॥

सूच्या वरमहं दातुं गच्छामि हिमवच्छिरः ।
ब्रह्मणेति प्रतिज्ञाते शक्रः स्वर्गमुपाययौ ॥ २० ॥

एतावताथ कालेन सा बभूवातिपावनी ।
सूची निजतपस्तापतापितामरमन्दिरा ॥ २१ ॥

एतावता सप्तसहस्रवर्षपरिमितेन ॥ २१ ॥

मुखरन्ध्रस्थितार्कांशुदृशा स्वच्छाययैव सा ।
विकासिन्या विवर्तिस्था चोदितान्तमवेक्षिता ॥ २२ ॥

आसर्गसमाप्तेस्तत्तप एव वर्णयिष्यन्निर्जने कृतस्य सूचीतपसस्तच्छायैव
साक्षिणीत्याह - मुखेति । विवर्तिनि विजृम्भमाणे तपसि स्था स्थिता सा सूची
स्वच्छाययैव चोदितान्तं तत्संकल्पविदितकालमर्यादान्तं [विहित इति
पाठः] अवेक्षिता । केन कारणेन । विकासिन्या प्रसृतया मुखरन्ध्रे स्थितो
योऽर्कांशुरातपस्तल्लक्षणया दृशा दृष्ट्येत्यर्थः ॥ २२ ॥

कौशेयरूपया सूच्या मेरुः स्थैर्येण निर्जितः ।
मज्जनं नैति वृद्ध्वैवं मुक्तमाद्यन्तयोर्दिने ॥ २३ ॥

तर्हि तच्छायया संध्ययोर्निशि च किमर्थं तद्दर्शनं मुक्तं तत्राह -
कौशेयेति । कौशेयतन्तुवत्तुच्छरूपया लघ्व्या च सूच्या स्थैर्येण गुणेन
निर्जितो मेरुर्लज्जयाम्बुधौ मज्जनं नैति न प्राप्नोति किं इति काकुना द्योत्यते ।
एवमनेनाभिप्रायेण तद्द्रष्टुमिव दिने आद्यन्तयोर्भागयोर्वृद्ध्वा
दैर्घ्यमालाम्ब्य तद्दर्शनान्मुक्तमुपरतमिति यावत् ॥ २३ ॥

मध्याह्ने तापभीत्येव विशन्त्या मारुतान्तरम् ।
अन्यदा गौरवाद्दृष्ट्वा दूरतः प्रेक्षमाणया ॥ २४ ॥

तर्हि मध्याह्ने किमिति मूले निलीना तत्राह । मध्याह्ने इति । मारुतानां
सूचीप्राणामन्तरमवकाशभूतं सूच्युदरं विशन्त्या मुक्तमित्यनुषज्यते ।
गौरवात् सन्मानहेतोः ॥ २४ ॥

सा तमावेक्षते क्षारात्तापादङ्गं निमज्जति ।
संकटे विस्मरत्येव जनो गौरवसत्क्रियाम् ॥ २५ ॥

सा छाया । तां सूचीम् । क्षारात्तीक्ष्णात् । तापादातपात् । कथं तर्हि मध्याह्ने
गौरवत्यागस्तत्राह - संकटे इति ॥ २५ ॥

छयासूची तापसूची यश्चात्मा स तृतीयया ।
त्रिकोणं तपसा पूतं वाराणस्या समं कृतम् ॥ २६ ॥

यश्च आत्मा लोहसूची तेन सतृतीयया परस्परग्रथनान्तरालदेशरूपं
त्रिकोणं असी वरणा गङ्गा ग्रथनान्तरालस्थया वाराणस्या समं
कृतमित्यर्थः ॥ २६ ॥

गतास्तेन त्रिकोणेन त्रिवर्णपरिखावता ।
वायवः पांसवो येऽपि ते परां मुक्तिमागताः ॥ २७ ॥

शुष्कत्वेनामूर्ता श्यामा शुक्ला चेति त्रिवर्णसूचीसरिल्लक्षणपरिखावता।
मुक्तिं स्वसंसर्गिजनमुक्तिप्रयोजनतां दोषमुक्तिलक्षणां पावनतां वा॥
२७॥

विदितपरमकारणाद्य जाता
स्वयमनुचेतनसंविदं विचार्य।
स्वमननकलनानुसार एक-
स्त्विह हि गुरुः परमो न राघवान्यः॥ २८॥

विदितं साक्षात्कृतं परमकारणं ब्रह्म यया तथाविधा जाता।
चेतनसंविदं प्रत्यगात्मानं स्वयमनुविचार्य। ननु कस्तस्या गुरुस्तत्राह
- स्वेति। स्वस्य मननं युक्तिभिर्विचारस्तेन कलना
स्वात्मपरिचयस्तदनुसरणं तदनुसार एवैको मुख्यो गुरुः। अन्यो गुरुस्तु न
मुख्य इत्यर्थः। यद्यपि आचार्यवान्पुरुषो वेद इति श्रुतिराह तथापि सा
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मया सूक्ष्मदर्शिभिः इति
श्रुत्यन्तरानुसाराच्छिष्यप्रज्ञामेवानुसरतीति भावः॥ २८॥

इत्यार्षे श्रीवासिष्ठमहारामायणे उत्पत्तिप्रकरणे
सूचीतपःपरिपाकवर्णनं नाम चतुःसप्ततितमः सर्गः॥ ७४॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
सूचीतपःपरिपाकवर्णनं नाम चतुःसप्ततितमः सर्गः॥ ७४॥

पञ्चसप्ततितमः सर्गः ७५

श्रीवसिष्ठ उवाच।

अथ वर्षसहस्रेण तां पितामह आययौ।
वरं पुत्रि गृहाणेति व्याजहार नभस्तलात्॥ १॥

प्रसन्नेऽपि विधौ सूच्याः प्रबोधाज्जोषमासनम्।
तथाप्यस्या वराद्धातुर्देहोद्भूतिश्च कीर्त्यते॥ १॥

अथ प्रबोधानन्तरं वर्षसहस्रेण॥ १॥

सूची कर्मेन्द्रियाभावाज्जीवमात्रकलावती।
न किंचिद्व्याजहारास्मै चिन्तयामास केवलम्॥ २॥

कर्मेन्द्रियाभावे वागिन्द्रियस्याप्यभावात्। कर्मेन्द्रियाभावश्चास्याः
सूचीत्वात् प्रबोधबाधितत्वाच्च॥ २॥

पूर्णास्मि गतसंदेहा किं वरेण करोम्यहम्।
शाम्यामि परिनिर्वामि सुखमासे च केवलम्॥ ३॥

चिन्ताप्रकारमेव स्फुटमाह - पूर्णेत्यादिना॥ ३॥

ज्ञातं ज्ञातव्यमखिलं शान्ता संदेहजालिका।
स्वविवेको विकसितः किमन्येन प्रयोजनम्॥ ४॥

अखिलं ज्ञातम्। एकविज्ञानेन सर्वविज्ञानात्॥ ४॥

36609 यथा स्थितेयमस्मीह संतिष्ठेयं तथैव हि।
36610 सत्यासत्यकलामेव त्यक्त्वा किमितरेण मे॥ ५॥
36611
36612 सत्या परमार्थरूपा। तां सत्यकलामेव त्यक्त्वा इतरेण मिथ्यार्थेन किं न
36613 किंचिदित्यर्थः॥ ५॥
36614
36615 प्। ३१३) १९०
36616
36617 एतावन्तमहं कालमविवेकेन योजिता।
36618 स्वसंकल्पसमुत्थेन वेतालेनेव बालिका॥ ६॥
36619
36620 इदानीमुपशान्तोऽसौ स्वविचारणया स्वयम्।
36621 ईप्सितानीप्सितैरर्थः को भवेत्कलितैर्मम॥ ७॥
36622
36623 असौ अविवेकः। कलितैः प्राप्तैः॥ ७॥
36624
36625 इति निश्चययुक्तां तां सूचीं कर्मेन्द्रियोज्झिताम्।
36626 तूष्णीस्थितां सनियतिः स पश्यन्भगवान्स्थितः॥ ८॥
36627
36628 नियत्या कर्मफलावश्यंभावनियामकेश्वरसंकल्पेन सहितः। सनियतिः स
36629 पितामहः॥ ८॥
36630
36631 ब्रह्मा पुनरुवाचेदं वीतरागां प्रसन्नधीः।
36632 वरं पुत्रि गृहाण त्वं किंचित्कालं च भूतले॥ ९॥
36633
36634 किंचिदिति पदसंस्कारपक्षे सामान्ये नपुंसकम्॥ ९॥
36635
36636 भोगान्भुक्त्वा ततः पश्चाद्गमिष्यसि परं पदम्।
36637 अव्यावृत्तिस्वरूपाया नियतेरेष निश्चयः॥ १०॥
36638
36639 अव्यावृत्तिस्वरूपायाः अस्मदादिभिरपि निवर्तयितुमशक्यायाः प्रागुक्तनियतेः
36640 ॥ १०॥
36641
36642 तपसानेन संकल्पः सफलोऽस्तु तवोत्तमे।
36643 पीना भव पुनः शैले हिमकाननराक्षसी॥ ११॥
36644
36645 अनेन तपसा फलितेनेति शेषः। पीना अभिवृद्धशरीरा॥ ११॥
36646
36647 यया पूर्वं वियुक्तासि तन्वा जलदरूपया।
36648 बीजान्तर्वृक्षता पुत्रि बृहद्वृक्षतया यथा॥ १२॥
36649
36650 बीजान्तर्लीना वृक्षता जातिर्बृहद्वृक्षतया व्यक्त्या यथा वियुक्ता तथा यया
36651 तन्वा वियुक्तासि तया योगमेष्यसीति परेण संबन्धः॥ १२॥
36652
36653 योगमेष्यसि भूयश्च तन्वान्तर्बीजरूपिणी।
36654 तयैव रससेकेन लतयेवाङ्कुरस्थितिः॥ १३॥
36655
36656 ननु नष्टायाः कथं पुनरुद्भव इत्याशङ्क्याह - अन्तर्बीजरूपिणीति। न
36657 सा नष्टा किंतु सूच्यन्तरेव बीजभावेन लीनेति भावः॥ १३॥
36658
36659 बाधां विदितवेद्यत्वान्न च लोके करिष्यसि।
36660 अन्तःशुद्धा स्पन्दवती शारदीवाभ्रमण्डली॥ १४॥

36661
36662 लोकबाधाहेतुना मम किं तया तन्वा तत्राह - बाधामिति ॥ १४ ॥
36663
36664 अश्रान्तध्याननिरता कदाचिल्लीलया यदि ।
36665 भविष्यसि बहीरूपा सर्वात्मध्यानरूपिणी ॥ १५ ॥
36666
36667 यदि कदाचिद्बहीरूपा निर्विकल्पसमाधिव्युत्थिता भविष्यसि तदा न्यायेन
36668 भूतबाधां करिष्यसीति परेणान्वयः ॥ १५ ॥
36669
36670 व्यवहारात्मकध्यानधारणाधाररूपिणी ।
36671 वातस्वभाववद्देहपरिस्पन्दाद्विलासिनी ॥ १६ ॥
36672
36673 किं ध्यानधारणदीनां सत्यता नेत्याह - व्यवहारेति । एवं
36674 स्पन्दादिव्यवहारोऽपि न वास्तव इत्याशयेनाह - वातस्वभाववद्देहेति ॥ १६ ॥
36675
36676 तदा विरोधिनी पुत्रि स्वकर्मस्पन्दरोधिनी ।
36677 न्यायेन क्षुन्निवृत्त्यर्थं भूतबाधां करिष्यसि ॥ १७ ॥
36678
36679 स्वकर्म राक्षसोचितमशास्त्रीयहिंसादि तदेव स्पन्दस्तस्य रोधिनी ॥ १७ ॥
36680
36681 भविष्यसि न्यायवृत्तिर्लोके त्वन्यायबाधिका ।
36682 जीवन्मुक्ततया देहे स्वविवेकैकपालिका ॥ १८ ॥
36683
36684 इत्युक्त्वा गगनतलाज्जगाम देवः
36685 सूची सा भवतु ममेति किं विरोधः ।
36686 रागो वाब्जजवचनार्थवारणेऽस्मि-
36687 न्नित्यन्तः स्वतनुमयी मनाग्बभूव ॥ १९ ॥
36688
36689 देवो ब्रह्मा जगाम । सा सूची अचिन्तयत् । इति ब्रह्मणोक्तं मम भवतु नाम किं
36690 विरोधोऽस्ति नास्तीत्यर्थः । अब्जजवचनार्थस्य वरस्य वारणे मम रागो वा किं
36691 किमर्थ इति विचिन्त्य अन्तर्मनसि मनाक् स्वतनुमयी प्राक्तनस्वशरीराकारा
36692 बभूव ॥ १९ ॥
36693
36694 प्रादेशः प्रथममभूत्ततोऽपि हस्तो
36695 व्यामश्चाप्यथ विटपस्ततोऽभ्रमाला ।
36696 सोद्यत्स्वावयवलता बभौ निमेषा-
36697 त्संकल्पद्रुमकणिकाङ्कुरक्रमेण ॥ २० ॥
36698
36699 मानसकल्पनाक्रमेणैव स्थूलदेहाविर्भावमाह - प्रादेश इति । प्रादेशः
36700 प्रादेशप्रमाणो देहः । प्रमाणे लः इति द्वयसचो लुक् । एवमग्रेऽपि । विटपो
36701 वृक्षशाखाग्रप्रमाणः । ततो विस्तृतः । अभ्रमाला तत्प्रमाणः । एवं
36702 क्रमेण सा सूची निमेषात्स्वसंकल्पद्रुमकणिकाया बीजस्याङ्कुरक्रमेण
36703 उद्यत्स्वावयवलता सती बभौ ॥ २० ॥
36704
36705 तद्गात्राण्यविकलशक्तिमन्ति देहा-
36706 दुद्भूतान्यथ करणेन्द्रियाणि सम्यक् ।
36707 संकल्पद्रुमवनपुष्पवत्समन्ता-
36708 द्बीजौघान्यलमभवंस्तिरोहितानि ॥ २१ ॥
36709
36710 गात्राणि अङ्गानि करणानीन्द्रियस्थानानि इन्द्रियाणि च उद्भूतानि । प्राक्तिरोहितानि
36711 बीजौघभूतानि सन्ति तदा अलं पर्याप्तानि पुनराविर्भूतान्यभवन् । तथाच
36712 मनःकल्पनामूलकत्वान्मिथ्याभूतान्येवेत्यर्थः ॥ २१ ॥

36713
36714 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे
36715 सूच्युपाख्याने सूचीशरीरलाभो नाम पञ्चसप्ततितमः सर्गः ॥ ७५ ॥
36716
36717 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे सूचीशरीरलाभो
36718 नाम पञ्चसप्ततितमः सर्गः ॥ ७५ ॥
36719
36720
36721 षट्सप्ततितमः सर्गः ७६
36722
36723 श्रीवसिष्ठ उवाच।
36724
36725 अथाभवदसौ सूची कर्कटीराक्षसी पुनः।
36726 सूक्ष्मैव स्थौल्यमायाता मेघलेखेव वार्षिकी ॥ १ ॥
36727
36728 लब्ध्वा देहं समाधिस्था षण्मासा क्षुधितोत्थिता।
36729 कर्कटी वायुवचसा किरातविषय ययौ ॥ १ ॥
36730
36731 अथ सर्वावयवप्रादुर्भावानन्तरम् ॥ १ ॥
36732
36733 निजमाकाशमासाद्य किंचित्प्रमुदिता सती।
36734 बृहद्राक्षसभावं तद्बोधात्कञ्चुकवज्जहौ ॥ २ ॥
36735
36736 निजं स्वात्मभूतं ब्रह्माकाशं आसाद्य पुनः प्रतिसंधाय तस्य
36737 बोधात्साक्षात्काराच्चिरप्ररूढत्वाद्बृहद्राक्षसभावं जहौ ॥ २ ॥
36738
36739 प्। ३१४) १९१
36740
36741 तत्रैव ध्यायती तस्थौ बद्धपद्मासनस्थितिः।
36742 व्यालम्ब्य संविदं शुद्धां संस्थिता गिरिकूटवत् ॥ ३ ॥
36743
36744 शुद्धां निष्प्रपञ्चां संविदमात्मानं वृत्तिधारया व्यालाम्ब्य आश्रित्य
36745 ॥ ३ ॥
36746
36747 अथ सा मासषट्केन ध्यानाद्बोधमुपागता।
36748 महाजलदनादेन प्रावृषीव शिखण्डिनी ॥ ४ ॥
36749
36750 महाजलदनादेन बोधं समाधिव्युत्थानम्। शिखण्डिनीपक्षे कामोद्बोधम् ॥
36751 ४ ॥
36752
36753 प्रबुद्धा सा बहिर्वृत्तिर्बभूव क्षुत्परायणा।
36754 यावद्देहं स्वभावोऽस्य देहस्य न निवर्तते ॥ ५ ॥
36755
36756 अस्य देहस्य यावद्देहं यावदवस्थानं तावत्क्षुधादिस्वभावो न निवर्तते ॥ ५
36757 । ।
36758
36759 अथ सा किं ग्रस इति चिन्तयामास चिन्तया।
36760 भोक्तव्यः परजीवश्च न्यायेन न विना मया ॥ ६ ॥
36761
36762 चिन्तया चिन्तनहेतुना चित्तेन ॥ ६ ॥
36763
36764 यदार्यगर्हितं यद्वा न्यायेन न समर्जितम्।

36765 तस्माद्ग्रासाद्वरं मन्ये मरणं देहिनामिदम् ॥ ७ ॥
36766
36767 आर्यैः पूज्यैर्महद्भिर्यद्गर्हितं निन्दितम् ॥ ७ ॥
36768
36769 यदि देहं त्यजामीदं तन्न्यायोपार्जितं विना ।
36770 न किंचिदस्ति निर्न्यायं भुक्तोऽर्थो हि गरायते ॥ ८ ॥
36771
36772 न्यायोपार्जितं ग्रासं विना देहं यदि त्यजामि तदा निर्न्यायमन्याय्यं न
36773 किंचिदस्ति । अन्यायोपार्जितस्त्वर्थो भुक्तः सन् गरायते विषवदाचरति ।
36774 अनर्थकोटिषु पर्यवस्यतीति यावत् ॥ ८ ॥
36775
36776 यत्र लोकक्रमप्राप्तं तेन भुक्तेन किं भवेत् ।
36777 न जीवितेन नो मृत्या किंचित्कारणमस्ति मे ॥ ९ ॥
36778
36779 लोकसंमतः क्रमो लोकक्रमस्तेन यन्न प्राप्तम् । मृत्या मरणेन । कारणं
36780 इष्टमनिष्टं वा प्रयोजकम् ॥ ९ ॥
36781
36782 मनोमात्रमहं ह्यासं देहादिभ्रमभूषणम् ।
36783 तच्छान्तं स्वावबोधेन देहादेहदृशौ कुतः ॥ १० ॥
36784
36785 देहादेहदृशौ जीवनमरणभ्रमौ ॥ १० ॥
36786
36787 श्रीवसिष्ठ उवाच ।
36788
36789 एवं स्थिता मौनवती शुश्राव गगनाद्गिरम् ।
36790 रक्षःस्वरूपसंत्यागतुष्टेनोक्तां नभस्वता ॥ ११ ॥
36791
36792 रक्षःस्वरूपस्य तद्देहाभिमानस्य संत्यागाद्धेतोस्तुष्टेन नभस्वता
36793 वायुना ॥ ११ ॥
36794
36795 गच्छ कर्कटि मूढांस्त्वं ज्ञानेनाश्ववबोधय ।
36796 मूढोत्तारणमेवेह स्वभावो महतामिति ॥ १२ ॥
36797
36798 तां गिरं दर्शयति - गच्छेत्यादिना । मूढाननात्मज्ञान् । महतां
36799 तत्त्वविदाम् । इति हेतोः ॥ १२ ॥
36800
36801 बोध्यमानो भवत्यापि यो न बोधमुपैष्यति ।
36802 स्वनाशायैव जातोऽसौ न्याय्यो ग्रासो भवेत्तव ॥ १३ ॥
36803
36804 असौ मूढः । न्याय्यो न्यायादनपेतः ग्रासः कवलः ॥ १३ ॥
36805
36806 श्रुत्वेत्यनुगृहीतास्मि त्वयेत्युक्तवती शनैः ।
36807 उत्तस्थौ शैलशिखरात्क्रमादवरुरोह च ॥ १४ ॥
36808
36809 इति गिरं श्रुत्वा । त्वया वायुना । परमार्थदृशा अनुग्रहाभावात्तथा वक्तुं
36810 लज्जमानेव शनैरुक्तवती ॥ १४ ॥
36811
36812 अधित्यकामतीत्याशु गत्वा चोपत्यकातटान् ।
36813 विवेश शैलपादस्थं किरातजनमण्डलम् ॥ १५ ॥
36814
36815 अधित्यकां पर्वतोर्ध्वभागम् । उपत्यका पर्वतासन्नभूमिस्तत्तटान् । शैलस्य
36816 हिमवतः पादेषु प्रत्यन्तपर्वतेषु स्थितम् ॥ १५ ॥

वह्यन्नपशुलोकौघद्रव्यशष्पौषधामिषम् |
अनन्तमूलपानान्नमृगकीटखगादिकम् [मूलपानान्नेति पाठेऽन्नेति
पौनरुक्त्यम् पाठान्तरे तु मूलपा वृक्षाः | अदन्ता दन्तरहिताः
प्राणिविशेषाः | अनन्तमूलपादन्ता इति पाठः] || १६ ||

अन्नादीनां सप्तानां द्वन्द्वे बहुव्रीहिः | एवं मूलादीनामपि | शष्पाणि
बालतृणानि | आमिषाणि मांसानि || १६ ||

प्रचलितवलिताञ्जनाचलाभा
हिमगिरिपादनिवेशितं सुदेशम् |
तदनुगतवती निशाचरी सा
निशि सुघनान्धतमिस्रमार्गभूमौ || १७ ||

प्रचलितः प्रस्थितो यो वलिताञ्जनः कज्जललिप्तोऽचलस्तदाभासा निशाचरी हिमगिरेः
पादेषु निवेशितं सुदेशं गतवतीति संबन्धः || १७ ||

इत्यार्षे श्रीवासिष्ठमहारामायणे मोक्षोपायेषूत्पत्तिप्रकरणे
अन्यायबाधिको नाम षट्सप्ततितमः सर्गः || ७६ ||

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे अन्यायबाधिको
नाम षट्सप्ततितमः सर्गः || ७६ ||

सप्तसप्ततितमः सर्गः ७७

श्रीवसिष्ठ उवाच |

एतस्मिन्नन्तरे तत्र किरातजनमण्डले |
हस्तहार्यतमःपिण्डा बभूवासितयामिनी || १ ||

तमिस्रा वर्ण्यते पश्चाद्दर्शनं राजमन्त्रिणोः |
कर्कट्यास्तत्परीक्षार्थं प्रश्नेच्छा चात्र विस्तरात् || १ ||

तमः पिण्ड इव तमःपिण्डः | हस्तेन हर्तुं शक्यो हस्तहार्यः |
हस्तहार्यस्तमः पिण्डो यस्याम् | यामिनी रात्रिः || १ ||

नीलमेघपटच्छन्ना निरिन्दुगगनान्तरा |
तमालवनसंपिण्डा मांसलोड्डीनकज्जला || २ ||

तां रात्रिं कर्कटीसखी भूतराक्षस्यन्तररूपेण वर्णयति -
नीलमेघेत्यादिना | निरिन्दु अमृतलुण्ठनभयात्पलायितेन्दु गगनान्तरं यया |
तमालवनानि संपिण्डयति एकघनीकरोतीव तमालवनसंपिण्डा | मांसला
पुष्टा | सर्वत्रोड्डीनं श्यामीकुर्वत् नेत्रकज्जलं यस्याः || २ ||

लताघनतया ग्रामकोटरैकान्ध्यमन्थरा |
गृहचत्वरसंबाधे नगरे नवयौवना || ३ ||

गिरिग्रामेषु लतानां घनतया नक्षत्रज्योतिषोऽप्यप्रसरान्मुख्येनान्ध्येन
जरतीव मन्थरा कुण्ठितगतिः | गृहचत्वरैः संबाधे निबिडिते नगरे
नवयौवनेव दीपिकाभिः संचरन्ती || ३ ||

प्। ३१५) १९१

चत्वरेषु तमःपिण्डी प्रजिह्मीकृतदीपिका।
कुञ्चितच्छिद्रनिष्क्रान्ताऽदीपिकारोचिराजिता॥ ४॥

बहिश्चत्वरेषु वायुना प्रजिह्मीकृता वक्रीकृता दीपिका यया। अत एव तमांसि
पिण्डयतीति तमःपिण्डी। कुञ्चितानां कुटिलगवाक्षाणां छिद्रेभ्यो
निष्क्रान्तैरीषद्दीपिकारोचिर्भिः राजिता शोभमाना। आदीपिकारोचिरितीषदर्थे आङ्
ङ्लोप इति दीर्घाभावश्छान्दसः॥ ४॥

सुवयस्येव कर्कट्याः परिनृत्यत्पिशाचिका।
मत्तवेतालकङ्कालकाष्ठमौनमिवास्थिता॥ ५॥

सुवयस्या शोभमाना सखीव। मत्तवेतालानां कंकालादिहरणप्रसङ्गे
निवारणाभावात्काष्ठमौनं व्रतमास्थितेव॥ ५॥

सुषुप्तमृगभूतौघघननीहारहारिणी।
मन्दमन्दमरुत्स्पर्शलसत्प्रालेयसीकरा॥ ६॥

सुषुप्तैर्मृगादिप्राणिनिकायैर्घनैर्नीहारैश्च हारिणी अलंकृता॥ ६॥

सरःसु विवटद्वारि काकभेकतरङ्गिता।
अन्तःपुरेषु रमणरणन्नारीनरानना॥ ७॥

इतःपरं राक्षसीरूपकं विहाय स्वरूपेणैव वर्णयति - सरःस्वित्यादिना।
विवटानां गर्तानां विवृद्धवटानां च द्वारि काकैर्भेकैश्च तरङ्गिता
व्याप्ता। रमणे क्रीडने रणन्ति नारीनराननानि यस्याम्॥ ७॥

जङ्गलेषु जगज्ज्वाला जटालज्वलनोज्ज्वला।
केदारेष्वम्बुसंसेकपृष्ठपाकमिलच्छला॥ ८॥

जगतो ज्वाला प्रलयानल इव जटालेन ज्वलनेनोज्ज्वला। अम्बुसेकेन आर्द्रीभावेन
शल्यकपृष्ठे पाकेन परिपक्वदशया चोन्मूलनात्केदारेषु मिलन्ति शलानि
शललीकण्टका यस्याम्॥ ८॥

नभस्थलेक्षितस्पन्दप्रविविक्तर्क्षचक्रिका।
वनेषु विसरद्वातपतत्पुष्पफलद्रुमा॥ ९॥

अक्षीणीव संजातान्यक्षितानि स्पन्दादिव प्रविविक्तानि विभक्तानि ऋक्षचक्राणि
नक्षत्रवृन्दानि यस्याम्॥ ९॥

श्वभ्रेषु कौशिकस्यान्तर्वायसव्याहतारवा।
तस्कराक्रान्तपर्यन्तग्राम्याक्रन्दनकर्कशा॥ १०॥

श्वभ्रेषु वृक्षकोटरेष्वन्तः कौशिकस्य रवं श्रुत्वेति शेषः॥ १०॥

विपिने विपिनामौना नगरे सुप्तनागरा।
वनेषु विसरद्वाता नीडेष्वस्पन्दपक्षिका॥ ११॥

विपिनमिव आमौना ईषदशब्दा॥ ११॥

गुहासु सुप्तसिंहाढ्या कुञ्जेषुस्वपदेणका।

36921 खे सावश्यायनिकरा विपिने मौनचारिणी ॥ १२ ॥
36922
36923 कज्जलाम्भोदमध्याभा काचशैलोदरोपमा ।
36924 पङ्कपिण्डान्तरघना खड्गच्छेद्यान्ध्यमांसला ॥ १३ ॥
36925
36926 पङ्कपिण्डो मृत्पिण्डस्तस्यान्तरमिव घना निबिडा ॥ १३ ॥
36927
36928 प्रलयानिलविक्षुब्धकज्जलाचलचञ्चला ।
36929 एकार्णवमहापङ्कपर्वतोदरमेदुरा ॥ १४ ॥
36930
36931 विक्षुब्धो विचूर्णितो विचलितो वा । एकार्णवमहापङ्कमिव पर्वतोदरमिव च
36932 मेदुरा ॥ १४ ॥
36933
36934 अङ्गारकोटरघना सौषुप्तपदसुन्दरी ।
36935 अज्ञाननिद्रानिबिडा भृङ्गपृष्ठच्छदच्छविः ॥ १५ ॥
36936
36937 अङ्गारस्य दग्धकाष्ठस्य कोटरमिव श्यामघना । सौषुप्तपदं
36938 गाढाज्ञानमिव सुन्दरी । अज्ञाननिद्रा मूलाज्ञानमिव निबिडा घना ।
36939 भृङ्गानां पृष्ठानीव च्छदाः पक्षा इव च च्छविर्यस्यास्तथाविधा ।
36940 असितयामिनी बभूवेत्युपक्रमेणान्वयः ॥ १५ ॥
36941
36942 तस्यां रजन्यां भीमायां किरातजनमण्डले ।
36943 मन्त्रिणा सह भूपालस्तस्मिन्नवसरे तदा ॥ १६ ॥
36944
36945 निर्जगाम सुधीरात्मा नगरात्सुप्तनागरात् ।
36946 अटवीं विक्रमो नाम विषमां वीरचर्यया ॥ १७ ॥
36947
36948 वीरोचितया तस्करादिवधार्थया चर्यया ॥ १७ ॥
36949
36950 अटव्यां कर्कटी सा तौ चरन्तौ राजमन्त्रिणौ ।
36951 अपश्यद्धृतधैर्यास्त्रौ वेतालालोकनोन्मुखौ ॥ १८ ॥
36952
36953 धृतानि धैर्यं च अस्त्राणि च याभ्यां तौ । ग्रामाद्बहिष्ठस्य
36954 ग्रामदैवतस्य वेतालस्य आलोकने उन्मुखौ ॥ १८ ॥
36955
36956 अथ सा चिन्तयामास लब्धो भक्षो ह्यहो मया ।
36957 मूढावेतावनात्मज्ञौ भारो देहः किलानयोः ॥ १९ ॥
36958
36959 सा कर्कटी ॥ १९ ॥
36960
36961 इहामुत्र च नाशाय मूढो दुःखाय जीवति ।
36962 यत्नाद्विनाशनीयोऽसौ नानर्थः परिपाल्यते ॥ २० ॥
36963
36964 इह लोके अमुत्र परलोके च । मूढोऽनात्मज्ञः ॥ २० ॥
36965
36966 अपश्यतः स्वमात्मानं मृतिर्मूढस्य जीवितम् ।
36967 मरणेनोदयोऽस्यास्ति पापासंपत्तिहेतुतः ॥ २१ ॥
36968
36969 मृतिरेव जीवितं । जीविताद्वरमिति यावत् । तदेवोपपत्त्या दर्शयति -
36970 मरणेनेति ॥ २१ ॥
36971
36972 आदिसर्गे च नियमः कृतः पङ्कजजन्मना ।

36973 हिंस्राणां भोजनायास्तु मूढात्मानात्मवानिति ॥ २२ ॥
36974
36975 तस्मादिमौ मयैवाद्य भोक्तव्यौ भोज्यतां गतौ ।
36976 अभव्य एव निर्दोषं प्राप्तमर्थमुपेक्षते ॥ २३ ॥
36977
36978 अभव्यः अभाग्य एव ॥ २३ ॥
36979
36980 कदाचित्ताविमौ स्यातां गुणयुक्तौ महाशयौ ।
36981 तादृङ्न रविनाशो हि स्वभावान्मे रोचते ॥ २४ ॥
36982
36983 आत्मज्ञानलक्षणगुणेन युक्तौ ॥ २४ ॥
36984
36985 तदेतौ संपरीक्षेऽहं यदि तादृग्गुणान्वितौ ।
36986 तद्भक्षं न करोम्येतौ न हिंस्यां गुणिनः क्वचित् ॥ २५ ॥
36987
36988 तत्तर्हि ॥ २५ ॥
36989
36990 अकृत्रिमं सुखं कीर्तिमायुश्चैवाभिवाञ्छता ।
36991 सर्वाभिमतदानेन पूजनीया गुणान्विताः ॥ २६ ॥
36992
36993 सर्वेषाममिमतानामिष्टानां दानेन ॥ २६ ॥
36994
36995 अपि नङ्क्ष्यामि देहेन नैव भोक्ष्ये गुणान्वितम् ।
36996 सुखयन्ति हि चेतांसि जीवितादपि साधवः ॥ २७ ॥
36997
36998 देहेन नत्वात्मना अविनाशित्वात् ॥ २७ ॥
36999
37000 प्। ३१६) १९२
37001
37002 अपि जीवितदानेन गुणिनं परिपालयेत् ।
37003 गुणवत्संगमौषध्या मृत्युरप्येति मित्रताम् ॥ २८ ॥
37004
37005 वशीकरणौषध्या ॥ २८ ॥
37006
37007 यत्राहमपि रक्षामि राक्षसी गुणशालिनम् ।
37008 तत्रान्यः को न कुर्यात्तं हृदि हारमिवामलम् ॥ २९ ॥
37009
37010 तं गुणिनम् ॥ २९ ॥
37011
37012 उदारगुणयुक्ता ये विहरन्तीह देहिनः ।
37013 धरातलेन्दवः सङ्गाद्भृशं शीतलयन्ति ते ॥ ३० ॥
37014
37015 धरातले इन्दवश्चन्द्राः ॥ ३० ॥
37016
37017 मृतिर्गुणितिरस्कारो जीवितं गुणिसंश्रयः ।
37018 फलं स्वर्गापवर्गादि जीविताद्गुणिसंश्रितात् ॥ ३१ ॥
37019
37020 फलं सिध्यतीति शेषः ॥ ३१ ॥
37021
37022 तस्मादिमौ परीक्षेऽहं कयाचित्प्रश्नलीलया ।
37023 किंमात्रज्ञानकावेताविति तामरसेक्षणौ ॥ ३२ ॥
37024

37025 परीक्षे परीक्षिष्ये ॥ ३२ ॥
37026
37027 आदौ विचार्य सगुणागुणलेशयुक्तिं
37028 पश्चात्स्वतोऽधिकतरं च गुणैर्यदि स्यात् ।
37029 कुर्यात्ततः समुपपत्तिवशेन दण्डं
37030 दड्यस्य युक्तिसदृशं घनसंभवेन ॥ ३३ ॥
37031
37032 आदौ सगुणोऽयमगुणो वेति गुणलेशेनापि युक्तिं योगं विचार्य पश्चात्स्वतः
37033 स्वस्मादधिकतरं च गुणिनं विचार्य यदि गुणैर्हीनः स्यात्ततस्तदनन्तरं
37034 सम्यक् शास्त्रोक्तदृशा उपपत्तिवशेन युक्तिसदृशं दण्ड्यस्य दण्डं
37035 कुर्यात् स्वतो गुणैर्घनसंभवे अतिशयस्य संभवे तु न कुर्यादित्यर्थः ॥ ३३ ॥
37036
37037 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे क०
37038 राक्षसीविचारो नाम सप्तसप्तितितमः सर्गः ॥ ७७ ॥
37039
37040 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे राक्षसीविचारो
37041 नाम सप्तसप्तितितमः सर्गः ॥ ७७ ॥
37042
37043
37044 अष्टसप्तितितमः सर्गः ७८
37045
37046 श्रीवसिष्ठ उवाच ।
37047
37048 अथ सा राक्षसी रक्षःकुलकाननमञ्जरी ।
37049 तमस्येवाभ्रलेखेव गम्भीरं विननाद ह ॥ १ ॥
37050
37051 भीषणोक्त्याप्यभीतस्य राज्ञः कर्कटिदर्शनम् ।
37052 मन्त्रिवाक्यानुनीतायाः प्रश्नारम्भश्च कीर्त्यते ॥ १ ॥
37053
37054 रक्षोवंशलक्षणस्य काननस्य
37055 बोधसौरभमकरन्दमधुरत्वात्पुष्पमञ्जरीव स्थिता ॥ १ ॥
37056
37057 नादान्ते समुवाचेदं हुंकारापरुषं वचः ।
37058 गर्जितानन्तरं जातकरकाशनिशब्दवत् ॥ २ ॥
37059
37060 शब्दतो हुंकारभीषणत्वेऽप्यर्थतोऽपरुषमनिष्ठुरम् ॥ २ ॥
37061
37062 भो भो घोराटवीव्योमपदवीशशिभास्करौ ।
37063 महामायातमःपीठशिलाकोटरकीटकौ ॥ ३ ॥
37064
37065 घोराटवीलक्षणाया व्योमपदव्याः प्रकाशकत्वाच्छशिभास्करौ ।
37066 महामायातमोलक्षणायाः सर्वभूताधारपीठभूतायाः
37067 कोटरान्तर्गतकीटकौ । अनेन स्वस्या आत्मज्ञता सूचिता ॥ ३ ॥
37068
37069 कौ भवन्तौ महाबुद्धी दुर्बुद्धी वा समागतौ ।
37070 मद्ग्रासपदमापन्नौ क्षणान्मरणकोचितौ ॥ ४ ॥
37071
37072 आत्मज्ञाने सति बुद्धेः साफल्यान्महाबुद्धी पूज्यबुद्धी । तदभावे
37073 बुद्धिवैयर्थ्याद्दुर्बुद्धी । कुत्सितं मरणं मरणकं तदुचितौ ॥ ४ ॥
37074
37075 राजोवाच ।
37076

37077 भो भो भूतक किं स्यास्त्वं क्व तिष्ठसि च देहकम् |
37078 दर्शयास्यास्तव गिरः को बिभेत्यलिनीध्वनेः || ५ ||
37079
37080 अल्पं देहं देहकं दर्शय | अलिनीध्वनेर्भ्रमरिकाध्वनितुल्याया अस्यास्तव
37081 गिरः सकाशात्को बिभेति | न कश्चिदित्यर्थः || ५ ||
37082
37083 सिंहवत्सर्ववेगेन पतन्त्यर्थे किलार्थिनः |
37084 त्यज संरम्भमारम्भं स्वसामर्थ्यं प्रदर्शय || ६ ||
37085
37086 संरम्भं कोपम् | आरम्भं भीषणोद्योगम् || ६ ||
37087
37088 किं प्रार्थयसि मे ब्रूहि ददामि तव सुव्रत |
37089 किं वा संरम्भशब्दाभ्यां भीषयास्मान्बिभेषि किम् || ७ ||
37090
37091 त्वत्सूचिता आत्मज्ञता मया ज्ञातेति द्योतनाय सुव्रतेति संबोधनम् | अस्मान्प्रति
37092 संरम्भशब्दाभ्यां भीषया वा किम् | त्वमेव वा किं बिभेषि || ७ ||
37093
37094 क्षिप्रमाकारशब्दाभ्यां मायया सन्मुखीभव |
37095 न किंचिद्दीर्घसूत्राणां सिद्ध्यत्यात्मक्षयादृते || ८ ||
37096
37097 मायया परदृश्यशरीरकल्पनशक्त्या | दीर्घसूत्राणामक्षिप्रकारिणाम् || ८ ||
37098
37099 राज्ञेत्युक्ते रम्यमुक्तमिति संचिन्त्य सा तयोः |
37100 प्रकाशायाप्य धैर्याय ननाद च जहास च || ९ ||
37101
37102 ततो ददृशतुस्तां तौ शब्दपूरितदिग्गणाम् |
37103 साट्टहासप्रभापिण्डपूरप्रकटिताकृतिम् || १० ||
37104
37105 अट्टहासदशनप्रभापिण्डपूरैः प्रकाशितस्वाकाराम् || १० ||
37106
37107 कल्पाभ्राशनिकाषेण घृष्टामद्रितटीमिव |
37108 स्वनेत्रविद्युद्वलयबलाकोज्ज्वलिताम्बराम् || ११ ||
37109
37110 अशनिकाषेण वज्रनिष्पेषेण घृष्टां निष्पिष्टाम् | स्वनेत्रविद्युद्भ्यां
37111 शङ्खवलयलक्षणबलाकाभिश्च दीपिताकाशाम् || ११ ||
37112
37113 तिमिरैकार्णवौर्वाग्निज्वालाविवलनामिव |
37114 गर्जद्घनघटातो।पपीवरासितकन्धराम् || १२ ||
37115
37116 तिमिरलक्षणस्यैकार्णवस्य || १२ ||
37117
37118 रणद्दशनसंरम्भहाहाहतनिशाचराम् |
37119 रोदसीकज्जलस्तम्भां लीलयोल्लसितां पुनः || १३ ||
37120
37121 ऊर्ध्वकेशीं शिरालाङ्गीं कपिलाक्षीं तमोमयीम् |
37122 यक्षरक्षःपिशाचानामप्यनर्थभयप्रदाम् || १४ ||
37123
37124 रणद्भ्यः कटकटायमानेभ्यो दशनेभ्यः संरम्भाद्भयात्
37125 हाहाकारपूर्वकं हता मारिता निशाचराश्चोरव्याघ्रजम्बुकादयो यया |
37126 रोदस्यौ द्यावापृथिव्यौ कज्जलैः स्तम्भयति विष्टभ्नातीति तथोक्ताम् || १३ || १४ ||
37127
37128 देहरन्ध्रविशच्छ्वासवातभांकारभीषणाम् |

37129 मुसलोलूखलालातहलशूर्पकशेखराम् || १५ ||
37130
37131 हलं शूर्पकाणि भग्नशूर्पाणि शेखरे यस्याः || १५ ||
37132
37133 प्। ३१७) १९२
37134
37135 स्फुरन्तीमिव कल्पान्ते वैदूर्यशिखरस्थलीम् |
37136 हासघट्टितविश्वेशां कालरात्रिमिवोदिताम् || १६ ||
37137
37138 कल्पान्ते विदीर्णामिति शेषः | हासैर्घट्टिता हिंसिता विश्वस्येशा दानवा यया
37139 तथाविधां कालरात्रिं शिवदूतीमिव || १६ ||
37140
37141 शरद्व्योमाटवीं साभ्रां कृतदेहामिवागताम् |
37142 शरीरिणीं महाभ्राढ्यां यामिनीमिव मांसलाम् || १७ ||
37143
37144 शरीरसंनिवेशेन पङ्कपीठमिवोत्थिताम् |
37145 तनुं चन्द्रार्कयुधाय तमसेव समाश्रिताम् || १८ ||
37146
37147 पङ्कपीठं पृथिवीपीठम् | तमसा राहुणा || १८ ||
37148
37149 इन्द्रनीलमहाशुभ्रलम्बाभ्रयुगलोपमौ |
37150 उलूखलादिहारौघौ दधानामसितौ स्तनौ || १९ ||
37151
37152 इन्द्रनीलमिव महाशुभ्रं नीलं यल्लम्बाभ्रयुगलं तदुपमो || १९ ||
37153
37154 लग्नामङ्गारकाष्ठेन समानां च महातनुम् |
37155 द्रुमाभास्पन्दसशिरलसद्भुजलतातनुम् || २० ||
37156
37157 लग्नां लाञ्छितां समानां सवर्णां च | द्रुमाभाभ्यां अस्पन्दाभ्यां
37158 शिरासहिताभ्यां लसद्भ्यां भुजलताभ्यां अतनुं अनल्पाम् || २० ||
37159
37160 तामवेक्ष्य महावीरौ तथैवाक्षुभितौ स्थितौ |
37161 न तदस्ति विमोहाय यद्विविक्तस्य चेतसः || २१ ||
37162
37163 विविक्तस्य सत्यमिथ्याविवेकशालिनः || २१ ||
37164
37165 मन्त्र्युवाच |
37166
37167 महाराक्षसि संरम्भो महात्मा किमयं तव |
37168 लघवो ह्यथवा कार्ये लघावप्यतिसंभ्रमाः || २२ ||
37169
37170 यदि त्वं महत्यसि तर्ह्यल्पकार्ये नैतावान्संरम्भो युक्त इति साम्ना
37171 समाधित्सुर्मन्त्री उवाच - महाराक्षसीति | हे महाराक्षसि तव
37172 स्वाभिमतसिद्धौ महात्मा निरतिशयस्वरूपोऽयं संरम्भः कोपः किं
37173 किमर्थ इत्यर्थः | वाङ्मात्रलभ्ये आहारलाभलक्षणे कार्ये न
37174 क्रोधसाहसादेः प्रयोजनमस्तीति भावः | अथवा यदि लघुरसि तर्हि न
37175 त्वत्संरम्भेण बिभीव इत्याशयेनाह - लघवो हीति || २२ ||
37176
37177 त्यज संरम्भमारम्भो नायं तव विराजते |
37178 विषये हि प्रवर्तन्ते धीमन्तः स्वार्थसाधकाः || २३ ||
37179
37180 साम्ना पुनः प्रथमकल्पमेवाश्रित्याह - त्यजेति | बुद्धिमन्तः

37181 सामसाध्येऽर्थे न दण्डमनुसरन्तीति भावः ॥ २३ ॥
37182
37183 त्वादृशानां सहस्राणि मशकानामिवाबले ।
37184 अस्माकं धीरतावात्याव्यूढानि तृणपर्णवत् ॥ २४ ॥
37185
37186 पुनर्द्वितीयकल्पमाश्रित्य दण्डोद्योगवैयर्थ्यमाह - त्वादृशानामिति ।
37187 धीरतालक्षणया वात्या वात्यया । वातशब्दात्पाशादित्वात्समूहे यप्रत्यये
37188 व्यत्ययेन ङीपि हलस्तद्धितस्य इति यलोपे तृतीयान्तोऽत्र वात्येति । व्यूढानि
37189 निरस्तानि ॥ २४ ॥
37190
37191 संरम्भद्वारमुत्सृज्य समतास्वच्छया धिया ।
37192 युक्त्या च व्यवहारिण्या स्वार्थः प्राज्ञेन साध्यते ॥ २५ ॥
37193
37194 तर्हि कथं स्वार्थसिद्धिस्तत्राह - संरम्भेति । व्यवहारिण्या
37195 प्राज्ञव्यवहारोचितया ॥ २५ ॥
37196
37197 स्वेनैव व्यवहारेण कार्यं सिद्ध्यतु वा न वा ।
37198 महानियतिरित्येव भ्रमस्यावसरो हि कः ॥ २६ ॥
37199
37200 कार्यसिद्धिसंशयेऽप्यनादिनियतिसिद्धः सामोपायो न हेयः किं वाच्यं
37201 तन्निश्चये इत्याशयेनाह - स्वेनैवेति । भ्रमस्य भ्रान्तोचितसंरम्भस्य ॥
37202 २६ ॥
37203
37204 कथयाभिमतं किं ते किमर्थयसि चार्थिनी ।
37205 अर्थी स्वप्नेऽपि नास्माकमप्राप्तार्थः पुरो गतः ॥ २७ ॥
37206
37207 कथं तर्हि साम्ना सिद्धिस्तत्राह - कथयेति ॥ २७ ॥
37208
37209 इत्युक्ता सा तदा तेन चिन्तयामास राक्षसी ।
37210 अहो नु विमलाचारं सत्त्वं पुरुषसिंहयोः ॥ २८ ॥
37211
37212 सत्त्वं धैर्यं बुद्धिबलं च ॥ २८ ॥
37213
37214 न सामान्याविमौ मन्ये विचित्रेयं चमत्कृतिः ।
37215 वचोवक्रेक्षणेनैव वदत्यन्तर्विनिश्चयम् ॥ २९ ॥
37216
37217 वक्रेक्षणेन मुखदर्शनेनैव प्रसादादिलिङ्गैरन्तस्तत्त्वविनिश्चयं वदति
37218 सूचयति ॥ २९ ॥
37219
37220 वचोवक्रेक्षणद्वारैर्धीमतामाशया मिथः ।
37221 एकीभवन्ति सरितां पयांसि वलनैरिव ॥ ३० ॥
37222
37223 वलनैः संगमैः ॥ ३० ॥
37224
37225 आभ्यां प्रायः परिज्ञातो मम भावोऽनयोर्मया ।
37226 न विनाश्यौ मया चेमौ स्वयमेवाविनाशिनौ ॥ ३१ ॥
37227
37228 मन्ये भवेतामात्मज्ञौ नात्मज्ञानादृते मतिः ।
37229 प्रमृष्टसदसद्भावाद्भवत्यस्तभया मृतौ ॥ ३२ ॥
37230
37231 मिथ्यात्वनिश्चयेन प्रमृष्टौ सदसद्भावौ जीवनमरणप्रत्ययौ
37232 यस्मात्तथाविधादात्मज्ञादृते ॥ ३२ ॥

तदेतौ परिपृच्छामि किंचित्संदेहमुत्थितम् ।
प्राज्ञं प्राप्य न पृच्छन्ति ये केचित्ते नराधमाः ॥ ३३ ॥

इति संचिन्त्य पृच्छायै तन्वानावसरं ततः ।
अकालकल्पाभ्ररवं हासं संयम्य साब्रवीत् ॥ ३४ ॥

हासं हास्यम् । संयम्य निरुध्य ॥ ३४ ॥

कौ भवन्तौ नरौ धीरौ कथ्यतामिति मेऽनघौ ।
जायते दर्शनादेव मैत्री विशदचेतसाम् ॥ ३५ ॥

मन्त्र्युवाच ।

अयं राजा किरातानामस्याहं मन्त्रितां गतः ।
उद्यतौ रात्रिचर्येण त्वादृग्जनविनिग्रहे ॥ ३६ ॥

त्वादृग्जनानां हिंस्राणां विनिग्रहे उद्यतौ उद्युक्तौ ॥ ३६ ॥

राज्ञो रात्रिंदिवं धर्मो दुष्टभूतविनिग्रहः ।
स्वधर्मत्यागिनो ये तु ते विनाशानलेन्धनम् ॥ ३७ ॥

राक्षस्युवाच ।

राजंस्त्वमसि दुर्मन्त्री दुर्मन्त्री न नृपो भवेत् ।
सद्रूपस्य भवेन्मन्त्री राजा सन्मन्त्रिणो भवेत् ॥ ३८ ॥

करिष्यमाणप्रश्नस्योपोद्घातं रचयन्त्याह - राजन्निति । दुष्टो मन्त्री
यस्य स तथा असि । संभावित इति शेषः ॥ ३८ ॥

राजा चादौ विवेकेन योजनीयः सुमन्त्रिणा ।
तेनार्यतामुपायाति यथा राजा तथा प्रजाः ॥ ३९ ॥

आर्यतां श्रेष्ठताम् ॥ ३९ ॥

समस्तगुणजालानामध्यात्मज्ञानमुत्तमम् ।
तद्विद्राजा भवेद्राजा तद्विन्मन्त्री च मन्त्रवित् ॥ ४० ॥

समस्तेति । तथाचाहुः - तत्कर्मयन्न बन्धाय सा विद्या या विमुक्तये ।
आयासायापरं कर्म विद्यान्या शिल्पनैपुणम् ॥ इति । मन्त्रविद्विचाररहस्यवित् ॥
४० ॥

प। ३१८) १९३

प्रभुत्वं समदृष्टित्वं तच्च स्याद्राजविद्यया ।
तामेव यो न जानाति नासौ मन्त्री न सोऽधिपः ॥ ४१ ॥

प्रभुत्वं
समदृष्टित्वाधीनत्वादायुर्घृतमितिवत्ताद्रूप्यारोपात्समदृष्टित्वं
विद्यानां राजा राजविद्या आत्मविद्या तया स्यात् । शुनि चैव श्वपाके च पण्डिताः
समदर्शिनः इति भगवद्वचनात् ॥ ४१ ॥

भवन्तौ तद्विदौ साधू यदि तच्छ्रेय आप्नुथः।
नो चेदनर्थदौ स्वस्याः प्रकृतेरद्म्यहं युवाम्॥ ४२॥

यथा राजा तथा प्रजा इति प्रागुक्तत्वाद्राज्ञो मौर्ख्ये प्रजानामपि
तदनिवारणात्तत्प्रयुक्तानर्थदौ युवां अद्मि भक्षयामि॥ ४२॥

एकोपायेन मत्पार्श्वाद्बालकावुत्तरिष्यथः।
मत्प्रश्नपञ्जरं सारं चेद्विचारयथो धिया॥ ४३॥

बालकाविव पित्रोः प्रीतिविषयौ॥ ४३॥

प्रश्नानिमान्कथय पार्थिव वा च मन्त्रिं-
स्तत्रार्थिनी भृशमहं परिपूरयार्थम्।
अङ्गीकृतार्थमददत्क इवास्ति लोके
दोषेण संक्षयकरेण न युज्यते यः॥ ४४॥

हे पार्थिव त्वमिमान् प्रश्नान् पृष्टानर्थान्कथय। अथवा हे मन्त्रिंस्त्वं
च वा कथय। तत्र तस्मिन्विषयेऽहं भृशमर्थिनी उपयाचनवती अस्मि। अर्थ
मदभिलषितं परिपूरय। योऽङ्गीकृतं दास्यामीति
प्रतिज्ञातमर्थमददत्प्रयच्छन्सन्संक्षयकरेण दोषेण न युज्यते स
तादृशः क इवास्ति को वास्ति। न कश्चिदित्यर्थः॥ ४४॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे क०
राक्षसीवर्णनं नामाष्टसप्ततितमः सर्गः॥ ७८॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे राक्षसीवर्णनं
नामाष्टसप्ततितमः सर्गः॥ ७८॥

## एकोनाशीतितमः सर्गः ७९

श्रीवसिष्ठ उवाच।

इत्युक्त्वा राक्षसी प्रश्नान्सा वक्तुमुपचक्रमे।
उच्यतामिति राज्ञोक्ते तानिमाञ्शृणु राघव॥ १॥

अनात्मविद्व्रसमानात्मविद्धृदयंगमान्।
चक्रे द्विसप्ततिप्रश्नान्क्रमात्सर्गेऽत्र कर्कटी॥ १॥

उच्यतामिति राज्ञा उक्ते अभ्यनुज्ञाते सति वा वक्तुमुपचक्रमे॥ १॥

राक्षस्युवाच।

एकस्यानेकसंख्यस्य कस्याणोरम्बुधेरिव।
अन्तर्ब्रह्माण्डलक्षाणि लीयन्ते बुद्बुदा इव॥ २॥

प्रश्नानामाशय उत्तरसर्गयोः स्फुटो भविष्यतीति नेहातिविस्तरः क्रियते।
उपाधिभेदादनेकसंख्यस्य दुर्लक्ष्यत्वादणोरपरिच्छेदाच्चाम्बुधेरिव॥ २॥

किमाकाशमनाकाशं न किंचित्किंचिदेव किम्।
कोऽहमेवासि संपन्नः को भवानप्यहं स्थितः॥ ३॥

37337 अनाकाशमशून्यम् । लौकिकप्रसिद्धं न किंचित्तत्त्ववित्प्रसिद्धं किंचिदेव ॥ ३
37338 । ।
37339
37340 गच्छन्न गच्छति च कः कोऽतिष्ठन्नपि तिष्ठति ।
37341 कश्चेतनोऽपि पाषाणः कश्चिद्व्योम्नि विचित्रकृत् ॥ ४ ॥
37342
37343 अतिष्ठन् गतिनिवृत्तिमकुर्वन् । पाषाण इव चैतन्यानाश्रयः ॥ ४ ॥
37344
37345 वह्निताम‍जहच्चैव कश्च वह्निरदाहकः ।
37346 अवह्नेर्जायते वह्निः कस्माद्राजन्निरन्तरम् ॥ ५ ॥
37347
37348 अचन्द्रार्काग्नितारोऽपि कोऽविनाशः प्रकाशकः ।
37349 अनेत्रलभ्यात्कस्माच्च प्रकाशः संप्रवर्तते ॥ ६ ॥
37350
37351 अविनाशः सन् प्रकाशकः ॥ ६ ॥
37352
37353 लतागुल्पाङ्कुरादीनां जात्यन्धानां तथैव च ।
37354 अन्येषामप्यनक्षाणामालोकः क इवोत्तमः ॥ ७ ॥
37355
37356 अनक्षाणामनाविर्भूतेन्द्रियाणाम् ॥ ७ ॥
37357
37358 जनकः कोऽम्बरादीनां सत्तायाः कः स्वभावदः ।
37359 को जगद्रत्नकोशः स्यात्कस्य कोशो मणेर्जगत् ॥ ८ ॥
37360
37361 स्वभावदः सत्ताप्रदः ॥ ८ ॥
37362
37363 कोऽणुस्तमःप्रकाशः स्यात्कोऽणुरस्ति च नास्ति च ।
37364 कोऽणुर्दूरेऽप्यदूरे च कोऽणुरेव महागिरिः ॥ ९ ॥
37365
37366 निमेष एव कः कल्पः कः कल्पोऽपि निमेषकः ।
37367 किं प्रत्यक्षमसद्रूपं किं चेतनमचेतनम् ॥ १० ॥
37368
37369 प्रत्यक्षं भासमानमपि मूढदृशा असद्रूपम् ॥ १० ॥
37370
37371 कश्च वायुरवायुश्च कः शब्दोऽशब्द एव कः ।
37372 कः सर्वं न च किंचिच्च कोऽहं नाहं च किं भवेत् ॥ ११ ॥
37373
37374 किं प्रयत्नशतप्राप्यं लब्ध्वापि बहुजन्मनि ।
37375 लब्धं न किंचिद्भवति किंतु सर्वं न लभ्यते ॥ १२ ॥
37376
37377 प्राग् बहुजन्मनि स्वात्मत्वादेव
37378 लब्ध्वाप्यज्ञानावृतत्वादलब्धप्रायत्वात्प्रयत्नशतप्राप्यम् । सर्वं
37379 पूर्णम् ॥ १२ ॥
37380
37381 स्वस्थेन जीवितेनोच्चैः केनात्मैवापहारितः ।
37382 केनाणुनान्तः क्रियते मेरुस्त्रिभुवनं तृणम् ॥ १३ ॥
37383
37384 आत्मा स्वात्मैव केनापहारितो नाशितप्रायः कृतः । त्रिभुवनं तृणं
37385 क्रियत इति पृथक्प्रश्नः ॥ १३ ॥
37386
37387 केनाप्यणुकमात्रेण पूरिता शतयोजनी ।
37388 कोऽणुरेव भवन्माति न योजनशतेष्वपि ॥ १४ ॥

37389
37390 केनालोकनमात्रेण जगद्बालः प्रनाट्यते ।
37391 कस्याणोरुदरे सन्ति किलावनिभृतां घटाः ॥ १५ ॥
37392
37393 प्रनाड्यते प्रनर्त्यते अनद्रांटि इति णोपदेशपर्युदासान्न णः । घटाः
37394 समूहाः ॥ १५ ॥
37395
37396 अणुत्वमजहत्कोऽणुर्मेरोः स्थूलतराकृतिः ।
37397 वालाग्रशतभागात्मा कोऽणुरुच्चैः शिलोच्चयः ॥ १६ ॥
37398
37399 शिलोश्चयः पर्वतनिभः ॥ १६ ॥
37400
37401 प्। ३१९) १९३
37402
37403 कोऽणु प्रकाशतमसां दीपः प्रकटनप्रदः ।
37404 कस्याणोरुदरे सन्ति समग्रानुभवाणवः ॥ १७ ॥
37405
37406 अनुभवाणवो वृत्त्यवच्छिन्नज्ञानलवाः ॥ १७ ॥
37407
37408 कोऽणुरत्यन्तनिःस्वादुरपि संस्वदतेऽनिशम् ।
37409 केन संत्यजता सर्वमणुना सर्वमाश्रितम् ॥ १८ ॥
37410
37411 निःस्वादुर्मधुरादिरसशून्यः । आश्रितं स्वीकृतमिति यावत् ॥ १८ ॥
37412
37413 केनात्माच्छादनाशक्तेनाणुनाच्छादितं जगत् ।
37414 जगल्लये न कस्याणोः सद्भूतमपि जीवति ॥ १९ ॥
37415
37416 लयेन तिरोहितमपि जगत्कस्याणोः सत्तया सद्भूतं पुनः सर्गे जीवत्यपि ॥ १९ ॥
37417
37418 अजातावयवः कोऽणुः सहस्रकरलोचनः ।
37419 को निमेषो महाकल्पः कल्पकोटिशतानि च ॥ २० ॥
37420
37421 अणौ जगन्ति तिष्ठन्ति कस्मिन्बीज इव द्रुमः ।
37422 बीजानि निष्कलान्तानि स्फुटान्यनुदितान्यपि ॥ २१ ॥
37423
37424 जगन्ति अनुत्पन्नान्यपि प्रलये कस्मिंस्तिष्ठन्ति । सर्गकाले च निष्कलं
37425 निरवयवमव्यक्तमन्तो बीजपरम्परावधिर्येषां तानि सर्वाणि बीजानि सर्गकाले
37426 जगदात्मना स्फुटानि विकासितान्यपि कस्मिन्सदैवानुदितानि ॥ २१ ॥
37427
37428 कल्पः कस्य निमेषस्य बीजस्येवान्तरस्थितः ।
37429 कः प्रयोजनकर्तृत्वमप्यनाश्रित्य कारकः ॥ २२ ॥
37430
37431 एवंकल्पः प्रलयोऽपि कस्यान्तः स्थितः । प्रयोजनं तत्तत्कारकप्रवर्तनं तत्र
37432 कर्तृत्वं अक्रियत्वात्कारकव्यापारयितृत्वमनाश्रित्यापि कः कारकः
37433 कर्तेत्यर्थः । अथवा प्रयोजनकर्तृत्वं क्रियाफलनिष्पादकत्वम् ॥ २२ ॥
37434
37435 दृश्यसंपत्तये द्रष्टा स्वात्मानं दृश्यतां नयन् ।
37436 दृश्यं पश्यन्स्वमात्मानं को हि पश्यत्यनेत्रवान् ॥ २३ ॥
37437
37438 दृश्यसंपत्तये भोग्यसिद्धये । बहिर्दृशा दृश्यं पश्यन् ॥ २३ ॥
37439
37440 अन्तर्गलितदृश्यं च क आत्मानमखण्डितम् ।

37441 दृश्यासंपत्तये पश्यन्पुरो दृश्यं न पश्यति || २४ ||
37442
37443 ज्ञानेनान्तर्गलितदृश्यं यथा स्यात्तथा पश्यन् || २४ ||
37444
37445 आत्मानं दर्शनं दृश्यं को भासयति दृश्यवत् |
37446 कटकादीनि हेम्नेव विकीर्णं केन च त्रयम् || २५ ||
37447
37448 आत्मानं द्रष्टारम् | दर्शनं वृत्तिम् |
37449 दृश्यवच्चक्षुर्दृश्यमिवापरोक्षं को भासयति | विकीर्णं विक्षिप्तं |
37450 विक्षेपशक्त्या प्रकटितमिति यावत् | तत्त्रयं द्रष्टा दर्शनं दृश्यम् || २५ ||
37451
37452 कस्मान्न किंचिच्च पृथगूर्म्यादीव महाम्भसः |
37453 कस्येच्छया पृथकास्ति वीचितेव महाम्भसः || २६ ||
37454
37455 दिक्कालाद्यनवच्छिन्नादेकस्मादसतः सतः |
37456 द्वैतमप्यपृथक्कस्माद्द्रवतेव महाम्भसः || २७ ||
37457
37458 असतः अस्थूलत्वादसत्कल्पात्सतः || २७ ||
37459
37460 आत्मानं दर्शनं दृश्यं सदसच्च [सदसच्च गतक्रमम् इति
37461 पाठः] जगत्त्रयम् |
37462 कोऽन्तर्बीजमिवान्तस्थं कृत्वा त्रिकालगः || २८ ||
37463
37464 सदुद्भूतावस्थं असत्तिरोहितावस्थं च अन्तस्थं कृत्वा स्थितः त्रिकालगः
37465 सदैवेत्यर्थः || २८ ||
37466
37467 भूतं भवद्भविष्यच्च जगद्वृन्दं बृहद्भ्रमम् |
37468 नित्यं समस्य कस्यान्तर्बीजस्यान्तरिव द्रुमः || २९ ||
37469
37470 कस्यान्तर्नित्यमस्तीति शेषः || २९ ||
37471
37472 बीजं द्रुमतयेवाशु द्रुमो बीजतयेव च |
37473 स्वमेकमजहद्रूपमुदेत्यनुदितोऽपि कः || ३० ||
37474
37475 दृष्टान्तद्वयाद्दार्ष्टान्तिके विशेषमाह - स्वमेकमिति | अविकृत एवेति
37476 यावत् | उदेति जगद्विकारात्मनेति शेषः || ३० ||
37477
37478 बिसतन्तुर्महामेरुर्भो राजन्यदपेक्षया |
37479 तस्य कस्योदरे सन्ति मेरुमन्दरकोटयः || ३१ ||
37480
37481 यदपेक्षया यद्दार्ढ्यमपेक्ष्य महामेरुर्बिसतन्तुरत्यन्तादृढतम
37482 इत्यर्थः | अथवा यस्यापेक्षया संकल्पेन बिसतन्तुरपि महामेरुरिव दृढ
37483 इत्यर्थः | तस्य तथाविधस्य वस्तुन उदरे अन्तः || ३१ ||
37484
37485 केनेदमाततमनेकचिदेव विश्वं
37486 किंसार एवमतिवल्गसि हंसि पासि |
37487 किंदर्शनेन न भवस्यथवा सदैव
37488 नूनं भवस्यमलदृग्वदनः स्वशान्त्यै || ३२ ||
37489
37490 अनेकाश्चितश्चेतना यस्मिंस्तथाविधमिदं विश्वं केन आततं सृष्ट्या
37491 विस्तारितम् | त्वं च कः सारो वास्तवं रूपं यस्य तथाविधः
37492 सन्सर्वव्यवहारेष्वतिशयेन वल्गसि व्यवहरसि पासि प्रजा हंसि च वध्यान् |

तथाच सृष्ट्यादिनिर्वाहाः सर्वेषां किंनिमित्तका इत्यर्थः। कस्य दर्शनं
किंदर्शनं तेन त्वममलद्दग्रूपः संस्तदन्यो न भवसि। अथवा तद्रूप
एव सदैव नूनं भवसि तद्वस्तुनः अस्मभ्यं स्वशान्त्यै
स्वमृत्युमोक्षार्थं वदेत्युपसंहारः॥ ३२॥

एषोऽसौ प्रगलतु संशयो ममोच्चै-
श्चित्तश्रीमुखमिहिकामलानुलेपः।
यस्याग्रे न गलति संशयः समूलो
नैवासौ क्वचिदपि पण्डितोक्तिमेति॥ ३३॥

एष उक्तलक्षणोऽसौ चित्तश्रियो मुखं स्वात्माकारवृत्तिस्तस्याश्चन्द्रस्येव
मिहिकालक्षणस्य मलस्यानुलेप आवरणभूतो मम संशयो गलतु। समूलो
मूलाज्ञानसहितः। पण्डितोक्तिं पण्डितशब्दयोग्यतां नैवैति॥ ३३॥

एवं मे यदि न विनेष्यथः क्रमोक्तं
संशान्तं लघुतरसंशयं [मसंशयं इति क्वचित्] सुबुद्धी।
तद्रक्षोजरठहुताशनेन्धनत्वं
निर्विघ्नं झटिति गमिष्यथः क्षणेन॥ ३४॥

एवंरूप मे लघुतरसंशयं यदि न विनेष्यथो नापाकरिष्यथस्तत्तर्हि
रक्षोजातेः स्वदेहस्य जठरहुताशनेन्धनत्वं। भक्ष्यतामिति यावत्। झटिति
क्षणेन निर्विघ्नं गमिष्यथः। अनात्मज्ञानां देहमात्रात्मभावानां
[भावनां इति पाठः] रक्षोन्नभावस्य दुर्वारत्वादिति भावः॥ ३४॥

पश्चात्तां जनपदमण्डलीं समन्ता-
द्द्रावल्कीमुरुजठरा क्षणाद्ग्रसेऽहम्।
एवं ते भवतु सुराजतेति मन्ये
मूर्खाणामतिरस एव संक्षयाय॥ ३५॥

न केवलं युवयोरेवानर्थः किंतु सर्वस्य जनपदस्याप्युपस्थित इत्याह -
पश्चादिति। उरुजठरा बृहत्कुक्षिः। एवमुक्तप्रश्नोत्तरदानेन ते स्वात्मना
सह सर्वप्रजापालनात्सुराजता स्यादिति मन्ये। मूर्खाणामनात्मज्ञानामतिरसो
भोगलाम्पट्यातिशयो राजत्वनिमित्तः संक्षयायैव भवति।
मद्भक्षणाभावेऽपि राज्यान्ते नरकावश्यंभावादिति भावः॥ ३५॥

प। ३२०) १९४

इत्युक्त्वा विपुलगभीरमेघनाद-
प्रोल्लासप्रकटगिरा निशाचरी सा।
तूष्णीमप्यतिविकटाकृतिस्तदासी-
च्छुद्धान्तः शरदमलाभ्रमण्डलीव॥ ३६॥

विपुलगभीरमेघनादप्रोल्लास इव प्रकटया तारया गिरा सा निशाचरीत्युक्त्वा
बहिरतिविकटाकृतिरपि अन्तः शुद्धा शरदमलाभ्रमण्डलीव
तूष्णीमासीदित्यर्थः॥ ३६॥

इत्यार्षे श्रीवासिष्ठमहारामायणे उत्पत्तिप्रकरणे क० राक्षसीप्रश्नो
नामैकोनाशीतितमः सर्गः॥ ७९॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे राक्षसीप्रश्नो
नामैकोनाशीतितमः सर्गः॥ ७९॥

अशीतितमः सर्गः ८०

श्रीवसिष्ठ उवाच।

महानिशि महारण्ये महाराक्षसकन्यया।
इति प्रोक्ते महाप्रश्ने महामन्त्री गिरं ददौ॥ १॥

समादधेऽत्र प्रथमं मन्त्री प्रश्नगणान्क्रमात्।
व्युत्क्रमाच्च यथान्यायं सूक्ष्माभिरुपपत्तिभिः॥ १॥

गिरं वक्ष्यमाणप्रतिज्ञानलक्षणाम्॥ १॥

मन्त्र्युवाच।

शृणु तोयदसंकाशे प्रश्नमेतं भिनद्मि ते।
अनुक्रमात्मकं मत्तं गजेन्द्रमिव केसरी॥ २॥

प्रश्नं प्रश्नगणं भिनद्मि उपपत्तिभिर्विदारयामि॥ २॥

भवत्या परमात्मैष कथितः कमलेक्षणे।
अनयैव वचोभङ्ग्या प्रश्नविद्बोधयोग्यया॥ ३॥

सर्वान्प्रश्नान् शिथिलीकर्तु सर्वप्रश्नहृदयं तावत्प्रथमं दर्शयति ##-

अनाख्यत्वादगम्यत्वान्मनःषष्ठेन्द्रियस्थितेः।
चिन्मात्रमेवमात्माणुराकाशादपि सूक्ष्मकः॥ ४॥

कस्याणोरम्बुधेरिवेति
प्रथमप्रश्नविशेष्येऽणुशब्दप्रयोगस्याभिप्रायमुद्घाटयति -
अनाख्यत्वादिति। तथाच अणुः पन्था विततः पुराणः इत्यादिश्रुतिषु प्रसिद्ध इति
भावः॥ ४॥

चिदणोः परमस्यान्तः सदिवासदिवापि वा।
बीजेऽन्तर्द्रुमसत्तेव स्फुरतीदं जगत्स्थितम्॥ ५॥

अन्तर्ब्रह्माण्डलक्षाणीति पृष्टांशं दर्शयति - चिदणोरिति। एतेन अणौ
जगन्ति तिष्ठन्ति कस्मिन्बीज इव द्रुमः इति प्रश्नोऽप्युत्तरितः॥ ५॥

सत्किंचिदनुभूतित्वात्सर्वात्मकतया स्वतः।
तदात्मकतया पूर्वं भावाः सत्तां किलागताः॥ ६॥

सदिवासदिवापि वा इत्युक्त्या सूचितं सत्तायाः कः स्वभावद इति
प्रश्नस्योत्तरमाह - सत्किंचिदिति। सर्ववस्तुसत्ताया
अनुभवसत्ताधीनत्वात्तत्सत्ताया
अन्याधीनत्वेऽनवस्थापातात्स्वतःसिद्धसत्ताकानुभवादेव सर्वे भावाः सत्तां
प्राप्ता इत्यर्थः॥ ६॥

आकाशं बाह्यशून्यत्वादनाकाशं तु चित्त्वतः।
अतीन्द्रियत्वान्नो किंचित्स एवाणुरनन्तकः॥ ७॥

किमाकाशमनाकाशम् इति प्रश्नतात्पर्यमुद्घाटयति - आकाशमिति। न

37597 किंचित्किंचिदेव किम् इति प्रश्नोत्तरमाह - अतीन्द्रियत्वादिति। नेन्द्रियगम्यं
37598 किंचिदेव यत्तदित्यर्थः॥ ७॥
37599
37600 सर्वात्मकत्वाद्भुक्ते च तेन किंचिन्न किंचन।
37601 चिदणोः प्रतिभा सा स्यादेकस्यानेकतोदिता।
37602 असत्येव [असत्येवापि सत्येव हेम्नः कटकता यथा इति क्वाचित्कः
37603 पाठः] यथा हेम्नः कटकादि तथा परे॥ ८॥
37604
37605 यदि तु किंचिदपि न किंचिद्यदात्मभावे तदिति प्रश्नार्थस्तदाप्याह -
37606 सर्वात्मकत्वादिति। स्वस्यैव सर्वात्मकत्वात्स्वात्मनैव साक्षात्कृतेन
37607 सर्वस्मिन्भुक्ते निगीर्णे सति तदेव किंचित्। न किंचनात्मना परिशिष्यत इत्याशय
37608 इत्यर्थः। एकस्यानेकसंख्यस्येति प्रश्नोपक्रमाभिप्रायमाह - चिदणोरिति।
37609 एकस्यैव चिदणोस्त्वदुदितानेकताप्रतिभामात्र प्रातीतिकी न वास्तवीत्यर्थः। एतेन
37610 कटकादीनि हेम्नेवेति प्रश्नोऽप्युक्तप्राय एवेत्याशयेनाह - यथा हेम्न इति॥
37611 ८॥
37612
37613 एषोऽणुः परमाकाशः सूक्ष्मत्वादप्यलक्षितः।
37614 मनःषष्ठेन्द्रियातीतः स्थितः सर्वात्मकोऽपि सन्॥ ९॥
37615
37616 कोऽणुस्तमःप्रकाशः स्यात् इत्यादिप्रश्नेषु पुनःपुनरणुशब्दप्रयोगस्यापि
37617 प्रागुक्त एवाभिप्राय इत्याह - एषोऽनुरिति॥ ९॥
37618
37619 सर्वात्मकत्वान्नैवासौ शून्यो भवति कर्हिचित्।
37620 यदस्ति न तदस्तीति वक्ता मन्ता इति स्मृतः॥ १०॥
37621
37622 कोऽणुरस्ति च नास्ति च इति प्रश्ने नास्ति चेत्यंशो बाधित एवेति दूषयति -
37623 सर्वात्मकत्वादित्यादिना। कथं बाधितस्तत्राह - यदस्तीति।
37624 यद्यस्माद्धेतोस्तदस्ति नास्तीति च वक्ता मन्ता च पुरुषः स आत्मैवेति
37625 वक्तृमन्त्रादिरूपेण स्मृतः प्रसिद्धः। तथाच
37626 स्वात्मापलापायोगान्नास्तितास्य न घटत एवेत्यर्थः॥ १०॥
37627
37628 कयाचिदपि युक्त्येह सतोऽसत्त्वं न युज्यते।
37629 सर्वात्मा स्वात्मगुप्तेन कर्पूरेणेव दृश्यते॥ ११॥
37630
37631 सतोऽसत्त्वविरोधादपि न युक्तमिदमित्याह - कयाचिदपीति। यद्यस्त्येव तर्हि
37632 कुतो न दृश्यत इत्याशङ्क्य निष्कृष्टरूपेणादर्शनेऽपि
37633 सर्वानुगतसद्रूपेणापिधानगुप्तेनापि कर्पूरेण स्वगन्धात्मनेव दृश्यत
37634 एवेत्याह - सर्वात्मेति। स्वात्मना प्रत्यग्रूपेण गुप्तेन छन्नेन सर्वात्मा
37635 सर्वानुगतसदात्मा दृश्यत इत्यर्थः॥ ११॥
37636
37637 चिन्मात्राणु स एवेह सर्वं किंचिन्मनःस्थितम्।
37638 न किंचिदिन्द्रियातीतरूपत्वादमलः स्थितः॥ १२॥
37639
37640 कः सर्व न च किंचिच्च इत्यस्योत्तरमाह - चिन्मात्राणुरिति। नन्वपरिच्छिन्नं
37641 कथं परिच्छिन्नसर्वरूपं तत्राह - किंचिदिति। मन
37642 इन्द्रियवृत्तिभिर्नानात्मताप्रत्ययात्किंचिन्मनःपरिच्छिन्नरूपेणैव
37643 सर्वमित्यर्थः। अत एव मन इन्द्रियाद्यपरिच्छिन्नस्वाभाविकरूपेण न
37644 किंचिदपीत्याशयेन त्वया तथोक्तमित्याह - न किंचिदिति॥ १२॥
37645
37646 प्। ३२१) १९४
37647
37648 स एव चैकोऽनेकश्च सर्वसत्त्वात्मवेदनात्।

स एवेदं जगद्धत्ते जगत्कोशस्तथैव हि ॥ १३ ॥

एतदभिप्रायेण वा तव एकस्यानेकसंख्यस्येत्युपक्रम इत्याह - स एवैक इति
। नित्यं समस्य कस्यान्तः इति प्रश्नस्य को जगद्रत्नकोशः स्यात् इत्यस्य
चोत्तरमाह - स एवेति ॥ १३ ॥

इमाश्चित्तमहाम्भोधौ त्रिजगल्लववीचयः ।
प्रज्ञास्तस्मिन्कचन्त्यप्सु द्रवत्वाच्चक्रता इव ॥ १४ ॥

कस्मान्न किंचिच्च पृथगूर्म्यादीव महाम्भसः इत्यस्योत्तरमाह - इमा
इति । चित्तात्मना महाम्भोदिवद्विकारिणि । प्रज्ञाश्चित्तविकल्पमात्ररूपाः । एतेन
कस्येच्छया पृथक्चास्तीत्येतदपि समाहितमेव ॥ १४ ॥

चित्तेन्द्रियाद्यलभ्यत्वात्सोऽणु शून्यस्वरूपवत् ।
स्वसंवेदनलभ्यत्वादशून्यं व्योमरूप्यपि ॥ १५ ॥

दिक्कालाद्यनवच्छिन्नादेकस्मादसतः सतः इति
शून्याशून्योभयात्मतोक्तेस्तात्पर्यमाह - चित्तेन्द्रियादिति ॥ १५ ॥

सोऽहं भवानेव भवान्संपन्नोऽद्वैतवेदनात् ।
स भवान्न भवेन्नाहं जातो बोधबृहद्वपुः ॥ १६ ॥

को भवानेव संपन्नः इत्यस्योत्तरमाह - सोऽहमिति । अहमद्वैतवेदनात्स
आत्मैव संपन्नः सन् भवान् त्वदात्मैव भवान्स संपन्नः अहमेव । इदमपि
अहंताभवत्ताप्रतिसंधानव्यवहारे अव्यवहारदृशा तु स आत्मा न
भवान्नाहं च किंतु बोधबृहद्वपुरेव जातः प्रादुर्भूत इत्यर्थः ॥ १६ ॥

त्वंताहंतात्मकं सर्वं विनिगीर्यावबोधतः ।
न त्वं नाहं न सर्वं च सर्वं वा भवति स्वयम् ॥ १७ ॥

उक्तार्थमेव स्फुटमाह - त्वंतेति ॥ १७ ॥

गच्छन्न गच्छत्येषोऽणुर्योजनौघगतोऽपि सन् ।
संवित्त्या योजनौघत्वं तस्याणोरन्तरे स्थितम् ॥ १८ ॥

गच्छन्न गच्छति च कः इत्यस्योत्तरमाह - गच्छन्निति । योजनौघगत
आकाशवद्योजनौघव्याप्यपि सन् । संवित्त्या स्वप्न इव कल्पनया ॥ १८ ॥

न गच्छत्येष यातोऽपि संप्राप्तोऽपि च नागतः ।
स्वसत्ताकाशकोशान्तर्वासित्वाद्देशकालयोः ॥ १९ ॥

को तिष्ठन्नपि तिष्ठति इत्यस्योत्तरमपि तयैव दिशा आह - न गच्छतीति ॥ १९ ॥

गम्यं यस्य शरीरस्थं क्व किलासौ प्रयाति हि ।
कुचकोटरगः पुत्रः किं मात्रान्यत्र वीक्ष्यते ॥ २० ॥

उक्तमुभयं दृष्टान्तेनोपपादयति - गम्यमित्यादिना । गम्यं गमनेन
प्राप्तव्यं देशान्तरम् ॥ २० ॥

गम्यो यस्य महादेशो यावत्संभवमक्षयः ।
अन्तस्थः सर्वकर्तुर्हि स कथं क्वेव गच्छति ॥ २१ ॥

37701 यथा देशान्तरप्राप्ते कुम्भे वक्रसमुद्रिते |
37702 तदाकाशस्य गमनागमने न तथात्मनः || २२ ||
37703
37704 स्फुटं दृष्टान्तान्तरमाह - यथेति | वक्रसमुद्रिते बद्धमुखे
37705 गमनागमने न स्तस्तथेत्यर्थः || २२ ||
37706
37707 चित्तता स्थाणुता स्वान्तर्यदा स्तोऽनुभवात्मिके |
37708 चेतनस्य जडस्यैव तदासौ द्वयमेव च || २३ ||
37709
37710 कश्चेतनोऽपि पाषाणः इत्यस्य प्रश्नस्य यदि चिद्रूपो जडरूपश्चेति
37711 विरुद्धोभयात्मक इत्यर्थस्तदाह - चित्ततेति | यदा जडस्यैव
37712 देहादेरात्मतादात्म्याध्यासाच्चेतनस्य चित्तता प्रकाशस्वभावता स्थाणुता
37713 जडता चानुभवात्मिके स्वानुभवसाक्षिके स्तस्तदासावविमर्शाद्द्वयं
37714 जडबोधोभयरूपो भवत्येवेत्यर्थः || २३ ||
37715
37716 यदा चेतनपाषाणसत्तैकात्मैकचिद्वपुः |
37717 तदा चेतन एवासौ पाषाण इव राक्षसि || २४ ||
37718
37719 यदा तु चेतनोऽपि पाषाण इव घनरूपः क इति प्रश्नार्थस्तदा
37720 पारमार्थिकमात्मरूपमेव चिद्घनं स इत्याह - यदा चेति || २४ ||
37721
37722 परमव्योम्न्यनाद्यन्ते चिन्मात्रपरमात्मना |
37723 विचित्रं त्रिजगच्चित्रं तेनेदमकृतं कृतम् || २५ ||
37724
37725 कश्चिद्व्योम्नि विचित्रकृत् इत्यस्योत्तरमाह - परमव्योम्नीति |
37726 मिथ्यात्वादकृतमेव कृतम् || २५ ||
37727
37728 तत्संवित्त्या वह्निसत्ता तेनात्यक्तानलाकृतिः |
37729 सर्वगोऽप्यदहत्येव स जगद्द्रव्यपावकः [स सर्वद्रव्यपावकः इति
37730 पाठः साधुः] || २६ ||
37731
37732 वह्नितामजहच्चैव कश्च वह्निरदाहकः इत्यस्योत्तरमाह - तत्संवित्त्येति |
37733 आत्मसत्ताया एव वह्निसत्तात्वे तस्याः सर्वगतत्वात्सर्वगोऽपि सः अदहति न
37734 दहत्येव | अमानोनाः प्रतिषेधे इति नञर्थको निपातोऽकारः | नैतावता स
37735 सर्वगतो नेति मन्तव्यम् | यतः स सर्वद्रव्याणां पावक इव प्रकाशक
37736 इत्यर्थः || २६ ||
37737
37738 प्रज्वलद्भास्वराकारान्निर्मलाद्गगनादपि |
37739 प्रज्वलच्चेतनैकात्मा तस्मादग्निः स जायते || २७ ||
37740
37741 अवह्नेर्जायते वह्निः कस्मादिति प्रश्नस्योत्तरमाह - प्रज्वलदिति || २७ ||
37742
37743 संवेदनाद्यदर्कादिप्रकाशस्य प्रकाशकः |
37744 न नश्यत्यात्मभारूपो महाकल्पाम्बुदैरपि || २८ ||
37745
37746 अचन्द्रार्काग्नितारोऽपि कोऽविनाशः प्रकाशकः इत्यस्योत्तरमाह -
37747 संवेदनादिति || २८ ||
37748
37749 अनेत्रलभ्योऽनुभवरूपो हृद्गृहदीपकः |
37750 सर्वसत्ताप्रदोऽनन्तः प्रकाशः परमः स्मृतः || २९ ||
37751
37752 अनेत्रलभ्यात्कस्माच्च प्रकाशः संप्रवर्तते इत्यस्योत्तरमाह - अनेत्रलभ्य

इति ॥ २९ ॥

प्रवर्ततेऽस्मदालोको मनःषष्ठेन्द्रियातिगात् ।
येनान्तरापि वस्तूनां दृष्टा दृश्यचमत्कृतिः ॥ ३० ॥

तस्य स्वयंज्योतिष्ट्वमनुभावयति - प्रवर्तत इति ।
अस्मदालोकोऽहंकारादिप्रथा मनःषष्ठेन्द्रियातिगादात्मनः
सकाशात्प्रवर्तते । यथा गाढान्धकारस्थितोऽपि त्वं क्वासीति
पृष्ठोऽहमिहास्मीति वक्ति । येन हेतुना अन्तरा आलोकदीपादिकमिति शेषः ।
वस्तूनां स्वदेहेन्द्रियादीनां विषये दृश्यचमत्कृतिरपरोक्षप्रथा
दृष्टा । सर्वानुभवप्रसिद्धेति यावत् ॥ ३० ॥

प। ३२२) १९५

लतागुल्माङ्कुरादीनामनक्षाणां च पोषकः ।
उत्सेधवेदनाकारः प्रकाशोऽनुभवात्मकः ॥ ३१ ॥

लतागुल्म इत्यादिप्रश्नस्योत्तरमाह - लतेति । पोषकः स्वसंनिधानेन
वृद्धिनिमित्तम् । उत्सेधस्य च तत्फलस्य वेदनमेव आकारो यस्य तत्साक्षिणः ॥
३१ ॥

कालाकाशक्रियासत्ता जगत्तत्रास्ति वेदने ।
स्वामी कर्ता पिता भोक्ता आत्मत्वाच्च न किंचन ॥ ३२ ॥

जनकः कोऽम्बरादीनाम् इत्यस्योत्तरमाह - कालाकाशेति । व्यवहारदृशा
चेदं परमार्थदृशा त्वाह - आत्मत्वादिति ॥ ३२ ॥

अणुत्वमजहत्सोऽणुर्जगद्रत्नसमुद्गकः ।
मातृमानप्रमेयात्म जगनास्तीति केवले ॥ ३३ ॥

को जगद्रत्नकोशः स्यात् इत्यस्योत्तरं पुनराह - अणुत्वमिति । समुद्गकः
संपुटकः । कस्य कोशी मणेर्जगत् इत्यस्योत्तरमाह - मात्रित्यादिसार्धेन ॥
३३ ॥

स एव सर्वजगति सर्वत्र कचति स्फुटम् ।
यदा जगत्समुद्रेऽस्मिंस्तदासौ [जगत्समुद्रे इति पाठः] परमो
मणिः ॥ ३४ ॥

दुर्बोधत्वात्तमः सोऽणुश्चिन्मात्रत्वात्प्रकाशदृक् ।
सोऽस्ति संवित्तिरूपत्वादक्षातीतस्तथा न सन् ॥ ३५ ॥

कोऽणुस्तमःप्रकाशः स्यात् इत्यस्योत्तरमाह - दुर्बोधत्वादिति । कोऽणुरस्ति च
नास्ति च इत्यस्योत्तरमाह - सोऽस्तीति ॥ ३५ ॥

दूरे सोऽनक्षलभ्यत्वाच्चिद्रूपत्वान्न दूरगः ।
सर्वसंवेदनाच्छैलो ह्यसावेवाणुरेव सन् ॥ ३६ ॥

कोऽणुर्दूरेऽप्यदूरे च इत्यस्योत्तरमाह - दूरे स इति । कोऽणुरेव महागिरिः
इत्यस्योत्तरमाह - सर्वसंवेदनादिति । विनैव करणं सर्वैरप्यहमहमिति
पुरोवर्तिशैल इवापरोक्षतया संवेदनादिति त्वयोक्त इत्यर्थः ॥ ३६ ॥

तत्संवेदनमात्रं यत्तदिदं भासते जगत् ।

37805 न सत्यमस्ति शैलादि तेनाणावेव मेरुता || ३७ ||
37806
37807 तत्राणुरेव सन् इत्यंशस्य तात्पर्यमाह - तत्संवेदनेति || ३७ ||
37808
37809 निमेषप्रतिभासो [निमेषकृतिभासः इति पाठः] हि निमेष इति
37810 कथ्यते |
37811 कल्पेति प्रतिभासो हि कल्पशब्देन कथ्यते || ३८ ||
37812
37813 निमेष एव कः कल्प इत्यस्योत्तरमाह - निमेषेत्यादिनवभिः || ३८ ||
37814
37815 कल्पक्रियाविलासो हि निमेषः प्रतिभासते |
37816 बहुयोजनकोटिस्थं मनस्येव महापुरम् || ३९ ||
37817
37818 उक्तार्थमुपपादयति - कल्पेति | निमेष एव कल्पे यावन्त्यः क्रियास्तैर्विलसतीति
37819 कल्पक्रियाविलासः प्रतिभासत इत्यर्थः | अल्पान्तर्विस्तृतस्य प्रतिभासे
37820 दृष्टान्तमाह - वह्विति || ३९ ||
37821
37822 निमेषजठरे कल्पसंभवः समुदेति हि |
37823 महानगरनिर्माणं मुकुरेऽन्तरिवामले || ४० ||
37824
37825 तदसंभावनावारणाय दृष्टान्तान्तरमाह - निमेषेति | मुकुरे दर्पणे
37826 || ४० ||
37827
37828 निमेषकल्पशैलादिपूरयोजनकोटयः |
37829 यत्राऽणावेव विद्यन्ते तत्र द्वैतैक्यते कुतः || ४१ ||
37830
37831 निमेषाः कल्पाः शैलादिपूरा योजनकोटयश्च स्वसत्यत्वे विरोधादाश्रय
37832 भेदका यत्राऽणावतिसूक्ष्मेऽपि विद्यन्ते मिथ्यात्वमालम्ब्य समाविशन्ति तत्र
37833 द्वैतैक्ययोरपि तथैव मिथ्यात्वेनैव समावेशादित्यर्थः || ४१ ||
37834
37835 कृतवान्प्रागिदमहमिति बुद्धावुदेति हि |
37836 क्षणात्सत्यमसत्यं च दृष्टान्तः स्वप्नविभ्रमः || ४२ ||
37837
37838 सत्यं व्यावहारिकमसत्यं प्रातिभासिकं च || ४२ ||
37839
37840 दुःखे कालः सुदीर्घो हि सुखे लघुतरः सदा |
37841 रात्रिर्द्वादशवर्षाणि हरिश्चन्द्रस्य चोदिता || ४३ ||
37842
37843 उक्तेऽर्थे लोकानुभवमाख्यायिकां चोदाहरति - दुःख इति | उदिता आविर्भूता ||
37844 ४३ ||
37845
37846 निश्चयो य उदेत्यन्तः सत्यात्मा सत्य एव च |
37847 हेम्नीव कटकादित्वं स एव चिति राजते || ४४ ||
37848
37849 चित्तवृत्त्यनुसारेणैव चितः प्रतिभासो न वस्तुवृत्तानुसारेणेत्याह -
37850 निश्चय इति || ४४ ||
37851
37852 न निमेषोऽस्ति नो कल्पो नादूरं न च दूरता |
37853 चिदणुप्रतिभैवैवं स्थितान्यान्यान्यवस्तुवत् [नान्यान्यवस्तुवत् इति
37854 पाठः] || ४५ ||
37855
37856 किं तर्हि वस्तुवृत्तं तदाह - नेति || ४५ ||

प्रकाशतमसोर्दूरादूरयोः क्षणकल्पयोः।
एकचिद्देहयोरेव न भेदोऽस्ति मनागपि॥ ४६॥

एवमन्येष्वपि विरुद्धेष्वधिष्ठानचिदभेदादेव भेदो नेत्याह -
प्रकाशेति॥ ४६॥

प्रत्यक्षमक्षसारत्वादप्रत्यक्षं ततोऽतिगम्।
दृश्यत्वेनैष वोदेति चेता द्रष्टैव सद्वपुः॥ ४७॥

किं प्रत्यक्षमसद्रूपम् इति प्रश्नस्योत्तरमाह - प्रत्यक्षमिति। अक्षाणां
बाह्यान्तरकरणानां सारत्वात्स्वस्वविषयापरोक्षप्रथानिर्वाहकत्वात्।
ततोऽतिगं तदविषयः। अथवा
प्रत्यक्षादिप्रमाणगम्यदृश्यारोपेणोदयादप्यस्य प्रत्यक्षत्वमित्याह ##-
प्रत्यक्ष इत्यर्थः॥ ४७॥

यावत्कटकसंवित्तिस्तावनास्तीव हेमता।
यावच्च दृश्यतापत्तिस्तावन्नास्तीव सा कला॥ ४८॥

यदि स एव दृश्यात्मा तर्हि कुतो दृश्यस्य हेयता तत्राह - यावदिति। सा
कला वास्तवी चिदेकरसता। तथाच न दृश्यरूपेण परमपुरुषार्थतेति
हेयत्वमिति भावः॥ ४८॥

कटकत्वेऽकृतेऽदृष्टे सुवर्णत्वमिवाततम्।
केवलं निर्मलं शुद्धं ब्रह्मैव परिदृश्यते॥ ४९॥

अत एव दृश्यात्मना अकल्पने कल्पितस्य वा अदर्शने तस्य
ब्रह्मरूपत्वात्पुरुषार्थतेत्याशयेनाह - कटकत्वे इति। अकृते अदृष्टे चेति
च्छेदः॥ ४९॥

सर्वत्वादेव सद्रूपो दुर्लक्ष्यत्वादसद्वपुः।
चेतनश्चेतनात्मत्वाच्चेत्यासंभवतस्त्वचित्॥ ५०॥

असद्रूपमिति प्रश्नांशाशयमाह - सर्वत्वादिति। सर्वानुविद्धसद्रूपेण
प्रथनात्सद्रूपः। निष्कृष्टरूपेण दुर्लक्ष्यत्वाच्चासद्वपुरसद्रूपः। असद्वा
इदमग्र आसीत्ततो वै सदजायत इति श्रुतौ तथा व्यवहारदर्शनादित्याशयः।
किं चेतनमचेतनम् इति प्रश्नोत्तरमाह - चेतन इति। अचित् अचेतन
इत्युक्तस्त्वयेत्यर्थः॥ ५०॥

प्। ३२३) १९५

चिच्चमत्कारमात्रात्मन्यस्मिंश्चित्प्रतिभात्मनि।
जगत्यनिलवृक्षाभे चिच्चेत्यकलने कुतः॥ ५१॥

चेत्याभावमुपपादयति - चिच्चमत्कारेत्यादिना। चित्प्रतिभात्मनि
चित्प्रतिभारूपे अनिललोलितवृक्षवदस्थिरे अनिलमयवृक्षवदत्यन्तासति च।
चिच्चेत्यकलने चैतन्याश्रयविषयताकल्पने॥ ५१॥

यथा तापस्य पीनस्य भासनं मृगतृष्णिका।
एवं पीवरमद्वैतं तथा चिद्भासनं जगत्॥ ५२॥

चिच्चमत्कारमात्रे दृष्टान्तमाह - यथेति। तापस्य आतपस्य। पीनस्य

37909 प्रचुरस्य ॥ ५२ ॥
37910
37911 अर्कांशुभिः सूक्ष्मतरनिर्माणं यदनामयम् ।
37912 अस्तितानास्तिते तत्र कल्पादेरिव कैव धीः ॥ ५३ ॥
37913
37914 यथा अर्करश्मिभिर्वक्ष्यमाणकाञ्चनादिनिर्माणं तत्र निर्माणे अस्तितानास्तिते
37915 ब्राह्मकल्पादिरूपस्य जगत इवेत्यसत उपमाभूतस्य असत्त्वं स्फुटमेव ।
37916 एवंच चिच्चेत्यभेदधीः कैव । निर्विषयेत्यर्थः ॥ ५३ ॥
37917
37918 माययांशुकणाङ्के खे यथा कचति काञ्चनम् ।
37919 तथा जगदिदं भाति चिच्चेत्यकलने कुतः ॥ ५४ ॥
37920
37921 मायया अविद्यया यथा अंशुकणाङ्के सूर्यांशुलेशाञ्चिते खे आकाशे
37922 काञ्चनं कचति प्रथते ॥ ५४ ॥
37923
37924 स्वप्नगन्धर्वसंकल्पनगरे कुड्यवेदनम् ।
37925 न सन्नासद्यथा तद्वद्विद्धि दीर्घभ्रमं जगत् ॥ ५५ ॥
37926
37927 तथा चैवंविधन्यायभावनाभ्यासनिर्मलात् ।
37928 चिदाकाशेन निर्याति यथा भूतार्थदर्शिनः ॥ ५६ ॥
37929
37930 अस्त्वेवं जगद्भ्रान्तिसिद्धं किं ततस्तत्राह - तथाचेति । तथाच
37931 एवंविधानां मिथ्यात्वोपपादकन्यायानां
37932 पुनःपुनर्भावनालक्षणेनाभ्यासेन निर्मलान्मनसो यथाभूतार्थदर्शिनः
37933 पारमार्थिकं ब्रह्म दृष्टवतः पुंसोऽविद्यानाशे सति चिदाकाशे पुनः
37934 संसारो न निर्याति पुनरावृत्तिर्नास्तीति सिद्धमित्यर्थः । अथवा
37935 न्यायपरिष्कृततत्त्वदृशा सृष्टिरेव नाभूदित्यर्थः ॥ ५६ ॥
37936
37937 न कुड्याकाशयोर्भेदो दृश्यसंवेदनादृते ।
37938 आब्रह्मजीवकलनाद्यद्रूढं रूढमेव च ॥ ५७ ॥
37939
37940 अथवा विषयरूपभेदकसंवेदनमेदादेव भिन्नमिव न वस्तुतस्तथैव
37941 आब्रह्मस्तम्बपर्यन्तनिरूढजीवानुभवादित्याह - नेति ॥ ५७ ॥
37942
37943 प्रतिभासाच्चिदाकाशे सत्त्वशून्यं भवन्ति ताः ।
37944 प्रकचन्ति ह्यनिर्भाव्याः प्रभापिण्ड इव प्रभाः ॥ ५८ ॥
37945
37946 यदि न भेदस्तर्हि कथं कुड्यादिभेदकलना जायन्ते तत्राह - प्रतिभासादिति
37947 । ताः कलनाः सत्त्वशून्यं यथा स्यात्तथा भवन्तीत्यर्थः । अत्यन्तासत्त्वे
37948 खपुष्पवद्भानानुपपत्तेराह - अनिर्भाव्या इति । यौक्तिकदृशा
37949 अनिर्वचनीया इत्यर्थः ॥ ५८ ॥
37950
37951 पृथक्तामतिभासस्य स्वचमत्कारयोगतः ।
37952 सर्वात्मिका हि प्रतिभा परा वृक्षात्मबीजवत् ॥ ५९ ॥
37953
37954 एवं सोपपत्ति प्रासङ्गिकं किं चेतनमचेतनम् इति प्रश्नोत्तरमुक्त्वा
37955 शिष्टानां प्रश्नानामुत्तरं राजार्थे
37956 परिशेषयंस्तदज्ञानशङ्कानिवृत्तये तेष्ववयुत्य द्वित्राणामुत्तरं
37957 विवक्षुर्द्वैतमिथ्यात्वोपवर्णनप्रसञ्जितं द्वैतमप्यपृथक्कस्मात्
37958 इत्यस्योत्तरमाह - पृथक्तेति । पृथक्तासंस्कारसंस्कृताया
37959 मतेर्बुद्धिवृत्तेर्यो भासोऽन्तर्गत आत्मप्रकाशस्तस्य यः स्वचमत्कारः
37960 पृथक्ताप्रकटनशक्तिलक्षणस्तद्योगतो द्वैतं प्रतिभातमपि

अपृथगेवेत्यर्थः। तत्र हेतुमाह - सर्वात्मिकेति। प्रतिभा आत्मप्रकाशः॥
५९॥

बीजमन्तस्थवृक्षत्वं नानाऽनाना यथैकदृक्।
तथाऽसंख्यजगद्ब्रह्म शान्तमाकाशकोशवत्॥ ६०॥

वृक्षात्मबीजवदिति दृष्टान्तं विवृण्वन् कोऽन्तर्बीजमिवान्तस्थं स्थितः
कृत्वा त्रिकालगः इत्यस्योत्तरमाह - बीजमिति। एकदृक् एकरूपं बीजं नाना
पृथग्भूतं अनाना अपृथग्भूतं च अन्तस्थवृक्षत्वं
अन्तर्गतवृक्षाकारं कृत्वा स्थितं तथा ब्रह्माप्यसंख्यजगदित्यर्थः॥
६०॥

बीजस्यान्तस्थवृक्षस्य व्योमाद्वैता स्थितिर्यथा।
ब्रह्मणोऽन्तस्थजगतः साक्षित्वाच्चित्स्थितिस्तथा॥ ६१॥

आकाशकोशवदित्युक्तेस्तात्पर्यं स्फुटयति - बीजस्येति। व्यधिकरणे
षष्ठ्यौ। बीजान्तर्गतवृक्षस्यातिसूक्ष्मत्वात्स्थितिर्यथा व्योमाद्वैता
आकाशतुल्या तथा ब्रह्मान्तर्गतजगतोऽप्यात्मसाक्षित्वात्तत्साक्षिणः
पृथगनुपलम्भाच्चिद्रूपेणैव स्थितिरिति
चितिभेदकाभावादाकाशकोशसाम्यमित्यर्थः॥ ६१॥

शान्तं समस्तमजमेकमनादिमध्यं
नेहास्ति काचन कलाकलना कथंचित्।
निर्द्वन्द्वशान्तमतिरेकमनेकमच्छ-
माभासरूपमजमेकविकासमास्ते॥ ६२॥

एतावतैव सर्वप्रश्नानामुत्तरमुक्तप्रायमिति
सूचयन्सर्वप्रश्नपरमतात्पर्यविषयाद्वितीयचिन्मात्रपरमार्थस्थितिप्रदर्शन्
एनोपसंहरति - शान्तमिति। निर्द्वन्द्वैः शान्तमतिभिरेव रिच्यते
मायातत्कार्यमलनिरासेन परिशोध्यत इति निर्द्वन्द्वशान्तमतिरेकम्।
अनेकमेकत्वाख्यगुणेनापि शून्यम्। एकमेव परितो निरङ्कुशं विकसति
बृहत्तमत्वादित्येकविकासम्। आभासरूपं चिन्मात्रमास्ते परमार्थत
इत्यर्थः। अजपदाभ्यां जन्मादिविकाराणां तद्वतां च निरासः॥ ६२॥

इत्यार्षे श्रीवासिष्ठमहारामायणे मोक्षोपायेषुत्पत्तिप्रकरणे क०
प्रश्नभेदनं नामाशीतितमः सर्गः॥ ८०॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे प्रश्नभेदनं
नामाशीतितमः सर्गः॥ ८०॥



एकाशीतितमः सर्गः ८१

राक्षस्युवाच।

अहो नु परमार्थोक्तिः पावनी तव मन्त्रिणः।
राजा राजीवपत्राक्ष इदानीमेष भाषताम्॥ १॥

इह राजाऽवशिष्टानां प्रश्नानामुत्तरं क्रमात्।
वदन्वक्ति विशेषज्ञो युक्तिमुक्तेष्वपि क्वचित्॥ १॥

38013
38014 मन्त्रिवचनचमत्कारदर्शनादेव राज्ञोऽपि तत्त्वज्ञत्वे परिज्ञातेऽपि राजोक्तौ
38015 चमत्कारातिशयं संभाव्य श्रोतुकामा राक्षस्युवाच - अहो इति ॥ १ ॥
38016
38017 राजोवाच ।
38018
38019 जागतप्रत्ययाभावो यस्याहुः प्रत्ययं परम् ।
38020 सर्वसंकल्पसंन्यासश्चेतसा यत्परिग्रहः ॥ २ ॥
38021
38022 राजा च तदभिप्रायमालक्ष्य सर्वप्रश्नमुख्यतात्पर्यविषयं ब्रह्म
38023 विरोधाभासोक्तिमुखचमत्कारातिशयेन दर्शयति - जागतेत्यादिचतुर्भिः ।
38024 अवस्थात्रयदर्शनलक्षणस्य जागतप्रत्ययस्याभावो बोधलक्षणा
38025 निवृत्तिरेव स्वतःस्फुरदधिष्ठानरूपतुरीयलक्षणा यस्य दर्शनमित्यर्थः ।
38026 स च तदेकनिष्ठतारूपेण तत्परिग्रहेण भवतीति तत्परिग्रहं लक्षणेन
38027 दर्शयति - सर्वेति ॥ २ ॥
38028
38029 यत्संकोचविकासाभ्यां जगत्प्रलयसृष्टयः ।
38030 निष्ठा वेदान्तवाक्यानामथ वाचामगोचरः ॥ ३ ॥
38031
38032 यस्य मायिकाभ्यां संकोचविकासाभ्याम् । वाचामगोचरो य इति शेषः ॥ ३ ॥
38033
38034 कोटिद्वयान्तरालस्थं मध्ये कोटिद्वयीमयम् ।
38035 यस्य चित्तमयी लीला जगदेतच्चराचरम् ॥ ४ ॥
38036
38037 सत्त्वासत्त्वभानाभानकोटिद्वयस्यान्तरालस्थमनिर्वचनीयमित्यर्थः । अत
38038 एवाद्यन्तयोरसत्कोट्यैव ग्रस्तत्वेऽपि मध्ये दैशिकपरिच्छेदेन क्वचिदस्ति
38039 क्वचिन्नास्तीति कोटिद्वयीमयम् । एवमाद्यन्तयोरभानग्रस्तत्वेऽपि मध्ये
38040 तत्तदिन्द्रिययोग्यरूपेण भाति रूपान्तरेण तत्त्वतश्च न भातीति मध्ये
38041 कोटिद्वयीमयम् । अत एव सदसत्संधिरूपस्य चिज्जडसंधिरूपस्य च
38042 हिरण्यगर्भात्मकस्य यदीयचित्तस्य विकारत्वाल्लीलाभूतमेतज्जगदित्यर्थः ॥ ४ ॥
38043
38044 यस्य विश्वात्मकत्वेऽपि खण्ड्यते नैकपिण्डता ।
38045 सन्मात्रं तत्त्वया भद्रे कथ्यते ब्रह्म शाश्वतम् ॥ ५ ॥
38046
38047 एकपिण्डता अखण्डवस्तुता । कथ्यते पृच्छ्यते ॥ ५ ॥
38048
38049 एषोऽणुर्वेदनाद्वायुः स्वभ्रान्तिर्दृगदृश्यत
38050 [भ्रान्तिदृगदृश्यत इति पाठः साधुः] ।
38051 अतो न किंचिद्वाय्वादि केवलं शुद्धचेतनम् ॥ ६ ॥
38052
38053 मन्त्र्युक्तशिष्टेषु प्रथमं कश्च वायुरवायुश्च इति प्रश्नं समाधत्ते ##-
38054 [स्वात्मन्येवेत्यादिफलितार्थकथनम्]
38055 वायुत्ववेदनाद्भ्रान्तिरन्यथाग्रहो यस्य तथाविधः सन् वायुरदृश्यत ।
38056 परमार्थतस्त्ववायुरेवेत्याह - अत इति ॥ ६ ॥
38057
38058 शब्दसंवेदनाच्छब्दः शब्दस्य भ्रान्तिदर्शनम् ।
38059 ततोऽत्र शब्दशब्दार्थदृष्टेर्दूरतरं गतः ॥ ७ ॥
38060
38061 कः शब्दोऽशब्द एव चेत्यस्याप्येवमेवोत्तरं बोध्यमित्याह - शब्देति ॥ ७ ॥
38062
38063 सोऽणुः सर्वं न किंचिच्च सोऽहं नाहं स एव च ।
38064 सर्वशक्यात्मनोऽस्यैव प्रतिभैकात्र कारणम् ॥ ८ ॥

कः सर्व नच किंचिच्च इत्यस्योत्तरमाह - सोऽणुरिति | कोऽहं नाहं च किं
भवेत् इत्येतत्समाधत्ते - सोऽहमिति | अहंकारनिष्कर्षे सोऽहं तद्रूपेण तु
नाहम् | अथवा अहंकारतत्ताभ्यामुपलक्षणे सोहम् | ताभ्यामनुपलक्षणे तु
नाहं स च नैवेत्यर्थः | एवं वास्तवावास्तववैचित्र्ये किं कारणं तदाह ##-
वास्तवप्रतिभाशक्तिर्वास्तवरूपव्यक्तौ च कारणमित्यर्थः || ८ ||

आत्मा यत्नशतप्राप्यो लब्धेऽस्मिन्न च किंचन |
लब्धं भवति तच्चैतत्परमं वा न किंचन || ९ ||

किं प्रयत्नशतप्राप्यम् लब्धं न किंचिद्भवति इत्यनयोरुत्तरमाह -
आत्मेति | लब्धेऽस्मिन्नच किंचन इत्येतदुपपादयति - लब्धमिति |
तदेतदात्मरूपत्वादेव प्रागेव लब्धं भवतीति यत्नस्तेन न सफलः | ततः
परममुत्कृष्टमन्यद्वा यत्नफलं न किंचनेत्याशयेन त्वया तथा
पृष्टमित्यर्थः || ९ ||

तावज्जन्म वसन्तेषु संसृतिव्रततिश्चिरम् |
विकसत्युदितो यावन्न बोधो मूलकाषकृत् || १० ||

तर्हि किं ज्ञानप्रयत्नो व्यर्थ एवेति शङ्कां परिहरन् किंतु सर्वं न लभ्यते
इत्यस्य तात्पर्यमाह - तावदिति | तथाच यावत्संसारमूलाज्ञाननाशो न
वृत्तस्तावल्लब्धमप्यात्मतत्त्वं सर्वं पूर्णरूपं न लब्धम् | बोधेन तु
पूर्णं लभ्यत इति न तद्यत्नवैयर्थ्यमित्यर्थः || १० ||

अणुनानेन रूपत्वं दृश्यतामिव गच्छता |
तापेनाम्बुधियेवेदं स्वस्थेनैवापहारितम् || ११ ||

स्वस्थेन जीवितेनोच्चैः केनात्मैवापहारितः इत्यस्योत्तरमाह - अणुनेति |
रूपत्वं साकारभावं प्राप्येति शेषः | तापेन मरुभूम्यातपेन | इदं
वास्तवात्मरूपम् || ११ ||

अनेन संविदणुना मेरुस्त्रिभुवनं तृणम् |
वमित्वा बहिरन्तस्थं मायात्मकमवेक्ष्यते || १२ ||

केनाणुनान्तः क्रियते मेरुस्त्रिभुवनं तृणम् इत्यनयोरुत्तरमाह - अनेनेति
| मेरुरन्तः क्रियते त्रिभुवनं च तृणमिव क्रियत इत्यर्थः | यद्यन्तः क्रियते
तर्हि बहिः कथमवेक्ष्यते तत्राह - वमित्वेति | बहिर्वमित्वेव अन्तरेव
बाह्यमिव कल्पयित्वेति यावत् || १२ ||

चिदणोरन्तरे यद्यदस्ति तद्दृश्यते बहिः |
संकल्पेष्टालिङ्गनदिदृष्टान्तोऽत्र [संकल्पेष्वालिङ्गनादि इति
पाठः] हि रागिणः || १३ ||

आन्तरीमपि सांकल्पिकाङ्गनां तदालिङ्गनं च
बाह्यसंस्कारबीजत्वाद्बहिरिव पश्यामीति रागिणामनुभवादित्यर्थः || १३ ||

प्। ३२५) १९६

आदिसर्गे सर्वशक्तिश्चिद्यथैवोदितात्मना |
तथाशु पश्यत्यखिलं संकल्पे पर्वतः स्वतः || १४ ||

ईदृशनियमे को हेतुस्तत्राह - आदिसर्ग इति | आदिसर्गे प्रवृत्ता नियतिरेव

38117 हेतुरित्यर्थः। यथा इक्षोर्वेण्वादेर्वा प्रथमपर्वतो
38118 यादृशशाखापत्राङ्कुराद्युद्गमस्तथैव द्वितीयादिपर्वभ्योऽपीति स्वतो
38119 नियमस्तथा आदिसर्गसंकल्पे पर्वतोऽपि इदानींतनसंकल्पे स्वतो नियम इति
38120 शेषः॥ १४॥
38121
38122 अभिजातस्य यस्यान्तर्यद्यथा प्रतिभासते।
38123 तत्तथा पश्यतीवासौ दृष्टान्तोऽत्र शोशोर्मनः॥ १५॥
38124
38125 अभिजातस्य आविर्भूतचित्तस्य च॥ १६॥
38126
38127 परमाणुतयैवापि चिन्मातेणानुनामुना।
38128 परिसूक्ष्मतमेनैव विष्वग्विश्वं प्रपूरितम्॥ १६॥
38129
38130 केनाप्यणुक्रमात्रेण पूरिता शतयोजनी इत्यस्योत्तरमाह - परमाणुतयेति।
38131 देशतः परमाणुतया वस्तुतश्चिन्मात्रेणाणुना कालतः परिसूक्ष्मतमेनेति
38132 त्रिविधपरिच्छेदकल्पनस्याप्यवधिभूतेनापीत्यर्थः। विष्वक् सर्वतः॥ १६॥
38133
38134 अणुरेव न मात्येष योजनानां शतेष्वपि।
38135 सर्वगत्वादनादित्वादरूपत्वादनाकृतिः॥ १७॥
38136
38137 कोऽणुरेव भवन्माति न योजनशतेष्वपि इत्यस्योत्तरमाह - अणुरेवेति॥ १७॥
38138
38139 यथा दूर्तेन खड्गेन [खिङ्गेन इति पाठः] पुंसा बालः
38140 प्रतार्यते।
38141 सुभ्रूविकारनयननिरीक्षणविचेष्टितैः॥ १८॥
38142
38143 खिड्गेन वि।एतन बालो मुग्धः स्त्रीजन शोभनैर्भ्रूविकारैर्नयनाभ्यां
38144 निरीक्षणैर्विचेष्टितैश्च प्रतार्यते वशीकृत्याकृश्यते॥ १८॥
38145
38146 चिदालोकेन शुद्धेन सपर्वततृणं जगत्।
38147 नाट्यतेऽविरतं तद्वद्विवृत्त्याभिनयं सदा॥ १९॥
38148
38149 यथायं दृष्टान्तस्तद्वच्चिदालोकेनापि अभिनयं व्यञ्जकचेष्टां विवृत्य
38150 जगन्नाट्यते सदेत्यर्थः॥ १९॥
38151
38152 तेनैवानन्तरूपत्वादणुना वाससा यथा।
38153 संविदा [संविदन्तर्भवद्बाह्ये इति पाठः साधुः]
38154 तद्भवद्बाह्ये कृत्वा मेर्वादिवेष्टितम्॥ २०॥
38155
38156 कस्याणोरुदरे सन्ति किलावनिभृतां घटाः इत्येतत्प्रत्याह - तेनेति। यथा
38157 वाससा स्वान्तर्भवन्मेर्वादिचित्रं बाह्य इव कृत्वा वेष्टितं तद्वदित्यर्थः॥
38158 २०॥
38159
38160 दिक्कालाद्यनवच्छिन्नरूपत्वान्मेरुतो बृहत्।
38161 वालाग्रशतभागात्माप्येष सूक्ष्मः परोऽनुकः॥ २१॥
38162
38163 अणुत्वमजहत्कोऽणुर्मेरोः स्थूलतराकृतिः इत्यस्योत्तरमाह - दिक्कालेति॥ २१॥
38164
38165 शुद्धसंवेदनाकाशरूपस्य परमाणुना।
38166 शोभते नहि साम्योक्तिर्मेरुसर्षपयोरिव॥ २२॥
38167
38168 प्रतिप्रश्नमात्मन्यणुशब्दप्रयोगस्य मन्त्रिणा योऽभिप्राय उक्तः

38169 अनाख्यत्वादगम्यत्वान्मनःषष्ठेन्द्रियस्थितेः।
38170 चिन्मात्रमेवमात्माणुराकाशादपि सूक्ष्मकः॥ इति कर्कट्या च स
38171 एवाभिप्रेतोऽभ्युपगतश्चेति निश्चित्य राजा स्वस्य विशेषज्ञतां दर्शयितुं तं
38172 दूषयति - शुद्धेति। सौक्ष्म्यमात्रेण नापरिच्छिन्नः
38173 परिच्छेदोत्कर्षावधिपरमाणुसादृश्यमालम्ब्य गौण्याऽनुरिति व्यपदेष्टुं
38174 शक्य इति भावः॥ २२॥
38175
38176 मायाकलापिनाणुत्वं निर्माय परमात्मनि।
38177 हेम्नीव कटकत्वेन नानात्र समता भवेत्॥ २३॥
38178
38179 कथं तर्हि अणोरणीयान्महतो महीयान् एषोऽणुरात्मा चेतसा वेदितव्यः
38180 इत्यादिश्रुतिषु तथा व्यपदेश इति चेत्सर्वशक्तिमत्त्वान्महत्त्वमिवाणुत्वमपि
38181 आत्मनि मायया निर्माय स्थितत्वान्मुख्यवृत्तिरेवात्राणुशब्दो नात्र
38182 समतानिमित्तमित्याह - मायेति। मायया कलापिना भूषितेन।शबलेनेति यावत्
38183 । हेम्नि स्वनिर्मितकटकादित्वेनेव अत्र समता न भवेत्।
38184 नानेत्यनेकविनार्थयोरित्यनुशासनान्नञो नाञः स्वार्थे विधानाच्च
38185 नानाशब्दो निषेधार्थः। इत्थमेव हि वालाग्रशतभागस्य शतधा कल्पितस्य
38186 च। भागो जीवः स विज्ञेयः इत्यादिश्रुतयो वालाग्रशतभागात्मा इति त्वदुक्तिश्च
38187 समंजसेति भावः॥ २३॥
38188
38189 प्रकटोऽनेन दीपेन प्रकाशोऽनुभवात्मना।
38190 स्वसत्तानाशपूर्वो हि विनानेन भवेत्ततः॥ २४॥
38191
38192 कोऽणुः प्रकाशतमसां दीपः इत्यस्योत्तरमाह - प्रकट इति।
38193 यद्यनेनात्मदीपेन विनैव प्रकाशोऽन्यो वा भवेत्। ततो हि तर्हि स्वस्य सत्ताया
38194 नाशोऽदर्शनं तत्पूर्वः असन्नेव भवेदित्यर्थः॥ २४॥
38195
38196 यदि सूर्यादिकं सर्वं जगदेकं जडं भवेत्।
38197 ततः किमात्मकं रूपं प्रकाशः स्यात्क्व वाथ किम्॥ २५॥
38198
38199 किंचैवं सति जगदान्ध्यमपि स्यादित्याह - यदिति॥ २५॥
38200
38201 शुद्धसन्मात्रचित्त्वं यत्स्वतः स्वात्मनि संस्थितम्।
38202 तदेतदणुना तेजो दृष्टं बहिरवस्थितम्॥ २६॥
38203
38204 चिदणुना स्वान्तरेव तेजस्तम-आदेः कल्पितत्वादपि तस्य तदधीनः प्रकाश
38205 इत्याह - शुद्धेति। तदेतदणुना तेनैतेनाणुना॥ २६॥
38206
38207 तेजांस्यर्केन्दुवह्नीनां न भिन्नानि तमोघनात्।
38208 एतावानेव भेदोऽस्ति यद्वर्णे शौक्ल्यकृष्णते॥ २७॥
38209
38210 ननु अर्केन्द्वादिभिरेव प्रकाशसिद्धेः किं चिदणुना तत्राह - तेजांसीति।
38211 तमोघनात् स्वकारणाज्ञानात्। एतावानिति। जाड्यांशे तु न भेद इत्याशयः॥
38212 २७॥
38213
38214 यादृक्कज्जलनीहारे मेघनीहारयोर्भवेत्।
38215 तादृक्प्रकाशतमसोर्भेदो नेति तयोः स्थितिः॥ २८॥
38216
38217 कज्जलवर्णे नीहारे सति मेघ इति व्यपदेशान्मेघनीहारयोर्यादृग्भेदो भवेत्
38218 प्रकाशतमसोरपि तादृगेवेति तयोर्न स्वतो भेदोऽस्तीति स्थितिरित्यर्थः॥ २८॥
38219
38220 जडयोरुपलम्भाय चिदादित्यः किलैतयोः।

यदा तपति तेनैते लब्धसत्तैकतां गते ॥ २९ ॥

चिदधीनप्रकाशसत्तावत्त्वेनापि तयोर्न भेद इत्याह - जडयोरिति ॥ २९ ॥

तपत्येकश्चिदादित्यो रात्रिंदिवमतन्द्रितः ।
अन्तर्बहिः शिलाद्यन्तरप्यनस्तमयोदयः ॥ ३० ॥

चैतन्यस्य तु न क्वचिदप्यप्रकाशप्रसक्तिरित्याह - तपतीति ॥ ३० ॥

त्रिलोकी भाति तेनेयं जीवस्य प्रथितात्मनः ।
नानोपलम्भभाण्डाढ्या कुटी कठिनकोटरा ॥ ३१ ॥

नानाविधैरुपलम्भैर्भोगैर्भाण्डैस्तत्साधनैश्चाढ्या कुटीव
कठिनकोटरा ॥ ३१ ॥

प। ३२६) १९७

तमस्त्वं तमसो देहमविनाशयतामुना ।
तप्यतेऽभासया भासा सर्वमाभास्यते तमः ॥ ३२ ॥

ननु यद्यात्मना तमः प्रकाश्यते तर्हि तस्य तमस्त्वमेव नश्येत्
नह्यप्रथास्वभावं तत्तदनाशे प्रथमानं कर्तुं शक्यमित्याशङ्क्याह
- तमस्त्वमिति । अमुना अभासया स्वतत्त्वप्रतिभासशून्यया भासा चैतन्येन
तमसो देहं स्वरूपभूतं तमस्त्वमविनाशयता तमस्तप्यते कार्यभावाय
क्षोभ्यते । ततः सर्वजगद्भूतं तम आभास्यत इत्यर्थः ॥ ३२ ॥

पद्मोत्पले यथार्केण तपता प्रकटीकृते ।
प्रकाशतमसो सत्ते चितैवं प्रकटीकृते ॥ ३३ ॥

तत्सत्ताप्रकटनहेतुत्वादप्यसौ न तन्निवर्तक इत्याशयेनाह - पद्मोत्पले इति
॥ ३३ ॥

अर्कः कुर्वन्नहोरात्रे दर्शयत्याकृतिं यथा ।
चितिः सदसती कृत्वा दर्शयत्याकृतिं तथा ॥ ३४ ॥

सदसती आविर्भावतिरोभावलक्षणे प्रकाशतमसी ॥ ३४ ॥

चिदणोरन्तरे सन्ति समग्रानुभवाणवः ।
यथा मधुरसस्यान्तः पुष्पपत्रफलश्रियः ॥ ३५ ॥

कस्याणोरुदरे सन्ति समग्रानुभवाणवः इत्यस्योत्तरमाह - चिदणोरिति ।
यथेति । मधुकरैः पत्रफलादिरसस्याप्याहरणेन
मधूत्पादनसंभवादित्याशयः । अथवा मधुरसस्य
वसन्तशोभायास्तात्कालिकवृक्षादिरसस्य वा ॥ ३५ ॥

उद्यन्ति चिदणोरेते समग्रानुभवाणवः ।
मधुमासरसाच्चित्रा इव खण्डपरम्पराः ॥ ३६ ॥

तदेव स्पष्टमाह - उद्यन्तीति । खण्डपरम्परा
वनखण्डसौन्दर्यक्रमाः ॥ ३६ ॥

परमात्माणुरत्यन्तनिःस्वादुः सूक्ष्मतावशात् ।

38273 समग्रस्वादुसत्तैकजनकः स्वदते स्वयम् ॥ ३७ ॥
38274
38275 कोऽणुरत्यन्तनिस्वादुरपि संस्वदतेऽनिशम् इत्यस्योत्तरमाह - परमात्मेति ॥ ३७
38276 ॥
38277
38278 यो यो नाम रसः कश्चित्समस्तोऽप्यप्स्ववस्थितः ।
38279 प्रतिबिम्बमिवादर्शे तं विना नास्त्यसौ स्वतः ॥ ३८ ॥
38280
38281 सर्वजलान्तर्गतरसाविर्भावस्यात्मनिमित्तत्वादपि स स्वदत इति वक्तुं
38282 शक्यमित्याह - यो य इति । असौ रसः ॥ ३८ ॥
38283
38284 त्यजता संस्थितं सर्वं चिन्मात्रपरमाणुना ।
38285 त्यक्तं जगदसंवित्त्या संवित्त्या सर्वमाश्रितम् ॥ ३९ ॥
38286
38287 केन संत्यजता सर्वमणुना सर्वमाश्रितम् इत्यस्योत्तरमाह - त्यजतेति ।
38288 असंवित्त्या अस्फुरणेन ॥ ३९ ॥
38289
38290 अशक्तया स्वात्मगुप्तौ सर्वमाच्छादितं जगत् ।
38291 चित्ताणुतामेव [चिताणुतां इति पाठः] परां संप्रसार्य वितानवत्
38292 ॥ ४० ॥
38293
38294 केनात्माच्छादनाशक्तेनाणुनाच्छादितं जगत् इत्येतस्योत्तरमाह -
38295 अशक्तयेति । गुप्तौ परिच्छिद्य तिरोधाने ॥ ४० ॥
38296
38297 आत्मगुप्तौ न शक्नोति परमात्माम्बराकृतिः ।
38298 मनागपि क्षणमपि गजो दूर्वावने यथा ॥ ४१ ॥
38299
38300 उक्तस्याशयं स्फुटमाह - आत्मगुप्ताविति ॥ ४१ ॥
38301
38302 तथाप्याक्रान्तवान्विश्वं ज्ञातो गोपायति क्षणात् ।
38303 जगद्धानाकणं बाल इवाहो घनमायिता ॥ ४२ ॥
38304
38305 जगत् जगदन्तःपातिजीवजातं ज्ञातः सन् स्वात्मलाभेन गोपायति रक्षति यथा
38306 बालो ज्ञातः प्रबुद्धः सन् धानाकणं गोपायति न सुप्तस्तद्वत् ।
38307 नन्वीदृशस्वप्रकाशपूर्णात्मनः कथं बालवत् स्वात्मविस्मृतिस्तत्राह ##-
38308
38309 चिन्मात्रानुनयेनेदं जगत्सन्नपि जीवति ।
38310 वसन्तरसबोधेन विचित्रेव वनावली ॥ ४३ ॥
38311
38312 जगल्लये न कस्याणोः सद्भूतमपि जीवति इत्यस्योत्तरमाह -
38313 चिन्मात्रानुनयेनेति । सन्नपि सन्नमपि जगत् । छान्दसो मलोपः । प्रलयेन
38314 लीनमपीत्यर्थः । चिन्मात्रस्यानुनयेनावलम्बेन जीवति । प्रलयेऽपि चित्सत्तयैव
38315 जगत्संस्कारशेषं तिष्ठतीत्यर्थः । वसन्तकाले पल्लवादिहेतुरसोद्बोधेन
38316 निमित्तेन ॥ ४३ ॥
38317
38318 चित्तसत्तैवमखिलं स्वतो जगदिवोदितम् ।
38319 मधुमासरसोल्लासाच्चित्रो हि वनखण्डकः ॥ ४४ ॥
38320
38321 यदि प्रलये सर्गे च ब्रह्मसत्तयैव जगज्जीवति तर्हि सर्गे को विशेषो
38322 येनाविर्भवतीत्याशङ्क्याह - चित्तसत्तेति । प्रलये च न चित्तसत्ता पृथगस्तीति
38323 विशेष इति भावः ॥ ४४ ॥
38324

सत्यं चिन्मयमेवेदं जगदित्येव विद्ध्यलम् ।
वसन्तरसमेव त्वं विद्धि पल्लवगुल्मकम् ॥ ४५ ॥

सर्वावयविसारत्वात्सहस्रकरलोचनः ।
परमाणुरसावेव नित्यानवयवोदयः ॥ ४६ ॥

एवंच न चिज्जगतोस्तत्त्वतो भेद इत्याह - सत्यमिति ॥ ४५ ॥ ४६ ॥

निमेषांशावबोधो हि चिदणोः प्रतिभासते ।
यतः कल्पसहस्रौघः स्वप्ने वार्धकबाल्यवत् ॥ ४७ ॥

अजातावयवः कोऽणुः सहस्रकरलोचनः इत्यस्योत्तरमाह - सर्वेति । सर्वे
येऽवयविनश्चतुर्विधा भूतग्रामास्तत्सारत्वात्तदात्मत्वादित्यर्थः । को निमेषो
महाकल्पः कल्पकोटिशतानि च इत्यस्योत्तरमाह - निमिषेति । इदं च
लीलोपाख्यानेन दर्शितमेव ॥ ४७ ॥

ततः सोऽपि निमेषोणुः कल्पकोटिशतान्यलम् ।
सर्वसत्ताविलासेन प्रतिभैका विजृम्भते ॥ ४८ ॥

अभुक्तवत्येव यथा भुक्तवानहमित्यलम् ।
जायते प्रत्ययस्तद्वन्निमेषे कल्पनिश्चयः ॥ ४९ ॥

अभुक्त्वा भुक्तवानस्मीत्येवं प्रत्ययशालिनः ।
दृश्यन्ते वासनाविष्टाः [वासनानिष्ठा इति पाठः] स्वप्ने
स्वमरणं यथा ॥ ५० ॥

जगन्ति परितिष्ठन्ति परमाणौ चिदात्मनि ।
प्रतिभासाः प्रवर्तन्ते तत एव हि जागताः ॥ ५१ ॥

अणौ जगन्ति तिष्ठन्ति कस्मिन्बीज इव द्रुमे इत्यस्योत्तरमाह - जगन्तीति ॥ ५१ ॥

यदस्ति यत्र तत्तस्मात्समुदेति तदेव तत् ।
आकारिणि विकारादि दृष्टं न गगनेऽमले ॥ ५२ ॥

यद्यत्रास्ति तत्ततः समुदेति यथा स्तम्भात्पुत्रिका तदेव च तद्भवति ॥ ५२ ॥

प्। ३२७) १९७

चिति भूतानि भूतानि वर्तमानानि संप्रति ।
भविष्यन्ति च भूतानि सन्ति बीजे द्रुमा इव ॥ ५३ ॥

बीजानि निष्कलान्तानि इत्यादेस्तात्पर्यमाह - चितीति । भूतान्यतीतानि संप्रति
वर्तमानानि अग्रे भविष्यन्ति च भूतानि चिति सदा तिष्ठन्तीत्यर्थः ॥ ५३ ॥

निमेषकल्पावेतेन तुषेणान्नकणाविव ।
वलिता वेषचेत्याभ्यामणुः स्वात्माङ्ककं श्रितः ॥ ५४ ॥

कल्पः कस्य निमेषस्य बीजस्येवान्तरस्थितः इत्यस्य तात्पर्यमाह - निमेषेति ।
अन्नकणौ तण्डुलतदवयवौ तुषेण व्रीहित्वचेव वलितौ परितो वेष्टितौ ।
एषोऽणुश्चेत्याभ्यां कल्पनिमेषाभ्यां स्वात्माङ्ककं स्वैकदेशं श्रित
आश्रितः । विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् इति
भगवद्वचनादिति भावः ॥ ५४ ॥

38377

38378 उदासीनवदासीनो न संस्पृष्टो मनागपि।
38379 एष भोक्तृत्वकर्तृत्वैः स्वात्मा सर्वजगत्यपि॥ ५५॥

38380

38381 कः प्रयोजनकर्तृत्वमप्यनाश्रित्य कारकः इत्यस्योत्तरमाह -
38382 उदासीनवदित्यादिना॥ ५५॥

38383

38384 जगत्सत्तोदिते यं हि शुद्धचित्परमाणुतः।
38385 परमाणोश्च भोक्तृत्वकर्तृत्वे केवलं स्थिते॥ ५६॥

38386

38387 केवलं विनैव क्रियाभोगसंबन्धं स्थिते॥ ५६॥

38388

38389 जगन्न किंचित्क्रियते सर्वदैव न केनचित्।
38390 विलीयते च नो किंचिन्मानुष्याद्दृश्यखण्डनम्॥ ५७॥

38391

38392 कुतो न क्रियाभोगसंबन्धस्तत्राह - जगदिति।
38393 क्रियाविषयस्यान्यतासत्त्वादित्यर्थः। किमर्थं तर्ह्यसतो दृश्यस्य
38394 खण्डनं वेदान्तेषु क्रियते तत्राह - मानुष्यादिति।
38395 मनुष्यभावाद्व्यावहारिकयौक्तिकदृग्वशान्न
38396 परमार्थदृष्टिबलादित्यर्थः॥ ५७॥

38397

38398 सर्वं समसमाभासमिदमाकाशकोशकम्।
38399 जगत्तयोपशब्दं च विद्ध्यनाद्यं निशाचरि॥ ५८॥

38400

38401 कीदृशी तर्हि परमार्थदृष्टिस्तां दर्शयति - सर्वमिति। जगत्तया
38402 उपशब्दं शब्दमात्रेण व्यवहृतम्। वाचारम्भणं विकारो नामधेयं
38403 इति श्रुतेरिति भावः॥ ५८॥

38404

38405 चिदणुर्दृश्यसिद्ध्यर्थमान्तरीं चिच्चमत्कृतिम्।
38406 बहीरूपतया धत्ते स्वात्मनि परिसंस्थिताम्॥ ५९॥

38407

38408 दृश्यसंपत्तये द्रष्टा स्वात्मानं दृश्यतां नयन्। दृश्यं
38409 पश्यन्स्वमात्मानं को हि पश्यत्यनेत्रवात्॥ इति प्रश्नस्योत्तरमाह -
38410 चिदणुरिति। चिच्चमत्कृतिं चिद्व्याप्तमायाशक्तिम्। बहीरूपतया
38411 बाह्यप्रपञ्चतया॥ ५९॥

38412

38413 एतद्बहिष्ठमन्तस्थमस्ति शब्दे न वस्तुनि।
38414 उपदेशाय सत्त्वानां चिद्रूपत्वाज्जगल्लये॥ ६०॥

38415

38416 ननु तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम् इति श्रुत्या
38417 अन्तर्बहिर्भेदशून्यत्वेनावगते ब्रह्मणि कथमुच्यते आन्तरीं चिच्चमत्कृतिं
38418 बहीरूपतया धत्ते इति तत्राह - एतदिति। बहिष्ठमन्तस्थमित्येतज्जगल्लये
38419 सत्त्वानामधिकारिप्राणिनामुपदेशाय कल्पितं शब्दे एवास्ति न वस्तुनि। तस्य
38420 चिदेकरूपत्वादित्यर्थः॥ ६०॥

38421

38422 द्रष्टाऽदृष्टपदं गच्छन्नात्मनां संप्रपश्यति।
38423 नेत्रदृश्याभिपातीव सदेवासदिव स्थितम्॥ ६१॥

38424

38425 दृश्यतां नयन्नित्यन्तस्य तात्पर्यमुक्त्वा प्रश्नशेषस्य तदाह -
38426 द्रष्टेति। नित्यापरोक्षोऽप्यात्मा अविद्यानावृतत्वादन्तःकरणावच्छेदेन
38427 सदैव स्फुरंस्तदभिमानेन द्रष्टा
38428 बहिर्विषयावच्छेदेनावृतत्वाददृष्टं पदं विषयं

38429 नेत्रदृश्याभिपातीव भूत्वा नेत्रद्वारा निर्गतान्तःकरणप्रणाड्या
38430 बहिर्गच्छन् सदेवात्मरूपमसद्घटादिरूपमिव स्थितमात्मानं
38431 संप्रपश्यति स्वात्मचितैव प्रकाशयति न नेत्रेण तस्य
38432 द्वारमात्रत्वादित्यनेत्रवानित्युक्तमित्यर्थः ॥ ६१ ॥
38433
38434 नच गच्छति दृश्यत्वं द्रष्टा ह्यसदवास्तवम् ।
38435 आम्तन्येव न यत्किंचित्तत्तामेति कथं परः ॥ ६२ ॥
38436
38437 सदेवासदिव स्थितम् इत्येतदुपपादयति - नचेति । कुतो न गच्छति तत्राह -
38438 आत्मनीति । सतोऽसद्रूपेण भवितुमशक्यत्वादिति भावः ॥ ६२ ॥
38439
38440 दृगेव लोचने सा च वासनान्तं निजं वपुः ।
38441 बहीरूपतया दृश्यं कृत्वा द्रष्टृतयोदिता ॥ ६३ ॥
38442
38443 एवं द्रष्टृतापि मिथ्यादृश्यसापेक्षत्वान्मिथ्यैवेत्याह - दृगेवेति ।
38444 न चक्षुषी लोचने द्वारमात्रत्वात्किंतु दृक् अपरोक्षात्मचैतन्यमेव लोचने ।
38445 चक्षुषश्चक्षुः इति श्रुतेः । सा च दृक् आविर्भावादारभ्य पुनस्तिरोभावेन
38446 वासनाभावान्तं दृश्यं कृत्वा तद्द्रष्टृतया स्वयमुदिता आत्मानं
38447 कल्पितवतीत्यर्थः ॥ ६३ ॥
38448
38449 न विना द्रष्टृतामस्ति दृश्यसत्ता कथंचन ।
38450 पितृतेव विना पुत्रं द्वितेवैक्यपदं विना ॥ ६४ ॥
38451
38452 एवंच परस्परसापेक्षकल्पनयोर्द्वयोरपि मिथ्यात्वमित्याह - न
38453 विनेत्यादिना ॥ ६४ ॥
38454
38455 द्रष्टैव दृश्यतामेति न द्रष्टृत्वं विनास्ति तत् ।
38456 विना पित्रेव तनयो विना भोक्रेव भोग्यता ॥ ६५ ॥
38457
38458 द्रष्टुर्दृश्यविनिर्माणे चित्त्वादस्त्येव शक्तता ।
38459 कनकस्यावदातस्य कटकादिकृताविव ॥ ६६ ॥
38460
38461 दृश्यस्य द्रष्टृनिर्माणे जडत्वान्नास्ति शक्तता ।
38462 कटकस्य तु हैमस्य यथा कनकनिर्मितौ ॥ ६७ ॥
38463
38464 चेतनादृश्यनिर्माणं चित्करोत्यसदेव सत् ।
38465 अकारणं मोहहेतुं हेमेव कटकभ्रमम् ॥ ६८ ॥
38466
38467 चिद्यतश्चेतना चेत्यप्रकाशनादिसमर्था अतो दृश्यनिर्माणं करोति ।
38468 मोहहेतुमज्ञानमात्रहेतुकम् ॥ ६८ ॥
38469
38470 कटकत्वावभासे हि यथा हेम्नो न हेमता ।
38471 सत्येव प्रकचत्येवं द्रष्टृदृश्यस्थितौ वपुः ॥ ६९ ॥
38472
38473 यदि द्रष्टैव दृश्यतां गच्छति तर्हि द्रष्टैवेदमिति दृश्यं कुतो न
38474 विभाव्यते तत्राह - कटकत्वेति । न हेमता सत्येव स्फुटं कचति कल्पितव्या
38475 मूढबुद्धौ सत्यास्फुरणात् । एवं दृश्यात्मना द्रष्टुः स्थितौ
38476 द्रष्टृवपुर्न कचतीत्यर्थः ॥ ६९ ॥
38477
38478 द्रष्टा दृश्यतया तिष्ठन्द्रष्टृतामुपजीवति ।
38479 सत्यां कटकसंवित्तौ हेम काञ्चनतामिव ॥ ७० ॥
38480

38481 तर्हि द्रष्टुरस्फुरणे तन्निरपेक्षसत्ताकमेव किं न स्यादिति
38482 चेत्तदुपजीवकताभावप्रसङ्गान्नैवमित्याशयेनाह - द्रष्टेति | सत्यां
38483 पूर्वसिद्धां काञ्चनतामिव || ७० ||
38484
38485 प्। ३२८) १९८
38486
38487 एकस्मिन्प्रतिभासे हि न सत्ता द्रष्टृदृश्ययोः |
38488 पुंप्रत्ययप्रकचने क्व पशुप्रत्ययोदयः || ७१ ||
38489
38490 कटकत्वावभासे हि यथा हेम्नो न हेमता सत्येव प्रकचतीत्येतदयुक्तं
38491 कटकमिदं हेमेति सामानाधिकरण्यप्रत्यये
38492 उभयसत्त्वप्रतिभासादेवमहं द्रष्टेति प्रत्ययेऽपीति चेत्तत्राह - एकस्मिन्निति
38493 | यथा दूरस्थे विषये पुमान्पशुर्वेति संशये पुंस्प्रत्ययकोटौ न पशुत्वं
38494 प्रतिभासते पशुप्रत्ययांशे च न पुंस्त्वम् एवं
38495 सामानाधिकरण्यप्रत्ययेऽपि नोभयांशस्यैकप्रत्ययप्रमेयतासंभव
38496 इत्यर्थः || ७१ ||
38497
38498 दृश्यं पश्यन्स्वमात्मानं न द्रष्टा संप्रपश्यति |
38499 द्रष्टुर्हि दृश्यतापत्तौ सत्ताऽसत्तेव तिष्ठति || ७२ ||
38500
38501 बहिर्मुखतया हि दृश्यं पश्येदन्तर्मुखतया च द्रष्टारम्
38502 नचोभयमुखता चितो युगपत्संभवतीत्याशयेनाह - दृश्यमिति | सत्ता
38503 द्रष्टृसत्ता | असत्तेव असतीवेति यावत् || ७२ ||
38504
38505 बोधाद्गलितदृश्यस्य द्रष्टुः सत्तेव भासते |
38506 अबुद्धे कटके स्वस्य हेम्नोऽकटकता यथा || ७३ ||
38507
38508 अन्तर्गलितदृश्यं च क आत्मानमखण्डितम् | दृश्यासंपत्तये पश्यन् पुरो
38509 दृश्यं न पश्यति || इति प्रश्नस्योत्तरमाह - बोधादिति | अबुद्धे
38510 हेमैकतत्त्वपरीक्षणे दत्तदृष्टितया उपेक्षणादप्रतिसंहिते || ७३ ||
38511
38512 दृश्ये सत्यस्ति वै द्रष्टा दृश्यं द्रष्टरि भासते |
38513 द्वयेन च विना नैकं नैकमप्यस्ति चानयोः || ७४ ||
38514
38515 दृश्यादर्शनेऽपि द्रष्टुर्दर्शनमपरिहार्यमिति कथमात्यन्तिकं
38516 दृश्यादर्शनं सिद्ध्येदित्यत आह - दृश्यते इति | द्रष्टरि सतीति शेषः |
38517 बोधाद्गलितदृश्यस्य पुंसः अनयोर्द्रष्टृदृश्ययोर्मध्ये एकमपि नास्ति |
38518 छत्रापाये छायापायवद्दृश्यापाये
38519 द्रष्टुरप्यपायाद्दृङ्मात्रपरिशेषादित्यर्थः || ७४ ||
38520
38521 सर्वं यथावद्विज्ञाय शुद्धसंविन्मयात्मना |
38522 वाचामविषयं स्वच्छं किंचिदेवावशिष्यते || ७५ ||
38523
38524 आत्मानं दर्शनं दृश्यं दीपेनेवावभासितम् |
38525 कृतं च सर्वमेतेन चिन्मात्रपरमाणुना || ७६ ||
38526
38527 आत्मानं दर्शनं दृश्यं को भासयति दृश्यवत् इत्यस्योत्तरमाह -
38528 आत्मानमिति | आत्मानं द्रष्टारम् | एतेन चिन्मात्रपरमाणुना च भासितं
38529 प्रथमानं कृतं द्रष्टादि सर्वं मातृमानप्रमेयाख्यं त्रयं बुधो
38530 निगिरतीति परेणान्वयः || ७६ ||
38531
38532 मातृमानप्रमेयाख्यं बुधो निगिरति त्रयम् |

38533 हेमेव कटकादित्वमसन्मयमुपस्थितम् ॥ ७७ ॥
38534
38535 कटकादीनि हेम्नेव विकीर्णं केन च त्रयम् इति प्रश्नं
38536 प्राक्तनोक्तदृष्टान्तोपन्यासेनैवार्थात्परिहरति [प्राक्तनोक्ति इति
38537 पाठः] - हेमेति ॥ ७७ ॥
38538
38539 यथा न जलभूम्यादेः पृथक्किंचिन्मनागपि ।
38540 तथैतस्मात्स्वभावाणोर्न किंचित्पृथगस्ति हि ॥ ७८ ॥
38541
38542 कस्मान्न किंचिच्च पृथक् इति प्रश्नस्योत्तरमाह - यथेति । किंचिद्भौतिकम्
38543 ॥ ७८ ॥
38544
38545 सर्वगानुभवात्मत्वात्सर्वानुभवरूपतः ।
38546 एकत्वानुभवन्याये रूढे सर्वैकतास्य हि ॥ ७९ ॥
38547
38548 अपृथक्त्वं युक्त्याप्यनुभावयति - सर्वगेति ॥ ७९ ॥
38549
38550 अस्येच्छया पृथङ्नास्ति वीचितेव महाम्भसः ।
38551 इच्छानुरूपसंपत्तेर्भावितार्थैकता किल ॥ ८० ॥
38552
38553 कस्येच्छया पृथक् चास्तीत्येतद्दूषयति - अस्येति । किलेति हेतौ । इच्छानुरूपस्य
38554 फलस्य संपत्तेरिच्छाभावितार्थस्य च एकता अपृथक्ता यत इत्यर्थः ॥ ८० ॥
38555
38556 दिक्कालाद्यनवच्छिन्नः परमात्मास्ति केवलः ।
38557 सर्वात्मत्वात्स सर्वात्मा सर्वानुभवतः स्वतः ॥ ८१ ॥
38558
38559 दिक्कालाद्यनवच्छिन्नादेकस्मादसतः सतः । द्वैतमप्यपृथक्कस्मात्
38560 इत्यस्योत्तरमाह - दिक्कालेति द्वाभ्याम् । सः सर्वेषामात्मत्वात्सर्वमात्मा
38561 अपृथग्भूतं यस्य सर्वात्मा स्वतस्तु सर्वानुभव एव न जडः ॥ ८१ ॥
38562
38563 सन्नेष चेतनात्मत्वाद्दर्शनानवबोधतः ।
38564 द्वैतैक्ये नात्र विद्येते सर्वरूपे महात्मनि ॥ ८२ ॥
38565
38566 असतः सतः इत्येतदर्थमाह - सन्नेष इति । असंदिग्धात्मसत्त्वानां
38567 चेतनानामात्मत्वात् दर्शने चक्षुरादिभिरालोचनेऽनवबोधतोऽत्रात्मनि
38568 द्वैतमैक्यं च लौकिकसद्रूपे न विद्येते इत्यसन्नित्युच्यते श्रुतौ न
38569 वास्तवासत्त्वाभिप्रायेणेत्यर्थः ॥ ८२ ॥
38570
38571 यदि कश्चिद्द्वितीयः स्यात्तदैकस्यैकता भवेत् ।
38572 द्वैतैक्ययोर्मिथः सिद्धिरातपच्छाययोरिव ॥ ८३ ॥
38573
38574 ननु द्वैतं सापेक्षरूपत्वान्मिथ्यास्तु ऐक्यं तु
38575 द्वितीयनिरपेक्षत्वाद्वास्तवमेवेति तत्कथं न विद्यत इत्युच्यते तत्राह - यदीति
38576 ॥ ८३ ॥
38577
38578 यत्र नास्ति द्वितीयो हि तत्रैकस्यैकता कथम् ।
38579 एकतायामसिद्धायां द्वयमेव न विद्यते ॥ ८४ ॥
38580
38581 द्वितीयव्यावर्तनाय कल्पितं संख्यारूपमपि द्वितीयसापेक्षं
38582 द्वित्वदितुल्यमेवेत्याशयेनाह - यत्रेति ॥ ८४ ॥
38583
38584 एवं स्थिते तु यस्तिष्ठंस्तत्तादृक्तदिवास्ति हि ।

38585 तस्मान्न व्यतिरिक्तं तद्रूपं द्रव इवाम्भसः ॥ ८५ ॥
38586
38587 द्वैतमप्यपृथक्कस्माद्द्रवतेव महाम्भसः इत्यंशं विवृणोति -
38588 एवं स्थिते त्विति। एवं द्वैतैक्यशून्यत्वेन तत्त्वे स्थिते सति
38589 यस्ताद्दग्द्वैतैक्यवानिव द्वैतैक्यमिव च यस्तिष्ठन् प्रतिभासते
38590 तस्मात्तद्द्वैतैक्यरूपमम्भसो द्रवतेव न व्यतिरिक्तमित्यर्थः ॥ ८५ ॥
38591
38592 नानारम्भविभासं [विनाशं च इति पाठः] च
38593 साम्येनाक्षुब्धरूपिणः।
38594 बीजस्यान्तस्तरुरिव ब्रह्मणोऽन्तः स्थितं जगत् ॥ ८६ ॥
38595
38596 आत्मानं दर्शनं दृश्यं सदसच्च जगत्त्रयम्। कोऽन्तर्बीजमिवान्तस्थं
38597 स्थितः कृत्वा त्रिकालगः ॥ इत्यस्योत्तरमाह - नानेति। बीजपक्षे
38598 भूजलादीनां ब्रह्मपक्षे सत्त्वरजस्तमसां साम्येन अक्षुब्धरूपिणः
38599 पूर्वावस्थातोऽप्रच्युतस्य ॥ ८६ ॥
38600
38601 द्वैतमप्यपृथक्तस्माद्धेम्नः कटकता यथा।
38602 सम्यग्बुद्धावबोधो हि द्वैतं तच्च न सन्मयम् ॥ ८७ ॥
38603
38604 सम्यगबुद्धस्यावगतवतोऽवबोधो ज्ञानात्मकमेव द्वैतम्। तच्च ज्ञानं
38605 सदेव न सन्मयम् ॥ ८७ ॥
38606
38607 यथा द्रवत्वं पयसः स्पन्दनं मातरिश्वनः।
38608 व्योम्नः शून्यत्वमेवं हि न पृथग्द्वैतमीश्वरात् ॥ ८८ ॥
38609
38610 प। ३२९) १९८
38611
38612 द्वैताद्वैतोपलम्भो हि दुःखायैव क्रियात्मने।
38613 निपुणोऽनुपलम्भो यस्त्वेतयोस्तत्परं विदुः ॥ ८९ ॥
38614
38615 किर्यात्मने प्रवृत्तिसिद्धये एव न निवृत्तये ॥ ८९ ॥
38616
38617 मातृमानप्रमेयादिद्रष्टृदर्शनदृश्यता।
38618 एतावज्जगदेतच्च परमाणौ चिति स्थितम् ॥ ९० ॥
38619
38620 भूतं भवद्भविष्यच्च इत्यस्योत्तरमाह - मात्रिति। यद्भूतभव्यादि जगत्
38621 शास्त्रीयमातृमानप्रमेयं आदिपदात्प्रमितिश्चेत्येतावत् लौकिकसाधारणं
38622 तु द्रष्टृादित्रिपुटीत्येतावदेव नातोऽधिकमस्ति। तत्सर्वं तत्साक्षिचिति परमाणौ
38623 स्थितमित्यर्थः ॥ ९० ॥
38624
38625 अयं जगदणुर्नित्यमेतेनाणुसुमेरुणा।
38626 स्पन्दनं पवनेनेव स्वाङ्ग एव कृताकृतः ॥ ९१ ॥
38627
38628 एतेनात्मरूपेणाणुसुमेरुणा पवनेन स्पन्दनमिवायं जगल्लक्षणोऽणुः
38629 स्वाङ्गे एव बहुशः कृतः अकृत उपसंहृतश्चेत्यर्थः ॥ ९१ ॥
38630
38631 अहो नु भीमा मायेयमथवा मायिनां परा।
38632 परमाण्वन्तरेवास्ति यत्त्रैलोक्यपरम्परा ॥ ९२ ॥
38633
38634 बृहद्भ्रममित्यंशमुपपादयति - अहो इति।
38635 इयमात्मचितिर्मायाशबलत्वान्माया। अथवा मायिनां जनव्यामोहकानां परा
38636 श्रेष्ठा। यद्यस्माद्धेतोः परमाण्वन्तरेव त्रैलोक्यपरम्परास्तीति

38637 दर्पणोदरप्रतीतो गिरिरिव नास्त्येवेति बृहद्भ्रम एवेत्यर्थः ॥ ९२ ॥
38638
38639 अथासंभवमायित्वमेवैतत्सर्वदा स्थितम् ।
38640 चिन्मात्रपरमाणुत्वमात्रमेव जगत्स्थितिः ॥ ९३ ॥
38641
38642 यदि तु एकमेवाद्वितीयम् इत्यादिश्रुत्या मायाया अप्यसत्त्वं तदापि जगच्चिदणुरेव
38643 न वस्त्वन्तरमस्तीति जगत्प्रत्ययो बृहद्भ्रम एवेत्याशयेनाह - अथेति ।
38644 अथेति पक्षान्तरे । न संभवतीत्यसंभवं मायित्वं
38645 यस्मिंस्तथाविधमेवैतदात्मरूपं सर्वदा स्थितमिति पक्षेऽपीत्यर्थः ॥ ९३ ॥
38646
38647 अन्तर्गतजगज्जालोऽप्येषोऽणुः साम्यमत्यजन् ।
38648 स्थितोऽन्तस्थबृहद्वृक्षं बीजं भाण्डोदरे यथा ॥ ९४ ॥
38649
38650 नित्यं समस्य कस्यान्तर्बीजस्यान्तरिव द्रुमः इत्यस्योत्तरमाह - अन्तर्गतेति ।
38651 बीजं भाण्डोदरे यथा इति दृष्टान्तपरमाण्वाद्यन्तर्गतब्रह्मचित्यपि
38652 सर्वजगदुत्पादनशक्तिसंभृतत्वलाभाय ॥ ९४ ॥
38653
38654 बीजेऽन्तर्वृक्षविस्तारः स्थितः सफलपल्लवः ।
38655 परया दृश्यते दृष्ट्या जगच्च चिदणूदरे ॥ ९५ ॥
38656
38657 बीजस्यान्तरिव द्रुमः इत्यंशं वर्णयति - बीजेऽन्तरिति द्वाभ्याम् । परया ।
38658 योगपरिष्कृतया ब्राह्म्या च ॥ ९५ ॥
38659
38660 स शाखाफलपुष्पं स्वमजहद्बीजकोटरे ।
38661 यथा तरुः स्थितस्तद्वद्विकासि चिदणोर्जगत् ॥ ९६ ॥
38662
38663 संस्थितं द्वैतमद्वैतं बीजकोश इव द्रुमः ।
38664 जगच्चित्परमाण्वन्तर्यः पश्यति स पश्यति ॥ ९७ ॥
38665
38666 स्वमेकमजहद्रूपमुदेत्यनुदितोऽपि कः इति प्रश्ने
38667 स्वमेकमजहद्रूपमित्यंशमुपपादयितुमध्यारोपितं
38668 स्थूलसूक्ष्मादिप्रपञ्चमपवदति - संस्थितमित्यादिसार्धत्रयेण ॥ ९७ ॥
38669
38670 न द्वैतं नैव चाद्वैतं न च बीजं न चाङ्कुरः ।
38671 न स्थूलं न च वा सूक्ष्मं नाजातं जातमेव च ॥ ९८ ॥
38672
38673 न चास्ति न च नास्तीदं न सौम्यं क्षुभितं न च ।
38674 त्रिजगच्चिदणोरन्तः खवाय्वपि न किंचन ॥ ९९ ॥
38675
38676 न जगन्नाजगच्चास्ति विद्यते चित्परा शुभा ।
38677 सर्वात्मिका यदा यत्र सा यथोदेति तत्तथा ॥ १०० ॥
38678
38679 उदेत्यनुदितोऽपि कः इत्यंशमुपपादयति - सर्वात्मिकेत्यादिना । सा चित् । यथा
38680 यादृशप्राग्वासनानुगुण्येन उदेति सृष्टिप्रतिभात्मना आविर्भवति ॥ १०० ॥
38681
38682 उदेत्यनुदितोऽप्येष स्वयंवेदनजृम्भितः ।
38683 परमात्माणुरेकात्मा समग्रात्मतयैव खे ॥ १०१ ॥
38684
38685 स्वयंवेदनेन स्वात्मरूपेण सर्गप्रतिभासेन जृम्भितो बृंहितः
38686 जृम्भितोऽपि खे निष्प्रपञ्चस्वरूपाकाशे एकात्मा सन् समग्रात्मतयैवास्ते
38687 इत्यर्थः ॥ १०१ ॥
38688

38689 द्रुमो भूमौ स्वबीजत्वमिवोदेत्यनुदेत्यपि।
38690 परं तत्त्वं जगद्भङ्ग्या जगत्तां स्वोदयेन च॥ १०२॥
38691
38692 तत्र दृष्टान्तमाह - द्रुम इति। यथा वृक्षो बीजानि जनयन्
38693 वृक्षस्वभावं अनुत् अनपनयन्स्वबीजत्वं उदेति ततो भूमौ एति प्राप्नोत्यपि
38694 तथा परं तत्त्वमपि जगद्भङ्ग्या उदेति तथा स्वोदयेन जगत्तां
38695 जन्ममरणादिकल्पनां च एति प्राप्नोतीत्यर्थः॥ १०२॥
38696
38697 द्रुमो बीजतयैवाशु न संत्यक्तसमस्थितिः।
38698 तिष्ठत्यपगतस्पन्दस्त्यागात्यागपरोऽणुकः॥ १०३॥
38699
38700 एतावांस्तु विशेषो यत् द्रुमो बीजतयैव संत्यक्ता समस्थितिर्येन तथाविधो
38701 विकारी न किंतु वृक्षतयापि। उभयात्मना विकारवैषम्यदर्शनात्।
38702 आत्माणुकस्तु त्यागात्यागपरः असङ्गाद्वितीयत्वात्सर्वत्यागपरः।
38703 सर्वानुगतसद्रूपत्वाच्च सर्वात्यागपरश्च सन् अपगतस्पन्दो निर्विकारः एव
38704 सदा तिष्ठतीत्यर्थः॥ १०३॥
38705
38706 बिसतन्तुर्महामेरुः परमाणोरपेक्षया।
38707 दृश्यं किल विशेत्तन्तुरदृश्याक्ष्णा पराणुता॥ १०४॥
38708
38709 बिसतन्तुर्महामेरुर्भो राजन्यदपेक्षया इत्यस्योत्तरमाह - बिसतन्तुरिति।
38710 परमाणोरपेक्षया स्थूलत्वादिति शेषः। तत्र युक्तिमाह - दृश्यमिति।
38711 भावप्रधानो निर्देशः। दृग्गोचरतां विशेदाविशेत्॥ १०४॥
38712
38713 बिसतन्तुर्महामेरुः परमाणोः किलात्मनः।
38714 तस्यैव तद्घनाः स्वान्तः स्थिता मेर्वादिकोटयः॥ १०५॥
38715
38716 दृष्टान्तोक्तं दार्ष्टान्तिकेऽप्युपपादयन् तस्य कस्योदरे सन्ति
38717 मेरुमन्दरकोटयः इत्यस्योत्तरमाह - बिसतन्तुरिति।
38718 परमाणोरप्यान्तरस्यात्मनो ब्रह्मणोऽपेक्षया बिसतन्तुरपि मेरुस्तस्यैव
38719 स्वान्तस्तद्घनाश्चिद्घनाः परमार्थस्वभावा मेरुमन्दरकोटयः स्थिताः॥
38720 १०५॥
38721
38722 एकेन तेन महता परमाणुना च
38723 व्याप्तं ततं विरचितं जनितं कृतं च।
38724 दृश्यं प्रपञ्चरचितं नभसेव विश्वं
38725 शून्यत्वमच्छमभितः परिलब्धमेव॥ १०६॥
38726
38727 विरचितं जनितं कृतं चेति चतुर्धा उत्तरम्। अपञ्चीकृतभूतात्मना ततम्
38728 पञ्चीकरणेन ब्रह्माण्डभुवनात्मना विरचितम् तत्र देवनरासुरतिर्यग्भेदेन
38729 जनितम्। तेषां भोगाय तत्तद्विषयभेदेन कृतं चेत्यर्थः। यथा नभसा
38730 गन्धर्वनगरादि दृश्यं नाना वैचित्र्यप्रपञ्चेन रचितमपि अभितः अच्छं
38731 शून्यत्वं आकाशैकस्वभावतां परिलब्धमेव तद्वदित्यर्थः। एतेन किंसार
38732 एव परिवल्गसि पासि हंसि इत्येतदपि विश्वान्तर्गतत्वात्तत्सार
38733 एवेत्यर्थात्समाहितमेव॥ १०६॥
38734
38735 प्। ३३०) २००
38736
38737 द्वैतेन सुन्दरतरं स्वमनुज्झितेन
38738 रूपं सुषुप्तसदृशेन यथावबोधात्
38739 ऐक्यं गतं स्थितिगमागममुक्तमेव-
38740 मित्थं स्थितं तनु जगत्परमार्थपिण्डः॥ १०७॥

38741
38742 किंदर्शनेन न भवस्यथ वा सदैव नूनं भवसि इत्यस्योत्तरमाह -
38743 द्वैतेनेति। यदा
38744 यथास्थितात्मतत्त्वावबोधाच्चित्संभिन्नजडाविद्यामात्ररूपत्वात्सुषुप्तसदृस्
38745 हेन स्वकालेऽपि सत्तास्फूर्तिव्यवहारसिद्धये सच्चिदानन्दैकरसत्वत्सुन्दरतरं
38746 स्वं रूपमधिष्ठानात्मतत्त्वमनुज्झितेनात्यक्तवता [अत्यक्तवता इति
38747 क्वचिन्न पठ्यते] द्वैतेन स्थितिगमागमैः
38748 सत्ताक्रियातन्निवृत्तिभिर्मुक्तमैक्यं गतं प्राप्तं तदा तनु क्षुद्रं
38749 जगदित्थं परमार्थपिण्ड एव स इत्थं ब्रह्मैकस्वाभाव्येन स्थितमिति
38750 संसाररूपो न भवामि सदैवाद्वितीयब्रह्मैकरूपश्च भवामीत्यर्थः ॥ १०७ ॥
38751
38752 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे कर्क०
38753 परमार्थापिण्डीकरणं नामैकाशीतितमः सर्गः ॥ ८१ ॥
38754
38755 इति श्रीवसिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
38756 परमार्थापिण्डीकरणं नामैकाशीतितमः सर्गः ॥ ८१ ॥
38757
38758
38759 द्व्यशीतितमः सर्गः ८२
38760
38761 श्रीवसिष्ठ उवाच।
38762
38763 इति राजमुखाच्छ्रुत्वा कर्कटी वनमर्कटी।
38764 अवबुद्धपदान्तं स्वं जहौ मत्सरचापलम् ॥ १ ॥
38765
38766 ग्रसन्नया मन्त्रदानं वर्ण्यतेऽत्रानया तयोः।
38767 वध्यभोज्यार्पणं चास्यै व्युत्थितायै समाधितः ॥ १ ॥
38768
38769 अवबुद्धं ब्रह्मपदमेवान्तो मूलोच्छेदेन नाशो यस्य तथाविधं स्वं
38770 स्वजात्युचितं मत्सरचापलं जहौ ॥ १ ॥
38771
38772 अन्तःशीतलतामेत्य विश्रान्तिमपतापताम्।
38773 प्राप्ता प्रावृण्मयूरीव सज्योत्स्नेव कुमुद्वती ॥ २ ॥
38774
38775 अपतापतां अपगतबाह्यदृष्टिसंतापताम् ॥ २ ॥
38776
38777 तथा राजगिरा तस्या आनन्द उदभूद्भृशम्।
38778 गर्भेऽन्तः खे बलाकाया रवेणेव पयोमुचः ॥ ३ ॥
38779
38780 खे पयोमुचो रवेण बलाकाया अन्तर्गर्भे सतीव ॥ ३ ॥
38781
38782 राक्षस्युवाच।
38783
38784 अहो बत पवित्रेयं भवतोर्भाति शेमुषी।
38785 अनस्तमितसारेण प्रबोधार्केण भासिता ॥ ४ ॥
38786
38787 शेमुषी बुद्धिः ॥ ४ ॥
38788
38789 शीता समरसा शुद्धा ज्योत्स्नेव शशिमण्डलात्।
38790 विवेककणिकां श्रुत्वा भवतो हृदयादियम् ॥ ५ ॥
38791
38792 शशिमण्डलात्प्रवृत्ता ज्योत्स्नेव भातीति सर्वत्रान्वयः। भवतो

38793 हृदयाद्बुद्धेः सकाशाद्वाग्द्वारा प्रसृतां विवेकामृतस्य कणिकां
38794 श्रुत्वा इयमहं भवादृशा विवेकिनो जगत्पूज्याः सेवनयोग्याश्च
38795 मुमुक्षुभिरिति मन्ये इत्युत्तरेणान्वयः ॥ ५ ॥
38796
38797 विवेकिनो जगत्पूज्याः सेव्या मन्ये भवादृशाः ।
38798 सत्सङ्गात्सविकासास्मि चन्द्रेणेव कुमुद्वती ॥ ६ ॥
38799
38800 सौरभं कुसुमासङ्गादेव सत्सङ्गमाच्छुभम् ।
38801 वर्तते ह्यर्कसंपर्काद्विकासोऽम्बुरुहामिव ॥ ७ ॥
38802
38803 कुसुमासङ्गादेव यथेति शेषः ॥ ७ ॥
38804
38805 महतामेव संपर्कात्पुनर्दुःखं न बाधते ।
38806 को हि दीपशिखाहस्तस्तमसा परिभूयते ॥ ८ ॥
38807
38808 सकृद्विवेकबाधितं दुःखं पुनर्न बाधते ॥ ८ ॥
38809
38810 मयेमौ जङ्गलप्राप्तौ भवन्तौ भूमिभास्करौ ।
38811 पूजनीयावतः शीघ्रमीहितं कथ्यतां शुभम् ॥ ९ ॥
38812
38813 पूजनीयौ इष्टार्थदानेन प्रीणनीयौ । ईहितं वाञ्छितम् ॥ ९ ॥
38814
38815 राजोवाच ।
38816
38817 अस्मिन् जनपदे रक्षःकुलकाननमञ्जरि [रक्षःकुलकाननमञ्जरि इति
38818 राक्षस्याः संबोधनम्] ।
38819 जनस्य बाधतेऽत्यन्तं सदा हृदयशूलनम् ॥ १० ॥
38820
38821 यतः सर्वैव जनता तप्ता दृढविषूचिका ।
38822 मण्डले ननु तेनाहं निर्गतो रात्रिचर्यया ॥ ११ ॥
38823
38824 जनता जनसमूहो दृढविषूचिका सती यतस्तप्ता संतप्ता ॥ ११ ॥
38825
38826 शूलादि हृदये नृणां न शाम्यति यदौषधैः ।
38827 ततोऽहं त्वद्विधप्रोक्तमन्त्रार्थेन विनिर्गतः ॥ १२ ॥
38828
38829 त्वद्विधैः प्रोक्तस्य मन्त्रस्य अर्थनमर्थोऽभिलाषस्तेन हेतुना ॥ १२ ॥
38830
38831 त्वादृशस्य च लोकस्य मुग्धलोकाभिघातिनः ।
38832 निग्रहार्थं प्रवृत्तिर्मे सा च संपत्तिमेत्यलम् ॥ १३ ॥
38833
38834 संपत्तिमेति तत्त्वज्ञमनोरथस्य मोघत्वासंभवाद्यं लोकमिति
38835 प्राक्प्रदर्शितश्रुतेरिति भावः ॥ १३ ॥
38836
38837 एतावदेव च शुभे त्वयाङ्गीक्रियतां वचः ।
38838 भूयो भवत्या प्राणा हि हिंसनीया न कस्यचित् ॥ १४ ॥
38839
38840 ततो मन्त्रप्राप्तिमसंभावयन्नन्यद्वृणीते - एतावदेवेति ॥ १४ ॥
38841
38842 राक्षस्युवाच ।
38843
38844 बाढमेवं करोम्यद्यप्रभृत्यवितथं प्रभो ।

38845 सत्यमेव न किंचिद्धि हिंसनीयं मयाधुना ॥ १५ ॥
38846
38847 राजोवाच ।
38848
38849 यद्येवं फुल्लपद्माक्षि परदेहैकभोजने ।
38850 किं स्याच्छरीरवृत्त्यै [भृत्यै इति पाठः] ते स्थिताया
38851 मत्समीहिते ॥ १६ ॥
38852
38853 मत्समीहिते अहिंसने व्रते स्थितायाः ॥ १६ ॥
38854
38855 प्। ३३१) २००
38856
38857 षड्भिर्मासैर्गिरौ राजन्प्रबुद्धायाः समाधितः ।
38858 जाता भोजनसंकल्पाद्भोजनेच्छेयमद्य मे ॥ १७ ॥
38859
38860 इदानीं शिखरं गत्वा तदेव ध्याननिश्चला ।
38861 यावदिच्छं सुखेनासे सजीवा शालभञ्जिका ॥ १८ ॥
38862
38863 शालभञ्जिका दार्वादिपुत्रिकेव ॥ १८ ॥
38864
38865 आमृतीं धारणां बद्ध्वा धारयामि शरीरकम् ।
38866 यथेच्छमथ कालेन त्यक्ष्यामीति मतिर्मम ॥ १९ ॥
38867
38868 आमृतीं अमृतात्मभावनारूपाम् ॥ १९ ॥
38869
38870 आशरीरपरित्यागमिदानीं न मया नृप ।
38871 हिंसनीयाः परप्राणास्तेनेदं मद्वचः शृणु ॥ २० ॥
38872
38873 हिमवान्नाम शैलोऽस्ति शरच्चन्द्रांशुनिर्मलः ।
38874 य उत्तराशाहृदये स्पृष्टपूर्वापरार्णवः ॥ २१ ॥
38875
38876 उत्तराशाया उत्तरदिशो हृदये मध्यमे । स्पृष्टौ अवगाढौ
38877 पूर्वापरार्णवौ येन ॥ २१ ॥
38878
38879 तत्राहं निवसाम्यग्रे हेमशृङ्गदरीगृहे ।
38880 आयसी मेघलेखेव कर्कटीनाम राक्षसी ॥ २२ ॥
38881
38882 तपसोपार्जितो ब्रह्मा जनतामारणेच्छया ।
38883 विषूचिका प्राणहरा स्यां सूच्यात्मेति भो मया ॥ २३ ॥
38884
38885 उपार्जितः स्ववशीकृतः इत्यन्त इच्छाभिलापः [इच्छाभिलाष इति क्वाचित्कः
38886 पाठः] ॥ २३ ॥
38887
38888 तस्मात्संप्राप्तवरया बहून्वर्षगणान्मया ।
38889 भुक्ता विषूचिकात्वेन जनता जीवबाधनैः ॥ २४ ॥
38890
38891 त्वया न गुणिनो हिंस्या इति मे ब्रह्मणा ततः ।
38892 नियमार्थं महामन्त्रस्तदायत्तास्मि संस्थिता ॥ २५ ॥
38893
38894 नियमार्थं मर्यादार्थं दत्त इति शेषः । अतस्तदायत्ता मन्त्राधीना ॥ २५ ॥
38895
38896 सोऽयं प्रगृह्यतां तेन सर्वं हृदयशूलनम् ।

38897 शममेष्यति लोकेऽस्मात्का कथा मत्कृते भ्रमे ॥ २६ ॥
38898
38899 सर्वं मत्कृतादन्यदपि सर्वम् ॥ २६ ॥
38900
38901 विततैवास्मि हिंसायां यत्पुरा हिंसितं मया ।
38902 जनस्य हृदयं तेन नाड्यो वैधुर्यमागताः ॥ २७ ॥
38903
38904 वितता विस्तृता चिरं प्रवृत्तेति यावत् । हृदयं हिंसितं रक्तचोषणेन
38905 शोषितं तेन हेतुना जनस्य जाड्यो वैधुर्यं रक्तविधुरताम् ॥ २७ ॥
38906
38907 हिंसित्वा रक्तमांसानि संत्यक्ता ये महाजनाः ।
38908 तेभ्यो विधुरनाडीभ्यो ये जातास्तेऽपि तादृशाः ॥ २८ ॥
38909
38910 कथंचित्तेषां जीवनेऽपि तद्वंश्यानामपि नीरक्ततैव संपन्नेत्याह -
38911 हिंसित्वेति । तस्माद्धिंसा महाननर्थं इत्यर्थः ॥ २८ ॥
38912
38913 राजन्विषूचिकामन्त्रः सोऽयं संपन्न एव ते ।
38914 नहि सत्त्ववतामस्ति दुःसाध्यमिह किंचन ॥ २९ ॥
38915
38916 संपन्नः प्राप्तो भविष्यतीति सिद्धवत्कारेण सूचयति ॥ २९ ॥
38917
38918 अतो दुर्नाडिकोशेषु शूलानां परिशान्तये ।
38919 मन्त्रो यो ब्रह्मणा प्रोक्तो राजञ्शीघ्रं गृहाण तम् ॥ ३० ॥
38920
38921 आगच्छ निकटं नद्या गच्छामस्तत्र भूमिप ।
38922 स्वाचान्ताभ्यां संयताभ्यां भवद्भ्यां सुमता ददे ॥ ३१ ॥
38923
38924 सुमता सुप्रीताऽहं ददे ॥ ३१ ॥
38925
38926 श्रीवसिष्ठ उवाच ।
38927
38928 इति तस्यां तदा रात्र्यां राक्षसीमन्त्रिभूभृतः ।
38929 जग्मुस्ते सरितस्तीरं मिथः संजातसौहृदाः ॥ ३२ ॥
38930
38931 अन्वयव्यतिरेकेण राक्षस्याः सौहृदं तदा ।
38932 ज्ञात्वा स्थितौ तौ स्वाचान्तावुभावन्तेनिवासिनौ ॥ ३३ ॥
38933
38934 अन्वयव्यतिरेकेण भावपरीक्षणलिङ्गेन । अन्तेनिवासिनौ शिष्यौ भूत्वेति शेषः
38935 ॥ ३३ ॥
38936
38937 तया ब्रह्मोपदिष्टोऽसु ततस्ताभ्यां यथाक्रमम् ।
38938 स्नेहाद्विषूचिकामन्त्रः प्रदत्तो जपसिद्धिदः ॥ ३४ ॥
38939
38940 ब्रह्मणा प्रागुपदिष्टोऽसौ मन्त्रः ॥ ३४ ॥
38941
38942 ततः संजातसौहार्दौ तौ विसृज्य निशाचरी ।
38943 यदा गन्तुं प्रवृत्तासौ तदा राजाब्रवीद्वचः ॥ ३५ ॥
38944
38945 सौहार्दं सुहृद्भावः ॥ ३५ ॥
38946
38947 राजोवाच ।
38948

38949 गुरुस्त्वं नौ महादेहे वयस्या च सुनिर्वृता |
38950 निमन्त्रयावहे यत्नाद्वासाय तव सुन्दरि || ३६ ||
38951
38952 हे महादेहे इति राक्षसीसंबोधनम् | गुरुर्वयस्या सखी च | हृदयसौन्दर्यात्
38953 सुन्दरीति संबोधनम् || ३६ ||
38954
38955 नचास्मत्प्रणयं प्रीता वितथीकर्तुमर्हसि |
38956 सौहार्दं सुजनानां हि दर्शनादेव वर्धते || ३७ ||
38957
38958 लघुसौभाग्यसंयुक्तं कृत्वाकारं मनोरमम् |
38959 आगच्छास्मद्गृहं भद्रे तत्र तिष्ठ यथासुखम् || ३८ ||
38960
38961 लघु अल्पप्रमाणं सौभाग्येन सौन्दर्यालंकारादिना युक्तं च | आकारं
38962 देहम् || ३८ ||
38963
38964 राक्षस्युवाच |
38965
38966 मुग्धस्त्रीरूपधारिण्यै दातुं शक्तोऽसि भोजनम् |
38967 संतर्पयसि मां केन राक्षसाकारघारिणीम् || ३९ ||
38968
38969 भोजनमन्नपानादि मनुष्ययोग्यम् || ३९ ||
38970
38971 रक्षोन्नमेव संतुष्ट्यै न सामान्यजनाशनम् |
38972 पूर्वसिद्धस्वभावोऽयमादेहं न निवर्तते || ४० ||
38973
38974 राजोवाच |
38975
38976 हेमस्रग्दामवलिता दिनानि कतिचिद्गृहे |
38977 मम स्त्रीरूपिणी तिष्ठ यावदिच्छमनिन्दिते || ४१ ||
38978
38979 मम गृहे | यावदिच्छं ददे इति परेणान्वयः || ४१ ||
38980
38981 ततो दुष्कृतिनश्चौरान्वध्याञ्छतसहस्रशः |
38982 मण्डलेभ्यः समानीय ददे तुभ्यं सुभोजनम् || ४२ ||
38983
38984 वध्यान् वधार्हान् || ४२ ||
38985
38986 कान्तारूपं परित्यज्य गृहीत्वा राक्षसं वपुः |
38987 आदाय वध्याञ्छतशः पुरुषांस्तान्सुसंचितान् || ४३ ||
38988
38989 नयस्व हिमवच्छृङ्गं तत्र भुङ्क्ष्व यथासुखम् |
38990 महाशनानामेकान्ते भोजनं हि सुखायते || ४४ ||
38991
38992 तृप्ता निद्रां मनाक्कृत्वा भव भूयः समाधिभाक् |
38993 समाधिविरता भूयोऽप्यागत्य पुनरन्यदा || ४५ ||
38994
38995 प्। ३३२) २०१
38996
38997 नेष्यस्यन्यान्वध्यजनान् हिंसा नैषां च धर्मतः |
38998 स्वधर्मेण च हिंसैव महाकरुणया समा || ४६ ||
38999
39000 त्वं समेष्यसि चावश्यं मां समाधिविरागिणी |

39001 असतामपि संरूढं सौहार्दं न निवर्तते ॥ ४७ ॥
39002
39003 अपगतेच्छा व्युत्थितेति यावत् । संरूढं प्ररूढम् ॥ ४७ ॥
39004
39005 राक्षस्युवाच ।
39006
39007 युक्तमुक्तं त्वया राजन्करोम्येवमहं सखे ।
39008 सौहार्देन प्रवृत्तस्य को वाक्यं नाभिनन्दति ॥ ४८ ॥
39009
39010 श्रीवसिष्ठ उवाच ।
39011
39012 इत्युक्त्वा राक्षसी तत्र संपन्ना सुविलासिनी ।
39013 हारकेयूरकटकपट्टस्रग्दामधारिणी ॥ ४९ ॥
39014
39015 सुविलासिनी सुन्दरस्त्री । पट्टं कौशेयं काञ्चीपट्टं वा ॥ ४९ ॥
39016
39017 राजन्नागच्छ गच्छाम इत्युक्त्वा भूपमन्त्रिणौ ।
39018 अग्रे गन्तुं प्रवृत्तौ तौ रात्रावनुससार सा ॥ ५० ॥
39019
39020 अनु पश्चात्ससार जगाम् ॥ ५० ॥
39021
39022 अथ ते पार्थिवगृहं प्राप्य तां रजनीं मिथः ।
39023 कथयैकगृहे रम्ये क्षपयामासुरादृताः ॥ ५१ ॥
39024
39025 एकगृहे एकस्यां शालायाम् । रजनीं क्षपयामासुः ॥ ५१ ॥
39026
39027 प्रभातेऽन्तःपुरे तस्थौ पुरन्ध्रीजनलीलया ।
39028 राक्षसी मन्त्रिराजानौ स्वव्यापारौ बभूवतुः ॥ ५२ ॥
39029
39030 स्वस्वोचितो व्यापारो जनपालनवध्यसंपादनव्यापारो ययोस्तौ ॥ ५२ ॥
39031
39032 ततो दिवसषट्केन संचितानि महीभृता ।
39033 नृप्तः परपुरेभ्योऽपि स्वमण्डलगणात्तथा ॥ ५३ ॥
39034
39035 नृपो ददाविति परेणान्वयः ॥ ५३ ॥
39036
39037 त्रीणि वध्यसहस्राणि तानि तस्यै तदा ददौ ।
39038 सा बभूव निशा काले सैवोग्रा कृष्णराक्षसी ॥ ५४ ॥
39039
39040 तानि वध्यसहस्राणि जग्राह भुजमण्डले ।
39041 धारानिकरजालानि मेघमालेव कोटरे ॥ ५५ ॥
39042
39043 कोटरे लम्बमानानीति शेषः ॥ ५५ ॥
39044
39045 ययौ राजानमापृच्छ्य तदेव हिमवच्छिरः ।
39046 दरिद्रा लब्धहेमेव ग्रहेषूग्रशरीरिणी ॥ ५६ ॥
39047
39048 ग्रहेषु पूतनारक्षःपिशाचादिषु मध्ये उग्रशरीरिणी बृहच्छरीरत्वेन
39049 श्रेष्ठेति यावत् ॥ ५६ ॥
39050
39051 तत्र तृप्ता भृशं भुक्त्वा सुखं सुप्त्वा दिनत्रयम् ।
39052 आसीत्प्रबोधसुस्वस्था सा समाधिमतिः पुनः ॥ ५७ ॥

39053
39054 समाधौ परिणता मतिर्यस्याः सा ॥ ५७ ॥
39055
39056 पञ्चभिर्वा चतुर्भिर्वा वर्षैः सा संप्रबुध्यते ।
39057 तत्ततो मण्डलं याति तेन राजसभाजने ॥ ५८ ॥
39058
39059 ततः प्रबोधानन्तरम् । तेन प्राक्तनराजवचनेन हेतुना । राज्ञः सभाजने
39060 प्रीतिसंगमे चिकीर्षिते सति तत्किरातमण्डलं याति ॥ ५८ ॥
39061
39062 तत्र विश्रम्भगर्भाभिः कथाभिः कंचिदेव सा ।
39063 स्थित्वा कालं गृहीत्वा तान्वध्यान्स्वास्पदमेत्यथ ॥ ५९ ॥
39064
39065 विस्रम्भगर्भाभिर्विश्वासयुक्ताभिः । स्वास्पदं स्वस्थानं हिमवच्छिखरम्
39066 ॥ ५९ ॥
39067
39068 जीवन्मुक्ततयैवमेव विपिने साद्यापि रक्षोङ्गना
39069 तस्मिन्नेव गिरौ स्थिता विचलितध्यानैकतानाशया ।
39070 तस्मिन्राजनि शान्तिमागतवति त्यक्तैषणेनात्मना
39071 तद्राष्ट्राधिपसौहृदैः स्वकवलानास्वादयन्ती चिरं ॥ ६० ॥
39072
39073 सा रक्षोङ्गना कर्कटी अद्यापि पूर्वोक्तरीत्यैव जीवन्मुक्ततया तस्मिन्नेव गिरौ
39074 विपिने विचलितः कदाचिद्व्युत्थाने व्यवहारभाक् कदाचित्समाधौ
39075 ज्ञानैकतानश्च आशयश्चित्तं यस्यास्तथा भूत्वा स्थिता । तस्मिन्किरातानां
39076 राजनि कालेन त्यक्तसर्वैषणेनात्मना मनसा विदेहकैवल्यलक्षणां परमां
39077 शान्तिमागतवति सति तत्संततिजानां तद्राष्ट्राधिपानां सौहृदैः
39078 पूर्ववदेव स्वकवलान्वध्यांश्चिरमास्वादयन्ती चिरं स्थितेत्यर्थः ॥ ६० ॥
39079
39080 इत्यार्षे श्रीवासिष्ठमहारामायणे मोक्षोपाये उत्पत्तिप्रकरणे कर्क०
39081 राक्षसीसौहार्दं नाम द्व्यशीतितमः सर्गः ॥ ८२ ॥
39082
39083 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
39084 राक्षसीसौहार्दं नाम द्व्यशीतितमः सर्गः ॥ ८२ ॥
39085
39086
39087 त्र्यशीतितमः सर्गः ८३
39088
39089 श्रीवसिष्ठ उवाच ।
39090
39091 किरातमण्डले तस्मिन्ये भवन्ति महीभृतः ।
39092 तैस्तैः सह परा मैत्री तस्याः समभिजायते ॥ १ ॥
39093
39094 अव्युत्थिता समाधेः सा चिरात्कैरातमण्डले ।
39095 प्रतिष्ठिताऽभवद्देवी कन्दरेत्यत्र वर्ण्यते ॥ १ ॥
39096
39097 तद्राष्ट्राधिपसौहृदैः स्वकवलानास्वादयन्तीति यदुक्तं तत्प्रपञ्चयति ##-
39098
39099 सर्वांस्तत्र महोत्पातान्पिशाचादिभयान्यपि ।
39100 रोगांश्च योगसंसिद्धा निवारयति राक्षसी ॥ २ ॥
39101
39102 उत्पातादिशमनसामर्थ्योपपादनाय विशिनष्टि - योगसंसिद्धेति ॥ २ ॥
39103
39104 बहुवर्षगणेनैषा ध्यानाद्विरतिमागता ।

39105 तत्रागत्य समस्तांस्तान्वध्याञ्जन्तून्सुसंचितान् ॥ ३ ॥
39106
39107 वध्यान्भुङ्क्ते इति शेषः ॥ ३ ॥
39108
39109 अद्यापि तत्र ये वध्यास्ते तदर्थं महीभुजा।
39110 नीयन्ते मित्रसन्माने के हि नाध्यवसायिनः ॥ ४ ॥
39111
39112 नाध्यवसायिनो योद्युक्ताः ॥ ४ ॥
39113
39114 तस्यां ध्याननिषण्णायां किरातजनमण्डले।
39115 अनायान्त्यां चिरं कालं जनैर्दोषप्रशान्तये ॥ ५ ॥
39116
39117 दोषाणां प्रागुक्तोत्पातादीनां प्रशान्तये जनैः साकं शिरो दारयति
39118 वध्यानामिति मङ्गलेतरन्नामास्या अस्तीति मङ्गलेतरनामिका। अथवा
39119 मङ्गला इति इतरन्नाम यस्याः सा। गगनकोटरे गगनस्पर्शिप्रासादोदरे ॥ ५ ॥
39120
39121 सा देवी कन्दरानाम्नी मङ्गलेतरनामिका।
39122 संप्रतिष्ठापिता मूर्त्या पुरे गगनकोटरे ॥ ६ ॥
39123
39124 प्। ३३३) २०१
39125
39126 ततःप्रभृति तत्रत्यो [तत्रान्य इति पाठः] यो यो भवति भूमिपः
39127 ।
39128 स कन्दरां भगवतीं प्रतिष्ठापयति स्वयम् ॥ ७ ॥
39129
39130 प्रतिष्ठापयति कालेन पूर्वप्रतिमायां गतायामन्यां प्रतिमां कारयित्वेति
39131 भावः ॥ ७ ॥
39132
39133 यः कन्दराप्रतिष्ठां [कन्दरां प्रतिष्ठां च इति पाठः] च न
39134 करोति नृपाधमः।
39135 तस्योपतापनिचयाः प्रजा निघ्नन्ति यत्नतः ॥ ८ ॥
39136
39137 किमर्थं प्रतिष्ठापयतीत्यत्र हेतुं व्यतिरेकमुखेनाह - य इति ॥ ८ ॥
39138
39139 तत्पूजनादवाप्नोति जनस्तन्निखिलं फलम्।
39140 स्ववासनावशोच्छूनमनर्थं यात्यपूजनात् ॥ ९ ॥
39141
39142 अन्वयमुखेनाप्याह - तदिति। तत् उत्पातरोगशान्त्यादिफलम्। कुतो
39143 नियमेनोत्पादादिप्रसक्तिस्तत्राह - स्ववासनेति। स्वस्ववासनावशेन
39144 उच्छूनमाविर्भूतम् ॥ ९ ॥
39145
39146 वध्यलोकोपहारेण सा देवी परिपूज्यते।
39147 प्रतिमा सा स्थिताद्यापि चित्रस्था फलदायिनी ॥ १० ॥
39148
39149 सा प्रतिमा अद्यापि स्थिता। अन्यत्रापि चित्रस्था चित्रलिखिता फलदायिनीति वा ॥ १० ॥
39150
39151 सकलकोमलमङ्गलकारिणी
39152 कवलिताखिलवध्यमहाजना।
39153 जयति सात्र किरातजनास्पदे
39154 परमबोधवती चिरदेवता ॥ ११ ॥
39155
39156 सकलजनानां कोमलस्य बालवत्ससस्यादिविभवस्य मङ्गलानां संपदां च

39157 कारिणी। चिरकालानुवृत्ता देवता॥ ११॥
39158
39159 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे कर्क०
39160 कन्दरापूजनं नाम त्र्यशीतितमः सर्गः॥ ८३॥
39161
39162 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे कन्दरापूजनं
39163 नाम त्र्यशीतितमः सर्गः॥ ८३॥
39164
39165
39166 चतुरशीतितमः सर्गः ८४
39167
39168 श्रीवसिष्ठ उवाच।
39169
39170 एतत्ते कथितं सर्वं मयाख्यानमनिन्दितम्।
39171 कर्कट्या हिमराक्षस्या यथावदनुपूर्वशः॥ १॥
39172
39173 निमित्तं कर्कटीनाम्ना [कर्कटीनाम्न इति पाठः] उपदेशार्थकल्पनम्
39174 ।
39175 दृष्टान्तोक्त्युपयोगश्च विस्तरादत्र वर्ण्यते॥ १॥
39176
39177 हिमशब्देन हिमवानुच्यते नामैकदेशे नामग्रहणन्यायात्॥ १॥
39178
39179 श्रीराम उवाच।
39180
39181 हिमवद्गह्वरे प्रोत्था सा कथं कृष्णराक्षसी।
39182 बभूव कर्कटीनाम्ना यथावद्वद मे प्रभो॥ २॥
39183
39184 तस्याः कृष्णवर्णत्वे कर्कटीनामप्राप्तौ च किं निमित्तमिति रामः पृच्छति
39185 - हिमवदिति॥ २॥
39186
39187 श्रीवसिष्ठ उवाच।
39188
39189 कुलानि सन्त्यनेकानि राक्षसानां स्वभावतः।
39190 तानि शुक्लानि कृष्णानि हरितान्युज्ज्वलानि च॥ ३॥
39191
39192 तत्राद्यस्य निमित्तमाह - कुलानीति॥ ३॥
39193
39194 कर्कटप्राणिसादृश्यात्कर्कटो नाम राक्षसः।
39195 बभूव तज्जा सा कृष्णा कर्कटी कर्कटाकृतिः॥ ४॥
39196
39197 द्वितीयस्य निमित्तमाह - कर्कटेति। कर्कटः कुलीरः स एव प्राणी
39198 तत्सादृश्यात्। बृहदुदरदीर्घहस्तपादादिमत्त्वात्कर्कटाकृतिः॥ ४॥
39199
39200 कर्कटीप्रश्नसंस्मृत्या मयैषा कथिता तव।
39201 अध्यात्मोक्तिप्रसङ्गेन विश्वरूपनिरूपणे॥ ५॥
39202
39203 विश्वरूपस्य जगत्तत्त्वस्य निरूपणे प्रस्तुते अध्यात्मोक्तिप्रसङ्गेन
39204 कर्कटीकृतानां प्रश्नानां संस्मृत्या एषा आख्यायिका कथिता॥ ५॥
39205
39206 संपन्नमेव मे कस्मादसंपन्नमिव स्फुटम्।
39207 इदं जगदनाद्यन्तात्पदात्परमकारणात्॥ ६॥
39208

उदाहृतामाख्यायिकां प्रकृते योजयति - संपन्नमिति ॥ ६ ॥

प्लाविन्यो वीचयो वारिण्यन्यानन्याः स्थिता यथा ।
वर्तमाना अपि परे सृष्टयः संस्थितास्तथा ॥ ७ ॥

प्लाविन्य उत्प्लवनवत्यः । अपिशब्दादतीतानागतसमुच्चयः ॥ ७ ॥

अज्वलन्नेव काष्ठेषु वह्निरर्थक्रियां यथा ।
करोति मर्कटादीनां शीतापहरणादिकम् ॥ ८ ॥

यदि वर्तमानानामप्यतीतानागतसाम्यं तर्हि कथमर्थक्रियाकारित्वं
विशेषस्तत्राह - अज्वलन्नित्यादिना । प्रज्वलन् इति पाठे मर्कटादीनां
बुद्ध्या प्रज्वलन्नतु वस्तुतः ॥ ८ ॥

समं सौम्यत्वमजहदेव नित्योदयस्थिति ।
तथा ब्रह्म करोतीदं नाना कर्तेव सज्जगत् ॥ ९ ॥

कर्तेव सत् नाना जगत्करोति ॥ ९ ॥

अप्यनागत एवायमेवं सर्ग उपागतः ।
भोः शालभञ्जिकासंविद्दारुण्येव मुधोदिता ॥ १० ॥

भो इति रामसंबोधनम् । शालभञ्जिकासंवित्प्रतिभाबुद्धिः ॥ १० ॥

बीजे यथाऽनन्यदपि फलाद्यन्यदिवोदितम् ।
चितौ तथाऽनन्यदपि चेत्यमन्यदिवोदितम् ॥ ११ ॥

फलादि अङ्कुराति फलान्तं व्युत्क्रमेण फलादीत्युच्यते ॥ ११ ॥

अच्छेदादेकसत्ताया न भेदः फलबीजयोः ।
चिच्चेत्ययोश्च वार्यूर्म्योरिव वस्तुनि कश्चन ॥ १२ ॥

बीजादिफलान्ते अनुस्यूतैकद्रव्यसत्ताया अविच्छेदान्न भेदः ॥ १२ ॥

अविचारात्कुतो भेदो नैतयोरुपपद्यते ।
यतःकुतश्चिदुदितः स विचारेण नश्यति ॥ १३ ॥

भ्रान्तिरेषा यथाऽयाता तथा यातु रघूद्वह ।
ज्ञास्यसे तत्प्रबुद्धस्त्वमेनां केवलमुत्सृज ॥ १४ ॥

यथा निर्हेतुकतयैव आयाता तथा यातु गच्छतु । किं तर्हि मया कार्य तत्राह
- एनामिति । एनां भ्रान्तिम् । तद्ब्रह्म प्रबुद्धः सन् ज्ञास्यसे ॥ १४ ॥

प्। ३३४) २०२

भ्रान्तिग्रन्थौ वित्रुटिते मदुक्तिश्रवणात्ततः ।
ज्ञानशब्दार्थभेदानां वस्तु ज्ञास्यस्यलं स्वयम् ॥ १५ ॥

यदि भ्रममुत्सृजामि तर्हि कथं त्वदुक्तश्रवणे शब्दार्थबोधभेदं
प्रतिपत्स्ये तत्राह - भ्रान्तीति । यद्यपि न भेदं प्रतिपत्स्यसे तथापि
तत्तत्पर्यगोचरं वस्तु स्वयमेव ज्ञास्यसीत्यर्थः ॥ १५ ॥

39261 चित्तादियमनर्थश्रीस्तच्च सा चेतरा च ते।
39262 मदुक्तिश्रवणादेव शान्तिमेष्यत्यसंशयम्॥ १६॥
39263
39264 तथापि कथमनर्थनिवृत्तिसिद्धिस्तत्राह - चित्तादिति। तच्चित्तम्। सा चित्तजा
39265 अनर्थश्रीः इतरा चित्तहेतुरविद्या च॥ १६॥
39266
39267 ब्रह्मणः सर्वमुत्पन्नं सर्वं ब्रह्मैवमेति च।
39268 मद्गीर्भिः संप्रबुद्धः सन् ज्ञास्यस्यलमनिन्दितम्॥ १७॥
39269
39270 जगत उत्पत्त्यादिनिरूपणस्यापि निष्प्रपञ्चवस्तुबोध एव
39271 प्रयोजनमित्याशयेनाह - ब्रह्मण इति। सर्वं जगद्विलयेन ब्रह्म एति
39272 प्राप्नोति च। अलं पूर्णम्॥ १७॥
39273
39274 श्रीराम उवाच।
39275
39276 तस्मादियमिति ब्रह्मन्व्यतिरेकार्थपञ्चमी।
39277 ननु किं विद्धि देवेशादभिन्नं सर्वमित्यपि॥ १८॥
39278
39279 यदि भेदोऽसन्नेव तर्हि ब्रह्मणः सर्वमुत्पन्नमिति त्वदुक्तौ तस्माद्वा
39280 एतस्मादात्मन आकाशः संभूतः इत्यादिश्रुतिषु च तस्मादितीयं
39281 व्यतिरेकार्थभेदप्रतिपादिका पञ्चमी किं सर्वं देवेशादभिन्नं विद्धीत्यपि
39282 किम्। लक्ष्यालक्ष्यभेदस्य तत्प्रतियोग्यादीनां चासत्त्वे शब्दाप्रसराल्लक्षणेन
39283 लक्ष्यबोधनव्यवहारासिद्धेरुपदेशासिद्धिश्चेति शङ्काशयः॥ १८॥
39284
39285 श्रीवसिष्ठ उवाच।
39286
39287 उपदेशाय शास्त्रेषु जातः शब्दोऽथवार्थजः।
39288 प्रतियोगिव्यवच्छेदसंख्यालक्षणपक्षवान्॥ १९॥
39289
39290 तात्कालिकभेदकल्पनया व्यावहारिकदृष्टिसिद्धभेदाद्युपादानाद्वा
39291 शब्दप्रसराद्बिम्बप्रतिबिम्बलक्षणव्यवहारवदुपदेशोपपत्तेर्न कोऽपि दोष
39292 इत्याशयेन वसिष्ठः परिहरति - उपदेशायेत्यादिना। जातः कल्पितः। अथवा
39293 लोकसिद्धार्थजो व्यावहारिकभेदोपजीवी शब्दः प्रसरिष्यतीति शेषः॥ १९॥
39294
39295 भेदो दृश्यत एवायं व्यवहारान्न वास्तवः।
39296 वेतालो बालकस्येव कार्यार्थं परिकल्पितः॥ २०॥
39297
39298 कल्पितेन प्रयोजनवद्व्यवहाअसिद्धिर्लोकेऽपि प्रसिद्धेत्याह - भेद इति॥ २०॥
39299
39300 द्वैतैक्यमपि नो यस्यां तथा भूतार्थसंस्थितौ।
39301 अस्ति तस्यामीदृशः स्यात्कुतः संकल्पविप्लवः॥ २१॥
39302
39303 यत्र स्वप्नगन्धर्वनगरादिसंस्थितौ द्वैतमैक्यं च नास्ति तस्यामपीदृशो
39304 लक्षणादिव्यवहारोऽस्ति सत्यसंकल्पानामुपदेशादिव्यवहारे संकल्पविप्लवः
39305 कुतः स्यादित्यर्थः॥ २१॥
39306
39307 कार्यकारणभावो हि तथा स्वस्वामिलक्षणम्।
39308 हेतुश्च हेतुमांश्चैवावयवावयविक्रमः॥ २२॥
39309
39310 त्वदुपदेशादिव्यवहारे च मयैव संकल्पात्कार्यकारणादिभेदः कल्पित
39311 इत्याह - कार्यकारणेत्यादिना॥ २२॥
39312

39313 व्यतिरेकाव्यतिरेकौ परिणामादिविभ्रमः।
39314 तथा भावविलासादि विद्याविद्ये सुखासुखे॥ २३॥
39315
39316 एवमादिमयी मिथ्यासंकल्पकलना मिता।
39317 अज्ञानामवबोधार्थं नतु भेदोऽस्ति वस्तुनि॥ २४॥
39318
39319 मिता कल्पिता॥ २४॥
39320
39321 अविबोधादयं वादो ज्ञाते द्वैतं न विद्यते।
39322 ज्ञाते संशान्तकलनं मौनमेवावशिष्यते॥ २५॥
39323
39324 अयं च व्यवहार उपदेश्यस्याज्ञदशायामेव न प्रबोधदशायामिति
39325 नाद्वैतहानिरित्याह - अविबोधादिति। मौनमशब्दः॥ २५॥
39326
39327 सर्वमेकमनाद्यन्तमविभागमखण्डितम्।
39328 इति ज्ञास्यसि सिद्धान्तं काले बोधमुपागतः॥ २६॥
39329
39330 विवदन्ते ह्यसंबुद्धाः स्वविकल्पविजृम्भितैः।
39331 उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते॥ २७॥
39332
39333 असंबुद्धा अज्ञाततत्त्वाः पुरुषाः स्वविकल्पविजृम्भितैस्तैर्कैः। अयं वादः
39334 सर्वोऽपि वेदान्ततत्वोपदेशात्प्रागेव यतो ज्ञाते द्वैतं न विद्यते इत्यर्थः॥ २७
39335 ।।
39336
39337 वाच्यवाचकसंबोधो विना द्वैतं न सिद्ध्यति।
39338 नच द्वैतं संभवति मौनं वापादयत्यलम्॥ २८॥
39339
39340 मास्तु द्वैतं तथापि कथं विवादासंभवस्तत्राह - वाच्येति। तर्ह्यस्तु
39341 द्वैतं तत्राह - नचेति। वेत्यवधारणे अतो मौनमेवापादयतीत्यर्थः॥ २८॥
39342
39343 महावाक्यार्थनिष्ठान्तां बुद्धिं कृत्वा रघूद्वह।
39344 वचोभेदमनादृत्य यदिदं वच्मि ते शृणु॥ २९॥
39345
39346 यतो वेत्यादिलक्षणवाक्ये तर्हि पञ्चम्याद्यर्थो न प्रतिपत्तव्यस्तत्राह -
39347 महावाक्येति। पञ्चम्याद्युपात्तं वचोभेदमनादृत्य तां
39348 लक्षणवाक्योत्थां बुद्धिमखण्डे महावाक्यार्थे एव
39349 निष्ठापदवाच्यलक्ष्यार्थव्युत्पत्तिद्वारा पर्यवसानं यस्यास्तथाविधां
39350 कृत्वा यदिदं वक्ष्यमाणं वच्मि तच्छृण्वित्यर्थः॥ २९॥
39351
39352 यतःकुतश्चिदुच्छ्रायं गन्धर्वपुरवन्मनः।
39353 भ्रान्तिमात्रं तनोतीदं जगदाख्यं स्वजृम्भणम्॥ ३०॥
39354
39355 यतःकुतश्चिदनिर्वाच्याद्धेतोरुच्छ्राय आविर्भावो यस्य॥ ३०॥
39356
39357 यथा चेतस्तनोतीमां जगन्मायां तथानघ।
39358 शृणु त्वं कथयामीदं दृष्टान्तं दृष्टिवेदनम्॥ ३१॥
39359
39360 उक्तार्थे वक्ष्यमाणाख्यायिकां दृष्टान्तत्वेनावतारयति - यथेति।
39361 स्वदृष्ट्यैव वेद्यते दार्ष्टान्तिकं येन तद्दृष्टिवेदनम्॥ ३१॥
39362
39363 यं श्रुत्वा सर्वमेवेदं भ्रान्तिमात्रमिति स्वयम्।
39364 राम निश्चयवान्भूत्वा दूरे त्यक्ष्यसि वासनाम्॥ ३२॥

39365
39366 मनोमनननिर्माणमात्रमेव जगल्लयम् |
39367 सर्वमुत्सृज्य शान्तात्मा स्वात्मन्येव निवत्स्यसि || ३३ ||
39368
39369 मद्वाक्यार्थविधानस्थो मनोव्याधिचिकित्सने |
39370 विवेकौषधलेशेन प्रयत्नं च करिष्यसि || ३४ ||
39371
39372 एवं स्थिते जगद्रूपं चित्तमेवेह जृम्भते |
39373 न विद्यते शरीरादि सिकतान्तरतैलवत् || ३५ ||
39374
39375 एवं वक्ष्यमाणाख्यायिकरीत्या स्थिते || ३५ ||
39376
39377 चित्तमेव हि संसारो रागादिक्लेशदूषितम् |
39378 तदैव तैर्विनिर्मुक्तं भवान्त इति कथ्यते || ३६ ||
39379
39380 भवस्य संसारस्यान्तो नाशः || ३६ ||
39381
39382 प्। ३३५) २०२
39383
39384 चित्तं साध्यं पालनीयं विचार्यं कार्यमार्यवत् |
39385 आहार्यं व्यवहार्यं च संचार्यं धार्यमादरात् || ३७ ||
39386
39387 लौकिकशास्त्रीयसाध्यपालनीयादिसर्वपदार्थरूपेण चित्तमेव विजृम्भते
39388 नान्यदित्याह - चित्तमिति | सिद्धेषु साधनेष्वसिद्धं साध्यम् | पूर्वसिद्धं
39389 पालनीयम् | असिद्धेषु नानासाधनेषु प्रसक्तेषु प्रयत्नगुरुलाघवविमर्शेन
39390 साधनानि संपाद्य पश्चात्साध्यं विचार्यम् तत्रापि
39391 शिष्टैकसंमतोपायसाध्यमार्यवत्कार्यम् | देशान्तरे सिद्धमेव स्वगृहे
39392 आनेतुं योग्यमाहार्यम् | स्वगृहस्थमेव क्रयविक्रयाद्युपयुक्तं
39393 व्यवहार्यम् | तेष्वप्यश्वरथादि संचार्यम् | भूषणादि तु धार्यम् | आदरादिति
39394 सर्वत्र संबध्यते | एतत्सर्वं चित्तमेव | नहि निश्चित्तस्य किंचित्साध्यादिकं
39395 प्रसिद्धमित्याशयः || ३७ ||
39396
39397 सर्वमभ्यन्तरे चित्तं बिभर्ति त्रिजगन्नभः |
39398 अहमापूरमिव तद्यथाकालं विजृम्भते || ३८ ||
39399
39400 त्रिजगत्कल्पनाया नभ आकाशभूतं चित्तं सर्वं दृश्यमभ्यन्तरे बिभर्ति
39401 | तदेव चित्तं यथाकालं देहप्राणेन्द्रियादिषु व्यापृतेषु अहमेव
39402 व्यापृतोऽस्मीत्यहमापूरमहंताप्रवाह इव विजृम्भते इत्यर्थः || ३८ ||
39403
39404 योऽयं चित्तस्य चिद्भागः सैषा सर्वार्थबीजता |
39405 यश्चास्य जडभागश्च तज्जगत्सोऽङ्ग संभ्रमः || ३९ ||
39406
39407 तत्र चिदंशप्राधान्येन द्रष्टृतापरपर्याया सर्वकल्पनाबीजभूता
39408 अहंताऽजडांशप्राधान्येन तु दृश्यभ्रान्तिरूपतेति विभागमाह -
39409 योऽयमिति || ३९ ||
39410
39411 अविद्यमानमेवेदमादिसर्गे धरादिकम् |
39412 निराकृतिरजः स्वप्नं पश्यतीव न पश्यति || ४० ||
39413
39414 उक्तमर्थं प्रागुक्तसृष्टिक्रमस्मारणेनोपपादयति - अविद्यमानमेवेति |
39415 अजो ब्रह्मा || ४० ||
39416

39417 सर्गादिदीर्घसंवित्त्या शैलादिजडसंविदा |
39418 सूक्ष्मं सूक्ष्मविदा चेति देहं शून्यं न वास्तवम् || ४१ ||
39419
39420 कथं पश्यति तदाह - सर्गादीति | शैलादिस्थूलं विराड्देहं
39421 दीर्घसंवित्त्या सृष्टिस्थितिप्रलयकोटिसाधारण्या साक्षिसंविदा सर्गादि
39422 जडसंविदा जडाहंभावनारूपया वैश्वानरसंविदा सूक्ष्मं
39423 लिङ्गसमष्टिसूत्रात्मकहिरण्यगर्भदेहं सूक्ष्मविदा तदहंभावसंविदा
39424 चेति शून्यमेव देहत्रयं पश्यतीत्यर्थः || ४१ ||
39425
39426 सर्वगेनात्मना व्याप्तं स्वचेत्यात्मवपुर्मनः |
39427 आततं सौम्य विमलं वारीव रवितेजसा || ४२ ||
39428
39429 योऽयं चित्तस्य चिद्भागः सैषा सर्वार्थबीजतेत्येतदुपपादयति - सर्वगेनेति |
39430 तथाच चिद्व्याप्तिबलादेव बीजतेत्यर्थः || ४२ ||
39431
39432 चित्तबालो जगद्यक्षं मिथ्या पश्यत्यबोधतः |
39433 बोधितोऽसौ परं रूपं स्वं पश्यति निरामयम् || ४३ ||
39434
39435 चिद्व्याप्तिबलादेव चित्तस्य अविचारे जगद्दृष्टृता विचारे आत्मदर्शनं चेत्याह
39436 - चित्तबाल इति || ४३ ||
39437
39438 यथात्मा दृश्यतामेति द्वित्वैक्यभ्रमदायिनीम् |
39439 शृणु तत्ते प्रवक्ष्यामि वक्ष्यामाणकथागमैः || ४४ ||
39440
39441 एवंच शुद्धात्मैव चित्तभावद्वारा दृश्यभावं प्राप्त इवेति फलितं
39442 तत्संभावनार्थं वक्ष्यमाणकथामवतारयति - यथेति || ४४ ||
39443
39444 यत्कथ्यते हि हृदयंगमयोपमान-
39445 युक्त्या गिरा मधुरयुक्तपदार्थया च |
39446 श्रोतुस्तदङ्ग हृदयं परितो विसारि
39447 व्याप्नोति तैलमिव वारिणी वार्य शङ्काम् || ४५ ||
39448
39449 ऐन्दवोपाख्यानोपमानयुक्त्या कथं जगतो मनोमात्रत्वनिश्चयस्तत्राह -
39450 यदिति | हृदयंगमया मनोनुरञ्जिन्या | शङ्कां वार्य निरस्य | ल्यप्
39451 छान्दसः | श्रोतुर्हृदयं व्याप्नोति || ४५ ||
39452
39453 त्यक्तोपमानममनोज्ञपदं दुरापं
39454 क्षुब्धं धराविधुरितं विनिगीर्णवर्णम् |
39455 श्रोतुर्न याति हृदयं प्रविनाशमेति
39456 वाक्यं किलाज्यमिव भस्मनि हूयमानम् || ४६ ||
39457
39458 उक्तमर्थं व्यतिरेकमुखेनाप्युपपादयति - त्यक्तोपमानमिति | यद्वाक्यं
39459 त्यक्तोपमानं दृष्टान्तोपन्यासरहितम् | अमनोज्ञानि शब्दशास्त्रासंमतानि
39460 कठोरवर्णादिघटितानि वा पदानि यस्मिंस्तथाविधम्
39461 दुरापमनभिव्यक्तवर्णत्वात्स्फुटतया [वर्णास्फुटतया इति पाठः]
39462 श्रोत्रेण प्राप्तुमशक्यम् क्रोधावेशादिवशात्क्षुब्धं सत् धराविधुरितं
39463 स्वस्थानविच्युतवर्णम् | विनिगीर्णवर्णं ग्रस्ताक्षरम् | संवृतः कलो ध्मात
39464 इत्यादिमहाभाष्योक्तस्वरवर्णदोषाणामुपलक्षणमेतत् | तथाचाहुः -
39465 ग्रस्तं निरस्तं प्रविलम्बितं द्रुतमम्बूकृतं ध्मातमथो विकम्पितम् |
39466 विस्रस्तमेणीकृतमर्धकं हतं विकीर्णमेताः स्वरदोषभावनाः || इति
39467 एतादृशं तद्वाक्यं श्रोतुर्हृदयं न याति नानुरञ्जयति | महतापि
39468 श्रमेणोपन्यस्तं प्रविनाशं नैष्फल्यं वाचाटत्वादिदोषप्रत्ययफलतां

वा एति। किलेति प्रसिद्धोऽस्य दृष्टान्त इति दर्शयति - आज्यमिवेति॥ ४६॥

आख्यानकानि भुवि यानि कथाश्च या या
यद्यत्प्रमेयमुचितं परिपेलवं वा।
दृष्टान्तदृष्टिकथनेन तदेति साधो
प्राकाश्यमाशु भुवनं सितरश्मिनेव॥ ४७॥

व्यतिरेकमुखोपपादितमर्थं पुनरन्वयोक्त्या निगमयति - आख्यानकानीति।
नानाकथाभिरुपेता महत्यो भारतादिकथा आख्यानकानि। अल्पास्तु कथाः।
उचितं अभिज्ञानुरञ्जनोपयुक्तं यद्यत्काव्यनाटकाध्यात्मनिबन्धादिरूपम्
। परिपेलवं शब्दतोऽर्थतश्च कोमलं च यद्यच्छ्रोत्रप्रमेयं तत्सर्वं
दृष्टान्तानां लोकप्रसिद्धप्रमाणदृष्टीनां च कथनेन प्राकाश्यं
स्फुटहृद्यार्थतामेतीत्यर्थः॥ ४७॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे
सूच्युपाख्याने मनोङ्कुरोत्पत्तिकथनं नाम चतुरशीतितमः सर्गः॥
८४॥

इति श्रीवासिषिठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
मनोङ्कुरोत्पत्तिकथनं नाम चतुरशीतितमः सर्गः॥ ८४॥

प्। ३३६) २०३

पञ्चाशीतितमः सर्गः ८५

श्रीवसिष्ठ उवाच।

पुरा मे ब्रह्मणा प्रोक्तं सर्वं तत्कथयानघ।
यदिदं तत्प्रवक्ष्यामि त्वयि पृच्छति राघव॥ १॥

सृष्टिं चिकीर्षतो धातुर्दशब्रह्माण्डदर्शनम्।
तत्रैकरविणा तेषां तत्त्वोक्तिश्चात्र वर्ण्यते॥ १॥

प्रतिज्ञातमैन्दवोपाख्यानं वक्तुमुपक्रमते - पुरेत्यादिना। हे अनघ
ब्रह्मणा मे पुरा यदिदं प्रोक्तं जगतो मनोमात्रत्वं तत्सर्व तत्कथया तेन
ब्रह्मणोक्तयैन्दवोपाख्यानकथया प्रवक्ष्यामीति योजना॥ १॥

पुरा मया हि भगवान्पृष्ठः कमलसंभवः।
इमे कथमुपायान्ति ब्रह्मन्सर्गगणा इति॥ २॥

तदर्थ तदानीं स्वकृतं प्रश्नमाह - पुरेति॥ २॥

तदुपाश्रुत्य भगवान्ब्रह्मा लोकपितामहः।
ऐन्दवाख्यानसहितं मामुवाच बृहद्वचः॥ ३॥

तत् मत्पृष्टं उप आश्रुत्य वक्ष्यामीति प्रतिज्ञाय। बृहत् महार्थम्॥ ३॥

ब्रह्मोवाच।

सर्वं हि मन एवेदमित्थं स्फुरति भूतिमत्।
जलं जलाशयस्फारैर्विचित्रैश्चक्रकैरिव॥ ४॥

भूतिमज्जगद्भावधारणशक्तिमत् । चक्रकैरावर्तैरिव ॥ ४ ॥

दिनादौ संप्रबुद्धस्य संसारं स्रष्टुमिच्छतः ।
पुराकल्पे हि कस्मिंश्चिच्छृणु किं वृत्तमङ्ग मे ॥ ५ ॥

हे अङ्ग मे मम पुराकल्पे दिनादौ कल्पादौ संप्रबुद्धस्य संसारं
जगत्स्रष्टुमिच्छतः किं वृत्तं यत्संपन्नं तच्छृण्वित्यर्थः ॥ ५ ॥

कदाचिदखिलं सर्गं संहृत्य दिवसक्षये ।
एक एवाहमेकाग्रः स्वस्थस्तामनयं निशाम् ॥ ६ ॥

निशान्ते संप्रबुद्धात्मा संध्यां कृत्वा यथाविधि ।
प्रजाः स्रष्टुं दृशौ स्फारे व्योम्नि योजितवानहम् ॥ ७ ॥

संध्यां संध्योपास्तिम् । योजितवान् प्रसारितवानिति यावत् ॥ ७ ॥

यावत्पश्यामि गगनं न तमोभिर्न तेजसा ।
व्याप्तमत्यन्तविततं शुन्यमन्तविवर्जितम् ॥ ८ ॥

विद्यमानस्यापि तमसो दिव्यस्वदृष्टिप्रसाराविघातित्वान्न तमोभिरित्युक्तम् ॥ ८
। ।

सर्गं संकल्पयामीति मतिं निश्चित्य तन्मया ।
समवेक्षितुमारब्धं शुद्धं सूक्ष्मेण चेतसा ॥ ९ ॥

तत्स्रष्टव्यवस्तु समवेक्षितुं पर्यालोचयितुम् ॥ ९ ॥

अथाहं दृष्टवांस्तत्र मनसा विततेऽम्बरे ।
पृथक्स्थितान्महारम्भान्सर्गान्स्थितिनिरर्गलान् ॥ १० ॥

अम्बरे अव्यक्ताकाशे सर्गान्ब्रह्माण्डान् । स्थित्या
तत्रत्यविष्ण्वादिकृतपालनादिव्यवस्थया निरर्गलान्निष्प्रतिबन्धान् ॥ १० ॥

तेषु मत्प्रतिबिम्बाभाः पद्मकोशनिवासिनः ।
राजहंसान्समारूढाः संस्थिता दश पद्मजाः ॥ ११ ॥

पृथक्स्थितेषु सर्गेषु तेषूद्यद्भूतपङ्क्तिषु ।
जलजालेषु शुद्धेषु जगत्सु जलदायिषु ॥ १२ ॥

उद्यन्त्य उत्पद्यमाना भूतपङ्क्तयश्चतुर्विधप्राणिनिकाया येषु । जलजालेषु
जलदजालेषु । छान्दसो दलोपः । अथवा जलानां जालमिव बन्धनेषु मेघेषु
शुद्धेष्ववग्रहादिदोषनिर्मुक्तेषु ॥ १२ ॥

प्रवहन्ति महानद्यः प्रध्वनन्ति यथाब्धयः ।
प्रतपन्त्युष्णारुचयः प्रस्फुरन्त्यम्बरेऽनिलाः ॥ १३ ॥

प्रकर्षेण स्फुरन्ति संचलन्ति ॥ १३ ॥

दिवि क्रीडन्ति विबुधा भुवि क्रीडन्ति मानवः ।
दानवा भोगिनश्चैव पातालेषु च संस्थिताः ॥ १४ ॥

39573 विबुधा देवाः ॥ १४ ॥
39574
39575 कालचक्रपरिप्रोता यद्भावाः सकलर्तवः ।
39576 यथाकालं फलापूर्णा भूषयन्त्यभितो महीम् ॥ १५ ॥
39577
39578 यद्भावाः यादृशशीतातपवर्षादिस्वभावाः । सकला ऋतवो वसन्तादयः ॥
39579 १५ ॥
39580
39581 प्रौढ्यं शुभाशुभाचारस्मृतयः ककुभं प्रति ।
39582 नरकस्वर्गफलदाः सर्वत्र समुपागताः ॥ १६ ॥
39583
39584 शुभा विहिता अशुभा निषिद्धा आचरास्तद्विभाजकस्मृतिग्रन्थाश्च ककुभं
39585 प्रति प्रतिदिशं सर्वत्र सर्ववर्णेषु प्रौढ्यं प्रौढतां समुपागताः ॥ १६ ॥
39586
39587 भोगमोक्षफलार्थिन्यः समस्ता भूतजातयः ।
39588 स्वमीहितं यथाकालं प्रयतन्ते यथाक्रमम् ॥ १७ ॥
39589
39590 यथाक्रमं यादृशो यासां प्रवृत्तिक्रमः स्वसर्गे
39591 क्लृप्तस्तमनतिक्रम्येत्यर्थः ॥ १७ ॥
39592
39593 सप्तलोकास्तथा द्वीपाः समुद्रा गिरयस्तथा ।
39594 अप्येष्यमाणाः कल्पान्तं स्फुरन्त्युरुतरारवम् ॥ १८ ॥
39595
39596 कल्पान्तं प्रलयम् ॥ कालेन एष्यमाणा अपि स्वकाले उरुतरारवं यथा स्यात्तथा
39597 स्फुरति ॥ १८ ॥
39598
39599 क्वचिद्ध्रासित्वमायातं क्वचित्स्थिरतरं स्थितम् ।
39600 स्थितं सर्वत्र कुञ्जेषु तमस्तेजोलवादृतम् ॥ १९ ॥
39601
39602 तमः क्वचिदनावृतदेशे ह्रासित्वमपक्षयम् । क्वचिद्गिरिगुहादौ । कुञ्जेषु तु
39603 तेजोलवैरातपच्छिद्रैरादृतं । स्नेहान्मिलितमित्यर्थः ॥ १९ ॥
39604
39605 नभोनीलोत्पलस्यान्तर्भ्रमदभ्रमधुव्रतम् ।
39606 प्रस्फुरत्तारकाजालकेसरापूर्णतां गतम् ॥ २० ॥
39607
39608 अर्थात्सरस्त्वेन जगद्वर्णयति - नभ इति ॥ २० ॥
39609
39610 कल्पान्तघननीहारो मेरुकुञ्जेषु संस्थितः ।
39611 शाल्मलेरमलं तूलमष्ठीलाकोटरेष्विव [अष्ठिला इति मुद्रितपुस्तके
39612 पाठः] ॥ २१ ॥
39613
39614 मेरुरिवोच्छ्रयान्मेरुर्हिमवांस्तत्कुञ्जेषु । अष्ठीला [१] फलकर्परं
39615 तत्कोटरेष्विव ॥ २१ ॥
39616
39617 लोकालोकाद्रिरसनारणदर्णवघुंघुमा ।
39618 तमःखण्डेन्द्रनीलाभा निजरत्नविराजिता ॥ २२ ॥
39619
39620 लोकालोकाद्रिरेव रसना काञ्ची यस्याः । रणन्तोऽर्णवा एव घुंगुमा
39621 भूषणध्वनयो यस्याः । तमःखण्डा एवेन्द्रनीलमणिप्रभा यस्याः । निजैः
39622 स्वान्तर्गतै रत्नैश्च विराजिता ॥ २२ ॥
39623
39624 धानाधरसुधा भूतरवकाकलिघुंघुमा ।

39625 संस्थिता भुवनाभोगे स्वान्तःपुर इवाङ्गना ॥ २३ ॥
39626
39627 धानाः शाल्यादिबीजान्येव प्राणिनामास्वादनीयत्वादधरसुधा यस्याः।
39628 भूतानां प्राणिनां रवा ध्वनय एव काकलिघुंघुमा
39629 मधुरास्फुटवाग्विलासा यस्याः सा तथाविधा अर्थाद्भूः तस्मिन्भुवनाभोगे
39630 स्वान्तःपुरे अङ्गनेव संस्थितेत्यर्थः ॥ २३ ॥
39631
39632 प्। ३३७) २०३
39633
39634 गौराङ्गपङ्क्तिर्मध्यस्था रजनीराजिरञ्जिता।
39635 पद्मोत्पलस्रज इव लक्ष्यते वत्सरश्रियः ॥ २४ ॥
39636
39637 वत्सरश्रियः संवत्सरलक्ष्म्या
39638 कण्ठधृतायास्तमःप्रकाशलक्षणपद्मोत्पलनिर्मितायाः स्रजो मध्यस्था
39639 अन्तर्निविष्टा अत एव तदीयपरागसदृशविद्युन्नक्षत्रादिव्याप्तत्वाद्रजनीराज्या
39640 हरिद्रालेपनप्रायेण रात्रिसमूहाङ्गरागेण रञ्जिता गौराणां
39641 कण्ठकुचोदरवलिनाभ्याद्यङ्गानां पङ्क्तिरिव अर्थात् द्यौर्लक्ष्यत इत्यर्थः
39642 ॥ २४ ॥
39643
39644 बहुगर्तविभागस्थभूता लोकाः पृथक्पृथक्।
39645 जातारुणा विलोक्यन्ते दाडिमानीव कान्तिकाः ॥ २५ ॥
39646
39647 बहूनि भुवनगर्तविभागेषु स्थितानि भूतानि बीजस्थानीयानि येषु तथाविधा
39648 लोका ब्रह्माण्डा जातान्यरुणानि तेजांसि येषु तथाविधाः सन्तः कान्तिकाः
39649 प्रकाशमाना दाडिमफलानीव विलोक्यन्त इत्यर्थः ॥ २५ ॥
39650
39651 त्रिप्रवाहा त्रिपथगा कृतोर्ध्वाधोगमागमा।
39652 जगद्यज्ञोपवीताभा स्फुरतीन्दुकलामला ॥ २६ ॥
39653
39654 इतश्चेतश्च गच्छन्ति शीर्यन्ते प्रोद्भवन्ति च।
39655 दिग्लतासु तडित्पुष्पा वातार्ता मेघपल्लवाः ॥ २७ ॥
39656
39657 तडित एव पुष्पाणि येषां तथाविधा मेघपल्लवा दिग्लतासु वातार्ताः सन्त
39658 इतश्चेतश्च गच्छन्ति शीर्यन्ते प्रोद्भवन्तीति योजना ॥ २७ ॥
39659
39660 गन्धर्वनगरोद्यानलतावितानमालिनी।
39661 समुद्रभूमिनभसां पदवी प्रविराजते ॥ २८ ॥
39662
39663 तच्च प्रतिभातं जगन्मिथ्यैवेति दर्शयति - गन्धर्वेति। सा
39664 समुद्रभूमिनभसां पदवी वितानशालिनी गन्धर्वनगरोद्यानलतेव
39665 प्रतिराजते न वास्तवीत्यर्थः ॥ २८ ॥
39666
39667 लोकान्तरेषु सङ्घेन देवासुरनरोरगाः।
39668 उदुम्बरेषु मशका इव घुंघुमिताः स्थिताः ॥ २९ ॥
39669
39670 लोकान्तरेषु भुवनगर्भेषु ॥ २९ ॥
39671
39672 युगकल्पक्षणलवकलाकाष्ठाकलङ्कितः।
39673 कालो वहत्यकलितसर्वनाशप्रतीक्षकः ॥ ३० ॥
39674
39675 तेषु लोकान्तरेषु युगादिलक्षणः कालोऽपि प्रवहतीत्यर्थः। अकलितस्य अतर्कितस्य
39676 सर्वनाशस्य प्रतीक्षकः ॥ ३० ॥

39677
39678 एवमालोक्य शुद्धेन परेण स्वेन चेतसा |
39679 भृशं विस्मयमापन्नः किमेतत्कथमित्यलम् || ३१ ||
39680
39681 विस्मयमापन्नः | अहमिति शेषः || ३१ ||
39682
39683 कथं मांसमयेनाक्ष्णा यन्न पश्यामि किंचन |
39684 तन्मायाजालमतुलं पश्यामि मनसाम्बरे || ३२ ||
39685
39686 विस्मयमेव सहेतुकमभिलप्य दर्शयति - कथमिति | मांसमयेन
39687 चक्षुर्गोलकनिविष्टेनाक्ष्णा यन्न पश्यामि तन्मनसा पश्यामि इदं कथं
39688 संपन्नमिति विस्मय इत्यर्थः || ३२ ||
39689
39690 अथालोक्य चिरं कालं मनसैवाहमम्बरात् |
39691 अर्कं तस्माज्जगजालादेकमानीय पृष्ठवान् || ३३ ||
39692
39693 अम्बरात्तद्भुवनाकाशात् | आनीय सत्यसंकल्पेन पुरः संनिधाप्य || ३३ ||
39694
39695 आगच्छ देवदेवेश भो भास्कर महाद्युते |
39696 स्वागतं तेऽस्त्विति प्रोक्तो मयासौ कथितोप्यथ || ३४ ||
39697
39698 स्वागतं तेऽस्त्विति प्रथमं प्रोक्तः अथ वक्ष्यमाणमर्थं कथितः
39699 पृष्टश्च || ३४ ||
39700
39701 कस्त्वं कथमिदं जातं जगदेव जगन्ति च |
39702 यदि जानासि भगवंस्तदेतत्कथयानघ || ३५ ||
39703
39704 तमेवार्थं दर्शयति - क इति | इदं त्वदीयं जगत्कथं जातम् | एवमन्यानि
39705 नव जगन्ति कथं जातानि कैः स्रष्टृभिः सृष्टानीत्यर्थः || ३५ ||
39706
39707 इत्युक्तो मां समालोक्य संपरिज्ञातवानथ |
39708 नमस्कृत्वाभ्युवाचेदमनिन्द्यपदया गिरा || ३६ ||
39709
39710 मां संपरिज्ञातवान् | अस्य ब्रह्मण्डस्य ब्रह्मा अयमितीति शेषः || ३६ ||
39711
39712 श्रीभानुरुवाच |
39713
39714 अस्य दृश्यप्रपञ्चस्य नित्यं कारणतामसि |
39715 गतः कस्मान्न जानीषे किं मामीश्वर पृच्छसि || ३७ ||
39716
39717 नित्यं शश्वत् || ३७ ||
39718
39719 अथ मद्वाक्यसंदर्भे लीला चेत्तव सर्वग |
39720 अचिन्तितां मदुत्पत्तिं तच्छृणुष्व वदाम्यहम् || ३८ ||
39721
39722 लीलाश्रवणे कौतूहलम् | अचिन्तितां त्वया असंकल्पिताम् || ३८ ||
39723
39724 सदसदिति कलाभिराततं यत्
39725 सदसदबोधविमोहदायिनीभिः |
39726 अविरतरचनाभिरीश्वरात्मन्
39727 प्रविलसतीह मनो महन्महात्मन् || ३९ ||
39728

39729 व्यवहारे सर्वशक्तिमत्त्वादीश्वरात्मन्। परमार्थदृशा तु महात्मन्।
39730 अविरता जगद्रचना याभ्यस्तथाविधाभिः। सदिति वा असदिति वा तत्त्वतोऽबोधेन
39731 विमोहदानशीलाभिः कदाचित्सत्कदाचिदसत्क्वचित्सत्क्वचिदसदिति
39732 कालदेशपरिच्छिन्नजगत्सत्ताप्रदर्शनकौशलरूपाभिर्यदिह आसमन्तात्ततं
39733 विस्तृतं तन्मन एव तथा प्रविलसतीति विद्धीत्यर्थः॥ ३९॥
39734
39735 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० मो० उ० ऐन्दवोपाख्यानोपक्रमे
39736 ब्रह्मादित्यसमागमो नाम पञ्चाशीतितमः सर्गः॥ ८५॥
39737
39738 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
39739 ब्रह्मादित्यसमागमो नाम पञ्चाशीतितमः सर्गः॥ ८५॥
39740
39741
39742 षडशीतितमः सर्गः ८६
39743
39744 श्रीभानुरुवाच।
39745
39746 कल्पनाम्नि महादेव ह्यस्तने दिवसे तव।
39747 तले कैलासशैलस्य जम्बूद्वीपैककोणके॥ १॥
39748
39749 इहेन्दोः सहभार्थस्य तपसैन्दवसंभवः।
39750 तेषां ज्येष्ठोपदेशेन धात्रहं भावनेर्यते॥ १॥
39751
39752 जम्बूद्वीपैककोणके विद्यमानस्य कैलासशैलस्यावयवभूते तले
39753 समभूप्रदेशे॥ १॥
39754
39755 प्। ३३८) २०४
39756
39757 सुवर्णजटनाम्ना यस्त्वत्पुत्रैर्जनितप्रजैः।
39758 मण्डलं कल्पितं श्रीमदनल्पसुखसुन्दरम्॥ २॥
39759
39760 यः प्रदेशः सुवर्णजटनाम्ना प्रसिद्ध इति शेषः। यत्र प्रदेशे जनिता प्रजा
39761 संततिर्यैस्तथाविधैस्तत्पुत्रैर्मरीच्यादिभिः प्रजानां निवासार्थं मण्डलं
39762 कल्पितमित्यर्थः॥ २॥
39763
39764 तत्राभूदतिधर्मात्मा ब्राह्मणो ब्रह्मवित्तमः।
39765 इन्दुनामातिशान्तात्मा कश्यपस्य कुलोद्भवः॥ ३॥
39766
39767 तत्र मण्डले। ब्रह्मवित्तमो वेदविच्छ्रेष्ठः॥ ३॥
39768
39769 तस्मिंस्तदा निवसतो नित्यं स्वजनमण्डले।
39770 तस्य प्राणसमा भार्या काचित्तस्यां महात्मनः॥ ४॥
39771
39772 न बभूवात्मजस्तस्य मरुभूमौ तृणं यथा।
39773 न व्यराजत सा भार्या तस्य निष्फलपुष्पिता॥ ५॥
39774
39775 ऋज्वी गौरी सुशुद्धापि शून्या शरलता यथा।
39776 तौ ततो दंपती खिन्नौ पुत्रार्थं तपसे गिरेः॥ ६॥
39777
39778 शून्या फलशून्या। शरलता काशस्तम्बः॥ ६॥
39779
39780 कैलासस्यांशमारूढौ रूढाविव नवद्रुमौ।

भूतैरनावृते शून्ये तस्मिन्कैलासकुञ्जके ॥ ७ ॥

अंशमूर्ध्वभागं। भूतैः प्राणिभिः ॥ ७ ॥

तेपतुस्तौ तपो घोरं जलाहारौ तरुस्थिती।
एकं पानीयचुलकं पीत्वा दिवसपर्यये ॥ ८ ॥

तरोः स्थितिरिव स्थितिः स्थैर्यं ययोस्तौ। तरुस्थितिमेवोपपादयति - एकमिति।
दिवसपर्यये दिनचरमभागे ॥ ८ ॥

निस्पन्दमुत्थितौ वार्क्षीं वृत्तिमाश्रित्य संस्थितौ।
तस्थतुस्तौ तदा तत्र तावत्कालं तरुव्रतौ ॥ ९ ॥

वार्क्षीं वृक्षसंबन्धिनीम्। तत्सदृशीमिति यावत् ॥ ९ ॥

यावत्त्रेता द्वापरं च युगे द्वे एव ते गते।
ततस्तुष्टोऽभवद्देवस्तयोः शशिकलाधरः ॥ १० ॥

द्वे युगे गते एवेति योजना। चिरं तपस्तु विशिष्टपुत्रलाभार्थम् ॥ १० ॥

दिनातपातापितयोरिन्दुः कुमुदयोरिव।
आजगाम तमुद्देशं यत्र तौ विप्रदंपती ॥ ११ ॥

उद्देशं प्रदेशम् ॥ ११ ॥

सलतापादपं देशं पुष्पाकर इवेश्वरः।
दंपती तौ वृषारूढं सोमं सोमार्धशेखरम् ॥ १२ ॥

पुष्पाकरो वसन्त इव। उमया सहितं सोमम् ॥ १२ ॥

फुल्लाननौ ददृशतुः कुमुदे शशिनं यथा।
तौ तं प्रणेमतुर्देवं तुषारामलमीश्वरम् ॥ १३ ॥

कुमुदे कैरवे। विकास एव दृष्टान्ते दर्शनम् ॥ १३ ॥

द्यावापृथिव्यावुदितं परिपूर्णमिवोडुपम्।
तर्जयन्पवनाधूतनववृक्षाननस्वरम् ॥ १४ ॥

द्यावापृथिव्यावित्यनेन तत्स्था जना लक्ष्यन्ते। उडुपं चन्द्रम्। पवनेन
मलयानिलेन आधूतानां ईषत्कम्पितपल्लवानां रसालादिवृक्षाणां
आननमिव कुजतां भ्रमरकोकिलादीनां स्वरं स्ववचोमाधुर्यातिशयेन
तर्जयन्निर्भर्त्सयन्निव ॥ १४ ॥

मृदूद्दामस्थितस्पन्दि प्रोवाचाथ वचः शिवः।

ईश्वर उवाच।

वरं विप्र गृहाणाशु तुष्टोऽस्मि तव वाञ्छितम् ॥ १५ ॥

मृदुना उद्दामेन सौन्दर्योत्कृष्टेन स्मितेन स्पन्दि ईषच्चलिताधरं यथा
स्यात्तथा। तव वाञ्छितमिष्टं वरं गृहाण ॥ १५ ॥

39833 मधुमाससरसाक्रान्तवृक्षवन्मुदितो भव |
39834
39835 विप्र उवाच |
39836
39837 भगवन्देवदेवेश दश पुत्रा महाधियः || १६ ||
39838
39839 भव्या भवन्तु मे भूयः शोको येन न भाधते |
39840
39841 भानुरुवाच |
39842
39843 अथैवमस्त्विति प्रोच्य जगामान्तर्धिमीश्वरः || १७ ||
39844
39845 भव्याः कल्याणगुणाचारशालिनः | येन पुत्रलाभेन || १७ ||
39846
39847 व्योम्नि वारिनिधिर्ह्रादं कृत्वेवोर्मिमहावपुः |
39848 ततस्तौ दम्पती तुष्टौ शिवलब्धवरौ गृहम् || १८ ||
39849
39850 व्योम्नीति पूर्वान्वयि | अथवा वारि निधीयते अस्मिन्निति वारिनिधिर्मेघः |
39851 ऊर्मिभिरिव विभक्तैरवयवैर्महद्वपुर्यस्य || १८ ||
39852
39853 गतौ गीर्वाणसदृशौ स्वमिवोमामहेश्वरौ |
39854 तत्रासौ ब्राह्मणी गेहे बभूवोदारगर्भिणी || १९ ||
39855
39856 गीर्वाणा देवास्तत्सदृशौ तौ दंपती | अथवा
39857 मायिकदिव्यशरीरकल्पनाद्गीर्वाणसदृशावुमामहेश्वरौ खं वास्तवं
39858 ब्रह्माकाशमिव || १९ ||
39859
39860 बभौ पूर्णोदरा श्यामा मेघलेखेव वारिणा |
39861 कालेऽथ सुषुवे पुत्रान्प्रतिपच्चन्द्रकोमलान् || २० ||
39862
39863 दशबालांस्ततो मुग्धान्वसुधेव नवाङ्कुरान् |
39864 कृतब्राह्मणसंस्कारा वृद्धिमीयुर्महौजसः || २१ ||
39865
39866 मुग्धान् सुन्दरान् | कृता
39867 जातकर्मनामकरणान्नप्राशनचौलोपनयनवेदव्रताध्ययनादयो
39868 ब्राह्मणसंस्कारा येषाम् || २१ ||
39869
39870 स्वल्पेनैव हि कालेन प्रावृषेव नवाम्बुदाः |
39871 ते सप्तवर्षवयसो बभूवुर्ज्ञातवाङ्मयाः || २२ ||
39872
39873 प्रावृषा वर्षर्तुना || २२ ||
39874
39875 विरेजुस्तेजसा तत्र नभसीवामला ग्रहाः |
39876 अथ कालेन महता तेषां तौ पितरौ तदा || २३ ||
39877
39878 संजग्मतुस्तनुं त्यक्त्वा स्वां गतिं गतिकोविदौ |
39879 मातापितृभ्यां रहिता दश ते ब्राह्मणास्ततः || २४ ||
39880
39881 स्वां गतिं विदेहकैवल्यम् | यतो मुख्यतमगतिभूतब्रह्मकोविदौ || २४ ||
39882
39883 ययुः कैलासशिखरं गृहं संत्यज्य खेदिनः |
39884 तत्र संचिन्तयामासुरुद्विग्नास्ते विबन्धवाः(?) || २५ ||

39885
39886 खेदिनो दुःखिताः। तेषां
39887 भाग्यवशाद्भाविहैरण्यगर्भैश्वर्यप्राप्त्यनुसारि विचार उत्पन्न इत्याह ##-
39888
39889 किं स्यादिह परं श्रेय ऊचुश्चेदं परस्परम्।
39890 किमिह स्यात्समुचितं भ्रातरः किमदुःखदम्॥ २६॥
39891
39892 परं विभवोत्कृष्टं श्रेयः सुखम्। इति संचिन्त्य इदं वक्ष्यमाणं चोचुः
39893 । ऐहिकामुष्मिकसुखोपायतया स्वीकर्तुं समुचितम्। हे भ्रातरः
39894 ऐहिकसुखाहेतुत्वेऽपि परिणामे अदुःखदं किम्॥ २६॥
39895
39896 प्। ३३९) २०४
39897
39898 किं महत्त्वं किमैश्वर्यं किं महाविभवं शुभम्।
39899 किं तदेतज्जनैश्वर्यं सामन्तो हि महेश्वर॥ २७॥
39900
39901 एवं सामान्यतो विमृश्य विशेषतोऽपि विमृशन्ति - किमिति।
39902 तदेतज्जनानामैश्वर्यं किमुत्कृष्टं गृहग्रामाधिपतिभ्यः। हि
39903 यस्मात्सामन्तो मण्डलाधिपतिर्महानीश्वरः ऐश्वर्यवान्॥ २७॥
39904
39905 सामन्तसंपत्किंनाम राजानो हि महेश्वराः।
39906 का नाम संपद्भूपानां सम्राडिह महेश्वरः॥ २८॥
39907
39908 किं नाम कियन्नाम। राजानो देशाधिपतयः॥ २८॥
39909
39910 किं नाम तन्महेन्द्रत्वं यन्मुहूर्तं प्रजापतेः।
39911 विनश्यति न यत्कल्पे किं स्यात्तदिह शोभनम्॥ २९॥
39912
39913 महेन्द्रस्तर्हि महेश्वरः स्यात्तत्राह - किं नामेति॥ २९॥
39914
39915 भाषमाणेष्वथैतेषु ज्येष्ठो भ्राता महामतिः।
39916 गम्भीरवागुवाचेदं मृगयूथान्मृगो यथा॥ ३०॥
39917
39918 एवं भाषमाणेषु भ्रातृषु जन्मान्तरे
39919 कृतहिरण्यगर्भोपास्तिरन्तरायैरन्तरा विपन्नत्वात्प्राप्तोत्तमजन्मा
39920 भ्रातृसंवादादेवोद्बुद्धप्राक्तनोपास्तिसंस्कारो महामतिर्नाम ज्येष्ठो
39921 भ्राता प्राक्स्वानुष्ठितोपास्तिक्रमं तदधिकृतेभ्यो भ्रातृभ्य
39922 उपदेष्टुकाम उवाचेत्याह - भाषमाणेष्विति। मृगो यूथपः॥ ३०॥
39923
39924 ऐश्वर्याणां हि सर्वेषामाकल्पं न विनाशि यत्।
39925 रोचते भ्रातरस्तन्मे ब्रह्मत्वमिह नेतरत्॥ ३१॥
39926
39927 आकल्पं आप्राकृतप्रलयम्। हे भ्रातरः ब्रह्मत्वं हिरण्यगर्भता॥ ३१॥
39928
39929 एतदुक्तं तदखिला द्विजपुत्रास्त उत्तमाः।
39930 वचोभिरैन्दवास्तत्र साधु साध्वित्यपूजयन्॥ ३२॥
39931
39932 भाग्यवशादितरेषामपि तत्राभिरुचिरुत्पन्नेत्याह - एतदिति। तदुत्तमाः इति
39933 पाठे स महामतिरेवोत्तमो ज्येष्ठः श्रेष्ठश्च येषाम्॥ ३२॥
39934
39935 ऊचुश्चेदं कथं तात सर्वदुःखोपमार्जनम्।
39936 पद्मासनं जगत्पूज्यं विरञ्चित्वमवाप्नुमः॥ ३३॥

39937
39938 अत एव तदुपायमपृच्छन्नित्याह - ऊचुरिति। सर्वाणि
39939 जरामरणसातिशयत्वादिप्रयुक्तदुःखान्युपमृज्यन्ते यस्मिन्नित्यधिकरणे
39940 ल्युट्। अवाप्नुमः शीघ्रं प्राप्स्यामः। वर्तमानसामीप्यविवक्षया लट्॥ ३३॥
39941
39942 भ्रात्रा तेन पुनः प्रोक्ता भ्रातरो भूरितेजसः।
39943 मदुक्तं सर्व एवेमे भवन्तः पालयन्तु वै॥ ३४॥
39944
39945 तेभ्य उपागतेभ्यो हिरण्यगर्भाहंग्रहोपास्तिं
39946 सपरिकरामुपदेक्ष्यंस्तदङ्गमामृतेर्धारणादार्ढ्यं विधत्ते -
39947 मदुक्तमिति। वै इति तत्र दृढनिश्चयापेक्षाद्योतनार्थम्॥ ३४॥
39948
39949 पद्मासनगतो भास्वान्ब्रह्माहमिति तेजसा।
39950 सृजामि संहरामीति ध्यानमस्तु चिराय वः॥ ३५॥
39951
39952 सृजामि संहरामीति लिङ्गात्संवर्गविद्येयमुपदिष्टेति गम्यते।
39953 इतिशब्दाद्वक्ष्यमाणप्रकारक्रमः सर्वोऽप्युपदिष्टो बोध्यः। चिरायेति
39954 भ्रमरकीटन्यायेन आतद्भावोदयमित्यर्थः॥ ३५॥
39955
39956 अग्रजेनेति कथिते बाढं कृत्वा त उत्तमाः।
39957 ध्यानाधीनधियस्तस्थुः सहैव ज्यायसा रसात्॥ ३६॥
39958
39959 बाढं कृत्वा दृढमङ्गीकृत्य। ज्यायसा ज्येष्ठभ्रात्रा सहैव।
39960 रसात्फलरागातिशयात्॥ ३६॥
39961
39962 लिपिकर्मार्पिताकारा ध्यानासक्तधियश्च ते।
39963 अन्तस्थेनैव मनसा चिन्तयामासुरादृताः॥ ३७॥
39964
39965 लिपिकर्म चित्रलेखस्तदर्पिताकाराः॥ ३७॥
39966
39967 अथ उत्फुल्लकमलकोशवक्रोन्नतासनः।
39968 ब्रह्माहं जगतां स्रष्टा कर्ता भोक्ता महेश्वरः॥ ३८॥
39969
39970 तत्कथं चिन्तनप्रकारं वक्तुमुपक्रमते - अथेत्यादिना॥ ३८॥
39971
39972 यज्ञक्रियाक्रमवतः साङ्गोपाङ्गा महर्षयः।
39973 सरस्वत्याथ गायत्र्या युक्ता वेदा नरा इमे॥ ३९॥
39974
39975 यज्ञक्रियाक्रमवतो यज्ञमूर्तेर्मम याजका महर्षयः साङ्गोपाङ्गा
39976 अङ्गैः शिक्षादिभिरुपाङ्गैः पुराणादिभिश्च सहिताः सरस्वत्या गायत्र्या च
39977 युक्ता वेदा नरा मूर्तिमन्त इमे मदन्तस्था इत्यर्थः॥ ३९॥
39978
39979 लोकपालपराक्रान्तः संचरत्सिद्धमण्डलः।
39980 अयमुद्दामसौभाग्यः स्वर्गः स्वरविभूषितः॥ ४०॥
39981
39982 पर्वतद्वीपजलधिकाननैः समलंकृतम्।
39983 इदं भूमण्डलं चैव त्रिलोकीकर्णकुण्डलम्॥ ४१॥
39984
39985 त्रिलोकीलक्षणायाः स्त्रियः कर्णकुण्डलम्॥ ४१॥
39986
39987 एतत्पातालकुहरं दैत्यदानवभोजितम्।
39988 अमृतस्त्रीगणाकीर्णं गृहं गगनकोटरम्॥ ४२॥

39989
39990 दैत्यैर्दानवैश्च भोजितं पूरितोदरम् | अमृतानाममर्त्यानां
39991 स्त्रीगणैरप्सरोभिराकीर्णं व्याप्तं गृहमिव गृहमित्यर्थः || ४२ ||
39992
39993 अयमिन्द्रो महाबाहुः प्रजालंकृतदोत्तमः |
39994 त्रैलोक्यनगरीमेकः पाति पावनयज्ञभुक् || ४३ ||
39995
39996 अयं मदन्तस्थः प्रजानां अलंकृतमलंकारं शोभमानतां ददतीति
39997 प्रजालंकृतदा राजानः | राजभिर्हि प्रजाः शोभन्ते तेषूत्तम || ४३ ||
39998
39999 दीप्रजालवरत्राभिरवष्टभ्याथ दिग्गणम् |
40000 क्रमेण प्रतपन्त्येते भानवो भूरिभानवः || ४४ ||
40001
40002 दीप्राभिः कान्तिजाललक्षणवरत्राभिः पाशैर्दिग्गणमवष्टभ्य यथा न
40003 पलायन्ते तथा बद्ध्वा रसादानाय प्रतपन्ति | भानवो द्वादशादित्याः
40004 भूरिभानवः प्रचुरकिरणाः | क्रमेण चैत्रादिमासक्रमेण || ४४ ||
40005
40006 लोकपाला इमे लोकं रक्षन्ति [रक्षन्त्यक्षुब्धवृत्तयः इति
40007 पाठः] शुद्धवृत्तयः |
40008 मर्यादाभिरतुच्छाभिर्गोपाला गोगणं यथा || ४५ ||
40009
40010 अतुच्छाभिर्न्याय्यत्वान्महतीभिः [अतुच्छामिस्तुच्छान्यत्वान्महतीभिरित्यपि
40011 पाठः] || ४५ ||
40012
40013 उन्मज्जन्ति निमज्जन्ति प्रस्फुरन्ति पतन्ति च |
40014 तरङ्गा इव तोयानामिमाः प्रतिदिनं प्रजाः || ४६ ||
40015
40016 उन्मज्जन्त्याविर्भवन्ति निमज्जन्ति तिरोभवन्ति प्रस्फुरन्ति विविधविभवादिना
40017 विराजन्ते | दारिद्र्यदोषादिना पतन्ति च || ४६ ||
40018
40019 प। ३४०) २०५
40020
40021 सृजामीममहं सर्गं संहरामि तथाद्दतः |
40022 अयमात्मनि तिष्ठामि शाम्यामि भुवनेश्वरः || ४७ ||
40023
40024 आत्मनि पारमार्थिके स्वरूपे तिष्ठामि | अत एव शाम्याम्युपरमे || ४७ ||
40025
40026 अयं संवत्सरो यात इदं परिणतं युगम् |
40027 सृष्टेरयमसौ कालः स्वयं संहरणस्य च || ४८ ||
40028
40029 उक्तमेव स्पष्टं वदन्नुपसंहरति - अयमित्यादिद्वाभ्याम् || ४८ ||
40030
40031 अयमेव गतः कल्पो ब्राह्मी रात्रिरियं तता |
40032 अयमात्मनि तिष्ठामि पूर्णात्मा परमेश्वरः || ४९ ||
40033
40034 इति भावितया उद्ध्या ते द्विजा अथ ऐन्दवाः |
40035 दशाद्रिवृत्तयस्तस्थुः समुत्कीर्णा इवोपलात् || ५० ||
40036
40037 अथ ऐन्दवा इत्यसंधिः संहिताऽनित्यत्वात् | अद्रिवृत्तयो दृढबद्धासनाः ||
40038 ५० ||
40039
40040 अधिगतकमलासनक्रमास्ते

40041 परिगलितेतरतुच्छवृत्तिजालाः ।
40042 सततमतितरां कुशासनस्था-
40043 श्चिरमिति पङ्कजकल्पने विरेजुः ॥ ५१ ॥
40044
40045 कुशासनस्थास्ते पङ्कजासनकल्पने सति परिगलितेतरतुच्छवृत्तिजालाः सन्तः
40046 अधिगतकमलासनक्रमाश्च सन्तो विरेजुः ॥ ५१ ॥
40047
40048 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० ए०
40049 ऐन्दवसमाधानं नाम षडशीतितमः सर्गः ॥ ८६ ॥
40050
40051 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
40052 ऐन्दवसमाधानं नाम षडशीतितमः सर्गः ॥ ८६ ॥
40053
40054
40055 सप्ताशीतितमः सर्गः ८७
40056
40057 भानुरुवाच ।
40058
40059 पितामहक्रमे तस्मिंस्ततस्ते बहुभावनात् ।
40060 कर्मभिस्तैः समाक्रान्तमनस्कास्तस्थुरादृताः ॥ १ ॥
40061
40062 मनसा ब्रह्मभूतानां क्रव्यादैर्देहभक्षणे ।
40063 प्रतिसर्गेऽथ सर्गे च तथावस्थितिरीर्यते ॥ १ ॥
40064
40065 हे पितामह ते ऐन्दवास्तस्मिन्नुपास्तिक्रमे
40066 तैस्तैर्भुवनभूतग्रामादिसृष्टिपरिपालनसंहारादिकर्मभिस्त्वमिव
40067 समाक्रान्तमनस्कास्तत्रैवादृता अत्यासक्ताः सन्तस्तावत्तस्थुर्यावत्तेषां
40068 कृशा देहा देहकाः शोषमभ्येत्य गलिता इति परेणान्वयः ॥ १ ॥
40069
40070 यावत्ते देहकास्तेषां तापेन पवनैस्तथा ।
40071 कालेन शोषमभ्येत्य गलिताः शीर्णपर्णवत् ॥ २ ॥
40072
40073 जक्षुस्तान्देहकांस्तत्र क्रव्यादा वनवासिनः ।
40074 इतश्चेतश्च लुठितान्सुफलानीव मर्कटाः ॥ ३ ॥
40075
40076 जक्षुर्बभक्षुः । क्रव्यादा मांसाशिनो मृगपक्षिणः ॥ ३ ॥
40077
40078 अथ ते शान्तबाह्यार्था ब्रह्मत्वे कृतभावनाः ।
40079 तस्थुश्चतुर्युगस्यान्ते यावत्कल्पः क्षयं गतः ॥ ४ ॥
40080
40081 शरीरनाशे च तेषामात्यन्तिकी बाह्यार्थप्रत्ययनिवृत्तिः संपन्नेत्याह -
40082 अथेति । चतुर्युगस्य शिष्टस्यान्ते ॥ ४ ॥
40083
40084 क्षीयमाणे ततः कल्पे तपत्यादित्यसंचये ।
40085 पुष्करावर्तकेषूच्चैर्वर्षत्सु कठिनारवम् ॥ ५ ॥
40086
40087 वहत्सु कल्पवातेषु स्थित एकमहार्णवे ।
40088 क्षीणेषु भूतवृन्देषु ते तथैव व्यवस्थिताः ॥ ६ ॥
40089
40090 ते ऐन्दवास्तथैव स्वमनःकल्पितब्रह्माण्डे सर्गादिव्यापृततयैव
40091 व्यवस्थिताः ॥ ६ ॥
40092

40093 ततो रात्रिक्रमपरे सर्वां संहृत्य तां स्थितिम् ।
40094 स्थिते त्वय्यात्मनि विभो ते तथैव व्यवस्थिताः ॥ ७ ॥
40095
40096 रात्रेः क्रमणं क्रमोऽतिक्रमस्तत्परे तत्प्रतीक्षे त्वयि योगनिद्रया आत्मनि स्थिते
40097 सति ॥ ७ ॥
40098
40099 अद्य प्रबुद्धे भवति स्रष्टुमिच्छति संसृतिम् ।
40100 सुखेनैव क्रमेणोच्चैस्ते तथैव व्यवस्थिताः ॥ ८ ॥
40101
40102 तथैते भगवन्ब्रह्मन्ब्रह्मणो ब्राह्मणा दश ।
40103 त एते दश संसारा मनोव्योमनि संस्थिताः ॥ ९ ॥
40104
40105 तेषामेकतमस्याहमयमाकाशमन्दिरे ।
40106 भानुर्भुवि विभो कालकलाकर्मणि योजितः ॥ १० ॥
40107
40108 एतावता ग्रन्थेन कथमिदं जातमिति प्रश्नस्योत्तरमुक्त्वा
40109 कस्त्वमित्यस्योत्तरमाह - तेषामित्यादिना । तेषामैन्दवसर्गाणां मध्ये
40110 एकतमस्य ब्रह्माण्डस्य च्छिद्रभूताकाशलक्षणे मन्दिरे । भुवीति
40111 त्रैलोक्योपलक्षणम् । भूलोक एव कर्माङ्गतया कालविभागज्ञानस्य
40112 विशेषोपयोगात् ॥ १० ॥
40113
40114 एष ते कथितः सर्गो दिशानामब्जसंभव ।
40115 ब्रह्मणां संभवो व्योम्नि यथेच्छसि तथा कुरु ॥ ११ ॥
40116
40117 एषु सर्गेषु सत्स्वपि न तव सर्गे कोऽपि विरोध इत्याशयेनाह - यथेच्छसीति ॥
40118 ११ ॥
40119
40120 विविधकल्पनया वलिताम्बरं
40121 यदिदमुत्तम जागतमुत्थितम् ।
40122 करणजालकमाहितमोहनं
40123 तदखिलं निजचेतसि विभ्रमः ॥ १२ ॥
40124
40125 कुतो न विरोध इति चेन्मनःकल्पनामात्रत्वेनासत्यत्वादित्याशयेनाह -
40126 विविधेति । हे उत्तम करणानां बाह्याभ्यन्तराणां जालकमिव बन्धनभूतम्
40127 । आहितेन आसङ्गेन मोहनं यदिदं जागतं दृश्यजातमुत्थितं तदखिलं
40128 तेषां निजचेतसि स्वचित्ते विभ्रमो भ्रान्तिमात्रं न वस्तुसदित्यर्थः ॥ १२ ॥
40129
40130 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० उ० ऐन्दवो०
40131 दशजगद्वर्णनं नाम सप्ताशीतितमः सर्गः ॥ ८७ ॥
40132
40133 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
40134 दशजगद्वर्णनं नाम सप्ताशीतितमः सर्गः ॥ ८७ ॥
40135
40136
40137 प्। ३४१) २०५
40138
40139 अष्टाशीतितमः सर्गः ८८
40140
40141 श्रीब्रह्मोवाच ।
40142
40143 ब्रह्माणो ब्राह्मणा भानुरित्युक्त्वा ब्रह्मणो मम ।
40144 ब्रह्मन्ब्रह्मविदां श्रेष्ठ तूष्णीमेव बभूव सः ॥ १ ॥

इह धातुरनासक्त्या सर्गसिद्धिरुदीर्यते।
मनसा दृढसिद्धस्य तथान्यैरनिवर्तनम्॥ १॥

उक्तां कथामुपसंहरति - ब्रह्माण इति। ब्रह्मन्ब्रह्मविदां श्रेष्ठेति
भानुकृतं ब्रह्मसंबोधनं ब्रह्मकृतं वसिष्ठसंबोधनं च। ते
दश ब्रह्माणः प्रागुक्ता ब्राह्मणा एव नान्ये इति स भानुर्ब्रह्मणो मम पुर
उक्त्वा तूष्णीमेव बभूवेत्यर्थः॥ १॥

तत उक्तं मया तस्य चिरं संचिन्त्य चेतसा।
भानो भानो वदाशु त्वं किमन्यत्संसृजाम्यहम्॥ २॥

भानो भानो इत्यादराद्विरुक्तिः॥ २॥

एतानि दश विद्यन्ते किल यत्र जगन्ति वै।
तत्रान्यो मम सर्गेण कोऽर्थः कथय भास्कर॥ ३॥

कोऽर्थः किं प्रयोजनम्॥ ३॥

इत्युक्तोऽथ मया भानुः संचिन्त्य सुचिरं धिया।
इदमत्र वचो युक्तमुवाच स महामुने॥ ४॥

युक्तं मत्प्रश्नोचितम्॥ ४॥

भानुरुवाच।

निरीहस्य निरिच्छस्य कोऽर्थः सर्गेण ते प्रभो।
विनोदमात्रमेवेदं सृष्टिस्तव जगत्पते॥ ५॥

निष्कामादेव भवतः सर्गः संपद्यते प्रभो।
अर्कादिव जलादित्यप्रतिबिम्बमिवाधियः॥ ६॥

अर्काज्जलादित्यात्मकं प्रतिबिम्बमिव। अधियो निर्मनस्कात्॥ ६॥

शरीरसंनिवेशस्य त्यागे रागे च ते यदा।
निष्कामो भगवन्भावो नाभिवाञ्छति नोज्झति॥ ७॥

सर्गे निष्कामतां कैमुतिकन्यायेन द्रढयति - शरीरेति।
शरीरात्मकस्यावयवसन्निवेशस्य त्यागे रागे अहमभिमानेन स्वीकृत्य
रञ्जने च ते भावो निष्कामः॥ ७॥

सृजसीदं तथा देव विनोदायैव भूतप।
पुनः संहृत्य संहृत्य दिनं दिनपतिर्यथा॥ ८॥

दिनं दिनपतिर्यथा सृजति तथा सृजसि॥ ८॥

तव नित्यमसंसक्तं विनोदायैव केवलम्।
इदं कर्तव्यमेवेति जगन्न तूद्यमेच्छया॥ ९॥

कर्तव्यं सर्गार्हम्। उद्यमः स्वार्थाभिलाषेणोद्योगस्तदिच्छया तु न॥ ९॥

सृष्टिं चेन्न करोषि त्वं महेश [महेच्छ इति पाठः तत्र हे

40197 महेच्छ महाशयेत्यर्थः] परमात्मनः |
40198 नित्यकर्मपरित्यागात्किमपूर्वमवाप्स्यसि || १० ||
40199
40200 आत्मनः स्वस्य नित्यकर्मपरित्यागात्परमन्यदपूर्वमदृष्टं किमवाप्स्यसि |
40201 न किंचिदित्यर्थः || १० ||
40202
40203 यथाप्राप्तं हि कर्तव्यमसक्तेन सदा सता |
40204 मुकुरेणाकलङ्केन प्रतिबिम्बक्रिया यथा || ११ ||
40205
40206 तर्हि किमुपरमो युक्तो नेत्याह - यथाप्राप्तमिति || ११ ||
40207
40208 यथैव कर्मकरणे कामना नास्ति धीमताम् |
40209 तथैव कर्मसंत्यागे कामना नास्ति धीमताम् || १२ ||
40210
40211 अप्राप्तकरण इव प्राप्तत्यागेऽपि हेत्वभावादित्यर्थः || १२ ||
40212
40213 अतः सुषुप्तोपमया धिया निष्कामया तया |
40214 सुषुप्तबुद्धसमया कुरु कार्यं यथागतम् || १३ ||
40215
40216 परमार्थतोऽकरणात्सुषुप्तोपमया | प्रतीतितः करणात्तु सुषुप्तेर्बुद्धः
40217 स्वप्नस्तत्समया || १३ ||
40218
40219 सर्गैरथेन्दुपुत्राणां तोषमेषि जगत्प्रभो |
40220 तदेते तोषयिष्यन्ति तं त्वां सर्गात्सुरेश्वर || १४ ||
40221
40222 किंचैतैरैन्दवसर्गैस्त्वं स्वपुत्रपौत्रादीनां संपद्वृद्धिदर्शनादिव
40223 यदि तोषमेषि तत्तर्हि एते ऐन्दवा अग्रेऽपि सर्गात्तं तोषशीलं त्वां
40224 तोषयिष्यन्तीत्यर्थः || १४ ||
40225
40226 चित्तनेत्रैर्भवानेतान्सर्गानन्यस्य नो दृशा |
40227 अवश्यं चक्षुषा सर्गं सृष्टमित्येव वेत्ति कः || १५ ||
40228
40229 अस्तु तोषः तथापि मत्सर्गस्तेन कुतो न गतार्थस्तत्राह - चित्तनेत्रेणेति |
40230 भवानन्यस्य सर्ग चित्तरूपेण नेत्रेण पश्यति दृशा चक्षुषा तु नो पश्यति |
40231 कस्तत्स्रष्टा तु स्वकृतं सर्गं मयेदं सृष्टमिति चक्षुषैवावश्यं वेत्ति
40232 अतस्ते स्वचक्षुर्दर्शनार्हः सर्गो नान्येन गतार्थ इत्यर्थः || १५ ||
40233
40234 येनैव मनसा सर्गो निर्मितः परमेश्वर |
40235 स एव मांसनेत्रेण तं पश्यति हि नेतरः || १६ ||
40236
40237 तर्ह्यैन्दवकृतसर्ग एव मया चक्षुषा द्रष्टव्यस्तत्राह - येनैवेति || १६ ||
40238
40239 न चैतान्दश संसारान्दश नीरजसंभवान् |
40240 कश्चिन्नाशयितुं शक्तश्चित्तदार्ढ्याच्चिरस्थितान् || १७ ||
40241
40242 यद्येवं तर्हि वृथा मन्मनसा दृश्योऽयमैन्दवसर्गो मत्प्रतिकूल एवेति
40243 मया नाशनीयस्तत्राह - न चैतानिति | दशैतान्संसारांस्तद्धेतून्दश
40244 नीरजसंभवान्पद्मजान्वा कश्चिन्नाशयितुं शक्तः || १७ ||
40245
40246 कर्मेन्द्रियैर्यत्क्रियते तद्रोद्धुं किल युज्यते |
40247 न मनोनिश्चयकृतं कश्चिद्रोधयितुं क्षमः || १८ ||
40248

40249 रोद्धुं रोधयितुमित्यनयोर्नाशयितुमित्यर्थः ॥ १८ ॥
40250
40251 यो बद्धपदतां यातो जन्तोर्मनसि निश्चयः ।
40252 स तेनैव विना ब्रह्मन्नान्येन विनिवार्यते ॥ १९ ॥
40253
40254 बद्धपदतां रूढमूलताम् ॥ १९ ॥
40255
40256 बहुकालं यदभ्यस्तं मनसा दृढनिश्चयम् ।
40257 शापेनापि न तस्यास्ति क्षयो नष्टेऽपि देहके ॥ २० ॥
40258
40259 शापेन तर्हि स मया निरसनीयस्तत्राह - बहुकालमिति ॥ २० ॥
40260
40261 प्। ३४२) २०६
40262
40263 यद्वद्धपीठमभितो मनसि प्ररूढं
40264 तद्रूपमेव पुरुषो भवतीह नान्यत् ।
40265 तद्बोधनादितरमत्र किलाभ्युपायं
40266 शैलौघसेकमिव निष्फलमेव मन्ये ॥ २१ ॥
40267
40268 बद्धपीठं स्थिरीभूतम् । अत एव हि मूढानां संसारनिवारणे
40269 तद्बोधनमेवोपायो न वरशापादिरन्य इत्याह - तद्बोधनादिति ।
40270 शैलौघानां शिलाशकलसमूहानामङ्कुरोदयेच्छया सेकमिव
40271 निष्फलमेवाहं मन्ये ॥ २१ ॥
40272
40273 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० उत्पत्तिप्रकरणे ऐ०
40274 ऐन्दवनिश्चयकथनं नामाष्टाशीतितमः सर्गः ॥ ८८ ॥
40275
40276 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
40277 ऐन्दवनिश्चयकथनं नामाष्टाशीतितमः सर्गः ॥ ८८ ॥
40278
40279
40280 एकोननवतितमः सर्गः ८९
40281
40282 भानुरुवाच ।
40283
40284 मनो हि जगतां कर्तृ मनो हि पुरुषः परः ।
40285 मनःकृतं कृतं लोके न शरीरकृतं कृतम् ॥ १ ॥
40286
40287 मनसो बद्धपीठस्य परयवैरचाल्यता ।
40288 इन्द्राहल्यामनोवृत्तकथयात्र प्रकाश्यते ॥ १ ॥
40289
40290 समष्टिभावापन्नं मन एव परः पुरुषो हिरण्यगर्भः ॥ १ ॥
40291
40292 सामान्यब्राह्मणा भूत्वा मनोभावनया किल ।
40293 ऐन्दवा ब्रह्मतां याता मनसः पश्य शक्तताम् ॥ २ ॥
40294
40295 मनसा भाव्यमानो हि देहतां याति देहकः ।
40296 देहभावनयाऽयुक्तो देहधर्मैर्न बाध्यते ॥ ३ ॥
40297
40298 देहभावनया अयुक्त इति च्छेदः । मुक्त इति पाठः स्पष्टः ।
40299 देहधर्मैर्जन्ममरणादिभिः ॥ ३ ॥
40300

40301 बाह्यदृष्टिर्हि नियतं सुखदुःखादि विन्दति |
40302 नान्तर्मुखतया योगी देहे वेत्ति प्रियाप्रिये || ४ ||
40303
40304 बाह्ये दृष्टिर्देहादावात्मात्मीयदृष्टिर्यस्य सः || ४ ||
40305
40306 मनःकारणकं तस्माज्जगद्विविधविभ्रमम् |
40307 इन्द्रस्याहल्यया सार्धं वृत्तान्तोऽत्र निदर्शनम् || ५ ||
40308
40309 वक्ष्यमाणकथां वक्तुमुक्तमुपसंहरति - मनःकारणकमिति || ५ ||
40310
40311 श्रीब्रह्मोवाच |
40312
40313 काहल्या भगवन्भानो को वात्रेन्द्रस्तमोनुद |
40314 ययोरुदन्तश्रवणे पावनी दृष्टिरेति हि || ६ ||
40315
40316 उदन्तो वृत्तान्तस्तस्य श्रवणे सति || ६ ||
40317
40318 भानुरुवाच |
40319
40320 श्रूयते हि पुरा देव मागधेषु महीपतिः |
40321 इन्द्रद्युम्न इति ख्यात इन्द्रद्युम्न इवापरः || ७ ||
40322
40323 अपरः पुराणान्तरप्रसिद्ध इन्द्रद्युम्न इव || ७ ||
40324
40325 तस्येन्दुबिम्बप्रतिमा भार्या कमललोचना |
40326 अहल्या नाम तत्रासीच्छशाङ्कस्येव रोहिणी || ८ ||
40327
40328 तस्मिन्नेव पुरे षिड्गः षिड्गप्रकरशेखरः |
40329 इन्द्रनामा परः कश्चिद्धिश्रीमान्विप्रकुमारकः || ९ ||
40330
40331 षिड्गो विटः | षिड्ग इति पाठेऽपि स एवार्थः | धीमान्विटविद्याकुशलः || ९ ||
40332
40333 अहल्या पूर्वमिन्द्रस्य बभूवेष्टेत्यहल्यया |
40334 श्रुतं राजमहिष्याथ कथाप्रस्तावतः क्वचित् || १० ||
40335
40336 अहल्या गौतमपत्नी || १० ||
40337
40338 आकर्ण्यैवमहल्या सा बभूवेन्द्रानुरागिणी |
40339 अहल्यां मां स नो कस्मात्सक्तोऽभ्येतीत्यथोत्सुका || ११ ||
40340
40341 स इन्द्रः सक्त आसक्तः सन् कुतो नो एति नागच्छतीत्युत्सुका उत्कण्ठिता || ११ ||
40342
40343 मृणालभारकदलीपल्लवास्तरणेषु सा |
40344 अतप्यत भृशं बाला लता लूना वनेष्विव || १२ ||
40345
40346 खेदमाप समग्रासु तासु भूपविभूतिषु |
40347 मत्सी निदाघतप्तासु परिलोला स्थलीष्विव || १३ ||
40348
40349 निदाघेन ग्रीष्मेण तप्तासु स्थलीषु परिलोला मत्सीव | सूर्यतिष्यागस्त्यमत्स्यानां
40350 य उपधायाः इति यलोपः || १३ ||
40351
40352 अयमिन्द्रोऽयमिन्द्रश्चेत्येवं जातप्रलापया |

लज्जापि हि तया त्यक्ता वैवश्यमनुयातया ॥ १४ ॥

तथा लज्जापि त्यक्ता । अनुयातया अनुसृतया ॥ १४ ॥

इत्यार्तया घनस्नेहमथ तस्या वयस्यया ।
उक्तं तया प्रियेऽविघ्नमिन्द्रमभ्यानयाम्यहम् ॥ १५ ॥

अथानन्तरं तस्या वयस्यया एवंविधां दृष्ट्वा आर्तया तया इति उक्तम् । हे
प्रिये सखि अहमिन्द्रमभिमुखमविघ्नं यथा स्यात्तथा आनयामि ॥ १५ ॥

इष्टं तवानयामीति श्रुत्वा विकसितेक्षणा ।
पपात पादयोः सख्या नलिन्या नलिनी यथा ॥ १६ ॥

नलिनी पद्मिनी ग्लाना अन्यस्य नलिन्या मूले यथा पतति तद्वत् ॥ १६ ॥

ततः प्रयाते दिवसे समायाते निशागमे ।
सा वयस्या तमिन्द्राख्यं ययौ द्विजकुमारकम् ॥ १७ ॥

बोधयित्वा यथायुक्तं सा तमिन्द्रमथाङ्गना ।
अहल्यानिकटं रात्र्यामानयामास सत्वरम् ॥ १८ ॥

ततः सा तेन षिड्गेन सहेन्द्रेण रतिं ययौ ।
कस्मिंश्चित्सदने गुप्ते बहुमाल्यविलेपना ॥ १९ ॥

हाराङ्गदमनोज्ञेन तरुणी तेन सा तदा ।
रतेनावर्जिता वल्ली रसेन [रतेन इति पाठः] मधुना यथा ॥ २० ॥

रतेन सुरतोचितक्रीडनेन आवर्जिता वशीकृता । मधुना वसन्तेन ॥ २० ॥

ततस्तदनुरक्ता सा पश्यन्ती तन्मयं जगत् ।
न समस्तगुणाकीर्णं भर्तारं बह्वमन्यत ॥ २१ ॥

केनचित्त्वथ कालेन तस्या इन्द्रानुरागिता ।
सा ज्ञाता राजसिंहेन तन्मुखव्योमचन्द्रिका ॥ २२ ॥

तन्मुखव्योम्नश्चन्द्रिकेवप्रकाशहेतुः ॥ २२ ॥

प्। ३४३) २०६

इन्द्रं ध्यायति सा यावत्तावत्तस्या विराजते ।
मुखं पूर्णेन चन्द्रेण प्रबुद्धमिव कैरवम् ॥ २३ ॥

तदेव स्पष्टमाह - इन्द्रमिति ॥ २३ ॥

इन्द्रोऽपि च तदासक्तसमस्तकरणाकुलः ।
न तिष्ठति क्षणमहो तया विरहितः क्वचित् ॥ २४ ॥

अथातिसुघनस्नेहनिरावरणचेष्टयोः ।
तयोरनयवृत्तान्तो राज्ञाकर्णि कटुव्यथः ॥ २५ ॥

अतिशयितेन सुघनेन निरन्तरेण च स्नेहेन निरावरणा अप्रच्छन्नाश्चेष्टा
ययोस्तयोः । कट्वी दुःसहा व्यथा यस्मात्सः ॥ २५ ॥

40405
40406 एवमन्योन्यमासक्तं भावमालक्ष्य भूपतिः।
40407 चकार बहुभिर्दण्डैः स द्वयोरथ शासनम्॥ २६॥
40408
40409 शासनं पीडनम्॥ २६॥
40410
40411 तावुभावपि संत्यक्तौ हेमन्ते सलिलाशये।
40412 तुष्टौ जहसतुस्तत्र न खेदं समुपागतौ॥ २७॥
40413
40414 तदेव विशिष्य दर्शयति - तावित्यादिना। तत्र लौकिकेऽसत्ये कुत्सितेऽपि विषये
40415 चित्तस्थैर्ये यदा न दुःखं सुखसंपत्तिश्च तदा परमात्मनि तत्स्थैर्ये
40416 तत्प्रसक्तिसंभावनापि दूरं निरस्ता निरतिशयानन्दावाप्तिश्च स्वतःसिद्धेति
40417 तात्पर्यरहस्यं सूचयंस्तयोश्चित्तस्थैर्यफलद्वयं प्रपञ्चयति -
40418 तुष्टावित्यादिना॥ २७॥
40419
40420 अपृच्छत ततो राजा खिन्नौ स्थो न तु दुर्मती।
40421 तावूचतुर्महीपालं जलाशयसमुद्धृतौ॥ २८॥
40422
40423 संस्मृत्यावामिहान्योन्यमुखकान्तिमनिन्दिताम्।
40424 आत्मानं न विजानीवो रूढभावं परस्परम्॥ २९॥
40425
40426 आत्मानं स्वदेहम्। रूढभावमिति क्रियाविशेषणम्॥ २९॥
40427
40428 शासनेषु च यत्सङ्गो निःशङ्कस्तेन हर्षितौ।
40429 मुह्यावो न महीपाल स्वाङ्गैरपि विकर्तितैः॥ ३०॥
40430
40431 यद्यस्मादावयोः सङ्गो मनःसंबन्धो निःशङ्को
40432 भेदशङ्काशून्यस्तेन हेतुना शासनेषु त्वत्कृतेषु पीडनेषु हर्षितौ स्वो न
40433 मुह्यावश्च॥ ३०॥
40434
40435 ततो भ्राष्ट्रे परिक्ष्प्तावखिन्नावेवमेव तौ।
40436 ऊचतुर्मुदितात्मानावन्योन्यस्मृतिहर्षितौ॥ ३१॥
40437
40438 एवं पूर्वोक्तरीत्यैवोचतुः॥ ३१॥
40439
40440 ग्रथितौ गजपादेषु न खिन्नावेव संस्थितौ।
40441 एवमेवोचतुर्भूपमन्योन्यस्मृतिहर्षितौ॥ ३२॥
40442
40443 कशाहतावखिन्नौ तावेवमेव किलोचतुः।
40444 अन्यस्माच्छासनाद्राज्ञा कल्पिताच्च पुनः पुनः॥ ३३॥
40445
40446 उद्धृतावूचतुः पृष्टौ तमेवार्थं पुनः पुनः।
40447 उवाचेन्द्रो महीपालं जगन्मे दयितामयम्॥ ३४॥
40448
40449 न शातनानि दुःखानि बाधन्ते किंचिदेव मे।
40450 अस्याश्चैव जगद्राजन्सर्वं मन्मयमेव च॥ ३५॥
40451
40452 दुःखानि दुःखहेतून्यपि शरीरशातनानि किंचिन्न बाधन्त एवेति योजना॥ ३५॥
40453
40454 तेनान्यशासनाद्दुःखं किंचिदेव न विद्यते।
40455 मनोमात्रमहं राजन् मनो हि पुरुषः स्मृतः॥ ३६॥
40456

40457 अन्यशासनादन्यस्मात्पीडनादपि। न विद्यते आवयोरिति शेषः॥ ३६॥
40458
40459 प्रपञ्चमात्रमेवायं देहो दृश्यत एव हि।
40460 समकालप्रयुक्तेन सहसा दण्डराशिना॥ ३७॥
40461
40462 प्रपञ्चः कल्पितो विस्तारो मनस एवेत्यर्थः। मन एव तर्हि दण्डैर्भेत्स्यामि
40463 तत्राह - समकालेति। समशब्द एकपरः॥ ३७॥
40464
40465 वीरं मनो भेदयितुं मनागपि न शक्यते।
40466 का नाम ता महाराज कीदृश्यः कस्य शक्तयः॥ ३८॥
40467
40468 वीरं इष्टार्थस्थैर्यशूरम्॥ ३८॥
40469
40470 याभिर्मनांसि भिद्यन्ते दृष्टनिश्चयवन्त्यपि।
40471 वृद्धिमायातु वा देहो यातु वा विशरारुताम्॥ ३९॥
40472
40473 दृष्टोऽनुभूयमानस्तद्भावापत्तिपर्यन्तो निश्चयो दृष्टनिश्चयस्तद्वन्त्यपि
40474 मनांसि विशरारुतां विशीर्णताम्॥ ३९॥
40475
40476 भावितार्थाभिपतितं मनस्तिष्ठति पूर्ववत्।
40477 इष्टेऽर्थे चिरमाविष्टं दधानं तत्स्थितं [तद्गतं मनः इति
40478 पाठः] मनः॥ ४०॥
40479
40480 आविष्टमभिनिवेशं दधानम्॥ ४०॥
40481
40482 भावाभावाः शरीरस्था नृप शक्ता न बाधितुम्।
40483 भावितं तीव्रवेगेन मनसा यन्महीपते॥ ४१॥
40484
40485 तदेव पश्यत्यचलं न शरीरविचेष्टितम्।
40486 न काश्चन क्रिया राजन्वरशापादिका अपि॥ ४२॥
40487
40488 अचलं स्थिरम्॥ ४२॥
40489
40490 तीव्रवेगेन संपन्नं शक्ताश्चालयितुं मनः।
40491 तीव्रवेगेन संयुक्तं पुरुषा ह्यभिवाञ्छितात्॥ ४३॥
40492
40493 तीव्रवेगेन दृढाभिनिवेशेन। अभिवाञ्छितादिष्टार्थाच्चालयितुम्॥ ४३॥
40494
40495 मनश्चालयितुं शक्ता न महाद्रिं मृगा इव।
40496 ममेयमसितापाङ्गी मनःकोशे प्रतिष्ठिता॥ ४४॥
40497
40498 देवागारे महोत्सेधे देवी भगवती यथा।
40499 न दुःखमनुगच्छामि प्रियया जीवरक्षया॥ ४५॥
40500
40501 गिरिर्ग्रीष्मदशादाहं लग्नयेवाब्दमालया।
40502 यत्र यत्र यथा राजंस्तिष्ठाम्यभिपतामि वा॥ ४६॥
40503
40504 तत्रेष्टसंगमादन्यत्किंचिन्नानुभवाम्यहम्।
40505 अहल्यादयितानाम्ना मनसेन्द्राभिधं मनः॥ ४७॥
40506
40507 इष्टसंगमादभिलषितार्थलाभादन्यत्किंचिदणुमात्रमपि नानुभवामि।
40508 तथाच मन एव वेषद्वयेन दृढसंगतं स्वभावात्स्वभावान्तरं

40509 यत्नशतैरपि गमयितुमशक्यमित्याशयेनाह - अहल्येति ॥ ४७ ॥
40510
40511 संसक्तमिदमायाति न स्वभावादृते परम् ।
40512 एककार्यनिविष्टं हि मनो धीरस्य भूपते ॥ ४८ ॥
40513
40514 एककार्यनिविष्टमेकाग्रम् । परं विषयान्तरम् ॥ ४८ ॥
40515
40516 न चाल्यते मेरुरिव वरशापबलैरपि ।
40517 देहो हि वरशापाभ्यामन्यत्वमिव गच्छति ।
40518 ननु धीरं मनो राजन्विजिगीषुतया स्थितम् ॥ ४९ ॥
40519
40520 सर्वविक्षेपविजिगीषुतया स्थितम् ॥ ४९ ॥
40521
40522 प्। ३४४) २०७
40523
40524 एतानि चात्र मनसां न च कारणानि
40525 राजञ्शरीरशकलानि वृथोत्थितानि ।
40526 चेतो हि कारणममीषु शरीरकेषु
40527 वारीव सर्ववनखण्डलतारसेषु ॥ ५० ॥
40528
40529 ननु देह एव मनसः कारणं देहपीडने कुतो न पीड्यते तत्राह - एतानीति ।
40530 एतानि परिदृश्यमानानि प्राणिनां शरीरलक्षणानि शकलानि कल्पनैकदेशा
40531 मनसां न कारणानि किंतु चेतो मन एवामीषु शरीरकेषु कारणमित्यर्थः ॥ ५०
40532 । ।
40533
40534 आद्यं शरीरमिह विद्धि मनो महात्म-
40535 न्संकल्पितो जगति तेन शरीरसङ्घः ।
40536 आद्यं शरीरमधितिष्ठति यत्र यत्र
40537 तत्तद्भृशं फलति नेतरदस्य पुंसः ॥ ५१ ॥
40538
40539 आद्यं आत्मनः प्रथमभोगायतनम् । अधितिष्ठति अहमित्यभिमानेनाविर्भवति
40540 । तेनाधिष्ठानेन तत्तच्छरीराद्याकारं फलतीत्यर्थः ॥ ५१ ॥
40541
40542 मुख्याङ्कुरं सुभग विद्धि मनो हि पुंसो
40543 देहास्ततः प्रविसृतास्तरुपल्लवाभाः ।
40544 नष्टेऽङ्कुरे पुनरुदेति न पल्लवश्री-
40545 र्नैवाङ्कुरः क्षयमुपैति दलक्षयेषु ॥ ५२ ॥
40546
40547 उक्तमेवार्थं दृष्टान्तेनोपपादयन्नाह - मुख्याङ्कुरमिति ॥ ५२ ॥
40548
40549 देहे क्षते विविधदेहगणं करोति
40550 स्वप्नावनाविव नवं नवमाशु चेतः ।
40551 चित्ते क्षते तु न करोति हि किंचिदेव
40552 देहस्ततः समनुपालय चित्तरत्नम् ॥ ५३ ॥
40553
40554 अत एव देहनाशेऽपि पुनःपुनर्देहोद्भवः चित्तनाशे तु कैवल्यमेव न
40555 पुनर्भव इति प्रसिद्धमित्याह - देह इति । ततश्चित्तलक्षणं रत्नं
40556 सर्वार्थहेतुभूतं चिन्तामणिं समनुपालय परमपुरुषार्थसमाधानेन
40557 रक्ष न तुच्छक्रोधादिवशतया विनाशयेत्यर्थः ॥ ५३ ॥
40558
40559 दिशि दिशि हरिणाक्षीमेव पश्यामि राजन्
40560 प्रिययुवतिमनस्त्वान्नित्यमानन्दितोऽस्मि ।

40561 तव पुरप्रकृतीनां यत्फलं दुःखदायि
40562 क्षणमथ सुचिरं तत्तन्न पश्यामि किंचित् ॥ ५४ ॥
40563
40564 उक्तार्थं पिण्डीकृत्यानूद्योपसंहरन्दण्डनप्रयत्नवैफल्यमाह -
40565 दिशि दिशीति । तव पुरस्य तदन्तर्गतप्रकृतीनां सेवकादिप्रजानां वा मध्ये
40566 यन्मम दुःखदायिकशाशस्त्रघातादि यच्च तत्फलं दुःखं
40567 तत्तत्किंचित्क्षणकालमथवा सुचिरं न पश्यामीत्यर्थः ॥ ५४ ॥
40568
40569 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० उत्पत्तिप्रकरणे
40570 कृत्रिमेन्द्राहल्यानुरागो नामैकोननवतितमः सर्गः ॥ ८९ ॥
40571
40572 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
40573 कृत्रिमेन्द्राहल्यानुरागो नामैकोननवतितमः सर्गः ॥ ८९ ॥
40574
40575
40576 नवतितमः सर्गः ९०
40577
40578 भानुरुवाच ।
40579
40580 अथेन्द्रेणैवमुक्तोऽसौ राजा राजीवलोचनः ।
40581 मुनिं भरतनामानं पार्श्वसंस्थमुवाच ह ॥ १ ॥
40582
40583 भरतस्य मुनेः शापान्नष्टयोरपि देहयोः ।
40584 न मानसी तन्मयता तयोर्नष्टेति कीर्त्यते ॥ १ ॥
40585
40586 राजीवं पद्ममिव लोचने यस्य ॥ १ ॥
40587
40588 राजोवाच ।
40589
40590 भगवन्सर्वधर्मज्ञ पश्यामि सुदुरात्मनः ।
40591 भृशमस्य मुखे स्फारं धाष्टर्यं मद्दारहारिणः ॥ २ ॥
40592
40593 अस्येन्द्रस्य मुखे । स्फारं प्रचुरम् ॥ २ ॥
40594
40595 पापानुरूपमस्याशु शापं देहि महामुने ।
40596 यदवध्यवधात्पापं वध्यत्यागात्तदेव हि ॥ ३ ॥
40597
40598 वध्यस्य वधार्हस्य त्यागादवधादपि तदेव पापं भवतीति हि धर्मशास्त्रे
40599 प्रसिद्धमित्यर्थः ॥ ३ ॥
40600
40601 इत्युक्तो राजसोंहेन भरतो मुनिसत्तमः ।
40602 यथावत्प्रविचार्याशु पापं तस्य दुरात्मनः ॥ ४ ॥
40603
40604 सहानया दुष्कृतिन्या भर्तृद्रोहाभिभूतया ।
40605 विनाशं व्रज दुर्बुद्धे इति शापं विसृष्टवान् ॥ ५ ॥
40606
40607 अनया अहल्यया सह । विनाशं मृत्युम् ॥ ५ ॥
40608
40609 ततस्तौ राजभरतौ प्रत्यूचतुरिदं वचः ।
40610 सुदुर्मती युवां याभ्यां क्षपितं दुश्चरं तपः ॥ ६ ॥
40611
40612 राजभरतौ प्रति इदं वच ऊचतुः ॥ ६ ॥

40613
40614 अनेन शापदानेन किंचिद्भवति नावयोः।
40615 देहे नष्टे न नौ किंचिन्नश्यति स्वान्तरूपयोः॥ ७॥
40616
40617 नौ आवयोः किंचिदपि न नश्यति। तत्र हेतुः - स्वान्तरूपयोरिति॥ ७॥
40618
40619 स्वान्तं हि नहि केनापि शक्यते नाशितुं क्वचित्।
40620 सूक्ष्मत्वाच्चिन्मयत्वाच्च दुर्लक्ष्यत्वाच्च विद्धि नौ॥ ८॥
40621
40622 नाशितुं नाशयितुम्। सेटि णिलोपश्छान्दसः परैर्दुर्लक्ष्यत्वाच्च॥ ८॥
40623
40624 श्रीभानुरुवाच।
40625
40626 सुघनस्नेहसंबद्धमनस्कावेव शापतः।
40627 पतितौ भूतले वृक्षविच्युताविव पल्लवौ॥ ९॥
40628
40629 पतितौ मृताविति यावत्॥ ९॥
40630
40631 अथ व्यसनसंसक्तौ मृगयोनिमुपागतौ।
40632 ततो द्वावपि संसक्तौ भूयो जातौ विहंगमौ॥ १०॥
40633
40634 व्यसनेन दृढविषयरागेण संसक्तौ बद्धौ॥ १०॥
40635
40636 अथास्माकं विभो सर्गे मिथःसंबन्धभावनौ।
40637 तपःपरौ महापुण्यौ जातौ ब्राह्मणदम्पती॥ ११॥
40638
40639 अथ बहुजन्मपरम्परानन्तरम्। अस्माकं सर्गे अस्मदीये ब्रह्माण्डे॥ ११॥
40640
40641 भारतोऽपि तयोः शापः स समर्थो बभूव ह।
40642 शरीरमात्राक्रमणे न मनोनिग्रहे प्रभो॥ १२॥
40643
40644 भारतो भरतेन दत्तः शापस्तयोः शरीरमात्रस्याक्रमणे नाशे समर्थो
40645 बभूव नतु मनोनिग्रहे इत्यर्थः॥ १२॥
40646
40647 प्। ३४५) २०७
40648
40649 तावद्यापि हि तेनैव मोहसंस्कारहेतुना।
40650 यत्र यत्र प्रजायेते भवतस्तत्र दम्पती॥ १३॥
40651
40652 अकृत्रिमप्रेमरसानुविद्धं
40653 स्नेहं तयोस्तं प्रतिवीक्ष्य कान्तम्।
40654 वृक्षा अपि प्रेमरसानुविद्धाः
40655 शृङ्गारचेष्टाकुलिता भवन्ति॥ १४॥
40656
40657 वृक्षा अपि शृङ्गारचेष्टाकुलिता भवन्ति किं पुनरन्ये इत्यतिशयोक्तिः॥ १४॥
40658
40659 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे
40660 कृत्रिमेन्द्राहल्यानुरागो नाम नवतितमः सर्गः॥ ९०॥
40661
40662 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
40663 कृत्रिमेन्द्राहल्यानुरागो नाम नवतितमः सर्गः॥ ९०॥
40664

एकनवतितमः सर्गः ९१

भानुरुवाच।

तेनैतद्वच्मि भवगन्यथाकालं मनो मुने।
अनिग्राह्यमभेद्यं च शापैरपि दुरासदैः॥ १॥

इह भानुं मनुं कृत्वा धातुः सर्गो निरूप्यते।
मनोमात्रविलासत्वं विश्वस्यैन्दवसर्गवत्॥ १॥

तेन भारतः शापो न मनोनिग्रहे समर्थो बभूवेत्युक्तेन हेतुना॥ १॥

ऐन्दवानामतः सृष्टिक्रमाणां प्रविनाशनम्।
युज्यते न च तद्ब्रह्मन्युक्तमेतन्महात्मनः॥ २॥

अतो हेतोरैन्दवानां सृष्टिक्रमाणां प्रविनाशनं त्वया कर्तुं न युज्यते न
पार्यते महात्मनस्तव तद्युक्तमुचितं च न भवतीत्यर्थः॥ २॥

किं तदस्ति जगत्यस्मिन्विविधेषु जगत्सु च।
तवापि नाथ नाथस्य यद्दैन्याय महात्मनः॥ ३॥

तर्हि वृथा मम सर्गः स्यादिति दैन्यमालक्ष्याह - किं तदिति॥ ३॥

मनो हि जगतां कर्तृ मनो हि पुरुषः स्मृतः।
यन्मनोनिश्चयकृतं तद्द्रव्यौषधिदण्डनैः॥ ४॥

हन्तुं न शक्यते जन्तोः प्रतिबिम्बं मणेरिव।
तस्मादेतेऽत्र तिष्ठन्तु भासुरैः सर्गसंभ्रमैः॥ ५॥

एते ऐन्दवाः॥ ५॥

त्वं सृष्ट्वेह प्रजास्तिष्ठ बुद्ध्याकाशो ह्यनन्तकः।
चित्ताकाशश्चिदाकाश आकाशश्च तृतीयकः॥ ६॥

क्व तर्हि मत्सर्गस्यावकाशस्तत्राह - त्वमिति। इह स्वचित्ताकाशे अनन्तं वै
मनः इति श्रुतेरिति भावः। प्रथमश्चिदाकाशश्चिदाभासाकाशः॥ ६॥

अनन्तास्त्रय एवैते चिदाकाशप्रकाशिताः।
एकं द्वौ त्रीन्बहून्वापि कुरु सर्गाञ्जगत्पते॥ ७॥

साक्षिकूटस्थचिदाकाश प्रकाशिताः।
चित्ताकाशेऽनन्तकोटिब्रह्माण्डानामप्यवकाशोऽस्ति किं पुनरेकस्येत्याशयेनाह
- एकमिति॥ ७॥

स्वेच्छयात्मनि तिष्ठ त्वं किं गृहीतं तवैन्दवैः।

ब्रह्मोवाच।

अथैन्दवजगज्जाले भानुनैवमुदाहृते॥ ८॥

मया संचिन्त्य सुचिरमिदमुक्तं महामुने।

40717 युक्तमुक्तं त्वया भानो विततं हि किलाम्बरम् ॥ ९ ॥
40718
40719 अम्बरं प्रागुक्तमाकाशचतुष्टयमपि ॥ ९ ॥
40720
40721 मनश्च विततं वापि चिदाकाशश्च विस्तृतः ।
40722 तद्यथाभिमतं सर्गं नित्यकर्म करोम्यहम् ॥ १० ॥
40723
40724 तत्र द्वयोरेव सर्गाधारता मुख्येत्याशयेनाह - मनश्चेति । चिदाकाशो
40725 मनोवच्छिन्नः । भूताकाशस्य सृज्यान्तःपाताद्ब्रह्माकाशस्यासङ्गतया
40726 सर्गानाधारत्वादिति ॥ १० ॥
40727
40728 कल्पयामि बहून्याशु भूतजालानि भास्कर ।
40729 तत्त्वमेवाशु भगवन्प्रथमो मे मनुर्भव ॥ ११ ॥
40730
40731 तत्तस्मिन्सर्गे प्रथमो मनुः स्वायंभुवः ॥ ११ ॥
40732
40733 कुरु सर्गं यथाकामं मया समभिचोदितः ।
40734 अथैतत्स महातेजा मम वाक्यं प्रभाकरः ॥ १२ ॥
40735
40736 समभिचोदित आज्ञप्तः सन् ॥ १२ ॥
40737
40738 अङ्गीकृत्य द्विधात्मानं चकार तपतांवर ।
40739 एकेन प्राक्तनेनास्मिन्वपुषा सूर्यतां गतः ॥ १३ ॥
40740
40741 तपतांवरेति वसिष्ठसंबोधनम् । अस्मिन् ऐन्दवसर्गे ॥ १३ ॥
40742
40743 व्योमाध्वगतया सर्गे ततान् दिवसावलिम् ।
40744 मन्मनुत्वं द्वितीयेन कृत्वा स्ववपुषा क्षणात् ॥ १४ ॥
40745
40746 ससर्ज सकलां सृष्टिं तां तामभिमतां मम ॥ १५ ॥
40747
40748 एतत्ते कथितं सर्वं वसिष्ठमनसो मुने ।
40749 स्वरूपं सर्वकृत्त्वं च शक्तत्वं च महात्मनः ॥ १६ ॥
40750
40751 उपसंहरति - एतदिति । महात्मनो मनसः ॥ १६ ॥
40752
40753 प्रतिभासमुपायाति यद्यदस्य हि चेतसः ।
40754 तत्तत्प्रकटतामेति स्थैर्यं सफलतामपि ॥ १७ ॥
40755
40756 सफलतां भोगव्यवहारप्रयोजकतामपि ॥ १७ ॥
40757
40758 सामान्यब्राह्मणा भूत्वा प्रतिभासवशात्किल ।
40759 ऐन्दवा ब्रह्मतां याता मनसः पश्य शक्तताम् ॥ १८ ॥
40760
40761 यथा चैन्दवजीवास्ते चित्रत्वाद्ब्रह्मतां गताः ।
40762 वयं तथैव चिद्भावाच्चित्तत्वाद्ब्रह्मतां गताः ॥ १९ ॥
40763
40764 स्वस्यापि हिरण्यगर्भता ऐन्दववन्मानस्येवेत्याह - यथेति ।
40765 चिद्भावाच्चित्तत्वं प्राप्य चित्तत्वाद्ब्रह्मतां हिरण्यगर्भताम् ॥ १९ ॥
40766
40767 चित्तं हि प्रतिभासात्म यच्च तत्प्रतिभासनम् ।
40768 तदिदं भाति देहादि स्वान्तं नान्यास्ति देहदृक् ॥ २० ॥

40769
40770 तदेव स्वान्तं मन एवास्ति। देहदृक् देहप्रतीतिश्चित्तादन्या नास्ति॥ २०॥
40771
40772 चित्तमात्मचमत्कारं तच्च तत्कुरुते स्वतः।
40773 यथावत्संभवं स्वात्मन्येवान्तर्मरिचादिवत्॥ २१॥
40774
40775 आत्मनि स्वस्मिंश्चमत्काराः कल्पना यस्य तथाविधं भवति।
40776 आत्मचमत्कारत्वं विवृणोति - तच्च तत्कुरुते इति। तर्हि सर्वेषां मनस्तुल्यं
40777 कुतो न कल्पयति तत्राह - यथावत्संभवमिति।
40778 यथावत्कामकर्मवासनानुसाराद्यावद्यदा संभवति तदा तावदेवेत्यर्थः।
40779 यथा मरिचं कटुतयैवान्तःपरिणमते निम्बस्तु तिक्ततया द्राक्षा मधुरतयेति
40780 स्वस्वसंस्काराद्व्यवस्थितं तद्वदित्यर्थः॥ २१॥
40781
40782 प्। ३४६) २०८
40783
40784 तदेतच्चित्तवद्भातमातिवाहिकनामकम्।
40785 तदेवोदाहरन्त्येवं देहनाम्ना घनभ्रमम्॥ २२॥
40786
40787 अत एव देवोऽहं मनुष्योऽहमित्यादिदेहनाम्ना प्रतिनियतं जना उदाहरन्ति
40788 नैकरूपमित्याह - तदेतदिति। चित्तवद्भातमातिवाहिकनामकं
40789 सूक्ष्मदेहमेव घनभ्रमं स्थौल्यभ्रान्तियुक्तं तत्तद्देहनाम्ना
40790 उदाहरन्ति॥ २२॥
40791
40792 कथ्यते जीवनाम्नैतच्चित्तं प्रतनुवासनम्।
40793 शान्तदेहचमत्कारं जीवं विद्धि क्रमात्परम्॥ २३॥
40794
40795 यदि चित्तं देहस्तर्हि इदमेव जीव इति कथं प्रागुक्तं तत्राह - कथ्यते इति।
40796 प्रतनुवासनं जीवो घनभ्रमं तु देह इत्युच्यत इति भेदक्रमात्
40797 शान्तदेहत्रयचमत्कारं तु परं ब्रह्म विद्धित्यर्थः॥ २३॥
40798
40799 नाहं न चान्यदस्तीह चित्रं चित्तमिदं स्थितम्।
40800 वसिस्ठैन्दवसंविद्वदसत्सत्तामिवागतम्॥ २४।
40801
40802 एवंच तन्तुभ्यः पट इव न कस्यापि देहो नाम पृथगस्तीत्याह - नाहमिति
40803 ॥ २४॥
40804
40805 यथैन्दव मनो ब्रह्मा तथैवायमहं स्थितः।
40806 तत्कृतं चाहमेवेदं संकल्पात्मैव भासते॥ २५॥
40807
40808 तत्कृतं सर्गान्तरमित्यपि मच्चित्तकल्पनैवेत्यहमेव तदपीत्याह -
40809 तत्कृतमिति॥ २५॥
40810
40811 कश्चिच्चित्तविलास्ऽयं ब्रह्माहमिह संस्थितः।
40812 स्वभाव एव देहादि विद्धि शून्यतरात्मखात्॥ २६॥
40813
40814 स्वभावः परमात्मैव सर्वप्रपञ्चशून्यतरादात्मखात्पृथगिव
40815 देहादिभावेन भातीत्यर्थः॥ २६॥
40816
40817 शुद्धचित्परमार्थैकरूपिणीत्येव भावनात्।
40818 जीवो भूयो मनो भूत्वा वेत्तीत्थं देहतां मुधा॥ २७॥
40819
40820 मुधेति निपातो नञर्थे॥ २७॥

सर्वमैन्दवसंसारवदिदं भाति चिद्वपुः ।
संपन्नसंप्रबोधात्मा स्वप्नो दीर्घः स्वशक्तिजः ॥ २८ ॥

चिद्वपुः परमात्मैव ऐन्दवसंसारवत्सर्वात्मा भाति । यथा
स्वाज्ञानशक्तिजः स्वप्नो दीर्घः सन्संपन्नजाग्रदात्मा भाति तद्वदित्यर्थः ॥
२८ ॥

द्विचन्द्रविभ्रमाकारं तन्मात्राभासपूर्वकम् ।
ऐन्दवाम्बरवद्रूढं चित्तादेवाखिलं भवेत् ॥ २९ ॥

यतः सूक्ष्मतरवासनामयशब्दतन्मात्राध्यासपूर्वकं भवति जगत्तत
ऐन्दवचित्ताकाशवदेव रूढमिति संभाव्यत इत्यर्थः ॥ २९ ॥

न सन्नासदहंरूपं सत्तासत्ते तदेव च ।
उपलम्भेन सद्रूपमसत्यं तद्विरोधतः ॥ ३० ॥

यद्युदासीनचित्तादेव सर्वं रूधं तर्हि कथं
देहादिष्वहंतयाभिमानादनुदासीनरूपं भातीति तत्राह - न सदिति ।
यदहंरूपमभिनिवेशरूपमनुदासीनस्वभावमनुभूयते तन्न सत् । सर्वत्र
चित्तकार्ये अदर्शनात् । नाप्यसत् । असत उपलम्भादर्शनात् । यतः सत्तासत्ते तदेव ।
सत्ता सदेकरूपत्वात्सदेव । असत्ता चासदेकरूपत्वादसदेव । अहंरूपं तु
नैकस्वभावनियतम् । यतः क्वचिदुपलम्भेन हेतुना सद्रूपमिव क्वचित्तु
तद्विरोधतोऽनुपलम्भादसत्यमसद्रूपमिति विरुद्धस्वभावं भासत इति
मायिकनित्यर्थः ॥ ३० ॥

जडाजडं मनो विद्धि संकल्पात्म बृहद्वपुः ।
अजडं ब्रह्मरूपत्वाज्जडं दृश्यात्मतावशात् ॥ ३१ ॥

एवं मनसो जडाजडविरुद्धस्वभावत्वादपि मायिकत्वमित्याह -
जडाजडमिति ॥ ३१ ॥

दृश्यानुभवसत्यात्म न सद्भावे विलासि तत् ।
कटकत्वं यथा हेम्नि तथा ब्रह्मणि संस्थितम् ॥ ३२ ॥

तस्य कदा दृश्यात्मता कदा वा ब्रह्मरूपत्वं तत्राह - दृश्येति ।
तन्मनो दृश्यानुभवकाले दृश्यमिव सत्यात्म सद्भावे ब्रह्मानुभवे न
विलासि न पृथग्विलसनशीलमिति ब्रह्मैव यथा हेम्नि कटकत्वं
करालंकृतिकार्यदृशा हेम्नः पृथक्सदिव कनकदृशा तु तदेव
तद्वत्संस्थितमित्यर्थः ॥ ३२ ॥

सर्वत्वाद्ब्रह्मणः सर्वं जडं चिन्मयमेव च ।
अस्मदादिशिलान्तात्म न जडं न च चेतनम् ॥ ३३ ॥

एवं जगतोऽपि जडाजडविरुद्धस्वभावत्वान्मायिकत्वमेवेत्याशयेनाह -
सर्वत्वादिति । अस्मदादिशिलान्तात्म ब्रह्मादिस्थावरान्तं यौक्तिकदृशा
विरुद्धस्वभावमपि परमार्थदृशा न जाड्यचैतन्यधर्मकमित्यर्थः ॥ ३३
॥

दार्वादीनामचित्त्वेन नोपलम्भस्य संभवः ।
उपलम्भो हि सदृशसंबन्धादेव जायते ॥ ३४ ॥

40873 जडं चेतनमिति वा व्यवस्था अनुलम्भे उपलम्भोत्तरं वा स्यात् | आद्ये
40874 उपलम्भस्यैवासंभवात्सत्तैव न सिद्ध्यति दूरे जडाजडत्वचिन्तेत्याशयेनाह
40875 - दार्वादीनामिति | सदृशयोः
40876 प्रमातृप्रमेयचिद्धात्वोर्वृत्तिद्वारकादैक्यसंबन्धाद्ध्युपलम्भः
40877 प्रसिद्धः | जडैकरूपत्ववादे तु न प्रमेयचैतन्यमस्तीति नोपलम्भसंभव
40878 इत्यर्थः || ३४ ||
40879
40880 उपलब्धेऽजडे विद्धि तेनेदं सर्वमेव हि |
40881 उपलम्भो हि सदृशसंबन्धात्स्यात्समात्मनोः || ३५ ||
40882
40883 द्वितीयेऽप्याह - उपलब्धे इति | अजडं विद्धीति च्छेदः | उपलब्धे
40884 प्रमेयस्योपलम्भेऽन्तर्भावात्तद्विषयस्याजडैकस्वभावता परिशिष्यते यतः
40885 प्रागुक्तचितोरैक्यलक्षणसंबन्धादेवोपलम्भो जायते | तथा चानुपलब्धे
40886 उपलब्धे च जडचेतनद्वैविध्यं दुर्घटमित्यर्थः || ३५ ||
40887
40888 जडचेतनभावादिशब्दार्थश्रीर्न विद्यते |
40889 अनिर्देश्यपदे पत्रलतादीव महामरौ || ३६ ||
40890
40891 उभयदुर्घटत्वे यत्फलितं तदाह - जडेति || ३६ ||
40892
40893 चितो यच्चेत्यकलनं तन्मनस्त्वमुदाहृतम् |
40894 चिद्भागोऽत्राजडो भागो जाड्यमत्र हि चेत्यता || ३७ ||
40895
40896 तस्याश्चितश्चेत्याकारकलनैव मनस्ता तत्रैव जडाजडविकल्पस्तद्विवेक एव
40897 निर्मनस्कतेत्याशयेनाह - चित इत्यादिना || ३७ ||
40898
40899 चिद्भागोऽत्रावबोधांशो जडं चेत्यं हि दृश्यते |
40900 इति जीवो जगद्भ्रान्तिं पश्यन्गाच्छति लोलताम् || ३८ ||
40901
40902 तत्र चिदात्मभागविस्मरणेन जडात्मजीवजगद्भ्रमः संपन्न इत्याह - इति
40903 जीव इति || ३८ ||
40904
40905 प्। ३४७) २०८
40906
40907 चित्तस्थ एव भावोऽसौ शुद्ध एव द्विधा कृतः |
40908 अतः सर्वं जगत्सैव द्वैतलब्धं च सैव तत् || ३९ ||
40909
40910 शुद्धो भावश्चित्स्वभाव एव चित्तं जगदिति द्विधा कृतः |
40911 अतश्चिदेकबुद्ध्योपलब्धं सर्व जगत्सा चिदेव द्वैतबुद्ध्या लब्धमपि
40912 तत्सैवेत्यर्थः || ३९ ||
40913
40914 स्वमेवान्यतया दृष्ट्वा चितिर्दृश्यतया वपुः |
40915 निर्भागाप्येकभागाभं भ्रमतीव भ्रमातुरा || ४० ||
40916
40917 निर्भागा निर्विभागा | एकभागाभं स्वगतविभागतुल्यम् || ४० ||
40918
40919 न भ्रान्तिरस्ति भ्रमभाङ्गा नैवेतीह निश्चयः |
40920 परिपूर्णार्णवप्रख्यावेतीत्थं संस्थिता चितिः || ४१ ||
40921
40922 भ्रमभाक् ना पुरुषो नैव || ४१ ||
40923
40924 सर्वं स्याज्जाड्यमप्यस्याश्चितिश्चित्त्वं च वेत्सि तत् |

40925 चिद्भागोंशोऽवबोधस्य त्वहंताजडतोदयः ॥ ४२ ॥
40926
40927 अस्याश्रितेः सर्वरूपं जाडमपि चितिरेव स्यात् । यतस्तस्मिञ्जाड्ये चित्त्वं च वेत्सि ।
40928 अचिदेकस्वभावत्वे स्फुरणायोगादस्फुरणे जाड्यस्याप्यसिद्धेरित्यर्थः । यथा
40929 जडेऽवबोधोऽष्ति एवं चेतने जडभागोऽप्यस्तीति दर्शयति - अहंतेति ॥ ४२ ॥
40930
40931 अहंतादिपरे तत्त्वे मनागपि न विद्यते ।
40932 ऊर्म्यादीव पृथक्तोये संवित्सारं हि तद्यतः ॥ ४३ ॥
40933
40934 कथमहंताया जडत्वमिति चेद्ब्रह्मव्यावृत्तत्वादित्याह - अहंतादीति ।
40935 संवित्सारं चिदेकरसम् ॥ ४३ ॥
40936
40937 अहंप्रत्ययसंदृश्यं चेत्यं विद्धि समुत्थितम् ।
40938 मृगतृष्णाम्बिवान्तस्थं नूनं विद्यत एव नो ॥ ४४ ॥
40939
40940 अत एव तस्यासत्त्वमपीत्याह - अहंप्रत्ययेति ॥ ४४ ॥
40941
40942 अहंतापदमन्तात्मपदं विद्धि निरामयम् ।
40943 विदं विदुरहंतादि शैत्यमेव यथा हिमम् ॥ ४५ ॥
40944
40945 अन्तात्मपदं सर्वद्वैतबाधावध्यात्मवस्तु । अहंताया अपदमनाश्रयं
40946 विद्धि । विदं चित्स्वभावमेव वासनया घनीभूताहंतादिरूपं जना विदुः
40947 पश्यन्ति । यथा शैत्यमेव घनीभावाद्धिमं पश्यन्ति तद्वदित्यर्थः ॥ ४५ ॥
40948
40949 चित्तेव चेत्यते जाड्यं स्वप्ने स्वमरणोपमम् ।
40950 सर्वात्मत्वात्सर्वशक्तीः कुर्वती नैति साम्यताम् ॥ ४६ ॥
40951
40952 सर्वशक्तीः कुर्वती आविष्कुर्वाणा चिद्विना ज्ञानदाढर्यं साम्यतां नैति ॥ ४६ ॥
40953
40954 मनः पदार्थादितया सर्वरूपं विजृम्भते ।
40955 नानात्माचित्तदेहोऽयमाकाशविशदाकृतिः ॥ ४७ ॥
40956
40957 नानात्मकश्चित्तलक्षणो देह आतिवाहिकः ॥ ४७ ॥
40958
40959 देहादिदेहप्रतिभारूपात्म्यं त्यजता सता ।
40960 विचार्यं प्रतिभासात्म चित्तं चित्तेन वै स्वयम् ॥ ४८ ॥
40961
40962 कथमिदं बोद्धुं शक्यं तत्रोपायमाह - देहादीति ।
40963 स्थूलदेहादिदेहत्रयप्रतिभारूपात्मतां च त्यजता सता अधिकारिणा चित्तेनैव
40964 चित्तं प्रतिभासात्म प्रातिभासिकं विचार्यमित्यर्थः ॥ ४८ ॥
40965
40966 चित्तताम्रे शोधिते हि परमार्थसुवर्णताम् ।
40967 गतेऽकृत्रिम आनन्दः किं देहोपलखण्डकैः ॥ ४९ ॥
40968
40969 किं तद्विचारलक्षणे शोधे कृते चित्तं भवति तदाह - चित्तेति । अकृत्रिमो
40970 नित्यनिरतिशय आनन्दः प्राप्यत इति शेषः । तर्हि देहादयोऽपि शोध्यन्तां ततोऽपि
40971 पुरुषार्थः किं न लभ्यते तत्राह - किमिति । वृथा तच्छोध इत्यर्थः ॥ ४९ ॥
40972
40973 यद्विद्यते शोध्यते तद्बोधः के च स्वपादपाः ।
40974 देहाद्यविद्या सत्या चेद्युक्त एतां प्रति ग्रहः ॥ ५० ॥
40975
40976 किंचासत्त्वादपि देहादेर्न शोधनार्हतेत्याह - यदिति । तद्बोधः फलवानिति

शेषः। खे कल्पिताः पादपाः के शोध्यमाना दृष्टा इत्यर्थः। एतामविद्यां
प्रति ग्रहः शोधनाग्रहो युक्त उचितः स्यादित्यर्थः॥ ५०॥

असत्यविनिविष्टानां देहवाचितया त्विह।
ये नामोपदिशन्त्यज्ञाः किंचित्ते पुरुषैडकाः॥ ५१॥

अत एव ह्यात्मादिशब्दा देहे प्रयुक्ता अपि श्रुतौ न देहवाचिनः
श्रुतेरसत्यार्थनिष्ठत्वायोगात्। ये त्वसत्यविनिविष्टा
देहात्मदृढनिश्चयाश्चार्वाकपामरादयो देहवाचिन एवात्मादिशब्दा इति
मन्यन्ते तेषां ये किंचिदपि प्रामणिकं वस्तूपदिशन्ति तेऽज्ञाः पुरुषैडकाः
पुंस्पशव एव। आत्मादिसत्यास्तुनिष्ठशब्दानां देहाद्यसत्यवाचितया
विपरीतव्युत्पन्नान्प्रति सत्यार्थबोधनाशक्तेरित्यर्थः॥ ५१॥

यथैतद्भावयेत्स्वान्तं तथैव भवति क्षणात्।
दृष्टान्तोऽत्रैन्दवाहल्याकृत्रिमेन्द्रादिनिश्चयाः॥ ५२॥

कथं तर्ह्यमूर्तस्य चित्तस्य मूर्तदेहभावः संपन्न इति
चेद्भावनयैवेत्याशयेनाह - यथैतदिति॥ ५२॥

यद्यद्यथा स्फुरति सुप्रतिभात्मचित्तं
तत्तत्तथा भवति देहतयोदितात्म।
देहोऽयमस्ति न न चाहमिति स्वरूपं
विज्ञानमेकमवगम्य निरिच्छमास्स्व॥ ५३॥

उक्तमेवार्थं स्फुटं वदन्नुपसंहरति - यद्यदिति। अयं देहो नास्ति।
अहमिति प्रसिद्धोऽहंकारश्च नास्ति। अत एकरसं विज्ञानं
स्वस्वरूपमवगम्य निरिच्छं यथा स्यात्तथा आस्स्व तिष्ठेत्यर्थः॥ ५३॥

देहोऽयमेष च किलायमिति स्वभावा-
द्देहोऽयमेतदखिलं तत एति नाशम्।
यक्षादिकल्पनवशाद्भयमेति बालो
निर्यक्षदेहगत एव कयापि युक्त्या॥ ५४॥

देहो मानुषादिरयं प्रत्यक्ष एष देहभोग्यः प्रपञ्चोऽयमिति
स्वभावात्स्वकल्पनावशादयमात्मा देह एव भवति एतदखिलं भोग्यं च
भवति ततस्तद्भावाद्देहनाशमनु नाशमेति। यथाऽयं बालः कयापि युक्त्या
निर्यक्षदेहगत एव सन्नपि
यक्षतद्भीषणत्वग्रसितृत्वादिकल्पनवशाद्यक्षेण ग्रस्तो यक्षदेहगतः
स्वप्नादौ भवति तद्वदित्यर्थः॥ ५४॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे
जीवावतरणक्रमोपदेशो नामैकनवतितमः सर्गः॥ ९१॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
जीवावतरणक्रमोपदेशो नामैकनवतितमः सर्गः॥ ९१॥

प्। ३४८) २०९

द्विनवतितमः सर्गः ९२

श्रीवसिष्ठ उवाच।

41029
41030 इत्युक्तवान्स भगवान्मया कमलसंभवः।
41031 रघूद्वह पुनः पृष्टो वाक्यमाक्षिप्य भूतपः॥ १॥
41032
41033 इहाक्षिप्य मनःशक्तिरमोघा स्थाप्यते दृढा।
41034 दार्ढ्ये पुरुषयत्नस्य यथेष्टारोपणक्षमा॥ १॥
41035
41036 प्राक्तनं वाक्यमनुपपत्त्युद्भावनेनाक्षिप्य पुनर्मया पृष्टः॥ १॥
41037
41038 त्वयैव भगवन्प्रोक्ताः शापमन्त्रादिशक्तयः।
41039 अमोघा इति ता एव कथं मोघाः कृताः पुनः॥ २॥
41040
41041 आक्षेपप्रकारमेव दर्शयति - त्वयैवेति। अतस्त्वदुक्तिस्त्वदुक्तिविरुद्धेत्यर्थः
41042 ॥ २॥
41043
41044 शापेन मन्त्रवीर्येण मनोबुद्धीन्द्रियाण्यपि।
41045 सर्वाण्येव विमूढानि दृष्टानि किल जन्तुषु॥ ३॥
41046
41047 एवं लोकदृष्टविरोधोऽपीत्याह - शापेनेति। तथाच नहुषस्य
41048 शापादजगरत्वं प्राप्तस्य मनोमोहात्स्ववंशजस्य भीमस्य ग्रसने
41049 प्रवृत्तिः। तथैव धार्मिकस्यापि सौदासस्य शापाद्राक्षसतां गतस्य
41050 बुद्धिमोहाद्ब्रह्मवधादौ प्रवृत्तिः। गन्धर्वराजस्य च
41051 शापाद्धृतराष्ट्रजन्मनि चक्षुरिन्द्रियनाशः। एवमन्यत्रापि दृष्ट
41052 इत्यर्थः॥ ३॥
41053
41054 यथैतौ पवनस्पन्दौ यथा स्नेहतिलौ यथा।
41055 अभिन्नौ तद्वदेवैतौ मनोदेहौ स एव तत्॥ ४॥
41056
41057 एवं कार्यविरोधोऽप्यस्तीत्याशयेनाह - यथेत्यादिना। तृतीययथाशब्दो
41058 वह्न्यौष्ण्यादिदृष्टान्तान्तरसंग्रहार्थः। कार्यकारणयोर्भेदानिरूपणात्।
41059 तथाच मनसो वरशापाद्यनाक्रमणे तदभिन्ने देहेऽपि तदनाक्रमणं
41060 स्यादित्याद्याशयः॥ ४॥
41061
41062 अथ नास्तीह वा देहः केवलं चेतसैव सः।
41063 मुधानुभूयते स्वप्नमृगतृष्णाद्विचन्द्रवत्॥ ५॥
41064
41065 ननु देहस्य मनोन्यूनसत्ताकत्वादेव शापाद्याक्रमणेऽपि न
41066 मनसस्तत्प्रसक्तिरिति विवर्तवादेन परिहारमाशङ्कते - अथेति॥ ५॥
41067
41068 एकनाशे द्वयोरेव नाशोऽत्राभ्युपपद्यते।
41069 अवश्यं भवितुं मनोनाशे देहपरिक्षयः॥ ६॥
41070
41071 तत्रापि दोषान्तरमाह - एकनाशे इति। एकनाशे द्वयोर्नाशो
41072 भवितुमवश्यमुपपद्यते। यथा मनोनाशे देहपरिक्षयो दृष्टः एवं
41073 देहानाशे मनःपरिक्षयोऽपि संभावित इति न देहस्य मनोन्यूनसत्ताकता किंतु
41074 समसत्ताकता। प्रत्युत चक्षुराद्यगम्यत्वे
41075 सत्यपरोक्षविषयत्वात्स्वप्नादिवन्मनस एव देहन्यूनसत्ताकतेति रज्जुनाशे
41076 सर्पस्येव देहनाशेन मनोवस्थानसंभव इति भावः॥ ६॥
41077
41078 मनः शापादिभिर्दोषैः कथं नाक्रम्यते प्रभो।
41079 कथमाक्रम्यते वापि ब्रूहि मे परमेश्वर॥ ७॥
41080

41081 ब्रह्मोवाच।
41082
41083 न तदस्तिजगत्कोशे शुभकर्मानुपातिना।
41084 यत्पौरुषेण शुद्धेन न सप्तासाद्यते जनैः॥ ८॥
41085
41086 तत्र प्रथमं विरोधं परिहर्तुं वरशापप्राबल्योक्तेरौत्सर्गिकत्वं
41087 बहुतरदृष्टानुसारादवश्यमभ्युपेयमित्युपपादयितुं
41088 वरशापयोरप्युपजीव्यं कर्मोपोद्बलितपौरुषप्राबल्यं तावत्स्मारयति -
41089 न तदिति॥ ८॥
41090
41091 आब्रह्म स्थावरान्तं च सर्वदा सर्वजातयः।
41092 सर्व एव जगत्यस्मिन्द्विशरीराः शरीरिणः॥ ९॥
41093
41094 स्थूलस्यैवोपघातो दृष्टो न सूक्ष्मस्येति लोकदृष्टानुसारं स्वोक्तेर्वक्तुं
41095 भिन्नस्वभावौ द्वौ देहौ दर्शयति - आब्रह्मेत्यादिना॥ ९॥
41096
41097 एकं मनःशरीरं तु क्षिप्रकारि सदा चलम्।
41098 अकिंचित्करमन्यत्तु शरीरं मांसनिर्मितम्॥ १०॥
41099
41100 तत्र मांसमयः कायः सर्वस्यैव च संगतः।
41101 सर्वैराक्रम्यते शापैस्तथा विद्यादिसंचयैः॥ ११॥
41102
41103 विद्या अभिचारकृत्यादयः। आदिपदाच्छस्त्रविषादयो गृह्यन्ते तेषां
41104 संचयैः समूहैः॥ ११॥
41105
41106 मूकप्रायो ह्यशक्तोऽसौ दीनः क्षणविनश्वरः।
41107 पद्मपत्राम्बुचपलो दैवादिविवशस्थितिः॥ १२॥
41108
41109 दैवादीत्यादिपदाद्राजपित्रादिसंग्रहः॥ १२॥
41110
41111 मनोनाम द्वितीयोऽयं कायः कायवतामिह।
41112 स आयत्तोऽपि नायत्तो भूतानां भुवनत्रये॥ १३॥
41113
41114 आयत्तः स्वाधीनः। नायत्तोऽस्वाधीनः॥ १३॥
41115
41116 पौरुषं स्वमवष्टभ्य धैर्यमालम्ब्य शाश्वतम्।
41117 यदि तिष्ठत्यगम्योऽसौ दुःखानां तदनिन्दितः॥ १४॥
41118
41119 तत्र स्वाधीनतां हेतूक्त्योपपादयति - पौरुषमिति। अगम्योऽनाक्रमणीयः।
41120 तैर्दुःखहेतुभिरनिन्दितः अदूषितः॥ १४॥
41121
41122 यथा यथासौ यतते मनोदेहो हि देहिनाम्।
41123 तथा तथासौ भवति स्वनिश्चयफलैकभाक्॥ १५॥
41124
41125 दुःखानुपघात इव सुखोपचयोऽप्यस्य वर्धत इत्याह - यथेति॥ १५॥
41126
41127 सफलो मांसदेहस्य न कश्चित्पौरुषक्रमः।
41128 मनोदेहस्य सफलं सर्वमेव स्वचेष्टितम्॥ १६॥
41129
41130 स्थूलदेहस्य तु नायं क्रम इत्याह - सफल इति॥ १६॥
41131
41132 पवित्रमनुसंधानं चेतः स्मरति सर्वदा।

निष्फलास्तत्र शापाद्याः शिलायामिव सायकाः ॥ १७ ॥

विषयदोषैर्हि मनो दुष्येन्नान्यदोषेणेत्याशयेनाह - पवित्रमिति । तथाच न
लोकदृष्टविरोधशङ्कावसर इति भावः ॥ १७ ॥

पतत्वम्भसि वह्नौ वा कर्दमे वा शरीरकम् ।
मनो यदनुसंधत्ते तदेवाप्नोति तत्क्षणात् ॥ १८ ॥

कार्यविरोधमपि परिहरति - पतत्विति ॥ १८ ॥

पुरुषातिशयः सर्वः सर्वभावोपमर्दने ।
ददात्यविघ्नेन फलं मनो हि मनसो मुने ॥ १९ ॥

सर्वेषां देहादिभावानामुपमर्दनेऽपि पुरुषातिशयः प्रयत्नः सर्वः
समृद्धः सन्नविघ्नेन फलं ददाति । तद्यद्ददाति तन्मन एव मनसः
फलं ददाति । पौरुषस्याऽपि मनोभेदत्वादित्यर्थः ॥ १९ ॥

पौरुषेण बलेनान्तश्चित्तं कृत्वा प्रियामयम् ।
कृत्रिमेन्द्रेण दुःखार्तिर्न दृष्टा सा मनागपि ॥ २० ॥

यत्र विषयदोषेऽपि मनोदार्ढ्ये दुःखादर्शनं तत्र पवित्रे विषये किं
वाच्यमित्याशयेनेन्द्रोपाख्यानादि स्मारयति - पौरुषेणेति ॥ २० ॥

प। ३४९) २०९

पौरुषेण मनः कृत्वा नीरागं विगतज्वरम् ।
माण्डव्येन जिताः क्लेशाःशूलप्रान्तेऽपि तिष्ठता ॥ २१ ॥

माण्डव्यस्य कथा महाभारतादौ प्रसिद्धा ॥ २१ ॥

अन्धकूपस्थितेनापि मानसैर्यज्ञसंचयैः ।
ऋषिणा दीर्घतपसा संप्राप्तं वैबुधं पदम् ॥ २२ ॥

दीर्घतपा अपि यष्टुकामो यागोपकरणोपार्जनाय निर्गतो दैवादन्धकूपे
निपतितस्तत्र यागकालातिक्रमे प्रसक्ते मनसैवेजे । तेनेन्द्रः प्रसन्नस्तं
कूपादुद्धृत्य स्वपदं निनायेति भारतादौ प्रसिद्धम् ॥ २२ ॥

इन्दुपुत्रैर्नरैरेव पुरुषाध्यवसायतः ।
ध्यानेन ब्रह्मता प्राप्ता सा मयापि न खण्ड्यते ॥ २३ ॥

अन्येऽपि सावधाना ये धीराः सुरमहर्षयः ।
चित्तात्स्वमनुसंधानं न त्यजन्ति मनागपि ॥ २४ ॥

अनुसंधानमुपासनं ज्ञानं वा ॥ २४ ॥

आधयो व्याधयश्चैव शापाः पापदृशस्तथा ।
न खण्डयन्ति तच्चित्तं पद्मघाताः शिलामिव ॥ २५ ॥

पापदृशो रक्षःपिशाचादयः । तच्चित्तं ध्येयार्थैकाग्रचित्तं न
खण्डयन्ति न परिभवन्ति । पद्मेन घातास्ताडनानि ॥ २५ ॥

ये चापि खण्डिताः केचिच्छापाद्यैराधिसायकैः ।

41185 स्वविवेकाक्षमं तेषां मनो मन्ये विपौरुषम् ॥ २६ ॥
41186
41187 ये सौदासनाहुषविश्वामित्रादयः । आदिपदात्कामक्रोद्धाभिमानादिसंग्रहः
41188 । तेषां मनो विपौरुषमदृढपौरुषमित्युपासनायां स्वविवेकाक्षममिति
41189 ज्ञाने चासमर्थमिति तर्कयामीत्यर्थः ॥ २६ ॥
41190
41191 न कदाचन संसारे सावधानमना मनाक् ।
41192 स्वप्नेऽपि कश्चिद्दृश्ये वा दोषजालैः खिलीकृतः ॥ २७ ॥
41193
41194 विवेकपौरुषदृढे तु मनसि नाभिलषितक्षतिरित्याह - न कदाचिदिति ।
41195 दृश्ये जाग्रति वा ॥ २७ ॥
41196
41197 मनसैव मनस्तस्मात्पौरुषेण पुमानिह ।
41198 स्वकमेव स्वकेनैव योजयेत्पावने पथि ॥ २८ ॥
41199
41200 प्रतिभातं यदेवास्य यथाभूतं भवत्यलम् ।
41201 क्षणादेव मनः पीनं बालवेतालवन्मुने ॥ २९ ॥
41202
41203 ईषत्प्रतिभातमपि मनसि चिरनिरूढं पीनं सद्यथाभूतं
41204 सत्यमिवोपभोगक्षमं भवतीत्यर्थः ॥ २९ ॥
41205
41206 प्रतिभासस्यानुपदं प्राक्तनीं स्थितिमुज्झति ।
41207 कुलालकर्मानुपदं घटो मृत्पिण्डतामिव ॥ ३० ॥
41208
41209 ननु पूर्वतनमनुष्यादिभावप्रतिभादार्ढ्यादैन्दवादेस्तत्स्थितिरपि कुतो
41210 नाभूत्तत्राह - प्रतिभासस्येति । उत्तरदृढवासनया
41211 पूर्ववासनोपमृद्यत इति भावः ॥ ३० ॥
41212
41213 प्रतिभासार्थतामेति क्षणादेव मनो मुने ।
41214 स्पन्दमात्रात्मकं वारि यथा तुङ्गतरङ्गताम् ॥ ३१ ॥
41215
41216 पूर्ववासनोपमर्दनोपक्षीणस्योपासनस्य कथं कार्यान्तरक्षमता तत्राह
41217 - प्रतिभासेति । विरोधिभञ्जनपर्यन्तमेव स्वकार्ये विलम्बः तदुत्तरं तु
41218 क्षणादेव निष्प्रत्यूहत्वादौपासनिकप्रतिभासगोचरोपास्यार्थतामेति
41219 प्राप्नोत्येवेति नोपक्षय इति भावः ॥ ३१ ॥
41220
41221 अनुसंधानमात्रेण सूर्यबिम्बेऽपि यामिनीम् ।
41222 मनः पश्यत्यशुद्धाक्षश्चन्द्रबिम्बे द्वितामिव ॥ ३२ ॥
41223
41224 ननु तथापि प्रलयकाले कथं तद्विरुद्धसर्गकल्पनं तेषां तत्राह -
41225 अनुसंधानमात्रेणेति । न तदीयसर्गे त्वदीयसर्गस्थं किंचिदनुकूलं
41226 प्रतिकूलं वा तत्र तदीयानुसंधानमात्रस्यापेक्षणादिति न प्रलयकालेऽपि
41227 तद्विरोध इति भावः । अशुद्धाक्षोऽङ्गुल्यवष्टब्धदृष्टिः ॥ ३२ ॥
41228
41229 यत्पश्यति तदेवाशु फलीभूतमिदं मनः ।
41230 सह हर्षविषादाभ्यां भुङ्क्ते तस्मात्तदेव तत् ॥ ३३ ॥
41231
41232 स्रष्टृत्ववत्तद्भोक्तृत्वमपि मनस एवेत्याह - यदिति । तदेव तत् यत्कर्तृ
41233 तदेव भोक्तृ इत्यर्थः ॥ ३३ ॥
41234
41235 प्रतिभानुपदं चेतश्चन्द्रेऽप्यग्निशिखाशतम् ।
41236 दृष्ट्वा दाहमवाप्नोति दग्धं च परितप्यते ॥ ३४ ॥

41237
41238 उक्तमर्थमुदाहरणेन दर्शयति - प्रतिभेति। प्रतिभा अनुसंधानं
41239 भोजकादृष्टोद्बोधितसंस्कारस्तदनुपदं तदनुसारि। तथाच विरहिणां
41240 प्रसिद्धमित्यर्थः॥ ३४॥
41241
41242 प्रतिभानुपदं चेतः क्षारेऽपि हि रसायनम्।
41243 दृष्ट्वा पीत्वा परां तृप्तिं याति वल्गति नृत्यति॥ ३५॥
41244
41245 क्षारे ऊषादौ। क्षीर इति पाठे जले। रसायनं मधुरादिरसभेदान्। तथा
41246 चोष्ट्रच्छागादयोऽर्कनिम्बादिपर्णान्यपि मधुरीकृत्य भक्षयन्तीति दृश्यत
41247 इति भावः॥ ३५॥
41248
41249 प्रतिभानुपदं चेतो व्योमन्यपि महावनम्।
41250 दृष्ट्वा लुनाति च पुनरारोपयत्यलम्॥ ३६॥
41251
41252 इत्थं यदेव परिकल्पयतीन्द्रजालं
41253 क्षिप्रं तदेव परिपश्यति तात चेतः।
41254 नासज्जगन्न च सदित्यवगम्य नूनं
41255 लूनां दृशं विविधभेदवतीं जहीहि॥ ३७॥
41256
41257 उक्तमुपसंहरति - इत्थमिति। लूनां परिच्छिन्नां दृशं दृष्टिं जहीहि
41258 त्यज॥ ३७॥
41259
41260 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे
41261 मनोमाहात्म्यवर्णनं नाम द्विनवतितमः सर्गः॥ ९२॥
41262
41263 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
41264 मनोमाहात्म्यवर्णनं नाम द्विनवतितमः सर्गः॥ ९२॥
41265
41266
41267 त्रिनवतितमः सर्गः ९३
41268
41269 श्रीवसिष्ठ उवाच।
41270
41271 इति मे भगवता पूर्वमुक्तं तदेतदद्य तुभ्यं कथितम्॥ १॥
41272
41273 मनोऽत्र ब्रह्मणो जज्ञे ततोऽभूत्तैजसो विधिः।
41274 ततो मोहादहंकारस्ततो विश्वमितीर्यते॥ १॥
41275
41276 मन उपक्रममेव सर्गक्रमं प्रागुक्तं
41277 प्रपञ्चयैषुर्विधिसंवादमुपसंहरति - इतीति। भगवता परमेष्ठीना॥
41278 १॥
41279
41280 तस्मादनाख्यानाद्ब्रह्मणः सर्वतः सर्वमनाख्यानमुत्पद्यते
41281 स्वयमेव तद्घनतां प्राप्य मनः संपद्यते॥ २॥
41282
41283 अनाख्यानादव्याकृतनामरूपात्। अनाख्यानं
41284 सूक्ष्मत्वान्नामसंबन्धानर्हं सर्वं प्रपञ्चरूअप्ं चलनात्मकं
41285 निर्विकल्पकज्ञानप्रकाशितमुत्पद्यते। तत्कालेन स्वयमेव
41286 संकल्पविकल्पनात्मकमननसामर्थ्योद्भवेन घनतां प्राप्य॥ २॥
41287
41288 प। ३५०) २१०

41289

41290 तन्मनस्तन्मात्रकल्पनपूर्वकसन्निवेशं भवति ततस्तैजसः पुरुषः
41291 संपद्यते सोऽयं ब्रह्मेत्यात्मनि नाम कृतवान् ॥ ३ ॥
41292

41293 तन्मात्राणि सूक्ष्मभूतानि तत्कल्पनापूर्वकं संनिवेशं स्वाप्नशरीरमिव
41294 वासनामयपुरुषाकारम् । ततः संनिवेशोपाधेस्तदुपहितः पुरुष आत्मा
41295 तैजसः तेजःप्रधानलिङ्गसमष्ट्युपाधित्वात् । सोऽयं ब्रह्मा परमेष्ठी ॥ ३ ॥
41296

41297 तेन राम योऽयं परमेष्ठी तन्मनस्तत्त्वं विद्धि ॥ ४ ॥
41298

41299 तस्य जगत्सर्गसंकल्पकता मनोरूपत्वादेवेत्याह - तेनेति ॥ ४ ॥
41300

41301 समनस्तत्त्वाकारो भगवान्ब्रह्मा संकल्पमयत्वाद्यदेव संकल्पयति
41302 तदेव पश्यति ॥ ५ ॥
41303

41304 ततस्तेनेयमविद्या परिकल्पिता अनात्मन्यात्माभिमानमयीति तेन ब्रह्मणा
41305 गिरितृणजलधिमयमिदं क्रमेण जगत्परिकल्पितम् ॥ ६ ॥
41306

41307 ननु तत्संकल्पाज्जगदुत्पद्यतां जीवानां तदभिमानस्तु कुतस्तत्राह -
41308 ततस्तेनेति । अत्राविद्या अन्यथाग्रहणलक्षणाध्यासरूपा कार्याविद्या । इति अनया
41309 रीत्या ॥ ६ ॥
41310

41311 इत्थं क्रमेण ब्रह्मतत्वादियमागता सृष्टिरन्यत एवागतेयमिति
41312 लक्ष्यते ॥ ७ ॥
41313

41314 ब्रह्मतत्त्वाच्चिदेकरसादागतापि अन्यतो जडात्प्रधानपरमाण्वादेः
41315 सकाशादागतेति तार्किकैर्लक्ष्यते ॥ ७ ॥
41316

41317 तस्मात्सर्वपदार्थानां त्रैलोक्योदरवर्तिनाम् ।
41318 उत्पत्तिर्ब्रह्मणो राम तरङ्गाणामिवार्णवात् ॥ ८ ॥
41319

41320 एकैकस्यानेकोपादानकल्पनागौरवान्न परमाणुकारणतावादो युक्तः । विना
41321 कर्तारं जडस्य जगद्वैचित्र्यरचनानुपपत्तेरसङ्गोदासीनस्य
41322 कर्तृत्वानुपपत्तेश्च न प्रधानकारणतावादो युक्तः । चितो
41323 जडाकारपरिणामायोगान्न विज्ञानविपरिणामवादो युक्तः । शून्यस्य च क्वापि
41324 कारणत्वादर्शनान्न तत्कारणतावादोऽपि युक्तः । सर्वेष्वपि कल्पेषु
41325 प्रमाणाभावाच्च नान्यत इयमागता सृष्टिरिति निश्चिते
41326 श्रुतिप्रामाण्याल्लाघवाच्चानिर्वचनीयमायाशक्तिकब्रह्मविवर्तवाद एव
41327 परिशिष्ट इत्याशयेनोपसंहरति - तस्मादिति ॥ ८ ॥
41328

41329 य एवमनुत्पन्ने जगति या ब्रह्मणश्चिन्मनोरूपिणी साहंकारे परिकल्प्य
41330 ब्रह्म ब्रह्मतामेति ॥ ९ ॥
41331

41332 य उत्पत्तिप्रकार एवमनया रीत्या । तामेवाह - अनुत्पन्ने इत्यादिना ।
41333 विवर्तत्वादेव परमार्थतोऽनुपन्ने जगति अहंकारसमष्ट्युपाधौ ब्रह्म
41334 प्रविष्टमिव परिकल्प्य ब्रह्मतां परमेष्ठितामेति ॥ ९ ॥
41335

41336 यास्त्वन्याश्चिच्छक्तयः सर्वशक्तेरभिन्ना एव कल्प्यन्ते ॥ १० ॥
41337

41338 अन्या व्यष्ट्यहंकारोपहिताश्चिच्छक्तयश्चिदाभासाः ॥ १० ॥
41339

41340 जगति स्फारतां नीते पितामहरूपेण मनसा समुल्लसन्ति ॥ ११ ॥

41341
41342 ताः पितामहरूपेण मनसा समष्टिमनोभावेन प्रथमं समुल्लसन्तीत्यर्थः
41343 ॥ ११ ॥
41344
41345 एते सहस्रशोऽपि परिवर्तमानजीवा उच्यन्ते ॥ १२ ॥
41346
41347 तेऽभ्युत्थिता एव चिन्नभसो नभसि तन्मात्रैरावलिता
41348 गगनपवनान्तर्वर्तिनश्चतुर्दशविधा ये भूतजातमध्यतयाभ्यासे
41349 तिष्ठन्ति तस्या एव प्राणशक्तिद्वारेण प्रविश्य शरीरं स्थावरं
41350 जंगमं वापि बीजतां गच्छन्ति ॥ १३ ॥
41351
41352 ते हि चिन्नभस एव समुत्थिता नभसि मायाकाशे
41353 तन्मात्रैर्भूतमात्रोपाधिभिरावलिताः सन्तो
41354 गगनस्थपवनस्यावहोद्वहादिभेदभिन्नस्य वातस्कन्धभेदस्य चान्तर्वर्तिनो
41355 ये चतुर्दशविधा लोकास्तेषु यादृशभूतजातमध्यवर्तितया
41356 यादृशवासनाकर्माभ्यासे ये जीवास्तिष्ठन्ति तस्या एव भूतजातेः
41357 प्राणशक्तिद्वारेण शरीरं स्थावरं जंगमं वा प्रविश्य रेतोरक्तादिरूपां
41358 बीजतां गच्छन्ति ॥ १३ ॥
41359
41360 तदनु योनितो जगति जायन्ते तदनु
41361 काकतालीययोगेनोत्पन्नवासनाप्रवाहानुरूपकर्मफलभागिनो भवन्ति ॥
41362 १४ ॥
41363
41364 ततः कर्मरज्जुभिर्वासनावलिताभिर्बद्धशरीरा भ्रमन्तः प्रोत्पतन्ति
41365 च ॥ १५ ॥
41366
41367 ततः साध्वसाधुवासनासंवलिताभिः पुण्यापुण्यकर्मरज्जुभिर्बद्धं
41368 शरीरं लिङ्गशरीरं येषां तथाविधाः सन्तः प्रोत्पतन्त्युत्तमलोकान्निपतन्ति
41369 निरयेषु वा ॥ १५ ॥
41370
41371 इच्छैवैता भूतजातयः ॥ १६ ॥
41372
41373 कर्मतद्वासनयोश्च कामराग एव बीजमिति तन्मया एव जीवा इत्याह -
41374 इच्छैवैता इति । तथाच श्रुतिः काममय एवायं पुरुषः ॥ १६ ॥
41375
41376 काश्चिज्जनसहस्रान्ताः पतन्ति वनपर्णवत् ।
41377 कर्मवात्या परिभ्रान्ता लुठन्ति गिरिकुक्षिषु ॥ १७ ॥
41378
41379 कामानुसारिजन्मपरम्परामेव मोक्षावसानां चतुर्धा पद्यैः प्रपञ्चयति
41380 - काश्चिदित्यादिना । काश्चिद्भूतजातयस्तज्जीवाजननं जनः । जना जन्मानि
41381 तत्सहस्राण्यन्तोऽवधिस्तत्त्वबोधस्य यासां तथाविधाः सन्तः संसारे पतन्ति
41382 ततो मुच्यन्ते इत्यर्थः । वनपर्णवदित्यादिपूर्वोत्तरान्वयि ॥ १७ ॥
41383
41384 अप्रमेयभवाः काश्चिच्चित्सत्ताज्ञानमोहिताः ।
41385 चिरजाता भवन्तीह बहुकल्पशतान्यपि ॥ १८ ॥
41386
41387 काश्चित्तु चित्सत्ताया अज्ञानेन मोहिता अत एवाप्रमेया गणनाद्यपरिच्छेद्या
41388 भवा जन्मानि यासां तथाविधाश्चिरजाताः सत्य इह संसारे
41389 बहुकल्पशतान्यपि भवन्ति ॥ १८ ॥
41390
41391 काश्चित्कतिपयातीता मनोरमभवान्तराः ।
41392 विहरन्ति जगत्यस्मिञ्शुभकर्मपरायणाः ॥ १९ ॥

कतिपयान्यतीतान्यमनोरमाणि भवान्तराणि जन्मानि यासां तथाविधाः सत्यः
सांप्रतं शुभकर्मपरायणा विहरन्ति ता अल्पैरेव जन्मभिर्भोक्ष्यन्त इति
शेषः ॥ १९ ॥

प्। ३५१) २१०

काश्चिद्विज्ञातविज्ञानाः परमेव पदं गताः ।
वातोद्भूताः पयोमध्यं सामुद्रा इव बिन्दवः ॥ २० ॥

काश्चित्त्वितः पूर्वमेव मुक्ता इत्याह - काश्चिदिति । वातोद्भूताः सामुद्रा
बिन्दवः पयोमध्यं समुद्रमिव प्रविशन्ति ॥ २० ॥

उत्पत्तिः सर्वजीवानामितीह ब्रह्मणः पदात् ।
आविर्भावतिरोभावभङ्गुरा भवभाविनी ॥ २१ ॥

उक्तमुपसंहरति - उत्पत्तिरित्यादिना ॥ २१ ॥

वासनाविषवैषम्यवैधुर्यज्वरधारिणी ।
अनन्तसंकटानर्थकार्यसत्कारकारिणी ॥ २२ ॥

नानादिग्देशकालान्तशैलकन्दरचारिणी [अन्तशब्देन मरणोत्तरं
गन्तव्या लोका उपलक्ष्यन्ते तेषु च] ।
रचितोत्तमवैचित्र्यविहिताऽसंभ्रमाऽसती ॥ २३ ॥

नानादिक्षु नानादेशेषु नानाकालेषु नानाशैलकन्दरेषु च चारिणी
कर्मफलभोगसंचारवती । रचितैरुत्तमैर्वैचित्र्यैर्विहिता आसंभ्रमाः
सर्वतोभ्रमा यया । परमार्थतस्त्वसती ॥ २३ ॥

एषा जगज्जाङ्गलजीर्णवल्ली
सम्यक्समालोककुठारकृत्ता ।
वल्लीव विक्षुब्धमनःशरीरा
भूयो न संरोहति रामभद्र ॥ २४ ॥

इत्थं संसारवल्लीं प्रपञ्च्य तदुच्छेदोपायमाह - एषेती । विक्षुब्धं
विक्षेपबहुलं मन एव शरीरं स्वरूपं यस्यास्तथाविधा एषा जगल्लक्षणा
मोहजाङ्गलस्य जीर्णवल्ली रजल्लता
सम्यक्समालोकस्तत्त्वसाक्षात्कारस्तल्लक्षणेन कुठारेण कृत्ता छिन्ना सती ।
वल्लीवेति व्यतिरेकदृष्टान्तः । भूयो न संरोहति मूलाज्ञानोच्छेदादिदिति
भावः ॥ २४ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे
उत्पत्तिदर्शनं नाम त्रिनवतितमः सर्गः ॥ ९३ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे उत्पत्तिदर्शनं
नाम त्रिनवतितमः सर्गः ॥ ९३ ॥

## चतुर्नवतितमः सर्गः ९४

श्रीवसिष्ठ उवाच ।

41445 उत्तमाधममध्यानां पदार्थानामितस्ततः।
41446 उत्पत्तीनां विभागोऽयं शृणु वक्ष्यामि राघव॥१॥
41447
41448 इह द्वादशधा भिन्ना वर्ण्यन्ते जीवजातयः।
41449 उपाधिगुणवैचित्र्याच्चिराचिरविमुक्तिगाः॥१॥
41450
41451 पूर्वोक्ते जीवानां चिराचिरमुक्तिविभागे रामस्य विशेषजिज्ञासां
41452 लिङ्गैरुपलक्ष्य तद्विस्तरेण वक्तुं वसिष्ठ उवाच - उत्तमेत्यादिना।
41453 सात्त्विकतामसराजसभेदेनोत्तमाधममध्यमानां पदार्थानां
41454 जीवोपाधीनामितस्ततो भुवनभेदेषु या उत्पत्तयः प्राक्कथितास्तासामयं
41455 वक्ष्यमाणो विभागोऽस्ति तं वक्ष्यामि शृण्वित्यर्थः॥१॥
41456
41457 इदंप्रथमतोत्पन्नो योऽस्मिन्नेव हि जन्मनि।
41458 इदंप्रथमतानाम्नी शुभाभ्याससमुद्भवा॥२॥
41459
41460 इदंप्रथमता १ गुणपीवरी २ ससत्त्वा ३ अधमसत्त्वा ४ अत्यन्ततामसी ५ राजसी ६
41461 राजससात्त्विकी ७ राजसराजसी ८ राजसतामसी ९ राजसात्यन्ततामसी १० तामसी ११
41462 तामससत्त्वा १२ तमोराजसी १३ अत्यन्ततामसी १४ इति वक्ष्यमाणभेदेषु
41463 अन्त्ययोर्भेदयोः पञ्चमनवमयोरन्तर्भावाद्द्वादश भेदाः परिशिष्यन्ते
41464 तेष्वाद्यां दर्शयति - इदंप्रथमतोत्पन्न इति। यो जीवः पूर्वकल्पे
41465 चरमजीवजन्मनि शमदमादिसर्वसाधनगुणसंपत्तावपि
41466 श्रवणाद्यलाभाद्बलवत्प्रतिबन्धाद्वा अनुत्पन्नज्ञानोऽस्मिन् कल्पे
41467 इदंप्रथमतया जन्मन्येव शमादिसर्वगुणसंपन्नो ज्ञानयोग्य
41468 उत्पन्नस्तस्य सा जीवजातिरिदंप्रथमतानाम्नीत्यर्थः।
41469 प्राक्कल्पीयशुभाभ्याससमुद्भवा हि सा। तस्मिन्नेव जन्मनि
41470 मुक्तिभागित्यर्थः॥२॥
41471
41472 शुभलोकाश्रया सा च शुभकार्यानुबन्धिनी।
41473 सा चेद्विचित्रसंसारवासनाव्यवहारिणी॥३॥
41474
41475 सैव चेत्प्राक्तनवैराग्यमान्द्यच्छुभलोकेच्छाकृतोपासनकर्मादिसंवलिता
41476 अत एव विचित्रसंसारवासनया भोगव्यवहारिणी भोगैर्वासनाक्षये
41477 कतिपयैर्दशपञ्चभिरेव भवैर्जन्मभिर्मोक्षं प्रापयतीति शेषः। इति हेतोः
41478 सा शान्तिरागाद्युभयगुणोपचितत्वाद्गुणपीवरीत्युक्तेत्यर्थः॥३॥
41479
41480 भवैः कतिपयैर्मोक्षमित्युक्ता गुणपीवरी।
41481 तादृक्फलप्रदानैककार्याकार्यानुमानदा॥४॥
41482
41483 तृतीयामाह - तादृगिति। तादृक्शब्दो वीप्सितव्यः। तादृशानि
41484 तादृशानि यानि सुखदुःखफलानि तत्प्रदानलक्षणैरेकैर्मुख्यैर्लिङ्गैः
41485 प्राक्कल्पीययोः कार्याकार्ययोः पुण्यपापयोरनुमानदा अनुमापयित्री सापि
41486 क्रमात्सत्त्वोपचये शतावधिजन्मभिर्मोक्षभागित्यर्थाद्गम्यते॥४॥
41487
41488 तेन राम ससत्त्वेति प्रोच्यते सा कृतात्मभिः।
41489 अथ चेच्चित्रसंसारवासनाव्यवहारिणी॥५॥
41490
41491 चतुर्थीमाह - अथेति॥५॥
41492
41493 अत्यन्तकलुषा जन्मसहस्रैर्ज्ञानभागिनी।
41494 तादृक्फलप्रदानैकधर्माधर्मानुमानदा॥६॥
41495
41496 अत्यन्तकलुषा प्राक्तनकल्पसंचितबहुदुष्कर्मदुर्वासनामालिन्यवती।

41497 तादृगित्यादि प्राग्वत् ॥ ६ ॥
41498
41499 असावधमसत्त्वेति तेन साधुभिरुच्यते ।
41500 सैव संख्यातिगानन्तजन्मवृन्दादनन्तरम् ॥ ७ ॥
41501
41502 पञ्चमीमाह - सैवेति । सैव तादृग्लक्षणैव सती
41503 अध्यात्मशास्त्रवैमुख्याहस्मिन्कल्पे संदिग्धमोक्षा
41504 कथंचित्संभावितमोक्षा ॥ ७ ॥
41505
41506 प्। ३५२) २११
41507
41508 संदिग्धमोक्षा यदि तत्प्रोच्यतेऽत्यन्ततामसी ।
41509 अनद्यतनजन्मा तु जातिस्तादृशकारिणी ॥ ८ ॥
41510
41511 षष्ठीं लक्षयति - अनद्यतनेति । या तु
41512 जातिरनद्यतनजन्मापूर्वकल्पीयवासनानुसारिणी अत एव तादृशचरित्रकारिणी
41513 द्वित्रिभवान्तरा एतत्कल्पीयद्वित्रिजन्ममध्ये मध्यमा मनुष्यादिरूपा या
41514 उत्पत्तिस्तादृक्कार्या तदनुरूपस्वर्गनरकादिप्रापिका संदिग्धमोहा सा
41515 राजसीत्यर्थः ॥ ८ ॥
41516
41517 योत्पत्तिर्मध्यमा पुंसो राम द्वित्रिभवान्तरा ।
41518 तादृक्कार्या तु सा लोके राजसी राजसत्तम ॥ ९ ॥
41519
41520 अविप्रकृष्टजन्मापि सोच्यते कृतबुद्धिभिः ।
41521 सा हि तन्मृतिमात्रेण मोक्षयोग्या मुमुक्षुभिः ॥ १० ॥
41522
41523 सप्तमीं लक्षयति - अविप्रकृष्टेति । सा यदा
41524 राजसदुःखानुभवप्रयुक्तवैराग्यादिसंपत्त्या अविप्रकृष्टज्ञानजन्मापि
41525 भवति तदा तत्रत्यमृतिमात्रेण मोक्षयोग्या मुमुक्षुभिः प्रोच्यते । सैव
41526 मया तादृक्कार्यलिङ्गकानुमानेन राजससात्त्विकी प्रोक्तेत्यर्थः ॥ १० ॥
41527
41528 तादृक्कार्यानुमानेन प्रोक्ता राजससात्त्विकी ।
41529 सैव चेदितरैरल्पैर्जन्मभिर्मोक्षभागिनी ॥ ११ ॥
41530
41531 अष्टमीं लक्षयति - सैव चेदिति ।
41532 इतरैरक्तमानुषातिरिक्तैरत्यर्यक्षगन्धर्वादिजन्मभिः क्रमाज्ज्ञान *
41533
41534 तत्तादृशी हि सा तज्ज्ञैः प्रोक्ता राजसराजसी ।
41535 सैव जन्मशतैर्मोक्षभागिनी चेच्चिरैषिणी ॥ १२ ॥
41536
41537 नवमीं लक्षयति - सैव जन्मशतैरिति ॥ १२ ॥
41538
41539 त्वदुक्ता तादृगारम्भा सद्धी राजसतामसी ।
41540 सैव संदिग्धमोक्षा चेत्सहस्रैरपि जन्मनाम् ॥ १३ ॥
41541
41542 तादृगारम्भा राजसतामसक्र * *?
41543 पभोजककर्मोपासनद्यारम्भवती । दशमी लक्षयति - सैवेति ॥ १३ ॥
41544
41545 तदुक्ता तादृशारम्भा राजसात्यन्ततामसी ।
41546 भुक्तजन्मसहस्रा तु योत्पत्तिर्ब्रह्मणो नृणाम् ॥ १४ ॥
41547
41548 एकादशीमाह - मुक्तेति । ब्रह्मणो हिरण्यगर्भाद्या उत्पत्तिः

41549 कल्पादावाविर्भावः || १४ ||
41550
41551 चिरमोक्षा हि कथिता तामसी सा महर्षिभिः |
41552 तज्जन्मनैव मोक्षस्य भागिनी चेत्तदुच्यते || १५ ||
41553
41554 चिरमोक्षा कल्पान्तरमोक्षा | द्वादधीमाह - तज्जन्मनैवेति | तज्जन्मना
41555 तामसप्रथमजन्मना | तामसे दानवरक्षःपिशाचादिजन्मनि
41556 सत्त्वोत्कर्षात्प्रह्लादकर्कट्यादीनां ज्ञानं प्रसिद्धमिति भावः || १५ ||
41557
41558 तज्ज्ञैस्तामससत्त्वेति तादृशारम्भशालिनी |
41559 भवैः कतिपयैर्मोक्षभागिनी चेत्तदुच्यते || १६ ||
41560
41561 राजसतामसी प्राक्प्रोक्ता तस्या एव कार्यपौर्वापर्येण त्रयोदशीमाह -
41562 भवैरिति || १६ ||
41563
41564 तमोराजसरूपेति तादृशैर्गुणबृंहितैः |
41565 पूर्वजन्मसहस्राढ्या पुरोजन्मशतैरपि || १७ ||
41566
41567 गुणबृंहितै रजस्तमोबहुलफलैरुपलक्षिते इत्यर्थः || १७ ||
41568
41569 मोक्षायोग्या ततः प्रोक्ता तज्ज्ञैस्तामसतामसी |
41570 पूर्वं तु जन्मलक्षाढ्या जन्मलक्षैः पुरोऽपि चेत् || १८ ||
41571
41572 चतुर्दशी विधामाह - पूर्वमिति || १८ ||
41573
41574 संदिग्धमोक्षा तदसौ प्रोच्यतेऽत्यन्ततामसी |
41575 सर्वा एताः समायान्ति ब्रह्मणो भूतजातयः || १९ ||
41576
41577 सर्वासामुपाधिद्वारा ब्रह्मप्रभवत्वं ब्रह्माभेदसंभावनाय
41578 दृष्टान्तभेदैर्दृढयन्नाह - सर्वा एता इति || १९ ||
41579
41580 किंचित्प्रचलिता भोगात्पयोराशेरिवोर्मयः |
41581 सर्वा एव विनिष्क्रान्ता ब्रह्मणो जीवराशयः || २० ||
41582
41583 स्वतेजःस्पन्दिताभोगाद्दीपादिव मरीचयः |
41584 सर्वा एव समुत्पन्ना ब्रह्मणो भूतपङ्क्तयः || २१ ||
41585
41586 स्वमरीचिवलोद्भूता ज्वलिताग्नेः कणा इव |
41587 सर्वा एवोत्थितास्तस्माद्ब्रह्मणो जीवराशाः [दृश्यदृश्य इति
41588 पाठः] || २२ ||
41589
41590 कणाः स्फुलिङ्गाः || २२ ||
41591
41592 मन्दारमञ्जरीरूपाश्चन्द्रबिम्बादिवांशवः |
41593 सर्वा एव समुत्पन्ना ब्रह्मणो दृश्यदृष्टयः || २३ ||
41594
41595 यथा विटपिनश्चित्रास्तद्रूपा विटपश्रियः |
41596 सर्वा एव समुत्पन्ना ब्रह्मणो जीवपङ्क्तयः || २४ ||
41597
41598 विटपश्रियः शाखाशोभाः || २४ ||
41599
41600 कटकाङ्गदकेयूरयुक्तयः कनकादिव |

सर्वा एवोत्थिता राम ब्रह्मणो जीवराशयः ॥ २५ ॥

निर्झरादमलोद्योतात्पयसामिव बिन्दवः ।
अजस्यैवाखिला राम भूतसंततिकल्पनाः ॥ २६ ॥

एवमंशांशिभावकल्पनया अभेदयोग्यतां प्रदर्श्य
उपाधिमिथ्यात्वप्रदर्शनेनाभेदं दर्शयति - अजस्यैवेति ॥ २६ ॥

आकाशस्य घटस्थालीरन्ध्राकाशादयो यथा ।
सर्वा एवोत्थिता लोककलना ब्रह्मणः पदात् ॥ २७ ॥

उपाधिमिथ्यात्वं तदनन्यत्वन्यायोपपादनेन दृष्टान्ते दर्शयितुं जगतो
ब्रह्मकार्यत्वमाह - सर्वा एवेत्यादिना ॥ २७ ॥

सीकरावर्तलहरीबिन्दवः पयसो यथा ।
सर्वा एवोत्थिता राम ब्रह्मणो दृश्यदृष्टयः ॥ २८ ॥

मृगतृष्णातरङ्गिण्यो यथा भास्करतेजसः ।
सर्वा दृश्यदृशो द्रष्टुर्व्यतिरिक्ता न रूपतः ॥ २९ ॥

शीतरश्मेरित ज्योत्स्ना स्वालोक इव तेजसः ।
एवमेता हि भूतानां जातयो विविधाश्च याः ॥ ३० ॥

स्वस्य आलोकः प्रभेव । उपसंहरति - एवमित्यादिना ॥ ३० ॥

यस्मादेव समायान्ति तस्मिन्नेव विशन्ति च ।
काश्चिज्जन्मसहस्रान्ते जातयश्चिरकालिकाः ।
काश्चित्कतिपयातीतजन्मरूपा व्यवस्थिताः ॥ ३१ ॥

समायान्त्याविर्भवन्ति । विशन्ति उपाधिविलयेनैक्यमापद्यन्ते । काश्चिदित्यादिः
प्रागुक्तस्यानुवादः ॥ ३१ ॥

प्। ३५३) २११

इत्थं जगत्सु विविधेषु विचित्ररूपा-
स्तस्येच्छया भगवतो व्यवहारवत्यः ।
आयान्ति यान्ति निपतन्ति तथोत्पतन्ति
रूपधियः कणपटा इव पादकोत्थाः ॥ ३२ ॥

तस्येश्वरात्मनो भगवतो ब्रह्मणो व्यवहारवत्यो रूपश्रिय उपाधिरूपाण्येव
श्रीर्यासां तथाविधाः प्रागुक्तजीवजातयो निपतन्ति भवाद्भवान्तरे भ्रमन्ति ।
पावकोत्थाः कणघटाः स्फुलिङ्गसमूहा इव ॥ ३२ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे मोक्षोपायेषूत्पत्तिप्रकरणे
ब्रह्मणः सर्वमुत्पद्यत इति कथनं नाम चतुर्नवतितमः सर्गः ॥ ९४ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे ब्रह्मणः
सर्वमुत्पद्यत इति कथनं नाम चतुर्नवतितमः सर्गः ॥ ९४ ॥

पञ्चनवतितमः सर्गः ९५

41653 श्रीवसिष्ठ उवाच |
41654
41655 अभिन्नौ कर्मकर्तारौ सममेव परात्पदात् |
41656 स्वयं प्रकटतां यातौ पुष्पामोदौ तरोरिव || १ ||
41657
41658 अप्रबुद्धजनौघस्य प्रबोधाय न वस्तुतः |
41659 कर्मकर्त्रोः सहोद्भूतिराक्षिप्येह समर्थ्यते || १ ||
41660
41661 ब्रह्मण एव कल्पादौ सर्वा जीवजातय आविर्भवन्तीत्युक्तिब्याजेन
41662 ब्रह्मैवोपाधिषु जीवभावेन प्रविष्टमिति दर्शितम् | एवंच आगन्तुके जीवभावे
41663 न प्राक्तनं कर्म निमित्तं वक्तुं शक्यम् | तस्य प्राक्तनकर्तृसापेक्षत्वात् |
41664 तदर्थं जीवस्यानादित्वाभ्युपगमे तु न ब्रह्मणः प्रागुक्त औपाधिको
41665 जीवभावः समर्थयितुं शक्य इत्युभयथापि दोषं प्रसक्तं
41666 दृष्टिभेदाश्रयेण परिहरिष्यन् गूढाभिसंधिः परिशेषाद्यौक्तिकदशा
41667 सहोत्पत्ति * *? दर्शयति - अभिन्नाविति |
41668 अन्योन्यतादात्म्यकल्पनादभिन्नो अतः समं युगपदेव परात्परदाद्ब्रह्मणः
41669 सकाशात्स्वयं स्वस्वभाववशादेव सर्गादौ प्रकटतां यातौ | तथाच
41670 भगवतो वाक्यम् - न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः | न
41671 कर्मफलसंयोगं स्वभावस्तु प्रवर्तते || इति || १ ||
41672
41673 सर्वसंकल्पनामुक्ते जीवा ब्रह्मणि निर्मले |
41674 स्फुरन्ति वितते व्योम्नि नीलिमेवाज्ञचक्षुषः || २ ||
41675
41676 तदाविर्भावे तादाग्र्याध्याये च जीवानां स्वभावशब्दितं * *?
41677 नमेव हेतुरिति सदृशान्तमाह - सर्वेति || २ ||
41678
41679 अप्रबुद्धजनाचारो यत्र राघव दृश्यते |
41680 तत्र ब्रह्मण उत्पन्ना जीवा इत्युक्तयः स्थिताः || ३ ||
41681
41682 अत एव सृष्टिवादोऽयभङ्गसंमतव्यवहारभूमावेव(?) न
41683 परमार्थपदे इत्याह - अप्रबुद्धेति || ३ ||
41684
41685 संप्रबुद्धजनाचारे वक्तुमेतन्न शोभनम् |
41686 यद्ब्रह्मण इदं जातं न जातं चेति राघव || ४ ||
41687
41688 न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः | न मुमुक्षुर्न वै मुक्तिरित्येवा
41689 परमार्थता | तदेतद्ब्रह्मापूर्वमनापरमनान्तरम * * * *
41690 न जगतो जीवानां कर्मणां वा उत्पत्त्यादिकं तन्निषेधो वा वक्तुं शक्य
41691 इत्याह - संप्रबुद्धेति || ४ ||
41692
41693 काचिद्वा कलना यावन्न नीता राघव प्रथाम् |
41694 उपदेश्योपदेशश्रीस्तावल्लोके न शोभते || ५ ||
41695
41696 तर्हि परमार्थोपदेशके शास्त्रे किम *? र * * * *
41697 ५ ||
41698
41699 अतो भेददृशा दीनामङ्गीकृत्योपदिश्यते |
41700 ब्रह्मेदमेते जीवा वै वेति वाचामयं क्रमः || ६ ||
41701
41702 यावद्व्यवहारकालमङ्गीकृत्येत्यर्थः | वै इति निश्चये | वा इति संशये |
41703 इतिशब्दः प्रकारे | यावत्प्रमाण * *? शोधं निश्चयेन
41704 यावत्प्रमेयनिर्णयं संशयेन प्रकारेणाङ्गीकृत्येत्यर्थः || ६ ||

इति दृष्टो निरासङ्गाद्ब्रह्मणो जायते जगत् ।
तजं तदेव तद्धेतुगतं दुरवबोधतः ॥ ७ ॥

लोकेऽप्यन्युप * * *? वादो बहुशः प्रसिद्धः इत्याह - इति
दृष्ट इति । यद्यभ्यु * *? द्वैतं तर्हि कथमपोद्यते तत्राह -
निरासङ्गादिति । निरासङ्गाद * * *? द्वितीयाद्ब्रह्मणो *
। * * *? दुत्पत्तेः प्राक् हेतु * * * * *

मेरुमन्दरसंकाशा वहवो जीवराशयः ।
उत्पत्योत्पत्य संलीनास्तस्मिन्नेव परे पदे ॥ ८ ॥

तदुपादा * * *? तु कालत्रयेऽपि तत्रैवोत्पद्य लीयमानात्वा
दृशन्ते(?) ॥ ८ ॥

अथानन्ताः स्फुरन्त्येते जायमानाः सहस्रशः ।
नानाककुब्निकुब्जेषु पादपेष्विव प *? वाः ॥ ९ ॥

जीवौघाश्चोद्भविष्यन्ति मधाविव नवाङ्कुराः ।
तत्रैव लयमेष्यन्ति ग्रीष्मे मधुरसा इव ॥ १० ॥

तिष्ठन्त्यजस्रं कालेषु त एवान्ये च भूरिशः ।
जायन्ते च प्रलीयन्ते परस्मिञ्जीवराशयः ॥ ११ ॥

पुष्पामोदादिपाभिन्नौ पुमान्कर्म च राघव ।
परमेशात्समायाते तत्रैव विशतः शनैः ॥ १२ ॥

मूढाभिसंधिमुपसंहरति(?) - पुष्पामोदाविति । अभिन्नाविति
। पुष्पामोदाविति दृष्टान्तविशेष * * * * *(##?

दृष्टमेते जगत्यस्मिन्दैत्योरगनरामराः ।
उद्भवन्त्यभवा भावैः प्रस्फुरन्ति पुनः पुनः ॥ १३ ॥

सहोत्पत्तिकलनायां दृष्टानुसारोऽप्यस्तीत्याह - दृष्टमिति । वस्तुवृत्या
अभावा अपि भावैर्वासनाभूतमात्रोपाधिभिरुद्भवन्ति तत्कालं प्रस्फुरन्ति
संचलन्ति चेति सहोत्पत्तितादात्म्ययोः प्रत्यक्षं दर्शनादित्यर्थः ॥ १३ ॥

प्। ३५४) २१२

हेतुर्विहरणे तेषामात्मविस्मरणादृते ।
न कश्चिल्लक्ष्यते साधो जन्मान्तरफलप्रदः ॥ १४ ॥

तथाच तदुत्पत्तौ न कर्माणि न वा अन्यन्निमित्तं कर्तृपूर्वकत्वात्तेषामतः
परिशेषात्प्रागुक्ताज्ञानमेकमेवेत्याह - हेतुरिति । अयमभिसंधिः । न
तावत्कर्तुरनादिता वक्तुं शक्या कर्तृत्वस्य स्वाभाविकत्वे
अनादिस्वभावस्याग्यौष्ण्यस्येवोपायसहस्रैरप्यपरिहार्यतयाऽनिर्मोक्षप्रसण्
^गात् । औपाधिकत्वे स उपाधिरविद्यैव वा स्यादन्यो वा । आद्ये फलतः
सैद्धान्तिकपरिशेषपक्षान्तर्गतिः । किंच अविद्याया आत्मनि
कर्तृतापादकत्वं स्वत एव वा अन्यसापेक्षतया वा । न स्वतः
सुषुप्तिमूर्च्छाप्रलयेष्वप्यात्मनः [प्यनात्मन इति पाठः]
कर्तृत्वापादनापत्तेः । अन्यसापेक्षतया चेद्यत्सापेक्षा सत्यविद्या
कर्तृतामापादयति स एवोपाधिः स्यान्नाविद्या । नह्युपाधेरुपाधिर्भवतीति ।

41757 द्वितीयेऽपि स उपाधिरविद्याकार्यं स्वतन्त्रो वा। स्वातन्त्र्ये यद्यनादिस्तर्हि
41758 सुषुप्तिप्रलययोरपि कर्तृतामापादयेत्। यदि सादिस्तर्हि तदुपहितकर्तृरूपमपि
41759 साद्येवेति नानादिकर्तृसिद्धिः। अविद्याकार्योपाधिपक्षेऽप्ययमेव दोष इति
41760 नित्यस्याप्यात्मनः कर्त्रुपाधिसंबन्धस्य प्रतिकल्पं प्रतिदिनं च
41761 भेदात्तदधीनस्योपहितकर्तृरूपस्य कर्मसहोत्पत्तिः
41762 कर्मशक्तिमदुपाधितादात्म्यरूपता च तत्र चात्मविस्मरणमेव बीजमिति पक्ष
41763 एव यौक्तिकदृशा परिशिष्यते। एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु
41764 विनश्यति इति श्रुतिरप्यत्रानुकूलेति॥ १४॥
41765
41766 श्रीराम उवाच।
41767
41768 अविसंवादिनार्थे यद्यत्प्रामाणिकदृष्टिभिः।
41769 वीतरागैर्विनिर्णीतं तच्छास्त्रमिति कथ्यते॥ १५॥
41770
41771 अस्मिन्पक्षे अनुपपत्तिमुपपादयिष्यन् रामस्तदुपयोगिनीं भूमिकां रचयितुं
41772 शास्त्रलक्षणमाह - अविसंवादिनेति। अलौकिके धर्मे ब्रह्मणि च प्रमाणं
41773 श्रुतिस्तत्प्रभवा दृष्टिर्येषां तैः प्रामाणिकदृष्टिभिर्वीतरागैश्च
41774 मन्वादिभिर्धर्माधर्मरूपे अर्थे स्वमूलश्रुत्यविसंवादिना
41775 जैमिनीयादितन्त्रसिद्धन्यायकलापेन यद्यद्विनिर्णीतं निर्णीय निबद्धं
41776 स्मृतिपुराणकल्पसूत्रेतिहासादि तच्छास्त्रमिति कथ्यते। तथाच
41777 श्रुतयस्तन्मूलस्मृत्यादयश्चालौकिकार्थे मानमित्याशयः॥ १५॥
41778
41779 महासत्त्वगुणोपेता ये धीराः समदृष्टयः।
41780 अनिर्देश्यकलोपेताः साधवस्त उदाहृताः॥ १६॥
41781
41782 एवं सदाचारोऽपि मानमिति वक्तुं सतां लक्षणमाह - महासत्त्वेति।
41783 महता अत्यन्तविशुद्धेन सत्त्वगुणेनोपेताः। धीरा
41784 विषयैर्दुःखस्थानैश्चाप्रकम्प्याः समदृष्टयः अरागद्वेषाः।
41785 अनिर्देश्या शब्देनाभिलपितुमशक्या या निरतिशयानन्दब्रह्मसाक्षात्कारकला
41786 तदुपेताः। ते साधवः सन्त इत्यर्थः॥ १६॥
41787
41788 द्वयं हि दृष्टिर्बालानां सिद्धये सर्वकर्मणाम्।
41789 साधुवृत्तं तथा शास्त्रं सर्वदैवानुवर्तते॥ १७॥
41790
41791 साधुवृत्तमुक्तलक्षणानां सतामाचारः शास्त्रं श्रुतिस्मृती चेति द्वयं
41792 बालानामज्ञाततत्त्वानां शिष्टानां दृष्टिर्नेत्रद्वयं
41793 धर्मब्रह्मतत्त्वदर्शनायेत्यर्थः॥ १७॥
41794
41795 साधुसंव्यवहारार्थं शास्त्रंयो नानुवर्तते।
41796 बहिःकुर्वन्ति तं सर्वे स च दुःखे निमज्जति॥ १८॥
41797
41798 साधुः स्वर्गमोक्षोपयोगी यः संव्यवहारस्तदर्थं तत्प्रयोजनं शास्त्रं
41799 सर्वे शिष्टा इति शेषः॥ १८॥
41800
41801 इह लोके च वेदे च श्रुतिरित्थं सदा प्रभो।
41802 यथा कर्म च कर्ता च पर्यायेणेह संगतौ॥ १९॥
41803
41804 इह अस्मिन् लोके प्रामाणिकजने वेदे च इत्थं श्रूयत इति श्रुतिर्नि रूढप्रवादः।
41805 अस्तीति शेषः। प्रवादमेवाभिलप्य दर्शयन् विवक्षितमर्थमाह -
41806 यथेत्यादिना। पर्यायेण अयौगपद्येन। हेतुफलभावेनेति यावत्॥ १९॥
41807
41808 कर्मणा क्रियते कर्ता कर्त्रा कर्म प्रणीयते।

बीजाङ्कुरादिवन्न्यायो लोकवेदोक्त एव सः ॥ २० ॥

तदेव स्पष्टमाह - कर्मणेति । प्रणीयते निष्पाद्यते ॥ २० ॥

कर्मणो जायते जन्तुर्बीजादिव नवाङ्कुरः ।
जन्तोः प्रजायते कर्म पुनर्बीजमिवाङ्कुरात् ॥ २१ ॥

यया वासनया जन्तुर्नीयते भवपञ्जरे ।
तद्वासनानुरूपेण फलं समनुभूयते ॥ २२ ॥

कर्मेव वासनापि प्राक्तनी कर्तृहेतुरित्याह - ययेति । समनुभूयते तेन
जन्तुनेति शेषः ॥ २२ ॥

एवं स्थिते कथं नाम जन्मबीजेन कर्मणा ।
विनोत्पत्तिस्त्वया प्रोक्ता भूतानां ब्रह्मणः पदात् ॥ २३ ॥

एवं भूमिकां कृत्वा कर्तृकर्मणोः सहोत्पत्तिपक्षमाक्षिपति - एवं
स्थिते इति । सहोत्पत्तिपक्षे हि प्राक्तनं कर्म विनैवोत्पत्तिरिति फलितं तच्चायुक्तम् ।
साधुकारी साधुर्भवति पापकारी पापो भवति पुण्यो वै पुण्येन कर्मणा
भवति पापः पापेन कर्मणा जायते जन्तुः
इत्यादिश्रुतिस्मृतिशिष्टप्रवादविरोधादित्यर्थः ॥ २३ ॥

पक्षेणानेन भगवन्भवता जन्मकर्मणोः ।
तिरस्कृता जगज्जाता साऽविनाभावितैतयोः ॥ २४ ॥

अनेन सहोत्पत्तिपक्षेणैतयोर्जीवकर्मणोर्जगति जाता प्रमाणनिरूढा
अविनाभाविता अन्वयव्यतिरेकशालिनी परस्परहेतुफलता तिरस्कृता
भवतेत्यर्थः ॥ २४ ॥

ब्रह्मण्यकारणे ब्रह्मन्ब्रह्मादिषु फलेषु च ।
कर्मणां फलमस्तीति द्वयं लोके प्रमार्जितम् ॥ २५ ॥

कर्मणां अकारणे अद्वयत्वात्स्वातिरिक्तकारणशून्ये मायाशबले ब्रह्मणि
वियदादिस्थूलदेहान्तभोगायतनसर्गरूपं फलमस्ति तत्फलेषु ब्रह्मादिषु
हिरण्यगर्भादिस्थूलसूक्ष्मोपाधिषु भोगतात्सामग्रीसर्गरूपं फलमस्तीति
लोके प्रसिद्धं प्रवादद्वयं त्वया प्रमार्जितमित्यर्थः ॥ २५ ॥

संजाते संकरे लोके कर्मस्वफलदायिषु ।
मात्स्यन्याये विलसति नाश एवावशिष्यते ॥ २६ ॥

दोषान्तरमप्याह - संजात इति । कर्मस्वफलदायिषु निष्फलेषु सत्सु
नरकादिभयाभावान्मत्स्यैरिव बलवद्भिर्हिंसनभक्षणैर्मात्स्यन्याये
विलसति सति ॥ २६ ॥

प्। ३५५) २१२

किं तत्कृतं भवत्येव भगवन्ब्रूहि तत्त्वतः ।
एनं मे संशयं स्फारं छिन्धि वेद्यविदांवर ॥ २७ ॥

तत्तस्मात् हे ब्रह्मन् तत्त्वतो यथार्थतो ब्रूहि । कृतं कर्म फलात्मना
भवत्येव किंवा नेति एनं संशयं छिन्धि ॥ २७ ॥

41861 श्रीवसिष्ठ उवाच।
41862
41863 साधु राघव पृष्टोऽस्मि त्वया प्रश्नमिमं शुभम्।
41864 शृणु वक्ष्यामि ते येन भृशं ज्ञानोदयो भवेत्॥ २८॥
41865
41866 इत्थमाक्षिप्तो वसिष्ठः प्रामाणिकमाक्षेपं प्रशंसंस्तत्समाधिं
41867 प्रतिजानीते - साध्विति॥ २८॥
41868
41869 मानसोऽयं समुन्मेषः कलाकलनरूपतः।
41870 एतत्तत्कर्मणां बीजं फलमस्यैव विद्यते॥ २९॥
41871
41872 सहोत्पत्तिपक्षेऽपि यथा न कश्चिद्दोषस्तथोपपादयितुं भूमिकां रचयति -
41873 मानस इति। यद्धि मनसा ध्यायति तद्वाचा वदति तत्कर्मणा करोति इति
41874 श्रुतेर्मनःसंबन्धी यः कलाकलनरूपतः क्रियाकौशलप्रतिसंधानरूपेण
41875 समुन्मेषो विकासः एतत्तत्प्रसिद्धं कर्मणां बीजम्। कथं ज्ञायते। यतः
41876 अस्यैवोत्तरत्र क्रियानिष्पत्तिरूपं फलं विद्यते
41877 नामनःपूर्वकदेहचेष्टामात्रस्येत्यर्थः॥ २९॥
41878
41879 यदैव हि मनस्तत्त्वमुत्थितं ब्रह्मणः पदात्।
41880 तदैव कर्म जन्तूनां जीवो देहतया स्थितः॥ ३०॥
41881
41882 फलमस्यैव विद्यते इति यदुक्तं तदुदाहृत्य दर्शयति - यदैवेति।
41883 आदिसर्गे परब्रह्मणः पदाद्यदैव मनोलक्षणं तत्त्वं वस्तूत्थितं तदैव
41884 जन्तूनां तदुपाध्याविर्भूतसमष्टिव्यष्टिजीवानां कर्माप्युत्थितम्। जीवश्च
41885 प्राक्तनवासनानुसारिदेहतया देहाहंभावेन स्थितः। तथाच श्रुतिः -
41886 तन्मनोऽकुरुत आत्मन्वी स्यामिति सोऽर्चन्नचरत् इति च।
41887 मनोजन्माधीनमेवात्मन्विताशब्दितदेहित्वं संचरणलक्षणं कर्म च
41888 दर्शयति। यद्यद्भवन्ति तदा भवन्ति इति च श्रुत्यन्तरम्। तथाच मन एव
41889 कर्तृ नात्मेति दर्शयितुं मया सहोत्पत्तिपक्षो दर्शित इति भावः॥ ३०॥
41890
41891 कुसुमाशययोर्भेदो न यथा भिन्नयोरिह।
41892 तथैव कर्ममनसोर्भेदो नास्त्यविभिन्नयोः॥ ३१॥
41893
41894 एवं कर्तृकर्मबिदोक्तेरपि कर्मणो मनोधर्मतैव नात्मधर्मता
41895 कौटस्थ्यस्वभावविरोधादिति प्रदर्शने तात्पर्यमिति सदृष्टान्तमाह -
41896 कुसुमेति। आशयोऽत्रान्तस्थ आमोदः॥ ३१॥
41897
41898 क्रियास्पन्दो जगत्यस्मिन्कर्मेति कथितो बुधैः।
41899 पूर्वं तस्य मनो देहं कर्मातश्चित्तमेव हि॥ ३२॥
41900
41901 ननु कर्मशब्देन यज्ञादिस्तज्जन्यमदृष्टं वोच्यते। तत्राद्यो देहधर्मः
41902 द्वितीयस्तु भोक्तृसमवायी तत्कथं मनोधर्मतानयोस्तत्राह - क्रियेति।
41903 क्रियैव हि कर्मसंस्कारात्मना मनसि स्थिता अदृष्टफलात्मना आविर्भूता
41904 देहस्वर्गनरकादिरूपा भवति। एवंच तस्य कर्मण आश्रयो देहमपि पूर्व
41905 मन एव। सविज्ञानो भवति सविज्ञानमेवान्ववक्रामति इति श्रुत्य मनसो
41906 भाविदेहाकाराभिमानं प्राप्तस्यैव पूर्वदेहादुत्क्रमणश्रुतेः।
41907 आतिवाहिकदेहस्यैव वासनाबलेन स्थूलदेहताकल्पनमिति प्राग्व्युत्पादनाच्च।
41908 अतश्चित्तं मनएव कर्मधर्मकत्वात्कर्मेत्यर्थः॥ ३२॥
41909
41910 न स शैलो न तद्व्योम न सोऽब्धिश्च न विष्टपम्।
41911 अस्ति यत्र फलं नास्ति कृतानामात्मकर्मणाम्॥ ३३॥
41912

41913 एवंच त्वदुक्तः कर्मनैष्फल्यदोषोऽपि परिहृतो मनःकार्यस्य सर्वस्यापि
41914 प्रपञ्चस्य कर्मफलत्वोपपत्तेरित्याशयेनाह - न स इति। फलशब्दो
41915 भावप्रधानः। फलत्वमित्यर्थः॥ ३३॥
41916
41917 ऐहिकं प्राक्तनं वापि कर्म यद्रचितं स्फुरत्।
41918 पौरुषोऽसौ परो यत्नो न कदाचन निष्फलः॥ ३४॥
41919
41920 रचितं सावधानमनुष्ठितं साङ्गतया च स्फुरद्विराजमानं यत्कर्म असौ
41921 पौरुषः प्रयत्न एव सच कदाचन कदाचिदपि निष्फलो नेत्यर्थः।
41922 अयमभिप्रायः - अविद्योत्थं मन एव
41923 क्रियाशक्तिमत्त्वाच्चिदात्मौपाधित्वाच्च कर्तृभोक्तृ च। तच्च अन्नमयं हि
41924 सोम्य मनस्तन्मनोऽकुरुत त्रीण्यात्मनेऽकुरुत मनो वाचं प्राणम् इत्यादिश्रुतेः
41925 प्रागुक्तयुक्तेश्च। यद्यपि प्रतिकल्पं प्रतिदिनं चोत्पद्य प्रलीयते तथापि
41926 प्रत्यहमाविर्भूय निशि तमसि तिरोभवन्ती कुड्यच्छायेव
41927 प्रतिदर्पणसंनिधानमाविर्भूय दर्पणापसरणे
41928 रितोभवन्मुखप्रतिबिम्बमिव च
41929 तदेवेदमित्यबाधितप्रत्यभिज्ञाप्रामाण्यादुपहितात्मैक्याच्च न भिद्यते
41930 इत्यनाद्यपि भवति। नहि नाशो नाम शून्यतापत्तिरुत्पत्तिर्वा असतः सत्त्वं येन
41931 प्रत्यहं सुषुप्तौ नाशाद्भेदः स्यात्।
41932 सत्कार्यवादाश्रयणाच्चाविद्याबीजात्मना सतोरेव
41933 प्राक्तनकर्तृकर्मणोस्तत्फलवियदादिप्रपञ्चस्य च सहोत्पत्त्यभ्युपगमेऽपि
41934 न कृतहानाकृताभ्यागमप्रसङ्ग इति न शास्त्रप्रामाण्यबाधो न वा
41935 मात्स्यन्यायप्रसक्तिर्न वा जन्मकर्मणोरविनाभावनियमप्रमार्जनं मन
41936 एव तिरोभूतावस्थमाविर्भूतावस्थं
41937 चाविद्येत्यभ्युपगमाच्चात्मविस्मरणैकहेतुपरिशेषोक्तिरप्यविरुद्धेति तत्त्वमिति
41938 ॥ ३४॥
41939
41940 कृष्णतासंक्षये यद्वत्क्षीयते कज्जलं स्वयम्।
41941 स्पन्दात्मकर्मविगमे तद्वत्प्रक्षीयते मनः॥ ३५॥
41942
41943 सहोत्पत्त्यैक्यपक्षाभ्युपगमस्य किं फलं तदाह - कृष्णतेति। तथाच
41944 कर्ममनसोरन्यतरनाशार्थिना स्पन्दात्मकस्य प्राणस्य मनसो वा
41945 निरोधलक्षणो हठयोगो राजयोगो वाभ्यसनीय इति तत्फलमिति भावः॥ ३५॥
41946
41947 कर्मनाशे मनोनाशो मनोनाशो ह्यकर्मता।
41948 मुक्तस्यैष भवत्येव नामुक्तस्य कदाचन॥ ३६॥
41949
41950 योगजन्यसाक्षात्कारेणाविद्यानाशे चात्यन्तिक उभयनाशो भवति
41951 नान्यथेत्याशयेन मुक्तस्येत्युक्तिः॥ ३६॥
41952
41953 वह्न्यौष्णयोरिव सदा श्लिष्टयोश्चित्तकर्मणोः।
41954 द्वयोरेकतराभावे द्वयमेव विलीयते॥ ३७॥
41955
41956 श्लिष्टयोस्तादात्म्येन संगतयोः॥ ३७॥
41957
41958 प्। ३५६) २१३
41959
41960 चित्तं सदा स्पन्दविलासमेत्य
41961 स्पन्दैकरूपं ननु कर्मविद्धि।
41962 कर्माथ चित्तं किल धर्मकर्म-
41963 पदं गते राम परस्परेण॥ ३८॥
41964

41965 एकनाशे अपरनाश इत्यत्रोपपत्तिं दर्शयन्नुपसंहरति - चित्तमिति।
41966 यतश्चित्तं स्पन्दविलासमेत्य विहितनिषिद्धनिष्पादनेन
41967 पुण्यपापात्मकधर्माधर्माकारपरिणामि भवति। अथ कर्म च
41968 तत्फलभोगानुरूपस्पन्दात्मकविलासमेत्य चित्तं भवति। अतस्ते परस्परेण
41969 निमित्तेन धर्मपदं कर्मपदं च गते वाचकत्वेन प्राप्ते
41970 धर्मकर्मशब्दाभ्यां लोके व्यवह्रियेते इत्यर्थः॥ ३८॥
41971
41972 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० उ०
41973 कर्मपुरुषयोरैक्यप्रतिपादनं नाम पञ्चनवतितमः सर्गः॥ ९५॥
41974
41975 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
41976 कर्मपुरुषयोरैक्यप्रतिपादनं नाम पञ्चनवतितमः सर्गः॥ ९५॥
41977
41978
41979 षण्णवतितमः सर्गः ९६
41980
41981 श्रीवसिष्ठ उवाच।
41982
41983 मनो हि भावनामात्रं भावना स्पन्दधर्मिणी।
41984 क्रिया तद्भावितारूपं फलं सर्वोऽनुधावति॥ १॥
41985
41986 मनसः कर्मवैचित्यादिह नानाविधाकृतेः।
41987 व्याख्यायन्तेऽभिधामेदास्तत्त्वं चास्य विशुद्धये॥ १॥
41988
41989 उक्तार्थप्रपञ्चनार्थस्य सर्गस्यार्थं संक्षिप्यादौ दर्शयति - मन इति।
41990 अनुभूतानामर्थानां भावना विभावनाख्यं विकल्पं तन्मात्रम्। सा
41991 भावना स्पन्दधर्मिणी सती विहितनिषिद्धक्रिया भवति तस्याः क्रियाया एव
41992 सौक्ष्म्याददृष्टभावापन्नाया जन्मान्तराद्यात्मकं यद्भावितारूपं
41993 तदेव फलं सर्वो जन्तुरनुधावति अनुसरति। मन एव
41994 क्रमेणोभयभावमापद्यत इत्यर्थः॥ १॥
41995
41996 श्रीराम उवाच।
41997
41998 विस्तरेण मम ब्रह्मन् जडस्याप्यजडाकृतेः।
41999 रूपमारूढसंकल्पं मनसो वक्तुमर्हसि॥ २॥
42000
42001 प्रश्नः स्पष्टः॥ २॥
42002
42003 श्रीवसिष्ठ उवाच।
42004
42005 अनन्तस्यात्मतत्त्वस्य सर्वशक्तेर्महात्मनः।
42006 संकल्पशक्ति रचितं यद्रूपं तन्मनो विदुः॥ ३॥
42007
42008 सर्वशक्तेः सर्वशक्तिमन्मायाशबलस्य रचितं प्रथमनिष्पादितं
42009 संकल्पशक्ति यद्रूपं तन्मन इत्यर्थः॥ ३॥
42010
42011 भावः सदसतोर्मध्ये नृणां चलति यश्चलः।
42012 कलनोन्मुखतां यातस्तद्रूपं मनसो विदुः॥ ४॥
42013
42014 सांप्रतिकेऽपि नृणां व्यवहारे तत्प्रसिद्धमित्याह - भाव इति। स्थाणुर्वा
42015 पुरुषो वेति विकल्पे सदसतोः कोट्योर्यो भावश्चलो दोलायमानश्चलति
42016 संचरतीत्यर्थः। कलनोन्मुखतां कोटिद्वयस्य स्मृतिपूर्वकताम्॥ ४॥

42017
42018 नाहं वेदावभासात्मा कुर्वाणोऽस्मीति निश्चयः ।
42019 तस्मादेकान्तकलनस्तद्रूपं मनसो विदुः ॥ ५ ॥
42020
42021 सदा चिद्रूपत्वाद्भासमानेऽप्यात्मनि नाहं वेदेति प्रत्ययः अकर्तर्यपि
42022 कर्तृताप्रत्ययश्च येन भवति तन्मन इत्याह - नाहमिति । एकान्तकलनो
42023 नियतं जायमानः ॥ ५ ॥
42024
42025 कल्पनात्मिकया कर्मशक्त्या विरहितं मनः ।
42026 न संभवति लोकेऽस्मिन्गुणहीनो गुणी यथा ॥ ६ ॥
42027
42028 निःस्पन्दे मनस्येतस्य लक्षणस्याव्याप्तिमाशङ्क्याह -
42029 कल्पनात्मिकयेत्यादिना ॥ ६ ॥
42030
42031 यथा वह्न्यौष्ण्ययोः सत्ता न संभवति भिन्नयोः ।
42032 तथैव कर्ममनसोस्तथात्ममनसोरपि ॥ ७ ॥
42033
42034 आत्ममनसोर्जीवमनसोः ॥ ७ ॥
42035
42036 स्वेनैव चित्तरूपेण कर्मणा फलधर्मिणा ।
42037 संकल्पैकशरीरेण नानाविस्तरशालिना ॥ ८ ॥
42038
42039 फलेन धर्मिणा साध्यवता ॥ ८ ॥
42040
42041 इदं ततमनेकात्म मायामयमकारणम् ।
42042 विश्वं विगतविन्यासं वासनाकल्पनाकुलम् ॥ ९ ॥
42043
42044 या येन वासना यत्र सतेवारोपिता यथा ।
42045 सा तेन फलसूस्तत्र तदेव प्राप्यते तथा ॥ १० ॥
42046
42047 वासनाकल्पनाकलनाकुलामित्येतत्स्फुटयति - या येनेति । यत्र सतेव
42048 यथैन्दवैरिहस्थैरेव सत्यलोकस्था वयमिति कल्पितेनेत्यर्थः । लतेवेति पाठे
42049 स्पष्टम् ॥ १० ॥
42050
42051 कर्म बीजं मनःस्पन्दः कथ्यतेऽथानुभूयते ।
42052 क्रियास्तु विविधास्तस्य शाखाश्चित्रफलास्तरोः ॥ ११ ॥
42053
42054 तस्य वासनातरोः कर्म बीजं मनःस्पन्दः शरीरं क्रियाः शाखा इति शास्त्रे
42055 कथ्यते फलतश्चानुभूयत इत्यर्थः ॥ ११ ॥
42056
42057 मनो यदनुसंधत्ते तत्कर्मेन्द्रियवृत्तयः ।
42058 सर्वाः संपादयन्त्येतास्तस्मात्कर्म मनः स्मृतम् ॥ १२ ॥
42059
42060 ननु कर्मेन्द्रियवृत्तिः कर्म कथं तन्मनसः स्यात्तत्राह - मन इति ॥ १२ ॥
42061
42062 मनो बुद्धिरहंकारश्चित्तं कर्माथ कल्पना ।
42063 संसृतिर्वासना विद्या प्रयत्नः स्मृतिरेव च ॥ १३ ॥
42064
42065 मन एव सर्वेन्द्रियभावं धत्त इति नायं दोष इति दर्शयंस्तन्नामान्याह ##-
42066
42067 इन्द्रियं प्रकृतिर्माया क्रिया चेतीतरा अपि ।
42068 चित्राः शब्दोक्तयो ब्रह्मन्संसारभ्रमहेतवः ॥ १४ ॥

42069
42070 नैतावत्यः किंत्वितरा अपि सन्ति। ब्रह्मन् ब्रह्मणि। छान्दसः सप्तम्या लुक्। न
42071 ङिसंबुद्ध्योः इति नलोपनिषेधः। संसारभ्रमः संसारकल्पितो
42072 वक्ष्यमाणप्रवृत्तिनिमित्तभेदः स एव हेतुर्यासाम्॥ १४॥
42073
42074 काकतालीययोगेन त्यक्तस्फारदृगाकृतेः।
42075 चितेश्चेत्यानुपातिन्याः कृताः पर्यायवृत्तयः॥ १५॥
42076
42077 काकतालीयमाकस्मिकं स्वरूपविस्मरणं तद्योगेन त्यक्तेव नानुभूयमाना
42078 स्फाराऽपरिच्छिन्ना दृगाकृतिश्चिदेकरसाकारो यया
42079 तथाभूतायाश्चितेश्चितेश्चेत्यानुपातिन्या बाह्यकल्पनोन्मुखायाः॥ १५॥
42080
42081 प्। ३५७) २१३
42082
42083 श्रीराम उवाच।
42084
42085 परायाः संविदो ब्रह्मन्नेताः पर्यायवृत्तयः।
42086 कल्प्यमानविचित्रार्थाः कथं रूढिमुपागताः॥ १६॥
42087
42088 उक्तानां मनोबुद्ध्यादिनाम्नां चेत्योन्मुखचितिप्रवृत्तिनिमित्तभेदेन
42089 योगरूढ्या पर्यायवृत्तितां प्रत्येकं निर्वचनेन विशिष्य जिज्ञासमानो
42090 रामः पृच्छति - पराया इति। कल्प्यमानो विचित्रो योगार्थो यासां
42091 तथाविधाः सत्यः॥ १६॥
42092
42093 श्रीवसिष्ठ उवाच।
42094
42095 गतेव सकलङ्कत्वं कदाचित्कल्पनात्मकम्।
42096 उन्मेषरूपिणी नाना तदैव हि मनःस्थिता॥ १७॥
42097
42098 एवं पृष्टो वसिष्ठः क्रमेण पञ्चदशापि नामानि व्याचिकीर्षुः प्रथमं
42099 मन इति नाम व्याचष्टे - गतेवेति। परा संविदविद्यया सकलङ्कत्वं
42100 गतेव सती कदाचिदुन्मेषरूपिणी भूत्वा यदेदमित्थमनित्थं वेति विकल्पात्मना
42101 नाना भवति तदैव सा मनोरूपेण स्थितेति तन्नागिका भवतीत्यर्थः॥ १७॥
42102
42103 भावनामनुसंधानं यदा निश्चित्य संस्थिता।
42104 तदैषा प्रोच्यते बुद्धिरियत्ताग्रहणक्षमा॥ १८॥
42105
42106 यदा तु प्रथमं विकल्पोत्तरं वा विशेषभावनां प्राप्य
42107 एकतरकोट्यनुसंधानं निश्चित्य सुस्थिरा स्थिता तदैषा संविद्बुद्धिरिति
42108 प्रोच्यते। इयत्ता ईदृशमेवेदं वस्त्विति परिच्छित्तिस्तद्ग्रहणसमर्थेत्यर्थः॥
42109 १८॥
42110
42111 यदा मिथ्याभिमानेन सत्तां कल्पयति स्वयम्।
42112 अहंकाराभिमानेन प्रोच्यते भवबन्धनी॥ १९॥
42113
42114 यदा तु मिथ्याभूतदेहाद्यात्मताभिमानेन स्वयं सत्तां कल्पयति मन्यते
42115 तदाहंकाराभिमानेन निमित्तेन सा अहंकार इति प्रोच्यते सैव
42116 सर्वानर्थबीजत्वाद्भवबन्धनीत्यर्थः॥ १९॥
42117
42118 इदं त्यक्त्वेदमायाति बालवत्पेलवा यदा।
42119 विचारं संपरित्यज्य तदा सा चित्तमुच्यते॥ २०॥
42120

42121 यदा त्वेकं विषयं त्यक्त्वा अपरं विषयं स्मरति विचारं
42122 पूर्वापरप्रतिसंधानं परित्यज्य तदा सा संविच्चित्तमित्युच्यत इत्यर्थः ॥ २० ॥
42123
42124 यदा स्पन्दैकधर्मत्वात्कर्तुर्या शून्यशंसिनी ।
42125 आधावति स्पन्दफलं तदा कर्मेत्युदाहृता ॥ २१ ॥
42126
42127 सैव संवित् कर्तुः स्पन्दैकधर्मत्वाद्वस्तुतः शून्यमसदेव स्पन्दं शंसति
42128 गोचरयति तच्छीला सती स्पन्दफलं शरीरादवयवादेर्देशान्तरसंयोगं
42129 संपादयितुमाधावतीव तदा कर्मेत्युच्यत इत्यर्थः ॥ २१ ॥
42130
42131 काकतालीययोगेन त्यक्त्वैकघननिश्चयम् ।
42132 यदेहितं कल्पयति भावं तेनेह कल्पना ॥ २२ ॥
42133
42134 एकमेव घनं वस्त्वन्तरावकाशशून्यं यत्स्वरूपं तन्निश्चयं त्यक्त्वा
42135 स्वपूर्णभावं विस्मृत्य यदा ईहितं वाञ्छितं परिच्छिन्नभावं
42136 कल्पयतीत्यर्थः ॥ २२ ॥
42137
42138 पूर्वदृष्टमदृष्टं वा प्राग्दृष्टमिति निश्चयैः ।
42139 यदैवेहां विधत्तेऽन्तस्तदा स्मृतिरुदाहृता ॥ २३ ॥
42140
42141 स्मृतिः संस्मृतिः ॥ २३ ॥
42142
42143 यदा पदार्थशक्तीनां संभुक्तानामिवाम्बरे ।
42144 वसत्यस्तमितान्येहा वासनेति तदोच्यते ॥ २४ ॥
42145
42146 यदा संभुक्तानां ग्रस्तानामिव तिरोभूतानां पदतदर्थतच्छक्तीनां
42147 स्वरूपेण अम्बरे शून्यप्रायेऽतिसूक्ष्मभावे वसति अस्तमितान्यचेष्टा च भवति
42148 तदा वासनेत्युच्यत इत्यर्थः ॥ २४ ॥
42149
42150 अस्त्यात्मतत्त्वं विमलं द्वितीया दृष्टिरङ्किता ।
42151 जाता ह्यविद्यमानैव तदा विद्येति कथ्यते ॥ २५ ॥
42152
42153 अङ्किताजातेत्येकं पदम् । अङ्कोऽविद्याकलङ्कस्तद्वैशिष्ट्यमङ्किता
42154 तद्वशाज्जाता द्वितीया दृष्टिः प्रपञ्चप्रतिभा कालत्रयेऽप्यविद्यमानैवेति
42155 यदा प्रबुध्यते तदा विद्येति कथ्यते इत्यर्थः ॥ २५ ॥
42156
42157 स्फुरत्यात्मविनाशाय विस्मारयति तत्पदम् ।
42158 मिथ्याविकल्पजालेन तन्मलं परिकल्प्यते ॥ २६ ॥
42159
42160 विस्मृतिर्मलमेव च इति पाठे ते द्वे नामनी सहैव व्याचष्टे - स्फुरतीति ।
42161 आत्मनो विनाशोऽत्यन्तादर्शनम् । यतो विस्मारयति तस्माद्विस्मृतिरित्युच्यत
42162 इत्यर्थः । अथवा मिथ्याविकल्पजालेन विविधं स्मारयति विक्षिपतीत्यर्थः ।
42163 तथाचावरणशक्तिप्राधान्येन मलं विक्षेपप्राधान्येन विस्मृतिरिति भावः ।
42164 प्रयत्नः स्मृतिरेव च इति पाठे तु आत्मनो विनाशायादर्शनाय स्फुरति
42165 संचलति यतत इवेति प्रयत्न इति विविधं स्मारयतीति स्मृतिरिति च मलं मलिनं
42166 तत्संविद्रूपमेव नाम्ना परिकल्प्यते इति क्लेशेन व्याख्येयम् ॥ २६ ॥
42167
42168 श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च भुक्त्वा घ्रात्वा विमृश्य च ।
42169 इन्द्रमानन्दयत्येषा [इंद्रमामोदयत्येषा इति पाठः]
42170 तेनेन्द्रियमिति स्मृतम् ॥ २७ ॥
42171
42172 एषा मनोभूता संविद्यदा श्रवणादिक्रियया इन्द्रं कार्यकरणस्वामिनं

42173 [परमेश्वरमामोदयति इति पाठः] जीवभावापन्नं
42174 परमेश्वरमानन्दयति भोगैः प्रीणयति तदेन्द्रियमित्युच्यत इत्यर्थः ।
42175 इन्द्रजुष्टमिन्द्रियमिति हि पाणिन्यनुशासनम् ॥ २७ ॥
42176
42177 सर्वस्य दृश्यजालस्य परमात्मन्यलक्षिते ।
42178 प्रकृतत्वेन भावानां लोके प्रकृतिरुच्यते ॥ २८ ॥
42179
42180 प्रकृतत्वेनोपादानाभिन्नकर्त्रात्मना निर्मितत्वेन ॥ २८ ॥
42181
42182 सदसत्तां नयत्याशु सत्तां वा सत्त्वमञ्जसा ।
42183 सत्तासत्ताविकल्पोऽयं तेन मायेति कथ्यते ॥ २९ ॥
42184
42185 स्पष्टम् ॥ २९ ॥
42186
42187 दर्शनश्रवणस्पर्शरसनघ्राणकर्मभिः ।
42188 क्रियेति कथ्यते लोके कार्यकारणतां गता ॥ ३० ॥
42189
42190 कार्यकारणतां संसृतितद्बीजात्मकताम् ॥ ३० ॥
42191
42192 चितेश्चेत्यानुपातिन्या गतायाः सकलङ्कताम् ।
42193 प्रस्फुरद्रूपधर्मिण्या एताः पर्यायवृत्तयः ॥ ३१ ॥
42194
42195 नामव्याख्यामुपसंहरति - चितेरिति ॥ ३१ ॥
42196
42197 चित्ततामुपयाताया गतायाः प्रकृतं पदम् ।
42198 स्वैरेव संकल्पशतैर्भृशं रूढिमुपागताः ॥ ३२ ॥
42199
42200 प्रकृतं प्रस्तुतं संसारपदम् । स्वैः स्वीयैरेव संकल्पादिकल्पनाशतैः ।
42201 एताः पर्यायवृत्तयः । रूढिं योगरूढिम् ॥ ३२ ॥
42202
42203 चेतनीयकलङ्काङ्काज्जाड्यजालानुपातिनी ।
42204 संख्याविभागकलना स्ववैकल्याकुलेव चित् ॥ ३३ ॥
42205
42206 एकस्याश्चितः कुतो मनोबुद्ध्यादिसंख्याविभागकलना तत्राह - चेतनीयेति ।
42207 चित् चेतनीयः अहमज्ञ इति स्वयमनुभवनार्हो योऽज्ञानकलङ्कश्चेतनीयेभ्यो
42208 विषयेभ्यः प्राप्तो वा यो
42209 द्वैतवासनाकलङ्कस्तदङ्कात्तत्संनिधानात्पूर्णस्वरूपवैकल्पेनाकुलेव
42210 भूत्वा देहादिजाड्यजालानुपातिनो यतः अत इत्यर्थः ॥ ३३ ॥
42211
42212 प्। ३५८) २१४
42213
42214 जीव इत्युच्यते लोके मन इत्यपि कथ्यते ।
42215 चित्तमित्युच्यते सैव बुद्धिरित्युच्यते तथा ॥ ३४ ॥
42216
42217 उक्तामेव विभागकलनां पुनर्विविच्याह - जीव इत्यादिद्वाभ्याम् ॥ ३४ ॥
42218
42219 नानासंकल्पकलिलं पर्यायनिचयं बुधाः ।
42220 वदन्त्यस्याः कलङ्किन्याश्च्युतायाः परमात्मनः ॥ ३५ ॥
42221
42222 श्रीराम उवाच ।
42223
42224 मनः किं स्याज्जडं ब्रह्मंस्तथा वापि च चेतनम् ।

42225 इत्येको मम तत्त्वज्ञ निश्चयोऽन्तर्न जायते ॥ ३६ ॥
42226
42227 जीव इत्युच्यते इत्युक्त्या चेतनत्वप्राप्तेर्दर्शनान्तरे लोके च जाड्यप्रसिद्धेः
42228 संदिहानो रामः पृच्छति - मन इति ॥ ३६ ॥
42229
42230 श्रीवसिष्ठ उवाच ।
42231
42232 मनो हि न जडꣳ राम नापि चेतनतां गतम् ।
42233 म्लानाऽजडा तदा दृष्टिर्मन इत्येव कथ्यते ॥ ३७ ॥
42234
42235 चिदचिदुभयसंवलनरूपत्वान्नैकतररूपं मनः परमार्थतस्तु मन्वानो
42236 मन इति तान्येतानि कर्मनामान्येव इति श्रुतावात्मन एव
42237 कर्मप्रयुक्तनामधेयेषु मनःशब्दपरिगणनादजडा दृष्टिश्चिदेव तदा
42238 संसारदशायां म्लाना उपाधिमालिन्यानुभाविनी मन इति कथ्यते इत्यर्थः ॥ ३७
42239 ॥
42240
42241 मध्ये सदसतो रूपं प्रतिभूतं यदाविलम् ।
42242 जगतः कारणं नाम तदेतच्चित्तमुच्यते ॥ ३८ ॥
42243
42244 चिदचिद्वैलक्षण्यवत्सदसद्वैलक्षण्यमपि तस्यास्तीत्याह - मध्ये इति ।
42245 प्रतिभूतं प्रतिप्राणिभेदम् । प्रतिभातम् इति पाठे स्पष्टम् ॥ ३८ ॥
42246
42247 शाश्वतेनैकरूपेण निश्चयेन विना स्थितिः ।
42248 येन सा चित्तमित्युक्ता तस्माज्जातमिदं जगत् ॥ ३९ ॥
42249
42250 अथवा आत्मनोऽज्ञातसत्तैव मन इत्याह - शाश्वतेनेति । येन हेतुना ॥ ३९ ॥
42251
42252 जडाजडदृशोर्मध्ये दोलारूपं स्वकल्पनम् ।
42253 यच्चितो म्लानरूपिण्यास्तदेतन्मन उच्यते ॥ ४० ॥
42254
42255 पूर्वोक्तमेव स्फुटयंस्तस्य चलस्वभावतामाह - जडेति । यच्चितो रूपमिति
42256 शेषः ॥ ४० ॥
42257
42258 चिन्निःस्पन्दो हि मलिनः कलङ्कविकलान्तरम् ।
42259 मन इत्युच्यते राम न जडं न च चिन्मयम् ॥ ४१ ॥
42260
42261 चितो निःस्पन्द औपाधिकचलभावो बहिर्मलिनस्तस्या अन्तः साक्षिचित
42262 आवरणविरहात्कलङ्कविकलान्तरं यद्रूपं तन्मन इत्युच्यत इत्यर्थः ॥ ४१ ॥
42263
42264 तस्येमानि विचित्राणि नामानि कलितान्यलम् ।
42265 अहंकारमनोबुद्धिजीवाद्यानीतराण्यपि ॥ ४२ ॥
42266
42267 यथा गच्छति शैलूषो रूपाण्यलं तथैव हि ।
42268 मनो नामान्यनेकानि धत्ते कर्मान्तरं व्रजत् ॥ ४३ ॥
42269
42270 शैलूषो नटजातिविशेषः । रूपाणि नानावेषानलमत्यर्थ गच्छति क्रमेण
42271 धारयति । कर्मान्तरं क्रियाभेदम् ॥ ४३ ॥
42272
42273 चित्राधिकारवशतो विचित्रा विकृताभिधाः ।
42274 यथा याति नरः कर्मवशाद्याति तथा मनः ॥ ४४ ॥
42275
42276 यथा नरः पाकाधिकारात्पाचक इति पाठाधिकारात् पाठक इति

42277 ग्रामाधिपत्याद्ग्रामणीरिति विचित्राधिकारवशतो विचित्रा
42278 विकृतास्तत्तत्क्रियाप्रकाशिका अभिधा नामानि याति तथा मनोऽपि कर्मवशात्ताः
42279 यातीत्यर्थः ॥ ४४ ॥
42280
42281 या एताः कथिताः संज्ञा मया राघव चेतसः ।
42282 एता एवान्यथा प्रोक्ता वादिभिः कल्पनाशतैः ॥ ४५ ॥
42283
42284 अन्यथा कल्पनाशतैः स्वकप्लोन्नीतयुक्तिशतैः ॥ ४५ ॥
42285
42286 स्वभावाभिमतां बुद्धिमारोप्य मनसा कृताः ।
42287 मनोबुद्धिन्द्रियादीनां विचित्रा नामरीतयः ॥ ४६ ॥
42288
42289 स्वेषां भावा विभावनास्तर्कास्तदभिमतां द्रव्यत्वाणुत्वादिबुद्धिं
42290 मनस्यारोप्य मनसा स्वेच्छया मनोबुद्ध्यादीनां विचित्रा नामरीतयः
42291 संज्ञाभेदास्तैः कृता इत्यर्थः ॥ ४६ ॥
42292
42293 मनो हि जडमन्यस्य भिन्नमन्यस्य जीवतः ।
42294 तथाहंकृतिरन्यस्य बुद्धिरन्यस्य वादिनः ॥ ४७ ॥
42295
42296 तेषां कल्पनाप्रकारान्विभज्य दर्शयति - मनो हीत्यादिना ॥ ४७ ॥
42297
42298 अहंकारमनोबुद्धिदृष्टयः सृष्टिकल्पनाः ।
42299 एकरूपतया प्रोक्ता या मया रघुनन्दन ॥ ४८ ॥
42300
42301 अन्तःकरणस्यैकरूपतया तस्य सृष्टिकल्पनाः
42302 संकल्पादिवृत्तिभेदसृष्टिनिमित्ता
42303 अहंकारमनोबुद्धिनामभेददृष्टयस्ते मया या प्रोक्तः ॥ ४८ ॥
42304
42305 नैयायिकैरितरथा तादृशैः परिकल्पिताः ।
42306 अन्यथा कल्पिताः सांख्यैश्चार्वाकैरपि चान्यथा ॥ ४९ ॥
42307
42308 गौतमीयतन्त्रानुसारिभिस्तास्तादृशैरेव स्वबुद्धिविकल्पैरितरथा कल्पिताः ।
42309 यथाहंकारो द्रव्यविशेषो विभुर्जीवात्मेति मनस्त्वणु तत्साक्षात्कारे कारणमिति
42310 बुद्धिस्तु तदीयो गुणस्त्रिक्षणावस्थायिनीति नतु वस्तुतस्तथेत्यर्थः ।
42311 सांख्यैस्ततोऽप्यन्यथा कल्पिताः । यथा बुद्धिः
42312 साक्षात्त्रिगुणात्मकप्रकृतिकार्यं महत्तत्त्वं अहंकारस्तु तत्कार्यं
42313 तत्त्वान्तरं मनस्त्वेकादशेन्द्रियगणान्तर्गतं षोडशविकारान्तःपातीति ।
42314 चार्वाकैस्तु चैतन्यगुणः कार्यस्यैव बुद्धिः काय एवाहंकार आत्मा तस्य
42315 पूर्वापरप्रतिसंधानं मन इति ॥ ४९ ॥
42316
42317 जमिनीयैश्चार्हतैश्च बौधाइर्वैशेषिकैस्तथा ।
42318 अन्यैरपि विचित्रैस्तैः पाञ्चरात्रादिभिस्तथा ॥ ५० ॥
42319
42320 जैमिनीयैस्तु कश्चिन्मनो विभु द्रव्यम् । कैश्चिदन्नयम् । बुद्धिस्तु
42321 जडबोधात्मकाहंकाररूपस्यात्मनश्चिदंश इति । आर्हतैस्तु
42322 मध्यमपरिमाणश्चिद्रूपो जीवास्तिकाय एवाहंकारः तस्य विषयाभिलाषो
42323 मनः अर्थप्रथा च बुद्धिरिति । बौद्धैः क्षणिकी आलयविज्ञाख्या बुद्धिधारा
42324 सैवात्माऽहंकाराश्च प्रवृत्तिविज्ञानात्मकः बुद्धिस्तु
42325 बाह्यार्थाकारस्तत्परिणामः अतीतः समनन्तरप्रत्ययो मन इति । वैशेषिकैस्तु
42326 नैयायिकवदेवाहंकारमनसी बुद्धिस्तु
42327 स्मृतिप्रत्यक्षानुमानतर्कविपर्ययविकल्पभेदभिन्ना पञ्चधेति । अन्यैः
42328 पाञ्चरात्रैर्वासुदेवाख्यात्परमात्मनः संकर्षणाख्यो जीवः स

42329 एवाहंकारस्ततः प्रद्युम्नाख्यं मनस्ततोऽनिरुद्धाख्या बुद्धिरिति।
42330 आदिपदाद्योगिमाहेश्वरनाकुलादीनामन्यथान्यथा कल्पना गृह्यन्ते॥ ५०॥
42331
42332 प्। ३५९) २१४
42333
42334 सर्वैरेव च गन्तव्यं तैः पदं पारमार्थिकम्।
42335 विचित्रं देशकालोत्थैः पुरमेकमिवाध्वगैः॥ ५१॥
42336
42337 सर्वेषामपि स्वस्वबुद्ध्यनुसारेण परमात्मतत्त्वनिर्णय एव क्रमेण
42338 फलिष्यतीत्याह - सर्वैरिति। विचित्रमित्यनेन तत्तद्बुद्ध्यनुसारिफलात्मना
42339 स्थातुं शक्तं तत्पदमिति सूचितम्॥ ५१॥
42340
42341 अज्ञानात्परमार्थस्य विपरीतावबोधतः।
42342 केवलं विवदन्त्येते विकल्पैरारुरुक्षवः॥ ५२॥
42343
42344 यदि एकमेव प्राप्यते तर्हि किमर्थं विवदन्ते तत्राह - अज्ञानादिति॥ ५२॥
42345
42346 स्वमार्गमभिशंसन्ति वादिनश्चित्रया दृशा।
42347 विचित्रदेशकालोत्था मार्गं स्वं पथिका इव॥ ५३॥
42348
42349 विचित्रदेशकालोत्थाः
42350 राजसतामसमलिनार्धमलिनसत्त्वप्रधानजनोचितदेशकालोत्पन्नाः। तथाच
42351 कालाद्यनुसारिणां तेषां स्वस्वपक्षाभिरुचिरिति तत्तत्प्रशंसा युक्तेति भावः॥
42352 ५३॥
42353
42354 तैर्मिथ्या राघव प्रोक्ताः कर्ममानसचेतसाम्।
42355 स्वविकल्पार्पितैरर्थैः स्वाः स्वा वैचित्र्ययुक्तयः॥ ५४॥
42356
42357 तर्हि किं मुमुक्षुभिरपि तदुक्तयुक्तय उपादेया नेत्याह - तैरिति। तैः
42358 कर्ममानसचेतसां फलेच्छया तत्साधनकर्मणि मानसं वाञ्छा यस्य
42359 तथाविधं चेतो येषां तेषामर्थे स्वाः स्वाः स्वकपोलनिर्मिता वैचित्र्ययुक्तयो
42360 मिथ्यैव प्रोक्ता न प्रमाणमूर्धन्योपनिषत्संमता इत्यर्थः॥ ५४॥
42361
42362 यथैव पुरुषः स्नानदानादानादिकाः क्रियाः।
42363 कुर्वंस्तत्कर्तृवैचित्र्यमेति तद्वदिदं मनः॥ ५५॥
42364
42365 विचित्रकार्यवशतो नामभेदेन कर्तृता।
42366 मनः संप्रोच्यते जीववासनाकर्मनामभिः॥ ५६॥
42367
42368 परिशेषात्स्वोक्तयुक्तय एव प्रामाणिक्य इत्याशयेन ताः पुनराह -
42369 विचित्रेत्यादिना॥ ५६॥
42370
42371 चित्तमेवेदमखिलं सर्वेणैवानुभूयते।
42372 अचित्तो हि नरो लोकं पश्यन्नपि न पश्यति॥ ५७॥
42373
42374 स्वोक्तयुक्तिषु लोकानुभवं संवादयति - चित्तमेवेत्यादिना॥ ५७॥
42375
42376 श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च भुक्त्वा घ्रात्वा शुभाशुभम्।
42377 अन्तर्हर्षं विषादं च समनस्को हि विन्दति॥ ५८॥
42378
42379 आलोक इव रूपाणामर्थानां कारणं मनः।
42380 बध्यते बद्धचित्तो हि मुक्तचित्तो हि मुच्यते॥ ५९॥

42381
42382 रूपाणां रूपप्रकाशानाम्। पञ्चीकृते पृथिव्यादौ प्रतीयमानानि
42383 रूपाण्यालोकभागस्यैवेत्याशयो वा। मुक्तचितो निर्वासनचित्तो मुक्तोऽहमिति
42384 निश्चयवान्वा॥ ५९॥
42385
42386 तज्जडानां परं विद्धि जडं येनोच्यते मनः।
42387 न चावगच्छति जडं मनो यस्य हि चेतनम्॥ ६०॥
42388
42389 अत एव हि मनसोऽपि वादिनां स्वस्ववासनानुसारी
42390 जाड्यानुभवश्चैतन्यानुभवश्चोपपन्न इत्याहा - तदिति॥ ६०॥
42391
42392 न चेतनं न च जडं यदिदं प्रोत्थितं मनः।
42393 विचित्रसुखदुःखेहं जगदभ्युदितं तदा॥ ६१॥
42394
42395 एकरूपे हि मनसि संसारः प्रविलीयते।
42396 उपाविलं कारणं तैर्भ्रान्त्या जगदुपस्थितम्॥ ६२॥
42397
42398 एकरूपे अद्वितीयब्रह्माकारे सति आविलं कलुषोदकं तस्य समीपे उपाविलं
42399 तत्सदृशं मलिनचिद्रूपं तु कारणं संसारस्य तैस्तथाविधैर्मनोभिः
42400 समष्टिभूतैर्हेतुभिरित्यर्थः॥ ६२॥
42401
42402 अजडं हि मनो राम संसारस्य न कारणम्।
42403 जडं चोपलधर्मापि संसारस्य न कारणम्॥ ६३॥
42404
42405 उपाविलमित्युक्तेस्तात्पर्यरहस्यमुद्घाटयति - अजडमिति द्वाभ्याम्॥ ६३॥
42406
42407 न चेतनं न च जडं तस्माज्जगति राघव।
42408 मनः कारणमर्थानां रूपाणामिव भासनम्॥ ६४॥
42409
42410 यथा नीलपीतादिरूपभेदानां न केवलं भासनशब्दितं तेजः कारणं न
42411 पृथिव्यादि किंतु त्रिवृत्करणेन मलिनं तेजस्तद्वदित्यर्थः॥ ६४॥
42412
42413 चित्तादृतेऽन्यद्यद्यस्ति तदचित्तस्य किं जगत्।
42414 सर्वस्य भूतजातस्य समग्रं प्रविलीयते॥ ६५॥
42415
42416 मनसोऽसत्त्वे जगत्सत्ताया निरूपणादर्शनादपि जगतो मनोमात्रत्वमित्याह ##-
42417 सर्वस्य प्राणिनिकायस्य समग्रं जगत् प्रविलीयते तस्माच्चित्तमात्रं तदित्यर्थः
42418 ॥ ६५॥
42419
42420 नानाकर्मवशावेशान्मनो नानाभिधेयताम्।
42421 एकं विचित्रतामेति कालो नाना यथर्तुभिः॥ ६६॥
42422
42423 यदि नामामनस्कारमहंकारेन्द्रियक्रियाः।
42424 क्षोभयन्ति शरीरं तत्सन्तु जीवादयः परे॥ ६७॥
42425
42426 अमनस्कारं चित्ताभोगं विना। तत् तर्हि। परे मनोऽतिरिक्ताः॥ ६७॥
42427
42428 दर्शनेषु तु ये प्रोक्ता भेदा मनसि तर्कतः।
42429 क्वचित्क्वचिद्वादकरैरपवादकरैः किल॥ ६८॥
42430
42431 तर्हि कथं प्रागुक्तवादिभिरन्ये सन्तीत्युक्तं तत्राह - दर्शनेष्विति।
42432 वादकरैर्वादिभिः। क्वचित्क्वचित्केषुचिद्दर्शनेषु स्वशास्त्रेषु ये भेदा उक्तास्ते

अपवादाः कुतर्कास्तूत्करैरुक्ता न प्रामाणिकैर्व्यासादिभिरित्यर्थः ॥ ६८ ॥

ते हि राम न बुध्यन्ते विशिष्यन्ते न च क्वचित् ।
सर्वा हि शक्तयो देवे विद्यन्ते सर्वगा यतः ॥ ६९ ॥

तेषां कुतर्कोद्भवे कारणान्याह - ते हीति । क्वचित्कदाचिदपि
तत्त्वज्ञैर्व्यासादिभिर्न विशिष्यन्ते नानुशास्यन्ते । तथाचाज्ञानं
सांप्रदायिकशिक्षाशून्यत्वं मनो देवस्य स्वाभाविककुतर्कशक्तयश्च तत्र
कारणानीत्यर्थः ॥ ६९ ॥

यदैव खलु शुद्धाया [श्रद्धाया इति पाठः] मनागपि हि
संविदः ।
जडेव शक्तिरुदिता तदा वैचित्र्यमागतम् ॥ ७० ॥

तर्हि तर्काप्रतिष्ठानात्तेषां सदा संशय एव स्यात्कथं
व्यवस्थितैकैकपक्षनिर्णयवैचित्र्यं तत्राह - यदैवेति । स्वस्वोत्प्रेक्षिततर्के
श्रद्धाजाड्याद्वैचित्र्यमित्यर्थः ॥ ७० ॥

ऊर्णनाभाद्यथा तन्तुर्जायते चेतनाज्जडः ।
नित्यप्रबुद्धात्पुरुषाद्ब्रह्मणः प्रकृतिस्तथा ॥ ७१ ॥

त्वत्प्रक्षेऽपि तर्हि तव श्रद्धाजाड्यमेव कुतो न हेतुरित्याशङ्क्य नायं मम
स्वबुद्ध्योत्प्रेक्षितः किंतु यथोर्णनाभिः सृजते गृह्णते च यथा
पृथिव्यामोषधयः संभवन्ति । यथा सतः पुरुषात्केशलोमानि
तथाऽक्षरात्संभवतीह विश्वम् इत्यादिश्रुतिसिद्धोऽयं पक्ष इत्याशयेनाह ##-

प। ३६०) २१५

अविद्यावशतश्चित्तभावनाः स्थितिमागताः ।
चिति पर्यायशब्दा हि भिन्नास्ते नेह वादिनाम् ॥ ७२ ॥

वादिनां तु न श्रुत्यादर इत्यविद्यावशात्स्वस्वभावेनैव स्थिरीभूता तत एव
तैर्मनस एव नामरूपभेदा भ्रान्त्या कल्पिता इत्याह - अविद्येति । चिति
चित्तभावापन्ने चैतन्ये ॥ ७२ ॥

जीवो मनश्च ननु बुद्धिरहंकृतिश्चे-
त्येवं प्रथामुपगतेयमनिर्मला चित् ।
सैषोच्यते जगति चेतनचित्तजीव-
संज्ञागणेन किल नास्ति विवाद एषः ॥ ७३ ॥

उक्तमेव स्फुटयन्नुपसंहरति - जीव इति ॥ ७३ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे
मनःसंज्ञाविचारो नाम षण्णवतितमः सर्गः ॥ ९६ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
मनःसंज्ञाविचारो नाम षण्णवतितमः सर्गः ॥ ९६ ॥

सप्तनवतितमः सर्गः ९७

श्रीराम उवाच ।

42485
42486 ब्रह्मन्मनस एवेदमन्तश्चाडम्बरं सृतम् ।
42487 यतस्तदेव कर्मेति वाक्यार्थादुपलभ्यते ॥ १ ॥
42488
42489 सर्वाकारेण संस्थानं मनसोऽत्र निरूप्यते ।
42490 चित्ताकाशचिदाकाशभूताकाशाश्च विस्तरात् ॥ १ ॥
42491
42492 एवं कर्तृकर्ममनःस्वरूपं तन्नामभेदं च बहुभिः प्रकारैः
42493 प्रतिबोधितो रामः स्वबुद्धं तद्गुरुबुद्धिसंवादायाभिलप्य दर्शयति -
42494 ब्रह्मन्निति । हे ब्रह्मन् प्राग्दर्शितत्वद्वाक्यार्थादिदमाडम्बरं
42495 ब्रह्माण्डपटहं मनस एव सकाशात्सृतमाविर्भूतं यतोऽतस्तज्जगदेव
42496 मनसः कर्मेति तात्पर्यमुपलभ्यते बुध्यते मयेत्यर्थः ॥ १ ॥
42497
42498 श्रीवसिष्ठ उवाच ।
42499
42500 दृढभावोपरक्तेन मनसैवोररीकृतम् ।
42501 मरुचण्डातपेनेव भास्वरावरणं [वरणं वपुः इति पाठः]
42502 पुनः ॥ २ ॥
42503
42504 रामेण बुद्धं तात्पर्यं तथैवेत्यनुमोदनाय स्वयं वसिष्ठः पुनः
42505 संक्षेपविस्तराभ्यामाह - दृढेत्यादिना । भास्वरस्य
42506 तेजस्त्वस्यावरणमप्रथाहेतुर्मृगतृष्णोदकमिव
42507 भास्वरस्यात्मनोऽप्रथाहेत्वज्ञानजाड्यमुररीकृतम् । अङ्गीकृतमित्यर्थः ॥
42508 २ ॥
42509
42510 ब्रह्मात्मनि जगत्यस्मिन्मन एकाकृतिं गतम् ।
42511 क्वचिन्नरतया रूढं क्वचित्सुरतयोत्थितम् ॥ ३ ॥
42512
42513 एकां मुख्यामाकृतिं जगत्संस्थानं गतं प्राप्तम् । तदेव प्रपञ्चयति
42514 - क्वचिदित्यादिना ॥ ३ ॥
42515
42516 क्वचिद्दैत्यतयोल्लासि क्वचिद्यक्षतयोदितम् ।
42517 क्वचिद्गन्धर्वतां प्राप्तं क्वचित्किन्नररूपि च ॥ ४ ॥
42518
42519 नानाचारनभोभागपुरपत्तनरूपया ।
42520 मन्ये विततयाकृत्या मन एव विजृम्भते ॥ ५ ॥
42521
42522 विततया विस्तीर्णया आकृत्या संस्थानवैचित्र्येण ॥ ५ ॥
42523
42524 एवं स्थिते शरीरौघस्तृणकाष्ठलतोपमः ।
42525 तद्विचारणया कोऽर्थो विचार्यं मन एव नः ॥ ६ ॥
42526
42527 यथा पृथिव्यादिभूततत्त्वजिज्ञासूनां तृणकाष्ठादिकं प्रत्येकं न
42528 विचारणार्हं तद्वदित्यर्थः ॥ ६ ॥
42529
42530 तेनेदं सर्वमाभोगि जगदित्याकुलं ततम् ।
42531 मन्ये तद्व्यतिरेकेण परमात्मैव शिष्यते ॥ ७ ॥
42532
42533 एवं कर्तृकर्मस्वरूपे बुद्धे तद्विशोधेन तदधिष्ठानात्मानं
42534 दर्शयितुमाह - मन्ये इति ॥ ७ ॥
42535
42536 आत्मा सर्वपदातीतः सर्वगः सर्वसंश्रयः ।

तत्प्रसादेन संसारे मनो धावति वल्गति ॥ ८ ॥

मन आदिस्पन्दास्तद्बलेनैव न स्वत इत्याह - तत्प्रसादेनेति ॥ ८ ॥

मनो मन्ये मनः कर्म तच्छरीरेषु कारणम् ।
जायते म्रियते तद्धि नात्मनीदृग्विधा गुणाः ॥ ९ ॥

शोधनप्रकारमाह - मन इति । ईदृग्विधा इत्यनेनान्तरालिका अपि
भावविकारा उपलक्ष्यन्ते ॥ ९ ॥

मन एव विचारेण मन्ये विलयमेष्यति ।
मनोविलयमात्रेण ततः श्रेयो भविष्यति ॥ १० ॥

श्रेयो मोक्षः ॥ १० ॥

मनोनाम्नि परिक्षीणे कर्मण्याहितसंभ्रमे ।
मुक्त इत्युच्यते जन्तुः पुनर्नाम न जायते ॥ ११ ॥

श्रीराम उवाच ।

भगवन्भवता प्रोक्ता जातयस्त्रिविधा नृणाम् ।
प्रथमं कारणं तासां मनः सदसदात्मकम् ॥ १२ ॥

अस्त्वेवं मनसः सकाशाज्जगदुत्पत्तिः मनस्तु
कूटस्थचिन्मात्रस्वभावाद्ब्रह्मणो नोत्पत्तुमर्हति । बुद्धिपूर्विका हि
तत्सृष्टिः श्रूयते तन्मनोऽकुरुत आत्मन्वी स्याम् इति । नच मन उत्पत्तेः
प्राग्बुद्धिः संभवति । अमतेऽर्थ्यवसायादर्शनादिति रामः शङ्कते -
भगवन्निति द्वाभ्याम् । त्रिविधा इति । यद्यपि द्वादशविधा उक्तास्तथापि तासां
सात्त्विकराजसतामसलक्षणत्रैविध्येन्तर्भावमभिप्रेत्य त्रिविधा इत्युक्तिः ।
नृणां जीवानाम् ॥ १२ ॥

तत्कथं शुद्धचिन्नाम्नस्तत्त्वाद्बुद्धिविवर्जितात् ।
उत्थितं स्फारतां यातं जगच्चित्रकरं मनः ॥ १३ ॥

श्रीवसिष्ठ उवाच ।

आकाशा हि त्रयो राम विद्यन्ते विततान्तराः ।
चित्ताकाशश्चिदाकाशो भूताकाशस्तृतीयकः ॥ १४ ॥

इमामप्याशङ्कां वक्ष्यमाणदृष्टिभेदाभिप्रायेण
सत्कार्यवादमाश्रित्य समाधित्सुर्वसिष्ठस्तदुपयुक्तामाकाशत्रयकल्पनां
दर्शयति - आकाशा हीति । विततान्तरा विस्तीर्णजठराः ॥ १४ ॥

प। ३६१) २१५

एते हि सर्वसामान्याः सर्वत्रैव व्यवस्थिताः ।
शुद्धचित्तत्वशक्त्या तु लब्धसत्तात्मतां गताः ॥ १५ ॥

सर्वस्वकार्यसाधारणाः सर्वस्वकार्ये व्यवस्थिता अनुगता इति तद्धेतुः ।
नचैवमद्वैतहानिः सत्ताभेदानभ्युपगमादित्याशयेनाह - शुद्धेति ॥
१५ ॥

42589 सबाह्याभ्यन्तरस्थो यः सत्तासत्तावबोधकः ।
42590 व्यापी समस्तभूतानां चिदाकाशः स उच्यते ॥ १६ ॥
42591
42592 त्रयाणामेकसत्ताकत्वे चिदाकाशे कोऽतिशय इत्याशङ्क्य तं
42593 दर्शयंश्चिदाकाशं मायाशबलं लक्षयति - सबाह्येति ।
42594 आभ्यन्तरबुद्ध्यादीनां बाह्यवस्तूनां च
42595 सत्तासत्तयोरागमापाययोरवबोधकः साक्षी ॥ १६ ॥
42596
42597 सर्वभूतहितः श्रेष्ठो यः कालकलनात्मकः ।
42598 येनेदमाततं सर्वं चित्ताकाशः स उच्यते ॥ १७ ॥
42599
42600 चित्ताकाशं लक्षयति - सर्वेति । सर्वेषां भूतानां
42601 सर्वव्यवहारहेतुत्वाद्धितः । सर्वकार्यकारणनियन्तृत्वाच्छ्रेष्ठः । आततं
42602 स्वकल्पनया विस्तारितम् ॥ १७ ॥
42603
42604 दशदिङ्मण्डलाभोगैरव्युच्छिन्नवपुर्हि यः ।
42605 भूतात्मासौ य आकाशः पवनाब्दादिसंश्रयः ॥ १८ ॥
42606
42607 भूताकाशं लक्षयति - दशेति । अब्दा मेघाः संवत्सरात्मा सूर्यो वा ॥ १८
42608 ॥
42609
42610 आकाशचित्ताकाशौ द्वौ चिदाकाशबलोद्भवौ ।
42611 चित्कारणं हि सर्वस्य कार्यौघस्य दिनं यथा ॥ १९ ॥
42612
42613 तत्र चिदाकाशे चिदंशस्य संनिधिमात्रेण निमित्ततेति प्रदर्शयति - दिनं
42614 यथेति ॥ १९ ॥
42615
42616 जडोऽस्मि न जडोऽस्मीति निश्चयो मलिनश्चितः ।
42617 यस्तदेव मनो विद्धि तेनाकाशादि भाव्यते ॥ २० ॥
42618
42619 जडांशस्य तु मन आद्याकारपरिणामित्वान्मनः प्रति मुख्योपादानत्वेऽपि
42620 मनसि चिज्जाड्योभयानुभवात्संवलितस्यैव मनोभावापत्तिरित्याह -
42621 जडोऽस्मीति ॥ २० ॥
42622
42623 अप्रबुद्धात्मविषयमाकाशत्रयकल्पनम् ।
42624 कल्प्यते उपदेशार्थं प्रबुद्धविषयं न तु ॥ २१ ॥
42625
42626 इयं च मनःसृष्ट्यादिकल्पना अज्ञबोधनार्था न वास्तवीति
42627 परमार्थदृशा न शुद्धचितः किंचिदुत्पन्नं विनष्टं वेति न
42628 कश्चिदाक्षेपावकाश इत्याशयेनाह - अप्रबुद्धेत्यादिना ॥ २१ ॥
42629
42630 एकमेव परं ब्रह्म सर्वं सर्वावपूरकम् ।
42631 प्रबुद्धविषयं नित्यं कलाकलनवर्जितम् ॥ २२ ॥
42632
42633 द्विअताद्वैतसमुद्भेदैर्वाक्यसंदर्भगर्भितैः ।
42634 उपदेश्यत एवाज्ञो न प्रबुद्धः कथंचन ॥ २३ ॥
42635
42636 यावद्रामाप्रबुद्धस्त्वमाकाशत्रयकल्पना ।
42637 तावदेवावबोधार्थं मया त्वमुपदिश्यसे ॥ २४ ॥
42638
42639 आकाशचित्ताकाशाद्याश्चिदाकाशकलङ्किताऽत् ।
42640 प्रसूता दावदहनाद्यथा मरुमरीचयः ॥ २५ ॥

दावदहनान्मरुभूमिप्रतापनाद्दावाग्नितुल्याद्वा आतपात् ॥ २५ ॥

चिनोति मलिनं रूपं चित्ततां समुपागतम् ।
त्रिजगन्तीन्द्रजालानि रचयत्याकुलात्मकम् ॥ २६ ॥

कार्येषु मालिन्यदर्शनादपि चित्तस्य न शुद्धचित्कार्यतेत्याशयेनाह -
चिनोतीति ॥ २६ ॥

चित्तत्वमस्य मलिनस्य चिदात्मकस्य
तत्त्वस्य दृश्यत इदं ननु बोधहीनैः ।
शुक्तौ यथा रजतता नतु बोधवद्भि-
र्मौर्ख्येण बन्ध इह बोधबलेन मोक्षः ॥ २७ ॥

अज्ञैकदृश्यत्वादपि चित्तस्याज्ञानकार्यत्वं अत एवातत्त्वज्ञदृशैव
बन्धस्तत्त्वज्ञदृशा त्वात्मनो नित्यमुक्ततैवेत्याह - चित्तत्वमिति ॥ २७ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मो० उत्पत्तिप्रकरणे
चिदाकाशमाहात्म्यं नाम सप्तनवतितमः सर्गः ॥ ९७ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
चिदाकाशमाहात्म्यं नाम सप्तनवतितमः सर्गः ॥ ९७ ॥

## अष्टनवतितमः सर्गः ९८

श्रीवसिष्ठ उवाच ।

यतःकुतश्चिदुत्पन्नं चित्तं यत्किंचिदेव हि ।
नित्यमात्मविमोक्षाय योजयेद्यत्नतोऽनघ ॥ १ ॥

उक्तार्थप्रतिबोधार्थं चित्ताख्यानमिहोच्यते ।
चित्ततत्त्वविमर्शाच्च नाशश्चित्तस्य विस्तरात् ॥ १ ॥

नित्यमुक्तस्याप्यात्मनोऽज्ञानान्मनोभ्रान्तिकृतो बन्धप्रत्यय इत्येवं
निर्णयाय मनसोऽज्ञातादात्मन उत्पत्तिर्विस्तरेणोक्ता रोगतत्त्वनिर्णयायेव
रोगनिदानापथ्याशनोक्तिरित्यम् । निर्णीते तु मनस्तत्त्वे सांप्रतं
तच्चिकित्साप्रयत्न एवावश्यं कार्यो न पुनः पुनर्निदानचिन्तायाः
प्रयोजनमस्तीत्याशयेनाह - यतःकुतश्चिदिति । योजयेत् आत्मनि समादध्यात् ॥
१ ॥

संयोजितं परे चित्तं शुद्धं निर्वासनं भवेत् ।
ततस्तु कल्पनाशून्यमात्मतां याति राघव ॥ २ ॥

समाधेः फलमाह - संयोजितमिति ॥ २ ॥

चित्तायत्तमिदं सर्वं जगत्स्थिरचरात्मकम् ।
चित्ताधीनवतो राम बन्धमोक्षावपि स्फुटम् ॥ ३ ॥

ननु चित्तनिरोधमात्रेण कथं बाह्याभ्यन्तरसर्वद्वैतबन्धनिवृत्तिः
स्यात्तत्राह - चित्तयत्तमिति ॥ ३ ॥

42693 अत्रार्थे कथ्यमानं मे चित्ताख्यानमनुत्तमम् |
42694 ब्रह्मणा यत्पुरा प्रोक्तं शृणु रामातियत्नतः || ४ ||
42695
42696 उक्तेऽर्थे उपपादकमाख्यानमवतारयति - अत्रेति || ४ ||
42697
42698 अस्ति रामाटवी स्फारा शून्याशान्तातिभीषणा |
42699 योजनानां शतं यस्यां लक्ष्यते कणमात्रकम् || ५ ||
42700
42701 अटव्यादिशब्दानां तात्पर्यार्थमुत्तरसर्गे स्वयमेव वक्ष्यति | शून्या
42702 मृगपक्ष्यादिरहिता मिथ्याभूता च | अशान्ता विक्षेपबहुला | शून्या आशान्ता
42703 दिगन्ता यस्यामिति वा | कणमात्रकं अणुमात्रमिव || ५ ||
42704
42705 तस्यामेको हि पुरुषः सहस्रकरलोचनः |
42706 पर्याकुलमतिर्भीमः संस्थितो वितताकृतिः || ६ ||
42707
42708 प। ३६२) २१६
42709
42710 स सहस्रेण बाहूनामादाय परिघान्बहून् |
42711 प्रहरस्यात्मनः पृष्ठे स्वात्मनैव पलायते || ७ ||
42712
42713 आत्मनः स्वस्य | स्वात्मना स्वेनैव || ७ ||
42714
42715 दृढप्रहारैः प्रहरन्स्वयमेवात्मनात्मनि |
42716 प्रविद्रवति भीतात्मा स योजनशतान्यपि || ८ ||
42717
42718 क्रन्दन्पलायमानोऽसौ गत्वा दूरमितस्ततः |
42719 श्रमवान्विवशाकारो विशीर्णचरणाङ्गकः || ९ ||
42720
42721 पतितोऽवश एवाशु महत्यन्धोऽन्धकूपके |
42722 कृष्णरात्रितमोभीमे नभोगम्भीरकोटरे || १० ||
42723
42724 अन्धो विवेकदृष्टिशून्यः | कृष्णरातिरिव तमसा भीमे || १० ||
42725
42726 ततः कालेन बहुना सोऽन्धकूपात्समुत्थितः |
42727 पुनः प्रहारैः प्रहरन्विद्रवत्यात्मनात्मनः || ११ ||
42728
42729 आत्मनः स्वस्मादेव निमित्तात् || ११ ||
42730
42731 पुनर्दूरतरं गत्वा करञ्जवनगुल्मकम् |
42732 प्रविष्टः कण्टकव्याप्तं शलभः पावकं यथा || १२ ||
42733
42734 करञ्जकण्टकलतानिबिडं वनगुल्मकमल्पच्छायं दुःखबहुलमिति यावत् |
42735 अन्यश्च कण्टकैर्व्याप्तम् || १२ ||
42736
42737 तस्मात्करञ्जगहनाद्विनिःसृत्य क्षणादिव |
42738 पुनः प्रहारैः प्रहरन्विद्रवत्यात्मनात्मनः || १३ ||
42739
42740 पुनर्दूरतरं गत्वा शशाङ्ककरशीतलम् |
42741 कदलीकाननं कान्तं संप्रविष्टो हसन्निव || १४ ||
42742
42743 हसन् आनन्दित इव || १४ ||
42744

42745 कदलीखण्डकात्तस्माद्विनिःसृत्य क्षणात्पुनः |
42746 स्वयं प्रहारैः प्रहरन्विद्रवत्यात्मनात्मनि [आत्मन इति
42747 पाठः] || १५ ||
42748
42749 पुनर्दूरतरं गत्वा तमेवान्धोऽन्धकूपकम् |
42750 स संप्रविष्टस्त्वरया विशीर्णावयवाकृतिः || १६ ||
42751
42752 अन्धकूपात्समुत्थाय प्रविष्टः कदलीवनम् |
42753 कदलीकाननाच्छ्वभ्रं करञ्जवनगुल्मकम् || १७ ||
42754
42755 श्वभ्रं गर्तमिव गम्भीरम् || १७ ||
42756
42757 करञ्जकाननात्कूपं कूपाद्रम्भावनान्तरम् |
42758 प्रविशन्प्रहरंश्चैव स्वयमात्मनि संस्थितः || १८ ||
42759
42760 कूपं प्रागुक्तान्धकूपम् | रम्भावनान्तरं कदलीवनमध्यम् || १८ ||
42761
42762 एवंरूपनिजाचारः सोऽवलोक्य चिरं मया |
42763 अवष्टभ्य बलादेव मुहूर्तं रोधितः पथि || १९ ||
42764
42765 अवलोक्य विवेकदृशा दृष्ट्वा | अवष्टभ्य योगबलेन धृत्वा || १९ ||
42766
42767 पृष्टः स कस्त्वं किमिदं केनार्थेन करोषि वा |
42768 किं नामाभिमतं तेऽत्र किं मुधा परिमुह्यसि || २० ||
42769
42770 इदं आत्मप्रहरणकूपपतनादि किं किमर्थम् | अभिमतमभिलषितम् || २० ||
42771
42772 इति पृष्टेन कथितं तेन मे रघुनन्दन |
42773 नाहं कश्चिन्न चैवेदं मुने किंचित्करोम्यहम् || २१ ||
42774
42775 त्वयाहमवभग्नोऽस्मि त्वं मे शत्रुरहो बत |
42776 त्वया दृष्टोऽस्मि नष्टोऽस्मि दुःखाय च सुखाय च || २२ ||
42777
42778 इत्युक्त्वा विक्लवान्यङ्गान्यालोक्य स्वान्यतुष्टिमान् |
42779 रुरोदातिरवं दीनो मेघो वर्षन्निवाटवीम् || २३ ||
42780
42781 अतुष्टिमान् भोगेभ्योऽसंतृप्तः || २३ ||
42782
42783 क्षणमात्रेण तत्रासावुपसंहृत्य रोदनम् |
42784 स्वान्यङ्गानि समालोक्य जहास च ननाद च || २४ ||
42785
42786 अथाट्टहासपर्यन्ते स पुमान्पुरतो मम |
42787 क्रमेण तानि तत्याज स्वान्यङ्गानि समंततः || २५ ||
42788
42789 प्रथमं पतितं तस्य शिरः परमदारुणम् |
42790 ततस्ते बाहवः पश्चाद्वक्षस्तदनु चोदरम् || २६ ||
42791
42792 संकल्पात्मकं शिरः तदेव सर्वानर्थमूलत्वात्परमदारुणम् बाहवो
42793 विकल्पाशयाः विषयाभिनिवेशो वक्षः तृष्णा उदरमिति योग्यतया कल्प्यम् || २६
42794 ||
42795
42796 अथ क्षणेन स पुमांस्तान्यङ्गानि यथाक्रमम् |

42797 संत्यज्य नियतेः शक्त्या क्वापि गन्तुमुपस्थितः ॥ २७ ॥
42798
42799 ज्ञानेनाज्ञानतत्कार्यबाधनियतेः शक्त्या । क्वापि गन्तुमित्यनेन
42800 गन्तव्यस्थलान्तरापरिशेषाद्बाधितस्य निःस्वरूपापत्तिरुक्ता ॥ २७ ॥
42801
42802 दृष्टवानहमेकान्ते पुनरन्यं तथा नरम् ।
42803 सोऽपि प्रहारान्परितः प्रयच्छन्स्वयमात्मनि ॥ २८ ॥
42804
42805 स्वमनस इवान्यमनसामप्येषैव रीतिरिति प्रदर्शनायाह -
42806 दृष्टवानित्यादिना ॥ २८ ॥
42807
42808 बाहुभिः पीवराकारैः स्वयमेव पलायते ।
42809 कूपे पतति कूपात्तु समुत्थायाभिधावति ॥ २९ ॥
42810
42811 पुनः पतति कुण्डेऽन्तः पुनरार्तः पलायते ।
42812 पुनः प्रविशति श्वभ्रं क्षणं शिशिरकाननम् ॥ ३० ॥
42813
42814 कुण्डेऽन्धकूपे । श्वभ्रं करञ्जवनगर्तम् । शिशिरकाननं कदलीवनम् ॥ ३०
42815 ॥
42816
42817 कष्टं पुनःपुनस्तुष्टः पुनः प्रहरति स्वयम् ।
42818 एवंप्रायनिजाचारश्चिरमालोक्य सस्मयम् ॥ ३१ ॥
42819
42820 स मया समवष्टभ्य परिपृष्टस्तथैव हि ।
42821 तेनैवसौ क्रमेणाद्य रुदित्वा संप्रहस्य च ॥ ३२ ॥
42822
42823 अङ्गैर्विशीर्णतामेत्य ययावलमलक्ष्यताम् ।
42824 विचार्य नियतेः शक्तिं ततो गन्तुमुपस्थितः ॥ ३३ ॥
42825
42826 अलक्ष्यतां अदृश्यताम् ॥ ३३ ॥
42827
42828 दृष्टवानहमेकान्ते पुनरन्यं तथा नरम् ।
42829 प्रहरंस्तद्वदेवासौ स्वयमेव पलायते ॥ ३४ ॥
42830
42831 पलायामनः पतितो महत्यन्धेऽन्धकूपके ।
42832 तत्राहं सुचिरं कालमवसं तत्प्रतीक्षकः ॥ ३५ ॥
42833
42834 अन्धयतीत्यन्धे अन्धकूपके तमोवृते कूपे ॥ ३५ ॥
42835
42836 यावत्स सुचिरेणापि कूपान्नाभ्युदितः शठः ।
42837 अथाहमुत्थितो गन्तुं दृष्टवान्पुरुषं पुनः ॥ ३६ ॥
42838
42839 तादृशं तादृशाकारं प्रपतन्तं तथैव च ।
42840 अवष्टभ्य तथैवाशु तस्य प्रोक्तं पुनर्मया ॥ ३७ ॥
42841
42842 प्। ३६३) २१६
42843
42844 तथैवोत्पलपत्राक्ष नासौ तदवबुद्धवान् ।
42845 केवलं मामसौ मूढो नैव जानासि किंचन ॥ ३८ ॥
42846
42847 उत्पलपत्राक्षेति रामसंबोधनम् । केवलं
42848 स्वव्यापारपरोऽभवदित्युत्तरेणान्वयः ॥ ३८ ॥

आः पाप दुर्द्विजेत्युक्त्वा स्वव्यापारपरो ययौ।
अथ तस्मिन्महारण्ये तथा विहरता मया॥ ३९॥

न केवलं स्वयं विवेकानभिज्ञः किंतु विवेकिजनतिरस्कारपरोऽपीति सूचनाय
आः पापेत्याद्युक्तिः॥ ३९॥

बहवस्तादृशा दृष्टाः पुरुषा दोषकारिणः।
मत्पृष्टाः केचिदायान्ति स्वप्रसंभ्रमवच्छमम्॥ ४०॥

मत्पृष्टा मया बोधिताः सन्तः शमं
प्रागुक्तस्वरूपनाशलक्षणमुपरमम्॥ ४४॥

मदुक्तं नाभिनन्दन्ति केचिच्छवतनुं यथा।
विनिपत्यान्धकूपेभ्यः केचित्तत्प्रोत्थिताः पुनः॥ ४१॥

नाभिनन्दन्त्युपेक्षन्ते जुगुप्सन्ति च॥ ४१॥

कदलीखण्डकात्केचिच्चिरेणापि न निर्गताः।
केचिदन्तर्हिताः स्फारे करञ्जवनगुल्मके॥ ४२॥

न निर्गताः। तत्रैव ज्ञानं प्राप्य मुक्ता इति यावत्॥ ४२॥

न क्वचित्स्थितिमायान्ति केचिद्धर्मपरायणाः।
एवंविधा सा वितता रघूद्वह महाटवी॥ ४३॥

धर्मपरायणाः काम्यधर्मपराः॥ ४३॥

अद्यापि विद्यते यस्यामित्थं ते पुरुषाः स्थिताः।
सा च दृष्टा त्वया राम त्वयेह व्यवहारिणी।
बाल्यात्तु बुद्धितत्त्वस्य न तां स्मरसि राघव॥ ४४॥

त्वया हेतुना व्यवहारिणी सर्वव्यवहारवती सा महाटवी त्वया दृष्टा।
बुद्धितत्त्वस्य बुद्धिसारस्य विवेकस्य। बाल्यादप्रागल्भ्यात्॥ ४४॥

सा भीषणा विविधकण्टकसङ्कटाङ्गी
घोराटवी घनतभोगहनापि लोके।
आगत्य निर्वृतिमलब्धपरावबोधै-
रासेव्यते कुसुमगुल्मकवाटिकेव [कुसुमप्रधाना गुल्मका
यस्मिंस्तत्कुसुमगुल्मकं काननं तद्रूपा वाटिकेत्यर्थः।
एतत्फलितार्थकैव कुसुमकाननेत्यादिष्टीका]॥ ४५॥

उपसंहरति - सेति। लोके लोक्यते विवेकदृशा
धर्मब्रह्मतत्त्वमस्तिंस्तथाविधे अधिकारिजन्मनि निर्वृतिं
साधनसंपत्तिसुखमागत्य प्राप्यापि
अभाग्यवशादलब्धपरमात्मबोधैरासेव्यते विषयासक्त्या सेव्यते।
कुसुमकाननवाटिकेवेत्यापातरम्यत्वे दृष्टान्तः॥ ४५॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे
चित्तोपाख्यानं नामाष्टनवतितमः सर्गः॥ ९८॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे चित्तोपाख्यानं

नामाष्टनवतितमः सर्गः ॥ ९८ ॥


एकोनशततमः सर्गः ९९

श्रीराम उवाच ।

कासौ महाटवी ब्रह्मन्कदा दृष्टा कथं मया ।
के च ते पुरुषास्तत्र किं तत्कर्तुं कृतोद्यमाः ॥ १ ॥

उक्तस्य चित्ताख्यानस्य क्रमेण व्युत्क्रमेण च ।
रामप्रश्नमुखेनात्र तात्पर्यार्थोऽनुवर्ण्यते ॥ १ ॥

किं किमर्थं वा तत्परिघैः स्वदेहप्रहारं कूप्रकरञ्जवनादिप्रवेशं च
कर्तुं कृतोद्यमास्ते जाताः । किंतत्कर्तृकृतोद्यमाः इति पाठे स्वतः
स्वानिष्टे प्रवृत्तेरयोगात्परतः सा वाच्येति केन तत्कर्त्रा तादृशानिष्टे
बलान्नियोजकेन हेतुना स्वप्रहारादौ कृतोद्यमास्ते संपन्ना इत्यर्थः ।
कश्चासौ तत्कर्तां च किंतत्कर्ता तेन कृतोद्यमा इति विग्रहः ॥ १ ॥

श्रीवसिष्ठ उवाच ।

रघुनाथ महाबाहो शृणु वक्ष्यामि तेऽखिलम् ।
न सा महाटवी राम दूरे नैव च ते नराः ॥ २ ॥

वस्तुतो ब्रह्मैव मिथ्याभूतस्वर्गनरकादिवैचित्र्यकल्पनया संसाराटवी
तत्कल्पकानि मनांस्येव ते नरा इति न ते दूरस्था मयोक्ता इत्याह -
रघुनाथेत्यादिना ॥ २ ॥

येयं संसारपदवी गम्भीराऽपारकोटरा ।
तां तां शून्यां विकाराढ्यां विद्धि राम महाटवीम् ॥ ३ ॥

या इयं प्रसिद्धा संसारपदवी तां परमार्थदृशा असत्त्वाच्छून्यां
भ्रान्तिदृशा तु सत्त्वाद्विकाराढ्यां तां प्रागुक्तां महाटवीं
विद्धीत्यर्थः ॥ ३ ॥

विचारालोकलभ्येयं यदैकेनैव वस्तुना ।
पूर्णा नान्येन संयुक्ता केवलेव तदैव सा ॥ ४ ॥

कदा सा शून्या केन वा उपायेन लभ्यते तत्राह - विचारालोकेति । यदा
एकेनाद्वितीयेनैव वस्तुना पूर्णा अन्येन न संयुक्ता भवति तदा केवला शुन्येव
भवति । इवशब्दः केवलशून्यादिशब्दानामपि तत्रौपचारिकी प्रवृत्तिः
प्रतियोग्यनिरूपणे शून्यत्वादेर्निरूपणासंभवादिति द्योतनाय । तादृशी
चेयं तत्त्वं पदार्थशोधनलक्षणेन विवेकालोकेन लभ्येत्यर्थः ॥ ४ ॥

तत्र ये ते महाकाराः पुरुषाः प्रभ्रमन्ति हि ।
मनांसि तानि विद्धि त्वं दुःखे निपतितान्यलम् ॥ ५ ॥

द्रष्टा योऽयमहं तेषां सविवेको महामते ।
विवेकेन मया तानि दृष्टान्यन्येव नानघ ॥ ६ ॥

विवेकोऽत्र विचारः ॥ ६ ॥

42953 मया तान्येव बोध्यन्ते विवेकेन मनांसि हि |
42954 सततं सुप्रकाशेन कमलानीव भानुना || ७ ||
42955
42956 मत्प्रबोधं समासाद्य मत्प्रसादान्महामते |
42957 मनांसि कानि चित्तानि गतान्युपशमात्परम् || ८ ||
42958
42959 मत्प्रबोधं तत्त्वज्ञानम् | मत्प्रसादाद्विवेकप्रसादात् |
42960 उपशमान्मनोभावनाशात् | परं मोक्षं गतानि || ८ ||
42961
42962 प्। ३६४) २१७
42963
42964 कानिचिन्नाभिनन्दन्ति मां विवेकं वोमोहतः |
42965 मत्तिरस्कारवशतः कूपेष्वेव पतन्त्यधः || ९ ||
42966
42967 मत्तिरस्कारो विचारोपेक्षा || ९ ||
42968
42969 ये तेऽन्धकूपा गहना नरकास्ते रघूद्वह |
42970 कदलीकाननं यानि संप्रविष्टानि तानि तु || १० ||
42971
42972 स्वर्गैकरसिकानि त्वं मनांसि ज्ञातुमर्हसि |
42973 प्रविष्टान्यन्धकूपान्तर्निर्गतानि न यानि तु || ११ ||
42974
42975 महापातकयुक्तानि तानि चित्तानि राघव |
42976 कदलीकाननस्थानि निर्गतानि न यानि तु || १२ ||
42977
42978 पुण्यसंभारयुक्तानि तानि चित्तानि राघव |
42979 करञ्जवनयातानि निर्गतानि न यानि तु || १३ ||
42980
42981 तानि मानुष्यजातानि चित्तानि रघुनन्दन |
42982 कानिचित्संप्रबुद्धानि तत्र मुक्तानि बन्धनात् || १४ ||
42983
42984 मानुष्ये मनुष्यभावे जातानि परिणतानि | संप्रबुद्धानीति मनुष्यदेहे
42985 वैराग्यादिविशेषसंभवान्मुख्यो ज्ञानाधिकार इति द्योतनाय || १४ ||
42986
42987 कानिचिद्बहुरूपाणि योनेर्योनिं विशन्ति हि |
42988 मनांसि तानि तिष्ठन्ति निपतन्त्युत्पतन्ति च || १५ ||
42989
42990 निपतन्ति नरकेषु | उत्पतन्ति स्वर्गे || १५ ||
42991
42992 यत्तत्करञ्जगहनं तत्कलत्ररसं विदुः |
42993 दुःखकण्टकसंबाधं मानुष्यं विविधैषणम् || १६ ||
42994
42995 कलत्ररसं कुटुम्बस्नेहवत् | अत एव दुःखकण्टकसंबाधं विविधैषणं
42996 च मानुष्यम् || १६ ||
42997
42998 करञ्जगहनं यानि प्रविष्टानि मनांसि तु |
42999 मानुष्ये तानि जातानि तत्रैव रसिकानि च || १७ ||
43000
43001 रसिकानि अभिनिविष्टानि विषयरसास्वादपराणि वा || १७ ||
43002
43003 कदलीकाननं यत्तच्छशाङ्ककरशीतलम् |
43004 तन्मनोह्लादनकरं स्वर्गं विद्धि रघुद्वह || १८ ||

43005
43006 कानिचित्पुण्यभूतेन तपसा धारणात्मना ।
43007 धारयन्ति शरीराणि संस्थितान्युदितान्यपि ॥ १९ ॥
43008
43009 पुण्यभूतेन शास्त्रविहितेन । अशास्त्रविहितस्य वारणार्थं विशेषणम् ।
43010 धारणात्मना ध्येयदेशे मनोनिबन्धरूपधारणाप्रधानेन उपासनेन
43011 हेतुना यानि ग्रहसप्तर्षिध्रुवादिशरीराणि धारयन्ति तानि इतरापेक्षया
43012 तेजोभोगाद्यतिशयेन तत्त्वावबोधेन च उदितानि अभ्युदयवन्त्यपि भूत्वा
43013 संस्थितानि चिरं स्थितानीत्यर्थः ॥ १९ ॥
43014
43015 यैरहं पुंभिरबुधैर्बुद्धिचित्ततिरस्कृतः ।
43016 तैर्मनोभिरनात्मज्ञैः स्वविवेकस्तिरस्कृतः ॥ २० ॥
43017
43018 बुद्धिभिश्चित्तैर्वा तिरस्कृत उपेक्षितः । नाध्यवसितो न स्मृतश्चेत्यर्थः ॥ २०
43019 ॥
43020
43021 त्वया दृष्टो विनष्टोऽस्मि त्वं मे शत्रुरिति द्रुतम् ।
43022 यदुक्तं तद्धि चित्तेन गलता परिदेवितम् ॥ २१ ॥
43023
43024 गलता तत्त्वावबोधाद्विशीर्यता । परिदेवितं विलपितम् ॥ २१ ॥
43025
43026 रुदितं यन्महाक्रन्दं पुंसा बह्वाशु राघव ।
43027 तद्भोगजालं त्यजता मनसा रोदनं कृतम् ॥ २२ ॥
43028
43029 अर्धप्राप्तविवेकस्य न प्राप्तस्यामलं पदम् ।
43030 चेतसस्त्यजतो भोगान्परितापो भृशं भवेत् ॥ २३ ॥
43031
43032 रुदताङ्गानि दृष्टानि कारुण्येनावबोधिना ।
43033 कष्टमेतानि संत्यज्य किं प्रयामीति चेतसा ॥ २४ ॥
43034
43035 स्वान्यङ्गानि समालोक्य जहास च ननाद च इत्युक्तेस्तात्पर्यमाह - रुदतेति ।
43036 अवबोधिना ईषद्विवेकवता । कारुण्येन स्त्रीपुत्रादिस्नेहेन ॥ २४ ॥
43037
43038 अर्धप्राप्तविवेकस्य न प्राप्तस्यामलं पदम् ।
43039 चेतसस्त्यजतोऽङ्गानि परितापो हि वर्धते ॥ २५ ॥
43040
43041 अङ्गानि स्नेहलोभादीनि ॥ २५ ॥
43042
43043 हसितं तु यदानन्दि पुंसा मदवबोधतः ।
43044 परिप्राप्तविवेकेन तत्तुष्टं राम चेतसा ॥ २६ ॥
43045
43046 तत्तुष्टं आनन्दितम् । तुषेर्नपुंसके भावे क्तः ॥ २६ ॥
43047
43048 परिप्राप्तविवेकस्य त्यक्तसंसारसंस्थितेः ।
43049 चेतसस्त्यजतो रूपमानन्दो हि विवर्धते ॥ २७ ॥
43050
43051 तदेव स्पष्टयति - परिप्राप्तेति ॥ २७ ॥
43052
43053 हसताङ्गानि दृष्टानि पुंसा यान्युपहासतः ।
43054 तानि दृष्टानि मनसा विप्रलम्भपदानि ह ॥ २८ ॥
43055
43056 विप्रलम्भपदानि स्ववञ्चननिमित्तानि ॥ २८ ॥

मिथ्याविकल्परचितैर्विप्रलब्धमहो चिरम् |
इत्यङ्गान्युपहासेन दृष्टानि स्वानि चेतसा || २९ ||

मिथ्याविकल्पेन रचितैः कल्पितैर्विषयैर्विप्रलब्धं वञ्चितमित्युपहासेन || २९ ||

मनः प्राप्तविवेकं हि विश्रान्तं वितते पदे |
प्राक्तनादीनताधारं हसन्पश्यति दूरतः || ३० ||

प्राक्तन्या आदिनताया आधारमालम्बनं विषयजातम् | दूरतः
असङ्गात्मासंस्पर्शितयेति यावत् || ३० ||

यदसौ समवष्टभ्य मया पृष्टः प्रयत्नतः |
तद्विवेको बलाच्चित्तमादत्त इति दर्शितम् || ३१ ||

असौ प्रागुक्तः पुरुषः | आदत्ते विष्टभ्राति || ३१ ||

यदङ्गानि विशीर्णानि गतान्यन्तर्धिमग्रतः |
तच्चित्तेन विनार्थाशा शाम्यतीति प्रदर्शितम् || ३२ ||

अर्थसहिता आशा अर्थाशा | मनोभादे सह विषयैर्विषयतृष्णापि बाध्यत इति
दर्शितमित्यर्थः || ३२ ||

सहस्रनेत्रहस्तत्वं यत्पुंसः परिवर्णितम् |
तदनन्ताकृतित्वं हि चेतसः परिदर्शितम् || ३३ ||

यदात्मनि प्रहारौघैः पुमान्प्रहरति स्वयम् |
तत्तत्कुकल्पनाघातैः प्रहरत्यात्मनो मनः || ३४ ||

पलायते यत्पुरुषः स्वात्मनः प्रहरन्स्वयम् |
स्ववासनाप्रहारेभ्यस्तन्मनः प्रपलायते || ३५ ||

स्वयं प्रहरति स्वान्तं स्वयमेव स्वयेच्छया |
पलायते स्वयं चैव पश्याज्ञानविजृम्भितम् || ३६ ||

स्वान्तं मनः || ३६ ||

स्ववासनोपतप्तानि सर्वाण्येव मनांसि हि |
स्वयमेव पलायन्ते गन्तुं युक्तानि तत्पदम् || ३७ ||

उपतप्तानि विक्षोभितानि | तद्ब्रह्मपदं गन्तुमवगन्तुं युक्तानि
स्वरूपयोग्यानि | अथवा युक्तानि योगेन निरुद्धान्यपि || ३७ ||

प्। ३६५) २१७

यदिदं दुःखं तत्तनोति स्वयं मनः |
स्वयमेवातिखिन्नंतु पुनस्तस्मात्पलायते || ३८ ||

उपतप्तमित्येतद्व्याचष्टे - यदिदमिति || ३८ ||

संकल्पवासनाजालैः स्वयमायाति बन्धनम् |
मनो लालामयैर्जालैः कोशकारकृमिर्यथा || ३९ ||

लाला स्वमुखद्रवस्तन्मयैस्तद्विकारैः । कोशकारकृमिः
कौशेयोत्पत्तिभूमौ प्रसिद्धः ॥ ३९ ॥

यथानर्थमवाप्नोति तथा क्रीडति चञ्चलम् ।
भाविदुःखमपश्यन्स्वं दुर्लीलाभिरिवार्भकः ॥ ४० ॥

अपश्यन्काष्ठरन्ध्रस्थवृषणाक्रमणं यथा ।
कीलोत्पाटी कपिर्दुःखमेतीदं हि तथा मनः ॥ ४१ ॥

उक्तेऽर्थे लौकिकीं गाथामुदाहरति - अपश्यन्निति । यथा किलारण्ये तक्षसु
महाकाष्ठमर्धं विदार्य मध्ये कीलं दत्त्वा दैवादपगतेषु
कश्चित्कपिस्तत्काष्ठोपविष्टः काष्ठरन्ध्रस्थस्ववृषणाक्रमं
भाविनमपश्यन्स्वचापलाद्विष्टम्भकीलोत्पाटी वृषणसंदंशेन
मरणादिदुःखमेति तद्वदित्यर्थः ॥ ४१ ॥

चिरपालनया चैव चिरभावनया तथा ।
अभ्यासात्तुच्छतामेत्य न भूयः परिशोचति ॥ ४२ ॥

यदि निरुद्धमपि विक्षेपैः पलायते तर्हि कथमिष्टसिद्धिस्तत्राह - चिरेति । न
सकृन्निरोधादिष्टसिद्धिः किंतु तस्य चिरपालनया चिरमसङ्गात्मभावनया
चेत्यर्थः । तुच्छतां ज्ञानबाध्यताम् ॥ ४२ ॥

मनःप्रमादाद्वर्धन्ते दुःखानि गिरिकूटवत् ।
तद्वशादेव नश्यन्ति सूर्यस्याग्रे हिमं यथा ॥ ४३ ॥

तथाच मन एव प्रमादविवेकाभ्यां बन्धमोक्षयोर्हेतुरिति फलितमित्याह ##-

यावज्जीवमनिन्द्यया च रमते शास्त्रार्थसंजातया
तुल्यं वासनया मनो हि मुनिवन्मौनेन रागादिषु ।
पश्चात्पावनपावनं पदमजं तत्प्राप्य तच्छीतलं
तत्संस्थेन न शोच्यते पुनरलं पुंसा महापत्स्वपि ॥ ४४ ॥

यद्यर्थे चशब्दः । यदि मनः शास्त्रार्थसंजातया अनिन्द्यया वासनया
तुल्यं समरसं सत् रागादिषु विषयेषु मौनेन निरोधेन यावज्जीवं
मुनिवद्रमते तत् तर्हि पश्चात्तत्त्वबोधेन पावनपावनं परमपवित्रमजं
जन्मादिविक्रियारहितमत एव शीतलं तापत्रयास्पृष्टमलं पूर्णं
तद्ब्रह्मपदं प्राप्य तत्संस्थेन जीवन्मुक्तेन पुंसा महापत्सु
प्रलयादिष्वपि पुनर्न शोच्यते । तरति शोकमात्मवित् इत्यादिश्रुतेरित्यर्थः ॥ ४४ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपाये उत्पत्तिप्रकरणे
चित्तोपाख्यानं नामैकोनशततमः सर्गः ॥ ९९ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे चित्तोपाख्यानं
नामैकोनशततमः सर्गः ॥ ९९ ॥

शततमः सर्गः १००

श्रीवसिष्ठ उवाच ।

चित्तमेतदुपायातं ब्रह्मणः परमात्पदात् ।

43161 अतन्मयं तन्मयं च तरङ्गः सागरादिव ॥ १ ॥
43162
43163 वर्ण्यतेऽत्र मनःशक्त्या ब्रह्मणः सर्वशक्तिता ।
43164 अज्ञानमात्रादद्वैते बन्धमोक्षादिकल्पना ॥ १ ॥
43165
43166 मनोधीनैव बन्धमोक्षकल्पनेति यदुक्तं तत्रोपपत्तिमाह - चित्तमित्यादिना
43167 । अतन्मयमब्रह्मभूताज्ञानविकारः । तन्मयं शुद्धब्रह्मविवर्तश्च ।
43168 यथा तरङ्गो जलविकारस्तत्सत्ताविवर्तश्च तद्वदित्यर्थः ॥ १ ॥
43169
43170 प्रबुद्धानां मनो राम ब्रह्मैवेह हि नेतरत् ।
43171 जलसामान्यबुद्धीनामब्धेर्नान्यस्तरङ्गकः ॥ २ ॥
43172
43173 जलसामान्यं जलसत्ता ॥ २ ॥
43174
43175 मनो रामाप्रबुद्धानां संसारभ्रमकारणम् ।
43176 अपश्यतोऽम्बुसामान्यमन्यताम्बुतरङ्गयोः ॥ ३ ॥
43177
43178 अप्रबुद्धदृशां पक्षे तत्प्रबोधाय केवलम् ।
43179 वाच्यवाचकसंबन्धकृतो भेदः प्रकल्प्यते ॥ ४ ॥
43180
43181 अत एव हि उपदेश्योपदेशकशब्दार्थादिशास्त्रीयव्यवहारकल्पनापि
43182 अज्ञपक्षमवलम्ब्यैव न तत्त्वदृशेति प्रागुक्तमित्याह - अप्रबुद्धेति ॥ ४
43183 । ।
43184
43185 सर्वशक्ति परं ब्रह्म नित्यमापूर्णमव्ययम् ।
43186 न तदस्ति न तस्मिन्यद्विद्यते विततात्मनि ॥ ५ ॥
43187
43188 सर्वजगत्कारणत्वमप्यज्ञातस्यैव ब्रह्मणो न ज्ञातस्येत्याशयेन तस्यैव
43189 सर्वशक्तिशालितामुपपादयति - सर्वशक्तीत्यादिना ॥ ५ ॥
43190
43191 सर्वशक्तिर्हि भगवान्यैव तस्मै हि रोचते ।
43192 शक्तिं तामेव विततां प्रकाशयति सर्वगः ॥ ६ ॥
43193
43194 प्रकाशयति कार्यात्मना प्रकटयति ॥ ६ ॥
43195
43196 चिच्छक्तिर्ब्रह्मणो राम शरीरेष्वभिदृश्यते ।
43197 स्पन्दशक्तिश्च वातेषु जडशक्तिस्तथोपले ॥ ७ ॥
43198
43199 शरीरेषु चतुर्विधभूतग्रामेषु ॥ ७ ॥
43200
43201 द्रवशक्तिस्तथाम्भःसु तेजःशक्तिस्तथाऽनले ।
43202 शून्यशक्तिस्तथाकाशे भावशक्तिर्भवस्थितौ ॥ ८ ॥
43203
43204 शून्यशक्तिरनावरकत्वात्सर्वावपनशक्तिः । भावशक्तिरस्तीति
43205 व्यवहारयोग्यता ॥ ८ ॥
43206
43207 ब्रह्मणः सर्वशक्तिर्हि दृश्यते दशदिग्गता ।
43208 नाशशक्तिर्विनाशेषु शोकशक्तिश्च शोकिषु ॥ ९ ॥
43209
43210 नाशशक्तिः कारणे तिरोभावशक्तिः ।
43211 शोकशक्तिराशोकजदेहजननशक्तिर्विषादशक्तिर्वा ॥ ९ ॥
43212

43213 आनन्दशक्तिर्मुदिते वीर्यशक्तिस्तथा भटे ।
43214 सर्गेषु सर्गशक्तिश्च कल्पान्ते सर्वशक्तिता ॥ १० ॥
43215
43216 कल्पान्ते प्राकृतप्रलये प्रकृतौ सर्वशक्तिता तस्याः सर्वकार्यबीजत्वात् ।
43217 शर्वशक्तिता इति पाठे संहारशक्तिता ॥ १० ॥
43218
43219 प्। ३६६) २१८
43220
43221 फलपुष्पलतापत्रशाखाविटपमूलवान् ।
43222 वृक्षबीजे यथा वृक्षस्तथेदं ब्रह्मणि स्थितम् ॥ ११ ॥
43223
43224 तदेवाह - फलेति ॥ ११ ॥
43225
43226 प्रतिभासवशादेव मध्यस्थं चित्तजाड्ययोः ।
43227 जीवेतराभिधं चित्तमन्तर्ब्रह्मणि दृश्यते ॥ १२ ॥
43228
43229 प्रथमकार्यस्य चित्तस्य चिज्जाड्योभयरूपतादर्शनादप्यज्ञातमेव ब्रह्म
43230 जगद्बीजमित्याशयेनाह - प्रतिभासेति । प्रतिभासोऽत्राज्ञानसाक्षी
43231 तद्वशादेव न शुद्धवशात् ॥ १२ ॥
43232
43233 नानातरुलतागुल्मजालपल्लवशालयः ।
43234 निर्विकल्पकचिन्मात्रं नानाऽनिर्ज्ञातकल्पना ॥ १३ ॥
43235
43236 यतोऽयं तरुगुल्मादिदृश्यप्रपञ्चोऽज्ञातचिद्विवर्तोऽतश्चिन्मात्रमेव
43237 तत्त्वमित्याह - नानेति । अनिर्ज्ञातकल्पना अज्ञाते तत्त्वे यत इयं
43238 कल्पनेत्यर्थः ॥ १३ ॥
43239
43240 ब्रह्मैवेदमहंतत्त्वं जगत्पश्याद्य राघव ।
43241 स आत्मा सर्वगो नाम नित्योदितमहावपुः ॥ १४ ॥
43242
43243 जगत् अहंतत्त्वं अहमिति भासमानजीवतत्त्वं प्रत्यक्चिद्रूपं ब्रह्मैवेति
43244 पश्येत्यर्थः ॥ १४ ॥
43245
43246 यन्मनाड्यननीं शक्तिं धत्ते तन्मन उच्यते ।
43247 पिच्छभ्रान्तिर्यथा व्योम्नि पयस्यावर्तधीर्यथा ॥ १५ ॥
43248
43249 ब्रह्मैव तत्तच्छक्तिपुरस्कारेण भ्रान्त्या मन आदिशब्दैरुच्यते नान्यदित्याह
43250 - यदित्यादिना ॥ १५ ॥
43251
43252 प्रतिभासकलामात्रं मनो जीवस्तथात्मनि ।
43253 यदेतन्मनसो रूपमुदितं मननात्मकम् ॥ १६ ॥
43254
43255 ब्राह्मी शक्तिरसौ तस्माद्ब्रह्मैव तदरिंदम ।
43256 इदं तदहमित्येव विभागः प्रतिभासजः ॥ १७ ॥
43257
43258 शक्तितत्कार्ययोरभेदादिदमिति पुरोवर्तितया तदिति परोक्षतया अहमिति
43259 प्रत्यक्तादात्म्येन च भासमानस्त्रिविधो दृश्यविभागः प्रतिभासजः
43260 प्रातिभासिक एव न वास्तव इत्यर्थः ॥ १७ ॥
43261
43262 मनसो ब्रह्मणोऽन्यच्च मोहे परमकारणम् ।
43263 यद्यच्चैतन्मनस्येव किंचित्सदसदात्मकम् ॥ १८ ॥
43264

43265 ननु कामकर्मवासनादिकमपि द्वैतप्रपञ्चहेतुः श्रूयते तत्कथं
43266 ब्रह्मशक्तिरेव तद्धेतुरुच्यते तत्राह - मनस इति। मनसो जीवस्य
43267 ब्रह्मणश्च मोहे भेदादिभ्रमे अन्यच्च कामादि यद्यत्किंचित्परमकारणं
43268 व्याशब्दितं लोके तत्सर्वं मनस्येवाविर्भावतिरोभावाभ्यां सदसदात्मकं
43269 सर्वशक्तेर्ब्रह्मणस्तां प्रागुक्तां ब्रह्मतां बृंहणशक्तिमेव विदुर्न
43270 तदन्यदिति परेणान्वयः॥ १८॥
43271
43272 व्याशब्दितं सर्वशक्तेस्तां शक्तिं ब्रह्मतां विदुः।
43273 मनः सत्तात्मकं नाम यथैतन्मनसि स्थितम्॥ १९॥
43274
43275 ननु मनोधर्माः कामादिशक्तयः कथं ब्रह्मणि स्थिता येन तच्छक्तयः
43276 स्युस्तत्राह - मन इति। यथा मनः सत्तात्मकं नाम ब्रह्मरूपं मनसि
43277 संसर्गाध्यासास्थितं यथा वा ऋतोर्वसन्तादेः शक्तयो वृक्षादिषु
43278 स्थितास्तद्वज्जीवेहा मनोधर्मा अपि ब्रह्मणि स्थिता इत्यर्थः॥ १९॥
43279
43280 यथर्तोः शक्तयस्तद्वज्जीवेहा ब्रह्मणि स्थिताः।
43281 व्याप्तसर्वर्तुकुसुमा क्ष्मादेशविधिभेदतः॥ २०॥
43282
43283 यदि सर्वा जीवेहा ब्रह्मशक्तयस्तर्हि कुतो न सर्वाः सर्वजीवेषु संकीर्यन्ते
43284 तत्राह - व्याप्तेति। यथा व्याप्तसर्वर्तुकुसुमशक्तिरपि क्ष्मा
43285 भूमिस्तत्तत्प्रदेशेषु बीजसंस्कारादिविधिभेदतो व्यवस्थयैव पुष्पादि दधाति
43286 न संकरेण तथा लोककृद्ब्रह्मापि चित्तशक्तीर्व्यवस्थया दधातीत्यर्थः॥ २०॥
43287
43288 यथा दधाति पुष्पाणि तथा चित्तानि लोककृत्।
43289 क्वचित्क्वचित्कदाचिद्धि तस्मादायान्ति शक्तयः॥ २१॥
43290
43291 आयान्ति व्यवस्थितफलात्मना आविर्भवन्ति। क्ष्मातलाच्छालिशक्तय इवेत्यर्थः॥
43292 २१॥
43293
43294 देशकालादिवैचित्र्यात्क्ष्मातलादिव [दिह शालयः इति पाठः]
43295 शालयः।
43296 न जातं प्रतिभासेन तेनैवान्येन पश्यति॥ २२॥
43297
43298 अभ्युपेत्य चेदं प्रतियोगिव्यवच्छेदसंख्यारूपादिभेदरूपं
43299 जगद्वैचित्र्यमसंकरो दर्शितः परमार्थतस्तत्प्रतिभासमात्रस्य
43300 कारकत्वायोगात्प्रतिभासपृथक्कृतकारकान्तरासिद्धेश्च प्रातिभासिकं न
43301 किंचिज्जातं न वा किंचित्केनचित्पश्यतीति मनःशब्दकल्पितब्रह्मजास्ते
43302 ब्रह्मैवेति बुध्यस्वेत्याह - न जातमिति सार्धेन॥ २२॥
43303
43304 प्रतियोगिव्यवच्छेदसंख्यारूपादयश्च ये।
43305 मनःशब्दैः प्रकल्प्यन्ते ब्रह्मजान्ब्रह्म विद्धि तान्॥ २३॥
43306
43307 यथा यथास्य मनसः प्रतिभासः प्रवर्तते।
43308 तथा तथैव भवति दृष्टान्तोऽत्र किलैन्दवाः॥ २४॥
43309
43310 स्वयमक्षुब्धविमले यथा स्पन्दो महाम्भसि।
43311 संसारकारणं जीवस्तथायं परमात्मनि॥ २५॥
43312
43313 जगत्कल्पको जीव एव ब्रह्मान्यो नास्ति दूरे तत्कल्पितं जगदित्याशयेनाह -
43314 स्वयमिति॥ २५॥
43315
43316 ज्ञस्य सर्वं चितं राम ब्रह्मैवावर्तते सदा।

कल्लोलोर्मितरङ्गौघैरब्धेर्जलमिवात्मनि ॥ २६ ॥

चितं उपचितं पूर्णमित्यर्थः । आसमन्ताद्वर्तते ॥ २६ ॥

द्वितीया नास्ति सत्तैका नामरूपक्रियात्मिका ।
परे नानातरङ्गेऽब्धौ कल्पनेव जलेतरा ॥ २७ ॥

परे ब्रह्मणि द्वितीया सत्ता नास्ति किंत्वेकैव ॥ २७ ॥

जायते नश्यति तथा यदिदं याति तिष्ठति ।
तदिदं ब्रह्मणि ब्रह्म ब्रह्मणा च विवर्तते ॥ २८ ॥

विवर्तते अतात्त्विकरूपेण प्रतिभासते ॥ २८ ॥

स्वात्मन्येवातपस्तीव्रो मृगतृष्णिकया यथा ।
विचित्रेण विचित्रोऽपि प्रस्फुरत्यात्मना तथा ॥ २९ ॥

मृगतृष्णिकया मृगतृष्णानद्यात्मना । विचित्रो विगतनामरूपोऽपि ॥ २९ ॥

करणं कर्म कर्ता च जननं मरणं स्थितिः ।
सर्वं ब्रह्मैव नह्यस्ति तद्विना कल्पनेतरा ॥ ३० ॥

न लोभोऽस्ति न मोहोऽस्ति न तृष्णास्ति न रञ्जना ।
क आत्मन्यात्मनो लोभस्तृष्णा मोहोऽथवा कुतः ॥ ३१ ॥

द्वितीयाभावे लोभमोहादीनां प्रसक्तिरेव नास्तीत्याह - नेति । रञ्जना
अत्यासक्तिः ॥ ३१ ॥

आत्मैवेदं जगत्सर्वमात्मैव कलनाक्रमः ।
हेमाङ्गदतयेवायमात्मोदेति मनस्तया ॥ ३२ ॥

मनस्तया मनोभावेन ॥ ३२ ॥

प्। ३६७) २१८

अबुद्धं यत्परं धाम तच्चित्तं जीव उच्यते ।
अपरिज्ञात एवाशु बन्धुरायात्यबन्धुताम् ॥ ३३ ॥

अबुद्धमज्ञानावृतम् ॥ ३३ ॥

चिन्मयेनात्मनाऽज्ञेन स्वसंकल्पनया स्वयम् ।
शून्यता गगनेनेव जीवता प्रकटीकृता ॥ ३४ ॥

अज्ञेनाज्ञानविषयीकृतेन यथा अशून्येनापि गगनेन शून्यता प्रकटीकृता
तद्वत् ॥ ३४ ॥

आत्मैवानात्मवदिह जीवो जगति राजते ।
द्वीन्दुत्वमिव दुर्दृष्टेः सच्चासच्च समुत्थितम् ॥ ३५ ॥

अनात्मवत् अनात्मभूताहंकारादितादात्म्येनाहंप्रत्ययविषयवत् ।
विषयरूपेण द्वितीयरूपेण चासत्परमार्थैकरूपेण सच्च ॥ ३५ ॥

43369 मोहार्थशब्दार्थदृशोरेतयोरत्यसंभवात् ।
43370 सत्यत्वादात्मनश्चैव क्वात्मा बद्धः क्व मुच्यते ॥ ३६ ॥
43371
43372 मोहार्थयोर्व्यामोहनिमित्तयोः ।
43373 एतयोर्बन्धमोक्षशब्दार्थदृशोरत्यन्तमसंभवात् ॥ ३६ ॥
43374
43375 नित्यासंभवबन्धस्य बद्धोऽस्मीति कुकल्पना ।
43376 यस्य काल्पनिकस्तस्य मोक्षो मिथ्या न तत्त्वतः ॥ ३७ ॥
43377
43378 नित्यं न संभवतीत्यसंभवो बन्धो यस्य । तथाच परमार्थदृष्ट्या
43379 काल्पनिकावपि बन्धमोक्षौ तुच्छौ । न निरोधो न चोत्पत्तिर्न बद्धो न च
43380 साधकः । न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता इति श्रुतेरिति भावः ॥ ३७ ॥
43381
43382 श्रीराम उवाच ।
43383
43384 मनो यं निश्चयं याति तत्तद्भवति नान्यथा ।
43385 तेन काल्पनिको नास्ति बन्धः कथमिह प्रभो ॥ ३८ ॥
43386
43387 यौक्तिकदृशा काल्पनिकानिर्वचनीयबन्धस्य
43388 प्राग्विस्तरेणोपपादितत्वात्काल्पनिकोऽपि बन्धो नास्तीति तुच्छतोक्तिमसहमानो
43389 रामः पृच्छति - मन इति ॥ ३८ ॥
43390
43391 श्रीवसिष्ठ उवाच ।
43392
43393 मिथ्या काल्पनिकीवेयं मूर्खाणां बन्धकल्पना ।
43394 मिथ्यैवाभ्युदिता तेषामितरा मोक्षकल्पना ॥ ३९ ॥
43395
43396 यौक्तिकदृष्टिरियं लौकिकदृष्टिदार्ढ्यविघटनाय
43397 परमार्थदृष्टिद्वारत्वेन कल्पितेति न तत्रैव विश्रान्तिः किंतु
43398 श्रौततुच्छतादृष्टावेवेत्याशयेन वसिष्ठः प्रत्याह - मिथ्येत्यादिना ।
43399 यथा काल्पनिकी स्वाप्नी कल्पना जाग्रद्दृशा मिथ्या तुच्छा तद्वत् ।
43400 अनिर्वचनीयता न वस्तुतत्त्वं किंतु युक्तिभिर्निर्वचनाशक्तिः । सा च
43401 मूर्खपुरुषधर्मो न वस्तुस्वभाव इति सूचनाय मूर्खाणामित्युक्तम् ॥ ३९ ॥
43402
43403 एवमज्ञानकादेव बन्धमोक्षदृशोऽस्मृतेः ।
43404 वस्तुतस्तु न बन्धोऽस्ति न मोक्षोऽस्ति महामते ॥ ४० ॥
43405
43406 एवं प्रागुक्तरीत्या तुच्छमज्ञानमज्ञानकं तस्मादेव
43407 बन्धमोक्षदृशः । नाऽसतो विद्यते भावो नाऽभावो विद्यते सतः । उभयोरपि
43408 दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥ इति स्मृतिविरोधेन
43409 सदसदान्तरालिकानिर्वचनीयताविश्रान्त्ययोगादित्यर्थः ॥ ४० ॥
43410
43411 कल्पनाया अवस्तुत्वं संप्रबुद्धमतिं प्रति ।
43412 रज्ज्वहेरिव हे प्राज्ञ तत्त्वबुद्धमतिं प्रति ॥ ४१ ॥
43413
43414 अवस्तुत्वं तुच्छत्वम् । तत्प्रागुक्तमनिर्वचनीयत्वं तु अबुद्धमतिमज्ञं
43415 परीक्षकं प्रति न प्राज्ञं प्रतीत्यर्थः ॥ ४१ ॥
43416
43417 बन्धमोक्षादिसंमोहो न प्राज्ञस्यास्ति कश्चन ।
43418 संमोहबन्धमोक्षादि ह्यज्ञस्यैवास्ति राघव ॥ ४२ ॥
43419
43420 तदेव स्पष्टतरमाह - बन्धेति ॥ ४२ ॥

43421
43422 आदौ मनस्तदनु बन्धविमोक्षदृष्टी
43423 पश्चात्प्रपञ्चरचना भुवनाभिधाना।
43424 इत्यादिका स्थितिरियं हि गता प्रतिष्ठा-
43425 माख्यायिका सुभग बालजनोदितेव॥ ४३॥
43426
43427 उक्तेऽर्थे बालकाख्यायिकामवतारयन्नुपसंहरति - आदाविति। हे सुभग
43428 इत्यादिका इयं बन्धस्थितिः प्रतिष्ठां दृढमूलताम्। बालजनाय धात्र्या
43429 उदिता उक्ता वक्ष्यमाणा आख्यायिकेव॥ ४३॥
43430
43431 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे
43432 चित्तचिकित्सापूर्वकं चित्तोत्पत्तिवर्णनं नाम शततमः सर्गः॥ १००॥
43433
43434 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
43435 चित्तोत्पत्तिवर्णनं नाम शततमः सर्गः॥ १००॥
43436
43437
43438 एकाधिकशततमः सर्गः १०१
43439
43440 श्रीराम उवाच।
43441
43442 किमुच्यते मुनिश्रेष्ठ बालकाख्यायिकाक्रमः।
43443 क्रमेण कथयैतन्मे मनोवर्णनकारणम्॥ १॥
43444
43445 संकल्पादर्थशून्याया विकल्पशतसंसृतेः।
43446 दृष्टान्तो वर्ण्यतेऽत्रैव बालकाख्यायिकाक्रमः॥ १॥
43447
43448 संकल्पविकल्पात्मकस्य मनसः संकल्पो मूलं तन्निरोधे
43449 मूलोच्छेदाद्विकल्पानुत्थाने निर्विकल्पपदप्रतिष्ठासिद्धिरिति सूचनाय
43450 प्रागवतारितां बालकाख्यायिकां श्रोतुकामो रामः पृच्छति - किमुच्यत
43451 इति। पदसंस्कारपक्षमाश्रित्य किमेतदित्यनयोः सामान्ये नपुंसकत्वम्।
43452 बालकाख्यायिकालक्षणः क्रमो दृष्टान्तः किंप्रकारो लोके उच्यते एतत्क्रमेण
43453 कथयेत्यर्थः॥ १॥
43454
43455 श्रीवसिष्ठ उवाच।
43456
43457 कोऽपि मुग्धमतिर्बालो धात्रीं पृच्छति राघव।
43458 कांचिद्विनोदिनीं धात्रि वर्णयाख्यायिकामिति॥ २॥
43459
43460 मुग्धमतिर्युक्तायुक्तविवेकशून्यः॥ २॥
43461
43462 सा बालस्य विनोदाय धात्री तस्य महामते।
43463 आख्यायिकां कथयति प्रसन्नमधुराक्षसम्॥ ३॥
43464
43465 क्वचित्सन्ति महात्मानो राजपुत्रास्त्रयः शुभाः।
43466 धार्मिकाः शौर्यमुदिता अत्यन्तासति पत्तने॥ ४॥
43467
43468 अत्यन्तासति पत्तने इति प्रधानराजधान्युक्तिः॥ ४॥
43469
43470 विस्तीर्णे शून्यनगरे व्योम्नीव जलतारकाः।
43471 द्वौ न जातौ तथैकस्तु गर्भ एव न संस्थितः॥ ५॥
43472

43473 शून्यानि नगराणि शाखानगराणि यस्मिन्निति तद्विशेषणम्।
43474 जलमय्यस्तारकाश्चन्द्रांशत्वात्॥ ५॥
43475
43476 प्। ३६८) २१९
43477
43478 अथात्युत्तमलाभार्थं कदाचित्समवायतः।
43479 विबन्धवः खिन्नमुखाः शोकोपहतचेतसः॥ ६॥
43480
43481 ते कदाचिद्विबन्धवो दैवान्मृतबान्धवा दुर्भिक्षादिना खिन्नमुखाश्च
43482 सन्तः समवायतः स्वनागरसमाजात् परस्परैकमत्यतो वा उत्तमस्य
43483 नगरान्तरस्य लाभार्थं निर्जग्मुरिति शेषः॥ ६॥
43484
43485 ते तस्माच्छून्यनगरान्निर्गता विततानानाः।
43486 गगनादिव संश्लिष्टा बुधशुक्रशनैश्चराः॥ ७॥
43487
43488 संश्लिष्टा मिलिताः॥ ७॥
43489
43490 शिरीषसुकुमाराङ्गाः पृष्ठतोऽर्केण तापिताः।
43491 मार्गेऽहनि गता ग्रीष्मतापार्ताः पल्लवा इव॥ ८॥
43492
43493 गताः म्लानतामिति शेषः॥ ८॥
43494
43495 संतप्तमार्गसिकतादग्धपादसरोरुहाः।
43496 हा तात चेति शोचन्तो मृगा यूथच्युता इव॥ ९॥
43497
43498 दर्भाग्रभिन्नचरणास्तापखिन्नाङ्गसंधयः।
43499 उल्लङ्घ्य दूरमध्वानं धूलिधूसरमूर्तयः॥ १०॥
43500
43501 मञ्जरीजालजटिलं फलपल्लवमालितम्।
43502 मृगपक्षिगणाधारं प्रापुर्मार्गे तरुत्रयम्॥ ११॥
43503
43504 यस्मिन्वृक्षत्रये वृक्षौ द्वौ न जातौ मनागपि।
43505 बीजमेव तृतीयस्य स्वारोहस्य न विद्यते॥ १२॥
43506
43507 वृक्षत्रय इति निर्धारणे सप्तमी। स्वारोहस्य सुखेनारोढुं शक्यस्य॥ १२॥
43508
43509 विश्रान्तास्ते परिश्रान्तास्तत्रैकस्य तरोरधः।
43510 पारिजाततले स्वर्गे शक्रानिलयमा इव॥ १३॥
43511
43512 फलान्यमृतकल्पानि भुक्त्वा पीत्वा च तद्रसम्।
43513 कृत्वा गुलुच्छकैर्मालां चिरं विश्रम्य ते ययुः॥ १४॥
43514
43515 गुलुच्छकैस्तल्लताविशेषमञ्जरीभिः॥ १४॥
43516
43517 पुनर्दूरतरं गत्वा मध्याह्ने समुपस्थिते।
43518 सरित्त्रितयमासेदुस्तरङ्गतरलारवम्॥ १५॥
43519
43520 तत्रैका परिशुष्कैव मनागप्यम्बु न द्वयोः।
43521 विद्यते सरितोर्दृष्टिरन्धलोचनयोरिव॥ १६॥
43522
43523 सरितोरिति कर्मणि षष्ठी। दृष्टिर्दर्शनम्।
43524 अन्धलोचनयोरन्धलोचनाभ्यामिवात्यन्तासतीत्यर्थः। करणताशक्तेरेव

43525 संबन्धसामान्यात्मना विवक्षणात्षष्ठी अन्धस्य
43526 लोचनयोर्गोलकयोर्दृष्टिरिन्द्रियमिव सरितोरम्बु न विद्यत इति वा ॥ १६ ॥
43527
43528 परिशुष्का भृशं यासौ तस्यां ते सस्नुराहताः ।
43529 घर्मार्ता इव गङ्गायां ब्रह्मविष्णुहरा इव ॥ १७ ॥
43530
43531 घर्मार्ता जना इव ब्रह्मविष्णुहरा गङ्गायामिव चेति पृथक्कृत्य योज्यम् ॥
43532 १७ ॥
43533
43534 चिरं कृत्वा जलक्रीडां पीत्वा क्षीरोपमं पयः ।
43535 जग्मुस्ते राजतनयाः प्रहृष्टमनसः स्वयम् ॥ १८ ॥
43536
43537 अभिलषितनगरप्राप्तौ प्रहृष्टमनसः ॥ १८ ॥
43538
43539 अथासेदुर्दिनस्यान्ते लम्बमाने दिवाकरे ।
43540 भविष्यन्नवनिर्माणं नगरं नगसन्निभम् ॥ १९ ॥
43541
43542 नगसन्निभं पर्वतप्रांशु ॥ १९ ॥
43543
43544 पताकापद्मिनीव्याप्तं नीलाकाशजलाशयम् ।
43545 दूरश्रुतसमुल्लापगायन्नागरमण्डलम् ॥ २० ॥
43546
43547 ऊर्ध्वं पताकाभिरधः पद्मिनीभिश्च व्याप्तम् । नीलाकाशा इव सुन्दराः
43548 शून्या वा जलाशया यत्र । समुल्लापाः स्वरमूर्च्छनाः ॥ २० ॥
43549
43550 ददृशुस्तत्र रम्याणि त्रीणि सद्भवनानि ते ।
43551 मणिकाञ्चनगेहानि शृङ्गाणीव महागिरेः ॥ २१ ॥
43552
43553 अनिर्मिते द्वे सदने एकं निर्भित्ति तत्र वै ।
43554 अभित्तिमन्दिरं चारु प्रविष्टास्ते नरास्त्रयः ॥ २२ ॥
43555
43556 तत्र तेषु त्रिषु मध्ये अभित्तिमन्दिरं ते प्रविष्टाः ॥ २२ ॥
43557
43558 संप्रविश्योपविश्याशु विहरन्तो वराननाः ।
43559 प्रापुः स्थालीत्रयं तत्र तप्तकाञ्चनकल्पितम् ॥ २३ ॥
43560
43561 तत्र कर्परतां याते द्वे एका चूर्णतां गता ।
43562 जगृहुश्चूर्णरूपां तां स्थालीं ते दीर्घबुद्धयः ॥ २४ ॥
43563
43564 कर्परतां कपालताम् ॥ २४ ॥
43565
43566 द्रोणैर्नवनवत्या तैस्तस्यां द्रोणेन चान्धसः ।
43567 तत्र द्रोणशतं हीनं रन्धितं बहुभोजिभिः ॥ २५ ॥
43568
43569 तत्र तस्यां स्थाल्याम् । अन्धसः ओदनप्रकृतेस्तण्डुलस्य नवनवत्या
43570 द्रोणैरेकेन च द्रोणेन हीनं न्यूनं द्रोणशतं रन्धितं पक्वम् । भावे
43571 क्तः ॥ २५ ॥
43572
43573 निमन्त्रितास्त्रयस्तैस्तु ब्राह्मणा राजसूनुभिः ।
43574 द्वौ निर्देहावथैकस्य मुखमेव न विद्यते ॥ २६ ॥
43575
43576 निर्मुखेनान्धसस्तत्र भुक्तं द्रोणशतं सुत ।

43577 विप्रभुक्तावशेषं तु भुक्तमन्धो नृपात्मजैः ॥ २७ ॥
43578
43579 त्रिभिस्ते राजपुत्राश्च परां निर्वृतिमागताः ।
43580 भविष्यन्नगरे तस्मिन् राजपुत्रास्त्रयो हि ते ।
43581 सुखमद्य स्थिताः पुत्र मृगयाव्यवहारिणः ॥ २८ ॥
43582
43583 निर्वृतिं तृप्तिम् । मृगयाभिर्व्यवहारिणः क्रीडमानाः ॥ २८ ॥
43584
43585 आख्यायिकैषा कथिता मया रम्या तवानघ ।
43586 एतां हृदि कुरु प्राज्ञ विदग्धस्त्वं भविष्यसि ॥ २९ ॥
43587
43588 विदग्धः पण्डितः ॥ २९ ॥
43589
43590 धात्र्येति कथिता राम बालकाख्यायिका शुभा ।
43591 तुष्टिं जगाम बालश्च शुभाख्यायिकयानया ॥ ३० ॥
43592
43593 एषा हि कथिता राम चित्ताख्यानकथां प्रति ।
43594 बालकाख्यायिका तुभ्यं मया कमललोचन ॥ ३१ ॥
43595
43596 चित्ताख्यानानन्तरं प्रवृत्ता या जगत्प्रत्ययस्य विकल्पमात्रत्वकथा तां
43597 प्रति तदुदाहरणत्वेनेत्यर्थः ॥ ३१ ॥
43598
43599 इयं संसाररचना स्थितिमेवमुपागता ।
43600 बालकाख्यायिकेवोग्रैः संकल्पैर्दृढकल्पितैः ॥ ३२ ॥
43601
43602 स्थितिं दार्ढ्यम् । एवं विकल्पमात्ररूपा । बालकाख्यायिकाशब्देन
43603 तज्जन्यबालप्रतीतिर्लक्षणया गृह्यते ॥ ३२ ॥
43604
43605 विकल्पजालकैवेयं प्रतिभासात्मिकानघ ।
43606 बन्धमोक्षादिकलनारूपेण परिजृम्भते ॥ ३३ ॥
43607
43608 तदेव स्पष्टमाह - विकल्पेति । विकल्पा एव जालकानि यस्यामिति विग्रहे
43609 समासादुत्पन्नस्य टापः सुपः परत्वात् प्रत्ययस्थात्कात्पूर्वस्य
43610 इत्यस्याप्रवृत्तिः ॥ ३३ ॥
43611
43612 प्। ३६९) २१९
43613
43614 संकल्पमात्रादितरद्विद्यते नेह किंचन ।
43615 संकल्पवशतः किंचिन्न किंचित्किंचिदेव वा ॥ ३४ ॥
43616
43617 विकल्पानां च संकल्पकार्यत्वात्तद्व्यतिरेकेणासत्त्वमित्याशयेनाह -
43618 संकल्पमात्रादिति । यतो यत्किंचिद्विकल्परूपं भाति तत्सर्वं संकल्पवशतो
43619 भाति । विकल्पभातं च किंचिन्नैव किंचिद्वा भवति । शब्दज्ञानानुपाती
43620 वस्तुशून्यो विकल्पः इति पतञ्जलिना तथा तल्लक्षणोक्तेरिति भावः ॥ ३४ ॥
43621
43622 द्यौः क्षमा वायुराकाशं पर्वताः सरितो दिशः ।
43623 संकल्पकचितं सर्वमेवं स्वप्नवदात्मनः ॥ ३५ ॥
43624
43625 युक्तमेव विशिष्य प्रपञ्चयति - द्यौरिति । क्षमा पृथ्वी ॥ ३५ ॥
43626
43627 राजपुत्रास्त्रयो नद्यो भविष्यन्नगरे यथा ।
43628 यथा संकल्परचना तथेयं हि जगत्स्थितिः ॥ ३६ ॥

43629
43630 संकल्पमात्रमभितः परिस्फुरति चञ्चलः ।
43631 पयोमात्रात्मकोऽभोधिरम्भसीवात्मनात्मनि ॥ ३७ ॥
43632
43633 चञ्चलः अम्भोधिः ॥ ३७ ॥
43634
43635 संकल्पमात्रं प्रथममुत्थितं परमात्मनः ।
43636 तदिदं स्फारतां यातं व्यापारैर्दिवसं यथा ॥ ३८ ॥
43637
43638 व्यापारैः सूर्यव्यापारैर्जनव्यापारैश्च ॥ ३८ ॥
43639
43640 संकल्पजालकलनैव जगत्समग्रं
43641 संकल्पमेव ननु विद्धि विलासचेत्यम् ।
43642 संकल्पमात्रमलमुत्सृज निर्विकल्प-
43643 माश्रित्य निश्चयमवाप्नुहि राम शान्तिम् ॥ ३९ ॥
43644
43645 तथाच संकल्पत्यागमात्रेण निर्विकल्पस्वरूपावस्थितिरिति दर्शयन्नुपसंहरति
43646 - संकल्पेति । मनोविलासा रागादिवृत्तयस्तच्चेत्यानि च तेषां समाहारम् ।
43647 संकल्पत्यागे च निर्विकल्पात्मनिश्चय एव हेतुरित्याह - आश्रित्येति ॥ ३९ ॥
43648
43649 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० उत्पत्तिप्रकरणे
43650 बालकाख्यायिकानामैकोत्तरशततमः सर्गः ॥ १०१ ॥
43651
43652 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
43653 बालकाख्यायिकानामैकोत्तरशततमः सर्गः ॥ १०१ ॥
43654
43655
43656 द्व्युत्तरशततमः सर्गः १०२
43657
43658 श्रीवसिष्ठ उवाच ।
43659
43660 स्वसंकल्पवशान्मूढो मोहमेति न पण्डितः ।
43661 अक्षये क्षयसंकल्पान्मुह्यते शिशुरेव हि ॥ १ ॥
43662
43663 इहाहंकारसंकल्पक्षयोपायो निरूप्यते ।
43664 विवेको नात्मवर्गस्य नित्यता च परात्मनः ॥ १ ॥
43665
43666 मूढोऽज्ञः । अक्षये परमात्मनि क्षीयत इति क्षयो नश्वरात्मा तत्संकल्पात् ।
43667 शिशुर्बालः । मुह्यते बिभेति ॥ १ ॥
43668
43669 श्रीराम उवाच ।
43670
43671 कोऽसौ संकल्पितः केन क्षयो ब्रह्मविदां वर ।
43672 असतैव महामोहं येनादात्तत्सदैव हि ॥ २ ॥
43673
43674 क्षयसंकल्पादिति हेतूक्तौ संकल्पकर्तृकर्मणी विशिष्य जिज्ञासमानो रामः
43675 पृच्छति - कोऽसाविति । असौ संकल्पितः क्षयः कः केन च संकल्पितो
43676 येनायमात्मा असतैव निमित्तेन महामोहं संसारभ्रमं आ अदात् उपात्तवान् ।
43677 अयं भावः - किं नित्यात्मा नश्वरात्मानं संकल्पयति उत
43678 नश्वरात्मैव । नाद्यः तस्य स्वात्मस्वभावविरुद्धसंकल्पकत्वायोगात् । न
43679 द्वितीयः । आत्माश्रयापत्तेः । तथा संकल्पितो नश्वरात्मापि किं जड उत
43680 चिद्रूपः नाद्यः । आत्मतादात्म्यानापातात् । न द्वितीयः । चितः

43681 संकल्पविषयत्वायोगादिति ॥ २ ॥
43682
43683 श्रीवसिष्ठ उवाच।
43684
43685 असता भूतसंधेन क्षयोऽहंकारनामधृक्।
43686 वेतालः शिशुनेवेह मिथ्यैव परिकल्पितः ॥ ३ ॥
43687
43688 यद्यद्भवन्ति तदा भवन्ति इति श्रुतेः
43689 प्राक्तनसिंहव्याघ्रादिभूतसंघात्मभावसंस्कारसंभृता##-
43690 चिदचित्संवलनात्मकसिंहव्याघ्राद्यहंकारात्मकनश्वरात्म##-
43691 अविद्योपहितेन परमात्मना तत्तदहंकारनामधृक् क्षयो नश्वरात्मा ॥ ३ ॥
43692
43693 एकस्मिन्नेव सर्वस्मिन्स्थिते परमवस्तुनि।
43694 कुतः कोऽयमहं नाम कथं नाम किलोदितः ॥ ४ ॥
43695
43696 नन्वहंकारस्यात्मस्वभावतैव किं न स्यात्कुतो मिथ्यात्वं तत्राह -
43697 एकस्मिन्निति। सर्वस्मिन् पूर्णे ॥ ४ ॥
43698
43699 वस्तुतो नास्त्यहंकारः परमात्मन्यभेदिनि।
43700 असम्यग्दर्शनान्मार्गीसरित्तीव्रातपे यथा ॥ ५ ॥
43701
43702 मार्गीसरित् मृगतृष्णानदी ॥ ५ ॥
43703
43704 मनोमणिमहारम्भः संसार इति लक्ष्यते।
43705 आत्मनात्मानमाश्रित्य स्फुरत्यन्तर्यथाम्भसा ॥ ६ ॥
43706
43707 मनोलक्षणस्य मणेश्चिन्तामणेर्महान् आरम्भः कार्यजातसर्गः। तर्हि किं
43708 मनस एव स्वातन्त्र्यं नेत्याह - आत्मानमाश्रित्येति। अम्भसा अम्भ इति
43709 शेषः ॥ ६ ॥
43710
43711 असम्यग्दर्शनं तेन त्यज राम निराश्रयम्।
43712 साश्रयं सत्यमानन्दि सम्यग्दर्शनमाश्रय ॥ ७ ॥
43713
43714 असम्यग्दर्शनं भ्रान्तिम्। निराश्रयं असद्विषयम्। साश्रयं
43715 सत्यार्थविषयम् ॥ ७ ॥
43716
43717 धिया विचारधर्मिण्या मोहसंरम्भहीनया।
43718 विचारयाधुना सत्यमसत्यं संपरित्यज ॥ ८ ॥
43719
43720 तत्र क उपायस्तत्राह - धियेति ॥ ८ ॥
43721
43722 अबद्धो बद्ध इत्युक्त्वा किं शोचसि मुधैव हि।
43723 अनन्तस्यात्मतत्त्वस्य किं कथं केन बध्यते ॥ ९ ॥
43724
43725 प्। ३७०) २२०
43726
43727 नानाऽनानात्वकलना त्वविभिन्नमहात्मनि।
43728 सर्वस्मिन्ब्रह्मतत्त्वेऽस्मिन्किं बद्धं किं विमुच्यते ॥ १० ॥
43729
43730 नानाऽनानात्वकलना भेदाभेदभ्रान्तिः। अस्मिन्सर्वस्मिन्बाधेन ब्रह्मतत्त्वे
43731 तन्मात्रपरिशेषे सतीत्यर्थः ॥ १० ॥
43732

43733 अनार्तोऽप्यार्तिमान्भाति च्छिन्नेऽङ्गे किंच ताम्यति |
43734 भेदाभेदविकारार्तिः काचिन्नात्मनि विद्यते || ११ ||
43735
43736 अच्छेद्याभेद्यात्मदर्शने देहच्छेदभेदादिप्रयुक्तदुःखस्यापि नावसरः
43737 किं पुनरन्यस्येत्याशयेनाह - अनार्त इति | आर्तिमति देहे तथा भाति || ११ ||
43738
43739 देहे नष्टे क्षते क्षीणे कात्मनः क्षतिरागता |
43740 भस्त्रायां परिदग्धायां भस्त्रापूरो न नश्यति || १२ ||
43741
43742 भस्त्रामापूरयतीति भस्त्रापूरो वायुः || १२ ||
43743
43744 देहः पततु वोदेतु का नः क्षतिरुपस्थिता |
43745 को नष्टः प्रक्षते पुष्पे आमोदो व्योमसंश्रयः || १३ ||
43746
43747 प्रक्षते नष्टे | आमोदो गन्धः || १३ ||
43748
43749 आपतन्तु वपुःपद्मे सुखदुःखहिमश्रियः |
43750 आकाशोड्डुयनालीनां का नः क्षतिरुपस्थिता || १४ ||
43751
43752 उड्डीयते अस्मिन्नित्युड्डुयनम् | अधिकरणे ल्युट् | आकाश उड्डुयनं येषां
43753 तथाविधानामलीनां भ्रमराणां नः | उडुपनालीनाम् इति पाठे
43754 आकाशस्थानां
43755 उडुपाश्चन्द्रशुक्रबृहस्पत्यादयस्ताराश्रेष्ठास्तल्लक्षणानां नालीनां
43756 पद्मानाम् रलयोरभेदादुडुपस्य चन्द्रस्य नारीणामश्विन्यादिसर्वताराणां
43757 च || १४ ||
43758
43759 देहः पततु वोदेतु यातु वा गगनान्तरम् |
43760 तद्विलक्षणरूपस्य कासौ भवति मे क्षतिः || १५ ||
43761
43762 यथा पयोदमरुतोर्यथा षट्पदपद्मयोः |
43763 तथा राघव संबन्धस्त्वच्छरीरत्वदात्मनोः || १६ ||
43764
43765 अभ्युपगतेऽपि संबन्धे अलेपके आत्मनि न
43766 तत्प्रयुक्तदुःखप्रसक्तिरित्याशयेनाह - यथेति | पयोदमरुतोर्मेघवाय्वोः
43767 || १६ ||
43768
43769 मनो राम शरीरं हि जगतः सकलस्य च |
43770 आद्या शक्तिश्चिदध्यात्मा न नश्यति कदाचन || १७ ||
43771
43772 शरीरादिसर्वजगतो मनोमात्रत्वादपि सति मनसि न शरीरादिनाशप्रयुक्तः
43773 शोको युक्तः किं पुनरात्ममात्रत्वादित्याशयेनाह - मन इति |
43774 शरीरशब्दः स्वरूपवचनः | तत्र हेतुः - आद्या शक्तिरिति | यतो मनो जगत
43775 आद्या कारणीभूता शक्तिः चिदात्मा तु मनसोऽपि अधि उपरि अतस्तन्नाशभ्रान्तिः
43776 सर्वथा न युक्तेत्यर्थः || १७ ||
43777
43778 योऽसावात्मा महाप्राज्ञ न नश्यति न गच्छति |
43779 न नश्यति कदाचिच्च किं मुधा परितप्यसे || १८ ||
43780
43781 आत्मनाशादिभ्रान्तेरेव सर्वशोकादिमूलत्वात्तां पुनः पुनर्वारयन्नाह ##-
43782
43783 विशीर्णेऽभ्रे यथा वातः शुष्केऽब्जे षट्पदो यथा |
43784 यात्यनन्तपदं व्योम तथात्मा देहसंक्षये || १९ ||

43785
43786 संसारेऽस्मिन्विहरतो मनोऽपि हि न नश्यति ।
43787 ज्ञानाग्निना विना जन्तोरात्मनाशे तु का कथा ॥ २० ॥
43788
43789 यः कुण्डबदरन्यायो यो घटाकाशयोः क्रमः ।
43790 स्थितिर्देहात्मनोः सैव सविनाशाविनाशयोः ॥ २१ ॥
43791
43792 आत्मनो देहान्तरवस्थितिर्वस्तुतो नास्त्येव । अभ्युपगमेऽपि न
43793 देहनाशात्तन्नाशप्रसक्तिरित्याशयेनाह - य इति । क्रमो न्यायः । स्थितिरपि
43794 न्यायः । सा तादृश्येव ॥ २१ ॥
43795
43796 बदरं हस्तमायाति यथा स्फुटति कुण्डके ।
43797 आत्मा गगनमायाति तथा चलति देहके ॥ २२ ॥
43798
43799 आद्यं कुण्डबदरन्यायं प्रकृते उपपादयति - बदरमिति । आत्मा जीवः
43800 गगनं वासनाकाशम् । चलति नश्यति सति । तथाच श्रुतिः - जीवापेतं वाव
43801 किलेदं म्रियते न जीवो म्रियते इति ॥ २२ ॥
43802
43803 कुम्भे गच्छत्यकुम्भत्वं कुम्भाकाशो यथाम्बरे ।
43804 तिष्ठत्येवमयं क्षीणे देहे देही निरामयः ॥ २३ ॥
43805
43806 द्वितीयमुपपादयति - कुम्भे इति । अकुम्भत्वं नाशम् ॥ २३ ॥
43807
43808 मनोदेहो हि जन्तूनां देशकालतिरोहितः ।
43809 मुहुर्मृतिपटाच्छन्नः शठे किं परिदेवना ॥ २४ ॥
43810
43811 मरणं मृतिस्तल्लक्षणेन पटेन मुहुराच्छन्नो भवति । शठे वञ्चके
43812 अस्मिन्मनसि किं का परिदेवना अयुक्तेत्यर्थः ॥ २४ ॥
43813
43814 देशकालतिरोधाने मूढोऽपि मरणे नरः ।
43815 किं बिभेति महाबाहो नेह पश्यति कश्चन ॥ २५ ॥
43816
43817 किं तर्हि मरणं तदाह - देशेति । गृहादिदेशे चरमश्वासकाले परेषां
43818 दृष्ट्वा आत्मनस्तिरोधानमात्रं मरणमित्यर्थः । नेह पश्यति
43819 कश्चनात्मनाशमिति शेषः ॥ २५ ॥
43820
43821 अतस्त्वं वासनां राम मिथ्यैवाहमिति स्थिताम् ।
43822 त्यज पक्षीश्वरो व्योमगमनोत्क इवाण्डकम् ॥ २६ ॥
43823
43824 पक्षी संजातपक्षः पक्षिशिशुः । स्वपरिच्छेदकमण्डकं शिथिलमण्डमिव
43825 ॥ २६ ॥
43826
43827 एषा हि मानसी शक्तिरिष्टानिष्टनिबन्धनी ।
43828 अनयैव मुधा भ्रान्त्या स्वप्नवत्परिकल्पना ॥ २७ ॥
43829
43830 इष्टानिष्टयोः रागद्वेषाभ्यां निबन्धनी अभिनिवेशबन्धनकरी ॥ २७ ॥
43831
43832 अविद्यैषा दुरन्तैषा दुःखायैषा विवर्धते ।
43833 अपरिज्ञानमानैषा तनोतीदमसन्मयम् ॥ २८ ॥
43834
43835 अविद्याविलासत्वादविद्या ॥ २८ ॥
43836

एषा तुच्छवदाका"अं तुषारमलिनं यथा |
परिपश्यति विभ्रान्ता स्वरूपस्य स्वभावतः || २९ ||

तुषारैर्मलिनं धूसरितम् | तथा दर्शनं मनसः स्वभाव इत्याह -
स्वरूपस्येति || २९ ||

असदेवेदमारम्भमन्थरं सदिवोत्थितम् |
कल्पितं जगदाभोगि दीर्घस्वप्न इवैतया || ३० ||

भावनामात्र एवास्याः स्वरूपं कर्तृतां गतम् |
जगन्नामाविलं चक्षुर्व्योम्नि बिम्बरुचामिव || ३१ ||

ननु मनोव्यापाराणां सर्वेषां प्रत्यक्षत्वाज्जगन्निर्मातृता कुतः
सर्वैर्नानुभूयते तत्राह - भावनेति | अस्याः स्वरूपं
जगदाकारभावनामात्रे एव कर्तृतां गतं न तदतिरिक्तनिर्माणे |
मिथ्यार्थानां दर्शनातिरिक्तनिर्माणाप्रसिद्धेः | तदेव जगन्नाम प्रसिद्धम् |
यथा आविलं तिमिरादिदुष्टं चक्षुर्व्योम्नि पिच्छकेशोंड्रकाद्याकाराणां
सूर्यचन्द्रादिबिम्बरुचां विभावनामात्रेण कर्तृतद्वदित्यर्थः | विभावनं
तु प्रत्यक्षमेवेति भावः || ३१ ||

प। ३७१) २२०

लयमस्याः स्वरूपं त्वं नय राम विचारणात् |
यथा हिमशिलायास्तु तपनाद्दिवसाधिपः || ३२ ||

अत एव ह्यविचारद्वैतभावनामात्रसिद्धस्य
विचारजन्यज्ञानमात्राल्लयसिद्धिरिति विचारः कार्य इत्याह - लयमिति | यथा
दिवसाधिपः सूर्यस्तपनात्स्वातपाद्धिमशिलायाः स्वरूपं लयं नाशं
नयति तद्वत् || ३२ ||

हिमाभावार्थिनोऽर्कस्य स्वोदयेनेप्सितं यथा |
सिद्ध्यत्येवं विचारेण मनोनाशार्थिनोऽर्थितम् || ३३ ||

अर्थितमभिलषितो मनोनाशः || ३३ ||

अविद्याऽसंप्रबुद्धा हि विततानर्थदुर्गमा |
नानेन्द्रजालकलनां शम्बरो हेम वर्षति || ३४ ||

एकस्मिन्मनसि नष्टेऽपि पुनरविद्यया मन आदिबन्धजन्मप्रसक्तिमाशङ्क्याह
- अविद्येति | हि यस्मादविद्याकादम्बिनी असंप्रबुद्धा अविज्ञातात्मतत्त्वा
यदा तदैव शम्बरोऽसुरविशेष इव नानेन्द्रजालकलनारूपमसदेव हेम
वर्षति नतु संप्रबुद्धा तदा निःस्वरूपत्वादित्यर्थः || ३४ ||

स्वविनाशक्रियां चैतां मन एव करोत्यलम् |
मनो ह्यात्मवधं नाम नाटकं परिनृत्यति || ३५ ||

एवंच मन एव चिरं जगद्रूपेण नृत्यदन्ते विद्यात्मकपरिणामेन
साविद्यस्वविनाशं करोतीति फलितमित्याह - स्वविनाशक्रियामिति |
आत्मवधं स्वसंहारं नाम नाटकं स्वरचितग्रन्थं परिलक्षीकृत्य
नृत्यति || ३५ ||

आत्मानमीक्षते चेतः स्वविनाशाय केवलम् |

43889 नहि जानाति दुर्बुद्धिर्विनाशं प्रत्युपस्थितम् ॥ ३६ ॥
43890
43891 स्वयं संकल्पमात्रेण स्वविनाशदृशामिदम् ।
43892 मनः संसाधयत्याशु क्लेशो नात्रोपयुज्यते ॥ ३७ ॥
43893
43894 स्वविनाशदृशां मनोनाशोपायमन्विष्यतां विवेकिनामिदं मनोनाशनं
43895 मनः स्वयमेव संकल्पनमात्रेण आशु संसाधयति ॥ ३७ ॥
43896
43897 स्वसंकल्पविकल्पांशं विवेकोपहितं मनः ।
43898 संत्यज्य रूपमाभोगि करोत्यात्मावबोधनम् ॥ ३८ ॥
43899
43900 विवेकेन उपहितं संस्कृतं मनः प्राक्तनं स्वसंकल्पविकल्पांशं
43901 संत्यज्य आभोगि ब्रह्माकारविस्तारं आत्मावबोधनं
43902 स्वात्मसाक्षात्कारवृत्त्यात्मकरूपं खं परिणामं करोति ॥ ३८ ॥
43903
43904 महोदयो मनोनाशो महोच्छेदस्य तूदयः ।
43905 मनोनाशे प्रयत्नं त्वं कुरु मा मनसो जवे ॥ ३९ ॥
43906
43907 महोदयः परमपुरुषार्थलाभः । महोच्छेदः सर्वदुःखोच्छेदः । जवे
43908 बहिर्व्यापारे ॥ ३९ ॥
43909
43910 अविरलसुखदुःखवृक्षखण्डे
43911 विषमकृतान्तमहोरगे वनेऽस्मिन् ।
43912 प्रभुरिदमखिले विवेकहीनं
43913 सुभग मनो महदापदेकहेतुः ॥ ४० ॥
43914
43915 उक्तार्थोपेक्षणे अनर्थापातं दर्शयन्नुपसंहरति - अविरलेति । अविरला
43916 निबिडाः सुखदुःखात्मका वृक्षखण्डा यस्मिन् । विषमः कृतान्तो
43917 मृत्युर्महोरगो यस्मिंस्तथाविधे । अखिले अनुच्छेद्ये अस्मिन् संसारलक्षणे
43918 असिपत्रवने इदं विवेकहीनं मन एव प्रभुर्दुरन्तदुःखहेतुरित्यर्थः ॥ ४० ॥
43919
43920 इत्युक्तवत्यथ मुनौ दिवसो जगाम
43921 सायंतनाय विधयेऽस्तमिनो जगाम ।
43922 स्नातुं सभा कृतनमस्करणा जगाम
43923 श्यामाक्षये रविकरैश्च सहाजगाम ॥ ४१ ॥
43924
43925 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे दे० मो०
43926 उपदेशकरणं नाम द्व्युत्तरशततमः सर्गः ॥ १०२ ॥
43927
43928 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे उपदेशकरणं
43929 नाम द्व्युत्तरशततमः सर्गः ॥ १०२ ॥
43930
43931 त्र्युतरशततमः सर्गः १०३
43932
43933 श्रीवसिष्ठ उवाच ।
43934
43935 परस्मादुत्थितं चेतस्तत्कल्लोल इवार्णवात् ।
43936 स्फारतामेत्य भुवनं तनोतीदमितस्ततः ॥ १ ॥
43937
43938 अविवेकस्य मनसो या यात्रानर्थकारिता ।
43939 मुमुक्षूणां विवेकाय सा सर्वात्र प्रपञ्च्यते ॥ १ ॥
43940

43941 अनर्थार्थमेव परस्मान्मनस उत्पत्तिरिति दर्शयति - परस्मादिति ॥ १ ॥
43942
43943 ह्रस्वं दीर्घं करोत्याशु दीर्घं नयति खर्वताम् ।
43944 स्वतां नयत्यन्यदलं स्वं तथैवान्यतामपि ॥ २ ॥
43945
43946 मनसो वस्तुस्वभावविरुद्धकल्पनसामर्थ्यं दर्शयति - ह्रस्वमित्यादिना
43947 । ह्रस्वं नेत्रसंनिहिताङ्गुल्यादि
43948 अतिविस्तृतसूर्यमण्डलाद्याच्छादकत्वकल्पनेन दीर्घं आशु करोति । दीर्घं
43949 सूर्यमण्डलादि खर्वतां ह्रस्वताम् । एवमात्मानात्मनोः
43950 स्वरूपविनिमयकल्पनमपि मन एव करोतीत्याह - स्वतामिति ॥ २ ॥
43951
43952 प्रादेशमात्रमपि यद्वस्तुभावनयैव तत् ।
43953 स्वयं संपन्नयेवाशु करोत्यद्रीन्द्रभासुरम् ॥ ३ ॥
43954
43955 स्वयमात्मभावेन संपन्नयेव । भावनया कल्पनया ॥ ३ ॥
43956
43957 लब्धप्रतिष्ठं परमात्पदादुल्लसितं मनः ।
43958 निमेषेणैव संसारान्करोति न करोति च ॥ ४ ॥
43959
43960 कुतोऽस्येदृशं सामर्थ्यं तत्राह - लब्धप्रतिष्ठमिति । ब्रह्मसत्तया
43961 विचित्रशक्त्युपबृंहितत्वेन लब्धसत्ताकमित्यर्थः ॥ ४ ॥
43962
43963 यदिदं दृश्यते किंचिज्जगत्स्थास्नु चरिष्णु च ।
43964 सर्वं सर्वप्रकाराढ्यं चित्तादेतदुपागतम् ॥ ५ ॥
43965
43966 देशकालक्रियाद्रव्यशक्तिपर्याकुलीकृतम् ।
43967 भावाद्भावान्तरं याति लोलत्वान्नटवन्मनः ॥ ६ ॥
43968
43969 भावाद्भावान्तरं एकवस्त्वाकारादपरवस्त्वाकारं नाट्यशास्त्रप्रसिद्धं
43970 संचारिभावभेदं च ॥ ६ ॥
43971
43972 सदसत्तां नयत्याशु सत्तां वा सन्नयत्यलम् ।
43973 तादृशान्येव चादत्ते सुखदुःखानि भावितम् ॥ ७ ॥
43974
43975 प। ३७२) २२१
43976
43977 यदाप्तं स्वयमादत्ते यथैव चञ्चलं मनः ।
43978 हस्तपादादिसंघातस्तदा प्रयतते तथा ॥ ८ ॥
43979
43980 चञ्चलं मनः आप्तं कर्मोपस्थापितं भोग्यं यदा यथा येनैव
43981 कल्पनाप्रकारेणानुकूलतया प्रतिकूलतया वा आदत्ते तदा
43982 हस्तपादादिसंघातस्तथा तदनुसारेणैव उपादाने हाने वा प्रवर्तत इति मनस
43983 एव सर्वव्यवहारस्वातन्त्र्यमित्यर्थः ॥ ८ ॥
43984
43985 ततः सैव क्रिया चित्तसमाहितफलाफलम् ।
43986 क्षणात्प्रयच्छति लता कालसिक्तेव तादृशम् ॥ ९ ॥
43987
43988 सा भोग्यार्थोपस्थापिका क्रिया चित्तेन समाहितं कल्पितं फलाफलं
43989 सुखदुःखम् ॥ ९ ॥
43990
43991 चित्रां क्रीडनकश्रेणीं यथा पङ्कादृगृहे शिशुः ।
43992 करोत्येवं मनो राम विकल्पं कुरुते जगत् ॥ १० ॥

43993
43994 पङ्कादार्द्रमृत्पिण्डात् ॥ १० ॥
43995
43996 मनःसर्वजनक्रीडानृजम्बाललवेष्वतः ।
43997 किमेतद्धि पदार्थेषु रूढं जगति कल्प्यते ॥ ११ ॥
43998
43999 मनःकल्पनामात्रे जगति न किंचिदपि रूपं वास्तवं संभवतीत्याह -
44000 मन इति । अतो हेतोर्मनसो याः सर्वजनात्मना क्रीडास्तत्रत्यनृदेहादिलक्षणेषु
44001 पङ्कलेशेषु सर्वपदार्थेषु यद्रूपं रूढं सत्यं कल्प्यते एतत्किं हि
44002 स्यान्न किंचिदित्यर्थः ॥ ११ ॥
44003
44004 करोत्यृतुकरः कालो यथा रूपान्यथा तरोः ।
44005 चित्तमेवं पदार्थानामेषामेवान्यतामिव ॥ १२ ॥
44006
44007 ऋतुकरो वसन्तादिविभागकारी । रूपाणामन्यथा अन्यताम् । पूरणगुण इति
44008 निषेधेऽपि च्छान्दसत्वात्पूर्वोत्तरसाहचर्येण कृदन्ययस्यैव तत्र
44009 ग्रहणाद्वा षष्ठीसमासः ॥ १२ ॥
44010
44011 मनोरथे तथा स्वप्ने संकल्पकलनासु च ।
44012 गोष्पदं योजनव्यूहः स्वासु लीलासु चेतसः ॥ १३ ॥
44013
44014 मनसश्चाघटितघटनाशक्तिः प्रसिद्धैवेति दर्शयति - मनोरथे
44015 इत्यादिना । योजनानां व्यूहः समूहोऽपि गोष्पदमिवाल्पमित्यर्थः ॥ १३ ॥
44016
44017 कल्पं क्षणीकरोत्यन्तः क्षणं नयति कल्पताम् ।
44018 मनस्तदायत्तमतो देशकालक्रमं विदुः ॥ १४ ॥
44019
44020 अतो देशकालक्रमं सर्वं तदायत्तं मनोधीनं विदुः सर्वेऽपीत्यर्थः ॥ १४ ॥
44021
44022 तीव्रमन्दत्वसंवेगाद्बहुत्वाल्पत्वभेदतः ।
44023 विलम्बनेन च चिरं ननु शक्तिमशक्तितः ॥ १५ ॥
44024
44025 ननु यदि मनः सर्वनिर्माणसमर्थं तर्हि कथमिदानीमस्माकं
44026 सर्वसर्गाशक्तिस्तत्राह - तीव्रेति । रजोगुणोत्कर्षे तीव्रता तमस उत्कर्षे तु
44027 मन्दतेति संवेगभेदात् आहारोपचयादुपचये बहुत्वमपचयेऽल्पत्वमिति
44028 भेदस्तत्तद्वस्तुसर्गानुकूलोपसासनादिविलम्बनेन च प्राप्तसर्गाशक्तितो न
44029 मनसो वास्तवीं सर्वसर्गशक्तिमपहातुं शक्नुम इत्यध्याहृत्य योज्यम् ॥ १५
44030 । ।
44031
44032 व्यामोहसंभ्रमानर्थदेशकालगमागमाः ।
44033 चेतसः प्रभवन्त्येते पादपादिव पल्लवाः ॥ १६ ॥
44034
44035 अत एव व्यामोहादिसंभवोऽपीत्याह - व्यामोहेति ॥ १६ ॥
44036
44037 जलमेव यथाम्भोधिरौष्ण्यमेव यथानलः ।
44038 तथा विविधसंरम्भः संसारश्चित्तमेव वा ॥ १७ ॥
44039
44040 कार्यस्य कारणानन्यत्वाच्चित्तमात्रमेव सर्वमित्याह - जलमेवेति ।
44041 वाशब्दः पादपूरणार्थः ॥ १७ ॥
44042
44043 सकर्तृकर्मकरणं यदिदं चेत्यमागतम् ।
44044 द्रष्टृदर्शनदृश्याढ्यं तत्सर्वं चित्तमेव च ॥ १८ ॥

चेत्यं भोक्तृभोग्यभोगरूपानर्थात्मकम् [भोक्तृ इति पदं क्वचिन्न
पठ्यते] । तथाच नवविधोऽपि संसारश्चित्तमेवेत्यर्थः ॥ १८ ॥

चित्तं जगन्ति भुवनानि वनान्तराणि
संलक्ष्यते स्वयमुपागतमात्मभेदैः ।
केयूरमौलिकटकैश्च लसत्स्वरूपं
त्यक्त्वैव काञ्चनधियेव जनेन हेम ॥ १९ ॥

सर्वं चित्तमेवेति येनोपायेन संलक्ष्यते तं दर्शयन्नुपसंहरति -
चित्तमिति । यथा काञ्चनतत्त्वपरीक्षकजनेन
केयूरमौलिभूषणकटकैश्चादन्यैश्च
रुचकाद्याकारैर्लसत्कल्पितनानास्वरूपं त्यक्त्वैव
शुद्धकाञ्चनमात्रप्रणिहितधिया परीक्ष्यमाणं तत्त्वतो हेम लक्षयितुं
शक्यते न केयूरादिरचनावैचित्र्यव्यामूढधिया तथा विवेकिनापि जगति
तदन्तर्गतभुवनानि तदन्तर्गतवनान्तरादिसर्ववस्तूनि च आत्मभेदैः
स्ववैचित्र्यैश्चित्तमेव स्वयमुपागतं चित्तमात्रमेव न चित्ताद्वस्त्वन्तरमिति
तत्त्वं संलक्ष्यत इत्यर्थः ॥ १९ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपायेषूत्पत्तिप्रकरणे
चित्तमाहात्म्यं नाम त्र्युत्तरशततमः सर्गः ॥ १०३ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे चित्तमाहात्म्यं
नाम त्र्युत्तरशततमः सर्गः ॥ १०३ ॥

## चतुरुत्तरशततमः सर्गः १०४

श्रीवसिष्ठ उवाच ।

अत्र ते शृणु वक्ष्यामि वृत्तान्तमिममुत्तमम् ।
जागतीहेन्द्रजालश्रीश्चित्तायत्ता यथा स्थिता ॥ १ ॥

अत्रादौ लवणाख्याने देशराजसभास्थितिः ।
तत्रेन्द्रजालिकाश्वेक्षा विस्मयस्थितिरुच्यते ॥ १ ॥

वृत्तान्तमाख्यानम् ॥ १ ॥

अस्त्यस्मिन्वसुधापीठे नानावनसमाकुलः ।
उत्तरापाण्डवो नाम स्फीतो जनपदो महान् ॥ २ ॥

नीरन्ध्रघनगम्भीरवनविश्रान्ततापसः ।
विद्याधरीकृतलतादोलोपवनपत्तनः ॥ ३ ॥

नीरन्ध्रघनेषु अत एव गम्भीरेषु वनेषु विश्रान्तास्तापसा यस्य । अनेन
व्याघ्रचोराद्युपप्लवाभाव उक्तः ॥ ३ ॥

वातोद्भूताब्जकिञ्जल्कपुञ्जपिञ्जरपर्वतः [वातोद्भूत इति क्वचित्]
।
लसत्कुसुमसंभारवनमालावतंसकः ॥ ४ ॥

करञ्जमञ्जरीकुञ्जगुच्छपर्यन्तजङ्गलः ।

44097 खर्जूरान्तरितग्रामो घुंघुमध्वनिताम्बरः ॥ ५ ॥
44098
44099 पर्यन्तजङ्गलानि ग्रामपर्यन्तारण्यानि । खर्जूरवृक्षैरन्तरिता अन्तर्हिता
44100 ग्रामा यत्र ॥ ५ ॥
44101
44102 प्। ३७३) २२१
44103
44104 एकपिङ्गशिलाश्रेणीशालिकेदारपिङ्गलः ।
44105 नीलकण्ठारवोद्दामवनजङ्गलमण्डितः ॥ ६ ॥
44106
44107 एकपिङ्गशिला उत्कृष्टपिङ्गलवर्णा मणिविशेषास्तच्छ्रेणिसदृशैः
44108 पक्वशालिकेदारैः पिङ्गलः ॥ ६ ॥
44109
44110 सारसारवसंरम्भरणत्कनककाननः ।
44111 तमालपाटलीनीलगिरिग्रामककुण्डलः ॥ ७ ॥
44112
44113 विचित्रविहगव्यूहविरावकृतकाकलिः ।
44114 नदीपरिसरोन्निद्रपारिभद्रद्रुमारुणः ॥ ८ ॥
44115
44116 उन्निद्राः कुसुमिताः पारिभद्रतरवो निम्बास्तैररुणः ॥ ८ ॥
44117
44118 गायत्कलमकेदारदारिकाहृतमन्मथः ।
44119 पुष्पफलचलद्वातव्याधूतकुसुमाम्बुदः ॥ ९ ॥
44120
44121 पुष्पेषु फलेषु च शिथिलितवृन्तानां पातनाय चलता वातेन व्याधूताः
44122 कुसुमलक्षणा अम्बुदा यत्र ॥ ९ ॥
44123
44124 दरीगृहविनिष्क्रान्तसिद्धचारणबन्दिकम् ।
44125 स्वर्गादिव समानीय लावण्यमभिनिर्मितः ॥ १० ॥
44126
44127 मेरुदरीगृहेभ्यो विनिष्क्रान्तं सिद्धचारणबन्दिकं यस्य तथाविधं
44128 स्वर्गलावण्यं स्वर्गाद्भुवि समानीय निर्मित इवेत्यर्थः ॥ १० ॥
44129
44130 गायत्किन्नरगन्धर्वकदलीखण्डमण्डपः ।
44131 मन्दानिलरवोद्भूतः पुष्पोपवनपाण्डुरः ॥ ११ ॥
44132
44133 मन्दैरनिलरवैरुद्भूत उत्कृष्टतया स्थितः । पुष्पयुक्तैरुपवनैः पाण्डुरः
44134 । एतादृश उत्तरापाण्डवो नाम जनपदोऽस्तीति प्राक्तनेन संबन्धः ॥ ११ ॥
44135
44136 तत्रास्ति लवणो नाम राजा परमधार्मिकः ।
44137 हरिश्चन्द्रकुलोद्भूतो भूमाविव दिवाकरः ॥ १२ ॥
44138
44139 भूमाववतीर्णो दिवाकर इव ॥ १२ ॥
44140
44141 यद्यशःकुसुमोत्तंसपाण्डुरस्कन्धमण्डलाः ।
44142 तत्र शैला विराजन्ते हाराः प्रोद्धूलिता इव ॥ १३ ॥
44143
44144 कुसुमलक्षणैरुत्तंसैः कुसुमानामुत्तंसैः रजोभिर्वा ॥ १३ ॥
44145
44146 कृपाणशकलोत्कृत्तनिःशेषारातिमण्डलः ।
44147 अरातिलोकः प्राप्नोति यदनुस्मरणाज्ज्वरम् ॥ १४ ॥
44148

44149 कृपाणैः शकलानि यथा स्युस्तथा उत्कृत्तन्यत एव निःशेषाणि
44150 प्रधानारातिमण्डलानि यस्य स तथाभूतोऽरातीनां लोकः सेवकजनः ॥ १४ ॥
44151
44152 यस्योदारसमारम्भमार्यलोकानुपालनम् ।
44153 चरितं संस्मरिष्यन्तिहरेरिव चिरं जनाः ॥ १५ ॥
44154
44155 आर्यलोकानां धार्मिकजनानामनुपालनं रक्षकं चरितम् ॥ १५ ॥
44156
44157 यस्याप्सरोभिरद्रीन्द्रमूर्धस्वमरसद्मसु ।
44158 विकासिपुलकोल्लासं गीयन्ते गुणगीतयः ॥ १६ ॥
44159
44160 यस्य स्वःसुन्दरीगीता लोकपालचिरश्रुताः ।
44161 विरिञ्चिहंसैर्ध्वन्यन्ते स्वभ्यासाद्गुणगीतयः ॥ १७ ॥
44162
44163 स्वःसुन्दरीभिरप्सरोभिर्गीता गुणगीतिप्रबन्धा विरिञ्चेर्ब्रह्मणो
44164 हंसैर्ध्वन्यन्ते । ध्वनिभिरनुक्रियन्त इति यावत् ॥ १७ ॥
44165
44166 स्वप्नेष्वपि न सामान्या यस्योदारचमत्कृतिः ।
44167 राम दृष्टा श्रुता वापि दैन्यदोषमयी क्रिया ॥ १८ ॥
44168
44169 सामान्या इतरनृपसाधारणी ॥ १८ ॥
44170
44171 जिह्मतां यो न जानाति न दृष्टा येन घृष्णुता ।
44172 उदारता येन धृता ब्रह्मणेवाक्षमालिका ॥ १९ ॥
44173
44174 जिह्मतां कौटिल्यम् । धृष्णुता अविनीतता । गृध्नुता इति पाठे
44175 परस्वाभिलाषिता ॥ १९ ॥
44176
44177 दिनाष्टभागमाकाशमागते दिवसाधिपे ।
44178 स कदाचित्सभास्थाने सिंहासनगतोऽभवत् ॥ २० ॥
44179
44180 अष्टभागमष्टमभागम् । मुहूर्तद्वयमिति यावत् ॥ २० ॥
44181
44182 सुखोपविष्टे तत्रास्मिन्राजनीन्दाविवाम्बरे ।
44183 प्रविशन्तीषु सामन्तसेनासु च ससंभ्रमम् ॥ २१ ॥
44184
44185 गायन्तीष्वथ कान्तासु सूपविष्टेषु राजसु ।
44186 मनो हरति साह्लादे वीणावंशकलारवे ॥ २२ ॥
44187
44188 राजसु सामन्तेषु ॥ २२ ॥
44189
44190 चारुचामरहस्तासु सविलासासु राजनि ।
44191 देवासुरगुरुप्रख्ये विश्रान्ते मन्त्रिमण्डले ॥ २३ ॥
44192
44193 सविलासासु सविलासं बीजयतीषु । देवासुरगुरू गुरुशुक्रौ तत्प्रख्ये ॥ २३ ॥
44194
44195 प्रस्तुतेषु प्रविष्टेषु राजकार्येषु मन्त्रिभिः ।
44196 प्रोक्तासु देशवार्तासु निपुणैश्चारुमन्त्रिभिः ॥ २४ ॥
44197
44198 इतिहाससमये पुण्ये वाच्यमाने च पुस्तके ।
44199 पठत्सु च स्तुतीः पुण्याः पुरः प्रह्वेषु बन्दिषु ॥ २५ ॥
44200

44201 सभां विवेश साटोपः कश्चित्तामैन्द्रजालिकः।
44202 वर्षेणाहितसंरम्भो वसुधामिव वारिदः॥ २६॥
44203
44204 साटोपः ऐन्द्रजालिकोचितवेषालंकारविरुदाडम्बरसंपन्नः। भाविना वर्षेण
44205 आहितो विद्युद्विस्फूर्जितादिसंरम्भो यस्य॥ २६॥
44206
44207 स ननाम महीपालं शिखरोदारकन्धरम्।
44208 पादोपान्तगतः कान्तं शैलं फलतरुर्यथा॥ २७॥
44209
44210 शिखरेण किरीटकूटेन शृङ्गैश्चोदारा कन्धरा कण्ठोऽधित्यका च यस्य।
44211 फलभारयुक्तस्तरुः फलतरुः॥ २७॥
44212
44213 सच्छायस्योन्नतांसस्य फलिनः पुष्पभासिनः।
44214 स विवेश पुरो राज्ञस्तरोरग्रे कपिर्यथा॥ २८॥
44215
44216 कपिरित्ययुक्तदुश्चेष्टाकारिण उचितो दृष्टान्तः॥ २८॥
44217
44218 चपलो लम्पटोऽर्थानामामोदसुखमारुतम्।
44219 उवाचोत्कन्धरं भूपं सपद्ममिव षट्पदः॥ २९॥
44220
44221 विलोकय विभो तावदेकामिह खरोलिकाम्।
44222 पीठस्थ एव साश्चर्यां व्योम्नि चन्द्र इवावनिम्॥ ३०॥
44223
44224 खरोलिकां मिथ्याकौतुकक्रीडाम्॥ ३०॥
44225
44226 इत्युक्त्वा पिच्छिका तेन भ्रामिता भ्रमदायिनी।
44227 नानाविरचनाबीजा मायेव परमात्मनः॥ ३१॥
44228
44229 पिच्छिका मयूरबर्हमुष्टिः॥ ३१॥
44230
44231 तां ददर्श महीपालस्तेजोरेणुविराजिताम्।
44232 शक्रः सुरविमानस्थः स्वकार्मुकलतामिव॥ ३२॥
44233
44234 तेजोरेणुभिर्नानावर्णकान्तैः पटलैः॥ ३२॥
44235
44236 प्। ३७४) २२२
44237
44238 सभां सैन्धवसामन्तो विवेशास्मिन्क्षणे तदा।
44239 तारापरिकरापूर्णां व्योमवीथीमिवाम्बुदः॥ ३३॥
44240
44241 सैन्धवसामन्तोऽश्वपालकः॥ ३३॥
44242
44243 तं चैवानुजगामाश्वः सौम्यः परमवेगवान्।
44244 देवलोकोन्मुखं तुष्टं शक्रमुच्चैःश्रवा इव॥ ३४॥
44245
44246 स तमश्वमुपादाय पार्थिवं समुवाच ह।
44247 सोच्चैःश्रवा इव क्षीरसागरो मरुतां पतिम्॥ ३५॥
44248
44249 सः अश्वपालकः॥ ३५॥
44250
44251 इदमुच्चैःश्रवःप्रख्यं हयरत्नं महीपते।
44252 जवोड्डयनशीलेन मूर्तिमानिव मारुतः॥ ३६॥

44253
44254 हयरत्नं पश्येति शेषः। जवेत्याद्युत्तरान्वयि॥ ३६॥
44255
44256 अश्वोऽयमस्मत्प्रभुणा प्रभो संप्रहितस्त्वयि।
44257 राजते हि पदार्थश्रीर्महतामर्पणाच्छुभा॥ ३७॥
44258
44259 महतामर्पणात् महद्भ्यो [अत्र योग्येभ्यो महद्भ्यो इति विपर्यस्तं
44260 क्वचित्पठ्यते] योग्येभ्यो दानात्॥ ३७॥
44261
44262 इत्युक्तवति तस्मिंस्तु प्रत्युवाचैन्द्रजालिकः।
44263 जलदस्तनिते शान्ते चातकोऽम्बुधरं यथा॥ ३८॥
44264
44265 राजानं प्रति उवाच॥ ३८॥
44266
44267 सदश्वमेनमारुह्य भुवनं विहर प्रभो।
44268 स्वप्रतापाहितानल्पशोभामुर्वीं रविर्यथा॥ ३९॥
44269
44270 स्वस्य प्रतापेन शौर्येणातपेन च आहितानल्पा शोभा श्रीः कान्तिश्च यस्यां
44271 ताम्॥ ३९॥
44272
44273 अश्वमालोकयामास तेनोक्त इति पार्थिवः।
44274 निर्घातस्तनितं मेघं मयूर इव सूत्करः॥ ४०॥
44275
44276 इति तेनोक्तः पार्थिवः। सुष्ठु उत् ऊर्ध्वं करोति शिर इति सूत्करो ध्वनिविशेषकारी
44277 वा॥ ४०॥
44278
44279 अथानिमेषया दृष्ट्या राजा चित्रोपमाकृतिः।
44280 बभूवालोकयन्नश्वं लिपिकर्मार्पितोपमः॥ ४१॥
44281
44282 लिपिकर्मार्पितश्चित्रन्यस्तस्तदुपमो निश्चलः। एतदादिः
44283 सभाजनप्रतीतिसिद्धार्थानुवादः। राजप्रतीतिदृष्टं तु अग्रे राजैव वक्ष्यति॥
44284 ४१॥
44285
44286 क्षणमालोक्य पीठस्थस्तस्थौ संस्थगितेक्षणः।
44287 दृष्ट्याऽक्षुब्धः समुद्रोऽद्रिमीनकैः करवो यथा॥ ४२॥
44288
44289 यथा केन जलेन रौति ध्वनतीति करवः समुद्रः पानोद्युक्तागस्त्यदृष्ट्या
44290 आक्षुब्धः सन् स्वान्तर्गतैरद्रिमीनकैः सह संस्थगितो
44291 भयात्संस्तम्भितस्तस्थौ तद्वत्। आक्षुब्धसमुद्रादिमीनकैरिति समस्तपाठे तु
44292 करवः कस्य जलस्य रवो यथा संस्थगित इति व्याख्येयम्॥ ४२॥
44293
44294 तस्थौ मुहूर्तयुग्मं स ध्यानासक्त इवात्मनि।
44295 वीतरागो मुनिः क्षुब्धः परानन्द इव स्थितः॥ ४३॥
44296
44297 क्षुब्धो बाह्यदृष्टेरन्तः संचलितः। बाह्यदृष्टिशून्य इति यावत्॥ ४३॥
44298
44299 बोधितः केनचिन्नासौ स्वप्रतापजितोर्जितः।
44300 धिया कामप्ययं भूयश्चिन्तां चिन्तयतीति च॥ ४४॥
44301
44302 स्वप्रतापेन जिता ऊर्जिता बलवन्तो येन। हेतुगर्भं विशेषणम्॥ ४४॥
44303
44304 बभूवुः केवलं तत्र निःस्पन्दसितचामराः।

44305 चामरिण्यो हि शर्वर्यः स्तम्भितेन्दुकरा इव ॥ ४५ ॥
44306
44307 विरेजुर्विस्मयापूर्णा निःस्पन्दास्ते सभासदः।
44308 निःस्पन्दकिञ्जल्कदलाः पद्माः पङ्ककृता इव ॥ ४६ ॥
44309
44310 पङ्ककृता मृन्मयाः ॥ ४६ ॥
44311
44312 प्रशशाम सभास्थाने जनकोलाहलः शनैः।
44313 प्रशान्तप्रावृषि व्योमन्याम्भोदमिव गर्जितम् ॥ ४७ ॥
44314
44315 अम्भोदस्येदमाम्भोदम् ॥ ४७ ॥
44316
44317 संदेहसागरे मग्ना जग्मुश्चिन्तां सुमन्त्रिणः।
44318 विषीदति गदापाणावसुराजाविवामराः ॥ ४८ ॥
44319
44320 असुरैः सह आजिः संग्रामस्तस्मिन् ॥ ४८ ॥
44321
44322 विततविस्मितजिह्मितया तया
44323 जनतया भयमोहविषण्णया।
44324 स्तिमितचक्षुषि भूमिपतौ स्थिते
44325 मुकुलिताब्जवनस्य धृता द्युतिः ॥ ४९ ॥
44326
44327 विततेन विस्तृतेन विस्मयेन जिह्मितया कुटिलितया। निरुत्साहीकृतयेति यावत्। तया
44328 आस्थानजनतया जनसमूहेन ॥ ४९ ॥
44329
44330 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे
44331 इन्द्रजालोपाख्याने नृपव्यामोहो नाम चतुरुत्तरशततमः सर्गः ॥ १०४
44332 ।।
44333
44334 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे नृपव्यामोहो
44335 नाम चतुरुत्तरशततमः सर्गः ॥ १०४ ॥
44336
44337
44338 पञ्चोत्तरशततमः सर्गः १०५
44339
44340 श्रीवसिष्ठ उवाच।
44341
44342 मुहूर्तद्वितयेनाथ बोधमाप महीपतिः।
44343 प्रावृषेण्याम्बुनिर्मुक्तमम्बोरुहमिवोत्तमम् ॥ १ ॥
44344
44345 विमोहं स्वस्थहृदयं नृपं प्रति सभासदाम्।
44346 मोहहेतोः परिप्रश्नात्तदुक्त्यारम्भ ईर्यते ॥ १ ॥
44347
44348 प्रावृषि भवेन प्रावृषेण्येनाम्बुना ॥ १ ॥
44349
44350 आसनात्साङ्गदोत्तंसः प्रबुद्धोऽसावकम्पयत्।
44351 सवनाभोगशृङ्गाग्र्यो भूकम्प इव पर्वतः ॥ २ ॥
44352
44353 अकम्पयत् अर्थात्स्वदेहमिति गम्यते ॥ २ ॥
44354
44355 बभूवाथ प्रबुद्धोऽसावासनोपरि कम्पितः।
44356 विक्षुब्ध इव पातालवारणे शङ्कराचलः ॥ ३ ॥

विक्षुब्धे संचलिते पातालवारणे भूविधारके दिग्गजे। शंकराचलः कैलासः
॥ ३ ॥

पतन्तं धारयामासुस्तं पुरोगा नृपं भुजैः।
मेरुं प्रलयविक्षुब्धं कुलशैलास्तटैरिव ॥ ४ ॥

कुलशैला मन्दरादयो विष्टम्भपर्वताः ॥ ४ ॥

पुरोगैर्धार्यमाणोऽसौ पर्याकुलमतिर्नृपः।
वीचिविक्षोभितस्येन्दोर्बभार वनमाः श्रियः ॥ ५ ॥

इन्दोः लक्षणया इन्दूदयोद्रिक्तस्यार्णवस्य वनं जलं मिन्वन्ति उपमिन्वन्तीति
वनमाः श्रियः शोभा बभार। वपुषा श्रियः इति पाठः स्पष्टः ॥ ५ ॥

प्। ३७५) २२२

कोऽयं प्रदेशः कस्येयं सभेति स नृपः शनैः।
दध्वान मज्जदम्भोजकोशस्थ इव षट्पदः ॥ ६ ॥

दध्वान अस्फुटमुक्तवान् ॥ ६ ॥

अथोवाच सभा देव किमेतदिति सादरम्।
रणन्मधुकरी भानुं दृष्टराहुमिवाब्जिनी ॥ ७ ॥

सभाशब्देन जना उच्यन्ते। अब्जिन्या भानुं प्रति
वक्तृत्वमौत्प्रेक्षिकमत्रोपमानम्। रणन्मधुकरीत्युत्प्रेक्षोपपादकं
विशेस्ऽणम् ॥ ७ ॥

अथैनंपरिपप्रच्छुः पुरोगा मन्त्रिणस्तथा।
प्रलयोल्लाससंत्रस्तं मार्कण्डेयमिवामराः ॥ ८ ॥

त्वयीत्थं संस्थिते देव वयमत्यन्तमाकुलाः।
अभेद्यमपि भिन्दन्ति निर्निमित्तं भ्रमा मनः ॥ ९ ॥

भ्रमा भ्रान्तिप्रत्यया निर्निमित्तं विनैव बाह्यं कारणं मनो भिन्दन्ति
क्षोभयन्ति भयविषादादिभिरित्यर्थः ॥ ९ ॥

आपातरमणीयेषु पर्यन्तविरसेषु च।
भोगेष्विव विकल्पेषु केषु ते लुलितं मनः ॥ १० ॥

भोगेषु रागादिना पृथग्जनानामिव ते केन हेतुना मनो लुलितं।
व्यामूढमित्यर्थः ॥ १० ॥

सततोदारवृत्तासु कथासु परिशीतलम्।
मनस्ते निर्मलं कस्मात्संभ्रमेषु निमज्जति ॥ ११ ॥

कथासु विवेकचर्चासु परिशीलनेन शीतलम्। संभ्रमेषु भयेषु ॥ ११ ॥

तुच्छालम्बनमालूनविशीर्णं लोकवृत्तिषु।
मनो मोहमुपादत्ते न महत्त्वविजृम्भितम् ॥ १२ ॥

44409 कीदृशं तर्हि मनो मोहयोग्यं तत्राहुः - तुच्छालम्बनमिति ।
44410 यतस्तुच्छविषयालम्बनमतो विषये आलूने आलूनमिव विशीर्णे विशीर्णमिव
44411 लोकवृत्तिषु मोहमुपादत्त इत्यर्थः । महत्त्वविजृम्भितं विवेकपरिष्कृतम्
44412 ॥ १२ ॥
44413
44414 सातत्येन हि यैवास्य मनसो वृत्तिरुत्थिता ।
44415 शरीरमदमत्तासु तामेवैतद्विधावति ॥ १३ ॥
44416
44417 शरीरमदो देहाभिमानस्तेन मत्तासु अस्पृष्टविवेकासु दशासु अस्य मनसो
44418 यैव स्त्रीपुत्रादिविषये वृत्तिरुत्थिता तामेव विधावति ॥ १३ ॥
44419
44420 अतुच्छालम्बनं धीरं प्रबुद्धं गुणहारि च ।
44421 तवापि हि मनश्चित्रमालूनमिव लक्ष्यते ॥ १४ ॥
44422
44423 तव मनस्तु न तथेत्याहुः - अतुच्छेति ॥ १४ ॥
44424
44425 अनभ्यस्तविवेकं हि देशकालवशानुगम् ।
44426 मन्त्रौषधिवशं याति मनो नोदारवृत्तिमत् ॥ १५ ॥
44427
44428 नित्यमात्तविवेकस्य कथमालूनशीर्णता ।
44429 धुनोति विततं चेतो वात्येव विबुधाचलम् ॥ १६ ॥
44430
44431 विततं विवेकविस्तृतम् । विबुधाचलं मेरुम् ॥ १६ ॥
44432
44433 इति जातानुगीर्णस्य भूपतेः कान्तिराननम् ।
44434 भूषयामास शीतांशुं मासान्त इव पूर्णता ॥ १७ ॥
44435
44436 जातेन स्वजनसमूहेन अनुगीर्णस्य अनुकूलगीर्भिराश्वासितस्य । मासान्ते
44437 पौर्णमास्याम् ॥ १७ ॥
44438
44439 रराज राजा सौम्यास्यमुन्मीलितविलोचनः ।
44440 गते हिमर्तावुल्लासिपुष्पौघ इव माधवः ॥ १८ ॥
44441
44442 हिमर्तौ शिशिरे । माधवो वसन्तः ॥ १८ ॥
44443
44444 अथातिसंभ्रमाश्चर्यखिन्नास्मृतिमुखो बभौ ।
44445 आसन्नमृत्युरालोक्य राहुमिन्दुरिवाम्बरे ॥ १९ ॥
44446
44447 अथासन्नमृत्युः संनिहितास्तमय इन्दुः राहुमिवैन्द्रजालिकमालोक्य
44448 अतिसंभ्रमेण भयेन आश्चर्येण च खिन्नं आस्मृत्या आध्यानेन
44449 पूर्वापरसर्ववृत्तान्तप्रतिसंधानेनोपलक्षितं मुखं यस्य तथाविधो
44450 बभौ । आसन्नो मृत्युर्ग्रसनं यस्य ॥ १९ ॥
44451
44452 ऐन्द्रजालिकमालोक्य प्रोवाचाथ हसन्निव ।
44453 बभ्रुं हिंसात्मकं दृष्ट्वा सर्परूपीव तक्षकः ॥ २० ॥
44454
44455 बभ्रुं नकुलम् । सर्परूपी क्षुद्रसर्पवेषप्रच्छन्नस्तक्षको नागराजः ॥ २० ॥
44456
44457 जाल्म जालजटालेन किमेतद्भवतां कृतम् ।
44458 येनास्पन्दप्रसन्नोऽब्धिः क्षणादेत्य प्रसन्नताम् ॥ २१ ॥
44459
44460 हे जाल्म असमीक्ष्यकारिन् जालेन मायावागुरया जटालेनेव । अब्धिपदेन

44461 तत्सदृशं स्वमनो गौण्योच्यते || २१ ||
44462
44463 चित्रं चित्रा हि देवस्य पदार्थशतशक्तयः |
44464 सुशक्तमपि मे चित्तं याभिर्मोहे निवेशितम् || २२ ||
44465
44466 चित्रमित्यस्य निवेशितमित्यत्रान्वयः || २२ ||
44467
44468 क्व वयं लोकपर्यायकृतान्तपदवेदिनः |
44469 क्व मनोमोहदायिन्यो वितताः प्रकृतापदः || २३ ||
44470
44471 चित्रतामेवाभिनयन्नाह - क्वेति | लोकपर्याया
44472 लोकप्रसिद्धसर्वव्यवहारास्तेषां कृतान्तपदस्य सिद्धान्तरहस्यस्य वेदिनो
44473 बोद्धारः | प्रकृताः सांप्रतमनुभूता आपदः || २३ ||
44474
44475 अप्यभ्यस्तमहाज्ञानं मनस्तिष्ठति देहके |
44476 कदाचिन्मोहमादत्ते क्षणं मतिमतामपि || २४ ||
44477
44478 अभ्यस्तमहाज्ञानमपि मनः कदाचिद्देहके तिष्ठति | विद्यमानेऽपि
44479 स्वप्नेन्द्रजालानां मोहं आदत्ते || २४ ||
44480
44481 इदमाश्चर्यमाख्यानं श्रूयतां रे सभासदः |
44482 मम शाम्बरिकेणेह यन्मुहूर्तं प्रदर्शितम् || २५ ||
44483
44484 शम्बरस्य माया शाम्बरी सास्यास्तीति शाम्बरिकस्तेन || २५ ||
44485
44486 दृष्टवानहमेतस्मिन्बह्वीः कार्यदशाश्चलाः |
44487 मुहूर्तं प्रार्थितोऽध्वस्तशक्रसृष्टिरिवाब्जजः || २६ ||
44488
44489 अध्वस्तशक्रसृष्टिरिति च्छेदः | पुरा किल बलिः क्वचिदसहायं शक्रमासाद्य
44490 बलेर्निगृह्याहर्तुकामः शक्रेण मायया स्वसैन्यं सृष्ट्वा बलिं
44491 मायाबन्धेन मोहयामास | तदा बलिना स्वबन्धनमोक्षणाय स्तुत्या प्रसादितो
44492 ब्रह्मा तत्रागत्य शाक्रीं सृष्टिं ध्वंसयितुं प्रवृत्तः शक्रप्रार्थनया
44493 अध्वस्तशक्रसृष्टिर्मुहूर्तमात्रं तन्मायाकौतुकं यथा
44494 दृष्टवांस्तद्वदित्यर्थः || २६ ||
44495
44496 इत्युक्त्वोन्मुखनेत्रेषु सभ्येषु स हसन्निव |
44497 राजा वर्णयितुं चित्रं वृत्तान्तमुपचक्रमे || २७ ||
44498
44499 प्। ३७६) २२३
44500
44501 राजोवाच |
44502
44503 इह विविधपदार्थसंकुलायां
44504 ह्रदनदपत्तनपर्वताकुलायाम् |
44505 कुलशिखरिसमुद्रसंकरायां
44506 भुवि विभवावलितोऽस्त्ययं प्रदेशः || २८ ||
44507
44508 वक्ष्यमाणोपोद्घातेन प्रथमं
44509 सर्वजनप्रसिद्धभूम्यन्तर्गतस्वदेशसत्तामनुवदति - इहेति |
44510 पर्वतग्रहणेन प्राप्तानामपि कुलशिखरिणां पुनर्ग्रहणं
44511 ब्राह्मणपरिव्राजकन्यायेन श्रैष्ठ्यार्थम् | संकीर्यत इति संकरा | कृञः
44512 शच इति कर्मणि बाहुलकात् शः | संकटायाम् इति पाठे तु दुर्गमायामित्यर्थः

44513 ॥ २८ ॥
44514
44515 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० उ०
44516 इन्द्रजालोपाख्याने राजावबोधो नाम पञ्चोत्तरशततमः सर्गः ॥ १०५ ॥
44517
44518 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे राजावबोधो
44519 नाम पञ्चोत्तरशततमः सर्गः ॥ १०५ ॥
44520
44521
44522 षडुत्तरशततमः सर्गः १०६
44523
44524 राजोवाच ।
44525
44526 अस्ति तावदयं देशो नानावननदीयुतः ।
44527 वसुधामण्डलस्यास्य सहोदर इवानुजः ॥ १ ॥
44528
44529 इहाश्वेनापनीतस्य वने चण्डालकन्यया ।
44530 समयात्पक्कणं नीत्वा विवाहः स्वस्य वर्ण्यते ॥ १ ॥
44531
44532 समानार्थः सहशब्दः । सहोदरः समानोदरोद्भव इवेत्यर्थः ॥ १ ॥
44533
44534 अस्मिंश्चायमहं राजा पौराभिमतवृत्तिमान् ।
44535 इन्द्रः स्वर्ग इवास्यां तु सभायां मध्यसंस्थितः ॥ २ ॥
44536
44537 यावदभ्यागतो दूरात्कश्चिच्छाम्बरिकस्त्वयम् ।
44538 रसातलादभ्युदितो मायी मय इव स्वयम् ॥ ३ ॥
44539
44540 यावदिति प्राकाश्ये निपातो नतु वतुबन्तः । प्रत्यक्षमभ्यागत इत्यर्थः ॥ ३ ॥
44541
44542 अनेन भ्रमिताद्येह पिच्छिका तेजसोर्जिता ।
44543 कल्पान्तपवनाभ्रेण शक्रचापलता यथा ॥ ४ ॥
44544
44545 भ्रमिता । भ्रमेर्णिचि मितां ह्रस्वः ॥ ४ ॥
44546
44547 आलोक्यैतामहं लोलामस्याश्वस्य पुरः स्थितः ।
44548 पृष्ठमारूढवानेक आत्मना भ्रान्तमानसः ॥ ५ ॥
44549
44550 एकोऽसहायः ॥ ५ ॥
44551
44552 ततोऽद्रिं प्रलयक्षुब्धं पुष्करावर्तको यथा ।
44553 तथा चलन्तं चलितः स्वश्वमारूढवानहम् ॥ ६ ॥
44554
44555 प्रलयक्षुब्धं उत्पातवशादेव चलन्तमद्रिमारूढः पुष्करावर्तको
44556 मेघराजो यथा चलितस्तथाहं चलित इत्यन्वयः ॥ ६ ॥
44557
44558 गन्तुं प्रवृत्तो मृगयामेकोऽहमतिरंहसा ।
44559 उर्वरामिव निर्भर्तुः कल्लोलः प्रलयाम्बुधेः ॥ ७ ॥
44560
44561 उर्वरां सर्वसस्याढ्यभूमिम् । निर्भर्तुर्निर्भरवतः प्रवृद्धस्येति यावत् ।
44562 कल्लोलो बृहत्तरङ्गः ॥ ७ ॥
44563
44564 तेनानिलविलोलेन दूरं नीतोऽस्मि वाजिना ।

44565 योगाभ्यासजडेनाज्ञो मुग्धस्य मनसा यथा ॥ ८ ॥
44566
44567 मुग्धः स्वमनसा इति पाठः स्पष्टः । मुग्धस्य मनसा इति पाठे
44568 मुग्धस्यापातरमणीयस्य विषयजातस्य भोगाभ्यासेन जडेनेत्यर्थः ।
44569 असमर्थसमासश्छान्दसः ॥ ८ ॥
44570
44571 अकिंचनमनःशून्यं स्त्रीचित्तमिव निर्भरम् ।
44572 ततः प्रलयनिर्दग्धजगदास्पदभीषणम् ॥ ९ ॥
44573
44574 अकिंचनस्य यतेर्मन इव शून्यं निर्विषयम् । निर्भरं लघु विषमं वा ।
44575 जगदास्पदं ब्रह्माण्डम् ॥ ९ ॥
44576
44577 निष्पक्षिक्षारनीहारं निर्वृक्षमजलं महत् ।
44578 संप्राप्तोऽहमपर्यन्तमरण्यं श्रान्तवाहनः ॥ १० ॥
44579
44580 क्षारनीहारं दुःसहशीतम् ॥ १० ॥
44581
44582 तद्द्वितीयमिवाकाशं तथाष्टममिवाम्बुधिम् ।
44583 पञ्चमं सागरमिव संशुष्कं शून्यकोटरम् ॥ ११ ॥
44584
44585 स्वादूदकार्णवात्परतोऽष्टमम्बुधिं प्राग्वर्णितभूपरिखागर्तमिव ।
44586 जम्बूद्वीपान्तश्चतुर्दिशं चतुःसागरप्रसिद्धेस्तत्र पञ्चमं सागरमिव ॥
44587 ११ ॥
44588
44589 ज्ञस्येव विततं चेतो मूर्खस्येव रुषाऽजवम् ।
44590 अदृष्टजनसंसर्गमजाततृणपल्लवम् ॥ १२ ॥
44591
44592 ज्ञस्य तत्त्वविदो ब्रह्माकारं चेत इव विततमपरिच्छेद्यम् । मूर्खस्य रुषा
44593 [टाबन्तमिदं रुषा इति] क्रोध इव अजवं दुर्गमं विषममिति
44594 [विषयं इति पाठः] यावत् ॥ १२ ॥
44595
44596 अरण्यमिदमासाद्य मतिर्मे खेदमागता ।
44597 ललनेवैत्य दारिद्यं निरन्नफलबान्धवम् ॥ १३ ॥
44598
44599 दारिद्यमेत्य प्राप्य स्थिता ललनेव स्थितमिति शेषः । सीदता मयेति व्यवहितेन
44600 वान्वयः ॥ १३ ॥
44601
44602 कचन्मरुमरीच्यम्बुपुरःप्लुतककुम्मुखम् ।
44603 आसूर्यास्तं दिनं तत्र प्रक्रान्तं सीदता मया ॥ १४ ॥
44604
44605 मरुमरीच्यम्बुभिः पुरोभागे प्लुतानि आप्लावितानि ककुम्मुखानि यत्र ॥ १४ ॥
44606
44607 तदरण्यं मयातीतमतिकृच्छ्रेण खेदिना ।
44608 विवेकिनेव संसारो मध्यशून्यतताकृति ॥ १५ ॥
44609
44610 यदेतेनातिवाह्याहं प्राप्तवाञ्जङ्गलं क्रमात् ।
44611 अस्ताद्रिसानुं खिन्नाश्वः शून्यभ्रान्त्येव भास्करः ॥ १६ ॥
44612
44613 एतेनाश्वेन । शून्यभ्रान्त्या आकाशगमनेन । प्राप्तवानित्यस्य यत्र स्फुरन्ति
44614 तत्रेति परेण संबन्धः ॥ १६ ॥
44615
44616 जम्बूकदम्बप्रायेषु कलालापाः पतत्रिणः ।

44617 यत्र स्फुरन्ति खण्डेषु पान्थानामिव बान्धवाः ॥ १७ ॥
44618
44619 यत्र शष्पशिखाश्रेण्यो दृश्यन्ते विरलाः स्थले ।
44620 कदर्थलक्ष्म्या जिह्मस्य हृदीवानन्दवृत्तयः ॥ १८ ॥
44621
44622 कदर्थलक्ष्म्या अधर्मार्जितधनेन । जिह्मस्य कुटिलजनस्य ॥ १८ ॥
44623
44624 पूर्वादरण्यादरसात्तद्धि किंचित्सुखावहम् ।
44625 अत्यन्तदुःखान्मरणाद्वरं व्याधिर्हि जन्तुषु ॥ १९ ॥
44626
44627 प्। ३७७) २२३
44628
44629 तत्र जम्बीरखण्डस्य तलं संप्राप्तवानहम् ।
44630 मार्कण्डेय इवागेन्द्रमेकार्णवविहारतः ॥ २० ॥
44631
44632 अगेन्द्रं वृक्षश्रेष्ठं विष्णवधिष्ठितवटम् ॥ २० ॥
44633
44634 आलम्बिता मया तत्र स्कन्धसंसर्गिणी लता ।
44635 नीला जलदमालेव तापतप्तेन भूभृता ॥ २१ ॥
44636
44637 आलम्बिता अश्वपरित्यागार्थमवलम्बिता ॥ २१ ॥
44638
44639 मयि प्रलम्बमानेऽस्यां प्रयातः स तुरङ्गमः ।
44640 गङ्गावलम्बिनि नरे यथा दुष्कृतसंचयः ॥ २२ ॥
44641
44642 चिरं दीर्घाध्वगः खिन्नस्तत्र विश्रान्तवानहम् ।
44643 भानुरस्ताचलओत्सङ्गे तले कल्पतरोरिव ॥ २३ ॥
44644
44645 यावत्समस्तसंसारव्यवहारभरैः समम् ।
44646 रविर्विश्रमणायेव निविष्टोऽस्ताचलाङ्गणे ॥ २४ ॥
44647
44648 यावत्समस्तसंसारव्यवहारैः सह रविरस्ताचलोपलक्षिते उदयाद्यन्ते
44649 गगनाङ्गणे निविष्टस्तावदहं तस्मिंस्तरुगणे निलीन इति व्यवहितेनान्वयः ॥
44650 २४ ॥
44651
44652 शनैः श्यामिकया ग्रस्ते समस्ते भुवनोदरे ।
44653 रात्रिसंव्यवहारेषु संप्रवृत्तेषु जङ्गले ॥ २५ ॥
44654
44655 अहं तरुतृणे तस्मिन्पेलवे खण्डकोटरे ।
44656 निलीनश्चिरलीनास्यः स्वनीडे विहगो यथा ॥ २६ ॥
44657
44658 चिरं लीनं स्वपक्षपुटे गोपितमास्यं चञ्चुपुटं येन तथाविधो विहगो
44659 यथा तथा ॥ २६ ॥
44660
44661 विषदष्टविवेकस्य कीनाशस्य गलत्स्मृतेः ।
44662 विक्रीतस्येव दीनस्य मग्नस्येवान्धकूपके ॥ २७ ॥
44663
44664 विषशब्देन विषधरः कीनाशशब्देन मृत्युवशश्च लक्षणयोच्यते ॥ २७ ॥
44665
44666 तत्र कल्पसमा रात्रिर्मोहमग्नस्य मे गता ।
44667 एकार्णवोह्यमानस्य मार्कण्डेयमनेरिव ॥ २८ ॥
44668

न स्नातवान्नार्चितवान्न तदा भुक्तवानहम् ।
केवलं मे गता रात्रिः सापदां धुरि तिष्ठतः ॥ २९ ॥

सापदां आपद्युक्तजनानां सा रात्रिरिति वा ॥ २९ ॥

विनिद्रस्य विधैर्यस्य स्फुरतः सह पल्लवैः ।
समं दुष्टातिदैर्घ्येण सा व्यतीयाय शर्वरी ॥ ३० ॥

पल्लवैः सह स्फुरतः कम्पमानस्य । दुष्टेन दुरुत्तरेणातिदैर्घ्येण समं
साकम् ॥ ३० ॥

ततस्तिमिरलेखासु सह तारेन्दुकैरवैः ।
मयीवापाद्यमानासु म्लानतामलमानने ॥ ३१ ॥

ततः पूर्वां दिशं प्राप्तमधुपानारुणामिव दृष्टवानिति तृतीयेनान्वयः
। तारेण्दुकैरवैः सह तिमिरलेखासु म्लानतामप्रसन्नतामापाद्यमानासु ।
तासामुपमानं मयीवेति । तारकेन्दुकैरवाणामुपमानमानने
इत्यनेनार्थादाननमिन्दोर्नेत्रे कैरवाणां तत्तारके ताराणामुपमानमिति
गम्यते ॥ ३१ ॥

शाम्यन्तीषु च वेतालक्ष्वेडासु जवजङ्गले ।
सहशीतार्तिमद्दन्तपङ्क्तिटाङ्कारसीत्कृतैः ॥ ३२ ॥

क्ष्वेडासु सिंहनादेषु । जवजङ्गले दीर्घारण्ये । जङ्गलेऽसहेति प्रश्लेषः ।
असहा दुःसहा या शीतार्तिस्तद्वतां प्राणिनां
दन्तपङ्क्तिघट्टनटाङ्कारसीत्कारैर्मामेव हसन्तीमिवेति देशो विशेषणम् ॥
३२ ॥

मामेवार्तिविनिर्मग्नं हसन्तीमिव दृष्टवान् ।
अहं पूर्वां दिशं प्राप्तमधुपानारुणामिव ॥ ३३ ॥

क्षणादज्ञ इव ज्ञानं दरिद्र इव काञ्चनम् ।
दृष्टवानहमर्कं खे वारणारोहणोन्मुखम् ॥ ३४ ॥

वारणाः प्राच्यामैरावताख्यो दिग्गजस्तदारोहणं तत
ऊर्ध्वभावस्तदुन्मुखम् ॥ ३४ ॥

उत्थायास्तरणं वस्त्रं तत्तदास्फोटितं मया ।
हस्तिचर्महरेणेव संध्यानृत्यानुरागिणा ॥ ३५ ॥

आस्तरणं वस्त्रमास्फोटितं विधूनितम् ॥ ३५ ॥

प्रवृत्तस्तामहं स्फारां विहर्तुं जङ्गलस्थलीम् ।
कालो जगत्कुटीं कल्पदग्धभूतगणामिव ॥ ३६ ॥

कालः कालरुद्रः । कल्पः प्रलयः ॥ ३६ ॥

न किंचिद्दृश्यते तत्र भूतं जरठजङ्गले ।
अभिजातो गुणलवो यथा मूर्खशरीरके ॥ ३७ ॥

अभिजातो हृद्यः ॥ ३७ ॥

केवलं विगताशङ्कं खण्डभ्रमणचञ्चलम् ।
चीचीकूचीतिवचना विहरन्ति विगङ्गमाः ॥ ३८ ॥

केवलं निष्फलवनखण्डभ्रमणेन चञ्चलं जातिचापल्यं यथा स्यात्तथा
विहरन्ति तत्रेति शेषः ॥ ३८ ॥

अथाष्टभागमापन्ने व्योम्नो दिवसनायके ।
शुष्कावश्यायलेशासु स्नातास्विव लतासु च ॥ ३९ ॥

अवश्यायलेशा नीहारजलकणाः ॥ ३९ ॥

दृष्टा मया प्रभ्रमता दारिकौदनधारिणी ।
गृहीतामृतसत्कुम्भा दानवेनेव माधवी ॥ ४० ॥

दारिका दन्या । माधवी स्त्रीवेषधरो हरिरिव ॥ ४० ॥

तरत्तारकनेत्रां तां श्यामामधवलाम्बराम् ।
अहमभ्यागतस्तत्र शर्वरीमिव चन्द्रमाः ॥ ४१ ॥

तरत्तारका एव नेत्राणि यस्याः ॥ ४१ ॥

मह्यमोदनमाश्वेतद्वाले बलवदापदि ।
देहिदीनार्तिहरणात्स्फारतां यान्ति संपदः ॥ ४२ ॥

बलवत्यां प्राणात्ययपर्यन्तायाम् । तथाच स्मृतिः - जीवितात्ययमापन्नो
योऽन्नमत्ति यतस्ततः । लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ इति ।
सर्वान्नानुमतिः प्राणात्यये तद्दर्शनात् इति बादरायणसूत्रं चेति भावः ॥ ४२
। ।

क्षुदन्तर्महतीयं मे बाले वृद्धिमुपेयुषी ।
कृष्णसर्पा प्रसूतेव कोटरस्था जरद्द्रुमे ॥ ४३ ॥

प्रसूता जातापत्या । सा हि स्वाण्डान्यपि ग्रसतीति क्षुधाया
अनुचितकारिणीत्वद्योतनार्थं विशेषणम् । तथाचाहुः अस्य दग्धोदरस्यार्थे को न
कुर्यादसांप्रतम् इति ॥ ४३ ॥

याच्ञयापि तया मह्यमित्थं दत्तं न किंचन ।
यत्नप्रार्थनया लक्ष्म्या यथा दुष्कृतिने धनम् ॥ ४४ ॥

यत्नयुक्तया प्रार्थनया यत्नप्रार्थनया ॥ ४४ ॥

केवलं चिरकालेन मयात्यन्तानुगामिना ।
खण्डात्खण्डं निपतति च्छायाभूते पुरःस्थिते ॥ ४५ ॥

एकस्माद्वनखण्डाद्वनखण्डान्तरं निपतति अनुगच्छति । अत एव
च्छायाभूते ॥ ४५ ॥

प। ३७८) २२५

तयोक्तं हारकेयूरिंश्चण्डालीं विद्धि मामिति ।
राक्षसीमिव सुक्रूरां पुरुषाश्वगजाशनाम् ॥ ४६ ॥

44773 हारकेयूरिन्नित्यनेनोत्तमजातिसूचनेन मदन्नमभोज्यमिति द्योतितम् ॥ ४६ ॥
44774
44775 राजन्यार्चनमात्रेण मत्तो नाप्नोषि भोजनम् ।
44776 ग्राम्यादनभिजातेहात्सौजन्यमिव सुन्दरम् ॥ ४७ ॥
44777
44778 अनभिजातेहादसंपन्नाभिलाषात् । ग्राम्यात् ग्रामीणजनात् । सौजन्यं
44779 सौहार्दमिव ॥ ४७ ॥
44780
44781 इत्युक्तवत्या गच्छन्त्या खेलया च पदे पदे ।
44782 कुञ्जकेषु निमज्जन्त्या लीलावनतयोदितम् ॥ ४८ ॥
44783
44784 मज्जन्त्या लीयमानया । लीलाभिः
44785 स्वाभिप्रेतार्थसूचककटाक्षादिचेष्टाभिरवनतया प्रह्वीभूतया ॥ ४८ ॥
44786
44787 ददामि भोजनमिदं भर्ता भवसि चेन्मम ।
44788 लोको नोपकरोत्यर्थैः सामान्यः स्निग्धतां विना ॥ ४९ ॥
44789
44790 सामान्यो लोकः पृथग्जनः ॥ ४९ ॥
44791
44792 वाहयत्यत्र मे दान्तान्केदारे पुल्कसः पिता ।
44793 श्मशान इव वेतालः क्षुधितो धूलिधूसरः ॥ ५० ॥
44794
44795 दान्तान् बलीवर्दान् वाहयति । कर्षतीति यावत् ॥ ५० ॥
44796
44797 तस्येदमन्नं भवति भर्तृत्वे दीयते स्थिते ।
44798 प्राणैरपि हि संपूज्या वल्लभाः पुरुषा यतः ॥ ५१ ॥
44799
44800 त्वयि भर्तृत्वे स्थिते सति दीयते ॥ ५१ ॥
44801
44802 अथोक्ता सा मया भर्ता भवामि तव सुव्रते ।
44803 केनापदि विचार्यन्ते वर्णधर्मकुलक्रमाः ॥ ५२ ॥
44804
44805 ततस्तयौदनादर्धं मह्यमेकं समर्पितम् ।
44806 माघव्येवामृतादर्धमिन्द्रायार्तिमहत्पुरा ॥ ५३ ॥
44807
44808 माधव्या इन्द्राय दत्तममृतादर्धमिव । आर्त्या क्षुत्पीडया
44809 महद्बहुमतमिति यावत् ॥ ५३ ॥
44810
44811 जम्बूफलरसः पीतः स भुक्तः पक्वणौदनः ।
44812 विश्रान्तं च मया तत्र मोहापहतचेतसा ॥ ५४ ॥
44813
44814 मां तत्रार्कमिवापूर्य सा प्रावृट् श्यामला गता ।
44815 हस्तेन समुपादाय प्राणं बहिरिव स्थितम् ॥ ५५ ॥
44816
44817 आपूर्य तिरोधाय ॥ ५५ ॥
44818
44819 दुराकृतिं दुरारम्भमाससाद भयप्रदम् ।
44820 पितरं पीवराकारमवीचिमिव यातना ॥ ५६ ॥
44821
44822 अवीचिं नरकविशेषम् ॥ ५६ ॥
44823
44824 तया मदनुषङ्गिण्या स्वार्थस्तस्मै निवेदितः ।

44825 मातङ्गाय भ्रमर्येव निःस्वनेनालिलग्नया ॥ ५७ ॥
44826
44827 मातङ्गाय चाण्डालाय निवेदितः। कर्णे इति शेषः। अत एवालिना भ्रमरान्तरेण
44828 लग्नया भ्रमर्येवेत्युपमा ॥ ५७ ॥
44829
44830 अयं मम भवेद्भर्ता तात हे तव रोचताम्।
44831 स तस्या बाढमित्युक्त्वा दिनान्ते समुपस्थिते ॥ ५८ ॥
44832
44833 मुमोच दान्तावाबद्धौ कृतान्तः किङ्कराविव।
44834 नीहाराभ्रकडारासु दिक्षु प्रोद्धूलितासु च।
44835 वेतालबन्धनात्तस्माद्दिनान्ते चलिता वयम् ॥ ५९ ॥
44836
44837 कडारासु कपिलासु। वेतालबन्धनात्पिशाचनिवासात्तस्माद्वनात् ॥ ५९ ॥
44838
44839 क्षणेन पक्कणं प्राप्ताः संध्यायां दीर्घजङ्गलात्।
44840 श्मशानादिव वेतालाः श्मशानमितरन्महत् ॥ ६० ॥
44841
44842 विकर्तितविभागस्थकपिकुक्कुटवायसम्।
44843 रक्तसिक्तोर्वराभागप्रभ्रमन्मक्षिकागणम् ॥ ६१ ॥
44844
44845 विकर्तिता अपि पुनः कर्तनेन विभागस्थाः ॥ ६१ ॥
44846
44847 शोषार्थं प्रसृतार्द्रान्त्रतन्त्रीजालपतत्खगम्।
44848 निष्कुटस्थितजम्बीरखण्डलग्नखगध्वनि ॥ ६२ ॥
44849
44850 निष्कुटेषु गृहारामेषु ॥ ६२ ॥
44851
44852 शुष्यद्गुरुवसापिण्डपूर्णालिन्दलसत्खगम्।
44853 दृष्टिप्रसृतरक्ताक्तचर्मस्रवदसृगलवम् ॥ ६३ ॥
44854
44855 अलिन्दो बहिर्द्वारप्रकोष्ठः ॥ ६३ ॥
44856
44857 बालहस्तस्थितक्रव्यपिण्डक्वणितमक्षिकम्।
44858 जर्जराधिष्ठचण्डालतर्जितारटितार्भकम् ॥ ६४ ॥
44859
44860 जर्जरैर्वृद्धैरधिष्ठैः श्रेष्ठैश्चण्डालैः ॥ ६४ ॥
44861
44862 तत्प्रविष्टा वयं कीर्णशिरान्त्रं भीमपक्कणम्।
44863 मृतभूतं जगत्कल्पे कृतान्तानुचरा इव ॥ ६५ ॥
44864
44865 मृतानि भूतानि प्राणिनो यत्र। कल्पे प्रलयकाले ॥ ६५ ॥
44866
44867 संभ्रमोपहितानल्पकदलीदलपीठके।
44868 अहमास्थितवांस्तत्र नवे श्वशुरमन्दिरे ॥ ६६ ॥
44869
44870 संभ्रमेणादरातिशयेन उपहिते आस्तीर्णे पीठके आसने ॥ ६६ ॥
44871
44872 श्वश्वा मे केकराक्ष्या तु तेनासृग्लवचक्षुषा।
44873 जामातायमिति प्रोक्तं तया तदभिनन्दितम् [सदभिनन्दितम् इति
44874 पाठः] ॥ ६७ ॥
44875
44876 अथ विश्रम्य चण्डालभोजनान्यजिनासने।

संचितान्युपभुक्तानि दुष्कृतानीव भूरिशः ॥ ६८ ॥

अनन्तदुःखबीजानि न मनोज्ञतराण्यपि ।
तानि प्रणयवाक्यानि श्रुतान्यसुभगान्यलम् ॥ ६९ ॥

निरभ्राम्बरनक्षत्रे कस्मिंश्चिद्दिवसे ततः ।
तैस्तैराम्भसंरम्भैस्तैर्वस्त्रविभवार्पणैः ॥ ७० ॥

तैस्तैश्चण्डालोत्सवोचितैर्मद्यमांसादिसंचयारम्भोद्योगैः ॥ ७० ॥

दत्ताप्यनेन सा मह्यं कुमारी भयदायिनी ।
सुकृष्णा कृष्णवर्णेन दुष्कृतेनेव यातना ॥ ७१ ॥

सरभसमभितो विनेदुरत्र
प्रसृतमहामदिरासवाः श्वपाकाः ।
हतपटुपटहा विलासवन्तः
स्वयमिव दुष्कृतराशयो महान्तः ॥ ७२ ॥

अत्रास्मिन्विवाहोत्सवे । मदिरासवपदाभ्यां तन्मदो लक्ष्यते । महान्तो
ब्रह्महत्यादयः ॥ ७२ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे मो० उत्पत्तिप्रकरणे इन्द्रजालोपाख्याने
चाण्डालीविवाहो नाम षडुत्तरशततमः सर्गः ॥ १०६ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे चाण्डालीविवाहो
नाम षडुत्तरशततमः सर्गः ॥ १०६ ॥


प्। ३७९) २२५

सप्तोत्तरशततमः सर्गः १०७

राजोवाच ।

बहुनात्र किमुक्तेन सोत्सवावर्जिताशयः ।
तदाप्रभृति तत्राहं संपन्नः पुष्टपुल्कसः ॥ १ ॥

अत्र स्वस्य चिरं तत्र वसतः षष्टिहायनान् ।
चण्डालोचितकृत्येन जीवनं यत्तदुच्यते ॥ १ ॥

सोत्सवेनोत्सवसहितेन विवाहेन आवर्जिताशयो वशीकृतचित्तः ॥ १ ॥

सप्तरात्रोत्सवस्यान्ते क्रमान्मासाष्टके गते ।
पुष्पिता सास्य संपन्ना स्थिता गर्भवती ततः ॥ २ ॥

सा भार्या । अस्य मम । पुष्पिता ऋतुमती ॥ २ ॥

प्रसूता दुःखदां कन्यां विपद्दुःखक्रियामिव ।
सा कन्या ववृधे शीघ्रं मूर्खचिन्तेव पीवरी ॥ ३ ॥

पुनः प्रसूता सा वर्षैस्त्रिभिः पुत्रमशोभनम् ।
अनर्थमिव दुर्बुद्धिराशापाशविधायकम् ॥ ४ ॥

44929
44930 पुनः सुतां दुहितरं पुनरप्यर्भकं ततः |
44931 कलत्रवानहं जातो वने जरठपुल्कसः || ५ ||
44932
44933 कलत्रवान् कुटुम्बी || ५ ||
44934
44935 तया सह समास्तत्र मया बह्व्योऽतिवाहिताः |
44936 नारके चिन्तया सार्धं ब्रह्मघ्नेनेव यातनाः || ६ ||
44937
44938 शीतवातातपक्लेशविवशेन वनान्तरे |
44939 चिरं विलुलितं वृद्धकच्छपेनेव पल्वले || ७ ||
44940
44941 कलत्रचिन्ताहतया धिया संदह्यमानया |
44942 दृष्टाः कष्टसमारम्भा दिशः प्रज्वलिता इव || ८ ||
44943
44944 क्षौमानेकसमाक्षीणपटे चेण्डकधारिणा |
44945 काष्ठभारो वने व्यूढो यो मूर्तमिव दुष्कृतम् || ९ ||
44946
44947 क्षौमे अतसीवल्कलविकारे अनेकसमाभिराक्षीणे जीर्णे पटे | चेण्डकं
44948 तृणादिनिर्मितं वलयाकारं भारोद्वहनशिरस्त्राणम् || ९ ||
44949
44950 यौकाकीर्णजरत्क्लिन्नगन्धिकौपीनवाससा |
44951 आश्वस्य धवलीकानां तले नीता घनाः समाः || १० ||
44952
44953 यूकानां समूहो यौकम् | जरज्जीर्ण दुर्गन्धि च कौपीनमेव वासो यस्य |
44954 आश्वस्य विश्रम्य | धवलीकानां वृक्षविशेषाणाम् || १० ||
44955
44956 कलत्रापूरणोत्केन जर्जरेण हिमानिलैः |
44957 हेमन्ते दर्दुरेणेव विलीनं वनकुक्षिषु || ११ ||
44958
44959 दर्दुरेण मेकेन || ११ ||
44960
44961 नानाकलहकल्लोलतापप्रसरविद्रुताः |
44962 बाष्पव्याजेन निर्मुक्ता नेत्राभ्यां रक्तबिन्दवः || १२ ||
44963
44964 तापप्रसरादिव विद्रुता विलीनाः || १२ ||
44965
44966 यामिन्यो विपिने क्लिन्ने वराहामिषभोजनाः |
44967 शिलातलकुटीकोशे नीता जलदविक्लवाः || १३ ||
44968
44969 काले क्षयं गते रोहे कालभ्रघनतां गते |
44970 असौहार्देन बन्धूनां कलहैश्चापि संततैः || १४ ||
44971
44972 कालवर्णैरभ्रैर्घनतां निबिडतां गते रोहे सर्वबीजप्रादुर्भावहेतौ
44973 वर्षाकाले क्षयं गते सति || १४ ||
44974
44975 सर्वत्र जातशङ्केन कलाभिमुखरार्भकैः |
44976 मया कृपणचित्तेन नीताः परगृहे समाः || १५ ||
44977
44978 अर्भकैः सहेति शेषः | परगृहे चाण्डालान्तरगेहे || १५ ||
44979
44980 चण्डालीकलहोद्विग्नचण्डचण्डालतर्जनैः |

44981 मुखं जर्जरतां यातमिन्दू राहुरदैरिव ॥ १६ ॥
44982
44983 राहोः रदैर्दन्तैरिन्दुरिव ॥ १६ ॥
44984
44985 चर्विताः खर्वितोष्ठेन द्वीपीपिशितपेशयः ।
44986 नारकाहृतविक्रीता नारक्यो रशना इव ॥ १७ ॥
44987
44988 नारकैराहृता नारकेभ्यो विक्रीताः । अनेन नरकेऽपि क्रयविक्रयपातकिनां
44989 तदनुरूपो व्यवहारोऽस्तीति गम्यते । रशनाः आन्त्ररज्जवः ॥ १७ ॥
44990
44991 हिमवत्कन्दरोद्दीर्णाश्चण्डा हेमन्तवीचयः ।
44992 शिशिरे शीकरासारतुषारनिचयाश्चिरम् ॥ १८ ॥
44993
44994 अङ्गे निरम्बरे सोढा मृत्युमुक्ता इवेषवः ।
44995 जराजरठमूढेन मूलानि क्षीणभूरुहाम् [क्षीरभूरुहां इति
44996 पाठः] ॥ १९ ॥
44997
44998 सुकृतानामिवैकेन समुत्खातानि भूरिशः ।
44999 शरावकेषु।वटव्यां च पललं पक्वमादरात् ॥ २० ॥
45000
45001 अस्पृष्टेन जनैर्भुक्तं कुकलत्रवता मया ।
45002 गृहीततेजःक्षतये बहुवक्त्रविकारिणा ॥ २१ ॥
45003
45004 गृहीतस्य तेजसः क्षतये ॥ २१ ॥
45005
45006 मार्गाविकमिवात्मीयं विक्रीतं पण्यमन्यतः ।
45007 प्राण्यङ्गवपुषस्तस्य प्रोत्कृत्योत्कृत्य पशलः ॥ २२ ॥
45008
45009 मृगाणां मांसं मार्गम् । अवेर्मांसं आविकम् । अन्यतः अन्येभ्यः
45010 पण्यं क्रीतं तदात्मीयं स्वदेहमांसमिव क्रीतमिति जुगुप्सोक्तिः ॥ २२ ॥
45011
45012 आयसंपरि विक्रीता विन्ध्यपक्कणभूमिषु ।
45013 जन्मान्तरसहस्रोत्थं स्वपापमिव वृद्धये ॥ २३ ॥
45014
45015 आयसंपरि अयःपात्रे निधाय संस्कृत्य वेत्यर्थः । वृद्धये
45016 अधिकमूल्यलाभार्थं विक्रीताः ॥ २३ ॥
45017
45018 अविकीर्णमसत्कीर्णं चण्डालारामभूमिषु ।
45019 दृष्टः कुद्दालको दृष्ट्या संध्यास्नेहविमुक्तया ॥ २४ ॥
45020
45021 विक्रीतशिष्टं तु चण्डालारामभूमिषु शोषणार्थमवकीर्णम् ।
45022 असद्भिरपवित्रैर्मलमूत्रादिभिः कीर्णं व्याप्तम् ।
45023 रौरवापतितेनेवात्यन्तदुर्दशां प्राप्तेन विन्ध्यपर्वतगुल्मानां बन्धुतां
45024 पोष्यतां गच्छतेव स्थितेन मया संध्यायां स्नेहेन विमुक्तया ।
45025 कन्दमूलमांसाद्यर्जनविघ्नभूतसंध्याकालद्वेष्ट्र्येति यावत् ।
45026 तथाविधया दृष्ट्या बुद्ध्या कुद्दालकः खनित्रविशेष एव
45027 पोषकत्वात्तत्कालस्निग्धतां तत्कालोचितमित्रतां गतो दृष्टो नान्य इति
45028 द्वयोरन्वयेनार्थः ॥ २४ ॥
45029
45030 रौरवापतितेनेव तत्कालस्निग्धतां गतः ।
45031 विन्ध्यकन्दरगुल्मानां बन्धुत्वमिव गच्छता ॥ २५ ॥
45032

पुलिन्दवपुषा यत्र युक्तयोगैः समर्पिताः।
तर्पिता लगुडाघातजितकौलेयरंहसा [लगुडात्काल इति पाठः] ॥ २६
॥

यत्र यस्यां दुर्दशायां युक्तयोगैः परम्परासंबन्धैर्दैवेन समर्पिताः
पुत्रदारादयो लगुडाघातैर्यष्टिताडनैर्जितकौलेयरंहसा
निवारितशुनकोपद्रवेण मया कदन्नेन तर्पिताः ॥ २६ ॥

प्। ३८०) २२६

पुत्रदाराः कदन्नेन ग्रामकान्धोचितेन च।
धारासाररणात्पत्रशुष्कतालतले निशाः ॥ २७ ॥

ग्रामकः [ग्रामकाः कुग्रामाः इति पाठः] कुग्रामस्तत्र
येऽन्धास्तदुचितेन कोद्रवकणपिन्याआदिना ॥ २७ ॥

नीता रणितदन्तेन सार्धं विपिनवानरैः।
रोमभिः कोटिमुद्रोद्यैः शीतेनाध्युषितस्य मे ॥ २८ ॥

कोटिर्मुक्तावेधनसूच्यग्रं तस्य मुद्रां साम्यमुद्यन्ति ऊर्ध्वभागे
प्राप्नुवन्तीति कोटिमुद्रोद्यानि ॥ २८ ॥

वर्षासु मुक्ताकणवद्धृता वानलबिन्दवः।
अजाजीमूतखण्डार्थं क्षुत्क्षुण्णक्षीणकुक्षिणा ॥ २९ ॥

वनं जलं लाति आददातीति वनलो मेघस्तत्संबन्धिनो वानलाबिन्दवः।
जीमूतखण्डो मेघलेश इव तुच्छो मांसखण्डस्तदर्थम् ॥ २९ ॥

कलत्रेण सहाटव्यां कृतः कलह आकुलः।
वने रणितदन्तेन शीतकेकरचक्षुषा ॥ ३० ॥

मपीमलिनगात्रेण वेतालस्वजनायितम्।
सरित्तीरेषु मत्स्यार्थं भ्रान्तं वडिशधारिणा ॥ ३१ ॥

वेतालस्य स्वजनो बन्धुस्तद्वदाचरितं वेतालवत्स्थितमिति यावत् ॥ ३१ ॥

कल्पे जगत्सुनाशार्थं कृतान्तेनेव पाशिना।
पीतं बहुपवासेन सद्यःकृत्तमृगोरसः ॥ ३२ ॥

सद्यःकृत्तस्य शरच्छिन्नस्य मृगस्य उरसो वक्षसः ॥ ३२ ॥

तत्कालकोष्णं रुधिरं मातुः स्तनपयो यथा।
श्मशानसंस्थितान्मत्तो रक्तरक्तान्मलाशिनः ॥ ३३ ॥

कोष्णं कयोष्णम्। रक्तेन रुधिरेण रक्ताद्रञ्जितान् मत्तो मलाशिनः
अपवित्रश्मशानबलिमांसाद्यशनशीलात् ॥ ३३ ॥

विद्रुता वनवेतालाश्चण्डिकाभिद्रुता इव।
वागुरा विपिने व्युप्ता बन्धार्थं मृगपक्षिणाम् ॥ ३४ ॥

विद्रुताः भयात्पलायिताः। व्युप्ताः प्रसारिताः ॥ ३४ ॥

45085 आशा इव विवृद्ध्यर्थं पुत्रदारकलत्रजाः ।
45086 मया मायामयैर्लोकाः सूत्रजालमयैः स्रगाः ॥ ३५ ॥
45087
45088 जालैर्जर्जरतां नीता दिशश्चासुकृतायुषा ।
45089 तत्रापि दत्तः प्रसरो मनसो दुष्कृतोदये ॥ ३६ ॥
45090
45091 तत्र तादृशे पापकर्मण्यपि । मनसः प्रसरो दत्तः ॥ ३६ ॥
45092
45093 आशा प्रसारिता दूरं प्रावृषीव तरङ्गिणी ।
45094 करभ्या इव सर्पेण विद्रुतं दूरतो धिया ॥ ३७ ॥
45095
45096 करभ्या भ *? क्याः सकाशात्सर्पेणेव धिया सद्बुद्ध्या दूरतो गतम्
45097 । भावे क्तः । करभी हि सर्पं श्वासेन विलादाकृष्य भक्षयतीति प्रागुक्तमेव
45098 ॥ ३७ ॥
45099
45100 दूरे त्यक्ता दया देहे भुजङ्गेनेव कञ्चुकम् ।
45101 क्रौर्यं सुखेन संरम्भशरवर्षि निनादि च ॥ ३८ ॥
45102
45103 देहे परप्राणिदेहे । संरम्भेण शरान्बाणानुदकानि च वर्षितुं शीलमस्य ।
45104 निनादि निष्ठुरभाषि गर्जनशीलं चेति अम्बुदक्रौर्यसाधारणे विशेषणे ।
45105 एवमग्रेऽप्युपमानोपमेयसाधारणानि विशेषणानि बोध्यानि ॥ ३८ ॥
45106
45107 अङ्गीकृतं निदाघान्ते नभसेवासिताम्बुदः ।
45108 विकासिन्यो क्षताः क्षारा दूरं परिहृता जनैः ॥ ३९ ॥
45109
45110 क्षारा उग्रगन्धा दुःसहोश्च ॥ ३९ ॥
45111
45112 श्वभ्रेणेव कुमञ्जर्यश्चिरमूढा मयापदः ।
45113 स्वकालकुलकोणासु नरकोद्दामभूमिषु ॥ ४० ॥
45114
45115 स्वस्य एतावत्कालमिदं भोक्तव्यमिति नियतः काल एव कुलकोणाः
45116 क्षेत्रभेदविभाजकसेत्वस्रयो यासु ॥ ४० ॥
45117
45118 उप्ता दुष्कृतबीजानां मुष्टयो मोहवृष्टयः ।
45119 वागुराभिर्मया विन्ध्यकन्दरस्थेन निर्दयम् ॥ ४१ ॥
45120
45121 मोह एव वृष्टिरिव फलवर्धनो यासां ताः ॥ ४१ ॥
45122
45123 भूतेष्विव कृतान्तेन मृगेषु परिवल्गितम् ।
45124 चामरीकण्ठकुड्येषु विश्रान्तशिरसा मया ॥ ४२ ॥
45125
45126 सुप्तमस्तविवेकेन शेषाङ्गेष्विव शौरिणा ।
45127 विलोलचरणाम्बरया सरावोल्लासिधूम्रया ॥ ४३ ॥
45128
45129 विभिः पक्षिभिर्लोलानि चरणाः प्रत्यन्तपर्वता अम्बरमाकाशं च यस्याः ।
45130 सरावैः सध्वनिभिर्व्याघ्रादिभिरुल्लासि धूम्रं रूपं यस्यामिति च
45131 गुहापक्षेऽर्थः । तनुपक्षे स्पष्टम् ॥ ४३ ॥
45132
45133 मम तन्वा सनीहारविन्ध्यकच्छगुहायितम् ।
45134 कृष्णदेहेन यौकाढ्या कन्धा स्कन्धे मया चिरम् ॥ ४४ ॥
45135
45136 विन्ध्यस्य कच्छो जलप्रायदेशस्तत्रत्यगुहावदाचरितम् । उपमानादाचारे

क्यङि भावे क्तः। यूकानां समूहो यौकं तदाढ्या कन्था मया ग्रीष्मे
सोढा मर्षितेति संबन्धः॥ ४४॥

ग्रीष्मे सोढा चलद्भूता वराहेण यथोर्वरा।
बहुशोऽहं वनोत्थाग्निनिर्दग्धप्राणिमण्डलः॥ ४५॥

कल्पाग्निभुक्तजगतः कालस्यानुगतिं गतः।
लोभिलिङ्गो यथा रोगमनर्थानिव दुर्ग्रहः।
प्रसूतास्तत्र मे दारा दुःखान्यथ सुखान्यपि॥ ४६॥

लोभिलिङ्गो मैथुनव्यसनी यथा क्षयादिरोगं प्रसूते। यथा वा दुर्ग्रहो
दुराग्रहो दुष्टग्रहो वा वैरकलहाद्यनर्थान्प्रसूते तद्वन्मे दाता दुःखानि
सुखान्यपि अपत्यानि प्रसूताः॥ ४६॥

नृपालपुत्रकेनैकतनयेन तदा मया।
नीता नीरन्ध्रदोषेण षष्टिः कल्पसमाः समाः॥ ४७॥

उपसंहरति - नृपालेति। एकतनयेनेत्यत्यन्तानौचित्यसूचनार्थमुक्तम्॥ ४७
।।

आक्रुष्टमुद्धुरतरं रुदितं विपत्सु
भुक्तं कदन्नमुषितं हतपक्कणेषु।
कालान्तरं बहु मयोपहतेन तत्र
दुर्वासनानिगडबन्धगतेन सभ्याः॥ ४८॥

उक्तां सर्वां दुर्दशां संक्षिप्य वदन्नुपसंहरति - आक्रुष्टमिति। हे
सभ्याः क्रोधावेशेन आक्रुष्टं विपत्सु रुदितम्। भवदनुभूतकालापेक्षया
कालान्तरम्॥ ४८॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे
इन्द्रजालोपाख्याने आपद्वर्णनं नाम सप्तोत्तरशततमः सर्गः॥ १०७॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे आपद्वर्णनं
नाम सप्तोत्तरशततमः सर्गः॥ १०७॥

प्। ३८१) २२६

अष्टोत्तरशततमः सर्गः १०८

राजोवाच।

अथ गच्छति कालेऽत्र जराजर्जरितायुषि।
तुषारपूर्णशष्पौघसमश्मश्रुभृते मयि॥ १॥

इह तस्मिन्निवसतश्चिरं चण्डालपक्कणे।
अनावृष्ट्युत्थदुर्भिक्षाद्वर्ण्यते देशदुर्दशा॥ १॥

शष्पौघसमैः श्मश्रुभिर्भृते संभृतमुखे॥ १॥

कर्मवातापनुन्नेषु सरसेष्वरसेष्वपि।
पतत्सु वासरौघेषु शीर्णपर्णगणेष्विव॥ २॥

सरसेषु ससुखेषु। अरसेषु सदुःखेषु। वासरौघेषु पतत्सु गच्छत्सु ॥ २ ॥

आजाविव शरौघेषु सुखदुःखेष्वनारतम्।
कलहेष्वप्यकार्येषु चागच्छत्सु पतत्सु च ॥ ३ ॥

आजौ युद्धे। अकार्येषु कर्तुमयोग्येषु वधबन्धस्तेयादिषु ॥ ३ ॥

विकल्पकल्पनावर्तवर्तिनि द्विजगे जडे।
समुद्र इव कल्लोलभरे भ्रमितचेतसि ॥ ४ ॥

द्विजः पक्षीव गच्छति निरालम्बने भ्रमतीति द्विजगे ॥ ४ ॥

चलच्चिन्ताचितं चक्रमारूढे भ्रान्त आत्मनि।
प्रोह्यमाने तृण इव सावर्तं कालसागरे ॥ ५ ॥

विन्ध्योर्वीवनकीटस्य ग्रासैकशरणस्य मे।
द्विबाहोर्गर्दभस्यात्र क्षीण इत्थं समागणे ॥ ६ ॥

समागणे वर्षपूगे क्षीणे सति ॥ ६ ॥

विस्मृते मम भूपत्वे शवस्येव महाजवे।
चाण्डालत्वे स्थिरीभूते पक्षच्छिन्न इवाचले ॥ ७ ॥

शवस्य मृतस्येव ॥ ७ ॥

संसारमिव कल्पान्तो दावाग्निरिव काननम्।
सागरोर्मिस्तटमिव शुष्कवृक्षमिवाशनिः ॥ ८ ॥

अकाण्डे मरणोड्डीनं चण्डचण्डालमण्डलम्।
निरन्नतृणपत्राम्बु विन्ध्यकच्छं तदाययौ ॥ ९ ॥

घनव्राते न वर्षति सति अकाण्डे मरणेन उड्डीनं परलोकगमनं
यस्मिंस्तथाविधं दुर्भिक्षं कर्तृ। चण्डं चण्डालमण्डलं
यस्मिंस्तथाविधं विन्ध्यकच्छं निरन्नतृणपत्राम्बु यथा स्यात्तथा
आययौ प्राप। संसारमिवेत्यादिप्राक्तनानि क्रमात्कर्मकर्त्रोरुपमानानि
बोध्यानि। अथवा तच्चण्डचण्डालमण्डलं विन्ध्यकच्छस्थलाख्यं
देशान्तरं ययावित्यर्थः ॥ ९ ॥

न वर्षति घनव्राते दृष्टनष्टे क्वचित्स्थिते।
पूताङ्गारकणोन्मिश्रगतौ वहति मारुते ॥ १० ॥

पूतैर्वस्त्रशोधितैरिव सूक्ष्मतमैरङ्गारकणैरुन्मिश्रा गतिर्यस्य ॥ १० ॥

शीर्णमर्मरपर्णासु दावाग्निवलितासु च।
वनस्थलीषु शून्यासु चिरप्रव्रजितास्विव ॥ ११ ॥

चिरप्रव्रजितास्विवेति पिङ्गलजटिलत्वादिनोपमा ॥ ११ ॥

अकाण्डमभवद्भीममुद्दामदवपावकम्।
शोषिताशेषगहनं भस्मशेषतृणोलपम् [तृणोपलम् इति
पाठः] ॥ १२ ॥

अकाण्डमनवसरोत्थं दुर्भिक्षम् ॥ १२ ॥

पांसुधूसरसर्वाङ्गं क्षुधिताशेषमानवम् ।
निरन्नतृणपानीयं देशाद्युद्वावमण्डलम् ॥ १३ ॥

उद्वावं उत्कृष्टारण्यभूतं मण्डलं जनपदो यस्मिन् ॥ १३ ॥

कचन्मरुमरीच्यम्बुमज्जन्महिषमण्डलम् ।
वातोत्थसीकरव्यूहापरिवाहवनाम्बरम् ॥ १४ ॥

वातोत्थसीकरव्यूहमपि न परिवहतीत्यपरिवाहं वनाम्बरं यत्र ॥ १४ ॥

पानीयशब्दमात्रैकश्रवणोत्कनरव्रजम् ।
आतपाततिसंशोषसीदत्सकलमानवम् ॥ १५ ॥

आतपस्याततिर्विस्तारः ॥ १५ ॥

पत्रग्रसनसंरब्धक्षुधितोत्थितजीवितम् ।
स्वाङ्गचर्वणसंरम्भलुठद्दशनमण्डलम् ॥ १६ ॥

पत्रग्रसनोद्योगेन क्षुभितेभ्य उत्थितं प्रस्थितं जीवितं यत्र । स्वाङ्गचर्वणे
संरम्भेणाभिलाषेण लुठन्ति परस्परमुपघ्नन्ति दशनमण्डलानि यत्र ॥
१६ ॥

मांसशङ्कानिगीर्णोग्रखदिराग्निकणोत्करम् ।
मण्डकासारसंग्रस्तवनपाषाणखण्डकम् ॥ १७ ॥

मण्डकानि स्नेहपिष्टकास्तद्भ्रान्त्या असारा अपि संग्रस्ता
वनपाषाणखण्डका यत्र ॥ १७ ॥

अन्योन्यभूतसंसक्तमातृपुत्रपितृव्रजम् ।
गृध्रोदररटत्सारनिगीर्णवरसारिकम् ॥ १८ ॥

सारनिगीर्णा समग्रनिगीर्णा ॥ १८ ॥

परस्पराङ्गविच्छेदरक्तसिक्तधरातलम् ।
हरिग्रसनसंरब्धमत्तक्षुधितवारणम् ॥ १९ ॥

दरीनिगरणैकैकसिंहभ्रमणभीषणम् ।
अन्योन्यग्रसनोद्युक्तलोकमल्लकृतं वहत् ॥ २० ॥

दरीषु स्वस्य निगरणशङ्कया एकैकशः सिंहभ्रमणेन भीषणम् ।
अन्योन्यस्य ग्रसने हिंसने उद्युक्तैर्लोकैर्मल्लकृतं मल्लचरित्रम् ॥ २० ॥

निष्पत्रपादपोड्डीनप्रौढाङ्गारमयानिलम् ।
रक्तपानोत्कमार्जारलीढधातुतटावनि ॥ २१ ॥

ज्वालाघनघटाटोपसावर्तसवनानिलम् ।
सर्वस्थलरसद्वह्निपुञ्जपिञ्जरजङ्गलम् ॥ २२ ॥

दग्धाजगरकुञ्जोत्थधूममांसलगुल्मकम् ।

45293 मारुतावलितज्वालासंध्याभ्रवलिताम्बरम् ॥ २३ ॥
45294

45295 दग्धा अजगरा यत्र थाविधात्कुञ्ञादुत्थितेन धूमेन दोहदेनेव मांसलानि
45296 पुष्टानीव गुल्मकानि यत्र ॥ २३ ॥
45297

45298 उद्दामरवमुद्भ्रान्तभस्मनाऽस्तम्भमण्डलम् ।
45299 साक्रन्दनरदाराग्रदीनार्भककृतारवम् ॥ २४ ॥
45300

45301 अस्तम्भान्यदण्डानि च्छत्रमण्डलानि यत्र ॥ २४ ॥
45302

45303 संभ्रान्तपुरुषव्यूहदन्तकृत्तमहाशवम् ।
45304 मांसगन्धजवग्रस्तरक्तारक्तनिजाङ्गुलि ॥ २५ ॥
45305

45306 जवेन ग्रसनत्वरया ग्रस्ता रक्तैरारक्ता निजाङ्गुलिर्यत्र ॥ २५ ॥
45307

45308 प्। ३८२) २२७
45309

45310 नीलपत्रलताशङ्कापीतधूमघनच्छवि ।
45311 भ्रमद्गृध्रनिगीर्णोग्रनभोभ्रान्तोल्मुकाभिषम् ॥ २६ ॥
45312

45313 इतरेतरभिन्नाङ्गलोकविद्रवणाकुलम् ।
45314 ज्वलिताग्निटणत्कारविदीर्णहृदयोदरम् ॥ २७ ॥
45315

45316 गर्तमारुतक्राङ्कारभीमदावाग्निवल्गनम् ।
45317 भीताजगरफूत्कारपतदङ्गारपादपम् ॥ २८ ॥
45318

45319 गर्तं प्रविशतो मारुतस्य क्राङ्कारो ध्वनिरिव भीमं दावाग्निवल्गनं यत्र ।
45320 भीतानामजगराणां फूत्कारात्पतन्त उत्पतन्तोऽङ्गारा येषु तथाविधाः
45321 पादपा यत्र ॥ २८ ॥
45322

45323 सदकाण्डस्फुटद्देशं प्राप्य तच्छुष्ककोटरम् ।
45324 द्वादशार्काग्निदग्धस्य जगतोऽनुकृतिं ययौ ॥ २९ ॥
45325

45326 सत् प्राग्रमणीयमपि विन्ध्यकच्छस्थलं प्राप्य तत् तादृशं दुर्भिक्षं
45327 प्रागुक्तमकाण्डस्फुटद्देशं सत् । अनुकृतिं साम्यम् ॥ २९ ॥
45328

45329 ज्वलदनलजटालवृक्षखण्ड-
45330 प्रसरमरुत्प्रसरावनुन्नलोकः ।
45331 ज्वलनतपनभास्करात्मजानां
45332 रमणगृहानुकृतिं जगाम देशः ॥ ३० ॥
45333

45334 ज्वलदनलेन जटालेषु वृक्षखण्डेषु प्रसरो यस्य तथाविधस्य मरुतः
45335 प्रसरेण । अवनुन्नः पीडितो लोको जनो यत्र । ज्वलनतपनयोर्भास्करात्मजस्य
45336 शनैश्चरस्य च रमणं क्रीडास्थानभूतं यद्गृहं तस्यानुकृतिं
45337 साम्यम् ॥ ३० ॥
45338

45339 इत्यार्षे श्रीवासिष्ठमहारामायणे मोक्षोपाये उत्पत्तिप्रकरणे
45340 इन्द्रजालोपाख्याने अकाण्डवर्णनं नामाष्टोत्तरशततमः सर्गः ॥ १०८
45341 । ।
45342

45343 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
45344 अकाण्डवर्णनं नामाष्टोत्तरशततमः सर्गः ॥ १०८ ॥

45345
45346
45347 नवोत्तरशततमः सर्गः १०९
45348
45349 राजोवाच।
45350
45351 तस्मिंस्तदा वर्तमाने कष्टे विधिविपर्यये।
45352 अकालोल्बणकल्पान्ते नितान्तं तापदायिनि॥ १॥
45353
45354 निर्गतस्य सदारस्य दृष्ट्वा पुत्रापदं चिताम्।
45355 विविक्षोः प्रतिबुद्धस्य सभ्यसंवाद ईर्यते॥ १॥
45356
45357 विधिविपर्यये दैवप्रातिकूल्ये॥ १॥
45358
45359 जनाः केचन निष्क्रम्य सकलत्रसुहृज्जनाः।
45360 गता देशान्तरं व्योम्नः शरदीव पयोधराः॥ २॥
45361
45362 देहावयवसंलीनपुत्रदाराग्र्यबन्धवः।
45363 शीर्णाः केचन तत्रैव च्छिन्ना इव वने द्रुमाः॥ ३॥
45364
45365 देहावयवा इव संलग्नास्त्यक्तुमशक्या इति यावत्॥ ३॥
45366
45367 भक्ताः केचन च व्याघ्रैर्निर्गतास्तु स्वमन्दिरात्।
45368 अजातपक्षकाः श्येनैः खगा नीडोद्गता इव॥ ४॥
45369
45370 चकारो भिन्न क्रमोऽनुक्तसमुच्चयार्थः। व्याघ्रैरन्यैश्च श्वापदैरित्यर्थः
45371 ॥ ४॥
45372
45373 प्रविष्टाः केचिदनलं ज्वलितं शलभा इव।
45374 केचिच्छ्वभ्रेषु पतिताः शिला शैलच्युता इव॥ ५॥
45375
45376 अहं तु तान्परित्यज्य श्वशुरादीन्स्वकं क्षमम्।
45377 कलत्रमात्रमादाय कृच्छ्राद्देशाद्विनिर्गतः॥ ६॥
45378
45379 क्षमं स्वानुगमनसमर्थम्॥ ६॥
45380
45381 अनलाननिलांश्चैव भक्षकांस्तक्षकानपि।
45382 वञ्चयित्वा भयान्मृत्योः सदारोऽहं विनिर्गतः॥ ७॥
45383
45384 भक्षकान्व्याघ्रादीन्। तक्षकान् सर्पान्॥ ७॥
45385
45386 प्राप्य तद्देशपर्यन्तं तत्र तालतरोस्तले।
45387 अवरोप्य सुतान्स्कन्धान्नानानर्थानिवोल्बणान्॥ ८॥
45388
45389 तद्देशस्य पर्यन्तं प्रान्तम्॥ ८॥
45390
45391 विश्रान्तोऽस्मि चिरं श्रान्तो रौरवादिव निर्गतः।
45392 दीर्घदावनिदाघार्तो ग्रीष्मे पद्म इवाजलः॥ ९॥
45393
45394 अजलः पद्मः कमलिनीव शुष्यन्नित्यर्थः। अथवा अजलो मेकादिः पद्मे
45395 कमलिनीमूल इव विश्रान्तोऽस्मीत्यर्थः॥ ९॥
45396

45397 अथ चाण्डालकन्यायां विश्रान्तायां तरोस्तले |
45398 सुप्तायां शीतलच्छाये द्वौ समालिङ्ग्य दारकौ || १० ||
45399
45400 पृच्छको नाम तनयो ममैकः पुरतः स्थितः |
45401 अत्यन्तवल्लभोऽस्माकं कनीयान्मौग्ध्यवानिति || ११ ||
45402
45403 स मामुवाच दीनात्मा बाष्पपूर्णविलोचनः |
45404 तात देह्याशु मे मांसं पातुं च रुधिरं क्षणात् || १२ ||
45405
45406 पुनःपुनर्वदन्नेवं स बालस्तनयो मम |
45407 प्राणान्तिकीं दशां प्राप्तः साक्रन्दो हि पुनः क्षुधा || १३ ||
45408
45409 तस्योक्तं तु मया पुत्र मांसं नास्तीति भूरिशः |
45410 तथापि मांसं देहीति वदत्येव स [सुदुर्मतिः इति पाठः]
45411 दुर्मतिः || १४ ||
45412
45413 अथ वात्सल्यमूढेन [युक्तेन इति पाठः] मया दुःखातिभारिणा |
45414 तस्योक्तं पुत्र मन्मांसं पक्वं संभुज्यतामिति || १५ ||
45415
45416 तदप्यङ्गीकृतं तेन देहीति वदता पुनः |
45417 मन्मांसभक्षणं क्षीणवृत्तिनाऽश्लेषवृत्तिना || १६ ||
45418
45419 क्षीणवृत्तिना अलब्धभक्ष्येण | अत्यन्तक्षुधितेनेति यावत् | आश्लेषवृत्तिना
45420 आलिङ्गनपरेण || १६ ||
45421
45422 सर्वदुःखापनोदाय स्नेहकारुण्यमोहिना |
45423 तस्य तामार्तिमालोक्य मया दुःखातिभारिणा || १७ ||
45424
45425 स्नेहकारुण्यमोहशब्दानां द्वन्द्वे हनिः || १७ ||
45426
45427 सोढुं तामापदं तीव्रामशक्तेन हतात्मना |
45428 मरणायातिमित्राय कृतोऽन्तर्निश्चयो मया || १८ ||
45429
45430 अतिमित्राय तत्कालो चितबन्धवे || १८ ||
45431
45432 प्। ३८३) २२७
45433
45434 तत्र काष्ठानि संचित्य चितां रचितवानहम् |
45435 चिता चटचटास्फोटैः स्थिता मदभिकाङ्क्षिणी || १९ ||
45436
45437 मदभिकाङ्क्षिणीव || १९ ||
45438
45439 तस्यां तु यावदात्मानं चितायां निक्षिपाम्यहम् |
45440 चलितोऽस्मि जवात्तावदस्मात्सिंहासनान्नृपः || २० ||
45441
45442 चलनात्संभावितां पतनक्रियां तत्फलं विभागं च गम्यमानमपेक्ष्य
45443 सिंहासनादिति अपादाने पञ्चमी बोध्या || २० ||
45444
45445 ततस्तूर्यनिनादेन जयशब्देन बोधितः |
45446 इति शाम्बरिकेणायं मोह उत्पादितो मम || २१ ||
45447
45448 अज्ञानेनेव जीवस्य दशाशतसमन्वितः |

इत्युक्तवति राजेन्द्रे लवणे भूरितेजसि ॥ २२ ॥

अन्तर्धानं जगामाशु तत्र शाम्बरिकः क्षणात् ।
अथेदमूचुस्ते सभ्या विस्मयोत्फुल्ललोचनाः ॥ २३ ॥

नायं शाम्बरिको देव यस्य नास्ति धनैषणा ।
दैवी काचन मायेयं संसारस्थितिबोधिनी ॥ २४ ॥

दैवी त्वदनुग्रहाय देवैः प्रयुक्ता अत एव संसारस्येदृशी स्थितिरिति बोधिनी ॥
२४ ॥

मनोविलासः संसार इति यस्यां प्रतीयते ।
सर्वशक्तेरनन्तस्य विलासो हि मनोजगत् ॥ २५ ॥

अनन्तस्य विष्णोः । मन एव जगत् ॥ २५ ॥

सर्वशक्तेर्विचित्रा हि शक्तयः शतशो विधेः ।
यद्विवेकि मनोऽप्येष विमोहयति मायया ॥ २६ ॥

एषः विधिः ॥ २६ ॥

विज्ञातलोकवृत्तान्तः क्व नामायं महीपतिः ।
क्व सामान्यमनोवृत्तियोग्यो विपुलसंभ्रमः ॥ २७ ॥

सामान्यानां पृथग्जनानां मनोवृत्तेर्योग्यः ॥ २७ ॥

न च शाम्बरिकेच्छेयं माया मनसि मोहिनी ।
अर्थस्य सिद्ध्यै चेहन्ते नित्यं शाम्बरिकाः किल ॥ २८ ॥

अर्थस्य धनस्य सिद्ध्यै ईहन्ते प्रीतिहेतुकौतुकप्रदर्शनाय चेष्टन्ते
नत्वीदृशदुर्भ्रान्तये ॥ २८ ॥

यत्नेन प्रार्थयन्तेऽर्थं नान्तर्धानं व्रजन्ति भो ।
इति संदेहवेलायां संस्थिता लुलिता वयम् ॥ २९ ॥

इति उक्ताल्लिङ्गद्वयाद्वयं संदेहसागरस्य वेलायां कूलभूते निर्णये स्थिताः
॥ २९ ॥

श्रीवसिष्ठ उवाच ।

सभायामवसं तस्यामहं राम तदा किल ।
तेन प्रत्यक्षतो दृष्टं मयैतन्नान्यतः श्रुतम् ॥ ३० ॥

उक्तेयमाख्यायिका न बालकाख्यायिकावत्कल्पितकथा नाप्यन्यतः श्रुता किंतु
प्रत्यक्षदृष्टेत्याह - सभायामिति ॥ ३० ॥

इति बहुकलनाविवर्धिताङ्गं
जयति चिरं विततं मनो महात्मन् ।
शममुपगमिते परस्वभावे
परममुपैष्यसि पावनं पदं यत् ॥ ३१ ॥

उक्तामाख्यायिकां प्रस्तुते जगतो मनोमात्रविलासत्वे योजयंस्तत्फलमाह -

45501 इतीति। इति उक्तरीत्या बह्वीभिः कलनाभिर्विरचनैर्विवर्धिताङ्गं प्ररूढं चिरं
45502 विततं फलपल्लवशाखाभिर्विस्तीर्णं तरुशरीरमिव मनो जयति
45503 आत्मस्वरूपमभिभूय स्वयं सर्वोत्कर्षेण वर्तते।
45504 यन्मनोविचारज्ञानयोगेन [अत्र यस्मान्मनसि इति पाठोऽपेक्षितः]
45505 शमं निर्वासनतालक्षणं उपगमिते प्रापिते परस्वभावे सति त्वं
45506 भेदकोपाधिबाधात्परमं पावनं पूर्णात्मपदमुपैष्यसि अतस्तदर्थं
45507 वक्ष्यमाणोपायैर्यतस्वेत्यर्थः॥ ३१॥
45508
45509 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मो० दे० उ०
45510 इन्द्रजालोपाख्याने चण्डालत्वव्यपगमो नाम नवोत्तरशततमः सर्गः॥
45511 १०९॥
45512
45513 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
45514 चण्डालत्वव्यपगमो नाम नवोत्तरशततमः सर्गः॥ १०९॥
45515
45516
45517 दशोत्तरशततमः सर्गः ११०
45518
45519 श्रीवसिष्ठ उवाच।
45520
45521 परमात्कारणादादौ चिच्चेत्यपदपातिनी।
45522 कलनापदमासाद्य कला कलिलतां गता॥ १॥
45523
45524 मनःप्रशमनोपायो मनोवैभववर्णनैः।
45525 प्रक्रम्यतेऽत्र गदितुं रामाय ब्रह्मसूनुना॥ १॥
45526
45527 मनसो वासनामयत्वादात्यन्तिकज्ञेयवासनोच्छेद एव
45528 मनःप्रशमनोपायस्तस्मिंश्च शास्त्राचार्यस्वानुभवैर्दृश्यजातस्य
45529 मनोभ्रममात्रत्वनिश्चयपूर्वकः सप्तमभूमिकारोहणपर्यन्तं
45530 ज्ञानपरिपाचको मनोनिरोधप्रयत्न एवोपाय इति वक्तुं मूलतो मनस्स्वरूपं
45531 परिशोधयन्नाह - परमादिति। परमं कारणं चित्संवलितमज्ञानं
45532 तस्मादेव निमित्ताच्चिच्चेत्यपदपातिनी चेत्यगोचरा संपन्ना न वस्तुतः
45533 अविकारत्वात्। आदावित्यनेन प्राथमिकचेत्यपदपातस्याज्ञाननिमित्तत्वे
45534 तन्मूलद्वैतदर्शनानां सुतरां तन्निमित्तकत्वं सिद्धमिति सूच्यते।
45535 चेत्यपदपातादेव कलना अर्थप्रथेयमिति पदं नाम आसाद्य
45536 अर्थकलाभिर्नानारूपवैचित्र्यैः कलिलतां कलुषीभावं गता। स एव
45537 वासनाप्रथमाङ्कुर इति भावः॥ १॥
45538
45539 असत्स्वेव विमोहेषु रामैवंप्रायवृत्तिषु।
45540 घनेषु तुच्छतामेत्य चिराय परिमूर्च्छति॥ २॥
45541
45542 एवंप्राया ईदृश्यो वृत्तयः स्थितयो येषां तेषु विमोहेषु
45543 अर्थकलाभासभ्रमेषु क्राद्धनेषु उपचितेषु सैव चित्स्वां पूर्णतां
45544 विस्मृत्य तुच्छतां असन्मनोरूपतामेत्य चिराय अनादिकालादारभ्य मूर्च्छति
45545 जन्ममरणादिभ्रमैर्मुह्यति। तथाच चितश्चेत्योन्मुखतैवानर्थमनोबीजमिति
45546 सैव निरोद्धव्येति भावः॥ २॥
45547
45548 असदेव मनोवृत्तिर्म्लाना विस्तारयत्यलम्।
45549 दुःखं दोषसहस्रेण वेतालानिव बालिका॥ ३॥
45550
45551 एवं तुच्छवासनादोषसहस्रेण म्लाना मनोवृत्तिर्मनोभावेन स्थिता सा
45552 चिदसदेव दुःखं विस्तारयति॥ ३॥

प्। ३८४) २२८

सदेव हि महादुःखमसत्तां नयति क्षणात्।
निष्कलङ्का मनोवृत्तिरन्धकारमिवार्करुक्॥ ४॥

यथा सकलङ्काषन्मनोवृत्तिश्चिद्दुःखं विस्तारयति एवं वासनाक्षये
निर्वासनाकलङ्का स्वाभाविकसद्रूपैव सती महादुःखमसत्तां शून्यतां
नयति। बोधेन बाध्यत इत्यर्थः॥ ४॥

नयत्यभ्याशतां दूरं दूरमभ्याशतां नयेत्।
मनो वल्गति भूतेषु बालो बालखगेष्विव॥ ५॥

उक्तार्थसंभावनाय मनसोऽघटितघटनासमर्थ्यमाह - नयतीत्यादिना
। अभ्याशतां समीपताम्॥ ५॥

अभयं भयमज्ञस्य चेतसो वासनावतः।
दूरतो मुग्धपान्थस्य स्थाणुर्याति पिशाचताम्॥ ६॥

शत्रुत्वं शङ्कते मित्रे कलङ्कमलिनं मनः।
मदाविष्टमतिर्जन्तुर्भ्रमत्पश्यति भूतलम्॥ ७॥

पर्याकुले हि मनसि शशिनो जायतेऽशनिः।
अमृतं विषभावेन भुक्तं याति विषक्रियाम्॥ ८॥

सुरपत्तननिर्माणमसत्सदिव पश्यति।
वासनावलितं चेतः स्वप्नवज्जाग्रदेव हि॥ ९॥

सुरपत्तनं गन्धर्वनगरम्॥ ९॥

मोहैककारणं जन्तोर्मनसो वासनोल्बणा।
उत्खातव्या प्रयत्नेन मूलोच्छेदेन सैव च॥ १०॥

उत्खातव्या मूलत उच्छेत्तव्या॥ १०॥

वासनावागुराकृष्टो मनोहरिणको नृणाम्।
परां विवशतामेति संसारवनगुल्मके॥ ११॥

येन च्छिन्ना विचारेण जीवस्य ज्ञेयवासना।
निरभ्रस्येव सूर्यस्य तस्यालोको विराजते॥ १२॥

आलोकः प्रकाशः॥ १२॥

अतस्त्वं मन् एवेदं नरं विद्धि न देहकम्।
जडो देहो मनश्चात्र न जडं नाजडं विदुः॥ १३॥

तत्र प्रथमं मन एव मे देहो नान्य इति सदा भावनाभ्यासः कार्य इत्याह ##-

यत्कृतं मनसा तात तत्कृतं विद्धि राघव।
यत्त्यक्तं मनसा तावत्तत्त्यक्तं विद्धि चानघ॥ १४॥

मनोमात्रं जगत्कृत्स्नं मनः पर्यन्तमण्डलम्।

45605 मनो व्योम मनो भूमिर्मनो वायुर्मनो महान् ॥ १५ ॥
45606
45607 पर्यन्तो भूप्रान्तस्तन्मण्डलम् ॥ १५ ॥
45608
45609 मनो यदि पदार्थे तु तद्भावेन न योजयेत् ।
45610 ततः सूर्योदयेऽप्येते [सूर्यादयोऽप्येते इति पाठः] न प्रकाशाः
45611 कदाचन ॥ १६ ॥
45612
45613 तद्भावेन प्रकाशादिभावेन न योजयेत् न कल्पयेत् ।
45614 दिवान्धैर्वैपरीत्यदर्शनादिति भावः ॥ १६ ॥
45615
45616 मनो मोहमुपादत्ते यस्यासौ मूढ उच्यते ।
45617 शरीरे मोहमापन्ने न शवो मूढ उच्यते ॥ १७ ॥
45618
45619 मोहं अप्रबोधम् ॥ १७ ॥
45620
45621 मनः पश्य भवत्यक्षि शृण्वच्छ्रवणतां गतम् ।
45622 त्वग्भावं स्पर्शनादेति घ्राणतामेति जिघ्रणात् ॥ १८ ॥
45623
45624 रसनाद्रसतामेति विचित्रास्तत्र [विचित्रास्वत्र वृत्तिषु इति पाठः
45625 साधुः] वृत्तिषु ।
45626 नाटके नटवद्देहे मन एवानुवर्तते ॥ १९ ॥
45627
45628 लघु दीर्घं करोत्येव सत्येऽसत्तां प्रयच्छति ।
45629 कटुतां नयति स्वादु रिपुं नयति मित्रताम् ॥ २० ॥
45630
45631 स्वादु मधुरताम् ॥ २० ॥
45632
45633 य एव प्रतिभासोऽस्य चेतसो वृत्तिवर्तिनः ।
45634 ततस्तदेव प्रत्यक्षं तथात्रानुभवादिह ॥ २१ ॥
45635
45636 प्रतिभासवशादेव स्वप्नाकुलितचेतसः ।
45637 हरिश्चन्द्रस्य संपन्ना रात्रिर्द्वादशवार्षिकी ॥ २२ ॥
45638
45639 चित्तानुभाववशतो मुहूर्तत्वे गतं युगम् ।
45640 इन्द्रद्युम्नस्य वैरिञ्चिपुराभ्यन्तरवर्तिनः ॥ २३ ॥
45641
45642 अनुभावोऽत्रानुभवः प्रभावो वा । इन्द्रद्युम्नस्य रेवतापरनाम्नः ॥ २३ ॥
45643
45644 मनोज्ञया मनोवृत्त्या सुखतां याति रौरवम् ।
45645 प्रातःप्राप्तव्यराज्यस्य सुबद्धस्येव बन्धनम् ॥ २४ ॥
45646
45647 दुःखस्य सुखत्वापत्तिः क्व दृष्टा तत्राह - मनोज्ञयेति । मनोज्ञया
45648 हरिस्मरणादिरूपया । रौरवं नरकदुःखमपि । श्वः प्रातरवश्यं राज्यं
45649 प्राप्तव्यमिति प्रमाणैर्निश्चयवतः करपादनिगडादिना सुष्ठु बद्धस्य
45650 बन्धनमिवेत्यर्थः ॥ २४ ॥
45651
45652 जिते मनसि सर्वैव विजिता चेन्द्रियावलिः ।
45653 शीर्यते च यथा तन्तौ दग्धे मौक्तिकमालिका ॥ २५ ॥
45654
45655 सर्वत्र स्थितया स्वच्छरूपया निर्विकारया ।
45656 समया सूक्ष्मया नित्यं चिच्छक्त्या साक्षिभूतया ॥ २६ ॥

हे राम किमन्यन्मनसोऽर्थविपरीतकल्पनसामर्थ्यं वाच्यं यत्सर्वत्र समया
स्वच्छत्वनिर्विकारत्वादिस्वभावचिन्मात्ररूपया स्वसत्तया मूकं
वागादिसर्वक्रियाशून्यमपि ब्रह्मदेहतादात्म्यकल्पनया देहसमं जडं च
कृत्वा अन्तर्मननं एषणं कामः संकल्पः इत्यादिकया मुह्यया भ्रान्त्या
बहिस्तु गिरिसरिद्व्योमसमुद्रपुरलीलया प्रकल्प्य व्यर्थं भ्रमतीति
सर्वत्रेत्यादिश्लोकत्रयस्यैकोऽन्वयः ॥ २६ ॥

सर्वभावानुगतया न चेत्यार्थविभिन्नया ।
रामात्मसत्तया मूकमपि देहसमं जडम् ॥ २७ ॥

मनोऽन्तश्चलति व्यर्थं मननैषणमुह्यया ।
बहिर्गिरिसरिद्व्योमसमुद्रपुरलीलया ॥ २८ ॥

जाग्रच्चाभिमतं वस्तु नयत्यमृतमृष्टताम् ।
अनीहितं च विषतां नयत्यमृतमप्यलम् ॥ २९ ॥

ननु मूढं मनोऽन्यथा कल्पयितुं विचारजागरूकं तु नान्यथा कल्पयिष्यतीति
किं तन्नाशोपायचिन्तया तत्राह - जाग्रच्चेति । विवेकजागरूकमपि
मनोऽस्वादूच्छिष्टमपि योषिदधरादिवस्त्वभिमतं
रागवशादिष्टममृतमिव मृष्टतां स्वादुतां नयति ।
अनीहितमनभिलषितं त्वमृतमपि विषतां विषवद्धेयतां नयति ।
विरक्तानाममृतेऽपि हेयताबुद्धिदर्शनादित्यर्थः ॥ २९ ॥

अमृष्टसर्वभावानामलमात्मचमत्कृतिम् ।

तर्हि तत्त्वज्ञानपि तत्कुतो न भ्रमयेत्तत्राह - अमृष्टेति । न मृष्टः
साक्षात्कृतः सर्वभावः पूर्णता यैस्तेषामेव मनः
स्वाभिमताकारमात्मचमत्कारभूतं रूपं सृजति नतु तत्त्वविदाम् । तेषां
मिथ्याबुद्धिबाधितमनोविलासेषु चमत्कारदृष्ट्यभावादित्याशयः ॥ ३० ॥

प्। ३८५) २२८

स्पन्देषु वायुतामेति प्रकाशेषु प्रकाशताम् ।
द्रवेषु द्रवतामेति चिच्छक्तिस्फुरितं मनः ॥ ३१ ॥

रूपसर्गमेव प्रपञ्चयति - स्पन्देष्वित्यादिना ॥ ३१ ॥

पृथ्व्यां कठिनतामेति शून्यतां शून्यदृष्टिषु ।
सर्वत्रेच्छास्थितिं याति चिच्छक्तिस्फुरितं मनः ॥ ३२ ॥

शून्यतामभावताम् । शून्यदृष्टिषु नास्तीति गृह्यमाणवस्तुषु ।
इच्छास्थितिं अप्रतिहतस्वैरवृत्तिम् ॥ ३२ ॥

शुक्लं कृष्णीकरोत्येव कृष्णं नयति शुक्लताम् ।
विनैव देशकालाभ्यां शक्तिं पश्यास्य चेतसः ॥ ३३ ॥

मनस्यन्यत्र संसक्ते चर्वितस्यापि जिह्वया ।
भोजनस्यापि मृष्टस्य न स्वादोऽस्यानुभूयते ॥ ३४ ॥

यच्चित्तदृष्टं तद्दृष्टं न दृष्टं तदलोकितम् ।
अन्धकारे यथा रूपमिन्द्रियं निर्मितं तथा ॥ ३५ ॥

45709

45710 तेन चित्तेनालोकितमदृष्टं पुरःस्थमपि न दृष्टम् | तथाच

45711 चक्षुरादीन्द्रियमपि तेनैव स्वात्मनि कल्पितमित्याह - अन्धकारे इति |

45712 यथान्धकारे नैल्यं छायावैचित्र्यरूपं वा निर्मितं तद्वत् || ३५ ||

45713

45714 इन्द्रियेण मनो देहि मनसेन्द्रियमुन्मनः |

45715 इन्द्रियाणि प्रसूतानि मनसो नेन्द्रियान्मनः || ३६ ||

45716

45717 यद्यपीन्द्रियालोचिताकारधारणान्मन इन्द्रियेण निमित्तेन देहि साकारम् | इन्द्रियं

45718 च मनोधीनार्थालोचकत्वान्मनसा देहीति साम्यं तथापि मन उत् उत्कृष्टम् |

45719 तत्कुतस्तत्राह - इन्द्रियाणीति || ३६ ||

45720

45721 अत्यन्तभिन्नयोरैक्यं येषां चित्तशरीरयोः |

45722 ज्ञातज्ञेया महात्मानो मनस्यास्ते सुपण्डिताः || ३७ ||

45723

45724 तच्चेदं मनो मूढैरात्मकोटौ निक्षिप्याहमित्यात्मतया गृह्यते |

45725 तत्त्वज्ञैस्तु देहकोटौ निक्षिप्य जडदेहात्मना गृह्यते | अत एव ते

45726 निर्विकारात्मदर्शिनो वन्द्या इत्याह - अत्यन्तेति | मूढदृष्ट्या

45727 अत्यन्तभिन्नयोः || ३७ ||

45728

45729 कुसुमोल्लासिधम्मिल्ला हेलाचलितलोचना |

45730 काष्ठकुड्योपमाङ्गेषु लग्नाप्यमनसोऽङ्गना || ३८ ||

45731

45732 अत एव तेषां कामादिविकारो न दृश्यत इत्याह - कुसुमेति | अमनसो देहे

45733 लग्नाप्यङ्गना काष्ठकुड्योपमा | विकारं जनयितुमक्षमेत्यर्थः || ३८ ||

45734

45735 मनस्यन्यत्र संसक्ते वीतरागेण कानने |

45736 क्रव्यादचर्वितोऽङ्कस्थः स्वकरोऽपि न लक्षितः || ३९ ||

45737

45738 एवं दुःखनिमित्तैर्दुःखात्मकविकारोऽपि तेषां नास्तीत्याह - मनसीति |

45739 वीतरागेण तदाख्यमुनिना | अङ्कस्थो ध्यानकालेऽङ्के प्रसारितः || ३९ ||

45740

45741 सुखीकर्तुं सुदुःखानि दुःखीकर्तुं सुखानि च |

45742 सुखेनैवाशु युज्यन्ते मनसोऽतिशया मुनेः || ४० ||

45743

45744 मुनेर्मनसः अभ्यासपाटवकृता भावनातिशयाः सुखेनानायासेनैव

45745 युज्यन्ते क्षमन्ते || ४० ||

45746

45747 मनस्यन्यत्र संसक्ते कथ्यमानापि यत्नतः |

45748 लता परशुकृत्तेव कथा विच्छिद्यते बत || ४१ ||

45749

45750 मनस्यद्रितटारूढे गृहस्थेनापि जन्तुना |

45751 शुभ्राभ्रकन्दरभ्रान्तिदुःखं समनुभूयते || ४२ ||

45752

45753 समनुभूयते | स्वप्ने इति शेषः || ४२ ||

45754

45755 मनस्युल्लसिते स्वप्ने हृद्येव पुरपर्वताः |

45756 आकाश इव विस्तीर्णे दृश्यन्ते निर्मिताः क्षमाः || ४३ ||

45757

45758 हृद्येव निर्मिता अन्तःकृताः स्वस्वकार्यक्षमाश्च दृश्यन्ते || ४३ ||

45759

45760 मनो विलुलिते स्वप्ने हृद्येवाद्रिपुरावलिम् |

तनोति चलिताम्भोधिर्वीचीचयमिवात्मनि ॥ ४४ ॥

मनः विलुलिते स्वेन विक्षिप्ते आत्मनि । तनोति विस्तारयति ॥ ४४ ॥

अन्तरब्धिजलाद्यद्वत्तरङ्गापीडवीचयः ।
देहान्तर्मनसस्तद्वत्स्वप्नाद्रिपुरराजयः ॥ ४५ ॥

अङ्कुरस्य यथा पत्रलतापुष्पफलश्रियः ।
मनसोऽस्य तथा जाग्रत्स्वप्नविभ्रमभूमयः ॥ ४६ ॥

व्यतिरिक्ता यथा हेम्नो न हेमवनिता तथा ।
जाग्रत्स्वप्नक्रियालक्ष्मीर्व्यतिरिक्ता न चेतसः ॥ ४७ ॥

हेमवनिता स्वर्णप्रतिमा ॥ ४७ ॥

धाराकणोर्मिफेनश्रीर्यथा संलक्ष्यतेऽम्भसः ।
तथा विचित्रविभवा नानातेयं हि चेतसः ॥ ४८ ॥

नानाता नानावैचित्र्यम् ॥ ४८ ॥

स्वचित्तवृत्तिरेवेह जाग्रत्स्वप्नदृशोदितम् ।
रसावेशादुपादत्ते शैलूष इव भूमिकाम् ॥ ४९ ॥

उदितमुदयमाविर्भावमादत्ते । रसो रागः शृङ्गारादिश्च तदावेशात् ।
शैलूषो नटः । भूमिकां वेषवैचित्र्यम् ॥ ४९ ॥

चण्डालत्वं हि लवणे प्रतिभासवशाद्यथा ।
तथेदं जगदाभोगि मनो मननमात्रकम् ॥ ५० ॥

यद्यत्संवेद्यते किंचित्तेन तेनाशु भूयते ।
मनो मनननिर्माणं यथेच्छसि तथा कुरु ॥ ५१ ॥

नानापुरसरिच्छैलरूपतामेत्य देहिनाम् ।
तनोत्यन्तःस्थमेवेदं जाग्रत्स्वप्नमयं मनः ॥ ५२ ॥

सुरत्वाद्दैत्यतामेत्य नागत्वान्नगतामपि ।
प्रतिभासवशाच्चित्तमापन्नं लवणो यथा ॥ ५३ ॥

नागत्वाद्गजत्वात्सर्पत्वाद्वा । नगतां वृक्षतां गिरितां वा ॥ ५३ ॥

नरत्वादेति नारीत्वं पितृत्वात्पुत्रतां गतः ।
यथा क्षिप्रं प्रति नरः स्वसंकल्पात्तथा मनः ॥ ५४ ॥

यथा पितृत्वात्पुत्रतां गतः पुमान् नरत्वान्नारीत्वमेति तद्वत् ॥ ५४ ॥

संकल्पतः प्रम्रियते संकल्पाज्जायते पुनः ।
मनश्चिरन्तनाभ्यस्ताज्जीवतामेत्यनाकृति ॥ ५५ ॥

अनाकृति स्वत आकारशून्यमपि जीवतां जीवाकारमेति ॥ ५५ ॥

मनो मननसंमूढमूढवासनमाततम् ।
संकल्पाद्योनिमायाति सुखदुःखे भयाभये ॥ ५६ ॥

मननेन सम्यङ्मूढा मोहातिशयं प्राप्ता मूढवासना यस्मिंस्तत् ।
ऊढवासनमिति वा छेदः । योनिं जन्मस्थानम् ।
मनोऽकृतेनायात्यस्मिञ्शरीरे इति हि श्रुतिः ॥ ५६ ॥

सुखं दुःखं च मनसि तिले तैलमिव स्थितम् ।
तद्देशकालवशतो घनं वा तनु वा भवेत् ॥ ५७ ॥

तैलं तिलस्य चाक्रान्त्या स्फुटतामेति शाश्वतीम् ।
चेतसो मननासङ्गाद्घनीभूते सुखासुखे ॥ ५८ ॥

आक्रान्त्या यन्त्रनिषीडनेन । चेतसोऽन्तर्घनीभूते सुखासुखे मननासङ्गात्
स्फुरतां इतो गच्छत इति वचनविपरिणामेनानुषङ्गः ॥ ५८ ॥

देशकालाभिधानेन राम संकल्प एव हि ।
कथ्यते तद्वशाद्यस्माद्देशकालौ स्थितिं गतौ ॥ ५९ ॥

ननु देशकालकर्मविषयवैचित्र्यादेव सुखदुःखादिवैचित्र्यं प्रसिद्धं
तत्कथं मननासङ्गादित्युच्यते तत्राह - देशेति । अल्पयोरपि
देशकालयोर्मनसा वैपुल्यसंकल्पने वैपुल्यानुभवात्तुच्छेऽपि विषये मनसा
बहुमते रागातिशयदर्शनाच्चेति भावः ॥ ५९ ॥

प्रशाम्यत्युल्लसत्येति याति नन्दति वल्गति ।
मनःशरीरसंकल्पे फलिते न शरीरकम् ॥ ६० ॥

एवं शरीरमपि मनःसंकल्पाधीनमेवेत्याह - प्रशाम्यतीति ।
मनःशरीरस्य संकल्पे फलिते सति स्थूलं शरीरकं
प्रशान्त्यादिविकारभाग्भवति न स्वातन्त्र्येणेति शेषः ॥ ६० ॥

नानास्फारसमुल्लासैः स्वसंकल्पोपकल्पितैः ।
मनो वल्गति देहेऽस्मिन्साध्वीवान्तःपुराजिरे ॥ ६१ ॥

चापले प्रसरस्तस्मादन्तर्येन नदीयते ।
मनोविलयमादत्ते तस्यालान इव द्विपः ॥ ६२ ॥

मनसो निग्रहोपायं सफलं दर्शय्ति - चापले इति । विषयनुसंधानं
चापलम् ॥ ६२ ॥

न स्पन्दते मनो यस्य शस्त्रस्तम्भ इवोत्तमः ।
सद्वस्तुतोऽसौ पुरुषः शिष्टाः कर्दमकीटकाः ॥ ६३ ॥

शस्त्रं स्तम्भनास्त्रं तत्कृते स्तम्भे यथा शत्रुर्न स्पन्दते तद्वत् । असावेव
सद्वस्तुतः परमार्थतः पुरुषः ॥ ६३ ॥

यस्याचपलतां यातं मन एकत्र संस्थितम् ।
अनुत्तमपदेनासौ ध्यानेनानुगतोऽनघ ॥ ६४ ॥

ध्यानेन हेतुना असौ अनुत्तमपदेन अनुगतः संगतः । ब्रह्मीभूत एवेत्यर्थः
॥ ६४ ॥

45865 संयमान्मनसः शान्तिमेति संसारविभ्रमः ।
45866 मन्दरेऽस्पन्दतां याते यथा क्षीरमहार्णवः ॥ ६५ ॥
45867
45868 अस्पन्दतामिति च्छेदः ॥ ६५ ॥
45869
45870 मानस्यो वृत्तयो या या भोगसंकल्पविभ्रमैः ।
45871 संसारविषवृक्षस्य ता एवाङ्कुरयोनयः ॥ ६६ ॥
45872
45873 चित्तं चलत्कुवलयं वलयन्त एते
45874 मूढा महाजडजवे मदमोहमन्दाः ।
45875 आवर्तवर्तिनि विलूनविशीर्णचिन्ता-
45876 चक्रभ्रमे पुरुषदुर्भ्रमराः पतन्ति ॥ ६७ ॥
45877
45878 मदमोहमन्दा एते पुरुषदुर्भ्रमराश्चित्तरूपं चलत्कुवलयं
45879 संसारदुर्नदीप्रवाह्यमानोत्पलं वलयन्तः संवेष्ट्य भ्रमन्तः सन्तो
45880 महाजडजवे लडयोरभेदान्महाजाड्यप्रवाहरूपजलवेगे वाल्यावर्तवद्वर्तिनि
45881 परिवर्तमाने प्रबलचिन्तान्तरेण विलूना चिरं नैष्फल्याद्देहेन सह विशीर्णा च
45882 या चिन्ता तल्लक्षणे चक्रभ्रमे चक्रसदृशे आवर्ते पतन्तीत्यर्थः ॥ ६७ ॥
45883
45884 इत्यार्षे श्रीवासिष्ठमहारामायणे मोक्षोपायेषूत्पत्तिप्रकरणे
45885 चित्तचिकित्सापूर्वकं चित्तवर्णनं नाम दशोत्तरशततमः सर्गः ॥ ११० ॥
45886
45887 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
45888 चित्तचिकित्सापूर्वकं चित्तवर्णनं नाम दशोत्तरशततमः सर्गः ॥ ११० ॥
45889
45890
45891 एकादशोत्तरशततमः सर्गः १११
45892
45893 श्रीवसिष्ठ उवाच ।
45894
45895 अस्य चित्तमहाव्याधेश्चिकित्साया महौषधम् ।
45896 स्वायत्तं शृणु वक्ष्यामि साधु सुस्वादु निश्चितम् ॥ १ ॥
45897
45898 यत्नादभिमतत्यागस्त्यागोऽहंताममत्वयोः ।
45899 अत्र चित्तजयोपायश्चिदैकाग्र्यं च वर्ण्यते ॥ १ ॥
45900
45901 स्वायत्तं स्वाधीनम् । अवश्यं साधयति पुरुषार्थमिति साधु ॥ १ ॥
45902
45903 स्वेनैव पौरुषेणाशु स्वसंवेदनरूपिणा ।
45904 यत्नेन चित्तवेतालस्त्यक्त्वेष्टं वस्तु जीयते ॥ २ ॥
45905
45906 इष्टं रागविषयं बाह्यविषयं त्यक्त्वा संवेदनं
45907 स्वात्ममात्राकारवृत्तिधारा तद्रूपिणा पौरुषेण यत्नेन जीयते ॥ २ ॥
45908
45909 त्यजन्नभिमतं वस्तु यस्तिष्ठति निरामयः ।
45910 जितमेव मनस्तेन कुदन्त इव दन्तिना ॥ ३ ॥
45911
45912 तत्रेष्टत्यागः प्रथमपीठिका दृढीकार्येत्याशयेनाह - त्यजन्निति ।
45913 अभिमतं इष्टम् । निरामयो रागादिचित्तरोगशून्यः ॥ ३ ॥
45914
45915 स्वसंवेदनयत्नेन पाल्यते चित्तबालकः ।
45916 अवस्तुतो वस्तुनि च योज्यते बोध्यतेऽपि च ॥ ४ ॥

पाल्यते रागचापलादिरोगचिकित्सया रक्ष्यते। अवस्तुतः प्रत्याहृत्येति शेषः॥ ४॥

शास्त्रसत्सङ्गधीरेण चिन्तातप्तमतापिना।
छिन्धि त्वमायसेनायो मनसैव मनो मुने॥ ५॥

चिन्तालक्षणे वह्नावातप्तं मनोरूपं अयः। अतप्तेन शान्ततापेन
मनसैवायसा साधनेन च्छिन्धि॥ ५॥

अयत्नेन यथा बाल इतश्चेतश्च योज्यते।
भावैस्तथैव चेतोन्तः किमिवात्रास्ति दुष्करम्॥ ६॥

भावैर्लालनभीषणाद्युपायैः॥ ६॥

सत्कर्मणि समाक्रान्तमुदर्कोदयदायिनि।
स्वपौरुषेणैव मनश्चेतनेन नियोजयेत्॥ ७॥

सत्कर्मणि समाध्यभ्यासलक्षणे समाक्रान्तमुपक्रान्तम्। चेतनेन चिदात्मना
नियोजयेदेकीकुर्यात्॥ ७॥

प। ३८७) २२९

स्वायत्तमेकान्तहितं स्वेप्सितत्यागवेदनम्।
यस्य दुष्करतां यातं धिक्तं पुरुषकीटकम्॥ ८॥

अविरक्तान्निन्दति - स्वायत्तमिति। स्वेप्सितस्य त्यागस्तद्विषयं वेदनं
वैराग्यवृत्तिः॥ ८॥

अरम्यं रम्यरूपेण भावयित्वा स्वसंविदा।
मल्लेनेव शिशुश्चित्तमयत्नेनैव जीयते॥ ९॥

अरम्यं विषयजातं परमार्थरम्यब्रह्मरूपेण भावयित्वा॥ ९॥

पौरुषेण प्रयत्नेन चित्तमाश्वेव जीयते।
अचित्तेनाप्रयत्नेन पदं ब्रह्मणि दीयते॥ १०॥

ब्रह्मणि पदमङ्घ्रिर्दीयते। ब्रह्म प्राप्यत इति यावत्॥ १०॥

स्वायत्तं च सुसाध्यं च स्वचित्ताक्रान्तिमात्रकम्।
शक्नुवन्ति न ये कर्तुं धिक्तान्पुरुषजम्बुकान्॥ ११॥

स्वचित्तस्य आक्रान्तिर्निग्रहस्तावन्मात्रम्॥ ११॥

स्वपौरुषैकसाध्येन स्वेप्सितत्यागरूपिणा।
मनःप्रशममात्रेण विना नास्ति शुभा गतिः॥ १२॥

मनोमारणमात्रेण साध्येन स्वात्मसंविदा।
निःसपत्नमनाद्यन्तमनिङ्गनमिहोच्यताम्॥ १३॥

स्वात्मसंविदा स्वात्मतत्त्वसाक्षात्कारेण निःसपत्नं
स्वसाम्राज्यसुखविरोधिमोहादिशत्रुरहितमत एवानिङ्गनमचलमनाद्यन्तं
स्वाराज्यसुखमिहास्मिन्नेव जीवन्मुक्तदेहे उच्यताम्। निःशङ्कं

45969 प्रतिज्ञायतामित्यर्थः ॥ १३ ॥
45970
45971 ईप्सितावेदनाख्यात्तु मनःप्रशमनादृते ।
45972 गुरूपदेशशास्त्रार्थमन्त्राद्या युक्तयस्तृणम् ॥ १४ ॥
45973
45974 ईप्सितस्य बाह्यविषयस्यावेदनमनवभासः । ईप्सितस्य मोक्षसुखस्य आवेदनं
45975 निवेदनसाधनं तदाख्याद्वा । युक्तयः साधनानि । नात्र
45976 गुरूपदेशनिन्दायां तात्पर्यं किंतु मनःप्रशमनस्तुतौ ॥ १४ ॥
45977
45978 सर्वं सर्वगतं शान्तं ब्रह्म संपद्यते तदा ।
45979 असंकल्पनशस्त्रेण च्छिन्नं चित्तं गतं यदा ॥ १५ ॥
45980
45981 गतं सहमूलेनोच्छिन्नं यदेत्यर्थः ॥ १५ ॥
45982
45983 स्वसंवेदनसाध्येऽस्मिन्संकल्पानर्थशासने ।
45984 शान्तायामत्र वपुषि पुंसः कैव कदर्थना ॥ १६ ॥
45985
45986 संकल्परूपस्य अनर्थस्य शासने निग्रहे शान्तायां
45987 शान्त्यादिसाधनसंपन्नायां जीवन्मुक्तौ । अत्र वपुषि अधिकारिशरीरे ।
45988 कदर्थना क्लेशः ॥ १६ ॥
45989
45990 नूनं दैवमनादृत्य मूढसंकल्पकल्पितम् ।
45991 पुरुषार्थेन संवित्त्या नय चित्तमचित्तताम् ॥ १७ ॥
45992
45993 ननु दैवप्रातिकूल्ये कथं कार्यसिद्धिस्तत्राह - नूनमिति ॥ १७ ॥
45994
45995 तां महापदवीमेकां [एतां इति पाठः] कामप्यधिगतं चिरम् ।
45996 चित्तं चिद्भक्षितं कृत्वा चित्तादपि परो भव ॥ १८ ॥
45997
45998 अचित्ततानयने क उपायस्तमाह - तामिति । चित्तं चिरं तां महापदवीं
45999 ब्रह्मरूपतामधिगतं प्राप्तं कृत्वान्ते साक्षात्कारवृत्त्याविर्भूतचित्ता
46000 समनस्काविद्याबाधाच्चिद्भक्षितं कृत्वा चित्तादपि परः पूर्णचिन्मात्ररूपो
46001 भवेत्यर्थः ॥ १८ ॥
46002
46003 भव भावनया युक्तो युक्तः परमया धिया ।
46004 धारयात्मानमव्यग्रो ग्रस्तचित्तं ततः परम् ॥ १९ ॥
46005
46006 तत्र प्रथमं चिन्मात्रभावनया युक्तो भव तत्स्थैर्यार्थं परमया
46007 अतिसावधानया धिया बुद्ध्या युक्तो भव । ततो ग्रस्तचित्तं ततश्चित्तात्परं
46008 आत्मानं धारय स्थापय नान्यदित्यर्थः ॥ १९ ॥
46009
46010 परं पौरुषमाश्रित्य नीत्वा चित्तमचित्तताम् ।
46011 तां महापदवीमेहि यत्र नाशो न विद्यते ॥ २० ॥
46012
46013 संवेदनविपर्यासरूपिणी धीरिवाचला ।
46014 जेतुमाशु मनो राम पौरुषेणैव शक्यते ॥ २१ ॥
46015
46016 यथा दिङ्मोहे अचला स्थिरापि प्रतीच्यां प्राचीति
46017 संवेदनविपर्यासधीर्विवेकस्थैर्यलक्षणेन पुरुषप्रयत्नेन जेतुं शक्यते
46018 तद्वन्मनोऽपीत्यर्थः ॥ २१ ॥
46019
46020 अनुद्वेगः श्रियो मूलमनुद्वेगात्प्रवर्तते ।

46021 जन्तोर्मनोजयो येन त्रिलोकीविजयस्तृणम् ॥ २२ ॥
46022
46023 चिरं मनोनिग्रहे प्रवृत्तस्योद्वेगात्तत्परित्यागो मा भूदिति तदुत्साहं
46024 वर्धयन्नाह - अनुद्वेग इति। श्रियो राज्यादिसंपदो मूलम्।
46025 दृष्टान्तार्थमिदम्। मनोजयः प्रवर्तते सिद्ध्यतीति यावत् ॥ २२ ॥
46026
46027 न शस्त्रदलनोत्पातपाता यस्यां मनागपि।
46028 स्वभावमात्रव्यावृत्तौ तस्यां कैव कदर्थना ॥ २३ ॥
46029
46030 श्रीसुखे युद्ध शस्त्रदलनकदर्थना स्वर्गसुखे उत्पातो मृत्वा
46031 ऊर्ध्वगमनं ततः पात इति कदर्थना मनोजयसुखे तु न कापीत्याह - न
46032 शस्त्रेति ॥ २३ ॥
46033
46034 अपि स्ववेदनाक्रान्तौ न शक्ता ये नराधमाः।
46035 कथं व्यवहरिष्यन्ति व्यवहारदशासु ते ॥ २४ ॥
46036
46037 स्वस्य वेदनं मनः। करणे ल्युट्। तस्याक्रान्तौ निग्रहे ॥ २४ ॥
46038
46039 पुमान्मृतोऽस्मि जातोऽस्मि जीवामीति कुदृष्टयः।
46040 चेतसो वृत्तयो भान्ति चपलस्यासदुत्थिताः ॥ २५ ॥
46041
46042 समाधिसुप्त्यादौ जन्ममरणादिदुःखानामननुभवाद्व्यवहारकाले
46043 मनोवृत्तिपूर्वकमेव तदनुभवाच्च मनोवृत्तिमात्रत्वं संसारस्येति
46044 दर्शयति - पुमानित्यादिना। असत्य एवोत्थिताः। कर्मधारयत्वात्पूर्वपदं
46045 पुंवत् ॥ २५ ॥
46046
46047 न कश्चनेह म्रियते जायते न च कश्चन।
46048 स्वयं वेत्ति मृतं स्वस्य लोकमन्यं स्वकं मनः ॥ २६ ॥
46049
46050 असत्त्वमेव दर्शयति - न कश्चनेति ॥ २६ ॥
46051
46052 इतो याति परं लोकं स्फुरत्यन्यतया मनः।
46053 तत्तस्यैत्येतदामोक्षमतो मृतिभयं कुतः ॥ २७ ॥
46054
46055 इहलोकेन विचरत्विहलोके परत्र च।
46056 चित्तमामोक्षमास्तेऽस्य रूपमन्यन्न विद्यते ॥ २८ ॥
46057
46058 इहलोके इहलोकेन इहलोकात्मना विचरतु भ्राम्यतु परत्र परलोके च
46059 परलोकभावेनेति शेषः। तथापि चित्तमेव तथा तथा आस्ते। अस्य संसारस्य
46060 चित्तादन्यद्रूपं न विद्यत इत्यर्थः ॥ २८ ॥
46061
46062 मृते भ्रातरि भृत्यादौ क्लेश आक्रियतेऽनृतः।
46063 तत्स्वचित्तं स्वचैतन्यव्यावृत्तात्मेति मे मतिः ॥ २९ ॥
46064
46065 एवं च शोकादयोऽप्यात्मचैतन्यव्यावृत्तचित्तमात्रधर्मा इत्याह - मृते
46066 इति। क्लेशः शोकः। निर्विकारस्वचैतन्याद्व्यावृत्तात्म विभक्तं
46067 स्वविकाररूपं स्वचित्तमेवेत्यर्थः ॥ २९ ॥
46068
46069 प। ३८८) २३०
46070
46071 सति पथ्ये तते शुभ्रे चित्तोपशमनाद्दते।
46072 तिर्यगूर्ध्वमधस्ताच्च भूयोभूयो विचारितम् ॥ ३० ॥

अतः परमात्मनि समूलचित्तनाश एव मुक्त्युपायो नान्य इति
परिशेषयन्नुपसंहरति - सतीत्यादिना | सति अन्यनिरपेक्षसत्ताके पथ्ये
सर्वहिते | शुभ्रे मायामालिन्यरहिते | ऋते प्रमाणमूर्धन्यश्रुतिबोधिते
परमात्मनि चितो भावश्चित्ता तया
उपशमनात्तद्भावमात्रपरिशेषलक्षणाच्चित्तस्योपशमनात् ऋते विना
मुक्तेरुपायोऽन्यो नास्ति | यावदित्यवधारणे | नास्त्येवेत्यर्थः |
एतदूर्ध्वमूर्ध्वलोकेषु अधस्तात् पातालादिलोकेषु तिर्यक् परितो द्वीपान्तरेषु च
तत्त्वदर्शिभिर्विचार्य निर्धारितमित्युत्तरेण सहान्वयः || ३० ||

यावन्नास्ति किलोपायश्चित्तोपशमनादृते |
ऋते तथ्ये तते शुभ्रे बोधे हृद्युदिते सति || ३१ ||

मनोविलये च समाधिपरिपाकपरिष्कृते मनस्यपरोक्षतया
आविर्भूतब्रह्मात्मकबोध एवोपाय इत्याशयेनाह - ऋते तथ्ये इति | ऋते
अबाध्ये || ३१ ||

मनोविलयमात्रेण विश्रान्तिरुपजायते |
व्यायते हृदयाकाशे चिति चिच्चक्रधारया || ३२ ||

व्यायते अत्यन्तविस्तीर्णे हृदयाकाशे दहराकाशरूपे ब्रह्मचिति
चरमवृत्तिद्धचिल्लक्षणया चक्रधारया मनो मारयेति परेणान्वयः || ३२ ||

मनो मारय निःशङ्कं त्वां प्रबध्नन्ति नाधयः |
यदि रम्यमरम्यत्वे त्वया संविदितं विदा || ३३ ||

आधयो मानसदुःखानि त्वां न प्रबध्नन्ति न बन्धयिष्यन्ति | आपातरम्येषु
विषयेषु दोषानुसंधानेनारम्यतादर्शनं प्रथमं
संपाद्यमित्याशयेनाह - यदीति || ३३ ||

छिन्नान्येव तदाङ्गानि [तदङ्गानि इति पाठः क्वचित्] चित्तस्येति
मतिर्मम |
अयं सोऽहमिदं तन्म एतावन्मात्रकं मनः || ३४ ||

मनसश्छेद्यान्यङ्गान्युक्त्वा शरीरमाह - अयं सोऽहमिति | अयं
दृश्यमानः स पित्रा उत्पादितो देहः अहं इदं देहसंबन्धि गृहक्षेत्रादि
तत्प्राक् पित्राद्यर्जितं मे मदीयं इति यो भ्रम एतावन्मात्रकं
एतावच्छरीरकं मन इत्यर्थः || ३४ ||

तदभावनमात्रेण दात्रेणेव विलूयते |
छिन्नाभ्रमण्डलं व्योम्नि [व्योम इति पाठः] यथा शरदि
धूयते || ३५ ||

वातेनाकल्पनेनैवं तथा तद्धूयते मनः |
भवन्ति यत्र शस्त्राग्निपवनास्तत्र भीर्भवेत् || ३६ ||

वातेन यथा छिन्नाभ्रमण्डलं धूयते निरस्यते तथा एवं
प्रागुक्तेनाहंमेत्यकल्पनेन मनो धूयत इत्यर्थः || ३६ ||

स्वायते मृदुनि स्वच्छे किमसंकल्पने भयम् |
इदं श्रेय इदं नेति सिद्धमाबालमक्षतम् || ३७ ||

46125 मृदुनि अकठिने | अनायाससाध्ये इति यावत् | सिद्धं प्रसिद्धम् || ३७ ||
46126
46127 बालं पुत्रमिवोदारे मनः श्रेयसि योजयेत् |
46128 अक्षयं चानवं चेतःसिंहं संसृतिबृंहणम् |
46129 घ्नन्ति ये ते जयन्तीह निर्वाणपददायिनः || ३८ ||
46130
46131 किं प्रसिद्धं तदाह - बालमिति | अक्षयं क्षेतुमशक्यम् | अनवं अबालम् |
46132 चेतोलक्षणं सिंहं ये घ्नन्ति ते जयन्ति सर्वोत्कर्षेण वर्तन्ते | अन्येभ्योऽपि
46133 निर्वाणपददायिनो भवन्तीत्यर्थः || ३८ ||
46134
46135 भीमाः संभ्रमदायिन्यः संकल्पकदनादिमाः |
46136 विपदः संप्रसूयन्ते मृगतृष्णा मराविव || ३९ ||
46137
46138 मन एव महाभयं मनोजय एवाभयप्रतिष्ठेत्याह - भीमा इति
46139 द्वाभ्याम् || ३९ ||
46140
46141 कल्पान्तपवना वान्तु यान्तु चैकत्वमर्णवाः |
46142 तपन्तु द्वादशादित्या नास्ति निर्मनसः क्षतिः || ४० ||
46143
46144 मनोबीजात्समुद्यन्ति सुखदुःखे शुभाशुभे |
46145 संसारखण्डका एते लोकसप्तकपल्लवाः || ४१ ||
46146
46147 खण्डका वनखण्डाः || ४१ ||
46148
46149 असंकल्पनमात्रैकसाध्ये सकलसिद्धिदे |
46150 असंकल्पनसाम्राज्ये तिष्ठावष्टब्धतत्पदः || ४२ ||
46151
46152 अवष्टब्धमवलम्बितं तत्परमात्मपदसिंहासनं येन तथाविधः सन्
46153 असंकल्पनसाम्राज्ये तिष्ठ || ४२ ||
46154
46155 प्रयच्छत्युत्तमानन्दं क्षीयमाणं मनः क्रमात् |
46156 काष्ठक्षीणाङ्गकाङ्गारो यथाङ्गारक्षयार्थिनः || ४३ ||
46157
46158 नन्वसंकल्पनमात्रेण कथं मनःक्षयानन्दसिद्धिस्तत्र दृष्टान्तमाह
46159 - काष्ठेति | यथा अङ्गारक्षयार्थिनो ज्वलदङ्गारनाशेन
46160 तापोपशमसुखार्थिनः पुरुषस्य काष्ठापसरणेनक्षीणाङ्गकः
46161 क्रमाद्भस्मीभावापन्नावयवः सोङ्गारस्तापोपशमनानन्दं प्रयच्छति
46162 तद्वदित्यर्थः || ४३ ||
46163
46164 अपि ब्रह्मकुटीलक्षं मनसश्चेत्समीहितम् |
46165 तदणोरन्तरे व्यक्तं विभक्तं परिदृश्यते || ४४ ||
46166
46167 संकल्पवृद्धौ ब्रह्माण्डलक्षाणामपि चिदणूदरे कल्पना संपद्यत
46168 इत्याह - अपीति | ब्रह्मकुटीनां ब्रह्माण्डानाम् | समीहितं
46169 संकल्पैरभिलषितं चेत् || ४४ ||
46170
46171 संकल्पमात्रविभवेन कृतात्यनर्थं
46172 संकल्पमात्रविभवेन सुसाधितार्थम् |
46173 संतोषमात्रविभवेन मनो विजित्य
46174 नित्योदितेन जयमेहि निरीप्सितेन || ४५ ||
46175
46176 संकल्पमात्रलक्षणेन स्वविभवेन सुसाधिता ब्रह्माण्डकोट्यादिपदार्था

46177 येन अत एव संकल्पमात्रविभवेनैव कृता अत्यनर्था जन्ममरणनिरयादयो
46178 येन तत्तथाविधं मनो नित्योदितेन निरन्तरभावितेन निरीहितेन निःसंकल्पेन
46179 संतोषमात्रविभवेन विजित्य विजयं सर्वोत्कर्षं एहि प्राप्नुहि ॥ ४५ ॥
46180
46181 परमपावनया विमनस्तया
46182 समतया मतयात्मविदामपि ।
46183 शमितया मितयान्तरहंतया
46184 यदवशिष्टमजं पदमस्तु तत् ॥ ४६ ॥
46185
46186 आत्मविदां मतया संमतया अवैषम्यवृत्त्या शमितया निरस्तया अमितया
46187 वह्न्या अहंतयापि अन्तः यत् अजं जन्मादिविकारशून्यं पदमवशिष्टं
46188 तदेव तवास्तु प्राप्यमिति आशिषि लोट् ॥ ४६ ॥
46189
46190 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० उत्पत्तिप्रकरणे
46191 चित्तचिकित्सानामैकादशोत्तरशततमः सर्गः ॥ १११ ॥
46192
46193 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे चित्तचिकित्सा
46194 नामैकादशोत्तरशततमः सर्गः ॥ १११ ॥
46195
46196
46197 प्। ३८९) २३०
46198
46199 द्वादशोत्तरशततमः सर्गः ११२
46200
46201 श्रीवसिष्ठ उवाच ।
46202
46203 यस्मिंस्तस्मिन्पदार्थे हि येन तेन यथा तथा ।
46204 तीव्रसंवेगसंपन्नं मनः पश्यति वाञ्छितम् ॥ १ ॥
46205
46206 अत्र चित्तक्षयोपायो वासनात्याग इर्यते ।
46207 चिन्मात्रवासनाभ्यासात्तदेकदृढनिश्चयात् ॥ १ ॥
46208
46209 वासनाक्षयार्थं द्वैतविषये मनसस्तीव्रवेगो निरोद्धव्यश्चिन्मात्राकारे तु
46210 संपाद्य इति वक्तुं मनसः स्वतीव्रवेगानुसारिफलसंपादनस्वभावतामाह
46211 - यस्मिन्निति । यस्मिन्पदार्थे येन येन वाञ्छितेन निमित्तेन यथा यथा
46212 प्रकर्षेण मनस्तीव्रवेगाभिसंपन्नं भवति तस्मिन्पदार्थे तत्तद्वाञ्छितं
46213 पश्यतीत्यर्थः ॥ १ ॥
46214
46215 जायते म्रियते चैषा मनसस्तीव्रवेगिता ।
46216 सौम्याम्बुबुद्बुदालीव निर्निमित्ता स्वभावतः ॥ २ ॥
46217
46218 हे सौम्य उपेक्षणेन जायते । निरोधप्रयत्नेन म्रियते शाम्यति । यत उत्पत्तौ
46219 निर्निमित्तेत्यर्थः ॥ २ ॥
46220
46221 शीतता तुहिनस्येव कज्जलस्येव कृष्णता ।
46222 लोलता मनसो रूपं तीव्रातीव्रैकरूपिणी ॥ ३ ॥
46223
46224 स्वभावत इति यदुक्तं तद्विशदयति - शीततेति ॥ ३ ॥
46225
46226 श्रीराम उवाच ।
46227
46228 कथमस्यातिलोलस्य वेगो वेगैककारणम् ।

46229 चलता मनसो ब्रह्मन्बलतो विनिवार्यते ॥ ४ ॥
46230
46231 वेग इत्यस्य व्याख्या चलतेति । वेगस्य तीव्रवेगस्य एकं मुख्यं कारणम् ॥ ४ ॥
46232
46233 श्रीवसिष्ठ उवाच ।
46234
46235 नेह चञ्चलताहीनं मनः क्वचन दृश्यते ।
46236 चञ्चलत्वं मनोधर्मो वह्नेर्धर्मो यथोष्णता ॥ ५ ॥
46237
46238 यैषा हि चञ्चला स्पन्दशक्तिश्चित्तत्वसंस्थिता ।
46239 तां विद्धि मानसीं शक्तिं जगदाडम्बरात्मिका ॥ ६ ॥
46240
46241 चित्तत्वं जगत्कारणमायासंवलितचैतन्यं तत्र संस्थिता स्पन्दशक्तिः
46242 क्रियाशक्तिस्तां मानसीं मनोरूपेण परिणतां विद्धित्यर्थः ॥ ६ ॥
46243
46244 स्पन्दास्पन्दादृते वायोर्यथा सत्तैव नोह्यते ।
46245 तथा [तथाच इति पाठः] न चित्तसत्तास्ति चञ्चलस्पन्दनादृते ॥ ७
46246 ॥
46247
46248 सत्ता अस्तिता । नोह्यते न विरक्र्यते ॥ ७ ॥
46249
46250 यत्तु चञ्चलताहीनं तन्मनो मृतमुच्यते ।
46251 तदेव च तपःशास्त्रसिद्धान्तो मोक्ष उच्यते ॥ ८ ॥
46252
46253 मनोविलयमात्रेण दुःखशान्तिरवाप्यते ।
46254 मनोमननमात्रेण दुःखं परमवाप्यते ॥ ९ ॥
46255
46256 दुःखमुत्पादयत्युच्चैरुत्थितश्चित्तराक्षसः ।
46257 सुखायानन्तभोगाय तं प्रयत्नेन पातय ॥ १० ॥
46258
46259 अनन्तं त्रिविधपरिच्छेदरहितं यथा स्यात्तथा भुज्यत इव प्रथत
46260 इत्यनन्तभोगाय मोक्षसुखाय ॥ १० ॥
46261
46262 तस्य चञ्चलता यैषा त्वविद्या राम सोच्यते ।
46263 वासनापदनाम्नीं तां विचारेण विनाशय ॥ ११ ॥
46264
46265 अविद्या रजःशक्तिबीजकत्वादविद्या । वासनापदनाम्नीमिति । मनः अनो बहुव्रीहेः
46266 इति प्रतिषेधविषये अन उपधालोपिन इति ङीप् पाक्षिकः ॥ ११ ॥
46267
46268 अविद्यया वासनया तयान्तश्चित्तसत्तया ।
46269 विलीनया त्यागवशात्परं श्रेयोऽधिगम्यते ॥ १२ ॥
46270
46271 त्यागवशाद्बाह्यविषयानुसंधानत्यागबलात् ॥ १२ ॥
46272
46273 यत्तत्सदसतोर्मध्यं यन्मध्यं चित्त्वजाड्ययोः ।
46274 तन्मनः प्रोच्यते राम द्वयोर्दोलायिताकृति ॥ १३ ॥
46275
46276 एवं वक्तव्योपयोगितया चाञ्चल्यधर्मकतां मनसः समर्थ्य
46277 वास्तवावस्तवरूपद्वयात्मकतामवास्तवांशहेयताप्रदर्शनाय
46278 वास्तवरूपप्रतिष्ठाया विनाशप्रसक्तिवारणाय चाह - यत्तदिति ।
46279 सदसतोर्मध्यं मिथुनीभावरूपमन्तरालम् । अत एवान्यतररूपप्राधान्ये
46280 दोलायिताकृति अविश्रान्तस्थिति ॥ १३ ॥

जाड्यानुसंधानहतं जाड्यात्मकतयेद्धया ।
चेतो जडत्वमायाति दृढाभ्यासवशेन हि ॥ १४ ॥

कस्मात्तर्ह्येकतरकोटिविश्रान्तिस्तत्राह - जाड्येति द्वाभ्याम् । इद्धया
प्ररूढया ॥ १४ ॥

विवेकैकानुसंधानाच्चिदंशात्मतया मनः ।
चिदेकतामुपायाति दृढाभ्यासवशादिह ॥ १५ ॥

चिदंशात्मतया इद्धयेत्यनुषज्यते ॥ १५ ॥

पौरुषेण प्रयत्नेन यस्मिन्नेव पदे मनः ।
पात्यते तत्पदं प्राप्य भवत्यभ्यासतो हि तत् ॥ १६ ॥

प्रयत्नेन स्वाभाविकेन शास्त्रीयेण वा ॥ १६ ॥

पुनः पौरुषमाश्रित्य चित्तमाक्रम्य चेतसा ।
विशोकं पदमाश्रित्य निराशङ्कः स्थिरो भव ॥ १७ ॥

भवभावनया मग्नं मनसैव न चेन्मनः ।
बलादुत्तार्यते राम तदुपायोऽस्ति नेतरः ॥ १८ ॥

तत्तत इतरः ॥ १८ ॥

मन एव समर्थं वो मनसो दृढनिग्रहे ।
अराजा कः समर्थः स्याद्राज्ञो राघव निग्रहे ॥ १९ ॥

तृष्णाग्राहगृहीतानां संसारार्णवरंहसि ।
आवर्तैरुह्यमानानां दूरे स्वं मन एव नौः ॥ २० ॥

दूरे उह्यमानानां प्रवाह्यमाणानाम् । नौस्तरिः ॥ २० ॥

मनसैव मनश्छित्त्वा पाशं परमबन्धनम् ।
उन्मोचितो न येनात्मा नासावन्येन मोक्ष्यते ॥ २१ ॥

या योदेति मनोनाम्नी वासना वासितान्तरा ।
तां तां परिहरेत्प्राज्ञस्ततोऽविद्याक्षयो भवेत् ॥ २२ ॥

मनोनाम्नी बाह्यार्थमननाभिधाना । ङीप् प्राग्वत् ।
परिहरेन्मिथ्यात्वानुसंधानेन निरस्येत् । यथा औष्ण्ये क्षीणे वह्निः शाम्यति
तद्वद्वासनाक्षये सह मनसाऽविद्या क्षीयत इति भावः ॥ २२ ॥

प। ३९०) २३१

भोगौघवासनां त्यक्त्वा त्यज त्वं भेदवासनाम् ।
भावाभावौ ततस्त्यक्त्वा निर्विकल्पः सुखी भव ॥ २३ ॥

वासनात्यागे क्रममाह - भोगौघेति । भावाभावौ चित्तचेत्यौ ।
कल्पनाव्युत्क्रमेण त्याग इति भावः ॥ २३ ॥

अभावनं भावनायास्त्वेतावान्वासनाक्षयः ।

एष एव मनोनाशस्त्वविद्यानाश उच्यते ॥ २४ ॥

चित्तचेत्यत्यागेऽपि तद्धेत्वज्ञानपरिशेषमाशङ्क्याह - अभावनमिति । न
भाव्यते पूर्णतयानुभूयते येनाविद्यावरणेन तदविद्यावरणं
भावनायास्तत्त्वसाक्षात्काराद्धेतोस्त्यक्त्वा सुखी भवेत्यनुषज्यते ॥ २४ ॥

यद्यत्संवेद्यते किंचित्तत्रासंवेदनं परम् ।
असंवित्तिस्तु निर्वाणं दुःखं संवेदनाद्भवेत् ॥ २५ ॥

अथवा साक्षाच्चित्तद्वारा वा यद्यत्किंचित्साक्षिणा संवेद्यते तत्र तत्र
संवेद्यताया असंवेदनं परमुत्कृष्टमनोनाशनिर्वाणमिति संक्षेप
इत्याह - यद्यदिति ॥ २५ ॥

स्वेनैव तत्प्रयत्नेन पुंसः संवेद्यते क्षणात् ।
भावस्याभावनं भूत्यै तत्तस्मान्नित्यमाहरेत् ॥ २६ ॥

तच्च वेद्यावेदनं पुरुषप्रयत्नाद्भवतीत्याह - स्वेनेति ।
भावस्याभावनं वेद्यस्यावेदनम् । तत्स्वप्रयत्नं नित्यमाहरेदभ्यसेत् ॥ २६
। ।

रागादयो ये मनसीप्सितास्ते
बुद्ध्वेह तांस्तांस्त्वमवस्तुभूतान् ।
त्यक्त्वा तदास्याङ्कुरमस्तबीजं
मा हर्षशोकं समुपैहि तृप्तः ॥ २७ ॥

उक्तमनूद्योपसंहरति - रागादय इति । ते तव मनसि ये ये रज्यन्ते येषु ते
रागा विषयाः । आदिपदात्तदुपाया इप्सितास्तांस्तांस्त्वमनर्थभूतान् बुद्ध्वा ते
रागादयः आस्याङ्कुरा बीजमुखनिर्गच्छदङ्कुरकल्पा यस्य तत्तथाविधं
मनोऽपि अस्तबीजं अज्ञानवासनाबीजैः सह त्यक्त्वा
पूर्णात्मानुभवामृततृप्तः सन् हर्षशोकं मा समुपहि मत्वा धीरो
हर्षशोकौ जहाति इति श्रुतेरित्यर्थः ॥ २७ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० उ०
मुखरवेणोपदेशांशकथनं नाम द्वादशोत्तरशततमः सर्गः ॥
११२ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
मुखरवेणोपदेशांशकथनं नाम द्वादशोत्तरशततमः सर्गः ॥ ११२ ॥

त्रयोदशोत्तरशततमः सर्गः ११३

श्रीवसिष्ठ उवाच ।

एषा हि वासना नित्यमसत्यैव यदुत्थिता ।
द्विचन्द्रभ्रान्तिवत्तेन त्यक्तुं राघव युज्यते ॥ १ ॥

सर्वदुर्वासनोच्छेदी विचारैर्विविधैर्मृतः ।
द्वैतमिथ्यात्वधीरूढस्तत्त्वबोधोऽत्र वर्ण्यते ॥ १ ॥

यद्यतो हेतोरसत्यैवोत्थिता तत्ततस्त्यक्तुं बाधितुं युज्यते ॥ १ ॥

46385 अविद्या विद्यमानेव नष्टप्रज्ञेषु विद्यते।
46386 नाम्नैवाङ्गीकृताभावात्सम्यक्प्रज्ञेषु सा कुतः॥ २॥
46387
46388 नष्टप्रज्ञेषु विवेकविज्ञानशून्येषु विद्यमाना परमार्थसत्येव
46389 दृढतरा विद्यते। सम्यक्प्रज्ञेषु तु
46390 अभावादपरमार्थत्वान्नाम्नैवाङ्गीकृता वन्ध्यापुत्रवत्। अतः सा कुतः॥ २
46391 ।।
46392
46393 मा भवाज्ञो भव प्राज्ञः सम्यग्राम विचारय।
46394 नास्त्येवेन्दुर्द्वितीयः खे भ्रान्त्या संलक्ष्यते मुधा॥ ३॥
46395
46396 अतस्तत्त्वज्ञतामेव विचारेण संपादयेत्याह - मा भवेति॥ ३॥
46397
46398 नात्र तत्त्वादृते किंचिद्विद्यते वस्त्ववस्तु च।
46399 ऊर्मिमालिनि विस्तीर्णे वारिपूरादृते यथा॥ ४॥
46400
46401 तत्त्वात्परमात्मनः। वस्तु भावः। अवस्तु अभावः॥ ४॥
46402
46403 स्वविकल्पादृते नैतान्भावाभावानसन्मयान्।
46404 नित्येऽसिते तते शुद्धे मा समारोपयात्मनि॥ ५॥
46405
46406 असिते देहादिबन्धनशून्ये। षिञ् बन्धने क्तः॥ ५॥
46407
46408 नासि कर्ता किमेतासु क्रियासु ममता तव।
46409 एकस्मिन्विद्यमाने हि किं केन क्रियते कथम्॥ ६॥
46410
46411 बन्धस्याकर्तृतामूलत्वात्तामेव प्रथमं त्यजेत्याह - नासीति। एकस्मिन्
46412 अद्वितीये। नह्येकमात्रकारकसाध्या क्रिया प्रसिद्धेति भावः॥ ६॥
46413
46414 मा वाऽकर्ता भव प्राज्ञ किमकर्तृतयेहिते।
46415 साध्यं साध्यमुपादेयं तस्मात्स्वस्थो भवानघ॥ ७॥
46416
46417 अकर्ता अकर्तृत्वाभिमानी च मा भव। अकर्तृतया ईहिते अभिमाने कृते
46418 उपादेयं प्राप्यं साध्यं स्वयत्ननिष्पाद्यं किं साध्यं फलमस्ति। न
46419 किंचिदित्यर्थः॥ ७॥
46420
46421 कर्ता संस्त्वमसक्तत्वाद्भावाभावे रघूद्वह।
46422 असक्तत्वादकर्तापि कर्तृवत्स्पन्दनं कुतः॥ ८॥
46423
46424 भावोऽभिमानस्तदभावे सति असक्तत्वादकर्तापि एवमकर्तापि
46425 संस्तत्राप्यभिमानाभावे अकर्तृत्वेऽप्यसक्तत्वात्कर्तापि। तर्हि
46426 किमज्ञवत्कर्ताहं नेत्याह - कर्तृवदिति। अस्पन्दात्मदर्शिनस्तव
46427 नाज्ञकर्तृवद्देहस्पन्दनेनात्मस्पन्दभ्रमलक्षणकर्तृताप्रसक्तिरित्यर्थ
46428 ः॥ ८॥
46429
46430 सत्यं स्याच्चेदुपादेयं मिथ्या स्याद्धेयमेव चेत्।
46431 उपादेयैकसक्तत्वाद्युक्ता सक्तिर्हि कर्मणि॥ ९॥
46432
46433 क्रियाफलमिथ्यात्वे कर्मासक्तिरेव न युक्तेति तर्केणापि दृढीकुर्वन्नाह -
46434 सत्यमिति॥ ९॥
46435
46436 यत्रेन्द्रजालमखिलं मायामयमवस्तुकम्।

46437 तत्र कास्था कथं नाम हेयोपादेयदृष्टयः ॥ १० ॥
46438
46439 दर्शिततर्कस्य विपर्ययपर्यवसानं दर्शयति - यत्रेति । यत्रतत्रेति शब्दौ
46440 यर्हितर्हीत्यर्थे ॥ १० ॥
46441
46442 संसारबीजकणिका यैषा विद्या रधूद्वह ।
46443 एषा ह्यविद्यमानैव सतीव स्फारतां गता ॥ ११ ॥
46444
46445 कुत इन्द्रजालतेति चेदाविद्यकत्वादित्याह - संसारेति ॥ ११ ॥
46446
46447 येयमाभोगिनिःसारा संसारारम्भचक्रिका ।
46448 विज्ञेया वासनैषा सा चेतसो मोहदायिनी ॥ १२ ॥
46449
46450 चारुवंशलतेवान्तःशून्या निस्सारकोटरा ।
46451 सरित्तरङ्गमालेव न व्युच्छिन्नापि नश्वरी ॥ १३ ॥
46452
46453 अविद्यारूपां संसारारम्भचक्रिकामेव विस्तरेण वर्णयति - चार्वित्यादिना ।
46454 अन्तःशून्येत्यस्य विवरणं निःसारकोटरेति । मूलनाशं विना व्युच्छिन्नापि न
46455 नश्वरी ॥ १३ ॥
46456
46457 प। ३९१) २३१
46458
46459 गृह्यमाणापि हस्तेन ग्रहीतुं नैव युज्यते ।
46460 मृद्व्यप्यत्यन्ततीक्ष्णाग्रा निर्झरोर्मिरिवोत्थिता ॥ १४ ॥
46461
46462 निर्झरोर्मिपक्षे कूलद्रुमच्छेदिनीत्वात्तीक्ष्णाग्रेति बोध्यम् ॥ १४ ॥
46463
46464 दृश्यते प्रकराभासा सदर्थे नोपयुज्यते ।
46465 तरङ्ग्ण्यतरङ्गाभा स्वाकारपरिनिष्ठिता ॥ १५ ॥
46466
46467 प्रकरः कार्यसमर्थकारणकलापस्तद्वदाभासः प्रथा यस्याः । तथापि
46468 सदर्थे सत्यपुरुषार्थे । तरङ्गिणीपक्षे स्नानपानादिसत्यार्थक्रियार्थे ।
46469 अतरङ्गाभा सत्यतरङ्गशून्यस्वप्नतरङ्गिणीसदृशी
46470 मृगतृष्णातरङ्गिणीव । स्वाकारः प्रतीतिमात्रशोभमान आकारस्तत्रैव
46471 परिनिष्ठिता परिसमाप्ता नार्थक्रियायामित्यर्थः ॥ १५ ॥
46472
46473 क्वचिद्वक्राः क्वचित्स्पष्टा दीर्घाः खर्वाः स्थिराश्चलाः ।
46474 यत्प्रसादोद्भवास्तस्माद्व्यतिरेकमुपागताः ॥ १६ ॥
46475
46476 स्वाकारानेव प्रपञ्चयति - क्वचिदिति । यस्या वर्ण्यमानचक्रिकायाः
46477 प्रसादादुद्भवा आविर्भूताः व्यतिरेकं परस्परभेदमुपागताः
46478 सर्वपदार्था इति शेषः ॥ १६ ॥
46479
46480 अन्तःशून्यापि सर्वत्र दृश्यते सारसुन्दरी ।
46481 न क्वचित्संस्थितापीह सर्वत्रैवोपलक्ष्यते ॥ १७ ॥
46482
46483 जडैव चिन्मयीवासावन्यस्पन्दोपजीविनी ।
46484 निमेषमप्यतिष्ठन्ती स्थैर्याशङ्कां प्रयच्छति ॥ १८ ॥
46485
46486 अन्यस्पन्दं मनश्चाञ्चल्यमुपजीवति तच्छीला ॥ १८ ॥
46487
46488 ज्वालावच्छुद्धवर्णापि मषीमलिनकोटरा ।

वल्गत्यन्यप्रसादेन दीयते तदवेक्षणात् ॥ १९ ॥

सत्त्वगुणेन शुद्धवर्णापि तमसा मषीमलिनकोटरा । अन्यस्य परमात्मनः
प्रसादेन सान्निध्येन वल्गति चलति । तस्यावेक्षणात्साक्षात्काराद्दीयते खण्ड्यते
। दो अवखण्डने ॥ १९ ॥

आलोके विमले म्लाना तमस्यपि विराजते ।
मृगतृष्णेव शुष्काभा नानावर्णविलासिनी ॥ २० ॥

विमले स्वात्मालोके आवरकत्वान्म्लाना ॥ २० ॥

वक्रा विषमयी तन्वी मृद्वी संकटकर्कशा ।
ललनाचञ्चला लुब्धा तृष्णा कृष्णेव भोगिनी ॥ २१ ॥

तृष्णादिरूपेणापि तामेवाह - वक्रेति । संकटहेतुत्वात्कर्कशा । ललनेव
चञ्चला । भोगिनी सर्पिणी ॥ २१ ॥

स्वयं दीपशिखेवाशु क्षीयते स्नेहसंक्षये ।
सिन्दूरधूलिलेखेव विना रागं विराजते ॥ २२ ॥

रागं स्नेहं विनापि सिन्दूरधूलिलेखेव रागवती विराजते ॥ २२ ॥

क्षणप्रकाशतरला कृतसंस्था जडाशया ।
मुग्धानां त्रासजननी वक्रा विद्युदिवोदिता ॥ २३ ॥

जडया आशया कृतसंस्था संपादितस्थितिः । विद्युत्पक्षे
डलयोरभेदाज्जलस्याशया मेघे कृतस्थितिरित्यर्थः ॥ २३ ॥

यत्नाद्गृहीत्वा दहति भूत्वा भूत्वा प्रलीयते ।
लभ्यतेऽपि हि नान्विष्टा विद्युद्वदतिभङ्गुरा ॥ २४ ॥

दहति । संतापदुःखे पर्यवस्यतीति यावत् । विद्युत्पक्षे स्पष्टम् ॥ २४ ॥

अप्रार्थितैवोपनता रमणीयाप्यनर्थदा ।
अकालपुष्पमालेव श्रेयसेनाभिनन्दिता ॥ २५ ॥

अकालपुष्पमालाप्युत्पातत्वादनर्थदा ॥ २५ ॥

अत्यन्तविसृतैवातिसुखाय भ्रमदायिनी ।
दुःस्वप्नकलनेवेयमनर्थायैव तर्किता ॥ २६ ॥

तर्किता पुनःपुनस्तर्कैरनुसंधीयमाना ॥ २६ ॥

प्रतिभासवशादेषा त्रिजगन्ति महान्ति च ।
मुहूर्तमात्रेणोत्पाद्य धत्ते ग्रासीकरोति च ॥ २७ ॥

मुहूर्तो वत्सरश्रेणी लवणस्यानया कृता ।
रात्रिर्द्वादशवर्षाणि हरिश्चन्द्रस्य निर्मिता ॥ २८ ॥

वियोगिनामथान्येषां कान्ताविभवशालिनाम् ।
रात्रिवत्सरवद्दीर्घा भवेत्तस्याः प्रसादतः ॥ २९ ॥

46541 सुखितस्याल्पतामेति दुःखितस्यैति दीर्घताम् |
46542 कालो यस्याः प्रसादेन विपर्यासैकशीलिनाम् || ३० ||
46543
46544 विपर्यासो भ्रमस्तदेकशीलिनां पुंसाम् || ३० ||
46545
46546 अस्याः स्वसत्तामात्रेण कर्तृतैतासु वृत्तिषु |
46547 दीपस्यालोककार्याणां यथा तद्वन्न वस्तुतः || ३१ ||
46548
46549 अविद्याया अपि ब्रह्मणि जगद्विवर्तारोपे सन्निधानमात्रेण निमित्तता नतु
46550 परिणामितेति स्वमतं दर्शयति - अस्या इति || ३१ ||
46551
46552 सनितम्बस्तनी चित्रे [त्वित्ते इति पाठः] न स्त्री स्त्रीधर्मिणी यथा |
46553 तथैवाकारचिन्तेयं कर्तुं योग्या न किंचन || ३२ ||
46554
46555 कुतो नास्याः कर्तृतेति चेदयोग्यत्वादित्याह - सनितम्बेति | स्त्रीधर्मिणी
46556 गृहकार्यकरणादिसमर्थेति यावत् | आकारचिन्ता प्रागनुभूतार्थवासनारूपा |
46557 इयमविद्या || ३२ ||
46558
46559 मनोराज्यमिवाकारभासुरा सत्यवर्जिता |
46560 सहस्रशतशास्त्रापि न किंचित्परमार्थतः || ३३ ||
46561
46562 तदेव स्पष्टमाह - मनोराज्यमिति || ३३ ||
46563
46564 अरण्ये मृगतृष्णेव मिथ्यैवाडम्बरान्विता |
46565 विडम्बयति तान्मुग्धमृगानेव न मानुषान् || ३४ ||
46566
46567 फेनमालेव संजातध्वस्ता विच्छेदवर्जिता |
46568 जडेव चञ्चलाकारा गृह्यमाणा न किंचन || ३५ ||
46569
46570 संजातध्वस्ता उत्पन्नप्रध्वंसिनी | विच्छेदवर्जिता प्रवाहनित्या | जडा
46571 नीहारपटलीव || ३५ ||
46572
46573 अटत्युड्डामराकारा रजःप्रसरधूसरा |
46574 बलात्कल्पान्तवात्येव स्वाक्रान्तभुवनान्तरा || ३६ ||
46575
46576 धूमालीवाङ्गसंलग्ना दाहखेदप्रदायिनी |
46577 गर्भीकृतरसाक्रम्य जगन्ति परिवर्तते || ३७ ||
46578
46579 गर्भीकृतो रसः परमात्मा जलं च यया | अत एव जगन्ति आक्रम्य प्रक्रम्य
46580 परिभूय च परिवर्तते भ्रमति || ३७ ||
46581
46582 धारा जलधरस्येव सुदीर्घा जलनिर्मिता |
46583 असारसंसारदृढा रज्जुस्तृणगणैरिव || ३८ ||
46584
46585 असारैः पेलवैः संसारैः संसरणसंस्कारैर्दृढा | तत्र दृष्टान्तः ##-
46586
46587 प्। ३९२) २३२
46588
46589 तरङ्गोत्पलमालेव कल्पनामात्रवर्णिता |
46590 मृणालीव बहुच्छिद्रा पङ्कप्रौढा जलात्मिका || ३९ ||
46591
46592 कविभिः कल्पनामात्रेण वर्णिता तरङ्गमालेवोत्पलमालेव च पङ्के पापे

46593 कर्दमे च प्रौढा जलात्मिका जडात्मिका। लडयोरभेदात्॥ ३९॥
46594
46595 जनेन दृश्यते वृद्धितत्परा नच वर्धते।
46596 विषास्वाद इवापातमधुराऽन्ते सुदारुणा॥ ४०॥
46597
46598 विषास्वादः सविषमोदकास्वादः॥ ४०॥
46599
46600 नष्टा दीपशिखेवैषा न जाने क्वेव गच्छति।
46601 मिहिकेवाग्रदृष्टापि गृह्यमाणा न किंचन॥ ४१॥
46602
46603 न जाने इति। बाधितस्य वादिसहस्रैरपि स्वरूपनिरूपणासंभवादिति भावः।
46604 मिहिका नीहारधूमपटलीव॥ ४१॥
46605
46606 पांसुमुष्टिरिवाकीर्य प्रेक्षिता पारमाणवी।
46607 आकाशनीलिमेवैषा निर्निमित्तैव दृश्यते॥ ४२॥
46608
46609 द्विचन्द्रमोहवज्जाता स्वप्नवद्विहितभ्रमा।
46610 यथा नौयायिनः स्थाणुस्पन्दस्तद्वदिहोत्थिता॥ ४३॥
46611
46612 अनयोपहते चित्ते दीर्घकालमिवाकुलैः।
46613 जनैराकल्प्यते दीर्घसंसारस्वप्नविभ्रमः॥ ४४॥
46614
46615 इवशब्दो मिथ्यात्वद्योतकः॥ ४४॥
46616
46617 अनयोपहते स्वस्मिंश्चित्राश्चेतसि विभ्रमाः।
46618 उत्पद्यन्ते विनश्यन्ति तरङ्गास्तोयधेरिव॥ ४५॥
46619
46620 स्वस्मिन्स्वात्मनि अनया उपहृते। आवरणेनासत्प्राये कृते सतीत्यर्थः॥ ४५॥
46621
46622 मनोज्ञमपि सत्यं च दृश्यते सदसत्तया।
46623 अमनोज्ञमसत्यं च दृश्यते सत्तयाप्यसत्॥ ४६॥
46624
46625 तस्या विपर्यासशक्तिमाह - मनोज्ञमिति। सद्ब्रह्म। असज्जगत्॥ ४६॥
46626
46627 पदार्थरथमारूढा भावनैषा बलान्विता।
46628 आक्रामति मनः क्षिप्रं विहगं वागुरा यथा॥ ४७॥
46629
46630 पदार्था विषयास्तद्रूपं रथं। तदाकारतामिति यावत्। भावना
46631 उद्भूतवासनारूपा एषा अविद्या मनः आक्रामति मोहयित्वा बध्नाति॥ ४७॥
46632
46633 करुणास्यन्दमानाक्षी स्रवत्क्षीरलवस्तनी।
46634 भवत्युल्लसितानन्दं जननी गृहिणी यथा॥ ४८॥
46635
46636 मातृपत्न्यादिरूपतामप्यविद्यैव धारयतीत्याह - करुणेति॥ ४८॥
46637
46638 विषीकरोति निःस्यन्दसंतर्पितजगत्त्रयम्।
46639 सुधार्द्रार्द्रमपि क्षिप्रं प्रवृद्धं बिम्बमैन्दवम्॥ ४९॥
46640
46641 निःस्यन्दैरमृतद्रवैश्चन्द्रिकाद्यात्मना परिणतैः
46642 संतर्पितजगत्त्रयमैन्दवं बिम्बमपि विषीकरोति॥ ४९॥
46643
46644 उन्मत्तरववेतालनर्तनारम्भसंभ्रमम्।

46645 स्थाणवः संप्रयच्छन्ति मूका अप्येतयान्धया ॥ ५० ॥
46646
46647 अन्धयतीत्यन्धया एतया निमित्तभूतया मूका
46648 वागादिसर्वकर्मेन्द्रियव्यापारशून्या अपि स्थाणव
46649 उन्मत्तरववेतालनर्तनारम्भसंभ्रमं संप्रयच्छन्ति जनयन्ति वने
46650 इत्यर्थः ॥ ५० ॥
46651
46652 संध्यादिषु च कालेषु लोष्टपाषाणभित्तयः ।
46653 अस्याः प्रसादाद्दृश्यन्ते सर्पाजगरदृष्टिभिः ॥ ५१ ॥
46654
46655 सर्पाजगरदृष्टिभिस्तथा तथा भ्रान्तिभिः ॥ ५१ ॥
46656
46657 एकोऽपि द्वितयोदेति यथा द्विशशिदर्शने ।
46658 दूरमभ्याशतां याति स्वप्ने स्वमरणं यथा ॥ ५२ ॥
46659
46660 अभ्याशतां सामीप्यम् ॥ ५२ ॥
46661
46662 आदीर्घं क्षणतामेति कालस्येष्टा यथा निशा ।
46663 क्षणो वर्षमिवाभाति कान्ताविरहिणामिव ॥ ५३ ॥
46664
46665 कालस्य संहाररुद्रस्येष्टा निशा प्रलयरातिरिव ॥ ५३ ॥
46666
46667 न तदस्तीह यन्नाम न करोतीयमुद्धता ।
46668 अस्यास्त्वकिंचनायास्तु शक्ततां पश्य राघव ॥ ५४ ॥
46669
46670 अकिंचनायाः स्वसत्तायामपि दरिद्रायाः ॥ ५४ ॥
46671
46672 संरोधयेत्प्रयत्नेन संविदेवाशु संविदम् ।
46673 सरित्स्रोतोनिरोधेन शुष्यत्येषा मनोनदी ॥ ५५ ॥
46674
46675 संविदा विवेकबुद्ध्या । संविदं विषयबुद्धिम् । संरोधफलमाह -
46676 सरिदिति । स्रोतोनिरोधेन सरिदिवेत्यध्याहार्यम् ॥ ५५ ॥
46677
46678 श्रीराम उवाच ।
46679
46680 अविद्यमानयैवेदं पेलवाङ्ग्या सुतुच्छया ।
46681 मिथ्याभावनया नाम चित्रमन्धीकृतं जगत् ॥ ५६ ॥
46682
46683 इत्थं विस्मापितो रामोऽविद्यास्वरूपपर्यालोचनेन विस्मितस्तां
46684 वर्णयन्विस्मयमभिनयति - अविद्यमानयैवेत्यादिना ॥ ५६ ॥
46685
46686 अरूपया निराकृत्या चारुचेतनहीनया ।
46687 असत्येवाप्यनश्यन्त्या चित्रमन्धीकृतं जगत् ॥ ५७ ॥
46688
46689 आकृतेः पृथग्ग्रहणाद्रूपपदं नीलादिपरम् । असत्या
46690 मृगतृष्णानद्येवानश्यन्त्या अशुष्यन्त्या ॥ ५७ ॥
46691
46692 आलोकेन विनश्यन्त्या [विनाश्यन्त्या इति पाठः] स्फुरन्त्या
46693 तमसोन्तरे ।
46694 कौशिकेक्षणधर्मिण्या चित्रमन्धीकृतं जगत् ॥ ५८ ॥
46695
46696 कौशिकस्येक्षणं चक्षुस्तद्धर्मिण्या तत्सदृशया ॥ ५८ ॥

कुकर्मैकान्तकारिण्या न सहन्त्या विलोकनम् ।
देहमप्यविजानन्त्या चित्रमन्धीकृतं जगत् ॥ ५९ ॥

क्रियाशक्तिमात्राश्रयत्वात्कुकर्मैकान्तकारिण्या
ज्ञानशक्तिशून्यत्वाद्देहमप्यविजानन्त्या ॥ ५९ ॥

सुदीनाचारधर्मिण्या नित्यं प्राकृतकान्तया ।
अनारतास्तंगतया चित्रमन्धीकृतं जगत् ॥ ६० ॥

प्राकृतानां मूढानां कान्तया रम्यया । प्राकृतस्य पृथग्जनस्य
कान्तया भार्यया च अस्तंगतया असत्या तमस्तिरोहितया च ॥ ६० ॥

अनन्तदुःखाकुलया सदैव मृतयानया ।
संबोधहीनया यत्र चित्रमन्धीकृतं जगत् ॥ ६१ ॥

मृतया मृतकल्पया ॥ ६१ ॥

कामकोपघाङ्गिन्या तमःप्रसरवक्रया ।
अचिरेणाशरीरिण्या चित्रमन्धीकृतं जगत् ॥ ६२ ॥

अचिरेण ज्ञानोदये वधे च अशरीरिण्या ॥ ६२ ॥

स्वात्मान्धरूपास्पदया जडया जाड्यजीर्णया ।
दुःखदीर्घप्रलापिन्या चित्रमन्धीकृतं जगत् ॥ ६३ ॥

स्वात्मविषये येऽन्धरूपा मूढास्तदास्पदया । इह श्लोकपञ्चके
श्लिष्टैर्विशेषणैः समासोक्त्या निशाचरी दीना स्त्री काचिदुपमा गम्यते ॥ ६३ ॥

पुरुषासङ्गसङ्गिन्या रागिण्या क्रिययानया ।
विद्रवन्त्या विवक्षासु चित्रमन्धीकृतः पुमान् ॥ ६४ ॥

इतस्त्रिभिः श्लोकैस्तां पुरुषस्य प्रतिकूलभार्यात्वेन वर्णयति - पुरुषेति ।
पुरुषस्य आसक्तिरसङ्ग ऐक्याध्यासस्तेन पुरुषसङ्गिन्या ।
नानाविचित्रविषयकल्पनक्रियया पुरुषस्य भोगसंपादनात्पुरुषानुरागिण्या ।
विवक्षासु स्वतत्त्वविचारेषु विद्रवन्त्या ॥ ६४ ॥

प। ३९३) २३२

पुरुषस्य न या शक्ता सोढुमीक्षितुमप्यलम् ।
तया स्त्रियावरणया चित्रमन्धीकृतः पुमान् ॥ ६५ ॥

ईक्षितं साक्षात्कारम् । आवृणोतीत्यावरणा । नन्द्यादित्वकल्पनाल्ल्युः ॥ ६५ ॥

न यस्याश्चेतनैवास्ति याप्यनष्टैव नश्यति ।
तया स्त्रिया परुषया चित्रमन्धीकृतः पुमान् ॥ ६६ ॥

अनन्तदुष्प्रसरविलासकारिणी
क्षयोदयोन्मुखसुखदुःखभागिनी ।
इयं प्रभो विगलति केन वाऽसमा
मनोगुहानिलयनिबद्धवासना ॥ ६७ ॥

46749 वर्णितां वासनामयीमविद्यामुपसंहरंस्तदुच्छेदोपायं पृच्छति -
46750 अनन्तेति। दुष्प्रसरविलासा दुश्चेष्टाविभ्रमाः। क्षयोदयोन्मुखानि
46751 मरणजन्मप्रभृतीनि सुखदुःखानि भाजयति प्रापयति तच्छीला। असमा
46752 विषमा। केनोपायेन विगलति नश्यति॥ ६७॥
46753
46754 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये उत्पत्तिप्रकरणे
46755 अविद्यावर्णनं नाम त्रयोदशोत्तरशततमः सर्गः॥ १३३॥
46756
46757 इति श्रीवासिष्ठमहारामायणे तात्पर्यप्रकाशे उत्पत्तिप्रकरणे अविद्यावर्णनं
46758 नाम त्रयोदशोत्तरशततमः सर्गः॥ ११३॥
46759
46760
46761 चतुर्दशोत्तरशतमः सर्गः ११४
46762
46763 श्रीराम उवाच।
46764
46765 अविद्याविभवप्रोत्थं निबिडं पुरुषस्य हि।
46766 महदान्ध्यमिदं ब्रह्मन्कथं नाम विनश्यति॥ १॥
46767
46768 इहाविद्याक्षयोपायः स्वात्मदर्शनमुच्यते।
46769 विशुद्धात्मस्वरूपं चासंकल्पाद्वासनाक्षयः॥ १॥
46770
46771 वासनाक्षयोपायं पृष्ट्वा तन्मूलाविद्यावरणक्षयोपायं पृच्छति -
46772 अविद्येति॥ १॥
46773
46774 श्रीवसिष्ठ उवाच।
46775
46776 यथा तुषारकणिका भास्करालोकनात्क्षणात्।
46777 नश्यत्येवमविद्येयं राघवात्मावलोकनात्॥ २॥
46778
46779 एवं पृष्टे वसिष्ठः प्रथममविद्याक्षयोपायमाह - यथेत्यादिना॥ २
46780 ।।
46781
46782 तावत्संसारभृगुषु स्वात्मना सह देहिनम्।
46783 आन्दोलयति नीरन्ध्रदुःखकण्टकशालिषु॥ ३॥
46784
46785 संसारलक्षणेषु भृगुषु गिरिप्रपातेषु। देहिनं देहाभिमानिनमहंकारम्
46786 । आन्दोलयत्यधोधःपातनेनावलोडयति॥ ३॥
46787
46788 अविद्या यावदस्यास्तु नोत्पन्ना क्षयकारिणी।
46789 स्वयमात्मावलोकेच्छा मोहसंक्षयदायिनी॥ ४॥
46790
46791 अस्याः परं प्रपश्यन्त्याः स्वात्मनाशः प्रजायते।
46792 आतपानुभवार्थिन्याश्छायाया इव राघव॥ ५॥
46793
46794 परं परमात्मानम्॥ ५॥
46795
46796 दृष्टे सर्वगते बोधे स्वयमेव विलीयते।
46797 सर्वाशाभ्युदितेच्छाया द्वादशार्कगणे यथा॥ ६॥
46798
46799 सर्वासु आशासु दिक्षु अभ्युदिते द्वादशार्कगणे छाया यथा तथा॥ ६॥
46800

46801 इच्छामात्रमविद्येह तन्नाशो मोक्ष उच्यते।
46802 स चासंकल्पमात्रेण सिद्धो भवति राघव॥ ७॥
46803
46804 कारणाविद्यानाशोपायमुक्त्वा कार्याविद्याजयोपायमाह - इच्छेति।
46805 तन्नाश इति। तथाच श्रुतिः यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः।
46806 अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते इति॥ ७॥
46807
46808 मनागपि मनोव्योम्नि वासनारजनीक्षये।
46809 कालिमा तनुतामेति चिदादित्यमहोदयात्॥ ८॥
46810
46811 वासना कामवासना। कालिमा अविद्यावरणम्॥ ८॥
46812
46813 यथोदिते दिनकरे क्वापि याति तमस्विनी।
46814 तथा विवेकेऽभ्युदिते क्वाप्यविद्या विलीयते॥ ९॥
46815
46816 दृढवासनया बन्धो घनतामेति चेतसः।
46817 बलाद्वेतालसंकल्पः संध्याकाले यथा शिशोः॥ १०॥
46818
46819 शिशोर्दृढतरवेतालवासनावासितस्येति शेषः॥ १०॥
46820
46821 श्रीराम उवाच।
46822
46823 यावत्किंचिदिदं दृश्यं साविद्या क्षीयते च सा।
46824 आत्मभावनया ब्रह्मन्नात्मासौ कीदृशः स्मृतः॥ ११॥
46825
46826 प्रश्नः स्पष्टः॥ ११॥
46827
46828 श्रीवसिष्ठ उवाच।
46829
46830 चेत्यानुपातरहितं सामान्येन च सर्वगम्।
46831 यच्चित्तत्त्वमनाख्येयं स आत्मा परमेश्वरः॥ १२॥
46832
46833 चेत्यानुपातो विषयव्याप्तिस्तद्रहितम्। सर्वचेत्यानां
46834 कारणत्वात्सामान्यमविद्या तेन च वर्जितम्। निर्विशेषावरणमिति
46835 [निर्विक्षेपावरणं इति पाठः] यावत्॥ १२॥
46836
46837 आब्रह्म स्तम्बपर्यन्तं तृणादि यदिदं जगत्।
46838 तत्सर्वं सर्वदात्मैव नाविद्या विद्यतेऽनघ॥ १३॥
46839
46840 तदसंभावनावारणाय सकार्याविद्यायास्तत्र बाधं प्रपञ्चयति -
46841 आब्रह्मेत्यादिना॥ १३॥
46842
46843 सर्वं च खल्विदं ब्रह्म नित्यं चिद्घनमक्षतम्।
46844 कल्पनान्या मनोनाम्नी विद्यते नहि काचन॥ १४॥
46845
46846 न जायते न म्रियते किंचिदत्र जगत्त्रये।
46847 न च भावविकाराणां सत्ता क्वचन विद्यते॥ १५॥
46848
46849 केवलं केवलाभासं सर्वसामान्यमक्षतम्।
46850 चेत्यानुपातरहितं चिन्मात्रमिह विद्यते॥ १६॥
46851
46852 सर्वसामान्यं सर्वानुगतसद्रूपम्॥ १६॥

प्। ३९४) २३३

तस्मिन्नित्ये तते शुद्धे चिन्मात्रे निरुपद्रवे ।
शान्ते समसमाभोगे निर्विकारोदितात्मनि ॥ १७ ॥

यैषा स्वभावातिगतं स्वयं संकल्प्य धावति ।
चिच्चैत्यं स्वयमाम्लाना सा म्लाना तन्मनः स्मृतम् ॥ १८ ॥

तस्मिन्नात्मनि यैषा आम्लाना सावरणा चित् स्वभावातिगतं चित्स्वभावविरुद्धं
जाड्यपरिच्छेदादिस्वभावं चेत्यं स्वयं संकल्प्य धावति सा विक्षेपम्लाना
तत्प्रसिद्धं मनः स्मृतमित्यर्थः ॥ १८ ॥

एतस्मात्सर्वगाद्देवात्सर्वशक्तेर्महात्मनः ।
विभागकलनाशक्तिर्लहरीवोत्थिताम्भसः ॥ १९ ॥

एतस्मान्मनोदेवात् ॥ १९ ॥

एकस्मिन्वितते शान्ते या न किंचन विद्यते ।
संकल्पमात्रेण गता सा सिद्धिं परमात्मनि ॥ २० ॥

या संसृतिः ॥ २० ॥

अतः संकल्पसिद्धेयं संकल्पेनैव नश्यति ।
येनैव जाता [जायते तेन इति पाठः] तेनैव वह्निज्वालेव वायुना ॥ २१
। ।

वायुनेति । वायोरग्निः इति श्रुतेरिति भावः ॥ २१ ॥

पौरुषोद्योगसिद्धेन भोगाशा रूपतां गता ।
असंकल्पनमात्रेण साविद्या प्रविलीयते ॥ २२ ॥

निदिध्यासनपरिपाकपौरुषोद्योगात्सिद्धेन साक्षात्कारप्रतिष्ठितेन
असंकल्पनमात्रेण ॥ २२ ॥

नाहं ब्रह्मेति संकल्पात्सुदृढाद्बध्यते मनः ।
सर्वं ब्रह्मेति संकल्पात्सुदृढान्मुच्यते मनः ॥ २३ ॥

तथाच बन्धमोक्षावपि मनोधर्मविव नात्मधर्मावित्याह - नाहमिति ॥
२३ ॥

संकल्पः परमो बन्धस्त्वसंकल्पो विमुक्तता ।
संकल्पं संविजित्यान्तर्यथेच्छसि तथा कुरु ॥ २४ ॥

नाहं ब्रह्मेति संकल्पं सर्वं ब्रह्मेति विरोधिसंकल्पप्रतिष्ठितज्ञानेन
संविजित्येत्यर्थः ॥ २४ ॥

दृढा न याम्बरेऽत्रास्ति नलिनी हेमपङ्कजा ।
लोलवैदूर्यमधुपा सुगन्धितदिगन्तरा ॥ २५ ॥

अत्राम्बरे या नास्ति सा नलिनीव बालेन मनःस्वार्थो मनोरथस्तेन विलासार्थं
यथा दृढा कल्प्यते तथैवेयं द्विविधाप्यविद्या इत्थं

46905 विकल्पजालिकेवासत्येवापि सत्समा बालेन मूढजनेन न सुखाय
46906 अत्यन्तदुःखायैव दृढा कलिता कल्पितेति चतुर्थेनान्वयः। नलिनीविशेषणानि
46907 स्पष्टानि॥ २५॥
46908
46909 उद्दण्डैः प्रकटाभोगैर्मृणालभुजमण्डलैः।
46910 विहसन्ती प्रकाशस्य शशिनो रश्मिमण्डलम्॥ २६॥
46911
46912 विकल्पजालिकेवेत्थमसत्येवापि सत्समा।
46913 मनःस्वार्थविलासार्थं यथा बालेन कल्प्यते॥ २७॥
46914
46915 तथैवेयमविद्येह भवबन्धनबन्धनी।
46916 चपला न सुखायैव बालेन कलिता दृढा॥ २८॥
46917
46918 कृशोऽति दुःखी बद्धोऽहं हस्तपादादिमानहम्।
46919 इति भावानुरूपेण व्यवहारेण बध्यते॥ २९॥
46920
46921 बन्धकल्पनाभेदान्प्रपञ्चयति - कृश इति॥ २९॥
46922
46923 नाहं दुःखी न मे देहो बन्धः कस्यात्मनः स्थितः।
46924 इति भावानुरूपेण व्यवहारेण मुच्यते॥ ३०॥
46925
46926 नाहं मांसं न चास्थीनि देहादन्यः परो ह्यहम्।
46927 इति निश्चयवानन्तः क्षीणाविद्य इहोच्यते॥ ३१॥
46928
46929 तन्मोक्षोपायकल्पनां दर्शयति - नाहमिति॥ ३०॥ ३१॥
46930
46931 प्रोत्तुङ्गसुरशैलाग्रवैदूर्यशिखरप्रभा।
46932 अथवार्कांशुदुर्भेदा तिमिरश्रीः स्थितोपरि॥ ३२॥
46933
46934 अविद्यादिकल्पनाया दृष्टान्तान्तरमाह - प्रोत्तुङ्गेत्यादिना। वैदूर्यं
46935 नीलमणिविशेषस्तन्मयशिखरस्य प्रभा परितः प्रसृता व्योम्नः कालिमेति
46936 योगभाष्यकारमतेनोक्तम्। ज्यौतिषिकमतेनाप्याह - अथवेति।
46937 दूरत्वादर्कांशुमिर्दुर्भेदा निरसितुमशक्या
46938 ब्रह्माण्डखर्परसंनिहितप्राग्वर्णिततिमिरस्य श्रीः कान्तिरेव व्योम्नः
46939 कालिमेति यथा धरणिसंस्थेन पुंसा कल्प्यते एवमियमविद्या इद्धया
46940 स्वसंकल्पनया कल्पितेत्यर्थः॥ ३२॥
46941
46942 कल्प्यते हि यथा व्योम्नः कालिमेति स्वभावतः।
46943 पुंसा धरणिसंस्थेन स्वसंकल्पनयेद्धया॥ ३३॥
46944
46945 कल्पितैवमविद्येयमनात्मन्यात्मभावना।
46946 पुरुषेणाप्रबुद्धेन न प्रबुद्धेन राघव॥ ३४॥
46947
46948 श्रीराम उवाच।
46949
46950 मेरुनीलमणिच्छाया नेयं नापि तमःप्रभा।
46951 तदेतत्किंकृतं ब्रह्मन्नीलत्वं नभसो वद॥ ३५॥
46952
46953 नीलमणि प्रभात्वे शरन्मेघनीरपटलादिष्वपि नीलिमप्रतिभासापत्तेरुत्तरतो
46954 नैल्याधिक्यप्रतीत्यापत्तेर्मेरोः पद्मरागादिमणिमयशृङ्गप्रभया
46955 रक्तिमादिप्रतिभासस्याप्यवर्जनाद्विनिगमकाभावान्न योगिकल्पना युक्तिमती।
46956 ब्रह्माण्डोर्ध्वाधःखर्परयोः स्वर्णरजतमयत्वात्

46957 तदण्डमभवद्धैमं सहस्रार्कसमद्युति इति पुराणेषु ब्रह्माण्डस्य
46958 महाप्रकाशताश्रवणादूर्ध्वोर्ध्वं
46959 सत्यलोकादिलोकैर्भास्वरतरतमैर्व्याप्तत्वादाब्रह्माण्डखर्परमसति
46960 व्यवधाने आदित्यरश्मिव्याप्तेर्दुर्वारत्वान्मध्ये
46961 तिमिरासंभवादतिदूरपातिनामादित्यरश्मीनामगम्येदूरतमे देशे
46962 अस्मदादिचक्षुःप्रसरकल्पनाया असंभावनीयत्वान्निशि नक्षत्रादिदर्शने
46963 तमसो व्यवधायकत्वादर्शनाद्ब्रह्माण्डखर्परस्यापि
46964 दर्शनापत्तेरान्तरालिकसत्यादिलोकविमानादिदर्शनावर्जनप्रसङ्गाच्च न
46965 ज्यौतिषिककल्पनापि युक्तेति मन्यमानो रामस्तत्पक्षावाक्षिप्य नभोनैल्यतत्त्वं
46966 पृच्छति - मेर्विति ॥ ३५ ॥
46967
46968 श्रीवसिष्ठ उवाच।
46969
46970 न नाम नीलता व्योम्नः शून्यस्य गुणवत्स्थिता।
46971 अन्यरत्नप्रभाभावान्न वाप्येषा च मैरवी ॥ ३६ ॥
46972
46973 रामाभिप्रेतयुक्तीरेवानूद्य दर्शयन्वसिष्ठः पक्षद्वयासंभवं
46974 स्वयमपि दर्शयति - नेति। अन्येषां पद्मरागादिरत्नानां प्रभाया
46975 अभावात्तद्वन्मैरवी मेरुसंबन्धिनी नीलमणिप्रभापि नेत्यर्थः ॥ ३६ ॥
46976
46977 तेजोमयत्वादण्डस्य स्फारत्वादिव तेजसः।
46978 प्राकाश्यादण्डपारस्य तमसो नात्र संभवः ॥ ३७ ॥
46979
46980 प्रथमपक्षं निरस्य द्वितीयं निरस्यति - तेजोमयत्वादिति।
46981 इवशब्दोऽनर्थकः प्रसिद्धिद्योतको वा। प्राकाश्यात्सर्वतः प्रकाशव्याप्तत्वात्।
46982 अण्डपारस्य अण्डान्तर्वर्तिनभःपारस्य ॥ ३७ ॥
46983
46984 प्। ३९५) २३३
46985
46986 केवलं शून्यतैवैषां वह्नि सुभग लक्ष्यते।
46987 वयस्येवानुरूपा या अविद्याया असन्मयी ॥ ३८ ॥
46988
46989 एवं पक्षद्वयमनूद्य सिद्धान्तमाह - केवलमिति। बह्वी विपुला। अविद्याया
46990 अनुरूपा वयस्या सखीव या लक्ष्यते ॥ ३८ ॥
46991
46992 स्वदृष्टिक्षयसंपत्तावक्ष्णोरेवोदितं तमः।
46993 वस्तुस्वभावात्तद्व्योम्नः कार्ष्ण्यमित्यवलोक्यते ॥ ३९ ॥
46994
46995 अक्ष्णोरेव स्वदृष्टेः स्वीयदर्शनशक्तेः क्षयस्य दूरे कुण्ठीभावस्य
46996 संपत्तौ सत्यां यद्वस्तु स्वभावात्तमोऽदर्शनमुदितं तद्व्योम्नः कार्ष्ण्यं
46997 नैल्यमित्यवलोक्यत इत्यर्थः ॥ ३९ ॥
46998
46999 एतद्बुद्ध्वा यथा व्योम्नि दृश्यमानोऽपि कालिमा।
47000 न कालिमेति बुद्धिः स्यादविद्यातिमिरं तथा ॥ ४० ॥
47001
47002 एतत् निदर्शनम्। तथेति बुद्ध्यस्वेति शेषः ॥ ४० ॥
47003
47004 असंकल्पो ह्यविद्याया निग्रहः कथितो बुधैः।
47005 यथा गगनपद्मिन्याः स भाति सुकरः स्वयम् ॥ ४१ ॥
47006
47007 प्रासङ्गिकं समाधाय प्रकृतमनुसंधत्ते - असंकल्प इत्यादिना। सः
47008 असंकल्पः सुकरो भाति न दुष्कर इत्यर्थः ॥ ४१ ॥

47009
47010 भ्रमस्य जागतस्यास्य जातस्याकाशवर्णवत् |
47011 अपुनःस्मरणं मन्ये साधो विस्मरणं वरम् || ४२ ||
47012
47013 एतदेवाभिप्रेत्य प्राक्प्रतिज्ञातमित्याह - भ्रमस्येति || ४२ ||
47014
47015 नष्टोऽहमिति संकल्पाद्यथा दुःखेन नश्यति |
47016 प्रबुद्धोऽस्मीति संकल्पाज्जनो ह्येति यथा सुखम् || ४३ ||
47017
47018 दुःखेन नश्यति स्वप्ने | प्रबुद्धो जाग्रदस्मीति संकल्पात्सुखं
47019 स्वाप्नदुःखापगमम् || ४३ ||
47020
47021 तथा संमूढसंकल्पान्मूढतामेति वै मनः |
47022 प्रबोधोदारसंकल्पात्प्रबोधायानुधावति || ४४ ||
47023
47024 प्रबोधाय बोधैकरसब्रह्मभावाय || ४४ ||
47025
47026 क्षणात्संस्मरणादेषा ह्यविद्योदेति शाश्वती |
47027 यस्माद्विस्मरणादन्तः परिणश्यति नश्वरी || ४५ ||
47028
47029 संस्मरणादज्ञोऽस्मीति संकल्पनात् | शाश्वतीति अनाद्यविद्यावत्तदनादितापि
47030 तत्प्रतीतिक्षणकल्पितैवेति न नित्यमुक्तत्वविरोध इति सूचनाय |
47031 विस्मरणात्संकल्पवासनामूलोच्छेदान्नश्वरी नित्यनष्टा || ४५ ||
47032
47033 भावनी सर्वभावानां सर्वभूतविमोहिनी |
47034 भारिणी स्वात्मनो नाशे स्वात्मवृद्धौ विनाशिनी || ४६ ||
47035
47036 स्वात्मनो नाशे अदर्शने भारिणी गुरुतरा | वृद्धिशीलेति यावत् | स्वात्मनो
47037 वृद्धौ अपरिच्छिन्नस्वरूपावाप्तौ || ४६ ||
47038
47039 मनो यदनुसंधत्ते तत्सर्वेन्द्रियवृत्तयः |
47040 क्षणात्संपादयन्त्येता राजाज्ञामिव मन्त्रिणः || ४७ ||
47041
47042 मनसो निरोधेऽपि कथमिन्द्रियैर्वासनोद्भवो न स्यात्तत्राह - मन इति || ४७ ||
47043
47044 तस्मान्मनोनुसंधानं भावेषु न करोति यः |
47045 अन्तश्चेतनयत्नेन स शान्तिमधिगच्छति || ४८ ||
47046
47047 अन्तश्चेतनयत्नो ब्रह्माहंभावना || ४८ ||
47048
47049 यदादावेव नास्तीदं तदद्यापि न विद्यते |
47050 यदिदं भाति तद्ब्रह्म शान्तमेकमनिन्दितम् || ४९ ||
47051
47052 तमेवान्तश्चेतनयत्नप्रकारं दर्शयति - यदित्यादिना || ४९ ||
47053
47054 मननीयमतो नान्यत्कदा कस्य कथं कुतः |
47055 निर्विकारमनाद्यन्तमास्यतामपयन्त्रणम् || ५० ||
47056
47057 अतो ब्रह्मणोऽन्यन्नास्ति | चतुर्भिः किंवृत्तैः कालसंबन्धिप्रकारनिमित्तानि
47058 व्युदस्यन्ते | अपयन्त्रणमपगतसंकोचं पूर्णतयेति यावत् || ५० ||
47059
47060 परं पौरुषमाश्रित्य यत्नात्परमया धिया |

47061 भोगाशाभावनां चित्तात्समूलामलमुद्धरेत् ॥ ५१ ॥
47062
47063 यदुदेति परो मोहो जरामरणकारणम् ।
47064 आशापाशशतोल्लासिवासना तद्विजृम्भते ॥ ५२ ॥
47065
47066 परो मोहः स्वाज्ञानं तदेव जरामरणादिकारणे । यद्यत्कार्यात्मना उदेति
47067 तत्सर्वं वासनैव विजृम्भते न वस्तुसदित्यर्थः ॥ ५२ ॥
47068
47069 मम पुत्रा मम धनमयं सोऽहमिदं मम ।
47070 इतीयमिन्द्रजालेन वासनैव विवल्गति ॥ ५३ ॥
47071
47072 शून्ये एव शरीरेऽस्मिन्विलोलो जलवातवत् ।
47073 अनन्यया वासनया त्वहंभावाहिरर्पितः ॥ ५४ ॥
47074
47075 यथा जले वातेन तरङ्गाहिः कल्पितस्तथा वासनया आत्मनि
47076 अहंभावलक्षणोऽहिः कल्पितः ॥ ५४ ॥
47077
47078 परमार्थेन तत्त्वज्ञ ममाहमिदमित्यलम् ।
47079 आत्मतत्त्वादृते सत्यं न कदाचन किंचन ॥ ५५ ॥
47080
47081 हे तत्त्वज्ञ विवेकिन् परमार्थेन दर्शनेन मम अहमिति द्वयम्पि अलम् ।
47082 नास्त्येवेत्यर्थः ॥ ५५ ॥
47083
47084 खाद्रिद्यूर्वीनदिश्रेण्यो दृष्टिसृष्ट्या पुनः पुनः ।
47085 सैवान्येव विचित्रेयमविद्या परिवर्तते ॥ ५६ ॥
47086
47087 खं च अद्रयश्च द्यौश्च उर्वी च नदीश्रेण्यश्चेति द्वन्द्वः ।
47088 दृष्टिसमकालया सृष्ट्या । जीवन्मुक्तानां दृष्ट्या
47089 दृष्टिसृष्टिवादस्यैव शास्त्रे प्रतिष्ठापनादिति भावः ॥ ५६ ॥
47090
47091 उदेत्यज्ञानमात्रेण नश्यति ज्ञानमात्रतः ।
47092 सन्मात्रे परिविच्छेद्या रज्ज्वामिव भुजंगधीः ॥ ५७ ॥
47093
47094 परितो विच्छेद्या त्रिविधपरिच्छेदवती ॥ ५७ ॥
47095
47096 खाद्यब्ध्युर्वीनदी सेयं याऽविद्याऽज्ञस्य राघव ।
47097 नाविद्या ज्ञस्य तद्ब्रह्म स्वमहिम्ना व्यवस्थितम् ॥ ५८ ॥
47098
47099 खाद्रीत्यादिसमाहारद्वन्द्वः । आर्षं स्त्रीत्वम् । इयं या अविद्या सा अज्ञस्य ।
47100 ज्ञस्य अविद्या नास्ति । तत् खादि ब्रह्मैवेत्यर्थः ॥ ५८ ॥
47101
47102 रज्जुसर्पविकल्पौ द्वावज्ञेनैवोपकल्पितौ ।
47103 ज्ञेन त्वेकैव निर्णीता ब्रह्मदृष्टिरकृत्रिमा ॥ ५९ ॥
47104
47105 द्वौ व्यावहारिकप्रातिभासिको विकल्पौ । अकृत्रिमा स्वतःसिद्धा ॥ ५९ ॥
47106
47107 मा भवाज्ञो भव प्राज्ञो जहि संसारवासनाम् ।
47108 अनात्मन्यात्मभावेन किमज्ञ इव रोदिषि ॥ ६० ॥
47109
47110 कस्तवायं जडो मूको देहो भवति राघव ।
47111 यदर्थं सुखदुःखाभ्यामवशः परिभूयसे ॥ ६१ ॥
47112

अनात्मनि देहे आत्मताभ्रान्तिरेव सर्वदुःखनिदानमिति प्रथमं तां वारयति
- क इति | जडत्वादेव मूको वागाद्यनधिष्ठाता || ६१ ||

प। ३९६) २३४

यथा हि काष्ठजतुनोर्यथा बदरकुण्डयोः |
श्लिष्टयोरपि नैकत्वं देहदेहवतोस्तथा || ६२ ||

जतु लाक्षा |
श्लिष्टयोरपीत्यपिशब्दादत्यन्तासंश्लिष्टयोरध्यस्तासङ्गयोर्दूरनिरस्तमेकत्
वमिति द्योत्यते || ६२ ||

भस्त्रादाहे यथा दाहो न भस्त्रान्तरवर्तिनः |
पवनस्य तथा देहनाशे नात्मा न नश्यति || ६३ ||

विदेहत्वादेवात्मनो जन्ममरणादिसंभावनापि नास्तीत्याह - भस्त्रेति || ६३ ||

दुःखितोऽहं सुखाढ्योऽहमिति भ्रान्तिं रघूद्वह |
मृगतृष्णोपमां बुद्ध्वा त्यज सत्यं समाश्रय || ६४ ||

अहो नु चित्रं यत्सत्यं ब्रह्म तद्विस्मृतं नृणाम् |
यदसत्यमविद्याख्यं तन्नूनं स्मृतिमागतम् || ६५ ||

प्रसरं त्वमविद्याया मा प्रयच्छ रधूद्वह |
अनयोपहिते चित्ते दुष्पारेह कदर्थना || ६६ ||

अविद्याया आत्मविस्मृतेः | अदर्थना दुरुक्तिः | दुष्पारा दुरुत्तरा || ६६ ||

मथ्यैवानर्थकारिण्या मनोमननपीनया |
अनया दुःखदायिन्या महामोहफलान्तया || ६७ ||

अविद्याया असंभावितानर्थसहस्रकारितां प्रपञ्चयति - मिथ्यैवेत्यादिना |
अनया चन्द्रबिम्बेऽपि दाहसंशोषदुःखं समनुभूयते इति परेणान्वयः || ६७
| |

चन्द्रबिम्बे सुधार्द्रेऽपि कृत्वा रौरवकल्पनम् |
नारकं दाहसंशोषदुःखं समनुभूयते || ६८ ||

जलकल्लोलकह्लारपुष्पसीकरवीचिषु |
सरस्सु मृगतृष्णाढ्यं मरुत्त्वं परिदृश्यते || ६९ ||

अनयेत्येतदत्रोत्तरश्लोके चानुषज्जते || ६९ ||

नभोनगरनिर्माणपातोत्पातनसंभ्रमाः |
स्वप्नादिष्वनुभूयन्ते विचित्राः सुखदुःखदाः || ७० ||

संसारवासनाश्चेतो यदि नाम न पूरयेत् |
तज्जाग्रत्स्वप्नसंरम्भाः किं नयेयुरिहापदम् || ७१ ||

न पूरयेत् इयमिति शेषः | तत्तर्हि | नयेयुरात्मानमिति शेषः || ७१ ||

दृश्यते रौरवा वीचिनरकानर्थशासना |

मिथ्याज्ञाने गते वृद्धिं स्वप्नोपवनभूमिषु ॥ ७२ ॥

शासना यातना । मिथ्याज्ञाने वृद्धिं गते सति ॥ ७२ ॥

अनया वेधितं चेतो बिसतन्तावपि क्षणात् ।
पश्यत्यखिलसंसारसागरानर्थविभ्रमम् ॥ ७३ ॥

अनयोपहते चित्ते राज्य एव हि संस्थिताः ।
तास्तादृश्यो जना यान्ति या न योग्याः श्वपाकिनः ॥ ७४ ॥

न योग्याः नोचिताः ॥ ७४ ॥

तस्माद्राम परित्यज्य वासनां भवबन्धनीम् ।
सर्वरागमयीं तिष्ठ नीरागः स्फटिको यथा ॥ ७५ ॥

सर्वरागः सर्वद्वैताकाररञ्जनं तन्मयीम् ॥ ७५ ॥

तिष्ठतस्तव कार्येषु मास्तु रागेषु रञ्जना ।
स्फटिकस्येव चित्राणि प्रतिबिम्बानि गृह्णतः ॥ ७६ ॥

कार्येषु व्यवहारेषु । रागेषु रक्तिविषयेषु । रञ्जना आसक्तिः ॥ ७६ ॥

विदितकौतुकसङ्गसमिद्धया [१]
यदि करोषि सदैव सुशीलया ।
वरधिया गतप्राकृतिकक्रिय-
स्तदसि केन सहानुपमीयसे ॥ ७७ ॥

विदितं निरतिशयानन्दरूपत्वात्परमकौतुकं ब्रह्म यैस्ते
विदितकौतुकास्तत्त्वविदस्तेषां सङ्गे समाजे पुनःपुनर्विचारेण समिद्धया
दृढतरब्रह्माहंभावनिश्चयप्रदीप्तया अत एव सर्वत्र
समदर्शान्दिसुशीलया वरधिया अनासङ्गबुद्ध्या यदि करोषि सदा व्यवहरसि
तत्तर्हि गता अपगताः प्राकृतिका अविद्याप्रयुक्ताः क्रिया
जन्ममरणादिविभ्रमा यस्य तथाविधोऽसि । नित्यमुक्तस्वरूपोऽसीति यावत् । तदा
केन जीवन्मुक्तेन महाप्रभावेण ब्रह्मणा हरिणा हरेण वा सह अनुपमीयसे
नोपमां गच्छसि । नञस्तिङन्तेन समासश्छान्दसः । अनुपम आत्मा इष्यसे
इति क्यचि कर्मणि अनुपम इवाचरसीति क्यङि वा च्छान्दसेनेत्वेन कथंचिद्योज्यम्
। महानुपमीयसे इति पाठास्तु ऋजुः । संयुक्तात्पूर्वं गुरु रहसंयुक्ताद्वेति
च्छन्दःशिक्षावचनाद्गतप्राकृतिक इत्यत्र न वृत्तभङ्गः शङ्क्यः ॥ ७७
॥

इत्यार्षे श्रीवासिष्ठमहारामायणे मोक्षोपाये उत्पत्तिप्रकरणे
यथाकथितदोषपरिहारोपदेशो नाम चतुर्दशोत्तरशततमः सर्गः ॥
११४ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
यथाकथितदोषपरिहारोपदेशो नाम चतुर्दशोत्तरशततमः सर्गः ॥ ११४ ॥

पञ्चदशोत्तरशततमः सर्गः ११५

श्रीवाल्मीकिरुवाच ।

47217 एवमुक्तो भगवता वसिष्ठेन महात्मना |
47218 रामः कमलपत्राक्ष उन्मीलित इवाबभौ || १ ||
47219
47220 रामस्य बोधादाश्चर्यं मायातन्नाशसंस्थितिः |
47221 लवणापन्निदानं च पृष्टमत्र प्रकीर्त्यते || १ ||
47222
47223 उन्मीलितो विकासितः | अर्थात्पद्म इवेति गम्यते || १ ||
47224
47225 विकासितान्तःकरणः शोभामलमुपाययौ |
47226 आश्वस्तस्तमसि क्षीणे पद्मोऽर्कालोकनादिव || २ ||
47227
47228 तदेव स्पष्टमाह - विकासितेति | आश्वस्तः समाधानतोषितः || २ ||
47229
47230 बोधविस्मयसंजातसौम्यस्मितसिताननः |
47231 दन्तरश्मिसुधाधौतामिमां वाचमुवाच ह || ३ ||
47232
47233 बोधप्रयुक्तविस्मयात्संजातेन सौम्येन स्मितेन सितं धवलितमाननं यस्य ||
47234 ३ ||
47235
47236 श्रीराम उवाच |
47237
47238 अहो नु चित्रं पद्मोत्थैर्बद्धास्तन्तुभिरद्रयः |
47239 अविद्यमाना या विद्या तया सर्वे वशीकृताः || ४ ||
47240
47241 अविद्यमाना अत्यन्तासती या तया || ४ ||
47242
47243 प्। ३९७) २३४
47244
47245 इदं तद्वज्रतां यातं तृणमात्रं जगत्त्रये |
47246 अविद्ययापि यन्नामासदेव सदिव स्थितम् || ५ ||
47247
47248 इदं दृश्यमानं तत् प्रसिद्धं संसारदुःखमविद्ययोपादानभूतयापि
47249 [पाधिभूतयेति इति पाठः] | नामेति किलार्थे || ५ ||
47250
47251 अस्याः संसारमायाया नद्यास्त्रिभुवनाङ्गणे |
47252 रूपं मदवबोधार्थं कथयानुग्रहात्पुनः || ६ ||
47253
47254 नद्या इव प्रवाहवत्याः संसारनिदानभूताया मायायाः | मदवबोधार्थं
47255 ममावबोधदार्ढ्यार्थं पुनः कथय || ६ ||
47256
47257 अन्यो यत्संशयोऽयं मे महात्मन्हृदि वर्तते |
47258 लवणोऽसौ महाभागः किं नामापदमाप्तवान् || ७ ||
47259
47260 किं कस्मान्निमित्तात् | नामेति किलार्थे || ७ ||
47261
47262 संश्लिष्टयोराहतयोर्द्वयोर्वा देहदेहिनोः |
47263 ब्रह्मन्क इव संसारी शुभाशुभफलैकभाक् || ८ ||
47264
47265 तृतीयं पृच्छति - संश्लिष्टयोरिति |
47266 जतुकाष्ठवत्संश्लिष्टयोर्मल्लमेषवत्परस्पराहतयोर्वा देहदेहिनोर्मध्ये
47267 कः शुभाशुभकर्मफल्योरेकभाक् | मुख्यो भोक्तेत्यर्थः || ८ ||
47268

47269 लवणस्य तथा दत्त्वा तामापदमनुत्तमाम् |
47270 किं गतश्चञ्चलारम्भः कश्चासावैन्द्रजालिकः || ९ ||
47271
47272 चतुर्थः प्रश्नः स्पष्टः || ९ ||
47273
47274 श्रीवसिष्ठ उवाच |
47275
47276 काष्ठकुड्योपमो देहो न किंचन इहानघ |
47277 स्वप्नालोक इवानेन चेतसा परिकल्प्यते || १० ||
47278
47279 एवं पृष्टो वसिष्ठो विवेकदार्ढ्यहेतुत्वप्रकर्षात्तृतीयं प्रश्नं
47280 प्रथमं समादधानोऽर्थात्प्रथममपि समाधत्ते - काष्ठेत्यादिना | न
47281 किंचन वस्तुसदित्यर्थः | तथाचाचेतनत्वादसत्त्वाच्च न देहस्य
47282 कर्मफलभोक्तृताप्रसक्तिरित्यर्थः || १० ||
47283
47284 चेतस्तु जीवतां यातं चिच्छक्तिपरिभूषितम् |
47285 विद्यात्संसारसंरम्भं कपिपोतकचञ्चलम् || ११ ||
47286
47287 किं तर्हि भोक्तृ तदाह - चेतस्त्विति | तस्य जाड्यदोषं परिहरति -
47288 चिच्छक्तीति | चिदाभासतादात्म्यापन्नमित्यर्थः | संसारे भोक्तृत्वे
47289 संरम्भोऽभिनिवेशो यस्य तत् || ११ ||
47290
47291 देही हि कर्मभाग्यो हि नानाकारशरीरधृक् |
47292 अहंकारमनोजीवनामभिः परिकल्प्यते || १२ ||
47293
47294 तदेव जीव इत्याह - देहीति || १२ ||
47295
47296 तस्येमान्यप्रबुद्धस्य न प्रबुद्धस्य राघव |
47297 सुखदुःखान्यनन्तानि शरीरस्य न कानिचित् || १३ ||
47298
47299 अप्रबुद्धं मनो नानासंज्ञाकल्पितकल्पनम् |
47300 वृतीरनुपतच्चित्रा विचित्राकृतितां गतम् || १४ ||
47301
47302 नानावृत्तीरनुपतदिति नामभेदे निमित्तोक्तिः || १४ ||
47303
47304 अप्रबुद्धं मनो यावन्निद्रितं तावदेव हि |
47305 संभ्रमं पश्यति स्वप्ने न प्रबुद्धं कदाचन || १५ ||
47306
47307 तस्य चाप्रबोधो निमित्तमित्याह - अग्रबुद्धमिति || १५ ||
47308
47309 अज्ञाननिद्राक्षुभितो जीवो यावन्न बोधितः |
47310 तावत्पश्यति दुर्भेदं संसारारम्भविभ्रमम् || १६ ||
47311
47312 संप्रबुद्धस्य मनसस्तमः सर्वं विलीयते |
47313 कमलस्य यथा हार्दं दिनालोकविकासिनः || १७ ||
47314
47315 हार्दं हृदयस्थम् || १७ ||
47316
47317 चित्ताविद्यामनोजीववासनेति कृतात्मभिः |
47318 कर्मात्मेति च यः प्रोक्तः स देही दुःखकोविदः || १८ ||
47319
47320 दुःखस्य कोविदो भोक्ता || १८ ||

47321
47322 जडो देहो न दुःखार्हो दुःखी देह्यविचारतः ।
47323 अविचारो घनाज्ञानादज्ञानं दुःखकारणम् ॥ १९ ॥
47324
47325 शुभाशुभानां धर्माणां जीवो विषयतां गतः ।
47326 अविवेकैकदोषेण कोशेनेव हि कीटकः ॥ २० ॥
47327
47328 कीटकः कौशेयकोशकाराख्यः ॥ २० ॥
47329
47330 अविवेकामयोन्नद्धं मनो विविधवृत्तिमत् ।
47331 नानाकारविहारेण परिभ्रमति चक्रवत् ॥ २१ ॥
47332
47333 अविवेकलक्षणेनामयेन रोगेणोन्नद्धं बद्धम् ॥ २१ ॥
47334
47335 उदेति रौति हन्त्यत्ति याति वल्गति निन्दै ।
47336 मन एव शरीरेऽस्मिन्न शरीरं कदाचन ॥ २२ ॥
47337
47338 भ्रमणमेव प्रपञ्चयति - उदेतीति ॥ २२ ॥
47339
47340 यथा गृहपतिर्गेहे विविधं हि विचेष्टते ।
47341 न गृहं तु जडं राम तथा देहे हि जीवकः ॥ २३ ॥
47342
47343 सर्वेषु सुखदुःखेषु सर्वासु कलनासु च ।
47344 मनः कर्तृ मनो भोक्तृ मानसं विद्धि मानवम् ॥ २४ ॥
47345
47346 मानवं जीवम् ॥ २४ ॥
47347
47348 अत्र ते श‍ृणु वक्ष्यामि वृत्तान्तमिममुत्तमम् ।
47349 लवणोऽसौ यथा यातश्चण्डालत्वं मनोभ्रमात् ॥ २५ ॥
47350
47351 तदुपपादकत्वे द्वितीयप्रश्नोत्तरमवतारयति - अत्रेति ॥ २५ ॥
47352
47353 मनः कर्मफलं भुङ्क्ते शुभं वाऽशुभमेव वा ।
47354 यथैतद्बुद्ध्यसे नूनं तथाकर्णय राघव ॥ २६ ॥
47355
47356 हरिश्चन्द्रकुलोत्थेन लवणेन पुरानघ ।
47357 एकं [एकान्तेनेति इति पाठः] तेनोपविष्टेन चिन्तितं मनसा चिरम् ॥
47358 २७ ॥
47359
47360 पितामहो मे सुमहान्राजसूयस्य याजकः ।
47361 अहं तस्य कुले जातस्तं यजे मनसा मखम् ॥ २८ ॥
47362
47363 बाह्यसंभारासामर्थ्याद्राजादिपीडानिमित्ते राजसूये
47364 मन्त्रिपुरोहिताद्यसंमतेर्वा मनसा यज्ञकल्पनमिति बोध्यम् ॥ २८ ॥
47365
47366 इति संचिन्त्य मनसा कृत्वा संभारमादृतः ।
47367 राजसूयस्य दीक्षायां प्रविवेश महीपतिः ॥ २९ ॥
47368
47369 ऋत्विजश्चाह्वयामास पूजयामास सन्मुनीन् ।
47370 देवानामन्त्रयामास ज्वालयामास पावकम् ॥ ३० ॥
47371
47372 यथेच्छं यजमानस्य मनसोपवनान्तरे ।

ययौ संवत्सरः साग्रो देवर्षिद्विजपूजया ॥ ३१ ॥

भूतेभ्यो द्विजपूर्वेभ्यो दत्त्वा सर्वस्वदक्षिणाम् ।
विबुध्यत दिनस्यान्ते स्व एवोपवने नृपः ॥ ३२ ॥

विबुध्यत बाह्यदृष्टिं प्रापेत्यर्थः । अडभावश्छान्दसः । स्वे स्वीये ॥ ३२ ॥

प्। ३९८) २३५

एवं स लवणो राजा राजसूयमवाप्तवान् ।
मनसैव हि तुष्टेन युक्तं तस्य फलेन च ॥ ३३ ॥

तस्य फलेन युक्तं भवितुमिति शेषः ॥ ३३ ॥

अतश्चित्तं नरं विद्धि भोक्तारं सुखदुःखयोः ।
तन्मनः पावनोपाये सत्ये योजय राघव ॥ ३४ ॥

तत्तस्मात्कारणान्मनसः पावने विशोधने उपाये विचारनिरोधादौ । मन एव
क्रियाशक्तिप्राधान्येन कर्तृ करणं क्रिया च । सैव सुखदुःखफलात्मना
परिणता तत्फलं मन एव चिदाभासव्याप्त्या चिच्छक्तिप्राधान्येन भोक्तृ
भोगश्चेति कर्तृभोक्तृभावप्रवाह एव मायानद्याः
स्वरूपमित्यर्थात्प्रथमप्रश्नविषयोऽप्यनेन संदर्भेण संदर्शितो बोध्यः
। चतुर्थप्रश्नं तूत्तरसर्गे समाधास्यति ॥ ३४ ॥

पूर्णे देशे सुसंपूर्णः पुमान्नष्टे विनश्यति ।
देहोऽहमिति येषां तु निश्चयस्तैरलं बुधाः ॥ ३५ ॥

एवं रामं समाधाय देवादीन्सभ्यान्प्रति विस्तरेण वर्णितमर्थं
पिण्डीकृत्याह - पूर्णे इति । हे बुधाः अयं मनोरूपः पुमान्पूर्णे
कालादिपरिच्छेदशून्ये दिशति स्वात्माकारं ददातीति देश आलम्बनं तत्र
प्रतिष्ठितः सम्पूर्णो भवति । नष्टे नित्यनश्वरे परिच्छिन्ने देहादिदेशे
प्रतिष्ठितस्तु तद्भावप्राप्त्या विनश्यति । अतो देहोऽहमिति येषां
नश्वराहंभावनिश्चयस्तैरलम् । प्रयोजनं नास्तीत्यर्थः ॥ ३५ ॥

उच्चैर्विवेकवति चेतसि संप्रबुद्धे
दुःखान्यलं विगलितानि विविक्तबुद्धेः ।
भास्वत्करप्रकटिते ननु पद्मखण्डे
संकोचजाड्यतिमिराणि चिरं क्षतानि ॥ ३६ ॥

उपसंहरति - उच्चैरिति ।
शास्त्राचार्यपुरस्कृतसम्यग्विचारपरिपाकादुच्चैर्विवेकवति
निरूढसारासारविवेके चेतसि संप्रबुद्धे नास्म्यहं कदापि देहादिस्वभावः
किंतु पूर्णानन्दस्वप्रकाशैकरसं ब्रह्मैवाहमस्मीति सम्यक् प्रबुद्धे सति
विविक्ता वृत्तीद्धबोधेन बाधिता बुद्धिवृत्तिरपि येन तथाविधस्य
ब्रह्मीभूतस्याधिकारिणः सर्वदुःखानि अलं समूलं चिरं विगलितानि
कदाचिदपि न भवन्तीत्यर्थः । पद्मखण्डे भास्वतः सूर्यस्य करैः प्रकटिते
संकोचो मुकुलता जाड्यं तुहिनम्लानता तिमिरं कोशान्तर्बाह्यान्धकारश्च
चिरं यथा क्षतानि नष्टानि भवन्ति तद्वदित्यर्थः ॥ ३६ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० मो० उत्पत्तिप्रकरणे
सुखदुःखभोक्तृतोव्पदेशो नाम पञ्चदशोत्तरशततमः सर्गः ॥
११५ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
सुख्दुःखभोक्तत्वोपदेशो नाम पञ्चदशोत्तरशततमः सर्गः ॥ ११५ ॥

षोडशोत्तरशततमः सर्गः ११६

श्रीराम उवाच।

राजसूयफलं प्राप्तं लवणेन किल प्रभो।
प्रमाणं किमिवात्र स्यात्कल्पनाजालशम्बरे ॥ १ ॥

तुर्यप्रश्नसमाधाने वर्णितार्थनिदर्शनात्।
सोपोद्घातास्ततो योगभूमयोऽन्नावतारिताः ॥ १ ॥

चतुर्थप्रश्नस्योत्तरं जिज्ञासू रामस्तदुपोद्बलकं द्वितीयप्रश्नोत्तरे
प्रमाणं पृच्छति - राजसूयफलमिति। लवणेन राज्ञा
चण्डालभावादिकल्पनारूपे जालशम्बरे शाम्बरिकोपदर्शितमायाजाले
राजसूयप्रयुक्तमनिष्टफलं प्राप्तम्। किलेत्यैतिह्येन यदुक्तमत्रास्मिन्नर्थे
किमिव प्रमाणं स्यात्। इवशब्दस्तदसंभवद्योतनार्थः। न तावत्प्रत्यक्षम्।
मदीयमानसराजसूयस्येदं फलमिति लवणेन स्वतो ज्ञातुमशक्यत्वात्।
तद्व्याप्यलिङ्गानामप्यप्रसिद्धेस्तेनान्यैर्वा ज्ञातुमशक्या
तन्मूलशब्दस्य ह्यैतिह्यस्य वा तत्राप्रसरादित्यर्थः। कल्पनाजालमम्बरे इति
पाठे तु अम्बरे चित्ताकाशे कल्पनाजालात्मकं फलमित्यन्वयः ॥ १ ॥

श्रीवसिष्ठ उवाच।

यदा शाम्बरिकः काले संप्राप्तो लावणीं सभाम्।
तदाहमवसं तत्र तत्प्रत्यक्षेण दृष्टवान् ॥ २ ॥

यद्यप्यन्येषां तत्र प्रमाणाप्रसरस्तथापि योगबलात्स्वस्य तत्प्रत्यक्षमिति
तन्मूलैवान्येषां प्रसिद्धिरिति वसिष्ठः समाधत्ते - यदेत्यादिना ॥ २ ॥

अहं सभ्यैस्ततस्तत्र गते शाम्बरिकर्मणि।
किमेतदिति यत्नेन पृष्टश्च लवणेन च ॥ ३ ॥

शाम्बरमस्यास्तीति शाम्बरि तथाविधं कर्म चरित्रं यस्य तस्मिन्।
सभ्यैर्लवणेन च पृष्ठः ॥ ३ ॥

चिन्तयित्वा मया दृष्ट्वा तत्र तत्कथितं ततः।
शृणु तत्ते प्रवक्ष्यामि राम शाम्बरिकेहितम् ॥ ४ ॥

दृष्ट्वा। योगबलेनेति शेषः। प्रासङ्गिकं प्रश्नं समाधाय प्राक्तनं
चतुर्थप्रश्नसमाधानं प्रतिजानीते - शृण्विति।
शाम्बरिकस्येहितमभिप्रायम् ॥ ४ ॥

राजसूयस्य कर्तारो ये हि ते द्वादशाब्दिकम्।
आपदुःखं प्राप्नुवन्ति नानाकारव्यथामयम् ॥ ५ ॥

अतः शक्रेण गगनाद्दुःखाय लवणस्य सः।
प्रहितो देवदूतो हि राम शाम्बरिकाकृतिः ॥ ६ ॥

राजसूयक्रियाकर्तुस्तस्य दत्त्वा महापदम्।
अगच्छत्स नभोमार्गं सुरसिद्धनिषेवितम्॥ ७॥

महापदं शारीरराजसूयफलद्वादशाब्दिकापदपेक्षया पञ्चगुणां
षष्टिवर्षकल्पनात्मिकामित्यर्थः। अनेन मानसराजसूयादेः
स्वाराज्यादिसुखफलमपि शारीरापेक्षया पञ्चगुणमधिकमिति गम्यते॥ ७॥

तस्मात्प्रत्यक्षमेवैतद्राम नात्र संदेहोऽस्ति। मनो हि विलक्षणानां
क्रियाणां कर्तृ भोक्तृ च तदेव निर्घृष्य संशोध्य चित्तरत्नमिह
हिमकणमिवातपेन विलीनतां विवेकेन नीत्वा परं श्रेयः प्राप्स्यसि।
चित्तमेव सकलभूताडम्बरकारिणीमविद्यां विद्धि। सा
विचित्रकेन्द्रजालवशादिदमुत्पादयति। अविद्याचित्तजीवबुद्धिशब्दानां
भेदो नास्ति वृक्षतरुशब्दयोरिवेति ज्ञात्वा चित्तमेव विकल्पनं कुरु।
अभ्युदिते चित्तवैमल्यार्कबिम्बे सकलङ्कविकल्पोत्थदोषतिमिरापहरणं
न तदस्ति राघव यन्न दृश्यते यन्नात्मीक्रियते यन्न परित्यज्यते यन्न
म्रियते यन्नात्मीयं यन्न परकीयं सर्वं सर्वदा सर्वो भवतीति
परमार्थः॥ ८॥

उक्तमुपसंहरन्प्रकृते योजयति - तस्मादित्यादिना गद्येन। हठयोगेन
निर्घृष्य राजयोगेन संशोध्य निर्विकल्पसमाधिना विलीनतां नीत्वा विवेकेन
तत्त्वसाक्षात्कारेण परं श्रेयो मोक्षं प्राप्स्यसि। विचित्रकं
विविधचित्ररचनाप्रकृतिभूतं यदिन्द्रजालमिव वासनारूपं तद्वशात्।
विकल्पनं विगतकल्पनं कुरु। तिमिरापहरणं भविष्यतीति शेषः। ननु
स्वचित्तलये स्वाविद्याक्षये वा स्वादृष्टार्जितस्य स्वाविद्याकार्यस्यैव निवृत्तिः
स्यान्न सर्वादृष्टाविद्याकार्यस्य स्वचित्तादेस्तदकारणत्वादित्याशङ्क्य
सर्वं सर्वादृष्टकार्यं सर्वोपभोग्यं चेति सर्वाविद्याकार्यं
सर्वात्मकस्वात्मदर्शनात्सर्वं दृष्टं भवति सर्वमप्यात्मीकृतं
भवति सर्वमपि त्यक्तं भवति सर्वमपि मारितं भवतीति नात्रासंभावना
युक्तेत्याशयेनाह - न तदस्तीति। तत्कुतस्तत्राह - यन्नात्मीयमिति। यतः
सर्वमात्मीयं सर्वं परकीयं यस्मात्सर्वं सर्वदा सर्वो भवतीति
परमार्था स्थितिरित्यर्थः। तथाच मधुब्राह्मणश्रुतिः इयं पृथिवी
सर्वेषां भूतानां मध्वस्यै पृथिव्यै सर्वाणि भूतानि मधु इत्याद्या
प्रसिद्धेत्याशयः॥ ८॥

प्। ३९९) २३५

भावराशिस्तथा बोधः सर्वो यात्येकपिण्डताम्।
विचित्रमृद्भाण्डगणो यथाऽपक्वो जले स्थितः॥ ९॥

अतः समाधिपरिपाकजन्यबोधेन
मनस्तत्कार्यप्रपञ्चयोरविद्यायाश्चैकरसब्रह्मात्मभावः परिशिष्यत इति
पद्येनोपसंहरति - भावराशिरिति।
भावराशिर्दृश्यपदार्थसमूहस्तथा तद्विषयकविचित्रवृत्तिरूपो
बोधस्तदुपहितः सर्वो जीवश्चैकपिण्डतां ब्रह्मैकरसतां याति। यथा अपक्व
इति च्छेदः॥ ९॥

श्रीराम उवाच।

एवं मनःपरिक्षये सकलसुखदुःखानामन्तः प्राप्यत इति भवता
प्रोक्तं तत्कथं महात्मंश्चपलवृत्तिरूपस्यास्य मनसोऽसत्ता भवति
॥ १०॥

47529 गुरूक्तेस्तात्पर्यसर्वस्वमनूद्य दर्शयन् रामो मनःसमुच्छेदं
47530 स्वबुद्धितर्कितोपायैरशक्यं मन्यमानस्तदुपायान्तरं जिज्ञासुर्गद्येन
47531 पृच्छति - एवमिति || १० ||
47532
47533 श्रीवसिष्ठ उवाच |
47534
47535 रघुकुलेन्दो शृणु मनःप्रशमने युक्तिं यां ज्ञात्वा
47536 स्वस्वाचारदूरे मनःसंधिरयमेष्यसि || ११ ||
47537
47538 वसिष्ठस्तदुपायं वक्तुं प्रतिजानीते - रघुकुलेन्दो इति | स्वानि स्वानि
47539 बहिःप्रचारद्वाराणीन्द्रियाणि तेषामाचारः संचारस्तस्य दूरे तदविषये
47540 ब्रह्मणि मनःसंधिरयं मनोवृत्तिधाराम् | रलयोरभेदान्मनसः
47541 संधानेन लयं वा एष्यसि प्राप्स्यसि || ११ ||
47542
47543 इह हि तावद्ब्रह्मणः सर्वभूतानां त्रिविधोत्पत्तिरिति तत्पूर्वोक्तम् || १२ ||
47544
47545 ननु यस्यानादौ संसारे कदापि नाशो न प्रसिद्धस्तस्य कथमुच्छेदः
47546 संभाव्यत इत्याशङ्क्य तत्संभावनाय मध्ये मध्ये तस्य नाशप्रसिद्धिं
47547 परिणामिस्वभावतया इतरभूतादितुल्यतां च दर्शयितुं प्रागुक्तां
47548 सात्त्विकादिभेदेन त्रिविधां जीवसृष्टिं स्मारयति - इह हीत्यादिना |
47549 पूर्वोक्तं स्मर्तव्यमिति शेषः | यद्यपि द्वादशधा जीवजातयः
47550 प्रागुक्तास्तथापि सात्त्विकादित्रैविध्ये द्वादशानामन्तर्भावात्त्रिविधेत्युक्तम् |
47551 आध्यात्मिकाधिदैविकाधिभौतिकभेदाद्वा त्रिविधा | तासु त्रिविधास्वपि सृष्टिषु
47552 मूलकारणं हैरण्यगर्भं मनस्तत्संकल्पानुसारीण्यन्यानि मनांसीत्यपि
47553 प्रागुक्तम् || १२ ||
47554
47555 तत्रेदंप्रथमया मनःकल्पनया देहीति सा ब्रह्मरूपिणी संकल्पमयी
47556 भूत्वा यदेव संकल्पयति तदेव पश्यति तेनेदं भुवनाडम्बरं
47557 कल्प्यते || १३ ||
47558
47559 तत्र हैरण्यगर्भमनसः स्वसंकल्पवैचित्र्यब्रह्माण्डाकारपरिणतस्य
47560 कल्पान्ते विलयः प्रसिद्धस्तत्कार्याणां च भौतिकानां विलयदर्शनात्तस्यापि
47561 विलयस्वभावतानुमातुं शक्यते | एवं मूलकारणे मनसि
47562 विलयस्वभावतानिश्चये तत्तुल्यस्वभावतया अस्मदादिमनःस्वपि सा
47563 संभावयितुं शक्यत इत्याशयेनाह - तत्रेदंप्रथमयेत्यादिना |
47564 इदंप्रथमया आद्यया | देही चतुर्मुखाकारदेहवानहमिति या ब्रह्मरूपिणी
47565 धातृस्वरूपा कल्पना सा तदेव पश्यति सत्यसंकल्पत्वादित्याशयः || १३ ||
47566
47567 तत्र जननमरणसुखदुःखमोहादिकं संसरणं कल्पयन्ती
47568 कल्पानुरचना बहुनाममन्थरं स्थित्वा स्वयं विलीयते
47569 हिमकणिकेवातपगता || १४ ||
47570
47571 अस्मदादिजन्ममरणादिसंसारोऽपि तदीयकल्पनैवेत्याह - तत्रेति | कल्पेषु
47572 चतुर्युगसहस्रमितेषु स्वाहस्सु तत्तदनुकूलरचनाभी रचितानां
47573 देवासुरादीनां बहुभिर्नामभिर्मन्थरं गुरुतरं यथा स्यात्तथा स्थित्वा
47574 भोगिपर्यङ्कशायिनि विष्णौ स्वयं विलीयते आतपगता हिमकणिका यथा
47575 स्वकारणे तेजसि लीयते तद्वत् || १४ ||
47576
47577 कालोदितः संकल्पवशात् पुनरन्यतया जायते सापि पुनर्विलीयते
47578 पुनरप्युदेति सैवेति भूयोभूयोऽनुसंसरन्ती स्वयमुपशाम्यति || १५ ||
47579
47580 पुनः सृष्टिकाले उदितो भगवन्नाभिपद्मादाविर्भूतश्चेत् पुनरन्यतया

कल्पान्तरसर्गान्तरतया सा प्राक्तनी कल्पना जायते स पुनः कल्पान्ते विलीयते
पुनरप्युदेति | इति यावदधिकारप्रारब्धक्षयं संसरन्ती तत्क्षये
स्वतःसिद्धादात्मबोधाद्द्विपरार्धावसाने समूलं स्वयमुपशाम्यति || १५ ||

इत्थमनन्ता ब्रह्मकोटयोऽस्मिन्ब्रह्माण्डेऽन्येषु च समतीता भविष्यन्तीति
सन्ति चेतरा अनन्ता यासां संख्यापि न विद्यते || १६ ||

एवमन्येष्वपि हैरण्यगर्भमनस्सु नश्वरस्वभावता प्रमाणसिद्धेत्याह
- इत्थमित्यादिना | अस्मिन् ब्रह्माण्डेऽपि प्रतिपरमाणु
ब्रह्माण्डकोटिकल्पनास्तीति प्रागुक्तरीत्या बोध्यम् || १६ ||

प्| ४००) २३६

एवमस्यां तादृशि वर्तमानायामीश्वरादागत्य जीवो यथा जीव्यते
विमुच्यते तच्छृणु || १७ ||

यथा समष्टिमनांसि पुरुषयत्नसाध्यैरेवोपासनज्ञानैरुपचीयन्ते
शाम्यन्ति चैवं व्यष्टिजीवमनांस्यपि
जन्ममरणबीजकामकर्मवासनासंकल्पैरुपचीयन्ते
निरोधज्ञानाभ्यासप्रकर्षैः शाम्यन्तीति नासंभावनीयो मनोनाश
इत्याशयेन सृष्ट्यादिकालादारभ्य मोक्षकल्पनान्तां जीवसंसृतिं
संक्षेपविस्तराभ्यां प्रपञ्चयति - एवमस्यामित्यादिना | अस्यां
प्रागुक्तायां समष्टिकल्पनायां तादृशि परमात्मनि वर्तमानायां
सत्यां जीवो व्यष्टिजीवो जीव्यते जीवति | पदविकरणव्यत्ययश्छान्दसः || १७ ||

ब्रह्मणो मनःशक्तिरभ्युदिता पुरःस्थितकाशशक्तिमवलम्ब्य
तत्रस्थपवनतानुपातिनी घनसंकल्पत्वं गच्छति || १८ ||

संक्षेपेण सूत्रितमर्थं विवरीतुकामः प्रथममीश्वरादागत्येत्यंशं
विवृणोति - मनःशक्तिरिति | प्रलये उपाधिविलयादव्याकृते लीनानां
जीवानां संस्कारमात्रेण परिशिष्टा मनःशक्तिः प्रथममव्याकृतात्
शब्दतन्मात्रात्मकाकाशशक्त्याविर्भावे सति पुरःस्थितां प्रथमोत्पन्नां
तामवलम्ब्य स्वयमप्यभुदिता सती पवनशक्त्यात्मकस्पर्शतन्मात्रोत्पत्तौ
तत्रत्यपवनतानुपातिनी ईषच्चलनयोग्यतालक्षणं घनसंकल्पत्वं गच्छति ||
१८ ||

ततः पुरःप्राप्तभूततन्मात्रपञ्चकतामेत्यान्तःकरणतां नीत्वा
सात्वसूक्ष्मा प्रकृतिर्भूत्वा
गगनपवनतेजोरूपतासंकल्पात्प्रालेयरूपतामुपेत्य शाल्योषधिं
विशन्ती प्राणिनां गर्भतां च गच्छति || १९ ||

ततः पुरःप्राप्तरूपरसगन्धात्मकतन्मात्रक्रमेण
पञ्चकतामपञ्चीकृतपञ्चभूतात्मकतामेत्य अन्तःकरणतां
मनोबुद्धिरहंकारश्चित्तमिति व्यवहारबीजजीवोपाधितां नीत्वा प्राप्य सा
प्रागुक्तमनःशक्तिरसूक्ष्मोपचिता पञ्चीकृतस्थूलप्रकृतिर्भूत्वा
पञ्चीकृतगगनपवनतेजोरूपतासंकल्पात् क्रमेण प्रालेयरूपतां
नीहारवृष्ट्यादिजलरूपतामुपेत्य शालिगोधूमाद्योषधिं सस्यं विशन्ती
अन्नभूता पुरुषैर्भुक्ता रेतोभावं प्राप्य स्त्रीयोनौ निषिक्ता
कललबुद्‌बुदादिक्रमेण प्राणिनां गर्भतां च गच्छति || १९ ||

जायते तस्मात्ततः पुरुषः संपद्यते || २० ||

तस्माज्जायते प्रसूयते ततो जन्मनः
कदाचित्सुकृताधिक्यात्कर्मज्ञानाधिकृतः पुरुषः संपद्यत इत्यर्थः ॥ २०
। ।

तेन पुरुषेण जातमात्रेणैव बाल्यात्प्रभृति विद्याग्रहणं कर्तव्यं
गुरवोऽनुगन्तव्याः ॥ २१ ॥

तेनेत्यादि निगदव्याख्यातम् ॥ २१ ॥

ततः क्रमात्पुंसस्तवेव चमत्कृतिर्जायते ॥ २२ ॥

तवेव चमत्कृतिर्विवेकवैराग्यादिसाधनसंपत्तिर्जायते ॥ २२ ॥

स्वच्छदृशा चित्तवृत्तेः पुरुषस्य हेयोपादेयविचार उत्पद्यते ॥ २३ ॥

स्वच्छदृशा चित्तवृत्तेः पुरुषस्य संसारानर्थो हेयो मोक्षोपाय उपादेय
इति विचार उत्पद्यते ॥ २३ ॥

तादृग्विवेकवति संकलिताभिमाने
पुंसि स्थिते विमलसत्त्वमयाग्र्यजातौ ।
सप्तात्मिकावतरति क्रमशः शिवाय
चेतःप्रकाशनकरी ननु योगभूमिः ॥ २४ ॥

गद्योक्तार्थसारं पद्येनोक्त्वोपसंहरंस्तादृशे पुरुषे
योगभूमिकामात्यन्तिकमनोनाशोपायभूतामवतारयति - तादृगिति ।
तादृक्साधनान्तरोपचितो यो विवेकस्तद्वति विमलसत्त्वमयी
अग्र्यजातिर्ब्राह्मणाद्युत्तमजातिर्यस्य स तादृशोऽहमिति संकलितः
स्वीकृतोऽभिमानोऽनेन तस्मिन्नधिकारिपुंसि स्थिते अचले सति शिवाय
परमपुरुषार्थाय वक्ष्यमाणसाप्तविध्यात्मिका चेतसः प्रकाशनं
ज्ञानेनाभिज्वलनं तत्करणशीला योगभूमिः
क्रमशश्चित्तोपरमतारतम्यक्रमेणावतरति ।
वक्ष्यमाणलक्षणैराविर्भवतीत्यर्थः ॥ २४ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षो० उत्पत्तिप्रकरणे
साधकजन्मावतारो नाम षोडशोत्तरशततमः सर्गः ॥ ११६ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
साधकजन्मावतारो नाम षोडशोत्तरशततमः सर्गः ॥ ११६ ॥

## सप्तदशोत्तरशततमः सर्गः ११७

श्रीराम उवाच ।

कीदृश्यो भगवन्योगभूमिकाः सप्तसिद्धिदाः ।
समासेनेति मे ब्रूहि सर्वतत्त्वविदांवर ॥ १ ॥

ज्ञानभूमिप्रभेदानामुपोद्घातेन वर्ण्यते ।
अज्ञानभूमिका सप्तविधा यद्वा प्रसङ्गतः ॥ १ ॥

समासेन संग्रहेण । इतिशब्दो लक्षणप्रभेदानां तदुपयोग्यर्थान्तराणां
च प्रश्नस्य द्योतनाय ॥ १ ॥

47685
47686 श्रीवसिष्ठ उवाच।
47687
47688 अज्ञानभुः सप्तपदा ज्ञभुः सप्तपदैव हि।
47689 पदान्तराण्यसंख्यानि भवन्त्यन्यान्यथैतयोः ॥ २ ॥
47690
47691 तत्र इतिशब्दपृष्टं ज्ञानभूमिकाबोधोपयुक्तमज्ञानभूमिकाभेदं
47692 प्रथमं वक्तुकामो वसिष्ठो ज्ञानाज्ञानभूमिके विभज्य दर्शयति -
47693 अज्ञानेति ॥ २ ॥
47694
47695 स्वयत्नसाधकरसान्महासत्ताभरोन्नतेः।
47696 एते प्रतिपदं बद्धमूले संफलतः फलम् ॥ ३ ॥
47697
47698 स्वाभाविकप्रवृत्तिलक्षणः पुरुषप्रयत्नो भोगरागदार्ढ्यलक्षणो
47699 रसावेशश्चाज्ञानभूप्रतिष्ठायामसाधारणहेतू।
47700 शास्त्रीयसाधनचतुष्टयविशिष्टः श्रवणादिप्रयत्नो
47701 मुमुक्षादार्ढ्यलक्षणरसावेशश्च ज्ञानभूप्रतिष्ठायाम्।
47702 अधिष्ठानब्रह्मसत्तोत्कर्षाधीनस्वसत्तालाभस्तूभयत्र साधारणो हेतुः।
47703 एतेभ्यो हेतुभ्य एते भूमिके प्रतिपदं स्वस्वविषये बद्धमूले सत्यौ
47704 स्वस्वोचितं संसारस्थितिदुःखलक्षणं तन्मुक्तिनिर्तिशयानन्दावाप्तिलक्षणं
47705 च फलं संफलतः। यथा अधोभुवनभुवः सप्तपदा उत्तरोत्तरं
47706 रजस्तमोदुःखबहुला नरकान्ताः ऊर्ध्वभुवनभुवस्तूत्तरोत्तरं
47707 सत्त्वसुखज्ञानबहुलाः सत्यलोकान्ताः क्रममुक्तिफलाश्च
47708 तद्वदित्यर्थाद्गम्यते ॥ ३ ॥
47709
47710 प्। ४०१) २३६
47711
47712 तत्र सप्तप्रकारां त्वमज्ञानस्य भुवं शृणु।
47713 ततः सप्तप्रकारां त्वं श्रोष्यसि ज्ञानभूमिकाम् ॥ ४ ॥
47714
47715 तत्र तयोर्भूमिकयोर्मध्ये ॥ ४ ॥
47716
47717 स्वरूपावस्थितिर्मुक्तिस्तद्भ्रंशोऽहंत्ववेदनम्।
47718 एतत्संक्षेपतः प्रोक्तं तज्ज्ञत्वाज्ञत्वलक्षणम् ॥ ५ ॥
47719
47720 तत्र भूमिद्वयस्य प्रत्येकं फलतः सामान्यलक्षणमाह - स्वरूपेति ॥ ५ ॥
47721
47722 शुद्धसन्मात्रसंवित्तेः स्वरूपान्न चलन्ति ये।
47723 रागद्वेषोदयाभावात्तेषां नाज्ञत्वसंभवः ॥ ६ ॥
47724
47725 तत्राद्यलक्षणं स्फुटयति - शुद्धेति ॥ ६ ॥
47726
47727 यत्स्वरूपपरिभ्रंशाच्चेत्यार्थे चितिमज्जनम्।
47728 एतस्मादपरो मोहो न भूतो न भविष्यति ॥ ७ ॥
47729
47730 द्वितीयं स्फुटयति - यदिति ॥ ७ ॥
47731
47732 अर्थादर्थान्तरं चित्ते याति मध्ये हि या स्थितिः।
47733 निरस्तमनना यासौ स्वरूपस्थितिरुच्यते ॥ ८ ॥
47734
47735 आद्यस्याप्रसिद्धिं वारयति - अर्थादिति। पूर्वविषयाच्च्युतस्य
47736 विषयान्तरमननात्प्राङ् निरस्तमनना स्वरूपावस्थितिः प्रसिद्धेत्यर्थः ॥ ८ ॥

संशान्तसर्वसंकल्पा या शिलान्तरिव स्थितिः।
जाड्यनिद्राविनिर्मुक्ता सा स्वरूपस्थितिः स्मृता॥ ९॥

मूर्च्छासुषुप्त्योर्वारणाय विशिनष्टि - जाड्यनिद्रेति॥ ९॥

अहंतांशे क्षते शान्ते भेदे निःस्पन्दतां गते।
अजडा या प्रकचति तत्स्वरूपमिति स्थितम्॥ १०॥

अन्तरहंतांशे बहिर्भेदे। उभयत्र निस्पन्दतां गते। अजडा स्वप्रकाशा या
चिदिति शेषः॥ १०॥

तत्रारोपितमज्ञानं तस्य भूमीरिमाः शृणु।
बीजजाग्रत्तथा जाग्रन्महाजाग्रत्तथैव च॥ ११॥

तत्र तस्यां प्रत्यक्चिति। आरोपितमनादितयाध्यस्तम्॥ ११॥

जाग्रत्स्वप्नस्तथा स्वप्नः स्वप्नजाग्रत्सुषुप्तकम्।
इति सप्तविधो मोहः पुनरेव परस्परम्॥ १२॥

श्लिष्टो भवत्यनेकाख्यः शृणु लक्षणमस्य च।
प्रथमे चेतनं यत्स्यादनाख्यं निर्मलं चितः॥ १३॥

पदान्तराण्यसंख्यानीति यदुक्तं तदुपपादयति - पुनरेव परस्परं
श्लिष्ट इति। अस्य सप्तविधस्य मोहस्य प्रत्येकं लक्षणं शृण्वित्यर्थः।
बीजजाग्रल्लक्षणमाह - प्रथममिति। चितो
मायाशबलचैतन्यात्सकाशात्सर्गादौ जागरादौ वा प्रथमं चेतनं
चिदाभाससंवलितरूपं यत्स्यात्तत्प्राणधारणादिक्रियोपाधिना
भविष्यच्चित्तजीवादिनामशब्दानां तदर्थानां च भाजनं
वक्ष्यमाणजाग्रद्बीजभूतं स्थितं बीजजाग्रदिति परेणान्वयः॥ १३॥

भविष्यच्चित्तजीवादिनामशब्दार्थभाजनम्।
बीजरूपं स्थितं जाग्रद्बीजजाग्रत्तदुच्यते॥ १४॥

एषा ज्ञप्तेर्नवावस्था त्वं जाग्रत्संसृतिं शृणु।
नवप्रसूतस्य परादयं चाहमिदं मम॥ १५॥

जाग्रल्लक्षणं श्रावयति -त्वमिति। नवप्रसूतस्य बीजजाग्रतः परात् परतः।
अयं स्थूलदेहोऽहं इदं देहभोग्यजातं मम इति यः
प्रत्ययस्तज्जाग्रदित्यर्थः॥ १५॥

इति यः प्रत्ययः स्वस्थस्तज्जाग्रत्प्रागभावनात्।
अयं सोऽहमिदं तन्म इति जन्मान्तरोदितः॥ १६॥

अयं सोऽहमिदं तन्मे इत्युक्तलक्षणस्य जाग्रत्प्रत्ययस्य जन्मानन्तरमुदितः।
नकारलोपश्छान्दसः। अथवा सजातीयपूर्वपूर्वजन्मसंस्कारोद्बोधेन
दृढतरोदितः अत एव पीवरः अभ्यासादुपचितः। तथाहि
ब्राह्मणादिजन्मसाधारण्येऽपि जन्मान्तराभ्यासात्
केषांचिद्ब्राह्मणोचितक्रियास्वभिनिवेशः पाटवातिशयश्च दृश्यते न
सर्वेषाम्। तथाचैहिकात्प्राक्तनाद्वा दृढाभ्यासपाटवादुपचिताभिनिवेशो
जाग्रत्प्रत्ययो महाजाग्रदित्यर्थः॥ १६॥

पीवरः प्रत्ययः प्रोक्तो महाजाग्रदिति स्फुरन् ।
अरूढमथ वा रूढं सर्वथा तन्मयात्मकम् ॥ १७ ॥

जाग्रत्स्वप्नं लक्षयति - अरूढमिति । अरूढमनभ्यासपेलवं
रूढमभ्यासदृढम् । यथा लवणस्य ॥ १७ ॥

यज्जाग्रतो मनोराज्यं जाग्रत्स्वप्नः स उच्यते ।
द्विचन्द्रशुक्तिकारूप्यमृगतृष्णादिभेदतः ॥ १८ ॥

द्विचन्द्रशुक्तिरूप्यादिभ्रान्तयोऽपि जाग्रत्स्वप्नभेदा एवेत्याह - द्विचन्द्रेति ॥
१८ ॥

अभ्यासात्प्राप्य जाग्रत्त्वं स्वप्नोऽनेकविधो भवेत् ।
अल्पकालं मया दृष्टमेवं नो सत्यमित्यपि ॥ १९ ॥

स्वप्नं लक्षयति - अल्पकालमिति । निद्रान्ते निद्रामध्ये निद्रावसाने वा
प्रतीयत इति प्रत्ययः । यः प्रत्ययोऽनुसंधीयते स स्वप्नः कथित इत्यर्थः ।
तस्याज्ञस्य । स च महाजाग्रत्स्थितेर्महाजाग्रदन्तर्गतस्थूलशरीरस्य हृदि
कण्ठादि हृदयान्तनाडीप्रदेशे भवतीत्यर्थः ॥ १९ ॥

निद्राकालानुभूतेऽर्थे निद्रान्ते प्रत्ययो हि यः ।
स स्वप्नः कथितस्तस्य महाजाग्रत्स्थितेर्हृदि ॥ २० ॥

चिरसंदर्शनाभावादप्रफुल्लबृहद्वपुः ।
स्वप्नो जाग्रत्तया रूढो महाजाग्रत्पदं गतः ॥ २१ ॥

उक्तलक्षणोपपादनाय स्वप्नमेव पुनर्विशिनष्टि -
चिरसंदर्शनाभावादिति । स्वप्नजाग्रतोर्लक्षणमाह - स्वप्नो जाग्रत्तयेति ।
रूढो दृढाभिनिवेशाच्चिरकालस्थायित्वकल्पनाद्वा उपचितः यथा
हरिश्चन्द्रस्य द्वादशवर्षात्मकः । महाजाग्रत्पदं महाजाग्रत्साम्यं
गतः सन्नित्यर्थः ॥ २१ ॥

अक्षतेवाक्षते देहे स्वप्नजाग्रन्मतं हि तत् ।
षडवस्थापरित्यागे जडा जीवस्य या स्थितिः ॥ २२ ॥

स चास्य दैवाद्देहनाशेऽपि तथैवाग्रेऽप्यनुवर्तते इति सूचनाय क्षते देहे
इत्युक्तम् । सुषुप्तिं लक्षयति - षडवस्थेति । पूर्वाः षडवस्थाः
कर्मफलभोगभूमित्वात्कर्मजाः । सुषुप्तिस्तु पूर्वोद्भूतकर्मणां भोगेन
क्षये उत्तरेषामनुद्भवेऽन्तराले छत्रापायवत्सर्वसूक्ष्मस्थूलप्रपञ्चविलये
तद्बीजाज्ञानमात्रपरिशेषात्तदुपहितात्ममात्रपरिशेषरूपेत्याशयेनाह -
जडा जीवस्य या स्थितिरिति ॥ २२ ॥

प। ४०२) २३७

भविष्यद्दुःखबोधाढ्या सौषुप्ती सोच्यते गतिः ।
एते तस्यामवस्थायां तृणलोष्टशिलादयः ॥ २३ ॥

भविष्यद्दुःखानि [१] बोधयन्ति अनुभावयन्तीति
भविष्यद्दुःखबोधानि वासनाकर्माणि तैराढ्या संपन्ना सुषुप्तिरेव
सौषुप्ती । सुषुप्तौ कारणे विलीनस्य जगतः संस्कारात्मना सत्वमेव नासत्वं
पुनरुद्भवाभावप्रसङ्गादित्याशयेनाह - एते इति ॥ २३ ॥

47841 पदार्थाः संस्थिताः सर्वे परमाणुप्रमाणिनः।
47842 सप्तावस्था इति प्रोक्ता मयाऽज्ञानस्य राघव॥ २४॥
47843
47844 उपसंहरति - सप्तावस्था इति॥ २४॥
47845
47846 एकैका शतशाखात्र नानाविभवरूपिणी।
47847 जाग्रत्स्वप्नश्चिरं रूढो जागृतावेव गच्छति॥ २५॥
47848
47849 तास्वेकैकान्तरन्यान्याविर्भावात्परस्परं संवलनाच्चानन्तभेदाः
47850 संभवन्तीत्याह - एकैकेति। जागृतावेव गच्छति मिलति॥ २५॥
47851
47852 नानापदार्थभेदेन सविकासं विजृम्भते।
47853 अस्यामप्युदरे सन्ति महाजाग्रद्दशाद्दशः॥ २६॥
47854
47855 अस्यां जाग्रद्भावापन्नायां जाग्रत्स्वप्नदशायाम्। उदरे अन्तः
47856 महाजाग्रद्दशालक्षणाः दृशः प्रत्ययाः। दृशः साक्षिणो
47857 महाजाग्रद्दशाः सन्तीति पृथक् पदच्छेदो वा॥ २६॥
47858
47859 तासामप्यन्तरे लोको मोहान्मोहान्तरं व्रजेत्।
47860 अन्तःपातिजलावर्त इव धावति नौर्भ्रमम्॥ २७॥
47861
47862 लोको जनः जीव इति यावत्। नद्यन्तःपातिजलावर्ते नौरिव भ्रमं धावति गच्छति॥
47863 २७॥
47864
47865 काश्चित्संसृतयो दीर्घं स्वप्नजाग्रत्तया स्थिताः।
47866 काश्चित्पुनः स्वप्नजाग्रज्जाग्रत्स्वप्नास्तथेतराः॥ २८॥
47867
47868 दीर्घं दीर्घकालम्। स्वप्नजाग्रदिति जातावेकवचनम्॥ २८॥
47869
47870 अज्ञानभूमिरिति सप्तपदा मयोक्ता
47871 नानाविकारजगदन्तरमेदहीना।
47872 अस्याः समुत्तरसि चारुविचारणाभि-
47873 र्दृष्टे प्रबोधविमले स्वयमात्मनीति॥ २९॥
47874
47875 वर्णितामज्ञानभूमिकामुपसंहरंस्तदुत्तरणोपायमाह -
47876 अज्ञानभूमिरिति। नानाविकारैर्जगदन्तरभेदैश्च हीना निन्द्या अवश्यहेयेति
47877 यावत्। इति उक्तवक्ष्यमाणप्रकाराभिश्चारुविचारणाभिः प्रबोधमले स्वयं
47878 प्रत्यङ्गात्रैकरसे आत्मनि दृष्टे सति अस्याः अविद्याभूमेः
47879 सकाशात्समुत्तरसि निर्गत एवासीत्यर्थः। स्वयमुत्तरसीति वा संबन्धः॥ २९॥
47880
47881 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० मोक्षोपायेषूत्पत्तिप्रकरणे
47882 अज्ञानभूमिकावर्णनं नाम सप्तदशोत्तरशततमः सर्गः॥ ११७॥
47883
47884 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
47885 अज्ञानभूमिकावर्णनं नाम सप्तदशोत्तरशततमः सर्गः॥ ११७॥
47886
47887
47888 अष्टादशोत्तरशततमः सर्गः ११८
47889
47890 श्रीवसिष्ठ उवाच।
47891
47892 इमां सप्तपदां ज्ञानभूमिमाकर्णयानघ।

47893 नानया ज्ञातया भूयो मोहपङ्के निमज्जसि ॥ १ ॥
47894
47895 इह सप्तपदा ज्ञानभूमिका लक्षणैः स्वकैः ।
47896 आरूढलक्षणैश्चैव मोक्षान्ता साधु वर्ण्यते ॥ १ ॥
47897
47898 ज्ञातया अभ्यासक्रमेणानुभूतया ॥ १ ॥
47899
47900 वदन्ति बहुभेदेन वादिनो योगभूमिकाः ।
47901 मम त्वभिमता नूनमिमा एव शुभप्रदाः ॥ २ ॥
47902
47903 ननु योगशास्त्रे यमनियमाद्यष्टाङ्गभेदभिन्ना योगभूमिकाः प्रसिद्ध
47904 एव किं ता एवैता नेत्याह - वदन्तीति । वादिनो योगसांख्यवादिनः । ता
47905 योगभूमिकास्तुच्छसिद्धिफला अन्येषामभिमताः । मम तु इमा
47906 ज्ञानभूमिका एवाभिमताः । यतः परमपुरुषार्थलक्षणशुभप्रदा
47907 इत्यर्थः ॥ २ ॥
47908
47909 अवबोधं विदुर्ज्ञानं तदिदं सप्तभूमिकम् ।
47910 मुक्तिस्तु ज्ञेयमित्युक्तं भूमिकासप्तकात्परम् ॥ ३ ॥
47911
47912 किं तज्ज्ञेयं किं वा ज्ञानं यद्भूमयो वर्ण्यन्ते इति ते लक्षयति -
47913 अवबोधमिति । अखण्डस्वाकारवृत्त्या रूढं ब्रह्म
47914 अज्ञाननिवर्तकत्वाज्ज्ञानं निवृत्ताज्ञानं तु तदेव
47915 ज्ञेयमित्युपचाराद्द्विविधोच्यत इत्यर्थः ॥ ३ ॥
47916
47917 सत्यावबोधो मोक्षश्चैवेति पर्यायनामनी ।
47918 सत्यावबोधो जीवोऽयं नेह भूयः प्ररोहति ॥ ४ ॥
47919
47920 तथाच पूर्वापरावस्थाकल्पितावान्तरप्रवृत्तिनिमित्तभेदस्य
47921 मिथ्याभूतस्यापाये
47922 अवबोधमोक्षपदयोरेकार्थमात्रनिष्ठत्वात्पर्यायनामता फलिता ।
47923 यतस्तादृशो जीवो न भूयः प्ररोहति येन भेदादपर्यायता स्यादित्याशयेनाह
47924 - सत्यावबोध इति ॥ ४ ॥
47925
47926 ज्ञानभूमिः शुभेच्छाख्या प्रथमा समुदाहृता ।
47927 विचारणा द्वितीया तु [भविष्यदुःखेति मुद्रितपुस्तके पाठः]
47928 तृतीया तनुमानसा ॥ ५ ॥
47929
47930 उद्देशः स्पष्टः ॥ ५ ॥
47931
47932 सत्त्वापत्तिश्चतुर्थी स्यात्ततोऽसंसक्तिनामिका ।
47933 पदार्थाभावनी षष्ठी सप्तमी तुर्यगा स्मृता ॥ ६ ॥
47934
47935 आसामन्ते स्थिता मुक्तिस्तस्यां भूयो न शोच्यते ।
47936 एतासां भूमिकानां त्वमिदं निर्वचनं शृणु ॥ ७ ॥
47937
47938 उद्दिष्टानां लक्षणोक्तिं वक्तुं प्रतिजानीते - एतासामिति ॥ ७ ॥
47939
47940 स्थितः किं मूढ एवास्मि प्रेक्ष्येऽहं शास्त्रसज्जनैः ।
47941 वैराग्यपूर्वमिच्छेति शुभेच्छेत्युच्यते बुधैः ॥ ८ ॥
47942
47943 प्रेक्ष्ये प्रेक्षिष्ये । इडभावश्छान्दसः । शास्त्रैर्विचारितवेदान्तवाक्यैः
47944 सज्जनैर्गुरुभिश्च । वैराग्यग्रहणं साधनचतुष्टयोपलक्षणम् । तथाच

निषिद्धवर्जननिष्कामयज्ञदानाद्यनुष्ठानप्रयुक्ता
संन्याससाधनचतुष्टयसंपत्तिसहिता मुक्तिपर्यवसिता
श्रवणादिप्रवृत्तिफलोपहितात्मसाक्षात्कारोत्कटेच्छैव प्रथमा
भूमिकेत्यर्थः ॥ ८ ॥

शास्त्रसज्जनसंपर्कवैराग्याभ्यासपूर्वकम् ।
सदाचारप्रवृत्तिर्या प्रोच्यते सा विचारणा ॥ ९ ॥

गुरुशुश्रुषाभिक्षाशनशौचादियतिधर्मपालनसहिते श्राणमनने एवात्र
सदाचारः । अन्यस्य चित्तशुद्धिमात्रहेतुत्वेन प्रागेव सिद्धत्वात् ॥ ९ ॥

प्। ४०३) २३७

विचारणाशुभेच्छाभ्यामिन्द्रियार्थेष्वसक्तता ।
यात्र सा तनुता भावात्प्रोच्यते तनुमानसा ॥ १० ॥

अभ्यर्हितत्वाद्विचारणाशब्दस्य पूर्वनिपातः । भावनं भावो निदिध्यासनं
तस्मात् । तथाच साधनचतुष्टयसंपत्त्यादिपूर्वकश्रवणमननाभ्यां
सहितान्निदिध्यासनाद्या मनस इन्द्रियार्थेषु शब्दादिविषयेषु असक्तता
अग्रहणपर्यन्ता तनुता सविकल्पसमाधिरूपा सूक्ष्मता सा तनुमानसाख्या
भूमिका प्रोक्ता । तनु सूक्ष्मतमं मानसं यस्यामिति व्युत्पत्तेरित्यर्थः ।
अण्णन्तस्योपसर्जनत्वान्न ङीप् । तथाचोक्तं योगशास्त्रे
श्रोत्रादिकरणैर्यावच्छब्दादिविषयग्रहः । तावद्ध्यानमिति प्रोक्तं समाधिः
स्यात्ततः परः ॥ इति ॥ १० ॥

भूमिकात्रितयाभ्यासाच्चित्तेऽर्थे विरतेर्वशात् ।
सत्यात्मनि स्थितिः शुद्धे सत्त्वापत्तिरुदाहृता ॥ ११ ॥

अर्थे बाह्यार्थे विषये संस्कारोच्छेदादात्यन्तिकी चित्ते या
विरतिस्तद्वशात्तत्स्थैर्यात् । शुद्धे मायातत्कार्यादवस्थात्रयाच्च शोधिते
सर्वाधिष्ठानसन्मात्ररूपे आत्मनि क्षीरोदकवल्लिपुटीविलयेन
साक्षात्कारपर्यन्ता या स्थितिर्निर्विकल्पकसमाधिरूपा सा सत्त्वापत्तिर्मनसः
परमात्मसत्त्वात्मनैवापन्नत्वादित्यर्थः । अत्र ह्यसौ ब्रह्मविदित्युच्यते ॥ ११ ॥

दशाचतुष्टयाभ्यासादसंसङ्गफलेन च ।
रूढसत्त्वचमत्कारात्प्रोक्ताऽसंसक्तिनामिका ॥ १२ ॥

असंसङ्गश्चित्तस्य बाह्याभ्यन्तराकारैस्तत्संस्कारैश्चास्पर्शस्तल्लक्षणेन
समाधिपरिपाकफलेन च हेतुना रूढ उपचितश्चित्ते
निरतिशयानन्दनित्यापरोक्षब्रह्मात्मभावसाक्षात्कारलक्षणश्चमत्कारो
यस्यां सा । यद्यप्युत्तमाधिकारिणां द्वितीयभूमिकायामपि साक्षात्कारः
शाब्दापरोक्षात्प्रसिद्धस्तथापि
पञ्चमभूमिकायामात्यन्तिकद्वैतसंस्कारोच्छेदप्रयुक्तोत्कर्षातिशयस्य
मन्दमध्यमाधिकारिणामपि चतुर्थभूमिकान्तोत्पन्नसाक्षात्कारस्य
पञ्चम्यां निरूढतरत्वोपपत्तेश्च सूचनाय रूढेति चमत्कारविशेषणम् ।
अत एव चतुर्थभूमिकान्ते क्वचित्पञ्चमीं भूमिकां प्राप्तो ब्रह्मविद्वर
इत्युच्यते । न विद्यते अविद्यातत्कार्यसंसक्तिः सर्वथा यस्यामिति व्युत्पत्त्या
असंसक्तिनामिका ॥ १२ ॥

भूमिकापञ्चकाभ्यासात्स्वात्मारामतया दृढम् ।
आभ्यन्तराणां बाह्यानां पदार्थानामभावनात् ॥ १३ ॥

47997 अस्या एव परिपाकोत्कर्षादुत्तरे द्वे भूमिके भवत इत्याशयेनाह -
47998 भूमिकापञ्चकेति। वक्ष्यमाणं नाम अन्वर्थतया निर्वक्ति -
47999 आभ्यन्तराणामिति॥ १३॥
48000
48001 परप्रयुक्तेन चिरं प्रयत्नेनार्थभावनात्।
48002 पदार्थाभावनानाम्नी षष्ठी संजायते गतिः॥ १४॥
48003
48004 तर्हि कथं देहयात्रासिद्धिस्तत्राह - परप्रयुक्तेनेति। अस्यां च
48005 भूमिकायां ब्रह्मविद्वरीयानित्याख्यायते॥ १४॥
48006
48007 भूमिषट्कचिराभ्यासाद्भेदस्यानुपलम्भतः।
48008 यत्स्वभावैकनिष्ठत्वं सा ज्ञेया तुर्यगा गतिः॥ १५॥
48009
48010 सप्तमीं भूमिकामाह - भूमिषट्केति। परप्रयत्नेनापि
48011 भेदस्यानुपलम्भत इत्यर्थाद्गम्यते। तुर्यं जाग्रदाद्यवस्थात्रयनिर्मुक्तं
48012 शिवमद्वैतं चतुर्थं मन्यन्ते इति श्रुत्या तादृशीविद्वदनुभवसिद्धत्वेन
48013 प्रतिपादितं ब्रह्म गच्छति आत्मतयानुभवत्यखण्डितं यस्यामवस्थायां
48014 सा तुर्यगा। तां तु प्राप्तो ब्रह्मविद्वरिष्ठ इत्युच्यते। सच ब्रह्मवित्प्रभृतिषु
48015 तुरीयस्तं गच्छतीति तुर्यगा॥ १५॥
48016
48017 एषा हि जीवन्मुक्तेषु तुर्यावस्थेह विद्यते।
48018 विदेहमुक्तिविषयस्तुर्यातीतमतः परम्॥ १६॥
48019
48020 इहास्मिन्नेव देहे विद्यते। अतोऽस्या अवस्थायाः परं विदेहमुक्तिविषयस्तुर्यातीतं
48021 ब्रह्मैवेति न भूमिकासु गण्यत इत्यर्थः॥ १६॥
48022
48023 ये हि राम महाभागाः सप्तमीं भूमिकां गताः।
48024 आत्मारामा महात्मानस्ते महत्पदमागताः॥ १७॥
48025
48026 जीवन्मुक्ता न सज्जन्ति सुखदुःखरसस्थितौ।
48027 प्रकृतेनार्थकार्याणि किंचित्कुर्वन्ति वा न वा॥ १८॥
48028
48029 किंचित्कुर्वन्ति षष्ठभूमिकायां न वा कुर्वन्ति
48030 सप्तमभूमिकायामित्याशयः॥ १८॥
48031
48032 पार्श्वस्थबोधिताः सन्तः सर्वाचारक्रमागतम्।
48033 आचारमाचरन्त्येव सुप्रबुद्धवदक्षतम्॥ १९॥
48034
48035 कुर्वन्ति वा नवेत्युक्तेर्यथेष्टाचारपरत्वाशङ्कां वारयन् स्वाशयं
48036 प्रकटयति - पार्श्वस्थेति। सर्वेषां
48037 तत्तदाश्रमनिष्ठानामाचारक्रमेणागतमाचारं सदाचारमेवाचरन्ति
48038 आचरन्त्येवेति द्विविधोऽपि नियमोऽत्र विवक्षितः। अक्षतं आसङ्गेनादूषितम्।
48039 अक्षता इति पाठे फलासक्तिलक्षणक्षतरहिता इत्यर्थः। तथाच न
48040 यथेष्टाचरणप्रसक्तिरिति भावः। तथाचाहुः - विदितब्रह्मतत्त्वस्य
48041 यथेष्टाचरणं यदि। शुनां तत्त्वविदां चैव को भेदोऽशुचिभक्षणे॥ इति॥ १९
48042 ।।
48043
48044 आत्मारामतया तांस्तु सुखयन्ति न काश्चन।
48045 जगत्क्रिया सुसंसुप्तान्नृपालोकाः स्त्रियो यथा॥ २०॥
48046
48047 अनासङ्गव्यवहारेण सुखदुःखानुदयं सदृष्टान्तमाह -
48048 आत्मारामतयेति। जगत्क्रियाव्यवहारास्तान् जीवन्मुक्तान्न सुखयन्ति। यथा

48049 सुसंसुप्तान् गाढनिद्रावशान् रूपेण सौन्दर्यातिशयेन आलोक्यन्त इति
48050 रूपालोकाः स्त्रियो न सुखयन्ति तद्वदित्यर्थः | जगत्क्रियासु संसुप्तान् रूपालोकः
48051 स्त्रियो यथा इति पाठे तु यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः इति
48052 भगवदुक्तदिशा जगद्व्यापारेषु स्वप्नवन्मिथ्यात्वदर्शनात्सुप्तप्रायांस्तान्
48053 ब्रह्मादिसंपदोऽपि न सुखयन्ति | यथा स्त्रीरूपालोकोऽन्याः स्त्रियो न सुखयति तत्र
48054 रागाभावात्तद्वदित्यर्थः || २० ||
48055
48056 भूमिकासप्तकं चैतद्धीमतामेव गोचरम् |
48057 न पशुस्थावरादीनां न च म्लेच्छादिचेतसाम् || २१ ||
48058
48059 म्लेच्छादिवच्चेतो देहात्मबुद्धिर्येषां तेषां मनुष्यादीनां चेत्यर्थः || २१ ||
48060
48061 प्राप्ता ज्ञानदशामेतां पशुम्लेच्छादयोऽपि ये |
48062 सदेहा वाप्यदेहा वा ते मुक्ता नात्र संशयः || २२ ||
48063
48064 पशवो हनुमत्प्रभृतयः | म्लेच्छा धर्मव्याधादयः आदिपदादसुराः
48065 प्रह्लादकर्कटीप्रमृतयश्च गृह्यन्ते || २२ ||
48066
48067 ज्ञप्तिर्हि ग्रन्थिविच्छेदस्तस्मिन्सति हि मुक्तता |
48068 मृगतृष्णाम्बुबुद्ध्यादि शान्तिमात्रात्मकस्त्वसौ || २३ ||
48069
48070 मृगतृष्णाम्बुबुद्धेरादिपदाच्छुक्तिरूप्यबुद्धेश्च या शान्तिर्बाधः
48071 सैव मात्रा तुला यस्य तदात्मकः | तत्तुल्य इति यावत् || २३ ||
48072
48073 प्। ४०४) २३८
48074
48075 ये तु मोहात्समुत्तीर्णा न प्राप्ताः पावनं पदम् |
48076 आस्थिता भूमिकास्वासु स्वात्मलाभपरायणाः || २४ ||
48077
48078 यद्यपि द्वितीयादिभूमिषु चतुर्थभूमौ वा
48079 ज्ञानोदयेनाज्ञानावरणभङ्गान्मोहात्सम्यगुत्तिर्णा एव तथापि
48080 प्रबलप्रारब्धप्रयुक्तविक्षेपात्पावनमात्यन्तिकमनोनाशोपलक्षितनिरतिशया
48081 नन्दपूर्णतालक्षणं विदेहकैवल्यं न प्राप्ता इत्यर्थः || २४ ||
48082
48083 सर्वभूमिगताः केचित्केचिद्द्वित्रैकभूमिकाः |
48084 भूमिषट्कगताः केचित्केचित्सप्तैकभूमिकाः || २५ ||
48085
48086 एकस्मिन्नेव जन्मनि क्रमात्सर्वभूमिगताः | एवं सर्वत्र सप्तैकभूमिका
48087 सप्तमैकभूमिकाः सनकादयः || २५ ||
48088
48089 भूमित्रयगताः केचित्केचिद्न्त्यां भुवं गताः |
48090 भूचतुष्टयगाः केचित्केचिद्भूमिद्वये स्थिताः || २६ ||
48091
48092 भूचतुष्टयगाः केचिदित्येतदन्यस्य पूर्वोक्तस्यैवानुवादः प्रपञ्चार्थः || २६
48093 | |
48094
48095 भूम्यंशभाजनाः केचित्केचित्सार्धत्रिभूमिकाः |
48096 केचित्सार्धचतुर्भूगाः सार्धषड्भूमिकाः परे || २७ ||
48097
48098 भूम्यंशः पादभूम्यर्धभूम्यादिः || २७ ||
48099
48100 विवेकिनो नरा लोके चरन्त इति भूमिषु |

48101 ग्रहायतनतापस्य द्दशावेशेषु संस्थिताः ॥ २८ ॥
48102
48103 इति उक्तप्रकारासु भूमिषु चरन्तः सन्तो द्दशा भूमात्मद्दष्ट्या
48104 गृह्णन्तीति ग्रहाः ग्रहातिग्रहाख्याः सान्तर्बाह्यकरणतद्विषयाः आयतनं
48105 तदाधारभूतं शरीरं च तत्प्रयुक्तस्य तापस्याध्यात्मिकादिभेदभिन्नस्य
48106 आवेशेषु बाधलक्षणेष्वात्मान्तःप्रवेशनेषु संस्थिता उद्युक्ताः सन्तीत्यर्थः
48107 ॥ २८ ॥
48108
48109 ते हि धीराः सुराजानो दशास्वासु जयन्ति ये ।
48110 तृणायतेऽत्र दिग्दन्तिघटाभटपराजयः ॥ २९ ॥
48111
48112 सेन्द्रियमनोजय एव सर्वशत्रुजयादुत्कृष्टः स्वात्मसाम्राज्यमेव
48113 सर्वोत्कृष्टा राजता नान्येत्याह - ते हीति । शोभनाः सर्वोत्कृष्टा राजानः
48114 । न पूजनात् इति न टच् । अत्र अस्याग्रे दिग्दन्तिघटासहितानां सर्वशत्रुभटानां
48115 पराजयस्तत्प्रयुक्तसप्तद्वीपराज्यं च तृणायते तुच्छीभवतीत्यर्थः ॥ २९ ॥
48116
48117 ये तासु भूमिषु जयन्ति हि ये महान्तो
48118 वन्द्यास्त एव हि जितेन्द्रियशत्रवस्ते ।
48119 सम्राड्विराडपि च यत्र तृणायते वै
48120 तस्मात्परं जगति ते समवाप्नुवन्ति ॥ ३० ॥
48121
48122 उक्तमेवार्थं स्फुटं वदन्नुपसंहरति - एतास्विति । येनेष्टं राजसूयेन
48123 यश्चैकः सर्वभूमण्डलाधिपतिरन्येषां राज्ञां शासिता स सम्राट् । युवा
48124 स्यात्साधुयुवाध्यापकः । आशिष्टो द्रढिष्ठो बलिष्ठः । तस्येयं पृथिवी
48125 सर्वा वित्तस्य पूर्णा स्यात् । स एको मानुष आनन्दः इति
48126 श्रुत्युक्तलक्षणमानुषानन्दसंपन्न इत्यर्थः । विराट् ब्रह्मशरीरः
48127 प्रजापतिर्दैवानन्दपरमावधिरपि यत्र सप्तमभूमौ तृणायते तस्मात्परं
48128 विदेहकैवल्यसुखं जगति इहैव यतस्ते समवाप्नुवन्तीत्यर्थः ॥ ३० ॥
48129
48130 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे०
48131 मोक्षोपायेषुत्पत्तिप्रकरणे ज्ञानभूमिकोपदेशो
48132 नामाष्टादशोत्तरशततमः सर्गः ॥ ११८ ॥
48133
48134 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे
48135 ज्ञानभूमिकोपदेशो नामाष्टादशोत्तरशततमः सर्गः ॥ ११८ ॥
48136
48137
48138 एकोनविंशोत्तरशततमः सर्गः ११९
48139
48140 श्रीवसिष्ठ उवाच ।
48141
48142 ऊर्मिकासंविदा हेम यथा विस्मृत्य हेमताम् ।
48143 विरौति नाहं हेमेति तथात्माहंतयानया ॥ १ ॥
48144
48145 निरस्य मायिकं रूपं सन्मात्रैकत्वदर्शनम् ।
48146 भूमिकासु स्थिरीकर्तुं युक्तिरत्र प्रपञ्च्यते ॥ १ ॥
48147
48148 तदर्थं परमात्मनः सहजस्वपूर्णानन्दस्वप्रकाशभावविस्मरणे
48149 मायिकजीवजगद्भावारोपेण नानाविधदुःखशोकादिप्राप्तौ च
48150 द्दष्टान्तमाह - ऊर्मिकेति । यथा हेम स्वतः सर्वतः कालत्रयेऽपि
48151 स्वर्णैकस्वभावं परमार्थतो लेशतोऽप्यस्वर्णशून्यमपि स्वात्मन्येव
48152 कल्पितया ऊर्मिकासंविदा अङ्गुलीयकभ्रान्त्या स्वां हेमतां हेमैकरसतां

48153 विस्मृत्य अदृष्ट्वा बाह्यमलसंपर्कप्रयुक्तकांस्यादिभावकल्पनया
48154 विरौति रोदिति। अचेतनस्य
48155 रोदनायोगात्कांस्योर्मिकादिशब्दाभिलापस्तत्स्वामिरोदनं वा
48156 तदीयरोदनत्वेनोपचर्यते। तथा आत्माप्यहंतया रोदितीत्यर्थः॥ १॥
48157
48158 श्रीराम उवाच।
48159
48160 ऊर्मिकासंविदुदयः कथं हेम्नो यथा मुने।
48161 अहंता चात्मन इति यथावद्ब्रूहि मे प्रभो॥ २॥
48162
48163 यथाशब्दोऽपि कथमित्यर्थे उत्तरान्वयी। तथाच आत्मनः अहंता च कथं इति
48164 दृष्टान्तं दार्ष्टान्तिकं च यथावदुपपत्तिभिर्ब्रूहि। व्यक्तं
48165 वर्णयेत्यर्थः॥ २॥
48166
48167 श्रीवसिष्ठ उवाच।
48168
48169 सत एवागमापायौ प्रष्टव्यौ नासतः सता।
48170 अहंत्वमूर्मिकात्वं च सती तु न कदाचन॥ ३॥
48171
48172 आगमापायावुत्पत्तिनाशौ स्वतःसिद्धेन द्रष्ट्रा द्रष्टुं शक्यौ
48173 अतस्तादृशावेव प्रष्टव्यौ त्वयेत्यर्थः। अयं भावः। षट्सु भावविकारेषु
48174 मध्यमाश्चत्वारः सत एव प्रसिद्धाः नासतस्तद्वदुत्पत्तिनाशावपि सत एव
48175 वाच्यौ। नह्यसदुत्पत्तिक्रियां कर्तुं नाशक्रियाधारीभवितुं वा शक्नोति।
48176 यद्यसदुत्पद्येत नश्येद्वा तर्ह्यसद्धर्मावुत्पत्तिनाशावप्यसन्तौ स्याताम्।
48177 नहि तौ तदा द्रष्टुं शक्यौ। सतोऽसद्भिः संबन्धाभावात्। तस्मात्सदेव हेम
48178 ब्रह्म वा ऊर्मिकाहन्तादिवेषेणोत्पद्यत इति॥ ३॥
48179
48180 प्। ४०५) २३८
48181
48182 हेम [यदि हेम ग्राह्यं तर्हि हेम्नि हेमनिमित्तमूर्मिकां त्वं
48183 गृहाणेति मध्यस्थेन उदितो भवत्यर्थात्क्रेता तत्तदा
48184 सोर्मिकेणार्थाद्विक्रेत्रा यद्दीयते तदस्ति सत्यमित्यन्वयः। उदिते यदीति
48185 सप्तम्यन्तपाठेऽर्थात्क्रेतरि मध्यस्थेन इति उदिते सति इत्याद्यन्वयः।
48186 हेम्नीति निमित्तात्कर्मयोगे इति सप्तमी] हेम्न्यूर्मिकां च त्वं
48187 गृहाणेत्युदितो यदि।
48188 यद्दीयते सोर्मिकेण तत्तदस्ति न संशयः॥ ४॥
48189
48190 हानोपादानादिक्रियासंबन्धोऽपि सत एव दृष्टो नासत इत्याह - हेमेति।
48191 गृहाण मूल्येन क्रीणीहि इति मूल्ये दापिते सोर्मिकेण विक्रेत्रा यत् हेम
48192 बहुमूल्येन दीयते तदस्ति सत्यम्। तथाच ब्रह्मैव सर्वव्यवहारगोचरो
48193 नाणुमात्रमपि तदन्यद्व्यवहारेऽपि निरूपयितुं शक्यमिति भावः॥ ४॥
48194
48195 श्रीराम उवाच।
48196
48197 एवं चेत्तत्प्रभो किं स्यादूर्मिकात्वं तु कीदृशम्।
48198 अनयैवार्थनिश्चित्या ज्ञास्यामि ब्रह्मणो वपुः॥ ५॥
48199
48200 यदि हेमैव क्रयादिसर्वव्यवहारगोचरस्तर्हि तदनुभातस्योर्मिकाद्याकारस्य
48201 हेमस्वरूपातिरिक्तं किं स्वरूपं स्यात्कीदृशं किंप्रकारं वा
48202 यदूर्मिकादिशब्दैरभिलप्यत इति प्रश्नार्थः॥ ५॥
48203
48204 श्रीवसिष्ठ उवाच।

रूपं राघव नीरूपमसतश्चेन्निरूप्यते।
तद्वन्ध्यातनयाकारगुणांस्त्वं समुदाहर॥ ६॥

अविचारितरमणीयं तत् विचारिते तु न किंचिदित्याशयेनोत्तरमाह - रूपमिति॥ ६
। ।

ऊर्मिकात्वं मुधा भ्रान्तिर्मयैषा सत्स्वरूपिणी।
रूपं तदेतदेवास्याः प्रेक्षिता यन्न दृश्यते॥ ७॥

यद्यवश्यं रूपं वाच्यं तर्ह्यविचारकालमात्रस्थितिकत्वं मायाया
रूपमित्याशयेनाह - रूपमिति। प्रेक्षिता विचार्य दृष्टा सती न दृश्यते
तुच्छीभवतीति यत्तत्प्रसिद्धमेतदेवास्या रूपमित्यर्थः॥ ७॥

मृगतृष्णाम्भसि द्वीन्दावहंतारूपकादिषु।
एतावदेव रूपं यत्प्रेक्ष्यमाणं न लभ्यते॥ ८॥

तथा प्रसिद्धिमेवान्यत्रापि मायिके दर्शयति - मृगतृष्णेत्यादिना॥ ८॥

यः शुक्तौ रजताकारं प्रेक्षते रजतस्य सः।
न संप्राप्नोत्यणुमपि कणं क्षणमपि क्वचित्॥ ९॥

अपर्यालोकनेनैव सदिवासद्विराजते।
यथा शुक्तौ रजतता जलं मरुमरीचिषु॥ १०॥

यन्नास्ति तस्य नास्तित्वं प्रेक्ष्यमाणं प्रकाशते।
अप्रेक्ष्यमाणं स्फुरति मृगतृष्णास्विवाम्बुधीः॥ ११॥

अप्रेक्ष्यमाणं नास्तित्वं स्फुरति रजतादिभावेनेति शेषः॥ ११॥

असदेव च सत्कार्यकरं भवति च स्थिरम्।
बालानां मरणायैव वेतालभ्रान्तिसंभ्रमः॥ १२॥

नन्वसतः सत्कार्यकारिता स्थिरता च क्व दृष्टा तत्राह - बालानामिति।
भ्रान्तिप्रयुक्तः संभ्रमो भयरोदनादिः॥ १२॥

हेमतां वर्जयित्वैकां विद्यते हेम्नि नेतरत्।
ऊर्मिकाकटकादित्वं तैलादिसिकतास्विव॥ १३॥

नेहास्ति सत्यं नो मिथ्या यद्यथा प्रतिभाव्यते [भासत इति
पाठः]।
तत्तथार्थक्रियाकारि बालयक्षविकारवत्॥ १४॥

न वस्तुसत्ता अर्थक्रियाव्यवस्थाहेतुः किंत्वारोपे अधिष्ठानसत्ताप्रतिभास
एवेत्याशयेनाह - नेहेति। सत्यमेवार्थक्रियाकारि मिथ्याभूतमेव वा
अर्थक्रियाकारीति नियमो नास्तीत्यर्थः॥ १४॥

सद्वा भवत्वसद्वापि सुरूढं हृदये हि यत्।
तत्तदर्थक्रियाकारि विषस्येवामृतक्रिया॥ १५॥

इदं च प्राग्बहुश उक्तमेवेति स्मारयति - सद्वेति॥ १५॥

परमैषैव सा विद्या मायैषा संसृतिर्ह्यसौ।
असतो निष्प्रतिष्ठस्य यदहंत्वस्य भावनम्॥ १६॥

दृष्टान्तं व्युत्पाद्य दार्ष्टान्तिकेऽपि तत्साम्यमाह - परमेषैवेत्यादिना॥
१६॥

हेम्न्यस्ति नोर्मिकादित्वमहन्ताद्यस्ति नात्मनि।
अहन्ताभाववस्त्वेमं स्वच्छे शान्ते सिते परे॥ १७॥

अभाववस्त्वसदेव वस्तु न परमार्थवस्त्वित्यर्थः॥ १७॥

न सनातनता काचिन्न च काचिद्विरिञ्चिता।
न च ब्रह्माण्डता काचिन्न च काचित्सुतादिता॥ १८॥

अवस्तुत्वं ब्रह्मातिरिक्तस्य सर्वस्य अथात आदेशो नेति नेति स एष नेति नेत्यात्मा
तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम् नेह नानास्ति किंचन यत्र
नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा
इत्याद्यपवादकश्रुतिसहस्रसिद्धमित्याशयेनाह - न सनातनतेत्यादिना।
सर्वकालसंबन्धः सनातनता सा च कालातीते नास्ति। सुता ब्रह्मसूनवः
प्रजापतयस्तदादिता॥ १८॥

न लोकान्तरता काचिन्न च स्वर्गादिता क्वचित्।
न मेरुता नासुरता न मनस्त्वं न देहता॥ १९॥

न महाभूतता काचिन्न च कारणता क्वचित्।
न च त्रिकालकलना न भावाभाववस्तुता॥ २०॥

त्वत्ताहन्तात्मता तत्ता सत्ताऽसत्ता न काचन।
न क्वचिद्भेदकलना न भावो न च रञ्जना॥ २१॥

भावो रागस्तत्कार्यं रञ्जना॥ २१॥

सर्वं शान्तं निरालम्बं जगत्त्वं शाश्वतं शिवम्।
अनामयमनाभासमनामकमकारणम्॥ २२॥

सर्वं जगत्त्वं जगतः पारमार्थिकं रूपं
शान्तमधिष्ठानसन्मात्रमित्यर्थः॥ २२॥

न सन्नासन्न मध्यान्तं न सर्वं सर्वमेव च।
मनोवचोभिरग्राह्यं शून्याच्छून्यं सुखात्सुखम्॥ २३॥

सत् उत्पत्त्याख्यभावविकारवत्। असत् नाशाख्यभावविकारवत्। मध्यान्तं
आन्तरालिकभावविकारवत्। अथवा सन्न नष्टम् असन्न स्थितम् अनयोर्मध्यं
उत्पत्तिनाशौ अन्तौ अवधी यस्य तथाभूतम्॥ २३॥

प्। ४०६) २३९

श्रीराम उवाच।

अवबुद्धं समं ब्रह्म सर्वमेव मयाधुना।
तथापि भूयः कथय सर्गः किमिव लोक्यते॥ २४॥

48309 इत्थं निष्प्रपञ्चे परमार्थैकरसे ब्रह्मणि बोधितेऽपि तत्र
48310 चित्तवृत्तिस्थिरीकरणाशक्तेः परावृत्तः पुनर्विपरीतभावनाकातरो रामः
48311 पृच्छति - अवबुद्धमिति | किमिव लोक्यत इति | ज्ञानेनाज्ञाने नष्टे
48312 तन्मूलजगतोऽपि बाधात्पुनर्भानमनुपपन्नमिति भावः || २४ ||
48313
48314 श्रीवसिष्ठ उवाच |
48315
48316 परे शान्ते परं नाम स्थितमित्थमिदंतया |
48317 नेह सर्गो न सर्गाख्या काचिदस्ति कदाचन || २५ ||
48318
48319 यदि त्वया तत्त्वं बुद्धं तर्हि पुनर्जगद्भानं ब्रह्मभानमेव || २५ ||
48320
48321 महार्णवाम्भसीवाम्बु संस्थिता परमेश्वरे |
48322 जलं द्रवत्वात्स्पन्दीव निस्पन्दं परमं पदम् || २६ ||
48323
48324 तत्र सकृद्भेदस्य तदाख्यायाश्च निमित्तापायादेव असत्त्वादित्याशयेन
48325 वसिष्ठः परिहरति - परे इति | परं तत्त्वं परे शान्ते स्वस्वभावे एव
48326 स्थितं न ताः प्रच्युतम् | इत्थं च पूर्णात्मभावात्सर्गस्तदाख्या च इदन्तया
48327 इह ब्रह्मणि नास्ति किंतु तत्स्वभावेनैवास्तीत्यर्थः |
48328 कदाचनेत्युक्तेस्तादृशस्थितेः कादाचित्कत्वाभाव उक्तः | किमिव लोक्यते इति किं
48329 दृष्टान्तस्य प्रश्न उत निमित्तस्य | आद्ये बाधाद्ब्रह्मीभूतनामरूपस्य
48330 ब्रह्मस्वरूपे स्थितौ दृष्टान्तमुक्त्वा यस्ततो विशेषस्तमाह - जलमिति || २६
48331 | |
48332
48333 भाः स्वात्मनीव कचति न कचत्येव तत्पदम् |
48334 भासां तत्त्वं हि कचनं पदं त्वकचनं विदुः || २७ ||
48335
48336 तस्य स्वप्रकाशत्वे दृष्टान्तमुक्त्वा तत्रापि पूर्ववद्विशेषमाह - भा इति
48337 | भाः सूर्यादिज्योतिः कचति दीप्यते | कचनं दीप्तिक्रिया भासां सूर्यादीनां
48338 तत्त्वं स्वभावः | अकचनं निष्क्रियम् || २७ ||
48339
48340 अध ऊर्ध्वं वर्जयित्वा यथाब्धेरुदरे पयः |
48341 स्फुरत्येवं परे चित्त्वादिदं नानेव तत्परम् || २८ ||
48342
48343 ईषद्विदः स्वयं चित्त्वाच्चेत्यतामिव गच्छति |
48344 बुद्ध्यते सर्ग इत्येव समास्थास्यति शास्वतम् || २९ ||
48345
48346 द्वितीयेऽप्याह - ईषदिति | ईषद्विदः अपरिपक्वबोधस्य तव | चेत्यतामिव
48347 गच्छतीत्यस्य विशदीकरणं बुध्यते सर्ग इत्येवेति | सच सर्गो ज्ञानपरिपाके
48348 शाश्वतं ब्रह्मस्वरूपं प्रतिष्ठास्यति || २९ ||
48349
48350 सर्गस्तु परमार्थस्य संज्ञेत्येव विनिश्चयः |
48351 नानास्ति नायमत्यन्तमम्बरस्य यथाम्बरम् || ३० ||
48352
48353 यतस्तदा अयमज्ञदृष्टो नानाभेदः अत्यन्तं नास्ति | यथा
48354 अम्बरस्याकाशस्याम्बरमाकाशान्तरं नास्त्यनवस्थापातादतस्तथा
48355 परमार्थस्य परमार्थान्तराभावात्सर्गशब्दो ब्रह्मण एव संज्ञेति
48356 विद्वन्निश्चय इत्यर्थः || ३० ||
48357
48358 चित्तात्सर्गसमापत्तिरचित्तात्सर्गसंक्षयः |
48359 परे परमसंशान्ते हेम्नीव कटकभ्रमः || ३१ ||
48360

48361 तथा चात्यन्तिकचित्तविनाशाभाव एव तव पुनः सर्गालोकने हेतुरित्याशयेनाह
48362 - चित्तादिति || ३१ ||
48363
48364 सन्नेव सर्गो सत्यत्वमेति चित्तशमोदये |
48365 असत्सत्तामवाप्नोति स्वतः संवेदनोदये || ३२ ||
48366
48367 संवेदनं चित्तं तस्योदये || ३२ ||
48368
48369 संवेदनमहंतावत्सर्गसंभ्रमसंभ्रमः |
48370 असंवेदनमाशान्तं परं विद्धि न तज्जडम् || ३३ ||
48371
48372 अहंतावत् अभिमानयुक्तं संवेदनं चित्तमेव सर्गभ्रमणभ्रान्तिः || ३३ ||
48373
48374 नानेव सर्गो नानायं ज्ञस्यैकात्मशिवात्मकः |
48375 पुंस्त्वकर्मक्रिया सेना मृन्मयी शिल्पिनां यथा || ३४ ||
48376
48377 ज्ञानिनामपि व्युत्थानदशायां चित्ताभासोदये कथं सर्गभानं तदाह ##-
48378 शेषः | यथा शिल्पिनां पुंस्त्वं पुरुषचातुरी तत्कर्मणा
48379 क्रियानिष्पत्तिर्यस्यास्तथाविधा मृन्मयी सेना वस्तुतो मृदपि सेनेव भासते
48380 तद्वदित्यर्थः | अथवा मृन्मयी पुरुषाद्याकारा सेना पुंस्त्वकर्मक्रिया
48381 युद्धादिपुरुषार्थकारिणीव भाति तद्वदित्यर्थः || ३४ ||
48382
48383 इदं पूर्णमनारम्भमनन्तमनघोदरम् |
48384 पूर्णे पूर्णपरापूरैः पूर्णमेवावतिष्ठते || ३५ ||
48385
48386 तेषां पारमार्थिकदृष्टौ तु इदं जगत्पूर्णं ब्रह्मैवावतिष्ठते इत्यत्र
48387 पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते | पूर्णस्य पूर्णमादाय
48388 पूर्णमेवावशिष्यते इति श्रुतिमर्थतो दर्शयति - इदमिति |
48389 अनारम्भमनुत्पत्तिकम् | अनन्तं नाशरहितम् | अत एव
48390 विकारान्तरदोषरहितमुदरं मध्यं यस्य तथाभूतम् | यतः पूर्णस्यैव
48391 परमात्मन आपूरैः सर्वतोव्याप्तिभिः पूर्णमतः पूर्णं
48392 सत्पूर्णमेवावतिष्ठते नाणुमात्रमप्यपूर्णतां यातीत्यर्थः || ३५ ||
48393
48394 यदयं लक्ष्यते सर्गस्तद्ब्रह्म ब्रह्मणि स्थितम् |
48395 नभो नभसि विश्रान्तं शान्तं शान्ते शिवे शिवम् || ३६ ||
48396
48397 तदेव दृढीकाराय पुनराह - यदयमिति | सामान्ये नपुंसकम् || ३६ ||
48398
48399 मुकुरप्रतिबिम्बस्थे नगरे नवयोजने |
48400 यथा दूरमदूरं च तथेशे तदतत्क्रमः || ३७ ||
48401
48402 ईशे ब्रह्मणि | तस्य दूरत्वस्य अतस्य सामीप्यस्य वा क्रमः परिपाटीत्यर्थः || ३७
48403 | |
48404
48405 असदभ्युदितं विश्वं सदप्यभ्युदितं सदा |
48406 प्रतिभासात्सदाभासमवस्तुत्वादसन्मयम् || ३८ ||
48407
48408 एवं च सत एवासद्विश्वाकारेण भानात्तत्त्वदृशा
48409 सदेवाभ्युदितमतत्त्वदृशा असदेवभूदितम् | यतो
48410 भेदप्रतिभासात्तत्सदाभासमसद्भेददर्शने त्वसन्मयमित्यर्थः || ३८ ||
48411
48412 आदर्शनगराकारे मृगतृष्णाम्बुभास्वरे |

द्विचन्द्रविभ्रमाभासे सर्गेऽस्मिन्कैव सत्यता ॥ ३९ ॥

मायाचूर्णपरिक्षेपाद्यथा व्योम्नि पुरभ्रमः ।
तथा संविदि संसारः सारोऽसारश्च भासते ॥ ४० ॥

ऐन्द्रजालिकैः परमोहनायाभिमन्त्रितमौषधचूर्णं मायाचूर्णम् । सारः
सत्योऽसारो मृतश्च ॥ ४० ॥

प्। ४०७) २३९

यावद्विचारदहनेन समूलदाहं
दग्धा न जर्जरलतेव बलादविद्या ।
शाखाप्रतानगहनानि बहूनि ताव-
न्नानाविधानि सुखदुःखवनानि सूते ॥ ४१ ॥

सवासनाविद्यानाशो यावत्सप्तमभूमिकाधिरोहणपर्यन्तो न
संपन्नस्तावद्विक्षेपदुःखं तत्त्वज्ञानामपि भासत एवातो
जीवन्मुक्तिसुखार्थिभिर्भूमिकाभ्यासः कार्य इत्याशयेनोपसंहरति -
यावदिति ॥ ४१ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० उत्पत्तिप्रकरणे
हेमोर्म्युपदेशो नामैकोनविंशत्युत्तरशततमः सर्गः ॥ ११९ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे हेमोर्म्युपदेशो
नामैकोनविंशत्युत्तरशततमः सर्गः ॥ ११९ ॥

## विंशत्युत्तरशततमः सर्गः १२०

श्रीवसिष्ठ उवाच ।

हेमोर्मिकादिवन्मिथ्या कथितायाः क्षयोन्मुखम् ।
त्वं महत्त्वमविद्यायाः शृणु राघव कीदृशम् ॥ १ ॥

लवणेन पुनर्गत्वा प्राग्दृष्टं विन्ध्यपक्कणम् ।
चण्डालीश्वश्रुसंवादः कृतोऽत्र प्रतिपाद्यते ॥ १ ॥

हेमोर्मिकानिदर्शनेन वर्णितं विश्वस्य ब्रह्मविवर्तत्वं तत्परिक्षितवतो
लवणस्यानुभवसिद्धमिति त्वयापि विमृश्य द्रष्टव्यमित्याशयेनाह -
हेमोर्मिकेति । मिथ्याशब्दोत्तरमितिशब्दोऽध्याहार्यः । विमर्शमात्रेण
क्षयोन्मुखं महत्त्वमाशर्यभूतत्वम् ॥ १ ॥

लवणोऽसौ महीपालस्तथा दृष्ट्वा तदा भ्रमम् ।
द्वितीये दिवसे गन्तुं प्रवृत्तस्तां महाटवीम् ॥ २ ॥

असौ प्राग्वर्णितो लवणः । तामैन्द्रजालिकोपदर्शिताम् ॥ २ ॥

यत्र दृष्टं मया दुःखमरण्यानीं स्मरामि ताम् ।
चित्तादर्शगतां विन्ध्यात्कदाचिल्लभ्यते हि सा ॥ ३ ॥

चित्तमेवादर्शो दर्पणस्तद्गताम् । विन्ध्यादिति ल्यब्लोपे कर्मण्यधिकरणे वा
पञ्चमी । विन्ध्यं प्राप्य विन्ध्ये गत्वा वेत्यर्थः ॥ ३ ॥

48465
48466 इति निश्चित्य सचिवैः प्रययौ दक्षिणापथम् ।
48467 पुनर्दिग्विजयायेव प्राप्य विन्ध्यमहीधरम् ॥ ४ ॥
48468
48469 पूर्वदक्षिणपाश्चात्यमहार्णवतटस्थलीम् ।
48470 बभ्राम कौतुकात्सर्वां व्योमवीथीमिवोष्णगुः ॥ ५ ॥
48471
48472 उष्णगुः सूर्यः ॥ ५ ॥
48473
48474 अथैकस्मिन्प्रदेशे तां चिन्तामिव पुरोगताम् ।
48475 ददर्शोग्रामरण्यानीं परलोकमहीमिव ॥ ६ ॥
48476
48477 अरण्यानीं महारण्यम् । अरण्यान्महत्त्वे आनुक् ॥ ६ ॥
48478
48479 स तत्र विहरंस्तांस्तान्वृत्तान्तान्सकलानथ ।
48480 दृष्टवान्पृष्टवांश्चैव ज्ञातवांश्च विसिस्मिये ॥ ७ ॥
48481
48482 तांस्तान् प्रागनुभूतानित्यर्थः ॥ ७ ॥
48483
48484 तान्परिज्ञातवांश्चासीद्व्याधान्पुल्कसजान्पुनः ।
48485 विस्मयाकुलया बुद्ध्या भूयो बभ्राम संभ्रमी ॥ ८ ॥
48486
48487 संभ्रमी कुतूहली ॥ ८ ॥
48488
48489 अथ प्राप्य महाटव्यां पर्यन्ते धूमधूसरे ।
48490 तमेव ग्रामकं यस्मिन्सोऽभवत्पुष्टपुल्कसः ॥ ९ ॥
48491
48492 तत्रापश्यज्जनांस्तांस्तांस्ताः स्त्रियस्ताः कुटीरकाः ।
48493 नानाकाराङ्गनाधारांस्तांस्तांश्च वसुधातटान् ॥ १० ॥
48494
48495 कुटीरकाः अल्पाः कुटीः । कुटीशमीशुण्डाभ्यो रः स्वार्थे कन् ॥ १० ॥
48496
48497 तांश्चाकाण्डपरिभ्रष्टांस्तान्वृक्षांस्तांस्त्वनुव्रजान् ।
48498 तांस्तथैव समुद्देशांस्तान्व्याधानेकलान्सुतान् ॥ ११ ॥
48499
48500 अकाण्डे दुर्भिक्षे परिभ्रष्टान् दुर्दशाक्रान्तान् । अनुव्रजान् स्वानुगान् । एकलान्
48501 बन्धुवर्जितान् ॥ ११ ॥
48502
48503 अन्यासु वृद्धासु सबाष्पनेत्रा-
48504 स्वार्तार्तियुक्तासु च वर्णयन्ती ।
48505 अकालकान्तारविशीर्णबन्धु-
48506 दुःखान्यसंख्यानि सखीषु वृद्धा ॥ १२ ॥
48507
48508 तत्रत्यं वृत्तान्तं वर्णयति - अन्यास्वित्यादिना । वृद्धा अस्य श्वश्रूः ।
48509 आर्तानां स्वबन्धूनामार्तिभिर्युक्तास्वन्यासु वृद्धासु सखीषु अकाले दुष्काले
48510 कान्तारेषु विशीर्णानां स्वबन्धूनां दुःखानि वर्णयन्ती सती इदं
48511 वक्ष्यमाणप्रकारं परिरोदितीति परेणान्वयः ॥ १२ ॥
48512
48513 वृद्धा प्रवृद्धोज्ज्वलनेत्रबाष्पा
48514 कष्टं [कंथावृता इति पाठः] बताशुष्ककुचा कृशाङ्गी ।
48515 अवग्रहोग्राशनिदग्धदेशे
48516 तत्रार्तनादा परिरोदितीदम् ॥ १३ ॥

48517
48518 तामेव विशिनष्टि - वृद्धेति | इतरवृद्धापेक्षया प्रकर्षेण
48519 वृद्धान्युज्ज्वलानि नेत्रबाष्पाणि यस्याः |
48520 अवग्रहोऽनावृष्टिस्तल्लक्षणेनोग्राशनिना दग्धप्राये देशे || १३ ||
48521
48522 हा पुत्रि पुत्रावृतसर्वगात्रे
48523 दिनत्रयाभोजनजर्जराङ्गि |
48524 कृत्वासिना वर्मणि जीर्णदेहाः
48525 कथं क्व मुक्ता भवतासवस्ते || १४ ||
48526
48527 रोदनप्रकारमेवाह - हा पुत्रीत्यादिना | वर्मणि स्वकोशे असिनेव प्रवेशं
48528 कृत्वा भवता स्थितेन राज्ञा अत एव प्राणप्रियास्ते यूयं दुर्भिक्षजीर्णदेहाः
48529 कथं मुक्तास्त्यक्ताः क्व वा मुक्ता इति पुत्रैः सह बहुत्वोक्तिः | अथवा
48530 पूर्ववदसिना भवता राज्ञा जीर्णदेहा जर्जरशरीरा असवः स्वप्राणाः कथं
48531 मुक्ताः क्व मुक्ता इत्यर्थः | निर्विसर्गपाठे तु जीर्णदेहा त्वं कथं मुक्ता
48532 असवश्च ते कथं मुक्ता इति योज्यम् || १४ ||
48533
48534 तालीदलालम्बनमम्बुदाद्रौ
48535 दन्तान्तरस्थारुणसत्फलस्य |
48536 स्मरामि गुञ्जाफलदाम भर्तुः
48537 पुरस्थमुद्रामरहासिनस्ते || १५ ||
48538
48539 इदानीं राज्ञः कुटुम्बभरणाय कृतं साहसकृत्यं स्मरन्त्याह -
48540 तालीति | अम्बुदवदुन्नते अद्रौ तालवृक्षमारुह्य फलं गृहीत्वा अवतरणकाले
48541 करद्वयस्यापि व्यापृतत्वात्फलधारणाशक्तेर्दन्तान्तरस्थं
48542 दन्तावष्टब्धं अरुणं सत् परिपक्कं फलं यस्य तथाविधस्य अत एव
48543 पुरस्थमुद्रया तत्कालोपस्थितवेषेण अमरं मरणवर्जितं हनूमन्तं
48544 हासिनः हसितुं शीलस्य ते तव दैवात्स्खलने तालीदलस्य
48545 सन्निहिततालान्तरशाखाया आलम्बनं साहसम् | तलालम्बनम् इति पाठे तले
48546 मूले आलम्बनमवतरणं साहसं स्मरामीत्यर्थः || १५ ||
48547
48548 प्। ४०८) २४०
48549
48550 कदम्बजम्बीरलवङ्गगुञ्जा-
48551 कुञ्जान्तरतस्तु चरत्तरक्षोः |
48552 पश्यामि पुत्रस्य कदा नु भूयो
48553 भयंकराण्युड्यतिवल्गितानि || १६ ||
48554
48555 कदम्बजम्बीरवृक्षाणां लवङ्गगुञ्जावल्लीनां च
48556 कुञ्जस्यान्तरन्तःप्रदेशे निलीय चरतस्तरक्षोर्व्याघ्रजातिभेदस्य भयंकराणि
48557 भयजनकानि पुत्रस्य पुत्रात्प्रियतमस्य जामातुः उड्यतिना उड्डयनेन वल्गितानि
48558 तद्वधार्थं गमनानि || १६ ||
48559
48560 न तानि कामस्य विलासिनीह
48561 मुखेऽपि शोभालसितानि सन्ति |
48562 तमालनीले चिबुकैकदेशे
48563 सुतस्य चान्यास्यगतामिषस्य || १७ ||
48564
48565 इदानीं स्वपुत्र्यां सकामस्य तस्य मुखशोभां स्मृत्वा वर्णयति - न
48566 तानीति | पानादिकाले अन्यस्याः स्वप्रेयस्या आस्यात् गतं प्रीत्या प्राप्तमामिषं
48567 मांसशकलं येन तथाविधस्य सुतस्य अनुकंप्यस्य ते तच्चर्वणकाले
48568 तमालसदृशश्मश्रुभिर्नीले चिबुकैकदेशे यानि शोभायुक्तानि लसितानि

विलासाः सन्ति तानि इह जगति विलासिनि कामस्य मन्मथस्य मुखे संपूर्णेऽपि न
सन्तीत्यर्थः ॥ १७ ॥

सुतापनीता सह तेन भर्त्रा
यमेन यस्या यमुना समाना।
तमालवल्लीसहपुष्पगुच्छा
समीरणेनेव वने वरेण ॥ १८ ॥

इदानीं भर्त्रा सह पुत्र्या मरणं संभावयन्त्याह - सुतेति। यस्याः
यमुना वर्णेन समाना सा मम सुता तेन भर्त्रा सह यमेन अपनीता
नूनमित्यर्थः। वरेण बलीयसा ॥ १८ ॥

हा पुत्रि गुञ्जाफलदामहारे
समुन्नताभोगपयोधराङ्गि।
वातोल्लसत्कज्जललोलवर्णे
पर्णाम्बरे बादरजम्बुदन्ते ॥ १९ ॥

पर्णान्येव अम्बरादिवस्त्रवत्परिधानादीनि यस्याः। बादराणि बदरबीजानि
जम्बूनि तद्बीजानीव वा दन्ता यस्याः ॥ १९ ॥

हा राजपुत्रेन्दुसमानकान्त
संत्यज्य शुद्धान्तविलासिनीस्ताः।
रतिं प्रयातोऽसि ममात्मजायां
न सापि ते सुस्थिरतामुपेता ॥ २० ॥

संसारनद्याः सुतरङ्गभङ्गैः
क्रियाविलासैर्विहितोपहासैः।
किं नाम तुच्छं न कृतं नृपेशो
यद्योजितः पुष्कसकन्यकायाम् ॥ २१ ॥

विहितः उचित उपहासो येभ्यस्तथाविधैः क्रियाविलासैः कर्मपरिपाकैः।
सुतरङ्गभङ्गैरिति व्यस्तरूपकम्। किं नाम तुच्छं निन्द्यं फलं न
कृतम्। तदेवाह - नृपेश इति ॥ २१ ॥

सा त्रस्तसारङ्गसमाननेत्रा
स दृप्तशार्दूलसमानवीर्यः।
उभौ गतावेकपदेन नाश-
माशा सहार्थेन यथा महेहा ॥ २२ ॥

एकपदेन युगपत् यथा महेहा बहुमनोरथयुक्ता आशा अर्थेन धनेन सह
नाशं गच्छति भाग्यविपर्यये तद्वदित्यर्थः ॥ २२ ॥

मृतेश्वराश्वस्तनिजात्मजास्मि
दुर्देशयातास्मि च दुर्गताऽस्मि।
दुर्जातिजातास्मि महापदेऽस्मि
साक्षाद्भयं भोऽस्मि महापदस्मि ॥ २३ ॥

इदानीं स्वात्मानमनुशोचन्त्याह - मृतेश्वरेति। आशु अस्तनिजात्मजा
मृतस्वपुत्री। दुर्गता दरिद्रास्मि। महति अपदे विषमस्थाने अस्मि। किंच भो
सख्यः साक्षाद्भयमेवाहमस्मि।
महापदेवाहमस्मीत्यतिशयद्योतनायाभेदारोपः ॥ २३ ॥

48621 नीचावमानप्रभवस्य मन्योः
48622 क्षुधाप्रपन्नस्य कलत्रकस्य ।
48623 शोकस्य वृत्तावनिवार्यवृत्ते-
48624 नार्यस्म्यनेकायतनं विनाथा ॥ २४ ॥
48625
48626 विनाथा अहं नीचावमानप्रभवस्य मन्योः कोपस्य क्षुधया प्रपन्नस्य
48627 कलत्रकस्य पोष्यवर्गस्य वृत्तौ आहारविषये अनिवार्यवृत्तेः शोकस्य
48628 चेत्याद्यनेकेषामायतनं गृहं नारीरूपं धात्रा निर्मितास्मीति शेषः ॥ २४ ॥
48629
48630 दैवोपतप्तस्य विबान्धवस्य
48631 मूढस्य रूढस्य महाधिभूमौ ।
48632 यत्प्राणनं यन्मरणं महाप-
48633 द्यस्यात्मनिर्जीवितमुत्तमं तत् ॥ २५ ॥
48634
48635 इदानीं स्वसदृशं जनमन्यमपि निन्दन्त्याह - दैवेति । महत्यां
48636 आधिर्मानसदुःखं तल्लक्षणायां भूमौ रूढस्य प्रादुर्भूतस्य
48637 ईदृशस्य यस्य जनस्य यत्प्राणनं जीवनं यन्मरणं या च महापत् तत्
48638 ततः आत्मनिर्जीवितं स्वतो जीवशून्यं पाषाणादि उत्तमं श्रेष्ठमित्यर्थः ॥
48639 २५ ॥
48640
48641 जनैर्विहीनस्य कुदेशवृत्ते-
48642 र्दुःखान्यनन्तानि समुल्लसन्ति ।
48643 सहस्रशाखारससंकुलानि
48644 तृणानि वर्षास्विव पर्वतस्य ॥ २६ ॥
48645
48646 जनैः स्वजनैर्विहीनस्य कुदेशे वृत्तिः स्थितिर्यस्य तथाविधस्य पुंसः ।
48647 विशेषणे पुंस्पर्वतसाधारणे ॥ २६ ॥
48648
48649 एवं लपन्तीं स्वकलत्रवृद्धां
48650 दासीभिराश्वास्य नृपः स्त्रियं ताम् ।
48651 पप्रच्छ किंवृत्तमिहैव का च
48652 का ते सुता कश्च सुतस्तवेति ॥ २७ ॥
48653
48654 लपन्तीं विलपन्तीम् । स्वकलत्रवृद्धां पुल्कसीभूतस्वपोष्येषु वृद्धां
48655 श्वश्रूं दासीभिराश्वास्येति साक्षादसंभाष्यत्वद्योतनाय ॥ २७ ॥
48656
48657 प। ४०९) २४०
48658
48659 उवाच सा बाष्पविलोचनाथ
48660 ग्रामस्त्वयं पुष्पसघोषनामा ।
48661 इहाभवत्पुष्कसकः पतिर्मे
48662 बभूव तस्येन्दुसमा सुतैका ॥ २८ ॥
48663
48664 सा दैवयोगात्पतिमिन्द्रतुल्य-
48665 मिहागतं दैववशेन भूपम् ।
48666 अयं विशीर्णं मधुकुम्भमाप
48667 वने वराकी करमी यथैका ॥ २९ ॥
48668
48669 दैवयोगाद्भाग्यवशात् । दैववशेन दुरदृष्टवशेन अयं शुभावहं
48670 विधिं प्राप्येति शेषः । विशीर्णं विशीर्णमुखपिधानं मधुकुम्भं
48671 करभी गर्दभी उष्ट्री वा आप प्राप्तवती ॥ २९ ॥
48672

48673 सा तेन सार्धं सुचिरं सुखानि
48674 भुक्त्वा प्रसूता तनयाः सुतांश्च ।
48675 वृद्धिं गता काननकोटरेऽस्मिं-
48676 स्तुम्बीलता पादपसंश्रितेव ॥ ३० ॥
48677
48678 तुम्बीलता अलाबुवल्ली ॥ ३० ॥
48679
48680 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपायेषूत्पत्तिप्रकरणे
48681 चण्डालीशोचने नाम विंशत्युत्तरशततमः सर्गः ॥ १२० ॥
48682
48683 इति श्रीवासिष्ठमहारामायणतातर्यप्रकाशे उत्पत्तिप्रकरणे चण्डालीशोचनं
48684 नाम विंशत्युत्तरशततमः सर्गः ॥ १२० ॥
48685
48686
48687 एकविंशत्युत्तरशततमः सर्गः १२१
48688
48689 चण्डाल्युवाच ।
48690
48691 केनचित्त्वथ कालेन ग्रामकेऽस्मिञ्जनेश्वर ।
48692 अवृष्टिदुःखमभवद्भीषणं भग्नमानवम् ॥ १ ॥
48693
48694 तच्छ्रुत्वा विस्मितस्यात्र लवणस्य गृहागमे ।
48695 विनिर्णयो वसिष्ठोक्त्या रामस्याप्यत्र कीर्त्यते ॥ १ ॥
48696
48697 अवृष्टिप्रयुक्तं दुर्भिक्षदुःखम् । भग्ना मानवा येन तत् ॥ १ ॥
48698
48699 महतानेन दुःखेन सर्वे ते ग्रामका जनाः ।
48700 विनिर्गत्य गता दूरं सर्वे पञ्चत्वमागताः ॥ २ ॥
48701
48702 पञ्चत्वं मरणम् ॥ २ ॥
48703
48704 तेनेमा दुःखभागिन्यः शून्या वयमिह प्रभो ।
48705 सौम्य शोचाम सद्बाष्पमाचान्तेक्षणधारया ॥ ३ ॥
48706
48707 तेन बन्धुमरणेन दुर्भिक्षेण च सद्बाष्पं सबाष्पं आचान्तयेव स्रवन्त्या
48708 ईक्षणधारया अस्त्रधारया । सद्बाष्पाः इति पाठे वयमित्यस्य विशेषणम् ॥ ३ ॥
48709
48710 इत्याकर्ण्याङ्गनावक्त्राद्राजा विस्मयमागतः ।
48711 मन्त्रिणां मुखमालोक्य चित्रार्पित इवाभवत् ॥ ४ ॥
48712
48713 भूयो विचारयामास तदाश्चर्यमनुत्तमम् ।
48714 भूयो भूयोऽथ बभूवाश्चर्यवानिति ॥ ५ ॥
48715
48716 इतिशब्दः प्रश्नप्रकारबाहुल्यद्योतकः ॥ ५ ॥
48717
48718 तेषां समुचितैर्दानसन्मानैर्दुःखसंक्षयम् ।
48719 कृत्वा करुणयाविष्टो इष्टलोकपरावरः ॥ ६ ॥
48720
48721 तेषां पक्कणजनानाम् [पक्कणेति पाठो मुद्रितपुस्तके सर्वत्र] ॥ ६ ॥
48722
48723 स्थित्वा तत्र चिरं कालं विमृश्य नियतेर्गतीः ।
48724 आजगाम गृहं पौरैर्वन्दितः प्रविवेश ह ॥ ७ ॥

48725
48726 नियतेर्दैवस्य ॥ ७ ॥
48727
48728 प्रातस्तत्र सभास्थाने मामपृच्छदसौ नृपः ।
48729 कथमेवं मुने स्वप्नः प्रत्यक्षमिति विस्मितः ॥ ८ ॥
48730
48731 प्रत्यक्षं दृष्ट इति शेषः ॥ ८ ॥
48732
48733 यथावस्तुतया तस्य तत उक्तः स तादृशः ।
48734 संशयो हृदयान्नुन्नो वातेनेवाम्बुदो दिवः ॥ ९ ॥
48735
48736 स तादृशः प्रश्नो मया यथावस्तु वस्तुयाथार्थ्यं तद्भावेन उक्तः
48737 समाहितः । दिवः अन्तरिक्षात् ॥ ९ ॥
48738
48739 इत्येवं राघवाविद्या महती भ्रमदायिनी ।
48740 असत्सत्तां नयत्याशु सच्चासत्तं नयत्यलम् ॥ १० ॥
48741
48742 श्रीराम उवाच ।
48743
48744 कथमेवं वद ब्रह्मन्स्वप्नः सत्यत्वमागतः ।
48745 भ्रमोदार इवैषोऽर्थो न मे गलति चेतसि ॥ ११ ॥
48746
48747 सत्यात्वं जाग्रत्कालानुभवयोग्यताम् । भ्रमोदार इवैषोऽर्थ इति पाठे न मे
48748 गलतीत्येतदुत्तरं संशयपदमध्याहार्यम् । संशयोभगवन्सोऽयम् इति
48749 पाठे तु स्पष्टम् ॥ ११ ॥
48750
48751 श्रीवसिष्ठ उवाच ।
48752
48753 सर्वमेतदविद्यायां संभवत्येव राघव ।
48754 घटेषु पटता दृष्टा स्वप्नसंभ्रमितादिषु ॥ १२ ॥
48755
48756 संभवमेवोपपादयति - घटेष्वित्यादिना ॥ १२ ॥
48757
48758 दूरं निकटवद्भाति मुकुरेऽन्तरिवाचलः ।
48759 चिरं शीघ्रत्वमायाति पुनः श्रेष्ठेव यामिनी ॥ १३ ॥
48760
48761 श्रेष्ठा सुखनिद्राप्रयाता यामिनी रात्रिरिव ॥ १३ ॥
48762
48763 असंभवच्च भवति स्वप्ने स्वमरणं यथा ।
48764 असच्च सदिवाभाति [सदिवोदेतीति इति पाठः] स्वप्नेष्विव नभोगतिः ॥
48765 १४ ॥
48766
48767 सुस्थितं सुष्ठु चलति भ्रमे भूपरिवर्तवत् ।
48768 अचलं चलतामेति मदविक्षुब्धचित्तवत् ॥ १५ ॥
48769
48770 सुस्थितं स्थिरम् । भ्रमे भ्रमणे । चित्तशब्देन तद्दृश्यं लक्ष्यते ॥ १५ ॥
48771
48772 वासनावलितं चेतो यद्यथा भावयत्यलम् ।
48773 तत्तथानुभवत्याशु न तदस्ति न वाप्यसत् ॥ १६ ॥
48774
48775 यदैवाभ्युदिता विद्या त्वहंत्वादिमयी मुधा ।
48776 तदैवानादिमध्यान्ता भ्रमस्यानन्ततोदिता ॥ १७ ॥

अनन्तता असंख्येयता ॥ १७ ॥

प्। ४१०) २४१

प्रतिभासवशादेव सर्वो विपरिवर्तते ।
क्षणः कल्पत्वमायाति कल्पश्च भवति क्षणः ॥ १८ ॥

विपर्यस्तमतिर्जन्तुः पश्यत्यात्मानमेडकम् ।
बिभर्ति सिंहतामेडो वासनावशतः स्वयम् ॥ १९ ॥

आत्मानं स्वं एडकं मेषम् ॥ १९ ॥

विषमभ्रमदाविद्यामोहाहन्तादयह् समाः ।
सर्वे चित्तविपर्यासफलसंपत्तिहेतुतः ॥ २० ॥

काकतालीयवच्चेतोवासनावशतः स्वतः ।
संवदन्ति महारम्भा व्यवहाराः परस्परम् ॥ २१ ॥

तथाच कल्पितत्वाविशेषेऽपि संवादविसंवादाभ्यामेव लोके
सत्यत्वमिथ्यात्वव्यवहारो न परमार्थविमर्शेनेत्याशयेनाह -
काकतालीयवदिति ॥ २१ ॥

वृत्तं प्राक्पक्कणे राज्ञः कस्यचिल्लवणस्य यत् ।
प्रतिभातं तदेतस्य सद्वासद्वा मनोगतम् ॥ २२ ॥

तर्हि लवणव्यवहारे कया रीत्या संवादस्तमाह - वृत्तमिति । पक्कणे
प्राक्कस्यचिद्यद्वृत्तं चाण्डालीविवाहादि तल्लवणस्य मनोगतं प्रतिभातमिति
संवादभ्रम इत्यर्थः ॥ २२ ॥

विस्मरत्यपि विस्तीर्णां कृतां चेतःक्रियां यथा ।
तथा कृतामप्यकृतामिति स्मरति निश्चितम् ॥ २३ ॥

अनुभूतविस्मृतिवदननुभूतस्मृतिरपि न दोषायेत्याशयेनाह -
विस्मरतीति । यद्यपि लवणस्य भ्रान्तावनुभव एव न
स्मृतिस्तथाप्यनुभवस्मृत्याद्यवान्तरवैलक्षण्यमपि कल्पनामात्रत्वान्न
विमर्शक्षममिति सूचनायेत्थमुक्तम् ॥ २३ ॥

तथा न भुक्तवानस्मि भुक्तवानिति चेतसि ।
स्वप्ने देशान्तरगमे प्राकृतोऽप्यवबुद्ध्यते ॥ २४ ॥

विन्ध्यपुष्कससुग्रामे व्यवहारोऽयमीदृशः ।
प्रतिभासागतस्तस्य स्वप्ने पूर्वकथा यथा ॥ २५ ॥

प्रतिभाससंवादयोः पूर्वापरभावोऽपि कल्पनामात्रत्वान्न व्यवस्थित
इत्याशयेनाह - विन्ध्येति द्वाभ्याम् । तस्य लवणस्य ॥ २५ ॥

अथवा लवणेनाशु दृष्टो यः स्वप्नविभ्रमः ।
स एव संविदं प्राप्तो विन्ध्यपुष्कसचेतसि ॥ २६ ॥

लावणी प्रतिभाऽरूढा विन्ध्यापुष्कसचेतसि ।
विन्ध्यपुष्कससंविद्वाऽरूढा पार्थिवचेतसि ॥ २७ ॥

प्रतिभाभेदकल्पनमपि तथा एकत्र जाताया एवोभयत्र
भानसंभवादित्याशयेनाह - लावणीति| लवणस्येयं लावणी| उभयत्र
आरूढेति च्छेदः || २७ ||

यथा बहूनां सदृशं वचनं नाम मानसम्|
तथा स्वप्नेऽपि भवति कालो देशः क्रियापि च || २८ ||

प्रतिभातद्विषययोः संवादे दृष्टान्तमाह - यथेति| बहूनां कवीनां
मानसोत्प्रेक्षारचितकाव्यार्थप्रतिपादकं वचनं कदाचित्सदृशं
सच्छब्दतोऽर्थतश्च संवाद भवति तथा लवणपुल्कसभ्रान्तिरूपे स्वप्नेऽपि
भवतीत्यर्थः || २८ ||

व्यवहारगतेस्तस्याः सत्तास्ति प्रतिभासतः|
सत्ता सर्वपदार्थानां नान्या संवेदनादृते || २९ ||

तर्हि किं सा व्यवहारगतिरत्यन्तासती नेत्याह - व्यवहारेति|
अधिष्ठानचित्सत्तयैव सर्ववस्तुसत्ता न स्वातन्त्र्येणेत्याह - सत्तेति || २९ ||

संवेदनेतरा भाति वीचिर्वा जलसंगतिः [संगत इति पाठः]|
भूतभव्यभविष्यस्था तरुबीजे तरुर्यथा || ३० ||

इवार्थे वाशब्दः| संवेदनसत्तैव भूतभव्यभविष्यत्प्रपञ्चगता सती
संवेदनादितरेव भाति जले वीचिरिव बीजे तरुरिव चेत्यर्थः || ३० ||

तस्याः सत्त्वमसत्त्वं च न सन्नासदिति स्थितम्|
सत्सदेव हि संवित्तेरसंवित्तेरसन्मयम् || ३१ ||

तस्याः संवेदनेतरसत्तायाः| सत्त्वदृशा संवेदनात्सत्त्वं तथा
असंवित्तेस्त्वसन्मयमिति| तत्सत्तासत्ते भ्रान्तिसंवेदनाधीने इत्यर्थः || ३१ ||

नाविद्या विद्यते किंचित्तैलादि सिकतास्विव|
हेम्नः किं कटकादन्यत्पदं स्याद्धेमतां विना || ३२ ||

भ्रान्तिगोचरस्य चाविद्यामात्रत्वादसत्त्वमेव फलितमित्याशयेनाह - नेति|
पदं वस्तु स्यात्किं नेत्यर्थः || ३२ ||

अविद्ययात्मतत्त्वस्य संबन्धो नोपपद्यते|
संबन्धः सदृशानां च यः स्फुटः स्वानुभूतितः || ३३ ||

वस्तुसंबन्धाद्वस्तु कुतो न स्यात्तत्राह - अविद्ययेति || ३३ ||

जतुकाष्ठादिसंबन्धो यः समासमयोगतः|
नान्योन्यानुभवायासौ तदेकस्पन्दमात्रकम् || ३४ ||

पार्थिवत्वद्रवत्वाभ्यां समासमयोगतः यो जतुकाष्ठादिसंबन्धः असौ
असदृशयोरन्योन्ययोः संबन्धोदाहरणाय न योग्यो यतस्तदुभयतस्तस्या
अविद्याया एकस्या एव स्पन्दो विलासस्तन्मात्रमित्यर्थः || ३४ ||

परमार्थमयं सर्वं यथा तेनोपलादयः|
चिता समभिचेत्यन्ते संबन्धवशतः समाः || ३५ ||

48881 यदि तु चिन्मयमेवाभ्युपगम्येत तर्हि समैस्तैश्चितः संबन्ध उपपद्यत
48882 इत्याह - परार्थमयमिति। यथा येन प्रकारेण परमार्थमयास्तेन हेतुना
48883 चिता समा इति संबन्धवशतश्चेत्यन्ते चिता प्रकाश्यन्ते इति भवेदित्यर्थः॥ ३५॥
48884
48885 यदा चिन्मात्रसन्मात्रमयाः सर्वे जगद्गताः।
48886 भावास्तदा विभान्त्येते मिथः स्वानुभवस्थितेः॥ ३६॥
48887
48888 तस्मिन्पक्षेऽपि दोषमाह - यदेति। तदा स्वानुभवस्थितेः
48889 स्वप्रकाशताबलादेव विभान्ति न चिदन्तरसंबन्धबलात्। दीपस्य
48890 स्वप्रथायां दीपान्तरसंबन्धापेक्षाभावादित्यर्थः॥ ३६॥
48891
48892 न संभवति संबन्धो विषमाणां निरन्तरः।
48893 न परस्परसंबन्धाद्विनानुभवनं मिथः॥ ३७॥
48894
48895 उक्तमेव कल्पद्वयं श्लोकद्वयेन स्फुटं पुनराह - न संभवतीति॥ ३७॥
48896
48897 सदृशे [सदंशे इति पाठः] सदृशं वस्तु
48898 क्षणाद्गत्वैकतामलम्।
48899 रूपमास्फारयत्येकमेकत्वादेव नान्यथा॥ ३८॥
48900
48901 द्वितीयकल्पे अणुमात्रस्याप्यचिदंशस्य
48902 भेदकस्याभावादखण्डब्रह्मस्वप्रकाशतैव फलितेत्याशयेन
48903 क्षणाद्गत्वैकतामलमित्युक्तम्॥ ३८॥
48904
48905 प्। ४११) २४१
48906
48907 चिच्चेत्यमिलिता [चिच्चेत्यचितितारूपदृश्ययोदेति चेतन इति
48908 पाठष्टीकानुगुणः] दृश्यरूपयोदेति चेतनः।
48909 (जडं [जडं जडेन इति श्लोकार्ध क्वचिन्न पठ्यते] जडेन
48910 मिलितं घनं संपद्यते जडम्।)
48911 न च चिज्जडयोरैक्यं वैलक्षण्यात्क्वचिद्भवेत्॥ ३९॥
48912
48913 यो मूढानां चेतनस्य चिच्चेत्यचिततारूपेण दृश्यया त्रिपुट्या
48914 उदितत्वानुभवः स न चिज्जडयोरभेदसंबन्धमादायोपपादयितुं शक्य
48915 इत्याशयेनाह - चिदिति॥ ३९॥
48916
48917 चिज्जडौ चित्र एकत्र न तौ संमिलतः क्वचित्।
48918 चिन्मयत्वाच्चिदालम्भश्चिदालम्भेन वेदनम्॥ ४०॥
48919
48920 नापि भेदसंबन्धमादायोपपादयितुं शक्यत इत्याह - चिज्जडाविति। एकत्र
48921 एकस्मिंस्त्रिपुटीपटीचित्रे। नापि चिन्मयानां चिता संबन्ध इति
48922 पक्षमादायाप्युपपादयितुं शक्यत इत्याह - चिन्मयत्वादिति।
48923 सादृश्याच्चिदालम्भसंभवेऽपि भेदकाभावाद्वेद्यत्वासिद्धेर्न
48924 दृश्यवेदनांशोपपत्तिरित्यर्थः॥ ४०॥
48925
48926 दारुपाषाणभेदानां ननु ह्येते चिदात्मकाः।
48927 पदार्थो हि पदार्थेन परिणाम्यनुभूयते॥ ४१॥
48928
48929 ननु जडत्वेन साम्येऽपि यथा दारुपाषाणमृदामेकगृहघटकत्वेन योगो
48930 यथा वा।प्यत्वेन साजात्येऽपि जिह्वारसयोर्योगस्तथा चित्त्वेन साम्येऽपि दृशो
48931 दृश्ययोगोऽस्तु तत्राह - दार्विति। दार्वादिजडपदार्थो
48932 गृहादिपदार्थभावेन परिणामी अनुभूयते नतु चिदित्यर्थः॥ ४१॥

48933
48934 जिह्वयैव रसास्वादः सजातीयामलोदयः |
48935 ऐक्यं च विद्धि संबन्धं नास्त्यसावसमानयोः || ४२ ||
48936
48937 सजातीयाभ्यां जिह्वारसाभ्याममलः स्फुट उदयो यस्य तथाविधो रसास्वादो
48938 रासनचित्तवृत्तिरूपः परिणाम्यनुभूयते इत्यनुषङ्गः |
48939 किंचिदभिन्नयोरेकीभावो हि संबन्धः स च पक्षद्वयेऽपि दुर्घट इत्याह -
48940 ऐक्यं चेति || ४२ ||
48941
48942 जडचेतनयोस्तेन नोपलादि जडं मतम् |
48943 चिदेवोपलकुड्यादिरूपिणीति मिता चिता || ४३ ||
48944
48945 जडचेतनयोरिति पूर्वान्वयि | तेन किं फलितं तदाह - तेनेति | इति मिता सती || ४३
48946 | |
48947
48948 एकीभावं गता द्रष्टृदृश्यादि कुरुते भ्रमम् |
48949 काष्ठोपलाद्यशेषं हि परमार्थमयं यतः || ४४ ||
48950
48951 परमार्थतस्त्वेकीभावं गता || ४४ ||
48952
48953 तदात्मना तत्संबन्धं [तत्संबन्ध इति पाठः साधुः]
48954 दृश्यत्वेनोपलभ्यते |
48955 सर्वं सर्वप्रकाराढ्यमनन्तमिव यत्नतः || ४५ ||
48956
48957 तर्हि परमार्थचिदात्मनां काष्ठपाषाणादीनां कथं गृहभावेन
48958 संबन्धो दृश्यते तत्राह - तदात्मनेति | कल्पितरूपेणैव तेषां
48959 संबन्धो दृश्यते न वास्तवचिद्रूपेणेत्यर्थः | यद्यस्माद्धेतोरनन्तं
48960 ब्रह्मैव सर्वप्रकाराढ्यं सर्वमिव भाति ततो हेतोर्विश्वं सन्मात्रमिति
48961 परेणान्वयः || ४५ ||
48962
48963 विश्वं सन्मात्रमेवैतद्विद्धि तत्त्वविदां वर |
48964 असत्तात्यागनिष्ठेन विश्वं लक्षशतभ्रमैः || ४६ ||
48965
48966 असत्तात्यागो मिथ्यात्वाग्रहणं स एव चिच्चमत्कारः || ४६ ||
48967
48968 पूरितं चिच्चमत्कारो नच किंचन पूरितम् |
48969 संकल्पनागरा नृणां मिथः स्पन्दन्ति नो यथा || ४७ ||
48970
48971 न देशकालरोधाय तथा सर्गेष्विति स्थितिः |
48972 भेदबोधे हि सर्गत्वमहंत्वादिभ्रमोदयः || ४८ ||
48973
48974 हेमसंवित्परित्यागे कटकादिभ्रमो यथा |
48975 कटकादिभ्रमो हेम्नि देशाद्देशं भवाद्भवम् || ४९ ||
48976
48977 कटकादि हेम्नि भ्रमो मिथ्यैव | यतस्तत् हेमदेशादेव देशं
48978 हेमभवनादेव भवं सत्तं च लभते इति शेषः || ४९ ||
48979
48980 दृग्दर्शनपरित्यागे नाविद्यास्ति पृथक्सदा |
48981 कटकादिमहाभेदमेकं हेम यथामलम् || ५० ||
48982
48983 कटकादिमहाभेदं हेम यथा भेददृग्दर्शनपरित्यागे एकं हेमैव
48984 तद्वदित्यर्थः || ५० ||

48985
48986 बोधैकत्वादयं सर्गस्तदेवासन्नयत्यलम् ।
48987 सेना मृत्संविदा चित्रा मृन्मात्रमिव मृन्मयी ॥ ५१ ॥
48988
48989 बोधव्यक्तेरेकत्वात् सदेव विश्वं असन्नयति असत्त्वमापदयति । असद्विश्वं वा
48990 सन्नयति सदैकरस्यं प्रापयति ॥ ५१ ॥
48991
48992 जलमेकं तरङ्गादि दार्वेकं शालभञ्जिका ।
48993 मृन्मात्रमेकं कुम्भादि ब्रह्मैकं त्रिजगद्भ्रमः ॥ ५२ ॥
48994
48995 संबन्धे दृश्यदृष्टीनां मध्ये द्रष्टुर्हि यद्वपुः ।
48996 द्रष्टृदर्शनदृश्यादिवर्जितं तदिदं परम् ॥ ५३ ॥
48997
48998 कुम्भाद्यनुस्यूतं निष्कृष्टमृत्स्वरूपमिव द्रष्ट्रादित्रिपुट्यनुस्यूतं
48999 तत्साक्षिचिन्मात्रं त्रिपुटीनिरासेन दर्शयति - संबन्धे इति । तत्प्राग्दर्शितं
49000 यत्परं ब्रह्म तदिदं निष्कृष्टप्रत्यक्स्वरूपमेवेत्यखण्डो वाक्यार्थो
49001 दर्शितो द्रष्टव्यः ॥ ५३ ॥
49002
49003 देशाद्देशं गते चित्ते मध्ये यच्चेतसो वपुः ।
49004 अजाड्यसंविन्मननं तन्मयो भव सर्वदा ॥ ५४ ॥
49005
49006 तस्य त्रिपुटीशून्यता कदा प्रसिद्धा तत्राह - देशादिति । प्राग्व्याख्यातम् ॥
49007 ५४ ॥
49008
49009 अजाग्रत्स्वप्ननिद्रस्य यत्ते रूपं सनातनम् ।
49010 अचेतनं चाजडं च तन्मयो भव सर्वदा ॥ ५५ ॥
49011
49012 अचेतनं चित्तवृत्तिरहितम् । तन्मयस्तदेकरसः ॥ ५५ ॥
49013
49014 जडतां वर्जयित्वैकां शिलाया हृदयं हि तत् ।
49015 अक्षुब्धो वाथवा क्षुब्धस्तन्मयो भव सर्वदा ॥ ५६ ॥
49016
49017 शिलाया हृदयं घनं चिदेकघनमिति यावत् । अक्षुब्धः समाधिस्थः
49018 क्षुब्धो व्यवहरन् ॥ ५६ ॥
49019
49020 कस्यचित्किंचनापीह नोदेति न विलीयते ।
49021 अक्षुब्धो वाथवा क्षुब्धः स्वस्थस्तिष्ठ यथासुखम् ॥ ५७ ॥
49022
49023 ननु क्षुब्धस्य कथं तन्मयता तिष्ठेत्तत्राह - कस्यचिदिति ।
49024 व्यवहारदशायामपि परमार्थदृष्टिमेवानुवर्तस्वेति भावः ॥ ५७ ॥
49025
49026 नाभिवाञ्छति नो द्वेष्टि देहे किंचित्क्वचित्पुमान् ।
49027 स्वस्थस्तिष्ठ निराशङ्कं देहवृत्तिषु मा पत ॥ ५८ ॥
49028
49029 सामान्येनोक्तं विशिष्याह - नेति । पुमान् आत्मा ॥ ५८ ॥
49030
49031 भविष्यद्ग्रामकग्राम्यकार्यव्यवसितो यथा ।
49032 चित्तवृत्तिषु मा तिष्ठ तथा सत्यात्मतां गतः ॥ ५९ ॥
49033
49034 यथा अनागते व्यवहार्ये चित्तस्यानासङ्गः स्वतःसिद्धस्तथा वर्तमानेऽपि
49035 मिथ्यात्वदृष्ट्या संपादनीय इत्याशयेनाह - भविष्यदिति ॥ ५९ ॥
49036

प्। ४१२) २४२

यथा देशान्तरनरो यथा काष्ठं यथोपलः।
तथैव पश्य चित्तं त्वमचित्तैव यदात्मना॥ ६०॥

यथा दूरदेशस्थो नरः सन्नप्यसत्समः। काष्ठोपलं तु
सन्निहितमप्यचेतनत्वादेवासङ्गाभिमानाद्यक्षमं तथैव चित्तं
पश्येत्यर्थः। यद्यस्मादात्मना आत्मस्वरूपेण विविच्य दर्शने अचित्ततैव
विदुषामनुभवसिद्धेत्यर्थः। छान्दसस्तलोपः॥ ६०॥

यथा दृषदि नास्त्यम्बु यथाम्भस्यनलस्तथा।
स्वात्मन्येवास्ति नो चित्तं परमात्मनि तत्कुतः॥ ६१॥

तदेव स्पष्टमाह - यथेति॥ ६१॥

प्रेक्ष्यमाणं न यत्किंचित्तेन यत्क्रियते क्वचित्।
कृतं भवति तन्नेति मत्वा चित्तातिगो भवेत्॥ ६२॥

चित्तस्यावस्तुत्वे चित्तकार्याणां सुतरामसत्त्वमित्याह - प्रेक्ष्यमाणमिति॥
६२॥

अत्यन्तानात्मभूतस्य यश्चित्तस्यानुवर्तते।
पर्यन्तवासिनः कस्मान्न म्लेच्छस्यानुवर्तते॥ ६३॥

शुद्धस्यात्मनः अशुद्धचित्तानुवृत्तिरनुचितात्वादपि हेयेत्याशयेनाह -
अत्यन्तेति। पर्यन्ताः प्रत्यन्तदेशास्तद्वासिनः। तस्मान्न
जननमियान्नान्तमियान्नेत्पाप्मानं मृत्युमन्ववायानि इति श्रुत्या
म्लेच्छानुवृत्तेर्निषिद्धत्वादिति भावः॥ ६३॥

निरन्तरमनादृत्य त्वमाराच्चित्तपुष्कसम्।
स्वस्थमास्स्व निराशङ्कं पङ्केनेव कृतो जडः॥ ६४॥

पङ्केन मृदा कृतो निर्मितः प्रतिमादिरिव॥ ६४॥

चित्तं नास्त्येव मे भूतं मृतमेवाद्य वेत्ति वा।
भव निश्चयवान्भूत्वा शिलापुरुषनिश्चलः॥ ६५॥

नास्त्येवेति मुख्यं कल्पः। भूतं मृतमेव सत् अद्य वेत्ति मिथ्या पश्यतीति
गौणः कल्पः॥ ६५॥

प्रेक्षायामस्ति नो चित्तं तद्विहीनोऽसि तत्त्वतः।
स किमर्थमनर्थेन तद्व्यर्थेन कदर्थ्यसे॥ ६६॥

प्रेक्षायां आत्मप्रेक्षायां चित्तप्रेक्षायां च॥ ६६॥

असता चित्तयक्षेण ये मुधा स्ववशे कृताः।
तेषां पेलवबुद्धीनां चन्द्रादशनिरुत्थितः॥ ६७॥

अशनिर्वैद्युताग्निः॥ ६७॥

चित्तं दूरे परित्यज्य योऽसि सोऽसि स्थिरो भव।
भव भावनया मुक्तो युक्त्या परमयान्वितः॥ ६८॥

49089
49090 युक्त्या मननेन भावनया ध्यानेन ॥ ६८ ॥
49091
49092 असतो येऽनुवर्तन्ते चेतसोऽसत्यरूपिणः ।
49093 व्योममारणकर्मैकनीतकालान्धिगस्तु तान् ॥ ६९ ॥
49094
49095 मूढनिन्दात्राधिकारिप्रोत्साहनाय ॥ ६९ ॥
49096
49097 व्यपगलितमना महानुभावो
49098 भव भवपारगतो भवामलात्मा ।
49099 सुचिरमपि विचारितं न लब्धं
49100 मलममलात्मनि मानसात्म किंचित् ॥ ७० ॥
49101
49102 महानुभावस्तत्त्वावबोधकुशलः सन् प्रथमं व्यपगलितमना भव
49103 ततस्तत्त्वबोधेनामलात्मा सन् भवपारगतो भव । उक्तार्थं द्रढयितुं
49104 वसिष्ठो विचारविशुद्धं स्वानुभवमाह - सुचिरमिति । मया सुचिरमपि
49105 मनस्तत्त्वलाभाय विचारितं तथाप्यमलात्मनि मानसात्मकं मलं किंचिदपि
49106 न लब्धं तस्मान्नास्त्येवेति मद्वाक्यादपि स्थिरो भवेत्यर्थः ॥ ७० ॥
49107
49108 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपायेषूत्पत्तिप्रकरणे
49109 चित्ताभावप्रतिपादनं नामैकविंशत्युत्तरशततमः सर्गः ॥ १२१ ॥
49110
49111 इति श्रीवासिष्ठमहारामायणे तात्पर्यप्रकाशे उत्पत्तिप्रकरणे
49112 चित्ताभावप्रतिपादनं नामैकविंशत्युत्तरशततमः सर्गः ॥ १२१ ॥
49113
49114
49115 द्वाविंशत्युत्तरशततमः सर्गः १२२
49116
49117 श्रीवसिष्ठ उवाच ।
49118
49119 प्रथमं जातमात्रेण पुंसा किंचिद्विकसितबुद्धिनैवं
49120 सत्संगमपरेण भवितव्यम् ॥ १ ॥
49121
49122 इहादौ वर्ण्यते पुंसो ज्ञानभूम्युदयक्रमः ।
49123 रामस्य शोकमोहादिनिरासैर्बोधनं ततः ॥ १ ॥
49124
49125 तत्र ज्ञानभूमिकाक्रमं गद्यैर्विवक्षुस्तल्लाभोपायेषु प्रथमपीठिकामाह
49126 - प्रथममिति किंचिद्विकसितबुद्धिना इह जन्मनि जन्मान्तरे
49127 वानुष्ठितैर्निष्कामकर्मभिः शुद्धचित्तेनेत्यर्थः ॥ १ ॥
49128
49129 अनवरतप्रवाहपतितोऽयमविद्यानदीनिवहः शास्त्रसज्जनसंपर्काद्दते
49130 न तरितुं शक्यते ॥ २ ॥
49131
49132 सत्सङ्गात्साधनचतुष्टयसंपत्तिसहितोऽध्यात्मशास्त्रसंबन्धः सिद्ध्यति
49133 सैव प्रथमा भूमिकेत्याशयेनाह - अनवरतेत्यादिना ॥ २ ॥
49134
49135 तेन विवेकतः पुरुषस्य हेयोपादेयविचार उपजायते ॥ ३ ॥
49136
49137 तदासौ शुभेच्छाभिधां विवेकभुवमापतितो [मवतीर्णो भवतीति
49138 पाठः] भवति ॥ ४ ॥
49139
49140 ततो विवेकवशतो विचारणायाम् ॥ ५ ॥

49141
49142 तज्जयाद्द्वितीयभूमिकावतारं दर्शयति - तत इत्यादिना ॥ ५ ॥
49143
49144 सम्यग्ज्ञानेनासम्यग्वासनां त्यजतः संसारभावनातोमनस्तनुतामेति
49145 ॥ ६ ॥
49146
49147 तज्जयात्तृतीयभूमिकावतार इत्याह - सम्यग्ज्ञानेनेत्यादिना ॥ ६ ॥
49148
49149 तेन तनुमानसां नाम विवेकभूमिमवतीर्णो भवति ॥ ७ ॥
49150
49151 प्। ४१३) २४२
49152
49153 यदैव योगिनः सम्यग्ज्ञानोदयस्तदैव सत्त्वापत्तिः ॥ ८ ॥
49154
49155 चतुर्थभूमिकावतारप्रकारमाह - यदैवेति ॥ ८ ॥
49156
49157 तद्वशाद्वासना तनुतां गता यदा तदैवासावसंसक्त इत्युच्यते
49158 कर्मफलेन न बध्यत इति ॥ ९ ॥
49159
49160 पञ्चम्यवतारमाह - तद्वशादिति । तन्नाम व्याचष्टे - कर्मफलेनेति
49161 ॥ ९ ॥
49162
49163 अथ तानववशादसत्ये भावनातानवमभ्यस्यति ॥ १० ॥
49164
49165 षष्ठ्यां भूमौ ततोऽवतारमाह - अथेति । असत्ये बाह्येऽर्थे
49166 भावनातानवं सदैवतान्तरमुखतयावस्थानेन [सदैवान्तर्मुखतया
49167 इति पाठः] ब्रह्माहंभाववासनोपचयेन बाह्यार्थस्य क्रमेण
49168 विस्मरणमित्यर्थः ॥ १० ॥
49169
49170 यावन्न कुर्वन्नपि व्यवहरन्नप्यसत्येषु संसारवस्तुषु स्थितोऽपि
49171 स्वात्मन्येव [स्वात्मन्यवक्षीण इति पाठः]
49172 क्षीणमनस्त्वादभ्यासवशाद्बाह्यं वस्तु कुर्वन्नपि न पश्यति
49173 नालम्बनेन सेवते नाभिध्यायति तनुवासनत्वाच्च केवलं मूढः
49174 सुप्तप्रबुद्ध इव कर्तव्यं करोति ॥ ११ ॥
49175
49176 कियत्कालं तदभ्यासस्तत्राह - यावदिति । न कुर्वन् समाधिस्थोऽपि । व्यवहरन्
49177 व्युत्थितोऽपि । बाह्यं स्नानभोजनादि कुर्वन्नपि न पश्यति । अत एव नालम्बनेन
49178 रुच्या सेवते नाभिध्यायति न स्मरति । मूढः शिशुरुन्मत्तो वा सुप्तप्रबुद्ध
49179 इव कर्तव्यं स्नानभोजनादि परेच्छया करोति ॥ ११ ॥
49180
49181 तनुभावितमनस्कस्तेन योगभूमिकां भावनामधिरूढः ॥ १२ ॥
49182
49183 तनुभावितमनस्कः सूक्ष्मतमब्रह्मैकरसीकृतचित्तस्तेनोक्तलक्षणेन
49184 योगभूमिकां भावनां पदार्थाभावनाख्यांअधिरूढो भवतीति शेषः ॥
49185 १२ ॥
49186
49187 इत्यन्तर्लीनचित्तः कतिचित्संवत्सरानभ्यस्य सर्वथैव कुर्वन्नपि
49188 बाह्यपदार्थान्भावनां त्यजति तुर्यात्मा भवति ततो जीवन्मुक्त इत्युच्यते
49189 ॥ १३ ॥
49190
49191 सप्तमभूमिकावतारक्रममाह - इत्यन्तर्लीनचित्त इति । इति
49192 उक्तप्रकारेणान्तर्ब्रह्मणि लीनचित्तः परेच्छया कार्यमात्रेण

49193 कदाचिद्बाह्यपदार्थान्स्नानभोजनादीन्कुर्वन्नपि सर्वथैव तद्भावनां
49194 त्यजति। तुर्यात्मा स्वयमेव भवति। षष्ठभूमिकापर्यन्तं चित्तस्य
49195 ब्रह्माकारतास्थैर्ये लेशतो यत्नानुवृत्तिरस्ति। सप्तम्यां तु भूमिकायां
49196 सर्वथैव तन्निवृत्या स्वारसिकी प्रतिष्ठेति विशेष इति भावः। स एव जीवन्मुक्त
49197 इत्युच्यते॥ १३॥
49198
49199 नाभिनन्दति संप्राप्तं नाप्राप्तमभिशोचति।
49200 केवलं विगताशङ्कं संप्राप्तमनुवर्तते॥ १४॥
49201
49202 यद्यपि प्राक्तनभूमिष्वपि कृतसाक्षात्कारा जीवन्मुक्ता एव तथापि तेषां
49203 कदाचित्प्रबलप्रारब्धोपनीतप्रियाप्रियस्पर्शसत्त्वान्न मुख्यं
49204 जीवन्मुक्तिसुखं सप्तम्यां तु भूमिकायां
49205 योगपरिपाकजन्यपुण्यातिशयेनात्युत्कटेन तिरस्कृतं प्रारब्धकर्म
49206 जीवनव्यवहाराभासमात्रे व्यवतिष्ठते न हर्षशोकादिजननाय
49207 प्रभवतीत्याशयेन तल्लक्षणं पद्येनाह - नाभिनन्दतीति॥ १४॥
49208
49209 त्वयापि राघव ज्ञातं ज्ञातव्यमखिलान्तरम्।
49210 ननु ते सर्वकार्येभ्यो वासना तनुतां गता॥ १५॥
49211
49212 तव तु अत्यन्तशुद्धचित्तत्वाद्द्वितीयभूमिकायामेव स्वविचारेणैव
49213 प्रत्यगात्मतत्त्वं परिज्ञातमित्याशयेनाह - त्वयेति॥ १५॥
49214
49215 शरीरातीतवृत्तिस्त्वं शरीरस्थोऽथवा भव।
49216 मागाः शोकं च हर्षं त्वं त्वमात्मा विगतामयः॥ १६॥
49217
49218 शरीरातीतवृत्तिः सदैव समाधिस्थः। शरीरस्थो लोकसंग्रहव्यवहारी॥ १६॥
49219
49220 त्वय्यात्मनि सिते स्वच्छे सर्वगे सर्वदोदिते।
49221 कुतो दुःखसुखे राम कुतो मरणजन्मनी॥ १७॥
49222
49223 सिते स्वयंप्रभे। स्वच्छे निर्मले॥ १७॥
49224
49225 अबन्धुरपि कस्मात्त्वं बन्धुदुःखानि शोचसि।
49226 अद्वितीये स्थिते ह्यस्मिन्बान्धवाः क इवात्मनि॥ १८॥
49227
49228 आत्मबोधेन मरणजन्मादिप्रयुक्तशोकजयेऽपि बान्धवसङ्गजः शोकः
49229 कथं जय्यस्तत्राह - अबन्धुरिति॥ १८॥
49230
49231 दृश्यते केवले देहे परमाणुचयः परम् [पर इति पाठः]।
49232 देशकालान्यतापत्तेर्नात्मोदेति न लीयते॥ १९॥
49233
49234 बन्धूनां देहः शोकार्ह उतात्मा। नाद्य इत्याह - दृश्यत इति। केवले
49235 भस्मीभूते। परमाणुचयस्त्वचेतनत्वादेव न शोकार्ह इत्यर्थः। न द्वितीय
49236 इत्याह - देशेति॥ १९॥
49237
49238 अविनाशोऽपि कस्मात्त्वं विनश्यामीति शोचसि।
49239 अमृत्युवसतौ स्वच्छे विनाशः क इवात्मनि॥ २०॥
49240
49241 घटे कपालतां याते घटाकाशो न नश्यति।
49242 यथा तथा शरीरेऽस्मिन्नष्टेऽपि न विनश्यति॥ २१॥
49243
49244 न विनश्यति आत्मेति शेषः॥ २१॥

मृगतृष्णातरङ्गिण्यां क्षीणायामातपो यथा।
न नश्यति तथा देहे नष्टे नात्मा विनश्यति॥ २२॥

वाञ्छैवोदेति ते कस्माद्भ्रान्तिरन्तर्निरर्थिका।
अद्वितीयो द्वितीयं किंयद्वस्त्वात्माभिवाञ्छतु॥ २३॥

श्रव्यं स्पृश्यं तथा दृश्यं रस्यं घ्रेयं च राघव।
न किंचिदस्ति जगति व्यतिरिक्तं यदात्मनः॥ २४॥

सर्वशक्ताविमास्तस्मिन्नात्मन्येवाखिलाः स्थिताः।
शक्तयो वितते व्यक्ते आकाश इव शून्यता॥ २५॥

नन्वातपे मृगतृष्णाभ्रमशक्तय इव जगच्छक्तयस्तर्हि पृथक्
स्युस्तत्राह - शक्तय इति॥ २५॥

चित्ताद्राघव रूढेयं त्रिलोकीललनोदिता।
त्रिविधेनक्रमेणेह जन्मना जनितभ्रमा॥ २६॥

तर्ह्यत्यन्तासतो जगतः प्ररोहे किं बीजमिति चेच्चित्तमेवेति प्रागुक्तमेवेत्याह ##-

मनःप्रशमने सिद्धे वासनाक्षयनामनि।
कर्मक्षयामिधानैव मायेयं प्रविनश्यति॥ २७॥

अत एव चित्तक्षयात्तत्क्षय इत्याह - मन इति। कर्मणां क्रियादिशक्तीनां
क्षयो निवासस्तदभिधाना॥ २७॥

प। ४१४) २४३

संसारोग्रारघट्टेऽस्मिन्नारूढा यन्त्रवाहिनी।
रज्जुस्तां वासनामेतां छिन्धि राघव यत्नतः॥ २८॥

आरघट्टे। पेषणयन्त्राधःशिलामध्यशङ्काविति यावत्। आरूढा
तिर्यक्काष्ठप्रान्ते आरोपिता। अत एव यन्त्रमूर्ध्वपेषणपाषाणं वहति
तच्छीला रज्जुः। तथाहि। पृथ्वी अधोयन्त्रशिलेव मेरुस्तच्छङ्कुरिव
ज्योतिश्चक्रमूर्ध्वशिलायन्त्रमिव वासनावष्टब्धं जगद्दृश्यत इति भावः
॥ २८॥

अपरिज्ञानमानैषा महामोहप्रदायिनी।
परिज्ञाता त्वनन्ताख्या सुखदा ब्रह्मदायिनी॥ २९॥

आगता ब्रह्मणो भुक्त्वा संसारमिह लीलया।
पुनर्ब्रह्मैव संस्मृत्य ब्रह्मण्येव विलीयते॥ ३०॥

संसारं भुक्त्वा स्वलीलाभूतयैव ब्रह्मविद्यया ब्रह्मैव संस्मृत्य
ब्रह्मण्येव विलीयत इत्यन्वयः॥ ३०॥

शिवाद्राघव नीरूपादप्रमेयान्निरामयात्।
सर्वभूतानि जातानि प्रकाशा इव तेजसः॥ ३१॥

रेखावृन्दं यथा पर्णे वीचिजालं यथा जले।
कटकादि यथा हेम्नि तथोष्णादि यथाऽनले॥ ३२॥

49297
49298 रेखावृन्दं शिराजालम् ॥ ३२ ॥
49299
49300 तदेतद्भावनारूपे तथेदं भुवनत्रयम् ।
49301 तस्मिन्नेव स्थितं जातं तस्मादेव तदेव च ॥ ३३ ॥
49302
49303 भावनारूपे वासनावच्छिन्ने ब्रह्मणि ॥ ३३ ॥
49304
49305 स एव सर्वभूतानामात्मा ब्रह्मेति कथ्यते ।
49306 तस्मिञ्ज्ञाते जगज्ज्ञातं स ज्ञाता भुवनत्रये ॥ ३४ ॥
49307
49308 तदेकविज्ञानेन सर्वं विज्ञातमित्याह - तस्मिन्निति । स ज्ञातेति । नान्योऽतोऽस्ति
49309 द्रष्टा इत्यादिश्रुतेरिति भावः ॥ ३४ ॥
49310
49311 शास्त्रसंव्यवहारार्थं तस्यास्य वितताकृतेः ।
49312 चिद्ब्रह्मात्मेति नामानि कल्पितानि कृतात्मभिः ॥ ३५ ॥
49313
49314 विषयेन्द्रियसंयोगे हर्षामर्षविवर्जिता ।
49315 सैषा शुद्धानुभूतिर्हि सोऽयमात्मा चिदव्ययः ॥ ३६ ॥
49316
49317 प्रियाप्रियविषयाणामिन्द्रियैः सह दैवात्संयोगेऽपि तेषु
49318 मिथ्यात्वनिश्चयाद्धर्षामर्षविवर्जिता सैषोक्तलक्षणा जीवन्मुक्तानुभूतिरेव
49319 स प्रसिद्ध आत्मा नतु मूढैरनुभूयमानः संसारस्वभाव इत्यर्थः ॥ ३६ ॥
49320
49321 आकाशातितराच्छाच्छ इदं तस्मिंश्चिदात्मनि ।
49322 स्वाभोग एव हि जगत्पृथग्वत्प्रतिबिम्बति ॥ ३७ ॥
49323
49324 हर्षामर्षविवर्जितेति यदुक्तं तदुपपादनायाह - इदं तस्मिन्नित्यादिना ।
49325 स्वाभोगे स्वान्तरेव जगत्पृथग्वत् अन्यदिव प्रतिबिम्बति तस्य च शुद्धसाक्षिणा
49326 प्रियाप्रियभागेन विवेक्तुमशक्यत्वात्तद्विवेकाय तदुभयव्यतिरेकेणान्तराले
49327 बुद्धिरन्तःकरणं प्रतिबिम्बति सैव प्रियाप्रियविकल्पनैर्लोभमोहादयो ये
49328 भावास्तान्याति न त्वात्मेत्यर्थः ॥ ३७ ॥
49329
49330 बुद्धिस्तद्व्यतिरेकेण लोभमोहादयो हि तान् ।
49331 पात्यसद्व्यतिरेकेण ते च तस्मिंस्तदेव ते ॥ ३८ ॥
49332
49333 ते च जगत्तद्बुद्धितत्प्रयुक्तलोभमोहादयः असतैव व्यतिरेकेण परस्परभेदेन
49334 तस्मिंश्चिदात्मनि प्रतिबिम्बिता इति परमार्थतस्तदात्मरूपमेव । तेन हि
49335 दर्पणव्यतिरेकेण तदन्तर्दृश्यमानाः पर्वतवननद्यादयः सन्तीत्यर्थः ॥
49336 ३८ ॥
49337
49338 अदेहस्यैव ते राम निर्विकल्पचिदाकृतेः ।
49339 लज्जाभयविषादेभ्यः कुतो मोहः समुत्थितः ॥ ३९ ॥
49340
49341 एवंच देहात्मबुद्धीनां मूढानामेव भयविषादादयो युक्ता नतु
49342 तवेत्याह - अदेहस्यैवेत्यादिना ॥ ३९ ॥
49343
49344 अदेहो देहजैरेभिर्लज्जादिभिरसन्मयैः ।
49345 किं मूर्ख इव दुर्बुद्धिर्विकल्पैरभिभूयसे ॥ ४० ॥
49346
49347 अखण्डचितिरूपस्य देहे खण्डनमागते ।
49348 असम्यग्दर्शिनोऽप्यस्ति न नाशः किमु सन्मतेः ॥ ४१ ॥

49349
49350 आपतेदर्कमार्गेऽपि न निरुद्धगमागमम् ।
49351 चित्तं नाम स विज्ञेयः पुरुषो न शरीरकम् ॥ ४२ ॥
49352
49353 असम्यग्दर्शिनोऽपि न नाश इति यदुक्तं तदुपपादयितुं
49354 देहाद्व्यतिरिक्तचित्तात्मानं व्युत्पादयति - आपतेदिति । यच्चित्तं
49355 संचारस्वातन्त्र्यात्सर्वत्र आपतेत् । अर्कस्य मार्गे निरालम्बनेऽपि यन्न निरुद्धा
49356 गमागमाः संचारा यस्य तथाविधं तच्चित्तमेव पुरि शेते इति पुरुषः
49357 संसार्यात्मा विज्ञेयो नतु शरीरमित्यर्थः ॥ ४२ ॥
49358
49359 शरीरे सत्यसति वा पुमानेव जगल्लये ।
49360 ज्ञोऽप्यज्ञोऽपि स्थितो राम नष्टे देहे न नश्यति ॥ ४३ ॥
49361
49362 यानीमानि विचित्राणि दुःखानि परिपश्यसि ।
49363 तानि देहस्य सर्वाणि नाग्राह्यस्य चिदात्मनः ॥ ४४ ॥
49364
49365 इदानीमसंसार्यात्मानं दर्शयितुं चित्तमपि देहकोटावेव निक्षिप्य देहस्यैव
49366 प्रियाप्रियस्पर्श इत्याह - यानीति ॥ ४४ ॥
49367
49368 मनोमार्गादतीतत्वाद्यासौ शून्यमिव स्थिता ।
49369 चित्कथं नाम दुःखैर्वा सुखैर्वा परिगृह्यते ॥ ४५ ॥
49370
49371 परिगृह्यते व्याप्यते ॥ ४५ ॥
49372
49373 स्वास्पदात्मानमेवासौ विनष्टाद्देहपञ्जरात् ।
49374 अभ्यस्तां वासनां यातः षट्पदः खमिवाम्बुजात् ॥ ४६ ॥
49375
49376 ननु नष्टे देहे जीवः क्व याति तत्राह - स्वास्पदात्मानमिति । असौ जीवो
49377 विनष्टाद्देहपञ्जराद्विनष्टदेहाभिमानं परित्यज्य प्रथमं स्वास्पदं
49378 स्वप्रतिष्ठाभूतं परमात्मानमेव याति । मनः प्राणे प्राणस्तेजसि तेजः
49379 परस्यां देवतायाम् इति
49380 श्रुतेर्मनःप्राणाद्युपाधिविलयाद्बिम्बभूतेश्वरैक्यं गच्छतीत्यर्थः । तर्हि
49381 कुतो न मुच्यते तत्राह - अभ्यस्तामिति ।
49382 भेदवासनामूलोच्छेदिज्ञानानुदयान्न मुच्यत इति भावः ॥ ४६ ॥
49383
49384 असच्चेदात्मतत्त्वं तदस्मिंस्ते देहपञ्जरे ।
49385 नष्टे किं नाम नष्टं स्याद्राम केनानुशोचसि ॥ ४७ ॥
49386
49387 ननु यदि जीवः प्रतिबिम्बस्तर्हि
49388 तस्योपाध्यतिरिक्तसत्त्वायोगादसत्त्वमुपाधिनाशेन नाशश्च स्यादिति
49389 चेदस्त्वेवं तथापि न त्वं जीव इति तदसत्त्वे नाशे वा न तव शोको युक्त इत्याह
49390 - असदिति । तत्प्रसिद्धमात्मतत्त्वं जीवरूपम् ॥ ४७ ॥
49391
49392 प्। ४१५) २४३
49393
49394 सत्यं भावय तेन त्वं मा मोहमनुभावय ।
49395 निरिच्छस्यात्मनो नेच्छा काचिदप्यनघाकृतेः ॥ ४८ ॥
49396
49397 वस्तुतस्तु प्रतिबिम्बो बिम्बमेव । बिम्बस्येवोपाध्यनुप्रविशभेदादिकल्पनया
49398 प्रतिबिम्बत्वेन ग्रहणात् । जडोपाधिकार्यत्वे चिदाभासस्य जडत्वापत्तौ
49399 संसारभानाभोगाच्च । तेन त्वं जीवं तदुपाधिपरित्यागेन सत्यं ब्रह्मैवेति
49400 भावय संभावय मोहं भ्रान्तिप्राप्तमसन्नश्वरदेहादिभावं

49401 भानुभावय। पूर्णब्रह्मभावतृप्तत्वादेव निरिच्छस्य॥ ४८॥
49402
49403 साक्षिभूते समे स्वच्छे निर्विकल्पे चिदात्मनि।
49404 निरिच्छं प्रतिबिम्बन्ति जगन्ति मुकुरे यथा॥ ४९॥
49405
49406 तर्हीच्छां विना तस्य कथं सर्गादिसिद्धिस्तत्राह - साक्षिभूते इति॥ ४९॥
49407
49408 साक्षिभूते समे स्वच्छे निर्विकल्पे चिदात्मनि।
49409 स्वयं जगन्ति दृश्यन्ते सन्मणाविव रश्मयः॥ ५०॥
49410
49411 अनिच्छमपि संबन्धो यथा दर्पणबिम्बयोः।
49412 तथैवेहात्मजगतोर्भेदाभेदौ व्यवस्थितौ॥ ५१॥
49413
49414 सूर्यसंनिधिमात्रेण यथोदेति जगत्क्रिया।
49415 चित्सत्तामात्रकेणेदं जगन्निष्पद्यते तथा॥ ५२॥
49416
49417 पिण्डग्रहो निवृत्तोऽस्या एवं राम जगत्स्थितेः।
49418 आकाशमेषा संपन्ना भवतामपि चेतसि॥ ५३॥
49419
49420 पिण्डग्रहो मूर्ताकारः। एवं उक्तोपदेशप्रकारेण। भवतामिति रामातिरिक्तान्
49421 श्रोतृन् प्रत्युक्तिः॥ ५३॥
49422
49423 सत्तामात्रेण दीपस्य यथालोकः स्वभावतः।
49424 चित्तत्त्वस्य स्वभावात्तु तथेयं जागती स्थितिः॥ ५४॥
49425
49426 आलोकः प्रभा॥ ५४॥
49427
49428 पूर्वं मनः समुदितं परमात्मतत्त्वा-
49429 त्तेनाततं जगदिदं स्वविकल्पजालैः।
49430 शून्येन शून्यमपि तेन यथाम्बरेण
49431 नीलत्वमुल्लसितचारुतराभिधानम्॥ ५५॥
49432
49433 विस्तरोक्तं प्रकरणार्थं संक्षिप्य दर्शयन्नुपसंहरति -
49434 पूर्वमित्यादिना। यथा शून्येनाम्बरेणाकाशेन शून्यमसदपि नीलत्वं
49435 सर्वजनानुभवेनोल्लसितमवाङ्मुखीकृतस्निग्धेन्द्रनीलमणिमयमहाकटाह
49436 अमिव नीलं नभो दृश्यते इत्युपमोत्प्रेक्षादियोग्यतया चारुतरमभिधानं
49437 वाग्व्यवहारो यस्मिंस्तथाविधमाततं विस्तारितं तथा तेन मनसापीदं
49438 जगदित्यर्थः॥ ५५॥
49439
49440 संकल्पसंक्षयवशाद्गलिते तु चित्ते
49441 संसारमोहमिहिका गलिता भवन्ति।
49442 स्वच्छं विभाति शरदीव खमागतायां
49443 चिन्मात्रमेकमजमाद्यमनन्तमन्तः॥ ५६॥
49444
49445 अत एव निमित्तापाये नैमित्तिकापायान्निर्मलात्ममात्रपरिशेषसिद्धिरित्याह -
49446 संकल्पेति। मिहिकास्तुषाराः। शरदि समागतायां स्वमाकाशमिव स्वच्छं
49447 चिन्मात्रमन्तः प्रत्यगात्मस्वभावे॥ ५६॥
49448
49449 कर्मात्मकं प्रथममेव मनोऽभ्युदेति
49450 संकल्पतः कमलजप्रकृतीस्तदेत्य।
49451 नानाभिदं जगदिदं हि मुधा तनोति
49452 वेतालदेहकलनामिव मुग्धबालः॥ ५७॥

व्यष्टिभ्रमकल्पनायामिव समष्टिसृष्टिकल्पनायामपि
मनोधीनावेवाविर्भावतिरोभावाविति दर्शयति - कर्मात्मकमिति।
सकलप्राणिकर्मसमष्ट्यात्मकं समष्टिक्रियाशक्तिप्रधानं च मनः
प्रथममुदेति आविर्भवति। ततस्तत्र चित्प्रतिबिम्बात्कमलजमन्वादिरूपाः
प्रकृतीः स्रष्टृशरीराण्येत्य स्वीकृत्य संकल्पतो नानाभिधं जगन्मुधा
व्यर्थमेव तनोति सृजतीत्यर्थः॥ ५७॥

असन्मयं सदिव पुरो विलक्ष्यते
पुनर्भवत्यथ परिलीयते पुनः।
स्वयं मनश्चिति चितसंस्फुरद्वपु-
र्महार्णवे जलवलयावली यथा॥ ५८॥

तस्माद्दृश्यं सर्वं व्यष्टिसम।टिभेदकल्पितमनोमात्रं
मनश्चासदज्ञानकार्यत्वादित्यसत एवाधिष्ठानसाक्षिसत्तास्फूर्तिबलेन
सत्तया स्फुरणमुत्पत्तिरिति रीत्या जगज्जन्मादिविवर्तोपादानत्वं
ब्रह्मणस्तटस्थलक्षणं तेन निष्प्रपञ्चसच्चिदानन्दैकरसं पूर्णं
ब्रह्मैव परमार्थभूतं लक्ष्यत इति सर्वसृष्टिश्रुतीनां तात्पर्यार्थं इति
सिद्धमित्याशयेनाह - असन्मयमिति। असदज्ञानं तन्मयं
तत्परिणामभूतं मनः स्वयमेव चिति स्वाधिष्ठानचैतन्ये चितेनौपचयेन
संस्फुरज्जगद्वपुः पुरः सदिव साक्षिणा विलोक्यते। यथा महार्णवे पूर्णे
तत्सत्तामात्रसिद्धापरिच्छिन्नजलवलयानां पङ्क्तिरित्यर्थः।
तस्माद्दृश्यमात्रस्य वाचारम्भणस्यानृतत्वात्प्रत्यगेकरसं पूर्णं
ब्रह्मैवाविकृतं सदास्ते इति सिद्धम्॥ ५८॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये देवदूतोक्ते
मोक्षोपायेषूत्पत्तिप्रकरणे स्वरूपनिरूपणं नाम
द्वाविंशत्युत्तरशततमः सर्गः॥ १२२॥

इति
श्रीमत्परमाहंसपरिव्राजकाचार्यश्रीमत्सर्वज्ञसरस्वतीपूज्यपादशिष्यश्री
मद्रामचन्द्रसरस्वतीपूज्यपादशिष्य-
श्रीमद्गङ्गाधरेन्द्रसरस्वतीपूज्यपादशिष्येण
श्रीमदानन्दबोधेन्द्रसरस्वत्याख्यभिक्षुणा विरचिते
श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उत्पत्तिप्रकरणे स्वरूपनिरूपणं
नाम द्वाविंशत्युत्तरशततमः सर्गः॥ १२२॥

समाप्तमिदमुत्पत्तिप्रकरणम्॥

49505 स्थितिप्रकरणं चतुर्थम्।
49506
49507 प्रथमः सर्गः १
49508
49509 अथोत्पत्तिप्रकरणादनन्तरमिदं शृणु।
49510 स्थितिप्रकरणं राम ज्ञातं निर्वाणकारि यत्॥ १॥
49511
49512 सदभयनिजपूर्णानन्दसंवित्प्रतिष्ठं
49513 यदिह निजमहिम्ना विश्वरूपाणि बिभ्रत्।
49514 विहरति च विमोहात्तेषु नानात्मबुद्ध्या
49515 श्रुतिविदितसतत्त्वं तत्परं ब्रह्म वन्दे॥ १॥
49516
49517 प्रसिद्धचित्रवैधर्म्यं जगच्चित्रस्य वर्ण्यते।
49518 सांख्यादिमतमुन्मृज्य साध्यते ब्रह्ममात्रता॥ १॥
49519
49520 उत्पत्तिप्रकरणे यतो वा इमानि भूतानि जायन्ते इत्यादीनां सर्वेषां
49521 सृष्टिप्रतिपादकवाक्यानामद्वये ब्रह्मणि जगदध्यारोपप्रदर्शनद्वारा
49522 तटस्थलक्षणतया तात्पर्यविश्रान्तिप्रदर्शनमुखेन जगज्जीवादिभेदं निरस्य
49523 प्रत्यग्ब्रह्मैकरस्यं व्युत्पादितम्। इदानीं येन जातानि जीवन्ति येन द्यौः
49524 पृथिवी दृढा एतस्यैवाक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ
49525 विधृतौ तिष्ठतः को ह्येवान्यात्कः भीषास्माद्वातः पवते एको दाधार
49526 भुवनानि विश्वा य एको जालवानीशत ईशनीभिः परमशक्तिभिः अनुज्ञाता
49527 ह्ययमात्मास्य सर्वस्य स्वात्मानं दधाति इत्यादि
49528 सांप्रतिकजगत्स्थितिनिर्वाहकताप्रतिपादकश्रुतीनाम् सदेव सोम्येदमग्र आसीत्
49529 आत्मा वा इदमेक एवाग्र आसीत्
49530 इत्यादिप्रलयकालिकजगत्सत्तानिर्वाहकत्वप्रतिपादकश्रुतीनां च
49531 पुरुषमतिवैचित्र्यप्रभवनानातात्पर्योत्प्रेक्षणयुक्तभ्रान्तिवैचित्र्यनिरासेन
49532 सच्चिदानन्दैकरसे ब्रह्मणि सच्चिद्रूपतोपपादनेन
49533 तटस्थलक्षणतात्पर्यपर्यवसानप्रदर्शनमुखेनापि विस्तरोपपादितं
49534 ब्रह्मैक्यज्ञानं स्थिरीकर्तुं स्थितिप्रकरणमारभमाणो भगवान्वसिष्ठः
49535 संगतिं प्रदर्श्यन्प्रतिजानीते - अथेति। उत्पत्तेः
49536 स्थितिहेतुत्वाद्धेतुतासंगतिरिति भावः।
49537 एवमेककार्यत्वसंगतिरप्यस्तीत्याशयेनाह - ज्ञातमिति।
49538 आनन्तर्याधिकारपरोऽप्यथशब्दः शङ्खवीणामृदङ्गध्वनिवत्स्वरूपतो
49539 मङ्गलमेवेति प्रकरणादौ मङ्गलमप्याचरितं बोध्यम्॥ १॥
49540
49541 एवं तावदिदं विद्धि दृश्यं जगदिति स्थितम्।
49542 अहं चेत्याद्यनाकारं भ्रान्तिमात्रमसन्मयम्॥ २॥
49543
49544 जगदुत्पत्तौ मिथ्यात्वप्रदर्शनाय व्युत्पादिता न्यायाः स्थितावपि तुल्या
49545 इत्यतिदेशेन दर्शयति - एवं तावदित्यादिना॥ २॥
49546
49547 अकर्तृकमरङ्गं च गगने चित्रमुत्थितम्।
49548 अद्रष्टृकं चानुभवमनिद्रं स्वप्नदर्शनम्॥ ३॥
49549
49550 अकर्तृकं हेतुकरणोपकरणसंपन्नलेखकशून्यम्।
49551 अरङ्गमुपादानरञ्जकद्रव्यशून्यम्। गगने
49552 इत्यनेनाधारभित्त्यादिशून्यतापि चित्रस्य दर्शिता। द्रष्टुरपि
49553 दृश्यान्तःपातादद्रष्टृकम्। मोहनिद्रया प्रमातुरभिभवेऽपि
49554 साक्षिणोऽनभिभवादनिद्रम्॥ ३॥
49555
49556 भविष्यत्पुरनिर्माणं चित्तसंस्थमिवोदितम्।

49557 मर्कटानलतापान्तमसदेवार्थसाधकम् ॥ ४ ॥
49558
49559 मर्कटैः कल्पितोऽनलो गुञ्जागैरिकादिसंचयरूपस्तत्तापोऽन्तो दृष्टान्तो यस्य ।
49560 तेनापि तेषां शीतनिवृत्तिरैतिह्यप्रसिद्धेत्याशयेनोक्तमसदेवार्थसाधकमिति
49561 ॥ ४ ॥
49562
49563 ब्रह्मण्यनन्यदन्याभमम्ब्वावर्तवदास्थितम् ।
49564 सद्रूपमपि [तद्रूपम् इति पाठः] निःशून्यं तेजः
49565 सौरमिवाम्बरे ॥ ५ ॥
49566
49567 सौरं तेज आलोको नत्वातपः ॥ ५ ॥
49568
49569 रत्नाभापुञ्जमिव खे दृश्यमानमभित्तिमत् ।
49570 गन्धर्वाणां पुरमिव दृश्यं [दृश्यमानं इति पाठः]
49571 नित्यमभित्तिमत् ॥ ६ ॥
49572
49573 अभित्तिमदनाधारम् ॥ ६ ॥
49574
49575 मृगतृष्णाम्बिवासत्यं सत्यवत्प्रत्ययप्रदम् ।
49576 संकल्पपुरवत्प्रौढमनुभूतमसन्मयम् ॥ ७ ॥
49577
49578 प्रौढं विस्तृतम् । स्फुटमनुभूतमिति वा ॥ ७ ॥
49579
49580 कथार्थप्रतिभानात्म न क्वचित्स्थितमस्थितम् ।
49581 निःसारमप्यतीवान्तःसारं स्वप्नाचलोपमम् ॥ ८ ॥
49582
49583 कविकल्पितकथार्थनगरपर्वतादिसंस्थानप्रतिभानमिवात्मा स्वरूपं यस्य ।
49584 क्वचिदपि देशे काले वा न स्थितमिति हेतोरस्थितमसत् । अन्तःसारमतिदृढम् ॥ ८ ॥
49585
49586 भूताकाशमिवाकरभासुरं शून्यमात्रकम् ।
49587 शरदभ्रमिवाग्रस्थमलमक्षयमक्षतम् ॥ ९ ॥
49588
49589 अवाङ्मुखीकृतेन्द्रनीलमहाकटाहाकारभासुरम् । यावदग्रस्थं
49590 तावदलमातपनिरोधादिसमर्थम् । क्षेतुमशक्यमक्षतमविच्छिन्नं च ॥ ९ ॥
49591
49592 वर्णो व्योममलस्येव दृश्यमानमवस्तुकम् ।
49593 स्वप्नाङ्गनारताकारमर्थनिष्ठमनर्थकम् ॥ १० ॥
49594
49595 व्योममलस्य कालिम्नो वर्णः स्निग्धता । राहोः शिर इतिवद्वा । व्योमतलस्य इति
49596 पाठे स्पष्टम् । अर्थनिष्ठं भोगलक्षणार्थक्रियाकारि ॥ १० ॥
49597
49598 चित्रोद्यानमिवोत्फुल्लमरसं सरसाकृति ।
49599 प्रकाशमपि निस्तेजश्चित्रार्कानलवत्स्थितम् ॥ ११ ॥
49600
49601 अरसं शुष्कं निर्मकरन्दं च ॥ ११ ॥
49602
49603 अनुभूतं मनोराज्यमिवासत्यमवास्तवम् ।
49604 चित्रपद्माकर इव सारसौगन्ध्यवर्जितम् ॥ १२ ॥
49605
49606 असत्यं स्वतः । अवास्तवं फलतोऽपि । सारो मकरन्दपरागादिः ॥ १२ ॥
49607
49608 शून्ये प्रकचितं नानावर्णमाकारितात्मकम् ।

49609 अपिण्डग्रहमाशुन्यमिन्द्रचापमिवोत्थितम् ॥ १३ ॥
49610
49611 पिण्डग्रहो मूर्तता तच्छून्यम् ॥ १३ ॥
49612
49613 परामर्शेन शुष्यद्भिर्भूतपेलवपल्लवैः ।
49614 कृतं जडमसारात्म कदलीस्तम्भभासुरम् ॥ १४ ॥
49615
49616 परस्य परमात्मन आमर्शेनेषद्विचारेणापि । परस्यान्यस्य
49617 वाय्वातपजनादेरामर्शेनेषदभिघातेनापि च । कदलीस्तम्भः कदलीतरुः ॥ १४
49618 । ।
49619
49620 स्फुरितेक्षणदृष्टान्धकारचक्रकवर्तनम् ।
49621 अत्यन्तमभवद्रूपमपि प्रत्यक्षवत्स्थितम् ॥ १५ ॥
49622
49623 स्फुरितेक्षणेनाक्षिरोगविशेषेण । अभवद्रूपमसंभवद्रूपम् ॥ १५ ॥
49624
49625 वार्बुद्बुदमिवाभोगि शून्यमन्तःस्फुरद्वपुः ।
49626 रसात्मकं चाप्यरसमविच्छिन्नक्षयोदयम् ॥ १६ ॥
49627
49628 आभोगि कल्पिताकारम् । रस आपातरमणीयता तदात्मकमप्यरसं
49629 परिणामकटुकम् । तदेव प्रपञ्चयति - अविच्छिन्नेति । क्षयोदया
49630 जन्ममरणानि ॥ १६ ॥
49631
49632 नीहार इव विस्तारि गृहीतं सन्न किंचन ।
49633 जडशून्यास्पदं शून्यं केषांचित्परमाणुवत् ॥ १७ ॥
49634
49635 सांख्यानां केवलजडात्मकम् । जडशून्यमविद्या तदास्पदं वेदान्तिनाम् ।
49636 शून्यं माध्यमिकानाम् । क्षणिकत्वात्कालतः परमाणुवद्योगाचार्याणाम् ।
49637 कालतो देशतश्च परमाणुवत्सौत्रान्तिकवैभाषिकयोः । देशत एव
49638 परमाणुवत्कणादगौतमीययोः । अनियतस्वभावपरमाणुवदार्हतानामिति
49639 वादिभिर्बहुधा विकल्पितमित्यर्थः ॥ १७ ॥
49640
49641 किंचिद्भूतमयोऽस्मीति स्थितं शून्यमभूतकम् ।
49642 गृह्यमाणोऽप्यसद्रूपो निशाचर इवास्थितम् ॥ १८ ॥
49643
49644 बाह्ये जगत्युक्तन्यायमाध्यात्मिकेऽपि दर्शयन्नाह - किंचिदिति ॥ १८ ॥
49645
49646 श्रीराम उवाच ।
49647
49648 महाकल्पक्षये दृश्यमास्ते बीज इवाङ्कुरः ।
49649 परे भूय उदेत्येतत्तत एवेति किं वद ॥ १९ ॥
49650
49651 नन्वेवं जगत्स्वतः सत्ताशून्यं ब्रह्मसत्ता च जगन्न स्पृशति तदा सदेव
49652 सोम्येदमग्र आसीत् इत्यादीनां सत्कार्यवादिश्रुतीनां
49653 तदनुसारिव्यासकपिलाद्युपबृंहणानां कथं सामञ्जस्यं स्यादिति
49654 मन्यमानो रामः पृच्छति - महाकल्पेति । इति यद्व्यासादिभिरुक्तं तत्किं
49655 कथं समञ्जसमित्यर्थः ॥ १९ ॥
49656
49657 एवंबोधाः किमज्ञाः स्युरुत ज्ञा इति च स्फुटम् ।
49658 यथावद्भगवन्ब्रूहि सर्वसंशयशान्तये ॥ २० ॥
49659
49660 एवं प्रलये स्वसत्तया कारणे जगदस्तीति प्रकारेण बोधो येषां ते कपिलादयः ॥

49661 २० ॥
49662
49663 श्रीवसिष्ठ उवाच।
49664
49665 इदं बीजेऽङ्कुर इव दृश्यमास्ते महाशये।
49666 ब्रूते य एवमज्ञत्वमेतत्तस्यास्ति शैशवम् ॥ २१ ॥
49667
49668 महति शये शयने प्रलये। एतद्वक्ष्यमाणप्रकारं
49669 शैशवमसङ्गात्मविवेचनेऽपि जगत्सत्यताविश्वासदार्ढ्यलक्षणं
49670 बाल्यमस्ति ॥ २१ ॥
49671
49672 शृण्वेतत्किमसंबन्धं कथमेतदवास्तवम्।
49673 विपरीतो बोध एष वक्तुः श्रोतुश्च मोहकृत् ॥ २२ ॥
49674
49675 एतद्वक्ष्यमाणयुक्तिजातं शृणु। कारणे प्रागुत्पत्तेः कार्यमस्तीति
49676 वदन्प्रष्टव्यः किं तत्सत्तासामान्येनास्ति उत बीजादिसत्तया उताङ्कुरादिसत्तया।
49677 आद्ये तदङ्कुरादि किमसंबन्धं केन असंबन्धो यस्य तथाविधम्।
49678 सामान्यसत्तायाः सर्ववस्तुसाधारण्याज्जायमानाङ्कुरादेः सर्वत्र
49679 संबन्धप्रसङ्ग इत्यर्थः। अस्त्विष्टापत्तिरिति चेत् एतदङ्कुरादिक्षेत्रे
49680 अङ्कुरितबीजे दृष्टमेव वास्तवम्। कुसूलस्थबीजे शिलाशकले वा
49681 भ्रान्तिदृष्टमवास्तवमित्येतत्कथमित्यर्थः। द्वितीयेऽपि बीजसत्ताया
49682 अङ्कुरसंबन्धस्य घटपटादिसंबन्धस्य च स्वरूपतो विशेषानिरूपणान्न
49683 विद्यते संबन्धो यस्य तदसंबन्धं किं वस्तु यद्बीजेन स्यादिति। व्रीह्यादिबीजे
49684 सर्वजगत्सत्त्वप्रसङ्गः। इष्टापत्तावङ्कुरितबीजेऽङ्कुराद्येव वास्तवं न
49685 घटपटादीत्येतत्कथमित्यर्थः। तृतीयेऽप्यङ्कुरस्वरूपसत्तया
49686 बीजसंबन्धस्य घटादिसंबन्धस्य च विशेषानिरूपणादसंबन्धं किं
49687 वस्तु। सर्वत्राङ्कुरसद्भावप्रसङ्ग इत्यर्थः। इष्टापत्तौ
49688 बीजादावेवाङ्कुरादि वास्तवं नान्यत्रेत्येतत्कथमित्यर्थः। किंच
49689 साधारणसत्तया असाधारणमङ्कुराद्यस्ति कारणसत्तया कार्यमस्ति
49690 कार्यसत्तया च कारणमस्तीति पक्षत्रयेऽप्युक्तिसंभवाघटनाद्विपरीत एवायं
49691 बोध इत्याशयेनाह - विपरीत इति ॥ २२ ॥
49692
49693 बीजे किलाङ्कुर इव जगदास्त इतीह या।
49694 बुद्धिः सा सत्प्रलापार्थं मूढा शृणु कथं किल ॥ २३ ॥
49695
49696 किंच बीजेऽङ्कुर इव प्रलये जगदस्तीति दृष्टान्तो विषमः।
49697 कूटस्थचिदेकरसस्यात्मनो बीजत्वस्यैवासंभवादित्याशयेनाह - बीजे
49698 इत्यादिना। सत्प्रलापार्थं प्रलये जगत्सत्त्वे दृष्टान्तोपन्यासार्थं या
49699 बुद्धिः सा मूढा भ्रान्तिः। दार्ष्टान्तिकवैषम्यादित्यर्थः ॥ २३ ॥
49700
49701 बीजं भवेत्स्वयं दृश्यं चित्तादीन्द्रियगोचरम्।
49702 यवधानादिधान्यानि युक्तः [युक्तस्तत्राङ्कुरोद्भव इति पाठः]
49703 पत्राङ्कुरोद्भवः ॥ २४ ॥
49704
49705 वैषम्यमेव स्फुटयति - बीजमित्यादिना। यवधानाः
49706 सतुषयवास्तदादिबीजं दृश्यं दर्शनार्हम्। तथाच
49707 तत्राङ्कुराद्यन्वयव्यतिरेकस्य
49708 प्रत्यक्षसिद्धत्वात्सावयवत्वात्परिणामिस्वभावत्वादङ्कुरवैजात्यभेदनिर्वा
49709 हकजातिसंस्थानादिभेदवत्त्वाच्च युक्तोऽङ्कुरादिबीजभाव इत्यर्थः ॥ २४ ॥
49710
49711 मनःषष्ठेन्द्रियातीतं यत्स्यादतितरामणु।
49712 बीजं तद्भवितुं शक्तं [शक्य इति पाठः] स्वयंभूर्जगतां

49713 कथम् ॥ २५ ॥
49714
49715 दार्ष्टान्तिके तु न तथेत्याह - मन इति। स्वयमेव भवति स्वयं भवत्येवेति
49716 च स्वयंभूः कूटस्थाद्वितीयचिदात्मा। तथाच यस्य बीजत्वमेव दुर्घटं
49717 दूरे तत्र जगतः स्वसत्तया स्थितिरिति भावः ॥ २५ ॥
49718
49719 आकाशादपि सूक्ष्मस्य परस्य परमात्मनः।
49720 सर्वाख्यानुपलम्भस्य कीदृशी बीजता कथम् ॥ २६ ॥
49721
49722 तत्सूक्ष्ममसदाभासमसदेव ह्यतादृशम्।
49723 कीदृशी बीजता तत्र बीजाभावे कुतोऽङ्कुरः ॥ २७ ॥
49724
49725 एवं तत्त्वज्ञदृशा बीजत्वासंभवमुक्त्वा अज्ञदृशापि तस्य
49726 तदसंभवमाह - तदिति। वस्तुतः अतादृशं सदेकरसम
49727 पिसूक्ष्मत्वादज्ञदृशा असदाभासमित्यसदेवेत्यर्थः। अङ्कुरो
49728 जगदङ्कुरः ॥ २७ ॥
49729
49730 गगनाङ्गादपि स्वच्छे शून्ये तत्र परे पदे।
49731 कथं सन्ति जगन्मेरुसमुद्रगगनादयः ॥ २८ ॥
49732
49733 न किंचिद्यत्कथं किंचित्तत्रास्ते वस्तु वस्तुनि।
49734 अस्ति चेत्तत्कथं तत्र विद्यमानं न दृश्यते ॥ २९ ॥
49735
49736 न किंचिदात्मनः किंचित्कथमेति कुतोऽथवा।
49737 शून्यरूपाद्घटाकाशाज्जातोऽद्रिः क्व कुतः कदा ॥ ३० ॥
49738
49739 न किंचिदात्मनः अथात आदेशो नेति नेति इति सर्वनिषेधात्मनः ॥ ३० ॥
49740
49741 प्रतिपक्षे कथं किंचिदास्ते च्छायातपे यथा।
49742 कथमास्ते तमो भानौ कथमास्ते हिमोऽनले ॥ ३१ ॥
49743
49744 चिदेकरससत्ताया जडानेकरससत्ताप्रतिपक्षत्वादपि तत्र न जगत्सत्ता
49745 संभावितेत्याह -प्रतिपक्षे इति ॥ ३१ ॥
49746
49747 मेरुरास्ते कथमणौ कुतः किंचिदनाकृतौ।
49748 तदतद्रूपयोरैक्यं क्व च्छायातपयोरिव ॥ ३२ ॥
49749
49750 ननु मास्तु भेदेन सत्तदैक्येन तु स्यात्तत्राप्याह - तदतद्रूपयोरिति।
49751 चिदचिद्रूपयोरित्यर्थः ॥ ३२ ॥
49752
49753 साकारवटधानादावङ्कुराः सन्ति युक्तिमत्।
49754 नाकारे तन्महाकारं जगदस्तीत्ययुक्तिकम् ॥ ३३ ॥
49755
49756 नाकारे अनाकारे। नायं नञ् किंतु नशब्दोऽन्यः प्रतिषेधार्थः समस्यते ॥ ३३
49757 ।।
49758
49759 देशान्तरे यच्च नरान्तरे च
49760 बुद्ध्यादिसर्वेन्द्रियशक्ति दृश्यम्।
49761 नास्त्येव तत्तद्विधबुद्धिबोधे
49762 न किंचिदित्येव तदुच्यते च ॥ ३४ ॥
49763
49764 किंचायं सांख्यादिभिः कल्पितः कारणे जगत्सद्भावः स किं

49765 लौकिकप्रमाणबलादुत सदेव सोम्येदमग्र आसीत् इत्यादिश्रुतिबलात् | नाद्य इत्याह
49766 - देशान्तरे इति | यद्बुद्ध्यादिसर्वेन्द्रियशक्ति दृश्यं घटपटादि
49767 तदधिकरणदेशाद्देशान्तरे तदधिकरणकालात्कालान्तरे च साक्षात्स्वयं
49768 द्रष्टरि नरान्तरे वा द्रष्टरि सत्यसति च
49769 तत्तद्विधप्रत्यक्षानुमानादिबुद्धिवृत्तिलक्षणे बोधे नास्त्येव न भात्येव
49770 तद्दृश्यादर्शनादियोग्यानुपलब्धिवशान्न किंचिदसदेवेति
49771 सर्वैर्लौकिकप्रामाणिकैरुच्यते | अतः सर्वलौकिकानुपलम्भविरुद्धं प्रलये
49772 जगत्सद्भावकल्पनमित्यर्थः || ३४ ||
49773
49774 कार्यस्य तत्कारणतां प्रयातं
49775 वक्तीति यस्तस्य विमूढबोधः |
49776 कैर्नाम तत्कार्यमुदेति तस्मा-
49777 त्स्वैः कारणाद्यैः सहकारिरूपैः || ३५ ||
49778
49779 न द्वितीयोऽपीत्याह - कार्यस्येति | सदेव सोम्येदमग्र आसीत् इत्यादिश्रुतिषु न
49780 कार्यकारणयोर्द्वे सत्ते प्रतीयेते | एकमेवाद्वितीयम् इति वाक्यशेषविरोधात् |
49781 तत्रैतद्विमृश्यताम् - किं कार्यमेव सत् तत्कार्यसत्त्वमेव कारणतां
49782 प्रयातं कारणे आरोपितं श्रुतिर्वक्तीति वा कारणमेव सत्तत्सत्त्वमेव कार्ये
49783 आरोपितमिति श्रुतिर्वक्तीति वा | अथवा सदेव सत् सत्सत्तैव कार्यकारणयोरारोपितेति |
49784 तत्र तस्य सांख्यस्य बोधः स आद्यपक्षानुसारी चेत् स विमूढबोधो भ्रम
49785 एव | वाचारम्भणं विकारो नामधेयम्
49786 इत्यादिकार्यानृतत्वपरश्रुत्यननुगुणत्वात्कारणानृतत्वापादकत्वेन
49787 स्वसिद्धान्तबाधकत्वाच्चेत्याशयेनाह - कैर्नामेति | कारणानां
49788 गुणानामेवानृतत्वे तन्महदादिकार्यं कैः कारणैरुदेत्यौत्पद्यते नाम |
49789 कारणे असति कार्यस्योत्पत्तुमेवाशक्तेरित्यर्थः | अत एव न द्वितीयोऽपि | कार्ये असति
49790 तत्तत्कारणताया अपि तद्घटिताया निरूपयितुमशक्तेरिति परिशेषात्तृतीयकल्प
49791 एव श्रुत्यभिप्रेतो युक्तश्च परिग्राह्य इत्याह - तस्मादित्याद्युत्तरश्लोकेन ||
49792 ३५ ||
49793
49794 दुर्बुद्धिभिः कारणकार्यभावं
49795 संकल्पितं दूरतरे व्युदस्य |
49796 तदेव तत्सत्यमनादिमध्यं
49797 जगत्तदेतत्स्थितमित्यवेहि || ३६ ||
49798
49799 तस्मात्कार्यकारणभेदसत्यतायाः श्रुत्यसंमतत्वाद्दुर्बुद्धिभिः
49800 सांख्यादिभिः संकल्पितं कारणकार्यभावमुपादानोपादेयभावं स्वैः
49801 स्वीयैः सहकारिरूपैः कारणाद्यैर्निमित्तप्रयोजनादिभेदैः सह दूरं
49802 व्युदस्य मिथ्येति निरस्य यदेवावशिष्टमनादिमध्यान्तं सन्मात्रं वस्तु
49803 तदेवाहिकुण्डलवज्जगदिति स्थितं नान्यदित्यवेहीत्यर्थः || ३६ ||
49804
49805 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये देवदूतोक्ते मोक्षोपायेषु
49806 स्थितिप्रकरणे जन्यजनिनिराकरणं नाम प्रथमः सर्गः || १ ||
49807
49808 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे
49809 जन्यजनिनिराकरणं नाम प्रथमः सर्गः || १ ||
49810
49811 द्वितीयः सर्गः २
49812
49813 श्रीवसिष्ठ उवाच |
49814
49815 अथैतदभ्युपगमे वच्मि वेद्यविदां वर |
49816 समस्तकलनातीते महाचिद्व्योम्नि निर्मले || १ ||

49817
49818 तर्कैः स्वरूपभेदेन निरस्य जगतः स्थितम् ।
49819 पूर्णानन्दात्म सन्मात्रस्थितिः शिष्टात्र वर्ण्यते ॥ १ ॥
49820
49821 एतस्य जगतः प्रलये पृथक्सत्त्वाभ्युपगमे वच्मि दोषानिति शेषः । ननु यदि
49822 नास्ति जगत्तर्हि सर्ग एव न सिद्ध्येत् । उत्पत्तिक्रिया हि कर्तृसाध्या नह्यसति कर्तरि
49823 सिद्ध्यति । नचोत्पद्यमानादन्यत्कर्त्रस्ति । ब्रह्मैव सत्त्वात्तत्कर्तृ
49824 चेत्तदेवोत्पद्येत न जगत् । नच कूटस्थमुत्पत्त्यादिभिर्विकारैर्युज्यते ।
49825 तस्मादुत्पत्तिसिद्धये प्रलये जगतोऽपि सत्ताभ्युपेयेत्याशङ्कामनूद्य निरस्यति
49826 - समस्तेत्यादिना ॥ १ ॥
49827
49828 जगदाद्यङ्कुरस्तत्र यद्यस्ति तदसौ तदा ।
49829 कैरिवोदेति कथय कारणैः सहकारिभिः ॥ २ ॥
49830
49831 भवेत्कर्तृसत्ताकल्पनं यदि कर्तृमात्रादुत्पत्तिक्रिया सिद्ध्येत् । सा हि
49832 कर्तारमिव स्वसिद्धये करणोपकरणाधिकरणादीनि कारकान्तराण्यपि
49833 सहकारीण्यपेक्षते तदभावात्सत्त्वेन कल्पितमपि जगन्नोत्पत्तुं
49834 शक्नोतीत्याशयेनाह - जगदादीति । आदिपदं वैचित्र्यप्रपञ्चार्थम् ।
49835 इवकारस्त्वत्यन्तासंभावितत्वद्योतनार्थः ॥ २ ॥
49836
49837 सहकारिकारणानामभावे त्वङ्कुरोद्गतिः ।
49838 वन्ध्याकन्येव दृष्टेह न कदाचन केनचित् ॥ ३ ॥
49839
49840 सहकारिकारणानामभावे यद्यवोदितम् ।
49841 मूलकारणमेवाङ्ग तत्स्वभावस्थितिं गतम् ॥ ४ ॥
49842
49843 तस्माद्रज्जुसर्पादिवत्सहकारिकारणानामभावेऽपि अवोदितमाविर्भूतं
49844 यद्यभ्युपगच्छसि तर्हि मूलकारणमेव भ्रान्तिकृतजगत्स्वभावस्थितिं
49845 गतं न वस्तुतो जगत्सर्गोऽस्तीति व्यर्था तस्य प्रलये सत्त्वकल्पनेत्यर्थः ॥ ४ ॥
49846
49847 सर्गादौ सर्गरूपेण ब्रह्मैवात्मनि तिष्ठति ।
49848 यथास्थितमनाकारं क्व जन्यजनकक्रमः ॥ ५ ॥
49849
49850 तदेव स्पष्टमाह - सर्गादाविति ॥ ५ ॥
49851
49852 अथ पृथ्व्यादयोऽन्ये वा केचिदत्रोपकुर्वते ।
49853 सहकारिकारणत्वं तत्पूर्वं चात्र दूषणम् ॥ ६ ॥
49854
49855 ननु प्रलये सर्वजगत्सत्त्वस्विकारान्न सहकारिदौर्लभ्यं तदन्तर्गतैः
49856 पृथव्यादिभिः परस्परमुपकर्तुं शक्यत्वादित्याशङ्क्य परिहरति -
49857 अथेति । तत्पूर्वं पृथ्व्याद्युत्पत्तिपूर्वकं वाच्यम् । नहि
49858 स्वयमेवानुत्पन्नमन्यस्योत्पत्तौ सहकारि भवितुं शक्नोति । तथाचोत्पत्तिसिद्धौ
49859 सहकारित्वसिद्धिस्तत्सिद्धाबुत्पत्तिसिद्धिरित्यन्योन्याश्रयोऽत्र दूषणमित्यर्थः ॥ ६
49860 । ।
49861
49862 तस्मात्पदे जगच्छान्तमास्ते तत्सहकारिभिः ।
49863 चित्तात्प्रसरतीत्युक्तिर्बालस्य न विपश्चितः ॥ ७ ॥
49864
49865 इत्थं च सांख्यादिकल्पना बालिशकल्पनैवेत्युपसंहरति - तस्मादिति । पदे
49866 सप्रकृतौ शान्तं प्रलये तिरोहितम् ॥ ७ ॥
49867
49868 तस्माद्राम जगन्नासीन्न चास्ति न भविष्यति ।

49869 चेतनाकाशमेवाशु कचतीत्थमिवात्मनि ॥ ८ ॥
49870
49871 परमते निरस्ते परिशिष्टं स्वसिद्धान्तं दर्शयति - तस्मादिति ॥ ८ ॥
49872
49873 अत्यन्ताभाव एवास्य जगतो विद्यते यदा ।
49874 तदा ब्रह्मेदमखिलमिति तद्राम नान्यथा ॥ ९ ॥
49875
49876 ब्रह्मैवेदममृतं पुरस्तात् इत्यादिश्रुतीनामपि बाधायां
49877 सामानाधिकरण्यादत्रैव तात्पर्यमित्याशयेनाह - अत्यन्ताभाव इति ।
49878 तत्प्रसिद्धं श्रुतितात्पर्यम् ॥ ९ ॥
49879
49880 पूर्वं प्रध्वंसनान्योन्याभावैर्यदुपशाम्यति ।
49881 न शाम्यत्येव तच्चित्ते शाम्यत्येव तु दृश्यते ॥ १० ॥
49882
49883 एवंच श्रौतबाधात्पूर्वं जागतं घटपटादि मुद्गरप्रहारादिना
49884 प्रध्वंसैर्वस्त्वन्तरात्मनान्योन्याभावैश्च यदुपशाम्यति इदमिदानीं नास्ति
49885 इदं न भवतीति गृह्यमाणमभावरूप उपशमं भजते इति यत्तत्र
49886 शाम्यत्येव नासावुपशमः किंतु तिरोधानेन तस्य चक्षुरादिदृश्यताया
49887 एवोपरमः । यतश्चित्ते वासनात्मना न शाम्यत्येवेत्यर्थः । अयं न्यायः
49888 प्रागभावात्यन्ताभावयोरपि योज्यः । स्वसत्तया ब्रह्मसत्तया वा सतो
49889 घटादेर्बाधमन्तरेण क्वाप्यसत्त्वायोगान्मृत्पिण्डभूतलादावदर्शनस्य
49890 तिरोधानेनाप्युपपत्तेरिति ॥ १० ॥
49891
49892 अत्यन्ताभाव एवास्य भावैर्यदुपशाम्यति ।
49893 न शाम्यत्येव सच्चित्ते क्व शाम्यत्येव दृश्यता ॥ ११ ॥
49894
49895 यत् यदि दृश्यं भावैः कामकर्मवासनादिबीजैः सह उपशाम्यति तदाऽस्य
49896 दृश्यस्यात्यन्ताभाव आत्यन्तिकोच्छेद एव भवेत् । चित्ते तु सति
49897 कामादिभावानां दुर्वारत्वान्न शाम्यत्येव । अतो दृश्यता विना ज्ञानं क्व
49898 शाम्यति । तदुपशमो दुर्लभ एवेत्यर्थः ॥ ११ ॥
49899
49900 अत्यन्ताभाव एवातो जगद्दृश्यस्य सर्वथा ।
49901 वर्जयित्वेतरा युक्तिर्नास्त्येवानर्थसंक्षये ॥ १२ ॥
49902
49903 अत एव समूलमनोनाशान्तश्रौतबाधातिरिक्तः
49904 सर्वदृश्यानर्थसंक्षयरूपे मोक्षे उपायो नास्तीत्याह - अत्यन्तेति ।
49905 अत्यन्ताभावोऽधिष्ठानदर्शनेन बाध एवात्र युक्तिः । इमां युक्तिं वर्जयित्वा ॥
49906 १२ ॥
49907
49908 चिदाकाशस्य बोधोऽयं जगद्भातीति यत्स्थितम् ।
49909 अयं सोऽहमिदं नाहं लोके चित्रकथा यथा ॥ १३ ॥
49910
49911 यत् यदा जगत्तत्त्वसाक्षात्कारवशाच्चिदाकाशस्य बोधः । राहोः शिर
49912 इतिवत्षष्ठी । बोधैकरसश्चिदाकाश एव नाणुमात्रमप्यचिद्रूपमस्तीति स्थितं
49913 परिनिष्ठितं ज्ञानं भवति तदा अयं देवदत्तादिनामा देहः स
49914 विशिष्टमातापितृजन्यः प्रत्यभिज्ञायमान एवाहं इदं
49915 परकीयदेहकुड्यादि नाहमिति लोके प्रसिद्धः पामरव्यवहारश्चित्रकथा यथा
49916 तथा भाति । भित्तिलिखितचित्रस्य सर्वस्य परमार्थतो भित्तिमात्रत्वेऽपि
49917 चित्रप्रासादभित्तौ इयं भित्तिरिति भवति चित्रमनुष्यगजादौ नेयं भित्तिरिति
49918 तद्वदित्यर्थः ॥ १३ ॥
49919
49920 इदमद्यादि पृथ्व्यादि तथेदं वत्सरादि च ।

49921 अयं कल्पः क्षणश्चायमिमे मरणजन्मनी || १४ ||
49922
49923 चित्रकथा न्यायमेव पृथ्व्यादिष्वपि प्रपञ्चयति - इदमित्यादिना || १४ ||
49924
49925 अयं कल्पान्तसंरम्भो महाकल्पान्त एष सः |
49926 अयं स सर्गप्रारम्भो भाव्यभावक्रमस्त्वसौ || १५ ||
49927
49928 एष दृश्यमानः स श्रुतिपुराणप्रसिद्धो भाव्यानां
49929 सृज्यानामाकाशादीनां भावक्रमः सृष्टिक्रमः || १५ ||
49930
49931 लक्ष्माणीमानि कल्पानामिमा ब्रह्माण्डकोटयः |
49932 एते चेमे परिगता इमे भूय उपागताः || १६ ||
49933
49934 लक्ष्माणि लक्षणानि | परिगता अतीताः सर्गाः || १६ ||
49935
49936 इमानि धिष्ण्यजालानि देशकालकला इमाः |
49937 महाचित्परमाकाशमनावृतमनन्तकम् || १७ ||
49938
49939 धिष्ण्यजालानि चतुर्दशधा भिन्ना देवमनुष्यादिस्थानभेदाः | देशानां
49940 सप्तद्वीपानां कालानां कृतत्रेताद्वापरादीनां कलाः कल्पनाः || १७ ||
49941
49942 यथापूर्वं स्थितं शान्तमित्येवं कचति स्वयम् |
49943 परमाणुसहस्रांशुभास एता महाचितेः || १८ ||
49944
49945 इत्येवं वर्णितेन चित्रकथान्यायेन महाचित्परमाकाशमेव स्वयं स्वात्मनि
49946 कचति स्फुरति नान्यदित्यर्थः | तर्हि किं महाचित्प्रकाश एतावानेव नेत्याह ##-
49947 प्रभाः परिच्छिन्नास्तथा मनोनिर्गतब्रह्माण्डकोटिषु परिच्छिन्ना
49948 एताश्चिद्भासः | यथा च नभोविस्तृतेन सूर्यप्रकाशेन
49949 परमाणुभेदभ्रमणादि दृश्यते तथा महाचित्परमाकाशेऽपीति भावः || १८
49950 | |
49951
49952 स्वयमन्तश्चमत्कारो यः समुद्गीर्यते चिता |
49953 तत्सर्गभानं भातिदमरूपं ननु भित्तिमत् || १९ ||
49954
49955 तथाच मनःपरिच्छेदपीडिता चित् स्वान्तर्गतं जगद्भ्रमतीवेत्युत्प्रेक्षमाण आह
49956 - स्वयमिति || १९ ||
49957
49958 नोद्यन्ति नच नश्यन्ति नायान्ति नच यान्ति च |
49959 महाशिलासु लेखानां सन्निवेशा इवाचलाः || २० ||
49960
49961 स्फटिकशिलान्तर्नयनदोषात्प्रतीयमाना रेखा इव न पदार्थभेदाः सन्तीत्याह
49962 - नोद्यन्तीत्यादिना || २० ||
49963
49964 इमे सर्गाः प्रस्फुरन्ति स्वात्मनात्मनि निर्मले |
49965 नभसीव नभोभागा निराकारा निराकृतौ || २१ ||
49966
49967 नभसीवेत्यादयः पृथक्सत्ताशून्यत्वे दृष्टान्ताः || २१ ||
49968
49969 द्रवत्वानीव तोयस्य स्पन्दा इव सदागतौ |
49970 आवर्ता इव चाम्भोधेर्गुणिनो वा यथा गुणाः || २२ ||
49971
49972 विज्ञानघनमेवैकमिदमेवमवस्थितम् |

49973 सोदयास्तमयारम्भमनन्तं [मनारंभं इति पाठः]
49974 शान्तमाततम् ॥ २३ ॥
49975
49976 सोदयास्तमयारम्भमिदं जगदेवमुक्तदृष्टान्तानुसारेण शान्तं
49977 ब्रह्मैवाततं विस्तृतम् ॥ २३ ॥
49978
49979 सहकार्यादिहेतूनामभावे शून्यतो जगत् ।
49980 स्वयंभूर्जायते चेति किलोन्मत्तकफूत्कृतम् ॥ २४ ॥
49981
49982 एवंच सहकार्यभावे सत्यपि कर्तरि उत्पत्त्याद्यसिद्धेः सांख्यानां कल्पना
49983 उन्मत्तचेष्टेवेत्युपसंहरति - सहकारीति । स्वयं भवति अस्तीति स्वयंभूः ।
49984 प्रागुत्पत्तेः पृथक्सत्त्वेनाभ्युपगतोऽपि पदार्थ इत्यर्थः । शून्यतः
49985 शून्यकल्पप्रधानादित्यर्थः । जायते चेति चकारो जन्युत्तरभाविनी सत्ता
49986 प्रागेवाभ्युपगता चेज्जनिकल्पनवैयर्थ्यमपीति दोषान्तरसमुच्चयार्थः ॥ २४ ॥
49987
49988 प्रशान्तसर्वार्थकलाकलङ्को
49989 निरस्तनिःशेषविकल्पतल्पः ।
49990 चिराय विद्रावितदीर्घनिद्रो
49991 भवाभयो भूषितभूः प्रबुद्धः ॥ २५ ॥
49992
49993 सर्वार्थस्वप्नदर्शनहेतुत्वाद्विकल्पास्तल्पमिव । तत्कल्पनेऽपि हेतुर्दीर्घनिन्द्रा
49994 अविद्या सैव स्वरूपजागरेण विद्राविता
49995 चेत्स्वाप्नव्याघ्रादिकल्पजन्ममृत्वादिभयहेतुबाधादभयः ।
49996 तल्पादुत्थितेन राज्ञा स्वसभाभूरिव भूषिता अलंकृता
49997 ब्रह्मवित्सभाभूर्येन तथाविधो भवेत्युपदेश आशीश्च ॥ २५ ॥
49998
49999 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु
50000 स्थितिप्रकरणे स्थितिबीजोपन्यासो नाम द्वितीयः सर्गः ॥ २ ॥
50001
50002 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे स्थितिबीजोपन्यासो
50003 नाम द्वितीयः सर्गः ॥ २ ॥
50004
50005
50006 तृतीयः सर्गः ३
50007
50008 श्रीराम उवाच ।
50009
50010 महाकल्पान्तसर्गादौ प्रथमोऽसौ प्रजापतिः ।
50011 स्मृत्यात्मा जायते मन्ये स्मृत्यात्मैव ततो जगत् ॥ १ ॥
50012
50013 विवर्तत्वं प्रतिष्ठाप्याऽपवादोऽत्र प्रदर्श्यते ।
50014 बोधदृष्ट्याऽज्ञदृष्ट्या तु जगदानन्त्यमुच्यते ॥ १ ॥
50015
50016 बाह्यघटाद्युत्पत्तावुत्पत्तिकर्त्रतिरिक्तसहकार्यपेक्षास्तु जगत्तु त्वया
50017 हिरण्यगर्भमनःसंकल्पजं तदीयस्मृतिमनोराज्यकल्पमुक्तं नच तत्र
50018 सहकार्यपेक्षा दृष्टा एवं च प्रलये प्रकृतौ स्वसत्तायां तिरोभूय
50019 सन्नेव मनोरूपः प्रजापतिः स्मृत्यात्मा जायते तस्मिंश्च संस्कारात्मना
50020 सदेव जगत्स्मृत्यात्मैव जायते चेत्को विरोध इति गूढाभिसंधिना रामः
50021 पृच्छति - महाकल्पान्तेति ॥ १ ॥
50022
50023 श्रीवसिष्ठ उवाच ।
50024

50025 महाप्रलयसर्गादावेवमेतद्रघूद्वह ।
50026 स्मृत्यात्मैव भवत्यादौ प्रथमोऽसौ प्रजापतिः ॥ २ ॥
50027
50028 अस्त्वेवं तथापि जगतो न प्रलये सत्त्वसिद्धिः
50029 स्वप्नमनोरथस्मृत्यादिविषयस्य स्वकालेऽपि सत्त्वाप्रसिद्धेस्तद्वलेन प्रलये
50030 सत्त्वकल्पनासिद्धेरिति गूढाभिसंधिरेव गुरुरभ्युपगमेन समाधत्ते -
50031 महाप्रलयेति ॥ २ ॥
50032
50033 तत्संकल्पात्मकजगत्स्मृत्यात्मैवमिदं ततः ।
50034 भाति संकल्पनगरं स्थितं पूर्वं प्रजापतेः ॥ ३ ॥
50035
50036 प्रजापतेः पूर्वं प्राथमिकं संकल्पनगरमेवैतज्जगदिति स्थितमित्यर्थः ॥ ३
50037 ॥
50038
50039 स्मृतिर्न संभवत्येव सर्गादौ परमात्मनः ।
50040 जन्माभावात्कथं कुत्र नभसीव महाद्रुमः ॥ ४ ॥
50041
50042 तर्हि बाह्यविकारमनोतिरिक्तविषयात्मना जगन्माभूत्सत्यं मनोविकारात्मना तु
50043 सत्यमेव । यथा चित्रतुरगो मांसविकारात्मना ह्यसत्योऽपि
50044 रङ्गद्रव्यविकारात्मना सत्यस्तद्वदिति रामशङ्कां लिङ्गैरुपलक्ष्याह ##-
50045 स्युः । तत्र न तावत्परपरिकल्पितं प्रधानं स्मृतिसमर्थम् ।
50046 मृदादिवदचेतनत्वात् । नापि पुरुषाः ।
50047 परैस्तेषामसङ्गोदासीननिर्विकारत्वाभ्युपगमात् ।
50048 परस्परव्यावर्तकधर्मानभ्युपगमेन भेदासिद्ध्या परमात्माभेदे तु
50049 सुतरां स्मृतिर्न संभवत्येव । जन्माभावात् विकारान्तराणां तत्पूर्वकत्वात्
50050 अप्राणो ह्यमनाः शुभ्रः इत्यादिश्रुत्या तस्य मनोनिषेधात्तद्द्वारा
50051 स्मर्तृत्वासिद्धेस्तस्य स्मृतिर्नभोद्रुमकल्पैवेति ॥ ४ ॥
50052
50053 श्रीराम उवाच ।
50054
50055 न संभवति किं ब्रह्मन्सर्गादौ प्राक्तनी स्मृतिः ।
50056 महाप्रलयसंमोहैर्नश्यति प्राक्स्मृतिः कथम् ॥ ५ ॥
50057
50058 ननु यथा प्रात्यहिकी सुषुप्तिस्तथा प्रलयोऽपि तत्र च लीनस्य मनसो जागरादाविव
50059 सर्गादावप्याविर्भावात्तदवच्छिन्नप्रजापतेरन्यस्य वा स्मर्तृत्वे को विरोध
50060 इत्याशयेन रामः शङ्कते - न संभवतीति । प्राक्स्मृतिः
50061 पूर्वकल्पीयसंस्कारः ॥ ५ ॥
50062
50063 श्रीवसिष्ठ उवाच ।
50064
50065 ये महाप्रलये प्राज्ञाः सर्वे ब्रह्मादयः पुरा ।
50066 किल निर्वाणमायातास्तेऽवश्यं ब्रह्मतां गताः ॥ ६ ॥
50067
50068 अभिसंधिमुद्घाटयन् वसिष्ठः परिहरति - ये महाप्रलये इत्यादिना । अयं
50069 भावः - इयं तव शङ्का किं हिरण्यगर्भजीव एक एव स्वमनसा
50070 नानाजीवशरीरादिभेदान्परिकल्प्य संसरतीति मतेन वा नानाजीवाः
50071 स्वस्वोपभोगयोग्यप्रपञ्चभागं कल्पयन्तो हिरण्यगर्भमपि
50072 स्वस्वबुद्ध्यनुसारेण सर्वस्रष्टारं कल्पयन्तीति मतेन वा । तत्र द्वितीये
50073 महाकल्पान्तसर्गादौ प्रथमोषौ प्रजापतिः इत्यादि
50074 त्वदीयशङ्कोपक्रमविरोधात्सृष्टिश्रुत्यननुगुणत्वात् प्रथमकल्पः
50075 परिशिष्यते । तत्र च प्राक्तनकल्पीयजीवजगतां महाप्रलयकाले
50076 हिरण्यगर्भमुक्त्यैव मुक्तत्वाज्जीवान्तरापरिशेषात्स्मर्ता न कश्चिदस्तीति

50077 नैतत्सर्गसिद्धिरिति। अक्षरार्थः स्पष्टः॥ ६॥
50078
50079 प्राक्तनः कः स्मृतेः कर्ता तस्मात्कथय सुव्रत।
50080 स्मृतिर्निर्मूलतां याता स्मर्तुर्मुक्ततया यतः॥ ७॥
50081
50082 अतः स्मर्तुरभावेन स्मृतिर्वेदिति किं कथम्।
50083 अवश्यं हि महाकल्पे सर्वे मोक्षैकभागिनः॥ ८॥
50084
50085 नानुभूतेऽनुभूते च स्वतश्चिद्व्योम्नि या स्मृतिः।
50086 सा जगद्भूरिति प्रौढा दृश्या सास्त्येव चित्प्रभा॥ ९॥
50087
50088 एवं पूर्वपूर्वकल्पीयसर्गा अपि स्मृतिरूपा न सिद्ध्यन्तीति या स्मृतिरिति त्वया
50089 शङ्किता जगद्भूर्जगत्स्थितिः सा प्रौढा ब्रह्मचित्प्रभैव सास्त्येव सदेति
50090 सत्कार्यवादिनीनं श्रुतीनामाशय इत्यर्थः॥ ९॥
50091
50092 भाति संवित्प्रभैवेयमनाद्यन्तावभासिनी।
50093 यत्तदेतज्जगदिति स्वयंभूरिति च स्थितम् [स्फुटं इति पाठः]॥ १०॥
50094
50095 उक्तार्थमेव स्पष्टमाह - भातीति॥ १०॥
50096
50097 अनादिकालसंसिद्धं यद्धानं ब्रह्मणो निजम्।
50098 स आतिवाहिको देहो विराजो जगदाकृतिः॥ ११॥
50099
50100 विराजो ब्रह्माण्डशरीरस्योपादानभूत आतिवाहिकः सूक्ष्मो देहः स
50101 परमात्मैवेत्यर्थः। तथाच ब्रह्मैव सूक्ष्मस्थूलभावारोपक्रमेण
50102 जगदात्मना भातीति भावः॥ ११॥
50103
50104 परमाणाविदं भाति त्रिजगत्सवनाभ्रखम्।
50105 देशकालक्रियाद्रव्यदिनरात्रिक्रमान्वितम्॥ १२॥
50106
50107 अव्यवस्थितस्वभावत्वादपि जगतो न जगद्रूपेण सत्ता किंतु
50108 ब्रह्मरूपेणैवेत्याशयेनाव्यवस्थितस्वभावमुपपादयति -
50109 परमाणावित्यादिना॥ १२॥
50110
50111 परमाणुः प्रविततस्तस्यास्ते तादृगेव च।
50112 भाति भासुरताकारि तादृग्गिरिकुलं पुनः॥ १३॥
50113
50114 तस्य पूर्वपरमाणोरन्तरन्यः प्रविततः परमाणुरास्ते सच तादृक्
50115 पूर्वपरमाणुसदृश एव पुनस्तत्रापि तादृक् सवनाभ्रखं गिरिकुलं
50116 भातीत्येव प्रत्यनुसंततिमिति परेणान्वयः॥ १३॥
50117
50118 तत्रापि तादृगाकारमेव प्रत्यनुसंततम्।
50119 दृश्यमाभाति भारूपमेतदङ्ग न वास्तवम्॥ १४॥
50120
50121 उपपादितेन यत्फलितं तदाह - एतदिति॥ १४॥
50122
50123 इत्यस्त्यन्तो न सद्दृष्टेरसद्दृष्टेश्च वा क्वचित्।
50124 अस्यास्त्वभ्युदितं बुद्धं नाबुद्धं प्रति वानघ॥ १५॥
50125
50126 एवंच सन्मात्रदृष्टिस्तत्त्वज्ञं प्रति स्वतो यथा अनन्ता
50127 एवमसदनृतजगद्दृष्टिरप्यज्ञं प्रति संख्यया अनन्तैवेत्याह - इतीति।
50128 अभ्युदितं परमाभ्युदयं प्राप्तम्। बुद्धं तत्त्वज्ञं प्रति। न आबुद्धं

50129 येन स नाबुद्धोऽज्ञस्तं प्रति वा ॥ १५ ॥
50130
50131 बुद्धं प्रतीदं ब्रह्मैव केवलं शान्तमव्ययम् ।
50132 अबुद्धं प्रति बुद्ध्यैतद्भासुरं भुवनान्वितम् ॥ १६ ॥
50133
50134 तदेव स्पष्टीकृत्य दर्शयति - बुद्धं प्रतीत्यादिना ॥ १६ ॥
50135
50136 यथेदं भासुरं भाति जगदण्डकजृम्भितम् ।
50137 यथा कोटिसहस्राणि भान्त्यन्यान्यप्यणावणौ ॥ १७ ॥
50138
50139 यथा स्तम्भे पुत्रिकान्तस्तस्याः स्वाङ्गेषु पुत्रिका ।
50140 तस्याश्च पुत्रिकास्त्यङ्गे तथा त्रैलोक्यपुत्रिका ॥ १८ ॥
50141
50142 नाभिन्ना नापि संख्येया यथाद्रौ परमाणुकाः ।
50143 तथा ब्रह्म बृहन्मेरौ त्रैलोक्यपरमाणवः ॥ १९ ॥
50144
50145 सूर्याद्यंशुषु संख्यातुं शक्यन्ते लघवोऽणवः ।
50146 उत्पद्यन्ते चिदादित्ये त्रैलोक्यपरमाणवः ॥ २० ॥
50147
50148 शक्यन्ते यदीति शेषः । पूर्वश्लोकान्तेति वानुषङ्गनीयम् ॥ २० ॥
50149
50150 यथाणवो वहन्त्यर्कदीप्तिष्वप्सु रजःसु च ।
50151 तथा वहन्ति चिद्व्योम्नि त्रैलोक्यपरमाणवः ॥ २१ ॥
50152
50153 वहन्ति प्रवहन्ति । भ्रमन्तीति यावत् ॥ २१ ॥
50154
50155 शून्यानुभवमात्रात्म भूताकाशमिदं यथा ।
50156 सर्गानुभवमात्रात्म चिदाकाशमिदं तथा ॥ २२ ॥
50157
50158 ननु निष्प्रपञ्चस्य कूटस्थस्य कथं सविकारसर्गात्मना भानमिति चेद्यथा
50159 नीरूपस्याशून्यस्य चाकाशस्य तद्विरुद्धरूपवच्छून्यतया भानं
50160 तद्वदित्याह - शून्येति । शून्यमावरणाभावः । असन्नैल्यं च
50161 तदनुभवमात्रात्म तथाऽनुभूयमानं नतु
50162 वास्तवपूर्णनीरूपानुभवात्मेत्यर्थः ॥ २२ ॥
50163
50164 सर्गस्तु सर्गशब्दार्थतया बुद्धो नयत्यधः ।
50165 स ब्रह्मशब्दार्थतया बुद्धः श्रेयो भवत्यलम् ॥ २३ ॥
50166
50167 नयत्यध इति । उदरमन्तरं कुरुते अथ तस्य भयं भवति इत्यादिश्रुतेः । श्रेयो
50168 भवतीति । तरति शोकमात्मवित् इत्यादिश्रुतेरिति भावः ॥ २३ ॥
50169
50170 विज्ञानात्मा शासिता विश्वबीजं
50171 ब्रह्मैवालं स्वं चिदाकाशमात्रम् ।
50172 यस्माज्जातं यत्तदेवेति विद्या-
50173 द्वेद्यं स्वान्तर्बोधसंबोधमात्रम् ॥ २४ ॥
50174
50175 किं तटस्थतयापि ज्ञातं ब्रह्म श्रेयो भवति नेत्याह - विज्ञानात्मेति । यो
50176 विज्ञानात्मा जीवाख्यः प्रत्यगात्मा यश्च विश्वस्य बीजं कारणं शासिता
50177 चेश्वरस्तौ परमार्थदृशा परिशोधने अलं पूर्णं स्वं प्रत्यगेकरसं
50178 चिदाकाशमात्रं ब्रह्मैव । यतो हि बाह्यमाभ्यन्तरं च भेदकोपाधिद्वयं
50179 ब्रह्मणः सकाशादेव जातं श्रूयते । यद्यस्माज्जातं तत्तदेवेति च
50180 तदनन्यत्वमारम्भणशब्दादिभ्यः इत्यादिनावगतं तस्मात्सर्वं वेद्यं

50181 स्वान्तर्बोधे संबोधमात्रं शुद्धं चिन्मात्रमित्यर्थः ॥ २४ ॥
50182
50183 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० स्थितिप्रकरणे
50184 जगदानन्त्यवर्णनं नाम तृतीयः सर्गः ॥ ३ ॥
50185
50186 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे
50187 जगदानन्त्यवर्णनं नाम तृतीयः सर्गः ॥ ३ ॥
50188
50189
50190 चतुर्थः सर्गः ४
50191
50192 श्रीवसिष्ठ उवाच ।
50193
50194 इन्द्रियग्रामसंग्रामसेतुना भवसागरः ।
50195 तीर्यते नेतरेणेह केनचिन्नाम कर्मणा ॥ १ ॥
50196
50197 इह विश्वस्थितेर्मूलं सेन्द्रियं मन ईर्यते ।
50198 तस्योच्छेदे जगच्छून्यं दृश्यासंभवदर्शनात् ॥ १ ॥
50199
50200 इन्द्रियग्रामाणां संग्रामो जयस्तल्लक्षणेन सेतुना ॥ १ ॥
50201
50202 शास्त्रसत्संगमाभ्यासात्सविवेको जितेन्द्रियः ।
50203 अत्यन्ताभावमेतस्य दृश्यस्याप्यवगच्छति ॥ २ ॥
50204
50205 इन्द्रियजये च विवेक उपायस्तत्र च सज्जनसच्छास्त्रैकनिष्ठतोपाय इत्याशयेनाह
50206 - शास्त्रेति ॥ २ ॥
50207
50208 एतत्ते कथितं सर्वं स्वरूपं रूपिणां वर ।
50209 संसारसागरश्रेण्यो यथा यान्ति प्रयान्ति च ॥ ३ ॥
50210
50211 विहितस्येन्द्रियजयस्य प्रकृतसंबन्धं वक्तुं प्रागुक्तं स्मारयति -
50212 एतदिति । रूपिणां सौन्दर्यवतां वर श्रेष्ठ । प्रयान्ति अपगच्छन्ति । न यान्ति इति
50213 पाठेऽप्ययमेवार्थः ॥ ३ ॥
50214
50215 बहुनात्र किमुक्तेन मनःकर्मद्रुमाङ्कुरः ।
50216 तस्मिंश्छिन्ने जगच्छाखी छिन्नः कर्मतनुर्भवेत् ॥ ४ ॥
50217
50218 भोक्तुर्भोग्यभोगाकारपरिणतानि विहितनिषिद्धकर्माण्येव तनुः शरीरं यस्य
50219 तथाविधो जगच्छाखी संसारवृक्षश्छिन्नो भवेत् ॥ ४ ॥
50220
50221 मनः सर्वमिदं राम तस्मिन्नन्तश्चिकित्सिते ।
50222 चिकित्सितो वै सकलो जगजालामयो भवेत् ॥ ५ ॥
50223
50224 जगज्जाललक्षण आमयो रोगः ॥ ५ ॥
50225
50226 तदेतज्जायते लोके मनोमननमाकुलम् ।
50227 मनसो व्यतिरेकेण देहः क्व किल दृश्यते ॥ ६ ॥
50228
50229 ननु मनसि चिकित्सितेऽपि देहाधीने सुखदुःखे स्यातां तत्राह - तदेतदिति ।
50230 मनसो देहाकारमननमेव स्वप्न इव आकुलं क्रियासमर्थं देहो जायते ॥ ६ ॥
50231
50232 दृश्यात्यन्तासंभवेन ऋते नान्येन हेतुना ।

50233 मनःपिशाचः प्रशमं याति कल्पशतैरपि [कल्पशतैरति इति
50234 पाठः] ॥ ७ ॥
50235
50236 तर्हि मनश्चिकित्सायां किमौषधं तदाह - दृश्येति। दृश्यस्य
50237 अत्यन्ताभावो बाधस्तस्माद्दते। तृतीया छान्दसी ॥ ७ ॥
50238
50239 एतच्च संभवत्येव मनोव्याधिचिकित्सिते।
50240 दृश्यात्यन्तासंभवात्म परमौषधमुत्तमम् ॥ ८ ॥
50241
50242 ननु मनोरोग आभ्यन्तरो दृश्यं तु बाह्यं तत् कथं
50243 बाह्यार्थात्यन्तासंभवादान्तरमनश्चिकित्सासंभवस्तत्राह - एतदिति।
50244 एतद्दृश्यात्यन्तासंभवात्मकं परमौषधं मनोव्याधिचिकित्सिते
50245 संभवत्येवोपाय इति शेषः। चिकित्सिते इति भावे क्तः ॥ ८ ॥
50246
50247 मनो मोहमुपादत्ते म्रियते जायते मनः।
50248 तत्स्वचिन्ताप्रसादेन बध्यते मुच्यते पुनः ॥ ९ ॥
50249
50250 कथं संभवति तदाह - मन इति। नहि मनस आन्तरता अर्थानां बाह्यता
50251 च वास्तवी किंतु मन एव तथा द्वैविध्यादिकल्पनया मोहं भ्रान्तिमुपादत्ते।
50252 जन्ममृत्युबन्धमोक्षादि च कल्पयतीत्यर्थः ॥ ९ ॥
50253
50254 स्फुरतीदं जगत्सर्वं चित्ते मननमूर्च्छिते।
50255 शून्यमेवाम्बरे स्फारे गन्धर्वाणां पुरं यथा ॥ १० ॥
50256
50257 कथमिदं ज्ञातमिति चेदन्वयव्यतिरेकाभ्यामित्याह - स्फुरतीति। मननेन
50258 मूर्च्छिते समुच्छ्रिते ॥ १० ॥
50259
50260 मनसीदं जगत्कृत्स्नं स्फारं स्फुरति चास्ति च।
50261 पुष्पगुच्छ इवामोदस्तत्स्थं तस्मादिवेतरत् ॥ ११ ॥
50262
50263 तथा च विमर्शो जगन्मनोधर्म एवेति न धर्मिनिवृत्तौ
50264 स्थातुमर्हतीत्याशयेन दृष्टान्तानाह - मनसीत्यादिना। धर्मेषु
50265 धर्मिभेदो न वास्तव इति द्योतनायान्त्य इवकारः ॥ ११ ॥
50266
50267 यथा तिलकणे तैलं गुणो गुणिनि वा यथा।
50268 यथा धर्मिणि वा धर्मस्तथेदं चित्तके जगत् ॥ १२ ॥
50269
50270 रश्मिजालं यथा सूर्ये यथालोकस्तु तेजसि।
50271 यथौष्ण्यं चित्रभानौ च मनसीदं तथा जगत् ॥ १३ ॥
50272
50273 चित्रभानौ अग्नौ ॥ १३ ॥
50274
50275 शैत्यं यथैव तुहिने यथा नभसि शून्यता।
50276 यथा चञ्चलता वायौ मनसीदं तथा जगत् ॥ १४ ॥
50277
50278 मनो जगज्जगदखिलं तथा मनः
50279 परस्परं त्वविरहिते सदैव हि।
50280 तयोर्द्वयोर्मनसि निरन्तरं क्षिते
50281 क्षितं जगन्नतु जगति क्षिते मनः ॥ १५ ॥
50282
50283 मनोजगतोर्धर्मिधर्मभावेनाभेदेऽपि धर्मिमनोनाशादेव जगन्नाशो नतु
50284 वैपरीत्येन तथैव लोके दर्शनादित्याशयेनोपसंहरति - मन इति। अविरहिते

50285 अविनाभूते। क्षिते नष्टे सति क्षितं नष्टं भवति॥ १५॥
50286
50287 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मी० दे० मो० स्थितिप्रकरणे
50288 स्थित्यङ्कुरकलनं नाम चतुर्थः सर्गः॥ ४॥
50289
50290 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे
50291 स्थित्यङ्कुरकलनं नाम चतुर्थः सर्गः॥ ४॥
50292
50293
50294 पञ्चमः सर्गः ५
50295
50296 श्रीराम उवाच।
50297
50298 भगवन्सर्वधर्मज्ञ पूर्वापरविदां वर।
50299 अयं मनसि संसारः स्फारः कथमिव स्थितः॥ १॥
50300
50301 भृगावत्र समाधिस्थे शुक्रस्य क्रीडतो गिरौ।
50302 अप्सरोदर्शने मोहात्तन्मयीभाव ईर्यते॥ १॥
50303
50304 कथं कीदृशदृष्टान्तप्रकारेणेव बहिः स्फुरन्नयं स्फारः संसारो
50305 मनसि यथा स्फुरति प्रत्यक्षं प्रतिभाति तथा दृष्टान्तदृष्ट्या
50306 दृष्टान्तप्रदर्शनेन कथयेत्यर्थः॥ १॥
50307
50308 यथायं मनसि स्फारः संसारः स्फुरति स्फुरन्।
50309 दृष्टान्तदृष्ट्या स्फुटया तथा कथय मेऽनघ॥ २॥
50310
50311 श्रीवसिष्ठ उवाच।
50312
50313 यथैन्दवानां विप्राणां जगन्त्यवपुषामपि।
50314 स्थितानि जातदार्ढ्यानि मनसीदं तथा स्थितम्॥ ३॥
50315
50316 उक्तान्येवात्रैन्दवादिजगन्ति दृष्टान्त इत्याह - यथेति॥ ३॥
50317
50318 लवलणस्य यथा राज्ञश्चेन्द्रजालाकुलाकृतेः।
50319 चण्डालत्वमनुप्राप्तं तथेदं मनसि स्थितम्॥ ४॥
50320
50321 आकुलाकृतेर्व्याकुलचित्तस्य॥ ४॥
50322
50323 भार्गवस्य चिरं कालं स्वर्गभोगबुभुक्षया।
50324 यथा भोगाधिनाथत्वं संसारित्वं बभूव च॥ ५॥
50325
50326 भार्गवोपाख्यानमप्यत्र दृष्टान्तत्वेनावतारयति - भार्गवस्येति।
50327 भोगाधिनाथत्वमप्सरोभोगलिप्सुत्वम्। संसारित्वं तदर्थं
50328 स्वर्गादिगन्तृत्वं जन्मान्तरवत्त्वं च। नाथतिरत्रोपयाज्ञायाम्॥ ५॥
50329
50330 भोगेश्वरत्वं च यथा [तथा इति पाठः] तथेदं मनसि स्थितम्।
50331
50332 श्रीराम उवाच।
50333
50334 भगवन्भृगुपुत्रस्य स्वर्गभोगबुभुक्षया॥ ६॥
50335
50336 भोगेश्वरत्वं स्वर्गे अप्सरोभोक्तृत्वम्। प्रश्नः स्पष्टः॥ ६॥

50337
50338 कथं भोगाधिनाथत्वं संसारित्वं बभूव च ।
50339
50340 श्रीवसिष्ठ उवाच ।
50341
50342 शृणु राम पुरा वृत्तं संवादं भृगुकालयोः ॥ ७ ॥
50343
50344 सानौ मन्दरशैलस्य तमालविटपाकुले ।
50345 पुरा मन्दरशैलस्य सानौ कुसुमसंकुले ॥ ८ ॥
50346
50347 सानौ प्रस्थे जातं भृगुकालयोः संवादं शृण्विति पूर्वेणान्वयः ।
50348 उक्तस्योपोद्घातमाह - पुरेत्यादिना ॥ ८ ॥
50349
50350 अतप्यत तपो घोरं कस्मिंश्चिद्भगवान्भृगुः ।
50351 तमुपास्ते स्म तेजस्वी बालः पुत्रो महामतिः ॥ ९ ॥
50352
50353 शुक्रः सकलचन्द्राभः [तथा इति पाठः] प्रकाश इव भासुरः
50354 ।
50355 भृगुर्वनवरे तस्मिन्समाधावेव संस्थितः ॥ १० ॥
50356
50357 सकलः पूर्णः । भास्कर इति पाठे प्रकाशत इति प्रकाशः स्फुरन् भास्कर इव ॥
50358 १० ॥
50359
50360 सर्वकालं समुत्कीर्णो वनोपलतलादिव ।
50361 शुक्रः कुसुमशय्यासु कलधौताजिरेषु च ॥ ११ ॥
50362
50363 सर्वकालं संस्थित इति पूर्वेणान्वयः । वनोपलतलात्प्रकृतेः
50364 समुत्कीर्णष्टङ्कच्छेदनिष्पादित इवेति निश्चलत्वेनोत्प्रेक्षा । कलधौताजिरेषु
50365 रूप्यहेमवेदिकासु ॥ ११ ॥
50366
50367 मन्दरोद्दामदोलासु बालो रमणलीलया ।
50368 विद्याविद्यादृशोर्मध्ये शुक्रः प्राप्तमहापदः ॥ १२ ॥
50369
50370 विद्यादृक् पारमार्थिकात्मतत्त्वदर्शनं अविद्यादृक्
50371 पामरादिप्रसिद्धजगत्सत्यतादर्शनं तयोर्मध्ये ॥ १२ ॥
50372
50373 त्रिशङ्कुरिव रोदोन्तरवर्तत तदाकुलः ।
50374 निर्विकल्पसमाधिस्थे स कदाचित्पितर्यथ ॥ १३ ॥
50375
50376 रोदस्योर्द्यावाभूम्योरन्तर्मध्ये विश्वामित्रनिर्मिते स्वर्गे त्रिशङ्कुराजर्षिरिव
50377 अवर्तत । अत एव रागादिना आकुलः ॥ १३ ॥
50378
50379 अव्यग्रोऽभवदेकान्ते जितारिरिव भूमिपः ।
50380 ददर्शाप्सरसं तत्र गच्छन्तीं नभसः पथा ॥ १४ ॥
50381
50382 अव्यग्रो विषयान्तरे अव्याक्षिप्तचित्तः ॥ १४ ॥
50383
50384 क्षीरोदमध्यलुलितां लक्ष्मीमिव जनार्दनः ।
50385 मन्दारमालावलितां मन्दानिलचलालकाम् ॥ १५ ॥
50386
50387 क्षीरोदस्य मध्याल्लुलितां मथनेनोत्पादिताम् । लक्ष्म्या इवाप्सरसामपि
50388 क्षीरोदादुत्पत्तिप्रसिद्धेरुभयविशेषणम् ॥ १५ ॥

हारझाङ्कारिगमनां सुगन्धितनभोनिलाम् ।
लावण्यपादपलतां मदघूर्णितलोचनाम् ॥ १६ ॥

सुगन्धितौ नभोनिलौ यया । नभोग्रहणमपगतेऽप्यनिले तत्प्रदेशस्य चिरं
सुगन्धित्वद्योतनार्थम् ॥ १६ ॥

अमृतीकृततद्देशां देहेन्दूदयदीप्तिभिः ।
कान्तामालोक्य तस्याभूदुल्लसत्तरलं मनः ॥ १७ ॥

देहलक्षणादिन्दोरुदयो यासां ताभिर्दीप्तिभिः किरणैः ॥ १७ ॥

दृष्टनिर्मलपूर्णेन्दुवपुरम्बुनिधेरिव ।
साप्यालोक्य शुक्रमुखं तथा परवशा ह्यभूत् ॥ १८ ॥

अम्बुनिधेवपुः संस्थानमिव उल्लसत् तरलं च ॥ १८ ॥

मनसिजेषु पराहतमाशयं
स परिबोध्य मनस्तदनूशना ।
विगलितेतरवृत्तितयात्मना
स च वधूमय एव बभूव ह ॥ १९ ॥

स च उशना तदनु अप्सरोदर्शनानन्तरं मनसिजस्येषुभिः पराहतमाशेते
विषयेषु मुह्यतीत्याशयं मनो यथाशक्ति विवेकैः परिबोध्य बहिः
शारीरकान्तानुसरणादिव्यापारान्निरुध्यैकाग्रतामापाद्यापि
अन्तर्विगलितेतरवृत्तितया वध्वेकाग्रचित्तत्वात्तदात्मना वधूमय एव बभूव
। यच्चित्तस्तन्मयो भवतित्यादिश्रुतिस्मृत्यनुभवप्रसिद्धिद्योतनाय ह इति
निपातः ॥ १९ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपायेषु स्थितिप्रकरणे
भार्गवोपाख्याने भार्गवस्खलनं नाम पञ्चमः सर्गः ॥ ५ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे
भार्गवस्खलनं नाम पञ्चमः सर्गः ॥ ५ ॥

## षष्ठः सर्गः ६

श्रीवसिष्ठ उवाच ।

अथ तां मनसा ध्यायंस्तत्रैवामीलितेक्षणः ।
आरब्धवान्मनोराज्यमिदमेकः किलोशना ॥ १ ॥

इह शुक्रस्य मनसा स्वर्गे गमनमुच्यते ।
तत्र शक्रेण सन्मानात्संनिधावुपवेशनम् ॥ १ ॥

इदं वक्ष्यमाणप्रकारं मनोराज्यम् । एवकारः
प्रकारान्तरवारणाद्देहविस्मृतिपर्यन्तताद्योतनार्थः ॥ १ ॥

एषा हि ललना व्योम्नि सहस्रनयनालये ।
संप्राप्तोऽयमहं स्वर्गमालोलसुरसुन्दरम् ॥ २ ॥

50441 एषा पुरोवर्तिनी मयानुगम्यमाना सहस्रनयनस्येन्द्रस्यालये स्वर्गे गच्छतीति
50442 शेषः | अयं तामनुगच्छन्नहम् || २ ||
50443
50444 इमे ते मृदुमन्दारकुसुमोत्तंससुन्दराः |
50445 द्रवत्कनकनिष्यन्दविलासिवपुषः सुराः || ३ ||
50446
50447 कनकनिष्यन्दो द्रुतसुवर्णम् | तद्धि अत्यन्तं कान्तिमत्प्रसिद्धम् | तदिव विलासि
50448 शोभमानं वपुर्येषाम् || ३ ||
50449
50450 इमास्ता लोचनोल्लासदृष्टनीलाब्जदृष्टयः |
50451 मुग्धहासविलासिन्यः कान्ता हरिणदृष्टयः || ४ ||
50452
50453 लोचनोल्लासेन प्रत्यक्षेण दृष्टानि नीलाब्जानीव दृष्टयो यासां ता इमाः
50454 कान्ता अप्सरसः || ४ ||
50455
50456 इमे ते कौसुमोद्द्योता अन्योन्यप्रतिबिम्बिताः |
50457 विश्वरूपोपमाकारा मरुतो मत्तकाशिनः || ५ ||
50458
50459 कौसुमैः पारिजातादिकुसुमरचितैर्माल्यैरुद्द्योतन्ते प्रकाशन्ते इति
50460 कौसुभोद्द्यओताः कौस्तुभोद्द्योताः इति पाठे कौस्तुभबहुद्द्यतमानाः
50461 [कौस्तुभवदुद्द्योतमानाः इति पाठः साधुः] |
50462 अन्योन्यप्रतिबिम्बितात्वादेव विश्वरूपः सर्वाकारो हरिस्तदुपमाकाराः | मत्ता
50463 हृष्टाः काशन्ते दीप्यन्ते तच्छीलाः मरुतो देवाः | प्राग्वर्णितानामपि
50464 देवानां प्रकारान्तरेण वर्णनान्न पौनरुक्त्यम् || ५ ||
50465
50466 ऐरावणकटामोदविरक्तमधुपश्रुताः |
50467 इमास्ताः काकलीगीता गीर्वाणगणगीतयः || ६ ||
50468
50469 ऐरावणस्यैरावतस्य कटौ गण्डौ | ताभ्यां मदजलं लक्ष्यते | तदामोदेऽपि
50470 विरक्तैरनासक्तैर्मधुपैः श्रुता आकर्णिताः काकल्या मधुरास्फुटध्वनिना
50471 गीता आलापिताः || ६ ||
50472
50473 इयं सा कनकाम्भोजचलद्वैरिञ्चसारसा |
50474 मन्दाकिनीतटोद्यानविश्रान्तसुरनायका || ७ ||
50475
50476 कनकाम्भोजेषु चलन्तो भ्रमन्तो वैरिञ्चा विरिञ्चिसंबन्धिनो हंसाः
50477 सारसाश्च यस्याम् || ७ ||
50478
50479 एते ते यमचन्द्रेन्द्रसूर्यानलजलानिलाः |
50480 लोकपालास्तनुद्योतकीर्णदीप्तानलार्चिषः || ८ ||
50481
50482 तनुद्योतैः शरीरकान्तिभिः कीर्णाः परितः प्रसारिता दीप्तानलार्चिषो यैः || ८ ||
50483
50484 अयं स रणवृत्तान्तहेतिकण्डूयिताननः |
50485 ऐरावणो रणे दन्तप्रोतदैत्येन्द्रमण्डलः || ९ ||
50486
50487 रणवृत्तान्तेषु युद्धप्रसङ्गेषु हेतिभिरायुधैः कण्डूयितमिव आननं
50488 यस्य || ९ ||
50489
50490 इमे ते भूतलस्थानाद्व्योम्नि तारकतां गताः |
50491 वैमानिकाश्चरच्चारुचामीकरमयातपाः || १० ||
50492

50493 चरन्तः प्रसरन्तश्चारुचामीकरमया इव आतपा देहविमानादिकान्तयो येषाम् ||
50494 १० ||
50495
50496 मेरूपलतलास्फालसीकराकीर्णदिवताः |
50497 एतास्ताः कीर्णमन्दारा गङ्गासलिलवीचयः || ११ ||
50498
50499 एताः प्रसृतमन्दारमञ्जरीपुञ्जपिञ्जराः |
50500 दोलालोलाप्सरःश्रेण्यः शक्रोपवनवीथयः || १२ ||
50501
50502 इमे ते कुन्दमन्दारमकरन्दसुगन्धयः |
50503 चन्द्रांशुनिकराकाराः पारिजातसमीरणाः || १३ ||
50504
50505 चन्द्रांशुनिकरा इव सुखस्पर्श आकारः शैत्यमान्द्यादियुक्तः संनिवेशो
50506 येषाम् || १३ ||
50507
50508 पुष्पकेसरनीहारपटवासरणोत्सुकैः |
50509 लताङ्गनागणैर्व्याप्तमिदं तन्नन्दनं वनम् || १४ ||
50510
50511 पुष्पैः केसरैर्नीहारैर्हिममकरन्दकणैः पटान्वासयन्ति सुगन्धयन्तीति
50512 पटवासाः परागास्तैश्च यः पवनान्दोलनक्रीडार्थं च
50513 परस्परताडनलक्षणो रणस्तत्र उत्सुकैरासक्तैर्लतागणैरङ्गनागणैश्च
50514 लतालक्षणैरङ्गनागणैर्वा लतासदृशैरङ्गनागणैर्वा व्याप्तम् || १४ ||
50515
50516 कान्तगीतरवानन्दप्रनर्तितसुराङ्गनौ |
50517 इमौ तौ वल्लकीस्निग्धस्वरौ नारदतुम्बुरू || १५ ||
50518
50519 नारदतुम्बुरू गन्धर्वविशेषौ ऋषी वा || १५ ||
50520
50521 इमे ते पुण्यकर्तारौ भूरिभूषणभूषिताः |
50522 व्योमन्युड्डीयमानेषु विमानेषु च संस्थिताः || १६ ||
50523
50524 मदमन्मथमत्ताङ्ग्य इमास्ताः सुरयोषितः |
50525 देवेश्वरं निषेवन्ते वनं वनलता इव || १७ ||
50526
50527 देवेश्वरमिन्द्रम् || १७ ||
50528
50529 इन्द्राश्मजालकुसुमाश्चिन्तामणिगुलुच्छकाः |
50530 कल्पवृक्षा इमे पक्वफलस्तबकदन्तुराः || १८ ||
50531
50532 इन्द्राश्मजालानीन्द्रनीलसमूहरूपाणि | चन्द्राश्म इति पाठे
50533 चन्द्रकान्तसमूहसदृशानि कुसुमानि येषाम् | चिन्ता मणय एव गुलुच्छकाः
50534 कलिकागुच्छानि येषाम् | पक्वैः फलस्तवकैर्दन्तुरा उन्नतदन्ता इव
50535 शोभमानाः || १८ ||
50536
50537 इह तावदिमं शक्रमहमासनसंस्थितम् |
50538 द्वितीयमिव त्रैलोक्यस्रष्टारमभिवादये || १९ ||
50539
50540 त्रैलोक्यस्रष्टारं ब्रह्माणम् || १९ ||
50541
50542 इति संचिन्त्य शुक्रेण मनसैव शचीपतिः |
50543 तेनाभिवादितस्तत्र द्वितीय इव खे भृगुः || २० ||
50544

50545 अथ सादरमुत्थाय शुक्रः शक्रेण पूजितः ।
50546 गृहीतहस्त आनीय समीपमुपवेशितः ॥ २१ ॥
50547
50548 समीपमानीय उपवेशितः ॥ २१ ॥
50549
50550 धन्यस्त्वदागमे नाथ स्वर्गोऽयं शुक्र शोभते ।
50551 उष्यतां चिरमेवेह शक्र इत्थमुवाच तम् ॥ २२ ॥
50552
50553 अथ तत्रोपविश्यासौ भार्गवः शोभिताननः ।
50554 श्रियं जहार शशिनः सकलस्यामलस्य च ॥ २३ ॥
50555
50556 सकलस्य पूर्णस्य अमलस्य रजःकलङ्करहितस्य ॥ २३ ॥
50557
50558 सकलसुरगणाभिवन्दितोऽसौ
50559 भृगुतनयः शतमन्युपार्श्वसंस्थः ।
50560 चिरतरमतुलामवाप तुष्टिं
50561 नरपतिसत्तमलालनं बभूव ॥ २४ ॥
50562
50563 नरपतिसत्तमस्य राजोत्तमस्येन्द्रस्य लालनं लालनीयः पुत्रादिरिव प्रियतम इति
50564 यावत् ॥ २४ ॥
50565
50566 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० मो० स्थितिप्रकरणे
50567 भार्गवोपाख्याने भार्गवमनोराज्यं नाम षष्ठः सर्गः ॥ ६ ॥
50568
50569 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे
50570 भार्गवमनोराज्यं नाम षष्ठः सर्गः ॥ ६ ॥
50571
50572
50573 सप्तमः सर्गः ७
50574
50575 इति शुक्रः पुरं प्राप्य वैबुधं स्वेन तेजसा ।
50576 विसस्मार निजं भावं प्राक्तनं व्यसनं विना ॥ १ ॥
50577
50578 इह भूयः स्वकान्तायाः स्वर्गे शुक्रेण दर्शनम् ।
50579 परस्परानुरागेण संगमश्चोपवर्ण्यते ॥ १ ॥
50580
50581 इति उक्तमनोराज्यप्रकारेण विबुधानां निवासं वैबुधं पुरं स्वर्गम् । स्वेन
50582 स्वकीयेन तेजसा पुण्यसामर्थ्येन । व्यसनं मरणदुःखं विनापि ॥ १ ॥
50583
50584 मुहूर्तमिव विश्रम्य तस्य पार्श्वे शचीपतेः ।
50585 स्वर्गं विहर्तुमुत्तस्थौ स्वर्गाभिपरिमोदितः ॥ २ ॥
50586
50587 स्वर्गेण सुखातिशयेनाभितः परिमोदितो हर्षितः । स्वर्गामिपरिमोदितः इति पाठे
50588 स्वर्गसंचरणशीलैर्देवैरुत्साहित इत्यर्थः ॥ २ ॥
50589
50590 स्वःश्रियं स समालोक्य लोललोचनवाञ्छिताम् ।
50591 स्त्रैणं द्रष्टुं जगामासौ नलिनीमिव सारसः ॥ ३ ॥
50592
50593 स्वःश्रियं स्वर्गशोभां स्वसौन्दर्यं च । लोललोचनस्य स्त्रीजनस्य
50594 वाञ्छितामभीष्टतामामिति समालोक्य विचार्य । स्त्रैणं स्त्रीसमूहम् ॥ ३ ॥
50595
50596 तत्र तां मृगशावाक्षीं कान्तामध्यगतामसौ ।

50597 ददर्श विपिनान्तस्थां भृगुश्चूतलतामिव ॥ ४ ॥
50598
50599 तां पूर्वदृष्टामप्सरसम् । भृगुर्भार्गवः ॥ ४ ॥
50600
50601 सापि तं भार्गवं राम दृष्ट्वा परवशाभवत् ।
50602 तामालोक्य लसल्लोलविलासवलिताकृतिम् ॥ ५ ॥
50603
50604 तामालोक्य स भार्गवोऽपि परवशोऽभवदित्यनुषङ्गः परेण वान्वयः ॥ ५ ॥
50605
50606 आसीद्विलीयमानाङ्गो ज्योत्स्नामिन्दुमणिर्यथा ।
50607 विलीयमानसर्वाङ्गस्तामवैक्षत कामिनीम् ॥ ६ ॥
50608
50609 स्वेदाख्यं संचारिभावं दर्शयति - विलीयमानाङ्ग इति ॥ ६ ॥
50610
50611 चन्द्रकान्त इव ज्योत्स्नां शीतलां खे विलासिनीम् ।
50612 तेनावलोकिता सापि तत्परायणतां गता ॥ ७ ॥
50613
50614 निशान्ते चक्रवाकेन कान्तेव परिकूजिता ।
50615 रसाद्विकसिता नूनमन्योन्यमनुरक्तयोः ॥ ८ ॥
50616
50617 निशि वियोगात्परितः कूजितं रुदितं यया सा कान्ता चक्रवाकिनी निशान्ते
50618 प्रातश्चक्रवाकेनावलोकितेव । रसात्प्रेमातिशयाद्विकसिता आविष्कृतशोभा ।
50619 नूनमित्यभेदोत्प्रेक्षाद्योतनाय ॥ ८ ॥
50620
50621 प्रातरर्कनलिन्योर्या शोभा सैव तयोरभूत् ।
50622 संकल्पितार्थदायित्वाद्देशस्याभूच्च तेन सा ॥ ९ ॥
50623
50624 देशस्य नन्दनोद्देशस्य ॥ ९ ॥
50625
50626 सर्वाङ्गं विवशीकृत्य कामायैव समर्पिता ।
50627 पेतुः स्मरशरास्तस्या मृदुष्वङ्गेषु भूरिशः ॥ १० ॥
50628
50629 पलाशेष्विव पद्मिन्या धारा इव पयोमुचः ।
50630 सा बभूव स्मरोद्धूता लोलालिवलयाकुला ॥ ११ ॥
50631
50632 पलाशेषु पत्रेषु । तस्याः कम्पाख्यं संचारिभावं दर्शयति - सेति ।
50633 स्मरेणोद्धूता कम्पिता ॥ ११ ॥
50634
50635 मन्दवाताभिनुन्नाया मञ्जर्याः सहधर्मिणी ।
50636 नीलनीरजनेत्रान्तां हंससारसगामिनीम् ॥ १२ ॥
50637
50638 सहशब्दः सादृश्ये । सदृशधर्मिणीत्यर्थः ॥ १२ ॥
50639
50640 मदनः क्षोभयामास गजः कमलिनीमिव ।
50641 अथ तां तादृशीं दृष्ट्वा शुक्रः संकल्पितार्थभाक् ॥ १३ ॥
50642
50643 तमः संकल्पयामास संहार इव भूतभुक् ।
50644 त्रिविष्टपस्य देशोऽसौ बभूव तिमिराकुलः ॥ १४ ॥
50645
50646 संहारे प्रलयकाले । भूतभुक् रुद्रः । त्रिविष्टपस्य स्वर्गस्यावयवोऽसौ
50647 नन्दनोद्देशः ॥ १४ ॥
50648

50649 भूलोकस्यान्धतमसा लोकालोकतटो यथा ।
50650 लज्जान्धकारतीक्ष्णांशौ तस्मिंस्तिमिरमण्डले ॥ १५ ॥
50651
50652 लज्जालक्षणस्यान्धकारस्य तीक्ष्णांशौ सूर्यवन्निवारके तिमिरमण्डले
50653 तस्मिन्मण्डले नन्दनप्रदेशे तस्य मिथुनस्य स्त्रीपुंसद्वन्द्वस्येव
50654 प्रतिष्ठां स्थैर्य आगते प्राप्ते सतीति परेण सहान्वयः ॥ १५ ॥
50655
50656 प्रतिष्ठामागते तस्य मिथुनस्येव मण्डले ।
50657 तेषु सर्वेषु भूतेषु गतेष्वभिमतां दिशम् ॥ १६ ॥
50658
50659 भूतेषु तस्याः सखीजनेषु तस्मात्प्रदेशादभिमतां दिशं गतेषु सत्सु ॥ १६ ॥
50660
50661 तस्मात्प्रदेशाद्भूलोके दिनान्ते विहगेष्विव ।
50662 सा दीर्घचञ्चलापाङ्गी प्रवृद्धमदनव्यथा ॥ १७ ॥
50663
50664 आजगाम भृगोः पुत्रं मयूरी वारिदं यथा ।
50665 धवलागारमध्यस्थे पर्यङ्के परिकल्पिते ॥ १८ ॥
50666
50667 धवलागारं स्फाटिकगृहं तन्मध्यस्थे ॥ १८ ॥
50668
50669 विवेश भार्गवस्तत्र क्षीरोद इव माधवः ।
50670 सा करावलम्ब्यास्य विवेशावनतानना ॥ १९ ॥
50671
50672 रराज च सुरेभस्य हृदि लग्नेव पद्मिनी ।
50673 उवाच चेदं मधुरं रसस्नेहाक्तया गिरा ॥ २० ॥
50674
50675 सुरेभस्यैरावणस्य ॥ २० ॥
50676
50677 वचो मधुरमानन्दविलासवलिताक्षरम् ।
50678 पश्यामलेन्दुवदनमण्डलीकृतकार्मुकः ॥ २१ ॥
50679
50680 अबलामनुबध्नाति मामेष किल नाङ्गकः ।
50681 पाहि मामबलां नाथ दीनां त्वच्छरणामिह ॥ २२ ॥
50682
50683 नाङ्गकोऽनङ्गकः । अबलां मामनुबध्नाति निर्बन्धयति । अत एव पाहि ॥ २२ ॥
50684
50685 कृपणाश्वासनं साधो विद्धि सच्चरितव्रतम् ।
50686 स्नेहदृष्टिमजानद्भिर्मूढैरेव महामते ॥ २३ ॥
50687
50688 प्रणया अवगण्यन्ते न रसज्ञैः कदाचन ।
50689 अशङ्कितोपसंपन्नः प्रणयोऽन्योन्यरक्तयोः ॥ २४ ॥
50690
50691 प्रणयाः प्रीत्यतिशयाः । अवगण्यन्ते न बहुमन्यन्ते । अशङ्कितं
50692 अन्यगोचरतासोपाधिकत्वविच्छेदापराधगणनादिशङ्कारहितं यथा
50693 स्यात्तथा उपसंपन्नः संजातः ॥ २४ ॥
50694
50695 अधःकरोति निष्यन्दं चन्द्रमाह्लादनं प्रिय ।
50696 न तथा सुखयत्येषा चेतस्त्रिभुवनेशिता ॥ २५ ॥
50697
50698 निष्यन्दं देवसंजीवनामृतस्राविणम् । अधःकरोति संजीवकादाह्लादकाच्च
50699 चन्द्रसहस्रादपि प्रियतमप्रणय एवातिशेते इति यावत् । त्रिभुवनेशिता
50700 त्रैलोक्यैश्वर्यम् ॥ २५ ॥

50701
50702 यथा परस्परानन्दः स्नेहः प्रथमरक्तयोः।
50703 त्वत्पादस्पर्शनेनेयं समाश्वस्तास्मि मानद॥ २६॥
50704
50705 चन्द्रपादपरामृष्टा यथा निशि कुमुद्वती।
50706 संस्पर्शामृतपानेन तव जीवामि सुन्दर॥ २७॥
50707
50708 चन्द्रांशुरसपानेन चकोरी चपला यथा।
50709 मामिमां चरणालीनां भ्रमरीं करपल्लवैः॥ २८॥
50710
50711 आलिङ्ग्यामृतसंपूर्णे स्वपद्मह्रदये कुरु।
50712 इत्युक्त्वा पुष्पमृद्वङ्गी सा तस्य पतितोरसि।
50713 व्याघूर्णितालिनयना सुतरोरिव मञ्जरी॥ २९॥
50714
50715 अमृतसंपूर्णे स्नेहदयामृतभरिते हृत्पद्मान्तस्थे हृदये चित्ते।
50716 सुतरोः कल्पवृक्षस्य॥ २९॥
50717
50718 तौ दम्पती तत्र विलासकान्ती
50719 विवेशतुस्तासु वनस्थलीषु।
50720 किञ्जल्कगौरानिलघूर्णितासु
50721 रक्तौ द्विरेफाविव पद्मिनीषु॥ ३०॥
50722
50723 विवेशतुः निर्विविशतुः। गुणश्छान्दसः। किञ्जल्कैः
50724 केसरैस्तदीयपरागैर्गौरेण पीतेनानिलेन घूर्णितासु कम्पितासु।
50725 वनस्थलीपद्मिन्योः साधारणं विशेषणम्॥ ३०॥
50726
50727 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० मो० स्थितिप्रकरणे
50728 भार्गवोपाख्याने नवसंगमो नाम सप्तमः सर्गः॥ ७॥
50729
50730 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे नवसंगमो
50731 नाम सप्तमः सर्गः॥ ७॥
50732
50733
50734 अष्टमः सर्गः ८
50735
50736 श्रीवसिष्ठ उवाच।
50737
50738 इति चित्तविलासेन चिरमुत्प्रेक्षितैः प्रियैः।
50739 प्रणयैर्भार्गवस्यासीत्तुष्टये सुसमागमः॥ १॥
50740
50741 विविधस्वर्गभोगान्ते पतितस्यात्र भूरिशः।
50742 जन्मानि वासनायोगात्तापसत्त्वं च कीर्त्यते॥ १॥
50743
50744 उत्प्रेक्षितैः कल्पितैः॥ १॥
50745
50746 मन्दारमालाकलया विबुधासवमत्तया।
50747 तदा तेन तया सार्धं द्वितीयेनामलेन्दुना॥ २॥
50748
50749 मन्दारमालाः आकलयति सर्वतो धारयतीति तथोक्तया। मन्दारमालालकया इति
50750 पाठः स्पष्टः। विबुधासवममृतं देवभोग्यमासवान्तरं वा॥ २॥
50751
50752 विहृतं मत्तहंसासु हेमपङ्कजिनीषु च।

50753 तटीष्वमरवाहिन्याः सह चारणकिंनरैः ॥ ३ ॥
50754
50755 अमरवाहिन्या मन्दाकिन्याः ॥ ३ ॥
50756
50757 पीतमिन्दुदलस्यन्दैर्देवैः सह रसायनम् ।
50758 पारिजातलताजालनिलयेषु विलासिना ॥ ४ ॥
50759
50760 इन्दुदलानां चन्द्रकलानां स्यन्दैर्निष्यन्दरूपैश्चन्द्रकलारब्धशरीरैरिति
50761 यावत् । लताजालनिलयेषु कुञ्जेषु ॥ ४ ॥
50762
50763 चारुचैत्ररथोद्यानलतालोलासुदोलया ।
50764 चिरं विलसितं व्यग्रैः सह विद्याधरीगणैः ॥ ५ ॥
50765
50766 लताकल्पितया लीलार्थया सुदोलया विलसितं क्रीडितम् ॥ ५ ॥
50767
50768 नन्दनोपवनाभोगो मन्दरेणेव वारिधिः ।
50769 भृशमालोड्यतां नीतः प्रथमैः सह शाम्भवैः ॥ ६ ॥
50770
50771 शाम्भवैः शिवानुचरैः प्रमथैः सह आलोड्यतां परिभ्रान्तताम् ॥ ६ ॥
50772
50773 बालहेमलताजालजटालासु नदीषु च ।
50774 भ्रान्तमुन्मत्तनागेन मैरवीष्वब्जिनीष्विव ॥ ७ ॥
50775
50776 उन्मत्तनागेन मत्तगजेन । मैरवीषु मेरुसंबन्धिनीषु भूमिषु ॥ ७ ॥
50777
50778 कैलासवनकुञ्जेषु तया सह विलासिना ।
50779 हरेन्दुधवला रात्र्यः क्षिपिता गणगीतिभिः ॥ ८ ॥
50780
50781 हरस्येन्दुना चूडामणिना कृष्णपक्षेऽपि धवलाः । क्षिपिताः क्षिप्ताः ।
50782 अतिवाहिता इति यावत् । इट् छन्दसः ॥ ८ ॥
50783
50784 गन्धमादनशैलस्य विश्रम्योपरि सानुषु ।
50785 सा तेन कनकाम्भोजैरापादमभिमण्डिता ॥ ९ ॥
50786
50787 सा वधुः ॥ ९ ॥
50788
50789 लोकालोकतटान्तेषु विचित्राश्चर्यहारिषु ।
50790 क्रीडितं कृतहासेन राम तेन तया सह ॥ १० ॥
50791
50792 लोकालोको भूप्रान्तपर्वतः प्रसिद्धः ॥ १० ॥
50793
50794 मन्दरान्तरकच्छेषु सार्धं हरिणशावकैः ।
50795 अवसत्स समाः षष्टिं कल्पितामरमन्दिरे ॥ ११ ॥
50796
50797 कच्छेषु जलप्रायशिशिरदेशेषु । हरिणशावकैर्मृगपोतैः । षष्टिं समाः
50798 संवत्सरान् ॥ ११ ॥
50799
50800 क्षीरार्णवतटीष्वस्य वनितासहचारिणः ।
50801 क्षीणं कृतयुगादर्धं श्वेतद्वीपजनैः सह ॥ १२ ॥
50802
50803 गन्धर्वनगरोद्यानलीलाविरचनैरसौ ।
50804 स्रष्टानन्तजगत्सृष्टेः कालस्यानुकृतिं गतः ॥ १३ ॥

50805
50806 मनोरथमात्रेण शुक्र एव सर्वजगत्सृष्टेः क्रमेण स्रष्टा सन्
50807 कालस्यानुकृतिं साम्यं गतः प्रापेत्यर्थः ॥ १३ ॥
50808
50809 अथावसदसौ शुक्रः पुरन्दरपुरे पुनः ।
50810 सुखं चतुर्युगान्यष्टौ हरिणेक्षणया सह ॥ १४ ॥
50811
50812 पुण्यक्षयानुसंधानात्ततश्चावनिमण्डले ।
50813 तयैव सह मानिन्या पपातोपहताकृतिः ॥ १५ ॥
50814
50815 उपहता पतनप्रतिसंधानभयाद्गलिता आकृतिर्दिव्यशरीरं यस्य ॥ १५ ॥
50816
50817 परालूनसमस्ताङ्गो हृतस्यन्दननन्दनः ।
50818 चिन्तापरवशो ध्वस्तः समितीव हतो भटः ॥ १६ ॥
50819
50820 परालूनानि द्रवीभावेन विच्छिन्नानि समस्ताङ्गानि यस्य । हृते
50821 देवैर्बलाद्गृहीते स्यन्दनं विमानं नन्दनं वनं
50822 वासोलङ्कारादयुपभोगानन्दसाधनं च यस्य । ध्वस्तः अधःपतितः । समिति
50823 युद्धे ॥ १६ ॥
50824
50825 पतितस्यावनौ तस्य चिन्तया सह दीर्घया ।
50826 शरीरं शतधा जातं शिलापातीव निर्झरः ॥ १७ ॥
50827
50828 शरीरं द्रवीभूतस्वरूपम् ॥ १७ ॥
50829
50830 संशीर्णयोर्देहकयोश्चित्तके व्यसनाविले ।
50831 विचेरतुस्तयोर्व्योम्नि निर्नीडौ विहगौ यथा ॥ १८ ॥
50832
50833 चित्तके लिङ्गशरीरे द्वे । व्यसनेन दुःखेन आविले अस्वच्छे ॥ १८ ॥
50834
50835 तत्राविविशतुश्चान्द्रं ते चित्ते रश्मिजालकम् ।
50836 प्रालेयतामुपेत्याशु शालितामथ जग्मतुः ॥ १९ ॥
50837
50838 तत्र व्योम्नि । आविविशतुः प्रविष्टे । प्रालेयतां हिमजलताम् ॥ १९ ॥
50839
50840 शालींस्तान्भुक्तवान्पक्वान्दशार्णेषु द्विजोत्तमः ।
50841 स शुक्रः शुक्रतामेत्य तद्भार्यातनयोऽभवत् ॥ २० ॥
50842
50843 दशार्णेषु देशविशेषेषु । शुक्रतां रेतस्ताम् ॥ २० ॥
50844
50845 ततो मुनीनां संसर्गात्तपस्युग्रे व्यवस्थितः ।
50846 अवसन्मेरुगहने मन्वन्तरमनिन्दितः ॥ २१ ॥
50847
50848 मेरुगहने इलावृतादिवर्षे ॥ २१ ॥
50849
50850 तत्र तस्य समुत्पन्नो मृग्याः पुत्रो नराकृतिः ।
50851 तत्स्नेहेन परं मोहं पुनरप्याययौ क्षणात् ॥ २२ ॥
50852
50853 मृग्या इति अर्थात्साप्सराः शापान्मृगी संपन्नेति गम्यते ॥ २२ ॥
50854
50855 पुत्रस्यास्य धनं मेऽस्तु गुणाश्चायुश्च शाश्वतम् ।
50856 इत्यनारतचिन्ताभिर्जहौ सत्यामवस्थितिम् ॥ २३ ॥

सत्यां श्रुत्यादिप्रमाणनियन्त्रितामवस्थितिं तपोध्यानदानादिनिष्ठां जहौ
॥ २३ ॥

धर्मचिन्तापरिभ्रंशात्पुत्रार्थं भोगचिन्तया ।
क्षीणायुषं तमहरन्मृत्युः सर्प इवानिलम् ॥ २४ ॥

अहरत् अग्रसत् ॥ २४ ॥

भोगैकचिन्तया सार्धं सममुत्क्रान्तचेतनः ।
प्राप्य मद्रेशपुत्रत्वमासीन्मद्रमहीपतिः ॥ २५ ॥

मद्रेशो मद्रराजस्तस्य पुत्रत्वं प्राक्तनब्राह्मण्यापेक्षया निकृष्टां
क्षात्रयोनिमित्याशयः ॥ २५ ॥

मद्रदेशे चिरं कृत्वा राज्यमुत्सन्नशात्रवम् ।
जरामभ्याजगामात्र हिमाशनिरिवाम्बुजम् ॥ २६ ॥

अभ्याजगाम प्राप ॥ २६ ॥

मद्रराजतनुं चारुं तपोवासनया सह ।
तत्याज तेन जातोऽसौ तपस्वी तापसात्मजः ॥ २७ ॥

तपोवासनया वानप्रस्थधर्मसंचिन्तयेत्यर्थाद्गम्यते ॥ २७ ॥

समङ्गाया महानद्यास्तटमासाद्य तापसः ।
तपस्तेपे महाबुद्धिः स राम विगतज्वरः ॥ २८ ॥

विगतज्वरः शान्त्यादिनिरस्तरागादिसंतापः ॥ २८ ॥

विविधजन्मदशां विविधाशयः
समनुभूय शरीरपरम्पराः ।
सुखमतिष्ठदसौ भृगुनन्दनो
वरनदीसुतटे दृढवृक्षवत् ॥ २९ ॥

असौ प्रागुक्तो भृगुनन्दनः शुक्रो विविधाशयो नानाविधवासनावासितः
संस्तत्तदनुसारिणीं विविधजन्मदशां प्राप्य शरीरपरम्पराः
सम्यगनुभूय दैवाद्वैराग्यादिसाधनसंप्राप्या सुखं निर्विक्षेपं यथा
स्यात्तथा वरनद्याः समङ्गायाः सुतटे
दृढवृक्षवच्छेदनभेदनादिविक्षेपसहस्रेऽप्यचञ्चलवृत्तिरतिष्ठदित्य
र्थः ॥ २९ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० मो० स्थितिप्रकरणे
भार्गवोपाख्याने शुक्रविविधजन्मानुभवो नामाष्टमः सर्गः ॥ ८ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे
शुक्रविविधजन्मानुभवो नामाष्टमः सर्गः ॥ ८ ॥

## नवमः सर्गः ९

श्रीवसिष्ठ उवाच ।

50909
50910 इति चिन्तयतस्तस्य शुक्रस्य पितुरग्रतः |
50911 जगामातितरां कालो बहुसंवत्सरात्मकः || १ ||
50912
50913 इह शुक्रशरीरस्य भृगुसंनिधिवर्तिनः |
50914 मृतप्रायस्य पतनं शुष्कता चोपवर्ण्यते || १ ||
50915
50916 इति उक्तप्रकारेण चिन्तयतो मनोराज्यैः कल्पयतः | पितुर्भृगोरग्रतः || १ ||
50917
50918 अथ कालेन महता पवनातपजर्जरः |
50919 कायस्तस्य पपातोर्व्यां छिन्नमूल इव द्रुमः || २ ||
50920
50921 पवनातपाभ्यां जर्जरः शिथिलीकृतः || २ ||
50922
50923 मनस्तु चञ्चलाभोगं तासु तासु दशासु च |
50924 बभ्रामातिविचित्रासु वनराजिष्विवैणकः || ३ ||
50925
50926 तासु तासु स्वकल्पितस्वर्गगमनादिदशासु | एणको हरिणः || ३ ||
50927
50928 भ्रान्तमुद्भ्रान्तमभितश्चक्रार्पितमिवाकुलम् |
50929 मनस्तस्य विशश्राम समङ्गासरितस्तटे || ४ ||
50930
50931 भोगकल्पनाभिर्भ्रान्तम् | जन्ममरणपरम्पराकल्पनयोद्भ्रान्तम् |
50932 विशश्राम विश्रान्तिं प्राप || ४ ||
50933
50934 अनन्तवृत्तान्तघनां पेलवां सुदृढामपि |
50935 तां संसृतिदशां शुक्रो विदेहोऽनुभवन्स्थितः || ५ ||
50936
50937 मनःकल्पनामात्रत्वात्पेलवाम् | सत्यताभ्रान्त्या
50938 प्राक्तनदेहविस्मरणात्सुदृढाम् | विदेहः शुक्रदेहनिरपेक्षः || ५ ||
50939
50940 मन्दराचलसानुस्था सा तनुस्तस्य धीमतः |
50941 तापप्रसरसंशुष्का चर्मशेषा बभूव ह || ६ ||
50942
50943 चर्मशेषा बहिः | अन्तस्त्वस्थिशेषा || ६ ||
50944
50945 शरीररन्ध्रप्रवहद्वातसीत्काररूपया |
50946 चेष्टा दुःखक्षयानन्दात्काकल्येव प्रगायति || ७ ||
50947
50948 सा तनुरभिमानदुःखक्षयप्रयुक्तादानन्दाद्धेतोः शरीररन्ध्रेषु
50949 वेणुरन्ध्रेष्विव प्रवहतः संचरतो वातस्य ये वेषुध्वनिवत्सीत्कारास्तद्रूपया
50950 [तद्भूतया इति क्वचित्] काकल्या सूक्ष्माव्यक्तमधुरध्वनिना देहस्य
50951 ईदृशी गतिरिति तच्चेष्टाः प्रगायतीवेत्युत्प्रेक्षा || ७ ||
50952
50953 मनोवराकमवटे लुठितं भवभूमिषु |
50954 हसतीवेति शुभ्राभ्रसितया दन्तमालया || ८ ||
50955
50956 तामेव देहदशामुत्प्रेक्षान्तरैरपि वर्णयति - मनोवराकमित्यादिना | सा
50957 तनुर्भवभूमिषु भोगाशालक्षने अवटे शुष्कपल्वले इति
50958 प्रागवर्णितप्रकारेण लुठितं मनोवराकं शुभ्राभ्रसितया दन्तमालया
50959 हसतीव || ८ ||
50960

दर्शयन्ती जगच्छून्यं वपुरक्ष्णोरकृत्रिमम् ।
मुखारण्यजरत्कूपरूपया गर्तशोभया ॥ ९ ॥

सा तनुर्मुखमण्डलरूपे अरण्ये जरत्कूपसमूहरूपया
नासानयनवक्त्रादिगर्तानां शोभया अकृत्रिमं स्वाभाविकं जगतः
शून्यमसद्रूपतां विवेकिनां वपुरक्ष्योः प्रत्यक्षं दर्शयन्तीव
स्थितेत्यर्थः । वपुर्ग्रहणं तदाश्रितप्रमाणान्तरोपलक्षणार्थम् ॥ ९ ॥

तापोपतप्ता संसिक्ता वर्षाजलभरेण सा ।
प्रागनुस्मरणोल्लासमिव वाष्पं विमुञ्चति ॥ १० ॥

प्राक्तापोपतप्ता पश्चात्संसिक्ता । प्रागनुस्मरणं
स्वबन्धुभूतपूर्वपूर्वदेहपरम्परानुस्मरणं
तत्प्रयुक्ताद्दुःखादानन्दाद्वा उल्लसतीति प्रागनुस्मरणोल्लासं बाष्पम्
अश्रुधूमाभासयोः श्लेषादभेदारोपः ॥ १० ॥

चन्द्रानिलविलासेन लुलिता वनभूमिषु ।
धारानिकरपातेन विनुन्ना जलदागमे ॥ ११ ॥

प्रावृण्निर्झररूपेण प्लुता गिरिनदीतटे ।
पांशुना पवनोत्थेन दुष्कृतेनेव रूषिता ॥ १२ ॥

प्रावृड्निर्झरस्य रूपेण धातुरागेण प्लुता रञ्जिता ॥ १२ ॥

शुष्ककाष्ठवदालोला वातेषु कृतखाकृतिः ।
तारमारुतसीत्कारे वने तप इवास्थिता ॥ १३ ॥

स्वाकृतिर्विलोडनोत्थखड्शब्दकरणम् । अव्यक्तानुकरणाड्डाचि
बहुलग्रहणान्न द्वित्वम् । भूतानां भाङ्कारो
भयङ्करधवनिस्तत्करणशीला अरण्यलक्ष्मीः अलक्ष्मीः । बाल्या बलिकर्मणा ।
आहारेणेति यावत् । ब्राह्मणादेराकृतिगणत्वात्कर्मणि ष्यञ् ङीष् ।
चर्ममयोदरी चर्ममात्रशेषोदरी ॥ १३ ॥

वक्रा शुष्कान्त्रतन्त्री च भूतभाङ्कारकारिणी ।
अरण्यलक्ष्मीर्बाल्येव शून्या चर्ममयोदरी ॥ १४ ॥

रागद्वेषविहीनत्वात्तस्य पुण्याश्रमस्य तु ।
महातपस्त्वाच्च भृगोर्न भुक्ता मृगपक्षिभिः ॥ १५ ॥

तर्हि सा तनुः श्वापदगृध्रादिभिः कुतो न भक्षिता तत्राह - रागेति ।
सप्रमाणत्वाच्च न विशीर्णेत्यपि द्रष्टव्य ॥ १५ ॥

यमनियमकृशीकृताङ्गयष्टि-
श्चरति तपः स्म भृगूद्वहस्य चेतः ।
तनुरथ पवनापनीतरक्ता
चिरमलुठन्महतीषु सा शिलासु ॥ १६ ॥

यमनियमाभ्यां कृशीकृता अङ्गयष्टिः स्वकल्पितशरीरान्तरं येन ।
क्लीबेऽपि विभक्त्यलुक् छान्दसः । भृगूद्वहस्य शुक्रस्य चेतश्चित्तं
तपश्चरति स्म समङ्गातटे । सा प्राक्तनी शुक्रतनुः ॥ १६ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपायेषु स्थितिप्रकरणे

51013 भा० भार्गवकलेवरवर्णनं नाम नवमः सर्गः ॥ ९ ॥
51014
51015 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे
51016 भार्गवकलेवरवर्णनं नाम नवमः सर्गः ॥ ९ ॥
51017
51018
51019 दशमः सर्गः १०
51020
51021 श्रीवसिष्ठ उवाच ।
51022
51023 अथ वर्षसहस्रेण दिव्येन परमेश्वरः ।
51024 भृगुः परमसंबोधाद्विरराम समाधितः ॥ १ ॥
51025
51026 दृष्टपुत्रतनोः कोपो भृगोरत्रोपवर्ण्यते ।
51027 कालं प्रत्यथ कालेन बोधनं चात्मविद्यया ॥ १ ॥
51028
51029 परमं परमात्मानं संबोधयति स्फुटं दर्शयतीति परमसंबोधः
51030 समाधिस्ततः ॥ १ ॥
51031
51032 नापश्यदग्रे तनयं विनयावनताननम् ।
51033 सामन्तं गुणसेनायाः पुण्यं मूर्तमिव स्थितम् ॥ २ ॥
51034
51035 गुणसेनाया गुणसमूहस्य सामन्तमधिष्ठातारम् ॥ २ ॥
51036
51037 अपश्यत्केवलं कायकङ्कालं पुरतो महत् ।
51038 देहयुक्तमिवाभाग्यं दारिद्र्यमिव मूर्तिमत् ॥ ३ ॥
51039
51040 कायलक्षणं कङ्कालं शवम् ॥ ३ ॥
51041
51042 तापशुष्कवपुः कृत्तिरन्ध्रस्फुरिततित्तिरिं ।
51043 संशुष्कान्त्रोदरगुहाछायाविश्रान्तदर्दुरम् ॥ ४ ॥
51044
51045 कङ्कालमेव वर्णयति - तापेत्यादिना । तापेनातपेन शुष्कवपुः । राहुः
51046 सर्पशिरा इतिवद्बहुव्रीहिः । कृत्तिरन्ध्रेषु चर्मच्छिद्रेषु कृतनीडत्वात्
51047 स्फुरितास्तित्तिरयः पक्षिभेदा यत्र । संशुष्कान्त्राया उदरगुहायाश्छायायां
51048 विश्रान्ता दर्दुरा भेका यस्य ॥ ४ ॥
51049
51050 नेत्रगर्तकसंसक्तप्रसूतनवकीटकम् ।
51051 पर्शुकापञ्जरप्रोतकोशकारकृमिव्रजम् ॥ ५ ॥
51052
51053 नेत्रगर्तके संसक्ता प्रसूता अपत्यपरम्पराभिर्वृद्धा नवकीटका यस्य ।
51054 पर्शुकानि पार्श्वास्थीनि तल्लक्षणे पञ्जरे प्रोताः कोशकारकृमयः
51055 पूर्वदेशप्रसिद्धा लूता वा ॥ ५ ॥
51056
51057 प्राक्तनीमुपभोगेहामिष्टानिष्टफलप्रदाम् ।
51058 धाराधौतान्त्रया तद्वद्भृशं शुष्कास्थिमालया ॥ ६ ॥
51059
51060 उपभोगेहां भोगवासनां शुष्कास्थिमालया विडम्बयदित्युत्तरेणान्वयः ।
51061 नानावैचित्र्यसंधिबन्धैर्देहारम्भकत्वेन चास्थ्नां वासनानां च साम्यात्
51062 ॥ ६ ॥
51063
51064 शिरोघटेन शुभ्रेण मसृणेनेन्दुवर्चसा ।

51065 विडम्बयच्च कर्पूराप्लुतलिङ्गशिरःश्रियम् ॥ ७ ॥
51066
51067 त्वचो विशीर्णत्वेनास्थिमात्रशेषादिन्दुवर्चसा पूजाविशेषे
51068 कर्पूरैराप्लुतस्याभिषिक्तस्य शिवलिङ्गशिरसः श्रियं शोभां विडम्बयत्
51069 अनुकुर्वत् ॥ ७ ॥
51070
51071 ऋज्व्या संशुष्कशिरया स्वास्थिमात्रावशेषया ।
51072 ग्रीवयात्मानुसृतया दीर्घीकुर्वदिवाकृतिम् ॥ ८ ॥
51073
51074 वासनाप्रसृतमात्मानमनुसृतयेव ॥ ८ ॥
51075
51076 मृणालिकापाण्डुरया धारावभृतमांसया ।
51077 नासाग्रास्थिकया वक्त्रे कृतसीमाकृतिं दधत् ॥ ९ ॥
51078
51079 वर्षधाराभिरवभृतमांसया शीर्णमांसया नासाग्रास्थिकया वक्त्रे
51080 मुखमण्डले कृतः सीमामध्यावधारणशङ्कुर्यस्य तदाकृतिं तधत् ।
51081 नासास्थ्यग्रस्य मुखमण्डलमध्यत्वादित्यर्थः । नासाग्रस्थितया इति पाठे
51082 अस्थिकयेति विशेष्यमध्याहार्यम् ॥ ९ ॥
51083
51084 दीर्घकन्धरया नूनमुन्नतीकृतवक्त्रया ।
51085 प्रेक्षमाणमिव प्राणानुत्क्रान्तानम्बरोदरे ॥ १० ॥
51086
51087 दीर्घया कन्धरया ग्रीवया ॥ १० ॥
51088
51089 जङ्घोरुजानुदोर्दण्डैर्द्विगुणां दीर्घतां गतैः ।
51090 प्रतिष्ठानमिवाशान्तं दीर्घाध्वश्रमभीतितः ॥ ११ ॥
51091
51092 दण्डशब्दस्य प्राण्यङ्गवचनत्वाभावान्न द्वन्द्वैकवद्भावः ।
51093 जङ्घादिभिरष्टभिः आशान्तं अष्टदिगन्तं प्रति प्रतिष्ठानं
51094 प्रतिष्ठमानं प्रस्थानं कुर्वाणमिव विश्लिष्य पलायनकाममिवेति यावत् ।
51095 मुगभावश्छान्दसः । दीर्घाध्वश्रमभीतित इति तत्र हेतूत्प्रेक्षा । नहि दीर्घे
51096 परलोकाध्वनि कायवहनश्रमः सोढुं शक्यत इति भयादिवेत्यर्थः ॥ ११ ॥
51097
51098 उदरेणातिरिक्तेन चर्मशेषेण शोषिणा ।
51099 प्रदर्शयदिवाज्ञस्य हृदयस्यातिशून्यताम् ॥ १२ ॥
51100
51101 प्रेक्ष्य तच्छुष्ककङ्कालमालानं दुःखदन्तिनः ।
51102 पूर्वापरपरामर्शमकुर्वन्भृगुरुत्थितः ॥ १३ ॥
51103
51104 आलानं बन्धनस्तम्भम् ॥ १३ ॥
51105
51106 आलोकसमकाले हि प्रतिभानं ततो भृगोः ।
51107 चिरमुत्क्रान्तजीवः किं मत्पुत्रोऽयमिति क्षणात् ॥ १४ ॥
51108
51109 आलोकनमालोकस्तत्समकालं प्रतिभानं वक्ष्यमाणवितर्कः अभूदिति शेषः ॥
51110 १४ ॥
51111
51112 अचिन्तयत एवास्य भविष्यं तनयं ततः ।
51113 कालं प्रति बभूवाशु कोपः परमदारुणः ॥ १५ ॥
51114
51115 भविष्यमवश्यभाव्यर्थमचिन्तयतः तनयं मृतं दृष्ट्वेति शेषः ॥ १५
51116 ॥

51117
51118 अकाल एव मत्पुत्रो नीतः किमिति कोपितः।
51119 कालाय शापमुत्स्रष्टुं भगवानुपचक्रमे॥ १६॥
51120
51121 अथाकलितरूपोऽसौ कालः कवलितप्रजः।
51122 आधिभौतिकमास्थाय वपुर्मुनिमुपाययौ॥ १७॥
51123
51124 अकलितरूपः अरूपोऽपीति यावत्। आकलितं कल्पितं रूपं येनेति वा॥ १७॥
51125
51126 खड्गपाशधरः श्रीमान्कुण्डली कवचान्वितः।
51127 षड्भुजः षण्मुखो वह्न्या वृतः किङ्करसेनया॥ १८॥
51128
51129 प्रतिपार्श्वं षड्भुजो द्वादशमासभुज इत्यर्थः षड्तुमुखः॥ १८॥
51130
51131 यच्छरीरसमुत्थेन ज्वालाजालेन वल्गता।
51132 फुल्लकिंशुकवृक्षस्य बभाराद्रेः श्रियं नभः॥ १९॥
51133
51134 यत्करस्थत्रिशूलाग्रनिःसृतैरग्निमण्डलैः।
51135 विरेजुरुदितैराशाः कानकैरिव कुण्डलैः॥ २०॥
51136
51137 आशा दिशः। कानकैः कनकमयैः॥ २०॥
51138
51139 यत्परश्वसनापास्तशिखरा मेदिनीभृतः।
51140 दोलामिव समारूढाश्चेलुः पेतुश्च घूर्णिताः॥ २१॥
51141
51142 परेण प्रबलेन श्वसनेन श्वासवायुना अपास्तशिखराः॥ २१॥
51143
51144 यत्खड्गमण्डलोद्द्योतैः श्यामं बिम्बं विवस्वतः।
51145 कल्पदग्धजगद्धूमपर्याकुलमिवाबभौ॥ २२॥
51146
51147 कल्पे प्रलयकाले दग्धस्य जगतो धूमेन पर्याकुलं मुखमिव
51148 [पर्याकुलमिवेत्येतावतैव निर्वाहे मुखमिवेत्याद्यधिकमत्रेति भाति]
51149 विकृतम्॥ २२॥
51150
51151 स उपेत्य महाबाहो कुपितं तं महामुनिम्।
51152 कल्पक्षुब्धाब्धिगम्भीरं सान्त्वपूर्वमुवाच ह॥ २३॥
51153
51154 महाबाहो इति रामस्य राज्ञो वा संबोधनम्॥ २३॥
51155
51156 विज्ञातलोकस्थितयो मुने दृष्टपरावराः।
51157 हेतुनापि न मुह्यन्ति किं नु हेतुं विनोत्तमाः॥ २४॥
51158
51159 हेतुना परापराधादिनिमित्तेन सतापि॥ २४॥
51160
51161 त्वमनन्ततपा विप्रो वयं नियतिपालकाः।
51162 तेन संपूज्यसे पूज्यः साधो नेतरयेच्छया॥ २५॥
51163
51164 इतरया शापभयादिनिमित्तया॥ २५॥
51165
51166 मा तपःक्षपयाऽबुद्धे कल्पकालमहानलैः।
51167 यो न दग्धोऽस्मि मे तस्य किं त्वं शापेन धक्ष्यसि॥ २६॥
51168

51169 शापदाने प्रत्युत तवैवानिष्टं स्यान्न ममेत्याशयेनाह - मा तप इति |
51170 अबुद्धे व्यर्थबुद्धे इति क्षेपच्छलेन ज्ञानबाधितत्वादविद्यमानबुद्धे इति
51171 प्रशंसा | समानवाक्ये युष्मदस्मदादेशा वक्तव्याः इति
51172 कात्यायनवचनविरोधाद्भिन्नवाक्यस्थपदात्परस्य मे इत्यादेशश्छान्दसः ||
51173 २६ ||
51174
51175 संसारावलयो ग्रस्ता निगीर्णा रुद्रकोटयः |
51176 भुक्तानि विष्णुवृन्दानि क्व न शक्ता वयं मुने || २७ ||
51177
51178 अप्रधृष्यतामुक्त्वा स्वस्याव्याहतशक्तितामाह - संसारेति |
51179 संसारावलयो ब्रह्माण्डपङ्क्तयः | क्व कस्मिन्विषये न
51180 शक्तास्तमुदाहरेत्यर्थः | क्व नु शप्ता इति पाठे तु क्व कस्मिन्नपराधे केन
51181 वा शापेनाभिभूता इत्यर्थः | स्वयं नियतिः स्वाभाविकी मर्यादा |
51182 ईहितमिच्छाद्वेषादिनिमित्तान्तरकृतमित्यर्थः || २७ ||
51183
51184 भोक्तारो हि वयं ब्रह्मन्भोजनं युष्मदादयः |
51185 स्वयं नियतिरेषा हि नावयोरेतदीहितम् || २८ ||
51186
51187 स्वयमूर्ध्वं प्रयात्यग्निः स्वयं यान्ति पयांस्यधः |
51188 भोक्तारं भोजनं याति सृष्टिं चाप्यन्तकःस्वयम् || २९ ||
51189
51190 सृज्यत इति सृष्टिस्तां जन्यभावमित्यर्थः | अन्तको विनाशकालः | स
51191 यद्यदेवासृजत तत्तदत्तुमध्रियतेति श्रुतेरिति भावः || २९ ||
51192
51193 इदमित्थं मुने रूपं ममेह परमात्मनः |
51194 स्वात्मनि स्वयमेवात्मा स्वत एव विजृम्भते || ३० ||
51195
51196 कुतस्तव सर्वभोक्तृता किं वा स्वरूपं तत्राह - इदमिति | इदं [इह इति
51197 मुद्रितपुस्तके पाठः] मूर्तामूर्तं जगत्परमात्मनो मम इत्थं
51198 भोज्यस्वभावतयैव स्वस्मिन् कल्पितं रूपम् | यतः परमात्मा स्वात्मनि
51199 स्वयमेव जगदात्मना विजृम्भते | अतः स्वयमेवोपसंहरतीत्यर्थः || ३० ||
51200
51201 नेह कर्ता न भोक्तास्ति दृष्ट्या नष्टकलङ्कया |
51202 बहवश्चेह कर्तारो दृष्ट्याऽनष्टकलङ्कया || ३१ ||
51203
51204 इदमप्यौपनिषदव्यवहारदृशोक्तं परमार्थदृशा त्वाह - नेहेति |
51205 कर्मठदृष्ट्या त्वाह - बहव इति | अनष्टकलङ्कयेति च्छेदः || ३१ ||
51206
51207 कर्तृताकर्तृते ब्रह्मन्केवलं परिकल्पिते |
51208 असम्यग्दर्शनेनैव न सम्यग्दर्शनस्य ते || ३२ ||
51209
51210 सम्यग्दर्शनं तत्त्वसाक्षात्कारो यस्य तस्य ते कर्तृताकर्तृते न स्तः || ३२ ||
51211
51212 पुष्पाणि तरुखण्डेषु भूतानि भुवनेषु च |
51213 स्वयमायान्ति यान्तीह कल्पते हेतुनामभिः || ३३ ||
51214
51215 न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः इत्यादिभगवद्दर्शितं
51216 पक्षमाश्रित्याह - पुष्पाणीति | हेतुनामभिः [इह विषये कर्त्रादिशब्देः
51217 काल एव कल्पते इति कालपदाध्याहारेण योजना कार्या] कर्त्रादिशब्दैः |
51218 हेतुना विधिः इति पाठे विधीयत इति विधिः प्राणिकर्मैव स्वाक्षिप्तेन हेतुना
51219 निमित्तवैचित्र्येण विचित्रकार्येऽपि कल्पते समर्थो भवतीत्यर्थः || ३३ ||
51220

51221 अब्बिम्बितस्य चन्द्रस्य चलने कर्त्रकर्तृते [कर्तृकर्तृते इति
51222 पाठः]।
51223 न सत्ये नानृते यद्वत्तद्वत्कालस्य सृष्टिषु ॥ ३४ ॥
51224
51225 परमार्थदृशा अभावान्न सत्ये व्यवहारसंवादान्नानृते। कालस्य
51226 कालरूपस्य परमात्मनः ॥ ३४ ॥
51227
51228 मनो मिथ्याभ्रमाभोगे कर्तृताकर्तृतामयीम्।
51229 करोति कलनां रज्ज्वां भ्रान्तेक्षण इवाहिताम् ॥ ३५ ॥
51230
51231 भ्रान्तेक्षणो दुष्टदृष्टिः ॥ ३५ ॥
51232
51233 तेन मागा मुने कोपमापदामीदृशः क्रमः।
51234 यद्यथा तत्तथैवाशु सत्यमालोकयाकुलः ॥ ३६ ॥
51235
51236 तेन वर्णितरीत्या अपराधासंभवेन। आकुलः सन् कोपं भागाः ॥ ३६ ॥
51237
51238 न वयं प्रतिभार्थेहा नाभिमानवशीकृताः।
51239 स्वतो हि तात वशगाः केवलं नियतौ स्थिताः ॥ ३७ ॥
51240
51241 रागाभिमानादिवशात्त्वत्पुत्रवधे अपराधिता स्यान्न च मे तौ स्त इत्याह -
51242 न वयमिति। प्रतिभार्थे भ्रान्तिकल्पितख्यातिपूजाद्यर्थे ईहा रागो येषाम्। अस्मदो
51243 द्वयोश्च इति बहुवचनम्। त्वत्समीपागमनमपि न त्वत्क्रोधभयात्किंतु
51244 तपस्विनो मान्या इति नियतिवशादित्याशयेनाह - स्वत इति ॥ ३७ ॥
51245
51246 प्रकृतव्यवहारेहानियतीरियतेर्वशात्।
51247 प्राज्ञाः समभिवर्तन्ते नाभिमानमहातमः ॥ ३८ ॥
51248
51249 सर्वप्राज्ञानुसारित्वान्नियतिवश्यता ममोचिता तव तु
51250 क्रोधाभिमानतमोनुवृत्तिरनुचितेत्याशयेनाह - प्रकृतेति।
51251 जगन्मर्यादापालकेश्वरेच्छालक्षणमहानियतेर्वशादवान्तरप्रकृतव्यव
51252 हारेच्छानियतीः समनुवर्तन्त इत्यर्थः ॥ ३८ ॥
51253
51254 कर्तव्यमेव नियतं केवलं कार्यकोविदैः।
51255 सुषुप्तिवृत्तिमाश्रित्य कदाचित्त्वं न नाशय ॥ ३९ ॥
51256
51257 कार्यकोविदैर्व्यवहारचतुरैः कर्तव्यमेव अवश्यं कर्तव्यं नियतं
51258 स्वस्वोचितमर्यादापालनं त्वं सुषुप्तवृत्तिं तमोवृत्तिमाश्रित्य न नाशय।
51259 कदाचिदपि नाशय इति पाठे स्पष्टम् ॥ ३९ ॥
51260
51261 क्व सा ज्ञानमयी दृष्टिः क्व महत्त्वं क्व धीरता।
51262 मार्गे सर्वप्रसिद्धेऽपि किमन्ध इव मुह्यसि ॥ ४० ॥
51263
51264 सर्वप्राज्ञप्रसिद्धे ॥ ४० ॥
51265
51266 स्वकर्मफलपाकोत्थामविचार्य दशां मुने।
51267 किं मुर्ख इव सर्वज्ञ मुधा मां शप्तुमिच्छसि ॥ ४१ ॥
51268
51269 मुधा व्यर्थम् ॥ ४१ ॥
51270
51271 देहिनामिह सर्वेषां शरीरं द्विविधं मुने।
51272 किं न जानासि तं देहमेकमन्यन्मनोभिधम् ॥ ४२ ॥

51273
51274 इत्थं भृगोर्मोहं विनिन्द्य प्रसुप्तं ज्ञानं प्रबोधयितुमुपक्रमते -
51275 देहिनामित्यादिना। तं प्रसिद्धं स्थूलम्॥ ४२॥
51276
51277 तत्र देहो जडोऽत्यर्थमाविनाशपरायणः।
51278 मनस्तुच्छं च नियतं कदर्थीक्रियते तव॥ ४३॥
51279
51280 आविनाशः ईषन्निमित्तेनापि विनाशः। नियतं आमोक्षस्थायि। तुच्छं
51281 प्रातिभासिकम्। कदर्थीक्रियते क्रोधादिना पीड्यते॥ ४३॥
51282
51283 चतुरेण यथा साधो रथः सारथिनोह्यते।
51284 कुर्वता किंचन स्नेहाद्देहोऽयं मनसा तथा॥ ४४॥
51285
51286 स्नेहादभिमानात्किंचन ईदृशमिति विशिष्य वक्तुमशक्यमन्तर्व्यापारं
51287 कुर्वता॥ ४४॥
51288
51289 असत्संकल्पः क्रियते सच्छरीरं विनाश्यते।
51290 क्षणेन मनसा पङ्कपुरुषः शिशुना यथा॥ ४५॥
51291
51292 असद्देहान्तरविषयः संकल्पः क्रियते। सत् पूर्वसिद्धं विनाश्यते।
51293 पङ्कपुरुष आर्द्रमृत्पुत्रिका क्रीडार्था॥ ४५॥
51294
51295 चित्तमेवेह पुरुषस्तत्कृतं कृतमुच्यते।
51296 तद्बद्धं कलनाहेतोः कलनास्तं विमुच्यते॥ ४६॥
51297
51298 असत्संकल्पनमेव कलना तद्रूपाद्धेतोर्बद्धम्॥ ४६॥
51299
51300 अयं देह इवात्रस्थमिदमङ्गमिदं शिरः।
51301 इदं स्फारविकारं तन्मन एवाभिधीयते॥ ४७॥
51302
51303 तस्य देहकलनाप्रकारमभिनयन्नाह - अयमिति॥ ४७॥
51304
51305 मनो हि जीवाज्जीवाख्यं निश्चयैकतया नु धीः।
51306 अहङ्कारोऽभिमन्तृत्वान्नानाता स्वयमेव हि॥ ४८॥
51307
51308 एकमेव मनो यथा पूर्वपूर्वजीवाज्जिवान्तराख्यं भवति तथा जीवटोपाख्याने
51309 वक्ष्यते। मनःसंकल्पितेऽर्थे निश्चयैकतया मन एव तदनु धीर्भवति।
51310 अभिमन्त्रृत्वादहङ्कार इति मनः स्वयमेव नानाता नानात्वं भवतीत्यर्थः॥
51311 ४८॥
51312
51313 देहवासनया चेतस्त्वन्यानि स्वानि चेच्छया।
51314 पार्थिवानि शरीराणि ह्यसन्ति परिपश्यति॥ ४९॥
51315
51316 आलोकयति चेत्सत्यं तदा सत्यमयीं मनः।
51317 शरीरभावनां त्यक्त्वा परामायाति निर्वृतिम्॥ ५०॥
51318
51319 इदंच मनसो देहादिकल्पकत्वमात्मसाक्षात्कारपर्यन्तपर्यन्तमेव
51320 नोत्तरत्रेत्याह - आलोकयतीति॥ ५०॥
51321
51322 तन्मनस्तव पुत्रस्य समाधौ त्वयि संस्थिते।
51323 स्वमनोरथमार्गेण दूराद्दूरतरं गतम्॥ ५१॥
51324

51325 एवं भृगुं प्रबोध्य मनोविलासमात्रकृतां तत्पुत्रकथां प्रस्तौति -
51326 तदिति || ५१ ||
51327
51328 इममौशनसं त्यक्त्वा देहं मन्दरकन्दरे |
51329 प्रयातो वैबुधं सद्म नीडोड्डीनः खगो यथा || ५२ ||
51330
51331 इमं त्वया दृश्यमानम् || ५२ ||
51332
51333 तत्र मन्दरगुञ्जेषु पारिजाततलेषु च |
51334 नन्दनोद्यानखण्डेषु लोकपालपुरेषु च || ५३ ||
51335
51336 मुने चतुर्युगान्यष्टौ विश्वाचीं देवसुन्दरीम् |
51337 असेवत महातेजाः षट्पदः पद्मिनीमिव || ५४ ||
51338
51339 देवसुन्दरीमप्सरसम् || ५४ ||
51340
51341 तीव्रसंवेगसंपन्नस्वसंकल्पोपकल्पिते |
51342 अथ पुण्यक्षये जाते नीहार इव शार्वरे [शाम्बरे इति पाठः] || ५५ ||
51343
51344 स्वर्ग इव पुण्यक्षयात्तत्पातोऽपि मनःकल्पनयैवेत्याशयेनाह - तीव्रेति || ५५
51345 ||
51346
51347 प्रम्लानकुसुमोत्तंसः खिन्नाङ्गावयवोल्लसः |
51348 स पपात तया सार्धं कालपक्वं फलं यथा || ५६ ||
51349
51350 स्वर्ग उत्तंसकुसुमम्लान्यादिकं स्वर्गे पुण्यक्षयचिह्नम् || ५६ ||
51351
51352 वैबुधं तत्परित्यज्य नभस्येव शरीरकम् |
51353 भूताकाशमथासाद्य वसुधायां व्यजायत || ५७ ||
51354
51355 अजायत जन्म लेभे || ५७ ||
51356
51357 आसीद्विप्रो दशार्णेषु कोसलेषु महीपतिः |
51358 धीवरोऽथ महाटव्यां हंसस्त्रिपथगातटे || ५८ ||
51359
51360 तस्य तत्तद्वासना कर्मानुसारीणि पूर्वमुक्तान्यनुक्तानि च बहूनि जन्मान्याह
51361 - आसीदित्यादिना || ५८ ||
51362
51363 सूर्यवंशे नृपः पौण्ड्रः सौरशाल्वेषु देशिकः |
51364 कल्पं विद्याधरः श्रीमान्धीमानथ मुनेः सुतः || ५९ ||
51365
51366 पौण्ड्रः पुण्ड्रदेशाधिपतिः | देशिको मन्त्रसिद्धः अन्येषामुपदेष्टा | अत
51367 एव मन्त्रोपास्तिप्रभावात्कल्पं विद्याधरः | अथ अनन्तरं मुनेः सुतो जातः ||
51368 ५९ ||
51369
51370 मद्रेष्वथ महीपालस्ततस्तापसबालकः |
51371 वासुदेव इति ख्यातः समङ्गायास्तटे स्थितः || ६० ||
51372
51373 अन्यास्वपि विचित्रासु वासनावशतः स्वयम् |
51374 विषमास्वेव पुत्रस्ते चचारान्तरयोनिषु || ६१ ||
51375
51376 नैतावन्त्येवास्य जन्मानि किंत्वन्यान्यप्यासन्नित्याह - अन्यास्वपीति || ६१ ||

51377

51378 अभूद्विन्ध्यनगे भूयः किरातः कैकटेषु च |
51379 सौवीरेष्वथ सामन्तस्त्रिगर्तेषु च गर्दभः || ६२ ||
51380

51381 सामन्तो मण्डलेश्वरः | तत्र कृतैः पापैस्तिर्यक्स्थावरादिजन्मान्यपि
51382 दर्शयति - त्रिगर्तेष्वित्यादिना || ६२ ||
51383

51384 वंशगुल्मः किरातेषु हरिणश्चीनजङ्गले |
51385 सरीसृपस्तालवृक्षे तमाले वनकुक्कुटः || ६३ ||
51386

51387 अयं स पुत्रो भवतो भूत्वा मन्त्रविदां वरः |
51388 प्रजजाप पुरा विद्यां विद्याधरपुरप्रदाम् || ६४ ||
51389

51390 कल्पं विद्याधरोऽभवदिति यदुक्तं प्राक् तत्सनिमित्तं प्रपञ्चयति - अयं
51391 स इत्यादिना || ६४ ||
51392

51393 तेनासावभवद्ब्रह्मन्व्योम्नि विद्याधरो महान् |
51394 हारकुण्डलकेयूरलीलानिचयलालकः || ६५ ||
51395

51396 हारकेयूरादिभिर्लीलानिचयैश्च लालको विलासयिता स्त्रीणाम् || ६५ ||
51397

51398 नायिकानलिनीभानुः पुष्पचाप इवापरः |
51399 विद्याधरीणां दयितो गन्धर्वपुरभूषणः || ६६ ||
51400

51401 अत एव स तासां प्रियतम इत्याशयेनाह - नायिकेति || ६६ ||
51402

51403 स कल्पावधिमासाद्य द्वादशादित्यधामनि |
51404 जगाम भस्मशेषत्वं शलभः पावके यथा || ६७ ||
51405

51406 द्वादशादित्यधामनि कल्पान्ते युगपदुदितद्वादशादित्यार्चिषि भस्मताम् || ६७ ||
51407

51408 जगन्निर्माणरहिते स्फारे नभसि सा ततः |
51409 वासना तस्य बभ्राम निर्नीडा विहगी यथा || ६८ ||
51410

51411 अथ कालेन संजाते विचित्रारम्भकारिणि |
51412 संसाररचनारम्भे ब्राह्मे रात्रिविपर्यये || ६९ ||
51413

51414 सा मुने वासना तस्य वातव्याचलिता सती |
51415 कृते ब्राह्मणतामेत्य जातोऽद्य वसुधातले || ७० ||
51416

51417 कृते आद्ययुगे || ७० ||
51418

51419 वासुदेवाभिधानोऽसौ मुने विप्रकुमारकः |
51420 जातो मतिमतां मध्ये समधीताखिलश्रुतिः || ७१ ||
51421

51422 कल्पं विद्याधरो भूत्वा नद्यास्त्वथ महामुने |
51423 तपश्चरति ते पुत्रः समङ्गायास्तटे स्थितः || ७२ ||
51424

51425 विविधविषयवासनानुवृत्त्या
51426 खदिरकरञ्जकरालकोटरासु |
51427 जगति जठरयोनिषु प्रयातो
51428 गहनतरासु च काननस्थलीषु || ७३ ||

51429
51430 उपसंहरति - विविधेति। खदिरकरञ्जकण्टककरालगिरिकोटरकल्पासु
51431 जठरयोनिषु गर्भवासभेदेषु प्रयातो भ्रान्तः॥ ७३॥
51432
51433 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० स्थितिप्रकरणे
51434 भार्गवोपाख्याने कालवचनं नाम दशमः सर्गः॥ १०॥
51435
51436 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे कालवचनं
51437 नाम दशमः सर्गः॥ १०॥
51438
51439
51440 एकादशः सर्गः ११
51441
51442 काल उवाच।
51443
51444 अद्योद्दामतरङ्गौघभाङ्काररणितानिले।
51445 तीर एव तरङ्गिण्यास्तपस्तपति ते सुतः॥ १॥
51446
51447 भृगोर्योगदशा सम्यक् पुत्रवृत्तान्तदर्शनात्।
51448 वर्ण्यते कालसंवादान्मनःक्रीडा जगत्स्थितिः॥ १॥
51449
51450 तरङ्गौघानां भाङ्कारैर्मन्द्रध्वनिभिः रणिता ध्वनन्तोऽनिला यत्र।
51451 तरङ्गिण्याः समङ्गाया तपस्तपति करोति॥ १॥
51452
51453 जटावानक्षवलयी जितसर्वेन्द्रियभ्रमः।
51454 तत्र वर्षशतान्यष्टौ संस्थितस्तपसि स्थिरे॥ २॥
51455
51456 यदीच्छसि मुने द्रष्टुं तं स्वप्नाभं मनोभ्रमम्।
51457 तत्समुन्मील्य विज्ञाननेत्रमाशु विलोकय॥ ३॥
51458
51459 तं पुत्रचरित्रात्मकं पुत्रमनोभ्रमम्। विज्ञायते अनेनेति विज्ञानं
51460 योगस्तन्नेत्रं सम्यगुन्मील्य उद्घाट्य॥ ३॥
51461
51462 श्रीवसिष्ठ उवाच।
51463
51464 इत्युक्ते जगदीशेन कालेन समदृष्टिना।
51465 मुनिः संचिन्तयामास ज्ञानाक्ष्णा तनयेहितम्॥ ४॥
51466
51467 तनयेहितं पुत्रचरित्रम्॥ ४॥
51468
51469 ददर्श च मुहूर्तेन प्रतिभानवशादसौ।
51470 पुत्रोदन्तमशेषेण बुद्धिदर्पणबिम्बितम्॥ ५॥
51471
51472 पुत्रस्योदन्तं वृत्तान्तम्। योगजधर्मविशुद्धबुद्धिदर्पणे बिम्बितमिव
51473 प्रत्यक्षम्॥ ५॥
51474
51475 पुनर्मन्दरसानुस्थां स्वस्थां कालाग्रसंस्थिताम्।
51476 समङ्गायास्तटादेत्य विवेश स्वतनुं भृगुः॥ ६॥
51477
51478 अत्र भृगुः स्वदेहान्निर्गत्य तेषु तेषु प्रदेशेषु समङ्गातटान्तेषु
51479 पुत्रव्रृत्तान्तं क्रमेण दृष्ट्वा पुनरागत्य स्वदेहं विवेशेति न भ्रमितव्यम्
51480 । योगबलेन स्वस्थान एव सर्वदर्शनसंभवात्। निर्गत्य

भ्रमणेऽप्यतीतानागतदर्शनायोगात् | तस्मात्समङ्गायास्तटादेत्य स्वतनुं
विवेशेत्युक्तेस्तच्चिन्तात्यागस्वशरीरप्रतिसंधानमात्रे तात्पर्यं बोध्यम् || ६ ||

विस्मयस्मेरया दृष्ट्या कालमालोक्य कान्तया |
वीतरागमुवाचेदं वीतरागो मुनिर्वचः || ७ ||

वीतरागः अपगतपुत्रस्नेहः || ७ ||

भगवन्भूतभव्येश बाला वयमनुज्ज्वलाः |
त्वादृशामेव धीर्देव त्रिकालामलदर्शिनी || ८ ||

बाला अज्ञाः | यतोऽनुज्ज्वला रागादिमलिनचित्ताः || ८ ||

नानाकारविकाराढ्या सत्येवासत्यरूपिणी |
विभ्रमं जनयत्येषा धीरस्यापि जगत्स्थितिः || ९ ||

असत्यरूपिणी जगत्स्थितिः सत्येव परमार्थरूपेव भासमाना सती
परमार्थवस्तुन्येव विभ्रमं जनयतीति वा | धीरस्य विदुषोऽपि || ९ ||

त्वमेव देव जानासि त्वदभ्यन्तरवर्ति यत् |
रूपमस्या मनोवृत्तेरिन्द्रजालविधायकम् || १० ||

विषयजगत्स्थितिरिव करणीभूतं मनोरूपमपि मादृशां दुर्ज्ञेयमित्याह
- त्वमेवेति | इन्द्रजालसदृशमायाव्यामोहविधायकम् || १० ||

मत्पुत्रस्यास्य भगवन्मृत्युः किल न विद्यते |
तेनेमं मृतमालोक्य जातः संभ्रमवानहम् || ११ ||

स्वव्यामोहे द्वे निमित्ते आह - मत्पुत्रस्येति द्वाभ्याम् | न विद्यते |
आकल्पमित्यर्थः || ११ ||

अक्षीणाजीवितं पुत्रं कालो मे नीतवानिति |
नियतेर्वशतो देव तुच्छापीच्छा ममोदिता || १२ ||

न क्षीणमाजीवितमायुर्यस्य तम् || १२ ||

ननु विज्ञातसंसारगतयो वयमापदाम् |
संपदां चैव गच्छामो हर्षामर्षवशं विभो || १३ ||

विस्मयस्याप्यर्थस्य च द्योतको ननुशब्दः || १३ ||

अयुक्तकारिणि क्रोधः प्रसादो युक्तकारि।इ |
कर्तव्य इति रूढेयं संसारे भगवन् स्थितिः || १४ ||

नियतिरूपं द्वितीयहेतुं विवृणोति - अयुक्तेति | स्थितिर्नियतिः || १४ ||

इदं कार्यमिदं नेति यावत्कार्यं जगद्भ्रमः |
तस्यैतत्संपरित्यागो हेय एव जगद्गुरो || १५ ||

कियत्कालं सा रूढा तत्राह - इदमिति | यावत्कालं इदमवश्यं
कर्तव्यमिदं न कर्तव्यमितीष्टानिष्टसाधनयोः कार्यं फलं सत्यमिति
जगद्भ्रमस्तावदेव | तर्हि स किमिदानीमपि तवोचितो नेत्याह - तस्येति | एतत्

51533 एतर्हि तस्य भ्रमस्य तत्त्वबोधात्परित्यागो वृत्तः। अतस्तदर्थं
51534 क्रोधप्रसादकर्तव्यतानियमोऽपि हेय एवेत्यनुचित एव क्रोध इत्यर्थः॥ १५॥
51535
51536 केवलं तावकीं चिन्तामनालोक्य यदा वयम्।
51537 भगवन्भवते क्रुद्धा याताः स्मस्तेन बाध्यताम्॥ १६॥
51538
51539 एवं सत्यप्यपराधे क्रोधो न युक्तः असति तु तदारोपेण क्रोधे प्रत्युत
51540 क्रोद्धुरेव दण्डो युक्त इत्याशयेनाह - केवलमिति। चिन्तां वर्णितरूपं
51541 नियतिपरिपालनमात्राभिप्रायम्। बाध्यतां त्वद्दण्ड्यतां याताः स्मः॥ १६॥
51542
51543 त्वयेदानीमहं देव स्मारितस्तनयेहितम्।
51544 समङ्गायास्तटे तेन दृष्टोऽयं तनयो मया॥ १७॥
51545
51546 मनो जगति भूतानां द्वे शरीरेऽत्र सर्वगम्।
51547 मन एव शरीरं हि येनेदं भाव्यते जगत्॥ १८॥
51548
51549 हि यस्मान्मन एव भौतिकं शरीरं कल्पयति अतो मन एव द्वे शरीरे इत्यर्थः।
51550 येन मनसा॥ १८॥
51551
51552 काल उवाच।
51553
51554 सम्यगुक्तं त्वया ब्रह्मन् शरीरं मन एव च।
51555 करोति देहं संकल्पात्कुम्भकारो घटं यथा॥ १९॥
51556
51557 इत्थं विनीतवादेन स्वोपदिष्टसूक्ष्मार्थग्रहणेन न तोषितः कालस्तदुक्तिं
51558 प्रशंसंस्तामेवोपपत्तिभिर्द्रढयति - सम्यगुक्तमित्यादिना॥ १९॥
51559
51560 करोत्यकृतमाकारं कृतं नाशयति क्षणात्।
51561 संकल्पेन मनोमोहाद्बालो वेतालकं यथा॥ २०॥
51562
51563 तथा च संभ्रमस्वप्नमिथ्याज्ञानादिभासुराः।
51564 गन्धर्वनगराकारा दृष्टा मनसि शक्तयः॥ २१॥
51565
51566 मनसः असन्निर्माणशक्तिः सर्वानुभवप्रसिद्धेत्याह - तथा चेति॥ २१॥
51567
51568 स्थूलदृष्टिदशां त्वेतामवलम्ब्य महामुने।
51569 पुंसो मनः शरीरं च कायौ द्वाविति कथ्यते॥ २२॥
51570
51571 मन एव शरीरं हीत्युक्तेः सम्यक्त्वमुपपाद्य येनेदं भाव्यते
51572 जगदित्युक्तेस्ततोऽपि सम्यक्त्वमित्युपपादयितुं पूर्वां निन्दति -
51573 स्थूलदृष्टिदशामिति॥ २२॥
51574
51575 मनो मनननिर्माणमात्रमेतज्जगत्त्रयम्।
51576 न सन्नासदिव स्फारमुदितं नेतरन्मुने॥ २३॥
51577
51578 का तर्हि सूक्ष्मदृष्टिस्तामाह - मन इत्यादिना। यतो मन इव
51579 सत्त्वासत्त्वाभ्यामनिर्वचनीयमिदमुदितमित्यर्थः॥ २३॥
51580
51581 चित्तदेहाङ्गलतया भेदवासनयेद्धया।
51582 द्विचन्द्रत्वमिवाज्ञानान्नानातेयं समुत्थिता॥ २४॥
51583
51584 चित्तदेहस्य अवयवभूतया लतयेव प्रतन्यमानया। नानाता जगद्भिदा॥ २४॥

51585
51586 भेदवासनया पश्यत्पदार्थनिचयं मनः ।
51587 भिन्नं पश्यति सर्वत्र घटावटपटादिकम् ॥ २५ ॥
51588
51589 कृशोऽतिदुःखी मूढोऽहमेताश्चान्याश्च भावनाः ।
51590 भावयत्स्वविकल्पोत्थां याति संसारितां मनः ॥ २६ ॥
51591
51592 मननं कृत्रिमं रूपं ममैतन्न यतोऽस्म्यहम् ।
51593 इति तत्यागतः शान्तं चेतो ब्रह्म सनातनम् ॥ २७ ॥
51594
51595 संसरणक्रममुपपाद्य तन्निवृत्त्युपायमाह - मननमिति ।
51596 कृत्रिममननरूपत्यागे अकृत्रिमस्वरूपावस्थितेरर्थप्राप्तत्वादिति भावः ॥
51597 २७ ॥
51598
51599 यथा प्रविततताम्भोधौ द्रुतां नैकतरङ्गिणि ।
51600 शाम्यत्स्पन्दतयानेककल्लोलावलिशालिनि ॥ २८ ॥
51601
51602 उक्तेऽर्थे विस्तरेण समुद्रतरङ्गदृष्टान्तं वर्णयितुमारभते -
51603 यथेत्यादिना । अत्रत्ययथाशब्दस्य चतुर्दशश्लोकस्थेन तथैवेत्यनेनान्वयः ।
51604 वारिसामान्यात्मना अम्भोधिरूपेण तत्तत्प्रदेशे स्थितजलात्मना च
51605 दृश्यमानदूरप्रस्थानरूपस्पन्दाभावाच्छाम्यत्स्पन्दतया स्थिते ।
51606 कल्लोलग्रहणं महत्त्वाद्गोबलीवर्दन्यायेन ॥ २८ ॥
51607
51608 वार्यात्मनि समे स्वच्छे शुद्धे स्वादुनि शीतले ।
51609 अविनाशिनि विस्तीर्णे महामहिमनि स्फुटे ॥ २९ ॥
51610
51611 ह्रस्वस्तरङ्गः स्वं रूपं भावयन्स्वस्वभावतः ।
51612 ह्रस्वोऽस्मीति विकल्पेन करोति स्वेन भावनाम् ॥ ३० ॥
51613
51614 स्वं रूपं भावयन्नित्यादिः सर्वस्तार्किकोऽहंकारारोपवादः । यदि भावयति
51615 तदा वक्ष्यमाणभावनां करोतीत्यर्थः ॥ ३० ॥
51616
51617 दीर्घस्तरङ्गः स्वं रूपं भावयन्स्वस्वभावतः ।
51618 दीर्घोऽस्मीति विकल्पेन करोति स्वेन भावनाम् ॥ ३१ ॥
51619
51620 ह्रस्वश्चैव परिभ्रष्टरूपोऽस्मीति तलातलम् ।
51621 भावयन्भूतलं याति तादृग्भावनया स्वया ॥ ३२ ॥
51622
51623 तलातलं पातालं भावयन्पतनभयाद्भूतलं तीरभूमिमुद्दिश्य याति ॥ ३२ ॥
51624
51625 उत्पन्नश्च पलादूर्ध्वमुत्थितोऽस्मीति भावितः ।
51626 सरश्मिरत्नजालस्तु शोभते दीप्तया श्रिया ॥ ३३ ॥
51627
51628 पलादल्पकालादूर्ध्वमनन्तरं उत्थितो भोगयोग्यं जन्म प्राप्तोऽस्मीति
51629 भावितोऽभिमन्यमानो दैवाद्गिरिरिव प्ररत्नरश्मिजालसहितः सन् शोभते ।
51630 भूषितोऽस्मीति हृष्यतीत्यर्थः ॥ ३३ ॥
51631
51632 तुषारकरबिम्बस्थः शीतलोऽस्मीति बिम्बति ।
51633 सतटाचलदावाग्निप्रतिबिम्बो ज्वलद्वपुः ॥ ३४ ॥
51634
51635 तस्यान्यान्यपि हर्षभयस्थानानि दर्शयति - तुषारकरेत्यादिना ।
51636 तुषारकरस्य चन्द्रस्य बिम्बनं बिम्बस्तत्र उपाधित्वेन स्थितः सन् शीतलोऽस्मीति

51637 बिम्बत्यभिमन्यते। तटस्थाचलदावाग्निप्रतिबिम्बेन सहितस्तु ज्वलद्वपुरस्मीति
51638 बिभेति कम्पते चेति प्रेणान्वयः॥ ३४॥
51639
51640 बिभेति वत दग्धोऽस्मीत्यात्तमौनश्च कम्पते।
51641 प्रतिबिम्बितवेलाद्रितटपक्षवनद्रुमः॥ ३५॥
51642
51643 प्रतिबिम्बिताः वेलाद्रितटयोः पक्षप्राया वनद्रुमा यस्मिंस्तथाभूतः सन्
51644 महता राज्यप्राप्त्यादिफलारम्भाडम्बरेण संयुक्तः कृतार्थोऽस्मीति राजते
51645 इति परेणान्वयः॥ ३५॥
51646
51647 महदारम्भसंरम्भसंयुक्तोऽस्मीति राजते।
51648 विशल्लोलानिलात्यन्तध्वस्तलोलशरीरकः॥ ३६॥
51649
51650 खण्डशः परियातोऽस्मीत्यात्तक्रन्द इवारवी।
51651 न चोर्मयस्ते जलधेर्व्यतिरिक्ताः पयोधरात्॥ ३७॥
51652
51653 आत्तक्रन्द आरब्धरोदन इव आरवी ध्वनिमान्। दृष्टान्ते आरोपमुक्त्वा
51654 अपवादं दर्शयति - न चेत्यादिना। पयोभराद्वारिसमूहरूपाज्जलधेः॥
51655 ३७॥
51656
51657 नचैकं रूपमेतेषां किंचित्सन्नाप्यसन्मयम्।
51658 नचैते ह्रस्वदैर्घ्याद्या गुणास्तेषु न तेषु ते॥ ३८॥
51659
51660 तेषूर्मिषु गुणा न सन्ति तेषु गुणेषु ऊर्मयश्च नेति दृष्टान्तार्थः॥ ३८॥
51661
51662 नोर्मयः संस्थिता ह्यब्धौ न तत्तत्र न संस्थिताः।
51663 केवलं स्वस्वभावस्थसंकल्पविकलीकृताः॥ ३९॥
51664
51665 तत्राब्धौ न संस्थिता इति यत्तत्र। अधिष्ठानात्मना सत्त्वाद्विवर्तात्मना तु
51666 प्रतियोग्यसिद्धावभावासिद्धेरिति भावः। के तर्हि ते ऊर्मयस्तत्राह -
51667 केवलमिति। विकलीकृता अल्पीकृताः। परिच्छेदभेदविकल्पिता इति यावत्॥ ३९॥
51668
51669 नष्टानष्टाः पुनर्जाता जाताजाताः पुनः पुनः।
51670 परस्परपरामर्शान्नान्यतामुपयान्त्यलम्॥ ४०॥
51671
51672 परस्परपरामर्शादन्योन्यमेलनात्॥ ४०॥
51673
51674 एकरूपाम्बुसामान्यमया एव निरामयाः।
51675 तथैवास्मिन्प्रवितते सिते शुद्धे निरामये॥ ४१॥
51676
51677 दार्ष्टान्तिके योजयति - तथैवेत्यादिना। सिते भारूपे॥ ४१॥
51678
51679 ब्रह्ममात्रैकवपुषि ब्रह्मणि स्फाररूपिणि।
51680 सर्वशक्तावनाद्यन्ते पृथग्वदपृथक्कृताः॥ ४२॥
51681
51682 ब्रह्ममात्रैकवपुषि निरङ्कुशब्रह्मणैकस्वभावे। अत एव ब्रह्मणि।
51683 पूर्णतैवात्र बृंहणं न वृद्धिक्रियेत्याशयेन तद्व्याख्या स्फाररूपिणीति
51684 ॥ ४२॥
51685
51686 संस्थिताः शक्तयश्चित्रा विचित्राचारचञ्चलाः।
51687 नानाशक्तिर्हि नानात्वमेति स्वे वपुषि स्थितिम्॥ ४३॥
51688

51689 शक्तयः उपचराज्जगन्ति अभेदोपचारे हेतुमाह - नानेति ॥ ४३ ॥
51690
51691 बृंहितं ब्रह्मणि ब्रह्म पयसीवोर्मिमण्डलम् ।
51692 स्त्रीपुमान्व्यङ्गरूपेण ब्रह्मैव परिवर्तते ॥ ४४ ॥
51693
51694 व्यङ्गो नपुंसकः त्रिपदद्वन्द्वे विभक्त्यलुक् छान्दसः ॥ ४४ ॥
51695
51696 कल्पनान्या जगन्नाम्नी नासीदस्ति भविष्यति ।
51697 ब्रह्मणो जगतो भेदो मनागपि न विद्यते ॥ ४५ ॥
51698
51699 यौक्तिकदृष्ट्योपपाद्य परमार्थदृष्ट्याप्याह - कल्पनेति ॥ ४५ ॥
51700
51701 संपूर्णं खल्विदं ब्रह्म जगद्ब्रह्मैव केवलम् ।
51702 इति भावय यतेन ह्यन्यत्सर्वं परित्यज ॥ ४६ ॥
51703
51704 नानारूपिण्येकरूपा वैरूप्यशतकारिणी ।
51705 नियतिर्नियताकारा पदार्थमधितिष्ठति ॥ ४७ ॥
51706
51707 अन्यपरित्यागोपायतया सर्वाधिष्ठानसन्मात्रं व्युत्पादयति - नानेति ।
51708 नियताकारा सदा सर्वत्रैकरूपा । नियतिः सत्ता ॥ ४७ ॥
51709
51710 जडाजडमुपादत्ते चित्तमायाति चिन्मये ।
51711 वासनारूपिणी शक्तिः स्वस्वरूपा स्थितात्मनः ॥ ४८ ॥
51712
51713 ननु जडाजडसाधारणी सत्ता कथं नियतैकरूपा स्यादित्याशङ्क्य न
51714 चित्तकृतजडाजडविकल्पाभ्यां सन्मात्रैकरूप्यक्षतिरित्याशयेनाह -
51715 जडेति । चिन्मये चिदाभासे चित्तं आयाति । प्राप्ते सति
51716 तत्तद्व्याप्तमहंकारमेवात्मतया तदन्यसन्मात्रं चानात्मतया
51717 मन्यमानमनाध्यात्मिकं जडमाध्यात्मिकं चाजडमिति भेदमुपादत्ते ।
51718 सेयं चित्तस्य भेदवासनारूपिणी शक्तिरधिष्ठानसन्मात्रातिरेके
51719 मिथ्यात्वापत्तेरात्मनः स्वस्वरूपैव स्थितेति नैकरस्यहानिरित्यर्थः ॥ ४८ ॥
51720
51721 ब्रह्मैवानघ तेनेदं स्फाराकारं विजृम्भते ।
51722 नानारूपैः प्रतिस्पन्दैः परिपूर्ण इवार्णवः ॥ ४९ ॥
51723
51724 एवं च वर्णितदृष्टान्तदार्ष्टान्तिकसाम्यमव्याहतमित्याह -
51725 ब्रह्मैवेत्यादिना ॥ ४९ ॥
51726
51727 नानातां स्वयमादत्ते नानाकारविहारतः ।
51728 आत्मैवात्मन्यात्मनैव समुद्राम्भ इवाम्भसि ॥ ५० ॥
51729
51730 व्यतिरिक्ता न पयसो विचित्रा वीचयो यथा ।
51731 व्यतिरिक्ता न विश्वेशात्समग्राः कल्पनास्तथा ॥ ५१ ॥
51732
51733 शाखापुष्पलतापत्रफलकोरकयुक्तयः ।
51734 यथैकस्मिंस्तथा बीजे सर्वदा सर्वशक्तिता ॥ ५२ ॥
51735
51736 एकस्मिन्बीजे ॥ ५२ ॥
51737
51738 विचित्रवर्णता यद्वद्दृश्यते कठिनातपे ।
51739 विचित्रशक्तिता तद्वद्देवेशे सदसन्मयी ॥ ५३ ॥
51740

51741 परिणामवादद्दष्टान्तेनोपपाद्य
51742 विवर्तवादप्रसिद्धद्दष्टान्तेनाप्युपपादयति - विचित्रेत्यादिना ॥ ५३ ॥
51743
51744 विचित्ररूपोदेतीयमविचित्रात्स्थितिः शिवात् ।
51745 एकवर्णात्पयोवाहाच्छक्रचापलता यथा ॥ ५४ ॥
51746
51747 पयोवाहान्मेघात् ॥ ५४ ॥
51748
51749 अजडाज्जडतोदेति जाड्यभावनहेतुका ।
51750 ऊर्णनाभाद्यथा तन्तुर्यथा पुंसः सुषुप्तता ॥ ५५ ॥
51751
51752 चेतनादचेतनोत्पत्तावपि वादद्वयानुरूपे द्वे द्दष्टान्ते आह - अजडादिति ।
51753 सुषुप्तता स्वाप्नरथादिः ॥ ५५ ॥
51754
51755 अचितश्चेतसः शक्तिं स्वबन्धायेच्छया शिवः ।
51756 तनोति तान्तवं कोशं कोशकारकृमिर्यथा ॥ ५६ ॥
51757
51758 ननु चित ऐकरूप्यात्तत्कार्ये अचिति कथं वैचित्र्यसिद्धिरित्यत उक्तं - चेतसः
51759 शक्तिमिति । वासनावैचित्र्यमित्यर्थः ॥ ५६ ॥
51760
51761 स्वेच्छयात्मात्मनो ब्रह्मन्भावयित्वैष विस्मृतिम् ।
51762 करोति कठिनं बन्धं कोशकारकृमिर्यथा ॥ ५७ ॥
51763
51764 स्वेच्छयात्मात्मनो ब्रह्मन्भावयित्वा स्वकं वपुः ।
51765 संसारान्मोक्षमाप्नोति स्वालानादिव वारणः ॥ ५८ ॥
51766
51767 स्वकं वपुः स्वीयं पूर्णस्वरूपं भावयित्वा साक्षादनुभूय ॥ ५८ ॥
51768
51769 यथैव भावयत्यात्मा सततं भवति स्वयम् ।
51770 तथैवापूर्यते शक्त्या शीघ्रमेव महानपि ॥ ५९ ॥
51771
51772 भाविता शक्तिरात्मानमात्मतां नयति क्षणात् ।
51773 अनन्तमखिलं प्रावृड्मिहिका महती यथा ॥ ६० ॥
51774
51775 भाविता चिरभावनया द्दढीकृता शक्तिर्वासना । आत्मतां स्वानुरूपताम् ।
51776 अनन्तमाकाशम् । प्रावृणिहिका प्रसिद्धा ॥ ६० ॥
51777
51778 या शक्तिरुदिता शीघ्रं याति तन्मयतामजः ।
51779 य एवर्तुः स्थितिं यातस्तन्मयो भवति द्रुमः ॥ ६१ ॥
51780
51781 उक्तमेव स्फुटयति - या शक्तिरिति ॥ ६१ ॥
51782
51783 न मोक्षो मोक्ष ईशस्य न बन्धो बन्ध आत्मनः ।
51784 बन्धमोक्षद्दशौ लोके न जाने प्रोत्थिते कुतः ॥ ६२ ॥
51785
51786 इयं बन्धमोक्षकल्पना अज्ञद्दशा तत्त्वद्दशा तु तत्संभावनैव
51787 नास्तीत्याह - नेति ॥ ६२ ॥
51788
51789 नास्ति बन्धो न मोक्षोऽस्ति तन्मयस्त्विव लक्ष्यते ।
51790 ग्रस्तं नित्यमनित्येन मायामयमहो जगत् ॥ ६३ ॥
51791
51792 तन्मयो बन्धमोक्षविकारवानिव लक्ष्यते भ्रान्त्या । कुतः यतोऽस्य नित्यं

51793 पूर्णात्मरूपमनित्येन आविद्यकेन वासनाध्यस्तभोक्तृभोग्यादिभावेन
51794 ग्रस्तं रितोहितम् | तदेव मायामयं जगदित्यर्थः || ६३ ||
51795
51796 यदैव चित्तं कलितं किलानेनाकलात्मना |
51797 कोशकारवदात्मायमनेनावलितस्तदा || ६४ ||
51798
51799 तत्र मुक्यं बन्धं दर्शयति - यदैवेति || ६४ ||
51800
51801 अन्योन्यरूपास्त्वत्यन्तं विकल्पितशरीरकाः |
51802 मनःशक्तय एतस्मादिमा निर्यान्ति कोटयः || ६५ ||
51803
51804 अन्ये बन्धास्तु तत्कृता एवेत्याह - अन्योन्येति || ६५ ||
51805
51806 तज्जास्तत्स्थाः पृथग्रूपाः समुद्रादिव वीचयः |
51807 तज्जास्तत्स्थाः पृथक्स्थाश्च चन्द्रादिव मरीचयः || ६६ ||
51808
51809 पृथगिव भूताः | कर्मज्ञानेन्द्रियभेदात्तामससात्त्विकभेदाद्वा
51810 विभागविवक्षया क्रमाद्दृष्टान्तद्वयोपन्यासः || ६६ ||
51811
51812 अस्मिन्स्पन्दमये स्फारे परमात्ममहाम्बुधौ |
51813 चिज्जले वितताभोगे चिन्मात्ररसमालिनि || ६७ ||
51814
51815 मुख्यामुख्यबन्धोपाधिकजीवाख्यसंविद्भेदानेव
51816 नामरूपक्रियादिवैचित्र्यैर्विस्तरेण दर्शयितुमुपक्रमते - अस्मिन्नित्यादिना ||
51817 ६७ ||
51818
51819 काश्चित्स्थिरा ब्रह्मविष्णू काश्चिद्रुद्रत्वमागताः |
51820 काश्चित्पुरुषतां प्राप्ताः काश्चिद्देवत्वमागताः || ६८ ||
51821
51822 पुरुषतां मनुष्यताम् || ६८ ||
51823
51824 (लहर्यः [कोष्ठकविन्यस्ताः श्लोकाः प्रक्षिप्ता इति भाति]
51825 प्रस्फुरन्त्येताः स्वभावोद्भावितात्मकाः |
51826 काश्चिद्यममहेन्द्रार्कवह्निवैश्रवणादिकाः ||
51827
51828 घ्नन्ति कुर्वन्ति तिष्ठन्ति लहर्यश्चपलैषणाः |
51829 काश्चित्किंनरगन्धर्वविद्याधरसुरादिकाः ||
51830
51831 उत्पतन्ति पतन्त्युग्रा लहर्यः परिवल्गिताः |
51832 काश्चित्किंचित्स्थिराकारा यथा कमलजादिकाः ||
51833
51834 काश्चिदुत्पन्नविध्वस्ता यथा सुरनरादिकाः ||)
51835
51836 कृमिकीटपतङ्गाहिगोमशाजगरादिकाः |
51837 काश्चित्तस्मिन्महाम्भोधौ स्फुरन्त्येतेम्बुबिन्दुवत् || ६९ ||
51838
51839 मशा मशकाः | महाम्भोधौ यादोरूपेणेति शेषः | दृष्टान्तशेषो वा || ६९
51840 | |
51841
51842 काश्चिच्चला नरमृगगृध्रजम्बुलकादिकाः |
51843 स्फुरन्ति गिरिकुञ्जेषु वेलावनतटेष्विव || ७० ||
51844

जम्बुलका जम्बुकाः। चञ्चुलका इति पाठे पक्षिभेदाः। वेलावनतटेष्विव चला
अस्थिराः। तेषु हि वायुप्राबल्यात्सदैव तरुगुल्मलतादीनां चलता प्रसिद्धा॥ ७०॥

सुदीर्घजीविताः काश्चित्काश्चिदत्यल्पजीविताः।
अतुच्छकलनाः काश्चित्काश्चित्तुच्छशरीरकाः॥ ७१॥

अतुच्छा महती कलना देहसंस्थानकल्पना यासां ताः॥ ७१॥

संसारस्वप्नसंरम्भे काश्चित्स्थैर्येण भाविताः।
सुविकल्पहताः काश्चिच्छङ्कन्ते सुस्थिरं जगत्॥ ७२॥

स्थैर्येण चिरस्थायित्वेन। सुविकल्पैर्दृढविकल्पैर्हता मोहिताः। शङ्कन्ते
संभावयन्ति॥ ७२॥

अल्पाल्पभावनाः काश्चिद्दैन्यदोषवशीकृताः।
कृशोऽतिदुःखी मूढोऽहमितिदुःखैर्वशीकृताः॥ ७३॥

अल्पभावनामेव त्रिधा दर्शयति - कृश इति॥ ७३॥

काश्चित्स्थावरतां याताः काश्चिद्देवत्वमागताः।
काश्चित्पुरुषतां प्राप्ताः काश्चिदर्णवतां गताः॥ ७४॥

पुरुषतां सदेहताम्। अर्णवतां सुषुप्तिप्रलययोरिवानाविर्भूतवासनां
मोहार्णवताम्॥ ७४॥

काश्चित्स्थिता जगति कल्पशतान्यनल्पाः
काश्चिद्व्रजन्ति परमं पदमिन्दुशुद्धः।
ब्रह्मार्णवात्समुदिता लहरीविलोला-
श्चित्संविदो हि मननापरनामवत्यः॥ ७५॥

इन्दुरिव ज्ञानामृतपूर्णत्वाच्छुद्धाः सत्यः परमं पदं
पूर्णस्वरूपावस्थितिलक्षणं मोक्षं व्रजन्ति। लहर्य इव विलोलाश्चितः संविद
औपाधिकसंवेदनभेदाः मननं मनस्तत्तादात्म्याध्यासात्तन्नामधेयाः
॥ ७५॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० स्थितिप्रकरणे
भार्गवोपाख्याने संसारप्रवृत्तिदर्शनं नामैकादशः सर्गः॥ ११
।।

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे
संसारप्रवृत्तिदर्शनं नामैकादशः सर्गः॥ ११॥

द्वादशः सर्गः १२

काल उवाच।

सुरासुरनराकारा इमा याः संविदो मुने।
ब्रह्मार्णवादभिन्नास्ताः सत्यमेतन्मृषेतरत्॥ १॥

तरङ्गाम्बुधिदृष्टान्तात्प्राप्तामात्मविकारताम्।
वारयन् वक्ति मोहोत्थवैचित्र्यस्य विवर्तताम्॥ १॥

51897
51898 तत्रादौ सर्वजीवानां ब्रह्मैक्यं भेदकप्रपञ्चमिथ्यात्वं चोपपादयितुं
51899 प्रतिजानीते - सुरासुरेति || १ ||
51900
51901 मिथ्याभावनया ब्रह्मन्स्वविकल्पकलङ्किताः |
51902 न ब्रह्म वयमित्यन्तर्निश्चयेन ह्यधोगताः || २ ||
51903
51904 यद्यभिन्नास्तर्हि कुतस्तथा नानुभवन्ति तत्राह - मिथ्येति | मिथ्याभावना
51905 अनात्मन्यात्मताभ्रान्तिस्तया हेतुनेत्यर्थः | अधोगताः निकृष्टां दशां
51906 प्राप्ताः || २ ||
51907
51908 ब्रह्मणो व्यतिरिक्तत्वं ब्रह्मार्णवगता अपि |
51909 भावयन्त्यो विमुह्यन्ति भीमासु भवभूमिषु || ३ ||
51910
51911 व्यतिरिक्तत्वं परिच्छिन्नतां भावयन्त्यः कल्पयन्त्यः || ३ ||
51912
51913 या एताः संविदो ब्राह्म्यो मननैककलङ्किताः |
51914 एतत्तत्कर्मणां बीजमप्यकर्मैव विद्धि ताः || ४ ||
51915
51916 मननं देहात्मभावस्य पुनःपुनरनुसंधानं तदेवैतत्कर्मणां
51917 पुण्यपापप्रवृत्तीनाम् | एवंभूता अपि ताः संविदः अकर्म निष्क्रियं
51918 ब्रह्मैवेति विद्धि || ४ ||
51919
51920 संकल्परूपयैवान्तर्मुने कलनयैतया |
51921 कर्मजालकरञ्जानां बीजमुष्ट्या करालया || ५ ||
51922
51923 प्राणस्तेजसा युक्तः सहात्मना यथासंकल्पितं लोकं नयति इति श्रुतेः
51924 कर्मबीजप्ररोहवैचित्र्यव्यवस्थायामपि संकल्पो हेतुरित्याह -
51925 संकल्परूपयेति || ५ ||
51926
51927 इमा जगति विस्तीर्णाः शरिरोपलपङ्क्तयः |
51928 तिष्ठन्ति परिवल्गन्ति रुदन्ति च हसन्ति च || ६ ||
51929
51930 आब्रह्मस्तम्बपर्यन्तं स्पन्दनैः पवनो यथा |
51931 उल्लसन्ति निलीयन्ते म्लायन्ति विहसन्ति च || ७ ||
51932
51933 ता एताः काश्चिदत्यच्छा यथा हरिहरादयः |
51934 काश्चिदल्पविमोहस्था यथोरगनरामराः || ८ ||
51935
51936 इदानीं तरङ्गस्थानीयांश्चित्संविच्छब्दितान् जीवानुपाधिवैशद्यतारतम्येन
51937 ज्ञानभूमिकाभेदेन कर्मगतिवैचित्र्यप्रयुक्तसंसरणप्रकारभेदेन च
51938 विभज्योदाहरति - ता एता इत्यादिना | ज्ञानैश्वर्योत्कर्षावधित्वादत्यच्छाः |
51939 ज्ञानाधिकारयोग्यताप्राप्तेरल्पविमोहस्थाः || ८ ||
51940
51941 काश्चिदत्यन्तमोहस्था यथा तरुतृणादयः |
51942 काश्चिदज्ञानसंमूढाः कृमिकीटत्वमागताः || ९ ||
51943
51944 इष्टानिष्टयोः प्रवृत्तिनिवृत्तिक्षमत्वात् कृमिकीटदेः
51945 स्थावरन्नात्यन्तमोहस्थतेति भावः || ९ ||
51946
51947 काश्चित्तृणवदुह्यन्ते दूरे ब्रह्ममहोदधेः |
51948 अप्राप्तभूमिका एता यथोरगनगादयः || १० ||

51949
51950 ब्रह्ममहोदधेर्मुक्तेदूरे उह्यन्ते प्रवाह्यन्ते
51951 शास्त्रप्रतिकूलप्रवृत्तिभिरित्यर्थः ॥ १० ॥
51952
51953 सत्त्वमात्रं समालोक्य काश्चिदेवमुपागताः ।
51954 जाताजाता निखन्यन्ते कृतान्तजरठाखुना ॥ ११ ॥
51955
51956 एवं संसरणक्रमेण नरादिभावमुपागताः सन्तः सत्त्वं
51957 संसरणश्रमविश्रान्तिहेतुभूतयोगभूमिकासद्भावस्तन्मात्रम् ।
51958 तटमात्रम् इति पाठेऽप्ययमेवार्थः । समालोक्य शास्त्रतः श्रुत्वा
51959 तदुन्मुखाः जाताजाता अपि कृतान्तो विघ्नकारि दुरदृष्टं तल्लक्षणेन
51960 जरठाखुना निखन्यन्ते । भूमिकादूषणेन पीड्यन्त इति यावत् ॥ ११ ॥
51961
51962 काश्चिदन्तरमासाद्य ब्रह्मतत्त्वमहाम्बुधेः ।
51963 गतास्तत्तां समं कायैर्हरिब्रह्महरादिकाः ॥ १२ ॥
51964
51965 अन्तरं ईषद्भेदकं विशुद्धज्ञानोपाधिम् । कायैः समं तत्तां
51966 ब्रह्ममहाम्बुधिताम् । जीवन्मुक्तिमिति यावत् ॥ १२ ॥
51967
51968 अल्पमोहात्मिकाः काश्चित्तमेव ब्रह्मवारिधिम् ।
51969 अदृष्टपारभूम्यौघमवलम्ब्य व्यवस्थिताः ॥ १३ ॥
51970
51971 न दृष्टा पारभूमिर्यस्य तथाविधः ओघः पूर्णता यस्य तं
51972 समाधिभिरवलम्ब्य ॥ १३ ॥
51973
51974 काश्चिद्वोक्तव्यजन्मौघभुक्तजन्मौघकोटयः ।
51975 वन्ध्याः प्रकाशतामस्यः संस्थिता भूतजातयः ॥ १४ ॥
51976
51977 अधिकारिदेहप्राप्त्या प्रकाशेऽपि रागान्धत्वात्तामस्यः ॥ १४ ॥
51978
51979 काश्चिदूर्ध्वादधो यान्ति यथा हस्तान्महत्फलम् ।
51980 ऊर्ध्वादूर्ध्वतरं काश्चिदधस्तात्काश्चिदप्यधः ॥ १५ ॥
51981
51982 ऊर्ध्वात् उत्कृष्टजन्मनः अधः निकृष्टपश्वादिजन्म ॥ १५ ॥
51983
51984 बहुसुखदुःखकराकराक्षयेयं
51985 परमपदास्मरणात्समागतेह ।
51986 परमपदावगमात्प्रयाति नाशं
51987 विहगपतिस्मरणाद्विषव्यथेव ॥ १६ ॥
51988
51989 एवमनर्थसहस्रनिदानं जीवभावं प्रपञ्च्य तन्मूलं
51990 स्मारयंस्तन्निवृत्त्युपायमाह - वह्विति । बहवः सुखदुःखकराणां
51991 जन्मनां आकराः खनीभूता रागादयो यस्यां तथाविधा इयं जीवता
51992 परमपदस्य स्वात्मतत्त्वस्यास्मरणादपर्यालोचनदोषात्समागता ॥ १६ ॥
51993
51994 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० मो० स्थितिप्रकरणे
51995 भार्गवोपाख्याने संसारोत्पत्तिविस्तारवर्णनं नाम द्वादशः सर्गः ॥
51996 १२ ॥
51997
51998 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे
51999 संसारोत्पत्तिविस्तारवर्णनं नाम द्वादशः सर्गः ॥ १२ ॥
52000

52001
52002 त्रयोदशः सर्गः १३
52003
52004 काल उवाच।
52005
52006 एतासां भूतजातीनामूर्मीणामिव सागरात्।
52007 विविधानां विचित्राणां लतानामिव माधवे॥ १॥
52008
52009 उपवर्ण्य मनःशक्तीरथात्र भृगुकालयोः।
52010 शुक्रस्य संनिधौ गन्तुमुत्थानं प्रतिपाद्यते॥ १॥
52011
52012 उक्तासु जीवजातिषु जीवन्मुक्तानामेव कृतार्थता नान्येषामित्याह -
52013 एतासामित्यादिना। सागरात् आविर्भूतानामिति शेषः। एतासां मध्ये ये
52014 जितमनोमोहास्ते भवन्तीति भव्याः कृतार्था इति परेणान्वयः।
52015 भव्यगेयप्रवचनीय - इत्यादिना कर्तरि यत्।
52016 यक्षादित्रितयोपादानमुदाहरणार्थं नतु परिगणनाय। मनुष्यादिष्वपि
52017 संभवात्॥ १॥
52018
52019 भव्या जितमनोमोहा दृष्टलोकपरावराः।
52020 जीवन्मुक्ता भ्रमन्तीह यक्षगन्धर्वकिंनराः॥ २॥
52021
52022 अन्ये तु काष्ठकुड्याभा मूढाः स्थावरजंगमाः।
52023 अपरे क्षीणमोहास्ते किं तेषां प्रविचार्यते॥ ३॥
52024
52025 साधनचतुष्टयसंपन्ना अज्ञा एव शास्त्रविचारेऽधिकारिणो न तत्त्वज्ञा
52026 इत्याशयेनाह - किं तेषामिति॥ ३॥
52027
52028 लोके प्रबुध्यमानानां भूतानामात्मसिद्धये।
52029 विहरन्तीह शास्त्राणि कल्पितान्युदितात्मभिः॥ ४॥
52030
52031 किमर्थं तर्हि तेषां देहधारणमिति चेत्
52032 शास्त्रप्रकल्पनेनाज्ञोद्धारार्थमेवेत्याशयेनाह - लोके इति॥ ४॥
52033
52034 संप्रबुद्धाशया ये तु दुष्कृतानां परिक्षये।
52035 तेषां शास्त्रविचारेषु निर्मला धीः प्रवर्तते॥ ५॥
52036
52037 ज्ञानमुत्पद्यते पुंसः क्षयात्पापस्य कर्मणः इति स्मृतेः शास्त्रमपि
52038 शुद्धचित्तेष्वेव सफलं नान्येष्वित्याशयेनाह - संप्रबुद्धेति॥ ५॥
52039
52040 विलीयते मनोमोहः सच्छास्त्रप्रविचारणात्।
52041 नभोविहरणाद्भानोः शार्वरं तिमिरं यथा॥ ६॥
52042
52043 शर्वर्यां भवं शार्वरम्॥ ६॥
52044
52045 अक्षीयमाणं हि मनो मोहायैव न सिद्धये।
52046 नीहार इव संचाद्य वेताल इव वल्गति॥ ७॥
52047
52048 नीहार इवेत्यावरणे वेताल इवेति विक्षेपे दृष्टान्तौ। वल्गति नृत्यति॥ ७॥
52049
52050 सर्वेषामेव देहानां सुखदुःकार्थभाजनम्।
52051 शरीरं मन एवेह नतु मांसमयं मुने॥ ८॥
52052

52053 देहानां तदात्मतापन्नजीवानाम् ॥ ८ ॥
52054

52055 योऽयं मांसास्थिसंघातो दृश्यते पाञ्चभौतिकः ।
52056 मनोविकल्पनं विद्धि न देहः परमार्थतः ॥ ९ ॥
52057

52058 मनःशरीरेण तव पुत्रोऽयं कृतवान्मुने ।
52059 तदेव प्राप्तवानाशु वयं नात्रापराधिनः ॥ १० ॥
52060

52061 स्वया वासनया लोको यद्यत्कर्म करोति यः ।
52062 स तथैव तदाप्नोति नेतरस्येह कर्तृता ॥ ११ ॥
52063

52064 स्वानुसंहितमन्तर्यन्मनोवासनया स्वया ।
52065 को नाम भुवनेशोऽस्ति तत्कर्तुं यस्य शक्तता ॥ १२ ॥
52066

52067 मनोवाअसनया अनुसंधानमात्रेणापि क्षणाद्यत्क्रियते तदस्माभिर्महतापि
52068 यत्नेन चिरेणापि कर्तुं न शक्यत इति
52069 नास्मास्वपराधसंभावनापीत्याशयेनाह - स्वानुसंहितमिति ॥ १२ ॥
52070

52071 ये सर्गा नरकाभोगा या जन्ममरणैषणाः ।
52072 स्वमनोमननेनेदं स निष्पन्दोऽपि दुःखदः ॥ १३ ॥
52073

52074 स मननात्मको निष्पन्द ईष~चलनमपि दुःखदः ॥ १३ ॥
52075

52076 बहुनात्र किमुक्तेन शब्दसंग्रहकारिणा ।
52077 उत्तिष्ठ भगवन्यामो यत्र ते तनयः स्थितः ॥ १४ ॥
52078

52079 शब्दसंग्रहः श्रवणं तत्कारिणा नत्वर्थप्रदर्शकिनेत्यर्थः । याम इति
52080 अस्मदो द्वयोश्च इति वा अनुचरसाहित्याद्वा बहुवचनम् ॥ १४ ॥
52081

52082 सर्वं चित्तशरीरेण भुक्त्वा शुक्रः क्षणादिव ।
52083 तथेन्दुरश्मिसंघट्टात्समङ्गातापसः स्थितः ॥ १५ ॥
52084

52085 सर्वं स्वर्गभोगं चित्तकल्पितशरीरेण भुक्त्वा अथ आकाशादिक्रमेण
52086 भूमाववतीर्ण इन्दुरश्मिसंपर्कादोषधीः प्रविश्यान्नादिभावक्रमेण
52087 जन्मपरम्परां प्राप्य संप्रति समङ्गायां तापसो भूत्वा स्थित इत्यर्थः ॥
52088 १५ ॥
52089

52090 तत्प्राणपवनश्चित्तान्मुक्त इन्द्वंशुवत्फलम् ।
52091 अवश्यायतया भूत्वा वीर्यं तेनान्तरास्थितः ॥ १६ ॥
52092

52093 इन्दुरश्मिसंघट्टादिति यदुक्तं तद्विशदयति - तत्प्राणेति । तस्य शुक्रस्य
52094 प्राणपवनश्चित्ताच्चेतनशक्तेर्मुक्तः संमूर्च्छितः सन् अवश्यायतया
52095 नीहारभावेन इन्द्वंशुसंपर्कात्तद्वद्भूत्वा सस्याद्वारा तत्फलं व्रीह्यादि
52096 भूत्वा पुरुषं प्रविश्यवीर्यं रेतो भूत्वा अन्तरा स्त्रीगर्भे स्थित इत्यर्थः ॥ १६ ॥
52097

52098 इत्युक्त्वा भगवान्कालो हसन्निव जगद्गतिम् ।
52099 हस्ताद्धस्तेन जग्राह भृगुमिन्दुमिवांशुमान् ॥ १७ ॥
52100

52101 हस्तादिति ल्यब्लोपे पञ्चमी । हस्तं प्रसार्येत्यर्थः । दृष्टान्तपक्षे
52102 लक्षितलक्षणया हस्तशब्देन करशब्दवाच्यकिरणपरिग्रहः ॥ १७ ॥
52103

52104 अहो नु चित्रा नियतेर्व्यवस्थेति वदञ्छनैः ।

52105 भगवान्भृगुरुत्तस्थावुदयाद्रेर्यथा रविः ॥ १८ ॥
52106
52107 नियतेर्दैवस्य कर्मणो वा ॥ १८ ॥
52108
52109 तेजोनिधी ह सममङ्ग स्मुत्थितौ तौ
52110 भातस्तदाम्बरतले सामालजाले ।
52111 तुल्योदयाविव नभस्यमले विहर्तु-
52112 मभ्युत्थितौ सजलदौ सकलेन्दुसूर्यौ ॥ १९ ॥
52113
52114 श्रीवाल्मीकिरुवाच ।
52115
52116 ह इति किलेत्यर्थे निपातः अङ्गेति संबोधने । सतमालजाले मन्दरे समं समं
52117 युगपत्समुत्थितौ तेजोनिधी तौ भृगुकालौ सजलदे अम्बरतले तुल्योदयौ सकलः
52118 पूर्ण इन्दुश्च सूर्यश्च ताविव भातः प्रकाशत इत्यर्थः ॥ १९ ॥
52119
52120 इत्युक्तवत्यथ मुनौ दिवसो जगाम
52121 सायंतनाय विधयेऽस्तमिनो जगाम ।
52122 स्नातुं सभा क्रतनमस्करणा जगाम
52123 श्यामाक्षये रविकरैश्च सहाजगाम ॥ २० ॥
52124
52125 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० स्थितिप्रकरणे
52126 भार्गवोपाख्याने भृगुसमाश्वासनं नाम त्रयोदशः सर्गः ॥ १३ ॥
52127
52128 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे
52129 भृगुसमाश्वासनं नाम त्रयोदशः सर्गः ॥ १३ ॥
52130
52131
52132 अष्टमो दिवसः ॥
52133
52134 चतुर्दशः सर्गः १४
52135
52136 श्रीवसिष्ठ उवाच ।
52137
52138 अथ कालभृगू देवौ मन्दराचलकन्दरात् ।
52139 गन्तुं प्रवृत्ताववनौ समङ्गासरितस्तटम् ॥ १ ॥
52140
52141 गत्वा ताभ्यां समाधिस्थशुक्रस्यात्र प्रबोधनम् ।
52142 स्मारणं पूर्ववृत्तस्यागमनेच्छा च कीर्यते ॥ १ ॥
52143
52144 अवनौ अवतीर्येति शेषः ॥ १ ॥
52145
52146 तौ शैलादवरोहन्तौ दृष्टवन्तौ महाद्युती ।
52147 नवहैमलताजालकुञ्जसुप्तनभश्चरान् ॥ २ ॥
52148
52149 नभश्चरान् देवगणान्पक्षिणश्च ॥ २ ॥
52150
52151 वल्लीवलयदोलाभिः क्रीडतो गगनाङ्गणे ।
52152 हरिणीमुग्धमुग्धाक्षिप्रेक्षितस्मारितोत्पलान् ॥ ३ ॥
52153
52154 हरिणीनामिव मुग्धमुग्धैः अक्षिप्रेक्षितैः कटाक्षैः स्मारितान्युत्पलानि यैः ।
52155 सदृशदर्शनस्य स्मृतिहेतुत्वात्सादृश्यं गम्यते ॥ ३ ॥
52156

52157 सिद्धानध्यासितोत्तुङ्गसिलाशकलविष्टरान् |
52158 धृताकारानिवोत्साहान्हेलादृष्टजगत्त्रयान् || ४ ||
52159
52160 अध्यासितान्याश्रितान्युत्तुङ्गशिलाशकलान्येव विष्टराणि आसनानि यैः |
52161 धृताकारान् स्वीकृतशरीरान् उत्साहानिव स्थितान् | हेलया लीलया दृष्टं
52162 जगत्त्रयं यैः || ४ ||
52163
52164 कृताजस्रपतत्पुष्पधारासारनिमज्जनान् |
52165 तालोत्तालकृतोद्धस्तहस्तान्हस्तिघटापतीन् || ५ ||
52166
52167 तालवृक्षा [इयं व्याख्या न मूलानुसारिणी] इवोत्तालाः स्थूलदीर्घाः
52168 कराः शुण्डादण्डा येषां तान् हस्तिघटापतीन् गजयूथपान् तौ दृष्टवन्तौ
52169 इति सर्वत्र संबध्यते || ५ ||
52170
52171 मदावलेपनिद्रालून्मदान्मूर्तानिव स्थितान् |
52172 पुष्पकेसररक्ताङ्गपवनारुणवालधीन् || ६ ||
52173
52174 तानेव विशिनष्टि - मदेति | पुष्पकेसरैः रक्ताङ्गेन रञ्जितेन पवनेन
52175 परागैः पूरणादरुणवालधीनिति देहलीदीपन्यायेन पूर्वोत्तराभ्यां
52176 संबध्यते || ६ ||
52177
52178 चञ्चलांश्चमरांश्चारून्भूभृन्मण्डलचामरान् |
52179 कृताजस्रपतत्पुष्पधारासारनिमज्जनान् || ७ ||
52180
52181 चमरान्मृगविशेषान् | भूभृन्मण्डलस्य पर्वतराजसमूहस्य
52182 चामरानिव स्थितान् || ७ ||
52183
52184 किन्नरान्भूमखर्जूराञ्शाखासरलतां गतान् |
52185 परस्परफलाघातक्ष्वेडावर्जितकीचकान् || ८ ||
52186
52187 किन्नरान्दृष्टवन्ताविति पूर्वत्र संबन्धः | भूमखर्जूरान्
52188 खर्जूरोत्तमजातिभेदान् शाखापर्यन्तं सरलतामृजुतां गतान् | परस्परस्य
52189 खर्जूरफलैराघातास्ताडनानि तल्लक्षणाभिः क्रीडाभिरावर्जिताः
52190 सफलीकृता अधःप्ररूढाः कीचका वेणवो यैस्तान्मर्कटान् || ८ ||
52191
52192 धातुपाटलदुर्वक्त्रान्मर्कटान्नटनोत्कटान् |
52193 लतावितानसंछन्नसानूपवनमन्दिरान् || ९ ||
52194
52195 धातुर्गैरिकमिव पाटलानि दुर्वक्त्राणि विकृतमुखानि येषां तान् | नटने
52196 अवस्पन्दने उत्कटान् शौण्दान् || ९ ||
52197
52198 सिद्धानमरनारीभिर्मन्दारकुसुमाहतान् |
52199 धातुपाटलनिर्द्वारपयोदपटसंवृतान् || १० ||
52200
52201 सिद्धान् देवयोनिविशेषान् | अमरनारीभिरप्सरोभिः रतिकालज्ञापनाय
52202 मन्दारकुसुमैराहतान् | अत एव धातुपाटलैर्निर्द्वारैरच्छिद्रैः पयोदपटैः
52203 संवृतान् || १० ||
52204
52205 तटानजनसंसर्गान्बौद्धान्प्रव्रजितानिव |
52206 सरितः कुन्दमन्दारपिनद्धलहरीघटाः |
52207 सागरोत्कतयेवात्तमधुमासप्रसाधनाः || ११ ||
52208

52209 तटान् प्रपातदेशान् | अजनसंसर्गान् जनसंचारानर्हान् |
52210 बौद्धप्रव्रजितदृष्टान्तो वृथापतनयोग्यताविवक्षया | सागरे कान्ते
52211 उत्कतया सोत्कण्ठतया हेतुनेव आत्तानि गृहीतानि
52212 मधुमासश्चैत्रस्तत्संबन्धीनि प्रसाधनानि पुष्पपल्लवाद्यलंकारा
52213 याभिस्ताः | उत्कटताचान्तमधुमांसप्रसाधना इति पाठे तु
52214 सागरस्योत्कटतायै उपभोगमदाय आचान्तैरुपयुक्तैर्मधुमांसैः
52215 प्रसाधनं यासां ताः || ११ ||
52216
52217 पुष्पभारपिनद्धाङ्गान्वृक्षान्पवनकम्पितान् |
52218 क्षीबानिव मधुप्राप्तौ घूर्णान्मधुकरेक्षणान् || १२ ||
52219
52220 शैलराजश्रियं स्फीतां पश्यन्तौ तावितस्ततः |
52221 प्राप्तवन्तौ वसुमतीं पुरपत्तनमण्डिताम् || १३ ||
52222
52223 क्षणादवापतुस्तत्र पुष्पलोलतरङ्गिणीम् |
52224 समङ्गां सरितं साधु सर्वपुष्पमयीमिव || १४ ||
52225
52226 पुष्पलोलतरङ्गामिति बहुव्रीहिणैव मत्वर्थलाभे अतिशयनित्ययोगद्योतनार्थ
52227 इनिप्रत्ययः | तदेव स्पष्टीकर्तुमाह - सर्वपुष्पमयीमिवेति || १४ ||
52228
52229 ददर्शाथ तटे तस्मिन्कस्मिंश्चित्तनयं भृगुः |
52230 देहान्तरपरावृत्तं भावमन्यमुपागतम् || १५ ||
52231
52232 अन्यं भावं अशुक्रताम् || १५ ||
52233
52234 शान्तेन्द्रियं समाधिस्थमचञ्चलमनोमृगम् |
52235 सुचिरादिव विश्रान्तं सुचिरश्रमशान्तये || १६ ||
52236
52237 सुचिरश्रमः अनादिसंसारश्रमस्तस्य शान्तये || १६ ||
52238
52239 चिन्तयन्तमिवानन्ताश्चिरभुक्ताऽचिरोज्झिताः |
52240 संसारसागरगतीर्हर्षशोकनिरन्तराः || १७ ||
52241
52242 चिरं भुक्ता अचिरात् उज्झितास्त्यक्ताः || १७ ||
52243
52244 नूनं निश्चलतां यातमतिभ्रमितचक्रवत् |
52245 अनन्तजगदावर्तविवर्तातिशयादिव || १८ ||
52246
52247 अतिभ्रमितचक्रवदिति दृष्टान्तो रागोपरमक्रमेण चित्तं स्वयमेव
52248 विश्राम्यतीति द्योतनाय || १८ ||
52249
52250 एकान्तसंस्थितं कान्तं कान्त्यैकाकिनमाश्रितम् |
52251 उपशान्तेहसंभग्नचित्तसंभ्रमसंगमम् || १९ ||
52252
52253 चक्रदृष्टान्ताभिप्रायमेव स्पष्टमाह - उपशान्तेहेति || १९ ||
52254
52255 निर्विकल्पसमाधिस्थं विरतं द्वन्द्ववृत्तितः |
52256 हसन्तमखिलां लोकगतिं शीतल्या धिया || २० ||
52257
52258 द्वन्द्ववृत्तितः शीतोष्णसुखदुःखादेः || २० ||
52259
52260 विगताखिलवृत्तान्तं विगताशेषभोक्तृतम् |

52261 निरस्तकल्पनाजालमालम्बितमहापदम् ॥ २१ ॥
52262
52263 वृत्तान्तानि प्रवृत्तयः । भोक्तृतास्तत्फलानि । महापदं
52264 अपरिच्छिन्नात्मसुखम् ॥ २१ ॥
52265
52266 अनन्तविश्रान्तितते पदे विश्रान्तमात्मनि ।
52267 प्रतिबिम्बमगृह्णन्तं सितं मणिमिवास्थितम् ॥ २२ ॥
52268
52269 हेयोपादेयसंकल्पविकल्पाभ्यां समुज्झितम् ।
52270 संप्रबुद्धमतिं धीरं ददर्श तनयं भृगुः ॥ २३ ॥
52271
52272 तमालोक्य भृगोः पुत्रं कालो भृगुमुवाच ह ।
52273 वाक्यमब्धिध्वनिनिभं तव पुत्रस्त्वसाविति ॥ २४ ॥
52274
52275 विबुध्यतामिति गिरा समाधेर्विरराम सः ।
52276 भार्गवोऽम्भोदघोषेण शनैरिव शिखण्डभृत् ॥ १५ ॥
52277
52278 शिखण्डभृत् मयूरः ॥ २५ ॥
52279
52280 उन्मील्य नेत्रे सोऽपश्यदन्ते कालभृगू प्रभू ।
52281 समोदयाविवायातौ देवौ शशिदिवाकरौ ॥ २६ ॥
52282
52283 अन्ते अन्तिके । समोदयौ संमुखोदितौ नत्वसमोदितौ ॥ २६ ॥
52284
52285 कदम्बलतिकापीठादथोत्थाय ननाम तौ ।
52286 समौ समागतौ कान्तौ विप्रौ हरिहराविव ॥ २७ ॥
52287
52288 विप्रौ विप्रवेषौ ॥ २७ ॥
52289
52290 मिथःकृतसमाचाराः शिलायां समुपाविशन् ।
52291 मेरुपृष्ठे जगत्पूज्या ब्रह्मविष्णुहरा इव ॥ २८ ॥
52292
52293 मिथः अन्योन्यं कृताः समाचारास्तत्कालोचितगौरवाभिनन्दनाद्याचारा यैः
52294 ॥ २८ ॥
52295
52296 अथ शान्तजपो राम स समङ्गातटे द्विजः ।
52297 तावुवाच वचः शान्तममृतस्यन्दसुन्दरम् ॥ २९ ॥
52298
52299 शान्तजपः समापितसमाधिः । जप मानसे च इति धात्वर्थदर्शनात् ।
52300 इदमर्धं पाठक्रमादार्थक्रमबलीयस्त्वात्कदम्बलतिकापीठादित्यतः
52301 प्राग्योज्यम् ॥ २९ ॥
52302
52303 भवतोर्दर्शनेनाहमद्य निर्वृतिमागतः ।
52304 सममागतयोर्लोके शीतलोष्णरुचोरिव ॥ ३० ॥
52305
52306 निर्वृतिं सुखम् ॥ ३० ॥
52307
52308 यो न शास्त्रेण तपसा न ज्ञानेनापि विद्यया ।
52309 विनष्टो मे मनोमोहः क्षीणोऽसौ दर्शनेन वाम् ॥ ३१ ॥
52310
52311 ज्ञानेन उपासनेन विद्यया ब्रह्मविद्यया । अतिशयोक्तिरियं प्रशंसार्था ।
52312 वां युवयोः ॥ ३१ ॥

52313
52314 न तथा सुखयन्त्यन्तर्निर्मलामृतवृष्टयः।
52315 यथा प्रहर्षयन्त्येता महतामेव दृष्टयः॥ ३२॥
52316
52317 चरणाभ्यामिमं देशं भवन्तौ भूरितेजसौ।
52318 कौ पवित्रितवन्तौ नः शशाङ्कार्कविवाम्बरम्॥ ३३॥
52319
52320 इत्युक्तवन्तं प्रोवाच भृगुर्जन्मान्तरात्मजम्।
52321 स्मरात्मानं प्रबुद्धोऽसि नाज्ञोऽसीति रघूद्वह॥ ३४॥
52322
52323 प्रबोधितोऽसौ भृगुणा जन्मान्तरदशां निजाम्।
52324 मुहूर्तमात्रं सस्मार ध्यानोन्मीलितलोचनः॥ ३५॥
52325
52326 ध्यानेन उन्मीलितं उद्घाटितं दिव्यं लोचनं यस्य सः॥ ३५॥
52327
52328 अथासौ विस्मयात्स्मेरमुखो मुदितमानसः।
52329 वितर्कमन्थरां वाचमुवाच वदतां वरः॥ ३६॥
52330
52331 विस्मयादाश्चर्यदर्शनात्॥ ३६॥
52332
52333 जगत्यविदितारम्भा नियतिः परमात्मनः।
52334 यद्वशादिदमाभोगि जगच्चक्रं प्रवर्तते॥ ३७॥
52335
52336 नियतिः कर्मफलव्यवस्थाहेतुर्मायाशक्तिः॥ ३७॥
52337
52338 ममानन्तान्यतीतानि जन्मान्यविदितान्यपि।
52339 दशाफलान्यनन्तानि कल्पान्तकलितादिव॥ ३८॥
52340
52341 दशाफलानि मरणमूर्च्छादिदुर्दशाफलानि दुःखमोहादीनि। कल्पान्तः
52342 प्रलयस्तेन कलितात्संपन्नाद्वर्षवातदाहादेरिव॥ ३८॥
52343
52344 दृष्टाः कठिनसंरम्भा विभवोऽप्यर्जनभ्रमाः।
52345 विहृतं वीतशोकासु चिरं मेरुस्थलीषु च॥ ३९॥
52346
52347 कठिनः संरम्भः क्रोधः उद्यओगश्च येषु ते विभवो राजानो
52348 द्रव्यार्जनभ्रमा अपि॥ ३९॥
52349
52350 पीतमामोदि मन्दारकेसरारुणितं पयः।
52351 मन्दाकिन्याः सकह्लारं तटीष्वमरभूभृतः॥ ४०॥
52352
52353 पयो वारि॥ ४०॥
52354
52355 भ्रान्तं मन्दरकुञ्जेषु फुल्लहेमलतालिषु।
52356 मेरोः कल्पतरुच्छायापुष्पसुन्दरसानुषु॥ ४१॥
52357
52358 न तदस्ति न यद्भुक्तं न तदस्ति न यत्कृतम्।
52359 न तदस्ति न यद्दृष्टमिष्टानिष्टासु वृत्तिषु॥ ४२॥
52360
52361 न तदस्तीति। सर्वं कृतं भुक्तं दृष्टं चेत्यर्थः। इष्टानिष्टासु
52362 अनुकूलप्रतिकूलासु वृत्तिषु दशासु॥ ४२॥
52363
52364 ज्ञातं ज्ञातव्यमधुना दृष्टं द्रष्टव्यमक्षतम्।

विश्रान्तोऽथ चिरं श्रान्तो गतो मे सकलो भ्रमः ‖ ४३ ‖

एकविज्ञानेनापि सर्वविज्ञानं दर्शयति - ज्ञातमिति | चिरं श्रान्तोऽहं
संप्रति विश्रान्तः ‖ ४३ ‖

उत्तिष्ठ तात गच्छामः पश्यामो मन्दरस्थिताम् |
तां तनुं तावदाशुष्कां शुष्कां वनलतामिव ‖ ४४ ‖

न समीहितमस्तीह नासमीहितमस्ति मे |
नियते रचनां द्रष्टुं केवलं विहराम्यहम् ‖ ४५ ‖

किं ते तया तन्वा समीहितं तत्राह - नेति ‖ ४५ ‖

यदतिसुभगमार्यसेवितं त-
त्स्थिरमनुयामि यदेकभावबुद्ध्या |
तदलमभिमता मतिर्ममास्तु
प्रकृतमिमं व्यवहारमाचरामि ‖ ४६ ‖

ननु नियते रचनां द्रष्टुं विहरतस्तव तत्राभिनिवेशात्पुनः
पूर्ववदप्सरोमनोरथानुगमनादिसंसारापत्तिरित्याशङ्क्य
दृढतरतत्त्वज्ञानबाधितानुवृत्तिमात्रत्वान्न
पूर्ववदभिनिवेशप्रसक्तिरित्याह - यदिति |
यद्यस्मात्कारणादहमेकभावबुद्ध्या एक एवात्मा भावः परमार्थसत्यो
नान्यदिति दृढनिश्चयेन
यच्चरित्रमतिसुभगमत्यन्तशुभावहमार्यैरन्यैश्च जीवन्मुक्तैः सेवितं
तदेव स्थिरं यथा स्यात्तथा अनुयाम्यनुसरामि न पूर्ववन्मूढवृत्तं
तत्तस्मात्तव मम च अभिमता पूर्वदेहजीवनादिरूपा मतिरलं सम्यगस्तु
नाम न काचित्तया क्षतिः | तया प्रकृतं
प्रारब्धशेषभोजकव्यवहारमाचरामि न मूढवदभिनिवेक्ष्यामीत्यर्थः ‖
४६ ‖

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मो० स्थितिप्रकरणे भा०
भार्गवजन्मान्तरस्मरणवर्णनं नाम चतुर्दशः सर्गः ‖ १४ ‖

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे
भार्गवजन्मान्तरवर्णनं नाम चतुर्दशः सर्गः ‖ १४ ‖

## पञ्चदशः सर्गः १५

श्रीवसिष्ठ उवाच |

विचारयन्तस्तत्त्वज्ञा इति ते जागतीर्गतीः |
समङ्गायास्तटात्तस्मात्प्रचेलुश्चञ्चलासवः ‖ १ ‖

अत्र तां तनुमालोक्य शुक्रस्य परिदेवनम् |
तन्निमित्तविशेषोक्त्या स्वभावश्चोपदिश्यते ‖ १ ‖

इति प्रागुक्तप्रकाराः जागतीः सांसारिकीर्गतीर्विचारयन्तः सन्तः
समङ्गातटाद्भृग्वाश्रमं प्रति प्रचेलुः प्रचलिताः | चञ्चलासव इत्यनेन
प्राणक्रिययैव तेषां चलनोपचारो नत्वात्मनि क्रियास्तीति द्योतनाय ‖ १ ‖

क्रमादाकाशमाक्रम्य निर्गत्याम्बुदकोटरैः।
संप्रापुः सिद्धमार्गेण क्षणान्मन्दरकन्दरम् ॥ २ ॥

अम्बुदकोटरैर्मेघच्छिद्रैः ॥ २ ॥

अधित्यकायां तस्याद्रेरार्द्रपर्णावगुण्ठिताम्।
ददर्श भार्गवः शुष्कां पूर्वजन्मोद्भवां तनुम् ॥ ३ ॥

अधित्यकायां ऊर्ध्वभागभूमौ ॥ ३ ॥

उवाचेदं च हे तात तन्वी तनुरियं हि सा।
या त्वया सुखसंभोगैः पुरा समभिलालिता ॥ ४ ॥

इदं वक्ष्यमाणप्रकारं वाक्यम्। तन्वी कृशा ॥ ४ ॥

इयं सा मत्तनुर्यस्याः कर्पूरागुरुचन्दनैः।
अङ्गमङ्गीकृतस्नेहा धात्री चिरमलेपयत् ॥ ५ ॥

सुखसंभोगैरिति यदुक्तं तत्प्रपञ्चयति - कर्पूरेत्यादिना ॥ ५ ॥

इयं सा मत्तनुर्यस्या मन्दारकुसुमोत्करैः।
रचिता शीतला शय्या मेरूपवनभूमिषु ॥ ६ ॥

इयं सा मत्तनुर्मत्तदेवस्त्रीगणलालिता।
सरीसृपमुखक्षुण्णा पश्य शेते धरातले ॥ ७ ॥

सरीसृपमुखैः सर्पवृश्चिकप्रभृतिकीटैः क्षुण्णा संचूर्णिता। छिद्रितेति
यावत् ॥ ७ ॥

चन्दनोद्यानखण्डेषु मम तन्वा ययानया।
चिरं विलसितं सेयं शुष्ककङ्कालतां गता ॥ ८ ॥

चन्दनानां हरिचन्दनानामुद्यानखण्डेषु विलसितं क्रीडाभिः शोभितम्।
नन्दना इति पाठे स्पष्टम् ॥ ८ ॥

सुराङ्गनाङ्गसंसर्गादुत्तुङ्गानङ्गभङ्गया।
चेतोवृत्त्या रहितया तन्वाद्य मम शुष्यते ॥ ९ ॥

उत्तुङ्गा अनङ्गभङ्गाः कामतरङ्गा यस्यां तथाविधया चेतोवृत्त्या
रहितया त्यक्तया शुष्यते। भावे लट् ॥ ९ ॥

तेषु तेषु विलासेषु तासु तासु दशासु च।
तथा तद्भावनाबन्धः कथं स्वस्थोऽसि देहक ॥ १० ॥

इदानीं देहमेव संबोध्यानुशोचति - तेषु तेष्वित्यादिना। तेषु तेषु विचित्रेषु
अवकाशेषु देवोद्यानादिप्रदेशेषु। तासु तासु विचित्रासु बाल्ययौवनादिदशासु।
तथा प्रागभूतप्रकारास्तत्तत्सौन्दर्यालंकार
गीतहास्यरतिविलासादिभावनासंबन्धा यस्य स तथाविधो भूत्वा संप्रति
कथं स्वस्थोऽसि। कुतस्तन्नानुशोचसीत्यर्थः ॥ १० ॥

हा तनो शवनामासि तापसंशोषमागता।
कङ्कालतां प्रयातासि मां भीषयसि दुर्भगे ॥ ११ ॥

52469
52470 कङ्कालतां अस्थिमात्रावशेषताम् ‖ ११ ‖
52471
52472 देहेनाहंविलासेषु [अलमिति पाठः] येनैव मुदितोऽभवम् ।
52473 कङ्कालतामुपगतात्तस्मादेव बिभेम्यहम् ‖ १२ ‖
52474
52475 ताराजालसमाकारो यत्र हारोऽभवत्पुरा ।
52476 ममोरसि निलीयन्ते तत्र पश्य पिपीलिकाः ‖ १३ ‖
52477
52478 हारो मुक्तावली ‖ १३ ‖
52479
52480 द्रवत्काञ्चनकान्तेन लोभं नीता वराङ्गना ।
52481 येन मद्वपुषा तेन पश्य कङ्कालतोह्यते ‖ १४ ‖
52482
52483 द्रवत्काञ्चनं द्रुतं सुवर्णमिव कान्तेन भासुरेण । लोभं
52484 कामभोगस्पृहाम् । उह्यते धार्यते । पश्येति पुनः पितरं प्रत्युक्तिः ‖ १४ ‖
52485
52486 पश्य मे विततास्येन तापसंशुष्ककृत्तिना ।
52487 मत्कङ्कालकुवक्त्रेण वित्रास्यन्ते वने मृगाः ‖ १५ ‖
52488
52489 कुवक्रेण विकृतेन मुखेन ‖ १५ ‖
52490
52491 पश्यामि संशुष्कतया शवोदरदरी मम ।
52492 प्रकाशार्कांशुजालेन विवेकेनेव शोभते ‖ १६ ‖
52493
52494 अन्तःप्रविष्टत्वात्प्रकाशेन प्रकाशमानेनार्कांशुजालेन शोभते ।
52495 पश्यामीत्यस्य पश्य मृगो धावतीत्यत्रेव वाक्यार्थः कर्म ‖ १६ ‖
52496
52497 मत्तनुः परिशुष्केयं स्थितोत्तानाचलोपले ।
52498 वैराग्यं नयतीवात्मतुच्छत्वेनान्तरं सताम् ‖ १७ ‖
52499
52500 आत्मनः स्वस्यास्तुच्छत्वेन फल्गुत्वेन । कुत्सितरूपताप्रदर्शनेनेति यावत् ।
52501 नयत्युपदिशतीव ‖ १७ ‖
52502
52503 शब्दरूपरसस्पर्शगन्धलोभाद्विमुक्तया ।
52504 निर्विकल्पसमाध्येव तदेतच्छुष्यते गिरौ ‖ १८ ‖
52505
52506 गन्धान्तानां लोभादभिलाषाद्विमुक्तया मत्तन्वा तदेतावत्कालं
52507 मत्परोक्षमेतदिदानीं मत्प्रत्यक्षं च निर्विकल्पः समाधिर्यस्यास्तयेव
52508 शुष्यते तप्यते ‖ १८ ‖
52509
52510 मुक्ताचित्तपिशाचेन नूनं सुखमिवास्थिता ।
52511 तनुर्दैवतभङ्गेभ्यो न बिभेति मनागपि ‖ १९ ‖
52512
52513 सुखं स्वस्थम् । दैवतोपपादितेभ्यो भङ्गेभ्योविपद्भ्यः ‖ १९ ‖
52514
52515 संशान्ते चित्तवेताले यामानन्दकलां तनुः ।
52516 याति तामपि राज्येन जागतेन न गच्छति ‖ २० ‖
52517
52518 आनन्दस्य कलां चमत्कृतिम् । जागतेन त्रैलोक्यसंबन्धिना
52519 राज्येनापीत्यन्वयः ‖ २० ‖
52520

पश्य विश्रान्तसंदेहं विगताशेषकौतुकम् ।
निरस्तकलनाजालं सुखं शेते कथं वने ॥ २१ ॥

चित्तमर्कटसंरम्भसंक्षुब्धः कायपादपः ।
तथा वेगेन चलति यथाऽमूलान्निकृन्तति ॥ २२ ॥

संरम्भेण कामादिचापलेन संक्षुब्धो न केवलं
विवेकसद्वासनादिशाखापल्लवादीन्येव स्वस्य यथा विशातयति तथा चलति किंतु
आमूलाद्यथा निकृन्तति उन्मूलितो भवति तथा चलति ।
विवेकाद्यनधिकृतस्थावरादियोनिष्वेव जीवं पातयतीत्यर्थः ॥ २२ ॥

चित्तानर्थविमुक्तोऽद्रौ गजाभ्रहरिविग्रहम् ।
नाद्य पश्यति मे देहः परानन्द इव स्थितः । २३ ॥

अद्रौ अस्मिन्मन्दरे मे देहश्चित्तलक्षणेनानर्थेन विमुक्तः सन्नद्य
गजानामभ्रैर्मेघैर्हरिभिः सिंहैश्च विग्रहं वैरं
युयुत्साप्रतिगर्जनाभिगमनादिलक्षणं न पश्यति ।
प्राक्कौतुकदर्शनपरानन्दे स्थित इव यथा प्राग्बहिः कौतुकदर्शनेन नन्दति
तथाद्य नेत्यर्थः । अथवा अद्रौ स्फटिकशिलासु प्रतिबिम्बितं जगाभ्रहरीणां
विग्रहं युद्धं मूर्तिं वाद्य न पश्यतीत्यर्थः । नाट्यं पश्यति इति पाठे तु
यथा परानन्दे परमात्मनि स्थितो जीवन्मुक्तः प्रथमं गजमिव स्थूलं
अभ्रमिव सूक्ष्मं हरिमिव कारणं च विग्रहाः शरीराणि
यस्मिंस्तथाविधमात्मनटस्य नाट्यं पश्यति तथा मम देहोऽपि
चित्तानर्थविमुक्तत्वादेव पृथक् स्थितेन मदात्मना अस्मिन्नद्रौ क्वचिद्रवाः
क्वचिदभ्राणि क्वचिद्धरयः सिंहमर्कटादय इति नानाविग्रहमात्मनटस्य
नाट्यं पश्यतीत्यर्थः ॥ २३ ॥

सर्वाशाज्वरसंमोहमिहिकाशरदागमम् ।
अचित्तत्वं विना नान्यच्छ्रेयः पश्यामि जन्तुषु ॥ २४ ॥

सर्वे आशारूपा ये ज्वरास्तन्निदानभूतो यो मोहस्तल्लक्षणाया मिहिकाया
अभ्रबीजस्य शरदागमभूतम् । सर्वासामाशानां दिशां वा सर्वास्वाशासु
दिक्षु वा ज्वरभूताया मोहमिहिकायाः शरदागमम् । अचित्तत्वं मनोनाशं
विना ॥ २४ ॥

त एव सुखसंभोगसीमान्तं समुपागताः ।
महाधिया शान्तधियो ये याता विमनस्कताम् ॥ २५ ॥

सुखसंभोगा हैरण्यगर्भानन्दान्ता विषयसुखभोगास्तेषां सीमान्तं
परमावधिं भूमानन्दम् । अपरिच्छिन्नब्रह्मसाक्षात्कारत्वान्महाधिया ।
रागादिधीकार्योपशमाच्छान्तधियः ॥ २५ ॥

सर्वदुःखदशामुक्तां संस्थितां विगतज्वराम् ।
दिष्ट्या पश्याम्यमननां वने तनुमिमामहम् ॥ २६ ॥

स्वदेहे जीवन्मुक्तदेहसाम्यं संभाव्याभिनन्दति - सर्वेति । दिष्ट्या
भाग्योदयेन ॥ २६ ॥

श्रीराम उवाच ।

भगवन्सर्वधर्मज्ञ भार्गवेण तदा किल ।
सुबहून्युपभुक्तानि शरीराणि पुनःपुनः ॥ २७ ॥

52573
52574 रामस्य प्रश्नाशयः स्पष्टः ॥ २७ ॥
52575
52576 भृगुणोत्पादिते काये तत्तस्मिंस्तस्य किं पुनः ।
52577 महानतिशयो जातः परिदेवनमेव वा ॥ २८ ॥
52578
52579 तत्तेभ्यः शरीरेभ्यः । तस्मिन्काये किं कस्माद्धेतोः महान् प्रवृद्धः ।
52580 अतिशयः स्नेहस्येति शेषः ॥ २८ ॥
52581
52582 श्रीवसिष्ठ उवाच ।
52583
52584 शुक्रस्य कलना राम यासौ जीवदशां गता ।
52585 कर्मात्मिका समुत्पन्ना भृगोर्भार्गवरूपिणी ॥ २९ ॥
52586
52587 शुक्रस्य
52588 सांप्रतिकग्रहपदाधिकारोपभोगप्रयोजकप्राक्कल्पानुष्ठितसत्कर्मणामुत्क्र
52589 आन्तिकाले एतत्कल्पभाविभृगूत्पाद्यशरीराकारेण परिणतानां
52590 तादृशाकारवासनात्मनैव प्रलये चिरमवस्थानादाकाशादिक्रमेणैतत्कल्पे
52591 भृगुशरीरोत्पत्तौ अन्नद्वारा प्राणापानप्रवाहेण तद्धृदयं प्रविश्य
52592 रेतोरूपपरिणामद्वारा
52593 चिराभ्यासदृढीकृतप्राक्तनकामकर्मवासनानुसारेणैव
52594 शुक्रदेहारम्भात्तेन कतिपयकर्मभोगेऽपि भोक्तव्यप्रारब्धकर्मणां
52595 बहूनामवशिष्टत्वाद्युक्तस्तस्मिन्स्नेहातिशयो न देहान्तरेषु
52596 तद्भोग्यकर्मणामनवशेषादित्याशयेनोत्तरं वसिष्ठ आह -
52597 शुक्रस्येत्यादिना । कलना प्राक्तनोत्क्रान्तिकालिकी भाविदेहाकारकलना ।
52598 भार्गवरूपिणी भृगूत्पाद्यदेहाकारा या प्राक्कल्पे आसीदिति शेषः ॥ २९ ॥
52599
52600 सा हीदंप्रथमत्वेन समुपेत्य परात्पदात् ।
52601 भूताकाशपदं प्राप्य वातव्यावलिता सती ॥ ३० ॥
52602
52603 सा हि सैवेदानीमौशनसी तनुः संपन्नेति परेणान्वयः । केन क्रमेण तमाह
52604 - इदंप्रथमत्वेनेत्यादिना ।
52605 परात्पदात्प्रलयकालपरिशिष्टान्मायाशबलेश्वरात् इदंप्रथमत्वेन
52606 एतत्कल्पीयप्रथमशरीरभावेन समुपेत्य
52607 सिक्तोच्छूनबीजान्तरङ्कुरशक्तिवदीषदाविर्भूय क्रमादाकाशादिपदं
52608 तत्तद्भूतसाम्यं प्राणवातेन वृष्टिद्वारा अन्नादिभावेन व्यावलिता
52609 अन्तर्भाविता सती ॥ ३० ॥
52610
52611 प्राणापानप्रवाहेण प्रविश्य हृदयं भृगोः ।
52612 क्रमेण वीर्यतामेत्य संपन्नौशनसी तनुः ॥ ३१ ॥
52613
52614 प्राणक्रियाविशेषात्मना अन्नग्रासिना अपानप्रवाहेण ॥ ३१ ॥
52615
52616 विहितब्राह्मसंस्कारा तत्र सा पितुरग्रगा ।
52617 कालेन महता प्राप्ता शुष्ककङ्कालरूपताम् ॥ ३२ ॥
52618
52619 विहिता विधिवदनुष्ठिता ब्राह्मा ब्राह्मणजन्मोचिता
52620 गर्भाधानपुंसवनजातकर्मान्नप्राशनचौलोपनयनादयः संस्कारा
52621 यस्याम् । नह्यसंस्कृततया ग्रहाधिकारो भोक्तुं शक्यत इति भावः ॥ ३२ ॥
52622
52623 इदंप्रथममायाता यदासौ ब्रह्मणस्तनुः ।
52624 अतस्तां प्रति शुक्रेण तदा तत्परिदेवितम् ॥ ३३ ॥

ब्रह्मणः सकाशादुक्तरीत्या इदं प्रथमं यथा स्यात्तथा यदा
यस्माद्धेतोरायाता अतः अकाले। पञ्चम्या अपि च्छान्दसो दाप्रत्ययः॥ ३३॥

वीतरागोऽप्यनिच्छोऽपि समङ्गाविप्ररूपवान्।
स शुशोच तनुं शुक्रः स्वभावो ह्येष देहजः॥ ३४॥

ज्ञानिनोऽपि न प्रारब्धमतिवर्तन्त इत्याशयेनाह - वीतेति॥ ३४॥

ज्ञस्याज्ञस्य च देहस्य यावद्देहमयं क्रमः।
लोकवद्व्यवहारोऽयं सक्त्यासक्त्याथवा सदा॥ ३५॥

यावद्देहं यावज्जीवनं सदा सर्वकाले क्रमो मर्यादानियमः न
कदाचिद्व्यभिचरतीत्यर्थः। ज्ञस्य सक्त्या अज्ञस्य त्वसक्त्येति विशेष इत्यर्थः॥
३५॥

ये परिज्ञातगतयो ये चाज्ञाः पशुधर्मिणः।
लोकसंव्यवहारेषु ते स्थिता लोकजालवत्॥ ३६॥

अत एवेतरव्यवहारेष्वपि तयोस्तुल्यतैवेत्याह - ये इति॥ ३६॥

व्यवहारे यथैवाज्ञस्तथैवाखिलपण्डितः।
वासनामात्रभेदोऽत्र कारणं बन्धमोक्षदम्॥ ३७॥

तर्हि द्वयोः साम्ये एकस्य बन्धोऽपरस्य मोक्ष इति विशेषः कुतस्तत्राह -
वासनेति॥ ३७॥

यावच्छरीरं तावद्धि दुःखे दुःखं सुखे सुखम्।
असंसक्तधियो धीरा दर्शयन्त्यप्रबुद्धवत्॥ ३८॥

दुःखे दुःखनिमित्तप्राप्तौ। दर्शयन्ति विडम्बयन्ति॥ ३८॥

सुखेषु सुखिता नित्यं दुःखिता दुःखवृत्तिषु।
महात्मानो हि दृश्यन्ते दृश्य एवाप्रबुद्धवत्॥ ३९॥

दुःखवृत्तिषु दुःखनिमित्तेषु दुःखिता दुःखिता इव। दृश्ये
व्यवहारविषये एवाप्रबुद्धवद्वर्तन्ते स्वात्मतत्त्वे तु सुस्थिरा
नाज्ञवद्वर्तन्त इत्यर्थः॥ ३९॥

सूर्यस्य प्रतिबिम्बानि क्षुभ्यन्ति न पुनः स्थिरम्।
चलाचलतया तज्ज्ञो लोकवृत्तिषु तिष्ठति॥ ४०॥

एकस्यैकदैव स्थिरास्थिरवृत्तिविरोधवारणाय दृष्टान्तमाह -
सूर्यस्येति। यथा सूर्यस्य जलस्थानि प्रतिबिम्बवपूंष्येव क्षुभ्यन्ति संचलन्ति
नतु नभस्थं स्थिरं बिम्बवपुस्तद्वदित्यर्थः। त्वर्थे पुनःशब्दः॥ ४०॥

अवस्थित इव स्वस्थः प्रतिबिम्बेषु भास्करः।
संत्यक्तलोककर्मापि बुद्ध एवाप्रबुद्धधीः॥ ४१॥

यथा प्रतिबिम्बेष्ववस्थितो भास्करः स्वस्थ एवास्वस्थोऽभिन्नश्चल इव भवति
तद्वद्बुद्ध एव व्यवहारस्थोऽप्रबुद्धधीर्भवतीत्यर्थः॥ ४१॥

52677 मुक्तबुद्धीन्द्रियो मुक्तो बद्धकर्मेन्द्रियोऽपि हि |
52678 बद्धबुद्धिन्द्रियो बद्धो मुक्तकर्मेन्द्रियोऽपि हि || ४२ ||
52679
52680 तर्ह्यज्ञवद्विहितनिषिद्धकर्मभिस्तस्य बन्धोऽपि स्यादित्याशङ्क्य
52681 बुद्धिन्द्रियासङ्गपूर्वककर्मणामेव बन्धकता नान्येषामित्याशयेनाह ##-
52682 | इन्द्रियार्थान्विमूढात्मा मिथ्याचारः स उच्यते || इत्यादिना || ४२ ||
52683
52684 सुखदुःखदृशो लोके बन्धमोक्षदृशस्तथा |
52685 हेतुर्बुद्धिन्द्रियाण्येव तेजांसीव प्रकाशने || ४३ ||
52686
52687 सुखदुःखदृशः सुखदुःखभोगस्य || ४३ ||
52688
52689 बहिर्लोकोचिताचारस्त्वन्तराचारवर्जितः |
52690 समो ह्यतीव तिष्ठ त्वं संशान्तसकलैषणः || ४४ ||
52691
52692 ननु तर्हि मया कथं स्थेयं तत्राह - बहिरिति | आचारवर्जितः
52693 कूटस्थात्मदृढनिष्क्रियः | अत एव समो वैषम्यशून्यः || ४४ ||
52694
52695 सर्वैषणाविमुक्तेन स्वात्मनात्मनि तिष्ठता |
52696 कुरु कर्माणि कार्याणि नूनं देहस्य संस्थितिः || ४५ ||
52697
52698 एषणा कर्मफलासङ्गस्तद्विमुक्तेन आत्मनि ब्रह्मणि तिष्ठता
52699 प्रतिष्ठितेनात्मना मनसा कर्माणि कुरु | नूनमिति हेतौ | यतो देहस्य कार्याणि
52700 कर्माणि संस्थितिः स्वभाव इत्यर्थः | नहि देहभृता शक्यं त्यक्तुं
52701 कर्माण्यशेषतः इति भगवताप्युक्तम् || ४५ ||
52702
52703 आधिव्याधिमहावर्तगर्तसंसारवर्त्मनि |
52704 ममतोग्रान्धकूपेऽस्मिन्मा पतातापदायिनि || ४६ ||
52705
52706 आधयो मानसदुःखानि | व्याधयः शारीरदुःखानि | महान्त आवर्ता
52707 मरणजन्मभ्यां परिवर्तनानि तान्येव गर्ताः श्वभ्राणि यस्मिंस्तथाविधे
52708 संसारवर्त्मनि ममतोग्रान्धकूपे मा पत || ४६ ||
52709
52710 न त्वं भावेषु नो भावास्त्वयि तामरसेक्षण |
52711 शुद्धबुद्धस्वभावस्त्वमात्मान्तः सुस्थिरो भव || ४७ ||
52712
52713 तदपतने उपायमाह - न त्वमित्यादिना | भावेषु दृश्यवस्तुषु देहादिषु
52714 तिष्ठसीत्यर्थः | त्वयि सन्तीति शेषः || ४७ ||
52715
52716 त्वं ब्रह्म ह्यमलं शुद्धं त्वं सर्वात्मा च सर्वकृत् |
52717 सर्वं शान्तमजं विश्वं भावयन्वै सुखी भव || ४८ ||
52718
52719 भावयन् विचारेणानुभवन्सन् || ४८ ||
52720
52721 व्यपगतममतामहान्धकारः
52722 पदममलं विगतैषणं समेत्य |
52723 प्रभवसि यदि चेतसो महात्मं-
52724 स्तदतिधिये महते सते नमस्ते || ४९ ||
52725
52726 हे महात्मन् विगतैषणं सकलैषणानिवर्तकं
52727 पूर्णानन्दममलमविद्यादिशून्यं पदं समेत्य सम्यगनुभवेन प्राप्य
52728 व्यपगतममतामहान्धकारः संश्वेतसश्चित्तस्य यदि वधे प्रभवसि

52729 समर्थः स्यास्तर्हि अतिधिये अपरिमितबुद्धये महते पूर्णाय सते
52730 परमार्थसत्यब्रह्मभूताय ते नमः । अस्मदादीनामपि सदा वन्द्यो
52731 भविष्यसीत्याशयः ॥ ४९ ॥
52732
52733 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मो० स्थितिप्र० भार्गवोपा०
52734 भार्गवपरिदेवनप्रसङ्गेनोपदेशकरणं नाम पञ्चदशः सर्गः ॥
52735 १५ ॥
52736
52737 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे
52738 भार्गवपरिदेवनप्रसङ्गेनोपदेशकरणं नाम पञ्चदशः सर्गः ॥ १५ ॥
52739
52740
52741 षोडशः सर्गः १६
52742
52743 श्रीवसिष्ठ उवाच ।
52744
52745 अथाक्षिप्य वचस्तस्य तनयस्य तथा भृगोः ।
52746 उवाच भगवान्कालो वचो गम्भीरनिःस्वनः ॥ १ ॥
52747
52748 कालवाक्याद्गते काले प्रवेशः स्वतनौ पुनः ।
52749 शुक्रस्य दैत्यगुरुता जीवन्मुक्तिश्च वर्ण्यते ॥ १ ॥
52750
52751 तथा प्राग्वर्णितप्रकारं भृगोस्तनयस्य शुक्रस्य वचः
52752 परिदेवनवाक्यमाक्षिप्य अयुक्तत्ववर्णनेन निरस्य ॥ १ ॥
52753
52754 काल उवाच ।
52755
52756 समङ्गातापसीमेतां तनुं संत्यज्य भार्गव ।
52757 प्रविशेमां तनुं साधो नगरीमिव पार्थिवः ॥ २ ॥
52758
52759 काले पूर्वजया तन्वा तपः कृत्वा तया पुनः ।
52760 गुरुत्वमसुरेन्द्राणां कर्तव्यं भवतानघ ॥ ३ ॥
52761
52762 काले आधिकारिकप्रारब्धोद्बोधकाले । पूर्वजया इदंप्रथमया ॥ ३ ॥
52763
52764 महाकल्पान्त आयाते भवता भार्गवी तनुः ।
52765 अपुनर्ग्रहणायैषा त्याज्या प्रम्लानपुष्पवत् ॥ ४ ॥
52766
52767 कदा तर्हि सा त्याज्या तदाह - महाकल्पान्ते इति । महतः
52768 सहस्रयुगपरिमितस्य कल्पस्य ब्रह्मदिनस्यान्ते । अपुनर्ग्रहणाय पुनः
52769 शरीरान्तराग्रहणाय । उपभुक्तम्लानपुष्पवत् ॥ ४ ॥
52770
52771 जीवन्मुक्तपदं प्राप्तस्तन्वा प्राक्तनरूपया ।
52772 महासुरेन्द्रगुरुतां कुर्वंस्तिष्ठ महामते ॥ ५ ॥
52773
52774 प्राक्तनरूपया पूर्वकल्पार्जितकर्मारब्धया ॥ ५ ॥
52775
52776 कल्याणमस्तु वां यामो वयं त्वभिमतां दिशम् ।
52777 न किंचिदपि यच्चित्तं यस्य नाभिमतं भवेत् ॥ ६ ॥
52778
52779 कल्याणं शुभं वां युवाभ्यामस्तु । वयमिति अस्मदो द्वयोश्च
52780 इत्येकस्मिन्बहुवचनमनुचरसाहित्यविवक्षया वा । अभिमतामिति

52781 दिग्विशेषणमनभिमतव्यावृत्तये नोपात्तं
52782 पूर्णात्मनोऽनभिमतस्यैवाप्रसिद्धेः। यस्य तु चित्तस्येदमभिमतमिदं
52783 नाभिमतमिति विकल्पो भवेत्तद्यदनभिमतं विहायाभिमतमुपसर्पेच्चित्तं
52784 पर्यालोच्यमानं न किंचिद्वस्तुरूपमस्ति तस्मादभिमतां दिशमित्यस्य
52785 परमप्रेमास्पदमात्मभावावस्थानं याम इति स्वाशयसूचनाय
52786 विशेषणमुपात्तमिति दर्शयन्नाह - न किंचिदिति॥ ६॥
52787
52788 इत्युक्त्वा मुञ्चतोर्बाष्पं तयोः सोऽन्तरधीयत।
52789 तप्ताङ्ग्योरिव रोदस्योः सममंशुभिरंशुमान्॥ ७॥
52790
52791 तयोर्भृगुशुक्रयोः स्नेहाद्बाष्पं मुञ्चतोः। षष्ठी चानादरे इति
52792 भावलक्षणे षष्ठी सप्तमी वा॥ ७॥
52793
52794 गते तस्मिन्भगवति कृतान्ते भवितव्यताम्।
52795 विचार्य भार्गवोऽभेद्यां नियतेर्नियतां गतिम्॥ ८॥
52796
52797 कृतान्ते काले। भवितव्यतामवश्यभाविकर्मगतिम्। नियतेरीश्वरेच्छाया
52798 नियतामनिवार्यां गतिं च विचार्येत्यर्थः॥ ८॥
52799
52800 कालकारणसंशुष्कां भाविपुष्पशुभोदयाम् [फलोदयामिति
52801 पाठः]।
52802 विवेश तां तनुं बालां सुलतामिव माधवः॥ ९॥
52803
52804 कालश्चिरकालो हेमन्तशिशिरकालश्च तेन कारणेन निमित्तेन संशुष्काम्।
52805 माधवो वसन्तः॥ ९॥
52806
52807 सा ब्राह्मणीतनुर्भूमौ विवर्णवदनाङ्गिका।
52808 पपात कम्पिता तूर्णं छिन्नमूला लता यथा॥ १०॥
52809
52810 सा वासुदेवाभिधाना समङ्गा तापसतनुः॥ १०॥
52811
52812 तस्यां प्रविष्टजीवायां पुत्रतन्वां महामुनिः।
52813 चकाराप्यायनं मन्त्रैः स कमण्डलुवारिभिः॥ ११॥
52814
52815 तस्यां शुक्राख्यायां पुत्रतन्वां प्रविष्टो जीवो यस्यां तथाविधायां
52816 सत्याम्॥ ११॥
52817
52818 सर्वा नाड्यस्ततस्तन्वास्तस्याः पूर्णा विरेजिरे।
52819 सरितः प्रावृषीवाम्बुपूरपूरितकोटराः॥ १२॥
52820
52821 ततः आप्यायनानन्तरम्॥ १२॥
52822
52823 नलिनी प्रावृषीवासौ मधाविव नवा लता।
52824 यदा पूर्णा तदा तस्याः प्रान्ताः पल्लविता बभुः॥ १३॥
52825
52826 प्रान्ता अङ्गुलिनखकेशादयः पल्लविताः पल्लववन्निर्गताः सन्तो बभुः॥ १३॥
52827
52828 अथ शुक्रः समुत्तस्थौ वहत्प्राणसमीरणः।
52829 रसमारुतसंयोगादापूर्ण इव वारिदः॥ १४॥
52830
52831 रसस्य जलस्य मारुतस्य पुरोवातस्य च संयोगात्॥ १४॥
52832

52833 पुरोऽभिवादयामास पितरं पावनाकृतिम् ।
52834 प्रथमोल्लासितो मेघः स्तनितेनेव पर्वतम् ॥ १५ ॥
52835
52836 स्तनितेनेवेति दृष्टान्तबलान्नामगोत्रकीर्तनपूर्वकता अभिवादने गम्यते ॥ १५ ॥
52837
52838 पिताथ प्राक्तनीं तन्वा आलिलिङ्गाकृतिं ततः ।
52839 स्नेहार्द्रवृत्तिर्जलदश्चिरादद्रितटीमिव ॥ १६ ॥
52840
52841 तन्वाः पुत्रतन्वाः । शोषविशीर्णाकृत्यपेक्षया प्राक्तनीं ।
52842 पूर्ववद्यौवनसौन्दर्यादिशालिनीमिति यावत् ॥ आकृतिं आकारम् ॥ १६ ॥
52843
52844 भृगुर्ददर्श सस्नेहं प्राक्तनीं तानवीं तनुम् ।
52845 मत्तो जातेयमित्यास्थां हसन्नपि महामतिः ॥ १७ ॥
52846
52847 बालत्वात्तनुः सूक्ष्मा सैव तानवी तां तनुं पुत्रदेहम् । तत्त्वदृशा
52848 अनौचित्यचिन्तनाद्धसन्नपि । चकारेति शेषः ॥ १७ ॥
52849
52850 मत्पुत्रोऽयमिति स्नेहो भृगुमप्यहरत्तदा ।
52851 परमात्मीयता देहे यावदाकृतिभाविनी ॥ १८ ॥
52852
52853 यावदाकृति यावज्जीवं भाविनी । आवश्यके णिनिः ।
52854 प्रारब्धप्राबल्यादवश्यभाविनीत्यर्थः ॥ १८ ॥
52855
52856 बभूवतुः पितापुत्रौ तावथान्योन्यशोभितौ ।
52857 निशावसानमुदितावर्कपद्माकराविव ॥ १९ ॥
52858
52859 चिरसंगमसंबद्धाविव चक्राह्वदम्पती ।
52860 घनागमनसस्नेहौ मयूरजलदाविव ॥ २० ॥
52861
52862 चक्राह्वदम्पती चक्रवाकजायापती । घनशब्देन तत्कालो लक्ष्यते ।
52863 बभूवतुरित्यनुषङ्गः ॥ २० ॥
52864
52865 चिरकालदृढोत्कण्ठौ तुल्ययोग्यतया तया ।
52866 स्थित्वा तत्र मुहूर्तं तावथोत्थाय महामती ॥ २१ ॥
52867
52868 चिरकालवियोगादृढीकृतसमागमोत्कण्ठौ । तया जगत्प्रसिद्धया
52869 वर्णितरूपया च तुल्यानन्दभरयोग्यतया मुहूर्तं स्थित्वा जढीभूय ॥ २१ ॥
52870
52871 समङ्गाद्विजदेहं तं भस्मसात्तत्र चक्रतुः ।
52872 को हि नाम जगज्जातमाचारं नानुतिष्ठति ॥ २२ ॥
52873
52874 आचारं सदाचारम् । तथाचाचारपरिपालनमेव दाहादिफलं न
52875 फलान्तरमत्रेत्यर्थः ॥ २२ ॥
52876
52877 एवं तौ कानने तस्मिन्पावने भृगुभार्गवौ ।
52878 संस्थितौ तापसौ दीप्तौ दिवीव शशिभास्करौ ॥ २३ ॥
52879
52880 चेरतुर्ज्ञातविज्ञेयौ जीवन्मुक्तौ जगद्गुरू ।
52881 देशकालदशौघेषु सुसमौ सुस्थिरौ ततः ॥ २४ ॥
52882
52883 देशकालानां शुभाशुभादिदशौघेषु समौ हर्षविषादवैषम्यरहितौ ।
52884 यतः स्वरूपे सुस्थिरावित्यर्थः ॥ २४ ॥

52885
52886 अथासुरगुरुत्वं स शुक्रः कालेन लब्धवान् ।
52887 भृगुरप्यात्मनो योग्ये पदेऽतिष्ठदनामये ॥ २५ ॥
52888
52889 असुरगुरुत्वग्रहणं ग्रहाधिकारस्याप्युपलक्षणम् । पदे प्राजापत्याधिकारे ॥
52890 २५ ॥
52891
52892 शुक्रोऽसौ प्रथममिति क्रमेण जात-
52893 स्तस्मात्सत्परमपदादुदारकीर्तिः ।
52894 स्वेनाशु स्मृतिपदविभ्रमेण पश्चा-
52895 दन्येषु प्रविलुलितो दशान्तरेषु ॥ २६ ॥
52896
52897 उक्तां शुक्रगतिं संक्षिप्योपसंहरति - शुक्र इति । स्वेन स्वीयेन
52898 स्मृतिपदं पुनः पुनः स्मरणारूढा अप्सरास्तत्प्रयुक्तेन
52899 मनोराज्यविभ्रमेण ॥ २६ ॥
52900
52901 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपायेषु स्थितिप्रकरणे
52902 भार्ग० शुक्रस्य पुनर्जीवनं नाम षोडशः सर्गः ॥ १६ ॥
52903
52904 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे शुक्रस्य
52905 पुनर्जीवनं नाम षोडशः सर्गः ॥ १६ ॥
52906
52907 सप्तदशः सर्गः १७
52908
52909 श्रीराम उवाच ।
52910
52911 भगवन्भृगुपुत्रस्य प्रतिभासानुभूतितः ।
52912 यथैषा सफला जाता तथान्यस्य न किं भवेत् ॥ १ ॥
52913
52914 शुद्धानामिह चित्तानां सत्यसंकल्पतोच्यते ।
52915 वासनाद्दृष्टतुल्यत्वे मेलनं च परस्परम् ॥ १ ॥
52916
52917 ननु शुक्रस्याप्सरः स्वर्गादिमनोराज्यस्य चिरं भोगेन
52918 साफलयमिवान्येषामपि तस्य तथात्वं किं न स्यादिति रामः शङ्कते -
52919 भगवन्निति । या भानोरथिकी प्रतिभा सैषा यथा स्वर्गाद्यनुभूतितः सफला
52920 जाता तथा अन्येषामपि किं न भवेदित्यन्वयः ॥ १ ॥
52921
52922 श्रीवसिष्ठ उवाच ।
52923
52924 इयं प्रथममुत्पन्ना सा तनुर्ब्रह्मणः पदात् ।
52925 शुद्धा जातिर्भार्गवस्य नान्यजन्मकलङ्किता ॥ २ ॥
52926
52927 प्रतिभानां फलोपभोगसंवादेन सफलत्वे द्वौ हेतू सत्यसंकल्पत्वयोग्या
52928 चित्तशुद्धिः उत्क्रान्तिकालोद्बुद्धपरिपक्वभाविभोगप्रदकर्मोद्भावितत्वं च ।
52929 तत्राद्यं शुक्रस्य दर्शयन्समाधत्ते - इयं प्रथममित्यादिना । शुक्रस्य
52930 प्राक्कल्पीयसर्वदोषाणां तच्चरमजन्मानुष्ठितकर्मोपासनैः
52931 क्षयादस्मिन्कल्पे सेयं तनुः
52932 प्रथममुत्पन्नेत्येतत्कल्पीयदोषाप्रसक्तेर्ब्रह्मणः
52933 पदादेवाधिकारभोगार्थं धातुः संकल्पाज्जातत्वेन
52934 तत्सांकल्पिकदोषस्याप्रसक्तेरुभयकुलशुद्धा ब्राह्मणजातिरिति
52935 बीजगर्भजात्यादिदोषस्याप्यप्रसक्तेर्नासत्यसंकल्पताप्राप्तिरित्यन्येभ्योऽस्य
52936 विशेष इत्यर्थः ॥ २ ॥

52937
52938 सर्वैषणानां संशान्तौ शुद्धचित्तस्य या स्थितिः ।
52939 तत्सत्यमुच्यते सैषा विमला चिदुदाहृता ॥ ३ ॥
52940
52941 अन्येषां ब्रह्मविदामपि सत्यसंकल्पत्वे रागादिदोषक्षयप्रयुक्तशुद्ध्या
52942 चित्तस्य सत्यात्मभावापत्तिरेव हेतुरित्याशयेनाह - सर्वैषणानामिति ॥ ३ ॥
52943
52944 मनोनिर्मलसत्त्वात्म यद्भावयति यादृशम् ।
52945 तत्तथाशु भवत्येव यथावर्तो भवेत्पयः ॥ ४ ॥
52946
52947 यथा भृगुसुतस्यैव बिभ्रमः प्रोत्थितः [सोत्थितः इति पाठः]
52948 स्वयम् ।
52949 प्रत्येकमप्येवमेव दृष्टान्तोऽत्र भृगोः सुतः ॥ ५ ॥
52950
52951 अन्येषां चित्तशुद्ध्यभावात्सत्यसंकल्पत्वासिद्ध्या आद्यकल्पासंभवेऽपि
52952 द्वितीयकल्पानुसारात्प्राक्तनमरणोद्बुद्धकर्मवासनाद्यनुगुणसुखदुःखभ्
52953 ओगानुकूलजगत्प्रतिभासे शुक्रसाम्यमस्त्येवेत्याशयेनाह - यथेति ॥ ५ ॥
52954
52955 बीजस्थाङ्कुरपत्रादि स्वं चमत्कुरुते यथा ।
52956 सर्वेषां भूतसङ्घानां भ्रमखण्डास्तथैव हि ॥ ६ ॥
52957
52958 भ्रमखण्डा भ्रान्तिकृतद्वैतविभागाः ॥ ६ ॥
52959
52960 यदिदं दृश्यते विश्वमेवमेवाखिलं जगत् ।
52961 प्रत्येकमुदितं मिथ्या मिथ्यैवास्तमुपैति च ॥ ७ ॥
52962
52963 दृश्यते अस्माभिरिति शेषः । प्रत्येकं प्रतिजीवम् ॥ ७ ॥
52964
52965 नास्तमेति नचोदेति जगत्किंचन कस्यचित् ।
52966 भ्रान्तिमात्रमिदं मायामुग्धेव परिजृम्भते ॥ ८ ॥
52967
52968 परमार्थदृशा त्वाह - नास्तमिति । मुग्धा उन्मत्तेव ॥ ८ ॥
52969
52970 यथा संप्रतिभासस्थः स्वयं संसारखण्डकः ।
52971 तथा तेषां सहस्राणि मिथ्या दृष्टानि सन्ति हि ॥ ९ ॥
52972
52973 एकैकस्यापि जीवस्यानेकं जगदनुभवसिद्धमित्याह - यथेति । संप्रति
52974 जागरे भासोऽपरोक्षावभासस्तत्र तिष्ठतीति भासस्थः । अस्माकमिति शेषः ।
52975 तेषां संसारखण्डानाम् । सन्ति स्वप्नभ्रमादावित्यर्थः । अथवा यदि
52976 प्रतिजीवं संसाराः प्रत्येकमुदितास्तर्हि कुतो न भासन्त इति चेत् भासन्त एवेत्याह
52977 - यथेति । सम्यक्प्रतिभासः स्फुटानुभवस्तत्स्थः अस्माकमिति शेषः ।
52978 तेषां जीवान्तराणां सहस्राणि संसाराणामिति शेषः ॥ ९ ॥
52979
52980 स्वप्नसंकल्पनगरव्यवहाराः परस्परम् ।
52981 पृथग्यथा न दृश्यन्ते तथैते संसृतिभ्रमाः ॥ १० ॥
52982
52983 तर्हि सर्वैः परस्परं संसाराः पृथक्कुतो न दृश्यन्ते तत्राह -
52984 स्वप्नेति । यथान्यस्य स्वप्नोऽन्यैर्न दृश्यते तद्वदित्यर्थः ॥ १० ॥
52985
52986 एवं नगरवृन्दानि नभस्संकल्परूपिणि ।
52987 सन्ति तानि न दृश्यन्ते मिथ्याज्ञानदृशं विना ॥ ११ ॥
52988

52989 पिशाचयक्षरक्षांसि सन्त्येवंरूपकाणि ह।
52990 संकल्पमात्रदेहानि सुखदुःखमयानि च॥ १२॥
52991
52992 एवमेव वयं चेमे संपन्ना रघुनन्दन।
52993 स्वसंकल्पात्मकाकारा मिथ्यासत्यत्वभाविनः॥ १३॥
52994
52995 एवमेव शुक्रवदेव॥ १३॥
52996
52997 एवंरूपैव हि परे विद्यते सर्गसंततिः।
52998 न वास्तवी वस्तुता तु संस्थितैवमवस्तुनि॥ १४॥
52999
53000 व्यष्टेः परे हिरण्यगर्भेऽपि एवमन्धपरम्परयैव संस्थिता॥ १४॥
53001
53002 प्रत्येकमुदितं विश्वमेवमेव मुधैव हि।
53003 वनगुल्मकरूपेण वसन्तैकरसो यथा॥ १५॥
53004
53005 सर्वजीवजगदाकारेण ब्रह्मैवोदितमित्याह - प्रत्येकमिति॥ १५॥
53006
53007 प्रथमोऽयं स्वसंकल्पः प्रथामभ्यागतो यथा।
53008 तथातिपरमार्थेन दृष्टेनेत्थं विभाव्यते॥ १६॥
53009
53010 प्राथमिकः स्वसंकल्प एव जगदाकारप्रथामभ्यागत इति कथं ज्ञायते
53011 तत्राह - प्रथम इति। तत्त्वदर्शनेन ज्ञायत इत्यर्थः॥ १६॥
53012
53013 प्रत्येकमुदितं चित्तं स्वस्वभावोदरस्थितम्।
53014 इदमित्थं समारम्भं जगत्पश्यन्विनश्यति॥ १७॥
53015
53016 स्वस्य स्वभावः अनाद्यज्ञानं तदुदरस्थितं चित्तमेव जगदिति
53017 पश्यन्विनश्यति स्वयमित्यर्थः॥ १७॥
53018
53019 प्रतिभासवशादस्ति नास्ति वस्त्ववलोकनात्।
53020 दीर्घस्वप्नो जगज्जालमालानं चित्तदन्तिनः॥ १८॥
53021
53022 तथाच प्रतिभासकालिक्येव जगत्सत्ता न वास्तवाधिष्ठानदर्शने
53023 स्थातुमर्हतीत्याह - प्रतिभासेति॥ १८॥
53024
53025 चित्सत्तैव जगत्सत्ता जगत्सत्तैव चित्तकम्।
53026 एकाभावाद्द्वयोर्नाशः स च सत्यविचारणात्॥ १९॥
53027
53028 तर्हि जगति किं प्राक्प्रतिभाता सत्ता अत्यन्तासती नेत्याह - चित्सत्तैवेति।
53029 चित्तसत्तैव हि जगत् इति पाठे आलानं चित्तदन्तिन इति यदुक्तं तदाशयं
53030 स्फुटयति - चित्तसत्तैवेति। तत्फलमाह - एकाभावादिति॥ १९॥
53031
53032
53033
53034 शुद्धस्य प्रतिभासो हि सत्यो भवति चेतसः।
53035 प्रमार्जनादिव मणेर्मलिनस्येह युक्तितः॥ २०॥
53036
53037 चित्तसत्तया जगत्सत्ता क्व दृष्टेति चेच्छुद्धचित्तानां सत्यसंकल्पोत्थे वस्तुनि
53038 दृष्टेत्याशयेनाह - शुद्धस्येति। मणेः प्रमार्जनान्मणिकार्यस्य
53039 प्रकाशविषनिर्हरणादेरिवेत्यर्थः। युक्तित उपायतः॥ २०॥
53040

53041 चिरमेकदृढाभ्यासाच्छुद्धिर्भवति चेतसः।
53042 अनाक्रान्तस्य संकल्पैः प्रतिभोदेति चेतसः॥ २१॥
53043
53044 एकदृढाभ्यास ऐकाग्र्यदार्ढ्याभ्यासः। प्रतिभा
53045 स्वच्छताप्रयुक्तभास्वरता॥ २१॥
53046
53047 सुवर्णं न स्थितिं याति मलवत्यंशुके यथा।
53048 एका दृष्टिः स्थितिं याति न म्लाने चित्तके तथा॥ २२॥
53049
53050 सुवर्णं शोभनवर्णं रञ्जकद्रव्यं द्रुतस्वर्णं वा। मलवत्यंशुके
53051 मलिनवस्त्रे। एका दृष्टिरद्वैतात्मज्ञानम्॥ २२।
53052
53053 श्रीराम उवाच।
53054
53055 प्रतिभासात्मनि जगत्येते कालक्रियाक्रमाः।
53056 सोदयास्तमया जाताः कथं शुक्रस्य चेतसः॥ २३॥
53057
53058 वासनानुसारी जगद्भ्रम इत्युक्तं तत्राननुभूते
53059 स्वर्गाप्सरोजन्मपरम्परादिवैचित्र्यक्रमे वासनारूपबीजासंभवाच्छुक्रस्य
53060 कथं तदारोपक्रमः संपन्न इत्याशयेन रामः पृच्छति -
53061 प्रतिभासात्मनीति। शुक्रस्य चेतसश्चित्तस्य प्रतिभासात्मनि
53062 प्रातिभासिककल्पनात्मके जगति कथं केन हेतुना जाताः॥ सोदयास्तमया
53063 इत्यनेन प्रतिभासोदयास्तमययोः प्रतिभासकाले ग्रहणायोगादप्रतिभासकाले
53064 च तयोरप्यनुभवासिद्धेः सुतरां तद्गोचरवासनाऽसिद्धिस्तदसिद्धौ
53065 क्रमस्याप्यसिद्धिरित्याशयः सूचितः॥ २३॥
53066
53067 श्रीवसिष्ठ उवाच।
53068
53069 यादृग्जगदिदं दृष्टं शुक्रेण पितृशास्त्रतः।
53070 तादृक्कस्य स्थितं चित्ते मयूराण्डे मयूरवत्॥ २४॥
53071
53072 पितृतः पितृजन्यचक्षुरादिवशात्पितृवाक्याच्च। शास्त्रतः
53073 श्रुतिस्मृत्यादिभ्यश्च यादृक्
53074 यादृशोत्पत्तिनाशादिविशिष्टमस्तीत्यवगतमैहिकं पारलौकिकं च तस्य चित्ते
53075 तादृगेव संस्काररूपेण स्थितम्। तथाच
53076 पितृशास्त्रादिप्रमाणतदाभासैरेव [प्रमाणतयाभासैः इति
53077 पाठः] वासनोदयस्तस्याप्यासीदेवेत्यर्थः।
53078 उत्पत्तिनाशक्रमगोचरसंस्कारः साक्षिणैव सेत्स्यतीति भावः॥ २४॥
53079
53080 स्वभावकोशस्थमिदं तदेतेन क्रमोदितम्।
53081 बीजेनाङ्कुरपत्रादिलतापुष्पफलं यथा॥ २५॥
53082
53083 स्वभावकोशश्चिदधिष्ठिता सजीवा अविद्या। एतेन पितृशास्त्रनिमित्तेन॥ २५॥
53084
53085 जीवो यद्वासनाबद्धस्तदेवान्तः प्रपश्यति।
53086 स्वरूपं चात्र दृष्टान्तो दीर्घस्वप्नस्त्विदं जगत्॥ २६॥
53087
53088 स्वरूपं स्वप्ने स्वकल्पितं शरीरम्। ननु नायं स्वप्नो नेत्याह - दीर्घेति॥
53089 २६॥
53090
53091 प्रत्येकमुदितो राम नूनं संसृतिखण्डकः।
53092 रात्रौ सैन्यनरस्वप्नजालवत्स्वात्मनि स्फुटः॥ २७॥

53093
53094 यथा सैन्यस्था नरा दिवा सैन्यवासनावासिता रात्रौ स्वप्ने प्रत्येकं सैन्यं
53095 स्वस्ववासनाकल्पितं नानासैन्यं पश्यन्तोऽपि ऐक्यं मन्यन्ते तद्वदित्यर्थः ॥
53096 २७ ॥
53097
53098 श्रीराम उवाच।
53099
53100 एष संसृतिखण्डोत्थो मिथः स मिलति स्वयम्।
53101 नो वा मिलति तन्मे त्वं यथावद्वक्तुमर्हसि ॥ २८ ॥
53102
53103 नन्वेवं सति नरस्तदीयसंसारश्च परैर्न द्रष्टुं शक्यत इति गुरूणां
53104 शिष्योद्धाराय प्रवृत्तिः शास्त्रप्रणयनं च स्वप्रकृतपरोपकार इव न
53105 शिष्यं प्राप्नुयात् तथा चोपदेशालाभाच्छिष्यस्यानिर्मोक्षप्राप्तौ तुल्ययुक्त्या
53106 गुरोरपि स्वगुरोरुपदेशालाभादनिर्मोक्षदोषानिर्मोक्ष इति मूलघातिन्येवेयं
53107 कल्पनेत्याशयेन रामः पृच्छति - एष इति। यदि न मिलति तदोक्तदोषः यदि
53108 मिलति तर्हि साधारणोऽयं संसारो नैकैकस्य ज्ञानेन बाधितुं शक्य
53109 इत्युभयतस्पाशा रज्जिरित्याशयः ॥ २८ ॥
53110
53111 श्रीवसिष्ठ उवाच।
53112
53113 मलिनं हि मनोऽवीर्यं न मिथः श्लेषमर्हति।
53114 अयोऽयसि च संतप्ते शुद्धे तप्तं तु लीयते ॥ २९ ॥
53115
53116 दोषद्वयास्पर्शाय व्यवस्थयोत्तरमाह - मलिनमिति। अयं भवः -
53117 मलिनं हि मनः शुद्धे मनसि मिथः परस्परसंश्लेषं मेलनं नार्हति।
53118 कुतः यतः अवीर्यं शुद्धमेलनयोग्यसौक्ष्म्यसामर्थ्यहीनम्। तप्तं
53119 कषायपाचनशुद्धं तु संतप्ते अयसि संतप्तमय इव लीयते ऐक्यं गच्छति।
53120 यतस्तत्समाधिज्ञाभ्यस्तसौक्ष्म्येण सवीर्यमित्याशयः। तथाच
53121 सवीर्यत्वादेव देवानां परकीयस्वप्नप्रवेशेन वरदानानुग्रह इव
53122 शिष्यमनःकल्पितजगदन्तःप्रवेशेन बोधनसमर्थमेवेति नाद्यो दोषः।
53123 साधारणत्वानभ्युपगमान्न द्वितीयदोषोऽपीति भावः ॥ २९ ॥
53124
53125 चित्ततत्त्वानि शुद्धानि संमिलन्ति परस्परम्।
53126 एकरूपाणि तोयानि यान्त्यैक्यं नाविलानि हि ॥ ३० ॥
53127
53128 शुद्धिर्हि चित्तस्य विवासनत्व-
53129 मभूतसंवेदनमेकरूपम्।
53130 तस्याशु शुद्ध्यां भवति प्रबुद्ध-
53131 स्तन्मात्रयुक्त्या परसंगमेति ॥ ३१ ॥
53132
53133 चित्तशुद्धेः परां काष्ठां दर्शयंस्तत्प्राप्त्यैव तत्त्वज्ञता दृढा
53134 परमप्राप्तिश्च प्रतिष्ठिता भवति नान्यथेत्युपसंहरति - शुद्धिर्हीति।
53135 विवासनत्वमात्यन्तिकवासनाक्षय एव चित्तस्य परमा शुद्धिरित्यर्थः। तस्य
53136 चित्तस्य तन्मात्रस्य तादृशचिन्मात्रपरिशेषलक्षणशुद्धिमात्रस्य युक्त्या
53137 लाभेन परेण परमकैवल्यात्मना सङ्गं मोक्षमेतीति यावत् ॥ ३१ ॥
53138
53139 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मो० स्थि० भार्गवोपाख्याने
53140 मनोराज्यसंमेलनं नाम सप्तदशः सर्गः ॥ १७ ॥
53141
53142 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे
53143 मनोराज्यसंमेलनं नाम सप्तदशः सर्गः ॥ १७ ॥
53144

53145 अष्टादशः सर्गः १८
53146
53147 श्रीवसिष्ठ उवाच।
53148
53149 सर्वसंसृतिखण्डेषु भूतबीजकलात्मनः।
53150 तन्मात्रप्रतिभासस्य प्रतिभासेन भिन्नता॥ १॥
53151
53152 मलिनानां तु मलिनैर्योगोऽवस्थाविशोधतः।
53153 तन्मात्रयुक्तिर्विज्ञस्य परसङ्गश्च वर्ण्यते॥ १॥
53154
53155 शुद्धमनोराज्यस्य शुद्धैर्मलिनैश्च संमेलनप्रकार उक्तः। इदानीं
53156 मलिनानां मलिनैर्मेलनप्रकारं जाग्रदाद्यवस्थानां
53157 द्रष्टृदृश्यादीनां च विशोधनेन चरमश्लोकोक्ततन्मात्रयुक्तिं
53158 [युक्तितया इति पाठः] तया परसङ्गप्राप्तिं च व्युत्पादयितुं
53159 प्रागुक्तं
53160 जाग्रदादिप्रपञ्चभेदमसाधारणस्वात्मप्रतिभासाधीनप्रतिभासेन
53161 साधयति - सर्वेति। सर्वेषां जीवानां स्वस्वकल्पितसंसृतिरूपेषु
53162 सृष्टिसंसृतेः खण्डेषु शकलेषु भूतात्मनः स्थूलस्य बीजात्मनः
53163 सूक्ष्मस्य कलनं कला लिङ्गभावोन्मुखता तदात्मनः कारणरूपस्य
53164 प्रपञ्चस्य प्रतिजीवं भिन्नता योक्ता सा स एव तन्मात्रः प्रतिभासते नान्यदिति
53165 तन्मात्रप्रतिभासः स्वप्रकाशचिदेकरस आत्मा तस्य प्रतिभासेन
53166 प्रतिनियताकारकल्पनया न वस्तुवृत्त्येत्यर्थः॥ १॥
53167
53168 प्रवृत्तिर्वा निवृत्तिर्वा तन्मात्रावृत्तिपूर्वकम्।
53169 सर्वस्य जीवजातस्य सुषुप्तत्वादनन्तरम्॥ २॥
53170
53171 तत्कुतोऽवगम्यते तत्राह - प्रवृत्तिरिति। यतः सर्वस्य जीवजातस्य
53172 सुषुप्तत्वादनन्तरमव्यवहितोत्तरक्षणे ह्यनादिद्वैतव्यवहारा यया
53173 प्रवृत्तिर्या च स्वप्ने जागरे च वननद्याद्यभिमुखी प्रवृत्तिस्ततो निवृत्तिः
53174 परावृत्तिर्वा सा सर्वापि तन्मात्रस्य चिदेकरसस्य या
53175 आसमन्ताद्वृत्तिर्व्याप्तिस्तत्पूर्वकमेव प्रसिद्धा अतो हेतोरित्यर्थः॥ २॥
53176
53177 प्रवृत्तिभाजो ये जीवास्ते तन्मात्रप्रदर्शिनः।
53178 तन्मात्रैकतया सर्गान्मिथः पश्यन्ति कल्पितान्॥ ३॥
53179
53180 प्रवृत्तिं भजन्ते व्यवहरन्ति ये ये जीवास्ते सर्वेऽपि तन्मात्रेण चिन्मात्रेणैव
53181 प्रदर्शिनः अर्थप्रकाशवन्तो नान्येन ज्योतिषा। अस्त्वेवं तथापि
53182 कथमन्यस्यान्यमनोराज्यप्रपञ्चदर्शनसिद्धिस्तत्राह - तन्मात्रेति।
53183 तन्मात्रस्य स्वस्वसाक्षिचिन्मात्रस्योपाधिमेलनेन ब्रह्मैक्यदार्ढ्येन वा
53184 एकतया एकत्वप्राप्त्या मिथः परस्परसर्गान्पश्यन्ति नान्यथेत्यर्थः॥ ३॥
53185
53186 तन्मात्रैक्यप्रणालेन चित्राः सर्गजलाशयाः।
53187 परस्परं संमिलन्ति घनतां यान्ति चाभितः॥ ४॥
53188
53189 उक्तलक्षणेन चिन्मात्रैकप्रणालेन। एकमार्गेणेति यावत्। घनतां
53190 परकीयव्यवहारसंवादादिना सत्यताभ्रान्तिदार्ढ्यान्निबिडताम्॥ ४॥
53191
53192 केचित्पृथक्स्थितिगताः पृथगेव लयं गताः।
53193 केचिन्मिथः संमिलिता जगद्गुञ्जा स्थिताक्षता॥ ५॥
53194
53195 पृथक्सर्गान्तरमेलनं विनैव केचिन्मिथः संवलिताः एवंरीत्या जगत्
53196 ब्रह्माण्डं तल्लक्षणा गुञ्जा प्रसिद्धा॥ ५॥

53197
53198 जगद्गुञ्जासहस्राणि यत्रासंख्यान्यणावणौ |
53199 अपरस्परलग्नानि काननं ब्रह्म नाम तत् || ६ ||
53200
53201 अणावणौ प्रतिपरमाणु | ब्रह्म मायाशबलम् | काननं वनम् || ६ ||
53202
53203 मिथः संमिलनेनैता घनतां समुपागताः |
53204 यद्यद्यत्र यथा रूढं तत्तत्पश्यति नेतरत् || ७ ||
53205
53206 एता जगद्गुञ्जाः घनतां निविडीभावात्साधारणव्यवहारयोग्यताम् | किं
53207 सर्वभावाः सर्वेषां दर्शनयोग्या नेत्याह - यद्यदिति | यावतां
53208 प्राणिनां यादृशकर्मभोगानुकूलं यत्र यथा रूढं तत्र तावदेव
53209 पश्यति नेतरत् | देशान्तरीयं लोकान्तरीयमित्यर्थः || ७ ||
53210
53211 वर्तमानं मनोराज्यं नैष्फल्यं समुपागता |
53212 सा कृत्तिर्मनसो ज्ञेया तस्य जीवपरम्परा || ८ ||
53213
53214 अत एव चित्तभेदस्तदुपाधिजीवभेदश्च सिद्ध्यतीत्याशयेनाह -
53215 वर्तमानमिति | एकस्य मनसो मनोन्तरे वर्तमानं मनोराज्यं प्रति
53216 नैष्फल्यं तद्दर्शनोपभोगाद्यसमर्थतालक्षणं निष्फलतां समुपागता
53217 या स्थितिः सैव कृत्तिर्विच्छित्तिर्मनोभेदहेतुर्ज्ञेयेत्यर्थः | तस्या एव
53218 सकाशाज्जिवपरम्परा जीवभेदा अपि ज्ञेया इत्यनुषज्यते || ८ ||
53219
53220 परस्परं संमिलतां सर्गाणां रूढभाविनाम् |
53221 देहसत्ता भृशं रूढा देहाभावस्तु विस्मृतिः || ९ ||
53222
53223 एवं विभिन्नमनोराज्यरूपाणां सर्गाणां तुल्यकर्मवासनादीनां
53224 युगपत्फलौन्मुख्येन मेलनेन व्यष्टिसमष्टिस्थूलदेहसत्तापि निरूढा ज्ञेया
53225 तद्विस्मृतौ तु देहाभाव एव स्वाभाविक इत्यर्थः || ९ ||
53226
53227 देहत्वपरिरूढत्वाच्चिद्धेम्ना विस्मृतात्मना |
53228 मिथ्यानुभूताऽविद्या तु शुद्धा कटकतामिता || १० ||
53229
53230 स्थूलदेहभावे निरूढे स्वाभाविकात्मस्थितिर्विस्मृता काल्पनिकी
53231 सांसारिकस्थितिः स्वीकृता चेत्याह - देहत्वेति | चिदेव हेम चिद्धेम तेन
53232 विस्मृतात्मना शुद्धा केवला कटकतामिता कटकत्वसदृशी
53233 संसारलक्षणा अविद्या मिथ्यैवानुभूतेत्यर्थः || १० ||
53234
53235 यथा शुद्धः प्राणमरुत्परप्राणादिवेदनात् |
53236 वेत्ति वेद्यं मनोराज्यं तथा सर्गान्तराश्रयम् || ११ ||
53237
53238 एवमशुद्धानामपि परस्परं क्वचिन्मेलनमुपपाद्य शुद्धानां
53239 परमनोराज्यवेदने दृष्टान्तमाह - यथेति | यथा हठयोगाभ्यासेन
53240 शुद्धः प्राणमरुत् परकायप्रवेशेन परप्राणानां
53241 आदिपदात्तदीयदेहेन्द्रियाणां च स्ववश्यतावेदनात्तैर्वेद्यं शब्दादि वेत्ति
53242 तथा शुद्धं मनोऽपि सर्गान्तराश्रयं मनोराज्यं वेत्तीत्यर्थः || ११ ||
53243
53244 सर्वेषां जीवराशीनामात्मावस्थात्रयं श्रितः |
53245 जाग्रत्स्वप्नसुषुप्त्याख्यमत्र देहो न कारणम् || १२ ||
53246
53247 ननु यदि मनोराज्यानां परस्परसंमिलनादेव स्थूलदेहसत्ता रूढा
53248 तर्ह्यसंमिलने देहाभावात् नेत्रस्थं जाग्रतं विद्यात्कण्ठे स्वप्नं

53249 समाविशेत् । सुषुप्तं हृदयस्थं तु तुरीयं मूर्ध्नि संस्थितम् ॥ इति
53250 श्रुतिबोधितदेहप्रदेशभेदाधीना जाग्रदाद्यवस्था अपि न स्युरित्याशङ्क्याह
53251 - सर्वेषामिति । जीवत्वस्वभावादेवावस्थात्रयकल्पना न देहमपेक्ष्य ।
53252 जाग्रत्कल्पनां विना देहासिद्धावन्योन्याश्रयापत्तेः । श्रुतिस्तु
53253 परदृष्टिसिद्धदेहानुवादेन तदेकदेशदृश्यत्वान्न
53254 जाग्रदादिप्रपञ्चविस्तारः सत्य इत्येवंपरा न देहस्य तद्धेतुत्वपरेति भावः
53255 ॥ १२ ॥
53256
53257 एवमात्मनि जीवत्वे सत्यवस्थात्रयात्मनि ।
53258 नचाम्भसीव वीचित्वमस्मिन्कचति देहता ॥ १३ ॥
53259
53260 अम्भ एव वीच्याद्यात्मकं प्रथते इति तत्त्वदर्शने सति ततः
53261 पृथग्वीच्यादिवस्त्विव जीव एवावस्थात्रयात्मेति पर्यालोचनेऽपि न जीवादन्या
53262 देहता वस्तुभूता परिशिष्यत इत्याह - एवमिति ॥ १३ ॥
53263
53264 चित्कलापदमासाद्य सुषुप्तान्तपदस्थितम् ।
53265 बुद्धो निवर्तते जीवो मूढः सर्गे प्रवर्तते ॥ १४ ॥
53266
53267 एवमेव बुद्धस्तत्त्ववित् सुषुप्तस्यान्तमवसानभूतं यत्तुर्यं पदं
53268 स्वरूपं तत्र स्थितं चित्कलापदं चैतन्यैकरसस्वभावमासाद्य ज्ञानेन
53269 प्राप्य जीवभावान्निवर्तते । यस्तु मूढः अतत्त्ववित् स एव स्वकल्पनया
53270 पुनर्देहाद्याकारकल्पनारूपे सर्गे प्रवर्तत इत्यर्थः ॥ १४ ॥
53271
53272 द्वयोरेकस्वरूपैव स्वसौहार्दनिदर्शनात् ।
53273 अज्ञः सुषुप्तोऽसंबुद्धो जीवः कश्चित्स सर्गभाक् ॥ १५ ॥
53274
53275 तर्हि किं ज्ञाज्ञयोः सुषुप्तिरपि भिद्यते नेत्याह - द्वयोरिति । एकस्वरूपैव
53276 सुषुप्तिरिति शेषः । स्वस्याज्ञस्यापि सौहार्दस्य संप्रसादस्य श्रुतौ
53277 निरतिशयानन्दमोक्षनिदर्शनत्वेनोपन्यासात् । तर्हि सैकस्य सर्गबीजमन्यस्य
53278 नेति कुतो विशेषतत्राह - अज्ञ इति । तयोर्मध्ये अज्ञः सुषुप्तोऽसंबुद्धो
53279 वास्तवात्मज्ञानहीनो देहाद्यात्मताभ्रमवासनावासितश्चेत्यस्मादेव
53280 विशेषात्स जीवः सर्गभागित्यर्थः ॥ १५ ॥
53281
53282 सर्वगत्वाच्चितः [१] कश्चित्परसर्गेण नीयते ।
53283 सर्गे सर्गे पृथग्रूपं सन्ति सर्गान्तराण्यपि ॥ १६ ॥
53284
53285 तत्राप्यवान्तरविशेषमाह - सर्वगत्वादिति [सर्गगत्वात् इत्युभयत्र
53286 पाठः] । नीयते अन्तः प्रवेश्यते । पृथग्रूपमिति क्रियाविशेषणम् ॥ १६ ॥
53287
53288 तेष्वप्यन्तस्थसर्गौघाः कदलीदलपीठवत् ।
53289 सर्वसर्गान्तरादूरं पत्रपीवरवृत्तिमत् ॥ १७ ॥
53290
53291 कदलीदलस्य पीठान्याधारभूतास्त्वक्कोशास्तद्वदन्तरन्तः सन्तीत्यर्थः ।
53292 ब्रह्म तु सर्वसर्गेष्वप्यैकरूप्येण संनिहितं कदलीदलमण्डपवदित्याह ##-
53293 अदूरं बहिर्विस्तीर्णैः पत्रैरिव पीवरवृत्तिमत् बृहदिति [बृहदित्यस्य
53294 परश्लोकस्थेन ब्रह्मेत्यनेनान्वय इत्यर्थः] परेणान्वयः ॥ १७ ॥
53295
53296 स्वभावशीतलं ब्रह्म कदलीदलमण्डपः ।
53297 कदल्यामन्यता नास्ति यथा पत्रशतेष्वपि ॥ १८ ॥
53298
53299 दृष्टान्तं विवृणोति - कदल्यामिति ॥ १८ ॥
53300

53301 ब्रह्मतत्त्वेऽन्यता नास्ति तथा सर्गशतेष्वपि |
53302 बीजमेव रसात्फुल्लं भूत्वा बीजं पुनर्भवेत् || १९ ||
53303
53304 इत्थं जगद्भावापन्नस्य ब्रह्मणः पुनः स्वभावापत्तौ दृष्टान्तमाह
53305 - बीजमिति | यथा वटादिबीजमेव रसाज्जलादिसंसर्गात्फुल्लं वृक्षादि
53306 भूत्वा तद्विटपप्रसरफलादिद्वारा पुनः प्राक्तनबीजभावेनाविर्भवति तथा
53307 ब्रह्मापि कामकर्मादिरससंपर्कान्मनो भूत्वा जन्ममरणादिकल्पनया
53308 अधिकारिदेहप्राप्तौ श्रवणमननादिक्रमेण
53309 बोधोदयात्प्राक्तनब्रह्मभावेनाविर्भवतीत्यर्थः || १९ ||
53310
53311 तथा ब्रह्म मनो भूत्वा बोधाद्ब्रह्म परं भवेत् |
53312 रसकारणकं बीजं फलभावेन जृम्भते || २० ||
53313
53314 यदि तस्यापि बीजस्य रससंपर्कैः पुनर्वृक्षभाववन्मुक्तस्यापि
53315 पुनर्जीवभावः स्यादिति बीजमदृष्टान्तं मन्यसे तर्हि रस एव
53316 दृष्टान्तोऽस्त्वित्याह - रसकारणकमिति || २० ||
53317
53318 ब्रह्मकारणको जीवो जगद्रूपेण जृम्भते |
53319 रसस्य कारणं किं स्यादिति वक्तुं न युज्यते || २१ ||
53320
53321 एवंच सति ब्रह्मणः कारणं किं स्यादिति शङ्काया अपि न प्रसर इत्याह -
53322 रसस्येति || २१ ||
53323
53324 ब्रह्मणः कारणं किं स्यादिति वक्तुं न युज्यते |
53325 स्वभावो निर्विशेषत्वात्परो वक्तुं न युज्यते || २२ ||
53326
53327 ननु पत्रकाण्डवृक्षपुष्पफलादीनां सरसतादर्शनात्तत्स्वभावभूतो
53328 रसस्तेषां कारणमिव जगत्कारणं ब्रह्मापि जगद्धर्मस्वभावविशेष एव
53329 स्यात्तथाच ब्रह्मकारणतासाधनं स्वभावकारणतावादेनार्थान्तरितं
53330 स्यादित्याशङ्क्याह - स्वभाव इति | न युज्यते | कुतः |
53331 निर्विशेषत्वात्कारणस्य
53332 कार्यसहोत्पत्तिकासाधारणधर्मविशेषरूपतत्स्वभावरूपत्वा##-
53333
53334 नाकारणे कारणादि परे वस्त्वादिकारणे |
53335 विचारणीयः सारो हि किमसारविचारणैः || २३ ||
53336
53337 तर्हि चिद्ब्रह्ममात्रेण कारेणेन जगति
53338 जाड्यादिस्वभावत्वासिद्धेर्जाड्यदुःखादिस्वभावं ब्रह्मणि जगतः
53339 कारणान्तरं वैचित्र्यहेतूनि निमित्तान्तराणि चाभ्युपेयानि स्युरिति चेन्नेत्याह ##-
53340 सर्वप्रपञ्चारोपस्यादिकारणे ब्रह्मणि कारणनिमित्तादि वस्त्वपि न संभवति
53341 तत्स्वभावविरोधादेवेत्यकारणविवर्तरूपं जगदनृतमेवेत्यर्थः | तर्हि
53342 जडानृतदुःखरूपस्य जगतो जडानृतदुःखरूपमेवादिकारणमुचितमिति
53343 तदेव विचार्यतां किमकारणब्रह्मविचारणेति चेत्तत्राह - विचारणीय इति |
53344 असारविचारणैः किं | कः पुरुषार्थ इत्यर्थः || २३ ||
53345
53346 बीजं जहद्बीजवपुः फलीभूतं विलोक्यते |
53347 ब्रह्माजहन्निजवपुः फलं बीजे च संस्थितम् || २४ ||
53348
53349 अकारणमादिकारणमिति यदुक्तं तदाशयोद्घाटनाय
53350 प्रागुक्तबीजदृष्टान्तापेक्षया ब्रह्मणि यो विशेषस्तमाह - बीजमिति | बीजं
53351 बीजवपुर्बीजाकारं जगत् त्यजत् सत् अङ्कुरादिफलीभूतं लोके विलोक्यते न तथा
53352 ब्रह्मेति | अत एव तद्विवर्तोपादानं

53353 स्वसमसत्ताककार्याभावादकारणमित्युक्तमित्याशयः ॥ २४ ॥
53354
53355 बीजस्याकृतिमत्सर्वं तेनानाकृतिमत्पदम् ।
53356 न युज्यते समीकर्तुं तस्मान्नास्त्युपमा शिवे ॥ २५ ॥
53357
53358 विशेषान्तरमपि दर्शयन्निर्विशेषस्योपचारादेवोपमोपन्यस्ता न
53359 वस्तुवृत्त्येत्याह - बीजस्येति । सर्वं स्वरूपमवयवगुणादि च आकृतिमत्
53360 इतरव्यावर्तकजातिसंस्थानादिमत् । तेन बीजेन समीकर्तुं तुलयितुम् ॥ २५ ॥
53361
53362
53363
53364 स्वमेव जायतेऽस्वाभं न च तज्जायतेऽन्यदृक् ।
53365 अतो न जातं नाजातं विद्धि ब्रह्म नभो जगत् ॥ २६ ॥
53366
53367 तर्ह्युपमोपचारस्य किं फलं तदाह - स्वमेवेति । अस्वाभं
53368 अनात्माभासम् ॥ २६ ॥
53369
53370 दृश्यं पश्यन्स्वमात्मानं न द्रष्टा संप्रपश्यति ।
53371 प्रपञ्चाक्रान्तसंवित्तेः कस्योदेति निजा स्थितिः ॥ २७ ॥
53372
53373 यदि स्वमेव जगदाभासं पश्यति तर्हि कुतोऽस्यानर्थप्राप्तिर्यतस्तत्परिहाराय
53374 शास्त्रं सफलं स्यात्तत्राह - दृश्यमिति । यथाभूतं स्वमात्मानं न
53375 पश्यतीत्यत एवानर्थ इत्यर्थः ॥ २७ ॥
53376
53377 मृगतृष्णाजलभ्रान्तौ सत्यां कैव विदग्धता ।
53378 विदग्धतायां सत्यां तु कैवासौ मृगतृष्णिका ॥ २८ ॥
53379
53380 भ्रान्त्युदये स्वाभाविक्यप्यस्य पूर्णानन्दस्वप्रकाशता वृथा
53381 संपन्नेत्याशयेनाह - मृगतृष्णेति । विदग्धता विद्वता ॥ २८ ॥
53382
53383 आकाशविशदो द्रष्टा सर्वाङ्गोऽपि न पश्यति ।
53384 नेत्रं निजमिवात्मानं दृशीभूतमहो भ्रमः ॥ २९ ॥
53385
53386 निर्मलस्वप्रकाशसर्वगतस्वभावत्वात्सर्वेषां सर्वदा
53387 स्फुटदर्शनार्होऽप्यात्मा कदापि केनापि तत्त्वतो न वीक्ष्यते अहो बहिर्मुखानां
53388 भ्रान्तिप्राबल्यमित्याह - आकाशेति । यथा नेत्रं
53389 पराक्प्रवणत्वात्स्वमात्मानं न पश्यति तद्वत् ॥ २९ ॥
53390
53391 आकाशविशदो द्रष्टा सर्वाङ्गोऽपि न पश्यति ।
53392 तेषां निजमिवात्मानं दृशीभूतमिवाभ्रमः ॥ ३० ॥
53393
53394 ननु बहिर्मुख आन्तरं स्वमात्मानं न पश्यतु बाह्यानां तु
53395 परेषामात्मानं पश्यत्विति चेन्नेत्याह - आकाशेति । निजात्मानमिव तेषां
53396 सर्वेषां बाह्यानामप्यात्मानं पारमार्थिकरूपं न पश्यति । यथा
53397 अभ्रमः निःशेषनिवृत्तभ्रान्तिर्मुक्तः दृशीभूतं दृश्यतापन्नं
53398 द्वैतं न पश्यति तद्वदित्यर्थः ॥ ३० ॥
53399
53400 आकाशविशदं ब्रह्म यत्नेनापि न लभ्यते ।
53401 दृश्ये दृश्यतया दृष्टे त्वस्य लाभः सुदूरतः ॥ ३१ ॥
53402
53403 तथाच दृश्यं दृश्यतया न द्रष्टव्यं किंतु दृङ्मात्रतयेति भावः ॥
53404 ३१ ॥

53405
53406 तादृग्भावस्वरूपेण विना यत्र न दृश्यते।
53407 तत्रापि दूरोदस्तैव द्रष्टुः सूक्ष्मस्य दृश्यता॥ ३२॥
53408
53409 ननु प्रमातुरान्तर आत्मा विषयाभिमुखेन तेन न दृश्यतां
53410 घटादिविषयाधिष्ठानभूतस्तु बहिर्वृत्तिव्याप्त्या दृश्यताम् तत्र
53411 प्रत्यङ्मुखत्वस्यानुपयोगादित्याशङ्क्याह - तादृगिति। यत्र
53412 घटादिविषयप्रदेशे वृत्त्यवच्छिन्नस्य
53413 द्रष्टुर्वृत्तेर्बाह्यघटाद्याकारानुरञ्जनात्स्वस्यापि तादृग्भावस्वरूपेण
53414 विना घटादि द्रष्टुं न शक्यते तत्रापि द्रष्टुर्दृश्यता दर्शनार्हता
53415 दूरोदस्ता दूरान्निरस्तैव। तत्र हेतुगर्भं विशिनष्टि - सूक्ष्मस्येति।
53416 विषयवृत्तिताद्रूप्यानुरक्तस्वरूपाद्विविच्य
53417 सूक्ष्मचिन्मात्रस्यावधारणाशक्तेरिति भावः॥ ३२॥
53418
53419 दृश्यं च दृश्यते तेन द्रष्टा राम न दृश्यते।
53420 द्रष्टैव संभवत्येको नतु दृश्यमिहास्ति हि॥ ३३॥
53421
53422 यदि सर्वथा द्रष्टा न दृश्यते तर्हि कथं तन्मात्रयुक्त्या
53423 तल्लाभसिद्धिरित्याशङ्क्य तदुपायमाह - द्रष्टैव संभवतीत्यादिना॥ ३३
53424 ||
53425
53426 द्रष्टा सर्वात्मको दृश्ये स्थितश्चेत्कैव द्रष्टृता।
53427 सर्वशक्तिमता राज्ञा यद्यत्संपद्यते यथा॥ ३४॥
53428
53429 कुतो नास्ति तदाह - द्रष्टेति। दृश्यप्रदेशास्थितस्य द्रष्टृत्वे
53430 अतिप्रसङ्गात् सर्वभूताधिवासः साक्षी चेता इत्यादिश्रुतेश्च सर्वात्मा दृश्ये
53431 स्थितश्च द्रष्टावश्यं वाच्यः। एवं चेत्तस्य स्वात्मभूते सर्वस्मिन्दृश्ये
53432 स्वात्मनि क्रियाविरोधात् कुतो द्रष्टृतेत्यर्थः। यदि तु सर्वशक्तिमत्त्वात्समर्थो
53433 राजेव दृश्यं संपाद्य तत्तथानुभवन् द्रष्टा भविष्यतीति ब्रूयास्तर्हि
53434 स्वातिरिक्तोपकरणापेक्षत्वे शक्तिसंकोचापत्तेरविकृतः स एव
53435 तत्तद्दृश्यरूपेण तथा तथोदेतीति पक्षस्यैव परिशेषान्न
53436 द्रष्टृतेत्यतिरिक्तवस्तुसिद्धिरित्याशयेनाह - सर्वशक्तिमतेति॥ ३४॥
53437
53438 तत्तथानुभवत्याशु स एवोदेति तत्तथा।
53439 यथा मधुरसोल्लासः खण्डो भवति भासुरः॥ ३५॥
53440
53441 उक्तेऽर्थे समञ्जसं दृष्टान्तमुपवर्ण्य प्रकृते योजयति - यथेत्यादिना
53442 । मधुरसस्य मधुररसस्यैक्षवरसस्य प्रसिद्धमधुरूपस्य वा रसस्य
53443 देशविशेषे मधुनोऽपि खण्डशर्करोत्पत्तिप्रसिद्धेः। खण्डः
53444 खण्डशर्करा॥ ३५॥
53445
53446 रसतामजहच्चैव फलपुष्पलतोन्नतः।
53447 चिदुल्लासस्तथा जीवो भूयो भवति देहकः॥ ३६॥
53448
53449 फलपुष्पादिरसैर्मधुमक्षिकाहृतैरुन्नतः [मूले
53450 फलपुष्पलताशब्देन लक्षणया तद्रसो गृह्यते]। अथवा मधुरसो
53451 वसन्तकाले वृक्षप्रविष्टरसः फलपुष्पलतात्मनोन्नतो वनखण्डो यथा
53452 भवति तद्वदिति व्याख्येयम्॥ ३६॥
53453
53454 चिन्मात्रतां तामजहदेव दर्शनदृङ्मयम्।
53455 अन्तःस्वानुभवश्चैव जगत्स्वप्नं प्रपश्यति॥ ३७॥
53456

53457 अहंतादिरसे भौमे खण्डकत्वमिवात्मनि ।
53458 नानाखण्डसहस्रौघैरद्वितीयैर्निजात्मनः ॥ ३८ ॥
53459
53460 आत्मनि अहंतादिभौमे रसे लवणादौ खण्डकत्वमिवेति प्रतिज्ञातस्यार्थस्य
53461 नानाखण्डसहस्रौघैरित्यादि चित्तथोदेत्यसंभ्रममित्यन्तमुपपादनम् ।
53462 निजात्मनो लवणादेरद्वितीयैरभिन्नैः ॥ ३८ ॥
53463
53464 यथोदेति रसो भौमश्चित्तथोदेत्यसंभ्रमम् ।
53465 चिद्रसोल्लासवृक्षाणां कचतामात्मनात्मनि ॥ ३९ ॥
53466
53467 ब्रह्माण्डानन्त्यं दर्शितमित्याशयेनाह - चिद्रसेति ॥ ३९ ॥
53468
53469 दृश्यशाखाशताढ्यानामिह नान्तोऽवगम्यते ।
53470 खण्डः प्रत्येकमेवायं यथा रसचमत्कृतिम् ॥ ४० ॥
53471
53472 तेषु तेषु भोगचमत्कारा अप्यनन्ता इति दर्शयति - खण्ड इति । अयं
53473 दृश्यमानः खण्ड एतद्ब्रह्माण्डलक्षणो वनखण्डो यथा यथा
53474 स्वरसचमत्कृतिं स्वादयति अनुभावयति एवं तथा तथा एषा चित्
53475 पश्यत्यनुभवतीति परेणान्वयः ॥ ४० ॥
53476
53477 स्वादयत्येवमेषा चित्पृथक्पश्यति संस्थितिम् ।
53478 या योदेति यथा यस्या जीवशक्तेः स्वसंसृतिः ॥ ४१ ॥
53479
53480 पृथगिति वीप्सितं बोध्यम् । प्रतिब्रह्माण्डमित्यर्थः । चमत्कृतिवैचित्र्ये
53481 तत्कल्पकविचित्रतत्तज्जीवसंस्कारोद्बोध एव हेतुरित्याह - या येति ॥ ४१ ॥
53482
53483 तां तां तथैति सा स्वात्मचिद्रूपभुवनस्थितिम् ।
53484 जीवसंसृतयः काश्चित्प्रमिलन्ति परस्परम् ॥ ४२ ॥
53485
53486 तत्र समानाकारवासनोद्भवेऽज्ञजीवानामपि संसृतयो मिलन्तीति
53487 जीवसंसृतिमेलनमुपवर्णितमुपसंहरति - जीवसंसृतय इति ॥ ४२ ॥
53488
53489 स्वयं विहृत्य संसारे शाम्यन्ति चिरकालतः ।
53490 सूक्ष्मया परया दृष्ट्या त्वं पश्य ज्ञानचेतसा ॥ ४३ ॥
53491
53492 मम तर्हि परसंसृतिसहस्रदर्शने क उपायस्तमाह - सूक्ष्मयेत्यादिना ।
53493 ज्ञानचेतसेति । प्रागुक्तेन शुद्धचित्तानां दर्शनोपायेनेत्यर्थः ॥ ४३ ॥
53494
53495 जगज्ज्वालसहस्राणि परमाण्वन्तरेष्वपि ।
53496 चित्ते नभसि पाषाणे ज्वालायामनिले जले ॥ ४४ ॥
53497
53498 सन्ति संसारलक्षाणि तिले तैलमिवाखिले ।
53499 सिद्धिमेति यदा चेतस्तदा जीवो भवेच्चितिः ॥ ४५ ॥
53500
53501 शुद्धा च सा सर्वगता तेन तन्मेलनं मिथः ।
53502 सर्वेषां पद्मजादीनां स्वसत्ताभ्रमरूपकः ॥ ४६ ॥
53503
53504 पद्मजादीनामस्मदादिसंसारदर्शनं शुद्धिवशादेवेत्याह - शुद्धा
53505 चेति । सर्वगतब्रह्मैकरसत्वात्सर्वगता । मेलनमपि स्वकीयपरकीयस्वप्नानां
53506 दैवात्क्वचित्संवादवत्स्वान्तःकल्पनात्मकमेवेत्याशयेनाह -
53507 सर्वेषामित्यादिना ॥ ४६ ॥
53508

53509 जगद्दीर्घमहास्वप्नः सोऽयमन्तः समुत्थितः |
53510 स्वप्नात्स्वप्नान्तरं यान्ति काश्चिद्भूतपरम्पराः || ४७ ||
53511
53512 तेनोपलम्भः कुड्यादावसौ दृढतरः स्थितः |
53513 यद्यत्र चिद्भावयति तत्तत्राशु भवत्यलम् || ४८ ||
53514
53515 तेन स्वप्नपरमपराभ्रमणेन | तद्वासनादार्ढ्याद्दृढतरः | चितो
53516 वासनोद्भवानुरूपविवर्तसामर्थ्यं सार्वत्रिकमिति दर्शयति - यद्यत्रेति ||
53517 ४८ ||
53518
53519 तया स्वप्नेऽपि यद्दृष्टं तत्काले सत्यमेव तत् |
53520 चिदणोरन्तरे सन्ति समस्तानुभवाणवः || ४९ ||
53521
53522 अत एव चित्सत्तायास्तत्रानुवेधानुभव इत्याह - तयेति | अनुभवाणवः
53523 सूक्ष्मीभूतानुभवाः जगदाकारवासना इति यावत् || ४९ ||
53524
53525 (यथा [कोष्ठकविन्यस्तोऽयं पाठः प्रक्षिप्त इति भाति
53526 आदर्शान्तरेष्वदर्शनाट्टीकाकर्त्रसंमतत्वाच्च] बीजान्तरे
53527 पत्रलतापुष्पफलाणवः) |
53528 परमाणुजगत्यन्तर्मन्ये चित्परमाणवः |
53529 लीनमाकाशमाकाशे द्वैतैक्यभ्रममुत्सृज || ५० ||
53530
53531 परमाण्विति | तथाच चिज्जगतोः कार्त्स्न्येन परस्परान्तःप्रविष्टत्वमाश्चर्यं
53532 मन्ये इत्यर्थः | अथवा नेदमाश्चर्यं चिदाकाशस्यैव जगद्भ्रमैर्भेदेन
53533 गृहीतस्य स्वात्मनि लीनत्वादित्याशयेनाह - लीनमिति || ५० ||
53534
53535 देशकालक्रियाद्रव्यैः स्वैरेवाणुभिरेव चित् |
53536 अणूननुभवत्यन्तरिताराणि नसंभवात् || ५१ ||
53537
53538 उक्तमेव प्रपञ्चयति - देशेत्यादिना | अणुभिः सूक्ष्मैः स्वैरेव
53539 चिदंशैः स्वात्मभूतानेवेतराणीवानुभवति नतु वस्तुत इतराणि | इतरेषां
53540 नसंभवादसंभवात् || ५१ ||
53541
53542 स्वयं सर्गस्य कचितः स्वप्ने चिदणुखण्डकः |
53543 ब्रह्मादेः कीटनिष्ठस्य देहदृष्ट्यानुभावितः || ५२ ||
53544
53545 ब्रह्मादेः कीटनिष्ठस्य कीटान्तस्थस्य
53546 साधारणस्तत्तदन्तःकरणोपाधिवशाच्चिदणुखण्डकः प्रलयकाले अस्फुटोऽपि
53547 सर्गस्य स्वप्ने प्रसक्ते तत्तद्देहदृष्ट्यानुभावितो भवतीत्यर्थः || ५२ ||
53548
53549 कचितं किंचिदेवेह वस्तुतस्तु न किंचन |
53550 स्वयं सत्यं स्वादयन्ते द्वैतं चित्परमाणवः || ५३ ||
53551
53552 यदनुभूयते किं तदिति तत्राह - कचितमिति |
53553 किंचिदेवेत्यनिर्वचनीयमित्यर्थः | तर्हि तत्किं तत्राह - स्वयं सत्यमिति |
53554 यथा कश्चिद्भ्रान्तः स्वयं स्वस्कन्धमारुरुक्षति तद्वच्चित्परमाणवो जीवाः
53555 स्वयं सत्यमात्मरूपमेव द्वैतं मन्यमाना भ्रान्त्या स्वादयन्तीत्यर्थः ||
53556 ५३ ||
53557
53558 स्वयं प्रकचति स्फारदेहश्चिदणुखण्डकः |
53559 नेत्रादिकुसुमद्वारैः संविदामोदमुद्गिरन् || ५४ ||
53560

53561 चिदेवाण्वन्तःकरणपरिच्छेदादणुखण्डकः ॥ ५४ ॥
53562
53563 संपश्यतितरां कश्चिद्बहीरूपेण चिद्घटः ।
53564 सर्वगत्वादनाशित्वाद्दृश्यबीजस्य वै चितेः ॥ ५५ ॥
53565
53566 कश्चिद्व्यष्टिरूपश्चिदेव घटसदृशस्थूलदेहपरिच्छेदाच्चिद्घटः ।
53567 देशतः कालतश्च बहीरूपेण । तत्र क्रमाद्धेतुः -
53568 सर्वगत्वादनाशित्वाच्चेति ॥ ५५ ॥
53569
53570 अन्तरेवाखिलं कश्चित्पश्यत्य विमलं जगत् ।
53571 तत्रातिकालकलनादुन्मज्जति निमज्जति ॥ ५६ ॥
53572
53573 कश्चित्समष्ट्यात्मा ब्रह्माण्डरूपः ।
53574 अतिकालकलनाच्चिराभ्यासात्तादात्म्याभिमानेन निमज्जति लीयते उन्मज्जति
53575 पुनराविर्भवति ॥ ५६ ॥
53576
53577 स्वप्नात्स्वप्नान्तरं तत्र तथा पश्यन्पुनः पुनः ।
53578 मिथ्या वटेषु लुठति शिलेव शिखरच्युता ॥ ५७ ॥
53579
53580 केचित्संमिलिताः केचिदात्मन्येवाभ्रमे स्थिताः ।
53581 मग्नाः स्वसंवित्प्रसरे स्फुरन्तो देहखण्डकाः ॥ ५८ ॥
53582
53583 स्वयमन्तः प्रपश्यन्ति ये जगज्जीवविभ्रमम् ।
53584 तैस्तैः कैश्चित्ततं दृश्यमसत्स्वप्नवदाश्रितम् ॥ ५९ ॥
53585
53586 अन्तर्दृश्यद्रष्टॄणां तन्मिथ्यात्वज्ञानं विशेष इत्याशयेनाह -
53587 स्वयमिति ॥ ५९ ॥
53588
53589 सर्वात्मत्वात्स्वभावस्य तद्दृश्यं सत्यमात्मनि ।
53590 सर्वगं विद्यते यत्र तत्र सर्वमुदेति हि ॥ ६० ॥
53591
53592 तेषामन्तरेव विश्वोदये चान्तस्तत्सत्ताहेतुर्बहिः केषांचित्तद्दर्शने तु बहिरेव
53593 तत्सत्ताहेतुरिति बीजव्यवस्थां हृदि निधायाह - सर्वात्मत्वादिति ॥ ६० ॥
53594
53595 जीवान्तः प्रतिभासस्य सर्वस्य पुनरन्तरे ।
53596 जीवखण्ड उदेत्युच्चैस्तस्यान्तरितरोऽपि च ॥ ६१ ॥
53597
53598 जीवान्तर्जीवान्तरस्य तत्र तत्र च जीवान्तरस्य सप्रपञ्चस्यानवस्थितस्योदयेऽपि
53599 तत्रत्यचिति तत्तत्सत्तैवाज्ञानसहिता हेतुर्ज्ञाते तु न किंचित्क्वाप्यासीदस्ति
53600 भविष्यति वेत्याशयेनाह - जीवान्तरित्यादिना ॥ ६१ ॥
53601
53602 जीवान्तर्जायते जीवस्तस्यान्तरपि जीवकः ।
53603 सर्वत्र रम्भादलवज्जीवो जीवन्तरेव हि ॥ ६२ ॥
53604
53605 दृश्यबुद्धिपरावृत्तौ सममेतदनन्तरम् ।
53606 हेम्नीव कटकादित्वं परिज्ञातं विनश्यति ॥ ६३ ॥
53607
53608 बुद्धेः परावृत्तौ पराक्प्रवणतां त्यक्त्वा प्रत्यक्प्रवणत्वे सति समं
53609 युगपदेव चैतदान्तरं बाह्यं च तत्त्वतः परिज्ञातं सद्विनश्यति ॥ ६३ ॥
53610
53611 विचारो यस्य नोदेति कोऽहं किमिदमित्यलम् ।
53612 तस्यान्तर्न विमुक्तोऽसौ दीर्घो जीवज्वरभ्रमः ॥ ६४ ॥

53613
53614 एवं तत्त्वदर्शनलक्षणां तन्मात्रयुक्तिं दर्शयित्वा
53615 तत्प्राप्तिप्रतिष्ठोपायानिन्द्रियजयादिविचारान्तान्व्युत्क्रमेण वक्तुमुपक्रमते
53616 - विचार इति ॥ ६४ ॥
53617
53618 विचारः सफलस्तस्य विज्ञेयो यस्य सन्मतेः ।
53619 दिनानुदिनमायाति तानवं भोगगृध्नुता ॥ ६५ ॥
53620
53621 वैराग्यपूर्वकविचार एव फलपर्यवसायी न रागीकृत इत्याह - सफल इति ॥
53622 ६५ ॥
53623
53624 यथा देहोपयुक्तं हि करोत्यारोग्यमौषधम् ।
53625 तथेन्द्रियजयेऽभ्यस्ते विवेकः फलितो भवेत् ॥ ६६ ॥
53626
53627 इन्द्रियजयाभ्यासपूर्वकमेव वैराग्यं विवेकहेतुर्नान्यादृशमित्याह -
53628 यथेति । देहेनोपयुक्तं पथ्याशनादिनियमैः सेवितम् ॥ ६६ ॥
53629
53630 विवेकोऽस्ति वचस्येव चित्रेऽग्निरिव भास्वरः ।
53631 यस्य तेनापरित्यक्ता दुःखायैवाविवेकिता ॥ ६७ ॥
53632
53633 वेवेकोऽपि वैराग्यमुमुक्षौत्कण्ठ्यापादनेन
53634 संन्यासश्रवणादिपहलपर्यवसित एव
53635 तन्मात्रयुक्तिजन्मप्रतिष्ठयोरुपयुज्यते न वाङ्मात्रपल्लवित इति दर्शयति -
53636 विवेक इत्यादिना । यस्य वचस्येव विवेकोऽस्ति न मनसि तेन अविवेकिता अपरित्यक्तेति सा
53637 दुःखायैव भवतीत्यर्थः ॥ ६७ ॥
53638
53639 यथा स्पर्शेन पवनः सत्तामायाति नो गिरा ।
53640 तथेच्छातानवेनैव विवेकोऽस्य विबुध्यते ॥ ६८ ॥
53641
53642 तर्हि मनःप्रतिष्ठितेऽस्य विवेके किं लिङ्गमिति चेद्वैराग्यदार्ढ्यमेवेत्याह ##-
53643 तद्वदित्यर्थः । तानवं अपक्षयक्रमेण नाशः ॥ ६८ ॥
53644
53645 चित्रामृतं नामृतमेव विद्धि
53646 चित्रानलं नानलमेव विद्धि ।
53647 चित्राङ्गना नूनमनङ्गनेति
53648 वाचा विवेकस्त्वविवेक एव ॥ ६९ ॥
53649
53650 रागिणा वाङ्मात्रदर्शितो विवेकस्तु अविवेकशाखोपशाखात्मकत्वादविवेक
53651 एवेति तुल्योक्त्या दर्शयति - चित्रामृतमिति । चित्रलिखितममृतं पीयूषं
53652 वारि वा ॥ ६९ ॥
53653
53654 पूर्वं विवेकेन तनुत्वमेति
53655 रागोऽथ वैरं च समूलमेव ।
53656 पश्चात्परिक्षीयत एव यत्नः
53657 स पावनो यत्र विवेकितास्ति ॥ ७० ॥
53658
53659 यत्न इष्टानिष्टप्राप्तिपरिहारानुकूला प्रवृत्तिर्ज्ञानोदयेन
53660 मूलोच्छेदात्परिक्षीयत एव । तस्माद्यत्र वेवेकितास्ति स एव
53661 पुमांस्तन्मात्रयुक्तिप्रतिष्ठायोग्यः पावन इत्यर्थः ॥ ७० ॥
53662
53663 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० स्थितिप्रकरणे
53664 जीवनखण्डकावतारो नामाष्टादशः सर्गः ॥ १८ ॥

53665
53666 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे
53667 जीवनखण्डकावतारो नामाष्टादशः सर्गः ॥ १८ ॥
53668
53669 एकोनविंशः सर्गः १९
53670
53671 श्रीवसिष्ठ उवाच ।
53672
53673 जीवबीजं परं ब्रह्म सर्वत्र खमिव स्थितम् ।
53674 तेन जीवोदरजगत्यपि जीवोऽस्त्यनेकधा ॥ १ ॥
53675
53676 यथोपास्तिफलावाप्तिर्बोधात्सत्यात्मसंस्थितिः ।
53677 जाग्रत्स्वप्नसुषुप्तीनां स्थितिस्तुर्यस्य चोच्यते ॥ १ ॥
53678
53679 ननु जीवान्तर्जीवपरम्पराकल्पनायां बाह्यबाह्यजीवा
53680 आन्तरान्तरजीवजगतामधिष्ठानत्वाद्बीजं स्युस्तथान्तरान्तराणां
53681 बाह्यबाह्यजीवात्मभावबोधात्तत्तद्भावप्राप्तिक्रमेण सर्वबाह्यजीवस्य
53682 ब्रह्मबोधोदये मुक्तिर्युक्ता नान्तराणां साक्षाद्ब्रह्माबोधाद्ब्रह्मणस्तत्र
53683 तत्रासंनिधानेआधिष्ठानत्वलक्षणबीजत्वासंभवात्तत्संभवे च सर्वेषां
53684 तुल्यतया तत्तदन्तःसत्त्वकलना निर्मूला स्यादित्याशङ्क्य
53685 जीवोदरजगज्जीवानामपि ब्रह्मैवाधिष्ठानत्वाद्बीजमिति साधयति -
53686 जीवबीजमिति । तेन सर्वत्र स्थितत्वेन हेतुना ॥ १ ॥
53687
53688 चिद्घनैकघनात्मत्वाज्जीवान्तर्जीवजातयः ।
53689 कदलीदलवत्सन्ति कीता इव धरोदरे ॥ २ ॥
53690
53691 एकान्तरेकस्तदन्तरप्येक इति परम्पराकल्पनायां कदलीदलवदेकैकान्तर्वहव
53692 इति परम्पराकल्पनायां तु धरोदरे कीटा इवेति भेदः ॥ २ ॥
53693
53694 यो यो नाम यथा ग्रीष्मे कल्पस्वेदाद्भवेत्कृमिः ।
53695 यद्यद्दृश्यं शुधचित्खं तज्जीवो भवति स्वतः ॥ ३ ॥
53696
53697 तुल्याधिष्ठानकत्वे आन्तरत्वकल्पना निर्मूलेत्यस्य कः परिहार इति चेत्तमाह ##-
53698 स तत्तदन्तरेव भवति तथा शुद्धचित्त्वमपि आन्तरं बाह्यं वा यद्यदेव
53699 यत्र दृश्यं भवति तत्तद्भोक्ता तत्र तत्र जीवो भवतीत्यर्थः ॥ ३ ॥
53700
53701 यथा यथा यतन्ते ते जीवकाः स्वाम्तसिद्धये ।
53702 तथा तथा भवन्त्याशु विचित्रोपासनक्रमैः ॥ ४ ॥
53703
53704 प्राक्तनपुरुषप्रयत्नरूपकर्मवशाद्वा सर्वव्यवस्थासिद्धिरित्याशयेनाह ##-
53705
53706 देवान्देवयजो यान्ति यक्षा यक्षान्व्रजन्ति हि ।
53707 ब्रह्म ब्रह्मयजो यान्ति यदतुच्छं तदाश्रयेत् ॥ ५ ॥
53708
53709 कर्मोपासनातारतम्यानुसारिदेवताजीवसायुज्येष्वपि तत्तद्देवान्तस्तारतम्येन
53710 भोगप्रसिद्धिः शास्त्रप्रामाण्यात्सिद्धेत्याशयेनाह - देवानिति । ब्रह्म
53711 हिरण्यगर्भाख्यं परं च । तेषु किं हेयं किमुपादेयं तदाह - यदिति ॥
53712 ५ ॥
53713
53714 स मुक्तो भृगुपुत्रो हि निर्मलत्वात्स्वसंविदः ।
53715 बद्धः प्रथमदृष्टेन दृश्येनाशु स्वभावतः ॥ ६ ॥
53716

53717 भार्गवोपाख्यानमप्युक्तेऽर्थेऽनुकूलमित्याह - स इति ।
53718 प्रथमदृष्टेनाप्सरोरूपेण शुक्रो बद्धोऽभूदित्यर्थः ॥ ६ ॥
53719
53720 भुवि जाता परिम्लाना बाला यत्प्रथमं पुरः ।
53721
53722 तथैवाव्युत्पन्ना बाला संविद्यथैव व्युत्पाद्यते तथैव भवतीति
53723 वास्तवब्रह्मात्मभावेनैव सा व्युत्पाद्या न
53724 मिथ्याजीवादिभावेनेत्याशयेनोपसंहरति - भुवीति ।
53725 सांसारिकव्यसनतापैर्यावदपरिम्लानेत्यर्थः ॥ ७ ॥
53726
53727 श्रीराम उवाच ।
53728
53729 जाग्रत्स्वप्नदशाभेदं भगवन्वक्तुमर्हसि ।
53730 कथं च जाग्रज्जाग्रत्स्यात्स्वप्नो जाग्रद्भ्रमः कथम् ॥ ८ ॥
53731
53732 संवित्कदा बाला कदा वा प्रौढेति विशेषं ज्ञातुं
53733 जाग्रत्स्वप्नदशावैलक्षण्यहेतुं श्रीरामः पृच्छति - जाग्रदिति ।
53734 अपरोक्षावभासत्वाविशेषेऽपि जाग्रत्कथं केन हेतुना
53735 जाग्रत्सत्यताव्यवहारहेतुः । स्वप्नस्तु जाग्रदाकारो भ्रम इति कथमित्यर्थः ॥ ८
53736 ॥
53737
53738 श्रीवसिष्ठ उवाच ।
53739
53740 स्थिरप्रत्यययुक्तं यत्तज्जाग्रदिति कथ्यते ।
53741 अस्थिरप्रत्ययं यत्स्यात्तत्स्वप्नः समुदाहृतः ॥ ९ ॥
53742
53743 स्थिरप्रतीतियोग्यतैव पुनःपुनः संवादिप्रत्यभिज्ञोपनीता जाग्रदर्थेषु
53744 सत्यताव्यवहारहेतुरिति वसिष्ठः समाधत्ते - स्थिरेति ॥ ९ ॥
53745
53746 जाग्रत्त्वे क्षणदृष्टः स्यात्स्वप्नः कालान्तरे स्थितः ।
53747 तज्जाग्रत्स्वप्नतामेति स्वप्नो जाग्रत्त्वमृच्छति ॥ १० ॥
53748
53749 स्वप्नोऽपि चेत्कालान्तरे स्थितः स्यात्तदा जाग्रत्त्वे क्षणेन जाग्रदेवेदमिति
53750 प्रत्यक्षानुभवेन दृष्टः स्यादेवं जाग्रदपि कालान्तरे यदि न स्थितं
53751 स्यात्तर्हि स्वप्न एव स्यादिति जाग्रत्स्वप्नतां स्वप्नश्च जाग्रत्त्वं ऋच्छति
53752 गच्छतीत्यर्थः ॥ १० ॥
53753
53754 जाग्रत्स्वप्नदशाभेदो न स्थिरास्थिरते विना ।
53755 समः सदैव सर्वत्र समस्तोऽनुभवोऽनयोः ॥ ११ ॥
53756
53757 अनुभवः अनुभवांशस्त्वनयोः समः ॥ ११ ॥
53758
53759 स्वप्नोऽपि स्वप्नसमये स्थैर्याज्जाग्रत्त्वमृच्छति ।
53760 अस्थैर्याज्जाग्रदेवास्ते स्वप्नस्तादृशबोधतः ॥ १२ ॥
53761
53762 अस्थैर्यादिति । यथा जाग्रन्मनोरथादिः ॥ १२ ॥
53763
53764 स्वप्नोऽपि जाग्रद्बुद्ध्यंशो जाग्रत्त्वमनुगच्छति ।
53765 स्वप्नता स्वप्नबुद्ध्या तु यथासंवेदनं स्थितम् ॥ १३ ॥
53766
53767 जाग्रद्बुद्ध्यंशो जाग्रद्बुद्धिग्राह्यास्थैर्यांशो यथा हरिश्चन्द्रस्य
53768 द्वादशवार्षिकः । तर्हि तस्य कथं स्वप्नता तत्राह - स्वप्नतेति ॥ १३ ॥

53769
53770 यत्तु यावत्स्थिरं बुद्धं तत्तावज्जाग्रदुच्यते |
53771 क्षणभङ्गात्तु तत्स्वप्नो यथा भवति तच्छृणु || १४ ||
53772
53773 यथासंवेदनं स्थिरमित्येतद्विशदयति - यत्त्वित्यादिना || १४ ||
53774
53775 जीवधातुः शरीरेऽन्तर्विद्यते येन जीव्यते |
53776 तेजो वीर्यं जीवधातुरित्याद्यभिधमङ्ग यत् || १५ ||
53777
53778 प्रतिज्ञातवर्णनोपोद्घातेन तद्द्रष्टृजीवभावं साधयति - जीवधातुरिति
53779 | येन जीव्यते इत्यनेन जीवनमेव तत्सद्भावसाधकं लिङ्गं दर्शितम् | तेज इति
53780 नाम्ना शरीरोष्मा तल्लिङ्गं वीर्यमिति नाम्ना शरीरचेष्टानिमित्तं बलं
53781 तल्लिङ्गमुक्तम् | जीवधातुरित्यनेन जीवनहेतुः सारो निरुपाधिप्रेमा
53782 तल्लिङ्गमुक्तम् | आदिपदादहमित्यभिमाननिमित्तं ज्ञानाद्यपि तथा
53783 प्रसिद्धं दर्शितं बोध्यम् || १५ ||
53784
53785 व्यवहारी यदा कायो मनसा कर्मणा गिरा |
53786 भवेत्तदा मरुन्नुन्नो जीवधातुः प्रसर्पति || १६ ||
53787
53788 अस्तु देहे जीवस्तस्य रूपादिदर्शनार्थप्रवृत्तौ किं निमित्तं तदाह -
53789 व्यवहारीति | प्रसर्पति हृदयात्कुल्याद्वारा सरो जलमिव निर्गत्य
53790 संचरतीत्यर्थः || १६ ||
53791
53792 तस्मिन्प्रसर्पत्यङ्गेषु सर्वा संविदुदेति हि |
53793 दृष्टत्वात्प्रैति चित्ताख्यमन्तर्लीनजगद्भ्रमम् || १७ ||
53794
53795 तत्रास्य वासनोद्भवात्स्वप्रदर्शनमित्याह - तस्मिन्निति | अङ्गेषु
53796 अङ्गान्तर्गतनाडीषु || १७ ||
53797
53798 ईक्षणादिषु रन्ध्रेषु प्रसरन्ती बहिर्मयम् |
53799 नानाकारविकाराढ्यं रूपमात्मनि पश्यति || १८ ||
53800
53801 तस्य जागरणमाह - ईक्षणादिष्विति | अनुभवकाले प्रत्ययस्य
53802 स्वप्नाविशेषेऽप्यथ प्रात्यहिकप्रत्यभिज्ञानन्तरं स्थिरत्वकल्पना
53803 जाग्रदित्यवगम्यत इत्यर्थः || १८ ||
53804
53805 स्थिरत्वात्तत्थैवाथ जाग्रदित्यवगम्यते |
53806 जाग्रत्क्रम इति प्रोक्तः सुषुप्तादिक्रमं शृणु || १९ ||
53807
53808 सुषुप्तादीत्यादिपदात्तुरीयक्रमं च || १९ ||
53809
53810 मनसा कर्मणा वाचा यदा क्षुभ्यति नो वपुः |
53811 शान्तात्मा तिष्ठति स्वस्थो जीवधातुस्तदा त्वसौ || २० ||
53812
53813 वाचिककायिकविक्षेपोपरमे स्वप्नोदयो मानसविक्षेपस्याप्युपरमे तु
53814 सुषुप्तिरित्याशयेनाह - मनसेत्यादिना || २० ||
53815
53816 समतामागतैर्वातैः क्षोभ्यते न हृदम्बरे |
53817 निर्वातसदने दीपो यथाऽलोकैककारकः || २१ ||
53818
53819 आलोकैककारकः निर्विक्षेपप्रकाशमात्रनिमित्तम् || २१ ||
53820

53821 ततः सरति नाङ्गेषु संविल्क्षुभ्यति तेन नो |
53822 न चेक्षणादीन्यायाति रन्ध्राण्यायाति नो बहिः || २२ ||
53823
53824 पूर्वार्धेन स्वप्ननिमित्ताभाव उत्तरार्धेन जाग्रन्निमित्ताभाव उक्तः || २२ ||
53825
53826 जीवोऽन्तरेव स्फुरति तैलसंविद्यथा तिले |
53827 शीतसंविद्धिम इव स्नेहसंविद्यथा घृते || २३ ||
53828
53829 ननु सता सोम्य तदा संपन्नो भवति स्वमपीतो भवति इति श्रुत्या सुषुप्तौ जीवस्य
53830 ब्रह्मण्यप्ययः श्रूयते तत्कथं तदा दीपवज्जिवस्थानमुच्यते तत्राह -
53831 जीव इति | जीवोऽहमिति संस्कारसचिव एव ब्रह्माप्येति न तद्विमुक्त इति तिले
53832 तैलसंविदिव तद्भावापन्नः स्फुरतीत्यर्थः || २३ ||
53833
53834 जीवाकारा कला काचिच्चितिः स्वच्छतयात्मनि |
53835 दशामायाति सौषुप्तिं सौम्यवातां विचेतनाम् || २४ ||
53836
53837 ननु तर्हि तीर्णो हि तदा सर्वाञ्छोकान् हृदयस्य भवति सलिल एको द्रष्टाऽद्वैतो
53838 भवति इत्यादिश्रुतिभिरात्यन्तिकब्रह्मैक्योक्तेस्तर्हि का गतिस्तत्राह - जीवाकारेति
53839 | प्रागुक्तजीवाकारा या काचिच्चितिः सा कला उपाधिविलयात्स्वच्छतया ब्रह्मात्मनि
53840 विचेतनां पृथक्चेतनशून्यां दशामायातीत्यंशमादाय ताः श्रुतयः
53841 प्रवृत्ता न भेदवासनाविलयाभिप्रायेणेत्यर्थः |
53842 प्राणवातकृतविक्षेपमाशङ्क्य विशिनष्टि - सौम्यवातामिति || २४ ||
53843
53844 ज्ञात्वा वैचित्युपरते [१] साम्यं व्यवहरन्नपि |
53845 जाग्रत्स्वप्नसुषुप्तेषु संबुद्धस्तुर्यवान्स्मृतः || २५ ||
53846
53847 प्रसङ्गात्तस्य तुर्यावस्थां दर्शयति - ज्ञात्वेति | चित्ते [चेतस्युपरते इति
53848 पाठः] उपरते सर्वव्यवहारोपरमवति चिति साम्यं अवैषम्यं शास्त्रतो
53849 ज्ञात्वा विचारैकाग्र्याभ्यां स्वप्रयत्नैः संबुद्धः प्राप्तसाक्षात्कारो योगी
53850 जाग्रत्स्वप्नसुषुप्तेषु प्रसिद्धेषु प्रागुक्तभूमिकाभेदेषु वा व्यवहरन् |
53851 अपिशब्दात्समाधिस्थोऽपि बोधदार्ढ्यबलात्तुर्यात्मस्वभावादप्रच्युतः सदैव
53852 तुर्यावस्थावान् स्मृत इत्यर्थः || २५ ||
53853
53854 सुषुप्ते सौम्यतां यातैः प्राणैः संचाल्यते यदा |
53855 स जीवधातुः सा संवित्ततश्चित्ततयोदिता || २६ ||
53856
53857 प्रस्तुतं सुषुप्तिमेवानूद्य ततः प्रागुक्तस्वप्नावतारं प्रपञ्चयितुं
53858 चित्तोत्पत्तिमाह - सुषुप्ते इति | सौम्यतां प्राप्तैः प्राणैरुपलक्षितः स
53859 जीवधातुर्यदा भोजकादृष्टपरिपाकापादितवैषम्यैस्तैरेव चाल्यते तदा सा
53860 जीवचित्तत्तद्भोगानुकूलप्राक्तनसंस्कारोद्बोधाच्चित्ततयोदिता | आविर्भूता
53861 भवतीत्यर्थः || २६ ||
53862
53863 स्वान्तःसंस्थजगज्जालं भावाभावैः क्रमभ्रमैः |
53864 पश्यति स्वान्तरेवाशु स्फारं बीज इव द्रुमम् || २७ ||
53865
53866 ततः स्वप्नदर्शनमाह - स्वान्तःसंस्थेति | बीज इव यथा योगी बीजे स्थितं
53867 द्रुमं योगशक्त्या भाविविस्तारयुक्तं विविच्य पश्यति तद्वत् || २७ ||
53868
53869 जीवधातुर्यदा वातैः किंचित्संक्षुभ्यते भृशम् |
53870 ततोऽस्म्यहं सुप्त इति पश्यत्यात्मनि खे गतिम् || २८ ||
53871
53872 उक्तमेव स्फुटमनूद्य चित्तादहंकारोत्पत्तिं भ्रान्तिभेदनिमितानि चाह -

53873 जीवेति। सुप्तः पुरुषो यदा वातैः किंचित्संक्षुभ्यते तदा अहमस्मीति पश्यति।
53874 यदा तु भृशं संक्षुभ्यते तदा खे गतिमाकाशगमनं पश्यतीत्यर्थः॥
53875 २८॥
53876
53877 यदाम्भसा प्लाव्यतेऽसौ तदा वार्यादिसंभ्रमम्।
53878 अन्तरेवानुभवति स्वामोदं कुसुमं यथा॥ २९॥
53879
53880 अम्भसा नाड्यन्तर्गतश्लेष्मद्रवेण॥ २९॥
53881
53882 यदा पित्तादिनाक्रान्तस्तदा ग्रीष्मादिसंभ्रमम्।
53883 अन्तरेवानुभवति स्फारं बहिरिवाखिलम्॥ ३०॥
53884
53885 रक्तापूर्णो रक्तवर्णान्देशान्कालान्बहिर्यथा [देशकालान् इति
53886 पाठः]।
53887 पश्यत्यनुभवात्मत्वात्तत्रैव च निमज्जति॥ ३१॥
53888
53889 रक्तेन नाड्यन्तर्गतरुधिरेणापूर्ण आप्लुतः सन् देशान् गैरिकादिव्याप्तदेशान्
53890 कालान् रक्ताभ्रव्याप्तसंध्यादिकालान्॥ ३१॥
53891
53892 सेवते वासनां यां तां सोऽन्तः पश्यति निद्रितः।
53893 पवनक्षोभितो रन्ध्रैर्भेरक्षादिभिर्यथा॥ ३२॥
53894
53895 अनाक्रान्तेन्द्रियच्छिद्रो यतः क्षुब्धोऽन्तरेव सः।
53896 संविदानुभवत्याशु स स्वप्न इति कथ्यते॥ ३३॥
53897
53898 न आक्रान्तानीन्द्रियच्छिद्राणि चक्षुरादिस्थानानि येन स तथाविधः सन्। सः
53899 आन्तरार्थानुभवः॥ ३३॥
53900
53901 समाक्रान्तेन्द्रियच्छिद्रो यः क्षुब्धो वायुना यदा।
53902 परिपश्यति तज्जाग्रदित्याहुर्मुनिसत्तमाः॥ ३४॥
53903
53904 तस्य जाग्रत्प्राप्तिलक्षणमाह - समाक्रान्तेति। यो जीवो यदा क्षुब्धः सन्
53905 समाक्रान्तेन्द्रियच्छिद्रो भूत्वा बहिः शब्दादीन्परिपश्यति तद्दर्शनं
53906 जाग्रदित्याहुरित्यर्थः॥ ३४॥
53907
53908 इति विदितवता त्वयाधुनान्तः
53909 प्रथितमहामतिनेह सत्यताख्या।
53910 असति जगति नैव भवनीया
53911 मृतिहतिसंहृतिदोषभावनी या॥ ३५॥
53912
53913 जाग्रदादिभेदैः प्रपञ्चिते जगति सत्यताबुद्धिरेवाभिनिवेशहेतुत्वादनर्थ इति
53914 सैव हेयेत्याह - इतीति। इह असति जगति सत्यताख्या दृष्टिर्नैव भावनीया।
53915 कुतः यतो या दृष्टिर्मृतिराध्यात्मिकनिमित्तैर्मरणं
53916 हतिराधिभौतिकैर्निमित्तैर्मरणं संहृतिराधिदैविकैर्निमित्तैर्मरणं
53917 तद्धेतवश्च ये दोषास्तेषां भावनी अवश्यं संपादयित्रीत्यर्थः॥ ३५॥
53918
53919 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मी० दे० मो० स्थितिप्रकरणे
53920 जाग्रत्स्वप्नसुषुप्तितुरीयस्वरूपविचारो नामैकोनविंशः सर्गः॥ १९॥
53921
53922 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे
53923 जाग्रत्स्वप्नसुषुप्तितुरीयस्वरूपविचारो नामैकोनविंशः सर्गः॥ १९॥
53924

53925
53926 विंशः सर्गः २०
53927
53928 श्रीवसिष्ठ उवाच ।
53929
53930 एतत्ते कथितं सर्वं मनोरूपनिरूपणम् ।
53931 मया राघव नान्येन केनचिन्नाम हेतुना ॥ १ ॥
53932
53933 विश्वं हि मनसो भ्रान्तिः सत्यात्मानवलम्बिनः ।
53934 सत्यात्मालम्बने चेतो विश्वं चात्मेति वर्ण्यते ॥ १ ॥
53935
53936 प्राग्वर्णितजाग्रदादिस्वरूपवर्णनस्य प्रस्तुतार्थसंबन्धं दर्शयति -
53937 एतदिति । मनोरूपं निरूप्यते यथावद्बोध्यते येन उपायेन तत्तथाभूतम् ।
53938 मनःस्वभावपरिज्ञानाय जाग्रदादिवर्णनं प्रस्तुतं नान्येन
53939 प्रयोजनेनेत्यर्थः ॥ १ ॥
53940
53941 दृढनिश्चयवच्चेतो यद्भावयति भूरिशः ।
53942 तत्तां यात्यनलाश्लेषादयःपिण्डोऽग्नितामिव ॥ २ ॥
53943
53944 अनेन मनसः कीदृशः स्वभावः परिज्ञात इति
53945 चेद्दृढभावितार्थाकारधारणस्वभाव इत्याह - दृढेति ॥ २ ॥
53946
53947 भावाभावग्रहोत्सर्गदृशश्चेतनकल्पिताः ।
53948 नासत्या नापि सत्यास्ता मनश्चापलकारिताः ॥ ३ ॥
53949
53950 तेन सदसद्रूपहेयोपादेयप्रत्ययविषयाः सर्वे
53951 मनःकल्पनामात्रत्वात्सदसद्विलक्षणा इति सिद्धमित्याह - भावेति ॥ ३ ॥
53952
53953 मनो मोहे तु कर्तृ स्यात्कारणं च जगत्स्थितेः ।
53954 विश्वरूपतयैवेदं तनोति मलिनं मनः ॥ ४ ॥
53955
53956 तत्र मनसो व्यष्टिरूपेण भ्रान्तिकर्तृता समष्टिरूपेण
53957 तद्विषयजगदुपादानतेति विशेषमाह - मन इति । विश्वरूपतया
53958 व्यष्टिसमष्टिरूपतया ॥ ४ ॥
53959
53960 मनो हि पुरुषो नाम तं नियोज्य शुभे पथि ।
53961 तज्जयैकान्तसाध्या हि सर्वा जगति भूतयः ॥ ५ ॥
53962
53963 तत्र कर्त्रंशः शुभे पथि नियुक्तश्चेदुपादानांशगता
53964 अणिमादिभूतयस्तत्त्वबोधश्च वशे भवन्तीत्याह - मन इति ॥ ५ ॥
53965
53966 पुरुषश्चेच्छरीरं स्यात्कथं शुक्रो महामतिः ।
53967 अगमद्विविधाकारं जन्मान्तरशतभ्रमम् [जनान्तर इति
53968 पाठः] ॥ ६ ॥
53969
53970 ननु देह एव पुरुषोऽस्तु न मन इति चेन्नेत्याह - पुरुष इति ॥ ६ ॥
53971
53972 अतश्चित्तं हि पुरुषः शरीरं चेत्यमेव हि ।
53973 यन्मयं च भवत्येतत्तदवाप्नोत्यसंशयम् ॥ ७ ॥
53974
53975 शरीरस्य पुरुषत्वासंभवे घटकुड्यादिवच्चेत्यतैव परिशेषादित्याह -
53976 अत इति । एतच्चित्तम् ॥ ७ ॥

यदतुच्छमनायासमनुपाधि गतभ्रमम् ।
यत्नात्तदनुसंधानं कुरु तत्तामवाप्स्यसि ॥ ८ ॥

मनः सर्वावाप्तिसमर्थमस्तु ततो मम को लाभस्तत्राह - यदिति ।
मोक्षप्रयत्ने कृते तव तल्लाभो भविष्यतीत्यर्थः ॥ ८ ॥

अभिपतति मनःस्थितं शरीरं
नतु वपुराचरितं मनः प्रयाति ।
अभिपततु तवात्र तेन सत्यं
सुभग मनः प्रजहात्वसत्यमन्यत् ॥ ९ ॥

उक्तमेवार्थं संक्षिप्योपसंहरति - अभिपततीति । मनःस्थितं
मनोभिलषितं देशं विषयं वा शरीरमभिपतति वपुषाचरितं तु देशं
विषयं वा मनो न नियमेन प्रयाति अतो मनसः स्वाभिलषितसिद्धौ
देहेन्द्रियादिनियमनसमर्थत्वात्तवापि मनस्सत्यं
परमार्थभूतमात्मतत्त्वमभिपततु तत्प्राप्तये यतताम् । तेन
देहेन्द्रियाद्यसत्यं द्वैतभ्रमं प्रजहात्वित्यर्थः ॥ ९ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मोक्षोपाये स्थितिप्रकरणे
मनोरूपवर्णनं नाम विंशतितमः सर्गः ॥ २० ॥

इति श्रीवासिष्ठम्हारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे मनोरूपवर्णनं
नाम विंशतितमः सर्गः ॥ २० ॥

## एकविंशः सर्गः २१

श्रीराम उवाच ।

भगवन्सर्वधर्मज्ञ संशयो यो महानयम् ।
हृदि व्यावर्तते लोलः कल्लोल इव सागरे ॥ १ ॥

विशुद्धे कल्पकाभावान्मनःकॢप्तिर्न युज्यते ।
अविशुद्धे मनःसिद्धेर्नानामतविकल्पनाः ॥ १ ॥

यदतुच्छमनायासमनुपाधि गतभ्रमम् । यत्नात्तदनुसंधानं कुर्विति
गुरुणोक्तो रामः स्वबुद्धिकौशलेन तदनुसंधाय तत्र
मनःकल्पनायोग्यतामपश्यन्प्रागुक्तायां तत्र
मनःकल्पनायामाश्वासमलभमानोऽर्धविकासितमतिः प्रष्टुकामो
गुरुमभिमुखीकृत्य संशयं दर्शयति - भगवन्निति । सर्वधर्मज्ञेति
शिष्याशयपरिज्ञानकौशलद्योतनाय विशेषणम् ॥ १ ॥

दिक्कालाद्यनवच्छिन्ने तते नित्ये निरामये ।
म्लाना संविन्मनोनाम्नी कुतः केयमुपस्थिता ॥ २ ॥

दिक्कृतपरिच्छेदाभावात्तते कालकृतपरिच्छेदाभावान्नित्ये
आदिपदोपात्तवस्तुकृतपरिच्छेदविरहान्निरामये । म्लाना विषयाकारकलुषा ।
कुत इति कारणासंभवः केति स्वरूपासंभवः इयमित्यपरोक्षता च मनसो
दर्शिता ॥ २ ॥

यस्मादन्यन्न नामास्ति न भूतं न भविष्यति ।

54029 कुतः कीदृक्कथं तत्र कलङ्कस्तस्य विद्यते ॥ ३ ॥
54030
54031 यद्यविद्याकलङ्कवशादिति ब्रूयुस्तत्राप्याह [ब्रूयाः इति पाठः] ##-
54032 कलङ्कसद्भावो न संभावित इत्यर्थः ॥ ३ ॥
54033
54034 श्रीवसिष्ठ उवाच ।
54035
54036 साधु राम त्वया प्रोक्तं जाता ते मोक्षभागिनी ।
54037 मतिरुत्तमनिष्यन्दा नन्दनस्येव मञ्जरी ॥ ४ ॥
54038
54039 एवं पृष्टो वसिष्ठो वस्तुपरिचयचमत्कारि रामबुद्धिकौशलं प्रथमं
54040 प्रशंसति - साध्विति । उत्तमो मकरन्दनिष्यन्द इव वस्त्वनुभवचमत्कारो
54041 यस्याः ॥ ४ ॥
54042
54043 पूर्वापरविचारार्थतत्परेयं मतिस्तव ।
54044 संप्राप्स्यसि पदं प्रोच्चैर्यत्प्राप्तं शंकरादिभिः ॥ ५ ॥
54045
54046 प्रश्नस्यास्य तु हे राम न कालस्तव संप्रति ।
54047 सिद्धान्तः कथ्यते यत्र तत्रायं प्रश्न उच्यते ॥ ६ ॥
54048
54049 शुद्धे चिदात्मन्यविद्याकलङ्को न युक्त इति प्रश्नः
54050 शुद्धात्मानमनुभूतवतः शोभेत । नच तं प्रति वयं मनो निरूपयामो
54051 येन स तथा पृच्छेत् । यस्तु शुद्धं नानुभूतवान् विद्वांसमेवात्मानं
54052 मन्यमानस्तेन स्वानुभवविरुद्धा आत्मनः शुद्धिरेव कथमिति
54053 शङ्कितव्यं नत्वनुभवविरुद्धां शुद्धिमभ्युपगम्य शुद्धे मालिन्यं
54054 कथमिति नाज्ञोपदेशकाले विज्ञवत्प्रश्नावसर इत्याशयेनाह -
54055 प्रश्नस्येति । यत्र निर्वाणप्रकरणे तवात्मदर्शनसमाधिप्रतिष्ठानन्तरं
54056 सिद्धान्तोऽनुभवारूढ एवार्थो मया स्वानुभवसंवादाय कथ्यते तत्रायं
54057 प्रश्न उच्यते । समाधीयत इत्यर्थः ॥ ६ ॥
54058
54059 सिद्धान्तकाले भवता प्रष्टव्योऽहमिदं परम् ।
54060 करामलकवत्तेन सिद्धान्तस्ते भविष्यति ॥ ७ ॥
54061
54062 वक्ष्यामि नवेत्यनाश्वासे पुनर्वा अहं प्रष्टव्य इत्याह - सिद्धान्तकाले इति
54063 । तेन प्रश्नेन मया समाहितेन सिद्धान्तः अनुभवारूढतत्त्व आत्मा भविष्यति
54064 ॥ ७ ॥
54065
54066 सिद्धान्तकाले प्रश्नोक्तिरेषा तव विराजते ।
54067 प्रावृषीव हि केकोक्तिर्युक्ता शरदि हंसगीः ॥ ८ ॥
54068
54069 शरदि तु हंसगीर्युक्ता नतु केकोक्तिस्तद्वदज्ञानुरूप एव प्रश्नो युक्तः ।
54070 सर्वेषां श्रोतॄणामद्याप्यात्मतत्त्वप्रतिबोधानुदयादिति भावः ॥ ८ ॥
54071
54072 सहजो नीलिमा व्योम्नि शोभते प्रावृषः क्षये ।
54073 प्रावृषि त्वतनूदग्रपयोदपटलोत्थितः ॥ ९ ॥
54074
54075 सांप्रतं त्वयं प्रश्नः प्रावृषि नभसः सहजनीलिमवर्णनवदित्याह ##-
54076
54077 अयं प्रकृत आरब्धो मनोनिर्णय उत्तमः ।
54078 यद्वशाज्जनताजन्म तदाकर्णय सुव्रत ॥ १० ॥
54079
54080 एवं समाधाय प्रस्तुतश्रवणे राममनुकूलयति - अयमिति ॥ १० ॥

54081
54082 एवं प्रकृतिरूपेयं मनोमननधर्मिणी।
54083 कर्मेति राम निर्णीतं सर्वैरेव मुमुक्षुभिः॥ ११॥
54084
54085 एवं प्रागुक्तदिशा मालिन्यस्याज्ञानुभवसिद्धत्वात्तदुपहिता इयं चित्
54086 व्याक्रियमाणा प्रकृतिरूपा भवति। मननधर्मिणी सती मनो भवति। पश्यन्ती
54087 चक्षुर्भवति। शृण्वन्ती श्रोत्रम्। पश्यंश्चक्षुः शृण्वन् श्रोत्रं
54088 मन्वानो मनः इत्यादिश्रुतेः। एवं कर्मेन्द्रियभावापन्ना व्यापारेण
54089 धर्माधर्माख्यिकर्मापि स्वयमेव भवतीति मुमुक्षुभिः
54090 श्रुत्यादिप्रमाणैर्निर्णीतमित्यर्थः॥ ११॥
54091
54092 शृणु दर्शनभेदेन तन्नामाभिमताकृतिम्।
54093 वाग्मिनां वदतां यातं चित्राभिः शास्त्रदृष्टिभिः॥ १२॥
54094
54095 बहुभिर्वादिभिः स्वस्वाभिमतनामरूपाकारेणान्यथाप्युत्प्रेक्ष्यमाणं
54096 तदेवेत्याह - शृण्विति॥ १२॥
54097
54098 यं यं भावमुपादत्ते मनो मननचञ्चलम्।
54099 तत्तामेति घनामोदमन्तःस्थः पवनो यथा॥ १३॥
54100
54101 तर्हि एकमूलत्वे कुतस्तेषां सिद्धान्तभेद इति शङ्कापरिहारव्याजेन कर्मेति
54102 निर्णीतमिति यदुक्तं तद्दर्शयति - यं यमित्यादिना। यं यं भावं
54103 यादृशयादृशवासनोद्भवम्। यथा
54104 सुरभिपूत्युग्रनिर्हार्यादिनानागन्धवत्कुसुमान्तःस्थः
54105 पवनस्तद्गन्धात्मकतामेति तद्वत्॥ १३॥
54106
54107 ततस्तमेव निर्णीय तमेव च विकल्पयन्।
54108 अन्तःस्थया रञ्जनया रञ्जयन्स्वामहंकृतिम्॥ १४॥
54109
54110 तं स्वस्ववासनाकल्पितमेव युक्तिभिर्निर्णीय रञ्जनया स्वकल्पितार्थे
54111 स्वीयतारागेण स्वामहंकृतिं रञ्जयंस्तद्भावमिवापादयन्॥ १४॥
54112
54113 तन्निश्चयमुपादाय तत्रैव रसमृच्छति।
54114 यन्मयत्वं शरीरे तु ततो बुद्धीन्द्रियेषु च॥ १५॥
54115
54116 रसं पुनःपुनरास्वादनचमत्कारम्। विषयिणां विषयास्वादरसेऽप्येषैव
54117 गतिरित्याशयेन तदनुरूपदेहधारणामाह - यन्मयत्वमिति॥ १५॥
54118
54119 यन्मयं हि मनो राम देहस्तदनु तद्वशः।
54120 तत्तामायाति गन्धान्तः पवनो गन्धतामिव॥ १६॥
54121
54122 गन्धान्तः गन्धवद्द्रव्यान्तः प्रविष्टः पवनस्तद्गन्धरूपतामिव॥ १६॥
54123
54124 बुद्धीन्द्रियेषु वल्गत्सु कर्मेन्द्रियगणस्ततः।
54125 स्फुरति स्वत एवोर्वी रजोलोल इवानिले॥ १७॥
54126
54127 मनोनुसारिदेहधारणे तत्र ज्ञानेन्द्रियाविर्भावे
54128 तत्पर्यालोचितविषयप्राप्तिहेतुक्रियानिमित्तकर्मेन्द्रियप्रादुर्भाव इत्याह -
54129 बुद्धिन्द्रियेष्विति। वल्गत्सु आविर्भूय स्वस्वविषये वल्गत्सु। रजोलोले अनिले वल्गति
54130 तदन्तर्गतरजोरूपा उर्वीव॥ १७॥
54131
54132 कर्मेन्द्रियगणे क्षुब्धे स्वशक्तिं प्रणयत्यलम्।

54133 कर्म निष्पद्यते स्फारं पांसुजालमिवानिले ॥ १८ ॥
54134
54135 स्वशक्तिं क्रियाशक्तिम् । प्रणयति प्रकटयति ॥ १८ ॥
54136
54137 एवं हि मनसः कर्म कर्मबीजं मनः स्मृतम् ।
54138 अभिन्नैव तयोः सत्ता यथा कुसुमगन्धयोः ॥ १९ ॥
54139
54140 उपपादितक्रमां मनसः कर्मरूपताप्राप्तिमुपसंहरन् कर्ममनसोः
54141 परस्परबीजतामभिन्नसत्तां चाह - एवमिति ॥ १९ ॥
54142
54143 यादृशं भावमादत्ते दृढाभ्यासवशान्मनः ।
54144 तथा स्पन्दाख्यकर्माख्यप्रथाशाखा विमुञ्चति ॥ २० ॥
54145
54146 एवं वासनाकर्मतत्फलानुभवानामपि समानरूपत्वादेका सत्तेत्याह -
54147 यादृशमिति द्वाभ्याम् ॥ २० ॥
54148
54149 तथा क्रियां तत्फलतां निष्पादयति चादरात् ।
54150 ततस्तमेव चास्वादमनुभूयाशु बध्यते ॥ २१ ॥
54151
54152 यं यं भावमुपादत्ते तं तं वस्त्विति विन्दति ।
54153 तत्तच्छ्रेयोऽन्यन्नास्तीति निश्चयोऽस्य च जायते ॥ २२ ॥
54154
54155 अस्त्वेवं तथाप्यसारेऽपि स्वस्याभिमते कथं पक्षपातः प्राणिनां वादिनां
54156 च तत्राह - यं यमिति ॥ २२ ॥
54157
54158 धर्मार्थकाममोक्षार्थं प्रयतन्ते सदैव हि ।
54159 मनांसि दृढभिन्नानि प्रतिपत्त्या स्वयैव च ॥ २३ ॥
54160
54161 मनो वै कापिलानां तु प्रतिपत्तिनिजामलम् ।
54162 उररीकृत्य निर्णीय कल्पिताः शास्त्रदृष्टयः ॥ २४ ॥
54163
54164 तत्र कापिलानां मनस्तु विवेकित्वादसङ्गचिन्मात्रत्वं पदार्थमात्रप्रतिपत्त्या
54165 निजया अमलं निर्मलमेव । तत्पदार्थविषये तु श्रुत्यनवलम्बनेन
54166 व्यामोहात्स्वबुद्ध्यैव सुखदुःखमोहात्मकस्य जडस्य
54167 जगतस्तादृशमेवोपादानं त्रिगुणात्मकं प्रधानं
54168 भवितुमर्हतीत्युररीकृत्य पुनःपुनरास्वादनेन तदेव तत्त्वमिति निर्णीय
54169 तथैव तेषां शास्त्रदृष्टयः कल्पिता इत्यर्थः ॥ २४ ॥
54170
54171 मोक्षे तु नान्यथा प्राप्तिरिति भावितचेतसः ।
54172 स्वां दृष्टिं प्रतिबिम्बन्ति स्थिताः स्वनियमभ्रमैः ॥ २५ ॥
54173
54174 अन्यथा स्वोक्तोपायमन्तरेण मोक्षे कस्यापि प्राप्तिर्नास्तीति निश्चितचेतसः
54175 स्वकल्पितनियमभ्रमैः स्थिता उपायान्तरमतिभ्यो निवृत्ताः सन्तः स्वां
54176 दृष्टिं ग्रन्थनिर्माणादिना प्रकाशयन्तः प्रतिबिम्बन्ति परबुद्धिषु
54177 संक्रामयन्तीत्यर्थः ॥ २५ ॥
54178
54179 वेदान्तवादिनो बुद्ध्या ब्रह्मेदमिति रूढया ।
54180 मुक्तिः शमदमोपेता निर्णीय परिकल्पिता ॥ २६ ॥
54181
54182 एवं वेदान्तिनोऽपीत्याह - वेदान्तवादिन इति ।
54183 श्रुतिप्रामाण्यादध्यारोपापवादन्यायेनेदं जगद्ब्रह्मैव
54184 नान्यद्ब्रह्मणोऽणुमात्रमप्यस्तीति रूढया । शमः सर्वानर्थनिवृत्तिः दमो

54185 वास्तवनिरतिशयानन्दापरिच्छिन्नब्रह्मात्मभावेनाविर्भावस्ताद्रूप्येण उप
54186 समीपे स्वस्थान एव इता प्राप्ता नत्वर्चिरादिमार्गेण दूरगमनेनेत्यर्थः।
54187 शमदमोपेता वेदान्तिन इति वा। परिरुपर्यर्थे। सर्वोत्कृष्टतया
54188 समर्थितेत्यर्थः॥ २६॥
54189
54190 मुक्तौ तु नान्यथा प्राप्तिरिति भावितचेतसः।
54191 स्वां दृष्टिं प्रविवृण्वन्ति स्वैरेव नियमभ्रमैः॥ २७॥
54192
54193 नियमभ्रमैरित्यनेन वेदान्तिनामुपेयतत्त्वमात्रं
54194 वास्तवमुपायप्रक्रियाभेदास्तु पाणिनेरिव कल्पिता एवेति सूचितम्॥ २७॥
54195
54196 विज्ञानवादिनो बुद्ध्या स्फुरत्स्वभ्रमपूरया।
54197 मुक्तिः शमदमोपेता निर्णीय परिकल्पिता॥ २८॥
54198
54199 शमेन सांवर्तिकोपप्लवोपशमेन दमेनेन्द्रियद्वारसंवरणेन चोपेता
54200 युक्ता सर्वज्ञबुद्धिधारानुप्रवेशलक्षणा।
54201 शमदमादिप्रसिद्धसाधनैरुपेता प्राप्तेति वा॥ २८॥
54202
54203 मुक्तौ तु नान्यथा प्राप्तिरिति भावितचेतसः।
54204 स्वां दृष्टिं प्रविवृण्वन्ति स्वैरेव नियमभ्रमैः॥ २९॥
54205
54206 नियमभ्रमैः
54207 प्रक्रियानियमभ्रमैस्तप्तशिलारोहणादिसाधननियमभ्रमैर्वा॥ २९॥
54208
54209 आर्हतादिभिरन्यैश्च स्वयाभिमतयेच्छया।
54210 चित्राश्चित्रसमाचारैः कल्पिताः शास्त्रदृष्टयः॥ ३०॥
54211
54212 आर्हतादिभिरित्यादिपदात्कापिलकौलिकादयो [आर्हतमते हि जीवादयो
54213 भोक्षान्ताः सप्त पदार्थाः। तत्र जीवश्चेतनः शरीरपरिमाणः १
54214 अजीवोऽश्मादिः २ आस्रवती जीवोऽनेनेत्यास्रव इन्द्रियवर्गः ३ संवृणोतीति संवरो
54215 विवेकः यमनियमादिरित्यन्ये ४ निःशेषतया जीर्यति कामादिरनेनेति निर्जरः
54216 केशोल्लुञ्चनादितपः ५ बन्धो मुहुर्जन्ममरणे ६
54217 मोक्षस्तदुच्छेदादलोकाकाशे सदोर्ध्वगमनं ७ इति। एषां सप्तानां
54218 साधकः सप्तभङ्गीन्यायः सद्वादी १ असद्वादी २ सदसद्वादी ३
54219 अनिर्वचनीयवादी ४ इति चतुर्विधा वादिनः। अनिर्वचनीयवादेऽपि
54220 सदादिभेदात्पुनस्त्रिविधा इति संकलनया सप्त वादिनः। तत्र सद्वादिना आर्हतं
54221 प्रति तव मते मोक्षादिरस्तीति पृष्टे स ब्रूते स्यादस्तीति। स्यादिति
54222 तिङन्तप्रतिरूपकमीपदर्थकं कथंचिदर्थकं वाऽव्ययं सर्वत्र।
54223 एवमसद्वाद्यादीन्प्रति क्रमेण स्यान्नास्तीत्यादीन्युत्तराणि। तेन तेषां
54224 तूष्णींभाव इत्यार्हतमनोरथः इति। इदंच काश्मीरस्थपुस्तके
54225 टिप्पणीरूपेणोपलभ्दम्] गृह्यन्ते।
54226 जीवाजीवास्रवसंवरनिर्जरबन्धमोक्षादिपदार्थविभागकल्पनैः स्यादस्ति
54227 स्यान्नास्ति स्यादस्ति च नास्ति च स्यादवक्तव्यः स्यादस्ति चावक्तव्यश्च स्यान्नास्ति
54228 चावक्तव्यश्च स्यादस्ति नास्ति चावक्तव्यश्च इत्यादिसप्तभङ्गीनयकल्पनैश्च
54229 चित्राः। चित्रैः समाचारैर्विवसनभिक्षाचर्याद्याचारैः॥ ३०॥
54230
54231 निर्निमित्तोत्थसौम्याम्बुबुद्बुदौघैरिवोत्थितैः।
54232 स्वनिश्चितैरिति प्रौढा नानाकारा हि रीतयः॥ ३१॥
54233
54234 सर्वेषां कल्पनावैचित्र्याणां न मानमेये मूलं किंतु चिराभ्यासरूढा
54235 मनःकल्पनैवेत्याह - निर्निमित्तेति द्वाभ्याम्॥ ३१॥
54236

54237 सर्वासामेव चैतासां रीतीनामेवमाकरः।
54238 मनो नाम महाबाहो मणीनामिव सागरः॥ ३२॥
54239
54240 न निम्बेक्षू कटुस्वादू शीतोष्णौ नेन्दुपावकौ।
54241 यद्यथा परमाभ्यस्तमुपलब्धं तथैव तत्॥ ३३॥
54242
54243 शीतोष्णाविति। अत एव हि चन्द्रमण्डले अर्काग्निमण्डलादिषु च वसतां देवानां
54244 न शीतोष्णादिपीडेति भावः। परमाभ्यस्तं
54245 भोजकादृष्टफलोत्पादपर्यन्तमभ्यस्तमित्यर्थः॥ ३३॥
54246
54247 यस्त्वकृत्रिम आनन्दस्तदर्थं प्रयतैर्नरैः।
54248 मनस्तन्मयतां नेयं येनासौ समवाप्यते॥ ३४॥
54249
54250 एवं तुच्छेऽपि कले दृढाभ्यासापेक्षा चेत्किं
54251 वाच्यमनादिसांसारिकविपरीतभावनातिरस्कृते अकृत्रिमानन्दमोक्षफले
54252 दृढाभ्यासापेक्षेत्याशयेनाह - यस्त्विति॥ ३४॥
54253
54254 दृश्यं संपरिडिम्भं स्वं तुच्छं परिहरन्मनः।
54255 तज्जाभ्यां सुखदुःखाभ्यां नावश्यं परिकृष्यते॥ ३५॥
54256
54257 कस्य तर्हि दृढाभ्यासो मुक्तये कार्य इति
54258 चेद्दृश्यमार्जनस्यैवेत्याशयेनाह - दृश्यमित्यादिना।
54259 सम्यक्परिरभ्य डिम्भमर्भकमिव स्नेहात्करोतीति संपरिडिम्भं एवंरूपं
54260 स्वं मनस्तदृश्यं परिहरत्त्यजत्तद्दृश्यजाभ्यां सुखदुःखाभ्यां न
54261 परिकृष्यते। अवश्यमित्यवधारणे॥ ३५॥
54262
54263 अपवित्रमसद्रूपं मोहनं भयकारणम्।
54264 दृश्यमाभासमाभोगि बन्धमाभावयानघ [बन्धं
54265 माभावय इति पाठः]॥ ३६॥
54266
54267 मायैषा सा ह्यविद्यैषा भावनैषा भयावहा।
54268 संविदस्तन्मयत्वं यत्तत्कर्मेति विदुर्बुधाः॥ ३७॥
54269
54270 तन्मयत्वं दृश्यप्रायत्वं यत्तदेव प्रागुक्तक्रमेण बन्धकं कर्म
54271 भवतीति विदुरित्यर्थः॥ ३७॥
54272
54273 दृष्ट्वा दृश्यैकतानत्वं विद्धि त्वं मोहनं मनः।
54274 प्रमार्जयैव तन्मिथ्या महामलिनकर्दमम्॥ ३८॥
54275
54276 दृश्यतन्मयता यैषा स्वभावस्थानुभूयते।
54277 संसारमदिरा सेयमविद्येत्युच्यते बुधैः॥ ३९॥
54278
54279 दृश्येन किमपराद्धं यदर्थं तन्मार्जनमुच्यत इति चेतत्राह -
54280 दृश्येति॥ ३९॥
54281
54282 अनयोपहतो लोकः कल्याणं नाधिगच्छति।
54283 भास्वरं तापनालोकं पटलान्धेक्षणो यथा॥ ४०॥
54284
54285 तपनः सूर्यस्तस्येमं तापनमालोकम्॥ ४०॥
54286
54287 स्वयमुत्पद्यते सा च संकल्पाद्व्योमवृक्षवत्।
54288 असंकल्पनमात्रेण भावनायां महामते॥ ४१॥

दृश्यमार्जने चासंकल्पनं हेतुरित्याह - स्वयमिति || ४१ ||

क्षीणायां स्वरसादेव विमर्शेन विलासिना |
असंसङ्गः पदार्थेषु सर्वेषु स्थिरतां गतः || ४२ ||

विमर्शेन विचारेण श्रवणमननात्मना | विलासिना
समाध्यभ्यासदार्ढ्यविलासवता || ४२ ||

सत्यदृष्टौ प्रपन्नायामसत्ये क्षयमागते |
निर्विकल्पचिदच्छात्मा स आत्मा समवाप्यते || ४३ ||

अच्छात्मा स्वच्छस्वभावः स परमार्थसत्य आत्मा | अहं स आत्माहं स
आत्मेति वा पाठान्तरे [निर्विकल्पचिदच्छोऽहं स आत्मा समवाप्यते
इत्येवंरूपे] च्छेदः | उभयत्रापि प्रत्यगात्मेत्यर्थः || ४३ ||

न सत्ता यस्य नासत्ता न सुखं नापि दुःखिता |
केवलं केवलीभावो यस्यान्तरुपलभ्यते || ४४ ||

सत्ता व्यक्तता | असत्ता अव्यक्तता | सुखं सात्त्विकचित्तवृत्तिरूपम् | अन्तः स्वहृदि
स्वानुभवादेवोपलभ्यते || ४४ ||

अभव्यया भावनया न चित्तेन्द्रियदृष्टिभिः |
आत्मनोऽनन्यभूताभिरपि यः परिवर्जितः || ४५ ||

अभव्यया अनर्थहेतुभूतया देहाद्यहंभावनया यो नोपलभ्यत
इत्यनुषज्यते | आत्मनस्तादात्म्याध्यासादनन्यभूताभिः || ४५ ||

वासनाभिरनन्ताभिर्व्योमेव घनराजिभिः |
संदिग्धायां यथा रज्ज्वां सर्पतत्त्वं तथैव हि || ४६ ||

अपिशब्दानुकर्षाद्वासनाभिरपि परिवर्जित इति पूर्वेणान्वयः |
एतदन्तविशेषणानां सर्वेषां स आत्मा समवाप्यते इति व्यवहितेन संबन्धः
| बन्धनिरासोपायं प्रपञ्च्य बन्धकल्पनाकर्तारमाह -
संदिग्धायामित्यादिना | सर्पतत्त्वं सर्पत्वम् || ४६ ||

चिदाकाशात्मना बन्धस्त्वबन्धेनैव कल्पितः |
कल्पितं कल्पितं वस्तु प्रतिकल्पनयान्यथा || ४७ ||

चिदाकाशात्मना स्वात्मनीति शेषः | कल्पितवस्त्वनुवेधात्प्रतिवस्तु बह्वैव
नानावैचित्र्यमिव गतं दुःखसंसारात्मना विभाव्यत इत्याशयेनाह -
कल्पितं कल्पितमिति || ४७ ||

तदेवान्यत्वमादत्ते स्वमहोरात्रयोरिव |
यदतुच्छमनायासमनुपाधि गतभ्रमम् || ४८ ||

तदेव कल्पनात्यागे परमपुरुषार्थसुखं परिशिष्यत इत्याह -
यदतुच्छमिति || ४८ ||

तत्तत्कल्पनयातीतं तत्सुखायैव कल्पते |
शून्य एव कुसूले तु सिंहोऽस्तीति भयं यथा || ४९ ||

54341 शून्य एव शरीरेऽन्तर्बद्धोऽस्मीति भयं तथा।
54342 शून्य एव कुसूले तु प्रेक्ष्य सिंहो न लभ्यते॥ ५०॥
54343
54344 अभयेऽप्यज्ञानाद्भयदर्शने प्रेक्षणमात्रेण तन्निवृत्तौ च
54345 दृष्टान्तमाह - शून्य एवेत्यादिना॥ ५०॥
54346
54347 तथा संसारबन्धार्थः प्रेक्षितोऽसौ न लभ्यते।
54348 इदं जगदयं चाहमिति संभ्रान्तमुत्थितम्॥ ५१॥
54349
54350 अयं देहादिसंघातः॥ ५१॥
54351
54352 बालानां मध्यमे काले छाया वैतालिकी यथा।
54353 कल्पनावशतो जन्तोर्भावाभावशुभाशुभाः॥ ५२॥
54354
54355 अतिशैशवयौवनयोर्मध्यमे त्रिचतुर्हायनादिकाले प्रकाशनिशयोर्मध्यमे
54356 मन्दान्धकारकाले वा। छाया वृक्षमूलादिप्रदेशस्थगाढान्धकारः।
54357 वैतालिकी वेतालाकारा। भावो वैभवमभावो दारिद्र्यं तद्रूपाः
54358 शुभाशुभा भावाः॥ ५२॥
54359
54360 क्षणादसत्तामायान्ति सत्तमपि पुनः क्षणात्।
54361 मातैव गृहिणीभावगृहीता कण्ठलम्बिनी॥ ५३॥
54362
54363 असत्तां तिरोभावं पुनः सत्तामाविर्भावमप्यायान्तीत्यर्थः। पदार्थानां
54364 कल्पनानुसार्यर्थक्रियाकारिता प्रसिद्धैवेत्याह - मातैवेत्यादिना॥ ५३॥
54365
54366 करोति गृहिणीकार्यं सुरतानन्ददा सती।
54367 कान्तैव मातृभावेन गृहीता कण्ठलम्बिनी॥ ५४॥
54368
54369 नूनं विस्मारयत्येव मन्मथं मातृभावनात्।
54370 भावानुसारिफलदं पदार्थौघमवेक्ष्य च॥ ५५॥
54371
54372 न ज्ञेनेह पदार्थेषु रूपमेकमुदीर्यते।
54373 दृढभावनया चेतो यद्यथा भावयत्यलम्॥ ५६॥
54374
54375 तत्तत्फलं तदाकारं तावत्कालं प्रपश्यति।
54376 न तदस्ति न यत्सत्यं न तदस्ति न यन्मृषा॥ ५७॥
54377
54378 यद्यथा येन निर्णीतं तत्तथा तेन लक्ष्यते।
54379 भाविताकाशमातङ्गं व्योमहस्तितया मनः॥ ५८॥
54380
54381 भावितः आकाशो मातङ्गो येन तथाविधं मनस्तस्मिन्कल्पितया
54382 व्योमहस्तितया आकाशगजभावेन कामातुरं सत् व्योमकल्पितकाननचारिणीं
54383 स्वसंकल्पितां मातंगीं करेणुमनुधावत्यनुसरतीति परेणान्वयः॥ ५८॥
54384
54385 व्योमकाननमातङ्गीं व्योमस्थामनुधावति।
54386 तस्मात्संकल्पमेव त्वं सर्वभावमयात्मकम्॥ ५९॥
54387
54388 तस्मात्संकल्पत्यागेनैव स्वाभाविकात्मभावेन स्थितिरित्युपसंहरन्नुपदिशति
54389 - तस्मादिति॥ ५९॥
54390
54391 त्यज राम सुषुप्तस्थः स्वात्मनैव भवात्मनः।
54392 मणिर्हि प्रतिबिम्बानां प्रतिषेधक्रियां प्रति॥ ६०॥

आत्मनः स्वस्य पारमार्थिकेनाद्वयानन्दात्मनैव भव
नत्वपारमार्थिकदुःखात्मनेत्यर्थः | ननु मया सह संकल्पैस्त्यक्ता अपि
द्वैतभावा अनिच्छेऽपि मयि मणौ प्रतिबिम्बा इव दुर्वाराः स्युरित्याशङ्क्य
विशेषमाह - मणिरिति || ६० ||

न शक्तो जडभावेन नतु राम भवादृशः |
यदात्मनि जगद्राम तवेह प्रतिबिम्बति || ६१ ||

निरुद्धे चेतसि दैवात्कदाचिद्द्वैतप्रतिबिम्बनेऽपि तस्य मिथ्यात्वानुसंधानेन
ताद्रूप्यरञ्जनं त्याज्यमित्याह - यदेति || ६१ ||

तदवस्त्विति निर्णीय मा तेनागच्छ रञ्जनम् |
तदेव सत्यमिति वाप्यभिन्नं परमात्मनः || ६२ ||

तस्य चिदैक्यानुसंधानेन प्रविलापनं वा कार्यमित्याह - तदेवेति |
एवकारो भिन्नक्रमः | तत्सत्यं ब्रह्मैवेत्यर्थः || ६२ ||

मत्वान्तस्त्वमनाद्यन्तं भावयात्मानमात्मना |
चेतसि प्रतिबिम्बन्ति ये भावास्तव राघव |
रञ्जयन्त्वन्यसक्तत्वान्मा ते त्वां स्फटिकं यथा || ६३ ||

ते त्वां मा रञ्जयन्तु || ६३ ||

स्फटिकममननं यथा विशन्ति
प्रकटतया न च रञ्जना विचित्रा |
इह हि विमननं तथा विशन्तु
प्रकटतया भुवनैषणा भवन्तम् || ६४ ||

अस्तु वा द्वैतप्रतिभासस्तथापि निर्विकारात्मबोधात्स्फटिकस्येव न तैस्तव
रञ्जनास्त्वित्याह - स्फटिकमिति | मननं प्रतिबिम्बितार्थानां
पुनःपुनरनुसंधाने रागादिवासनाधानं तद्रहितम् | भुवनैषणाः
प्रारब्धभोगोचितजगद्व्यवहारेच्छाः || ६४ ||

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपायेषु स्थितिप्रकरणे
विज्ञानवादो नामैकविंशः सर्गः || २१ ||

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे विज्ञानवादो
नामैकविंशः सर्गः || २१ ||

## द्वाविंशः सर्गः २२

श्रीवसिष्ठ उवाच |

जन्तोः कृतविचारस्य विगलद्वृत्तिचेतसः |
मननं त्यजतो ज्ञात्वा किंचित्परिणतात्मनः || १ ||

इह प्ररूढबोधस्य सर्वदोषपरिक्षयः |
प्रसादः सुविशुद्धात्मदर्शनं चोपवर्ण्यते || १ ||

ज्ञानफलजीवन्मुक्तावस्थानुभवप्रकारं प्रपञ्चयिष्यन्

54445 श्रवणमननाद्युपचयक्रमेण यथा यथा ज्ञानदार्ढ्यं तथा तथा
54446 दोषक्षयप्रकर्षं प्रथमं दर्शयति - जन्तोरित्यादिना।
54447 समाध्यभ्यासेन क्रमाद्वाह्यमननमात्ममननं च त्यजतः किंचित्परिणतो
54448 विशुद्धात्माकारतया विश्रान्त आत्मा मनो यस्य तथाविधस्य जन्तोरधिकारिणो
54449 जीर्णजाड्ये आत्माम्भसा एकत्वं व्रजति सति विज्ञानवशतः स्वभावः
54450 प्रसीदतीत्यनेनान्वयः [अष्टमश्लोकस्थेनेत्यर्थः] ॥ १ ॥
54451
54452 दृश्यं संत्यजतो हेयमुपादेयमुपेयुषः।
54453 द्रष्टारं पश्यतो दृश्यमद्रष्टारमपश्यतः ॥ २ ॥
54454
54455 हेयमज्ञानभूमिकाभेदं संत्यजतः। उपादेयं
54456 ज्ञानभूमिकाविशेषमुपेयुषः। द्रष्टारं प्रमातारमपि दृश्यं
54457 साक्षिचिद्वेद्यं पश्यतः। अथवा सर्वं दृश्यं द्रष्टारं भासकं
54458 चिन्मात्रमेवेति पश्यतः अद्रष्टारं भासकचिद्व्यतिरिक्तमपश्यतः ॥ २ ॥
54459
54460 जागर्तव्ये परे तत्त्वे जागरूकस्य जीवतः।
54461 सुप्तस्य घनसंमोहमये संसारवर्त्मनि ॥ ३ ॥
54462
54463 घने संमोहमये अज्ञानविकारात्मके सुप्तस्य। यस्यां जाग्रति भूतानि सा
54464 निशा पश्यतो मुनेः इति भगवद्वचनात् ॥ ३ ॥
54465
54466 पर्यन्तात्यन्तवैराग्यात्सरसेष्वरसेष्वपि।
54467 भोगेष्वाभोगरम्येषु विरक्तस्य निराशिषः ॥ ४ ॥
54468
54469 सर्वसुखलवावधि विरञ्चिपदपर्यन्तमत्यन्तवैराग्यात् सरसेषु
54470 क्रममुक्तिरसवत्सु अरसेषु तद्रहितेषु आभोगं भोगकालपर्यन्तमेव रम्येषु
54471 भोगेषु भोगसाधनेषु स्रक् चन्दनादिषु विरक्तस्य। अत एव लोकसंग्रहार्थं
54472 क्रियमाणकर्मफलेषु प्रारब्धोपनीतभोगेषु च निराशिषः। आविरिञ्चसुखेषु
54473 वैराग्यात्तत्साधनाप्सरोविमानादिविषयेषु ऐहिकभोगेषु च विरक्तस्येति
54474 पिण्डितार्थः ॥ ४ ॥
54475
54476 व्रजत्यात्माम्भसैकत्वं जीर्णजाड्ये नभस्यलम्।
54477 गलत्यपगतासङ्गे हिमापूर इवातपे ॥ ५ ॥
54478
54479 जीर्णजाड्ये अनादिजडे नभसि अज्ञानाकाशे गलति सति। किं जले
54480 सैन्धवखण्डवद्रसावशेषेण नेत्याह - आत्माम्भसा एकत्वं व्रजतीति।
54481 आतपे हिमखण्डवन्निरवशेषमित्यर्थः ॥ ५ ॥
54482
54483 तरङ्गितासु कल्लोलजललोलान्तरासु च।
54484 शाम्यन्तीष्वथ तृष्णासु नदीष्विव घनात्यये ॥ ६ ॥
54485
54486 तरङ्गितास्विति द्वे नदीतृष्णयोर्द्वयोरपि विशेषणे। तृष्णापक्षे
54487 कल्लोलजलमिव लोलान्तरासु ॥ ६ ॥
54488
54489 संसारवासनाजाले खगजाल इवाखुना।
54490 त्रोटिते हृदयग्रन्थौ श्लथे वैराग्यरंहसा ॥ ७ ॥
54491
54492 खगजाले पक्षिबन्धनानाये। आखुना मूषकेण ॥ ७ ॥
54493
54494 कातकं फलमासाद्य यथा वारि प्रसीदति।
54495 तथा विज्ञानवशतः स्वभावः संप्रसीदति ॥ ८ ॥
54496

54497 कातकं कतकसंबन्धि फलं। तद्रज इति यावत्। स्वभावोऽत्र मनः॥ ८॥
54498
54499 नीरोगं निरुपासङ्गं निर्द्वन्द्वं निरुपाश्रयम्।
54500 विनिर्याति मनो मोहाद्विहगः पञ्जरादिव॥ ९॥
54501
54502 रागः कामः। उप आसंजयति प्रसंजयति विषयेष्वित्युपासङ्गो
54503 विषयगुणानुसंधानम्। द्वन्द्वं भार्यादिजनसाहित्यम्। उपाश्रयः
54504 पुनःपुनर्भोगलाभभूमिः। इत्येतेभ्यः प्रथमं निर्गतं
54505 पश्चान्मोहादज्ञानाद्विनिर्याति॥ ९॥
54506
54507 शान्ते संदेहदौरात्म्ये गतकौतुकविभ्रमम्।
54508 परिपूर्णान्तरं चेतः पूर्णेन्दुरिव राजते॥ १०॥
54509
54510 विनिर्गतस्य पुनः कीदृशी स्थितिस्तां वर्णयति - शान्ते इत्यादिना॥ १०॥
54511
54512 जनितोत्तमसौन्दर्या दूरादस्तमयोन्नता।
54513 समतोदेति सर्वत्र शान्ते वात इवार्णवे॥ ११॥
54514
54515 समता समदृष्टिता॥ ११॥
54516
54517 अन्धकारमयी मूका जाड्यजर्जरितान्तरा।
54518 तनुत्वमेति संसारवासनेवोदये क्षपा॥ १२॥
54519
54520 मूका बोधवाग्व्यवहारशून्या। क्षपापक्षे जाड्येन तुषारशैत्येन
54521 वासनापक्षे मौर्ख्येण जर्जरान्तरा। तनुत्वमपक्षयम्। उदये सूर्योदये
54522 क्षपेवेत्यन्वयः॥ १२॥
54523
54524 दृष्टचिद्भास्करा प्रज्ञापद्मिनी पुण्यपल्लवा।
54525 विकसत्यमलोद्द्योता प्रातर्द्युरिव रूपिणी॥ १३॥
54526
54527 दृष्टः चिद्भास्करो यया। पुण्यानि
54528 गुरुसेवाश्रवणसमाध्यभ्यासादिसुकृतान्येव पल्लवाः किसलयानि
54529 यस्यास्तथाविधा। हृदयसरसि प्रज्ञापद्मिनी विवेकपद्मिनी विलसति।
54530 द्यौर्व्योमेव॥ १३॥
54531
54532 प्रज्ञा हृदयहारिण्यो भुवनाह्लादनक्षमाः।
54533 सत्त्वलब्धाः प्रवर्धन्ते सकलेन्दोरिवांशवः॥ १४॥
54534
54535 हृदयहारिण्यो मनोहराः सत्त्वगुणोपचयाल्लब्धाः प्रज्ञाः प्रवर्धन्ते॥
54536 १४॥
54537
54538 बहुनात्र किमुक्तेन ज्ञातज्ञेयो महामतिः।
54539 नोदेति नैव यात्यस्तमभूताकाशकोशवत्॥ १५॥
54540
54541 अभूतो वाय्वादिभूतचतुष्टयरहितो य आकाशकोशस्तद्वत्परिच्छिन्न
54542 [तद्वदपरिच्छिन्न इति पाठः] इत्यर्थः॥ १५॥
54543
54544 विचारणा परिज्ञातस्वभावस्योदितात्मनः।
54545 अनुकम्पा भवन्तीह ब्रह्मविष्ण्विन्द्रशंकराः॥ १६॥
54546
54547 तस्य महाप्रभावतामाह - विचारणेति।
54548 सर्गावताराद्यधिकारक्लेशदर्शनादनुकल्प्याः॥ १६॥

54549
54550 प्रकटाकारमप्यन्तर्निरहंकारचेतसम् ।
54551 नाप्नुवन्ति विकल्पास्तं मृगतृष्णामिवैणकाः ॥ १७ ॥
54552
54553 तस्य पुनः प्रमादात्पूर्ववद्विक्षेपप्रसक्तिं वारयति - प्रकटाकारमिति ।
54554 मृगतृष्णा तत्सलिलपानं लक्षणया ॥ १७ ॥
54555
54556 तरङ्गवदिमे लोकाः प्रयान्त्यायान्ति चेतसः ।
54557 क्रोडीकुर्वन्ति चाज्ञं ते न ज्ञं मरणजन्मनी ॥ १८ ॥
54558
54559 एवं जन्ममरणप्रसक्तिमपि वारयति - तरङ्गवदिति । आयान्ति जायन्ते ।
54560 प्रयान्ति म्रियन्ते । चेतसः स्वचित्तवासनावशात् ॥ १८ ॥
54561
54562 आविर्भावतिरोभावौ संसारो नेतरक्रमः ।
54563 इति ताभ्यां समालोको रमते स निबध्यते ॥ १९ ॥
54564
54565 इतरस्मिन्नज्ञभिन्ने तत्त्वज्ञे क्रमते इति क्रमस्तथाविधो न इति ज्ञात्वेति शेषः ।
54566 सम्यगालोको वस्तुतत्त्वदर्शनं यस्य स तत्त्ववित् ।
54567 मायाव्याघ्रादिकौतुकदर्शनेनेव रमते सोऽज्ञस्तु निबध्यते ॥ १९ ॥
54568
54569 न जायते न म्रियते कुम्भे कुम्भनभो यथा ।
54570 भूषिते दूषिते वापि देहे तद्वदिहात्मवान् ॥ २० ॥
54571
54572 विवेक उदिते शीते मिथ्या भ्रममरूदिता ।
54573 क्षीयते वासना साग्रे मृगतृष्णा मराविव ॥ २१ ॥
54574
54575 साग्रे अग्रभागोदितचन्द्रसहिते प्रदोषे । साये इति वा पाठः ॥ २१ ॥
54576
54577 कोऽहं कथमिदं चेति यावन्न प्रविचारितम् ।
54578 संसाराडम्बरं तावदन्धकारोपमं स्थितम् ॥ २२ ॥
54579
54580 मिथयाभ्रमभरोद्भूतं शरीरं पदमापदाम् ।
54581 आत्मभावनया नेदं यः पश्यति स पश्यति ॥ २३ ॥
54582
54583 कीदृशस्थित्या तर्हि निःसंसारान्धकारं पूर्णात्मानं पश्यति तामाह ##-
54584
54585 देशकालवशोत्थानि न ममेति गतभ्रमम् ।
54586 शरीरे सुखदुःखानि यः पश्यति स पश्यति ॥ २४ ॥
54587
54588 देववशोत्थान्याधिभौतिकानि कालवशोत्थान्याधिदैविकानि शरीरे
54589 उत्थान्याध्यात्मिकानि च सुखदुःखानि न ममेति यः पश्यति ॥ २४ ॥
54590
54591 अपारपर्यन्तनभो दिक्कालादिक्रियान्वितम् ।
54592 अहमेवेति सर्वत्र यः पश्यति स पश्यति ॥ २५ ॥
54593
54594 अपारपर्यन्तं यन्नभोदिक्कालादि यच्च तत्र
54595 परिच्छिन्नमुत्पत्तिचलतादिक्रियान्वितं तत्र सर्वत्राहमेवेति यः पश्यति ॥ २५ ॥
54596
54597 बालाग्रलक्षभागात्तु कोटिशः परिकल्पितात् ।
54598 अहं सूक्ष्म इति व्यापी यः पश्यति स पश्यति ॥ २६ ॥
54599
54600 यो व्यापी सन् कोटिशः परिकल्पिताद्वालाग्रलक्षभागात् । तुशब्दोऽप्यर्थे ॥ २६ ॥

आत्मानमितरच्चैव दृष्ट्या नित्याविभिन्नया ।
सर्वं चिज्ज्योतिरेवेति यः पश्यति स पश्यति ॥ २७ ॥

आत्मानं स्वात्मत्वेन प्रसिद्धं जीवं इतरत्तद्दृश्यं च सर्व चिज्ज्योतिरिति तेन
नित्यमविभिन्नया दृष्ट्या यः पश्यतीत्यर्थः ॥ २७ ॥

सर्वशक्तिरनन्तात्मा सर्वभावान्तरस्थितः ।
अद्वितीयश्चिदित्यन्तर्यः पश्यति स पश्यति ॥ २८ ॥

आधिव्याधिभयोद्विग्नो जरामरणजन्मवान् ।
देहोऽहमिति यः प्राज्ञो न पश्यति स पश्यति ॥ २९ ॥

तिर्यगूर्ध्वमधस्ताच्च व्यापको महिमा मम ।
द्वितीयो न ममास्तीति यः पश्यति स पश्यति ॥ ३० ॥

महिमा विस्तारः ॥ ३० ॥

मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ।
चित्तं तु नाहमेवेति यः पश्यति स पश्यति ॥ ३१ ॥

चिदेव तन्तुस्तेन प्रोते सर्वमहमेवेति वा चित्तमन्तःकरणं तु नाहमेवेति वा ॥
३१ ॥

नाहं न चान्यदस्तीति ब्रह्मैवास्ति निरामयम् ।
इत्थं सदसतोर्मध्ये यः पश्यति स पश्यति ॥ ३२ ॥

अहमेवेति पश्यतीत्युक्ते चित्परित्यागेन अहंकार एव परिगृहीतो माभूदिति
सहाहंकारेण जगत्प्रतिषेधेन चिदेकरसं ब्रह्मैव परिशेष्य
द्रष्टव्यमित्याह - नाहमिति । सतो वर्तमानस्यासतोऽतीतस्य भविष्यतश्च
मध्ये । सतो व्यक्तस्यासतोऽव्यक्तस्येति वा ॥ ३२ ॥

यन्नाम किंचित्त्रैलोक्यं स एवावयवो मम ।
तरङ्गोऽब्धाविवेत्यन्तर्यः पश्यति स पश्यति ॥ ३३ ॥

अवयव इति । पादोऽस्य सर्वा भूतानि इति श्रुतेः विष्टभ्याहमिदं
कृत्स्नमेकांशेन स्थितो जगत् इति भगवद्वचनाच्चेति भावः ॥ ३३ ॥

शोच्या पाल्या मयैवेयं स्वसेयं मे कनीयसी ।
त्रिलोकी पेलवेत्युच्चैर्यः पश्यति स पश्यति ॥ ३४ ॥

स्वतः सत्ताशून्यत्वेन मृतप्रायत्वाच्छोच्या । अत एव स्वसत्तास्फूर्त्यर्पणेन
पाल्या । स्वसा अनुजा कनीयसो अल्पा । युवाल्पयोः कनन्यतरस्याम् इति कनादेशः ।
दृष्टिमात्रेणापि पीड्यमानत्वात्पेलवा ॥ ३४ ॥

आत्मतापरते त्वत्तामत्ते यस्य महात्मनः ।
भवादुपरते नूनं स पश्यति सुलोचनः ॥ ३५ ॥

भवः सांसारिकदेहादिस्तस्मादुपरते विवेकबाधाभ्यां निवृत्ते ॥ ३५ ॥

चेत्यानुपातरहितं चिद्भैरवमयं वपुः ।
आपूरितजगज्जालं यः पश्यति स पश्यति ॥ ३६ ॥

54653
54654 चेत्यानुपातो दृश्यसंवलनं तद्रहितम् । अत एव निष्प्रत्यूहस्वभावस्फूर्त्या
54655 आपूरितं प्रभया तम इव सर्वतो व्याप्तं जगज्जालं येन ॥ ३६ ॥
54656
54657 सुखं दुःखं भवो भावो विवेककलनाश्च याः ।
54658 अहमेवेति वा नूनं पश्यन्नपि न हीयते ॥ ३७ ॥
54659
54660 भवः अधिकारिदेहस्तत्र भावो गुरुदैवतशास्त्रादिश्रद्धा तत्र
54661 नित्यानित्यादिविवेकस्तेन कलनाः
54662 श्रवणादिक्रमेणात्मपरिचयतारतम्यभेदाश्च सर्वे अहमेवेति यः पश्यति ॥
54663 ३७ ॥
54664
54665 स्वात्मसत्तापरापूर्णे जगत्यंशेन वर्तिना ।
54666 किं मे हेयं किमादेयमिति पश्यन्सुदृङ्गरः ॥ ३८ ॥
54667
54668 आत्मसत्तयैव परया निरतिशयानन्दघनया आपूर्णे ब्रह्मादिस्तम्बपर्यन्ते
54669 आनन्दलवार्पणेन तर्पिते जगति अंशेनैकदेशेन वर्तिना
54670 ऐहिकपारलौकिकभोग्यवस्तुना मे किं दुःखमस्ति यद्धेयं
54671 किंवान्यत्सुखमस्ति यदुपादेयमिति पश्यन्सुदृक् अभ्रान्तदृष्टिरित्यर्थः ॥
54672 ३८ ॥
54673
54674 अप्रतर्क्यमनाभासं सन्मात्रमिदमित्यलम् ।
54675 हेयोपादेयकलना यस्य क्षीणा स वै पुमान् ॥ ३९ ॥
54676
54677 अप्रतर्क्यं तर्कागम्यम् । अनाभासं वृत्तिभेदप्रतिफलनरहितं
54678 निर्विक्षेपमिति यावत् ॥ ३९ ॥
54679
54680 य आकाशवदेकात्मा सर्वभावगतोऽपि सन् ।
54681 न भावरञ्जनामेति स महात्मा महेश्वरः ॥ ४० ॥
54682
54683 महानीश्वरो निरतिशयस्वानन्दोपभोगसमर्थः शिव इत्यर्थः ॥ ४० ॥
54684
54685 तमःप्रकाशकलनामुक्तः कालात्मतां गतः ।
54686 यः सौम्यः सुसमः स्वस्थस्तं नौमि पदमागतम् ॥ ४१ ॥
54687
54688 तमः सुषुप्तिः प्रकाशो जागरः कलना स्वप्नस्तैर्मुक्तः । कालस्य
54689 मृत्योरप्यात्मतां निरतिशयप्रेमास्पदतां गतः ।
54690 स्वस्थस्तुरीयावस्थाप्रतिष्ठो यस्तम् ॥ ४१ ॥
54691
54692 यस्योदयस्तमयसंकलनाकलासु
54693 चित्रासु चारुविभवासु जगद्गतासु ।
54694 वृत्तिः सदैव सकलैकमतेरनन्ता
54695 तस्मै नमः परमबोधवते शिवाय ॥ ४२ ॥
54696
54697 सकलेऽपि जगत्येकं ब्रह्मेति मतिर्यस्य । जगद्गतासु चित्रासूदयः सर्गोऽस्तमयः
54698 प्रलयः संकलना स्थितिस्तल्लक्षणासु वृत्तिर्ब्रह्माकारदृष्टिरनन्ता
54699 अपरिच्छिन्ना । तस्मै परमबोधवते जीवन्मुक्तविग्रहाय साक्षाच्छिवाय नम
54700 इत्यर्थः ॥ ४२ ॥
54701
54702 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मो० स्थितिप्रकरणे
54703 अनुत्तमपदविश्रान्तिवर्णनं नाम द्वाविंशः सर्गः ॥ २२ ॥
54704

54705 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे
54706 अनुत्तमपदविश्रान्तिवर्णनं नाम द्वाविंशः सर्गः ॥ २२ ॥
54707
54708
54709 त्रयोविंशः सर्गः २३
54710
54711 श्रीवसिष्ठ उवाच ।
54712
54713 य उत्तमपदालम्बी चक्रभ्रमवदास्थितः ।
54714 शरीरनगरीराज्यं कुर्वन्नपि न लिप्यते ॥ १ ॥
54715
54716 शरीरनगरे राज्यं प्रबुद्धस्यात्र वर्ण्यते ।
54717 विनोदोसक्तसद्भोगैर्मनोजयसुखोदयः ॥ १ ॥
54718
54719 जीवन्मुक्तस्य शरीरनगरीराज्यं वर्णयिष्यन् रामस्य तज्जिज्ञासां
54720 प्रश्नप्रयोजिकामुत्थापयति - शरीरेति । निवृत्ते घटोत्पादनप्रयोजने
54721 यावद्वेगं कुलालचक्रभ्रमवद्यावत्प्रारब्धक्षयं
54722 देहधारणव्यवहारमास्थितो जीवन्मुक्तः इत्यर्थः । न लिप्यते
54723 सत्यत्वाभिमानाभावादिति भावः ॥ १ ॥
54724
54725 तस्येयं भोगमोक्षार्थं तज्ज्ञस्योपवनोपमा ।
54726 सुखायैव न दुःखाय स्वशरीरमहापुरी ॥ २ ॥
54727
54728 क्रीडाविनोदहेतुत्वादुपवनोपमा ॥ २ ॥
54729
54730 श्रीराम उवाच ।
54731
54732 नगरीत्वं शरीरस्य कथं नाम महामुने ।
54733 एतां चाधिवसन्योगी कथं राजसुखैकभाक् ॥ ३ ॥
54734
54735 एतां त्वदुक्तां शरीरनगरीमधिवसन्नधिष्ठाय पालयन् ।
54736 एकपदस्वारस्यात्सुखमेव भजते नतु राजान इव तद्दुःखलेशमपीत्यर्थः ॥ ३
54737 ॥
54738
54739 श्रीवसिष्ठ उवाच ।
54740
54741 रम्येयं देहनगरी राम सर्वगुणान्विता ।
54742 ज्ञस्यानन्तविलासाढ्या स्वालोकार्कप्रकाशिता ॥ ४ ॥
54743
54744 स्वालोक आत्मज्योतिः स एवार्कः ॥ ४ ॥
54745
54746 नेत्रवातायनोद्द्योतप्रकाशभुवनान्तरा ।
54747 करप्रतोलीविस्तारप्राप्तपादोपजाङ्गला ॥ ५ ॥
54748
54749 नेत्रे एव वातायने तत्रस्थाभ्यामुद्द्योताभ्यामिन्द्रियप्रदीपाभ्यां प्रकाशन्ते
54750 इति प्रकाशानि भुवनान्तराणि यस्याम् । करावेव प्रतोल्यौ रथ्ये तद्विस्तारेण
54751 प्राप्तं जानुपर्यन्ततालक्षणं पादोपजाङ्गलं यस्याः ॥ ५ ॥
54752
54753 रोमराजीलतागुल्मा त्वचाजालकमालिता ।
54754 गुल्फाङ्गुल्यां प्रविश्रान्तजङ्घोरुस्तम्भमण्डला ॥ ६ ॥
54755
54756 त्वचागतैः शिराजालकैर्मालिता । गुल्फौ पादजङ्घासंधिग्रन्थी ताभ्यां

पार्ष्णिर्लक्ष्यते तत्सहितायामङ्गुल्याम् । जातावेकवचनम् ॥ ६ ॥

रेखाविभक्तपादाग्रशिलाप्रथमनिर्मिता ।
चर्ममर्मशिरासारसंधिसीमामनोरमा ॥ ७ ॥

पादाग्रपदेनात्र पादाधस्तनी कठिना त्वगुच्यते सैव स्तम्भमूलाधारशिला ।
रेखाभिर्विभक्तया नानालक्षणया तया प्रथमनिर्मिता ।
प्रथमाधारनिर्माणेन निर्मितेत्यर्थः । बहिश्चर्म अन्तर्मर्माणि सीमानः
मध्ये मध्ये शिराणां साराः शाखाप्ररोहाः सीमानः अस्थिषु तु संधयः
सीमानः ताभिर्मनोरमा ॥ ७ ॥

उरूरुतनुभागाग्रनिर्मितोपस्थनिम्नगा ।
कचत्केशावलीकाचदलप्रस्थवनावृता ॥ ८ ॥

उर्वोः ऊर्वोस्तनोर्मध्यकायस्य च यः संधिभागस्तस्याग्रे पुरोभागे निर्मिता
उपस्थेन्द्रियरूपा निम्नगा नगरमध्यनदी यस्याः । कचन्ती केशावल्येव
काचवन्नीलानि दलानि येषु तथाविधैः क्रीडाशैलप्रायशिरःप्रस्थेन
श्मश्रुकक्षादिरोमवनैश्चावृता ॥ ८ ॥

भ्रूललाटोष्ठसच्छायवदनोद्यानशोभिता ।
दृष्टिपातोत्पलाकीर्णकपोलविपुलस्थली ॥ ९ ॥

नीलच्छदसदृशाभ्यां भ्रूभ्यां पाण्डुनवच्छदसदृशेन ललाटेन
पुष्पसदृशाभ्यामोष्ठाभ्यां च सच्छायं
कान्तिमद्यद्वदनलक्षणमुद्यानं कदलीवनं तेन शोभिता । दृष्टिपाताः
कटाक्षास्तल्लक्षणैरुत्पलैराकीर्णौ यौ कपोलौ तल्लक्षणे विहारस्थल्यौ यत्र ॥ ९
। ।

वक्षःस्थलसरःस्यूतकुचपङ्कजकोरका ।
घनरोमावलीच्छन्नस्कन्धक्रीडाशिलोच्चया ॥ १० ॥

स्कन्धावेव क्रीडाशिलोच्चयौ यस्याम् ॥ १० ॥

उदरश्वभ्रनिक्षिप्तस्वान्नेष्टा भक्ष्यतत्परा ।
दीर्घकण्ठबिलोद्गीर्णवातसंरम्भशब्दिता ॥ ११ ॥

उदरलक्षणे कोशागारश्वभ्रे निक्षिप्तानि यानि स्वप्रारब्धप्रापितान्यन्नानि
तान्येव स्वानि धनानि अन्नानि धान्यादीनीष्टानि प्रियाणि वसनाभरणादीनि च
यस्याम् । भक्ष्यमनिषिद्धविषयोपभोगं तन्वन्तीति भक्ष्यतततो
रसनश्रोत्रादयः पराः शिरःसौधवातायनोपविष्टनागरस्थानीया यस्याम् ।
दीर्घमूर्ध्वमुखं यत्कण्ठबिलं तद्द्वारा उद्गीर्णो यः
प्राणवातस्तत्कृतेन संरम्भेण कण्ठद्वारकपाटोद्घाटनेन शब्दिता ॥ ११
। ।

हृदयापणनिर्णीतयथाप्राप्तार्थभूषिता ।
अनारतनवद्वारप्रवहत्प्राणनागरा ॥ १२ ॥

हृदयापणशब्देन तत्स्था विचारलक्षणा रत्नादिपरीक्षकजना गृह्यन्ते ।
तैर्निर्णीताः परीक्ष्य गृहीताश्चक्षुरादिद्वारा यथायोग्यं प्राप्ता ये
शब्दाद्यर्थास्तैर्वासनारूपैः पण्यैर्भूषिता ॥ १२ ॥

आस्यस्फारवदादृष्टदन्तास्थिशकलाकुला ।

54809 मुखास्पदाभ्रमज्जिह्वाचण्डीचर्वितभोजना ॥ १३ ॥
54810

54811 आस्ये स्फारवत् द्वारभक्तिरचना
54812 गजदन्तविभागदीषद्दृष्टैर्दन्तलक्षणैरस्थिशकलैराकुला। मुखास्पदया
54813 आसमन्ताद्भ्रमन्त्या जिह्वालक्षणया चण्ड्या काल्या चर्वितानि आस्वादितानि
54814 भोजनानि चतुर्विधान्यन्नानि यस्याम् ॥ १३ ॥
54815

54816 रोमशष्पतरच्छन्ना कर्णकोटरकूपका।
54817 स्फिक्शृङ्खलास्थितोपान्तपृष्ठविस्तीर्णजङ्गला ॥ १४ ॥
54818

54819 रोमलक्षणैः श।पतरैर्दीर्घतृणैश्छन्ना ॥ १४ ॥
54820

54821 गुदोत्थानारघट्टान्तप्रद्रुतानन्तकर्दमा।
54822 चित्तोद्यानमहीवल्गदात्मचिन्तावराङ्गना ॥ १५ ॥
54823

54824 गुदादुत्थानमुद्गमो यस्य मलस्य तदेव मूत्रस्थानलक्षणस्य आरघट्टस्य
54825 घटीयन्त्रस्यान्ते प्रान्ते प्रद्रुतः प्रवहन्ननन्तो दूरतः कर्दमो यस्याम्।
54826 चित्तलक्षणायामुद्यानमह्यां वल्गन्ती सदाक्रीडमाना आत्मचिन्तालक्षणा
54827 वराङ्गना पुरस्वामिनी यस्याम् ॥ १५ ॥
54828

54829 धीवरत्राद्दृढावद्धचपलेन्द्रियमर्कटा।
54830 वदनोद्यानहसनपुष्पोद्गममनोरमा ॥ १६ ॥
54831

54832 धीरेव वरत्रा चर्मरज्जुस्तया दृढा बद्धाश्चपलेन्द्रियमर्कटा यस्याम्।
54833 वदनोद्याने हसनमेव पुष्पोद्गमस्तेन मनोरमा ॥ १६ ॥
54834

54835 स्वशरीरमनोज्ञस्य सर्वसौभाग्यसुन्दरी।
54836 सुखायैव न दुःखाय परमाय हिताय च ॥ १७ ॥
54837

54838 स्वशरीरमनसी जानातीति स्वशरीरमनोज्ञस्तत्त्ववित्तस्य सुखायैव
54839 परमहितमुपदेशादिना परोद्धारस्तस्मै च ॥ १७ ॥
54840

54841 अज्ञस्येयमनन्तानां दुःखानां कोशमालिका।
54842 ज्ञस्य त्वियमनन्तानां सुखानां कोशमालिका ॥ १८ ॥
54843

54844 किंचिदस्यां प्रनष्टायां ज्ञस्य नष्टमरिन्दम।
54845 स्थितायां संस्थितं सर्वं तेनेयं ज्ञसुखावहा ॥ १९ ॥
54846

54847 ज्ञस्यानन्तसुखायेति यदुक्तं तद्दर्शयति - किंचिदिति। किंचिदल्पं
54848 तुच्छमेव नष्टं न सत्यवस्त्वित्यर्थः। सर्वं भोगमोक्षसुखम् ॥ १९ ॥
54849

54850 यदेनां ज्ञः समारुह्य संसारे विहरत्यलम्।
54851 अशेषभोगमोक्षार्थं तेनेयं ज्ञरथः स्मृतः ॥ २० ॥
54852

54853 ज्ञस्य रथ इव रथः ॥ २० ॥
54854

54855 शब्दरूपरसस्पर्शगन्धबन्धुश्रियो यतः।
54856 अनयैव हि लभ्यन्ते तेनेयं ज्ञस्य लाभदा ॥ २१ ॥
54857

54858 सुखदुःखक्रियाजालं यदेषोद्वहति स्वयम्।
54859 तदेषा राम सर्वज्ञसर्ववस्तुभरक्षमा ॥ २२ ॥
54860

54861 सर्वं पूर्णमात्मानं जानातीति सर्वज्ञस्तत्त्ववित्तस्य सर्वेषां
54862 भोगमोक्षोपायवस्तूनां भरणं भरः संग्रहस्तत्क्षमा ॥ २२ ॥
54863
54864 तस्यां शरीरपुर्यां हि राज्यं कुर्वन्गतज्वरः ।
54865 ज्ञस्तिष्ठति गतव्यग्रः स्वपुर्यामिव वासवः ॥ २३ ॥
54866
54867 व्यग्रशब्दो भावप्रधानः । तथाच गतव्यग्रः स्वस्थ इत्यर्थः ॥ २३ ॥
54868
54869 न क्षिपत्यवटाटोपे मनोमत्ततुरङ्गमम् ।
54870 न लोभदुर्द्रुमादाय प्रज्ञापुत्रीं प्रयच्छति ॥ २४ ॥
54871
54872 अवटे योनिगर्ते आटोपः पराक्रमो यस्य कामस्य तद्विषये । न क्षिपति न प्रेरयति ।
54873 लोभ एव दुर्द्रुर्विषवृक्षस्तमादाय शुल्कत्वेन गृहीत्वा प्रज्ञालक्षणां
54874 पुत्रीं कन्यां मोहाधर्मादिदौष्कुलेयेभ्यो न प्रयच्छति । अथवा
54875 दुर्द्रुमशब्देन तत्फलं लक्ष्यते । लोभलक्षणदुर्द्रुमफलमत्ति अनुभवतीति
54876 लोभदुर्द्रुमादः अधार्मिकजनस्तस्मै प्रज्ञा विवेकवती बुद्धिस्तल्लक्षणां
54877 पुत्रीं न प्रयच्छति । तेषु स्वप्रज्ञां गूहमानश्चरतीत्यर्थः ॥ २४ ॥
54878
54879 अज्ञानपरराष्ट्रं च न रन्ध्रं त्वस्य पश्यति ।
54880 संसारारिभयस्यान्तर्मूलान्येव निकृन्तति ॥ २५ ॥
54881
54882 संसारलक्षणारिभयस्य मूलानि स्नेहास्तानि निकृन्तति ॥ २५ ॥
54883
54884 तृष्णासारपरावर्तं कामसंभोगदुर्ग्रहे ।
54885 न निमज्जति पर्यस्तः सुखदुःखप्रदेवने ॥ २६ ॥
54886
54887 तृष्णानद्याः सरणं सारः प्रवाहस्तस्य महत्यावर्ते
54888 कामसंभोगलक्षणदुष्टग्राहवति अन्तर्मुखत्वात्पर्यस्तो बहिर्मुखः सन् न
54889 निमज्जति । सुखलवलक्षणैर्दुःखैः प्रदेवने परिदेवनसाधने ॥ २६ ॥
54890
54891 करोत्यविरतं स्नानं बहिरन्तरवीक्षणात् ।
54892 सरित्संगमतीर्थेषु मनोरथगतः क्रमात् ॥ २७ ॥
54893
54894 बहिरन्तश्च अस्य वासुदेवस्य परमात्मन ईक्षणादाधिभौतिकेष्वाध्यात्मिकेषु
54895 च सरित्संगमतीर्थेषु अविरतं सार्वकालिकं स्नानं करोति ।
54896 तथाचाहुर्वृद्धः - स्नातं तेन समस्ततीर्थसलिले सर्वापि
54897 दत्ताऽवनिर्यज्ञानां च कृतं सहस्रमयुतं देवाश्च संपूजिताः ।
54898 संसाराच्च समुद्धृताः स्वपितरः सर्वस्य पूज्यो ह्यसौ यस्य ब्रह्मविचारणे
54899 क्षणमपि प्राप्नोति धैर्यं मनः ॥ इति । मनोरथोऽत्र
54900 मानसब्रह्माकारवृत्तिस्तद्गतस्तदारूढः ॥ २७ ॥
54901
54902 सकलाक्षजनादृश्यसुखप्रेक्षापराङ्मुखः ।
54903 ध्याननाम्नि सुखं नित्यं तिष्ठत्यन्तःपुरान्तरे ॥ २८ ॥
54904
54905 सकलैरक्षलक्षणैर्जनैरादृश्येषु आपातदृश्येषु विषयेषु सुखानां
54906 प्रेक्षायां पराङ्मुखः ॥ २८ ॥
54907
54908 सुखावहैषा नगरी नित्यं वै विदितात्मनः ।
54909 भोगमोक्षप्रदा चैषा शक्रस्येवामरावती ॥ २९ ॥
54910
54911 स्थितया संस्थितं सर्वं किंचिन्नष्टं न नष्टया ।
54912 यया पुर्या महीयस्या सा कथं न सुखावहा ॥ ३० ॥

54913
54914 विनष्टे देहनगरे ज्ञस्य नष्टं न किंचन।
54915 आक्रान्तकुम्भाकाशस्य स्वस्य कुम्भक्षये यथा॥ ३१॥
54916
54917 आक्रान्तः स्वसात्कृतः कुम्भाकाशो येन तस्य स्वस्य॥ ३१॥
54918
54919 विद्यमानं घटं वायुः किंचित्स्पृशति नास्थितम्।
54920 यथा तथैव देही स्वां शरीरनगरीमिमाम्॥ ३२॥
54921
54922 यस्य स्थितिदशायामपि न सम्यक् स्पर्शस्तस्य नाशे स्पर्शो नेति किं वाच्यमिति
54923 दृष्टान्तेनाह - विद्यमानमिति॥ ३२॥
54924
54925 अत्रस्थः पुरुषो भोगानात्मा सर्वगतोऽपि सन्।
54926 विश्वकल्पकृतान्भुक्त्वा पुंसामधिगतार्थभाक्॥ ३३॥
54927
54928 अत्रास्यां शरीरनगर्यां तिष्ठतीत्यत्रस्थ आत्मा तत्त्वविद्विश्वकल्पनं
54929 विश्वकल्पस्तत्कृतान्प्रारब्धभोगान्भुक्त्वा अधिगतं प्राक्साक्षात्कृतं
54930 पूर्णं स्वात्मरूपमर्थं परमपुरुषार्थं मोक्षं भजत्
54931 इत्यधिगतार्थभाग्भवतीति शेषः॥ ३३॥
54932
54933 कुर्वन्नपि न कुर्वाणः समस्तार्थक्रियोन्मुखः।
54934 कदाचित्प्रकृतान्सर्वान्कार्यार्थाननुतिष्ठति॥ ३४॥
54935
54936 व्यवहारदृशा कुर्वन्नपि परमार्थदृशा न कुर्वाणः॥ ३४॥
54937
54938 कदाचिल्लीलया लोलं विमानमधिरोहति।
54939 अनाहतगतिः कान्तं विहर्तुममलं मनः॥ ३५॥
54940
54941 तस्य देहनगर्यां कान्तादिभोगफलान्याह - कदाचिदिति। विमानं
54942 विमानतुल्यं हृत्पुण्डरीकम्। कान्तं भोगकौतुकवन्मनो विहर्तुं
54943 विनोदयितुम्॥ ३५॥
54944
54945 तत्रस्थो लोकसुन्दर्या सततं शीतलाङ्गया।
54946 रमते रामया मैत्र्या नित्यं हृदयसंस्थितः॥ ३६॥
54947
54948 तत्रस्थः पूर्ववत्। मैत्र्या मैत्रीलक्षणया। रामया प्रियया॥ ३६॥
54949
54950 द्वे कान्ते तिष्ठतः सम्यक् पार्श्वयोः सत्यतैकते।
54951 इन्दोरिव विशाखे द्वे समाह्लादितचेतसी॥ ३७॥
54952
54953 क्षपितानखिला&ल्लोकान्दुःखक्रकचदारितान्।
54954 वल्लीवनस्थान्नभसः पृष्ठादर्क इवेक्षते॥ ३८॥
54955
54956 स्वर्गिणो नारकिदुःखदर्शितामिव तस्याज्ञजनदुःखदर्शितामाह -
54957 क्षपितानिति। वल्लीभिर्वनमिव परस्परं संवेष्ट्य स्थितान्। नभसः पृष्ठे
54958 स्थितोऽर्क इवेति दृष्टान्तात्तत्त्वविदोऽपि संसारवनविप्रकर्षो गम्यते॥ ३८॥
54959
54960 चिरं पूरितसर्वाशः सर्वसंपतीसुन्दरः।
54961 अपुनःखण्डनायेन्दुः पूर्णाङ्ग इव राजते॥ ३९॥
54962
54963 आशा दिशो मनोरथाश्च। सर्वाः संपत्तयस्ताभिः सर्वात्मभावसंपत्त्या च
54964 सुन्दरः। अपुनःखण्डनाय पुनःक्षयाभावाय॥ ३९॥

54965
54966 सेव्यामानोऽपि भोगौघो न खेदायास्य जायते।
54967 कालकूटः किलेशस्य कण्ठे प्रत्युत राजते॥ ४०॥
54968
54969 भोगौघः स्रक्चन्द्रनादिभोगौघः। खेदाय पुनर्जन्मादिदुःखाय। अथवा
54970 भोगौघो दुष्प्रारब्धः भोगौघः खेदाय तात्कालिकदुःखाय। प्रत्युतेति।
54971 तत्त्वविदोऽपि तप आदिक्लेशः प्रत्युताज्ञजनशिक्षामहाफलो राजते इति भावः॥
54972 ४०॥
54973
54974 परिज्ञातोपभुक्तो हि भोगो भवति तुष्टये।
54975 विज्ञाय सेवितो मैत्रीमेति चोरो न शत्रुताम्॥ ४१॥
54976
54977 परिज्ञाय भोगे प्रत्युत तस्य सुखहेतुतैवेत्याशयेनाह - परिज्ञातेति॥ ४१॥
54978
54979 नरनारी नटौघानां [नदौघानां इति पाठः] विरहे
54980 दूरगामिनाम्।
54981 ज्ञेन यात्रेव सुभगा भोगश्रीरवलोक्यते॥ ४२॥
54982
54983 तत्कुतस्तत्राह - नरेति। विरहे समाजविघटने दूरगमनशीलानां
54984 समाजमिलितनरनारीनटौघानां यात्रा समाज इव।
54985 भोगश्रीर्भोग्यपुत्रधनादिश्रीः॥ ४२॥
54986
54987 अशङ्कितोपसंप्राप्ता ग्रामयात्रा यथाध्वगैः।
54988 प्रेक्ष्यन्ते तद्वदेव ज्ञैर्व्यवहारमयाः [ङीष्भाव आर्षः]
54989 क्रियाः॥ ४३॥
54990
54991 अयत्नोपनतेऽप्यक्षि पदार्थेषु यथा पुनः।
54992 नीरागमेव पतति तद्वत्कार्येषु धीरधीः॥ ४४॥
54993
54994 यथा अक्षि चक्षुरयत्नोपनते यत्नाविरचिते पर्वतवनपुष्करिण्यादौ
54995 तद्गततरुगुल्मतामरसादिपदार्थेषु
54996 ममत्वाभिमानाभावाच्छेदभेदापहारादिदर्शनेऽपि
54997 दुःखादर्शनान्नीरागमेव पतति तद्वद्धीरस्य विदुषो धीः
54998 स्वपुत्रमित्रादिव्यवहारकार्येष्वपि नीरागमेव पततीत्यर्थः॥ ४४॥
54999
55000 इन्द्रियाणां न हरै प्राप्तमर्थं कदाचन।
55001 नाददाति तथाऽप्राप्तं संपूर्णो ज्ञोऽवतिष्ठते॥ ४५॥
55002
55003 कथं तर्हि प्रवर्तते तदाह - इन्द्रियाणामिति। प्राप्तं
55004 प्रारब्धोपस्थापितमर्थं विषयं न हरति न वारयति। अप्राप्तं च
55005 यत्नपूर्वकं नाददाति न संपादयति। यथाप्राप्तोपयोगेन जीवतीत्यर्थः॥ ४५॥
55006
55007 अप्राप्तचिन्ताः संप्राप्तसमुपेक्षाश्च सन्मतिम्।
55008 न कम्पयन्ति तरलाः पिच्छाघाता इवाचलम्॥ ४६॥
55009
55010 तत्कुतस्तत्राह - अप्राप्तेति। यतः अप्राप्तचिन्ताः प्राप्तोपेक्षाः पश्चात्तापाच्च
55011 तं न कम्पयन्ति न तरलीकुर्वन्त्यज्ञमिवेत्यर्थः। पिच्छाघाता
55012 मयूरबर्हघाताः॥ ४६॥
55013
55014 संशान्तसर्वसंदेहो गलिताखिलकौतुकः।
55015 संक्षीणकल्पनादेहो ज्ञः सम्राडिव राजते॥ ४७॥
55016

55017 सर्वसंदेहकारणाज्ञाननाशादेव संशान्तसर्वसंदेहः। सर्वभोगेषु
55018 मिथ्यात्वदर्शनाद्गलिताखिलकौतुकः। संक्षीणौ तदुभयकल्पनाहेतू
55019 स्थूलसूक्ष्मदेहौ यस्येति हेतुगर्भं विशेषणम्। सम्राट् राजसूयफलं
55020 स्वाराज्यपदं प्राप्तवानिव। स स्वराड्भवति इति श्रुतेः॥ ४७॥
55021
55022 आत्मन्येव न मात्यन्तः स्वात्मनात्मनि जृम्भते।
55023 संपूर्णोऽपारपर्यन्तः क्षीरार्णव इवार्णवे॥ ४८॥
55024
55025 पामरदृशा स्वाराज्यदृष्टान्तस्तत्त्वदृशा तु नास्ति दृष्टान्तः
55026 परिच्छेदाभावादित्याशयेनाह - आत्मन्येवेति। अर्णवे स्वात्मनीत्यर्थः॥ ४८
55027 ॥
55028
55029 भोगेच्छाकृपणाञ्जन्तून्दीनान्दीनेन्द्रियाणि च।
55030 अनुन्मत्तमनाः शान्तो हसत्युन्मत्तकानिव॥ ४९॥
55031
55032 अनुन्मत्तमनाः प्रशान्तचित्तः संभोगेच्छाकृपणान् जन्तून् दीनानि
55033 स्वपरेन्द्रियाणि च उन्मत्तकानिव हसति॥ ४९॥
55034
55035 इच्छतोऽन्योज्झितां जायां यथैवान्येन हस्यते।
55036 इन्द्रियस्येच्छतो भोगं तद्वज्ज्ञेन विहस्यते॥ ५०॥
55037
55038 तत्त्वविदोज्झितं भोगमिच्छत इन्द्रियस्य। हस्यते प्रवृत्तिरित्युभयत्र शेषः॥
55039 ५०॥
55040
55041 त्यजत्स्वात्मसुखं सौम्यं मनो विषयविद्रुतम्।
55042 अङ्कुशेनेव नागेन्द्रं विचारेण वशं नयेत्॥ ५१॥
55043
55044 ननु मन्दज्ञानेन पुरुषेण विषयेषु द्रुतं मनः कथं निग्राह्यं तत्राह
55045 - त्यजदिति॥ ५१॥
55046
55047 भोगेषु प्रसरो यस्या मनोवृत्तेश्च दीयते।
55048 साप्यादावेव हन्तव्या विषस्येवाङ्कुरोद्गतिः॥ ५२॥
55049
55050 दीयते यया भोगतृष्णयेति शेषः॥ ५२॥
55051
55052 ताडितस्य हि यः पश्चात्संमानः सोऽप्यनन्तकः।
55053 शालेर्ग्रीष्माभितप्तस्य कुसेकोऽप्यमृतायते॥ ५३॥
55054
55055 ननु [तनुनिग्रहपीडितं इति पाठः] निग्रहपीडितं मनो रुष्टो बाल इव
55056 स्वात्मन्यपि न रज्येतेति चेत्तत्राह - ताडितस्येति। चिरोन्मादलालितस्य
55057 सकृन्निग्रहे पुनः परित्यागे हि तथा स्याच्चिरनिग्रहेण निराशतां नीतस्य तु न
55058 तथेति भावः। कुसेकोऽपीत्यपिशब्दात्सुसेके किं वाच्यमिति गम्यते॥ ५३॥
55059
55060 अनार्तेन हि सन्मानो बहुमानो न बुध्यते।
55061 पूर्णानां सरितां प्रावृट्पूरः स्वल्पो न राजते॥ ५४॥
55062
55063 उक्तमेव भावं प्रकाशयति - अनार्तेनेति॥ ५४॥
55064
55065 पूर्णस्तु प्राकृतोऽप्यन्यत्पुनरप्यभिवाञ्छते।
55066 जगत्पूरणयोग्याम्बुर्गृह्णात्येवार्णवो जलम्॥ ५५॥
55067
55068 मनसोऽभिगृहीतस्य या पश्चाद्भोगमण्डना।

55069 तामेवालब्धविस्तारां [तामेव लब्धविस्तारात् इति टीकानुगुणः पाठ इति
55070 भाति] क्लिष्टत्वाद्बहु मन्यते || ५६ ||
55071
55072 अभिगृहीतस्य सर्वतो निगृहीतस्य |
55073 भोगमण्डनाभिक्षाशनाद्यल्पविषयार्पणेन लालनम् |
55074 लब्धविस्तारात्प्राक्तनभोगाद्बहु अधिकं मन्यते || ५६ ||
55075
55076 बन्धमुक्तो महीपालो ग्रासमात्रेण तुष्यति |
55077 परैरबद्धो नाक्रान्तो न राज्यं बहु मन्यते || ५७ ||
55078
55079 उक्तेऽर्थे दृष्टान्तमाह - बन्धमुक्त इति || ५७ ||
55080
55081 हस्तं हस्तेन संपीड्य दन्तैर्दन्तान्विचूर्ण्य च |
55082 अङ्गान्यङ्गैरिवाक्रम्य जयेच्चेन्द्रियशात्रवान् || ५८ ||
55083
55084 तस्माच्चिरनिग्रहेण बोधेन च समूलमनोजयाय प्रथममिन्द्रियजय एव
55085 सर्वप्रयत्नैः कार्य इत्याह - हस्तमिति || ५८ ||
55086
55087 जेतुमन्यं कृतोत्साहैः पुरुषैरिह पण्डितैः |
55088 पूर्वं हृदयशत्रुत्वाज्जेतव्यानीन्द्रियाण्यलम् || ५९ ||
55089
55090 न मनोजयार्थमेव बाह्यशत्रुजयार्थमपीन्द्रियजय आवश्यक इत्याह -
55091 जेतुमिति || ५९ ||
55092
55093 एतावति धरणितले
55094 सुभगास्ते साधुचेतनाः पुरुषाः |
55095 पुरुषकलासु च गण्या
55096 न जिता ये चेतसा स्वेन || ६० ||
55097
55098 इन्द्रियनिग्रहफलं मनोजयमाश्रयप्रशंसावन्दनाभ्यां प्रशंसति ##-
55099 पुरुषाणां कलासु स्वबन्धमोक्षकौशलेषु गण्या इत्यर्थः || ६० ||
55100
55101 हृदयबिले कृतकुण्डल-
55102 कलनाविवशो मनोमहाभुजगः |
55103 यस्योपशान्तिमागत-
55104 मलमुदितं तं सुनिर्मलं वन्दे || ६१ ||
55105
55106 हृदयबिले कृतया कुण्डलकलनया विवशो गर्वपरवशो महाभुजगो मनो
55107 यस्य उपशान्तिमात्यन्तिकनाशमागतं महामुनिं अलं स्वेन
55108 रूपेणोदितमाविर्भूतं सुनिर्मलं तं तत्त्वविदं वन्दे इत्यर्थः || ६१ ||
55109
55110 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मो० स्थितिप्रकरणे
55111 शरीरनगरविभूतियोगो नाम त्रयोविंशः सर्गः || २३ ||
55112
55113 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे
55114 शरीरनगरविभूतियोगो नाम त्रयोविंशः सर्गः || २३ ||
55115
55116
55117 चतुर्विंशः सर्गः २४
55118
55119 श्रीवसिष्ठ उवाच |
55120

55121 महानरकसाम्राज्ये मत्तदुष्कृतवारणाः ।
55122 आशाशरशलाकाढ्या दुर्जया हीन्द्रियारयः ॥ १ ॥
55123
55124 इह प्राबल्यमक्षाणां जयोपायश्च वर्ण्यते ।
55125 तेन प्रसादबोधाभ्यां वासनाक्षय ईर्यते ॥ १ ॥
55126
55127 तत्रेन्द्रियजये उपायप्रयत्नाधिक्यं विधित्सुरिन्द्रियाणां दुर्जयतामाह -
55128 महानरकेति ।
55129 तपनाऽवीचिमहारौरवरौरवसंघातकालसूत्रसंज्ञकमहानरक##-
55130 वारणा गजा येषाम् । आशास्तृष्णास्ता एव शरशलाकास्ताभिराढ्याः ॥ १ ॥
55131
55132 स्वाश्रयं प्रथमं देहं कृतघ्ना नाशयन्ति ये ।
55133 ते कुकार्यमहाकोशा दुर्जयाः स्वेन्द्रियारयः ॥ २ ॥
55134
55135 कुकार्याणि पापानि तान्येव महान्तः कोशा धनसंचया येषाम् ॥ २ ॥
55136
55137 कलेवरालयं प्राप्य विषयामिषगृध्नुकाः ।
55138 अक्षगृध्रा विवल्गन्ति कार्याकार्योग्रपक्षिणः ॥ ३ ॥
55139
55140 कलेवरलक्षणमालयं कुलायम् । विषयलक्षणेष्वामिषेषु गृध्नुका
55141 अभिकाङ्क्षिणः । अक्षीणीन्द्रियाण्येव गृध्राः । कार्यं कर्तुं
55142 योग्यमनिषिद्धं कर्म अकार्य निषिद्धं कर्म ते एवोग्रपक्षौ
55143 ताभ्यामुग्रपक्षिणः ॥ ३ ॥
55144
55145 विवेकतन्तुजालेन गृहीता येन ते शठाः ।
55146 तस्याङ्गानि न लुम्पन्ति पाशा नागबलं यथा ॥ ४ ॥
55147
55148 शठा धूर्तास्ते इन्द्रियारयो येन गृहीता निगृहीतास्तस्य पुंसोऽङ्गानि
55149 शान्त्यादीनि न लुम्पन्ति । नागबलं गजघटाम् ॥ ४ ॥
55150
55151 आपातरमणीयेषु रमते विषयेषु यः ।
55152 विवेकधनवानस्मिन्कुकलेवरपत्तने ॥ ५ ॥
55153
55154 तानरीन् जेतुं प्रथमं विवेकधनसंचयः कार्य इत्याशयेनाह - आपातेति
55155 ॥ ५ ॥
55156
55157 इन्द्रियारिभिरन्तस्थैरवशो नाभिभूयते ।
55158 न तथा सुखिता भूपा मृन्मयोग्रपुरीजुषः ॥ ६ ॥
55159
55160 मृन्मयोग्रत्वाभ्यां पुरीविशेषणं
55161 स्वशरीरपुर्यास्तद्विलक्षणत्वेनोत्कर्षप्रतिपादनार्थम् ॥ ६ ॥
55162
55163 यथा स्वाधीनमनसः स्वशरीरपुरीश्वराः ।
55164 आक्रान्तेन्द्रियभृत्यस्य सुगृहीतमनोरिपोः ॥ ७ ॥
55165
55166 इन्द्रियादिनिग्रहस्य फलान्याह - आक्रान्तेत्यादिना ॥ ७ ॥
55167
55168 वसन्त इव मञ्जर्यो वर्धन्ते शुद्धबुद्धयः ।
55169 प्रक्षीणाचित्तदर्पस्य निगृहीतेन्द्रियद्विषः ॥ ८ ॥
55170
55171 पद्मिन्य इव हेमन्ते क्षीयन्ते भोगवासनाः ।
55172 तावन्निशीथवेताला वल्गन्ति हृदि वासनाः ॥ ९ ॥

55173
55174 निशीथपदेनाज्ञानान्धकारो गम्यते ॥ ९ ॥
55175
55176 एकतत्त्वदृढाभ्यासाद्यावन्न विजितं मनः ।
55177 भृत्योऽभिमतकर्तृत्वान्मन्त्री सत्कार्यकारणात् ॥ १० ॥
55178
55179 स्वदेहनगरीसाम्राज्ये भृत्यमन्त्रिसामन्तादिकार्यं शुद्धं मन एव
55180 निर्वाहयतीत्याह - भृत्य इति ॥ १० ॥
55181
55182 सामन्तश्चेन्द्रियाक्रान्तेर्मनो मन्ये विवेकिनः ।
55183 लालनात्स्निग्धललना पालनात्पावनः पिता ॥ ११ ॥
55184
55185 स्निग्धा स्नेहवती । ललना भार्या ॥ ११ ॥
55186
55187 सुहृदुत्तमविश्वासान्मनो मन्ये मनीषिणाम् ।
55188 स्वालोकितः शास्त्रदृशा बुद्ध्यान्तः स्वानुभावितः ॥ १२ ॥
55189
55190 मनसः पितृत्वे हेत्वन्तरमप्याह - स्वालोकित इति । शास्त्रदर्शितया
55191 देवतादृशा अनुल्लङ्घ्यशासनत्वेन चिन्मात्रस्पन्दत्वेन च स्वालोकितः ।
55192 बुद्ध्या स्नेहबुद्ध्या विवेकबुद्ध्या च ॥ १२ ॥
55193
55194 प्रयच्छति परां सिद्धिं त्यक्त्वात्मानं मनःपिता ।
55195 सुदृष्टः सुपरामृष्टः सुदृढः सुप्रबोधितः ॥ १३ ॥
55196
55197 परां स्वार्जितधनादिलक्षणां तत्त्वज्ञानलक्षणां च सिद्धिम् । आत्मानं
55198 देहं मनोरूपं च त्यक्त्वा । सुदृढ इति विशेषणाद्वज्रमणिरिति गम्यते ।
55199 आदौ शास्त्रदर्शितपरीक्षादृशा सुदृष्टः खनिस्थाने भाग्याद्दृष्टश्च ।
55200 तत आचार्यसतीर्थ्यादिसहायेन स्वानुभवपर्यन्तं सुपरामृष्टः सम्यक्
55201 शाणोल्लेखनपरामृष्टश्च । ततो निदिध्यासनेन सुदृढो
55202 घनघातसहस्राभेद्यश्च । ततस्तत्त्वसाक्षात्कारेण
55203 सुप्रबोधितस्तेजोव्यञ्जकरसक्षालनसुप्रबोधितश्च ॥ १३ ॥
55204
55205 सुगुणे योजितो भाति हृदि हृद्यो मनोमणिः ।
55206 जन्मवृक्षकुठाराणि तथोदर्कोदयानि च ॥ १४ ॥
55207
55208 ततः सुगुणे पञ्चमादिभूमिकाभेदे योजितः शोभनगुणवति स्वर्णहारादौ
55209 योजितश्च । मणिरूपकप्रस्तावेऽपि रामस्यान्तरा मन्त्री सत्कार्यकारणादिति
55210 प्रागुक्ते सत्कार्यविशेषजिज्ञासामुपलक्ष्याह - जन्मेति । शुभकर्मणि
55211 शास्त्रीये प्रवृत्तस्येति शेषः । अनर्थपरम्परालक्षणानां
55212 जन्मवृक्षाणां कुठाराणि च्छेदकानि तथा उदर्कस्तदुत्तरफलभूत उदयो
55213 निरतिशयानन्दाविर्भावो येभ्यस्तथाविधानि च
55214 साधनचतुष्टयसंपत्त्यादिसाक्षात्कारान्तानि कर्माणि सत्कार्याणि दिशति ।
55215 कारयतीत्यर्थः ॥ १४ ॥
55216
55217 दिशत्येवं मनोमन्त्री कर्माणि शुभकर्मणि ।
55218 एवं मनोमणिं राम बहुपङ्ककलङ्कितम् ॥ १५ ॥
55219
55220 इत्थं रामं समाधाय प्रस्तुतं मणिरूपकमेवावलम्ब्योपसंहरति -
55221 एवमिति । अथवा
55222 मणिमन्त्रौषधीनामचिन्त्यप्रभावत्वान्मन्त्रकार्यसिद्धिवैचित्र्याणां
55223 मणिनापि संभवान्मनोमणिरेव मन्त्रीत्युक्तः । तस्य च जन्मवृक्षच्छेदो
55224 निरतिशयानन्दोदयश्च सिद्धिवैचित्र्ये इति तात्पर्येण मणिरूपकानुसारेणैव

योज्यम् ॥ १५ ॥

विवेकवारिणा सिद्ध्यै प्रक्षाल्यालोकवान्भव ।
भवभूमिषु भीमासु विवेकविकलो वसन् ॥ १६ ॥

एवं विवेकस्य निरतिशयशुभोदर्कतामुक्त्वा
महानर्थोदर्कात्तत्प्रमादाद्रामं वारयति - भवभूमिष्वित्यादिना ॥ १६ ॥

मा पतोत्पातपूर्णासु [पातोत्पात इति पाठः] विवशः प्राकृतो
यथा ।
संसारमायामुदितामनर्थशतसंकुलाम् ॥ १७ ॥

उत् ऊर्ध्वात्पातयन्तीत्युत्पाता रागादयस्तैः पूर्णासु ॥ १७ ॥

मा महामोहमिहिकामिमां त्वमवधीरय ।
विवेकं परमाश्रित्य बुद्ध्या सत्यमवेक्ष्य च ॥ १८ ॥

मावधीरय महारोगमिव नोपेक्षयावमंस्था इत्यर्थः ।
प्रस्तुतमिन्द्रियारिजयोपायोपदेशमुपसंहरति - विवेकमिति ॥ १८ ॥

इन्द्रियारीनलं जित्वा तीर्णो भव भवार्णवात् ।
असत्येव शरीरेऽस्मिन्सुखदुःखेष्वसत्सु च ॥ १९ ॥

ननु उत्पत्तिप्रकरणे देहेन्द्रियादीनामसत्त्वमुपपादितं तत्कुतोऽत्र तज्जयोपाय
उपदिश्यते तत्राह - असत्येवेति ॥ १९ ॥

दामव्यालकटन्यायो मा ते भवतु राघव ।
भीमभासदृढस्थित्या त्वं यास्यसि विशोकताम् ॥ २० ॥

तत्त्वदृशा असत्त्वेऽपि मोहदृशा तत्सत्त्वस्यानुभविकत्वादचिकित्सने
वासनादार्ढ्येन दामव्यालकटन्यायेनानर्थप्राप्तिर्दुर्वारा ।
विवेकाद्यभ्यासेन तच्चिकित्सने तु
भीमभासदृढन्यायान्नानर्थप्राप्तिरित्याह - दामेति ॥ २० ॥

अयमहमिति निश्चयो वृथा य-
स्तमलमपास्य महामते स्वबुद्ध्या ।
यदितरदवलम्ब्य तत्पदं त्वं
व्रज पिब भुङ्क्ष्व न बध्यसे मनस्कः ॥ २१ ॥

अयं दृश्यभूतो देहादिरेवाहमिति यो वृथा निश्चयो मिथ्याभिमानस्तं
स्वबुद्ध्या स्वतत्त्वनिश्चयेन अलमपास्य यदिदं वस्तुन इतरत् प्रत्यगेकरसं
तदेवावलम्ब्य तत्स्वभावेन स्थितत्वादमनस्कः सन् व्रजनादिव्यवहारं
कुर्वन्नपि न बध्यसे मुक्त एवासीत्यर्थः ॥ २१ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मो० स्थितिप्रकरणे
मनस्यसत्ताप्रतिपादनं नाम चतुर्विंशः सर्गः ॥ २४ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे
मनस्यसत्ताप्रतिपादनं नाम चतुर्विंशः सर्गः ॥ २३ ॥

पञ्चविंशः सर्गः २५

श्रीवसिष्ठ उवाच।

अस्मिन्विहरतो लोके लोकारामस्य धीमतः।
श्रेयसे तिष्ठतो यत्नमुत्तमार्थाभिधायिनः॥१॥

सेनापतीनां त्रिदशैः शम्बरस्यात्र सूदनम्।
दामव्यालकटोत्पत्तिस्तैर्जयाशा च वर्ण्यते॥१॥

निर्वासनस्यापि शनैर्वासनासंचयेन देहाद्यभिमानजनने
जन्ममरणपरम्परा भवति किं पुनर्विवेकविरलवासनस्येति
कैमुतिकन्यायप्रदर्शनमुखेनेषदात्मव्युत्पन्नानामलब्धपूर्णनिष्ठाना
ं मन्दमध्यमाधिकारिणां
वासनोच्छेदप्रयत्नदार्ढ्यावश्यकताप्रदर्शनपरां
दामव्यालकटाख्यायिकां विवक्षुर्वसिष्ठो रामस्य
तच्छुश्रूषोत्पादनायोक्तमेव विविच्य पुनरनुवदति - अस्मिन्निति द्वाभ्याम्।
लोका जना आरमन्ते विश्राम्यन्त्यस्मिन्निति लोकारामस्तस्य ते यत्नं तिष्ठतः
अनुतिष्ठतः उत्तमान् शमदमाद्यर्थानभिधत्ते स्वात्मनि प्रकाशयति
तच्छीलस्य॥१॥

दामव्यालकटन्यायो मा ते भवतु राघव।
भीमभासदृढस्थित्या त्वं विशोको भवेति च॥२॥

दामव्यालकटन्यायो माभूदिति भीमभासदृढस्थित्या विशोको भवेति च
उदाहृतं प्रागिति शेषः॥२॥

श्रीराम उवाच।

दामव्यालकटन्यायो मा ते भूदित्युदाहृतम्।
ब्रह्मन् किमेतद्भवता भवतापापहारिणा॥३॥

एवं पुनरनुवादेनोत्थापितजिज्ञासो रामस्तदुभयोक्तेर्विस्तरं पृच्छति -
दामेत्यादिना॥३॥

भीमभासदृढस्थित्या त्वं विशोको भवेति च।
प्रभो किमुक्तं भवता भवतापापहारिणा॥४॥

उदारयैतया शुद्धं संप्रबोधय मां गिरा।
घनस्तापापहारिण्या प्रावृषीव कलापिनम्॥५॥

एतया एतत्कथाद्वयवर्णनरूपया। घनो मेघः। कलापिपक्षे
संप्रबोधनमुल्लासनम्॥५॥

श्रीवसिष्ठ उवाच।

दामव्यालकटन्यायं भीमभासदृढस्थितिम्।
शृणु राघव तच्छ्रुत्वा यदिष्टं तत्समाचर॥६॥

आसीत्पातालकुहरे सर्वाश्चर्यमनोरमे।
शम्बरो नाम दैत्येन्द्रो मायामणिमहार्णवः॥७॥

मायालक्षणानां मणीनां महार्णव इवाकरः॥७॥

55329
55330 आकाशनगरोद्यानरचितासुरमन्दिरः।
55331 कृत्रिमोत्तमचन्द्रार्कभूषितात्मीयमण्डलः॥ ८॥
55332
55333 तत्त्वमेव प्रपञ्चयति - आकाशेत्यादिना। आकाशकल्पिते नगरे उद्यानेषु
55334 रचितान्यसुरमन्दिराणि येन॥ ८॥
55335
55336 शिलाशकलसंभूतपद्माद्यैरमराचलः।
55337 अनन्तविभवारम्भपरिपूरितदानवः॥ ९॥
55338
55339 शिलाशकलानीव संभूतैः सुलभैः पद्माद्यैः
55340 पद्मरागाद्यैर्मणिभिर्निधिश्च अमराचलो मेरुरिव संपन्नः॥ ९॥
55341
55342 गृहरत्नाङ्गनागेयजितामरवधूध्वनिः।
55343 चन्द्रबिम्बकलापूर्णक्रीडोपवनपादपः॥ १०॥
55344
55345 गृहे रत्नभूतानामङ्गनानां गेयैर्गीतैर्जिता अमरवधूनां ध्वनयो
55346 गीतिसंपदो यस्य॥ १०॥
55347
55348 फुल्लनीलोत्पलव्यूहकरालरमणालयः।
55349 रत्नहंसध्वनाहूतहेमाम्बुरुहसारसः॥ ११॥
55350
55351 फुल्लैर्नीलोत्पलव्यूहैः करालः कामिभयंकरो रमणालयः क्रीडागृहं
55352 यस्य। ध्वननं ध्वनिस्तेनाहूतः॥ ११॥
55353
55354 हेमपादपशाखाग्रकृताम्भोरुहकुड्मलः।
55355 करञ्जजालप्रपतन्मन्दारकुसुमाकरः॥ १२॥
55356
55357 तर्कुयन्त्रमयानन्तदैत्यनिर्जितवासवः।
55358 हिमशीतानलज्वालानिर्मितोद्यानमण्डपः॥ १३॥
55359
55360 तर्कुयन्त्रं कर्तरीयन्त्रं तन्मयैरनन्तैर्बहुभिर्दैत्यैर्निर्जितो वासवो येन।
55361 हिममिव शीतैरनलज्वालैर्निर्मितो रचित उद्यानमण्डपो येन॥ १३॥
55362
55363 सर्वत्र कुसुमोद्यानजितानन्दननदनः।
55364 मायासर्वहृतव्यालमलयाचलचन्दनः॥ १४॥
55365
55366 मायया सर्वाणि हृतानि व्यालसहितानि मलयाचलचन्दनानि येन॥ १४॥
55367
55368 हेमश्रीलोकलावण्यनिर्जितान्तःपुराङ्गनः।
55369 नानाकुसुमसंभारजानुदघ्नगृहाङ्गणः॥ १५॥
55370
55371 हेम्नः श्रीर्लोकलावण्यानि च निर्जितानि याभिस्तथाविधा अन्तःपुराङ्गना यस्य।
55372 निष्ठापरनिपातश्छान्दसः॥ १५॥
55373
55374 क्रीडार्थमृन्मयेशानजितचक्रगदाधरः।
55375 अजस्रोड्डीनरत्नौघताराढ्यखपुरान्तरः॥ १६॥
55376
55377 क्रीडार्थेन मृन्मयेनेशानेन जितश्चक्रगदाधरो विष्णुर्येन।
55378 अजस्रमुड्डीनैः खद्योतबद्भ्रमद्भिः रत्नौघैस्ताराढ्यं तारकितं खं
55379 पुरान्तरं च यस्य॥ १६॥
55380

55381 निशीथाखिलपातालशतचन्द्रनभस्तलः।
55382 स्वशालभञ्जिकालोकगीतगीतिरणोत्कटः॥ १७॥
55383
55384 अमावास्यादिनिशीथेष्वखिले पाताले शतचन्द्रं नभस्तलं यस्य।
55385 स्वरचितशालभञ्जिकामर्चां आलोकयन्तीति स्वशालभञ्जिकालोकास्तैः
55386 स्वशालभञ्जिकालक्षणैर्लोकैर्वा गीता गीतिः प्रबन्धो यस्य तथाविधो
55387 रणोत्कुटो युद्धशौण्डीर्यं यस्य॥ १७॥
55388
55389 मायैरावणनागेन्द्रविद्रुतामरवारणः।
55390 त्रैलोक्यविभवोत्कर्षपूरितान्तःपुरान्तरः॥ १८॥
55391
55392 विभवेषु स्त्रीहस्त्यश्वादिषूत्कर्षैः रत्नभूतैः स्त्रीरत्नादिभिः॥ १८॥
55393
55394 सर्वसंपत्तिसुभगः सर्वैश्वर्यनमस्कृतः।
55395 समस्तदैत्यसामन्तवन्दितोग्रानुशासनः॥ १९॥
55396
55397 महाभुजवनच्छायाविश्रान्तासुरमण्डलः।
55398 सर्वबुधिगणाधाररत्नमण्डलमण्डितः॥ २०॥
55399
55400 वनग्रहणादिच्छया मायिकसहस्रायुतादिभुजसंपत्तिर्गम्यते॥ २०॥
55401
55402 तस्योत्सादितदेवस्य कठिनोड्डामराकृतेः।
55403 बभूव विपुलं सैन्यमासुरं सुरनाशनम्॥ २१॥
55404
55405 तस्य शम्बरस्य। कठिना दुःसहा उड्डामरा भीषणा नभश्चरी वा
55406 आकृतिर्यस्य॥ २१॥
55407
55408 तस्मिन्मायाबले सुप्ते देशान्तरगते तथा।
55409 तत्सैन्यं तरसा जघ्नुश्छिद्रं प्राप्य किलामराः॥ २२॥
55410
55411 माया बलं यस्य तथाविधे तस्मिन्मये॥ २२॥
55412
55413 अथ शम्बरदैत्येन मुण्डिक्रोधद्रुमादयः।
55414 रक्षार्थमथ सामन्ताः स्वसेनासु नियोजिताः॥ २३॥
55415
55416 सामन्ताः सेनापतयः॥ २३॥
55417
55418 तानप्यन्तरमासाद्य जघ्नुर्देवा भयानकाः।
55419 व्योमान्तरगताः श्येनाः कलविङ्कानिवाकुलान्॥ २४॥
55420
55421 सेनापतीन्पुनश्चान्यांश्चकारासुरसत्तमः।
55422 चपलानुद्भटारावांस्तरङ्गानिव सागरः॥ २५॥
55423
55424 देवास्तानपि तस्याशु जघ्नुस्तेन [जग्मुः इति पाठः] स कोपवान्।
55425 जगामामरनाशाय परिपूर्णं त्रिविष्टपम्॥ २६॥
55426
55427 परिपूर्णं देवैरित्यर्थाद्गम्यते॥ २६॥
55428
55429 तस्मात्तन्मायया भीताः सुरास्तेऽन्तर्धिमाययुः।
55430 मेरुकाननकुञ्जेषु मृगा गौरीहरेरिव॥ २७॥
55431
55432 गौरीहरेर्गौरीवाहनसिंहाद्भीता मृगा इव॥ २७॥

55433
55434 क्रन्दत्क्षुद्रामरगणं बाष्पक्लिन्नाप्सरोमुखम् |
55435 शून्यं ददर्श स स्वर्गं कल्पक्षीणजगत्समम् || २८ ||
55436
55437 विहरन्कुपितस्तत्र लब्धमाहृत्य सुन्दरम् |
55438 लोकपालपुरीं दग्ध्वा जगामात्मीयमालयम् || २९ ||
55439
55440 तत्र स्वर्गे लुण्ठनेन लब्धं सुन्दरं रत्नादि आहृत्य आदाय || २९ ||
55441
55442 एवं दृढतरीभूते द्वेषे दानवदेवयोः |
55443 देवाः स्वर्गं परित्यज्य दिक्षु जग्मुरदर्शनम् || ३० ||
55444
55445 अदर्शनमन्तर्धानम् || ३० ||
55446
55447 अथ शम्बरदैत्येन ये ये सेनाधिनायकाः |
55448 क्रियन्ते यत्नतस्तांस्तु जघ्नुर्यत्नपराः सुराः || ३१ ||
55449
55450 तांस्तान् जघ्नुर्यावच्छम्बर उद्वेगमायातः सन् जज्वालेति परेणान्वयः || ३१ ||
55451
55452 यावदुद्वेगमायातः शम्बरः कोपवान्भृशम् |
55453 तार्णोऽतिमात्रमनल इव जज्वाल सोच्छ्वसन् || ३२ ||
55454
55455 सोच्छ्वसन्निति सोचि लोपे चेत्पादपूरणम् इति सोर्लोपः || ३२ ||
55456
55457 त्रैलोक्यमपि चान्विष्यन्न देवा&ल्लब्धवानथ |
55458 परेणापि प्रयत्नेन निधानमिव दुष्कृती || ३३ ||
55459
55460 ससर्ज मायया घोरानसुरांस्त्रीन्महाबलान् |
55461 बलरक्षार्थमुदितान्कालान्मूर्तिमिव स्थितान् || ३४ ||
55462
55463 बलं सैन्यं तस्य रक्षार्थमुदितानुद्युक्तान् | कालान् भूतो भविष्यन् वर्तमान
55464 इति त्रिधा प्रसिद्धान् || ३४ ||
55465
55466 निर्वृत्ता मायया भीमा बलपादपवाहिनः |
55467 उदगुस्ते महामायाः पक्षक्षुब्धा इवाद्रयः || ३५ ||
55468
55469 बलमिव पादपान्वहन्ति तच्छीलानित्यद्रिपक्षे || ३५ ||
55470
55471 दामो व्यालः कटश्चेति नामभिः परिलाञ्छिताः |
55472 यथाप्राप्तैककर्तारश्चेतनामात्रधर्मिणः || ३६ ||
55473
55474 दमयति शत्रूनिति दमः स एव दामः | व्याल इव वेष्टयति परानिति व्यालः |
55475 कटत्यावृणोति परास्तेभ्यः स्वानिति कट इति व्युत्पत्त्यान्वर्थैर्नामभिः
55476 परिलाञ्छिता अङ्किताः || ३६ ||
55477
55478 अभावात्कर्मणां ते च प्राक्तना नच वासनाः |
55479 निर्विकल्पकचिन्मात्रपरिस्पन्दैकधर्मकाः || ३७ ||
55480
55481 पूर्वेभ्यस्तेषु कोऽतिशये हेतुस्तमाह - अभावादित्यादिना | ते दामादयः
55482 प्राक्तनाः पूर्वसिद्धजीवा न | नच वासनास्तेषां सन्ति | कुतः | कर्मणां
55483 धर्मादीनामभावात् | किंतु निर्विकल्पको भयशङ्कापलायनादिविकल्पशून्यो
55484 यश्चिन्मात्रसंनिधाननिमित्तदेहपरिस्पन्दस्तदेकधर्मकाः || ३७ ||

55485
55486 कर्मजीवकलां तन्वीमसारां च मनोभिदाम् |
55487 अपुष्टां कृत्रिमामन्तश्चोदयओदयमागताः || ३८ ||
55488
55489 ननु यदि तेषां कर्मकामवासना न सन्ति तर्हि जन्मबीजाभावाज्जन्मैव न स्यात्
55490 | यदि च बीजाभावेऽपि जन्म स्यात्तर्हि मुक्तानामपि पुनर्जन्म स्यादिति | तथा
55491 चाग्रेऽपि वक्ष्यति विद्यते वासना यत्र तत्र सा याति पीनताम् इति | अतोऽसंगतं
55492 कर्माद्यभाववचनमित्याशङ्क्याह - कर्मजीवकलामिति | नैते स्वतन्त्रा
55493 जीवाः किंतु अन्तश्चोदयति प्रेरयतीत्यन्तश्चोदा अन्तर्यामिचित् तया निमित्तभूतया
55494 कर्मजीवस्य शम्बरस्य कलां कौशलरूपां तन्वीमल्पपरिमाणामपुष्टां
55495 कर्मवासनाद्यनुपचितां कृत्रिमां मायाकल्पनारूपामत एवासारां
55496 भोगसारशून्यां मनोभिदां सर्गसंकल्पवृत्तिमादाय
55497 उदयमाविर्भावमागताः | तथा चैन्द्रजालिकसृष्टपुरुषान्तराणामिव
55498 स्वतन्त्रकर्माभावेऽप्याविर्भावलक्षणं जन्मोपपद्यत इति भावः | अथवा
55499 विपश्चिदुपाख्यानवक्ष्यमाणन्यायेन
55500 शम्बरजीवस्यैवाग्निविस्फुलिङ्गवदन्तश्चाद्बहिश्च विभागात्कर्मजीवस्य
55501 कलामंशभूतां तत्र कर्मवासनादीनामत्यल्पत्वादपुष्टां मनो
55502 मनःप्रायां कृत्रिमां भिदां प्राप्य देहाद्युपाध्युदयादुदयं जन्म
55503 आगताः प्राप्ताः | तथाच
55504 योगिदेहभेदवच्छम्बरकामकर्मवासनाबीजवशादेवैषां जन्मसिद्धेर्न
55505 पृथक्तदपेक्षास्ति | एतावांस्तु विशेषः | योगिनां देहभेदे तत्त्वज्ञानेन
55506 बाधितत्वान्न प्रतिशरीरं कामादिजन्मबीजोपचयो दामव्यालकटादिदेहे
55507 त्वज्ञत्वात्तदुपचये जन्मपरम्पराप्राप्तिरिति न काचिदनुपपत्तिरिति भावः || ३८ ||
55508
55509 ते ह्यन्धपारम्पर्येण काकतालीयवद्भटाः |
55510 प्रकृतामनुवर्तन्ते क्रियामुज्झितवासनाः || ३९ ||
55511
55512 अत एव योगिवदेव तेषां यावद्वासनोपचयं व्यवहार इत्याह - ते हीति || ३९ ||
55513
55514 अर्धसुप्ता यथा बालाः स्वाङ्गैः रिङ्गन्ति केवलम् |
55515 वासनात्माभिमानाभ्यां हीनास्ते तद्वदेव हि || ४० ||
55516
55517 अप्रबुद्धवासनानां क्व चेष्टा दृष्टेति चेत्तत्राह - अर्धसुप्ता इति |
55518 रिङ्गन्ति चेष्टन्ते || ४० ||
55519
55520 नाभिपातं न चापातं न विदुस्ते पलायनम् |
55521 न जीवितं न मरणं न रणं न जयाजयौ || ४१ ||
55522
55523 अभिपातं युद्धकाले आभिमुख्येन शत्रूणां पतनम् | आपातं
55524 विश्रान्तविश्वस्तेषु अकस्माच्छत्रूणां पतनम् || ४१ ||
55525
55526 केवलं सैनिकानग्रे दृष्टानाहननोद्यतान् |
55527 अभिजग्मुः परानाजौ प्रहारदलिताद्रयः || ४२ ||
55528
55529 यदि न विदुस्तर्हि स्वयं कथं शत्रूनभिपेतुस्तत्राह - केवलमिति | अभिपत्य
55530 प्रहर्तव्यमित्येतादृशशम्बरसंकल्पवासनामात्रशरीरत्वादभिमुख##-
55531
55532 शम्बरश्चिन्तयामास परितुष्टमनाः परम् |
55533 विजेष्यते हि मे सेना मायासुरसुरक्षिता || ४३ ||
55534
55535 मायाकृतैरसुरैः सुरक्षिता || ४३ ||
55536

55537 अतिबलासुरदोर्द्रुमपालिता
55538 मम चमूः स्थिरतामलमेष्यति।
55539 अमरवारणदन्तविघट्टने-
55540 ष्वमरपर्वतहेमशिला यथा॥ ४४॥
55541
55542 अमरवारणा दिग्गजास्तेषां दन्तविघट्टनेष्वमरपर्वतो मेरुस्तदीया
55543 हेमशिलेव शत्रुप्रहारेष्वपि अलमत्यन्तं स्थिरतामेष्यति प्राप्स्यति॥ ४४॥
55544
55545 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० स्थितिप्रकरणे
55546 दामव्यालकटोत्पत्तिवर्णनं नाम पञ्चविंशः सर्गः॥ २५॥
55547
55548 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे
55549 दामव्यालकटोत्पत्तिवर्णनं नाम पञ्चविंशः सर्गः॥ २५॥
55550
55551
55552 षड्विंशः सर्गः २६
55553
55554 श्रीवसिष्ठ उवाच।
55555
55556 इति निर्णीय दैत्येन्द्रो दामव्यालकटान्विताम्।
55557 सेनां संप्रेषयामास भूतलं देवनाशिनीम्॥ १॥
55558
55559 दामव्यालकटादीनामुद्भूतानां रसातलात्।
55560 दैवतैः सह संग्रामो वर्ण्यतेऽत्र महोद्भटः॥ १॥
55561
55562 इति विजेष्यते इत्यादिपूर्वोक्तप्रकारेण॥ १॥
55563
55564 दैत्याः सागरकुञ्जेभ्यः कन्दरेभ्यश्च सायुधाः।
55565 उदगुर्भीमनिर्ह्रादाः सपक्षगिरिलीलया॥ २॥
55566
55567 सागरेभ्यो वेलावनकुञ्जेभ्यो गिरिकन्दरेभ्यश्च यथामार्गलाभं उदगुः
55568 ऊर्ध्वं निश्चक्रमुः॥ २॥
55569
55570 रोदसीकोटरं हस्तप्रहारहतभास्करम्।
55571 दानवाः पूरयामासुर्दामव्यालकटैधिताः॥ ३॥
55572
55573 हस्तप्रहारैर्हतो निस्तेजस्कः कृतो भास्करो यस्मिंस्तथाविधं
55574 रोदस्योर्द्यावापृथिव्योः कोटरमन्तरालाकाशम्। दामव्यालकटैरेधिता
55575 वर्धिताः॥ ३॥
55576
55577 अथोत्तस्थुर्निकुञ्जेभ्यः कन्दरेभ्यः सुराचलात्।
55578 प्रलयान्त इवाक्षुब्धा भीमाः स्वर्वासिनां गणाः॥ ४॥
55579
55580 उत्तस्थुर्युद्धायेति शेषः॥ ४॥
55581
55582 देवासुरपताकिन्योस्तद्युद्धमभवत्तयोः।
55583 अकालोल्बणकल्पान्तभीषणं भुवनान्तरे॥ ५॥
55584
55585 अकाले उल्बणो दुःसहः कल्पान्तः प्रलय इव भीषणम्॥ ५॥
55586
55587 पेतुः प्रलयपर्यस्तचन्द्रार्का इव दीप्तयः।
55588 शिरांसि कुण्डलोद्द्योततेजःपीततमांस्यथ॥ ६॥

55589
55590 कुण्डलोद्योततेजोभिः पीततमांसि शिरांसि प्रलयपर्यस्तचन्द्रार्का दीप्तय इव
55591 कबन्धात्पेतुः ॥ ६ ॥
55592
55593 जुघूर्णुर्भटनिर्मुक्तसिंहनादविराविताः ।
55594 प्रलयानिलसंपूरैः स्फुटहासा इवाद्रयः ॥ ७ ॥
55595
55596 प्रलयानिलानां संपूरैर्महाप्रवाहैः स्फुटनं स्फुटः । घञर्थे
55597 कविधानात्कः । स एवान्तरधातुवैचित्र्यदन्तप्रकाशसाम्याद्धासो येषाम् ॥ ७ ॥
55598
55599 रेणुः शैलशिलातुल्यहेतिघातास्तभित्तयः ।
55600 कुलाचलतटाभीरुविश्रान्तहरिमण्डलाः ॥ ८ ॥
55601
55602 भीरवः अत एव विश्रान्ता अन्तर्निलीना हरिमण्डलाः सिंहसमूहा येषु
55603 तथाविधाः शैलशिलासदृशहेतीनां घातैरस्तभित्तयो भग्नवप्राः
55604 [भङ्गवप्राः इति पाठः] । कुलाचलानां हिमवदादीनां तटाः
55605 रेणुः दध्वनुः । रणतेर्लिट् ॥ ८ ॥
55606
55607 चेरुः परस्पराघातहतहेतिसमुत्थिताः ।
55608 लोलानलकणाः कल्पविशीर्णा इव तारकाः ॥ ९ ॥
55609
55610 विलेसू रक्तमांसौघपूर्णैकार्णवतीरगाः ।
55611 कल्पतालवदुत्ताला वेतालास्तालतालिताः ॥ १० ॥
55612
55613 कल्पः संवर्तस्तदीयोत्पातभूततालवृक्षवदुत्तालाः ॥ १० ॥
55614
55615 प्रस्फुरद्रुधिरासारशान्तपांसुपयोधरे ।
55616 व्योम्नि हेतिहतक्षुण्णा मौलिकुण्डलकोटयः ॥ ११ ॥
55617
55618 शान्ताः पयोधरा इव पांसवो यस्मिन्व्योम्नि मौलिकुण्डलकोटयो
55619 भास्कराकारैरुपलक्षिता बभूवुरिति देहलीदीपन्यायेन संबध्यते ॥ ११ ॥
55620
55621 बभूवुर्भास्कराकारैः कल्पभूरुहधारिभिः ।
55622 प्रहारदलिताद्रीन्द्रैर्दैत्यैर्निर्विवरा दिशः ॥ १२ ॥
55623
55624 प्रहरणायोत्पाटितकल्पभूरुहधारिभिः ॥ १२ ॥
55625
55626 जग्मुर्ज्वलदसिप्रान्तवातपातितभित्तयः ।
55627 कणप्रकरतां शैलाः कल्पाग्निदलिता इव ॥ १३ ॥
55628
55629 असिप्रान्तलक्षणैर्वातैर्झञ्झापवनैः पातिता भित्तयो वप्राणि येषाम् ।
55630 कणप्रकरतां चूर्णसमूहताम् ॥ १३ ॥
55631
55632 देवास्ते च समाजग्मुरश्वमेधैधिता इव ।
55633 असुरानस्त्रविभ्रष्टाञ्जलदानिव वायवः ॥ १४ ॥
55634
55635 जगृहुस्तानथाक्रम्य जरठाखूनिवौतवः ।
55636 तेऽपि ताञ्जगृहुर्मत्तानृक्षारूढानिव द्रुमान् ॥ १५ ॥
55637
55638 तानसुरान् रजठाखुन्वृद्धमूषकान् ओतवो मार्जारा इव ते असुरास्तान् देवान्
55639 द्रुमान् रूढानारूढान् मत्तान् प्रमत्तपुरुषान् ऋक्षा भल्लूका इव जगृहुः
55640 ॥ १५ ॥

55641
55642 दोर्वृक्षविलसद्धेतिकुसुमाः शस्त्रपल्लवाः।
55643 रेजुः सुरासुराः फुल्ला वनलोला इव द्रुमाः॥ १६॥
55644
55645 दोर्लक्षणेषु वृक्षेषु विलसन्त्यो हेतयः शस्त्राण्येव कुसुमानि येषाम्॥ १६॥
55646
55647 अन्योन्यं पूरयामासुः शस्त्रपूरैर्दिशो दश।
55648 वनानि कुसुमव्रातैः सुमेराविव मारुतः॥ १७॥
55649
55650 घोरं समभवद्युद्धं देवदानव सेनयोः।
55651 रोदोरन्ध्रोदुम्बरान्तर्महामशकसंघयोः॥ १८॥
55652
55653 रोदोरन्ध्ररूपो य उदुम्बरान्तःप्रदेशस्तत्र
55654 महामशकसंघप्राययोर्देवदानवसेनयोः॥ १८॥
55655
55656 अथोदपतदुत्तालैर्लोकपालेभमण्डलैः।
55657 कल्पाभ्रस्फूर्जिताकारो दारुणः समरारवः॥ १९॥
55658
55659 इदानीं दिग्गजादिप्रमृद्यमानजनरणकोलाहलं वर्णयति -
55660 अथेत्यादिसप्तभिः॥ १९॥
55661
55662 पिण्डग्रहेण नभसि भूभागमिव कुट्टिमम्।
55663 मुष्टिग्राह्यो महामेघमन्थरोदरपीवरः॥ २०॥
55664
55665 पिण्डग्रहेण घनीभावस्वीकारेण नभसि कुट्टिमं भूभागमिव कुर्वाण इति
55666 शेषः। क्वचित्प्रदेशे मुष्टिग्राह्य इव क्वचिच्च मेघानां मन्थरं
55667 जलभारमन्थरमुदरमिव पीवरो गम्भीर इति यावत्॥ २०॥
55668
55669 रथसंपातसंपिष्टशस्त्रशैलरटन्नटः।
55670 त्रुटद्धृदयनिःसत्त्वकर्कशाक्रन्दघर्घरः॥ २१॥
55671
55672 रथसंपातेन संपिष्टैः शस्त्रैः शैलेषु रटन् नट इव तालल‌यानुसारी।
55673 त्रुटद्धृदयानां निस्सत्त्वानां कर्कशाक्रन्दैर्घर्घरः॥ २१॥
55674
55675 प्रलयप्रत्ययोल्लासिकल्पान्तारावबृंहणः।
55676 द्वादशादित्यसंघट्टद्रवत्काञ्चनपर्वतः॥ २२॥
55677
55678 प्रलयस्य प्रत्ययैः कारणैरग्निवाय्वादिभिरुल्लासी यः कल्पस्य ब्रह्माह्नोऽन्ते
55679 प्रसिद्ध आरावस्तस्य बृंहणः प्रतिगर्जनप्रायः। द्वादशादित्यानां
55680 संघट्टनेन मेलनेन द्रवन् यः काञ्चनपर्वतस्तदीयशब्द इवेत्यर्थः॥ २२
55681 ।।
55682
55683 ब्रह्माण्डकुण्डसंघट्टात्परावृत्त्या च निर्गतः।
55684 महास्रोतःपयःपूरः सत्त्वाहत इवाकरः॥ २३॥
55685
55686 संघट्टादिति ल्यब्लोपे पञ्चमी। संघट्टं प्राप्य परावृत्त्या चकारेण
55687 स्वस्थानाच्च निर्गतः सत्त्वैः प्राणिभिराहतः आकरः सत्त्वाकरः महास्रोतसः
55688 पयःपूरध्वनिरिव॥ २३॥
55689
55690 चञ्चत्सपक्षशैलेन्द्रपक्षपातचलद्ध्वनिः।
55691 कठिनापूरणोद्धूतस्फुटच्छैलेन्द्रकन्दरः॥ २४॥
55692

55693 चञ्चतां चलतां सपक्षशैलेन्द्राणां पक्षवातेनेव चलन् ध्वनिर्यत्र |
55694 कठिनैर्दुःश्रवैरापूरणैरुद्धूता उद्विग्नाः स्फुटन्तः श्रोत्रप्रायाः
55695 शैलेन्द्रकन्दराः येन || २४ ||
55696
55697 मन्दरोद्धूतदुग्धाब्धिसंक्षोभसदृशाङ्गकः |
55698 रतिश्रुद्धुंघुमास्फोटघटितद्वीपजन्तुभूः || २५ ||
55699
55700 अमृतार्थं मथने मन्दरेणोद्धूतस्य दुग्धाब्धेः संक्षोभध्वनिना
55701 सदृशमङ्गं स्वरूपं यस्य | तत्रैवामृतोत्पत्तौ रत्या तदासक्त्या
55702 शृण्वन्ति ये देवासुरास्तेषां हर्षोत्कर्षे घुंघुमा इव ध्वनन्त आस्फोटा
55703 भुजास्फालन शब्दास्तैर्घटिता व्याप्ताः सप्तद्वीपलक्षणा जन्तुभुवः
55704 प्राण्यावासायेन || २५ ||
55705
55706 सेनयोः क्षुब्धयोरासीद्युद्धमुद्धतदानवम् |
55707 निष्पिष्टनगरग्रामगिरिकाननमानवम् || २६ ||
55708
55709 इत आरभ्य आसर्गसमाप्तेर्युद्धमेव वर्णयति - सेनयोरित्यादिना || २६ ||
55710
55711 महाहेतिशतच्छिन्नदानवाचलपूर्णदिक् |
55712 अन्योन्याहतहेत्यादिचूर्णपूर्णाम्बरोदरम् || २७ ||
55713
55714 भुशुण्डीमण्डलास्फोटस्फुटन्मेरुशिरःशतम् |
55715 शरमारुतनिर्लूनदैत्यदेवमुखाम्बुजम् || २८ ||
55716
55717 चक्रावर्तशतभ्रान्तदेवदैत्यजरत्तृणम् |
55718 सेनाप्रहारकल्लोलवलनावलिताम्बरम् || २९ ||
55719
55720 हेत्युग्रवातनिष्पिष्टपतद्वैमानिकव्रजम् |
55721 अस्त्रोदिताब्धिवार्योघप्लावितव्योमपत्तनम् || ३० ||
55722
55723 हेतय एवोग्रवातास्तैर्निष्पिष्टाः पतन्तश्च वैमानिकव्रजा यत्र |
55724 अस्त्रैर्वारुणास्त्रादिभिरुदितस्याब्धेर्वार्योधैः प्लावितानि
55725 व्योमपत्तनान्यमरावत्यादीनि यत्र || ३० ||
55726
55727 वहन्महास्त्रपातासिशूलशक्तिनदीशतम् |
55728 शैलपक्षोद्धटास्फोटलुठद्ब्रह्माण्डमण्डपम् || ३१ ||
55729
55730 शैलानां पक्षेषु पार्श्वेषु उद्धटैरास्फोटैर्लुठन् कम्पमानो
55731 ब्रह्माण्डमण्डपो यत्र || ३१ ||
55732
55733 दैत्यपार्ष्णिप्रहारौघपतल्लोकेशपत्तनम् |
55734 नारीहलहलारावरणत्कङ्कणमन्दिरम् || ३२ ||
55735
55736 लुठद्दैत्यबलोद्भूतमत्तास्रौघजलान्वितम् [बलोद्धूत इति
55737 पाठः] |
55738 रक्तधौतनरौघोग्रमुक्तनादद्रवज्जनम् || ३३ ||
55739
55740 लोकपानीकपाम्भोजच्छन्नाच्छन्नयमान्वितम् |
55741 पुनः सुरासुरैर्घातैर्दृष्टसैन्यकुलाकुलम् || ३४ ||
55742
55743 लोकपानामिन्द्रादीनामनीकपाः सेनानायकास्तल्लक्षणेष्वम्भोजेषु भ्रमर इव
55744 कदाचिन्मृतानां प्राणहरणाय च्छन्नः कदाचिद्युद्धार्थमच्छन्नः

55745 प्रकटश्च यो यमस्तेनान्वितम् | पलायनकाले घातैः प्रहारैः पुनः
55746 परावृत्य दृष्टेनार्थात्प्रहरता सैन्यकुलेनाकुलम् || ३४ ||
55747
55748 सपक्षपर्वताकारदानवाद्रिगमागमैः |
55749 वहच्छवशवाशब्दभूरिभाङ्कारभीषणम् || ३५ ||
55750
55751 शवशवेत्यनुकरणशब्दरूपैर्भूरिभिर्भाङ्कारैर्भीषणम् || ३५ ||
55752
55753 आयुधाग्रविभिन्नोग्रदैत्यपर्वतनिर्झरैः |
55754 रक्तैररुणिताशेषवसुधार्णवपर्वतम् || ३६ ||
55755
55756 उत्सन्नराष्ट्रनगरविपिनग्रामगह्वरम् |
55757 धृतासंख्यासुरेभाश्वमनुष्यशवपर्वतम् || ३७ ||
55758
55759 धृता असंख्यसुरेभाश्वमनुष्यशवा यैस्तथाविधाः पर्वता मेर्वादयो
55760 यत्र || ३७ ||
55761
55762 सुतालोत्तालनाराचराजिरोचितवारणम् |
55763 मुष्टिप्रहारपिष्टांसमत्तैरावणवारणम् || ३८ ||
55764
55765 कल्पाभ्रपटलासारधारादलितपर्वतम् |
55766 महाशनिविनिष्पेषपिष्टोड्डीनकुलाचलम् || ३९ ||
55767
55768 कुपिताग्निज्वलज्ज्वालाजालज्वलितदानवम् |
55769 एकाञ्जलिपुटानीतसमुद्रोत्सादितानलम् || ४० ||
55770
55771 कुपिताग्नीति देवपराक्रमः | एकाञ्जलीत्यसुरपराक्रमः || ४० ||
55772
55773 चण्डदैत्यातिसंभारशिलीकृतमहाज्वलम् |
55774 वनव्यूहेन्धनाग्न्यर्चिर्द्राविताम्बुशिलोच्चयम् || ४१ ||
55775
55776 चण्डैर्दैत्यैः शैलशिलाद्यतिसंभारैः प्रक्षिप्तैः शिलीकृतः महान् ज्वलतीति
55777 ज्वलोऽग्निर्यत्रेति दैत्यपराक्रमः |
55778 वनव्यूहलक्षणेन्धनप्रयुक्ताभिरग्न्यर्चिर्भिर्द्राविता अत एवाम्बुप्रायाः
55779 शिलोच्चया यत्रेति देवपराक्रमः | एवमग्रेऽपि यथायोग्यं बोध्यम् || ४१ ||
55780
55781 अस्त्रनिर्मितदुर्वारतमःकल्पान्तरात्रिकम् |
55782 मायासूर्यगणोद्द्योतैः पीतातनुतमःपटम् || ४२ ||
55783
55784 मायाग्निवर्षनिष्पीतकलाभ्रघनवर्षणम् |
55785 ससीत्काराग्निवमनशस्त्रसंघट्टवर्षणम् || ४३ ||
55786
55787 कला मायाकौशलं तत्प्रयुक्तानामभ्राणां धनं वर्षणं यत्र || ४३ ||
55788
55789 वज्रवर्षास्त्रनिर्धूतशैलवर्षास्त्रसंभ्रमम् |
55790 निद्राबोधास्त्रयुद्धाढ्यं संघर्षावग्रहाश्रयम् || ४४ ||
55791
55792 संघर्षः पराभिभवः स एवावग्रहः प्रागुक्तवर्षप्रतिबन्धस्तदाश्रयम्
55793 || ४४ ||
55794
55795 वहत्क्रकचवृक्षास्त्रं जलाग्न्यस्मरणान्वितम् |
55796 ब्रह्मास्त्रयुद्धविषमं तमस्तेजोस्त्रसारितम् || ४५ ||

55797
55798 जलाग्न्योरस्मरणेन व्यामोहेनान्वितम् ॥ ४५ ॥
55799
55800 अस्त्रोद्गीर्णायुधानीकनीरन्ध्रसकलाम्बरम् ।
55801 शिलावर्षास्त्रदलितं वह्निवर्षास्त्रभासुरम् ॥ ४६ ॥
55802
55803 आसुरपैशाचाद्यस्त्रैरुद्गीर्णैस्तोमरमुसलमुद्गराद्यायुधानीकैर्नीरन्ध्रं
55804 सकलाम्बरं यत्र ॥ ४६ ॥
55805
55806 पताकास्पृष्टशशिकश्चक्रचीत्कारगर्जितैः ।
55807 मुहूर्तेन रथैर्लङ्घितोदयास्तमयाचलम् ॥ ४७ ॥
55808
55809 वज्रप्रहाराविरतम्रियमाणमहासुरम् ।
55810 शुक्रामरमहाविद्याजीवमानमहासुरम् ॥ ४८ ॥
55811
55812 शुक्रस्य अमराख्या महाविद्या मृतसंजीवनविद्या तया जीवमाना महासुरा
55813 यत्र ॥ ४८ ॥
55814
55815 विद्रवद्देवसंघातं जयप्रोड्डामरामरम् ।
55816 शुभग्रहमहाकेतुमालिकानामितस्ततः ॥ ४९ ॥
55817
55818 क्वचिद्विद्रवद्देवसंघातं क्वचिज्जयप्रोड्डामरामरम् ।
55819 क्वचिच्छुभग्रहाणां महतीनां केतुमालिकानां च
55820 बुद्धेर्दर्शनार्थमितस्तत उद्धरकन्धरं उन्नमितकण्ठम् ॥ ४९ ॥
55821
55822 उत्पातमङ्गलुघानां बुद्धेरुद्धरकन्धरम् ।
55823 साद्रिखोर्वीसमुद्रद्युजगद्रुधिरवारिधि ॥ ५० ॥
55824
55825 क्वचित्तु उत्पातानां मङ्गलौघानां बुद्धेर्दर्शनार्थमुद्धरकन्धरम् ।
55826 फलस्यापि हेतुत्वविवक्षणाद्वुद्धेरिति पञ्चमी । अद्रिभिः स्वेन समुद्रेण दिवा
55827 च सहितं जगदेव रुधिरवारिधिर्यत्र ॥ ५० ॥
55828
55829 फुल्लैककिंशुकवनं कुर्वद्दुर्वारवैरतः ।
55830 पर्वतप्रतिमासंख्यं शवपूर्णमहार्णवम् ॥ ५१ ॥
55831
55832 जगदित्यनुवर्तते । कुर्वदिति पूर्वोत्तरार्धान्वयि । उभयत्रापि रुधिरेणेति शेषः ॥
55833 ५१ ॥
55834
55835 समग्रतरुशाखाग्रलम्बलोलमहाशवम् ।
55836 दीप्यमानैः स्ववातार्तैः पक्षपुष्पैर्लसत्फलैः ॥ ५२ ॥
55837
55838 शरव्रातस्य वनत्वेन रूपणाय विशिनष्टि - दीप्यमानैरित्यादि ।
55839 अर्करश्मिप्रतिबिम्बपल्लवैर्दीप्यमानैः स्वस्य वेगवातेनार्तैश्चञ्चलैः
55840 कङ्कादिपक्षा गरुत एव पुष्पाणि येषां तैः । लसन्ति फलानि लोहभागा एव
55841 श्लेषात्फलानि येषां तैः ॥ ५२ ॥
55842
55843 तालोत्तालैः शरव्रातवनैर्व्याप्तनभस्थलम् ।
55844 पर्वतप्रतिमासंख्यकबन्धशतबाहुभिः ॥ ५३ ॥
55845
55846 तालेभ्योऽप्युत्तालैरुच्छ्रितैः ॥ ५३ ॥
55847
55848 नृत्यद्भिः पातिताम्भोदविमानसुरतारकम् ।

55849 शरशक्तिगदाप्रासपट्टिशप्रोतपर्वतम् ॥ ५४ ॥
55850
55851 कबन्धशतबाहुभिः पातिता अम्भोदा विमानानि सुरस्तारकाश्च यत्र ।
55852 पट्टिशान्तैः प्रोताः संतताः पर्वता यत्र ॥ ५४ ॥
55853
55854 लोकसप्तकविभ्रष्टकुड्यखण्डचिताम्बरम् ।
55855 अनारतरसन्मत्तकल्पाभ्रद्दढदुन्दुभि ॥ ५५ ॥
55856
55857 यद्यप्यूर्ध्वं षडेव लोकास्तथापि
55858 भूलोकस्थकुड्यखण्डानामप्युड्डयनेन
55859 भ्रंशसंभवाल्लोकसप्तकेत्युक्तम् ॥ ५५ ॥
55860
55861 एवं शब्दशतोन्नादपातालतलवारणम् ।
55862 विनायककराकृष्टदीर्घदानवपर्वतम् ॥ ५६ ॥
55863
55864 एवं प्रागुक्तप्रकारैः शब्दशतैरुन्नादाः प्रतिगर्जन्तः पातालतलवारणा
55865 दिग्गजा यत्र ॥ ५६ ॥
55866
55867 एकदिक्करनिष्पन्दसिद्धसाध्यमरुद्गणम् ।
55868 पलायमानगन्धर्वकिन्नरामरचारणम् ॥ ५७ ॥
55869
55870 दिग्भेदकराणां सूर्येन्द्रादीनामेकस्यां दिशि दैवान्मिलने एकदिक्करा
55871 असुरभयान्निष्पन्दाश्च सिद्धसाध्यमरुद्गणा यत्र ॥ ५७ ॥
55872
55873 ववुरशनिनिपातखण्डिताङ्गा
55874 दलितशिलाशकलाः ककुम्मुखेषु ।
55875 प्रलयसमयसूचकाः सुराणां
55876 सुरतरुघर्घरघस्मराः समीराः ॥ ५८ ॥
55877
55878 इदानीमौत्पातिकं झंझापवनं वर्णयति - ववुरिति ।
55879 अशनिनिपातैर्वैद्युताग्निपातनैः खण्डितप्राण्यङ्गा दलितशिलाशकलाश्च ।
55880 सुराणां प्रलयसमयस्य सूचकाः सुरतरुघर्घराणां
55881 कल्पवृक्षसंबन्धिभ्रमरकोकिलादिध्वनीनां घस्मरा
55882 भक्षकास्तिरोधायका इति यावत् । समीरा झंझामारुता ववुः ॥ ५८ ॥
55883
55884 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० मो० स्थितिप्रकरणे
55885 दामव्यालकटसंग्रामवर्णनं नाम षड्विंशः सर्गः ॥ २६ ॥
55886
55887 इति श्रीवासिष्ठमहारामायणे तात्पर्यप्रकाशे स्थितिप्रकरणे
55888 दामव्यालकटसंग्रामवर्णनं नाम षड्विंशः सर्गः ॥ २६ ॥
55889
55890
55891 सप्तविंशः सर्गः २७
55892
55893 श्रीवैष्ठ उवाच ।
55894
55895 तस्मिंस्तदा वर्तमाने घोरे समरसंभ्रमे ।
55896 देवासुरशरीरेषु गर्तेष्वभ्रोदरेष्विव ॥ १ ॥
55897
55898 देवाः पराजितास्तेभ्यः प्रपन्नेभ्योऽत्र पद्मभूः ।
55899 प्राह दैत्यवधोपायं वासनोपचयं चिरात् ॥ १ ॥
55900

55901 देवासुरशरीरेषु जातेषु गर्तेषु व्रणेषु असृक्प्रवाहेषु वहत्स्विति परेणान्वयः
55902 ॥ १ ॥
55903
55904 वहत्स्वसृक्प्रवाहेषु गङ्गापूरेष्विवाम्बरात् ।
55905 दाम्नि वेष्टितदेवौघकृतक्ष्वेडाघनारवे ॥ २ ॥
55906
55907 वेष्टितदेवौघं यथा स्यात्तथा कृतः क्ष्वेडा सिंहनादरूपो महारवो येन
55908 ॥ २ ॥
55909
55910 व्याले निजकराकृष्टिपिष्टसर्वसुरालये ।
55911 कटे कठिनसंरम्भसङ्गरक्षपितामरे ॥ ३ ॥
55912
55913 आकृष्टिराकर्षणं तया पिष्टाः संचूर्णिताः सर्वसुरालया येन ॥ ३ ॥
55914
55915 ऐरावते क्षीणरवे पलायनपरायणे ।
55916 प्रवृद्धे दानवानीके मध्याह्न इव भास्करे ॥ ४ ॥
55917
55918 पतिताङ्गव्यथार्तानि प्रस्नवद्रुधिराणि च ।
55919 पयांसीवावसेतूनि देवसैन्यानि दुद्रुवुः ॥ ५ ॥
55920
55921 अवसेतूनि अवसन्नसेतूनि ॥ ५ ॥
55922
55923 दामव्यालकटास्तानि चिरमन्तर्हितानि च ।
55924 अनुजग्मुर्लसन्नादमिन्धनानीव पावकाः ॥ ६ ॥
55925
55926 अन्तर्हितानि दूरं तिरोहितानि । लसन्नादं भ्राजमानाधिक्षेपध्वनि यथा
55927 स्यात्तथा ॥ ६ ॥
55928
55929 अन्विष्टानपि यत्नेन नालभन्तासुराः सुरान् ।
55930 घनजालवनोड्डीनान्सिंहा हरिणकानिव ॥ ७ ॥
55931
55932 धनानि निबिडानि लतादिजालानि यस्मिंस्तथाविधे वने उड्डीनान् उत्प्लुत्य लीनान् ॥ ७ ॥
55933
55934 अलब्धेष्वमरौघेषु दामव्यालकटास्तदा ।
55935 जग्मुः पातालकोशस्थं प्रभुं प्रमुदिताशयाः ॥ ८ ॥
55936
55937 निर्वासनात्वात्स्वत एव प्रमुदिताशयता जयलाभनिमित्तकत्वेनोपचर्यते ॥ ८ ॥
55938
55939 अथ देवा विषण्णास्ते क्सणमाश्वास्य वै ययुः ।
55940 जयोपायाय विजिता ब्रह्माणममितौजसम् ॥ ९ ॥
55941
55942 जयोपायाय जयोपायप्रश्नाय ॥ ९ ॥
55943
55944 तेषामाविरभूद्ब्रह्मा रक्तरक्ताननश्रियाम् ।
55945 सायं रक्तीकृताम्बूनामब्धीनामिव चन्द्रमाः ॥ १० ॥
55946
55947 रक्तै रुधिरै रक्ता शोणा आननश्रीर्येषां तेषाम् ॥ १० ॥
55948
55949 प्रणम्य ते सुरास्तस्मा अनर्थं शम्बरेहितम् ।
55950 सम्यक्प्रकथयामासुर्दामव्यालकटक्रमम् ॥ ११ ॥
55951
55952 शम्बरस्येहितमिच्छा । सृष्ट्यात्मकं दामव्यालकटकमम् ॥ ११ ॥

55953
55954 तदाकर्ण्याखिलं ब्रह्मा विचार्य स विचारवित् ।
55955 उवाचेदं सुरानीकमाश्वासनकरं वचः ॥ १२ ॥
55956
55957 श्रीब्रह्मोवाच ।
55958
55959 शतवर्षसहस्रान्ते शम्बरेण हरेः करात् ।
55960 मर्तव्यं समरेशस्य तत्कालं संप्रतीक्षताम् ॥ १३ ॥
55961
55962 तत्कालमिति कालाध्वनोः इति द्वितीया ॥ १३ ॥
55963
55964 दामव्यालकटानेतानद्य त्वमरसत्तमाः ।
55965 योधयन्तः पलायध्वं मायायुद्धेन दानवान् ॥ १४ ॥
55966
55967 युद्धाभ्यासवशादेषां मुकुराणामिवाशये ।
55968 अहंकारचमत्कारः प्रतिबिम्बमुपैष्यति ॥ १५ ॥
55969
55970 अहमित्याकारा प्रथमान्तःकरणवृत्तिरहंकारचमत्कारः ॥ १५ ॥
55971
55972 गृहीतवासनास्त्वेते दामव्यालकटाः सुराः ।
55973 सुजेया वो भविष्यन्ति लग्नजालाः खगा इव ॥ १६ ॥
55974
55975 तया वृत्त्या गृहीताः क्रमेणोपचिता वासना येषाम् ॥ १६ ॥
55976
55977 अद्य त्ववासना ह्येते सुखदुःखविवर्जिताः ।
55978 धैर्येणारीन्विनिघ्नन्तो देवा दुर्जयतां गताः ॥ १७ ॥
55979
55980 अवासनाः शम्बरसंकल्पेन प्रतिबन्धादनाविर्भूतवासना नत्वत्यन्ता
55981 वासनाः । ज्ञानं विना आत्यन्तिकवासनोच्छेदासंभवात् । निर्वासनानां
55982 जन्मानुपपत्तेश्चेति बोध्यम् ॥ १७ ॥
55983
55984 वासनातन्तुबद्धा ये आशापाशवशीकृताः ।
55985 वश्यतां यान्ति ते लोके रज्जुबद्धाः खगा इव ॥ १८ ॥
55986
55987 ये भिन्नवासना धीराः सर्वत्रासक्तबुद्धयः ।
55988 न हृष्यन्ति न कुप्यन्ति दुर्जयास्ते महाधियः ॥ १९ ॥
55989
55990 भिन्नवासना नष्टवासनाः ॥ १९ ॥
55991
55992 यस्यान्तर्वासनारज्ज्वा ग्रन्थिबन्धः शरीरिणः ।
55993 महानपि बहुज्ञओऽपि स बालेनापि जीयते ॥ २० ॥
55994
55995 अयं सोऽहं ममेदं तदित्याकल्पितकल्पनः ।
55996 आपदां पात्रतामेति पयसामिव सागरः ॥ २१ ॥
55997
55998 इयन्मात्रपरिच्छिन्नो येनात्मा भव्यभावितः ।
55999 स सर्वज्ञोऽपि सर्वत्र परां कृपणतां गतः ॥ २२ ॥
56000
56001 सर्वदुर्वासनानां मध्ये आत्मनो देहादितादात्म्येन
56002 परिच्छिन्नताभ्रान्तिवासनैव
56003 महामौर्ख्यकार्पण्यजन्ममरणादिबीजत्वान्महाननर्थ इत्याह -
56004 इयन्मात्रेत्यादिना ॥ २२ ॥

अनन्तस्याप्रमेयस्य येनेयत्ता प्रकल्पिता |
आत्मनस्तस्य तेनात्मा स्वात्मनैवावशीकृतः || २३ ||

अवशीकृतो विवशीकृतः | संसारनर्थविह्वलीकृत इति यावत् || २३ ||

आत्मनो व्यतिरिक्तं यत्किंचिदस्ति जगत्त्रये |
यत्रोपादेयभावेन बद्धा भवतु वासना || २४ ||

यद्यदि आत्मनो व्यतिरिक्तं किंचिदस्ति तर्हि तत्र उपादेयभावेन उपादातुं
योग्यतया वासना भवतु नाम नतु तदस्तीत्यर्थः || २४ ||

आस्थामात्रमनन्तानां दुःखानामाकरं विदुः |
अनास्थामात्रमभितः सुखानामाकरं विदुः || २५ ||

तथा चासद्वस्तुन्यास्था त्याज्येत्याशयेनाह - आस्थामात्रमिति || २५ ||

दामव्यालकटा यावदनास्था भवसंस्थितौ |
तावन्न नाम जेयावो मशकानामिवानलाः || २६ ||

उक्तं प्रकृते योजयति - दामेति || २६ ||

अन्तर्वासनया जन्तुर्दीनतामनुयातया |
जितो भवत्यन्यथा तु मशकोऽप्यमराचलः || २७ ||

देहाद्यहंभावग्राहिण्या अन्तर्वासनया
देहादिनाशेनात्मनाशसंभावनया दीनतां कातरताम् | अन्यथा
तादृशवासनाभावे तु मशकोऽप्यमराचलो मेरुरिवाप्रकम्प्यो भवतीत्यर्थः
|| २७ ||

विद्यते वासना यत्र तत्र सा याति पीनताम् |
गुणो गुणिनि हि द्वित्वं सतो दृष्टं हि नासतः || २८ ||

हि यस्मादगुणिनि धर्मिणि सति पीनत्वाख्यो गुणो भवति | किंचोपचयमन्तरा न
पीनत्वसिद्धिः | उपचयश्च द्वितीयावयवसिद्धौ | तच्च द्वित्वं सतो द्रव्यस्य
दृष्टं नासत इत्यर्थः || २८ ||

अयं सोऽहं ममेदं चेत्येवमन्तः स्वासनम् |
यथा दामादयः शक्र भावयन्ति तथा कुरु || २९ ||

दामादयो  यथा येनोपायेन | अयं देहादिरेव स प्रसिद्धोऽहम् | इदं
जयपराजयपूजाजीवनादि मम इति भावयन्त्यभिमंस्यन्ते तथा तमुपायं
कुर्वित्यर्थः || २९ ||

या या जनस्य विपदो भावाभावदशाश्च याः |
तृष्णाकरञ्जवल्ल्यास्ता मञ्जर्यः कटुकोमलाः || ३० ||

वासनातन्तुबद्धो यो लोको विपरिवर्तते |
सा प्रवृद्धातिदुःखाय सुखायोच्छेदमागता || ३१ ||

यो विपरिवर्तते तस्य सा वासना अतिदुःखायेत्यर्थः || ३१ ||

56057 धीरोऽप्यतिबहुज्ञोऽपि कुलजोऽपि महानपि ।
56058 तृष्णया बध्यते जन्तुः सिंहः शृङ्खलया यथा ॥ ३२ ॥
56059
56060 देहपादपसंस्थस्य हृदयालयगामिनः ।
56061 तृष्णा चित्तखगस्येयं वागुरा परिकल्पिता ॥ ३३ ॥
56062
56063 हृदयपुण्डरीकमेवालयो नीडं तद्गामिनश्चित्तोपलक्षितजीवखगस्य ॥ ३३ ॥
56064
56065 दीनो वासनया लोकः कृतान्तेनापकृष्यते ।
56066 रज्ज्वेव बालेन खगो विवशो भृशमुच्छ्वसन् ॥ ३४ ॥
56067
56068 रज्ज्वा तन्तुनेव ॥ ३४ ॥
56069
56070 अलमायुधभारेण संगर भ्रमणेन च ।
56071 वासनाया विपर्यासं युक्त्या यत्नाद्रिपोः कुरु ॥ ३५ ॥
56072
56073 वासनायाः शम्बरसंकल्पाहितनिरभिमानवासनायाः । विपर्यासं
56074 वैपरीत्यम् । अभिमानोपचयमिति यावत् । रिपोर्दामादेः ॥ ३५ ॥
56075
56076 अन्तरा [अन्तरक्षुभिते इति पाठष्टीकाकृत्संमत इति भाति]
56077 क्षुभिते धैर्ये रिपोरमरनायक ।
56078 न शस्त्राणि न चास्त्राणि न शास्त्राणि जयन्ति च ॥ ३६ ॥
56079
56080 शत्रोरन्तः अक्षुभिते धैर्ये सतीति शेषः । शास्त्राणि औशनसादीनि नीतिशास्त्राणि
56081 ॥ ३६ ॥
56082
56083 दामव्यालकटास्त्वेते युद्धाभ्यासवशेन च ।
56084 अहंकारमयीं मत्तास्ते ग्रहीष्यन्ति वासनाम् ॥ ३७ ॥
56085
56086 अहंकारमयीं वासनां ते एते संकल्पाद्ग्रहीष्यन्ति ॥ ३७ ॥
56087
56088 यदा तेऽत्यज्ञपुरुषाः शम्बरेण विनिर्मिताः ।
56089 वासनामाश्रयिष्यन्ति तदा यास्यन्ति जेयताम् ॥ ३८ ॥
56090
56091 तत्त्वज्ञेभ्यस्तेषु कोऽपकर्षो येन ते वासनां गृह्णीयुस्तत्राह - अस्यज्ञेति
56092 ॥ ३८ ॥
56093
56094 तत्तावद्युक्तियुद्धेन तान्प्रबोधयतामराः ।
56095 यावदभ्यासवशतो भविष्यन्ति सवासनाः ॥ ३९ ॥
56096
56097 प्रबोधयत व्यवहारपदेषु जागरूकान्कुरुत ॥ ३९ ॥
56098
56099 ततो वश्या भविष्यन्ति भवतां बद्धवासनाः ।
56100 तृष्णाऽप्रोताशया लोके न च केचन पेलवाः ॥ ४० ॥
56101
56102 केचन केचिदपि तृष्णया अप्रोताशयाश्चेन्न च ते पेलवाः ॥ ४० ॥
56103
56104 समविषममिदं जगत्समग्रं
56105 समुपनतं स्थिरतां स्ववासनान्तः ।
56106 चलचललहरीभरो यथाब्धा-
56107 वत इह सैव चिकित्स्यतां प्रयाता ॥ ४१ ॥
56108

56109 यथा जलाशयान्तश्चलचलानामत्यन्तचपलानां विचित्रलहरीणां भरोऽतिशयो
56110 जलात्मनैवास्ति तथा स्ववासनान्तरिदं समविषमं स्थिरतां प्रवाहनित्यतां
56111 समुपनतं समुपगतं स्थितमित्यर्थः ॥ ४१ ॥
56112
56113 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपायेषु स्थितिप्रकरणे
56114 पितामहवाक्यं नाम सप्तविंशः सर्गः ॥ २७ ॥
56115
56116 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे पितामहवाक्यं
56117 नाम सप्तविंशः सर्गः ॥ २७ ॥
56118
56119
56120 अष्टाविंशः सर्गः २८
56121
56122 श्रीवसिष्ठ उवाच ।
56123
56124 इत्युक्त्वा भगवान्देवांस्तत्रैवान्तर्धिमाययौ ।
56125 वेलावनितटे शब्दं कृत्वेवाम्बुतरङ्गकः ॥ १ ॥
56126
56127 विश्रान्तानां पुनर्युद्धं विस्तरेणात्र वर्ण्यते ।
56128 देवानां दानवानां च चिरमावासनोदयात् ॥ १ ॥
56129
56130 अम्बुनस्तरङ्गको वेलापदसान्निध्यात्समुद्रतरङ्ग इति गम्यते ॥ १ ॥
56131
56132 सुरास्त्वाकर्ण्य तद्वाक्यं जग्मुः स्वाभिमतां दिशम् ।
56133 कमलामोदमादाय वनमालामिवानिलाः ॥ २ ॥
56134
56135 स्वाभिमतां स्वाभिप्रेतां तत्तद्दिक्पालाधिष्ठितदिशम् ।
56136 स्वाभिमतामित्येतद्वनमालाया अपि विशेषणम् ॥ २ ॥
56137
56138 दिनानि कतिचित्स्वेषु कान्तेषु स्थिरकान्तिषु ।
56139 द्विरेफा इव पद्मेषु मन्दिरेषु विशश्रमुः ॥ ३ ॥
56140
56141 विशश्रमुर्विश्रान्ताः ॥ ३ ॥
56142
56143 कंचित्कालं समासाद्य स्वात्मोदयकरं शुभम् ।
56144 चक्रुर्दुन्दुभिनिर्घोषं प्रलयाभ्ररवोपमम् ॥ ४ ॥
56145
56146 अथ दैत्यैर्महाव्योम्नि तैः पातालतले स्थितैः ।
56147 कालक्षेपकरं घोरं पुनर्युद्धमवर्तत ॥ ५ ॥
56148
56149 अथ दुन्दुभिरवं श्रुत्वा सन्नह्य दैत्येषूर्ध्वमागतेषु सत्सु ।
56150 महाव्योम्न्यन्तरिक्षे ॥ ५ ॥
56151
56152 ववुरसिशरशक्तिमुद्गरौघा
56153 मुसलगदापरशूग्रचक्रशङ्खाः ।
56154 अशनिगिरिशिलाहुताशवृक्षा
56155 अहिगरुडादिमुखानि चायुधानि ॥ ६ ॥
56156
56157 आसर्गसमाप्तेर्युद्धमेव वर्णयति - ववौरित्यादिना । शङ्खाः
56158 शङ्खाकारा आयुधविशेषाः । परप्राणहारित्वादायुधप्रायाः
56159 शङ्खशब्दा वा । गिरीणां शिलासहिताः गिरिप्रायाः शिला गिरयः शिलाश्चेति वा
56160 वृक्षान्ताः । अहिगरुडादिमुखान्यायुधानि च महाव्योम्नि ववुः जग्मुः ॥ ६ ॥

56161
56162 मायाकृतायुधमहाम्बुघनप्रवाहा
56163 क्षिप्रावहा प्रतिदिशं किल निर्जगाम।
56164 पाषाणपर्वतमहीरुहलक्षवृक्ष-
56165 क्षुब्धाम्बुपूरघनघोषवती नदी द्राक् ॥ ७ ॥
56166
56167 तदेव वर्णयति - मायेति। मायाकृतान्यायुधान्येव महाम्बूनि तेषां
56168 घनः प्रवाहो यस्याः। अत एव क्षिप्रान् शीघ्रहस्तानावहति जयायेति क्षिप्रावहा
56169 । पाषाणैः पर्वतैर्महीरुहलक्षैस्तेष्वपि प्रधानैर्वृक्षैश्च
56170 क्षुब्धाम्बुपूरेव घनघोषवती नदी द्राक् निर्जगामेत्यर्थः ॥ ७ ॥
56171
56172 मध्यप्रवाहवहदुल्मुकशूलशैल-
56173 प्रासासिकुन्तशरतोमरमुद्गरौघा।
56174 गङ्गोपमाम्बुवलितामरमन्दिरेण
56175 सर्वासु दिक्ष्वशनिवर्षनिकर्षणेन ॥ ८ ॥
56176
56177 तामेव नदीं पुनर्वर्णयति - मध्येति। अम्बुभिर्जलैरिव वलितं वेष्टितं
56178 अमरमन्दिरं मेर्वादि येन तथाविधेनाशनिप्रमुखायुधवर्षप्रयुक्तेन
56179 निकर्षणेन वप्रच्छेदनेव गङ्गोपमा।
56180 मेर्वादिगिरिपृष्ठप्रवहद्गङ्गासदृशीत्यर्थः ॥ ८ ॥
56181
56182 पृथ्व्यादिदारुणशरीरमपि प्रहार-
56183 दानग्रहा गहनराशिशरीरकेव।
56184 मायोपशाम्यति सुरासुरसिद्धसन्ना
56185 मायाकृतिः पुनरुदेति नचैव सैव ॥ ९ ॥
56186
56187 संप्रति सुरासुराणां परस्परव्यामोहनाय विचित्रमायानिर्माणं
56188 प्रतीकारैश्च तदुपशमं पुनःपुनस्तत्सदृशमायान्तरोद्भवोपशमं
56189 चाह - पृथ्व्यादीति। पृथ्वी मही तन्मयी
56190 आदिपदाज्जलतेजोवाय्वाकाशमयीव माया। यथेयं पृथिवी भ्रमतीव पततीव
56191 निरुणद्धिवाप्स्विव निमज्जन्त्यग्निनेव दह्यन्ते वायुनेवोड्डीयन्ते
56192 महागर्ताकाश इव निपतन्ति जना इति। दारुणानि रक्षःपिशाचादिशरीराणि
56193 तन्मयीव। यथा तानि निपतन्तीव धावन्तीव युध्यन्तीव खादन्तीवेत्येवंरूपा
56194 दारुणशरीरमयी। प्रहाराणां दानं ग्रहो ग्रहणं च बहुशो यस्यां
56195 तथाविधान्या। गहनानि परैर्दुस्तराणि राशीभूतानीव बहुत्वमापन्नानि
56196 शरीरकाणि प्रतियोधशरीराणि यस्यां सा तथाविधेवान्या। एवंविधापि
56197 प्रयुक्ता माया सुरैरसुरैः सिद्धैश्च प्रतीकारैः सन्ना विनाशिता सती
56198 उपशाम्यति पुनस्तादृश्येव मायाकृतिरुदेति सा किं सैव पूर्वोत्पन्नैव
56199 मायाकृतिरुत न चैव च सा किंत्वन्यैवेति तत्त्वतो दुर्ज्ञेयेत्यर्थः ॥ ९ ॥
56200
56201 शैलोपमायुधविघट्टितभूधराणि
56202 रक्ताम्बुपूरपरिपूर्णमहार्णवानि।
56203 देवासुरेन्द्रशवशैलविरूढकुन्त-
56204 तालीवनानि ककुभां वदनानि चाचन् ॥ १० ॥
56205
56206 देवलक्षणेष्वसुरेन्द्रशवलक्षणेषु च शैलेषु विरूढानि
56207 कुन्तपङ्क्तिलक्षणतालीवनानि येषु तथाविधानि च ककुभां दिशां वदनानि
56208 मुखान्यासन् ॥ १० ॥
56209
56210 उद्गीर्णकुन्तशरशक्तिगदासिचक्र-
56211 हेलानिगीर्णसुरदानवमुक्तशैला।
56212 काषोल्लसत्क्रकचदन्तनखाग्रमाला

56213 जीवान्विता ह्यपतदायससिंहसृष्टिः ॥ ११ ॥
56214
56215 उद्गीर्णैः कुन्तशरशक्तिगदासिचक्रैर्हेलयैव निगीर्णाः सुरैर्दान्ववैश्च
56216 मुक्ताः शैला यस्याम् । काषेण च्छेदनेनोल्लसतां क्रकचानां दन्ता एव
56217 नखाग्रमाला यस्यास्तथाविधा । परजीवग्राहित्वाज्जीवान्विता ।
56218 आयसानामयोविकारायुधमयानां हिंस्रत्वात्सिंहानां सृष्टिरपतत् ।
56219 निष्पपातेत्यर्थः ॥ ११ ॥
56220
56221 उज्ज्वाललोचनविषज्वलनातपौघ-
56222 दिग्दाहदर्शितयुगान्तदिनेशसेना ।
56223 उड्डीयमानपरिदीर्घमहामहीध्र-
56224 मग्नाब्धिवद्विषधरावलिरुल्ललास ॥ १२ ॥
56225
56226 इदानीं सर्पास्त्रनिर्मितदृष्टिविषमायासर्पसमूहं वर्णयति - उज्ज्वालेति ।
56227 उद्गता ज्वाला येभ्यस्तथाविधानां लोचनविषज्वलनानामातपौघेन ये दिशां
56228 दाहास्तैर्दर्शिता युगान्ते युगपदुदितद्वादशदिनेशानां सेना यया
56229 तथाविधा विषधराणां सर्पाणामावलिः उड्डीयमानैः परितो
56230 दीर्घैरुच्छ्रयेण महद्भिर्महीध्रैर्मग्नेन व्याप्तेनाब्धिना तुल्यं
56231 मग्नाब्धिवत् उल्ललास शुशुभे ॥ १२ ॥
56232
56233 उन्नादवज्रमकरोत्करकर्कशान्तः-
56234 क्षुब्धाब्धिवीचिवलयैर्वलिताचलेन्द्रैः ।
56235 आसीज्जगत्सकलमेव सुसंकटाङ्ग-
56236 मावृत्तिभिर्विविधहेतिनदीप्रवाहैः ॥ १३ ॥
56237
56238 इदानीं सामुद्रास्त्रमायया समुद्रवेष्टनं वर्णयति - उन्नादेति । वलितो
56239 वेष्टितोऽचलेन्द्रो मेरुर्यैस्तथाविधैर्विविधैर्हेतिनदीप्रवाहैः उन्नादस्य
56240 वज्रादिरत्नैर्मकरोत्करैश्च कर्कशस्यान्तःक्षुब्धस्याब्धेर्वीचिवलयैः
56241 सकलमेव जगत् आवृत्तिभिः परिवर्तनैः सुसंकटाङ्गं
56242 पीडितसर्वावयवमासीत् ॥ १३ ॥
56243
56244 शैलास्त्रशस्त्रगरुडाचलचालितोच्च-
56245 नागं महासुरगणाङ्गणमन्तरिक्षम् ।
56246 आसीत्क्षणं जलधिभिः क्षणमग्निपूरैः
56247 पूर्णं क्षणं दिनकरैः क्षणमन्धकारैः ॥ १४ ॥
56248
56249 महतां सुराणामसुराणां च युद्धाङ्गणभूतमन्तरिक्षं शैलास्त्रैः
56250 शस्त्रैर्मायारचितगरुडैर्बलादुत्पाट्य प्रक्षिप्तैरचलैश्च चालिताः पलायिताः
56251 प्राग्वर्णितदृष्टिविषनागा यस्मास्तथाविधं सत्क्षणं जलाधिभिः
56252 पूर्णमासीत् । क्षणमग्निपूरैः पूर्णमासीत् । क्षणं दिनकरैः पूर्णमासीत् ।
56253 क्षणमन्धकारैः पूर्णमासीदिति प्रागुक्तस्यैवानुवादः ॥ १४ ॥
56254
56255 गरुडगुडगुडाकुलान्तरिक्ष-
56256 प्रविसृतहेतिहुताशपर्वतौघैः ।
56257 जगदभवदसह्यकल्पकाले
56258 ज्वलितसुरालयभूतलान्तरालम् ॥ १५ ॥
56259
56260 गारुडास्त्रप्रभवैर्गरुडैः । गुडगुडेत्यव्यक्तानुकरणम् । गुडगुडेति
56261 ध्वनिभिराकुलेन्तरिक्षे प्रविसृतैर्हेतिहुताशपर्वतानामोघैः प्रवाहैः
56262 पुनरपि जगदसह्यकल्पकाल इव ज्वलितसुरालयभूतलान्तरालमभवत् ॥ १५ ॥
56263
56264 उदपतन्नसुरा वसुधातला-

56265 द्रगनमद्रितटादिव पक्षिणः।
56266 अतिबलादपतन्विबुधा भुवि
56267 प्रलयचालितशैलशिला इव ॥ १६ ॥
56268
56269 असुरा वसुधातलात् गगनं उत् ऊर्ध्वं अपतन्। विबुधास्तु ऊर्ध्वदेशाद्भुवि
56270 अपतन् ॥ १६ ॥
56271
56272 शरीररूढोन्नतहेतिवृक्ष-
56273 वनावलीलग्नमहाग्निदाहाः।
56274 सुरासुराः प्रापुरथाम्बरान्तः
56275 कल्पानिलान्दोलितशैलशोभाम् ॥ १७ ॥
56276
56277 शरीरे रूढैरुन्नतहेतिवृक्षैः संपन्नासु वनावलीषु लग्नो महानग्निदाहो
56278 येषां तथाविधाः सुरासुराः कल्पानिलैरान्दोलितानां
56279 भ्राम्यमाणानामर्थाज्ज्वलतां शैलानां शोभां प्रापुः ॥ १७ ॥
56280
56281 सुरासुराद्रीन्द्रशरीरमुक्तै
56282 रक्तप्रवाहैरभितो भ्रमद्भिः।
56283 वभार पूर्णं परितोऽम्बरोऽद्रेः
56284 संध्याकरौघक्षतमङ्ग गङ्गाम् ॥ १८ ॥
56285
56286 अद्रेर्मेरोः परितोऽभितश्चतुर्दिशमम्बर आकाशो नायकः। व्यत्ययेन पुंस्त्वम्
56287 । सुरासुरलक्षणानामद्रीन्द्राणां शरीरेभ्यो मुक्तैरभितो भ्रमद्भिः
56288 रक्तप्रवाहैः पूर्णं संध्याया नायिकायाः। करौघपदेन करजौघा
56289 लक्ष्यन्ते। तेषां क्षतं बभार। अथवा तथाविधरक्तप्रवाहैः पूर्णां
56290 गङ्गां बभारेत्युत्प्रेक्षयोर्विकल्पः। अङ्गेति स।बोधने।
56291 पूर्णमित्येतन्नखक्षतगङ्गयोर्द्वयोरपि विशेषणम्। स्त्रीनपुंसकयोः
56292 नपुंसकमनपुंसकेन इत्येकशेषे एकवद्भावः ॥ १८ ॥
56293
56294 गिरिवर्षणमम्बुवर्षणं
56295 विविधोग्रायुधवर्षणं तथा।
56296 विषमाशनिवर्षणं च ते
56297 सममन्योन्यमथाग्निवर्षणम् ॥ १९ ॥
56298
56299 ते सुरासुराः अनयन् इति परेणान्वयः ॥ १९ ॥
56300
56301 अनयन्नयमार्गकोविदा
56302 दलिताशेषगिरीन्द्रभित्तयः।
56303 ससृजुश्च समं समन्ततः
56304 करिकुम्भेष्विव पुण्यवर्षणम् ॥ २० ॥
56305
56306 पुण्ये पुण्यके उत्सवविशेषे क्रीडार्थं
56307 नलिकायन्त्रैर्लाक्षाकुङ्कुमचन्दनादिरसवर्षणमिवेत्यर्थः ॥ २० ॥
56308
56309 देवासुराः समरसंभ्रममाकुलास्ते
56310 अन्योन्यमङ्गदलनाकुलहेतिहस्ताः।
56311 नागेन्द्रडिम्भपृतनापृथुपीठपेषैः
56312 कीर्णश्रियो नभसि बभ्रमुरक्षिपन्तः ॥ २१ ॥
56313
56314 अन्योन्यं समरसंभ्रमं युद्धोत्साहमक्षिपन्तः अत्यजन्तो देवासुरा
56315 अङ्गदलने आकुला व्यग्रा हेतियुक्ता हस्ता येषां तथाविधाः सन्तो
56316 नागेन्द्राणामैरावतादिदिग्गजानां डिम्भानां सन्ततिभूतानां गनानां

56317 पृतनायाः समूहस्य पृथूनां पीठानां पीठसदृशपृष्ठानां
56318 पेषैरिव पीडाकरैर्गुरुतरसंभारसंभृतारोहऽनिः कीर्णश्रियो
56319 विस्तारितशोभा नभसि बभ्रमुरित्यर्थः ॥ २१ ॥
56320
56321 छिन्नैः शिरःकरभुजोरुभरैर्भ्रमद्भि-
56322 राकाशकाष्ठशलभैरशिवैस्तदानीम् ।
56323 आसीज्जगज्जठरमभ्रभरैरिवोग्रै-
56324 राभास्करस्थगितदिक्तटशैलजालम् ॥ २२ ॥
56325
56326 आकाशस्य काष्ठानां दिशां च समाहार आकाशकाष्ठं तत्र शलभैः
56327 औत्पातिकरक्तपतङ्गविशेषभूतैः आकाशस्यैव
56328 फलपुष्पपर्णाद्यनवशेषात्काष्ठसदृशस्य शलभैरिति वा । अभ्राणां
56329 मेघानां भरैरतिशयैरिव । अब्भ्रमरैः इति पाठेऽपि अपां
56330 भ्रमरैर्मेघैरित्येवार्थः । आभास्करं भास्करपर्यन्तं
56331 स्थगितान्याछादितानि दिक्तटानि शैलजालानि च यत्र तथाविधमासीत् ॥ २२ ॥
56332
56333 रटद्भटास्फोटकटिस्फुटद्भिः
56334 समीरितैर्हेतिकलासितौघैः ।
56335 परस्पराघातहतैः पतद्भि-
56336 र्जगाम शीर्णा दलशो धरित्री ॥ २३ ॥
56337
56338 सम्यगीरितैः प्रहृतैः रटतां भटानामास्फोटेनास्फालनेन
56339 कटिप्रदेशेषु स्फुटद्भिस्त्रुट्यद्भिस्तथा परस्परास्फालहतैरत एव
56340 पतद्भिर्हेतिभिः कलाभिर्यन्त्रक्षेपण्यादिकौशलैरसितानां क्षिप्तानां
56341 शिलापर्वतादीनामोघैः । इट् छान्दसः । धरित्री शीर्णा सती दलशः खण्डशो
56342 जगाम । खण्डिताभूदित्यर्थः ॥ २३ ॥
56343
56344 अन्योन्यमायुधशिलाचलवृक्षवर्षै-
56345 र्मेरुप्रमाणकठिनाङ्गनिघर्षणैश्च ।
56346 आसीद्रणं चटचटास्फुटदन्तरिक्षं
56347 कल्पक्षयान्तमिव भीमभरोग्रनादैः ॥ २४ ॥
56348
56349 मेरुप्रमाणानां कठिनानामङ्गानां देहानां निघर्षणैः
56350 परस्परसंघट्टनैश्च जनितैर्भीमो भरोऽतिशयो येषां
56351 तथाविधैरुग्रनादैः रणं कल्पक्षयान्तमिवासीदित्यर्थः ॥ २४ ॥
56352
56353 मत्तानिलक्षुब्धजलानलार्क-
56354 दलद्द्वयं दीर्घसुरासुरौघम् ।
56355 ब्रह्माण्डमाखण्डितकुड्यकोण-
56356 मकालकल्पान्तकरालमासीत् ॥ २५ ॥
56357
56358 मत्तेन प्रचण्डेनानिलेन क्षुब्धा जलानलावधः अर्कश्च ऊर्ध्वं यत्र
56359 तथाविधं दलद्द्वयं यत्र । दीर्घा मायाविभवैः प्रवृद्धाः सुरासुरौघा
56360 यत्र । आखण्डिता विदारिताः प्रान्तकुड्यकोणा यत्र तथाविधं
56361 ब्रह्माण्डमकालप्रवृत्तकल्पान्त इव करालं भीषणमासीत् ॥ २५ ॥
56362
56363 भ्रान्तैर्भृशं भरितदिक्तटमद्रिकूटै-
56364 रात्मप्रमाणघनहेतिहतै रणद्भिः ।
56365 कूजद्भिरार्तिभिरिवोग्रगुहोच्चवातैः
56366 क्रन्दद्भिरापतितसिंहरवैरदभ्रैः ॥ २६ ॥
56367
56368 पुनस्तत्कीदृशमासीत्तदाह - भ्रान्तैरिति । आत्मप्रमाणैः

56369 स्वसदृशायामैर्घनैर्हेतिभिर्हतैः | अत एव भृशं भ्रान्तैः | भ्रमणे
56370 च रणद्भिरुग्रगुहोच्चवातैरार्तिभिः कूजद्भिरिव अदभ्रैस्तारैः |
56371 आपतितसिंहरवैः क्रन्दद्भिरिव स्थितैरद्रिकूटैर्भरितदिक्तटमासीत् || २६ ||
56372
56373 मायानदीजलधियोधगनाग्निदाहै-
56374 र्वृक्षैः सुरासुरशवैरचलैः शिलोच्चैः |
56375 भ्रान्तैः शराशिशितशक्तिगदास्त्रशस्त्रै-
56376 र्वातावकीर्णवनपर्णवदन्तरन्तः || २७ ||
56377
56378 वातावकीर्णवनपर्णवदन्तरन्तर्भ्रान्तैः
56379 शरासिप्रभृतिभिर्भरितमसीदित्यनुवर्तते || २७ ||
56380
56381 अद्रीन्द्रपक्षपरिमाणगमाक्षमोक्त-
56382 दुर्वारहस्तिवलदारुणदेहकैर्द्राक् |
56383 आसीत्पतद्भटशरीरगिरीन्द्रवात-
56384 विभ्रष्टदेवपुरपूर्णजलार्णवौघम् || २८ ||
56385
56386 पुनस्तत्कीदृशमासीत्तदाह - अद्रीन्द्रेति | अद्रीन्द्रस्य मेरोः पक्षाः
56387 प्रत्यन्तपर्वतास्तत्सदृशपरिमाणैरत एव गमनं गमो मनुष्यादीनां
56388 संचारस्तन्निरोधकत्वात्तदक्षमैः पूर्वोक्तानां दुर्वारहस्तिबलानां
56389 हस्तियुथानां देहकैः शवैर्भरितदिक्तटमासीत् | किंच
56390 पतद्भिर्भटशरीरैर्गिरीन्द्रैर्वातविभ्रष्टदेवपुरैश्च
56391 पूर्णजलार्णवौघमासीत् || २८ ||
56392
56393 घनघुंघुमपूरितान्तरिक्षा
56394 क्षतजक्षालितभूधरा धरा च |
56395 रुधिरहदवृत्तिवर्तिनी वा
56396 भुवनाभोगगुहा तदाकुलाभूत् || २९ ||
56397
56398 किंच तदा भुवनाभोगस्य ब्रह्माण्डस्योदरगुहा
56399 घनैर्घुंघुमैर्ध्वनिभिः पूरितान्तरिक्षा | क्षतजैः क्षालिता
56400 भूधरास्तदधराः पृथ्वीपातालादयश्च यस्यां तथाविधा | रुधिरहृद
56401 एव वृत्तिराहारो येषां रक्षःपिशाचादीनां त इव वर्तनशीला वा सती
56402 आकुलाभूत् || २९ ||
56403
56404 अनन्तदृक्प्रसृतविकारकारिणी
56405 क्षयोदयोन्मुखसुखदुःखशंसिनी |
56406 रणक्रियासुरसुरघट्टसंकटा
56407 तदाभवत्खलु सदृशीह संसृतेः || ३० ||
56408
56409 अनन्तदृशामिन्द्रादिदेवानां प्रसृतभयादिविकारकारिणी | अनन्तायां
56410 त्रिविधपरिच्छेदशून्यायां दृशि आत्मचैतन्ये प्रसृतजगद्विकारकारिणी च |
56411 क्षयोन्मुखानामुदयोन्मुखानां च व्युत्क्रमात्सुखदुःखशंसिनी
56412 असुराणां अशास्त्रीयचित्तवृत्तीनां सुराणां शास्त्रीयतद्वृत्तीनां
56413 प्रसिद्धानां चासुरसुराणां घट्टनं घट्टः परस्परसमागमस्तेन
56414 संकटा दुस्तरा रणक्रिया संसृतेरविद्यादिसंसारस्य सदृशी अभवत् || ३० ||
56415
56416 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० स्थितिप्रकरणे
56417 दामव्यालकटपुनर्युद्धवर्णनं नामाष्टविंशः सर्गः || २८ ||
56418
56419 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे
56420 दामव्यालकटपुनर्युद्धवर्णनं नामाष्टाविंशः सर्गः || २८ ||

56421
56422
56423 एकोनत्रिंशः सर्गः २९
56424
56425 श्रीवसिष्ठ उवाच।
56426
56427 एवंप्रायाकुलारम्भैरसुरैरसुहारिभिः।
56428 सहसा हृतसंरब्धैरारब्धः सुमहान् रणः॥ १॥
56429
56430 प्राप्तदेहाभिमानानां दामादीनां सुरैर्मृधे।
56431 विषादो वर्ण्यते पश्चात्पलायनपराजयौ॥ १॥
56432
56433 एवंप्रायाः प्राग्वर्णितप्रकारा आकुला व्यग्रप्राया आरम्भा येषां
56434 तैरसुहारिभिरसुरैः सुमहान् रण आरभ्दः॥ १॥
56435
56436 माययाथ विवादेन सन्धिना विग्रहेण च।
56437 पलायनेन धैर्येण च्छन्नगोपायनेन च॥ २॥
56438
56439 स संगरो देवैः कदाचिन्मायया विवादेन वाग्युद्धमात्रेण दानाद्युपायैः
56440 सन्धिना कदाचिद्विग्रहेण कदाचित्पलायनेन प्रच्छन्नतया स्थित्वा
56441 स्वजनगोपायनेन॥ २॥
56442
56443 कार्पण्येनास्त्रयुद्धेन स्वान्तर्धानैश्च भूरिशः।
56444 धृतः स संगरो देवैस्त्रिंशद्वर्षाणि पञ्चकम्॥ ३॥
56445
56446 कदाचित्कार्पण्येन कृपणवच्छरणागतियाञ्चादिना स संगरो विधृतः।
56447 तत्राद्यः संग्रामस्त्रिंशद्वर्षाणि विधृतः। द्वितीयस्तु पञ्चकं वर्षाणि
56448 अष्टौ मासान्दश दिवसान्विधृतः। तृतीयस्तु सप्त पञ्च चेति
56449 द्वादशदिवसान्विधृतः। तावत्कालं द्वयोरपि सेनयोर्वृक्षाणामग्नीनां
56450 हेतीनामेकेषां मुख्यानामशनीनां भूभृतां पर्वतानां च वर्षाणि
56451 वृष्टयः पेतुरित्यर्थः॥ ३॥
56452
56453 वर्षाणि दिवसान्मासान्दशाष्टौ सप्त पञ्च च।
56454 वर्षाणि पेतुर्वृक्षाग्निहेत्येकाशनिभूभृताम्॥ ४॥
56455
56456 एतावता तु कालेन दृढाभ्यासादहंकृतेः।
56457 दामादयोऽहमित्यास्थां जगृहुर्ग्रस्तचेतसः॥ ५॥
56458
56459 ग्रस्तचेतसो वासनयेति शेषः॥ ५॥
56460
56461 नैकट्यातिशयाद्यद्वद्दर्पणं बिम्बवद्भवेत्।
56462 अभ्यासातिशयात्तद्वत्ते साहंकारतां गताः॥ ६॥
56463
56464 अभिमानाभ्यासस्याहंकारदार्ढ्यहेतुतां दृष्टान्तेन दर्शयति -
56465 नैकट्यादिति॥ ६॥
56466
56467 यद्वद्दूरगतं वस्तु नादर्शे प्रतिबिम्बति।
56468 पदार्थवासना तद्वदनभ्यासान्न जायते॥ ७॥
56469
56470 उत्पन्नापि वासना चिरमभ्यासत्यागेन नश्यतीत्याशयेनाह - यद्वदिति।
56471 दूरगतं दूरपरित्यक्तं न प्रतिबिम्बति प्रतिबिम्बभावादपैति।
56472 अनभ्यासादभ्यासपरित्यागात्॥ ७॥

56473
56474 यदा दामादयो जाता अहंकारात्मवासनाः ।
56475 तदा मे जीवितं मेऽर्थ इति दैन्यमुपागताः ॥ ८ ॥
56476
56477 अहंकार एवात्मेति वासना येषां ते अहंकारात्मवासनाः । जीवितं जीवनं मे
56478 स्यात् तदर्थं मे अर्थो धनं स्यादित्याशया दैन्यमुपागताः ॥ ८ ॥
56479
56480 भववासनया ग्रस्ता मोहवासनया ततः ।
56481 आशापाशनिबद्धास्ते ततः कृपणतां गताः ॥ ९ ॥
56482
56483 ततः भवत्यस्मादिति भवो विहितनिषिद्धप्रवृत्तिस्तद्वासनया ग्रस्ताः । देहो मे
56484 सदैवारोगदृढभोगक्षमोऽस्त्वित्यादिमोहवासनया ॥ ९ ॥
56485
56486 मुग्धेव ह्यनहंकरैर्ममत्वमुपकल्पितम् ।
56487 रज्ज्वां भुजङ्गत्वमिव दामव्यालकटैस्ततः ॥ १० ॥
56488
56489 मुग्धेव ह्यनहंकारैः इति पाठे मुग्धेव कृपणतां गता इति
56490 पूर्वेणान्वयः । शुद्धैरप्यनहंकारैः इति पाठे तु वस्तुतः शुद्धैरपि
56491 दामादिभिर्ममत्वमुपकल्पितमिति स्पष्टोऽर्थः ॥ १० ॥
56492
56493 आपादमस्तको देहः कथं मे भवतु स्थिरः ।
56494 ममेति तृष्णाकृपणा दीनतां ते समाययुः ॥ ११ ॥
56495
56496 ममेति तृष्णाया एव विवरणमापादमस्तक इति ॥ ११ ॥
56497
56498 स्थिरो भवतु मे देहः सुखायास्तु धनं मम ।
56499 इति बद्धधियां तेषां धैर्यमन्तर्द्धिमाययौ ॥ १२ ॥
56500
56501 सवासनत्वाद्वपुषामल्पसत्त्वात्सुरद्विषाम् ।
56502 या तु प्रहारपरता मार्जितेवाशु साभवत् ॥ १३ ॥
56503
56504 सुरद्विषां दामादीनां या प्राक् प्रसिद्धा प्रहारपरता सा
56505 अल्पसत्त्वान्न्यूनबलत्वान्मार्जितेव लिपिः कार्याक्षमा अभवत् ॥ १३ ॥
56506
56507 कथं सुरा जगत्यस्मिन्भवाम इति चिन्तया ।
56508 विवशा दीनतां जग्मुः पद्मा इव निरम्भसः ॥ १४ ॥
56509
56510 सुरा अमराः कथं भवाम इति चिन्तया ॥ १४ ॥
56511
56512 तेषां योषान्नपानेन स्वाहंकृतिमतां रतिः ।
56513 बभूव भावभावस्था भीषणा भवभाजिनी ॥ १५ ॥
56514
56515 भावा विषयास्तेषां भावनं भावस्तत्स्था अत एव भवं भाजयति प्रापयति
56516 तच्छीला ॥ १५ ॥
56517
56518 अथ तस्मिन्रणे भीत्या सापेक्षत्वमुपाययुः ।
56519 मत्तेभगनसंरब्धे वने हरिणका इव ॥ १६ ॥
56520
56521 सापेक्षत्वं जीवने इति शेषः । मत्तेभैर्युधाय घनं संरब्धे कुपिते ॥ १६ ॥
56522
56523 मरिष्यामो मरिष्याम इति चिन्ताहताशयाः ।
56524 मन्दं मन्दं किल भ्रेमुः कुपितैरावणे रणे ॥ १७ ॥

56525
56526 कुपितः ऐरावण ऐरावतो यत्र ॥ १७ ॥
56527
56528 शरीरैकार्थिनां तेषां भीतानां मरणादपि ।
56529 अल्पसत्त्वतया मूर्ध्नि कृतमेव परैः पदम् ॥ १८ ॥
56530
56531 परैः शत्रुभिः ॥ १८ ॥
56532
56533 अथ प्रम्लानसत्त्वास्ते हन्तुमग्रगतं भटम् ।
56534 न शेकुरिन्धने क्षीणे हविर्दग्धुमिवाग्नयः ॥ १९ ॥
56535
56536 विबुधानां प्रहरतां मशकत्वमुपागताः ।
56537 क्षतविक्षतसंघातास्तस्थुः सामान्यसद्भटाः ॥ २० ॥
56538
56539 सामान्या इतरे सद्भटा इव सामान्यसद्भटाः ॥ २० ॥
56540
56541 बहुनात्र किमुक्तेन मरणाद्भीतचेतसः ।
56542 दैत्या देवेषु वल्गस्तु दुद्रुवुः समराजिरात् ॥ २१ ॥
56543
56544 वल्गत्सु अभिपतत्सु ॥ २१ ॥
56545
56546 तेषु द्रवत्सु भीतेषु सर्वतो दानवादिषु ।
56547 दामव्यालकटाख्येषु विख्यातेषु सुरालये ॥ २२ ॥
56548
56549 तद्दैत्यसैन्यं न्यपतद्विद्रुतं खादितस्ततः ।
56550 कल्पान्तपवनोद्भूतं [पवनोद्धूतं इति पाठः]
56551 ताराजालमिवाभितः ॥ २३ ॥
56552
56553 खात् नभसः ॥ २३ ॥
56554
56555 अमराचलकुञ्जेषु शिखराणां शिखासु च ।
56556 तटेषु वारिराशीनां पयोदपटलेषु च ॥ २४ ॥
56557
56558 अमराचलकुञ्जेष्वित्यादिसप्तम्यन्तपदानां सर्वेषां पतितास्ते सुरारय इत्यत्र
56559 [एकोनत्रिंशश्लोक इति भावः] संबन्धः ॥ २४ ॥
56560
56561 सागरावर्तगर्तेषु श्वभ्रेषूद्यत्सरित्सु च ।
56562 जङ्गलेषु दिगन्तेषु ज्वलत्सु विपिनेषु च ॥ २५ ॥
56563
56564 उद्यन्तीषु प्रवृद्धासु सरित्सु । कर्मधारये पुंवद्भावः ॥ २५ ॥
56565
56566 तद्बाणोच्छिन्नदेशेषु ग्रामेषु नगरेषु च ।
56567 अटवीषूग्रपक्षासु मरुभूमिदवाग्निषु ॥ २६ ॥
56568
56569 तेषां देवासुराणां बाणैरुच्छिन्नेषु देशेषु । उग्राणां क्रूराणां
56570 सिंहव्याघ्ररक्षसां पक्षासु परिग्रहभूतासु ॥ २६ ॥
56571
56572 लोकालोकाचलान्तेषु पर्वतेषु ह्रदेषु च ।
56573 आन्ध्रद्रविडकाश्मीरपारसीकपुरेषु च ॥ २७ ॥
56574
56575 नानाम्भोधितरङ्गासु गङ्गाजलघटासु च ।
56576 द्विपान्तरेषु जालेषु जम्बुखण्डलतासु च ॥ २८ ॥

56577
56578 सहस्रमुखैर्गङ्गायाः समुद्रप्रवेशादेकोऽप्यम्भोधिः प्रदेशभेदेन
56579 नानेति नानाम्भोधिषु तरङ्गा यासां तासु। द्वीपान्तरेषु मत्स्यबन्धनाय
56580 प्रसारितेषु जालेषु। जम्बूखण्डा देशभेदाः॥ २८॥
56581
56582 सर्वतः पर्वताकाराः पतितास्ते सुरारयः।
56583 विस्फोटिताङ्गचरणा विभिन्नकरबाहवः॥ २९॥
56584
56585 पतितानेव विशिनष्टि - विस्फोटिताङ्गेत्यादिना॥ २९॥
56586
56587 शाखालग्नान्त्रतन्त्रीका मुक्तरक्तभरच्छटाः।
56588 व्यस्तशेखरमूर्धानो निष्क्रान्ताः कुपितेक्षणाः॥ ३०॥
56589
56590 मुक्ता रक्तभरच्छटा यैः। निष्क्रान्ता नितरां विक्षिप्तपादाः॥ ३०॥
56591
56592 सायुधा बलमायेषुच्छिन्नकङ्कटहेतयः।
56593 दूरापातविपर्यस्तपतन्नानायुधांशुकाः॥ ३१॥
56594
56595 बलैर्मायाभिरिषुभिश्च च्छिन्नाः कङ्कटा वारबाणा हेतयश्च येषाम्।
56596 दूरमापातेन पलायनेन विपर्यस्ताः पतन्तो नानायुधानामंशुकानां च
56597 समाहारा येषाम्॥ ३१॥
56598
56599 कण्ठलम्बिशिरस्त्राणचटत्कारोग्रभीतयः।
56600 शिखाशतशिलाप्रोता देहभागविलम्बिनः॥ ३२॥
56601
56602 कण्ठविलम्बिनां शिरस्त्राणानां चटत्कारैरुग्रा भीतिर्येषाम्। ग्रन्थिताग्रैः
56603 शिखाशतैः पर्वताग्रशिलासु प्रोताः। अत एव देहभागर्विलम्बिनो लम्बमानाः
56604 ॥ ३२॥
56605
56606 शाल्मल्युग्रदृढापातकटत्कण्टकसंकटाः।
56607 सुशिलाफलकास्फालशतधाशीर्णमस्तकाः॥ ३३॥
56608
56609 शाल्मलीषु सकण्टकत्वाद्दृढापाते कटद्भिः कण्टकैः संकटं दुःखं
56610 येषाम्॥ ३३॥
56611
56612 सर्व एव सकलायुधशस्त्र-
56613 पातमात्रसमनन्तरमेव।
56614 दिक्षु नाशमगमन्नसुरेन्द्राः
56615 पांसवोऽम्बुदनिधौ पयसीव॥ ३४॥
56616
56617 उपसंहरति - सर्व एवेति। इत्थं सर्व एवासुरेन्द्राः सकलानामायुधानां
56618 शस्त्राणां च पातमात्राद्युद्धारम्भात्समनन्तरमेव दिक्षु
56619 नाशमदर्शनमगमन्। यथाम्बुदानां निधौ वर्षर्तौ पयसि जले पांसवो
56620 नाशं गच्छन्ति तद्वदित्यर्थः॥ ३४॥
56621
56622 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० स्थितिप्रकरणे
56623 दामव्यालकटोपाख्याने असुरपरिभ्रंशो नामैकोनत्रिंशः सर्गः॥ २९
56624 ।।
56625
56626 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे असुरपरिभ्रंशो
56627 नामैकोनत्रिंशः सर्गः॥ २९॥
56628

56629
56630 त्रिंशः सर्गः ३०
56631
56632 श्रीवसिष्ठ उवाच।
56633
56634 इति तुष्टेषु देवेषु दानवेषु हतेषु च।
56635 दामव्यालकटा [दामव्यालकटादीनां इति षष्ठीबहुवन्वनान्तः
56636 पाठः प्राङ्मुद्रिते आदर्शान्तरे च लभ्यते तत्स्वारस्यं तु
56637 धीधिषणेभ्य एव समधिगन्तव्यम्] दीना बभूवुर्भयविह्वलाः॥ १॥
56638
56639 पाताले यमदग्धानामत्र जन्मपरम्परा।
56640 काश्मीरदेशमत्स्यान्ता दामादीनां प्रकीर्त्यते॥ १॥
56641
56642 इत्यनया रीत्या दानवेषु हतेषु सत्सु। देवेषु तुष्टेष्विति
56643 पाठक्रमादर्थक्रमबलीयस्त्वाद्योज्यम्। दीना विषण्णाः॥ १॥
56644
56645 जज्वाल कुपितः क्वेति कल्पान्ताग्निरिव ज्वलन्।
56646 शम्बरः शमितानीको दामव्यालकटान्प्रति॥ २॥
56647
56648 शम्बरो दामव्यालकटान्प्रति कुपितः सन् क्वेति पृच्छन् जज्वालेत्यर्थः॥ २॥
56649
56650 शम्बरस्य भयाद्गत्वा पातालमथ सप्तमम्।
56651 दामव्यालकटास्तस्थुस्त्यक्त्वाथ निजमण्डलम्॥ ३॥
56652
56653 सप्तमं पातालमेव विशिनष्टि - यमस्येति। तत्रापि शम्बराद्भयं किं न
56654 स्यादिति शङ्कां वारयितुं कालत्रासनक्षमा इति। कालो मृत्युरिवान्येषां
56655 त्रासनक्षमा इत्यर्थः॥ ४॥
56656
56657 यमस्य किङ्करा यत्र ये कालत्रासनक्षमाः।
56658 कुतूहलेन तिष्ठन्ति नरकार्णवपालकाः॥ ४॥
56659
56660 ते तेषामथ यातानां दत्त्वा भयमभीरवः।
56661 चिन्ता इव घनाकाराः कुमारीश्च ददुः क्रमात्॥ ५॥
56662
56663 यातानां शरणमिति शेषः। त्रिभ्यस्तिस्रः कुमारीः कन्या घनाकारा
56664 मूर्तिमतीश्चिन्ता इव स्थिता इत्यर्थः॥ ५॥
56665
56666 तैः सार्धं नीतवन्तस्ते तत्र दामादयोऽवधिम्।
56667 दशवर्षसहस्रान्तमान्तानन्तकुवासनाः॥ ६॥
56668
56669 अवधिं आयुःशेषम्॥ ६॥
56670
56671 इयं मे कामिनी कन्या ममेयं प्रभुतेति च।
56672 दुरूढस्नेहबन्धानां कालस्तेषां व्यवर्तत॥ ७॥
56673
56674 आत्तानन्तकुवासनाः प्रपञ्चयति - इयमिति॥ ७॥
56675
56676 धर्मराजोऽथ तं देशं कदाचित्समुपाययौ।
56677 महानरककार्याणां विचारार्थं यदृच्छया॥ ८॥
56678
56679 धर्मराजो यमः॥ ८॥
56680

56681 अपरिज्ञातमेनं ते धर्मराजं त्रयोऽसुराः |
56682 न प्रणेमुर्विनाशाय सामान्यमिव किङ्करम् || ९ ||
56683
56684 छत्रचामरादिलिङ्गादर्शनाद्यमराजोऽयमित्यपरिज्ञातम् || ९ ||
56685
56686 अथ वैवस्वतेनैते ज्वलितासूग्रभूमिषु |
56687 विहितभ्रूपरिस्पन्दमात्रेणैव निवेशिताः || १० ||
56688
56689 ज्वलितासु रौरवाद्युग्रनरकभूमिषु | तासु हि शतयोजनपर्यन्तं
56690 जानुमितज्वलदङ्गारादयः प्रसिद्धाः || १० ||
56691
56692 तत्र ते करुणाक्रन्दाः ससुहृद्दारबन्धवः |
56693 प्रदग्धाः पर्णविटपा वृक्षा इव वनानिलैः || ११ ||
56694
56695 पर्णान्येव विटपाः शाखा येषां ते पर्णविटपाः | बाला इति यावत् || ११ ||
56696
56697 स्वया वासनया जातास्तयैव क्रूरया पुनः |
56698 बन्धकर्मकराकाराः किराता राजकिङ्कराः || १२ ||
56699
56700 वधबन्धकर्मकरयमकिङ्करसहवासात्तादृशवासनया
56701 बन्धकर्मकराकाराः किङ्कराश्च | एवमग्रेऽप्यूहम् || १२ ||
56702
56703 तज्जन्माथ परित्यज्य जाताः श्वभ्रेषु वायसाः |
56704 तदन्ते गृध्रतां यातास्ततोऽपि शुकतां गताः || १३ ||
56705
56706 सूकरत्वं त्रिगर्तेषु मेषत्वं पर्वतेषु च |
56707 मगधेष्वथ कीटत्वं बभ्रुस्ते [ते वक्रबुद्धय इति पाठः] च
56708 कुबुद्धयः || १४ ||
56709
56710 ते बभ्रुः | दधुरित्यर्थः || १४ ||
56711
56712 अनुभूयेतरामन्यां चित्रां योनिपरम्पराम् |
56713 अद्य मत्स्याः स्थिता राम काश्मीरारण्यपल्वले || १५ ||
56714
56715 मत्स्या भूत्वेति शेषः || १५ ||
56716
56717 दावाग्निक्वथिताल्पाल्पपङ्ककल्पाम्बुपायिनः |
56718 न म्रियन्ते न जीवन्ति जरज्जम्बालजर्जराः || १६ ||
56719
56720 जरज्जम्बालं जीर्णपङ्कस्तेषु जर्जराः श्लथदेहाः || १६ ||
56721
56722 विचित्रयोनिसंरम्भमनुभूय पुनःपुनः |
56723 भूत्वा भूत्वा पुनर्नष्टास्तरङ्गा जलधाविव || १७ ||
56724
56725 उक्तमेवानुवदति - विचित्रेति || १७ ||
56726
56727 भवजलधिगतास्ते वासनातन्तुनुन्ना-
56728 स्तृणमिव चिरमूढा देहरूपैस्तरङ्गैः |
56729 उपशममुपयाता राम नाद्याप्यनन्तं
56730 परिकलय महत्त्वं दारुणं वासनायाः || १८ ||
56731
56732 उपसंहरति - भवजलधीति | वासनातन्तुभिर्नुन्नाः प्रेरिताः सन्तो

56733 देहरूपैस्तरङ्गैस्तृणमिव चिरं ऊढा नानाप्रदेशं प्रापितास्ते अद्यापि
56734 अनन्तं अपरिच्छेद्यफलं उपशमं नोपयाताः। वासनाया दारुणं
56735 विदारुणं महत्त्वं। महानर्थरूपत्वमिति यावत्। परिकलय। अनेनैव
56736 दृष्टान्तेन सर्वत्र पश्येत्यर्थः॥ १८॥
56737
56738 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मोक्षोपाये स्थितिप्रकरणे
56739 दामव्यालकटजन्मान्तरचित्रवर्णनं नाम त्रिंशः सर्गः॥ ३०॥
56740
56741 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे
56742 दामव्यालकटजन्मान्तरचित्रवर्णनं नाम त्रिंशः सर्गः॥ ३०॥
56743
56744
56745 एकत्रिंशः सर्गः ३१
56746
56747 श्रीवसिष्ठ उवाच।
56748
56749 अतः प्रबोधाय तव वच्मि राम महामते।
56750 दामव्यालकटन्यायो मा तेऽस्त्विति तु लीलया॥ १॥
56751
56752 अर्थच्युतिरनर्थाप्तिरहंमानादिहोच्यते।
56753 तथा दामादिभावानां सत्त्वासत्त्वनिराक्रिया॥ १॥
56754
56755 पूर्वोक्तं स्मारयन् प्रकृतकथां तत्र योजयति - अत इति॥ १॥
56756
56757 अविवेकानुसंधानाच्चित्तमापदमीदृशीम्।
56758 अनन्तभवदुःखाय परिगृह्णाति हेलया॥ २॥
56759
56760 अविवेकानुसंधानाद्विवेकानुसंधानाभावात्। ईदृशीं अभिमानलक्षणां
56761 आपदम्॥ २॥
56762
56763 क्व किलामरविध्वंसिशम्बरानीकनाथता।
56764 क्व तापतप्तजम्बालजालजर्जरमीनता॥ ३॥
56765
56766 प्राक्तननिरभिमानितायाः पश्चात्तनाभिमानस्य च फलतो महदन्तरं
56767 दर्शयति - क्व किलेत्यादिना॥ ३॥
56768
56769 क्व धैर्यममरानीकविद्रावणकरं महत्।
56770 क्व किरातमहीपालक्षुद्रकिङ्कररूपता॥ ४॥
56771
56772 क्व नाम निरहङ्कारचित्सत्त्वोदारधीरता।
56773 क्व मिथ्यावासनावेशादहङ्कारकुकल्पना॥ ५॥
56774
56775 स्वरूपतोऽप्यन्तरमाह - क्व नामेति॥ ५॥
56776
56777 शाखाप्रतानगहना संसारविषमञ्जरी।
56778 अहङ्काराङ्कुरा देव समुदेतीयमातता॥ ६॥
56779
56780 मञ्जरीपदेन तत्प्रधाना वल्ली गृह्यते॥ ६॥
56781
56782 अहङ्कारमतो राम मार्जयान्तः प्रयत्नतः।
56783 अहं न किंचिदेवेति भावयित्वा सुखी भव॥ ७॥
56784

56785 केनोपायेन तन्मार्जनं तमाह - अहं न किंचिदेवेति। दृश्ये जडे
56786 सर्वत्रेदंत्वस्यैव दर्शनादहंत्वायोगाद्दृक्स्वरूपे
56787 अहङ्कारादिसर्वसाक्षिण्यभिमानधर्मकत्वाघटनेनाहंत्वायोगाद्दृग्दृस्
56788 ह्यव्यतिरिक्तस्य चालीकत्वादहंत्वास्पदं न किंचिदेवेति तत्त्वतो
56789 भावयित्वेत्यर्थः॥ ७॥
56790
56791 अहङ्काराम्बुदच्छन्नं परमार्थेन्दुमण्डलम्।
56792 रसायनमयं शीतमदृश्यत्वमुपागतम्॥ ८॥
56793
56794 अहङ्कारस्यानर्थहेतुतामुक्त्वा अर्थविघातकतामाह - अहङ्कारेति।
56795 रसायनमयमानन्दैकरसम्। अमृतमयं शीततापत्रयशून्यं [अत्र
56796 शीतं तापत्रयशून्यं च इति पाठः साधीयान्] च॥ ८॥
56797
56798 अहङ्कारपिशाचार्ता दामव्यालकटास्त्रयः।
56799 गताः सत्तामसन्तोऽपि मायामाहात्म्यदानवाः॥ ९॥
56800
56801 सत्तां जन्ममरणप्रवाहे स्थितिम्। प्राक्तत्रासन्तोऽपि मायामाहात्म्यप्रयुक्ता
56802 दानवा दामादयः॥ ९॥
56803
56804 काश्मीरेषु महारण्यसरसीवनपल्वले।
56805 अद्य मत्स्याः स्थिता राम शैवाललवलालसाः॥ १०॥
56806
56807 शैवाललवेषु लालसा अत्यन्तं साभिलाषाः॥ १०॥
56808
56809 श्रीराम उवाच।
56810
56811 नासतो विद्यते भावो नाभावो विद्यते सतः।
56812 ते ह्यसन्तः कथं सत्तां संपन्ना इति मे वद॥ ११॥
56813
56814 असन्तोऽपि सत्तां गता इत्येतच्छ्रुत्वा रामस्तदनुपपत्तिं शङ्कते - नासत इति
56815 ॥ ११॥
56816
56817 श्रीवसिष्ठ उवाच।
56818
56819 एवमेतन्महाबाहो नासत्संभवति क्वचित्।
56820 कदाचित्किंचिदप्येव बृहत्संपद्यते तनु॥ १२॥
56821
56822 स्वाभिप्रेतं विशेषं वक्तुं प्रथमं रामोक्तिमभ्युपगम्य वसिष्ठः
56823 परिहारमारभते - एवमेतदिति। सत्यं कदाचिदपि किंचिदपि नासत्संभवति
56824 किंतु तनु सूक्ष्ममेव सदाविर्भावेन बृहत्संपद्यते
56825 सैवोत्पत्तिर्बृहत्तिरोभावेन तनु संपद्यते स एव विनाश इत्यर्थः॥ १२॥
56826
56827 किमसत्संस्थितं ब्रूहि किं तत्सद्वाथ संस्थितम्।
56828 सम्यङ्गिदर्शनेनैव करिष्ये तव बोधनम्॥ १३॥
56829
56830 अस्त्वेवं तथापि अनात्मवस्तुषु सत्त्वासत्त्वविभाग एव दुर्निरूप इति विवक्षू
56831 रामं पृच्छति - किमिति॥ १३॥
56832
56833 श्रीराम उवाच।
56834
56835 सन्त एव स्थिताः सन्तो ब्रह्मन्वयमिमे किल।
56836 दामादयस्त्वसन्तोऽपि वक्षि सन्तः स्थिता इति॥ १४॥

ननु अस्मदादीनां सत्त्वं प्रत्यक्षादिप्रमाणसिद्धं दामादीनां
मायामात्रत्वादसत्त्वं त्वयैवोक्तं तथाच कथं तेषां पुनः सत्त्वं
विप्रतिषिद्धं वदसि को वा तवाभिप्राय इत्यर्थः ॥ १४ ॥

श्रीवसिष्ठ उवाच ।

यथा दामादयो राम स्थिता मायामया इति ।
असत्या एव सत्याभा मृगतृष्णाम्बुपूरवत् ॥ १५ ॥

यद्यस्मदादिशरीराणां व्यावहारिकप्रमाणव्यवहारयोग्यत्वात्सत्त्वं
मन्यसे तर्हि दामादीनामपि तत्तुल्यम् । अथ
तत्त्वज्ञानबाध्यत्वाद्दुर्वचत्वाद्वा असत्त्वं मन्यसे तदपि तुल्यमिति न
विप्रतिषेध इत्याशयेन वसिष्ठ उत्तरमाह - यथेत्यादिना ॥ १५ ॥

तथैवेमे वयमपि ससुरासुरदानवाः ।
असत्या एव वल्गामो याम आयाम एव च ॥ १६ ॥

अलीकमेव त्वद्भावो मद्भावोऽलीकमेव च ।
अनुभूतोऽप्यसद्रूपः स्वप्ने स्वमरणं यथा ॥ १७ ॥

त्वद्भावो रामशरीरभावः मद्भावो वसिष्ठशरीरभावः ॥ १७ ॥

मृतो बन्धुर्यथा स्वप्नेऽप्यनुभूतोऽप्यसन्मयः ।
मृतोऽयमिति चेज्ज्ञप्तिर्भवेदेवमिदं जगत् ॥ १८ ॥

एषातिमूढविषय उक्तिरेव न राजते ।
अभ्यासेन विनोदेति नानुभूतेरपह्नवः ॥ १९ ॥

जगत्सत्यतानिश्चयवानतिमूढस्तद्विषये तं प्रति एषा अलीकत्वोक्तिर्न राजत एव ।
कुतस्तत्राह - अभ्यासेनेति । परमार्थतत्त्वविचाराभ्यासेन विना
जगत्सत्यत्वानुभूतेरपह्नवोऽपलापो नोदेति ॥ १९ ॥

निश्चयोऽन्तःप्ररूढो यः संपन्नोऽभ्यसनं विना ।
नाशमायाति लोकेऽस्मिन्न कदाचन कस्यचित् ॥ २० ॥

एवं पूर्वोत्पन्नदुःसंस्कारनाशोऽपि शास्त्रार्थतत्त्वाभ्यासं विना
नोदेतीत्याह - निश्चय इति ॥ २० ॥

इदं जगदसद्ब्रह्म सत्यमित्येव वक्ति यः ।
तमुन्मत्तमिवोन्मत्तो विमूढोऽपि हसत्यलम् ॥ २१ ॥

अत एव ह्यनधिकारिण्युपदेशवाक्यमुन्मत्तप्रलपितप्रायत्वाद##-

अक्षीबक्षीबयोरैक्यं क्व किलेहाज्ञतज्ज्ञयोः ।
अन्धप्रकाशयोर्बोधे स्याच्छायातपयोरिव ॥ २२ ॥

यद्यज्ञान्नोपदिशेत्तैः सहाज्ञचेष्टाभिरेव ज्ञोऽपि व्यवहरेत्तर्हि सोऽप्यज्ञः
स्यात् तथा चाज्ञतज्ज्ञयोरैक्यं स्यादित्याशङ्क्याह - अक्षीबेति । क्षीबो
मदिरामत्तः अक्षीबो विमदस्तयोरैक्यं क्व स्यात् । अन्धयतीत्यन्धं तमः ।
प्रकाशः सूर्यादिः ॥ २२ ॥

56889 यत्नेनाप्यनुभूतोऽर्थः सत्ये कर्तुमपह्नवम् ।
56890 अज्ञोऽन्तश्च न शक्नोति शवमाक्रमणं यथा ॥ २३ ॥
56891
56892 इतोऽप्यज्ञो नोपदेश्य इत्याह - यत्नेनेति । अज्ञो महतापि यत्नेन
56893 बोध्यमानोऽपि अन्तर्बहिश्च मनोबुद्ध्यादिभेदेन रूपरसादिभेदेन चानुभूतो
56894 द्वैतरूपो योऽर्थस्तस्य सत्ये अधिष्ठाने अपह्नवं नेतिनेतीति बाधं कर्तुं न
56895 शक्नोति । यथा शवं कुणपं आक्रमणं स्वपद्भ्यां भ्रमणं कर्तुं न
56896 शक्नोति तद्वत् । नचाप्यस्तापह्नवं विना अधिष्ठानतत्त्वं बोद्धुं शक्यमिति
56897 व्यर्थस्तदुपदेशः स्यादित्यर्थः ॥ २३ ॥
56898
56899 ब्रह्म सर्वं जगदिति वक्तुं नाज्ञस्य युज्यते ।
56900 तपोविद्याननुभवे स तदेवानुभूतवान् ॥ २४ ॥
56901
56902 तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन
56903 इति ज्ञानाधिकारसिद्धये तप उपासनादिविधानादपि तदसंस्कृतोऽज्ञो
56904 नोपदेशार्ह इत्याह - ब्रह्मेति । यतस्तपोविद्यादीनामननुभवे
56905 अनुभवप्रयुक्तसंस्काराभावे सति सोऽज्ञस्तत्प्रसिद्धं
56906 संसारिदेहाद्यात्मभावमेवानादिकालमनुभूतवान्न कदापि
56907 असंसार्यात्मभावमित्यर्थः ॥ २४ ॥
56908
56909 अबुद्धविषये ह्येषा राम वाक्प्रविराजते ।
56910 बुद्धस्यास्मीति रूपेण किल नास्त्येव किंचन ॥ २५ ॥
56911
56912 क्व तर्ह्युपदेशवाग्विराजते तत्राह - अबुद्धेति । अनुदरा कन्येतिवदल्पार्थो
56913 नञ् समस्यते । अल्पबुद्धविषये इत्यर्थः । बुद्धस्य सम्यग्बोधवतस्तु अस्मीति
56914 अहंकारपरामर्शिरूपेण परामृष्टुं किंचिदपि नास्त्येवेति सोऽपि नोपदेशार्ह
56915 इत्यर्थः । तथाचोक्तमुपक्रमे नात्यन्तमज्ञो नोत ज्ञः
56916 सोऽस्मिञ्छास्त्रेऽधिकारवान् इति ॥ २५ ॥
56917
56918 ब्रह्मैवेदं परं शान्तमित्येवानुभवन्सुधीः ।
56919 अपह्नवः स्वानुभूतेः कर्तुं तस्य क्व युज्यते ॥ २६ ॥
56920
56921 अस्मीति बोद्धुमशक्याहं ब्रह्मास्मीति
56922 वाक्यार्थबोधज्ञस्यानधिकारवन्निषेध्याप्रसिद्धेर्नेतीत्यपह्नववाक्यार्थबो
56923 धे पि ज्ञस्यानधिकारमाह - ब्रह्मैवेति ॥ २६ ॥
56924
56925 परस्माद्व्यतिरेकेण नाहमात्मनि किंचन ।
56926 हेमनीवोर्मिकादित्वं न मय्यस्ति विशिष्टता ॥ २७ ॥
56927
56928 ननु हेमन्यूर्मिकादेरिवाहंकारस्यैव ब्रह्मण्य ह्योऽज्ञेन कुतो न क्रियते
56929 तत्राह - परस्मादिति । यतः आत्मनि अहंपदवाच्यं
56930 परस्माद्व्यतिरेकेणोर्मिकादिकमिव प्रातीतिकमपि ज्ञस्य किंचिन्नास्तीत्यर्थः । न
56931 मयीति । यतोऽद्वये मयि विशिष्टता भ्रान्त्यापि नास्ति यत्र विशेषणापह्नवः
56932 क्रियेतेत्यर्थः ॥ २७ ॥
56933
56934 भूतता व्यतिरेकेण मूढे नात्मनि किंचन ।
56935 ऊर्म्यादिबुद्धौ हेमेव ज्ञे नास्ति परमार्थता ॥ २८ ॥
56936
56937 ज्ञदृष्ट्या जगदिवाज्ञदृष्ट्या परमार्थोऽप्यत्यन्तासन्नेवेति तस्य तदस्तिता
56938 न बोधयितुं शक्येत्याशयेनाह - भूततेति । भूतता
56939 पाञ्चभौतिककार्यकारणमात्रात्मता ॥ २८ ॥
56940

56941 मिथ्याहंतामयो मूढः सत्यैकात्ममयः सुधीः।
56942 युज्यते न क्वचिन्नाम स्वभावापह्नवोऽनयोः॥ २९॥
56943
56944 उक्तमेव संक्षिप्य स्फुटमाह - मिथ्येति द्वाभ्याम्॥ २९॥
56945
56946 यो यन्मयस्तस्य तस्मिन्युज्यतेऽपह्नवः कथम्।
56947 पुरुषस्य घटोऽस्मीति वाक्यमुन्मत्तमेव हि॥ ३०॥
56948
56949 अन्यात्मतानिश्चयवतस्तदन्यात्मतोपदेशवैयर्थ्ये दृष्टान्तमाह -
56950 पुरुषस्येति॥ ३०॥
56951
56952 तस्मान्नेमे वयं सत्या नच दामादयः क्वचित्।
56953 असत्यास्ते वयं चेमे नास्ति नः खलु संभवः॥ ३१॥
56954
56955 औपोद्घातिकं समाप्य प्रस्तुतमुपपादितमुपसंहरति - तस्मादिति। इमे
56956 प्रत्यक्षगम्यवसिष्ठरामादिदेहात्मना प्रसिद्धा वयं शास्त्रदृशा न
56957 सत्याः। विद्वदनुभवदृशाप्यसत्याः। यौक्तिकदृशापि न संभवः।
56958 सद्भावो नास्तीत्यर्थः॥ ३१॥
56959
56960 सत्यं संवेदनं शुद्धं बोधाकाशं निरञ्जनम्।
56961 सत्यं सर्वगतं शान्तमस्त्यनस्तमयोदयम्॥ ३२॥
56962
56963 किं तर्हि सत्यं तदाह - सत्यमिति। संवेदनमेव [संवेदनामव इति
56964 पाठः] शास्त्रदृशापि सत्यं विद्वदनुभवतोऽपि सत्यं
56965 यौक्तिकदृशापि तदेवानस्तमयोदयमस्तीत्यर्थः॥ ३२॥
56966
56967 सर्वं शान्तं च निःशून्यं न किंचिदिव संस्थितम्।
56968 तत्र व्योम्नि विभान्तीमा निजा भासोऽङ्ग सृष्टयः॥ ३३॥
56969
56970 सर्वं जगच्छान्तं उपरतम्। किं शून्यपरिशेषेण नेत्याह -
56971 निःशून्यमिति। निरस्तशून्यम्। तर्हि कथं शान्तं तत्राह - न किंचिदिवेति।
56972 सर्वशून्यमिव नतु शून्यमेव। सन्मात्रपूर्णभावेन स्थितमित्यर्थः। निजाः
56973 भासः अन्यथाप्रथाः॥ ३३॥
56974
56975 यथा तैमिरिकाक्षस्य सहजा एव दृष्टयः।
56976 केशोण्ड्रकादिवद्भान्ति तथेमास्तत्र दृष्टयः॥ ३४॥
56977
56978 सतः असत्सदाकारेण प्रथा क्व दृष्टेति चेत्तदाह - यथेति॥ ३४॥
56979
56980 स आत्मानं यथा वेत्ति तथानुभवति क्षणात्।
56981 चिदाकाशस्ततोऽसत्यमपि सत्यं तदीक्षणात्॥ ३५॥
56982
56983 स सत्यात्मा आत्मानं यथा येन येन प्रकारेण वेत्ति तथैव क्षणादनुभवति।
56984 ततस्तस्मात्तदीक्षणात् सत्यात्मदृष्टिबलादसत्यमपि सत्यमिव
56985 क्षणाद्भवतीत्यर्थः॥ ३५॥
56986
56987 न सत्यमस्ति नासत्यमिति तस्माज्जगल्लये।
56988 यद्यथा वेत्ति चिद्रूपं तत्तथोदेत्यसंशयम्॥ ३६॥
56989
56990 यदि सत्येक्षणात्सत्यं स्वतस्तर्हि जगत्किंरूपमस्ति तत्राह - न सत्यमिति॥ ३६
56991 ।।
56992

56993 यथा दामादयस्तद्वदेवमभ्युदिता वयम् ।
56994 सत्यासत्याः किमत्राङ्ग तान्प्रत्यपि विकल्पना ॥ ३७ ॥
56995
56996 एवं प्रसिद्धेन वसिष्ठरामाद्याकारेण । तान् दामादीन् । अपिशब्द एवकारार्थे
56997 ॥ ३७ ॥
56998
56999 अस्यानन्तस्य चिद्व्योम्नः सर्वगस्य निराकृतेः ।
57000 चिदुदेति यथा यान्तस्तथा सा तत्र भात्यलम् ॥ ३८ ॥
57001
57002 या चित् अन्तः यथा यादृशाकारेण उदेति ॥ ३८ ॥
57003
57004 यत्र दामादिरूपेण संवित्प्रकचिता स्वयम् ।
57005 तथा सा तत्र संपन्ना तथाकारानुभूतितः ॥ ३९ ॥
57006
57007 उक्तमेवोदाहृत्य दर्शयति - यत्रेति ॥ ३९ ॥
57008
57009 अस्मदादिस्वरूपेण संविद्यत्रोदिता स्वयम् ।
57010 तथासौ तत्र संपन्ना तथाकारानुभूतितः ॥ ४० ॥
57011
57012 स्वस्वप्नप्रतिभासस्य जगदित्यभिधा कृता ।
57013 चिद्व्योम्नो व्योमवपुषस्तापस्येव मृगाम्बुता ॥ ४१ ॥
57014
57015 तापस्य मरुमयूखस्य ॥ ४१ ॥
57016
57017 यत्र प्रबुद्धं चिद्व्योम तत्र दृश्याभिधा कृता ।
57018 यत्र सुप्तं तु तेनैव तत्र मोक्षाभिधा कृता ॥ ४२ ॥
57019
57020 यत्र जगद्विषये प्रबुद्धं जागरूकम् । बाह्यार्थोपलब्धिरूपमिति यावत् । यत्र
57021 अद्वितीयस्वप्रकाशे स्वात्मनि प्रसुप्तं बाह्योपलब्धिरहितं तत्र तेनैव
57022 चिद्व्योम्नैव । तथाच श्रुतिः यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति यत्र
57023 त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् इति ॥ ४२ ॥
57024
57025 नच तत्क्वचिदासुप्तं न प्रबुद्धं कदाचन ।
57026 चिद्व्योम केवलं दृश्यं जगदित्यवगम्यताम् ॥ ४३ ॥
57027
57028 इदं तु बोधनायावस्थाद्वयं सादृश्यकल्पनयोक्तं परमार्थतस्त्वाह ##-
57029
57030 निर्वाणमेव सर्गश्रीः सर्गश्रीरेव निर्वृतिः ।
57031 नानयोः शब्दयोरर्थभेदः पर्याययोरिव ॥ ४४ ॥
57032
57033 यदा दृश्यं केवलं चिद्व्योमैव तदा सर्गनिर्वाणयोर्भेदो निवृत्त इत्याह
57034 - निर्वाणमेवेति ॥ ४४ ॥
57035
57036 परमार्थो जगदिति रूपं वेत्ति स्वयं स्वकम् ।
57037 यथा तैमिरिकं चक्षुः केशोण्ड्रकमिवेक्षते ॥ ४५ ॥
57038
57039 उक्तमुपपादयति - परमार्थ इति द्वाभ्याम् । स्वयं अज्ञानोपहित आत्मा ॥ ४५
57040 ||
57041
57042 न तत्केशोण्ड्रकं किंचित्सा हि दृष्टिस्तथा स्थिता ।
57043 नेदं दृश्यमिदं किंचिदित्थं चिद्व्योम संस्थितम् ॥ ४६ ॥
57044

57045 सर्वत्र सर्वमिदमस्ति यथानुभूतं
57046 नो किंचन क्वचिदिहास्ति न चानुभूतम् ।
57047 शान्तं सदेकमिदमाततमित्थमास्ते
57048 संत्यक्तशोकभयभेदमतस्त्वमास्स्व ॥ ४७ ॥
57049
57050 अध्यारोपदृष्टौ सर्वत्रगे चिद्व्योम्नि सर्वारोपसंभवात्सर्वत्र सर्वमस्ति
57051 अपवाददृष्टौ तु क्वचिदपि किंचिन्नास्ति । इत्थमुक्तप्रकारद्वयेऽपि इदं जगत्
57052 शान्तं निरस्तभेदं अत एवैकं सत् ततं पूर्णमास्ते । अतस्त्वमपि
57053 संत्यक्तशोकभयभेदं यथा स्यात्तथा पूर्ण आस्स्वेत्यर्थः ॥ ४७ ॥
57054
57055 शिलोदराकारघनं प्रशान्तं
57056 महाचिते रूपमिदं स्वमच्छम् ।
57057 नैवास्ति नास्तीति दृशौ क्वचित्तु
57058 यच्चास्ति तत्साधु तदेव भाति ॥ ४८ ॥
57059
57060 तदेव पुनः स्थिरीकुर्वन्वर्णयति - शिलेति । स्फटिकशिलाया उदरमिव
57061 शून्याकारं भासमानमपि घनं तत्र प्रतिबिम्बवनगिरिनद्यादिस्वरूप
57062 इवास्ति नास्तीति दृशौ तु क्वचिन्नैव । यच्च प्रतिभानमात्रेणास्ति
57063 तत्तच्चितिरूपमेव तथा भातीत्यर्थः ॥ ४८ ॥
57064
57065 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु
57066 स्थितिप्रकरणे सदसन्निराकरणं नामैकत्रिंशः सर्गः ॥ ३१ ॥
57067
57068 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे
57069 सदसन्निराकरणं नामैकत्रिंशः सर्गः ॥ ३१ ॥
57070
57071
57072 द्वात्रिंशः सर्गः ३२
57073
57074 श्रीराम उवाच ।
57075
57076 सतामप्यसतामेव बालयक्षपिशाचवत् ।
57077 दामव्यालकटादीनां दुःखस्यान्तः कथं भवेत् ॥ १ ॥
57078
57079 मत्स्यसारसजन्माप्त्या वियुक्ता राजसद्मनि ।
57080 मशकादितनुष्वाप्तज्ञानास्ते मुक्तिमाययुः ॥ १ ॥
57081
57082 अज्ञबुद्ध्या सतामपि परमार्थतोऽसतामेव दुःखस्यान्तो मोक्षः कथं
57083 भवेत् । कदा भविष्यतीति यावत् ॥ १ ॥
57084
57085 श्रीवसिष्ठ उवाच ।
57086
57087 दामव्यालकुटुम्बैस्तैस्तदैव यमकिङ्करैः ।
57088 प्रार्थितेन यमेनोक्तमिदं शृणु रघूद्वह ॥ २ ॥
57089
57090 दामव्यालकटानां कुटुम्बैर्बान्धवभूतैर्यमकिङ्करैः ॥ २ ॥
57091
57092 यदा वियोगमेष्यन्ति श्रोष्यन्ति च निजां कथाम् ।
57093 दामादयस्तदा मुक्ता भविष्यन्तीत्यसंशयम् ॥ ३ ॥
57094
57095 निजां स्वीयां
57096 शम्बरमायाकल्पितजीवभावनिर्वासनाद्वयचिन्मात्रस्वस्वाभाव्यकथाम् ।

57097 तदा स्वतत्त्वं बुद्ध्वा मुक्ता भविष्यन्तीति असंशयं निःसंशयं
57098 यमेनोक्तमित्यर्थः ॥ ३ ॥
57099
57100 श्रीराम उवाच ।
57101
57102 स्ववृत्तान्तमिमं कुत्र कदा कथयते कथम् ।
57103 श्रोष्यन्ति भगवंस्ते वा वर्णयेदं यथाक्रमम् ॥ ४ ॥
57104
57105 ते दामादयः । त्वर्थे वाशब्दः । कथयते कथयतः सकाशात् । व्यत्ययेन
57106 पञ्चम्यर्थे चतुर्थी ॥ ४ ॥
57107
57108 श्रीवसिष्ठ उवाच ।
57109
57110 काश्मीरेषु महापद्मसरसीतीरपल्वले ।
57111 भूयोभूयोऽनुभूयैव मत्स्ययोनिपरम्पराम् ॥ ५ ॥
57112
57113 आलोलिताशया लोलाः कालेन लयमागताः ।
57114 तत्रैव पद्मसरसि ते भविष्यन्ति सारसाः ॥ ६ ॥
57115
57116 आलोलितः ग्रीष्मे महिषसूकरादिभिरालोडित आशयः पल्वलं येषां तथाविधाः
57117 सन्तः ॥ ६ ॥
57118
57119 तत्र ख्लारमालासु सरोजपटलीषु च ।
57120 शैवालवरवल्लिषु तरङ्गवलनासु च ॥ ७ ॥
57121
57122 चलत्कुसुमदोलासु नीलोत्पललतासु च ।
57123 सीकरौघाभ्रलेखासु शीतलावर्तवर्तिषु ॥ ८ ॥
57124
57125 सारसाः सरसंभोगान्भुक्त्वा भुवनभूषणाः ।
57126 विहृत्य सुचिरं कालमलमागतशुद्धयः ॥ ९ ॥
57127
57128 ते वियुक्ता भविष्यन्ति मुक्तये लब्धबुद्धयः ।
57129 रजःसत्त्वतमांसीव भेदं प्राप्य यदृच्छया ॥ १० ॥
57130
57131 लब्धबुद्धयः प्राप्तविचारबुद्धयः । यथा रजःसत्त्वतमांसि विवेकदृशा
57132 पर्यालोच्यमानानि मुक्तये भेदं विवेकं प्राप्नुवन्ति तद्वत् ॥ १० ॥
57133
57134 काश्मीरमण्डलस्यान्तर्नगरं नगशोभितम् ।
57135 नाम्नाधिष्ठानमित्येव श्रीमत्तस्य भविष्यति ॥ ११ ॥
57136
57137 नगैर्वृक्षैरद्रिभिश्च शोभितम् ॥ ११ ॥
57138
57139 प्रद्युम्नशिखरं नाम तस्य मध्ये भविष्यति ।
57140 शृङ्गं लघु सरोजस्य कोशचक्रमिवोदरे ॥ १२ ॥
57141
57142 लघु लङ्घनार्हं स्वारोहमिति यावत् । कोशचक्रं कर्णिकेव ॥ १२ ॥
57143
57144 तस्य मूर्ध्नि गिरेर्गेहं कश्चिद्राजा भविष्यति ।
57145 अभ्रंकषमहाशालं शृङ्गे [शालशृङ्गे इति टिकानुगुणः
57146 पाठः] शृङ्गमिवापरम् ॥ १३ ॥
57147
57148 तस्य गिरेर्मूर्ध्नि कश्चित्किंचिद्गेहं अन्येषां गृहाणां राजेव राजा

57149 भविष्यति। अभ्रमाकाशं कषति च्छिद्रीकरोतीवेत्यभ्रंकषे महति
57150 शालवृक्षस्य शृङ्गे मध्यमशाखाग्रे। अभ्रंकषा महत्यः शालाः
57151 प्रासादा यत्र तथाविधे गिरिशृङ्गे अपरं शृङ्गमिवेत्युत्प्रेक्षा वा॥ १३॥
57152
57153 गृहस्येशानकोणेऽस्ति शिरोभित्तिव्रणोदरे।
57154 तस्यानिशमविश्रान्तवाताधूततृणान्तिके॥ १४॥
57155
57156 शिरोभित्तेरूर्ध्वकुड्यस्य व्रणो विदीर्णशिलासंधिभागस्तस्योदरे अस्ति नीडमिति
57157 शेषः॥ १४॥
57158
57159 आलये दानवो व्यालः कलविङ्को भविष्यति।
57160 प्रथमाल्पश्रुतशास्त्र इवार्थरहितारवः॥ १५॥
57161
57162 आलये तस्मिन्नीडे कलविङ्कश्चटकः। प्रथममल्पं श्रुतं शास्त्रं येन
57163 तथाविधो द्विज इव अर्थरहितो निरर्थक आरवो यस्य। चीचीकूचीत्यव्यक्तवाशित इति
57164 यावत्॥ १५॥
57165
57166 तस्मिन्नेव तदा काले तत्र राजा भविष्यति।
57167 श्रीयशस्करदेवाख्यः शक्रः स्वर्ग इवापरः॥ १६॥
57168
57169 दानवो दामनामात्र मशकस्तस्य सद्मनि।
57170 भविष्यति बृहत्स्तम्भपृष्ठच्छिद्रे मृदुध्वनिः॥ १७॥
57171
57172 अधिष्ठानाभिधे तस्मिन्नेवान्तर्नगरे तदा।
57173 रत्नावलीविहाराख्यो विहारोऽपि भविष्यति॥ १८॥
57174
57175 विहरन्त्यस्मिञ्जना इति विहारः क्रीडागृहम्॥ १८॥
57176
57177 तस्मिंस्तद्भूमिपामात्यो नरसिंह इति श्रुतः।
57178 करामलकवद्दृष्टबन्धमोक्षो निवत्स्यति॥ १९॥
57179
57180 करामलकवत् दृष्टौ श्रुतियुक्तिगुरूपदेशस्वानुभवैः परीक्ष्य
57181 रत्नतत्त्वमिव निश्चितौ बन्धमोक्षौ येन॥ १९॥
57182
57183 भविष्यति गृहे तस्य क्रीडनः क्रकरः खगः।
57184 कटो मायासुरो नाम कृतराजतपञ्जरः॥ २०॥
57185
57186 तस्यामात्यस्य क्रीडनः क्रीडासाधनभूतः क्रकरः शारिकाभेदः कटो नाम
57187 मायासुर इत्यन्वयः॥ २०॥
57188
57189 स नृसिंहो नृपामात्यश्लोकैर्विरचितामिमाम्।
57190 दामव्यालकटादीनां कथयिष्यति सत्कथाम्॥ २१॥
57191
57192 सकटः क्रकरः श्रुत्वा तत्कथासंस्मृतात्मभूः।
57193 शान्तमित्थं महाशान्तं परं निर्वाणमेष्यति॥ २२॥
57194
57195 संस्मृत आत्मैव सर्वतः सर्वदा भवतीत्यात्मभूरपरिच्छिन्नात्मा येन।
57196 शान्तं बाधितशम्बरकलितजीवरूपम्। इत्थमेव महाशान्तं मूलतः
57197 शान्तं संसाररूपं यत्र तथाविधं परं मोक्षम्॥ २२॥
57198
57199 प्रद्युम्नशिखरप्रान्तवास्तव्यः कलविङ्ककः।
57200 तत्रत्यैश्च कथां श्रुत्वा परं निर्वाणमेष्यति॥ २३॥

57201
57202 प्रद्युम्नस्य गिरेः शिखरप्रान्ते वसतीति वास्तव्यः। वसेस्तव्यत्कर्तरि णिच्च इति
57203 तव्यत्प्रत्ययः। तत्रत्यैश्चादन्यैश्च वर्ण्यमानामिति शेषः। कथां
57204 स्वपूर्ववृत्तान्तघटितब्रह्मकथम्॥ २३॥
57205
57206 राजमन्दिरदार्वन्तर्व्रणवास्तव्यतां गतः।
57207 मशकोऽपि प्रसङ्गेन श्रुत्वा शान्तिमुपैष्यति॥ २४॥
57208
57209 दार्वन्तः स्तम्भपृष्ठे। शान्तिं मोक्षम्॥ २४॥
57210
57211 प्रद्युम्नशृङ्गाच्चटको मशको राजमन्दिरात्।
57212 विहारात्क्रकरश्चेति मोक्षमेष्यन्ति राघव॥ २५॥
57213
57214 एष ते कथितः सर्वो दामव्यालकथाक्रमः।
57215 मायैवमेव संसारशून्यैवात्यन्तभासुरा॥ २६॥
57216
57217 भ्रमयत्यपरिज्ञानान्मृगतृष्णाम्बुधीरिव।
57218 महतोऽपि पदादेवं नानाज्ञानवशादधः॥ २७॥
57219
57220 इतरपदेभ्यो महतोऽपि पदात् अपरिपक्वज्ञानदशातः॥ २७॥
57221
57222 पतन्ति मोहिता मूढा दामव्यालकटा इव।
57223 क्व भ्रूक्षेपविनिष्पिष्टमेरुमन्दरसद्मता॥ २८॥
57224
57225 निर्वासनत्वप्रयुक्तप्राक्तनोत्कर्षस्य पश्चात्तनमशकादिजन्मनश्च
57226 महदन्तरं दर्शयति - क्वेत्यादिना॥ २८॥
57227
57228 क्व राजगृहदार्वन्तर्व्रणे मशकरूपता।
57229 क्व चपेटभुजामात्रपातितार्केन्दुबिम्बता॥ २९॥
57230
57231 चपेटः करतलेन प्रहारस्तेन भुजामात्रेण बाहुमात्रेण। विनैव प्रहरणानीति
57232 यावत्॥ २९॥
57233
57234 क्व प्रद्युम्नगिरौ गेहे भित्तिव्रणविहङ्गता।
57235 क्व पुष्पलीलया लोलकरतोलितमेरुता॥ ३०॥
57236
57237 पुष्पलीलया पुष्पवल्लोलेन करेण तोलितो भारेयत्तयावधारितो मेरुर्यैस्तद्भावः
57238 क्व॥ ३०॥
57239
57240 क्व वा शृङ्गे नृसिंहस्य गृहे क्रकरपोतता।
57241 चिदाकाशोऽहमित्येव रजसा रञ्जितप्रभः॥ ३१॥
57242
57243 नृसिंहस्य मन्त्रिणः। इदानीं राजसाहंकाररञ्जनेन चिदाकाशस्य
57244 देहाद्याकाराभिमानावतारप्रकारं दर्शयति - चिदाकाश इति॥ ३१॥
57245
57246 स्वरूपमत्यजन्नेव विरूपमपि बुध्यते।
57247 स्वयैव वासनाभ्रान्त्या सत्ययेवाप्यसत्यया॥ ३२॥
57248
57249 स्वरूपं स्वाभाविकस्वप्रकाशताम्। विरूपं
57250 अहंकारप्राणदेहेन्द्रियादिरूपम्॥ ३२॥
57251
57252 मृगतृष्णाम्बुबुद्ध्येव याति जन्तुरिवान्तरम्।

57253 तरन्ति ते भवाम्भोधिं स्वप्रवाहधियैव ये ॥ ३३ ॥
57254
57255 अन्तरं चिद्रूपाद्भेदमिव याति। इदानीं तत्तरणोपायमाह - तरन्तीति।
57256 स्वप्रवाहधिया प्रत्यक्प्रवणबुद्ध्या ॥ ३३ ॥
57257
57258 शास्त्रेणासादितं दृश्यमिति निर्वाणसंस्थिताः।
57259 नानादुःखविकाराणि शुष्कतर्कमतानि ये ॥ ३४ ॥
57260
57261 शास्त्रेण महावाक्यादिलक्षणेन। किमिति महावाक्यावलम्बस्तर्कैरेव
57262 तन्निर्णयः कुतो न स्यात्तत्राह - नानेति ॥ ३४ ॥
57263
57264 यान्ति श्वभ्रं [स्वभ्रं इत्यपि पाठः] जलानीव स्वलाभं
57265 नाशयन्ति ते।
57266 स्वानुभूतिप्रसिद्धेन मार्गेणागमगामिना ॥ ३५ ॥
57267
57268 स्वलाभं पारमार्थिकात्मभावस्थितिलक्षणपरमपुरुषार्थलाभम्।
57269 औपनिषदमार्गमनुभूतिरपि संवदति न तार्किकमित्याशयेनाह -
57270 स्वानुभूतीति। आगमगामिना श्रुत्यनुसारिणा ॥ ३५ ॥
57271
57272 न विनाशो भवत्यङ्ग गच्छतां परमां गतिम्।
57273 इदं मे स्यादिदं मे स्यादितिबुद्धेर्महामते [बुद्धेरित्यत्र
57274 वृद्धैरिति क्वचित्पठ्यते] ॥ ३६ ॥
57275
57276 अङ्गेत्यामन्त्रणे। केन तर्हि पुरुषार्थविनाशस्तदाह - इदमिति। इतिबुद्धेः
57277 पुरुषस्य ॥ ३६ ॥
57278
57279 स्वेन दौर्भाग्यदैन्येन न भस्माप्युपतिष्ठते।
57280 वेत्ति नित्यमुदारात्मा त्रैलोक्यमपि यस्तृणम् ॥ ३७ ॥
57281
57282 दौर्भाग्यप्रयुक्तदैन्येनेत्यर्थः। नष्टस्य च पुरुषार्थस्य भस्मापि
57283 नोपतिष्ठत इति सर्वथा नैराश्यमित्यर्थः। एवं स्पृहाया अनर्थत्वमुक्त्वा
57284 वैराग्यस्य सर्वानर्थनिवर्तकत्वमाह - वेत्तीति ॥ ३७ ॥
57285
57286 तं त्यजन्त्यापदः सर्वाः सर्पा इव जरत्त्वचम्।
57287 परिस्फुरति यस्यान्तर्नित्यं सत्त्वचमत्कृतिः ॥ ३८ ॥
57288
57289 विरक्तस्य चेज्ज्ञानकलापि स्यात्तर्हि तस्य दूरे आपच्छङ्का प्रत्युत सर्वे देवाः
57290 स्वोपजीव्यं स्वाधारं ब्रह्माण्डमिव सदा तं पालयन्त्यपीत्याह -
57291 परिस्फुरतीति ॥ ३८ ॥
57292
57293 ब्राह्ममण्डमिवाखण्डं लोकेशाः पालयन्ति तम्।
57294 अप्यापदि दुरन्तायां नैव गन्तव्यमक्रमे ॥ ३९ ॥
57295
57296 न क्रम्यत इत्यक्रमेऽसन्मार्गे ॥ ३९ ॥
57297
57298 राहुरप्यक्रमेणैवं पबन्नप्यमृतं मृतः।
57299 सच्छास्त्रसाधुसंपर्कमर्कमुग्रप्रकाशदम् ॥ ४० ॥
57300
57301 कस्तर्हि मार्गस्तमाह - सच्छास्त्रेति।
57302 सच्छास्त्रमुपनिषदस्तदुपबृंहणानि च तदर्थनिष्ठाः
57303 साधवस्तदुभयेन संपर्कः सदा तन्निषेवणं तमेवार्कं सूर्यं निर्दयं
57304 निःशेषसंसारसंहारकत्वादुग्रः शिवः परमात्मा तस्य प्रकाशदं

साक्षात्कारहेतुं तमोनभिभवनीयं प्रकाशदं च ॥ ४० ॥

ये श्रयन्ते न ते यान्ति मोहान्ध्यस्य पुनर्वशम् ।
अवश्या वश्यतां यान्ति यान्ति सर्वापदः क्षयम् ॥ ४१ ॥

मोहलक्षणस्यान्ध्यस्यान्धकारस्य । इदानीं वैराग्यादिगुणान्पुनः
प्रशंसति - अवश्या इति ॥ ४१ ॥

अक्षयं भवति श्रेयः कृतं येन गुणैर्यशः ।
येषां गुणेष्वसंतोषो रागो येषां श्रुतं प्रति ॥ ४२ ॥

येन पुरुषश्रेष्ठेन वैराग्यशमदमादिगुणैर्यशः सत्स्वग्रगण्यत्वेन
विख्यातिः । उक्तगुणेषु येषामसंतोषः अनलंबुद्धिः ।
श्रुतमध्यात्मशास्त्रश्रवणाभ्यासादि प्रति येषां सदा राग इच्छा ॥ ४२ ॥

सत्यव्यसनिनो ये च ते नराः पशवोऽपरे ।
यशश्चन्द्रिकया येषां भासितं जन्तुहृत्सरः ॥ ४३ ॥

ये च सत्यं सत्यवाक्यं ब्रह्म च तयोर्व्यसनिनस्त एव
नरजन्मसार्थकीकरणान्नराः अपरे तु नरा अपि पशुवद्व्यर्थजन्मत्वात्पशव
इत्यर्थः । येषां यशोलक्षणस्य चन्द्रस्य चन्द्रिकया जन्तूनां प्राणिनां हृत्
हृदयलक्षणं सरो भासितं आह्लादकैरवोन्मेषैः प्रकाशितम् ॥ ४३ ॥

तेषां क्षीरसमुद्राणां नूनं मूर्तौ स्थितो हरिः ।
भुक्तं भोक्तव्यमखिलं दृष्टा द्रष्टव्यदृष्टयः ॥ ४४ ॥

त एव क्षीरसमुद्रा अत एव तेषां मूर्तौ हरिर्विष्णुः परमात्मा स्फुटं स्थित
इत्यर्थः । इदानीं जगतो हितैषी पितृमातृभ्योऽप्याप्ततमः श्रीवसिष्ठः
सर्वैरनादौ संसारे पुनःपुनः सहानर्थपरम्पराफलैरनुभूतेषु
विषयेषु दृश्यकौतुकविशेषेषु च नापूर्वं किंचिदवशिष्टमिति
दर्शयन्वैराग्यशास्त्राचारनिष्ठामेव प्रशंसमानः प्ररोचयति -
भुक्तमित्यादिना ॥ ४४ ॥

किमन्यद्भवभङ्गाय भूयो भोगेषु लुब्धता ।
यथाक्रमं यथाशास्त्रं यथाचारं यथास्थिति ॥ ४५ ॥

अन्यद्भवेषु भाविजन्मपरम्परासु भङ्गाय स्वात्मविनाशाय भूयोऽपि
भोगेषु लुब्धता किं युक्ता । सर्वथा न युक्तेत्यर्थः । अन्यद्भवेत्यत्र दुक्
छान्दसः । यथाक्रमं स्वस्वाधिकारानुरूपम् । यथाशास्त्रं
तादृशाधिकारिकचित्तशुद्ध्याद्यनुकूलशास्त्रानुरूपम् । तत्रापि यथाचारं
पूर्वपूर्वाचार्यप्रवर्तितसंप्रदायानुरूपम् । यथास्थिति
तत्राप्येकैकभूमिकायां यावत्परिपाकं स्थितिमनतिक्रम्येत्यर्थः ॥ ४५ ॥

स्थीयतां मुच्यतामन्तर्भोगजालमवास्तवम् ।
संस्तवः क्रियतां कीर्त्या गुणैर्गगनगामिभिः ॥ ४६ ॥

संस्तवः साधुजनमुखेषु स्वसाधुवादः । गगनगामिभिः
स्वर्गपर्यन्तप्रख्यातैः ॥ ४६ ॥

त्रायेते मृत्युतो ह्येते न कदाचन भोगकाः ।
गायन्ति सिद्धसुन्दर्यो येषामिन्दुसितं यशः ॥ ४७ ॥

57357 एते संस्तवकीर्ती। स्त्रीशेषश्छान्दसः सामान्ये नपुंसकं वा ॥ ४७ ॥
57358
57359 गीतिभिर्गगनाभोगैस्ते जीवन्ति मृताः परे।
57360 परमं पौरुषं यत्नमास्थायादाय सूद्यमम् ॥ ४८ ॥
57361
57362 गगनाभोगैर्गगनवत्सर्वदेशकालव्यापिभिः। यशः कथं संपादयितुं
57363 शक्यते तत्राह - परममिति ॥ ४८ ॥
57364
57365 यथाशास्त्रमनुद्वेगमाचरन्को न सिद्धिभाक्।
57366 यथाशास्त्रं विहरता त्वरा कार्या न सिद्धिषु ॥ ४९ ॥
57367
57368 आचरन् साधनानीति शेषः ॥ ४९ ॥
57369
57370 चिरकालपरिपक्वा सिद्धिः पुष्टफला भवेत्।
57371 वीतशोकभयायासमगर्वमपयन्त्रणम् ॥ ५० ॥
57372
57373 अपयन्त्रणं शीघ्रतानिर्बन्धरहितम् ॥ ५० ॥
57374
57375 व्यवहारो यथाशास्त्रं क्रियतां मा विनश्यताम्।
57376 जीवो जीर्णान्धकूपेषु भवेष्वन्तमिवागतः ॥ ५१ ॥
57377
57378 भवतां भूरिसङ्गानामधुनेन्द्रियदामतः।
57379 इतःप्रभृति मा भूयो गम्यतामधमादधः ॥ ५२ ॥
57380
57381 भूरिसङ्गानां भवतां जीव इन्द्रियदामतः अन्तं मृत्युमिवागतः सन्
57382 भवलक्षणेषु जीर्णान्धकूपेषु मा विनश्यतामिति पूर्वत्रान्वयः ॥ ५२ ॥
57383
57384 इदं विचार्यतां शास्त्रमस्त्रमापन्निवारणम्।
57385 रणे शितशरश्रेणिशतनिर्लूनवारणे ॥ ५३ ॥
57386
57387 शितैस्तीक्ष्णैः शरश्रेणिशतैर्निर्लूनाश्छिन्ना वारणा गजा यत्र तथाविधेऽपि
57388 रणे सद्यः प्रसक्तमहाभयमृत्वाद्यापदामपि
57389 निवारणमजरामरनित्यनिरतिशयानन्दात्मप्रदर्शकमिदं शास्त्रमवश्यं
57390 विचार्यतामित्यर्थः ॥ ५३ ॥
57391
57392 जीवमुद्रा च किं पङ्के भोगगन्धो निरस्यताम्।
57393 किमर्थमात्रया कार्यमार्याः शास्त्रमवेक्ष्यताम् ॥ ५४ ॥
57394
57395 किं पङ्के ग्रीष्मोष्मसंतप्तपल्वलदुर्गन्धिपङ्कसदृशे संसारे पुनः
57396 पुनर्मृतोज्जीवितजरन्मण्डूकवज्जीवमुद्रा जीविताशेति यावत्। किं
57397 अतितुच्छेत्यर्थः। मुह्यसि इति पाठे स्पष्टम्। अतो भोगगन्धो भोगवासना
57398 हृदयादपनीयताम्। तदर्थया अर्थमात्रया द्रव्यलेशेन किं कार्यम्। हे
57399 आर्याः सर्वं परित्यज्य मोक्षशास्त्रमेवावेक्ष्यतामित्यर्थः ॥ ५४ ॥
57400
57401 इदं बिम्बमिदं बिम्बमिति सत्यं विचार्यताम्।
57402 धिया परप्रेरणया यातमापशवो यथा ॥ ५५ ॥
57403
57404 विषयाकारवृत्तिप्रतिफलितचिदाभासानामन्तःकरणावच्छिन्नं चैतन्यं
57405 बिम्बम्। अन्तःकरणोपहितचिदाभासस्य तु शुद्धं ब्रह्मचैतन्यमेव बिम्बम्।
57406 प्रतिबिम्बतदुपाधी असत्ये बिम्बं तु सत्यम्। तत्रान्तःकरणोपाध्यसत्यत्वे
57407 तदवच्छिन्नबिम्बचैतन्यस्य तत्समनियतचिदाभासबिम्बभूतब्रह्मचैतन्यस्य
57408 च भेदो मिथ्यैवेत्यखण्डं सत्यं प्रत्यगभिन्नं ब्रह्मचैतन्यमेव

परिशिष्यत इति विचार्यतामित्यर्थः। ननु परे
सांख्यपातञ्जलगौतमकणादबुद्धार्हदादयो
नोक्तप्रतिबिम्बताप्रक्रियामिच्छन्ति किंत्वन्यथान्यथैव निरूपयन्तस्तत्रैव
जनान्प्रेरयन्ति तत्प्रेरणापि किमुपादेया नेत्याह - धियेति। यथा ह्ययं
ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन्
इत्यादिस्वतन्त्रश्रुतिप्रमाणानुसारिणां पशुवत्परप्रेरणया
यानमनुचितमेवेति भावः॥ ५५॥

दौर्भाग्यदायिनी दीना शुभहीना विचारणा।
घनदीर्घमहानिद्रा त्यज्यतां संप्रबुध्यताम्॥ ५६॥

एवं शास्त्रार्थविचारणां विधाय संप्रति
जीवनधनपशुपुत्रादिसांसारिकविचारणां दर्शनान्तरविचारणां च
त्याजयितुं निन्दति - दौर्भाग्येति। उदर्के दौर्भाग्यदायिनी स्वकाले
कार्पण्यहेतुत्वाद्दीना तुच्छफलत्वात्फलहीना
गाढतमओमात्रनिवेशाद्घनदीर्घमहानिद्रा त्यज्यताम्॥ ५६॥

सुप्तं मास्थीयतां वृद्धकच्छपेनेव पल्वले।
उत्थानमङ्गीक्रियतां जरामरणशान्तये॥ ५७॥

अनर्थायार्थसंपत्तिर्भोगौघो भवरोगदः।
आपदः संपदः सर्वाः सर्वत्रानादरो जयः॥ ५८॥

पूर्वोत्तरार्धयोराद्यवाक्यार्थयोः प्रथमौ विधेयौ
द्वितीयवाक्यार्थयोस्तद्वैपरीत्यम्॥ ५८॥

लोकतन्त्रानुसारेण विचाराद्व्यवहारिणाम्।
शास्त्राचारानुसारेण कर्मणा सत्फलाय च॥ ५९॥

लोकतन्त्रं जनवृत्तं तदनुसारेण तदविरोधिना। शास्त्राचारौ अनुसरति
तथाविधेन कर्मणा तत्फलाय चोत्थानमङ्गीक्रियतामिति व्यवहितानुषङ्गः॥
५९॥

आचारचारुचरितस्य विविक्तवृत्तेः
संसारसौख्यफलदुःखदशास्त्रगृध्नोः [दशास्वगृध्नोः इति
पाठष्टीकानुगुणः सुसमीचीनश्चेति प्रतीयते अन्यथा
मूलेऽनर्थापातष्टीकाननुगुणत्वं चापतेत्]।
आयुर्यशांसि च गुणाश्च सहैव लक्ष्म्या
फुल्लन्ति माधवलता इव सत्फलाय॥ ६०॥

उक्तमर्थं संक्षिप्योपसंहरति - आचारेति। विविक्तबुद्धेर्विवेकिबुद्धेः।
अगृध्नोरनभिलाषस्य। फुल्लन्ति विकसन्ति। माधवलता वसन्तकालपल्लवितलता
इव। सत्फलाय उत्तमफलाय॥ ६०॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० मो० स्थितिप्रकरणे
दामव्यालकटोपाख्याने सदाचारनिरूपणं नाम द्वात्रिंशः सर्गः॥
३२॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे
सदाचारनिरूपणं नाम द्वात्रिंशः सर्गः॥ ३२॥

57461 त्रयस्त्रिंशः सर्गः ३३
57462
57463 श्रीवसिष्ठ उवाच।
57464
57465 सर्वातिशयसाफल्यात्सर्वं सर्वत्र सर्वदा।
57466 संभवत्येव तस्मात्त्वं शुभोद्योगं न संत्यज॥ १॥
57467
57468 वर्ण्यतेऽत्र शुभोद्योगसाधुसच्छास्त्रवैभवम्।
57469 बन्धोऽहङ्कारतस्तस्य त्यागान्मुक्तिश्च विस्तरात्॥ १॥
57470
57471 वक्ष्यमाणस्य शुभोद्योगादेः सेवनोत्कर्षे फलावश्यंभावं दर्शयितुं
57472 सामान्यन्यायं दर्शयति - सर्वेति। सर्वेषां साधनातिशयानां
57473 साफल्यनियमात्सर्वत्र दृष्टकृस्।इसेवादिसाधने शास्त्रीयमोक्षसाधने
57474 शुभोद्योगादौ च सर्व स्वस्वानुरूपं फलं संभवत्येव न कदापि
57475 वैफल्यं तस्मान्मोक्षफलार्थी त्वमपि शुभोद्योगं कदापि न
57476 संत्यजेत्यर्थः॥ १॥
57477
57478 मित्रस्वजनबन्धूनां नन्दिनानन्ददायिना।
57479 सरसीशानमासाद्य मृत्युरप्युपनिर्जितः॥ २॥
57480
57481 तत्र शास्त्रीयशुभोद्योगस्यासाध्यं किंचिन्नास्त्येवेति दर्शयितुं
57482 नन्दीश्वरोपाख्यानादि संक्षिप्योदाहरति - मित्रेत्यादिना। शिलादनामा किल
57483 मुनिः सर्वज्ञं पुत्रं कामयमानस्तपसा भगवन्तं रुद्रं
57484 प्रसादयामास। तस्मै चिरेण तपसा प्रसन्नो वरं दास्यन्किल स भगवानुवाच
57485 । न मत्तोऽन्यः सर्वज्ञः संभवत्यतोऽहमेवांशेनावतीर्णस्ते पुत्रो
57486 भविष्यामि स ते मदंशजः पुत्रः ओंषशवर्षे मृत्युपदं यातेति।
57487 तच्छ्रुत्वा शिलादस्तद्वचनं प्रतिकूलयितुमशक्नुवंस्तमेव शरणं
57488 गतस्तथास्त्वित्यनुमेने। अथ तस्य सर्वज्ञः पुत्रो नन्दिनामा बभूव। स बाल
57489 एव पितुः सकाशात्स्वस्य भाविमृत्युपाशबन्धनं श्रुत्वा तपसा तमेव
57490 रुद्रमाराधयामास। अथ षोडशे वर्षे सरस्तीरे लिङ्गार्चनकाले मृत्युना
57491 पाशैर्बध्यमानस्तत्रैवाविभूतेन शिवेन मृत्युं वामपादाग्रेण हत्वा
57492 पाशांश्छित्त्वा स जरामृत्युवर्जितः स्वानुचरः कृतः इति लैङ्गे प्रसिद्धम्
57493 ॥ २॥
57494
57495 सर्वोत्कर्षेण संपन्ना देवा अपि विमर्दिताः।
57496 दानवैर्दानवार्थाढ्यैर्गजैः पद्माकरा इव॥ ३॥
57497
57498 दानवैर्बलिप्रभृतिभिः दानवैः सैनिकैरर्थैर्धनैश्चाढ्यैः
57499 संपन्नतरैः॥ ३॥
57500
57501 मरुत्तनृपतेर्यज्ञे संवर्तेन महर्षिणा।
57502 ब्रह्मणेवापरः सर्गो भावितः ससुरासुरः॥ ४॥
57503
57504 यद्यपि महाभारते मरुत्तयज्ञे विघ्नं चिकीर्षोः सुरसैन्यसहितस्येन्द्रस्य
57505 संवर्तेन स्वसंकल्पमात्रेण वशीकृतस्य देवैः सह यज्ञपरिचारकत्वं
57506 कृतमित्येवं प्रसिद्धम् तथापि पुराणान्तरे सुरासुरसर्गारम्भोऽपि
57507 क्वचिच्छ्रूयत एवेति कल्पान्तरकथात्वान्न विरोधः॥ ४॥
57508
57509 महातिशययुक्तेन विश्वामित्रेण विप्रता।
57510 भूयोभूयः प्रयुक्तेन दुष्प्रापा तपसार्जिता॥ ५॥
57511
57512 पिष्टसेकाम्बु दुष्प्रापं रसायनवदश्नता।

57513 दुर्भगेनेदृशेनाप्तः क्षीरोद उपमन्युना ॥ ६ ॥
57514
57515 पिष्टसेकाम्बु पिष्टमिश्रितोदकं तदपि रोदनादियत्नप्राप्यत्वाद्दुष्प्रापम्
57516 [प्राप्येति पदं क्वचिन्न पठ्यते] । ईदृशेन दुर्भगेन
57517 भाग्यहीनेनाप्युपमन्युना क्षीरोदः क्षीरसमुद्रस्तपसा शिवप्रसादादाप्तः
57518 प्राप्त इति भारतादौ प्रसिद्धम् ॥ ६ ॥
57519
57520 त्रैलोक्यमल्लांस्तृणवदश्नन्विष्ण्वब्जजादिकान् ।
57521 भक्त्यातिशयदार्ढ्येन कालः श्वेतेन कालितः ॥ ७ ॥
57522
57523 त्रैलोक्यमल्लान् । अतिबलत्वेन ख्यातानिति यावत् । तथाविधानपि
57524 विष्ण्वब्जजादिकांस्तृणवदश्नन्ग्रसन् । तथाच भार्गवाख्याने कालवचनं
57525 संसारावलयो भुक्ताः इत्यादि । श्वेतेन श्वेताख्येन मुनिना कालो मृत्युः
57526 कालितो निर्जितः । इदमपि लैङ्गे प्रसिद्धम् ॥ ७ ॥
57527
57528 प्रणयेन यमं जित्वा कृत्वा वचनसंगमम् ।
57529 परलोकादुपानीतः सावित्र्या सत्यवान्पतिः ॥ ८ ॥
57530
57531 सावित्र्या राजकन्यया प्रणयेन भर्तृप्राणानुगमनस्तुत्यादिप्रीणनोपायेन
57532 यमं जित्वा वशीकृत्य ऋते सत्यवतः प्राणादन्यं वरं वृणीष्वेति
57533 यमवचनस्य स्वस्याः सत्यवतः शतपुत्रोत्पत्तिवरप्रार्थनावचनेन
57534 संगमं संबन्धम् । सावित्र्युपाख्यानमपि भारते प्रसिद्धमेव ॥ ८ ॥
57535
57536 न सोऽस्त्यतिशयो लोके यस्यास्ति न फलं स्फुटम् ।
57537 भवितव्यं विचार्यान्तः सर्वातिशयशालिना ॥ ९ ॥
57538
57539 अतिशयः शास्त्रीयशुभोद्योगातिशयः । तर्हि नानाविधशुभोद्योगेषु दर्शितेषु
57540 मादृशेन कुत्रातिशायिना भाव्यं तत्राह - भवितव्यमित्यादिना ।
57541 अधिकारिणा न मूढवत्क्षुद्रफलप्रार्थनया फल्गुना भवितव्यं
57542 किंत्वन्तर्मनसि फलतारतम्यं विचार्य सर्वातिशायिफललाभेन
57543 सर्वातिशयशालिना भवितव्यमित्यर्थः ॥ ९ ॥
57544
57545 आत्मज्ञानमशेषाणां सुखदुःखदशादृशाम् ।
57546 मूलकाषकरं तस्माद्भाव्यं तत्रातिशायिना ॥ १० ॥
57547
57548 सर्वातिशयश्चात्मज्ञानादेव यतस्तदशेषाणां
57549 सुखदुःखजन्ममरणादिदशाभ्रान्तिदृष्टीनां मूलोच्छेदकरं
57550 तस्मात्तत्रैव शुभोद्योगातिशयशालिना भाव्यमित्यर्थः ॥ १० ॥
57551
57552 नाशायापद्गतार्थिन्या दृष्ट्या दृश्यादिदृष्टयः ।
57553 दुःखादृते निराबाधं सुखं किं चिदवाप्यते ॥ ११ ॥
57554
57555 तत्रादौ भोगरागदृष्टीनां विनाशाय तत्तद्विषयदोषदृष्टयोऽन्वेष्टव्या
57556 इत्याह - नाशायेति । क्षुत्तृष्णाकामाद्यापद्गतानर्थयति
57557 विषयोपहारेणानुगृह्णातीत्यापद्गतार्थिन्या दृष्ट्याः
57558 भोगदृष्टेर्नाशाय प्रथमं तद्विरोधिविषयदोषदृष्टयो दृश्या
57559 अन्वेष्टव्याः । हिशब्दस्तदावश्यकत्वद्योतनार्थः । ननु तदन्वेषणे
57560 विषयत्यागपर्यवसानात्सद्यो दुःखं स्यादिति चेत्तत्राह - दुःखादिति ।
57561 वैराग्याभ्यासादिदुःखादृते निराबाधं भूमानन्दसुखं चित् किं
57562 अवाप्यते । नावाप्यत एवेत्यर्थः । किंचिदिति च्छेदे तु काकुर्बोध्यः ॥ ११ ॥
57563
57564 अशमः परमं ब्रह्म शमश्च परमं पदम् ।

57565 यद्यप्येवं तथाप्येनं प्रथमं विद्धि शंकरम् ॥ १२ ॥
57566
57567 ननु सर्वविषयदुःखत्यागमप्यङ्गीकृत्य वैराग्येण
57568 रागादिदोषप्रशमोऽवश्यं संपाद्यः स्याद्यदि प्राप्यं ब्रह्म सशममेव
57569 पुरुषार्थः स्यात् । नतु तथा । शमस्यापि
57570 सात्त्विकचित्तवृत्तिभेदस्यान्तःकरणधर्मस्याद्वितीये
57571 ब्रह्मण्यभावात्सुखैकरसब्रह्मातिरिक्तस्य दृश्यतया
57572 परमपुरुषार्थघटकत्वाभावाच्चेत्याशङ्कामर्धाङ्गीकारेण परिहरन्
57573 शमस्यावश्यकत्वं दर्शयति - अशम इति । सत्यमशमश्चिदात्मैव
57574 परमं ब्रह्म तथापि शमोऽपि सनिदानसंसारानर्थनिवृत्तिरूपः परमं
57575 पदं परमपुरुषार्थो भवत्येव । यद्यप्येवं द्वयमपि सममिति प्राप्तं
57576 तथापि एनं प्रशमं शं भूमानन्दब्रह्मसुखं करोत्यभिव्यनक्तीति
57577 शंकरं विद्धि । नह्यनभिव्यक्तसुखस्य पुरुषार्थतेति त्दुपयोगितास्याधिकेति
57578 भावः ॥ १२ ॥
57579
57580 अभिमानं परित्यज्य शममाश्रित्य शाश्वतम् ।
57581 विचार्य प्रज्ञयार्यत्वं कुर्यात्सज्जनसेवनम् ॥ १३ ॥
57582
57583 इदानीं प्रशमोपायमाह - अभिमानमिति । शाश्वतं यत्कैवल्यमविचालि
57584 आर्यत्वं मोक्षयोग्याभ्यर्हितजन्मादिशालितां स्वस्य विचार्य परिशील्य ॥ १३ ॥
57585
57586 न तपांसि न तीर्थानि न शास्त्राणि जयन्ति च ।
57587 संसारसागरोत्तारे सज्जनासेवनं विना ॥ १४ ॥
57588
57589 चित्तशुद्ध्यर्थं सेवितानां तप आदीनामपि सज्जनसेवनद्वारैव ज्ञानोपयोगो
57590 नान्यथेत्याशयेनाह - नेति । जयन्ति । ज्ञानोत्पत्तये प्रभवन्तीति यावत् ॥ १४ ॥
57591
57592 लोभमोहरुषां यस्य तनुतानुदिनं भवेत् ।
57593 यथाशास्त्रं विहरति स्वस्वकर्मसु सज्जनः ॥ १५ ॥
57594
57595 इदानीं सज्जनलक्षणमाह - लोभेति । यस्य सेवनादिति शेषः ॥ १५ ॥
57596
57597 अथात्मविदुषां सङ्गात्तस्य साधोः प्रवर्तते ।
57598 अत्यन्ताभाव एवास्य यथा दृश्यस्य दृश्यते ॥ १६ ॥
57599
57600 सदा सज्जनसेवापरायणस्य कदाचिदात्मवित्सङ्गोऽप्यवश्यं भवति येन
57601 ज्ञानलाभ इत्याह - अथेति ॥ १६ ॥
57602
57603 दृश्यात्यन्ताभावतस्तु परमेवावशिष्यते ।
57604 अन्याभाववशादाशु जीवस्तत्रैव लीयते ॥ १७ ॥
57605
57606 तेन तस्य परमपुरुषार्थोऽपि सिद्ध्यतीत्याह - दृश्येति ॥ १७ ॥
57607
57608 नचोत्पन्नं नचैवासीद्दृश्यं नच भविष्यति ।
57609 वर्तमानेऽपि नैवास्ति परमेवास्त्यवेधितम् ॥ १८ ॥
57610
57611 परमेवावशिष्यते इति यदुक्तं तद्दृश्यात्यन्ताभावोपपादनेन समर्थयति
57612 - नचेत्यादिना । अवेधितमतोदितं अपीडितमिति यावत् ॥ १८ ॥
57613
57614 एवं युक्तिसहस्रेण दर्शितं दृश्यतेऽपि च ।
57615 सर्वैरेवानुभूतं च दर्शयिष्यामि चाधुना ॥ १९ ॥
57616

57617 यथोत्पत्यादिकं न संभवति तथोत्पत्तिप्रकरणेऽपि
57618 युक्तिभिरुपपादितमुपपादयिष्यते चेत्याह - एवमिति। यथा
57619 सर्वैर्विद्वद्भिरनुभूतं च तथा ते इदं त्रिजगत्संविदम्बरं अधुना
57620 दर्शयिष्यामि चेति परेण सहान्वयः॥ १९॥
57621
57622 तथेदममलं शान्तं त्रिजगत्संविदम्बरम्।
57623 इदं तत्त्वमतत्त्वादि कुतोऽत्र स्यात्कथं च वा॥ २०॥
57624
57625 तदेव दर्शयति - इदं तत्त्वमिति। इदं संविदम्बरं तत्त्वं
57626 परमार्थरूपम् अत्र अतत्त्वं माया तदेव आदि मूलकारणं यस्य तद्वियदादि
57627 कुतः स्यात्। किं सत उत असत उत मायायाः। आद्ययोरविकारत्वान्माययोत्पादे
57628 मिथ्यात्वापत्तेरनुत्पत्तिपक्षस्यैव परिशेषात्। एवं कथं वा स्यात्। अच्छिद्रे
57629 कूटस्थनित्ये चिदात्मनि छिद्रस्वभावस्य
57630 वियतष्टङ्कसहस्रैरप्युत्पादयितुमशक्यत्वादित्यर्थः॥ २०॥
57631
57632 चिच्चमत्कुरुते चारु चञ्चलाऽचञ्चलात्मनि।
57633 यत्तयैव तदेवेदं जगदित्यवबुध्यते॥ २१॥
57634
57635 यदि नोत्पन्नमेव कथं तर्हि जगदिति सर्वैरवबुध्यते तत्राह - चिदिति।
57636 अचञ्चलात्मनि कल्पितचाञ्चल्येन चञ्चला मायाप्रतिबिम्बचिद्यच्चमत्कुरुते
57637 जगद्भावमिव कल्पयति तदेव जगदिति तयैवावबुध्यत इत्यर्थः॥ २१॥
57638
57639 त्रैलोक्यभूयोनुभवश्चिदादित्यांशुमण्डलम्।
57640 को वा स्वांशुमतोर्भेदो निर्विकल्पः स कथ्यताम्॥ २२॥
57641
57642 नन्वियं जगदवबोधचित्सविकल्पा ब्रह्मचिन्निर्विकल्पेति जगद्भेदमपलपितुं
57643 प्रवृत्तस्य ते प्रत्युत चित्यपि भेदः प्रसक्त इत्याशङ्क्याह - त्रैलोक्येति।
57644 त्रैलोक्ये यावान्भूयाननुभवः स सर्वोऽपि ब्रह्मचिदादित्यस्यांशुमण्डलं
57645 किरणसमूह इव वस्तुतो न भिद्यत इत्यर्थः।
57646 स्वस्यांशुमण्डलस्यांशुमतश्च को वा भेदः। विकल्पानां मिथ्यात्वे स
57647 त्रैलोक्यभूयोनुभवोऽपि निर्विकल्पक एव कथ्यतामित्यर्थः॥ २२॥
57648
57649 स्वाभावतोऽस्याश्चिद्दृष्टेर्ये [चिद्वृत्तेरिति पाठश्चेत्तर्हि
57650 व्याख्यानुकूलः स्यात्] उन्मेषनिमेषणे।
57651 जगद्रूपानुभूतेस्तावेतावस्तमयोदयौ॥ २३॥
57652
57653 अस्याः सविकल्पायाश्चिद्वृत्तेश्चिदाभासस्य उन्मेषो जगदनुभूतेरुदयो
57654 निमेषोऽस्तमय इत्यार्थक्रमप्राबल्यात्पाठव्युत्क्रमेण योज्यम्। अथवास्या
57655 निर्विकल्परूपायाश्चिद्वृत्तेश्चरमसाक्षात्कारस्य उन्मेषो
57656 जगद्रूपानुभूतेरस्तमयो निमेषोऽनाविर्भावस्तूदय इति पाठक्रमेणैव
57657 योज्यम्॥ २३॥
57658
57659 अहमर्थोऽपरिज्ञातः परमार्थाम्बरे मलम्।
57660 परिज्ञातोऽहमर्थस्तु परमात्माम्बरं भवेत्॥ २४॥
57661
57662 तस्मान्निमेष एव प्रतीचोऽविद्यामल उन्मेषश्च नैर्मल्यलक्षणो मोक्ष
57663 इत्याशयेनाह - अहमर्थ इति॥ २४॥
57664
57665 अहंभावः परिज्ञातो नाहंभावो भवत्यलम्।
57666 एकतामम्बुनेवाम्बु याति चिन्नभसात्मना॥ २५॥
57667
57668 नन्वहमर्थोऽहंकारः स कथं परिज्ञातोऽपि परमात्माम्बरं स्यात्तत्राह

57669 - अहमर्थ इति। यावत्तत्त्वतो न परिज्ञातस्तावदेवाहंकारः सः परिज्ञाते
57670 तु न तथेत्यर्थः॥ २५॥
57671
57672 अहमादिजगद्दृश्यं किल नास्त्येव वस्तुतः।
57673 अवश्यमेव तत्तस्माच्छिष्यतेऽहंविचारतः॥ २६॥
57674
57675 परिज्ञातो बाध्येत तर्हि किं शिष्यते तदाह - अवश्यमेवेति। तच्चिन्नभः
57676 शिष्यते परिशिष्यते। विचारतः कोऽयमहंपदार्थः स्यादिति
57677 प्रमाणपूर्वकविचारजन्यज्ञानात्॥ २६॥
57678
57679 बाध्यते चामलधियामपिशाचे पिशाचधीः।
57680 शिशूनां तावदाध्वान्तःकरणानां विचारणा॥ २७॥
57681
57682 अपिशाचे पिशाचधीः अमलधियां प्रौढबुद्धीनां बाध्यते।
57683 आध्वान्तःकरणानां ईषन्मार्गप्रवृत्तबुद्धीनां तु शतशो नायं पिशाच
57684 इत्युपदिष्टेऽपि विचारणा संशय एव भवति नतु बाध्यत इत्यर्थः॥ २७॥
57685
57686 चिज्ज्योत्स्ना यावदेवान्तरहंकारघनावृता।
57687 विकासयति नो तावत्परमार्थकुमुद्वतीम्॥ २८॥
57688
57689 यथा बालानां मोहो बोधनिरोधी तद्वत्प्रौढानामभिमानोऽपि
57690 तन्निरोधीत्याशयेनाह - चिज्ज्योत्स्नेति॥ २८॥
57691
57692 प्रमार्जितेऽहमित्यस्मिन्पदे स्वार्थे स्वयं विना।
57693 नरकस्वर्गमोक्षादितृष्णायाः कल्पनैव का॥ २९॥
57694
57695 अहमभिमानापाये
57696 भयरागमुमुक्षाहेतुकद्वेषरागगोचरनरकस्वर्गमोक्षतृष्णाप्यपैतीत्याह
57697 - प्रमार्जिते इति॥ २९॥
57698
57699 हृदि यावदहंभावो वारिदः प्रविजृम्भते।
57700 तावद्विकासमायाति तृष्णाकुटजमञ्जरी॥ ३०॥
57701
57702 आक्रम्य चेतनां नित्यमहंकाराम्बुदे स्थिते।
57703 जाड्यमेव स्थितिं याति न प्रकाशः कदाचन॥ ३१॥
57704
57705 असन्नयमहंकारः स्वयं मिथ्या प्रकल्पितः।
57706 दुःखायैव न हर्षाय बालसंभ्रमयक्षवत्॥ ३२॥
57707
57708 मुधैव कल्पितो मोहमहंभावः प्रयच्छति।
57709 अनन्तसंसारकरं दामादिष्विव दुर्मतौ॥ ३३॥
57710
57711 मोहं भ्रमम्। दुर्मतौ अभिमानदूषितान्तःकरणे॥ ३३॥
57712
57713 अयं सोऽहमिति स्फारान्मोहादन्यतरत्तमः।
57714 अनर्थभूतं संसारे न भूतं न भविष्यति॥ ३४॥
57715
57716 तत्राप्ययं देहोऽहमिति भ्रमः सर्वानर्थनिदानमित्याह - अयमिति॥ ३४॥
57717
57718 यत्किंचिदिदमायाति सुखदुःखमलं भवे।
57719 तदहंकारचक्रस्य प्रविकारो विजृम्भते॥ ३५॥
57720

57721 प्रविकारो मुख्यः परिणामस्तदर्थत्वात्परिणामान्तराणाम् ॥ ३५ ॥
57722
57723 अहंकाराङ्कुरः कृष्टो हृदयेनावरोपितः ।
57724 सहस्रशाखं दुश्छेदं तस्य संसृतिनाशनम् ॥ ३६ ॥
57725
57726 येन अहंकारलक्षणो दुर्वृक्षाङ्कुरो हृदयेन विचारपरिष्कृतमनसैव
57727 हलेन कृष्टः कर्षणेन मूलशैथिल्यमापादितः सन्नवरोपित उत्खाय
57728 निरस्तस्तस्यार्थादात्मक्षेत्रे संसृतिनाशनं ज्ञानसस्यं सहस्रशाखं
57729 प्रवृद्धं फलतीति शेषः ॥ ३६ ॥
57730
57731 अहंभावोऽङ्कुरो जन्म वृक्षाणामक्षयात्मनाम् ।
57732 ममेदमिति विस्तीर्णास्तेषां शाखाः सहस्रशः ॥ ३७ ॥
57733
57734 तदनुच्छेदेऽनर्थमाह - अहंभाव इति । अक्षयात्मनां
57735 ज्ञानकुठारमन्तरेणानुच्छेद्यस्वभावानाम् ॥ ३७ ॥
57736
57737 करटापातविस्फोटा भान्त्यर्था वासनादयः ।
57738 विचार्यचारुरववत्तरङ्गवरपङ्क्तिवत् ॥ ३८ ॥
57739
57740 ज्ञानमात्रोच्छेद्यत्वादतिनिःसाराश्च ते इत्याह - करटापातेति । करटानां
57741 काकानामापात ईषत्पतनं तेनापि विस्फुटन्ति विशीर्यन्ते इति
57742 करटापातविस्फोटाः । विचार्यो विमृश्यश्चारुः रवो विस्फोटनशब्दो यस्य
57743 तथाविधपक्वशाल्मलीफलादिवत् । तरङ्गाणां वरा रम्या याः
57744 पङ्क्तयस्तद्वच्चापातभङ्गुराः फल्गव इत्यर्थः ॥ ३८ ॥
57745
57746 अहंभावनया भाति त्वमहंभाववर्जितः ।
57747 संसारचक्रवहनमात्मनः परिरोधया ॥ ३९ ॥
57748
57749 वस्तुतस्त्वहंभाववर्जित एवात्मा आत्मनः परिरोधया
57750 तिरोधात्र्याहंभावनया स्वयमेव संसारचक्रे वहनं भ्रमणमिव
57751 भातीत्यर्थः ॥ ३९ ॥
57752
57753 अहंभावतमो यावज्जन्मारण्ये विजृम्भते ।
57754 तावदेता विवल्गन्ति चिन्तामत्ताः पिशाचिकाः ॥ ४० ॥
57755
57756 चिन्तालक्षणा मत्ताः पिशाचिका विवल्गन्ति विधावन्ति ॥ ४० ॥
57757
57758 अहंकारपिशाचेन गृहीतो यो नराधमः ।
57759 न शास्त्राणि न मन्त्राश्च तस्याभावस्य सिद्धये ॥ ४१ ॥
57760
57761 तस्याहंकारपिशाचस्याभावस्य निवृत्तेः सिद्धये प्रभवन्तीति शेषः ॥ ४१ ॥
57762
57763 श्रीराम उवाच ।
57764
57765 केनोपायेन भगवन्नहंकारो न वर्धते ।
57766 तं त्वं कथय मे ब्रह्मन्संसारभयशान्तये ॥ ४२ ॥
57767
57768 तं उपायम् ॥ ४२ ॥
57769
57770 श्रीवसिष्ठ उवाच ।
57771
57772 चिन्मात्रदर्पणाकारे निर्मले स्वात्मनि स्थिते ।

57773 इति भावानुसंधानादहंकारो न वर्धते ॥ ४३ ॥
57774
57775 इति उक्तप्रकारस्य भावस्य स्वात्मस्वभावस्यानुसंधानात् सदा
57776 स्मरणात्स्वात्मनि चिन्मात्रदर्पणाकारे निर्मले स्थिते सति अहंकारो न वर्धते ॥
57777 ४३ ॥
57778
57779 मिथ्येयमिन्द्रजालश्रीः किं मे स्नेहविरागयोः ।
57780 इत्यन्तरानुसंधानादहंकारो न जायते ॥ ४४ ॥
57781
57782 स्नेहविरागयोः रागद्वेषाभ्यां किं न
57783 किंचित्प्रयोजनमित्यन्तर्मनस्यनुसंधानात् ॥ ४४ ॥
57784
57785 नाहमात्मनि नो यस्य दृश्यश्रिय इति स्वयम् ।
57786 शान्तेन व्यवहारेण नाहंकारः प्रवर्धते ॥ ४५ ॥
57787
57788 यस्य पुंस आत्मनि नाहं अहंकारो नास्ति दृश्यश्रियश्च नो सन्ति इति स्थित्या
57789 स्वयमेव शान्तेन ॥ ४५ ॥
57790
57791 अहं हि जगदित्यन्तर्हेयादेयदृशोः क्षये ।
57792 समतायां प्रसन्नायां [प्रपन्नायां क्त्युभयत्र पाठः
57793 क्वचित्] नाहंभावः प्रवर्धते ॥ ४६ ॥
57794
57795 अन्तरहमिति बहिर्जगदिति हेयादेयव्यवहारनिमित्तयोर्दृशोः क्षये सति
57796 समतायामवैषम्यलक्षणायां प्रसन्नायाम् ॥ ४६ ॥
57797
57798 अहं चिज्जगदित्यन्तर्हेयादेयदृशोः क्षये ।
57799 समतायां प्रसन्नायां [प्रपन्नायां क्त्युभयत्र पाठः
57800 क्वचित्] नाहंभावः प्रवर्धते ॥ ४७ ॥
57801
57802 अहं द्रष्टा चिद्दर्शनं जगद्दृश्यं इति त्रिपुटीप्रत्यये तत्रापीदं हेयं
57803 शत्रुभूतमिदमादेयं मित्रभूतमिति दृशोः क्षये समतायां
57804 सर्वात्मतालक्षणायाम् ॥ ४७ ॥
57805
57806 श्रीराम उवाच ।
57807
57808 किमाकृतिरहंकारः कथं संत्यज्यते प्रभो ।
57809 सशरीरोऽशरीरश्च त्यक्ते तस्मिंश्च किं भवेत् ॥ ४८ ॥
57810
57811 सशरीरो जाग्रदहंकारः । अशरीरः स्वाप्नमानोरथिकाहंकारश्च । अथवा
57812 सशरीरो देहमात्राहंभावलक्षणः । अशरीरो
57813 देहव्यतिरिक्तबुद्धिमात्रोपाधिकाहंभावलक्षणः
57814 सर्वाहंभावलक्षणश्चेत्यर्थः । कथं केनोपायेन संत्यज्यते ॥ ४८ ॥
57815
57816 श्रीवसिष्ठ उवाच ।
57817
57818 त्रिविधो राघवास्तीह त्वहंकारो जगत्त्रये ।
57819 द्वौ श्रेष्ठावितरस्त्याज्यः शृणु त्वं कथयामि ते ॥ ४९ ॥
57820
57821 अशास्त्रीयस्याहंकारस्य त्याजनार्थं शास्त्रीयौ द्वावहंकारौ विहितौ
57822 सूक्ष्मात्मविषयः सार्वात्म्यविषयश्च
57823 तयोस्तत्त्वदर्शनाप्रतिकूलत्वात्सांप्रतिकत्वेन
57824 सुत्यजत्वादपरिच्छिन्नात्मदर्शनद्वारत्वाच्च श्रेष्ठता । इतरस्य

57825 देहमात्राहंभावरूपस्यानर्थरूपत्वात्त्याज्यता चेत्यर्थः ॥ ४९ ॥
57826
57827 अहं सर्वमिदं विश्वं परमात्माहमच्युतः ।
57828 नान्यदस्तीति परमा विज्ञेया सा ह्यहंकृतिः ॥ ५० ॥
57829
57830 अहं सर्वमिदं विश्वमिति कार्यब्रह्मविषया परमात्माहमच्युत इति
57831 कारणविषया तत्पदवाच्यार्थलक्ष्यार्थविषया वा । अन्यदनहंभूतं जगति
57832 नास्तीत्यर्थः ॥ ५० ॥
57833
57834 मोक्षायैषा न बन्धाय जीवन्मुक्तस्य विद्यते ।
57835 सर्वस्माद्व्यतिरिक्तोऽहं वालाग्रशतकल्पितः ॥ ५१ ॥
57836
57837 जीवन्मुक्तस्य चतुर्थपञ्चमभूमिकास्थस्य ।
57838 यद्यपीयमभ्यासदशापन्नस्यापि [यं तृतीयेत्यपि पाठः] भवति
57839 तथापि जीवन्मुक्तेषु पक्केति भावः । बालाग्रस्य केशाग्रभागस्य
57840 शततमभाग इति कल्पितः । शोधनेन निरवयवः समर्थित इति यावत् ।
57841 स्थौल्यविरहे बुद्धिसौक्ष्म्योपाधिकसौक्ष्म्यकाष्ठायां वाऽयं दृष्टान्तो
57842 नत्वणुपरिमाणत्वे । तस्यावैदिकत्वात् । स चानन्त्याय कल्पत इति श्रुतिविरोधाच्चेति
57843 बोध्यम् ॥ ५१ ॥
57844
57845 इति या संविदेषासौ द्वितीयाहंकृतिः शुभा ।
57846 मोक्षायैषा न बन्धाय जीवन्मुक्तस्य विद्यते ॥ ५२ ॥
57847
57848 अत एवाह - जीवन्मुक्तस्येति । षष्ठभूमिकास्थस्येत्याशयः ॥ ५२ ॥
57849
57850 अहंकाराभिधा या सा कल्प्यते नतु वास्तवी ।
57851 पाणिपादादिमात्रोऽयमहमित्येष निश्चयः ॥ ५३ ॥
57852
57853 ये तु सप्तमभूमिकारूढास्तेषु जीवनान्यथानुपपत्त्या या कल्प्यते नतु वास्तवी
57854 सा कल्पना । कल्पयित्रा वेदित्रा वा प्रत्यक्षमननुभवात् ।
57855 अतोऽत्यन्तासत्त्वादहंकार इति
57856 नाममात्रपरिशेषादहंकाराभिधामात्रमित्याह - अहंकाराभिधेति ।
57857 तृतीयं दर्शयति - पाणिपादादीति । अयं देह एवाहमित्येष निश्चयो
57858 मिथ्याभिमानः ॥ ५३ ॥
57859
57860 अहंकारस्तृतीयोऽसौ लौकिकस्तुच्छ एव सः ।
57861 वर्ज्य एव दुरात्मासौ शत्रुरेव [कन्दः संसारसंततेः इति
57862 पाठः] परः स्मृतः ॥ ५४ ॥
57863
57864 अनेनाभिहतो जन्तुर्न भूयः परिरोहति ।
57865 रिपुणानेन बलिना विविधाधिप्रदायिना ॥ ५५ ॥
57866
57867 न परिरोहति नापरिच्छिन्नस्वभावेनाविर्भवति । आधिग्रहणं
57868 प्राधान्याद्दुःखमात्रोपलक्षणम् ॥ ५५ ॥
57869
57870 कष्टीकृतमतिर्लोकः संकटेष्वेव मज्जति ।
57871 अनया दुरहंकृत्या भावात्संसक्तया चिरम् ॥ ५६ ॥
57872
57873 भावात्स्वभावादेव चिरमनादिकालादारभ्य संसक्तया
57874 कष्टीकृतमतिर्दुर्वासनाप्रचयदुष्प्रवृत्त्याद्यापादनेन पीडितचित्तः ॥ ५६ ॥
57875
57876 शिष्टाहंकारवाञ्जन्तुर्भगवान्याति मुक्तताम् ।

57877 लोकाहंकारवद्दोषवपुरस्मिन्निरूपणः ॥ ५७ ॥
57878
57879 केन तर्हि तस्माज्जन्तुर्मुच्यते तदाह - शिष्टेति। शिष्टौ प्रागुक्तौ यौ
57880 शुद्धाहंकारौ तद्वान्सन् दोषान्ममताप्रयुक्तरागादीन्वपति
57881 सर्वतश्छिनत्तीति दोषवपुः सन् अस्मिन्सर्वात्मभावाहंकारेऽपि
57882 लोकप्रसिद्धदेहात्मभावाहंकारवन्निरूपयतीति निरूपणो दृढीभूतः सन्
57883 भगवान् हिरण्यगर्भ ईश्वरो वा स्वयमेव भावनया संपन्नो
57884 देहाहंभावाहंकारमुक्ततां यातीत्यर्थः ॥ ५७ ॥
57885
57886 न देहोऽस्मीति निर्णीय वर्जनं महतां मतम्।
57887 प्रथमं द्वावहंकारावङ्गीकृत्यान्त्यलौकिकौ ॥ ५८ ॥
57888
57889 अयमेव प्रकारोऽन्येषां ब्रह्मनिष्ठानां संमत इत्याह - न देह इति।
57890 अन्त्यो देहात्मभावाहंकार इव लौकिकौ निरूढतमौ आद्यौ द्वावहंकारौ
57891 प्रथममङ्गीकृत्य न देहोऽस्मीति विचारतोऽपि निर्णीय तदहंकारवर्जनं
57892 कार्यमिति महतां पूर्वेषामपि मतमित्यर्थः ॥ ५८ ॥
57893
57894 प्रथमं द्वावहंकारावङ्गीकृत्यान्त्यलौकिकौ।
57895 तृतीयाहंकृतिस्त्याज्या लौकिकी दुःखदायिनी ॥ ५९ ॥
57896
57897 उक्तमेवार्थं पुनरनूद्योपसंहरति - प्रथममिति ॥ ५९ ॥
57898
57899 अनया दुरहंकृत्या दामव्यालकटाः किल।
57900 तां दशां समनुप्राप्ता या कथास्वपि खेददा ॥ ६० ॥
57901
57902 तत्रोक्तोपाख्यानमपि निदर्शनमित्याह - अनयेति ॥ ६० ॥
57903
57904 श्रीराम उवाच।
57905
57906 तृतीयां लौकिकीमेतां त्यक्त्वा चित्तादहंकृतिम्।
57907 किंभावः पुरुषो ब्रह्मन्प्राप्नुयादात्मनो हितम् ॥ ६१ ॥
57908
57909 प्रश्नद्वये समाहिते रामस्तृतीयं
57910 प्रश्नमर्थात्तृतीयाहंकारनिवृत्तिफलप्रश्नतया
57911 पर्यवसन्नमध्यवस्यंस्तादृशपुरुषस्थितिप्रकारभेदान्पृच्छति -
57912 तृतीयामिति। के भावाः स्थितिप्रकारा यस्य स किंभावः ॥ ६१ ॥
57913
57914 श्रीवसिष्ठ उवाच।
57915
57916 एषा तावत्परित्याज्या त्यक्त्वैतां दुःखदायिनीम्।
57917 यथा यथा पुमांस्तिष्ठेत्परमेति तथा तथा ॥ ६२ ॥
57918
57919 यथा यथा सर्वाहंभावेन शुद्धाहंभावेन
57920 श्रवणगुरुशुश्रूषादिपरतया सप्तभूमिकाभेदेषु वा येन येन प्रकारेण
57921 स्थातुं शक्नोति तथा तथा स्वरूपसुखाभिव्यक्त्युत्कर्षलाभात्परमेतीत्यर्थः
57922 ॥ ६२ ॥
57923
57924 अहंकारदृशावेते पूर्वोक्ते भावयन्यदि।
57925 तिष्ठेदुपैति परमं तत्पदं पुरुषऽनघ ॥ ६३ ॥
57926
57927 तदेव प्रपञ्चयति - अहंकारेत्यादिना। पूर्वोक्ते आद्ये द्वे ॥ ६३ ॥
57928

57929 अथ ते अपि संत्यज्य सर्वाहंकृतिवर्जितः।
57930 संतिष्ठेत तथात्युच्चैः पदमेवाधिरोहति॥ ६४॥
57931
57932 सर्वदा सर्वयत्नेन लौकिकी दुरहंकृतिः।
57933 परमानन्दबोधाय वर्जनीयाऽनया धिया॥ ६५॥
57934
57935 शतकृत्वोऽपि पथ्यं वक्तव्यमिति
57936 न्यायात्पुनर्देहात्मभावनात्यागगुणान्कीर्तयंस्तदावश्यकत्वं दर्शयति
57937 - सर्वदेत्यादिना॥ ६५॥
57938
57939 शरीरास्थामयापुण्यदुरहंकारवर्जनम्।
57940 अत्यन्तपरमं श्रेय एतदेव परं पदम्॥ ६६॥
57941
57942 शरीरास्थामयः अपुण्यः पापरूपो यो दुरहंकारस्तस्य वर्जनम्॥ ६६॥
57943
57944 भावादहंकृतिं त्यक्त्वा स्थूलामेतां हि लौकिकीम्।
57945 तिष्ठन्व्यवहरन्वापि न नरः प्रपतत्यधः॥ ६७॥
57946
57947 भावनं भावो विचारस्तस्मात्॥ ६७॥
57948
57949 संशान्ताहंकृतेर्जन्तोर्भोगा रोगा महामते।
57950 न स्वदन्ते सुतृप्तस्य यथा प्रतिविषा रसाः॥ ६८॥
57951
57952 प्रतिपन्नविषाः प्रतिविषाः। विषसंपृक्ता इति यावत्॥ ६८॥
57953
57954 भोगेष्वस्वदमानेषु पुंसः श्रेयः पुरो गतम्।
57955 क्षीणेऽन्धकारे किं नाम मनसोऽन्यत्प्रवर्तते॥ ६९॥
57956
57957 प्रतिबन्धनिरासात्पुरोगतमिव भवतीति शेषः। मनसः अन्धकारे
57958 अन्धकारवदग्रहणान्यथाग्रहणनिमित्तेऽहंकारे क्षीणे सत्यन्यत्किं
57959 प्रतिबन्धकं प्रवर्तते येन श्रेयःप्राप्तिविघातः स्यात्। न किंचिदित्यर्थः॥ ६९
57960 ।।
57961
57962 अहंकारानुसंधानवर्जनादेव राघव।
57963 पौरुषेण प्रयत्नाच्च तीर्यते भवसागरः॥ ७०॥
57964
57965 पौरुषेण धैर्येण श्रवणादिप्रयत्नाच्च॥ ७०॥
57966
57967 नाहं न तेन मम किंचिदपीति मत्वा
57968 सर्वं च मे सकलमप्यहमेव चेति।
57969 लब्धास्पदं मनसि संविदमेवमीड्यां
57970 नीत्वा स्थितिं परमुपैति पदं महात्मा॥ ७१॥
57971
57972 प्रथमं सकलमप्यहमेव तेन सर्वं च मे इति मत्वा तेन देहादि नाहं
57973 तत्संबन्धि च किंचिदपि मम न इति मत्वा तेन सर्वप्रतिबन्धक्षयान्मनसि
57974 लब्धास्पदं यथा स्यात्तथा ईड्यां पूज्यां एवं प्राग्विस्तरोक्तप्रकारां
57975 शुद्धात्मसंविदं नीत्वा प्रापय्य क्रमेण सप्तभूमिकास्थितिं प्राप्य
57976 महानपरिच्छिन्न आत्मा स्वयं सन् परं पदं विदेहकैवल्यमुपैति
57977 प्राप्नोतीत्यर्थः॥ ७१॥
57978
57979 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मो० स्थितिप्रकरणे
57980 दामव्यालकटोपाख्यानेऽहंकारविचारो नाम त्रयस्त्रिंशः सर्गः॥ ३३॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे अहंकारविचारो
नाम त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

चतुस्त्रिंशः सर्गः ३४

श्रीवसिष्ठ उवाच ।

अत्र ते शृणु वक्ष्यामि दामादिषु गतेष्वथ ।
यद्वृत्तं शम्बरस्यैव नगरे नगसंनिभे ॥ १ ॥

भीमभासदृढैः कृत्तैर्देवैरभ्यर्थितो हरिः ।
शम्बरं निजघानात्र ते च मुक्ता विवासनाः ॥ १ ॥

ज्ञानविवेकयोरभावे संपन्नमपि निर्वासनत्वं दुरभ्यासेन विहन्यते ।
तयोर्दार्ढ्ये तु तस्य ह न देवाश्च नाभूत्या ईशते आत्मा ह्येषां स भवति इति
श्रुत्युक्तदिशा न देवैरपि पुनर्बन्धः कर्तुं शक्य इत्यर्थे
भीमभासदृढन्यायं निदर्शयितुमुपक्रमते - अत्रेत्यादिना । अत्र
भावादहंकृतिं त्यक्त्वेत्यादिवर्णितेऽर्थे । नगसन्निभे संपदा मेरुसदृशे
॥ १ ॥

तथा गगनविभ्रष्टे समस्ते ध्वस्तसंस्थितौ ।
विनष्टे शम्बरानीके शरदीवाब्दमण्डले ॥ २ ॥

तथा वर्णितप्रकारेण । गगनाद्विभ्रष्टे अधःपतिते सति । ध्वस्तसंस्थितौ
भिन्नमर्यादे ॥ २ ॥

देवनिर्जितसैन्योऽसौ नीत्वा कतिपयाः समाः ।
पुनर्देववधोद्युक्तश्चिन्तयामास दानवः ॥ ३ ॥

असौ दानवः शम्बरः ॥ ३ ॥

दामादयस्तु रचिता ये मया माययाऽसुराः ।
मौर्ख्यात्तैर्भाविता युद्धे मिथ्यैव दुरहंकृतिः ॥ ४ ॥

चिन्ताप्रकारमेवाह - दामादय इत्यादिना ॥ ४ ॥

इदानीं संसृजाम्यन्यान्दानवान्माययोदितान् ।
तानप्यध्यात्मशास्त्रज्ञान्सविवेकान्करोम्यहम् ॥ ५ ॥

तानध्यात्मशास्त्रज्ञान् सविवेकानपि करोमीत्यन्वयः ॥ ५ ॥

ततस्तत्त्वपरिज्ञानान्मिथ्याभावनयोज्झिताः ।
नाहंकारं प्रयास्यन्ति विजेष्यन्ति च तान्सुरान् ॥ ६ ॥

इति संचिन्त्य दैत्येन्द्रस्तादृशान्दानवान्धिया ।
माययोत्पादयामास बुद्बुदानिव वारिधिः ॥ ७ ॥

वरप्राप्तिविद्याबलवशीकृताविद्यालक्षणया मायया ॥ ७ ॥

सर्वज्ञा वेद्यवेत्तारो वीतरागा गतैनसः ।

58033 यथाप्राप्तैककर्तारो भावितात्मान उत्तमाः ॥ ८ ॥
58034
58035 एकविज्ञानेन सर्वविज्ञानात्सर्वज्ञाः । वेद्यात्मतत्त्ववेत्तृत्वादेव
58036 वीतरागादिविशेषणा ॥ ८ ॥
58037
58038 भीमो भासो दृढ इति नामभिः परिलाञ्छिताः ।
58039 जगत्तृणमिवाशेषं पश्यन्तः पावनाशयाः ॥ ९ ॥
58040
58041 ते दैत्या भुवनं प्राप्य च्छादयामासुरम्बरम् ।
58042 गर्जन्तो हेतितडितः प्रावृषीव पयोधराः ॥ १० ॥
58043
58044 भुवनमूर्ध्वभुवनम् । हेतितडित इत्युपमानपक्षे इवार्थगर्भो बहुव्रीहिः ॥
58045 १० ॥
58046
58047 अयुध्यन्त समं देवैरपि वर्षगणान्बहून् ।
58048 विवेकवशतो जग्मुर्नाहंकारं कदाचन ॥ ११ ॥
58049
58050 तेषां यावदुदेत्यन्तर्ममेदमिति वासना ।
58051 तावत्कोऽयमहं चेति विचाराद्यात्यसत्यताम् ॥ १२ ॥
58052
58053 असच्छरीरं विबुधाः कोऽसावहमिति स्थितिः ।
58054 विचारादित्थमेतेषां प्रोदगुर्न भयादयः ॥ १३ ॥
58055
58056 येभ्यो भेतव्यं यदर्थे च तदुभयं मिथ्येति विचाराद्भयाद्यनुदय इत्याह
58057 - असदिति । शरीरं विबुधाश्च असत् ।
58058 नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् इत्येकशेषैकवद्भावः ॥ १३ ॥
58059
58060 असच्छरीरं नास्तीदं चिच्छुद्धैवात्मनि स्थिता ।
58061 अहंनाम न चान्योऽस्ति निश्चित्यैवासुरा ययुः ॥ १४ ॥
58062
58063 ततस्तैर्निरहंकारैर्जरामरणनिर्भयैः ।
58064 प्राप्तार्थकारिभिर्धीरैर्वर्तमानानुसारिभिः ॥ १५ ॥
58065
58066 असक्तबुद्धिभिर्नित्यं हतान्यैरप्यहन्तृभिः ।
58067 वासनाजालनिर्मुक्तैः कृतकार्यैरकर्तृभिः ॥ १६ ॥
58068
58069 हता अन्ये यैस्तथाविधैरपि हन्तृत्वाभिमानाभावादहन्तृभिः ॥ १६ ॥
58070
58071 प्रभोः कार्यमिदं कार्यमिति संगरतत्परैः ।
58072 वीतरागैर्गतद्वेषैः सर्वदा समदृष्टिभिः ॥ १७ ॥
58073
58074 तर्हि तेषां कुतः संगरे प्रवृत्तिस्तत्राह - प्रभोरिति । प्रभोः शम्बरस्य
58075 दृशा इदं कार्यम् । तस्याज्ञत्वादित्यर्थः । अथवा सेवकीभूतैः सदसद्वा
58076 प्रभोः कार्यमवश्यं कार्यमिति नियतिरिति हेतोः संगरतत्परैर्नतु
58077 फलाभिलाषयेत्यर्थः ॥ १७ ॥
58078
58079 सा दैवी दानवैः सेना भीमभासदृढादिभिः ।
58080 हता भुक्ता हृता प्लुष्टा स्वान्नश्रीरिव भोक्तृभिः ॥ १८ ॥
58081
58082 भुक्ता जवेन वशीकृत्य सेवादिनोपभुक्तेत्यर्थः ॥ १८ ॥
58083
58084 भीमभासदृढक्षुण्णा जाता गीर्वाणवाहिनी ।

58085 परिदुद्राव वेगेन गङ्गेव हिमवच्च्युता ॥ १९ ॥
58086

58087 सा सुरानीकिनी देवं क्षीरोदार्णवशायिनम् ।
58088 जगाम शरणं शैलं वातार्तेवाब्दमालिका ॥ २० ॥
58089

58090 सुराणां अनीकिनी सेना ॥ २० ॥
58091

58092 हरिराश्वासयामास तां भीतां देववाहिनीम् ।
58093 भुजङ्गाभिवृतामेकां रमणीमिव नायकः ॥ २१ ॥
58094

58095 भुजङ्गैर्विटैर्बलादुपभोगायाभिवृताम् । भीतामित्यस्या अपि विशेषणम् ।
58096 नायको भर्ता ॥ २१ ॥
58097

58098 अथ क्षीरोदकुहरे तावत्सा सुरवाहिनी ।
58099 उवास यावद्भगवांस्तन्निरासार्थमुद्ययौ ॥ २२ ॥
58100

58101 क्षीरोदस्य कुहरे श्वेतद्वीपे । तावत् यावच्छम्बरस्यायुःक्षयस्तावत् । तस्य
58102 शम्बरस्य निरासो वधस्तदर्थम् ॥ २२ ॥
58103

58104 बभूव दारुणं युद्धं शौरिशम्बरयोस्ततः ।
58105 अकाल इव कल्पान्ते समुड्डीनकुलाचलम् ॥ २३ ॥
58106

58107 कल्पान्त इव अकालेऽपि समुड्डीनकुलाचलं युद्धम् ॥ २३ ॥
58108

58109 शशाम समरे तस्मिन्दैत्यः सबलवाहनः ।
58110 नारायणहतो यातः शम्बरो वैष्णवीं पुरीम् ॥ २४ ॥
58111

58112 शशाम । मृत इति यावत् । वैष्णवीं पुरीं यातः । ये ये हताश्चक्रधरेण
58113 दैत्यास्त्रैलोक्यनाथेन जनार्दनेन । ते ते गता विष्णुपुरं नरेन्द्र क्रोधोऽपि
58114 देवस्य वरेण तुल्यः ॥ इति शास्त्रादित्यर्थः ॥ २४ ॥
58115

58116 भीमभासदृढास्ते तु तस्मिन्विषमसंगरे ।
58117 विष्णुनैव शमं नीताः पवनेनेव दीपिकाः ॥ २५ ॥
58118

58119 शमं विदेहकैवल्यम् ॥ २५ ॥
58120

58121 ते हि निर्वासना एव यदा शान्तिमुपागताः ।
58122 न तदैषां गतिर्ज्ञाता दीपानामिव शाम्यताम् ॥ २६ ॥
58123

58124 तेषामपि शम्बरवत्प्रसक्तां देशान्तरगतिं प्रतिषेधति - ते हीति । वासना
58125 हि गतिकारणम् । तदेष सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्य इति
58126 श्रुतेः । निर्वासनत्वात्तेषां गत्यभावादेव गतिर्न ज्ञातेत्यर्थः ॥ २६ ॥
58127

58128 तस्माद्वासनया बद्धं मुक्तं निर्वासनं मनः ।
58129 राम निर्वासनीभावमाहरस्व विवेकतः ॥ २७ ॥
58130

58131 उक्तां कथां प्रकृते योजयन्नुपसंहरति - तस्मादिति । आहरस्व आनय ।
58132 अवश्यं संपादयेति यावत् ॥ २७ ॥
58133

58134 सम्यगालोकनात्सत्याद्वासना प्रविलीयते ।
58135 वासनाविलये चेतः शममायाति दीपवत् ॥ २८ ॥
58136

58137 तदाहरणे क उपायस्तमाह - सम्यगिति ।
58138 सत्याद्यथाभूतार्थगोचरात्सम्यगालोकनाद्रत्नतत्त्वसाक्षात्कारवच्चिरविचारप्र्
58139 अणिधानजनितसाक्षात्कारादित्यर्थः । चेतो मनः । शमं नाशम् ॥ २८ ॥
58140
58141 न सत्यं किंचिदेवेह सद्भावो भावयत्यलम् ।
58142 नास्त्येव भावना तस्मादित्येतत्सम्यगीक्षणम् ॥ २९ ॥
58143
58144 सम्यगालोकनप्रकारमिदानीं दर्शयति - न सत्यमिति । अलं पूर्णः
58145 सद्भावः परमार्थसत्यश्चिदात्मा यदिदं दृश्यं भावयति तत्किंचिदपि
58146 न सत्यम् । तस्मात्तस्य दृश्यस्य भावना दर्शनमपि दृश्यविशेषिताकारा
58147 नास्त्येव इति एतत्स्वप्रकाशचिन्मात्रपरिशेषदर्शनमेव सम्यगीक्षणमित्यर्थः
58148 ॥ २९ ॥
58149
58150 आत्मैवेदं जगत्सर्वं कः किं भावयतु क्व वा ।
58151 भावना नाम नास्त्येव तदेतत्सम्यगीक्षणम् ॥ ३० ॥
58152
58153 कः किं भावयत्विति त्रिपुटीनिषेधः । क्वेत्याधारनिषेधः । भावनेति
58154 तत्संस्कारनिषेधः ॥ ३० ॥
58155
58156 वासनाचित्तनामानौ शब्दावर्थसमन्वितौ ।
58157 सत्यावलोकनाद्यत्र विलीनौ तत्परं पदम् ॥ ३१ ॥
58158
58159 वासना चित्तमितिशब्दावपि राहोः शिर इतिवद्वैकल्पिकभेदकल्पनात्तन्नामानौ ॥
58160 ३१ ॥
58161
58162 वासनावलितं चित्तमिह स्थितिमुपागतम् ।
58163 तदेव तद्विनिर्मुक्तं विमुक्तमिति कथ्यते ॥ ३२ ॥
58164
58165 विमुक्तं जीवन्मुक्तम् । विदेहकैवल्ये चित्तस्याभावात् ॥ ३२ ॥
58166
58167 नानाघटपटाकारैश्चेतःस्थितिमुपागतम् ।
58168 तदेवाशु शमं नेयं मिथ्यायक्ष इवोत्थितः ॥ ३३ ॥
58169
58170 मिथ्यायक्षो बालवेताल इव ॥ ३३ ॥
58171
58172 दामव्यालकटाकारैश्चेतः परिणतं यथा ।
58173 भीमभासदृढन्यायो राघवास्त्वचलस्तव ॥ ३४ ॥
58174
58175 देहात्मज्ञानवज्ज्ञानं देहात्मज्ञानबाधकम् । आत्मन्येव भवेद्यस्य स
58176 नेच्छन्नपि मुच्यते इति न्यायाद्दामव्यालकटदेहात्मभावनया यथा तेषां
58177 चेतः परिणतं तथैव ब्रह्मात्मभावनया
58178 भीमभासदृढन्यायस्तवाचलोऽस्त्वित्यर्थः ॥ ३४ ॥
58179
58180 दामव्यालकटन्यायो मा ते भवतु राघव ।
58181 एतद्राम पुरा प्रोक्तं पित्रा कमलजेन मे ॥ ३५ ॥
58182
58183 स्वोक्तार्थे सादरग्रहणसिद्धये पितृप्रसादलब्धतां दर्शयन्पुनः
58184 स्नेहातिशयात्तमेवार्थं स्थिरयन्नुपदिशति - दामेत्यादिना ॥ ३५ ॥
58185
58186 भवते यन्मया प्रोक्तं शिष्यायात्यन्तधीमते ।
58187 दामव्यालकटन्यायस्तस्मान्मा तेऽस्तु राघव ।
58188 भीमभासदृढन्यायो नित्यमस्तु तवानघ ॥ ३६ ॥

58189
58190 अविरलसुखदुःखसंकटेयं
58191 भवपदवी भवतापनोपयाता।
58192 व्यवहरणवतो विभूतियातौ
58193 सततमसक्ततयैव नश्यतीति॥ ३७॥
58194
58195 इति उक्तप्रकारेण भीमभासदृढन्यायेन व्यवहरणवतस्तव
58196 सर्वव्यवहारविषयेष्वसक्ततयैव
58197 विभूतेस्तत्त्वबोधपरिपाकलक्षणस्यैश्वर्यस्य यातौ प्राप्तौ सत्यां
58198 अविरलसुखदुःखसंकटा भवेषु जन्मपरम्परासु तापनाय
58199 त्रिविधतापभोगायोपयाता भवपदवी मूलोच्छेदेन नश्यति नान्यथेत्यर्थः॥
58200 ३७॥
58201
58202 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मो॰ स्थितिप्रकरणे
58203 दामव्यालकटोपाख्यानसमाप्तिर्नाम चतुस्त्रिंशः सर्गः॥ ३४॥
58204
58205 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे
58206 दामव्यालकटोपाख्यानसमाप्तिर्नाम चतुस्त्रिंशः सर्गः॥ ३४॥
58207
58208
58209 पञ्चत्रिंशः सर्गः ३५
58210
58211 श्रीवसिष्ठ उवाच।
58212
58213 जयन्ति ते महाशूराः साधवो यैर्विनिर्जितम्।
58214 अविद्यामेदुरोल्लासैः स्वमनो विषयोन्मुखम्॥ १॥
58215
58216 इह चित्तशमोपायो भोगेच्छात्याग उच्यते।
58217 सत्संगमविवेकात्मबोधरूढसमाधियुक्॥ १॥
58218
58219 तत्र मनोनिग्रह एव मुख्योपायोऽन्ये तदर्था इत्याशयेन तमेव प्रथमं
58220 प्रशंसन्प्रस्तौति - जयन्तीति द्वाभ्याम्॥ १॥
58221
58222 संसारस्यास्य दुःखस्य सर्वोपद्रवदायिनः।
58223 उपाय एक एवास्ति मनसः स्वस्य निग्रहः॥ २॥
58224
58225 श्रूयतां ज्ञानसर्वस्वं श्रुत्वा चैवावधार्यताम्।
58226 भोगेच्छामात्रको बन्धस्तत्त्यागो मोक्ष उच्यते॥ ३॥
58227
58228 मनोनिग्रहोपायेषु भोगेच्छात्यागो मुख्य इत्याह - श्रूयतामिति॥ ३॥
58229
58230 किमन्यैः शास्त्रसंदर्भैः क्रियतामिदमेव तु।
58231 यद्यत्स्वादिह तत्सर्वं दृश्यतां विषवह्निवत्॥ ४॥
58232
58233 तस्मिंश्च विषयेषु दोषदर्शनाद्बीभत्सा उपाया इत्याशयेनाह -
58234 किमन्यैरिति॥ ४॥
58235
58236 विषमा विषयाभोगाः प्रविचार्य पुनःपुनः।
58237 उपरिष्टात्परित्यज्य सेव्यमानाः सुखावहाः॥ ५॥
58238
58239 तत्राविचार्य सहसा विषयत्यागो दुःखद एव विचार्य गुरुशास्त्रोक्तक्रमेण
58240 त्यागस्त्वापातकटुकोऽप्युदर्के महासुख इत्याह - विषमा इति।

58241 विषयाणामभोगास्त्यागा विषमाः । विनाविचारमिति शेषः । पुनःपुनः
58242 प्रविचार्य सहनाभ्यासादुपरिष्टात्क्रमेण भोगवासनाः परित्यज्य
58243 सेव्यमानास्तु परिपाके सुखावहा इत्यर्थः ॥ ५ ॥
58244
58245 दोषान्प्रसवति स्फारान्वासनावलिता मतिः ।
58246 कीर्णकण्टकबीजा भूः कण्टकप्रसरं यथा ॥ ६ ॥
58247
58248 भोगवासनासु सतीषु का हानिस्तत्राह - दोषानिति । दोषान् रागादीन् प्रसवति
58249 पुनःपुनर्विषयस्मारणेनोत्पादयति । कीर्णानि कण्टकद्रुमबीजानि यस्याम् ॥ ६ ॥
58250
58251 अलग्नवासनाजाला मतिः प्रसरवर्जिता ।
58252 अदृष्टरागद्वेषा या शममेति शनैः परम् ॥ ७ ॥
58253
58254 अतो या मतिरलग्नवासनाजाला अत एवादृष्टरागद्वेषा अत एव
58255 प्रसरश्चाञ्चल्यं तद्वर्जिता सती सा शनैः शममेतीत्यर्थः ॥ ७ ॥
58256
58257 शुभाशुभानसद्ग्लानीन्प्रसूते सुगुणान्सदा ।
58258 फलदानङ्कुरान्काले श्रेष्ठबीजवतीव भूः ॥ ८ ॥
58259
58260 शुभा मतिः असती अविद्यमाना ग्लानिर्दुःखं येभ्यस्तथाविधान्सुगुणान्
58261 शान्तिदान्त्यादिसद्गुणयुक्तान् शुभानेव
58262 ज्ञानसमाधिविश्रान्तिलक्षणान्मोक्षफलदानङ्कुरान्सूते । यथा शाल्यादि
58263 श्रेष्ठबीजवती भूमिरित्यर्थः ॥ ८ ॥
58264
58265 शुभभावानुसंधानात्प्रसन्ने मनसि स्थिते ।
58266 शनैः शनैः प्रशान्ते च मिथ्याज्ञानघनाम्बुदे ॥ ९ ॥
58267
58268 दयादाक्षिण्यक्षमादिशुभभावाभ्यासमारभ्य समाधिपर्यन्तानि
58269 मनोविश्रान्तिसाधनानि क्रमेणाह - शुभेत्यादिना । सर्वेषां
58270 भावलक्षणसप्तम्यन्तानां मनो भवति निर्द्वन्द्वमित्यत्रान्वयः ॥ ९ ॥
58271
58272 वृद्धिं याते च सौजन्ये यक्षे शुक्ल इवोडुपे ।
58273 विवेके प्रसृते पुण्ये नभसीवार्कतेजसि ॥ १० ॥
58274
58275 उडुपे चन्द्रे ॥ १० ॥
58276
58277 धृतावन्तर्विवृद्धायां मुक्तायामिव कीचके ।
58278 स्थितावन्तः कृतार्थायां मधाविव निशाकरे ॥ ११ ॥
58279
58280 धृतौ इन्द्रियनिग्रहधैर्ये । कीचके वेणौ ।
58281 करीन्द्रजीमूतवराहशङ्खमत्स्यादिशुक्त्युद्भववेणुजानि । मुक्ताफलानि
58282 प्रथितानि लोके तेषां तु शुक्त्युद्भवमेव भूरि ॥ इत्यष्टसु मुक्ताप्रकारेषु
58283 [मुक्ताकरेषु इति पाठः] वेणूनामपि रत्नशास्त्रे परिगणितत्वात् ।
58284 अन्तर्हृदि मनसि स्थितौ आत्मसौख्यलाभेन कृतार्थायाम् ॥ ११ ॥
58285
58286 फलिते शीतलच्छाये सत्सङ्गसफलद्रुमे ।
58287 स्रवत्यानन्दसुरसे समाधिसरलद्रुमे ॥ १२ ॥
58288
58289 सत्सङ्गो गुर्वादिसमागमः ॥ १२ ॥
58290
58291 मनो भवति निर्द्वन्द्वं निष्कामं निरुपद्रवम् ।
58292 प्रशान्तचापलानर्थशोकमोहभयामयम् ॥ १३ ॥

58293
58294 क्षीणशास्त्रार्थसंदेहं विगताशेषकौतुकम् ।
58295 निरस्तकल्पनाजालं मोहमुक्तमलेपकम् ॥ १४ ॥
58296
58297 कौतुकं विचित्रविषयदर्शनोत्कण्ठा ॥ १४ ॥
58298
58299 निरीहं निरुपाक्रोशं निरपेक्षं निराधिकम् ।
58300 संशान्तशोकनीहारमसक्तं ग्रन्थिवर्जितम् ॥ १५ ॥
58301
58302 कामो [त्रयोदशे श्लोके निष्काममित्युक्त्यात्र च
58303 निरीहनिरपेक्षत्वप्रतिपादनात्प्राप्तं पौनश् *? यं परिहरति]
58304 बीजावस्था । अपेक्षा प्रवृत्त्युन्मुखावस्था । ईहा प्रवृत्त्यवस्थेति भेदान्न
58305 पौनरुक्त्यम् । ग्रन्थिभिरासङ्गैर्वर्जितं भवतीति सर्वत्रानुकृष्यते ॥ १५ ॥
58306
58307 संदेहोग्रसुतं साग्रं सतृष्णादारपञ्जरम् ।
58308 नाशयित्वा स्वमात्मानं साधयत्यर्थमैश्वरम् ॥ १६ ॥
58309
58310 एवंभूतं मनः किं करोति तदाह - संदेहेति । क आत्मा कीदृशो वा कैः
58311 साधनैर्वा लभ्यः कर्मभिर्ज्ञानेन वा कीदृशं वा ज्ञानं साधनानि च
58312 तस्य कानि स्युर्नानावादिभिरन्यथान्यथा निरूपणादित्यादिबहुविधसंदेहा एव
58313 उग्राः सुता दुष्पुत्रा यस्य तथाविधम् । अग्रैः
58314 शाखाप्रायैर्नानामनोरथारम्भैः सहितम् । तृष्णालक्षणा ये दाराः
58315 पञ्जरं स्थूलशरीरं च तत्सहितं आत्मानं स्वं मनः स्वरूपं
58316 नाशयित्वा स्वस्येश्वरो यः प्रत्यगात्मा तत्संबन्धिनमर्थं
58317 जीवन्मुक्तिलक्षणं परमपुरुषार्थं साधयतीत्यर्थः ॥ १६ ॥
58318
58319 आत्मपीवरताहेतून्विकल्पांश्चायमुज्झति ।
58320 संस्मृत्य प्रभुतामेषु जहाति तृणवत्तनुम् ॥ १७ ॥
58321
58322 मनः केन क्रमेण स्वात्मानं नाशयति तमाह - आत्मेति ।
58323 प्रथममात्मनः स्वस्य पीवरता
58324 पुष्टिस्तद्धेतूनरिमित्रसाध्वसाध्वादिविकल्पानुज्झति । कथम् । एषु विकल्पेषु
58325 स्वस्य उत्पादन इव निग्रहेऽपि प्रभुतां समर्थतां संस्मृत्य विचिन्त्येत्यर्थः
58326 । ततस्तनुं देहाकारं स्वीयं कल्पितरूपं तृणवज्जहाति । यावदेव हि
58327 देहाहंभावेन वासितं मनो देहाकारं भवति तावदेव
58328 देहानुकूलप्रतिकूलविषयेषु रागद्वेषातिप्रभवैर्विकल्पसहस्रैर्वर्धते
58329 तस्मिंस्तु क्षीणे क्षीयत इति भावः ॥ १७ ॥
58330
58331 मनसोऽभ्युदयो नाशो मनोनाशो महोदयः ।
58332 ज्ञमनो नाशमभ्येति मनोऽज्ञस्य विवर्धते ॥ १८ ॥
58333
58334 ननु स्वनाशस्याभ्युदयत्वाभावात्प्रत्युतानर्थरूपत्वात्तत्र मनः कथं
58335 प्रवर्ततां तत्राह - मनस इति । अयं भावः - नहि मनः
58336 स्वातन्त्र्येणाभ्युदयमिच्छति किंत्वात्मभूतत्वात् आत्मभूतस्य च
58337 मनोभावोऽनर्थस्तन्नाशस्तु
58338 सर्वानर्थप्रहाणरूपत्वान्निरतिशयानन्दस्वरूपपरिशेषाच्चाभ्युदय एवेति ।
58339 प्रत्यगात्मनस्तु स्वरूपलाभान्महोदयत्वं निर्विवादमेवेत्याशयेनाह -
58340 मनोनाश इति । तर्हि देहाहंकारत्यागमात्रं कार्यं किं
58341 ब्रह्मात्मताज्ञानेन तत्राह - ज्ञमन इति । ज्ञस्य ब्रह्मात्मैक्यज्ञस्य ।
58342 अज्ञस्येति । अज्ञानरूपे मलेऽनुच्छिन्ने मनो भूयः प्ररोहत्येवेति भावः ॥ १८ ॥
58343
58344 मनोमात्रं जगच्चक्रं मनः पर्वतमण्डलम् ।

58345 मनो व्योम मनो देवो मनो मित्रं मनो रिपुः ॥ १९ ॥
58346
58347 प्ररोहतां का हानिस्तत्राह - मनोमात्रमिति। जगदनर्थप्राप्तिरेव हानिरिति
58348 भावः ॥ १९ ॥
58349
58350 विकल्पकलुषा या स्याच्चित्तत्वस्यात्मविस्मृतिः।
58351 मन इत्युच्यते सेयं वासना भवभागिनी ॥ २० ॥
58352
58353 तर्हि तस्य मनसः किं स्वरूपं यदवश्योच्छेद्यं तदाह - विकल्पेति।
58354 आत्माप्रतिसंधाननिमित्तनानाविकल्पवासना एव तत्स्वरूपमित्यर्थः ॥ २० ॥
58355
58356 चेत्यानुपातकलितचिन्मात्रे तिष्ठताभिधम्।
58357 मनाग्विकल्पकलुषं चित्तत्त्वं जीव उच्यते ॥ २१ ॥
58358
58359 अस्त्वेवेंविधं मनस्तेन बध्यो जीवः कस्तमाह - चेत्येति। मनसि चेत्यस्य
58360 विषयस्य योऽनुपातो वासनात्मना प्रवेशस्तेन कलिते परिच्छिन्ने चिन्मात्रे।
58361 तिष्ठतीति तिष्ठस्तद्भावस्तिष्ठता। व्यत्ययेन कर्तरि शः।
58362 स्थितिरित्यभिधाशब्दव्यवहारयोग्यता यस्मिंस्तथाविधं
58363 मनाग्विकल्पवासनाकलुषं ब्रह्म तदेव जीव इत्युच्यत इत्यर्थः ॥ २१ ॥
58364
58365 चेत्यप्रपतितं रूढसंज्ञमज्ञत्वमागतम्।
58366 तदेवाधिकनिःसारं कल्प्यतेऽन्तर्मनस्तया ॥ २२ ॥
58367
58368 यतश्चेत्ये प्रपतितं तत्रैव चिराभ्यासाद्रूढा संज्ञा आत्मत्वाभिमानो यस्य
58369 तथाविधं यदज्ञत्वं स्वरूपविस्मरणमागतं यज्जीवरूपं तदेव
58370 विकल्पसहस्रैर्मोमुह्यमानतया सारभूतसुखस्वभावतापहाराद्यदा
58371 अधिकनिःसारं भवति तदा जीवोपकरणमनस्तया भेदेन कल्प्यत इत्यर्थः ॥ २२
58372 ॥
58373
58374 नात्मा संसारिपुरुषो न शरीरं न शोणितम्।
58375 जडं सर्वं शरीरादि देही खवदलेपकः ॥ २३ ॥
58376
58377 एवं जीवतदुपाधी प्रदर्श्य तद्विविक्तं शुद्धात्मस्वरूपं दर्शयति -
58378 नेत्यादिना। संसारिपुरुषो जीवस्वभावो वस्तुतो न भवतीत्यर्थः ॥ २३ ॥
58379
58380 शरीरे कणशः कृत्ते नास्त्यन्यद्रुधिरादिकात्।
58381 निर्भिन्ने कदलीस्तम्भे नास्त्यन्यत्पल्लवाद्दते ॥ २४ ॥
58382
58383 जडत्वमेव स्फुटयति - शरीरे इति। कृत्ते छिन्ने।
58384 पल्लवात्पल्लवप्रकृतित्वक्संघातात् ॥ २४ ॥
58385
58386 मनो जीवो नरं विद्धि तदेवाकारमागतम्।
58387 आत्मनात्मानमादत्ते स्वविकल्पात्मकल्पितम् ॥ २५ ॥
58388
58389 स्वविकल्पान्नरस्तत्र प्रसार्य रचयत्यलम्।
58390 जालमात्मनिबन्धाय कोशकारकृमिर्यथा ॥ २६ ॥
58391
58392 विकल्पान् विकल्पवासनाः। प्रसार्य उद्भाव्य। नरो जीवः ॥ २६ ॥
58393
58394 इमं देहभ्रमं त्यक्त्वा देशकालान्तरे पुनः।
58395 शरीरत्वमथादत्ते पल्लवत्वमिवाङ्कुरः ॥ २७ ॥
58396

58397 तद्देहात्मकत्वाभावे युक्तिमाह - इममिति | शरीरत्वं देहान्तरभावम् ||
58398 २७ ||
58399
58400 यादृग्वासनमेतत्स्यान्मनस्तादृक्प्रजायते |
58401 जातं स्वपिति यच्चित्तं तत्स्वप्ने निशि तिष्ठति || २८ ||
58402
58403 शरीरस्य वासनामयत्वे युक्तिमाह - यादृगिति | चित्तं यज्जातं सत्स्वपिति
58404 स्वप्ने तदेव भूत्वा तिष्ठतीत्यन्वयः || २८ ||
58405
58406 अम्लं मधुरसासिक्तं मधुरं मधुरञ्जितम् |
58407 बीजं प्रतिविषाकल्कसिक्तं च कटु जायते || २९ ||
58408
58409 विषयस्य वासनाधायकत्वे दृष्टान्तमाह - अम्लमिति | अम्लं
58410 तिन्तिण्याद्यम्लं बीजं मधुरसासिक्तं चेदङ्कुरादिक्रमेण वृक्षीभूय
58411 फलकालेऽपि मधुरञ्जितं सत् मधुरं जायते तदेव बीजं प्रतिविषायाः
58412 विषप्रतिनिधिभूतधत्तूरकरञ्जादिवल्ल्याः कल्केन रसेन सिक्तं चेत् फलकालेऽपि
58413 कटु जायते इति लोके आरामशास्त्रे च प्रसिद्धमित्यर्थः || २९ ||
58414
58415 शुभवासनया चेतो महत्या जायते महत् |
58416 भवतीन्द्रमनोराज्य इन्द्रता स्वप्नभाङ्नरः [स्वप्नभाङ्कुरः इति
58417 क्वचित्] || ३० ||
58418
58419 क्षुद्रवासनया चेतःक्षुद्रतामपि पेलवाम् |
58420 पिशाचविभ्रमात्स्वप्ने पिशाचान्निशि पश्यति || ३१ ||
58421
58422 पेलवां पश्यतीत्यपकृष्यते || ३१ ||
58423
58424 सरसि स्फारनैर्मल्ये कालुष्यं याति न स्थितिम् |
58425 तथैव स्फारकालुष्ये प्रसादो याति न स्थितिम् || ३२ ||
58426
58427 नैर्मल्ये कृतेऽपि पुनर्व्युत्थाने द्वैतदर्शनात्कालुष्यप्रसक्तिमाशङ्क्याह
58428 - सरसीति | एतेनाल्पविवेकादिना नैर्मल्यस्थितिप्रसक्तिरपि वारितेत्याशयेनाह
58429 - तथैवेति || ३२ ||
58430
58431 मनसि स्फारकालुष्ये तद्रूपं जायते फलम् |
58432 तथैव स्फारनैर्मल्ये तद्रूपं जायते फलम् || ३३ ||
58433
58434 त्यजत्युदारां न गतिं क्षीणोऽप्यनिशमुत्तमः |
58435 उद्योगवानविरतं पूरणाशामिवोडुपः || ३४ ||
58436
58437 ननु तर्हि देशोपप्लवादिना चिरसमाधिभङ्गे पुनः कालुष्यं
58438 स्यादित्याशङ्क्याह - त्यजतीति | क्षीणो दारिद्र्याद्युपप्लुतोऽपि | उदारां
58439 शान्तिं समाधानादिचित्तप्रसादनगतिम् || ३४ ||
58440
58441 नेह बन्धो न मोक्षोऽस्ति नाबन्धोऽस्ति [न बोध्यो न च बन्धनं इति
58442 पाठः | आद्ये न बन्धतेत्यत्र बन्धशब्दादर्श आद्यत्वि
58443 बन्धवत्तेत्यर्थः] न बन्धता |
58444 मिथ्योत्थितैव मायेयमिन्द्रजाललता यथा || ३५ ||
58445
58446 अथवा तत्त्वबोधबाधितत्वादेव नोपप्लवसहस्रेऽपि
58447 कालुष्यप्रसक्तिरित्याशयेनाह - नेहेति || ३५ ||
58448

58449 गन्धर्वनगराकारा मृगतृष्णा इवोत्थिता।
58450 द्विचन्द्रविभ्रमाभासा द्वैतैकत्वविवर्जिता॥ ३६॥
58451
58452 मायामेव विशिनष्टि - गन्धर्वेति। द्वैतैकत्वविवर्जितेत्युत्तरान्वयि॥ ३६॥
58453
58454 सर्वैव ब्रह्मसत्तेयमित्येषा परमार्थता।
58455 परिस्फुरति निःसारः संसारोऽयमसन्मयः॥ ३७॥
58456
58457 का तर्हि परमार्थता तामाह - सर्वैवेति॥ ३७॥
58458
58459 नानन्तोऽहं वराकोऽहमिति दुर्निश्चयोदितः।
58460 अनन्तोऽस्मीश्वरोऽस्मीति निश्चयेन विलीयते॥ ३८॥
58461
58462 अहमनन्तोऽपरिच्छिन्नो न। अत एव वराकः क्षुद्रः॥ ३८॥
58463
58464 सर्वगे स्वात्मनि स्वच्छे एषोऽहमिति भावना।
58465 एतत्तद्बन्धनं लोके स्वविकल्पोपकल्पितम्॥ ३९॥
58466
58467 एषः एतद्देहमात्रः॥ ३९॥
58468
58469 बन्धमोक्षदशाहीना द्वित्वैकत्वविवर्जिता।
58470 सर्वैव ब्रह्मसत्तेयमित्येषा परमार्थता॥ ४०॥
58471
58472 नैर्मल्यप्राप्तमरणमसक्तं सर्वदृष्टिषु।
58473 अमनस्त्वमिहापन्नं ब्रह्म पश्यति नान्यथा॥ ४१॥
58474
58475 नैर्मल्यातिशयेन प्राप्तं सन्निहितं मरणं स्वनाशो यस्य तथाविधं अत
58476 एवामनस्त्वमापन्नं मन इह अस्मिन्नधिकारिशरीर एव ब्रह्म पश्यति॥ ४१॥
58477
58478 मनो निर्मलतां यातं शुभसंतानवारिभिः।
58479 ब्राह्मीं दृष्टिमुपादत्ते रागं शुक्लपटो यथा॥ ४२॥
58480
58481 शुभसंतानं समाध्यभ्यासजन्यधर्मोपचयस्तल्लक्षणवारिभिः।
58482 ब्राह्मीं दृष्टिं सर्वत्र ब्रह्मदृष्टिम्। रागं रञ्जकद्रव्यवर्णम्॥ ४२॥
58483
58484 सर्वमेव ममात्मेति सर्वभावनयानघ।
58485 हेयादेयबले क्षीणे बन्धमोक्षो विमुच्यताम्॥ ४३॥
58486
58487 बन्धसापेक्षो मोक्षोऽपि विमुच्यताम्॥ ४३॥
58488
58489 शुद्धस्य मनसः कायशास्त्रवैराग्यबुद्धिभिः।
58490 अभिजातोपलस्येव जगत्तस्येति [जगत्तस्यैवेति पाठः] विद्युतिः॥ ४४॥
58491
58492 ननु कायादिबन्धः सत्यः किं न स्यादिति चेन्न।
58493 मनोविकारमात्रत्वान्मानोरथिकप्रासादादिवदित्याशयेनमाह -
58494 शुद्धस्येति। आदावनधिकार्यधिकारिशरीराभिमानात्कायात्मना ततः
58495 सच्छास्त्रश्रवणाभिमानाच्छास्त्रात्मना वैराग्यात्मना तत
58496 आत्मबोधाद्बोधात्मना च। शुद्धस्य मनस एव अभिजातोपलस्य स्फटिकस्येव
58497 इति विद्युतिर्विविधप्रतिभास एव जगत्संसार इत्यर्थः॥ ४४॥
58498
58499 पदार्थेनैकतामेत्य मनसो नैकतानता।
58500 असत्यज्ञानदृष्टिं तां विद्धि क्षणविनाशिनीम्॥ ४५॥

द्वैतदर्शनक्षण एव बन्धप्राप्तिमात्मदर्शनक्षण एव सद्योमोक्षप्राप्तिं
च करतलामलकवद्विविच्य दर्शयति - पदार्थेनेति श्लोकद्वयेन ॥ ४५ ॥

सबाह्याभ्यन्तरं त्यक्त्वा सर्वां दृश्यदृशं यदा।
मनस्तिष्ठति तल्लीनं संप्राप्तं तत्पदं तदा ॥ ४६ ॥

दृश्यदृष्टिः स्फुटा येयं सा ह्यवश्यमसन्मयी।
तन्मयत्वं च मनसः स्वरूपं विद्धि नेतरत् ॥ ४७ ॥

तन्मयत्वं दृश्यदृष्टिप्रचुरत्वम् ॥ ४७ ॥

आद्यन्तयोर्विनाशित्वान्मध्येऽपि तदसन्मयम्।
अज्ञातमनसस्तेन दुःखिता हस्तसंस्थिता ॥ ४८ ॥

दृश्यदृष्टेरसन्मयत्वं कुतस्तत्राह - आद्यन्तयोरिति। विनाशित्वात्
असत्त्वात्। एवमसदित्यज्ञातं मनो येन तस्य हस्तसंस्थिता करप्राप्तेव न
दुरन्वेषेत्यर्थः ॥ ४८ ॥

आत्मैवेदं जगदिति विना भावेन दुःखदा।
दृश्यश्रीरन्यथा त्वेषा भोगमोक्षप्रदायिनी ॥ ४९ ॥

इति भावेन बोधेन विना दृश्यश्रीर्दुःखदा। अन्यथा तादृशबोधसत्त्वे तु
भोगग्रहणमज्ञभोगवद्दुर्वासनाधानप्रयुक्तदुःखबीजत्वा##-
द्यतनार्थम् ॥ ४९ ॥

जलमन्यत्तरङ्गोऽन्य इति नानातयाऽज्ञता।
जलमेव तरङ्गोऽयमित्येकत्वात्किल ज्ञता ॥ ५० ॥

लोकवदेव शास्त्रेऽज्ञताज्ञते बोध्ये नापूर्वे इत्याह - जलमिति ॥ ५० ॥

दुःखमायात्यसदिति हेयोपादेयरूपि यत्।
तदभावेन तु ज्ञानादानन्त्यमवशिष्यते ॥ ५१ ॥

नानाता कुतो हेया एकता च कुत उपादेया तत्राह - दुःखमिति।
हेयोपादेयरूपि यन्नानात्वं तदसदविद्यमानमिति हेतोर्दुःखं
जन्ममरणाद्यायाति अनुसरति अतो हेयम्। तदभावेन
त्वात्मतत्त्वज्ञानादानन्त्यमपरिच्छिन्नात्मरूपमवशिष्यते
अतस्तदुपादेयमित्यर्थः ॥ ५१ ॥

संकल्पकल्पितत्वाच्च मनोरूपमसन्मयम्।
असन्मयविनाशे तु कः शोको वद राघव ॥ ५२ ॥

ननु प्रियतममनोबुद्ध्यादिद्वैतस्य सत्यत्वादात्मोपकरणत्वाच्च तन्नाशे
धनादिनाश इव शोकः स्यात्तत्राह - संकल्पेति ॥ ५२ ॥

अवत्सलो यथा बन्धुररागद्वेषया धिया।
दृश्यते पश्य तद्वत्त्वं तत्त्वं पञ्जरमात्मनः ॥ ५३ ॥

किंच रागद्वेषयोः सतोरिष्टहानादनिष्टप्राप्तेश्च शोकः स्यात्तौ त्यक्त्वा

58553 उदासीनदृशा देहत्रयपञ्जरं पश्यतो न शोकप्रसक्तिरित्याशयेनाह -
58554 अवत्सल इति | अवत्सलो निःस्नेहः | तत्त्वं पृथिव्यादिभूततत्त्वरूपम् || ५३ ||
58555
58556 अवत्सलाद्यथा बन्धोः सुखदुःखैर्न लिप्यते |
58557 तत्त्वेन [ज्ञानेनेति पाठान्तरम्] संपरिज्ञानात्तथा
58558 तत्त्वचयात्मनः || ५४ ||
58559
58560 तत्त्वचयात्मनो भूतराशिमात्रस्वभावाद्देहद्वयपञ्जरात् || ५४ ||
58561
58562 तदनादि शिवं ज्ञानं यन्मध्यं द्रष्टृदृश्ययोः |
58563 तस्मिन्सत्ये मनः शान्तं पांसुर्वायुक्षये यथा || ५५ ||
58564
58565 यस्मिन्नधिष्ठाने मनःक्षयस्तत्स्वरूपमाह - तदिति | शिवं
58566 नित्यनिरतिशयानन्दरूपम् | द्रष्टृदृश्ययोर्मध्यं दृग्रूपमित्यर्थः ||
58567 ५५ ||
58568
58569 उपशान्ते मनोवायौ देहपांसुः प्रशाम्यति |
58570 पुनः संसारनगरे न नीहारः प्रवर्तते || ५६ ||
58571
58572 मनोनाशे स्थूलदेहोऽप्यसम्भवतीत्याह - उपशान्ते इति | संसारस्य
58573 नगरवदधिष्ठाने प्रतीचि नीहारो नीहारवदावरिका अविद्या क्षीणत्वान्न
58574 प्रवर्तते || ५६ ||
58575
58576 वासनाप्रावृषि क्षीणे संस्थितौ राममागते |
58577 जाड्ये जनितहृत्कम्पे पङ्के शोषमुपागते || ५७ ||
58578
58579 तत्क्षयप्रकारमेव शरत्कालत्वेनोपपादयति - वासनेत्यादिना | क्षीणे इति
58580 पदसंस्कारपक्षे सामान्ये नपुंसकम् | संस्थितौ स्वरूपस्थितौ रमणं
58581 रामो विहारस्तमागते प्राप्ते मनसीति शेषः | रागमिति पाठे
58582 ताद्रूप्यरञ्जनमित्यर्थः | जनितो हृत्कम्पो भयं येन तथाविधे जाड्ये
58583 मौढ्ये | पक्षान्तरे शैत्ये तद्रूपे पङ्के शोषमुपागते सति || ५७ ||
58584
58585 शुष्के तृष्णावटे शान्ते मन्दे हृदयकानने |
58586 क्षीणेष्वक्षकदम्बेषु मिथ्याज्ञानघने क्षते || ५८ ||
58587
58588 मन्दे रागादिगुल्मविरले | अक्षकदम्बेषु इन्द्रियसमूहलक्षणकदम्बवृक्षेषु
58589 क्षीणेषु क्षीणफलेषु || ५८ ||
58590
58591 क्षीयते मोहमिहिका प्रभात इव शर्वरी |
58592 क्वापि गच्छति तज्जाड्यं विषं मन्त्रहतं यथा || ५९ ||
58593
58594 देहाद्रौ न भयक्षुद्राः सरितः प्रसरन्त्यलम् |
58595 नोल्लसन्ति लसत्पक्षाः संकल्पोग्रकलापिनः || ६० ||
58596
58597 भयलक्षणाः क्षुद्राः सरितः कुल्याः | कलापिनो मयूराः || ६० ||
58598
58599 परां निर्मलतामेति संविदाकाशगोचरः |
58600 राजतेऽतितरामच्छो जीवादित्यो महोदयः || ६१ ||
58601
58602 स्वरूपसंविल्लक्षणे आकाशे गोचरः अपरोक्षं स्फुरन् || ६१ ||
58603
58604 घनमोहभरोन्मुक्ता विविक्तत्वं परं गताः |

58605 समये ह्यतिशोभन्ते धौता आशा महादिशः ॥ ६२ ॥
58606
58607 विविक्तत्वं विवेकितां विभक्ततां च। समये समाध्यादिकाले
58608 सूर्यचन्द्रोदयकाले च। धौता रजोभिरदूषिता आशास्तृष्णास्तल्लक्षणा
58609 महादिशः ॥ ६२ ॥
58610
58611 भृशमाभाति विमला मुदिताकाशमञ्जरी।
58612 शीतलीकृतदिक्चक्रा शरद्व्योम्नीव चन्द्रिका ॥ ६३ ॥
58613
58614 मुदिता पुण्यफलानुशायिनी चित्तवृत्तिस्तल्लक्षणा चित्ताकाशस्य मञ्जरी ॥ ६३ ॥
58615
58616 सर्वसंपत्प्रकाशेन परमानन्ददायिना।
58617 भृशं सफलतामेति सुविविक्ता विवेकभूः ॥ ६४ ॥
58618
58619 सर्वाः संपदो विषयानन्दलवान् स्वान्तर्भाविण प्रकाशयतीति
58620 सर्वसंपत्प्रकाश आत्मा तल्लक्षणेन फलेन सस्यफलपक्षे तु सर्वेषां
58621 कृषीवलादीनां भाविसंपदः प्रकाशयतीति तेनेति योज्यम्। सुविविक्ता
58622 सम्यक्परिशोधिता केदारभेदैर्विभक्ता च ॥ ६४ ॥
58623
58624 सपर्वतवनाभोगं परमालोकसुन्दरम्।
58625 अच्छाच्छं शितलच्छायं जायते भुवनान्तरम् ॥ ६५ ॥
58626
58627 परमालोकेनात्मप्रकाशेन सूर्यचन्द्रज्योतिषा च तत्त्वपक्षे शीतला
58628 त्रिविधतापशून्या छाया चिदाभासो यस्मिन्नित्यर्थः। शरत्पक्षे स्पष्टम् ॥ ६५
58629 ||
58630
58631 विस्तारितं सुसुमतां स्फारितं स्फटिकाकृतिम्।
58632 उपैति हृत्सरः स्वच्छं नीरजोम्बुजकोशकम् ॥ ६६ ॥
58633
58634 परिच्छेदापगमाद्विस्तारितम्। विवेकजलोपचयात्स्फारितम्।
58635 हृन्मनस्तल्लक्षणं सरः। निर्गतरजोगुणो हृदयाम्बुजकोशो यत्र।
58636 शरत्पक्षे स्पष्टम् ॥ ६६ ॥
58637
58638 हृत्पद्मकोशान्मलिनः स्वाहंकारमधुव्रतः।
58639 अपुनर्दर्शनायैव चञ्चलः क्वापि गच्छति ॥ ६७ ॥
58640
58641 नीरजस्त्वं कार्यतोऽप्याह - हृदिति ॥ ६७ ॥
58642
58643 भवत्यपगताक्षेपः सर्वगः सर्वनायकः।
58644 निर्वासनः शान्तमनाः स्वदेहनगरेश्वरः ॥ ६८ ॥
58645
58646 अपगत आक्षेपः संकोचो यस्य अत एव सर्वगः ॥ ६८ ॥
58647
58648 विचारणासमधिगतात्मदीपको
58649 मनस्यलं परिगलितेव धीरधीः।
58650 विलोकयन्क्षयभवनीरसा गती-
58651 र्गतज्वरो विलसति देहपत्तने ॥ ६९ ॥
58652
58653 एवं वासनाक्षयफलानि प्रपञ्च्य तैरेव जीवन्मुक्तस्थितिं दर्शयति -
58654 विचारणेति। अवमत्य स्वदोषान् धीरा धीर्यस्य तथाविधः सन् क्षयेषु मृत्युषु
58655 भवेषु जन्मसु च पारलौकिकीरैहलौकिकीश्च नीरसा गतीर्विलोकयन्
58656 विचारणासमधिगतात्मदीपको भूत्वा जीवन्मुक्तो गतज्वरः सन् नेहपत्तने

स्वशरीरनगरे विलसति विराजते इत्यर्थः ॥ ६९ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपाये
स्थितिप्रकरणे उपशमवर्णनं नाम पञ्चत्रिंशः सर्गः ॥ ३५ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे
उपशमवर्णनं नाम पञ्चत्रिंशः सर्गः ॥ ३५ ॥

षट्त्रिंशः सर्गः ३६

श्रीराम उवाच ।

यथेदृशं स्थितं विश्वं विश्वातीते चिदात्मनि ।
तन्मे कथय हे ब्रह्मन् पुनर्बोधविवृद्धये ॥ १ ॥

स्वतः स्थिता ह्यसक्तैव चित्सर्वत्र स्थितोच्यते ।
चित्स्थित्या सर्वभावानां स्थितिर्न पृथगित्यपि ॥ १ ॥

इदानीं मुख्यं प्रकरणार्थं जगत्स्थितिस्वरूपं जिज्ञासुः श्रीरामः
पृच्छति - यथेति । ईदृशं प्राग्वर्णितप्रकारम् ॥ १ ॥

श्रीवसिष्ठ उवाच ।

यथोर्मयोऽनभिव्यक्ता भाविनः पयसि स्थिताः ।
न स्थिताश्चात्मनोऽन्यत्वाच्चित्तत्वे सृष्टयस्तथा ॥ २ ॥

ब्रह्मसत्तयैव जगत्स्थितिर्न पृथक् । प्राणिनां पृथक्स्वसत्तया
जगत्स्थितिप्रत्ययस्तु ब्रह्मास्वरूपस्थित्यबोधनिबन्धन इति समाधातुकामो
वसिष्ठस्तदनुरूपं दृष्टान्तमाह - यथेत्यादिना ।
सद्रूपादात्मनोऽन्यत्वात्स्वतः सत्त्वशून्यत्वाच्च न स्थिताः ॥ २ ॥

यथा सर्वगतः सौक्ष्म्यादाकाशो नोपलक्ष्यते ।
तथा निरंशश्चिद्भावः सर्वगोऽपि न लक्ष्यते ॥ ३ ॥

यद्यात्मस्थित्यैव सर्वस्थितिस्तर्हि सर्वत्रात्मा कुतो न लक्ष्यते तत्राह - यथेति
। निरंश इति सौक्ष्म्ये उपपत्तिः ॥ ३ ॥

सुस्थितेवास्थितेवान्तः प्रतिभास्ति मणौ यथा ।
न सत्यभूता नासत्या तथेयं सृष्टिरात्मनि ॥ ४ ॥

सुस्थिते निरावरणस्थिते आस्थिते आवृतस्थिते । प्रतिभा प्रतिबिम्बः । मणौ
स्फटिकादौ । सुस्थिता इव आस्थिता इवेति प्रतिभाविशेषणे वा ॥ ४ ॥

स्वाधारैरम्बुदैः स्वस्थैर्न स्पृष्टं गगनं यथा ।
चित्स्थैः सर्गैश्चिदाधारैर्न स्पृष्टा चित्परा तथा ॥ ५ ॥

असङ्गत्वे दृष्टान्तमाह - स्वेति । अन्योन्यतादात्म्याध्यासाच्चित आधारैः
॥ ५ ॥

जलधिष्ठिततत्तेजो यथाङ्ग प्रतिबिम्बति ।
तथा पुर्यष्टकेष्वेव चिद्धि देहेषु लक्ष्यते ॥ ६ ॥

तर्हि सूक्ष्माच्चिद्घटादाविव देहेऽपि न लक्ष्येत लक्ष्यते तु तत्र को हेतुस्तत्राह - जलधिष्ठितेति। अङ्गेति संबोधने। यथा जले संयुक्ताः किरणाः संपृक्ततया स्फुटं न लक्ष्यन्ते प्रतिबिम्बात्मना तु स्फुटं लक्ष्यन्ते तद्वत्पुर्यष्टकात्मकेषु देहेष्वित्यर्थः॥ ६॥

सर्वसंकल्परहिता सर्वसंज्ञाविवर्जिता।
सैषा चिदविनाशात्मा तच्चेत्यादिकृताभिधा॥ ७॥

तस्याः प्रतिबिम्बता तदधीनकामसंकल्पनामरूपभावत्वाच्च न वास्तवीत्याह - सर्वेति। किंकृता तर्हि जीवाद्यभिधा तदाह - तदिति। आदिपदादाभासग्रहः॥ ७॥

आकाशशतभागाच्छा ज्ञेषु निष्कलरूपिणी।
सकलाकलसंसारस्वरूपैकात्म्यदर्शिनी॥ ८॥

चित्सौक्ष्म्यस्वाच्छ्यपर्यालोचने आकाशोऽपि शतगुणस्थूलोऽस्वच्छश्च स्यादिति विद्वदनुभवेनाह - आकाशेति। सकलमप्यकलं निष्कलं संसारस्वरूपं यत्र तथाविधैकात्म्यदर्शनशीलेति विद्वदनुभवाभिनयः। अमलेति पाठे मायामलरहितमित्यर्थः॥ ८॥

तरङ्गादिमयी स्फारा नानाता सलिलार्णवे।
तस्मान्न व्यतिरेकेण यथा भावविकारिणी॥ ९॥

अत एव तत्र भ्रान्तिदृष्टा भावविकारास्तद्व्यतिरेकेण न सन्तीत्याह - तरङ्गेति द्वाभ्याम्॥ ९॥

त्वत्तामत्तामयि स्फारा नानातेयं चिदर्णवे।
चिन्मात्रव्यतिरेकेण तथा नैव प्रकाशते॥ १०॥

चिच्चिनोति चितं चेत्यं तेनेदं स्थितमात्मनि।
अज्ञेऽज्ञे त्वन्यदायातमन्यदस्तीति कल्पना॥ ११॥

यदि चित् चेत्यं चिनोति उपचिनोतीति मन्यसे तर्हि चिच्चितमेव चिनोतीति मन्यस्वनचेत्यमन्यदस्तीति। एवं मनने तेन चितः स्वात्मनि व्यापारायोगेन हेतुना इदं चित्स्वरूपमात्मन्येव स्थितं न किंचिच्चिनोतीति फलतीत्यर्थः। सेयं परमार्थदृष्टिः। यस्त्वज्ञ एव सन् ज्ञोऽस्मीत्यभिमन्यते तस्यैव चिद्व्यतिरिक्तं सर्गेष्वन्यदायातमस्तीति च कल्पनेत्यर्थः। अज्ञेऽज्ञे इति वीप्सा वा॥ ११॥

अज्ञेष्वसत्स्वभावोग्रसंसारगणगर्भिणी।
ज्ञेषु प्रकाशरूपैव सकलैकात्मिका सती॥ १२॥

तामेव ज्ञाज्ञयोः कल्पनया चितं पुनर्विभज्याह - अज्ञेष्विति॥ १२॥

अनुभूतिवशान्नित्यमर्कादीनां प्रकाशिनी।
स्वादिनी सर्वभूतानां भाविनी भवभोगिनाम्॥ १३॥

तस्या एव चितो जगत्प्रकाशभोगजन्मनिर्वाहकतामाह - अनुभूतीति। स्वादिनी विषयस्वादने निमित्तभूता। भवभोगिनां जीवानां भाविनी जन्मादौ निमित्तभूता च। आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते इति श्रुतेः॥ १३॥

58761 नास्तमेति न चोदेति नोत्तिष्ठति न तिष्ठति।
58762 न चायाति न वा याति न चेह नच नेह चित्॥ १४॥
58763
58764 अज्ञानां जन्मादिनिमित्तभावेऽपि ज्ञदृशा कूटस्थापरिच्छिन्नैकरूपैव
58765 सेत्याह - नास्तमेतीति॥ १४॥
58766
58767 सैषा चिदमलाकारा स्वयमात्मनि संस्थिता।
58768 राघवेत्थं प्रपञ्चेन जगन्नाम्ना विजृम्भते॥ १५॥
58769
58770 विजृम्भते विवर्तते॥ १५॥
58771
58772 तेजःपुञ्जैर्यथा तेजः पयःपूरैर्यथा पयः।
58773 परिस्फुरति संस्पन्दैस्तथा चित्सर्गविभ्रमैः॥ १६॥
58774
58775 चिद्विवर्तोऽपि परमार्थदृशा चिदेवेत्याशयेन दृष्टान्तावाह -
58776 तेजःपुञ्जैरिति॥ १६॥
58777
58778 तत्स्वभावेन चिन्नाम्ना सर्वगेनोदितात्मना।
58779 प्रकाशेनाप्रकाशेन निरंशेनांशधारिणा॥ १७॥
58780
58781 स्वतःशुद्धस्याप्यविद्यया सर्गविभ्रमैः परिस्फुरणमेव सर्गकर्तृत्वं
58782 नान्यादृशमिति दर्शयितुं तदुपयोगिनी द्वे रूपे आह - तदिति। स्वभावेन
58783 चिन्नाम्ना। व्यवहारतः सर्वगेन। परमार्थतः प्रकाशेन। नाहं जानामीति
58784 व्यवहारादप्रकाशेन। एवमग्रेऽपि॥ १७॥
58785
58786 स्वयं स्वकलनाभोगादनन्तं पदमुज्झता।
58787 अहमस्मीति भावेन गच्छता ज्ञपदं शनैः॥ १८॥
58788
58789 स्वकलना अविद्यायां स्वप्रतिबिम्बस्तल्लक्षणादाभोगात्कृत्रिमवेषात्। अनन्तं
58790 पदमपरिच्छिन्नस्वरूपमुज्झतेवाप्रतिसंदधानेन। अज्ञपदं जीवताम्॥ १८॥
58791
58792 नानातायां प्ररूढायामस्यां संसृतिपूर्वकम्।
58793 भावाभावग्रहोत्सर्गपदे स्थितिमुपागते॥ १९॥
58794
58795 इदमस्ति इदं नास्तीति भावाभावौ। इदं ग्राह्यमिदं
58796 त्याज्यमितीष्टानिष्टयोर्ग्रहोत्सर्गौ च। तेषां पदे स्थाने देहात्मभावे॥ १९॥
58797
58798 पुर्यष्टकस्पन्दशतैः करोति न करोति च।
58799 उत्सेधमेति भूकोशकोटरस्थोऽङ्कुरोत्करः॥ २०॥
58800
58801 अध्यस्तात्मभावपुर्यष्टकस्पन्दशतैर्विहितनिषिद्धकर्मभिर्भोग्यं
58802 जगत्करोति न करोतीति। वस्तुतः तत्तद्वस्तुभावेन करणप्रकाशने प्रपञ्चयति
58803 - उत्सेधमित्यादिना। उत्सेधमुपचयेनौन्नत्यम्॥ २०॥
58804
58805 व्योम सौषिर्यमादत्ते सर्वमूर्त्यविरोधि यत्।
58806 स्पन्दैकधर्मवान्वातो रसरूपतया जलम्॥ २१॥
58807
58808 भुवोङ्कुरात्मनोत्सेधे भूतान्तरभावेन तदानुकूल्याचरणमाह -
58809 व्योमेति। यदि व्योम सौषिर्यं नादद्यान्निरवकाशोऽङ्कुरो न निर्गच्छेत्। एवं
58810 स्पन्दात्मको वायुराकर्षति येनाङ्कुरो निर्गच्छतीत्याह - स्पन्देति। एवं
58811 जलं स्वरसेनाङ्कुरं स्नेहयतीत्याशयेनाह - रसेति॥ २१॥
58812

58813 दृढोर्वी प्रकटं तेजः स्थितिमन्ति जगन्ति च ।
58814 प्रतिबन्धाभ्यनुज्ञासु कालः कलनया स्थितः ॥ २२ ॥
58815
58816 एवमुर्वी स्वदार्ढ्यदानेनाङ्कुरमनुगृह्णातीत्याशयेनाह - दृढेति ।
58817 तेजश्च रूपदानेन प्रकटीकरोतीत्याशयेनाह - प्रकटमिति । एवं
58818 सर्वजगन्ति तत्तत्कार्याणां स्थित्यविघाताभ्यामनुग्राहकाणीत्याशयेनाह ##-
58819 यवाङ्कुरोद्गमाभ्यनुज्ञानेन चानुग्राहक इत्याह - प्रतिबन्धेति ।
58820 कलनया परिणामकतया ॥ २२ ॥
58821
58822 पुष्पेषु गन्धतां याति शनैः संचितकेसरम् ।
58823 मृत्कोटररसोल्लासः स्थाणुतामेति भूतले ॥ २३ ॥
58824
58825 पूर्वपुण्यादिभावापन्ना चिद्गन्धाद्यात्मना विवर्तत इत्याह - पुष्पेष्विति ।
58826 मृदन्तर्गतरसभावापन्ना चित् स्थाणुतां तरूपचयेन तन्मूलदारुताम् ॥ २३ ॥
58827
58828 मूलस्थाः फलमायान्ति पेलवा रसलेशकाः ।
58829 संनिवेशं व्रजन्त्येता रेखाः पल्लवपालिषु ॥ २४ ॥
58830
58831 मूलस्थरसभावापन्ना च फलभावं याति । त एव रसाः पल्लवपालिषु
58832 प्रविष्टा रेखाः शिरा भूत्वा पत्रादिसंनिवेशं व्रजन्ति ॥ २४ ॥
58833
58834 नवतामनुगृह्णाति शक्रबाणासनेन च ।
58835 यो [योयो नूतनतासंपादनपूर्वकोऽनुग्रहः] यो भवत्यविरतं
58836 संस्थानेन वनेन च ॥ २५ ॥
58837
58838 शक्रबाणासनेनेन्द्रचापेन समामिति शेषः । नवतां वृक्षस्य नूतनतां च
58839 संपादयन्ननुगृह्णाति ॥ २५ ॥
58840
58841 वसन्तमुपतिष्ठन्ति पुष्पपल्लवराशयः ।
58842 निदाघविधिमायान्ति दैवदाहविभूतयः ॥ २६ ॥
58843
58844 तस्या ऋतुरूपेणापि कार्यानुग्राहकत्वं प्रपञ्चयति - वसन्तमित्यादिना ।
58845 दैवस्य सौरस्य तेजसो दाहविभूतयस्तापशक्तयः ॥ २६ ॥
58846
58847 प्रावृट्समयमीहन्ते नीला जलदराशयः ।
58848 शरदं चानुधावन्ति समग्राः फलराशयः ॥ २७ ॥
58849
58850 समग्राः क्षेत्रेषु प्रचुरीभूता धान्यादिफलराशयः ॥ २७ ॥
58851
58852 हेमन्ते हिमहासिन्यो भवन्ति ककुभो दश ।
58853 नयन्त्युपलताम्बु शिशिरे शीतलानिलाः ॥ २८ ॥
58854
58855 न जहाति स्वमर्यादां कालो युगमयीमिमाम् ।
58856 तरङ्गिणीतरङ्गौघलीलया यान्ति सृष्टयः ॥ २९ ॥
58857
58858 संवत्सरयुगादिकालात्मना च तस्याः सर्गादिमर्यादानुग्राहकत्वमाह -
58859 न जहातीति ॥ २९ ॥
58860
58861 नियतिः स्थितिमायाति स्थैर्यचातुर्यकारिणी ।
58862 तिष्ठत्याप्रलयं धीरा धराधरणधर्मिणी ॥ ३० ॥
58863
58864 नियत्यादिरूपेणापि तस्या जगन्मर्यादाव्यवस्थापकत्वमाह - नियतिरिति ।

स्थैर्यचातुर्यकारित्वमेव धरादावुदाहृत्य दर्शयति - तिष्ठतीति -
धरणधर्मिणी सर्वजनाधारस्वभावा ॥ ३० ॥

चतुर्दशविधानीह भूतानि भुवनान्तरे ।
नानाचारविहाराणि नानाविरचनानि च ॥ ३१ ॥

चतुर्दशलोकवासित्वाच्चतुर्दशविधानि भूतानि प्राणिनः ॥ ३१ ॥

पुनःपुनर्विलीयन्ते जायन्ते च पुनःपुनः ।
धारापरम्परा याति विना वारीव बुद्बुदाः ॥ ३२ ॥

भूतानां धारा परम्परा जन्ममरणप्रवाहपरम्परा यात्यपगच्छति
तत्त्वज्ञानेनेति शेषः ॥ ३२ ॥

आयाति याति परितिष्ठति लीलयाटि-
स्वार्थानुपार्जयति धावति जन्मनाशैः ।
उन्मत्तवद्विहितभावनमाहितेहा
मुग्धा कृतान्तविवशा जनता वराकी ॥ ३३ ॥

उक्तमेवार्थं प्रपञ्चयन्नुपसंहरति - आयातीति । ब्रह्माण्डकोटिलक्षणा
तदन्तर्गतप्राणिलक्षणा च शोच्यत्वाद्वराकी जनता विहितभावनं यथा
स्यात्तथा । प्राक्तनसंकल्पवासनारागादिति यावत् । आहितेहा उद्भूतकामा
स्वरूपविचारवार्तानभिज्ञत्वान्मुग्धा उन्मत्तवदिह लोके जन्मभिरायाति
परलोकं याति परितश्च स्थावरादिजन्मभिस्तिष्ठति लीलया भोगकौतुकेन
अतिशयितान् ऐहिकामुष्मिकभोगोपायधनधर्मादिलक्षणान्स्वार्थानुपार्जयति
जन्मनाशैर्धावति संसारे इत्थं भ्रमतीत्यर्थः ॥ ३३ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपायेषु स्थितिप्रकरणे
चिदादित्यस्वरूपवर्णनं नाम षट्त्रिंशः सर्गः ॥ ३६ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे
चिदादित्यस्वरूपवर्णनं नाम षट्त्रिंशः सर्गः ॥ ३६ ॥

सप्तत्रिंशः सर्गः ३७

श्रीवसिष्ठ उवाच ।

इत्थं स्थिरतराकाराः संसारावलयोऽभितः ।
स्वभावाद्ब्रह्मणः सर्वाः पुनरायान्ति यान्ति च ॥ १ ॥

आत्मनोऽनात्मभावोऽयमविद्याकामकर्मभिः ।
बोधादकामान्नैष्कर्म्यात्स्वरूपावस्थितिस्ततः ॥ १ ॥

चित्स्वरूपस्थितिरेव जगत्स्थितिश्चित एव जगद्रूपेणावस्थानादिति वक्तुं
प्रागुक्तमनुवदति - इत्थमिति ॥ १ ॥

स्वतः सर्वमिदं जातमन्योन्यं हेतुतां गतम् ।
अन्योन्यमभिनश्यत्तत्स्वत एव विलीयते ॥ २ ॥

58917 अन्योन्यं हेतुतां गतमिदं जगत्स्वतः स्वाधिष्ठानचैतन्यादेव जातम्।
58918 एवमग्रेऽपि ॥ २ ॥
58919
58920 स्वतोऽस्पन्दोऽपि तु स्पन्दो यथाऽगाधजलोदरे।
58921 तथैवेयमसत्सच्च चिदेव परिदृश्यते ॥ ३ ॥
58922
58923 यथा अगाधजलोदरे जलाव्याप्तदेशाभावाज्जलस्य स्पन्दोऽप्यस्पन्दस्तथेत्यर्थः
58924 ॥ ३ ॥
58925
58926 व्योमन्येव निराकारे निदाघात्सरितो यथा।
58927 लक्ष्यन्ते तद्वदेवेमाश्चित्तत्त्वे सृष्टिदृष्टयः ॥ ४ ॥
58928
58929 सरितो मृगतृष्णाः ॥ ४ ॥
58930
58931 यथा मदवशादात्मा सोऽन्यवत्प्रतिभासते।
58932 तथैव चित्त्वाच्चिद्धातुः स एवाऽस इव स्थितः ॥ ५ ॥
58933
58934 स एव स्वात्मा अन्यवत् अघूर्णमानोऽपि घूर्णमान इव। चिद्धातुश्चित्सारः। असः
58935 अचिदिव ॥ ५ ॥
58936
58937 न चेदं सदसन्नेदं तत्स्थातत्स्थतया चितः।
58938 नातिरिक्तातिरिक्ता च कटकादिषु हेमता ॥ ६ ॥
58939
58940 उक्तार्थं स्थिरयितुं जगतोऽनिर्वचनीयस्वभावतां दर्शयति - न चेति।
58941 सतैव तद्वेषधारणादसत्त्वं दुर्वचनं बाध्यत्वाच्च सत्त्वं
58942 दुर्वचनमित्याशयेनाह - तत्स्थातत्स्थतयेति ॥ ६ ॥
58943
58944 येन शब्दं रसं रूपं गन्धं जानासि राघव।
58945 सोऽयमात्मा परं ब्रह्म सर्वमापूर्य संस्थितः ॥ ७ ॥
58946
58947 ननु ब्रह्मणो जगद्विवर्तः श्रूयते न प्रत्यक्चित इत्याशङ्क्य सैव ब्रह्मेति
58948 दर्शयति - येनेति। येन रूपं रसं गन्धं शब्दान्स्पर्शांश्च
58949 मैथुनान्। एतेनैव विजानाति किमत्र परिशिष्यत ॥ एतद्वै तत् इति काठकश्रुतौ
58950 ब्रह्मण एव प्रत्यगात्मताभिधानादिति भावः ॥ ७ ॥
58951
58952 नानैकत्वादतीतात्तु सर्वगादमलात्मनः।
58953 द्वितीया कलना नास्ति काचिन्नेतरथा क्वचित् ॥ ८ ॥
58954
58955 ननु प्रतीचां नानात्वाद्ब्रह्मणश्चैकत्वात्कथमैक्यमित्याशङ्क्य
58956 नानैकत्वयोर्मिथ्यात्वान्नायं दोष इत्याशयेनाह - नानैकत्वादतीतादिति ॥ ८
58957 ॥
58958
58959 राम भावनादन्यस्य भावाभावाः शुभाशुभाः।
58960 सृष्टयः परिकल्प्यन्तेऽनात्मन्येवाथवात्मनि ॥ ९ ॥
58961
58962 यतोऽन्यस्य वस्तुनो भावाः सद्भावा अभावाः शुभाशुभाः सृष्टयश्च
58963 भावनाद्वासनावशादेव परिकल्प्यन्ते। ताश्च मायिकदृशा
58964 अनात्मभूतमायायामेव। अथवा तत्त्वदृशा आत्ममात्रत्वादात्मन्येव ॥ ९ ॥
58965
58966 यस्मादात्मनो व्यतिरिक्ते वस्तुनि सिद्धे सति तत्रेच्छा प्रवर्तते। यत्र
58967 स्वात्मनो व्यतिरिक्तं न किंचिदपि संभवति तत्रात्मा किमिव
58968 वाञ्छन्किमनुस्मरन्धावतु किमुपैतु ॥ १० ॥

58969
58970 अथवात्मनीति यत्पद्ये पक्षान्तरमुक्तं तद्युक्तिप्रयोजनाभ्यां
58971 गद्यैरुपपादयति - यस्मादित्यादिना | यदा आत्मरूपा सृष्टिरात्मन्येवास्ते
58972 इति पक्षस्तदा आत्मान्या सृष्टिर्नास्त्येवेति फलितम् | इच्छापूर्विका हि सृष्टिः |
58973 सोऽकामयत बहु स्यां प्रजायेय इत्यादिश्रुतेः | नचात्मन आत्मनीच्छासिद्धत्वात्
58974 | नचात्मनोऽन्यत्प्रसिद्धमस्ति यदिच्छन्नात्मा स्रष्टुं प्रवर्तेत |
58975 नचाप्रवर्तमानः कश्चित्स्रष्टुं शक्नोतीत्याशयः | किमुपैतु धावनेन वा
58976 किं फलं प्राप्नोतु || १० ||
58977
58978 अत इदमीहितमिदमनीहितमित्यात्मानं न स्पृशन्ति विकल्पाः | अतो
58979 निरिच्छतायामात्मा न किंचिदपि करोति कर्तृकरणकर्मणामेकत्वात् न
58980 क्वचित्तिष्ठत्याधाराधेययोरेकत्वात् नच निरिच्छस्यात्मनो [१]
58981 नैष्कर्म्यमभिमतम् द्वितीयायाः कल्पनाया अभावात् || ११ ||
58982
58983 ननु नैष्कर्म्यसिद्धिस्तत्फलमस्तु तत्राह - नचेति | निरिच्छेति [निरिच्छति
58984 इति मूले टीकायां च निरिच्छति = अनिच्छे इति क्वचित्पठ्यते] | अनिच्छे
58985 कर्मप्रसिद्धौ नैष्कर्म्यफलं स्यान्नच सास्तीत्याशयेनाह - द्वितीयाया इति
58986 || ११ ||
58987
58988 नेतरा जानासि राम त्वमियं ब्रह्मसंस्थितिः |
58989 सर्वद्वन्द्वविनिर्मुक्तः कर्ता भव गतज्वरः || १२ ||
58990
58991 इतरा उक्तप्रकारेऽभ्योऽन्या साफल्यादिकल्पना न नास्त्येव | इयं हि
58992 ब्रह्मसंस्थितिः | यद्यत्र त्वमितरां जानासि तर्हि सर्वद्वन्द्वविनिर्मुक्तो
58993 गतज्वरोऽपि सन् कर्ता भव नाहं निवारयामीति भावः || १२ ||
58994
58995 अन्यच्च राघव पुनः
58996
58997 पुनः कृत्वा कृत्वा बहुविधमिदं कर्म तरसा
58998 त्वया प्राप्यं किं तद्वद यदुचितं भूतकरणात् |
58999 अकर्तृत्वे वास्था भवतु तव चाप्यागमवतो
59000 भव स्वस्थः स्वच्छः स्तिमित इव निर्वातजलधिः || १३ ||
59001
59002 अज्ञातदशायामपि भौतिकशरीरपरिग्रहणकर्तृत्वे भूतैरेव भूतानि
59003 कृत्वा भौतिकानि फलानि प्राप्तानि नत्वसङ्गोदासीनेनात्मना किं वाच्यं तस्य
59004 प्रबोधदशायां क्रियातत्फलयोरसंभव इति न तत्रास्थोचितेत्याशयेन
59005 गद्योक्तार्थसमर्थनाय पद्यमवतारयति - अन्यच्चेति | द्वितीयं
59006 पुनःशब्दमारभ्य पद्यं बोध्यम् | हे राघव त्वया तरसा
59007 कर्तृत्वाभिनिवेशेन पुनःपुनः कृत्वा कृत्वा भूतकरणात्
59008 विषयभूतैर्देहभूतोपचयादेरन्यत्किं फलं प्राप्यं यत्ते तव
59009 नित्यनिरतिशयानन्दात्मन उचितं फलं स्यादित्यर्थः | अतः
59010 सर्वकर्तृत्वाभिनिवेशं हित्वा स्वस्वरूपोचिते अकर्तृत्व एवास्था भवतु |
59011 एवार्थे वाशब्दः | तदुपपत्तये हेतुगर्भं विशिनष्टि - आगमवत इति |
59012 श्रुतिगुरुवाक्यैरात्मप्रबोधवत इति यावत् | अपिशब्दान्मुख्याधिकारवत्तानुक्ता
59013 समुच्चीयते | अतः स्वच्छः स्वस्थो भवेत्यर्थः || १३ ||
59014
59015 गत्वा सुदूरमपि यत्नवता जवेन
59016 नासाद्यते तदिह येन सुपूर्णतैति |
59017 मत्वेति मा व्रज पदार्थगणान्धिया त्वं
59018 न त्वं त्वमेव परमार्थतया चिदात्मा || १४ ||
59019
59020 विस्तरोक्तमर्थ संक्षिप्योपसंहरति - गत्वेति | येन सुपूर्णता

59021 अपरिच्छिन्नसुखलाभेन पूर्णकामता एति तत्साधनं सुदूरं दिशामन्तमपि
59022 गत्वा भ्रमित्वा अत्यन्तयत्नवतापि नासाद्यत इति मत्वा निश्चित्य त्वं धिया
59023 मनसापि बाह्यपदार्थगणान्मा व्रज। इत्थं क्रियाः सर्वास्त्याजयित्वा स्वस्थान
59024 एव परमपुरुषार्थं दर्शयति - न त्वमिति। न त्वं निरस्तपराग्रूपस्त्वमेव
59025 परमार्थतया दृष्टः पूर्णानन्दचिदात्मा परमपुरुष इत्यर्थः॥ १४॥
59026
59027 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० स्थितिप्रकरणे
59028 उपशमवर्णनं नाम सप्तत्रिंशः सर्गः॥ ३७॥
59029
59030 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे
59031 उपशमवर्णनं नाम सप्तत्रिंशः सर्गः॥ ३७॥
59032
59033
59034 श्रीवसिष्ठ उवाच।
59035
59036 एवं स्थिते तु तज्ज्ञानां यदेतत्कर्तृत्वं दृश्यते सुखदुःखादिषु
59037 योगादिषु वा तदसन्नतु मूर्खाणाम्॥ १॥
59038
59039 असङ्गात्मानभिज्ञस्य मनःसङ्गेन कर्तृता।
59040 ज्ञस्याकर्तृरभोक्तृत्वान्न बन्धोऽस्तीत्युदीर्यते॥ १॥
59041
59042 ननु तत्त्वविदामपि लौकिकेषु शास्त्रीयेषु च कर्मसु कर्तृत्वं दृश्यते
59043 तच्चावश्यमिष्टानिष्टभोक्तृत्वं प्रापयिष्यतीत्यज्ञात्को विशेषस्तत्राह ##-
59044 समाध्यभ्यासपरिपाकभूमिकाभेदेषु वा तज्ज्ञानां तत्त्वविदां
59045 तद्दृश्यमानं कर्म असत् नास्त्येव नतु मूर्खाणां तत्तथेत्ययमेव विशेष
59046 इत्यर्थः॥ १॥
59047
59048 यतः कर्तृत्वं नाम किमुच्यते। यो ह्यन्तस्थाया मनोवृत्तेर्निश्चय
59049 उपादेयताप्रत्ययो वासनाभिधानस्तत्कर्तृत्वशब्देनोच्यते॥ २॥
59050
59051 तदुभयमुपपादयितुं कर्तृत्वरूपं विमृशति - यत इत्यादिना। यो हीति।
59052 शारीरक्रिया न कर्तृता। अबुद्धिपूर्वचेष्टायां करोमीति प्रत्ययादर्शनात्
59053 किंतु मानसी पूर्वपूर्वकर्तृता वासनारागात्मकमनोवृत्तेरुद्भूता
59054 कार्यमिदमिति निश्चयात्मकवृत्तिरूपेण परिणता क्रियाभिधानेत्यर्थः॥ २॥
59055
59056 चेष्टावशात्ताद्दक्फलभोक्तृत्वं वासनानुरूपं स्पन्दते पुरुषः
59057 स्पन्दानुरूपं फलमनुभवति। फलभोक्तृत्वं नाम कर्तृत्वादिति
59058 सिद्धान्तः॥ ३॥
59059
59060 भोक्तृत्वमपि
59061 तदधीनचेष्टावशात्तत्तद्वासनानुरूपफलास्वादगोचरोद्भूतवासनैवेत्याह
59062 - चेष्टावशादिति। यतो वासनानुरूपं स्पन्दते पुरुषः॥ ३॥
59063
59064 तथाच।
59065
59066 कुर्वतोऽकुर्वतो वापि स्वर्गेऽपि नरकेऽपि वा।
59067 यादृग्वासनमेतत्स्यान्मनस्तदनुभूयते॥ ४॥
59068
59069 उक्तेऽर्थे श्लोकमुदाहरति - तथाचेति। स्वर्गे नरकेऽपि वा तदनुभूयत इति
59070 संबन्धः॥ ४॥
59071
59072 तस्मादज्ञाततत्वानां पुंसां कुर्वतामकुर्वतां च कर्तृता नतु

59073 ज्ञाततत्त्वानामवासनत्वात् ॥ ५ ॥
59074
59075 अस्तु वासनैव कर्तृता भोक्तृता च तथापि कथं
59076 ज्ञाज्ञयोर्विशेषसिद्धिस्तत्राह - तस्मादिति ॥ ५ ॥
59077
59078 ज्ञाततत्त्वो हि शिथिलीभूतवासनः कुर्वन्नपि फलं नानुसंदधाति ।
59079 अथच स्पन्दनमात्रं केवलं करोत्यसक्तबुद्धिः संप्राप्तमपि
59080 फलमात्मैवेदं सर्वमेव कर्मफलमनुभवत्यकुर्वन्नपि करोति
59081 मग्नमनाः ॥ ६ ॥
59082
59083 ज्ञे विशेषमुक्तमुपपादयति - ज्ञाततत्त्वो हीति । एवं तस्य
59084 भोक्तृत्वमप्यसदित्येतदुपपादयति - संप्राप्तमपीति । मग्नमना
59085 भोगासक्तचित्तोऽज्ञस्तु अकुर्वन्नपि करोति ॥ ६ ॥
59086
59087 मनो यत्करोति तत्कृतं भवति यन्न करोति तन्न कृतं भवति अतो मन
59088 एव कर्तृ न देहः ॥ ७ ॥
59089
59090 चित्तादेवायं संसार आगतश्चित्तमय एव चित्तमात्रं चित्त एव स्थित इति
59091 विज्ञातम् । विषयश्च सर्वमुपशान्तमभूद्वासनैवेति ज्ञ एवास्तीति ॥ ८ ॥
59092
59093 विज्ञातं विचार्य निर्धारितं प्रागिति शेषः । सर्वो विषयश्च
59094 वृत्तिभेदश्चेत्युभयमुपशान्तं सद्वासनैवाभूत्तदा तदुपहितो ज्ञो जीव
59095 एवास्ति ॥ ८ ॥
59096
59097 आत्मविदां हि तन्मनः परमुपशममागतं मृगतृणाजलमिव
59098 वर्षति जलदे हिमकण इव चण्डातपे विलीनं तुर्यदशामुपागतं स्थितम् ॥
59099 ९ ॥
59100
59101 तेषु जीवेष्वात्मविदां तन्मनः वर्षति जलदे प्रावृषि
59102 मृगतृष्णाजलमिवोपशममागतं सत् चण्डातपे हिमकण इव निलीनं
59103 तुर्यदशामुपागतं सत्तद्भावेनैव स्थितमिति विशेष इत्यर्थः ॥ ९ ॥
59104
59105 नानन्दं न निरानन्दं न चलं नाचलं स्थिरम् ।
59106 न सन्नासन्न चैतेषां मध्यं ज्ञानिमनो विदुः ॥ १० ॥
59107
59108 उक्तमनोदशावर्णनपरं श्लोकमुदाहरति - नानन्दमिति । आनन्दं
59109 विषयसुखविश्रान्तं न । नापि स्वरूपानन्दशून्यम् । अचलं
59110 शिलादिवज्जडावस्थं न । एतेषां उक्तानन्दनिरानन्दचलाचलसदसतां
59111 मध्यं संध्यवस्थारूपं च न किंतु
59112 परिशेषाद्भूमात्मसुखैकरसमित्यर्थः ॥ १० ॥
59113
59114 न वासनामये स्पन्दरसे गज इव पल्वले मज्जति तज्ज्ञो
59115 मूर्खमनोभोगभूमिमेव पश्यति न सत्तत्त्वं ॥ ११ ॥
59116
59117 ज्ञाज्ञयोर्विशेषान्तरमप्याह - न वासनेत्यादिना । न सत्तत्त्वं
59118 परमार्थतत्त्वम् ॥ ११ ॥
59119
59120 तथाचायमत्रापरो दृष्टान्तः । अकुर्वन्नपि श्वभ्रपतनं
59121 शय्यासनगतोऽपि श्वभ्रपातवासनावासिते चेतसि
59122 श्वभ्रपतनदुःखमनुभवति । अपरस्तु कुर्वन्नपि श्वभ्रपतनं
59123 परममुपशममुपगतवति मनसि शय्यासनसुखमनुभवति ।
59124 एवमनयोः शय्यासनश्वभ्रपातयोरेकः श्वभ्रपतनस्याकर्तापि कर्ता

59125 संपन्नो द्वितीयश्च श्वभ्रपतनस्य कर्ताप्यकर्ता
59126 संपन्नश्चित्तवशात्तस्माद्यच्चित्तं तन्मयो भवति पुरुष इति सिद्धान्तः
59127 ॥ १२ ॥
59128
59129 अज्ञमनसो दुर्वासनादुःखमज्जने स्वप्नो दृष्टान्त इत्युक्त्वोपपादयति -
59130 तथाचेत्यादिना। तथाच श्रुतिरपि अथ यत्रैनं घ्नन्तीव जिनन्तीव हस्तीव
59131 विच्छादयति गर्तमिव पतति यदेव जाग्रद्भयं पश्यति तदत्राविद्यया मन्यते
59132 इति। अपरस्तत्त्वज्ञस्तु। उक्तमुपसंहृत्य प्रकृते योजयति - तस्मादिति ॥ १२ ॥
59133
59134 तेन तत्र कर्तुरकर्तुर्वा नित्यमसंसक्तं भवतु चेतो नहि
59135 किंचिदस्त्यात्मतत्त्वव्यतिरिक्तं यत्र संसक्तिर्भाव्यते। यत्किंचिदिदं
59136 जगद्गतं तत्सर्वं शुद्धचित्तत्वादाभासमवेहि ॥ १३ ॥
59137
59138 भवतु चेतः। तवेति शेषः। तत्त्वदृशस्तव यत्र संसक्तिः संभाव्यते
59139 तदात्मतत्त्वव्यतिरिक्तं नह्यस्ति ॥ १३ ॥
59140
59141 एवं चास्य ज्ञातज्ञेयस्य पुंसो नामात्मा सुखदुःखानां न गम्य इति
59142 निश्चये जाते नात्मव्यतिरिक्ता आधाराधेयदृष्टयो विद्यन्त इति निश्चये जाते
59143 कर्ता भोक्ता सर्वपदार्थव्यतिरिक्तो वालाग्रसहस्रभागोऽहमिति निश्चये
59144 जाते यत्किंचिदिदं तत्सर्वमहमेवेति वा निश्चये जाते
59145 सर्वसत्त्वावभासकः सर्वगस्तिष्ठाम्येवाहमिति निश्चये जाते नाहं
59146 सुखदुःखानां गम्य इति विगतज्वरतया चित्तवृत्तिर्लीलयैव तिष्ठते
59147 व्यवहारेषु ॥ १४ ॥
59148
59149 नामेत्यवधारणे निपातः। सुखदुःखानामगम्य एवेति निश्चये जाते
59150 इत्यस्योपपादक आधाराधेयदृष्ट्यसत्त्वनिश्चयस्तदुपपादको
59151 देहातिरिक्तवालाग्रमात्रात्मनिश्चयः सर्वाहंभावनिश्चयो वा
59152 तद्विशोधनफलभूतः सर्वगतात्मनिश्चयस्तद्द्वारा प्रागुक्तेनाहं
59153 सुखदुःखानां गम्य इति निश्चये जाते
59154 विगतेष्टानिष्टप्राप्तिपरिहारचिन्ताज्वरतया चित्तवृत्तिरात्मन्येव लीलया
59155 प्रारब्धभोगार्थं लीलां प्रकाशयन्ती व्यवहारेषु तिष्ठते।
59156 प्रकाशनस्थेयाख्ययोश्च इति तङ् ॥ १४ ॥
59157
59158 तज्ज्ञस्य संकटे च मुदितैव केवलं ज्योत्स्नेव भुवनभावमलंकरोति
59159 येन चित्तादृते तु ज्ञः कुर्वन्नप्यकर्ता संपन्नो
59160 मनसोऽलेपकत्वान्नासौ पादपाण्यादिविक्षेपस्य यत्नकृतस्यापि कर्मणः
59161 फलमनुभवति ॥ १५ ॥
59162
59163 अतस्तत्त्वज्ञस्य संकटेष्वपि न दुःखभोक्तृत्वं प्रत्युतानन्द एवेत्याह ##-
59164
59165 एवं मनः सर्वकर्मणां सर्वेहितानां सर्वभावानां सर्वलोकानां
59166 सर्वगतीनां बीजं तस्मिन्परिहृते सर्वकर्माणि परिहृतानि भवन्ति
59167 सर्वदुःखानि क्षीयन्ते सर्वकर्माणि लयमुपयान्ति। मानसेनापि कर्मणा
59168 यत्कृतेनापि ज्ञो नाक्रम्यते न विवशीक्रियते न
59169 रञ्जनामुपैत्यव्यतिरिक्तात् ॥ १६ ॥
59170
59171 मनसः सर्वकार्यमनोबुद्धितद्विषयतद्गतीनां बीजत्वात्तत्यागे
59172 सर्वसंसारपरिहारः सिद्ध इत्याह - एवमिति। सर्वकर्माणि सर्वाश्चेष्टाः
59173 सर्वकर्माणि सर्वाणि पुण्यपापानि लयमुपयान्ति मानसेन सांकल्पिकेन कृते
59174 शारीरिणापि कर्मणा यद्यस्मात् ज्ञो नाक्रम्यते तत्र हेतुर्न वशीक्रियत इति। तत्र
59175 हेतुर्न रञ्जनामुपैतीति। तत्फले रक्तो हि तत्साधनक्रियया स्वसिद्ध्यै
59176 वशीकृत्य प्रवृर्त्यते। प्रवृत्तश्च तत्कृतगुणदोषैराक्रम्यते। कुतः।

59177 अव्यतिरिक्तात् परमार्थतः स्वव्यतिरिक्तस्याभावात् ॥ १६ ॥
59178
59179 यथा बालो मनसा नगरस्य निर्माणं निर्मृष्टं च
59180 कुर्वन्नगरनिर्माणं मनःकृतमकृतमिव लीलयानुभवति
59181 नोपादेयतयासुखदुःखमकृत्रिममिति पश्यति नगरनिर्मथनं च
59182 मनःकृतं कृतमिति पश्यतीति दुःखमपि लीलयानुभवन्नपि न
59183 दुःखमिति पश्यति । एवमसौ परमार्थतः कुर्वन्नपि न लिप्यत एवेति ॥ १७ ॥
59184
59185 कृतस्याप्यकृतत्वे दृष्टान्तमाह - यथेत्यादिना । निर्मृष्टं
59186 निर्मितस्य परिष्कारम् । नगरस्य निर्मथनं प्रविलापनप्रयुक्तां निवृत्तिम् ।
59187 कृतं वास्तवम् । दार्ष्टान्तिके उक्तं योजयति - एवमिति ॥ १७ ॥
59188
59189 सर्वभावेषु हेयोपादेयताभ्यां जगति किं कारणं दुःखस्य न
59190 चोपादेये किंचिदपि संभवति यदविनाशं व्यतिरिक्तं
59191 चात्मनस्तस्मादयमात्माऽकर्ताऽभोक्ताऽतत्त्वतो यदेतत्कर्तृत्वं च
59192 स्वध्यारोप्यते ॥ १८ ॥
59193
59194 इत्थं कर्तृत्वं विचार्य दुःखकारणं विमृशति - सर्वभावेष्विति ।
59195 जगति सर्वभावेषु हेयोपादेयताभ्यां व्यवह्रियमाणेषु दुःखस्य कारणं
59196 किम् । नच हेयं दुःखकारणम् । उपादानपूर्वकत्वाद्धानस्य ।
59197 हेयस्योपादेयत्वाभावादेव ततो दुःखाप्रसक्तेरिति परिशेषादुपादेयं
59198 दुःखहेतुरिति स्यात् । नच तदपि संभवतीत्याह - नचोपादेय इति ।
59199 नश्वरादुपादेयाद्दुःखमविनाशिनो विनाशिनो वा । नाद्यः । विनाशिनह्
59200 स्वरक्षणे असमर्थस्य क्वापि कारणत्वायोगात् । न द्वितीयोऽपि । नह्युपादेये जगति
59201 तादृशं किंचिदपि संभवति यदविनाशि । अतोऽन्यदार्तम् इति श्रुत्या
59202 आत्मव्यतिरिक्तस्य विनाशित्वोक्तेरित्याशयेन हानोपादानतायोग्यत्वादुपादेयस्य
59203 तद्व्यतिरिक्तस्य नश्वरत्वादित्यर्थः । एवं भोग्यदुःखस्य
59204 कारणानिरूपणादप्यात्मा अकर्ता अभोक्ता चेति सिद्धमित्याह - तस्मादिति ।
59205 चकारो भिन्नक्रमः । एतच्च कर्तृत्वं यदनुभूयते तत् अतत्त्वतः सु
59206 अध्यारोप्यते इत्यन्वयः ॥ १८ ॥
59207
59208 आवश्यकं तत्सम्यग्दर्शनमोहान्न वस्तुत इति
59209 यथाभूतवस्तुविचारणात्कर्तृत्वभोक्तृत्वे न स्तः ।
59210 इन्द्रियेन्द्रियार्थद्वेषाभिलाषादिका दृष्टयस्तद्दृष्टीनां दृश्यन्ते
59211 नातद्दृष्टीनाम् ॥ १९ ॥
59212
59213 आवश्यकं जीवता अनिवार्यम् । नहि देहभृता शक्यं त्यक्तुं
59214 कर्माण्यशेषतः इति न्यायादित्यर्थः । आवश्यकत्वं कुतस्तत्राह - इन्द्रियेति
59215 । इन्द्रियैरिन्द्रियार्थेषु द्वेषाभिलाषादिकैस्तन्निमित्तैः
59216 पुण्यपापादृष्टैश्चायस्ता विवशीक्कृता बुद्धिर्येषामज्ञानां
59217 [मूलस्थस्यैव दृष्टिपदस्यायं पर्यायार्थः] तेषामेवेत्यर्थः ॥
59218 १९ ॥
59219
59220 मोक्षोऽस्ति न संसारे स्वसंसक्तमनसामिहासंसक्तमनसां
59221 त्वेतत्सर्वमेवास्ति ॥ २० ॥
59222
59223 अत एव तत्त्वविदां न मोक्षकल्पनाप्यस्तीत्याह - मोक्ष इति ।
59224 स्वस्मिन्पूर्णात्मन्येव संसक्तं मनो येषाम् । इह
59225 स्वात्मन्यसंसक्तमनसामभ्यासदशापन्नानां तु दृष्ट्या
59226 एतद्बन्धमोक्षादि सर्वमेवास्ति ॥ २० ॥
59227
59228 यथास्थितं ज्ञस्य केवलमात्मतत्त्वमेवोल्लसति तद्द्वित्वैकत्ववादिसिद्धे

59229 द्वित्वैकत्वे करोति सत्त्वासत्त्वे करोति शक्तिजालादभिन्नां सर्वशक्तितां च
59230 दर्शयति तस्य ॥ २१ ॥
59231
59232 ज्ञस्य दृशा तर्हि किमस्ति तदाह - यथास्थितमिति । कथं तर्हि तस्य
59233 व्यवहारसिद्धिरिति
59234 चेत्परदृष्टिप्रसिद्धद्वित्वैकत्वादेस्तात्कालिकेनाभ्युपगममात्रेणेत्याह -
59235 तद्द्वित्वैकत्वेति । तदात्मतत्त्वमेव तस्य तत्त्वज्ञस्य जीवनादिव्यवहारसिद्धये
59236 द्वित्वैकत्ववादिदृष्टिसिद्धे द्वित्वैकत्वे तत्कालं करोति ॥ २१ ॥
59237
59238 न बन्धोऽस्ति न मोक्षोऽस्ति नाबन्धोस्ति न बन्धनम् ।
59239 अप्रबोधादिदं दुःखं प्रबोधात्प्रविलीयते ॥ २२ ॥
59240
59241 फलितार्थं पद्येनाह - न बन्ध इति । बन्धनं बन्धकारणं
59242 कामकर्मादि ॥ २२ ॥
59243
59244 संकल्पिता जगति मोक्षमतिर्मुधैव
59245 संकल्पिता जगति बन्धमतिर्मुधैव ।
59246 संत्यज्य सर्वमनहंकृतिरात्मनिष्ठो
59247 धीरो धिया व्यवहरन्भुवि राम तिष्ठ ॥ २३ ॥
59248
59249 उक्तां पूर्णात्मनिष्ठामुपसंहरन् रामायोपदिशति - संकल्पितेति ।
59250 स्पष्टोऽर्थः ॥ २३ ॥
59251
59252 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मो० स्थितिप्रकरणे
59253 उपशमवर्णनं नाम अष्टत्रिंशः सर्गः ॥ ३८ ॥
59254
59255 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे
59256 उपशमवर्णनं नाम अष्टत्रिंशः सर्गः ॥ ३८ ॥
59257
59258
59259 एकोनचत्वारिंशः सर्गः ३९
59260
59261 श्रीराम उवाच ।
59262
59263 भगवन्नेवं स्थिते परे ब्रह्मण्येव विद्यमाने कुत
59264 एवाभित्तिचित्ररूपायाः सृष्टेरगम इति कथय महात्मन् ॥ १ ॥
59265
59266 ब्रह्मणः सर्वशक्तित्वं रामव्यामोहविस्तरः ।
59267 तद्बोधाय वसिष्ठस्य विमर्शादीह कीर्त्यते ॥ १ ॥
59268
59269 अज्ञदृष्टावेव स्थितो रामो गुरुवचनविश्वासात्परोक्षतयैव पूर्णतास्थितिं
59270 पर्यालोच्य विरोधं मन्यमानः शङ्कते - भगवन्निति । एवं
59271 त्वदुक्तरीत्या बन्धमोक्षादेरसंभवे स्थिते सति ॥ १ ॥
59272
59273 श्रीवसिष्ठ उवाच
59274
59275 राजपुत्र ब्रह्मतत्त्वमेवेदमावर्तते यस्मात्सर्वशक्ति तत्तस्मात्सर्वाः
59276 शक्तयो ब्रह्मणि दृश्यन्ते ॥ २ ॥
59277
59278 किमसावज्ञदृष्टाववस्थितः शङ्कते उताभिज्ञतां
59279 कांचित्प्राप्तोऽन्तरालवर्ती सन्निति परीक्षितुं वसिष्ठः
59280 सर्वशक्तितावादाभ्युपगमेन परिहरति - राजपुत्रेत्यादिना । आवर्तते

59281 निवर्तते। दृश्यन्ते कार्यलिङ्गैरनुमीयन्ते ॥ २ ॥
59282
59283 सत्त्वमसत्त्वं द्वित्वमेकत्वमनेकत्वमाद्यत्वमन्तत्वमिति ॥ ३ ॥
59284
59285 तथाचाशक्तानामेव विरोधो न सर्वशक्तेरित्यभिप्रेत्योदाहरति -
59286 सत्त्वमसत्त्वमित्यादि ॥ ३ ॥
59287
59288 तच्च नान्यत्। यथा जलराशेर्जलाशय उल्लासप्रफुल्लासेन नानाकारतां
59289 [नानाकारतादिति पाठः] दर्शयन्प्रकटतां गच्छति ॥ ४ ॥
59290
59291 यथा जलराशेः समुद्रस्य जलाशयो जलपूर उल्लासेन चन्द्रोदयनिमित्तकेन
59292 स्वाविर्भाविण प्रफुल्लतीति प्रफुल्। फुल्ल विकसने क्विप् [संहितायां हलो
59293 यमाम् इत्यनेन मध्यवर्तिललोप इति ज्ञेयम्]। विकस्वरः सन्। लासेन
59294 तरङ्गनृत्येन ॥ ४ ॥
59295
59296 तथा चिद्धनश्चित्तं चित्त्वाच्च सर्वाः शक्तीः
59297 कर्ममयीर्वासनामयीर्मनोमयीश्चिनोति दर्शयति बिभर्ति जनयति
59298 क्षिपयति चेति ॥ ५ ॥
59299
59300 चित्तं चित्तोपाधिकं जीवभावम्। तस्यापि चिदाभासरूपस्य चित्त्वाच्च।
59301 चिनोत्येकैकशः संचिनोति। संचितांश्च फलमुखेन दर्शयति -
59302 उपभोगैर्बिभर्ति पुनस्तिरोभावेन क्षिपयति ॥ ५ ॥
59303
59304 सर्वेषामेव जीवानां सर्वासामभितो दृशाम्।
59305 समग्राणां पदार्थानामुत्पत्तिर्ब्रह्मणोऽनिशम् ॥ ६ ॥
59306
59307 उक्तेऽर्थे श्लोकावुदाहरति - सर्वेषामेवेति ॥ ६ ॥
59308
59309 लोकात्परादुपायान्ति तस्मिंश्चित्त्वाद्विशन्त्यलम्।
59310 तन्मया एव सततं तरङ्गा इव सागरे ॥ ७ ॥
59311
59312 पराल्लोकात्परमात्मनः ॥ ७ ॥
59313
59314 श्रीराम उवाच।
59315
59316 भगवंस्तवातिगहनेयं वचनव्यक्तिर्न खल्वद्य
59317 वाक्यार्थमवगच्छामि ॥ ८ ॥
59318
59319 एवं शक्तिवादेन समाधीयमानोऽपि रामो वह्नौ शैत्यशक्तिमिव जले
59320 दहनशक्तिमिव विरुद्धां चिति जाड्यशक्तिं अदृश्ये दृश्यताशक्तिं नित्ये
59321 अनित्यताशक्तिं च ब्रह्मण्यसंभावयन् शङ्कते - भगवन्नित्यादिना।
59322 वचनव्यक्तिर्वाक्यार्थावगतिः। अतिगहना दुःसंपादा विरोधसत्त्वादित्यर्थः ॥
59323 ८ ॥
59324
59325 क्व किलातीतमनःषष्ठेन्द्रियवृत्ति ब्रह्मतत्त्वं क्व भङ्गुरेयं तज्जा
59326 पदार्थश्रीरिति वचनरचना। यदि चायमारम्भो ब्रह्मण
59327 आपतितस्तदनेन तत्सदृशेनैव भवितव्यम् ॥ ९ ॥
59328
59329 विरोधानेव दर्शयति - क्व किलेति। वचनरचना नामसृष्टिः। आरम्भो
59330 रूपसृष्टिः। सदृशेनैव भवितव्यं नतु विरुद्धेनेत्यर्थः ॥ ९ ॥
59331
59332 यो यस्माज्जायते स तत्सदृश एव भवति ॥ १० ॥

59333
59334 भवति लोके इति शेषः ॥ १० ॥
59335
59336 यथा दीपाद्दीपः पुरुषात्पुरुषः सस्यात्सस्यम् ॥ ११ ॥
59337
59338 यतो निर्विकाराद्यदागतं निर्विकारेणैवानेन भवितव्यम् ॥ १२ ॥
59339
59340 अथैतद्व्यतिरिक्तं चिदात्मनस्तन्निष्कलङ्कस्य परमेश्वरस्य येयं
59341 कलङ्कापत्तिरित्याकर्ण्य भगवान् ब्रह्मर्षिरुवाच [एतदग्रे
59342 श्रीवसिष्ठ उवाचेति क्वचित् पठ्यते] ॥ १३ ॥
59343
59344 अथशब्दो यदीत्यर्थे । तत्तर्हि निष्कलङ्कस्य परमेश्वरस्य या
59345 जगद्भावापत्तिस्त्वयोक्ता इयं कलङ्कापत्तिरुक्ता स्यादित्यर्थः ॥ १३ ॥
59346
59347 ब्रह्मैवेदं स्थितं नाम मलमस्तीह नानघ ।
59348 तरङ्गौघगणैरम्भः सिन्धौ स्फुरति नो रजः ॥ १४ ॥
59349
59350 तत्त्वदृशा वसिष्ठो जगतश्चिद्भावमेवमविकारतां च पश्यन्समाधत्ते
59351 - ब्रह्मैवेदमिति ॥ १४ ॥
59352
59353 द्वितीया कल्पनैवेह न रघूद्वह विद्यते ।
59354 ब्रह्ममात्रादृते वह्नावौष्ण्यमात्रादृते यथा ॥ १५ ॥
59355
59356 श्रीराम उवाच ।
59357
59358 निर्दुःखं ब्रह्म निर्द्वन्द्वं तज्जं दुःखमयं जगत् ।
59359 अस्पष्टार्थमिदं ब्रह्मन्न वेद्मि वचनं तव ॥ १६ ॥
59360
59361 अज्ञदृष्टावेव स्थितो रामः सर्वथा आनन्दैकरसस्वभावे
59362 तद्विरुद्धदुःखजगद्रूपता ब्रह्मणो दुर्वचैवेति प्रत्यवतिष्ठते -
59363 निर्दुःखमिति ॥ १६ ॥
59364
59365 श्रीवाल्मीकिरुवाच ।
59366
59367 इत्युक्ते तत्र रामेण चिन्तयामास चेतसा ।
59368 वसिष्ठो मुनिशार्दूलो राघवस्योपदेशने ॥ १७ ॥
59369
59370 एवं निरुत्तरीकृतस्य वसिष्ठस्य रामप्रबोधनोपायचिन्तां वाल्मीकिर्दर्शयति
59371 - इत्युक्ते इत्यादिना ॥ १७ ॥
59372
59373 परं विकासमायाता नास्य तावदियं मतिः ।
59374 किंचिन्निर्मलतां प्राप्ता प्रोह्यते चेह वस्तुनि ॥ १८ ॥
59375
59376 यो व्युत्पन्नमनास्तस्य ज्ञातज्ञेयस्य धीमतः ।
59377 मोक्षोपायगिरां पारं प्रयातस्य विवेकतः ॥ १९ ॥
59378
59379 यः पुरुषो व्युत्पन्नमना जगतो जडभावं विहाय चिदेकरसतां द्रष्टुं
59380 समर्थ इति यावत् ॥ १९ ॥
59381
59382 न कश्चित्कस्यचिद्दोषो नास्ति विद्यात्मनि ह्यलम् ।
59383 यावन्नोक्तं न विश्रान्तिं तावदेत्येष राघवः ॥ २० ॥
59384

59385 तस्य दृशा कस्यचिद्वस्तुनः कश्चिदपि दोषो विरोधो नास्ति। यतो
59386 जगद्विरुद्धरूपं विद्यात्मनि क्वचिदपि नास्ति। अलं सम्यक् यावन्नोक्तं
59387 नोपदिष्टमस्माभिस्तावदेव राघवो विश्रान्तिं नैति न प्राप्नोति।
59388 अतोऽवश्यमुपदेष्टव्य इत्यर्थः ॥ २० ॥
59389
59390 अर्धव्युत्पन्नबुद्धेस्तु नैतद्व्यक्तं हि शोभते।
59391 दृश्यानया भोगदृशा भावयन्नेष नश्यति ॥ २१ ॥
59392
59393 परंतु अर्धव्युत्पन्नदृष्टेरेतत् प्रागुक्तं सर्वं ब्रह्मेत्युपदेशनं न
59394 शोभते। कुतः। यत एषोऽर्धव्युत्पन्नो दृश्यान्यानयत्युपस्थापयति
59395 संजीवयतीति वा दृश्याना। अनितेः क्विपि आपं चैवं हलन्तानाम् इति टापू।
59396 तथाविधया भोगदृशा सदैव अर्थाद्दृश्यान्येव भावयन्सन्नश्यति।
59397 तत्त्वबोधाद्भ्रश्यतीति यावत् ॥ २१ ॥
59398
59399 परां दृष्टिं प्रयातस्य भोगेच्छा नाभिजायते।
59400 सर्वं ब्रह्मेति सिद्धान्तः काले नामास्य युज्यते ॥ २२ ॥
59401
59402 कस्य तर्हि तादृशोपदेशो युज्यते तमाह - परामिति। सिद्धान्तः
59403 परिनिष्ठितोपदेशः ॥ २२ ॥
59404
59405 आदौ शमदमप्रायैर्गुणैः शिष्यं विशोधयेत्।
59406 पश्चात्सर्वमिदं ब्रह्म शुद्धस्त्वमिति बोधयेत् ॥ २३ ॥
59407
59408 कथं तर्ह्यर्धव्युत्पन्न उपदेश्यस्तत्राह - आदाविति ॥ २३ ॥
59409
59410 अज्ञस्यार्धप्रबुद्धस्य सर्वं ब्रह्मेति यो वदेत्।
59411 महानरकजालेषु स तेन विनियोजितः ॥ २४ ॥
59412
59413 प्रबुद्धबुद्धेः प्रक्षीणभोगेच्छस्य निराशिषः।
59414 नास्त्यविद्यामलमिति युक्तं वक्तुं महात्मनः ॥ २५ ॥
59415
59416 अपरीक्ष्य च यः शिष्यं प्रशास्त्यतिविमूढधीः।
59417 स एव नरकं याति यावदाभूतसंप्लवम् ॥ २६ ॥
59418
59419 अत्त्वज्ञ एवानधिकार्युपदेशे प्रवर्तते तस्य शिष्यप्रतारकस्य युक्तो नरकपात
59420 इत्याशयेनाह - अपरीक्ष्येति। एवकारो भिन्नक्रमः। स यात्येवेति ॥ २६ ॥
59421
59422 इति संचिन्त्य भगवानज्ञानतिमिरापहः।
59423 तमुवाच मुनिश्रेष्ठो वसिष्ठो भूमिभास्करः ॥ २७ ॥
59424
59425 श्रीवसिष्ठ उवाच।
59426
59427 कलङ्ककलना ब्रह्मण्यस्ति नास्तीति वानघ।
59428 सिद्धान्तकाले वक्तव्यं स्वयं ज्ञास्यसि राघव ॥ २८ ॥
59429
59430 स्वयमेव ज्ञास्यसि। यदि न ज्ञास्यसि तर्हि सिद्धान्तकाले वक्तव्यं
59431 नाधुनेत्यर्थः ॥ २८ ॥
59432
59433 ब्रह्म सर्वशक्ति सर्वव्यापि सर्वगतं सर्वोहमेवेति ॥ २९ ॥
59434
59435 सांप्रतमर्धव्युत्पन्नयोग्यं ब्रह्मणः प्रागुक्तसर्वशक्तित्वादि प्रतीचः
59436 सर्वाहंभावदर्शनं च प्रथममुपदिशति - ब्रह्म सर्वशक्तीति ॥ २९ ॥

59437
59438 यथेन्द्रजालिनः पश्यसि चित्रा मायया क्रिया जनयन्तः सदसत्तां
59439 नयन्त्यसच्च सत्तां नयन्ति तथैवात्मा अमायामयोऽपि मायामय इव
59440 परम ऐन्द्रजालिको घटं पटं करोति पटं च घटं करोति उपले
59441 लतां जनयति मेरौ कनकतटे नन्दनवनमिव लतायामुपलमुत्पादयति
59442 कल्पपादपेषु रत्नस्तबकमिव व्योम्नि काननमध्यारोपयति ॥ ३० ॥
59443
59444 माययैवास्य सर्वशक्तिता प्रतीचः सार्वात्म्यं चेति प्रपञ्चयति -
59445 यथेन्द्रजालिन इत्यादिना। असंभावितसंभावनाय लोकशास्त्रप्रसिद्धं
59446 दृष्टान्तमाह - कनकतटे इति। यद्वद्देवशक्त्या असंभावितान्यपि
59447 नन्दनवनरत्नस्तबकादीनि संभाव्यन्ते तद्वदात्मशक्त्यापि संभाव्यतामिति
59448 भावः ॥ ३० ॥
59449
59450 गन्धर्व उद्यानमिव तस्मिन् जगति भविष्यति गगने कल्पनया नगरतां
59451 जनयति नष्टच्छायाञ्जनमिव व्योम धरातलं नयतीति ॥ ३१ ॥
59452
59453 वस्तुव्यत्यय इव देशकालव्यत्ययोऽपि मायाशक्त्यैव संभावनीय
59454 इत्याशयेनाह - भविष्यति गगने इति। व्योम नष्टच्छायाञ्जनं
59455 निरस्तनैल्यकज्जलं कृत्वा धरातलं भूप्रदेशं नयति प्रापयति।
59456 इतिशब्दस्तत्राप्यसंभावितसहस्रसंभावनार्थः ॥ ३१ ॥
59457
59458 गन्धर्वनगरराजगृहे विपुलाङ्गनाजनमिव भूतले व्योम निवेशयति ॥
59459 ३२ ॥
59460
59461 तर्हि किं गगनस्याधो निवेशाय भूतलमन्यतो नयति नेत्याह -
59462 गन्धर्वनगरेति ॥ ३२ ॥
59463
59464 रक्तकुट्टिमेष्वाकाशप्रतिबिम्बमिव किंचिदस्ति जगति भविष्यति वा बभूव
59465 ॥ ३३ ॥
59466
59467 जगति यत्किंचिदस्ति भविष्यति बभूव तत्सर्व रक्तकुट्टिमेषु
59468 पद्मरागमणिमयसौधभावेषु आकाशप्रतिबिम्बमिवाधिष्ठानरक्तिम्ना
59469 रक्तं स्वतोऽसदपि ब्रह्मसत्तया सदिव भवतीत्यर्थः ॥ ३३ ॥
59470
59471 यदीश्वरो व्यक्तरूपो विचित्रतामुपेत्य निदर्शयति ॥ ३४ ॥
59472
59473 तत्र हेतुमाह - यदीश्वर इति। निदर्शयति स्वात्मानमित्यर्थः ॥ ३४ ॥
59474
59475 सर्वमेव सर्वथा सर्वत्र यथा संभवत्येकमेवेह वस्तु विद्यत इति
59476 तस्माद्धर्षामर्षविस्मयानां क्व वाऽवसरो राम ॥ ३५ ॥
59477
59478 एवं चैकमेव वस्तु सर्वथा सर्वं भवतीति नासंभावना
59479 हर्षामर्षादयश्च युक्ता इत्याह - सर्वमेवेति ॥ ३५ ॥
59480
59481 समतयैव सततं धृतिमता स्थातव्यम् ॥ ३६ ॥
59482
59483 एवमसंभावनां रामस्य निरस्य प्रागुक्तसमतास्थितिमेव विधत्ते -
59484 समतयैवेति ॥ ३६ ॥
59485
59486 विस्मयस्मयसंमोहहर्षामर्षविकारिताम्।
59487 समतावलितस्तज्ज्ञो न कदाचन गच्छति ॥ ३७ ॥
59488

59489 तदैव हर्षदिरात्यन्तिकक्षय इत्याशयेन श्लोकमुदाहरति - विस्मयेति || ३७ ||
59490
59491 अपर्यवसाने देशकालवति चित्रा हि जगति युक्तयो दृश्यन्ते || ३८ ||
59492
59493 अपर्यवसाने समताया इति शेषः | युक्तयो दृश्यरजनात्मिका दृश्यन्ते || ३८ ||
59494
59495 एताश्च युक्तीर्नामासावात्मा यत्नेन रचनां करोति न चोत्पन्नां
59496 तिरस्कारोति सागर इव वीचीः || ३९ ||
59497
59498 सामग्रीयुक्तावस्थायुक्तिः फलावस्थारचनेति प्रवृत्तिनिमित्तभेदाद्युक्तिः
59499 रचनां करोतीति सामानाधिकरण्यम् | अयमात्मा न तिरस्करोति || ३९ ||
59500
59501 किं तर्हि क्षीर इव घृतं घट इव मृदि पट इव तन्तुषु वट इव
59502 धानायात्मन्येव स्थिताः शक्तयः प्रकटतामागता
59503 व्यवह्रियन्तेऽविरचितमेव तरङ्गवत् || ४० ||
59504
59505 किं तर्ह्यनेन प्रकटतामागताः शक्तयो व्यवह्रियन्ते इति कथंचिद्योज्यम् |
59506 इयं च व्यवहारदृष्टिः कल्पनैव परमार्थतस्तु अविरचितमेव जगत् || ४० ||
59507
59508 नात्र कश्चित्कर्ता न भोक्ता न विनाशमेति || ४१ ||
59509
59510 नात्र कर्तेत्यादि स्पष्टम् || ४१ ||
59511
59512 केवलमात्मतत्त्वे साक्षिणि निरामये समतयात्मनि नित्यमसंक्षुब्धे
59513 तिष्ठति सत्येवं संपद्यते || ४२ ||
59514
59515 तादृशेऽपि परमार्थे सति जगत्संपत्तौ दृष्टान्तप्रदर्शकौ
59516 श्लोकाववतारयति - सत्येव(?)संपद्यत इति || ४२ ||
59517
59518 सति दीप इवालोकः सत्यर्क इव वासरः |
59519 सति पुष्प इवामोदः स्वतः संपद्यते जगत् || ४३ ||
59520
59521 श्लोकौ स्पष्टौ || ४३ ||
59522
59523 आभासमात्रमेवेदं परिदृश्यत एव च |
59524 स्पन्दः समीरणस्येव न सन्नासदवस्थितम् || ४४ ||
59525
59526 न सन्नासदिति | अनिर्वचनीयमित्यर्थः || ४४ ||
59527
59528 निर्दोषवदेव जागतीनां दृष्टीनां परमार्थतो भगवान्स्थितो
59529 विनष्टानां पुनः कर्ता कृतानां वा नाशयिता स केवलं
59530 कदाचित्प्रकटाः कदाचिदल्पप्रकटाः कदाचिदप्रकटास्तारका इव
59531 कुसुमराशयः || ४५ ||
59532
59533 एवं च स्वसंनिधिमात्राज्जायमानजगद्दोषैरलिप्यमान एवात्मा जगतः
59534 कर्तेव हर्तेव नियन्तेव नभ इव तारकाकुसुमराशीनां भवतीत्याह -
59535 निर्दोषवदेवेत्यादिना | केवले नभसि तारकाः कुसुमराशय इव
59536 कदाचित्प्रकटास्तस्मिन्भवन्तीति सर्वत्र शेषः || ४५ ||
59537
59538 नश्यतीह हि तद्वस्तु नात्मभूतं यदात्मनः |
59539 कथं नश्यति तद्वस्तु स्वात्मभूतं यदात्मनः || ४६ ||
59540

59541 इत्थं चासतो जगतः असत्तात्मको नाशः स्वत एव सत्तात्मिका उत्पत्तिः स्थितिश्च
59542 ब्रह्मसत्तैवेति विभागे फलितमाह - नश्यतीत्याविसार्धश्लोकद्वयेन ॥ ४६ ॥
59543
59544 जायते नैव तद्वस्तु नात्मभूतं यदात्मनः ।
59545 जायते चैव तद्वस्तु स्वात्मभूतं यदात्मनः ॥ ४७ ॥
59546
59547 जायत इत्येतत्स्थितेरप्युपलक्षणम् ॥ ४७ ॥
59548
59549 कथं तज्जायते तस्मात्स्वात्मभूतं यदात्मनः ॥ ४८ ॥
59550
59551 तर्हि किमात्मा जन्यो नेत्याह - कथमिति ॥ ४८ ॥
59552
59553 तस्मात्सम्यग्ज्ञानवशाद्ब्रह्मणः सर्वपदार्थानामागमः ॥ ४९ ॥
59554
59555 आत्मसत्ताया जगत्यध्यासो जगतो जन्म नात्मनो
59556 भेदाभावादित्याशयेनोक्तमुपसंहरति - तस्मादिति ।
59557 सम्यग्ज्ञानवशात्परमार्थसत्यचित्स्वरूपबलात् । आगमोऽवतारः उत्पत्तिरिति
59558 यावत् ॥ ४९ ॥
59559
59560 अवतीर्णानां च तेषामवतरणसमकालमेवाविद्योदेति तत्त्वज्ञानं
59561 दृढतामेति तदनु शतसहस्रस्कन्धो
59562 विचित्रशुभाशुभफलभरफलितो भूरिशाखः स्फारतामेति
59563 संसारद्रुमः ॥ ५० ॥
59564
59565 अस्तु पदार्थानामवतारस्तैरात्मनः कथं संसारप्राप्तिरिति तद्दर्शयति -
59566 अथतीर्णानामिति । अविद्यात्र तदभिमानः । तत्तौ अज्ञानं अभिमानलक्षणं
59567 कालेन दृढतामेति ॥ ५० ॥
59568
59569 आशामञ्जरिताकृतिं विफलितं दुःखादिभिर्दारुणैर्भोगैः पल्लवितं
59570 जराकुसुमितं तृष्णालताभासुरम् ।
59571 संसाराभिधवृक्षमात्मनिगडं छित्त्वा विवेकासिना मुक्तस्त्वं
59572 विहरेह वारणपतिः स्तम्भादिवोन्मोचितः ॥ ५१ ॥
59573
59574 संसारद्रुममेव निर्वर्ण्य तदुच्छेदोपायमाह - आशेति ।
59575 आशाभिर्मञ्जरिता संजातमञ्जरीका आकृतिर्यस्य दुःखादिभिर्विविधं
59576 फलितम् । प्रकृत्या चारुरित्यादिवदभेदे प्रकृत्यादिभ्य उपसंख्यानम् इति
59577 तृतीया । लताः शाखाः वल्ल्यश्च । आत्मनो निगडं बन्धस्थानम् । शिष्टं
59578 स्पष्टम् ॥ ५१ ॥
59579
59580 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मो॰ स्थितिप्रकरणे
59581 सर्वैकत्वप्रतिपादनं नामैकोनचत्वारिंशः सर्गः ॥ ३९ ॥
59582
59583 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे
59584 सर्वैकत्वप्रतिपादनं नामैकोनचत्वारिंशः सर्गः ॥ ३९ ॥
59585
59586
59587 चत्वारिंशः सर्गः ४०
59588
59589 श्रीराम उवाच ।
59590
59591 उत्पत्तिः कथमेतेषां जीवानां ब्रह्मणः पदात् ।
59592 कियती कीदृशी चेति विस्तरेण वद प्रभो ॥ १ ॥

59593
59594 वर्ण्यते जीवभेदानामिहोत्पत्तिरुपाधिभिः ।
59595 तेषां तदुपधीनां च ब्रह्मभावश्च विस्तरात् ॥ १ ॥
59596
59597 प्रश्नः स्पष्टः । यद्यपि जीवभेदानामुत्पत्तिरुत्पत्तिप्रकरणे विस्तरेण वर्णितेति
59598 न पुनः प्रश्नार्हा तथापि करिष्यमाणस्याक्षेपस्योत्थानाय विशेषबुभुत्सया
59599 च पुनः प्रश्नो बोध्यः ॥ १ ॥
59600
59601 श्रीवसिष्ठ उवाच ।
59602
59603 उत्पद्यन्ते यथा चित्रा ब्रह्मणो भूतजातयः ।
59604 यथा नाशं प्रयान्त्येता यथा मुक्ता भवन्ति हि ॥ २ ॥
59605
59606 अत एव वसिष्ठः स्ऽम्क्षिप्य तत्समाधिं प्रतिजानीते - उत्पद्यन्ते
59607 इत्यादिद्वाभ्याम् ॥ २ ॥
59608
59609 यथा च परिवर्धन्ते तिष्ठन्त्यन्तर्हिता यथा ।
59610 संक्षेपेण महाबाणो शृणु वक्ष्यामि तेऽनघ ॥ ३ ॥
59611
59612 ब्राह्मी चिच्छक्तिरमला कल्पयन्ती यदृच्छया ।
59613 सर्वशक्तिः स्वयं चेत्यं भवत्याकलनात्मकम् ॥ ४ ॥
59614
59615 कल्पनाबीजप्राक्तनवासनोद्बोधस्यानियतरूपताप्रदर्शनाय यदृच्छयेति ।
59616 भाविदेहाद्याकारस्येवत्स्फुरणमाकलना तदात्मकम् ॥ ४ ॥
59617
59618 कलनाद्घनतामेत्य यत्किंचिदपि सा स्वयम् ।
59619 संकल्पयति पश्चात्तत्तत्तामेति मनःपदम् ॥ ५ ॥
59620
59621 तस्यैव सम्यगहंभावेन स्फुरणं घनतामेत्य प्राप्य सा घनतैव मनो
59622 जीवोपाधिश्चेत्याशयेनाह - मन इति ॥ ५ ॥
59623
59624 मनःसंकल्पमात्रेण गन्धर्वपुरवत्क्षणात् ।
59625 तनोतीदमसद्दृश्यं ब्राह्मीं स्थितिमिव त्यजत् ॥ ६ ॥
59626
59627 ब्राह्मीं स्थितिं दृग्रूपतां दृश्याहंकारादिकल्पनया त्यजदिव ॥ ६ ॥
59628
59629 चित्स्वरूपं परिकचच्छून्यमेवावतिष्ठते ।
59630 यत्तद्दृश्यं स्थितं तत्स्याद्दृश्यमाकाशमेव तत् ॥ ७ ॥
59631
59632 ततः किं वृत्तं तदाह - चित्स्वरूपमिति । परितः कचत् स्वप्रकाशमपि
59633 चित्स्वरूपं पराग्दृष्ट्या दृश्यमानं शून्यं
59634 रिक्तघटोदरसदृशमेवावभासते । तदवस्थया स्थितं तादृग्रूपमेव
59635 सर्वजनदृश्यं तत्प्रसिद्धमाकाशमित्युच्यत इत्यर्थः ॥ ७ ॥
59636
59637 कृत्वा पद्मजसंकल्पं रूपं पश्यति पद्मजम् ।
59638 ततो जगत्कल्पयति सप्रजापतिपूर्वकम् ॥ ८ ॥
59639
59640 तस्मिन्नाकाशे चतुर्मुखादिस्थूलदेहस्य भुवनानां च कल्पनां दर्शयति ##-
59641
59642 चतुर्दशविधानन्तभूतजातसघुंघुमा ।
59643 सृष्टिरेवमियं राम चित्तनिर्मितिमागता ॥ ९ ॥
59644

59645 चित्तमात्रमयी शून्या व्योममात्रशरीरिका।
59646 संकल्पमात्रनगरी भ्रान्तिमात्रात्मिका सती॥ १०॥
59647
59648 इत्थं चोपाध्युत्पत्तेर्मिथ्यात्वे तत्प्रयुक्ता जीवोत्पत्तिः सुतरां
59649 मिथ्येत्याशयेनाह - चित्तमात्रेति॥ १०॥
59650
59651 इह काश्चिन्महामोहा भूतानां जातयः स्थिताः।
59652 काश्चिदभ्युदितज्ञानाः काश्चिन्मध्ये स्खलन्ति हि॥ ११॥
59653
59654 तत्र शास्त्राधिकारिदौर्लभ्यप्रदर्शनाय जीवांस्त्रिधा विभजते - इहेति। इह
59655 भुवनेषु। अभ्युदितज्ञानाः सनकादयः। मध्ये आन्तरालिकदशायां स्थिता
59656 मोक्षाय यतमाना अपि पुनःपुनर्विघ्नैः स्खलन्ति।
59657 वैराग्यदार्ढ्याभावादित्यर्थः॥ ११॥
59658
59659 भुवि संबध्यमानानां यान्त्येनामुपदेश्यताम्।
59660 सर्वासां भूतजातीनां या एता नरजातयः॥ १२॥
59661
59662 क्व तर्हि शास्त्राधिकारप्रयोजकं वैराग्यं सुलभं तानाह - भुवीति।
59663 निर्धारणे षष्ठ्यः। एता भरतखण्डस्थाः॥ १२॥
59664
59665 बह्वाधयो दुःखमया मोहद्वेषभयातुराः।
59666 तासां सम्यक्प्रवक्ष्यामि तावद्राजससात्त्विकीः॥ १३॥
59667
59668 तासां वैराग्यसंभवे हेतूनाह - वह्वाधय इति। तासां नरजातीनां
59669 मध्ये तामसीनां शास्त्रानधिकारादुपदेशयोग्या
59670 राजससात्त्विकीर्द्विचत्वारिंशे सर्गे जीवावतरणक्रमवर्णने
59671 प्रवक्ष्यामीत्यर्थः॥ १३॥
59672
59673 यत्तदप्यमृतं ब्रह्म सर्वव्यापि निरामयम्।
59674 चिदाभासमनन्ताख्यमनादि विगतभ्रमम्॥ १४॥
59675
59676 यदमृतं ब्रह्म तच्चिदाभासं जीवरूपं यथा जातं तदपि तत्रैव
59677 वक्ष्यामीत्यर्थः॥ १४॥
59678
59679 निस्पन्दवपुषस्तस्य स्पन्दः सत्तैकदेशतः।
59680 घनतामेति सौम्येऽब्धौ चलता चलतामिव॥ १५॥
59681
59682 निस्पन्दवपुषस्तस्य परमात्मनः। सौम्ये निश्चलेऽब्धौ चलतां तरङ्गाणां
59683 चलता चाञ्चल्यमिव सत्तैकदेशतो जीवभावेन स्पन्दो यथा घनतामेति तथा
59684 तदपि तत्रैव प्रवक्ष्यामीत्यर्थः॥ १५॥
59685
59686 श्रीराम उवाच।
59687
59688 अनन्तस्यात्मतत्त्वस्य एकदेशः क उच्यते।
59689 कथं विकारिता वा स्यात्कथं वा द्वयविक्रमः॥ १६॥
59690
59691 स्पन्दः सत्तैकदेशत इति यदुक्तं तदयुक्तम्। अखण्डपूर्णसत्तैकरसे
59692 ब्रह्मणि सत्तैकदेशस्य स्पन्दस्य चासंभाव्यत्वादिति रामः शङ्कते -
59693 अनन्तस्येति॥ १६॥
59694
59695 श्रीवसिष्ठ उवाच।
59696

59697 तेन जातं ततो जातमितीयं रचना गिराम् ।
59698 शास्त्रसंव्यवहारार्थं न राम परमार्थतः ॥ १७ ॥
59699
59700 जीवब्रह्मैक्यस्य वास्तवस्य
59701 व्युत्पादनायायमुत्पत्त्येकदेशस्पन्दादिव्यवहारः शास्त्रे कल्पितः अतो न
59702 वस्तुवृत्त्याश्रयेण तस्यां विरोध उद्भावनीय इत्याशयेन वसिष्ठ
59703 उत्तरमाह - तेन जातमित्यादिना । तेन निमित्तेन । तत उपादानात् ॥ १७ ॥
59704
59705 विकारितावयविताविदिक्सत्तादेशतादयः ।
59706 क्रमा न संभवन्तीशे दृश्यमानोदया अपि ॥ १८ ॥
59707
59708 कुतो न परमार्थतस्तत्राह - विकारितेति । देशता एकदेशता ।
59709 दृश्यमानोदयाः प्रत्यक्षेणोत्पद्यमानतया दृश्यमाना अपि ॥ १८ ॥
59710
59711 तं विना कल्पनैवान्या नास्ति नापि भविष्यति ।
59712 कुतस्त्यौ क्रमशब्दार्थावुक्तयो व्यवहारजाः ॥ १९ ॥
59713
59714 यदि तत्र न संभवन्ति तर्हि जगतामन्यदेव मूलं कल्प्यतां तत्राह - तं
59715 विनेति । अन्यकल्पनाया अपि चित्प्रकाशं विनाऽयोगादित्यर्थः । हेतुकार्ये
59716 क्रमशब्दार्थौ व्यवहारजा उक्तयश्च कुतस्त्या इति विपरिणम्यते ॥ १९ ॥
59717
59718 या येह कलना योऽर्थो यः शब्दो यो गिरां गणः ।
59719 तज्जत्वात्तन्मयत्वाच्च तत्तत्पदमिवेष्यते ॥ २० ॥
59720
59721 शब्दो नामानि । गिरां गणो वाक्यानि । तन्मयत्वात्सन्मयत्वात् । पदं सद्वस्त्विव
59722 ॥ २० ॥
59723
59724 तज्जः स एव भवति वह्नेर्वह्निरिवोत्थितः ।
59725 जन्योऽयं जनकश्चायमित्युक्ता भेदकल्पना ॥ २१ ॥
59726
59727 एवंच सत्ताभेदाभावाद्भेदप्रत्ययो मिथ्यैवेत्याह - तज्ज इत्यादिना ॥ २१ ॥
59728
59729 अयमस्मात्समुत्पन्न इतीयं या जगत्स्थितिः ।
59730 आधिक्यं तत्क्रियाशक्तौ जन्यं जनकमेव वा ॥ २२ ॥
59731
59732 कथं तर्हि दीपाद्दीपान्तरमिदमुत्पन्नमिति व्यवहारस्तत्राह - अयमिति ।
59733 एकस्यैव दीपस्य मायया द्विधा स्वरूपनिर्माणक्रियाशक्तौ
59734 यदाधिक्यमतिशयस्तदेव जन्यं जनकमिति द्विधा भासत इत्यर्थः ॥ २२ ॥
59735
59736 इदमन्यदिदं चान्यदिति शब्दार्थविक्लवः ।
59737 उक्तावेव न देवेऽस्ति प्रमितौ भिन्नता यतः ॥ २३ ॥
59738
59739 शब्दार्थविक्लवो नामरूपव्यवहारश्रमः उक्तौ वाङ्मात्रेऽस्ति न देवे
59740 परमात्मन्यस्ति । वाचारम्भणं विकारो नामधेयम् इति श्रुतेः । यतः प्रमितौ
59741 परिच्छेदे सति भिन्नता स्यादित्यर्थः ॥ २३ ॥
59742
59743 तज्जयैव मनःशक्त्या स्वतः संज्ञा प्रवर्तते ।
59744 दृढभावनया तस्मादिष्टोऽर्थः प्रतिपद्यते ॥ २४ ॥
59745
59746 तज्जया क्रियाशक्तिजन्ययैव मनःशक्त्या स्वतः स्वभावत एव संज्ञा
59747 नामविभागोऽपि प्रवर्तते । इष्टोऽर्थो व्यवहारः प्रतिपद्यते संपद्यते ॥ २४ ॥
59748

59749 अग्नेः शिखाया एकस्या द्वितीया जनकेति या ।
59750 उक्तिवैचित्र्यमेवैतन्नोक्त्यर्थेऽत्रास्ति सत्यता ॥ २५ ॥
59751
59752 उक्तमेवार्थमुदाहृत्य दर्शयति - अग्नेरिति ॥ २५ ॥
59753
59754 न जन्यजनकाद्यास्ताः संभवन्त्युक्तयः परे ।
59755 एकमेव ह्यनन्तत्वात्किं कथं जनयिष्यति ॥ २६ ॥
59756
59757 उक्तेरेव स्वभावोऽयमुक्तेरुक्तिरनन्तरम् ।
59758 प्रतियोगिव्यवच्छेदसंख्याद्यर्थे न युज्यते ॥ २७ ॥
59759
59760 प्रतियोगी स्वाश्रयतादात्म्यविरोधी । व्यवच्छेदो भेदः । संख्याद्वित्वादिः ॥ २७
59761 ॥
59762
59763 ऊर्मिजालमिवाम्भोधौ परे यः परिदृश्यते ।
59764 शब्दोऽर्थकलनाकारस्तद्ब्रह्मैव विदुर्बुधाः ॥ २८ ॥
59765
59766 ब्रह्म चिद्ब्रह्म च मनो ब्रह्म विज्ञानवस्तु च ।
59767 ब्रह्मार्थो ब्रह्म शब्दश्च ब्रह्म चिद्ब्रह्म धातवः ॥ २९ ॥
59768
59769 कस्तर्हि सिद्धान्तस्तमाह - ब्रह्मेत्यादिना । चित्प्रत्यगात्मा विज्ञानवस्तु
59770 बुद्धिवृत्तिभेदाः । चित् ईश्वरः साक्षी अर्थप्रथा वा ॥ २९ ॥
59771
59772 ब्रह्म सर्वमिदं विश्वं विश्वातीतं च तत्पदम् ।
59773 वस्तुतस्तु जगन्नास्ति सर्वं ब्रह्मैव केवलम् ॥ ३० ॥
59774
59775 अयमन्योऽयमन्योऽयं भाग इत्यम्बरात्मनि ।
59776 मिथ्याज्ञानविकल्पोक्तिर्वाचि सत्यार्थतात्र का ॥ ३१ ॥
59777
59778 वह्नेः शिखेव जातेयं शिखेति मनसोऽभिधा ।
59779 चापलोत्थविकल्पश्रीर्वस्तुतः स्यान्न सिद्ध्यति ॥ ३२ ॥
59780
59781 सिद्ध्यति नित्यसिद्धकूटस्थे ॥ ३२ ॥
59782
59783 असत्यैव विकल्पोक्तिः सत्यभावो विकल्पते ।
59784 तमोपहतदृष्टित्वाद्द्विचन्द्रज्ञानदोषवत् ॥ ३३ ॥
59785
59786 विकल्पते भ्रान्त्या प्रथते ॥ ३३ ॥
59787
59788 सर्वस्मात्सर्वगात्तस्मादनन्ताद्ब्रह्मणः पदात् ।
59789 नान्यत्किंचित्संभवति तदुत्थं यत्तदेव तत् ॥ ३४ ॥
59790
59791 ब्रह्मतत्त्वं विना नेह किंचिदेवोपपद्यते ।
59792 सर्वं च खल्विदं ब्रह्मेत्येषैव परमार्थता ॥ ३५ ॥
59793
59794 एवंप्रायश्च हे प्राज्ञ सिद्धान्तस्ते भविष्यति ।
59795 तत्रैवोदाहरिष्यापः सिद्धान्तार्थोक्तिपञ्जरम् ॥ ३६ ॥
59796
59797 भविष्यति बुद्धौ प्रतिष्ठास्यति । तत्रैव तदैव । उदाहरिष्यामो
59798 निर्वाणप्रकरणे ॥ ३६ ॥
59799
59800 इहाविद्यादिकाः केचिद्विद्यन्ते नेतरक्रमाः ।

ज्ञास्यस्यलमशेषार्थांस्तत्तदज्ञानसंक्षये ॥ ३७ ॥

इह अस्यां परमार्थतायाम् । अलं पूर्णब्रह्मभावेन । एकस्याप्यज्ञानस्य
संशयभेदैः सह बहुत्वविवक्षया तत्तदज्ञानसंक्षये इति वीप्सोक्तिः ॥ ३७ ॥

अवस्तुसंक्षये वस्तु यथावस्तु प्रसीदति ।
यथा च दृश्यते दृश्यं जगन्नैशतमःक्षये ॥ ३८ ॥

दृश्यं चक्षुषा दर्शनार्हम् । जगत्स्थाण्वादि ॥ ३८ ॥

यदिदमखिलमाततं कुदृष्ट्या
तदुपशमे तव राम निर्मलाभे ।
अवितथपदनिर्मले भविष्य-
त्यवितथमेव न संशयोऽत्र कश्चित् ॥ ३९ ॥

उक्तं सर्वमुपसंहरति - यदिति । कुदृष्ट्या अज्ञानदूषितदृष्ट्या
यदिदमखिलं जगदाततं सर्वतो विस्तृतं भाति तस्य सर्वस्य सहाज्ञानेन
नाशे सति निर्मलदर्पणाभे अवितथे परमार्थभूते परमपदे निर्मले
अवितथं तदेव भविष्यति स्थास्यति ॥ ३९ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मो० स्थितिप्रकरणे
ब्रह्मैवेदं सर्वं जगदिति प्रतिपादनं नाम चत्वारिंशः सर्गः ॥ ४० ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे ब्रह्मैवेदं
सर्व जगदिति प्रतिपादनं नाम चत्वारिंशः सर्गः ॥ ४० ॥

## एकचत्वारिंशः सर्गः ४१

श्रीराम उवाच ।

क्षीरोदकुक्षितुल्याभिः शीतलामलदीप्तिभिः ।
तवोक्तिभिर्विचित्राभिर्गम्भीराभिरिवाभितः ॥ १ ॥

कलनादिविशेषाणां माया मूलमिहोच्यते ।
दुर्वचा सा चिकित्स्यैव न विचिन्त्या मृषेत्यपि ॥ १ ॥

पूर्व सर्वत्र कलनैव मन आदिद्वैतकल्पनाया मूलमित्युक्तम् इदानीं
निर्विकारेऽद्वये कलनाया निमित्तमसंभावयंस्तत्प्रष्टुकामो रामो
गुरोरादराय प्राक्तनोक्तीः प्रशंसमानः प्रथमं स्वव्यामोहमुद्गिरति ##-
चन्द्रतुल्याभिरित्यर्थः । अत एव शीतलामलदीप्तिभिरिति विशेषणम् । आन्ध्यं
व्यामोहतमः । प्रावृषि लोलान्यभ्राणि यस्मिन् ॥ १ ॥

क्षणमान्ध्यमिवाप्नोमि क्षणं यामि प्रकाशताम् ।
शान्तातपलवः प्रावृड्लोलाभ्र इव वासरः ॥ २ ॥

अनन्तस्याप्रमेयस्य सर्वस्यैकस्य भास्वतः ।
अनस्तमितसारस्य कलना कथमागता ॥ ३ ॥

अनन्तत्वादेवाप्रमेयस्य प्रमाणापरिच्छेद्यस्य । सर्वस्य पूर्णस्य । भास्वतः
स्वतः सदा प्रथमानस्य । न अस्तमितः सारः परमार्थस्वरूपप्रथा यस्य ।
तथाच प्रथमानेऽद्वितीयपूर्णस्वभावे परिच्छिन्नकलनात्मको विकारो वस्तुतः

59853 कल्पनया वा न संभाव्य इति तत्र हेतुर्वाच्य इत्यर्थः ॥ ३ ॥
59854
59855 श्रीवसिष्ठ उवाच ।
59856
59857 यथाभूतार्थवाक्यार्थाः सर्वा एव ममोक्तयः ।
59858 नासमर्था विरूपार्थाः पूर्वापरविरोधदाः ॥ ४ ॥
59859
59860 तवायं व्यामोहो न मद्वाक्यदोषात्किंतु ते तात्पर्यानवधानदोषादेवेति
59861 दर्शयन्वसिष्ठः समाधत्ते - यथाभूतेत्यादिना । यथाभूतो
59862 यथास्थितोऽर्थ एव वाक्यार्थो यासाम् । असामर्थ्य
59863 पदानामाकाङ्क्षायोग्यतासत्तिराहित्यम् । वैरूप्यं तु अवान्तरवाक्यानां
59864 महावाक्यार्थापर्यवसानम् । विरोध उपक्रमोपसंहारयोः
59865 परस्परव्याघातस्तैर्वर्जिता इत्यर्थः ॥ ४ ॥
59866
59867 ज्ञानदृष्टौ प्रसन्नायां प्रबोधे विततोदये ।
59868 यथावज्ज्ञास्यसि स्वस्थो मद्वाग्दृष्टिबलाबलम् ॥ ५ ॥
59869
59870 कदा तर्हि मम तात्पर्यावधानं स्यात्तत्राह - ज्ञानदृष्टाविति ।
59871 मद्वाचां तत्प्रयुक्ततत्त्वदृष्टेश्च इतरवाग्दृष्ट्यपेक्षया बलाबलं
59872 प्राबल्यम् ॥ ५ ॥
59873
59874 उपदेश्योपदेशार्थं शास्त्रार्थप्रतिपत्तये ।
59875 शब्दार्थवाक्यरचनाभ्रमो मा तन्मयो भव ॥ ६ ॥
59876
59877 ननु यथा स्वमाता वन्ध्या स्वमुखे जिह्वा नास्ति मूकोऽहमिति वाक्यं
59878 हेतुस्वसत्ताबाधितार्थकं तथा नेह नानास्ति किंचन एकमेवाद्वितीयम्
59879 इत्यादिश्रुतिशास्त्रं तद्वाक्यानि चेति कथं विरोधपरिहार इति चेत्तत्राह -
59880 उपदेश्येति । असत्यस्यापि स्वप्नादेः
59881 सत्यार्थप्रतिपत्त्युपायतादर्शनान्मिथ्याभूतशब्दार्थवाक्यरचनाभ्रमोऽपि
59882 सत्यशास्त्रार्थप्रतिपत्तिहेतुः संभवतीति व्यामूढतया तन्मयो भ्रममयो
59883 मा भवेत्यर्थः ॥ ६ ॥
59884
59885 यदा पुरा ज्ञास्यसि तत्सत्यमत्यन्तनिर्मलम् ।
59886 वाच्यवाचकशब्दार्थभेदं त्यक्ष्यसि वै तदा ॥ ७ ॥
59887
59888 कियत्कालं तर्हि शब्दार्थवाक्यरचनाभ्रमोऽनुसर्तव्यस्तत्राह - यदेति ।
59889 यावद्वाक्यार्थापरोक्षोदयमिति भावः ॥ ७ ॥
59890
59891 भेदकृद्वाक्प्रपञ्चोऽयमुपदेश्येषु कल्पितः ।
59892 उपदेश्योपदेशार्थं शास्त्रार्थप्रतिपत्तये ॥ ८ ॥
59893
59894 तत्कुतस्तत्राह - भेदेति द्वाभ्याम् ॥ ८ ॥
59895
59896 शब्दार्थवाक्प्रपञ्चोऽयमुपदेशेषु कल्पितः ।
59897 सदाऽज्ञेषु न तज्ज्ञेषु विद्यते पारमार्थिकः ॥ ९ ॥
59898
59899 कलनामलमोहादि किंचिन्नात्मनि विद्यते ।
59900 नीरागं ब्रह्म परमं तदेवेदं जगत्स्थितम् ॥ १० ॥
59901
59902 प्रागुक्ता कलना चितश्चेत्योन्मुखता । तन्निमित्ते मले पूर्वसंस्कारकर्मणी ।
59903 मोहोऽविद्या ॥ १० ॥
59904

59905 एतद्विचित्ररूपाभिर्युक्तिभिर्बहुशः पुनः ।
59906 विस्तरेणैव वक्तव्यं सिद्धान्तावसरेऽनघ ॥ ११ ॥
59907
59908 सिद्धान्तावसरे असंभावनोच्छेदानन्तरं निर्वाणप्रकरणे ॥ ११ ॥
59909
59910 वाक्प्रपञ्चं विना त्वेतदज्ञानमतुलं तमः ।
59911 भेत्तुमन्योन्यमुदितं यत्नं कर्तुं न शक्यते ॥ १२ ॥
59912
59913 तर्हीदानींतनो वाक्प्रपञ्चस्ते किमर्थस्तत्राह - वाक्प्रपञ्चमिति ।
59914 अज्ञानं साधनाज्ञानं अतुलं तमोमूलाज्ञानं चान्योन्यं
59915 परस्परसहायेन भ्रान्तिसहस्रशाखाप्ररोहैरुदितं प्ररूढं भेत्तुं
59916 तत्साधनेषु यत्नं कर्तुं च न शक्यत इत्यर्थः ॥ १२ ॥
59917
59918 अविद्ययैवोत्तमया स्वात्मनाशोद्यमेच्छया ।
59919 विद्या सा प्रार्थ्यते राम सर्वदोषापहारिणी ॥ १३ ॥
59920
59921 तर्हि उपदेशवाक्प्रपञ्चस्य
59922 तज्जन्यविद्यायाश्चाविद्याकार्यत्वाविशेषात्कथमविद्याविरोधिता
59923 स्वविरोधिविद्यां वा कथमविद्या प्रार्थयेदिति चेत्तत्राह - अविद्ययैवेति ।
59924 उत्तमया बहुजन्मसंचितसुकृतविशुद्धान्तःकरणाकारपरिणतया । तथाच
59925 स्वशरीरविरोधेऽपि स्वात्महितत्वाद्विवेकिन्याः पतिव्रतायाः पतिचितारोहणेनेव
59926 तत्प्रार्थनोपपत्तिरिति भावः ॥ १३ ॥
59927
59928 शाम्यति ह्यस्त्रमस्त्रेण मलेन क्षाल्यते मलः ।
59929 शमं विषं विषेणैति रिपुणा हन्यते रिपुः ॥ १४ ॥
59930
59931 विरोधितामुपपादयति - शाम्यतीति । मलेन क्षारेण ॥ १४ ॥
59932
59933 ईदृशी राम मायेयं यां स्वनाशेन हर्षदा ।
59934 न लक्ष्यते स्वभावोऽस्याः प्रेक्ष्यमाणैव नश्यति ॥ १५ ॥
59935
59936 तस्याः स्वनाशकत्वे कर्मकर्तृताविरोधमाशङ्क्य क्रियायां स विरोधो न
59937 ज्ञानेनाज्ञानबाधे इत्याशयेनाह - ईदृशीति ॥ १५ ॥
59938
59939 विवेकमाच्छादयति जगन्ति जनयत्यलम् ।
59940 नच विज्ञायते कैषा पश्याश्चर्यमिदं जगत् ॥ १६ ॥
59941
59942 तस्या असंभावितानन्तकार्यदर्शनादपि न विरोधसंभावनेत्याशयेनाह ##-
59943
59944 अप्रेक्ष्यमाणा स्फुरति प्रेक्षिता तु विनश्यति ।
59945 मायेयमपरिज्ञायमानरूपैव वल्गति ॥ १७ ॥
59946
59947 अहो नु खलु चित्रेयं माया संसारबन्धनी ।
59948 असत्येवातिसत्येव स्वज्ञानं विहितं तया ॥ १८ ॥
59949
59950 अत्यभिन्नपदे तस्मिंस्तन्वाना भेदमाततम् ।
59951 संसारमाया येनासौ तेनासौ पुरुषोत्तमः ॥ १९ ॥
59952
59953 येन हेतुना असौ अक्षराख्या माया तस्मिन् अत्यभिन्नपदे आत्मनि क्षरात्मकं
59954 आततं सर्वतो विस्तृतं तन्वाना आस्ते तेन हेतुना असौ
59955 क्षराक्षरलक्षणपुरुषातीत आत्मा पुरुषोत्तम इत्यर्थः ॥ १९ ॥
59956

59957 नास्त्येषा परमार्थे न त्वेवं भावनयेद्धया |
59958 ज्ञो भूत्वा ज्ञेयसंप्राप्तो ज्ञास्यस्यस्यास्त्वमाशयम् || २० ||
59959
59960 एषा माया परमार्थे न वस्तुवृत्या तु नास्ति एवं भावनया इद्धया
59961 आचार्यश्रुतितर्कस्वानुभवाभ्यासप्रदीपितया त्वं ज्ञस्तत्त्वविद्भूत्वा ज्ञेयं
59962 स्वात्मवास्तवरूपं विस्मृतकण्ठचामीकरवत् संप्राप्तः सन्नस्या
59963 मदुक्तेराशयं ज्ञास्यसि संभावयिष्यसि || २० ||
59964
59965 यावत्तु न प्रबुद्धस्त्वं तावन्मद्वचसैव ते |
59966 निश्चयो भवतूद्दामो नास्त्यविद्येति निश्चलः || २१ ||
59967
59968 इदानीं तु मद्वचनविश्वासात्परोक्षकल्प एव मदुक्तोऽर्थो ग्राह्य इत्याह -
59969 यावदिति || २१ ||
59970
59971 यदिदं दृश्यतां यातं मानसं मननं महत् |
59972 असन्मात्रमिदं यस्मान्मनोमात्रविजृम्भितम् || २२ ||
59973
59974 निश्चयस्य निश्चलतासंपादने उपायमाह - यदिदमिति || २२ ||
59975
59976 सत्तद्ब्रह्मेति यस्यान्तर्निश्चयः सोऽपि मोक्षभाक् |
59977 चलाचलाकृतिर्या या दृष्टिराबद्धभावना || २३ ||
59978
59979 मानसं मनोवृत्तिरूपं यदिदं दृश्यतां साक्षिप्रत्ययवेद्यतां यातं
59980 सर्वव्यवहारबीजत्वान्महत् मननं अतीतानागतानेकार्थप्रतिसंधानं इदं
59981 असन्मात्रं असदेवेत्यर्थः | तत्र हेतुमाह - यस्मादिति | मनननिरासे मनो
59982 निरिन्धनाग्निवत्स्वयमेव शाम्यतीति ब्रह्मसन्मात्रपरिशेषे
59983 प्रागुक्तनिश्चयनैश्चल्यात्पुरुषार्थसिद्धिरित्याशयेनाह - सत्तदिति |
59984 उक्तमर्थं स्थिरिकर्तुं बाह्यार्थमननदृष्टीनां बन्धहेतुतामाह -
59985 चलाचलेति || २३ ||
59986
59987 सा समग्रजगद्भूतखगबन्धनवागुरा |
59988 यः स्वप्नभूमिवद्भ्रान्तमसत्सद्व्येकनिश्चयः || २४ ||
59989
59990 समस्ते जगति भूतखगानां जीवपक्षिणाम् | असति अनागतातीते सति वर्तमाने चेति
59991 द्विरूपेऽपि मननविषये सदेवेदमसदेवेदमिति वा एकरूपो दृढनिश्चयो यस्य
59992 तथाविधो योऽधिकारी जगत्स्वप्नभूमिवद्भ्रान्तिमात्रमिति पश्यति स न
59993 निमज्जतीत्यर्थः || २४ ||
59994
59995 जगत्पश्यत्यसक्तात्मा न स दुःखे निमज्जति |
59996 यस्यैतास्वस्वरूपासु भावना स्वात्मभावना || २५ ||
59997
59998 कस्तर्हि निमज्जति तमाह - यस्येति | अस्वरूपासु मिथ्याभूतासु
59999 देहेन्द्रियादिद्वैतभावनासु आत्मभावना अहमिति बुद्धिः || २५ ||
60000
60001 अस्वरूपस्य तस्यापि सा ह्यविद्यैव विद्यते |
60002 विकारितादयो दोषा न केचन महात्मनि || २६ ||
60003
60004 मिथ्यात्मदर्शिनस्तस्य अविद्यामज्जनमेव दण्ड इत्याशयेनाह -
60005 अस्वरूपस्येति || २६ ||
60006
60007 परमात्मनि विद्यन्ते पयसीवेह पांसवः |
60008 भावनाशब्दशब्दार्थरञ्जनेयं जगद्गता || २७ ||

60009
60010 तर्हि तत्त्वविदां पूर्वापरार्थभावनाभावाद्व्यवहारासिद्धिरित्याशङ्क्याह
60011 - भावनेति। शब्देषु नामसु शब्दार्थेषु रूपेषु च स्फटिकवद्रञ्जना
60012 तात्कालिकानुषङ्गः॥ २७॥
60013
60014 व्यवहारार्थमुत्पन्ना व्यतिरिक्ता च नात्मनः।
60015 अनेन व्यवहारेण विनैताः शास्त्रदृष्टयः॥ २८॥
60016
60017 संस्थितिं नाधिगच्छन्ति पटा इव वितन्तवः।
60018 उह्यमानो ह्यविद्यायामात्मा नेहोपलक्ष्यते॥ २९॥
60019
60020 यद्यविद्यादि नास्त्येव तर्हि किमर्थं शास्त्रमिति चेत्तत्राह - उह्यमान इति।
60021 अविद्यानद्यां उह्यमानः प्रवाह्यमाण आत्मा आत्मज्ञानादृते
60022 नैवोपलक्ष्यते अनुभूयते॥ २९॥
60023
60024 आत्मज्ञानादृते तच्च शास्त्रार्थात्समवाप्यते।
60025 अविद्यासरितः पारमात्मलाभादृते किल॥ ३०॥
60026
60027 तच्च आत्मज्ञानं तु॥ ३०॥
60028
60029 राम नासाद्यते तद्धि पदमक्षयमुच्यते।
60030 यतःकुतश्चिज्जातेयमविद्या मलदायिनी॥ ३१॥
60031
60032 नन्वियमविद्या परमात्मनि कुतो जाता तत्राह - यतःकुतश्चिदिति॥ ३१॥
60033
60034 नूनं स्थितिमुपायाता समासाद्य पदं स्थिता।
60035 कुतो जातेयमिति ते राम मास्तु विचारणा॥ ३२॥
60036
60037 इमां कथमहं हन्मीत्येषा तेऽस्तु विचारणा।
60038 अस्तं गतायां क्षीणायामस्यां ज्ञास्यसि राघव॥ ३३॥
60039
60040 तर्हीयमनादिरुत सादिः। आद्ये आत्मवन्नित्या स्यात् द्वितीये तु हेतुर्वाच्यः। एवं
60041 किं सत्या उतासत्या। आद्येऽज्ञानादनिवृत्तिः द्वितीये
60042 संवादिव्यवहारहेतुत्वानुपपत्तिरित्याद्याशङ्कासहस्रस्यापि तन्नाशादेव
60043 निवृत्तिरित्याशयेनाह - अस्तं गतायामिति॥ ३३॥
60044
60045 यत एषा यथा चैषा यथा नष्टेत्यखण्डितम्।
60046 वस्तुतः किल नास्त्येषा विभात्येषा न वेक्षिता॥ ३४॥
60047
60048 असतो भ्रान्ततां सत्यरूपां जानातु कः कुतः।
60049 जातेयं प्रौढिमापन्ना दोषायैवातताकृतिः॥ ३५॥
60050
60051 असतः सत्यवद्विमर्शः स्वाप्नपुरुषगोत्रचिन्तावद्वृथैवेत्याशयेनाह -
60052 असत इति॥ ३५॥
60053
60054 बलात्प्रणाशय त्वेनां परिज्ञास्यसि वै ततः।
60055 अपि शूरा अतिप्राज्ञास्ते न सन्ति जगत्त्रये॥ ३६॥
60056
60057 तर्हि स्वाप्नपुरुषवधोद्योगवत्तन्निवृत्तौ यत्नातिशयो वृथेत्याशङ्क्य
60058 तद्विलक्षणमनर्थप्राबल्यमाह - अपीति॥ ३६॥
60059
60060 अविद्यया ये पुरुषा न नाम विवशीकृताः।

60061 तदस्या रोगशीलाया यत्नं कुरु विनाशने ॥ ३७ ॥
60062
60063 यथैषा जन्मदुःखेषु न भूयस्त्वां नियोक्ष्यति ।
60064 सर्वापदामेकसखीमज्ञानतरुमञ्जरीम् ।
60065 अनर्थसार्थजननीमविद्यामलमुद्धर ॥ ३८ ॥
60066
60067 भयविषाददुराधिविपत्प्रदां
60068 हृदयमोहमहापटलाङ्कुराम् ।
60069 भृशमपास्य कुदृष्टिमिमां बला-
60070 द्भव भवार्णवपारमुपागतः ॥ ३९ ॥
60071
60072 उपसंहरति - भयेति । हृदयपदेन तत्स्था आत्मदृष्टिरुपलक्ष्यते । तस्या
60073 मोहलक्षणान्ध्यहेतूनां महतां पटलत्वक्स्थानीयानां
60074 स्थूलदेहादीनामङ्कुरवत्कारणभूतां कुदृष्टिमविद्याम् ॥ ३९ ॥
60075
60076 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपायेषु स्थितिप्रकरणे
60077 अविद्याकथनं नामैकचत्वारिंशः सर्गः ॥ ४१ ॥
60078
60079 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे अविद्याकथनं
60080 नामैकचत्वारिंशः सर्गः ॥ ४१ ॥
60081
60082
60083 द्विचत्वारिंशः सर्गः ४२
60084
60085 श्रीवसिष्ठ उवाच ।
60086
60087 कुपितस्यासतोऽप्यस्य प्रेक्षामात्रविनाशिनः ।
60088 अविद्याविततव्याधेरौषधं शृणु राघव ॥ १ ॥
60089
60090 अनन्तशक्तेश्चिद्भूम्नो वासनाघनताक्रमात् ।
60091 वर्ण्यते विस्तरेणात्र जीवावतरणक्रमः ॥ १ ॥
60092
60093 एवमविद्याव्याधिमुपवर्ण्य तच्चिकित्सोपायं बहुभिः सर्गैर्वक्तुं प्रतिजानीते
60094 - कुपितस्येति ॥ १ ॥
60095
60096 यां तां कथयितुं जातिं राम राजससात्त्विकीम् ।
60097 मनोवीर्यविचारार्थं प्रस्तुतोऽस्मीह तां शृणु ॥ २ ॥
60098
60099 तदर्थं जीवावतरणक्रमं वर्णयितुं चत्वारिंशे सर्गे तासां
60100 सम्यक्प्रवक्ष्यामि तावद्राजससात्त्विकीः इति यत्प्रतिज्ञातं तच्छेषवर्णनमिति
60101 स्मारयति - यां तामिति ॥ २ ॥
60102
60103 यत्तदप्यमृतं ब्रह्म सर्वव्यापि निरामयम् ।
60104 चिदाभासमनन्ताख्यमनादि विगतभ्रमम् ॥ ३ ॥
60105
60106 यत्तदपीति श्लोकस्तत्रैव व्याख्यातः ॥ ३ ॥
60107
60108 चित्स्पन्दवपुषस्तस्य [अत्र निस्पन्दवपुष इति पाठो युक्तः स्यात्]
60109 स्पन्दस्तस्माच्चिदेव हि ।
60110 प्रदेशाद्घनतामेति सौम्योऽब्धिश्चलनादिव ॥ ४ ॥
60111
60112 स्पन्दत इति स्पन्दश्चिदाभासः । प्रदेशादौपाधिकैकदेशात् । यथा सौम्य

60113 एवाब्धिश्चलनात्तरङ्गादिघनतामेति तद्वत् ॥ ४ ॥
60114
60115 अन्तरब्धेर्जलं यद्वत्स्पन्दास्पन्दवदीहते ।
60116 सर्वशक्तिस्तथैकत्र गच्छति स्पन्दशक्तिताम् ॥ ५ ॥
60117
60118 शक्तिवैचित्र्याणां
60119 सत्त्वादिगुणोपचयापचयमिश्रणतारतम्यकृतत्वादुपचयादेश्च
60120 राजसक्रियाशक्तिमूलकत्वात्प्रथमं क्रियाशक्त्युद्भवं दर्शयति -
60121 अन्तरब्धेरिति ॥ ५ ॥
60122
60123 आत्मन्येवात्मना व्योम्नि यथा सरति मारुतः ।
60124 तथेहात्मात्मशक्त्यैव स्वात्मन्येवैति लोलताम् ॥ ६ ॥
60125
60126 स्वतः कूटस्थेऽप्याध्यासिकचलनाविरोधमाह - आत्मन्येवेति ॥ ६ ॥
60127
60128 स्वशिखास्पन्दशक्त्यैव दीपः सौम्यो यथोन्नतम् ।
60129 एति तद्वदसावात्मा तत्स्वे वपुषि वल्गति ॥ ७ ॥
60130
60131 स्पन्दशक्तेरस्पन्दप्रकाशशक्त्याप्यविरोधे दृष्टान्तमाह - दीप इति ।
60132 सौम्यो वाय्वाद्यविक्षिप्तः उन्नतमूर्ध्वदेशमेति । वल्गति चलति प्रकाशयतीति
60133 यावत् ॥ ७ ॥
60134
60135 जलान्तरेऽम्बुधिर्यद्वल्लसद्वारीव चञ्चलः ।
60136 सर्वशक्तिर्वपुष्येव तथा स्पन्दविलासवान् ॥ ८ ॥
60137
60138 शरदातपादिसंपर्काल्लसति स्फुरति वारिप्रदेशे चञ्चल इव न सर्वतस्तद्वदिति
60139 कल्पितैकदेशे चलनारोपे दृष्टान्तः ॥ ८ ॥
60140
60141 यथोल्लसति भाश्चक्रैः कचन्कनकसागरः ।
60142 तथात्मनि परिस्पन्दैः स्फुरत्यक्षैश्चिदर्णवः ॥ ९ ॥
60143
60144 परमार्थतोऽन्यथैव सतः कल्पितरूपान्तरेण स्फुरणेऽप्ययमेव दृष्टान्त
60145 इत्याशयेनाह - यथेति । भासां शरदातपानां चक्रैः समूहैः कचन्
60146 दीप्यन् द्रवीभूतकनकमिव सागरः स्फुरति । अक्षैरैन्द्रियकप्रकाशैः ॥ ९ ॥
60147
60148 लक्ष्यते मौक्तिकस्पन्दो यथा व्योम्नि दृशोऽदृशि ।
60149 तथा भाति लसद्रूपा चिच्छक्तिश्चिन्महाम्बरे ॥ १० ॥
60150
60151 अतीन्द्रिये ऐन्द्रियकरूपस्फुरणेऽपि तमाह - लक्ष्यत इति । अदृशि अतीन्द्रिये ॥ १०
60152 ॥
60153
60154 किंचित्क्षुभितरूपा सा चिच्छक्तिश्चिन्महार्णवे ।
60155 तन्मयी चित्स्फुरत्यच्छा तत्रैवोर्मिरिवार्णवे ॥ ११ ॥
60156
60157 आत्मनोऽव्यतिरिक्तैव व्यतिरिक्तेव तिष्ठति ।
60158 आलोकश्रीरिवालोककोटरे यत्ततां गता ॥ १२ ॥
60159
60160 ऐन्द्रियकचिच्छक्तिः परमार्थचिदेव जन्यतारोप एव केवलमौपाधिक
60161 इत्याशयेनाह - आत्मन इति । अव्यतिरिक्तैवेति च्छेदः । आलोककोटरे
60162 सूचीपाशादिकल्पितालोकच्छिद्रे । यत्ततां उपाधिपारवश्यम् ॥ १२ ॥
60163
60164 क्षणं स्फुरति सा देवी सर्वशक्तितया तया ।

60165 चेतति स्वां स्वयं शक्तिं कलेन्दोः शीततामिव ॥ १३ ॥
60166
60167 अत एव तस्याः कालिकपरिच्छेदः शक्तिशक्तिमत्तादिभेदविभावनं
60168 चोपपन्नमित्याशयेनाह - क्षणमिति ॥ १३ ॥
60169
60170 उदितैषा प्रकाशाख्या चिच्छक्तिः परमात्मनः ।
60171 देशकालक्रियाशक्तिर्वयस्याः संप्रकर्षति ॥ १४ ॥
60172
60173 शक्त्यन्तराणां चिच्छक्त्युदयाधीनैव प्रवृत्तिर्न स्वातन्त्र्येणेत्याह -
60174 उदितेति । वयस्याः सखीः ॥ १४ ॥
60175
60176 स्वस्वभावं विदित्वैवमनाद्यन्तपदे स्थिता ।
60177 रूपं परिमितेवासौ भावयत्यविभाविता ॥ १५ ॥
60178
60179 एवं स्वस्वभावं विदित्वा अनाद्यन्तपदे स्थिता भवति । अविभाविता सती
60180 एवमुक्तलक्षणं कल्पितरूपं भ्रान्त्या स्वस्वभावं गृहीत्वा परिमिता
60181 परिच्छिन्नास्मीति स्वात्मानं भावयति । दृढं वासयतीत्यर्थः ॥ १५ ॥
60182
60183 यदैवंभावितं रूपं तया परमसत्तया ।
60184 तदैवैनामनुगता नामसंख्यादिका दृशः ॥ १६ ॥
60185
60186 नामेति । तथाच श्रुतिः प्राणन्नेव प्राणो नाम भवति
60187 वदन्वाक्पश्यंश्चक्षुः इति । संख्या रूपभेदाः ।
60188 आदिपदादिष्टानिष्टादिसर्वजगत्कल्पना गृह्यन्ते ॥ १६ ॥
60189
60190 चिदेवैतदवस्त्वेव व्यतिरिक्ता तथात्मनः ।
60191 अनन्ता तद्गतैवाशु लहरीव महार्णवात् ॥ १७ ॥
60192
60193 एवंच चिति कल्पितस्य सर्वस्य चिन्मात्रतैव परमार्थरूपमिति फलितमित्याह ##-
60194 शेषः ॥ १७ ॥
60195
60196 यथा कटककेयूरैर्भेदो हेम्नो विलक्षणः ।
60197 तथात्मनश्चितो रूपं भावयन्त्याः स्वमांशिकम् ॥ १८ ॥
60198
60199 आंशिकं अंशकल्पनाधीनं सर्वजगद्रूपमित्यर्थः ॥ १८ ॥
60200
60201 यथा दीपेन दीपानां जातानामात्मनां तथा ।
60202 देशकालकलामात्रभेदः स्वाभाविकश्चितेः ॥ १९ ॥
60203
60204 वर्तिकाद्युपाधिदेशेन देशः तत्कालेन कालस्तत्कलाभिस्तदवयवैः कलाश्चेति
60205 तन्मात्रयुक्तो भेदो न दीपाग्निस्वरूपे तथा चितेरपि उपाधिस्वभावादागतः
60206 स्वाभाविकः ॥ १९ ॥
60207
60208 देशकालपरिस्पन्दशक्तिसन्दीपिताथ चित् ।
60209 संकल्पमनुधावन्ती प्रयाति कलनापदम् ॥ २० ॥
60210
60211 दृष्टान्तोक्तं चित्युपपादयति - देशेति ॥ २० ॥
60212
60213 विकल्पकलिताकारं देशकालक्रियास्पदम् ।
60214 चितो रूपं महाबाहो क्षेत्रज्ञ इति कथ्यते ॥ २१ ॥
60215
60216 अत एव क्षेत्रोपाधिकल्पनाधीनं चितः क्षेत्रज्ञत्वं प्रसिद्धमित्याह -

60217 विकल्पेति ॥ २१ ॥
60218
60219 क्षेत्रं शरीरमित्याहुस्तदसौ वेत्त्यखण्डितम् ।
60220 सबाह्याभ्यन्तरं तेन क्षेत्रज्ञ इति कथ्यते ॥ २२ ॥
60221
60222 वासनां कलयन्सोऽपि यात्यहंकारतां पुनः ।
60223 अहंकारोऽपि निर्णेता कलङ्की बुद्धिरुच्यते ॥ २३ ॥
60224
60225 क्षेत्रकल्पनाक्रमं दर्शयति - वासनामित्यादिना । निर्णेता अध्यवसाता । अत
60226 एव कल्पनान्तरकलङ्की ॥ २३ ॥
60227
60228 बुद्धिः संकल्पकलिता प्रयाति मनसः पदम् ।
60229 मनो घनविकल्पं तु गच्छतीन्द्रियतां शनैः ॥ २४ ॥
60230
60231 पाणिपादमयं देहमिन्द्रियाणि विदुर्बुधाः ।
60232 देहोऽसौ ज्ञायते लोके सूयतेऽपि च जीवति ॥ २५ ॥
60233
60234 देहं देहतां गच्छन्तीति विपरिणम्यानुषज्जते ॥ २५ ॥
60235
60236 एवं जीवो हि संकल्पवासनारज्जुवेष्टितः ।
60237 दुःखजालपरीतात्मा क्रमादायाति चित्तताम् ॥ २६ ॥
60238
60239 चित्ततां बाह्यार्थचेतनसमर्थताम् ॥ २६ ॥
60240
60241 क्रमेण पाकवशतः फलमेति यथान्यताम् ।
60242 अवस्थयैव नाकृत्या जीवो मलवशात्तथा ॥ २७ ॥
60243
60244 फलं बदरादि । अन्यतां वैलक्षण्यम् । अवस्थया
60245 रूपरसपरिणामादिगुणपरावृत्त्यैव न त्वाकृत्या बदरत्वादिजात्या तथा
60246 जीवः क्षेत्रज्ञोऽप्यविद्यामलपरिणामवशाद्वैलक्षण्यं याति
60247 नापरिणामिचित्स्वभावेनेत्यर्थः ॥ २७ ॥
60248
60249 जीवोऽहंकारतां प्राप्तस्त्वहंकारश्च बुद्धिताम् ।
60250 संकल्पजालकलितां मनस्तां बुद्धिरागता ॥ २८ ॥
60251
60252 एवं क्षेत्रसिद्धिमुपवर्ण्य जीवस्याहंकारादिक्षेत्रे
60253 तादात्म्यसंसर्गाध्यासलक्षणं बन्धं क्रमेणाह - जीव इत्यादिना ॥ २८ ॥
60254
60255 मनो हि संकल्पमयं संस्थाग्रहणतत्परम् ।
60256 प्रतियोगिव्यवच्छिन्नप्राप्तिसत्यैरपीहितैः ॥ २९ ॥
60257
60258 संस्थानं संस्था स्त्रीपुत्रादिशरीराकारस्तस्य ग्रहणे तदाकारवृत्तिद्वारा
60259 संस्कारात्मना धारणे तत्परम् । सत्यैः सफलैः अपिशब्दाद्विफलैरपि
60260 ईहितैर्मनोरथैः प्रतियोगिभ्यो वस्त्वन्तरेभ्यो व्यवच्छिन्ना व्यावृत्ता
60261 प्राप्तिरर्थग्रहो यस्य । परिच्छिन्नतुच्छविषयासक्तं भवतीत्यर्थः ॥ २९ ॥
60262
60263 इच्छाद्याः शक्तयश्चेतो गावो वृषमिवोन्मदम् ।
60264
60265 तदासक्तौ तान्विषयान्पुनःपुनः स्मरच्चित्तभावापन्नं
60266 रागद्वेषादिदोषैरास्कन्द्यत इत्याह - इच्छाद्या इति । अनुधावन्त्यनुसरन्ति ॥
60267 ३० ॥
60268

60269 इति शक्तिमयं चेतो घनाहंकारतां गतम् ।
60270 कोशकारक्रिमिरिव स्वेच्छया याति बन्धनम् ॥ ३१ ॥
60271
60272 इति उक्तक्रमेण रागद्वेषादिशक्तिप्रचुरं चेतः
60273 शाखाप्ररोहशतकोटिभिरभिमानवृद्ध्या घनाहंकारतां गतं सत् ॥ ३१
60274 । ।
60275
60276 स्वसंकल्पानुसंधानात्पाशैरिव नयन्वपुः ।
60277 कष्टमस्मिन्स्वयं बन्धमेत्यात्मा परितप्यते ॥ ३२ ॥
60278
60279 पाशैर्बडिशजालादिपाशैः स्ववपुर्मृत्यवे नयन्मत्स्यादिरिव एत्य प्राप्य ।
60280 आत्मा मनः प्रकृतत्वात् ॥ ३२ ॥
60281
60282 बद्धमस्मीति कल्यद्विद्यातत्त्वं जहच्छनैः ।
60283 अविद्यां जनयत्यन्तर्जगज्जङ्गलराक्षसीम् ॥ ३३ ॥
60284
60285 अस्मीति कलयत् परमार्थसत्यमिति पश्यत् । विद्यातत्त्वं पारमार्थिकमात्मरूपं
60286 जहत् त्यजत् । स्वप्नेऽप्यविचारयदिति यावत् । अविद्यां
60287 जन्ममरणादिभ्रान्तिपरम्पराम् ॥ ३३ ॥
60288
60289 स्वसंकल्पिततन्मात्रज्वालाभ्यन्तरवर्ति च ।
60290 परां विवशतामेति शृङ्खलाबद्धसिंहवत् ॥ ३४ ॥
60291
60292 तन्मात्राणि शब्दादिविषयास्तदिन्धना रागादिज्वालास्तदभ्यन्तरवर्ति मनः ।
60293 चकारः पूर्वोक्ताविद्यान्तसमुच्चयार्थः ॥ ३४ ॥
60294
60295 विचित्रकार्यकर्तृत्वमाहरद्वासनावशात् ।
60296 स्वेच्छामात्रानुरचिता दशाश्चानुपतत्तथा ॥ ३५ ॥
60297
60298 विचित्राणां विहितनिषिद्धनानारूपाणां कार्याणां कर्मणां
60299 कर्तृत्वमाहरद्यत्नैः संपादयत् । दशाः नानायोनिनरकादिदुर्दशाः
60300 वक्ष्यमाणमननादिदशाश्च अनुपतद्विवशतामेतीति प्राक्तनेनान्वयः ॥ ३५ ॥
60301
60302 क्वचिन्मनः क्वचिद्बुद्धिः क्वचिज्ज्ञानं क्वचित्क्रियाः ।
60303 क्वचिदेतदहंकारः क्वचित्पुर्यष्टकं स्मृतम् ॥ ३६ ॥
60304
60305 तस्यैव मननादिवृत्तिभेदैर्मन आदिशब्दभाक्त्वं नान्यस्येत्याह -
60306 क्वचिदित्यादिना ॥ ३६ ॥
60307
60308 क्वचित्प्रकृतिरित्युक्तं क्वचिन्मायेति कल्पितम् ।
60309 क्वचिन्मलमिति प्रोक्तं क्वचित्कर्मेति संस्थितम् ॥ ३७ ॥
60310
60311 क्वचिद्बन्धमिति ख्यातं क्वचिच्चित्तमिति स्फुटम् ।
60312 प्रोक्तं क्वचिदविद्येति क्वचिदिच्छेति संस्थितम् ॥ ३८ ॥
60313
60314 तदेतदाबद्धमिह चित्तं राघव दुःखितम् ।
60315 तृष्णाशोकसमाविष्टं रागायतनमाततम् ॥ ३९ ॥
60316
60317 तथाच बद्धत्वमपि तस्यैव नात्मन इति प्रपञ्चयति - तदेतदित्यादिना ॥ ३९ ॥
60318
60319 जरामरणमोहान्तर्भवभावनयाहतम् ।
60320 ईहितानीहितैर्ग्रस्तमविद्यारागरञ्जितम् ॥ ४० ॥

60321
60322 इच्छासंक्षुभिताकारं कर्मवृक्षवनाङ्कुरम् |
60323 सुविस्मृतोत्पत्तिपदं कल्पितानर्थकल्पितम् || ४१ ||
60324
60325 सुष्ठु विस्मृतं स्वोत्पत्तिनिमित्तं परमात्मपदं येन || ४१ ||
60326
60327 कोशकारवदाबद्धं शोकाकारपदं गतम् |
60328 तन्मात्रवृन्दावयवमनन्तनरकातपम् || ४२ ||
60329
60330 स्वदृश्यमपि शैलेन्द्रसमभारभयावहम् |
60331 जरामरणशाखाढ्यं संसारविषदुर्द्रुमम् || ४३ ||
60332
60333 स्वस्यात्मनो दृश्यमपि अनात्मत्वेन ज्ञातुं योग्यमपि दुर्विवेकत्वेन
60334 दुरुद्धरत्वाच्छैलेन्द्रसमेन भारेण गौरवेण भयावहम् | विषमयं
60335 दुर्द्रुमं दुष्टवृक्षम् || ४३ ||
60336
60337 इमं संसारमखिलमाशापाशविधायकम् |
60338 दधदन्तः फलैर्हीनं वटधाना वटं यथा || ४४ ||
60339
60340 फलैः पुरुषार्थैर्हीनम् || ४४ ||
60341
60342 चिन्तानलशिखादग्धं कोपाजगरचर्वितम् |
60343 कामाब्धिकल्लोलहतं विस्मृतात्मपितामहम् || ४५ ||
60344
60345 विस्मृतः आत्मस्वरूपः पितामहो मूलकारणं येन || ४५ ||
60346
60347 मृगं यूथादिव भ्रष्टं शोकोपहतचेतनम् |
60348 पतङ्गकमिव ज्वालादग्धं विषयपावके || ४६ ||
60349
60350 छिन्नमूलमिवाम्भोजं परमां म्लानिमागतम् |
60351 छिन्नाङ्गमात्मनः स्थानाद्विशेषासङ्गदुःस्थितम् || ४७ ||
60352
60353 आत्मनः स्वस्य स्थानान्निवासभूताद्देहभेदान्मृत्युनापनयने
60354 तत्तद्देहाभिमानविच्छेदाच्छिन्नाङ्गम् | अत एव
60355 तत्तद्देहविशेषासङ्गाद्दुःस्थितम् || ४७ ||
60356
60357 विषयादिषु मध्यस्थं चित्ररूपेषु शत्रुषु |
60358 दशास्वेतास्वनन्तासु लुठितं संकटास्विति || ४८ ||
60359
60360 विषयेन्द्रियदेहादिलक्षणेषु चित्ररूपेषु नानावैचित्र्यैः स्ववधोद्यतेषु शत्रुषु
60361 तद्विश्वासेन तन्मध्यस्थम् | इति प्रपञ्चितप्रकारास्वित्यर्थः || ४८ ||
60362
60363 दुःखे निपतितं घोरे विहङ्गः सागरे यथा |
60364 स्वबन्धास्थं जगज्जाले शून्ये गन्धर्वपत्तने || ४९ ||
60365
60366 स्वस्य बन्धे बन्धनहेतौ तत्साधनदेहादौ च आस्था स्नेहातिशयो यस्य तत् || ४९
60367 ||
60368
60369 उह्यमानमनास्थाब्धौ मनो विषयविद्रुतम् |
60370 उद्धरामरसंकाश मातङ्गमिव कर्दमात् || ५० ||
60371
60372 तत्त्वज्ञानतत्साधनादावनास्थानादरस्तद्रूपेऽब्धावुह्यमानं प्लवमानं

मनस्तदास्थोपोद्वलनेनोद्धर ॥ ५० ॥

बलीवर्दवदामग्नं मनो मदनपल्वले ।
आलूनशीर्णावयवं बलाद्राम समुद्धर ॥ ५१ ॥

चिरविषयभोगप्रयुक्तपुण्यक्षये
परलोकगतिसाधनाभावादालूनशीर्णपादाद्यवयवप्रायम् । बलीवर्दपक्षे
स्पष्टम् ॥ ५१ ॥

शुभाशुभप्रसरपराहताकृतौ
ज्वलज्जरामरणविषादमूर्च्छिते ।
व्यथेह यस्य मनसि भो न जायते
नराकृतिर्जगति स राम राक्षसः ॥ ५२ ॥

प्रागुक्तानास्था परनिन्दनेनोपसंहरति - शुभाशुभेति । शुभानां
काम्यसुकृतानामशुभानां निषिद्धकर्मणां च प्रसरैः पराहता
मलिनीकृता आकृतिर्यस्य । ज्वलद्भिर्जरामरणविषादैर्मूर्च्छिते ईदृशे
स्वमनसि सति यस्य व्यथा तदुद्धारफलचिन्ताप्रयुक्तपीडा न जायते स पुमान्
नराकृतिप्रतिच्छन्नो राक्षस एवेत्यर्थः ॥ ५२ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मो० स्थितिप्रकरणे
जीवावतरणं नाम द्विचत्वारिंशः सर्गः ॥ ४२ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे जीवावतरणं
नाम द्विचत्वारिंशः सर्गः ॥ ४२ ॥

## त्रिचत्वारिंशः सर्गः ४३

श्रीवसिष्ठ उवाच ।

एवं जीवाश्रितो भावा भवभावनयोहिताः ।
ब्रह्मणः कल्पिताकाराल्लक्षशोऽप्यथ कोटिशः ॥ १ ॥

जीवानां कर्मगतयः प्रपञ्च्यन्तेऽत्र विस्तरात् ।
विवेकादेः सुदौर्लभ्यान्मुक्तिः केषांचिदित्यपि ॥ १ ॥

एवं मनसः स्वबन्धकत्वप्रकारमुपवर्ण्य
तदुपहितचिद्रूपजीवानामामोक्षं संसारस्थितिप्रकारवैचित्र्यं
वर्णयिष्यंस्तत्संगतिप्रदर्शनाय प्रागुक्तजीवोत्पत्तिं प्रकारभेदैरनुवदति
- एवमित्यादिना । चितः भावा औपाधिका विभावरूपा जीवा भवभावनया
संसारवासनया ऊहिताः प्रवाहिताः । इट् छान्दसः । पूर्ववासनानुसारेण
कल्पिताकाराद्ब्रह्मणः सकाशाज्जाता इत्यादिपरेणान्वयः ॥ १ ॥

असंख्याताः पुरा जाता जायन्ते चापि वाद्य भोः ।
उत्पतिष्यन्ति चैवाम्बुकणौघा इव निर्झरात् ॥ २ ॥

अद्य संप्रति जायन्ते । भो इति रामसंबोधनम् ॥ २ ॥

स्ववासनादशावेशादाशाविवशतां गता ।
दशास्वतिविचित्रासु स्वयं निगडिताशयाः ॥ ३ ॥

60425 अनारतं प्रतिदिशं देशे देशे जले स्थले।
60426 जायन्ते वा म्रियन्ते वा बुद्बुदा इव वारिणि ॥ ४ ॥
60427
60428 अनारतं सततम्। वाशब्दौ पर्यायार्थौ ॥ ४ ॥
60429
60430 केचित्प्रथमजन्मानः केचिज्जन्मशताधिकाः।
60431 केचिद्वाऽजन्मसंख्याकाः केचिद्द्वित्रिभवान्तराः ॥ ५ ॥
60432
60433 प्रथमजन्मानः अस्मिन्कल्पे एकमेव जन्म प्राप्ताः। न विद्यते जन्मसंख्या
60434 येषां ते अजन्मसंख्याकाः ॥ ५ ॥
60435
60436 भविष्यज्जातयः केचित्केचिद्भूतभवोद्भवाः।
60437 वर्तमानभवाः केचित्केचित्त्वभवतां गताः ॥ ६ ॥
60438
60439 भविष्यन्ती जातिर्जन्म येषां ते भविष्यज्जातयः। अस्मिन् कल्पे अद्याप्यनुत्पन्ना
60440 इत्यर्थः। भूता अतीता भवोद्भवा येषां जीवन्मुक्ता इति यावत्। अभवतां
60441 विदेहमुक्तिम् ॥ ६ ॥
60442
60443 केचित्कल्पसहस्राणि जायमानाः पुनः पुनः।
60444 एकामेवास्थिता योनिं केचिद्योन्यन्तरं श्रिताः ॥ ७ ॥
60445
60446 योनिं देहजातिम् ॥ ७ ॥
60447
60448 केचिन्महादुःखसहाः केचिदल्पोदयाः स्थिताः।
60449 केचिदत्यन्तमुदिताः केचिदर्कादिवोदिताः ॥ ८ ॥
60450
60451 महादुःखसहा नारकाः। अल्पोदया अल्पसुखा मर्त्याः। अत्यन्तमुदिता देवाः।
60452 अर्कादिवोदिताः सत्यलोकगाः ॥ ८ ॥
60453
60454 केचित्किंनरगन्धर्वविद्याधरमहोरगाः।
60455 केचिदर्केन्द्रवरुणास्त्र्यक्षाधोक्षजपद्मजाः ॥ ९ ॥
60456
60457 त्र्यक्षादिग्रहणं त्र्यक्षादिसारूप्यप्राप्तजीवाभिप्रायम् ॥ ९ ॥
60458
60459 केचित्कूश्माण्डवेतालयक्षरक्षःपिशाचकाः।
60460 केचिद्ब्राह्मणभूपाला वैश्यशूद्रगणाः स्थिताः ॥ १० ॥
60461
60462 केचिच्छ्वपचचाण्डालकिरातावेशपुष्कसाः।
60463 केचित्तृणौषधी केचित्फलमूलपतङ्गकाः ॥ ११ ॥
60464
60465 किरातावेशाः किरातयोनिप्रविष्टास्त एव। तृणौषधी इति जात्योर्द्विवचनम्।
60466 फलमूलग्रहणं तदन्तर्गतबीजावस्थजीवाभिप्रायेण ॥ ११ ॥
60467
60468 केचिच्चित्रलतागुल्मतृणोपलदृशोऽभितः।
60469 केचित्कदम्बजम्बीरशालतालतमालकाः ॥ १२ ॥
60470
60471 पुनस्तृणग्रहणं तदवान्तरजातिप्रपञ्चार्थम्। उपलं पश्यन्ति
60472 स्वदेहतयेत्युपलदृशः पर्वतादयः ॥ १२ ॥
60473
60474 केचिद्विभवसंसारमन्त्रिसामन्तभूमिपाः।
60475 केचिच्चीराम्बराच्छन्ना मुनिमौनमुपस्थिताः ॥ १३ ॥
60476

60477 विभवैः संसरन्ति भ्रमन्तीति विभवसंसाराः । अम्बरदौर्लभ्यात्तपोर्थं
60478 वा चीराम्बराच्छनाअः ॥ १३ ॥
60479
60480 केचिद्भुजङ्गगोनासकृमिकीटपिपीलिकाः ।
60481 केचिन्मृगेन्द्रमहिषमृगाजचमरैणकाः ॥ १४ ॥
60482
60483 गोनासा अजगराः ॥ १४ ॥
60484
60485 केचित्सारसचक्राह्वबलाकाबककोकिलाः ।
60486 केचित्कमलकह्लारकुमुदोत्पलतां गताः ॥ १५ ॥
60487
60488 केचित्कलभमातङ्गवराहवृषगर्दभाः ।
60489 केचिद्द्विरेफमशकाः पुत्तिकादंशवंशजाः ॥ १६ ॥
60490
60491 कलभः करिशावः । पुत्तिका पतङ्गिका ॥ १६ ॥
60492
60493 केचिदापद्बलाक्रान्ताः केचित्संपदमागताः ।
60494 केचित्स्थिताः स्वर्गपुरे केचिन्नरकमास्थिताः ॥ १७ ॥
60495
60496 ऋक्षचक्रगताः केचिद्वृक्षरन्ध्रगताः परे ।
60497 वातभूताः स्थिताः केचित्केचिद्व्योमपदे स्थिताः ॥ १८ ॥
60498
60499 ऋक्षचक्रं नक्षत्रचक्रं तद्गताः । वातभूता
60500 आवहप्रवहादिवाय्वधिकारं प्राप्ताः । व्योमपदे आकाशाधिकारे ॥ १८ ॥
60501
60502 सूर्यांशुषु स्थिताः केचित्केचिदिन्द्वंशुषु स्थिताः ।
60503 केचित्तृणलतागुल्मरसस्वादुष्ववस्थिताः ॥ १९ ॥
60504
60505 सूर्यांशुषु रसादानाद्यधिकारे । इन्द्वंशुषु ओषध्याद्याप्यायनाधिकारे ।
60506 तृणादीनां रसः स्वादुर्यत्र पश्वादियोग्ये विषयलांपठ्ये इति यावत् ॥ १९ ॥
60507
60508 जीवन्मुक्ता भ्रमन्तीह केचित्कल्याणभाजनाः ।
60509 चिरमुक्ताः स्थिताः केचिन्नूनं परिणताः परे ॥ २० ॥
60510
60511 परे परमात्मनि परिणतास्तद्भावं प्राप्ता विदेहमुक्ताः ॥ २० ॥
60512
60513 केचिच्चिरेण कालेन भविष्यन्मुक्तयः शिवाः ।
60514 केचिद्द्विषन्ति चिद्भावाः केवलीभावमात्मनः ॥ २१ ॥
60515
60516 चिद्भावा जीवा भोगलम्पटाः सन्तः केवलीभावं कैवल्यं द्विषन्ति ॥ २१ ॥
60517
60518 केचिद्विशालाः ककुभः केचिन्नद्यो महारयाः ।
60519 केचित्स्त्रियः कान्तदृशः केचित्पण्डनपुंसकाः ॥ २२ ॥
60520
60521 ककुभो दिग्देवताः ॥ २२ ॥
60522
60523 केचित्प्रबुद्धमतयः केचिज्जडतराशयाः ।
60524 केचिज्ज्ञानोपदेष्टारः केचिदात्तसमाधयः ॥ २३ ॥
60525
60526 एते सर्वेऽपि संसरणानर्थवासनावशादेवेति सैव
60527 समूलमुच्छेद्येत्याशयेनोपसंहरति - जीवा इति ।
60528 उक्तानुक्तसर्वसंग्रहार्थमेतास्वेतास्विति वीप्सा ॥ २४ ॥

60529
60530 जीवाः स्ववासनावेशविवशाशयतां गताः।
60531 एतास्वेतास्ववस्थासु संस्थिता बद्धभावनाः॥ २४॥
60532
60533 विहरन्ति भुवि। निपतन्ति नरके। उत्पतन्ति स्वर्गे। अत एव कन्दुका इव॥ २५॥
60534
60535 विहरन्ति जगत्केचिन्निपतन्त्युत्पतन्ति च।
60536 कन्दुका इव हस्तेन मृत्युनाऽविरतं हताः॥ २५॥
60537
60538 विहरन्ति भुवि। निपतन्ति नरके। उत्पतन्ति स्वर्गे। अत एव कन्दुका इव॥ २५॥
60539
60540 आशापाशशताबद्धा वासनाभावधारिणः।
60541 कायात्कायमुपायान्ति वृक्षाद्वृक्षमिवाण्डजाः॥ २६॥
60542
60543 वासनारूपान्भावान्भाविदेहादीन्धारयन्ति तच्छीलाः॥ २६॥
60544
60545 अनन्तानन्तसंकल्पकल्पनोत्पादमायया।
60546 इन्द्रजालं वितन्वाना जगन्मयमिदं महत्॥ २७॥
60547
60548 अनन्तेषु विषयेषु अनन्तसंकल्पकल्पनोत्पादनहेतुभूतया मायया अविद्यया॥
60549 २७॥
60550
60551 तावद्भ्रमन्ति संसारे वारिण्यावर्तराशयः।
60552 यावन्मूढा न पश्यन्ति स्वमात्मानमनिन्दितम्॥ २८॥
60553
60554 आवर्तराशय इवेति शेषः॥ २८॥
60555
60556 दृष्ट्वात्मानमसत्त्यक्त्वा सत्यामासाद्य संविदम्।
60557 कालेन पदमागत्य जायन्ते नेह ते पुनः॥ २९॥
60558
60559 विवेकिनां तर्ह्यात्मदर्शनात्को लाभस्तमाह - दृष्ट्वेति। कालेन
60560 भूमिकादार्ढ्यक्रमेण॥ २९॥
60561
60562 भुक्त्वा जन्मसहस्राणि भूयः संसारसंकटे।
60563 पतन्ति केचिदबुधाः संप्राप्यापि विवेकिताम्॥ ३०॥
60564
60565 विवेकभ्रष्टानां या गतिस्तामाह - भुक्त्वेति॥ ३०॥
60566
60567 केचिच्छक्तत्वमप्युच्चैः प्राप्य तुच्छतया धिया।
60568 पुनस्तिर्यक्त्वमायान्ति तिर्यक्त्वान्नरकानपि॥ ३१॥
60569
60570 शक्तत्वं प्रशस्तजन्मदेशकालप्रतिभाविनयसत्समागमादिसंपन्नताम्।
60571 उच्चैर्देवगन्धर्वब्राह्मणाद्युत्कृष्टसंपद्रूपम्। तुच्छतया
60572 तुच्छविषयलंपटतया धिया स्वबुद्ध्यैव। शक्रत्वम् इति पाठे नहुषः
60573 उदाहार्यः॥ ३१॥
60574
60575 केचिन्महाधियः सन्त उत्पद्य ब्रह्मणः पदात्।
60576 तदैव जन्मनैकेन तत्रैवाशु विशन्त्यलम्॥ ३२॥
60577
60578 महाधियः सनकादयः। तदैव तस्मिन्नेव कल्पे। तत्र मोक्षाख्ये ब्रह्मपदे॥
60579 ३२॥
60580

60581 ब्रह्माण्डेष्वितरेष्वन्ये तेष्वन्ये जीवराशयः |
60582 प्रयान्ति पद्मोद्भवतामन्ये च हरतामपि || ३३ ||
60583
60584 इतरेषु स्वोत्पत्तिब्रह्माण्डान्तरेषु यथैन्दवाः | तेषु
60585 स्वोत्पत्तिस्थानब्रह्माण्डेषु | हरतां हरसारूप्यम् || ३३ ||
60586
60587 अन्ये प्रयान्ति तिर्यक्त्वमन्ये च सुरतामपि |
60588 अन्येऽपि जागतां राम यथैवेह तथैव हि || ३४ ||
60589
60590 नागतां सर्पतां जगतां वा | यथैवेह ब्रह्माण्डे तथैव
60591 ब्रह्माण्डान्तरेऽपीति शेषः || ३४ ||
60592
60593 यथेदं हि जगत्स्फारं तथान्यानि जगन्त्यपि |
60594 विद्यन्ते समतीतानि भविष्यन्ति च भूरिशः || ३५ ||
60595
60596 इदं जगत् ब्रह्माण्डम् | जगन्ति ब्रह्माण्डानि || ३५ ||
60597
60598 अन्येनान्येन चित्रेण क्रमेणान्येन हेतुना |
60599 विचित्राः सृष्टयस्तेषामापतन्ति पतन्ति च || ३६ ||
60600
60601 आपतन्त्याविर्भवन्ति पतन्ति तिरोभवन्ति च || ३६ ||
60602
60603 कश्चिद्गन्धर्वतां याति कश्चिद्गच्छति यक्षताम् |
60604 कश्चित्प्रयाति सुरतां कश्चिदायाति दैत्यताम् || ३७ ||
60605
60606 अत्रैव ब्रह्माण्डान्तरेष्वपि कर्मवैचित्र्याज्जीवगतिर्विचित्रैवेत्याशयेनाह -
60607 कश्चिदिति || ३७ ||
60608
60609 येनैव व्यवहारेण ब्रह्माण्डेऽस्मिन्जनाः स्थिताः |
60610 तेनैवान्येषु तिष्ठन्ति सन्निवेशविलक्षणाः || ३८ ||
60611
60612 येनैव मनुष्यादियोग्यव्यवहारेण | द्वीपान्तरीयजनवत्सन्निवेशेन
60613 संस्थानभेदेन परं विलक्षणाः || ३८ ||
60614
60615 स्वस्वभाववशावेशादन्योन्यपरिघट्टनैः |
60616 सृष्टयः परिवर्तन्ते तरङ्गिण्या इवोर्मयः || ३९ ||
60617
60618 अस्त्वेवं तथापि कथं तेषामुत्तमाधमादिभावेन परस्परस्नेहविरोधादिना
60619 च सृष्टिपरिवृत्तिस्तत्राह - स्वस्वभावेति |
60620 सात्त्विकराजसतामसादिस्वस्वभाववशात्तत्तदनुकूलव्यवहाराभिनिवेशात्प्रवृ
60621 ^इत्तानामेकविषये स्पर्धया अन्योन्यपरिघट्टनैः सृष्टिपरिवृत्तिरित्यर्थः ||
60622 ३९ ||
60623
60624 आविर्भावतिरोभावैरुन्मज्जननिमज्जनैः |
60625 सृष्टयः परिवर्तन्ते तरङ्गिण्या इवोर्मयः || ४० ||
60626
60627 तत्रापि तेहुमाह - आविर्भावेति | रजस आविर्भावे सृष्टेरुन्मज्जनं
60628 सत्त्वतमसोर्निमज्जनं तमस आविर्भावेन रजसस्तिरोभावे
60629 सृष्टेर्निमज्जनमन्तरा सत्त्वाविर्भावे तावत्कालं पालनमिति हेतुपरिवृत्त्या
60630 परिवर्तन्त इत्यर्थः || ४० ||
60631
60632 निर्यान्त्यविरतं तस्मात्परस्माज्जिवराशयः |

60633 अनिर्देश्याः स्वसंवेद्यास्तत्रैवाशु स्फुरन्ति च ॥ ४१ ॥
60634
60635 गुणाधीनान्तःकरणादिषृष्ट्या
60636 तदुपाधिकजीवनिर्गमप्रसिद्धिरित्याशयेनाह - निर्यान्तीति । तत्र
60637 परस्मिन्नेव स्फुरन्ति स्फुटं व्यवहरन्ति च ॥ ४१ ॥
60638
60639 दीपादिवालोकद्दशः सूर्यादिव मरीचयः ।
60640 कणास्तप्तायस इव स्फुलिङ्गा इव पावकात् ॥ ४२ ॥
60641
60642 तत्र श्रुत्यादिप्रसिद्धद्दष्टान्तमाह - दीपादिति ॥ ४२ ॥
60643
60644 कालादिवर्तवश्चित्रा आमोदाः कुसुमादिव ।
60645 शीतला इव वर्षाणुपूरादब्धेरिवोर्मयः ॥ ४३ ॥
60646
60647 शीतलास्तुषारा इव ॥ ४३ ॥
60648
60649 उत्पत्त्योत्पत्त्य कालेन भुक्त्वा देहपरम्पराम् ।
60650 स्वत एव पदे यान्ति निलयं जीवराशयः ॥ ४४ ॥
60651
60652 प्रलये शान्ते पदे बीजभूते । निलयं निलीनताम् ॥ ४४ ॥
60653
60654 अविरतमियमातता तथोच्चै-
60655 र्भवति विनश्यति वर्धते मुधैव ।
60656 त्रिभुवनरचनादिमोहमाया
60657 परमपदे लहरीव वारिराशौ ॥ ४५ ॥
60658
60659 उक्तं जीवजगत्सर्गं संक्षिप्योपसंहरति - अविरतमिति । इयं
60660 त्रिभुवनरचनाभ्रान्तिलक्षणा माया परमपदे अविरतं संततं मुधैव
60661 आतता सर्गेण विस्तृता वर्धते तथा उच्चैर्भवति विपरिणमते विनश्यति च ।
60662 वारिराशौ लहरीवेति मुधात्वे द्दष्टान्तः ॥ ४५ ॥
60663
60664 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० स्थितिप्रकरणे
60665 जीवनिचयस्थानोपदेशो नाम त्रिचत्वारिंशः सर्गः ॥ ४३ ॥
60666
60667 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे
60668 जीवनिचयस्थानोपदेशो नाम त्रिचत्वारिंशः सर्गः ॥ ४३ ॥
60669
60670
60671 चतुश्चत्वारिंशः सर्गः ४४
60672
60673 श्रीराम उवाच ।
60674
60675 क्रमेणानेन येनाप्ता जीवेन स्थितिरात्मनः ।
60676 स कथं भगवन्देहं समाधत्तेऽस्थिपञ्जरम् ॥ १ ॥
60677
60678 मुक्तिप्रलयसाम्येऽपि विशेषोऽत्र प्रकीर्त्यते ।
60679 तथा विरिञ्चिजीवस्य शरीरग्रहणक्रमः ॥ १ ॥
60680
60681 प्रलये स्वत एव प्रदेशान्ते जीवराशयो विलयं यान्तीति यदुक्तं तत्र रामः
60682 शङ्कते - क्रमेणेति । अनेन उत्पत्त्योत्पत्त्य कालेन भुक्त्वा देहपरम्परामिति
60683 त्वदुक्तेन क्रमेण येन जीवेन प्रलये स्वत एव परमपदे आत्मनः स्थितिराप्ता स
60684 मुक्त एवेति पुनः कथं देहमादत्ते । परमपदं प्राप्तस्य पुनरावृत्तौ

60685 मुक्तावप्यनाश्वासप्रसङ्गात् । न चाज्ञानावृतस्य बीजभावकृतो विशेषः
60686 । अबीजस्य
60687 शिलाशकलादेरज्ञानमात्रावरणेनाङ्कुरादिबीजत्वादर्शनादित्यर्थः ॥ १ ॥
60688
60689 श्रीवसिष्ठ उवाच ।
60690
60691 पूर्वमेव मया प्रोक्तं राम किं नावबुध्यसे ।
60692 पूर्वापरविचारार्हा शेमुषी क्व गता तव ॥ २ ॥
60693
60694 स्वसमसत्ताकं बीजत्वादर्शनेऽपि आवरणसमसत्ताकसर्पादिकं प्रति
60695 आवृतरज्ज्वादेर्बीजत्वदर्शनान्मिथ्याबीजत्वमावरणमात्रकृतं
60696 विशेषेणानुक्तमपि स्वबुद्ध्यैव त्वयोहितुं शक्यमिति न
60697 प्रश्नार्हमेतदित्याशयेन परिहारमाह - पूर्वमेवेति ॥ २ ॥
60698
60699 यदिदं हि शरीरादि जगत्स्थावरजङ्गमम् ।
60700 आभासमात्रमेवैतदसत्स्वप्नमिवोत्थितम् ॥ ३ ॥
60701
60702 आभासो विवर्तस्तावन्मात्रम् ॥ ३ ॥
60703
60704 दीर्घस्वप्नो ह्ययं राम मिथ्यैवानघ दृश्यते ।
60705 द्विचन्द्रविभ्रमाकारं भ्रमान्तर्भ्रान्तशैलवत् ॥ ४ ॥
60706
60707 चिरस्थायिनां ब्रह्माण्डभुवनादीनां कथमाभासमात्रता तत्राह -
60708 दीर्घेति ॥ ४ ॥
60709
60710 प्रशान्ताज्ञाननिद्रस्तु नूनं गलितभावनः ।
60711 प्रबुद्धचेताः संसारस्वप्नं पश्यन्न पश्यति ॥ ५ ॥
60712
60713 अज्ञानात्मनो बीजभावात्पुनः संसारस्वप्नदर्शनेऽपि ज्ञस्य न
60714 तत्प्रसक्तिरित्याशयेनाह - प्रशान्तेति । जीवन्मुक्तव्यवहारार्ह पश्यन्नपि
60715 परमार्थदृशा न पश्यति ॥ ५ ॥
60716
60717 स्वभावकल्पितो राम जीवानां सर्वदैव हि ।
60718 आमोक्षपदसंपाप्ति संसारोऽस्त्यात्मनोऽन्तरे ॥ ६ ॥
60719
60720 बीजभूते अज्ञानात्मनि भाविसंसारस्यामोक्षं सूक्ष्मरूपेण सत्त्वादपि
60721 पुनर्जन्मोपपत्तिरित्याशयेनाह - स्वभावेति ॥ ६ ॥
60722
60723 जीवस्य तरलः काय आवर्तः पयसो यथा ।
60724 यथा बीजेऽङ्कुरः स्फारः पल्लवः स्वाङ्कुरे यथा ॥ ७ ॥
60725
60726 जीवस्यान्तरे तरलः कायोऽस्ति यथा पयसोऽन्तरे आवर्त इत्यादिदृष्टान्ताः ॥ ७ ॥
60727
60728 पल्लवे च यथा पुष्पं पुष्पकोशे फलं यथा ।
60729 यतः स कल्पनारूपो देहोऽस्ति मनसोऽन्तरे ॥ ८ ॥
60730
60731 कुतो जीवान्तः कायोऽस्ति तत्राह - यत इति । अन्तरे मध्ये ॥ ८ ॥
60732
60733 बहूरूपतया राम यतोऽस्त्येकतमः स्फुटः ।
60734 स एव प्रतिभासोऽस्य मनसः किल जायते ॥ ९ ॥
60735
60736 तत्रापि देहः कथं संभाव्यते तत्राह - बहुरूपतयेति । मनसो

60737 बहुरूपतया प्रसिद्धेर्देहरूपस्यापि वासनात्मना तत्र संभवादित्यर्थः।
60738 तर्हि बहूनि शरीराणि युगपत्कुतो न जायन्ते तत्राह - यत इति। यतो बहुषु
60739 वासनात्मना स्थितेषु य एवैकतमः परिपक्वैः कर्मभिः स्फुटोऽभिव्यक्तः
60740 क्रियते स एव प्रतिभासोऽस्य प्रायेण काले जायते न सर्व इत्यर्थः॥ ९॥
60741
60742 स एवाशु भवत्येतन्मृत्पिण्डो घटकोपमः।
60743 आदिसर्गे पुरा कायः प्रतिभासोऽस्य चोत्तमः॥ १०॥
60744
60745 एतन्मनः स एव देहो भवति। तत्रोत्तमकर्मपरिपाके उत्तम एव देहो
60746 भवतीत्येतदादिसर्गमारभ्य दर्शयति - आदिसर्ग इति॥ १०॥
60747
60748 यस्मादेष विभुर्ब्रह्मा पद्मकोशगृहस्थितः।
60749 तत्संकल्पक्रमेणैव ततः स्थितिमुपागता॥ ११॥
60750
60751 इत्थं सृष्टिरपर्यन्ता मायेव घनमायया।
60752
60753 श्रीराम उवाच।
60754
60755 जीवो मनःपदं प्राप्य वैरिञ्चं पदमागतः॥ १२॥
60756
60757 यथा ब्रह्मंस्तथा सर्वं विस्तरेण वदाशु मे।
60758
60759 श्रीवसिष्ठ उवाच।
60760
60761 ब्रह्मे शृणु महाबाहो शरीरग्रहणे क्रमम्॥ १३॥
60762
60763 निदर्शनेन तेनैव जागतीं ज्ञास्यसि स्थितिम्।
60764 दिक्कालाद्यनवच्छिन्नमात्मतत्त्वं स्वशक्तितः॥ १४॥
60765
60766 लीलयैव यदादत्ते दिक्कालकलितं वपुः।
60767 तदैव जीवपर्यायं वासनावेशतत्परम्॥ १५॥
60768
60769 मनः संपद्यते लोलं कलनाकलनोन्मुखम्।
60770 मलयन्ती मनःशक्तिरादौ भावयति क्षणात्॥ १६॥
60771
60772 कलनाकलनोन्मुखमिति यदुक्तं तद्विवृणोति - कलयन्तीत्यादिना। पूर्वसर्गे
60773 आकाशादिक्रमाविर्भूतहिरण्यगर्भाहंग्रहोपासनसंस्कृतं
60774 मनस्तथैवाव्याकृते लीनं मनः शक्तिरित्युच्यते सा तेनैव क्रमेण
60775 स्वाविर्भावं कल्पयन्ती सतीत्यर्थः॥ १६॥
60776
60777 आकाशभावनामच्छां शब्दबीजरसोन्मुखीम्।
60778 ततस्तां घनतां यातं घनस्पन्दक्रमान्मनः॥ १७॥
60779
60780 शब्दानां बीजं शब्दतन्मात्रं रसः श्रोत्रेन्द्रियम्। तां
60781 तादृशाकाशभावनां प्राप्य घनतामुपचयं यातं मनः॥ १७॥
60782
60783 भावयत्यनिलस्पन्दं स्पर्शबीजरसोन्मुखम्।
60784 ताभ्यामाकाशवाताभ्यामदृष्टाभ्यां मनोदृशा॥ १८॥
60785
60786 अनिलात्मना स्पन्दमीषच्चलनम्। स्पर्शबीजेत्यादि प्राग्वत्। अपञ्चीकृतत्वेन
60787 सूक्ष्मतमत्वान्मनोदृशा मनोवच्छिन्न चैतन्यात्मना
60788 जीवेनादृष्टाभ्याम्॥ १८॥

60789
60790 शब्दस्पर्शस्वरूपाभ्यां संघाताज्जन्यतेऽनलः |
60791 मनस्तद्घन्तां प्राप्य ततो भावयति क्षणात् || १९ ||
60792
60793 संघातात् उपचयादभिघाताच्च | अनलो रूपबीजरसात्मकः || १९ ||
60794
60795 प्राकाश्यममलालोकमालोकस्तेन वर्धते |
60796 मनस्तावद्गुणगतं रसतन्मात्रवेदनम् || २० ||
60797
60798 तावद्गुणगतं तावद्भिराकाशवायुतेजोभिर्गुणनं गुण उपचयस्तं गतं
60799 प्राप्तम् || २० ||
60800
60801 क्षणार्धेन त्वपां शैत्यं जलसंवित्ततो भवेत् |
60802 ततस्ताद्दग्गुणगतं मनो भावयति क्षणात् || २१ ||
60803
60804 अपां शैत्यं रसतन्मात्रं प्राप्य जलमिति संवेद्यत इति संवित्प्रतीत्यर्हं
60805 भवेदित्यर्थः | ताद्दशामुक्तप्रकाराणां चतुर्णां गुणं
60806 संघातभावं गतम् || २१ ||
60807
60808 स्वरूपं गन्धवत्स्थूलं येनोदेष्यति मेदिनी |
60809 अथेत्थंभूततन्मात्रवेष्टितं तनुतां जहत् || २२ ||
60810
60811 उदेष्यतीति पूर्वभूतजन्मकालमपेक्ष्य भविष्यत्त्वविवक्षणाल्लृट् |
60812 भूततन्मात्रवेष्टितमिदं पञ्चकं मिलितं सत्तनुतां सौक्ष्म्यं जहत्त्यजत् ||
60813 २२ ||
60814
60815 वपुर्वह्निकणाकारं स्फुरितं व्योम्नि पश्यति |
60816 अहंकारकलायुक्तं बुद्धिबीजसमन्वितम् || २३ ||
60817
60818 यद्वपुः पश्यति तल्लिङ्गाख्यं पुर्यष्टकमित्यन्वयः || २३ ||
60819
60820 तत्पुर्यष्टकमित्युक्तं भूतहृत्पद्मषट्पदम् |
60821 तस्मिंस्तु तीव्रसंवेगाद्भावयद्भास्वरं वपुः || २४ ||
60822
60823 कर्मज्ञानेन्द्रियगणौ भूतप्राणमनोगणाः | अविद्याकामकर्माणि लिङ्गैः
60824 [लिङ्गं इति पाठः] पुर्यष्टकं विदु | वक्ष्यमाणदेहभावनया
60825 लिङ्गस्यैव हि पञ्चीकरणेन घनत्वे स्थूलदेहताविभावनमित्याह -
60826 तस्मिंस्त्विति || २४ ||
60827
60828 स्थूलतामेति पाकेन मनो बिल्वफलं यथा |
60829 मूषास्थद्रुतहेमाभं स्फुरितं विमलाम्बरे || २५ ||
60830
60831 मूषा प्रतिमाकारनभोगर्भमृत्पिण्डस्तदन्तर्निषिक्तद्रुतहेमाभं बहिः
60832 स्थूलभास्वरमन्तः सूक्ष्मभास्वरं स्थूलदेहसंवलितं
60833 वक्ष्यमाणसंनिवेशमुपादत्ते तत्तेजो लिङ्गं कर्तृ || २५ ||
60834
60835 सन्निवेशमुपादत्ते तत्तेजः स्वस्वभावतः |
60836 तस्मिन्स्वसन्निवेशे च तेजःपुञ्जमये पुनः [मन इत्यपि पाठः] ||
60837 २६ ||
60838
60839 तत्र मनसो विशेषकल्पनाभिनिवेशशाखोपशाखाप्रचय इत्याह -
60840 तस्मिन्नित्यादिना || २६ ||

60841
60842 भजते भावनां स्फारां निश्चितामातताम्बराम् ।
60843 ऊर्ध्वं शिरःपीठमयीमधःपादमयीं तथा ॥ २७ ॥
60844
60845 आतताम्बरां व्याप्ताकाशां भूयुअसीमिति यावत् । तत्र क्रमाच्छिर
60846 आद्यवयवकल्पनामाह - ऊर्ध्वमिति ॥ २७ ॥
60847
60848 पार्श्वयोर्हस्तसंस्थानां मध्ये चोदरधर्मिणीम् ।
60849 प्रकटावयवो बालो ज्वालामालामलाकृतिः ॥ २८ ॥
60850
60851 अङ्गुल्यादिनिष्पत्त्या प्रकटावयवः ॥ २८ ॥
60852
60853 मनोरथवशोपात्तवपुस्तिष्ठत्यसावथ ।
60854 एवं स्ववासनावेशात्कलिताङ्गो मनोमुनिः ॥ २९ ॥
60855
60856 असौ ब्रह्मा । मुनिः पूर्वोपासितप्रकारमननशीलः ॥ २९ ॥
60857
60858 नयत्युपचयं देहं स्वस्वभावमृतुर्यथा ।
60859 कालेन स्फुटतामेति भवत्यमलविग्रहः ॥ ३० ॥
60860
60861 बुद्धिसत्त्वबलोत्साहविज्ञानैश्वर्यसंस्थितः ।
60862 स एव भगवान्ब्रह्मा सर्वलोकपितामहः ॥ ३१ ॥
60863
60864 ज्ञानमप्रतिमं यस्य वैराग्यं च जगत्पतेः । ऐश्वर्यं चैव धर्मश्च
60865 सहसिद्धं चतुष्टयम् ॥ इति स्मृतिप्रसिद्धविशेषणसिद्धिं तस्य दर्शयति ##-
60866
60867 द्रवत्कनकसंकाशः परमाकाशसंभवः ।
60868 यथासौ परमाकाशे तिष्ठत्यपररूपवान् ॥ ३२ ॥
60869
60870 परमाकाशे ब्रह्मण्यसौ यथा यादृश्या स्वसत्तया तिष्ठति तथा
60871 तादृश्यैव व्यवहारक्षमसत्तया आत्मनो मोहमज्ञानमेव चित्तलीलया
60872 पञ्चीकृतस्थूलव्योमादिवक्ष्यमाणरूपेण जनयतीत्यर्थः ॥ ३२ ॥
60873
60874 जनयत्यात्मनो मोहमात्मस्थं चित्तलीलया ।
60875 कदाचित्केवलं व्योम परमं पारवर्जितम् ॥ ३३ ॥
60876
60877 तस्य कालभेदेन नानाविधाः कल्पना दर्शयति - कदाचिदिति । पारं
60878 परावधिः आदिः पूर्वावधिः पर्यन्तौ पार्श्वतोऽवधिस्तदभावादेव
60879 मध्यमावधिरहितं च केवलं व्योम कल्पयतीत्यर्थः ॥ ३३ ॥
60880
60881 अनादिमध्यपर्यन्तं कदाचिदमलं पयः ।
60882 कदाचित्कल्पकालाग्निज्वालाभास्वरमण्डकम् ॥ ३४ ॥
60883
60884 दैनंदिनप्रलयकाले तु अमलं पय एव कल्पयति । कदाचित्कल्पान्ते दाहकाले ॥ ३४
60885 । ।
60886
60887 कदाचित्काननं कार्ष्ण्यं कालं कमलकुड्मलम् ।
60888 अन्यान्यन्यान्यनेकानि प्रतिजन्मावधिः प्रभुः ॥ ३५ ॥
60889
60890 कदाचित्पृथिवीसर्गोत्तरं भूतसर्गात्प्राक्काले कृष्णमेव कार्ष्ण्यम् ।
60891 चातुर्वर्ण्यमितिवत्स्वार्थे ष्यञ् । हरितवर्णं काननं वृक्षव्याप्तां
60892 कृत्स्नां भुवमित्यर्थः । कदाचित्पाद्मे कल्पे

60893 श्यामभूपद्मप्रकृतित्वात्कालं श्यामं विष्णुनाभ्युत्थं
60894 कमलकुड्मलम् । अन्यान्यन्यानि भुवनार्णवजनादिरूपाण्यनेकानि संस्थानानि
60895 कल्पयन्विष्ण्वादिरूपेण स्वयमेव पालयति ॥ ३५ ॥
60896
60897 कल्पयन्पालयत्येष नानारूपाणि हेलया ।
60898 तत्रेदंप्रथमत्वेन यदैष ब्रह्मणः पदात् ॥ ३६ ॥
60899
60900 तस्य प्रथमकल्पमारभ्य प्रतिदिनं सुप्तोत्थितस्य स्वदेहकल्पनाक्रमं
60901 दर्शयति - तत्रेत्यादिना । सर्वेषां ब्रह्माण्डानां तदभिमानिब्रह्मणां
60902 च कालानवच्छिन्नब्रह्मपदादेवाविर्भावात्तद्दृशा न पौर्वापर्यमस्तीति
60903 प्राथम्यमेवेत्यभिप्रेत्येदंप्रथमत्वेनेत्युच्यते ॥ ३६ ॥
60904
60905 अवतीर्णस्तदाऽज्ञानात्तथैव सुखमस्मृतम् ।
60906 गर्भनिद्राव्यपगमे वपुः पश्यति भास्वरम् ॥ ३७ ॥
60907
60908 यदावतीर्णस्तदाप्रभृति ब्रह्माण्डगर्भे विष्णुकुक्षिगर्भे वा सुखं
60909 सौषुप्तसुखोपलक्षितमस्मृतं प्राक्तनवास्तवरूपस्य
60910 देहव्यवहारादेश्चास्मरणरूपं सुषुप्तमभूदिति शेषः ॥ ३७ ॥
60911
60912 प्राणापानप्रवाहाढ्यं द्रव्यैरिव विनिर्मितम् ।
60913 रोमकोटिभिराकीर्णं द्वात्रिंशद्दशनान्वितम् ॥ ३८ ॥
60914
60915 द्रव्यैः पञ्चभूतस्वच्छभागैः ॥ ३८ ॥
60916
60917 त्रिस्थूणं पञ्चदैवत्यमधश्चरणलाञ्छितम् ।
60918 पञ्चभागं नवद्वारं त्वग्लेपमसृणाङ्गकम् ॥ ३९ ॥
60919
60920 सक्थिपृष्ठास्थिभिस्त्रिस्थूणम् । पञ्चभिः प्राणैः पञ्चदैवस्यम् ।
60921 पाणिपादशिरोवक्षःकुक्षिणा पञ्चभागम् ॥ ३९ ॥
60922
60923 युक्तमङ्गुलिर्विंशत्या नखविंशतिलाञ्छितम् ।
60924 द्विबाहुं द्विस्तनं द्व्यक्षं बह्वक्षिभुजमेव च ॥ ४० ॥
60925
60926 इच्छया कदाचिद्बह्वक्षिभुजमपि ॥ ४० ॥
60927
60928 नीडं चित्तविहङ्गस्य नीडं मन्मथभोगिनः ।
60929 तृष्णापिशाच्या निलयं जीवकेसरिकन्दरम् ॥ ४१ ॥
60930
60931 अभिमानगजालानं मानसाम्भोजशोभितम् ।
60932 अथालोच्य वपुर्ब्रह्मा कान्तमात्मीयमुत्तमम् ॥ ४२ ॥
60933
60934 चिन्तयामास भगवांस्त्रिकालामलदर्शनः ।
60935 अस्मिन्नाकाशकुहरे तते मधुपलाञ्छिते ॥ ४३ ॥
60936
60937 मधुपपदेन तत्सदृशश्यामता लक्ष्यते तया लाञ्छिते ॥ ४३ ॥
60938
60939 अदृष्टपारपर्यन्ते प्रथमं किमभूदिति ।
60940 इति चिन्तितवान्ब्रह्मा सद्यो जातोऽमलात्मदृक् ॥ ४४ ॥
60941
60942 प्रथमं मदुत्पत्तेः पूर्वम् । इतिशब्दद्वयं वीप्सया
60943 सर्वपूर्वविशेषचिन्तालाभार्थम् । अमला निर्मलत्वादतीतानागतदर्शने क्षमा
60944 आत्मदृग् यस्य ॥ ४४ ॥

60945
60946 अपश्यत्सर्गवृन्दानि समतीतान्यनेकशः।
60947 अथ सस्मार सकलान्सर्वान्धर्मगणान्क्रमात् ॥ ४५ ॥
60948
60949 अथ तत्कारणचिन्तानन्तरम्। सकलान् साङ्गोपाङ्गान्।
60950 धर्मगणग्रहणमधर्माणामप्युपलक्षणम् ॥ ४५ ॥
60951
60952 वसन्तः कुसुमानीव वेदानादाय संस्तुतान्।
60953 लीलया कल्पयामास चित्रसंकल्पजाः प्रजाः ॥ ४६ ॥
60954
60955 अत एव तस्योत्तरकाले सर्गोऽपि वेदोक्तक्रमेणैव सुकरोऽभूदित्याशयेनाह -
60956 लीलयेति ॥ ४६ ॥
60957
60958 नानाचारसमाचारं गन्धर्वनगरे यथा।
60959 तासां स्वर्गापवर्गार्थं धर्मकामार्थसिद्धये ॥ ४७ ॥
60960
60961 अनन्तानि विचित्राणि शास्त्राणि समकल्पयत्।
60962 दृष्टिरेवमियं राम सर्गेऽस्मिन्स्थितिमागता।
60963 विरिञ्चिरूपान्मनसः पुष्पलक्ष्मीर्मधोरिव ॥ ४८ ॥
60964
60965 मनस एव सर्वसृष्टिरिति यत्प्रतिज्ञातं तदेवंरीत्या समर्थितमित्युपसंहरति
60966 - दृष्टिरिति ॥ ४८ ॥
60967
60968 विविधविरचनैः क्रियाविलासैः
60969 कमलजरूपधरेण चेतसैव।
60970 रघुसुत परिकल्पनेन नीता
60971 स्थितिमतुलां जगतीह सर्गलक्ष्मीः ॥ ४९ ॥
60972
60973 हे रघुसुत रघुसंतते परिदृश्यमाना सर्गलक्ष्मीः कमलजरूपधरेण
60974 चेतसा मनसैव स्वपरिकल्पनेन अतुलां सत्यतुच्छविलक्षणत्वादसदृशीं
60975 स्थितिं नीतेत्यर्थः ॥ ४९ ॥
60976
60977 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० मो० स्थितिप्रकरणे
60978 संसारावतरणप्रतिपादनोपदेशो नाम चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥
60979
60980 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे
60981 संसारावतरणप्रतिपादनोपदेशो चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥
60982
60983
60984 पञ्चचत्वारिंशः सर्गः ४५
60985
60986 श्रीवसिष्ठ उवाच।
60987
60988 जगत्संपन्नमेवेदं संपन्नं किंचिदेव न।
60989 शून्यमेव च भामात्रं मनोविलसितं स्थितम् ॥ १ ॥
60990
60991 मनोरथादौ दृष्टत्वान्मनः कार्यं न सत्किचित्।
60992 असत्तस्माज्जगद्रूपं सत्सदेवेति वर्ण्यते ॥ १ ॥
60993
60994 संपन्नं परिनिष्ठितमेव सन्न किंचिदेव संपन्नम्। यतो मनोविलसितं
60995 सर्वं भामात्रं प्रतिभासमात्रं स्थितम्। तद्व्यतिरेकेण शून्यमेवेत्यर्थः
60996 ॥ १ ॥

60997
60998 न देशकालावेतेन ब्रह्माण्डेनावृतौ स्थितौ।
60999 मनागपि महारूपवताप्याकाशरूपिणा॥ २॥
61000
61001 कुतश्च प्रतिभासव्यतिरेकेण शून्यता तस्येति तत्राह - नेति। यतः
61002 प्रतिभासदेशकालौ एतेन परिच्छिन्नेन ब्रह्माण्डेन नावृतौ न व्याप्तौ।
61003 अतीतानागतबहिःस्थितब्रह्माण्डकोटीनामपि त्रसरेणूनामातपान्तरिव
61004 प्रतिभासान्तःस्फुरणदर्शनात्। किं बहुना। महारूपवता परममहत्त्वेन
61005 प्रसिद्धेनाप्याकाशरूपिणा प्रथमभूतेन तस्य तौ न व्याप्तौ।
61006 ज्यायानाकाशात् इति श्रुतेः अप्रतिभासमाने आकाशे ज्यायस्त्वे मानाभावेन
61007 प्रतिभासान्तरेव तस्य भानस्यावश्यवाच्यत्वे
61008 प्रतिभासमानानन्तकोटिष्वेकतमभूतस्य तस्य निरस्ता
61009 प्रतिभासदेशकालव्यापकतेति सूचनाय मनागपीत्युक्तिरिति बोध्यम्॥ २॥
61010
61011 एतत्संकल्पमात्रात्म स्वप्नदृष्टपुरोपमम्।
61012 यत्रैव तत्र तच्छून्यं केवलं व्योम संस्थितम्॥ ३॥
61013
61014 पूर्वोत्तरदेशकालाव्याप्तिरास्तां नाम स्वाश्रययोर्देशकालयोरपि
61015 अध्यस्तेनाधिष्ठानासंस्पर्शान्न प्रतिभासव्याप्तिप्रसक्तिरित्याशयेनाह -
61016 एतदिति। यत्रैव देशे काले च जगच्चिति भासति तत्रैव तदधिष्ठानं चित्
61017 जगच्छून्यं केवलं व्योमेव संस्थितमित्यर्थः॥ ३॥
61018
61019 अभित्तिरागरचनमपि दृष्टमसन्मयम्।
61020 अकृतं कृतमेवैतद्व्योम्नि चित्रं विचित्रकम्॥ ४॥
61021
61022 अत एवेदं गन्धर्वनगरचित्रवदिति प्रागुक्तमित्याह - अभित्तीति॥ ४॥
61023
61024 मनसा कल्पितं सर्वं देहादिभुवनत्रयम्।
61025 संस्मृतौ कारणं चैतच्चक्षुरालोकने यथा॥ ५॥
61026
61027 किंच मनसः स्मृतिमात्रे हेतुत्वात्तद्रचितमिदं स्मृतितुल्यमिति न
61028 स्वकालेऽर्थरूपं सदित्याह - मनसेति। एतत् मनः॥ ५॥
61029
61030 आभासमात्रं हि जगद्घटावटपटभ्रमैः।
61031 आवर्तते न सद्रूपात्पृथक्कुड्यादयः स्थिताः॥ ६॥
61032
61033 कुड्यादिजगतः सतः पृथक्कृत्य दर्शयितुमशक्यत्वादपि
61034 सद्व्यतिरेकेणासत्त्वमित्याह - आभासेति॥ ६॥
61035
61036 मनसेदं शरीरं हि वासनार्थं प्रकल्पितम्।
61037 कृमिकोशप्रकारेण स्वात्मकोश इव स्वयम्॥ ७॥
61038
61039 यथा स्वात्मनः स्वयं कोश इव प्रकल्पितं तथैव इदं शरीरं स्वस्य
61040 वासनार्थं स्थित्यर्थं कृमिकोशप्रकारेण नीडभूतं कल्पितमित्यर्थः॥ ७
61041 ।।
61042
61043 न तदस्ति च यन्नाम चेतःसंकल्पमम्बरम्।
61044 न करोति न चाप्नोति दुर्गमप्यतिदुष्करम्॥ ८॥
61045
61046 चेतसः संकल्पमात्रेणासद्रचनाप्राप्तिशक्तिप्रसिद्धेरप्युक्तार्थोपपत्तिरित्याह
61047 - न तदिति। यदिति सामान्ये नपुंसकम्। अम्बरमर्थशून्यं संकल्पं
61048 संकल्परूपं यन्न करोति नाप्नोति चेत्यन्वयः। दुर्गं दुरापम्॥ ८॥

61049
61050 सर्वशक्तिधरे देवे का नाम ननु शक्तयः।
61051 न संभवन्त्याश्रियन्ते याभिरन्तर्मनोगुहाः ॥ ९ ॥
61052
61053 याभिः शक्तिभिर्मनोगुहा अन्तर्नाश्रियन्ते ताः शक्तयो देवे जगदीश्वरेऽपि का
61054 नाम संभवन्तीत्यन्वयः ॥ ९ ॥
61055
61056 सत्तासत्ते पदार्थानां सर्वेषां सर्वदैव हि।
61057 महाबाहो संभवतः सर्वशक्तौ विभौ सति ॥ १० ॥
61058
61059 यदि सदैव जगदसद्ब्रह्म सदैव सत्परस्परं च तयोः सदैवासंस्पर्शस्तर्हि
61060 कथं जगति कादाचित्के सत्तासत्ते तत्राह - सत्तासत्ते इति। न कादाचित्के अपि तु
61061 सदातने। तयोः परस्पराभिभवेन पर्यायेणावेशकल्पनमेवाचिन्त्यं
61062 मायाशक्तिकृतमिति भावः ॥ १० ॥
61063
61064 पश्य भावनया प्राप्तं मनसैवात्मजं वपुः।
61065 तस्मात्तत्कलनां राम सर्वशक्तियुतां विदुः ॥ ११ ॥
61066
61067 सेयमैश्वरी सर्वशक्तिः स्वमनस्येव प्रत्यक्षं दृश्यतामित्याह -
61068 पश्येति। जगति विचित्रपदार्थशक्तयोऽपि सर्वशक्तिमन्मनःकल्पनादेवेत्याह ##-
61069
61070 स्वसंकल्पकृताः सर्वे देवासुरनरादयः।
61071 स्वसंकल्पोपशमने शाम्यन्त्यस्नेहदीपवत् ॥ १२ ॥
61072
61073 अत एव न देवादिशक्तिभिरपि मुक्तिः प्रतिबद्धुं शक्येत्याशयेनाह -
61074 स्वसंकल्पेति ॥ १२ ॥
61075
61076 आकाशसदृशं सर्वं कलनामात्रजृम्भितम्।
61077 जगत्पश्य महाबुद्धे सुदीर्घं स्वप्नमुत्थितम् ॥ १३ ॥
61078
61079 न जायते न म्रियते इह किंचित्कदाचन।
61080 परमार्थेन सुमते मिथ्या सर्वं तु विद्यते ॥ १४ ॥
61081
61082 न वृद्धिमेति नो ह्रासं यन्न किंचित्कदाचन।
61083 किं वा तनु भवेत्तत्र कस्य का नाम खण्डना ॥ १५ ॥
61084
61085 ननु खण्डनेनाल्पीकृतम्। नह्यखण्डे खण्डनमतरेण परिच्छेदप्रसक्तिः
61086 नच खण्डनं वा संभवतीत्यर्थः ॥ १५ ॥
61087
61088 भूमभूतं स्वकायोत्थमपश्यन्निपुणं दृशा।
61089 राघवाऽमहता स्वान्तः किमज्ञ इव मुह्यसि ॥ १६ ॥
61090
61091 बहोर्भावो भूमा तथाभूतम्। अपरिच्छिन्नमिति यावत्। स्वकायादुत्थं
61092 मुञ्जेषीकावत् पृथक्कृतमपश्यन् अमहता परिच्छिन्नात्मदर्शनेन किं
61093 मुह्यसि ॥ १६ ॥
61094
61095 मृगतृष्णा यथा तापान्मनसो निश्चयात्तथा।
61096 असन्त इव दृश्यन्ते सर्वे ब्रह्मादयोऽप्यमी ॥ १७ ॥
61097
61098 तापात् मरुमयूखात्। निश्चयात् संकल्पात् ॥ १७ ॥
61099
61100 द्विचन्द्रविभ्रमप्रख्या मनोरथवदुत्थिताः।

61101 मिथ्याज्ञानघनाः सर्वे जगत्याकारराशयः ॥ १८ ॥
61102
61103 आकारराशयो दृश्याकारसमूहाः ॥ १८ ॥
61104
61105 यथा नौयायिनो मिथ्या स्थाणुस्पन्दमतिस्तथा ।
61106 असत्यैवोत्थिता नित्यमाकाराणां परम्परा ॥ १९ ॥
61107
61108 इन्द्रजालमिदं विद्धि मायारचितपञ्जरम् ।
61109 मनोमनननिर्माणं न सन्नासदिव स्थितम् ॥ २० ॥
61110
61111 नासदिव सत्यमिव ॥ २० ॥
61112
61113 ब्रह्मैवेदं जगत्सर्वमन्यतायास्ततः कुतः ।
61114 प्रसङ्गः कीदृशः कोऽसौ क्व वा सा परितिष्ठति ॥ २१ ॥
61115
61116 अन्यतायाः भेदस्य । चतुर्भिः किंवृत्तैः प्रमाणप्रकारस्वरूपाधाराणां
61117 निषेधः । सा अन्यता ॥ २१ ॥
61118
61119 अयं गिरिरयं स्थाणुरित्याडम्बरविभ्रमः ।
61120 मनसो भावनादार्ढ्यादसन्सन्निव लक्ष्यते ॥ २२ ॥
61121
61122 उपचयावधिर्गिरिरपचयावधिः स्थाणुस्ताभ्यां सर्वे
61123 तदान्तरालिकपरिच्छेदाडम्बरविभ्रमा अप्युपलक्ष्यन्ते ॥ २२ ॥
61124
61125 प्रपञ्चपतनारम्भं प्रमत्तस्य इदं जगत् ।
61126 सकामतृष्णामननं त्यक्त्वान्यद्राम भावय ॥ २३ ॥
61127
61128 प्रमत्तस्य विचारहीनस्य पुंसः सकामतृष्णामनननमिदं जगत् प्रपञ्चे
61129 स्वर्गनरकतिर्यगादिजन्मसु पतनमारभत इति प्रपञ्चपतनारम्भं भवतीति
61130 शेषः । अतस्त्वं विवेकेन जगत्यक्त्वा अन्यत् निष्प्रपञ्चमात्मानं
61131 भावयेत्यर्थः ॥ २३ ॥
61132
61133 यथा स्वप्नो महारम्भो भ्रान्तिरेव न वस्तुतः ।
61134 दीर्घस्वप्नं तथैवेदं विद्धि चित्तोपपादितम् ॥ २४ ॥
61135
61136 दृश्यमानमहाभोगं गृह्यमाणमवस्तुकम् ।
61137 कोशमाशाभुजङ्गानां संसाराडम्बरं त्यज ॥ २५ ॥
61138
61139 दृश्यमानावस्थं महाभोगं बहुविस्तीर्णं रमणीयमिव । तेषु
61140 कतिपयानामेव ग्रहीतुं शक्यत्वाद्गृहीतेष्वपि
61141 कदाचित्कस्यचिदेवोपभोगात्तदुत्तरक्षण एव क्षयाच्च अवस्तुकं तुच्छम् ।
61142 अभुक्तेषु पूर्वदृष्टेष्वदृष्टेषु च विषयेषु
61143 तृष्णाविषोत्कटानामाशाभुजङ्गानां कोशं वल्मीकमिव स्थितम् ॥ २५ ॥
61144
61145 असदेतदिति ज्ञात्वा माऽत्र भावं निवेशय ।
61146 अनुधावति न प्राज्ञो विज्ञाय मृगतृष्णिकाम् ॥ २६ ॥
61147
61148 कथं त्याज्यं तत्राह - असदिति । भावं रागम् ॥ २६ ॥
61149
61150 स्वसंकल्पात्स्वरूपाढ्यां मनोरथमयीं श्रियम् ।
61151 योऽनुगच्छति मूढात्मा दुःखस्यैव स भाजनम् ॥ २७ ॥
61152

61153 तदनुधावनेऽनर्थमाह -स्वसंकल्पेति ॥ २७ ॥
61154
61155 वस्तुन्यसति लोकोऽयं यातु काममवस्तुनि ।
61156 यस्तु वस्तु परित्यज्य यात्यवस्तु स नश्यति ॥ २८ ॥
61157
61158 न केवलमनर्थप्राप्तिरेव किंत्वर्थनाशोऽपि तस्यास्तीत्याह - यस्त्विति । नश्यति
61159 परमपुरुषार्थाद्भ्रश्यति ॥ २८ ॥
61160
61161 मनोव्यामोह एवेदं रज्ज्वामहिभयं यथा ।
61162 भावनामात्रवैचित्र्याच्चिरमावर्तते जगत् ॥ २९ ॥
61163
61164 असद्भ्युदितैर्भविर्जलान्तश्चन्द्रवच्चलैः ।
61165 वञ्चयते बाल एवेह न तत्त्वज्ञो भवादृशः ॥ ३० ॥
61166
61167 य इमं गुणसंघातं भावयन्सुखमीहते ।
61168 प्रमार्ष्टि स जडो जाड्यं वह्निभावनया स्वया ॥ ३१ ॥
61169
61170 गुणानां शब्दादीनां संघातं देहादि भावयन्
61171 अहंममेत्यभिमन्यमानः । जाड्यं शीतम् । वह्निभावनया ।
61172 मनोरथकल्पितवह्निनेति यावत् ॥ ३१ ॥
61173
61174 असदेवेदमाभोगि दृश्यते जलपञ्जरम् ।
61175 मनोमनननिर्माणहृदये नगरं यथा ॥ ३२ ॥
61176
61177 जलपञ्जरं लडयोरभेदाज्जडसंघातभूतं देहादि ॥ ३२ ॥
61178
61179 इदं चित्तेच्छयोदेति लीयते तदनिच्छया ।
61180 मिथ्यैवं दृश्यते स्फीतं गन्धर्वनगरं यथा ॥ ३३ ॥
61181
61182 यदीदमैच्छिकसंकल्पवशादुदितं तर्हि ऐच्छिकनिवृत्तिसंकल्पादेव कुतो न
61183 निवर्तते तत्राह - लीयत इति । तस्य चित्रस्यानिच्छया रागक्षयमात्रेण ।
61184 एवंविधं लोके मिथ्यैव दृश्यते । गन्धर्वनगरग्रहणं
61185 मनोरथकल्पितनगरोपलक्षणम् ॥ ३३ ॥
61186
61187 राम नष्टे जगत्यस्मिन्न किंचिदपि नश्यति ।
61188 युक्तेऽपि च जगत्यस्मिन्न किंचिदपि युज्यते ॥ ३४ ॥
61189
61190 अतो नास्य नाशे समृद्धौ वा शोकहर्षौ कार्याविल्याशयेनाह -
61191 रामेत्यादिना । युक्ते समृद्धे ॥ ३४ ॥
61192
61193 मनःप्रकल्पिते भग्ने हृदि विस्तीर्णपत्तने ।
61194 वृद्धिं चोपगते ब्रूहि किं वृद्धं कस्य किं क्षतम् ॥ ३५ ॥
61195
61196 क्रीडार्थेन यथोदेति बालानां हृदि वर्तनम् ।
61197 मनसा तद्वदेवेदमुदेत्यविरतं जगत् ॥ ३६ ॥
61198
61199 क्रीडार्थेन पुत्रिकादिना वर्तनं पुत्रपश्वादिव्यवहाराभासकल्पनं यथा न
61200 शोच्यते इति शेषः ॥ ३६ ॥
61201
61202 न किंचित्कस्यचिन्नष्टमिन्द्रजालजले यथा ।
61203 भ्रष्टे नष्टे तथैवास्मिन्संसारे वितथोत्थिते ॥ ३७ ॥
61204

61205 यदसत्तदसत्स्याच्चेन्न किं कस्य किल क्षतम् ।
61206 ततो हर्षविषादानां संसारे नाम नास्पदम् ॥ ३८ ॥
61207
61208 यदसदलीकं तदसदविद्यमानमेव चेत्स्यात् कस्य किं क्षतम् । न किंचिदिति
61209 शेषः । इवार्थे वा नकारः । अतः संसारे हर्षविषादानामास्पदं न
61210 किंचिन्नामेत्यन्वयः ॥ ३८ ॥
61211
61212 असदेव यदत्यन्तं तस्माात्किं नाम नश्यति ।
61213 नाशाभावे हि दुःखस्य कः प्रसङ्गो महामते ॥ ३९ ॥
61214
61215 इत्थं नाशाभ्युपगमेन शोकानर्हतामुक्त्वा वस्तुतो नाश एव कस्यचिन्नास्तीति
61216 तामाह - असदेवेति । यद्यतोऽसदेव तस्मात्ततः ॥ ३९ ॥
61217
61218 सदेव वा यदत्यन्तं तस्य किं नाम नश्यति ।
61219 ब्रह्मैवेदं जगत्सर्वं सुखदुःखे किमुत्थिते ॥ ४० ॥
61220
61221 अध्यस्तदृष्ट्या नाशासंभवमुपपाद्य अधिष्ठानदृष्ट्यापि
61222 तमुपपादयति - सदेवेति । सुखदुःखे किंनिमित्तमुत्थिते । नोत्थिते एवेत्यर्थः
61223 ॥ ४० ॥
61224
61225 असद्वापि यदत्यन्तं वृद्धिः स्यात्तस्य कीदृशी ।
61226 वृद्धेरभावे हर्षस्य कः प्रसङ्गो महामते ॥ ४१ ॥
61227
61228 उत्पत्तिनिरासादेव वृद्ध्यादिविकारा अपि निरस्ता एवेति
61229 तन्निमित्तहर्षस्याप्ययुक्ततेत्याह [प्युक्तता इति पाठः] - असदिति ।
61230 वापी अवधारणे ॥ ४१ ॥
61231
61232 सर्वत्रासत्यभूतेऽस्मिन्प्रपञ्चैकान्तकारिणि ।
61233 संसारे किमुपादेयं प्राज्ञो यदभिवाञ्छतु ॥ ४२ ॥
61234
61235 इष्टप्राप्तौ हि हर्षः स्यादिष्टमेव मायामये नास्तीत्याह - सर्वत्रेति ॥ ४२ ॥
61236
61237 सर्वत्र सत्यभूतेऽस्मिन्ब्रह्मतत्त्वमयेऽपि च ।
61238 किं स्यात्त्रिभुवने हेयं प्राज्ञाः परिहरन्तु यत् ॥ ४३ ॥
61239
61240 एवं सर्वमानन्दैकरस्येन पश्यतो हेयमपि नास्तीत्याह - सर्वत्रेति ।
61241 ब्रह्मतत्त्वमये । स्वार्थे मयट् । परिहरन्तु त्यजन्तु ॥ ४३ ॥
61242
61243 असत्सद्वा जगद्यस्य तेनासौ सुखदुःखयोः ।
61244 अगम्य एव मूर्खस्तु तद्विनाशेन दुःखितः ॥ ४४ ॥
61245
61246 तस्य पक्षद्वयेऽपि विनाशानर्हस्य पुत्रमित्रादेर्विनाशेन स्वभ्रान्तिकल्पितेन
61247 दुःखितः ॥ ४४ ॥
61248
61249 आदावन्ते च यन्नासित् वर्तमानेऽपि तत्तथा ।
61250 योऽभिवाञ्छत्यसद्राम तस्यासत्तैव दृश्यते ॥ ४५ ॥
61251
61252 इदानीमसत्सत्पक्षयोस्तुल्ये उपपत्ति दर्शयति - आदाविति द्वाभ्याम् । असद्वा
61253 इदमग्र आसीत् नैवेह किंचनाग्र आसीत्
61254 इत्यादिश्रुतिभिर्गगनपवनभुवनादीनामाद्यन्तयोरसत्त्वं श्रूयते
61255 घटादेश्च प्रत्यक्षमनुभूयते चिरं चोभयतश्चासत्त्वमचिरं सकृच्च
61256 सत्त्वं प्रतिव्यक्ति प्रसिद्धम् । ते च परस्परोच्छित्तिस्वभावेन

61257 सत्त्वासत्त्वेनैकवस्तुन्येकतरप्रहाणमन्तरेण निविशेते
61258 इत्यवश्यमेकतरस्मिन्प्रहातव्ये
61259 आद्यन्तयोश्चिरतरमसत्त्वप्रसिद्धेर्वर्तमानदशायामप्यसत्त्वमेव
61260 सर्वव्यक्तीनामिति असत्त्वपक्षेच्छुना असत्त्वमेव श्रुतियुक्त्यनुभवैर्द्रश्यत
61261 इत्यर्थः ॥ ४५ ॥
61262
61263 आदावन्ते च यत्सत्यं वर्तमाने सदेव तत् ।
61264 यस्य सर्वं सदेव स्यात्तस्य सत्तैव दृश्यते ॥ ४६ ॥
61265
61266 सदेव सोम्येदमग्र आसीत् कथमसतः सज्जायेत इत्यादिश्रुतिभिः सत्सदित्येव
61267 प्रमाणप्रवृत्तिकाले सर्ववस्त्वनुभवादाद्यन्तकालयोः
61268 सत्तानभिव्यक्तितिरोधानमात्रकल्पनेनापि असद्वा इदमग्र आसीत्
61269 इत्यादिश्रुतियुक्त्योरुपपत्तेः सत्त्वश्रुतियुक्त्योरन्यथोपपादयितुमशक्यत्वाच्च
61270 सदातनी सार्वत्रिकी च सर्ववस्तूनां सत्ता लाघवादेकैव युक्तेति सत्तैक्ये सिद्धे
61271 आदावन्ते च कारणब्रह्मसत्तयैव सर्वस्य सत्यत्वाद्वर्तमानकाले तत्तथैवेति
61272 सद्वादिना अखण्डब्रह्मसत्तैव सर्वत्र दृश्यत इत्यर्थः ॥ ४६ ॥
61273
61274 असत्यभूतं तोयान्तश्चन्द्रव्योमतलादिकम् ।
61275 बाला एवाभिवाञ्छन्ति मनोमोहाय नोत्तमाः ॥ ४७ ॥
61276
61277 देशकालपरिच्छिन्नसत्ताकल्पनं पक्षद्वयबहिष्कृतं
61278 सर्वश्रुतियुक्तिविरुद्धं मूर्खसहस्रैरन्धपरम्परया परिकल्पितं
61279 सर्वानर्थकारीति बालिशानां तेषामेवोचितं न तवेत्याशयेनाह -
61280 असत्यभूतमित्यादिना ॥ ४७ ॥
61281
61282 बालो हि वितताकारैर्वस्तुरिक्तैः प्रयोजनैः ।
61283 संतोषमेत्यनन्ताय दुःखाय न सुखाय तु ॥ ४८ ॥
61284
61285 वस्तुरिक्तैरर्थशून्यैः । प्रयोजनैः सुखाभासैः ॥ ४८ ॥
61286
61287 तस्मान्मा त्वं भवो बालो राम राजीवलोचन ।
61288 अविनाशमिहालोक्य नित्यमाश्रय सुस्थिरम् ॥ ४९ ॥
61289
61290 मा भवः मा भूः । लुङ्विषये व्यत्ययेन लङ् ॥ ४९ ॥
61291
61292 असदिदमखिलं मया समेतं
61293 त्विति विगणय्य विषादितास्तु मा ते ।
61294 सदिह हि सकलं मया समेतं
61295 त्विति च विलोक्य विषादितास्तु मा ते ॥ ५० ॥
61296
61297 इदानीं दर्शितयोः सदसत्पक्षयोर्द्वारभेदेनैकप्रयोजनावसाने फलतः
61298 समुच्चयं दर्शयन्नुपसंहरति - असदिति । मायामूढैरात्मत्वेन
61299 कल्पितेनाहंकारेण समेतं सहितमिदमखिलं जगदसदेवेति मत्वा
61300 श्रुतिगुरुयुक्तिस्वानुभवैरवधार्य पुत्रमित्रधनादिनाशे विषादिता शोकः ।
61301 विषमिव परिणामदुःखदान्विषयानत्तुं भोक्तुं शीलमस्येति विषादी रागी
61302 तद्भावो विषादिता रागश्च मास्तु । तथाच शोकरागादिनिरासद्वारा
61303 ऐकात्म्यदर्शने प्रपञ्चासत्त्ववाद उपयुज्यत इति भावः ।
61304 एवमन्यार्थेनासद्वादप्रस्तावेन निस्तत्त्वमेव जगदिति न मन्तव्यं किंतु
61305 सकलं सदेव । सत्त्वस्याप्रसिद्धौ तत्प्रतिक्षेपकस्यासत्त्वस्याप्रसिद्धेः ।
61306 प्रसिद्धौ च तत्प्रतिक्षिप्तत्वादेवासत्त्वासिद्धेः । एवं सर्वत्र सत्तया
61307 प्रतिक्षिप्तमसत्त्वं निरास्पदं न क्वचित्कस्यचित्परिच्छेदाय
61308 प्रभवतित्यपरिच्छिन्नसदैकरस्ये सिद्धे घटपटादिपरिच्छेदकाकारस्य

61309 पृथगनवशेषान्मया शोधितचिन्मात्रैकरसेन प्रतीचा अखण्डैक्येन
61310 समेतं सदेव भूमाख्यमहमिति विलोक्य स्वात्मप्रतिष्ठस्य ते तव विषादिता
61311 पुनःसांसारिकजन्ममरणादिविषादावाप्तिर्मास्तु। कालत्रयेऽपि न
61312 संभावितेत्यर्थः॥ ५०॥
61313
61314 श्रीवाल्मीकिरुवाच।
61315
61316 इत्युक्तवत्यथ मुनौ दिवसो जगाम
61317 सायंतनाय विधयेऽस्तमिनो जगाम।
61318 स्नातुं सभा कृतनमस्करणा जगाम
61319 श्यामाक्षये रविकरैश्च सहाजगाम॥ ५१॥
61320
61321 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मो० स्थितिप्रकरणे
61322 यथाभूतार्थयोगोपदेशो नाम पञ्चचत्वारिंशः सर्गः॥ ४५॥
61323
61324 इति श्रीवासिष्ठमहारामायणे तात्पर्यप्रकाशे स्थितिप्रकरणे
61325 यथाभूतार्थयोगोपदेशो नाम पञ्चचत्वारिंशः सर्गः॥ ४५॥
61326
61327 ॥ नवमो दिवसः॥
61328
61329 षट्चत्वारिंशः सर्गः ४६
61330
61331 श्रीवसिष्ठ उवाच।
61332
61333 रम्ये धनेषु दारादौ शोकस्यावसरो [मूले हर्षस्यावसरो हि कः इति
61334 पाठः। टीकायां च उभयान्वयीत्यस्यानन्तरं - दारादाविन्द्रजाले
61335 क्षणा दुष्टे सति हर्षस्यावसरः कः तस्मिन्नष्टे वा का
61336 परिदेवनेत्यन्वयः इति पाठोऽधिकः क्वचित्] हि कः।
61337 इन्द्रजालेक्षणाद्दृष्टे नष्टे का परिदेवना॥ १॥
61338
61339 विहरन्नपि संसारे यैर्गुणैर्न निमज्जति।
61340 ते रामायात्र कीर्त्यन्ते जीवन्मुक्तेषु ये स्थिताः॥ १॥
61341
61342 तत्र सर्ववस्तुष्वनास्थया नष्टोपेक्षणानागतावाञ्छनलक्षणौ गुणौ
61343 प्रथममुपदिदिक्षु पूर्वप्रस्तावस्य तदुपयोगं दर्शयितुमाह - रम्ये
61344 इत्यादिना। रम्ये इति पदसंस्कारपक्षे एकवचनं
61345 वचनसर्वनामेत्यनुशासनादेकवचनं आवृत्त्योभयान्वयि॥ १॥
61346
61347 गन्धर्वनगरस्यार्थे दूषिते भूषिते तथा।
61348 अविद्यांशे सुतादौ वा कः क्रमः सुखदुःखयोः॥ २॥
61349
61350 क्रमणं क्रमः प्रसरः॥ २॥
61351
61352 रम्ये धनेऽथ दारादौ हर्षस्यावसरो हि कः।
61353 वृद्धायां मृगतृष्णायां किमानन्दो जलार्थिनाम्॥ ३॥
61354
61355 धनदारादौ च समृद्धे सतीति शेषः। आनन्दो जलक्रीडादिसुखाधिक्यं किम्॥
61356 ३॥
61357
61358 धनदारेषु वृद्धेषु दुःखं युक्तं न तुष्टयः।
61359 वृद्धायं मोहमायायां कः समाश्वासवानिह॥ ४॥
61360

61361 तद्वृद्धौ संसाररोगवृद्धिसंभावनया दुःखमेव कर्तुमुचितं न
61362 हर्ष इत्याह - धनेति ॥ ४ ॥
61363
61364 यैरेव जायते रागो मूर्खस्याधिकतागतैः ।
61365 तैरेव भोगैः प्राज्ञस्य विराग उपजायते ॥ ५ ॥
61366
61367 अधिकतां अभिवृद्धिं आगतैः ॥ ५ ॥
61368
61369 नष्टे धनेऽथ दारादौ हर्षस्यावसरो हि कः ।
61370 पारावलोकिनस्त्वेतैर्विरागं यान्ति साधवः ॥ ६ ॥
61371
61372 नष्टे नश्वरस्वभावे । पारावलोकिनः
61373 नश्वरतानरकहेतुत्वाद्युदर्ककटुकतादर्शिनः ॥ ६ ॥
61374
61375 अतो राघव तत्त्वज्ञो व्यवहारेषु संसृतेः ।
61376 नष्टं नष्टमुपेक्षस्व प्राप्तं प्राप्तमुपाहर ॥ ७ ॥
61377
61378 यदर्थमयं प्रस्तावस्तं दर्शयति - अत इति । उपाहर उपयुंक्ष्व ।
61379 प्राप्तोपयोगोऽर्थप्राप्तत्वान्न विधेयो गुणः ॥ ७ ॥
61380
61381 अनागतानां भोगानामवाञ्छनमकृत्रिमम् ।
61382 आगतानां च संभोग इति पण्डितलक्षणम् ॥ ८ ॥
61383
61384 गुणान्तरमाह - अनागतानामिति ॥ ८ ॥
61385
61386 संसारसंभ्रमे ह्यसिंश्छन्नात्मन्याततायिनि ।
61387 तथा विहर संबुद्धो यथा नायासि मूढताम् ॥ ९ ॥
61388
61389 अप्रमादलक्षणं गुणान्तरमुपदिशति - संसारेति । संसारे
61390 संभ्रमयतीति संसारसंभ्रमः कामस्तल्लक्षणे च्छन्नात्मनि जिघांसया
61391 प्रच्छन्ने आततेन विषशस्त्राग्न्यादिना हन्तुं अयते उपगच्छतीत्याततायी
61392 शत्रुस्तस्मिन् । तदुक्तम् उद्यतासिं विषाग्निं च शापोद्यतकरं तथा ।
61393 आथर्वणेन हन्तारं पिशुनं राजसद्मसु । भार्यातिक्रमिणं चैव
61394 विद्यात्सप्ताततायिनः ॥ इति । संबुद्धः प्रबोधे अप्रमत्तः ॥ ९ ॥
61395
61396 संसाराडम्बरस्यास्य प्रपञ्चरहिते क्रमे ।
61397 सम्यग्ज्ञा नानुपश्यन्ति ये हतास्ते कुबुद्धयः ॥ १० ॥
61398
61399 प्रपञ्चरहिते क्रम्यत इति क्रमः परमपदं तस्मिन्सम्यग्ज्ञा अपि ये
61400 प्रमादादस्य संसाराडम्बरस्य वञ्चनां नानुपश्यन्ति ते कुबुद्धयः ।
61401 प्रमादेन हता इत्यर्थः । अथवा प्रपञ्चरहिते ब्रह्मणि
61402 विवेकवैराग्यप्रबोधाप्रमादादिगुणार्जनक्रमे ये सम्यग्ज्ञास्तेऽस्य
61403 संसाराडम्बररस्य । कर्मण एव शेषात्वविवक्षया षष्ठी । इमं
61404 संसाराडम्बरं नानुपश्यन्ति । ये तु कुबुद्धय उक्तगुणहीनास्ते हता
61405 इत्यर्थः ॥ १० ॥
61406
61407 यया कयाचिद्युक्त्यैव दृश्याद्यस्य गता रतिः ।
61408 परिमज्जति तस्यास्था न क्वचिद्विमला मतिः ॥ ११ ॥
61409
61410 दृश्यदर्शनारतिलक्षणमपरं गुणमुपदिशति - ययेति ।
61411 चित्तरञ्जनद्वैतवासनाधानस्वरूपप्रच्यावननरकाद्यनर्थहेतुत्वमिथ्यात्व्
61412 आनामन्यतमोपपादिकया यया कयाचिद्युक्त्या । गता निवृत्ता आस्था

परमार्थाभिनिविष्टा विमला विपापा मतिर्न परिमज्जति मोहाब्धौ ॥ ११ ॥

यस्यासदिदमित्यास्था निवृत्ता सर्ववस्तुषु ।
क्रोडीकरोति सर्वज्ञं नाविद्या तमवास्तवी ॥ १२ ॥

एवं बाह्यार्थाभिनिवेशत्यागोऽपि गुण इत्याशयेनाह - यस्येति । असदिदमिति
निश्चयेनेति शेषः । आस्था अभिनिवेशः ॥ १२ ॥

अहं जगच्चैकमिदं सर्वमेवेति यस्य धीः ।
आस्थानास्थे परित्यज्य संस्थिता स न मज्जति ॥ १३ ॥

ऐक्यात्मदर्शनमपि गुण इत्याह - अहमिति । अनास्थापरित्यागो
यथाप्राप्तानुवर्तनम् ॥ १३ ॥

शुद्धं सदसतोर्मध्यं पदं बुद्ध्याऽवलम्ब्य च ।
सबाह्याभ्यन्तरं दृश्यं मा गृहाण विमुञ्च मा ॥ १४ ॥

उक्तमेव विवृणोति - शुद्धमिति । सदसतोर्व्यक्ताव्यक्तयोर्मध्यमनुगतम्
। शुद्धं सत्तामात्रम् । पदं तदेव प्रत्यगात्मेत्यवलम्ब्य ॥ १४ ॥

अत्यन्तविरतः स्वस्थः सर्ववासविवर्जितः ।
व्योमवत्तिष्ठ नीरागो राम कार्यपरोऽपि सन् ॥ १५ ॥

उपरतिसंतोषानिकेतनत्वासङ्गत्वगुणानुपदिशति - अत्यन्तेति ॥ १५ ॥

यस्य नेच्छा न वानिच्छा ज्ञस्य कर्मणि तिष्ठतः ।
न तस्य लिप्यते प्रज्ञा पद्मपत्रमिवाम्बुभिः ॥ १६ ॥

कथं नीरागः स्यात्कथं वा असङ्गस्तत्राह - यस्येति ॥ १६ ॥

दर्शनस्पर्शनादीनि मा करोतु करोतु च ।
तवेन्द्रियमनो गौणं त्वमनिच्छो भवात्मवान् ॥ १७ ॥

बाधितानुवृत्तिमात्रत्वेनामुख्यत्वाद्गौणं तव इन्द्रियसहितं मनो
दर्शनादीनि करोतु न करोतु वा ॥ १७ ॥

ममेदमित्यसद्भूतमिन्द्रियार्थे भवन्मनः ।
मा निमज्जत्वमग्नः सन्मा करोतु करोतु वा ॥ १८ ॥

इन्द्रियार्थे ममतात्यागलक्षणं गुणमुपदिशन्ननास्थामुपपादयति -
ममेति । अमग्नः सन्निति पुंस्त्वं छान्दसम् । त्वमज्ञः सन्निति पाठे तु त्वं
मनः मा निमज्जयेत्यर्थः ॥ १८ ॥

यदा ते नेन्द्रियार्थश्रीः स्वदते हृदि राघव ।
तदा विज्ञातविज्ञानः समुत्तीर्णभवार्णवः ॥ १९ ॥

स्वस्य जीवन्मुक्तताप्राप्तिप्रत्यये लिङ्गमाह - यदेति । न स्वदते
अनर्थहेतुत्वाप्रतिसंधानेऽपि स्वत एव न रोचते ॥ १९ ॥

आस्वादितेन्द्रियार्थस्य सतनोरतनोरपि ।
अनिच्छतोऽपि संपन्ना मुक्तिरर्थवशात्तव ॥ २० ॥

61465 आ अस्वादितेति च्छेदः | आसमन्तात् ऐहलौकिकाः पारलौकिकाश्च अस्वादिताः
61466 अरुचिविषयीकृता इन्द्रियार्था विषया यस्य धीरस्य | सतनोर्व्युत्थाने
61467 देहभानवतः | अतनोः समाधिना तद्रहितस्यापि | अर्थवशात् अनायासेनेति यावत्
61468 || २० ||
61469
61470 उच्चैःपदाय परया प्रज्ञया वासनागणात् |
61471 पुष्पाद्गन्धमिवोदारं चेतो राम पृथक्कुरु || २१ ||
61472
61473 तस्यां जीवन्मुक्तौ वासनाभ्यश्चित्तस्य निष्कर्ष एव मुख्यं साधनमित्याह
61474 - उच्चैःपदायेति | उदारं विवेकवैराग्योत्कृष्टं चेतो मनः || २१ ||
61475
61476 संसाराम्बुनिधावस्मिन्वासनाम्बुपरिप्लुते |
61477 ये प्रज्ञा नावमारूढास्ते तीर्णा ब्रुडिताः परे || २२ ||
61478
61479 ब्रुडिता निमग्नाः || २२ ||
61480
61481 क्षुरधाराप्रमितया धिया परमधीरया |
61482 प्रविचार्यात्मनस्तत्त्वं ततः स्वपदमाविश || २३ ||
61483
61484 कीदृशी सा प्रज्ञानौस्तां दर्शयति - क्षुरधारेति |
61485 विवेकवैराग्यादितीक्ष्णीकृतयेत्यर्थः | धीरया द्वन्द्वसहने धैर्यवत्या || २३ ||
61486
61487 यथा तत्त्वविदः प्राज्ञा ज्ञानबृंहितचेतसः |
61488 विहरन्ति तथा राम विहर्तव्यं न मूढवत् || २४ ||
61489
61490 जीवन्मुक्ता महात्मानो नित्यतृप्ता महाधियः |
61491 आचारैरनुगन्तव्या न भोगकृपणाः शठाः || २५ ||
61492
61493 शठाः स्वपरवञ्चकाः || २५ ||
61494
61495 न त्यजन्ति न वाञ्छन्ति व्यवहारं जगद्गतम् |
61496 सर्वमेवानुवर्तन्ते पारावारविदो जनाः || २६ ||
61497
61498 पारं ब्रह्मतत्त्वमवारं जगत्तत्त्वं तद्विदः || २६ ||
61499
61500 प्रभावस्याभिमानस्य गुणानां यशसः श्रियः |
61501 न क्वचित्कृपणा लोके महान्तस्तत्त्वदर्शिनः || २७ ||
61502
61503 ननु विदुषामपि क्वचित्कार्पण्यं स्यान्नेत्याह - प्रभावस्येति | प्रभावो
61504 विद्यातपःपराक्रमाद्युत्कर्षः | गुणा दाक्ष्यकुलशीलादयः | श्रियः
61505 संपदः | एतेषां हि विषये लोके कार्पण्यं प्रसिद्धम् | तत्त्वदर्शिनः
61506 प्रभावादीनां मिथ्यत्वादपुरुषार्थतादर्शिनः || २७ ||
61507
61508 सुशून्येऽपि न खिद्यन्ते देवोद्याने नसङ्गिनः |
61509 नियतिं च न मुञ्चन्ति महान्तो भास्करा इव || २८ ||
61510
61511 सुशून्ये सर्वनाशेऽपि | देवोद्याने सर्वकामसमृद्धनन्दनादावपि
61512 नसङ्गिनो नासक्ताः | नियतिं शास्त्रमर्यादाम् | भास्करपक्षे सुशून्ये आकाशे
61513 | नियतिं स्वमार्गमर्यादाम् || २८ ||
61514
61515 विगतेच्छा यथाप्राप्तव्यवहारानुवर्तिनः |
61516 विचरन्ति समुन्नद्धाः स्वस्था देहरथे स्थिताः || २९ ||

61517
61518 समुन्नद्धाः विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः
61519 इत्यादिश्रुत्युक्तसाधनसन्नद्धाः ॥ २९ ॥
61520
61521 त्वमपि प्राप्तवान् राम विवेकमिममाततम् ।
61522 प्रज्ञाबलेन चानेन ज्ञाने स्वस्थोऽसि सुन्दर ॥ ३० ॥
61523
61524 मयि तर्हि ते गुणाः सन्ति न वेति सदेहकातरं राममाश्वासयति - त्वमपीति ॥
61525 ३० ॥
61526
61527 स्पष्टां दृष्टिमवष्टभ्य निर्मानो गतमत्सरः ।
61528 विहरास्मिन्भुवः पीठे परां सिद्धिमवाप्स्यसि ॥ ३१ ॥
61529
61530 स्वस्थः सर्वेहितत्यागी दूरालोकनवाञ्छनः ।
61531 परां शीतलतामन्तरादाय विहरानघ ॥ ३२ ॥
61532
61533 दूराः आलोकनवासनाविषयकौतुकदर्शनेच्छा यस्य तथाविधो भूत्वेत्यर्थः
61534 ॥ ३२ ॥
61535
61536 श्रीवाल्मीकिरुवाच ।
61537
61538 इत्थं गिरा विमलया विमलाशयस्य
61539 रामो मुनेः सपदि मृष्ट इवाबभासे ।
61540 ज्ञानामृतेन मधुरेण विराजितान्तः
61541 पूर्णः शशाङ्क इव शीतलतां जगाम ॥ ३३ ॥
61542
61543 उपदिष्टार्थरहस्यानां रामस्यान्तरुन्मेषादाविर्भावं वाल्मीकिराह -
61544 इत्थमिति । विमलाशयस्य मुनेर्वसिष्ठस्येत्थमुक्तप्रकारया गिरा रामो
61545 मृष्टः परिमार्जितो दर्पण इव आबभासे । ज्ञानामृतेन
61546 विराजितान्तःकरणः सन् [संपूर्ण इति पाठः] पूर्णः शशाङ्क इव
61547 शीतलतां तापत्रयोपशान्तिं जगाम प्राप ॥ ३३ ॥
61548
61549 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपायेषु स्थितिप्रकरणे
61550 जीवन्मुक्तस्थितगुणवर्णनं नाम षट्चत्वारिंशः सर्गः ॥ ४६ ॥
61551
61552 इति श्रीवासिष्ठमहारामायणे तात्पर्यप्रकाशे स्थितिप्रकरणे
61553 जीवन्मुक्तस्थितगुणवर्णनं नाम षट्चत्वारिंशः सर्गः ॥ ४६ ॥
61554
61555 सप्तचत्वारिंशः सर्गः ४७
61556
61557 श्रीराम उवाच ।
61558
61559 भगवन्सर्वधर्मज्ञ सर्ववेदाङ्गपारग [वेदवेदाङ्गपारग इति
61560 पाठः] ।
61561 आश्वस्त इव तिष्ठामि शुद्धाभिर्भवदुक्तिभिः ॥ १ ॥
61562
61563 अतीता भाविनः सन्तो ब्रह्म ब्रह्माण्डकोटयः ।
61564 देवाद्याश्चात्र वर्ण्यन्ते नियतानियतक्रमाः ॥ १ ॥
61565
61566 आश्वस्तः अपनीतभाराध्वक्षुच्छ्रमः पुरुष इव ॥ १ ॥
61567
61568 उदाराणि विविक्तानि पेशलान्युदितानि च ।

61569 श्रोतुं तृप्तिं न गच्छामि वचांसि वदतस्तव ॥ २ ॥
61570
61571 उदाराण्युत्तमभूर्यर्थप्रदानि। विविक्तानि
61572 वर्णपदवाक्यप्रकरणभेदैर्व्यक्तानि। पेशलानि
61573 विचित्रकथायुक्तिसंदर्भचतुराणि। उदितानि आत्मतत्त्वप्रकाशकत्वेन
61574 हृदयपद्मविकासत्वेन च सूर्यादिवदुद्गतानि ॥ २ ॥
61575
61576 जात्या राजससात्त्विक्याः कथनावसरान्तरे।
61577 उत्पत्तिर्भवता प्रोक्ता शास्त्रैः कमलजन्मनः ॥ ३ ॥
61578
61579 एवं प्रशंसया गुरुमुत्साह्य प्रासङ्गिकं ब्रह्मादिदेवतैश्वर्यतत्त्वं
61580 जिज्ञासुः पृच्छति - जात्या इति। राजससात्त्विक्या जात्याः जीवजातेः
61581 कथनावसरे भवता
61582 शास्त्रैर्नानाविधसृष्टिप्रतिपादकश्रुतिपुराणादिप्रमाणैः कमलजन्मन
61583 उत्पत्तिर्या प्रोक्ता प्रस्तुता तां स्फुटं वर्णयेति शेषः ॥ ३ ॥
61584
61585 श्रीवसिष्ठ उवाच।
61586
61587 बहूनि ब्रह्मलक्षाणि शंकरेन्द्रशतानि च।
61588 नारायणसहस्राणि समतीतानि राघव ॥ ४ ॥
61589
61590 बहूनीत्यस्य सर्वत्र संबन्धाच्छतसहस्रादिपदान्यप्यनन्तपराणि ॥ ४ ॥
61591
61592 अन्येषु च विचित्रेषु ब्रह्माण्डेषु च भूरिशः।
61593 नानाचारविहाराणि विहरन्ति सहस्रशः ॥ ५ ॥
61594
61595 अन्येषु ब्रह्माण्डेषु चदस्मिन्नपि नानाचारविहाराणि सुरासुरादिशरीराणीति
61596 शेषः ॥ ५ ॥
61597
61598 तुल्यकालमनन्तेषु कालान्तरभवेषु च।
61599 जगत्सु प्रोद्भविष्यन्ति बहून्यन्यानि भूरिशः ॥ ६ ॥
61600
61601 तेषामब्जोद्भवादीनां ब्रह्माण्डेषु दिवौकसाम्।
61602 उत्पत्तयो महाबाहो विचित्राभ्युत्थिता इव ॥ ७ ॥
61603
61604 विचित्रे इन्द्रजाले अभ्युत्थिता इव ॥ ७ ॥
61605
61606 कचाचित्सृष्टयः शार्व्यः कदाचित्पद्मजोद्भवाः।
61607 कदाचिदपि वैष्णव्यः कदाचिन्मुनिनिर्मिताः ॥ ८ ॥
61608
61609 शार्व्यो रुद्रपूर्वाः। पद्मजादेव प्रथमजादुद्भवो यासां ताः। वैष्णव्यो
61610 विष्णुपूर्वाः। तथाचोक्तं पुराणे तपसा तोषयित्वेशं
61611 ब्रह्मविष्णुमहेश्वराः। परस्परस्माज्जायन्ते परस्परजयैषिणः ॥ इति
61612 मुनिनिर्मिता इत्यवान्तरसर्गाभिप्रायम् ॥ ८ ॥
61613
61614 कदाचित्पद्मजो ब्रह्मा कदाचित्सलिलोद्भवः।
61615 अण्डोद्भवः कदाचित्तु कदाचिज्जायतेऽम्बरात् ॥ ९ ॥
61616
61617 ब्रह्मादीनामाविर्भावस्थानान्यप्यनियतानीत्याह - कदाचिदिति। पाद्मकल्पे
61618 पद्मजः सलिलोद्भव आपवाख्यः अण्डोद्भवः प्रसिद्धः। अम्बरादिति। तथाच
61619 आकाशप्रभवो ब्रह्मा इति सूर्यवंशादिप्रस्तावे पूर्वरामायणे उक्तम् ॥ ९ ॥
61620

61621 कस्मिंश्चिदण्डे त्र्यक्षोऽर्कः कस्मिंश्चिदपि वासवः |
61622 कस्मिंश्चित्पुण्डरीकाक्षः कस्मिंश्चित्र्यक्ष एव हि || १० ||
61623
61624 एवमर्कादिपदाधिकारिष्वप्यनियम इत्याह - कस्मिंश्चिदिति | त्र्यक्ष एव
61625 सर्वदेवताधिकारेष्विति एवकारबलाल्लभ्यते | हिशब्दस्तस्यैवान्यत्रापि
61626 देवतान्तरभावकल्पना नान्यस्येति द्योतनार्थः || १० ||
61627
61628 कस्यांचिद्भूरभूत्सृष्टौ नीरन्ध्रतरुसंकटा |
61629 कस्यांचिन्नरनीरन्ध्रा कस्यांचिद्भूधरावृता || ११ ||
61630
61631 नीरन्ध्रतरुसंकटा प्रथममिति सर्वत्र शेषः || ११ ||
61632
61633 भूरभून्मृन्मयी काचित्काचिदासीद्दृषन्मयी |
61634 आसीद्धेममयी काचित्काचित्ताम्रमयी तथा || १२ ||
61635
61636 प्राचुर्ये मयट् || १२ ||
61637
61638 इहैव कानि चित्राणि जगन्त्यन्यान्यथान्यथा |
61639 अन्यान्येकैकलोकानि निर्महांस्यापि कानिचित् || १३ ||
61640
61641 इहास्मिन्ब्रह्माण्डे एव कानि कियन्ति चित्राण्याश्चर्याणि | अथ अन्यान्यपि जगन्ति
61642 ब्रह्माण्डानि | अन्यथा अन्यैः प्रकारैः | बह्वाश्चर्याणीत्यर्थः | एकैक एव
61643 सूर्यादिवल्लोकः आलोकः प्रकाशात्मा येषु निर्महांसि निष्प्रकाशानि || १३ ||
61644
61645 अनन्तानि जगन्त्यस्मिन्ब्रह्मतत्त्वमहाम्बरे |
61646 अम्भोधिवीचिजलवन्निमज्जन्त्युद्भवन्ति च || १४ ||
61647
61648 निमज्जन्ति लीयन्ते || १४ ||
61649
61650 यथा तरङ्गा जलधौ मृगतृष्णा मरौ यथा |
61651 कुसुमानि यथा चूते तथा विश्वश्रियः परे || १५ ||
61652
61653 भानोर्गणयितुं शक्या रश्मिषु त्रसरेणवः |
61654 आलोलवपुषो ब्रह्म तत्त्वेन जगतां गणाः || १६ ||
61655
61656 आलोल वपुषश्चञ्चलाः || १६ ||
61657
61658 यथा मशकजालानि वर्षादिष्वाकुलानि तु |
61659 उत्पत्योत्पत्य नश्यन्ति तथेमा लोकसृष्टयः || १७ ||
61660
61661 नच विज्ञायते कस्मात्कालात्प्रभृति चागताः |
61662 नित्यागमापायपरा एताः सर्गपरम्पराः || १८ ||
61663
61664 तेषां सर्गाणां प्रवाहानादितामाह - नचेत्यादिना | नित्यमेव
61665 आगमापायावाविर्भावतिरोभावौ तत्पराः || १८ ||
61666
61667 अनादिमत्योऽविरतं प्रस्फुरन्ति तरङ्गवत् |
61668 पूर्वात्पूर्वं किलाभूवंस्ततः पूर्वतरं यथा || १९ ||
61669
61670 भूत्वा भूत्वा प्रलीयन्ते ससुरासुरमानवाः |
61671 सरित्तरङ्गभङ्ग्यैव समस्ता भूतजातयः || २० ||
61672

61673 सरित्तरङ्गाणां भङ्ग्या रीत्या ॥ २० ॥
61674
61675 यथेदमण्डं वैरिञ्चं तथा ब्रह्माण्डपङ्क्तयः ।
61676 याः सहस्राः परिक्षीणा नाडिका वत्सरेष्विव ॥ २१ ॥
61677
61678 सहस्राः सहस्रशः । नाडिका घटिकाः ॥ २१ ॥
61679
61680 अन्याः संप्रति विद्यन्ते वर्तमानशरीरकाः ।
61681 प्रान्ते ब्रह्मपुरस्यास्य वितते ब्रह्मणः पदे ॥ २२ ॥
61682
61683 सर्वेषां ब्रह्माण्डानां लीलोपाख्यानोक्तरीत्या हृदयाकाशस्थे ब्रह्मण्येव
61684 कल्पनमित्याह - अन्या इति । अन्या ब्रह्माण्डपङ्क्तयः । संप्रति इदानीमपि ।
61685 अस्य ब्रह्मोपलब्धिस्थानत्वाद्ब्रह्मपुरस्य शरीरस्य प्रान्ते
61686 हृदयपुण्डरीकदेशे स्थिते वितते अत्यन्तविस्तीर्णे ब्रह्मणः पदे ब्रह्मणि
61687 वर्तमानशरीरकाः परिवर्तमानमूर्तयः सत्यो विद्यन्ते । अस्मिन्द्यावापृथिवी
61688 अन्तरेव समाहिते इति श्रुतेरिति भावः ॥ २२ ॥
61689
61690 ब्रह्मण्यन्या भविष्यन्ति ब्राह्मो ब्रह्मपुरश्रियः ।
61691 पुनस्ताश्च विनङ्क्ष्यन्ति भूत्वा भूत्वा यथा गिरः ॥ २३ ॥
61692
61693 ब्रह्मपुरोपलक्षितहृदयाकाशस्य श्रियः शोभाभूताः ब्राह्म्यो
61694 ब्रह्मनिर्मिता ब्रह्माण्डपङ्क्तयः । यथा गिरो ध्वनिभेदा आकाशे भूत्वा
61695 भूत्वा नश्यन्ति तद्वत् ॥ २३ ॥
61696
61697 ब्रह्मण्यन्या भविष्यन्त्यः स्थिताः सर्गपरम्पराः ।
61698 घटा इव मृदो राशावङ्कुरे पल्लवा इव ॥ २४ ॥
61699
61700 दृष्टान्तान्तरोक्त्यर्थमुक्तमेवाह - ब्रह्मणीति ॥ २४ ॥
61701
61702 यावद्ब्रह्म चिदाकाशे तथा त्रिभुवनश्रियः ।
61703 स्फाराकारविकाराढ्याः प्रेक्ष्यमाणा न किंचन ॥ २५ ॥
61704
61705 यावत्तत्त्वज्ञानेन प्रेक्ष्यमाणा न किंचनेति बाधस्तावत्कालं
61706 भविष्यन्तीत्यर्थः ॥ २५ ॥
61707
61708 उन्मज्जन्त्यो निमज्जन्त्यो न सत्या नाप्यसच्छ्रियः ।
61709 जडारम्भा वितन्वन्त्यस्ता एव खलता इव ॥ २६ ॥
61710
61711 जडारम्भाः मूर्खैरध्यस्ताः । वितन्वन्त्यो विस्तीर्यमाणाः खलता व्योमलता
61712 इव ॥ २६ ॥
61713
61714 तरङ्गसमधर्मिण्यो दृष्टनष्टशरीरकाः ।
61715 सर्वासां सृष्टिराशीनां चित्राकारविचेष्टिताः ॥ २७ ॥
61716
61717 सृष्टिराशीनां स्वान्तर्गतसृष्टिसमष्टिभूतानां ब्रह्माण्डानां
61718 सृष्टयश्चित्राकाराणि विचेष्टितानि तदन्तर्गतप्राणिचेष्टा यासां ताः ॥ २७ ॥
61719
61720 चित्राकारविकाराश्च चित्ररूपा हि सृष्टयः ।
61721 व्यतिरिक्ता न सर्वेषां समस्ताः सृष्टिदृष्टयः ॥ २८ ॥
61722
61723 सर्वेषां ब्रह्माण्डानां समस्ताः सृष्टिदृष्टयस्तत्त्वज्ञविषये
61724 सलिलाद्वृष्टय इव न व्यतिरिक्ता इति परेणान्वयः ॥ २८ ॥

61725
61726 तत्त्वज्ञविषये राम सलिलादिव वृष्टयः |
61727 आयान्ति सृष्टयो देवाज्जलदादिव वृष्टयः || २९ ||
61728
61729 अतत्त्वज्ञदृष्ट्या तु जलदाद्वृष्टय इव देवात्तटस्थेश्वरादायान्ति || २९ ||
61730
61731 व्यतिरिक्ता न सर्वेषां समस्ताः सृष्टिदृष्टयः |
61732 व्यतिरिक्ता द्रवाम्भोधिस्वाष्ठीलाः शाल्मलेरिव || ३० ||
61733
61734 परमार्थतस्तु अज्ञानां तत्त्वविदां च सर्वेषां न व्यतिरिक्ताः |
61735 मूलकृष्टानि द्रवरूपाणि भूमेरम्भासि धारयन्तीति द्रवाम्भोधयः
61736 शिरास्ताश्च स्वाः स्वीयास्त्वक्कीनाटपत्रादयश्च अष्ठीलादारुबीजादिग्रन्थयश्च
61737 शाल्मलेर्वृक्षाद्यथा न व्यतिरिक्तास्तद्वत् || ३० ||
61738
61739 इह सृष्टिषु पुष्टासु निकृष्टासु च राघव |
61740 परमान्नभसो जातास्तन्मात्रमलमालिका || ३१ ||
61741
61742 पुष्टासु स्थूलभूतारब्धासु देहादिषु निकृष्टासु
61743 सूक्ष्मभूतारब्धास्विन्द्रियादिषु च परमान्नभसः अव्याकृताकाशाज्जाताः
61744 भूतसूक्ष्माख्यपञ्चतन्मात्रलक्षणस्य मायामलस्य सूत्रस्थानीयस्य
61745 स्फटिकरुद्राक्षग्रथिता मालिका इव सर्वभावा इत्यर्थः || ३१ ||
61746
61747 कदाचित्प्रथमं व्योम पतिष्ठामधिगच्छति |
61748 ततः प्रजायते ब्रह्मा व्योमजोऽसौ प्रजापतिः || ३२ ||
61749
61750 कदाचित्पद्मजो ब्रह्मेति यदुक्तं तत्र यथायोगं
61751 पञ्चीकरणोत्तरभाविस्थूलव्योमादीनां प्रथमाविर्भावक्रमो नियामक
61752 इत्याह - कदाचिदित्यादिना | प्रतिष्ठां स्थूलीभावेन स्थितिम् | एवं सर्वत्र ||
61753 ३२ ||
61754
61755 कदाचित्प्रथमं वायुः प्रतिष्ठामधिगच्छति |
61756 ततः प्रजायते ब्रह्मा वायुजोऽसौ प्रजापतिः || ३३ ||
61757
61758 कदाचित्प्रथमं तेजः प्रतिष्ठामधिगच्छति |
61759 ततः प्रजायते कर्ता तेजसोऽसौ प्रजापतिः || ३४ ||
61760
61761 कदाचित्प्रथमं वारि प्रतिष्ठामधिगच्छति |
61762 ततः प्रजायते ब्रह्मा वारिजोऽसौ प्रजापतिः || ३५ ||
61763
61764 कदाचित्प्रथमं पृथ्वी स्फारतामधिगच्छति |
61765 ततः प्रजायते ब्रह्मा पार्थिवोऽसौ प्रजापतिः || ३६ ||
61766
61767 इदं चत्वारि संपीड्य पञ्चमं वर्धते यदा |
61768 तदा तज्जात एवैष कुरुते जागतीं क्रियाम् || ३७ ||
61769
61770 इदानीमेकैकस्योक्तव्योमादेः प्रथममाविर्भावे युक्तिमाह - इदमिति | इदं
61771 स्वातिरिक्तं चत्वारि भूतचतुष्टयं संपीड्य स्वांशोपबृंहणेन
61772 तिरोभूतमिव कृत्वा पञ्चमं यदेव भूतं यदा वर्धते तदा तज्जात एवैष
61773 ब्रह्मा जागतीं तदुत्तरसृष्ट्यादिक्रियां कुरुत इत्यर्थः || ३७ ||
61774
61775 कदाचिदप्सु वायौ वा सुस्फारे वापि तेजसि |
61776 स्वयं संपद्यतेऽकस्मात्पुमान्प्रकृतिभावितः || ३८ ||

61777
61778 सर्वेषां पञ्चभूतकार्यतया पञ्चात्मकत्वे सति तदुद्भवस्य प्रजापतेः
61779 कथमेकैकजत्वव्यपदेश इति चेद्वैशेष्यादिति न्यायेनेत्याह - कदाचिदिति ।
61780 सुस्फारे अधिकभागवति सति तदुपाधिः पुमान्प्रजापतिः प्रकृत्या
61781 पूर्वोपासनक्रमानुसारिस्वभावेन भावितो वासितः स्वयमेव आपवो
61782 वायुजस्तैजस इत्याद्याकारेणाकस्मात्संपद्यत इत्यर्थः ॥ ३८ ॥
61783
61784 तस्याथ शब्दो वदनात्कदाचिज्जायते पदात् ।
61785 कदाचिदंशात्पृष्ठाद्वा कदाचिल्लोचनात्करात् ॥ ३९ ॥
61786
61787 तस्य देहावयवेभ्यः सर्गप्रवृत्तिं दर्शयति - तस्येति । अथानन्तरम् ।
61788 शब्दो नामरूपयोरप्युपलक्षणम् । तथाच मुखाद्यवयवेभ्यो
61789 ब्राह्मणादिशब्दाः सहार्थैर्यथायोगं जायन्ते । ब्राह्मणोऽस्य मुखमासीत्
61790 इत्यादिश्रुतेरित्यर्थः । अंशात्पुरोभागात् । पृष्ठात्पश्चाद्भागात् ॥ ३९ ॥
61791
61792 कदाचित्पुरुषस्यास्य नाभौ पद्मं प्रजायते ।
61793 तस्मिन्संवर्धते ब्रह्मा पद्मजोऽसौ प्रकीर्तितः ॥ ४० ॥
61794
61795 अस्यैव नारायणाख्यस्य पुरुषस्य । तत्र तस्यैव पद्मे
61796 जन्मवशात्पद्मजाख्येत्याह - तस्मिन्निति ॥ ४० ॥
61797
61798 मायेयं स्वप्नवद्भ्रान्तिर्मिथ्यारचितचक्रिका ।
61799 मनोराज्यमिवालोलसलिलावर्तसुन्दरी ॥ ४१ ॥
61800
61801 सतस्तत एव तस्य कथं जन्म घटतामिति पर्यनुयुञ्जानं रामं प्रत्याह ##-
61802
61803 किमिवास्यां वद ज्ञप्तौ कथं संभवतीह ते ।
61804 क्वचिद्बालमनोराज्यमिदं पर्यनुयुज्यते ॥ ४२ ॥
61805
61806 यदि सतः पुरुषस्य स्वनाभिपद्मे जन्म न संभवति तर्हि अस्यां
61807 असङ्गाद्वितीयायां ज्ञप्तौ ब्रह्मणि ते तव किमिव द्वितीयं जगद्रूपं
61808 संभवति कथं च संभवति तद्वदेत्यर्थः । तथाच तव पर्यनुयोगो
61809 बालमनोराज्यपर्यनुयोगसम एवेत्याह - क्वचिदिति । काकुः ॥ ४२ ॥
61810
61811 कदाचिदम्बरे शुद्धे मनस्तत्त्वानुरञ्जनात् ।
61812 सौवर्णं ब्रह्मगर्भं च स्वयमण्डं प्रवर्तते ॥ ४३ ॥
61813
61814 पद्मजोत्पत्तिवद्व्योमजोत्पत्तिमपि मनसोऽचिन्त्यरचनाशक्तिमवलम्ब्य
61815 समर्थयति - कदाचिदिति ॥ ४३ ॥
61816
61817 कदाचिदेव [एष इति पाठः] पुरुषो वीर्यं सृजति वारिणि ।
61818 तस्मात्प्रजायते पद्मं ब्रह्माण्डमथवा महत् ॥ ४४ ॥
61819
61820 पद्मं भूपद्मम् ॥ ४४ ॥
61821
61822 तस्मात्प्रजायते ब्रह्मा कदाचिद्भास्करोऽप्यसौ ।
61823 कदाचिद्वरुणो ब्रह्मा कदाचिद्वायुरण्डजः ॥ ४५ ॥
61824
61825 भास्करः प्राक्कल्पे सूर्याधिकारस्थोऽस्मिन्कल्पे ब्रह्मा भवति । एवं
61826 वरुणादयोऽपि ॥ ४५ ॥
61827
61828 एवमन्तर्विहीनासु विचित्रास्विह सृष्टिषु ।

61829 विचित्रोत्पत्तयो राम ब्रह्मणो विविधा गताः ॥ ४६ ॥
61830
61831 अन्तः प्रत्यगात्मनि विहीनासु असतीषु । ब्रह्मणः प्रस्तुतहिरण्यगर्भस्य विचित्रा
61832 उत्पत्तयो गताः । ब्रह्माणः इति पाठः स्पष्टः ॥ ४६ ॥
61833
61834 निदर्शनार्थं सृष्टेस्तु मयैकस्य प्रजापतेः ।
61835 भवते कथितोत्पत्तिर्न तत्र नियमः क्वचित् ॥ ४७ ॥
61836
61837 एकस्येदं वर्णनमन्येषामपि स्थालीपुलाकन्यायेन निदर्शनार्थमित्याह -
61838 निदर्शनेति ॥ ४७ ॥
61839
61840 मनोविजृम्भणमिदं संसार इति संमतम् ।
61841 संबोधनाय भवतः सृष्टिक्रम उदाहृतः ॥ ४८ ॥
61842
61843 संमतं सिद्धन्तः । तस्य सम्यग्बोधनाय ॥ ४८ ॥
61844
61845 सात्त्विकीप्रभृतयो याश्च जातयश्चेत्थमागताः ।
61846 इति ते कथनायैष सृष्टिक्रम उदाहृतः ॥ ४९ ॥
61847
61848 पूर्ववर्णिता जीवजातिभेदा अपि निदर्शनार्थमेवेत्याह - सात्त्विकीति ।
61849 सृष्टिक्रमवर्णनमपि एतदर्थमेवेत्याह - इतीति ॥ ४९ ॥
61850
61851 पुनः सृष्टिः पुनर्नाशः पुनर्दुःखं पुनः सुखम् ।
61852 पुनरज्ञः पुनस्तज्ज्ञो बन्धमोक्षदृशः पुनः ॥ ५० ॥
61853
61854 यावदेतन्मनः समूलं नोन्मूल्यते तावत्संसारपरम्परायाः
61855 कदाप्यनुपरम इति दर्शयति - पुनः सृष्टिरित्यादिना । मोक्षदृशो
61856 मोक्षास्तित्वकल्पनाः ॥ ५० ॥
61857
61858 पुनः सृष्टिकराऽवीतवीतस्नेहदृशः पुनः ।
61859 दीपा इव कृतालोकाः प्रशाम्यन्त्युद्भवन्ति च ॥ ५१ ॥
61860
61861 अवीतेषु वर्तमानागामिप्रियेषु वीतेष्वतीतप्रियेषु स्नेहदृशः ॥ ५१ ॥
61862
61863 देहोत्पत्तौ विनाशे च दीपानां ब्रह्मणामपि ।
61864 कालेनाधिकतां त्यक्त्वा नाशे भेदो न कश्चन ॥ ५२ ॥
61865
61866 ननु दीपा अल्पकालस्थायिनो द्विपरार्धायुषां ब्रह्मादिशरीराणां
61867 कथमुपमास्तत्राह - देहोत्पत्ताविति । दीपपक्षे
61868 देहोत्पत्तिश्चम्पककलिकाकारसंस्थाननिष्पत्तिः । उत्पत्तिनाशौ
61869 आद्यन्तक्षणिकभावविकारौ नाशस्त्वनाद्यन्तयोः पूर्वोत्तरकालयोरसत्त्वमिति
61870 न पौनरुक्त्यम् ॥ ५२ ॥
61871
61872 पुनः कृतं पुनस्त्रेता पुनः स द्वापरः कलिः ।
61873 पुनरावर्तते सर्वं चक्रावर्ततया जगत् ॥ ५३ ॥
61874
61875 चक्रमिवावर्तत इति चक्रावर्तस्तद्भावेन ॥ ५३ ॥
61876
61877 पुनर्मन्वन्तरारम्भाः पुनः कल्पपरम्पराः ।
61878 पुनः पुनः कार्यदशाः प्रातः प्रातरहो यथा ॥ ५४ ॥
61879
61880 लोकालोककलाकालकलनाकलितान्तरम् ।

61881 पुनःपुनरिदं सर्वं न किंचन पुनःपुनः ॥ ५५ ॥
61882
61883 लोकालोकौ दिनरात्री कलास्त्रिंशत्काष्ठात्मको मुहूर्तद्वादशभागस्य
61884 क्षणस्य त्रिंशो भगस्तद्घटिताभिः प्राण्यायुःकालकलनाभिः कलिताः
61885 परिच्छिन्ना आन्तराः सर्वपदार्था यस्मिन् ॥ ५५ ॥
61886
61887 अनाहते प्रतप्तेऽयःपिण्डेऽनलकणा इव ।
61888 इमे भावाः स्थिता नित्यं चिदाकाशे स्वभावतः ॥ ५६ ॥
61889
61890 अनाहते शिलाद्याघातरहिते । स्वभावतो मायाबीजस्वभावात् ॥ ५६ ॥
61891
61892 कदाचिदनभिव्यक्तं कदाचिद्व्यक्तिमागतम् ।
61893 इदमस्ति परे तत्त्वे सर्वं वृक्ष इवार्तवम् ॥ ५७ ॥
61894
61895 आर्तवं तत्तदृतुभवं फलपुष्पादीव ॥ ५७ ॥
61896
61897 चित्स्पन्द एव सर्वात्मा सर्वदैवेदृशाकृतिः ।
61898 यदस्माज्जायते सर्गो द्विन्दुत्वमिव लोचनात् ॥ ५८ ॥
61899
61900 चित्स्पन्दश्चिद्विवर्तः । द्विन्दुत्वमिन्दुद्वित्वम् ॥ ५८ ॥
61901
61902 चितः सर्वाः समायान्ति संतताः सृष्टिदृष्टयः ।
61903 तत्स्था एवाप्यतत्स्थाभाश्चन्द्रादिव मरीचयः ॥ ५९ ॥
61904
61905 न कदाचन संसारः किलायं राम सत्सदा ।
61906 सर्वशक्तावसंसारशक्तिता विद्यते यतः ॥ ६० ॥
61907
61908 असंसारशक्तिता असंसारस्वभावता । असङ्गाद्वितीयस्वभावतेति यावत् । विद्यते
61909 परमार्थत इति शेषः ॥ ६० ॥
61910
61911 न चैवेदं कदाचित्तु साधो जगदनीदृशम् ।
61912 सर्वशक्तौ हि संसारशक्तिता विद्यते यतः ॥ ६१ ॥
61913
61914 संसारशक्तिता जगद्बीजमर्यादा ॥ ६१ ॥
61915
61916 महाकल्पावधिः कालेन संसारितयेद्धया ।
61917 न भविष्यति संसार इदानीमिति युज्यते ॥ ६२ ॥
61918
61919 इद्धया अधिष्ठानचैतन्यदीप्तया संसारितया कालेन चोपलक्षितः संसारो
61920 महाकल्पो वैज्ञानिको मोक्षाख्यः प्रलयस्तदवधिर्विद्यते अग्रे न भविष्यतीति
61921 व्यवहार इदानीं युज्यत इत्यन्वयः ॥ ६२ ॥
61922
61923 ज्ञदृष्ट्या सर्वमेवेदं ब्रह्मैवेति महामते ।
61924 नास्ति संसार इत्येतदुपपद्यत एव च ॥ ६३ ॥
61925
61926 संसारासत्त्वसत्त्वयोर्विरोधमाशङ्क्य दृष्टिभेदेन विरोधमाह -
61927 ज्ञदृष्ट्येत्यादिना ॥ ६३ ॥
61928
61929 अज्ञदृष्ट्या त्वविच्छिन्नसंसारत्वादनारतम् ।
61930 नित्या संसारमायेयं मिथ्यापीहोपपद्यते ॥ ६४ ॥
61931
61932 पुनःपुनश्च भावित्वान्न कदाचिदनीदृशम् ।

61933 जगदित्येतदित्युक्तं न मृषा रघुनन्दन ॥ ६५ ॥
61934
61935 अत एव कर्ममीमांसकानां न कदाचिदनीदृशं जगदिति
61936 जगत्प्रवाहनित्यव्यवहारोऽप्युपपन्न इत्याह - पुनरिति । इति अनया दृष्ट्या न
61937 मृषा । तदीप्सितकर्मकाण्डप्रामाण्योपपादकत्वादित्यर्थः ॥ ६५ ॥
61938
61939 अनारतपतद्रूपा दिशो दृष्टा विनश्वराः ।
61940 विनाशीदं जगत्सर्वमिति किं नोपपद्यते ॥ ६६ ॥
61941
61942 अज्ञदृष्टीनां विचित्रत्वाद्बुद्धादिभिः स्वस्वप्रक्रियानिर्वाहाय कल्पिताः
61943 क्षणिकपरमाण्वादिव्यवहारा अपि तद्दृष्ट्या उपपद्यन्त एवेत्याह -
61944 अनारतेति । दिशो दिक्षूदिता विद्युदादयः अनारतं सदा पतद्रूपाः
61945 क्षणप्रध्वंसिस्वभावा दृष्टाः । तथैव सर्वत्र कल्पनादित्यर्थः । किमिति
61946 काकुः ॥ ६६ ॥
61947
61948 सर्वत्रोदितचन्द्रार्का दिशो दृष्टाः स्थिराचलाः ।
61949 अविनाशि जगत्सर्वमित्यप्यवितथोपमम् ॥ ६७ ॥
61950
61951 एवं चन्द्रार्कादिस्फीतालोकासु दिक्षु पर्वतभूम्यब्धीनां
61952 स्थिरतादर्शनात्सदैव स्वसत्तया सदेव जगदिति सांख्यादिकल्पनाप्युपपद्यत
61953 एवेत्याह - सर्वत्रेति ॥ ६७ ॥
61954
61955 न तदस्ति न यत्तस्मिन्नेकस्मिन्विततात्मनि ।
61956 संकल्पकलनाजालमनाख्ये नोपपद्यते ॥ ६८ ॥
61957
61958 तथाच ब्रह्मणि तत्तत्संकल्पितेष्वर्थेष्वनुपपन्नं किमपि नास्ति
61959 संकल्पकलनाजालमेव परं नोपपद्यत इत्याह - न तदस्तीति ॥ ६८ ॥
61960
61961 पुनःपुनरिदं सर्वं पुनर्मरणजन्मनी ।
61962 पुनः सुखं पुनर्दुःखं पुनः करणकर्मणी ॥ ६९ ॥
61963
61964 प्रासङ्गिकं सर्वसंभवमुपपाद्य प्रस्तुतं सर्गपौनःपुन्यमेव
61965 वर्णयति - पुनरित्यादिना ॥ ६९ ॥
61966
61967 पुनराशाः पुनर्व्योम पुनरम्भोधयोऽद्रयः ।
61968 अभ्युदेति पुनः सृष्टिः खवदर्कप्रभा यथा ॥ ७० ॥
61969
61970 स्ववत्सु गवाक्षच्छिद्रवत्सु गृहेषु एकैवार्कप्रभा यथा नानात्वेनोदेति तथा
61971 ॥ ७० ॥
61972
61973 पुनर्दैत्याः पुनर्देवाः पुनर्लोकान्तरक्रमाः ।
61974 पुनः स्वर्गापवर्गेहाः पुनरिन्द्रः पुनः शशी ॥ ७१ ॥
61975
61976 पुनर्नारायणो देवः पुनर्दनुसुतादयः ।
61977 पुनराशाचलच्चारुचन्द्रार्कवरुणानिलाः [आशाश्चलत् इति पाठः]
61978 ॥ ७२ ॥
61979
61980 सुमेरुकर्णिकाकान्ता सह्यकेसरशालिनी ।
61981 पूर्णा स्फीतोदरोदेति रोदसी नलिनी पुनः ॥ ७३ ॥
61982
61983 पूर्णा प्राणिपुण्यामोदैर्भोगमकरन्दैश्च स्फीतोदरा विशालकुक्षिः ।
61984 द्यावापृथिव्यौ रोदस्यौ तल्लक्षणा नलिनी ॥ ७३ ॥

61985
61986 व्योमकाननमाक्रम्य वल्गत्यंशुनखोत्करैः ।
61987 तमःकरिघटा भेत्तुं पुनर्भास्करकेसरी ॥ ७४ ॥
61988
61989 वल्गत्युद्रच्छति ॥ ७४ ॥
61990
61991 पुनरिन्दुश्चलत्स्वच्छमञ्जरीसुन्दरैः करैः ।
61992 करोत्यमृतमाह्लादि दिग्वधूमुखमण्डनम् ॥ ७५ ॥
61993
61994 आह्लादि सर्वप्राणिसुखकरं अमृतं करोत्युपचिनोति ॥ ७५ ॥
61995
61996 पुनः स्वर्गतरोः पुण्यक्षयवातसमीरिताः ।
61997 पतन्तीह विनुन्नाङ्गाः पुण्यकृत्पुष्पराशयः ॥ ७६ ॥
61998
61999 पुण्यानि कृन्तन्ति भोगैश्छिन्दन्तीति पुण्यकृतः स्वर्गिणस्तल्लक्षणाः
62000 पुष्पराशयः ॥ ७६ ॥
62001
62002 पुनः कार्यक्रियापक्षैः संसारारम्भनामकम् ।
62003 किंचित्पटपटं कृत्वा याति कालकपिञ्जलः ॥ ७७ ॥
62004
62005 पटपटं कृत्वा । ननु अनुकरणं चानितिपरम् इति गतिसंज्ञायां
62006 कुगतिप्रादयः इति नित्यं समासे ल्यपा भाव्यम् । सत्यम् । किंचिदिति
62007 विशेषणदर्शनात् सविशेषणानां वृत्तिर्न इति महाभाष्योक्तेर्न समासः ।
62008 कालः सृष्टिकालस्तल्लक्षणः कपिञ्जलः पक्षिविशेषः ॥ ७७ ॥
62009
62010 पुनरिन्द्रादिके याते सज्जमास्थाय केवलम् ।
62011 आयात्यपरदेवेन्द्रषट्पदः स्वर्गपङ्कजम् ॥ ७८ ॥
62012
62013 पूर्वेन्द्रलक्षणे अलिके क्षुद्रभ्रमरे याते निवृत्ताधिकारे सति । सज्जं
62014 नूतनतत्तन्मन्वन्तराधिकारिदेवतागणान्तरसन्नद्धमैरावताद्यास्थाय ।
62015 राज्यम् इति पाठे स्पष्टम् । केवलं पूर्वदेवगणशून्यम् ॥ ७८ ॥
62016
62017 पुनः कालं कृतापूतं [कृपापूतं इति क्वचित्] कलुषीकुरुते
62018 कलिः ।
62019 सचक्रिणमिवाम्भोधिं प्रवृद्धोऽवकरानिलः ॥ ७९ ॥
62020
62021 कृतेन युगेन आपूतं सर्वतः पूतम् । कलिरधर्मः । सचक्रिणं
62022 स्वान्तःशयानविष्णुसहितम् । अवकिरति पांसूनित्यवकरोऽनिलः प्रलयवायुः ॥ ७९
62023 ॥
62024
62025 पुनः कालकुलालेन कृतभूतशरावकम् ।
62026 चक्रमावर्त्यते वेगादजस्रं कल्पनामकम् ॥ ८० ॥
62027
62028 कृताः प्राणिशरावा यस्मिन् ॥ ८० ॥
62029
62030 पुनर्नीरसतामेति जगदस्तशुभस्थिति ।
62031 अभ्यासीभूतसंकल्पं संशुष्कमिव काननम् ॥ ८१ ॥
62032
62033 नीरसतां धर्मरसहीनताम् । अभ्यासीभूतसंकल्पं यस्य यद्विषये
62034 पूर्वाभ्यासस्तदनुगुणीभूताः संकल्पा यस्मिन् ॥ ८१ ॥
62035
62036 पुनरर्कगणेष्वग्निदग्धानन्तकलेवरम् ।

62037 सर्वभूतास्थिसंपूर्णं जगदेति श्मशानताम् ॥ ८२ ॥
62038
62039 पुनः कुलाचलाकारपुष्करावर्तवर्षणैः ।
62040 नृत्यद्भववृहत्फेनां यात्येकार्णवतां जगत् ॥ ८३ ॥
62041
62042 नृत्यन् भवः संहाररुद्र एव शुभ्रत्वाद्वृहन् फेनो यस्याम् ॥ ८३ ॥
62043
62044 पुनः संशान्तवाय्वम्बुरिक्तं सकलवस्तुभिः ।
62045 तदपूर्वमिवाकाशं जगदायाति शून्यताम् ॥ ८४ ॥
62046
62047 पुनः कतिपया भुक्त्वा समाः समरसाशयः ।
62048 जीवितं जीर्णया तन्वा पुनः स्वात्मनि लीयते ॥ ८५ ॥
62049
62050 जीवितं भुक्त्वा अनुभूय ॥ ८५ ॥
62051
62052 पुनरन्येन कालेन तथैव जगतां गणान् ।
62053 मनस्तनोति वै शून्ये गन्धर्वनगरं यथा ॥ ८६ ॥
62054
62055 पुनः सर्मसमारम्भः प्रलये सर्वसंभवः ।
62056 सर्वं पुनरिदं राम चक्रवत्परिवर्तते ॥ ८७ ॥
62057
62058 पुनः प्रलये सति सर्गसमारम्भः [सर्वसमारंभः इति पाठः] ॥ ८७
62059 ।।
62060
62061 किमेतस्मिन्महामायाडम्बरे दीर्घशम्बरे ।
62062 राम सत्यमसत्यं वा निर्णेयं यदिहोच्यते ॥ ८८ ॥
62063
62064 दीर्घशम्बरे दीर्घभ्रमे किं निर्णेयं विचार्येत्थमिति निश्चेयं न
62065 किंचिदित्यर्थः । निर्णयम् इति पाठे निर्युक्तिकमित्यर्थः ॥ ८८ ॥
62066
62067 दाशूराख्यायिकेवेयं राम संसारचक्रिका ।
62068 कल्पनारचिताकारा वस्तुशून्या न वस्तुतः ॥ ८९ ॥
62069
62070 उक्तेऽर्थे दाशूराख्यायिकामुदाहरिष्यामीत्याशयेनाह - दाशूरेति ॥ ८९ ॥
62071
62072 अविरलमिदमाततं विकल्पै-
62073 रसदुदितैरपि तैर्द्विचन्द्रकल्पैः ।
62074 विरचितमसतानुपन्नसत्यं
62075 जगदिह तेन विमूढता किमुत्था ॥ ९० ॥
62076
62077 येन हेतुना इदं जगदसतोऽज्ञानादुदितैर्विकल्पैरविरलमविच्छिन्नप्रवाहं
62078 यथा स्यात्तथा आततं तथा असता अविद्यमानेनैव कर्त्रा
62079 विरचितमनुत्पन्नमनुसृतमधिष्ठानब्रह्म सत्यं येन तथाविधं तेन
62080 हेतुना ते विमूढता किमुत्था कस्मान्निमित्ताजाता । यन्निमित्तं त्वं पश्यसि
62081 तन्नास्त्येव यत्त्वस्ति परमार्थतस्तदभयं ब्रह्मैवेति न ते निर्निमित्तो मोहोऽयं
62082 युक्त इत्युपसंहारः ॥ ९० ॥
62083
62084 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मो० स्थितिप्रकरणे
62085 जगद्वासनिर्णययोगोपदेशो नाम सप्तचत्वारिंशः सर्गः ॥ ४७ ॥
62086
62087 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे
62088 जगद्वासनिर्णययोगोपदेशो नाम सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

62089
62090
62091 अष्टचत्वारिंशः सर्गः ४८
62092
62093 श्रीवसिष्ठ उवाच।
62094
62095 क्रियाविशेषबहुला भोगैश्वर्यहताशयाः।
62096 नापेक्षन्ते यदा सत्यं न पश्यन्ति शठास्तदा॥ १॥
62097
62098 भोगादिलिप्सा कुत्सात्र दाशूरस्याथ संभवः।
62099 प्रसन्नाच्चानलात्तस्य वरप्राप्त्यन्तमीर्यते [प्राप्त्यर्थं इति पाठः]॥
62100 १॥
62101
62102 यदि इयं संसारचक्रिका कल्पनामात्रम् यदि च ब्रह्मैव तत्त्वतोऽस्ति तर्हि तथा
62103 किमिति मेधाप्रतिभाकौशलशालिष्वपि महाजनेषु कोऽपि न पश्यति तत्र को हेतुरिति
62104 चेत्तदनपेक्षा तद्विरुद्धभोगैश्वर्याद्यभिनिवेशश्च हेतुरित्याह -
62105 क्रियाविशेषेति। ऐहिकामुष्मिकभोगैश्वर्योपायभूतैर्लौकिकैर्वैदिकैश्च
62106 क्रियाविशेषैर्बहुला उपचितकामाः शठाः स्वपरवञ्चकाः॥ १॥
62107
62108 ये तु पारं गता बुद्धेरिन्द्रियैर्न वशीकृताः।
62109 त एनां जागतीं मायां पश्यन्ति करबिल्ववत्॥ २॥
62110
62111 तर्हि के पश्यन्ति तानाह - ये त्विति। मायाग्रहणं सत्यस्याप्युपलक्षणम्॥ २
62112 ।।
62113
62114 तुच्छां तां जागतीं मायां दृष्ट्वा जीवो विचारवान्।
62115 अहंकारमयीं मायां त्यजत्यहिरिव त्वचम्॥ ३॥
62116
62117 जागतीं बाह्यां ममेत्यभिनिवेशहेतुभूताम्।
62118 अहंकारमयीमान्तरीमहमित्यभिनिवेशहेतुभूताम्॥ ३॥
62119
62120 असक्तता ततोऽभ्येत्य पुना राम न जायते।
62121 क्षेत्रेष्वपि चिरं तिष्ठन्बीजं दग्धमिवाग्निना॥ ४॥
62122
62123 आधिव्याधिपरीताय प्रातर्वाद्य विनाशिने।
62124 प्रयतन्ते शरीराय हितमज्ञास्तु नात्मने॥ ५॥
62125
62126 भोगैश्वर्यप्रसक्तस्य कारागृहदार्ढ्यायेव देहरक्षणाय वृथानर्थाय
62127 च प्रयासं परमपुरुषार्थोपेक्षां चात्यन्तानुचितां दृष्ट्वा तमनुशोचति
62128 - आधीति। प्रातः अद्य वा विनाशिने। चतुर्थी तदर्थार्थ - इति
62129 हितशब्दयोगे चतुर्थी॥ ५॥
62130
62131 त्वमप्यज्ञवदज्ञस्य शरीरस्य समीहितम्।
62132 मा संपादय दुःखाय भवात्मैकपरायणः॥ ६॥
62133
62134 श्रीराम उवाच।
62135
62136 दाशूराख्यायिकेवेयं सुखसंसारचक्रिका।
62137 कल्पनारचिताकारा वस्तुशून्येति किं प्रभो॥ ७॥
62138
62139 प्राक् प्रस्तुतां दाशूराख्यायिकां शुश्रूषू रामः पृच्छति - दाशूरेति
62140 । विषयसुखार्था संसारचक्रिका वस्तुशून्या इति यत्त्वयोक्तं तत्किं कीदृशम्।

62141 यादृशं तथा वर्णयेत्यर्थः ॥ ७ ॥
62142
62143 श्रीवसिष्ठ उवाच ।
62144
62145 जगन्मायास्वरूपस्य वर्णनाव्यपदेशतः ।
62146 दाशूराख्यायिकां राम वर्ण्यमानां मया शृणु ॥ ८ ॥
62147
62148 वर्णनाया व्यपदेशतः । उदाहरणतयेत्यर्थः ॥ ८ ॥
62149
62150 अस्त्यस्मिन्वसुधापीठे विचित्रकुसुमद्रुमः ।
62151 मागधो नाम विख्यातः श्रीमाञ्जनपदो महान् ॥ ९ ॥
62152
62153 मगधानां निवासो जनपदो मागधः । तस्य निवासः इत्यण् ॥ ९ ॥
62154
62155 कदम्बवनविस्तारलीलावलितजङ्गलः ।
62156 विचित्रविहगव्यूहसर्वाश्चर्यमनोहरः ॥ १० ॥
62157
62158 सस्यसंकटसीमान्तः पुरोपवनमण्डितः ।
62159 कमलोत्पलकह्लारपूर्णसर्वसरित्तटः ॥ ११ ॥
62160
62161 सस्यैः संकटा निबिडिताः सीमान्ता ग्रामसीमावधयो यस्मिन् ॥ ११ ॥
62162
62163 उद्यानदोलाविलसल्ललनागेयघुंघुमः ।
62164 निशोपभुक्तकुसुमनीरन्ध्रविशिखावनिः ॥ १२ ॥
62165
62166 निशया उपभुक्तैरिव म्लानोत्सृष्टैः कुसुमैर्नीरन्ध्रा विशिखा
62167 मन्मथशरा यस्यां तथाविधा अवनिर्यस्मिन् ॥ १२ ॥
62168
62169 तत्रैकस्मिन्गिरितटे कर्णिकारसमाकुले ।
62170 कदलीखण्डनीरन्ध्रनीपगुल्मविराजिते ॥ १३ ॥
62171
62172 तत्र तस्मिन् जनपदे । नीपैः कदम्बैरन्यश्च गुल्मैर्विराजिते ॥ १३ ॥
62173
62174 पुष्पौघस्फूर्जदनिले केसरारुणधूलिनि ।
62175 कारण्डवकृतारावे रसत्सरससारसे ॥ १४ ॥
62176
62177 पुष्पेषु ओघैः प्रवाहैः स्फूर्जन्तो ध्वनन्तोऽनिला यस्मिन् । रसन्तः सरसाः
62178 सानुरागाः सारसा यस्मिन् ॥ १४ ॥
62179
62180 तस्मिन्नगवरे पुण्ये विचित्रविहगद्रुमे ।
62181 कश्चित्परमधर्मात्मा मुनिरासीन्महातपाः ॥ १५ ॥
62182
62183 दाशूरनामा महता तपोयोगेन संयुतः ।
62184 कदम्बपृष्ठवास्तव्यो वीतरागो महामतिः ॥ १६ ॥
62185
62186 तपःसहितेन योगेन । कदम्बपृष्ठे कदम्बाग्रे वसतीति वास्तव्यः ।
62187 वसेस्तव्यत्कर्तरि णिच्च इत्यनुशासनात् ॥ १६ ॥
62188
62189 श्रीराम उवाच ।
62190
62191 असौ तपस्वी भगवन्विपिने केन हेतुना ।
62192 कथं चाप्यवसत्पृष्ठे कदम्बस्य महातरोः ॥ १७ ॥

कथं केन प्रभावेन प्रकारेण च ॥ १७ ॥

श्रीवसिष्ठ उवाच।

शरलोमेति विख्यातः पिता तस्य बभूव ह।
रामाऽपर इव ब्रह्मा तस्मिन्नेवावसद्गिरौ ॥ १८ ॥

तस्यासावेकपुत्रोऽभूत्कचो देवगुरोरिव।
तेन सार्धं स पुत्रेण नीतवाञ्जीवितं वने ॥ १९ ॥

जीवितमायुर्नीतवान् ॥ १९ ॥

अथासौ शरलोमात्र भुक्त्वा युगगणं ययौ।
त्यक्तदेहः सुरागारं मुक्तनीडः खगो यथा ॥ २० ॥

युगगणं अयनयुगलात्मकवत्सरगणं सुखदुःखादिद्वन्द्वगणं वा
भुक्त्वा अनुभूय ॥ २० ॥

एक एव वने तस्मिन्दाशूरः प्ररुरोद ह।
दशापनीतपितृकः करुणं कुररो यथा ॥ २१ ॥

एक एवेत्युक्त्या मातापितरमन्वगादिति गम्यते। दशया चरमभावविकारेण
ग्रहदशाविशेषेण वा अपनीतः पिता यस्य दशभिः प्राणैर्वा देहादपसृत्य
नीतः परलोकाय पिता यस्य। कुररः पक्षिभेदः ॥ २१ ॥

मातापितृवियोगेन शोकसंतापिताशयः।
म्लानिमभ्याययौ नूनं हेमन्त इव पङ्कजम् ॥ २२ ॥

बालोऽसावतिदीनात्मा वनदेवतया वने।
इत्थमाश्वासितो राम तदाऽदृश्यशरीरया ॥ २३ ॥

इत्थं वक्ष्यमाणप्रकारेण। अदृश्यशरीरया अन्तर्हितयेति यावत् ॥ २३ ॥

ऋषिपुत्र महाप्राज्ञ किमज्ञ इव रोदिषि।
संसारस्य न कस्मात्त्वं स्वरूपं वेत्सि चञ्चलम् ॥ २४ ॥

चञ्चलमशाश्वतम् ॥ २४ ॥

सर्वदैवेदृशी साधो संसारे संसृतिश्चला।
जायते जीव्यते पश्चादवश्यं च विनश्यति ॥ २५ ॥

जीव्यते जीवति। विकरणपदव्यत्ययश्छान्दसः ॥ २५ ॥

यद्यत्किंचिद्दृश्यदृशि ब्रह्मादिकमिदं मुने।
गन्तव्यस्तेन सर्वेण विनाशो नात्र संशयः ॥ २६ ॥

दृश्यदृशि व्यवहारदृष्टौ यद्यत्किंचित्प्रसिद्धमिति शेषः। गन्तव्यः
प्राप्तव्यः ॥ २६ ॥

तदर्थं मा कृथा व्यर्थं विषादं मरणे पितुः।
अवश्यभाव्यस्तमयो जातस्याहर्पतेरिव ॥ २७ ॥

62245
62246 तदर्थं तस्माद्धेतोः। अहर्पतेः सूर्यस्य। अहरादीनां पत्यादिषु वा रेफो
62247 वक्तव्यः इति रत्वम्॥ २७॥
62248
62249 अशरीरामिति श्रुत्वा गिरमारक्तलोचनः।
62250 धैर्यमासादयामास शिखण्डी स्तनितादिव॥ २८॥
62251
62252 स्तनितात् मेघगर्जितात्॥ २८॥
62253
62254 उत्थायावश्यकं कृत्वा पाश्चात्यं पितुरादरात्।
62255 चकार तपसे बुद्धिं दृढामुत्तमसिद्धये॥ २९॥
62256
62257 आवश्यकं पुत्रेणावश्यं कर्तव्यं पितुरौर्ध्वदेहिकम्॥ २९॥
62258
62259 ब्राह्मेण कर्मणा तस्य विपिने चरतस्तपः।
62260 अनन्तसंकल्पमयं श्रोत्रियत्वं बभूव ह॥ ३०॥
62261
62262 अनन्तसंकल्पमयं बहुतरशुद्ध्यशुद्ध्यादिकल्पनाप्रचुरम्। श्रोत्रियत्वं
62263 वेदाध्ययनतदर्थविचारानुष्ठाननिष्ठत्वम्॥ ३०॥
62264
62265 अज्ञातज्ञेयबुद्धेअस्तु श्रोत्रियस्य तया तया।
62266 न विशश्राम चेतोऽस्य पवित्रेऽपि धरातले॥ ३१॥
62267
62268 न ज्ञातमवश्यज्ञेयं ब्रह्म यया तथाविधा बुद्धिर्यस्य। तया तया
62269 शुद्ध्यशुद्ध्यादिकल्पनया॥ ३१॥
62270
62271 केवलं सर्वमेवेदमपि शुद्धं धरातलम्।
62272 अशुद्धमिव पश्यन्स न रेमे क्वचिदेव हि॥ ३२॥
62273
62274 क्वचिदेवेत्यप्यर्थे एवकारः॥ ३२॥
62275
62276 अथ संकल्पयामास स्वसंकल्पनयैव सः।
62277 वृक्षाग्रमेव संशुद्धं स्थितिस्तत्रोचिता मम॥ ३३॥
62278
62279 तदिदानीं तपस्तप्स्ये तपसा येन शाखिषु।
62280 स्वगवत्स्थितिमाप्नोमि शाखासु च दलेषु च॥ ३४॥
62281
62282 तत् तदर्थम्। खगवत्पक्षिवद्देववद्वा स्थितिमवस्थानसामर्थ्यम्॥ ३४॥
62283
62284 इति संचिन्त्य संज्वाल्य हुताशमतिभास्वरम्।
62285 जुहाव तस्मिन्प्रोत्कृत्य मांसं स्वस्कन्धभित्तितः॥ ३५॥
62286
62287 तपस्तप्स्ये इति संकल्पदर्शनात्तपोनन्तरं ततः शीघ्रं
62288 सिद्ध्यदर्शनादयं होमसाहसारम्भ इति गम्यते॥ ३५॥
62289
62290 अथ गीर्वाणवृन्दस्य समग्रा गलभित्तयः।
62291 मन्मुखत्वेन मा यान्तु विप्रमांसेन भस्मताम्॥ ३६॥
62292
62293 अथ भगवान्सप्तार्चिः इति संचिन्त्येति परेणान्वयः। चिन्ताप्रकारमेव दर्शयति
62294 - गीर्वाणवृन्दस्येत्यादिना। मन्मुखत्वेन अग्निमुखत्वेन। अग्निमुखा वै
62295 देवाः इति श्रुतेः। समग्रा ग्लभित्तयः कण्ठदेशा विप्रमांसेन जग्धेन
62296 भस्मतां मा यान्तु न प्राप्नुवन्त्विति संचिन्त्येत्यन्वयः॥ ३६॥

62297

62298 इति संचिन्त्य भगवान्सप्तार्चिस्तस्य देवता।
62299 पुरो बभूव दीप्तांशुर्दीप्तांशुर्वाक्पतेरिव॥ ३७॥
62300

62301 दीप्तांशुर्भास्वरप्रभो दीप्तांशुः सूर्योवाक्पतेर्बृहस्पतेरिव॥ ३७॥
62302

62303 उवाच वचनं धीरं [धीरं इति द्वितीयैकवचनस्थाने धीर इति
62304 संबुद्धिष्टीकाकृतोररीकरणात्सुस्वारस्याच्च स एव पाठः
62305 समीचीनः] कुमाराभिमतं वरम्।
62306 गृहाण स्थापितं साधो कोशाकाशान्मणिं यथा॥ ३८॥
62307

62308 धीरेति साहसानुरूपं संबोधनम्। स्थापितं त्वत्संकल्पसिद्धं त्वयि
62309 स्थितमेव गृहाण। कोशाकाशात्कोशोदरान्मणिं यथा तत्स्वामी गृह्णाति
62310 तद्वत्॥ ३८॥
62311

62312 इत्युक्तवन्तमनलमर्घपुष्पेण शोभिना।
62313 संपूज्य स्तुतिवादेन प्राह विप्रकुमारकः॥ ३९॥
62314

62315 भगवन् भूतपूर्णाया भुवः पावनमण्डलम्।
62316 नाप्नोमि तेन वृक्षाणामुपरि स्थितिरस्तु मे॥ ४०॥
62317

62318 विशुद्धिदूषकैः शूद्रचाण्डालश्वमार्जारादिभूतैः पूर्णायाः।
62319 पावनमण्डलं पवित्रप्रदेशम्॥ ४०॥
62320

62321 इत्युक्ते मुनिपुत्रेण सर्वदेवमुखं शिखी।
62322 एवमस्तु तवेत्युक्त्वा जगामान्तर्द्धिमीश्वरः॥ ४१॥
62323

62324 शिखी अग्निदेवः॥ ४१॥
62325

62326 तस्मिन्नन्तर्हिते देवे क्षणात्सान्ध्य इवाम्बुजे।
62327 पूर्णकामः कुमारोऽसौ पूर्णेन्दुरिव चाबभौ॥ ४२॥
62328

62329 अधिगताभिमताननमण्डल-
62330 द्युतिभरेण जहास स तुष्टिमान्।
62331 शशिनमाप्तकलाकुलमम्बुजं
62332 विकसितं च सितस्मितशोभिना॥ ४३॥
62333

62334 तन्मुखशोभामेव वर्णयति - अधिगतेति। अधिगतेन प्राप्तेनाभिमतेन
62335 वरेण प्रयुक्तेनाननमण्डलद्युतिभरेण स दाशूरः शशिनमम्बुजं च
62336 जहासेत्युत्प्रेक्षा॥ ४३॥
62337

62338 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० स्थितिप्रकरणे दाशूरो०
62339 दाशूरवरप्रदानवर्णनं नामाष्टचत्वारिंशः सर्गः॥ ४८॥
62340

62341 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे
62342 दाशूरवरप्रदानवर्णनं नामास्टचत्वारिंशः सर्गः॥ ४८॥
62343

62344

62345 एकोनपञ्चाशः सर्गः ४९
62346

62347 श्रीवसिष्ठ उवाच।
62348

62349 अथ काननमध्यस्थं चुम्बिताम्बुदमण्डलम् |
62350 मध्याह्नखिन्नसूर्याश्वसेवितस्कन्धमण्डलम् || १ ||
62351
62352 शाखापल्लवपुष्पौघफलपक्षिमनोहरः |
62353 इहोत्प्रेक्षाद्यलङ्कारैः कदम्ब उपवर्ण्यते || १ ||
62354
62355 मध्याह्ने खिन्नैरिव सूर्याश्वैः सेवितानि स्कन्धमण्डलानि यस्य || १ ||
62356
62357 वितानमिव दिक्कुक्षिदीर्घं विटपबाहुभिः |
62358 आलोकयन्तं ककुभो विकासिकुसुमेक्षणैः || २ ||
62359
62360 वितानमिव कुर्वाणमिति शेषः | विटपवितानानावृतो देशः परिशिष्टोऽन्योऽस्ति न
62361 वेति परितः ककुभो दिश आलोकयन्तम् || २ ||
62362
62363 वातावधूलितानल्पभ्रमद्भ्रमरकुन्तलम् |
62364 प्रमार्जयन्तमाशानां मुखं पल्लवपाणिभिः || ३ ||
62365
62366 वातैरवधूलिता निष्परागीकृता अनल्पा भ्रमद्भ्रमरा एव कुन्तलाः केशा
62367 यस्य | आशानां दिक्कान्तानाम् || ३ ||
62368
62369 कच्छैरुरुगुडुच्छाच्छमञ्जरीपुञ्जकञ्जरैः |
62370 आस्यैरिव सताम्बूलैर्हसन्तं वनमालिकाः || ४ ||
62371
62372 कं हिमजलं छयन्ति बिन्दुभावेन परिच्छिन्दन्तीति कच्छाः
62373 पल्लवप्रदेशास्तैः उरुभिर्गुडुच्छानां लताविशेषाणां
62374 अच्छैर्दन्तपङ्क्तिवत्स्थितैर्मञ्जरीपुञ्जैः कञ्जरैः केसरितैः || ४ ||
62375
62376 लताविलसितोल्लासैः पुष्पकेसरधूलिभिः |
62377 आबद्धमण्डलाभोगं पूर्णेन्दुमिव दीप्तिभिः || ५ ||
62378
62379 लतानां विलसितेन शोभातिशयेन उल्लासैरुल्लसद्भिः
62380 पुष्पकेसरनिविष्टपरागैराबद्धो मण्डलाकारवेषो येन || ५ ||
62381
62382 संकटं विटपावल्या कुञ्जकूजच्चकोरया |
62383 छन्नया सिद्धवीथ्येव जगदुच्चतया श्रितम् || ६ ||
62384
62385 कुञ्जेषु लतापिहितप्रदेशेषु कूजन्तश्चकोरा यस्यां तथाविधया | विटपानां
62386 शाखानामावल्या पङ्क्त्या संकटं निबिडितम् |
62387 ग्रहनक्षत्रताराविमानादिच्छन्नया सिद्धवीथ्या स्वातीपथवीथ्या उच्चतया
62388 ऊर्ध्वभावेन श्रितं जगद्ब्रह्माण्डमिव स्थितमित्यर्थः || ६ ||
62389
62390 स्कन्धपीठोपविष्टानां लम्बमानैः कलापिनाम् |
62391 कलापैः शोभितं व्योम सेन्द्रचापैरिवाम्बुदैः || ७ ||
62392
62393 कलापिनां मयूराणां कलापैर्बर्हैः || ७ ||
62394
62395 मग्नोन्मग्नैः प्रतिस्कन्धमाश्रितैश्चमरैः सितैः |
62396 पूर्णं मुहुर्दृष्टनष्टैः संवत्सरमिवेन्दुभिः || ८ ||
62397
62398 प्रतिस्कन्धं प्रतिस्कन्धकोटरमाश्रितैर्विश्रान्तैरन्तर्गतकायार्धेन
62399 मग्नैर्बहिर्निःसृतकायार्धेनोन्मग्नैः कैश्चित्प्रविष्टैः
62400 कैश्चिद्बहिष्ठैर्वा | अत एव

62401 दृष्टनष्टैर्दृष्टादृष्टैश्चमरैर्मृगभेदैः। एतेन परितोऽधः
62402 स्कन्धानां बृहत्त्वं भूसंलग्नता च गम्यते। इन्दुपक्षे
62403 मग्नोन्मग्नैरस्तमितोदितैरत एव दृष्टनष्टैः॥ ८॥
62404
62405 कपिञ्जलकुलालापैः कलकोकिलकूजितैः।
62406 जीवंजीवविरावैश्च प्रगायन्तमिवोच्छ्रितैः॥ ९॥
62407
62408 जीवंजीवाश्चकोराः॥ ९॥
62409
62410 कादम्बककदम्बैश्च कुलायकृतकेलिभिः।
62411 स्वर्गकोटरविश्रान्तैः सिद्धैर्जगदिवावृतम्॥ १०॥
62412
62413 कादम्बकाः कलहंसाः। कुलायेषु नीडेषु कृतकेलिभिः क्रीडाद्भिः
62414 सिद्धैर्देवैरावृतं जगद्ब्रह्माण्डमिव स्थितम्॥ १०॥
62415
62416 प्रवालचलहस्ताभिरलिनेत्राभिराश्रितम्।
62417 अप्सरोभिरिव स्वर्गं मञ्जरीभिरितस्ततः॥ ११॥
62418
62419 प्रवालेत्यादिविशेषणे अप्सरसां मञ्जरीणां च श्लेषात्साधारणे योज्ये॥ ११॥
62420
62421 सेन्द्रचापविलासेन कुमुदोत्कररेणुना।
62422 मञ्जरीपिञ्जराश्यामं विद्युत्वन्तमिवाम्बुदम्॥ १२॥
62423
62424 कुमुदग्रहणं
62425 कुमुदनीलोत्पलकोकनदादिसदृशनानावर्णलतापुष्पोपलक्षणम्। अत
62426 एवेन्द्रचापविलाससहितेन तद्रेणुना उपलक्षितं स्वमञ्जरीभिश्च पिञ्जरं
62427 आसमन्तात् पत्रैः श्यामम्। विद्युत्वन्तमिति तसौ मत्वर्थे इति भत्वान्न जश्॥ १२॥
62428
62429 सहस्रभुजशाखाढ्यं पूरिताकाशकोटरम्।
62430 विश्वरूपमिवोन्नृत्तं चन्द्रार्ककृतकुण्डलम्॥ १३॥
62431
62432 स्वं विश्वरूपं दर्शयन्तं विष्णुमिव स्थितमित्यर्थः। अथवा विश्वरूपं
62433 जगत्स्वरूपमिव स्थितमित्यर्थः॥ १३॥
62434
62435 प्। ५२३)
62436
62437 तले निषण्णनागेन्द्रं व्योम्नि तारागणाकुलम्।
62438 लतापुष्पमयं मध्ये खमण्डलमिवापरम्॥ १४॥
62439
62440 खमण्डलं ब्रह्माण्डोदराकाशम्। तदपि हि तले भूमेरधो निषण्णा
62441 निविष्टा नागेन्द्राः शेषादयो दिग्गजाश्च यस्मिंस्तत्। शिष्टं स्पष्टम्॥ १४॥
62442
62443 पितामहमिवाशेषशैलकाननशालिनम्।
62444 फलपल्लवपुष्पाणां कोशमेकमिवावनौ॥ १५॥
62445
62446 पितामहपक्षे स्वसृष्टैरशेषैः प्राणिभिः शैलैः काननैश्च शालिनं
62447 शोभमानम्। कदम्बपक्षे अशेषैः शैलस्य काननैः शोभमानमित्यर्थः॥
62448 १५॥
62449
62450 दधानं कलिकाजालं स्थगितं पुष्पधूलिभिः।
62451 कच्छेष्वर्ककरच्छन्नताराजालमिवाम्बरम्॥ १६॥
62452

62453 प्रागुक्तेषु कच्छेषु पुष्पधूलिभिः स्थगितमाच्छादितं कलिकाजालं
62454 कोरकसमूहं दधानम् ॥ १६ ॥
62455
62456 विलोलविहगैः स्कन्धैः कुलायकुलसंकुलैः ।
62457 वलितं भूतलं लोके पूर्णैर्जनपदैरिव ॥ १७ ॥
62458
62459 वलितं व्याप्तम् ॥ १७ ॥
62460
62461 मञ्जरीसुपताकाढ्यं लतामण्डलमण्डितम् ।
62462 पुष्पमङ्कोलधवलं पुष्पप्रकरपूरितम् ॥ १८ ॥
62463
62464 अन्तहपुरसाम्यमाह - मञ्जरीत्यादित्रिभिः । मङ्कोलं गृहलेपनचूर्णम्
62465 ॥ १८ ॥
62466
62467 कूजच्चकोरभ्रमरशुककोकिलसारिकम् ।
62468 घनस्तबकसंछन्नकुहरोग्रगवाक्षकम् ॥ १९ ॥
62469
62470 अन्तःपुरपक्षे घनैर्बहुभिः रत्नादिस्तबकैः संछन्नकुहराः
62471 पूरितगर्भाः । लोहार्गलवर्षवरगुप्तत्वादुग्रा अप्रधृष्या गवाक्षाः
62472 कुड्यापवरकाणि यत्र । वृक्षपक्षे सर्पगर्भत्वादुग्राः ॥ १९ ॥
62473
62474 संचरत्पक्षिबहुलं जनमन्थरकोटरम् ।
62475 सर्वासां वनदेवीनामन्तःपुरमिवोत्तमम् ॥ २० ॥
62476
62477 वृक्षपक्षे छायोपसेविभिर्जनैर्मन्थरकोटरं विलोडिततलम् ॥ २० ॥
62478
62479 कूलद्भृङ्गतरङ्गौघैः पुष्पकेसरराजिभिः ।
62480 राजमानं पतन्तीभिः सरिद्भिरिव पर्वतम् ॥ २१ ॥
62481
62482 भ्रमद्भिः पुष्पपत्रौघैर्मन्दवातविलासिभिः ।
62483 वर्धमानैर्वृतस्कन्धं शुभ्राभ्रैरिव भूधरम् ॥ २२ ॥
62484
62485 वर्धमानैः प्रत्यहमुपचीयमानैः ॥ २२ ॥
62486
62487 मातङ्गकटघृष्टेन जानुस्तब्धेन पीठिना ।
62488 आभोगिना बद्धपदं तरुणेव महाचलम् ॥ २३ ॥
62489
62490 इदानीं मूलबन्धं वर्णयति - मातङ्गेति ।
62491 मातङ्गकठघृष्टेनेत्यनेन मूलबन्धस्य तावदौन्नत्यं गम्यते ।
62492 ऊर्ध्वज्ञुजानुवत्स्तब्धेन पीठिना पीठवत्प्रसृतेन आभोगिना विस्तीर्णेन
62493 मूलबन्धेन बद्धपदं अवष्टब्धस्थानम् । तरुणा
62494 उपत्यकाप्ररूढतरुवृन्देन ॥ २३ ॥
62495
62496 विचित्रवर्णपक्षाणां स्कन्धकोटरच्चरिणाम् ।
62497 वृतं खगानां वृन्देन भूतानामिव शार्ङ्गिणम् ॥ २४ ॥
62498
62499 भूतानां पार्षदानां वृन्देनेव ॥ २४ ॥
62500
62501 स्तबकाङ्गुलिजालेन लोलेनाभिनयक्रियाम् ।
62502 दिशन्तमिव वल्लीनां प्रनृत्तानां वनानिलैः ॥ २५ ॥
62503
62504 अभिनया नाट्यशास्त्रप्रसिद्धा भावव्यञ्जककरनेत्रादिचेष्टाविशेषास्तेषां

कियाँ निष्पादनप्रकारं दिशन्तमुपदिशन्तमिव ॥ २५ ॥

कश्चिदेव निवासो मे नार्थिनामिति तुष्टितः ।
नृत्यन्तमिव बह्वाढ्यलतावलयवल्गनैः ॥ २६ ॥

मूलकोटरस्कन्धशाखापत्रपुष्पादिप्रदेशानां मध्ये मे मम कश्चिदेक
एव अर्थिनां मनुष्यमृगपक्ष्यादीनां निवासो न । अन्यः सर्वोऽपि
निवासत्वेनोपयुक्तः कदाचित्कश्चिदेकः परिशिष्यते । अहो मे परोपकारे
सर्वाङ्गसाफल्यमिति तुष्टितो हर्षपारवश्येन हेतुना ॥ २६ ॥

लताकान्तैककान्तत्वाच्छृङ्गाररसनिर्भरम् ।
काकल्येव प्रगायन्तं मत्तालिनिजनिःस्वनैः ॥ २७ ॥

लतालक्षणानां वल्लीनां कान्तानामेककान्तत्वाद्धेतोः । काकल्या
कलध्वनिना ॥ २७ ॥

आदरोन्मुक्तकुसुमं सिद्धानां व्योमचारिणाम् ।
स्वागतानीव कुर्वाणं कोकिलालिकुलारवैः ॥ २८ ॥

आदरोन्मुक्तकुसुमं यथा स्यात्तथा ॥ २८ ॥

लतापुष्पफलोल्लासं प्रान्तपञ्चमहीरुहाम् ।
विहसन्तमिवाच्छाभिः पुष्पकुड्मलदीप्तिभिः ॥ २९ ॥

प्रान्तस्थानां पञ्चमहीरुहां वटोदुम्बरप्लक्षाम्रपलाशाख्यानां
पञ्चपुण्यवृक्षाणाम् । उत्तरप्रान्तस्थानां मन्दारादिपञ्चकल्पतरूणां
वा । लताद्युल्लासं हसन्तमिव ॥ २९ ॥

पारिजातमिवाजेतुमूर्ध्वगैः खगमण्डलैः ।
व्योमान्तराभिधावन्तमलमुद्धतकन्धरम् ॥ ३० ॥

अलमत्यर्थमुद्धतकन्धरमुन्नमितग्रीवं यथा स्यात्तथा व्योमान्तरा
आकाशोदरे अभिधावन्तमिव ॥ ३० ॥

मध्यभागस्फुरत्तुङ्गैः [स्फुरद्भृङ्गैः इति पाठः]
स्तबकैर्घनपङ्क्तिभिः ।
सहस्राक्षत्वमतुलैर्जेतुमिन्द्रमिवोद्यतम् ॥ ३१ ॥

घनपङ्क्तिभिर्निबिडश्रेणिभिः । सहस्राक्षत्वं असंख्यनेत्रत्वं प्राप्येति
[प्राप्तैः इति पाठः] शेषः । अतुलैः शोभया संख्यया
चेन्द्रनेत्रेभ्योऽधिकत्वात्तैस्तुलयितुमशक्यैः ॥ ३१ ॥

क्वचित्कुसुमगुच्छाच्छफणामणिगणावृतम् ।
पातालादुत्थितं शेषमिव व्योमदिदृक्षया ॥ ३२ ॥

कुसुमगुच्छलक्षणैः कुसुमगुच्छसदृशैश्च
अच्छफणामणिभिर्व्योमदिदृक्षया हेतुना पातालादुत्थितं शेषमिव स्थितम्
॥ ३२ ॥

रजसोद्धूलिताकारं द्वितीयमिव शंकरम् ।
छायया फलशालिन्या समस्तजनशंकरम् ॥ ३३ ॥

62557 भगवांस्तु भक्तानामेव शंकरः अयं तु समस्तजनशंकर इत्यतिशयः ॥
62558 ३३ ॥
62559
62560 निबिडदलनिवाहभिन्नकोशैः
62561 कुसुमलतानवमण्डपैरुपेतम् ।
62562 पुरमिव गगने कदम्बवृक्षं
62563 खगकुलनागरसंकुलं ददर्श ॥ ३४ ॥
62564
62565 निबिडानां दलानां निवाहा निवहास्तेषु
62566 भिन्नकोशैर्विकासितमुकुलैर्निबिडदलनिवहभेदेन भिन्नसंस्थानैश्च
62567 कुसुमलतानां नवमण्डपैरुपेतं घटितम् । खगकुलक्षणैर्नागरैर्जनैः
62568 संकुलम् गगने रचितं पुरमिव स्थितं कदम्बवृक्षं ददर्शेत्यर्थः ॥ ३४
62569 ।।
62570
62571 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० स्थितिप्रकरणे
62572 दाशूरो० दाशूरकदम्बवर्णनं नामैकोनपञ्चाशः सर्गः ॥ ४९ ॥
62573
62574 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे
62575 दाशूर्कदंबवर्णनं नामैकोनपञ्चाशः सर्गः ॥ ४९ ॥
62576
62577
62578 पञ्चाशः सर्गः ५०
62579
62580 श्रीवसिष्ठ उवाच ।
62581
62582 तमथासौ तथा बुद्धिफलपल्लवशालिनम् ।
62583 आनन्दमन्थरमनाः पुष्परूपाचलोपमम् ॥ १ ॥
62584
62585 तत्कदम्बाग्रसंस्थेन दाशूरेण विलोकिताः ।
62586 दिशोऽत्र वनिताकारा वर्ण्यन्ते गुणविस्तरैः ॥ १ ॥
62587
62588 असौ दाशूरः । तथा प्रागुक्तप्रकारा भूम्यपवित्रताबुद्धिर्यस्य ॥ १ ॥
62589
62590 कदम्बं रोदसीस्तम्भमारुरोह वनस्थितम् ।
62591 एकार्णवगतं शौरिर्वटवृक्षमिवोन्नतम् ॥ २ ॥
62592
62593 रोदस्योर्द्यावापृथिव्योः स्तम्भमिव वने स्थितम् ॥ २ ॥
62594
62595 तत्रासौ व्योमलग्नायाः शाखायाः प्रान्तपल्लवे ।
62596 विवेश विगताशङ्कमेकाग्रं तप आस्थितः ॥ ३ ॥
62597
62598 विगतापावित्र्यविक्षेपाशङ्कं यथा स्यात्तथा ॥ ३ ॥
62599
62600 अथोपविश्य मृदुनि नवपल्लवविष्टरे ।
62601 क्षणमालोकितास्तेन दिशः कौतुकचञ्चलम् ॥ ४ ॥
62602
62603 नवपल्लवकल्पिते विष्टर आसने । कौतुकेन चञ्चलं चपलेक्षणं यथा
62604 स्यात्तथा ॥ ४ ॥
62605
62606 सरिदेकावलीरम्याः शैलेन्द्रस्तनकुड्मलाः ।
62607 निर्मलाकाशकबरा लोलनीलाम्बुदालकाः ॥ ५ ॥
62608

62609 अत्र सर्वत्र विशेषणान्युभयत्र योज्यानि।
62610 सरिल्लक्षणाभिरेकावलीभिर्हारभेदैः रम्याः॥ ५॥
62611
62612 नीलपल्लववसनाः पुष्पपूरावतंसिकाः।
62613 गृहीतसागरापूर्णकलशाः पुरुभूषणाः॥ ६॥
62614
62615 पुरुभूषणा बहुभूषणाः॥ ६॥
62616
62617 धृतप्रफुल्लपद्मिन्यः सुगन्धिमुखमारुताः।
62618 नीलघुंघुमकाकल्यो निर्झराराववनूपुराः॥ ७॥
62619
62620 नीलानां भ्रमरकोकिलादीनां घुंघुमा ध्वनय एव काकल्यो
62621 मधुराव्यक्तभाषितानि यासां ताः॥ ७॥
62622
62623 द्युमूर्धानो महीपादा वनालीरोमराजयः।
62624 जङ्गलोरुनितम्बिन्यश्चन्द्रार्ककृतकुण्डलाः॥ ८॥
62625
62626 शालिसंसारकेदाराश्चन्दनस्थालिकान्विताः।
62627 शिखरोरसिजालग्नहिमशुभ्राम्बुदांशुकाः॥ ९॥
62628
62629 शाल्यादिसस्यकम्पैः संसाराः स्पन्दमानाः केदाराः क्षत्रङ्गभक्तयो
62630 यासाम्। चन्दनस्थैश्चन्दनाश्रितैरलिकैर्ललाटैरन्विताः।
62631 पर्वतशिखरलक्षणेषूरसिजेषु स्तनेष्वासमन्ताल्लग्नानि हिममिव
62632 शुभ्राण्यम्बुदांशुकानि यासाम्॥ ९॥
62633
62634 महार्णवपयःपूरनवमण्डनदर्पणाः।
62635 ऋक्षौघघर्मपुलका भुवनान्तःपुरान्तराः॥ १०॥
62636
62637 महार्णवानां पयःपूरा एव नवमण्डनदर्शनार्था दर्पणा यासाम्।
62638 ऋक्षौघा नक्षत्रपङ्क्तय एव घर्मपुलकाः स्वेदबिन्दवो यासाम्॥ १०॥
62639
62640 आर्तवस्तनधारिण्यो लग्नसूर्यांशुकुङ्कुमाः।
62641 विचित्रकुसुमोपेताश्चन्द्रांशुसितचन्दनाः॥ ११॥
62642
62643 आर्तवानि तत्तदृतूत्पन्नकुसुमपल्लवादीन्येव स्तनधारिण्यः कूर्पासका
62644 यासाम्॥ ११॥
62645
62646 गगनगतलतादलोपविष्टः
62647 प्रसृतवनावनिवारिवाहवेषाः।
62648 त्रिभुवनवनिता ददर्श हृष्टः
62649 कुसुमनिरन्तरमण्डिता दशाशाः॥ १२॥
62650
62651 गगनगताया लतायाः शाखाया दलेषूपविष्टः सन् प्रसृता विस्तीर्णा वनानि
62652 अवनयो वारिवाहाश्च वेषाः कृत्रिमाकारभेदकालंकारा यासां
62653 तथाविधास्त्रिभुवनस्थजनोपभोग्यत्वात्त्रिभुवनवनिताः दश आशा दिशो
62654 ददर्शेत्यर्थः॥ १२॥
62655
62656 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० स्थितिप्रकरणे दा०
62657 दाशूरदिगवलोकनं नाम पञ्चाशः सर्गः॥ ५०॥
62658
62659 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे
62660 दाशूरदिगवलोकनं नाम पञ्चाशः सर्गः॥ ५०॥

62661
62662
62663 एकपञ्चाशः सर्गः ५१
62664
62665 श्रीवसिष्ठ उवाच।
62666
62667 ततःप्रभृति तत्रासौ प्रसिद्धस्तापसाश्रमे।
62668 कदम्बदाशूर इति शूरस्तपसि दारुणे॥ १॥
62669
62670 मनोयज्ञैरात्मबोधो वनदेव्यां सुतोद्भवः।
62671 दाशूरस्यात्र पुत्राय ज्ञानदानं च कीर्त्यते॥ १॥
62672
62673 दारुणे तपसि शूरः अपराङ्मुखः। अदोद्युक्त इति यावत्॥ १॥
62674
62675 तस्म्&ल्लतादले स्थित्वा विलोक्य ककुभः क्षणात्।
62676 दृढपद्मासनं बद्ध्वा दिग्भ्यः प्रत्याहृतात्मना॥ २॥
62677
62678 ककुभो दिशः। प्रत्याहृतात्मना परावर्तितेन॥ २॥
62679
62680 अज्ञातपरमार्थेन क्रियामात्रे च तिष्ठता।
62681 फलकार्पण्ययुक्तेन मनसा सोऽकरोन्मखम्॥ ३॥
62682
62683 नभोगतलतापत्रसंस्थितेनान्तरात्मना।
62684 सर्वाः स्वमनसा तेन कृता यज्ञक्रियाः क्रमात्॥ ४॥
62685
62686 नभोगताया लतायाः शाखायाः पत्रेषु स्थितेन तेन सर्वा
62687 आधानाद्यश्वमेधान्ताः॥ ४॥
62688
62689 तत्रासौ दश वर्षाणि मनसैवायजत्सुरान्।
62690 गवाश्वनरमेधाद्यैर्यज्ञैर्विपुलदक्षिणैः॥ ५॥
62691
62692 कालेनामलतां याते वितते तस्य चेतसि।
62693 बलादवततारान्तर्ज्ञानमात्मप्रसादजम्॥ ६॥
62694
62695 अमलतां रागादिदोषशून्यताम्। एवं प्रतिबन्धक्षये सति बलात्
62696 प्राग्जन्मकृतश्रवणसंस्कारोद्बोधबलात्॥ ६॥
62697
62698 ततो विशीर्णावरणो विगलद्वासनामलः।
62699 स ददर्शैकदा तस्यां लतायामग्रतः स्थिताम्॥ ७॥
62700
62701 ततो ज्ञानाद्विशीर्णाज्ञानावरणः। तदभ्यासाच्च विगलद्वासनामलो
62702 जीवन्मुक्तः सन्नित्यर्थः॥ ७॥
62703
62704 वनदेवीं विशालाक्षीमालोककुसुमाम्बराम्।
62705 कामिनीं कान्तवदनां मदगूर्णितलोचनाम्॥ ८॥
62706
62707 नीलोत्पलामोदवतीमतीव सुमनोहराम्।
62708 तामुवाचानवद्याङ्गीं स मुनिर्विनताननाम्॥ ९॥
62709
62710 भक्तिप्रणामलज्जाभिर्विनताननाम्॥ ९॥
62711
62712 कोकिलाकुसुमापूरनतां वनलतामिव।

62713 का त्वमुत्पलपत्राक्षि कान्तिविक्षोभितस्मरा || १० ||
62714
62715 कोकिलया कुसुमापूरैश्च नताम् || १० ||
62716
62717 वयस्यामिव पुष्पाढ्यां लतां किमिव तिष्ठसि |
62718 इत्युक्ते मृगशावाक्षी गौरपीनपयोधरा || ११ ||
62719
62720 लतां अवष्टभ्येति शेषः || ११ ||
62721
62722 मुनिमाह मनोहारि मुग्धाक्षरमिदं वचः |
62723 यानि यानि दुरापानि वाञ्छितानि महीतले || १२ ||
62724
62725 प्राप्यन्ते तान्ति तान्याशु महतामेव याच्ञया |
62726 अहमस्मि&ल्लताकीर्णे त्वत्कदम्बाभ्यलंकृते || १३ ||
62727
62728 याञ्चया प्रार्थनया || १३ ||
62729
62730 लतालीलालया ब्रह्मन्विपिने वनदेवता |
62731 यश्चैत्रसितपक्षस्य त्रयोदश्यां स्मरोत्सवे || १४ ||
62732
62733 लताकुञ्जा एव लीलार्था आलया यस्याः | का त्वमिति प्रश्नस्योत्तरमुक्त्वा
62734 स्वागमनप्रयोजनमाह - य इत्यादिना | स्मराराधनाय प्रवर्तिते
62735 गीतवादित्रनाट्यबलिभोज्याद्युत्सवे || १४ ||
62736
62737 बभूव वनदेवीनां समाजो नन्दने वने |
62738 तत्राहमगमं नाथ त्रैलोक्यललनासदः || १५ ||
62739
62740 त्रैलोक्यस्थानां ललनानां वनदेवीनां सदः समाजम् || १५ ||
62741
62742 तत्र दृष्टा मया सर्वा वयस्या मदनोत्सवे |
62743 अपुत्रया पुत्रयुतास्तेनाहं दुःखिता भृशम् || १६ ||
62744
62745 तेनापुत्रत्वेन || १६ ||
62746
62747 त्वयि सर्वार्थसार्थस्य बृहत्कल्पतरौ स्थिते |
62748 अनाथेव कथं नाथ किल शोचाम्यपुत्रिका || १७ ||
62749
62750 सर्वेषामर्थानां पुरुषार्थानां सार्थस्य सङ्घस्य | अजन्तुसंघे
62751 सार्थशब्दो गौणः || १७ ||
62752
62753 देहि मे भगवन्पुत्र नो देद्देहमिहाग्नये |
62754 प्रकरोम्याहुतिं पुत्र दुःखदाहोपशान्तये || १८ ||
62755
62756 दाहोपशान्तयैति मानसदाहापेक्षया शरीरदाहः [दाहदुःखमल्पमिति
62757 पाठः] सुखायत इति भावः || १८ ||
62758
62759 तामित्युक्तवतीं तन्वीं विहस्य मुनिपुङ्गवः |
62760 प्राह हस्तगतं पुष्पं तस्यै दत्त्वा दयान्वितः || १९ ||
62761
62762 दयान्वितो नतु धैर्याच्च्युत इति भावः || १९ ||
62763
62764 गच्छ तन्वङ्गि मासेन पूजार्हमलिलोचनम् |

62765 प्रसोष्यसे सुतं कान्तं प्रसूनमिव सल्लता ॥ २० ॥
62766
62767 पूजार्हं जगत्पूज्यम् ॥ २० ॥
62768
62769 किंत्वसौ मरणावेशयायिन्या नस्त्वया सुतः ।
62770 याचितः कृच्छ्रं संप्राप्य ज्ञाता तेन भविष्यति ॥ २१ ॥
62771
62772 कृच्छ्रं प्राणसंकटं संप्राप्य मरणावेश आत्मघातसंकल्पस्तेन
62773 यायिन्या आगतया त्वया नः अस्मत्तो याचितस्तेन हेतुना ज्ञाता तत्त्वज्ञः ।
62774 नत्वन्यवनदेवीपुत्रवदसौ भोगलम्पट इत्यर्थः ॥ २१ ॥
62775
62776 इत्युक्त्वा स मुनिस्तन्वीं प्रसन्नमुखमण्डलाम् ।
62777 परिचर्यां करोमीति प्रार्थनोत्कां व्यसर्जयत् ॥ २२ ॥
62778
62779 परिचर्यां संगमसेवाद्युपचारम् ॥ २२ ॥
62780
62781 सा जगामात्मसदनं सोऽतिष्ठत्स्वात्मना सह ।
62782 अवहत्क्रमशः काल ऋतुसंवत्सराङ्कितः ॥ २३ ॥
62783
62784 स्वात्मना सहेत्यसहाय इति यावत् । अवहत् अतिचक्रमे ॥ २३ ॥
62785
62786 अथ दीर्घेण कालेन सैवोत्पलविलोचना ।
62787 द्वादशाब्दमुपादाय सुतं मुनिमुपाययौ ॥ २४ ॥
62788
62789 सा प्रणम्योपविश्याग्रे मुनिमिन्दुसमाननम् ।
62790 उवाच कलया वाचा चूतद्रुममिवालिनी ॥ २५ ॥
62791
62792 अलिनी भ्रमरी ॥ २५ ॥
62793
62794 अयं स भगवन्भव्यः कुमारः पुत्र आवयोः ।
62795 कृतो मया समग्राणां कलानां किल कोविदः ॥ २६ ॥
62796
62797 कलानां वेदादिसर्वविद्यानाम् ॥ २६ ॥
62798
62799 प्रभो केवलमेतेन ज्ञानं नाधिगतं शुभम् ।
62800 येन संसारचक्रेऽस्मिन्न पुनः परिपीड्यते ॥ २७ ॥
62801
62802 ज्ञानं ब्रह्मविद्या ॥ २७ ॥
62803
62804 ज्ञानं त्वमेवास्य विभो कृपयोपदिशाधुना ।
62805 को हि नाम कुले जातं पुत्रं मौर्ख्येण योजयेत् ॥ २८ ॥
62806
62807 मौर्ख्येणेति । इतरविद्यानामतत्त्वविषयत्वादविद्यात्वमेवेति न
62808 मौर्ख्यनिस्तारस्ताभिरिति भावः ॥ २८ ॥
62809
62810 एवं वदन्तीं स मुनिः सच्छिष्यमबले सुतम् ।
62811 इहैव स्थापयैनं त्वमित्युक्त्वा तां व्यसर्जयत् ॥ २९ ॥
62812
62813 सच्छिष्यमुत्तमशिष्यगुणसंपन्नम् ॥ २९ ॥
62814
62815 तस्यां गतायां स पितुरन्तेवासितया तया ।
62816 अतिष्ठत्संयतो धीमानर्कस्येवारुणः पुरः ॥ ३० ॥

62817
62818 अन्तेवासितया गुरुशुश्रूषणव्रतेन संयतः स्थिरनियमः सन्। अरुणो
62819 गरुडाग्रजः॥ ३०॥
62820
62821 कदर्थः प्राप्य विज्ञानं ततश्चित्राभिरुक्तिभिः।
62822 चिरकालमसौ तत्र मुनिः पुत्रमबोधयत्॥ ३१॥
62823
62824 कदर्थः शुश्रूषाव्रतचर्यादिक्लेशैः कदर्थितः सन् विज्ञानं
62825 उपायभूतशास्त्रजन्यं परोक्षज्ञानं प्राप्य स्थित इति शेषः।
62826 ततस्तदनन्तरं तं पुत्रं चिरकालं अबोधयत्।
62827 अपरोक्षीभावायोपदिदेशेत्यर्थः। अथवा पिता प्राक्तपःकदर्थितः सन्
62828 विज्ञानं प्राप्य पुत्रोऽप्येवं कदर्थितो माभूदिति स्वयमबोधयदित्यर्थः॥
62829 ३१॥
62830
62831 आख्यायिकाख्यानशतैर्दृष्टान्तैर्दृष्टिकल्पितैः।
62832 तथेतिहासवृत्तान्तैर्वेदवेदान्तनिश्चयैः॥ ३२॥
62833
62834 स्वोपलब्धार्थकथानिबन्धा आख्यायिकाः। पराख्यानादिकथानिबन्धा
62835 आख्यानानि। तेषां शतैः। दृष्टिकल्पितैः
62836 साम्यदर्शनकल्पितैर्भारतादीतिहासप्रसिद्धैर्वृत्तान्तैः निश्चयैः
62837 सिद्धान्तैः॥ ३२॥
62838
62839 अनुद्वेगितया नित्यं विस्तरेण कथाक्रमैः।
62840 अनुभूतिमुपारूढै रूढिमेति यथा मयि॥ ३३॥
62841
62842 मयि प्रत्यगात्मनि रूढिं व्युत्पत्तिदार्ढ्यं यथा धिया पुत्र एति प्राप्नोति तथा
62843 इतिहासदृष्टान्तादिभिरबोधयदिति पूर्वत्रान्वयः॥ ३३॥
62844
62845 अनुभववशतो रसातिरिक्तै-
62846 रलमुचितार्थवचोगणैर्महात्मा।
62847 जलद इव शिखण्डिनं पुरःस्थं
62848 तनयमबोधयदम्बरे महर्षिः॥ ३४॥
62849
62850 अनुभवः स्वात्मबोधचमत्कारस्तद्वशतः सर्वरसेभ्योऽतिरिक्तैरतिशयितैः।
62851 उचितः परमपुरुषार्थरूपत्वादवश्यबोधार्हः अर्थो येषां
62852 तथाविधैर्वचोगणैः। जलदपक्षे अनुभववशतः श्रवणमात्रेण
62853 शिखण्डिनां प्रीतिजननादन्यरसाधिकैः। उचितः शिखण्डिनीसहनृत्याद्यर्थो
62854 येभ्यस्तथाविधैर्वचोगणैर्गर्जितसमूहैः। अम्बरे वृक्षाग्रे अन्तरिक्षे च॥ ३४
62855 ।।
62856
62857 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपायेषु स्थितिप्रकरणे
62858 दाशूरो० दाशूरसुतानुबोधनं नामैकपञ्चाशः सर्गः॥ ५१॥
62859
62860 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे
62861 दाशूरसुतानुबोधनं नामैकपञ्चाशत्तमः सर्गः॥ ५१॥
62862
62863
62864 द्विपञ्चाशः सर्गः ५२
62865
62866 श्रीवसिष्ठ उवाच।
62867
62868 कदाचिदथ मार्गेण तेन कैलासवासिनीम्।

62869 अहं स्नातुमदृश्यात्मा व्योमवीथीगतोऽगमम् ॥ १ ॥
62870
62871 खोत्थस्य राज्ञश्चरितं कल्पयित्वेह वर्ण्यते ।
62872 संकल्पकल्पितं विश्वं मिथ्यैवेति विवक्षया ॥ १ ॥
62873
62874 तेन दाशूरकदम्बोपलक्षितेन मार्गेण । कैलासवासिनीं मन्दाकिनीमिति शेषः ॥
62875 १ ॥
62876
62877 निर्गत्य नभसः सप्तमुनिमण्डलकोटरात् ।
62878 रात्रौ प्राप्तोऽस्मि सुमते दाशूरतरुमुन्नतम् [मूलतः इति पाठः
62879 तत्र सार्वविभक्तिकस्तसिः] ॥ २ ॥
62880
62881 सप्तर्षिमण्डलं कोटरमिवैकदेशो यस्य तथाविधान्नभसो द्युलोकाकाशात् ॥
62882 २ ॥
62883
62884 यावच्छृणोमि विटपकुहरात्कानने वचः ।
62885 कुड्मलाम्भोजलग्नस्य षट्पदस्येव निःस्वनम् ॥ ३ ॥
62886
62887 यावदिति साकल्ये निपातः ॥ ३ ॥
62888
62889 शृणु पुत्र महाबुद्धे वस्तुतोऽस्य समामिमाम् ।
62890 वर्णयामि महाश्चर्यामेकामाख्यायिकां तव ॥ ४ ॥
62891
62892 यद्वचः श्रुतं तदेवाह - शृणु पुत्रेत्यादिना । अस्य संसारस्य
62893 समामुपमानभूताम् ॥ ४ ॥
62894
62895 अस्ति राजा महावीर्यो विख्यातो भुवनत्रये ।
62896 नाम्ना खोत्थ इति श्रीमाञ्जगदाक्रमणक्षमः ॥ ५ ॥
62897
62898 खात् अव्याकृताकाशात् कालत्रयेऽपि जगच्छून्याद्ब्रह्माकाशाद्वा उत्थः
62899 उत्तरसर्गेऽस्य व्याख्या मूले स्पष्टेति न विस्तरेणात्र व्याख्यायते ॥ ५ ॥
62900
62901 अस्यानुशासनं सर्वे भुवनेष्वपि नायकाः ।
62902 शिरोभिर्धारयन्त्युच्चैश्चूडामणिमिवार्थिनः ॥ ६ ॥
62903
62904 नायका ईश्वरा ब्रह्मादयोऽपि । अर्थिनो धनिनः ॥ ६ ॥
62905
62906 यः साहसैकरसिको नानाश्चर्यविहारवान् ।
62907 केनचित्त्रिषु लोकेषु न महात्मा वशीकृतः ॥ ७ ॥
62908
62909 यस्यारम्भसहस्राणि सुखदुःखप्रदान्यलम् ।
62910 संख्यातुं केन शक्यन्ते कल्लोला जलधेरिव ॥ ८ ॥
62911
62912 यस्य वीर्यं सुवीर्यस्य न शस्त्रैर्न च पावकैः ।
62913 केनचिद्भुवने क्रान्तमाकाशमिव मुष्टिना ॥ ९ ॥
62914
62915 क्रान्तमभिभूतमनुसृतं वा ॥ ९ ॥
62916
62917 यदीयां विततारम्भां लीलां निर्माणभासुराम् ।
62918 न मनागनुवर्तन्ते शक्रोपेन्द्रहरा अपि ॥ १० ॥
62919
62920 अल्पेऽपि प्रयोजने बहुतरकल्पनासहस्रसंकुलत्वाद्विततारम्भाम् ।

62921 स्वप्नमनोरथादिनिर्माणैर्भासुराम् । अनुवर्तन्ते अनुकर्तुं शक्नुवन्तीति यावत् ॥
62922 १० ॥
62923
62924 त्रयस्तस्य महाबाहो देहा विहरणक्षमाः ।
62925 जगदाक्रम्य तिष्ठन्ति ह्युत्तमाधममध्यमाः ॥ ११ ॥
62926
62927 सात्त्विकराजसताअमसभेदाल्लयः । विहरणक्षमाः
62928 सर्वव्यवहारक्रीडासमर्थाः ॥ ११ ॥
62929
62930 व्योमन्येवातिवितते जातोऽसौ त्रिशरीरकः ।
62931 तत्रैव च स्थितिं यातः शब्दपातश्च पक्षिवत् ॥ १२ ॥
62932
62933 व्योमन्यव्याकृताकाशे । यथा पक्षी
62934 व्योमन्येवाण्डपिण्डगरुन्मयदेहत्रयात्मकः क्रमाज्जातः सर्वतः
62935 परिभवशङ्की निःसारपिप्पलादिफलास्वादलोलुपः शब्दमात्रादुत्पतति
62936 नत्वर्थतत्त्वं विमृशति तद्वदयमपि स्थूलसूक्ष्मकारणात्मकत्रिशरीरको
62937 व्योमनि ब्रह्माकाशे जातः सन् सर्वतो भीतस्तुच्छविषयासक्तो
62938 विधिनिषेधशब्दानुपाती भ्रमतीत्यर्थः ॥ १२ ॥
62939
62940 तत्रैवापारगगने नगरं तेन निर्मितम् ।
62941 चतुर्दशमहारथ्यं विभागत्रयभूषितम् ॥ १३ ॥
62942
62943 नगरं ब्रह्माण्डरूपं चतुर्दशलोकात्मकमहारथ्यं
62944 चतुर्दशविद्यात्मकरथ्यामार्गविभक्तं च । एवं कर्मकरणव्युत्पत्तिभ्यां
62945 विभागत्रयेण त्रिलोकात्मना त्रय्यात्मना च भूषितम् ॥ १३ ॥
62946
62947 वनोपवनमालाढ्यं क्रीडाशिखरिसुन्दरम् ।
62948 मुक्तालताविवलितवापीसप्तकभूषितम् [विगलित इति पाठः] ॥ १४ ॥
62949
62950 वनानां नन्दनादीनाम् । शिखरिभिर्मेर्वादिभिः । वापीसप्तकं समुद्राः ॥ १४ ॥
62951
62952 शीतलोष्णात्मकाक्षीणदीपद्वयविराजितम् ।
62953 ऊर्ध्वाधोगतिरूपेण वणिङ्मार्गेण संकुलम् ॥ १५ ॥
62954
62955 दीपद्वयं चन्द्रसूर्यौ । शास्त्रीयैः
62956 कर्मभिरूर्ध्वगतिरशास्त्रीयैरधोगतिरित्येवंरूपेण ॥ १५ ॥
62957
62958 तस्मिन्नेवातिविपुले पत्तने तेन भूभृता ।
62959 संसारिणो विरचिता मुग्धापवरका गणाः ॥ १६ ॥
62960
62961 संसारिणो जङ्गमाः । मुग्धा विषयव्यामूढा
62962 अपवरकवदात्माकाशपरिच्छेदकत्वादपवरका देवमानुषादिदेहगणाः ॥ १६
62963 ॥
62964
62965 ऊर्ध्वं केचिदधः केचित्केचिन्मध्ये नियोजिताः ।
62966 केचिच्चिरेण नश्यन्तः केचिच्छीघ्रविनाशिनः ॥ १७ ॥
62967
62968 असितच्छादनच्छन्ना नवद्वारविभूषिताः ।
62969 अनारतवहद्वाता बहुवातायनान्विताः ॥ १८ ॥
62970
62971 असितैश्छादनैः केशतृणैश्छन्नाः । बहुभिर्वातायनैरूर्ध्वच्छिद्रैः ॥
62972 १८ ॥

62973
62974 दीपपञ्चकसालोकास्त्रिस्थूणाः शुक्लदारवः ।
62975 मसृणालेपमृदवः प्रतोलीभुजसंकुलाः ॥ १९ ॥
62976
62977 दीपपञ्चकैर्ज्ञानेन्द्रियैः सालोकाः सप्रकाशाः - ऊरू कसेरुका
62978 [कसेरुका = पृष्ठास्थि] चेति तिस्रः स्थूणाः स्तम्भा येषाम् ।
62979 शुक्लान्यस्थीन्येव वंशदारुस्थानीयानि येषु । मसृणैः
62980 स्निग्धैरालेपमृत्तिकास्थानीयैश्चर्मभिः । प्रतोल्यो रथ्यास्तद्रूपैर्भुजैः
62981 संकुलाः ॥ १९ ॥
62982
62983 मायया रचितास्तेन राज्ञा तेषु महात्मना ।
62984 रक्षितारो महायक्षा नित्यमालोकभीरवः ॥ २० ॥
62985
62986 तेषां अपवरकाणां अभिमानेन रक्षितारो यक्षाः कार्यकरणैः पूज्याः
62987 स्वामिभूता अहंकाराः । आलोकादात्मविवेकाद्भीरवः । ततस्तत्क्षयादित्यर्थः ॥
62988 २० ॥
62989
62990 अथापवरकौघेषु चलत्सु स महीपतिः ।
62991 करोति विविधां क्रीडां नीडेष्विव विहङ्गमः ॥ २१ ॥
62992
62993 चलत्सु व्यवहारवत्सु स महीपतिः संकल्पात्मा जीवः ॥ २१ ॥
62994
62995 त्रिशरीरशतेष्वन्तस्तैर्यक्षैः सह पुत्रक ।
62996 लीलावशमुषित्वा तु पुनर्निर्गम्य गच्छति ॥ २२ ॥
62997
62998 लीलाभिरवशमस्वाधीनं यथा स्यात्तथेत्युषित्वा निर्गम्य चेत्युभयान्वयि ॥ २२
62999 । ।
63000
63001 तस्येच्छा जायते वत्स कदाचिच्चलचेतसः ।
63002 पुरं भविष्यन्निर्माणं किंचिद्यामीति निश्चला ॥ २३ ॥
63003
63004 भविष्यन्निर्माणं अविद्यमानं स्वप्नादिजगत् । निश्चला यावत्तद्भोगं स्थिरा
63005 ॥ २३ ॥
63006
63007 भूताविष्ट इवावेगात्तत उथाय धावति ।
63008 पुरं तदप्यथाप्नोति [तदायमाप्नोति इति पाठः] गन्धर्वैरिव
63009 निर्मितम् ॥ २४ ॥
63010
63011 आवेगान्निद्राद्यावेशात् उत्थाय जाग्रद्देहाद्यभिमानं त्यक्त्वा धावति । स तत्र
63012 बुद्धान्ते रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं
63013 प्रतियोन्याद्रवति स्वप्नान्तायैव इति श्रुतेः गन्धर्वैर्निर्मितं पुरं
63014 गन्धर्वनगरमिव मिथ्याभूतमित्यर्थः ॥ २४ ॥
63015
63016 तस्येच्छा जायते पुत्र कदाचिच्चलचेतसः ।
63017 विनाशं संप्रयामीति तेनाशु स विनश्यति ॥ २५ ॥
63018
63019 विनाशं संकल्पलयावस्थां सुषुप्तिम् । विनश्यति कारणाविद्यायां
63020 कर्मबीजसंस्कारशेषं करकवद्विलीयते ॥ २५ ॥
63021
63022 पुनरुत्पद्यते तूर्णं [पुर्णं इति पाठः]
63023 स्वात्मनोर्मिरिवाम्भसः ।
63024 व्यवहारं तनोत्युच्चैः पुनरारम्भमन्थरम् ॥ २६ ॥

63025
63026 स्वात्मना पूर्वस्वभावेनैव। स एवाहमिति सुषुप्तोत्थितस्य
63027 प्रत्यभिज्ञानुभवादिति भावः॥ २६॥
63028
63029 स्वयैव व्यवहृत्याथ कदाचित्परिभूयते।
63030 किंकरोस्म्यहमज्ञओऽस्मि दुःखितोऽस्मीति शोचति॥ २७॥
63031
63032 परिभूयते शत्रुरोगदारिद्यादिभिः॥ २७॥
63033
63034 मुदमेत्य कदाचिच्च स्वयमायाति दीनताम्।
63035 प्रावृड्वर्षकलोल्लासपूरादिव नदीरयः॥ २८॥
63036
63037 मुदं पूर्वानुभूतसुखमेत्य अतिक्रम्य स्मृत्वा वा॥ २८॥
63038
63039 जयति गच्छति वल्गति जृम्भते
63040 स्फुरति भाति न भाति च भासुरः।
63041 सुत महामहिमा स महीपतिः
63042 पतिरपामिव वातरयाकुलः॥ २९॥
63043
63044 हे सुत महात्मा स पूर्वोक्तो महीपतिः सति पराभिभवसामर्थ्ये परान् गच्छति
63045 जयति च संपदः प्राप्य जृम्भत्ते स्फुरति संचलति भाति च जाग्रत्स्वप्नयोः
63046 सुषुप्तिप्रलयसमाधिमुक्तिषु न भाति च। अन्तर्गतेनात्मज्योतिषा भासुरः अत एव
63047 महामहिमा अपां पतिः समुद्र इव॥ २९॥
63048
63049 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० स्थितिप्रकरणे
63050 दाशूरो० खोत्थविभववर्णनं नाम द्विपञ्चाशः सर्गः॥ ५२॥
63051
63052 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे
63053 खोत्थविभववर्णनं नाम द्विपञ्चाशः सर्गः॥ ५२॥
63054
63055
63056 त्रिपञ्चाशः सर्गः ५३
63057
63058 श्रीवसिष्ठ उवाच।
63059
63060 अथापृच्छत्सुतस्तत्र जम्बूद्वीपे महानिशि।
63061 कदम्बाग्रावचूडस्थं पितरं पावनाशयम्॥ १॥
63062
63063 खोत्थाख्यानस्य तात्पर्यं विस्तरेणेह वर्ण्यते।
63064 संकल्पकथितं विश्वमित्युक्तार्थे निदर्शनम्॥ १॥
63065
63066 कदम्बस्याग्रे अवचूड उत्तंस इव स्थितमित्युपमितसमासः॥ १॥
63067
63068 पुत्र उवाच।
63069
63070 कोऽसौ खोत्थ इति ख्यातो भूपस्तातोत्तमाकृतिः।
63071 कथितं च किमेतन्मे त्वयेति ब्रूहि तत्त्वतः॥ २॥
63072
63073 क्व भविष्यति निर्माणं वर्तमाने क्व गम्यता।
63074 उभयार्थविरुद्धत्वान्मन्मोहाय वचस्तव॥ ३॥
63075
63076 यथाश्रुतार्थे तात्पर्यं नास्ति किंतु अन्यत्र तात्पर्यमिति त्वया कुतो ज्ञातमिति चेत्

63077 पुरं भविष्यन्निर्माणं किंचिद्यामीति निश्चला इत्याद्युक्तौ
63078 भविष्यत्त्ववर्तमानत्वयोर्यौगपद्यविरोधाद्यनन्वितार्थकत्व##-
63079
63080 दाशूर उवाच।
63081
63082 शृणु पुत्र यथाभूतमेतत्ते कथयाम्यहम्।
63083 येन संसारचक्रस्य तत्त्वमस्यावबुध्यसे॥ ४॥
63084
63085 अवबुध्यसे अवभोत्स्यसे॥ ४॥
63086
63087 असदप्युत्थितारम्भमवस्तुमयमाततम्।
63088 संसारसंस्थानमिदमेवमाकथितं मया॥ ५॥
63089
63090 असतः परमार्थसत्ताशून्यादेवाज्ञानादभ्युद्यतारम्भं अत एवावस्तु
63091 माया तन्मयम्। एवमस्यार्थस्य बोधनाय आकथितं पारोक्ष्येण वर्णितम्॥ ५॥
63092
63093 परमान्नभसो जातः संकल्पः खोत्थ उच्यते।
63094 जायते स्वयमेवासौ स्वयमेव विलीयते॥ ६॥
63095
63096 संकल्पः संकल्पप्रधानं मनः। समष्टिव्यष्टिमनसोरेकीकारेण
63097 खादव्यक्ताकाशादुत्थ इति व्युत्पत्त्या खोत्थ उच्यत इत्यर्थः। स्वयमेव
63098 स्वसंकल्पजन्यप्रवृत्तिवासनोद्भवादेव जायते निवृत्तिवासनादार्ढ्याच्च
63099 स्वयमेव लीयत इत्यर्थः॥ ६॥
63100
63101 तत्स्वरूपमिदं सर्वं जगदाभोगि विद्यते।
63102 जायते तत्र जाते तु तस्मिन्नष्टे विनश्यति॥ ७॥
63103
63104 तत्स्वरूपं तत्परिणामः। उक्तार्थं तदन्वयव्यतिरेकानुविधानप्रदर्शनेन
63105 द्रढयति - जायत इति॥ ७॥
63106
63107 ब्रह्मविष्ण्विन्द्ररुद्राद्यांस्तस्यैवावयवान्विदुः।
63108 विटपानिव वृक्षस्य शृङ्गाणीव महीभृतः॥ ८॥
63109
63110 ननु ब्रह्मविष्ण्वादिभ्यः सकाशाज्जगदुत्पन्नमिति श्रुतं
63111 तत्कथमन्यस्मादुच्यते तत्राह - ब्रह्मेति। विटपान्स्कन्धान्॥ ८॥
63112
63113 शून्ये व्योमनि तेनेदं निर्मितं त्रिजगत्पुरम्।
63114 प्रतिभासानुसंधानमात्रेणैत्य विरिञ्चिताम्॥ ९॥
63115
63116 शून्ये त्रैकालिकजगदभाववति व्योमनि ब्रह्मणि। अचेतनस्यास्य कुतो
63117 निर्माणशक्तिरिति चेदधिष्ठानचैतन्यानुग्रहेण
63118 चेतनविरिञ्चाकारताप्राप्तेरित्याह - प्रतिभासेति॥ ९॥
63119
63120 यत्रेमे विततालोका लोककोशाश्चतुर्दश।
63121 वनोपवनमालाश्च यत्रोद्यानपरम्पराः॥ १०॥
63122
63123 तदेव त्रिजगत्पुरं प्राग्वर्णितमित्याह - यत्रेत्यादिना। विततालोकाः
63124 सूर्यादिप्रभादीप्ताः। प्रसिद्धवनोपवनमाला यत्र उद्यानपरम्परा वर्णिता
63125 इत्यर्थः॥ १०॥
63126
63127 क्रीडाशिखरिणो यत्र सह्यमन्दरमेरवः।
63128 शीतोष्णदीप्ती चन्द्रार्कौ दीपौ यत्रानलाकृती॥ ११॥

63129
63130 अनलाकृती दीप्यमानौ। अनिलाक्षतौ इति पाठे स्पष्टम्॥ ११॥
63131
63132 सूर्यांशुकचदालोलतरङ्गोत्तुङ्गमौक्तिकाः।
63133 वहन्ति सरितो यत्र सन्मुक्तावलयश्चलाः॥ १२॥
63134
63135 मुक्तालताविवलितवापीसप्तकभूषितमित्युक्तेरर्थमाह [विगलित इति
63136 पाठः] - सूर्येति। तरङ्गाणां मुक्तासाम्ये उपपत्तिः
63137 सूर्यांशुकचदालोलत्वम्॥ १२॥
63138
63139 इक्षुक्षीरादिसलिला मणिरत्नविसाङ्कुराः।
63140 और्वानलाम्बुजा यत्र वाप्यः सप्त महार्णवाः॥ १३॥
63141
63142 मणिरत्नानि मणिश्रेष्ठा एव बिसाङ्कुरा यासु। और्वानला वडवाग्नय एव
63143 अम्बुजानि यासु। यत्र नगरे॥ १३॥
63144
63145 अध उर्व्यां तथोर्ध्वे खे पुण्यापुण्यधनश्रियः।
63146 नरामरकिराटानां यत्रान्तः क्रयविक्रयौ॥ १४॥
63147
63148 ऊर्ध्वाधोगतिरूपेण वणिज्मार्गेण संकुलमिति यदुक्तं तस्यार्थमाह -
63149 अध इति। पुण्यान्यपुण्यानि पापानि च धनश्रियो येषां तेषां नराणां
63150 कर्मोपासनाधिकारिणामार्याणाममराणां च देवान् भावयतानेन ते देव
63151 भावयन्तु वः इति भगवदुक्तन्यायेन पुण्यतत्फलक्रयविक्रयौ। किराटानां
63152 प्रत्यन्तदेशवासिनां कर्माधिकारबहिष्कृतानां
63153 पापतत्फलस्थावरतिर्यगादिभिः परस्परोपकारबाहुल्यात्क्रयविक्रयौ बोध्यौ॥
63154 १४॥
63155
63156 तस्मिन्नेव जगत्यस्मिन्पुरे संकल्पभूभृता।
63157 क्रीडार्थमात्मनश्चित्रा देहापवरकाः कृताः॥ १५॥
63158
63159 संसारिणो विरचिता मुग्धापवरका गणा इत्युक्तेस्तात्पर्यमाह -
63160 तस्मिन्नेवेत्यादिना॥ १५॥
63161
63162 केचिद्गीर्वाणनामान ऊर्ध्व एव नियोजिताः।
63163 नरनागादयः केचिदध एव नियोजिताः॥ १६॥
63164
63165 वातयन्त्रप्रवाहेण चलन्तो मांसमृन्मयाः।
63166 सितास्थिदारवश्चित्रास्त्वग्लेपमसृणामलाः॥ १७॥
63167
63168 वातयन्त्राणि प्राणास्तत्प्रवाहेण। मांसान्येव मृदस्तद्विकाराः।
63169 सितान्यस्थीन्येव दारूणि यत्र। त्वचो लिप्यन्ते यैस्तैलोद्वर्तनादिभिस्ते
63170 त्वग्लेपास्तैर्मसृणाश्चिक्कणा अमलाश्च॥ १७॥
63171
63172 केचिच्चिरेण नश्यन्ति केचिच्छीघ्रविनाशिनः।
63173 केचित्केशोलपोल्लासरचिताच्छादनश्रियः॥ १८॥
63174
63175 केशलक्षणानां उलपानां तृणविशेषाणां उल्लासेन रचिता
63176 आच्छादनश्रीर्येषामिति असितच्छादनच्छन्ना इत्युक्तेर्विवरणम्॥ १८॥
63177
63178 कर्णाक्षिनासाप्रमुखैर्द्वारैर्नवभिरन्विताः।
63179 अनारतवहत्प्राणपवनेनोष्णशीतलाः॥ १९॥
63180

63181 नवद्वारविभूषिता इत्युक्तिं विवृणोति - कर्णेति। अनारतवहद्वाता इत्युक्तिं
63182 विवृणोति - अनारतेति। प्राणस्योष्णत्वमपानस्य च शीतत्वं
63183 प्रत्यक्षसिद्धम्॥ १९॥
63184
63185 कर्णनासास्यताल्वादिवातायनगणान्विताः।
63186 भुजाद्यङ्गप्रतोलीकाः पञ्चेन्द्रियकुदीपकाः॥ २०॥
63187
63188 बहुवातायनान्विता इत्यादि विवृणोति - कर्णनासेत्यादिना। कुदीपकेति
63189 विवरणेन दीपपञ्चकेत्यत्र संघार्थे जातः कन् तन्त्रेण कुत्सामपि द्योतयतीति
63190 तात्पर्यं सूचितम्॥ २०॥
63191
63192 मायया रचितास्तेषु संकल्पेन महामते।
63193 अहङ्कारमहायक्षाः परमालोकभीरवः॥ २१॥
63194
63195 रक्षितारो महायक्षा इत्येतद्विवृणोति - माययेति। परमालोकभीरव इत्यस्य
63196 परमात्मदर्शनेन हृदयग्रन्थ्यात्मकाहङ्कारक्षयश्रुतेः
63197 परमस्यालोकनाद्भीरवो बिभ्यत इति तात्पर्यमित्यर्थः॥ २१॥
63198
63199 देहापवरकेष्वन्तर्महाहङ्कारयक्षकैः।
63200 सह संक्रीडतेऽत्यर्थं स सदैवासदुत्थितैः॥ २२॥
63201
63202 यथा कुसूले मार्जारो भस्त्रायां भुजगो यथा।
63203 मुक्ताफलं यथा वेणावहङ्कारस्तथा तनौ॥ २३॥
63204
63205 ननु देह एवाहङ्कारो नान्यो नेत्याह - यथेति॥ २३॥
63206
63207 क्षणमभ्युदयं यान्ति क्षणं शाम्यन्ति दीपवत्।
63208 देहगेहेषु संकल्पतरङ्गाः सागरेष्विव॥ २४॥
63209
63210 संक्रीडनप्रकारमाह - क्षणमिति। संकल्पस्य तरङ्गा वृत्तयः॥ २४॥
63211
63212 भविष्यन्नवनिर्माणं स व्याप्नोति तदा पुरम्।
63213 यदा संकल्पितं वस्तु क्षणादेव प्रपश्यति॥ २५॥
63214
63215 तस्येच्छा जायते इत्यादेस्तात्पर्यं पुत्रोक्तविरोधपरिहारेण वर्णयति -
63216 भविष्यदिति॥ २५॥
63217
63218 असंकल्पनमात्रेण स्वेनैवाशु विनश्यति।
63219 श्रेयसे परमायस्य नाशत्वेन तु संभवः॥ २६॥
63220
63221 तेनाशु स विनश्यतीत्यस्य तात्पर्यमाह - असंकल्पनेति।
63222 जाग्रत्स्वप्नावस्थयोः परं अत्यन्तं आयस्य भ्रमणप्रयुक्तमायासं प्राप्य
63223 श्रेयसे विश्रान्तिसुखाय असंकल्पनमात्रेण सुषुप्तौ नाशत्वेन प्रविलयेन
63224 कारणीभूताविद्यामात्रभावेन संभवः सत्तेत्यर्थः। अथवा
63225 नानाजन्मकोटिष्वायस्य दैवान्निर्विण्णः
63226 शास्त्राचार्यसमाध्यभ्यासादिबलादात्मतत्त्वसाक्षात्कारे सति
63227 संकल्पमूलोच्छेदादेवासंकल्पनमात्रेण श्रेयसे मोक्षाय संभवो
63228 निर्वृतिः। परमायास्य इति पाठे तु अस्य संकल्पस्य नाशत्वेन
63229 वासनाक्षयप्रयुक्तशून्यभावेन संभवः अभिनिष्पत्तिः परमाय श्रेयसे
63230 भवतीति सर्वत्र शेषः॥ २६॥
63231
63232 स्वयं संकल्पनामात्रं जायते बालयक्षवत्।

63233 अनन्तायात्मदुःखाय नानन्दाय कदाचन ॥ २७ ॥
63234
63235 पुनरुत्पद्यते इत्युक्तेस्तात्पर्यमाह - स्वयमिति ॥ २७ ॥
63236
63237 इदं स्फारं जगद्दुःखं प्रतनोत्यात्मसत्तया ।
63238 असत्तया नाशयति घनमान्ध्यं यथा तमः ॥ २८ ॥
63239
63240 स्वयैव दुःखदायिन्या चेष्टया परिरोदिति ।
63241 काष्ठावष्टब्धवृषणः कीलोत्पाटी कपिर्यथा ॥ २९ ॥
63242
63243 किं करोमित्यादिशोकोक्तेर्बीजमाह - स्वयैवेति । दुःखदायिन्यां
63244 निषिद्धाचरणाभिमानादिरूपया । काष्ठावष्टब्धेत्युत्पत्तिप्रकरणे
63245 व्याख्यातम् ॥ २९ ॥
63246
63247 संकल्पितानन्दलवस्तिष्ठत्युद्धरकन्धरम् ।
63248 अकस्मात्प्रच्युतमधुबिन्दुभुक्करभो यथा ॥ ३० ॥
63249
63250 करभो गर्दभः । अनेन विषयसुखमपि रासभस्य मधुलेहनवदतिदुर्लभं
63251 किं पुनर्मोक्षसुखमिति ध्वनितम् ॥ ३० ॥
63252
63253 क्षणं विरतिमायाति रतिमेति क्षणं स्वयम् ।
63254 क्षणं विकारमायाति संकल्पेनैव बालवत् ॥ ३१ ॥
63255
63256 एनं सकलभावेभ्यः कृत्वा निर्मूलमादरात् ।
63257 मतिरन्तःपदं याति यथा पुत्र तथा कुरु ॥ ३२ ॥
63258
63259 खोत्थाख्यायिकावर्णनप्रयोजनमाह - एनमिति । सकलभावेभ्यः
63260 सर्वबाह्यवस्तुभ्यः परावृत्य समाध्यभ्यासेन तत्त्वज्ञानेन च निर्मूलं
63261 निर्वासनाऽज्ञानं कृत्वा मतिः अन्तःपदं प्रत्यग्भूतं ब्रह्म यथा
63262 यात्यवलम्ब्य विश्राम्यति तथा कुर्वित्यर्थः ॥ ३२ ॥
63263
63264 त्रयस्तस्या मतेर्देहा अधमोत्तममध्यमाः ।
63265 तमःसत्त्वरजःसंज्ञाः कारणं जगतः स्थितेः ॥ ३३ ॥
63266
63267 प्राग्ये त्रयो देहा उक्तास्तान्प्रपञ्चयति - त्रय इति । मतेः संकल्पात्मनो
63268 मनसः ॥ ३३ ॥
63269
63270 तमोरूपो हि संकल्पो नित्यं प्राकृतचेष्टया ।
63271 परां कृपणतामेत्य प्रयाति कृमिकीटताम् ॥ ३४ ॥
63272
63273 प्राकृतचेष्टया स्वाभाविकप्रवृत्त्या परां कृपणतां नरकेषु
63274 प्रसिद्धम् । कृमिकीटग्रहणं स्थावरादीनामप्युपलक्षणम् ॥ ३४ ॥
63275
63276 सत्त्वरूपो हि संकल्पो धर्मज्ञानपरायणः ।
63277 अदूरकेवलीभावं स्वाराज्यमधितिष्ठति ॥ ३५ ॥
63278
63279 ज्ञानमत्रोपासनं शास्त्रीयप्रवृत्तिनियम इति यावत् । अदूरकेवलीभावं
63280 संनिहितमोक्षं स्वाराज्यं हैरण्यगर्भभावान्तदेवतापदम् ॥ ३५ ॥
63281
63282 रजोरूपो हि संकल्पो लोकसंव्यवहारवान् ।
63283 परितिष्ठति संसारे पुत्रदारानुरञ्जितः ॥ ३६ ॥
63284

63285 लोकसंव्यवहारो मनुष्यजन्मना तद्योग्यव्यवहारस्तद्वान् ॥ ३६ ॥
63286
63287 त्रिविधं तु परित्यज्य रूपमेतन्महामते ।
63288 संकल्पः परमायाति पदमात्मपरिक्षये ॥ ३७ ॥
63289
63290 परं पदं मोक्षम् । आत्मपरिक्षये आत्यन्तिकसंकल्पोच्छेदे सति ॥ ३७ ॥
63291
63292 सर्वा दृष्टीः परित्यज्य नियम्य मनसा मनः ।
63293 सबाह्याभ्यन्तरार्थस्य संकल्पस्य क्षयं कुरु ॥ ३८ ॥
63294
63295 तर्हि संकल्पक्षये क उपायस्तमाह - सर्वा इति । दृष्टीर्बाह्यार्थदर्शनानि
63296 बाह्येन्द्रियाणि वैराग्येण निरुध्येति यावत् ॥ ३८ ॥
63297
63298 यदि वर्षसहस्राणि तपश्चरसि दारुणम् ।
63299 यदि वा विलयात्मानं शिलायां चूर्णयस्यलम् ॥ ३९ ॥
63300
63301 ननु संकल्पक्षयो दुष्करः अन्य एवोपायो मोक्षार्थमुपदिश्यतां नेत्याह ##-
63302
63303 यदि वाग्निं प्रविशसि वडवाग्निमथापि वा ।
63304 यदि वा पतसि श्वभ्रे खड्गधाराजवे तथा ॥ ४० ॥
63305
63306 हरो यद्युपदेष्टा ते हरिः कमलजोऽपि वा ।
63307 अत्यन्तकरुणाक्रान्तो लोकनाथोऽथवा यतिः ॥ ४१ ॥
63308
63309 लोकनाथो यतिः श्रीदत्तात्रेयो दुर्वासा वा अत्यन्तकरुणाक्रान्तः सन्नुपदेष्टा
63310 स्यात् । अथवा अत्यन्तकरुणाक्रान्त इति विशेषणस्वारस्यादात्यन्तिकाहिंसोपदेष्टा
63311 बुद्धोऽत्र यतिः । तस्यात्र ग्रहणं त्ववैदिकमार्गेष्वपि
63312 मोक्षप्रत्याशावारणार्थम् ॥ ४१ ॥
63313
63314 पातालस्थस्य भूस्थस्य स्वर्गस्थस्यापि तत्तव ।
63315 नान्यः कश्चिदुपायोऽस्ति संकल्पोपशमादृते ॥ ४२ ॥
63316
63317 अनाबाधेऽविकारे च सुखे परमपावने ।
63318 संकल्पोपशमे यत्नं पौरुषेण परं कुरु ॥ ४३ ॥
63319
63320 सच संकल्पोपशमो ब्रह्मस्वरूप एवेत्याशयेन विशिनष्टि - अनाभाध
63321 इत्यादि । परं यत्नं
63322 साधनचतुष्टयसंपत्तिश्रवणमनननिदिध्यासनलक्षणम् ॥ ४३ ॥
63323
63324 संकल्पतन्तावखिला भावाः प्रोताः किलानघ ।
63325 छिन्ने तन्तौ न जाने ते क्व यान्ति विशरारवः ॥ ४४ ॥
63326
63327 ननु संकल्पमात्रोच्छेदेन सर्वजगद्बन्धनिवृत्तिः कुतस्तत्राह -
63328 संकल्पेति । तर्हि ते नष्टा भावाः क्व यान्ति तत्राह - न जाने इति ।
63329 आरोपितभावानामधिष्ठाने बाधेऽन्यत्र [बोधे इति क्वचित्पठ्यते]
63330 गमनाप्रसिद्धेरिति भावः ॥ ४४ ॥
63331
63332 असत्सत्सदसत्सर्वं संकल्पादेव नान्यतः ।
63333 संकल्पं सदसच्चैवमिह सत्यं किमुच्यताम् ॥ ४५ ॥
63334
63335 नन्वियं संकल्पादिसर्वभावनिवृत्तिरसती सती सदसती वा । आद्ये
63336 मोक्षासिद्धिर्द्वितीये मोक्षेऽपि द्वैतापत्तिस्तृतीये

63337 पाक्षिकबन्धद्वैतयोरवारणमिति न मोक्षे
63338 निर्व्रणतासिद्धिरित्यादिदोषगणानेकोक्त्या परिहरति - असदिति | सदसत्त्वादयः
63339 सर्वे विकल्पाः संकल्पादेव सहभावैरुत्पन्नाः संकल्पमेव सदसच्चेत्येवं
63340 विकल्पितुं न शक्नुवन्ति इह परमार्थसत्यसंकल्पं ब्रह्म न स्पृशन्तीति किं
63341 वाच्यम् | कार्याणां यत्र स्वसङ्गिनि कारणेऽप्यान्तरे कुण्ठीभावस्तत्र किं
63342 वाच्यमसङ्गे परमात्मनीति भावः || ४५ ||
63343
63344 संकल्प्यते यथा यद्यत्तत्तथा भवति क्षणात् |
63345 मा किंचिदपि तत्त्वज्ञ संकल्पय कदाचन || ४६ ||
63346
63347 निःसंकल्पो यथाप्राप्तव्यवहारपरो भव |
63348 चिदचेत्योन्मुखत्वं हि याति संकल्पसंक्षये || ४७ ||
63349
63350 उत्थाय सत्त्वरूपेण योन्या सत्यमयात्मकम् |
63351 न तज्जगद्दुःखमिदं व्यर्थं सदृशमात्मनः || ४८ ||
63352
63353 ननु मोक्षसंपादने का क्षतिस्तत्राह - उत्थायेति | सत्यमयात्मकं
63354 सत्यैकस्वभावं ब्रह्म असत्यमायावशात् योन्या
63355 सुरनरतिर्यगादिचतुरशीतियोनिद्वारेण सत्त्वरूपेण तत्तत्प्राणिभेदरूपेणोत्थाय
63356 व्यर्थमेव जगद्दुःखमनुभवति इदमात्मनः स्वस्य न सदृशं न
63357 युक्तमित्यर्थः || ४८ ||
63358
63359 तेन दुःखाय महते किं मृतेन तवानघ |
63360 यद्दुःखाय तत्प्राज्ञाः संश्रयन्तीह नेतरत् || ४९ ||
63361
63362 तेन नानायोनिजन्मना निमित्तेन दुःखाय दुःखार्थं मृतेन
63363 पुनःपुनर्मरणेन च तव किं फलम् || ४९ ||
63364
63365 अधिगतपरमार्थतामुपेत्य
63366 प्रसभमपास्य विकल्पजालमुच्चैः |
63367 अधिगमय पदं तदद्वितीयं
63368 विततसुखाय सुषुप्तचित्तवृत्तिः || ५० ||
63369
63370 तर्हि मया किं कार्यं तत्राह - अधिगतेति | त्वं अधिगतपरमार्थतां
63371 तत्त्वज्ञतामुपेत्य प्राप्य प्रसभं मूलोच्छेदबलाद्विकल्पजालमपास्य
63372 यदद्वितीयं पदं मोक्षाख्यं तद्विततसुखाय निरतिशयानन्दावाप्तये
63373 अधिगमय स्वप्रयत्नेन साधयेत्यर्थः | मुखं व्यादाय
63374 स्वपितीतिवत्पूर्वकालत्वारोपेण ल्यप् || ५० ||
63375
63376 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० स्थिति० दाशूरो०
63377 संसारनगरविकल्पयोगविचारो नाम त्रिपञ्चाशः सर्गः || ५३ ||
63378
63379 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे
63380 संसारनगरविकल्पयोगविचारो नाम त्रिपञ्चाशत्तमः सर्गः || ५३ ||
63381
63382
63383 चतुःपञ्चाशः सर्गः ५४
63384
63385 पुत्र उवाच |
63386
63387 कीदृशस्तात संकल्पः कथमुत्पद्यते प्रभो |
63388 कथं च वृद्धिमाप्नोति कथं चैष विनश्यति || १ ||

63389
63390 संकल्पस्य यथोत्पत्तिर्यद्रूपं घनता यथा।
63391 येनोपायेन चोच्छेदस्तत्सर्वमिह कीर्त्यते ॥ १ ॥
63392
63393 प्रश्नः स्पष्टः ॥ १ ॥
63394
63395 दाशूर उवाच।
63396
63397 अनन्तस्यात्मतत्त्वस्य सत्तासामान्यरूपिणः।
63398 चितश्चेत्योन्मुखत्वं यत्तत्संकल्पाङ्कुरं विदुः ॥ २ ॥
63399
63400 लेशतः प्राप्तसत्ताकः स एव घनतां शनैः।
63401 याति चित्तखमापूर्य दृढजाड्याय मेघवत् ॥ ३ ॥
63402
63403 चेत्योन्मुखत्वं यत्प्राङ्गन इति व्याख्यातं तदेव
63404 संकल्पवृक्षस्याविद्याबीजोद्भवं [बीजोद्भेदं इत्यपि पाठः]
63405 प्रथमाङ्कुरं विदुरित्यर्थः। चित्तखं तमेव चित्ताकाशं आपूर्य सर्वतो
63406 व्याप्य दृढजाड्याय अधिष्ठानचितश्चित्स्वभावतातिरोधानेन
63407 जडप्रपञ्चाकारसंपत्तये इति यावत् ॥ ३ ॥
63408
63409 भावयन्ती चितिश्चेत्यं व्यतिरिक्तमिवात्मनः।
63410 संकल्पतामुपायाति बीजमङ्कुरतामिव ॥ ४ ॥
63411
63412 एवं समष्टिसंकल्पाज्जगदुद्भवमुक्त्वा तथैव
63413 बुद्ध्यहंकारप्राणेन्द्रियदेहाद्याकारव्यष्टिसंकल्पोत्पत्तिमाह -
63414 भावयन्तीति ॥ ४ ॥
63415
63416 संकल्पेन हि संकल्पः स्वयमेव प्रजायते।
63417 वर्धते स्वयमेवाशु दुःखाय न सुखाय तु ॥ ५ ॥
63418
63419 ततो मूलाङ्कुराच्छाखाङ्कुराणामिव
63420 बाह्यविषयाकारसंकल्पपरमपराभिर्वृद्धिं दुःखान्तामाह -
63421 संकल्पेनेति ॥ ५ ॥
63422
63423 संकल्पमात्रं हि जगज्जलमात्रं यथार्णवः।
63424 ऋते संकल्पमन्या ते नास्ति संसारदुःखिता ॥ ६ ॥
63425
63426 काकतालीययोगेन संजातोऽस्ति मुधैव हि।
63427 मृगतृष्णाद्विचन्द्रत्वमिवासत्यं च वर्धते ॥ ७ ॥
63428
63429 ननु निर्विकाराद्वये वस्तुनि कथं निर्बीजजगदुद्भवस्तत्राह - काकतालीयेति।
63430 विवर्तवादाश्रयेण चायं दोषः परिहार्य इत्याशयेनाह - मृगतृष्णेति
63431 ॥ ७ ॥
63432
63433 निगीर्णमातुलिङ्गस्य कनकप्रत्ययो यथा।
63434 स्वयमभ्येत्यसत्योऽन्तः संकल्पस्ते तथा हृदि ॥ ८ ॥
63435
63436 पूर्वानुभूतविषयवासनोद्बोधाद्भेया जगद्भ्रान्तिरित्याशयेनाह -
63437 निगीर्णेति। मातुलिङ्गं फलविशेषः। तद्धि चाक्षुषं पित्तमुद्दीपयच्छुक्ले
63438 पीतभ्रमं जनयति ॥ ८ ॥
63439
63440 असत्यमेव जातस्त्वमसत्यमपि वर्तसे।

63441 अस्मिञ्ज्ञाते च विज्ञाने ह्यसत्यं संविलीयते ॥ ९ ॥
63442
63443 अस्मिन्मदुपदेशात्मके विज्ञायते अनेनेति विज्ञाने शास्त्रे ॥ ९ ॥
63444
63445 असौ सोऽहमिमे भावाः सुखदुःखमया मम ।
63446 व्यर्थमेवेति नानास्था येनान्तः परितप्यसे ॥ १० ॥
63447
63448 असौ यो वेदान्तेषु प्रसिद्धः पूर्णात्मा सः अहमेव मम इमे सुखदुःखमया
63449 जन्मादिभावा व्यर्थं मिथ्यैव इत्यनास्था येनाज्ञानेन हेतुना नास्ति तेन
63450 परितप्यसे ॥ १० ॥
63451
63452 असन्नेवास्य जातोऽसि कुतो जन्मविलासतः ।
63453 व्यर्थमेवावमूढोऽसि संकल्पवशतः स्वतः ॥ ११ ॥
63454
63455 अस्य जन्मादेः संबन्धी कदाप्यसन्नेव भ्रान्त्या जातोऽसि ।
63456 विलासतस्तात्त्विकपूर्णतालक्षणस्वविलसनात्तु कुतो जन्म ॥ ११ ॥
63457
63458 मा संकल्पय संकल्पं भावं भावय मा स्थितौ ।
63459 एतावतैव भावेन भव्यो भवति भूतये ॥ १२ ॥
63460
63461 तर्ह्यस्य भ्रमस्य निवृत्तौ क उपायस्तमाह - मा संकल्पयेति ।
63462 पूर्वानुभूतं सुखदुःखादिभावं सांप्रतिकस्थितौ मा भावय मा स्मर ।
63463 स्मृतेर्हि पूर्वभावे तदुपादानहानाद्यर्थसंकल्पोदयः स्यादेवेति भावः ॥
63464 १२ ॥
63465
63466 संकल्पनाशयत्नेन न भयान्यनुगच्छति ।
63467 भावनाभावमात्रेण संकल्पः क्षीयते स्वयम् ॥ १३ ॥
63468
63469 तथाच संकल्पक्षयात्सर्वभयक्षयः । पूर्वभावाभावनाच्च संकल्पक्षय
63470 इति क्रमः सिद्ध इत्याह - संकल्पेति ॥ १३ ॥
63471
63472 सुमनःपल्लवामर्दे किंचिद्व्यतिकरो भवेत् ।
63473 सुसाध्यो भावमात्रेण नतु संकल्पनाशने ॥ १४ ॥
63474
63475 अयमुपायोऽत्यन्तसुकर इति प्रशंसति - सुमन इत्यादिना । सुमनसां
63476 शिरीषादिपुष्पाणां पल्लवस्य दलस्यामर्दने कश्चिच्चासौ व्यतिकरश्च
63477 किंचिद्व्यतिकरः प्रयत्नः सुसाध्यः सुकरोऽपि भवेत् संभावितो नतु
63478 अभावोऽभावना तन्मात्रेण साध्ये संकल्पनाशने तत्संभावनेत्यर्थः ॥ १४ ॥
63479
63480 पुष्पाक्रान्तौ करस्पन्दयत्नः पुत्रोपयुज्यते ।
63481 तदप्युपकरोत्यस्मिन्न संकल्पपरिक्षये ॥ १५ ॥
63482
63483 उक्तमेव व्याचष्टे - पुष्पेति । तदपि सोऽपि तावानपीति यावत् । नोपकरोति ॥ १५ ॥
63484
63485 संकल्पो येन हन्तव्यस्तेन भावविपर्ययात् ।
63486 अप्यर्धेन निमेषेण लीलयैव निहन्यते ॥ १६ ॥
63487
63488 भावो भावना स्मृतिस्तस्य विपर्ययादस्मरणात् ॥ १६ ॥
63489
63490 भावमात्रोपसंपन्ने स्वात्मनि स्थितिमागते ।
63491 साध्यते यदसाध्यं तत्कस्य स्यात्किमिवाङ्ग ते ॥ १७ ॥
63492

63493 ननु संकल्पक्षयाद्दुःखक्षयेऽपि निरतिशयानन्दावाप्तिः केनोपायेन साध्या
63494 तत्राह - भावेति | भावो भावना निरन्तरं स्वपूर्णानन्दात्मताचिन्तनं
63495 तन्मात्रेणोपसंपन्ने प्राप्ते स्वात्मनि स्थितिं स्वरूपाप्रच्युतिमागते सति
63496 यदसाध्यं तदपि साध्यते | नन्वसाध्यं साध्यत इति विप्रतिषिद्धं तत्राह
63497 - कस्येति | स्वतःसिद्धं तन्नापैतीत्याशयेन साध्यं स्यादित्युक्तं
63498 नतूत्पद्यत इत्याशयेन | भावानां ह्यपगमो द्वेधा | परेणापहारे वा
63499 नाशेन भावान्तरप्राप्तौ वा | हे अङ्ग ते तव आत्मा अन्येनापह्रियमाणः कस्य
63500 स्यात् | नह्यद्वितीयात्मनोऽन्यः प्रसिद्धः विनश्यन्वा किमिव स्यात् | घटो हि
63501 विनश्यन् कपालं भवति | आत्मा तु किं स्यात् | यत्स्यात्तन्न नष्टेन द्रष्टुं
63502 शक्यम् | नचात्मान्यो द्रष्टास्ति | तस्मादात्मनाशो निःसाक्षिको न
63503 सिद्ध्यत्येवेत्यात्मरूपो मोक्षः स्वतः सिद्धो नापैष्यतीत्यर्थः || १७ ||
63504
63505 संकल्पेनैव संकल्पं मनसा स्वमनो मुने |
63506 छित्त्वा स्वात्मनि तिष्ठ त्वं किमेतावति दुष्करम् || १८ ||
63507
63508 असंकल्पनसंकल्पेनैव सर्वसंकल्पं आत्मतत्त्वमननरूपेण मनसैव
63509 स्वमनश्छित्त्वेत्यर्थः || १८ ||
63510
63511 उपशान्ते हि संकल्पे उपशान्तमिदं भवेत् |
63512 संसारदुःखमखिलं मूलादपि महामते || १९ ||
63513
63514 उक्तोपायद्वयेन मूलादप्युपशान्ते सति दुःखमपि मूलादुपशान्तं
63515 भवेदित्यर्थः || १९ ||
63516
63517 संकल्पो हि मनो जीवश्चित्तं बुद्धिः सवासना |
63518 नाम्नैवान्यत्वमेतेषां नार्थेनार्थविदां वर || २० ||
63519
63520 ननु संकल्पे उपशान्तेऽपि जीवचित्तवासनादिवशाद्दुःखं स्यादेवेत्याशङ्क्य
63521 तेषां संकल्पेऽन्तर्भावमाह - संकल्प इति || २० ||
63522
63523 संकल्पनादृते नेह किंचिदेवास्ति कुत्रचित् |
63524 तमेव हृदयाच्छिन्धि किमेतत्परिशोचसि [किमन्यत् इति पाठः] ||
63525 २१ ||
63526
63527 यथैवेदं नभः शून्यं जगच्छून्यं तथैव हि |
63528 असन्मयविकल्पोत्थे उभे एते तते यतः || २२ ||
63529
63530 ननु संकल्पस्यैव जीवजगदात्मकत्वे तत्क्षये नैरात्म्यलक्षणशून्यतापत्तिः
63531 नहि जीवान्य आत्मा नामास्तीत्याशङ्क्याह - यथैवेति | मरुमरीचिकाच्छेदेऽपि
63532 न मरुभूः शून्यात्मिका यथेदं निदर्शनं तथा
63533 जगज्जीवादिदृश्यमात्रबाधेऽपि न दृग्रूप आत्मा शून्यात्मकः | एते
63534 मरीचिकाजगती उभे समे तते आरोपणविस्तृते || २२ ||
63535
63536 असिद्धं सर्वमेवैतदसिद्धेनैव साधितम् |
63537 संकल्पेन जगद्यस्माद्भावना क्वावतिष्ठताम् || २३ ||
63538
63539 ननु बाधितमपि भावनया पुनः स्यादित्याशङ्क्याह - असिद्धमिति
63540 बाधितेऽर्थे भावनैव नावतरतीत्यर्थः || २३ ||
63541
63542 (सत्यास्थायामसत्यां [इदमर्धमधिकं क्वचित्] तु
63543 किंनिष्ठा वासना भवेत् |)
63544 भावनाक्षयतः सिद्धिस्ततः प्राप्यं न शिष्यते |

63545 तस्मादसदिदं सर्वं विज्ञेयं हेलयेद्धया ॥ २४ ॥
63546
63547 तस्माज्जगन्मिथ्यात्वदर्शनं भावनोच्छेदार्थिना प्रथमं
63548 साध्यमित्याशयेनाह - भावनेति । इद्धया अभ्यासदृढीकृतया । हेलया
63549 दृश्यावहेलनया ॥ २४ ॥
63550
63551 तनुभावनया तेन सुखदुःखैर्न लिप्यते ।
63552 अवस्त्विति च निर्णीय स्नेहास्था न प्रवर्तते ॥ २५ ॥
63553
63554 तेन दृश्यावहेलनेन तनुभावनया देहात्मताप्रतिसंधानेन प्रागुक्तैः
63555 सुखदुःखैः । तनुसंबन्धिपुत्रमित्राद्यप्यवस्त्विति विज्ञाय तेषु स्नेहास्था च
63556 न प्रवर्तत इत्यर्थः ॥ २५ ॥
63557
63558 आस्थाक्षये न जायेते हर्षामर्षौ भवाभवौ ।
63559 तस्मादसदिदं सर्वं सुखदुःखादिविभ्रमैः ॥ २६ ॥
63560
63561 मनो जीवः स्फुरत्युच्चैर्मानसं नगरं जगत् ।
63562 भविष्यद्वर्तमानं च भूतं च परिवर्तयन् ॥ २७ ॥
63563
63564 मन एव चित्प्रतिबिम्बाज्जीवः सन् जगल्लक्षणं मानसं नगरं परिवर्तयन्
63565 रचयन् परिणमयन् विनाशयंश्च स्फुरतीत्यर्थः ॥ २७ ॥
63566
63567 वासनावलितं लोके स्फुरच्छक्ति मनः स्थितम् ।
63568 करोति स्वाशयेनेमां व्यवस्थां मलिनश्चलः ॥ २८ ॥
63569
63570 कुतस्तथा परिवर्तयन्स्फुरति तत्राह - वासनेति । यतोऽस्य
63571 मनोविषयसंबन्धात्तत्तद्वासनाभिरावलितमधिष्ठानचित्संबन्धा##-
63572 प्रागुक्तां रचनादिव्यवस्थां करोतीत्यर्थः ॥ २८ ॥
63573
63574 आत्मनः सदृशीं लीलां जीवो हृद्वनमर्कटः ।
63575 दीर्घमाकारमादाय निमेषाद्याति ह्रस्वताम् ॥ २९ ॥
63576
63577 तर्हिष्टमेव कुतो न करोति अनिष्टं च कुतः करोति तत्राह - आत्मन इति ॥ २९ ॥
63578
63579 ग्रहीतुं च न शक्यन्ते संकल्पजलवीचयः ।
63580 मनाग्दृष्टा विवर्धन्ते ह्रसन्ति सपरिच्छदाः ॥ ३० ॥
63581
63582 कुतोऽस्य वृद्धिह्रासौ तत्राह - ग्रहीतुमिति । नियन्तुमित्यर्थः । दृष्टाः
63583 विषयदर्शनोद्बुद्धः । विषयदर्शनस्मरणत्यागे तु सपरिवारा ह्रसन्ति ॥ ३० ॥
63584
63585 तृणमात्रेण दीप्यन्ते संकल्पा वह्निशेषवत् ।
63586 जगत्यप्रकटाकाराः प्रदीप्ताः क्षणभङ्गुराः ॥ ३१ ॥
63587
63588 तृणमात्रेण तृणसदृशेनाल्पेनापि विषयेणेति यावत् । वह्निशेषोऽग्निकणः ।
63589 जगतीत्याद्युत्तरान्वयि ॥ ३१ ॥
63590
63591 भ्रमदा जडसंस्थानाः संकल्पास्तडिदग्नयः ।
63592 यदेवासन्मयं पुत्र तदेवाशु चिकित्सितुम् ॥ ३२ ॥
63593
63594 भ्रमदाः स्थाण्वादौ चोरादिभ्रान्तिहेतवः जडेषु विषयेषु
63595 लडयोरभेदान्मेघजलेषु च संस्थानं येषाम् । इत्थं कीदृशस्तात
63596 संकल्पः इत्यादिप्रश्नानामुत्तरमुपवर्ण्य कथं चैष विनश्यति इति

63597 चरमप्रश्नस्योत्तरं विवक्षुर्वर्णितस्य संकल्पस्य सुचिकित्स्यतामाह -
63598 यदेवेत्यादिना। असन्मयं असत्याज्ञानविकारभूतम्॥ ३२॥
63599
63600 शक्यते नात्र संदेहो नासत्सद्भवति क्वचित्।
63601 संस्थितो यदि संकल्पो दुश्चिकित्स्यः स्वतो भवेत्॥ ३३॥
63602
63603 शक्यते ज्ञानेनेति शेषः। संस्थितः परमार्थभूतो यदि भवेत्॥ ३३॥
63604
63605 किंत्वसद्भूत एवैष सुचिकित्स्यस्तदा भवेत्।
63606 अकृत्रिमं चेत्संसारमलमङ्गारकार्ष्ण्यवत्॥ ३४॥
63607
63608 जगत्सत्यतापक्षे तु आत्मनोऽपि जगदविशेषान्मलिनस्वभावत्वापत्तौ ज्ञानेन
63609 सत्यनिरास एव सर्वप्रमाणविरुद्ध इत्यनिर्मोक्षप्रसङ्गः।
63610 विरुद्धस्याप्यभ्युपगमे अङ्गारकार्ष्ण्यस्य सशेषक्षालने मलिनस्यैव
63611 परिशेषो निःशेषक्षालने तु शून्यावसानतेतिवत्पुरुषार्थो
63612 परिशेषश्चेत्याशयेनाह - अकृत्रिममिति। कृतिर्मिथ्याकल्पना तया
63613 निर्वृत्तं कृत्रिमं तद्भिन्नमकृत्रिमं सत्यम्॥ ३४॥
63614
63615 तदेतत्क्षालने साधो कः प्रवर्तेत दुर्मतिः।
63616 किंत्वेतत्तण्डुलेष्वेव तुषकञ्चुकवत्स्थितम्॥ ३५॥
63617
63618 तुषकञ्चुकं यथा अतण्डुलभूतमेव तण्डुले निरस्यते तद्वदसदेव सति
63619 निरस्यमित्यर्थः॥ ३५॥
63620
63621 यतस्ततः प्रयत्नेन पौरुषेण विनश्यति।
63622 अकृत्रिममपि प्राप्तं भृशं पुत्र तथा पुनः॥ ३६॥
63623
63624 कृतिः कारणव्यापारस्तया निर्वृत्तं कृत्रिमं तद्भिन्नं
63625 अनादिभूतमपीत्यर्थः। डुकृञो ङ्वितः क्त्रिः क्त्रेर्मम्नित्यम् इति निर्वृत्तार्थे
63626 मप्॥ ३६॥
63627
63628 सुखोच्छेद्यतया ज्ञस्य संसारमलमाततम्।
63629 तण्डुलस्य यथा चर्म यथा ताम्रस्य कालिमा॥ ३७॥
63630
63631 ज्ञस्य तत्त्वविदः सुखेन अनायासेनैव उच्छेद्यतया उच्छेदार्हतया आततं
63632 विस्तीर्णम्। अनाद्यज्ञानजस्यातिविस्तीर्णस्य च रजतस्वप्नादिविभ्रमस्य
63633 प्रबोधमात्रेणोच्छेददर्शनादिति भावः।
63634 असंभावनाविपरीतभावनादिमलं तु
63635 ज्ञानभूमिकाभ्यासलक्षणपुरुषप्रयत्नेनापि नश्यतीत्याशयेनाह -
63636 तण्डुलस्येत्यादिना॥ ३७॥
63637
63638 नश्यति क्रियया पुत्र पुरुषस्य तथा मलम्।
63639 नश्यत्येव न संदेहस्तस्मादुद्यमवान्भव॥ ३८॥
63640
63641 असत्कल्पैर्विकल्पैर्यत्संसारो न जितो मुधा।
63642 स्तोकेनाशु लयं याति क्वासद्वस्तु चिरं स्थितम्॥ ३९॥
63643
63644 असत्कल्पैर्विकल्पैरुपलक्षितः संसारो यदेतावन्तं कालं त्वया न
63645 जितस्तन्मुधैवोपायापरिज्ञानादित्यर्थः॥ ३९॥
63646
63647 असत्यामेति संसारः स्वव्यवस्थां विचारतः।
63648 दीपालोकादिबान्धस्य द्विन्दुत्वं स्वीक्षितादिव॥ ४०॥

असत्यां स्वव्यवस्थां स्वनिष्ठां बाधामिति यावत् | अन्धस्य
तमस्तिरोभूतचक्षुषो दीपालोके सति आन्ध्यमिवेति शेषः || ४० ||

नासौ तव न चास्य त्वं भ्रान्तिं पुत्र परित्यज |
असत्ये सत्यवद्दृष्टे भावना मा स्म हीदृशः || ४१ ||

असौ संसारः | हि यस्मादसत्ये सत्यवद्दृष्टे सति ईदृशः एतादृशस्य
भावना पुनश्चिन्ता मा स्म न खलु युक्तेति शेषः || ४१ ||

मम गुरुविभवोज्ज्वला विलासा
इति तव मास्तु वृथैव विभ्रमोऽन्तः |
त्वमपि च वितताश्च ते विलासा
विलसति सर्वमिदं तदात्मतत्त्वम् || ४२ ||

मम संसारिस्वभावस्य एते गुरुभिर्महद्भिर्विभवैः संपद्भिरुज्ज्वला
दीप्यमाना भोगविलासाः सत्याः शाश्वताश्चेति विभ्रमस्तव मास्तु | त्वं
संसारी अपि च ते विलासाश्चकारादन्यदपि जननमरणादिदृश्यमात्रं
तदात्मतत्त्वमेव तथा विलसति न दृश्यरूपं सदन्यदस्तीत्यर्थः || ४२ ||

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० स्थितिप्रकरणे
दाशूरो० संकल्पचिकित्सा नाम चतुःपञ्चाशः सर्गः || ५४ ||

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे संकल्पचिकित्सा
नाम चतुःपञ्चाशः सर्गः || ५४ ||

पञ्चपञ्चाशः सर्गः ५५

श्रीवसिष्ठ उवाच |

इत्याकर्ण्य तदा तत्र रात्रावालपनं द्वयोः |
अहं रघुकुलाकाशशशाङ्क रघुनन्दन || १ ||

दाशूरेण वसिष्ठस्य पूजितस्य मिथः कथाः |
कदम्बशोभावीक्षात्र प्रातर्यानं च वर्ण्यते || १ ||

आलपनं व्यक्तसंभाषणम् || १ ||

पतितः खात्कदम्बाग्रे पत्रपुष्पफलाकुले |
तूष्णीं निर्वृष्टमुक्तात्मा शृङ्गाग्र इव तोयदः || २ ||

स्वात्तूष्णीं निःशब्दं पतितोऽवतीर्णः | निर्वृष्टेन वृष्टिजलवेषेऽन मुक्तः
अधोवतारित आत्मा येन तोयदेन || २ ||

अपश्यं तत्र दाशूरं शूरमिन्द्रियनिग्रहे |
परेण तपसा युक्तं तेजसेव हुताशनम् || ३ ||

तेजोभिर्देहनिष्क्रान्तैः काञ्चनीकृतभूतलम् |
तापयन्तं प्रदेशं तं भुवनं भास्करो यथा || ४ ||

तापयन्तं भासयन्तम् [त्रासयन्तं इति पाठः] || ४ ||

मामथालोक्य संप्राप्तं दाशूरोऽर्घसपर्यया।
वितीर्णविष्टरं पत्रपूजया पर्यपूजयत्॥ ५॥

वितीर्णो विष्टर आसनं यस्मै तम्। पत्रग्रहणं
पुष्पफलादीनामप्युपलक्षणम्॥ ५॥

ततः पूर्वकथास्तेन सह दाशूर भास्वता।
कृतास्तनयसंबोधाः संसारोत्तरणक्षमाः॥ ६॥

पूर्वकथाः प्राक्प्रसुतब्रह्मचर्चाः। तनयं सम्यग्बोधयन्तीति
तनयसंबोहाः। कर्मण्यण्। गतिकारकोपपदानां कृद्भिः सह
समासवचने कृद्ग्रहणे गतिपूर्वकस्यापि ग्रहणात्सोपसर्गेण सह समासः॥
६॥

दृष्टवांस्तमहं वृक्षं कोरकोत्तरकोटरम्।
दाशूरस्येच्छया सर्वैरयतद्भिर्मृगव्रजैः॥ ७॥

अयतद्भिः अव्याकुलयद्भिरिति यावत्॥ ७॥

सेव्यमानं वनमिव लतामण्डलमण्डितम्।
स्मितेन विस्फुटमिव श्वसनस्फुरितच्छदम्॥ ८॥

तं कदम्बं वधूश्लिष्टवरवेषेण वर्णयति - स्मितेनेत्यादिना। यतः
कोरकोत्तरकोटरं श्वसनस्फुरितपल्लवं च अत एव स्मितेन स्फुटमिव स्थितम्॥
८॥

लताकोटिगतैर्भ्रान्तैश्चामरैरिन्दुसुन्दरैः।
शुभ्राभ्रखण्डनिकरैः शरन्नभ इवावृतम्॥ ९॥

लतानां कोटिषु शाखाग्रेषु गतैः संक्रान्तैश्चामरैश्चमरपुच्छैः॥ ९॥

प्रालेयकणपद्धत्या मुक्तावल्याभ्यलंकृतम्।
सर्वावयवमेवाच्छपुष्पपूरैः प्रपूरितम्॥ १०॥

सर्वावयवं अभिव्याप्येति शेषः॥ १०॥

स्वरेणुचन्दनालेपैः समालब्धमखण्डितम्।
स्वच्छदाभोगविपुलरक्ताम्बरपरिच्छदम्॥ ११॥

समालब्धं लिप्तम्। स्वस्य च्छदाभोगैः पल्लवविस्तारैर्विपुला रक्ताः शोणा
अम्बरपरिच्छदा अन्तरीयोत्तरीयकञ्चुकोष्णीषादयो यस्य॥ ११॥

विवाहायेव वेषेण पुष्पभारातिभारिणा।
लताङ्गनानुषक्तेन नागरेण कृतोपमम्॥ १२॥

मुनिबद्धोटजाकारलतामण्डपमण्डितम्।
मञ्जरीभिः पताकाभिर्युक्तं पुरमहोत्सवे॥ १३॥

मुनिभिर्बद्धानामुटजानामाकार इवाकारो येषां तैर्लतामण्डपैर्मण्डितम्
। पुरमहोत्सवे पताकाभिर्युक्तं अर्थात्पुरमिवेत्यनुषज्यते। पुरमिवोत्सवे इति
पाठः साधुः॥ १३॥

63753
63754 मृगकण्डूयनध्वस्तपुष्पधूलिविधूसरम् ।
63755 प्रोत्सारितोपान्तवनं वृषमल्लमिवोत्थितम् ॥ १४ ॥
63756
63757 मृगकण्डूयनकम्पेन ध्वस्तैः स्खलितैः पुष्पधूलिभिर्विधूसरम् ।
63758 प्रोत्सारितं स्वोत्कर्षेण न्यग्भावितं उपान्तवनं येन । वृषमल्लं
63759 वृषश्रेष्ठम् ॥ १४ ॥
63760
63761 बर्हिभिः कुसुमोद्वान्तपरागपरिपाटलैः ।
63762 निक्षेपक्षिप्तसंध्याभ्रबालवालमिवाचलैः ॥ १५ ॥
63763
63764 बर्हिभिर्मयूरैः । अचलैः पर्वतैर्निक्षेपभूताः क्षिप्ताः स्थापिताः
63765 संध्याभ्रपोतलक्षणा वालाः स्वकेशा यस्मिंस्तथाविधमिवेत्युत्प्रेक्षा ॥ १५ ॥
63766
63767 प्रवालारुणहस्तेन कुसुमस्मितशोभिना ।
63768 मधुना घूर्णमानेन प्रान्तेन पुलकत्विषा ॥ १६ ॥
63769
63770 इदानीमलिनेत्रेण भासिनेत्यन्तैः साधारणैर्विशेषणैर्विलासिपुरुषरूपेण
63771 कदम्बं वसन्तं वनदेवीवृन्दं वा वर्णयंस्तदालयत्वेन तं वर्णयति
63772 - प्रवालेत्यादिना । तत्राद्यकल्पे स्वेन स्वदेहेनेति वा
63773 विशेष्यमन्तेऽध्याहार्यम् । मधुना श्लेषान्मकरन्देन मद्येन च मदेनेव
63774 घूर्णमानेन । प्रान्तेनार्थात्केसरपूर्णेन हेतुना पुलकशोभावता ॥ १६ ॥
63775
63776 नीरन्ध्रपुष्पपूर्णेन घूर्णितेन वनानिलैः ।
63777 निद्रालुकुड्मलदृशा स्तबकस्तनधारिणा ॥ १७ ॥
63778
63779 नीरन्ध्रं निरन्तरं पुष्पैः पूर्णेन । लतास्तबकस्तनान्धारिणा पल्लवकरैः
63780 परामृशता ॥ १७ ॥
63781
63782 पुष्पजालरजःपुञ्जकुङ्कुमारुणवाससा ।
63783 लतावितानिलयवातायननिषङ्गिणा ॥ १८ ॥
63784
63785 लतारचितवितानलक्षणानां निलयानां गृहाणां वातायनेषु
63786 प्रासादगवाक्षद्वारकेषु निषङ्गिणा अनुरक्तेन ॥ १८ ॥
63787
63788 नीलपुष्पलतादोलालीलालास्यविलासिना ।
63789 आपादमस्तकप्रान्तं सर्वतो निर्मितालयम् ॥ १९ ॥
63790
63791 नीलासु स्निग्धहरितच्छदासु पुष्पयुक्तलतादोल्सासु लीलालास्ये
63792 कौतुकान्दोलनविषये विलासिपुरुषभूतेन । कोकिलालापशालिना वनदेवीनां
63793 वृन्देन वृतेनेति वा पाठयोरन्यतरदध्याहार्यम् । ईदृशेन स्वेन
63794 स्वदेहेन वा आपादमस्तकप्रान्तं सर्वतः सर्वेऽवयवाः निर्मिता आलयाः
63795 पुष्पफलपक्ष्यादिभूषणाश्रया येन तम् । द्वितीये उक्तविशेषणगणवता
63796 मधुना वसन्तेन सर्वतः सर्वदा सर्वाङ्गे निर्मितालयमिति योज्यम् । तृतीयेऽपि
63797 उक्तविशेषणगणवता वनदेवीनां वृन्देन सर्वतो निर्मितालयमिति परेण सह
63798 योज्यमिति ॥ १९ ॥
63799
63800 वृन्देन वनदेवीनां कोकिलालापशालिना ।
63801 संदिग्धमञ्जरीजालमलिनेत्रेण भासिना ॥ २० ॥
63802
63803 अलीनां पर्यायेण लताकदम्बमञ्जरीषूपवेशनात्किमेतानि लतानेत्राणि उत
63804 कदमनेत्राणीति संदेहास्पदीभूतमञ्जरीजालयुक्तमित्यर्थः । अथवा

63805 वनदेवीनामलिसदृशनेत्रेण वृन्देन किमेतानि वनदेवीनां नेत्राण्युत
63806 भ्रमरयुता मञ्जर्य इति संदिग्धमञ्जरीजालमिति योज्यम् ‖ २० ‖
63807

63808 अवश्यायोपशमितरतिखेदैर्मदालसैः ।
63809 पुष्पधूलिसमालब्धैराश्लिष्टैर्निबिडं मिथः ‖ २१ ‖
63810

63811 पुष्पधूलिभिः समालब्धैर्लिप्तैः । मिथः अन्योन्यं रहसि च निबिडमाश्लिष्टैः
63812 ‖ २१ ‖
63813

63814 पुष्पान्तरान्तःपुरगैः किमपि प्रणयोचितम् ।
63815 ध्वनद्भिरभितः स्वच्छमत्तालियुगलैर्वृतम् ‖ २२ ‖
63816

63817 पुष्पस्यान्तरो गर्भ एवान्तःपुरम् । मत्तालीनां युगलैर्मिथुनैः ‖ २२ ‖
63818

63819 काननोपान्तनगरीगुंगुमाकर्णनेच्छया ।
63820 क्षणमुत्कर्णमाशान्तचारुवर्वणटांकृतैः ‖ २३ ‖
63821

63822 आशान्तेषु दिक्प्रदेशेषु चारुभिर्मधुरैर्वर्वणानां नीलमक्षिकाणां
63823 निवेदकपुरुषस्थानीयानां टांकृतैर्ध्वनिभिः काननोपान्तलक्षणायाः
63824 स्वनगर्या घुंघुमस्य मृगपक्ष्याद्याक्रोशस्याकर्णनेच्छया क्षणं
63825 उत्कर्णमूर्ध्वीकृतकर्णमिव स्थितमित्यर्थः ‖ २३ ‖
63826

63827 क्षणं दलाग्रविश्रान्तमुग्धमुग्धशिरस्तया ।
63828 पश्यद्भिरिन्द्वंशुकवज्जालामर्णवमेखलाम् ‖ २४ ‖
63829

63830 दलाग्रेषु पल्लवेषु उपधानस्थानीयेषु निद्रावेशाच्चापलाच्च क्षणं
63831 विश्रान्तानि मुघ्दमुग्धानि दर्शनीयतमानि शिरांसि येषां तद्भावेन ।
63832 इन्दुना अंशुकवन्ति किरणपटैराच्छादितानि वनाद्यवयवजालानि
63833 यस्यास्तथाविधामर्णवमेखलां भूमिं निशापगमप्रतीक्षया पश्यद्भिः
63834 ‖ २४ ‖
63835

63836 वनस्थलीनां तनयैर्नयैर्मूर्तिमिवास्थितैः ।
63837 शुभैः पत्रपुटेष्वन्तर्मृगैः सारतलान्तरम् ‖ २५ ‖
63838

63839 वनस्थलीनां तनयैः पुत्रभूतैर्मुनिप्रभावान्मूर्तिमाश्रितैर्नयैर्विनयैरिव
63840 स्थितैः पत्रपुटेषु पर्णजालोदरेषु अन्तर्लीनैर्मृगैः शाखामृगादिभिः
63841 साराः शोभमानाः सार्थकीभूताश्च तलमधोभूभाग आन्तराः
63842 शाखाद्यवयवाश्च यस्य तम् ‖ २५ ‖
63843

63844 नीडश्वसत्सुविश्वस्तसुप्तमात्रकपक्षिणम् ।
63845 पाकच्युतफलोपान्तभूतकञ्चुकमण्डली ‖ २६ ‖
63846

63847 नीडेषु श्वसन्तः मुनिप्रभावनिर्भयत्वात्सुविश्वस्तं यथा स्यात्तथा
63848 सुप्तमात्रकाः । अज्ञातेकन् । सुप्तत्वादलक्ष्यमाणा इति यावत् । पक्षिणो यत्र तम् ।
63849 पूर्वं भ्रमराविष्टेषु दैवात्पाकवशादधश्च्युतेषु फलेषु
63850 उपान्तस्थितमृगादिभूतैः कञ्चुकवत्सर्वतो व्याप्तमण्डलीभ्यो
63851 भक्षणोपमर्दादिशङ्कया संदिग्धाः भयान्मूकाश्च भ्रमरकीटा यस्य
63852 तमित्युत्तरेण सह समासः ‖ २६ ‖
63853

63854 संदिग्धमूकभ्रमरं गुच्छैः पूजाक्षसूत्रकैः ।
63855 श्यामलीकृतपर्यन्तं नीडैः पल्लवमण्डितैः ‖ २७ ‖
63856

63857 पूजापदेन तत्कालिको जपो लक्ष्यते। तत्राक्षसूत्रकल्पैः लम्बमानलतागुच्छैः
63858 सुगन्धितं अशेषं वनं येन ॥ २७ ॥
63859
63860 सुगन्धिताशेषवनं पुष्पमेघीकृताम्बरम्।
63861 धूलीकदम्बशबलफलौघवलितं तले ॥ २८ ॥
63862
63863 तले मूलभुवि धूलीकदम्बशबलैः फलौघैर्वलितं व्याप्तम् ॥ २८ ॥
63864
63865 बहुनात्र किमुक्तेन न किंचिदपि विद्यते।
63866 पत्रं यत्र तरौ यत्र नोष्यते वा न युज्यते ॥ २९ ॥
63867
63868 यत्र तरौ यत्र यस्मिन्पत्रे प्राणिभिर्नोष्यते न युज्यते नोपयुज्यते वा तादृशं
63869 पत्रमपि किंचिन्न विद्यते किं वाच्यं शाखाफलपुष्पादीत्यहोऽस्य सर्वथा
63870 परोपकारेण जन्मसार्थक्यमिति भावः ॥ २९ ॥
63871
63872 पत्रे पत्रे मृगाः सुप्ता विश्रान्ताश्च पदे पदे।
63873 कच्छे कच्छे खगा लीनास्तस्य भूरुहभूपतेः ॥ ३० ॥
63874
63875 पत्रे पत्रे। अधोगलितपत्रेषु सर्वेष्वित्यर्थः। कं अवश्यायजलं छयति
63876 छिनत्तीति कच्छः पत्राद्यधोदेशः। छो छेदने इत्यस्मादातोऽनुपसर्गे कः ॥
63877 ३० ॥
63878
63879 एवंगुणविशिष्टं तं समालोकयतो मम।
63880 महोत्सवेन सदृशी सा बभूव तमस्विनी ॥ ३१ ॥
63881
63882 दिव्यदृशा समालोकयतः। तमस्विनीति। यद्यपि
63883 प्रागिन्द्रंशुकवज्जालामित्युक्तत्वाज्ज्योत्स्नावत्येव तथापि
63884 रात्रित्वमात्रविवक्षयैवमुक्तम् ॥ ३१ ॥
63885
63886 ततः कथाभी रम्याभिः स तस्य तनयो मया।
63887 विज्ञानालोकरम्याभिर्नीतो बोधं परं पुनः ॥ ३२ ॥
63888
63889 आवयोस्तत्र चित्राभिः कथाभिरितरेतरम्।
63890 शर्वरी सा व्यतीयाय मुहूर्त इव कान्तयोः ॥ ३३ ॥
63891
63892 मम तस्य च आवयोः। त्यदादीनि सर्वैर्नित्यम् इत्यस्मच्छब्दशेषः ॥ ३३ ॥
63893
63894 प्रातः प्रतनुतां याते पुष्पर्द्धिघनजालके।
63895 स्वर्गाङ्गनाङ्गभोगाभे तारकानिकरे शनैः ॥ ३४ ॥
63896
63897 पुष्पर्द्धिघनजालप्रतिकृतौ तारकानिकरे। इवे प्रतिकृतौ इति कन् ॥ ३४ ॥
63898
63899 आकदम्बनभोभागमुपयातं [मार्गम् इति पाठः] सुतान्वितम्।
63900 अहं विसृज्य दाशुरं ततोऽमरनदीं गतः ॥ ३५ ॥
63901
63902 उपयातमनुयातम्। ओदकान्तात्प्रियं पान्थमनुव्रजेत् इति स्मृतेः। गृहं प्रति
63903 विसृज्य निवर्त्य ॥ ३५ ॥
63904
63905 तत्राभिमतमासाद्य स्थानमेत्य नभस्तलम्।
63906 प्रविश्य खं मुनीनां च मध्यं स्वस्थ इव स्थितः ॥ ३६ ॥
63907
63908 दाशूराख्यायिकैषा ते कथिता रघुनन्दन।

जगतः प्रतिबिम्बाभा सत्याकाराप्यसन्मयी ॥ ३७ ॥

दाशूराख्यायिकेवेयमित्येतत्कथितं मया ।
तुभ्यं राघव बोधाय जगद्रूपनिरूपणे ॥ ३८ ॥

आख्यायिकायाः प्रागुक्तां संगतिं स्मारयति - दाशूरेति ॥ ३८ ॥

तस्मादवास्तवीं त्यक्त्वा वास्तवीमपि रञ्जनाम् ।
दाशूरसिद्धान्तदृशा सदोदारो भवात्मवान् ॥ ३९ ॥

दाशूरोपदिष्टसिद्धान्तदृशा ॥ ३९ ॥

तस्माद्विकल्पं मलमात्मनस्त्वं
निर्धूय पश्यामलमात्मतत्त्वम् ।
आसादयिष्यस्यचिरात्पदं त-
द्भविष्यसीज्यो भुवनेषु येन ॥ ४० ॥

विकल्पं तद्धर्मिमनस्तद्धेतुभूतं मलमज्ञानं च निर्धूय । येन
आसादनेन इज्यः पूज्यो भविष्यसि ॥ ४० ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मो० स्थितिप्रकरणे दाशूरो०
वसिष्ठदाशूरमेलनं नाम पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

इति श्रीवासिष्ठमहारामायणे तात्पर्यप्रकाशे स्थितिप्रकरणे
वसिष्ठदाशूरमेलनं नाम पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

दाशूरोपाख्यानं समाप्तम् ।

षट्पञ्चाशः सर्गः ५६

श्रीवसिष्ठ उवाच ।

नास्तीदमिति निर्णीय सर्वतस्त्यज रञ्जनाम् ।
यन्नास्ति तत्प्रति किल केवास्थेह विचारिणाम् ॥ १ ॥

सत्तासत्ते जडस्यात्र कर्तृताकर्तृते चितः ।
विमृश्य सर्वथा दृश्ये रञ्जनास्था निवार्यते ॥ १ ॥

इदं जडं जगत् ।
रञ्जनामहंममेतिसंसर्गतादात्म्याध्यासलक्षणामास्थाम् । विचारिणां
विवेकिनां ॥ १ ॥

दृश्यमानमथेदं चेदस्ति सत्तामुपागतम् ।
तिष्ठ स्वात्मनि बध्नासि त्वं किमत्र किलात्मताम् ॥ २ ॥

किं दृश्यं सदथ-सदसत् उतासदेव । पक्षत्रयेपि तत्राहंतादिरञ्जनं
नोचितमित्याह - दृश्यमानमिति त्रिभिः । इदं देहादि
त्वत्सत्तानिर्पएक्षसत्तामुपागतं यद्यस्तीति मन्यसे तर्हि त्वमपि तत्सत्तानिरपेक्षे
असङ्गोदासीनचिद्रूपे स्वात्मनि तिष्ठ । अत्र त्वं निरपेक्षे देहादौ
अधयसेनात्मतां किं बध्नासि । नचेदं तवोचितमित्यर्थः । तिष्ठत्वात्मनि इति
पाठे तु यदि सत्तामुपागतमस्ति तर्हि आत्मनि स्वीयजडस्वभावे तिष्ठतु नाम ।

63961 त्वमत्रेत्यादि प्राग्वत् ॥ २ ॥
63962
63963 अथ चेदस्ति नास्तीदमिति निश्चयवानसि ।
63964 तथापि भावनासङ्गः कथं युक्तश्चलाचले ॥ ३ ॥
63965
63966 भावनासङ्गः प्रागुक्ताध्यासः । चलाचले सत्त्वासत्त्वयोः
63967 परस्परोच्छित्तिरूपत्वादनियतस्वभावे ॥ ३ ॥
63968
63969 नेदमस्ति जगद्राम तव नास्ति महामते ।
63970 केवलं स्वच्छमेवेत्थमाततं मितमीदृशम् ॥ ४ ॥
63971
63972 अथ चेदित्यनुकृष्यते । अथ चेन्नेदं जगदस्ति तर्हि तव बन्धो नास्त्येव केवलं
63973 स्वच्छमेवात्मतत्त्वमित्थंरीत्या आततं सर्वतो विस्तीर्णं मितं प्रमितमिति
63974 नान्यरञ्जनावकाश इत्यर्थः ॥ ४ ॥
63975
63976 नेदं कर्तृकृतं किंचिन्न वा कर्तृकृतक्रमम् ।
63977 स्वयमाभासते चेदं कर्त्रकर्तृपदं गतम् ॥ ५ ॥
63978
63979 किंचेदं जगत्सकर्तृकमुताकर्तृकमथ कर्त्रकर्तृसाधारणं
63980 उदासीनात्मसंनिधिमात्रलब्धस्वरूपम् । त्रिष्वपि पक्षेषु तव तद्रञ्जना न
63981 युक्तेत्याह - नेदमिति द्वाभ्याम् ॥ ५ ॥
63982
63983 अकर्तृकं जगज्जालं भवत्वथ सकर्तृकम् ।
63984 मा त्वमेतेन शबलं भावयन्नास्व चेतसि ॥ ६ ॥
63985
63986 शबलं अन्योन्यतादात्म्याध्यासादैक्यमिवापन्नं भावयन्
63987 देहाद्यात्मभावं पश्यंश्चेतसि बुद्ध्युपाधिपरिच्छेदे मा आस्व न
63988 तिष्ठेत्यर्थः ॥ ६ ॥
63989
63990 सर्वेन्द्रियविहीनात्मा कर्तेव स जडोपमः ।
63991 अकर्तृ च तदा मन्ये काकतालीयवज्जगत् ॥ ७ ॥
63992
63993 ननु यतो वा इमानि भूतानि जायन्ते विश्वस्य कर्ता भुवनस्य गोप्ता
63994 इत्यादिश्रुतिविरुद्धोऽयमकर्तृकत्वपक्षः कथमुत्थितः किमर्थं वा
63995 त्वयोपन्यस्तस्तत्राह - सर्वेति ।
63996 यत्तदद्रेश्यमग्राह्यमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं
63997 सर्वगतं सुसूक्ष्मम् । तदव्ययं यद्भूतयोनिं परिपश्यन्ति
63998 इत्यादिश्रुतिभिरसङ्गोदासीनत्वाज्जडपर्वताद्युपम आत्मा मेरुः सूर्यं
63999 परिवर्तयतीतिवत्कर्तेवोपचर्यते जगन्मिथ्यात्वव्युत्पादनायेति यदा सर्वासां
64000 सकर्तृकत्वप्रतिपादकश्रूतीनां हृदयं ज्ञातं तदेत्यर्थः ॥ ७ ॥
64001
64002 काकतालीययोगेन जातं यत्किंचिदेव तत् ।
64003 तस्मिन्भावानुसंधानं बालो बध्नाति नेतरः ॥ ८ ॥
64004
64005 यत्किंचिदेव अनिर्वचनीयमेव । भावोऽहंताद्यभिमानस्तेन
64006 पुनःपुनरनुसंधानं स्मरणम् । बालो बालिशः ॥ ८ ॥
64007
64008 न कदाचिदिदं शान्तं जगद्राम न च क्षयि ।
64009 अजस्रं दृश्यमानत्वाद्द्रावित्वाच्च पुनः पुनः ॥ ९ ॥
64010
64011 अनिर्वचनीयत्वमेव युक्त्या दर्शयति - नेत्यादिना ।
64012 शान्तमत्यन्तांभावात्मकशून्यस्वभावम् । क्षयि

64013 प्रध्वंसप्रयुक्तशून्यस्वभावं च न। शून्यस्य
64014 दर्शनायोग्यत्वाज्जगतश्च सदा प्रवाहरूपेण
64015 दृश्यमानत्वाद्ध्वस्तस्योत्पत्तिविरोधाज्जगतश्च
64016 पुनःपुनरुत्पद्यमानत्वादित्यर्थः ॥ ९ ॥
64017
64018 न कदाचिदिदं चास्ति जगद्राम न च क्षयि।
64019 अजस्रं क्षीयमाणत्वानास्तित्वाच्चानुमानतः ॥ १० ॥
64020
64021 तर्ह्यात्मवत्सदा सत्स्वभावं क्षणिकसत्तास्वभावं वास्तु तत्राह - नेति।
64022 अस्ति नित्यसत्तास्वभावम्। क्षयि क्षणिकसत्तास्वभावम्। आद्ये अजस्रं
64023 प्रतिक्षणं परिणामभेदेन क्षीयमाणत्वानुभवविरोधात्। द्वितीये
64024 अनाद्यनन्तयोः पूर्वोत्तरकालयोरसतो वर्तमानत्वाभिमतक्षणेऽप्यसतः
64025 सत्त्वायोगेनासत्त्वानुमानादित्यर्थः ॥ १० ॥
64026
64027 सर्वेन्द्रियपदातीतो यदा कर्तेह विज्वरः।
64028 कुर्वाणः सर्वदा खेदं न कदाचन गच्छति ॥ ११ ॥
64029
64030 अस्तु वास्य नियतिप्रयुक्तसर्गादौ संनिधिमात्रेण कर्तृत्वं तथापि
64031 सृज्याभिमानेन तत्र खेदो न युक्त इत्याह - सर्वेन्द्रियेति द्वाभ्याम् ॥ ११ ॥
64032
64033 तेनेयं नियतिः प्रौढा भावाभावदशामयी।
64034 ईदृश्येव स्थिरा दीर्घा मिथ्योत्थापि च दृश्यते ॥ १२ ॥
64035
64036 अपर्यन्तस्य कालस्य कश्चिदंशः शरच्छतम्।
64037 तावन्मात्रमहाश्चर्यः किमर्थं सोऽनुधावति ॥ १३ ॥
64038
64039 शरच्छतं मानुषदेहजीवनपरमावधिः कालः। अनाद्यनन्तयोः
64040 पूर्वोत्तरकालयोः कदाप्यसत्त्वादत्यन्तासंभावितं तावत्कालमात्रं
64041 महदतिदृढं मनुष्यदेहात्मतालक्षणमाश्चर्यं यस्य तथाविधः सन्
64042 स सर्वेन्द्रियपदातीत आत्मा किमर्थमनुधावति। सर्वथेदमनुचितमित्यर्थः ॥
64043 १३ ॥
64044
64045 स्थिराश्चेज्जगतां भावास्तत्त्वादास्था न शोभते।
64046 कथमन्योन्यसंश्लेषो जडचेतनयोः किल ॥ १४ ॥
64047
64048 इदानीमकर्तृकत्वपक्षे स्थिरत्वाभ्युपगमेऽप्यास्था नोचितेत्याह - स्थिरा इति
64049 । तत्त्वात् स्थिरत्वादेव हानोपादानायोग्यत्वादित्यर्थः। असङ्गचितो
64050 जडसंबन्धाघटनादपि तत्र सा अनुचितेत्याशयेनाह - कथमिति ॥ १४ ॥
64051
64052 अस्थिराश्चेज्जगद्भावास्तदप्यास्था न शोभते।
64053 पयःफेनास्थिरस्यान्ते दुःखमेषा ददाति ते ॥ १५ ॥
64054
64055 इदानीमकर्तृकास्थिरत्वपक्षेऽप्यास्था नोचितेत्याह - अस्थिरा इति। यतस्ते अस्थिरे
64056 आस्थां बध्नतः पयःफेनलक्षणस्याप्यस्थिरस्यान्ते नाशे एषा आस्था
64057 प्रसक्ता सती दुःखं ददाति दातुं प्रसज्जेतेति यावत्। तथाच पयःफेनास्थया
64058 तन्नाशे शोक उचितश्चेद्देहाद्यास्थया तन्नाशेऽपि स उचितः स्यादिति भावः ॥ १५ ॥
64059
64060 आस्थाबन्धो महाबाहो जगद्भावत्वमात्मनः।
64061 न स्थिरास्थिरयोः फेनशैलयोरिव राजते ॥ १६ ॥
64062
64063 आत्मनो जगद्भावत्वं जगत्स्वभावता। जन्मनाशादिस्वभावतेति यावत्। साच
64064 अन्योन्यतादात्म्यसंसर्गाध्यासलक्षण आस्थाबन्ध एव न तदन्यो निरूपयितुं

64065 शक्यः। सच तत्त्वविमर्शे स्थिरास्थिरपक्षयोर्द्वयोरपि न राजते। न शोभते
64066 इत्यर्थः। अथवा स्थिरास्थिरयोरात्मजगतोस्तादात्म्यलक्षण आस्थाबन्धो न
64067 राजते फेनशैलयोरिवेत्यर्थः॥ १६॥
64068
64069 सर्वकर्ताप्यकर्तेव करोत्यात्मा न किंचन।
64070 तिष्ठत्येवमुदासीन आलोकं प्रति दीपवत्॥ १७॥
64071
64072 ननु कर्तृत्वपक्षे कथमनास्थोपपत्तिस्तत्राह - सर्वेति। अकर्ता शैल इव।
64073 औदासीन्यांशेऽयं दृष्टान्तः। कार्यनिर्वाहात्तु कर्तेत्युच्यत इति
64074 सदृष्टान्तमाह - तिष्ठतीत्यादिना॥ १७॥
64075
64076 कुर्वन्न किंचित्कुरुते दिवाकार्यमिवांशुमान्।
64077 गच्छन्न गच्छति स्वस्थः स्वास्पदस्थो रविर्यथा॥ १८॥
64078
64079 दिवाकार्यं सर्वप्राणिदिनकृत्यनिर्वाहम्॥ १८॥
64080
64081 यतः कुतश्चिदेवेदं संपन्नमिव लक्ष्यते।
64082 अरुणातीरवद्वारिपूरावर्तवदाततम्॥ १९॥
64083
64084 नन्वादित्यो दिनकृत्यनिमित्तमात्रं कर्तारस्तु जनास्तद्भिन्ना दृश्यन्ते
64085 जगन्निर्माणे तु नान्ये कर्तारः सन्तीति वैषम्यमाशङ्क्याह - अरुणेति।
64086 अरुणाख्या नदी तस्यास्तीरं स्वभावत एव शिलाविषममुदासीनं च। वारिपूरोऽपि
64087 निम्नानुसारिस्वभावो न प्रवाहवैषम्यकर्ता। द्वयोस्तयोः सन्निधाने
64088 जायमान आवर्तो यतः कुतश्चिदेव आकस्मिकः संपन्नस्तद्वच्चिज्जडसन्निधौ
64089 जगदपीति नात्र कस्यचिच्छिरसि तत्कर्तृताभार आरोपयितुं शक्य इति भावः।
64090 आद्यो वतिरिवार्थे सप्तम्यन्तात्। द्वितीयस्तु तेन तुल्यमिति तृतीयान्तात्॥ १९॥
64091
64092 इति चेद्भवता राम नैपुण्येनावधारितम्।
64093 प्रमाणपरिशुद्धेन चेतसा न विचारितम्॥ २०॥
64094
64095 एवं विमर्शे तु सुतरां जगत्यास्था नोचितेत्याह - इतीति त्रिभिः॥ २०॥
64096
64097 तथापि भावनां साधो पदार्थं प्रति नार्हसि।
64098 अलातचक्रे स्वप्ने च भ्रमे वा केव भावना॥ २१॥
64099
64100 अकस्मादागतो जन्तुः सौहार्दस्य न भाजनम्।
64101 भ्रमोद्भूतं जगज्जालमास्थायास्तन्न भाजनम्॥ २२॥
64102
64103 सौहार्दस्य मैत्र्याः॥ २२॥
64104
64105 औष्ण्येन्दौ शीतले भानौ मृगतृष्णाजले तथा।
64106 यथा न भावयस्यास्थामेवं भावय मा स्थितौ॥ २३॥
64107
64108 अनृतत्वाच्च तत्रास्था नोचितेत्याह - औष्ण्येति। यथा शीतार्त
64109 औष्ण्यभ्रान्तिगृहीते इन्दौ। तापार्तो भ्रान्तिकृतशीतले भानौ तृषार्तश्च
64110 त्वं मृगतृष्णाजले आस्थां न भावयसि एवं जगत्स्थितावपीत्यर्थः॥ २३॥
64111
64112 संकल्पपुरुषस्वप्नजनद्वीन्दुत्वविभ्रमम्।
64113 यथा पश्यसि पश्य त्वं भावजातमिदं तथा॥ २४॥
64114
64115 अन्तरास्थां परित्यज्य भावश्रीभावनामयीम्।
64116 योऽसि सोऽसि जगत्यस्मि&ल्लीलया विहरानघ॥ २५॥

भावश्रीः स्त्र्यादिवस्तुसौन्दर्यं तच्चिन्तनप्रचुराम् ॥ २५ ॥

अकर्तृत्वपदं पीत्वा पीत्वेच्छामपि कुर्वतः ।
सर्वभावान्तरस्थस्य सर्वातीतस्य चात्मनः ॥ २६ ॥

अकर्तृत्वपदं तदिच्छां अपिशब्दात्कर्तृत्वपदं तदिच्छां च पीत्वा
निर्गीर्य योऽसि परिशिष्टः सोऽसीति पूर्वेणाप्यन्वयः । लीलया विहरेति यदुक्तं
तद्विवृणोति - अकर्तृत्वपदमिति । कुर्वतो व्यवहारे औदासीन्येन
कर्तृभूतस्य ते सन्निधिमात्रेण निरिच्छैव नियतिः परिजृम्भते ।
व्यवहाराकारेण प्रथते इति यावत् ॥ २६ ॥

इयं संनिधिमात्रेण नियतिः परिजृम्भते ।
दीपसंनिधिमात्रेण निरिच्छैव प्रकाशते ॥ २७ ॥

तत्र दृष्टान्तानाह - दीपेति । निरिच्छैव प्रभेति शेषः ॥ २७ ॥

अभ्रसंनिधिमात्रेण कुटजानि यथा स्वयम् ।
आत्मसंनिधिमात्रेण त्रिजगन्ति तथा स्वयम् ॥ २८ ॥

कुटजानि कुटजपुष्पाणि । उभयत्र जायन्त इति शेषः ॥ २८ ॥

सर्वेच्छारहिते भानौ यथा व्योमनि तिष्ठति ।
जायते व्यवहारश्च सति देवे तथा क्रिया ॥ २९ ॥

देवे परमात्मनि ॥ २९ ॥

निरिच्छे संस्थिते रत्ने यथालोकः प्रवर्तते ।
सत्तामात्रेण देवे तु तथैवायं जगद्गणः ॥ ३० ॥

अतः स्वात्मनि कर्तृत्वमकर्तृत्वं च संस्थितम् ।
निरिच्छत्वादकर्तासौ कर्ता संनिधिमात्रतः ॥ ३१ ॥

कर्तृत्वाकर्तृत्वोक्त्योर्बीजं दर्शयन्नुपसंहरति - अत इति ॥ ३१ ॥

सर्वेन्द्रियाद्यतीतत्वात्कर्ता भोक्ता न सन्मयः ।
इन्द्रियान्तर्गतत्वात्तु कर्ता भोक्ता स एव हि ॥ ३२ ॥

बीजान्तरे च दर्शयति - सर्वेति । कर्ता भोक्ता च न अकर्ता अभोक्ता चेत्युक्त
इत्यर्थः ॥ ३२ ॥

द्वे एतामनि विद्येते कर्तृताकर्तृतानघ ।
ययैव पश्यसि श्रेयस्तामाश्रित्य स्थिरो भव ॥ ३३ ॥

कर्तृता अकर्तृता चेत्यध्याहार्यम् ॥ ३३ ॥

सर्वस्थोऽहमकर्तेति दृढभावनयानया ।
प्रवाहपतितं कार्यं कुर्वन्नपि न लिप्यते ॥ ३४ ॥

द्वयोरपि श्रेयस्त्वं प्रत्येकं दर्शयति - सर्वस्थ इत्यादिना ॥ ३४ ॥

याति नीरसतां जन्तुरप्रवृत्तेश्च चेतसः ।

64169 यस्याहं किंचिदेवेह न करोमीति निश्चयः ॥ ३५ ॥
64170
64171 कथं न लिप्यते तदाह - यातीति । नीरसतां विरागम् ॥ ३५ ॥
64172
64173 भोगौघकामवांस्तत्र कः करोतु जहातु वा ।
64174 तस्मान्नित्यमकर्ताहमिति भावनयेद्धया ॥ ३६ ॥
64175
64176 परमामृतनाम्नी सा समतैवावशिष्यते ।
64177 अथ सर्वं करोमीति महाकर्तृतया तया ॥ ३७ ॥
64178
64179 द्वितीयकल्पस्यापि श्रेयस्त्वं दर्शयति - अथेत्यादिना ॥ ३७ ॥
64180
64181 यदीच्छसि स्थितिं राम तत्तामप्युत्तमां विदुः ।
64182 अहो यन्न करोमीमं समग्रं जागतं भ्रमम् ॥ ३८ ॥
64183
64184 तत्तां तादृशीं स्थितिमपि । प्रथमकल्पे रागद्वेषाद्यप्रसक्तिं दर्शयति ##-
64185
64186 रागद्वेषक्रमस्तत्र कुतोऽन्यस्यात्यसंभवात् ।
64187 यदन्येन शरीरं तु दग्धमन्येन लालितम् ॥ ३९ ॥
64188
64189 क्रमः प्रसङ्गो मम कुतः । यतः स्यात्तस्य मदन्यस्य
64190 अत्यन्तमसंभवादित्यर्थः । अन्यसंभवात् इति पाठे तु अकर्तुरन्यस्य
64191 कर्तुरिवान्यस्य रागादेः संभवादित्यर्थः । द्वितीयकल्पेऽपि तदप्रसक्तिं
64192 दर्शयति - यदिति ॥ ३९ ॥
64193
64194 सोऽस्मदारम्भ एवातः कः खेदोल्लासयोः क्रमः ।
64195 मत्सुखासुखविस्तारे जगज्जालक्षयोदये ॥ ४० ॥
64196
64197 अस्मदारम्भोऽस्मत्कृत एव अतः खेदोल्लासयोर्दुःखहर्षयोः । जगज्जालस्य
64198 क्षये उदये च अहं कर्ता ॥ ४० ॥
64199
64200 अहं कर्तेति मत्वान्तः कः खेदोल्लासयोः क्रमः ।
64201 खेदोल्लासविलासेषु स्वात्मकर्तृतयैतया ॥ ४१ ॥
64202
64203 मत्वा स्थितस्येति शेषः । अस्त्वेवं तथापि कथं समतालाभस्तत्राह -
64204 स्वेदेति ॥ ४१ ॥
64205
64206 स्वयमेव लयं याते समतैवावशिष्यते ।
64207 समता सर्वभूतेषु यासौ सत्या परा स्थितिः ॥ ४२ ॥
64208
64209 लयं याते यातेषु । व्यत्ययेनैकवचनं छान्दसम् ॥ ४२ ॥
64210
64211 तस्यामवस्थितं चित्तं न भूयो जन्मभाङ्नाक् ।
64212 अथवा सर्वकर्तृत्वमकर्तृत्वं च राघव ॥ ४३ ॥
64213
64214 अभ्यासदृशा दृष्टी द्वे व्युत्पाद्य परिनिष्ठितदृष्टिं दर्शयति -
64215 अथवेति ॥ ४३ ॥
64216
64217 सर्वं त्यक्त्वा मनः पीत्वा योऽसि सोसि स्थिरो भव ।
64218 अहं सोऽहमयं नाहं करोमीदमिदं तु न ॥ ४४ ॥
64219
64220 एतद्दृष्टिदृशा पूर्वदृष्ट्योरल्पतां दर्शयति - अयमिति । अयं

64221 एतद्देहे प्रसिद्धो हंसः सर्वदेहात्मकसमष्टिरूप इति द्वितीयकल्पे
64222 समष्टिपरिच्छेदस्य कर्तृत्वाभिमानस्य चानपगमादपूर्णता आद्यकल्पे तु
64223 इदं देहेन्द्रियाद्यहं न अत इदं किंचिदपि न करोमीत्यध्यात्मपरिच्छेदस्य
64224 कर्तृत्वादेश्च निरासेन शोधितत्वंपदार्थमात्रनिष्ठत्वेऽपि
64225 तत्पदार्थशोधनस्य वाक्यार्थनिष्ठायाश्चालाभादपूर्णतेति
64226 दृष्टिद्वयमपि तुष्टये नेत्यर्थः ॥ ४४ ॥
64227
64228 इति भावानुसंधानमयी दृष्टिर्न तुष्टये ।
64229 सा कालसूत्रपदवी सा महावीचिवागुरा ॥ ४५ ॥
64230
64231 यदि ते न तुष्टये तर्हि किमर्थमुपन्यस्ते इति
64232 चेत्सर्वानर्थमूलदेहाहंभावविमोचनोपायत्वेनोपन्यस्ते इत्याशयेन
64233 देहाहंभावस्यानर्थरूपतां सर्वथा त्याज्यतां च दर्शयति -
64234 सेत्यादिना । कालसूत्रादिच्यसिपत्रवनानि नरकभेदाः ।
64235 कार्यकारणयोरायुर्घृतमितिवदभेदारोपात्सामानाधिकरण्यम् ॥ ४५ ॥
64236
64237 सासिपत्रवनश्रेणी या देहोऽहमिति स्थितिः ।
64238 सा त्याज्या सर्वयत्नेन सर्वनाशेऽप्युपस्थिते ॥ ४६ ॥
64239
64240 स्प्रष्टव्या सा न भव्येन सश्वमांसेव पुष्कसी ।
64241 तया सुदूरोज्झितया दृष्टौ पटललेखया ॥ ४७ ॥
64242
64243 श्वमांसेन सहिता सश्वमांसा । देहाहंमतेरपि
64244 श्वमांससदृशकामाद्यशुचिदूषितत्वादिति भावः । विशुद्धात्मदृष्टौ
64245 स्वाधिष्ठाने पटललेखावदावरणविक्षेपहेतुभूतयेति यावत् ॥ ४७ ॥
64246
64247 उदेति परमा दृष्टिर्ज्योत्स्नेव विगताम्बुदा ।
64248 ययाभ्युदितया राम तीर्यते भवसागरः ॥ ४८ ॥
64249
64250 कर्ता नास्मि न चाहमस्मि स इति ज्ञात्वैवमन्तः स्फुटं ।
64251 कर्ता चास्मि समग्रमस्मि तदिति ज्ञात्वाथवा निश्चयं ॥
64252 कोप्येवास्मि न किंचिदेवमिति वा निर्णीय सर्वोत्तमे ।
64253 तिष्ठ त्वं स्वपदे स्थिताः पदविदो यत्रोत्तमाः साधवः ॥ ४९ ॥
64254
64255 इदानीं दृष्टित्रयं संगृह्य तासु स्वाधिकारानुरूपामैच्छिकीं
64256 स्थितिमुपदिशन्नुपसंहरति - कर्तेति । सः कर्तृताप्रयोजको देहादिश्चाहं
64257 नास्मि । समग्रमिति पदं तन्त्रेण द्वितीयाप्रथमान्तं देहलीदीपन्यायेन
64258 पूर्वोत्तरयोः संबध्यते । तथाच समग्रं सर्वं कर्ता अहमेवास्मि ।
64259 समग्रं सर्वसमष्टिभूतं तद्ब्रह्माण्डमप्यहमेवास्मीत्यर्थः । एवं
64260 प्रसिद्धदृश्यरूपं न किंचिदस्मि किंतु कोऽप्येव
64261 लोकप्रसिद्धपरिच्छिन्नजडदुःखस्वभावात्मविलक्षणः
64262 पूर्णानन्दचिदात्मास्मीत्यर्थः । निर्णीयेत्यनेन
64263 पूर्वदृष्ट्योरप्येतत्पर्यवसानमावश्यकमिति ध्वनितम् । पदविदो
64264 ब्रह्मविदः ॥ ४९ ॥
64265
64266 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० स्थितिप्रकरणे
64267 कर्तृत्वविचारयोगोपदेशकरणं नाम षट्पञ्चाशः सर्गः ॥ ५६ ॥
64268
64269 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे कर्तृत्वयोगो
64270 नाम षट्पञ्चाशः सर्गः ॥ ५६ ॥
64271
64272 सप्तपञ्चाशः सर्गः ५७

श्रीराम उवाच।

सत्यमेतत्त्वया ब्रह्मन्यदुक्तं सूक्तिसुन्दरम्।
अकर्तैव हि कर्तात्मा भोक्ताभोक्तैव भूतकृत्॥ १॥

रामप्रश्नानवसरो वासनावर्जनक्रमः।
तदेकोपायसिद्धानां प्रशंसा चात्र विस्तरात्॥ १॥

वक्ष्यमाणप्रश्नकामो रामः प्रागुक्तार्थानामनुवादप्रशंसाभ्यां
स्वस्य तदवबोधं दर्शयति - सत्यमित्यादिना।
तुल्यन्यायेनानुक्तमस्याभोक्तृत्वं सर्वभोक्तृत्वं चेत्येतदपि
मयावयतमिति सूचयति - भोक्तेति॥ १॥

सर्वेश्वरः सर्वगश्च चिन्मात्रममलं पदम्।
स्थानं भुवि वपुर्देवः सर्वभूतान्तरस्थितः॥ २॥

तिष्ठन्ति सर्वभूतान्यस्मिन्निति स्थानम्। यथा भुवि
वपुश्चतुर्विधभूतग्रामशरीरं तिष्ठति तद्वदित्यध्याहृत्य
कथंचिद्योज्यम्। स्वयं च सर्वभूतान्तरस्थितः॥ २॥

हृदयंगमतां प्राप्तमिदानीं ब्रह्म मे विभो।
त्वदुक्तिभिर्यथाम्भोदधाराभिर्भूभृदव्यथः॥ ३॥

तथाच सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि। संपश्यन्ब्रह्म
परमं याति नान्येन हेतुना। इति श्रुत्युक्तार्थस्यापि तुल्ययुक्त्यैव
मयावगतत्वाद्ब्रह्म मे अनुभवपदमारूढमित्याह -
हृदयंगमतामिति। यथा अम्भोदधाराभिर्भूमृत्पर्वतोऽव्यथो
निरस्तग्रीष्मताप आस्ते तथा त्वदुक्तिभिरिदानीमहमासे इति शेषः॥ ३॥

औदासीन्यादनिच्छत्वान्न भुङ्क्ते न करोति च।
समग्रालोककारित्वाद्भुङ्क्ते देवः करोति च॥ ४॥

भोक्तृत्वाभोक्तृत्वयोरविरोधेऽपि त्वदुक्तोपपत्तिस्तुल्येति मयावगतमिति
दर्शयति - औदासीन्यादिति॥ ४॥

किंत्वयं भगवन्स्फारः संशयो मे हृदि स्थितः।
तं त्वं छिन्धि गिरा ब्रह्मन्दीधित्येन्दुर्यथा तमः॥ ५॥

अयं वक्ष्यमाणप्रकारः॥ ५॥

इदं सत्तदिदं वाऽसदयं सोऽहमिदं ननु।
अयमेको द्वितीयोऽयमित्यादिकलनामयम्॥ ६॥

प्रश्नोपयोगितया पूर्वसर्गोक्तं जगतः सत्त्वासत्त्वदृष्टिपक्षं
व्यष्ट्यहंतापरित्यागेन समष्ट्यहंभावपक्षं चानूद्य पृच्छति -
इदमिति। इदं जगत्सत्तदिदमसद्वा त्वदुक्तदिशा। सोऽयं प्रसिद्धः
समष्टिरेवाहमिदं व्यष्टिदेहमात्रं तु न इत्येतद्वा। अयं प्रपञ्चः
समष्टिदृशा एको व्यष्टिदृशा तु द्वितीयो नाना वा।
इत्याद्यनियतबहुरूपकल्पनामयमेकस्मिन्नियतैकस्वभावे अध्वान्ते
स्वप्रकाशत्वादेव स्वतः परिहृतमोहान्धकारे अच्छे निर्मले आत्मनि भास्करे
नीहार इव विरुद्धं कथं सांप्रतं विद्यते। यदि ब्रूयाः प्रथमं

64325 मायाशबलब्रह्मोदरे स्थितमिदं सांप्रतमभिव्यक्तं विद्यत इति तत्रापि
64326 पृच्छामि - इदं प्रथममेव वा कथं स्थितम्। विरोधस्य तदानीमपि
64327 तुल्यत्वादित्यर्थः॥ ६॥
64328
64329 एकस्मिन्विद्यतेऽध्वान्ते नीहार इव भास्करे।
64330 इदं प्रथममेवाच्छे कथमात्मनि संस्थितम्॥ ७॥
64331
64332 श्रीवसिष्ठ उवाच।
64333
64334 सिद्धान्तकाल एवास्य संप्रश्नस्योत्तरं स्थिरम्।
64335 कथयिष्यामि ते राम येन ज्ञास्यसि तत्त्वतः॥ ८॥
64336
64337 रामवाक्यबलादेव रामस्य स्वप्रकाशप्रत्यगात्मदर्शनं तस्य
64338 सर्वशरीरेष्वेकताज्ञानं जगतोऽनिर्वचनीयताबोधश्च वृत्तो
64339 वासनाक्षयाभावात्तु सर्वसंशयमूलाविद्योच्छेदी
64340 प्रत्यगात्मब्रह्मैक्यलक्षणाखण्डाकारानुभवो न वृत्त इति निश्चित्य
64341 वसिष्ठस्तदुपायतया वासनोच्छेदोपायान्विवक्षुरस्योत्तरं वक्तुं
64342 नायमवसर इत्याह - सिद्धान्त इत्यादिना। सिद्धान्ते
64343 निर्वाणप्रकरणस्योत्तरार्धे पाषाणाख्यायिकादौ॥ ८॥
64344
64345 मोक्षोपायस्य सिद्धान्तमसंप्राप्य न राघव।
64346 श्रोतुं प्रश्नोत्तराण्येतान्यलं योग्यो भविष्यसि॥ ९॥
64347
64348 मोक्षोपायस्योपदेशस्य सिद्धान्तं परिनिष्ठारूपमखण्डाकारबोधम्॥ ९॥
64349
64350 कान्तागीतगिरां राम तरुणो भाजनं यथा।
64351 प्रश्नानामुत्तमोक्तीनां पुण्यकृद्भाजनं तथा॥ १०॥
64352
64353 सांप्रतमुच्यमानमपि न ते चित्तमधिरोक्ष्यतीत्याशयेनाह - कान्तेति।
64354 पुण्यकृत्सर्वकर्मफलपरिनिष्ठात्मज्ञानवान्॥ १०॥
64355
64356 वृथा भवति बालेषु यथा रागमयी कथा।
64357 निरर्थकाल्पबोधेषु तथोदारोदया कथा॥ ११॥
64358
64359 उदार उदयो निःश्रेयसं यस्याः सकाशात्सा॥ ११॥
64360
64361 कस्मिंश्चिदेव समये किंचित्पुंसो विराजते।
64362 फलमाभाति वृक्षस्य शरद्येव न माधवे॥ १२॥
64363
64364 तथा प्रश्नोऽप्ययं तदैव राजते इत्याशयेनाह - कस्मिंश्चिदिति। वृक्षस्य
64365 नारङ्गपूगजम्बीरादेः॥ १२॥
64366
64367 उपदेशगिरो वृद्धे रञ्जना निर्मले पटे।
64368 लगन्त्युदारविज्ञानकथा चाधिगतात्मनि॥ १३॥
64369
64370 उपदेशगिरो वैराग्योपदेशाः वृद्धे ज्ञानवृद्धे विवेकिनि नतु रागिणि
64371 लगन्तीत्यर्थः॥ १३॥
64372
64373 प्रश्नस्यास्योत्तरं पूर्वं लेशतः कथितं मया।
64374 न विस्तरेण तेनैतन्न ज्ञातं भवता स्फुटम्॥ १४॥
64375
64376 भार्गवोपाख्यानान्ते

64377 प्रागारब्धमप्यस्योत्तरमनधिकारमालोक्यैवोपेक्षितमित्याह -
64378 प्रश्नस्येति ॥ १४ ॥
64379
64380 यदि त्वमात्मनात्मानमधिगच्छसि तं स्वयम् ।
64381 एतत्प्रश्नोत्तरं साधु जानास्यत्र न संशयः ॥ १५ ॥
64382
64383 अखण्डार्थबोधे जाते मदुक्तिं विनाप्यस्योत्तरं स्वयमेव ज्ञास्यसीत्याह ##-
64384
64385 मया सिद्धान्तकाले तु प्राप्तबोधे त्वयि स्थिते ।
64386 वक्तव्यो विस्तरेणैव साधो प्रश्नोत्तरक्रमः ॥ १६ ॥
64387
64388 तर्हि त्वं किमुपेक्षिष्यसे नेत्याह - मयेति ॥ १६ ॥
64389
64390 जानात्यात्मानमात्मैव कृत आत्मात्मनैव हि ।
64391 आत्मैव संप्रसन्नः सन्नात्मानं प्रतिपद्यते ॥ १७ ॥
64392
64393 मदुपदेशो द्वारप्रदर्शनमात्रं त्वया त्वात्मनैवात्मा प्रणिधानेन
64394 द्रष्टव्य इत्याशयेनाह - जानातीति । संसारिणमप्यात्मानमात्मैव जानाति ।
64395 हि यस्मादात्मनैवात्मा अप्रसादात्तथा कृतः स
64396 आत्मैवात्मबोधात्संप्रसन्नः सन् वास्तवं पूर्णमात्मानं प्रतिपद्यत
64397 इत्यर्थः ॥ १७ ॥
64398
64399 तदेतत्कथितं राम कर्त्रकर्तृविचारणम् ।
64400 अज्ञातत्वात्तु तामेतामक्षीणवासनो भवेत् ॥ १८ ॥
64401
64402 कर्त्रकर्त्रात्मविचारणमपि मया तदेतदखण्डब्रह्मबोधमुद्दिश्यैव
64403 कथितम् । कथितेऽपि तामेतामखण्डात्मतामज्ञातत्वान्न ज्ञातवानित्यतस्तु
64404 नूनं भवानक्षीणवासनो भवेत् । संभावनायां लिङ् । वासनाक्षयस्तव न
64405 जात इति संभावयामीत्यर्थः ॥ १८ ॥
64406
64407 बद्धो हि वासनाबद्धो मोक्षः स्याद्वासनाक्षयः ।
64408 वासनास्त्वं परित्यज्य मोक्षार्थित्वमपि त्यज ॥ १९ ॥
64409
64410 इदानीं बन्धमोक्षरहस्ये दर्शयन्वासनोच्छेदोपायक्रममाह - बद्ध
64411 इत्यादिना ॥ १९ ॥
64412
64413 तामसीर्वासनाः पूर्वं त्यक्त्वा विषयवासिताः ।
64414 मैत्र्यादिभावनानाम्नीं गृहाणामलवासनाम् ॥ २० ॥
64415
64416 तत्र वासनाक्षये प्रथमपीठिका वैराग्यदार्ढ्यमित्याह - तामसीरिति ।
64417 तामसीः तमःप्रधानतिर्यग्योन्यादिगतिप्रदाः ।
64418 राजसमनुष्यादिजन्मप्रदानामप्युपलक्षणमेतत् । विषयैर्वासिता आहिताः ।
64419 मैत्रीकरुणामुदितोपेक्षा मैत्र्यादयस्तद्भावनानाम्नीम् । तथाच
64420 पातञ्जलसूत्रम् मैत्रीकरुणामुदितोपेक्षाणां
64421 सुखदुःखपुण्यापुण्यफलानां भावनातश्चित्तप्रसादनम् इति ॥ २० ॥
64422
64423 तामप्यन्तः परित्यज्य ताभिर्व्यवहरन्नपि ।
64424 अन्तःशान्तसमस्तेहो भव चिन्मात्रवासनः ॥ २१ ॥
64425
64426 अन्तश्चिन्मात्रव्यतिरेकेण मैत्र्यादयोऽपि न सन्तीति दर्शनेन
64427 बहिस्ताभिर्मैत्र्यादिभिर्व्यवहरन्नपि चिन्मात्रमेवाहमिति
64428 संप्रज्ञातसमाध्यभ्यासदृढीकृतवासनो भव ॥ २१ ॥

64429
64430 तामप्यथ परित्यज्य मनोबुद्धिसमन्विताम् ।
64431 शेषे स्थिरसमाधानो येन त्यजसि तत्त्यज ॥ २२ ॥
64432
64433 मनोबुद्धिग्रहणं चित्ततद्वृत्तीनामप्युपलक्षणम् । शेषे आत्मत्वादेव
64434 त्यक्तुमशक्यत्वादवश्यं परिशिष्यमाणे प्रत्यक्तत्वे स्थिरं समाधानं
64435 विश्रान्तिर्यस्य तथाविधः । असंप्रज्ञातसमाधौ विश्रान्त इति यावत् । येन
64436 कलनाख्येन द्वैतकल्पनामूलस्तम्भभूतेनाहंकारेण प्रागुक्तं सर्वं
64437 त्यजसि तदपि त्यज । सर्वस्यापि हि त्यागस्तत्र तत्राहं ममेत्यभिमानवर्जनमेव ।
64438 तच्चाहंकारेऽपि शुद्धचिन्मात्ररूपानहंभूतपूर्णात्मदर्शनेन
64439 मूलाज्ञानोच्छेदात्स्वयमेव भवतीति न तत्र कारणान्तरापेक्षेति नानवस्थेति
64440 भावः ॥ २२ ॥
64441
64442 चिन्मयः कलनाकालप्रकाशतिमिरादिकम् ।
64443 वासनां वासितारं च प्राणस्पन्दनपूर्वकम् ॥ २३ ॥
64444
64445 प्राणस्पन्दनपूर्वकं कलनाकालप्रकाशतिमिरादिकं वासनां वासितारं
64446 विषयं चकारात्तद्द्वाराणीन्द्रियाणि च समूलमहंकारमपि चोन्मूल्य
64447 व्योमेव सौम्या निर्मला प्रशान्तविक्षेपा च ब्रह्मात्माखण्डैकाकारा
64448 धीर्यस्य तथाविधः सन् यश्चिन्मयस्त्वं भवसि संपद्यसे स एव
64449 परमार्थरूपो भ्वानस्त्विति परेन सहान्वयः । सत्कृतः सर्वपूजितः ॥ २३ ॥
64450
64451 समूलमपि संत्यक्त्वा व्योमसौम्यप्रशान्तधीः ।
64452 यस्त्वं भवसि सद्बुद्धे स भवानस्तु सत्कृतः ॥ २४ ॥
64453
64454 हृदयात्संपरित्यज्य सर्वमेव महामतिः ।
64455 यस्तिष्ठति गतव्यग्रः स मुक्तः परमेश्वरः ॥ २५ ॥
64456
64457 ईदृशीं स्थितिं प्राप्तस्य पूज्यतामेव प्रशंसाभिर्दर्शयति -
64458 हृदयादित्यादिना । गतो व्यग्रः सर्वविक्षेपहेतुरभिमानो यस्य ॥ २५ ॥
64459
64460 समाधिमथ कर्माणि मा करोतु करोतु वा ।
64461 हृदयेनास्तसर्वास्थो मुक्त एवोत्तमाशयः ॥ २६ ॥
64462
64463 एवमभ्यासपरिपाकेन सप्तमीं भूमिकामारूढस्य सिद्धस्य
64464 कृतकृत्यतैव न कर्तव्यान्तरपरिशेषोऽस्तीत्याह - समाधिमिति । अस्ता
64465 निरस्ताः सर्वा आस्थाः प्रागुक्ताभिमानाध्यासा येन सः ॥ २६ ॥
64466
64467 नैष्कर्म्येण न तस्यार्थो न तस्यार्थोऽस्ति कर्मभिः ।
64468 न समाधानजाप्याभ्यां यस्य निर्वासनं मनः ॥ २७ ॥
64469
64470 विचारितमलं शास्त्रं चिरमुद्ग्राहितं मिथः ।
64471 संत्यक्तवासनान्मौनादृते नास्त्युत्तमं पदम ॥ २८ ॥
64472
64473 कतिपयकालानुष्ठितश्रवणमननध्यानैर्वासनाक्षयात्प्रागेव
64474 कृतकृत्यताभ्रमात्परावृत्तिं वारयन्नाह - विचारितमिति । मिथः
64475 परस्परं विद्वद्भिः सह संवादेनोद्ग्राहितं दृढमुपन्यासक्षमं
64476 कृतम् । महता परिश्रमेण सर्वविद्वत्संमत्या चेदमेव
64477 मोक्षशास्त्ररहस्यमिति निर्णीतमित्यर्थह् ।
64478 मौनाद्बाल्यपाण्डित्यशब्दवाच्यश्रवणमननपरिपाकजन्यप्रागुक्तनिर्विकल्प्
64479 आसंप्रज्ञातसमाधिपरिपाकान्तान्मुनिभावादृते परं पदं
64480 ब्राह्मणाख्यं परिनिष्ठिततत्त्वज्ञानं नास्तीति निर्णीतमित्यर्थः । तथाच

64481 श्रुतिः तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेद्बाल्यं च
64482 पाण्डित्यं निर्विद्याथ मुनिरमौनं मौनं च निर्विद्याथ ब्राह्मणः इति । एष
64483 नित्यो महिमा ब्राह्मणस्य इति च ॥ २८ ॥
64484
64485 दृष्टं द्रष्टव्यमखिलं भ्रान्त्वा भ्रान्त्वा दिशो दश ।
64486 जनाः कतिपया एव यथावस्त्ववलोकिनः ॥ २९ ॥
64487
64488 अत एव तत्त्वज्ञा विरला दुर्लभाश्चेत्याह - दृष्टमिति ॥ २९ ॥
64489
64490 यद्यदालोक्यते किंचित्कश्चिद्यत्तन्न विद्यते ।
64491 ईप्सितानीप्सितादन्यन्न तत्र यतते जनः ॥ ३० ॥
64492
64493 सर्वजनानां बहिर्मुखत्वाद्बहिश्चेप्सितानीप्सितयोरेव
64494 दर्शनात्तत्प्राप्तिपरिहारोपायप्रवणतैव दृष्टा नात्मप्रवणतेत्याह -
64495 यद्यदिति । यद्यत्किंचिदालोक्यते तत् ईप्सितानीप्सितादन्यन्न विद्यते
64496 तदन्यद्यदविषयमात्मतत्त्वं तत्र तु कश्चिदपि जनो न यतते
64497 किंत्वीप्सितानीप्सितयोरेवेत्यर्थः ॥ ३० ॥
64498
64499 ये केचन समारम्भा ये जनस्य क्रियाक्रमाः ।
64500 ते सर्वे देहमात्रार्थमात्मार्थं नतु किंचन ॥ ३१ ॥
64501
64502 स चानात्मविषये
64503 यत्नोऽनात्मदेहमात्रार्थत्वात्पुनःपुनर्देहारम्भानर्थहेतुरेवेत्याशयेनाह
64504 - ये केचनेति । समारम्भा लौकिकगृहप्रासादादि विषयाः । क्रियाक्रमा
64505 वैदिकयज्ञादयः ॥ ३१ ॥
64506
64507 पाताले ब्रह्मलोके च स्वर्गे च वसुधातले ।
64508 व्योम्नि कतिपया एव दृश्यन्ते दृष्टदृष्टयः ॥ ३२ ॥
64509
64510 व्योम्नि अन्तरिक्षलोके । दृष्टा दृष्टिश्चिदेकरसं ब्रह्म यैस्ते पुरुषाः ॥ ३२ ॥
64511
64512 इदं हेयमुपादेयमिदमित्यसदुत्थितौ ।
64513 निश्चयौ गलितौ यस्य ज्ञस्यासावतिदुर्लभः ॥ ३३ ॥
64514
64515 असदुत्थितौ स्वात्माज्ञानादुद्भूतौ ॥ ३३ ॥
64516
64517 करोतु भुवने राज्यं विशत्वम्भोदमम्बु वा ।
64518 नात्मलाभादृते जन्तुर्विश्रान्तिमधिगच्छति ॥ ३४ ॥
64519
64520 ननु संसारेऽप्युत्तमराज्यादिपदलाभे विश्रान्तिर्दृश्यते किमात्मदर्शनेन
64521 नेत्याह - करोत्विति । इन्द्रपदलाभेन वृष्ट्यधिकारे अम्भोदं विशतु ।
64522 वरुणपदलाभेनाम्बु वा योगसिद्धिभिर्वा भूतजयात्सर्वत्र विशतु ॥ ३४ ॥
64523
64524 ये महामतयः सन्तः शूराश्चेन्द्रियशत्रुषु ।
64525 जन्मज्वरविनाशाय त उपास्या महाधियः ॥ ३५ ॥
64526
64527 तर्हि विश्रान्त्यर्थिना के उपास्यास्तानाह - ये इति ॥ ३५ ॥
64528
64529 सर्वत्र पञ्चभूतानि षष्ठं किंचिन्न विद्यते ।
64530 पाताले भूतले स्वर्गे रतिमेतु क्व धीरधीः ॥ ३६ ॥
64531
64532 तदुपासनेन तत्त्वबोधेऽपि पुनर्भोगभूमिषु रतिः केन वार्यते तत्राह -

64533 सर्वत्रेति। अपागादग्नेरग्नित्वं त्रीणि रूपाणीत्येव सत्यम् इति
64534 श्रुत्युक्तदिशासर्वभौतिकानां भूतमात्रतालक्षणमिथ्यात्वबोधे तेषु
64535 रत्यनुदयादिति भावः ॥ ३६ ॥
64536
64537 युक्त्या वै चरतो ज्ञस्य संसारो गोष्पदाकृतिः।
64538 दूरसंत्यक्तयुक्तेस्तु महामत्तार्णवोपमः ॥ ३७ ॥
64539
64540 तर्हि भूतानामेव परिशिष्टानामानन्त्यात्तदुत्तरणासंभव इति
64541 चेत्सत्यमिदमज्ञानामेवमेव। तत्त्वविदां तु अन्नेन सोम्य शुङ्गेनापो
64542 मूलमन्विच्छ इति श्रुतिदर्शितयुक्त्या सर्वाधिष्ठानब्रह्मदर्शनेन
64543 भूतानामप्यनृतत्वनिश्चयात्तदुत्तरणं सुलभमेवेत्याशयेनाह -
64544 युक्त्येति। मत्तार्णवः प्रलयार्णवः ॥ ३७ ॥
64545
64546 कदम्बगोलकैस्तुल्यं ब्रह्माण्डं स्फारचेतसः।
64547 किं प्रयच्छति किं भुङ्क्ते प्राप्तेऽस्मिन्सकलेपि सः ॥ ३८ ॥
64548
64549 किंचापरिच्छिन्नात्मानन्ददृष्ट्या ब्रह्माण्डस्याल्पतरत्वदर्शनादपि
64550 कदम्बगोलकमशकभोग्येष्विव तुच्छेषु धनदारादिषु न
64551 दानभोगादिवाञ्छाप्रसक्तिरित्याह - कदम्बेति ॥ ३८ ॥
64552
64553 एतदर्थमबुद्धीनां यन्महासमरक्रियाः।
64554 तन्मन्ये राम धिक्कार्यं द्वन्द्वलक्ऽक्षयावहम् ॥ ३९ ॥
64555
64556 राज्यादिसुखं समराद्यनर्थैर्योधद्वन्द्वलक्षाणां क्षयावहत्वात्तत्त्वविदा
64557 दयालुना धिक्कार्यमेव न सत्कार्यमित्याह - एतदर्थमिति। यच्छब्दार्थे
64558 एतच्छब्दः। अबुद्धीनां मूढानाम्। तद्राज्यसुखमिति शेषः ॥ ३९ ॥
64559
64560 कल्पमात्रेण कालेन सुमहापेलवोदरे।
64561 तस्मिन्नपि हि यो नाशः सर्वाधिरमहाधियाम् ॥ ४० ॥
64562
64563 ननु महाकल्पावसानचिरकालभोग्ये ब्राह्मे पदे तस्य रतिः स्यान्नेत्याह -
64564 कल्पेति। द्विपरार्धावधिना महाकल्पान्तमात्रेण कालेनापि
64565 शीर्यमाणत्वात्सुमहापेलवोदरे तस्मिन्नपि पदे सर्वप्राणिनां
64566 प्रलयनिमित्तत्वादाधिर्मानसव्यथानिमित्तभूतो नाशः सोऽमहाधियां
64567 मूढानामेव। स्पृहणीयो न तत्त्वविदामित्यर्थः ॥ ४० ॥
64568
64569 आत्मनो ज्ञस्य सर्गादिर्यन्मनागपि नोद्गतम्।
64570 तस्मिञ्जगल्लये प्राप्ते किं चिदात्मा बली भवेत् ॥ ४१ ॥
64571
64572 किंच ज्ञस्य तत्त्वविदो दृशा यज्जगल्लयं सर्गादिरुपायान्मनागीषदपि
64573 नोद्गतं नोत्पन्नमेव। न निरोधो न चोत्पत्तिः इत्यादिश्रुतेः। तस्मिंस्तुच्छे
64574 वन्ध्यापुत्रप्राये जगल्लये प्राप्ते चिदात्मा किं बली बलवान् भवेत्। येन तत्र
64575 रागः स्यादित्यर्थः ॥ ४१ ॥
64576
64577 इतः शैलशतैर्व्याप्ता तथेतो जलराशिभिः।
64578 कियानस्य भुवो देहो येनोदारं प्रपूरयेत् ॥ ४२ ॥
64579
64580 असारबहुलत्वादुपयुक्तांशाल्पत्वादपि सार्वभौमादिपदस्य न
64581 स्पृहणीयतेत्याशयेनाह - इत इति। उदारं सर्वत्यागरिक्तविपुलाशयम् ॥ ४२ ॥
64582
64583 न तदस्ति जगत्यस्मिन्सपातालसुरालये।
64584 यन्नामात्मवतो ज्ञस्य किंचित्कार्यतरं भवेत् ॥ ४३ ॥

64585
64586 कार्यतरं अवश्यकर्तव्यम् | सर्वकामावाप्त्या कृतकृत्यत्वादित्यर्थः || ४३ ||
64587
64588 एकतामनुयातस्य व्योमवद्विततस्य च |
64589 स्वस्थस्यात्मवतो ज्ञस्य स्थितस्यात्मन्यचेतसः || ४४ ||
64590
64591 यथा मृगतृष्णा सवितुः प्रकाशमपेक्ष्य सिद्ध्यन्ती सवितारमपेक्षते नतु
64592 सविता मृगतृष्णानिमित्तभूतोऽपि तामपेक्षते तथा
64593 तत्त्वविदश्चित्प्रकाशमपेक्ष्य प्रसिद्ध्यज्जगदेव प्रत्युत तत्त्वविदमपेक्षतां
64594 तत्त्ववित्त पूर्णानन्दारामः कटाक्षेणापि जगन्न पश्यति दूरे तस्य
64595 तदपेक्षेत्याशयेनाह - एकतामित्यादिना | अचेतसो
64596 निर्मनस्कस्यात्मवतस्त्रिलोकीलक्षणा विपुला मृगतृष्णानदीतटी
64597 शान्तसर्वसंसारसुभगा सती शून्यकोटरा आकाशोदरनिभैव न
64598 मूर्तरूपास्तीत्यर्थः | असतामपि बाधितानुवृत्त्या यावत्प्रारब्धक्षयं
64599 प्रतिभासनिर्वाहाय विशिनष्टि - शरीरजालनीहारेति || ४४ ||
64600
64601 शरीरजालनीहारधूसरा शून्यकोटरा |
64602 शान्तसंसारसुभगा त्रिलोकीविपुलातटी || ४५ ||
64603
64604 स्फारब्रह्मामलाम्भोधिफेनाः सर्वे कुलाचलाः |
64605 चिदादित्यमहाभासमृगतृष्णाजलश्रियः || ४६ ||
64606
64607 जगतस्तत्त्वविदात्मप्रकाशापेक्षां प्रपञ्चयति - स्फारेत्यादिना | जलश्रियो
64608 नदीसमुद्रादयः || ४६ ||
64609
64610 आत्मतत्त्वमहाम्भोधिवीचयः सर्गराजयः |
64611 अनुत्तमपदाम्भोदवृष्टयः शास्त्रदृष्टयः || ४७ ||
64612
64613 शास्त्रदृष्टयः श्रौतस्मार्तधर्मब्रह्मादितत्त्वप्रतिभासाः | यद्यपि
64614 लौकिकचाक्षुषादिदृष्टयोऽपि प्रकाशात्मकत्वाद्ब्रह्माम्भोदवृष्टिकल्पा एव
64615 तथापि सुक्षेत्रे वृष्टिवच्छास्त्रदृष्टीनामेव पुरुषार्थोपयोगात्ता
64616 एवोपात्ताः || ४७ ||
64617
64618 चन्द्राग्नितपनालोका घटकाष्ठादिसन्निभाः |
64619 प्रकाशनीयाश्चिद्रूपत्विषो मलकणास्तथा || ४८ ||
64620
64621 अधिष्ठानत्वेन तदपेक्षामुक्त्वा जडानां प्रकाशार्थमपि तदपेक्षामाह
64622 - चन्द्रेति | यदा निर्मला आदित्यादयोऽपि तत्प्रकाशापेक्षास्तदा
64623 अत्यन्तमलिनत्वान्मलकण प्रायाः पार्थिवादिधातवस्तमपेक्षन्त इति किं
64624 वाच्यमित्याशयेन मलकणास्तथेत्युक्तम् || ४८ ||
64625
64626 विहरन्ति स्वमात्मानः संसारवनचारिणः |
64627 कामभोगोलपग्रासमृगा नरसुरासुराः || ४९ ||
64628
64629 एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति इति श्रुतेः सर्वप्राणिनां
64630 जीवनहेतुविषयानन्दार्थमपि तदपेक्षामाह - विहरन्तीति | स्वो
64631 देहस्तदात्मना मीयते परिच्छिद्यते अनुभूयते हिंस्यते वा यः स
64632 स्वप्रस्तथाविध आत्मा येषां कामभोगलक्षणानां उलपानां
64633 तृणराजीनां ग्रासे मृगा इव मृगाः भवन्तीति शेषः || ४९ ||
64634
64635 अस्थिखण्डार्गलामूर्धपिधानाः स्नायुशृङ्खलाः |
64636 जगद्देहा जरज्जीवरक्तमांससमुद्गकाः || ५० ||

मृगाणां वने विहारे स्वातन्त्र्यमस्ति। नरसुरासुरजीवानां तु देहपञ्जरे
बद्धत्वादत्यन्तपारतन्त्र्यदुःखमेवेत्याशयेनाह - अस्थीति। जगतां
सर्वेषां नरसुरासुरादिदेहा जरतामनादिसंसारकान्तारे जीर्णानां जीवानां
पर्यायेण बन्धनार्थाः रक्तमांसनिर्मिताः समुद्गकाः संपुटकाः।
पञ्जराणीति यावत्। कृता धात्रेति शेषः। पञ्जरसामग्रीमेवाह - अस्थीति।
अस्थिखण्डा एव अर्गला विष्कम्भदारूणि येषाम्। मूर्धैव
पिधानमूर्ध्वफलकं येषाम्। स्नायवः शिराः शृङ्खला लोहबन्धनानि
येषाम्॥ ५०॥

वनमालामृगा मुग्धाः पुरसंचारसंस्थितौ [संचापितास्थितौ इति
पाठः]।
बालबुद्धिविनोदाय योजिताश्चर्मपुत्रिकाः॥ ५१॥

एवं जीवाविष्टाश्चर्म पुत्रिका एव संसारवनमालामृगास्त एव मुग्धा
देहविवेकशून्या बालानां स्वस्वबुद्धीनां भोगपल्लवग्रासैर्विनोदाय
तत्तद्भोगभूमिलक्षणपुरसंचारसंस्थितौ धात्रा योजिता इत्यर्थः॥ ५१॥

नैवंविधोदारमना मनागपि महामतिः।
न ज्ञश्चलति भोगौघैर्मन्दवातैरिवाचलः॥ ५२॥

तत्त्वविदोऽपि देहदर्शनात्सोऽपि किं तथा नेत्याह - नैवंविधेति।
उदारमनाः सर्वत्यागी प्रागुक्तमहामतिस्तु एवंविधो मनागपि न।
यलोपस्यासिद्धत्वात्संधिरार्षः। दारेषु दारोपलक्षितभोगेषु मनो यस्य
एवंविधो नेति वा॥ ५२॥

तस्मिन्किल पदे राम ज्ञस्तिष्ठति महोत्तमे।
यस्मिंश्चन्द्रार्कदेशोऽपि न पातालमिव स्थितः॥ ५३॥

चन्द्रार्कमण्डलप्रदेशः पातालमिव परिहृतप्रकाशोऽपि न स्थितः किं
वाच्यं प्रकाशमानो न स्थित इति। अथवा चन्द्रार्कसंचारदेशो विपुल
आकाशोऽपि पातालं भूच्छिद्रमिवाल्पभावेनापि न स्थित इति। तादृशमहापदे
स्थितस्याकाशोदरैकदेशपरिच्छिन्नेषु पदेषु का तृष्णेत्यर्थः॥ ५३॥

यस्यालोकाल्लोकपालाः समालोकाः सुवेदिनः।
शरीरं पान्त्ययमिव पश्यन्मूढाः क्षपार्णवे॥ ५४॥

यस्य तत्त्वविद आलोकाच्चित्प्रकाशाल्लोकपाला ब्रह्मादयः समालोकाः
सर्वजगत्साधारणप्रकाशाः सन्तश्चक्षुरादिद्वारा बहिरन्तर्बुद्ध्या च
सुवेदिनः सम्यग्व्यवहारोचितबोधशालिनः सन्तः क्षपार्णवे अज्ञानसमुद्रे
मग्नाः पश्यन्मूढा अशरीरं स्वात्मानं विविच्य पश्यन्तोऽपि मूढाः
सन्तः अयमज्ञजन इव शरीरात्मभावेन शरीरं पान्ति रक्षन्ति।
दृढाभ्यस्तभोगवासनासहकृताधिकारिकप्रारब्धप्राबल्यादित्यर्थः॥ ५४
॥

न केचन जगद्भावास्तत्त्वज्ञं रञ्जयन्त्यमी।
अप्यभ्यासगताः स्फारहृदयं खमिवाम्बुदाः॥ ५५॥

तत्त्वज्ञं तु वैराग्यदार्ढ्येन भोगवासनाक्षयात्स्फारहृदयं
निर्वासनशुद्धान्तःकरणं केचन लोकपालभोग्या अप्यमी
त्रैलोक्यराज्यादिजगद्भावा अभ्यासगताः पुनःपुनः परिशील्यमाना अपि न
रञ्जयन्तीत्यर्थः॥ ५५॥

न केचन जगद्भावास्तत्त्वज्ञं रञ्जयन्त्यमी।
मर्कटा इव नृत्यन्तो गौरीलास्यार्थिनं हरम्॥ ५६॥

न केचन जगद्भावास्तत्त्वज्ञं रजयन्त्यमी।
प्राक्तनप्रतिबिम्बश्री रत्नं कुम्भगतं यथा॥ ५७॥

प्राक्तनी कुम्भाद्बहिः स्थितिदशायां रत्नान्तर्दृश्यमाना
स्तम्भकुड्यादिप्रतिबिम्बश्रीः॥ ५७॥

वज्रार्पितोपममसन्मयमम्बुभङ्ग-
तुङ्गं तरङ्गकृतबिम्बमिवावलोक्य।
लोलां तदीहितसुखेषु रतिं न याति
तज्ज्ञः कुशैवललवेष्विव राजहंसः॥ ५८॥

उक्तमेवार्थं संक्षिप्योपसंहरति - वज्रेति। तज्ज्ञस्तत्त्ववित्।
ब्रह्मलोकान्तं सर्वं जगद्वैभवमज्ञदृशा
अतिदुर्भेदत्वाद्वज्रार्पितोपमम्। विवेकदृशाम्बुभङ्गेषु जलविलासेषु
तुङ्गमुच्छ्रितं तरङ्गेण स्वाग्रे कृतं
चन्द्रादिप्रतिबिम्बमिवानिर्वचनीयमस्थिरम्। तत्त्वदृशा त्वसन्मयं
तुच्छमवलोक्य अज्ञ इव तदीहितसुखेषु लोलां लौल्यवतीं रतिं न याति यथा
मद्गुभोग्येषु कुत्सितशैवलखण्डेषु राजहंसो रतिं न बध्नाति
तद्वदित्यर्थः॥ ५८॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु
स्थितिप्रकरणे पूर्णाशयस्वरूपवर्णनं नाम सप्तपञ्चाशः सर्गः॥
५७॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे
पूर्णाशयस्वरूपवर्णनं नाम सप्तपञ्चाशः सर्गः॥ ५७॥

## अष्टपञ्चाशः सर्गः ५८

श्रीवसिष्ठ उवाच।

अत्रैव वस्तुन्युदिता शृणु राघव पूर्वजाः।
कचेन गाथा या गीता बार्हस्पत्येन पावनाः॥ १॥

आरूढस्य पदं पूर्णं सार्वात्म्यस्थितिबोधिनी।
रामायात्र वसिष्ठेन कचगाथोपदिश्यते॥ १॥

अत्रैव प्रागुक्ते वस्तुनि विषये पूर्वजाः पूर्वकालवृत्ताः। बार्हस्पत्येन
बृहस्पतिपुत्रेण। अनन्तरापत्ये पत्युत्तरपदलक्षणो ण्यः॥ १॥

कस्मिंश्चिन्मेरुगहनेऽतिष्ठन्सुरगुरोः सुतः।
कदाचिदभ्यासवशाद्विश्रान्तिं प्राप चात्मनि॥ २॥

अभ्यासवशात् श्रुताया ब्रह्मविद्याया मननमिदिध्यासनपरिपाकादिति यावत्॥
२॥

सम्यग्ज्ञानामृतापूर्णा मतिर्नारमतास्य सा।

64741 पञ्चभूतमयेऽमान्ये दृश्येऽस्मिन्पेलवात्मनि [दृश्यः इति
64742 पाठः] ॥ ३ ॥
64743
64744 अमान्ये अनादरार्हे ॥ ३ ॥
64745
64746 स तेन निर्विण्ण इव सदात्मत्वादृते पदम् ।
64747 अपश्यन्समुवाचेदमेको गद्गदया गिरा ॥ ४ ॥
64748
64749 तेन दृश्यारमणेन सदात्मत्वात् ऋते विना सदैकात्म्यातिरिक्तं पदं वस्तु
64750 अपश्यन् एकमात्रपरिशेषान्निर्विण्ण इवेत्युत्प्रेक्षा । हर्षगद्गदया गिरा इदं
64751 वक्ष्यमाणं समुवाच ॥ ४ ॥
64752
64753 किं करोमि क्व गच्छामि किं गृह्णामि त्यजामि किम् ।
64754 आत्मना पूरितं विश्वं महाकल्पाम्बुना यथा ॥ ५ ॥
64755
64756 यदुवाच तदाह - किं करोमीत्यादिना ॥ ५ ॥
64757
64758 दुःखमात्मा सुखं चैव खमाशासुमहत्तया ।
64759 सर्वमात्ममयं ज्ञातं नष्टकष्टोऽहमात्मना ॥ ६ ॥
64760
64761 ननु जीवात्मनो यानि सुखसाधनानि तानि कुरु । यत्र तानि प्राप्यन्ते तत्र गच्छ ।
64762 सुखं तत्साधनानि च गृहाण दुःखसाधनानि दुःखं च त्यजेति चेत्तत्राह
64763 - दुःखमिति । दुःखं तदुपभोक्तात्मा जीवस्तदभिलषणीयं सुखं
64764 चेत्यादि सर्वं जगन्मूलान्वेषणे खमाकाशमात्रं सदाशाभ्यो दिग्भ्यो
64765 मनोरथेभ्यश्च सुमहत्तया आत्ममयम् । स्वार्थे मयट् । आत्मैवेति
64766 ज्ञातमतस्तेनैवानन्दैकरसेनात्मन नष्टसर्वदुःओऽस्मीति न
64767 हानोपादानप्रयोजनमस्तीत्यर्थः ॥ ६ ॥
64768
64769 सबाह्याभ्यन्तरे देहे अधश्चोर्ध्वं च दिक्षु च ।
64770 इत आत्मा ततश्चात्मा नास्त्यनात्ममयं क्वचित् ॥ ७ ॥
64771
64772 बाह्यैराधिभौतिकादिभिराभ्यन्तरैराध्यात्मिकैश्च सहिते
64773 उभयविभागनिमित्तभूते देहे अधः ऊर्ध्वं प्राच्यादिदिक्षु तत्त्वतो
64774 दृश्यमानेष्वात्मैव सर्वमित्यर्थः । तथाच श्रुतिः
64775 आत्मैवाधस्तादात्मोपरिष्टादात्मा पश्चादात्मा पुरस्तादात्मा दक्षिणत
64776 आत्मोत्तरत आत्मैवेदं सर्वम् इति ॥ ७ ॥
64777
64778 सर्वत्रैव स्थितो ह्यात्मा सर्वमात्ममयं स्थितम् ।
64779 सर्वमेवेदमात्मैवमात्मन्येव भवाम्यहम् ॥ ८ ॥
64780
64781 सर्वत्रैवाधिष्ठानभावेन स्थितो विवर्तात्मककल्पितविकारदर्शने
64782 सर्वमात्ममयं तत्त्वदर्शने तु सर्वमात्मैव । एवमनया दृशा अहं
64783 परमार्थात्मनि भवामि वर्ते सर्वदैवेत्यर्थः ॥ ८ ॥
64784
64785 यन्नाम नाम तत्किंचित्सर्वमेवाहमान्तरः ।
64786 आपूरितापारनभाः सर्वत्र सन्मयः स्थितः ॥ ९ ॥
64787
64788 यन्नाम चेतनं प्रसिद्धं यत्किंचिदचेतनं च नाम प्रसिद्धं
64789 तत्सर्वमित्यर्थः । सन्मय इति सदंशस्य सर्वानुगतत्वेन
64790 सर्वाधिष्ठानत्वादित्यर्थः ॥ ९ ॥
64791
64792 पूर्णस्तिष्ठामि मोदात्मा सुखमेकार्णवोपमः ।

64793 इत्येवं भावयंस्तत्र कनककाचलकुञ्जके ॥ १० ॥
64794
64795 मोदात्मेत्यस्य विवरणं सुखमित्यादि ॥ १० ॥
64796
64797 उच्चारयन्नोङ्कारं च घण्टास्वनमिव क्रमात् ।
64798 ओंकारस्य कलामात्रं पाश्चात्यं वालकोमलम् ।
64799 नान्तरस्थो न बाह्यस्थो भावयन्परमे हृदि ॥ ११ ॥
64800
64801 इदं तेन केन प्रमाणेन दृष्टं तदाह - उच्चारयन्निति । तथाच श्रुतिः
64802 प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते । अप्रमत्तेन वेद्धव्यं
64803 शरवत्तन्मयो भवेत् इति । ओंकारेऽकारादिमात्राणां विराडादिवाचकत्वात्तुरीयं
64804 केनांशेन दृष्टं तमाह - ओंकारस्येति ।
64805 पूर्वपूर्वमात्राविराडादिस्वार्थैः सहोत्तरोत्तरत्र प्रबिलाप्य बालः केश
64806 इवोङ्कारस्य शिरसि लक्ष्यमाणं सूक्ष्मं कोमलं च
64807 पाश्चात्यमर्धमात्राख्यं कलामात्रं
64808 सर्वप्रविलयावधिभूततुरीयलक्षणं [लक्षकं इति पाठः]
64809 तुरीयात्मनैव भावयंस्तद्भावापन्नः सन्नान्तरकारणस्थो न
64810 बाह्यकार्यस्थश्च वक्ष्यमाणरीत्या स्थित इत्यर्थः ॥ ११ ॥
64811
64812 व्यपगतकलनाकलङ्कशुद्धो
64813 हृदयनिरन्तरलीनवातवृत्तिः ।
64814 गतघनशरदाशयोपमानः
64815 स्थित इति राम कचः स गायमानः ॥ १२ ॥
64816
64817 तामेव स्थितिं दर्शयन्नुपसंहरति - व्यपगतेति । वातवृत्तिः
64818 प्राणस्पन्दः । सा च कलना निरोधे स्वत एव निलीनेति भावः । गता घना मेघा
64819 यस्मात्तथाविधो यः शरदाशयः शरदाकाशस्तदुपमानः स्थित इत्यर्थः ॥
64820 १२ ॥
64821
64822 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मो० स्थितिप्रकरणे
64823 कचगाथानामाष्टपञ्चाशः सर्गः ॥ ५८ ॥
64824
64825 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे
64826 कचगाथानामाष्टपञ्चाशः सर्गः ॥ ५८ ॥
64827
64828
64829 एकोनषष्टितमः सर्गः ५९
64830
64831 अन्नपानाङ्गनासङ्गादृते नास्तीह किंचन ।
64832 शुभमस्त्विति संवादि महान्किमिव वाञ्छतु ॥ १ ॥
64833
64834 विषयासारता ब्राह्मात्संकल्पाद्विश्वकल्पना ।
64835 धातुर्निर्वेदविश्रान्तिः शास्त्रस्रगश्च कीर्त्यते ॥ १ ॥
64836
64837 प्रासङ्गिकीं कचगाथां समाप्य प्रकृतं भोगजातस्य
64838 तत्त्वविद्वाञ्छाद्ययोग्यत्वोपपादनमेवानुवर्तमानो वसिष्ठो
64839 वैराग्योपदेशाय विषयासारतां प्रपञ्चयति - अन्नपानेत्यादिना । इह
64840 संसारे अन्नपानाङ्गनालक्षणैर्विषयैर्जिह्वोपस्थादीन्द्रियाणां यः
64841 सङ्गस्तस्मादृते शुभं पुरुषार्थरूपमन्यन्नास्ति इति
64842 श्रुतुस्मृत्याप्तोपदेशानुभवसंवादि यथा स्यात्तथा निश्चित्य
64843 महान्परमपदारूढ एतेषु भोगेषु किमिव वाञ्छतु । न
64844 किंचित्तद्वाञ्छायोग्यमत्रास्तीत्यर्थः ॥ १ ॥

64845
64846 तिर्यञ्चः पशवो मूढा ये न तुष्यन्त्यसाधवः |
64847 भोगैः कृपणसर्वस्वैरादिमध्यान्तपेलवैः || २ ||
64848
64849 ननु मोक्ष इव कामोऽपि पुरुषार्थ एवेति सर्वैर्वाञ्छनीय एवेति ये
64850 प्राहुस्तान्प्रत्याह - तिर्यञ्च इत्यादि || २ ||
64851
64852 विश्वासं यान्ति ये लोके तैरलं नरगर्दभैः |
64853 इतः केशा इतो रक्तमितीयं प्रमदातनुः || ३ ||
64854
64855 एतया तोषमायान्ति सारमेया न मानवाः |
64856 मृन्महीदारुतरवो देहा मांसमया अपि || ४ ||
64857
64858 सरमा देवशुनी तत्संततिजाः सारमेयाः शुनकाः | सर्वा मही मृदेव |
64859 सर्वेऽपि तरवो दारुकाष्ठमेव | सर्वेऽपि देहा मांसमया एव || ४ ||
64860
64861 अधो भूरम्बरं पृष्ठे किमपूर्वं सुखाय तु |
64862 मात्रास्पर्शानुसारिण्यो विवेकपदभङ्गुराः || ५ ||
64863
64864 पृष्ठे ऊर्ध्वभागे अम्बरमाकाशमेव | अपूर्वं सारभूतं किमस्ति
64865 यत्सुखायेत्यर्थः | मिन्वन्ति विषयानिति मात्रा इन्द्रियाणि तत्स्पर्शानुसारिण्यः |
64866 विवेकस्य पदे स्थाने तत्त्वे भङ्गुरा बाध्यमानाः || ५ ||
64867
64868 मोहायैवापरामृष्टाः सकला लोकसंविदः |
64869 सर्वस्या एव पर्यन्ते सुखाशायाश्च संस्थितम् || ६ ||
64870
64871 अपरामृष्टा अविचाररमणीयाः | लोकसंविदो जनव्यवहाराः | सर्वस्याः
64872 सुखाशाया विषयलाभेनालाभेन वा पर्यन्ते | चस्त्वर्थे | मालिन्यं
64873 पापविषयादिकालुष्यं वियोगविषादादिप्रयुक्तऽम् दुःखमपि एवं
64874 सांप्रतिकसुखान्तवदेव संस्थितमिति परेण सहान्वयः || ६ ||
64875
64876 मालिन्यं दुःखमप्येवं ज्वालाया इव कज्जलम् |
64877 आगमापायिनोऽनित्या मनःषष्ठेन्द्रियक्रियाः || ७ ||
64878
64879 इन्द्रियशक्तिक्षयाद्विषयसंपत्क्षयाद्वा
64880 भोगक्षयोऽवश्यमापततीत्याशयेनाह - आगमेति || ७ ||
64881
64882 लता नागेन्द्रमृदिता धारयन्ति न संपदः |
64883 पुत्रिका रक्तमांसस्य कान्तेयमिति सादरम् || ८ ||
64884
64885 संपदो विषयसंपदो नित्यमुपभुज्यमाना नागेन्द्रमृदितलताप्रायाः सत्यो
64886 न धारयन्ति क्षीयन्त इत्यर्थः | न केवलमनित्यत्वमेव
64887 कान्तादिभोग्यस्याशुचिनरकरूपत्वमपीत्याह - पुत्रिकेति | अस्थिचये
64888 स्वदेहनाम्ना पुरुषेण रक्तमांसस्य पुत्रिका इयं कान्ता इति बुद्ध्या सादरं
64889 श्लिष्यते | मोहकस्य कामस्यायं क्रम इत्यर्थः || ८ ||
64890
64891 स्वदेहनाम्नाऽस्थिचये [नाम्ना स्थितये इत्यपि क्वचित्पठ्यते तत्तु
64892 सङ्गतिविकलमिति प्रतीयते] श्लिष्यते मोहकक्रमः |
64893 सर्वं सत्यमिदं राम स्थिरमज्ञस्य तुष्टये || ९ ||
64894
64895 अत एवाज्ञस्यैव भोगस्तुष्टये न ज्ञस्येत्याह - सर्वमिति || ९ ||
64896

64897 ज्ञस्यास्थैर्यमसत्यं च जगद्राम न तुष्टये।
64898 अभुक्तेऽपि विषा यैषा विषमूर्च्छां प्रयच्छति॥ १०॥
64899
64900 अस्थिरमेवास्थैर्यम्। अभुक्ते अभोगेऽप्येषा भोगतृष्णा विषा
64901 [विशब्दादर्शभाद्यपि(?) विषयतीत्यर्थः] या
64902 विषवन्मूर्च्छां प्रयच्छति किं पुनर्भुक्ते सतीत्यर्थः॥ १०॥
64903
64904 तां परित्यज्य भोगास्थां स्वात्मैकत्वगतिं भज।
64905 अनात्ममयभावेन चित्तं स्थितिमुपागतम्।
64906 यदा तदैतदाजातं जगज्जालमसन्मयम्॥ ११॥
64907
64908 भोगवासनयैवात्मनः अनात्मदेहादिमयात्मभावनया यदा चित्तं
64909 स्थितिमुपागतं तदेत्यर्थः॥ ११॥
64910
64911 वासनावशतो ब्रह्ममनसा कल्पितं वपुः।
64912 तेजसा श्रितकुड्येन हेमाभत्वमिवात्मनः॥ १२॥
64913
64914 ननु अस्मच्चित्तस्थित्यनुसारिदेहादिजगज्जातमिति कथमुच्यते
64915 विरिञ्चिसंकल्पजातस्य तन्मनोनुसारित्वस्यैवौचित्यादित्याशङ्क्याह -
64916 वासनेति। ब्रह्मणो विरिञ्चेर्मनसा अस्मद्वासनाकर्मादिवशतस्तदनुसारेणैव
64917 संकल्पाज्जगद्वपुः कल्पितमित्यर्थः॥ १२॥
64918
64919 श्रीराम उवाच।
64920
64921 वैरिञ्चपदमासाद्य मनो ब्रह्मन्महामते।
64922 इदं जगत्सुघनतां कथमानयति क्रमात्॥ १३॥
64923
64924 अन्यस्यान्यानुसारिरूपकल्पने दृष्टान्तमाह - तेजसेति। यथा
64925 आश्रितहेमरजतेन्द्रनीलादिकुड्येन तेजसा सूर्याद्यालोकेन तत्तदनुसारिस्वरूपं
64926 कल्पितं तद्वदित्यर्थः। प्रसङ्गाद्रामो विरिञ्चिमनसो जगत्कल्पनाक्रमं
64927 पृच्छति - वैरिञ्चेति। पूर्वोपासकस्य मनः प्राक्तनं व्यष्ट्यभिमानं
64928 समष्ट्यात्मताभावनाप्रचयजन्यसंस्कारपरिपाकेन निरस्य
64929 समष्ट्यात्मनाभिनिष्पत्तिलक्षणं वैरिञ्चपदमासाद्य कार्यब्रह्मभूतं
64930 सत् इदं जगत्कथं क्रमात्सुघनतां चतुर्विधभूतग्रामनिबिडताम्।
64931 अवान्तरसर्गविषयोऽयं प्रश्नः। आद्यसर्गक्रमस्य प्राग्बहुश उक्तत्वात्॥ १३॥
64932
64933 श्रीवसिष्ठ उवाच।
64934
64935 गर्भतल्पात्समुत्थाय पद्मजः प्रथमः शिशुः।
64936 ब्रह्मेति शब्दमकरोद्ब्रह्मा तेन स उच्यते॥ १४॥
64937
64938 गर्भः पद्मकोशस्तल्लक्षणात्तल्पात्। संकल्पजालं
64939 संकल्पात्मकमनःसमष्टिस्तद्रूपस्य मनसा स्वेनैव
64940 कल्पितचतुर्मुखाकृतेः॥ १४॥
64941
64942 संकल्पजालरूपस्य मनसा कल्पिताकृतेः।
64943 अकरोत्तस्य संकल्पलक्ष्मीः पदमथोत्तरे॥ १५॥
64944
64945 अथ उत्थानलक्षणजागरणकल्पनानन्तरं उत्तरे सर्गे पदं व्यवसायमकरोत्
64946 ॥ १५॥
64947
64948 ततः संकल्पयामास पूर्वं तेजो महाप्रभम्।

64949 शरदन्ते लताचक्रचक्रीकृतदिगन्तरम् ॥ १६ ॥
64950

64951 सर्वव्यवहाराणामादित्याद्यालोकाधीनत्वात्प्रथममादित्यसर्ग
64952 विवक्षुस्तदुपादानसर्वनभोव्यापितेजःसर्गमुक्त्वा तदेव तेजो वर्णयति -
64953 तत इत्यादिना । शरत्कालान्ते हिमपाण्डुरैर्लताचक्रैरिव चक्रीकृतं
64954 दिगन्तरालं येन ॥ १६ ॥
64955

64956 पक्षप्रतिमनिस्यूतकर्मणातिगुणाक्षरम् ।
64957 पुञ्जपिञ्जरपर्यन्तं हेमज्ञाननिभाम्बरम् ॥ १७ ॥
64958

64959 पक्षप्रतिमनि प्रसारितपक्षिपक्षसदृशे पार्श्वद्वये स्यूतकर्मणा
64960 तन्तुसंतानकरणेन अतिगुणं बहुतन्तुकमिव अक्षरं क्षयधर्मवर्जितं
64961 शून्यात्मकमाकाशं येन ।
64962 प्रसृतैस्तेजःपुञ्जैर्दिगन्तगतचक्रवालगिरिशिखरचित्रधातुसंभेदात्पिञ्जर्
64963 आ दिक्पर्यन्ता येन । हेमेव
64964 भास्वरमनावृतापरिच्छिन्नप्रकाशैकरसत्वाद्ब्रह्मज्ञाननिभं
64965 चाम्बरमाकाशं येन ॥ १७ ॥
64966

64967 जालहेमलताजालजटालनिजमन्दिरम् ।
64968 कचत्प्रसरदुद्यानाकारकुण्डलमण्डितम् ॥ १८ ॥
64969

64970 विकासाय दलकोटरेषु प्रविष्टैः किरणैर्जालेषु वातायनेषु
64971 कल्पितैर्हेमलताजालैरिव भास्वरैः केसरैर्जटालं निजमन्दिरं
64972 वैरिञ्चपद्मं येन । एकार्णवतरङ्गेषु प्रतिफलनेन कचद्भिर्दीप्यमानैः
64973 प्रसरदुद्यानवनाकारैश्च कुण्डलैः किरणावर्तैर्मण्डितम् ॥ १८ ॥
64974

64975 तं शरीरं मनस्तस्मिंस्ततस्तेजसि भास्वरे ।
64976 आत्माकारसमाकारं भास्वरं समकल्पयत् ॥ १९ ॥
64977

64978 तस्मिंस्तेजसि हिरण्यगर्भस्य स्वसदृशमूर्त्यन्तरकल्पनेन प्रवेशमाह ##-
64979 प्रागुक्तं मनस्तस्मिंस्तेजसि भास्वरं तेजोमयं तं
64980 पुराणादिप्रसिद्धमात्माकारसमाकारं समकल्पयत् ॥ १९ ॥
64981

64982 स ततस्तेजसस्तस्मादभ्युदेति दिवाकरः ।
64983 जालमण्डलमध्यस्थो ज्वलत्कनककुण्डलः ॥ २० ॥
64984

64985 स देवस्ततस्तस्मात्तेजसः पिण्डीभूताद्दिवाकरः सन्नद्यापि प्रत्यक्षमभ्युदेति ।
64986 प्रभाजालात्मकस्य मण्डलस्य मध्यस्थः । ज्वलती कनककुण्डले यस्य । अथवा
64987 दिग्जाललक्षणस्य वधूमण्डलस्य मध्यस्थः साधारणः । ज्वलन्
64988 प्रकाशमानः कनककुण्डलभूत इत्यर्थः ॥ २० ॥
64989

64990 ज्वलज्जटाभारधरोपान्तविस्फारपावकः ।
64991 ज्वालाविशालावयवः पूरिताकाशमण्डलः ॥ २१ ॥
64992

64993 ज्वलन्तो जटाभारधरा ज्वा * *? लीधारिण उपान्तेषु विस्फारा
64994 पावका यस्य ॥ २१ ॥
64995

64996

64997

64998 अथ ब्रह्मा महाबुद्धिरन्यास्तास्तेजसः कलाः ।
64999 अपाल्य यदसद्ब्रह्मा तरङ्गानिव सागरः ॥ २२ ॥
65000

65001 तदनन्तरं मरीच्यादिप्रजापतिसर्गमाह - अथेति। ब्रह्मा
65002 विश्वबृंहणकर्ता महाबुद्धिः सर्वज्ञः समष्टिबुद्ध्यात्मा वा ब्रह्मा
65003 स चतुर्मुखः अन्या आदित्यनिर्माणावशिष्टास्तेजसस्ताः कलाः। अपाल्य अपवार्य।
65004 विभज्येति यावत्। यन्नवधा असत् क्षिप्तवान्। तेऽपि
65005 तेजःखण्डास्तत्संकल्पवशादेव संप्राप्तसर्वसिद्धयस्तत्समानशक्तयः
65006 प्रजापतयः सन्तो यथा संकल्पितं वस्तु क्षणादेवाग्रतो दृष्ट्वा आपुः
65007 प्रापुरिति परेणान्वयः। अपपूर्वादलं
65008 भूषणपर्याप्तिशक्तिवारणनिषेधेष्वितिधातोर्ल्यप्। असु क्षेपणे इति धातोः ऊदितो
65009 वा इत्यङि आट्थुकोरभावश्छान्दसः॥ २२॥
65010
65011 तेऽपि संकल्पसंप्राप्तसिद्धयः समशक्तयः।
65012 यथासंकल्पितं वस्तु क्षणाद्दृष्ट्वापुरग्रतः॥ २३॥
65013
65014 संकल्पयन्तो यान्यांस्ते नानाभूतगणान्बहून्।
65015 भूतेष्वन्यांस्तु तेष्वन्यांस्तेष्वन्यान्विविधानपि॥ २४॥
65016
65017 तेभ्यो देवदानवयक्षराक्षसमानवादिसर्गप्रवृत्तिरित्याह -
65018 संकल्पयन्त इति। ते प्रजापतयो यान् यान् पुत्रपौत्रपरम्परया
65019 देवदानवादिजातिभेदैर्नानाविधान् व्यक्तिभेदाच्च बहून्भूतगणान्
65020 संकल्पयन्तो बभूवुस्तांस्तानापुरित्यनुवज्जते। तेष्वग्रे
65021 मैथुनसृष्टिप्रवृत्तिं दर्शयति - भूतेष्विति॥ २४॥
65022
65023 संस्मृत्य वेदांस्तदनु यज्ञक्रमगुणान्बहून्।
65024 जगद्गृहादयं ब्रह्मा मर्यादां समकल्पयत्॥ २५॥
65025
65026 संकल्पयन्त आपुरित्यत्राप्यनुवर्तते। ततो यज्ञाविकर्मप्रवृत्तिं दर्शयति ##-
65027
65028 ब्राह्मं रूपमुपादाय मनोनाम महद्वपुः।
65029 तनोतीत्थमिमां दृष्टिं भूतसंततिसंकुलाम्॥ २६॥
65030
65031 समुद्राचलवृक्षाढ्यां कृतलोकोत्तरक्रमाम्।
65032 मेरुभूपीठदिक्कुञ्जजटालोदरमण्डलाम्॥ २७॥
65033
65034 सुखदुःखजराजन्ममरणस्वाध्बोधिताम्।
65035 रागद्वेषमयोद्विग्नां गुणत्रयमयात्मिकाम्॥ २८॥
65036
65037 शारिरैः सुखदुःखजराजन्ममरणैः स्वैर्मानसैश्चाधिभिः सर्वथा
65038 हेयोऽयं संसार इति बोधिताम्॥ २८॥
65039
65040 मनोहस्तैर्विरिंचोत्थैर्यद्यथा कल्पितं पुरा।
65041 तत्तथैवाखिलं द्रष्टुं दृश्यतेऽद्यापि मायया॥ २९॥
65042
65043 ननु सर्वस्य व्यवहारस्य विरिंचिमनःवृतत्वे यज्ञादीनां
65044 शारीरत्वमुपासनादीनां मानसत्वमिति व्यवस्थायां को हेतुस्तमाह -
65045 मनोहस्तैरिति। विरिञ्चोत्थैर्मनोवृत्तिभिर्हस्तैर्वा यैद्वस्तु यथा द्रष्टुं
65046 प्राप्तुं च योग्यं पुराकल्पितं तत्तथैवाद्यापि व्यवस्थितं दृश्यते प्राप्यते
65047 च। तत्कल्पनानुसारेणैवान्येषामपि कल्पनानियतेरित्यर्थः॥ २९॥
65048
65049 इत्थं सर्वेषु भूतेषु केषुचित्त्वथवा पुनः।
65050 संकल्पयति संसारं परं पश्यति चित्स्थितम्॥ ३०॥
65051
65052 समष्टिदृष्ट्या सर्वेषु भूतेषु व्यष्टिदृष्ट्या एकजीवपक्षेण वा

65053 केषुचित्स्थितं मनः संकल्पयति चित्पश्यति | अथवा मन एव चित्स्थितं
65054 संकल्पयति परं पश्यति च || ३० ||
65055
65056 मोह एवंमयो मिथ्या जागतः स्थिरतां गतः |
65057 संकल्पनेन मनसा कल्पितोऽचिरतः स्वयम् || ३१ ||
65058
65059 एवंमय उक्तप्रकारः | अचिरतः शीघ्रमेव संकल्पितः || ३१ ||
65060
65061 संकल्पवशतः सर्वाः प्रसवन्ति जगत्क्रियाः |
65062 संकल्पवशतो देवा निर्यान्ति नियतिस्थिताः || ३२ ||
65063
65064 कोपितायाः प्रजानाथर्जगत्सृष्टेः कुलोद्भवः |
65065 ब्रह्मा संचिन्तयत्येष पद्मासनगतः प्रभुः || ३३ ||
65066
65067 इत्थं सर्गविस्तारं प्रपञ्च्य तदुपरमे शास्त्रनिर्माणे च कारणं वक्तुं
65068 पीठिकां रचयति - कोपिताया इति | इन्द्रविरोचनादिभिर्देवासुरप्रजानाथैः
65069 स्वस्वोत्कर्षाय मनुष्यादिप्रजासु धर्माधर्माभिवृद्धये
65070 यतमानैर्बलात्सात्त्विकराजसतामसवृत्तिषु
65071 प्रवर्तनाद्वधबन्धजन्मजरामयादिक्लेशसहस्रैः कोपिताया अतिपीडिताया
65072 जगत्सृष्टेः सकाशान्निर्विण्णः सर्वप्रजाकुलान्युद्भवन्त्यस्मादिति कुलोद्भव
65073 एष प्रागुक्तो ब्रह्मा वक्ष्यमाणप्रकारेण संचिन्तयतीत्यर्थः || ३३ ||
65074
65075 मनःस्पन्दनमात्रेण चित्रं चित्तं यदुत्थितम् |
65076 सृष्टिर्वा भोगिनी स्फारा व्यवहारविकारिणी || ३४ ||
65077
65078 मनःस्पन्दनमात्रेण यच्चित्तं व्यष्टिजीवोपाधिभूतम् | तदुपभोगार्था
65079 भोगिनी स्फारा विस्तीर्णा भुवनादिसृष्टिर्वेति यदुत्थितं इदं सर्वं मया
65080 स्वसंकल्पजालमेवामितस्ततमिति परेणान्वयः || ३४ ||
65081
65082 रुद्रोपेन्द्रमहेन्द्राद्या [महेन्द्राढ्या इति पाठः]
65083 शैलसागरसंकुला |
65084 पातालरोदोदिक्स्वर्गमार्गसंकटकोटरा || ३५ ||
65085
65086 संकल्पजालमत्यन्तं मयेदमभितस्ततम् |
65087 अधुना विरतोऽस्म्यस्माद्विकल्पोल्लासनक्रमात् || ३६ ||
65088
65089 इति निश्चित्य विरतः कल्पनानर्थसंकटात् |
65090 अनादिमत्परं ब्रह्म स्मरत्यात्मानमात्मना || ३७ ||
65091
65092 विरत इति शमं प्राप्तः सन् || ३७ ||
65093
65094 तमासाद्य तदाभासे पदे गलितमानसे |
65095 सुखं तिष्ठति शान्तात्मा तल्पेऽधः श्रमवानिव || ३८ ||
65096
65097 तं परमात्मानं स्मृतिमात्रेण आसाद्य प्राप्य तदेव आसमन्ताद्भासते
65098 यस्मिंस्तथाविधे गलितमानसे सप्तमभूमिकालक्षणे पदे सुखं
65099 तिष्ठतीत्यर्थः | अधःसंवृत्तापवरके क्लृप्ते तल्पे | रहसीति यावत् || ३८ ||
65100
65101 निर्ममो निरहंकारः परां शान्तिमुपागतः |
65102 अविक्षुब्ध इवाम्भोधिरात्मनात्मनि तिष्ठति || ३९ ||
65103
65104 ध्यानात्कदाचिद्भगवान्स्वयं विरमति प्रभुः |

65105 बन्धनात्सलिलस्यन्दात्सौम्यत्वादिव वारिधिः ॥ ४० ॥
65106
65107 बन्धनात् एकाकारवृत्तिधारणानिर्बन्धलक्षणाद्ध्यानात् ॥ ४० ॥
65108
65109 विचारयति संसारं सुखदुःखसमन्वितम् ।
65110 आशापाशशतैर्बद्धं रागद्वेषभयातुरम् ॥ ४१ ॥
65111
65112 ततः स करुणाक्रान्तमना भूतविभूतये ।
65113 करोतीह महार्थानि शास्त्राणि विविधानि च ॥ ४२ ॥
65114
65115 अध्यात्मज्ञानगर्भाणि वेदवेदाङ्गसंग्रहम् ।
65116 पुराणादीनि चान्यानि मुक्तये सर्वदेहिनाम् ॥ ४३ ॥
65117
65118 पुनस्त्पदमालम्ब्य परमापद्विनिर्गतः ।
65119 स्वस्थस्तिष्ठति शान्तात्मा निर्मन्दर इवार्णवः ॥ ४४ ॥
65120
65121 तत्प्रागुक्तं सप्तमभूमिकालक्षणं परं पदम् ।
65122 सृष्टिविक्षेपलक्षणाभ्य आपद्भ्यो विनिर्गतः ॥ ४४ ॥
65123
65124 अवलोक्य जगच्चेष्टां मर्यादां विनियोज्य च ।
65125 ब्रह्मा कमलपीठस्थः पुनः स्वात्मनि तिष्ठति ॥ ४५ ॥
65126
65127 कदाचित्केवलं सर्वसंकल्पपरिहीनया ।
65128 यदृच्छयानुग्रहार्थं लोकक्रमवदास्थितः ॥ ४६ ॥
65129
65130 केवलमनुग्रहार्थमेवेत्यर्थः ॥ ४६ ॥
65131
65132 नार्जवं नास्य संत्यागो वपुषो नच संग्रहः ।
65133 नाना न चेतनं नेह न स्थितिर्नास्थितिः स्थिता ॥ ४७ ॥
65134
65135 तर्हि तस्य समाधिकाले आर्जवं सर्गसंहारादिकाले तु तस्य संत्यागो
65136 देहादिसंग्रहः सर्गरूपेण नानात्वं व्युत्थानकाले चेतनं पद्मे
65137 स्थितिरन्यत्र चास्थितिरिति नानाभावसमारम्भेषु चित्तवृत्तिषु चाज्ञवदेव
65138 वैषम्यं प्राप्तमित्याशङ्क्य क्रमात्परिहरति - नार्जवमित्यादिना ॥ ४७ ॥
65139
65140 सर्वभावसमारम्भः समः सर्वासु वृत्तिषु ।
65141 परिपूर्णार्णवाकारो मुक्तशेषोऽवतिष्ठते ॥ ४८ ॥
65142
65143 कदाचित्केवलं सर्वसंकल्पपरिहीनया ।
65144 यदृच्छयानुग्रहार्थं लोकानां प्रतिबुध्यते ॥ ४९ ॥
65145
65146 एषा ब्राह्मी स्थितिः पुण्या या मयोक्ता महामते ।
65147 यातां विधिसुरानीकौ तामेतां सात्विकीमपि ॥ ५० ॥
65148
65149 उपसंहरति - एषेति । इदानीं मानसः प्रजापतीनां सर्गस्ते हि
65150 संकल्पसंप्राप्तसिद्धयः स्वयं प्रज्ञातज्ञानयोगैश्वर्याः प्रथमो
65151 विध्यनीकः । मैथुनसर्गेऽपि देवगन्धर्वयक्षादीनां
65152 सात्त्विकत्वात्सकृदुपदेशप्राप्तज्ञानैश्वर्यः सुरानीको मध्यमः ।
65153 मनुष्यादिस्तु रजस्तमोग्रस्तः प्रयत्नसहस्रसाध्यज्ञानैश्वर्यो
65154 नरानीकोऽधम इत्यनीकत्रयविभागं मनसि निधाय तेषां
65155 स्वकारणासादितचित्तशुद्ध्यनुरूपज्ञानोदयेन ब्रह्मप्राप्तिं विभज्य
65156 दर्शयति - यातामित्यादिना । तां वर्णितप्रकारां एतां सात्त्विकीं

65157 सत्त्वोत्कर्षप्राप्यां ब्राह्मीं स्थितिं विधिसुरानीकावपि यातां प्राप्नुयाताम् ॥
65158 ५० ॥
65159
65160 चित्सर्गोपरमाकाशे ब्रह्मणो यन्मनःफलम् ।
65161 उदेति प्रथमः सैव ब्रह्मत्वं समवाश्नुते ॥ ५१ ॥
65162
65163 तत्र प्रथमानीकस्य मानसोपासनाफलत्वान्मनोमात्रजन्यत्वेन
65164 सौक्ष्म्यात्तत्प्राप्तौ विशेषमाह - चित्सर्गेति । यद्यस्मात्
65165 प्रथमोऽनीकश्चिद्रूपे सर्वसर्गोपरमरूपे सर्वब्रह्माकाशे ब्रह्मणो
65166 विरिञ्चेर्मनःकल्पितं फलमिव मनःफलं सत्प्रथममदेति अतः सैव स एव
65167 । सोचि लोपे चेत्पादपूरणम् इति सुलोपः । स्वतः सिद्धज्ञानैश्वर्येण प्रथमं
65168 सम्यगवगम्याश्नुते इत्यर्थः ॥ ५१ ॥
65169
65170 सर्गे स्थितिं गते त्वन्या योदेति कल्पनापरा ।
65171 सा व्योमानिलमाश्रित्य प्रविश्यौषधिपल्लवान् ॥ ५२ ॥
65172
65173 द्वितीयानीकस्यौषधिपल्लवविकारभूतसोमाज्यपयःसाध्यकर्मफलत्वेन
65174 तत्परिणामतया प्राकृतापेक्षया स्थौल्यादुपदेशमात्रमपेक्ष्य
65175 ब्रह्मप्राप्तिरिति विशेषं दर्शयति - सर्गे इत्यादिना ।
65176 प्रजापतीनामोषध्यादीनां च सर्गे स्थितिं गते सति या सुरानीकलक्षणान्या
65177 अपरा प्रथमा पेक्षया न्यूना कल्पनोदेति सा प्रथमं चन्द्रकलात्मना
65178 व्योमानिलं चाश्रित्यौषधिपल्लवान्प्रविश्य सोमाज्यपयोभावेनाग्नौ
65179 हूयमाना सूर्यमण्डले अमृताकारपरिणता प्रजापतिप्रभृतिभिरुपभुक्ता
65180 तद्रेतोरूपपरिणता मैथुनद्वारेणेन्द्रादिसुरत्वं कुबेरादियक्षादिदेवयोनितां
65181 चायातीति परेणान्वयः ॥ ५२ ॥
65182
65183 काचित्सुरत्वमायाति काचिदायाति यक्षताम् ।
65184 उदेति प्रथमं सैषा ब्रह्मत्वं समवाश्नुते ॥ ५३ ॥
65185
65186 सैषा सात्त्विकत्वान्मनुष्याद्यपेक्षया प्रथमं
65187 प्रजापतीनामनुग्रहोपदेशादिना ज्ञानैश्वर्यसंपदा उदेति । अतः
65188 प्रथममेव ब्रह्मत्वं समवाश्नुत इत्यर्थः ॥ ५३ ॥
65189
65190 या यत्सत्त्वं समन्वेति सा तदेवाशु जायते ।
65191 जाता संसर्गवशतस्तस्मिन्नेव च जन्मनि ।
65192 बध्यते मुच्यते वासौ स्वयमन्वारभेदतः ॥ ५४ ॥
65193
65194 तर्हि किं सर्वेषां देवानां मुक्तिर्नेत्याह - येति । देवेषु मानवेषु वा जाता
65195 या व्यक्तिर्यत्सत्त्वं ज्ञानवैराग्यसंपन्नं भोगलम्पटं वा मैत्र्यादिना
65196 समन्वेति सा तत्संगत्या आशु तदेव जायते तादृशगुणवती भवतीत्यर्थः ।
65197 भोगलम्पटसंसर्गवशतः स्वयमपि तथाभूता सती बध्यते
65198 तद्विपरीतसंगत्या स्वयमपि ज्ञानवैराग्यसंपन्ना मुच्यत इत्यर्थः । तर्हि
65199 तृतीयानीकैः किं कार्यं तदाह - स्वयमिति । अतो बन्धमोक्षयोः
65200 सङ्गानुरूपत्वात्स्वयमेव पौरुषप्रयत्नेन
65201 साधुसंगमसच्छास्त्रश्रवणादीनिन्द्रियमनोजयोपायांशान्वारभेत् ।
65202 यावत्फलोदयमभ्यस्येदित्यर्थः ॥ ५४ ॥
65203
65204 इत्थं गतास्थितिरियं किल रामभद्र
65205 सृष्टिः स्फुटप्रकटसंकटकर्मलब्धा ।
65206 आविर्भविद्विविधवेगविहारभार-
65207 संरम्भगर्भविधृता कलनापदे सा ॥ ५५ ॥
65208

65209 उक्तं सर्वं संक्षिप्योपसंहरति - इत्थमिति | स्फुटानि प्रकाशबहुलानि
65210 उपासनानि प्रकटानि सर्वजनप्रसिद्धानि यज्ञादीनि संकटान्यनर्थफलानि
65211 कर्माणि निषिद्धमिश्राणि तैर्निमित्तैः क्रमाल्लब्धा विविधैः
65212 प्रारब्धवेगैर्विहारभारैः क्रीडाकौतुकैः संरम्भगर्भैः
65213 क्रोधलोभसंभृतैश्च व्यवहारैः क्रमाद्विधृता अवष्टब्धा सती
65214 कलनापदे सर्गोन्मुखे ब्रह्मणि इत्थं प्रागुक्तसंकल्पकल्पनयैव गता
65215 प्राप्ता आस्थितिः सत्ता यया तथाविधा सेयं त्र्यनीकात्मिका
65216 सृष्टिराविर्भविदित्यर्थः || ५५ ||
65217
65218 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० स्थितिप्रकरणे
65219 कमलजव्यवहारवर्णनं नामैकोनषष्टितमः सर्गः || ५९ ||
65220
65221 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे
65222 कमलजव्यवहारवर्णनं नामैकोनषष्टितमः सर्गः || ५९ ||
65223
65224 षष्टितमः सर्गः ६०
65225
65226 श्रीवसिष्ठ उवाच |
65227
65228 अस्मिन्भगवति ब्रह्मंश्चपलं पदमाश्रिते |
65229 पितामहे महाबाहो कृतसर्गव्यवस्थितौ || १ ||
65230
65231 ब्रह्मोत्थितानां जीवानामिह देहग्रहक्रमः |
65232 वर्ण्यते सात्त्विकानां च प्राधान्याद्बोधभागिनाम् || १ ||
65233
65234 प्रागुक्तत्र्यनीकसृष्टिं सा व्योमानिलमाश्रित्येति
65235 संक्षेपोक्तक्रमप्रपञ्चनेन वर्णयितुं भूमिकां रचयति -
65236 अस्मिन्नित्यादिना | ब्रह्मन् ब्रह्मणि पितामहे | सुपां सुलुक् इति सप्तम्या लुकि न
65237 ङिसंबुद्ध्योः इति नलोपनिषेधः | चपलं पदं समाधिव्युत्थानम् || १ ||
65238
65239 जगज्जीर्णारघट्टेऽस्मिन्वहति स्वव्यवस्थया |
65240 विप्रेतभूतघटया रज्ज्वा जीविततृष्णया || २ ||
65241
65242 आरघट्टे घटीयन्त्रे विप्रेतानां मृतानां भूतानां घटया
65243 समूहलक्षणया विप्रेतानि भूतान्येव घटा यस्यां तथाविधया वा
65244 घटीमालारज्ज्वा जीवितं पुनर्देहग्रहणेन जीवनं जलं च तद्विषयतृष्णया
65245 आरोहावरोहाभ्यां वहति परिवर्तमाने || २ ||
65246
65247 ब्रह्मोत्थेषु च भूतेषु विशत्सु भवपञ्जरम् |
65248 आवर्तेष्वीश्वरव्योमबालमध्यविवर्तिषु || ३ ||
65249
65250 अन्येषु मनःसु ईश्वरस्य मायाशबलब्रह्मणो बालः पुत्रभूतं प्रथमजं
65251 यद्व्योम तन्मध्ये विवर्तिषु भ्रमणशीलेषु सत्सु || ३ ||
65252
65253 मनःस्वन्येषु वातान्तलोलाहतकणेष्विव |
65254 अनारतं विनिर्यान्ति विशन्त्यन्ये तथाभितः || ४ ||
65255
65256 हे राम ब्रह्मणि जीवौघा अनारतं सततं केचन
65257 उपाधिविनिर्गमादग्निविस्फुलिङ्गवद्विनिर्यान्ति | केचित्त्वन्ये
65258 उपाधिविलयात्सुप्ताविव विश्रान्तये प्रविशन्तीत्यर्थः || ४ ||
65259
65260 राम ब्रह्मणि जीवौघास्तरङ्गा इव वारिधौ |

65261 अनाद्यन्तपदोत्पन्नाः कलनापदमागताः ॥ ५ ॥
65262
65263 उत्पन्ना इत्यस्य व्याख्या कलनापदमागता इति ॥ ५ ॥
65264
65265 भूताकाशं विशन्त्येते धूमश्रीरिव चाम्बुदम् ।
65266 एकतां यान्ति जीवौघा ब्रह्मण्याकाशमारुतैः ॥ ६ ॥
65267
65268 तत्र पूर्वसर्गेऽनुक्तं तृतीयानीकोत्पत्तिक्रमं प्रथमं प्रपञ्चयति -
65269 भूताकाशमित्यादिना । ब्रह्मणि अध्यस्तैराकाशमारुतैः सह
65270 क्षीरोदकवदेकतां यान्ति ॥ ६ ॥
65271
65272 दिनं तन्मात्रवातेन तत्प्राणात्मतया यथा ।
65273 आक्रम्यन्ते प्रचण्डेन दैत्यौघेनामरा इव ॥ ७ ॥
65274
65275 ततस्तेजोम्बुभुवामुत्पत्तौ सत्यां दिनं प्रकाशं प्राप्य
65276 शब्दस्पर्शरूपरसगन्धलक्षणतन्मात्रसहितेन प्रागुक्तवायुना तथा
65277 तदुपभोगहेत्वमुख्यमुख्योभयविधप्राणात्मतया च आक्रम्यन्ते
65278 वशीक्रियन्ते ॥ ७ ॥
65279
65280 भूतप्राणानिलं तेन गन्धवाहेन तेन च ।
65281 निविशन्ति शरीरेषु जीवा गच्छन्ति वीर्यताम् ॥ ८ ॥
65282
65283 एवं लिङ्गदेहतां प्राप्तास्तेन प्राणात्मभावेन तेन गन्धवाहेन
65284 भूततन्मात्रसहितवायुना च सहान्नोदकादिद्वारा चतुर्विधभूतग्रामाणां
65285 प्राणानिलमन्नग्रासकमपानवृत्तिभेदं प्राप्य शरीरेषु निविशन्ति ।
65286 नेर्विशः इति तङभावश्छान्दसः । वीर्यतां रेतोभावम् ॥ ८ ॥
65287
65288 ततो जगति जायन्ते भवन्ति प्राणिनोऽस्फुटाः ।
65289 अन्या धूमादिमाजाता राम जीवपरम्परा ॥ ९ ॥
65290
65291 अस्फुटा अनभिव्यक्तज्ञानैश्वर्याः । तृतीयानीकस्य सर्गक्रममुक्त्वा
65292 द्वितीयानीकस्य तमाह - अन्या इति । अस्या अपि लिङ्गदेहप्राप्तिपर्यन्तं प्रागुक्त
65293 एव क्रमः । ओषधिवनस्पतिप्रवेशेन क्षीराज्यादिपरिणत्याग्नौ हुता
65294 आहुतिर्धूमद्वारा सूर्यमण्डलं प्राप्य सूर्यकिरणद्वारा चन्द्रानुप्रवेशेन
65295 वा रंहत्यधिकरणन्यायेनाहुत्यप्परिवेष्टितयजमानप्राणानां
65296 धूमादिमार्गेण चन्द्रमण्डलानुप्रवेशाद्वा धूमादिं मार्गं आजाता
65297 अनुप्रविष्टाअ ॥ ९ ॥
65298
65299 तन्मात्रवति तावद्धिरशून्येऽम्बरकोटरे ।
65300 उदेति यावद्भगवानिन्दुरुद्दाममण्डलः ॥ १० ॥
65301
65302 सापि चन्द्रकलात्मतां प्राप्ता कल्पवृक्षफलेषु
65303 रसभावेनानुप्रवेशात्तदुपभोक्तृवीर्यभावपरिणामेन देवगर्भे जायते इति
65304 क्रममभिप्रेत्याह - तन्मात्रवतीत्यादिना ।
65305 प्रागुक्ततन्मात्रात्मकलिङ्गदेहवति । उद्दाममण्डलः पूर्णो
65306 भगवानिन्दुर्यावत् यावद्धी रश्मिभिर्जगद्धासयन्नुदेति तावद्धिर्लोलैः
65307 पाण्डुरूपवद्रश्मिभिरशून्ये पूर्णे अत एव क्षीराम्बुधेर्निधौ आश्रयभूते
65308 प्रतिनिधिभूते वा अम्बरकोटरे सा तिष्ठतीति शेषः ॥ १० ॥
65309
65310 क्षीराम्बुधिनिधौ लोलैः पाण्डुवद्रश्मिभिर्जगत् ।
65311 ततस्तेष्वतिरम्येषु चन्द्ररश्मिषु संपतत् ॥ ११ ॥
65312

65313 ततस्तदनन्तरं तेषु चन्द्ररश्मिषु नन्दनादिवने संपतत् संपतत्सु ।
65314 छान्दसः सुपो लुक् । रश्म्यनुसारेण संपतन्ती तस्मिन्वने प्रेष्या दासी आन्तरेषु
65315 गृहाभ्यन्तरकृत्येष्विव लोला व्यग्रा विहगी पक्षिणीप्राया करोति प्रवेशमिति
65316 शेषः ॥ ११ ॥
65317
65318 करोति विहगी लोला वने प्रेष्यान्तरेष्विव ।
65319 तेभ्योऽपि स्वरसेनैव यान्ति पीवरतामपि ॥ १२ ॥
65320
65321 ततस्मिन्वने फलानि तेभ्यश्चन्द्ररश्मिभ्योऽपिशब्दाद्रविरश्मिभ्यश्च
65322 निमित्तेभ्यः स्वरसेनैव पीवरतां क्रमादुपचयं माधुर्यमपि यान्ति ॥ १२ ॥
65323
65324 फलेषु तेषु बध्नाति पदमिन्दुकरात्क्षता ।
65325 जीवाली क्षीरपूर्णेषु मातुः स्तनभरेष्विव ॥ १३ ॥
65326
65327 एवं रसपूर्णेषु प्रागुक्ता जीवाली इन्दुकरात् क्षता विभक्ता सती तेषु फलेषु
65328 पदं स्थितिं बध्नाति । यथा शिशुर्मातुः स्तनभरेषु पदं बध्नाति तद्वत् ॥
65329 १३ ॥
65330
65331 ताः फलावलयः पक्का भविष्यन्ति मरीचिभिः ।
65332 तेष्वेव वीर्यमागत्य तिष्ठन्त्यप्राप्तबोधिताः ॥ १४ ॥
65333
65334 मरीचिभिः रविरश्मिभिः । तेष्वेव फलेषु कश्यपादिभिरुपभुक्तेषु वीर्य
65335 वीर्यतामागत्य प्राप्य । अप्राप्तबोधिताः मूर्च्छितप्रायाः ॥ १४ ॥
65336
65337 प्रसुप्तवासनाजालजीवतागर्भपञ्जरम् ।
65338 अधितिष्ठति बीजश्रीः सुप्तपत्रा यथा वटम् ॥ १५ ॥
65339
65340 मूर्च्छितजीवानां प्रबुद्धपितृमातृगर्भस्थितौ दृष्टान्तमाह -
65341 बीजश्रीरिति । यथा सुप्तपत्रा अनाविर्भूताङ्कुरविटपपत्रा
65342 वटबीजश्रीराविर्भूतविटपाङ्कुरपत्रफलं वटमधिष्ठाय तिष्ठति
65343 तद्वदित्यर्थः ॥ १५ ॥
65344
65345 यथा काष्ठे स्थितश्चाग्निर्यथा मृदि घटा स्थिताः ।
65346 अनेकक्रमयोगेन परागत्य महेश्वरात् ॥ १६ ॥
65347
65348 न केवलं गर्भ एव मूर्च्छितानामन्यमाश्रित्य तिरोहितस्थितिः किंतु
65349 महेश्वरात् प्रलये उपाधिप्रविलयेन प्राप्तादव्यक्तात्परागत्य
65350 निर्गम्याकाशादिभावे लिङ्गारम्भकाले चन्द्ररश्म्याद्यनुप्रवेशकाले च
65351 अनेकक्रमयोगेन प्रवृत्तेस्तथैव स्थितिरित्यर्थः ॥ १६ ॥
65352
65353 अदृष्टान्यशरीरश्रीः क्रमतेयो न चोदति ।
65354 स हि सत्ये जातिः स्यादुदारव्यवहारवान् ॥ १७ ॥
65355
65356 एवं गर्भे प्राप्तानां जन्मनि निमित्तभेदाद्विशेषं दर्शयति -
65357 अदृष्टेत्यादिना । प्राग्जन्मनि न दृष्टा अन्यस्य स्त्रीपुत्रादिशरीरस्य श्रीर्येन
65358 तथाविधः सर्वतो विरक्तः सन् यो मरणान्तं कालं क्रमते यश्च
65359 रागादिभिर्बहुभिः
65360 कर्मकाण्डादिशास्त्रैश्चैहिकपारलौकिकभोगसाधनलौकिकवैदिककर्मसु
65361 चोद्यमानोऽपि न चोदति न प्रवर्तते स हि धीरः पुरुषधौरेयः
65362 प्रागुक्तक्रमाद्देवगर्भे जायमानः सती अत्यन्तसात्त्विक्येव जातिः संस्तत्र
65363 ज्ञानं प्राप्य उदारजीवन्मुक्तोचितव्यवहारवान्स्यादित्यर्थः ॥ १७ ॥
65364

65365 तेनैव मोक्षभागी चेज्जन्मना स तु सात्त्विकः ।
65366 अथैतां योनिमासाद्य कृत्यां जन्मपरम्पराम् ॥ १८ ॥
65367
65368 देवपदाधिकारप्राप्त्यनुकूलकर्मोपासनानुष्ठायिनां त्वाह - अथेति ।
65369 एतां देवयोनिमासाद्य कृत्यां छेत्तुं शक्यामपि जन्मपरम्परां
65370 भोगलाम्पट्यादकृन्तन्स्वाधिकारभोगरक्षार्थमेव प्राप्तजन्मा चेत्स
65371 तमोयुक्तो राजससात्त्विक इत्यर्थः ॥ १८ ॥
65372
65373 रक्षार्थं प्राप्तजन्मा चेत्तमोराजससात्त्विकः ।
65374 पाश्चात्यजन्मना पुंसो राम वक्ष्यामि चाधुना ॥ १९ ॥
65375
65376 इदानीं प्रथमानीकजानां केवलसात्त्विकत्वमपुनर्जन्मतां चाह -
65377 पाश्चात्येति । पाश्चात्येन चरमेण जन्मना नरसुरानीकापेक्षया प्राधान्येन
65378 प्राजापत्याधिकारेण संसारमायातः केवलसात्त्विको विध्यनीको यथा मुच्यते इति
65379 तथा वक्ष्यामीत्यन्वयः ॥ १९ ॥
65380
65381 प्राधान्येन यथाऽयातः संसारमिति सात्त्विकः ।
65382 स कदाचिन्न कश्चिच्च संभवत्यनघाकृते ॥ २० ॥
65383
65384 स प्रथमानीकजः पुमान् कश्चिदपि कदाचिदपि न पुनः संभवति मुच्यत
65385 एवेत्यर्थः ॥ २० ॥
65386
65387 संभवन्तीह पुरुषा राम राजससात्त्विकाः ।
65388 प्रविचार्य समायात मन्तव्यं चेह तद्धिया ॥ २१ ॥
65389
65390 के तर्हि संभवन्ति तानाह - संभवन्तीति । केवलसात्त्वकस्य
65391 पुनर्जन्माभावे को हेतुस्तमाह - प्रविचार्येति । यतस्ते प्राग्जन्मन्यप्यात्म
65392 तत्त्वं श्रवणाद्युपायैः प्रविचार्य प्रतिबन्धमात्रक्षयाय तद्योग्यं
65393 सात्त्विकं जन्म समायाता इह जन्मन्यपि तेषां धिया सदैवात्मतत्त्वमेव
65394 मन्तव्यं मननेन परिशीलनीयं तस्मादित्यर्थः ॥ २१ ॥
65395
65396 प्राधान्येन समायाता ये यदा परमात्मनः ।
65397 दुर्लभाः पुरुषा राम ते महागुणशालिनः ॥ २२ ॥
65398
65399 अत एव ते दुर्लभा इत्याह - प्राधान्येनेति ॥ २२ ॥
65400
65401 ये चान्ये विविधा मूढा मूकास्तामसजातयः ।
65402 तेषां स्थावरतुल्यानां किंच राम विचार्यते ॥ २३ ॥
65403
65404 ये विधिसुरनरानीकेभ्योऽन्ये रक्षःपिशाचादयस्तिर्यञ्चश्च तेषां
65405 स्थावरादितुल्यत्वाज्ज्ञानाधिकारकथायां विचारयोग्यतैव नास्तीति तेनोपन्यस्ता
65406 इत्याह - ये चान्ये इति ॥ २३ ॥
65407
65408 कतिपया न गता भवभावनां
65409 नरसुराः प्रकृतक्रमजन्मनि ।
65410 अहमिव प्रविचारणयोग्यता-
65411 मनुगतो ननु राजससात्त्विकः ॥ २४ ॥
65412
65413 तत्त्वदौर्लभ्यमेवोपपादयन्नुपसंहरति - कतिपया इति । प्रकृते क्रमेण
65414 प्राप्तेऽपि उत्तमजन्मनि कतिपया एव नराः सुराश्च भवभावनां
65415 सांसारिकभोगरुचिं न गताः । तथाच वैराग्यमेवातिदुर्लभमित्यर्थः ।
65416 किंबहुना । अप्यर्थे ननुशब्दः । तेष्वहमिव जन्मप्रभृत्येव

65417 शमदमादिसर्वगुणसंपत्त्या प्रकर्षेणात्मविचारणयोग्यतामनुगतोऽपि
65418 निरन्तरसमाधिसुखविघ्नभूतराजकुलपौरोहित्याद्यधिकारप्रारब्धयोगाद्राज्
65419 असात्त्विक ईषद्रजोयुक्तसात्त्विक एव न शुद्धसात्त्विक इत्यतिदौर्लभ्यद्योतनाय
65420 निरभिमानादतिशयोक्तिः ॥ २४ ॥
65421
65422 स्थितस्य ते महापदाविचार्ययैवमायता।
65423 विचारय त्वमञ्जसा तदद्य चेह न द्वयम् ॥ २५ ॥
65424
65425 ममेव तवापि वैराग्यशमदमादिसंपत्तिपूर्णत्वमस्त्येव किंतु महतः
65426 परमात्मपदस्य अविचार्यया अविचारणया स्थितस्यैवमुक्तप्रकारा
65427 संसारभ्रान्तिरायता विस्तीर्णा। तत्पदं इह मत्पुरतः अद्यैव अञ्जसा शीघ्रं
65428 विचारय। विचारयमात्रेण त्वमेव च इह प्रत्यक्षं न द्वयमद्वयं
65429 तत्परमपदमसीत्यर्थः। अविचार्य या महती आपदा आपत् ते आयता आयाता इति वा
65430 योज्यम् ॥ २५ ॥
65431
65432 इत्यार्षे वासिष्ठमहारामायणे वाल्मीकीये दे० मो० स्थिति०
65433 विचारपुरुषनिर्णयप्रसङ्गोपदेशजीवावतारो नाम षष्टितमः सर्गः ॥
65434 ६० ॥
65435
65436 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे
65437 विचारपुरुषनिर्णयप्रसङ्गोपदेशजीवावतारो नाम षष्टितमः सर्गः ॥ ६० ॥
65438
65439 एकषष्टितमः सर्गः ६१
65440
65441 श्रीवसिष्ठ उवाच।
65442
65443 ये हि राजससात्त्विक्या जाता भुवि महागुणाः।
65444 ते नित्यमेव मुदिताः प्रकाशाः स्व इवेन्दवः ॥ १ ॥
65445
65446 मुक्तियोग्याः प्रशस्यन्ते जना राजससात्त्विकाः।
65447 तेषां विवेकवैराग्यक्रमश्चात्रोपदिश्यते ॥ १ ॥
65448
65449 ये प्रविचारणयोग्यतामनुगताः पुरुषा राजससात्त्विक्या प्राक्तनकर्मोपासनया
65450 भुवि जाताः ॥ १ ॥
65451
65452 न खेदमभिगच्छन्ति व्योमभागो मलं यथा।
65453 नापदा म्लानिमायान्ति निशि हेमाम्बुजं यथा ॥ २ ॥
65454
65455 खेदं मानसं दुःखम्। म्लानिं शारीरं दुःखम् ॥ २ ॥
65456
65457 नेहन्ते प्रकृतादन्यत्ते नान्यत्स्थावरो यथा।
65458 रमन्ते स्वसदाचारैः स्वार्थेभ्यः पादपा यथा ॥ ३ ॥
65459
65460 यथा स्थावरो वृक्षादिः प्रारब्धभोगादन्यन्नेहते तद्वते प्रकृतात्
65461 ज्ञानतत्साधनसंपदोऽन्यन्नेहन्ते। स्वार्थेभ्यः स्वीयपुष्पफलादिभ्यो
65462 हेतुभ्यः ॥ ३ ॥
65463
65464 नित्यमापूर्यतां याति सुधायामिन्दुसुन्दरी।
65465 राम राजससत्त्वस्य मोक्षमायात्यसौ यथा ॥ ४ ॥
65466
65467 राजससत्त्वस्योक्तपुरुषस्य धीः
65468 शान्त्यादिसुधायामुपचितायामापूर्यतामुपचेयतां याति। अत एव

65469 शुक्लपक्षेन्दुरिव सुन्दरी || ४ ||
65470
65471 आपद्यपि न मुञ्चन्ति शशिवच्छीततामिव |
65472 प्रकृत्यैव विराजन्ते मैत्र्यादिगुणकान्तया || ५ ||
65473
65474 शीततामिव स्थितां सौम्यतां शशिवन्न मुञ्चन्ति || ५ ||
65475
65476 नवस्तबकभाविन्या लतयेव वनद्रुमाः |
65477 समाः समरसाः सौम्याः सततं साधुसाधवः || ६ ||
65478
65479 नवैः स्तनकल्पैः स्तबकैर्भावः प्रेमा तद्वत्या लतयेव नित्याश्लिष्टया
65480 गुणकान्तयेति पूर्वेणान्वयः | साधुभ्योऽपि साधवः || ६ ||
65481
65482 अब्धिवद्धृतमर्यादा भवन्ति भवता समाः |
65483 अतस्तेषां महाबाहो पदमापदवासनम् || ७ ||
65484
65485 यत एवंगुणसंपन्ना अतस्तेषामापदामवासनमनधिकरणं यत्पदं तत्तु
65486 तदेव यथा गन्तव्यं तथेह जगति अखेदिना मनसा विहर्तव्यमिति परेणान्वयः
65487 || ७ ||
65488
65489 सततं तत्तु गन्तव्यं गन्तव्यं नापदर्णवे |
65490 तथा तथेह जगति विहर्तव्यमखेदिना || ८ ||
65491
65492 आत्मोदयाश्च वर्धन्ते यथाऽराजससात्त्विकाः |
65493 अचिन्त्यगत्या सच्छास्त्रं विचार्यं च पुनःपुनः || ९ ||
65494
65495 अराजसा रजःक्षयोपेताः सात्त्विका आत्मोदयाः स्वानन्दलाभा यथा वर्धन्ते
65496 तथा अचिन्त्यगत्या मूढचिन्तनार्हविषयगतिपरित्यागेन पुनःपुनः
65497 सच्छास्त्रं विचार्यं भवतीत्यर्थः || ९ ||
65498
65499 अनित्यता स्वमनसा विविधैवाशु भावतः |
65500 आदावन्ते च यां नित्यं क्रियां त्रैलोक्यवर्तिनीम् || १० ||
65501
65502 एवं भावतः अत्यादरेण सर्ववस्तूनां विविधा नानानिमित्तोपपाद्या अनित्यतापि
65503 आशु विचार्या भवतीति विपरिणम्यते | एतावन्तं कालमुदारप्रशंसामुखेन
65504 रामाय सद्गुणानुपदिश्येदानीं साक्षादेवोपदिशति - आदावित्यादिना |
65505 एवमनित्यतां विचारयन् सुधीर्विशुद्धबुद्धिः आदौ ऐहिकोपभोगायोपयुक्तां
65506 लौकिकीमन्ते मरणोत्तरकाले उपयुक्तां पारलौकिकीं च त्रैलोक्यवर्तिनीं क्रियां
65507 तत्फलभूतान्पशुपुत्रधनस्वर्गविमानाप्सरःप्रभृतिपदार्थांश्च
65508 आपदेवेति भावयेत् न इतरत् संपदियमिति भावयेदिति परेणान्वयः || १० ||
65509
65510 पदार्थानापदेवाशु भावयेन्नेतरत्सुधीः |
65511 असम्यग्दर्शनं त्यक्त्वा व्यर्थमज्ञानसंततिम् || ११ ||
65512
65513 स्मर्तव्यं सम्यगेवेदं ज्ञानमर्थमनन्तकम् |
65514 कोऽहं कथमिदं जातं संसाराडम्बरं विभो || १२ ||
65515
65516 इदं वक्ष्यमाणप्रकारं विचारात्मकं ज्ञानमनन्तकमर्थं प्राप्तुमिति
65517 शेषः | विधिवदुपगतेन साधुभिः सतीर्थ्यैः सह प्रयत्नेन सेवादिना
65518 प्रसादितेन प्राज्ञेन गुरुणा हे प्रभो कोऽहमित्यादिसविनयप्रश्नपूर्वकं
65519 विचार्य स्मर्तव्यमिति संबन्धः || १२ ||
65520

65521 प्रविचार्य प्रयत्नेन प्राज्ञेन सह साधुभिः।
65522 नच कर्मसु मङ्क्तव्यं नानर्थेन सहावसेत् ॥ १३ ॥
65523
65524 श्रवणाङ्गतया कर्मसंन्यासमाह - नचेति। मङ्क्तव्यं मज्जनीयम्।
65525 मस्जेर्भावे तव्यः मस्जिनशोर्झलि इति नुम् ॥ १३ ॥
65526
65527 द्रष्टव्यः सर्वविच्छेदः संसारानुगतः सदा।
65528 साधुरेवानुगन्तव्यो मयूरेणाम्बुदो यथा ॥ १४ ॥
65529
65530 सर्वस्य प्रियस्य विच्छेदोऽवश्यंभावीति द्रष्टव्यः ॥ १४ ॥
65531
65532 अहंकारस्य देहस्य संसारस्याप्लवस्य च।
65533 स्वविचारमलंकृत्य सत्यमेवावलोकयेत् ॥ १५ ॥
65534
65535 आन्तरस्याहंकारस्य ततो बाह्यस्य देहस्य ततोऽपि बाह्यस्य
65536 पुत्रमितादिसंसारस्य चाप्लवार्णवत्रयकल्पस्य प्लवभूतं स्वविचारं अलं
65537 पूर्णभावावसानं कृत्वा ॥ १५ ॥
65538
65539 शरीरमस्थिरमपि संत्यक्त्वा घनशोभनम्।
65540 वीतमुक्तावलीतन्तुं चिन्मात्रमवलोकयेत् ॥ १६ ॥
65541
65542 सत्यमेवावलोकयेदिति यदुक्तं तत्रोपायमाह - शरीरमिति।
65543 अपिशब्दादहंकारमपि संत्यक्त्वा। ल्यबकरणं छान्दसम्। घनशोभनं
65544 अत्यन्तं शुभम्। वीता व्याप्ता मुक्तावली येन तथाविधम्।
65545 छान्दसत्वादुपसर्जनह्रस्वाभावः। भूतेति पाठे स्पष्टम्।
65546 तदन्तर्गततन्तुमिव सर्वदेहाहंकारसाधारणमन्तर्गतं
65547 साक्षिचिन्मात्रमित्यर्थः ॥ १६ ॥
65548
65549 तस्मिन्पदे नित्यतते सर्वगे सर्वभाविते।
65550 शिवे सर्वमिदं प्रोतं सूत्रे मणिगणा यथा ॥ १७ ॥
65551
65552 दृष्टान्तसाम्यं दर्शयति - तस्मिन्नित्यादिना ॥ १७ ॥
65553
65554 यैव चिद्भुवनाभोगे भूषणे व्योम्नि भास्करे।
65555 धराविवरकोशस्थे सैव चित्कीटकोदरे ॥ १८ ॥
65556
65557 कुम्भव्योम्नां न भेदोऽस्ति यथेह परमार्थतः।
65558 चितौ शरीरसंस्थानां न भेदोऽस्ति तथानघ ॥ १९ ॥
65559
65560 चिद्भेदाशङ्कां निरस्यति - कुम्भेति। शरीरसंस्थानां जीवानाम्। चितौ
65561 चिति ॥ १९ ॥
65562
65563 सर्वेषामेव भूतानां तिक्तकट्वादिमेदिनाम् [कट्वादिवेदिनां इति
65564 पाठः]।
65565 एकत्वादनुभूतेर्हि कुतश्चिन्मात्रभिन्नता ॥ २० ॥
65566
65567 यथा एकपुरुषास्वादमीयतिक्तकट्वादिरसभेदेऽपि
65568 नानुभवभेदस्तद्वद्देहादिभेदेष्वपीत्याशयेनाह - सर्वेषामिति ॥ २० ॥
65569
65570 एकसिन्नेव सततं स्थिते सन्मात्रवस्तुनि।
65571 जातोऽयमयमुन्नष्ट इति तेषां तवेह धीः ॥ २१ ॥
65572

चेतनेषु चिद्भेद इव सर्ववस्तुषु सत्स्वरूपभेदोऽपि नास्तीत्याशयेनाह - एकस्मिन्निति। तेषां जातादिवस्तूनाम्। तव इह मूढजनेषु प्रसिद्धा धीर्य शास्त्रीयेत्यर्थः॥ २१॥

नच तन्नाम वस्त्वस्ति यद्भूत्वा संप्रलीयते।
आभासमात्रमेवेदं न सन्नासच्च राघव॥ २२॥

कीदृशी तर्हि शास्त्रीयधीस्तामाह - नचेति॥ २२॥

उद्भूतेनाप्रशान्तेन चेतसा सपदि स्थितम्।
नेह मोहान्त आमोक्षान्नेदं यत्तदवस्तु च॥ २३॥

न सन्नासच्चेत्युक्तिमुपपादयति - उद्भूतेनेति। यत आमोक्षात् उद्भूतेनाभिव्यक्तेन अप्रशान्तेन च चेतसा स्फुटं गृह्यमाणं सपदि स्वकाले स्थितं अतो नासत्। मोहस्यान्ते निवृत्तौ तु आमोक्षात्प्रसिद्धे इह पूर्वकाले इदं नास्ति मोक्षकाले त्विदं सुतरां नास्तीत्यवस्तु चेति न सदपीत्यर्थः॥ २३॥

किं किलासति रामेह मोहजाले समुज्झति।
यत्किंचित्सङ्गसङ्गत्या विमोहे कारणं हि तत्॥ २४॥

ज्ञानसाफल्यपर्यालोचनेऽपि मोहादेः सत्त्वमत्यन्तासत्त्वं वा दुर्वचमित्यनिर्वचनीयतैव फलितेत्याह - किं किलेति। मोहजाले अत्यन्तासति ज्ञानेन किं किल समुज्झति निरस्यति। निरस्याभावे निरासकसाफल्यायोगात्। एवमत्यन्तसत्त्वे वा ज्ञानेन किं समुज्झति। सत्यस्य ज्ञाननिरस्यत्वादर्शनात्। तस्माद्यः कश्चिच्चासौ सङ्गश्च यत्किंचित्सङ्गोऽनिर्वचनीयाध्यासस्तल्लक्षणया संगत्या रज्जुसर्पादीव तत् दृश्यजातं विमोहे कारणमिति परिशेषात्सिद्धमित्यर्थः॥ २४॥

(असति [इदमन्तिमं पद्यं क्वचिद्दृश्यते] जगति किं किलेह
मोहः
सति च किमङ्ग विमोहकारणं तत्।
जननमरणसंस्थितिष्वतस्त्वं
भव खमिवातिसमः सदोपशान्तः॥)

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपायेषु स्थितिप्रकरणे जननमरणसंस्थितिर्नामैकषष्टितमः सर्गः॥ ६१॥

इति श्रीवासिष्ठमहारामायणे तात्पर्यप्रकाशे स्थितिप्रकरणे जननमरणसंस्थितिर्नामैकषष्टितमः सर्गः॥ ६१॥

## द्विषष्टितमः सर्गः ६२

श्रीवसिष्ठ उवाच।

धीरो विचारवान्साक्षादादावेव महाधिया।
शास्त्रेण विदुषा शास्त्रं सुजनेन विचारयेत्॥ १॥

रामस्य सर्वशास्त्रोक्तगुणसंपत्तिरुच्यते।

65625 अवरस्यापि सत्सङ्गपौरुषाभ्यां वरस्थितिः ॥ १ ॥
65626
65627 अचिन्त्यगत्या सच्छास्त्रं विचार्यं च पुनःपुनरिति प्रागुक्तं तत्कथं विचार्य
65628 तदाह - धीर इति। धीरो बाह्याभ्यन्तरद्वन्द्वसहिष्णुः। विचारवान्
65629 ऊहापोहकुशलः। साक्षात्स्वयमेव तद्विज्ञानार्थं स
65630 गुरुमेवाभिगच्छेत्समित्पाणिः इत्यादिशास्त्रेणोपगतेन विदुषा सुजनेन
65631 शिष्यापराधसहिष्णुना गुरुणा सह शास्त्रमादौ विचारयेदित्यर्थः ॥ १ ॥
65632
65633 सुजनेन वितृष्णेन विदुषा महता सह।
65634 प्रविचार्य महायोगात्पदमासाद्यते परम् ॥ २ ॥
65635
65636 सुजनेन शोभनाभिजनेन। महायोगान्मनोनाशान्तात्समाधेः ॥ २ ॥
65637
65638 शास्त्रार्थसुजनासङ्गवैराग्याभ्याससत्कृतः।
65639 पुरुषस्त्वमिवाभाति निजविज्ञानभाजनम् ॥ ३ ॥
65640
65641 शास्त्राणां वेदान्तोपयोगिशास्त्रान्तराणामर्थानां सत्कर्मसदाचारादीनां
65642 सुजनासङ्गवैराग्यादीनां च निरन्तराभ्यासैः सत्कृतः संस्कृतो यः
65643 पुरुषस्त्वमिवाभाति स प्रकृतशास्त्रश्रवणे निजस्य
65644 प्रत्यक्तत्त्वविषयस्वविज्ञानस्य भाजनमित्यर्थः। अथवा
65645 अध्यात्मशास्त्रादिभिः सत्कृतो निजविज्ञानभाजनं भूत्वा त्वमिवाभातीति
65646 योजना ॥ ३ ॥
65647
65648 त्वमुदारनिजाचारो धीरो गुणगणाकरः।
65649 अधितिष्ठसि निर्दुःखं वीतसर्गमनोमलः ॥ ४ ॥
65650
65651 उक्तगुणास्त्वयि सन्त्येवेत्याह - त्वमिति ॥ ४ ॥
65652
65653 नूनमुत्सर्जिताभ्रेण शरद्व्योम्ना समो भवान्।
65654 भव भावनया मुक्तो युक्त उत्तमसंविदा ॥ ५ ॥
65655
65656 इदानीं रामस्य प्रबोधाज्जीवन्मुक्ततां संभावयन्नाह - नूनमित्यादिना
65657 ॥ ५ ॥
65658
65659 चिन्तामुक्तकलावत्या मुक्तकल्पनया स्थितम्।
65660 मनो मुक्तविभागं च मुक्तमेव न संशयः ॥ ६ ॥
65661
65662 तत्संभावनाबीजं मुक्तमनसो लक्षणमाह - चिन्तेति।
65663 सर्वबाह्यार्थचिन्ताभिर्मुक्तया अन्तश्च परमात्मना क्षीरोदकवदेकीभावात्
65664 कलावत्या ब्रह्माकारपरिणतिलक्षणकौशलवत्या मुक्तानामनुभवसिद्धया
65665 कल्पनया स्थितं मनो मुक्तमेव नात्र संशय इत्यर्थः ॥ ६ ॥
65666
65667 तवोत्तमानुभावस्य त इदानीं नरा भुवि।
65668 चेष्टामनुसरिष्यन्ति रागद्वेषविहीनया ॥ ७ ॥
65669
65670 एवं मुक्तमनसस्तव चेष्टान्ते प्रागुक्ता जीवन्मुक्ता इदानीं रागद्वेषविहीनया
65671 प्रागुक्तकल्पनया अनुसरिष्यन्ति ॥ ७ ॥
65672
65673 वहिर्लोकोचिताचारा विहरिष्यन्ति ये जनाः।
65674 भवार्णवं तरिष्यन्ति धीमन्तः पोतकान्विताः ॥ ८ ॥
65675
65676 पोतका ज्ञानप्लवास्तैरन्विताः ॥ ८ ॥

65677
65678 तव तुल्यमतिर्यः स्यात्सुजनः समदर्शनः |
65679 योग्योऽसौ ज्ञानदृष्टीनां मयोक्तानां सुदृष्टिमान् || ९ ||
65680
65681 यावद्देहं धिया तिष्ठ रागद्वेषविहीनया |
65682 बहिर्लोकोचिताचारस्त्वन्तस्त्यक्ताखिलैषणः || १० ||
65683
65684 किं तर्हि जीवन्मुक्तस्य मम शरीरत्यागो यथेष्टाचरणं वास्तु नेत्याह -
65685 यावद्देहमिति | लोकोचितोधर्मशास्त्रसद्दुत्तानुसारी आचारो यस्य || १० ||
65686
65687 परां शान्तिमुपागच्छ यथान्ये गुणशालिनः |
65688 अविचार्यास्त एवेह गोमायुशिशुधर्मकाः || ११ ||
65689
65690 गोमायुधर्मकाः स्वार्थकौशलेन परवञ्चकाः | शिशुधर्मका
65691 यथेष्टाचारिणो मूढाः || ११ ||
65692
65693 ये स्वभावा महासत्या नृणा सात्त्विकजन्मनाम् |
65694 तान्भजन्पुरुषो याति पाश्चात्योदारजन्मताम् || १२ ||
65695
65696 शुद्धसात्त्विकजन्मनां जीवन्मुक्तानां ये स्वभावाः स्वाभाविकाः
65697 शमदमादिगुणास्तान्भजन् अर्जयन्साधारणोऽपि पुरुषः क्रमात् ज्ञानं
65698 प्राप्य पाश्चात्योदारजन्मतां चरमजीवन्मुक्तशरीरं प्राप्नोतीत्यर्थः || १२ ||
65699
65700 यानेव सेवते तन्तुरिह जातिगुणान्सदा |
65701 अथान्यजातिजातोऽपि [१] जातिं भजति तां क्षणात् || १३ ||
65702
65703 तत्कुतस्तत्राह - यानेवेति | उत्कृष्टजातिगुणसेवने उत्कृष्टजातौ जन्म
65704 लभते निकृष्टजातिगुणसेवने निकृष्टमिति नियमादित्यर्थः || १३ ||
65705
65706 प्राक्तनानखिलान्भावान्यान्ति कर्मवशं गताः |
65707 पौरुषेणावजीयन्ते धराधरमहाकुलाः || १४ ||
65708
65709 प्राक्तनानिति | यं यं वापि स्मरन्भावम् इति न्यायादित्यर्थः | अवश्यं
65710 निकृष्टतमेनापि मोक्षायैव यत्नः कार्यः पौरुषादनुपरतस्य
65711 फलसिद्धेरवश्यंभावादित्याशयेनाह - पौरुषेणेति | धराधरा
65712 राजानः पर्वताश्च तेषां महाकुलाः सेनावनानि च
65713 नीतिशास्त्रानुसारिपौरुषेण च्छेदनादिना चावजीयन्ते लोके || १४ ||
65714
65715 धैर्येणाभ्युद्धरेद्बुद्धिं पङ्कान्मुग्धगवीमिव |
65716 तामसीं राजसीं चैव जातिमन्यामपि श्रितः || १५ ||
65717
65718 अभ्युद्धरेद्विषयेभ्यो निवर्तयेत् | तामसीं रक्षःपिशाचशूद्रादिरूपां जातिं
65719 योनिं राजसीं क्षत्रियवैश्यादिरूपामन्यां सत्त्वतमोमिश्रसर्पादिजातिमपि
65720 श्रितः प्राप्तः पुरुषः || १५ ||
65721
65722 स्वविवेकवशाद्यान्ति सन्तः सात्त्विकजातिताम् |
65723 अतश्चित्तमणौ स्वच्छे यद्राघव नियोज्यते || १६ ||
65724
65725 उक्तमेव प्रपञ्चयति - स्वविवेकेत्यादिना | चित्तमणौ चित्तस्फटिके | नियोज्यते
65726 आसज्ज्यते || १६ ||
65727
65728 तन्मयो विभवत्येवं तस्माद्भवति पौरुषम् |

पौरुषेण प्रयत्नेन महार्हगुणशालिनः ॥ १७ ॥

मुमुक्षवो भवन्तीह पाश्चात्यशुभजातयः ।
न तदस्ति पृथिव्यां वा दिवि देवेषु वा क्वचित् ॥ १८ ॥

पौरुषेण प्रयत्नेन यन्नाप्नोति गुणान्वितः ।
ब्रह्मचर्येण धैर्येण वीर्यवैराग्यरंहसा ।
युक्त्या युक्तेन हि विना न प्राप्नोषि तदीहितम् ॥ १९ ॥

हितं महासत्त्वतयात्मतत्त्वं
विधाय बुद्ध्या भव वीतशोकः ।
तव क्रमेणैव ततो जनोऽयं
मुक्तो भविष्यत्यथ वीतशोकः ॥ २० ॥

उक्तं संक्षिप्योपसंहरति - हितमिति ।
सर्वप्राणिनामात्यन्तिकदुःखोपशमोपलक्षितनिरतिशयानन्दरूप##-
विशुद्धसत्त्वगुणोपचयोपाये प्रणिधानवत्या बुद्ध्या विधाय आत्मभावेन
स्थिरीकृत्य वीतशोको भवेत्युपदेश आशीश्च । तवोपदिष्टेन
क्रमेणान्योऽप्ययमधिकारिजनो मुक्तो भविष्यतीत्यर्थः ॥ २० ॥

पाश्चात्यजन्मनि विवेकमहामहिम्ना
युक्ते त्वयि प्रसृतसर्वगुणाभिरामे ।
सत्त्वस्थकर्मणि पदं कुरु रामभद्र
मैषा करोतु भवसङ्गविमोहचिन्ता ॥ २१ ॥

हे रामभद्र त्वं विवेकमहामहिम्ना युक्ते प्रसृतैः पल्लवितैः सर्वैः
शान्तिदान्त्यादिगुणैरभिरामेऽस्मिन्पाश्चात्यजन्मनि प्राप्ते सति सत्त्वस्थानां
जीवन्मुक्तानां कर्मणि सप्तमभूमिकालक्षणे पदं स्थानं कुरु । एषा
वैराग्यप्रकरणोपवर्णिता सर्वजनप्रसिद्धा च भवसङ्गविमोहचिन्ता त्वयि
पदं स्थानं मा करोत्वित्यर्थः ॥ २१ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये देवदूतोक्ते
द्वात्रिंशत्साहस्र्यां संहितायां मोक्षोपायेषु स्थितिप्रकरणे
द्विषष्टितमः सर्गः ॥ ६२ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणे द्विषष्टितमः
सर्गः ॥ ६२ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमत्सर्वज्ञसरस्वती##-
श्रीमद्गङ्गाधरेन्द्रसरस्वतीपूज्यपादशिष्येण
श्रीमदानन्दबोधेन्द्रसरस्वत्याख्यभिक्षुणा विरचिते
श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे स्थितिप्रकरणं समाप्तम् ॥

समाप्तमिदं स्थितिप्रकरणम्

प्रथमः सर्गः १

श्रीवसिष्ठ उवाच।

अथ स्थितिप्रकरणादनन्तरमिदं शृणु।
उपशमप्रकरणं ज्ञातं निर्वाणकारि यत्॥ १॥

भुवनरचनपालनोपशान्तिप्रथितमहाविभवस्वभावपूर्णम्।
निगमहृदयसाक्षि निष्प्रपञ्चं निजसुखबोधघनं शिवं प्रपद्ये॥ १॥

मध्याह्नशङ्खध्वनिना सभोत्थानमिहोच्यते।
वसिष्ठस्याह्निकं रात्रौ विश्वामित्रसहस्थितिः॥ १॥

उत्पत्तिप्रकरणे सर्वसृष्टिश्रुतितात्पर्योद्घाटनाय मनोधीनैव
सर्वप्रपञ्चरचनेति दर्शितम्। स्थितिप्रकरणे च
सर्वजगत्स्थितिप्रतिपादकश्रुतितात्पर्यप्रदर्शनाय मनःस्थित्यधीनैव
सर्वप्रपञ्चस्थितिरिति दर्शितम्। इदानीं यथा गार्ग्य मरीचयोऽर्कस्यास्तं
गच्छत एतस्मिंस्तेजोमण्डल एकीभवन्ति सुषुप्तिकाले सकले विलीने
यत्प्रयन्त्यभिसंविशन्ति यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति
नामरूपे विहाय गताः कलाः पञ्चदश प्रतिष्ठाम् एवमेवास्य
परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति
इत्यादीनां सुषुप्तिप्रलयसमाधिसाक्षात्कारविदेहकैवल्येषु
प्रपञ्चोपशमाज्जीवस्य ब्रह्मस्वभावताप्राप्तिप्रतिपादनेन
प्रत्यग्ब्रह्मैकरसाखण्डवस्तुलक्षकश्रुतीनामपि मन उपशमादेव
सर्वप्रपञ्चोपशमेन स्वरूपप्रतिष्ठायां तात्पर्यमिति
रहस्योद्घाटनायोपशमप्रकरणमारभमाणः पूर्वोत्तरप्रकरणयोः
संगतिं दर्शयन् विषयप्रयोजने निर्दिश्य शिष्यमवधानयन्प्रतिजानीते -
अथेति। अथ
स्थितिप्रतिपादकश्रुतितात्पर्यवर्णनानान्तरमुपसंहारबोधकश्रुतितात्पर्यवर्
णनस्यावसरसंगतिरित्यर्थः। ज्ञातं निर्वाणकारीति। तथाच
पूर्वप्रकरणप्रयोजनमेवास्यापीत्येककार्यकारितासंगतिरपि दर्शिता बोध्या॥
१॥

श्रीवाल्मीकिरुवाच।

शरत्तारकिताकाशस्तिमितायां सुसंसदि।
कथयत्येवमाह्लादि वसिष्ठे पावनं वचः॥ २॥

शरत्तारकितेत्यादिकथासंदर्भः समयोचिताचारावश्यकत्वद्योतनार्थः।
शरदि तारकितः संजाततारक आकाश इव स्तिमितायाम्। सर्वेषां
सप्तम्यन्तपदानां मध्याह्न शङ्खानां स्वन उदभूदिति चतुर्दशे श्लोके
संबन्धः॥ २॥

श्रवणार्थित्वमौनस्थपार्थिवे संसदन्तरे।
निर्वात इव निस्पन्दकमले कमलाकरे॥ ३॥

श्रवणार्थित्वेन मौनस्थाः पार्थिवा यत्र। संसदन्तरे सभामध्ये ॥ ३ ॥

विलासिनीषु संशान्तमदमोहबलासु च।
शममन्तः प्रयान्तीषु चिरप्रव्रजितास्विव ॥ ४ ॥

कराम्भोरुहहंसेषु लीनेषु श्रवणादिव।
मुक्तघुर्घुरवादेषु वायसेषु ताराविव ॥ ५ ॥

संनिधानाद्विलासिनीनां कराम्भोरुहेषु हंसायमानेषु चामरेषु
श्रवणाच्छ्रुतार्थे समाधिना लीनेष्विवेति निःस्पन्दत्वदर्शनादुत्प्रेक्षा।
मुक्तघुर्घुरवादेषु त्यक्तकङ्कणकिङ्किणीरवेषु। वयांस्येव वायसास्तेषु।
ताराविति सदस उपमा ॥ ५ ॥

नासाग्रपरिविश्रान्ततर्जन्यङ्गुलिकोटिषु।
विचारयत्सु विज्ञानकलां तज्ज्ञेषु राजसु ॥ ६ ॥

तज्ज्ञेषु विचारज्ञेषु ॥ ६ ॥

रामे विकासमायाते प्रभात इव पङ्कजे।
परित्यक्ततमःपीठे सूर्योदय इवाम्बरे ॥ ७ ॥

तमसो भूमावेव घनत्वादुपरितनाम्बरपीठत्वेनोत्प्रेक्षा। यथा
आचार्यागमने शिष्य उत्तिष्ठन् पीठं परित्यजति तद्वत्सूर्यस्योदये
परित्यक्ततमःपीठे सतीत्यर्थः ॥ ७ ॥

आकर्णयति वासिष्ठीर्गिरो दशरथे रसात्।
कलापिनीव जीमूतनिर्ह्रादान्मुक्तवर्षणात् ॥ ८ ॥

रसात् प्रेमार्द्रभावात्। तस्योपमा मुक्तवर्षणादिति।
मुक्तवर्षणप्रयुक्तादार्द्रीभावादिति यावत् ॥ ८ ॥

आहृत्य सर्वभोगेभ्यो मनो मर्कटचञ्चलम्।
श्रवणं प्रति यत्नेन सारेण मन्त्रिणि स्थिते ॥ ९ ॥

यत्नेन आहृत्य परावर्त्य स्थिते ॥ ९ ॥

वसिष्ठोक्त्या परिज्ञातस्वात्मनीन्दुकलामले।
लक्ष्मणे विलसल्लक्ष्ये शिक्षाबलविचक्षणे ॥ १० ॥

शिक्षाबलविचक्षणत्वादेव विलसद्धृदि स्फुरल्लक्ष्यं ब्रह्म यस्य
तथाभूते ॥ १० ॥

शत्रुघ्ने शत्रुदलने चेतसा पूर्णतां गते।
अलमानन्दमायाते राकाचन्द्रोपमे स्थिते ॥ ११ ॥

अलं पूर्णमानन्दमायाते प्राप्ते ॥ ११ ॥

सुमित्रे मित्रतां याते मानसे दुःखशीलिते।
विकासिहृदये जाते तत्काल इव पङ्कजे ॥ १२ ॥

सुमित्रे मन्त्रिविशेषे दुःखशीलिते मानसे मित्रतां वश्यतां याते सति
विकासिहृदये जाते। अम्बुजपक्षे आप्रातर्मानसे सरसि मनसि च दुःखेन शीलिते

चिन्तिते शोभने मित्रे सूर्ये मित्रतामुदयेन प्रीतिकरतां याते सति तत्काले
विकासिहृदये जाते ॥ १२ ॥

तत्रस्थेषु तथान्येषु तदा मुनिषु राजसु ।
सुधौतचित्तरत्नेषु प्रोल्लसत्स्विव चेतसा ॥ १३ ॥

प्रोल्लसत्स्विव जातेष्विति यथायोगं विपरिणामेन सर्वत्रानुषज्जते ॥ १३ ॥

उदभूत्पूरयन्नाशाः कल्पाभ्ररवमांसलः ।
अथ मध्याह्नशङ्खानामब्धिघोषसमः स्वनः ॥ १४ ॥

आशा दिशः । कल्पाभ्ररव इव मांसलोबलवान् ॥ १४ ॥

महता तेन शब्देन तिरोधानं मुनेर्गिरः ।
ययुर्जलदनादेन कोकिलध्वनयो यथा ॥ १५ ॥

मुनेर्वसिष्ठस्य ॥ १५ ॥

मुनिरन्तरयांचक्रे स्वां वाचमथ संसदि ।
जितसारो गुणः केन महता समुदीर्यते ॥ १६ ॥

अन्तरयांचक्रे तिरोदधे उपसंजहारेति यावत् । जितोऽभिभूतः सारो
जनाह्लादकाशो यस्य तथाविधो गुणः केन महता अभिज्ञेनाभ्युदीर्यते
प्रकटीक्रियते ॥ १६ ॥

मुहूर्तमात्रं बिभ्रभ्य श्रुत्वा मध्याह्ननिःस्वनम् ।
घने कोलाहले शान्ते रामं मुनिरुवाच ह ॥ १७ ॥

रामाद्यतनमेतावदाह्निकं कथितं मया ।
प्रातरन्यत्तु वक्ष्यामो वक्तव्यमरिमर्दन ॥ १८ ॥

अह्ना निर्वृत्तमाह्निकम् । वक्ष्यामो वयमिति शेषः ॥ १८ ॥

इदं नियतितः प्राप्तं कर्तव्यं तद्द्विजन्मनाम् ।
मध्याह्नमुपपन्नं यत्कर्तव्यं नावसीदति ॥ १९ ॥

मध्याह्नं मध्याह्ने यदुपपन्नं युक्तं द्विजन्मनां नियतितः प्राप्तं
कर्तव्यं कर्म नावसीदतीति यत् तदिदं मयापि कर्तव्यमित्यन्वयः ॥ १९ ॥

त्वमप्युत्तिष्ठ सुभग समस्ताचारसत्क्रियाम् ।
आचराचारचतुरस्नानदानार्चनादिकाम् ॥ २० ॥

इत्युक्त्वा मुनिरुत्तस्थौ समं दशरथः प्रभुः ।
ससदाः सेन्दुरादित्य उदयाद्रितटादिव ॥ २१ ॥

मुनिना समं ससदाः सभाप्यसर्वजनसहितो दशरथोऽप्युत्तस्थौ ॥ २१ ॥

तयोरुत्तिष्ठतोः सर्वा सभोत्थातुमकम्पत ।
मन्दवातपरामृष्टा नलिनीवालिलोचना ॥ २२ ॥

अलिलोचणा इति सभाया अपि विशेषणम् ॥ २२ ॥

65937 उत्तस्थौ सावतंसोत्थभृङ्गमण्डलमण्डिता।
65938 करिसेनेव सन्ध्यद्रावालोलकरपुष्करा॥ २३॥
65939
65940 अत्रत्यमध्याह्नकाले अस्ताचले सूर्योदयकालः करिणामुत्थानयोग्य इत्याशयेन
65941 संध्याद्राविति। विन्ध्याद्राविति पाठे स्थानोपमा॥ २३॥
65942
65943 परस्पराङ्गसंघट्टचूर्णिताङ्गदमण्डली।
65944 रत्नपूर्णारुणाम्भोदसन्ध्यासमयसूचनी॥ २४॥
65945
65946 यतो रत्नपूर्णा अतः सादृश्यादरुणाम्भोदसंध्यासमयस्य सूचनी।
65947 स्मारिकेति यावत्॥ २४॥
65948
65949 पतदुत्तंसविभ्रान्तभृङ्गोपहितघुंघुमा।
65950 मुकुटोद्दामविद्योतशक्रचापीकृताम्बरा॥ २५॥
65951
65952 पतद्भिरुत्तंसविभ्रान्तैर्भृङ्गैराहितघुंघुमा।
65953 मुकुटानामुद्दामैर्नानामणिविद्योतैः शक्रचापीकृतमम्बरमाकाशं
65954 वस्त्रजातं वा यया सा॥ २५॥
65955
65956 कान्तालताहस्तदलचारुचामरमञ्जरी।
65957 वनलेखेव विक्षुब्धवरवारणमण्डला॥ २६॥
65958
65959 कान्तालक्षणानां लतानां हस्तलक्षणेषु दलेषु पल्लवेषु चारुचामरलक्षणा
65960 मञ्जर्यो यस्यां तथाविधा वनलेखेवेत्यर्थः॥ २६॥
65961
65962 कचत्कटकभारक्तीकृतान्योन्यतताम्बरा।
65963 वातव्याधूतपुष्पेव मन्दारवनमालिका॥ २७॥
65964
65965 कचन्तीभिः कटकभाभिः रक्तीकृतान्यन्योन्यमाकर्षणात्ततानि
65966 विस्तृतान्यम्बराणि यस्याम्॥ २७॥
65967
65968 कर्पूरकणनीहाररचितामलवारिदा।
65969 शरद्दिक्तटमालेव प्रसृताशेषभूमिका॥ २८॥
65970
65971 कर्पूरकणलक्षणैस्तत्सदृशैश्च नीहारैर्हिमकणैरुड्डीयमानै रचिता
65972 अमलाः शुभ्रा वारिदा यया। अत एव
65973 नीहारकाशपुष्पादिभिर्व्याप्ताशेषभूमिका शरद्दिक्तटमालेव स्थिता॥ २८॥
65974
65975 लोलमौलिमणिप्रान्तपाटलाम्बरकोटरा।
65976 संध्येवाफुल्लनीलाब्जा कार्यसंहारकारिणी॥ २९॥
65977
65978 कार्याणां दिनकृत्यानामुपसंहारकारिणी॥ २९॥
65979
65980 रत्नांशुसलिलापूरमुखपद्मनिरन्तरा।
65981 पद्मिनीवालिवलिता नूपुरारवसारसा॥ ३०॥
65982
65983 संतता सा सभोत्तस्थौ भूभृच्छतसमाकुला।
65984 भूतसंततिसंभ्रान्ता सृष्टिर्नवमिवोदिता॥ ३१॥
65985
65986 भूभृतां राज्ञां पर्वतानां च शतैः॥ ३१॥
65987
65988 प्रणम्याथ नृपं भूपा निर्ययुर्नृपमन्दिरात्।

शक्रचापीकृता रत्नैरम्बुधेरिव वीचयः ॥ ३२ ॥

सुमन्त्रो मन्त्रिणश्चैव वसिष्ठमथ भूमिपम् ।
प्रणम्य जग्मुः स्नानाय रसविज्ञानकोविदाः ॥ ३३ ॥

रसे ब्रह्मरसे जले च विहारविज्ञाने कोविदाः ॥ ३३ ॥

वामदेवादयश्चान्ये विश्वमित्रादयस्तथा ।
वसिष्ठं पुरतः कृत्वा तस्थुरावर्ननोन्मुखाः ॥ ३४ ॥

आवर्जनमनुज्ञा तदुन्मुखास्तत्प्रतीक्षाः ॥ ३४ ॥

राजा दशरथस्तत्र पूजयित्वा मुनिव्रजम् ।
तद्विसृष्टो जगामाथ स्वकार्यार्थमरिन्दमः ॥ ३५ ॥

वनं वनास्पदा जग्मुर्व्योम व्योमनिवासिनः ।
नगरं नागराश्चैव प्रातरागमनाय ते ॥ ३६ ॥

वनास्पदा वानप्रस्थाः ॥ ३६ ॥

महीपतिवसिष्ठाभ्यां प्रणयात्प्रार्थितः प्रभुः ।
वसिष्ठसद्मनि निशां विश्वामित्रोऽत्यवाहयत् ॥ ३७ ॥

वसिष्ठः सह विप्रेन्द्रैः पार्थिवैर्मुनिभिस्तथा ।
उपास्यमानो रामाद्यैः सर्वैर्दशरथात्मजैः ॥ ३८ ॥

जगाम स्वाश्रमं श्रीमान्सर्वलोकनमस्कृतः ।
अनुयातः सुरौघेन ब्रह्मलोकमिवाब्जजः ॥ ३९ ॥

तस्मात्प्रदेशाद्रामादीन्पुनर्दशरथात्मजान् ।
सर्वान्विसर्जयामास पादोपान्ते नतानसौ ॥ ४० ॥

तस्मादाश्रमप्रदेशात् ॥ ४० ॥

नभश्चरान्धरणिचरानधश्चरा-
न्विसृज्य संस्तुतगुणगोचरांश्च तान् ।
यथाक्रमं स्वगृहमुदारसत्त्ववां-
श्चकार तां द्विजजनवासरक्रियाम् ॥ ४१ ॥

अधश्चरान्नागान् । संस्तुतानां प्रशस्तानां गुणानां गोचरानाश्रयानिति
यावत् । यथाक्रमं विसृज्य स्वगृहं प्रविश्येति शेषः । द्विजजनानां
वासरोचितां पञ्चयज्ञक्रियां चकारेत्यर्थः ॥ ४१ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये देवदूतोक्ते मो०
उपशमप्रकरणे आह्निकवर्णनं नाम प्रथमः सर्गः ॥ १ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
आह्निकवर्णनं नाम प्रथमः सर्गः ॥ १ ॥

## द्वितीयः सर्गः २

66041 श्रीवाल्मीकिरुवाच।
66042
66043 ते समेत्य गृहं गत्वा राजपुत्राः शशित्विषः।
66044 चक्रुः सर्वमशेषेण स्वसद्मसु दिनक्रमम् ॥ १ ॥
66045
66046 इहाह्निकक्रिया रात्रौ रामस्य श्रुतचिन्तनम्।
66047 बुद्धेः श्रुतार्थे स्थैर्यार्थ प्रार्थना चोपवर्ण्यते ॥ १ ॥
66048
66049 दिनक्रममाह्निकम् ॥ १ ॥
66050
66051 वसिष्ठो राघवश्चैव राजानो मुनयो द्विजाः।
66052 इति चक्रुः स्वकार्याणि तथा स्वगृहवीथिषु ॥ २ ॥
66053
66054 इति वक्ष्यमाणप्रकारेण चक्रुः। स्वगृहेषु वीथिषु तथा बहिश्च
66055 यान्युचितानीत्यर्थः ॥ २ ॥
66056
66057 सस्नुः कमलकह्लारकुमुदोत्पलहारिषु।
66058 जलाशयेषु चक्राह्वहंससारसराजिषु ॥ ३ ॥
66059
66060 गोभूतिलहिरण्यानि शयनान्यासनानि च।
66061 ददुर्दानानि विप्रेभ्यो भाजनान्यंशुकानि च ॥ ४ ॥
66062
66063 हेमरत्नविचित्रेषु स्वेषु चामरसद्मसु।
66064 आनर्चुरच्युतेशानहुताशार्कादिकान्सुरान् ॥ ५ ॥
66065
66066 अमरसद्मसु देवालयेषु। स्वेषु स्वगृहेषु च ॥ ५ ॥
66067
66068 पुत्रपौत्रसुहृद्भृत्यबन्धुमित्रगणैः सह।
66069 तत आस्वादयामासुर्भोजनान्युचितानि वै ॥ ६ ॥
66070
66071 एतस्मिन्समये चास्मिन्नगरे दिवसोऽभवत्।
66072 तनुरष्टाङ्गशेषत्वादद्दष्टो न च मनोहरः ॥ ७ ॥
66073
66074 दिवसस्तनुः सूक्ष्मोऽभवत्। अष्टाङ्गशेषत्वादष्टमभागशेषत्वात् ॥ ७ ॥
66075
66076 सायन्तनदिनान्तं ते तत्कालोचितचेष्टया।
66077 अनयन्नंशुभिः सार्धं यावदस्तं ययौ रविः ॥ ८ ॥
66078
66079 तत्कालोचितचेष्टया पुराणधर्मशास्त्रावलोकनादिरूपया ॥ ८ ॥
66080
66081 संध्यां ववन्दिरे सुष्ठु जेपुश्चैवाघमर्षणम्।
66082 पेठुः स्तोत्राणि पुण्यानि जगुर्गाथा मनोहराः ॥ ९ ॥
66083
66084 ततश्चाभ्युदिता श्यामा कामिनीशोकहारिणी।
66085 क्षीरोदादिव माहेन्द्री चन्द्रावश्यायदायिनी ॥ १० ॥
66086
66087 तत इत्युपात्तस्य तदुत्तरकालस्य क्षीरोदः कामिन्या ऐन्द्री दिक्
66088 कान्तसंगमप्रयुक्तशोकहरणानन्दस्य
66089 चन्द्रसंगमप्रयुक्तस्तापोपशमनोऽवश्याय इति क्रमेणोपमानानि ॥ १० ॥
66090
66091 शनैरास्तीर्णपुष्पेषु कीर्णकर्पूरमुष्टिषु।
66092 दीर्घेन्दुबिम्बरम्येषु तस्थुस्तल्पेषु राघवाः ॥ ११ ॥

66093
66094 दीर्घीभूतमिन्दुबिम्बमिव रम्येषु ॥ ११ ॥
66095
66096 अथ रामादृतेऽन्येषां तत्र तद्व्यवहारिणी ।
66097 व्यतीयाय शनैः श्यामा मुहूर्त इव शोभना ॥ १२ ॥
66098
66099 तद्व्यवहारिणी तत्कालोचितविषयभोगनिद्रादिव्यवहारवती ॥ १२ ॥
66100
66101 तस्थौ रामस्तु तामेव वासिष्ठीं वचनावलीम् ।
66102 चिन्तयन्मधुरोदारां करिणीं कलभो यथा ॥ १३ ॥
66103
66104 कलभः करिशावः करिणीं मातरं यथा ॥ १३ ॥
66105
66106 किमिदं नाम संसारभ्रमणं किमिमे जनाः ।
66107 भूतानि च विचित्राणि किमायान्ति प्रयान्ति किं ॥ १४ ॥
66108
66109 चिन्ताप्रकारमेव प्रपञ्चयति - किमित्यादिना ॥ १४ ॥
66110
66111 मनसः कीदृशं रूपं कथं चैतत्प्रशाम्यति ।
66112 मायेयं सा किमुत्था स्यात्कथं चैव निवर्तते ॥ १५ ॥
66113
66114 निवृत्तयानया कः स्याद्गुणो दोषोऽथ वा भवेत् ।
66115 कथमात्मनि चैवायं तते संकोच आगतः ॥ १६ ॥
66116
66117 सर्वभोग्यभोक्तृभोगनिवृत्तेर्दोषः पुरुषार्थविघातो भवेत् । तते
66118 आकाशादपि विस्तीर्णे ॥ १६ ॥
66119
66120 किमुक्तं स्याद्भगवता मुनिना मनसः क्षये ।
66121 किं चिन्द्रियजये प्रोक्तं किमुक्तमथवात्मनि ॥ १७ ॥
66122
66123 किं साधनं फलं चोक्तं स्यात् । आत्मनि विज्ञाते इति शेषः ॥ १७ ॥
66124
66125 जीवश्चित्तं मनो मायेत्येवमादिभिराततैः ।
66126 रूपैरात्मैव संसारं तनोतीममसन्मयम् ॥ १८ ॥
66127
66128 एभिरेवं मनोमात्रतन्तुवद्धैः क्षयं गतैः ।
66129 दुःखोपशान्तिरेतानि सुचिकित्स्यानि नः कथम् ॥ १९ ॥
66130
66131 दुःखोपशान्तिः सिद्ध्यतीति शेषः । एतानि मनो मायादिरूपाणि ॥ १९ ॥
66132
66133 भोगाभ्रमालावलयां धीबलाकामिमां कथम् ।
66134 पृथक्करोमि पयसो धारां हंस इवाम्भसः ॥ २० ॥
66135
66136 भुज्यन्त इति भोगा विषयास्त एव संस्कारात्मना घनीभूय
66137 चित्ताकाशावरकत्वाद्दुःखसहस्रधारावर्षित्वाच्चाभ्राणि तान्यनुसृत्य
66138 मालेव वलयति वेष्टयतीति मालावलयां धीवृत्तिलक्षणां बलाकां बकीं
66139 कथं पृथक्करोमि । वेवेकेन परावर्तयामीति यावत् । पयसो दुग्धस्य धारां
66140 भागमिति यावत् ॥ २० ॥
66141
66142 भोगास्त्यक्तुं न शक्यन्ते तत्त्यागेन विना वयम् ।
66143 प्रभवामो न विपदामहो संकटमागतम् ॥ २१ ॥
66144

66145 ननु किं विमर्शेन त्यज्यन्तां भोगास्तत्राह - भोगा इति। विपदां प्रतीकारे
66146 इति शेषः। सर्वात्मना भोगत्यागे जीवनासिद्धेस्तदर्थमल्पस्यापि
66147 भोगस्योपादाने वासनावृद्धेः संकटमागतमित्यर्थः॥ २१॥
66148
66149 मनोमात्रमिदं प्राप्यं तच्चैवेदं प्रयोजनम्।
66150 संपन्नं नो गिरिगुरु मौर्ख्याद्यक्षः शिशोरिव॥ २२॥
66151
66152 संकटान्तरमप्याह - मनोमात्रमिति। इदं
66153 प्राप्यमवश्यप्राप्तव्यमात्मतत्त्वं मन एव मीयते प्रमीयतेऽनयेति मात्रा
66154 प्रमाणं यस्य तथाविधम्। तच्च मनो नोऽस्माकमिदं बाह्यमेव
66155 विषयजातमेव प्रयुज्यते येन तत्प्रयोजनं निष्पत्तिहेतुभूतं पुरुषार्थभूतं
66156 च यस्य तथाविधं सन्मौर्ख्याद्गिरितोऽपि गुरु दुरुद्धरं संपन्नम्। यथा
66157 शिशोर्मौर्ख्यात्कल्पितो यक्षः। तथाच विषयाधीनसिद्धिकं मनस्तेभ्यो
66158 निवर्तयितुमेवाशक्यं निःस्वरूपतापत्तेस्तदनिवृत्तौ तु न तत्त्वसाक्षात्कारे
66159 प्रमाणं तत्कर्तु शक्यमिति संकटान्तरमित्यर्थः॥ २२॥
66160
66161 परमां शान्तिमागत्य गतसंसारसंभ्रमा।
66162 बालेव लब्धदयिता कंचित्प्राप्स्यति नो मतिः॥ २३॥
66163
66164 यदि तु निर्वासनं सर्वविषयोपशमेऽपि ब्रह्माकारतामात्रावलम्बनेन
66165 मनोऽवस्थापयितुं शक्येत तदा स्यादभिलषितसिद्धिरिति चिन्तयन्नाह -
66166 परमामिति। लब्धो दयितः कान्तो यया तथाविधा बाला तरुणीव
66167 लब्धब्रह्माकारा सती कंचिदन्यं नो प्राप्स्यति। न स्मरिष्यतीत्यर्थः॥ २३॥
66168
66169 कदोपशान्तसंरम्भं विगताशेषकौतुकम्।
66170 अपापामात्मविश्रान्तं [अपापपदविश्रान्तं इति पाठः] मम
66171 स्यात्पावनं मनः॥ २४॥
66172
66173 तां दशां प्राप्तुमुत्कण्ठते - कदेत्यादिना। संरम्भः क्रोधः।
66174 कौतुकं कामः। पापग्रहणं पुण्यतदुभयकार्याणामप्युपलक्षणम्॥ २४
66175 ।।
66176
66177 कलाकलापसंपूर्णाच्छशाङ्कादपि शीतले।
66178 पदे सुरूढं विश्रम्य भ्रमिष्यामि कदा जगत्॥ २५॥
66179
66180 सप्तमभूमिकापर्यन्तं सुरूढं यथा स्यात्तथा विश्रम्य।
66181 जीवन्मुक्तिसुखं प्राप्येति यावत्॥ २५॥
66182
66183 कलनापेलवं रूपमुत्सृज्यालीनमात्मनि।
66184 कदैष्यति मनः शान्तिमम्भसीव तरङ्गकः॥ २६॥
66185
66186 आत्मनि आलीनं तिरोहितं सत्॥ २६॥
66187
66188 तृष्णातरङ्गाकुलितमाशामकरमालिनम्।
66189 कदा संसारजलधिं तीर्त्वा स्यामहमज्वरः॥ २७॥
66190
66191 कदोपशमशुद्धासु पदवीषु विचक्षणाः।
66192 मुमुक्षूणां निवत्स्यामो निःशोकं समदर्शनाः॥ २८॥
66193
66194 मुमुक्षूणां प्राप्यासु पदवीषु पदेषु॥ २८॥
66195
66196 संतापितसमस्ताङ्गः सर्वधातुभयंकरः।

66197 संसृतिज्वर आदीर्घः कदा नाशमुपैष्यति ॥ २९ ॥
66198
66199 अङ्गानि स्त्रीपुत्रपश्वादीनि हस्तपादादीनि च धातवः
66200 स्वर्णरूप्यादयस्त्वगसृङ्मांसादयश्च तेभ्यः क्षीयमाणेभ्यो
66201 भयंकरः ॥ २९ ॥
66202
66203 निर्वातदीपलेखेव कदा चित्तं गतव्यथम् ।
66204 शममेष्यति हे बुद्धे सुप्रकाशघनान्तरम् ॥ ३० ॥
66205
66206 कदेन्द्रियाणि दुःखेभ्यः संतरिष्यन्ति हेलया ।
66207 दुरीहादग्धदेहानि गरुत्मन्त इवार्णवान् ॥ ३१ ॥
66208
66209 विषयाभिमुखाकर्षणदुरीहाभिर्दुश्चेष्टाभिर्दग्धो देहो
66210 यैस्तथाविधानीन्द्रियाणि विषयहेलया कदा दुःखानि संतरिष्यन्तीत्यर्थः ।
66211 अथवा इन्द्रियाणि कर्तॄणि । दुरीहा दुष्टविषयाभिलाषस्तत्प्रयुक्तानि
66212 दग्धदेहानि भाविनानाशरीराणि कर्मभूतानि विषयहेलया दुःखेभ्यः
66213 दुःखानि परिहर्तुं कदा तरिष्यन्तीति योजना । दुःखेभ्य इति
66214 सुखदुःखतत्क्रियायाम् इति चौरादिकाद्दुःखधातोर्भावे घञि तुमर्थाच्च
66215 भाववचनात् इति चतुर्थी ॥ ३१ ॥
66216
66217 अयं सोऽहं रुदन्मूढ इति व्यर्थाहितो भ्रमः ।
66218 शरदीवासितो मेघः कदा नाशमुपैष्यति ॥ ३२ ॥
66219
66220 पशुपुत्रधनान्नपानादीनामलाभवियोगादिना रुदति मूढे मयि
66221 रोदननिमित्तभूतोऽयं देह एव स प्रसिद्ध आत्मा अहं चेति व्यर्थं
66222 पूर्वपूर्वदेहवासनाकामकर्मपरम्पराहितो भ्रमः प्रबोधवैमल्ये शरदि
66223 प्रवृत्तायां वार्षिकोऽसितो मेघ इव कदा नाशमुपैष्यतीत्यर्थः ॥ ३२ ॥
66224
66225 मन्दारवनलेखासु या मतिः सा तृणायते ।
66226 याचे तत्पदमात्मीयं संप्राप्स्यामः कदा वयम् ॥ ३३ ॥
66227
66228 उत्कटया मुमुक्षया स्वर्गोऽपि स्वस्य तृणवद्भातीत्याह - मन्दारेति । मतिः
66229 सुखानुभवः । अहं याचे वाञ्छामीति यावत् । वयमिति अस्मदो द्वयोश्च इति
66230 बहुवचनम् ॥ ३३ ॥
66231
66232 वीतरागजनप्रोक्ता निर्मला ज्ञानदृष्टयः ।
66233 कच्चित्पदं त्वयि मनः करिष्यन्तीति मे वद ॥ ३४ ॥
66234
66235 इदानीं मन-आदीन्विवेकग्रहणाय प्रार्थयते - वीतरागेत्यादिना । हे
66236 मनः त्वयि पदं स्थानं कच्चित्करिष्यन्ति ॥ ३४ ॥
66237
66238 हा तात मातः पुत्रेति गिरामासामहं पुनः ।
66239 भाजनं चित्त माभूवं भोजनं दुःखभोगिनाम् ॥ ३५ ॥
66240
66241 अहं दुःखलक्षणानां भोगिनामजगराणां भोजनं भक्ष्यं
66242 सन्नासामाक्रन्दगिरां पुनर्भाजनं माभूवमित्यन्वयः ॥ ३५ ॥
66243
66244 हे बुद्धे भगिनि भ्रातुरर्थितां पूरयाशु मे ।
66245 आवयोर्दुःखमोक्षाय विचारय मुनेर्गिरः ॥ ३६ ॥
66246
66247 जीवबुद्ध्योरेकाविद्योदरोद्भूतत्वाद्भगिनीति संबोधनम् । मुनेर्वसिष्ठस्य ॥
66248 ३६ ॥

त्वां पादपतितः प्रीत्या याचे सति सुते मते।
तेन भव्ये भवोच्छेदभूतये सुस्थिरा भव॥ ३७॥

सति साध्वि। शास्त्रसज्जनप्रसादेन पश्चादुत्पन्नत्वात्सुते पुत्रि। मते सन्मते।
तेन मत्प्रार्थनेन। भवोच्छेदोपलक्षितपूर्णतासंपदे॥ ३७॥

वसिष्ठमुनिना प्रोक्ता विरक्ताः प्रथमं गिरः।
ततो मुमुक्षोराचार उत्पत्तीनां क्रमस्ततः॥ ३८॥

एवं प्रार्थनया स्थिरीकृतां मतिं
वैराग्यप्रकरणादिप्रकरणचतुष्टयार्थस्मरणे क्रमान्नियुङ्क्ते -
वसिष्ठेति। प्रोक्ता मन्मुखेन वादिताः स्वयंप्रोक्ताश्च स्थितिप्रकरणान्ता
गिरः॥ ३८॥

ततः स्थितिप्रकरणं समं दृष्टान्तसुन्दरम्।
विज्ञानगर्भसुलभं यथावत्स्मर हे मते॥ ३९॥

विज्ञानगर्भं सुलभं सरलं च। विज्ञानगर्भैरधिकारिभिराख्यानैर्वा
सुलभं सुबोधमिति वा॥ ३९॥

कृतमति शतशो विचारितं य-
द्यदि तदुपैति न मानसस्य बुद्धिः।
भवति तदफलं शरद्घनाभं
सततमतो मतिरेव कार्यसारः॥ ४०॥

ननु मनसः प्राक्प्रार्थितत्वात्तत एव प्रकरणचतुष्टयार्थावधारणसिद्धेः
किमर्थं तद्व्यतिरेकेण पुनर्मतिः प्रार्थ्यते तत्राह - कृतमतीति।
मानसस्य मनसः कृतमतिनिपुणं यथा स्यात्तथा शतशो यद्वस्तु
विचारितं भवति तद्बुद्धिरध्यवसानमतिर्यदि नोपैति नाङ्गीकरोति तर्हि तत्तथा
विचारितमप्यफलं शरद्घनवन्नश्यत्येव न स्थिरीभवतीत्यर्थः। अतः
श्रवणेन विचारितेऽपि तत्त्वे मतिर्मननकृताध्यवसायबुद्धिरेव सततं कार्ये
कर्तव्यार्थविषये सारो मुख्यो भवतीति मननाय पृथक् तत्प्रार्थनं
युक्तमेवेत्यर्थः॥ ४०॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे०
मोक्षोपायेषूपशमप्रकरणे उपदेशानुवर्णनं नाम द्वितीयः सर्गः
॥ २॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
उपदेशानुवर्णनं नाम द्वितीयः सर्गः॥ २॥

तृतीयः सर्गः ३

श्रीवाल्मीकिरुवाच।

तस्यैवंप्रायया तत्र ततयोदारचिन्तया।
सा व्यतीयाय रजनी पद्मस्येवार्ककाङ्क्षिणः॥ १॥

उषःस्नानगृहायातरामप्रभृतिभिः सह।
वसिष्ठस्य सभायानं प्रस्तावश्चात्र कीर्त्यते॥ १॥

66301
66302 स्य रामस्य। एवंप्रायया उक्तप्रकारया। ततया विस्तृतयता चिन्तया॥ १॥
66303
66304 किंचित्तमःकडारासु किंचिदप्यरुणासु च।
66305 नभोविरलतारासु दिक्षु संमार्जितास्विव॥ २॥
66306
66307 तमोभिः कडारासु कपिशवर्णासु॥ २॥
66308
66309 प्रभाततूर्यघोषेण सममिन्दुसमाननः।
66310 उत्तस्थौ राघवः श्रीमान्पद्मः पद्मकरादिव॥ ३॥
66311
66312 प्रातःस्नानविधिं कृत्वा संपाद्य भ्रातृभिः पुनः।
66313 प्रहिताल्पपरीवरो वसिष्ठसदनं ययौ॥ ४॥
66314
66315 संपाद्य निर्वर्त्य संध्यावन्दनादिकमित्यौचित्याद्गम्यते। भ्रातृभिः
66316 प्रहितः प्रेषितः अल्पः परीवारः परिजनो यस्य। भ्रातृभिः सह प्रहितः
66317 आप्ततमोऽल्पः परीवारो यस्येति वा॥ ४॥
66318
66319 समाधिसंस्थमे कान्ते मुनिमात्मपरायणम्।
66320 दूर एवाननामासौ रामो विनतकन्धरः॥ ५॥
66321
66322 समाधिसंस्थमिति। पूर्वमेव स्नात्वा प्रातःकृत्यं निर्वर्त्य
66323 समाधिसंस्थमिति गम्यते॥ ५॥
66324
66325 तं प्रणम्याङ्गणे तस्थुस्तस्मिंस्ते विनयान्विताः।
66326 यावत्तमः समालूनं व्यक्तं दिङ्मुखमण्डलम्॥ ६॥
66327
66328 ते रामादयो यावत्तमः सम्यगालूनं छिन्नं भवति तावत्तस्थुः॥ ६॥
66329
66330 राजानो राजपुत्राश्च ऋषयो ब्राह्मणास्ततः।
66331 आययुः सदनं मौनं ब्रह्मलोकमिवामराः॥ ७॥
66332
66333 मौनं निःशब्दं यथा स्यात्तथा॥ ७॥
66334
66335 तद्वसिष्ठस्य सदनं बभूव जनसंकुलम्।
66336 हस्त्यश्वरथसंबाधं पार्थिवाचारशोभनम्॥ ८॥
66337
66338 पार्थिवोचिताचारेऽपि पार्थिवसदनमिव शोभनं शोभमानम्॥ ८॥
66339
66340 क्षणाद्वसिष्ठो भगवान्विरराम समाधितः।
66341 आचारेणोपचारेण जग्राह प्रणतं जनम्॥ ९॥
66342
66343 विनयाद्याचारेण प्रियवचनाद्युपचारेण॥ ९॥
66344
66345 तथानुयातो मुनिभिर्विश्वामित्रान्वितो मुनिः।
66346 आरुरोह रथं श्रीमान्सहसाब्जमिवाब्जजः॥ १०॥
66347
66348 ययौ गृहं दाशरथं सैन्येन महता वृतः।
66349 ब्रह्मेव शक्रनगरं समस्तसुरमालितः॥ ११॥
66350
66351 विवेशावनतां तत्र रम्यां दाशरथीं सभाम्।
66352 हंसयूथानुवलितो राजहंस इवाब्जिनीम्॥ १२॥

66353
66354 अवनतां प्रणम्रजनाम् ॥ १२ ॥
66355
66356 त्रीणि तत्र पदान्याशु तदा दशरथो नृपः ।
66357 निर्जगाम महावीरः सिंहासनसमुत्थितः ॥ १३ ॥
66358
66359 निर्जगाम अभिजगाम ॥ १३ ॥
66360
66361 विविशुस्तत्र ते सर्वे नृपा दशरथादयः ।
66362 वसिष्ठाद्याश्च मुनयो ऋषयो ब्राह्मणास्तथा ॥ १४ ॥
66363
66364 मन्त्रिणश्च सुमन्त्राद्याः सौम्याद्याश्च विपश्चितः ।
66365 राजपुत्राश्च रामाद्या मन्त्रिपुत्राः शुभादयः ॥ १५ ॥
66366
66367 अमात्याद्याः प्रकृतयः सुहोत्राद्याश्च नागराः ।
66368 मालवाद्यास्तथा भृत्याः पौराद्याश्चैव मालिनः ॥ १६ ॥
66369
66370 अथ तेषूपविष्टेषु स्वेषु स्वेष्वासनेषु च ।
66371 सर्वेष्वेवोपविष्टेषु वसिष्ठोन्मुखदृष्टिषु ॥ १७ ॥
66372
66373 तेषु मुनिनृपमन्त्रिप्रभृतिषु प्रथममुपविष्टेषु सत्सु पश्चादन्येष्वपि
66374 सर्वेषूपविष्टेष्वित्यर्थः । सर्वेष्वेवेत्यादीनां सर्गसमाप्तिपर्यन्तं सर्वेषां
66375 सप्तम्यन्तानामुत्तरसर्गस्थ इदं दशरथो वाक्यमुवाचेत्यत्र संबन्धः ॥
66376 १७ ॥
66377
66378 सभाकलकले शान्ते मौनसंस्थेषु बन्दिषु ।
66379 वृत्तासु स्थितिवार्तासु सौम्ये तस्मिन्सभान्तरे ॥ १८ ॥
66380
66381 सभायाः कलकले कोलाहले । स्थितिवार्तासु परस्परं
66382 रात्रिसुखावस्थितिप्रश्नप्रतिवचनवार्तासु वृत्तासु सतीषु ॥ १८ ॥
66383
66384 स्फुरत्पवनमालासु विशत्स्वम्भोजकोटरात् ।
66385 परागेषु विलोलेषु मुक्तादामसु चञ्चलम् ॥ १९ ॥
66386
66387 अम्भोजकोटरान्निर्गत्य सभां विशत्स्विति शेषः । अत एवाम्भोजानां परागेषु
66388 मुक्तादामसु चञ्चलं यथा स्यात्तथा विलोलेषु लम्पटेषु ॥ १९ ॥
66389
66390 बृहत्कुसुमदोलाभ्यः प्रसृताभ्यः समंततः ।
66391 वाति मांसलमामोदमादाय मधुरानिले ॥ २० ॥
66392
66393 वातायनेषु मृदुषु कुसुमाकीर्णभूमिषु ।
66394 पर्यङ्केषूपविष्टासु पश्यन्तीषु पुरंध्रिषु ॥ २१ ॥
66395
66396 मृदुषु पर्यङ्केषु ॥ २१ ॥
66397
66398 जालागतार्ककरलोलविलोचनासु
66399 रत्नप्रभानिकरपिङ्गलकोमलासु ।
66400 संत्यक्तचापललवं चपलासु तासु
66401 मौन्स्थितासु सितचामरधारिणीषु ॥ २२ ॥
66402
66403 जालागतैरर्ककरैरवलोकनप्रतिघाताल्लोलानि विलोचनानि यासाम् ।
66404 रत्नप्रभानिकरैः पिङ्गलासु कोमलासु सुकुमारीषु तासु प्रागुक्तासु

66405 सितचामरधारिणीषु संत्यक्तचापललवं यथा स्यात्तथा मौनस्थितासु ॥ २२ ॥
66406
66407 मुक्ताफलप्रतिफलप्रतिमार्करश्मि-
66408 रागोदरास्वजिरभूमिषु पुष्पकौघम् ।
66409 नासादयत्यभिनवातपबिम्बबुद्ध्या
66410 भ्रान्ते भ्रमत्यलिकुले नभसीव मेघे ॥ २३ ॥
66411
66412 नानारत्नखचितास्वजिरभूमिषु मुक्ताफलानां प्रतिफलानि
66413 प्रतिच्छायास्तत्प्रतिमा अर्करश्मिरागा उदरे यासां तथाविधासु
66414 नानापुष्पाकारचित्रासु जातासु अभिनवातपबिम्बा एवेमे इति भ्रान्तिबुद्ध्या अलिकुले
66415 पुस्पकौघं विकीर्णपुष्पसमूहं नासादयति अलभमाने अत एव
66416 भूम्यस्पर्शान्नभसि मेघ इव भ्रमति सति ॥ २३ ॥
66417
66418 पुण्यैर्वसिष्ठवदनप्रसृतं श्रुतं य-
66419 त्तत्संततिप्रसृतविस्मयमार्यलोके ।
66420 सत्संगमे मृदुपदाक्षरमुग्धवाक्य-
66421 मन्योन्यमीप्सितमनल्पगुणाभिरामम् ॥ २४ ॥
66422
66423 तस्मिन्सत्संगमे सतां समाजे आर्यलोके बहुमतजने प्राक्संचितैः
66424 पुण्यैर्यद्वसिष्ठवदनप्रसृतं वचनं श्रुतं तस्य संतत्या हृदि
66425 विस्तारेण प्रसृतविस्मयमुद्भूताश्चर्यं यथा स्यात्तथा
66426 अन्योन्यमीप्सितमभिमतमनल्पगुणाभिरामं मृदुपदाक्षरमुग्धवाक्यं
66427 भाषमाणे सतीति शेषः ॥ २४ ॥
66428
66429 दिग्भ्यः पुराच्च गगनाच्च वनाच्च सिद्ध-
66430 विद्याधरार्यमुनिविप्रगणे वसिष्ठम् ।
66431 मौनप्रप्राणमभितः प्रविशत्यशब्दं
66432 सोपांशु गौरववता सह जातवाक्ये ॥ २५ ॥
66433
66434 वनाच्च समागते इति शेषः । विद्याधराणामार्यमुनीनामन्येषां च
66435 विप्राणां गणे वसिष्ठमभितो मौनप्रणामं प्रणम्य अशब्दं पिहितास्यं
66436 यथा स्यात्तथा प्रविशति सति । ततो गौरववता गरीयसा अवश्यसंभाष्येण सह
66437 सोपांशु अतिमन्दस्वरं कर्णसन्निधौ जातवाक्ये सति । वसिष्ठमभित इति
66438 अभितः परितः समयानिकषाहाप्रतियोगेऽपि इति षष्ठ्यर्थे द्वितीया ॥ २५ ॥
66439
66440 उन्निद्रकोकनदकोमलकोशकृष्ट-
66441 मग्नालिजालमकरन्दसुवर्णरागैः ।
66442 आपिङ्ले मरुति वाति विलोलघण्टा-
66443 टाकारगीतविनिपीतनिशान्तगीते ॥ २६ ॥
66444
66445 उन्निद्राणां कोकनदानां रक्तकमलानां कोमलेभ्यः कोशेभ्यः
66446 कृष्टानां प्राक्तदन्तर्मग्नानामलिजालानां मकरन्दानांसुवर्णानां
66447 परागाणां च रागै रञ्जनैरापिङ्गले ईषत्पिङ्गलवर्णे मरुता
66448 स्वाभिमर्शाद्विलोलानां गृहप्रान्तघण्टानां
66449 टांकारगीतैर्विनिपीतान्यभिभूतानि निशान्तानां गृहाणां गीतानि येन
66450 तथाविधे मरुति वाति सति । घण्टाजिह्वाग्रे
66451 पिप्पलपत्राकाररचनान्मन्दवातैरपि गृहपटलघण्टावलिध्वननं
66452 दक्षिणदेशे नेपाले च प्रसिद्धम् ॥ २६ ॥
66453
66454 अगुरुतगरधूमे चन्दनामोदमिश्रे
66455 सरसकुसुमदामोद्दामगन्धाङ्किताभ्रे ।
66456 सरति सति वितानाम्भोरुहामोदलेशै-

66457 श्चलकुसुमरजोङ्कैः शब्दविज्ञातभृङ्गम् ॥ २७ ॥
66458
66459 चन्दनामोदैर्मिश्रे चलकुसुमरजोभिरङ्क्यत इत्यङ्कस्तथाविधे अत एव
66460 सरसानां कुसुमदाम्नामुद्दामैर्गन्धैरङ्कितानि सुरभितान्यभ्राणि येन
66461 तथाविधे अगुरुतगरनिर्यासधूमे तन्नीलिम्ना तिरोहितवर्णत्वाच्छब्दैरेव
66462 विज्ञाता नतु साक्षाद्दृष्टा भृङ्गा यस्मिन्कर्मणि तद्यथा स्यात्तथा
66463 वितानवद्धानामम्भोरुहाणामामोदलेशैः सह सरति ऊर्ध्वं प्रवहति
66464 सतीत्यर्थः ॥ २७ ॥
66465
66466 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मोक्षोपायेषूपशमप्रकरणे
66467 सभासंस्थानवर्णनं नाम तृतीयः सर्गः ॥ ३ ॥
66468
66469 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
66470 सभासंस्थानवर्णनं नाम तृतीयः सर्गः ॥ ३ ॥
66471
66472
66473 चतुर्थः सर्गः ४
66474
66475 श्रीवाल्मीकिरुवाच ।
66476
66477 मेघगम्भीरया वाचा विश्रब्धपदसुन्दरम् ।
66478 इदं दशरथो वाक्यमुवाच मुनिनायकम् ॥ १ ॥
66479
66480 राज्ञा वसिष्ठवाक्यानां प्रशंसा मुनिवाक्यतः ।
66481 रामेण चिन्तितार्थानामनुवादश्च वर्ण्यते ॥ १ ॥
66482
66483 विश्रब्धैर्विश्वासातिशयप्रकाशकैः पदैः सुन्दरम् ॥ १ ॥
66484
66485 भगवन्ह्यस्तनेन त्वं वाक्यसंदर्भजन्मना ।
66486 कच्चिन्मुक्तोऽसि खेदेन तपःकार्श्यातिशायिना ॥ २ ॥
66487
66488 ह्यस्तनेन पूर्वेद्युर्भवेन वाक्यसंदर्भोच्चारणजन्मना खेदेन श्रमेण ॥
66489 २ ॥
66490
66491 ह्यस्तनोक्तो य आनन्दी विविक्तो वचसां गणः ।
66492 अमृतावर्षणेनेव तेनैवाश्वासिता वयम् ॥ ३ ॥
66493
66494 आनन्दी श्रोत्रानन्दनशीलः । विविक्तो विशदः ॥ ३ ॥
66495
66496 चन्द्रांशव इवोत्सार्य तमांस्यमृतनिर्मलाः ।
66497 अन्तःशीतलयन्त्येता महताममला गिरः ॥ ४ ॥
66498
66499 तमांसि अज्ञानान्यन्धकारांश्च ॥ ४ ॥
66500
66501 अपूर्वाह्लाददायिन्य उच्चैस्तरपदाश्रयाः ।
66502 अतिमोहापहारिण्यः सूक्तयो हि महीयसाम् ॥ ५ ॥
66503
66504 इदानीं चन्द्रांशुभ्योऽप्युत्कर्षमाह - अपूर्वेति । अपूर्वः
66505 अनास्वादितपूर्वः कारणशून्यश्चानन्दो ब्रह्मसुखं प्रयोजनम् । तदेव
66506 मानुषानन्दादिहैरण्यगर्भानन्दान्तविषयसुखेभ्य उच्चैस्तरं पदं
66507 तदाश्रयास्तद्विषयाः । अतिमोहापहारिण्य इत्यनर्थनिवृत्तिरूपं
66508 प्रयोजनान्तरं तासामुक्तम् ॥ ५ ॥

66509
66510 आत्मरत्नावलोकैकदीपिका सरसात्मिका |
66511 यमाद्युक्तिलतोदेति स वन्द्यः सुजनद्रुमः || ६ ||
66512
66513 युक्तिलक्षणा ज्योतिर्लता यस्मादुदेति यमाश्रित्योदेति || ६ ||
66514
66515 दुरीहितं दुर्विहितं सर्वं सज्जनसूक्तयः |
66516 प्रमार्जयन्ति शीतांशोस्तमःकाण्डमिवाङ्घ्रयः || ७ ||
66517
66518 दुरीहितं मानसदोषम् | दुर्विहितं शारीरदोषम् | सर्वं समस्तेन्द्रियदोषम् |
66519 शीतांशोश्चन्द्रस्याङ्घ्रयः किरणाः || ७ ||
66520
66521 तृष्णालोभादयोऽस्माकं संसारनिगडा मुने |
66522 तवोक्त्या तनुतां याताः शरदीवासिताम्बुदाः || ८ ||
66523
66524 तानेव स्पष्टमाह - तृष्णेति | तनुतामल्पावशेषताम् || ८ ||
66525
66526 संप्रवृत्ता वयं द्रष्टुमात्मानमपकल्मषम् |
66527 रसाञ्जनानीतदृशो जात्यन्धा इव काञ्चनम् || ९ ||
66528
66529 रसः सिद्धरसस्तद्रचितैः सिद्धाञ्जनैरानीतदृशो
66530 ब्रह्मरसाभ्यञ्जनेनानीतप्रत्यग्दृशश्च || ९ ||
66531
66532 संसारवासनानाम्नी मिहिका हृदयाम्बरे |
66533 प्रवृत्ता तनुतां गन्तुं त्वदुक्तिशरदेव नः || १० ||
66534
66535 हृदयाम्बरे स्थितेति शेषः | रूपकबलादेवान्तर्भूते | इवार्थे गम्यमाने
66536 पुनरिवशब्दप्रयोग उत्प्रेक्षाद्योतनार्थः || १० ||
66537
66538 मुने मन्दारमञ्जर्यस्तरङ्गा वामृताम्भसः |
66539 न तथा ह्लादयन्त्यन्तर्यथोदारधियां गिरः || ११ ||
66540
66541 अमृताम्भसः अमृताम्भोधेः || ११ ||
66542
66543 यद्यद्राघव संयाति महाजनसपर्यया |
66544 दिनं तदिह सालोकं शेषास्त्वन्धा दिनालयः || १२ ||
66545
66546 यद्यद्दिनं महतां जनानां ब्रह्मविदां सपर्यया पूजया संयात्यपयाति |
66547 सालोकं सप्रकाशम् | अन्धास्तमोवृताः || १२ ||
66548
66549 राम राजीवपत्राक्ष प्रकृतार्थमिहाव्ययम् |
66550 मुनिमाबोधय पुनः प्रसादे समवस्थितम् || १३ ||
66551
66552 आबोधय पृच्छ || १३ ||
66553
66554 इत्युक्तो भूभृता तत्र रामाभिमुखमास्थितः |
66555 उवाचेदमुदारात्मा वसिष्ठो भगवान्मुनिः || १४ ||
66556
66557 आस्थित्त उपविष्टः || १४ ||
66558
66559 श्रीवसिष्ठ उवाच |
66560

66561 राघव स्वकुलैकेन्दो यन्मयोक्तं महामते |
66562 कच्चित्स्मरसि वाक्यार्थं पूर्वापरविचारितम् || १५ ||
66563
66564 उत्पत्तीनां विचित्राणां सत्त्वादिगुणभेदतः |
66565 कच्चित्स्मरसि सर्वासां विभागमरिमर्दन || १६ ||
66566
66567 सर्वासां प्रागुक्तजीवजातीनाम् || १६ ||
66568
66569 कश्चित्सर्वमसर्वं च सदसच्च सदोदितम् |
66570 रूपं स्मरसि वेत्स्येव विविक्तं परमात्मनः || १७ ||
66571
66572 सर्वं नटवन्मायया जगद्वेषेण स्थितं ब्रह्म | असर्वं निष्प्रपञ्चम् |
66573 सत्स्थूलमसत्सूक्ष्मं सत्यासत्यरूपं वा मदुक्तं स्मरसि स्वबुद्ध्या
66574 दृश्येभ्यो विविक्तं वेत्स्येव वा || १७ ||
66575
66576 यथेदमुदितं विश्वं विश्वेशादेव चेश्वरात् |
66577 कच्चित्स्मरसि तत्साधो साधुवादैकभाजन || १८ ||
66578
66579 विश्वेशात्सर्वशक्तिसंपन्नादीश्वराद्ब्रह्मणः | एवकारः
66580 सांख्याद्यभिमतप्रधानादिकारणवादनिरासार्थः | साधुवादाः
66581 प्रशंसाः सदुपदेशाश्च || १८ ||
66582
66583 रूपं कच्चिदविद्याया बलाद्भङ्गुरमाततम् |
66584 अनन्तमन्तवच्चैव सम्यक्स्मरसि सन्मते || १९ ||
66585
66586 बलात्कालबलात् | संख्यया अनन्तं देशकालादिना त्वन्तवत् || १९ ||
66587
66588 चित्तमेव नरो नान्यदिति यत्प्रतिपादितम् |
66589 लक्षणादिविचारेण कच्चित्स्मरसि साधु तत् || २० ||
66590
66591 वाक्यार्थश्चाखिलः कच्चित्त्वया राम विचारितः |
66592 ह्यस्तनस्य विचारस्य रात्रौ हृदि निवेशितः || २१ ||
66593
66594 ह्यस्तनस्य विचारस्य श्रवणस्य विषयो वाक्यार्थो विचारितो मननेन परिष्कृतः
66595 || २१ ||
66596
66597 भूयोभूयः परामृष्टं हृदये सुनियोजितम् |
66598 प्रयोजनं फलत्युच्चैर्न हेलाहतसंस्थितेः || २२ ||
66599
66600 हेलया अनादरेण हता संस्थितिरुपदिष्टार्थधारणं येन तथाविधस्य
66601 पुरुषाधमस्य न फलतीत्यर्थः || २२ ||
66602
66603 भाजनं त्वं विविक्तानां वचसां शुद्धिशालिनाम् |
66604 विविक्तहृदयः कण्ठे मुक्तानामिव राघव || २३ ||
66605
66606 विविक्तहृदयो विवेकशालिमनाः विशालवक्षाश्च || २३ ||
66607
66608 श्रीवाल्मीकिरुवाच |
66609
66610 कमलासनपुत्रेण मुनिना समहौजसा |
66611 एवं वितीर्णावसरो रामो वाक्यमुवाच ह || २४ ||
66612

66613 श्रीराम उवाच।
66614
66615 भगवन्सर्वधर्मज्ञ तवैवैतद्विजृम्भितम्।
66616 यदहं परमोदारो बुद्धवान्वचनं तव॥ २५॥
66617
66618 विजृम्भितं प्रभाविस्तारः॥ २५॥
66619
66620 यदादिशसि तत्सर्वं तथैव न तदन्यथा।
66621 अपास्तनिद्रेण मया वाक्यार्थो हृदि चिन्तितः॥ २६॥
66622
66623 तथैव कृतमिति शेषः। तदेव स्पष्टमाह - अपास्तेति॥ २६॥
66624
66625 भवान्धकारक्षतये भवतोक्तिविवस्वता।
66626 ह्यःप्रसादितमाह्लादि वाग्रश्मिपटलं प्रभो॥ २७॥
66627
66628 भवता कर्त्रा उक्तिलक्षणेन विवस्वता सूर्येण करणेन। उक्तौ
66629 उपदेशेनार्थप्रकाशनविषये विवस्वता सूर्यभूतेन भवतेति
66630 सामानाधिकरण्यं वा। आह्लादि जाड्यशीतापनयसुखकरम्॥ २७॥
66631
66632 तदतीतमदीनात्मन्सर्वमन्तःकृतं मया।
66633 रम्यं पुण्यं पवित्रं च रत्नवृन्दमिवान्वितम्॥ २८॥
66634
66635 अन्तःकृतं हृदि कृतम्। अन्वितं क्रमयुक्तम्॥ २८॥
66636
66637 हितानुबन्धि हृद्यं च पुण्यमानन्दसाधनम्।
66638 शिरसा ध्रियते कैर्नो सिधैस्त्वदनुशासनम्॥ २९॥
66639
66640 सर्वानिष्टहानानुबन्धित्वान्मधुरतरत्वात्परमपुरुषार्थसाधनत्वादनुल्लण्
66641 ^घ्यशासनत्वाच्च तव वचनमवश्यं शिरसा प्रणम्य हृदि
66642 कार्यमित्याशयेनाह - हितानुबन्धीति।
66643 सिद्धैर्देवभेदैर्योगमन्त्रादिसिद्धैः स्वतःसिद्धैः सनकादिभिर्वा कैर्न
66644 शिरसा ध्रियते॥ २९॥
66645
66646 प्रतिक्षिपन्तः संसारमिहिकावरणं वयम्।
66647 प्रसन्नास्त्वत्प्रसादेन वर्षान्त इव वासराः॥ ३०॥
66648
66649 स्वस्मिन्नुपदेशस्य नैष्फल्यशङ्कां वारयन्नाह - प्रतिक्षिपन्त इति।
66650 निरस्यन्त इत्यर्थः। वर्षान्ते शरदि॥ ३०॥
66651
66652 आपातमधुरारम्भं मध्ये सौभाग्यवर्धनम्।
66653 अनुत्तमफलोदर्कं पुण्यं त्वदनुशासनम्॥ ३१॥
66654
66655 उपदेशस्य कालत्रयेऽपि हितकारितामाह - आपातेति। आपाते श्रवणकाले।
66656 मध्ये मननदिध्यासनकाले। सौभाग्यस्य अन्तर्मुखताप्रयुक्तस्य
66657 शमादिसंपत्सुखस्य। अनुत्तमं मोक्षाख्यं फलं यत्र तथाविध उदर्क
66658 उत्तरकालो यस्य तत्॥ ३१॥
66659
66660 विकासिसितमम्लानमाह्लादितशुभाशुभम्।
66661 त्वद्वचःकुसुमं नित्यं श्रीमत्फलदमस्तु नः॥ ३२॥
66662
66663 सितं स्वच्छं शुभ्रं च। आह्लादितानि आनन्दैकरसीकृतानि शुभाशुभानि
66664 पुण्यपापानि तत्फलानि च येन। आह्लादिताः शुभा देवा अशुभाः सर्पादयश्च

66665 येन। त्वद्वचोलक्षणं कुसुमं कल्पवृक्षपुष्पम्॥ ३२॥
66666
66667 सकलशास्त्रविचारविशारद
66668 प्रसृतपुण्यजलैकमहाह्रद।
66669 भज भृशं विततव्रत संप्रति
66670 प्रसृततां हतकिल्बिष संततिम्॥ ३३॥
66671
66672 इदानीं गुरुं तीर्थत्वान्महाह्रदत्वेन रूपयन्संबोध्य पुनः
66673 शिष्टार्थोपदेशवाक्प्रवाहं प्रार्थयते - सकलेति।
66674 देशकालशास्त्रविचारेषु [देशकालेति सकलशब्दार्थः] विशारद हे
66675 प्रसृताचारपुण्यजलानामेकमहाह्रद विततव्रत मां प्रति [अयं
66676 संततिपदस्यार्थः तथाच त्वत्संततिं मां प्रतीत्यर्थः। रामस्य
66677 विद्यावंशत्वेन वसिष्ठसंतानत्वात्] संप्रति प्रसृततां
66678 उपदेशवाक्प्रसरं भजेत्यर्थः। ह्रदपक्षे सकलशास्त्रलक्षणानां वीनां
66679 हंसादिपक्षिणां चारैर्विशारद शोभमान। विततानि विस्तारितानि व्रतानि
66680 मुनिभिर्यत्र। स्नातॄणां हतानि किल्बिषाणि येन। एवंविध हे
66681 प्रसृतपुण्यजलैकमहाह्रद त्वं संप्रति इदानीं संततिं
66682 वाक्संतानरूपां प्रसृततां प्रवाहं भजेत्यर्थः। मां प्रतीत्यन्ते पाठे
66683 मद्विशुद्धये इत्यर्थः॥ ३३॥
66684
66685 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपाये
66686 उपशमप्रकरणे राघवप्रश्नो नाम चतुर्थः सर्गः॥ ४॥
66687
66688 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
66689 राघवप्रश्नो नाम चतुर्थः सर्गः॥ ४॥
66690
66691
66692 पञ्चमः सर्गः ५
66693
66694 श्रीवसिष्ठ उवाच।
66695
66696 इदमुत्तमसिद्धान्तसुन्दरं सुन्दराकृते।
66697 उपशान्तिप्रकरणं शृणुष्वावहितो हितम्॥ १॥
66698
66699 अविवेकप्रवृद्धाया मनोमात्रजगत्स्थितेः।
66700 इहोपशमनोपायक्रमः सम्यगुदीर्यते॥ १॥
66701
66702 अवहितः सावधानचित्तः॥ १॥
66703
66704 दीर्घसंसारमायेयं राम राजसतामसैः।
66705 धार्यते जन्तुभिर्नित्यं सुस्तम्भैरिव मण्डपः॥ २॥
66706
66707 प्रागुक्तमनूद्य प्रस्तुतेन संगमयति - दीर्घेति। राजसतामसैः
66708 प्रागुक्तजीवैर्धार्यते। पुरुषो वा अक्षितिः सहीदमन्नं धियाधिया जनयते
66709 कर्मभिः इत्यादिश्रुतेरिति भावः॥ २॥
66710
66711 सत्त्वस्थजातिभिर्धीरैस्त्वादृशैर्गुणबृंहितैः।
66712 हेलया त्यज्यते पक्वा [तुच्छे इति पाठः] मायेयं त्वगिवोरगैः॥ ३
66713 ।।
66714
66715 प्रागुक्तलक्षणैः सत्त्वस्थजातिभिः राजससात्त्विकैः शुद्धसात्त्विकैश्च॥ ३॥
66716

66717 ये सत्त्वजातयः प्राज्ञास्तथा राजससात्त्विकाः ।
66718 विचारयन्ति ते साधो जगत्पूर्वपरम्पराम् ॥ ४ ॥
66719
66720 केनोपायेन त्यज्यते तमाह - ये इति । पूर्वपरम्परां मूलपरम्परां
66721 अन्नेन सोम्य शुङ्गेनापोमूलमन्विच्छ इत्यादिश्रुतिदर्शिताम् ॥ ४ ॥
66722
66723 शास्त्रसज्जनसत्कार्यसङ्गेनोपहतैनसाम् ।
66724 सारावलोकिनी बुद्धीर्जायते दीपिकोपमा ॥ ५ ॥
66725
66726 सत्कार्याणि यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् इति भगवदुक्तानि ॥ ५ ॥
66727
66728 स्वयमेव विचारेण विचार्यात्मानमात्मना ।
66729 यावन्नाधिगतं ज्ञेयं न तावदधिगम्यते ॥ ६ ॥
66730
66731 स्वयमेवेति । उद्धरेदात्मनात्मानं इति न्यायादिति भावः । नाधिगतं न
66732 ज्ञातम् । अधिगम्यते प्राप्यते ॥ ६ ॥
66733
66734 प्रज्ञावतां नयवतां धीराणां कुलशालिनाम् ।
66735 जात्या राजससत्त्वानां मुख्यस्त्वं रघुनन्दन ॥ ७ ॥
66736
66737 त्वयि तु तत्प्राप्तियोग्यतास्त्येवेत्याह - प्रज्ञावतामिति । नयवतां
66738 प्रमाणकुशलानाम् ॥ ७ ॥
66739
66740 स्वयमालोकय प्राज्ञ संसारारम्भदृष्टिषु ।
66741 किं सत्यं किमसत्यं वा भव सत्यपरायणः ॥ ८ ॥
66742
66743 आलोकय विचारेण पश्य ॥ ८ ॥
66744
66745 आदावन्ते च यन्नासि कीदृशी तस्य सत्यता ।
66746 आदावन्ते च यन्नित्यं तत्सत्यं नाम नेतरत् ॥ ९ ॥
66747
66748 अस्तीति सत् सदेव सत्यमसत्ताविरुद्धस्वभावं तद्विरुद्धं नास्तिस्वभावं
66749 कथं संभवेत् । स्वभावविपर्यासायोगादिति भावः । नित्यं
66750 नियतसत्स्वभावम् ॥ ९ ॥
66751
66752 आद्यन्तासन्मये यस्य वस्तुन्यासज्जते मनः ।
66753 तस्य मुग्धपशोर्जन्तोर्विवेकः केन जन्यते ॥ १० ॥
66754
66755 आसज्जते सत्यबुद्ध्या रज्यते ॥ १० ॥
66756
66757 जायते मन एवेह मन एव विवर्धते ।
66758 सम्यग्दर्शनदृष्ट्या तु मन एव हि मुच्यते ॥ ११ ॥
66759
66760 मनोरथरचितप्रासादवन्मनोमात्रकार्यत्वादपि न सत्यताप्रसक्तिर्जगत
66761 इत्याशयेनाह - जायत इति ॥ ११ ॥
66762
66763 श्रीराम उवाच ।
66764
66765 ज्ञातमेतन्मया ब्रह्मन्यथास्मिन्भुवनत्रये ।
66766 मन एव हि संसारिजरामरणभाजनम् ॥ १२ ॥
66767
66768 प्रश्नः स्पष्टः ॥ १२ ॥

66769
66770 यस्तस्योत्तरणोपायस्तन्मे ब्रूहि सुनिश्चितम् |
66771 हार्दं तमस्त्वयार्केण राघवाणां विनाश्यते || १३ ||
66772
66773 श्रीवसिष्ठ उवाच |
66774
66775 पूर्वं राघव शास्त्रेण वैराग्येण परेण च |
66776 तथा सज्जनसङ्गेन नीयतां पुण्यतां मनः || १४ ||
66777
66778 प्रथमं शास्त्रसज्जनसङ्गाभ्यां वैराग्यादिसाधनचतुष्टयं
66779 संपाद्यमित्याह - पूर्वमिति | पुण्यतां ज्ञानोदययोग्यतापादिकां
66780 विशुद्धिम् || १४ ||
66781
66782 सौजन्योपहितं चेतो यदा वैराग्यमागतम् |
66783 तदानुगम्या गुरवो विज्ञानगुरवोऽपि ये || १५ ||
66784
66785 सौजन्यं निरभिमानिता | ये गुरवो विज्ञानेन सर्वशास्त्ररहस्यज्ञानेन गुरवो
66786 गरीयांसोऽपि शब्दादुपदेशकौशलेन शिष्यबोधनसमर्थाश्च भवन्ति ते
66787 विधिना अनुगम्याः || १५ ||
66788
66789 ततस्तस्योपदिष्टेन कृत्वा ध्यानार्चनादिकम् |
66790 क्रमेण पदमाप्नोति तद्यत्परमपावनम् || १६ ||
66791
66792 उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम् |
66793 ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात् इत्यादिश्रुतेः
66794 प्रथमं गुरूपदिष्टमार्गेण सगुणेश्वरध्यानार्चनादिकं कृत्वा
66795 तदनुग्रहाद्वक्ष्यमाणविचारादिकमेणेत्यर्थः || १६ ||
66796
66797 विचारेणावदातेन पश्यत्यात्मानमात्मना |
66798 इन्दुना शीतलेनान्तर्विश्वं खमिव तेजसा || १७ ||
66799
66800 विश्वं कृत्स्नं खमिन्दुना तेजसा पूर्णमिव || १७ ||
66801
66802 तावद्भवमहाम्भोधौ जनस्तृणवदुह्यते |
66803 विचारतटविश्रान्तिमेति यावन्न चेतसा || १८ ||
66804
66805 चेतसा बुद्धिप्लवेन विचारलक्षणे तटे यावद्विश्रान्तिं स्थैर्य नैति || १८ ||
66806
66807 विचारेण परिज्ञातवस्तुनोऽस्य जनस्य धीः |
66808 सर्वानधःकरोत्याधीन्सौम्याम्भ इव वालुकाः || १९ ||
66809
66810 आधीन् मानसदुःखानि | अधःकरोति निरस्यतीति यावत् | सौम्यं निम्नप्रसन्नम् ||
66811 १९ ||
66812
66813 इदं रुक्ममिदं भस्म परिज्ञातमिति स्फुटम् |
66814 न यथा हेमकारस्य हेमज्ञानात्मनस्तथा || २० ||
66815
66816 भस्मनि गूढं हेम अन्यैर्विवेक्तुमशक्यमपि यथा हेमज्ञनात्मनः सदा
66817 हेमपरिशोधनेन तद्विवेककुशलात्मनो हेमकारस्य इदं रुक्ममिदं
66818 भस्मेति स्फुटं परिज्ञातमिति न तदलाभमोहस्यावसरस्तथा
66819 अयमज्ञदृशा प्रसिद्धो मनागात्मा परिच्छिन्नजीवश्चिरं विचारेण विविच्य
66820 स्वात्मनि अवगते सति अक्षयः कालादिपरिच्छेदशून्यः स्वत एव स्फुटं

66821 भवतीति कुतो मोहस्यावसर इति परेणान्वयः ॥ २० ॥
66822
66823 अक्षयोऽयं मनागात्मा स्वात्मन्यवगते चिरम् ।
66824 भवतीति नरस्येह मोहस्यावसरः कुतः ॥ २१ ॥
66825
66826 अपरिज्ञातसारे हि मनोऽन्तर्यदि मुह्यते ।
66827 ज्ञातसारे त्वसंदिग्धमसती किल मूढता ॥ २२ ॥
66828
66829 अपरिज्ञातसारे पुरुषे । यदि मुह्यति तर्हि मुह्यतां नामेति शेषः । असती
66830 असंभावितैव किलेत्यर्थः ॥ २२ ॥
66831
66832 हे जना अपरिज्ञात आत्मा वो दुःखसिद्धये ।
66833 परिज्ञातस्त्वनन्ताय सुखायोपशमाय च ॥ २३ ॥
66834
66835 इदानीमनुक्रोशात्सर्वश्रोतृजनान्प्रत्याह - हे जना इति । यदा ह्येवैष
66836 एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवति तत्त्वेव भयं
66837 विदुषोऽमन्वानस्य इत्यादिश्रुतेरिति भावः । परिज्ञातस्त्विति । रस ह्येवायं
66838 लब्ध्वानन्दी भवति । सर्वान्कामानाप्त्वाऽमृतः समभवत् । ज्ञात्वा तं
66839 मृत्युमत्येति । आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन इत्यादिश्रुतेरिति
66840 भावः ॥ २३ ॥
66841
66842 मिश्रीभूतमिवानेन देहेनोपहतात्मना ।
66843 व्यक्तीकृत्य स्वमात्मानं स्वस्था भवत मा चिरम् ॥ २४ ॥
66844
66845 व्यक्तीकृत्य पञ्चकोशविवेकेन दृष्ट्वा ॥ २४ ॥
66846
66847 देहेनास्य न संबन्धो मनागेवामलात्मनः ।
66848 हेम्नः पङ्कलवेनेव तद्गतस्यापि मानवाः ॥ २५ ॥
66849
66850 व्यक्तीकरणमेव स्फुटयति - देहेनेत्यादिना । अप्यर्थे एवकारः ॥ २५ ॥
66851
66852 पृथगात्मा पृथग्देही जलपद्मलवोपमौ ।
66853 ऊर्ध्ववाहुर्विरौम्येष न च कश्चिच्छृणोति मे ॥ २६ ॥
66854
66855 आत्मा ब्रह्म देही जीवश्च यथा पद्माधारमहाजलं
66856 पद्मपत्रनिविष्टजललवश्चोपाधित एव पृथङ्न वस्तुतस्तद्वदित्यर्थः । ननु
66857 महाजलस्य पद्मपत्रारोहपरिच्छेदादौ वाय्वादिनिमित्तं प्रसिद्धम् ।
66858 पूर्णात्मनः परिच्छेदेन देहारोहणे किं निमित्तमिति चेदसकृदुद्घोषितं
66859 पापिष्ठं मन एव । अतस्तन्नाशायैव यत्नः कार्य
66860 इत्याशयेनानुक्रोशादाक्रोशति - ऊर्ध्वबाहुरित्यादिना ॥ २६ ॥
66861
66862 जडधर्मि मनो यावद्गर्तकच्छपवत्स्थितम् ।
66863 भोगमार्गवदामूढं विस्मृतात्मविचारणम् ॥ २७ ॥
66864
66865 दुर्वासनापङ्कगर्ते कच्छपवन्निलीनं कठोरं च भोगप्राप्तौ
66866 मार्गवद्द्वारभूतैरिन्द्रियैर्विषयेष्वामूढं मनो यावत्स्थितं
66867 तावत्संसारतिमिरं सेन्दुना सवह्निना
66868 अपिशब्दान्नक्षत्रमण्यादिसर्वतेजःसहितेन अर्कद्वादशकेनापि मनाक् ईषदपि
66869 न भिद्यते इति परेण सहान्वयः ॥ २७ ॥
66870
66871 तावत्संसारतिमिरं सेन्दुनापि सवह्निना ।
66872 अर्कद्वादशकेनापि मनागपि न भिद्यते ॥ २८ ॥

66873
66874 संप्रबुद्धे हि मनसि स्वां विवेचयति स्थितिम् |
66875 नैशमर्कोदय इव तमो हार्दं पलायते || २९ ||
66876
66877 स्वां पारमार्थिकीं स्थितिं विवेचयति अनृताद्विविच्य पश्यति सति || २९ ||
66878
66879 नित्यमुत्तमबोधाय योगशय्यागतं मनः |
66880 बोधयेद्भवभेदाय भवो ह्यत्यन्तदुःखदः || ३० ||
66881
66882 योगो देहादितादात्म्याध्यासस्तल्लक्षणायां शय्यायां गतं सुप्तं
66883 समाधिविश्रान्तिं कृत्वेति वा || ३० ||
66884
66885 यथा रजोभिर्गगनं यथा कमलमम्बुभिः |
66886 न लिप्यते हि संश्लिष्टैर्देहैरात्मा तथैव च || ३१ ||
66887
66888 कथं बोधयेत्तदाह - यथेति || ३१ ||
66889
66890 कर्दमादि यथा हेम्ना श्लिष्टिमेति पृथक्स्थितम् |
66891 नान्तःपरिणतिं याति जडो देहस्तथात्मना || ३२ ||
66892
66893 हेमतादात्म्यापत्तिलक्षणां परिणतिमन्तर्वस्तुतो न याति || ३२ ||
66894
66895 सुखदुःखानुभावित्वमात्मनीत्यवबुध्यते |
66896 असत्यमेव गगने बिन्दुताम्लानते यथा || ३३ ||
66897
66898 अनुभावित्वमनुसारित्वमनुभवितृत्वं च इत्यवबुध्यते मूढ इति शेषः |
66899 बिन्दुता तद्यथावटरकाणि संपतन्तीव दृश्यन्ते इति श्रुत्यनुभवसिद्धा
66900 बिन्दुसहस्राकारता | म्लानता मालिन्यम् || ३३ ||
66901
66902 सुखदुःखे न देहस्य सर्वातीतस्य नात्मनः |
66903 एते ह्यज्ञानकस्यैव तस्मिन्नष्टे न कस्यचित् || ३४ ||
66904
66905 यदि नात्मनः सुखदुःखे तर्हि किं देहस्य नेत्याह - सुखदुःखे इति | तर्हि
66906 कस्य तत्राह - एते इति | अज्ञानमेवाज्ञानकं तस्यैव || ३४ ||
66907
66908 न कस्यचित्सुखं किंचिद्दुःखं च नच कस्यचित् |
66909 सर्वमात्ममयं शान्तमनन्तं पश्य राघव || ३५ ||
66910
66911 आत्ममयमात्मविवर्तम् | शान्तं नित्यप्रशान्तम् || ३५ ||
66912
66913 इमा याः परिदृश्यन्ते वितताः सृष्टिदृष्टयः |
66914 पयसीव तरङ्गास्ते पिच्छं व्योम्नीव चात्मनि || ३६ ||
66915
66916 विवर्ततां दृष्टान्तेन दर्शयति - इमा इति | व्योम्नि पिच्छं
66917 अर्धनिमीलिताक्षस्य सूर्याभिमुखं शयानस्य भ्रान्त्या प्रसिद्धम् || ३६ ||
66918
66919 यथा मणिर्ददात्यात्मच्छायाः स्वयमकारणम् |
66920 तेजोमयीस्तथैवायमात्मा सृष्टीः प्रयच्छति || ३७ ||
66921
66922 तेजोमयीरात्मच्छायाः स्वकान्तीर्ददाति प्रसारयति | अकारणमक्रियाव्यापृत इति
66923 यावत् | प्रयच्छति प्रसारयति || ३७ ||
66924

66925 आत्मा जगच्च सुमते नैकं न द्वैतमप्यसत् |
66926 आभासमात्रमेवेदमित्थं संप्रति जृम्भते || ३८ ||
66927
66928 नैकं नाद्वयम् न द्वैतं न नानापि यतो जगद्रूपमसत् | नह्यसता सतोऽभेदो
66929 भेदो वा निरूपयितुं शक्यत इत्यर्थः | संप्रत्यज्ञानकाले || ३८ ||
66930
66931 समस्तं खल्विदं ब्रह्म सर्वमात्मैवमाततम् |
66932 अहमन्यदिदं चान्यदिति भ्रान्तिं त्यजानघ || ३९ ||
66933
66934 परमार्थतस्तु भ्रान्तेरपि पृथग्दुर्निरूपत्वात् ब्रह्मैवेदं
66935 सर्वमात्मैवेदं सर्वम् इति श्रुत्युक्तदृशा ब्रह्मैव सर्वमित्याह -
66936 समस्तमिति || ३९ ||
66937
66938 तते ब्रह्मघने नित्ये संभवन्ति न कल्पनाः |
66939 विच्छित्तयः पयोराशौ यथा राम न सन्मयाः || ४० ||
66940
66941 तते दैशिकपरिच्छेदरहिते | ब्रह्मघने वस्तुकृतपरिच्छेदरहिते | नित्ये
66942 कालिकपरिच्छेदशून्ये || ४० ||
66943
66944 एकसिन्नेव सर्वस्मिन्परमात्मनि वस्तुनि |
66945 द्वितीया कल्पना नास्ति वह्नौ हिमकणो यथा || ४१ ||
66946
66947 वास्तवैकत्वविरोधादपि न द्वैतकल्पना सतीत्याह - एकस्मिन्नेवेति || ४१ ||
66948
66949 भावयन्नात्मनात्मानं चिद्रूपेणैव चिन्मयम् |
66950 ऋजूज्ज्वलमये ह्यात्मा स्वयमात्मनि जृम्भते || ४२ ||
66951
66952 इदानीं तादृशात्मपरिचयेन तत्र विश्रान्तये सदा तद्भावना कार्येत्याह ##-
66953 ऋजूज्ज्वलमये मायाकौटिल्यमालिन्यरहिते इति यावत् || ४२ ||
66954
66955 न शोकोस्ति न मोहोस्ति न जन्मास्ति न जन्मवान् |
66956 यदस्तीह तदेवास्ति विज्वरो भव राघव || ४३ ||
66957
66958 तद्भावपन्नस्य जीवन्मुक्तिविश्रान्तिं दर्शयति - न शोक इत्यादिना || ४३ ||
66959
66960 निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् |
66961 अद्वितीयो विशोकात्मा विज्वरो भव राघव || ४४ ||
66962
66963 निर्द्वन्द्वः शीतोष्णादिशारीरद्वन्द्वविक्षेपरहितः | नित्यसत्त्वे
66964 स्थितत्वाद्रजस्तमःप्रयुक्तमानसविक्षेपरहितः | अत एव
66965 तदुभयपरिहारोपाययोगक्षेमचिन्तोज्झितः || ४४ ||
66966
66967 समः स्वस्थः स्थिरमतिः शान्तशोकमना मुनिः |
66968 मौनी वरमणिस्वच्छो विज्वरो भव राघव || ४५ ||
66969
66970 विविक्तः शान्तसंकल्पो धीरधीर्विजिताशयः |
66971 यथाप्राप्तानुवर्ती च विज्वरो भव राघव || ४६ ||
66972
66973 विविक्तः अविद्यातत्कार्यनिर्णिक्तः | विजिताशयः स्वाधीनचित्तः || ४६ ||
66974
66975 वीतरागो निरायासो विमलो वीतकल्मषः |
66976 नादाता न परित्यागी विज्वरो भव राघव || ४७ ||

66977
66978 विश्वातीतपदं प्राप्तः प्राप्तप्राप्तव्यपूरितः ।
66979 पूर्णार्णववदक्षुब्धो विज्वरो भव राघव ॥ ४८ ॥
66980
66981 विकल्पजालनिर्मुक्तो मायाञ्जनविवर्जितः ।
66982 आत्मनात्मनि तृप्तात्मा विज्वरो भव राघव ॥ ४९ ॥
66983
66984 अनन्तापारपर्यन्तवपुरात्मविदांवर ।
66985 धराधरशिरोधीरो विज्वरो भव राघव ॥ ५० ॥
66986
66987 धराधराणां शिर इव श्रेष्ठो मेरुः स इव धीरः ॥ ५० ॥
66988
66989 यथाप्राप्तानुभवनात्सर्वत्रानभिवाञ्छनात् ।
66990 त्यागादानपरित्यागाद्विज्वरो भव राघव ॥ ५१ ॥
66991
66992 आत्मन्येवात्मनौदार्यं भज पूर्ण इवार्णवः ।
66993 आत्मन्येवात्मनाह्लादं भज पूर्णेन्दुबिम्बवत् ॥ ५२ ॥
66994
66995 औदार्यमकार्पण्यम् । पूर्णकामतामिति यावत् । आह्लादं
66996 सर्वतापोपशमसुखम् ॥ ५२ ॥
66997
66998 विश्वप्रपञ्चरचनेयमसत्यरूपा
66999 नासत्यरूपमनुधावति राम तज्ज्ञः ।
67000 तज्ज्ञोऽसि शान्तकलनोऽसि निरामयोऽसि
67001 नित्योदितोऽसि भव सुन्दर शान्तशोकः ॥ ५३ ॥
67002
67003 उक्तमर्थं संगृह्योपदिशन्नुपसंहरति - विश्वेति । स्पष्टोऽर्थः ॥ ५३ ॥
67004
67005 एकातपत्रमवनौ गुरुणोपदिष्टं
67006 सम्यक्सुपालय चिरं समयेह दृष्ट्या ।
67007 राज्यं समस्तगुणरञ्जितराजलोक-
67008 स्त्यागो न युक्त इह कर्मसु नापि रागः ॥ ५४ ॥
67009
67010 यदि तज्ज्ञोऽसत्यं नानुधावति तर्हि किं मम राज्यादिना पारिव्राज्यमेव
67011 युक्तमिति रामाशयमालक्ष्याह - एकेति । गुरुणा पित्रा
67012 उपदिष्टमाज्ञप्तमेकातपत्रं राज्यं समस्तगुणरञ्जिता राजानो लोकाः
67013 प्रजाश्च येन तथाविधः सन् समया दृष्ट्या चिरं सम्यक् सुपालय ।
67014 प्रारब्धत्वादवश्यभोक्तव्येषु कर्मसु तत्फलेषु च त्यागो न युक्तो नापि रागो
67015 युक्त इत्यर्थः । त्यक्त्वा कर्मफलासङ्गं नित्ययुक्तो निराश्रयः ।
67016 कर्मण्यभिप्रवृत्तोऽपि नैव किंचित्करोति सः । इति भगवद्वचनादिति भावः ॥ ५४
67017 ॥
67018
67019 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपायेषु
67020 उपशमप्रकरणे प्रशमोपदेशो नाम पञ्चमः सर्गः ॥ ५ ॥
67021
67022 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
67023 प्रशमोपदेशो नाम पञ्चमः सर्गः ॥ ५ ॥
67024
67025
67026 षष्ठः सर्गः ६
67027
67028 श्रीवसिष्ठ उवाच ।

इमं विश्वपरिस्पन्दं करोमीत्यस्तवासनम् |
प्रवर्तते यः कार्येषु स मुक्त इति मे मतिः || १ ||

इह कर्मगतीः पूर्वमुक्त्वा चरमजन्मनाम् |
जीवन्मुक्त्यै गुणावाप्तौ सामान्यक्रम ईर्यते || १ ||

गुणार्जनक्रमस्य वक्ष्यमाणस्य प्रकृतसंबन्धं दर्शयितुं प्रस्तुतं
निरासङ्गविहिताप्रतिषिद्धकार्यप्रवृत्त्या जीवन्मुक्तं लक्षयति - इममिति |
विश्वं कृत्स्नं परिस्पन्दं
श्रुतिस्मृतिसदाचारप्राप्तव्यवहारमयस्कान्तवत्सन्निधिमात्रेण
करोमीत्यस्तवासनं प्रवर्तते नत्वज्ञ इव कर्तृत्वाभिनिवेशेनेत्यर्थः || १ ||

पौरुषीं तनुमाश्रित्य केचिदेतत्क्रियारताः |
स्वर्गान्नरकमायान्ति स्वर्गं च नरकात्पुनः || २ ||

कर्मफलासङ्गादेवाज्ञानामनर्थप्राप्तिरिति दर्शयति - पौरुषीमिति |
पौरुषीं मानुषीं तनुं देहमाश्रित्य प्राप्यापि केचिन्मूढा एतस्यां
निरासङ्गकर्मानुष्ठानलक्षणायां क्रियायामरताः कामात्मानः
काम्यकर्मभिः स्वर्ग भुक्त्वा ततः कतिपयकर्मानुशयावशेषेण
[कपूय इति पाठः] नरकमायान्ति || २ ||

केचित्त्वकर्मणि रता विरता अपि कर्मणः |
नरकान्नरकं यान्ति दुःखाद्दुःखं भयाद्भयम् || ३ ||

अकर्मणि निषिद्धकर्मणि रताः | कर्मणः सत्कर्मणो विरताः | तथाच स्मृतिः
- विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् | अनिग्रहाच्चेन्द्रियाणां नरः
पतनमृच्छति || इति || ३ ||

केचित्स्ववासनातन्तुबद्धाः कर्मफलोदिताः |
तिर्यक्त्वात्स्थावरतनुं यान्ति तिर्यक्तनुं ततः || ४ ||

नरकोपभुक्तदुष्कर्मफलक्रमेण तिर्यग्योनिषु उदिता जाताः || ४ ||

केचिदात्मविदो धन्या विचारितमनोदृशः |
विच्छिन्नतृष्णानिगडा यान्ति निष्केवलं पदम् || ५ ||

राजसतामसान् शुद्धतामसांश्चोक्त्वा शुद्धसात्त्विकजीवानाह - केचिदिति |
विचारितो मनोदृक् मनःसाक्ष्यात्मा यैस्ते निष्केवलं परमकैवल्यरूपं
पदम् || ५ ||

पुरा कतिपयान्येव भुक्त्वा जन्मानि राघव |
अस्मिञ्जन्मनि यो मुक्तस्तस्माद्राजससात्त्विकः [तस्माद्राजस इत्यत्र स
स्याद्राजस इति पाठो युक्तः] || ६ ||

राजससात्त्विकान्दर्शयति - पुरेति | कतिपयान्युत्तरोत्तरोत्कृष्टानि
मानुषजन्मानि || ६ ||

जातोऽसौ वृद्धिमभ्येति पार्वणश्चन्द्रमा इव |
कुटजं प्रावृषीवैनं सौभाग्यमनुगच्छति || ७ ||

तस्य शान्त्यादिगुणैरभिवृद्धिमाह - जात इत्यादिना | सौभाग्यं

67081 साधनचतुष्टयम् | कुटजपक्षे पुष्पश्रीः || ७ ||
67082
67083 यस्येदं जन्म पाश्चात्यं तमाश्वेव महामते |
67084 विशन्ति विद्या विमला मुक्ता वेणुमिवोत्तमम् || ८ ||
67085
67086 विद्या ब्रह्मविद्योपायसर्वविद्याः | वेणुमिवेति वेणुविशेषस्यापि
67087 मुक्ताकरत्वप्रसिद्धेः || ८ ||
67088
67089 आर्यता हृद्यता मैत्री सौम्यता करुणा ज्ञता |
67090 समाश्रयन्ति तं नित्यमन्तःपुरमिवाङ्गनाः || ९ ||
67091
67092 ज्ञता परोक्षप्रायं ज्ञानम् || ९ ||
67093
67094 यः कुर्वन्सर्वकार्याणि पुष्टे नष्टेऽथ तत्फले |
67095 समः सन्सर्वकार्येषु न तुष्यति न शोचति || १० ||
67096
67097 तस्योपक्रमोक्तजीवन्मुक्तलक्षणोपक्रममाह - य इति | पुष्टे प्रवृद्धे ||
67098 १० ||
67099
67100 तमांसीव दिवा यान्ति तत्र द्वन्द्वानि संक्षयम् |
67101 शरदीव घनास्तत्र गुणा गच्छन्ति शुद्धताम् || ११ ||
67102
67103 द्वन्द्वानि सुखदुःखादीनि | प्राङ्गलिना अपि धृतिश्रद्धाह्रीप्रभृतयो
67104 गुणाः || ११ ||
67105
67106 पेशलाचारमधुरं सर्वे वाञ्छन्ति तं जनाः |
67107 वेणुं मधुरनिध्वानं वने वनमृगा इव || १२ ||
67108
67109 वेणुं कीचकम् | मारुतपूर्णरन्ध्रत्वेन मधुरनिध्वानम् || १२ ||
67110
67111 नरं पाश्चात्यजन्मानमेवंप्राया गुणश्रियः |
67112 जातमेवानुधावन्ति बलाका इव वारिदम् || १३ ||
67113
67114 जातमेवेति बाल्यात्प्रभृत्येवेति यावत् || १३ ||
67115
67116 ततोऽसौ गुणसंपूर्णो गुरुमेवानुगच्छति |
67117 स तमेवं विवेके वै नियोजयति पावने || १४ ||
67118
67119 एवंगुणसंपत्तौ गुरुमुखाच्छ्रवणाधिकारो नापक्वचित्तानामित्याशयेनाह
67120 - तत इति | एवं प्राङ्गदुक्तप्रकारे आत्मानात्मतत्त्वविवेके उपायानुपदिश्य
67121 स्वबुद्ध्यापि कार्ये मनने नियोजयती त्यर्थः || १४ ||
67122
67123 विचारवैराग्यवता चेतसा गुणशालिना |
67124 देवं पश्यत्यथात्मानमेकरूपमनामयम् || १५ ||
67125
67126 एवंगुणसंपन्नस्यैव गुरुपूर्वकश्रवणादिना साक्षात्कारलाभं दर्शयति
67127 - विचारेति | एकरूपमानन्दैकरसम् || १५ ||
67128
67129 तनोत्ययं विचारेण चारुणा शान्तचेतसा |
67130 प्रबोधनाय प्रथमं मनोमननमान्तरम् || १६ ||
67131
67132 नियोजयतीत्यत्र सूचितं मननं विवृणोति - तनोतीति || १६ ||

67133
67134 ये हि पाश्चात्यजन्मानस्ते हि सुप्तं मनोमृगम् ।
67135 प्रबोधयन्ति प्रथमं गुणहीनं महागुणाः ॥ १७ ॥
67136
67137 गुणहीनं निर्गुणं ब्रह्मैव यथा भवति तथा प्रबोधयन्तीत्यर्थः ॥ १७ ॥
67138
67139 प्रथितगुणान्सुगुरून्निषेव्य यत्ना-
67140 दमलधिया प्रविचार्य चित्तरत्नम् ।
67141 गतिममलामुपयान्ति मानवास्ते
67142 परमवलोक्य चिरं प्रकाशमन्तः ॥ १८ ॥
67143
67144 उक्तमर्थं संक्षिप्योपसंहरति - प्रथितेति । ते
67145 उक्तगुणसंपन्नाश्चरमजन्मानो मानवाः प्रथितगुणान्
67146 प्रख्यातजीवन्मुक्तलक्षणगुणान् सुगुरून् यत्नान्निषेव्य
67147 तद्दर्शितयुक्तिभिरमलधिया चित्तान्तर्गतं रत्नं प्रत्यगात्मानं प्रविचार्य
67148 रत्नपरीक्षावन्मननेन परीक्ष्य चित्तान्तःप्रकाशं परं प्रत्यगभिन्नं
67149 ब्रह्म चिरमवलोक्य साक्षादनुभूय तत्साक्षात्कारमात्रेण
67150 तद्भावलाभलक्षणाममलां मायातत्कार्यसर्वमलनिर्मुक्तां
67151 परमपुरुषार्थलक्षणां गतिमुप समीपे स्वस्थान एव यान्ति लभन्ते
67152 नोपासकवदुत्क्रम्य लोकान्तरं गत्वेत्यर्थः ॥ १८ ॥
67153
67154 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये
67155 मोक्षोपायेषूपशमप्रकरणे प्रथमोपदेशो नाम षष्ठः सर्गः ॥ ६ ॥
67156
67157 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
67158 प्रथमोपदेशो नाम षष्ठः सर्गः ॥ ६ ॥
67159
67160
67161 सप्तमः सर्गः ७
67162
67163 श्रीवसिष्ठ उवाच ।
67164
67165 एष तावत्क्रमः प्रोक्तः सामान्यः सर्वदेहिनाम् ।
67166 इममन्यं विशेषं त्वं शृणु राजीवलोचन ॥ १ ॥
67167
67168 इह स्वेन विचारेण किंचिद्व्युत्पन्नचेतसः ।
67169 वर्ण्यते ज्ञानसंप्राप्तिप्रकाशफलपातवत् ॥ १ ॥
67170
67171 उक्तं सामान्यक्रममनूद्य कस्यचिद्भाग्यवतो विनैव तं दैवोपनीतेन
67172 स्वविचारमात्रेणैव सहसा सर्वगुणसंपत्सहितज्ञानोदयलक्षणं विशेषं
67173 दर्शयति - एष इत्यादिना ॥ १ ॥
67174
67175 अस्मिन्संसारसंरम्भे जातानां देहधारिणाम् ।
67176 अपवर्गक्षमौ राम द्वाविमावुत्तमौ क्रमौ ॥ २ ॥
67177
67178 अपवर्गक्षमौ मोक्षफलोपहितौ । इमौ उक्तवक्ष्यमाणौ ॥ २ ॥
67179
67180 एकस्तावद्गुरुप्रोक्तादनुष्ठानाच्छनैः शनैः ।
67181 जन्मना जन्मभिर्वापि सिद्धिदः समुदाहृतः ॥ ३ ॥
67182
67183 एकेन जन्मना बहुभिर्वा जन्मभिः सिद्धिदो मोक्षप्रापकः समुदाहृतः ।
67184 प्रागुक्त इत्यर्थः ॥ ३ ॥

67185
67186 द्वितीयस्त्वात्मनैवाशु किंचिद्व्युत्पन्नचेतसा।
67187 भवति ज्ञानसंप्राप्तिराकाशफलपातवत्॥ ४॥
67188
67189 आत्मना स्वेनैव दैवोपनीतजीवजगत्तत्त्वविचारवता
67190 ज्ञानसंप्राप्तिर्भवतीत्यर्थः॥ ४॥
67191
67192 नभःफलनिपाताभज्ञानसंप्रतिपत्तये।
67193 तत्रेमं शृणु वृत्तान्तं प्राक्तनं कथयामि ते॥ ५॥
67194
67195 द्वितीये क्रमे जनकाख्यायिकामुदाहरिष्यन्भूमिकां रचयति - नभःफलेति
67196 ॥ ५॥
67197
67198 शृणु सुभग कथां महानुभावा
67199 व्यपगतपूर्वशुभाशुभार्गलौघाः।
67200 खपतितफलवत्परं विवेकं
67201 चरमभवा विमलं समश्नुवन्ति॥ ६॥
67202
67203 हे सुभग चरमभवाश्चरमजन्मानो महानुभावाः पुरुषाः परं विवेकं
67204 यथा खपतितफलवत्समश्नुवन्ति तथा वक्ष्यमाणां कथां
67205 शृण्वित्यर्थः॥ ६॥
67206
67207 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० मोक्षोपायेषूपशमप्रकरणे
67208 आकाशफलप्राप्तिवज्ज्ञानसंप्राप्तिक्रमसूचनं नाम सप्तमः सर्गः
67209 ॥ ७॥
67210
67211 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
67212 आकाशफलप्राप्तिवज्ज्ञानसंप्राप्तिक्रमसूचनं नाम सप्तमः सर्गः॥ ७॥
67213
67214
67215 अष्टमः सर्गः ८
67216
67217 श्रीवसिष्ठ उवाच।
67218
67219 अस्त्यस्तमितसर्वापदुद्यत्संपदुदारधीः।
67220 विदेहानां महीपालो जनको नाम वीर्यवान्॥ १॥
67221
67222 जनकेन वसन्तेऽत्र वने विहरता क्वचित्।
67223 सिद्धगीताः शुभाः श्लोकाः श्रुता इत्युपवर्ण्यते॥ १॥
67224
67225 विदेहानां जनपदानां महीपालो राजा॥ १॥
67226
67227 कल्पवृक्षोऽर्थिसार्थानां मित्राब्जानां दिवाकरः।
67228 माधवो बन्धुपुष्पाणां स्त्रीणां मकरकेतनः॥ २॥
67229
67230 अर्थिसार्थानां याचकजनसङ्घानाम्। बन्धुलक्षणानां पुष्पाणां
67231 माधवी वसन्तः॥ २॥
67232
67233 द्विजकैरवशीतांशुर्द्विषत्तिमिरभास्करः।
67234 सौजन्यरत्नजलधिर्भुवं विष्णुरिवास्थितः॥ ३॥
67235
67236 भुवं विष्णुर्भवानिव आस्थितः पालनार्थमाश्रितः॥ ३॥

67237
67238 प्रफुल्लबाललतिके मञ्जरीपुञ्जपिञ्जरे।
67239 स कदाचिन्मधौ मत्ते कोकिलालापलासिनि॥ ४॥
67240
67241 प्रफुल्ला बाललतिका यत्र। अनुकम्पायां कन्। मत्ते मत्तवद्विजृम्भमाणे अत
67242 एव कोकिलालापैर्लासिनि नृत्यतीव स्थिते मधौवसन्ते॥ ४॥
67243
67244 ययौ कुसुमिताभोगं सुविलासलताङ्गनम्।
67245 लीलयोपवनं कान्तं नन्दनं वासवो यथा॥ ५॥
67246
67247 सुविलासा लता एवाङ्गनालता अङ्गनाश्च वा यत्र॥ ५॥
67248
67249 तस्मिन्वरवने हृद्ये केसरोद्दाममारुते।
67250 दूरस्थानुचरः सानुकुञ्जेषु विचचार ह॥ ६॥
67251
67252 केसरेषूद्दामा रजःसौगन्ध्यमकरन्दकणापहरणसमर्था नतु
67253 पांसुविकिरणादौ। मन्दसुरभिशीता इति यावत्। तथाविधा मारुता यत्र।
67254 सानुकुञ्जेषु क्रीडाशैलप्रस्थप्ररूढेषु लतागृहेषु॥ ६॥
67255
67256 अथ शुश्राव कस्मिंश्चित्तमालवनगुल्मके।
67257 सिद्धानामप्रदृश्यानां स्वप्रसङ्गादुदाहृताः॥ ७॥
67258
67259 अप्रदृश्यानामन्तर्हितानाम्। स्वप्रसङ्गात् स्वानुग्रहार्थमिति यावत्॥ ७॥
67260
67261 विविक्तवासिनां नित्यं शैलकन्दरचारिणाम्।
67262 इमाः कमलपत्राक्ष गीता गीतात्मभावनाः॥ ८॥
67263
67264 श्रुतिस्मृतिपुराणेतिहासैर्गीतमात्मानं श्रवणमात्रेण भावयन्ति यथा
67265 स्वयमेव साक्षाद्भवति तथा कुर्वन्तीति गीतात्मभावनाः। गीताः
67266 स्मार्तोपनिषदः शुश्राव॥ ८॥
67267
67268 सिद्धा ऊचुः।
67269
67270 द्रष्टृदृश्यसमायोगात्प्रत्ययानन्दनिश्चयः।
67271 यस्तं स्वमात्मतत्त्वोत्थं निःस्पन्दं समुपास्महे॥ ९॥
67272
67273 द्रष्टुश्चक्षुरादिद्वारा विषयप्रमातुर्दृश्येन स्रक्चन्दनवनितादिविषयेण
67274 समायोगात्संनिकर्षाज्जाते प्रत्यये विषयाकारबुद्धिवृत्तौ स्वयं प्रथमानो
67275 य आनन्दरूपो निश्चयस्तं तत्स्वभावमेव आत्मतत्त्वपरिशोधनेन उत्थं
67276 निरतिशयभूमात्मनाविर्भूतं स्वमात्मानं निःस्पन्दं
67277 निर्विकल्पसमाधिनिरस्तबाह्यान्तःकरणस्पन्दं यथा स्यात्तथा समुपास्महे
67278 निरन्तरमनुभवामः। अयं भावः - विषयाकारवृत्तौ स्वयं
67279 प्रथमान आनन्दो न विषयकोटौ। जडत्वप्रसङ्गात्। नापि
67280 कर्तृकरणवृत्तिकोटौ। तेषां कारकत्वेन तच्छेषतानुभवविरोधात्।
67281 तस्मात्साक्षिकोटावेव। साक्ष्येव
67282 ह्यविद्यावरणमन्दीकृतचिदानन्दस्वभावोऽन्यमहंकारात्मानं कल्पयित्वा
67283 तच्छेषतामिवापन्नो विषयाकारवृत्त्याविर्भूतं स्वानन्दं तच्छेषतामिव
67284 नयन् न स्वात्मानं निरतिशयानन्दं प्रतिबुद्ध्यते अतस्तमेव
67285 स्वतत्त्वविचारोत्थनिरतिशयानन्दस्वभावं समाहितेन मनसा वयमुपास्महे
67286 एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति इति
67287 श्रुतेर्ब्रह्मानन्दस्यैवाविद्यया विषयाकारवृत्तिपरिच्छेदेन
67288 विषयानन्दत्वविभावनादिति। अथवा द्रष्टुः पुरुषस्य दृश्यस्य वियदादेश्च

67289 बाह्याध्यात्मिकवैषम्यप्रविलापनेन समे परिशिष्टसन्मात्रस्वभावे
67290 आत्यन्तिकाभेदापत्तिलक्षणादायोगान्मेलनारूढाद्योगादिति व्युत्पत्त्या
67291 निर्विकल्पकसमाधिपरिपाकाद्वा प्रत्ययः प्रत्येयः स्वानुभवादेव
67292 विश्वसनीयो भूमानन्दनिश्चयो यस्तमात्मनस्तत्त्वेन यथार्थरूपेणोत्थं
67293 प्रकटीभूतं स्वं निस्पन्दं समुपास्महे इत्यर्थः | अथवा
67294 द्रष्टुर्बुद्धेर्दृश्यानां विषयाणां
67295 चोपचयापचयजाड्यप्रियाप्रियादिरूपसाम्येन
67296 समादायोगात्संबन्धात्तदुभयान्तरालिकस्तदुभयविलक्षणत्वात्प्रत्यय
67297 एवानन्द इति निश्चीयत इत्यानन्दनिश्चयस्तं निस्पन्दं
67298 सक्रियवृत्त्युपाधिनिर्मुक्तमत एवात्मतत्त्वोत्थं
67299 स्वीययथार्थरूपेणाविर्भूतं चिदानन्दैकरसं स्वं प्रत्यगात्मानं
67300 समुपास्मह इत्यर्थः | अथवा य आत्मा अहमिति द्रष्टा इदं ममेति
67301 दृश्यैश्चान्योन्यतादात्म्यसंसर्गाध्यासलक्षणात्समायोगात्प्रतीयते
67302 अनुभूयते शुनकसूकरादिभिरपीति प्रत्ययो विषयानन्द एव पुरुषार्थ इति
67303 निश्चयवान्संसरति | स्वा स्वीया या मा प्रमा
67304 वेदान्तजन्याखण्डाकारवृत्तिस्तया आत्मतत्त्वोत्थं
67305 स्वीयपारमार्थिकरूपेणाविर्भूतं कृत्वा निस्पन्दं निश्चलं समुपास्मह
67306 इत्यर्थः | अथवा यः प्रत्ययः स्वप्रकाश आनन्दैकरसः स्वरूपनिश्चयो
67307 द्रष्टृदृश्यसमायः सन् द्रष्टृदृश्याकारमायासहितो भूत्वा अगात्
67308 स्वरूपप्रच्युतोऽभूत्तमानन्दनिश्चयं चरमसाक्षात्कारवृत्त्यारूढा या
67309 स्वात्मभूतैव मा तया दृष्टृदृश्यमायानिरासेनात्मतत्त्वेनोत्थमित्यादि
67310 प्राग्वत् | अथवा द्रष्टृदृश्यसमाः यः अगादिति च्छेदः | य आत्मा
67311 तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मात्
67312 इत्यादिश्रुत्यनुभवसिद्धात्परमप्रेमास्पदत्वप्रत्ययादानन्दरूपत्वेन
67313 निश्चेतुं योग्योऽपि विवेकविचारादिप्रत्ययाभावाद्द्रष्टृदृश्यसमा
67314 भोक्तृभोग्यप्रायाः संसारदशा अगात् तं यस्तम् | यसु प्रयत्ने क्तः |
67315 विवेकवैराग्यश्रवणमननादिप्रयत्नैः साक्षात्कृतं स्वेनैव मिमीते
67316 परिच्छिनत्ति हिनस्ति वा सर्व द्रष्टृदृश्यद्वैतजातमिति स्वमं
67317 यदात्मतत्त्वं तद्भावेनोत्थितं निस्पन्दं पुनः
67318 संसारप्रसक्तिशङ्काशून्यं सम्यगुपेत्य सर्वसामीप्यावधि
67319 प्रत्यगात्मतया प्राप्य आस्महे तिष्ठामह इत्यर्थः || ९ ||
67320
67321 अन्ये ऊचुः |
67322
67323 द्रष्टृदर्शनदृश्यानि त्यक्त्वा वासनया सह |
67324 दर्शनप्रथमाभासमात्मानं समुपास्महे || १० ||
67325
67326 तमेवात्मानं निष्कृष्य करतलामलकवद्दर्शयन्त इवान्ये प्राहुः -
67327 द्रष्टृदर्शनेति | द्रष्ट्रादित्रिपुटीत्यागेनावस्थाद्वयनिरासः | वासनया
67328 सहेत्यनेनतु तदुभयबीजवासनासंभृतसौषुप्ताज्ञानस्यापि निरासः उक्तः |
67329 दर्शनाच्चक्षुषमानसादिवृत्तेः प्रथमं पूर्वमेव तदुत्पत्तिसाक्षितया
67330 भासमानमित्यनेन पूर्वसिद्धस्त्रिपुटीसाक्षी सर्वानुभवसिद्धो विविच्य
67331 दर्शितः | तमेव सबीजत्रिपुटीत्यागात्तुरीयमात्मानं समुपास्मह इत्यर्थः || १०
67332 | |
67333
67334 अन्ये ऊचुः |
67335
67336 द्वयोर्मध्यगतं नित्यमस्तिनास्तीति पक्षयोः |
67337 प्रकाशनं प्रकाश्यानामात्मानं समुपास्महे || ११ ||
67338
67339 दर्शनप्रथमाभासे साक्षिणि ये अस्तिनास्तीति विप्रतिपद्यन्ते तान्प्रत्यपि
67340 तदुभयपक्षाविरुद्धं साक्षिणं दर्शयन्तोऽन्ये प्राहुः - द्वयोरिति | ये

67341 तावदस्ति दर्शनप्रथमाभासः परंतु सोऽपि जन्य एव न नित्य इत्याहुस्तेषां
67342 पूर्वपूर्वतदाभासानां स्वप्रकाशत्वे स्वविषयत्वे वा
67343 स्वमात्राभानपरिक्षीणत्वात्पूर्वोत्तरविज्ञानास्पर्शित्वाच्च न
67344 तदुत्पत्त्यादिसाक्षिता निर्वहतीति तत्साक्षी अन्य आवश्यक इति तत्पक्षमध्यगतं
67345 तदविरुद्धं येऽपि नास्तित्याहुस्तेषां नास्तिताया अपि निःसाक्षिकाया
67346 असिद्धेस्तत्पक्षसाधकत्वेन तन्मध्यगतमित्यर्थः। अथवा जगतः अस्तित्वं
67347 आविर्भूतावस्थाकार्यम्। नास्तित्वं तु तिरोभावावस्थाकारणम्। असद्वा इदमग्र
67348 आसीत्ततो वै सदजायत इति श्रुतेः। तयोरुभयोरयौगपद्यात्पक्षयोः
67349 पाक्षिकयोरनुगतसन्मात्ररूपेण मध्यगतमित्यर्थः अथवा अस्तिनास्तीति
67350 पक्षयोः कल्पितविरुद्धकोट्योर्द्वयोरप्यधिष्ठानतया मध्यगतमित्यर्थः।
67351 अत एव कल्पितानास्तित्वस्याधिष्ठानस्पर्शान्नित्यं प्रकाश्यानां
67352 भावाभावानां प्रकाशकम्॥ ११॥
67353
67354 अन्ये ऊचुः।
67355
67356 यस्मिन्सर्वं यस्य यतः सर्वं यस्मायिदम् [यस्मा इदम् इति क्वचित्]।
67357 येन सर्वं यद्धि सर्वं तत्सत्यं समुपास्महे॥ १२॥
67358
67359 यस्मिन्सर्वमिति। यस्मै इदमिति च्छेदः। सप्तमीविभक्तिमारभ्य व्युत्क्रमेण
67360 सर्वा विभक्तयः षण्णां कारकाणां संबन्धप्रातिपदिकार्थभेदस्य च
67361 प्रदर्शनायात्र निर्दिष्टाः। तथाच यद्ब्रह्म सर्वाधारत्वात्सर्वस्वामित्वादेः
67362 सर्वोपादाननिमित्तावधिभावात्सर्वपारार्थ्यसंप्रदानादिभावनिर्वाहकत्वात्
67363 अर्वकर्तृकरणादिभावाच्च मायया सर्वजगद्व्यवहारनिर्वाहकं
67364 सर्वात्मकं च भवति तत्सर्वाधिष्ठानं परमार्थसत्यं प्रत्यगात्मैवेति
67365 बोधेन सम्यगुपेत्य तद्भूता आस्महे इत्यर्थः॥ १२॥
67366
67367 अन्ये ऊचुः।
67368
67369 अशिरस्कं हकारान्तमशेषाकारसंस्थितम्।
67370 अजस्रमुच्चरन्तं स्वं तमात्मानमुपास्महे॥ १३॥
67371
67372 अः शिर इव प्रथमो यस्य तमकारादिमित्यर्थः। हकारोऽन्ते यस्य तं
67373 हकारान्तमहंपदमशेषवस्तुप्रकाशकवेदशास्त्रादिशब्दजालप्रकृतिभू
67374 तानामशेषवर्णानामक्षरसमाम्नाये
67375 अकारहकारान्तरालनिवेशादशेषजगदाकारे सप्रपञ्चे ब्रह्मणि न हन्यते न
67376 हीयते इति व्युत्पत्त्या अह व्याप्ताविति धातुनिष्पत्त्या च न शिष्यते आकारो
67377 यस्मिन्नित्यशेषाकारे निर्गुणे च संस्थितं तात्पर्यनिष्ठां प्राप्तमजस्रं
67378 क्रियमाणेषु स्वव्यवहारेषु उच्चरन्तं अहंकारोपाधिनिरासेन तं
67379 वर्णिताहंपदार्थं आत्मा वा इदमेक एवाग्र आसीत्
67380 इत्यादिश्रुतिप्रसिद्धब्रह्मात्मानमुपास्महे निरन्तरं भावयाम इत्यर्थः।
67381 अथवा अशेषवस्त्वाकारसंस्थितं लवरयंहं इति हकारान्तं
67382 पञ्चबीजप्रतिपाद्यपञ्चमहाभूतात्मकं जगत् अशिरस्कं
67383 शिरोभूतमूलाज्ञानरहितं कर्तुमिव अस्त्यस्यति वा मायान्तं जगदिति
67384 व्युत्पत्त्याऽस्मच्छब्दनिष्पन्नमकारशिरस्कहकारान्तमहंपदमजस्रमुच्चर
67385 न्तम्। युष्मसिभ्यां मदिक् इत्यस्तेरस्यतेर्वास्मच्छब्दव्युत्पादनादित्यर्थः।
67386 अथवा अशेषजगदाकारसंस्थितं निष्प्रमाणकत्वेन
67387 निर्मूलत्वाच्छ्रुतिशिरोबाह्यत्वाचाशिरस्कं हकारान्तं सोऽहं
67388 परमार्थासङ्गचिदेकरसत्वादजस्रमुच्चरन्तं उदस्य चरन्तमुद्धृत्य
67389 भक्षयन्तं वा स्वं प्रत्यग्रूपमात्मानमुपास्महे इत्यर्थः। संग्रहे तु
67390 सशिरस्कं हकारादिमिति पाठः। तस्य च सुरनरतिर्यगाद्यशेषशरीराकारेषु
67391 संस्थितं सशिरस्कं हकारादि हंस इति मन्त्रमजपागायत्रीरूपेण
67392 षट्शताधिकैकविंशतिसहस्रसंख्यया अजस्रं प्रत्यहं

67393 श्वासोच्छ्वासच्छलेनोच्चरन्तमित्यर्थः। उदश्चरः सकर्मकात्
67394 इत्यात्मनेपदविषये लटः शत्रादेशश्छान्दसः। अथवा
67395 पूर्वरूपेणापहारान्न शिष्यते अकारो यत्र तदशेषाकारं सो इति पदं तत्र
67396 संस्थितं अत एव अशिरस्कं शिरोभूतप्रथमवर्णरहितं हकारान्तं
67397 हकारमात्रावशेषं अहंपदं सोहंमन्त्रमिति यावत्।
67398 अजस्रमुच्चरन्तमित्यादि प्राग्वत्॥ १३॥
67399
67400 अन्ये ऊचुः।
67401
67402 संत्यज्य हृद्गुहेशानं देवमन्यं प्रयान्ति ये।
67403 ते रत्नमभिवाञ्छन्ति त्यक्तहस्तस्थकौस्तुभाः॥ १४॥
67404
67405 हृद्गुहेशानं अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये
67406 संनिविष्टः। अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः ईशानो
67407 भूतभव्यस्य स एवाद्य स उश्वः इत्यादिश्रुतिप्रसिद्धमिति भावः॥ १४॥
67408
67409 अन्ये ऊचुः।
67410
67411 सर्वाशाः किल संत्यज्य फलमेतदवाप्यते।
67412 येनाशाविषवल्लीनां मूलमाला विलूयते॥ १५॥
67413
67414 अन्ये तत्प्राप्तौ वैराग्यमेव मुख्यं साधनमित्याहुः - सर्वाशा इति। एतत्
67415 हृदयस्थं ज्ञानफलं ब्रह्म अवाप्यते लभ्यते। येन तल्लाभेन
67416 मूलमालावासनाजालजटिलहृदयग्रन्थिः। रसोऽप्यस्य परं दृष्ट्वा निवर्तते
67417 इति भगवद्वचनादिति भावः॥ १५॥
67418
67419 अन्ये ऊचुः।
67420
67421 बुद्ध्वाप्यत्यन्तवैरस्यं यः पदार्थेषु दुर्मतिः।
67422 बध्नाति भावनां भूयो नरो नासौ स गर्दभः॥ १६॥
67423
67424 पदार्थेषु भोग्यविषयेषु। भावनां भोगतृष्णाम्॥ १६॥
67425
67426 अन्ये ऊचुः।
67427
67428 उत्थितानुत्थितानेतानिन्द्रियाहीन्पुनः पुनः।
67429 हन्याद्विवेकदण्डेन वज्रेणेव हरिर्गिरीन्॥ १७॥
67430
67431 अन्ये इन्द्रियनिग्रह एव मुख्यं साधनमित्याशयेनाहुः - उत्थितानिति।
67432 हरिरिन्द्रः। तथाच ब्रह्मवैवर्ते एकमेकं कालकूटमिन्द्रियं
67433 नाशकृत्पुनः। तदेव शोधितं साक्षाद्विषमप्यमृतं यथा इति। तथाच
67434 भारतेऽपि - इन्द्रियाण्येव तत्सर्वं यत्स्वर्गनरकावुभौ।
67435 निगृहीतविसृष्टानि स्वर्गाय नरकाय च॥ १७॥
67436
67437 अन्ये ऊचुः।
67438
67439 उपशमसुखमाहरेत्पवित्रं
67440 सुशमवतः शममेति साधुचेतः।
67441 प्रशमितमनसः स्वके स्वरूपे
67442 भवति सुखे स्थितिरुत्तमा चिराय॥ १८॥
67443
67444 अन्ये तु उपशम एव मुख्यं साधनमितरत्सर्वं

67445 तदर्थमित्याशयेनोपसंहरन्ति - उपशमेति। उपशमो
67446 बाह्याभ्यन्तरेन्द्रियव्यापारोपरमस्तेन
67447 विक्षेपदुःखोपशमवदाविर्भूतमात्मसुखमाहरेत्संपादयेत्। तद्धि न
67448 विषयसुखवद्दोषहेतुः किंतु चित्तप्रसादहेतुत्वात्पवित्रम्। शमवशतो
67449 निरिन्धनाग्निवच्चेतः शममुपक्षयं प्रयाति। एवं प्रशमितमनसः सुखे
67450 निरतिशयानन्दे स्वके स्वीये परमार्थस्वरूपे स्थितिर्भूमिका
67451 परम्परारोहणक्रमेणोत्तमा सप्तमभूमिकाप्रतिष्ठालक्षणा चिराय
67452 विदेहकैवल्यावधि भवतीत्यर्थः॥ १८॥
67453
67454 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे०
67455 मोक्षोपायेषूपशमप्रकरणे सिद्धगीतानामाष्टमः सर्गः॥ ८॥
67456
67457 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
67458 सिद्धगीतानामाष्टमः सर्गः॥ ८॥
67459
67460 नवमः सर्गः ९
67461
67462 श्रीवसिष्ठ उवाच।
67463
67464 इति सिद्धगनोद्गीता गीताः श्रुत्वा महीपतिः।
67465 विषादमाजगामाशु भीरू रणरवादिव॥ १॥
67466
67467 इह श्रुतवतो राज्ञो निर्वेदाद्गृहमीयुषः।
67468 विमर्शेनार्थमूलानां मनोनिर्णय ईर्यते॥ १॥
67469
67470 भीरुर्भयशीलः। ढ्रलोपे पूर्वस्य दीर्घो णः॥ १॥
67471
67472 जगाम परिवारं स्वमाकर्षन्स्वगृहं प्रति।
67473 स्वतीरवृक्षानुगतः सरिदोघ इवार्णवम्॥ २॥
67474
67475 स्वं स्वीयं परिवारम्॥ २॥
67476
67477 परिवारमशेषेण विसृज्य स्वं स्वमालयम्।
67478 एक एवारुरोहाग्र्यं गृहमर्क इवाचलम्॥ ३॥
67479
67480 स्वं स्वमालयं गृहं प्रति विसृज्य। गृहं गृहप्रासादम्।
67481 अचलमुदयाद्रिम्॥ ३॥
67482
67483 तत्र प्रोड्डयनालोलखगपक्षतिचञ्चलाः।
67484 आलोकयॅल्लोकगतिर्विललापेदमाकुलः॥ ४॥
67485
67486 प्रोड्डयने आलोलाः खगानां पक्षतयः पक्षमूलानीव चञ्चलाः। सोद्वेगं
67487 भङ्गुरा इति यावत्। लोकगतीर्देहादिदृश्यपदार्थस्थितीः। इदं
67488 वक्ष्यमाणप्रकारं विललाप॥ ४॥
67489
67490 हा कष्टमतिकष्टासु लोकलोलदशास्वयम्।
67491 पाषाणेष्विव पाषाणा आलुठामि बलादहम्॥ ५॥
67492
67493 लोकानां जीवानां लोलासु जन्मजराभयमरणादिना लोलासु दशासु।
67494 पाषाणदृष्टान्तो मौर्ख्यकठोरताद्योतनार्थः॥ ५॥
67495
67496 अपर्यन्तस्य कालस्य कोऽप्यंशो जीव्यते मया।

67497 तस्मिन्भावं निबध्नामि धिङ्मामधमचेतनम् ॥ ६ ॥
67498
67499 जीवधातोरकर्मकत्वेऽपि कालभावाध्वगन्तव्याः कर्मसंज्ञास्त्वकर्मणां
67500 इति कात्यायनवचनाज्जीव्यते इति काले कर्मणि लः । तस्मिंस्तादृशेऽपि जीवने
67501 भावमाशाम् ॥ ६ ॥
67502
67503 कियन्मात्रमिदं नाम राज्यमाजीवितं मम ।
67504 किमेतेन विना दुःखं तिष्ठामि हतधीर्यथा ॥ ७ ॥
67505
67506 आजीवितं जीविताविधि राज्यम् । एतेनैतावन्मात्रेण संतुष्टः सन् हतधीर्मूर्ख
67507 इव दुःखं भाविदुःखप्रतिकारचिन्तां विना किं तिष्ठामीत्यर्थः । अथवा
67508 एतेन एतावन्मात्रेण हतधीर्विनष्टबुद्ध्युपाधिर्जीवन्मुक्त इव विना दुःखं
67509 निर्दुःखं तिष्ठामि किं इति काक्वा योज्यम् ॥ ७ ॥
67510
67511 आदावन्तेऽप्यनन्तोऽहं मध्ये पेलवजीवितः ।
67512 बालश्चित्रेन्दुनेवाहं किं मुधा धृतिमास्थितः ॥ ८ ॥
67513
67514 ननु देह एवात्मा तस्य नाशे सहैव तेन सर्वदुःखनिवृत्तिः किं न
67515 स्यान्नेत्याह - आदाविति । कामकर्मवासनाबीजमन्तरेण
67516 भोगवैचित्र्यप्रयोजकजन्मासिद्धेर्विधिनिषेधमोक्षशास्त्रप्रामाण्यानुरोधाच्
67517 चानादिरनन्तश्चाहं न देहमात्र इत्यर्थः । चित्रलिखितेनानिन्दुनैवेन्दुबुद्ध्या
67518 गृहीतेन बाल इवानात्मनैवात्मतया गृहीतेन देहेनेत्यर्थः ।
67519 धृतिमाश्वासम् ॥ ८ ॥
67520
67521 प्रपञ्चरहितेनाहमिन्द्रजालेन जालिना ।
67522 हा कष्टमतिमुह्यामि केनास्मि परिमोहितः ॥ ९ ॥
67523
67524 केन जालिना ऐन्द्रजालिकेन परिमोहितोऽस्मि ॥ ९ ॥
67525
67526 यद्वस्तु यच्च वा रम्यं यदुदारमकृत्रिमम् ।
67527 किंचित्तदिह नास्त्येव किंनिष्ठेह मतिर्मम ॥ १० ॥
67528
67529 वसतीति वस्तु सत्यम् रम्यं सुखैकरूपम् उदारमपरिच्छिन्नम्
67530 अकृत्रिममजन्यं च तत्तादृशं किंचिदपि इह जगति नास्त्येव । कस्मिन् निष्ठा
67531 विश्रान्तिर्यस्याः सा किंनिष्ठा भवत्विति शेषः ॥ १० ॥
67532
67533 दूरस्थमप्यदूरस्थं यन्मे मनसि वर्तते ।
67534 इति निश्चित्य बाह्यार्थभावनां संत्यजाम्यहम् ॥ ११ ॥
67535
67536 ननु दूरदेशे तादृशं वस्तु प्रसिद्धं स्यान्नेत्याह - दूरस्थमिति ।
67537 दूरस्थत्वेन प्रसिद्धमपि यत्किंचिद्वस्तु अदूरस्थमेव । कुतः । यद्यस्मान्मे
67538 मनसि वर्तते । नहि मनो देहाद्बहिर्दूरं व्रजति । तथा सति दूरे एव
67539 तत्प्रथानुभूयेत न हृदि । हृद्येव हि सर्वे बाह्यवस्तुबोधमनुभवन्ति ।
67540 तस्माद्दूरादिकल्पनाप्यन्तर्भासमाना न वास्तवीत्यनर्थ एवेति तद्भावना
67541 त्याज्यैव नोपादेयेत्यर्थः ॥ ११ ॥
67542
67543 लोकाजवं जवीभावः सलिलावर्तभङ्गुरः ।
67544 दृष्टोऽद्यापि हि दुःखाय केयमास्था सुखं प्रति ॥ १२ ॥
67545
67546 लोकानां जनानां भोगार्थं धनार्जनादिप्रवृत्तिरूप आजवं जवीभावः
67547 सलिलावर्त इव भङ्गुरो नश्वरफलो जन्ममरणादिदुःखहेतुश्च बहुशो
67548 दृष्टः । सुखं विषयसुखं प्रति ॥ १२ ॥

67549
67550 प्रत्यब्दं प्रतिमासं च प्रत्यहं च प्रतिक्षणम् ।
67551 सुखानि दुःखपिण्डानि दुःखानि तु पुनः पुनः ॥ १३ ॥
67552
67553 उक्तमेव प्रपञ्चयति - प्रत्यब्दमित्यादिना । दुःखपिण्डानि दुःखनिबिडानि
67554 । एवार्थे तुशब्दः ॥ १३ ॥
67555
67556 परामृष्टं विशिष्टं हि दृष्टं नष्टं न भावितम् ।
67557 अत्रस्थं न तदस्तीह सतां यत्रास्तु संस्थितिः ॥ १४ ॥
67558
67559 अत्र संसारे तिष्ठतीत्यत्रस्थं किंचित्कालं दृष्टं सद्य एव नष्टं
67560 स्वराज्यादिपदं तुच्छत्वान्न भावितं न चिन्तितमेव । हि यतो विशिष्टं
67561 सर्वोत्कृष्टत्वेन प्रसिद्धमैन्द्रप्राजापत्यादिपदमपि परामृष्टं
67562 विचारितं सतां विवेकिनां संस्थितिरात्यन्तिकविश्रान्तिर्यत्रास्तु तादृशमिह
67563 नास्त्येवेत्यर्थः ॥ १४ ॥
67564
67565 अद्य ये महतां मूर्ध्नि ते दिनैर्निपतन्त्यधः ।
67566 हतचित्तमहत्तायां कैषा विश्वस्तता बत ॥ १५ ॥
67567
67568 हतेत्यधिक्षेपार्थं चित्तविशेषणम् । महत्तायां राज्यादिवैभवोत्कर्षे ।
67569 हतचित्तमहंतायाम् इति पाठे तु हतचित्तं यथा स्यात्तथा अहंतायां
67570 राज्याभिमाने इति योज्यम् ॥ १५ ॥
67571
67572 अरज्जुरेव बद्धोऽहमपङ्कोऽस्मि कलङ्कितः ।
67573 पतितोस्म्युपरिस्थोपि हा ममात्मन्हता स्थितिः ॥ १६ ॥
67574
67575 आत्मन्निति संबोधनम् । आत्मनि स्वस्वभावे स्थितिर्हतेति सुब्लुकि सप्तम्यन्तं वा
67576 योज्यम् ॥ १६ ॥
67577
67578 कस्मादकस्मान्मोहोयमागतो धीमतोऽपि मे ।
67579 असितः पिहितालोको भास्कराग्रमिवाम्बुदः ॥ १७ ॥
67580
67581 असितः श्यामः । भास्करस्य अग्रं पुरोदेशम् ॥ १७ ॥
67582
67583 क इमे मे महाभोगाः क इमे मम बान्धवाः ।
67584 बालो भूतमयेनेव संकेतेनाहमाकुलः ॥ १८ ॥
67585
67586 संकेतेन ममतालक्षणसंबन्धकल्पनेन ॥ १८ ॥
67587
67588 स्वयमेव निबध्नामि जरामरणरागिणीम् ।
67589 किमिमामहमेतेषु धृतिमुद्वेगकारिणीम् ॥ १९ ॥
67590
67591 एतेषु भोगादिषु जरामरणयोः रागिणीं प्रियसखीमिवानयित्रीम् । धृतिं
67592 आस्थाम् ॥ १९ ॥
67593
67594 यातु तिष्ठतु वा सम्यङ् ममैतां प्रति को ग्रहः ।
67595 बुद्बुदश्रीरिवैषा हि मथ्यैवेत्थमुपस्थिता ॥ २० ॥
67596
67597 एतां भोगबान्धवादिसंपदं प्रति को ग्रह आग्रहः ॥ २० ॥
67598
67599 ते महाविभवा भोगास्ते सन्तः स्निग्धबान्धवाः ।
67600 सर्वं स्मृतिपथं प्राप्तं वर्तमानेऽपि का धृतिः ॥ २१ ॥

67601
67602 ते चक्रवर्तिनां पृथुमरुत्तादीनां प्रसिद्धा महाविभवाः। सन्तः
67603 सद्गुणाः। सर्वमिति सामान्ये नपुंसकम्। का धृतिरास्था॥ २१॥
67604
67605 क्व धनानि महीपानां ब्रह्मणः क्व जगन्ति वा।
67606 प्राक्तनानि प्रयातानि केयं विश्वस्तता मम॥ २२॥
67607
67608 ब्रह्मणः प्राक्तनहिरण्यगर्भस्य। जगन्ति भुवनानि क्व प्रयातानि मम
67609 निधनादिष्विति शेषः॥ २२॥
67610
67611 गिलितानीन्द्रलक्षाणि बुद्बुदानीव वारिणि।
67612 मां जीवितनिबद्धास्थं विहसिष्यन्ति साधवः॥ २३॥
67613
67614 गिलितानि कालेनेति शेषः। गलितानि इति वा पाठः। साधवो विवेकिनः॥ २३॥
67615
67616 ब्रह्मणां कोटयो याता गताः सर्गपरम्पराः।
67617 प्रयाताः पांसुवद्भूपाः का धृतिर्मम जीविते॥ २४॥
67618
67619 कोटिग्रहणमानन्त्योपलक्षणम् संसारस्यानादित्वात्। धृतिरास्था॥ २४॥
67620
67621 संसाररात्रिदुःस्वप्ने चेत्ये [चेत्यदेहभये इति पाठः] देहमये
67622 भ्रमे।
67623 आस्थां चेदनुबध्नामि तत्रेमां तु धिगस्थितिम्॥ २५॥
67624
67625 संसार एव रात्रिस्तमोमयत्वात्तत्र ये दुःस्वप्नभूते देहमये देहप्रचुरे
67626 अहंममताव्यवहारभ्रमे अस्थितिममर्यादामविवेकितामिति यावत्॥ २५॥
67627
67628 अयं सोऽहमिति व्यर्थकल्पनाऽसत्स्वरूपिणी।
67629 अहंकारपिशाचेन किमज्ञवदहं स्थितः॥ २६॥
67630
67631 अयमिति देहसंनिहिते अपरोक्षताकल्पनम्। स इति तद्विप्रकृष्टे परोक्षताकल्पना
67632 । अहमिति देहे आत्मताकल्पना। सा त्रिविधापि असत्स्वरूपिण्येव। अतः
67633 अहंकारपिशाचेन मोहित इति शेषः। अहमज्ञवत्किं किमर्थं निर्विचार
67634 एतावन्तं कालं स्थित इत्यर्थः॥ २६॥
67635
67636 हतं हतमिदं कस्मादायुराततयानया।
67637 पश्यन्नपि न पश्यामि सूक्ष्मया काललेखया॥ २७॥
67638
67639 सूक्ष्मया क्षणलवमुहूर्तादिरूपया काललेखया इदमायुर्हतं हतं
67640 प्रतिक्षणं मुहुर्मुहुश्छिन्नं पश्यन्नपि कस्मान्न पश्यामि न
67641 विमृशामीत्यर्थः॥ २७॥
67642
67643 पादपीठे कृतेशानाः शार्ङ्गिक्रीडनकन्दुकाः।
67644 कालकापालिकाग्रस्ताः किमास्थे मयि वल्गसि॥ २८॥
67645
67646 पादपीठे पादपीठवद्रचितेषु भुवनेषु कृताः प्रतिमावद्रचिता नमिता वा
67647 ईशाना ईश्वरा ब्रह्मादयोऽपि यैः। शार्ङ्गिणो विष्ण्वादिदेहाः क्रीडनकन्दुका
67648 इव मुहुर्मुहुर्युद्धादिव्यवहारेषु नभस्युत्क्षिप्ता यैः। तहाविधा
67649 महाकल्पलक्षणकालरूपा ब्रह्मकपालपाणित्वात्कापालिका रुद्रास्तेऽपि
67650 महाकालेन ग्रस्ताः। आस्थे हे जीविताशे मयि किं वल्गसि नृत्यसि॥ २८॥
67651
67652 अजस्रमुपयान्त्येते यान्ति चाद्यापि वासराः।

67653 अविनष्टैकसद्वस्तुर्दृष्टो नाद्यापि वासरः ‖ २९ ‖
67654
67655 उपयान्ति आगच्छन्ति | अद्यास्मिन्नपि वयसि यान्ति वृथैवापगच्छन्ति | अविनष्टं
67656 नित्यमेकं सन्निर्दोषमानन्दैकरसं वस्तु लब्धं यस्मिंस्तथाविधो
67657 वासरोऽद्यापि अद्यतनकालावधि न दृष्टः ‖ २९ ‖
67658
67659 सारसाः सरसीवैते सर्वस्मिञ्जनचेतसि |
67660 भोगा एव स्फुरन्त्यन्तर्न तु स्वपददृष्टयः ‖ ३० ‖
67661
67662 स्वं प्रत्यगात्मभूतं यत्परमं पदं तस्य दृष्टयः साक्षात्काराः ‖ ३०
67663 | |
67664
67665 कष्टात्कष्टतरं प्राप्तो दुःखाद्दुःखतरं गतः |
67666 अद्यापि न विरक्तोस्मि हा धिङ्मामधमाशयम् ‖ ३१ ‖
67667
67668 रागलोभादिदूषितत्वादधम आशयो मनो यस्य तम् ‖ ३१ ‖
67669
67670 येषु येषु दृढा बद्धा भावना भव्यवस्तुषु |
67671 तानि तानि विनष्टानि दृष्टानि किमिहोत्तमम् ‖ ३२ ‖
67672
67673 भावना प्रीतिः | भव्येषु रमणीयेषु वस्तुषु विषयेषु ‖ ३२ ‖
67674
67675 यन्मध्ये यच्च पर्यन्ते यदापाते मनोरमम् |
67676 सर्वमेवापवित्रं तद्विनाशामेध्यदूषितम् ‖ ३३ ‖
67677
67678 मध्ये मनोरमं वयः | पर्यन्ते मनोरमो धर्मः | आपाते मनोरमा
67679 विषयाः ‖ ३३ ‖
67680
67681 येषु येषु पदार्थेषु धृतिं बध्नाति मानवः |
67682 तेषु तेष्वेव तस्यायं दृष्टो नाशोदयो भृशम् ‖ ३४ ‖
67683
67684 धृतिमास्थाम् | तस्य मानवस्य | अयं प्रसिद्धः | नाशोदयो
67685 दुःखप्रादुर्भावः ‖ ३४ ‖
67686
67687 श्वःश्वः पापीयसीमेष श्वःश्वः क्रूरतरामपि |
67688 श्वःश्वः स्वेदकरीमेति दशामिह जडो जनः ‖ ३५ ‖
67689
67690 अज्ञस्योत्तरकालेऽपि विश्रान्तिप्रत्याशा नास्तीत्याह - श्वःश्व इति |
67691 रागलोभाद्यभिवृद्ध्या पापीयसीम् | हिंसादिप्रवृत्त्या क्रूरतराम् |
67692 तत्फलकाले खेदकरीम् ‖ ३५ ‖
67693
67694 अज्ञानैकहतो बाल्ये यौवने मदनाहतः |
67695 शेषे कलत्रचिन्तार्तः किं करोति कदा जडः ‖ ३६ ‖
67696
67697 शेषे वयसि | कलत्रं तदुपलक्षितं कुटुम्बं तद्भरणादिचिन्तया आर्तः |
67698 वित्तार्तः इति पाठे कलत्रवित्तादिक्षयेणार्तः | कदा किं स्वोद्धारसाधनं करोति
67699 | न कदाचिदपीत्यर्थः ‖ ३६ ‖
67700
67701 आगमापायि विरसं दशावैषम्यदूषितम् |
67702 असारसारं संसारं किं तत्पश्यति दुर्मतिः ‖ ३७ ‖
67703
67704 आगमापायि आद्यन्तयोरसत् | भोगकालेऽपि विरसम् |

67705 दारिद्र्यरोगवार्धकादिदशावैषम्यैर्दूषितम् | असारमेव सारं सारबुद्ध्या
67706 गृहीतम् | किं वृथा पश्यति | यत्पश्यति तत्किंनिमित्तमिति वार्थः || ३७ ||
67707
67708 राजसूयाश्वमेधाद्यैरिष्ट्वा यज्ञशतैरपि |
67709 महाकल्पान्तमप्यंशं स्वर्गं प्राप्नोति नाधिकम् || ३८ ||
67710
67711 ननु यत्र दुःखेन संभिन्नम् इत्यादिश्रुत्युक्तलक्षणः स्वर्गः सारभूतः किं
67712 न स्यात्तत्राह - राजसूयेति | महाकल्पान्तं ब्रह्मादिभोग्यमपि स्वर्ग
67713 महाकालदृशा अंशं क्षणभोग्यप्रायमल्पमेव प्राप्नोति
67714 नत्वधिकमपरिच्छिन्नमित्यसार एव स इत्यर्थः || ३८ ||
67715
67716 कोऽसौ स्वर्गोऽस्ति भूमौ वा पाताले वा प्रदेशकः |
67717 न यत्राभिभवन्त्येता दुर्भ्रमर्य इवापदः || ३९ ||
67718
67719 न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति इति श्रुतेः
67720 स्वर्गिणामप्यसुरादिपीडाश्रुतेश्च न दुःखासंबिन्नत्वमपि तस्य
67721 संभवतीत्याशयेनाह - कोऽसाविति || ३९ ||
67722
67723 निजचेतोबिलव्यालाः शरीरस्थलपल्लवाः |
67724 आधयो व्याधयश्चैते निवार्यन्ते कथं किल || ४० ||
67725
67726 किंच देहाभिमाने सत्याधिव्याध्योर्दुर्निवारत्वान्न क्वाप्यज्ञस्य
67727 विश्रान्तिरस्तीत्याशयेनाह - निजेति || ४० ||
67728
67729 सतोऽसत्ता स्थिता मूर्ध्नि मूर्ध्नि रम्येष्वरम्यता |
67730 सुखेषु मूर्ध्नि दुःखानि किमेकं संश्रयाम्यहम् || ४१ ||
67731
67732 भङ्गुरत्वदुःखग्रस्तत्वाभ्यां सर्वस्यामङ्गलतामेव प्रपञ्चयति -
67733 सत इत्यादिना | सतः वर्तमानकालदृश्यस्य | असत्ता नाशः || ४१ ||
67734
67735 जायन्ते च म्रियन्ते च प्राकृताः क्षुद्रजन्तवः |
67736 धरा तैरेव नीरन्ध्रा दुर्लभाः साधुसाधवः || ४२ ||
67737
67738 प्राकृताः प्रकृतिस्वाभाविकमज्ञानं तन्मोहिताः | नीरन्ध्रा निबिडितेति
67739 यावत् || ४२ ||
67740
67741 नीलोत्पलालिनयनाः परमप्रेमभूषणाः |
67742 हासायैव विलासिन्यः क्षणभङ्गितया स्थिताः || ४३ ||
67743
67744 हासायैव योग्या इति शेषः || ४३ ||
67745
67746 येषां निमेषणोन्मेषैर्जगतां प्रलयोदयौ |
67747 तादृशाः पुरुषाः सन्ति मादृशां गणनैव का || ४४ ||
67748
67749 ननु राजत्वात्सर्वनियमनसमर्थस्योत्तमपुरुषस्य तव कुतो नाश्वासस्तत्राह
67750 - येषामिति || ४४ ||
67751
67752 सन्ति रम्यतराद्रम्याः सुस्थिरादपि सुस्थिराः |
67753 चिन्तापर्यवसानेयं पदार्थश्रीः किमीहसे || ४५ ||
67754
67755 चिन्ता अर्जनरक्षणवियोगादिना | चिन्तैव पर्यवसानं फलं
67756 यस्यास्तथाविधेयं पदार्थश्रीरतस्तां किमीहसे इच्छसि || ४५ ||

67757

67758 संपदश्च विचित्रा यास्ताश्चेच्चित्तेन संमताः ।
67759 तत्ता अपि महारम्भा हन्त मन्ये महापदः ॥ ४६ ॥
67760

67761 या नानारत्नगजवाजिधनदारादिभेदेन विचित्राः संपदस्ताश्चेच्चित्तेन
67762 संमता बहुमताः स्युस्तत्तर्हि ता अपि महारम्भा बहुप्रयत्नलभ्या
67763 दुःखरक्ष्या अवश्यापायिन्यश्चेति महापद इत्येव मन्ये इत्यर्थः ॥ ४६ ॥
67764

67765 आपदोऽपि विचित्रा यास्ताश्चेन्मनसि संमताः ।
67766 तत्ता अपि महारम्भा मन्ये मनसि संपदः ॥ ४७ ॥
67767

67768 एवं या दारिद्र्यबन्धुराज्यादिनाशलक्षणा आपदोपि यदि
67769 साधुसङ्गतीर्थतपःप्रबोधादिप्रापणेन विचित्राः श्रेय एवेति मनसि
67770 संमताश्चेत्ता अपि विवेकवैराग्यादिमहारम्भाः संपद एव मन्ये इत्यर्थः ॥
67771 ४७ ॥
67772

67773 मनोमात्रविवर्तेऽस्मिञ्जगत्यब्धिन्दुभङ्गुरे ।
67774 ममेदमित्यपूर्वेयं कुतस्त्याऽक्षरमालिका ॥ ४८ ॥
67775

67776 तस्मादसत्ये जगति ममताभिवृद्धिरेव विपत् । वेवेकात्तत्परिक्षय एव
67777 संपदित्याशयेन जगतो ममतानर्हत्वं दर्शयति - मनोमात्रेति । अब्धौ
67778 प्रतिबिम्बित इन्दुरिव भङ्गुरे भङ्गस्वभावे मिथ्याभूते च । अक्षरमालिका
67779 पदवाक्यात्मिका वर्णपङ्क्तिः कुतस्त्या । निरर्थिकेति यावत् ॥ ४८ ॥
67780

67781 काकतालीययोगेन संपन्नायां जगत्स्थितौ ।
67782 धूर्तेन कल्पिता व्यर्थं हेयोपादेयभावना ॥ ४९ ॥
67783

67784 काकतालीययोगेन काकागमनमिव तच्छिरसि तालपतनमिवाविचारमात्रकृतेन
67785 स्वसंबन्धेन । धूर्तेन भोगलम्पटेन मनसा ॥ ४९ ॥
67786

67787 इयत्ताच्छिन्नतप्तासु सुखनाम्नीषु दृष्टिषु ।
67788 कास्वेतास्वनुरक्तोऽस्मि पतङ्गोऽग्निशिखास्विव ॥ ५० ॥
67789

67790 देशकालवस्तुकृतया इयत्तया आच्छिन्नासु परिच्छिन्नासु
67791 त्रिविधतापग्रस्तत्वात्तप्तासु । दीपाग्निशिखापक्षे स्पष्टम् ॥ ५० ॥
67792

67793 वरमेकान्तदाहेषु लुठनं रौरवाग्निषु ।
67794 नत्वालूनविवर्तासु स्थितं संसारवृत्तिषु ॥ ५१ ॥
67795

67796 निरन्तरदुःखभोगोऽभ्यासात्सह्योऽपि स्यात् सुखभोगविच्छिन्नाभ्यासो
67797 दुःखभोगोऽयं दुःसह एवेत्याशयेनाह - वरमेति । आलूना विच्छिन्नाः
67798 सुखदुःखपरिवर्ता यासु । स्थितं स्थितिः । भावे क्तः ॥ ५१ ॥
67799

67800 संसार एव दुःखानां सीमान्त इति कथ्यते ।
67801 तन्मध्यपतिते देहे सुखमासाद्यते कथम् ॥ ५२ ॥
67802

67803 विषयसुखानां सुखता नास्त्येव किंतु दुःखविशेषरूपतैवेति
67804 युक्त्योपपादयति - संसार इति ॥ ५२ ॥
67805

67806 अकृत्रिममहादुःखे संसारे ये व्यवस्थिताः ।
67807 त एतेऽन्यानि दुःखानि जानते मधुराण्यलम् ॥ ५३ ॥
67808

67809 कथं तर्हि सुखत्वानुभवस्तत्र युक्तिमाह - अकृत्रिमेति |
67810 खड्गाघातानुभवात्कशाघातानुभवः सुखमितिवद्दुःखान्येव मधुराणि
67811 सुखानि जानते मन्यन्त इत्यर्थः || ५३ ||
67812
67813 अहमप्यधमोत्कृष्टकाष्ठलोष्टसमस्थितिः |
67814 अज्ञैरेवागतः साम्यं परमामृष्टवस्तुभिः || ५४ ||
67815
67816 श्रुतिस्मृत्यादिप्रमाणकुशलो मेधावी विचारपटुरप्यहं परमत्यन्तमेव
67817 न मृष्टानि न विचारितानि शास्त्रलोकप्रमाणवस्तूनि यैस्तैरज्ञैर्मूर्खैः
67818 साम्यमित्यर्थः || ५४ ||
67819
67820 सहस्राङ्कुरशाखात्मफलपल्लवशालिनः |
67821 अस्य संसारवृक्षस्य मनो मूलमहाङ्कुरः || ५५ ||
67822
67823 इदानीं स्वस्य प्रमाणकुशलतां संसारमूलावधारणेन सफलयति -
67824 सहस्रेति | अङ्कुराः संकल्पाः शाखा देहभुवनादयः | आत्मा
67825 शाखाद्यवयवी विराट् | फलानि सुखदुःखे | पल्लवा रागलोभास्तैः शालिनः
67826 शोभमानस्य || ५५ ||
67827
67828 संकल्पमेव तन्मन्ये संकल्पोपशमेन तत् |
67829 शोषयामि यथा शोषमेति संसारपादपः || ५६ ||
67830
67831 मनसोऽपि रहस्यं स्वेन ज्ञातमेवेत्याह - संकल्पमेवेति || ५६ ||
67832
67833 आकारमात्ररम्यासु मनोमर्कटवृत्तिषु |
67834 परिज्ञातास्विहाद्यैव न रमे नाशनीष्वहम् || ५७ ||
67835
67836 मनोमर्कटस्य वृत्तिषु चापलेषु | अद्यैव अद्यप्रभृति || ५७ ||
67837
67838 आशापाशशतप्रोताः पातोत्पातोपतापदाः |
67839 संसारवृत्तयो भुक्ता इदानीं विश्रमाम्यहम् || ५८ ||
67840
67841 पातोऽधोगतिः | उत्पात ऊर्ध्वगतिः अपकर्षोत्कर्षौ वा | उपतापो दुःखम् || ५८ ||
67842
67843 हा हतोऽस्मि विनष्टोऽस्मि मृतोऽस्मीति पुनःपुनः |
67844 शोचितं गतमेवाहमिदानीं नानुरोदिमि || ५९ ||
67845
67846 इति मया यत्पुनःपुनः प्राक् शोचितं तद्गतमेव | अहमिदानीं नानुरोदिमि न
67847 शोचामीत्यर्थः || ५९ ||
67848
67849 प्रबुद्धोऽस्मि प्रहृष्टोऽस्मि दृष्टश्चोरोऽयमात्मनः |
67850 मनो नाम निहन्म्येनं मनसास्मि चिरं हतः || ६० ||
67851
67852 कुतो नानुशोचसि तत्राह - प्रबुद्धोऽस्मीति | आत्मनः
67853 स्वपारमार्थिकरूपधनस्य चोरोऽपहर्ता | न केवलं चोरत्वादेव निहन्म्यपि तु
67854 वैरित्वादपीत्याह - मनसेति || ६० ||
67855
67856 एतावन्तमिमं कालं मनोमुक्ताफलं मम |
67857 अविद्धमासीदधुना विद्धं तु गुणमर्हति || ६१ ||
67858
67859 अविद्धमलक्षीकृतम् | मुक्ताफलपक्षे अच्छिद्रितम् | गुणं शमदमादिम् |
67860 मुक्तापक्षे सूत्रम् || ६१ ||

67861
67862 मनस्तुषारकणिका विवेकार्कातपेन मे।
67863 चिरप्रवृत्तये नूनमचिराल्लयमेष्यति ॥ ६२ ॥
67864
67865 चिरं अनादिब्रह्मतत्त्वं तत्र प्रवृत्तये प्रतिष्ठार्थम्। तुषारकणिकापक्षे
67866 चिरप्रवृत्तिः सदागतिर्वायुस्तत्प्राप्तये। यदा वा आप उच्छुष्यन्ति
67867 वायुमेवापियन्ति इति श्रुतेरित्यर्थः ॥ ६२ ॥
67868
67869 विविधैः साधुभिः सिद्धैरहं साधु प्रबोधितः।
67870 आत्मानमनुगच्छामि परमानन्दसाधनम् ॥ ६३ ॥
67871
67872 विविधैरुपदेशैः। सिद्धविशेषणं वा। अनुगतिमात्रेण परमानन्दस्य
67873 स्वस्यैव साधनम्। अभेदेऽप्युपचारात्करणता ॥ ६३ ॥
67874
67875 आत्मानं मणिमेकान्ते लब्ध्वैवालोकयन्सुखम्।
67876 तिष्ठाम्यस्तमितान्येहः शारदीवाचलेऽम्बुदः ॥ ६४ ॥
67877
67878 अतः परमात्मनिष्ठां कदापि न त्यक्ष्यामीत्याह - आत्मानमिति। अचले
67879 हिमवदादौ ॥ ६४ ॥
67880
67881 अयमहमिदमाततं ममेति
67882 स्फुरितमपास्य बलादसत्यमन्तः।
67883 रिपुमतिबलिनं मनो निहत्य
67884 प्रशममुपैमि नमोऽस्तु ते विवेक ॥ ६५ ॥
67885
67886 इदानीमुक्तं संक्षिप्योपसंहरन् विवेकगुरुं नमस्यति - अयमिति। अयं
67887 देहोऽहमिति इदं धनराज्यादि ममेति स्फुरितमाततमसत्यरूपं
67888 ज्ञानबलादपास्य समाध्यभ्यासेनातिबलिनं मनोरिपुं निःशेषं हत्वा
67889 सप्तमभूमिकाविश्रान्तिलक्षणं प्रशममुपैमि प्राप्नोमि ॥ ६५ ॥
67890
67891 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मो० उपशमप्रकरणे
67892 जनकवितर्को नाम नवमः सर्गः ॥ ९ ॥
67893
67894 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे जनवितर्को
67895 नाम नवमः सर्गः ॥ ९ ॥
67896
67897 दशमः सर्गः १०
67898
67899 श्रीवसिष्ठ उवाच।
67900
67901 इति चिन्तयतस्तस्य पुरः संप्रविवेश ह।
67902 प्रतीहारः परो भानोः स्यन्दनाग्र इवारुणः ॥ १ ॥
67903
67904 द्वाःस्थेन प्रार्थितेऽन्यत्र माध्याह्निकविधिक्रमे।
67905 तूष्णीं विचारो भूयोऽपि जनकस्योपवर्ण्यते ॥ १ ॥
67906
67907 प्रतीहारो द्वारपालः। उपसर्गस्य घञ्यमनुष्ये बहुलम् इति दीर्घः ॥ १ ॥
67908
67909 प्रतीहार उवाच।
67910
67911 देव दोःस्तम्भविश्रान्तसमस्तवसुद्धाभर।
67912 संपादयोत्तिष्ठ दिनव्यापारं नृपतोचितम् ॥ २ ॥

67913
67914 दोःस्तम्भयोर्विश्रान्तः समस्तवसुधाभरो यस्य। नृपताया उचितमनुरूपम्
67915 ॥ २ ॥
67916
67917 एताः कुसुमकर्पूरकुङ्कुमाम्बुघटाः स्त्रियः।
67918 स्नानभूमौ स्थिताः सज्जा नद्यो मूर्तियुता इव ॥ ३ ॥
67919
67920 तत्र सामग्रीसिद्धिमाह - एता इत्यादिना ॥ ३ ॥
67921
67922 एताः कमलकह्लारकाननभ्रान्तषट्पदाः।
67923 कृताः कमलिनीपाशरचितांशुकमण्डपाः ॥ ४ ॥
67924
67925 कमलिनीपाशैः सपद्मबिसरज्जुभी रचिताः परितश्चारुनिर्मिताः
67926 कनकचित्रांशुमण्डपा यासु तथाविधा अत एव एताः कर्बुरवर्णाः
67927 कमलिन्याः कमलवत्याः सरस्यास्तीरभुव इति परेणान्वयः ॥ ४ ॥
67928
67929 एताः कमलिनीतीरभुवश्छत्रैः प्रपूरिताः।
67930 सचामररथेभाश्वैः स्नानावसरसेविनाम् ॥ ५ ॥
67931
67932 तथा स्नानावसरे सेवन्ते तच्छीलानां जनानां चामरै रथैरिभैरश्वैश्च
67933 सहितैश्छत्रैश्च प्रपूरिताः। अनेन
67934 हंससारसनक्रपद्मादिसहितसरसीसाम्यापत्तिस्तीरभुवोऽर्थाद्गम्यते ॥ ५ ॥
67935
67936 समग्रसुमनःपूर्णैरन्नौषधिपरिप्लुतैः।
67937 सज्जीकृताः पटलकैर्देवार्चनगृहास्तथा ॥ ६ ॥
67938
67939 समग्रैः सुमनोभिः पुष्पैराप्तभृत्यैश्च पूर्णैः। अन्नैः
67940 पक्वैरोषधिभिर्यवाङ्कुरादिभिश्च परिप्लुतैः परिष्कृतैः। रत्नौषधीति
67941 पाठे स्पष्टम्। पटलकैः प्रान्तभागैः। हे देवेति संबुद्धिः। अर्चनगृहा
67942 देवब्राह्मणातिथिपूजागृहाः। देवार्चनगृहाः इत्यैकपद्यं वा ॥ ६ ॥
67943
67944 स्नातः पवित्रहस्तश्च परिजप्याघमर्षणः।
67945 त्वामेव प्रेक्षते देव दक्षिणार्हो द्विजव्रजः ॥ ७ ॥
67946
67947 तव स्नानकाले परितो जप्या जपितव्या अघमर्षणमन्त्रा येन अत एव दक्षिणार्हः
67948 ॥ ७ ॥
67949
67950 लसच्चामरहस्ताभिः पाल्यते परमेश्वर।
67951 सज्जीकृतास्ते कान्ताभिः शीता भोजनभूमयः ॥ ८ ॥
67952
67953 लेपनचन्दनोदकसेकादिपरिष्कृतत्वाच्छीताः शीतलाः ॥ ८ ॥
67954
67955 शीघ्रमुत्तिष्ठ भद्रं ते निपतं कार्यमाचर।
67956 न कालमतिवर्तन्ते महान्तः स्वेषु कर्मसु ॥ ९ ॥
67957
67958 प्रतीहारपतावित्थमुक्तवत्यथ पार्थिवः।
67959 तथैव चिन्तयामास चित्रां संसारसंस्थितिम् ॥ १० ॥
67960
67961 कियन्मात्रमिदं नाम राज्यं सुखमिति स्थितम्।
67962 न प्रयोजनमेतेन ममेह क्षणभङ्गिना ॥ ११ ॥
67963
67964 सर्वमेव परित्यज्य मिथ्याशम्बरडम्बरम्।

67965 एकान्त एव तिष्ठामि संशान्त इव वारिधिः ॥ १२ ॥
67966
67967 शम्बरपदेन शाम्बरीमाया लक्ष्यते। मिथ्याशम्बरं मृगतृष्णाजलं
67968 तत्सदृशं वा ॥ १२ ॥
67969
67970 अलमेभिरसत्प्रायैर्मम भोगविजृम्भितैः।
67971 त्यक्त्वा सर्वाणि कर्माणि सुखं तिष्ठामि केवलम् ॥ १३ ॥
67972
67973 चित्त चातुर्यमेतस्माद्भोगाभ्यासकुसंभ्रमात्।
67974 त्यज जन्मजराजाड्यजालजम्बालशान्तये ॥ १४ ॥
67975
67976 हे चित्त चातुर्यं सुखलवास्वादचतुरतां त्यज ॥ १४ ॥
67977
67978 दशासु स्वासु यास्वेव संभ्रमं चित्त पश्यसि।
67979 ताभ्य एवाभिरचितं परमं दुःखमेष्यसि ॥ १५ ॥
67980
67981 यासु दशासु विषयाभिलाषतत्प्रयत्नतदुपभोगतदनुस्मरणादिरूपासु।
67982 संभ्रमं सुखलवास्वादभ्रान्तिंमुत्साहं वा ॥ १५ ॥
67983
67984 प्रवृत्तं सन्निवृत्तं सद्भूयोभूयश्चिरंचिरम्।
67985 भोगभूमिषु सर्वासु चित्तं तृप्तिं न गच्छति ॥ १६ ॥
67986
67987 भोगाशया प्रवृत्तं सत् भोगशक्तिकुण्ठीभावाल्लोकशास्त्रादिभयाच्च
67988 निवृत्तं सत् ॥ १६ ॥
67989
67990 तस्मात्पापालमनया तुच्छया भोगचिन्तया।
67991 भवत्यकृत्रिमा तृप्तिर्येनाभिपत तं ततः ॥ १७ ॥
67992
67993 ततः कृत्रिमसुखानामनर्थबीजत्वाद्येन हेतुना अकृत्रिमा प्रीतिर्भवति तं
67994 हेतुं पत। लभस्वेति यावत् ॥ १७ ॥
67995
67996 इति संचिन्त्य जनकस्तूष्णीमेव बभूव ह।
67997 शान्तचापलचेतस्त्वाल्लिपिकर्मार्पितोपमः ॥ १८ ॥
67998
67999 प्रतीहारोऽपि नोवाच गौरवेण भयेन च।
68000 पुनर्वाक्यं महीपानां चित्तवृत्तिषु शिक्षितः ॥ १९ ॥
68001
68002 चित्तवृत्तिषु चित्तानुवर्तनेषु ॥ १९ ॥
68003
68004 तूष्णीमथ क्षणं स्थित्वा जनको जनजीवितम्।
68005 पुनः संचिन्तयामास मनसा शमशालिना ॥ २० ॥
68006
68007 जनजीवितं प्राणिजीवननिदानम्। येन जातानि जीवन्ति इति श्रुतेः ॥ २० ॥
68008
68009 किमुपादेयमस्तीह यत्नात्संसाधयाम्यहम्।
68010 कस्मिन्वस्तुनि बध्नामि धृतिं नाशविवर्जिते ॥ २१ ॥
68011
68012 किं मे क्रियापरतया किं मे निष्क्रिययापि वा।
68013 न तदस्ति विनाशेन वर्जितं यत्किलोदितम् ॥ २२ ॥
68014
68015 अपि वा कार्यमिति शेषः। यत्किल उदितं जन्म प्राप्तं तत् विनाशेन वर्जितं नास्ति।
68016 जन्यभावस्य विनाशनियमादिति भावः ॥ २२ ॥

68017
68018 क्रियावानक्रियो वास्तु कायोऽयमसदुत्थितः |
68019 समस्थितस्य शुद्धस्य चितः का नाम मे क्षतिः || २३ ||
68020
68021 समस्थितस्य देहचलनाचलनदशयोस्तुल्यरूपस्थितेः | चितश्चिन्मात्रस्वभावस्य
68022 || २३ ||
68023
68024 नाभिवाञ्छाम्यसंप्राप्तं संप्राप्तं न त्यजाम्यहम् |
68025 स्वस्थ आत्मनि तिष्ठामि यन्ममास्ति तदस्तु मे || २४ ||
68026
68027 यन्मम प्रारब्धोपनीतमस्ति तदेवास्तु नान्यदित्यर्थः | अथवा यन्मम
68028 निरतिशयानन्दरूपमान्तरमस्ति तदेवास्तु न बाह्यं किंचिदित्यर्थः || २४ ||
68029
68030 न ममेह कृतेनार्थो नाकृतेनेह कश्चन |
68031 क्रिययाऽक्रियया वापि यत्प्राप्तं तदसन्मयम् || २५ ||
68032
68033 अकृतेन उपेक्षणेन | कश्चन अनर्थ इति शेषः | अक्रियया उपेक्षया | प्राप्तं
68034 दुःखमसन्मयं मायामयम् | मिथ्यैवेति यावत् || २५ ||
68035
68036 अकुर्वतः कुर्वतो वा युक्तायुक्ताः क्रिया मम |
68037 नाभिवाञ्छितमस्तीह यदुपादेयतां गतम् || २६ ||
68038
68039 युक्ताः शास्त्रविहिताः | अयुक्ता लोकप्राप्ताः || २६ ||
68040
68041 तदुत्थाय क्रमप्राप्तां कायोऽयं प्रकृतां क्रियाम् |
68042 करोत्वस्पन्दिताङ्गस्तु किमयं साधु शुष्यति || २७ ||
68043
68044 पूर्वपूर्वव्यवहारक्रमप्राप्ताम् | अस्पन्दिताङ्गस्त्वयं देहः शुष्यति तत्किं
68045 साधु आवश्यकं नेत्यर्थः || २७ ||
68046
68047 स्थिते मनसि निष्कामे समे विगतरञ्जने |
68048 कायावयवजौ कार्यौ स्पन्दास्पन्दौ फले समौ || २८ ||
68049
68050 कार्यौ प्रारब्धकर्मोपनीतौ | पुण्यपापानुदयलक्षणे फले समौ || २८ ||
68051
68052 कर्मजासु फलश्रीषु मनसा कर्तृभोक्तृते |
68053 तस्मिन्प्रशान्तिमायाते कृतमप्यकृतं नृणाम् || २९ ||
68054
68055 तत्कुतस्तत्राह - कर्मजास्विति | कृतमप्यकृतं भुक्तमप्यभुक्तमित्यपि
68056 योज्यम् || २९ ||
68057
68058 यो निश्चयोऽन्तः पुरुषस्य रूढः
68059 क्रियास्वसौ तन्मयतामुपैति |
68060 अनामयं मे पदमाहता धी-
68061 रधीरतामन्तरलं त्यजामि || ३० ||
68062
68063 पुरुषस्यान्तर्य एव निश्चयः कर्ता भोक्तेति वा असौ पुरुषः सर्वासु
68064 देहादिक्रियासु तन्मयतां स्वनिश्चितार्थमयतामुपैतीति वस्तुस्थितिः | सांप्रतं
68065 तु मे मम धीरनामयं कर्तृभोक्तृतारोगशून्यमात्मपदमाहता
68066 आविद्धा तद्दृढनिश्चयासंपन्नेत्यर्थः | अतः अन्तश्चित्ते
68067 कृताकृतफलावश्यंभावाय
68068 पुनर्जन्मादिप्राप्तिशङ्कानिमित्तामिष्टानिष्टप्राप्तिविघातनिमित्तां

68069 चाधीरतामलमत्यन्तमेव त्यजामीत्यर्थः ॥ ३० ॥
68070
68071 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपाये
68072 उपशमप्रकरणे जनकनिश्चयो नाम दशमः सर्गः ॥ १० ॥
68073
68074 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे जनकनिश्चयो
68075 नाम दशमः सर्गः ॥ १० ॥
68076
68077
68078 एकादशः सर्गः ११
68079
68080 श्रीवसिष्ठ उवाच ।
68081
68082 इति संचिन्त्य जनको यथाप्राप्तां क्रियामसौ ।
68083 असक्तः कर्तुमुत्तस्थौ दिनं दिनपतिर्यथा ॥ १ ॥
68084
68085 कृताह्निकस्य राज्ञोऽत्र निशान्ते वर्ण्यते पुनः ।
68086 विवेकैर्बहुभिश्चित्रैः स्वचित्तस्य प्रबोधनम् ॥ १ ॥
68087
68088 असक्तः कर्तृत्वभोक्तृत्वाभिमानलक्षणासङ्गरहितः ॥ १ ॥
68089
68090 इष्टानिष्टाः परित्यज्य चेतसा वासनाः स्वयम् ।
68091 यथाप्राप्तं चकारासौ जाग्रत्येव सुषुप्तवत् ॥ २ ॥
68092
68093 इदं मे इष्टमिदं मेऽनिष्टमिति कल्पनानिमित्तभूता वासनाः । सुषुप्तवदिति ।
68094 स्थूलसूक्ष्मदेहाद्यभिमानाभावे जाग्रत्सुषुप्तयोर्विशेषाभावादिति भावः ॥
68095 २ ॥
68096
68097 संपाद्य तदहःकार्यमार्यावर्जनपूर्वकम् ।
68098 अनयच्छर्वरीमेकस्तयैव [मेकान्तयैव इति पाठः] ध्यानलीलया
68099 ॥ ३ ॥
68100
68101 आर्याणां पूज्यानां देवब्राह्मणादीनामावर्जनं पूजादानादिना
68102 समाधानम् । अहःकार्यमाह्निकम् ॥ ३ ॥
68103
68104 मनः समरसं कृत्वा संशान्तविषयभ्रमम् ।
68105 शर्वर्यां क्षीयमाणायामित्थं चित्तमबोधयत् ॥ ४ ॥
68106
68107 समरसं समाहितं कृत्वा । इत्थं वक्ष्यमाणदिशा ॥ ४ ॥
68108
68109 चित्त चञ्चल संसार आत्मनो न सुखाय ते ।
68110 शममेहि शमाच्छान्तं सुखं सारमवाप्यते ॥ ५ ॥
68111
68112 शान्तं निर्विक्षेपं सारभूतमात्मसुखम् ॥ ५ ॥
68113
68114 यथा यथा विकल्पौघान्संकल्पयसि हेलया ।
68115 तथा तथैति स्फारत्वं संसारस्तव चिन्तया ॥ ६ ॥
68116
68117 शतशाखत्वमायाति सेकेन विटपी यथा ।
68118 अनन्ताधित्वमायासि शठभोगेच्छया तथा ॥ ७ ॥
68119
68120 अनन्ताधित्वमसंख्यव्यथाशालितामायासि प्राप्नोषि त्वम् ॥ ७ ॥

68121
68122 चिन्ताजालविलासोत्था [अत्र विकल्पोत्या इति पाठः]
68123 जन्मसंसारसृष्टयः।
68124 तस्मात्यक्त्वा विचित्रां त्वं चिन्तामुपशमं व्रज॥८॥
68125
68126 यतो जन्मसंसारसृष्टयो विषयचिन्ताजालविकल्पोत्था इति पूर्वेणान्वयः॥८॥
68127
68128 संसारसृष्टितरलामिमां तुलय सुन्दर।
68129 अस्यां चेत्सारमाप्नोषि तदेतामेव संश्रय॥९॥
68130
68131 हे सुन्दर विवेकिन् इमां संसारसृष्टिं शमसुखं च तुलय तुलामारोप्येव
68132 बुद्ध्या कः सार इति परीक्षस्व। तरलामित्यनेन
68133 नश्वरत्वाद्विक्षेपदुःखजटिलत्वाच्च नास्त्यत्र सार इति सूचितम्॥९॥
68134
68135 आस्थां यस्मात्परित्यज्य दृश्यदर्शनलालसात्।
68136 मैतद्गृहाण मा मुञ्च स्वेच्छया विहरेच्छया॥१०॥
68137
68138 यस्मादियमसारा तस्मादस्यामास्थां परित्यज्य एतदसारं दृश्यं
68139 दर्शनयोग्यमेतदिति दर्शनलालसात्प्रियं मा गृहाण अप्रियं च
68140 दर्शनानर्हमिति द्वेषान्मा मुञ्च किंतूभयसाक्षिस्वात्ममात्रेच्छया
68141 आत्मकामः सन् इच्छया स्वैरं विहर॥१०॥
68142
68143 इदं दृश्यमसत्सद्वाप्युदेत्वस्तमुपैतु वा।
68144 साधो विषमतां गच्छ मैतदीयैर्गुणागुणैः॥११॥
68145
68146 असत्प्रागविद्यमानं सुखदुःखसाधनमुदेतु सांप्रतं
68147 सद्विद्यमानमस्तं नाशमुपैतु वा। मा
68148 तदागमापायप्रयुक्तहर्षविषादलक्षणां विषमतां गच्छेत्यर्थः॥११॥
68149
68150 मनागपि न संबन्धस्तव दृश्येन वस्तुना।
68151 अविद्यमानरूपेण संबन्धः कोऽयमीदृशः॥१२॥
68152
68153 ननु सति तत्संबन्धे कथं तत्प्रयुक्तवैषम्यवर्जनसंभवस्तत्राह -
68154 मनागपीति॥१२॥
68155
68156 असत्त्वमेतच्च न सद्द्वयोरेवासतोः सतोः।
68157 संबन्ध इति चित्रेयमपूर्वैवाक्षरावली॥१३॥
68158
68159 हे मनः त्वमसत्। एतद्दृश्यं च न सत्। अप्यर्थे एवकारः। अतो द्वयोरपि
68160 बन्ध्यापुत्रखपुष्पयोरिवासतोः सतोर्निःस्वरूपस्थितिकयोः संबन्ध
68161 इत्यक्षरावली उक्तिः अपूर्वा। आश्चर्यैवेत्यर्थः॥१३॥
68162
68163 असदेतत्तु सच्चेत्त्वं तथापि किल सुन्दर।
68164 सङ्गः सदसतोः कीदृग्वद त्वं मर्त्यजीवयोः॥१४॥
68165
68166 यदि मन्यसे नाहमसत् सत्य आत्मैवाहं दृश्यमेवासदिति तथापि न
68167 संबन्धघटनेत्याह - असदिति। मर्त्यजीवयोः सदा मृतजीवतोः॥१४॥
68168
68169 चित्त त्वमथ दृश्यं च द्वे एव यदि सन्मये।
68170 सदास्थिते तत्प्रसरः कुतो हर्षविषादयोः॥१५॥
68171
68172 द्वयोरपि सत्त्वमेव नासत्त्वं कस्यचिदपीति कल्पेऽपि कदापीष्टवियोगाभावान्न

68173 हर्षविषादप्रसक्तिरित्याह - चित्तेति | हे चित्त त्वं इति च्छेदः || १५ ||
68174
68175 तस्मान्महाधिं मुञ्च त्वं मूकमुल्लासमाहर |
68176 संक्षुब्धाम्बुधिमाविष्टां त्यजाभव्यामिमां स्थितिम् || १६ ||
68177
68178 महान्तमाधिं विषादं मूकं तूष्णींभूतं
68179 सदात्मस्वरूपस्थितावुत्साहमाहर समाध्यभ्यासेन संपादय |
68180 संक्षुब्धं संक्षोभो विक्षेपस्तल्लक्षणमम्बुधिम् || १६ ||
68181
68182 कन्दुकालातवद्व्यर्थमात्मनैव परिज्वलन् |
68183 मा मोहमलमासाद्य मन्दतां गच्छ सन्मते || १७ ||
68184
68185 कन्दुकालातमुत्सवेषु जनकौतुकार्थमाग्नेयद्रव्यरचितं
68186 कन्दुकाकारमलातयन्त्रम् | तद्धि स्वत एव ज्वलत्पुनःपुनरुच्छलति | मोहं
68187 अलमिति वा मोहलक्षणं मलमिति वा || १७ ||
68188
68189 न तदिहास्ति समुन्नतमुत्तमं
68190 व्रजसि येन परां परिपूर्णताम् |
68191 तदवलम्ब्य बलादति धीरतां
68192 जहिहि चञ्चलतां शठ रे मनः || १८ ||
68193
68194 इह दृश्यवर्गमध्ये येन लब्धेन त्वं परिपूर्णतां व्रजसि तत्तादृशं
68195 किमपि नास्ति | कथं तर्हि पूर्णतालाभस्तमुपायमाह - तदिति |
68196 तत्तस्मादभ्यासवैराग्यबलादतिधीरतामवलम्ब्य
68197 तद्ब्रह्मावलम्ब्यातिधीरतां प्राप्येति वा | चञ्चलतां जहिहि त्यज || १८ ||
68198
68199 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये
68200 मोक्षोपायेषूपशमप्रकरणे चित्तानुशासनं नामैकादशः सर्गः || ११
68201 | |
68202
68203 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
68204 चित्तानुशासनं नामैकादशः सर्गः || ११ ||
68205
68206
68207 द्वादशः सर्गः १२
68208
68209 श्रीवसिष्ठ उवाच |
68210
68211 एवं विचारयंस्तत्र स्वराज्ये जनको नृपः |
68212 चकाराखिलकार्याणि न मुमोह च धीरधीः || १ ||
68213
68214 वर्ण्यते जनकस्यात्र जीवन्मुक्ततया स्थितिः |
68215 विचारप्रज्ञयोश्चित्रं माहात्म्यमपि विस्तरात् || १ ||
68216
68217 न मुमोह अहंममताभ्यां पूर्ववदित्यर्थः || १ ||
68218
68219 न मनः प्रोल्ललासास्य क्वचिदानन्दवृत्तिषु |
68220 केवलं सुषुप्तसंस्थं सदैव व्यवतिष्ठत || २ ||
68221
68222 आनन्दवृत्तिषु हर्षस्थानेषु | सुषुप्ताविव संस्था निर्विक्षेपस्थितिर्यस्मिन्निति
68223 व्यवस्थितिक्रियाविशेषणम् || २ ||
68224

68225 ततःप्रभृत्यसौ दृश्यं नाजहार न वात्यजत् ।
68226 केवलं विगताशङ्कं वर्तमाने व्यवस्थितः ॥ ३ ॥
68227
68228 वर्तमाने तत्कालोपस्थिते दृश्ये । व्यवस्थितः अलंबुद्ध्या स्थितः ॥ ३ ॥
68229
68230 अनारतविवेकेन तेन सद्यः सनातनम् ।
68231 पुनः कलङ्कं नैवाप्तमम्बरेणेव राजसम् ॥ ४ ॥
68232
68233 अनारतविवेकेन सदा विचारवता । सनातनं अनादिस्वभावप्राप्तम् ।
68234 कलङ्कमहंममाभिमानमालिन्यम् । राजसं रजोगुणेन धूलिभिश्च
68235 प्रसञ्जितम् ॥ ४ ॥
68236
68237 स्वविवेकानुसंधानादिति तस्य महीपतेः ।
68238 सम्यग्ज्ञानमनन्ताभमलं विमलतां ययौ ॥ ५ ॥
68239
68240 अनन्ताभमपरिच्छिन्नब्रह्माकारम् ॥ ५ ॥
68241
68242 अनामृष्टविकल्पांशुश्चिदात्मा विगतामयः ।
68243 उदियाय हृदाकाशे तस्य व्योम्नीव भास्करः ॥ ६ ॥
68244
68245 विक्षेपैर्मेघपटलैश्च अनामृष्टविकल्पा असंपादितरञ्जनाभेदा
68246 अंशवः प्रकाशा यस्य । विगता देहभेदनिरोधप्रयुक्ता आमया दुःखानि
68247 यस्य ॥ ६ ॥
68248
68249 स ददर्शाखिलान्भावांश्चिच्छक्तौ समवस्थितान् ।
68250 आत्मभूताननन्तात्मा सर्वभूतात्मकोविदः ॥ ७ ॥
68251
68252 चिच्छक्तौ चिदात्मनि समवस्थितानध्यस्तान् अत एव परमार्थदृशा
68253 आत्मभूतान् ॥ ७ ॥
68254
68255 प्रहृष्टो न बभूवासौ क्वचिन्न च सुदुःखितः ।
68256 प्रकृतेर्व्यवहारत्वात्सदैव सममानसः ॥ ८ ॥
68257
68258 प्रकृतेर्मायाया एव
68259 सर्वव्यवहाररूपत्वादसङ्गात्मासंस्पर्शदर्शनात्सममानसः ॥ ८ ॥
68260
68261 जीवन्मुक्तो बभूवाऔ ततःप्रभृति मानदः ।
68262 जनको जरठज्ञानी ज्ञातलोकपरावरः ॥ ९ ॥
68263
68264 जरठज्ञानी ज्ञानवृद्ध इति यावत् ॥ ९ ॥
68265
68266 राज्यं कुर्वन्विदेहानां जनको जनजीवितम् ।
68267 नैव हर्षविषादाभ्यां सोऽवशः परितप्यते ॥ १० ॥
68268
68269 जनानां जीवितमिव प्रिय इति यावत् ॥ १० ॥
68270
68271 नास्तमेति न चोदेति गुणदोषविचेष्टितैः ॥ ११ ॥
68272
68273 मानसैर्गुणदोषविचेष्टितैरस्तं स्वरूपतिरोधानं उदयं
68274 पुनस्तदाविर्भावं च नैति बाह्यैश्च राज्योत्थैरर्थानर्थैर्न हृष्यति न
68275 ग्लायतीति व्युत्क्रमेणान्वयः ॥ ११ ॥
68276

68277 अर्थानर्थैः स राज्योत्थैर्न ग्लायति न हृष्यति ।
68278 कुर्वन्नपि करोत्येष न किंचिदपि कुत्रचित् ।
68279 स तिष्ठत्येव सततं सर्वदैवान्तरे चितः ॥ १२ ॥
68280
68281 न किंचिदपि करोति अकर्त्रात्मभूतत्वादित्यर्थः । तदेवाह - स इति ॥ १२ ॥
68282
68283 सुषुप्तावस्थितस्यैव जनकस्य महीपतेः ।
68284 भावनाः सर्वभावेभ्यः सर्वथैवास्तमागताः ॥ १३ ॥
68285
68286 भावना रागादिवासनाः ॥ १३ ॥
68287
68288 भविष्यं नानुसंधत्ते नातीतं चिन्तयत्यसौ ।
68289 वर्तमाननिमेषं तु हसन्नेवानुवर्तते ॥ १४ ॥
68290
68291 वासनाक्षयफलमाह - भविष्यमिति ।
68292 वासनावशात्पूर्वोत्तरानुसंधानं तेन प्राक्तनानिष्टकारिषु द्वेष
68293 आगामिप्रियार्थं रागस्ततः प्रवृत्तिरिति सर्वानर्थप्रसक्तिः ।
68294 वर्तमानमात्रदर्शनं तु दुःखस्यानुपेक्षया नाप्रियतानुसंधानमिति
68295 सहजानन्दानुवृत्त्या हसन्नेवेत्यर्थः ॥ १४ ॥
68296
68297 स्वविचारवशेनैव तेन तामरसेक्षण ।
68298 प्राप्तं प्राप्यमशेषेण राम नेतरयेच्छया ॥ १५ ॥
68299
68300 आख्यानोपक्रमबीजं स्मारयन्नुपसंहरति - स्वविचारेति । अशेषेण
68301 निरवशेषेण प्राप्तं ज्ञानमात्रेण विस्मृतकण्ठचामीकरवल्लब्धम् । तेन
68302 जनकेन ॥ १५ ॥
68303
68304 तावत्तावत्स्वकेनैव चेतसा प्रविचार्यते ।
68305 यावद्यावद्विचाराणां सीमान्तः समवाप्यते ॥ १६ ॥
68306
68307 तथाच फलपर्यन्तं विचारः कार्यो नान्तरा निर्वेदाद्धेय इत्याह - तावदिति
68308 । प्रविचार्यते प्रविचारयेदित्यर्थः ॥ १६ ॥
68309
68310 न तद्गुरोर्न शास्त्रार्थान्न पुण्यात्प्राप्यते पदम् ।
68311 यत्साधुसङ्गाभ्युदिताद्विचारविशदाद्धृदः ॥ १७ ॥
68312
68313 गुर्वादीनां साधनानामसाधनत्ववादो विचारप्राधान्यबोधनार्थः ।
68314 अपशवो वा अन्ये गो अश्वेभ्यः पशवो गो अश्वाः इतिवत् ॥ १७ ॥
68315
68316 सुन्दर्या निजया बुद्ध्या प्रज्ञयेव वयस्यया ।
68317 पदमासाद्यते राम न नामक्रिययान्यया ॥ १८ ॥
68318
68319 सुन्दर्या सच्छास्त्रविवेकाद्परिष्कृतया । ऊहापोहकुशला मतिः प्रज्ञा तया
68320 वयस्यया सख्या ॥ १८ ॥
68321
68322 यस्योज्ज्वलति तीक्ष्णाग्रा पूर्वापरविचारिणी ।
68323 प्रज्ञादीपशिखा जातु जाड्यान्ध्यं तं न बाधते ॥ १९ ॥
68324
68325 जाड्यमज्ञानं तल्लक्षणमान्ध्यं तमः ॥ १९ ॥
68326
68327 दुरुत्तरा या विपदो दुःखकल्लोलसंकुलाः ।
68328 तीर्यते प्रज्ञया ताभ्यो नावापद्भ्यो महामते ॥ २० ॥

68329
68330 ताभ्यो विपत्रदीभ्यः प्रज्ञया नावा तीर्यते जनैरिति प्रसिद्धम् || २० ||
68331
68332 प्रज्ञाविरहितं मूढमापदल्पापि बाधते |
68333 पेलवाचानिलकला सारहीनमिवोलपम् || २१ ||
68334
68335 पेलवा मृदुला अनिलस्य कला लेशः | उलपं तृणविशेषम् || २१ ||
68336
68337 प्रज्ञावानसहायोऽपि विशास्त्रोऽप्यरिमर्दन |
68338 उत्तरत्येव संसारसागराद्राम पेलवात् || २२ ||
68339
68340 असहायो गुर्वादिसहायशून्यः | विशास्त्रः शास्त्रश्रवणशून्योऽपि | इयमपि
68341 प्रशंसार्थमेवात्युक्तिः | आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत्
68342 इत्यादिश्रुतिविरोधात् | हे राम पेलवाज्ज्ञानमात्रबाध्यत्वेनातिकोमलात् || २२ ||
68343
68344 प्रज्ञावानसहायोऽपि कार्यान्तमधिगच्छति |
68345 दुष्प्रज्ञः कार्यमासाद्य प्रधानमपि नश्यति || २३ ||
68346
68347 लोकेऽपि प्रज्ञावतो मन्त्र्यादेर्बलान्तरवद्भ्यः प्राबल्यं प्रसिद्धमित्याह ##-
68348 प्रजा चरमसाक्षात्कारवृत्तिस्तद्वानात्मा सर्वेषां कार्यप्रपञ्चानामन्तं
68349 बाधं सर्वेषामवश्यकर्तव्यपुरुषार्थानामन्तमवधिं परमपुरुषार्थं
68350 च अधिगच्छति | दुष्प्रज्ञो मोहस्तु सर्वप्रपञ्चसंतानलक्षणं
68351 कार्यजातमासाद्य तन्मूलत्वात्प्रधानं सदपि ज्ञानमात्रेण नश्यतीत्यर्थः |
68352 ज्ञाज्ञपक्षभेदेन [ज्ञानपक्ष इति क्वचित्] वा योज्यम् || २३ ||
68353
68354 शास्त्रसज्जनसंसर्गैः प्रज्ञां पूर्वं विवर्धयेत् |
68355 सेकसंरक्षणारम्भैः फलप्राप्तौ लतामिव || २४ ||
68356
68357 प्राज्ञता तर्हि केनोपायेन लभ्या तत्राह - शास्त्रेति || २४ ||
68358
68359 प्रज्ञाबलबृहन्मूलः काले सत्कार्यपादपः |
68360 फलं फलत्यतिस्वादु भासो बिम्बमिवैन्दवम् || २५ ||
68361
68362 प्रज्ञाबलमेव बृहत् मूलं यस्य तथाविधः | सत्कार्यं सत्कर्म
68363 प्राक्तनभाग्यं तल्लक्षणः पादपः | भासः सूर्यप्रकाशः स यथा
68364 शुक्लपक्षे क्रमेण चन्द्रमण्डलं प्रविष्टः पूर्णममृतमयं
68365 चन्द्रबिम्बं फलति तद्वत् | अथवा ऐन्दवं बिम्बं कर्तृ | तद्यथा
68366 जगत्तिमिरापहा भासश्चन्द्रिकाः फलति
68367 तद्वन्मूलाज्ञाननिबर्हणक्षममात्मज्ञानं फलतीत्यर्थः || २५ ||
68368
68369 य एव यत्नः क्रियते बाह्यार्थोपार्जने जनैः |
68370 स एव यत्नः कर्तव्यः पूर्वं प्रज्ञाविवर्धने || २६ ||
68371
68372 यो यादृशः यत्न उद्यओगः | स तादृशः | तथाच नाधिकः
68373 श्रमोऽस्तीत्यर्थः || २६ ||
68374
68375 सीमान्तं सर्वदुःखानामापदां कोशमुत्तमम् |
68376 बीजं संसारवृक्षाणां प्रज्ञामान्द्यं विनाशयेत् || २७ ||
68377
68378 सर्वेषां दुःखानां दुर्दशानां सीमान्तं परमावधिम् || २७ ||
68379
68380 स्वर्गाद्यद्यच्च पातालाद्राज्याद्यत्समवाप्यते |

68381 तत्समासाद्यते सर्वं प्रज्ञाकोशान्महात्मना ॥ २८ ॥
68382
68383 एवं प्रज्ञाकोशस्यापि सर्वसंपदवधित्वमिति दर्शयति - स्वर्गादिति।
68384 यत्समवाप्यते सुखमिति शेषः। स्वर्लोकादपि रम्याणि पातालानीति नारदः।
68385 जगाद द्युसदां मध्ये पातालेभ्यः समागतः ॥ इति पौराणिकवचनात्पातालेऽपि
68386 सुखातिशयः प्रसिद्धः ॥ २८ ॥
68387
68388 प्रज्ञयोत्तीर्यते भीमात्तस्मात्संसारसागरात्।
68389 न दानैर्न च वा तीर्थैस्तपसा नच राघव ॥ २९ ॥
68390
68391 आत्यन्तिकदुःखक्षयोऽपि प्रज्ञैकफलमित्याह - प्रज्ञयेति।
68392 दानतपःप्रभृतीनामल्पपापक्षयफलत्वादिति भावः ॥ २९ ॥
68393
68394 यत्प्राप्ताः संपदं दैवीमपि भूमिचरा नराः।
68395 प्रज्ञापुण्यलतायास्तत्फलं स्वादु समुत्थितम् ॥ ३० ॥
68396
68397 यच्चान्यत्स्वर्गादि दानादिकर्मणां फलं तदपि प्रज्ञाफलमेवेत्याह -
68398 यदिति। भूमिचरा अपि नरा दैवीं नभश्चरत्वादिलक्षणां संपदं प्राप्ता इति
68399 यत्तदपीत्यर्थः ॥ ३० ॥
68400
68401 प्रज्ञया नखरालूनमत्तवारणयूथपाः।
68402 जम्बुकैर्विजिताः सिंहाः सिंहैर्हरिणका इव ॥ ३१ ॥
68403
68404 सामान्यैरपि भूपत्वं प्राप्तं प्रज्ञावशान्नरैः।
68405 स्वर्गापवर्गयोग्यत्वं प्राज्ञस्यैवेह दृश्यते ॥ ३२ ॥
68406
68407 प्रज्ञया वादिनः सर्वे स्वविकल्पविलासिनः।
68408 जयन्ति सुभटप्रख्यान्नरानप्यतिभीरवः ॥ ३३ ॥
68409
68410 सुभटप्रख्यान् वादशूरानिति यावत् ॥ ३३ ॥
68411
68412 चिन्तामणिरियं प्रज्ञा हृत्कोशस्था विवेकिनः।
68413 फलं कल्पलतेवैषा चिन्तितं संप्रयच्छति ॥ ३४ ॥
68414
68415 भव्यस्तरति संसारं प्रज्ञयापोह्यतेऽधमः।
68416 शिक्षितः पारमाप्नोति नावा नाप्नोत्यशिक्षितः ॥ ३५ ॥
68417
68418 शिक्षितो नौकानयनशिक्षावान्कैवर्तः ॥ ३५ ॥
68419
68420 धीः सम्यग्योजिता पारमसम्यग्योजिताऽपदम्।
68421 नरं नयति संसारे भ्रमन्ती नौरिवार्णवे ॥ ३६ ॥
68422
68423 धीर्नौरिव सम्यग्विवेकवैराग्यादिसन्मार्गे योजिता चेत्पारं नयति। असम्यग्
68424 रागद्वेषलोभाद्यसन्मार्गे योजिता तु आपदं नयति प्रापयतीत्यर्थः ॥ ३६ ॥
68425
68426 विवेकिनमसंमूढं प्राज्ञमाशागणोत्थिताः।
68427 दोषा न परिबाधन्ते सन्नद्धमिव सायकाः ॥ ३७ ॥
68428
68429 आशा तृष्णा तत्पक्षीया गणा लोभमोहक्रोधचिन्तादयस्तेभ्य उत्थिता दोषा
68430 द्वेषचिन्ताविषादादयः। संनद्धं वर्मनद्धम् ॥ ३७ ॥
68431
68432 प्रज्ञयेह जगत्सर्वं सम्यगेवाङ्ग दृश्यते।

सम्यग्दर्शनमायान्ति नापदो नच संपदः ॥ ३८ ॥

सम्यक् गुणदोषतत्त्वविवेकेन दृश्यते । सम्यग् दर्शनं यस्य तं
सम्यग्दर्शनं पुरुषम् ॥ ३८ ॥

पिधानं परमार्कस्य जडात्मा विततोऽसितः ।
अहंकाराम्बुदो मत्तः प्रज्ञावातेन बाध्यते ॥ ३९ ॥

परमः परमात्मा तल्लक्षणस्यार्कस्य पिधानं तिरोधायकः ।
लडयोरभेदादम्बुदपक्षे जलात्मा । विततो विस्तीर्णः । असितोऽस्वच्छो नीलश्च ॥ ३९ ॥

पदमतुलमुपैतुमिच्छतोच्चैः
प्रथममियं मतिरेव लालनीया ।
फलमभिलषता कृषीवलेन
प्रथमतरं ननु कृष्यते धरैव ॥ ४० ॥

लालनीया बाल इव क्रमाद्विवेकशिक्षणेन शोधनीया । फलं कृषिफलं
धान्याभिवृद्धिम् । नन्विति प्रसिद्धौ ॥ ४० ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे०
मोक्षोपायेषूपशमप्रकरणे प्रज्ञामाहात्म्यं नाम द्वादशः
सर्गः ॥ १२ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
प्रज्ञामाहात्म्यं नाम द्वादशः सर्गः ॥ १२ ॥

## त्रयोदशः सर्गः १३

श्रीवसिष्ठ उवाच ।

एवं जनकवद्राम विचार्यात्मानमात्मना ।
पदं विदितवेद्यानामविघ्नेनाधिगच्छसि ॥ १ ॥

जनकस्य विचारं तं दृष्टान्तीकृत्य विस्तरात् ।
चित्तप्रशमनोपायाः कीर्त्यन्त इह युक्तिभिः ॥ १ ॥

अविघ्नेन असंभावनादिप्रतिबन्धकनिरासेन ॥ १ ॥

ये हि पाश्चात्यजन्मानः प्राज्ञा राजससात्त्विकाः ।
प्राप्नुवन्ति स्वयं प्राप्यं ते जना जनका इव ॥ २ ॥

रजसा पुरुषप्रयत्नसंभवात्सत्त्वेन च चित्तप्रसादोपचयाद्राजससात्त्विका एव
स्वविवेकेनाकाशफलपातवज्ज्ञानप्राप्तावप्यधिकारिण इति भावः ॥ २ ॥

तावत्तावद्विजित्यारीनिन्द्रियाख्यान्पुनःपुनः ।
यावदात्मात्मनैवायमात्मन्येव प्रसीदति ॥ ३ ॥

ते कथं प्राप्नुवन्ति तदाह - तावत्तावदिति । सत्त्वोपचयाद्यावदात्मा आत्मनि
प्रसीदति तावत्तावद्रजसो विष्टम्भशक्त्या इन्द्रियारीन्पुनःपुनर्विजित्येत्यर्थः ॥ ३
। ।

68485 प्रसन्ने सर्वगे देवे देवेशे परमात्मनि |
68486 स्वयमालोकिते सर्वाः क्षीयन्ते दुःस्वदृष्टयः || ४ ||
68487
68488 अध्यात्माधिकारात्सर्वेषां देवानामिन्द्रियाणामीशे वशिनि देवे परमात्मनि
68489 स्वयमालोकिते सति || ४ ||
68490
68491 मुष्टयो मोहबीजानां वृष्टयो विविधापदाम् |
68492 कुदृष्टयः क्षयं यान्ति दृष्टे तस्मिन्परावरे || ५ ||
68493
68494 मोहबीजानां दुर्वासनानां मुष्टयो मुष्टिवदन्तर्दृढं
68495 संग्राहकाश्चित्तक्षेत्रे उप्यमानाश्च
68496 विविधानामाध्यात्मिकादिभिन्नानामापदां दुःखानां वृष्टयो
68497 वृष्टिवदकस्मात्सर्वतः क्षारयित्र्यः |
68498 कुदृष्टयोऽहंममतादिप्रत्ययलक्षणा हृदयग्रन्थयः | परा
68499 मानुषानन्दादिहैरण्यगर्भानन्दान्ताः सुखोत्कर्षा अवरा न्यूना
68500 यस्मात्तथाविधे | तथाच श्रुतिः - भिद्यते हृदयग्रन्थिश्छिद्यन्ते
68501 सर्वसंशयाः | क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे इति || ५ ||
68502
68503 सदा जनकवद्राम सर्वारम्भवदात्मना |
68504 प्रज्ञयात्मानमालक्ष्य लक्ष्मीवानुत्तमो भव || ६ ||
68505
68506 प्रज्ञया विवेकबुद्ध्या आत्मानं स्वं
68507 सर्वारम्भवत्सर्वजगदुत्पत्त्याद्यधिष्ठानं ब्रह्म तदात्मना आलक्ष्य
68508 साक्षादनुभूय परमपुरुषार्थलक्ष्मीवानुत्तमः सर्वोत्कृष्टो भवेत्यर्थः
68509 || ६ ||
68510
68511 नित्यमन्तर्विचारस्य पश्यतश्चञ्चलं जगत् |
68512 जनकस्येव कालेन स्वयमात्मा प्रसीदति || ७ ||
68513
68514 इदानीमात्मप्रसादोपाये विचार एव मुख्य इत्याह - नित्यमिति |
68515 चञ्चलमनित्यं भ्रमणस्वभावं च || ७ ||
68516
68517 न दैवं नच कर्माणि न धनानि न बान्धवाः |
68518 शरणं भवबीतानां स्वप्रयत्नादृते नृणाम् || ८ ||
68519
68520 विचारस्यापि मूलं पुरुषप्रयत्न एवेत्याशयेनाह - नेति || ८ ||
68521
68522 ये दैवनिष्ठाः कृत्यादौ कुविकल्पपरायणाः |
68523 तेषां मन्दा मतिस्तात नानुगम्या विनाशनी || ९ ||
68524
68525 ननु दैववशात्स्वयमेव कालेन ज्ञानं भविष्यति किमस्मत्प्रयत्नेनेति ये
68526 मन्यन्ते तन्निन्दति - य इति | कृतिर्यत्नः |
68527 आदिपदाद्विवेकवैराग्यविचारादयस्तेषु | दैवे प्रतिकूले किं स्वप्रयत्नसहस्रेण
68528 सेत्स्यति बहूनां यतमानानां दैवोपहतानां
68529 काममन्युभिर्भ्रंशदर्शनादित्यादिकुविकल्पपरायणाः || ९ ||
68530
68531 विवेकं परमाश्रित्य विलोक्यात्मानमात्मना |
68532 धिया विरागोद्धुरया संसारजलधिं तरेत् || १० ||
68533
68534 एषा सा कथिता राम नभःफलनिपातवत् |
68535 सुखदा ज्ञानसंप्राप्तिरज्ञानतरुशातनी || ११ ||
68536

68537 एषा जनकाख्यायिकोदाहरणप्रपञ्चिता ॥ ११ ॥
68538
68539 जनकस्येव सद्बुद्धेः स्वयमेव विलोकिनः ।
68540 विकासमेत्ययं देही देवः प्रातरिवाम्बुजम् ॥ १२ ॥
68541
68542 देही देहान्तर्हृदि स्थितो देवः परमात्मा ॥ १२ ॥
68543
68544 संसारमननं चित्रं विचारेण विलीयते ।
68545 गलद्वशीकृतस्पर्शमातपेन हिमं यथा ॥ १३ ॥
68546
68547 संसारस्य मननं विकल्पनं चिन्तनं वा ।
68548 वशीकृतस्पर्शमपहृतशैत्यम् ॥ १३ ॥
68549
68550 अयमेवाहमित्यस्या निशाया उदिते क्षये ।
68551 स्वयं सर्वगतः स्फारः स्वालोकः संप्रवर्तते ॥ १४ ॥
68552
68553 देहाहंभावत्याग एव पूर्णात्मदर्शने मुख्यं साधनमित्याह -
68554 अयमिति ॥ १४ ॥
68555
68556 अयमेवाहमित्यस्मिन्संकोचे विलयं गते ।
68557 अनन्तभुवनव्यापी विस्तार उपजायते ॥ १५ ॥
68558
68559 जनकेन परित्यक्ता यथाहंकारवासना ।
68560 तथा त्वमपि सद्बुद्धे विचार्यान्तः परित्यज ॥ १६ ॥
68561
68562 अहंकाराम्बुदे क्षीणे चिद्व्योम्नि विमले तते ।
68563 नूनं संप्रौढतामेति स्वालोको भास्करः परः ॥ १७ ॥
68564
68565 नूनं निश्चयेन अवश्यमिति यावत् । स्वालोकात्मा भास्करः सूर्यः
68566 संप्रौढतां शरदीव स्फुटप्रकाशताम् ॥ १७ ॥
68567
68568 एतावदेवातितमो यदहंभावभावनम् ।
68569 तस्मिंश्च शममानीते प्रकाश उपजायते ॥ १८ ॥
68570
68571 अतितमः तमसो मुख्यं बलमिति यावत् ॥ १८ ॥
68572
68573 नाहमस्ति न चान्योस्ति नच नास्तीति भावितम् ।
68574 मनः प्रशान्तिमायातं नोपादेयेषु मज्जति ॥ १९ ॥
68575
68576 अहमहंता नास्ति । अस्मच्छब्दार्थस्याप्यहंकारस्याप्रत्यक्त्वविवक्षणान्न
68577 तदभिधानायोत्तमपुरुषः कृतः । अहमर्थस्य तदन्यस्य च निषेधे
68578 शून्यताप्रसक्तिमाशङ्क्योक्तं नच नास्तीति । उभयसाक्षिणः सत्त्वादिति भावः
68579 । उपादेयेषु उपादानार्हेषु विषयेषु ॥ १९ ॥
68580
68581 उपादेयानुपतनं हेयैकान्तविवर्जनम् ।
68582 यदेतन्मनसो राम तद्बन्धं विद्धि नेतरत् ॥ २० ॥
68583
68584 उपादेयेषु रागो हेयेषु द्वेषश्च मानसः पुरुषस्य बन्धो नान्य इत्याह -
68585 उपादेयेति ॥ २० ॥
68586
68587 मा खेदं भज हेयेषु नोपादेयपरो भव ।
68588 हेयादेयदृशौ त्यक्त्वा शेषस्थः स्वच्छतां व्रज ॥ २१ ॥

68589
68590 हेयादेयदृशौ रागद्वेषात्मकवृत्ती । शेषस्तत्साक्षी तत्स्थस्तदेकनिष्ठः सन्
68591 स्वच्छतां विक्षेपकालुष्यशून्यताम् ॥ २१ ॥
68592
68593 येषामिदमुपादेयमिदं हेयमिति स्थितिः ।
68594 विलीना ते न वाञ्छन्ति त त्यजन्तीह किंचन ॥ २२ ॥
68595
68596 इति स्थितिरेवंरूपा व्यवस्था येषां
68597 सर्वत्रहेयानुपादेयात्ममात्रतादर्शनाद्विलीना ते पुरुषाः ॥ २२ ॥
68598
68599 हेयोपादेयकलने क्षीणे यावन्न चेतसः ।
68600 न तावत्समता भाति साभ्रे व्योम्नीव चन्द्रिका ॥ २३ ॥
68601
68602 समता अविषमब्रह्मात्मता ॥ २३ ॥
68603
68604 अवस्त्विदमिदं वस्तु यस्येति लुलितं मनः ।
68605 तस्मिन्नोदेति समता शाखोट इव मञ्जरी ॥ २४ ॥
68606
68607 अवस्तु अप्रशस्तं वस्तु अतो हेयं वस्तु प्रशस्तं वस्तु अत उपादेयमिति यस्य
68608 मनः अन्तर्लुलितं लोलतां गतमित्यर्थः । शाखोटो वृक्षविशेषः
68609 महापुष्पफलपल्लवोऽनुपजीव्यच्छायः प्रसिद्धः ॥ २४ ॥
68610
68611 युक्तायुक्तैषणा यत्र लाभालाभविलासिनी ।
68612 समता स्वच्छता तत्र कुतो वैराग्यभासिनी ॥ २५ ॥
68613
68614 युक्तमनुकूलमत इदं मे भूयादित्येषणालाभविलासिनी । अयुक्तं
68615 प्रतिकूलमिदमतो मे कदापि माभूदित्यरागविलासिनी एषणा इच्छा द्वेषश्च यत्र
68616 यस्मिन्पुरुषे ॥ २५ ॥
68617
68618 एकस्मिन्ब्रह्मतत्त्वेऽस्मिन्विद्यमाने निरामये ।
68619 नानाऽनानातया नित्यं किमयुक्तं क्व युक्तता ॥ २६ ॥
68620
68621 तत्र समतास्वच्छतयोः संभावने को विरोधस्तमाह - एकस्मिन्निति ।
68622 नानाऽनानातया भेदाभेदविकल्पनया । यद्यसङ्गाद्वितीयानन्दा अभिन्नास्तर्हि
68623 आत्मत्वादेव सर्वेऽप्यनुकूला एव । यदि भिन्नास्तथाप्यात्मास्पर्शान्नानुकूला न
68624 वा प्रतिकूला इति न तदापि तयोरवकाश इति भावः ॥ २६ ॥
68625
68626 ईप्सितानीप्सिताशङ्के मर्कट्यौ चित्तपादपे ।
68627 चञ्चले स्फुरतो यस्मिन्कुतस्तस्येह सौम्यता ॥ २७ ॥
68628
68629 तस्य चित्तपादपस्य । सौम्यता निष्कम्पता ॥ २७ ॥
68630
68631 निराशता निर्भयता नित्यता समता ज्ञता ।
68632 निरीहता निष्क्रियता सौम्यता निर्विकल्पता ॥ २८ ॥
68633
68634 इदानीं जीवन्मुक्तलक्षणभूतान्पञ्चदशगुणानाह - निराशतेति
68635 द्वाभ्याम् । निरीहता मनश्चापलाभावः । निष्क्रियता
68636 शारीरकर्तृत्वाभिनिवेशाभावः । सौम्यता सदाप्रसन्नता ॥ २८ ॥
68637
68638 धृतिर्मैत्री मतिस्तुष्टिर्मृदुता मृदुभाषिता ।
68639 हेयोपादेयनिर्मुक्ते ज्ञे तिष्ठन्त्यपवासनम् ॥ २९ ॥
68640

68641 मैत्री सर्वभूतसुहृत्त्वम् | मतिर्मननशीलता | यदि गुणास्तिष्ठन्ति तर्हि
68642 तद्वासनयैव तस्य बन्धः स्यादित्याशङ्क्याह - अपवासनमिति |
68643 वासनाबीजस्याज्ञानस्य नष्टत्वादिति भावः || २९ ||
68644
68645 धावमानमधोभागे चित्तं प्रत्याहरेद्बलात् |
68646 प्रत्याहारेण पतितमधो वारीव सेतुना || ३० ||
68647
68648 इदानीं रामस्य तद्गुणार्जने उपायमाह - धावमानमित्यादिना |
68649 अधोभागे निकृष्टेषु विषयेषु | प्रत्याहारेण विषयेभ्यः
68650 सर्वबाह्येन्द्रियाणां परावर्तनेन | अधःपतितं प्रवाहोन्मुखं वारि
68651 सेतुनेव || ३० ||
68652
68653 बाह्यानर्थानिमांस्त्यक्त्वा तिष्ठन्गच्छन्स्वपन्श्वसन् |
68654 सर्वथा सर्वदा सर्वानान्तरांश्च विचारय || ३१ ||
68655
68656 बाह्येष्वर्थेष्वात्मताभ्रान्त्यप्रसक्तेस्त्याग एवोपायः | आन्तरेषु तु तत्प्रसक्तेः |
68657 सर्वदा सर्वप्रकारेण तत्र रत्नतत्त्वपरीक्षावद्विचारः कार्य इत्याह-
68658 बाह्यानिति | तथाचाहुर्वृद्धाः - गच्छतस्तिष्ठतो वापि जाग्रतः स्वपतोऽपि
68659 वा | न विचारपरं चेतो यस्यासौ मृत उच्यत इति || ३१ ||
68660
68661 गृहीततृष्णाशफरि वासनाजालमाविलम् |
68662 संसारवारिप्रसृतं चिन्तातन्तुभिराततम् || ३२ ||
68663
68664 अनया मदुपदिष्टया बुद्धिलक्षणया शलाकया कर्तर्या वासनालक्षणं
68665 जालमानायं छिन्धीति परेणान्वयः | गृहीतास्तृष्णाशफर्यो येन
68666 मोहशैवालैराविलं मलिनम् | संसारलक्षणे वारिणि प्रसृतं प्रसारितम् |
68667 चिन्तालक्षणैस्तन्तुभिराततं निर्मितम् || ३२ ||
68668
68669 अनया तीक्ष्णया तात च्छिन्धि बुद्धिशलाकया |
68670 वात्ययेवाम्बुदं काले वहन्त्या वितते पदे || ३३ ||
68671
68672 वितते विस्तीर्णतरे पदे आकाशे ब्रह्मणि च वहन्त्येति वात्याशलाकयोर्विशेषणम् ||
68673 ३३ ||
68674
68675 अस्य संसारवृक्षस्य मूलं दोषाङ्कुरास्पदम् |
68676 भव्यधीरेण धैर्येण प्रोद्धरोद्धुरया धिया || ३४ ||
68677
68678 हे भव्य धीरेण चिराभ्यासदृढीकृतेनैकात्मस्थैर्यलक्षणेन
68679 चित्तधैर्येण संपन्नया अत एवोद्धुरया
68680 अनादिकालनिमग्नात्मोद्धारसमर्थया अपरोक्षसाक्षात्कारधिया
68681 संसारवृक्षस्य मूलं सवासनमज्ञानं छिन्धीत्यर्थः || ३४ ||
68682
68683 मनसैव मनश्छित्त्व कुठारेणेव पादपम् |
68684 पदं पावनमासाद्य सद्य एव स्थिरो भव || ३५ ||
68685
68686 ननु सति विक्षेपहेतौ मनसि कथं मूलच्छेदस्तत्राह - मनसैवेति | यथा
68687 अग्रनिविष्टलोहेन पादपावयवकाष्ठात्मना कुठारेण पादपश्छिद्यते
68688 तद्वदग्रनिवेशितवृत्तिद्धब्रह्मचैतन्येन मनसैव मनश्छित्त्वेत्यर्थः ||
68689 ३५ ||
68690
68691 मनसैव मनच्छित्त्वा विस्मृत्या चरमं मनः |
68692 वर्तमानमपि च्छित्त्वा च्छिन्नसंसारतां व्रज || ३६ ||

68693
68694 ननु पूर्वसिद्धमनस उक्तोपायेन च्छेदनेपि भाविमनोवृत्तीनां
68695 वर्तमानब्रह्माकारमनोवृत्तेर्वा कथं छेदनं तत्राह - विस्मृत्येति
68696 | विस्मृतिर्वासनोच्छेदस्तया चरममुत्तरकालप्रसक्तं वृत्तिरूपम् | असत्यां
68697 वासनायामग्रेऽपि वृत्त्यनुदयात् | वर्तमानं कतकरेणुन्यायेन स्वेनैव
68698 स्वस्य निरासाच्छित्त्वा || ३६ ||
68699
68700 मोहो विस्मृत्य संसारं न भूयः परिरोहति |
68701 चित्तं विस्मृत्य संसारो न भूयः परिरोहति || ३७ ||
68702
68703 नन्वेवमपि तत्त्वविदो जीवनसिद्धये तदुपादानभूताविद्याख्यो
68704 मोहोऽवश्यमभ्युपगन्तव्यः स एव पुनः संसारं
68705 प्ररोहयिष्यतीत्याशङ्क्याह - मोह इति | परिरोहति प्ररोहति |
68706 वासनाक्षयलक्षणे विस्मरणे सति तस्य बीजशक्त्यभावादिति भावः | तर्हि
68707 संसारस्तस्मिन्मोहक्षेत्रे स्वयमेव प्ररोहतु तत्राह - चित्तमिति |
68708 चित्तसंस्कारोच्छेदलक्षणे चित्तविस्मरणे सति न चेत्यस्य प्ररोहः संभवति |
68709 चित्तसंस्कारस्यापि चेत्यारोपबीजत्वादिति भावः || ३७ ||
68710
68711 तिष्ठन्गच्छन्स्वपञ्जाग्रन्निवसन्नुत्पतन्पतन् |
68712 असदेवेदमित्यन्तर्निश्चित्यास्थां परित्यज || ३८ ||
68713
68714 चित्तचेत्योभयविस्मरणे तदास्थात्याग एवोपाय इत्याह - तिष्ठन्निति || ३८ ||
68715
68716 समतामलमाश्रित्य संप्राप्तं कार्यमाहरन् |
68717 अचिन्तयंस्तथाऽप्राप्तं विहरेह हि राघव || ३९ ||
68718
68719 आस्थापरित्यागे समतापि सिद्ध्यतीत्याशयेनाह - समतामिति | तथा
68720 अप्राप्तमिति च्छेदः || ३९ ||
68721
68722 यथा शर्वोऽपि लिङ्गानि न बिभर्ति बिभर्ति च |
68723 त्वमेवमिह कार्याणि कुरु मा कुरु चानघ || ४० ||
68724
68725 यथा शर्वो महेश्वरः क्षित्याद्यष्टमूर्तिलक्षणानि लिङ्गानि
68726 शुद्धचिन्मात्रदृशा न बिभर्ति
68727 जगदाकारविवर्तमायाधिष्ठानत्वात्सन्निधिमात्रेण बिभर्ति च तेन सर्वकर्ता
68728 च भवति एवं त्वमपि राज्यादिकार्याण्यनास्थया सन्निधिमात्रेण कुरु
68729 अकर्त्रात्मनिश्चयान्मा कुरु चेत्यर्थः || ४० ||
68730
68731 त्वमेव वेत्ता त्वमजस्त्वमात्मा त्वं महेश्वरः |
68732 आत्मनोऽव्यतिरिक्तः संस्त्वयेत्थमिदमाततम् || ४१ ||
68733
68734 किंच नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता इत्यादिश्रुतेः सर्व शरीरेषु त्वमेव
68735 वेत्ता वेदिता | इड भावश्छान्दसः | सत्तार्थाद्विद्यतेर्वा तृच् |
68736 परमार्थसन्नित्यर्थः | अजो जन्मादिविक्रियाशून्यः | सर्वस्यात्मा प्रत्यक्चिद्रसः
68737 प्रागुक्तो महेश्वरश्च त्वमेव | आत्मनः स्वस्वभावादव्यतिरिक्तः
68738 अप्रच्युतस्वभाव एव सन् | एवंभूतेन त्वया स्वमोहादित्थमिदमाततं
68739 विस्तारितं नान्येनेत्यर्थः || ४१ ||
68740
68741 येनात्मदृश्यसद्भावादभितो भावनोज्झिता |
68742 स न संगृह्यते दोषैर्हर्षामर्षविषादजैः || ४२ ||
68743
68744 यदि मयैवेदमाततं तर्हि कथं ममात्र हर्षामर्षदोषोदयस्तत्राह -

68745 येनेति। येन तत्त्वविदा आत्मदृश्यस्य
68746 सद्भावात्परमार्थसन्मात्रताभावनादभितोऽन्यदिति भावना उज्झिता त्यक्ता स
68747 न दोषैः संगृह्यते अतस्त्वमप्युज्झेत्यर्थः ॥ ४२ ॥
68748
68749 रागद्वेषविनिर्मुक्तः समलोष्टाश्मकाञ्चनः।
68750 युक्त इत्युच्यते योगी त्यक्तसंसारवासनः ॥ ४३ ॥
68751
68752 स यत्करोति यद्भुङ्क्ते यद्ददाति निहन्ति यत्।
68753 तत्र मुक्तधियस्तस्य समता सुखदुःखयोः ॥ ४४ ॥
68754
68755 प्राप्तं कर्तव्यमेवेति त्यक्तेष्टानिष्टभावनः।
68756 प्रवर्तते यः कार्येषु न स मज्जति कुत्रचित् ॥ ४५ ॥
68757
68758 चित्सत्तामात्रमेवेदमिति निश्चयवन्मनः।
68759 त्यक्तभोगाभिमननं शममेति महामते ॥ ४६ ॥
68760
68761 इदं जगत् स्वयं च। भोगाभिमननं भोगचिन्ता सा त्यक्ता येन ॥ ४६ ॥
68762
68763 मनः प्रकृत्यैव जडं चित्तत्त्वमनुधावति।
68764 मांसगर्धेन मार्जारो वने मृगपतिं यथा ॥ ४७ ॥
68765
68766 चित्सत्तामात्रमेवेदमिति यदुक्तं तदुपपादयति - मन इत्यादिना। यतो जडं
68767 अतः स्वतः सेद्धुं परं साधयितुं चासमर्थत्वात्स्वसिद्धये
68768 स्वविषयसिद्धये च स्वसाक्षिभूतं स्वप्रकाशचिद्रूपं तत्त्वं पारमार्थिकं
68769 वस्तु अनुधावत्यनुसरति। यथा स्वजीवनाय स्वपुत्रादिभरणाय च मार्जारः
68770 सिंहमनुसरति तद्वदित्यर्थः ॥ ४७ ॥
68771
68772 सिंहवीर्यवशाल्लब्धं मांसं भुङ्क्तेऽनुगो हरेः।
68773 चिद्वीर्यवशतः प्राप्तं दृश्यमाश्रयते मनः ॥ ४८ ॥
68774
68775 दृश्यं स्वं स्वविषयं च आश्रयते उपजीवति ॥ ४८ ॥
68776
68777 मन एवमसत्कल्पं चित्प्रसादेन जीवति।
68778 भावयन्विश्वमेवैकं चिन्तामेत्य चिदप्युत ॥ ४९ ॥
68779
68780 अस्त्वेवं किं ततस्तत्राह - मन इति। एवंच सति मनः असत्कल्पं
68781 शून्यप्रायं मिथ्येति सिद्धमित्यर्थः। कथं जीवति तदाह - भावयन्निति।
68782 एकमद्वितीयमात्मानं विस्मृत्य विश्वं जगदाकारमेव भावयन्। छान्दसो
68783 लिङ्गव्यत्ययः। कल्पयत्सज्जगदाकारं भूत्वा जीवतीत्यर्थः। अत एव
68784 चिन्तामात्मस्मृतिमेत्य प्राप्य उत पुनश्चिदपि भवति मनस्त्वं जहातीत्यर्थः
68785 ॥ ४९ ॥
68786
68787 जडं यत्किल निर्हीनं चिता दीपिकयौजसा।
68788 तन्मनः शवसंकाशमचिदुत्तिष्ठते कथम् ॥ ५० ॥
68789
68790 मनसः प्रकाशशक्तिरिव स्पन्दशक्तिरपि चिदधीनैवेत्याह - जडमिति।
68791 चिल्लक्षणया दीपिकया ओजसा बलेन च विना। उत्तिष्ठते स्पन्दते ॥ ५० ॥
68792
68793 चित्स्वभावपरामृष्टा स्पन्दशक्तिरसन्मयी।
68794 कल्पना चित्तमित्युक्त्या कथ्यते शास्त्रदृष्टिभिः ॥ ५१ ॥
68795
68796 अत एव चिति स्पन्दकल्पनैव मन इति विद्वत्प्रवादोऽप्यस्तीत्याह - चित्स्वभावेति ॥

68797 ५१ ॥
68798
68799 यश्चित्तफणिफूत्कारः सैवेयं कलनोच्यते ।
68800 चिदेवाहमिति ज्ञात्वा सा चित्तामेव गच्छति ॥ ५२ ॥
68801
68802 स्पन्दशक्तेरेव विलासश्चित्तं तद्वृत्तयश्चेत्याह - य इति ।
68803 फूत्कारग्रहणं विषस्याप्युपलक्षणम् । तथाच चित्तादित्रिपुटी
68804 दृश्याकारतैव कलनेत्यर्थः । चित्तां शुद्धचिन्मात्रताम् ॥ ५२ ॥
68805
68806 चेत्येन रहिता यैषा चित्तद्ब्रह्म सनातनम् ।
68807 चेत्येन सहिता यैषा चित्सेयं कलनोच्यते ॥ ५३ ॥
68808
68809 तथाच चितश्चेत्यत्याग एव ब्रह्मता पर्यवसन्नेत्याह - चेत्येनेति ॥ ५३ ॥
68810
68811 किंचिदामृष्टरूपं यद्ब्रह्म तच्च स्थिरं मनः ।
68812 कल्पना सत्सदैवैतत्सदिवोपस्थिता हृदि ॥ ५४ ॥
68813
68814 कलनैव मननान्मनो भवतीत्याह - किंचिदिति । तद्ब्रह्मैव
68815 किंचिदामृष्टरूपं कलना सत् सदैव हृदि सदिव उपस्थिता
68816 संकल्पविकल्पकल्पना भूत्वा स्थिरं एतत्प्रसिद्धं मनो भवतीत्यर्थः ॥ ५४ ॥
68817
68818 चित्तमित्येव रूढेयं यदैव कलनोदिता ।
68819 तदैव चित्त्वं विस्मृत्य सा जडेव व्यवस्थिता ॥ ५५ ॥
68820
68821 नित्यानुभवस्वभावस्य स्वरूपविस्मरणे कलनैव स्मृतित्वमापन्नचित्ततां
68822 गच्छतीत्याह - चित्तमिति । तदा परोक्षतापत्तियोग्या जडताप्यस्याः
68823 संपन्नेत्याह - जडेवेति ॥ ५५ ॥
68824
68825 संपन्ना कलनानाम्नी संकल्पानुविधायिनी ।
68826 अवच्छेदवती वाग्रा हेयोपादेयधर्मिणी ॥ ५६ ॥
68827
68828 अतीतविषयाकारकल्पनेन चित्ततामिव अनागतविषयाकारकल्पनेन
68829 संकल्पविकल्पानुविधानान्मनस्तामपि सा प्राप्तेत्याशयेनाह - संपन्नेति
68830 । एवमवच्छेदवती द्विधा परिच्छिन्ना सती
68831 प्राक्तनेष्टानिष्टसाधनसाजात्यमध्यवस्य भावीष्टानिष्टसाधनतां
68832 संकल्प्य हेयोपादेयधर्मिणी अग्रा मुख्या चिदेव संपन्नेत्यर्थः ॥ ५६ ॥
68833
68834 सैषा चिदेव जगतामागतेव स्वशक्तितः ।
68835 न संप्रबोधिता यावद्रूपं तावन्न बुध्यते ॥ ५७ ॥
68836
68837 मनः प्रकृत्यैवेत्यादिनोपपादितं चित्सत्तामात्रमेवेदमित्यंशं
68838 पिण्डीकृत्योपसंहरति - सैषेति । स्वशक्तितः स्वीयमायाशक्तिवशात् ।
68839 गुरुशास्त्रस्वविचारैर्यावन्न संप्रबोधिता तावद्वास्तवं
68840 पूर्णानन्दाद्वयरूपं न बुध्यत इत्यर्थः ॥ ५७ ॥
68841
68842 अतः शास्त्रविचारेण वैराग्येण परेण च ।
68843 निग्रहेणेन्द्रियाणां च बोधयेत्कलनां स्वयम् ॥ ५८ ॥
68844
68845 बोधयेज्जडाकारकलनालक्षणादवस्थात्रयस्वप्राद्यावर्तयेदित्यर्थः ॥ ५८ ॥
68846
68847 कलना सर्वजन्तूनां विज्ञानेन शमेन च ।
68848 प्रबुद्धा ब्रह्मतामेति भ्रमतीतरथा जगत् ॥ ५९ ॥

68849
68850 विज्ञानेन शास्त्रजन्यज्ञानेन | शमेन विज्ञानशमाभ्यामप्रबोधने || ५९ ||
68851
68852 व्यामोहमदिरामत्तं लुठितां विषयावटे |
68853 आत्मावेदनसंसुप्तां कलनामेव बोधयेत् || ६० ||
68854
68855 व्यामोहो रागः | आत्मनः अवेदनमज्ञानं निद्रा तेन संसुप्ताम् || ६० ||
68856
68857 अप्रबुद्धा यदा ह्येषा न किंचिदवबुध्यते |
68858 संकल्पकलनेवान्तर्दृश्यमानाप्यसन्मयी || ६१ ||
68859
68860 ननु कलना यदि सुप्ता कथं जगदवबुध्यते अवबोधे वा तस्याः
68861 प्रसिद्धचित्स्वभावात्कोऽतिशयस्तत्राह - अप्रबुद्धेति | यन्मन्यसे
68862 जगदवबुध्यत इति तन्न किंचिदवबुध्यते | जगतोऽनवबोधमात्रविलसितत्वात् |
68863 यतो दृश्यमानापि जगत्स्थितिः सांकल्पिकप्रासादकलनेव असन्मयीत्यर्थः || ६१
68864 | |
68865
68866 तया परमया दृष्ट्या कलनैषान्तरस्थया |
68867 मञ्जरी गन्धशक्त्येव पदार्थेषु विराजते || ६२ ||
68868
68869 विषयांशपरित्यागेऽवशिष्टा कलनैवात्मेत्युक्ते वृत्तिज्ञानमेवायमात्मेति
68870 मा ग्राहीति तत्साक्षिणीं तदान्तरीं शुद्धचितं विविच्य दर्शयति -
68871 तयेत्यादिना | एषा चित्तवृत्तिरूपा कलना अन्तरस्थया तया सर्वसाक्षिण्या
68872 परमया दृष्ट्या व्याप्ता सती पदार्थेषु स्वस्वविषयेषु विराजते
68873 प्रकाशनसमर्था भवति न स्वत इत्यर्थः || ६२ ||
68874
68875 तनुः संकल्पिता यैषा कलनेति जगत्त्रये |
68876 सा हि किंचिद्विजानाति नित्यं ज्ञानैकधर्मिणी || ६३ ||
68877
68878 यदि सा सर्वसाक्षिणीं कुतस्तत्तदन्तःकरणधर्मानेव प्रकाशयति न सर्व
68879 तत्राह - तनुःसंकल्पितेति | या एषा ज्ञानैकधर्मिणी नित्यबोधस्वभावा
68880 साक्षिचित्सा परिच्छिन्नवृत्तिकलनोपाधिवशात्तनुरल्पैवेति जगत्त्रयेऽपि तैस्तैः
68881 प्राणिभिः संकल्पिता अतः किंचिदल्पमेव तत्तदन्तःकरणादि विजानातीत्यर्थः ||
68882 ६३ ||
68883
68884 चेतनेन जडा राम कलनोपलरूपिणी |
68885 पद्मिनीवातपेनासौ परेणैव प्रबोध्यते || ६४ ||
68886
68887 वृत्तिरूपा तु कलना विवेके उपलरूपिणी पाषाणकल्पा जडैव | अत एव चेतनेन
68888 साक्षिणा प्रबोध्यते || ६४ ||
68889
68890 यथा शिलामयी कन्या चोदितापि न नृत्यति |
68891 तथेयं कलना देहे न किंचिदवबुध्यते || ६५ ||
68892
68893 ये तु नैयायिकप्रभृतयो नित्यसाक्षिणमजानानाः
68894 परप्रकाशस्यैवानित्यज्ञानस्य अर्थप्रकाशतां मन्यन्ते
68895 तान्बहुभिर्दृष्टान्तैरुपहसति - यथेत्यादिना || ६५ ||
68896
68897 लिपिकर्मनृपैर्युद्धं क्व कृतं घर्घरारवम् |
68898 क्वचिन्न चन्द्रकिरणैरोषध्यः प्रतिबोधिताः || ६६ ||
68899
68900 अचेतनस्यान्तःकरणतद्वृत्त्यादेर्नित्यचित्संनिधानाभावे

68901 विषयोन्मुखप्रवृत्तिरेव दुर्लभा दूरे तत्प्रकाशकतेत्याशयेनाह -
68902 लिपिकर्मेति। लिपिकर्मभिश्चित्रलिखितैर्नृपैः। प्रतिबोधिता आप्यायिताः॥ ६६॥
68903
68904 असृगालिप्तगात्रैश्च शवैः क्व परिवल्गितम्।
68905 क्व गीतं मधुरध्वानं वनपाषाणखण्डकैः॥ ६७॥
68906
68907 परिवल्गितं धावितम्॥ ६७॥
68908
68909 क्व पुंसा विहितैरर्कैः क्षपितं यामिनीतमः।
68910 क्व संकल्पमयैश्छाया क्रियते व्योमकाननैः॥ ६८॥
68911
68912 पुंसा विहितैः शिलादिना निर्मितैः॥ ६८॥
68913
68914 क्व जडैरुपलाकारैर्मिथ्याभ्रमभरोत्थितैः।
68915 मृगतृष्णामयैरेभिर्मनोभिः क्रियते क्रिया॥ ६९॥
68916
68917 यथातपे क्षते स्फारे मृगतृष्णातरङ्गिणी।
68918 कलना तद्वदेवेयं स्फुरत्यात्मनि सत्यलम्॥ ७०॥
68919
68920 नित्यचिदात्मानभ्युपगमे कलनाद्यध्यास एव न सिध्येदित्याशयेनाह -
68921 यथेति॥ ७०॥
68922
68923 यदेतत्स्पन्दितं नाम तन्मनोऽधिगतं शठैः।
68924 मरुतां विद्धि तां शक्तिमन्तः प्राणशरीरिणीम्॥ ७१॥
68925
68926 चितः परिच्छेदस्पन्दकल्पनैव मन इत्युक्तम् इदानीं सैव चिदचिदंशविवेके
68927 चिदंशस्यात्ममात्रत्वाज्जडांश एव परिशिष्यते तथाविधा तु स्पन्दशक्तिः
68928 प्राण एवेति तन्निरोधे कृते न मनो नाम पृथङ्निरोध्यमस्तीति वक्तुं
68929 भूमिकां रचयति - यदेतदिति। शठैः स्ववञ्चकैरज्ञैः।
68930 अन्नमयान्तःप्राणशरीरिणीं प्राणमयकोशात्मिकाम्॥ ७१॥
68931
68932 येषां संविदनाक्रान्ता संकल्पलवनिश्चयैः।
68933 अनाक्षिप्तरसाकारा प्रभैषा पारमात्मिकी॥ ७२॥
68934
68935 सा प्राणशक्तिः संकल्पादुत्थिता निःसंकल्पानां योगिनां चिदात्मैव सा
68936 पृथगस्तीत्याह - येषामिति। न आक्षिप्तः कल्पितः रस्यन्त इति रसा
68937 विषयास्तदाकारो यया॥ ७२॥
68938
68939 अयं सोऽहमिदं तन्म इति या कलनाविला।
68940 प्राणात्मतत्त्वयोस्तस्याः संज्ञा जीवेति कथ्यते॥ ७३॥
68941
68942 सैव अहंममेत्याक्षिप्तरसाकारा यदा तदा विना स्पन्दं
68943 तदाक्षेपायोगात्स्पन्दात्मकप्राणतत्त्वस्य चिदात्मकस्यात्मतत्त्वस्य च
68944 पृथगिव संजातस्याविवेकात्पुनरैक्याध्यासेनाविला जडसंवलितचिद्रूपा
68945 कलना जीव प्राणधारण इति धात्वर्थानुगमाज्जीवतीति जीवेति संज्ञा कथ्यत
68946 इत्यर्थः॥ ७३॥
68947
68948 धीश्चित्तं जीव इत्येताः संकल्पस्यासतो मताः।
68949 संज्ञाः संकल्पितास्तज्ज्ञैर्न राम परमार्थतः॥ ७४॥
68950
68951 एवमन्या अपि संज्ञास्तस्याः प्रसिद्धा इत्याह - धीरिति॥ ७४॥
68952

68953 मनो नो न मतिर्नापि धीरेषा न शरीरकम् |
68954 अस्तीह परमार्थेन स्वात्मैवेहास्ति सर्वदा || ७५ ||
68955
68956 कुतो न परमार्थतस्तत्राह - मन इति | यतः परमार्थेन मनश्चित्तं
68957 बुद्धिः शरीरमित्येतदुपलक्षितं दृश्यमात्रमिहात्मनि नास्ति अप्राणो
68958 ह्यमनाः शुभ्रः अकायमव्रणमस्नाविरम् अस्थूलमनणु इत्यादिश्रुतिशतेन
68959 विद्वदनुभवैर्युक्तिभिश्च बाधितत्वादिति भावः || ७५ ||
68960
68961 आत्मैवेदं जगत्सर्वमात्मा कालक्रमस्तथा |
68962 स चाकाशादच्छतरो नास्तीवास्त्येव चामलः || ७६ ||
68963
68964 यद्यात्मैवास्ति तर्हि स कुतो न भाति जगद्रूपेण वा को भाति तत्राह -
68965 आत्मैवेति || ७६ ||
68966
68967 अच्छत्वादसदाभासः संविद्रूपतया तु सत् |
68968 आत्मा सर्वपदातीतः स्वानुभूत्यानुभूयते || ७७ ||
68969
68970 कुतो नास्तीव कुतश्चास्त्येवेति निश्चयस्तत्राह - अच्छत्वादिति |
68971 अछत्वाच्चक्षुरादियोग्यताप्रयोजकस्थौल्यनैल्याद्यभावादसन्निवाभासत
68972 इत्यसदाभासः | चिद्रूपतया स्वपरप्रथानिर्वाहकत्वात्तु सत् | अत एव
68973 स्वानुभूत्यैवानुभूयते न करणैरित्यर्थः || ७७ ||
68974
68975 मनस्तत्र परिक्षीणं यत्र संवित्परात्मनः |
68976 अन्धकारक्षयस्तत्र यत्रालोकः प्रवर्तते || ७८ ||
68977
68978 स्थौल्याद्यभावात्करणान्तराणि तत्र न प्रवर्तन्तां मनस्तु
68979 सूक्ष्मतयार्थनिर्णयनिमित्तत्वेन प्रसिद्धं कुतो नप्रवर्तते तत्राह - मन
68980 इति | सत्यं तत्र मनः प्रवर्तेत यदि तद्दर्शनकाले स्वयं न नश्येत्
68981 मनसस्त्वज्ञानकार्यत्वात्तद्दर्शनवृत्त्युदयसमकालमेवाविद्यया सह
68982 क्षयान्न तद्दर्शनशक्ततेत्यर्थः || ७८ ||
68983
68984 यत्रात्मसंविदोऽच्छायाः संकल्पोत्थतया मताः |
68985 तत्रात्मनो विस्मरणं स्मरणं चित्तजन्मनः || ७९ ||
68986
68987 क्व तर्हि मनसः प्रवृत्तिशक्तिस्तदाह - यत्रेति | यत्र यस्यां
68988 दशायामच्छायाः स्वच्छतराया आत्मरूपायाः संविदः
68989 संकल्पवशाद्बाह्यविषयाकारोत्थतया बाह्यार्थाः
68990 प्रकाश्यत्वेनाभिमतास्तत्र पारमार्थिकस्यात्मनो विस्मरणं चित्तजन्मनो
68991 मिथ्यार्थस्य स्मरणं दर्शनमित्यादिप्रसिद्धमित्यर्थः || ७९ ||
68992
68993 परस्य पुंसः संकल्पमयत्वं चित्तमुच्यते |
68994 अचित्तत्वमसंकल्पान्मोक्षस्तेनाभिजायते || ८० ||
68995
68996 स्वोद्भवप्रतिकूलत्वादपि न मनस आत्मदर्शनशक्तिरस्तीत्याह - परस्येति |
68997 संकल्पमयत्वाधीनोद्भवं मनः सर्वसंकल्पक्षयोपलक्षिते मोक्षात्मनि
68998 कथं प्रवर्तेतेति भावः || ८० ||
68999
69000 एतावच्चेतसो जन्म बीजं संसारभूतये |
69001 संकल्पोन्मुखतां यातः संविदो वा किलात्मनः || ८१ ||
69002
69003 अत एव संकल्पचित्तजन्मबीजमित्यसकृदा वेदितमित्याह - एतावदिति |
69004 संकल्पोन्मुखतां यातो गच्छत आत्मनो यत् संविदश्चित्स्वभावाद्वा

69005 विकल्पनमीषदन्यथाभावलक्षणमेतावदेव चेतसो जन्म किलेत्यन्वयः ॥ ८१ ॥
69006
69007 निर्विकल्पाच्चितः सत्ता संकल्पाङ्ककलङ्किता ।
69008 कलनेत्युच्यते तेन पुंस्त्ववद्बुद्ध्यते मनः ॥ ८२ ॥
69009
69010 उक्तमेव स्फुटीकृत्याह - निर्विकल्पादिति । निर्विकल्पात्प्रच्युतेति शेषः । यथा
69011 स्त्र्यादिसंकल्पकलनया पुंस्त्वं पुंव्यञ्जनं बुद्ध्यते
69012 प्रजाप्रसवार्थमाविर्भवति तथा मनोऽपि जगत्प्रसवार्थमित्यर्थः । तथाच
69013 बादरायणस्यापि सूत्रम् पुंस्त्वादिवदपि हि लोके इति ॥ ८२ ॥
69014
69015 प्राणशक्तौ निरुद्धायां मनो राम विलीयते ।
69016 द्रव्यच्छायानु तद्द्रव्यं प्राणरूपं हि मानसम् ॥ ८३ ॥
69017
69018 यदेतत्स्पन्दितं नामेत्यादिना यत् प्रस्तुतं तस्य प्रयोजनमाह -
69019 प्राणशक्ताविति । यथा द्रव्यस्य दर्पणादेः संबन्धिनी छाया प्रतिच्छाया
69020 तस्मिन्द्रव्ये विलीने तद्द्रव्यमनु विलीयते तद्वत् । तत्कुतः । यतो यथा प्रतिबिम्बं
69021 दर्पणस्यैव कल्पितं रूपं तथा मानसं मनोऽपि प्राणस्यैव रूपमित्यर्थः
69022 ॥ ८३ ॥
69023
69024 देशान्तरानुभवनं प्राणो वेत्ति हृदि स्थितम् ।
69025 स्पन्दवेदनतो यत्तन्मन इत्यभिधीयते ॥ ८४ ॥
69026
69027 प्राणरूपं मानसमिति कुतो ज्ञातं तत्राह - देशान्तरेति । यतः प्राणो
69028 जीवन्पुरुषो दूरदेशान्तरस्यानुभवनं मानसानुभवं हृदि स्थितं वेत्ति
69029 हृदि मे तस्य देशस्यानुभवोऽस्तीत्यनुभवति । तत्र देशान्तरसंबन्धस्य
69030 स्पन्दमन्तरेणासिद्धेर्वेदनांशस्य
69031 चित्संवलनमन्तरेणायोगात्स्पन्दवेदनोभयशक्तियोगात्प्राण एव मन
69032 इत्यभिधीयत इत्यर्थः ॥ ८४ ॥
69033
69034 वैराग्यात्कारणाभ्यासाद्युक्तितो व्यसनक्षयात् ।
69035 परमार्थावबोधाच्च रोध्यन्ते प्राणवायवः ॥ ८५ ॥
69036
69037 इत्थं प्राणनिरोधेन मनोनिरोधसिद्धये तयोरैक्यं व्युत्पाद्येदानीं
69038 निरोधोपायमाह - वैराग्यादिति । कारणं प्राणायामस्तस्याभ्यासात् । योगो
69039 युक्तिः समाधिस्तस्मात् । चित्तस्य बाह्यविषयोपसर्पणदुरभ्यासो व्यसनं तस्य
69040 क्षयात् ॥ ८५ ॥
69041
69042 दृषदो विद्यते शक्तिः कदाचिच्चलनैधसाम् ।
69043 न पुनर्मनसामस्ति शक्तिः स्पन्दावबोधने ॥ ८६ ॥
69044
69045 इदानीं अन्नमयं हि सोम्य मन आपोमयः प्राणः इति श्रुत्या
69046 भिन्नोपादानकयोः प्राणमनसोर्भेद इति पक्षेऽपि मनसः
69047 स्वतःस्पन्दशक्तेश्चिच्छक्तेश्चाभावात्प्राणचिदात्माधीने एव ते इति
69048 प्राणनिरोधे निरोधोपपत्तिरित्याशयेनाह - दृषद इति । एधःशब्देन
69049 काष्ठवाचिना तत्कार्यज्वलनशक्तिर्लक्ष्यते । दृषदः शिलाया अपि
69050 कदाचिच्चलनशक्तिर्ज्वलनशक्तिश्च विद्यते संभवेत् नतु मनसां स्पन्दविषये
69051 अवबोधविषये वा शक्तिरस्तीत्यर्थः ॥ ८६ ॥
69052
69053 स्पन्दः प्राणमरुच्छक्तिश्चलद्रूपैव सा जडा ।
69054 चिच्छक्तिः स्वात्मनः स्वच्छा सर्वदा सर्वगैव सा ॥ ८७ ॥
69055
69056 कयोस्तर्हि ते शक्ती तावाह - स्पन्द इति ॥ ८७ ॥

69057
69058 चिच्छक्तेः स्पन्दशक्तेश्च संबन्धः कल्प्यते मनः ।
69059 मिथ्यैव तत्समुत्पन्नं मिथ्या ज्ञानं तदुच्यते ॥ ८८ ॥
69060
69061 किं तर्हि मनस्तदाह - चिच्छक्तेरिति ॥ ८८ ॥
69062
69063 एषा ह्यविद्या कथिता मायैषा सा निगद्यते ।
69064 परमेतत्तदज्ञानं संसारादिविषप्रदम् ॥ ८९ ॥
69065
69066 अविद्या कार्याविद्या । माया विक्षेपशक्तिः । एतन्मन
69067 एवाज्ञानसर्वस्वनिर्वाहकत्वादज्ञानम् ॥ ८९ ॥
69068
69069 चिच्छक्तेः स्पन्दशक्तेश्च सङ्गेः संकल्पकल्पनम् ।
69070 न कृतं चेत्परिक्षीणास्तदिमा भवभीतयः ॥ ९० ॥
69071
69072 संकल्पकल्पनं संकल्पकल्पननिमित्तमिति यावत् । अत एव निमित्ताजनने
69073 नैमित्तिकापायसिद्धिरित्याह - न कृतं चेदिति ॥ ९० ॥
69074
69075 वायुतः स्पन्दशक्तिर्या सा चिता चेत्यते यदा ।
69076 सचेत्या चित्तदैवान्तः संकल्पाद्याति चित्तताम् ॥ ९१ ॥
69077
69078 वायोरिति वायुतः । षष्ठ्यन्तात्सार्वविभक्तिकस्तसिः ॥ ९१ ॥
69079
69080 चित्ततैषा चितो मिथ्या कल्पिता बालयक्षवत् ।
69081 अखण्डमण्डलाकारस्पन्दरूपा चिदेव यत् ॥ ९२ ॥
69082
69083 न विद्यन्तेऽखण्डमण्डलाकारस्पन्दरूपाणि यस्यां तथाविधा चिदेव
69084 यद्यस्मात्परमार्थ इत्यर्थः ॥ ९२ ॥
69085
69086 सैषा चित्ता तदन्येन केन संबाध्यते किल ।
69087 अखण्डशक्तेरिन्द्रस्य केन स्यात्सह संगरः ॥ ९३ ॥
69088
69089 सा उक्ताखण्डपूर्णतालक्षणा चित्ता चित्स्वभावता तदन्येन केन संबाध्यते
69090 खण्ड्यते । किलेति तदसंभावनाद्योतनार्थः । किं तदधीनसिद्धिकेन उतान्येन
69091 अन्यस्याप्रसिद्धेः । चिदधीनसिद्धिकस्य चिद्बाधनाशक्तेर्बाधस्यापि
69092 सिद्धेश्चित्सत्ताधीनत्वाच्चित्खण्डनमन्तरेण चिदन्तराले अचित्सिद्ध्ययोगाच्चेति
69093 भावः । तद्विदन्ते इति पाठे तु तां तादृशीं चित्स्वभावतां स्वस्य वेत्तीति तद्वित्
69094 अन्ते सकार्याविद्यानाशे सति केन संबाध्यते इति योज्यम् । इन्द्रस्य देवराजस्य
69095 परमेश्वरस्य वा ॥ ९३ ॥
69096
69097 अतः संबन्धिनोऽभावात्संबन्धोऽत्र न विद्यते ।
69098 संबन्धेन विना कस्य सिद्धं तत्कीदृशं मनः ॥ ९४ ॥
69099
69100 अतोऽचितश्चिदविरोधायोगाद्विरोधे चित्सत्ताबाधितस्थितिकत्वाच्च कीदृशं मनः ।
69101 यदि जडमपि स्वसत्तायामन्यनिरपेक्सं स्वतःसिद्धमुच्येत तथापि
69102 तदनुभवितुस्तत्संबन्धिनश्चेतनस्यान्यस्याभावाच्चित्संबन्धेन विना
69103 तन्मनः कस्य सिद्धं कीदृशं वा तत्स्यात् । अनुभवानारोहे अलीकस्य तस्य च
69104 विशेषासिद्धेरिति भावः ॥ ९४ ॥
69105
69106 चित्स्पन्दयोरेकतायां किं नाम मन उच्यते ।
69107 का सेना हयमातङ्गसङ्गसंघट्टनं विना ॥ ९५ ॥
69108

69109 इत्थं चित्स्पन्दयोर्भेदपक्षे मनसोऽलीकतामुक्त्वा एकतापक्षे तु सुतरां
69110 तथेत्याह - चित्स्पन्दयोरिति | चित्स्पन्दयोरेकता चिदपलापेन तावदशक्या
69111 वक्तुम् | स्पन्दसाधकाभावप्रसङ्गात् | परिशेषात्स्पन्दापलापेनैकत्वोक्तौ
69112 राजातिरिक्तगजतुरगाद्यपलापे सेनास्वरूपासिद्धिवन्मनसः
69113 सुतरामसिद्धिरित्यर्थः || ९५ ||
69114
69115 तस्मान्नास्त्येव दुष्टात्म चित्तं राम जगत्त्रये |
69116 सैषा सम्यक्परिज्ञानाच्चेतसो जायते क्षतिः || ९६ ||
69117
69118 तस्मात्पक्षद्वयेऽप्यसंभवाच्चित्तं मनो नास्त्येव तत्त्वज्ञानान्नास्तीति
69119 निश्चय एव मनोनाश इत्यर्थः || ९६ ||
69120
69121 मुधा मैवमनर्थाय मनः संकल्पयानघ |
69122 मनो मिथ्यासमुदितं नास्त्यत्र परमार्थतः || ९७ ||
69123
69124 मा त्वमन्तः क्वचित्किंचित्संकल्पय महामते |
69125 मनः संकल्पकं राम यस्मान्नास्तीह कुत्रचित् || ९८ ||
69126
69127 असम्यग्ज्ञानसंभूता कल्पना मृगतृष्णिका |
69128 हृन्मरौ तव संशान्ता सम्यगालोकनान्मुने || ९९ ||
69129
69130 हृत्पदेन हृदयान्तस्थप्रत्यगात्मोच्यते | तल्लक्षणे मरौ | असम्यग्ज्ञानेन
69131 संभूता | मुने इति रामसंबोधनं मननप्रवणताविधानार्थम् || ९९ ||
69132
69133 जडत्वान्निःस्वरूपत्वात्सर्वदैव मृतं मनः |
69134 मृतेन मार्यते लोकश्चित्रेयं मौर्ख्यचक्रिका || १०० ||
69135
69136 मरणं यदि चैतन्यनिवृत्तिर्यदि वा निःस्वरूपतापत्तिस्तदुभयमपि
69137 मनस्यस्तीति नित्यमृतम् | मौर्ख्यचक्रिका चक्रवत्परिवर्तमाना
69138 मौर्ख्यपरम्परा || १०० ||
69139
69140 यस्य नात्मा न देहोऽस्ति नाधारो नापि चाकृतिः |
69141 तेनेदं भक्ष्यते सर्वं चित्रेयं मौर्ख्यवागुरा || १०१ ||
69142
69143 आत्मा स्वरूपम् | आकृतिरवयवसंस्थानं जातिर्वा || १०१ ||
69144
69145 सर्वसामग्र्यहीनेन हन्यते मनसापि यः |
69146 नीलोत्पलदलाघातैर्मन्ये दलितमस्तकम् || १०२ ||
69147
69148 सामग्र्यं शस्त्रास्त्रदेहहस्तपादादियुद्धसामग्री तेन हीनेन | दलितमस्तकं
69149 तं इति शेषः || १०२ ||
69150
69151 जडेन मूकेनान्धेन निहतो मनसापि यः |
69152 मन्ये स दह्यते मूढः पूर्णचन्द्रमरीचिभिः || १०३ ||
69153
69154 विद्यमानोऽपि यः शूरो लोकस्तेनाभिभूयते |
69155 अविद्यमानमेवेदं हन्यते मुग्धतोदिता || १०४ ||
69156
69157 तेन अविद्यमानेन मनसा विद्यमानः | शूरः
69158 शत्रुजयसर्वसामग्रीसंपन्नोऽपि लोको मूढजनोऽभिभूयते | विवेकिभिश्च
69159 वैराग्यादिभिर्महाप्रयत्नसंपाद्यैः साधनैर्महता
69160 योगध्यानसमाध्यभ्यासासाक्षात्कारोपायेनाविद्यमानमेव हन्यते इतीयं

69161 सर्वा विकल्पना मुग्धतैवोदिता न पारमार्थिकीत्यर्थः। तथाचाहुः स्वामिनः
69162 समसरमिति निरविदमिति समतरमिति चेह सहजसान्द्रसुखे। केवलचिद्गगने मयि
69163 केयमहो विफलबहुविकल्पलता॥ इति॥ १०४॥
69164
69165 मिथ्यासंकल्पकलितं मिथ्यावस्थितिमागतम्।
69166 अन्विष्टमपि नो दृष्टं का तस्य किल शक्तता॥ १०५॥
69167
69168 शक्तता अभिभवितुमिति शेषः॥ १०५॥
69169
69170 अहो नु खलु चित्रेयं मायामयविधायिनी।
69171 चेतसाप्यतिलोलेन लोकोऽयमभिभूयते॥ १०६॥
69172
69173 महामायावित्वेन प्रसिद्धस्य मयस्यापि विधायिनी निर्मात्री॥ १०६॥
69174
69175 मौर्ख्यं यदापदान्विष्टः का हि नापदजानतः।
69176 पश्य मौर्ख्यादियं सृष्टिरज्ञानेनैव जन्यते॥ १०७॥
69177
69178 यदा मौर्ख्य तदा स पुरुषः सर्वेणाप्यापदा [अत्र सर्वयाप्यापदा।
69179 सर्वेणापि प्रकारेणेत्यर्थ इति युक्तम्] अन्विष्टः परिमृग्य आश्रितो नात्र
69180 विप्रतिपत्तिः। हि यस्मादजानतो मूर्खस्य का आपन्नास्ति सर्वाप्यस्त्येवेत्यर्थः।
69181 न विद्यते ज्ञानं यस्य सः अज्ञानः मूर्खात्मा तेन
69182 मौर्ख्याद्दुष्कर्मादिद्वारा इयं सर्वापन्निधिभूता सृष्टिः। आपदां
69183 निष्ठेति पाठे तु स्पष्टम्॥ १०७॥
69184
69185 हा कष्टमपि दुर्बुद्धेः सृष्टिर्मौर्ख्यवशं गता।
69186 असतैव यदेतेन जीवेनाप्युपपाद्यते॥ १०८॥
69187
69188 इयं सृष्टिर्मनोदेहादिदुर्बुद्धेर्निमित्तान्मौर्ख्यस्य वशं गता मौर्ख्येण
69189 पीड्यमानाप्येतेन प्रसिद्धेन जीवेनाप्यसता
69190 असन्मार्गानुवर्तनेनैवोत्तरोत्तरदुःखायोपपाद्यते। तथाचान्धस्येव जडस्य
69191 मन आदेः स्वाभाविकमौर्ख्यात्पीडितस्य पुनस्तद्दुःखाभिज्ञेन जीवेनापि
69192 पीडनं कष्टात्कष्टतरमनुचितमित्यर्थः॥ १०८॥
69193
69194 मन्ये मौर्ख्यमयी सृष्टिरियमत्यन्तपेलवा।
69195 वास्तरङ्गप्रवाहेण कणशः परिशीर्यते॥ १०९॥
69196
69197 अत्यन्तपेलवा अविचारमात्रसिद्धत्वाद्विचारमात्रेण बाधितुं शक्येति यावत्। तत्र
69198 तादृशान्विचारमात्रनिरस्यान्दृष्टान्तानाह - वारित्यादिना। यथा वाः
69199 वारि स्वकल्पितेन तरङ्गप्रवाहेण पिष्यमाणं कणशः परिशीर्यते इति
69200 भ्रान्तिवदित्यर्थः॥ १०९॥
69201
69202 नीलाञ्जनालवालेन यन्त्रेणैव विचूर्ण्यते।
69203 इन्दोराभोगपूर्णस्य करस्पर्शेन मुह्यति॥ ११०॥
69204
69205 तदेव वारि यत्रावर्तस्तत्र नीलाञ्जनवर्णेन आलवालेन मध्यच्छिद्रवता
69206 पेषणयन्त्रेणैव विचूर्ण्यते। तदेव वारि यत्र कम्पते तत्र आभोगेन मण्डलेन
69207 पूर्णस्येन्दोः करस्पर्शेन मुह्यति उन्मादपरवशतां गच्छतीति च
69208 भ्रान्तिर्यथा तद्वदित्यर्थः॥ ११०॥
69209
69210 रिपुभिर्नयनोन्मुक्तैर्दृष्टः सूत्रैर्निबध्यते।
69211 संकल्पकृतया शूरसेनया परिभूयते॥ १११॥
69212

69213 रिपुभिर्दृष्टो दृष्टमात्रः पुरुषो नयनोन्मुक्तैर्नेत्रसृष्टैः
69214 सूत्रैर्बध्यत इत्यादिभ्रान्तिवदित्यर्थः। अथवा मन्ये इत्यादि असती
69215 मृगतृष्णावास्तरङ्गप्रवाहादिनापीयं सृष्टिर्विनाशयितुं शक्यते किं
69216 पुनः शास्त्रीयोपायेनेति मन्ये इत्येवं योज्यम्॥ १११॥
69217
69218 तस्मात्किलेयं मनसा न स्थितेनैव कुत्रचित्।
69219 कल्पितेन मुधान्येन कृपणेन निहन्यते॥ ११२॥
69220
69221 तस्मादतिपेलवत्वादियं मूर्खलोकमयी सृष्टिर्निहन्यत इति परेण सहान्वयः
69222 ॥ ११२॥
69223
69224 मूर्खलोकमयी सृष्टिर्मन एवासदुत्थितम्।
69225 यः शक्तो न वशीकर्तुं नासौ रामोपदिश्यते॥ ११३॥
69226
69227 तस्मान्मनोवशीकरणाशक्तो नाध्यात्मशास्त्राधिकारीत्याह - मन एवेति॥
69228 ११३॥
69229
69230 अभिजाताऽस्वरूपैषा प्रज्ञा क्षोदेषु न क्षमा।
69231 नोपदेशगिरां योग्या परिपूर्णेव संस्थिता॥ ११४॥
69232
69233 कुतो नोपदिश्यते तत्राह - अभिजातेति। यतस्तस्यैषा प्रज्ञा अभितो जाता
69234 अभिजाता बाह्यविषयेष्वेव निरूढा तावतैव परिपूर्णेव संस्थिता न
69235 मनोनिग्रहोद्युक्ता। अस्वरूपा न विद्यते आन्तरं स्वरूपं यस्यास्तथाविधा
69236 प्रत्यक्प्रवणा न भवतीत्यर्थः। अत एव क्षोदेषु सूक्ष्मार्थविचारेषु न क्षमा
69237 ॥ ११४॥
69238
69239 बिभेत्येषापि वीणायास्तन्त्रीगुणतनुध्वनेः।
69240 बन्धोरपि सनिद्रस्य बिभेति वदनद्युतेः॥ ११५॥
69241
69242 अत एव धैर्यहेत्वभावात्सर्वतो बिभेतीत्याह - बिभेतीति॥ ११५॥
69243
69244 असतोऽपि जनादुच्चैर्गीताद्भीता पलायते।
69245 स्वेनैव मनसाप्यज्ञा किलैषा विवशीकृता॥ ११६॥
69246
69247 असतोऽपि शत्रुजनात्प्रतारकादिभिरायातस्ते शत्रुजन इत्युच्चैर्गीताद्भीता सती
69248 पलायते। किं बहुना स्वेन स्वीयेनैव मनसापि विवशीकृता भीषिता
69249 किमन्येनेत्यर्थः॥ ११६॥
69250
69251 सुखलवविवशा द्विषेव तप्ता
69252 हृदयगतेन निजेन चेतसैव।
69253 विधुरितधिषणा न वेत्ति सत्यं
69254 तदपि कथं परिमोहितो मुधैव॥ ११७॥
69255
69256 इदानीं सा दुष्प्रज्ञा बिभेतु नाम तथापि न तद्वशेन पुरुषस्य व्यामोहो युक्त
69257 इति प्राक्प्रस्तुतमेवोपसंहरति - सुखेति। यतः सा प्रज्ञा
69258 विषसंपृक्तमोदकास्वादसुखलवप्रायेण विषयसुखलवेन मरणोन्मुखीव
69259 विवशा द्विषेव प्रहरता हृदयगतेन चेतसैव तप्ता संतापिता विधुरिता
69260 शून्या धिषणा विवेकबुद्धिर्यस्यास्तथाविधा सत्यं तु सुतरां न वेत्ति
69261 तत्तथाभूतयापि तया पुरुषो मुधैव परिमोहितः
69262 स्वच्छचित्तात्स्वजनासंतप्ताद्विवेकबुद्धिमतः सत्यस्वरहस्यवेदिनः शत्रोः
69263 सकाशान्मोहो युक्तो नतु तद्विपरीताया दुष्प्रज्ञायाः सकाशादिति भावः॥ ११७
69264 ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे०
मोक्षोपायेषूपशमप्रकरणे मनोविनिवारणं नाम त्रयोदशः सर्गः
॥ १३ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
मनोनिवारणं नाम त्रयोदशः सर्गः ॥ १३ ॥

चतुर्दशः सर्गः १४

श्रीवसिष्ठ उवाच।

संसारसागरासारकल्लोलैरुह्यमानया।
मतेर्मानद मूकत्वं यया जनतयार्जितम् ॥ १ ॥

उपेक्ष्यानुपदेशार्हान्नानायोनिषु दुःखिनः।
मनोनिर्मार्जनोपायस्तदर्हेभ्योऽत्र वर्ण्यते ॥ १ ॥

तत्रादौ मन एवासदुत्थितम्। यः शक्तो न वशीकर्तुं नासौ रामोपदिश्यते इति
प्राक्प्रस्तुतानुपदेशानधिकारिजनानेवोपेक्षणीयतया वर्णयति -
संसारेत्यादिना। संसारसागरस्य
असारकल्लोलभूतैर्विषयसुखाभिलाषैरुह्यमानया निरन्तरं प्रवर्त्यमानया
यया जनतया मनोनिग्रहविवेकवैराग्यादिविषये अपेक्षाभावाद्विदुषः
प्राप्यापि प्रश्नप्रार्थनाद्यकरणान्मतेर्मूकत्वमेवाश्रितं सा जनता मया
आत्मलाभोपायप्रचुरोत्कृष्टकलाशालिभिर्विचारोक्तिभिरिह जगत्यस्मिन् शास्त्रे
नोपदिश्यते इति द्वयोरन्वयः ॥ १ ॥

आत्मलाभमयोदारकलाभिरिह सा मया।
विचारोक्तिभिरेताभिः शास्त्रेऽस्मिन्नोपदिश्यते ॥ २ ॥

न पश्यत्येव योऽत्यर्थं [यो नित्यं इति पाठः] तस्य कः खलु
दुर्मतिः।
विचित्रमञ्जरी चित्रं संदर्शयति काननम् ॥ ३ ॥

योऽन्ध इत्येव वक्तव्ये नित्यं न पश्यतीत्युक्तिश्चक्षुष्मानपि यो
दुरदृष्टद्वेषादिना न पश्यति तस्यापि तत्प्रदर्शनमनुचितमिति सूचनार्थम् ॥
३ ॥

कः कुष्ठघर्घरघ्राणं नानामोदविचारणे।
मूर्खमात्मोपदेशेन प्रमाणीकुरुतेऽमतिः ॥ ४ ॥

कुष्ठरोगविशीर्णघर्घरस्वननादिघ्राणं यस्य तं पुरुषं
कोऽमतिर्निर्बुद्धिर्नानामोदानां विचारणे परीक्षणे प्रमाणीकुरुते
आमोदतत्त्वनिर्णेतृत्वेनाश्रयतीत्यर्थः ॥ ४ ॥

विपर्यस्तेन्द्रियं मत्तं मदिराघूर्णितेक्षणम्।
धर्मनिर्णयसाक्षित्वे कः प्रमाणीकरोत्यधीः ॥ ५ ॥

कः शवं वा श्मशानस्थं समवायकथाशतम्।
परिपृच्छति संदेहे कश्च मूर्खं प्रशास्ति च ॥ ६ ॥

69317 समवाया जनसमूहास्तत्रत्यं कथाशतम् ॥ ६ ॥
69318
69319 येनाशयबिलस्थोऽपि मूकोन्धोऽपि न निर्जितः।
69320 मनोव्यालः स दुर्बुद्धिः कथं नामोपदिश्यते ॥ ७ ॥
69321
69322 आशेते अस्मिन्नित्याशयो हृदयं तद्बिलस्थः ॥ ७ ॥
69323
69324 जितमेव मनो विद्धि वस्तुतो यन्न विद्यते।
69325 निकटात्सा चिरास्तैव या शिला नैव विद्यते ॥ ८ ॥
69326
69327 तर्हि किं विवेकिनोऽपि मनोजयोऽशक्यो नेत्याह - जितमेवेति।
69328 निकटात्स्वसंनिधेः अस्ता दूरनिरस्तैव ॥ ८ ॥
69329
69330 मनो न विजितं राम येनासदपि दुर्धिया।
69331 तेनाग्रस्तविषेणैव म्रियते विषमूर्च्छया ॥ ९ ॥
69332
69333 अग्रस्तविषेणेति सर्पदंशाद्यभावस्याप्युपलक्षणम् ॥ ९ ॥
69334
69335 ज्ञः पश्यति सदैवात्मा स्पन्दने प्राणशक्तयः।
69336 इन्द्रियाणि स्वधर्मेषु मनो राम किमुच्यते ॥ १० ॥
69337
69338 वस्तुतो यन्न विद्यते इत्येतदुपपादयति - ज्ञ इति। किमर्थप्रथार्थं मन उत
69339 स्पन्दार्थमुत ज्ञानकर्मेन्द्रियप्रयोजनसिद्धये। तल्लयमपि
69340 प्राणप्रेरितैरिन्द्रियरुपनीतानामर्थानां साक्षिणैव प्रथासंभवान्न
69341 मनसः कृत्यमस्तीति भावः ॥ १० ॥
69342
69343 प्राणानां स्पन्दनी शक्तिर्ज्ञानशक्तिः परात्मनः।
69344 इन्द्रियाणां निजा शक्तिरेकः कोऽत्र निबध्यते ॥ ११ ॥
69345
69346 ननु सर्वशक्तिभिर्निबद्धं मनः किं न स्यादिति चेन्न इयमुक्तिर्विवेके घटते
69347 वीणामधुरध्वनिवत्समाजेनापि समुदितव्यवहारसिद्धेरित्याशयेनाह -
69348 प्राणानामिति। तथाच यथा तैर्थिकसमाजस्नानदानगानस्तवनादिव्यवहारो न
69349 सर्वशक्तिमदेकप्रयुक्तस्तद्वदयमपीत्यर्थः ॥ ११ ॥
69350
69351 सर्वास्तदंशवस्तस्य [सर्वास्ता अंशव इति पाठः] सर्वशक्तेः
69352 किलात्मनः।
69353 पृथक्ता वाच्यता चेयं कुतो नाम तवोत्थिता ॥ १२ ॥
69354
69355 यदि कश्चिद्ब्रूयात्संघातस्य संहन्तृपरार्थत्वनियमादत्रापि
69356 कश्चिदपेक्षित इति तर्ह्यस्यापि संघातस्य जगत्संघातान्तःपातात्सर्वेषां
69357 सर्वा व्यवहारशक्तयः सर्वनिर्मातुरीश्वरस्यात्मन एवांशव इति
69358 तादर्थ्यमेवास्यापि सिद्ध्येन्नाचेतनमनोर्थत्वमिति न प्रतिशरीरभिन्ना
69359 चेतनमनःसिद्धिरित्याशयेनाह - सर्वा इति। वाच्यता मन आदिशब्दवाच्यता
69360 ॥ १२ ॥
69361
69362 किं नाम जीव इत्युक्तं येनेहान्धीकृतं जगत्।
69363 चित्तं चैवासदेव त्वं विद्धि का तस्य शक्तता ॥ १३ ॥
69364
69365 तर्ह्यस्तु जीवश्चेतनोऽस्याधिष्ठाता स च न चित्ताख्य मनःप्रग्रहेण विना
69366 इन्द्रियाश्वानधिष्ठातुं शक्नोतीति चित्तमपि सिद्धमेवेति चेत्तत्राह - किं
69367 नामेति। जीव इति चित्तमेव चेति यत्त्वयोक्तं तदुभयं किं नाम। किमात्मातिरिक्तं
69368 चेतनान्तरमुताचेतनम्। नाद्यः नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता इति श्रुत्या

69369 ब्रह्मातिरिक्तचेतनान्तरस्य प्रतिषेधात्। द्वितीये त्वाह - का तस्य शक्ततेति।
69370 अचेतनस्य चेतनार्थत्वावश्यकतया इन्द्रियेभ्यो
69371 विशेषाभावात्तदधिष्ठानशक्त्यभावात्। अतस्त्वं तदुभयमसदेव
69372 विद्धित्यर्थः॥ १३॥
69373
69374 मनोनिर्दग्धदृष्टीनां दृष्ट्वा दुःखपरम्पराम्।
69375 मतिर्मे करुणाक्रान्ता राम मुग्धेव तप्यते॥ १४॥
69376
69377 स्वकल्पितेन मनसा निर्दग्धा परमार्थदृष्टिर्येषाम्।
69378 तद्दुःखनिवारणोपायस्यान्वेषणे वर्षकोटिभिरप्यलाभान्मुग्धा
69379 व्यामोहमिवापन्ना॥ १४॥
69380
69381 कः किलात्र कुतः खेदो यन्मूर्खः परितप्यते।
69382 दुःखायैव हि जायन्ते करभाः प्राकृतास्तथा॥ १५॥
69383
69384 सनिमित्तकं हि दुःखं निमित्तनिवारणेन वारयितुं शक्यम् मूर्खाणां तु
69385 निर्निमित्तमेव दुःखमतो दुर्वारमेवेत्याशयेनाह - कः किलेति। करभा
69386 गर्दभाः प्रकृता मूर्खाश्च अतः शोच्या एवेत्यर्थः। अथवा नैते शोच्याः
69387 ईदृशां मूढयोनीनामसंख्यातानां दर्शनेन
69388 तद्वदेवोपेक्षार्हत्वादित्याशयेन इयमुक्तिः॥ १५॥
69389
69390 विनाशायैव जायन्ते जडा देहेष्वबुद्धयः।
69391 अनारतोदयाः पापा बुद्बुदा जलधेरिव॥ १६॥
69392
69393 उक्ताथविवरणाय नानायोनिभेददुःखिन उदाहर्तुं पीठिकां रचयति -
69394 विनाशायैवेति। पापाः यतः पापकारिण इत्यर्थः॥ १६॥
69395
69396 कियन्तः पश्य पशवः प्रत्यहं प्रतिमण्डलम्।
69397 सूनावद्भिर्निहन्यन्ते कैवात्र परिदेवना॥ १७॥
69398
69399 अज्ञानां योनिभेदेषु दुःखवैचित्र्याणि वैराग्यदार्ढ्यायोदाहरति -
69400 कियन्त इत्यादिना। प्रतिमण्डलं प्रतिदेशम्। सूना पशुहिंसास्थानं
69401 तद्वद्भिस्तदधिष्ठितैः पुरुषैः॥ १७॥
69402
69403 अर्बुदान्यनिलो हन्ति क्ष्माजातेषु चान्वहम्।
69404 दंशानां मशकानां च कैवात्र परिदेवना॥ १८॥
69405
69406 क्ष्माजातेषु भूम्युद्भवजन्तुषु मध्ये अनिलो दंशानां मशकानां
69407 चार्बुदान्यसंख्यातानि हन्ति॥ १८॥
69408
69409 दिशं प्रति गिरीन्द्रेषु पुलिन्दाद्या वने वने।
69410 निघ्नन्ति मृगलक्षाणि कैवात्र परिदेवना॥ १९॥
69411
69412 दिशं प्रति प्रतिदिशम्। वीप्सायां
69413 द्विर्वचनस्याव्ययीभावारम्भसामर्थ्याद्विकल्पितत्वेऽप्यन्यतरस्यावश्यकत्वा
69414 दुभयाभावश्छान्दसः॥ १९॥
69415
69416 जले जलचरव्यूहान्सूक्ष्मान्स्थूलो निकृन्तति।
69417 ग्रासार्थं निर्दयो मत्स्यः कैवात्र परिदेवना॥ २०॥
69418
69419 लिक्षामणुकणक्षामां क्षुधा खादति मक्षिका।
69420 तां कोशकारः क्षुधितो दंशस्तमपि चञ्चलम्॥ २१॥

69421
69422 इदानीं दुर्बलानां प्रबलैः पीडनं परम्परयोपपादयति - लिक्षेत्यादिना
69423 | अणुकणवत्क्षामां लिक्षां वस्त्रयूकां मक्षिका क्षुधा बुभुक्षया खादति
69424 | कोशकार ऊर्णनाभिः कीटविशेषो वा | दंशो वनमक्षिका || २१ ||
69425
69426 तं दंशं दर्दुरो भुङ्क्ते व्यालस्तमपि दर्दुरम् |
69427 सर्पमुग्रं खगो हन्ति बभ्रुश्चैनं निकृन्तति || २२ ||
69428
69429 दर्दुरो भेकः | खगो गरुडादिः | बभ्रुर्नकुलश्चैनं सर्पम् || २२ ||
69430
69431 बभ्रुं हिनस्ति मार्जारो मार्जारं श्वा निकृन्तति |
69432 ऋक्षः कौलेयकं हन्ति ऋक्षं व्याघ्रो निकृन्तति || २३ ||
69433
69434 ऋक्षो भल्लूकः | रिच्छ इति पाठे श्वापदविशेषः || २३ ||
69435
69436 सिंहोऽभिभवति व्याघ्रं शरभः सिंहमत्ति च |
69437 शरभो नाशमायाति मत्तमेघविलङ्घने || २४ ||
69438
69439 मत्तस्य गर्जतो मेघस्य विलङ्घने स्वोपरिभागे गमने प्रसक्ते
69440 तदसहनेनोत्पत्य शिलातले निपातान्नाशमायातीति प्रसिद्धमित्यर्थः || २४ ||
69441
69442 मेघा वातैर्विधूयन्ते वायवो गिरिभिर्जिताः |
69443 गिरयो वज्रनिष्पिष्टाः शक्रस्य वशगः पविः || २५ ||
69444
69445 वज्रेण निष्पिष्टाः खण्डिताः | पविर्वज्रोऽपि शक्रस्य वशगः | शक्रेण
69446 बलाद्वशीकृत इति यावत् || २५ ||
69447
69448 विष्णुना क्रियते शक्रो विष्णुर्गच्छति जन्तुताम् |
69449 सुखदुःखदशामेतां जरामरणपालिताम् || २६ ||
69450
69451 क्रियते वशग इत्यनुवर्तते | जन्तुतां मत्स्यकूर्मवराहादितिर्यग्जन्त्ववतारान् |
69452 अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि इति संकल्प्य जीवात्मना
69453 विष्णोरेव प्रवेशाज्जीवभावेन सर्वजन्तुशरीरित्वात्सर्वजन्त्वात्मकतां वा | अत
69454 एव विशिनष्टि - सुखदुःखेति जरामरणाभ्यां स्वभोज्यमन्नमिव
69455 यावदायुःपालिताम् || २६ ||
69456
69457 जन्तवोऽपि महाकाया अपि विद्यायुधान्विताः |
69458 लिक्षाभिरङ्गलग्नाभिरुपजीव्यन्त एव हि || २७ ||
69459
69460 लिक्षाग्रहणं मशकमत्कुणमक्षिकाक्रव्यादाद्युपलक्षणम् | उपजीव्यन्ते
69461 भक्ष्यन्ते || २७ ||
69462
69463 अजस्रमेवमालूनविशीर्णं भूतजङ्गलम् |
69464 परस्परमलं मोहादद्यते रक्ष्यतेऽपि च || २८ ||
69465
69466 आधिभौतिकैरालूनं आध्यात्मिकैराधिदैविकैश्च दुःखैर्विशीर्णं
69467 भूतजङ्गलं प्राणिवृन्दम् | अद्यते भक्ष्यते उत्तरकाले भक्षणायेदानीं
69468 रक्ष्यते | अपिशब्दादर्धं भक्षयित्वार्धं रक्ष्यते || २८ ||
69469
69470 अनारतं विनश्यन्ति विविधा भूतजातयः |
69471 अनारतं च जायन्ते लिक्षायूकापिपीलिकाः || २९ ||
69472

69473 अनारतं संततम् । यूकाः शिरोरुहजाः । लिक्षायूकापिपीलिका इति क्षुद्रजन्तवः
69474 इत्येकवद्भावाकरणं छान्दसम् । नच सर्वो द्वन्द्वो विभाषैकवद्भवति इति
69475 तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम् इत्यत्र
69476 बहुवचनग्रहणेन ज्ञापनात्सिद्धमिति युक्तम् । ज्ञापकस्य सजातीयापेक्षत्वेन
69477 तस्याप्राप्तविभाषात्वादन्यथा प्राणितूर्याद्यङ्गद्वन्द्वेऽपि विभाषापत्तेरिति ॥
69478 २९ ॥
69479
69480 जलकोशेषु जायन्ते मत्स्येभमकरादयः ।
69481 भूमावन्तः प्रजायन्ते कीटौघा वृश्चिकादयः ॥ ३० ॥
69482
69483 बाधकपरम्परां समाप्य प्रकृतमनुवर्तते - जलकोशेष्विति ।
69484 जलकोशेषु जलाशयेषु । इभा इभाकारा जलजन्तुविशेषाः ॥ ३० ॥
69485
69486 अन्तरिक्षेऽपि जायन्ते आकाशविहगादयः ।
69487 वनवीथिषु जायन्ते सिंहव्याघ्रमृगादयः ॥ ३१ ॥
69488
69489 आकाशविहगाः क्षुद्रपक्षिविशेषास्ते हि सदा भ्रमन्तोऽन्तरिक्ष एव प्रसूयन्ते
69490 प्रसूतं चाण्डमधःपातात्प्रागेव भित्त्वा निर्गताः शावकाः सद्यः
69491 संजातपक्षा अन्तरिक्षमेवोत्पत्य भ्रमन्तीति लोकप्रवादप्रसिद्धम् ।
69492 आदिपदात्पिशाचा भूतवेतालादयो ग्राह्याः ॥ ३१ ॥
69493
69494 प्राण्यङ्गेष्वपि जायन्ते विचित्राः ककुभं प्रति ।
69495 स्थावरेष्वपि जायन्ते घुणा जघनकादयः ॥ ३२ ॥
69496
69497 प्राण्यङ्गेषु कृमियूकादयः । ककुभं प्रति प्रतिदिशम् । घुणाः
69498 काष्ठकृमयः जघनका भ्रमरिकाकाराः काष्ठकीटाः ।
69499 आदिपदात्पत्रफलपुष्पाद्युद्भवाः कृमिमशकभेदा गृह्यन्ते ॥ ३२ ॥
69500
69501 शिलान्तरेषु जायन्ते कीटभेकघुणादयः ।
69502 विष्ठायामपि जायन्ते नानाकीटगणास्तथा ॥ ३३ ॥
69503
69504 एवमेतेष्वसंख्येषु जन्मस्वपचयेषु च ।
69505 अजस्रं करुणावन्तो नन्दन्तु प्ररुदन्तु वा ॥ ३४ ॥
69506
69507 उपसंहृत्य प्रस्तुते योजयति - एवमिति । नन्दन्तु प्ररुदन्तु वेति
69508 द्वेषाभावात्परपीडाभिनन्दनमिव
69509 स्नेहाभावाद्रोदनमप्यनुचितमित्युपेक्षैव युक्तेति भावः ॥ ३४ ॥
69510
69511 अनारतमृतावस्मिन्ननारतसमुद्भवे ।
69512 संसारसंभ्रमे युक्ता न तुष्टिर्न च दुःखिता ॥ ३५ ॥
69513
69514 उक्तमेव स्पष्टमाह - अनारतेति ॥ ३५ ॥
69515
69516 पङ्क्तयस्त्वेवमेवेमा वृक्षपर्णगणैः समाः ।
69517 उत्पत्योत्पत्य लीयन्ते भूतानां भूरिसंभवाः ॥ ३६ ॥
69518
69519 भूतानां पङ्क्तयः समूहाः । एवमेव वृथैवेत्यर्थः ॥ ३६ ॥
69520
69521 यः प्रवृत्तः कुबुद्धीनां दयावान्दुःखमार्जने ।
69522 स्वगतच्छत्रनिर्मृष्टसूर्यांशु खिद्यते नभः ॥ ३७ ॥
69523
69524 यः दयावान्सन्कुबुद्धीनां दुःखमार्जने प्रवृत्तः सः नभः

69525 कृत्स्नमाकाशं स्वगतेन च्छत्रेण निर्मृष्टसूर्यांशु निवारितातपं
69526 कर्तुं खिद्यते श्राम्यतीत्यर्थः। खिद्यते न सः इति पाठे तु किं न खिद्यते इति
69527 काक्वा योज्यम्॥ ३७॥
69528
69529 न तिर्यक्समधर्माण उपदेश्या नरा भुवि।
69530 कथार्थकथनेनार्थः कः स्थाणुनिकटे वने॥ ३८॥
69531
69532 किं किल स्फारमनसां पशूनां च विशेषणम्।
69533 कृष्यन्ते पशवो रज्ज्वा मनसा मूढचेतसः॥ ३९॥
69534
69535 स्फारमनसां विषयविस्तारितमनसाम्। विशेषणं विशेषः॥ ३९॥
69536
69537 स्वचित्तपङ्कमग्नानां स्वनाशारब्धकर्मणाम्।
69538 मूर्खाणामापदं दृष्ट्वा प्ररुदन्त्युपला अपि॥ ४०॥
69539
69540 उपलाः पाषाणा अपि प्ररुदन्ति किं पुनः सचेतना इत्यतिशयोक्तिः॥ ४०॥
69541
69542 अनिर्जितात्मचित्तानां समन्ताद्दुःखदा दशाः।
69543 तन्मार्जनं कृतप्रज्ञो नाऽतः संप्रतिपद्यते॥ ४१॥
69544
69545 समन्तात्सर्वदेशेषु सर्वदा च दुःखदा दशाः पूर्णाः सन्तीति शेषः। अतः
69546 कृत्स्नभूमिपांसुसंमार्जनवदशक्यत्वान्न संप्रतिपद्यत इत्यर्थः॥ ४१॥
69547
69548 विनिर्जितात्मचित्तानां दुःखानि रघुनन्दन।
69549 सुविचार्याणि तेनात्र ज्ञातज्ञेयः प्रवर्तताम्॥ ४२॥
69550
69551 सुविचार्याणि रलयोरभेदासुविचाल्यानि। सुखनिरस्यानीत्यर्थः तेन हेतुना। अत्र
69552 तन्मार्जने। ज्ञातज्ञेयस्तत्त्ववित्॥ ४२॥
69553
69554 मनो नास्ति महाबाहो मा मुधोप प्रकल्पय।
69555 अनेन कल्पितेन त्वं वेतालेनेव हन्यसे॥ ४३॥
69556
69557 प्रासङ्गिकीमधिकारिचिन्तां समाप्य प्रस्तुतमेवानुवर्तमान आह - मन इति
69558 ॥ ४३॥
69559
69560 यावद्विस्मृतवानात्मतत्त्वं मूढो भवद्भवान्।
69561 तावत्तव मनोव्यालो बभूवाभ्युदितस्ततः॥ ४४॥
69562
69563 यदि नास्ति तर्हि प्रतियोग्यप्रसिद्धौ निषेधानवकाशमाशङ्क्याह -
69564 यावदिति। तथाच प्राक्तनीमज्ञदशामादाय प्रसिद्धिरुपपन्नेत्यर्थः॥ ४४॥
69565
69566 इदानीं भवता ज्ञातं यथाभूतमरिंदम्।
69567 संकल्पाद्वर्धते चित्तं तदेवाशु परित्यज॥ ४५॥
69568
69569 यथाभूतं परमार्थात्मरूपम्॥ ४५॥
69570
69571 दृश्यमाश्रयसीदं चेत्तत्सचित्तोऽसि बान्धवान्।
69572 दृश्यं संत्यजसीदं चेत्तत्सचित्तोसि मोक्षवान्॥ ४६॥
69573
69574 बन्धमोक्षरहस्यमाह - दृश्यमिति॥ ४६॥
69575
69576 अयं गुणसमाहारो बन्धायैव समाश्रितः।

69577 संत्यक्तो भव मोक्षाय यथेच्छसि तथा कुरु ॥ ४७ ॥
69578
69579 किं तर्हि दृश्यतत्त्वं तदाह - अयमिति । त्रिगुणात्मकमायामय इत्यर्थः ॥
69580 ४७ ॥
69581
69582 नाहं नेदमिति ध्यायंस्तिष्ठ त्वमचलाचलः ।
69583 अनन्ताकाशसंकाशहृदयो हृदयेश्वरः ॥ ४८ ॥
69584
69585 अहमित्यान्तरं दृश्यं इदमिति बाह्यं च नस्त्येवेति ध्यायन् । अचलः पर्वत
69586 इवाचलः स्थिरः । हृदयेश्वर आत्मा ॥ ४८ ॥
69587
69588 आत्मनो जगतश्चास्य त्वमङ्ग कलनामलम् ।
69589 राम द्वित्वमयीं त्यक्त्वाशेषस्थः सुस्थिरो भव ॥ ४९ ॥
69590
69591 अहमिदमिति द्वित्वमयीं कलनां अलं सर्वात्मना त्यक्त्वेत्यर्थः ॥ ४९ ॥
69592
69593 आत्मनो जगतश्चान्तर्द्रष्टृदृश्यदशान्तरे ।
69594 दर्शनाख्ये स्वमात्मानं सर्वदा भावयन्भव ॥ ५० ॥
69595
69596 ननु तदुभयकलनात्यागे किमवशिष्यते यत्र स्थितिरुपदिश्यते तदाह -
69597 आत्मन इति । द्रष्टृदृश्यदशयोरन्तरे अन्तराले इत्येतावत्युक्ते
69598 वृत्तिज्ञानस्याप्यान्तरालिकत्वाद्ग्रहणं स्यात्तन्माभूदित्यात्मनो
69599 जगतश्चान्तरिति । तथाच त्रिपुट्यनुस्यूतसन्मात्ररूपे दर्शनाख्ये
69600 त्रिपुटीसाक्षिस्वभावे स्थितं स्वमात्मानं भावयन् भव आस्व ॥ ५० ॥
69601
69602 स्वाद्यस्वादकसंत्यक्तं स्वाद्यस्वादकमध्यगम् ।
69603 स्वादनं केवलं ध्यायन्नित्यमात्ममयो भव ॥ ५१ ॥
69604
69605 चाक्षुषत्रिपुटीवद्रासनादित्रिपुटीष्वपि स एव तत्साक्षी परिचेय इत्याशयेनाह ##-
69606
69607 रामानुभवनीयस्य तथानुभवितुः स्वयम् ।
69608 अवलम्ब्य निरालम्बं मध्यं मध्ये स्थिरो भव ॥ ५२ ॥
69609
69610 अनुमित्याद्यनुभवान्तरेष्वप्येवं बोध्यमित्याशयेनाह - रामेति ।
69611 निरालम्बं आलम्बो विषयभूतस्त्रिपुट्यंशस्तद्व्यतिरिक्तं मध्यं तदान्तरं
69612 हृदयमध्ये अवलम्ब्य स्थिरो भवेत्यर्थः ॥ ५२ ॥
69613
69614 भवभावनया हीनं भावाभावदशोज्झितम् ।
69615 भावयन्नेवमात्मानमात्मसंस्थः स्वयं भव ॥ ५३ ॥
69616
69617 भवस्य भावना संस्कारवशाद्दर्शनं स्वप्नदशेति यावत् । भावदशा
69618 जाग्रत् । अभावदशा सुप्तिः । भावाभावदृशोज्झितम् इति पाठे
69619 तदुभयदर्शनोज्झितमित्यर्थः ॥ ५३ ॥
69620
69621 आत्मसत्तां त्यजन्नेतां चेत्यं भावयसि स्वयम् ।
69622 यदा राम तदा यासि चित्ततामतिदुःखदाम् ॥ ५४ ॥
69623
69624 एतां शुद्धचिन्मात्रस्वभावामात्मसत्तां प्रमादात्त्यजन् यदा चेत्यं
69625 तदतिरिक्तं भावयसि तदा चित्ततां यासीत्यन्वयः ॥ ५४ ॥
69626
69627 चित्ततां शृङ्खलामेतां स्वरूपज्ञानयुक्तितः ।
69628 बिलाच्चित्तान्महाबाहो स्वात्मसिंहं विमोचय ॥ ५५ ॥

69629
69630 स्वरूपज्ञानयुक्तितो भङ्क्त्वेति शेषः | चित्ताच्चितलक्षणाद्बिलात्पञ्जरात् |
69631 बलादिति पाठे तु मननादिकृतज्ञानदार्ढ्यबलात् || ५५ ||
69632
69633 परमात्मदशां त्यक्त्वा चेत्यं परिपतन्नलम् |
69634 यदा गच्छसि संकल्पं चेत्यं संपश्यसे तदा || ५६ ||
69635
69636 संपश्यसे पश्यसि | पदव्यत्ययश्छान्दसः || ५६ ||
69637
69638 आत्मनो व्यतिरिक्तं सच्चित्तमित्यङ्ग संविदा |
69639 मनः संपद्यए दुःखि क्षीयते त्यक्तया तया || ५७ ||
69640
69641 कथं चेत्यपरिपतनं तेन च कथं संकल्पगमनं कथं वा
69642 तत्क्षयस्तदाह - आत्मन इति | हे अङ्ग यदा चित्तं
69643 पूर्वानुभवजनितदृश्यसंस्कारोद्बोधे सति चिदेव किंचित्स्थौल्यमिवापन्नं
69644 चित्तमिति संविदा आत्मनो व्यतिरिक्तं सत् सिद्धं भवति तदैव
69645 पुनःपुनर्मननाद्दृढीभूतं संकल्पसमर्थं सन्मनः संपद्यते
69646 तदेव दुःखि | तया स्वव्यतिरिक्तसत्तासंविदा त्यक्तया तु क्षीयते || ५७ ||
69647
69648 आत्मैवेदं जगत्सर्वमित्यन्तः संविदोदये |
69649 क्व चेता क्व च वा चित्तं किं चेत्यं चेतनं च किम् || ५८ ||
69650
69651 एतदेव स्पष्टमाह - आत्मैवेदमिति | संविदेव संविदा | भागुरिमतेन
69652 हलन्ताट्टाप् | तस्या उदये सति चेता चेतिता उपहितः चित्तमुपाधिः चेत्यं
69653 तद्वृत्तिव्याप्यम् | चेतनं वृत्तिरिति चतुष्कमपि किं | न किंचिदवशिष्यत
69654 इत्यर्थः || ५८ ||
69655
69656 अहमात्मेति जीवोऽस्मीत्येतावच्चित्तकं विदुः |
69657 अनेनेत्थमनाद्यन्तं दुःखं राघव तन्यते || ५९ ||
69658
69659 इति एवमनुभूयमानदेहेन्द्रियादिशाली जीवोऽस्मि || ५९ ||
69660
69661 अहमात्मा न जीवाख्याः सत्ताः सन्तीतराः क्वचित् |
69662 इत्येव चित्तोपशमः परमं सुखमुच्यते || ६० ||
69663
69664 आत्मा ब्रह्मैव न जीवाख्या ब्रह्मेतराः सत्तः परमार्थसत्याः सन्ति || ६० ||
69665
69666 आत्मैवेदं जगदिति जाते राघव निश्चये |
69667 असत्ता चेतसो जाता भवत्येव न संशयः || ६१ ||
69668
69669 सर्वस्य जगतो ब्रह्मभावे तदन्तर्गतचित्तस्याप्यसत्ता अर्थात्संपन्ना
69670 भवत्येवेत्याह - आत्मैवेदमिति || ६१ ||
69671
69672 एवं सत्यावबोधेन स्वात्मैवेदमिति स्थितः |
69673 मनः सुगलितं विद्धि सूर्यभासा तमो यथा || ६२ ||
69674
69675 मनोनाशोपायमुक्तमुपसंहरति - एवमिति || ६२ ||
69676
69677 मनःसर्प शरीरस्थो यावत्तावन्महद्भयम् |
69678 तस्मिन्नुत्सारिते योगाद्भयस्यावसरः कुतः || ६३ ||
69679
69680 अथ तत्फलान्याह - मनःसर्प इत्यादिना | योगात्समाधेः प्रतीचो

69681 ब्रह्मैक्यलक्षणमिलनाद्वा। ह्येवैष
69682 एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते अथ
69683 सोऽभयं गतो भवति। आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन
69684 इत्यादिश्रुतेरिति भावः॥ ६३॥
69685
69686 भ्रान्तिमात्रोत्थितश्चित्ते वेतालोऽतिबलोऽनघ।
69687 सम्यग्ज्ञानेन मन्त्रेण प्रसभं विनिपात्यताम्॥ ६४॥
69688
69689 देहगेहाद्गते चित्तयक्षे बलवतां वरे।
69690 निराधिर्विगतोद्वेगस्तिष्ठ नास्ति भयं तव॥ ६५॥
69691
69692 आधिग्रहणं सर्वदुःखोपलक्षणम्। उद्वेगो दुःखासहिष्णुतया व्याकुलता॥
69693 ६५॥
69694
69695 नीराग एव निरुपार्जन एव चास्मी-
69696 त्येतावतैव गलिता तव चित्तसत्ता।
69697 निर्दुःखमुत्तमपदं परमं गतोऽसि
69698 तिष्ठोपशान्तपरमैषण एवमन्तः॥ ६६॥
69699
69700 आत्मलाभेनावाप्तसर्वकामत्वान्निरागोऽत एव निरुपार्जनो
69701 बाह्यसुखसाधनोपार्जनशून्यः। एवंच मुमुक्षापि न परिशिष्टेति न
69702 तदर्थमपि प्रवृत्तिप्रसक्तिरित्याशयेनाह - उपशान्तपरमैषण इति॥ ६६॥
69703
69704 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपायेषु
69705 उपशमप्रकरणे स्वचित्तनिरूपणं नाम चतुर्दशः सर्गः॥ १४॥
69706
69707 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
69708 स्वचित्तनिरूपणं नाम चतुर्दशः सर्गः॥ १४॥
69709
69710
69711 पञ्चदशः सर्गः १५
69712
69713 श्रीवसिष्ठ उवाच।
69714
69715 एतामनुसरन्नाम चित्तसत्तामपावनीम्।
69716 संसारबीजकणिकां जीवबन्धनवागुराम्॥ १॥
69717
69718 आत्मा मनस्त्वमापन्नो बध्यते संसृतौ यया।
69719 सा तृष्णाऽनर्थबीजानां सुविचित्रोपवर्ण्यते॥ १॥
69720
69721 चित्तनाशने परमपुरुषार्थप्राप्तिरुक्ता इदानीं चित्तानुसरणे
69722 तृष्णाभिवृद्ध्या अनर्थपरम्पराप्राप्तिरिति दर्शयितुं भूमिकां रचयति
69723 - एतमित्यादिना। आत्मा एतां चित्तसत्तामनुसरन्
69724 संस्त्यक्तस्वीयब्रह्मात्मरूपाभो भूत्वा
69725 मलिनामविद्यापिहितामिन्द्रियवृत्त्यधीनाभिव्यक्तिकां दृशं
69726 ज्ञानमापतच्चित्तमेवानुरुद्ध्य चित्तकल्पितदेहादिसंघातमात्रोऽहमिति
69727 संधत्ते चित्तोपनीतनानाविषयकलनाप्रयुक्तं रागद्वेषवासनामलं च धत्ते
69728 इति द्वयोरन्वय॥ १॥
69729
69730 आत्मा त्यक्तात्मरूपाभो मलिनामाप् तद्दृशम्।
69731 चित्तं समनुसंधत्ते धत्ते च कलनामलम्॥ २॥
69732

69733 वर्धमानमहामोहदायिनी भयकारिणी ।
69734 तृष्णा विषलतारूपा मूर्च्छामिव प्रयच्छति ॥ ३ ॥
69735
69736 धत्तां नाम किं ततस्तत्राह - वर्धमानेति ।
69737 मरणमूर्च्छाभ्रान्तिसहस्रहेतुत्वाद्विषलतारूपा तृष्णा अस्मै
69738 कलनामलधारिणे आत्मने मूर्च्छामिव प्रयच्छति न सुखलेशमपीत्यर्थः ॥
69739 ३ ॥
69740
69741 यदा यदोदेति तदा महामोहप्रदायिनी ।
69742 तृष्णा कृष्णानिशेवेयमनन्तात्मविकारिणी ॥ ४ ॥
69743
69744 वर्धमानमहामोहदायिनीत्येतद्विवृणोति - यदेति । कृष्णानिशा
69745 वार्षिकीतमिस्रा । सापि हि अनन्तात्मन्याकाशे
69746 मेघविस्फूर्जितवृष्ट्याद्यनेकविकारिणी ॥ ४ ॥
69747
69748 कल्पानलशिखादाहं सोढुं शक्ता हरादयः ।
69749 तृष्णानलशिखादाहं सोढुं शक्ता न केचन ॥ ५ ॥
69750
69751 भयकारिणीत्येतदपि विवृणोति - कल्पानलेति । न केचन धीरा इति शेषः ॥ ५ ॥
69752
69753 तीक्ष्णा कृष्णा सुदीर्घा च वहत्यङ्गं सदा निजम् ।
69754 शीतलैवासुखोदर्का घोरा तृष्णाकृपाणिका ॥ ६ ॥
69755
69756 कृपाणिका असिः । तीक्ष्णेत्याद्यसित्वोपपादनम् । निजमङ्गं सदा वहति
69757 कृंततीति यावत् । असुखः उदर्कः फलकालो यस्याः ॥ ६ ॥
69758
69759 यान्येतानि दुरन्तानि दुर्जराण्युन्नतानि च ।
69760 तृष्णावल्ल्याः फलानीह तानि दुःखानि राघव ॥ ७ ॥
69761
69762 विषलतेत्येतद्विशदयति - यानीति । दुर्जराणि रजयितुमशक्यानि । दुर्निवाराणीति
69763 यावत् ॥ ७ ॥
69764
69765 अदृश्यैवात्ति मांसास्थिरुधिरादि शरीरकात् ।
69766 मनोबिलविलीनैषा तृष्णावनशुनी नृणाम् ॥ ८ ॥
69767
69768 वनशुनी वृकी ॥ ८ ॥
69769
69770 क्षणमुल्लासमायाति क्षणमायाति शून्यताम् ।
69771 जडा विदलयत्याशु तृष्णाप्रावृट्तरङ्गिणी ॥ ९ ॥
69772
69773 क्षणमुल्लासं वृद्धिम् । विशेषणान्युभयत्र योज्यानि । जडा शीतला मलिना च
69774 । विदलयति शिलाकण्टकारण्यादिप्रवेशं नीत्वा खण्डयति । प्रावृट्तरङ्गिणी
69775 वर्षाभिवृद्धनदी ॥ ९ ॥
69776
69777 दृष्टदैन्यो हतस्वान्तो हतौजा याति नीचताम् ।
69778 मुह्यते रौति पतति तृष्णयाभिहतो जनः ॥ १० ॥
69779
69780 मूर्च्छामिव प्रयच्छतीत्येतद्विवृणोति - दृष्टदैन्य इति ॥ १० ॥
69781
69782 न स्थिता कोटरे यस्य तृष्णाकृष्णभुजङ्गमी ।
69783 तस्य प्राणानिलाः स्वस्थाः पुंसो हृदयरन्ध्रगाः ॥ ११ ॥
69784

69785 तृष्णाक्षये सर्वदुःखहानिः सर्वपुण्योदयश्च सिद्ध्यतीत्याह - न
69786 स्थितेत्यादिना ॥ ११ ॥
69787
69788 नूनमस्तंगतो यत्र तृष्णाकृष्णनिशाक्रमः ।
69789 पुण्यानि तत्र वर्धन्ते शुक्लपक्ष इवेन्दवः ॥ १२ ॥
69790
69791 यो न तृष्णाघुणावल्ल्या क्षतः पुरुषपादपः ।
69792 पुण्यप्रसूनैः स सदा दशां याति विकासिनीम् ॥ १३ ॥
69793
69794 अनन्ताकुलकल्लोला विवर्तावर्तसंकुला ।
69795 प्रवहत्याशयारण्ये तृष्णान्धानां नदी नृणाम् ॥ १४ ॥
69796
69797 अन्धानां विवेकदृष्टिहीनानां नृणामाशयश्चित्तं तल्लक्षणेऽरण्ये
69798 अनन्तव्याकुलतालक्षणकल्लोलवती भ्रान्तिलक्षणैरावर्तैश्च संकुला
69799 तृष्णानदी नूनं वहति प्रवहति ॥ १४ ॥
69800
69801 तृष्णयेमे जनाः सर्वे सूत्रयन्त्रपतत्रिवत् ।
69802 भ्राम्यन्ते प्रविशीर्यन्ते संह्रियन्ते च भूरिशः ॥ १५ ॥
69803
69804 सूत्रेण यन्त्र्यते बध्यते इति सूत्रयन्त्रः पतत्री पक्षी तद्वत् । प्रथमं
69805 वित्तस्यार्जनाय भ्राम्यन्ते ततो रक्षणव्ययक्षयचिन्ताशोकैः पक्षलुञ्चनैरिव
69806 प्रविशीर्यन्ते अन्ते च संह्रियन्ते मार्यन्ते ॥ १५ ॥
69807
69808 मूलान्यपि सुसूक्ष्माणि कठिनाशयकर्कशा ।
69809 तृष्णा परशुधारेव वल्गन्ती विनिकृन्तति ॥ १६ ॥
69810
69811 धर्मज्ञानमूलानि दयाविवेकादीनि सुसूक्ष्माणि ईषदङ्कुरितान्यपि कठिनेन
69812 निर्दयेनाशयेन कर्कशा । वल्गन्ती तत्कालं निपतन्ती ॥ १६ ॥
69813
69814 निपतत्यवटे मूढस्तृष्णामनुसरज्जनः ।
69815 नीलामनुपतञ्छ्वभ्रतृणशाखां यथैणकः ॥ १७ ॥
69816
69817 अवटे नरकान्धकूपे । नीलां हरिताम् । श्वभ्रस्य कूपस्य मुखे रूढस्य
69818 तृणस्य शाखामनुपतन् एणको हरिण इव ॥ १७ ॥
69819
69820 नोन्मत्तपि जरा चक्षुस्तथा जरयति क्षणात् ।
69821 यथा जरयति क्षामा तृष्णा हृदयरूपिका ॥ १८ ॥
69822
69823 उन्मत्ता प्ररूढतमापि जरा चक्षुर्जरयत्यन्धयति । हृदयस्था रूपिका
69824 पिशाची ॥ १८ ॥
69825
69826 तृष्णयाशयकौशिक्या हृद्यमङ्गलभूतया ।
69827 रूढया भगवानेष विष्णुर्वामनतां गतः ॥ १९ ॥
69828
69829 अमङ्गलभूतया हृदि रूढया कृतनीडया ॥ १९ ॥
69830
69831 कयाचिदेव दैविक्या हृदि ग्रथितयानया ।
69832 तृष्णया भ्राम्यते व्योम्नि रज्ज्वेवार्कोऽन्वहं किल ॥ २० ॥
69833
69834 दैविक्या देवेनेश्वरेण प्रयुक्तया देवभोग्यसुखविषयया वा तृष्णया
69835 रज्ज्वेव बद्ध इति शेषः ॥ २० ॥
69836

सर्वदुःखमयाकारां जगतीजीवनच्छिदम् ।
तृष्णां परिहरेत्क्रूरामुरगीमिव दूरगः ॥ २१ ॥

जगतीपदेन जगतीस्थाः सर्वप्राणिनो लक्ष्यन्ते ॥ २१ ॥

तृष्णया वायवो वान्ति शैलास्तिष्ठन्ति तृष्णया ।
तृष्णयैव धरा धात्री त्रैलोक्यं तृष्णया धृतम् ॥ २२ ॥

सर्वसंसारस्थितिस्तृष्णावशादेवेत्याशयेनाह - तृष्णयेति ॥ २२ ॥

सर्वैव लोकयात्रेयं प्रोता तृष्णावरत्रया ।
रज्जुबन्धाद्विमुच्यन्ते तृष्णाबन्धान्न केचन ॥ २३ ॥

वरत्रा चर्ममयी रज्जुः ॥ २३ ॥

तस्माद्राघव तृष्णां त्वं त्यज संकल्पवर्जनात् ।
मनस्त्वकल्पनं नास्ति निर्णीतमिति युक्तितः ॥ २४ ॥

संकल्पवर्जनमात्रेण कथं तृष्णात्यागसिद्धिस्तत्राह - मन इति ।
अकल्पनं संकल्परहितं मनो नास्ति । मनसोऽभावे कुतस्तृष्णाप्रसक्तिरिति
भावः ॥ २४ ॥

अयं त्वमहमित्येव प्रथमं तावदाशये ।
मां दुराशां महाबाहो संकल्पय तमोमयीम् ॥ २५ ॥

त्वं अयं देहोऽहमिति दुराशां सर्वदुराशानिमित्तमभिमानं मा संकल्पय
॥ २५ ॥

एतां दुःखप्रसविनीमनात्मन्यात्मभावनाम् ।
न भावयसि चेद्राम तदा तज्ज्ञेषु गण्यसे ॥ २६ ॥

एतामहंभावमयीमपुण्यां
छित्त्वानहंभावशलाकयैव ।
स्वभावनां भव्य भवान्तभूमौ
भवाभिभूताखिलभूतभीतिः ॥ २७ ॥

अनहंभावलक्षणया शलाकया कर्तर्या अहंभावमयीमेतां तृष्णां
छित्त्वा हे भव्य भवस्यान्तो बाधस्तद्भूमौ ब्रह्मणि सप्तमभूमिकाभेदे
वा भव आस्स्वेत्यर्थः ॥ २७ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये
मोक्षोपायेषूपशमप्रकरणे तृष्णावर्णनं नाम पञ्चदशः
सर्गः ॥ १५ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
तृष्णावर्णनं नाम पञ्चदशः सर्गः ॥ १५ ॥

## षोडशः सर्गः १६

श्रीराम उवाच ।

69889 स्वभावगम्भीरमेतद्भगवन्वचनं तव।
69890 यदहंकारतृष्णां त्वं मा गृहाणेति वक्षि माम्॥ १॥
69891
69892 वर्ण्यते वासनात्यागो ध्येयज्ञेयविभागतः।
69893 तेनात्र जीवन्मुक्तानां विदेहानां च लक्षणम्॥ १॥
69894
69895 जीवता देहेऽहंभावस्य त्यक्तुमशक्यत्वाच्छिष्यमरणे
69896 गुरोस्तात्पर्यायोगादेतामहंभावमयीं तृष्णां
69897 चित्त्वेत्यादयुक्तेस्तात्पर्यमनवधारयन् रामः पृच्छति - स्वभावेत्यादिना
69898 ॥ १॥
69899
69900 यद्यहंकारसंत्यागं करोमि तदिदं प्रभो।
69901 त्यजामि देहनामानं संनिवेशमशेषतः॥ २॥
69902
69903 अशेषत इति।
69904 प्राणाहंकारयोरेकतापत्तेस्त्वयैवोक्तत्वात्प्राणान्परिशेष्याहंकारत्यागासं
69905 भवात्प्राणानामप्यनवशेषणेनेत्यर्थः॥ २॥
69906
69907 जानुस्तम्भेन महता धार्यते सुतरुर्यथा।
69908 अहंकारेण देहोऽयं तथैव किल धार्यते॥ ३॥
69909
69910 जानुस्तम्भेन जानुवत्प्रसृतमूलबन्धविष्टम्भेन॥ ३॥
69911
69912 अहंकारक्षये देहः किलावश्यं विनश्यति।
69913 मूले क्रकचसंलूने सुमहानिव पादपः॥ ४॥
69914
69915 तदेव व्यतिरेकेण द्रढयति - अहंकारेति॥ ४॥
69916
69917 तत्कथं संत्यजाम्येन जीवामि च कथं मुने।
69918 एनमर्थं विनिश्चित्य वद मे वदतां वर॥ ५॥
69919
69920 श्रीवसिष्ठ उवाच।
69921
69922 सर्वत्र वासनात्यागो राम राजीवलोचन।
69923 द्विविधः कथ्यते तज्ज्ञैर्ज्ञेयो ध्येयश्च मानद॥ ६॥
69924
69925 ज्ञेयो विदुषां समाधिकाले विदेहकैवल्ये च ज्ञानबाधितः।
69926 अधिष्ठानमात्रपरिशेषात्मा ध्येयः। व्युत्थानकाले
69927 वाक्यजन्याखण्डाकारवृत्त्या सवासनस्याज्ञानस्य बाधेऽपि
69928 जीवन्मुक्तिशास्त्रानुरोधात्प्रारब्धफलभोगशेषाच्च तन्निर्वाहाय
69929 बाधितानुवृत्तेरविद्यालेशपरिशेषस्य विक्षेपांशाबाधस्य
69930 वाभ्युपगमादनध्यस्ताहंभावेन देहेन
69931 भोगहेतुव्यवहारासिद्धेस्तात्कालिकाहंकाराभासानुवृत्तेर्विद्वदनुभव##-
69932 ध्यानप्रायत्वाद्ध्येय इव ध्येय इति द्विविध इत्यर्थः॥ ६॥
69933
69934 अहमेषां पदार्थानामेते च मम जीवितम्।
69935 नाहमेभिर्विना कश्चिन्न मयैते विना किल॥ ७॥
69936
69937 तत्र द्वितीयमुपपादयति - अहमिति। विवेकिदृशात्र द्वावहंप्रत्ययगोचरौ
69938 प्रतीयेते। एको देहेन्द्रियबुद्धिमनःसापेक्षः संघातात्मा
69939 पुत्रमित्रकलत्रधनादिममतानिरूपकः।
69940 अपरोऽखण्डैकस्वभावोऽवस्थात्रयमरणमूर्च्छाजन्मान्तरसाधारणश्चिन्म्

69941 आत्रस्वभावो विवेकपरिशिष्टः | तत्राद्यस्य स्वरूपं प्रथमं विचार्य
69942 निर्धार्यमित्याह - अहमिति | एषां देहेन्द्रियादीनां बाह्यान्नपानादीनां
69943 चोपभुक्तानां पदार्थानां संघातात्मेत्यर्थः | एते देहादयोऽन्नादयश्च
69944 मम जीवितं स्वरूपसिद्धिनिमित्तम् | अत एवैभिर्विनाऽहं न कश्चिद्व्यवहारपदे
69945 प्रसिद्धोऽस्मीत्यन्तःप्रथमस्याहंपदार्थस्य निश्चयं कृत्वा मनसा सह
69946 पृथक्करणे संघातात्मानमत्यन्तासद्रूपमेव विचार्य द्वितीये
69947 परिशिष्टचिद्रूपेणाहंपदार्थस्य न मे एते पदार्था इति निष्कृष्टबोधेन
69948 तथैव भाविते सति यो भावनात्मा वासनात्यागः स ध्येय इति मया कीर्तित इति
69949 त्रयाणामर्थः || ७ ||
69950
69951 इत्यन्तर्निश्चयं कृत्वा विचार्य मनसा सह |
69952 नाहं पदार्थस्य न मे पदार्थ इति भाविते || ८ ||
69953
69954 अन्तःशीतलया बुद्ध्या कुर्वत्या लीलया क्रियाम् |
69955 यो नूनं वासनात्यागो ध्येयो राम स कीर्तितः || ९ ||
69956
69957 सर्वं समतया बुद्ध्वा यं कृत्वा वासनाक्षयम् |
69958 जहाति निर्ममो देहं ज्ञेयोऽसौ वासनाक्षयः || १० ||
69959
69960 प्रथमं वासनाक्षयमुपपादयति - सर्वमिति | सर्वं जगत्समतया
69961 समं ब्रह्म तद्भावेन बुद्ध्वा साक्षात्कृत्य भूमिकाभ्यासक्रमेण यं
69962 वासनाक्षयं कृत्वा निर्ममो निरहंकारश्च निर्विकल्पकसमाधिस्थः
69963 प्रारभ्दक्षयेण वा यत्सर्वथा देहं जहाति असौ ज्ञेयो वासनाक्षय इत्यर्थः ||
69964 १० ||
69965
69966 अहंकारमयीं त्यक्त्वा वासनां लीलयैव यः |
69967 तिष्ठति ध्येयसंत्यागी जीवन्मुक्तः स उच्यते || ११ ||
69968
69969 तत्र द्वितीयमुदाहरति - अहंकारेति | लीलया लोकसंप्रहोचितव्यवहारेण
69970 यस्तिष्ठति स ध्येयसंत्यागी ध्येयवासनात्यागवान् || ११ ||
69971
69972 निर्मूलकलनां त्यक्त्वा वासनां यः शमं गतः |
69973 ज्ञेयत्यागमयं विद्धि मुक्तं तं रघुनन्दन || १२ ||
69974
69975 आद्यमुदाहरति - निर्मूलेति | मूलाज्ञानेन सह कलनां त्यक्त्वेत्यर्थः |
69976 ज्ञेयत्यागमयं ज्ञानबाधितसवासनाज्ञानपरिशिष्टचिन्मात्रप्रधानम् ||
69977 १२ ||
69978
69979 ध्येयं तं वासनात्यागं कृत्वा तिष्ठन्ति लीलया |
69980 जीवन्मुक्ता महात्मानः सुजना जनकादयः || १३ ||
69981
69982 उक्तमेव प्रपञ्चयति - ध्येयमित्यादिना | लीलया व्यवहारेण || १३ ||
69983
69984 ज्ञेयं तु वासनात्यागं कृत्वोपशममागताः |
69985 विदेहमुक्तास्तिष्ठन्ति ब्रह्मण्येव परावरे || १४ ||
69986
69987 द्वावेव राघव त्यागौ समौ मुक्तपदे स्थितौ |
69988 द्वावेतौ ब्रह्मतां यातौ द्वावेव विगतज्वरौ || १५ ||
69989
69990 अप्यर्थे एवकारः || १५ ||
69991
69992 युक्तायुक्तमती स्वासे केवलं विमलेऽनघ |

69993 एकः स्थितः स्फुरद्देहः शान्तदेहः स्थितोऽपरः ॥ १६ ॥
69994
69995 युक्तमतिः समाध्यारूढः । अयुक्तमतिर्व्युत्थानव्यवहारवान् । एतौ
69996 युक्तायुक्तमती द्वावपि सुखेन आस्यते विश्रम्यते अस्मिन्निति स्वासे विमले
69997 अविद्यामलनिर्मुक्ते ब्रह्मण्येव केवलं स्थितौ । कस्तर्हि विशेषस्तमाह -
69998 एक इति । एको व्युत्थितः । अपरः समाहितः ॥ १६ ॥
69999
70000 एकः सदेहो निर्मुक्तस्तिष्ठत्यपगतज्वरः ।
70001 त्यक्तदेहो विमुक्तोऽन्यो वर्ततेऽज्ञेयवासनः ॥ १७ ॥
70002
70003 अज्ञेयवासन इति च्छेदः ॥ १७ ॥
70004
70005 आपतत्सु यथाकालं सुखदुःखेष्वनारतम् ।
70006 न हृष्यति ग्लायति यः स मुक्त इति होच्यते ॥ १८ ॥
70007
70008 व्यवहरतो मुक्तस्य लक्षणान्याह - आपतत्स्वित्यादिना ॥ १८ ॥
70009
70010 ईप्सितानीप्सिते न स्तो यस्येष्टानिष्टवस्तुषु ।
70011 सुषुप्तवच्चरति यः स मुक्त इति कथ्यते ॥ १९ ॥
70012
70013 ईप्सितानीप्सिते इच्छाद्वेषौ । अज्ञदृशा इष्टानिष्टत्वेन संमतेषु वस्तुषु
70014 सुषुप्तवदनासक्त इति यावत् ॥ १९ ॥
70015
70016 हेयोपादेयकलने ममेत्यहमिहेति च ।
70017 यस्यान्तः संपरिक्षीणे स जीवन्मुक्त उच्यते ॥ २० ॥
70018
70019 इह देहे तत्संबन्धिनि च अहमिति ममेति च कलने इति योजना ॥ २० ॥
70020
70021 हर्षामर्षभयक्रोधकामकार्पण्यदृष्टिभिः ।
70022 न परामृश्यते योऽन्तः स जीवन्मुक्त उच्यते ॥ २१ ॥
70023
70024 सुषुप्तवत्प्रशमितभाववृत्तिना
70025 स्थितं सदा जाग्रति येन चेतसा ।
70026 कलान्वितो विधुरिव यः सदा मुदा
70027 निषेव्यते मुक्त इतीह स स्मृतः ॥ २२ ॥
70028
70029 येन पुंसा सुषुप्तवत्प्रशमिता भाववृत्तयः पदार्थेष्वास्था यस्य
70030 तथाविधेन चेतसोपलक्षितेन जाग्रति जागरेपि सदा स्थितम् । भावे क्तः । यश्च
70031 सदा मुदा स्वाभाविकहर्षेण कलान्वितः पूर्णकलो विधुश्चन्द्र इव प्रसादेन
70032 निषेव्यते स इह जगति मुक्तो जीवन्मुक्त इति स्मृत इत्यर्थः ॥ २२ ॥
70033
70034 श्रीवाल्मीकिरुवाच ।
70035
70036 इत्युक्तवत्यथ मुनौ दिवसो जगाम
70037 सायंतनाय विधयेऽस्तमिनो जगाम ।
70038 स्नातुं सभा कृतनमस्करणा जगाम
70039 श्यामाक्षये रविकरैश्च सहाजगाम ॥ २३ ॥
70040
70041 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे०
70042 मोक्षोपायेषूपशमप्रकरणे तृष्णाचिकित्सा नाम षोडशः सर्गः ॥ १६ ॥
70043
70044 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे

70045 तृष्णाचिकित्सा नाम षोडशः सर्गः ॥ १६ ॥
70046
70047 एकादशो दिवसः ॥
70048
70049
70050 सप्तदशः सर्गः १७
70051
70052 श्रीवसिष्ठ उवाच ।
70053
70054 विदेहमुक्ता ये राम ते गिरामिह गोचरे ।
70055 नैव तिष्ठन्ति तस्मात्त्वं जीवन्मुक्तिमिमां शृणु ॥ १ ॥
70056
70057 यादृशैर्निश्चयैर्युक्तो जीवन्मुक्तो न बध्यते ।
70058 अज्ञश्च बध्यते भूयस्तद्विभागोऽत्र वर्ण्यते ॥ १ ॥
70059
70060 रामस्येङ्गितैर्विदेहमुक्तलक्षणजिज्ञासां प्रतिलक्ष्य तस्यैकरूप्येण
70061 लक्षणाद्यभावाद्वाचां कुण्ठीभावोक्त्यैव
70062 निरतिशयस्वप्रकाशभूमानन्दमात्रपरिशेषस्तत्स्वरूपलक्षणमिति सूचयन्
70063 जीवन्मुक्तिलक्षणेष्वेवावश्योपादेयान्विशेषान्वक्तुं प्रतिजानीते -
70064 वेदेहमुक्ता इति ॥ १ ॥
70065
70066 प्राकृतान्येव कर्माणि [कार्याणीति पाठः] यया
70067 वर्जितवाञ्छया ।
70068 क्रियन्ते तृष्णयेमानि तां जीवन्मुक्ततां विदुः ॥ २ ॥
70069
70070 ननु तर्हि जीवन्मुक्तानां तत्तद्वर्णाश्रमोचितकर्मफलतृष्णा यद्यस्ति तर्हि
70071 अज्ञवदेव तद्भोगाय पुनर्देहबन्धोऽपि स्यात् । यदि नास्ति तर्हि प्रवृत्तिरेव न
70072 स्यात् प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते इति न्यायादिति दोषं परिहर्तुं
70073 ज्ञाज्ञयोः
70074 प्रवर्तकशुद्धाशुद्धतृष्णावैलक्षण्यमुपपादयितुमुपक्रमते -
70075 प्राकृतान्येवेत्यादिना । प्राकृतानि तत्तद्वर्णाश्रमस्वभावप्रापितानि ।
70076 वाञ्छा विषयास्वादनोत्साह ॥ २ ॥
70077
70078 या स्थितिस्तृष्णया जन्तोर्बाह्यार्थे बद्धभावया ।
70079 तं बन्धमाहुराचार्याः संसारनिगडं दृढम् ॥ ३ ॥
70080
70081 बद्ध उत्साहदृढीकृतो भावः संसारसत्यताबुद्ध्या भोगोत्साहो यया ॥ ३
70082 ।।
70083
70084 नूनमुज्झितसंकल्पा हृदि बाह्ये विहारिणी ।
70085 वासना योदिता सेह जीवन्मुक्तशरीरिणी ॥ ४ ॥
70086
70087 भोग्यवर्गाणामनृतत्वनिश्चयेन हृदि उज्झितभोगसंकल्पा बाह्ये
70088 लोकसंग्रहमात्रप्रयोजनेन विहारिणी वासना तृष्णा जीवन्मुक्तानां
70089 शरीरमात्राश्रितेत्यर्थः ॥ ४ ॥
70090
70091 बाह्यार्थव्यसनोच्छ्रना तृष्णा बद्धेति राघव ।
70092 सर्वार्थव्यसनोन्मुक्ता तृष्णा मुक्तेति कथ्यते ॥ ५ ॥
70093
70094 उक्तलक्षणे एव तृष्णे प्रपञ्चयिष्यन् पिण्डीकृत्याह - बाह्येति । व्यसनं
70095 लाम्पट्यम् ॥ ५ ॥
70096

70097 पूर्वं यस्यास्तु तृष्णाया वर्तमानेऽपि शाश्वती।
70098 निर्दुःखता निष्कलता सा मुक्तेति बुधैः स्मृता॥ ६॥
70099
70100 पूर्वं विषयप्राप्तेः प्राक्काले। विषयनाशोत्तरकालस्याप्युपलक्षणमेतत्।
70101 निर्दुःखता रागविरहादिप्रयुक्तदुःखशून्यता। विषयप्राप्तिकालेऽपि निष्कलता
70102 निरुच्छूनता॥ ६॥
70103
70104 इदमस्तु ममेत्यन्तर्यैषा राघव भावना।
70105 तां तृष्णां शृङ्खलां विद्धि कलनां च महामते॥ ७॥
70106
70107 तामेतां सर्वभावेषु सत्स्वसत्सु च सर्वदा।
70108 संत्यज्य परमोदारः परमेति महामनाः॥ ८॥
70109
70110 परं जीवन्मुक्तिपदम्॥ ८॥
70111
70112 बन्धाशामथ मोक्षाशां सुखदुःखदशामपि।
70113 त्यक्त्वा सदसदाशां च तिष्ठाक्षुब्धमहाब्धिवत्॥ ९॥
70114
70115 बध्नन्तीति बन्धा देहादयस्तदाशाम्। मोक्षस्तन्निवृत्तिस्तदाशाम्।
70116 बन्धमिथ्यात्वनिश्चये तन्निवृत्तेरनाशास्यत्वान्नहि जागरूकः
70117 स्वाप्ननिगडबन्धमोक्षमाशास्त इति भावः। सुखदुःखदशानामपि
70118 मिथ्यात्वनिश्चय एवात्र त्यागः॥ ९॥
70119
70120 अजरामरमात्मानं बुद्ध्वा बुद्धिमतां वर।
70121 जरामरणशङ्काभिर्मा मनः कलुषं कृथाः॥ १०॥
70122
70123 पदार्थ तत्त्वं नेदं ते नायं त्वमसि राघव।
70124 किंचित्तदन्यदेवेदमन्य एवासि राघव॥ ११॥
70125
70126 आशात्यागे उपायमाह - पदार्थेति। इदं दृश्यं पदार्थतत्त्वं
70127 पदार्थरूपं ते तव न। त्वमपि न। तत्तस्मात्परमार्थसत्यादन्यदेव
70128 किंचित्तुच्छमित्यर्थः॥ ११॥
70129
70130 असदभ्युदिते विश्वे सतीवासति संस्थिते।
70131 त्वयि तत्तामतिगते तृष्णायाः संभवः कुतः॥ १२॥
70132
70133 अन्यच्च राम मनसि पुरुषस्य विचारिणः।
70134 जायते निश्चयः साधो स्फाराकारश्चतुर्विधः॥ १३॥
70135
70136 हे राम अन्यच्च वक्ष्यमाणं चतुर्विधनिश्चयभेदं शृण्विति शेषः।
70137 तमेवाह - मनसीति॥ १३॥
70138
70139 आपादमस्तकमहं मातापितृविनिर्मितः।
70140 इत्येको निश्चयो राम बन्धायासद्विलोकनात्॥ १४॥
70141
70142 अतीतः सर्वभावेभ्यो वालाग्रादप्यहं तनुः।
70143 इति द्वितीयो मोक्षाय निश्चयो जायते सताम्॥ १५॥
70144
70145 सर्वेभ्यो देहेन्द्रियादिभेदेभ्योऽतीतोऽतिरिक्तः। तनुः सूक्ष्मः स्थौल्यरहित इति
70146 यावत्। त्वंपदार्थशोधनविधयास्य मोक्षहेतुत्वम्॥ १५॥
70147
70148 जगज्जालपदार्थात्मा सर्वमेवाहमक्षयः।

70149 तृतीयो निश्चयश्चेत्थं मोक्षायैव रघूद्वह ॥ १६ ॥
70150
70151 तृतीय इति । अस्याप्याध्यात्मिकपरिच्छिन्नात्मताभ्रमनिवृत्त्या तत्पदार्थेन
70152 सहैव शोधनसंभवान्मोक्षोपयोगः ॥ १६ ॥
70153
70154 अहं जगद्वा सकलं शून्यं व्योमसमं सदा ।
70155 एवमेष चतुर्थोऽन्यो निश्चयो मोक्षसिद्धये ॥ १७ ॥
70156
70157 अहमित्याध्यात्मिकपरिच्छेदोपाधिः जगदिति आधिदैविकाद्युपाधिः । सदा
70158 कालत्रयेऽपि । एषः सर्वदृश्यबाधात्मनिश्चयः ॥ १७ ॥
70159
70160 निश्चयेषु चतुर्ष्वेषु बन्धाय प्रथमः स्मृतः ।
70161 त्रयो मोक्षाय कथिताः शुद्धभावनयोत्थिताः ॥ १८ ॥
70162
70163 एतेषां प्रथमः प्रोक्तस्तृष्णाया बन्धयोग्यता ।
70164 शुद्धतृष्णास्त्रयः स्वच्छा जीवन्मुक्तविलासिनः ॥ १९ ॥
70165
70166 तृष्णाभेदनिरूपणेऽस्य विभागस्य का प्रसक्तिस्तत्राह - एतेषामिति ।
70167 अस्मिन्सत्येव तृष्णाया बन्धकत्वादयमेव बन्धहेतुरित्यर्थः । शुद्धा
70168 निर्दोषा तृष्णा येषु ते शुद्धतृष्णाः उत्तरे त्रयो निश्चयाः ॥ १९ ॥
70169
70170 सर्वमात्माहमेवेति निश्चयो यो महामते ।
70171 तमादाय विषादाय न भूयो याति मे मतिः ॥ २० ॥
70172
70173 तत्र तृतीयस्य प्रयोजनमाह - सर्वमिति ॥ २० ॥
70174
70175 तिर्यगूर्ध्वमधस्ताच्च व्यापको महिमात्मनः ।
70176 सर्वमात्मेति तेनान्तर्निश्चयेन न बध्यते ॥ २१ ॥
70177
70178 शून्यं तत्प्रकृतिर्माया ब्रह्मविज्ञानमित्यपि ।
70179 शिवः पुरुष ईशानो नित्य आत्मैव कथ्यते ॥ २२ ॥
70180
70181 चतुर्थस्य शून्यवादिमतप्रविष्टतां वारयन्नाह - शून्यमिति ।
70182 परिशिष्टात्मैव वादिभिः शून्यादिशब्दैः कथ्यते नावस्त्वित्यर्थः ॥ २२ ॥
70183
70184 सदा सर्वं सदेवेदं नेह द्वित्वान्यते क्वचित् ।
70185 विद्येते विद्यया व्याप्तं जगन्नेतरया धिया ॥ २३ ॥
70186
70187 विद्यया परमार्थस्वरूपदृष्ट्या जगद्व्याप्तं ग्रस्तम् । इतरया
70188 पूर्ववद्भ्रान्तिधिया न ॥ २३ ॥
70189
70190 आपातलमनन्तात्मा पूरितोऽम्भोधिरम्बुधिः ।
70191 आब्रह्मस्तम्बपर्यन्तं जगदापूर्णमात्मना ॥ २४ ॥
70192
70193 यथा अनन्तात्मा अपरिच्छेद्यपरिणाहोऽम्भोधिरापातालमम्बुभिः
70194 पूरितस्तथेत्यर्थः ॥ २४ ॥
70195
70196 अतः सत्यमृतं नित्यं नानृतं विद्यते क्वचित् ।
70197 वार्येव सकलाम्भोधिर्न तरङ्गादयः क्वचित् ॥ २५ ॥
70198
70199 अस्त्वापूर्णं किं ततस्तत्राह - अत इति । अतः ऋतं प्रमाणबोधितं
70200 ब्रह्मैक्यमेव नित्यं सत्यम् । तद्व्यतिरेकेणामृतं जगद्रूपं न विद्यत इति

70201 सिद्धमित्यर्थः ॥ २५ ॥
70202

70203 पृथक्कटककेयूरनूपुरादि न काञ्चनात् ।
70204 भिन्नास्तरुतृणाकारकोटयश्चैव नात्मनः ॥ २६ ॥
70205

70206 काञ्चनान्न पृथक् । आत्मनः पृथिव्यात्मनः सकाशान्न भिन्नाः ॥ २६ ॥
70207

70208 द्वैताद्वैतसमुद्भेदैर्जगन्निर्माणलीलया ।
70209 परमात्ममयी शक्तिरद्वैतैव विजृम्भते ॥ २७ ॥
70210

70211 कथं तर्हि जलसमुद्रादौ जगति भेदाभेदप्रत्ययस्तत्राह - द्वैताद्वैतेति ।
70212 अद्वैता परमात्ममयी शक्तिर्ब्रह्मसत्तैवाज्ञान्प्रति
70213 द्वैताद्वैतसमुद्भेदैर्विजृम्भत इत्यर्थः ॥ २७ ॥
70214

70215 आत्मीये परकीये च सर्वस्मिन्नेव सर्वदा ।
70216 नष्टे वोपचिते कार्ये सुखदुःखे गृहाण मा ॥ २८ ॥
70217

70218 अस्त्वेवं किं ततस्त्राह - आत्मीये इति । स्वीये परकीये वा पुत्रमित्रादौ सर्वस्मिन्
70219 जगति च उपचिते नष्टे वा सुखदुःखे अभिज्ञस्त्वं मा गृहाणेत्यर्थः ॥ २८ ॥
70220

70221 भावाद्वैतमुपाश्रित्य सत्ताद्वितमयात्मकः ।
70222 कमद्वितमनादृत्य द्वैताद्वैतमयो भव ॥ २९ ॥
70223

70224 कथं तर्हि मया व्यवहर्तव्यमिति चेद्ब्रह्मवद्द्वैताद्वैतालम्बनेनैवेति
70225 तद्विभज्याह - भावाद्वैतमिति । ब्रह्मवदेव त्वं परमार्थतः
70226 सत्ताद्वैतमयात्मक एव सन् व्यवहारकालेऽपि भावनया अद्वैतमेवोपाश्रित्य
70227 तत्तत्प्राणिकर्मफलदाने ब्रह्मेव वर्णाश्रमधर्मव्यवस्थापनकर्मविषये
70228 अद्वैतं सर्वथैवानादृत्य व्यवहरन् यथोचितं द्वैताद्वैतोभयपरो
70229 भवेत्यर्थः । अद्वैते कर्मणामेवासिद्धेरैकरूप्येण सर्वत्र
70230 कथंचिदद्वैताचरणे जगद्व्यवस्थाधर्मशास्त्रादिबाधप्रसङ्गाच्च तत्र
70231 द्वैताश्रयणमेवोचितमिति भावः ॥ २९ ॥
70232

70233 भवभूमिषु भीमासु भावभावनवात्यया ।
70234 मा पतोत्पातपूर्णासु दरीष्वन्तः करी यथा ॥ ३० ॥
70235

70236 भावेऽपि द्वैताश्रयणे का क्षतिस्तत्राह - भवेति । उत्पातैरशुभनिमित्तैः
70237 पूर्णासु । दरीग्रहणेन गर्तो लक्ष्यते । तथाच संसारगर्तपात एव तत्र क्षतिरिति
70238 भावः ॥ ३० ॥
70239

70240 द्वैतं न संभवति चित्तमयं महात्म-
70241 न्नात्मन्यथैक्यमपि न द्वितयोदितात्म ।
70242 अद्वैतमैक्यरहितं सततोदितं स-
70243 त्सर्वं न किंचिदपि चाहुरतः स्वरूपम् ॥ ३१ ॥
70244

70245 सत्तद्वैतमुक्तमुपपादयति - द्वैतमिति । द्वैतं परमार्थसन्न संभवति
70246 । यतस्तच्चित्तमयं चित्तकल्पितमेव न वस्तुस्पर्शि
70247 परैरप्यपेक्षाबुद्धिजन्यत्वाभ्युपगमात्तन्नाशे नाशाभ्युपगमाच्च ।
70248 एवमात्मन्यैक्यमेकत्वाख्यसंख्यागुणोऽपि न संभवति यतस्तदपि
70249 द्वित्वादिव्यावर्तकत्वेनैव कल्पितत्वाद्द्वितयादेवोदित आत्मा स्वरूपं यस्य
70250 तथाभूतम् । अतः अद्वैतमैक्येन च रहितं
70251 स्वसिद्धवप्यन्यनिरपेक्षत्वात्सततोदितं सत्सन्मात्रं ब्रह्म ऐक्यनिरासात्सर्वं
70252 द्वैतनिरासान्न किंचिदपीति च । तस्मात्तत्सर्वमभवत् नेह नानास्ति किंचन

इत्यादिश्रुतयस्तदनुभविनश्च लक्षणया आहुरित्यर्थः ॥ ३१ ॥

नैवाहमस्ति नच नाम जगन्ति सन्ति
सर्वं च विद्यत इदं ननु निर्विकारम् ।
विज्ञानमात्रमवभासत एव शान्तं
नासन्न सज्जगदिदं च सदेति विद्धि ॥ ३२ ॥

अहमिति युष्मदात्मप्रविभक्तरूपं नैवास्ति अस्मदर्थप्रविभक्तरूपाणि
युष्मदादिजगन्ति च न सन्ति किंतु सर्वमिदं निर्विकारं विज्ञानमात्रमेव
विद्यते । तदवभासतस्तत्साक्षात्कारमात्रतः शान्तमिदं तु जगत्सदा नासत् न
सच्चेति विद्धित्यर्थः ॥ ३२ ॥

परममृतमनाद्यं भासनं सर्वभासा-
मजरमजमचिन्त्यं निष्कलं निर्विकारम् ।
विगतकरणजालं जीवनं जीवशक्तेः
सकलकलनहीनं कारणं कारणानाम् ॥ ३३ ॥

पुनस्तन्निश्चयमेव दृढमाशिषापि संपादयति - परमिति द्वाभ्याम् ।
जीवशक्तेः प्राणस्य जीवनं प्राणनव्यवहारनिमित्तम् । प्राणस्य प्राणम्
इत्यादिश्रुतेः ॥ ३३ ॥

सततमुदितमीशं व्यातते चित्प्रकाशे
स्थितमनुभवबीजं स्वात्मभावोपदेश्यम् ।
स्वदनमनुचितोऽन्तर्ब्रह्म सर्वं सदैव
त्वमहमपि जगच्चेत्यस्तु ते निश्चयोन्तः ॥ ३४ ॥

अनुभवानां चाक्षुषादीनां बीजं मूलभूतम् । स्वात्मभावः
स्वस्वरूपावस्थितिस्तेन दशमस्त्वमसीतिवच्छब्दापरोक्षापादनेनोपदेश्यं
अन्तःस्वदनमान्तरानन्दैकरसं ब्रह्मैव त्वमहं जगच्च न
ततोऽन्यदस्तीत्यनुसृत्य चित उपचितो निश्चयस्तेऽन्तरस्त्वित्याशीरुपदेशश्च ॥ ३४ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपाये
उपशमप्रकरणे तृष्णाविच्छेदोपदेशो नाम सप्तदशः सर्गः ॥ १७ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
तृष्णाविच्छेदोपदेशो नाम सप्तदशः सर्गः ॥ १७ ॥

अष्टादशः सर्गः १८

श्रीवसिष्ठ उवाच ।

युक्ताशयानां महतामहतानां कुदृष्टिभिः ।
स्वभावोऽयं महाबाहो लीलया चरतामिह ॥ १ ॥

यया स्थित्या स्थितो विद्वान्संसारे नावसीदति ।
सा स्थितिर्विस्तरेणात्र राघवायोपदिश्यते ॥ १ ॥

युक्ताशयानां समाहितमनसाम् ।
कामलोभादिकुदृष्टिभिरहतानामदूषितानामयं वक्ष्यमाणप्रकारः
स्वभावः स्थितिः श्रूयतामिति शेषः ॥ १ ॥

70305 विहरन्नपि संसारे जीवन्मुक्तमना मुनिः।
70306 आदिमध्यान्तविरसा विहसेज्जागतीर्गतीः॥ २॥
70307
70308 आदौ जन्मादिदुःखैर्मध्ये आध्यात्मिकादिदुःखैरन्ते
70309 मृत्युनरकादिदुःखैर्विरसाः। विहसेत् हासयोग्यतया तुच्छीकृत्य पश्येत्॥ २
70310 ।।
70311
70312 सर्वप्रकृतकार्यस्थो मध्यस्थः सर्वदृष्टिषु।
70313 ध्येयं तं वासनात्यागमवलम्ब्य व्यवस्थितः॥ ३॥
70314
70315 सर्वेषु प्रकृतेषु तत्तत्कालप्रसक्तेषु कार्येषूचिताचरणेषु तिष्ठतीति स्थः
70316 सर्वासु शत्रुमित्रादिदृष्टिषु मध्यस्थः समः तं ज्ञेयो ध्येयश्चेति द्विधा
70317 वर्णितवासनात्यागयोर्मध्ये ध्येयं वासनात्यागमवलम्ब्येत्यर्थः॥ ३॥
70318
70319 सर्वत्र विगतोद्वेगः सर्वार्थपरिपोषकः।
70320 विवेकोद्द्योतदृष्टात्मा प्रबोधोपवनस्थितिः॥ ४॥
70321
70322 सर्वेषामर्थस्याभिमतस्य परिपोषको न कस्यचिद्विप्रियकारी। प्रबोधलक्षणे
70323 उपवने स्थितिर्यस्य॥ ४॥
70324
70325 सर्वातीतपदालम्बी पूर्णेन्दुशिशिराशयः।
70326 नोद्वेगी नच तुष्टात्मा संसारे नावसीदति॥ ५॥
70327
70328 सर्वशत्रुषु मध्यस्थो दयादाक्षिण्यसंयुतः।
70329 प्राप्तकर्मकरोऽग्र्याणां संसारे नावसीदति॥ ६॥
70330
70331 समः [मूलस्थितपाठे सर्वशत्रुषु मध्यस्थपदमहिम्ना मित्रेषु च
70332 मध्यस्थः उभयत्र रागद्वेषशून्यत्वात्सम इत्यर्थः] शत्रौ च मित्रे चेति
70333 पाठः स्पष्टः। अग्र्यणां गुरुप्रभृतीनां
70334 समयोचितप्राप्तसेवापरिपालनादिकर्मकरः॥ ६॥
70335
70336 नाभिनन्दति न द्वेष्टि न शोचति न काङ्क्षति।
70337 मौनस्थः प्रकृतारम्भी संसारे नावसीदति॥ ७॥
70338
70339 मौनस्थो मितभाषी। प्रकृतारम्भी आवश्यककार्येष्वनलसः॥ ७॥
70340
70341 पृष्टः सन्प्रकृतं वक्ति न पृष्टः स्थाणुवत्स्थितः।
70342 ईहितानीहितैर्मुक्तः संसारे नावसीदति॥ ८॥
70343
70344 तदेवाह - पृष्ट इति॥ ८॥
70345
70346 सर्वस्याभिमतं वक्ता चोदितः पेशलोक्तिमान्।
70347 आशयज्ञश्च भूतानां संसारे नावसीदति॥ ९॥
70348
70349 अभिमतं प्रियं वक्ता। चोदित आक्षिप्तः पेशलोक्तिमान् चतुरं समाधाता॥ ९॥
70350
70351 युक्तायुक्तदृशा ग्रस्तमाशोपहतचेष्टितम्।
70352 जानाति लोकदृष्टान्तं करकोटरबिल्वत्॥ १०॥
70353
70354 इदं युक्तमिदमयुक्तमिति वैषम्यदृशा। जानाति अपक्षपातितया पश्यति। अत
70355 एव करकोटरः करतलगर्तस्तत्प्रतिष्ठितबिल्वफलवत्स्पष्टमित्युक्तम्।
70356 एकतरपक्षपाते तु तत्पक्षदोषा अपरपक्षगतगुणाश्च रागद्वेषपिहितत्वाना

70357 स्पष्टं भासन्त इति ॥ १० ॥
70358
70359 परं पदमुपारूढो भङ्गुरां जागतीं स्थितिम् ।
70360 अन्तःशीतलया बुद्ध्या हसन्निव निरीक्षते ॥ ११ ॥
70361
70362 अत एव वैषम्यदर्शनादेः फलमपि जनानां हसन्निव ताटस्थ्येनैव
70363 पश्यतीत्याह - परमिति ॥ ११ ॥
70364
70365 जितचित्ता महात्मानो ये हि दृष्टपरावराः ।
70366 स्वभाव ईदृशस्तेषां कथितस्तव राघव ॥ १२ ॥
70367
70368 उपसंहरति - जितेति ॥ १२ ॥
70369
70370 वयं तु वक्तुं मूर्खाणामजितात्मीयचेतसाम् ।
70371 भोगकर्दममग्नानां न विद्मोऽभिमतं मतम् ॥ १३ ॥
70372
70373 मुक्तस्थितिरिव बद्धस्थितिरपि तदाशयोद्घाटनेन वर्ण्यतामिति
70374 चेन्मूर्खमनोरथभ्रान्तीनां तत्प्रयुक्तदुश्चेष्टानां
70375 तत्फलदुःखवचित्र्याणां चानन्त्यान्न सा वर्णयितुं शक्येत्याशयेनाह ##-
70376
70377 तेषामभिमता नार्यो भावाभावविभूषिताः ।
70378 ज्वालानरकवह्नीनां यास्ताः कनकरोचिषः ॥ १४ ॥
70379
70380 तेषां मूर्खाणां नार्यः स्त्रियोऽभिमता अभिलषिता याः भावानां
70381 विवेकबुद्धीनामत्यन्ताभावैः पूर्वसंचितसुकृतानां प्रध्वंसाभावैः
70382 संभावितसुकृततपःसंयमादीनां प्रागभावपरिपालनैश्च विभूषिता
70383 आपादमस्तकमलंकृताः । अत एव नरकवह्नीनां कनकसमानरोचिषो ज्वाला
70384 एव ता इत्यर्थः ॥ १४ ॥
70385
70386 अनर्थगहनाश्चार्था व्यर्थानर्थकदर्थनाः ।
70387 दिशन्तो दुःखसंरम्भमभितः प्रहितापदः ॥ १५ ॥
70388
70389 तथा मूर्खाणामभिलषिता अर्था धनानि ते च अनर्थगहना अर्जने पालने व्यये
70390 नाशे च बह्वायासाधर्मराशिनिमित्तभूताः । व्यर्था
70391 अनर्थप्रयोजककलहवैरादिकदर्थनाश्च येभ्यस्तथाविधाश्चेत्यर्थः ॥ १५ ॥
70392
70393 फलसंधीनि कर्माणि नानाचारमयानि च ।
70394 सुखदुःखावपूर्णानि तानि वक्तुं न शक्नुमः ॥ १६ ॥
70395
70396 ननु तेषां तादृशैरप्यर्थैर्यज्ञादिसत्कर्माचरणसिद्धेर्निस्तारः
70397 स्यान्नेत्याह - फलसंधीनीति । यानि मूर्खाणां यज्ञादिकर्माणि तान्यपि
70398 फलाभिसंधियुक्तान्येव न निरभिसंधीनि ।
70399 नानाविधैर्दम्भमानमदमात्सर्याद्याचारैर्दुराचारैश्च प्रचुराणि अत एव
70400 पुनर्जन्मादिप्रयुक्तसुखदुःखैरवपूर्णानीति मूर्खाणां किंचिदपि
70401 निस्तारनिमित्तं वक्तुं न शक्नुम इत्यर्थः ॥ १६ ॥
70402
70403 पूर्णां दृष्टिमवष्टभ्य ध्येयत्यागविलासिनीम् ।
70404 जीवन्मुक्ततया स्वस्थो लोके विहर राघव ॥ १७ ॥
70405
70406 अतस्त्वमपि विद्वच्चरित्रेणैव विहर नान्येनेत्याह - पूर्णामित्यादिना ॥ १७ ॥
70407
70408 अन्तः संत्यक्तसर्वाशो वीतरागो विवासनः ।

70409 बहिः सर्वसमाचारो लोके विहर राघव ॥ १८ ॥
70410

70411 उदारः पेशलाचारः सर्वाचारानुवृत्तिमान् ।
70412 अन्तः सर्वपरित्यागी लोके विहर राघव ॥ १९ ॥
70413

70414 सर्वेषामज्ञानामपि कर्माद्याचारेषु अनुवृत्तिमान् । न बुद्धिभेदं
70415 जनयेदज्ञानां कर्मसङ्गिनाम् इति भगवद्वचनादिति भावः ॥ १९ ॥
70416

70417 प्रविचार्य दशाः सर्वा यदतुच्छं परं पदम् ।
70418 तदेव भावेनालम्ब्य लोके विहर राघव ॥ २० ॥
70419

70420 सर्वाः संसारदशाः परमार्थस्वरूपावस्थितिभूमिकाभेददशाश्च ॥ २० ॥
70421

70422 अन्तर्नैराश्यमादाय बहिराशोन्मुखेहितः ।
70423 बहिस्तप्तोऽन्तराशीतो लोके विहर राघव ॥ २१ ॥
70424

70425 आशोन्मुखानामिव ईहितानि चेष्टा यस्य । सर्वात्मना नैराश्यप्रकटने
70426 धनमित्रादिसंग्रहायोगाद्राज्यपरिपालनानिर्वाहादिति भावः । अत एव
70427 धनादिनाशे बहिस्तप्त इव तप्तः । अन्तस्तु आशीतः सर्वतः शीतलः ॥ २१ ॥
70428

70429 बहिः कृत्रिमसंरम्भो हृदि संरम्भवर्जितः ।
70430 कर्ता बहिरकर्तान्तर्लोके विहर राघव ॥ २२ ॥
70431

70432 ज्ञातवानसि सर्वेषां भावानां सम्यगन्तरम् ।
70433 यथेच्छसि तथा दृष्ट्या लोके विहर राघव ॥ २३ ॥
70434

70435 अन्तरं व्यवहारतः परमार्थतश्च सारासारतारतम्यम् । अतः सद्व्यवहारे
70436 अतिसर्गस्तवेत्याह - यथेच्छसीति ॥ २३ ॥
70437

70438 कृत्रिमोल्लासहर्षस्थः कृत्रिमोद्वेगगर्हणः ।
70439 कृत्रिमारम्भसंरम्भो लोके विहर राघव ॥ २४ ॥
70440

70441 त्यक्ताहंकृतिराश्वस्तमतिराकाशशोभनः ।
70442 अगृहीतकलङ्काङ्को लोके विहर राघव ॥ २५ ॥
70443

70444 चन्द्रस्तु रात्रावहमेव प्रकाशक इति गृहीताहंकृतिः
70445 क्षयरोगित्वादनाश्वस्तमतिर्गृहीतकलङ्कलाञ्छनश्च त्वं तु न तथेति
70446 व्यतिरेकः ॥ २५ ॥
70447

70448 आशापाशशतोन्मुक्तः समः सर्वासु वृत्तिषु ।
70449 बहिः प्रकृतिकार्यस्थो लोके विहर राघव ॥ २६ ॥
70450

70451 प्रकृतिस्तत्तद्वर्णाश्रमस्वभावस्तदुचितकार्यस्थः प्रजाहितकार्यस्थो वा ॥ २६
70452 ॥
70453

70454 न बन्धोऽस्ति न मोक्षोऽस्ति देहिनः परमार्थतः ।
70455 मिथ्येयमिन्द्रजालश्रीः संसारपरिवर्तिनी ॥ २७ ॥
70456

70457 समः सर्वासु वृत्तिष्विति यदुक्तं
70458 तद्बन्धमोक्षादिवैषम्यप्रतिषेधेनोपपादयति - न बन्ध इत्यादिना ॥ २७ ॥
70459

70460 भ्रान्तिमात्रमिदं मोहाज्जगद्राघव दृश्यते ।

70461 जनितप्रत्ययं स्फारं जलं तीव्रातपे यथा ॥ २८ ॥
70462
70463 जलं मृगतृणोदकम् ॥ २८ ॥
70464
70465 अबद्धस्यैकरूपस्य सर्वगस्यात्मनः कथम् ।
70466 बन्धः स्यात्तदभावे तु मोक्षः कस्य विधीयते ॥ २९ ॥
70467
70468 कुतो न बन्धोऽस्ति तत्र युक्तिमाह - अबद्धस्येति । असङ्गस्येत्यर्थः । विधीयते
70469 यत्नेन संपाद्यते ॥ २९ ॥
70470
70471 अतत्त्वज्ञानजातेयं संसारभ्रान्तिरातता ।
70472 तत्त्वज्ञानात्क्षयं याति रज्ज्वामिव भुजङ्गधीः ॥ ३० ॥
70473
70474 तर्हि किं तत्त्वज्ञानं व्यर्थं नेत्याह - अतत्त्वेति ॥ ३० ॥
70475
70476 ज्ञातवानसि तत्त्वं त्वमेकया सूक्ष्मया धिया ।
70477 जातोऽसि निरहंकारो व्योमवत्तिष्ठ निर्मलः ॥ ३१ ॥
70478
70479 ज्ञोऽसि त्वित्थं तदखिलाः सुहृद्बान्धववासनाः ।
70480 संत्यजासत्स्वभावस्य का नाम किल भावना ॥ ३२ ॥
70481
70482 ज्ञः साक्ष्यसि तत्तस्मात्सुहृद्बान्धवविषया ममतावासनाः ।
70483 असत्स्वभावस्य अविद्यमानस्वरूपस्य सुहृदादेर्भावना चिन्तना का नाम । न
70484 युक्तेत्यर्थः ॥ ३२ ॥
70485
70486 अपि चेत्थं तदन्यस्त्वं सत्त्ववाननुमीयसे ।
70487 इदं प्रथमतः प्राप्तं परमादपि कारणात् ॥ ३३ ॥
70488
70489 अपि च इत्थं मदुक्तप्रकारेण वासनात्यागे ताभ्योऽन्यः परिशिष्टः साक्षी त्वं
70490 परमार्थसत्त्ववान्परिशेषादनुमीयते । प्रथमतः वासनात्यागात्पूर्वं ते
70491 परमात्कारणाद्ब्रह्मणः प्रलयसुषुप्त्योर्नित्यप्राप्तादपि इदं
70492 परिच्छिन्नासत्यरूपमेव प्राप्तं न परमार्थसत्यरूपमिति वासनात्याग एव
70493 तत्प्राप्तिहेतुर्नान्य इत्यर्थः । अथवा अपि चेति समुच्चये ।
70494 तदन्यस्तस्मादसत्स्वभावादन्यः परमार्थसत्स्वभावस्त्वं
70495 स्वभावेनैवासत्स्वभावेभ्योऽविद्यातत्कार्येभ्यः सत्त्ववान् बलवाननुमीयसे ।
70496 अतः परमादाद्यादविद्यालक्षणात्कारणादपि इदं प्रथमतः
70497 अनादिकालात्प्राप्तं बन्धमपि इत्थं वासनावदेव संत्यजेत्यनुषज्यते ॥ ३३ ॥
70498
70499 भोगबन्धुजगद्भावैः कर्मभिश्च शुभाशुभैः ।
70500 आत्मनो नास्ति संबन्धः किमेताननुशोचसि ॥ ३४ ॥
70501
70502 भोगैस्तत्साधकैर्बन्धुभिर्जगद्भावैः स्रक्चन्दनादिभिस्तत्प्राप्तिनिमित्तैः
70503 शुभाशुभैः कर्मभिश्च ॥ ३४ ॥
70504
70505 आत्मतत्त्विकसारोऽहमिति जातधियो भयैः ।
70506 न ते रामास्ति संबन्धः किं बिभेषि जगद्भ्रमात् ॥ ३५ ॥
70507
70508 आत्मतत्त्वमेवैकः सारः सत्यः परमानन्दो यस्य तथाविधोऽहमिति जाता
70509 धीर्यस्य । भयैर्भयहेतुभिः ॥ ३५ ॥
70510
70511 अजातस्य सतो बन्धोर्बन्धुदुःखसुखभ्रमैः ।
70512 कस्ते राघव संबन्धो यदेताननुशोचसि ॥ ३६ ॥

70513
70514 मम तत्त्वविदः स्वतो दुःखं माभूत् बन्धूनामज्ञत्वेन
70515 दुःखित्वात्तद्दुःखसमागमैर्दुःखं तु दुर्वारमिति चेत्तत्राह - अजातस्येति
70516 | मिथ्यात्वाद्बन्धौ अजाते सतीत्यर्थः | षष्ठी चानादरे इति षष्ठी | अथवा
70517 बन्धोः संबन्धितयाऽजातस्य तवेति योज्यम् || ३६ ||
70518
70519 त्वं चेद्बभूविथ पुरा तथेदानीं भविष्यसि |
70520 अद्य चेह स्थितोऽसीति ज्ञातवानसि निश्चयम् || ३७ ||
70521
70522 एवमात्मनोऽसङ्गत्वाद्वितीयत्वदर्शने शोकासंभव उक्तः इदानीमस्त्वात्मा
70523 सङ्गी तथापि स किं नित्य उत क्षणिक उत प्रागभाववद्घटादिवद्वा कालान्तरे
70524 नश्वरः सर्वेष्वपि पक्षेषु बन्धुशोको न युक्त इति प्रौढ्या समाधित्सुराद्ये
70525 कल्पे तावदाह - त्वं चेदिति | पुरा पूर्वजन्मसु बभूविथ तथा
70526 भाविजन्मसु भविष्यसि | अद्येदानीमिह जन्मनि च
70527 स्थितोऽसीत्येवंस्वभावमात्मानं यदि निश्चयं दृढं ज्ञातवानसि तदा
70528 अनन्तरगान्वर्तमानान्निकटस्थितान्सन्निहितान्बन्धून्
70529 प्राणादीनिवेत्यध्याहारः | अनन्तजन्मस्वतीतान्सुबहून् कस्मान्नानुशोचसि |
70530 विनिगमनाविरहात्सर्वशोकाशक्तेश्च न क्वापि शोको युक्त इति भावः || ३७ ||
70531
70532 तदानन्तरगानन्यान्प्राणादीन्निकटस्थितान् |
70533 बन्धूनतीतान्सुबहून्कस्मात्त्वं नानुशोचसि || ३८ ||
70534
70535 पूर्वमन्यस्तथेदानीं बभूविथ भविष्यसि |
70536 यदि राम तथापि त्वं सद्रूपं किं विमुह्यसि || ३९ ||
70537
70538 द्वितीयेऽप्याह - पूर्वमिति | इदानीमन्यः अग्रेऽप्यन्यो भविष्यसि इति
70539 क्षणिकमात्मानं यदि जानासि तथापि त्वं किं सद्रूपमालम्ब्य विमुह्यसि
70540 शोचसि | द्वितीयक्षणे शोच्यस्य शोचितुश्चासत्त्वेन शोकावसराभावादित्यर्थः ||
70541 ३९ ||
70542
70543 पुरा भूत्वाद्य भूत्वा च भूयश्चेन्न भविष्यसि |
70544 तथापि क्षीणसंसारः किमर्थमनुशोचसि || ४० ||
70545
70546 तृतीयेऽप्याह - पुरेति | तथाप्यात्मनाशादेव क्षीणसंसारः || ४० ||
70547
70548 तस्मान्न दुःखिता युक्ता प्राकृते जागते क्रमे |
70549 तथैव मुदिता युक्ता युक्तं कार्यानुवर्तनम् || ४१ ||
70550
70551 यदा आत्मनो जन्मादिसङ्गित्वेऽपि शोको न युक्तस्तदा किं
70552 वाच्यमसङ्गोदासीननित्यकूटस्थस्वप्रकाशपूर्णानन्दैकरसत्वे स न युक्त
70553 इतीत्याशयेनोपसंहरति - तस्मादिति | मुदिता सहजसंतोषवृत्तिः || ४१ ||
70554
70555 मा गच्छ दुःखितां राम सुखितामपि मा व्रज |
70556 समतामेहि सर्वत्र परमात्मा हि सर्वगः || ४२ ||
70557
70558 अनन्तः सत्स्वरूपस्त्वं खमिवाततितान्तरम् |
70559 प्रकाशो नित्यशुद्धस्त्वं ज्वालनामिव कोटरम् || ४३ ||
70560
70561 यथा ज्वालानां कोटरे सर्वतः प्रभाव्याप्ते तमसो नावकाशस्तद्वत्त्वय्यपि
70562 तमोदुःखादेरिति भावः || ४३ ||
70563
70564 जागतानां पदार्थानामदृष्टात्मतनुस्तनुः |

70565 हृत्स्थोऽसि हारमुक्तानामेकस्तन्तुरिवाततः ॥ ४४ ॥
70566
70567 त्वमेव सर्वान्तर इत्याह - जागतानामिति। न दृष्टा आत्मनस्तनुः
70568 स्वरूपं यस्य। तनुः सूक्ष्मः हारभूतमुक्ताफलानां
70569 तन्तुरिवाततोऽनुस्यूतः ॥ ४४ ॥
70570
70571 संसारस्थितिरेवेयं यद्भूत्वा भूयते पुनः।
70572 अज्ञेनैव न तज्ज्ञेन ज्ञोऽसि राम सुखी भव ॥ ४५ ॥
70573
70574 पुनर्जन्मशङ्कां वारयति - संसारेति। भूत्वा उत्पद्य पुनर्भूयते ॥ ४५ ॥
70575
70576 स्वरूपमिदमस्यास्तु संसृतेः सतताधिमत्।
70577 अज्ञानात्स्फारतामेति ज्ञातवानसि सन्मते ॥ ४६ ॥
70578
70579 स्वरूपं स्वभावः। सततमाधिमत् दुःखबहुलम् ॥ ४६ ॥
70580
70581 रूपं किमन्यद्भवतु भ्रममात्राद्दते भ्रमे।
70582 स्वप्नमात्राद्दते स्वप्ने भवत्यन्यो हि कः क्रमः ॥ ४७ ॥
70583
70584 स्वरूपं तत्त्वमिति न मन्तव्यमित्याह - रूपमिति। भ्रान्त्यन्तरेषु
70585 तत्त्वाप्रसिद्धेरत्रापि न तत्त्वमस्तीत्यर्थः ॥ ४७ ॥
70586
70587 सर्वशक्तेरियं शक्तिर्भ्रममात्रमयं तथा।
70588 राम दृश्यत एवेदमाभानमतिभास्वरम् ॥ ४८ ॥
70589
70590 ननु निस्तत्त्वं कथं सदिति दृश्यते तत्राह - सर्वेति। आभानं
70591 जगदाकारभानम्। अतिभास्वरं व्यक्तम् ॥ ४८ ॥
70592
70593 सुबन्धुः कस्यचित्कः स्यादिह नो कश्चिदप्यरिः।
70594 सदा सर्वे स सर्वस्य सर्वं सर्वेश्वरेच्छया ॥ ४९ ॥
70595
70596 जगतो भ्रान्तिमात्रताप्रदर्शनायानियतस्वभावतां दर्शयति -
70597 सुबन्धुरित्यादिना। सर्वस्य सर्वेऽपि सर्वे अरयो मित्राणि उदासीनाश्चेत्यर्थः ॥ ४९ ॥
70598
70599 आलूनशीर्णमखिलमिदमन्योन्यसंश्रितम्।
70600 अनारतं याति जगत्तरङ्गौघ इवाम्भसः ॥ ५० ॥
70601
70602 अन्योन्यसंश्रितं परस्परनिमित्तम् ॥ ५० ॥
70603
70604 अध ऊर्ध्वत्वमायाति यात्यूर्ध्वत्वमधस्तथा।
70605 संसारस्य चलस्यास्य चक्रनेमिरिवाभितः ॥ ५१ ॥
70606
70607 अध इति। प्रत्यक्षं चेदं ज्योतिश्चक्रभागानां भूमेश्चेति भावः ॥ ५१ ॥
70608
70609 स्वर्गस्था नरकं यान्ति नारकाश्च त्रिविष्टपम्।
70610 योनेयोन्यन्तरं यान्ति द्वीपाद्द्विपान्तरं जनाः ॥ ५२ ॥
70611
70612 एवमुत्कर्षापकर्षावप्यनियतावेवेत्याह - स्वर्गस्था इति ॥ ५२ ॥
70613
70614 धीराः कार्पण्यमायान्ति कृपणा यान्ति धीरताम्।
70615 परिस्फुरन्ति भूतानि पातोत्पातशतभ्रमैः ॥ ५३ ॥
70616

70617 धीरा अप्रार्थनशीलाः ॥ ५३ ॥
70618
70619 एकरूपस्थिरं चक्रं स्वच्छं संतापवर्जितम् ।
70620 नेह संप्राप्यते किंचिदग्नौ हिमकणो यथा ॥ ५४ ॥
70621
70622 उपसंहरति - एकरूपेति । चक्रं पदार्थमण्डलम् ॥ ५४ ॥
70623
70624 ये ये नाम महाभागा बहवो बान्धवास्तथा ।
70625 विनष्टा एव दृश्यन्ते ते ते कतिपयैर्दिनैः ॥ ५५ ॥
70626
70627 विनाशस्तु सर्वत्र नियत इत्याह - ये ये इति ॥ ५५ ॥
70628
70629 परतात्मीयतान्यत्वत्वमत्त्वादिभावना ।
70630 नेह सत्या महाबाहो द्विचन्द्रादिदृशो यथा ॥ ५६ ॥
70631
70632 अस्त्वनियतता किं ततस्तत्राह - परतेति ॥ ५६ ॥
70633
70634 अयं बन्धुः परश्चायमयं चाहमयं भवान् ।
70635 इति मिथ्यादृशो राम विगलन्तु तवाधुना ॥ ५७ ॥
70636
70637 विगलन्तु विशीर्यन्ताम् ॥ ५७ ॥
70638
70639 क्रीडार्थं व्यवहारस्थ एताभिर्हतदृष्टिभिः ।
70640 आमूलमन्तश्छिन्नाभिर्बहिर्विहर हेलया ॥ ५८ ॥
70641
70642 हतदृष्टिभिर्बाधितानुवृत्तिदृष्टिभिः । आमूलमज्ञानवासनाभ्यां सह
70643 अन्तश्छिन्नाभिः ॥ ५८ ॥
70644
70645 संसारसरणावस्यां तथा विहर सुव्रत ।
70646 न यथैव श्रमश्रान्तो वासनाभारवानिव ॥ ५९ ॥
70647
70648 वासनाभारवान् अज्ञ इव श्रमश्रान्तो यथा न भवस्येव तथा अस्यां
70649 संसारसरणौ विहर ॥ ५९ ॥
70650
70651 यथा यथैषा कार्याणि वासनाक्षयकारिणी ।
70652 विचारणा तवोदेति संशाम्यन्ति तथा तथा ॥ ६० ॥
70653
70654 कदा तर्हि मम व्यवहारोपरमो भविष्यति तत्राह - यथा यथेति ।
70655 वासनाक्षयकारिणी विचारणा यथा यथोदेति तथा तथा कार्याणि व्यवहाराः
70656 प्रशाम्यन्ति उपरंस्यन्त इत्यर्थः ॥ ६० ॥
70657
70658 अयं बन्धुरयं नेति गणना लघुचेतसाम् ।
70659 उदारचरितानां तु विगतावरणैव धीः ॥ ६१ ॥
70660
70661 विगतं अयमेव बन्धुरिति परिच्छेदलक्षणं आवरणं यस्यास्तादृश्येव
70662 सर्वत्र समतादर्शिनीत्यर्थः ॥ ६१ ॥
70663
70664 न तदस्ति न यत्राहं न तदस्ति न यन्मम ।
70665 इति निर्णीय धीराणां विगतावरणैव धीः ॥ ६२ ॥
70666
70667 उक्तमेवार्थं कारणोपन्यासेन विवृणोति - न तदिति ॥ ६२ ॥
70668

70669 नास्तमेति न चोदेति यश्चिदाकाशवन्महान् |
70670 सर्वं संपश्यति स्वस्थः स्वस्थो भूमितलं यथा || ६३ ||
70671
70672 स्वस्थः स्वरूपप्रतिष्ठितो विक्षेपदुःखोपशमस्वास्थ्यवान्वा || ६३ ||
70673
70674 सर्वा एव हि ते भूतजातयो राम बन्धवः |
70675 अत्यन्तासंयुता एतास्तव राम न काश्चन || ६४ ||
70676
70677 सर्वा इति | अनादौ संसारे सर्वयोनिषु स्वस्य बहुशो जन्मानुभवादित्यर्थः |
70678 बन्धुत्वेनात्यन्तमसंयुताः काश्चन काश्चिदपि न पर्यायेण सर्वैः सह
70679 संबन्धादित्यर्थः | अथवा देहद्वारकपरम्परासंबन्धापेक्षया
70680 सर्वजीवैः सह साक्षादैकात्म्यसंबन्धस्यान्तरङ्गत्वात्तेन
70681 संबन्धेनात्यन्तासंयुता न काश्चनेत्यर्थः || ६४ ||
70682
70683 विविधजन्मशताहितसंभ्रमे
70684 जगति बन्धुरबन्धुरितीक्षणम् |
70685 भ्रमदशैव विवल्गति वस्तुत-
70686 स्त्रिभुवनं चिरबन्धुरबन्ध्वपि || ६५ ||
70687
70688 उक्तमेवार्थं संक्षिप्य विवृण्वन्नुपसंहरति - विविधेति |
70689 विविधैर्नानायोनिविचित्रैर्जन्मशतैराहिताः संभ्रमा यस्मिंस्तथाविधे जगति
70690 अयं बन्धुरयमबन्धुरिति ईक्षणं भेददर्शनं भ्रमदशैव विवल्गति
70691 विजृम्भते | वस्तुतस्तु जीवभावदृष्टौ त्रिभुवनं त्रिभुवनस्थं जीवजातं
70692 निजबन्धुर्ब्रह्मभावदृष्टौ तु स्वयमेव सर्वमित्यबन्ध्वपि तदेवेत्यर्थः ||
70693 ६५ ||
70694
70695 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये
70696 मोक्षोपायेषूपशमप्रकरणे जीवन्मुक्तवर्णनं नामाष्टादशः
70697 सर्गः || १८ ||
70698
70699 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
70700 जीवन्मुक्तवर्णनं नामाऽष्टादशः सर्गः || १८ ||
70701
70702
70703 एकोनविंशः सर्गः १९
70704
70705 अत्रैवोदाहरन्तीममितिहासं पुरातनम् |
70706 भ्रात्रोस्त्रिपथगातीरे संवादं मुनिपुत्रयोः || १ ||
70707
70708 इहोक्तसिद्धये पुण्यपावनाख्यानमुच्यते |
70709 पुण्यो यत्पितृशोकार्तं पावनं समबोधयत् || १ ||
70710
70711 अत्र उक्तार्थविषये || १ ||
70712
70713 अयं बन्धुरयं नेति कथाप्रस्तावतः स्मृतम् |
70714 इतिहासमिमं पुण्यमाश्चर्यं शृणु राघव || २ ||
70715
70716 अस्त्यस्य जम्बूद्वीपस्य कस्मिंश्चिद्गिरिकुञ्जके |
70717 वनव्यूहमहोत्तंसं महेन्द्रो नाम पर्वतः || ३ ||
70718
70719 मध्ये | निर्धारणे सप्तमी | पुञ्जके इति पाठः स्पष्टः || ३ ||
70720

70721 कल्पद्रुमवनच्छायाविश्रान्तमुनिकिन्नरः ।
70722 शृङ्गैराततमाकाशं जितवान्यः समुन्नतैः ॥ ४ ॥
70723
70724 आततं विस्तीर्णमप्याकाशं शृङ्गैर्जितवान् व्याप्तवान् ॥ ४ ॥
70725
70726 ब्रह्मलोकान्तरप्राप्तशृङ्गकन्दरचारिभिः ।
70727 सामवेदप्रतिध्वानघुंघुमैर्गायतीव यः ॥ ५ ॥
70728
70729 ब्रह्मलोकेत्यतिशयोक्तिः ॥ ५ ॥
70730
70731 यः पयोमेदुरैर्मेघैर्लसितैः शृङ्गकोटिषु ।
70732 लताकुसुमसंप्रोतैः कुन्तलैरिव राजते ॥ ६ ॥
70733
70734 पयोमेदुरैर्नीलैरिति यावत् । लसितैर्विद्युद्भिर्विराजमानैः । कुन्तलैः केशैः ॥ ६ ॥
70735
70736 यस्तदोड्डयनोत्कानां [यस्तटोड्डयनोत्कानां इति टीकाकृत्संमतः
70737 पाठः] शरभाणां विजृम्भितैः ।
70738 विस्फूर्जति गुहावक्त्रैः कल्पाभ्राणि हसन्निव ॥ ७ ॥
70739
70740 तटेषु उड्डयने उत्कानां सोत्कण्ठानां शरभाणामष्टापदानां
70741 विजृम्भितैर्विस्फूर्जति गर्जति [गर्जति इति क्वचिन्न पठ्यते] ॥ ७ ॥
70742
70743 येन निर्झरनिह्रदैः कन्दरान्तरचारिभिः ।
70744 समुद्रजलकल्लोलविलासो विजितोऽभितः ॥ ८ ॥
70745
70746 कन्दरान्तरेषु चारिभिः प्रतिध्वनितैरिति यावत् । कल्लोलानां विलासः
70747 सगर्जितनृत्यम् ॥ ८ ॥
70748
70749 तस्यैकदेशे वितते रत्नसानौ मनोरमे ।
70750 मुनिभिः स्नानपानार्थं व्योमगङ्गावतारिता ॥ ९ ॥
70751
70752 रत्नमये सानौ प्रस्थदेशे व्योमगङ्गा मन्दाकिनी ॥ ९ ॥
70753
70754 तस्यास्त्रिपथगायास्तु तीरे विकसितद्रुमे ।
70755 रत्नाद्रितटविद्योते कचत्कनकपिञ्जरे ॥ १० ॥
70756
70757 रत्नाद्रेर्मेरोस्तटमिव विद्योतमाने ॥ १० ॥
70758
70759 आसीदभ्युदितज्ञानस्तपोराशिरुदारधीः ।
70760 मुनिदीर्घतपा नाम तपो मूर्तमिवापरम् ॥ ११ ॥
70761
70762 अभ्युदितं ज्ञानं परमात्मबोधो यस्य । मूर्तं धृतशरीरम् ॥ ११ ॥
70763
70764 मुनेर्बभूवतुस्तस्य पुत्रौ द्वाविन्दुसुन्दरौ ।
70765 पुण्यपावननामानौ द्वौ कचाविव वाक्पतेः ॥ १२ ॥
70766
70767 द्वौ कचाविवेत्यभूतोपमा । वाक्पतेर्बृहस्पतेः ॥ १२ ॥
70768
70769 स ताभ्यां सह पुत्राभ्यां भार्यया च सहैकया ।
70770 उवास सरितस्तीरे तस्मिन्सफलपादपे ॥ १३ ॥
70771
70772 अथ काले तयोस्तस्य पुत्रयोर्ज्ञानवानभूत् ।

70773 पुण्यो नाम च यो ज्येष्ठो गुणज्येष्ठश्च राघव ॥ १४ ॥
70774
70775 ज्ञानवान् तत्त्ववित् ॥ १४ ॥
70776
70777 पावनोर्धप्रबुद्धोऽभूत्पूर्वसंध्याम्बुजं यथा ।
70778 मौर्ख्यादधिगतो नाप्तः पदे दोलायितः स्थितः ॥ १५ ॥
70779
70780 अर्धप्रबुद्ध इत्यस्य विवरणं मौर्ख्यादधिगतो निर्गतः । पदे
70781 परमात्मवस्तुनि चानाप्तः । अन्तराले दोलायितः स्थितः ॥ १५ ॥
70782
70783 ततो वहत्यकलिते काले कलितकारणे ।
70784 संवत्सरशते जीर्णदीर्घदेहलतायुषि ॥ १६ ॥
70785
70786 अकलिते प्राणिभिरायुःक्षयत्वेनालक्षिते । संवत्सरशतात्मके । देहलता च
70787 आयुश्च देहलतायुषी जीर्णे देहलतायुषी येन तथाविधे काले वहत्यतिक्रामति सति
70788 मुनिर्देहं जहाविति व्यवहितेन संबन्धः ॥ १६ ॥
70789
70790 अस्माद्द्वङ्गुरभूताढ्याद्वृत्तान्तशतभीषणात् ।
70791 रतिमुत्सृज्य संसाराज्जराजर्जरजीवितः ॥ १७ ॥
70792
70793 जन्मजरामरणस्वर्गपातनरकादिवृत्तान्तशतैर्भीषणात्संसाराद्रति##-
70794 १७ ॥
70795
70796 कलनापक्षिणी नीडं देहं दीर्घतपा मुनिः ।
70797 जहौ गिरिगुहागेहे भारं वैवधिको यथा ॥ १८ ॥
70798
70799 यथा वैवधिको वीवधवाहको गेहे वीवधभारं जहाति तथेत्यर्थः ।
70800 विवधवीवधशब्दावुभयतो बद्धशिक्ये स्कन्दवाह्ये काष्ठविशेषे वर्तेते ॥
70801 १८ ॥
70802
70803 प्रशान्तकलनारम्भं चेत्यरिक्तचिदास्पदम् ।
70804 पदं जगाम नीरागं पुष्पगन्ध इवाम्बरम् ॥ १९ ॥
70805
70806 प्रशान्ताः कलनारम्भा यत्र । चेत्यै रिक्ता रहिता याश्चितस्तत्तज्जीवचैतन्यानि
70807 तेषामास्पदं प्रतिष्ठाभूतं परमपदम् । यथा
70808 पुष्पगन्धोऽम्बरमाकाशं गच्छति तद्वत् ॥ १९ ॥
70809
70810 अथ भार्या मुनेर्देहं प्राणापानविवर्जितम् ।
70811 दृष्ट्वा विलुलितं भूमौ विनालमिव पङ्कजम् ॥ २० ॥
70812
70813 चिरमभ्यस्तया योगयुक्त्या पतिवितीर्णया ।
70814 तत्याज तनुमम्लानां षट्पदी पद्मिनीमिव ॥ २१ ॥
70815
70816 पत्या वितीर्णया उपदिष्टया योगयुक्त्या । अम्लानां रोगजरादिम्लानिरहितामपि
70817 तनुं तत्याज ॥ २१ ॥
70818
70819 भर्तारमेवानुययौ जनस्यादृष्टतां गता ।
70820 प्रभागगनकोशस्थमस्तं यातमिवोडुपम् ॥ २२ ॥
70821
70822 ब्रह्मीभूतं भर्तारमेव अनुययौ स्वयमपि ब्रह्मीभावं प्रापेति यावत् । नहि
70823 ब्रह्मविदां देशान्तरे गतिरस्ति । न तस्य प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते
70824 इति श्रुतेः ॥ २२ ॥

70825
70826 मातापित्रोस्तु गतयोरौर्ध्वदेहिककर्मणि।
70827 पुण्य एव स्थितोऽव्यग्रः पावनो दुःखमाययौ॥ २३॥
70828
70829 अव्यग्रो विशोकः॥ २३॥
70830
70831 शोकोपहृतचित्तोऽसौ भ्रमन्काननवीथिषु।
70832 ज्यायांसमनवेक्ष्यैव पावनो विललाप ह॥ २४॥
70833
70834 ज्यायांसं ज्येष्ठभ्रातरं अनवेक्ष्य। तद्वद्धैर्यमनाल्म्ब्येति यावत्॥ २४॥
70835
70836 अथौर्ध्वदेहिकं कृत्वा मातापित्रोरुदारधीः।
70837 आययौ विपिने पुण्यः पावनः शोकलालसम्॥ २५॥
70838
70839 पुण्य उवाच।
70840
70841 किं पुत्र घनतां शोकं नयस्यान्ध्यैककारणम्।
70842 बाष्पधाराधरं घोरं प्रावट्काल इवाम्बुजम्॥ २६॥
70843
70844 पितृसमो ज्येष्ठ इति शास्त्रात्पुत्रेति संबोधनम्। शोकं दुःखमूष्माणं च
70845 । घनतां निबिडतां मेघतां च। अत एव
70846 बाष्पधाराधरमान्ध्यैककारणमिति च श्लेषात् साधारणे विशेषणे।
70847 आम्बुजं अम्बुजसंबन्धिनमम्बुजसदृशनेत्रसंबन्धिनं च॥ २६॥
70848
70849 पिता तव महाप्राज्ञ गतः सार्धं त्वदम्बया।
70850 स्वामेव परमात्मात्मपदवीं मोक्षनामिकाम्॥ २७॥
70851
70852 तत्स्थानं सर्वजन्तूनां तद्रूपं विजितात्मनाम्।
70853 स्वभावमभिसंपन्ने किं पितर्यनुशोचसि॥ २८॥
70854
70855 स्थानं उत्पत्त्यादिकालत्रयेऽप्याधारभूतम्। जन्तूनां जननधर्मिणां
70856 प्राणिनाम्। विजितात्मनां ब्रह्मविदाम्। रूपं स्वरूपम्। अत एव न पितुः
70857 शोच्यतेत्याह - स्वभावमिति॥ २८॥
70858
70859 ईदृशी तु त्वया बद्धा भावनेह विमोहजा।
70860 संसारे यदशोच्योऽपि त्वया तातोनुशोच्यते॥ २९॥
70861
70862 ईदृशी इयमेव मम माता अयमेव मम पितेत्येवंरूपा। यत् यया भावनया
70863 ॥ २९॥
70864
70865 न सैव भवतो माता नासावेव पिता तव।
70866 न भवानेष तनयस्तयोर्निःसंख्यपुत्रयोः॥ ३०॥
70867
70868 निःसंख्याः संख्यातुमशक्याः पुत्रा ययोः॥ ३०॥
70869
70870 मातापितृसहस्राणि समतीतानि ते सुत।
70871 बहून्यम्बुप्रवाहस्य निम्नानीव वने वने॥ ३१॥
70872
70873 निम्नानि गम्भीरस्थानानीव॥ ३१॥
70874
70875 असंख्यपुत्रयोर्नैव भवानेव सुतस्तयोः।
70876 सरित्तरङ्गवत्पुत्र गताः पुत्रगणा नृणाम्॥ ३२॥

70877
70878 हे पुत्र नृणामन्येषामपि ॥ ३२ ॥
70879
70880 अस्मत्पित्रोरतीतानि पुत्रलक्षाण्यनेकशः ।
70881 पत्रकोरकवृन्तानि लताविटपयोरिव ॥ ३३ ॥
70882
70883 विटपग्रहणेन विटपी लक्ष्यते । विटपिनोरिवेति वा पाठः ॥ ३३ ॥
70884
70885 मित्रबान्धववृन्दानि जन्तोर्जन्मनि जन्मनि ।
70886 ऋतावृतावतीतानि फलानीव महातरोः ॥ ३४ ॥
70887
70888 शोचनीया यदि स्नेहान्मातापितृसुताः सुत ।
70889 तदतीता न शोच्यन्ते किमजस्रं सहस्रशः ॥ ३५ ॥
70890
70891 न शोच्यन्ते त्वयेति शेषः ॥ ३५ ॥
70892
70893 प्रपञ्चोऽयं महाभाग दृश्यते जागते भ्रमे ।
70894 परमार्थेन ते प्राज्ञ नास्ति मित्रं न बान्धवाः ॥ ३६ ॥
70895
70896 जागते जगत्कल्पनानिमित्ते भ्रमे मोहे सत्येव दृश्यते । परमार्थेन
70897 परमार्थतस्तु ते तव न । तथाचोक्तं वार्तिके -
70898 अविद्यास्तीत्यविद्यायामेवासित्वा प्रकल्प्यते । ब्रह्मदृष्ट्या त्वविद्येयं न
70899 कथंचन युज्यते इति ॥ ३६ ॥
70900
70901 न नाश इव हि भ्रातः परमार्थेन विद्यते ।
70902 महत्यपि चिरातप्ते मराविव पयोलवाः ॥ ३७ ॥
70903
70904 परमार्थेन परमार्थदृष्ट्या मरोर्मरुत्वादेव पयोलवा न सन्ति तत्र
70905 चिरातप्ते सुतराम् । तथा ब्रह्मस्वाभाव्यादेव नाशो नास्ति तत्र तत्त्वबोधे
70906 सुतरामिति द्योतनायापिशब्दः ॥ ३७ ॥
70907
70908 एता याः प्रेक्षसे लक्ष्मीश्छत्रचामरचञ्चलाः ।
70909 स्वप्न एव महाबुद्धे दिनानि त्रीणि पञ्च वा ॥ ३८ ॥
70910
70911 लक्ष्मीः राज्यादिसंपदः । स्वप्न एव ता इति शेषः ॥ ३८ ॥
70912
70913 दृष्ट्या तु पारमार्थिक्या पुत्रं सत्यं विचारय ।
70914 नैव त्वं न वयं चैव भ्रान्तिमन्तः परित्यज ॥ ३९ ॥
70915
70916 अयं गतो मृतश्चायमिति दुर्दृष्टयः पुरः ।
70917 स्वसंकल्पोपतापोत्था दृश्यन्ते नतु सत्यतः ॥ ४० ॥
70918
70919 स्वसंकल्पलक्षणो य उपतापः संनिपातभ्रमस्तदुत्थाः पुरो दृश्यन्ते ॥ ४०
70920 ॥
70921
70922 अज्ञानविस्तीर्णमरौ विलोलं
70923 शुभाशुभस्यन्दमयैस्तरङ्गैः ।
70924 सवासनानाममरीचिवारि
70925 परिस्फुरत्येतदनन्तरूपम् ॥ ४१ ॥
70926
70927 अज्ञानलक्षणेनातपेन विस्तीर्णे आच्छन्ने मरौ मरुभूमिसदृशे आत्मनि ।
70928 स्वसंकल्पवासनानामकं मरीचिवारि मृगतृष्णोदकम् ॥ ४१ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये
मोक्षोपायेषुपशमप्रकरणे पावनबोधनं नामैकोनविंशः सर्गः
॥ १९ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
पावनबोधनं नामैकोनविंशः सर्गः ॥ १९ ॥

विंशः सर्गः २०

पुण्य उवाच ।

कः पिता किं च वा मित्रं का माता के च बान्धवाः ।
स्वबुद्ध्यैवावधूयन्ते वात्यया जनपांसवः ॥ १ ॥

नानायोनिषु जन्मानि पावनस्यात्मनस्तथा ।
इह पुण्येन कीर्त्यन्ते शोकमोहापनुत्तये ॥ १ ॥

शोकस्य मोहमूलकत्वान्मोहापनयनेनैवास्य शोकोऽपनेय इति मन्यमानः
पुण्यस्तद्विषयाणां पित्रादीनामनिर्वचनीयत्वान्मिथ्यात्वं प्रतिज्ञाय
ज्ञानापनोद्यतामाह - कः पितेति । कः किंस्वरूपः । तत्त्वतो
निर्वक्तुमशक्याः सर्वेऽपीत्यर्थः । स्वबुद्ध्या स्वभ्रान्त्यैवावधूयन्ते
उत्थाप्यन्ते । अथवा स्वविवेकबुद्धिलक्षणया वात्यया
स्वजनपांसवोऽवधूयन्ते निरस्यन्ते ॥ १ ॥

बन्धुमित्रसुतस्नेहद्वेषमोहदशामयः ।
स्वसंज्ञामात्रकेणैव प्रपञ्चोऽयं वितन्यते ॥ २ ॥

स्नेहद्वेषमोहदशालक्षण आमयो रोगः । स्वसंज्ञा स्वकृतः
संकेतस्तन्मात्रकेणैव ॥ २ ॥

बन्धुत्वे भावितो बन्धुः परत्वे भावितः परः ।
विषामृतदशेवेह स्थितिर्भावनिबन्धनी ॥ ३ ॥

उक्तमुपपादयति - बन्धुत्वे इति । भावितो दृढभावनया संकेतितः ।
परत्वे शत्रुत्वे । यथा विषकृतिभिर्विषस्य जीवनहेतुत्वेन
दृढभावनात्तान्प्रति अमृतदृशा अन्यस्तद्विपरीतभावनाद्विषदशा चेति
भावनिबन्धनी स्थितिस्तद्वदित्यर्थः ॥ ३ ॥

एकत्वे विद्यमानस्य सर्वगस्य किलात्मनः ।
अयं बन्धुः परश्चायमित्यसौ कलना कुतः ॥ ४ ॥

आस्तां बन्धुतत्त्वचिन्ता तदनुशोचिनस्तव स्वतत्त्वविमर्शमात्रेण ते निरसितुं
शक्या इत्याशयेनाह - एकत्वे इति । सर्वदेहेष्वेकत्वे अभिन्नत्वे ॥ ४ ॥

रक्तमांसास्थिसंघाताद्देहादेवास्थिपञ्जरात् ।
कोऽहं स्यामिति चेत्तेन स्वयं पुत्र विचारय ॥ ५ ॥

नन्वहं कथं सर्वदेहेष्वेक इति चेदहं प्रत्ययवेद्यमेव कोऽसाविति
विमृशेत्याह - रक्तेति । रक्तादिजडसंघाताद्देहादन्यश्चेतनस्वभावः
कोऽहं स्यामिति विचारयेत्यर्थः ॥ ५ ॥

70981
70982 दृष्ट्या तु पारमार्थिक्या न कश्चित्त्वं न वास्म्यहम् |
70983 मिथ्याज्ञानमिदं पुण्यः पावनश्चेति वल्गति || ६ ||
70984
70985 त्वं पावनशब्दवाच्यो देहादिर्न कश्चित् | अहं पुण्यशब्दवाच्यः |
70986 मिथ्याज्ञानं देहात्मताभ्रम एव वल्गति प्रथते || ६ ||
70987
70988 कस्ते पिता कश्च सुहृत्का माता कश्च वा परः |
70989 खस्यानन्तविलासस्य किमत्वं किं स्वमुच्यताम् || ७ ||
70990
70991 एवं पित्रादिशरीरमपि विमर्शे भ्रान्तिरेवेत्याह - क इति | यदि तु
70992 देहाद्युपाधिनिष्कृष्टं चिदाकाशमेवाहं त्वं पित्रादयश्चेति मन्यसे तदा
70993 मम पिता मम भ्रातेत्यादिभेदघटितः स्वत्वादिसंबन्धो न घटत एवेत्याह
70994 - खस्येति | खस्य चिदाकाशस्य || ७ ||
70995
70996 असि चेत्त्वं तदन्येषु यातेषु बहुजन्मसु |
70997 ये बन्धवो ये विभवाः किं तानपि न शोचसि || ८ ||
70998
70999 लिङ्गशरीराण्येवाहं मद्बान्धवाश्चेति चेत्तत्राह - असि चेदिति | त्वं
71000 मद्यावृत्तलिङ्गात्मा असि चेत्तत्तदा यातेष्वतीतेषु किं किमर्थं न शोचसि || ८ ||
71001
71002 बभूवुस्ते सुपुष्पासु स्थलीषु मृगयोनिषु |
71003 बहवो बन्धवो मार्गास्तान्कथं नानुशोचसि || ९ ||
71004
71005 जन्मान्तरबन्धून्प्रपञ्चयति - बभूवुरित्यादिना | मार्गाः मृगयोनिजा
71006 जीवाः || ९ ||
71007
71008 बभूवुस्ते सपद्मासु तटीष्वम्भोजिनीषु ते |
71009 हंसस्य बन्धवो हंसास्तान्कथं नानुशोचसि || १० ||
71010
71011 अम्भोजिनीषु पद्मवनीषु नद्यादितटीषु हंसस्य ते ते तत्कालप्रसिद्धा हंसा
71012 बन्धवो बभूवुः | तटीष्वम्भोधियोषिताम् इति पाठे नदीनां तटीष्वित्यर्थः ||
71013 १० ||
71014
71015 बभूवुस्तेऽलमन्यत्र चित्रासु वनराजिषु |
71016 बहवो बन्धवो वृक्षास्तान्कथं नानुशोचसि || ११ ||
71017
71018 अन्यत्रान्येषु जन्मसु | अलमत्यन्तं बन्धवो बभूवुः || ११ ||
71019
71020 बभूवुस्ते महोग्रेषु शिखरेषु महीभृताम् |
71021 बहवो बान्धवाः सिंहास्तान्कथं नानुशोचसि || १२ ||
71022
71023 बभूवुस्ते स्रवन्तीषु सरःस्वम्भोजिनीषु च |
71024 बहवो बन्धवो मत्स्यास्तान्कथं नानुशोचसि || १३ ||
71025
71026 स्रवन्तीषु नदीषु || १३ ||
71027
71028 बभूविथ दशार्णेषु कपिलो वनवानरः |
71029 राजपुत्रस्तुषारेषु पुण्ड्रेषु वनवायसः || १४ ||
71030
71031 इदानीं भ्रातुर्जन्मभेदान्योगबलेन दृष्टान्विशिष्य स्मारयन्नाह -
71032 बभूविथेति | दशार्णतुषारपुण्ड्रादयो देशविशेषाः || १४ ||

71033
71034 हैहयेषु च मातङ्गस्त्रिगर्तेषु च गर्दभः |
71035 शाल्वेषु सरमापुत्रः पतत्री सरलद्रुमे || १५ ||
71036
71037 सरमा शुनी तस्याः पुत्रः | पतत्री पक्षी अर्थाच्छाल्वेष्वेव || १५ ||
71038
71039 विन्ध्याद्रौ पिप्पलो भूत्वा घुणो भूत्वा महावटे |
71040 मन्दरे कुक्कुटो भूत्वा विप्रो जातोऽसि कन्दरे || १६ ||
71041
71042 घुणः काष्ठकीटकः अर्थान्मन्दरस्यैव कन्दरे दरीप्रदेशे || १६ ||
71043
71044 कोसलेषु द्विजो भूत्वा भूत्वा वङ्गेषु तित्तिरिः |
71045 अश्वो भूत्वा तुषारेषु जातस्त्वं ब्रह्मणोऽध्वरे || १७ ||
71046
71047 पुष्करेषु प्रसिद्धे ब्रह्मणः प्रजापतेरध्वरे जातः पशुरिति शेषः | यातः इति
71048 वा पाठः || १७ ||
71049
71050 यः कीटस्तालकन्दान्तर्मशको य उदुम्बरे |
71051 यः प्राग्बको विन्ध्यवने स त्वं पुत्र ममानुजः || १८ ||
71052
71053 तालतरोः कन्दो मूलं तदन्तः | त्रीण्यपि जन्मानि विन्ध्यवने || १८ ||
71054
71055 हिमवत्कन्दरे भूर्जतनुत्वग्ग्रन्थिकोटरे |
71056 पिपीलिको यः षण्मासान्सोऽयं त्वमनुजो मम || १९ ||
71057
71058 भूर्जवृक्षस्य तन्वी मृदुला या त्वक् तद्ग्रन्थिप्रभवे कोटरे बिले || १९ ||
71059
71060 स्थितः सीमान्तकुग्रामगोमये यश्च वृश्चिकः |
71061 सार्धसंवत्सरं साधो सोऽयं त्वमनुजो मम || २० ||
71062
71063 अर्थात्स्वदेशसीमाया अन्ते यः कुग्रामस्तत्रत्ये शुष्कगोमयोत्करे || २० ||
71064
71065 पुलिन्दीस्तनपीठेषु निलीनं येन कानने |
71066 षट्पदेनेव पद्मेषु सोऽयं त्वमनुजो मम || २१ ||
71067
71068 लीनं अर्थात्पुलिन्दीशिशुज्न्म प्राप्येति गम्यते || २१ ||
71069
71070 एतास्वन्यासु बह्वीषु जनयोनिषु पुत्रक |
71071 जातोऽसि जम्बूद्वीपेऽस्मिन्पुरा शतसहस्रशः || २२ ||
71072
71073 इत्थं तवात्मनश्चैव प्राक्तनं वासनाक्रमम् |
71074 पश्यामि सूक्ष्मया बुद्ध्या सम्यग्दर्शनशुद्धया || २३ ||
71075
71076 ममापि बह्व्यो बहुधा योनयो मोहमन्थराः |
71077 समतीताः स्मराम्यद्य ता ज्ञानोदितया दृशा || २४ ||
71078
71079 भ्रातृजन्मोक्तीरुपसंहृत्य स्वजन्मभेदान्वक्तुमारभते - ममापीति |
71080 मोहमन्थरा अज्ञानजडाः || २४ |||
71081
71082 त्रिगर्तेषु शुको भूत्वा भेको भूत्वा सरित्तटे |
71083 वनेषु लावको भूत्वा जातोऽहमिह कानने || २५ ||
71084

71085 लावकः क्षुद्रपक्षिविशेषः ॥ २५ ॥
71086
71087 भुक्त्वा पुलिन्दतां विन्ध्ये कृत्वा वङ्गेषु वृक्षताम् ।
71088 उष्ट्रत्वमपि विन्ध्याद्रौ जातोऽहमिह कानने ॥ २६ ॥
71089
71090 वृक्षतां कृत्वा वृक्षजन्म भुक्त्वेत्यर्थः । उष्ट्रत्वमुष्ट्रजन्म ।
71091 न्युब्जत्वम् इति पाठेऽपि न्युब्जपृष्ठमुष्ट्रत्वमेव भुक्त्वेह जात इत्यर्थः ॥ २६
71092 । ।
71093
71094 यश्चातको हिमगिरौ यो राजा पौण्ड्रमण्डले ।
71095 व्याघ्रो यः सह्यकुञ्जेषु स एवाहं [स एवेह इति पाठः]
71096 तवाग्रजः ॥ २७ ॥
71097
71098 यो गृध्रो दशवर्षाणि यो ग्राहो मासपञ्चकम् ।
71099 यः समानां सिंहः स एवेह तवाग्रजः ॥ २८ ॥
71100
71101 इहास्मिञ्जन्मनि ॥ २८ ॥
71102
71103 आन्ध्रग्रामचकोरेण तुषारनृपराजिना ।
71104 श्रीशैलाचार्यपुत्रेण दम्भवत्कथ्यते मया ॥ २९ ॥
71105
71106 तुषारेषु हिमवत्प्रदेशेषु नृपवद्विराजनशीलेन माण्डलिकेनेत्यर्थः ।
71107 अपुण्यस्य स्वस्य लोकवञ्चनाय पुण्यनाम्ना प्रख्यापनं
71108 दम्भस्तद्वत्स्थितेन मयेत्युत्प्रेक्षा । मयेदं कथ्यते तव इति पाठे तु स्पष्टम्
71109 ॥ २९ ॥
71110
71111 सर्वे विविधसंसारा विविधाचारचेष्टिताः ।
71112 विलासा जन्मनो भ्रान्ते स्मर्यन्ते प्राक्तना मया ॥ ३० ॥
71113
71114 जन्मनः जन्मभेदरूपाया भ्रान्तेर्विलासाः ॥ ३० ॥
71115
71116 एवं स्थिते जगज्जाता बान्धवाः शतशो गताः ।
71117 पितरो मातरश्चैव भ्रातरः सुहृदस्तथा ॥ ३१ ॥
71118
71119 उपसंहृत्य प्रकृते योजयति - एवं स्थिते इति ॥ ३१ ॥
71120
71121 कांस्तान्समनुशोचावो न शोचावश्च कानपि ।
71122 बन्धूनिहातिशोचाव ईदृश्येव जगद्गतिः ॥ ३२ ॥
71123
71124 तान् प्राक्तनान्बन्धून्कान् शोचावः । तान्बन्धूनतिक्रम्य इह कान् शोचावः । न
71125 कांश्चिदपि शोचावः । यत ईदृश्येव जगद्गतिरित्यर्थः ॥ ३२ ॥
71126
71127 अनन्ताः पितरो यान्ति यान्त्यनन्ताश्च मातरः ।
71128 इह संसारिणां पुंसां वनपादपपर्णवत् ॥ ३३ ॥
71129
71130 किं प्रमाणमतः पुत्र दुःखस्यात्र सुखस्य च ।
71131 तस्मात्सर्वं परित्यज्य तिष्ठावः स्वच्छतां गतौ ॥ ३४ ॥
71132
71133 किं प्रमाणमवधिः । सर्वं शोकं दृश्यमात्रं वा ॥ ३४ ॥
71134
71135 प्रपञ्चभावनां त्यक्त्वा मनस्यहमिति स्थिताम् ।
71136 तां गतिं गच्छ भद्रं ते यां यान्ति गतिकोविदाः ॥ ३५ ॥

गतिकोविदा आत्मावगतिकुशलाः ॥ ३५ ॥

इहाजवं जवीभावं पतनोत्पतनात्मकम् ।
न [नानुशोचन्ति इति पाठः] च शोचन्ति सुधियश्चिरं वल्गन्ति
केवलम् ॥ ३६ ॥

पतनमधोगतिरुत्पतनमूर्ध्वगतिस्तदात्मकं आजवं
जवीभावमविश्रान्तभ्रमणम् । केवलं निरभिमानतया वल्गन्ति व्यवहरन्ति ॥
३६ ॥

भावाभावविनिर्मुक्तं जरामरणवर्जितम् ।
संस्मरत्मानमव्यग्रो मा विमूढमना भव ॥ ३७ ॥

न ते दुःखं न ते जन्म न ते माता न ते पिता ।
आत्मैवसि न सद्बुद्धे त्वमन्यः कश्चिदेव हि ॥ ३८ ॥

त्वमात्मैवासि नान्यः अनात्मभूतदेहादिः कश्चित्त्वमसीत्यर्थः ॥ ३८ ॥

अस्यां संसारयात्रायां नानाभिनयदायिनः ।
अज्ञा एव नराः साधुरसभावसमन्विताः ॥ ३९ ॥

नर्तकवन्नानाभिनया अभिनिवेशचेष्टास्तद्दायिनस्तत्कारिणोऽज्ञामूढा एव
नराः साधुरसभावः पुरुषार्थसारताबुद्धिस्तत्समन्विता इत्यर्थः ॥ ३९ ॥

मध्यस्थदृष्टयः स्वस्था यथाप्राप्तार्थदर्शिनः ।
तज्ज्ञास्तु प्रेक्षका एव साक्षिधर्मे व्यवस्थिताः ॥ ४० ॥

तज्ज्ञास्तत्त्वज्ञास्तु तटस्थदृष्टय उदासीनाः प्रेक्षका एव । अत एव
साक्षिधर्मे व्यवस्थिता ॥ ४० ॥

कर्तारोऽपि न कर्तारो यथा दीपा निशागमे ।
आलोककर्मणामेवं तज्ज्ञा लोकस्थिताविह ॥ ४१ ॥

निशाया आगमे आगमने सति आलोककर्मणां प्रकाशनक्रियाणां यथा दीपाः
संनिधिमात्रेण कर्तारोऽपि अव्याप्रियमाणत्वादकर्तार एवं तज्ज्ञा
लोकव्यवहारस्थितावित्यर्थः ॥ ४१ ॥

प्रतिबिम्बे न दृश्यन्ते स्वात्मबिम्बगतैरपि ।
यथा दर्पणरत्नाद्यास्तथा कार्ये महाधियः ॥ ४२ ॥

दृष्टान्तान्तरमाह - प्रतिबिम्बे इति । यथा करादिगतदर्पणा रत्नाद्याः
प्रतिबिम्बोपाधयः स्वात्मनो बिम्बभूतसर्वदेहगतैः सर्वैर्धर्मैः सहापि
स्वात्मनि कृते प्रतिबिम्बे बिम्बधर्मान्तरवत्स्वयं निविष्टा न दृश्यन्ते
तद्वत्स्वात्मन्यध्यस्ते कार्ये कर्तारोऽपि मधाधियः स्वयमभिनिविष्टा न
भवन्तीत्यर्थः ॥ ४२ ॥

सर्वैषणामयकलङ्कविवर्जितेन
स्वस्थात्मभावकलितेन हृदब्जमध्ये ।
पुत्रात्मनात्मनि महामुनिनामुनैव
संत्यज्य संभ्रममलं परितोषमेहि ॥ ४३ ॥

71189 हे पुत्र सर्वैरेषणामयकलङ्कैर्विवर्जितेन अत एव मुनिना मननशीलेन
71190 आत्मना स्वेनैव हृदब्जमध्ये स्वस्थात्मस्वभावेन कलितेन साक्षात्कृतेन
71191 संसारसंभ्रमं अलं निःशेषं त्यक्त्वा अमुना परिशिष्टेनात्मनैव
71192 परितोषमेहीत्यर्थः ॥ ४३ ॥
71193
71194 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु
71195 उपशमप्रकरणे पावनबोधो नाम विंशः सर्गः ॥ २० ॥
71196
71197 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे पावनबोधो
71198 नाम विंशः सर्गः ॥ २० ॥
71199
71200
71201 एकविंशः सर्गः २१
71202
71203 श्रीवसिष्ठ उवाच ।
71204
71205 एवं प्रबोधितस्तेन तदा पुण्येन पावनः ।
71206 प्रबोधमाप प्राकाश्यं प्रभात इव भूतलम् ॥ १ ॥
71207
71208 तृष्णापाशक्षयो मोक्षो ह्याशया चित्तवृत्तयः ।
71209 निराशस्यात्मपूर्णस्य स्वतो मुक्तिरितीर्यते ॥ १ ॥
71210
71211 प्रबोधं परिनिष्ठितमात्मनिश्चयम् ॥ १ ॥
71212
71213 उभावपि ततः सिद्धौ ज्ञानविज्ञानपारगौ ।
71214 विचेरतुर्वने तस्मिन्यावदिच्छमनिन्दितौ ॥ २ ॥
71215
71216 यावदिच्छं प्रारब्धक्षयपर्यन्तमिति यावत् ॥ २ ॥
71217
71218 ततः कदाचित्कालेन निर्वाणपदमागतौ ।
71219 तौ विदेहौ गतस्नेहौ दीपाविव शमं गतौ ॥ ३ ॥
71220
71221 गतस्नेहौ क्षीणतैलौ ॥ ३ ॥
71222
71223 एवं प्राग्भुक्तदेहानामनन्ता जनबन्धुता ।
71224 आः कैः किं गृह्यते ताभ्यः किं वा संत्यज्यतेऽनघ ॥ ४ ॥
71225
71226 उक्तमाख्यानमुपसंहृत्य प्रकृते योजयति - एवमिति । जनबन्धुता
71227 सुहृज्जनबन्धुसमूहः । आः इति विस्मये निपातः । गृह्यते शोच्यत्वेनोपादीयते
71228 ॥ ४ ॥
71229
71230 तस्मादासामनन्तानां तृष्णानां रघुनन्दन ।
71231 उपायस्त्याग एवैको न नाम परिपालनम् ॥ ५ ॥
71232
71233 आसां सर्वशोकादिमूलभूतानां प्रतिविषयमनन्तानाम् । परिपालनं
71234 विषयसंपादनैरभिवर्धनम् ॥ ५ ॥
71235
71236 चिन्तनेनैधते चिन्ता त्विन्धनेनेव पावकः ।
71237 नश्यत्यचिन्तनेनैव विनेन्धनमिवानलः ॥ ६ ॥
71238
71239 विषयाचिन्तनमेव तत्परित्याग इत्याशयेनाह - चिन्तनेनेति । एधते वर्धते ॥ ६
71240 ॥

ध्येयत्यागरथारूढः करुणोदारया दृशा ।
लोकमालोकयन्दीनमातिष्ठोत्तिष्ठ राघव ॥ ७ ॥

ध्येयत्यागः प्राग्वर्णितध्येयवासनात्यागः । करुणा सर्वभूतानुकम्पा ।
आतिष्ठ अनुतिष्ठ । प्रकृतव्यवहारमिति शेषः ॥ ७ ॥

एषा ब्रह्मी स्थितिः स्वच्छा निष्कामा विगतामया ।
एनां प्राप्य महाबाहो विमूढोऽपि न मुह्यति ॥ ८ ॥

विमूढो व्यवहारेष्वचतुरोऽपि न मुह्यति ॥ ८ ॥

एकं विवेकं सुहृदमेकां प्रौढसखीं धियम् ।
आदाय विहरन्नेवं संकटेषु न मुह्यति ॥ ९ ॥

विवेकलक्षणं सुहृदं मित्रम् । धियं परमार्थबोधलक्षणां
प्रियसखीम् ॥ ९ ॥

विनिवारितसर्वार्थादपहस्तितबान्धवात् ।
न स्वधैर्याद्दते कश्चिदभ्युद्धरति संकटात् ॥ १० ॥

विनिवारिताः परित्यक्ताः सर्वे अर्था धनानि येन । अपहस्तिता
अन्तःस्नेहविच्छेदादपहस्तिता हस्तेन ककुदि प्रणोद्य निरस्ता इव बान्धवा येन ।
अभ्युद्धरति संकटादुन्नयति स्वमिति शेषः ॥ १० ॥

वैराग्येणाथ शास्त्रेण महत्त्वादिगुणैरपि ।
यत्नेनापद्विघातार्थं स्वयमेवोन्नयेन्मनः ॥ ११ ॥

उन्नयेत् उत्कर्षं नयेत् विषयगर्तादुद्धरेद्वा ॥ ११ ॥

न तत्त्रिभुवनैश्वर्यान्न कोशाद्रत्नधारिणः ।
फलमासाद्यते चित्ताद्यन्महत्त्वोपबृंहितात् ॥ १२ ॥

तत् सर्वदुःखप्रशमनोपलक्षितनिरतिशयानन्दलाभलक्षणं फलम् ।
महत्त्वं तुच्छविषयानभिलाषस्तेनोपवृंहितादुपचितात् ॥ १२ ॥

तदेतस्मिञ्जगत्कुक्षौ पातोत्पातनदोलनैः ।
पतन्ति पुरुषा ये वै मनस्तेषां गतज्वरम् ॥ १३ ॥

पाता अधोगतयः उत्पतनान्यूर्ध्वगतयः दोलनानि मर्त्यलोकेष्वेव
जन्मपरम्परया भ्रमणानि च तैस्तन्निमित्तभूतैर्विषयाभिलाषैर्ये पतन्ति
तेषां मनः सदैव गतज्वरं प्राप्तसंतापमेव न
कदाचिद्विश्राम्यतीत्यर्थः । अथवा पूर्वश्लोकान्नेत्यनुवर्त्य ये न पतन्ति तेषां
मनोगतज्वरं निःसंतापमिति व्याख्येयम् । पुनन्ति यतन्ते इति वा पाठे
पातयन्त्युत्पातयन्ति च ये विषयरागास्ते पातोत्पातनास्तेभ्यो दोलनैरुत्क्षेपणैः
प्रत्याहारोपायैरात्मनि स्थैर्यापादनेन ये मनः पुनन्ति यतन्ते वा तेषां
मनोगतज्वरं शान्तत्रिविधतापं भवतीति व्याख्येयम् ॥ १३ ॥

पूर्णे मनसि संपूर्णं जगत्सर्वं सुधाद्रवैः ।
उपानद्गूढपादस्य ननु चर्मास्तृतैव भूः ॥ १४ ॥

ननु संतापहेतुष्वाध्यात्मिकाधिदैविकाधिभौतिकेषु

71293 रोगवर्षातपचोरसर्पादिषु सत्सु कथं मनःप्रशान्तिमात्रेण
71294 सर्वतापनिवृत्तिस्तत्राह - पूर्णे इति | त्रिविधा अपि संतापा मनोदोषमूला एव
71295 | मनसि विशुद्धब्रह्मामृतरसपूर्णे सति सर्वं जगदानन्दपूर्णमेव भाति
71296 | यथा मृदुलोपानद्भ्यां संवृतचरणस्य कुशकण्टकादिसंकुलापि
71297 सर्वा भूर्मृदुलतरचर्मास्तृतैव भाति तद्वदित्यर्थः || १४ ||
71298
71299 वैराग्यात्पूर्णतामेति मनो नाशावशानुगम् |
71300 आशया रिक्ततामेति शरदेव सरोमलम् || १५ ||
71301
71302 न आशावशानुगमिति च्छेदः | रिक्ततां शुष्कार्णवोदरकल्पताम् | सरोमलं
71303 भिन्नतडागपङ्कः | सरोजलम् इति वा पाठः || १५ ||
71304
71305 हृदयं शून्यतामेति प्रकटीकृतकोटरम् |
71306 अगस्तिपीतार्णववदाशाविवशचेतसाम् || १६ ||
71307
71308 रिक्ततामेतीत्येतद्दृष्टान्तेन विवृणोति - हृदयमिति | कोटरस्य
71309 प्रकटीकरणपत्रान्तर्गतलोभदैन्यादिदोषाणां ग्राहभुजङ्गादीनां च
71310 स्फुटं प्रकाशनम् || १६ ||
71311
71312 यस्य चित्ततरौ स्फारे तृष्णाचपलमर्कटी |
71313 न वल्गति महत्तस्य राजते हृद्वनं ततम् || १७ ||
71314
71315 स्फारे धर्मज्ञानवैराग्यशान्तिदान्त्यादिपुष्पफलपल्लवादिसमृद्धे
71316 चित्ततरौ मनोवृक्षे | हृवनं मनोबुद्धिरहंकारश्चित्तमिति
71317 चतुर्विधवृक्षघटितमन्तःकरणवनम् || १७ ||
71318
71319 पद्माक्षकोशं त्रिजगद्गोष्पदं योजनव्रजम् |
71320 निमेषार्धं महाकल्पः स्पृहारहितचेतसाम् || १८ ||
71321
71322 निःस्पृहं प्रशंसति - पद्माक्षेत्यादिना | त्रिजगत्त्रैलोक्यमपि
71323 पद्मबीजकोशवदल्पमिति यावत् | अपरिच्छिन्नब्रह्मसुखदृशा
71324 ब्रह्माण्डान्तर्गतसुखलवानामल्पतरत्वात् | एवं नित्यसर्वगतब्रह्मदृशा
71325 देशकालपरिच्छिन्नाधिपत्यादिविभवोऽप्यल्प एवेत्याशयेनाह - गोष्पदमिति
71326 || १८ ||
71327
71328 शीतता सा न शीतांशोर्न हिमाचलकन्दरे |
71329 न रम्भाचन्दनावल्यां निःस्पृहेषु मनःसु या || १९ ||
71330
71331 शीतता निस्तापाह्लादः | रम्भाः कदल्यश्चन्दनतरवश्च तदावल्यां तद्वने
71332 यथायोग्यं तत्संश्लेषे वा || १९ ||
71333
71334 न तथा भाति पूर्णेन्दुर्न पूर्णः क्षीरसागरः |
71335 न लक्ष्मीवदनं कान्तं स्पृहाहीनं यथा मनः || २० ||
71336
71337 यथाब्दलेखा शशिनं सुधालेपं मषी यथा |
71338 दूषयत्येवमेवान्तर्नरमाशापिशाचिका || २१ ||
71339
71340 अब्दलेखा मेघराजिः | मषी कज्जलद्रवः | दूषयति मलिनयति || २१ ||
71341
71342 आशाख्याश्चित्तवृक्षस्य शाखाः स्थगितदिक्तटाः |
71343 तासु च्छिन्नास्वरूपत्वं याति चित्तमहाद्रुमः || २२ ||
71344

71345 स्थगितदिक्तटा आच्छादितदिगन्ताः | अरूपत्वं ब्रह्मतां स्थाणुतां च || २२ ||
71346
71347 छिन्नतृष्णामहाशाखे चित्तस्थाणौ स्थितिं गते |
71348 एकरूपतया धैर्यं प्रयाति शतशाखताम् || २३ ||
71349
71350 निरोधककुवृक्षे च्छिन्ने तदधः प्ररूढः सद्वृक्ष इव पश्चाद्धैर्यं
71351 शतशाखतां प्रयाति | वर्धत यावत् || २३ ||
71352
71353 अनस्तमितधैर्येण तेन चित्ते क्षयं गते |
71354 तत्पदं प्राप्यते राम यत्र नाशो न विद्यते || २४ ||
71355
71356 अस्तु धैर्याभिवृद्धिः किं ततस्तत्राह - अनस्तमितेति | अनस्तमितधैर्येण
71357 अभिवृद्धवैराग्यजितेन्द्रियत्वद्वन्द्वसहिष्णुत्वादिधैर्यवता पुरुषेण || २४ ||
71358
71359 एतासां चित्तवृत्तीनामाशानामुत्तमाशयः |
71360 न ददासि प्ररोहं चेत्तद्भयं नास्ति राघव || २५ ||
71361
71362 प्ररोहं पुनः प्ररोहावकाशं न ददासि चेत्तर्हि जन्मादिभयं
71363 नास्तीत्यर्थः || २५ ||
71364
71365 चित्तं वृत्तिविहीनं ते यदा यातमचित्तताम् |
71366 तदा मोक्षमयीमन्तः सत्तामाप्नोषि तां तताम् || २६ ||
71367
71368 ततां पूर्णाम् || २६ ||
71369
71370 चित्तकौशिकपक्षिण्या तृष्णया क्षुब्धयान्तरे |
71371 अमङ्गलानि विस्तारमलमायान्ति राघव || २७ ||
71372
71373 चित्ते प्रविष्टया कौशिकपक्षिण्या उलूक्या | यदा कदाचिद्गृहेऽपि उलूकी प्रविष्टा
71374 चेन्मृत्युदारिद्र्योपप्लवाद्यमङ्गलानि भवन्तीति ज्योतिःशास्त्रादौ प्रसिद्धम् |
71375 सा चेद्देहान्तश्चित्ते निरन्तरं प्रविश्य सर्वव्यवहारेषु क्षुब्धा तिष्ठति तदा
71376 तया अमङ्गलानि सर्वाण्येव अलं विस्तारमायान्तीति किं वाच्यमिति भावः || २७ ||
71377
71378 चिन्तनं वृत्तिरित्युक्तं वर्तते चित्तमाशया |
71379 चित्तवृत्तिमतो ह्याशां त्यक्त्वा निश्चित्ततां व्रज || २८ ||
71380
71381 ननु आशात्यागमात्रेण कथं चित्तोपशमः
71382 संकल्पविचिकित्साधृत्यधृत्यादिवृत्त्यन्तरैरपि तत्प्ररोहस्य
71383 दुर्वारत्वादित्याशङ्कां सर्ववृत्तीनामाशामूलताप्रदर्शनेन परिहरति ##-
71384 चाक्षुषादिवृत्तिप्रसक्तिरस्तीति चिन्तनमेव तदा चित्तस्य वृत्तिः परिशिष्यत इति
71385 प्रागुक्तम् | चिन्तने च चित्तमाशयैव प्रवर्तते | आशास्यानामेव विषयाणां
71386 चिन्तनदर्शनात् | संकल्पादिवृत्तीनां च चिन्तितार्थविषयतया
71387 चिन्तापूर्वकत्वाच्चिन्तामूलभूतामाशाख्यां चित्तवृत्तिं त्यक्त्वा निश्चित्ततां
71388 व्रजेत्यर्थः || २८ ||
71389
71390 यो यया वर्तते वृत्त्या स तयैव विना क्षयी |
71391 अतश्चित्तोपशान्त्यर्थं तद्वृत्तिं प्रक्षयं नय || २९ ||
71392
71393 ज्वालौष्ण्यक्षये वह्नेरिव वृत्तिक्षये मनस उपशमः सिद्ध्यतीत्याह - यो
71394 ययेति | तयैव विना तद्वृत्तेरात्यन्तिकनिरोधेन क्षयी अपक्षयक्रमेण नश्यति ||
71395 २९ ||
71396

71397 प्रशमितसकलैषणो महात्म-
71398 नभव भवबन्धमपास्य मुक्तचित्तः |
71399 मनसि निगडरज्जवः कदाशाः
71400 परिगलितासु च तासु को न मुक्तः || ३० ||
71401
71402 उक्तमर्थं संगृह्योपसंहरति - प्रशमितेति | हे महात्मन त्वं
71403 प्रशमितपुत्रवित्तलोकादिसकलैषणः सन् भवबन्धमाशाख्यमपास्य
71404 मुक्तचित्तो जीवन्मुक्तो भव | यतः कुत्सिता आशा मनसि विद्यमाना आत्मनो
71405 निगडरज्जवो निगडवद्रज्जुवच्च बन्धनहेतवः | तासु परिगलितासु सतीषु को न
71406 मुक्तः | सर्वोऽपि जन्तुर्मुच्यत एवेत्यर्थः || ३० ||
71407
71408 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे०
71409 मोक्षोपायेषूपशमप्रकरणे तृष्णाविचिकित्सायोगोत्पत्तिर्नामैकविंशः
71410 सर्गः || २१ ||
71411
71412 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
71413 तृष्णाविचिकित्सायोगोत्पत्तिर्नामैकविंशः सर्गः || २१ ||
71414
71415
71416 द्वाविंशः सर्गः २२
71417
71418 श्रीवसिष्ठ उवाच |
71419
71420 अथवा रघुवंशाख्यनभःपूर्णनिशाकर |
71421 बलिवद्बुद्धिभेदेन ज्ञानमासादयामलम् || १ ||
71422
71423 बल्याख्यानमुपक्रम्य पातालमिह वर्ण्यते |
71424 बलेश्च राज्यं निर्वेदान्मेरुशृङ्गे विचारणा || १ ||
71425
71426 इदानीं पद्माक्षकोशं त्रिजगदिति विवेकोदये त्रैलोक्यैश्वर्यस्याप्यल्पत्वं
71427 यदुक्तं तदुपपादनाय बल्याख्यानं वक्तुकामो वसिष्ठो भूमिकां रचयति
71428 - अथवेति | बुद्धिभेदेन अकस्माद्विचारोदयेन || १ ||
71429
71430 श्रीराम उवाच |
71431
71432 भगवन्सर्वधर्मज्ञ त्वत्प्रसादान्मया हृदि |
71433 प्राप्तं प्राप्तव्यमखिलं विश्रान्तं चामले पदे || २ ||
71434
71435 प्राप्तव्यमखिलं सर्वात्मकं ब्रह्म हृदि प्राप्तं तस्मिन्नेवामले पदे
71436 विश्रान्तं च || २ ||
71437
71438 शरदीवाम्बरादभ्रमदभ्रं मम चेतसः |
71439 विभो व्यपगतं सर्वं तृष्णाख्यं तन्महातमः || ३ ||
71440
71441 अदभ्रमनल्पं तृष्णाख्यं तत्प्रसिद्धं महातमो मम चेतसः
71442 सकाशादपगतम् || ३ ||
71443
71444 अमृतापूरितः स्वस्थः शीतलात्मा महाद्युतिः |
71445 तिष्ठाम्यानन्दवानन्तः सायं पूर्ण इवोडुराट् || ४ ||
71446
71447 अमृतापूरित इत्यादिविशेषणानि स्वस्य उडुराजस्य च साधारणानि || ४ ||
71448

71449 अशेषसंशयाम्भोदशरत्समय किंत्वहम् ।
71450 तृप्तिमेषां न गच्छामि वचसां वदतस्तव ॥ ५ ॥
71451
71452 अशेषाणां संशयलक्षणानामम्भोदानां शरत्समय इव निवारक इति
71453 गुरुसंबोधनम् । वदतस्तव एषां वचसां श्रवणविषये तृप्तिं
71454 अलंबुद्धिं न गच्छामि ॥ ५ ॥
71455
71456 बलेर्विज्ञानसंप्राप्तिं पुनर्मद्बोधवृद्धये ।
71457 विभो कथय खिद्यन्ते सन्तो नावनतं प्रति ॥ ६ ॥
71458
71459 विज्ञानस्य संप्राप्तिं प्राप्तिप्रकारम् । अवनतं प्रणामोपनतं शिष्यं प्रति
71460 उपदेशने इति शेषः ॥ ६ ॥
71461
71462 श्रीवसिष्ठ उवाच ।
71463
71464 शृणु राघव ते वक्ष्ये बलेर्वृत्तान्तमुत्तमम् ।
71465 श्रुतेन येन तं तत्त्वबोधं प्राप्स्यसि शाश्वतम् ॥ ७ ॥
71466
71467 तं तादृशं तत्त्वबोधं विचारपूर्वकतत्त्वावधारणम् । शाश्वतं
71468 नित्यात्मलाभफलम् । शाश्वतं नित्यं तत्त्वभूतमात्मस्वरूपबोधमिति वा ॥
71469 ७ ॥
71470
71471 अस्त्यस्मिञ्जगतः कोशे कस्मिंश्चिद्दिङ्निकुञ्जके ।
71472 पातालमिति विख्यातो लोको भूमेरधः स्थितः ॥ ८ ॥
71473
71474 जगतः कोशे ब्रह्माण्डे । दिग्लक्षणे निकुञ्जके अल्पे कुञ्जे ॥ ८ ॥
71475
71476 क्षीरोदार्णवजाताभिर्दिरधाभिरमृतांशुभिः ।
71477 क्वचिद्दानवकन्याभिर्भाति निर्विवरान्तरः ॥ ९ ॥
71478
71479 क्षीरोदार्णवे क्षीरसमुद्रे जाताभिः । दानवानामर्णवोदरेऽपि निवासप्रसिद्धेः ।
71480 अत एव तत्रोत्पन्नस्यामृतस्यांशुभिरवयवैर्दिग्धाभिरुपचिताभिरिव
71481 रम्याभिः । निर्विवरान्तरः पूर्ण इति यावत् ॥ ९ ॥
71482
71483 जिह्वागणोद्दामरवैर्विलोलरसनायुगैः ।
71484 क्वचिद्भोगिभिरापूर्णः सहस्रशतमस्तकैः ॥ १० ॥
71485
71486 द्व्यादिद्विसहस्रान्तसंख्याकैर्जिह्वागणैरितरापेक्षया द्विगुणं
71487 व्याकरणच्छन्दः शास्त्रादिव्याख्यानादुद्दामरवैः । अत एव
71488 विलोलरसनायुगैः । भोगिभिः शेषादिभिः ॥ १० ॥
71489
71490 देहाद्रिवलिताशेषविश्वोद्धरणघस्मरैः ।
71491 क्वचिद्दनुसुतैर्व्याप्तश्चलद्भिरिव मेरुभिः ॥ ११ ॥
71492
71493 देहाद्रिभिर्वलितं व्याप्तमशेषं जगद्येषां तथाविधैर्विश्वोद्धरणस्य
71494 धर्मस्य यज्ञहविषो वा घस्मरैर्बलाद्भक्षकैः । कर्मधारयः ॥ ११ ॥
71495
71496 कुम्भकूटाग्रविश्रान्तवसुधामण्डलोदरैः ।
71497 क्वचिद्दिग्दन्तिभिर्दन्तद्रुमाद्रिभिरुपाश्रितः ॥ १२ ॥
71498
71499 कुम्भलक्षणानां कूटानां शिखराणामग्रेषु विश्रान्तं
71500 वसुधामण्डलस्योदरं मध्यं येषाम् ।

71501 उदरग्रहणादधोजम्बूद्वीपप्रान्तेष्वेव दिक्षु
71502 मध्यतनमण्डपस्तम्भवद्दिग्गजानां भूमिधारणे निवेश इति गम्यते। अत
71503 एव जम्बूद्वीपभुवं खनद्भिः सगरपुत्रैः प्रतिदिशं दिग्गजा दृष्टा इति
71504 पूर्वरामायणेऽप्युक्तम्। दन्तलक्षणानां द्रुमाणामद्रिभिः
71505 पर्वतवदाश्रयभूतैः॥ १२॥
71506
71507 महाकटकटाशब्दत्रस्तभूतपरम्परैः।
71508 क्वचिद्दुर्गन्धभूताभैरधोनारकमण्डलैः॥ १३॥
71509
71510 दुर्गन्ध इति भूतानां नारकि प्राणिनां आभाः स्वकर्मैकृताः प्रतिभासा
71511 यत्र। अधः सर्वाधः। तत्र हि पुराणेषु नरकाः प्रसिद्धाः॥ १३॥
71512
71513 आभूतलमभिप्रोतसप्तपातालमण्डलैः।
71514 क्वचिद्रत्नाकरैर्व्याप्तः पातालैर्विवरैरिव॥ १४॥
71515
71516 क्वचित् अधस्तननारकप्रदेशमारभ्य आभूतलं
71517 उपरितनास्मदीयभूतलपर्यन्तं सप्तापूपप्रोतलोहशलाकावत्
71518 प्रोतसप्तपातालमण्डलैः रत्नानामाकरभूतैर्मेर्वादिगिरिपादैर्व्याप्तः।
71519 क्वचिच्च विवरैरिव संकुचितप्रायैः पातालैः पातालावयवैर्व्याप्तः॥ १४॥
71520
71521 सुरासुरशिरःसुप्तपादाम्भोरुहपांसुना।
71522 क्वचिद्भगवता तेन कपिलेन पवित्रितः॥ १५॥
71523
71524 सुराणामसुराणां च शिरःसु सुप्ता इव विश्रान्ताः पादाम्भोरुहपांसवो
71525 यस्य तथाविधेन। त्रैलोक्यवन्दितेनेति यावत्॥ १५॥
71526
71527 आसुरीसंभृतानन्तपूजनक्रीडनैषिणा।
71528 क्वचिद्भगवता तेन हाटकेशेन पालितः॥ १६॥
71529
71530 आसुरीभिरसुरस्त्रीभिः सेनाभिर्वा संभृतैरनन्तैर्बहुविधोपकरणैः
71531 पूजनानि क्रीडनानि च एष्टुमभिलषितुं शीलं यस्य तथाविधेन हाटकेशेन
71532 स्वर्णलिङ्गात्मना पुराणेषु प्रसिद्धेन शिवेन॥ १६॥
71533
71534 तस्मिन्नसुरदोस्तम्भधार्यमाणमहाभरे।
71535 बभूव दानवो राजा विरोचनसुतो बलिः॥ १७॥
71536
71537 तस्मिन् पाताललोके। असुराणां दोस्तम्भैर्धार्यमाणो महान् भरो राज्यभारो
71538 [राज्यभार इत्यग्रिगं पदं क्वचिन्न लभ्यते] यत्र॥ १७॥
71539
71540 साक्रन्देन समं सर्वैः सुरविद्याधरोरगैः।
71541 पादसंवाहनं यस्य सुरराजेन वाञ्छितम्॥ १८॥
71542
71543 तस्य पराक्रममाह - साक्रन्देनेति। आक्रन्दो रोदनं तत्सहितेन।
71544 वाञ्छितं बलादिति शेषः॥ १८॥
71545
71546 कोशस्त्रैलोक्यरत्नानां पाता सर्वशरीरिणाम्।
71547 धर्ता भुवनधर्तृणां यस्य पालयिता हरिः॥ १९॥
71548
71549 कुतस्तस्येदृशं सामर्थ्यं तत्राह - कोश इति। त्रैलोक्यलक्षणानां
71550 रत्नानां कोश इव स्वोदरे रक्षिता। भुवनधर्तृणां त्रैलोक्यपालकानां
71551 इन्द्रमनुशेषादीनां धर्ता आधारभूतः। यस्य बलेः॥ १९॥
71552

71553 ऐरावणस्य संशोषं यन्नाम्ना कटभित्तयः ।
71554 केकयेवाहिहृन्नाड्यो जग्मुराजग्मुरार्तताम् ॥ २० ॥
71555
71556 ऐरावणस्यैरावतस्य । कटभित्तयः गण्डस्थलानि । बहुवचनं सप्तानां
71557 मदस्थानानामुपलक्षणार्थम् । यन्नाम्ना श्रुतेनेति शेषः । केकया
71558 मयूरवाअण्या अहीनां हृन्नाड्यो हृदयशिरा इव शोषं जग्मुरार्ततां
71559 भयस्विन्नतां चाजग्मुः ॥ २० ॥
71560
71561 प्रतापोग्रोष्मभिर्यस्य कल्पकाल इवाब्धयः ।
71562 ययुः शोषोन्मुखाः सप्त सप्ततां कुपिताकृतेः ॥ २१ ॥
71563
71564 कुपिताकृतेर्यस्य प्रतापस्य उग्रैर्दुःसहैरूष्मभिरुष्णस्पर्शैः सप्त
71565 महाब्धयः शोषोन्मुखाः सन्तः कल्पकाल इव गर्तसंख्यामात्रेण सप्ततां
71566 ययुर्न जलादिपूरसंख्ययेत्यर्थः ॥ २१ ॥
71567
71568 यदध्वराग्र्यधूमाभ्रराजयो वलिताब्धयः ।
71569 ब्रह्माण्डकोटरस्यास्य सदा कवचतां ययुः ॥ २२ ॥
71570
71571 अध्वराग्र्याः अश्वमेधास्तदीयधूमप्रभवा अभ्रपङ्क्तयः । जलपानाय
71572 वलिता अब्धयो याभिः । कोटरपदेन तत्स्थाः प्राणिनो गृह्यन्ते । वृष्ट्या
71573 जगत्पालनहेतुत्वादावरकत्वाच्च कवचतां वर्मताम् ॥ २२ ॥
71574
71575 यस्य दृष्टिदृढाघातनुन्नाधारकुलाचलाः ।
71576 विनमन्ति दिशः सर्वा लताः फलनता इव ॥ २३ ॥
71577
71578 दृष्ट्या दृढाघातस्तिर्यक्प्रेक्षणं तेन नुन्ना भूम्याधारकुलाचला
71579 यासां तथाविधा दिशः । भूमेर्नमने दिशामधःप्रदेशे
71580 दर्शनान्नमनोत्प्रेक्षा ॥ २३ ॥
71581
71582 लीलाविजितनिःशेषभुवनाभोगभूषणः ।
71583 दशकोटीः स वर्षाणि दैत्यो राज्यं चकार ह ॥ २४ ॥
71584
71585 लीलया विजिता अशेषाणां भुवनाभोगानां लोकसंस्थानां भूषणभूता
71586 इन्द्रादयो येन ॥ २४ ॥
71587
71588 अथ गच्छत्स्वनल्पेषु युगेष्वावर्तवृत्तिषु ।
71589 सुरासुरमहौघेषु प्रोत्पतत्सु पतत्सु च ॥ २५ ॥
71590
71591 आवर्तवृत्तिषु जलावर्तसदृशस्वभावेषु ॥ २५ ॥
71592
71593 अजस्रमतिभुक्तेषु त्रैलोक्योदारवृत्तिषु ।
71594 भोगेष्वभजदुद्वेगं बलिर्दानवनायकः ॥ २६ ॥
71595
71596 त्रैलोक्येऽप्युदारवृत्तिषूत्कृष्टस्थितिषु भोगेषु भुक्तेषु सत्सु विषयभूतेषु च
71597 उद्वेगं वैरस्यमभजत् ॥ २६ ॥
71598
71599 मेरुशृङ्गशिखारत्नकृतवातायनस्थितः ।
71600 एकदा चिन्तयामास स्वयं संसारसंस्थितिम् ॥ २७ ॥
71601
71602 मेरुशृङ्गस्य शिखायामग्रभागे रत्नकृतहर्म्यवातायने स्थित
71603 उपविष्टः सन् ॥ २७ ॥
71604

71605 कियन्तमिदमक्षुण्णशक्तिनैव मयाधुना ।
71606 साम्राज्यमिह कर्तव्यं विहर्तव्यं जगत्त्रये ॥ २८ ॥
71607
71608 न क्षुण्णा परैरकुण्ठिता शक्तिर्यस्य अथाविधेन मया ॥ २८ ॥
71609
71610 महता मम राष्ट्रेण त्रैलोक्याद्भुतकारिणा ।
71611 किं वा भवति भुक्तेन भूरिभोगातिहारिणा ॥ २९ ॥
71612
71613 राष्ट्रेण भुक्तेन किं वा भवति । भूरिभिर्भोगैरितिशयेन हारिणा मनोहारिणा
71614 ॥ २९ ॥
71615
71616 आपातमात्रमधुरमावश्यकपरिक्षयम् ।
71617 भोगोपभोगमात्रं मे किं नामेदं सुखावहम् ॥ ३० ॥
71618
71619 भोगोपभोगमात्रं कृत्स्नोपभोगः । पुरुषार्थान्तरव्यावृत्तये वा
71620 मात्रशब्दः ॥ ३० ॥
71621
71622 पुनर्दिनैककलनाशर्वरीसंस्थितिः पुनः ।
71623 पुनस्तान्येव कर्माणि लज्जायै नच तुष्टये ॥ ३१ ॥
71624
71625 तान्येव स्नानभोजनशयनादीनि । नाभिनवं किंचित्कर्म सुखं वस्तीत्यर्थः ।
71626 अतो महतां पुरो लाम्पट्यं लज्जायै नतु तुष्टये ॥ ३१ ॥
71627
71628 पुनरालिङ्ग्यते कान्ता पुनरेव च भुज्यते ।
71629 सेयं शिशुजनक्रीडा लज्जायै महतामिह ॥ ३२ ॥
71630
71631 उक्तमेव स्फुटयति - पुनरित्यादिना ॥ ३२ ॥
71632
71633 तमेव भुक्तविरसं व्यापारौघं पुनःपुनः ।
71634 दिवसे दिवसे कुर्वन्प्राज्ञः कस्मान्न लज्जते ॥ ३३ ॥
71635
71636 पुनर्दिनं पुना रात्रिः पुनः कार्यप्रम्पराः ।
71637 पुनःपुनरहं मन्ये प्राज्ञस्येयं विडम्बना ॥ ३४ ॥
71638
71639 प्राज्ञस्य दृश्या इयं विडम्बना पुनःपुनः
71640 कृतानुकरणमिवोपहासहेतुरित्यर्थः ॥ ३४ ॥
71641
71642 ऊर्मितां पुनरासाद्य पुनरेति निरूर्मिताम् ।
71643 यथा जलं तथैवायं तां तामेति क्रियां जनः ॥ ३५ ॥
71644
71645 व्यर्थकृतानुकरणे दृष्टान्तमाह - ऊर्मितामिति ॥ ३५ ॥
71646
71647 उन्मत्तचेष्टिताकारा पुनःपुनरियं क्रिया ।
71648 जनं हासयते प्राज्ञं बाललीलोपमा मुहुः ॥ ३६ ॥
71649
71650 कृतयाप्यनया नित्यं क्रियया कृतकार्यया ।
71651 कोऽर्थः स्यात्तदृशो येन पुनः कर्म न विद्यते ॥ ३७ ॥
71652
71653 येन लब्धेन पुनः कर्म न विद्यते कृतकृत्यता स्यात्तादृशोऽर्थः कः स्यात्
71654 ॥ ३७ ॥
71655
71656 कियन्तमथवा कालमिदमाडम्बरं महत् ।

71657 इहास्माभिरनुष्ठेयं किं तावत्समवाप्यते ॥ ३८ ॥
71658
71659 महदाडम्बरं दृष्टादृष्टार्थकर्मजातम् ॥ ३८ ॥
71660
71661 अनन्तेयं शिशुक्रीडा वस्तुशून्यैव वस्तुतः ।
71662 आवृत्त्या क्रियते व्यर्थमनर्थप्रसरार्थिभिः ॥ ३९ ॥
71663
71664 अनन्ता प्रवाहानन्ता । उत्पन्नप्रध्वंसस्वभावत्वात् । वस्तुतः परमार्थतो
71665 वस्तुशून्यैव इयं शिशुक्रीडा अनर्थप्रसरो
71666 दुःखपरम्पराप्राप्तिस्तदर्थिभिः क्रियते ॥ ३९ ॥
71667
71668 फलमेकं महोदारं नेह पश्यामि किंचन ।
71669 कार्यमस्तीतरत्प्राप्ते यस्मिन्नाम न किंचन ॥ ४० ॥
71670
71671 यस्मिन्प्राप्ते सति इतरन्न किंचन कार्यं कर्तव्यमस्ति तादृशं फलं
71672 पुरुषार्थमिह न किंचन पश्यामि ॥ ४० ॥
71673
71674 भोगादृते किमन्यत्स्यात्तद्द्रव्यमविनाशि यत् ।
71675 एवं संचिन्तयाम्याशु दध्यौ मत्वेत्यसौ बलिः ॥ ४१ ॥
71676
71677 भोगात् क्षणिकतुच्छविषयसुखादृतेऽन्यद्यदविनाशि नित्यं तद्द्रव्यं
71678 सुखं किं स्यादेवं संचिन्तयामीति मत्वा असौ बलिराशु दध्यावित्यन्वयः ॥
71679 ४१ ॥
71680
71681 अथाभ्युवाचासुरराडाः संस्मृतमिति क्षणात् ।
71682 स्वात्मन्येव मनस्यर्थं सभ्रूभङ्गं विमर्शयन् ॥ ४२ ॥
71683
71684 ध्यानेन संस्कारोद्बोधात्सविमर्शां
71685 प्राक्स्वपृष्ठपित्रुपदेशक्रमस्मृतिं दर्शयति - अथेति । अथ
71686 क्षणादात्मनि स्वस्मिन्नेव उवाच । आः इति स्मरणद्योतको निपातः । किमुवाच
71687 तदाह - संस्मृतं सम्यङ्ग्या स्मृतमिति स्मृतार्थं मनस्येव
71688 विमर्शयन्विमृशन् । प्रेषणाध्यारोपाण्णिच् ॥ ४२ ॥
71689
71690 पुरा किलेह भगवान्पृष्टोऽभूत्स विरोचनः ।
71691 पिता मयात्मतत्त्वज्ञो दृष्टलोकपरावरः ॥ ४३ ॥
71692
71693 स्मृतमर्थं क्रमेणाह - पुरा किलेत्यादिना ॥ ४३ ॥
71694
71695 यथा सकलदुःखानां सुखानां च महामते ।
71696 यत्र सर्वे भ्रमाः शान्ताः कोऽसौ सीमान्त उच्यते ॥ ४४ ॥
71697
71698 किं पृष्टस्तदाह - यथेत्यादिना । यथेति तत्प्रकारोपक्रमार्थः ।
71699 सकलदुःखानां सांसारिकसुखानां च परिहारप्राप्त्युपायगोचराः सर्वे
71700 व्यवहारभ्रमा यत्र शान्ता असौ संसारसीम्नोऽन्तोऽवधिः कः उच्यते
71701 प्राज्ञैरित्यर्थः ॥ ४४ ॥
71702
71703 क्वोपशान्तो मनोमोहः क्वातीताः सकलैषणाः ।
71704 विरामरहितं कुत्र तात विश्रमणं चिरम् ॥ ४५ ॥
71705
71706 विरामः पुनरावृत्तिस्तद्रहितं विश्रमणं विश्रान्तिः ॥ ४५ ॥
71707
71708 किं प्राप्तेह समस्तेभ्यः प्राप्येऽस्मिंस्तृप्तिमान्पुमान् ।

71709 किं दृष्ट्वा दर्शनं भूयो न तातोपकरोत्यलम् ॥ ४६ ॥
71710
71711 पुमान् किं सुखं प्राप्ता प्राप्तवान् सन्नस्मिन्नेव देहे समस्तेभ्यो
71712 ब्रह्मलोकान्तविषयेभ्यः प्राप्ये सुखे या तृप्तिराशापरिपूर्तिस्तद्वान् स्यादिति
71713 शेषः। नोपकरोति फलान्तरेण। एकविज्ञानेन सर्वविज्ञानं सिद्ध्यतीत्यर्थः ॥
71714 ४६ ॥
71715
71716 अत्यन्तबहवोऽप्येते भोगा हि न सुखावहाः।
71717 क्षोभयन्ति मनो मोहे पातयन्ति सतामपि ॥ ४७ ॥
71718
71719 कुतस्ते तज्जिज्ञासा तत्राह - अत्यन्तेति। कुतो न सुखावहास्तत्राह -
71720 क्षोभयन्तीति ॥ ४७ ॥
71721
71722 तत्ताताविहतानन्दसुन्दरं किंचिदेव मे।
71723 तादृक्कथय यत्रस्थश्चिरं विश्रान्तिमेम्यहम् ॥ ४८ ॥
71724
71725 इत्याकर्ण्य पुरा निशाकरकरस्पर्धालुगुच्छस्खल-
71726 त्पुष्पापूरकृतावगुण्ठनपदस्योक्तं तले तेन मे।
71727 पित्रा स्वर्गहृतस्य सागरतरोः संरोपितस्याजिरे
71728 स्फाराकाररसायनासवसमं संमोहशान्त्यै वचः ॥
71729
71730 पुरा पूर्वकाले निशाकरस्य चन्द्रस्य करैः किरणैः सह
71731 सौन्दर्यामृतरसपूर्णत्वादिगुणाधिक्यात्स्पर्धालुभ्यो गुच्छेभ्यः
71732 पुष्पफलस्तबकेभ्यः स्खलतां पुष्पाणां फलानां चापूरेण समूहेन
71733 कृतमवगुण्ठनं यस्य तथाविधं पदं मूलस्थानं यस्य तथाविधस्य
71734 स्वर्गात् हृतस्य बलादानीतस्य अजिरे स्वाङ्गणे संरोपितस्य सागरतरोः
71735 क्षीरसमुद्रोत्पन्नस्य कल्पवृक्षस्य तले उपविष्टेन मे मम पित्रा विरोचनेन इति
71736 प्रागुक्तप्रकारं प्रश्नमाकर्ण्य तस्य कल्पतरोः स्फाराकारै
71737 रसायनलक्षणैरासवैर्मकरन्दैः समं तुल्यं सुरभि मधुरं
71738 जरामरणदुःखनिवारणं चेति यावत्। वचः संमोहशान्त्यै
71739 मदीयाज्ञानभ्रमनिवारणाय यदुक्तं तन्मया स्मृतमित्यर्थः ॥ ४९ ॥
71740
71741 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे०
71742 मोक्षोपायेषूपशमप्रकरणे विरोचनस्मरणं नाम द्वाविंशः सर्गः
71743 ॥ २२ ॥
71744
71745 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
71746 विरोचनस्मरणं नाम द्वाविंशः सर्गः ॥ २२ ॥
71747
71748
71749 त्रयोविंशः सर्गः २३
71750
71751 विरोचन उवाच।
71752
71753 अस्ति पुत्रातिविततो देशो विपुलकोटरः।
71754 त्रैलोक्यानां सहस्राणि यत्र मान्ति बहून्यपि ॥ १ ॥
71755
71756 वक्तुं चित्तजयं राजमन्त्र्युपाख्यानमुच्यते।
71757 तत्रात्र मन्त्रिणो वीर्यमप्रतिद्वन्द्वमूर्जितम् ॥ १ ॥
71758
71759 चित्तं वृत्तिविहीनं ते यदा यातमचित्तताम्। तदा मोक्षमयीमन्तः
71760 सत्तामाप्नोषि तां तताम्। इति मोक्षस्य चित्तजयाधीनत्वमुक्तं चित्तजये च

71761 आत्यन्तिक आशात्याग उपाय उक्तः स चात्मदर्शनमन्तरेण न सिद्ध्यति। विषया
71762 विनिवर्तन्ते निराहारस्य देहिनः। रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते॥
71763 इति भगवद्वचनात्। आत्मदर्शनं च मनोजयमन्तरेण न
71764 सिद्ध्यतीत्यन्योन्याश्रयतापन्नमिदमशक्यमेवेत्याशङ्कां परिहर्तुं
71765 साधनद्वययौगपद्याभ्यासाद्युपायभेदं वक्तुं बल्युपाख्यानान्तराले
71766 राजमन्त्र्युपाख्यानं विरोचनमुखेन प्रस्तौति - अस्ति पुत्रेत्यादिना। देशो
71767 मोक्षाख्यः॥ १॥
71768 यत्र नाम्भोदयो नापि सागरा वा न चाद्रयः।
71769 न वनानि न तीर्थानि न नद्यो न सरांसि च॥ २॥
71770
71771 न मही नापि चाकाशं न द्यौर्न पवनादयः।
71772 न चन्द्रार्कौ न लोकेशा न देवा नच दानवाः॥ ३॥
71773
71774 न भूतयक्षरक्षांसि न गुल्मा न वनश्रियः।
71775 न काष्ठतृणभूतानि स्थावराणि चराणि च॥ ४॥
71776
71777 नापो न ज्वलनो नाशा नोर्ध्वं नाधो न विष्टपम्।
71778 न लोको नातपो नाहं न हरीन्द्रहरादयः॥ ५॥
71779
71780 एक एवास्मि सुमहांस्तत्र राजा महाद्युतिः।
71781 सर्वकृत्सर्वगः सर्वः स च तूष्णीं व्यवस्थितः॥ ६॥
71782
71783 राजा आत्मा। तूष्णीं व्यवस्थितः। कूटस्थ इति यावत्॥ ६॥
71784
71785 तेन संकल्पितो मन्त्री सर्वसन्मन्त्रणोन्मुखः।
71786 अघटं घटयत्याशु घटं विघटयत्यलम्॥ ७॥
71787
71788 मन्त्री मनः। अघटमत्यन्तानुपपन्नमप्यात्मनः संसारित्वं घटयति।
71789 घटं घटमानमपि पूर्णानदेकरसत्वं विघटयति नास्ति न
71790 भातीत्यपलापयति॥ ७॥
71791
71792 भोक्तुं न किंचिच्छक्नोति न च जानाति किंचन।
71793 राजार्थं केवलं सर्वं करोत्यज्ञोऽपि सन्सदा॥ ८॥
71794
71795 अज्ञोऽपि जडोऽपि सन्॥ ८॥
71796
71797 स एव सर्वकार्यैककर्ता तस्य महीपतेः।
71798 राजा केवलमेकान्ते स्वस्थ एवावतिष्ठते॥ ९॥
71799
71800 एकान्ते अद्वितीयस्वभावे॥ ९॥
71801
71802 बलिरुवाच।
71803
71804 आधिव्याधिविनिर्मुक्तः कः स देशो महामते।
71805 कथमासाद्यते चापि केन वाधिगतः प्रभो॥ १०॥
71806
71807 बलिप्रश्ना निगदव्याख्याताः॥ १०॥
71808
71809 कः स तादृग्विधो मन्त्री राजा चापि महाबलः।
71810 हेलालूनजगज्जालैर्योऽस्माभिरपि नो जितः॥ ११॥
71811
71812 अपूर्वमेतदाख्यानं ममामरभयपद।

71813 कथयापनयास्माकं हृद्व्योम्नः संशयाम्बुदम् ‖ १२ ‖
71814
71815 कथया अस्माभिस्तदजये निमित्तकथनेन ‖ १२ ‖
71816
71817 विरोचन उवाच ।
71818
71819 स तत्र मन्त्री बलवान्देवासुरगणैः सुत ।
71820 समेतैर्लक्षगुणितैरपि नाक्रम्यते मनाक् ‖ १३ ‖
71821
71822 तत्रादावन्ते पृष्टं तदजये निमित्तमेव विस्तरेणाह - स तत्रेत्यादिना ।
71823 मनाक् ईषदपि ‖ १३ ‖
71824
71825 नासौ सहस्रनयनो न यमो न धनेश्वरः ।
71826 नामरो नासुरो वापि यदि पुत्रक जीयते ‖ १४ ‖
71827
71828 स मन्त्री किं द्वितीय इन्द्र उत यम उत कुबेर उत कश्चिदमरोऽसुरो वा
71829 महानुभावो यतो जेतुमशक्यो नेत्याह - नासाविति । यदि सहस्राक्षादिः
71830 कश्चित्स्यात्तर्हि त्वया जीयत एवेत्यर्थः ‖ १४ ‖
71831
71832 तत्रासिमुसलप्रासवज्रचक्रगदादयः ।
71833 हेतयः कुण्ठतां यान्ति दृषदीवोत्पलाहतिः ‖ १५ ‖
71834
71835 किं मम आयुधानि भटा वा न सन्ति सन्तु नाम नासौ तद्विषय इत्याह -
71836 तत्रेति ‖ १५ ‖
71837
71838 गम्योऽसौ नास्त्रशस्त्राणां न भटोद्भवकर्मणाम् ।
71839 तेन देवासुराः सर्वे सर्वदैव वशीकृताः ‖ १६ ‖
71840
71841 प्रत्युत त्वदादयस्तेनैव जिता इत्याह - तेनेति ‖ १६ ‖
71842
71843 अविष्णुनापि तेनेह हिरण्याक्षादयोऽसुराः ।
71844 पातिताः कल्पवातेन मेरुकल्पद्रुमा इव ‖ १७ ‖
71845
71846 अस्मत्पूर्वजादयोऽपि तेनैव वशीकृत्य विष्णुना घातिता इत्याशयेनाह -
71847 अविष्णुनापीति । कल्पवातेन प्रलयवायुना ‖ १७ ‖
71848
71849 नारायणादयो देवा अपि सर्वावबोधिनः ।
71850 तेनाक्रम्य यथाकाममवटेषु निवेशिताः ‖ १८ ‖
71851
71852 सर्वेषामवबोधिनो विवेकोपदेष्टारोऽपि तेनैव
71853 भृगुशापादिनिमित्तापादनेनाक्रम्य वशीकृत्य । अवटेषु गर्भश्वभ्रेषु ‖
71854 १८ ‖
71855
71856 तत्प्रसादेन साटोपं पञ्चमात्रशरः स्मरः ।
71857 त्रैलोक्यमिदमाक्रम्य सम्राडिव विवल्गति ‖ १९ ‖
71858
71859 स्मरः कामः पञ्चमात्रशरोऽपि तत्प्रसादेनेदं त्रैलोक्यमाक्रम्य जित्वा
71860 विवल्गति विजृम्भते ‖ १९ ‖
71861
71862 सुरासुरौघगृह्योऽपि गुणहीनोऽपि दुर्मतिः ।
71863 दुराकृतिरपि क्रोधस्तत्प्रसादेन जृम्भते ‖ २० ‖
71864

71865 सुरासुरौघा गृह्या अस्वैरिणो येन। पदास्वैरिबाह्यापक्ष्येषु च इति क्यप्॥ २०॥
71866
71867 देवासुरसहस्राणां संगरो यः पुनः पुनः।
71868 तदेतत्क्रीडनं तस्य मन्त्रिणो मन्त्रशालिनः॥ २१॥
71869
71870 स मन्त्री केवलं पुत्र तेनैव प्रभुणा यदि।
71871 जीयते तत्सुजेयोऽसावन्यथा त्वचलोपमः॥ २२॥
71872
71873 प्रभुणा आत्मना। यदि जीयते तत्तदा सुजेयो जय्यः॥ २२॥
71874
71875 तस्यैव तत्प्रभोः काले जेतुं तं मन्त्रिणं निजम्।
71876 इच्छा संजायते तेन जीयतेऽसावयत्नतः॥ २३॥
71877
71878 काले बहुतरसुकृतपरिपाकाद्विवेकोदयकाले। अयत्नतो ज्ञानमात्रतः॥ २३॥
71879
71880 त्रैलोक्यबलिनां मल्लमुच्छ्वसितजगत्त्रयम्।
71881 जेतुं चेदस्ति ते शक्तिस्तत्पराक्रमवानसि॥ २४॥
71882
71883 त्रैलोक्ये यावन्तो बलिनस्तेषां मल्लं बलेन जेतारम्। उच्छ्वसितं
71884 म्रियमाणजन्तुवदूर्ध्वश्वसनशीलं कृतं जगत्त्रयं येन। तत्तर्हि॥ २४॥
71885
71886 तस्मिन्नभ्युदिते सूर्ये त्रैलोक्यकमलाकराः।
71887 इमे विकासमायान्ति विलीयन्तेऽस्तमागते॥ २५॥
71888
71889 तस्य न सर्वजयशक्तिमात्रं किंतु त्रैलोक्यजननादिशक्तिरप्यस्तीत्याह -
71890 तस्मिन्निति। तस्मिन् सूर्ये इति व्यस्तरूपकम्॥ २५॥
71891
71892 तमेवमेकया बुद्ध्या व्यामोहपरिहीनया।
71893 यदि जेतुं समर्थोऽसि धीरस्तदसि सुव्रत॥ २६॥
71894
71895 एकया निश्चितया एकाग्रया च। तत्तर्हि धीरोऽसि॥ २६॥
71896
71897 तस्मिञ्जिते जिता लोका भविष्यन्त्यजिता अपि।
71898 अजिते त्वजिता एते चिरकालजिता अपि॥ २७॥
71899
71900 तस्मादनन्तसिद्ध्यर्थं शाश्वताय सुखाय च।
71901 तज्जये यत्नमातिष्ठ कष्टयापि हि चेष्टया॥ २८॥
71902
71903 अनन्ता याः सिद्धयस्तदर्थम्। अन्तो मृत्युस्तदभावोऽनन्तं
71904 मृत्युजयस्तत्सिद्ध्यर्थं च। कष्टया श्रमसाध्ययापि सर्वत्यागादिचेष्टया
71905 ॥ २८॥
71906
71907 ससुरदनुजनागयक्षसंघं
71908 सनरमहोरगकिन्नरं समेतम्।
71909 त्रिजगदपि वशीकृतं समन्ता-
71910 दतिबलिना ननु हेलयैव तेन॥ २९॥
71911
71912 पुनस्तत्प्रभावमेवोक्तमनूद्योपसंहरति - ससुरेति। नागा दिग्गजाः।
71913 महोरगाः शेषादयः॥ २९॥
71914
71915 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे०
71916 मोक्षोपायेषूपशमप्रकरणे विरोचनवचनं नाम त्रयोविंशः सर्गः

71917 ॥ २३ ॥
71918
71919 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
71920 विरोचनवचनं नाम त्रयोविंशः सर्गः ॥ २३ ॥
71921
71922
71923 चतुर्विंशः सर्गः २४
71924
71925 बलिरुवाच ।
71926
71927 केनोपायेन बलवान्स तात परिजीयते ।
71928 कोऽसावतिमहावीर्यः सर्वं प्रकथयाशु मे ॥ १ ॥
71929
71930 इद दुर्मन्त्रिणस्तस्य जयोपायः प्रकिर्त्यते ।
71931 राजसंदर्शनोपायवैराग्यादिसमन्वितः ॥ १ ॥
71932
71933 प्रश्नः स्पष्टः ॥ १ ॥
71934
71935 विरोचन उवाच ।
71936
71937 मन्त्रिणस्तस्य तनय नित्याजेयस्थितेरपि ।
71938 शृणु वच्मि सुसाधत्वं येनासौ परिजीयते ॥ २ ॥
71939
71940 सुसाधत्वं सुखजयोपायमिति यावत् ॥ २ ॥
71941
71942 पुत्र युक्त्या गृहीतोऽसौ क्षणादायाति वश्यताम् ।
71943 युक्तिं विना दहत्येष आशीविष इवोद्धतः ॥ ३ ॥
71944
71945 बालवल्लालयित्वैनं युक्त्या नियमयन्ति ये ।
71946 राजानं तं समालोक्य पदमासादयन्ति ते ॥ ४ ॥
71947
71948 लालयित्वा अल्पविषयप्रदानेन मुहुर्विषयदोषख्यापनेन च वञ्चयित्वा । युक्त्या
71949 राजयोगाख्यया । पदं राजपदम् ॥ ४ ॥
71950
71951 दृष्टे तस्मिन्महीपाले स मन्त्री वशमेति च ।
71952 तस्मिंश्च मन्त्रिण्याक्रान्ते स राजा दृश्यते पुनः ॥ ५ ॥
71953
71954 पुनःशब्दो वाक्यालंकारार्थः ॥ ५ ॥
71955
71956 यावन्न दृष्टो राजासौ तावन्मन्त्री न जीयते ।
71957 मन्त्री च यावन्न जितस्तावद्राजा न दृश्यते ॥ ६ ॥
71958
71959 राजन्यदृष्टे दुर्मन्त्री स दुःखाय फलत्यति ।
71960 मन्त्रिण्यनिर्जिते राजा सोऽत्यन्तं यात्यदृश्यताम् ॥ ७ ॥
71961
71962 अति दुःखाय रागद्वेषादीन्फलति ॥ ७ ॥
71963
71964 अभ्यासेनोभयं तस्मात्सममेव समारभेत् ।
71965 राजसंदर्शनं तस्य मन्त्रिणश्च पराजयम् ॥ ८ ॥
71966
71967 संदर्शनपराजयशब्दौ तत्तदुपायपरौ ॥ ८ ॥
71968

71969 पौरुषेण प्रयत्नेन स्वभ्यासेन शनैःशनैः |
71970 द्वयं संपाद्य यत्नेन देशमाप्नोषि तं शुभम् || ९ ||
71971
71972 द्वयं राजसंदर्शनं मन्त्रिपराजयं च || ९ ||
71973
71974 त्वमभ्यासे फलीभूते तं देशमभिगच्छसि |
71975 यदि दैत्येन्द्र तद्भूयो मनागपि न शोचसि || १० ||
71976
71977 फलीभूते सफलीभूते ज्ञानफलात्मना परिणते वा || १० ||
71978
71979 संशान्तसकलायासा नित्यप्रमुदिताशयाः |
71980 साधवस्तत्र तिष्ठन्ति प्रशान्ताशेषसंशयाः || ११ ||
71981
71982 तत्र के तिष्ठन्ति तानाह - संशान्तेति | निवृत्तसर्वानर्था
71983 निरतिशयनित्यानन्दपूर्णाश्च ये साधवस्ते तत्र तिष्ठन्तीत्यर्थः || ११ ||
71984
71985 शृणु कः पुत्र देशोऽसौ सर्वं प्रकटयामि ते |
71986 देशनाम्ना मयोक्तस्ते मोक्षः सकलदुःखहा || १२ ||
71987
71988 इदानीं गूढोक्तिं विवरीतुमाह - शृण्विति || १२ ||
71989
71990 राजा तु तत्र भगवानात्मा सर्वपदातिगः |
71991 तेन मन्त्री कृतः प्राज्ञो मनो नाम महामते || १३ ||
71992
71993 सर्वाणि मानुषानन्दादिहैरण्यगर्भानन्दान्तपदान्यतीत्य गच्छतीति
71994 सर्वपदातिगः सर्ववाढ्यनसागोचरश्च | प्राज्ञः सर्वप्रज्ञासमष्टिरूपः
71995 || १३ ||
71996
71997 मनोनिष्ठतया विश्वमिदं परिणतिं गतम् |
71998 घटत्वेनेव मृत्पिण्डो धूमोऽम्बुदतयैव च || १४ ||
71999
72000 मनोनिष्ठतया मनसि वासनात्मकसूक्ष्मभावेन स्थितयेत्यर्थः | परिणतिः
72001 स्थौल्यम् | घटत्वेन घटभावेन | मृत्पिण्डः पिण्डान्तर्गतमृद्भागः ||
72002 १४ ||
72003
72004 तस्मिञ्जिते जितं सर्वं सर्वमासादितं भवेत् |
72005 दुर्जयं तद्विजानीयाद्युक्त्यैव परिजीयते || १५ ||
72006
72007 जेतव्यं सर्वं जितमासादयितव्यं सर्वमासादितं भवेदित्यर्थः || १५ ||
72008
72009 बलिरुवाच |
72010
72011 या युक्तिर्भगवंस्तस्य चित्तस्याक्रमणे स्फुटम् |
72012 तां मे कथय तत्तावद्यथा जेष्यामि दारुणम् || १६ ||
72013
72014 आक्रमणे आस्कन्दने | जये इति यावत् || १६ ||
72015
72016 विरोचन उवाच |
72017
72018 विषयान्प्रति भोः पुत्र सर्वानेव हि सर्वथा |
72019 अनास्था परमा ह्येषा सा युक्तिर्मनसो जये || १७ ||
72020

72021 अनास्था अस्पृहा | युक्तिरुपायः || १७ ||
72022
72023 एषैव परमा युक्तिरनयैव महामदः |
72024 स्वमनोमत्तमातङ्गो द्रागित्येवावदम्यते || १८ ||
72025
72026 द्रागित्येव झटित्येव | अवदम्यते अवमत्य दम्यते | मुक्तिमिच्छसि चेत्तात
72027 विषयान्विषवत्त्यज इत्यभियुक्तोक्तेः || १८ ||
72028
72029 एषा ह्यत्यन्तदुष्प्रापा सुप्रापा च महामते |
72030 अनभ्यस्तातिदुष्प्रापा स्वभ्यस्ता प्राप्यते सुखम् || १९ ||
72031
72032 इषा युक्तिः || १९ ||
72033
72034 क्रमादभ्यस्यमानैषा विषयारतिरात्मज |
72035 सर्वतः स्फुटतामेति सेकसिक्ता लता यथा || २० ||
72036
72037 विषयेष्वरतिर्विरक्तिः | स्फुटतां शान्त्यादिविटपविस्तारव्यक्तताम् || २० ||
72038
72039 नासाद्यते ह्यनभ्यस्ता काङ्क्षतापि शठात्मना |
72040 पुत्र शालिरिवाव्युप्ता तस्मादेनां समाहर || २१ ||
72041
72042 शठात्मना भोगलुब्धमनसा | अव्युप्ता सुक्षेत्रेष्वनुप्ता | समाहर अभ्यासेन
72043 स्थिरीकुरु || २१ ||
72044
72045 तावद्भ्रमन्ति दुःखेषु संसारावटवासिनः |
72046 विरतिं विषयेष्वेते यावन्नायान्ति देहिनः || २२ ||
72047
72048 विरतिं वैराग्यम् || २२ ||
72049
72050 अभ्यासेन विना कश्चिन्नाप्नोति विषयारतिम् |
72051 अप्यत्यन्तबलो देही देशान्तरमिवागतिः || २३ ||
72052
72053 अगतिर्गमनशून्यः || २३ ||
72054
72055 ध्येयत्यागमतोऽजस्रं ध्यायता देहधारिणा |
72056 भोगेष्वरतिरभ्यासाद्वृद्धिं नेया लता यथा || २४ ||
72057
72058 ध्येयत्यागं प्रागुक्तजीवन्मुक्तिहेतुध्येयवासनात्यागम् | ध्यायता वाञ्छता
72059 || २४ ||
72060
72061 पुरुषार्थादृते पुत्र नेह संप्राप्यते शुभम् |
72062 क्रियाफलं परिप्राप्तुं हर्षामर्षविवर्जितम् || २५ ||
72063
72064 नाकस्मात्सर्वे विषयास्त्युक्तुं शक्याः किंतु क्रमेणैकैकं विषयं चिरं
72065 त्यक्त्वा सकृत्सकृत्कदाचित्सेवमानः क्रमात्सर्वं वैराग्यपरिपाके त्यजेत् तत्र
72066 च पुरुषप्रयत्नदार्ढ्यं
72067 पुनर्हर्षामर्षलौल्यप्रसङ्गवारकमावश्यकमित्याशयेनाह -
72068 पुरुषार्थादिति | पुरुषार्थः पुरुषप्रयत्नस्तस्मादृते हर्षामर्षविवर्जितं
72069 क्रियाफलं परिप्राप्तुमनुकूलं शुभं साधनं न संप्राप्यते || २५ ||
72070
72071 दैवमित्युच्यते लोके न दैवं देहवत्क्वचित् |
72072 अवश्यं भवितव्याख्या स्वेहया [१] नियतिश्च या || २६ ||

72073
72074 ननु दैवादेव तत्प्राप्तिः किं न स्यात्तत्राह - दैवमिति । स्वा स्वीया या
72075 नियतिप्रयुक्ता शुभाशुभक्रिया सैव नरैर्मानुषदृष्टिभिर्दैवशब्देनोच्यते
72076 न इतरैर्दिव्यशास्त्रीयदृष्टिमद्भिरिति परेणान्वयः ॥ २६ ॥
72077
72078 उच्यते दैवशब्देन सा नरैरेव नेतरैः ।
72079 यद्यस्येह यदा यत्र संपन्नं समतां गतम् ॥ २७ ॥
72080
72081 ननु विनापि प्रयत्नं दैवादेव केषांचिद्धर्षामर्षोपशमो दृश्यते
72082 तत्कथं तत्राह - यदिति । हर्षामर्षहेतुकर्मक्षये सति यदेव
72083 हर्षामर्षविनाशाय संपन्नं तदेव जनैर्दैवमिति कथ्यत इत्यर्थः ॥ २७ ॥
72084
72085 हर्षामर्षविनाशाय तद्दैवमिति कथ्यते ।
72086 दैवं नियतिरूपं च पौरुषेणोपजीयते ॥ २८ ॥
72087
72088 अस्तु त्वदुक्तमेव दैवं किं ततस्तत्राह - दैवमिति । मदुक्तं नियतिरूपं
72089 दैवं तु वैराग्यदार्ढ्याभ्यासादिपौरुषेण उपसमीपे अल्पकालेनैव जीयते
72090 मरुभूमितत्त्वज्ञानविलासेन मृगतृष्णाभ्रम इवेत्यर्थः ॥ २८ ॥
72091
72092 सम्यग्ज्ञानविलासेन मृगतृष्णाभ्रमो यथा ।
72093 यथा संकल्प्यते यद्यत्पौरुषेण तथैव तत् ॥ २९ ॥
72094
72095 ननु यदि दैवाख्या नियतिः पौरुषाख्यया तया जीयते तर्हि तस्याः
72096 फलनियमाभावादनियतत्वप्रसङ्ग इति चेदिष्टापत्तिः । सर्वेषु
72097 मनःसंकल्पजेष्वसति बाधके प्रमाणैः फलवत्तया गृहीतत्वे फलवत्त
72098 सुखप्रदमित्येव नियमाभ्युपगमादित्याह - यथेति ॥ २९ ॥
72099
72100 फलवत्तागृहीतत्वे फलवत्तासुखप्रदम् ।
72101 कर्ता नो मन एवेह यत्कल्पयति तत्तथा ॥ ३० ॥
72102
72103 नचैवमनियतित्वप्रसङ्गः मनसा कर्त्रा ईदृशनियमस्यैव
72104 कल्पनान्नियतित्वव्यवहारसिद्धेरित्याशयेनाह - कर्तेति । कर्ता जीवो नः
72105 अस्माकं मते मन एव ॥ ३० ॥
72106
72107 नियतिं यादृशीमेतत्संकल्पयति सा तथा ।
72108 नियतानियतान्कांश्चिदर्थाननियतानपि ॥ ३१ ॥
72109
72110 नियतिं यादृशीमेतत्संकल्पयतीत्येतदुपपादयति - नियतानियतानिति ।
72111 उत्सर्गतः फलनियतानपवादविषयेष्वनियतान् व्यावहारिकानर्थाननियतान्
72112 अत्यन्तं फलानियतान् प्रातिभासिकानपि करोतीति परेणान्वयः ॥ ३१ ॥
72113
72114 करोति चित्तं तेनैतच्चित्तं नियतियोजकम् ।
72115 नियत्यां नियतं कुर्वन्कदाचित्स्वार्थनामिकाम् ॥ ३२ ॥
72116
72117 तेन हेतुना एतच्चित्तं स्वसंकल्पितार्थानुसारेण फलनियतेरपि
72118 योजकमुपपादकमित्यर्थः । अत एवार्थस्य पारमार्थिकत्वे तद्विषयबोधस्य
72119 नियतफलत्वमेव न दैववत्कर्मवद्वा अनियतफलत्वमित्याशयेनाह -
72120 नियत्यामिति । अयं चित्तात्मा जीवः कदाचिन्मोक्षाधिकृतजन्मनि नियत्यां
72121 नित्यनियतैकस्वभावे परमात्मनि स्वार्थनामिकां
72122 प्रत्यक्परमार्थगोचरसाक्षात्कारनामिकां नियतिं समानाकारवृत्तिधारां
72123 निर्विकल्पकसमाधिमिति यावत् । कुर्वन्नस्मिन् जगत्कोशे व्योम्नि मारुत इव
72124 असङ्गः स्फुरति स्वस्वभावे प्रकाशत इत्यर्थः ॥ ३२ ॥

72125
72126 स्फुरत्यस्मिञ्जगत्कोशे जीवो व्योम्नीव मारुतः।
72127 नियत्या विहितं कुर्वन्कदाचिन्नियतिं चरः॥ ३३॥
72128
72129 कदाचिद्व्युत्थानकाले नियत्याशास्त्रलक्षणया विहितं स्वस्वाश्रमोचितं कर्म
72130 कुर्वन् संज्ञार्थमज्ञजनबोधनार्थमेते याज्ञिकाः शिष्टाः
72131 सदाचारप्रवर्तका इत्यादिना लोके रूढः प्रख्यातो नियतिशब्दो यस्य
72132 तथाविधः सन्स्फुरति। यथा सानुर्गिरिप्रस्थः स्वयमचलस्वभावोऽपि
72133 पवनवेगाच्चलत्सु वृक्षेषु चल इव स्थिरेषु च स्थिर इव स्फुरति तद्वदित्यर्थः॥
72134 ३३॥
72135
72136 संज्ञार्थं रूढनियतिशब्दः स्फुरति सानुवत्।
72137 तस्माद्यावन्मनस्तावन्न दैवं नियतिर्न च॥ ३४॥
72138
72139 अतस्त्वयापि यावज्जीवं चरमोक्तचरितद्वयमवलम्ब्यतामित्याह - तस्मादिति॥
72140 ३४॥
72141
72142 मनस्यस्तंगते साधो यद्भवत्यस्तु तत्तथा।
72143 जीवो हि पुरुषो जातः पौरुषेण स यद्यथा॥ ३५॥
72144
72145 तदुत्तरं किं भविष्यति तत्राह - मनसीति। पुरुषो जातः
72146 कर्मज्ञानाधिकारिशरीरं प्राप्तः सन्यद्यथा संकल्पयति तत्तथा भवतीति
72147 स्वायत्ते संकल्पे पौरुषेण वैराग्यादिसाधनानि संपाद्य
72148 परमपुरुषार्थात्मकब्रह्मात्मभाव एव संकल्पनीयो न संसार्यात्मभाव
72149 इत्याशयेनाह - पुरुषार्थादृते इत्यादिना॥ ३५॥
72150
72151 संकल्पयति लोकेऽस्मिंस्तत्तथा तस्य नान्यथा।
72152 पुरुषार्थादृते पुत्र न किंचिदिह विद्यते॥ ३६॥
72153
72154 परं पौरुषमाश्रित्य भोगेष्वरतिमाहरेत्।
72155 न भोगेष्वरतिर्यावज्जायते भवनाशनी॥ ३७॥
72156
72157 न परा निर्वृतिस्तावत्प्राप्यते जयदायिनी।
72158 विषयेषु रतिर्यावत्स्थिता संमोहकारिणी॥ ३८॥
72159
72160 यावद्विषयेषु रतिरस्ति तावद्विलोलान्दोलनस्थितिर्भोगलक्षणैर्भोगिभरैः
72161 सर्पभारैः प्रोता ग्रथिता अत एव दुःखदा कदाशालक्षणा भवदशादोला
72162 प्रेङ्खोलिका वैराग्यश्रवणसमाध्याद्यभ्यासेन विना कदाचन कदापि न
72163 निवर्तते नावरितुं शक्येति परेण सहान्वयः॥ ३८॥
72164
72165 तावद्भवदशादोला विलोलान्दोलनस्थितिः।
72166 अभ्यासेन विना पुत्र न कदाचन दुःखदा॥ ३९॥
72167
72168 भोगभोगिभरप्रोता कदाशा विनिवर्तते॥ ४०॥
72169
72170 बलिरुवाच।
72171
72172 भोगेष्वरतिरेवान्तः कथं सर्वासुरेश्वर।
72173 स्थितिमायाति जीवस्य दीर्घजीवितदायिनी॥ ४१॥
72174
72175 दीर्घजीवितं नित्यात्मभावेन स्थितिः॥ ४१॥
72176

72177 विरोचन उवाच ।
72178
72179 आत्मावलोकनलता फलिनी फलति स्फुटम् ।
72180 जीवस्य भोगेष्वरतिं शरदीव महालता ॥ ४२ ॥
72181
72182 फलिनी मोक्षफलवती भोगेष्वरतिं वैराग्यमवान्तरफलं फलति । यथा
72183 द्राक्षादिमहालता शरदि शलाटुं फलति तद्वत् ॥ ४२ ॥
72184
72185 आत्मावलोकनेनैषा विषयारतिरुत्तमा ।
72186 हृदये स्थितिमायाति श्रीरिवाम्भोजकोटरे ॥ ४३ ॥
72187
72188 श्रीर्लक्ष्मीः । अम्भोजकोटरे पद्मगर्भे ॥ ४३ ॥
72189
72190 तस्मात्प्रज्ञानिकाषेण विचारेणातिचारुणा ।
72191 देवमालोकयेद्भोगाद्रतिं चावहरेत्समम् ॥ ४४ ॥
72192
72193 प्रज्ञामणेर्निकाषेण शाणस्थानीयेन विचारेण । समं तुल्यकालम् ॥ ४४ ॥
72194
72195 चित्तस्य भोगैर्द्वौ भागौ शास्त्रेणैकं प्रपूरयेत् ।
72196 गुरुशुश्रूषया चैकमव्युत्पन्नस्य सत्क्रमे ॥ ४५ ॥
72197
72198 तत्र चित्तपरिपाकभेदानुसारेण भूमिकाभेदान् विवक्षुः
72199 प्रथमभूमिकामाह - चित्तस्येति । भोगैर्देहमात्रोपायैर्द्वौ दिनस्य
72200 कालभागौ शास्त्रेण श्रवणेन । अव्युत्पन्नस्य चित्तस्य सत्क्रमे सन्मार्गारम्भे
72201 शास्त्रोक्तक्रमे इति वा ॥ ४५ ॥
72202
72203 किंचिद्व्युत्पत्तियुक्तस्य भागं भोगैः प्रपूरयेत् ।
72204 गुरुशुश्रूषया भागौ भागं शास्त्रार्थचिन्तया ॥ ४६ ॥
72205
72206 तज्जये तदुत्तरभूमिकामाह - किंचिदिति । आत्मज्ञाने लब्धचमत्कारस्येति
72207 यावत् । अत एव भोगेष्वनास्थोदयाद्भागन्यूनतापत्तिः । गुरुशुश्रूषायां च
72208 भागान्तरवृद्धिः । चिरं गुरुसन्निधाने सत्यवसरे गुरुषु
72209 स्वसंदेहप्रश्नसंभवादिति भावः ॥ ४६ ॥
72210
72211 व्युत्पत्तिमनुयातस्य पूरयेच्चेतसोऽन्वहम् ।
72212 द्वौ भागौ शास्त्रवैराग्यैर्द्वौ ध्यानगुरुपूजया ॥ ४७ ॥
72213
72214 तज्जये तदुत्तरभूमिकामाह - व्युत्पत्तिमिति । रत्नतत्त्ववच्चिरपरीक्षणेन
72215 तत्त्वतोऽवधारणं व्युत्पत्तिस्तामनुयातस्य चेतसो द्वौ भागौ शास्त्रवैराग्यैः
72216 समुच्चितैः पूरयेत् । द्वौ तु ध्यानैर्गुरुपूजनेन च क्रमात्पूरयेत् ॥ ४७ ॥
72217
72218 साधुतामागतो जीवो योग्यो ज्ञानकथाक्रमे ।
72219 निर्मलाकृतिरादत्ते पट उत्तमरञ्जनाम् ॥ ४८ ॥
72220
72221 चतुर्विधेऽपि क्रमे शुद्धचित्त एवाधिकारी नान्य इत्याह - साधुतामिति । पटो
72222 निर्मलाकृतिः सम्यक्परिशुद्धसंस्थान एवोत्तमां
72223 कुसुम्भकिंशुकादिरञ्जनामादत्ते न मलिन इत्यर्थः ॥ ४८ ॥
72224
72225 शनैः शनैर्लालनीयं युक्तिभिः पावनोक्तिभिः ।
72226 शास्त्रार्थपरिणामेन पालयेच्चित्तबालकम् ॥ ४९ ॥
72227
72228 ईषन्मलिनस्य तर्हि कथं तत्राह - शनैरिति ।

72229 युक्तिभिर्दुःखान्वयव्यतिरेकप्रदर्शनैः पावनोक्तिभिः
72230 श्रुतिस्मृतिगुरूक्तिभिः शास्त्रार्थे चित्तस्य परिणामश्चिरपरिशीलनेन
72231 शर्करामलकवन्मधुरैकरस्य परिणतिस्तेन ॥ ४९ ॥
72232
72233 परे परिणतं ज्ञाने शिथिलीभूतदुर्ग्रहम् ।
72234 ज्योत्स्नाऽहीनस्फटिकवच्चेतः शीतं विराजते ॥ ५० ॥
72235
72236 शिथिलीभूतो दुर्ग्रहो बाह्यमलिनजडाकारग्रहणं यस्य । ज्योत्स्नया अहीनेन
72237 अपृथग्भूतेन स्फटिकेन तुल्यं चित्प्रकाशसमरसमिति यावत् । लीनेति पाठे
72238 स्पष्टम् । शीतं निस्तापम् ॥ ५० ॥
72239
72240 प्रज्ञया परया ऋज्व्या भोगानामीश्वरस्य च ।
72241 सममेवाथ देहस्य रूपमाश्ववलोकयेत् ॥ ५१ ॥
72242
72243 कीदृशी परे परिणतिस्तां दर्शयति - प्रज्ञयेति । ऋज्व्या
72244 गलितभेदवैषम्यकौटिल्यया परया ब्रह्माकारया प्रज्ञया भोगानां
72245 करणकर्मभावव्युत्पत्तिभिरिन्द्रियविषयतद्वृत्तीनामीश्वरस्य तत्स्वामिनो
72246 जीवस्य अथ देहस्य भोगायतनस्य च समं तुल्यं
72247 सच्चिदानन्दाद्वयैकरसमधिष्ठानब्रह्मस्वरूपमेवावलोकयेत् समं
72248 तुल्यकालमेवाधिष्ठानरूपमवलोकयेदिति वा ॥ ५१ ॥
72249
72250 प्रज्ञाविचारवशतः सममेव सदा सुत ।
72251 आत्मावलोकनं तृष्णासंत्यागं च समाहरेत् ॥ ५२ ॥
72252
72253 विचारफलतृष्णासंत्यागोऽप्यात्यन्तिकस्तदैव भवतीत्याशयेनाह -
72254 प्रज्ञेति ॥ ५२ ॥
72255
72256 परदृष्टौ वितृष्णत्वं तृष्णाभावे च दृक्परा ।
72257 एते मिथः स्थिते दृष्टी तेजोदीपदशे यथा ॥ ५३ ॥
72258
72259 विचारफलं पुरुषापराधनिवृत्तिर्ज्ञानफलं मूलाविद्यानिवृत्तिश्च न
72260 पृथक्सिद्ध्यत इत्याह - परदृष्टाविति । यथा वह्नेस्तेजोदशा
72261 प्रभावस्था दीपदशा दीपाकारावस्था च तिमिरतैलोभयनिवर्तिके मिथः
72262 अन्योन्ययौगपद्येन स्थिते तद्वदित्यर्थः ॥ ५३ ॥
72263
72264 भोगपूगे गतास्वादे दृष्टे देवे परावरे ।
72265 परे ब्रह्मणि विश्रान्तिरनन्तोदेति शाश्वती ॥ ५४ ॥
72266
72267 आस्वाद्यत इत्यास्वादो रसः । गतरस इत्यर्थः ॥ ५४ ॥
72268
72269 विषयाकलितानन्दमनन्तोदेति निर्वृतिः ।
72270 न कदाचन जीवानामात्मविश्रवणादृते ॥ ५५ ॥
72271
72272 भोगास्वादलम्पटानां तु नात्मानन्दप्राप्तिरस्तीत्याह - विषयेति ।
72273 विषयेष्वेव आकलितः सारतया गृहीत आनन्दो यस्मिन्कर्मणि तथा आस्वादयतां
72274 जीवानां कदाचन कदापि न निर्वृतिर्निरतिशयानन्दो नास्ति ॥ ५५ ॥
72275
72276 यज्ञदानतपस्तीर्थसेवाभिर्जायते सुखम् ।
72277 न तपोभिर्न दानेन न तीर्थैरपि जायते ॥ ५६ ॥
72278
72279 आत्मावलोकनेनैषा विषयारतिरुत्तमा । हृदये स्थितिमायातीति यदुक्तं तत्केचिन्न
72280 मृष्यन्ति यज्ञादिभिरेव चित्तशुद्ध्या विषयारतिसंभवादिति तान्प्रत्याह ##-

विरतिर्जायत इति परेणान्वयः ॥ ५६ ॥

भोगेषु विरतिर्जन्तोः स्वभावालोकनादृते ।
कयाचिदपि नो युक्त्या बुद्धिरात्मावलोकने ॥ ५७ ॥

एवं भोगवैराग्याभ्यासपुरुषप्रयत्नं विना केनाप्युपायान्तरेण
आत्मावलोकनेऽपि बुद्धिर्न प्रवर्तत इत्याह - कयाचिदिति ॥ ५७ ॥

स्वप्रयत्नादृते पुंसः श्रेयसे संप्रवर्तते ।
भोगसंत्यागसंप्राप्तपरमार्थादृते सुत ॥ ५८ ॥

न ब्रह्पदविश्रान्तिसुखमासाद्यते परम् ।
आब्रह्मस्तम्बपर्यन्ते जगत्यस्मिन्न कुत्रचित् ॥ ५९ ॥

तद्वदाश्वस्यते भाते परमे कारणे यथा ।
पौरुषं यत्नमाश्रित्य दैवं कृत्वा सुदूरतः ॥ ६० ॥

आश्वस्यते विश्रम्यते । भाते स्वात्मतया अभिव्यक्ते परमे कारणे परमात्मनि ॥
६० ॥

भोगान्विगर्हयेत्प्राज्ञः श्रेयोद्वारदृढार्गलान् ।
प्रौढायां भोगगर्हायां विचार उपजायते ॥ ६१ ॥

विचारः सदसद्विवेकः ॥ ६१ ॥

वृद्धायां प्रावृषि श्रीमाञ्शरत्काल इवामलः ।
विचारो भोगगर्हातो विचाराद्भोगगर्हणम् ॥ ६२ ॥

वृद्धायां सस्याद्यभिवृद्धियुक्तायाम् । शाल्यादिफलसंपदा श्रीमान् ।
तयोरप्यन्योन्याधीना अभिवृद्धिरिति युगपद्वर्धनीयतेत्याह - विचार इति ॥
६२ ॥

अन्योन्यमेते पूर्येते समुद्रजलदाविव ।
भोगगर्हाविचारश्च स्वात्मालोकश्च शाश्वतः ॥ ६३ ॥

यथा समुद्रेण रश्मिद्वारा जलदाः पूर्यन्ते जलदैश्च वृष्टिद्वारा
समुद्रस्तद्वत् । इदानीं त्रयाणां युगपद्वर्धनीयतामाहा - भोगगर्हेति ।
आत्मालोक आत्मदर्शनम् ॥ ६३ ॥

अन्योन्यं साधयन्त्यर्थं सुस्निग्धाः सुहृदो यथा ।
पूर्वं दैवमनादृत्य पौरुषेण प्रयत्नतः ॥ ६४ ॥

दन्तैर्दन्तान्प्रसंपीड्य भोगेष्वरतिमाहरेत् ।
देशाचाराविरुद्धेन बान्धवैकमतेन च ॥ ६५ ॥

प्रथमं भोगारतिरेव महता प्रयत्नेनावश्यं साध्येत्याह - दन्तैरिति ।
तदर्थमुपायमाह - देशेति । तत्तद्वर्णविहितप्रतिग्रहाद्युपायेषु
देशबन्धुजनसंमत एव परिग्राह्यो नान्य इत्याशयः ॥ ६५ ॥

पौरुषेण क्रमेणादौ धनानि समुपार्जयेत् ।
धनैरभ्याहरेद्भव्यान्सुजनान्गुणशालिनः ॥ ६६ ॥

72333 पौरुषेण तत्तद्वर्णोत्पन्नपुरुषोचितेन प्रतिग्रहादिक्रमेण। अभ्याहरेत्।
72334 आराध्य वशीकुर्यादिति यावत्॥ ६६॥
72335
72336 प्रवर्तते समासङ्गात्तेषां भोगविगर्हणा।
72337 ततो विचारस्तदनु ज्ञानं शास्त्रार्थसंग्रहः॥ ६७॥
72338
72339 तदनु विचारानन्तरं ज्ञानं विचारितवाक्यार्थज्ञानं तदनु
72340 गतिसामान्यन्यायालोचनाच्छास्त्रार्थसंग्रहः सर्वश्रुतीनामद्वितीये
72341 ब्रह्मणे तात्पर्यनिर्णयो भवतीत्यर्थः॥ ६७॥
72342
72343 ततः क्रमेण परमपदप्राप्तिः प्रजायते।
72344 यदा तूपरते काले विषयेभ्यो विरम्यसे॥ ६८॥
72345
72346 ततो मनननिदिध्यासनक्रमेण भूमिकारोहणक्रमेण वा इत्थं सांप्रतं
72347 विषयविरामेण परमपदप्राप्त्युपाय उक्तः।
72348 विषयांस्त्यक्तुमसमर्थश्चेद्यौवनकाले उपरते सति यदा विषयेभ्यो विरम्यसे
72349 तदैव विचारवशतः परमं पदमेष्यसि नाधुनेत्यर्थः॥ ६८॥
72350
72351 तदा विचारवशतः परमं पदमेष्यसि।
72352 सम्यक्प्राप्स्यसि विश्रान्तिमात्मन्यत्यन्तपावने॥ ६९॥
72353
72354 एवं विषयोपरमावश्यकत्वे सतीदानीमेवोपरमस्ते युक्त इत्याशयेनाह -
72355 सम्यगिति॥ ६९॥
72356
72357 न पुनः कल्पनापङ्के दुःखाय निपतिष्यसि।
72358 स्थितापि नास्था ते शुद्ध नमस्तेऽस्तु सदाशिव॥ ७०॥
72359
72360 हे शुद्ध ते तव। भोगस्थानस्थितापि यया कालान्तरप्रतीक्षा स्यादतस्त्वं
72361 सदाशिव एव अतस्ते सांप्रतमेव ब्रह्मभूताय नमोऽस्त्वित्यनुचितोऽपि
72362 पुत्रदृशा नमस्कारो ब्रह्मदृष्ट्या कृतः॥ ७०॥
72363
72364 देशक्रमेण धनमल्पविगर्हणेन
72365 तेनाङ्ग साधुजनमर्जय मानपूर्वम्।
72366 तत्संगमोत्थविषयाद्यवहेलनेन
72367 सम्यग्विचारविभवेन तवात्मलाभः॥ ७१॥
72368
72369 उक्तमर्थं संक्षिप्योपसंहरति - देशेति। देशाचाराविरुद्धक्रमेण
72370 धनं अर्जयेति शेषः। तेन धनेन अल्पस्य तुच्छतरस्य भोगस्य विगर्हणेन।
72371 भोगार्थं धनव्ययमकृत्वेति यावत्। साधुजनं ब्रह्मविज्जनं
72372 प्रणिपातसेवान्नाच्छादनादिसन्मानपूर्वकं अर्जय। शास्त्रपूर्वमिति पाठे तु
72373 तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् इति
72374 शास्त्रोक्तरीत्येत्यर्थः। ततः सत्संगमोत्थेन विषयतद्रागद्वेषाद्यवहेलनेन
72375 साधनचतुष्टयसंपत्त्या प्रवृत्तेन सम्यगध्यात्मशास्त्रविचारस्य
72376 विभवेन ते तव आत्मलाभो विस्मृतकण्ठचामीकरलाभवद्भविष्यतीत्यर्थः॥
72377 ७१॥
72378
72379 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे०
72380 मोक्षोपायेषूपशमप्रकरणे चित्तविचिकित्सायोगोपदेशो नाम चतुर्विंशः
72381 सर्गः॥ २४॥
72382
72383 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
72384 चित्तविचिकित्सायोगो नाम चतुर्विंशः सर्गः॥ २४॥

पञ्चविंशः सर्गः २५

बलिरुवाच।

एतन्मे कथितं पूर्वं पित्रा चारुविचारिणा।
इदानीं संस्मृतं दिष्ट्या संप्रबोधमहं गतः॥ १॥

इह भूयो बलेरन्तर्विवेकेन्दुशुभोदयः।
संदेहशान्तये शुक्रचिन्तेच्छातोऽनुवर्ण्यते॥ १॥

अवान्तराख्यानमुपसंहृत्य प्रकृते योजयति - एतदिति॥ १॥

अद्येयं मम संजाता भोगान्प्रत्यरतिः स्फुटम्।
दिष्ट्या शमसुखं स्वच्छं विशाम्यमृतशीतलम्॥ २॥

पुनरापूरयन्नाशां पुनरप्याहरन्धनम्।
पुनरावर्जयन्कातां खिन्नोऽस्मि विभवस्थितौ॥ ३॥

पुनरिति वीसितम्। पुनःपुनरित्यर्थः। आवर्जयन् प्रार्थनादिना अनुकूलयन्।
विभवस्थितौ संपत्परिपालनविषये खिन्नः संतप्तोऽस्मि॥ ३॥

अहो नु खलु रम्येयं शमभूः शीतलान्तरा।
सर्वा एव शमं यान्ति सुखदुःखदृशः शमे॥ ४॥

शमे शान्तिगुणे। सर्वा एव सुखदुःखदृशः समं नाशं यान्ति॥ ४॥

शाम्यामि परिनिर्वामि सुखमासे शमे [मुद्रितपुस्तकेषु प्रायः समे
इत्येव पाठो लभ्यते स त्वसंगत इत्यन्यादर्शगतः शमे इत्ययं
पाठः टीकाकृदनुमत्यादृतः] स्थितः।
अयमन्तः प्रहृष्यामि चन्द्रबिम्ब इवार्पितः॥ ५॥

शमे स्थितः प्रतिष्ठितोऽहं शाम्यामीति सर्वतापोपशमोक्तिः। चन्द्रबिम्बेऽर्पित
इव परिनिर्वामीति चित्तस्य निरतिशयसुखपारवश्योक्तिः। सुखमास इति
तद्धेतुसुखात्मना स्थित्युक्तिः। अन्तरिति सर्वत्र संबाध्यते। अयं
प्रहृष्यामीति हर्षलिङ्गपुलकाद्यतिशयोक्तिः॥ ५॥

उत्ताण्डवन्मनोरंहःप्रोषितोरुशरीरकम्।
अनारतपरिक्षोभं हा दुःखं विभवार्जनम्॥ ६॥

उत्ताण्डवशब्दात् सर्वप्रातिपदिकेभ्य आचारे क्विब्वक्तव्यः इति क्विपि लटः
शत्रादेशः। भोगोत्कण्ठया उत्ताण्डवतो मनसो रंहोभिः प्रोषितं दग्धं
देशभ्रमणशीलं वा उरु प्रधानं शरीरं उरु शरीरं वा यस्मिन् अत
एवानारतपरिक्षोभं विभवार्जनं दुःखमेव। हा इति खेदे॥ ६॥

अङ्गमङ्गेन संपीड्य मांसं मांसेन च स्त्रियः।
पुराहमभवं प्रीतो यत्तन्मोहविजृम्भितम्॥ ७॥

इदानीं तत्फलस्त्र्यादिभोगस्वरूपमप्यसारतया विविच्य परिशोचति -
अङ्गमित्यादिना॥ ७॥

72437 दृष्टान्तदृष्टयो दृष्टा भुक्तं भोक्तव्यमक्षतम् ।
72438 आक्रान्तमखिलं भूतं जातं किमिव शोभनम् ॥ ८ ॥
72439
72440 सर्वेषां विभवानां दृष्टान्तभूतमहाविभवदृष्टयः स्वेन दृष्टाः
72441 । अक्षतं परैरव्याहतं भोक्तव्यं राज्यभोगादि भुक्तम् । अखिलं भूतं
72442 प्राणिजातमाक्रान्तं स्वसामर्थ्येन नामितमिति यावत् । तथापि किमिव शोभनं
72443 शाश्वतसुखं जातम् । अनादौ संसारे सर्वेषामपि कदाचिदेवं
72444 वैभवसंभवात्स्वस्यापि पूर्ववच्छतशो दुर्दशासहस्रस्याग्रेऽपि
72445 संभावितत्वाच्च न किंचिच्छोभनमित्यर्थः ॥ ८ ॥
72446
72447 पुनस्तान्येव तान्येव तत्रेहान्यत्र वापि च ।
72448 इतश्चेतश्च वस्तूनि नापूर्वं नाम किंचन ॥ ९ ॥
72449
72450 अभिनवचमत्कारान्तरादर्शनाच्चर्वितचर्वणप्रायत्वाच्च
72451 नैहिकामुष्मिकभोगानां सारतास्तीत्याह - पुनरिति । तत्र स्वर्गादौ । इह भुवि
72452 । अन्यत्र नागलोकादौ ॥ ९ ॥
72453
72454 सर्वमेव परित्यज्य परिहृत्य धिया स्वयम् ।
72455 स्वस्थ एवावतिष्ठेऽहं पूर्णात्पूर्ण इवात्मनि ॥ १० ॥
72456
72457 पूर्णात्स्वरूपाद्बोधतः प्राप्तात्पूर्ण इवेत्यपूर्णताभ्रान्तिनिरास एव
72458 नापूर्वपूर्णताप्राप्तिरस्तीति द्योतनाय । अथवा पूर्णाच्चन्द्रान्निमित्तात्पूर्णः
72459 क्षीराब्धिरिवेत्यर्थः ॥ १० ॥
72460
72461 पाताले भूतले स्वर्गे स्त्रियो रत्नोपलादयः ।
72462 सारं तदपि तुच्छेन कालेनाशु निगीर्यते ॥ ११ ॥
72463
72464 यदपि भोग्यमज्ञदृष्ट्या सारत्वेन गृहीतं तदपि नश्वरत्वाद्दुःखाय
72465 पर्यवसितं तद्दृशाप्यसारमेवेत्याशयेनाह - पाताल इति ॥ ११ ॥
72466
72467 एतावन्तमहं कालं भृशं बालोऽभवं पुरा ।
72468 यः कुर्वन्द्वेषममरैस्तुच्छया जगदिच्छया ॥ १२ ॥
72469
72470 तुच्छया जगदाधिपत्येच्छया अमरैः सह द्वेषं कुर्वन्नहं मृशं बालो
72471 मूर्ख एवाभवमित्यर्थः ॥ १२ ॥
72472
72473 मनोनिर्माणमात्रेण जगन्नाम्ना महाधिना ।
72474 त्यक्तेनानेन कोऽर्थः स्यात्को नु रागो महात्मनः ॥ १३ ॥
72475
72476 जगन्नाम्ना जगदाधिपत्यनाम्ना महता आधिना मानसदुःखेन अत्यक्तेनेति
72477 [पूर्वार्धेन मिलितोच्चारणात्] च्छेदः । अर्थः पुरुषार्थः स्यात् ।
72478 अनुरागे हि सति तत्र पुरुषार्थताबुद्धिः स एव नास्तीत्याह - क इति ॥ १३ ॥
72479
72480 कष्टं चिरतरं कालमनर्थोऽर्थधिया मया ।
72481 अज्ञानमदमत्तेन कालेन स्वेन सेवितः ॥ १४ ॥
72482
72483 कालेन स्वमृत्युभूतेन स्वेनैव मया अनर्थः अर्थधिया सेवित इत्यर्थः ॥ १४ ॥
72484
72485 तरत्तरलतृष्णेन किमिवास्मिञ्जगल्लयम् ।
72486 मया न कृतमज्ञेन पश्चात्तापाभिवृद्धये ॥ १५ ॥
72487
72488 एतया तदलं मेऽस्तु तुच्छया पूर्वचिन्तया ।

72489 पौरुषं याति साफल्यं वर्तमानचिकित्सया ॥ १६ ॥
72490
72491 अथवा किं मम गतशोकेन सांप्रतिकमोहचिकित्सया
72492 पुरुषजन्मसाफल्योपायं चिन्तयामीत्याह - एतयेति ॥ १६ ॥
72493
72494 अद्यापरिमिताकारकारणैकतयात्मनि ।
72495 सर्वतः सुखमभ्येति रसायनमिवार्णवे ॥ १७ ॥
72496
72497 अपरिमिताकारं अपरिच्छिन्नस्वरूपं यत्कारणं ब्रह्म तदेकतया
72498 तदभेदस्थित्या आत्मनि सर्वतः पूर्णं सुखमर्णवे क्षीरसमुद्रे
72499 रसायनममृतमथनेनेव यथा सर्वतः अभ्येत्याविर्भवति तथा अद्य
72500 औशनसं शुक्रं पृच्छामीति परेणान्वयः ॥ १७ ॥
72501
72502 कोऽयं तावदहं किं स्यादात्मेत्यात्मावलोकनम् ।
72503 पृच्छाम्यौशनसं नाथं नूनमज्ञानशान्तये ॥ १८ ॥
72504
72505 अयं प्रपञ्चः कः । अहं अहंप्रत्ययवेद्यं जीवतत्त्वं किम् । इत्यात्मा
72506 अवलोक्यते येन तदात्मावलोकनमुपायं नाथं
72507 कुलगुरुत्वात्कुलस्येश्वरमुशनसमेवौशनसं पृच्छामि प्रक्ष्यामि ॥ १८ ॥
72508
72509 संचिन्तयामि परमेश्वरमाशु शुक्र-
72510 मुद्यत्प्रसादमथ तेन गिरोपदिष्टे ।
72511 तिष्ठाम्यनन्तविभवे स्वयमात्मनात्म-
72512 न्यक्षीणमर्थमुपदेशगिरः फलन्ति ॥ १९ ॥
72513
72514 अहं परमेश्वरं योगसिद्धत्वात्सर्वकामेश्वरम् । स्वाश्रितेष्वाशु
72515 उद्यत्प्रसादं शुक्रं संचिन्तयामि । तेन शुक्रेण गिरा उपदिष्टे अनन्तविभवे
72516 आत्मनि स्वयमात्मनैव तिष्ठामि स्थास्यापि । वर्तमानसामीप्ये लट् ।
72517 तत्रावस्थाने केन हेतुना तवाश्वासस्तत्राह - अक्षीणमिति । यतो
72518 महतामुपदेशगिरोऽक्षीणमक्षयमर्थं फलन्ति न
72519 कदाचिद्विफलीभवन्तीत्यर्थः ॥ १९ ॥
72520
72521 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० उपशमप्रकरणे
72522 बलिचिन्तासिद्धान्तयोगोपदेशो नाम पञ्चविंशः सर्गः ॥ २५ ॥
72523
72524 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
72525 बालचिन्तासिद्धान्तयोगोपदेशो नाम पञ्चविंशः सर्गः ॥ २५ ॥
72526
72527
72528 षड्विंशः सर्गः २६
72529
72530 श्रीवसिष्ठ उवाच ।
72531
72532 इति संचिन्त्य बलवान्बलिरामीलितेक्षणः ।
72533 दध्यौ कमलपत्राक्षं शुक्रमाकाशमन्दिरम् ॥ १ ॥
72534
72535 स्मृत्या यातस्य शुक्रस्य संक्षेपेण बलिं प्रति ।
72536 तत्त्वसारोपदेशोऽथ नभोगतिरिहेर्यते ॥ १ ॥
72537
72538 आकाशो ब्रह्माकाश एव मन्दिरं विश्रान्तिस्थानं यय तम् ॥ १ ॥
72539
72540 सर्वस्थं चिन्तयानं तु नित्यध्यानोऽथ भार्गवः ।

72541 चेतःस्थं ज्ञातवान् शिष्यं बलिं गुर्वर्थिनं पुरे ॥ २ ॥
72542
72543 अथ नित्यध्यानोऽभीक्ष्णं ध्यानपरो भार्गवः
72544 सर्वान्तरब्रह्मरूपत्वात्सर्वस्थं स्वं चिन्तयानं स्वचेतःस्थं बलिं
72545 शिष्यं गुर्वर्थिनं तत्त्वजिज्ञासया स्वदर्शनेच्छुं ज्ञातवानित्यन्वयः ॥ २ ॥
72546
72547 अथ सर्वगतानन्तचिदात्मा भार्गवः प्रभुः ।
72548 आनिनाय स देहं स्वं रत्नवातायनं बलेः ॥ ३ ॥
72549
72550 अथ स भार्गवः स्वं देहं बलेः रत्नवातायनं रत्नगवाक्षस्थानं प्रति
72551 आनिनाय । स्वयमाजगामेति यावत् ॥ ३ ॥
72552
72553 गुरुदेहप्रभाजालपरिमृष्टतनुर्बलिः ।
72554 बुबुधे प्रातरर्कांशुसंबोधितमिवाम्बुजम् ॥ ४ ॥
72555
72556 परिमृष्टतनुः संस्पृष्टशरीरः । संबोधितं विकासितम् ॥ ४ ॥
72557
72558 तत्र रत्नार्घ्यदानेन मन्दारकुसुमोत्करैः ।
72559 पादाभिवन्दनैरेनं पूजयामास भार्गवम् ॥ ५ ॥
72560
72561 रत्नार्घ्यपरिपूर्णाङ्गं कृतमन्दारशेखरम् ।
72562 महार्हासनविश्रान्तमथोवाच गुरुं बलिः ॥ ६ ॥
72563
72564 बलिरुवाच ।
72565
72566 भगवंस्त्वत्प्रसादोत्था प्रतिभेयं पुरस्तव ।
72567 नियोजयति मां वक्तुं कार्यं कर्तुमिवार्कभाः ॥ ७ ॥
72568
72569 प्रतिभा नवनवोन्मेषशालिनी बुद्धिः यथा प्रातरुदिता अर्कभा ब्राह्मणादीन्
72570 संध्यावन्दनादिकार्यं कर्तुं सन्निधानमात्रेण नियोजयति तद्वत् ॥ ७ ॥
72571
72572 भोगान्प्रति विरक्तोऽस्मि महासंमोहदायिनः ।
72573 तत्तत्त्वं ज्ञातुमिच्छामि महासंमोहहारि यत् ॥ ८ ॥
72574
72575 यत्स्वज्ञानमात्रेण महासंमोहहारि तत्तादृशं तत्त्वम् ॥ ८ ॥
72576
72577 कियन्मात्रमिदं भोगजालं किंमयमेव वा ।
72578 कोऽहं कस्त्वं किमेते वा लोका इति वदाशु मे ॥ ९ ॥
72579
72580 कियती मात्रा उत्कर्षावधिर्यस्य तत् । भोगजालं विषयसुखम् । किंमयं
72581 किंप्रकृतिकमिति भोगतत्त्वप्रश्नः । कोऽहं कस्त्वमिति भोक्तृतत्त्वप्रश्नः ।
72582 किमेते लोका इति भोग्यतत्त्वप्रश्नः । लोक्यन्ते इति लोका इति व्युत्पत्तेः ॥ ९ ॥
72583
72584 शुक्र उवाच ।
72585
72586 बहुनात्र किमुक्तेन खं गन्तुं यत्नवानहम् ।
72587 सर्वदानवराजेन्द्र सारं संक्षेपतः शृणु ॥ १० ॥
72588
72589 भोक्त्रादित्रिपुटीभेदस्यैकस्यां चिति कल्पितत्वात्संक्षेपतस्तदुपदेशेनैव
72590 प्रश्नत्रयस्याप्युत्तरं सुवचमित्याशयं द्योतयन्नाह - बहुनेति । खं
72591 आकाशमार्गम् । सारं प्रश्नत्रयसारम् ॥ १० ॥
72592

72593 चिदिहास्ति हि चिन्मात्रमिदं चिन्मयमेव च |
72594 चित्त्वं चिदहमेते च लोकाश्चिदिति संग्रहः || ११ ||
72595
72596 इह जगति चिदस्ति | हिशब्दस्तत्सिद्धेरन्यनिरपेक्षत्वप्रसिद्धिद्योतनाय | अत इदं
72597 चिद्दृश्यं चिदधीनसिद्धिकं भोगजातं चिदेव मात्रा उत्कर्षावधिर्यस्य
72598 तथाविधम् | यतो वाचो निवर्तन्ते इति श्रुत्या पूर्णचित एव
72599 सर्वानन्दोत्कर्षावधित्वोक्तेः | चित्येव भेदवैचित्र्याध्यासाच्चिन्मयमेव च
72600 एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति इति श्रुतेः | एवं
72601 तत्त्वमस्यहं ब्रह्मास्मि एष ब्रह्मैष इन्द्रः नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति
72602 श्रोता इत्यादिश्रुतिशतेभ्यस्त्वमहमादिभोक्तृतत्त्वमपि चिन्मात्रमेवेत्याह ##-
72603 तत्सत्तास्फूर्त्योश्चिदधीनत्वात् ब्रह्मैवेदं विश्वमिदं वरिष्ठं
72604 इत्यादिश्रुतेश्चेत्याशयेनाह - एते चेति || ११ ||
72605
72606 भव्योऽसि चेत्तदेतस्मात्सर्वमाप्नोषि निश्चयात् |
72607 नो चेत्तद्ब्रह्मपि प्रोक्तं त्वयि भस्मनि हूयते || १२ ||
72608
72609 भवतीति भव्यः श्रद्दधानो विवेकी || १२ ||
72610
72611 चिच्चेत्यकलनाबन्धस्तन्मुक्तिर्मुक्तिरुच्यते |
72612 चिदचेत्याखिलात्मेति सर्वसिद्धान्तसंग्रहः || १३ ||
72613
72614 चितश्चेत्याकारकलनैव बन्धः अचेत्या चेत्याकारनिर्मुक्ता | अखिलात्मा
72615 पूर्णात्मा || १३ ||
72616
72617 एनं निश्चयमादाय विलोकयसि हेलया |
72618 स्वयमेवात्मनात्मानमनन्तं पदमाप्स्यसि || १४ ||
72619
72620 विलोकयसि चेदिति शेषः | आत्मनां अखण्डाकारवृत्त्या रूढप्रतीचा || १४ ||
72621
72622 खं व्रजाम्यहमत्रैव मुनयः सप्त संगताः |
72623 केनापि सुरकार्येण वस्तव्यं तत्र वै मया || १५ ||
72624
72625 खं देवलोकः | वस्तव्यं अवश्यं संनिधातव्यम् | भावे तव्यः || १५ ||
72626
72627 राजन्यावदयं देहस्तावन्मुक्तधियामपि |
72628 यथाप्राप्तक्रियात्यागो रोचते न स्वभावतः || १६ ||
72629
72630 ननु मुक्तधियः कृतकृत्यस्य तव तत्र अगमने का क्षतिस्तत्राह -
72631 राजन्निति || १६ ||
72632
72633 इति कथितवताथ भार्गवेण
72634 स्फुटजलराशिपथा महाजवेन |
72635 प्लुतमलिशबले नभोन्तराले
72636 तरलतरङ्गवदाकुले ग्रहौघैः || १७ ||
72637
72638 अथ इति कथितवता भार्गवेण ग्रहौघैराकुले अत एव पुष्परेणुव्याप्तोऽलिरिव
72639 शबले किर्मीरे नभोन्तराले स्फुटेन जलराशेर्मेघस्य समुद्रस्य च पथा
72640 उपरिमार्गेण तरलतरङ्गवन्महाजवेन प्लुतं उड्डीनम् | भावे क्तः || १७ ||
72641
72642 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे०
72643 मोक्षोपायेषूपशमप्रकरणे बल्युपदेशयोगो नाम षड्विंशः सर्गः ||
72644 २६ ||

72645
72646 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
72647 बल्युपदेशयोगो नाम षड्विंशः सर्गः ॥ २६ ॥
72648
72649
72650 सप्तविंशः सर्गः २७
72651
72652 श्रीवसिष्ठ उवाच ।
72653
72654 सुरासुरसभाज्येष्ठे तस्मिन्भृगुसुते गते ।
72655 मनसा चिन्तयामास बलिर्बुद्धिमतां वरः ॥ १ ॥
72656
72657 शुक्रोपदिष्टमार्गेण सर्वं विमृशतो बलेः ।
72658 चित्पूर्णानन्दविश्रान्त्या चिरं स्थितिरिहोच्यते ॥ १ ॥
72659
72660 सुरासुरसभासु ज्येष्ठे प्रशस्यतमे । ज्यचेति प्रशस्यशब्दस्येष्ठनि
72661 ज्यादेशः ॥ १ ॥
72662
72663 युक्तमुक्तं भगवता चिदेवेदं जगत्त्रयम् ।
72664 चिदहं चिदिमे लोकाश्चिदाशाश्चिदियं क्रिया ॥ २ ॥
72665
72666 यच्चिन्तयामास तदाह - युक्तमित्यादिना ॥ २ ॥
72667
72668 सबाह्याभ्यन्तरं सर्वं चिदेव परमार्थतः ।
72669 अस्ति चिद्व्यतिरेकेण नेह किंचन कुत्रचित् ॥ ३ ॥
72670
72671 अयमादित्य इत्यर्को न चिता यदि चेत्यते ।
72672 तदर्कतमसोर्भेदः क इहेवोपलभ्यते ॥ ४ ॥
72673
72674 युक्ततामुपपादयति - अयमादित्य इत्यादिना । चेत्यते संज्ञायते ।
72675 तमोघटदीपादिव्यावृत्ततया [व्यावृत्तता इत्यपि क्वचित्] यदि न
72676 प्रकाश्यत इत्यर्थः । भेदो व्यावृत्तिर्विच्छित्तिवैधर्म्यं च । इवशब्दो
72677 वाक्यालंकारार्थः ॥ ४ ॥
72678
72679 इयं भूरिति भूरेषा चिता यदि न चेत्यते ।
72680 भूमेः किं नाम भूमित्वं तद्द्रव्ये भव्यतां गतम् ॥ ५ ॥
72681
72682 भूमित्वं जलादिव्यावृत्तरूपं किम् । एवमग्रेऽपि सर्वत्र । भव्यतां
72683 निरूढतां गतं प्राप्तम् ॥ ५ ॥
72684
72685 इमा दिशो दिश इति चेत्यन्ते न चिता यदि ।
72686 तत्किं नाम दिशां दिक्त्वं शैलानां चापि काद्रिता ॥ ६ ॥
72687
72688 शैलेष्वपि इमे शैला इति यदि न चेत्यन्ते इत्यर्थाद्गम्यते ॥ ६ ॥
72689
72690 इदं जगज्जगदिति चिता यदि न चेत्यते ।
72691 तत्किं जगत्त्वं जगतो नभस्त्वं नभसोऽथ किम् ॥ ७ ॥
72692
72693 जगत् क्रियावन्मूर्तद्रव्यं नभस्त्वमूर्तम् ॥ ७ ॥
72694
72695 कायोऽयं पर्वताकारश्चिता यदि न चेत्यते ।
72696 तत्किं नाम शरीरत्वं शरीरस्य शरीरिणाम् ॥ ८ ॥

72697
72698 भूतेषूक्त्वा भौतिकेष्वाह - काय इति। पर्वताकारः। स्थूल इति यावत्॥ ८॥
72699
72700 चिदिन्द्रियाणि चित्कायश्चिन्मनश्चित्तदेषणा।
72701 चिदन्तश्चिद्बहिश्चित्खं चिद्भावाश्चिद्भवस्थितिः॥ ९॥
72702
72703 खं शून्यमसत्। भावास्तद्विलक्षणाः सन्तः।
72704 भवस्थितिस्तदुभयसंवलनात्कादाचित्कीसत्ता॥ ९॥
72705
72706 चितैवैनमहं सर्वं स्पर्शनैषणपूर्वकम्।
72707 करोमि मात्रासंस्पर्शं शरीरेण न किंचन॥ १०॥
72708
72709 स्पर्शनैषणं भोगेच्छा तत्पूर्वकं मात्राणां शब्दादिविषयाणां
72710 संस्पर्शं भोगम्। शरीरेणेति। अचेतनस्य भोक्तृत्वायोगादिति भावः॥ १०॥
72711
72712 किमनेन शरीरेण काष्ठलोष्टसमेन मे।
72713 अशेषजगदेकात्मा चिदहं चेतनात्मकः॥ ११॥
72714
72715 यदि शरीरेण न किंचन तर्हि शरीराभिमानो वृथैवेति त्याज्य एवेत्याह -
72716 किमनेनेति। तत्त्यागे निरुपाधिचितां
72717 भेदकाभावात्सर्वचिदैकात्म्यसिद्धिरपरोलाभ इत्याशयेनाह - अशेषेति।
72718 चेतनात्मक इति। चेतना चित् तदात्मकत्वस्य सर्वत्राविशेषादिति
72719 हेतुप्रदर्शनार्थम्॥ ११॥
72720
72721 अहं चिदम्बरे भानावहं चिद्भूतपञ्जरे।
72722 सुरासुरेषु चिदहं स्थावरेषु चरेषु च॥ १२॥
72723
72724 अम्बरे आकाशे। भानौ सूर्यादितेजसि। भूतपञ्जरे अवशिष्टभूतत्रये।
72725 सुरासुरादिस्थावरजङ्गमदेहेषु च। या चित्सा अहमेव सैवाहमिति वार्थः॥ १२॥
72726
72727 चिदस्तीह द्वितीया हि कल्पनैव न विद्यते।
72728 द्वित्वस्यासंभवाल्लोके कः शत्रुः कश्च वासुहृत्॥ १३॥
72729
72730 एवं सर्वचिदैक्ये भेदप्रत्ययानां पृथगनवशेषाद्व्याघाताच्च
72731 द्वित्वस्यासंभवाच्छत्रुमित्रादिकल्पनापि दूरनिरस्तेत्याह - चिदस्तीति॥ १३॥
72732
72733 बलिनाम्नः शरीरस्य च्छिन्ने शिरसि भासुरे।
72734 चितः किं तद्भवेच्छिन्नं सर्वलोकावपूरणात्॥ १४॥
72735
72736 अस्तु वा देहादिद्वैतं तथाप्यसङ्गपूर्णचिन्मात्ररूपस्य मम न तत्क्षत्या
72737 कापि क्षतिरस्तीत्याह - बलिनाम्न इति॥ १४॥
72738
72739 चिता संचेतितो द्वेषो द्वेषो भवति नान्यथा।
72740 तस्माद्द्वेषादयः सर्वे भावाभावाश्चिदात्मकाः॥ १५॥
72741
72742 अस्तु वा तच्चित एव च्छिन्नं तथापि च्छेद्यच्छेदनादिभावाभावानां
72743 तद्गोचररागद्वेषादीनां च चिदधीनकल्पनत्वेन चिदव्यतिरेकान्न चित्प्रतिकूलं
72744 किंचिदापन्नमित्याशयेनाह - चितेति॥ १५॥
72745
72746 न चितो व्यतिरेकेण प्रविचार्यापि किंचन।
72747 आसाद्यते किल स्फारादस्मात्त्रिभुवनोदरात्॥ १६॥
72748

72749 न द्वेषोऽस्ति न रागोऽस्ति न मनो नास्य वृत्तयः ।
72750 चिन्मात्रस्यातिशुद्धस्य विकल्पकलना कुतः ॥ १७ ॥
72751
72752 चिदहं सर्वगो व्यापी नित्यानन्दमयात्मकः ।
72753 विकल्पकलनातीतो द्वितीयांशविवर्जितः ॥ १८ ॥
72754
72755 प्रतिकूलाप्रसिद्धौ चितो नित्यानुकूलप्रथमानतालक्षणा आनन्दात्मना स्वत एव
72756 परिशिष्यत इत्याशयेन नित्यानन्दमयात्मक इत्युक्तिः ॥ १८ ॥
72757
72758 चितश्चिदिति यन्नाम निर्नामाया न नाम तत् ।
72759 शब्दात्मिकैषा चिच्छक्तिः परिस्फुरति सर्वगा ॥ १९ ॥
72760
72761 जगद्रूपनामकल्पनावच्चितः स्वनामकल्पनापि स्वविवर्त एवेत्याह - चित इति ।
72762 सर्वगा सर्वनामरूपकल्पनाधिष्ठानचिच्छक्तिरेव स्वनामशब्दात्मिकेव
72763 परिस्फुरतीत्यर्थः ॥ १९ ॥
72764
72765 दृश्यदर्शननिर्मुक्तकेवलामलरूपवान् ।
72766 नित्योदितो निराभासो द्रष्टास्मि परमेश्वरः ॥ २० ॥
72767
72768 एवं च कोऽहमिति प्रश्नोत्तरमपि स्वयमेव मयावगतमित्याह - दृश्येति ॥
72769 २० ॥
72770
72771 कल्पनाविकलाकारः कालकान्तकलामयः ।
72772 आभासमात्रमुदितो नित्याभासविवर्जितः ॥ २१ ॥
72773
72774 ईदृशे भारूपैकस्वरूपे अस्मिन्मयि नित्यस्वात्मावभासविवर्जितः के जले
72775 अलकान्ते केशाग्रे वा प्रतिबिम्बितचन्द्रकलाप्रायः शुक्लपक्षकाले
72776 उपचयात्कान्ताः कला यस्य चन्द्रस्य तत्प्रायो वा स्वकल्पनारूपो विकलाकारः
72777 परिच्छिन्नजीवभावो य उदितः स आभासमात्रं भ्रान्तिरेव न वास्तव इत्यर्थः ॥
72778 २१ ॥
72779
72780 भारूपैकस्वरूपेऽस्मिन्स्वरूपेण जयाम्यहम् ।
72781 चेत्यरञ्जनरिक्ताय विमुक्ताय महात्मने ॥ २२ ॥
72782
72783 अत एव तं जीवभावं चरमसाक्षात्कारवृत्तीद्धेन स्वरूपेणैवाहं
72784 जयाम्यभिभवामि । जितजीवभावः स्वात्मैव परमेश्वर इति तं नमस्यति -
72785 चेत्येत्यादिना ॥ २२ ॥
72786
72787 प्रत्यक्चेतनरूपाय स्वरूपाय नमोऽस्तु ते ।
72788 चितये चेत्यमुक्ताय युक्त्या युक्ताय योग्यया ॥ २३ ॥
72789
72790 योग्यया युक्त्या प्रत्यक्परागभेदान्वययोग्येनाखण्डाभेदेन युक्ताय
72791 साक्षात्कारयोग्यया मनननिदिध्यासनयुक्त्या युक्तायेति वा मह्यं
72792 प्रत्यग्रूपाय ते ब्रह्मणे नमोऽस्तु ॥ २३ ॥
72793
72794 सर्वावभासदीपाय [रूपाय इति पाठः] मह्यमेव नमोऽस्तु ते ।
72795 चेत्यनिर्मुक्तचिद्रूपं विष्वग्विश्वावपूरकम् ॥ २४ ॥
72796
72797 संशान्तसर्वसंवेद्यं सच्चिन्मात्रमहं महत् ।
72798 आकाशवदनन्तोऽहमप्यणोरणुराततः ॥ २५ ॥
72799
72800 नासादयन्ति मामेताः सुखदुःखदशा दृशः ।

72801 संवेदनमसंवेद्यमचेत्यं चेतनं ततम् || २६ ||
72802
72803 वर्तमानविषये संवेदनमसंवेद्यं अतीतानागतविषये अचेत्यं चेतनम् |
72804 उभयत्र चाक्षुषादिवृत्तीनां स्मृत्यादिवृत्तीनां च व्यावृत्तये
72805 असंवेद्यमचेत्यमिति च विशेषणे || २६ ||
72806
72807 न शक्ता मां परिच्छेत्तुं भावाभावा जगद्गताः |
72808 अथ चैते जगद्भावाः परिच्छिन्दन्तु मामिमम् || २७ ||
72809
72810 परिच्छेत्तुं देशतः कालतो वस्तुतो वा इयत्त्वे व्यवस्थापयितुं न शक्ताः |
72811 भावाभावयोः प्रत्युत साक्षिपरिच्छेद्यत्वादिति भावः | यदि ब्रूया न
72812 वयमियत्त्वे व्यवस्थापनं परिच्छेदं ब्रूमः किंतु तत्त्वावधारणं
72813 तदनुकूलाश्च प्रमाणादयो जगद्भवास्तत्त्वतः परिच्छिन्दन्त्येवात्मानमिति
72814 तत्राह - अथ चेति | प्रकारान्तरद्योतनार्थोऽथशब्दः || २७ ||
72815
72816 यथाभिमतमेवैते मत्तो न व्यतिरेकिणः |
72817 यदि [मयि इत्यपि क्वचिल्लभ्यते] स्वभावभूतेन वस्तुना वस्तु नीयते
72818 || २८ ||
72819
72820 एवं परिच्छेदनं मम यथाभिमतं संमतमेव | यतस्ते
72821 मत्स्वरूपपरिच्छेदमात्रेण मत्तो न व्यतिरेकिणो मदेकपरिशेषाः | अहमेव
72822 संपद्यन्त इत्यर्थः | एवंभूतैश्च परिच्छेदे वामहस्तगतस्य धनस्य
72823 दक्षिणहस्तेन नयने हरणे परावृत्य दाने वा हस्तद्वयाभिन्नस्य
72824 देहात्मकस्य देवदत्तस्य यथा न धनक्षतिस्तद्वन्न काचित्क्षतिरित्याह -
72825 यदीति || २८ ||
72826
72827 ह्रियते दीयते वापि तत्किं कस्य किल क्षतम् |
72828 सर्वदा सर्वमेवाहं सर्वकृत्सर्वसंगतः || २९ ||
72829
72830 वस्तुतस्तु तत्त्वबोधात्पूर्वमपि जगत्स्वयमेवेति प्रागपि न किंचिदुदितं क्षतं
72831 वेत्याशयेनाह - सर्वदेति || २९ ||
72832
72833 चेत्यमस्म्यहमेवैतन्न किंचिदपि चोदितम् |
72834 किं संकल्पविकल्पाभ्यां चितं चिदियमेकिका || ३० ||
72835
72836 अहमेकिका चित् चिद्भूतस्य च मम संकल्पविकल्पाभ्यां किं
72837 चितमुपचितमपचितं वा || ३० ||
72838
72839 संक्षोभयाम्यहं तावच्छाम्याम्यात्मनि पावने |
72840 इति संचिन्तयन्नेव बलिः परमकोविदः || ३१ ||
72841
72842 अज्ञानात्संक्षोभयामि तत्त्वबोधाच्च शाम्यामि इति संचिन्तयन्बलिः
72843 ओंकारात्स्थूलसूक्ष्मसंक्षोभाभ्यां तद्बीजाज्ञानेन च संवलितं चैतन्यं
72844 बोधयदकारादिमात्रात्रयं विहाय परमर्धमात्रार्थं तुरीयं भावयन्
72845 स्वात्मतयानुभवंस्तत्र समाहितः स्थितः || ३१ ||
72846
72847 ओंकारादर्धमात्रार्थं भावयन्मौनमास्थितः |
72848 संशान्तसर्वसंकल्पः प्रशान्तकलनागणः || ३२ ||
72849
72850 निःशङ्कमपि दूरास्तचेत्यचिन्तकचिन्तनः |
72851 ध्यातृध्येयध्यानहीनो निर्मलः शान्तवासनः || ३३ ||
72852

दूरे अस्तानि चेत्यचिन्तकचिन्तनानि येन। त्रिपुटीमात्रत्यागोपलक्षणमेतत्। तत्र
हेतुः - ध्यात्रिति ॥ ३४ ॥

बभूवावातदीपाभो बलिः प्राप्तमहापदः।
उपशान्तमनास्तत्र रत्नवातायने बलिः।
अवसद्बहुकालं स समुत्कीर्ण इवोपले ॥ ३४ ॥

उपले समुत्कीर्णः टङ्कच्छेदनिष्पादितः पुरुष इव ॥ ३४ ॥

प्रशमितैषणया परिपूर्णया
मननदोषदशोज्झितयैतया।
बलिरराजत निर्मलसत्तया
विघनमच्छतयेव शरन्नभः ॥ ३५ ॥

बलिः प्रशमितैषणया अत एव परिपूर्णया अत एव
विषयमननदोषदशाभिरुज्झितया एतया निर्मलब्रह्मभावप्राप्तिलक्षणया
सत्तया विघनं गतमेघं शरन्नभ इव अराजत ॥ ३५ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये देवदूतोक्ते मो०
उपशमप्रकरणे बलिविश्रान्तिर्नाम सप्तविंशः सर्गः २७ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
बलिविश्रान्तिर्नाम सप्तविंशतितमः सर्गः ॥ २७ ॥

## अष्टाविंशः सर्गः २८

श्रीवसिष्ठ उवाच।

अथ ते दानवास्तत्र बलेरनुचरास्तदा।
तद्गेहं स्फाटिकं सौधमुच्चैरारुरुहुः क्षणात् ॥ १ ॥

निश्चेष्टं बलिमालोक्य विषण्णैर्दानवैः स्मृतः।
शुक्रस्तत्स्थितिमाख्याय तेषां शोकमिहाहरत् ॥ १ ॥

तस्य बलेर्गेहं आश्रयभूतं सौधम् ॥ १ ॥

डिम्भाद्या मन्त्रिणो धीराः सामन्ताः कुमुदादयः।
सुराद्याश्चैव राजानो वृत्ताद्या बलहारिणः ॥ २ ॥

अनुचरानेव नामभिरुद्दिशति - डिम्भाद्या इत्यादिना ॥ २ ॥

हयग्रीवादयः सैन्याश्चाक्राजाद्याश्च [चक्रेत्यपि पाठः]
बान्धवाः।
लडुकाद्याश्च सुहृदो बल्लूकाद्याश्च लालकाः ॥ ३ ॥

कुबेरयमशक्राद्या उपायनकराः सुराः।
यक्षविद्याधरा नागाः सेवावसरकाङ्क्षिणः ॥ ४ ॥

रम्भातिलोत्तमाद्याश्च चामरिण्यो वराङ्गनाः।
सागराः सरितः शैला दिशश्च विदिशस्तथा ॥ ५ ॥

72905 दिशो विदिशश्च दिगधिदेवतास्तात्वधिकृता जनाश्च ॥ ५ ॥
72906
72907 सेवार्थमाययुस्तस्य तं प्रदेशं तदा बलेः ।
72908 अन्ये च बहवः सिद्धास्त्रैलोक्यओदरवासिनः ॥ ६ ॥
72909
72910 सिद्धाः देवयोनिविशेषाः ॥ ६ ॥
72911
72912 ध्यानमौनसमाधिस्थं चित्रार्पितमिवाचलम् ।
72913 नमत्किरीटावलयो ददृशुर्बलिमादृताः ॥ ७ ॥
72914
72915 शिरोनमनान्नमन्त्यः किरीटावलयो येषाम् । आदृताः सादराः ॥ ७ ॥
72916
72917 तं दृष्ट्वा कृतकर्तव्यप्रणामास्ते महासुराः ।
72918 विषादविस्मयानन्दभयमन्थरतां ययुः ॥ ८ ॥
72919
72920 कृतः अवश्यकर्तव्यः प्रणामो यैः । सुहृदो विषादमन्थरताम् उदासीना
72921 विस्मयमन्थरताम् तत्त्वविदस्त्वानन्दमन्थरताम्
72922 अनभिज्ञोपजीविनस्तूभयमन्थरतां ययुः । अथवा
72923 प्राणसंशयाद्विषादमन्थरताम् सुखप्रसाददर्शनाद्विस्मयमन्थरताम्
72924 रोमाञ्चाद्यानन्दलिङ्गदर्शनादानन्दमन्थरताम् चिरमनुत्थाने
72925 त्राणादर्शनाद्भयमन्थरतां ययुरित्यर्थः ॥ ८ ॥
72926
72927 मन्त्रिणः प्रविचार्यात्र किं प्राप्तमिति दानवाः ।
72928 भार्गवं चिन्तयामासुर्गुरुं सर्वविदांवरम् ॥ ९ ॥
72929
72930 चिन्तनानन्तरं दैत्या भार्गवं भास्वरं वपुः ।
72931 ददृशुः कल्पितं प्राप्तं गन्धर्वनगरं यथा ॥ १० ॥
72932
72933 कल्पितं सप्तर्षिसभागतेनैव भार्गविण योगबलाद्बलिसौधदेशे प्राप्तात्वेन
72934 कल्पितम् ॥ १० ॥
72935
72936 पूज्यमानोऽसुरगणैर्निविष्टो गुरुविष्टरे ।
72937 ददर्श ध्यानमौनस्थं भार्गवो दानवेश्वरम् ॥ ११ ॥
72938
72939 विश्रम्य स क्षणमिव प्रेमवानवलोक्य च ।
72940 बलिं विचारयन्दृष्ट्वा परिक्षीणभवभ्रमम् ॥ १२ ॥
72941
72942 इवशब्दो विश्रान्तेरपि कल्पितत्वद्योतनार्थः ॥ १२ ॥
72943
72944 देहरश्मिशतैर्दत्तदीप्तिभिः क्षीरसागरम् ।
72945 क्षिपन्निव सभामाह हसन्वाक्यमिदं गुरुः ॥ १३ ॥
72946
72947 क्षिपन् प्रसारय निन्दन्वा । सभां तत्स्थान्दैत्यान्
72948 हसन्ननभिज्ञताख्यापनायोपहसन् ॥ १३ ॥
72949
72950 अतिमात्रमिदं दैत्याः स्वविचारणयैव यत् ।
72951 संप्राप्तविमलावासः सिद्धोऽयं भगवान्बलिः ॥ १४ ॥
72952
72953 हे दैत्याः अयं बलिः स्वविचारणयैव संप्राप्तो विमल आवासः
72954 सर्वाधिष्ठानं ब्रह्म येन तथाविध इति यत्तदतिमात्रम् । अतिशयोऽस्य
72955 सुखविश्रान्तेरित्यर्थः ॥ १४ ॥
72956

72957 अयं तदेवमेवेह तिष्ठन्दानवसत्तमाः ।
72958 स्वात्मनि स्थितिमाप्नोतु पदं पश्यत्वनामयम् ॥ १५ ॥
72959
72960 तत्तस्मादयमेव समाहितस्तिष्ठन् निरतिशयानन्दे स्वात्मनि स्थितिं
72961 चिरावस्थानमाप्नोतु ॥ १५ ॥
72962
72963 श्रान्तो विश्राममायातः क्षीणचित्तभवभ्रमः ।
72964 शान्तसंसारनीहारो वाचनीयो न दानवाः ॥ १६ ॥
72965
72966 न वाचनीयो न संभाषणीयः तूष्णीमाध्वमिति यावत् ॥ १६ ॥
72967
72968 स्व एवालोक एतेन संप्राप्तोऽज्ञानसंकटे ।
72969 शान्तेऽत्र संभ्रमे सौरो दिनेनेव करोत्करः ॥ १७ ॥
72970
72971 अत्र भुवि रात्र्यन्धकारनिद्रादिसंभ्रमे शान्ते सति दिनेन दिवसेन सौरः
72972 करोत्करः किरणसमूह इव । एतेन बलिना अज्ञानसंकटे शान्ते सति स्व
72973 एवालोकः संप्राप्तः ॥ १७ ॥
72974
72975 स्वयमेव हि कालेन प्रबोधमयमेष्यति ।
72976 बीजकोशात्स्वसंवित्त्या सुप्तमूर्तिरिवाङ्कुरः ॥ १८ ॥
72977
72978 बीजकोशाद्बीजपुटात् स्वसंवित्त्या मूर्च्छितावस्थाप्रच्युत्या ।
72979 अङ्कुराहंभावप्रबोधेनेति यावत् ॥ १८ ॥
72980
72981 कुरुध्वं स्वामिकार्याणि सर्वे दानवनायकाः ।
72982 बलिर्वर्षसहस्रेण समाधेर्बोधमेष्यति ॥ १९ ॥
72983
72984 स्वामिकार्याणि राज्यतन्त्राणि ॥ १९ ॥
72985
72986 इत्युक्ता गुरुणा तत्र हर्षामर्षविषादजाम् ।
72987 दैत्याश्चिन्तां जहुः शुष्कां मञ्जरीमिव पादपाः ॥ २० ॥
72988
72989 दैत्यग्रहणं देवानामप्युपलक्षणम् । अत एव दुर्हृदो हर्षजां
72990 द्विषोऽमर्षजां सुहृदुपजीविनश्च विषादजां चिन्तां जहुः ॥ २० ॥
72991
72992 वैरोचनिसभासंस्थां विधाय प्राग्व्यवस्थया ।
72993 स्वव्यापारपरास्तस्थुः सर्व एवासुरास्ततः ॥ २१ ॥
72994
72995 प्राग्व्यवस्थया पूर्वक्लृप्तराज्यतन्त्रव्यवहारक्रमेण ॥ २१ ॥
72996
72997 नरा मही महिपतयो रसातलं
72998 ग्रहा नभस्त्रिदशगणास्त्रिविष्टपम् ।
72999 दिशोऽद्रयो [अस्मिन्पद्ये छन्दोभेदः] दिक्पतयश्च कंदरा-
73000 न्वनेचरा गगनचराश्च खं ययुः ॥ २२ ॥
73001
73002 आगन्तुका नरनागादयस्तदा किं चक्रुस्तदाह - नरा इति । ययुरिति सर्वत्र
73003 संबध्यते । अद्रयः कुलाचलाधिदेवता दिक्पतयो दिक्पालाश्च स्वाः स्वा दिशो
73004 ययुः । वनेचरा ऋक्षवानरादियूथपतयः किष्किन्धादिकन्दरान् ययुः ।
73005 गगनचरा गरुडसंपातिजटायुप्रभृतयः ॥ २२ ॥
73006
73007 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे०
73008 मोक्षोपायेषूपशमप्रकरणे बलिसमाधानवर्णनं नामाष्टाविंशः

73009 सर्गः ॥ २८ ॥
73010
73011 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
73012 बलिसमाधानवर्णनं नामाष्टाविंशः सर्गः ॥ २८ ॥
73013
73014
73015 एकोनत्रिंशः सर्गः २९
73016
73017 श्रीवसिष्ठ उवाच ।
73018
73019 अथ वर्षसहस्रेण दिव्येनासुरपुङ्गवः [सत्तम इति पाठः] ।
73020 देवदुन्दुभिनिर्घोषैर्बुबुधे भगवान्बलिः ॥ १ ॥
73021
73022 जीवन्मुक्तस्य राज्यश्रीः पाताले रोधनं बलेः ।
73023 रामाय बलिवत्पूर्णस्थितिश्चात्रोपदिश्यते ॥ १ ॥
73024
73025 वर्षसहस्रेणेति समाधेर्वर्ष सहस्रेणात्यन्तसंयोगादपवर्गे तृतीया ॥ १ ॥
73026
73027 बलौ प्रबुद्धे तद्बालं विरेजे नगरं तदा ।
73028 वैरिञ्च इव सूर्यौघ उदिते कमलाकरः ॥ २ ॥
73029
73030 बलेरिदं बालं नगरं वैर्ञ्चे विरिञ्चेरायतनभूतगगने सूर्यौघे
73031 सूर्यकिरणप्रवाहे उदिते सति कमलाकरः पद्माकर इव विकासश्रीमानित्यर्थः ।
73032 सर्गौघे सर्वौघे इति पाठयोस्तु सर्व पदार्थजातं सर्गं वा ओघयति
73033 समर्थयतीति व्युत्पत्त्या सूर्य एव ग्राह्यस्तस्मिन्नुदिते सतीतर्थः । ओघृ
73034 सामर्थ्ये इति धातोर्ण्यन्तात्कर्मण्यण् ॥ २ ॥
73035
73036 बलिः प्रबुद्ध एवासौ यावन्नायान्ति दानवाः ।
73037 तावत्संचिन्तयामास समाधिसदने क्षणम् ॥ ३ ॥
73038
73039 समाधिसदने प्रागुक्तसमाधिस्थाने ॥ ३ ॥
73040
73041 अहो नु रम्या पदवी शीतला पारमार्थिकी ।
73042 अहमस्यां क्षणं स्थित्वा परां विश्रान्तिमागतः ॥ ४ ॥
73043
73044 समाधिसुखमग्नस्य दिव्यवर्षसहस्रमपि क्षणवद्गतमिति क्षणं
73045 स्थित्वेत्युक्तिः ॥ ४ ॥
73046
73047 तदेतामेव पदवीमवलम्ब्य करोम्यहम् ।
73048 भवतीहोपभुक्ताभिः किं मे बाह्यविभूतिभिः ॥ ५ ॥
73049
73050 करोमि विश्रान्तिमिति शेषः । बाह्यविभूतिभिरुपभुक्ताभिर्मे किं भवति । न
73051 किंचिदीदृशं विश्रान्तिसुखमित्यर्थः ॥ ५ ॥
73052
73053 ऐन्दवेष्वपि बिम्बेषु न तथानन्दवीचयः ।
73054 तोषयन्ति यथान्तर्मे संसिद्धिभवभूतयः ॥ ६ ॥
73055
73056 तदेवाह - ऐन्दवेष्विति । संसिद्धिः समाधिपरिपाकस्तद्भवा भूतय
73057 आनन्दाः । एकस्मिन्नेव इयत्तया अपरिच्छेद्यत्वाद्बहुत्वकल्पनया बहुवचनम् ॥
73058 ६ ॥
73059
73060 इति भूयोऽपि विश्रान्त्यै कुर्वाणं गलितं मनः ।

73061 बलिमावारयामासुर्दैत्याश्चन्द्रमिवाम्बुदाः ॥ ७ ॥
73062
73063 आवारयामासुरागत्य परिवव्रुः ॥ ७ ॥
73064
73065 तानालोक्य पुनर्दध्यौ तत्प्रणामाकुलेक्षणः ।
73066 तैः कुलाचलसंकाशैः परिवीतवपुस्त्विदम् ॥ ८ ॥
73067
73068 पुनःशब्दः पूर्वसमाधिसंकल्पपरावृत्तिद्योतनार्थः ॥ ८ ॥
73069
73070 चितः क्षीणविकल्पस्य किमुपादेयमस्ति मे ।
73071 मनस्तदभिपातित्वाद्याति तद्रसतामलम् ॥ ९ ॥
73072
73073 उपादेयबुद्ध्या हि बाह्यार्थदर्शने मनस्तदभिपातित्वात्तद्रागितालक्षणं
73074 मलं याति न दर्शनमात्रेणेत्यर्थः ॥ ९ ॥
73075
73076 मोक्षमिच्छाम्यहं कस्माद्बद्धः केनास्मि वै पुरा ।
73077 अबद्धो मोक्षमिच्छामि केयं बालविडम्बना ॥ १० ॥
73078
73079 ननु मोक्षेच्छया समाध्यवलम्बनियमोऽस्तु तत्राह - मोक्षमिति । ज्ञानेन
73080 त्रैकालिके अविद्यातत्कार्यबाधे सति बन्धस्यैवादर्शनादिति भावः । बालानां
73081 मूर्खाणां विडम्बना चेष्टानुकृतिः ॥ १० ॥
73082
73083 न बन्धोस्ति न मोक्षोस्ति मौर्ख्यं मे क्षयमागतम् ।
73084 किं मे ध्यानविलासेन किं वा ध्यानेन मे भवेत् ॥ ११ ॥
73085
73086 ध्यानाध्यानभ्रमौ त्यक्त्वा पुंस्त्वं स्वमवलोकयत् ।
73087 यदायाति तदायातु न मे वृद्धिर्न वा क्षयः ॥ १२ ॥
73088
73089 स्वं प्रत्यग्रूपं पुंस्त्वमात्मतत्त्वं दृक्स्वभावादेव
73090 बहिरप्यौदासीन्येनावलोकयत्सद्यद्वस्तु प्रति आयाति तदायातु स्फुरतु नाम
73091 नैतावता मेऽज्ञानामिव देहादितादात्म्याध्यासात्तद्वृद्धिक्षयप्रयुक्तौ
73092 वृद्धिक्षयौ स्तो येनानर्थः स्यादित्यर्थः । अयं श्लोकः क्वचिदेवास्ति न
73093 सर्वत्र ॥ १२ ॥
73094
73095 न ध्यानं नापि वाऽध्यानं न भोगान्नाप्यभोगिताम् [नाथ भोगिता
73096 इति पाठः] ।
73097 अभिवाञ्छामि तिष्ठामि सममेव गतज्वरः ॥ १३ ॥
73098
73099 न मे वाञ्छा परे तत्त्वे न मे वाञ्छा जगत्स्थितौ ।
73100 न मे ध्यानदशाकार्यं [अत्र ध्यानदृशा कार्य इति साधु] न
73101 कार्यं विभवेन मे ॥ १४ ॥
73102
73103 नाहं मृतो न जीवामि न सन्नासन्न सन्मयः ।
73104 नेदं मे नैव चान्यन्मे नमो मह्यमहं बृहत् ॥ १५ ॥
73105
73106 देहसंबन्धाभावान्न मृतः । प्राणसंबन्धाभावान्न जीवामि ।
73107 सन्मूर्तः । सन्मयस्तद्विकारः । इदं देहभुवनादि ।
73108 अन्यद्देहान्तरभुवनान्तरादि ॥ १५ ॥
73109
73110 इदमस्तु जगद्राज्यं तिष्ठाम्यत्र तु संस्थितः ।
73111 नेह वास्तु जगद्राज्यं तिष्ठाम्यात्मनि शीतलः ॥ १६ ॥
73112

73113 किं मे ध्यानदृशा कार्यं किं राज्यविभवश्रिया ।
73114 यदायाति तदायातु नाहं किंचन मे क्वचित् ॥ १७ ॥
73115
73116 न किंचिदपि कर्तव्यं यदि नाम मयाधुना ।
73117 तत्कस्मान्न करोमीदं किंचित्प्रकृतकर्म वै ॥ १८ ॥
73118
73119 कर्तव्यं कर्तृत्वास्थया निर्वर्तनीयम् । तर्त्तहिं किंचित् अनास्थितचेष्टासाध्यं
73120 प्रकृतं कर्म राज्यपरिपालनं किं कुतो न करोमि ॥ १८ ॥
73121
73122 इति निर्णीय पूर्णात्मा बलिर्ज्ञानवतां वरः ।
73123 दैत्यानालोकयामास पद्मानीव दिवाकरः ॥ १९ ॥
73124
73125 दृष्टिपातविभागेन सर्वेषां दनुजन्मनाम् ।
73126 शिरःप्रणामाञ्जग्राह पुष्पामोदानिवानिलः ॥ २० ॥
73127
73128 दृष्टिपातानां विभागेन तत्तदुचितवैचित्र्येण ॥ २० ॥
73129
73130 अथ वैरोचनिस्तत्र ध्येयत्यागमयात्मना ।
73131 मनसा सकलान्येव राजकार्याणि संव्यघात् ॥ २१ ॥
73132
73133 ध्येयो वासनात्यागः प्राग्वर्णितस्तन्मयात्मना तद्विलासप्रचुरेण ॥ २१ ॥
73134
73135 द्विजान्देवान्गुरूंश्चैव पूजयामास पूजया ।
73136 संमानयामास सुहृद्बन्धुसामन्तसज्जनान् ॥ २२ ॥
73137
73138 पूजा पाद्यार्घ्यादि उचितदानसंभावनादिसत्कारः संमाननमिति भेदः ॥ २२
73139 । ।
73140
73141 अर्थेनापूरयामास भृत्यानर्थिगणांस्तथा ।
73142 ललना लालयामास विचित्रविभवार्पणैः ॥ २३ ॥
73143
73144 इत्यसौ ववृधे तस्मिन्राज्ये सकलशासने ।
73145 यज्ञं प्रति बभूवाथ मतिरस्य कदाचन ॥ २४ ॥
73146
73147 असौ बलिः सकलानां देवासुरादीनां शासने आज्ञापनविषये राज्ये ववृधे ।
73148 राज्याङ्गाद्यभिवृद्धिं प्रापेत्यर्थः । अथ कदाचन यज्ञं प्रति अस्य
73149 मतिरिच्छा बभूव ॥ २४ ॥
73150
73151 तर्पिताशेषभुवनं देवर्षिगणपूजितम् ।
73152 सह शुक्रादिभिर्मुख्यैः स चकार महामखम् ॥ २५ ॥
73153
73154 महामखं अश्वमेघम् ॥ २५ ॥
73155
73156 बलिर्भोगभरस्यार्थी नेति निर्णीय माधवः ।
73157 बलेरीहितसिद्ध्यर्थं सिद्धिदस्तन्मखं ययौ ॥ २६ ॥
73158
73159 भोगैककृपणायेदं जगज्जङ्गलखण्डकम् ।
73160 दातुं शोच्याय शक्राय वयोज्येष्ठाय कार्यवित् ॥ २७ ॥
73161
73162 भोगे एकस्मिन्नेव आसक्तत्वात्कृपणाय अत एव शोच्याय ।
73163 कार्यमवश्यकर्तव्यं शक्रसुकृतफलप्रदानं वेत्तीति कार्यवित्
73164 भिक्षणचातुर्यविद्वा ॥ २७ ॥

73165
73166 क्रममाणो बलेनात्र वञ्चयित्वा बलिं हरिः।
73167 बबन्ध पातालतले भूगेह इह वानरम्॥ २८॥
73168
73169 बलेन मायाबलेन क्रममाणस्त्रीन् लोकानिति शेषः॥ २८॥
73170
73171 अद्यासौ संस्थितो राम पुनरिन्द्रत्वहेतुना।
73172 जीवन्मुक्तवपुः स्वस्थो नित्यं ध्यानविषण्णधीः॥ २९॥
73173
73174 अद्य अद्यापि। असौ बलिः पाताले पुनरिन्द्रत्वहेतुना प्रारब्धेनोपलक्षित इति शेषः
73175 । स्थितः। ध्याने निर्विकल्पसमाधौ विषण्णा गलिता धीर्यस्य॥ २९॥
73176
73177 पातालकुहरे तिष्ठञ्जीवन्मुक्तगतिर्बलिः।
73178 आपदं संपदं दृष्ट्या समयैव स पश्यति॥ ३०॥
73179
73180 नास्तमेति न चोदेति तत्प्रज्ञा सुखदुःखयोः।
73181 समा स्थिरकरा चित्रलेख्या सूर्यावलिर्यथा॥ ३१॥
73182
73183 समा उदयास्तमयरहिता। स्थिराः करा मरीचयो यस्याः। चित्रस्य लेखनं
73184 चित्रलेख्या तत्संबन्धिनी सूर्यावलिः सूर्यमण्डलं यथा तथेत्यर्थः॥ ३१॥
73185
73186 आविर्भावतिरोभावसहस्राणीह जीवताम्।
73187 तन्मनाश्चिरमालोक्य भीमेषु विरतिं गतम्॥ ३२॥
73188
73189 जीवतां जीवनास्थावतां भोगलम्पटानां बिभवानां जन्मादीनां
73190 चाविर्भावतिरोभावसहस्राणि चिरमालोक्य तस्य बलेर्मनो विरतिं वैराग्यं
73191 गतम्॥ ३२॥
73192
73193 दशकोटीश्च वर्षाणामनुशास्य जगत्त्रयम्।
73194 अन्ते विरक्ततां प्राप्तमुपशान्तं बलेर्मनः॥ ३३॥
73195
73196 ऊहापोहसहस्राणि भावाभावशतानि च।
73197 बलिना परिदृष्टानि क्व समाश्वासमेत्यसौ॥ ३४॥
73198
73199 सुखदुःखयोरूहापोहयोरागमापाययोः सहस्राणि। भावाभावयोः
73200 संपद्विपदोः शतानि च। सहस्रशतशब्दावसंख्येयपरौ॥ ३४॥
73201
73202 भोगाभिलाषं संत्यज्य बलिः संपूर्णमानसः।
73203 आत्मारामस्थितो नित्यं मध्ये पातालकोटरे॥ ३५॥
73204
73205 सप्तपातालानां मध्यभूते रसातलाख्ये पातालकोटरे यावद्विपत्क्षयं
73206 स्थितः॥ ३५॥
73207
73208 पुनरेतेन बलिना जगदिन्द्रतयाखिलम्।
73209 अनुशास्यमिदं राम बहून्वर्षगणानिह॥ ३६॥
73210
73211 अनुशास्यं स्वामिभावेन आज्ञाप्यं भविष्यतीत्यर्थः॥ ३६॥
73212
73213 न तस्येन्द्रपदप्राप्त्या तुष्टिः समुपजायते।
73214 न तस्य स्वपदभ्रंशादुद्वेग उपजायते॥ ३७॥
73215
73216 समः सर्वेषु भावेषु सर्वदैवोदिताशयः।

73217 संप्राप्तमाहरन्स्वस्थ आकाश इव तिष्ठति ॥ ३८ ॥
73218
73219 उदिताशयः संतुष्टचित्तः । संप्राप्तं
73220 प्रारब्धोपनीतमाहरन्नुपभुञ्जानः ॥ ३८ ॥
73221
73222 बलेर्विज्ञानसंप्राप्तिरेषा ते कथिता मया ।
73223 एतां दृष्टिमवष्टभ्य त्वमप्यभ्युदितो भव ॥ ३९ ॥
73224
73225 बलिचरित्रमुपसंहृत्य रामायोपदिशति - बलेरित्यादिना । अभ्युदितो
73226 जीवन्मुक्त्यभ्युदयवान् ॥ ३९ ॥
73227
73228 बलिवत्प्रविवेकेन नित्योऽहमिति निश्चयात् ।
73229 पदमासादयाद्वैतं पौरुषेणैव राघव ॥ ४० ॥
73230
73231 प्रविवेकेन स्वविचारेण ॥ ४० ॥
73232
73233 द्वे चाष्टौ चैव वर्षाणां कोटीर्भुक्त्वा जगत्त्रयम् ।
73234 अन्ते वैरस्यमापन्नो बलिरप्यसरोत्तमः ॥ ४१ ॥
73235
73236 द्वे चाष्टौ च । दशकोटीरिति यावत् ॥ ४१ ॥
73237
73238 तस्मादवश्यवैरस्यं भोगभारमरिंदम ।
73239 संत्यज्य सत्यमानन्दमवैरस्यं पदं व्रज ॥ ४२ ॥
73240
73241 अवश्यं वैरस्यं दुःखपर्यवसानं यस्य । अवैरस्यं निर्दुःखम् ॥ ४२ ॥
73242
73243 इमा दृश्यदृशो राम नानाकारविकारदाः ।
73244 नेह कान्ततया ज्ञेया दूराच्छैलशिला इव ॥ ४३ ॥
73245
73246 कान्ततया रम्यतया । तत्र दूरस्थाः पर्वता रम्याः इति प्रसिद्धं
73247 दृष्टान्तमाह - दूरादिति ॥ ४३ ॥
73248
73249 धावमानमिहामुत्र लुठितं लोकवृत्तिषु ।
73250 संस्थापय निबद्ध्यैतच्चेतो हृदयकोटरे ॥ ४४ ॥
73251
73252 इह ऐहिकभोगेषु अमुत्र पारलौकिकभोगेषु धावमानम् । लोकवृत्तिषु
73253 पामरचेष्टासु लुठितं प्रवृत्तम् ॥ ४४ ॥
73254
73255 चिदादित्यो भवानेव सर्वत्र जगति स्थितः ।
73256 कः परस्ते क आत्मीयः परिस्खलसि किं मुधा ॥ ४५ ॥
73257
73258 ननु शत्रुमित्रयोः कथं समदृष्टिः स्यात्तत्राह - चिदादित्य इति । आदित्य
73259 इव सर्वावभासिका चित् चिदादित्यः । तथाच त्वमेव शत्रुदेहादावपि प्रकाशक
73260 आत्मेति न वैषम्ये हेतुरस्तीति भावः ॥ ४५ ॥
73261
73262 त्वमनन्तो महाबाहो त्वमाद्यः पुरुषोत्तमः ।
73263 त्वं पदार्थशताकारैः परिस्फूर्जसि चिद्वपुः ॥ ४६ ॥
73264
73265 ननु जीवस्य मम कथमीश्वरात्मसमदर्शनं तत्राह - त्वमिति ।
73266 जडवैषम्यमप्यानन्त्येनैव नाशङ्क्यमित्याशयेनाह - त्वं
73267 पदार्थशताकारैरिति ॥ ४६ ॥
73268

73269 त्वयि सर्वमिदं प्रोतं जगत्स्थावरजंगमम् |
73270 बोधे नित्योदिते शुद्धे सूत्रे मणिगणा यथा || ४७ ||
73271
73272 तत्संभावनार्थमाह - त्वयीति || ४७ ||
73273
73274 न जायसे न म्रियसे त्वमजः पुरुषो विराट् |
73275 चिच्छुद्धा जन्ममरणभ्रान्तयो मा भवन्तु ते || ४८ ||
73276
73277 कालकृतवैषम्याण्यपि परिहर्तुमाह - न जायसे इति || ४८ ||
73278
73279 समस्तजन्मरोगाणां प्रविचार्य बलाबलम् |
73280 तृष्णामुत्सृज्य भोगानां भोक्तैव भव केवलम् || ४९ ||
73281
73282 तृष्णावृद्धौ जन्मादिरोगाणां प्राबल्यं तृष्णापक्षये च तेषां
73283 दौर्बल्यमित्यन्वयव्यतिरेकाभ्यां परीक्ष्येत्यर्थः | भोगानां
73284 तृष्णामुत्सृज्य भोक्ता भोगसाक्षिचिन्मात्रमेव भव || ४९ ||
73285
73286 त्वयि स्थिते जगन्नाथे चिदादित्ये सदोदिते |
73287 इदमाभासते सर्वं संसारस्वप्नमण्डनम् || ५० ||
73288
73289 त्वदीयचिद्बलादेव जगत्सिद्धमित्याह - त्वयीति || ५० ||
73290
73291 मा विषादं कृथा व्यर्थं सुखदुःखैषणा न ते |
73292 शुद्धचित्तोऽसि सर्वात्मा सर्ववस्त्ववभासकः || ५१ ||
73293
73294 शुद्धचित्तः प्रबुद्धचित्तः || ५१ ||
73295
73296 पूर्वमिष्टमनिष्टं त्वमनिष्टं चेष्टमित्यपि |
73297 परिकल्प्य तदभ्यासात्ततोऽपि परित्यज || ५२ ||
73298
73299 यद्यशुद्धचित्तोऽसि तथापि तच्छुद्धये क्रमादुपायं शृण्वित्याह -
73300 पूर्वमिति | यद्यदिष्टं मनःप्रियं तदनिष्टमनर्थसाधनं
73301 यच्चानिष्टमप्रियं मनसस्तपःक्लेशेन्द्रियसंयमप्राणायामादि
73302 तत्सर्वमिष्टमावश्यकं ममेति प्रथमं परिकल्प्य
73303 सप्तमभूमिकापरिपाकपर्यन्तं तदभ्यासात्तज्जये सति तत् तां कल्पनामपि
73304 ततः परित्यजेत्यर्थः || ५२ ||
73305
73306 इष्टानिष्टदृशोस्त्यागे समतोदेति शाश्वती |
73307 तया हृदयवर्तिन्या पुनर्जन्तुर्न जायते || ५३ ||
73308
73309 तत्त्यागफलमाह - इष्टेति | हृदयवर्तिन्या अभ्यासाद्धृदये
73310 स्थिरीकृतया || ५३ ||
73311
73312 येषु येषु प्रदेशेषु मनो मज्जति बालवत् |
73313 तेभ्यस्तेभ्यः समाहृत्य तद्धि तत्त्वे नियोजयेत् || ५४ ||
73314
73315 तत्त्वे तत्तदधिष्ठानचिन्मात्रे | तथाच भगवताप्युक्तम् यतो यतो निश्चरति
73316 मनश्चञ्चलमस्थिरम् | ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् || इति || ५४ ||
73317
73318 एवमभ्यागताभ्यासं मनोमत्तमतंगजम् |
73319 निबध्य सर्वभावेन परं श्रेयोऽधिगम्यते || ५५ ||
73320

73321 सर्वभावेन सर्वप्रयत्नेन सर्वात्मभावेन च । निबध्य निरुध्य ॥ ५५ ॥
73322
73323 मा शरीरयथार्थज्ञैर्मिथ्यादृष्टिहताशयैः ।
73324 धूर्तैः संकल्पविक्रीतैर्विमूढैः समतां व्रज ॥ ५६ ॥
73325
73326 शरीर मेव यथार्थं परमार्थ इति ये जानन्ति तैः । भोगसंकल्पेभ्यो
73327 विक्रीतैरिव तत्परवशैः ॥ ५६ ॥
73328
73329 अकिंचनात्स्वनिर्णीतौ लम्बमानात्परोक्तिषु ।
73330 न मौर्ख्यादधिको लोके कश्चिदस्तीह दुःखदः ॥ ५७ ॥
73331
73332 पराधीनप्रज्ञानां स्वयंविचारासमर्थानां मौर्ख्यमेव महाननर्थ
73333 इत्याह - अकिंचनादिति । स्वस्यात्मतत्त्वस्य निर्णीतौ निर्णयविषये अकिंचनात्
73334 विवेकवैराग्याद्युपायदरिद्रात् । परेषां प्रतारकाणां मूर्खाणां चोक्तिषु
73335 अन्धगोलाङ्गलन्यायेनावलम्बमानात् ॥ ५७ ॥
73336
73337 त्वमेतदविवेकाभ्रमुदितं हृदयाम्बरे ।
73338 विवेकपवनेनाशु दूरं नय महामते ॥ ५८ ॥
73339
73340 एतन्मौर्ख्यलक्षणमविवेकाभ्ररणादविवेकाभ्रम् ॥ ५८ ॥
73341
73342 आत्मनैव प्रयत्नेन यावदात्मावलोकने ।
73343 न कृतोऽनुग्रहस्तावन्न विचारोदयो भवेत् ॥ ५९ ॥
73344
73345 मौर्ख्यनिरासहेतुर्विचारः स च
73346 बहुजन्मसंचितसुकृतपरिपाकजादात्मानुग्रहादेव भवतीत्याह -
73347 आत्मनैवेति । प्रयत्नेन श्रवणवैराग्यादिपुरुषप्रयत्नेन ॥ ५९ ॥
73348
73349 वेदवेदान्तशास्त्रार्थतर्कदृष्टिभिरप्ययम् ।
73350 नात्मा प्रकटतामेति यावन्न स्वमवेक्षितम् ॥ ६० ॥
73351
73352 सत्यपि वैराग्यविचारश्रवणादौ
73353 बहिर्मुखदृष्टेर्ज्ञानानुदयात्प्रत्यग्दृष्टिरप्यावश्यकीत्याशयेनाह ##-
73354 प्रत्यग्दृशां विमोक्षाय विबन्धाय पराग्दृशाम् ॥ इति ॥ ६० ॥
73355
73356 त्वमात्मन्यात्मना राम प्रसादे समवस्थितः ।
73357 प्राप्तोऽसि विततं बोधं मद्वचस्येव बुध्यसे ॥ ६१ ॥
73358
73359 तर्हि प्रत्यग्दृष्टिरेवैका ज्ञानायास्तु किं गुरूपदेशेनेत्याशङ्क्याह -
73360 मद्वचस्येवेति । मदुपदेशे सत्येवेत्यर्थः । बलवदपि शिक्षितानामात्मन्य
73361 प्रत्ययं चेतः इतिन्यायाद्गुरुशास्त्रोक्तिसंवादे सत्येव स्वप्रत्यये
73362 विश्वासादसंदिग्धबोधसिद्धिरिति द्योतनायैवकारः ॥ ६१ ॥
73363
73364 विकल्पांशविहीनस्य त्वयैषा चिद्विवस्वतः ।
73365 गृहीता वितता व्याप्तिर्मदुक्त्या परमात्मनः ॥ ६२ ॥
73366
73367 अमुमेवार्थं स्पष्टमाह - विकल्पेति ।
73368 संदेहादिचित्तविकल्पैरविषयीकृतस्येत्यर्थः । वितता
73369 व्याप्तिस्त्रेधाप्यपरिच्छिन्नता ॥ ६२ ॥
73370
73371 विलीनसर्वसंकल्पः शान्तसंदेहविभ्रमः ।
73372 क्षीणकौतुकनीहारो जातोऽसि विगतज्वरः ॥ ६३ ॥

73373
73374 कौतुकं बाह्यार्थचमत्कारकुतूहलमात्मतत्त्वजिज्ञासाकुतूहलं च स एव
73375 नीहारोऽवश्यायः ॥ ६३ ॥
73376
73377 यदुपगच्छसि पासि निहंसि वा
73378 पिबसि विस्मयसे च विवर्धसे ।
73379 तदपि तेन तदास्तु यदा मुने
73380 विगतबोधकलङ्कविशङ्कितः ॥ ६४ ॥
73381
73382 हे मुने मननशील राम त्वं यदा विगतो बोधस्य बोधैकरस्यात्मतत्त्वस्य
73383 कलङ्क आवरणं विशङ्कितं विक्षेपश्च यस्य तथाविधो भविष्यसि तदा ते
73384 यदप्राप्तं ज्ञानं तत्साधनं च विचारगुरुशास्त्रोपदेशाद्युपगच्छसि
73385 मोक्षार्थं स्वीकरोषि यच्च विवेकवैराग्यादि पासि यत्नेन रक्षै
73386 यच्चालस्यप्रमादादिदोषजातं निहंसि यत्नेन जयसि यच्च
73387 समाधिसुखामृतं पिबसि यच्चोत्तरोत्तरभूमिकाधिरोहणेन विस्मयसे यच्च
73388 सप्तमभूमिकाविश्रान्त्या पूर्वपूर्वावस्थाधिकसुखोत्कर्षाद्विवर्धसे तदपि
73389 तदा नास्तु किंतु ब्रह्मैव यथास्थितं तिष्ठेत्यर्थः ॥ ६४ ॥
73390
73391 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० उपशमप्रकरणे
73392 बलेर्विज्ञानप्राप्तिर्नामैकोनत्रिंशः सर्गः ॥ २९ ॥
73393
73394 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
73395 बलेर्विज्ञानप्राप्तिर्नामैकोनत्रिंशः सर्गः ॥ २९ ॥
73396
73397
73398 त्रिंशः सर्गः ३०
73399
73400 श्रीवसिष्ठ उवाच ।
73401
73402 अथेमं परमं राम विज्ञानाभिगमे क्रमम् ।
73403 शृणु दैत्येश्वरः सिद्धः प्रह्लादः स्वात्मना यथा ॥ १ ॥
73404
73405 हिरण्यकशिपोर्वीर्यं प्रह्लादादिसुतोद्भवः ।
73406 नृसिंहेन वधः शोकादौर्ध्वंदहिकमुच्यते ॥ १ ॥
73407
73408 इत्थं केवलं
73409 काकतालीयन्यायप्रवृत्तात्स्वविचाराच्छास्त्राचार्योपदेशानुगृहीताच्च
73410 ज्ञानोदयक्रमो निरूपितः ।
73411 इदानीमुपासितेश्वरानुग्रहजन्याद्विचाराज्ज्ञानोदयप्रकारं वर्णयितुं
73412 प्रह्लादोपाख्यानमाचिख्यासुर्वसिष्ठस्तच्छ्रवणे राममवधापयति -
73413 अथेति । विज्ञानस्याभिगमे आभिमुख्येन प्राप्तौ । निष्प्रत्यूहप्राप्ताविति यावत् ।
73414 तथाच भगवतैवोक्तम् जरामरणमोक्षाय मामाश्रित्य यतन्ति ये । ते ब्रह्म
73415 तद्विदुः कृत्स्नम् इति ॥ १ ॥
73416
73417 आसीत्पातालकुहरे विद्रावितसुरासुरः ।
73418 हिरण्यकशिपुर्नाम नारायणपराक्रमः ॥ २ ॥
73419
73420 नारायणस्य पराक्रम इवेत्यर्थे पूर्वपदं लक्षणया वर्तते । उष्ट्रमुखः
73421 खरमुख इत्यत्रोष्ट्रशब्दस्तन्मुखसदृशार्थ इवेति बोध्यम् ।
73422 इवार्थवृत्तिमध्यमपदलोपी वा बहुव्रीहिः ॥ २ ॥
73423
73424 आक्रान्तभुवनाभोगः स जहार हरेर्जगत् ।

73425 षट्पदस्य बृहत्पत्रं राजहंस इवाम्बुजम् ॥ ३ ॥
73426
73427 नारायणपराक्रमत्वोपपादकं विशेषणमाक्रान्तभुवनाभोग इति ।
73428 भुवनपदेन त्रीण्यपि भुवनानि गृह्यन्ते । स
73429 हिरण्यकशिपुर्हरेरिन्द्रादाच्छिद्य जगत्त्रिभुवनैश्वर्यं जहार । षट्पदस्य
73430 रात्रौ गृहभूतं प्रातर्विकासेन बृहत्पत्रमम्बुजं राजहंस इव
73431 सुरासुरशब्दस्तत्तदधिपतिपरः ॥ ३ ॥
73432
73433 चकार जगतां राज्यं समाक्रान्तसुरासरः ।
73434 दन्ती निरस्तहंसौधो नलिन्यामलिनामिव ॥ ४ ॥
73435
73436 नलिन्यां अलिनां भ्रमराणां राज्यं निरस्तहंसौघो
73437 दन्तीवेत्युपमानुरोधाज्जगदुद्द्वेजकता गम्यते ॥ ४ ॥
73438
73439 अथासावसुराधीशः कुर्वंस्त्रिभुवनेशताम् ।
73440 कालेन सुषुवे पुत्रानङ्कुरानिव माधवः ॥ ५ ॥
73441
73442 माधवो वसन्तकालः ॥ ५ ॥
73443
73444 तेऽवर्धन्ताचिरेणैव तेजस्यूर्जितबालकाः ।
73445 दशार्कांशुशतानीव व्योमाक्रान्तिविलासिनः ॥ ६ ॥
73446
73447 तेजस्यूर्जिता वयसा बालकाः । दश दशसंख्याकानि अर्कस्यांशुशतानीव ।
73448 व्योमा क्रान्तिराकाशव्याप्तिः सुरलोकाक्रमणं च तया विलासिनः ॥ ६ ॥
73449
73450 प्रह्लादनामा बलवान्प्रधानात्मा बभूव ह ।
73451 तेषां मध्ये महार्हाणां मणीनामिव कौस्तुभः ॥ ७ ॥
73452
73453 तेषां मध्ये प्रह्लादनामा प्रधानात्मा युवराजो बभूव । हेत्यैतिह्ये ॥ ७ ॥
73454
73455 तेनाराजत पुत्रेण हिरण्यकशिपुर्भृशम् ।
73456 सर्वसौन्दर्ययुक्तेन वसन्तेनेव वत्सरः ॥ ८ ॥
73457
73458 अथ पुत्रसहायोऽसौ बलकोशसमन्वितः ।
73459 आजगाम मदं दैत्यस्त्रिगण्डगलितेभवत् ॥ ९ ॥
73460
73461 त्रीणि गण्डोपलक्षितमुखाश्रितानि गलितानि मदधारा यस्य तथाविधो य
73462 इभस्तद्वत् । यद्यपि सप्त मदस्थानानि प्रसिद्धानि तथापि
73463 प्राधान्यात्त्रिण्युपात्तानि । उक्तस्त्रिगण्डगलितो यो गजः षष्टिहायनः
73464 इत्यभियुक्तवचनात् षष्टिहायने भवदिति वा ॥ ९ ॥
73465
73466 तत्तापाक्रान्तितापेन त्रिजगन्ति विकासिना ।
73467 कल्पान्तसूर्यगणवन्नवयैव करश्रिया ॥ १० ॥
73468
73469 विकासिना विजृम्भमाणेन । आक्रान्तिरास्कन्दनं तत्प्रयुक्तेन तापेन पीडनेन ।
73470 नवया तरुणया नित्याभिनवया च करश्रिया किरणकान्त्या
73471 करग्रहणप्रयुक्तसंपदा च ॥ १० ॥
73472
73473 अखिद्यन्तास्य तेनाथ सूर्येन्दुप्रमुखाः सुराः ।
73474 दुर्विलासविलोलस्य बालस्येव स्वबन्धवः ॥ ११ ॥
73475
73476 तेन आक्रान्तितापेन ॥ ११ ॥

73477
73478 प्रार्थयांचक्रिरेऽथाजं दैत्येन्द्रेभपतेर्वधे।
73479 न क्षमन्ते महान्तोपि पौनःपुन्येन दुष्क्रियाम्॥ १२॥
73480
73481 पौनःपुन्येन पुनःपुनर्भावेन कृतां दुष्क्रियामपराधम्॥ १२॥
73482
73483 ततः प्रलयपर्यस्तजगद्घर्घरजृम्भितम्।
73484 दिग्दन्तिदशनप्रख्यनखवज्रादिजृम्भितम्॥ १३॥
73485
73486 ततस्तदनन्तरं माधवः प्रलयपर्यस्तेत्यादि विशेषणविशिष्टं नारसिंहं
73487 वपुः कृत्वा महासुरं हिरण्यकशिपुं अहन् इति सप्तमेन संबन्धः। प्रलये
73488 पर्यस्तं जगदिव घर्घरं ध्वनत् जृम्भितं गात्रविनमनं यस्य तत्।
73489 दिग्दन्तिदशनप्रख्यैर्नखैर्वज्रादिभिरिव जृम्भितं यत्र॥ १३॥
73490
73491 स्थिरविद्युल्लताजालभासुरद्विजमण्डलम्।
73492 दशदिक्कोटरोद्भ्रान्तज्वलज्ज्वलनकुण्डलम्॥ १४॥
73493
73494 स्थिराण्यवञ्चलानि विद्युल्लताजालानीव भासुराणि द्विजानां दन्तानां
73495 मण्डलानि यस्य। दिक्श्रोत्रकत्वाद्दशसु दिक्कोटरेषूद्भ्रान्तज्वलज्ज्वलनाः
73496 कुण्डलानीव यस्य॥ १४॥
73497
73498 समस्तकुलशैलेन्द्रपिण्डपीठोद्भटोदरम्।
73499 दोर्द्रुमाधूतनिर्धूतस्फुरद्ब्रह्माण्डखर्परम्॥ १५॥
73500
73501 समस्तानां कुलशैलेन्द्राणां पिण्डपीठं
73502 पिण्डाकारसंस्थानमिवोद्भटं भीषणमुदर यस्य। दोर्द्रुमाणामाधूतैः
73503 परिवर्तनैर्निर्धूतमत एव स्फुरत्संचलद्विदीर्यमाणं ब्रह्माण्डखर्परं
73504 यस्य॥ १५॥
73505
73506 वदनोदरनिष्क्रान्तवातोत्सारितपर्वतम्।
73507 त्रिजगद्दहनोद्युक्तकोपकल्पाग्निगर्वितम्॥ १६॥
73508
73509 वदनेन उदरान्निष्क्रान्तैः श्वासवातैरुत्सारिताः पर्वता यस्य॥ १६॥
73510
73511 सटाविकटपीनांसस्पन्दप्रेरितभास्करम्।
73512 रोमकूपलसद्वह्निपुञ्जापिञ्जरपर्वतम्॥ १७॥
73513
73514 कुलाचलमहाकुड्यघटनोद्भटदिक्तटम्।
73515 सर्वावयवनिष्क्रान्तपट्टिशप्रासतोमरम्॥ १८॥
73516
73517 कुलाचलैरुत्खातैर्महाकुड्यस्य घटनायां रचनायामिव उद्भटानि
73518 उद्युक्तानि दिक्तटानि यत्र। सर्वावयवेभ्यो निष्क्रान्तानि
73519 पट्टिशप्रासतोमराण्यायुधविशेषा यस्य॥ १८॥
73520
73521 नारसिंहं वपुः कृत्वा माधवोऽह्नन्महासुरम्।
73522 लसत्कटकटारावं तुरङ्गममिव द्विपः॥ १९॥
73523
73524 तथाविधं नारसिंहं वपुः कृत्वेत्यर्थः। अहन् हतवान्। हन्तेर्लङि तिप इति
73525 लोपे हल्ङ्यादिलोपः। लसत्कटकटारावमिति क्रियाविशेषणम्। तेन विदार्याहन्निति
73526 गम्यते। तुरंगमस्यापि द्विपेन विदारणं युद्धेषु प्रसिद्धम्॥ १९॥
73527
73528 पौरमासुरमुद्वान्तैर्ददाहेक्षणवह्निभिः।

73529 स सर्वभूतकल्पान्ते जगज्जालमिवानलः ॥ २० ॥
73530
73531 आसुरं पौरं पुरवास्तव्यसर्वजन्तुं पुरोपकरणं च ।
73532 ईक्षणवह्निभिर्नेत्रानलैः ॥ २० ॥
73533
73534 नृसिंहमारुते तस्मिन्भृशं क्षोभमुपागते ।
73535 विस्फूर्जितघनास्फोटैरेकार्णव इवाकुले ॥ २१ ॥
73536
73537 विस्फूर्जितसदृशैर्घनैरास्फोटैर्बाहुध्वनिभिः । प्रलयपक्षे घनानां
73538 संवर्तमेघानामास्फोटैर्गर्जितैः । एकार्णवे जलप्रलये ॥ २१ ॥
73539
73540 दुद्रुवुर्दानवौघास्ते दिग्ज्वलन्मशका इव ।
73541 उपाययुरदृश्यत्वं दीपा इव गतत्विषः ॥ २२ ॥
73542
73543 दिक्षु ज्वलन्तो मशका इव ॥ २२ ॥
73544
73545 अथ विद्रुतदैत्येन्द्रं दग्धान्तःपुरमण्डलम् ।
73546 बभूव पातालतलं कल्पक्षुण्णजगत्समम् ॥ २३ ॥
73547
73548 कल्पेन प्रल्यकालेन क्षुण्णं चूर्णितं यज्जगत्तत्समम् ॥ २३ ॥
73549
73550 अकालकल्पान्तविधौ हत्वा दैत्यं शनैर्विभौ ।
73551 क्वापि याते समाश्वस्तसुरसंरम्भपूजिते ॥ २४ ॥
73552
73553 अकाले कल्पान्तविधानसदृशे युद्धे दैत्यं हिरण्यकशिपुं हत्वा
73554 समाश्वस्तैः सुरैः संरम्भेण आदरनिर्भरेण पूजिते विभौ नृसिंहे क्वापि
73555 वाचामगोचरे स्वपदे याते सति ॥ २४ ॥
73556
73557 मृतशिष्टा दनुसुताः प्रह्लादपरिपालिताः ।
73558 दग्धं तं देशमाजग्मुः सरः शुष्कमिवाण्डजाः ॥ २५ ॥
73559
73560 अण्डजाः पक्षिणः ॥ २५ ॥
73561
73562 तत्र कालोचितां कृत्वा स्वनाशपरिदेवनाम् ।
73563 और्ध्वदेहिकसत्कारं चक्रुः प्रेतेषु बन्धुषु ॥ २६ ॥
73564
73565 स्वानां बान्धवानां नाशप्रयुक्तां परिदेवनां विलापम् ॥ २६ ॥
73566
73567 हतबन्धुजनं प्लुष्टबन्धुबान्धवमण्डलम् ।
73568 शनैराश्वासयामासुर्मृतशिष्टं स्वकं जनम् ॥ २७ ॥
73569
73570 प्लुष्टं दग्धं सप्राणं बन्धूनां तद्बान्धवानां च मण्डलं
73571 समूहम् ॥ २७ ॥
73572
73573 चित्रार्पितोपमदुराकृतयो निरीहा
73574 दीनाशया हि महताम्बुरुहोपमानाः ।
73575 शोकोपतप्तमनसोऽसुरनायकास्ते
73576 दग्धद्रुमा इव निरस्तविकारमासन् ॥ २८ ॥
73577
73578 निरीहाश्चिन्तया निश्चेष्टाः अत एव चित्रार्पितोपमाः दुःखिता आकृतयो येषां ते
73579 प्रह्लादादयोऽसुरनायका दग्धा दग्धपत्रशाखा द्रुमा इव निरस्तविकारं
73580 निश्चेष्टं आसन् । स्थाणूनां वायुना चलनाभावः प्रसिद्धः ॥ २८ ॥

73581
73582 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मो० उपशमप्रकरणे
73583 प्रह्लादविश्रान्तौ हिरण्यकशिपुवधो नाम त्रिंशः सर्गः ॥ ३० ॥
73584
73585 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
73586 हिरण्यकशिपुवधो नाम त्रिंशत्तमः सर्गः ॥ ३० ॥
73587
73588
73589 एकत्रिंशः सर्गः ३१
73590
73591 श्रीवसिष्ठ उवाच।
73592
73593 अथ दुःखपरीतात्मा हरिणा हतदानवे।
73594 प्रह्लादश्चिन्तयामास मौनी पातालकोटरे ॥ १ ॥
73595
73596 हरिविक्रमचिन्तात्र स्वजनक्षेमचिन्तनम्।
73597 प्रह्लादस्य हरेर्भक्त्या तद्भावश्चोपवर्ण्यते ॥ १ ॥
73598
73599 हता दानवा यस्मिंस्तथाविधे पातालकोटरे ॥ १ ॥
73600
73601 को न्वस्माकमुपायः स्याद्य एवेहासुराङ्कुरः।
73602 तीक्ष्णाग्रो जायते तं तं भुङ्क्ते शाखामृगो हरिः ॥ २ ॥
73603
73604 उपैतीत्युपायः सहायः। तीक्ष्णाग्रः संपत्पल्लवोद्गमक्षमो य
73605 एषासुरवृक्षाणामङ्कुरप्रायस्तेजस्वी जायते तं तं भुङ्क्ते। हरिपदस्य
73606 शाखामृगपदेन
73607 व्याख्यानमङ्कुरविनाशकत्वोपपादनार्थमधिक्षेपार्तह् च ॥ २ ॥
73608
73609 न कदाचन पाताले दैत्या दोर्दण्डशालिनः।
73610 स्थिरा बभूवुरुद्भिन्नाः पद्मा इव हिमाचले ॥ ३ ॥
73611
73612 उद्भिन्ना अङ्कुरिता वीर्यविकसिता वा ॥ ३ ॥
73613
73614 उत्पत्योत्पत्य नश्यन्ति भासुराकारघर्घराः।
73615 क्षीणप्रस्फुरितारम्भास्तरङ्गा इव वारिधेः ॥ ४ ॥
73616
73617 नश्यन्त्यसुरा इत्यनुषज्यते ॥ ४ ॥
73618
73619 सबाह्याभ्यन्तरं कष्टं समग्रालोकहारिणः।
73620 रिपवः प्रौढिमायाता अपूर्वतिमिरभ्रमाः ॥ ५ ॥
73621
73622 कष्टमिति खेदे। आलोक्यन्त इत्यालोका बाह्यराज्यादिसंपदः। आभ्यन्तरा
73623 उत्साहहर्षप्रसादसुखविश्रान्त्यादिसंपदश्च त एव आलोकाः प्रकाशास्तेषां
73624 हारिणोऽपहरणशीलाः। अत एव अपूर्वस्तिमिरभ्रमो येषु तथाविधा रिपवो देवाः
73625 प्रौढिमुत्कर्षम् ॥ ५ ॥
73626
73627 तमःप्रपूर्णहृदयाः संकुचत्पत्रसंपदः।
73628 सुहृदः खेदमायान्ति निशीथकमलाकराः ॥ ६ ॥
73629
73630 तमसा कश्मलान्धकारेण प्रपूर्णहृदयाः संकुचन्त्यः पत्रस्थानीयाः
73631 संपदो येषां तथाविधाः सुहृल्लक्षणा निशीथकमलाकराः खेदमायान्ति
73632 ॥ ६ ॥

73633
73634 तातस्य मलिनैर्नूनं पादपीठोपमर्दकैः ।
73635 सुरैर्विषय आक्रान्तो मृगैरिव महावनम् ॥ ७ ॥
73636
73637 मलिनैर्द्वेषकलुषैस्तातस्य प्रणामकाले पादपीठोपमर्दकैः सुरैर्विषयो
73638 देश आक्रान्तो नूनमिति वितर्के । महावनं सिंहवनम् ॥ ७ ॥
73639
73640 निरुद्यमा गतश्रीका दीनाः प्रकटिताशयाः ।
73641 बान्धवा न विराजन्ते पद्माः प्लुष्टदला इव ॥ ८ ॥
73642
73643 प्रकटिताशयाः ख्यापितहार्ददुःखाः । प्लुष्टदला ग्रीष्मदग्धपत्राः ॥ ८ ॥
73644
73645 स्फुरन्त्यसुरवीराणां गृहेष्वविरतानिलैः ।
73646 धूसरा भस्मनीहारा धूपधूमभरा इव ॥ ९ ॥
73647
73648 अविरतैरनिलैरुत्पातघातैः कीर्यमाणा भस्मलक्षणा नीहाराः
73649 प्राक्तनधूपधूमभरा इव स्फुरन्ति ॥ ९ ॥
73650
73651 हृतद्वारकपाटासु दैत्यान्तःपुरभित्तिषु ।
73652 प्रभा मरकतस्येव जाता नवयवाङ्कुराः ॥ १० ॥
73653
73654 प्राङ्गरकतस्य प्रभा इव सांप्रतं यवानां नवाङ्कुरा जाताः ॥ १० ॥
73655
73656 त्रिलोकीनाभिनलिनीमत्तेभा दानवा अपि ।
73657 देववद्दैन्यमायाताः किमसाध्यमहो विधेः ॥ ११ ॥
73658
73659 त्रिलोक्या नाभिनलिनी मेरुस्तदुपमर्दे मत्तेभभूता अपि दानवाः प्राग्देवा इव
73660 दैन्यमायाताः । किमित्याक्षेपे । असाध्यं नास्तीत्यर्थः ॥ ११ ॥
73661
73662 मनाक्चलति पर्णेऽपि दृष्टारिभयभीतयः ।
73663 वध्वस्त्रस्यन्ति विध्वस्ता मृग्यो ग्रामगता इव ॥ १२ ॥
73664
73665 वध्वो दैत्यसीमन्तिन्यस्त्रस्यन्ति उद्विजन्ति ॥ १२ ॥
73666
73667 आसुरीकर्णपूरार्थं फुल्ला रत्नगुलुच्छकाः ।
73668 नरसिंहकरालूनाः स्थाणुतामागता द्रुमाः ॥ १३ ॥
73669
73670 रत्नमया गुलुच्छकाः स्तबका येषां तथाविधा द्रुमा दिव्यवृक्षाः ॥ १३ ॥
73671
73672 दिव्याम्बरलतापत्रा रत्नस्तबकदन्तुराः ।
73673 पुनरारोपितास्तत्र नन्दने कल्पपादपाः ॥ १४ ॥
73674
73675 दिव्यान्यम्बराणि येषु तथाविधा लताः शाखाः पत्राणि च येषाम् ।
73676 रत्नस्तबकैर्दन्तुराः । दन्त उन्नत उरच् । पुनरित्यनेन पूर्वं तत आनीता इति
73677 गम्यते ॥ १४ ॥
73678
73679 पुरा त्वमरबन्दीनामसुरैः संस्तुतं मुखम् ।
73680 अद्य त्वसुरबन्दीनां सुरैरालोकितं मुखम् ॥ १५ ॥
73681
73682 बन्दीनां बन्दीकृतस्त्रीणाम् । संस्तुतं सप्रशंसं दृष्टम् ॥ १५ ॥
73683
73684 मन्ये दानमहानद्यः सुरेभकटभित्तिषु ।

प्रवृत्तास्ता भविष्यन्ति शैलसानुष्विवापगाः ॥ १६ ॥

दानानि मदधारास्तल्लक्षणा महानद्यः । मन्ये इति वितर्के ॥ १६ ॥

अस्माकमिभगण्डेषु दानदाहविभूतयः ।
लसन्ति मरुखण्डेषु संशुष्केष्विव धूलयः ॥ १७ ॥

दानस्य मदस्य दाहस्तत्प्रयुक्ता विभूतयो भस्मानि ॥ १७ ॥

विकासिसितमन्दारमकरन्दारुणानिलाः ।
ते मेरुशिखरैस्तुल्या दैत्या दुर्लभतां गताः ॥ १८ ॥

विकासिनां सितमन्दाराणां सपरागैर्मकरन्दैररुणा रञ्जिता
अङ्गस्पर्शिनोऽनिला येषाम् । अत एव मेरुशिखरैस्तुल्याः ॥ १८ ॥

सुरगन्धर्वसुन्दर्यो दानवान्तःपुरोचिताः ।
अद्य मेरौ स्थितिं याता मञ्जर्य इव पादपे ॥ १९ ॥

कष्टं तात पुरंध्रीणां शुष्काम्बुरुहनीरसाः ।
विलासाः सुरनारीभिर्भत्र्स्यन्ते लास्यलीलया ॥ २० ॥

लास्यलीलया नृत्येषु विडम्बनलीलया ॥ २० ॥

पूर्वं यैरेव मत्तातश्चामरैरुपवीजितः ।
सहस्रनयनः स्वर्गे कष्टं तैरेव वीज्यते ॥ २१ ॥

इयमस्माकमप्यापदागता दैन्यदायिनी ।
तस्यैकस्य प्रसादेन दुष्पौरुषगतेर्हरेः ॥ २२ ॥

अस्माकं महाप्रभावाणामपि दुःखा पौरुषगतिः पराक्रमस्मरणमपि
यस्य ॥ २२ ॥

तद्दोर्वनघनच्छायालब्धविश्रान्तयः सुराः ।
न कदाचन तप्यन्ते हिमाद्रेरिव सानवः ॥ २३ ॥

तप्यन्ते वयमिव संतप्यन्ते ॥ २३ ॥

शौरिशौर्याग्रशिखरसंश्रयेणाश्रितश्रियः ।
अस्मान्समुपरुन्धन्ति शुनः शाखामृगा इव ॥ २४ ॥

शौरेर्हरेः शौर्यं पराक्रमस्तदेव गिरेस्तरोर्वा शिखरस्याग्रमग्रशिखरं
तत्संश्रयेण आश्रितश्रियः प्राप्तसंपदो देवा गिरितरुशिखरसंश्रयाः
शाखामृगा मर्कटा शुनः कुक्कुरानिवास्मान्वलवतोऽपि समुपरुन्धन्ति
पाताले नियच्छन्ति ॥ २४ ॥

तेनासुरपुरन्ध्रीणां नित्यं मण्डनमण्डने ।
मुखपद्मे स्थितं बाष्पमब्जिनीनां हिमं यथा ॥ २५ ॥

मण्डनानामलंकाराणामपि मण्डनभूते मुखपद्मे बाष्पमस्रं तेन
शौरिशौर्येण हेतुना नित्यं स्थितम् । अब्जिनीनां मुखभूते पद्मे
हिममवश्यायबिन्दुर्यथा यद्वदित्यर्थः ॥ २५ ॥

73737 शीर्णभिन्नलुठद्भित्तिर्जगज्जरठमण्डपः।
73738 अयं नीलमणिस्तम्भैस्तद्भुजैरेव धार्यते॥ २६॥
73739
73740 अर्थादसुरविक्रमैः शीर्णो विदारितोऽत एव लुठद्भित्तिर्जगल्लक्षणो
73741 जरठमण्डपो जीर्णालयो नीलमणिस्तम्भप्रायैस्तस्य शौरेर्भुजैरेव धार्यते
73742 अवष्टभ्यते॥ २६॥
73743
73744 स धर्ता सुरसैन्यस्य मज्जतो विपदर्णवे।
73745 क्षीरोदोदरमग्नस्य मन्दरस्येव कच्छपः॥ २७॥
73746
73747 कच्छपः कच्छपावतारः स इव स शौरिर्धर्ता धारयिता॥ २७॥
73748
73749 एते तातादयः सर्वे तेनैवासुरसत्तमाः।
73750 पातिताः क्षुब्धकल्पान्तवातेनेव कुलाचलाः॥ २८॥
73751
73752 स एक एव संहारकर्मक्षमभुजानलः।
73753 सुरसार्थगुरुः श्रीमान्विषमो मधुसूदनः॥ २९॥
73754
73755 विषम आक्रमितुमशक्य इति यावत्॥ २९॥
73756
73757 दैत्यदोर्दण्डपरशोस्तस्य वीर्येण वीर्यवान्।
73758 दानवान्बाधते शक्रो बालकानिव मर्कटः॥ ३०॥
73759
73760 दैत्यदोर्दण्डखण्डने परशुभूतस्य। यथा महामर्कटवीर्येण
73761 वीर्यवान्मर्कटो बालकान्बाधते तद्वत्॥ ३०॥
73762
73763 दुर्जयः पुण्डरीकाक्षः प्रविमुक्तायुधोऽपि सन्।
73764 नासौ शस्त्रास्त्रविच्छेदैर्वज्रसारो विदीर्यते॥ ३१॥
73765
73766 शस्त्रास्त्रकृतैर्विच्छेदैः खण्डनैः। वज्रादपि सारो दृढतरः॥ ३१॥
73767
73768 अभ्यस्ता बहवस्तेन मिथः प्रेरितपर्वताः।
73769 भीमाः समरसंरम्भाः सममस्मत्पितामहैः॥ ३२॥
73770
73771 प्रेरिताः क्षिप्ताः पर्वता यत्र तथाविधाः समरसंरम्भा
73772 युद्धकौशलविशेषा अस्मत्पितामहैः सह युद्ध्वा अभ्यस्ताः शिक्षिता
73773 इत्युत्प्रेक्षा॥ ३२॥
73774
73775 तासु तास्वतिघोरासु वितताास्वतिराजिषु [अरिराजिषु इति पाठो युक्तः]।
73776 यो न भीत इदानीं स भयमेष्यति का कथा॥ ३३॥
73777
73778 भयमेष्यति इति का कथा कः प्रसङ्ग इत्यर्थः॥ ३३॥
73779
73780 उपायमेकमेवेमं हरेराक्रमणे स्फुटम्।
73781 मन्ये तद्व्यतिरेकेण विद्यते न प्रतिक्रिया॥ ३४॥
73782
73783 आक्रमणे वशीकरणे। प्रतिक्रिया तत्कृत पीडाप्रतीकारः॥ ३४॥
73784
73785 सर्वात्मना सर्वधिया सर्वसंरम्भरंहसा।
73786 स एव शरणं देवो गतिरस्तीह नान्यथा॥ ३५॥
73787
73788 कुतो न विद्यते तत्राह - सर्वात्मनेति। इह जगति सर्वात्मना

73789 सर्ववस्तुस्वभावेन सर्वधिया सर्वबुद्धिभेदेन सर्वसंरम्भरंहसा
73790 सर्वक्रियोद्योगेन च शरणार्थिनां स एव शरणं नान्यथा गतिरस्तीत्यर्थः ||
73791 ३५ ||
73792
73793 न तस्मादधिकः कश्चिदस्ति लोकत्रयान्तरे |
73794 प्रलयस्थितिसर्गाणां हरिः कारणतां गतः || ३६ ||
73795
73796 नन्वन्ये शरणं किं न स्युस्तत्राह - नेति || ३६ ||
73797
73798 अस्मान्निमेषादारभ्य नारायणमजं सदा |
73799 संप्रपन्नोऽस्मि सर्वत्र नारायणमयो ह्यहम् || ३७ ||
73800
73801 इति निश्चित्य सर्वभावेन तत्प्रतिपत्तिं संकल्पयति - अस्मादिति | किं
73802 देशकालवस्तुभेदेन प्रपद्यसे नेत्याह - सर्वत्रेति |
73803 सर्वदेशकालवस्तुष्वहं नारायणमयः || ३७ ||
73804
73805 नमो नारायणायेति मन्त्रः सर्वार्थसाधकः |
73806 नापैति मम हृत्कोशादाकाशादिव मारुतः || ३८ ||
73807
73808 निरन्तरतत्प्रतिपत्तिधारणानुस्मरणजपसाधनं श्रौतं
73809 तन्मन्त्रमनुस्मृत्य निरन्तरं तज्जपं संकल्पयति - नमो नारायणायेति
73810 | सप्रणवोऽयं शुचेः शुद्धे देशादावेव जपार्हो न निरन्तरमिति
73811 निष्प्रणवोपादानम् | हृत्कोशादित्युक्तिर्मानसजपमुख्यताद्योतनार्था || ३८ ||
73812
73813 हरिराशा हरिर्व्योम हरिरुर्वी हरिर्जगत् |
73814 अहं हरिरमेयात्मा जातो विष्णुमयो ह्यहम् || ३९ ||
73815
73816 सर्वत्र नारायणमयो ह्यहमित्युक्तं विशदयति - हरिरिति | आशा दिशः |
73817 विष्णुमयो भावनेन विष्णुप्रायः | स्त्रीमयो जाल्म
73818 इतिवद्भावनाकृततद्भावलक्षणे प्राचुर्ये मयट् || ३९ ||
73819
73820 अविष्णुः पूजयन्विष्णुं न पूजाफलभाग्भवेत् |
73821 विष्णुर्भूत्वा यजेद्विष्णुमयं विष्णुरहं स्थितः || ४० ||
73822
73823 किमर्थमेवम् कल्पयसि तत्राह - अविष्णुरिति | नाविष्णुः पूजयेद्विष्णुं
73824 नाशिवः पूजयेच्छिवम् इति विध्यनुरोधादित्यर्थः || ४० ||
73825
73826 हरिः प्रह्लादनामा यो मत्तो नान्यो हरिः पृथक् |
73827 इति निश्चयवानन्तर्व्यापकोऽहं च सर्वतः || ४१ ||
73828
73829 यो हरिः स एव प्रह्लादनामा | नान्योऽतोऽस्ति द्रष्टा इत्यादिश्रुतेः | मत्तः
73830 प्रतीचश्चान्यो हरिः पृथक् आत्मान्तरभृतो नास्ति || ४१ ||
73831
73832 अनन्तमिदमाकाशमापूर्य विनतासुतः |
73833 कनकाङ्गो ममाङ्गानामयमासनतां गतः || ४२ ||
73834
73835 इदानीं हरेर्वाहनायुधामरणशरीरादीनि स्वात्मनः कल्पयति -
73836 अनन्तमित्यादिना | आपूर्य स्थित इति शेषः | कनकमिवाङ्गं यस्य स्वर्णवर्ण
73837 इत्यर्थः || ४२ ||
73838
73839 करशाखैकविश्रान्तसर्वहेतिविहंगमाः |
73840 नखांशुमञ्जरीकीर्णा महामरकतद्रुमाः || ४३ ||

कराणां शाखास्वङ्गेषु एकविश्रान्ता नित्यविश्रान्ताः सर्वे
हेतयश्चक्रगदानन्दकाद्यायुधलक्षणा विहङ्गमाः पक्षिणो येषाम् ।
नखकान्तिलक्षणमञ्जरीभिः कीर्णा अत एव महामरकतद्रुमभूताः ।
मृदुमन्दारदामदिग्धे अंसमण्डले मूलप्रदेशौ येषाम् ।
समुद्रमथनकाले मन्दरेणाघृष्टकेयूरा मम हरेश्चत्वार एते बाहव इति
द्वयोरन्वयः ॥ ४३ ॥

इमे ते मृदुमन्दारदामदिग्धांसमण्डलाः ।
मन्दराघृष्टकेयूराश्चत्वारो मम बाहवः ॥ ४४ ॥

चलच्छशिकलापूरचारुचामरधारिणी ।
इयं मे पार्श्वगा लक्ष्मीः क्षीरोदकुहरोत्थिता ॥ ४५ ॥

हेलाविलुब्धभुवना त्रैलोक्यतरुमञ्जरी ।
इयं मे पाश्वगा कीर्तिरचलामलभासिनी ॥ ४६ ॥

हेलया अयत्नेनैव विलुब्धानि विलोभितानि श्रवणसस्पृहीकृतानि भुवनानि
तत्स्था जना यया । अत एव त्रैलोक्यलक्षणतरोर्मञ्जरीव विराजमाना हरेः
कीर्तिर्मूर्तिमती मे पार्श्वगा वर्तते ॥ ४६ ॥

अनारतजगज्जालनवनिर्माणकारिणी [जरज्जाल इत्यपि पाठः] ।
इयं मे पार्श्वगा माया स्वेन्द्रजालविलासिनी ॥ ४७ ॥

पार्श्वगा पार्श्वान्तरे स्थिता जयानाम्नी लक्ष्मीसखी ॥ ४७ ॥

इयं सा हेलयाक्रान्तत्रैलोक्यतरुखण्डिका ।
जया स्फुरति मे पार्श्वे लता कल्पतरोरिव ॥ ४८ ॥

इमौ मे नित्यशीतोष्णौ देवौ शीतांशुभास्करौ ।
प्रकटीकृतसंसारौ मुखमध्ये विलोचने ॥ ४९ ॥

ममेयमुत्पलश्यामा पीनाम्भोधरसुन्दरी ।
श्यामीकृतककुप्चक्रा देहदीप्तिर्विसर्पिणी ॥ ५० ॥

देहदीप्तिः शरीरकान्तिः ॥ ५० ॥

अयं मम करे शङ्खः पाञ्चजन्यः स्फुरद्ध्वनिः ।
मूर्तं खमिव शब्दात्मा क्षीरोद इव संस्थितः ॥ ५१ ॥

क्षीरोद इव शुभ्र इति शेषः ॥ ५१ ॥

अयं मे कर्णिकाकोशनिलीनब्रह्मषट्पदः ।
पद्मः करतले श्रीमान्स्वनाडीकुहरोद्भवः ॥ ५२ ॥

स्वस्य नाडीकुहरं नाभिस्तदुद्भवः । तथाच नाभिपद्ममेव कदाचित्करेण
धार्यते कदाचिन्नाभाविति गम्यते ॥ ५२ ॥

इयं मे रत्नचित्राङ्गी सुमेरुशिखरोपमा ।
हेमाङ्गदा गदा गुर्वी दैत्यदानवमर्दिनी ॥ ५३ ॥

हेमाङ्गदा हेमपिनद्धा गदा ॥ ५३ ॥

अयं मे भास्कराकार [भास्वराकार इति पाठः] उद्यदंशुः
सुदर्शनः।
ज्वालाजटिलपर्यन्तपरिपाटलदिक्तटः॥ ५४॥

परितः पाटलवर्णानि दिक्तटानि यस्मात्। अनेनासुररुधिराक्तता गम्यते॥ ५४॥

अयं मे केतुमद्वह्निसुन्दरो ज्वलितोऽसितः।
कुठारो दैत्यवृक्षाणां नन्दयन्नन्दकः स्थितः॥ ५५॥

केतुमान् धूमरेखावान्वह्निरिव सुन्दरः। अत एवासितः। दैत्यवृक्षाणां
कुठार इव च्छेत्ता। देवान् नन्दयन् नन्दको भगवत्खड्गः॥ ५५॥

इदं मे शरधाराणां पुष्करावर्तकोपमम्।
शार्ङ्गं धनुरहीन्द्राभमिन्द्रकार्मुकसुन्दरम्॥ ५६॥

इन्द्रकार्मुकमिव सुन्दरं नानामणिचित्रम्॥ ५६॥

इमान्यहमनन्तानि जगन्ति जठरे चिरम्।
बिभर्मि जातनष्टानि वर्तमानान्यनेकशः॥ ५७॥

सांप्रतं जातानि चिरनष्टानि चिरजातवर्तमानानि च।
भविष्यतामप्युपलक्षणमेतत्॥ ५७॥

इमौ मही मे चरणाविदं मे गगनं शिरः।
इदं वपुर्मे त्रिजगदिमे मे कुक्षयो दिशः॥ ५८॥

इदानीं हरेर्विराड्रूपमपि स्वस्यैवेत्याह - इमाविति। मही मे इमौ
चरणावित्यन्वयः। कुक्षय इति बहुत्वं दिग्बहुत्वाददितिः पाशानितिवत्॥ ५८॥

साक्षादयमहं विष्णुर्नीलमेघोदरद्युतिः।
सुपर्णपर्वतारूढः शङ्खचक्रगदाधरः॥ ५९॥

एते मत्तः पलायन्ते समग्रा दुष्टचेतसः।
तार्णास्तरलसंचाराः पवनादिव राशयः॥ ६०॥

तार्णा राशयः शुष्कतृणराशयः॥ ६०॥

अयं नीलोत्पलश्यामः पीतवासा गदाधरः।
लक्ष्मीवान्गरुडारूढः स्वयमेवाहमच्युतः॥ ६१॥

को मामेति विरुद्धात्मा त्रैलोक्यदहनक्षमम्।
स्वनाशाय ततः क्षुब्धं कालाग्निं शलभो यथा॥ ६२॥

विरुद्धात्मा द्विषन् एति युद्धायागच्छति। य आगच्छति स यतः
स्वनाशायैवागच्छति नान्यत्तदागमनफलमित्यर्थः॥ ६२॥

इमे मे तैजसीं सृष्टिं ममाग्रस्थाः सुरासुराः।
न शक्नुवन्ति संरोद्धुं चक्षुर्मन्दाः प्रभा इव॥ ६३॥

तैजसीं सृष्टिं तेजोज्वालाप्रसरं संरोद्धुं प्रशमयितुं सोढुं वा॥ ६३॥

इमं मामीश्वरं विष्णुं ब्रह्मेन्द्राग्निहरादयः |
स्तुवन्त्यनन्तया वाचा बहुवक्त्रसमुत्थया || ६४ ||

अयं विजृम्भितैश्वर्यो जातोऽहमजिताकृतिः |
सर्वद्वन्द्वपदातीतो महिम्ना परमेण हि || ६५ ||

अजितो विष्णुस्तदाकृतिः परमेण महिम्ना प्रभावेण परमार्थस्वभावेन च |
एष नित्यो महिमा इति श्रुतेः || ६५ ||

त्रिभुवनभवनोदरैकमूर्ति
प्रसभविभिन्नसमस्तदुष्टसत्त्वम् |
घनगिरितृणकाननान्तरस्थं
सकलभयापहरं वपुः प्रणौमि || ६६ ||

त्रिभुवनभवनमुदरे यस्य तथाविधैका मूर्तिर्यस्य तत् | घना मेघाः
गिरयस्तृणानि काननानि चेत्येतदादि सर्ववस्तूनामान्तरे अधिष्ठानभावे
स्थितं अत एव तत्त्वतः साक्षात्कारमात्रेण सकलभयापहरं वैष्णवं
वपुर्विराड्रूपं देवतारूपं परब्रह्मात्मकं चाहमेवेति मां
प्रणौमीत्यर्थः || ६६ ||

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षो
उपशमप्रकरणे प्रह्लादनिर्वाणे नारायणीकरणं नामैकत्रिंशः
सर्गः || ३१ ||

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
नारायणीकरणं नामैकत्रिंशः सर्गः || ३१ ||

## द्वात्रिंशः सर्गः ३२

श्रीवसिष्ठ उवाच |

प्रह्लाद इति संचिन्त्य कृत्वा नारायणीं तनुम् |
पुनः संचिन्तयामास पूजार्थमसुरद्विषः || १ ||

विष्णोर्मानसपूजात्र बाह्यपूजाऽसुरैः सह |
श्रुत्वा विस्मितदेवानां हरेः पृच्छा च वर्ण्यते || १ ||

स्वतनुं भावनया नारायणीं नारायणात्मिकां कृत्वा || १ ||

वपुषो वैष्णवादस्मान्मा भून्मूर्तिः परावरा |
अयं प्राणप्रवाहेण बहिर्विष्णुः स्थितोऽपरः || २ ||

अस्मान्मया परिकल्पितात्त्रिविधाद्वैष्णवाद्वपुषोऽन्या परा समष्टिरूपा अवरा
व्यष्टिदेवतारूपा वा मा भूत् किंत्वयमेव मद्रूपो
विष्णुर्हृदयात्प्राणप्रवाहेण पुष्पाञ्जलिभावनया बहिरावाहितः सन्
यावत्पूजाकालमपर इव स्थितः कल्प्यत इत्यर्थः || २ ||

वैनतेयसमारूढः स्फुरच्छक्तिचतुष्टयः |
शङ्खचक्रगदापाणिः श्यामलाङ्गश्चतुर्भुजः || ३ ||

स कीदृशस्तमाह - वैनतेयेति द्वाभ्याम् | स्फुरत्

73997 क्रियाज्ञानेच्छानुग्रहाख्यं शक्तिचतुष्टयं यस्य ॥ ३ ॥
73998
73999 चन्द्रार्कनयनः श्रीमान्कान्तनन्दकनन्दनः ।
74000 पद्मपाणिर्विशालाक्षः शार्ङ्गधन्वा महाद्युतिः ॥ ४ ॥
74001
74002 कान्तेन नन्दकेन खड्गेन नन्दनः स्वजनान्दनः ॥ ४ ॥
74003
74004 तदेनं पूजयाम्याशु परिवारसमन्वितम् ।
74005 सपर्यया मनोमय्या सर्वसंभाररम्यया ॥ ५ ॥
74006
74007 परिवारैः संकर्षणप्रद्युम्नादिव्यूहैः पार्षदैश्च समन्वितम् ॥ ५ ॥
74008
74009 तत एनं महादेवं पूजयिष्याम्यहं पुनः ।
74010 पूजया बाह्यसंभोगमहत्या बहुरत्नया ॥ ६ ॥
74011
74012 महादेवं पूज्यं देवं स्वकुलदेवशिवाभिन्नं वा । बाह्यैः संभोगैः
74013 संभारैर्महत्या विस्तृतया ॥ ६ ॥
74014
74015 प्रह्लाद इति संचिन्त्य संभारभरभारिणा ।
74016 मनसा पूजयामास माधवं कमलाधवम् ॥ ७ ॥
74017
74018 कमला लक्ष्मीस्तस्या धवं पतिम् ॥ ७ ॥
74019
74020 रत्नौघपात्रपटलैश्चन्दनादिविलेपनैः ।
74021 धूपैर्दीपैर्विचित्रैश्च नानाविभवभूषणैः ॥ ८ ॥
74022
74023 रत्नौघखचितानां पात्राणां पटलैः प्रान्तैरभिषेचनैरिति शेषः ।
74024 नानाविभवैर्भूषणैरलंकारैः ॥ ८ ॥
74025
74026 मन्दारमालावलनैर्हेमाब्जपटलोत्करैः ।
74027 कल्पवृक्षलतागुच्छै रत्नस्तबकमण्डलैः ॥ ९ ॥
74028
74029 पल्लवैर्दिव्यवृक्षाणां नानाकुसुमदामभिः ।
74030 किंकिरातैर्बकैः कुन्दैश्चम्पकैरसितोत्पलैः ॥ १० ॥
74031
74032 किं किरातादयो यथायोगं पुष्पजातिभेदा बोध्याः ॥ १० ॥
74033
74034 कह्लारैः कुमुदैः काशैः खर्जूरैश्चूतकिंशुकैः ।
74035 अशोकैर्मदनैर्बिल्वैः कर्णिकारैः किरातकैः ॥ ११ ॥
74036
74037 कदम्बैर्बकुलैर्निम्बैः सिन्दुवारैः सयूथकैः ।
74038 पारिभद्रैर्गुग्गुलीभिर्बिन्दुकैः पुष्पकोत्करैः ॥ १२ ॥
74039
74040 प्रियङ्गुपटलैः पाटैः पाटलैर्धातुपाटलैः ।
74041 आम्रैराम्रातकैर्गव्यैर्हरीतकबिभीतकैः ॥ १३ ॥
74042
74043 शालतालतमालानां लताकुसुमपल्लवैः ।
74044 कोमलैः कलिकाजालैः सहकारैः सकुङ्कुमैः ॥ १४ ॥
74045
74046 सकुङ्कुमैः काश्मीरद्रवाक्तैः ॥ १४ ॥
74047
74048 केतकैः शतपत्रैश्च तथैलामञ्जरीगणैः ।

74049 सर्वसौन्दर्यसंमानैः स्वयमात्मार्पणैरपि ॥ १५ ॥
74050
74051 सर्वैर्धूपदीपनैवेद्यताम्बूलदर्पणच्छत्रचामरनीराजनपुष्पाञ्जलिप्रदक्ष्
74052 इणानमस्कारादिभिः सौन्दर्ययुक्तैः संमानैरुपचारैः ॥ १५ ॥
74053
74054 हरिं परमया भक्त्या जगद्विभवभव्यया ।
74055 मनसा पूजयामास प्रह्लादोऽन्तःपुरे पतिम् ॥ १६ ॥
74056
74057 जगति ये ये विभवाः प्रसिद्धास्तैस्तैरुपकरणीकृतैर्भव्यया भक्त्या पतिं
74058 जगत्पतिं स्वस्वामिनं वा ॥ १६ ॥
74059
74060 अथ देवगृहे तस्मिन्बाह्यार्थैः परिपूर्णया ।
74061 पूजया पूजयामास दानवेशो जनार्दनम् ॥ १७ ॥
74062
74063 अथ मानसपूजानन्तरम् । तस्मिन्नन्तःपुरे स्थिते देवगृहे ॥ १७ ॥
74064
74065 बहिर्द्रव्यैरनेनैव क्रमेण परमेश्वरम् ।
74066 पुनःपुनः पूजयित्वा तुष्टिमान्दानवोऽभवत् ॥ १८ ॥
74067
74068 अनेन मानसपूजोक्तेनैव क्रमेण ॥ १८ ॥
74069
74070 ततस्ततः प्रभृत्येव प्रह्लादः परमेश्वरम् ।
74071 तथैव [तयैव इत्यपि क्वचित्] प्रत्यहं भक्त्या पूजयामास
74072 पूर्णया ॥ १९ ॥
74073
74074 अथ तस्मिन्पुरे दैत्यास्ततः प्रभृति वैष्णवाः ।
74075 सर्व एवाभवन्भव्या राजा ह्याचारकारणम् ॥ २० ॥
74076
74077 राजा हीति । राज्ञि धर्मिणि धर्मिष्ठाः पापे पापाः समे समाः ।
74078 तद्धर्ममनुवर्तन्ते यथा राजा तथा प्रजाः ॥ इति न्यायादित्यर्थः ॥ २० ॥
74079
74080 जगाम वार्ता गगनं देवलोकमथारिहन् ।
74081 विष्णोर्द्वेषं परित्यज्य भक्ता दैत्याः स्थिता इति ॥ २१ ॥
74082
74083 वार्ता जगाम चारमुखादित्यर्थाद्गम्यते ॥ २१ ॥
74084
74085 देवा विस्मयमाजग्मुः शक्राद्याः समरुद्गणाः ।
74086 गृहीता वैष्णवी भक्तिर्दैत्यैः किमिति राघव ॥ २२ ॥
74087
74088 किं कस्माद्गृहीतेति ॥ २२ ॥
74089
74090 क्षीरोदे भोगिभोगस्थं बिबुधा विस्मयाकुलाः ।
74091 जग्मुरम्बरमुत्सृज्य हरिमाहवशालिनम् ॥ २३ ॥
74092
74093 अम्बरं अमरावतीम् ॥ २३ ॥
74094
74095 तत्रैनं दैत्यवृत्तान्तं कथयामासुरस्य ते ।
74096 पप्रच्छुश्चैनमासीनमपूर्वाश्चर्यविस्मयम् ॥ २४ ॥
74097
74098 अस्य अस्मै हरये । एनं हरिम् ॥ २४ ॥
74099
74100 विबुधा ऊचुः ।

74101

74102 किमेतद्भगवन्दैत्या विरुद्धा ये सदैव ते।
74103 ते हि तन्मयतां याता मायेयमिति भाव्यते॥ २५॥
74104

74105 ते विरुद्धास्त्वां द्विषन्त इति यावत्। तन्मयतां त्वन्मयताम्॥ २५॥
74106

74107 क्व किलात्यन्तदुर्वृत्ता दानवा दलिताद्रयः।
74108 क्व पाश्चात्यमहाजन्मलभ्या भक्तिर्जनार्दने॥ २६॥
74109

74110 द्वेषाद्दलिताः अद्रयस्त्वद्भक्तदेवमुन्यावासा यैः॥ २६॥
74111

74112 प्राकृतो गुणवाञ्जात इत्येषा भगवन्कथा।
74113 अकालपुष्पमालेव सुखायोद्वेजनाय च॥ २७॥
74114

74115 प्राकृतः पामरः। एषा कथा। औत्पातिकी अकाल पुष्पमालेव॥ २७॥
74116

74117 नोपपन्नं हि यद्यत्र तत्र तत्र विराजते।
74118 मध्ये काचकलापस्य महामूल्यो मणिर्यथा॥ २८॥
74119

74120 न उपपन्नं युक्तम्॥ २८॥
74121

74122 यो यो यादृग्गुणो जन्तुः स तामेवैति संस्थितिम्।
74123 सदृशेष्वप्यजेषु श्वा न मध्ये रमते क्वचित्॥ २९॥
74124

74125 ननु कश्यपवंश्यत्वाद्युष्मत्सदृशा एव ते इति चेद्गुणवैषम्यान्नेत्याशये
74126 नाहुः - यो य इति। तामसस्तामसीं राजसो राजसीं सात्त्विकस्तु सात्त्विकीं
74127 संस्थितिमेतीति युक्तमित्यर्थः॥ २९॥
74128

74129 न तथा दुःखयन्त्यङ्गे मज्जन्त्यो वज्रसूचयः।
74130 वैसादृश्येन संबद्धा यथैता वस्तुदृष्टयः॥ ३०॥
74131

74132 वैसादृश्येन अनौचित्येन। तथाच हरिणोक्तम् - शशी दिवसधूसरो
74133 गलितयौवना कामिनी सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः।
74134 प्रभुर्धनपरायणः सततदुर्गतिः सज्जनो नृपाङ्गणगतः खलो मनसि
74135 सप्त शल्यानि मे॥ इति॥ ३०॥
74136

74137 यद्यत्र क्रमसंप्राप्तमुपपन्नमनिन्दितम्।
74138 तदेव राजते तत्र जलेऽम्भोजं नतु स्थले॥ ३१॥
74139

74140 क्रमो योग्यता तया संप्राप्तम्॥ ३१॥
74141

74142 क्वाधमः प्राकृतारम्भो हीनकर्मरतिः सदा।
74143 वराको दानवो [दानवस्तुच्छजातिः इति क्वचित्पाठः]
74144 हीनजातिर्भक्तिः क्व वैष्णवी॥ ३२॥
74145

74146 हीनजातिस्तामसयोनिः॥ ३२॥
74147

74148 कमलिनी परुषोषरभूगता
74149 सुखयतीह यथा न दुराश्रया।
74150 दितिसुतोऽपि हि माधवभक्तिमा-
74151 निति कथा न तथेश सुखाय नः॥ ३३॥
74152

74153 कमलिनी परुषायां तप्तायामूषरभुवि गता इति कथा यथा श्रोतॄन्न
74154 सुखयति तथा हे ईश दितेः सुतः संततिरपि माधवे भक्तिमानिति। दुराश्रया
74155 अधमाश्रयविषया कथापि नः तथैव न सुखायेत्यर्थः॥ ३३॥
74156
74157 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे०
74158 मोक्षोपायेषूपशमप्रकरणे विबुधवाक्यं नाम द्वात्रिंशः सर्गः॥
74159 ३२॥
74160
74161 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
74162 विबुधवाक्यं नाम द्वात्रिंशः सर्गः॥ ३२॥
74163
74164
74165 त्रयस्त्रिंशः सर्गः ३३
74166
74167 श्रीवसिष्ठ उवाच।
74168
74169 गर्जन्तमतिसंरब्धं सुरलोकमथारिहा।
74170 उवाच माधवो वाक्यं शिखिवृन्दमिवाम्बुदः॥ १॥
74171
74172 हरिभक्त्यात्र दैत्यस्य विवेकादिगुणोदयः।
74173 हरिं प्रसन्नं दृष्ट्वाग्रे स्तवश्चैवोपवर्ण्यते॥ १॥
74174
74175 अनुचितदर्शनादतिसंरब्धं कुपितमत एव गर्जन्तं प्रागुक्तप्रकारेण
74176 उच्चैराक्रुश्य पृच्छन्तं सुरलोकमथ माधव उवाचेत्यन्वयः॥ १॥
74177
74178 श्रीभगवानुवाच।
74179
74180 विबुधा मा विषण्णाः स्थ प्रह्लादो भक्तिमानिति।
74181 पाश्चात्यं जन्म तस्येदं मोक्षार्होऽसावरिंदमः॥ २॥
74182
74183 स्वत एव बलिनो दैत्यास्त्वद्भक्त्याप्युपस्कृता बलवत्तरा भविष्यन्ति कुतो न
74184 विषादस्तत्राह - मोक्षार्ह इति। यतो मोक्षार्हस्ततो न वस्तुच्छं राज्यसुखं
74185 स वाञ्छतीत्यर्थः॥ २॥
74186
74187 अत उत्तरमेतेन गर्भता दनुजन्मना।
74188 न कर्तव्या प्रदग्धेन बीजेनेवाङ्कुरक्रिया॥ ३॥
74189
74190 एतेन दनुजन्मना अतोऽस्माज्जन्मन उत्तरकालं गर्भता मातृगर्भे वसतिर्न
74191 कर्तव्या॥ ३॥
74192
74193 गुणवान्निर्गुणो जात इत्यनर्थक्रमं विदुः।
74194 निर्गुणो गुणवाञ्जात इत्याहुः सिद्धिदं क्रमम्॥ ४॥
74195
74196 देवैरुक्तं तस्य भगवद्भक्त्यनौचित्यदोषं परिहरति - गुणवानिति।
74197 जातश्चेति [चेदिति इत्यपि पाठः] शेषः। अनर्थक्रमं
74198 अनर्थपर्यवसितं पुरुषार्थविघातकं च क्रमं विदुः आहुश्च विद्वांसः॥
74199 ४॥
74200
74201 आत्मीयानि विचित्राणि भुवनान्यमरोत्तमाः।
74202 प्रयात नासुखायैषा प्रह्लादी गुणितेह वः॥ ५॥
74203
74204 प्राह्लादी प्रह्लादसंबन्धिनी मद्भक्त्यादिगुणिता वः असुखाय न॥ ५॥

74205
74206 श्रीवसिष्ठ उवाच।
74207
74208 इत्युक्त्वा विबुधांस्तत्र क्षीरोदार्णववीचिषु।
74209 अन्तर्धानं ययौ देवस्तटतापिच्छगुच्छवत्॥ ६॥
74210
74211 तटोत्पन्नतापिच्छस्य नीलं गुच्छं यथा उन्नतासु वीचिषु
74212 व्यवधानादन्तर्धानं याति तद्वत्॥ ६॥
74213
74214 सोऽपि संपूजितहरिः सुरौघो व्रजदम्बरम्।
74215 पुनर्मन्दरनिर्धूतात्कणजालमिवार्णवात्॥ ७॥
74216
74217 पूर्वमम्बरादर्णवे पतितं कणजालं
74218 मन्दरनिर्धूतादर्णवात्पुनरम्बरमिव॥ ७॥
74219
74220 प्रह्लादं प्रति गीर्वाणास्ततः स्निग्धत्वमाययुः।
74221 महान्तो यत्र नोद्विग्नास्तत्र विश्वासवन्मनः॥ ८॥
74222
74223 स्निग्धत्वं सौहृदम्। यत्र यस्मिन्पुरुषे विषये वा महान्तः स्वपूज्याः
74224 पित्राचार्यादयो नोद्विग्नास्तत्र तस्मिन्बालामामपि मनो
74225 विश्वासवत्प्रसिद्धमित्यर्थः॥ ८॥
74226
74227 प्रत्यहं पूजयामास देवदेवं जनार्दनम्।
74228 मनसा कर्मणा वाचा प्रह्लादो भक्तिमानिति॥ ९॥
74229
74230 अथ पूजापरस्यास्य समवर्धन्त कालतः।
74231 विवेकानन्दवैराग्यविभवप्रमुखा गुणाः॥ १०॥
74232
74233 आनन्दो यथाप्राप्तेन संतोषः॥ १०॥
74234
74235 नाभ्यनन्ददसौ भोगपूगं शुष्कमिव द्रुमम्।
74236 न चारमत कान्तासु मृगो लोकमहीष्विव॥ ११॥
74237
74238 लोकमहीषु जनाकीर्णभूमिष्विव॥ ११॥
74239
74240 न रेमे लोकचर्यासु शास्त्रार्थकथनादृते।
74241 न जायते रतिस्तस्य दृश्ये स्थल इवाब्जिनी॥ १२॥
74242
74243 लोकचर्यासु अशास्त्रीयलोकवृत्तेषु। दृश्ये दर्शनार्हे समाजोत्सवादिकौतुके॥
74244 १२॥
74245
74246 न विशश्राम चेतोऽस्य भोगरोगानुरञ्जने।
74247 मुक्ताफलमसंश्लिष्टं मुक्ताफल इवामले॥ १३॥
74248
74249 भोगरूपाणां रोगाणां विषयापथ्यसेवनेनानुकूलाचरणे।
74250 असंश्लिष्टमग्रथितमच्छिद्रितं वा॥ १३॥
74251
74252 त्यक्तभोगादिकलनं विश्रान्तिमनुपागतम्।
74253 चेतः केवलमस्यासीद्दोलायामिव योजितम्॥ १४॥
74254
74255 कथं तर्हि चेत आसीत्तदाह - त्यक्तेति। दोलायां योजितमिव
74256 नैकतरभागविश्रान्तमन्तरालालम्बीत्यर्थः॥ १४॥

74257
74258 प्राह्लादीं तां स्थितिं विष्णुर्देवः क्षीरोदमन्दिरात् ।
74259 विवेद सर्वगतया धिया परमकान्तया ॥ १५ ॥
74260
74261 परमकान्तया शुद्धसत्त्वात्मिकया धिया ज्ञानशक्त्या विवेद विदितवान् ॥ १५ ॥
74262
74263 अथ पातालमार्गेण विष्णुराह्लादिताग्रतः ।
74264 पूजादेवगृहं तस्य प्रह्लादस्य समाययौ ॥ १६ ॥
74265
74266 आह्लादिता भक्ताह्लादकर्ता । एतस्यैवानन्दत्यान्यानि भूतानि मात्रामुपजीवन्ति इति
74267 श्रुतेः सर्वानन्दकर्ता वा । पूजादेवगृहं गत्वा प्रह्लादस्य अग्रतः
74268 समाययौ ॥ १६ ॥
74269
74270 विज्ञायाभ्यागतं देवं पूजया द्विगुणेद्धया ।
74271 दैत्येन्द्रः पुण्डरीकाक्षमादरात्पर्यपूजयत् ॥ १७ ॥
74272
74273 द्विगुणेनोपकरणोपचारेण इद्धया दीप्तया ॥ १७ ॥
74274
74275 पूजागृहगतं देवं प्रत्यक्षावस्थितं हरिम् ।
74276 प्रह्लादः परमप्रीतो गिरा तुष्टाव पुष्टया ॥ १८ ॥
74277
74278 पुष्टया हर्षोपचितया ॥ १८ ॥
74279
74280 प्रह्लाद उवाच ।
74281
74282 त्रिभुवनभवनाभिरामकोशं
74283 सकलकलङ्कहरं परं प्रकाशम् ।
74284 अशरणशरणं शरण्यमीशं
74285 हरिमजमच्युतमीश्वरं प्रपद्ये ॥ १९ ॥
74286
74287 त्रिभुवनस्य यद्भवनं सुरक्षितस्थितिस्तदनुकूलमभिरामं कोशगृहम् ।
74288 स्वान्तःस्थितत्रिभुवनस्य स्वेनैव पालनात् । सकलस्य बाह्याभ्यन्तरस्य
74289 कलङ्कस्य तमसः हरं अपहर्तारम् । परं
74290 सूर्यचन्द्राग्निवाक्करणप्रकाशेभ्योऽप्युत्कृष्टं स्वयंज्योतिः प्रकाशम् । न
74291 विद्यतेऽन्यच्छरणं येषां ते अशरणास्तेषां शरणं रक्षकम् ।
74292 अविनाशित्वाच्छरण्यं शरणार्हम् । ईशं सर्वशक्तिसंपन्नम् । अत एव रजसा
74293 अजं सत्त्वेनाच्युतं तमसा चेश्वरं सर्वदुःखहरत्वाद्धरिं त्वां प्रपद्ये
74294 इत्यर्थः ॥ १९ ॥
74295
74296 कुवलयदलनीलसंनिकाशं
74297 शरदमलाम्बरकोटरोपमानम् ।
74298 भ्रमरतिमिरकज्जलाञ्जनाभं
74299 सरसिजचक्रगदाधरं प्रपद्ये ॥ २० ॥
74300
74301 कुवलयदलेनोत्पलेन नीलमणिना च संनिकाशं समानकान्तिम् ॥ २० ॥
74302
74303 विमलमलिकलापकोमलाङ्गं
74304 सितदलपङ्कजकुड्मलाभशङ्खम् ।
74305 श्रुतिरणितविरञ्चिचञ्चरीकं
74306 स्वहृदयपद्मदलाश्रयं प्रपद्ये ॥ २१ ॥
74307
74308 अलिकलापमिव कोमलानि सुन्दराण्यङ्गानि यस्य । सितदलपङ्कजस्य

74309 पुण्डरीकस्य कुड्मलमिव आभातीति सितदलपङ्कजकुड्मलाभः शङ्खो यस्य
74310 | श्रुतय एव रणितानि गुञ्जारवा यस्य तथाविधो विरिञ्चिनामा चञ्चरीको
74311 नाभिपद्मे भृङ्गो यस्य | स्वानां स्वभक्तानां
74312 हृदयपद्मदलान्याश्रय आधारो यस्य तम् ॥ २१ ॥
74313
74314 सितनखगणतारकावकीर्णं
74315 स्मितधवलाननपीवरेन्दुबिम्बम् |
74316 हृदयमणिमरीचिजालगङ्गं
74317 हरिशरदम्बरमाततं प्रपद्ये ॥ २२ ॥
74318
74319 हरिलक्षणं शरदम्बरं शरत्कालाकाशं प्रपद्ये |
74320 शरदम्बरत्वोपपादनाय विशिनष्टि - सितनखेत्यादि | स्मितेन
74321 धवलमाननलक्षणं पीवरं पूर्णमिन्दुबिम्बं यस्य | हृदयमणिः
74322 कौस्तुभस्तन्मरीचिजालान्येव गङ्गा मन्दाकिनी यत्र ॥ २२ ॥
74323
74324 अविरलकृतसृष्टिसर्वलीनं
74325 सततमजातमवर्धनं विशालम् |
74326 गुणशतजरठाभिजातदेहं
74327 तरुदलशायिनमर्भकं प्रपद्ये ॥ २३ ॥
74328
74329 अविरला निबिडा कृता सृष्टिः सर्वाप्यसंबाधं लीना निविष्टा यस्मिन् | स्वयं
74330 तु सततमजातमनुत्पन्नमत एवाऽवर्धनं वृद्ध्यादिविकारशून्यम् | कथं
74331 तस्य देहित्वं तत्राह - गुणेति |
74332 सत्त्वादिमायागुणप्रयुक्तैर्गुणशतैरनन्तकल्याणगुणैर्जरठोऽतिचिरंतनोऽभिज्
74333 आतः सुन्दरो देहो यस्य तथाविधम् | प्रलयकाले वटतरुदले शायिनमर्भकं
74334 प्रपद्ये इत्यर्थः ॥ २३ ॥
74335
74336 नवविकसितपद्मरेणुगौरं
74337 स्फुटकमलावपुषा विभूषिताङ्गम् |
74338 दिनशमसमयारुणाङ्गरागं
74339 कनकनिभाम्बरसुन्दरं प्रपद्ये ॥ २४ ॥
74340
74341 नवविकसितस्य नाभिपद्मस्य रेणुभिर्गौरं पीतमर्थादुदरदेशे | स्फुटेन
74342 प्रकाशमानेन कमलाया लक्ष्म्या वपुषा विभूषितमङ्गं वक्षो वामोरुर्वा
74343 यस्य | दिनशमसमयः सायंकाल इवारुणो रक्तचनदनकाश्मीराद्यङ्गरागो
74344 यस्य ॥ २४ ॥
74345
74346 दितिसुतनलिनीतुषारपातं
74347 सुरनलिनीसततोदितार्कबिम्बम् |
74348 कमलजनलिनीजलावपूरं
74349 हृदि नलिनीनिलयं विभुं प्रपद्ये ॥ २५ ॥
74350
74351 कमलजो ब्रह्मा तन्नलिन्या जलेनावपूर्यत इति जलावपूरस्तडागस्तद्रूपम् |
74352 हृदि प्रसिद्धा नलिनी हृत्पद्ममिति यावत् ॥ २५ ॥
74353
74354 त्रिभुवननलिनीसितारविन्दं
74355 तिमिरसमानविमोहदीपमग्र्यम् |
74356 स्फुटतरमजडं चिदात्मतत्त्वं
74357 जगदखिलार्तिहरं हरिं प्रपद्ये ॥ २६ ॥
74358
74359 त्रिभुवननलिन्याः सिते अरविन्दे करे यस्य सूर्यस्य तथाभूतम् | अत एव
74360 तिमिरसमानस्य विमोहस्य दीपम् | अग्र्यं श्रेष्ठम् | किं भौतिकप्रकाशोऽसौ

74361 नेत्याह - स्फुटतरमिति | स्फुटतरं नित्यस्वप्रकाशमत एवाजडं
74362 चिद्रूपमात्मतत्त्वमत एव साक्षात्कारमात्रेण जगतां
74363 जगद्गतजीवानामखिलार्तिहरम् || २६ ||
74364
74365 श्रीवसिष्ठ उवाच |
74366
74367 इति गुणबहुलाभिर्वाग्भिरभ्यर्चितोऽसौ
74368 हरिरसुरविनाशः श्रीनिषण्णांसदेशः |
74369 जलद इव मयूरं प्रीतिमान्प्रीयमाणं
74370 कुवलयदलनीलः प्रत्युवाचासुरेन्द्रम् || २७ ||
74371
74372 इति उक्तप्रकाराभिर्गुणैर्बहुलाभिः स्तुतिवाग्भिरभ्यर्चितः | श्रिया निषण्ण
74373 आलिङ्गितोंऽसदेशो यस्य तथाविधो हरिर्जलदो मयूरमिव असुरेन्द्रं प्रह्लादं
74374 प्रत्युवाच || २७ ||
74375
74376 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे०
74377 मोक्षोपायेषूपशमप्रकरणे नारायणागमनं नाम त्रयस्त्रिंशः
74378 सर्गः || ३३ ||
74379
74380 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
74381 नारायणागमनं नाम त्रयस्त्रिंशः सर्गः || ३३ ||
74382
74383
74384 चतुस्त्रिंशः सर्गः ३४
74385
74386 श्रीभगवानुवाच |
74387
74388 वरं गुणनिधे दैत्यकुलचूडामहामणे |
74389 गृहाणाभिमतं भूयो जन्म दुःखोपशान्तये || १ ||
74390
74391 हरेर्वरादिह प्राप्य प्रह्लादः सुविचारणाम् |
74392 निरस्यानात्मवर्गं स्वमपश्यच्चित्सदद्वयम् || १ ||
74393
74394 हे दैत्यकुलचूडामहामणे त्वं वरं गृहाण || १ ||
74395
74396 प्रह्लाद उवाच |
74397
74398 सर्वसंकल्पफलद सर्वलोकान्तरस्थित |
74399 यदुदारतमं वेत्सि तदेवादिश मे विभो || २ ||
74400
74401 सर्वेषां लोकानां प्राणिनामन्तरे हृदये स्थित | उदारतमं
74402 सर्वकार्पण्यनिवारकमिति यावत् | आदिश आज्ञापयेति विनयोक्त्यां याचनम् || २ ||
74403
74404 श्रीभगवानुवाच |
74405
74406 सर्वसंभ्रमसंशान्त्यै परमाय फलाय च |
74407 ब्रह्मविश्रान्तिपर्यन्तो विचारोऽस्तु तवानघ || ३ ||
74408
74409 एवं प्रार्थितो विष्णुः
74410 स्वविचारोत्पन्नब्रह्मात्मतत्त्वसाक्षात्कारविश्रान्तिमन्तरेण
74411 नात्यन्तिककार्पण्यनिवृत्तिरिति मन्यमानस्तदनुरूपं वरं दिशति - सर्वेति
74412 | सर्वसंभ्रमसंशान्तिरात्यन्तिकानर्थनिवृत्तिः | परमं फलं

74413 निरतिशयानन्दावाप्तिः ॥ ३ ॥
74414
74415 श्रीवसिष्ठ उवाच ।
74416
74417 इत्युक्त्वा दितिपुत्रेन्द्रं विष्णुरन्तरधीयत ।
74418 कृतघर्घरनिर्ह्रादस्तरङ्गस्तोयधेरिव ॥ ४ ॥
74419
74420 विष्णावन्तर्हिते देवे पूजायां कुसुमाञ्जलिम् ।
74421 पाश्चात्यं दानवस्त्यक्त्वा मणिरत्नपरिष्कृतम् ॥ ५ ॥
74422
74423 पद्मासनस्थोऽतिमुदा ह्यप्यविश्य वरासने ।
74424 स्तोत्रपाठविधावन्तश्चिन्तयामास चेतसा ॥ ६ ॥
74425
74426 वरासने उपविश्य पद्मासनस्थः संस्तोत्रपाठविधानकाले
74427 अन्तर्वक्ष्यमाणप्रकारेण चिन्तयामास ॥ ६ ॥
74428
74429 विचारवानेव भवान्भवत्विति भवारिणा ।
74430 देवेनोक्तोऽस्मि तेनान्तः करोम्यात्मविचारणम् ॥ ७ ॥
74431
74432 भवः संसारस्तदरिणा तन्निवारकेण । तेन हेतुना ॥ ७ ॥
74433
74434 किमहं नाम तावत्स्यां योऽस्मिन्भुवनडम्बरे ।
74435 वच्मि गच्छामि तिष्ठामि प्रयत्नेनाहरामि च ॥ ८ ॥
74436
74437 तत्र सर्वस्य दृश्यस्यात्मार्थत्वादात्मन एव प्राधान्यं निश्चित्य स एवास्मिन्
74438 कः स्यादिति विचारयति - किमहमित्यादिना । प्रयत्नेन सर्वोद्योगेन । आहरामि
74439 विषयानुपभुञ्जे ॥ ८ ॥
74440
74441 जगत्तावदिदं नाहं सवृक्षतृणपर्वतम् ।
74442 यद्बाह्यमलमत्यन्तं तत्स्यां कथमहं किल ॥ ९ ॥
74443
74444 तत्र देहाद्बाह्यं तावन्नात्मेत्याह - जगदिति ॥ ९ ॥
74445
74446 असन्नभ्युदितो मूकः पवनैः स्फुरितः क्षणम् ।
74447 कालेनाल्पेन विलयी देहो नाहमचेतनः ॥ १० ॥
74448
74449 देहोऽपि नाहमित्याह - असन्निति । मूकोऽनभिज्ञत्वादेव वक्तुमसमर्थः ।
74450 पवनैः प्राणवायुभिः क्षणं स्वसंचारक्षणे स्फुरितः संचलितः ॥ १० ॥
74451
74452 जडया कर्णशष्कुल्या कल्प्यमानः क्षणक्षयी ।
74453 शून्याकृतिः शून्यभवः शब्दो नाहमचेतनः ॥ ११ ॥
74454
74455 एवं शब्दादिविषया अपि नात्मेत्याह - जडयेत्यादिना । जडया अचिद्रूपया
74456 कल्प्यामानस्तारो मन्द्रः पदं वाक्यमित्यादिभेदैः समर्थ्यमानः ।
74457 क्षयित्वादेव शून्याकृतिः । शून्यादाकाशाद्भवतीति भवः । यद्यप्याकाशो
74458 न शून्यस्वभावस्तथाप्यात्मसत्तातः पृथक्करणे निःस्वरूप इति
74459 शून्यत्वोक्तिः ॥ ११ ॥
74460
74461 त्वचा क्षणविनाशिन्या प्राप्यमप्राप्यमप्यथ ।
74462 चित्प्रसादोपलब्धात्मस्पर्शनं नास्म्यचेतनम् ॥ १२ ॥
74463
74464 प्राप्यमप्राप्यमपि कदाचित्प्राप्यम् । स्पर्शनं उष्णत्वादि । न

नित्यप्राप्तस्वभाव आत्मा भवितुमर्हतीति भावः ॥ १२ ॥

बद्धात्मा जिह्वया तुच्छो लोलया लोलसत्तया ।
स्वल्पस्पन्दो द्रव्यनिष्ठो रसो नाहमचेतनः ॥ १३ ॥

लोलसत्तया अनित्यया लोलया चलया जिह्वया बद्धात्मा संबद्धस्वभावो
रसनेन्द्रियाधीनसिद्धिक इति यावत् । स्वल्पो जिह्वाग्रात्कण्ठपर्यन्तः स्पन्द
आस्वादप्रसरो यस्य ॥ १३ ॥

दृश्यदर्शनयोर्लीनं क्षयिक्षणविनाशिनोः ।
केवले द्रष्टरि क्षीणं रूपं नाहमचेतनम् ॥ १४ ॥

दृश्ये द्रव्ये दर्शने चक्षुषि च लीनं तदुभयाधीनसिद्धिकमिति यावत् ।
क्षणविनाशिनोरनित्ययोः । केवले द्रष्टरि उपभोगजननेन क्षीणमुपक्षीणम् ॥
१४ ॥

नासयाप्यन्धजडया क्षयिण्या परिकल्पितः ।
पेलवोऽनियताकारो गन्धो नाहमचेतनः ॥ १५ ॥

अन्धवज्जडया अप्रकाशया । नासया घ्राणेन्द्रियेण । कालेनान्यथा
परिणामादनियताकारः ॥ १५ ॥

निर्ममोऽमननः शान्तो गतपञ्चेन्द्रियभ्रमः ।
शुद्धचेतन एवाहं कलाकलनवर्जितः ॥ १६ ॥

शब्दाविषयाणामनात्मत्ववचनं वचनादानादीनामपि समानं सत्सर्वत्र
त्रिपुटीनां न्यायसाम्यादनात्मत्वोपलक्षणम् ।
तेनाहंकारमनोबुद्धिचित्तत्रिपुट्या अप्यनात्मत्वेन निरासे
शुद्धचिन्मात्रमेवात्मा परिशिष्ट इत्याशयेनाह - निर्मम इति ॥ १६ ॥

चेत्यवर्जितचिन्मात्रमहमेषोऽवभासकः ।
सबाह्याभ्यन्तरव्यापी निष्कलामलसन्मयः ॥ १७ ॥

चेतनपदेन चेतनावतो जडाशस्यापि ग्रहणं माभूदिति तत्परिशोधायाह ##-

अनेन चेतनेनेमे सर्वे घटपटादयः ।
सूर्यान्ता अवभास्यन्ते दीपेनोत्तमतेजसा ॥ १८ ॥

इत्थं त्वंपदार्थं परिशुद्धं विचार्य तन्मुखेनैव तत्पदार्थमपि
परिशोध्यावधारयितुमुपक्रमते - अनेनेत्यादिना ।
अन्यनिरपेक्षत्वादुत्तमतेजसा चेतनेन दीपेन ॥ १८ ॥

आ इदानीं स्मृतं सत्यमेतत्तदखिलं मया ।
निर्विकल्पचिदाभास एष आत्मास्मि सर्वगः ॥ १९ ॥

निर्विकल्पो वियदादिविकल्पशून्यश्चिल्लक्षण आभासः प्रकाश एष आत्मास्मीति
अनात्येश्वरनिरासः ॥ १९ ॥

अनेनैताः स्फुरन्तीह विचित्रेन्द्रियवृत्तयः [पङ्क्तय इत्यपि
पाठः] ।
तेजसान्तःप्रकाशेन यथाग्निकणपङ्क्तयः ॥ २० ॥

74517 अग्निभूता अङ्गारकणपङ्क्तयो यथेत्यर्थः ॥ २० ॥
74518
74519 अनेनैताः स्फुरन्तीह [स्फुररितः इति पाठः]
74520 विचित्रेन्द्रियपङ्क्तयः ।
74521 सर्वगेन निदाघेन यथा मरुमरीचिकाः ॥ २१ ॥
74522
74523 अनेनैतत्पदार्थानां वस्तुत्वं प्रतिपाद्यते ।
74524 शुक्लादिगुणवत्त्वं स्वं प्रदीपेनेव वाससाम् ॥ २२ ॥
74525
74526 सर्वपदार्थानां स्फूर्तिरिव सत्ताप्येतदधीनैवेत्याह - अनेनेति ।
74527 सत्तोपपादने प्रदीपदृष्टान्तः स्फूर्तिसत्तयोरभेदद्योतनार्थः ॥ २२ ॥
74528
74529 असावेव हि भूतानां सर्वेषामेव जाग्रताम् ।
74530 सर्वानुभविताभूमिरात्मा मुकुरवत्स्थितः ॥ २३ ॥
74531
74532 जाग्रतां सचेतसामिति यावत् । सर्वासामनुभव एषामस्तीत्यनुभविनो
74533 देहेन्द्रियमनोबुद्ध्यादयस्तद्भावानां अनुभवितानामनुभवानां भूमिः
74534 परं विश्रान्तिस्थानम् । यथा मुकुरः सर्ववस्तुप्रतिबिम्बविश्रान्तिभूस्तद्वत् ॥
74535 २३ ॥
74536
74537
74538
74539 तस्यैकस्याविकल्पस्य चिद्दीपस्य प्रसादतः ।
74540 उष्णोऽर्कः शिशिरश्चन्द्रो घनोऽद्रिर्विद्रुतं पयः ॥ २४ ॥
74541
74542 पदार्थानां स्वभाववैचित्र्याण्यप्येतदधीनसिद्धिकानीत्याह - तस्येति ।
74543 घनः कठिनः । विद्रुतं द्रवम् [दुतम् इति पाठः] ॥ २४ ॥
74544
74545 सातत्येनानुभूतानां सर्वेषां च जगत्स्थितौ ।
74546 एतत्कारणमाद्यं तत्कारणं नास्य विद्यते ॥ २५ ॥
74547
74548 सातत्येन आकाशाद्वायुर्वायो रग्निरग्नेरापः इत्यादिक्रमेण श्रुतिप्रत्यक्षादिना
74549 अनुभूतानां सर्वेषां पदार्थानां जगति उत्पत्त्यादिव्यवस्थितौ एतदाद्यं
74550 कारणम् । तनोतीति तत् सद्रूपेण सर्वकार्यव्यापकम् ॥ २५ ॥
74551
74552 सातत्येनानुभूतानां पदार्थानामनेन तत् ।
74553 पदार्थत्वमुदेत्युच्चैः प्रतापेनेव तप्तता ॥ २६ ॥
74554
74555 तत् प्रसिद्धं वियदादिपदार्थत्वम् । प्रतापेन ग्रीष्मार्कतापेन
74556 भूम्यादेस्तप्ततेव ॥ २६ ॥
74557
74558 अनाकारात्कारणाच्च सर्वकारणकारणात् ।
74559 एतस्मादिदमुत्पन्नं जगच्छैत्यं हिमादिव ॥ २७ ॥
74560
74561 परमार्थतोऽनाकारात्कारणत्वाद्याकारशून्यात् अविद्यया कारणभूताच्च
74562 सर्वेषां ब्रह्मादिकारणानां कारणादेतस्मात्प्रत्यग्रूपद्ब्रह्मण इदं
74563 जगदुत्पन्नम् ॥ २७ ॥
74564
74565 ब्रह्मविष्ण्विन्द्ररुद्राणां कारणानां जगत्स्थितौ ।
74566 एतत्कारणमाद्यं तत्कारणं नास्य विद्यते ॥ २८ ॥
74567
74568 सर्वकारणकारणादित्येतद्विवृणोति - ब्रह्मविष्ण्विति ॥ २८ ॥

74569
74570 चिच्चेत्यद्रष्टृदृश्यादिनामभिर्वर्जितात्मने |
74571 स्वयं सकृद्विभाताय मह्यमस्मै नमो नमः || २९ ||
74572
74573 सकृद्विभाताय नित्यस्वप्रकाशाय || २९ ||
74574
74575 एतस्मिन्सर्वभूतानि निर्विकल्पचिदात्मनि |
74576 गुणभूतानि भूतेशे तिष्ठन्ति विविशन्ति च || ३० ||
74577
74578 कारणत्वात्सर्गहेतुत्ववत्स्थितिप्रलयहेतुत्वमप्यस्यैवेत्याह - एतस्मिन्निति |
74579 गुणभूतात्प्रधानभूतानि गुणवदपृथक्सत्ताकानि वा विविशन्ति प्रविशन्ति |
74580 तथाच यतो वा इमानि भूतानि जायन्ते इत्यादिश्रुत्युक्तब्रह्मलक्षणस्यास्मिन्नेव
74581 समन्वयः इत्यर्थः || ३० ||
74582
74583 यत्किलानेन कलितं चेतनेनातरात्मना |
74584 तत्तद्भवति सर्वत्र नेतरत्सदपि स्थितम् || ३१ ||
74585
74586 कारणे सूक्ष्मरूपेण स्थितमिदानीं सद्वर्तमानमपि यदनेनेश्वरेण
74587 चेतनेनान्तरात्मनोत्तरक्षणेऽस्त्विति कलितं संकल्पितं तत्तद्भवत्युत्तरक्षणे
74588 नेतरदित्यर्थः || ३१ ||
74589
74590 यच्चिता कलितं किंचित्तदाप्नोति निजं पदम् |
74591 यच्चिताकलितं नेह तत्सदप्यन्तमागतम् || ३२ ||
74592
74593 कलितं स्वीयसत्तास्फुर्तिप्रदानेनोज्जीवितम् | निजं घटोऽस्तीत्यादिव्यवहारपदम् |
74594 अन्तमसत्त्वलक्षणं नाशमागतं प्राप्तम् || ३२ ||
74595
74596 इमे घटपटाकाराः पदार्थशतपङ्क्तयः |
74597 जागत्यो विपुलादर्शे ह्यस्मिन्व्योमनि बिम्बिताः || ३३ ||
74598
74599 एतद्वृद्धं वृद्धतरे क्षयि क्षयिणि जायते |
74600 पदार्थे सदसच्चापि प्रतिबिम्बार्कवत्स्थितम् || ३४ ||
74601
74602 एवं वृद्ध्यादिभावविकारा अप्येतस्मिन्नेवाध्यस्ता इत्याह - एतदिति | यथा
74603 प्रतिबिम्बार्के क्षयवृद्धी तद्रूपेण स्थिते बिम्बे एवाध्यस्ते अन्यवृत्तितयेव
74604 विभाव्येते तद्वदित्यर्थः || ३४ ||
74605
74606 अदृश्यं सर्वभूतानां प्राप्यं गलितचेतसाम् |
74607 एतत्तद्दृश्यते सद्भिः परं व्योमातिनिर्मलम् || ३५ ||
74608
74609 सर्वेषां भूतानामज्ञानाम् | गलितचेतसां दृश्यमिति वक्तव्ये
74610 प्राप्यमित्युक्तिर्दर्शनप्राप्त्योर्भेदाभावद्योतनायेत्याशयेन व्याचष्टे -
74611 एतत्तदिति || ३५ ||
74612
74613 इयमभ्युदयं याति नानादृश्यसुमञ्जरी |
74614 आचारचञ्चरीकाढ्या एतस्मात्कारणद्रुमात् || ३६ ||
74615
74616 ये तु कारणस्यैकदेशे परिणामो जगदिति कल्पयन्ति तेषां कल्पनाप्यस्मिन्नेव
74617 नान्यत्रेत्याशयेनाह - इयमिति द्वाभ्याम् || ३६ ||
74618
74619 अस्मादियमुदेत्युच्चैः संसाररचनाचला |
74620 विचित्रतरुगुल्माढ्या शैलादिव वनावली || ३७ ||

सर्वेषामविभिन्नोऽसौ त्रैलोक्योदरवर्तिनाम् |
ब्रह्मादीनां तृणान्तानां चिदात्मा संप्रकाशकः || ३८ ||

अस्मिन्नेव कल्पनेति कुतो ज्ञातमिति चेदेतदभिन्नस्फूर्तिकत्वाज्जगत इत्याह -
सर्वेषामिति || ३८ ||

एकोऽसावहमाद्यन्तरहितः सर्वगाकृतिः |
चराचराणां भूतानामन्तः स्वानुभवः स्थितः || ३९ ||

अस्य तस्य ममेमानि स्थावराणि चराणि च |
परिसंख्यादिहीनानि शरीराणि बहूनि च || ४० ||

परिच्छिद्य संख्यागणना व्यक्तीयत्ता | आदिपदाद्देशेयत्ताकालेयत्ते गृह्येते ||
४० ||

एकोऽसावनुभूत्यात्मा स्वानुभूतिवशात्स्वयम् |
सर्वदृग्द्रष्टृदृश्यत्वात्सहस्रकरलोचनः || ४१ ||

स्वानुभूतिवशात्स्वात्मनि क्रियाविरोधेनानुभूत्यन्तरा
घटनात्स्वप्रकाशानुभूत्यात्मायमित्यर्थः | परप्रकाशनेऽप्यस्य
संकोचाभावेन सर्वदृग्द्रष्टृदृश्यासाक्षितया भास्या यस्य
तथाविधत्वात्प्रतिशरीरमात्मभेदासिद्धावयमेव सर्वेषां करलोचनैः
सहस्रकरलोचन इत्यर्थः || ४१ ||

एषोऽसावहमाकाशे सूर्यदेहेन चारुणा |
विहरामीतरेणापि वायुदेहेन वायुना || ४२ ||

सर्वात्मभावं स्वस्य प्रत्येकमाह - एषोऽसाविति | एष
प्रत्यक्षोऽसावीश्वरभूतोऽहं सूर्यभूतः सन्सूयदेहेन विहरामि | एवं
वायुना वायुदेहेन || ४२ ||

ममैतद्वपुरानीलं शङ्खचक्रगदाधरम् |
सर्वसौभाग्यसीमान्तं ह्यस्मिञ्जगति वल्गति || ४३ ||

वल्गति व्यवहरति || ४३ ||

अहमस्मिन्समुद्भूतः पद्मासनगतः सदा |
निर्विकल्पसमाधिस्थः परां निर्वृतिमागतः || ४४ ||

अहं त्रिनेत्रयाऽकृत्या गौरीवक्त्राब्जषट्पदः |
सर्गान्ते संहरामीदं कूर्मोऽङ्गपटलं यथा || ४५ ||

आकृत्या मूर्त्या || ४५ ||

अहमिन्द्रेण रूपेण त्रिलोकीमखिलामिमाम् |
पालयामि क्रमप्राप्तां मठिकामिव तापसः || ४६ ||

क्रमप्राप्तां मन्वन्तरक्रमप्राप्ताम् || ४६ ||

स्त्रीपुमानहमेवैतत्कुमारो ह्यहमित्यपि |
जीर्णोऽहं देहधारित्वाज्जातोऽहं विश्वतोमुखः || ४७ ||

74673
74674 त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी | त्वं जीर्णो दण्डेन वञ्चसि
74675 त्वं जातो भवसि विश्वतोमुखः इति श्रुतिं स्वात्मनि स्वानुभवेन संवादयति
74676 - स्त्रीति || ४७ ||
74677
74678 अहं तृणलतागुल्मजालं रसतया स्थितः |
74679 उत्थापयामि चिद्भूमेः कूपोऽन्तरलतामिव || ४८ ||
74680
74681 रसतया जीवसारतया जलतया च | कूपो जीर्णकूपः || ४८ ||
74682
74683 स्वलीलार्थमिदं चारु जगदाडम्बरं ततम् |
74684 मयाभिजातबालेन पङ्कक्रीडनकं यथा || ४९ ||
74685
74686 अभिजातेन क्रीडनकनिर्माणकुशलेन बालेन || ४९ ||
74687
74688 मयेदमाप्यते सर्वं सत्ता मां प्राप्य गच्छति |
74689 मत्परित्यक्तमेतच्च सदप्येव न किंचन || ५० ||
74690
74691 आप्यते कारणभावेन व्याप्यते | कार्यस्य च सत्ताप्रविलयेन मां प्राप्य
74692 गच्छति तिरोभवति | मया स्वतत्त्वदर्शनेन
74693 परित्यक्तमेतज्जगज्जिवन्मुक्तव्यवहारे सदपि न किंचन || ५० ||
74694
74695 मयि स्फारे चिदादर्शे प्रतिबिम्बं यदागतम् |
74696 तदस्ति नेतरद्यस्मान्मत्तोअण्यन्नेह विद्यते || ५१ ||
74697
74698 कुसुमेष्वहमामोदः पुष्पपत्रेष्वहं छविः |
74699 छविष्वहं रूपकला रूपेष्वनुभवोऽप्यहम् || ५२ ||
74700
74701 इदानीमीश्वरभूतस्य स्वस्य विभूतिविस्तरमुपभोगेनुभवान्तरमाह -
74702 कुसुमेष्विति || ५२ ||
74703
74704 यद्यत्किंचिदिदं दृश्यं जगत्स्थावरजङ्गमम् |
74705 सर्वसंकल्परहितं तच्चित्तत्त्वमहं परम् || ५३ ||
74706
74707 दृश्यं दर्शनार्ह स्थावरं जंगमं वा विभूतिमच्छ्रीमदूर्जितं वा
74708 तस्य सर्वस्योत्कर्षनिमित्तं चिदात्मतत्त्वं अहमेव किं
74709 संकल्पादिदूषितजीवरूपेण नेत्याह - सर्वसंकल्परहितमिति | अत एव परम् ||
74710 ५३ ||
74711
74712 आद्या रसमयी शक्ती रसौघो विस्तृतो यया |
74713 सा यथा दारुकुड्येषु तथाहं सर्ववस्तुषु || ५४ ||
74714
74715 रसमयी आद्या शक्तिः रसतन्मात्रा यथा सागरनदी सरःकूपादिरसौघो
74716 जलौघः सन् विस्तृतः सैव जलभूता शक्तिर्दारुषु वृक्षेषु
74717 शाखापल्लवाद्युद्भवनिमित्ततया कुड्येषु च
74718 तृणयवाङ्कुराद्युद्भवनिमित्ततया प्रसृता तथाहं सर्ववस्तुषु
74719 तत्तत्कार्योद्भवनिमित्ततया प्रसृत इत्यर्थः || ५४ ||
74720
74721 परमां तामहं सर्वपदार्थान्तरवर्तिताम् |
74722 उपेत्य संविद्वैचित्र्यं प्रतनोमि स्वयेच्छया || ५५ ||
74723
74724 स्वसृष्टकार्यान्तरानुप्रवेशेन जीवसंविद्वैचित्र्येऽपि स्वयमेव हेतुरित्याह ##-

74725
74726 घृतं यथान्तः पयसो रसशक्तिर्यथा जले।
74727 चिच्छक्तिः सर्वभावेषु तथान्तरहमास्थितः॥ ५६॥
74728
74729 इदं जगत्त्रिकालस्थं चिति मध्ये च संस्थितम्।
74730 चेत्योपचाररहितं वस्तुजातमिवावनौ॥ ५७॥
74731
74732 चेत्योपचारश्चेत्यप्रथा तद्रहितं जडमिति यावत्। त्रिकालस्थमतीतं
74733 वर्तमानं भविष्यच्चेदं जगत् चिति चिद्रूपे मयि मध्ये एकांशे व्यवस्थितम्।
74734 यथा तृणकाष्ठलोष्टादिवस्तुजातमवनौ तद्वत्॥ ५७॥
74735
74736 भरिताशेषदिक्कुक्षिस्त्यक्तसंकोचविभ्रमः।
74737 सर्वस्थः सर्वकर्ता च विराट् सम्राडहं स्थितः॥ ५८॥
74738
74739 विविधो व्यष्टिभेदेन राजत इति विराट्। सम्यक्समष्टिभावेन राजत इति सम्राट्।
74740 अथवा विशेषेण राजान्तरेभ्यो राजत इति विराट्। सम्राट् सर्वेषां
74741 राज्ञामाज्ञापयिता॥ ५८॥
74742
74743 अपूर्वमनिबद्धेन्द्रमशस्त्रदलितामरम्।
74744 अप्रार्थितं मे संप्राप्तं जगद्राज्यमिदं ततम्॥ ५९॥
74745
74746 इन्द्राधिकराज्याप्राप्तेः कथं सम्राट्त्वं तत्राह - अपूर्वमिति॥ ५९॥
74747
74748 अहो नु विततात्मास्मि न माम्यप्यात्मनात्मनि।
74749 कल्पान्तपवनाधूत एकार्णव इवार्णवे॥ ६०॥
74750
74751 न मामि कुसूले धान्यमिव समावेशं न प्राप्नोमि। अर्णवे
74752 प्राक्तनार्णवपरिमाणे॥ ६०॥
74753
74754 नात्मन्यन्तमवाप्नोमि स्वस्थेऽन्तः स्वदिते स्वयम्।
74755 क्षीरवारिनिधौ पङ्गुः सरीसृप इव स्फुरन्॥ ६१॥
74756
74757 अन्तः स्वयं स्वदिते स्वेनैव निरतिशयानन्दात्मना स्वदमाने। पङ्गुः
74758 कुण्ठितगतिः सरीसृपः सर्पः स्फुरन् संचरन्॥ ६१॥
74759
74760 स्वल्पेयं मठिका ब्राह्मी जगन्नाम्नी सुसंकटा।
74761 गजो बिल्व इव स्वाङ्गे न माति विपुलं वपुः॥ ६२॥
74762
74763 ब्राह्मी मठिका ब्रह्माण्डः। सुसंकटा संकुचितगर्भा। विपुलं विस्तृतं
74764 वपुर्मत्स्वरूपं न माति न समाविशति॥ ६२॥
74765
74766 विरिञ्चिभवनात्पारे तत्त्वान्तेऽप्याहरत्पदम्।
74767 प्रसरत्येव मे रूपमद्यापि न निवर्तते॥ ६३॥
74768
74769 उत्तरोत्तरदशगुणपार्थिवाद्यावरणावृताद्ब्रह्माण्डलक्षणाद्विरिञ्चिभव
74770 नात्पारेपरतश्चतुर्विंशतिसंख्यानां
74771 सांख्यवैष्णवादितन्त्रप्रसिद्धानां षट्त्रिंशत्संख्यानां
74772 शैवपाशुपताभिमतानां वा तत्त्वनामन्तेऽपि पदमाहरत् क्रममाणमिति
74773 यावत्। मे रूपं प्रसरत्येवेति वास्तवस्यैव विस्तारस्य प्रसारत्वेन कल्पना॥ ६३॥
74774
74775 अयं नामाहमित्यन्तः कुतो निरवलम्बना।
74776 अपर्यन्ताकृतेरेषा किलासीत्स्वल्पता मम॥ ६४॥

74777
74778 अयं देहादिरहमिति कल्पना कुत आसीदियन्तं कालमित्यर्थः ॥ ६४ ॥
74779
74780 भवानयमयं चाहमिति मिथ्यैव विभ्रमः ।
74781 को देहः कोऽप्यदेहो वा को मृतः कश्च जीवति ॥ ६५ ॥
74782
74783 देहस्यैवाप्रसिद्धावदेहोऽपि कः । वन्ध्यापुत्रस्येव तद्धन्तुरप्यप्रसिद्धेः ।
74784 एवं को मृतः प्राणस्यैवाप्रसिद्धौ कस्तेन वियुक्तः । कश्च जीवति प्राणान्
74785 धारयति ॥ ६५ ॥
74786
74787 वराकाः पेलवधियो बभूवुर्मे पितामहाः ।
74788 ये साम्राज्यमिदं त्यक्त्वा रेमिरे भवभूमिषु ॥ ६६ ॥
74789
74790 मिथ्या साम्राज्यासक्तान्स्वपितामहादीनिदानीमनुशोचति - वराका इति ।
74791 पेलवधियः क्षुद्रधिय इति यावत् ॥ ६६ ॥
74792
74793 क्वेयं किल महादृष्टिर्भरिता ब्रह्मबृंहिता ।
74794 क्व सरीसृपभीमाशा भीमा राज्यविभूतिभिः [विभूतयः इति
74795 पाठश्चेत्साधु] ॥ ६७ ॥
74796
74797 सरीसृपाः सर्पा इव भीमाभिराशाभिर्भीमाः ॥ ६७ ॥
74798
74799 अनन्तानन्दसंभोगा परोपशमशालिनी ।
74800 शुद्धेयं चिन्मयी दृष्टिर्जयत्यखिलदृष्टिषु ॥ ६८ ॥
74801
74802 सर्वभावान्तरस्थाय चेत्यमुक्तचिदात्मने ।
74803 प्रत्यक्चेतनरूपाय मह्यमेव नमो नमः ॥ ६९ ॥
74804
74805 जयाम्यहमजो जातो जीर्णसंसारसंसृतिः ।
74806 प्राप्तप्राप्यो महात्मायं जीवामि च जयामि च ॥ ७० ॥
74807
74808 यतोऽहं चिरभुक्तमन्नमिव जीर्णा संसारसंसृतिर्येन तथाविधः सन् अजो
74809 जातः अतो जयामि सर्वतो जेतव्यजयफलं सर्वानर्थनिवृत्तिं प्राप्तोऽस्मि । किंच
74810 प्राप्तानि प्राप्तव्यानि सर्वाणि सुखानि येन तथाविधः सन् जीवामि जीवितसाफल्यं
74811 प्राप्तोऽस्मि । अत एव जयामि सर्वोत्कर्षेण वर्ते चेत्यर्थः ॥ ७० ॥
74812
74813 इदमुत्तमसाम्राज्यं बोधं संत्यज्य शाश्वतम् ।
74814 न रमेऽहमरम्यासु राज्यदुःखविभूतिषु ॥ ७१ ॥
74815
74816 दारुवारिदृषन्मात्रे लुलितो यो धरातले ।
74817 धिग्वराकमनात्मज्ञं तं कुदानवकीटकम् ॥ ७२ ॥
74818
74819 वनदुर्गे दारुणि जलदुर्गे वारिगिरिदुर्गे च दृषदः मिन्वन्तीति मात्राः विपत्सु
74820 शरणं यत्र तथाविधे धरातले भूतले स्वामित्वाभिमानेन यो लुलितो लोलतां
74821 गतस्तं कुदानवलक्षणं कीटकम् । कीटकेष्वपि दारुकीटकानां
74822 दारुभिर्दुर्गभूतैर्वारिकीटकानां वारिणा
74823 दृषत्संधिगतवृश्चिकादिकीटकानां दृषद्भिश्च त्राणदर्शनात्स्वतः
74824 स्वत्राणशक्तेस्तुल्यत्वादित्यर्थः ॥ ७२ ॥
74825
74826 अविद्यैकात्मभिर्द्रव्यैरविद्यामयमङ्गकम् ।
74827 अज्ञेन संतर्पयता किं नाम गुरुणा कृतम् ॥ ७३ ॥
74828

74829 कार्यकारणयोरभेदादविद्यैकात्मकैः। द्रव्यैरन्नपानादिविषयैः। गुरुणा
74830 पित्रा॥ ७३॥
74831
74832 वर्षाणि कतिचित्प्राप्य जगच्छ्रीमठिकामिमाम्।
74833 किं नाम प्रापदुचितं हिरण्यकशिपुः किल॥ ७४॥
74834
74835 जगत्त्रैलोक्यं तल्लक्षणां श्रीयुक्तां मठिकाम्। उचितं काश्यपे कुले
74836 जन्मनोनुरूपं परमपुरुषार्थम्॥ ७४॥
74837
74838 अनास्वाद्येदमानन्दं जगद्राज्यशतान्यपि।
74839 समास्वादयता नेह किंचिदास्वादितं भवेत्॥ ७५॥
74840
74841 अयमात्मैवानन्द इदमानन्दस्तम्। इदं जडदुःखरूपमपि
74842 देहेन्द्रियविषयाद्यानन्दयति आनन्दरूपतयानुभावयतीति वा इदमानन्दस्तम्॥
74843 ७५॥
74844
74845 न किंचिद्येन संप्राप्तं तेनेदं परमामृतम्।
74846 संप्राप्यान्तः प्रपूर्णेन सर्वं प्राप्तमखण्डितम्॥ ७६॥
74847
74848 एकसंप्राप्त्यैव विनैव विषयं सर्वविषयसुखप्राप्तिमाह - न किंचिदिति।
74849 अखण्डितं निरन्तरम्॥ ७६॥
74850
74851 त्यक्त्वा पदमिदं मूर्खो मितमेति न पण्डितः।
74852 उष्ट्रो हि त्यक्तसुलतः कण्टकं याति नेतरः॥ ७७॥
74853
74854 त्यक्ता सुलता फलभरानतद्राक्षादिवल्ली येन तथाविधः सन्॥ ७७॥
74855
74856 परां दृष्टिमिमां त्यक्त्वा दग्धराज्ये रमेत कः।
74857 कस्त्यक्त्वेक्षुरसं प्राज्ञः कटु निम्बपयः पिबेत्॥ ७८॥
74858
74859 निम्बपयः पिचुमन्दपत्ररसम्॥ ७८॥
74860
74861 मूर्खा एव हि ते सर्वे बभूवुर्मे पितामहाः।
74862 इमां दृष्टिं परित्यज्य रेमिरे राज्यसंकटे॥ ७९॥
74863
74864 रेमिरे ये इति शेषः॥ ७९॥
74865
74866 क्व फुल्लानन्दनस्थल्यः क्व दग्धमरुभूमयः।
74867 क्वेमा बोधदृशः शान्ताः क्व भोगेष्वात्मबुद्धयः॥ ८०॥
74868
74869 भोगेषु भोगायतनदेहादिषु॥ ८०॥
74870
74871 न किंचिदपि त्रैलोक्ये यद्राज्यमपि वाञ्छते।
74872 सर्वमस्त्येव चित्तत्त्वे तत्कस्मान्नानुभूयते॥ ८१॥
74873
74874 न किंचिदपि सुखमिति शेषः। राज्यमपि प्राप्येति शेषः॥ ८१॥
74875
74876 चिता सर्वस्थया स्वस्थसमया निर्विकारया।
74877 सर्वया सर्वदा सर्वं सर्वतः साधु लभ्यते॥ ८२॥
74878
74879 सर्वं सुखं तत्साधनं च॥ ८२॥
74880

74881 भासिनी तैजसी शक्तिरमृतप्राप्तिरैन्दवी |
74882 ब्राह्मी महत्ता महती शाक्री त्रैलोक्यराजता || ८३ ||
74883
74884 तत्कुतस्तत्राह - भासिनीत्यादिना | यतः भासिन्यादयस्तत्तत्सुखनिमित्ता
74885 विचित्राः शक्तयः परया चिता क्रियन्ते इत्यष्टमेनान्वयः | ब्राह्मी
74886 हैरण्यगर्भी | महत्ता मान्यता | महती सर्वोत्कृष्टा || ८३ ||
74887
74888 परमा पूर्णता शार्वी जयलक्ष्मीश्च वैष्णवी |
74889 मानसी शीघ्रगतिता बलवत्ता च वायवी || ८४ ||
74890
74891 शर्वः शिवस्तत्संबन्धिनी परमा पूर्णता
74892 निरतिशयज्ञानैश्वर्यानन्दशक्तिसंपूर्णता || ८४ ||
74893
74894 आग्नेयी दाहकलना पायसी रसनिर्वृतिः |
74895 मौनी महातपःसिद्धिर्विद्या बार्हस्पती तथा || ८५ ||
74896
74897 पायसी जलसंबन्धिनी रसनिर्वृत्तिराप्यायकता | मौनी
74898 भृग्वादिमुनिसंबन्धिनी विद्या वाक्पतिता || ८५ ||
74899
74900 वैमानिकी व्योमगतिः स्थिरता चापि पार्वती |
74901 गम्भीरताथ सामुद्री भैरवी च महोन्नतिः || ८६ ||
74902
74903 शमश्रीः सौगती सौम्या मादिरी मदलोलता |
74904 माधवी पुष्पमयता वार्षिकी [शारदी घनसस्यतेति पाठः]
74905 घनशब्दिता || ८७ ||
74906
74907 सौगती सुगतराद्धान्तसिद्धा शमश्रीः शून्यतालक्षण सर्वोपप्लवशान्तिः |
74908 अथवा शोभना गतिः सुगतिर्ब्रह्मसाक्षात्कारस्तत्संबन्धिनी शमश्रीः
74909 सर्वानर्थनिर्वापणशक्तिः || ८७ ||
74910
74911 याक्षी च मायामयता नाभसी निष्कलङ्कता |
74912 शीततापि च तौषारी नैदाघी तापतप्तता || ८८ ||
74913
74914 मायामयता मायाप्रचुरता | निष्कलङ्कता निर्लेपता || ८८ ||
74915
74916 एताश्चान्यास्तथा बव्ह्यो देशकालक्रियात्मिकाः |
74917 नानाकारविकारोत्थास्त्रिकालोदरसंस्थिताः || ८९ ||
74918
74919 त्रिकालोदरसंस्थिता अतीता अनागता वर्तमानाश्चेत्यर्थः || ८९ ||
74920
74921 विचित्राः शक्तयः स्वस्थसमया निर्विकारया |
74922 चिता क्रियन्ते परया कलाकलनयुक्तया || ९० ||
74923
74924 स्वस्थया स्वभावादप्रच्युतया अत एव समया एकरूपया | निर्विकारया
74925 वास्तवविकारशून्यया चिता | कलाकलनं तच्छक्तिकार्यानुसंधानं
74926 तद्युक्तया || ९० ||
74927
74928 विकल्पहीना चित्सर्वा पदार्थशतदृष्टिषु |
74929 सममेवाभिपतति प्रभा प्राभाकरी यथा || ९१ ||
74930
74931 ननु विचित्राणामर्थानां विचित्रप्रथादर्शनात्कथं चितः समता तत्राह -
74932 विकल्पेति | सर्वासर्ववृत्तिप्रविष्टापि चित्तवृत्तिगतैर्विकल्पवैचित्र्यैर्लिप्यते |

74933 यथा प्राभाकरी प्रभा न वृत्तिकृतैः स्थाणुपुरुषादिविकल्पैस्तद्वदित्यर्थः
74934 ॥ ९१ ॥
74935
74936 सर्वाशाकोशविश्रान्तां पदार्थपटलीं महीम् ।
74937 कालत्रयेहाकलितां यथानुभवति क्षणात् ॥ ९२ ॥
74938
74939 दिक्कालभेदप्रयुक्तमपि वैषम्यमस्या नास्तीत्याह - सर्वाशेति । महीं
74940 वह्वीम् । अनुभवति प्रकाशयति सौरी प्रभा यथा तथा चिदपि चेतति प्रथयतीति
74941 परेणान्वयः ॥ ९२ ॥
74942
74943 तथा समस्तसंसारबृहद्दृश्यदशाश्रियम् ।
74944 कालत्रयस्थाममला चिच्चेतति तदात्मिका ॥ ९३ ॥
74945
74946 तुल्यकालपरामृष्टा त्रिकालकलनाशता ।
74947 अनन्तभुवनाभोगा परिपूर्णैव शुद्धचित् ॥ ९४ ॥
74948
74949 देशकालभेदाश्च स्वाप्रदेशकालदैर्घ्ये इवाभिन्नकालयैव चिता भास्यन्त
74950 इत्याह - तुल्यकालेति । तुल्यशब्दोऽभिन्नपरः । तथा च परिपूर्णा अखण्डैव
74951 शुद्धचिदभिन्नकालपरामृष्टैव सती अतीतादित्रिकालकलनाशतभिन्नेव
74952 प्रत्यक्षानुमित्युपमित्याद्यनन्तमानमेयपुरुषभेदभिन्नाभोगेव च
74953 भातीत्यर्थः ॥ ९४ ॥
74954
74955 परामृष्टत्रिकालाया दृष्टानन्तदृशश्चितः ।
74956 समतापरपर्याया पूर्णतैवावशिष्यते ॥ ९५ ॥
74957
74958 अत एव कालभेदे वृत्तिभेदेऽपि च तत्साक्षिण्याश्चितो न भेद इति पूर्णतैवेत्याह
74959 - परामृष्टेति ॥ ९५ ॥
74960
74961 तुल्यकालावबुद्धेन स्वादुना कटुनापि चित् ।
74962 समेन समतामेति मधुनिम्बानुभूतिवत् ॥ ९६ ॥
74963
74964 अत एव मधुरद्वयस्य तिक्तद्वयस्य वा युगपदास्वादे विषयभेदेऽपि
74965 नानुभूतिभेद इति विषयादिभेदो न चिद्भेदप्रयोजक इत्याह - तुल्यकालेति ।
74966 समेन तुल्यरसेन स्वादुना मधुरद्वयेन । तत्र
74967 मधुनिम्बाद्येकैकानुभूतिवदिति चिदभेदे दृष्टान्तः ॥ ९६ ॥
74968
74969 त्यक्तसंकल्पकलया सूक्ष्मया चिद्व्यवस्थया ।
74970 सर्वभावानुगतया सत्ताद्वैतैकरूपया ॥ ९७ ॥
74971
74972 घटपटादिविचित्रा पदार्थश्रीरपि त्यक्तपरस्परव्यावर्तकभेदसंकल्पकलया
74973 सूक्ष्मया सत्ताद्वैतैकरूपया चिद्व्यवस्थया तुल्यकालमनुभूयमाना
74974 साम्येनैवानुभूयते न भेदवैषम्येणेति न विषयादिभेदश्चिद्भेदक इति
74975 द्वयोरर्थः ॥ ९७ ॥
74976
74977 विचित्रापि पदार्थश्रीरन्योन्यवलितान्तरा ।
74978 तुल्यकालानुभवना साम्येनैवानुभूयते ॥ ९८ ॥
74979
74980 भावेनाभावमाश्रित्य भावस्त्यजति दुःखताम् ।
74981 प्रेक्ष्य भावमभावेन भावस्त्यजति दुष्टताम् ॥ ९९ ॥
74982
74983 भेदसंकल्पकलात्यागे उपायमाह - भावेनेति । भावेन चित्तेन
74984 वाचारम्भणश्रुत्या नेतिनेत्यादिश्रुत्या आचार्योपदेशस्वविचारादिना च

74985 दृश्यजातस्याभावमाश्रित्य स चित्तरूपो भावो दुःखतां
74986 शोकमोहादिपरिणामं सद्यस्त्यजति। तथापि रागादिसंस्कारदुष्टतया
74987 कालान्तरे पुनः शोकाद्युद्भवः स्यादतः
74988 सर्वदृश्यप्रतिषेधलक्षणेनाभावेन भावं
74989 परमार्थसदद्वैतानन्दस्वभावमात्मानं प्रेक्ष्य स चित्तलक्षणो भावो
74990 रागादिदुष्टतामपि जहाति। रसोऽप्यस्य परं दृष्ट्वा निवर्तते इति
74991 भगवद्वचनात्। अतो बीजाभावाद्भेदसंकल्पकलात्यागः सिद्ध इत्यर्थः॥ ९९॥
74992
74993 कालत्रयमपश्यन्त्या हीनायाश्चेत्यबन्धनैः।
74994 चितश्चेत्यमुपेक्षिण्याः समतैवावशिष्यते॥ १००॥
74995
74996 उक्तमर्थं भङ्ग्यन्तरेणोपपादयति - कालत्रयमिति। वर्तमानं चेत्यं
74997 दृश्यं उपेक्षिण्या अतीतचेत्यवासनाबन्धनैर्हीनायाश्चेत्याधारं
74998 कालत्रयमप्यपश्यन्त्याश्चितो न भाव्यपि चेत्ययोगः संभाव्यत इति समतैव
74999 परिशिष्यत इत्यर्थः॥ १००॥
75000
75001 याति वाचामगम्यत्वादसत्तामिव शाश्वतीम्।
75002 नैरात्म्यसिद्धान्तदशामुपयातेव तिष्ठति॥ १०१॥
75003
75004 उपयातेवेति। वस्तुतस्तु नोपयाता यतस्तिष्ठति सतोऽसत्त्वायोगादिति भावः॥ १०१॥
75005
75006 भवत्यात्मा तथा ब्रह्म न किंचिच्चाखिलं च वा।
75007 परमोपशमेऽलीना मोक्षनाम्ना परोच्यते॥ १०२॥
75008
75009 यस्तिष्ठति स शास्त्रीयव्यवहारे प्रत्यक्त्वादात्मा भवति तथा बृहत्त्वाद्ब्रह्म
75010 भवति। परमार्थदृशा तु वाचां प्रवृत्त्यभावान्न किंचित्। यदि च
75011 प्रवृत्तिनिमित्तकल्पनया शब्दप्रवृत्तिरुच्येत तदा
75012 संकोचकारणभावात्सर्वप्रवृत्तिनिमित्तकल्पनादखिलं च। यतो वाचो
75013 निवर्तन्ते अप्राप्य मनसा सह तस्मात्तत्सर्वमभवत् इति च श्रुतौ द्वेधापि
75014 निरूपणादिति भावः। सर्वदृश्यानां परमोपशमे सति तदवधित्वादलीना
75015 परा समता मोक्षनाम्नोच्यत इत्यर्थः॥ १०२॥
75016
75017 संकल्पकलिता त्वेषा मन्दाभासतया जगत्।
75018 न सम्यक्पश्यतीदं चिद्दृष्टिः पटलिनी यथा॥ १०३॥
75019
75020 इत्थं भेदसंकल्पकलनात्यागः सोपायो वर्णितः। इदानीं संकल्पकलने चितो
75021 मान्द्यप्रसरक्रममाह - संकल्पे इत्यादिना।
75022 जगत्सम्यक्पारमार्थिकरूपेण न पश्यति। पटलिनी पटलावरणवती॥ १०३॥
75023
75024 ईहानीहामयैरन्तर्या चिदावलिता मलैः।
75025 सा हि नोड्डयितुं शक्ता पाशबद्धेव पक्षिणी॥ १०४॥
75026
75027 ईहानीहामयैरिष्टानिष्टसंकल्पनरूपैर्मलैः उड्डयितुं सर्वनभो व्याप्तुं
75028 नभसा गन्तुं च॥ १०४॥
75029
75030 संकल्पकलनेनैव ये केचन जना इमे।
75031 पतिता मोहजालेषु विनेत्रा इव पक्षिणः॥ १०५॥
75032
75033 संकल्पजालवलितैर्विषयावटपातिभिः।
75034 पदवी गतबाधेयं न दृष्टा मत्पितामहैः॥ १०६॥
75035
75036 इयं गतबाधा निर्दुःखा अपरिच्छिन्नात्मपदवी न दृष्टा॥ १०६॥

75037
75038 दिनैः कतिपयैरेव स्फुरिता धरणीतले।
75039 वराकास्तेन ते नष्टा मशकाः कुहरेष्विव॥ १०७॥
75040
75041 तेन आत्मपदव्यदर्शनेन। ते मत्पितामहाः॥ १०७॥
75042
75043 यद्यज्ञास्यन्निमे तत्त्वं भोगदुःखार्थिनस्तदा।
75044 भावाभावान्धकूपेषु नापतिष्यन्हताशयाः॥ १०८॥
75045
75046 हताशया दुर्बुद्धयः। इमे मत्पितामहा यदि आत्मतत्त्वमज्ञास्यंस्तदा
75047 नापतिष्यन्। हेतुहेतुमत्त्वे लिङ्निमित्ते क्रियातिपत्तौ लृङ्॥ १०८॥
75048
75049 इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन जन्तवः।
75050 धराविवरमग्नानां कीटानां समतां गताः॥ १०९॥
75051
75052 द्वन्द्वमोहेन सुखदुःखशीतोष्णाद्यर्जनप्रतीकाराभिनिवेशेन॥ १०९॥
75053
75054 ईहितानीहिताकाराः कलनामृगतृष्णिकाः।
75055 सत्यावबोधमेघेन यस्य शान्ताः स जीवति॥ ११०॥
75056
75057 सत्यावबोधमेघेन द्वन्द्वतापोपशान्त्या शान्ताः। स जीवति सार्थकजीवन इति
75058 यावत्॥ ११०॥
75059
75060 कुतः किलास्याः शुद्धाया अविच्छिन्नामलाकृतेः।
75061 चन्द्रिकाया रुचः कोष्णाः कलङ्काः कलनाश्रितः॥ १११॥
75062
75063 सत्यावबोधमात्रेण कथं तच्छान्तिरिति चेदसत्त्वदेवेत्याह - कुत इति।
75064 कोष्णा मन्दोष्णाः। कलङ्काः श्यामिकाः॥ १११॥
75065
75066 आत्मनेऽस्तु [आत्मने तु नमो इति पाठः] नमो
75067 मह्यमविच्छिन्नचिदात्मने।
75068 लोकालोकमणे देव चिरेणाधिगतोऽस्यहो॥ ११२॥
75069
75070 इदानीमखण्डवाक्यार्थं साक्षात्कृत्य
75071 तद्भावेऽवस्थितमात्मानमतिदुर्लभमधिगतं प्रणयान्नमस्यति -
75072 आत्मने इति। लोकस्यालोको ज्ञानप्रकाशस्तन्निमित्तभूतमणे। चिरेणेति।
75073 तथाचोक्तं स्वाराज्यसिद्धौ अपि भूपरमाणुभूरिसंख्येष्वपयातेषु
75074 चतुर्मुखेष्वलब्धात्। अपदुःखनिरन्तसौख्यसिन्धोर्न च लाभोऽस्ति परो
75075 निजात्मलाभात्॥ इति॥ ११२॥
75076
75077 परामृष्टोऽसि लब्धोऽसि प्रोदितोऽसि चिराय च।
75078 उद्धृतोसि विकल्पेभ्यो योसि सोसि नमोस्तु ते॥ ११३॥
75079
75080 प्रोदितः स्वीयपरमार्थरूपेणाभिव्यक्तः॥ ११३॥
75081
75082 मह्यं तुभ्यमनन्ताय मह्यं तुभ्यं शिवात्मने।
75083 नमो देवाधिदेवाय पराय परमात्मने॥ ११४॥
75084
75085 प्रथमे मह्यंतुभ्यमिति पदे परस्परविशेषणेन शोधनार्थे। अत
75086 एवानन्ताय। द्वितीये तु अखण्डैकरसतालक्षणः वाक्यार्थलाभार्थे। अत एव
75087 शिवात्मने देवानां ब्रह्मादीनां सर्वेन्द्रियप्राणमनसां चधिदेवाय
75088 अधिष्ठाय प्रकाशकाय॥ ११४॥

75089
75090 गतघनपरिपूर्णमिन्दुबिम्बं
75091 गतकलनावरणं स्वमेव रूपम् ।
75092 स्ववपुषि मुदिते स्वयं स्वसंस्थं
75093 स्वयमुदितं स्ववशं स्वयं नमामि ॥ ११५ ॥
75094
75095 गतघनं निरस्तमेघावरणं परिपूर्णमिन्दुबिम्बमिवेति शेषः । स्ववपुषि
75096 स्वात्मनि मुदिते आनन्दैकरसे स्वयमनन्याधारतया स्वेन पारमार्थिकरूपेण
75097 संस्थं विश्रान्तम् । निराधारमिति यावत् । स्वयमुदितं स्वप्रकाशं
75098 स्ववशं स्वाधीनस्वानन्दं स्वयमनन्योऽहं नमामि ।
75099 सर्वोत्कर्षेणानुसंदधे इत्यर्थः ॥ ११५ ॥
75100
75101 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये
75102 मोक्षोपायेषूपशमप्रकरणे प्रह्लादात्मोपदेशयोगो नाम
75103 चतुस्त्रिंशः सर्गः ॥ ३४ ॥
75104
75105 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
75106 प्रह्लादात्मोपदेशयोगो नाम चतुस्त्रिंशः सर्गः ॥ ३४ ॥
75107
75108
75109 पञ्चत्रिंशः सर्गः ३५
75110
75111 प्रह्लाद उवाच ।
75112
75113 मोमित्येकोचिताकारो विकारपरिवर्जितः ।
75114 आत्मैवायमिदं सर्वं यत्किंचिज्जगतीगतम् ॥ १ ॥
75115
75116 साक्षात्कृतमिहात्मानं निर्वर्ण्यान्तः प्रणम्य च ।
75117 तद्बलेन जितान्बन्धाननुसंधाय नन्दति ॥ १ ॥
75118
75119 ओमिति । ओमिति ब्रह्म ओमितीदं सर्वं एतद्वै सत्यकाम परं चापरं च ब्रह्म
75120 यदोंकारः इत्यादिश्रुतेः सर्वाध्यारोपवद्ब्रह्मबोधकः
75121 सर्वापवादपरिशिष्टतद्बोधकश्च ओमित्येक एव उचितः स्वानुरूपः
75122 अभिधानाकारो यस्य । जगती जगत् तद्गतं यत्किंचित्तत्सर्वमयमनुभूयमान
75123 आत्मैव ॥ १ ॥
75124
75125 मेदोस्थिमांसमज्जासृगतीतोऽप्येष चेतनः ।
75126 अन्तरस्थो हि सूर्यादीन्प्रकाशयति दीपकः ॥ २ ॥
75127
75128 देहमात्रान्तर्गतोऽयं कथं बाह्यं सूर्यादि सर्वमिदं स्यादिति
75129 चेत्तत्प्रकाशकत्वादित्याह - मेद इति । नायं
75130 मेदोऽस्थ्याद्यात्मकदेहपरिमितः किंतु तदतीतोऽपि । यतः सूर्याद्यन्तरस्थः ॥ २ ॥
75131
75132 उष्णीकरोति दहनं रसयत्यमृतं रसम् ।
75133 इन्द्रियानुभवान्भुङ्क्ते भोगानिव महीपतिः ॥ ३ ॥
75134
75135 कथं तत्प्रकाश्यत्वमात्रेण सर्वं तदात्मकं तत्राह - उष्णीकरोतीति । यतो
75136 दहनादेरुष्णादिस्वभावता चिदधीनोष्णताभानाधीना अतश्चिदात्मैव
75137 स्वसत्तया दहनमुष्णीकरोति । एवं रसं जलं स्वसत्तयैवामृतं
75138 लब्धसत्ताकं रसयति रसतया विभावयति । एवमन्यानपि
75139 इन्द्रियानुभवान्स्पर्शादिस्वभावानर्थान्स्वसत्तयैव संपाद्य भुङ्क्ते ॥ ३ ॥
75140

75141 तिष्ठन्नपि हि नासीनो गच्छन्नपि न गच्छति।
75142 शान्तोऽपि व्यवहारस्थः कुर्वन्नपि न लिप्यते॥ ४॥
75143
75144 तिष्ठन् सदा निष्क्रियोऽपि न आसीन उपविष्ट इव धावनादिव्यवहारादुपरतः।
75145 वाय्वादित्यात्मना सदागतित्वात्। तथा कालात्मना सदा गच्छन्नपि
75146 कुलालचक्रमिव न तिलमात्रमन्यतो गच्छति। शान्तो निर्व्यवहारोऽपि
75147 सर्वव्यवहारस्थः॥ ४॥
75148
75149 पूर्वमद्य तथेदानीमिहामुत्रोभयत्र च।
75150 विहितोऽविहितोऽप्येष समः सर्वासु वृत्तिषु॥ ५॥
75151
75152 ननु पूर्वकृतेनाद्य सुखदुःखाभ्यां लिप्यते। इदानीमिहकृतेनाग्रेऽमुत्र
75153 लिप्स्यते तत्कथं कुर्वन्नपि न लिप्यत इत्युच्यते तत्रह - पूर्वमिति। इहास्मिन्
75154 लोके अमुत्र परलोके उभयत्र इहलोकसंधिभूते स्वप्रस्थाने च विहितः
75155 शास्त्रानिषिद्धशुभकर्मफलभुक् अविहितः
75156 शास्त्रनिषिद्धाशुभकर्मफलभुगपि सन् सर्वासु भोगवृत्तिषु सम एव।
75157 दृश्यैर्भोगैर्दृशो विकारासिद्धेरित्यर्थः॥ ५॥
75158
75159 उद्भवत्यभयो भावं भुवनानि ततस्ततः।
75160 ब्रह्मादितृणपर्यन्तं जगदावर्तयन्स्थितः॥ ६॥
75161
75162 भोक्रस्पर्शिभिर्भोगैः कथं कर्मणां साफल्यं तत्राह - उद्भवतीति।
75163 वस्तुतोऽभय एवात्मा तत्तत्कर्मानुरूपं स्वयमुद्भवति उद्भूतं च
75164 ब्रह्मादितृणपर्यन्तं भोक्तृभोग्यभावं तदधिकरणानि
75165 चतुर्दशभुवनानि चेति जगत्स्वसंनिधिमात्रेणावर्तयन् स्थितस्तदेवास्य
75166 कर्मफलमित्यर्थः॥ ६॥
75167
75168 नित्यस्पन्दमयो नित्यमपि देवात्सदागतेः।
75169 स्थाणोरप्यक्रियो नित्यमाकाशादप्यलेपकः॥ ७॥
75170
75171 नन्वस्पन्दः कथमावर्तयेत्तत्राह - नित्येति। नित्यात्मसत्ताया एव
75172 स्पन्दसत्तात्वान्नित्यं स्पन्दमयो नित्यमक्रियो नित्यमलेपकश्च॥ ७॥
75173
75174 मनांसि क्षोभयत्येष पल्लवानीव मारुतः।
75175 वाहयत्यक्षपङ्क्तिं स्वामश्वालीमिव सारथिः॥ ८॥
75176
75177 ननु मन इन्द्रियाणि वा देहादि प्रवर्तयन्ति नात्मा तत्राह - मनांसीति।
75178 अक्षपङ्क्तिमिन्द्रियपङ्क्तिम्॥ ८॥
75179
75180 अतिदुर्विधवद्देहगेहे कर्मरतः सदा।
75181 सम्राडिवात्मनि स्वस्थः संस्थितो भोगभुग्विभुः॥ ९॥
75182
75183 अत्यन्ता दुर्विधा दुर्दशा यस्य तद्वत्। इवशब्दो दुर्विधाया
75184 मिथ्यात्वद्योतनार्थः पूर्वविरुद्धदशास्वपि योज्यः॥ ९॥
75185
75186 एष एव सदाऽन्विष्यः स्तुत्यो ध्यातव्य एव तु।
75187 जरामरणसंमोहादनेनोत्तीर्य गम्यते॥ १०॥
75188
75189 अनेन अन्विष्टेनेति शेषः॥ १०॥
75190
75191 सुलभश्चायमत्यन्तं सुजेत्यश्चाप्तबन्धुवत्।
75192 शरीरपद्मकुहरे सर्वेषामेव षट्पदः॥ ११॥

75193
75194 सुलभो ज्ञानमात्रेण लब्धुं शक्यः | सुजेयः स्मृतिमात्रेण वशीकर्तुं
75195 योग्यः || ११ ||
75196
75197 अनाक्रुष्टोऽप्यनाहूतः स्वदेहादेव लभ्यते |
75198 मनागेवोपहूतोऽपि क्षणाद्भवति सन्मुखः || १२ ||
75199
75200 दूरस्थस्य मित्रादेराक्रुश्याह्वानाल्लाभः | ईषद्दुरस्थस्य
75201 त्वाह्वानमात्रादस्य तु लाभेन तदुभयापेक्षेति भावः | उपहूतः
75202 प्रणवोच्चारणेनानुस्मृतः || १२ ||
75203
75204 नास्य संसेव्यमानस्य सर्वसंपत्तिशालिनः |
75205 धनानामीश्वरस्येव स्मयो गर्वो यथा भवेत् || १३ ||
75206
75207 धनानामीश्वरस्य धनिकस्य यथा स्मयो मानो गर्वः परावहेलना
75208 संभाव्यते तथास्य नेत्यर्थः || १३ ||
75209
75210 आमोद इव पुष्पेषु तैलं तिलकणेष्विव |
75211 रसजातिष्विवास्वादो देवो देहेषु संस्थितः || १४ ||
75212
75213 कथमयं देहेऽस्ति तदाह - आमोद इति | आस्वादो माधुर्यम् || १४ ||
75214
75215 अविचारवशादेष हृदयस्थोऽपि चेतनः |
75216 न ज्ञायते चिरादृष्टो [चिराद्दृष्टो इत्यपि पाठः]
75217 दृष्टबन्धुरिवाग्रतः || १५ ||
75218
75219 चिरं प्रागदृष्टः संप्रत्यग्रतो दृष्टो बन्धुः पित्रादिरिव || १५ ||
75220
75221 विचारणापरिज्ञात एतस्मिन्परमेश्वरे |
75222 अभ्युदेति परानन्दो लब्धे प्रियजने यथा || १६ ||
75223
75224 अस्मिन्दृष्टे परे बन्धावुद्दामानन्ददायिनि |
75225 आयान्ति दृष्टयस्तास्ता याभिर्भङ्गो विलीयते || १७ ||
75226
75227 भङ्गो मरणादिर्विच्छेदः || १७ ||
75228
75229 त्रुट्यन्ते सर्वतः पाशाः क्षीयन्ते सर्वशत्रवः |
75230 न कृन्तन्ति मनांस्याशा गृहाणीव दुराखवः || १८ ||
75231
75232 पाशाः स्नेहादयः | शत्रवः कामादयः | आशास्तृष्णाः || १८ ||
75233
75234 अस्मिन्दृष्टे जगद्दृष्टं श्रुतेऽस्मिन्सकलं श्रुतम् |
75235 स्पृष्टे चास्मिञ्जगत्स्पृष्टं स्थितेऽस्मिन्संस्थितं जगत् || १९ ||
75236
75237 तदेकविज्ञानेन सर्वविज्ञानमाह - अस्मिन्निति | स्थितेऽस्मिन्निति
75238 तत्सत्ताधीनसत्ताकं जगदित्यर्थः || १९ ||
75239
75240 एष जागर्ति सुप्तानां प्रहरत्यविवेकिनाम् |
75241 हरत्यापदमार्तानां वितरत्यमहात्मनाम् || २० ||
75242
75243 एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः इति श्रुतिमालम्ब्याह -
75244 एष इति | अमहात्मनां परिच्छिन्नात्मकेश्वरोपासकानाम् | आर्तानामापदं

75245 हरति वितरति वाञ्छितमिति शेषः ॥ २० ॥
75246
75247 विचरत्येष लोकेषु जीव एव जगत्स्थितौ ।
75248 विलसत्येव भोगेषु प्रस्फुरत्येव वस्तुषु ॥ २१ ॥
75249
75250 जगत्स्थितौ एष आत्मा जीव एव भूत्वा विचरति भोगेषु विलसति ।
75251 वस्त्रालंकारसमाजोत्सवादिवस्तुषु स्फुरति शोभते ॥ २१ ॥
75252
75253 आत्मनात्मानमेवातः शान्तेनानुभवन्भवी ।
75254 स्थितः सर्वेषु देहेषु तीक्ष्णत्वं मरिचेष्विव ॥ २२ ॥
75255
75256 असाधारणजीवभेदभ्रमदशायामप्यस्य न
75257 साधारणैकात्म्यस्फूर्तिक्षतिरित्याह - आत्मनेति ॥ २२ ॥
75258
75259 चेतनाकलनारूपी सबाह्याभ्यन्तराश्रितः ।
75260 जगत्पदार्थसंभारे सत्तासामान्यमास्थितः ॥ २३ ॥
75261
75262 पूर्वोत्तरानुसंधानं चेतना वर्तमानदर्शनं कलना तद्रूपी
75263 सबाह्येष्वाभ्यन्तरेषु चेतनोपाधिषु आश्रितः । जगत्पदार्थानां संभारे तु
75264 अधिष्ठानसत्तासामान्यमात्रस्वभावं सर्वानुगतमास्थितः ॥ २३ ॥
75265
75266 एष शून्यत्वमाकाशे स्पन्द एष सदागतौ ।
75267 प्रकाशश्चैव तेजस्तु पयस्स्वेष रसः परः ॥ २४ ॥
75268
75269 काठिन्यमवनावेवमौष्ण्यमेव हुताशने ।
75270 शैत्यमेष निशानाथे सत्ता चैष जगद्गणे ॥ २५ ॥
75271
75272 मषीपिण्डे यथा कार्ष्ण्यं शैत्यं हिमकणे यथा ।
75273 यथा पुष्पेषु सौगन्ध्यं देहे देहपतिस्तथा ॥ २६ ॥
75274
75275 तथा देहपतिरात्मा देहे प्रकाशतः इत्यर्थः ॥ २६ ॥
75276
75277 यथा सर्वगता सत्ता कालः सर्वगतो यथा ।
75278 प्रभुशक्तिर्मही यस्य सर्वदेशगता यथा ॥ २७ ॥
75279
75280 प्रकाशतामेव मन-इन्द्रियादिव्यावृत्तां सर्वक्षेत्रसाधारणीं
75281 दृष्टान्तैर्दर्शयति - यथेति द्वाभ्याम् ॥ २७ ॥
75282
75283 रूपालोकमनस्कारयुक्तं सत्त्वं तथात्मनः ।
75284 नित्यः सोऽयं महादेवो देवानामेव बोधकः ॥ २८ ॥
75285
75286 यथैते दृष्टान्तास्तथा
75287 रूपालोकैश्चक्षुरादिव्यापारैर्मनस्कारैर्मानसव्यापारैश्च युक्तं
75288 यद्बाह्याभ्यन्तरप्रकाशनं तदात्मनः कृत्यमिति प्रकाशैकस्वभावः स
75289 इत्यर्थः । एवमधिदैवं सर्वदेवानां सूर्येन्द्रचन्द्रादीनामपि बोधकोऽयं
75290 प्रसिद्धो महादेवोऽहमेवास्मीति प्रेणान्वयः ॥ २८ ॥
75291
75292 अहमेवास्मि मे नास्ति कलनापि किलेतरा ।
75293 रेणुनेवाणुना व्योम्नि पद्मपत्रमिवाम्भसा ॥ २९ ॥
75294
75295 अणुना सूक्ष्मतमेन रेणुना ॥ २९ ॥
75296

75297 संभ्रमेणेव पाषाणे संबन्धो मयि नेतरैः।
75298 सुखदुःखश्रियो देहे मा पतन्तु पतन्तु वा॥ ३०॥
75299
75300 संभ्रमेण भयकम्पादिना॥ ३०॥
75301
75302 तुम्बकोपरि धाराश्च का नः क्षतिरुपस्थिता।
75303 दीपाङ्गातिगतो रज्ज्वा नालोको बध्यते यथा॥ ३१॥
75304
75305 तुम्बकः अलाबूः। इवार्थे चकारः। जलधारा इवेत्यर्थः। नः अस्माकं
75306 तुम्बकाकाशकल्पानामिति भावः। दीपाङ्गानि तैलवर्तिपात्राण्यतिक्रम्य निर्गतो
75307 दीपालोको यथा रज्ज्वा न बध्यते॥ ३१॥
75308
75309 तथा नायमहं बद्धः सर्वभावगणातिगः।
75310 संबन्धः कोऽस्तु नः कामैर्भावाभावैरथेन्द्रियैः॥ ३२॥
75311
75312 केन संबध्यते व्योम केन संबाध्यते मनः।
75313 शरीरे शतधा याते खण्डना का शरीरिणः॥ ३३॥
75314
75315 संबाध्यते अभिहन्यते। अमूर्तत्वादिति भावः॥ ३३॥
75316
75317 कुम्भे भग्ने क्षते क्षीणे कुम्भाकाशस्य का क्षतिः।
75318 पिशाचक इवादृश्यो मनो नामोदितं मुधा॥ ३४॥
75319
75320 कपालशो भग्ने छिद्रीभावेन क्षते मृदपचयेन क्षीणे॥ ३४॥
75321
75322 जडे तस्मिन्क्षते बोधात्का नः क्षतिरुपस्थिता।
75323 सुखदुःखमयी यस्य वासना तन्मनो मम॥ ३५॥
75324
75325 बोधान्मनोव्यतिरिक्तात्मदर्शनात्। यस्य सुखदुःखमयी वासना तत्तादृशं
75326 मनः पूर्वमज्ञतादशायामभवन्नेदानीमस्तीत्यर्थः॥ ३५॥
75327
75328 अभवत्पूर्वमद्यैका संपन्नाऽतनुनिर्वृतिः।
75329 अन्यो भुङ्क्तेऽन्य आदत्तेऽप्यन्यस्यानर्थसंकटः॥ ३६॥
75330
75331 अतनुरपरिच्छिन्ना निर्वृतिः सुखविश्रान्तिः॥ ३६॥
75332
75333 अन्यः पश्यत्यहो मौर्ख्यं कस्येयं खलु चक्रिका।
75334 भुङ्क्ते प्रकृतिरादत्ते मनोदेहस्य संकटः॥ ३७॥
75335
75336 एषां भोक्रादीनामैक्यादध्यासलक्षणं मौर्ख्यं कस्यैन्द्रजालिकस्य
75337 चक्रिका चक्रवत्परिवर्तनचातुरीत्यर्थः। भोक्रादिभेदं दर्शयति -
75338 भुङ्क्ते इति॥ ३७॥
75339
75340 दुष्टात्मा मौर्ख्यमस्तीह न किंचित्केवले क्षतिः।
75341 न मे भोगस्थितौ वाञ्छा न च भोगविवर्जने॥ ३८॥
75342
75343 प्रकृत्यादिदुष्टः दोषारोपित आत्मा। विमर्शेन किंचिन्मौर्ख्यमस्ति
75344 तेनाक्षतिरित्यर्थः॥ ३८॥
75345
75346 यदायाति तदायातु यत्प्रयाति प्रयातु तत्।
75347 सुखेषु मम नापेक्षा नोपेक्षा दुःखवृत्तिषु॥ ३९॥
75348

75349 सुखदुःखान्युपायान्तु यान्तु वाप्यहमेषु कः।
75350 वासना विविधा देहे त्वस्तं चोदयमेव वा॥ ४०॥
75351
75352 प्रयान्तु नाहमेतासु न चैता मम काश्चन।
75353 एतावन्तमहं कालमज्ञानरिपुणा हतः॥ ४१॥
75354
75355 एता वासनाः॥ ४१॥
75356
75357 हृत्वा विवेकसर्वस्वमेकान्तमवपोथितम्।
75358 वैष्णवेन प्रसादेन स्वसमुत्थेन चारुणा॥ ४२॥
75359
75360 अज्ञानरिपुणावपोथितं हिंसितम्। अवबोधितम् इति पाठे अविवेकसर्वस्वमिति
75361 च्छेदः। वैष्णवेन प्रसादेनानुग्रहेण मे अविवेकसर्वस्वं हृत्वा एकान्तं
75362 नियतैकस्वभावं ब्रह्म अवबोधितम्॥ ४२॥
75363
75364 इदानीं संपरिज्ञाय मयैष परिमोषितः।
75365 अहंकारपिशाचोऽयं शरीरतरुकोटरात्॥ ४३॥
75366
75367 परिमोषितोऽपहारितः॥ ४३॥
75368
75369 परावबोधमन्त्रेण मयेदानीमपाकृतः।
75370 निरहंकारयक्षोऽयं मच्छरीरमहाद्रुमः॥ ४४॥
75371
75372 इदानीं मच्छरीरमहाद्रुमो निर्गतोऽहंकारयक्षो यस्मात्तथाविधः सन्
75373 पुण्यतामायातः॥ ४४॥
75374
75375 पुण्यतामलमायातः प्रफुल्ल इव राजते।
75376 प्रशान्तमोहदारिद्र्यो दुराशादोषसंक्षये॥ ४५॥
75377
75378 विवेकधनसंभारान्स्थितोऽस्मि परमेश्वरः।
75379 ज्ञातं ज्ञातव्यमखिलं दृष्टा द्रष्टव्यदृष्टयः॥ ४६॥
75380
75381 विवेकधनसंभारान् प्राप्येति शेषः॥ ४६॥
75382
75383 तत्प्राप्तमधुना येन नाप्राप्तमवशिष्यते।
75384 दिष्ट्या दूरोज्झितानर्थामपेतविषयोरगाम्॥ ४७॥
75385
75386 संशान्तमोहनीहारां शान्ताशामृगतृष्णिकाम्।
75387 रजोरहितसर्वाशां शीतलोपशमद्रुमाम्॥ ४८॥
75388
75389 प्राप्तोऽस्मि विततां भूमिमुन्नतां पारमार्थिकीम्।
75390 स्तुत्या प्रणत्या विज्ञप्त्या शमेन नियमेन च॥ ४९॥
75391
75392 विष्णोः स्तुत्या प्रणत्या विज्ञप्त्या प्रार्थनया च वरमुखेन लब्धः॥ ४९॥
75393
75394 लब्धोऽयं भगवानात्मा दृष्टश्चाधिगतः स्फुटम्।
75395 अहंकारपदातीतश्चिरात्संस्मृतिमागतः॥ ५०॥
75396
75397 स्वभावाद्भगवानात्मा विष्णोर्ब्रह्म सनातनम्।
75398 इन्द्रियोरगगर्तेषु मरणश्वभ्रभूमिषु॥ ५१॥
75399
75400 विष्णोः प्रसादाद्ब्रह्म आत्मा संस्मृतिमागत इति पूर्वेणान्वयः।

75401 इन्द्रियेत्यादेरहं समवमोषित इति चतुर्थेनान्वयः। इन्द्रियाण्येवोरगगर्ताः
75402 सर्पबिलानि येषु। एवमुत्तरत्रापि बहुव्रीहयः॥ ५१॥
75403
75404 तृष्णाकरञ्जकुञ्जेषु कामकोलाहलेषु च।
75405 वासनावनजालेषु जन्मकूपान्तरेषु च॥ ५२॥
75406
75407 वासनावनजालेष्विति सर्वसप्तम्यन्तानां विशेष्यम्॥ ५२॥
75408
75409 दुःखदावाग्निदाहेषु दुःखदावाग्निहारिषु।
75410 पातोत्पातदशालक्षैर्मज्जनोन्मज्जनभ्रमैः॥ ५३॥
75411
75412 दुःखान्येव दावाग्निदाहो यत्र। दुःखाः दावाग्नय इव हारिणः
75413 परधनप्राणापहारिणश्चोरा यत्र।
75414 पातोत्पातसदृशैर्विपत्संपद्दशालक्षैः।
75415 मज्जनप्रायैरधोगतिभिरुन्मज्जनप्रायैः सद्गतिभिः॥ ५३॥
75416
75417 आविर्भावतिरोभावैराशापाशविचेष्टनैः।
75418 अहं चिरमहंकारद्विषा समवमोषितः॥ ५४॥
75419
75420 अहं चिरमहंकारलक्षणेन द्विषा सम्यगवमोषितः आत्मप्रमोषेण पीडितः॥
75421 ५४॥
75422
75423 निशायामल्पवीर्यात्मा पिशाचेनेव जङ्गले।
75424 स्वयमेव त्वथेदानीं क्रियाशक्त्या स्वयैव हि॥ ५५॥
75425
75426 शौरिणा व्यपदेशेन प्रसन्नविष्णुव्याजेन स्वयं स्वेनैव विवेकश्रीः
75427 प्रबोधिता उद्दीपिता। तया विवेकश्रिया ईशाने ईश्वरे स्वात्मनि प्रबुद्धे भवति
75428 प्रबुद्धे सति॥ ५५॥
75429
75430 शौरिणा व्यपदेशेन विवेकश्रीर्विबोधिता।
75431 प्रबुद्धे भवतीशाने तमहंकारराक्षसम्॥ ५६॥
75432
75433 न पश्यामि नभोदीपे ज्वलिते तिमिरं यथा।
75434 तस्याहंकारयक्षस्य मनोविवरवासिनः॥ ५७॥
75435
75436 दीपस्येव प्रशान्तस्य न वेद्मि गतिमीश्वरः।
75437 दृष्ट एव त्वयीशाने पलायनपरायणः॥ ५८॥
75438
75439 संपन्नो मदहंकारश्चोरः सूर्योदये यथा।
75440 असदभ्युत्थिते तस्मिन्नहंकारे पिशाचवत्॥ ५९॥
75441
75442 असतोऽज्ञानात्प्रागभ्युत्थिते संप्रति गते सति निर्गतो गोनसोऽजगरो
75443 यस्मात्तथाविधो द्रुमो वृक्षवान् आराम इव।
75444 द्रुशब्दाद्वृक्षवाचकान्मत्वर्थे द्युद्रुभ्यां मः इति मप्रत्ययः॥ ५९॥
75445
75446 गते तिष्ठाम्यहं स्वस्थो निर्गोनस इव द्रुमः।
75447 शाम्यामि परिनिर्वामि जगत्यस्मिन्प्रबोधवान्॥ ६०॥
75448
75449 तस्करेणोज्झितोऽस्मीति निर्वृतोऽस्मि चिरोदयम्।
75450 शैत्यमभ्यागतोस्म्यन्तः शान्ताशामृगतृष्णिकः॥ ६१॥
75451
75452 तस्करेण आत्मप्रमोषकेणाहंकारेण॥ ६१॥

75453
75454 प्रावृडम्बुभरस्नातः शान्तदाव इवाचलः ।
75455 प्रमार्जितेहमित्यस्मिन्पदे स्वार्थविचारतः ॥ ६२ ॥
75456
75457 शान्तदावो निर्वाणदवाग्निरचलः पर्वत इव ॥ ६२ ॥
75458
75459 को मोहः कानि दुःखानि काः कदाशाः क आधयः ।
75460 नरकस्वर्गमोक्षादिभ्रमाः सत्यामहंकृतौ ॥ ६३ ॥
75461
75462 के आधयो मानसव्यथाः । परलोकदुःखादिचिन्तया कुतो नाधयः स्युस्तत्राह
75463 - नरकेति ॥ ६३ ॥
75464
75465 भित्तावेव प्रवर्तन्ते चित्रेहा न नभस्तले ।
75466 अहंकारकलापित्ते चित्ते ज्ञानचमत्कृतिः ।
75467 न राजतेऽशुके म्लाने यथा कुङ्कुमरञ्जना ॥ ६४ ॥
75468
75469 ननु सत्येवाहंकारे मोहादिप्रशमचमत्कृतिः किं न स्यात्तत्राह -
75470 अहंकारेति । अहंकारकलालक्षणे पित्ते पित्तजोन्मादे सति ॥ ६४ ॥
75471
75472 निरहंकारजलदे तृष्णासारविवर्जिते ।
75473 भाति चित्तशरद्व्योम्नि स्वच्छता कान्तिशालिनी ॥ ६५ ॥
75474
75475 इदानीं सरःसमुद्रादिनानाभावैरात्मानं रूपयन्नमस्यति -
75476 निरहंकारेत्यादिना । कान्तिशालिनी आत्मचन्द्रप्रकाशशालिनी । स्वच्छता
75477 नैर्मल्यम् ॥ ६५ ॥
75478
75479 निरहंकारपङ्काय संप्रसन्नान्तराय च ।
75480 मह्यमानन्दसरसे तुभ्यमात्मन्नमो नमः ॥ ६६ ॥
75481
75482 मह्यं प्रत्यगात्मभूताय । तुभ्यं ब्रह्मणे । एवमग्रेऽपि ॥ ६६ ॥
75483
75484 शान्तेन्द्रियोग्रग्राहाय क्षीणचित्तौर्ववह्नये ।
75485 आनन्दाम्बुधये तुभ्यं मह्यमात्मन्नमो नमः ॥ ६७ ॥
75486
75487 गताहंकारमेघाय शान्ताशादाववह्नये ।
75488 मह्यमानन्दशैलाय विश्रान्ताय नमो नमः ॥ ६८ ॥
75489
75490 विश्रान्ताय अचलाय ॥ ६८ ॥
75491
75492 प्रफुल्लानन्दपद्माय शान्तचिन्तामयोर्मये ।
75493 मह्यं सन्मानसायात्मंस्तुभ्यमन्तर्नमो नमः ॥ ६९ ॥
75494
75495 सद्ब्रह्म तल्लक्षणाय । मानसाय देवसरसे ॥ ६९ ॥
75496
75497 संविदाभासपक्षाय पद्मकोटरवासिने ।
75498 सर्वमानसहंसाय स्वात्मनेऽन्तर्नमो नमः ॥ ७० ॥
75499
75500 संविदाभासौ बुद्धितद्वृत्तिप्रतिबिम्बचैतन्ये एव पक्षौ यस्य ॥ ७० ॥
75501
75502 कलाकलितरूपाय निष्कलायामृतात्मने ।
75503 सदोदिताय पूर्णात्मन् शशिने ते नमो नमः ॥ ७१ ॥
75504

75505 कलाभिः एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च इति श्रुत्युक्ताभिः
75506 सप्तदशभिः षोडशकलः सोम्य पुरुष इति श्रुतिदर्शिताभिर्वा | चन्द्रपक्षे तु
75507 प्रसिद्धाभिः | निष्कलाय निरवयवाय | चन्द्रपक्षे कलाव्यतिरिक्तदेवतात्मने ||
75508 ७१ ||
75509
75510 सदोदिताय शान्ताय महाहृद्ध्वान्तहारिणे |
75511 सर्वगायाप्यदृश्याय चित्सूर्याय नमो नमः || ७२ ||
75512
75513 चित्सूर्ये प्रसिद्धसूर्यात्सदोदितायेत्यादिविशेषणैर्विशेषो दर्शितः | शान्ताय
75514 अतापकाय | अदृश्याय दृश्यविलक्षणाय || ७२ ||
75515
75516 अस्नेहस्नेहदीपाय वृत्तिनिष्क्रान्तवर्तिने |
75517 स्वभावाधारधीराय चिद्दीपाय नमो नमः || ७३ ||
75518
75519 अस्नेहो निस्तैलः | स्नेहं परमप्रेमाणं दीपयतीति स्नेहदीपः | अथवा
75520 पुत्रमित्रधनादिष्वस्नेहाः यतयस्तेषां स्नेहेन दीप्यते |
75521 सर्ववस्तुस्वभावानामाधाराय | धीराय धीप्रकाशकाय || ७३ ||
75522
75523 मदनानलसंतप्ते शीतेन मनसा मनः |
75524 भग्नमन्तर्मया तप्तमयसेव बलादयः || ७४ ||
75525
75526 इदानीं स्वपौरुषं सफलमित्यभिनन्दति - मदनेत्यादिना | यथा अयसा
75527 कार्ष्णायसटङ्केन तप्तमयो भज्यते तथा शीतेन शमादियुक्तेन मनसा
75528 मदनानलसंतप्तं मनो मया भग्नमित्यर्थः || ७४ ||
75529
75530 इन्द्रियेणेन्द्रियं छित्त्वा छित्त्वा च मनसा मनः |
75531 अहंकृतिमहंकृत्या छित्त्वा शेषो जयाम्यहम् || ७५ ||
75532
75533 प्रत्यक्प्रवणेनेन्द्रियेण चक्षुरादिना पराक्प्रवणं तदेव छित्त्वा | एवं
75534 मनोहंकारयोरपि बोध्यम् | शेषोऽवशिष्टचिन्मात्रोऽहम् || ७५ ||
75535
75536 भावेनाभावमाच्छिद्य हित्वा तृष्णामतृष्णया |
75537 निष्पिष्य प्रज्ञयाऽप्रज्ञां ज्ञोऽज्ञः सत्योसि ते नमः || ७६ ||
75538
75539 भावेन श्रद्धया | अभावमश्रद्धाम् | ऊहापोहवती बुद्धिः प्रज्ञा तया
75540 अविचारसंदेहादिलक्षणामप्रज्ञाम् | अज्ञो ज्ञातृत्वाभिमानशून्यो ज्ञो
75541 ज्ञप्तिमात्रस्वभाव एव सत्योऽसि तादृशाय ते तुभ्यं [अत्र मह्यं इति
75542 क्वचित्पठ्यते] नमः || ७६ ||
75543
75544 मनसा मनसि च्छिन्ने निरहंकारतां गते |
75545 भावेन गलिते भावे स्वच्छस्तिष्ठामि केवलः || ७७ ||
75546
75547 भावेन ब्रह्माहंभावेन देहाद्यहंभावे गलिते || ७७ ||
75548
75549 निर्भावं निरहंकारं निर्मनस्कमनीहितम् |
75550 केवलं स्पन्दशुद्धात्मन्येव [आत्मन्येतत्तिष्ठति इति पाठः]
75551 तिष्ठति मे वपुः || ७८ ||
75552
75553 निर्भावं भावनाहेतुबुद्धिशून्यम् | अनीहितं इच्छाहेतुचित्तशून्यम् | स्पन्दः
75554 प्राणनक्रिया तन्मात्रेण शुद्ध आत्मा यस्य तथाविधे जीवन्मुक्तात्मनि तिष्ठति
75555 जीवति | तथा च श्रुतिः तस्मादेकमेव व्रतं चरेत्प्राण्याच्चैवापान्याच्च इति || ७८ ||
75556

75557 हेलानुकम्पितानन्तविश्वेशादतिशायिनी |
75558 परमोपशमोपेता जातेयं मम निर्वृतिः || ७९ ||
75559
75560 हेलयैव अनुकम्पिता भोगैश्वर्यदाएनेनानुगृहीता अनन्ताः स्वभक्ता येन
75561 तथाविधाद्विश्वेशाद्ब्रह्मविष्ण्वादेरप्यतिशायिनी उत्कृष्टा
75562 निर्वृतिर्निरतिशयानन्दविश्रान्तिः || ७९ ||
75563
75564 प्रशान्तमोहवेतालो गताहंकारराक्षसः |
75565 कदाशारूपिकोनमुक्तो जातोऽस्मि विगतज्वरः || ८० ||
75566
75567 रूपिका पिशाची तयोन्मुक्तः | अत एव विगतज्वरः || ८० ||
75568
75569 तृष्णारज्जुगुणं छित्त्वा मच्छरीरकपञ्जरात् |
75570 न जाने क्व गतोड्डीय दुरहंकृतिपक्षिणी || ८१ ||
75571
75572 उद्धूलिते घनाज्ञानकुलाये कायपादपात् |
75573 न जाने गत उड्डीय क्वाहंभावविहंगमः || ८२ ||
75574
75575 उद्धूलिते ज्ञानाभ्यासपेषणेन धूलीकृत्योड्डायिते || ८२ ||
75576
75577 दुराशादीर्घदौरात्म्यधूसरा भोगभस्मना |
75578 भयभोगिहिता दिष्ट्या भूयस्यो वासनाः क्षताः || ८३ ||
75579
75580 दुराशाभिर्दीर्घैर्दौरात्म्यैर्दुष्टदेहाद्यात्मत्वाभिमानैश्च धूसरा मलिना
75581 | भयलक्षणानां भोगिनां सर्पाणां हिता | भूयस्यो दुर्वासनाः
75582 भोगान्भस्मयतीति भोगभस्म समाधिस्तेन क्षता उच्छिन्नाः || ८३ ||
75583
75584 एतावन्तमहं कालं कोऽभुवं चित्रमीदृशम् |
75585 येनाहमेष मिथ्यैव दृढाहंकारतां गतः || ८४ ||
75586
75587 इदानीं निद्राक्षये स्वाप्नदुर्दशामिव प्राक्तनीमहंकारदशां स्मृत्वा
75588 विस्मयते - एतावन्तमिति | चित्रमाश्चर्यम् || ८४ ||
75589
75590 अद्याहमस्मि जातोऽयमहमद्य महामतिः |
75591 अहंकारमहाभ्रेण यत्कृष्णेनालमुज्झितः || ८५ ||
75592
75593 अद्याहमयमनुभूयमाननिरतिशयानन्दस्वभावो जातः प्रादुर्भूतः |
75594 यद्यतोऽहं महती अपरिच्छिन्नब्रह्माकारा मतिः साक्षात्कारवृत्तिर्यस्य
75595 तथाविधः सन्नहंकारमहाभ्रेणालं निःशेषमुज्झितः | निर्मुक्त इत्यर्थः ||
75596 ८५ ||
75597
75598 दृष्टोऽयमात्मा भगवांस्तथैवाधिगतो मया |
75599 आलब्धश्चानुभूतोऽङ्गं स्वानुभूतौ नियोजितः || ८६ ||
75600
75601 महामतिरित्येतद्विशदयति - दृष्ट इति | वाक्यप्रमाणेन दृष्टो
75602 मननेनाधिगतः समाधौ मनसा
75603 चिराश्लेषमालब्धसमाध्यनुभूतश्चाङ्गं स्वदेहमिव सदा स्वानुभूतौ
75604 नियोजितः | तथाचाहुः देहात्मज्ञानवज्ज्ञानं देहात्मज्ञानबाधकम् |
75605 आत्मन्येव भवेद्यस्य स नेच्छन्नपि मुच्यते || इति || ८६ ||
75606
75607 गतास्पदं गतमननं गतैषणं
75608 तिरस्कृतं निपुणमहंकृतिभ्रमैः |

75609 निरीहितं व्यपगतरागरञ्जनं
75610 विकौतुकं प्रशममिदं गतं मनः ॥ ८७ ॥
75611
75612 सांप्रतं निर्दोषविक्षेपं स्वमनः प्रशमं गतमित्याह - गतास्पदमिति
75613 । गतास्पदं निर्विषयम् । विषयाणां मननाद्धि तेष्वेषणा प्रसिद्धेति
75614 मूलोच्छित्त्या गतमननं गतैषणं च । निपुणं नितरां तिरस्कृतं
75615 निराकृतमुज्झितमिति यावत् । अत एव निरीहितं निश्चेष्टम् । कौतुकं
75616 भोगोत्कण्ठा तद्रहितम् । अत एव निरिन्धनाग्निवत्प्रशमं गतमित्यर्थः ॥ ८७ ॥
75617
75618 दुरुत्तराः समविषमा महापदः
75619 सुदुःसहाः प्रभवनदीर्घदोषदाः ।
75620 गताः क्षयं समधिगतो महेश्वर-
75621 श्चिदद्वयोऽपगामचित्त्वमन्तरे ॥ ८८ ॥
75622
75623 मनःप्रशमादेव सर्वापन्निवृत्तिं निरतिशयानन्दात्मावाप्तिं च
75624 वदन्नुपसंहरति - दुरुत्तरा इति । प्रभवनानि नानायोनिजन्मपरंपराः
75625 दीर्घा दोषाः कामलोभमोहादयस्तत्प्रदाः समाश्चिरकालैकरूपदुःखाः
75626 विषमाः प्रतिक्षणविचित्रदुःखा महापदः क्षयं गताः । चिदद्वयो
75627 महेश्वरः पूर्णानन्दात्मा समधिगतः प्राप्तः । तत्कुतः । यतः अन्तरे
75628 प्रत्यगात्मन्यचित्त्वमज्ञानजाड्यं ज्ञानेनापगतं बाधितमित्यर्थः ॥ ८८ ॥
75629
75630 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे०
75631 मोक्षोपायेषूपशमप्रकरणे ब्रह्मात्मचिन्ता [१] नाम
75632 पञ्चत्रिंशः सर्गः ॥ ३५ ॥
75633
75634 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
75635 ब्रह्मात्मचिन्ता [ब्रह्मतात्मलाभचिन्ता इति पाठः] नाम
75636 पञ्चविंशः सर्गः ॥ ३५ ॥
75637
75638
75639 षट्त्रिंशः सर्गः ३६
75640
75641 प्रह्लाद उवाच ।
75642
75643 आत्मा सर्वपदातीतश्चिरात्संस्मृतिमागतः ।
75644 दिष्ट्या लब्धोऽसि भगवन्नमस्तेस्तु महात्मने ॥ १ ॥
75645
75646 आत्मानं दुर्लभं प्राप्य प्रह्लादः प्रणमन्मुहुः ।
75647 स्तौति नन्दति कान्तेव कान्तेन रमते रहः ॥ १ ॥
75648
75649 सर्वेभ्यो मानुषानन्दादिहैरण्यगर्भान्तेभ्यः पदेभ्यः
75650 सुखोत्कर्षस्थानेभ्योऽप्यतीतो निरतिशयानन्दरूपः आत्मा प्रत्यक् । महात्मने
75651 अपरिच्छिन्नस्वभावाय ॥ १ ॥
75652
75653 अभिवन्द्याथ चालोक्य चिरमालिङ्ग्यसे मया ।
75654 कोऽन्यः स्यात्त्वदृते बन्धुर्भगवन्भुवनत्रये ॥ २ ॥
75655
75656 चिरमालिङ्ग्यसे क्षीरोदकवत्समरसवृत्त्या समाधावनुभूयसे । बन्धुः
75657 परमप्रियः ॥ २ ॥
75658
75659 हंसि पासि ददासि त्वं स्तौषि यासि विवल्गसि ।
75660 अयं प्राप्तोसि दृष्टोसि किं करोषि क्व गच्छसि ॥ ३ ॥

75661
75662 यावन्न प्राप्तो न दृष्टश्च तावन्मृत्युर्भूत्वा अभक्तान् हंसि।
75663 भक्तान्पासि। उपासनाकर्मभिराराधितो ददासि। स्तावकादिरूपेण स्तौषि।
75664 गन्तृरूपेण यासि। सर्वरूपेण च विवल्गसि व्यवहरसि। मया तु अयं
75665 नित्यापरोक्षस्वभावः प्राप्तो दृष्टश्च। अतः परं मां प्रति किं करोषि क्व
75666 वा गच्छसि। न त्वयेदानीमन्यतो गन्तुं किंचित्कर्तुं वा
75667 पूर्ववच्छक्यमित्यर्थः॥ ३॥
75668
75669 स्वसत्तापूरिताशेषविश्व विश्वजनीन भोः।
75670 सर्वत्र लक्ष्यसे नित्यमधुना क्व पलायसे॥ ४॥
75671
75672 विश्वेभ्यो जनेभ्यो हित विश्वजनीन॥ ४॥
75673
75674 आवयोरन्तरं भूरि जन्मव्यवहितान्तरम्।
75675 अदूरमद्य संपन्नं दिष्ट्या दृष्टोऽसि बान्धव॥ ५॥
75676
75677 अन्तरमन्तर्धायकमज्ञानम्। अभूदिति शेषः। अद्य
75678 तन्नाशाददूरमत्यन्ताभेदलक्षणमतिसामीप्यं संपन्नम्॥ ५॥
75679
75680 नमस्ते कृतकृत्याय कर्त्रे भर्त्रे नमोस्तु ते।
75681 नमः संसारवृन्ताय नित्याय विमलात्मने॥ ६॥
75682
75683 संसारलक्षणस्य पर्णस्य वृन्ताय॥ ६॥
75684
75685 नमश्चक्राब्जहस्ताय नमश्चन्द्रार्धधारिणे।
75686 नमो विबुधनाथाय नमस्ते पद्मजन्मने॥ ७॥
75687
75688 विबुधनाथायेन्द्ररूपाय॥ ७॥
75689
75690 वाच्यवाचकदृष्ट्यैव भेदो योऽयमिहावयोः।
75691 असत्या कल्पनैवेषा वीचिवीच्यम्भसोरिव॥ ८॥
75692
75693 वाच्यवाचकदृष्ट्या व्यवहारदृष्ट्या। एषा व्यवहारदृष्टिर्भिदा च॥ ८॥
75694
75695 त्वमेवानन्तयानन्तवस्तुवैचित्र्यरूपया।
75696 भावाभावविलासिन्या नित्ययैव विजृम्भसे॥ ९॥
75697
75698 अनन्तया कल्पनयेति शेषः। नित्यया प्रवाहानाद्यया [प्रवाहनद्या इत्यपि
75699 क्वचित्]॥ ९॥
75700
75701 नमो द्रष्ट्रे नमः स्रष्ट्रे नमोऽनन्तविकासिने।
75702 नमः सर्वस्वभावाय नमस्ते सर्वगात्मने॥ १०॥
75703
75704 आदौ सृज्यपदार्थानां द्रष्ट्रे। ततः स्रष्ट्रे। सृष्ट्वा चानन्तरूपैर्विकासिने
75705 । अत एव सर्वस्वभावाय। अधिष्ठानतया सर्वगात्मने॥ १०॥
75706
75707 प्रतिजन्म चिरं बह्व्यो दीर्घदुःखवता मया।
75708 त्वया मयोपदिष्टेन दग्धेनापहतौजसा॥ ११॥
75709
75710 एतावन्तं कालं मद्रूपेण त्वमेव मच्छन्दानुवर्तनाच्छान्त इदानीं
75711 त्वयैव त्वं विश्रान्तये लब्ध इत्याह - प्रतिजन्मेति। मया मद्भावापन्नेन
75712 जीवभूतेन त्वया मया स्वकामादिदोषानुसारेणोपदिष्टेनासन्मार्गेण

प्रवृत्तत्वाद्दग्धेन अत एवापहतौजसा तिरोहितेश्वरभावेन ॥ ११ ॥

आलोकिता लोकदृशो दृष्टा दृष्टान्तदृष्टयः ।
न प्राप्तस्तत्त्वयाऽनेन किंचिदासादितं भवेत् ॥ १२ ॥

त्वया लोकदृश ऊर्ध्वाधोमध्यलोकसंचारभ्रमास्तेषु
विवेकानुकूलदृष्टान्तदृष्टयश्च आलोकिताः । तत्तस्माद्बहिर्लोकदर्शनात्वं
त्वया न प्राप्तः । अनेन लोकत्रयदर्शनेन च किंचित्स्वल्पमपि
पुरुषार्थरूपमासादितं न भवेत् नाभूदिति द्वयोरर्थः ॥ १२ ॥

सर्वं मृत्काष्ठपाषाणवारिमात्रमिदं जगत् ।
नेहास्ति त्वदृते देव यत्प्राप्तौ नाभिवाञ्छति ॥ १३ ॥

कुतो नाभूत्तत्राह - सर्वमिति । नाभिवाञ्छति पुरुषार्थेच्छा पूर्णा
भवति तत्तादृशं वस्तु त्वदृते त्वां विना इह जगति अन्यन्नास्तीत्यर्थः ॥ १३ ॥

देवायमद्य लब्धोऽसि दृष्टोऽस्यधिगतोऽसि च ।
संप्रप्तोऽसि गृहीतोऽसि नमस्तेस्तु न मुह्यसि ॥ १४ ॥

न मुह्यसि । मोहनिस्तीर्णोऽसीति यावत् ॥ १४ ॥

योऽक्ष्णोः कनीनिकारश्मिजालप्रोतवपुः स्थितः ।
देव दर्शनरूपेण कथं सोऽत्र न दृश्यते ॥ १५ ॥

कथमहं दृष्ट इति चेच्चाक्षुषादिसर्ववृत्तिप्रथारूपेण प्रतिबोधविदितं
मतमिति श्रुतिदर्शितोपायेनेत्याह - य इति । चक्षुर्द्वारान्तःकरणस्य
घटादिदेशनिर्गमने
तदवच्छिन्नचैतन्यात्माऽक्षिकनीनिकारश्मिजालप्रोतवपुःस्थित इत्यर्थः ।
एवमग्रेऽप्यूह्यम् ॥ १५ ॥

यस्त्वक्स्पर्शौ स्पृशन्सर्वं गन्धं तैलं तिले यथा ।
स्पर्शमन्तःकरोत्येष स कथं नानुभूयते ॥ १६ ॥

त्वचं स्पर्शमौष्ण्यादिकं च स्पृशन् स्पार्शनवृत्त्या व्याप्नुवन् यथा
तिलेऽन्तर्गतं तैलं तिलसंयुक्तपुष्पगन्धमन्तःकरोति गृह्णाति
तद्वत्स्पर्शं शीतादि अन्तःकरोति व्याप्य प्रकाशयति ॥ १६ ॥

यः शब्दश्रवणादन्तः शब्दशक्तिं परामृशन् ।
रोमाञ्चं जनयत्यङ्गे स दूरस्थः कथं भवेत् ॥ १७ ॥

शब्दशक्तिं गानकाव्यादिगुणचमत्कारम् । परामृशन् प्रकाशयन् ॥ १७ ॥

जिह्वापल्लवलग्नानि स्वदितस्याग्रतोऽपि च ।
स्वदन्ते यस्य वस्तूनि स्वदते स न कस्य च ॥ १८ ॥

वस्तूनि मधुराम्लादीनि अग्रतः पुरस्तादेव स्वदितस्य स्वारसिकप्रेमविषयस्य
स्वदन्ते । स्वदते सुखात्मना स्फुरति ॥ १८ ॥

पुष्पगन्धानुपादाय घ्राणहस्तेन देहकम् ।
य आलोकयति प्रीत्या कस्यासौ न करे स्थितः ॥ १९ ॥

घ्राणहस्तेन हस्तवदुपादानकारणेन घ्राणेन कण्ठधृतस्रजः

75765 पुष्पाणां गन्धानुपादाय मालालंकृतं स्वं देहकमालोकयति पश्यति।
75766 करे स्थित इव स्फुटं प्रत्यक्षः इत्यर्थः॥ १९॥
75767
75768 वेदवेदान्तसिद्धान्ततर्कपौराणगीतिभिः।
75769 यो गीतः स कथं ह्यात्मा विज्ञातो याति विस्मृतिं॥ २०॥
75770
75771 सैवेह देहभोगाली सुभगापीयमद्य मे।
75772 अन्तर्न स्वदते स्वच्छे त्वयि दृष्टे परावरे॥ २१॥
75773
75774 त्वया विमलदीपेन भानुः प्रकटतां गतः।
75775 त्वया शीततुषारेण चन्द्रः शिशिरतां गतः॥ २२॥
75776
75777 येन सूर्यस्तपति तेजसेद्धः इत्यादिश्रुतिदृशाप्याह - त्वयेति॥ २२॥
75778
75779 त्वयैते गुरवः शैलास्त्वयैते द्युचरा धृताः।
75780 त्वयैवेयं धरा धीरा त्वयैवाम्बरमम्बरम्॥ २३॥
75781
75782 द्युचरा नभश्चरा वाय्वादयः। धीरा निश्चला। अम्बरमवकाशदम्॥ २३॥
75783
75784 दिष्ट्या मत्तामसि प्राप्तो दिष्ट्या त्वत्तामहं गतः।
75785 अहं त्वं त्वमहं देव दिष्ट्या भेदोऽस्ति नावयोः॥ २४॥
75786
75787 दिष्ट्या भाग्येन। अहं त्वं त्वमहमिति व्यतिहारेणाभेदो दृढीकृतः॥ २४॥
75788
75789 अहं त्वमितिशब्दाभ्यां पर्यायाभ्यां महात्मनः।
75790 तव वा मम वा शाखा संयुक्ताभ्यां नमो नमः॥ २५॥
75791
75792 इदानीमखण्डार्थे प्रमाणतया संपन्नावहंत्वंशब्दौ नमस्यति -
75793 अहमिति। लक्ष्यस्य महात्मनो बोधने पर्यायाभ्याम्। तव
75794 कारणोपाधिविशिष्टस्य वाच्यार्थस्य मम कार्योपाधिविशिष्टस्य वाच्यार्थस्य
75795 वा शाखावदेकदेशभूताभ्यामुपाधिभ्यां भेदकल्पनात्संयुक्ताभ्यां
75796 सामानाधिकरण्येनान्विताभ्यामहंत्वमिति शब्दाभ्याम्। नमो नम
75797 इत्यादरादभ्यासः। द्वौ वाशब्दौ
75798 शाखाद्वयसंबन्धयोर्मिथ्यात्वद्योतनार्थौ॥ २५॥
75799
75800 नमो मह्यमनन्ताय निरहंकाररूपिणे।
75801 नमो मह्यमरूपाय नमः समसमात्मने॥ २६॥
75802
75803 इदानीमखण्डार्थं प्रत्यक्प्राधान्येन प्रणम्य तस्यैव ब्रह्मतां दर्शयति
75804 - नम इत्यादिना॥ २६॥
75805
75806 मय्यात्मनि समे स्वच्छे साक्षिभूते निराकृतौ।
75807 दिक्कालाद्यनवच्छिन्ने स्वात्मन्येवेह तिष्ठसि॥ २७॥
75808
75809 हे ब्रह्मन् त्वं मय्यात्मनि प्रत्यक्स्वभाव एव तिष्ठसि न कदाचित्पराग्भावे
75810 इत्यर्थः॥ २७॥
75811
75812 मनः प्रक्षोममायाति स्फुरन्तीन्द्रियवृत्तयः।
75813 शक्तिरुल्लसति स्फारा प्राणापानप्रवाहिनी॥ २८॥
75814
75815 तत्कुतो ज्ञातं तत्राह - मन इति। केनेषितं पतति प्रेषितं मनः
75816 इत्यादिश्रुतिदर्शितेन मनःप्रभृतीनामयस्कान्तवत्प्रवर्तकत्वेन

75817 ज्ञातमित्यर्थः ॥ २८ ॥
75818
75819 वहन्ति देहयन्त्राणि कृष्टान्याशावरत्रया ।
75820 चर्ममांसास्थिदिग्धानि मनःसारथिमन्ति च ॥ २९ ॥
75821
75822 अयं संविद्वपुरहं न काचिन्न कृतास्पदः ।
75823 देहः पततु वोदेतु यथाभिमतयेच्छया ॥ ३० ॥
75824
75825 तर्हि त्वं किं प्राणनादिशक्तिरुत देहकृतास्पदोऽहंकारादिर्वा नेत्याह -
75826 अयमिति । अयमहं संविद्वपुरेव नतु काचिच्छक्तिर्नापि ध्येयकृतास्पदः
75827 [देहकृत इति पाठः] । तर्हि ते किं देहेनेति चेन्न किंचिदित्याह -
75828 देह इति ॥ ३० ॥
75829
75830 चिरादहमहं जातः स्वात्मलाभश्चिरादयम् ।
75831 चिरादुपशम याति कल्पस्यान्ते जगद्यथा ॥ ३१ ॥
75832
75833 उपशमं याति भ्रम इति शेषः ॥ ३१ ॥
75834
75835 चिरात्संसारगामित्वाद्दीर्घे संसारवर्त्मनि ।
75836 विश्रान्तोऽस्मि चिरं श्रान्तः कल्पस्यान्त इवानलः ॥ ३२ ॥
75837
75838 संसारगामित्वात्संसारे भ्रमणशीलत्वात् । एतावत्कालं संसारवर्त्मनि
75839 श्रान्तोऽहं संप्रति विश्रान्तः ॥ ३२ ॥
75840
75841 सर्वातीताय सर्वाय तुभ्यं मह्यं नमो नमः ।
75842 तेभ्योऽपि च नमस्तेस्तु ये मां त्वां प्रवदन्ति च ॥ ३३ ॥
75843
75844 ये गुरवो वेदान्ताश्च त्वां मां मद्रूपमेव प्रवदन्ति ॥ ३३ ॥
75845
75846 अखिलानन्तसंभोगा न स्पृष्टा दोषवृत्तिभिः ।
75847 जयत्यकृतसंरम्भा साक्षिता परमात्मनः ॥ ३४ ॥
75848
75849 अखिला अनन्ताः संभोगाः प्रकाश्या यस्यास्तथाविधापि
75850 प्राकाश्यदोषवृत्तिभिरस्पृष्टा । न कृतः संरम्भोऽभिनिवेशो यया ।
75851 उदासीनेत्यर्थः । अत एव जयति ॥ ३४ ॥
75852
75853 आत्मन्पुष्प इवामोदो भस्त्रापिण्ड इवानिलः ।
75854 तिले तैलमिवास्मिंस्त्वं सर्वत्र वपुषि स्थितः ॥ ३५ ॥
75855
75856 त्वमेव सर्वत्र सार इत्याह - आत्मन्निति ॥ ३५ ॥
75857
75858 हंसि पासि ददासि त्वमवस्फूर्जसि वल्गसि ।
75859 अनहंकृतिरूपोऽपि चित्रेयं तव मायिता ॥ ३६ ॥
75860
75861 सर्वकर्तापि त्वमेवेत्याह - हंसीति ॥ ३६ ॥
75862
75863 जयामीशज्वलद्दीप्तिः सर्वमुन्मीलयञ्जगत् ।
75864 जयाम्युपरतारम्भो जगद्भूयो निमीलयन् ॥ ३७ ॥
75865
75866 सर्गकाले ईशेन त्वया चिदात्मना
75867 ज्वलद्दीप्तिर्बहिरन्तश्चार्थप्रकाशनेनोज्ज्वलितोऽहं जीवभावेनानुप्रविश्य
75868 नामरूपात्मकं सर्वं जगदुन्मीलयन्व्याकुर्वंस्त्वदात्मनैव जयामि

75869 वशीकृत्य पालयामि | प्रलयकाले चाहमुपरतारम्भो जगद्भूयः
75870 पुनर्निमीलयन्नुपसंहरन्नपि त्वदात्मनैव जयाम्यभिभवामीत्यर्थः || ३७ ||
75871
75872 परमाणोस्तवैवान्तरिदं संसारमण्डलम् |
75873 वटत्वं वटधानायां बभूवास्ति भविष्यति || ३८ ||
75874
75875 परमाणोरत्यन्तसूक्ष्मस्य | दुर्लक्ष्यस्येत्यर्थः | वटत्वं वटव्यक्तिसंवलिता
75876 जातिः || ३८ ||
75877
75878 हयद्विपरथाकारैर्यद्वत्खे दृश्यतेऽम्बुदः |
75879 तद्वदालोक्यसे देव पदार्थशतविभ्रमैः || ३९ ||
75880
75881 भावानां भूरिभङ्गानामभवाय भवाय च |
75882 भव भावविमुक्तात्मा भावाभावबहिष्कृतः || ४० ||
75883
75884 इदानीं स्वयं मुक्तात्मा स्वाभिन्नाय बद्धात्मने मोक्षोपायमुपदिशति -
75885 भावानामित्यादिना | भूरिभङ्गानां बहुविधविकारस्वभावानां अभवाय
75886 बाधाय भवाय निरतिशयानन्दस्वरूपाविर्भावाय च असङ्गात्मदर्शनेन
75887 भावाभावाभ्यां बहिष्कृतो विविक्तः संस्तद्भावेनैव सदा विमुक्तात्मा
75888 भव | मा पुनर्बन्धं प्रतिपद्यस्वेत्यर्थः || ४० ||
75889
75890 जहि मानं महाकोपं कालुष्यं क्रूरतां तथा |
75891 न महान्तो निमज्जन्ति प्राकृते गुणसंकटे || ४१ ||
75892
75893 तदुपायभूतां पूर्वपीठिकामुपदिशति - जहीत्यादिना || ४१ ||
75894
75895 प्राक्तनीं दीर्घदौरात्म्यदशां स्मृत्वा पुनःपुनः |
75896 कोहं किं तद्बभूवेति हसन्मुक्ताच्छटासितम् || ४२ ||
75897
75898 इति विचार्येति शेषः | मुक्तानां छटाः कणा इव सितं शुभ्रं यथा स्यात्तथा
75899 हसन् प्राक्तनीं दीर्घदौरात्म्यदशां जहीति पूर्वेणान्वयः || ४२ ||
75900
75901 ते प्रयाताः समारम्भा गतास्ते दग्धवासराः |
75902 येषु चिन्तानलज्वालाजालाकीर्णो भवानभूत् || ४३ ||
75903
75904 अद्य त्वं देहनगरे राजा स्फारमनोरथः |
75905 न दुःखैर्गृह्यसे नापि सुखैर्व्योम करैरिव || ४४ ||
75906
75907 करैर्मुष्टिभिर्व्योमेव || ४४ ||
75908
75909 अद्येन्द्रियदुरश्वांश्च जित्वा जितमनोगजः |
75910 भोगारिमभितो भङ्क्त्वा साम्राज्यमधितिष्ठसि || ४५ ||
75911
75912 अपाराम्बरपान्थस्त्वमजस्रास्तमयोदयः |
75913 अवभासकरो नित्यं बहिरन्तश्च भास्करः || ४६ ||
75914
75915 बहिः अविद्यादृशि अन्तऽह् स्वरूपदृशि च यथाक्रममजस्रमस्तमय उदयश्च
75916 यस्य | अथवा अजस्रमभीक्ष्णं जगतः अस्तमयोदयौ प्रलयसर्गौ
75917 यस्मादित्यर्थः | भास्करपक्षे स्पष्टम् || ४६ ||
75918
75919 सर्वदैवासि संसुप्तः शक्त्या संबोध्यसे विभो |
75920 भोगालोकनलीलार्थं कामिन्या कामुको यथा || ४७ ||

यद्येवं तर्हि सर्वत्र तथा कुतो नावगच्छामि तत्राह - सर्वदैवेति | सर्वदा
अनादिकालात्सुप्तोऽसि | शक्त्या भोजकादृष्टशक्त्या भोगालोकनलीलार्थं
तावन्मात्रं संबोध्यसे न पूर्णात्मरूपेणेत्यर्थः || ४७ ||

दृक्क्षुद्राभिरुपानीतं दूराद्रूपमधु त्वया |
पीयते स्वीकृतं शक्त्या नेत्रवातायनस्थया || ४८ ||

भोगालोकनलीलामेव विशदयति - दृक्क्षुद्राभिरिति | दृश
इन्द्रियवृत्तयस्तल्लक्षणाभिः क्षुद्राभिर्मधुमक्षिकाभेदैः |
रूपादिलक्षणं मधु क्षौद्रम् | नेत्रादिवातायनस्थया चिच्छक्त्या || ४८ ||

ब्रह्माण्डकोटराध्वान्ताः प्राणापानपरैस्त्वया |
गतागतैर्ब्रह्मपुरे संप्रेक्ष्यन्ते प्रतिक्षणम् || ४९ ||

योगिनामुत्क्रमणकाले सुषुम्नादिमार्गप्रकाशोऽपि त्वदधीन एवेत्याह -
ब्रह्माण्डेति | प्राणापानशब्दाभ्यां तन्निरोधाभ्यासो लक्ष्यते |
तत्परैर्योगिभिर्ब्रह्मोपलब्धिस्थानत्वाद्ब्रह्मपुरे देहे
प्रतिक्षणमभ्यस्तैर्हृदि संपिण्डितानां प्राणानामुत्क्रम्य
परकायप्रवेशलोकान्तरसंचाराद्यनुकुलैर्नानानाडीमार्गेषु गतागतैः
संचारैर्ब्रह्माण्डान्तरं गन्तुमर्चिरादिमार्गेण सूर्यमण्डलं गन्तुं वा
ब्रह्माण्डकोटरस्य ब्रह्मरन्ध्रस्य च संबन्धिनः अध्वान्ताः
सुषुम्नादिमार्गपर्वाणि त्वयैव स्वयंज्योतिषा करणेन संप्रेक्ष्यन्ते स्फुटं
दृश्यन्ते | हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामतीति
श्रुतेर्यद्यपि सर्वेषां मरणेन [मरणे इति पाठः]
नाडीद्वारप्रकाश आत्मज्योतिरधीन एव तथाप्ययोगिनां पीडापारवश्यादिना
तदवधानाशक्तेर्योगिनां चाभ्यासकाले मरणकाले च सावधानत्वात्त
एवोदाहृताः || ४९ ||

देहपुष्पे त्वमामोदो देहेन्दौ त्वमृतामृतम् |
रसस्त्वं देहविटपे शैत्यं देहहिमे भवान् || ५० ||

ऋतं परमार्थसत्यभूतममृतम् [सत्यमृतामृतम् इति
पाठः] | देहलक्षणे विटपे शाखायं रागादिपल्लवोद्गमनिमित्तभूतो
रसः || ५० ||

त्वय्यस्ति विस्मयस्नेहः शरीरक्षीरसर्पिषि |
त्वमन्तरस्य देहस्य दारुण्यग्निरिव स्थितः || ५१ ||

सर्वप्राणिनां शरीरे स्मयस्य गर्वस्य निमित्तभूतः स्नेहो योऽस्ति स
शरीरलक्षणस्य क्षीरस्य सर्पिषि घृतवत्सारभूते त्वय्येव सोऽस्ति | त्वया
तदभिमानत्यागे स्नेहादर्शनादित्यर्थः || ५१ ||

त्वमेवानुत्तमास्वादः प्राकाश्यं तेजसामपि |
अवगन्ता त्वमर्थानां त्वं भासामवभासकः || ५२ ||

अनुत्तमास्वादोऽतिमधुरोऽमृतस्वरूप इति यावत् | तेजसां सूर्यादीनाम् |
अधिदैवं प्राकाश्यं प्रकाशनिमित्तम् | अध्यात्मं च भासां
चक्षुरादिकरणानामवभासकः || ५२ ||

स्पन्दस्त्वं सर्ववायूनां त्वं मनोहस्तिनो मदः |
प्रज्ञानलशिखायास्त्वं प्राकाश्यं तैक्ष्ण्यमेव च || ५३ ||

75973
75974 वायूनां प्राणानां स्पन्दयतीति स्पन्दः। मनोलक्षणस्य हस्तिनो मद इव
75975 भ्रान्तिनिमित्तम्। तैक्ष्ण्यमौष्ण्यनिमित्तम्॥ ५३॥
75976
75977 त्वद्वशादियमात्मीया वाचा संप्रविलीयते।
75978 दीपवत्पुनरन्यत्र समुदेति कुतोऽपि सा॥ ५४॥
75979
75980 वाचा वाणी। आपं चैव हलन्तानाम् इति भागुरिमतेन टाप्।
75981 त्वद्वशात्त्वयोपसंहारात्संप्रविलीयते उपशाम्यति मरणमूर्च्छास्वप्नेषु।
75982 अन्यत्र देहान्तरेषु॥ ५४॥
75983
75984 त्वयि संसारवर्तिन्यः पदार्थावलयस्तथा।
75985 कटकाङ्गदकेयूरयुक्तयः कनके यथा॥ ५५॥
75986
75987 पदार्थावलयः समुद्यन्तीति विपरिणामेनानुषज्यते॥ ५५॥
75988
75989 भवानयमयं चाहंत्वंशब्दैरेवमादिभिः।
75990 स्वयमेवात्मनात्मानं लीलार्थं स्तौषि वक्षि च॥ ५६॥
75991
75992 त्वयैव स्वात्मनि मदादिशब्दैर्व्यवहारः क्रियते न त्वत्तोऽन्योऽस्तीत्याह -
75993 भवानिति। स्तौषि गुणैः। वक्षि अन्यत्॥ ५६॥
75994
75995 मन्दानिलविनुन्नोऽब्दो गजाश्वनरदृष्टिभिः।
75996 यथा संलक्ष्यते व्योम्नि तथा त्वं भूतदृष्टिभिः॥ ५७॥
75997
75998 अब्दो मेघः॥ ५७॥
75999
76000 यथा हयगजाकारैर्ज्वाला लसति वह्निषु।
76001 तथैवाव्यतिरिक्तैस्त्वं दृश्यसे भुवि सृष्टिषु॥ ५८॥
76002
76003 प्रत्येकं ज्वलत्सु काष्ठेषु कासांचिज्ज्वालानां हयाद्याकारतापि
76004 कदाचिद्दृश्यते॥ ५८॥
76005
76006 त्वं ब्रह्माण्डकमुक्तानामच्छिन्नस्तन्तुराततः।
76007 क्षेत्रं त्वं भूतसस्यानां चिद्रसायनसेवितम्॥ ५९॥
76008
76009 ब्रह्माण्डलक्षणानां मुक्तानां मुक्ताफलानाम्। जलतेज##-
76010
76011 असत्तदनभिव्यक्तं पदार्थानां प्रकाश्यते।
76012 त्वया तत्त्वं यथा पक्त्या मांसानां स्वादवेदनम्॥ ६०॥
76013
76014 क्षेत्रत्वमुपपादयति - त्वयेति। त्वया अनभिव्यक्तमत##-
76015 स्वरूपं सर्गेण प्रकाश्यते। यथा पक्त्या पाकेन मांसानां
76016 स्वादवेदनमास्वादनार्हा स्वादुता प्रकाश्यते तद्वत्॥ ६०॥
76017
76018 विद्यमानापि वस्तुश्रीर्न स्थिता त्वयि न स्थिते।
76019 वनितारूपलावण्यसत्तेव गतचक्षुषः॥ ६१॥
76020
76021 एवं चित्प्रकाशानाकलितं सदप्यसत्प्रायमेवेत्याह - विद्यमानेति।
76022 वनितासंबन्धिनी रूपलावण्यसत्तेव॥ ६१॥
76023
76024 सदपीह न सत्तयै वस्तु नावर्जितं त्वया।

76025 तृप्तये न स्वलावण्यं मुकुरात्प्रतिबिम्बितम् ॥ ६२ ॥
76026
76027 अनावर्जितं अर्थक्रियाशक्त्या अननुगृहीतं सत्प्रतीतमपि न सत्तायै
76028 अर्थक्रियायै समर्थमित्यर्थः । मुकुराद्दर्पणान्निमित्तात्प्रतिबिम्बितं
76029 स्वलावण्यं स्वमुखसौन्दर्यं कान्तानां
76030 चुम्बनाधरास्वादनाद्यर्थक्रियाप्रयुक्ततृप्तये कामोपशमाय
76031 नालमित्यर्थः ॥ ६२ ॥
76032
76033 लुठति त्वां विना देहः काष्ठलोष्टसमः क्षितौ ।
76034 सन्नप्यसन्नगोच्छ्रायः श्यामास्विव रविं विना ॥ ६३ ॥
76035
76036 नगस्य गिरेर्वृक्षस्य चोच्छ्राय औन्नत्यं सन्
76037 विद्यमानोऽप्यभानादसन्नसत्प्रायः । श्यामासु तमिस्रासु ॥ ६३ ॥
76038
76039 सुखदुःखक्रमः प्राप्य भवन्तं परिनश्यति ।
76040 प्राकाश्यमासाद्य यथा तमस्तेजोऽथवा हिमम् ॥ ६४ ॥
76041
76042 प्राप्य साक्षादनुभूय । प्राकाश्यं सूर्यप्रकाशम् । तेजो दीपनक्षत्रादिप्रभा
76043 ॥ ६४ ॥
76044
76045 त्वदालोकनयैवैते स्थितिं यान्ति सुखादयः ।
76046 सूर्यालोकनया प्रातर्वर्णाः शुक्लादयो यथा ॥ ६५ ॥
76047
76048 यतस्त्वदालोकनयैव लब्धात्मानस्ते सुखादयः अतश्चरमसाक्षात्कारेद्धस्य
76049 ते तव संबन्धक्षण एव विनश्यन्ति परटु त्वया दृष्टा एव
76050 व्रजन्त्यपगच्छन्ति नोपायान्तरेणेत्यर्थः ॥ ६५ ॥
76051
76052 लब्धात्मानो विनश्यन्ति संबन्धक्षण एव ते ।
76053 ते तमांसीव दीपस्य दृष्टा एव व्रजन्त्यलम् ॥ ६६ ॥
76054
76055 तमस्ता तमसो दीपासत्तायां स्फुटतां गता ।
76056 दीपसंबन्धसमये सा चोत्पद्य विनश्यति ॥ ६७ ॥
76057
76058 दीपस्यासत्तायामविद्यमानतायां स्फुटतां गता तमसस्तमस्ता
76059 दीपालोकसंबन्धसमये सैवोत्पद्य स्वधर्मिणो वियुज्य विनश्यति तद्धर्मी तु
76060 सन्मात्रस्वभावो न नश्यतीत्यर्थः । एवार्थे चकारः ॥ ६७ ॥
76061
76062 तदेवं सुखदुःखश्रीर्दृष्ट्वैव त्वामनामयम् ।
76063 जायते जातमात्रैवं सर्वनाशेन नश्यति ॥ ६८ ॥
76064
76065 दृष्टान्तोक्तं दार्ष्टान्तिके योजयति - तदेवमिति । सर्वनाशेनेति ।
76066 बीजभावेन सहेत्यर्थः ॥ ६८ ॥
76067
76068 भङ्गुरत्वादिह स्थातुं कालं नाणुमपि क्षमा ।
76069 निमेषलक्षभागाख्या तन्वी कालकला यथा ॥ ६९ ॥
76070
76071 सुखदुःखश्रीर्विषयापगमे स्वरसभङ्गुरत्वादिह
76072 नित्यनिरतिशयानन्दप्रकाशात्मनि अणुमपि कालं क्षणमपि स्थातुं न क्षमा
76073 । यथा निमेषकालस्य लक्षतमभागत्वेन प्रसिद्धा तन्वी अतिसूक्ष्मा कालकला
76074 स्वत एव नश्यति तद्वदित्यर्थः ॥ ६९ ॥
76075
76076 गान्धर्वी नगरी तन्वी सुखदुःखादिभावना ।

76077 स्फुरति त्वत्प्रसादेन त्वयि दृष्टे विलीयते ॥ ७० ॥
76078
76079 एवमतिसूक्ष्मकालत्वाल्लक्षयितुमशक्या गान्धर्वनगरीव मिथ्याभूतापि
76080 सुखदुःखादिभावना अज्ञातत्वत्प्रसादेन स्थिरेव सत्येव स्फुरति त्वयि दृष्टे
76081 सति विलीयते नश्यतीत्यर्थः ॥ ७० ॥
76082
76083 त्वदालोकेक्षणोद्भूता त्वदालोकेक्षणक्षया ।
76084 मृतेव जाता जातेव मृता केनोपलक्ष्यते ॥ ७१ ॥
76085
76086 अज्ञातत्वदालोकलक्षणेनेक्षणेन दुष्टचक्षुषोद्भूता ।
76087 सुज्ञातत्वदालोकेक्षणक्षया । एवंभूतेयं मृता स्वप्ने पुनर्जातेव
76088 स्वप्नजाता जागरे पुनर्मृतेवेत्यर्थः ॥ ७१ ॥
76089
76090 क्षणमप्यस्थिरं वस्तु कथं कार्यकरं भवेत् ।
76091 तरङ्गैरुत्पलाकारैर्माला कथमवेक्ष्यते ॥ ७२ ॥
76092
76093 मिथ्यावस्तूनां क्षणस्थायित्वस्यापि
76094 दुर्घटत्वादर्थक्रियाकारित्वमत्याश्चर्यमित्याह - क्षणमपीति ।
76095 उत्पलाकारैरुत्पलबुद्ध्या कल्पिताकारैः ॥ ७२ ॥
76096
76097 यदा वा जातनिर्नष्टं क्रियां वस्तु करिष्यते ।
76098 तदा रमेत लोकोऽयं मालां कृत्वा तडिद्गणैः ॥ ७३ ॥
76099
76100 ननु सौगतदर्शनवदत्रापि क्षणिकैरर्थक्रिया किं न स्यात्तत्राह - यदा
76101 वेति । न प्रामाणिकी सौगतैरप्यर्थक्रिया साधयितुं शक्येति भावः ॥ ७३ ॥
76102
76103 इमां सुखादिकां लक्ष्मीं विवेकिजनचेतसि ।
76104 स्थितः सन्नेव गृह्णासि न जहासि समस्थितिम् ॥ ७४ ॥
76105
76106 इमामुक्तरीत्या दुर्घटामपि सुखदुःखादिकां लक्ष्मीं
76107 तद्दुर्घटताभिज्ञानां विवेकिजनानां चेतसि स्थितः सन् गृह्णास्येव ।
76108 अविवेकिभ्यो विवेकिषु यो विशेषस्तमाह - न जहासीति ॥ ७४ ॥
76109
76110 अविवेकिषु योऽसि त्वं सहजात्मन्यदृच्छया ।
76111 तद्रूपकथनेनालं ममानल्पपदास्पद ॥ ७५ ॥
76112
76113 अविवेकिषु तर्हि कीदृशोऽहमिति प्रश्ने तु नोत्तरमस्ति
76114 अविवेकिकल्पनानामानन्त्यादनियतत्वाच्चेत्याह - अविवेकिष्विति । यदृच्छया
76115 आकस्मिकनानावासनोद्बोधेन निमित्तेन मम वाणीति शेषः । नालं न समर्था
76116 हे अनल्पानामनन्तानां पदानां रूपभेदानां नाम्नां च आस्पद
76117 इत्यसामर्थ्योपपादकं संबोधनम् ॥ ७५ ॥
76118
76119 निरीहेण निरंशेन निरहंकृतिना त्वया ।
76120 सता वाप्यसता वापि कर्तृत्वमुररीकृतम् ॥ ७६ ॥
76121
76122 अनल्पपदास्पदत्वे च कर्तृत्वाध्यासो मूलमित्याशयेनाह - निरीहेणेति ।
76123 सता मूर्तस्थूअल्देहोपाधिना । असता अमूर्तसूक्ष्मदेहोपाधिना । वाशब्दः
76124 स्वप्ने सूक्ष्मस्य स्वातन्त्र्यद्योतनार्थः । अपिशब्दो जागरे देहद्वयसमुच्चयेन
76125 कर्तृत्वद्योतनार्थः ॥ ७६ ॥
76126
76127 जय प्रोड्डामराकार जय शान्तिपरायण ।
76128 जय सर्वागमातीत जय सर्वागमास्पद ॥ ७७ ॥

इदानीं विवेक्यविवेकिप्रसिद्धरूपद्वयेनापि स्तौति - जयेति द्वाभ्याम्।
प्रोड्डामरो ब्रह्माण्डाद्यतिविस्तृत आकारो यस्य। आगमग्रहणं
सर्वप्रमाणोपलक्षणम्। सर्वागमास्पद सर्वप्रमाणवेद्य॥ ७७॥

जय जात जयाजात जय क्षत जयाक्षत।
जय भाव जयाभाव जय जेय जयाजय॥ ७८॥

जेय आविद्यकरूपेण जेतुं योज्य। स्वाभाविकेन त्वजय अजय्य॥ ७८॥

उल्लसाम्युपशाम्यामि तिष्ठाम्यधिगतोऽस्मि च।
जयी जयाय जीवामि नमो मह्यं नमोऽस्तु ते॥ ७९॥

अत एवाहमाविद्यकरूपजयवत्त्वाज्जयी। प्रारब्धशेषस्यापि जयाय जीवामि॥ ७९॥

त्वयि स्थिते मयि विगतामयात्मनि
स्वसंस्थितौ व्यपगतरागरञ्जने।
क्व बन्धनं क्व च विपदः क्व संपदो
भवाभवौ क्व शममुपैमि शाश्वतम्॥ ८०॥

त्वत्स्वरूपेणावस्थितौ मम सर्वानर्थनिराससिद्धिः संपन्नेत्युपसंहरति ##-
भवाभवौ जन्ममरणे क्व। अतः शाश्वतं शमं सुखविश्रान्तिमुपैमि
प्राप्नोमीत्यर्थः॥ ८०॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे०
मोक्षोपायेषूपशमप्रकरणे आत्मस्तवनं नाम षट्त्रिंशः सर्गः॥
३६॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे आत्मस्तवनं
नाम षट्त्रिंशः सर्गः॥ ३६॥

सप्तत्रिंशः सर्गः ३७

श्रीवसिष्ठ उवाच।

इति संचिन्तयन्नेव प्रह्लादः परवीरहा।
निर्विकल्पपरानन्दसमाधिं समुपाययौ॥ १॥

इह भूयः समाधिस्थे प्रह्लादे दानवं पुरम्।
अनायकं दस्युहतं दुर्दशापन्नमीर्यते॥ १॥

इति वर्णितप्रकारमात्मानं संचिन्तयन्॥ १॥

निर्विकल्पसमाधिस्थश्चित्रार्पित इवाचलः।
शैलादिव समुत्कीर्णो बभौ स्वपदमास्थितः॥ २॥

स्वपदं स्वरूपसाम्राज्यम्॥ २॥

तथानुतिष्ठतस्तस्य कालो बहुतरो ययौ।
स्वगृहे भुवनस्थस्य मेरोरिव सुरद्विषः॥ ३॥

76181 स्वगृहे तथा समाधौ तिष्ठतस्तस्य सुरद्विषः प्रह्लादस्य
76182 भुवनमध्यस्थरूपमेरोरिव बहुतरः कालो ययौ ॥ ३ ॥
76183
76184 बोधितोऽप्यसुराधीशैर्नाबुध्यत महामतिः।
76185 अकाले बहुसेकोऽपि बीजकोशादिवाङ्कुरः ॥ ४ ॥
76186
76187 बीजकोशाद्बीजपुटात् ॥ ४ ॥
76188
76189 एवं वर्षसहस्राणि पीनात्माऽतिष्ठदेकदृक् ।
76190 शान्त एवासुरपुरे मार्तण्ड इव चोपले ॥ ५ ॥
76191
76192 पीनं प्रवृद्धतमं ब्रह्म तदात्मा। पीनांस इति पाठे स्पष्टम्। एकदृक्
76193 बाह्यदृक्। शून्य इति यावत् उपले उत्कीर्णो मार्तण्डः सूर्य इव। निश्चल इति यावत्
76194 ॥ ५ ॥
76195
76196 परानन्ददशैकान्तपरिणामितया तया।
76197 निरानन्दं पराभासमिवाभासपदं गतः ॥ ६ ॥
76198
76199 तया परानन्दो भूमाख्यस्तद्दशायामेकान्तमेकरसं परिणामी
76200 परिणतस्तत्तया निरानन्दमत्यन्तासत्प्राय आनन्दो यस्मिंस्तथाविध परः
76201 परमात्मा न भासते यस्मिंस्तथाविधं मरणमिव प्राप्तो
76202 देहमात्रावशेषमाभासपदं द्रष्टृजनप्रतीतियोग्यत्वं गतः ॥ ६ ॥
76203
76204 एतावताथ कालेन तद्रसातलमण्डलम् ।
76205 बभूवाराजकं तीक्ष्णं मात्स्यन्यायकदर्थितम् ॥ ७ ॥
76206
76207 मात्स्यन्यायो बलवद्भिः स्वजातीयैरन्यैश्च दुर्बलानां निष्कारणं
76208 वधादिस्तेन कदर्थितं पीडितम् ॥ ७ ॥
76209
76210 हिरण्यकशिपौ क्षीणे समाधौ तत्सुते स्थिते।
76211 न बभूवापरः कश्चिद्राजा दनुसुतालये ॥ ८ ॥
76212
76213 तत्कुतस्तत्राह - हिरण्यकशिपाविति। दनुसुतालये दैत्यपुरे ॥ ८ ॥
76214
76215 असुरेशार्थिनां तेषां दानवानां समाधितः।
76216 परेणापि प्रयत्नेन प्रह्लादो न व्यबुध्यत ॥ ९ ॥
76217
76218 दानवानां परेणापि प्रयत्नेन प्रह्लादः समाधितो नावबुध्यत ॥ ९ ॥
76219
76220 न प्रापुर्विकसद्रूपं पतिं तममरारयः।
76221 लसत्पत्रलताजालं निशि पद्ममिवालयः ॥ १० ॥
76222
76223 विकसद्रूपं प्रबोधवन्तमिति यावत्। न प्रापुर्नापश्यन् ॥ १० ॥
76224
76225 संविद्वादो न तस्यान्तरबोध्यत विचेतसः।
76226 भुवश्चेष्टाक्रम इव पौरुषो गतभास्वतः ॥ ११ ॥
76227
76228 संविद्वादः प्रबोधवार्तापि। विचेतसो गलितचित्तस्य। गतो भास्वान्सूर्यो यस्याः
76229 सकाशात्तथाविधाया भुवो भूमेरन्तः पौरुषः सुषुप्तपुरुषसंबन्धी
76230 स्नानदानप्रस्थानधावनादिचेष्टाक्रम इव ॥ ११ ॥
76231
76232 अथोद्विग्नेषु दैत्येषु गतेष्वभिमतां दिशम्।

76233 विचरत्सु यथाकाममराजनि पुरे पुरा ॥ १२ ॥
76234
76235 उद्विग्नेषु दुर्बलेषु दैत्येषु गतेषु बलवत्सु च दैत्येषु यथाकामं
76236 दस्युवद्यथेच्छं विचरत्सु व्यवहरत्सु सत्सु पातालं चिराय
76237 मात्स्यन्यायविपर्यस्तमभूदिति परेणान्वयः ॥ १२ ॥
76238
76239 चिराय पातालमभूदभूपालतया तया ।
76240 मात्स्यन्यायविपर्यस्तमस्तंगतगुणक्रमम् ॥ १३ ॥
76241
76242 बलिमुक्ताबलपुरं [भुक्ताबल इति पाठोऽपेक्षितः]
76243 मर्यादाक्रमवर्जितम् ।
76244 सर्वार्ताशेषवनितं परस्परहृताम्बरम् ॥ १४ ॥
76245
76246 मात्स्यन्यायमेव तत्रोवपादयति - बलीत्यादिना ।
76247 बलिभिर्बलवद्भिर्मुक्तान्यपहृतान्यबलानां पुराणि यत्र । सर्वेभ्य आर्ताः
76248 पीडिता अशेषा वनिताः स्त्रियो यत्र ॥ १४ ॥
76249
76250 प्रलापाक्रन्दपुरुषं विसंस्थानपुरान्तरम् ।
76251 लुठदुद्यानगरं व्यर्थानर्थकदर्थितम् ॥ १५ ॥
76252
76253 विसंस्थानं भग्नसंनिवेशम् । उद्याननगरपदाभ्यां तत्स्था वृक्षा
76254 जनाश्च लक्ष्यन्ते ॥ १५ ॥
76255
76256 चिन्तापरासुरगणं निरन्नफलबान्धवम् ।
76257 अकाण्डोत्पातविवशं ध्वस्ताशामुखमण्डलम् ॥ १६ ॥
76258
76259 ध्वस्तानि रेणुव्याप्तान्याशानां दिशां मुखमण्डलानि यत्र ॥ १६ ॥
76260
76261 सुरार्भकपराभूतं भूतैराक्रान्तमन्त्यजैः ।
76262 भूतरिक्तमलक्ष्मीकमुच्छिन्नप्रायकोटरम् ॥ १७ ॥
76263
76264 सुराणामर्भकैरपि पराभूतं तिरस्कृतम् ।
76265 अन्त्यजैस्तामसैर्भूतैश्चण्डालश्वशृगालरक्षःपिशाचादिभिः ॥ १७ ॥
76266
76267 अनियतवनितार्थमन्त्रयुद्धं
76268 हृतधनदारविरावितं समन्तात् ।
76269 कलियुगसम्योद्भटोत्कटाभं
76270 तदसुरमण्डलमाकुलं बभूव ॥ १८ ॥
76271
76272 न नियतानि नियमवन्ति वनिता अर्था धनानि मन्त्राः सौहार्दसंकेता युद्धानि
76273 तन्निमित्तवैराणि च यस्य । कलियुगसमये उद्भटाः परस्वहरणशूरा ये
76274 उत्कटाः क्रूरा दस्यवस्तदाभम् । अत एवाकुलं सर्वतो भयोद्विग्नं बभूव ॥
76275 १८ ॥
76276
76277 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे०
76278 मोक्षोपायेषूपशमप्रकरणे असुरमण्डलव्याकुलीभवनं नाम
76279 सप्तत्रिंशः सर्गः ॥ ३७ ॥
76280
76281 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
76282 असुरमण्डलव्याकुलीभवनं नाम सप्तत्रिंशः सर्गः ॥ ३७ ॥
76283
76284

76285 अष्टत्रिंशः सर्गः ३८
76286
76287 श्रीवसिष्ठ उवाच।
76288
76289 अथाखिलजगज्जालक्रमपालनदेवनः।
76290 क्षीरोदनगरे शेषशय्यासनगतो हरिः॥ १॥
76291
76292 जगद्व्यवस्थासिद्ध्यर्थं हरेश्चिन्तोपवर्ण्यते।
76293 इह दैत्यकुलं त्रातुं प्रह्लादस्य प्रबोधने॥ १॥
76294
76295 अखिलानां जगज्जालसंबन्धिनां क्रमाणां नियतीनां पालनमेव देवनं
76296 क्रीडनं यस्य॥ १॥
76297
76298 प्रावृण्निद्राव्युपरमे देवार्थमरिसूदनः।
76299 धिया विलोकयामास कदाचिज्जागतीं गतिम्॥ २॥
76300
76301 प्रावृण्निद्राव्यपगमे। कार्तिकान्ते इति यावत्। देवानामर्थं प्रयोजनं
76302 साधयितुमिति शेषः। अनेन देवैः काले स्तुत्या प्रबोधित इति गम्यते। जानतीं
76303 त्रैलोक्यसंबन्धिनीं गति तात्कालिकस्थितिम्॥ २॥
76304
76305 त्रिविष्टपं स्वमनसा पार्थिवं चावलोक्य सः।
76306 आचारमाजगामाशु पातालमरिपालितम्॥ ३॥
76307
76308 विलोकनक्रममेव विविच्याह - त्रिविष्टपमित्यादिना। पार्थिवं
76309 भूलोकसंबन्धिनमाचारं जनानां शुभाशुभाचरणम्। मनसा
76310 पातालमाजगाम पातालस्थितिं पर्यालोचितवानिति यावत्॥ ३॥
76311
76312 तत्र स्थिरसमाधाने स्थिते प्रह्लाददानवे।
76313 दृष्ट्वा संपदमिन्द्रस्य पुरे प्रौढिमुपागताम्॥ ४॥
76314
76315 तत्र पाताले प्रह्लाददानवे स्थिरे समाधाने समाधौ स्थिते सति इन्द्रस्य पुरे
76316 स्वर्गे प्रौढिमभिवृद्धिमुपागतां संपदं दृष्ट्वा पूर्वं
76317 क्षीरोदार्णवशायिनः पश्चात्प्रबुध्य व्यालतल्पतलस्थस्य तत्रापि
76318 पद्मासनबन्धेन स्थितस्य शङ्खचक्रगदापाणेर्विष्णोर्मनः
76319 स्वकल्पितेनातिभास्वता त्रैलोक्याब्जस्य महता अलिना भ्रमरभूतेन शरीरेण
76320 इदं वक्ष्यमाणप्रकारं कर्तव्यं संचिन्तयामासेति त्रयाणामन्वयः॥ ४॥
76321
76322 व्यालतल्पतलस्थस्य क्षीरोदार्णवशायिनः।
76323 शङ्खचक्रगदापाणेर्देहस्यान्तरचारिणः॥ ५॥
76324
76325 पद्मासनस्थस्य मनः शरीरेणातिभास्वता।
76326 इदं संचिन्तयामास त्रैलोक्याब्जमहालिना॥ ६॥
76327
76328 प्रह्लादे पदविश्रान्ते पाताले गतनायके।
76329 कष्टं सृष्टिरियं प्रायो निर्दैत्यत्वमुपागता॥ ७॥
76330
76331 पदं समाधिसाम्राज्यपदं तत्र विश्रान्ते॥ ७॥
76332
76333 दैत्याभावे सुरश्रेणी निर्जिगीषुपदं गता।
76334 शममेष्यत्यदृष्टाब्दपटलेषु सरिद्यथा॥ ८॥
76335
76336 शममरागद्वेषताम्। न दृष्टान्यब्दपटलानि येषु तथाविधेषु

76337 अनावृष्टिकालेषु ॥ ८ ॥
76338
76339 मोक्षाख्यं निर्गतद्वन्द्वं ततो यास्यति तत्पदम् ।
76340 क्षीणाभिमानविरसा लतेव प्रविशुष्कताम् ॥ ९ ॥
76341
76342 ततः शमान्निर्गतद्वन्द्वं गतशीतोष्णादिद्वन्द्वोपप्लवमद्वितीयमिति वा ।
76343 विरसा स्वर्गसुखाद्विरक्ता जलसेकशून्या च ॥ ९ ॥
76344
76345 देवौघे शान्तिमायाते भुवि यज्ञतपःक्रिया ।
76346 चिदेवत्वफलाः सर्वाः शममेष्यन्त्यसंशयम् ॥ १० ॥
76347
76348 द्वेष्याभावात्स्वर्गसुखे दुर्लभत्वादर्शनादुपेक्षापत्तेः स्वतः
76349 सात्त्विकत्वाच्च देवौघे शान्तिमायाते सति । मुक्तेश्च बिभ्यतो देवा मोहेनापि
76350 दधुर्नरान् । तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विदुयुः । तस्मादेतेऽसुरा
76351 विघ्नमाचरन्ति शपन्ति च । प्रमादिनो बहिश्चित्ताः पिशुनाः कलहोत्सुकाः ।
76352 संन्यासिनोऽपि दृश्यन्ते देवसंदूषिताशयाः ॥
76353 इत्यादिश्रुतिस्मृतिवार्तिकादिप्रसिद्धदेवसंदूषिताशयत्वासिद्धेर्मनुष्याणाम्
76354 अपि शमादिप्रसङ्गे भुवि यज्ञतपःक्रिया अदेवत्वफलाः सत्यः
76355 शममुत्सादमेष्यन्तीत्यर्थः ॥ १० ॥
76356
76357 क्रियास्वथोपशान्तासु भूर्लोकोऽस्तमुपैष्यति ।
76358 असंसारप्रसङ्गोऽथ तस्य नाशे भविष्यति ॥ ११ ॥
76359
76360 अस्तु क्रियोत्सादः का क्षतिस्तत्राह - क्रियास्विति । भूर्लोकग्रहणं
76361 कर्मभूमिपरम् । अस्तं वैयर्थ्यं तस्य नाशे वैयर्थ्ये
76362 कर्माधीनसंसारस्योच्छेदप्रसङ्ग इत्यर्थः ॥ ११ ॥
76363
76364 आकल्पान्तं त्रिभुवनं यदिदं कल्पितं मया ।
76365 नाशमेष्यत्यकालेन तापे हिमकणो यथा ॥ १२ ॥
76366
76367 अस्त्वेवं किं ततस्ते क्षतं तत्राह - आकल्पान्तमिति ॥ १२ ॥
76368
76369 किमेवमस्मिन्नाभोगे विलीय क्षयमागते ।
76370 कृतं मयेह भवति स्वलीलाक्षयकारिणा ॥ १३ ॥
76371
76372 अस्मिन् आभोगे जगत्संस्थाने विलीय क्षयमागते सति स्वलीलायाः क्षयकारिणा
76373 मया किमुचितं कृतं भवति न किंचिदित्यर्थः ॥ १३ ॥
76374
76375 ततोऽहमपि शून्येऽस्मिन्नष्टचन्द्रार्कतारके ।
76376 वपुःप्रशान्तिमाधाय स्थितिमेष्यामि तत्पदे ॥ १४ ॥
76377
76378 ततः स्वलीलाक्षयादहमपि लीलार्थस्य वपुषः प्रशममुपसंहारमाधाय
76379 संपाद्य अपुनःसंसारोद्भवाय तस्मिन्पूर्णात्मपदे स्थितिमेष्यामि
76380 प्राप्स्यामि । संभावनाधिकेऽपि भविष्यति लडेव ॥ १४ ॥
76381
76382 अकाण्ड एवमेवं हि जगत्युपशमं गते ।
76383 नेह श्रेयो न पश्यामि मन्ये जीवन्तु दानवाः ॥ १५ ॥
76384
76385 एवमेवमुक्तनानाप्रकारभेदेन अकाण्डे अनवसरे जगत्युपशमं गते सति इह
76386 देवमनुष्यादिजीववर्गे श्रेयो न पश्यामीति न अपितु पश्याम्येव ।
76387 वैराग्यात्प्रकृतौ लयः इति स्मृतेः प्रकृतिलये सुषुप्ताविव
76388 सर्वदुःखोपशमलक्षणश्रेयःसिद्धेः किंतु तमेवैतं वेदानुवचनेन

76389 ब्राह्मणा विविदिषन्ति अनेकजन्मसंसिद्धस्ततो याति परां गतिम्
76390 इत्यादिश्रुतिस्मृतिसिद्धानेकजन्मानुष्ठितनिष्कामकर्मसाध्यविविदिषातत्त्वसाक्
76391 षात्काराभावान्मूलाज्ञानावरणानिवृत्तेर्वीजे सति
76392 पुनरावृत्तिशङ्काप्रसक्तेश्च न निरतिशयानन्दावाप्तिलक्षणं श्रेयः
76393 कस्यचित्सिद्ध्यतीति मन्ये। अतः क्रमेण सर्वेषां तल्लाभार्थं दान वा
76394 जीवन्त्वित्यर्थः॥ १५॥
76395
76396 दैत्योद्योगेन विबुधास्ततो यज्ञतपःक्रियाः।
76397 तेन संसारसंस्थानं न संसारक्रमोऽन्यथा॥ १६॥
76398
76399 तमेव क्रमं पुनः संक्षिप्याह - दैत्येति। विबुधा देवाः। ततस्तेभ्यो
76400 विबुधेभ्यः॥ १६॥
76401
76402 तस्माद्रसातलं गत्वा यथावत्स्थापयाम्यहम्।
76403 स्वे क्रमे दानवाधीशमृतुः पुनरिव द्रुमम्॥ १७॥
76404
76405 यथावत् यथापूर्वम्। ऋतुर्वसन्तादिः॥ १७॥
76406
76407 विना प्रह्लादमथ चिदितरं दानवेश्वरम्।
76408 करोमि तदसौ मन्ये देवानासादयिष्यति॥ १८॥
76409
76410 प्रह्लादस्य त्वयं देहः पश्चिमः पावनो महान्।
76411 आकल्पमिह वस्तव्यं देहेनानेन तेन च॥ १९॥
76412
76413 एवं हि नियतिर्देवी निश्चिता पारमेश्वरी।
76414 प्रह्लादेन यथाकल्पं स्थातव्यमिह देहिना॥ २०॥
76415
76416 तस्मात्तमेव गत्वा तु दैत्येन्द्रं बोधयाम्यहम्।
76417 गर्जन्गिरिनदीसुप्तं मयूरमिव वारिदः॥ २१॥
76418
76419 गर्जन्वारिदः॥ २१॥
76420
76421 जीवन्मुक्तसमाधिस्थः करोत्वसुरनाथताम्।
76422 मणिर्मुक्तमनस्कारः प्रतिबिम्बक्रियामिव॥ २२॥
76423
76424 जीवन्मुक्तानां यः सदातनः असंसक्तिलक्षणः समाधिस्तत्स्थः।
76425 मुक्तमनस्कारः मनस्तच्चेष्टारहितः। प्रतिबिम्बक्रियां स्वस्मिन्
76426 सन्निहितवस्तुप्रतिबिम्बधारणम्॥ २२॥
76427
76428 नहि नश्यति सर्गोऽयमेवं सह सुरासुरैः।
76429 भविष्यति च तद्द्वन्द्वं तन्मे क्रीडा भविष्यति॥ २३॥
76430
76431 तत् प्रसिद्धम्। द्वन्द्वपदेन तत्क्रिया युद्धं लक्ष्यते॥ २३॥
76432
76433 सर्गक्षयोदयावेतौ सुसमौ मम यद्यपि।
76434 तथापीदं यथासंस्थं भवत्वन्येन किं मम॥ २४॥
76435
76436 सर्गस्य सृज्यस्य जगतः क्षयोदयौ। प्राक्तनसर्गसंस्थामनतिक्रम्येति
76437 यथासंस्थम्। पदार्थानतिवृत्तावव्ययीभावः॥ २४॥
76438
76439 भावाभावेषु यत्तुल्यं तन्नाशे तत्स्थितौ च वा।
76440 यः प्रयत्नस्त्वबुद्धित्वात्तद्योगगमनं भवेत्॥ २५॥

ननु योगनिद्रया स्वरूपसुखगमनं मुक्त्वा दैत्यपुरगमनं
तवानुचितमित्याशङ्क्याह - भावेति। अबुद्धित्वादभिनिवेशविरहाद्यो
गमनादिप्रयत्नस्तद्योगगमनमेव भवेन्नान्यतो गमनम्। यतो
यद्योगनिद्राप्राप्यं सुखं गमनयत्नादेर्भावाभावेषूत्पत्त्यनुत्पत्तिषु
तन्नाशे तत्स्थितौ च सममित्यर्थः॥ २५॥

तस्मात्प्रयामि पातालं बोधयाम्यसुरेश्वरम्।
स्थैर्यं यामि न संसारलीलां संपादयाम्यहम्॥ २६॥

गच्छन्नप्यहं स्थैर्यमचलत्वमेव यामि यतो नाज्ञवत्संसारलीलां
संपादयामीत्यर्थः॥ २६॥

असुरपुरमवाप्य प्रोद्धताचारघोरं
कमलमिव विवस्वान्दैत्यमुद्बोधयामः।
जगदिदमखिलं स्वस्थैर्यमभ्यानयामो
घनविधिरिव शैले चञ्चलं मेघजालम्॥ २७॥

प्रोद्धतानां निर्मर्यादानां दस्यूनामाचारेण घोरं
भयानकमसुरपुरमवाप्य गत्वा विवस्वान्सूर्यः कमलमिव दैत्यं
प्रह्लादं समाधेरुद्बोधयामः। तेन चेदमखिलं जगत्प्रागुक्तरीत्या
स्थैर्यमभ्यानयामः। यथा घनान्विधत्ते इति घनविधिर्वर्षर्तुश्चञ्चलं
मेघजालं शैले हिमवदादौ स्थैर्यमभ्यानयति तद्वदित्यर्थः॥ २७॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे०
मोक्षोपायेषुपशमप्रकरणे परमेश्वरवितर्को नामाष्टत्रिंशः
सर्गः॥ ३८॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
परमेश्वरवितर्को नामाष्टत्रिंशः सर्गः॥ ३८॥


एकोनचत्वारिंशः सर्गः ३९

श्रीवसिष्ठ उवाच।

इति संचिन्त्य सर्वात्मा क्षीरोदादात्मकात्पुरात्।
चचाल परिवारेण सह सानुरिवाचलः॥ १॥

हरिर्दैत्यपुरं गत्वा शङ्खनादप्रबोधितम्।
प्रह्लादमवदद्राज्यमाकल्पं पाल्यतामिति॥ १॥

क्षीरोदान्तर्गतश्वेतद्वीपान्तर्गतादात्मकादात्मीयात्पुरात्। परिवारेण सहेति
शेषः। सानुः प्रस्थस्तेन सहितः अचलो मन्दर इव। अचलः
परमार्थतश्चलनशून्य इति वा॥ १॥

क्षीरोदतलरन्ध्रेण तेनैव स्तम्भिताम्भसा।
प्रह्लादनगरं प्राप शक्रलोकमिवापरम्॥ २॥

धातृसंकल्पादेव स्तम्भितं पातालकुहराप्रवेशि अम्भो
यस्मिंस्तथाविधेन क्षीरोदस्य तलरन्ध्रेणाधश्छिद्रेण। शक्रलोकमिव
रम्यमित्यर्थः॥ २॥

76493
76494 हेममन्दिरकोशस्थं ददर्शात्रासुरं हरिः।
76495 अथ शैलगुहालीनं समाधिस्थमिवाब्जजम्॥ ३॥
76496
76497 अथ अत्र प्रह्लादनगरे। असुरं प्रह्लादम्। शैलस्य मेरोर्गुहायां लीनमब्जजं
76498 ब्रह्माणमिव॥ ३॥
76499
76500 तत्र ते तेजसा दैत्या वैष्णवेनावधूलिताः।
76501 दूरं ययुर्दिनेशांशुवित्रस्ता इव कौशिकाः॥ ४॥
76502
76503 अवधूलिताः धूलिवदवधूताः। कौशिका उलूकाः॥ ४॥
76504
76505 द्वित्रैः सहासुरैर्मुख्यैः परिवारयुतो हरिः।
76506 प्रविवेशासुरगृहं तारावानिव खं शशी॥ ५॥
76507
76508 वैनतेयासनस्थोऽसौ लक्ष्मीविधुतचामरः।
76509 स्वायुधादिपरीवारो देवर्षिमुनिवन्दितः॥ ६॥
76510
76511 महात्मन्संप्रबुध्यस्वेत्येवं विष्णुरुदाहरन्।
76512 पाञ्चजन्यं प्रदध्मौ च ध्वनयन्ककुभां गणम्॥ ७॥
76513
76514 ककुभां दिशाम्॥ ७॥
76515
76516 महता तेन शब्देन वैष्णवप्राणजन्मना।
76517 तुल्यकालपरिक्षुब्धकल्पाभ्रार्णवरंहसा॥ ८॥
76518
76519 प्राणो बलं तज्जन्मना। तुल्यकालपरिक्षुब्धानि प्रलयाभ्राणि प्रलयार्णवाश्च
76520 तद्रंहसा। रहःशब्देन तत्प्रभवो ध्वनिर्लक्ष्यते॥ ८॥
76521
76522 आसुरी जनता भूमौ पपातागतसंभ्रमा।
76523 मत्तलीलाभ्रनादेन राजहंसावली यथा॥ ९॥
76524
76525 आगतसंभ्रमा प्रोद्भूतभयमूर्च्छा॥ ९॥
76526
76527 जहर्ष जनितानन्दा वैष्णवी गतसंभ्रमा।
76528 जनता जलदध्वानफुल्लेव कुटजावली॥ १०॥
76529
76530 बभूव संप्रबुद्धात्मा दानवेशः शनैःशनैः।
76531 मेघावसर उत्फुल्लकदम्ब इव कानने॥ ११॥
76532
76533 दानवेशः प्रह्लादः॥ ११॥
76534
76535 ब्रह्मरन्ध्रकृतोत्थाना प्राणशक्तिरथासुरम्।
76536 शनैराक्रम्यामास गङ्गा सर्वमिवार्णवम्॥ १२॥
76537
76538 संप्रबोधक्रमं प्रपञ्चयति - ब्रह्मरन्ध्रेत्यादिना। आक्रमयामास
76539 आपूरयामास॥ १२॥
76540
76541 क्षणादाक्रमयामास प्राणश्रीः सर्वतोऽसुरम्।
76542 उदयानन्तरं सौरी प्रभेव भुवनान्तरम्॥ १३॥
76543
76544 प्राणेषु रन्ध्रनवके प्रवृत्तेष्वथ तस्य चित्।

76545 चेत्योन्मुखी बभूवान्तः प्राणदर्पणबिम्बिता ॥ १४ ॥
76546
76547 प्राणेषु इन्द्रियेषु। प्राणो लिङ्गदेहस्तल्लक्षणे दर्पणे बिम्बिता प्रतिफलिता ॥ १४ ॥
76548
76549 चेतनीयोन्मुखी चेत्यं चिन्मनस्तामुपाययौ।
76550 द्वित्वं मुकुरसंक्रान्ता मुखश्रीरिव राघव ॥ १५ ॥
76551
76552 चेतनीयविषयोन्मुखी चित् चेत्याकारसंस्कारोद्बोधाच्चेत्यमिव भूत्वा
76553 चिज्जडोभयरूपतालक्षणां मनस्तामुपाययौ प्राप ॥ १५ ॥
76554
76555 किंचिदङ्कुरिते चित्ते नेत्रे विकसनोन्मुखे।
76556 शनैर्बभूवतुस्तस्य प्रातर्नीले यथोत्पले ॥ १६ ॥
76557
76558 तस्य नेत्रे शनैर्विकसनोन्मुखे बभूवतुः ॥ १६ ॥
76559
76560 प्राणापानपरामृष्टानाडीविवरसंविदः।
76561 वातार्तस्येव पद्मस्य स्पन्दोऽस्य समजायत ॥ १७ ॥
76562
76563 प्राणापानाभ्यामन्तःप्रविष्टाभ्यां परामृष्टाया उद्बोधिताया
76564 आसमन्तान्नाडीविवरेषु संविदः संवेदनान्निमित्तात्। वातेनार्तस्य नुन्नस्य
76565 पद्मस्येव अस्य तद्देहस्य स्पन्द ईषच्चलनं समजायत ॥ १७ ॥
76566
76567 निमेषान्तरमात्रेण मनः पीवरतां ययौ।
76568 तस्मिन्प्राणवशात्पूर्णे तरङ्ग इव वारिणि ॥ १८ ॥
76569
76570 अथासौ विकसन्नेत्रमनःप्राणवपुर्बभौ।
76571 अर्धोदित इवादित्ये सरः स्फुरितपङ्कजम् ॥ १९ ॥
76572
76573 अस्मिन्नवसरे यावद्बुध्यस्वेत्यवदद्विभुः।
76574 प्रबुद्धस्तावदेषोऽभूद्बर्ही घनरवादिव ॥ २० ॥
76575
76576 बर्ही मयूरः। घनरवान्मेघशब्दात् ॥ २० ॥
76577
76578 प्रफुल्लनयनं जातमननं पीवरस्मृतिम्।
76579 उवाचैनं त्रिलोकेशः पुरा नाभ्यब्जजं यथा ॥ २१ ॥
76580
76581 जातमननं संजातप्रह्लादाहंभावप्रत्यभिज्ञम्। पीवरी सम्यगुपचिता
76582 पूर्वावस्थादिस्मृतियस्य तम् ॥ २१ ॥
76583
76584 साधो स्मर महालक्ष्मीमात्मीयां स्मर चाकृतिम्।
76585 अकाण्ड एव किं देहविरामः क्रियते त्वया ॥ २२ ॥
76586
76587 महतीं लक्ष्मीं दैत्यराज्यश्रियमात्मीयां स्वीयामाकृतिं देहाकारं च
76588 स्मर। त्वया देहविस्मरणेनाऽकाण्डेऽनवसर एव देहस्य विरामोऽवसानं किं
76589 किमर्थं क्रियते ॥ २२ ॥
76590
76591 हेयोपादेयसंकल्पविहीनस्य शरीरगैः।
76592 भावाभावैस्तवार्थः किमुत्तिष्ठोत्तिष्ठ संप्रति ॥ २३ ॥
76593
76594 ननु न ह वै सशरीरस्य प्रियाप्रिययोरपहतिरस्ति इति श्रुतेः सर्वजनानां
76595 तथानुभवाच्चानर्थहेतुर्देहस्मरणमिति चेत्तत्राह - हेयेति।
76596 हेयोपादेयसंकल्पत्यागे सत्यपि देहे प्रियाप्रियैर्भावाभावैस्तवार्थो नास्तीति

76597 नानर्थप्रसक्तिरित्यर्थः ॥ २३ ॥
76598
76599 मन्त(?)व्यमिह देहेन कल्पं यावदनेन ते।
76600 वयं हि नियतिं विद्मो यथाभूतामनिन्दिताम् ॥ २४ ॥
76601
76602 कियत्कालं तर्हि देहधारणं तत्राह - स्थातव्यमिति। नियतिं
76603 त्वदायुर्नियमम् ॥ २४ ॥
76604
76605 जीवन्मुक्तेन भवता राज्य एवेह तिष्ठता।
76606 क्षेपणीया गतोद्वेगमाकल्पान्तमियं तनुः ॥ २५ ॥
76607
76608 क्षेपणीया व्यवहारे प्रेरणीया ॥ २५ ॥
76609
76610 तन्वां कल्पान्तशीर्णायां स्वे महिम्नि त्वयानघ।
76611 वस्तव्यं स्फुटिते कुम्भे कुम्भाकाशेन खे यथा ॥ २६ ॥
76612
76613 कल्पान्ते तर्हि मया कथं स्थेयं तदाह - तन्वामिति। स्वे महिम्नि
76614 स्वात्मभूते निरतिशयमहत्त्वे। स्वे महाकाशे ॥ २६ ॥
76615
76616 कल्पान्तस्थायिनी शुद्धा दृष्टलोकपरावरा।
76617 इयं तव तनुर्जाता जीवन्मुक्तविलासिनी ॥ २७ ॥
76618
76619 नोदिता द्वादशादित्या न प्रलीनाः शिलोच्चयाः।
76620 न जगज्ज्वलितं साधो तनुं त्यजसि किं मुधा ॥ २८ ॥
76621
76622 तर्हि किं कल्पान्तः संनिहितो नेत्याह - नोदिता इत्यादिना ॥ २८ ॥
76623
76624 वायुर्वहति नोन्मत्तस्त्रलोकीभस्मधूसरः।
76625 लोलामरकपालाङ्कस्तनुं त्यजसि किं मुधा ॥ २९ ॥
76626
76627 लोलान्यमराणां शिरःकपालान्यङ्कश्चिह्नं यस्य तथाविधः ॥ २९ ॥
76628
76629 अशोक इव मञ्जर्यः पुष्करावर्तविद्युतः।
76630 न स्फुरन्ति जगत्कोशे तनुं त्यजसि किं मुधा ॥ ३० ॥
76631
76632 पुष्करावर्ताख्येषु संवर्तमेघेषु विद्युतस्तडितो न स्फुरन्ति। इदानीमिति
76633 सर्वत्रानुषङ्गः ॥ ३० ॥
76634
76635 धरासाररणच्छैलाः प्रज्वलज्ज्वलनोज्ज्वलाः।
76636 ककुभो न विशीर्यन्ते तनुं त्यजसि किं मुधा ॥ ३१ ॥
76637
76638 धराया भूमेर्दह्यमानाया आसमन्तात्सरणं सारः प्रकम्पस्तेन
76639 विदीर्यमाणत्वाद्रणन्तः शैला यासु। ककुभो दिशः। अमूर्तानां
76640 विशरणायोगाद्दिगन्तस्था ब्रह्माण्डभित्तयो गृह्यन्ते ॥ ३१ ॥
76641
76642 न ब्रह्मविष्णुरुद्राख्यत्रयीशेषमिदं स्थितम्।
76643 जगज्जरठजीमूतं तनुं त्यजसि किं मुधा ॥ ३२ ॥
76644
76645 इदं जगत् जरठाः प्रवृद्धा जीमूताः प्रलयमेघा यस्मिंस्तथाविधं सत्
76646 ब्रह्मविष्णुरुद्राख्यदेवत्रयीमात्रशेषं भूत्वा न स्थितम् ॥ ३२ ॥
76647
76648 न चेहाद्रिदलश्रेणिमात्रैकानुमितान्तराः।

76649 दिशो जर्जरतां यातास्तनु त्यजसि किं मुधा ॥ ३३ ॥
76650
76651 अद्रेर्लोकालोकाचलस्य भूपद्मदलप्रायैः शृङ्गैरनुमितमन्तरं भेदो
76652 यासां न सूर्योदयादिना तथाविधा दिशो ब्रह्माण्डभित्तयः ॥ ३३ ॥
76653
76654 स्फुटदद्रीन्द्रटंकाराः कराः सौरा भ्रमन्ति खे ।
76655 कल्पाभ्राणि न गर्जन्ति तनुं त्यजसि किं मुधा ॥ ३४ ॥
76656
76657 स्फुटतो दीर्यमाणस्याद्रीन्द्रस्य मेरोरिव टंकारा ध्वनयो येषां सौरा
76658 द्वादशादित्यसंबन्धिनः कराः किरणा न भ्रमन्तीति नञनुषज्जते ॥ ३४ ॥
76659
76660 अहं भूतावकीर्णासु सालोकासु खगध्वजः ।
76661 विहरामि दशाशासु मा देहमवधीरय ॥ ३५ ॥
76662
76663 भूतावकीर्णास्वण्डजादिचतुर्विधप्राणिव्याप्तासु । अहं विष्णुर्विहरामि । मा
76664 अवधीरय त्यज । तथा चेदानीं तव मरणं न शोभत इत्यर्थः ॥ ३५ ॥
76665
76666 इमे वयमिमे शैला भूतानीमान्ययं भवान् ।
76667 इदं जगदिदं व्योम मा देहमवधीरय ॥ ३६ ॥
76668
76669 पीवराज्ञानयोगेन यस्य पर्याकुलं मनः ।
76670 दुःखानि विनिकृन्तन्ति मरणं तस्य राजते ॥ ३७ ॥
76671
76672 कस्य तर्हि मरणमुचितं तमाह - पीवरेत्यादिना । यस्य मनः
76673 अज्ञानयोगेन दुःखानि विनिकृन्तन्ति तस्य मरणं राजते । अत्यन्तपीडितो जीवः
76674 स्थूलदेहं विमुञ्चति इति स्मृतिसिद्धमरणहेतूपपत्तेरित्यर्थः ॥ ३७ ॥
76675
76676 कृशोऽतिदुःखी मूढोऽहमेताश्चान्याश्च भावनाः ।
76677 मतिं यस्यावलुम्पन्ति मरणं तस्य राजते ॥ ३८ ॥
76678
76679 आशापाशनिबद्धोऽन्तरितश्चेतश्च नीयते ।
76680 यो विलोलमनोवृत्त्या मरणं तस्य राजते ॥ ३९ ॥
76681
76682 यस्य तृष्णाः प्रभञ्जन्ति हृदयं हृतभावनाः ।
76683 प्ररोहमिव गर्धेभ्यो मरणं तस्य राजते ॥ ४० ॥
76684
76685 हृतभावना अपहृतविवेकाङ्कुरास्तृष्णा यस्य हृदयं प्रभञ्जन्ति
76686 आमृद्नन्ति यथा महाफलं शाल्याद्यङ्कुरप्ररोहं गर्धेभ्यस्तदभिलाषि
76687 पश्वादिभ्यो मूढाः प्रभञ्जन्ति तद्वत् ॥ ४० ॥
76688
76689 चित्तवृत्तिलता यस्य तालोत्तालमनोवने ।
76690 फलिता सुखदुःखाभ्यां मरणं तस्य राजते ॥ ४१ ॥
76691
76692 तालवृक्षवदुत्ताले रागाद्युच्छ्रायवति मनोलक्षणे वने ॥ ४१ ॥
76693
76694 रोमराजीलताजालं यस्येमं देहदुर्द्रुमम् ।
76695 अनर्थौघो हरत्युच्चैर्मरणं तस्य राजते ॥ ४२ ॥
76696
76697 रोमराज्येव लताजालं शाखासमूहो यस्मिंस्तथाविधं देहलक्षणं
76698 दुर्द्रुमं विषवृक्षं कामाद्यनर्थलक्षण ओघश्चण्डमारुतप्रवाहो
76699 हरति ॥ ४२ ॥
76700

76701 यस्य स्वदेहविपिनमाधिव्याधिदवाग्नयः।
76702 दहन्ति लोलाङ्गलतं मरणं तस्य राजते॥ ४३॥
76703
76704 कामकोपात्मका यस्य स्फूर्जन्त्यजगरास्तनौ।
76705 अन्तःशुष्कद्रुमस्येव मरणं तस्य राजते॥ ४४॥
76706
76707 अन्तः कोटरान्तः॥ ४४॥
76708
76709 योऽयं देहपरित्यागस्तल्लोके मरणं स्मृतम्।
76710 न सता नासता तेन कारणं वेद्यवेदनम्॥ ४५॥
76711
76712 मरणस्वरूपपर्यालोचनेऽपि तत्त्वज्ञस्य तन्न संभवतीत्याह - योऽयमिति।
76713 स्मृतं प्रसिद्धम्। तच्च तत्त्वविदो न सता आत्मना संपादयितुं शक्यं
76714 नाप्यसता तेन देहेन संपादयितुं शक्यं सदात्मनो निष्क्रियतया
76715 त्यागक्रियायोगात्। असङ्गस्य देहसङ्गाप्रसिद्धेश्च असता स्वप्रित्यागस्य
76716 दूरनिरस्तत्वाच्च। ननु देहस्यासत्त्वे किं कारणं तदाह - कारणमिति।
76717 वेद्यस्य प्रमाणैरवश्यवेदनार्हस्य स्वात्मनो वेदनं ज्ञानमेव
76718 देहाद्यसत्त्वे कारणम्।
76719 देहादिसद्भावप्रत्ययस्याज्ञाननिबन्धनत्वादित्यर्थः॥ ४५॥
76720
76721 यस्य नोत्क्रामति मतिः स्वात्मतत्त्वावलोकनात्।
76722 यथार्थदर्शिनो ज्ञस्य जीवितं तस्य शोभते॥ ४६॥
76723
76724 कस्य तर्हि जीवितं शोभते तमाह - यस्येत्यादिना। तथाच न
76725 देहात्प्राणोत्क्रमणं किंत्वात्मतत्त्वान्मतेरुत्क्रमणमेव तच्च ज्ञस्य
76726 नास्त्येवेति सदैव तस्य जीवितं शोभते। अज्ञस्य तु मतिः सदैव
76727 स्वात्मतत्त्वादुत्क्रामतीत्यसौ नित्यमृतस्वरूप इति भावः॥ ४६॥
76728
76729 यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते।
76730 यः समः सर्वभावेषु जीवितं तस्य राजते॥ ४७॥
76731
76732 किंचैकदेहाभिमाने तत्त्यागो मरणं स्यात् यस्य तु स नास्ति यस्य
76733 बुद्धिस्तदीयप्रियाप्रियैर्न लिप्यते स सर्वेषु भावेषु देहेषु विषयेषु च समः
76734 साधारणात्मा तस्य मरणासंभवाज्जीवितमेव राजते इत्यर्थः।
76735 एवमग्रेऽप्यूह्यम्॥ ४७॥
76736
76737 योऽन्तःशीतलया बुद्ध्या रागद्वेषविमुक्तया।
76738 साक्षिवत्पश्यतीदं हि जीवितं तस्य राजते॥ ४८॥
76739
76740 येन सम्यक्परिज्ञाय हेयोपादेयमुज्झता।
76741 चित्तस्यान्तेऽर्पितं चित्तं जीवितं तस्य शोभते॥ ४९॥
76742
76743 सम्यगसारतया परिज्ञाय। चित्तस्यान्ते अवसानभूते साक्षिणि॥ ४९॥
76744
76745 अवस्तुसदृशे वस्तुन्यसक्तं कलनामले।
76746 येन लीनं कृतं चेतो जीवितं तस्य शोभते॥ ५०॥
76747
76748 अवस्तु शुक्तिरजतादि तत्सदृशे वस्तुनि वस्तुवद्भासमाने
76749 बाह्यार्थकलनात्मकमले असक्तं चेतो ब्रह्मण्येव लीनं घृतकाठिन्यमिव
76750 विलीनं कृतमित्यर्थः॥ ५०॥
76751
76752 सत्यां दृष्टिमवष्टभ्य लीलयेयं जगत्क्रिया।

76753 क्रियतेऽवासनं येन जीवितं तस्य राजते ॥ ५१ ॥
76754
76755 जगत्क्रिया जगतो व्यवहारः ॥ ५१ ॥
76756
76757 नान्तस्तुष्यति नोद्वेगमेति यो विहरन्नपि ।
76758 हेयोपादेयसंप्राप्तौ जीवितं तस्य शोभते ॥ ५२ ॥
76759
76760 हेयस्य दुःखहेतोः संप्राप्तौ नोद्वेगमेति । उपादेयस्य सुखसाधनस्य
76761 प्राप्तौ नान्तस्तुष्यति ॥ ५२ ॥
76762
76763 शुद्धपक्षस्य शुद्धस्य हंसौघः सरसो यथा ।
76764 यस्माद्गुणौघो निर्याति जीवितं तस्य शोभते ॥ ५३ ॥
76765
76766 शुद्धास्तत्त्वविद एव पक्षाः स्वीया यस्य स्वयं च शुद्धस्य । सरःपक्षे
76767 शुद्धः शुभ्रा हंसा बकादयः पक्षा यस्य । स्वतःशुद्धस्य निर्मलस्य
76768 पवित्रस्य च । गुणाः शान्तिक्षमामाधुर्यादयः शैत्यसौरभ्यादयश्च ॥ ५३ ॥
76769
76770 यस्मिन्श्रुतिपथं प्राप्ते दृष्टे स्मृतिमुपागते ।
76771 आनन्दं यान्ति भूतानि जीवितं तस्य शोभते ॥ ५४ ॥
76772
76773 श्रुती कर्णौ तत्पथम् ॥ ५४ ॥
76774
76775 यस्योदयेषु हृदयेन [हृदयेषु इति पाठः] जनाम्बुजानि
76776 जीवालिमन्ति सकलानि विलासवन्ति ।
76777 तस्यैव भाति परिजीवितमक्षयेन्दो-
76778 रापूर्णतेव दनुजेश्वर नेतरस्य ॥ ५५ ॥
76779
76780 यस्य उदयेषु संपत्सु उद्गमनेषु च जीवलक्षणभ्रमरवन्ति
76781 जनलक्षणान्यम्बुजानि कुमुदानि विलासवन्ति आनन्दितानि भवन्ति । अक्षयेन्दोः
76782 क्षयरोगनिर्मुक्तचन्द्रस्य आपूर्णतेव तस्यैव तत्त्वविदो जीवितं राजते
76783 नेतरस्याज्ञस्येत्यर्थः ॥ ५५ ॥
76784
76785 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० मोक्षो० उपशमप्रकरणे
76786 प्रह्लादनिर्वाणे नारायणवचनोन्यासो नामैकोनचत्वारिंशः सर्गः ॥ ३९
76787 ॥
76788
76789 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
76790 नारायणवचनोपन्यासो नामैकोनचत्वारिंशः सर्गः ॥ ३९ ॥
76791
76792
76793 चत्वारिंशः सर्गः ४०
76794
76795 श्रीभगवानुवाच ।
76796
76797 स्थैर्यं देहस्य दृष्टस्य जीवितं प्रोच्यते जनैः ।
76798 देहान्तरार्थं देहस्य संत्यागो मरणं स्मृतम् ॥ १ ॥
76799
76800 सदेहोऽपि विदेहोऽत्र कूटस्थोऽपि क्रियापरः ।
76801 यथा व्यवहरेज्ज्ञानी स क्रमो हरिणोच्यते ॥ १ ॥
76802
76803 जीवन्मुक्तस्यापि प्रह्लादस्य संनिधिमात्रेण
76804 राज्यपरिपालननिर्वाहोपायमुपदिदिक्षुर्भगवान्वासुदेवः सत्यपि देहे तस्य

76805 तत्संबन्धाभावात्प्रागुक्ते जीवितमरणे गौणे एव न मुख्ये इति वक्तुं
76806 जीवनमरणयोर्लोकप्रसिद्धं स्वरूपमाह - स्थैर्यमिति | देहान्तरार्थं
76807 पुनर्देहान्तरग्रहणाय पूर्वदेहस्य संत्याग उत्क्रम्य गमनं प्राणानां
76808 मरणं स्मृतम् | मृङ् प्राणत्यागे इति धात्वर्थप्रसिद्धेरित्यर्थः || १ ||
76809
76810 द्वाभ्यां चैवासि पक्षाभ्यामाभ्यां मुक्तो महामते |
76811 किं ते मरणमस्तीह किं वा जीवितमस्ति ते || २ ||
76812
76813 द्वाभ्यां देहस्थैर्यप्राणोत्क्रमणपक्षाभ्याम् | अशरीरं शरीरेषु न तस्य
76814 प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते इति श्रुतेरिति भावः || २ ||
76815
76816 निदर्शनार्थमेतत्तु मयोक्तमरिमर्दन |
76817 न त्वं जीवसि सर्वज्ञ म्रियसे न कदाचन || ३ ||
76818
76819 कथं तर्हि जीवितं तव शोभते मरणं न शोभते इति त्वयोक्तं तत्राह -
76820 निदर्शनार्थमिति | ज्ञानाज्ञानगुणदोषप्रपञ्चनार्थमित्यर्थः || ३ ||
76821
76822 देहसंस्थोऽप्यदेहत्वाददेहोऽसि विदेहदृक् |
76823 व्योमसंस्थोऽप्यसक्तत्वादव्योमेव हि मारुतः || ४ ||
76824
76825 अदेहत्वे विदेहदृक् विगतदेहदृष्टिरिति हेतुः | असक्तत्वादासङ्गविरहात् || ४ ||
76826
76827 स्पर्शसंबोधकारित्वाद्देह एवास्ति सुव्रत |
76828 उत्सेधारोधकत्वेन खमुत्सेधस्य कारणम् || ५ ||
76829
76830 देहसंस्थत्वं कथं ज्ञायते तत्राह - स्पर्शेति | देहे
76831 शीतोष्णादिस्पर्शसंवेदननिमित्तत्वादन्यत्र तददर्शनाद्देह एवास्ति भवानिति
76832 शेषः | त्वाचे [त्वचि इति क्वचित्] स्पर्शसंवेदने कथमसङ्गात्मा
76833 कारणमिति तत्र दृष्टान्तमाह -उत्सेधेति | यथा तरूत्सेधे
76834 अरोधकत्वात्खमुत्सेधकारणमित्युच्यते तद्वदित्यर्थः || ५ ||
76835
76836 प्रबुद्धो ज्ञातवस्तुत्वाद्देहः क्व शमिनामिह |
76837 इदं त्वेकं परिच्छिन्नं रूपमज्ञेषु दुःस्थितम् || ६ ||
76838
76839 अदेहत्वं तर्हि कथं तत्राह - प्रबुद्ध इति | त्वं ज्ञाततत्त्वत्वात्प्रबुद्धः
76840 प्रबोधे च सति शमिनां सर्वद्वैतोपशमवतां देहः क्व वर्तते | नहि
76841 स्वप्नोपशमे स्वाप्नदेहोऽस्ति | इदं त्वेकं परिच्छिन्नं
76842 देहरूपमज्ञेष्वप्रबोधवत्सु दुःस्थितमसंभाव्यमपि स्थितमित्यर्थः || ६ ||
76843
76844 सर्वदा सर्वमेवासि चित्प्रकाशः परैकधीः |
76845 को देहः कोऽप्यदेहस्ते यं गृह्णासि जहासि च || ७ ||
76846
76847 यद्यज्ञोऽपि देहे स्थित्वा देही तर्ह्यहमपि देहे स्पर्शविदनात्स्थितस्तद्वत्किं न
76848 स्यां तत्राह - सर्वदेति | प्रकाशकत्वेन स्थितिः सर्वदा सर्ववस्तुष्वपि तुल्येति
76849 सर्वमेव त्वमसि नाज्ञवद्देहमात्रमित्यर्थः | एवंच तव कः पदार्थो देहः
76850 स्याद्यमहंबुद्ध्या गृह्णासि गृह्णीयाः | अदेहोऽपि कः
76851 स्याद्यमनहंबुद्ध्या जहासि त्यजेरित्यर्थः || ७ ||
76852
76853 समुदेतु वसन्तो वा वातु वा प्रलयानिलः |
76854 भावाभावविहीनस्य किमभ्यागतमात्मनः || ८ ||
76855
76856 ननु यदुपचयात्स्वस्य हर्षोपचयो यन्नाशनिमित्तदर्शनाच्च विषादः स देह

76857 इतरस्त्वदेह इति भेदः किं न स्यादिति चेन्न। तत्त्वविदो
76858 हर्षविषादहेत्वसंभवादित्याह - समुदेत्वित्यादिना। भाव्यते प्रीत्या
76859 स्मर्यत इति भावः प्रियम्। न भाव्यते इत्यभावोऽप्रियं
76860 तदुभयविहीनस्येत्यर्थः॥ ८॥
76861
76862 प्रलुठत्स्वपि शैलेषु कल्पाग्निषु दहत्स्वपि।
76863 वहत्सूत्पातवातेषु स्वात्मन्येव हि तिष्ठति॥ ९॥
76864
76865 तिष्ठति तत्त्वज्ञ इति शेषः॥ ९॥
76866
76867 सर्वभूतानि तिष्ठन्तु सर्वमेव प्रयातु वा।
76868 नश्यन्तु वाथ वर्धन्तामात्मन्येवाभितिष्ठति॥ १०॥
76869
76870 क्षीयते न क्षयं प्राप्ते वर्धमाने न वर्धते।
76871 न स्पन्दते स्पन्दमाने देहेऽस्मिन्परमेश्वरः॥ ११॥
76872
76873 देहस्याहमहं देहीति क्षीणे चित्तविभ्रमे।
76874 त्यजामि न त्यजामीति किं मुधा कलनोदिता॥ १२॥
76875
76876 देहस्य संबन्धिन्यहमिति तादात्म्याध्यासलक्षणे देहीति
76877 तद्धर्मसंसर्गाध्यासलक्षणे च चित्तविभ्रमे क्षीणे सति मुधा निर्हेतुका
76878 निष्फला च त्यजामि न त्यजामीति कलना किमुदिता स्यात्। नैवोदेतीत्यर्थः॥ १२॥
76879
76880 इदं कृत्वा करोमीदमिदं त्यक्त्वेदमित्यलम्।
76881 इति तत्त्वविदां तात संकल्पाः संक्षयं गताः॥ १३॥
76882
76883 त्यक्त्वेदं त्यक्ष्यामीति शेषः॥ १३॥
76884
76885 प्रबुद्धाः सर्वकर्तारः करिष्यन्तीह किंचन।
76886 न तस्याकरणे नित्यमकर्तृत्वपदं गताः॥ १४॥
76887
76888 सर्वकर्तारोऽपि किंचन किंचिदपि न करिष्यन्तीति पूर्वार्धे नञोऽन्वयः। तस्य
76889 कदाप्यकरणे नित्यमेव ते अकर्तृत्वपदं गतास्तिष्ठन्तीत्यर्थः॥ १४॥
76890
76891 अकर्तृत्वादभोक्तृत्वमर्थादिव समागतम्।
76892 संगृहीतं किलानुप्तं केनेह भुवनत्रये॥ १५॥
76893
76894 तत्फलमाह - अकर्तृत्वादिति। अनुप्तं वापादिना अनिष्पादितं व्रीह्यादि॥ १५॥
76895
76896 शान्ते कर्तृत्वभोक्तृत्वे शान्तिरेवेह शिष्यते।
76897 प्रौढिमभ्यागता सैव मुक्तिरित्युच्यते बुधैः॥ १६॥
76898
76899 शान्तिर्निर्विक्षेपता। प्रौढिं कर्तृत्वमूलोच्छेदेन प्ररूढताम्॥ १६॥
76900
76901 प्रबुद्धाश्चिन्मयाः शुद्धाः सर्वमाक्रम्य संस्थिताः।
76902 किं त्यक्तं परिगृह्णन्तु किं गृहीतं त्यजन्तु वा॥ १७॥
76903
76904 उक्तं व्यक्तौपपादयति - प्रबुद्धा इत्यादिना। आक्रम्य
76905 परमार्थस्वरूपाविर्भाविण परिभूय त्यक्तं अप्राप्तं किं फलमैहिकं
76906 परिगृह्णन्तु॥ १७॥
76907
76908 ग्राह्यग्राहकसंबन्धप्रमितावयविक्रमैः।

हीनः प्रमेयावयवैः किं गृह्णातु जहातु किम् ॥ १८ ॥

ग्राह्यग्राहकतत्संबन्धलक्षणैरङ्गदशाप्रमितक्रियाकारकसंबन्धघट्
इतावान्तरवाक्यार्थलक्षणावयविक्रमैर्महावाक्यप्रमेयावयवैरङ्गप्रध्
आनक्रियाकलापलक्षणविकारैर्हीनः कूटस्थात्मा
तद्घटिअसाङ्गप्रधानक्रियानिष्पादनसाध्यं पारलौकिकं स्वर्गादिफलं
वा किं गृह्णन्तु किं जहात्वित्यर्थः ॥ १८ ॥

ग्राह्यग्राहकसंबन्धे क्षीणे शान्तिरुदेत्यलम् ।
स्थितिमभ्यागता शान्तिर्मोक्षनाम्नाभिधीयते ॥ १९ ॥

ऐहिकामुष्मिकेष्टानिष्टसाधनहानोपादाननिमित्तग्राह्यग्राहक##-
स्थितिमभ्यागता मोक्षनाम्नोच्यत इत्युक्तोपपादनोपसंहारः ॥ १९ ॥

तत्र स्थिताः सदा शान्तास्त्वादृशाः पुरुषोत्तमाः ।
सुषुप्तावयवस्पन्दसाधर्म्येण चरन्ति हि ॥ २० ॥

एवं स्थितानामपि यावत्प्रारब्धक्षयं व्यवहारसिद्धौ दृष्टान्तमाह ##-
प्राणोदरान्नरसादिस्पन्दं जीवनादृष्टात्मसंनिधिमात्रेणाचरन्तीत्युच्यते
तद्वज्जीवन्मुक्ता अपि चरन्ति । व्यवहरन्तीत्यर्थः ॥ २० ॥

परावबोधविश्रान्तवासनो जगति स्थितिम् ।
अर्धसुप्त इवेहेमां त्वं पश्यात्मस्थया धिया ॥ २१ ॥

तद्वत्त्वमपि राज्यपालनमाचरेत्याशयेनाह - परावबोधेति । अर्धसुप्तः
सुषुप्तजाग्रत्संधिस्थः ॥ २१ ॥

न रमन्ते हि रम्येषु स्वात्मन्येव गताशयाः ।
नोद्विजन्तेऽन्यदुःखेषु स्वात्मन्येकरसायनाः ॥ २२ ॥

रम्येषु अनात्मस्विति शेषः । आत्मान्येषु आत्मास्पर्शिषु दुःखेषु । स्वात्मन्येव
एकं रसायनमिव मधुरं सुखं येषाम् । तथाचोक्तं वार्तिके दुःखी यदि
भवेत्साक्षी कः साक्षी दुःखितो भवेत् । दुःखिनः साक्षिता नास्ति साक्षिणो
दुःखिता कुतः इति ॥ २२ ॥

नित्यप्रबुद्धा गृह्णन्ति कार्याणीमान्यसङ्गिनः ।
मुकुरा इव बिम्बानि यथाप्राप्तान्यवाञ्छया ॥ २३ ॥

सुखदुःखाभावे तत्प्राप्तिपरिहारार्थानि कार्याणि कथं गृह्णन्ति तत्राह ##-

जाग्रति स्वात्मनि स्वस्थाः सुप्ताः संसारसंस्थितौ ।
बालवत्प्रविवेपन्ते सुषुप्तसदृशाशयाः ॥ २४ ॥

तर्हि ते किं स्वात्मन्यप्यास्थाशून्या नेत्याह - जाग्रतीति । तथाच या निशा
सर्वभूतानां तस्यां जागर्ति संयमी इति भगवतापि तेषामात्मास्था दर्शिना ।
प्रविवेपन्ते प्रकम्पन्ते । व्यवहरन्तीति यावत् ॥ २४ ॥

त्वमजितपदवीमुपागतोऽन्तः
कमलजवासरमेकमेव भुक्त्वा ।
गुणगणकलितामिहैव लक्ष्मीं
व्रज परमास्पदमच्युतं महात्मन् ॥ २५ ॥

76961 विवक्षितार्थं संक्षिप्योपसंहरति - त्वमिति। हे महात्मन् त्वमन्तः
76962 अजितस्य विष्णोः पदवीं परमात्मपदं समागतः प्राप्तवान्सन्नेकं
76963 कमलजवासरं कल्पपर्यन्तमिहैव पाताले गुणगणैः कलितां राज्यलक्ष्मीं
76964 भुक्त्वा अच्युतं विदेहकैवल्याख्यं च्युतिरहितं परमास्पदं परमपदं
76965 व्रजेत्यर्थः॥ २५॥
76966
76967 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये
76968 मोक्षोपायेषूपशमप्रकरणे प्रह्लादबोधनं नाम चत्वारिंशः
76969 सर्गः॥ ४०॥
76970
76971 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
76972 प्रह्लादबोधनं नाम चत्वारिंशः सर्गः॥ ४०॥
76973
76974
76975 एकचत्वारिंशः सर्गः ४१
76976
76977 श्रीवसिष्ठ उवाच।
76978
76979 जगद्रत्नसमुद्गेन त्रैलोक्याद्भुतदर्शिना।
76980 इत्युक्ते पद्मनाभेन ज्योत्स्नाशीतलया गिरा॥ १॥
76981
76982 गृहीतशासनाद्दैत्यात्पूजां संप्राप्य सानुगः।
76983 दैत्यराज्येऽभिषिच्यैनं वरैरच्छन्दयद्धरिः॥ १॥
76984
76985 प्रलये जगल्लक्षणानां रत्नानां स्वान्तः प्रवेशनात्समुद्गेन संपुटकेन
76986 सृष्टिकाले त्रैलोक्यलक्षणाद्भुतप्रदर्शनशीलेन पद्मनाभेन विष्णुदेहेन
76987 इति प्रागुक्तप्रकारेणोक्ते सति॥ १॥
76988
76989 प्रह्लादनामा देहोऽसौ विकाशिनयनाम्बुजः।
76990 मुदोवाच वचो धीरो गृहीतमननक्रमः॥ २॥
76991
76992 प्रह्लादनामा असौ प्रागुक्तो देहो गृहीतमननक्रमः सन् मुदा उवाच।
76993 देहग्रहणमात्मनि व्यवहर्तृतावारणार्थम्॥ २॥
76994
76995 प्रह्लाद उवाच।
76996
76997 हिताहितविचारेण राजकार्यशतेन च।
76998 अत्यहं श्रमितो देव क्षणं विश्रामतां गतः॥ ३॥
76999
77000 असुराणां किं हितं देवानां किसहितमिति विचारेण श्रमितः श्रमं प्रापितः।
77001 क्षणमिति समाधौ कालदैर्घ्याप्रत्ययादुक्तम्॥ ३॥
77002
77003 भगवंस्त्वत्प्रसादेन स्थितिः सम्यगथागता।
77004 समाधावसमाधौ च रूपेणाहं समः सदा॥ ४॥
77005
77006 स्थितिस्तत्त्वबोधेन स्वरूपावस्थितिः। रूपेण पारमार्थिकस्वरूपेण। सदा
77007 समाध्यसमाध्योः सदेहविदेहमुक्त्योश्च॥ ४॥
77008
77009 चिरमन्तर्महादेव दृष्टोऽस्यमलया धिया।
77010 पुनर्बहिरयं दृष्ट्या दिष्ट्या देव प्रदृश्यसे॥ ५॥
77011
77012 इमौ श्लोकौ क्वचिदेव पुस्तके दृश्येते। अन्तर्धिया

77013 अखण्डमानससाक्षात्कारवृत्त्या दृष्टोऽसि। बहिर्दृष्ट्या चक्षुषा दिष्ट्या
77014 भाग्यवशेन दृश्यसे ॥ ५ ॥
77015
77016 अहमासमनन्तायामस्यां दृष्टौ महेश्वर।
77017 सर्वसंकल्पमुक्तायां व्योम व्योम्नीव निर्मले ॥ ६ ॥
77018
77019 अस्यामान्तर्यां दृष्टौ ॥ ६ ॥
77020
77021 न शोकेन न मोहेन न च वैराग्यचिन्तया।
77022 न देहत्यागकार्येण न संसारभयेन च ॥ ७ ॥
77023
77024 तत्र शोकमोहादिनिमित्तवशादहं समाधिं नाश्रितो येन मम
77025 देहत्यागप्रसक्तिः स्यादित्याह - न शोकेनेति ॥ ७ ॥
77026
77027 एकस्मिन्विद्यमाने हि कुतः शोकः कुतः क्षतिः।
77028 कुतो देहः क्व संसारः क्व स्थितिः क्व भयाभये ॥ ८ ॥
77029
77030 दृष्ट एव ते पितृराज्यादिनाशादिः शोकहेतुस्तं कथमपलपसि तत्राह -
77031 एकस्मिन्निति। सत्यमत्र दृष्टो नत्वद्वैतात्मनि स इति न तद्धेतुको मे
77032 समाधिरित्यर्थः ॥ ८ ॥
77033
77034 यथेच्छयैवामलया केवलं स्वयमुत्थया।
77035 एवमेवाहमवसं वितते पावने पदे ॥ ९ ॥
77036
77037 तर्हि समाधेस्तो को हेतुरिति चेद्विचारजा विश्रान्तीच्छैवेत्याह - यथेच्छयेति।
77038 एवमेव देहत्यागाद्यभिसन्धिं विनैव ॥ ९ ॥
77039
77040 हा विरक्तोऽस्मि संसारं त्यजामीतीयमीश्वर।
77041 अप्रबुद्धदृशां चिन्ता हर्षशोकविकारदा ॥ १० ॥
77042
77043 नच वैराग्यचिन्तयेति वैराग्यापह्नवो न युक्तस्तस्य विचारपूर्वके
77044 समाधावनुकूलत्वादिति चेत्तत्राह - हा विरक्त इति ॥ १० ॥
77045
77046 देहाभावे न दुःखानि देहे दुःखानि मे मतिः।
77047 इति चिन्ताविषव्याली मूर्खमेवावलुम्पति ॥ ११ ॥
77048
77049 वैराग्यस्य समाधिहेतुत्वे रागवद्देहस्यापि
77050 दुःखहेतुत्वानुभवात्तत्त्यागस्यापि समाधिनिमित्तता स्यात् सोऽप्यतत्त्वविद एव
77051 वाञ्छितो न ममेत्याह - देहाभाव इति ॥ ११ ॥
77052
77053 इदं सुखमिदं दुःखमिदं नास्तीदमस्ति मे।
77054 इति दोलायितं चेतो मूढमेव न पण्डितम् ॥ १२ ॥
77055
77056 अत एव सुखलिप्सया दुःखनिवृत्तिलिप्सयापि वा न समाधिरित्याह - इदमिति।
77057 मूढमेव अवलुम्पतीत्यनुकृष्यते ॥ १२ ॥
77058
77059 अहमन्योऽन्य एवायमित्यज्ञानां तु वासना।
77060 दूरोदस्तात्मबुद्धीनां जयत्यसुमतामिह ॥ १३ ॥
77061
77062 तर्ह्यस्तु भेदवासनाक्षयेच्छया समाधिस्तत्राह - अहमन्य इति। दूरोदस्ता
77063 आत्मबुद्धिस्तत्त्वज्ञानं यैस्तेषामज्ञानामेव जयति न तत्त्वविदामित्यर्थः।
77064 असुमतां प्राणिनाम् ॥ १३ ॥

77065
77066 इदं त्याज्यमिदं ग्राह्यमिति मिथ्या मनोभ्रमः |
77067 नोन्मत्ततां नयत्यन्तर्ज्ञमज्ञमिव दुर्धियः || १४ ||
77068
77069 तर्हि संसारत्यागाय मोक्षग्रहणाय वा समाधिरस्त्विति चेत्तत्राप्याह -
77070 इदमिति | इति प्रसिद्धो दुर्धियः संबन्धी भ्रमः अज्ञमिव ज्ञं नोन्मत्ततां
77071 नयतीत्यन्वयः || १४ ||
77072
77073 सर्वस्मिन्नात्मनि तते त्वयि तामरसेक्षण |
77074 हेयोपादेयपक्षस्था द्वितीया कलना कुतः || १५ ||
77075
77076 तत्कुतस्तत्राह - सर्वस्मिन्नित्यादिना || १५ ||
77077
77078 विज्ञानाभासमखिलं जगत्सदसदुत्थितम् |
77079 किं हेयं किमुपादेयमिह यत्त्यज्यते न वा || १६ ||
77080
77081 भ्रान्तिविज्ञाने शुक्तिरजतादिवदाभासते न परमार्थत इति विज्ञानाभासम् |
77082 सत आत्मनोऽसतो
77083 मायायाश्चान्योन्यतादात्म्याध्यासलक्षणान्मिथुनीकरणादुत्थितम् || १६ ||
77084
77085 केवलं स्वस्वभावेन द्रष्टृदृश्ये विचारयन् |
77086 क्षणं विश्रान्तवानन्तः परमात्मनात्मनि || १७ ||
77087
77088 अत एव मम तत्त्वविचारविश्रान्तिरेव समाधिः संपन्न इत्याह - केवलमिति ||
77089 १७ ||
77090
77091 भावाभावविनिर्मुक्तो हेयोपादेयवर्जितः |
77092 एवमासमहं पूर्वमधुनेत्थं व्यवस्थितः || १८ ||
77093
77094 पूर्व समाधिकाले | अधुना व्युत्थानकाले | इत्थं
77095 त्वदाज्ञप्तार्थोपादानयोग्यतया व्यवस्थितोऽस्मीत्यर्थः || १८ ||
77096
77097 स मयात्मीयमापन्नं सर्वमात्मात्मतां गतः |
77098 करोम्यहं महादेव तुभ्यं यत्परिरोचते || १९ ||
77099
77100 स आत्मतां स्वस्वभावं गत आत्मा अहं मया आत्मीयं स्वकर्तव्यतां
77101 प्राप्तं सर्व त्वदाज्ञप्तं कार्य करोमि | किं स्वरागेण करिष्यसि नेत्याह -
77102 तुभ्यमिति | त्वदिच्छानुवर्तितयेत्यर्थः || १९ ||
77103
77104 त्वमयं पुण्डरीकाक्षः पूज्यस्तावज्जगत्त्रये |
77105 तन्मत्तः प्रकृतिप्राप्तां पूजामादातुमर्हसि || २० ||
77106
77107 यथा त्वदाज्ञप्तं राज्यं नियतिप्राप्तमहमङ्गीकरोमि तथा त्वमपि
77108 मद्दत्तां पूजां सर्वेश्वरत्वात्तव नियतिप्राप्तां गृहाणेत्याह - त्वमिति
77109 | प्रकृतिः शास्त्रलोकप्रसिद्धा नियतिः || २० ||
77110
77111 इत्युक्त्वा दानवाधीशः पुरः क्षीरोदशायिनः |
77112 शैलेन्द्र इव पूर्णेन्दुमर्घपात्रमुपाददे || २१ ||
77113
77114 शैलेन्द्र उदयाद्रिः || २१ ||
77115
77116 सायुधं साप्सरोवृन्दं ससुरं सखगाधिपम् |

77117 पूजयामास गोविन्दं सत्रैलोक्यमथाग्रगम् ॥ २२ ॥
77118
77119 सत्रैलोक्यमुदरान्तःस्थितत्रैलोक्यसहितम् । अग्रगं पुरःस्थितम् ॥ २२ ॥
77120
77121 सबाह्याभ्यन्तरभ्रान्तभुवनं भुवनेश्वरम् ।
77122 पूजयित्वाथ तिष्ठन्तमुवाच कमलापतिः ॥ २३ ॥
77123
77124 बाह्येषु रोमकूपादिषु आभ्यन्तरेषु बस्तिजठरहृदयादिषु च भ्रान्तानि
77125 परिवर्तमानानि भुवनानि यस्य तम् ॥ २३ ॥
77126
77127 श्रीभगवानुवाच ।
77128
77129 उत्तिष्ठ दानवाधीश सिंहासनमुपाश्रय ।
77130 यावदाश्वभिषेकं ते स्वयमेव ददाम्यहम् ॥ २४ ॥
77131
77132 पाञ्चजन्यरवं श्रुत्वा य इमे समुपागताः ।
77133 सिद्धाः साध्याः सुरौघास्ते कुर्वन्तु तव मङ्गलम् ॥ २५ ॥
77134
77135 इत्युक्त्वा पुण्डरीकाक्षो दानवं सिंहविष्टरे ।
77136 योजयामास योग्यं तं मेरुशृङ्ग इवाम्बुदम् ॥ २६ ॥
77137
77138 सिंहविष्टरे सिंहासने ॥ २६ ॥
77139
77140 अथैनं हरिराहूतैः क्षीरोदाद्यैर्महाब्धिभिः ।
77141 गङ्गादिभिः सरित्पूरैः सर्वतीर्थजलैस्तथा ॥ २७ ॥
77142
77143 सर्वविप्रर्षिसङ्घैश्च सर्वसिद्धगणैः सह ।
77144 पुनर्विद्याधरयुतो लोकपालसमन्वितः ॥ २८ ॥
77145
77146 पुनःशब्दस्वारस्यात्पूर्वं स्वयमेक एवाभ्यषिञ्चिद्विद्याधरादिभिः सह
77147 पुनरुत्साहातिशयादभ्यषिञ्चदिति गम्यते ॥ २८ ॥
77148
77149 अभ्यषिञ्चदमेयात्मा दैत्यराज्ये महासुरम् ।
77150 मरुद्गणैः स्तूयमानं पूर्वं स्वर्गे हरिं यथा ॥ २९ ॥
77151
77152 हरिमिन्द्रम् ॥ २९ ॥
77153
77154 सुरासुरैः स्तूयमानं स्तूयमानः सुरासुरैः ।
77155 अभिषिक्तमुवाचेदं प्रह्लादं मधुसूदनः ॥ ३० ॥
77156
77157 श्रीभगवानुवाच ।
77158
77159 यावन्मेरुर्धरा यावद्यावच्चन्द्रार्कमण्डले ।
77160 अखण्डितगुणश्लाघी तावद्राजा भवानघ ॥ ३१ ॥
77161
77162 धरा पृथ्वी । धराः अन्ये पर्वताश्चेति वा ॥ ३१ ॥
77163
77164 इष्टानिष्टफलं त्यक्त्वा समदर्शनया धिया ।
77165 वीतरागभयक्रोधो राज्यं समनुपालय ॥ ३२ ॥
77166
77167 राज्येऽस्मिन्भोगसंपूर्णे दृष्टानुत्तमभूमिना ।
77168 न गन्तव्यस्त्वयोद्वेगः स्वर्गे मानवकेऽथवा ॥ ३३ ॥

77169
77170 दृष्टा अनुत्तमा निरतिशयानन्दभूमिर्येन तथाविधेन त्वया राज्ये उद्वेगः
77171 अरतिलक्षणो न गन्तव्यस्तथा पित्रादिवत्स्वर्गे देवलोके मानवे भूलोके च उद्वेगो
77172 न गन्तव्यो न गमयितव्यः ॥ ३३ ॥
77173
77174 देशकालक्रियाकारैर्यथाप्राप्तासु दृष्टिषु ।
77175 प्रकृतं कार्यमातिष्ठ त्यक्त्वा मानसमास्स्व भो ॥ ३४ ॥
77176
77177 यथाप्राप्तासु प्रजाशात्रवादिनिग्रहानुग्रहादिदृष्टिषु
77178 तत्तत्पुरुषानुरूपैर्देशकालक्रियाकारैः प्रकृतं प्रसञ्जितं
77179 वधबन्धदण्डादिकार्यमातिष्ठ अनुतिष्ठ । मानसं रागादिवैषम्यं
77180 त्यक्त्वा आस्स्व ॥ ३४ ॥
77181
77182 अतिदेहतयेदंताममतापरिवर्जितम् ।
77183 भावाभावे समं कार्यं कुर्वन्निह न बाध्यसे ॥ ३५ ॥
77184
77185 अतिदेहतया देहातिरिक्तात्मभावेन । भावाभावे लाभालाभे ॥ ३५ ॥
77186
77187 दृष्टसंसारपर्यायस्तुलितातुलतत्पदः ।
77188 सर्वं सर्वत्र जानासि किमन्यदुपदिश्यते ॥ ३६ ॥
77189
77190 व्यवहारे परमार्थे च त्वमेव निपुणोअषीति नोपदेश्यं तवास्तीत्याह -
77191 दृष्टेति ॥ ३६ ॥
77192
77193 वीतरागभयक्रोधे त्वयि राजनि राजति ।
77194 नेदानीं दुःखदुर्ग्रन्थिर्नासुरान्दलयिष्यति ॥ ३७ ॥
77195
77196 अनेन तव पूर्वमनोरथोऽपि सेत्स्यतीत्याह - वीतेति ।
77197 दुःखदुर्ग्रन्थिरसुरेष्विदानीं न स्थास्यति देवस्थश्च स मद्द्वारा असुरान्न
77198 दलयिष्यतीत्यर्थः ॥ ३७ ॥
77199
77200 बाष्पश्रीर्नासुरीकर्णमञ्जरीः प्लावयिष्यति ।
77201 वनराजिमिवोन्मत्ता सरित्तारतरङ्गिणी ॥ ३८ ॥
77202
77203 उन्मत्ता वर्षाभिवर्धिता सरिन्नदी । तारतरङ्गिणी बृहत्तरङ्गा ॥ ३८ ॥
77204
77205 अद्यप्रभृत्यसंप्राप्तदानवामरसंगरम् ।
77206 निर्मन्दराम्भोनिधिवज्जगत्स्वस्थमिव स्थितम् ॥ ३९ ॥
77207
77208 जगत्स्वास्थ्यमपि सेत्स्यतीत्याह - अद्येति । निर्मन्दरो निर्गतमन्थाचलो
77209 योऽम्भोनिधिस्तद्वत् ॥ ३९ ॥
77210
77211 देवासुरकुटुम्बिन्यो भर्तृष्वन्तःपुरेषु च ।
77212 स्वेष्वेव यान्तु विश्वासमपरस्परमाहृताः ॥ ४० ॥
77213
77214 अपरस्परमाहृताः परस्परभर्तृभिरबन्दीकृताः ॥ ४० ॥
77215
77216 भवबहुलनिशानितान्तनिद्रा-
77217 तिमिरमपास्य सदोदिताशयश्रीः ।
77218 दनुसुत वनिताविलासरम्यां
77219 चिरमजितामुपभुङ्क्ष्व राज्यलक्ष्मीम् ॥ ४१ ॥
77220

हे दनुसुत त्वं बहुलनिशा
कृष्णपक्षरात्रिस्तत्रत्यनितान्तनिद्रातिमिरप्रायमज्ञानान्धकारमपास्य
सदा उदिता आशयश्रीः स्वप्रकाशब्रह्मात्मस्फूर्तिर्यस्य तथाविधः सन्
वनितानामसुरस्त्रीणां संभजनीयशान्त्यादीनां च विलासैः रम्याम् । अजितां
शत्रुभिः कामादिषट्कैश्चापराभूतां राज्यलक्ष्मीं स्वाराज्यलक्ष्मीं च
चिरमुपभुङ्क्ष्वेत्याशीः ॥ ४१ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे०
मोक्षोपायेषूपशमप्रकरणे प्रह्लादाभिषेको नामैकचत्वारिंशः
सर्गः ॥ ४१ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
प्रह्लादाभिषेको नामैकचत्वारिंशः सर्गः ॥ ४१ ॥

द्विचत्वारिंशः सर्गः ४२

श्रीवसिष्ठ उवाच ।

इत्युक्त्वा पुण्डरीकाक्षः सनरामरकिन्नरः ।
द्वितीय इव संसारश्चचालासुरमन्दिरात् ॥ १ ॥

विष्णोः क्षीरोदगमनमाख्यानफलमुत्तमम् ।
समाधिमुक्तव्युत्थाने हेतुश्चात्रोपवर्ण्यते ॥ १ ॥

सनरामरकिन्नरत्वादेव द्वितीयः संसार इव विस्तृतः । चचाल जगाम ॥ १ ॥

प्रह्लादादिविनिर्मुक्तैः पश्चात्पुष्पाञ्जलिव्रजैः ।
पूर्यमाणो विहङ्गेशपाश्चायाङ्गरुहोत्करैः ॥ २ ॥

विहङ्गेशस्य गरुडस्य पाश्चात्येष्वङ्गरुहेषु उत्करवद्राशीभूतैः
पुष्पाञ्जलिव्रजैः ॥ २ ॥

क्रमात्क्षीरोदमासाद्य विसृज्य सुरवाहिनीम् ।
भोगिभोगासने तस्थौ श्वेताब्ज इव षट्पदः ॥ ३ ॥

भोगिभोगासने विष्णुः शक्रः स्वर्गे सहामरैः ।
पाताले दानवाधीश इति तस्थुर्गतज्वराः ॥ ४ ॥

एषा ते कथिता राम निःशेषमलनाशिनी ।
प्राह्लादी बोधसंप्राप्तिरैन्दवद्रवशीतला ॥ ५ ॥

ऐन्दवो द्रवोऽमृतमिव शीतला ॥ ५ ॥

तां तु ये मानवा लोके बहुदुष्कृतिनोऽपि हि ।
धिया विचारयिष्यन्ति ते प्राप्स्यन्त्यचिरात्पदम् ॥ ६ ॥

सामान्येन विचारेण क्षयमायाति दुष्कृतम् ।
योगवाक्यविचारेण को न याति परं पदम् ॥ ७ ॥

दुष्कृतपदेन पापं तन्मूलमज्ञानं च ॥ ७ ॥

77273 अज्ञानमुच्यते पापं तद्विचारेण नश्यति।
77274 पापमूलच्छिदं तस्माद्विचारं न परित्यजेत्॥ ८॥
77275
77276 मयोक्तं न पापमेवेत्याह - अज्ञानमिति॥ ८॥
77277
77278 इमां प्रह्लादसंसिद्धिं प्रविचारयतां नृणाम्।
77279 सप्तजन्मकृतं पापं क्षयमायात्यसंशयम्॥ ९॥
77280
77281 सप्तजन्मकृतमित्यापातविचारफलमेतत्। ज्ञानफलपर्यन्तेन तु विचारेण
77282 प्रारब्धफलातिरिक्तसर्वपापक्षयः प्रसिद्ध एवेति॥ ९॥
77283
77284 श्रीराम उवाच।
77285
77286 परे पदे परिणतं पाञ्चजन्यस्वनैर्मनः।
77287 कथं प्रबुद्धं भगवन्प्रह्लादस्य महात्मनः॥ १०॥
77288
77289 समाधिमुक्तस्य विदेहमुक्तेन सह विश्रान्तिसुखादिसाम्ये पुनर्व्युत्थानहेतुं
77290 जिज्ञासमानो रामः पृच्छति - परे इति। मनसो विलये
77291 पाञ्चजन्यस्वनश्रवणमपि दुर्लभमिति कथं तेन प्रबोध इति भावः॥ १०॥
77292
77293 श्रीवसिष्ठ उवाच।
77294
77295 द्विविधा मुक्तता लोके संभवत्यनघाकृते।
77296 सदेहैका विदेहान्या विभागोऽयं तयोः शृणु॥ ११॥
77297
77298 प्रारब्धशेषोद्बोधितशुद्धवासनासहितभगवदिच्छैव तत्प्रबोधे हेतुरिति
77299 विशेषं वक्तुं सदेहविदेहमुक्ती विभज्य दर्शयति - द्विविधेत्यादिना।
77300 विभागो विभाजकलक्षणभेदः। अयं वक्ष्यमाणप्रकारः॥ ११॥
77301
77302 असंसक्तमतेर्यस्य त्यागादानेषु कर्मणाम्।
77303 नैषणा तत्स्थितिं विद्धि त्वं जीवन्मुक्ततामिह॥ १२॥
77304
77305 कर्मणामिष्टानिष्टानां त्यागादानेषु विषयेषु एषणा रागो नास्ति। तस्य तां
77306 स्थितिं जीवन्मुक्ततां विद्धि॥ १२॥
77307
77308 सैव देहक्षये राम पुनर्जननवर्जिता।
77309 विदेहमुक्तता प्रोक्ता तत्स्था नायान्ति दृश्यताम्॥ १३॥
77310
77311 देहपदेन तद्धारणहेतुः प्रारब्धशेषो लक्ष्यते। तस्य भोगेन क्षये
77312 सतीत्यर्थः॥ १३॥
77313
77314 सृष्टबीजोपमा भूयो जन्माङ्कुरविवर्जिताः [जन्मान्तरेति
77315 पाठः]।
77316 हृदि जीवद्विमुक्तानां शुद्धा भवति वासना॥ १४॥
77317
77318 भृष्टानि भर्जितानि बीजान्युपमा येषामिति पुनर्दृश्यतानवाप्तौ
77319 हेतुगर्भं विशेषणम्। जीवन्मुक्तेषु तु समाधिव्युत्थानेन
77320 पुनर्देहदृश्यतायां हेतुरस्तीत्याह - हृदीति। शुद्धा
77321 आसङ्गमालिन्यनिर्मुक्ता॥ १४॥
77322
77323 पावनी परमोदारा शुद्धसत्त्वानुपातिनी।
77324 आत्मध्यानमयी नित्यं सुषुप्तस्येव तिष्ठति॥ १५॥

77325
77326 पावनी शुद्धब्रह्मात्मभावना पवित्रा परमोदारा तृष्णाकार्पण्यरहिता।
77327 अन्तःकरणस्य ब्रह्मणिल येऽपि वासनास्थितौ दृष्टान्तमाह -
77328 सुषुप्तस्येवेति॥ १५॥
77329
77330 अपि वर्षसहस्रान्ते तयैवान्तरवस्थया।
77331 सति देहे प्रबुध्यन्ते जीवन्मुक्ता रघूद्वह॥ १६॥
77332
77333 देहपदेनात्रापि तद्धारणहेतुः प्रारब्धशेषो लक्ष्यते॥ १६॥
77334
77335 प्रह्लादोऽन्तस्थया शुद्धसत्त्ववासनया स्वया।
77336 बोधमाप महाबाहो शङ्खशब्दावबुद्धया॥ १७॥
77337
77338 सैव प्रह्लादबोधेऽपि हेतुरित्याह - प्रह्लाद इति॥ १७॥
77339
77340 हरिरात्मा हि भूतानां तस्य यत्प्रतिभासते।
77341 तत्तथैव भवत्याशु सर्वमात्मैव कारणम्॥ १८॥
77342
77343 लीने श्रोत्रे शङ्खशब्दस्याप्यग्रहात्तावन्मात्रेण कथं बोध
77344 इत्याशङ्कां परिहरन्नाह - हरिरिति। आत्मा कारणात्मा। सत्यसंकल्प इति
77345 यावत्॥ १८॥
77346
77347 प्रबोधमेतु प्रह्लादो यदैवेति विचिन्तितम्।
77348
77349 आत्मन्यकारणेनैव भूतानां कारणेन च।
77350 सृष्ट्यर्थं वपुरात्तं हि वासुदेवमयात्मना॥ २०॥
77351
77352 अकारणेनैव शुद्धात्मना भूतानां कारणेनाव्याकृतेन
77353 चकारात्कामकर्मादिना च निमित्तेन आत्मन्येव जगत्सृष्ट्यर्थं
77354 वासुदेवमयात्मना वपुः शरीरमात्रं गृहीतम्। हिशब्दस्तथा
77355 श्रुतिस्मृतिपुराणप्रसिद्धिद्योतनार्थः॥ २०॥
77356
77357 आत्मावलोकनेनाशु माधवः परिदृश्यते।
77358 माधवाराधनेनाशु स्वयमात्मावलोक्यते॥ २१॥
77359
77360 अत एव तद्वपुर्दर्शने आत्मदर्शनं सिद्ध्यत्यात्मदर्शने च तद्दर्शनं
77361 सुलभमित्याह - आत्मेति॥ २१॥
77362
77363 एतां दृष्टिमवष्टभ्य राघवात्मावलोकने।
77364 विहराशु विचारात्मा पदं प्राप्स्यसि शाश्वतम्॥ २२॥
77365
77366 विहर यतस्व॥ २२॥
77367
77368 दुःखासारवती राम संसारप्रावृडातता।
77369 जाड्यं ददाति परमं विचारार्कमपश्यताम्॥ २३॥
77370
77371 दुःखान्येव आसारा धारासंपातास्तद्वती। जाड्यं मौर्ख्यं रोगं च॥ २३॥
77372
77373 प्रसादादात्मनो विष्णोर्मायियमतिभासुरा।
77374 प्रबाधते न धीरांस्तु यक्षी मन्त्रवतो यथा॥ २४॥
77375
77376 यक्षीग्रहणं सर्वपिशाचाद्युपलक्षणम्। मन्त्रवतो मन्त्रसिद्धान्॥ २४॥

77377
77378 आत्मेच्छयैव घनतां समुपागतान्त-
77379 रात्मेच्छयैव अनुतामुपयाति काले।
77380 संसारजालरचनेयमनन्तमाया-
77381 ज्वालेह वातवलयादिव पावकस्य॥ २५॥
77382
77383 संसारजालरचनालक्षणा अनन्तस्य विष्णोरियं माया तस्यैवात्मन इच्छयैव
77384 घनतां देहादिघनानर्थभावं समुपागता। सा च
77385 निर्व्याजभक्तिप्रणिधानाद्याराधितस्य तस्यात्मन इच्छयैव
77386 विवेकविचारादिजन्मकाले तनुतां ह्रासमुपयाति। यथा पावकस्य ज्वाला
77387 वातवलयादेव घनतामुपयाति अन्ते च तद्वशादेव तनुतामुपयाति तद्वत्। अत
77388 ईश्वरप्रसादजनितविचारादिनैवावश्यं ज्ञानलाभ इत्याख्यानतात्पर्यमिति
77389 भावः। तथाच भगवतो बादरायणस्य सूत्रम् पराभिध्यानात्तु तिरोहितं ततो
77390 ह्यस्य बन्धविपर्ययौ इति। मत्तः स्मृतिर्ज्ञानमपोहनं च इति
77391 भगवद्वचनं चेति भावः॥ २५॥
77392
77393 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये देवदूतोक्ते मो०
77394 उपशमप्रकरणे प्रह्लादव्यवस्था नाम द्विचत्वारिंशः सर्गः॥ ४२॥
77395
77396 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
77397 प्रह्लादव्यवस्था नाम द्विचत्वारिंशः सर्गः॥ ४२॥
77398
77399
77400 त्रिचत्वारिंशः सर्गः ४३
77401
77402 श्रीराम उवाच।
77403
77404 भगवन्सर्वधर्मज्ञ शुद्धैस्त्वद्वचनांशुभिः।
77405 निर्वृताः स्म शशाङ्कस्य करैरोषधयो यथा॥ १॥
77406
77407 ईशप्रसादलभ्येऽपि नेश्वरे दीयतां भरः।
77408 पौरुषेणेन्द्रियाक्रान्त्या साध्यं ज्ञानमितीर्यते॥ १॥
77409
77410 निर्वृता आह्लादिताः स्म॥ १॥
77411
77412 कर्णाभिवाञ्छयमानानि पवित्राणि मृदूनि च।
77413 सुखयन्ति गृहीतानि पुष्पाणीव वचांसि ते॥ २॥
77414
77415 कर्णाभ्यां श्रवणायावतंसनाय चाभिवाञ्छ्यमानानि। पुष्पपक्षे
77416 गुरुदेवतादिप्रसादरूपतया पापापहारित्वात्पवित्राणि पुष्पाण्युत्पलादीनीव॥ २॥
77417
77418 पौरुषेण प्रयत्नेन सर्वमासाद्यते यदि।
77419 प्रह्लादस्तत्कथं बुद्धो न माधववरं विना॥ ३॥
77420
77421 तत्तर्हि प्रह्लादो माधवस्य वरं विनापि स्वपौरुषेणैव कथं न
77422 प्रबुद्धवान्। अतः स्वपौरुषादेव सर्वत्र ज्ञानलाभ इति
77423 प्रागुक्तनियमभङ्ग इत्यर्थः॥ ३॥
77424
77425 श्रीवसिष्ठ उवाच।
77426
77427 यद्यद्राघव संप्राप्तं प्रह्लादेन महात्मना।
77428 तत्तदासादितं तेन पौरुषादेव नान्यतः॥ ४॥

77429
77430 स्वपौरुषसाध्यायां पुरुषार्थसिद्धौ माधववरोऽपि द्वारविशेष एव न
77431 स्वतन्त्र इति नोक्तनियमभङ्ग इत्याशयेन संक्षिप्योत्तरमाह - यद्यदिति ॥ ४
77432 ||
77433
77434 आत्मा नारायणश्चैव न भिन्नस्तिलतैलवत् ।
77435 तथैव शौक्ल्यपटवत्कुसुमामोदवत्तथा ॥ ५ ॥
77436
77437 अथवा विष्णोः प्रह्लादात्मभेदाभावात्तत्प्रयत्नप्राप्तो वरः
77438 प्रह्लादप्रयत्नादेवेति वात्र परिहारः सुलभ इत्याशयेनाह - आत्मेत्यादिना ।
77439 यथा तिलान्तर्गतं ततो निःसारितं च तैलं न भिन्नं तद्वत् । नन्वेवं सति
77440 विकारिता स्यादिति दृष्टान्तान्तरमाह - शौक्ल्यपटवदिति । यथा
77441 कुसुमानां सार आमोदस्तद्वज्जीवानां परमार्थसारो विष्णुरिति वा अभेदो
77442 ज्ञेय इत्याह - कुसुमेति ॥ ५ ॥
77443
77444 यो हि विष्णुः स एवात्मा यो ह्यात्मासौ जनार्दनः ।
77445 विष्ण्वात्मशब्दौ पर्यायौ यथा विटपिपादपौ ॥ ६ ॥
77446
77447 अथवा कार्यकारणोपाधित्यागे परिशिष्टचिन्मात्रस्यात्यन्ताभेद एवेति
77448 लक्ष्यपरयोर्विष्ण्वात्मशब्दयोः पर्यायतैवेत्याह - य इति ।
77449 विटपवत्त्वपादकरणकपानकर्तृत्वोपाधिभेदेऽप्यखण्डवृक्षस्वरूपे
77450 यथा विटपिपादपशब्दयोः पर्यायता तद्वदित्यर्थः ॥ ६ ॥
77451
77452 प्रह्लादनामा प्रथममात्मैव स्वयमात्मना ।
77453 स्वयैव परया शक्त्या विष्णुभक्तौ नियोजितः ॥ ७ ॥
77454
77455 प्रह्लादो ह्यात्मनैवैनं वरमर्जितवान्स्वयम् ।
77456 स्वयं विचारगं कृत्वा स्वयं विदितवान्मनः ॥ ८ ॥
77457
77458 आत्मना स्वात्मभूतेनैव विष्णुना स्वमनः स्वयमेव विचारगं कृत्वा
77459 स्वात्मानं स्वयमेव विदितवानित्यर्थः ॥ ८ ॥
77460
77461 कदाचिदात्मनैवात्मा स्वयं शक्त्या प्रबुध्यते ।
77462 कदाचिद्विष्णुदेहेन भक्तिलभ्येन बोध्यते ॥ ९ ॥
77463
77464 शक्त्या स्वप्रयत्नकृतविचारबलेन । भक्तिलक्षणप्रयत्नलभ्येन
77465 विष्णुदेहद्वारेणेत्यर्थः ॥ ९ ॥
77466
77467 चिरमाराधितोऽप्येष परमप्रीतिमानपि ।
77468 नाविचारवतो ज्ञानं दातुं शक्नोति माधवः ॥ १० ॥
77469
77470 अन्वयेन दर्शितमर्थं व्यतिरेकस्यापि प्रदर्शनेन द्रढयति - चिरमिति ॥ १०
77471 ||
77472
77473 मुख्यः पुरुषयत्नोत्थो विचारः स्वात्मदर्शने ।
77474 गौणो वरादिको हेतुर्मुख्यहेतुपरो भव ॥ ११ ॥
77475
77476 आत्मावबोधपर्यन्तो विचारोऽस्त्विति वरं ददतो हरेः पुरुषप्रयत्नोत्थो विचार एव
77477 मुख्योअभिमतो न वरः । अन्यथा ज्ञानमस्त्वित्येव
77478 वरदानप्रसङ्गादित्याशयेनाह - मुख्य इति ॥ ११ ॥
77479
77480 पूर्वमेव बलात्तस्मादाक्रम्येन्द्रियपञ्चकम् ।

77481 अभ्यसन्सर्वयत्नेन चित्तं कुरु विचारवत् ॥ १२ ॥
77482
77483 यद्विषयप्रयत्नाद्विचारोदयस्तं दर्शयति - पूर्वमिति । पञ्चकग्रहणं
77484 दशकोपलक्षणम् ॥ १२ ॥
77485
77486 यद्यदासाद्यते किंचित्केनचित्क्वचिदेव हि ।
77487 स्वशक्तिसंप्रवृत्त्या तल्लभ्यते नान्यतः क्वचित् ॥ १३ ॥
77488
77489 स्वस्य शक्तिर्यत्नस्तत्प्रयुक्तया संप्रवृत्त्या शुभाचरणेन ॥ १३ ॥
77490
77491 पौरुषं यत्नमाश्रित्य प्रोल्लङ्घ्येन्द्रियपर्वतम् ।
77492 संसारजलधिं तीर्त्वा पारं गच्छ परं पदम् ॥ १४ ॥
77493
77494 विना पुरुषयत्नेन दृश्यते चेज्जनार्दनः ।
77495 मृगपक्षिगणं कस्मात्तदासौ नोद्धरत्यजः ॥ १५ ॥
77496
77497 दृश्यते तत्त्वतः साक्षात्क्रियते । नोद्धरतिं नात्मतत्त्वं दर्शयति ।
77498 आत्मदर्शनमेवोद्धार इत्याशयः ॥ १५ ॥
77499
77500 गुरुश्चेदुद्धरत्यज्ञमात्मीयात्पौरुषाद्दते ।
77501 उष्ट्रं दान्तं बलिवर्दं तत्कस्मान्नोद्धरत्यसौ ॥ १६ ॥
77502
77503 विनैव शिष्यप्रयत्नं शक्तिपातादिना गुरुस्तमुद्धरतीति योगशास्त्रादौ
77504 सिद्धमिति तत्रानैकान्त्यमाशङ्क्याह - गुरुश्चेदिति । गुरुभक्त्यादियत्न एव
77505 तत्रापि ज्ञानजनने गुर्वनुग्रहं द्वारीकरोतीति भावः ॥ १६ ॥
77506
77507 न हरेर्न गुरोर्नार्थात्किंचिदासाद्यते महत् ।
77508 आक्रान्तमनसः स्वस्माद्यदासादितमात्मनः ॥ १७ ॥
77509
77510 अर्थाद्धनात् । अमृतत्वस्य तु नाशास्ति वित्तेन इति श्रुतेरिति भावः ।
77511 आक्रान्तमनसो ज्ञानदार्ढ्येन बाधितमनसो यदात्मनः
77512 स्वस्मान्महत्परमपुरुषार्थरूपमासादितं तत् ॥ १७ ॥
77513
77514 अभ्यासवैराग्ययुतादाक्रान्तेन्द्रियपन्नगात् ।
77515 नात्मनः प्राप्यते यत्तत्प्राप्यते न जगत्त्रयात् ॥ १८ ॥
77516
77517 यत्परमपुरुषार्थरूपम् ॥ १८ ॥
77518
77519 आराधयात्मनात्मानमात्मनात्मानमर्चय ।
77520 आत्मनात्मानमालोक्य संतिष्ठस्वात्मनात्मनि ॥ १९ ॥
77521
77522 आराधय उत्कृष्टबुद्ध्या श्रवणादिना साधय सिद्धं च
77523 निरन्तरानुसंधानेनार्चय । आलोक्य तत्त्वतः साक्षात्कृत्य संतिष्ठस्व तत्रैव
77524 सम्यगवतिष्ठस्व । तद्भावान्न च्यवस्वेत्यर्थः ॥ १९ ॥
77525
77526 शास्त्रयत्नविचारेभ्यो मूर्खाणां प्रपलायिनाम् ।
77527 कल्पिता वैष्णवी भक्तिः प्रवृत्त्यर्थं शुभस्थितौ ॥ २० ॥
77528
77529 यदि स्वप्रयत्नजविचारादेव ज्ञानोदयस्तर्हि किमर्थं शास्त्रेषु
77530 विष्ण्वादिभक्तिविधानं तत्राह - शास्त्रेति ।
77531 विषयासक्तिप्राबल्यादध्यात्मशास्त्रेभ्य इन्द्रियजयादियत्नेभ्यो विचारेभ्यश्च
77532 प्रपलायिनां दूरी भूतानां मूर्खाणां कथंचिच्छुभस्थितौ सन्मार्गे

77533 प्रवृत्त्यर्थमित्यर्थः ॥ २० ॥
77534
77535 अभ्यासयत्नौ प्रथमं मुख्यो विधिरुदाहृतः ।
77536 तदभावे तु गौणः स्यात्पूज्यपूजामयक्रमः ॥ २१ ॥
77537
77538 उक्तमेवार्थमुपपत्तिभिर्द्रढयति - अभ्यासेत्यादिना ॥ २१ ॥
77539
77540 अस्ति चेदिन्द्रियाक्रान्तिः किं प्राप्यं पूजनैः फलम् ।
77541 नास्ति चेदिन्द्रियाक्रान्तिः किं प्राप्यं पूजनैः फलम् ॥ २२ ॥
77542
77543 विचारोपशमाभ्यां हि न विनासाद्यते हरिः ।
77544 विचारोपशमाभ्यां च मुक्तस्याब्जकरेण किम् ॥ २३ ॥
77545
77546 आसाद्यते स्वात्मभावेन तत्त्वतो लभ्यते । हरिः पूर्णानन्दात्मा ।
77547 विचारोपशमाभ्यामेव मुक्तस्य परमपुरुषार्थं प्राप्तस्याब्जकरेण
77548 हरिदेहेन किमधिकं प्राप्यमस्तीत्यर्थः । अथवा विचारोपशमाभ्यां
77549 मुक्तस्य रहितस्य विषयासक्तस्य अब्जकरेणेश्वरेणापि किं हितं कर्तुं
77550 शक्यमित्यर्थः ॥ २३ ॥
77551
77552 विचारोपशमोपेतं चित्तमाराधयात्मनः ।
77553 तस्मिन्सिद्धे भवान्सिद्धो नो चेत्त्वं वनगर्दभः ॥ २४ ॥
77554
77555 आराधय प्रसादय । सिद्धे प्रसन्ने सति भवानपि सिद्धः
77556 परमपुरुषार्थलक्षणां सिद्धिं प्राप्तः ॥ २४ ॥
77557
77558 क्रियते माधवादीनां प्रणयप्रार्थना स्वयम् ।
77559 तथैव क्रियते कस्मान्न स्वकस्यैव चेतसः ॥ २५ ॥
77560
77561 क्रियते यथेति शेषः ॥ २५ ॥
77562
77563 सर्वस्यैव जनस्यास्य् विष्णुरभ्यन्तरे स्थितः ।
77564 तं परित्यज्य ये यान्ति बहिर्विष्णुं नराधमाः ॥ २६ ॥
77565
77566 मनोभक्तिरेव मुख्या विष्णुभक्तिर्नतु बाह्येत्याह - सर्वस्येत्यादिना ॥ २६ ॥
77567
77568 हृद्गुहावासिचित्तत्त्वं मुख्यं सानातनं वपुः ।
77569 शङ्खचक्रगदाहस्तो गौण आकार आत्मनः ॥ २७ ॥
77570
77571 चिल्लक्षणं तत्त्वमबाधितं वस्तु सनातनमेव सानातनं शाश्वतं वपुः
77572 स्वरूपे । गौणो मायागुणकल्पित आगन्तुक इति यावत् ॥ २७ ॥
77573
77574 यो हि मुख्यं परित्यज्य गौणं समनुधावति ।
77575 त्यक्त्वा रसायनं सिद्धं साध्यं संसाधयत्यसौ ॥ २८ ॥
77576
77577 रसायनममृतम् । साध्यमोदनादि संसाधयति कृष्यादिनोत्पादयति ॥ २८ ॥
77578
77579 यस्तु भोः स्थितिमेवास्यामात्मज्ञानचमत्कृतौ ।
77580 नासादयति संमत्तमनाः स रघुनन्दन ॥ २९ ॥
77581
77582 कस्तर्हि बाह्यविष्णुभक्तावधिकारी तमाह - यस्त्विति द्वाभ्याम् । य
77583 आत्मतत्त्वचमत्कृतौ स्थितिं नासादयत्येव स श"खचक्रगदापाणिं
77584 परमेश्वरमर्चयेदित्यन्वयः ॥ २९ ॥

77585
77586 अप्राप्तात्मविवेकोऽन्तरङ्गचित्तवशीकृतः।
77587 शङ्खचक्रगदापाणिमर्चयेत्परमेश्वरम्॥ ३०॥
77588
77589 काले निर्मलतामेति चित्तं वैराग्यकारिणा॥ ३१॥
77590
77591 वैराग्यकारिणा तपसा॥ ३१॥
77592
77593 नित्याभ्यासविवेकाभ्यां चित्तमाशु प्रसीदति।
77594 आम्र एव दशामेति साहकारीं शनैः शनैः॥ ३२॥
77595
77596 आशुग्रहणं प्रसादावश्यंभावद्योतनार्थम्। सहकारः
77597 पुष्पफलाद्यतिसौरभस्तद्भावलक्षणां दशाम्॥ ३२॥
77598
77599 एतदप्यात्मनैवात्मा फलमाप्नोति भाषितम्।
77600 हरिपूजाक्रमाख्येन निमित्तेनारिसूदन॥ ३३॥
77601
77602 शास्त्रे हरिपूजाक्रमाख्येन निमित्तेन यत्फलं भाषितमेतदप्यात्मना स्वेनैव
77603 संकल्पितं प्राप्नोतीत्यर्थः॥ ३३॥
77604
77605 वरमाप्नोति यो वापि विष्णोरमिततेजसः।
77606 तेन स्वस्यैव तत्प्राप्तं फलमभ्यासशाखिनः॥ ३४॥
77607
77608 योऽपि विष्णोः सकाशाद्वरं प्राप्नोति तेनापि स्वस्य स्वीयस्यैवाभ्यासशाखिनः
77609 फलं प्राप्तं नाकस्मिकमित्यर्थः॥ ३४॥
77610
77611 सर्वेषामुत्तमस्थानां सर्वासां चिरसंपदाम्।
77612 स्वमनोनिग्रहो भूमिर्भूमिः सस्यश्रियामिव [स्वस्य इति पाठः]॥
77613 ३५॥
77614
77615 उत्तमस्थानां प्रशस्तपुरुषार्थाभिनिवेशानां चिरसंपदां
77616 चिरभोग्यमन्वादिसंपदां च स्वमनोनिग्रह एव
77617 भूमिरुद्भवस्थानमित्यर्थः॥ ३५॥
77618
77619 अप्युर्वीस्वननोत्कस्य कर्षतोऽपि शिलोच्चयम्।
77620 स्वमनोनिग्रहादन्यो नोपायोऽस्तीह कश्चन॥ ३६॥
77621
77622 उर्वीखननोत्कस्य सगरसुतादेः शिलोच्चयं मन्थाचलं कर्षतो देवासुरादेरपि।
77623 निधिरत्नादिलाभायोर्वीखननाद्युत्कस्य वा। मनस ऐकाग्र्यं विना
77624 महाकार्यासिद्धेरित्याशयः॥ ३६॥
77625
77626 तावज्जन्मसहस्राणि भ्रमन्ति भुवि मानवाः।
77627 यावन्नोपशमं याति मनोमत्तमहार्णवः॥ ३७॥
77628
77629 ब्रह्मविष्ण्विन्द्ररुद्राद्याश्चिरसंपूजिता अपि।
77630 उपप्लवान्मनोव्याधेर्न त्रायन्तेऽपि वत्सलाः॥ ३८॥
77631
77632 वत्सला दयावन्तोऽपि ब्रह्माद्या मनोव्याधेरुपप्लवान्न त्रायन्ते॥ ३८॥
77633
77634 आकारभासुरं त्यक्त्वा बाह्यमान्तरमप्यजम्।
77635 कुरु जन्मक्षयायाशु संविन्मात्रैकचिन्तनम्॥ ३९॥
77636

77637 बाह्यं बहिरिन्द्रियगम्यमान्तरमन्तःकरणगम्यं चाकारभासुरं
77638 विषयरूपं त्यक्त्वा अजं जन्मादिविक्रियशून्यम् ।
77639 संविन्मात्रस्यैकमखण्डाकारं चिन्तनं कुर्वित्यर्थः ॥ ३९ ॥
77640
77641 संवेद्यनिर्मुक्तनिरामयैक-
77642 संविन्मयास्वादमनन्तरूपम् ।
77643 सन्मात्रमास्वादय सर्वसारं
77644 पारं परं प्राप्स्यसि जन्मनद्याः ॥ ४० ॥
77645
77646 उक्तमेव व्यक्तोक्त्योपसंहरति - संवेद्येति । हे राम त्वं
77647 संवेद्यैर्बाह्यान्तरविषयैर्निर्मुक्तं यन्निरामयैकसंविन्मय
77648 स्वयमेवास्वदते निरतिशयानन्दात्मना स्फुरति तथाविधं सन्मात्रं
77649 निरन्तरं तदाकारवृत्त्या आस्वादय । एवमास्वादयन् जन्मनद्याः परं
77650 पारं प्राप्स्यसीत्यर्थः ॥ ४० ॥
77651
77652 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मोक्षोपायेषूपशमप्रकरणे
77653 प्रह्लादविश्रान्तिर्नाम त्रिचत्वारिंशः सर्गः ॥ ४३ ॥
77654
77655 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
77656 प्रह्लादविश्रान्तिर्नाम त्रिचत्वारिंशः सर्गः ॥ ४३ ॥
77657
77658
77659 चतुश्चत्वारिंशः सर्गः ४४
77660
77661 श्रीवसिष्ठ उवाच ।
77662
77663 रामापर्यवसानेयं माया संसृतिनामिका ।
77664 आत्मचित्तजयेनैव क्षयमायाति नान्यथा ॥ १ ॥
77665
77666 मनोनैराश्यसिद्ध्यर्थं मृषा दुःखस्वरूपता ।
77667 दृश्यस्य विस्तरेणास्मिन्गाध्याख्याने प्रदर्श्यते ॥ १ ॥
77668
77669 तत्र विष्णुवराद्गाधेर्जले मायानिरीक्षणे ।
77670 गृहे मृतस्य नीतस्य श्मशाने दाह ईर्यते ॥ २ ॥
77671
77672 अपर्यवसाना अपरिमितभ्रान्तिहेतुरिति यावत् ॥ १ ॥
77673
77674 जगन्मायाप्रपञ्चस्य वैचित्र्यप्रतिपत्तये ।
77675 इतिहासमिमं वक्ष्ये शृणुष्वावहितोऽनघ ॥ २ ॥
77676
77677 अवहितः सावधानचित्तः ॥ २ ॥
77678
77679 अस्त्यस्मिन्वसुधापीठे कोसलो नाम मण्डलः ।
77680 कल्पवृक्षवनं मेराविव रत्नगणाकरः ॥ ३ ॥
77681
77682 मण्डलो देशविशेषः । मेरौ कल्पवृक्षवनं नन्दनादीव ॥ ३ ॥
77683
77684 तत्राभूद्ब्राह्मणः कश्चिद्गुणी गाधिरिति श्रुतः ।
77685 परमश्रोत्रियो धीमान्धर्ममूर्तिरिव स्थितः ॥ ४ ॥
77686
77687 तत्र तस्मिन्मण्डले ॥ ४ ॥
77688

77689 आबाल्यात्प्रविरक्तेन चेतसा स व्यराजत ।
77690 निष्कलङ्कावदातेन भुवनं नभसा यथा ॥ ५ ॥
77691
77692 निष्कलङ्कावदातेनेति नभसोऽपि विशेषणम् ॥ ५ ॥
77693
77694 किमप्यभिमतं कार्यं विनिधाय स्वचेतसि ।
77695 बन्धुवृन्दाद्विनिष्क्रम्य तपस्तप्तुं वनं ययौ ॥ ६ ॥
77696
77697 कार्यं तपःप्रयोजनम् ॥ ६ ॥
77698
77699 उत्फुल्लकमलं प्राप सरस्तत्र स विप्रराट् ।
77700 चन्द्रः प्रसन्नविमलं तारासारमिवाम्बरम् ॥ ७ ॥
77701
77702 तत्र वने । तारा अश्विन्याद्याः सारादर्शनीयतमा यस्मिन् ॥ ७ ॥
77703
77704 आशौरिदर्शनं तस्मिंस्तपोर्थं सरसि द्विजः ।
77705 आकण्ठमम्बुनिर्मग्नः प्रावृट्पद्म इवाविशत् ॥ ८ ॥
77706
77707 आशौरिदर्शनं विष्णुदर्शनपर्यन्तं तपोर्थं सरसि प्रावृटपद्म इव
77708 आकण्ठमम्बुनिर्मग्नः सन् आविशत् प्रविश्य स्थित इत्यर्थः ॥ ८ ॥
77709
77710 ययौ मासाष्टकं तस्य मग्नस्य सरसोऽम्भसि ।
77711 वासपङ्कजसंकोचमनाग्भग्नमुखच्छवेः ॥ ९ ॥
77712
77713 वासो निवासस्थानं तत्रत्यानां पङ्कजानां सूर्यवियोगेन संकोचे
77714 तत्संवासस्नेहान्मनाग्भग्ना मुखच्छविर्यस्य ॥ ९ ॥
77715
77716 अथैनं तपसा तप्तमाजगामैकदा हरिः ।
77717 निदाघार्तं घनः श्यामः प्रावृषीव धरातलम् ॥ १० ॥
77718
77719 श्याम इति हरेरपि विशेषणम् ॥ १० ॥
77720
77721 श्रीभगवानुवाच ।
77722
77723 विप्रोत्तिष्ठ पयोमध्याद्गृहाणाभिमतं वरम् ।
77724 अभीप्सितफलोपेतो जातस्ते नियमद्रुमः ॥ ११ ॥
77725
77726 नियमद्रुमस्तपोवृक्षः । अभीप्सितेन फलेन उपेतः फलितो जात इत्यर्थः ॥ ११ ॥
77727
77728 ब्राह्मण उवाच ।
77729
77730 असंक्येयजगद्भूतहृत्पद्म कुहरालिने ।
77731 जगत्त्रयैकनलिनीसरसे विष्णवे नमः ॥ १२ ॥
77732
77733 असंख्येयानां जगति विद्यमानानां भूतानां प्राणिनां
77734 हृत्पद्मकुहरस्थाय श्यामत्वादलिने भृङ्गाय ॥ १२ ॥
77735
77736 मायामिमां त्वद्रचितां भगवान्पारमात्मिकीम् ।
77737 द्रष्टुमिच्छामि संसारनाम्नीमान्ध्यैककारिणीम् ॥ १३ ॥
77738
77739 पारमात्मिकीं परमात्मन्यध्यस्ताम् ॥ १३ ॥
77740

77741 श्रीवसिष्ठ उवाच।
77742
77743 इमां द्रक्ष्यसि मायां त्वं ततस्त्यक्ष्यसि चेत्यजः।
77744 उक्त्वा ययावदृश्यत्वं गान्धर्वमिव पत्तनम्॥ १४॥
77745
77746 मायादर्शनमात्रेण परमपुरुषार्थफलकस्य स्वाराधनतपसः
77747 सार्थक्यालाभात्ततस्त्यक्ष्यसि चेत्यप्रार्थितोऽपि भगवता द्वितीयो वरो दत्तः।
77748 अदृश्यत्वमन्तर्धानम्॥ १४॥
77749
77750 गते विष्णौ समुत्तस्थौ जलात्स ब्राह्मणेश्वरः।
77751 शीतलामलमूर्तित्वादिन्दुः क्षीरोदकादिव॥ १५॥
77752
77753 बभूव परितुष्टात्मा दर्शनेन जगत्पतेः।
77754 दर्शनस्पर्शनैरिन्दोरुत्फुल्लमिव कैरवम्॥ १६॥
77755
77756 दर्शनस्पर्शनैरित्युक्तेः स्थावराणामपि चाक्षुषादिज्ञानमस्तीति गम्यते॥ १६
77757 ।।
77758
77759 अथास्य कतिचित्तस्मिन्दिवसा निर्ययुर्वने।
77760 हरिसंदर्शनानन्दवतो ब्राह्मणकर्मणा॥ १७॥
77761
77762 ब्राह्मणकर्मणा तपःस्वाध्यायातिथिपूजनादिना॥ १७॥
77763
77764 एकदारब्धवान्स्नानं सरस्युदितपङ्कजे।
77765 चिन्तयन्वैष्णवं वाक्यं महर्षिरिव मानसे॥ १८॥
77766
77767 उदितपङ्कजे फुल्लपद्मे। यथा महर्षिर्योगबलेनातीतानागतं द्रष्टुं
77768 मानसे चिन्तयति तद्वत्॥ १८॥
77769
77770 अथ स्नानविधावन्तर्जलमेष चकार ह।
77771 सकलाघविघातार्थं परिवर्तमिवात्मना॥ १९॥
77772
77773 सकलाघविघातार्थमघमर्षणार्थमन्तर्जलं परिवर्तमावर्तमिव
77774 सकुशेन करेण चकारेत्यर्थः॥ १९॥
77775
77776 अन्तर्जलविहौ तस्मिन्विस्मृतध्यानमन्त्रधीः।
77777 पर्यस्तसंवित्प्रसरः सोऽपश्यज्जलमध्यतः॥ २०॥
77778
77779 अन्तर्जलं निमज्ज्य प्रणवादिमन्त्रस्मरणलक्षणे अघमर्षणविधौ पर्यस्तो
77780 विपरीतग्रहणोन्मुखः संवित्प्रसरो यस्य तथाविधः सन्॥ २०॥
77781
77782 मृतमात्मानमात्मीये सदने शोच्यतां गतम्।
77783 पतितं वातवेगेन कन्दरान्तरिव द्रुमम्॥ २१॥
77784
77785 कन्दरान्तर्दरीगर्भे पतितं द्रुममिव॥ २१॥
77786
77787 प्राणापानप्रवाहेण मुक्तमन्तमुपागतम्।
77788 संशान्तावयवस्पन्दं निर्वात इव खण्डकम्॥ २२॥
77789
77790 मृतमित्यस्य विवरणं प्राणापानेति। निर्वातपतितं कदल्यादिखण्डकमिव॥
77791 २२॥
77792

77793 पाण्डुराननमाम्लानं वृक्षपर्णमिवारसम् ।
77794 शवीभूतमिवाग्लानं छिन्ननालमिवाम्बुजम् ॥ २३ ॥
77795
77796 शवीभूतं । इवकारो मिथ्यात्वपरो नोपमार्थः ॥ २३ ॥
77797
77798 विपर्यस्तेक्षणं प्रातर्मग्नतारमिवाम्बरम् ।
77799 सावग्रहमिव ग्रामं सर्वतः पांसुधूसरम् ॥ २४ ॥
77800
77801 अवग्रहो वर्षप्रतिरोधस्तेनोद्ध्वस्तं ग्राममिव ॥ २४ ॥
77802
77803 बाष्पक्लिन्नमुखैर्दीनैः करुणाक्रन्दकारिभिः ।
77804 आवृतं बन्धुभिः खिन्नैः कुररैरिव पादपम् ॥ २५ ॥
77805
77806 करुणया आक्रन्दो रोदनं तत्कारिभिः । कुररैः पक्षिविशेषैः ॥ २५ ॥
77807
77808 सेतुभङ्गगलद्वारिह्रियमाणमुखाब्जया ।
77809 नलिन्या समधर्मिण्या भार्यया पादयोः श्रितम् ॥ २६ ॥
77810
77811 सेतुभङ्गाद्गलद्भिः प्रवहद्भिर्करिभिर्ह्रियमाणं मुखमिव अब्जं
77812 यस्यास्तथाविधया नलिन्या कमलिन्या ॥ २६ ॥
77813
77814 ताराक्रन्दरणद्रेफप्रलापालापलुब्धया ।
77815 मात्रा गृहीतं चिबुके नवव्यञ्जनलाञ्छिते ॥ २७ ॥
77816
77817 तारेणोच्चतरेणाक्रन्देन रणन्तो रेफा द्विरेफा इव प्रलापे अनर्थकव्यक्तवाक्ये
77818 दीर्घस्वरालापे च लुब्धया आसक्तया । नवैर्व्यञ्जनैः श्मश्रुभिर्लाञ्छिते
77819 चिह्निते ॥ २७ ॥
77820
77821 अन्यैः पार्श्वगतैर्दीनैः स्रवदश्रुमुखैर्जनैः ।
77822 श्रितं गलदवश्यायैः शुष्कपर्णैरिव द्रुमम् ॥ २८ ॥
77823
77824 श्रितं परिवेष्टितम् ॥ २८ ॥
77825
77826 वियोगभीत्या संयोगपरिहारपरैरिव ।
77827 दूरं विप्रसृतैरङ्गैरनात्मीयैरिवावृतम् ॥ २९ ॥
77828
77829 संयोगा विप्रयोगान्ताः इति न्यायप्रापितवियोगभीत्या
77830 संयोगपरिहारपरैरिवेत्युत्प्रेक्षा । अङ्गैर्हस्तपादादिभिः ।
77831 अनात्मीयैरस्वीयैरस्वजनैरिव वेत्युपमा ॥ २९ ॥
77832
77833 परस्परमलग्नाभ्यामोष्ठाभ्यां दशनैः सितैः ।
77834 सविरागमिवाम्लानैर्हसन्तं स्वात्मजीवितम् ॥ ३० ॥
77835
77836 आम्लानैरीषन्मलिनैर्दशनैः स्वात्मजीवितमेतावत्कालं वृथेति हसन्तं
77837 सविरागं विरक्तपुरुषमिव ॥ ३० ॥
77838
77839 मौनध्यानमिवापन्नं पङ्कादिव विनिर्मितम् ।
77840 अप्रबोधाय संसुप्तं विश्राम्यन्तमिवोच्चकैः ॥ ३१ ॥
77841
77842 मौनध्यानमित्याद्याश्चतस्र उत्प्रेक्षाः ॥ ३१ ॥
77843
77844 बान्धवाक्रन्दसंरम्भकोलाहलगता गिरः ।

77845 स्नेहभावविचारार्थं शृण्वन्तमिव यत्नतः ॥ ३२ ॥
77846
77847 बान्धवेषु कस्याधिकः स्नेहः कस्याल्प इति तत्तदाशयविमर्शार्थं
77848 यत्नतोऽवहितमनस्कतया तूष्णीं तदाक्रन्दान्शृण्वन्तमिव ॥ ३२ ॥
77849
77850 अथ तत्कालकल्लोलप्रलापाकुलचेष्टितैः ।
77851
77852 अथ क्रमेण स्वजनैर्निष्कालितं गृहाद्बहिर्निष्कासितमिति परेणान्वयः ॥ ३३ ॥
77853
77854 क्रमेण स्वजनैः क्षुब्धैस्ताराक्रन्दादिघर्घरैः ।
77855 निष्कालितममङ्गल्यमपुनर्दर्शनाय वै ॥ ३४ ॥
77856
77857 नीतं श्मशानं मांसान्त्रवसापङ्ककलङ्कितम् ।
77858 शुष्काशुष्करसक्लिन्नं कंकालशतसंकुलम् ॥ ३५ ॥
77859
77860 मांसान्त्रेत्यादिजरत्खगमित्यन्तानि श्मशानविशेषणानि ॥ ३५ ॥
77861
77862 गृध्राभ्रच्छन्नसूर्यांशुचिताज्वलननिस्तमः ।
77863 शिवाशिवमुखज्वालाजालपल्लवितावनि ॥ ३६ ॥
77864
77865 शिवानामशिवैर्मुखनिर्गतज्वालाजालैः पल्लवितेवावनिर्यस्य ॥ ३६ ॥
77866
77867 वहद्रक्तसरित्स्नातमग्नकङ्कोग्रवायसम् ।
77868 रक्तार्द्रतन्त्रीप्रसरजालाबद्धजरत्खगम् ॥ ३७ ॥
77869
77870 वहद्रक्तसरित्सुकेचित्स्नाताः केचिन्मग्नाश्च कङ्का उग्रवायसाश्च यत्र ।
77871 रक्तैरार्द्राणां तन्त्रीणां प्रसरलक्षणैर्जालैरानायैराबद्धा जरत्खगा
77872 वृद्धपक्षिणो यत्र ॥ ३७ ॥
77873
77874 तत्र ते ज्वलने दीप्ते चक्रुस्तं भस्मसाच्छवम् ।
77875 बान्धवाः सलिलापूरं समुद्रा इव वाडवे ॥ ३८ ॥
77876
77877 वाडवे वडवाग्नौ समुद्राः स्वसलिलापूरं यथा भस्मसाच्चक्रुस्तद्वत् ॥ ३८ ॥
77878
77879 चितिश्चटचटास्फोटैः शवमाशु ददाह सा ।
77880 शुष्केन्धनबहूच्छूनज्वालाजालजटावली ॥ ३९ ॥
77881
77882 शुष्कैरिन्धनैर्बहु उच्छूना अभिवृद्धा ज्वालाजाललक्षणा जटावलिर्यस्याः
77883 सा चितिश्चिता चटचटाशब्दैस्तं शवमाशु ददाह ॥ ३९ ॥
77884
77885 अभ्युल्लसत्कटकटारवमुक्तगन्ध-
77886 व्याप्ताम्बुवाहपटलोऽस्थिचयं हुताशः ।
77887 दन्ती सरन्ध्रमिव वेणुवनं समन्ता-
77888 दुद्वान्तमेदुररसं दलयांचकार ॥ ४० ॥
77889
77890 अभ्युल्लसद्भिः कटकटारवैर्मुक्तैर्गन्धैश्च व्याप्तान्यम्बुवाहपटलानि
77891 येन तथाविधो हुताशोऽग्निः समन्तादुद्वान्ता उद्गीर्णा मेदुरा उपचिता रसा
77892 यस्मात्तथाविधमस्थिचयं दन्ती सरन्ध्रं वेणुवनमिव दल्यांचकार ।
77893 विदलयामासेत्यर्थः ॥ ४० ॥
77894
77895 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० मोक्षोपायेषूपशमप्रकरणे
77896 गाधिवृत्तान्ते गाधिविनाशो नाम चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

77897
77898 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे गाधिविनाशो
77899 नाम चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥
77900
77901
77902 पञ्चचत्वारिंशः सर्गः ४५
77903
77904 श्रीवसिष्ठ उवाच।
77905
77906 अथापश्यदसौ गाधिः स्वाधिपीवरया धिया।
77907 अन्तर्जलस्थ एवान्तरात्मनात्मनि निर्मले ॥ १ ॥
77908
77909 इहास्य पुल्कसीकुक्षौ जन्म कैरातकी स्थितिः।
77910 मृतबन्धोः कीरपुरे राज्यप्राप्तिश्च वर्ण्यते ॥ १ ॥
77911
77912 स्वस्याधिभिर्मानसदुःखैः पीवरया उपचितया। इत आरभ्य सर्वेषां
77913 कारकाणां विंशतितमश्लोकस्थे अपश्यदित्यत्र क्रमेणान्वयः ॥ १ ॥
77914
77915 भूतमण्डलपर्यन्तग्रामोपान्तनिवासिनाम्।
77916 श्वपचानां स्त्रिया गर्भे स्थितिमात्मानमाकुलम् ॥ २ ॥
77917
77918 भूतमण्डलाख्यो देशभेदस्तस्य पर्यन्तः सीमा तत्रत्यग्रामस्य उपान्ते
77919 संनिहितभूमौ निवासिनाम् ॥ २ ॥
77920
77921 गर्भयासभराक्रान्तं पीडितं पेलवाङ्गकम्।
77922 श्वपचीहृदये सुप्तं स्वविष्ठायामिवाकुलम् ॥ ३ ॥
77923
77924 गर्भवासपदेन तत्रत्यदुःखानि लक्ष्यन्ते तद्भरेणाक्रान्तम्।
77925 पीडितमित्यादिस्तस्यैव प्रपञ्चः ॥ ३ ॥
77926
77927 शनैः पक्वतया काले प्रसूतं मेचकच्छविम्।
77928 श्वपच्या प्रावृषेवाब्दं श्याममावलितं मलैः ॥ ४ ॥
77929
77930 श्वपच्या काले प्रसूतम्। अब्दं मेघम् ॥ ४ ॥
77931
77932 संपन्नं श्वपचागारे शिशुं श्वपचवल्लभम्।
77933 इतश्चेतश्च गच्छन्तमुत्पीडमिव यामुनम् ॥ ५ ॥
77934
77935 यामुनं यमुनाप्रवाहपतितमुत्पीडमुत्तंसोत्पलमिव ॥ ५ ॥
77936
77937 द्वादशाब्ददशां यातं संस्थितं षोडशाब्दिकम्।
77938 पीवरांसमुदाराङ्गं पयोदमिव मेदुरम् ॥ ६ ॥
77939
77940 सारमेयपरीवारं विहरन्तं वनाद्वनम्।
77941 निघ्नन्तं मृगलक्षाणि पौलिन्दीं स्थितिमागतम् ॥ ७ ॥
77942
77943 सारमेयाः श्वान एव मृगयाद्यर्थं परीवारो यस्य। पौलिन्दीं कैरातीं
77944 स्थितिं वृत्तिम् ॥ ७ ॥
77945
77946 तमाललतयेवाथ श्रितं श्वपचकान्तया।
77947 स्तनस्तबकशालिन्या नवपल्लवहस्तया ॥ ८ ॥
77948

77949 अथ श्वपचकन्यया श्रितम्। कृतोद्वाहमिति यावत्॥ ८॥
77950
77951 श्यामया मलिनाकारदशनामलमालया।
77952 वनपल्लवया भूरिविलासवलिताङ्गया॥ ९॥
77953
77954 दन्तधावनाभावान्मलिनाकारा स्वाभाविकशौक्ल्यादमला दशनमाला
77955 यस्यास्तया। वनपल्लवान् यान्त्यनुगच्छन्ति
77956 तथाविधैर्भूरिविलासैर्वलिताङ्गया। वनपल्लवशब्दे उपपदे यातेः क्विप्॥ ९॥
77957
77958 विलसन्तं वनान्तेषु तया सह नवेष्टया।
77959 श्यामलं श्यामया भृङ्गं भृङ्ग्येव कुसुमर्द्धिषु॥ १०॥
77960
77961 नवत्वादेवेष्टया नवं नित्यामिनवं यथा स्यात्तथा इष्टया वा।
77962 कुसुमर्द्धिषु पुष्पसमृद्धमत्सु वनान्तेषु॥ १०॥
77963
77964 वनपर्णलतापत्रे वसन्तं व्यसनातुरम्।
77965 विन्ध्यकान्तारमाकारमभ्यागतमिवोद्भटम्॥ ११॥
77966
77967 आकारमभ्यागतं गृहीतपुरुषाकारं विन्ध्यकान्तारमिवेत्युत्प्रेक्षा॥ ११॥
77968
77969 विश्रान्तं वनकुञ्जेषु सुप्तं गिरिदरीषु च।
77970 निलीनं पत्रपुञ्जेषु गुल्मकेषु कृतालयम्॥ १२॥
77971
77972 किंकिरातावतंसाढ्यं यूथिकास्रग्विभूषितम्।
77973 केतकोत्तंससुभगं सहकारस्रगाकुलम्॥ १३॥
77974
77975 किंकिरातादिपदैस्तत्तन्मञ्जर्यो गृह्यन्ते॥ १३॥
77976
77977 लुलितं पुष्पशय्यासु भ्रान्तमद्रितटीषु च।
77978 तज्ज्ञं काननकोशेषु बहुज्ञं मृगमारणे॥ १४॥
77979
77980 काननकोशेषु विषयेषु तज्ज्ञमसाधारणज्ञानवन्तमित्यर्थः। बहुज्ञं
77981 पण्डितम्॥ १४॥
77982
77983 प्रसूतमथ शैलेषु पुत्रान्निजकुलाङ्कुरान्।
77984 अत्यन्तविषमोदन्तान्खदिरः कण्टकानिव॥ १५॥
77985
77986 अत्यन्तं विषमाः श्रोतुमप्यशक्या उदन्ताश्चरित्राणि येषाम्॥ १५॥
77987
77988 कलत्रवन्तं संपन्नं स्थितं प्रक्षीणयौवनम्।
77989 शनैर्जर्जरतां यातं वृष्टिहीनमिव स्थलम्॥ १६॥
77990
77991 ततो भूतग्रहग्रामजन्मदेशमुपेत्य तम्।
77992 संस्थितं मठिकां पर्णैः कृत्वा दूरे मुनीन्द्रवत्॥ १७॥
77993
77994 भूतग्रहो भूतमण्डलाख्यो देशस्तदीयग्रामसंबन्धिनीं
77995 जन्मभूमिमुपेत्य दूरे तालादिपर्णैर्मठिकां कुटीं कृत्वा स्थितम्॥ १७॥
77996
77997 जराजरठतां यातं स्वदेहसमपुत्रकम्।
77998 जीर्णप्रायरसश्वभ्रतमालतरुसंनिभम्॥ १८॥
77999
78000 स्वदेहसमप्रमाणाः पुत्रा यस्य। जीर्णप्राया रसा यस्य तथाविधेन

78001 श्वभोर्त्पन्नतमालतारुणा संनिभं सद्दशम् ॥ १८ ॥
78002

78003 प्रौढं श्वपचगार्हस्थ्यं कुर्वाणं बहुबान्धवम् ।
78004 क्रूरनामार्थवचनं परां वृद्धिमुपागतम् ॥ १९ ॥
78005

78006 क्रूराणि नामान्याख्या अर्थाः क्रियावचनानि च यस्य । परां
78007 कुटुम्बवृद्धिमुपागतं स्वं अपश्यदिति । एतदन्तानां सर्वविशेषणानां
78008 परेणान्वयः ॥ १९ ॥
78009

78010 अथापश्यदसौ गाधिर्यावत्तस्य कलत्रिणः ।
78011 जरठः श्वपचेभ्यश्च स्वात्मनो भ्रमहारिणः ॥ २० ॥
78012

78013 अन्येभ्यः श्वपचेभ्यो जरठोऽसौ गाधिः । अथानन्तरं भ्रमहारिणः
78014 भ्रान्तिमेवानुवर्तमानस्य कलत्रिणः कुटुम्बिनः स्वात्मनः स्वस्य
78015 यावत्कलत्रं कुटुम्बमभूत्तन्मृत्युना आवृत्य अशेषेण निःशेषतया
78016 नीतमपश्यदिति द्वयोरन्वयः । यथा आसारसलिलेन वृष्टिजलप्रवाहेण
78017 वनपतितशुष्कपर्णगणो नीयते तद्वदित्यर्थः ॥ २० ॥
78018

78019 तत्कलत्रमशेषेण नीतमावृत्य मृत्युना ।
78020 आसारसलिलेनाशु वनपर्णगणो यथा ॥ २१ ॥
78021

78022 प्रलपत्येक एवासावटव्यां दुःखकर्शितः ।
78023 वियूथ इव सारङ्गो विगतास्थोऽश्रुलोचनः ॥ २२ ॥
78024

78025 अथासौ जरठ एक एव अटव्यां प्रलपति रोदिति ॥ २२ ॥
78026

78027 दिनानि कतिचित्तत्र नीत्वा शोकपरीतधीः ।
78028 जहौ स्वदेशं संशुष्कपद्मं सर इवाण्डजः ॥ २३ ॥
78029

78030 अण्डजो हंसादिः ॥ २३ ॥
78031

78032 विजहार  बहून्देशाननास्थश्चिन्तयान्वितः ।
78033 प्रेर्यमाण इवान्येन वातनुन्न इवाम्बुदः ॥ २४ ॥
78034

78035 अन्येन प्रेर्यमाणः पराधीन इव ॥ २४ ॥
78036

78037 एकदा प्राप कीराणां मण्डले श्रीमतीं पुरीम् ।
78038 खेचरो विहरञ्शून्ये सद्विमानमिवाम्बरे ॥ २५ ॥
78039

78040 कीराणां जानपदानामावासभूते मण्डले । शून्ये अम्बरे विहरन् संचरन् ॥
78041 २५ ॥
78042

78043 नृत्यद्रत्नांशुकच्छन्नमार्गवृक्षलताङ्गनम् ।
78044 आगुल्पाकीर्णकुसुमं चन्दनागुरुसुन्दरम् ॥ २६ ॥
78045

78046 नृत्यतो रत्नैरंशुकैश्च च्छन्ना मार्गस्था वृक्षा लता अङ्गनाश्च
78047 यस्मिंस्तथाविधं राजमार्गमध्यमवापेति परेणान्वयः ॥ २६ ॥
78048

78049 सामन्तैर्ललनाभिश्च नागरैश्च निरन्तरम् ।
78050 स्वर्गमार्गोपमं राजमार्गमध्यमवाप सः ॥ २७ ॥
78051

78052 निरन्तरं निबिडितम् ॥ २७ ॥

78053
78054 मणिरत्नकृतागारं तत्र मङ्गलहस्तिनम् |
78055 ददर्शामरशैलेन्द्रमिव संचारचञ्चलम् || २८ ||
78056
78057 मणिरत्नैर्मणिश्रेष्ठैः कृतागारं कृताश्रयं कृतजालकम् |
78058 शैलेन्द्रपक्षे कृतदेवसदनम् | अमरशैलेन्द्रं मेरुम् || २८ ||
78059
78060 मृते राजनि राजार्थं विहरन्तमितस्ततः |
78061 रत्नज्ञमिव रत्नार्थं चिन्तामणिदिदृक्षया || २९ ||
78062
78063 इतस्ततो विहरन्तं संचरन्तम् | रत्नज्ञं रत्नपरीक्षाकुशलं पुरुषम् || २९ ||
78064
78065 तमसौ श्वपचो नागं कौतुकोद्धुरया दृशा |
78066 चिरमालोकयामास स्पन्दयुक्ताचलोपमम् || ३० ||
78067
78068 असौ श्वपचः || ३० ||
78069
78070 आलोकयन्तमादाय तं करेण स वारणः |
78071 स्वकटेऽयोजयन्मेरुस्तटेऽर्कमिव सादरम् || ३१ ||
78072
78073 स्वस्य कटे गण्डस्थले अयोजयत् आरोहयामास || ३१ ||
78074
78075 तस्मिन्कटगते ने दुर्जयदुन्दुभयोऽभितः |
78076 कल्पाम्बुद इवाकाशमधिरूढे महार्णवाः || ३२ ||
78077
78078 महान्तोऽर्णवाः समुद्रा इव || ३२ ||
78079
78080 पूरिताशो बभौ राजा जयतीति जनस्वनः |
78081 उदभूत्संप्रबुद्धानां विहगानामिवारवः || ३३ ||
78082
78083 आशा दिशो मनोरथाश्च || ३३ ||
78084
78085 उदभूद्बन्दिवृन्दानां घनकोलाहलस्ततः |
78086 वेलाविलुलिताम्बूनामम्बुधीनामिव ध्वनिः || ३४ ||
78087
78088 तं तत्रावरयामासुर्मण्डनार्थं वराङ्गनाः |
78089 क्षीरोदगतविभ्रान्ता लहर्य इव मन्दरम् || ३५ ||
78090
78091 आवरयामासुः परिवव्रुः | क्षीरोदस्य गतेन मथनकृतक्षोमेण विभ्रान्ताः ||
78092 ३५ ||
78093
78094 मानिन्यस्तं गुणप्रोतैर्नानारत्नैरपूरयन् |
78095 नानाप्रभाप्रभातार्का वेला इव तटाचलम् || ३६ ||
78096
78097 गुणेषु सूत्रेषु प्रोतैर्ग्रथितैर्मालाभुतैरिति यावत् | नानावर्णमणिषु
78098 प्रतिबिम्बनात्तत्तत्प्रभाभिः प्रभातोऽर्को यासु तथाविधाः वेलाः
78099 स्वतटस्थमचलं गिरिमिव || ३६ ||
78100
78101 तुषारशिशिरस्पर्शैस्तास्तं हारैरभूषयन् |
78102 श्यामा वननदीपूरैर्वर्षाः शृङ्गमिवोत्तमम् || ३७ ||
78103
78104 श्यामाः युवत्यः | वर्षाः वृष्टयो वननदीनां पुरैस्तन्मध्यपतितं

78105 गिरिशृङ्गमिव ॥ ३७ ॥
78106
78107 विचित्रवर्णसौगन्ध्यैः पुष्पैरावलयन्स्त्रियः ।
78108 अनं मधुश्रिय इव तं लोलकरपल्लवाः ॥ ३८ ॥
78109
78110 नानावर्णरसामोदैस्तास्तमाशु विलेपनैः ।
78111 अलेपयन्प्रभाजालैर्नगोऽभ्रमिव धातुभिः ॥ ३९ ॥
78112
78113 नगो गिरिर्धातुभिर्लक्षणया धातुसंबन्धिभिः प्रभाजालैरभ्रमाकाशं
78114 मेघमिव वा ॥ ३९ ॥
78115
78116 रत्नकाञ्चनकान्तोऽसावाददे चित्तमाततम् ।
78117 संध्याभ्रतारेन्दुनदीव्याप्तं मेरुरिवाम्बरम् ॥ ४० ॥
78118
78119 रत्नकाञ्चनभूषणैः कान्तो भूषितोऽसौ राजा चित्तमाददे तासामिति शेषः ॥ ४०
78120 ।।
78121
78122 भूषितः सविलासाभिर्बालवल्लीभिरावृतः ।
78123 रत्नपुष्पांशुकाकीर्णः कल्पवृक्ष इवाबभौ ॥ ४१ ॥
78124
78125 तादृशं तमुपाजग्मुः परिवारसमन्विताः ।
78126 सर्वाः प्रकृतयः फुल्लं मार्गद्रुममिवाध्वगाः ॥ ४२ ॥
78127
78128 ता एनमासने सैंहे तत्राभिषिषिचुः क्रमात् ।
78129 तस्मिन्नेव गजे शक्रमैरावत इवामराः ॥ ४३ ॥
78130
78131 ता प्रकृतयः सैंहे आसने उपवेश्य
78132 क्रमाद्ब्राह्मणादिवर्णक्रमादभिषिषिचुः । अभिषिच्य च तस्मिन्प्रागुक्ते गजे
78133 उपवेश्यानुजग्मुरित शेषः ॥ ४३ ॥
78134
78135 एवं स श्वपचो राज्यं प्राप कीरपुरान्तरे ।
78136 आरण्यं हरिणं पुष्टमप्राणमिव वायसः ॥ ४४ ॥
78137
78138 कीरीकरतलाम्भोजप्रमृष्टचरणाम्बुजः ।
78139 सर्वाङ्गिं कुङ्कुमालेपैः संध्याम्बुधरशोभनः ॥ ४५ ॥
78140
78141 जज्वाल कीरनगरे नागरीगणवानसौ ।
78142 सिंहीगणयुतः सिंहो यथा कुसुमिते वने ॥ ४६ ॥
78143
78144 हरिहतकरिकुम्भोन्मुक्तमुक्ताकलाप-
78145 प्रविरचितशरीरः शान्तचिन्ताविषादः ।
78146 अरमत सह सद्भिस्तत्र भोगैः सरस्यां
78147 रविकरमदतप्तो वारिपूरैरिवेभः ॥ ४७ ॥
78148
78149 हरिणा सिंहेन हताद्विदारितात्करिकुम्भादुन्मुक्तानां मुक्ताफलानां
78150 कलापैः प्रविरचितं भूषितं शरीरं यस्य । शान्ताः प्राक्तन चिन्ता
78151 विषादाश्च यस्य तथाविधः संस्तत्र नगरे सद्भिर्मन्त्रिपौरादिभिः सह
78152 भोगैररमत रेमे । यथा रविकरैर्मदेन च तप्त इभः सरस्यां वारिपूरै
78153 रमते तद्वत् ॥ ४७ ॥
78154
78155 परिविसृतनृपौजाः सर्वदिक्संस्थिताज्ञः
78156 कतिपयदिवसेहासिद्धदेशव्यवस्थः ।

78157 प्रकृतिभिरलमूढाशेषराजन्यभारः
78158 स गवल इति नाम्ना तत्र राजा बभूव ॥ ४८ ॥
78159
78160 परितो विसृतं प्रसृतं नृपौजो राजशक्तिर्यस्य। अत एव सर्वदिक्षु संस्थिता
78161 आज्ञा यस्य। कतिपयदिवसैरीहया स्वेच्छयैव सिद्धा राज्यव्यवस्था यस्य स
78162 श्वपचो गवल इत्यभिनवेन नाम्ना प्रसिद्धस्तत्र कीरदेशे राजा
78163 बभूवेत्यर्थः ॥ ४८ ॥
78164
78165 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मोक्षोपायेषूपशमप्रकरणे
78166 गाधिवृत्तान्ते श्वपचराज्यलाभो नाम पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥
78167
78168 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
78169 श्वपचराज्यलाभो नाम पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥
78170
78171
78172 षट्चत्वारिंशः सर्गः ४६
78173
78174 श्रीवसिष्ठ उवाच।
78175
78176 विलासिनीभिर्वलितो मन्त्रिमण्डलपूजितः।
78177 वन्दितः सर्वसामन्तैश्छत्रचामरलालितः ॥ १ ॥
78178
78179 इह तं श्वपचाच्छ्रुत्वा श्वपचं ज्वलनं जने।
78180 प्रविष्टे सोऽपि निर्दग्धः प्रबुद्धो गाधिरीर्यते ॥ १ ॥
78181
78182 विलासिनीभिर्वलित इत्यादिविशेषणः स विस्मृतात्मस्वभावोऽभूदिति
78183 तृतीयेनान्वयः ॥ १ ॥
78184
78185 सिद्धानुशासनः कान्तो ज्ञातराज्यगुणक्रमः।
78186 वीतशोकभयायासप्रज्ञः [प्रजः इति साधीयानत्र]
78187 प्राप्तमहादशः ॥ २ ॥
78188
78189 सिद्धमप्रतिहतमनुशासनमाज्ञापनं यस्य। वीतशोकभयायासाः प्रजा
78190 यस्य ॥ २ ॥
78191
78192 विस्मृतात्मस्वभावोऽभूदनिशं स्तवमङ्गलैः।
78193 आनन्दपूर्णया वृत्त्या भृशं क्षीब इवासवैः ॥ ३ ॥
78194
78195 क्षीणो मत्त इव ॥ ३ ॥
78196
78197 कीरेषु श्वपचो राज्यं वर्षाण्यष्टौ चकार ह।
78198 आर्यवृत्तमशेषेण तावत्कालं बभार ह ॥ ४ ॥
78199
78200 आर्यवृत्तं दयादाक्षिण्यशौचादि ॥ ४ ॥
78201
78202 यदृच्छयैकदाथासावतिष्ठत्त्यक्तभूषणः।
78203 अतमस्तारकेन्द्वर्कतेजोऽम्भोदमिवाम्बरम् ॥ ५ ॥
78204
78205 न विद्यन्ते तमस्तारकेन्द्वर्कतेजांस्यम्भोदाश्च
78206 यस्मिंस्तथाविधमम्बरमिव सर्वतो नीलः ॥ ५ ॥
78207
78208 बह्वमन्यत नो हारकेयूरवलयान्यसौ।

78209 प्रभुताबृंहितं चेतो नाहार्यमभिनन्दति ॥ ६ ॥
78210
78211 किमर्थं त्यक्तभूषणस्तत्राह - बह्विति । प्रभुतया बृंहितमुपचितम् ।
78212 आहार्यं कृत्रिमं भूषणादि नाभिनन्दति ॥ ६ ॥
78213
78214 एक एवाजिरं बाह्यं तादृग्वेषः स निर्ययौ ।
78215 मुख्याङ्गं णान्नभोभागादस्तं गच्छन्निवांशुमान् ॥ ७ ॥
78216
78217 आन्तरान्मुख्यजनाश्रितादङ्गणाद्बाह्यं
78218 नीचजनसाधारणमजिरमङ्गणं निर्ययौ । यथा अस्तं
78219 गच्छन्गमिष्यन्नंशुमान्मुख्याद्गगनाङ्गणात्प्रान्तनभोभागं निर्याति
78220 तद्वत् ॥ ७ ॥
78221
78222 तत्रापश्यद्धनं श्यामं पीनं श्वपचपेटकम् ।
78223 गायन्मृदु वसन्तोत्थं कोकिलानामिव व्रजम् ॥ ८ ॥
78224
78225 श्वपचानां पेटकं संघम् । मृदु मधुरं गायत् ॥ ८ ॥
78226
78227 धुनानं वल्लकीतन्त्रीं करपल्लवलीलया ।
78228 मृदुरेफं रणद्रेफामलिश्रेणिमिव द्रुमम् ॥ ९ ॥
78229
78230 वल्लक्या वीणायास्तन्त्रीं गुणम् । मृदुरेफं मृदुस्वरम् । द्रुमं
78231 धुनानां कम्पयन्तीम् । रणन्तो रेफाः पक्षा यस्यास्तथाविधामलिश्रेणिं
78232 भ्रमरपङ्क्तिमिव ॥ ९ ॥
78233
78234 एकस्तस्मात्समुत्तस्थौ जरावात्रक्तलोचनः ।
78235 काचशृङ्गहिमापूर्णमिव श्वपचनायकः ॥ १० ॥
78236
78237 हिमैरापूर्णं काचमयं गिरेः शृङ्गमिव स्थितः श्यामो धूलिधूसर इति
78238 यावत् ॥ १० ॥
78239
78240 भो कटंजेति सहसा वदन्कीरमहीपतिम् ।
78241 इह राजा भवन्तं वा कच्चिद्गेयक्रियाविदम् ॥ ११ ॥
78242
78243 कटंजेति पूर्वनाम्ना वदन् संबोधयन् ॥ ११ ॥
78244
78245 रक्तकण्ठं मानयति रागवानिव कोकिलम् ।
78246 आपूरयति वा कच्चिद्गृहवस्त्रासनार्पणैः ॥ १२ ॥
78247
78248 रक्तकण्ठं मधुरकण्ठध्वनिम् । मानयति बहुमन्यते किम् । रागवान्
78249 स्वरवित् कान्ताद्यनुरागवान्वा । गृहस्य वस्त्रासनानां चार्पणैर्दानैः ॥ १२ ॥
78250
78251 मधू रसालविटपं फलपुष्पभरैरिव ।
78252 दर्शनेन तवाद्याहं परां निर्वृतिमागतः ॥ १३ ॥
78253
78254 मधुर्वसन्तः । रलोपे दीर्घः । निर्वृतिं सुखम् ॥ १३ ॥
78255
78256 पद्मं सूर्योदयेनेव चन्द्रोदय इवौषधी ।
78257 आनन्दानामशेषाणां लाभानां महतामपि ॥ १४ ॥
78258
78259 विश्रामाणामनन्तानां सीमान्तो बन्धुदर्शनम् ।
78260 श्वपचे प्रवदत्येवं राजा यावत्तया तया ।

78261 वकार तत्कालजया चेष्टयैवावधीरणम् ॥ १५ ॥
78262
78263 सीमान्तः परमावधिः । सीमन्तः केशवेशे इत्युक्तेः पररूपाभावः ।
78264 अवधीरणं तिरस्कारं तद्व्याजेन गूहनमिति यावत् ॥ १५ ॥
78265
78266 तावद्वातायनगताः कान्ताः प्रकृतयस्तथा ।
78267 श्वपचोऽयमिति ज्ञात्वा म्लानतामलमाययुः ॥ १६ ॥
78268
78269 अलमत्यन्तम् । म्लोआनतां क्षीणहर्षताम् ॥ १६ ॥
78270
78271 पद्मास्तुषारप्रावृष्ट्या ग्रामाः सावग्रहा इव ।
78272 दाववन्त इवाद्रीन्द्रा नागरा न विरेजिरे ॥ १७ ॥
78273
78274 तुषारैः प्राति पूरयतीति तया तुषारप्रावृष्ट्या । इवेत्यत्रापि संबध्यते । प्रा
78275 पूरणे इत्यस्मात्क्विपि तृतीयैकवचने आतो धातोः इत्यालोपः । सावग्रहा
78276 अनावृष्टिपीडिताः दवे भवो दावोऽग्निस्तद्वन्त इव ॥ १७ ॥
78277
78278 नृपोऽवधीरयामास तां तां श्वपचसंकथाम् ।
78279 वृक्षाग्रगतमार्जारफेत्कारं मृगराडिव ॥ १८ ॥
78280
78281 अवधीरयामास निर्भर्त्सयामास । संकथां संभाषाम् ॥ १८ ॥
78282
78283 सत्वरं प्रविवेशान्तःपुरमाम्लानमानवम् ।
78284 राजहंस इवावर्षे सीदत्सरसिजं सरः ॥ १९ ॥
78285
78286 सीदत्सरसिजं शुध्यत्पङ्कजम् ॥ १९ ॥
78287
78288 सर्वावयवविश्रान्तां म्लानतामयमाययौ ।
78289 जानुस्तम्भान्तरमहारन्ध्राग्निरिव दुर्द्रुमः ॥ २० ॥
78290
78291 सर्वेष्ववयवेषु विश्रान्तां व्याप्ताम् । जान्विव स्तभ्राति विष्टभ्रोतीति
78292 जानुस्तम्भो मूलभागस्तदन्तरालस्थे महारन्ध्रे कोटरे अग्निर्यस्य । दुर्द्रुमः
78293 शाल्मल्यादिः ॥ २० ॥
78294
78295 तत्रापश्यदसौ सर्वं विषण्णवदनं जनम् ।
78296 जालं कुङ्कुमपुष्पाणां भुक्तमूलमिवाखुना ॥ २१ ॥
78297
78298 जालपदेन पुष्पजालास्पदं गुल्मं [गुल्मं इति क्वचिन्न पठ्यते]
78299 गृह्यते । आखुना मूषकेण भुक्तमूलं खण्डितमूलम् ॥ २१ ॥
78300
78301 मन्त्रिणो नागरा नार्यस्ततस्ते तं महीपतिम् ।
78302 नास्प्राक्षुरपि तिष्ठन्तं गृह एव शवं यथा ॥ २२ ॥
78303
78304 गृहे एव तिष्ठन्तमपि नास्प्राक्षुर्न स्पृष्टवन्तः ॥ २२ ॥
78305
78306 भृत्याश्चाकृतसत्कारं दूर एनमथात्यजन् ।
78307 दुःखयुक्ता घनस्नेहा अपि बालाः शवं यथा ॥ २३ ॥
78308
78309 अनानन्दमुखं श्यामं शरीरं श्रीविवर्जितम् ।
78310 दग्धं स्थलमिवैनं ते वह्नमन्यन्त नाकुलाः ॥ २४ ॥
78311
78312 दग्धं स्थलं श्मशानदेशमिव ॥ २४ ॥

धूमायमानदेहस्य परितापदशावती |
नाढौकतास्य जनता पार्श्वमग्निर्गिरिरिव || २५ ||

जनता जनसमूहोऽस्य पार्श्वं नाढौकत नासर्पत | गिरेः पार्श्वं
वप्रशिलाभागमग्निरिव || २५ ||

मन्दोत्साहाः समुद्भूताः सभ्यसंघातवर्जिताः |
न तदाज्ञाः पदं प्रापुर्भस्मनीवाम्बुविप्रुषः || २६ ||

स आज्ञाशक्त्या तां कुतो न वशीचकार तत्राह - मन्दोत्साहा इति |
सभ्यैर्भटादिसंघातैश्च वर्जिता उपेक्षितास्तदाज्ञाः पदं
विषयमाज्ञापनयोग्यं पुरुषं न प्रापुः || २६ ||

क्रूरकर्मकराकारात्संगताशुभदायिनः |
तस्माद्विशेषेण जना राक्षसादिव दुद्रुवुः || २७ ||

संगतेन अशुभस्य पापस्य वधादेश्च दायिनः | राक्षसादिव भीता इति शेऽः ||
२७ ||

एक एव बभूवासौ जनमध्यगतोऽपि सन् |
अर्थादिगुणनिर्मुक्तः परदेश इवाध्वगः || २८ ||

अर्था धनानि | आदिपदात्स्वजनसुहृदादयो गृह्यन्ते || २८ ||

भृशमालपतेऽप्यस्मै नालापं नागरा ददुः |
मुक्ताजालयुतायापि कीचकायाध्वगा इव || २९ ||

वेणूनामपि मुक्ताकरत्वान्मुक्ताजालयुताय वायुना कूजते कीचकाय
वेणुजातिभेदाय || २९ ||

अथ सर्वे वयं दीर्घकालं श्वपचदूषिताः |
प्रायश्चित्तैर्न शुद्ध्यामः प्रविशामो हुताशनम् || ३० ||

इति निर्णीय नगरे नागरा मन्त्रिणस्तथा |
अभितो ज्वालयामासुश्चिताः शुष्केन्धनैधिताः || ३१ ||

शुष्कैरिन्धनैरेधिता वर्धिताः || ३१ ||

ज्वलितास्वभितस्तासु तारकास्विव खे तदा |
बभूव नगरं सर्वमाक्रन्दपरमानवम् || ३२ ||

तारकास्विव ज्वलितासु दीप्यमानासु सतीषु | अकर्मकत्वात्कर्तरि क्तः | नगरपदेन
तत्स्था जना लक्ष्यन्ते || ३२ ||

करुणारावमुखरैः कलत्रैर्बाष्पवर्षिभिः |
अवष्टब्धं ज्वलत्कुण्डोपान्तमन्दरुदत्प्रजम् || ३३ ||

तदेव नगरं वर्णयति - करुणेत्याद्यष्टभिः | अवष्टब्धं
कराद्यवलम्बेन विष्टब्धम् | ज्वलतां कुण्डानामुपान्ते मन्दा व्यामूढा
रुदन्तश्च प्रजा यत्र || ३३ ||

78365 अग्निकुण्डप्रविष्टानां मन्त्रिणां भृत्यरोदनैः ।
78366 रुदत्क्रन्दद्दृढतरमरण्यमिव मारुतैः ॥ ३४ ॥
78367
78368 रुदत् अश्रून्विमुञ्चत् । क्रन्दत् आक्रुशदिति भेदः । मारुतैः
78369 सावश्यायझञ्झानिलैः ॥ ३४ ॥
78370
78371 चितादीपितविप्रेन्द्रमांसमांसलगन्धया ।
78372 जातनीहारमुत्पातवात्ययावकरोद्धतैः ॥ ३५ ॥
78373
78374 चितास्वादीपितानां विप्रेन्द्राणां मांसैर्मासल उपचितो गन्धो यस्यास्तया
78375 वात्यया अवकरेभ्य उत्करेभ्य उत्थितै रजोभिर्जातनीहारमुद्भूतमिहिकमिव
78376 स्थितम् ॥ ३५ ॥
78377
78378 वक्रैर्व्योभाभवच्छन्नभास्करं जलदैरिव ॥ ३६ ॥
78379
78380 वातेन दीर्घैर्दूरप्रसृतैर्वसागन्धैर्दूरादानीतैः खगैः पक्षिभिः
78381 पिशाचादिभिश्चोर्जितैस्तेषां चक्रैर्मण्डलैर्जलदैश्छन्नभास्करं व्योमेव
78382 नगरमभवत् ॥ ३६ ॥
78383
78384 वातोद्धूतचितावह्निप्रज्वलद्व्योममण्डलम् ।
78385 उड्डीनाग्निकणव्राततारासारदिगन्तरम् ॥ ३७ ॥
78386
78387 प्रमत्ततस्करक्रन्दद्वेल्लद्बालकुमारकम् ।
78388 संत्रस्तनागरापास्तजीविताख्यमसंस्थिति ॥ ३८ ॥
78389
78390 पुनः कीदृशं तदभवत्तदाह - प्रमत्तेति ।
78391 प्रमत्तैरुद्धतैस्तस्करैर्भूषणाद्यपहारकाले क्रन्दन्तो वेल्लन्तः कम्पन्तो
78392 बालाः कुमारा ईषत्प्रौढाश्च यत्र । संत्रस्तैर्नागरैरपास्तं त्यक्तं जीवितं
78393 आख्या स्वनाम च यत्र । असंस्थिति निर्मर्यादम् ॥ ३८ ॥
78394
78395 अलक्षितगृहं चौरलुण्ठिताखिलसंचयम् ।
78396 त्यक्तपुत्रकलत्रं तन्मरणव्यग्रनागरम् ॥ ३९ ॥
78397
78398 मरणाय व्यग्रास्त्वरमाणा नागरा यत्र तथाविधमभवदित्यनुषज्जते ॥ ३९ ॥
78399
78400 तस्मिंस्तथा वर्तमाने कष्टे विधिविपर्यये ।
78401 अशेषजनताशेषकल्पान्तसदृशस्थितौ ॥ ४० ॥
78402
78403 राज्यसज्जनसंपर्कपवित्रीकृतधीरधीः ।
78404 गवलश्चिन्तयामास शोकेनाकुलचेतनः ॥ ४१ ॥
78405
78406 मदर्थे हि कदर्थोऽयं देशेऽस्मिन्स्थितिमागतः ।
78407 अकालकल्पान्तमयः सर्वनायकनाशनः ॥ ४२ ॥
78408
78409 अयं कदर्थोऽनर्थः ॥ ४२ ॥
78410
78411 किं मे जीवितदुःखेन मरणं मे महोत्सवः ।
78412 लोकनिन्द्यस्य दुर्जन्तोर्जीवितान्मरणं वरम् ॥ ४३ ॥
78413
78414 इति निश्चित्य गवलो ज्वलिते ज्वलने पुनः ।
78415 पतङ्गवदनुद्वेगमकरोदाहुतिं वपुः ॥ ४४ ॥
78416

78417 वपुः स्वशरीरं ज्वलितेऽनले आहुतिमकरोत् ॥ ४४ ॥
78418
78419 तस्मिन्बलाद्गवलनाम्नि हुताशराशौ
78420 देहे पतत्यवयवाकुलतां प्रयाते।
78421 स्वाङ्गावदाहदहनस्फुरणानुरोधा-
78422 दन्तर्जले झटिति बोधमवाप गाधिः ॥ ४५ ॥
78423
78424 तस्मिन् गवलनाम्नि देहे निर्वेदबलाद्धुताशराशौ पतति सति स्वाङ्गानां
78425 हस्तपादादीनामवदाहे दहने यानि स्फुरणानि संचलनानि
78426 तदनुरोधादघमर्षणं कुर्वन्गाधिरन्तर्जले झटिति बोधमवापेत्यर्थः ॥ ४५
78427 ।।
78428
78429 श्रीवाल्मीकिरुवाच।
78430
78431 इत्युक्तवत्यथ मुनौ दिवसो जगाम
78432 सायंतनाय विधयेऽस्तमिनो जगाम।
78433 स्नातुं सभा कृतनमस्करणा जगाम
78434 श्यामाक्षये रविकरैश्च सहाजगाम ॥ ४६ ॥
78435
78436 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मोक्षो उपशमप्रकरणे
78437 गाधिवृत्तान्ते राज्यभ्रंशो नाम षट्चत्वारिंशः सर्गः ॥ ४६ ॥
78438
78439 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
78440 राज्यभ्रंशो नाम षट्चत्वारिंशः सर्गः ॥ ४६ ॥
78441
78442 ॥ द्वादशो दिवसः ॥
78443
78444 सप्तचत्वारिंशः सर्गः ४७
78445
78446 श्रीवसिष्ठ उवाच।
78447
78448 मुहूर्तद्वितयेनाथ गाधिराधिभवभ्रमात्।
78449 प्रशशामाकुलीभावो वेलावर्त इवाम्बुधेः ॥ १ ॥
78450
78451 गाधिः स्वमतिथेः [स्वप्नमिव स्मृत्वेति पाठः] श्रुत्वा
78452 तत्कीरनृपचेष्टितम्।
78453 गत्वा दृष्ट्वा मुहुः पृष्ट्वा विस्मितोऽभूदितीर्यते ॥ १ ॥
78454
78455 आधिरूपात्प्रागुक्तभवभ्रमात्प्रशशाम। आकुलीभवत्यस्मिन्नित्याकुलीभावः
78456 । अधिकरणे घञ। वेलासन्निहित आवर्त इव ॥ १ ॥
78457
78458 मनोनिर्माणसंमोहात्तस्मात्स विरराम ह।
78459 कल्पान्तसमये ब्रह्मा जगद्विरचनादिव ॥ २ ॥
78460
78461 बोधमाप शनैः शान्तः स्वमेवोन्निद्रधीरिव।
78462 क्षीबतायां प्रशान्तायां यथा परिणताशयः ॥ ३ ॥
78463
78464 स्वं प्राक्तनगाध्यहंभावलक्षणं बोधमाप। उन्निद्रा व्यपेतनिद्रा
78465 धीर्यस्य स इव। क्षीबतायां मदिरादिमदे। परिणताशयः स्वच्छचित्तः ॥ ३ ॥
78466
78467 अयं सोऽहमिदं कार्यमिदं नेति ददर्श ह।
78468 निशाव्यपगमे लोको यथा क्षीणे तमःपटे ॥ ४ ॥

78469
78470 यो जले स्नानायावतीर्णः सोऽयं गाधिरहम् । स्नानशेषतर्पणादिकृत्यं मे
78471 कार्यम् । इदं प्राग्दृष्टचण्डालराज्यादि न कार्यम् । लोको जनो यथा पश्यति
78472 तद्वत् ॥ ४ ॥
78473
78474 स्मृतस्वरूपोऽथ पदमुद्दध्रे स जलान्तरात् ।
78475 शिशिरान्ते प्रवृत्तास्यं सरोजमिव माधवः ॥ ५ ॥
78476
78477 पदं पादमुद्दध्रे उद्धृतवान् । शिशिरान्ते शीतापगमे प्रवृत्तास्यं
78478 संजातमुकुलमुखम् । माधवो वसन्तः ॥ ५ ॥
78479
78480 एतद्वारिककुब्ब्योमवतीं वसुमतीमिमाम् ।
78481 अन्यामिव पुनः पश्यन्विस्मयं परमं ययौ ॥ ६ ॥
78482
78483 एषा चासौ वारिककुब्व्योमवती चेति वा एतैः
78484 परिदृश्यमानैर्वार्यादिभिस्तद्वतीमिति वा विग्रहः ॥ ६ ॥
78485
78486 कोऽहं किमिव पश्यामि किमकार्षमहं किल ।
78487 एवं विचारयंश्चितं सभ्रूभङ्गमभूत्क्षणम् ॥ ७ ॥
78488
78489 सभ्रूभङ्गं एवमन्तर्विचारयन्नभूत् ॥ ७ ॥
78490
78491 श्रान्तस्तत्क्षणमात्रेण संभ्रमं दृष्टवानहम् ।
78492 इति विज्ञाय सलिलादुदस्थादुदयार्कवत् ॥ ८ ॥
78493
78494 तत्तस्माच्छ्रान्तिवशात् क्षणमात्रेण । संभ्रमं महाभ्रमम् । उदस्थात् ।
78495 लुङि गातिस्था इति सिचो लुक् । उदयो गिरिः कालो वा तत्रत्यार्कवत् ॥ ८ ॥
78496
78497 चिन्तयामास च तटे क्व सा माता क्व सा प्रिया ।
78498 यदाहं मृतिमायातो मध्ये मातृमहेलयोः ॥ ९ ॥
78499
78500 चिन्ताप्रकारमेव दर्शयति - क्वेत्यादिना । महिलाशब्दस्यैव महेलेति
78501 च्छान्दसो गुणः ॥ ९ ॥
78502
78503 बालस्य मातापितरौ नष्टौ किल ममामतेः ।
78504 वातनीतस्य पत्रस्य वल्लीवृक्षमिवासिना ॥ १० ॥
78505
78506 अमतेः अप्रौढचित्तावस्थस्य । वातनीतस्य पत्रस्य पर्णस्य
78507 मातापितृस्थानीयं वल्लिवृक्षं असिनेव मृत्युना नष्टौ ॥ १० ॥
78508
78509 अविवाहोऽस्मि जानामि न स्वरूपमपि स्त्रियः ।
78510 दुष्टायाः क्षोभकारिण्या मदिराया इव द्विजः ॥ ११ ॥
78511
78512 द्विजो विप्रो मदिरायाः स्वरूपं रसमिव ॥ ११ ॥
78513
78514 अतिदूरतरीभूताः स्वदेशस्य स्वबान्धवाः ।
78515 के नाम मम येषां ते मध्ये जीवं त्यजाम्यहम् ॥ १२ ॥
78516
78517 स्वदेशस्य जन्मभूमेः । स्वा बान्धवाः ज्ञातयः । येषां मध्ये अहं
78518 जीवं त्यजामि मरणं दृष्टानस्मि ते के नामेति संबन्धः ॥ १२ ॥
78519
78520 तस्मादेतत्समुद्भूतमहं किं नाम दृष्टवान् ।

78521 विविधारम्भसंरम्भं गन्धर्वनगरं यथा ॥ १३ ॥
78522
78523 विविधं आरभ्यत इत्यारम्भं पदार्थजातं संरम्भं
78524 जन्माद्यभिनिवेशं च किं नाम दृष्टवान् ॥ १३ ॥
78525
78526 तदास्तामेतदेषा हि बन्धुमध्ये मृतस्थितिः ।
78527 मायामोहे मनागस्मिन्न सत्यमुपलभ्यते ॥ १४ ॥
78528
78529 स्वप्नस्येव बाधान्मिथ्यात्वं निश्चित्योपेक्षते - तदास्तामिति । तत्तस्मादेषा
78530 भ्रान्तिरास्तां नामेत्यर्थः ॥ १४ ॥
78531
78532 नित्यमेवमनन्तासु भ्रान्तिदृष्टिषु देहिनाम् ।
78533 चेतो भ्रमति शार्दूलो वनराजिष्विवोन्मदः ॥ १५ ॥
78534
78535 अवधार्येति तं चित्ते मोहं गाधिर्निनाय सः ।
78536 दिनानि कतिचित्तस्मिन्स्वक एवाश्रमे तदा ॥ १६ ॥
78537
78538 स्वक एवाश्रमे कतिचिद्दिनानि निनाय ॥ १६ ॥
78539
78540 एकदा गाधिमगमत्कश्चित्तत्र प्रियोऽतिथिः ।
78541 ब्रह्माणमिव दुर्वासाः स विशश्राम सश्रमः ॥ १७ ॥
78542
78543 कृशत्वात्सश्रमः सोऽतिथिस्तदाश्रमे विशश्राम विश्रान्तिमकरोत् ।
78544 सायमुवासेति यावत् ॥ १७ ॥
78545
78546 परमां तुष्टिमानीतः फलपुष्परसाशनैः ।
78547 सोऽतिथिर्गाधिना तेन वसन्तेनेव पादपः ॥ १८ ॥
78548
78549 तुष्टिं तृप्तिम् ॥ १८ ॥
78550
78551 मिथो वन्दितसंध्यौ तौ कृतजाप्यावुभावपि ।
78552 क्रमाच्छयनमासाद्य तस्थतुर्मृदुपल्लवम् ॥ १९ ॥
78553
78554 ततः प्रावर्तते [प्रावर्तत इति छेदः] शान्ता तयोस्तापसयोः कथा
78555 ।
78556 स्वव्यापारोचिता पुष्पश्रीरिवर्तुत्वमाशयोः ॥ २० ॥
78557
78558 स्वस्वतपोध्यानादिव्यापाराणामुचिता अनुरूपा कथा प्रावर्तत । ई
78559 [प्रावर्तत ई इति छेदः] इति खल्वर्थे निपातः । शान्ता शान्तिरसप्रधाना
78560 । स्वक्रियया ऋतूनामृतुत्वं मिनोति परिच्छिनत्तीति ऋतुत्वमः सूर्यस्तस्य
78561 आशाया उत्तरदिशश्च योगे वसन्ते तदुचिता पुष्पश्रीरिव ॥ २० ॥
78562
78563 तं पप्रच्छातिथिं गाधिः प्रसङ्गपतितं वचः ।
78564 किं ब्रह्मन्सुकृशाङ्गस्त्वं किमिति श्रमवानसि ॥ २१ ॥
78565
78566 तयोर्वार्ताप्रसङ्गपतितम् ॥ २१ ॥
78567
78568 अतिथिरुवाच ।
78569
78570 ममातिकार्श्यश्रमयोर्भगवन् शृणु कारणम् ।
78571 कथयामि तथाभूतं वयं नासत्यवादिनः ॥ २२ ॥
78572

वयं। अस्मदो द्वयोश्चेति बहुवचनम्॥ २२॥

अस्त्यस्मिन्वसुधापीठे उत्तराशानिकुञ्जके।
कीरो नामातिविख्यातः श्रीमाञ्जनपदो महान्॥ २३॥

तत्राहमवसं मासं पूज्यमानः पुरे जनैः।
नानात्मस्वादलोलात्मा चित्तवेतालमोहितः॥ २४॥

नानाविधा आत्मनः स्वदन्ते रोचन्त इति नानात्मस्वादा भोज्यभेदास्तेषु लोभो
गार्ध्यं तदात्मा तत्प्रधानः सन्। कुतस्त्वमेवमभूस्तत्राह - चित्तेति॥ २४
।।

एकदैकेन तत्रोक्तं कथाप्रस्तावतः क्वचित्।
इहाभूच्छ्वपचो राजा वर्षाण्यष्टौ द्विजेति मे॥ २५॥

ततो ग्रामेषु तत्पृष्टैः प्रोक्तं सकलजन्तुभिः।
राजा बभूव श्वपचो वर्षाण्यष्टाविहेति तैः॥ २६॥

सोऽयमन्ते परिज्ञातः प्रविष्टो ज्वलनं जवात्।
ततो द्विजशतानीह प्रविष्टानि हुताशनम्॥ २७॥

स श्वपचः। अन्ते अष्टमवर्षान्ते॥ २७॥

इति तेषां मुखाच्छ्रुत्वा तस्मान्निर्गत्य मण्डलात्।
प्रयागेऽकरवं शुद्ध्यै प्रायश्चित्तमहं द्विज॥ २८॥

शुद्ध्यै तद्देशवासदोषशान्त्यै॥ २८॥

कृत्वा चान्द्रायणस्यान्ते तृतीयस्याद्य पारणम्।
इहाहमागतस्तेन श्रान्तोस्म्यतिकृशोस्मि च॥ २९॥

श्रीवसिष्ठ उवाच।

इति श्रुतवता तेन गाधिना स तदा द्विजः।
भूयः पृष्टोऽप्येतदेव कथयामास नान्यथा॥ ३०॥

अथ विस्मयवान्गाधिस्तां नीत्वा तत्र शर्वरीम्।
जगद्गेहमहादीपे रवावुदयमागते॥ ३१॥

अथ गाधिः रवौ उदयमागते स्वातिथौ आपृच्छ्य गते सति विस्मयेनोद्धुरया
गरीयस्या धिया इदं वक्ष्यमाणं संचिन्तयामासेति परेण संबन्धः॥ ३१॥

कृतप्रातःस्नानविधावापृच्छय स्वातिथौ गते।
इदं संचिन्तयामास विस्मयोद्धुरया धिया॥ ३२॥

यन्मया संभ्रमे दृष्टं सत्यभूतं द्विजेन तत्।
उक्तं ममेति किं नाम स्यान्मायाशम्बाक्रमः॥ ३३॥

मया यत्संभ्रमे भ्रान्तिदशायां दृष्टं तद्द्विजेनातिथिना
सत्यभूतमुक्तं मम इति एवंरूपमिदं किं मायालक्षणः
शम्बरस्यासुरस्य रचनाक्रमः स्यात्। संभावनायां लिङ॥ ३३॥

78625 य *? धुमध्ये मरणं मया तद्दृष्टमात्मनः।
78626 सा मायैव न संदेहः शेषं पश्यामि तस्य तम्॥ ३४॥
78627
78628 सा माया मिथ्यैव तत्र न संवादो द्रष्टुं शक्यः। शेषमवशिष्टं
78629 तस्यातिथेश्चान्द्रायणनिमित्तं तमात्मश्वपचोदन्तं पश्यामि
78630 द्रक्ष्यामीत्यर्थः॥ ३४॥
78631
78632 तदात्मश्वपचोदन्तं द्रष्टुं तावदखिन्नधीः।
78633 भूतमण्डलपर्यन्तग्रामं गच्छामि सत्वरम्॥ ३५॥
78634
78635 तदेवाह - तदिति। तस्य तदवस्थस्यात्मनः श्वपचस्य उदन्तं वृत्तान्तम्॥
78636 ३५॥
78637
78638 इति संचिन्तयन्गन्तुं मण्डलान्तरमादरात्।
78639 उत्तस्थौ भास्करः पार्श्वं मेरोर्द्रष्टुमिवोद्यतः॥ ३६॥
78640
78641 इति संचिन्तयन् गाधिर्मण्डलान्तरं द्रष्टुमुत्तस्थौ। उद्यत उद्युक्तः॥ ३६॥
78642
78643 मनोराज्यमपि प्राज्ञा लभन्ते व्यवसायिनः।
78644 गाधिना स्वप्नसंदृष्टं गत्वा लब्धमखण्डितम्॥ ३७॥
78645
78646 तत्कथं द्रष्टुं शक्यमिति चेत्पुरुषप्रयत्नस्यालभ्यं नास्तीत्याह -
78647 मनोराज्यमिति॥ ३७॥
78648
78649 सर्वमध्यवसायेन दुष्प्रापमपि लभ्यते।
78650 पश्यन्गाधिर्जगन्मायां प्रमेयीकर्तुमुद्यतः॥ ३८॥
78651
78652 प्रमेयीकर्तुं चक्षुःप्रमाणगोचरीकर्तुम्॥ ३८॥
78653
78654 विनिर्गत्याभवन्मार्गे प्रावृडोघजवेन सः।
78655 देशानुल्लङ्घयामास बहून्वाततुरङ्गवत्॥ ३९॥
78656
78657 स मार्गे प्रावृषि य ओघो जलप्रवाहस्तज्जवेन त्वरमाणोऽभवत्। वात एव
78658 तुरंगो वाहनं यस्य मेघस्य तद्वत्॥ ३९॥
78659
78660 तच्चेदृशनिजाचारं भूतमण्डलमागतः।
78661 करभः कण्टकार्थ्येकः कारञ्जमिव काननम्॥ ४०॥
78662
78663 ईदृशः प्राग्दृष्टप्रकारो निजाचारो यस्मिंस्तद्भूतमण्डलं च
78664 प्रथममागतः॥ ४०॥
78665
78666 तत्र संवित्स्थितेनैव संनिवेशेन वै पुनः।
78667 अपश्यद्ग्रामकं कंचिद्गन्धर्व इव पत्तनम्॥ ४१॥
78668
78669 संविदि बुद्धौ स्थितेनैव स्मर्यमाणेनैव सन्निवेशेन संस्थानविशेषेण
78670 स्थितं कंचिद्ग्रामकमपश्यत्॥ ४१॥
78671
78672 ददर्श तस्य पर्यन्ते तमेव श्वपचालयम्।
78673 अधस्ताद्भूवनस्येव पाताले नरकव्रजम्॥ ४२॥
78674
78675 चित्तचिन्तितविस्तारं तन्निवेशमयं परम्।
78676 गन्धर्ववदसावात्मश्वपचत्वं दृष्टवान्॥ ४३॥

78677
78678 चित्ते चिन्तितो जन्मादिविस्तारो यत्र तथाविधं स प्राग्दृष्टो यो
78679 गृहादिनिवेशस्तत्प्रचुरं आत्मनः श्वपचत्वं च लिङ्गैः
78680 पुनर्दृष्टवानित्यर्थः ॥ ४३ ॥
78681
78682 तेनैव संनिवेशेन प्राग्दृष्टं श्वपचास्पदम् ।
78683 तस्य कामपि वैराग्यपदवीमनयन्मनः ॥ ४४ ॥
78684
78685 तच्छ्वपचास्पदं कर्तृ तस्य मनः कामपि
78686 वैराग्यपदवीमनयत्प्रापयामास ॥ ४४ ॥
78687
78688 प्रावृडासारलुठितं भित्तिजातयवाङ्कुरम् ।
78689 पर्यस्तच्छादनार्धाङ्कं किंचिदादृष्टतल्पकम् ॥ ४५ ॥
78690
78691 तदेव वर्णयति - प्रावृडित्यादिना । किंचिदादृष्टं प्रत्यभिज्ञातं
78692 तल्पकं शयनकटखण्डादि यस्मिन् ॥ ४५ ॥
78693
78694 दारिद्र्यं तद्दृढमिव दौर्भाग्यमिव कुड्यमत् ।
78695 भ्रष्टाङ्गमिव दौरात्म्यं दौःस्थित्यमिव खण्डितम् ॥ ४६ ॥
78696
78697 कुड्यमत् भित्त्यवशेषगृहाकारमिति यावत् । यवादित्वादवत्वम् ।
78698 भ्रष्टाङ्गं स्खलितावयवं चौर्यादिदौरात्म्यमिव । दौःस्थित्यं दुर्दशाम्
78699 । खण्डितं छिन्नैकदेशम् ॥ ४६ ॥
78700
78701 गाधिर्दन्तावदलितैर्गवाश्वमहिषास्थिभिः ।
78702 धवलैर्व्याप्तपर्यन्तं साक्ष्यं कर्तुमिव स्थितैः ॥ ४७ ॥
78703
78704 गाधिश्चिरमालोकयामासेति तृतीयेन संबन्धः ॥ ४७ ॥
78705
78706 भुक्तं पीतं पुरा तेन येषु खर्परकेषु वै ।
78707 तैरस्पन्दाभ्रसलिलैः पानपूर्णैरिवावृतम् ॥ ४८ ॥
78708
78709 अस्पन्दान्यभ्रसलिलानि [न्यभ्रमसलिलानीति क्वचित्] दैवागतवृष्टिजलानि
78710 येषु तैः ॥ ४८ ॥
78711
78712 ताभिरेवान्त्रतन्त्रीभिः संशुष्काभिर्लतावृतैः ।
78713 तृष्णाभिरिव दीर्घाभिः परितः परिवेष्टितम् ॥ ४९ ॥
78714
78715 लतावृतैर्लतावत्स्तम्भादिपरिवेष्टनैः परितः परिवेष्टितम् । आत्ततन्त्रीभिः इति
78716 पाठे लतानामावृतैरावरणैरात्ताभिस्तन्त्रीभिः प्रतानैः
78717 परिवेष्टितमित्यर्थः ॥ ४९ ॥
78718
78719 चिरमालोकयामास स तदात्मगृहं जवात् ।
78720 प्राक्तनं शुष्कशवतां यातं देहमिवात्मवान् ॥ ५० ॥
78721
78722 शुष्कशवप्रायतां यातं स्वदेहमिव । आत्मवान् तत्त्ववित् ॥ ५० ॥
78723
78724 अतिविस्मयमातस्थौ ग्रामकं समुपाययौ ।
78725 उल्लङ्घ्य म्लेच्छनगरमार्यदेशमिवाध्वगः ॥ ५१ ॥
78726
78727 तत्स्वगृहमुल्लङ्घ्य । तत्समीपस्थं ग्रामकं कुग्रामम् ॥ ५१ ॥
78728

78729 तत्रापृच्छज्जनं साधो कच्चित्स्मरति भो भवान् ।
78730 प्राग्वृत्तमस्य ग्रामस्य पर्यन्ते श्वपचक्रमम् ॥ ५२ ॥
78731
78732 श्वपचक्रमं श्वपचवृत्तान्तम् ॥ ५२ ॥
78733
78734 सर्व एव हि धीमन्तश्चिरवृत्तमपि स्फुटम् ।
78735 करस्थमिव पश्यन्ति मयेति सुजनाच्छ्रुतम् ॥ ५३ ॥
78736
78737 पश्यन्ति स्फुटं स्मरन्तीति यावत् ॥ ५३ ॥
78738
78739 अत्र श्वपचमेकान्ते वासिनं वृद्धमुत्तमम् ।
78740 स्मरस्येनं किमुत भो दुःखानामिव देहकम् ॥ ५४ ॥
78741
78742 यदि जानासि भोः साधो तन्मे कथय तत्त्वतः ।
78743 पान्थ संशयविच्छेदे महत्पुण्यफलं स्मृतम् ॥ ५५ ॥
78744
78745 भूयो भूय इति ग्राम्याः पृष्टा गाधिद्विजन्मना ।
78746 अनल्पस्मयसंरम्भमार्तेनेव चिकित्सकाः ॥ ५६ ॥
78747
78748 अनल्पः स्मयो विस्मयः संरम्भः प्रश्नोद्योगश्च यस्मिन्कर्मणीति
78749 क्रियाविशेषणम् । आर्तेन रोगार्तेन ॥ ५६ ॥
78750
78751 ग्राम्या ऊचुः ।
78752
78753 यथा कथयसि ब्रह्मंस्तत्तथा न तदन्यथा ।
78754 कटंजनामा श्वपच इहाभूद्दारुणाकृतिः ॥ ५७ ॥
78755
78756 पुत्रपौत्रसुहृद्‌भृत्यबन्धुस्वजनपेटकम् ।
78757 यस्यातिविस्तीर्णमभूत्पत्रवृन्दं तरोरिव ॥ ५८ ॥
78758
78759 यस्य वृद्धस्य तत्सर्वं कलत्रं मृत्युराच्छिनत् ।
78760 अद्रेः पुष्पफलोपेतं दावो वनमिवानलः ॥ ५९ ॥
78761
78762 दवे भवो दावः ॥ ५९ ॥
78763
78764 यस्ततो देशमुत्सृज्य ययौ कीरपुरान्तरम् ।
78765 वर्षाण्यष्टावनुद्वेगं तत्र राजा बभूव सः ॥ ६० ॥
78766
78767 यस्तत्रार्थं परिज्ञाय जनैर्दूरे निराकृतः ।
78768 यथा राशिरनर्थस्य यथा ग्रामे विषद्रुमः ॥ ६१ ॥
78769
78770 ततो जनेऽग्निं प्रविशत्यात्मना यो हुताशनम् ।
78771 आर्यतामार्यसंसर्गादागतः प्रविवेश ह ॥ ६२ ॥
78772
78773 किं त्वमेव प्रयत्नेन श्वपचं पृच्छसि प्रभो ।
78774 किं ते बन्धुरसौ कच्चिदभवस्त्वं स्वतोऽथवा ॥ ६३ ॥
78775
78776 स ते बन्धुः किमभवत् । अथवा त्वं स्वतः स्वयमेव तद्बन्धुरभवः ॥ ६३ ॥
78777
78778 एवं कथयतो ग्राम्यान्गाधिः पृच्छन्पुनःपुनः ।
78779 सर्वेषु तत्र प्रान्तेषु मासमेकमुवास सः ॥ ६४ ॥
78780

78781 तत्र ग्रामे। सर्वेषु प्रान्तेषु तत्तद्वासयोग्यगृहेष्विति यावत्॥ ६४॥
78782
78783 यथा तेनानुभूतं तच्छ्वापचं तत्तथैव तैः।
78784 ग्रामीणैस्तस्य कथितं सर्वैरेवावखण्डितम्॥ ६५॥
78785
78786 अव्याहतं सकलभूतमुखादथैत-
78787 दाकर्ण्य सम्यगवलोक्य यथानुभूतम्।
78788 गाधिः शशाङ्कमलवद्धृदयेऽधिरूढं
78789 गूढाकृतिः परमविस्मयमाजगाम॥ ६६॥
78790
78791 सकलभूतभुखादव्याहतममृषार्थकं वाक्यमाकर्ण्य स्वयं
78792 चाबाधितप्रत्यभिज्ञया यथानुभूतमवलोक्य लज्जया गूढाकृतिर्गाधिः
78793 शशाङ्कस्येन्दोर्मलवत्कलङ्कमिव स्वहृदये अधिरूढं परमं
78794 विस्मयमाजगाम प्रापेत्यर्थः॥ ६६॥
78795
78796 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे०
78797 मोक्षोपायेषूपशमप्रकरणे गाधिवृत्तान्ते प्रत्यक्षावलोकनं नाम
78798 सप्तचत्वारिंशः सर्गः॥ ४७॥
78799
78800 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
78801 प्रत्यक्षावलोकनं नाम सप्तचत्वारिंशः सर्गः॥ ४७॥
78802
78803
78804 अष्टचत्वारिंशः सर्गः ४८
78805
78806 श्रीवसिष्ठ उवाच।
78807
78808 लुठितं श्वपचागारे पुनर्विस्मयमाययौ।
78809 गाधेर्मनो हि नायाति तृप्तिमाश्चर्यदर्शने॥ १॥
78810
78811 गाधिना कीरनगरं गत्वा दृष्ट्वा च विस्मयात्।
78812 तपसा तोषितो विष्णुः सर्वं मायेत्युवाच तम्॥ १॥
78813
78814 लुठितं परिवृत्तम्। चिरमासक्तमिति यावत्॥ १॥
78815
78816 तत्रावलोकयामास स्थानानि सदनानि च।
78817 कल्पक्षोभविवृत्तानि जगन्तीवाम्बुजोद्भवः॥ २॥
78818
78819 कल्पः संवर्तस्तदीये क्षोभे उपप्लवे विवृत्तानि भग्नानि। अम्बुजोद्भवो
78820 ब्रह्मा॥ २॥
78821
78822 उवाच स्वात्मनैवेदमरण्ये लुठितालये।
78823 शुष्कास्थिमालावलिते पिशाचक इव द्रुमे॥ ३॥
78824
78825 लुठितालये भग्नगृहे। स्वमनस्येव उवाच। द्रुमे श्मशानवृक्षे॥ ३॥
78826
78827 इमास्ता मृतमातङ्गदन्तमाला वृतौ कृताः।
78828 अद्यापि संस्थिताः कल्पं प्रतिमेरुशिखा इव॥ ४॥
78829
78830 यदुवाच तदाह - इमास्ता इत्यादिना। वृतौ प्राकारे कृताः
78831 शूलवन्निखाता मृतमातङ्गदन्तमालास्ता इमाः। प्रत्यक्षं
78832 प्रत्यभिज्ञायन्त इत्यर्थः। कल्पं प्रलयकालं प्रति लक्षीकृत्य मेरोः

78833 शिखाः शिखराणीव ॥ ४ ॥
78834
78835 इह तद्वानरीमांसं पक्ववंशाङ्कुरैः सह ।
78836 भुक्तं पुरासवोन्मत्तैः सह श्वपचबन्धुभिः ॥ ५ ॥
78837
78838 पक्वैर्वंशाङ्कुरैः करीरव्यञ्जनैः सह ॥ ५ ॥
78839
78840 आलिङ्ग्य श्वपचश्यामामिह केसरि वर्मणि ।
78841 सुप्तमापीय मैरेयं तिक्तं गजमदेन च ॥ ६ ॥
78842
78843 केसरिणोऽश्वस्य चर्मणि । गजमदेन तिक्तमित्युक्त्या हस्तिपकात्क्रीतं मैरेयमिति
78844 गम्यते । मैरेये मदशक्त्युत्कर्षाय हस्तिपका गजमदमपि मेलयन्तीति
78845 प्रसिद्धम् ॥ ६ ॥
78846
78847 कौलेयककुटुम्बिन्यः पिण्याकपलवर्धिताः ।
78848 इह बद्धा वरत्राभिर्मृतेभरदकाष्ठके ॥ ७ ॥
78849
78850 कौलेयककुटुम्बिन्यः शुन्यः । पिण्याकैः पलैर्मांसैश्च वर्धिताः ।
78851 वरत्राभिश्चर्मरज्जुभिः ॥ ७ ॥
78852
78853 इह वारणमुक्तानां ददासीत्पिठर त्रयम् ।
78854 पिनद्धं माहिषेणोग्रचर्मणाम्बुदशोभिना ॥ ८ ॥
78855
78856 वारणमुक्तानां गजमौक्तिकानां पिठरत्रयं उखात्रयप्रमाणं दत्
78857 गजदन्तरचितं पात्रमिहास्मिन्स्थले आसीत् ॥ ८ ॥
78858
78859 स्थलीष्वेतासु तास्वत्र सह श्वपचबालकैः ।
78860 चिरं विलुठितं चूतपत्रपुञ्जे पिकैरिव ॥ ९ ॥
78861
78862 एतासु दृश्यमानासु । तासु पूर्वदृष्टासु । अत्रास्मिन् ग्रामान्ते । विलुठितं
78863 पांसुक्रीडास्वित्यर्थः ॥ ९ ॥
78864
78865 अत्र तदालनिःश्वासरणद्वंशप्रवृत्तवत् ।
78866 गीतं पीतं शुनीरक्तं साधिता शवभूषितः ॥ १० ॥
78867
78868 बालानां निःश्वासैर्मुखवातैः रणतां वंशानां प्रवृत्तं
78869 स्वरतालप्रवृत्तिस्तद्वत्तदनुरूपतया गीतम् । शवान् भूषयितुं शीलं यस्येति
78870 शवभूषि श्मशानमाल्यचन्दनादि तस्मादिति ततः । साधिता
78871 सर्वेषामलंक्रियेति शेषः ॥ १० ॥
78872
78873 अत्र सार्धं कुटुम्बेन जन्यत्रेषु कुटुम्बिना ।
78874 मृत्तं तत्कृतमुन्नादं कल्लोलैर्जलधाविव ॥ ११ ॥
78875
78876 जन्यत्रेषु विवाहेषु ॥ ११ ॥
78877
78878 अत्रोड्डयनलोलानां काकभासपतत्त्रिणाम् ।
78879 धृतानामन्यदाशार्थं ग्रथितं वंशपञ्जरम् ॥ १२ ॥
78880
78881 अन्यदा अशनं आशः दिनान्तरे भक्षणं तदर्थम् । दासार्थम् इति पाठे तु
78882 दसु हिंसायाम् इत्यस्माद्धम् । दिनान्तरे हिंसनार्थमित्यर्थः ॥ १२ ॥
78883
78884 श्रीवसिष्ठ उवाच ।

एवंप्रायाः स्मरन्गाधिः प्राक्तनीः श्वपचक्रियाः ।
विस्मयोत्कम्पितशिरा धातुश्चेष्टां परामृशत् ॥ १३ ॥

परामृशत् तर्कितवान् ॥ १३ ॥

चचाल तस्माद्दीर्घेण देशात्कालेन कार्यवित् ।
भूतमण्डलमुत्सृज्य प्राप देशान्तरं क्रमात् ॥ १४ ॥

सपुल्लङ्घ्य नदीशैलमण्डलारण्यसंततिम् ।

तुषाराद्रिकुक्षौ रत्नमिव श्रेष्ठं जनास्पदं जनपदं
प्राग्दृष्टकीरदेशमित्यर्थः ॥ १५ ॥

तत्र प्राप महीपालनगरं नगसंनिभम् ।
जगद्भ्रमणखिन्नात्मा स्वर्लोकमिव नारदः ॥ १६ ॥

नगसंनिभं पर्वतवदुन्नतप्रासादं रत्नाद्याढ्यं च ॥ १६ ॥

अथात्मनानुभूतानि दृष्टान्यसेवितानि च ।
स्थानानि नगरे पश्यन्पप्रच्छ जनमादृतः ॥ १७ ॥

अनुभूतानि स्वगृहप्रासादादीनि । दृष्टानि परगृहप्रासादादीनि ।
आसेवितान्यारामस्थानशालादीनि स्थानानि ॥ १७ ॥

साधो स्मरसि किंचित्त्वमिह श्वपचमीश्वरम् ।
यदि जानासि तत्त्वं मे वर्णयाशु यथाविधि ॥ १८ ॥

यथाविधि विधिं विधानमनतिक्रम्येत्यर्थः ॥ १८ ॥

नागरा ऊचुः ।

अमूदिहाष्टौ वर्षाणि श्वपचो भूमिपो द्विज ।
राजत्वमर्पितं यस्य नाम मङ्गलहस्तिना ॥ १९ ॥

नामेति प्रसिद्धौ ॥ १९ ॥

अन्ते च संपरिज्ञातः स प्रविष्टो हुताशनम् ।
अद्य द्वादशवर्षाणि समतीतानि तापस ॥ २० ॥

यं यं पृच्छत्यसौ गाधिर्जनं जातकुतूहलः ।
तस्य तस्य मुखादेव शृणोत्यास्वादयत्यपि ॥ २१ ॥

अन्तः स्वप्रत्यभिज्ञासंवादादास्वादयति चमत्कारमनुभवत्यपीत्यर्थः ॥ २१
। ।

अथापश्यत्पुरे तस्मिन्नृपं सबलवाहनम् ।
देवं चक्रधरं विष्णुं मन्दिरान्निर्गतं बहिः ॥ २२ ॥

तस्य भगवदनुग्रहात्तस्मिन्पुरे राजरूपेण भगवद्दर्शनमभूदित्याह ##-
मन्दिरराद्राजसदनाद्बहिर्निर्गतम् ॥ २२ ॥

स दृष्ट्वा स्थगिताकाशं चलरेणुपयोधरैः ।
प्राक्तनीं राजतां स्मृत्वा समुवाचाति विस्मयः ॥ २३ ॥

बाह्यवस्तु दर्शनव्यामोहचित्तस्य तस्य दृष्टायामपि भगवन्मूर्तौ तत्र
भावो विचारोऽपि वा नाभूत्किंतु प्राक्तनेषु स्वानुभूतस्त्रीच्छत्रचामरादिषु
प्रत्यभिज्ञाकौतुकेष्वेव चित्तं बभ्रामेत्याशयेनाह - स इति । चलैरुद्गतै
रेणुलक्षणैः पयोधरैर्मेघैः स्थगितमाच्छादितमाकाशं येन
तथाविधं तत्सैन्यं दृष्ट्वेत्यर्थः ॥ २३ ॥

इमास्ताः कीरकामिन्यः पद्मगर्भोपमत्वचः ।
कनकद्रववर्णिन्यो लोलनीलोत्पलेक्षणाः ॥ २४ ॥

ता इमाः प्रत्यभिज्ञाताः कीरनृपतेः कामिन्यो वेश्याः ॥ २४ ॥

चामरौघा इमे चन्द्रकरसंपिण्डपाण्डुराः ।
स्थिरनिर्झरसंकाशाः काशपुष्पचया इव ॥ २५ ॥

चन्द्रकराणां [एतदग्रे संपिडनं इति क्वचित्पठ्यते] संपिण्डः
पिण्डीभाव इव पाण्डुराः । स्थिरा मूर्तीभावात्स्थैर्यमापन्ना ये निर्झरा
गिरिवारिप्रपातास्तत्संकाशाः ॥ २५ ॥

कान्ताभिरवधूयन्ते बालव्यजनरराजयः ।
इमास्ता वनवल्लीभिर्दीप्यमाना इवर्द्धयः ॥ २६ ॥

ऋद्धयः पुष्पमञ्जरीसमृद्धय इव ॥ २६ ॥

इमास्ता मत्तमातङ्गघटा घटितदिक्तटाः ।
संकल्पपादपा मेरोरिव शृङ्गपरम्पराः ॥ २७ ॥

मत्तमातङ्गानां घटाः सङ्घाः । घटिता दन्ताग्रनिर्भिन्ना दिक्तटा
याभिस्ताः । संभावनयातिशयोक्तिः । संकल्पानुसारिफलदाः पादपा येषु ॥
२७ ॥

एते ते यमवारीशकुबेरप्रतिमौजसः ।
सामन्ता वासवस्येव लोकपाला महीभृतः ॥ २८ ॥

वासवस्य यमादयो लोकपाला इव महीमृत एते सामन्ता अवान्तरदेशाधीशाः
॥ २८ ॥

इमास्ताः सर्ववस्त्वोघाः सर्वाभिमतदास्तताः ।
कल्पवृक्षलताकुञ्जसुन्दर्यो गृहपङ्क्तयः ॥ २९ ॥

सर्वे धनधान्यादिवस्त्वोघा यासु ॥ २९ ॥

इदं तत्कीरजनताराज्यं प्राग्भुक्तमद्य मे ।
आत्मजन्मान्तराचार एव प्रत्यक्षतां गतम् ॥ ३० ॥

प्राग्भुक्तमद्यजन्मान्तराचारो जन्मान्तरचरित्रमिव प्रत्यक्षतां गतम् ॥ ३० ॥

सत्यं स्वप्न इवायं मे जाग्रद्भूतः पुनः स्थितः ।
न जाने किंकृतोत्थाना मायेयं प्रविजृम्भते ॥ ३१ ॥

78989 सत्य निश्चितं प्राक्स्वप्न इव दृष्टः पुनर्जाग्रद्भूतः स्थितः। किं केन
78990 किमर्थं वा कृतमुत्थानमाविर्भावो यया॥ ३१॥
78991
78992 अहो नु खलु दीर्घेण मनोमोहेन वल्गता।
78993 वैवश्यमुपनीतोऽहं जालेनेव शकुन्तकः॥ ३२॥
78994
78995 वैवश्यमस्वाधीनताम्॥ ३२॥
78996
78997 हा धिक्कष्टबुद्धं मे मनो वासनया हतम्।
78998 पश्यति भ्रमजालानि विततानि शिशोरिव॥ ३३॥
78999
79000 अबुद्धमप्रबुद्धम्॥ ३३॥
79001
79002 एषा हि माया महती तेन मे चक्रधारिणा।
79003 दर्शितेत्यधुना साधु मया स्मृतमखण्डितम्॥ ३४॥
79004
79005 तेन प्राक्प्रसादितेन चक्रधारिणा विष्णुना॥ ३४॥
79006
79007 तदिदानीं तथा यत्नं करिष्ये गिरिकन्दरे।
79008 यथा कुसंभ्रमस्यास्य जाने जन्म तथा स्थितिम्॥ ३५॥
79009
79010 जन्मस्थितिपदाभ्यां तन्निमित्तं लक्ष्यते॥ ३५॥
79011
79012 इति संचिन्त्य नगराद्गाधिस्तस्माज्जगाम ह।
79013 कन्दरं प्राप्य शैलस्य तस्थौ विश्रान्तसिंहवत्॥ ३६॥
79014
79015 तत्र संवत्सरं सार्धं पयश्चुलुकभोजनम्।
79016 तपश्चक्रे महातेजास्तुष्टये शार्ङ्गधन्वनः॥ ३७॥
79017
79018 पयश्चुलुकस्य भोजनं पानं कुर्वन्निति शेषः। शार्ङ्गधन्वनो विष्णोः।
79019 धनुषश्च इत्यनङ्॥ ३७॥
79020
79021 अथास्य पुण्डरीकाक्षः पयोमूर्तिरुपाययौ।
79022 प्रसादमुत्पलश्यामः शरदीव महाह्रदः॥ ३८॥
79023
79024 पय इव प्रसादस्वभावा मूर्तिर्यस्य। ह्रदपक्षे पय एव मूर्तिः स्वरूपं यस्य
79025 ॥ ३८॥
79026
79027 तमाजगाम शैलेन्द्रकन्दरं द्विजमन्दिरम्।
79028 पयोधरवदच्छाच्छच्छविर्व्योमन्यथावसत्॥ ३९॥
79029
79030 द्विजस्य गाधेर्मन्दिरं निवासभूतं कन्दरम्। पयोधरवदच्छादप्यच्छा
79031 निर्मलतरा छविः कान्तिर्यस्य। पयोधरवद्व्योमन्यावसदतिष्ठदिति वा॥ ३९॥
79032
79033 श्रीभगवानुवाच।
79034
79035 गाधे कच्चित्त्वया दृष्टा माया मम गरीयसी।
79036 दृष्टं त्वया जगज्जालचेष्टितं दैष्टिकात्मकम्॥ ४०॥
79037
79038 दिष्टं दैवमेव मतिः प्रतीतिनिमित्तं यस्य न वस्तुतदात्मकम्॥ ४०॥
79039
79040 चित्ताभिगत एतस्मिन्प्राप्ते सम्यगनिन्दितः।

79041 तपो गिरितटे कुर्वन्किमन्यदभिवाञ्छसि ॥ ४१ ॥
79042
79043 चित्तेनाभिगते वाञ्छिते एतस्मिन् मन्मायादर्शने प्राप्ते सति पुनर्गिरितटे तपः
79044 कुर्वन्ननिन्दितः शुद्धस्त्वमन्यत्किमभिवाञ्छसीत्यन्वयः ॥ ४१ ॥
79045
79046 श्रीवसिष्ठ उवाच ।
79047
79048 एवं वदन्तमालोक्य हरिं गाधिर्द्विजोत्तमः ।
79049 अर्चां कुसुमपूरेण पादयोः पर्यपूरयत् ॥ ४२ ॥
79050
79051 अर्चां नित्यं पूज्यमानां भगवत्प्रतिमां पादयोरर्चां पूजां
79052 कुसुमपूरेण करोन्मुक्तपुष्पप्रवाहेण पयःपूरवत् पूर्णा चकारेति वा । अनेन
79053 पूजाकाले भगवदागमनं गम्यते ॥ ४२ ॥
79054
79055 दत्त्वार्घ्यं कीर्णकुसुमः प्रणम्याशु प्रदक्षिणैः ।
79056 विष्णुमाह द्विजो वाक्यमम्भोदमिव चातकः ॥ ४३ ॥
79057
79058 अर्घ्यं उत्तरार्घ्यम् । प्रदक्षिणैः सह प्रणम्य प्रणामान्तां पूजां
79059 समाप्य ॥ ४३ ॥
79060
79061 गाधिरुवाच ।
79062
79063 देव यैषा त्वया माया दर्शिताऽतितमोमयी ।
79064 महीं प्रातरिवादित्यस्तां मे प्रकटतां नय ॥ ४४ ॥
79065
79066 भ्रमं यं पश्यति मनो वासनामलमालितम् ।
79067 स्वप्नवत्स कथं देव जाग्रत्यपि हि दृश्यते ॥ ४५ ॥
79068
79069 यस्तत्र ज्ञातव्यांशस्तमाह - भ्रममिति । भ्रमं मिथ्याविषयजातम् ॥
79070 ४५ ॥
79071
79072 मुहूर्तमुपलब्धश्च जलान्तः स्वप्नविभ्रमः ।
79073 कथं प्रत्यक्षतां प्राप्तो ममामलपदास्पद ॥ ४६ ॥
79074
79075 प्रत्यक्षतां चिरं चक्षुरादिगोचरताम् । अमलमविद्यामलरहितं
79076 पदमास्पदं प्रतिष्ठा यस्य ॥ ४६ ॥
79077
79078 दैर्घ्यादैर्घ्येऽस्य कालस्य शरीरस्य भवाभवाः ।
79079 कथमन्तस्थिता न स्युर्मदीयैः श्वपचभ्रमैः ॥ ४७ ॥
79080
79081 मदीयैः श्वपचभ्रमैः कृते अस्य कालस्य दैर्घ्यादैर्घ्ये तथा
79082 श्वपचशरीरस्य भवाभवा उत्पत्तिनाशाश्च अन्तर्मनस्येव स्थिताः कथं न
79083 स्युः बहिस्ते कथं तिष्ठन्तीत्यर्थः ॥ ४७ ॥
79084
79085 श्रीभगवानुवाच ।
79086
79087 गाधे स्वाधिविधूतस्य स्वरूपस्यैतदात्मकम् ।
79088 चेतसोऽदृष्टतत्त्वस्य यत्पश्यत्युरुविभ्रमम् ॥ ४८ ॥
79089
79090 हे गाधे भवान्यत् उरु महज्जगद्विभ्रमं पश्यति तत् अदृष्टतत्त्वस्य अत एव
79091 स्वनिष्ठैराधिभिर्वाअनारोगैर्गृहीतस्य
79092 चेतसश्चित्तभावापन्नस्यात्मस्वरूपस्य एतदात्मकं रूपं भासते तद्वस्तुतो

नान्तर्न वा बहिर्नाल्पं न वा दीर्घमित्यर्थः ॥ ४८ ॥

बहिर्न किंचिदप्यस्ति खाद्यब्ध्युर्वीदिगादिकम् ।
एतत्स्वचित्त एवास्ति पत्रपुञ्जमिवाङ्कुरे ॥ ४९ ॥

यदि चास्तीति मन्यसे तर्हि स्वचित्त एवस्तीत्याह - बहिरिति । खमाकाशम् अद्रयः
पर्वताः उर्वी पृथ्वी दिशश्चेत्यादिकं जगदित्यर्थः ॥ ४९ ॥

फलादि स्फारतामेति यथैव बहिरङ्कुरात् ।
बहिः प्रकटतां याति तथा पृथ्व्यादिचेतसः ॥ ५० ॥

सत्यं पृथ्व्यादि चित्तस्थं न बहिष्ठं कदाचन ।
अङ्कुरस्थः पल्लवस्तु तस्माद्यस्मात्फलश्रियः ॥ ५१ ॥

यस्माद्धेतोः फलश्रियस्तस्माद्दृश्यन्ते इति शेषः ॥ ५१ ॥

रूपालोकमनस्कारतत्ताकालक्रियात्मकम् ।
कुम्भकारो घटमिव चेतो हन्ति करोति च ॥ ५२ ॥

वर्तमानविषये चक्षुरादिना रूपालोकः । भाविनि च मनसा
समर्थनान्मनस्कारः । अतीते च स्मर्यमाणे तत्ता तन्निरूपकास्त्रिविधाः
कालस्तद्व्यञ्जिका च सूर्यादिक्रियेत्येवमात्मकम् । हन्ति स्वात्मन्युपसंहरति
करोति सृजति च ॥ ५२ ॥

आबालमेतत्पुरुषैः सर्वैरेवानुभूयते ।
स्वप्नभ्रममदावेगरागरोगादिदृष्टिषु ॥ ५३ ॥

सर्वानुभवसिद्धं चेदमित्याह - आबालमिति ॥ ५३ ॥

चित्ते वृत्तान्तलक्षाणि संस्थितान्यात्तवासने ।
पादपे फलपुष्पाणि मूलाक्रान्तावनाविव ॥ ५४ ॥

मूलैराक्रान्ता अवनिः पृथ्वी येन तथाविधे पादपे इवेति
मनसोऽप्यधिष्ठानसदवष्टम्भबलाज्जगद्धारकत्वमिति द्योतनार्थम् ॥ ५४ ॥

त्यक्तावनेर्विटपिनो भूयः पत्राणि नो यथा ।
निर्वासनस्य जीवस्य पुनर्जन्मादि नो तथा ॥ ५५ ॥

त्यक्तावनेरुन्मूलितस्येति यावत् ॥ ५५ ॥

यत्रानन्तजगज्जालं संस्थितं तेन तेजसा ।
श्वपचत्वं प्रकटितं यदि तद्विस्मयोऽत्र किम् ॥ ५६ ॥

तथा चेदं श्वपचत्वं मनःस्थितानन्तवासनाजाले एकदेशप्रकटनमित्याह
- यत्रेति ॥ ५६ ॥

अवबुद्धा श्वपचता प्रतिभासवशात्त्वया ।
यथैवानल्पसंरम्भा विचित्राधिविकारदा ॥ ५७ ॥

तव सत्यत्वेनाभिमतमतिथ्यागमनादिप्रपञ्चजातमपि
श्वपचत्ववन्मनःस्थमेवेत्याह - अवबुद्धेत्यादिना ॥ ५७ ॥

79145 तथैवातिथिरायातो भुक्तवान्सुप्तवान्द्विजः ।
79146 कथां कथितवांश्चेति दृष्टवानसि संभ्रमम् ॥ ५८ ॥
79147
79148 तथैवोत्थाय गच्छामि प्राप्तोऽहं भूतमण्डलम् ।
79149 इमे भूता इमे ग्रामा दृष्टवानसि संभ्रमम् ॥ ५९ ॥
79150
79151 इमे ग्रामा इति संभ्रमं दृष्टवानसीति सर्वत्र इतिशब्दोऽध्याहार्यः ॥ ५९ ॥
79152
79153 तथैवेदं कटंजस्य प्राक्तनं लुठितं गृहम् ।
79154 जनैरुक्तं कटंजस्य दृष्टवानसि संभ्रमम् ॥ ६० ॥
79155
79156 तथैव कीरनगरं प्राप्तोऽस्मि कथितं च मे ।
79157 कीरैः श्वपचराजत्वं दृष्टवानसि सभ्रमम् ॥ ६१ ॥
79158
79159 एवं सर्वं त्वया दृष्टं मोहजालं द्विजोत्तम ।
79160 यत्सत्यमिति जानासि यच्चासत्यमवैषि च ॥ ६२ ॥
79161
79162 वासनावलितं चेतः किं नामान्तर्न पश्यति ।
79163 सार्थितं दृश्यते स्वप्ने वर्षसाध्यं प्रयोजनम् ॥ ६३ ॥
79164
79165 साधितं क्षणेनैव सिद्धम् ॥ ६३ ॥
79166
79167 सर्वमेतन्महाबुद्धे व्यामोहाद्दृष्टवानसि ॥ ६४ ॥
79168
79169 गच्छता भवता भूतदेशं पान्थेन कन्दरे ।
79170 कस्मिंश्चिद्विप्र विश्रान्तं कुरङ्गेणेव कानने ॥ ६५ ॥
79171
79172 किंच त्वयेदानीमपि न भूतमण्डले कीरनगरे वा गतं किंत्वतिथिवाक्यं
79173 श्रुत्वा भूतदेशं र्पति गच्छता प्रस्थितेन पान्थेन त्वया पथि
79174 कस्मिंश्चिद्गिरिकन्दरे विश्रान्तं तत्रैव श्रमेण
79175 मूढत्वात्परवशचित्तत्वात्स्वप्नवदिदं तद्भूतमण्डलमिदं
79176 तच्छ्वपचागारमित्यादि दृष्टं न परमार्थत इति द्वयोरर्थः ॥ ६५ ॥
79177
79178 तत्रैव श्रममूढत्वादिदं तद्भूतमण्डलम् ।
79179 इदं तच्छ्वपचागारमिति दृष्टं न सत्यतः ॥ ६६ ॥
79180
79181 तथैव कीरनगरं दृष्टवानसि तत्तथा ।
79182 तदैव चान्यदा वापि मायार्थं हि भवान्द्विज ॥ ६७ ॥
79183
79184 तत्तस्मिन्कन्दरे तदैव श्रमकाले कीरनगरं दृष्टवानसि अन्यदा
79185 अघमर्षणकाले वापि तथविअ मायामयमर्थं भवान् दृष्टवानित्यर्थः ॥
79186 ६७ ॥
79187
79188 सर्वदैव समग्रासु विहरन्नसि दृष्टवान् ।
79189 दिक्षु प्रोन्मत्तक इव विभ्रमं मनसा मुने ॥ ६८ ॥
79190
79191 चले [जलकन्दरे तदा इति पाठः] कन्दरे तदेति च देशकालनियमो
79192 भ्रमस्य नास्ति यावत्तत्त्वबोधं सर्वदा भ्रान्त्यैव
79193 विहरणादिव्यवहारदर्शनादित्याशयेनाह - सर्वदैवेति ॥ ६८ ॥
79194
79195 तदुत्तिष्ठ निजं कर्म कुर्वंस्तिष्ठोपशान्तधीः ।
79196 न स्वकर्म विना श्रेयः प्राप्नुवन्तीह मानवाः ॥ ६९ ॥

79197
79198 निजं ब्रह्मचर्याश्रमोचितमग्निकार्यस्वाध्यायादि कर्म ॥ ६९ ॥
79199
79200 श्रीवसिष्ठ उवाच ।
79201
79202 इति निगदितवान्स पद्मनाभो
79203 भुवनगतापसवृन्दपूज्यमानः ।
79204 विबुधमुनिगणैः पवित्रहस्तै-
79205 र्वृत उदधिं निजमस्पदं जगाम ॥ ७० ॥
79206
79207 भुवनगैस्त्रिभुवनगतैस्तापसवृन्दैः पूज्यमानः स पद्मनाभ इति
79208 उक्तप्रकारेण निगदितवान्सन् भगवच्चरणस्पर्शसेवादिना
79209 पवित्रहस्तैर्विबुधमुनिगणैर्वृतः सन् निजमास्पदं गृहभूतं
79210 क्षीरोदधिं जगामेत्यर्थः ॥ ७० ॥
79211
79212 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये
79213 मोक्षोपायेषूपशमप्रकरणे गाधिवृत्तान्ते मायामहत्त्वकथनं
79214 नामाष्टचत्वारिंशः सर्गः ॥ ४८ ॥
79215
79216 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
79217 मायामहत्त्वकथनं नामाष्टचत्वारिंशः सर्गः ॥ ४८ ॥
79218
79219
79220 एकोनपञ्चाशः सर्गः ४९
79221
79222 श्रीवसिष्ठ उवाच ।
79223
79224 अथ गाधिर्गते विष्णौ पुनर्भूतादिकं क्रमात् ।
79225 स्वयं मोहविचारार्थं बभ्रामाभ्रमिवाम्बरे ॥ १ ॥
79226
79227 गाधिर्देशौ पुनर्गत्वा हरिं पृष्ट्वा पुनः पुनः ।
79228 सर्वं मायेति निश्चित्य जीवन्मुक्तोऽभवत्क्रमात् ॥ १ ॥
79229
79230 तथैवोत्थाय गच्छामि प्राप्तोऽहं भूतमण्डलाम् । इमे भूता इमे ग्रामा
79231 दृष्टवानसि संभ्रमम् ॥ नातिथिर्न च भूतानि न कीरास्ते न तत्पुरम् ॥
79232 इत्यादिभगवद्वचनार्थं
79233 त्वसंभावनाविपरीतभावनादाढ्यादप्रतिपद्यमानो
79234 गाधिर्जगदधिष्ठानात्मतत्त्वसाक्षात्कारं विनैव पूर्वदृष्टदेशादीनां
79235 बाधोऽस्ति न वेति परीक्ष्यानुभवितुकामः पुनर्भूतमण्डलादिदेशान्
79236 बभ्रामेत्याह - अथेति । भूतादिकं भूतमण्डलादिदेशम् । आत्मनः स्वस्य
79237 श्वपचत्वादिवृत्तान्तं तथा पूर्वानुभूतवदेवोपलभ्य ॥ १ ॥
79238
79239 उपलभ्य तथैवात्मवृत्तान्तं जनतस्ततः ।
79240 हरिमाराधयामास पुनरद्रिगुहां गतः ॥ २ ॥
79241
79242 श्रुत्वा लिङ्गैर्दृष्ट्वा च भगवद्वाक्यतात्पर्यभोधाय
79243 पुनर्हरिमारधयामासेत्यर्थः ॥ २ ॥
79244
79245 आजगामैनमल्पेन कालेनाथ जनार्दनः ।
79246 सकृदाराधनेनैव माधवो याति बन्धुताम् ॥ ३ ॥
79247
79248 उवाच गाधिं भगवान्मयूरमिव वारिदः ।

79249 किं त्वं प्रार्थयसे भूयस्तपसेति प्रसादवान् ॥ ४ ॥
79250
79251 प्रसादवान् प्रसन्नः सन् ॥ ४ ॥
79252
79253 गाधिरुवाच ।
79254
79255 भ्रान्तोऽस्मि देव षण्मासान्भूतकीरजनास्पदम् ।
79256 तत्र व्यभिचरत्यस्मद्‌वृत्तान्तो न कथास्वपि ॥ ५ ॥
79257
79258 कथासु जनप्रवादेषु । अपिपदाल्लिङ्गप्रत्यभिज्ञादिसंवादेष्वपि न
79259 व्यभिचरतीत्यर्थः ॥ ५ ॥
79260
79261 मायया भूतभूर्दृष्टा त्वयेत्युक्तोऽस्मि किं प्रभो ।
79262 मोहनाशाय महतां वचो नो मोहवृद्धये ॥ ६ ॥
79263
79264 अस्तु तथा किं ततस्तत्राह - माययेति । मायादृष्टार्था अवश्यं कालान्तरे
79265 व्यभिचरन्ति अव्यभिचारिणश्चैतेऽर्थाः कथं मायेत्यवधारयितुं शक्या इति
79266 मोहवृद्धये त्वद्वचनं संपन्नमिति भावः ॥ ६ ॥
79267
79268 श्रीभगवानुवाच ।
79269
79270 काकतालीययोगेन चेतसि श्वपचस्थितिः ।
79271 सर्वेषां भूतकीराणां तवेव प्रतिबिम्बति ॥ ७ ॥
79272
79273 मायिकस्यापि कथास्वव्यभिचारे उपपत्तिमाह - काकतालीयेति ।
79274 प्रसिद्धभूतदेशजानां कीरदेशजानां च जनानां चेतसि तव चेतसीव
79275 कठंजकश्वपचस्य स्थितिरपरोक्षतया भ्रान्त्या प्रतिबिम्बतीत्यर्थः ॥ ७ ॥
79276
79277 तेनाङ्ग तव वृत्तान्तं यथावत्कथयन्ति ते ।
79278 प्रतिभासो हि नायाति पुनरप्रतिभासताम् ॥ ८ ॥
79279
79280 तथाच तेऽपि स्वभ्रान्त्यैव तथा वदन्तीत्यार्थसमाजग्रस्तस्तद्वचनसंवादो न
79281 सत्यतापादक इत्याह - तेनेति । प्रतिभास इति । विना भाधमिति शेषः ॥ ८ ॥
79282
79283 केनचिच्छ्वपचेनान्ते ग्रामस्य रचितं गृहम् ।
79284 तत्त्वया दृष्टमाविष्टमिष्टकाखण्डतां गतम् ॥ ९ ॥
79285
79286 प्रत्यभिज्ञासंवादस्य तर्हि का गतिस्तामाह - केनचिदिति । आविष्टं मयेदं
79287 प्राग्रचितमिति भ्रान्त्यभिनिवेशविषयीकृतम् ॥ ९ ॥
79288
79289 कदाचित्प्रतिभैकैव बहूनामपि जायते ।
79290 काकोलतालस्थितिवद्विचित्रा हि मनोगतिः ॥ १० ॥
79291
79292 प्रतिभा भ्रान्तिरूपः प्रतिभास एका एकरूपैव । काकोलो द्रोणकाकाख्यः
79293 काकजातिभेदस्तस्य ताले पक्वतालफले तालमूले वा स्थितिरुपवेशनं तद्वत् ॥ १०
79294 ॥
79295
79296 तथाहि बहवः स्वप्नमेकं पश्यन्ति मानवाः ।
79297 स्वापभ्रमदमैरेयमदमन्थरचित्तवत् ॥ ११ ॥
79298
79299 स्वापो निद्रा तद्वद्‌भ्रमदेन मैरेयमदेन मन्थरचित्ता यथा बहवस्तुल्यरूपा
79300 घूर्णमाना इव दिशः पश्यन्ति तद्वत् ॥ ११ ॥

79301
79302 एकस्यामेव लीलायां रमन्ते बहुबालकाः।
79303 एकस्यामेव नीलायां वनस्थल्यामिवैणकाः ॥ १२ ॥
79304
79305 एकस्यामेव
79306 सिकतादिसंनिवेशसंकेतकल्पितगृहप्रासाददुर्गादिभ्रमलीलायां बहवो
79307 बालका रमन्ते। नीलायां शाद्वलश्यामलायां वनस्थल्याम्। एणका
79308 मृगपोताः ॥ १२ ॥
79309
79310 बहवस्तुल्यकालं च प्रतिभासेन कर्मणाम्।
79311 जना यतन्ते स्वफलपाकेऽतिबहुलाकृतौ ॥ १३ ॥
79312
79313 अतिबहुलाकृतौ वधबन्धपराजयपलायनादिनानाकारे स्वप्रारब्धफलपाके
79314 लभ्येऽपि बहवः सैनिकादिजनास्तुल्यकालं जयलाभभोगादीनां तुल्यरूपाणां
79315 कर्मणां प्रयोजनानां भ्रान्त्या प्रतिभासेन तल्लोभाद्युद्धादिना यतन्ते इति
79316 प्रसिद्धमित्यर्थः ॥ १३ ॥
79317
79318 प्रतिबन्धाभ्यनुज्ञानां कालो दातेति या श्रुतिः।
79319 विप्र संकल्पमात्रोऽसौ कालो ह्यात्मनि तिष्ठति ॥ १४ ॥
79320
79321 यदि मानसकल्पनैव जगत्तर्हि हेमन्तादिः कालो व्रीह्याद्यङ्कुरोदयस्य
79322 प्रतिबन्धको यवादीनां चाभ्यनुज्ञातेति लोकप्रसिद्धेर्बाधः
79323 स्यान्मानसकल्पनायां बाह्यकालस्य व्यवस्थापकत्वायोगादित्याशङ्कां
79324 गाधेः परिहरन्नाह - प्रतिबन्धेति। श्रुतिर्लौकिकप्रवादश्रवणम्। सा न
79325 विरुध्यत इति शेषः। यतोऽसौ प्रतिबन्धाभ्यनुज्ञानहेतुरपि कालः
79326 संकल्पमात्रः। दिग्विशेषावच्छिन्नां सूर्यक्रियां दृष्ट्वा मनसैव
79327 यथाशास्त्रं मासर्त्वादिभेदकल्पनादिति भावः। कस्तर्ह्यकल्पितः
79328 कालस्तमाह - काल इति। यस्त्वकल्पितोऽखण्डः कालः परमात्मा स
79329 स्वात्मन्येव तिष्ठति न कस्यचित्प्रतिबन्धमभ्यनुज्ञां वा ददातीत्यर्थः ॥ १४
79330 ॥
79331
79332 अमूर्तो भगवान्कालो ब्रह्मैव तमजं विदुः।
79333 न जहाति न चादत्ते किंचित्कस्य कदेति च ॥ १५ ॥
79334
79335 अमुमेवार्थं स्पष्टयति - अमूर्त इत्यादिना ॥ १५ ॥
79336
79337 लौकिको यस्त्वयं कालो वर्षकल्पयुगात्मकः।
79338 संकल्प्यते पदार्थौघैः पदार्थौघश्च तेन तु ॥ १६ ॥
79339
79340 आद्यस्य संकल्पात्मतामुपपादयति - लौकिक इति। जन्यमात्रस्य
79341 कालोपाधित्वात्सूर्यक्रियाचन्द्रपिण्डादिपदार्थौघैः संकल्प्यते। तेन च
79342 प्रतिबन्धानुज्ञाभ्यां सर्वपदार्थौघस्तत्क्रियाफलादिव्यवस्था च
79343 संकल्प्यत इत्यर्थः। तुशब्दश्चार्थे ॥ १६ ॥
79344
79345 समानप्रतिभासोत्थसंभ्रमं भ्रान्तचेतसः।
79346 तथा तं दृष्टवन्तस्ते भूतकीरजनोच्चयाः ॥ १७ ॥
79347
79348 प्रासङ्गिकीं शङ्कां परिहृत्य प्रकृतमालम्ब्याह - समानेति।
79349 भूतदेशजाःकीरदेशजाश्च जनोच्चया जनसमूहाः ॥ १७ ॥
79350
79351 स्वव्यापारपरो भूत्वा धियात्मानं विचारय।
79352 साधो गतमनोमोहमिहैवास्व व्रजाम्यहम् ॥ १८ ॥

79353
79354 तर्हि मया किं कार्यं तत्राह - स्वव्यापारेति । स्ववर्णाश्रमोचिताचरणपर
79355 इत्यर्थः ॥ १८ ॥
79356
79357 इत्युक्त्वा भगवान्विष्णुर्जगामान्तर्धिमीश्वरः ।
79358 अतिष्ठत्कन्दरे गाधिराधिपीवरया धिया ॥ १९ ॥
79359
79360 आधिपीवरया चिन्तोपचितया ॥ १९ ॥
79361
79362 ततः कतिपयेष्वद्रौ मासेष्वतिगतेषु सः ।
79363 पुनराराधयामास पुण्डरीककरं द्विजः ॥ २० ॥
79364
79365 ददर्श चैकदा नाथमागतं प्रणनाम तम् ।
79366 पूजयामास मनसा चोक्तेनोवाच चेश्वरम् ॥ २१ ॥
79367
79368 मनसा चकाराद्वचसा कर्मणा च पूजयामास उक्तेन
79369 प्रश्नानुज्ञावाक्येनोवाच पप्रच्छ च ॥ २१ ॥
79370
79371 गाधिरुवाच ।
79372
79373 भगवन्संस्मरंश्चैतामात्मनः श्वपचस्थितम् ।
79374 इमां संसारमायां च परिमुह्यामि चेतसा ॥ २२ ॥
79375
79376 इमां जननमरणाद्यनर्थबहुलां संसारमायां च संस्मरन् ॥ २२ ॥
79377
79378 तदुक्त्वास्व यथावस्तु महामोहनिवृत्तये ।
79379 एकस्मिन्नेव विमले मां नियोजय कर्मणि ॥ २३ ॥
79380
79381 तत्तस्माद्धेतोर्महामोहस्य निवृत्तये उपायमुक्त्वा झटिति न गच्छ किंतु
79382 यावत्संशयमोहोच्छेदमास्व तिष्ठेत्यर्थः ॥ २३ ॥
79383
79384 श्रीभगवानुवाच ।
79385
79386 ब्रह्मन् जगदिदं मायामहाशम्बरडम्बरम् ।
79387 सर्वा आश्चर्यकलनाः संभवन्तीह विस्मृतेः ॥ २४ ॥
79388
79389 विस्मृतेः स्वात्मतत्त्वविस्मरणात् । आवरणनिमित्तादज्ञानादिति यावत् ॥ २४ ॥
79390
79391 भूतकीरपुरे मोहाद्दृष्टवांस्तत्तथा भवान् ।
79392 इत्येतत्संभवत्येव दृश्यते हि जनैर्भ्रमः ॥ २५ ॥
79393
79394 मायायां चासंभावितसहस्रमपि संभवत्येवेत्याह - भूतेति ।
79395 तच्छ्वपचत्वादि तथा तत्तत्प्रकारेण
79396 दृष्टवानित्येतन्मोहादज्ञानात्संभवत्येव । तथाहि
79397 जनैर्निद्रादावसंभावितगोचरोऽपि भ्रमो दृश्यत इत्यर्थः ॥ २५ ॥
79398
79399 भूतास्त्वमिव कीराश्च दृष्टवन्तस्तथा भ्रमम् ।
79400 मुधैवेत्यपि सत्याभं समकालादिसंभवात् ॥ २६ ॥
79401
79402 मुधा मिथ्यैव । इति एवं मिथ्यास्वभावमपि सत्याभं दृष्टवन्त इत्यर्थः ।
79403 समेन संकल्पेन समकालादेः संभवादित्यर्थः ॥ २६ ॥
79404

79405 इदं तु शृणु वक्ष्यामि यथाभूतमनिन्दितम् |
79406 यथैति तनुतां चिन्ता मार्गशीर्षलतेव ते || २७ ||
79407
79408 यथाभूतं यथास्थितम् | अनिन्दितं तव
79409 श्वपचनिन्दासंबन्धनिवारकमित्यर्थः | तनुतामपक्षयम् || २७ ||
79410
79411 योऽसौ कटंजको नाम श्वपचो भूतमण्डले |
79412 तेनैव संनिवेशेन स तथैवाभवत्पुरा || २८ ||
79413
79414 तेन त्वद्दृष्टसदृशेनैव संनिवेशेन शरीरग्रामगृहदाराद्याकारेण
79415 तथैव युक्तोऽभवदित्यर्थः || २८ ||
79416
79417 बभूव कीरनृपतिः प्रविवेशानलं ततः || २९ ||
79418
79419 तथैवेति सर्वत्रानुषङ्गनीयम् || २९ ||
79420
79421 भवतः केवलं चित्ते जलान्तर्वर्तिनस्तदा |
79422 प्रतिभाता तथाभूता कटंजाचारसंस्थितिः || ३० ||
79423
79424 यदि तथाभूतोऽन्योऽभूत्तर्हि मम कथं तदनुभवपथं प्राप्तं तत्राह ##-
79425 केवलं प्रतिभाता मत्संकल्पवशादित्यर्थः || ३० ||
79426
79427 द्रष्टानुभूतमप्यर्थं कदाचिद्विस्मरत्यलम् |
79428 कदाचिदप्यदृष्टं तु चेतः पश्यति दृष्टवत् || ३१ ||
79429
79430 कदाप्यदृष्टस्य देशान्तरस्थस्यातीतस्य च कथं पुरोवर्तमानतया
79431 दर्शनं तत्राह - द्रष्टेति | यथा अनुभूतमपि विस्मरति तथा अदृष्टमपि
79432 पश्यतीत्यर्थः || ३१ ||
79433
79434 यथा स्वप्नमनोराज्यधातुसंस्थितिविभ्रमाः |
79435 जाग्रत्यपि तथैवाङ्ग दृश्यन्ते मनसा स्वयम् || ३२ ||
79436
79437 धातुसंस्थितिः संनिपातः || ३२ ||
79438
79439 भविष्यद्भूतकालस्थं यथा त्रैकाल्यदर्शिनः |
79440 प्रतिभामेति गाधे यत्कटंजाचरितं तथा || ३३ ||
79441
79442 यथा त्रैकाल्यदर्शिनो योगिनो दृष्ट्या भविष्यदपि वस्तु तदुत्तरकालिकेषु
79443 दृश्यमानेषु भूतकालस्थं भवति तथा हे गाधे अतीतमपि कटंजाचरितं
79444 वर्तमानप्रतिभामेतीत्यर्थः || ३३ ||
79445
79446 अयं सोऽहमिदं तन्म इति मज्जति नात्मवान् |
79447 अयं सोऽहमिदं तन्म इति मज्जत्यनात्मवान् || ३४ ||
79448
79449 नन्वनात्मन्यनात्मीये च कटंजके तदीयगृहकलत्रादौ च मम स एवाहं
79450 तदीयमेव तन्मे मदीयमिति कथं मज्जनमिति चेदत्यल्पमिदमुच्यते |
79451 अनात्मविदां सर्वेषामप्यनात्मनि देहे अनात्मीये च
79452 गृहकलत्रादावहंममेत्यभिमानदर्शनादात्मविद एव केवलं
79453 तन्मज्जनाभावादित्याशयेनाह - अयमिति || ३४ ||
79454
79455 सर्वमेवाहमेवेति तत्त्वज्ञो नावसीदति |
79456 न गृह्णाति पदार्थेषु विभागानर्थभावनम् || ३५ ||

79457
79458 सर्वाहंभावनयापि तत्त्वविदस्तत्र न मज्जनं परिच्छिन्नाहंभावस्यैव
79459 मज्जनहेतुत्वादित्याह - सर्वमेवेति ॥ ३५ ॥
79460
79461 तेनासौ भ्रमयोगेषु सुखदुःखविलासिषु ।
79462 न निमज्जति मग्नोऽपि तुम्बीपात्रमिवाम्भसि ॥ ३६ ॥
79463
79464 सर्वाहंभावेऽप्यहंकारसत्त्वान्मग्नप्रायोऽपि ॥ ३६ ॥
79465
79466 त्वं तावद्वासनाजालग्रस्तचित्तो विचेतनः ।
79467 किंचिच्छेषमहाव्याधिरिव न स्वस्थमागतः ॥ ३७ ॥
79468
79469 अहं तर्हि कीदृश इति चेदान्तरालिक इत्याह - त्वमिति । स्वस्थं
79470 स्वरूपावस्थितमात्मानमागतः प्राप्तः ॥ ३७ ॥
79471
79472 ज्ञानस्यापरिपूर्णत्वान्न शक्नोषि मनोभ्रमम् ।
79473 विनिवारयितुं मेघसम्यग्यत्नवानिव ॥ ३८ ॥
79474
79475 मेघपदेन तत्कार्यं वृष्टिर्लक्ष्यते ।
79476 गृहरचनपरगृहप्रवेशादिसम्यग्यत्नशून्यः पुरुष इव ॥ ३८ ॥
79477
79478 यदेव ते मनोमात्रे सहसा प्रतिभासते ।
79479 तरुरुच्चजनेनेव तेनैवाक्रम्यसे क्षणात् ॥ ३९ ॥
79480
79481 आक्रम्यसे तदभिमानेन परिभूयसे ॥ ३९ ॥
79482
79483 चित्तं नाभिः किलास्येह मायाचक्रस्य सर्वतः ।
79484 स्थीयते चेत्तदाक्रम्य तन्न किंचित्प्रबाधते ॥ ४० ॥
79485
79486 नाभिर्मध्यम् । सर्वतो भ्रमत इति शेषः । तच्चित्तमाक्रम्य आत्मनि
79487 प्रविलापनेन तिरस्कृत्य । तन्मायाचक्रं किंचिदपि न प्राबधते ॥ ४० ॥
79488
79489 त्वमुत्तिष्ठ गिरेः कुञ्जे दशवर्षाण्यखिन्नधीः ।
79490 तपः कुरु ततो ज्ञानमनन्तं समवाप्स्यसि ॥ ४१ ॥
79491
79492 तपश्चित्तनिरोधाभ्यासम् ॥ ४१ ॥
79493
79494 इत्युक्त्वा पुण्डरीकाक्षस्तत्रैवान्तरधीयत ।
79495 वाताभ्रवद्दीपकवद्यमुनोत्पीडवत्क्षणात् ॥ ४२ ॥
79496
79497 वातलीनाभ्रवन्निर्वाणदीपकवद्यमुनातरङ्गवच्चेति मालोपमा ॥ ४२ ॥
79498
79499 गाधिर्विवेकवशजं वैराग्यपदमागतः ।
79500 शरत्समयपर्यन्ते वैरस्यमिव पादपः ॥ ४३ ॥
79501
79502 वैरस्यमस्निग्धताम् ॥ ४३ ॥
79503
79504 विचित्रं चेष्टितं धातुरसमञ्जसमागतम् ।
79505 भ्रमद्भ्रमभरोन्मुक्तमतिर्मन्दमगर्हयत् ॥ ४४ ॥
79506
79507 भ्रमता भ्रमभरेणोन्मुक्ता मतिर्यस्य तथाविधः सन् धातुः
79508 प्राक्तनकर्मलक्षणस्य

79509 दैवस्यासमंजसमयुक्तश्वपचभावादिप्रदर्शनरूपं विचित्रं
79510 चेष्टितमगर्हयत् ॥ ४४ ॥
79511
79512 जगाम करुणार्द्रात्मा नियमायोत्तमश्रिये ।
79513 विश्रान्त्यै ऋष्यमूकं तु पयोधर इवाचलम् ॥ ४५ ॥
79514
79515 नियमाय चित्तनियमनाभ्यासाय । ऋषमूकं मतङ्गाश्रमस्थमचलम् ॥ ४५
79516 ।।
79517
79518 निरस्ताशेषसंकल्पस्तपस्तत्र चकार ह ।
79519 दशवर्षाणि तेनासावात्मज्ञानमवाप ह ॥ ४६ ॥
79520
79521 तपः मनसश्चेन्द्रियाणां च ऐकाग्र्यं परमं तपः इति प्रसिद्धम् ॥ ४६ ॥
79522
79523 अरमत तदनु स्वां प्राप्य सत्तां महात्मा
79524 ह्यपगतभयशोको भोगभूवावनीषु ।
79525 सततमुदितजीवन्मुक्तरूपः प्रशान्तः
79526 सकल इव शशाङ्को भूर्णितापूर्णचेताः ॥ ४७ ॥
79527
79528 तदनु आत्मज्ञानप्राप्त्यनन्तरं महात्मा गाधिः स्वां पारमार्थिकीं
79529 सत्तां प्राप्य अपगतभयशोकः सन् सततमुदितं जीवत एव मुक्तरूपं यस्य
79530 तथाविधः अत एवापरिच्छिन्नस्वानन्दमदेन घूर्णितमापूर्णं च चेतो यस्य
79531 तथाविधः सन् सकलः कलापूर्णः शशाङ्क इवापरिच्छिन्ने ब्रह्माकाशे
79532 अरमत विजहार । विश्रान्तिं प्रापेत्यर्थः ॥ ४७ ॥
79533
79534 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे०
79535 मोक्षोपायेषूपशमप्रकरणे गाधिवृत्तान्ते
79536 गाधेर्ज्ञानप्राप्तिर्नामैकोनपञ्चाशः सर्गः ॥ ४९ ॥
79537
79538 इति श्रीवासिष्ठमहारामायाणतात्पर्यप्रकाशे उपशमप्रकरणे
79539 गाधेर्ज्ञानप्राप्तिर्नामैकोनपञ्चाशः सर्गः ॥ ४९ ॥
79540
79541 गाध्युपाख्यानं संपूर्णम् ।
79542
79543 पञ्चाशः सर्गः ५०
79544
79545 श्रीवसिष्ठ उवाच ।
79546
79547 एवमेषातिवितता दुर्ज्ञाना रघुनन्दन ।
79548 महामोहमयी माया विषमा पारमात्मिकी ॥ १ ॥
79549
79550 चित्तस्याक्रमणोपाया ज्ञानमाहात्म्यमुत्तमम् ।
79551 चेतोहिपीनतादोषहेतवश्चात्र कीर्तिताः ॥ १ ॥
79552
79553 वर्णितं गाध्युपाख्यानं प्रकृते योजयति - एवमित्यादिना । दुर्ज्ञाना
79554 अचिन्त्या । पारमात्मिकी परमात्ममात्राश्रयविषया ॥ १ ॥
79555
79556 क्व मुहूर्तद्वयस्वप्नसंभ्रमाल्लोकदृष्टता ।
79557 क्वानेकवर्षसंभुक्तश्वपचावनिपभ्रमः ॥ २ ॥
79558
79559 दुर्ज्ञानतामेव त्रेधा दर्शयति - क्वेति द्वाभ्याम् ॥ २ ॥
79560

79561 क्व संभ्रमोपलब्धत्वं क्व प्रत्यक्षनिदर्शनम् ।
79562 क्वासत्यत्वमसंदिग्धं क्व सत्यपरिणामिता ॥ ३ ॥
79563
79564 अतो वच्मि महाबाहो मायेयं विषमान्वहम् ।
79565 असावधानमनसं संयोजयति संकटे ॥ ४ ॥
79566
79567 श्रीराम उवाच ।
79568
79569 एवमस्य कथं ब्रह्मन्मायाचक्रस्य रोधनम् ।
79570 कुर्युः प्रवहतो वेगात्सर्वाङ्गच्छेदकारिणः ॥ ५ ॥
79571
79572 चित्तं नाभिः किलास्येह मायाचक्रस्य सर्वतः । स्थीयते चेत्तदाक्रम्य तन्न
79573 किंचित्प्रबाधते ॥ इति यद्भगवतान्ते उपदिष्टं तदुपायं जिज्ञासू रामः
79574 पृच्छति - एवमिति । कुर्युरधिकारिण इति शेषः । पूर्णानन्दात्मनः
79575 परिच्छेददुःखापादनमेवाङ्गच्छेदसाम्यादङ्गच्छेदस्तत्कारिणः ॥ ५ ॥
79576
79577 श्रीवसिष्ठ उवाच ।
79578
79579 अस्य संसाररूपस्य मायाचक्रस्य राघव ।
79580 चित्तं विद्धि महानाभिं भ्रमतो भ्रमदायिनः ॥ ६ ॥
79581
79582 भगवदुपदिष्टमायाचक्रावष्टम्भप्रकारं प्रथमं
79583 प्रपञ्चयितुमुक्तमनुवदति - अस्येत्यादिना ॥ ६ ॥
79584
79585 तस्मिन्द्रुतमवष्टब्धे धिया पुरुषयत्नतः ।
79586 गृहीतनाभिवहनान्मायाचक्रं निरुध्यते ॥ ७ ॥
79587
79588 मायाचक्रं गृहीता नाभिर्यस्य तत्तथाविधं
79589 सद्वहनाद्भ्रमणान्निरुध्यते । निवर्तते इति यावत् ॥ ७ ॥
79590
79591 अवष्टब्धमनोनाभिमोहचक्रं न गच्छति ।
79592 यथा रज्ज्वां निरुद्धायां कीलकं रज्जुवेष्टितम् ॥ ८ ॥
79593
79594 यथा बालानां कांस्यादिमयं क्रीडाचक्रं तन्तुवेष्टितनाभिकीलकं
79595 तर्जन्यग्रनिबद्धायां रज्ज्वां तन्तौ निरुद्धायां न गच्छति न भ्रमति तद्वत्
79596 ॥ ८ ॥
79597
79598 चक्रयुद्धैकतज्ज्ञोऽसि कस्माज्जानासि नानघ ।
79599 चक्रं नाभाववष्टब्धं वशमायाति नान्यथा ॥ ९ ॥
79600
79601 किंच हे राघव त्वं चक्रयुद्धेष्वेको मुख्यस्तज्ज्ञश्च
79602 विष्टम्भभ्रमणाद्यभिज्ञोऽसि अतः कस्मादुक्तदृष्टान्तं न जानासि ॥ ९ ॥
79603
79604 चित्तं नाभिमवष्टभ्य तस्माद्यत्नेन राघव ।
79605 संसारचक्रं वहनादात्मनः परिरोधय ॥ १० ॥
79606
79607 आत्मनो वहनाज्जन्मपरम्पराप्रापणात् सम्यङ्निरोधय निरुन्धि ॥ १० ॥
79608
79609 एतां युक्तिं विना दुःखमनन्तमितमात्मनः ।
79610 अस्यां दृष्टौ क्षणादन्तं गतमेवावलोकय ॥ ११ ॥
79611
79612 एतां चित्तरोधनलक्षणां युक्तिं योगमुपायं विना आत्मनोऽनन्तं

दुःखमितं प्राप्तम् | तच्च दुःखमस्यां दृष्टौ प्राप्तायां सत्यामन्तं
नाशं गतमेव अवलोकय | मदुक्तार्थे संशये त्वं तथा कृत्वा
पश्येत्यर्थः || ११ ||

चित्ताक्रमणमात्रात्तु परमादौषधादृते |
प्रयत्नेनापि संसारमहारोगो न शाम्यति || १२ ||

उपायान्तरं च नास्तीत्याह - चित्तेति || १२ ||

तस्माद्राघव संत्यज्य तीर्थदानतपःक्रियाः |
श्रेयसे परमायान्तश्चित्तमेव वशं कुरु || १३ ||

चित्तान्तरेव संसारः कुम्भान्तः कुम्भखं यथा |
चित्तनाशे न संसारः कुम्भनाशे न कुम्भखम् || १४ ||

तत्रोपपत्तिमाह - चित्तन्तरिति || १४ ||

चिरं संसरणाकाशकोटरं चित्तकुम्भखम् |
विनाश्यातुलिताकाशस्वरूपं रूपमाविश || १५ ||

यथा कुम्भखे निरुद्धो मशकादिः स्वदुःखसंसरणाकाशकोटरं
दैवात्कुम्भनाशेन विनाश्यातुलितमनुपमं महाकाशस्वरूपमाविश्य
मुक्तबन्धः सुखी भवति तथा त्वमपि चित्तनाशेन चित्तकुम्भखं विनाश्य
अतुलितं ब्रह्माकाशमाविशेत्यर्थः || १५ ||

वर्तमानमनायासं भजद्वाह्यधिया क्षणम् |
भूतं भविष्यदभजद्याति चित्तमचित्तताम् || १६ ||

चित्तनाशे तर्हि क उपायस्तमाह - वर्तमानमिति |
भूतभविष्यद्विषयानुसंधानत्यागादेव क्रमाच्चित्तं क्षीयत इत्यर्थः || १६ ||

संकल्पांशानुसंधानवर्जनं चेत्प्रतिक्षणम् |
करोषि तदचित्तत्वं प्राप्त एवासि पावनम् || १७ ||

भाविविषयसंकल्पस्य तदंशभूतार्थानुसंधानस्य च वर्जनं
प्रतिक्षणं सावधानतया करोषि चेत्तर्हि || १७ ||

यावत्संकल्पकलना तावच्चीत्तविभूतयः |
यावज्जलदविस्तारस्तावत्खजलबिन्दवः || १८ ||

खजलस्य वर्षस्य बिन्दवः || १८ ||

सचित्तं चेतनं यावत्तावत्संकल्पकल्पनम् |
सचन्द्रांशु जगद्यावत्तावत्प्रालेयलेशकाः || १९ ||

एवं संकल्पा अपि सति चित्ते दुर्वारा इत्याह - सचित्तमिति | चेतनं
चिदात्मरूपम् || १९ ||

चेतनं चित्तरिक्तं चेद्भावितं तत्स्वसंसृतेः |
आमूलमेव दग्धानि विद्धि मूलानि सिद्धवत् || २० ||

चित्तरिक्तं चित्तात्पृथक्कृतं कूटस्थमिति यावत् | तत्तदा स्वसंसृतेर्मूलानि

79665 कामकर्मवासनादीनि आमूलं मूलाज्ञानेन सह दग्धानीति सिद्धवत्कारेण
79666 महासिद्धसाम्येन वा विद्धीत्यर्थः ॥ २० ॥
79667
79668 चेतनं चित्तरिक्तं हि प्रत्यक्चेतनमुच्यते ।
79669 निर्मनस्कस्वभावं तन्न तत्र कलनामलः ॥ २१ ॥
79670
79671 नन्वस्तु दाहस्तथापि चेतने पुनः कलनामलवशाच्चित्तादिसमुद्भवः किं न
79672 स्यादित्याशङ्क्याह - चेतनमिति ॥ २१ ॥
79673
79674 सा सत्यता सा शिवता सावस्था पारमात्मिकी ।
79675
79676 चित्तरहितचेतनस्वरूपं यत्सैव परमार्थसत्यता । शिवता
79677 निरतिशयानन्दरूपता । सैव परमात्मस्वभावभूता अवस्था । सर्वज्ञता
79678 सर्वावभासकचिद्रूपता । दृष्टिः परमार्थदृक् । यत्र यस्यामवस्थायाम् ।
79679 क्षतमिति निन्दार्थं विशेषणम् ॥ २२ ॥
79680
79681 मनो यत्र तु तत्राशास्तत्र दुःखसुखानि च ।
79682 सदा संनिधिमायान्ति श्मशान इव वायसाः ॥ २३ ॥
79683
79684 निन्द्यताबीजान्येव दर्शयति - मन इति ॥ २३ ॥
79685
79686 वस्तुतत्त्वावबोधेन सर्वभावव्यवस्थितेः ।
79687 ससृतिव्रततेर्बीजं संकल्पेनोपजायते ॥ २४ ॥
79688
79689 ननु विदुषामपि मनोऽस्ति तत्राप्याशादीनि कुतो नोपजायन्ते तत्राह -
79690 संसृतीति । सत्यमस्ति तथापि तेषां मानसे संकल्पे
79691 आशादिसर्वभावव्यवस्थापिकायाः संसारवल्ल्या वासनात्मकं बीजमेव न
79692 जायते वस्तुतत्त्वावबोधेन बाधितत्वादित्यर्थः ॥ २४ ॥
79693
79694 शास्त्रसज्जनसंपर्कसंतताभ्यासयोगतः ।
79695 जागतानामवस्तुत्वं भावानामवगम्यते ॥ २५ ॥
79696
79697 वस्तुत्वेनावगतानां केनोपायेनावस्तुत्वावगमलक्षणो बाधस्तमाह -
79698 शास्त्रेति ॥ २५ ॥
79699
79700 अविवेकादुपाहृत्य चेतसोद्यमनिश्चयैः ।
79701 बलात्कारेण संयोज्यं शास्त्रसत्पुरुषक्रमैः ॥ २६ ॥
79702
79703 उपाहृत्य निवर्त्य । उद्यमः पुरुषयत्नस्तत्सहितैरवश्यमस्मिञ्जन्मनि
79704 ज्ञानं साधयामीति दृढनिश्चयैः ॥ २६ ॥
79705
79706 मुख्यं कारणमात्मैव परमात्मावलोकने ।
79707 अगाधे पतितं रत्नं रत्नेनैवावलोक्यते ॥ २७ ॥
79708
79709 किं मुख्यं कारणमवलम्ब्य शास्त्रादिनाप्यात्मान्वेष्य इति
79710 चेत्स्वयंज्योतिरूपं प्रत्यगात्मानमेव । तद्वेद्यवैलक्षण्येन तस्यैव स्वतः
79711 प्रथमानत्वादित्याशयेनाह - मुख्यमिति । रत्नेन प्रकाशमानेन
79712 स्वेनैवेत्यर्थः ॥ २७ ॥
79713
79714 स्वानुभूतानि दुःखानि स्वात्मैव त्यक्तुमिच्छति ।
79715 तेनात्मैवात्मविज्ञाने हेतुरेकः परः स्मृतः ॥ २८ ॥
79716

79717 उक्तां मुख्यकारणतां स्फुटयति - स्वेति | स्वेनानुभूतानि दृश्यजातानि
79718 दुःखान्येवेति विवेकेन येन हेतुना त्यक्तुमिच्छति तेनैव हेतुना स्वात्मवलोकने
79719 तत्प्रतिकूलस्वभावः स्वयं मुख्यो हेतुः | नहि
79720 स्वयमप्यसुखजडस्वभावत्वे तत्प्रतिकूलः स्यादिति भावः || २८ ||
79721
79722 प्रलपन्विसृजन्गृह्णन्नुन्मिषन्निमिषन्नपि |
79723 निरस्तमननानन्तसंविन्मात्रपरो भव || २९ ||
79724
79725 तस्मात्त्वं सदा तदेकप्रवणो भव तल्लाभायेत्याह - प्रलपन्नित्यादिना ||
79726 २९ ||
79727
79728 जायमानस्तथा जीवन्म्रियमाणः क्रियारतः |
79729 स्वात्मन्यमलतां प्राप्ते संविदंशे स्थिरो भव || ३० ||
79730
79731 जन्ममरणग्रहणं तत्समसुखदुःखदुर्दशान्तरेष्वदप्यात्मप्रवणताया
79732 अविस्मरणविधानार्थम् | शोधनेनामलतां प्राप्ते संविन्मात्रांशे || ३० ||
79733
79734 ममेदं तदयं सोऽहमिति संत्यज्य वासनाः |
79735 एकनिष्ठतयान्तस्थसंविन्मात्रपरो भव || ३१ ||
79736
79737 इदं पुरोवर्ति तद्दूरस्थं च मम | अयं स प्रत्यभिज्ञायमानो देहोऽहमिति
79738 वासनाः सम्यक् त्यक्त्वा || ३१ ||
79739
79740 वर्तमानभविष्यन्त्योः स्थित्योरादेहमेकधीः |
79741 स्वसंवित्त्यानुसंधानसमाधानपरो भव || ३२ ||
79742
79743 वर्तमाना बाल्यादिस्थितिर्भविष्यन्ती यौवनराज्यादिस्थितिस्तयोरनुसंधानं
79744 ध्यानं समाधानं समाधिः || ३२ ||
79745
79746 बाल्ययौवनवृद्धेषु दुःखेषु च सुखेषु च |
79747 जाग्रत्स्वप्नसुषुप्तेषु स्वसंवित्तिपरो भव || ३३ ||
79748
79749 उक्तमेव स्पष्टमाह - बाल्येति || ३३ ||
79750
79751 मलं संवेद्यमुत्सृज्य मनो निर्गलयन्परम् |
79752 आशापाशमलं छित्त्वा स्वसंवित्तिपरो भव || ३४ ||
79753
79754 संवेद्यं बाह्यविषयलक्षणम् || ३४ ||
79755
79756 शुभाशुभस्वसंकेतसंशान्ताविषूचिकः |
79757 नष्टेष्टानिष्टदृष्टिस्त्वं संवित्सारपरो भव || ३५ ||
79758
79759 शुभाशुभलक्षणौ यौ स्वसंकल्पकृतसंकेतौ तयोः संशान्ता
79760 आशाविषूचिका यस्य | अत एव नष्टेनिष्टा दृष्टिर्यस्य || ३५ ||
79761
79762 सकर्तृकर्मकरणान्स्वास्पर्शानन्तरा स्पृशन् |
79763 निर्विकल्पनिरालम्बः स्वचिन्मात्रपरो भव || ३६ ||
79764
79765 कर्ता विज्ञानमयः कर्म बाह्यविषयाः करणानीन्द्रियाणि तत्सहितान् | स्वं न
79766 स्पृशन्तीति स्वास्पर्शानेवंविधसंसारान् स्वस्यान्तरा मध्ये मणिः
79767 स्वान्तर्गतप्रतिबिम्बानिव स्पृशन्प्रथयन् || ३६ ||
79768

79769 जाग्रत्येव हि संसुप्तां भावयन्सुस्थिरां स्थितिम् |
79770 सर्वमस्मीति संचिन्त्य सत्तैकात्मवपुर्भव || ३७ ||
79771
79772 संसुप्तां सुषुप्तवन्निर्विकल्पाम् || ३७ ||
79773
79774 नानाऽनानादशमुक्तो युक्तो मुक्ततया समे |
79775 समग्रकलनादीपः स्वचिन्मात्रपरो भव || ३८ ||
79776
79777 नानादशा जाग्रत्स्वप्नौ अनानादशा सुषुप्तिस्ताभ्यां
79778 सृष्टिप्रलयदशाभ्यां वा मुक्तः | समग्रस्य दृश्यस्य कलनायां
79779 प्रथायां दीपः | समस्तानां सकलनानाबुद्धिवृत्तीनां दीपवत्प्रकाशक इति
79780 वा || ३८ ||
79781
79782 आत्मतापरते त्यक्त्वा निर्विभागो जगत्स्थितौ |
79783 वज्रस्तम्भवदात्मानमवलम्ब्य स्थिरो भव || ३९ ||
79784
79785 आत्मता स्वता परता तदन्यता ते त्यक्त्वा || ३९ ||
79786
79787 स्थित्वान्तर्मानसान्पाशानाशारूपानुदारया |
79788 धिया धैर्यैकधर्मिण्या निर्धर्माधर्मतां व्रज || ४० ||
79789
79790 निर्धर्माधर्मतां धर्माधर्मरहितताम् || ४० ||
79791
79792 समास्वादयतस्तत्त्वं स्वसंवेदनधर्मिणः |
79793 विषं हालाहलमपि यास्यत्यमृततामथ || ४१ ||
79794
79795 सर्वस्यामृतत्वे संपन्ने विषस्याप्यमृतताया अर्थसिद्धत्वादिति भावः || ४१
79796 | |
79797
79798 तदोदेति महामोहः संसृतिभ्रमकारणम् |
79799 निर्मलाया निरंशायाः संवित्तेश्चामतिर्यदा || ४२ ||
79800
79801 अमतिर्विस्मृतिः | अज्ञानमिति यावत् || ४२ ||
79802
79803 तदा संक्षीयते मोहः संसारभ्रमकारणम् |
79804 निर्मलायां निरंशायां स्वसंवित्तौ स्थितिर्यदा || ४३ ||
79805
79806 स्वरूपमनुयातस्य तीर्णस्याशामहार्णवम् |
79807 प्रसरिष्यति ते संवित्सूर्यांशुरिव सर्वतः || ४४ ||
79808
79809 तीर्णस्येति | स्वरूपप्राप्त्यैवाशामहार्णवतरणात् रसोऽप्यस्य परं दृष्ट्वा
79810 निवर्तते इति भगवद्वचनादिति भावः || ४४ ||
79811
79812 स्वभावमालोकयत आनन्दाद्वयसंस्थितेः |
79813 रसायनमपि स्वादु राम प्रतिविषायते || ४५ ||
79814
79815 मुक्तस्यान्यत्राशासंभावना दूरे
79816 प्रत्युतामृतादिरसायनास्वादेऽप्यात्मानन्दास्वादविघ्नत्वसंभावनया
79817 विषवद्धेयताबुद्ध्युदयादित्याशयेनाह - स्वभावमिति | प्रतिकूलं
79818 विषमिवाचरति प्रतिविषायते || ४५ ||
79819
79820 तैर्नो भजामहे पुंभिर्ये स्वभावमुपागताः |

79821 शेषाः पुरुषनामानो गर्दभा दीर्घबाहवः ॥ ४६ ॥
79822
79823 ये पुरुषा नोऽस्माकं स्वभावं प्रत्यगात्मभावमुपागता जीवन्मुक्ताः
79824 पुंजन्मसार्थकीकरणात्पुरुषार्थसाधनात्सफलपौरुषत्वाच्च पुंभिस्तैः
79825 पुरुषधौरेयैः सह भजामहे सदा मैत्रीमिति शेषः। अन्ये तु
79826 पुरुषार्थोपयोगिपौरुषहीनत्वान्नाममात्रेण पुरुषा नार्थलेशेनापीति
79827 गर्दभवदुपेक्ष्या एव न दर्शनादियोग्या अपीत्याशयेनाह - शेषा इति ॥ ४६ ॥
79828
79829 पर्वतात्पर्वतं यान्ति पुरोऽद्रेरिव दन्तिनः।
79830 परां कोटिं प्रयातस्य स्वसंवित्त्युन्नतस्थितेः ॥ ४७ ॥
79831
79832 नन्वन्येऽपि योगिन उपासकाश्च जगति महान्तः सन्त्येव तेभ्योऽपि तत्त्वविद एव क
79833 उत्कर्स्ऽस्तत्राह - पर्वतादिति। स्वसंवित्त्या सर्वोन्नतस्थितेरत एव परां
79834 कोटिमुत्कर्षकाष्ठां प्रयातस्य तत्त्वविदः पुरो योगिप्रभृतयो
79835 ज्ञानार्थंतांस्तान्महत उपसर्पन्तोऽद्रेर्मेर्विदः पुरो दन्तिनः
79836 प्रत्यन्तपर्वतात्पर्वतान्तरं यान्तीव भासन्ते न मेरुरिव सर्वोन्नता
79837 दृढविश्रान्ताश्चेत्यर्थः ॥ ४७ ॥
79838
79839 अदृष्टादृश्यसीम्नोऽन्तः सूर्यादीन्यखिलान्यपि।
79840 न तेजांस्युपकुर्वन्ति स्वसंविद्दिव्यचक्षुषः ॥ ४८ ॥
79841
79842 स्वसंवित्त्या उन्नतस्थितिमुपपादयति - अदृष्टेति। प्राक्केनाप्यदृष्टाः
79843 सांप्रतमग्रे च अदृश्या द्रष्टुमशक्याः सीमानोऽवधयो यस्य
79844 तथाविधस्य स्वसंविल्लक्षणं दिव्यं चक्षुर्यस्य तस्य तत्त्वविदः अन्तः
79845 कल्पितानि सूर्यादीन्यखिलान्यपि तेजांसि नोपकुर्वन्तीति स्वसंवित्त्यैव
79846 तस्योन्नतस्थितिरित्यर्थः ॥ ४८ ॥
79847
79848 अवस्तुतां व्रजन्त्येते माध्याह्ना इव दीपकाः।
79849 अर्कादयो महालोका विद्ययाधिगतात्मनः ॥ ४९ ॥
79850
79851 न केवलं नोपकर्तुं शक्नुवन्ति किंतु तत्पुरतोऽवस्तुतामेव गच्छन्तीत्याह ##-
79852
79853 तेजोंशुषु प्रभावेषु बलिष्वपि महत्स्वपि।
79854 सर्वेषून्नतियुक्तेषु तत्त्वज्ञः परमोन्नतः ॥ ५० ॥
79855
79856 अत उक्तं सिद्धमित्याह - तेजोंशुष्विति। तेजसः अंशुषु कार्येषु
79857 प्रकाशनेषु योगसिद्धिवशित्वाअदिप्रभावेषु बलिषु शरीरादिबलवत्सु
79858 ऐश्वर्यायुरादिना महत्सु अन्येष्वपि वाग्मित्वाद्युन्नतियुक्तेषु सर्वेषु मध्ये
79859 परमोन्नतः। सर्वौन्नत्यानामेतस्मिन्नध्यस्तत्वादिति भावः ॥ ५० ॥
79860
79861 भान्तीह भासा यस्यार्कवह्नीन्दुमणितारकाः।
79862 तथा जगति राजन्ते ज्ञातज्ञेया नरोत्तमाः ॥ ५१ ॥
79863
79864 यस्य जगदीश्वरस्य भासा भान्ति तथा तत्तुल्यतयेत्यर्थः ॥ ५१ ॥
79865
79866 धराविवरकीटेभ्यो गर्धभेभ्योऽपि मानवः।
79867 तिर्यग्भ्यश्चाप्यतत्त्वज्ञा राम तुच्छतराः स्मृताः ॥ ५२ ॥
79868
79869 तुच्छतरा मूढतराः। तत्त्वज्ञानाभावे
79870 ततोऽप्यधमतमयोनिकोटिप्राप्तेर्दुर्वारत्वादिति भावः ॥ ५२ ॥
79871
79872 तावत्संमोहवेतालो देही यावदनात्मवान्।

79873 आत्मज्ञ एव संयुक्तश्चेतनेनेति तद्विदः ॥ ५३ ॥
79874
79875 सतोऽप्यात्मनोऽज्ञानेनासत्त्वापादनादनात्मवान् अत एवासावचेतन इति आत्मज्ञ
79876 एव चेतनेन संयुक्त इति तद्विद आहुरिति शेषः ॥ ५३ ॥
79877
79878 अनात्मज्ञो हि दुःखेहः प्रस्फुरन्नपि भूतले।
79879 शव एव भ्रमत्युच्चैरात्मज्ञस्तु सचेतनः ॥ ५४ ॥
79880
79881 दुःखदाहार्था ईहा चेष्टा यस्य। एवार्थे तुशब्दः ॥ ५४ ॥
79882
79883 दूरादात्मज्ञता याति चित्ते पीवरतां गते।
79884 आलोकलक्ष्मीरभितो महामेघ इवोत्थिते ॥ ५५ ॥
79885
79886 चित्ते पीवरतां स्थौल्यं गते सति। आत्मज्ञता ईषत्संपादितापि दूराद्याति ॥ ५५ ॥
79887
79888 भोगाभोगतिरस्कारैः कार्श्यं नेयं शनैर्मनः।
79889 रसापहारैस्तज्ज्ञेयन् कालेनाजीर्णपर्णवत् ॥ ५६ ॥
79890
79891 अतः कारणान्मनः प्राप्तानां भोगानां विषयाणामाभोगः सेवनं
79892 तत्तिरस्कारैरप्राप्तानां रसस्याभिलाषस्यापहारैश्च चिराभ्यस्तैः कालेन
79893 आजीर्णपर्णवत्कार्श्यमपचयं नेयमित्यर्थः ॥ ५६ ॥
79894
79895 अन्यात्मन्यात्मभावेन देहमात्रास्थयानया।
79896 पुत्रदारकुटुम्बैश्च चेतो गच्छति पीनताम् ॥ ५७ ॥
79897
79898 के ते मनःपीनताहेतवो यद्वर्जनेन तत्कार्श्यं स्यात्तानाह -
79899 अनात्मनीत्यादिना ॥ ५७ ॥
79900
79901 अहंकारविकारेण ममतामलहेलया।
79902 इदं ममेति भावेन चेतो गच्छति पीनताम् ॥ ५८ ॥
79903
79904 विकारेण विकासेन। ममतालक्षणे मले हेलया लीलया आसक्त्येति यावत्।
79905 सर्वममतामूलमाह - इदमिति। इदं शरीरं मम आत्मा भोगायतनं
79906 वेति भावेनेत्यर्थः ॥ ५८ ॥
79907
79908 जरामरणदुःखेन व्यर्थमुन्नतिमीयुषा।
79909 दोषाशीविषकोशेन चेतो गच्छति पीनताम् ॥ ५९ ॥
79910
79911 तमेव भावं विशिनष्टि - जरेति ॥ ५९ ॥
79912
79913 आधिव्याधिविलासेन समाश्वासेन संसृतेः।
79914 हेयादेयप्रयत्नेन चेतो गच्छति पीनताम् ॥ ६० ॥
79915
79916 संसृतेः समाश्वासेन रम्यताचिरस्थायितादिविश्वासेन ॥ ६० ॥
79917
79918 स्नेहेन धनलोभेन लाभेन मणियोषिताम्।
79919 आपातरमणीयेन चेतो गच्छति पीनताम् ॥ ६१ ॥
79920
79921 आस्थादानेन चारेण चित्ताहिर्याति पीनताम् ॥ ६२ ॥
79922
79923 चारेण नानाविषयसंचारेण ॥ ६२ ॥
79924

79925 आगमापायवपुषा विषवैषम्यशंसिना।
79926 भोगाभोगेन भीमेन चेतो गच्छति पीनताम्॥ ६३॥
79927
79928 आगमापायौ वपुःस्वभावौ यस्य विषेणेव वैषम्यं
79929 दाहमूर्छादिव्याकुलता तच्छंसिना। तत्पर्यवसितेनेति यावत्।
79930 भोगानामाभोगेन प्राग्व्याख्यातेन॥ ६३॥
79931
79932 शरीरदुःश्वभ्रचिरप्ररूढं
79933 चिन्ताचयोच्चाकृतिमञ्जरीकम्।
79934 जरामृतिव्याधिफलौघनम्रं
79935 कामोपभोगौघविकासिपुष्पम्॥ ६४॥
79936
79937 शरीरलक्षणे दुष्टश्वभ्रे चिराय प्ररूढमेनं चित्तविषद्रुमं
79938 त्वमशङ्कं विचारसारक्रकचेन च्छिन्धीति परेणान्वयः। चिन्ताचया एव
79939 उच्चाकृतयो मञ्जर्यो यस्मिन्। नदृतश्च इति कप्॥ ६४॥
79940
79941 विचारसारक्रकचेन चित्त-
79942 विषद्रुमं त्वद्भुतमद्रिकल्पम्।
79943 आशामहाशाखमशङ्कमेनं
79944 छिन्धि प्रसह्यात्र विकल्पपत्रम्॥ ६५॥
79945
79946 विकल्पा एव पत्राणि यस्मिन्॥ ६५॥
79947
79948 मत्तेक्षणं चैकतटोपवेशं
79949 विश्रान्तिसौख्येष्वसमर्थमुग्रम्।
79950 आलोकनोत्कं सुजनक्रमाब्ज-
79951 खण्डस्य चण्डं सुखदुःखगण्डम्॥ ६६॥
79952
79953 इदानीं तदेव चेतो गजत्वेन वर्णयति - मत्तेक्षणमिति द्वाभ्याम्। हे
79954 राघवराजसिंह त्वमुक्तदशविशेषणविशिष्टं चेतोगजं सुतीक्ष्णया
79955 धीकरजाग्रपङ्क्त्या विदारयेति द्वितीयेनान्वयः। मत्ते स्वविवेकप्रमादवती
79956 मदघूर्णे च आगमानुमानलक्षणे ईक्षणे यस्य तम्। एकस्मिन्
79957 बहिर्मुखलक्षणे संसाराद्रितटे उपवेशनमुपवेशो यस्य तम्। अत
79958 एवान्तर्मुखविश्रान्तिसौख्येष्वसमर्थम्। द्वेषासूयादिभीषणत्वादुग्रम्।
79959 सुजनैः क्रम्यन्त इति सुजनक्रमाः
79960 शमदमतितिक्षादयस्तल्लक्षणस्याब्जखण्डस्य पद्मवनस्यालोकने उत्कं
79961 सोत्कण्ठं परंतु चण्डमतिकोपनं तद्रक्षणायोग्यमिति यावत्। सुखदुःखे
79962 एव शीतोष्णबाष्पमदस्राविणौ गण्डौ यस्य॥ ६६॥
79963
79964 चेतोगजं कायकुकाननस्थं
79965 सुतीक्ष्णया धीकरजाग्रपङ्क्त्या।
79966 विदारयादीर्घविकारदन्तं
79967 क्रियाकरं राघव राजसिंह॥ ६७॥
79968
79969 आदीर्घाः कामादिविकारा एव दन्तौ यस्य अत एव
79970 धर्यादिवप्रविदारणक्रियाकरम्॥ ६७॥
79971
79972 रतिं गतं नित्यमसत्प्रदेशे
79973 शरीरमांसग्रसनेन पुष्टम्।
79974 दुष्टक्रिअयकर्कशचञ्चुदण्ड-
79975 मेकेक्षणं पुष्टमोंशुकृष्णम्॥ ६८॥
79976

79977 असति कुत्सिते स्त्रीव्यञ्जनश्मशानादिप्रदेशे रतिमासक्तिं गतम्।
79978 शरीरलक्षणस्य मांसस्य ग्रसनेनेवान्तर्भावापादनेन पुष्टमुपचितम्।
79979 दुष्टक्रिया परमर्मतोदनं तत्र कर्कशश्चञ्चुदण्डस्तोट्यग्रं
79980 तत्सदृशौष्ठव्यापारो यस्य। एकस्मिन्स्वार्थ एव ईक्षणं दर्शनं यस्य।
79981 पुष्टैस्तमोंशुभिस्तामसवृत्तिभिः कृष्णं मलिनम्। काकपक्षे चत्वारि
79982 विशेषणानि स्पष्टानि। पुष्टास्तमोंशवोऽन्धकारभागा इव कृष्णं
79983 निजचित्तकाकं कायकुलायकोशाद्दूरे समुत्सारयेत्युत्तरेणान्वयः॥ ६८॥
79984
79985 दूरे समुत्सारय भारभूतं
79986 दुश्चेष्टितं कर्कशमारटन्तम्।
79987 गन्धोद्गतं कायकुलायकोशा-
79988 द्दोषोपशान्त्यै निजचित्तकाकम्॥ ६९॥
79989
79990 वोढुरात्मनो वृक्षादेश्च वृथाश्रमहेतुत्वाद्भारभूतम्। गन्धेभ्यो
79991 दुर्वासनाभ्य उद्गतमाविर्भूतं प्रस्थितं च॥ ६९॥
79992
79993 तृष्णापिशाचया परिचर्यमाणं
79994 विश्रान्तमज्ञानमहावटेषु।
79995 भ्रान्तं चिरं देहशतेष्वटव्यां
79996 स्वसंसृतौ चेतनवर्जितेषु॥ ७०॥
79997
79998 तदेव चित्तं पिशाचत्वेन रूपयंस्तदनुत्सादने मोक्षासिद्धिमाह -
79999 तृष्णेति द्वाभ्याम्। अज्ञानलक्षणेषु महत्सु वटेष्ववटेषु वा। देहशतेषु
80000 अनन्तकोटिदेहलक्षणाया मटव्यामिति व्यस्तरूपकम्। स्वस्य चित्तस्य
80001 संसृतावपसरणे चेतनवर्जितेषु। प्रत्यक्षमचेतनेष्विति यावत्। ईदृशमेनं
80002 चित्तपिशाचं स्वचिदात्मनो
80003 गेहभूताद्धृदयाद्यावन्नोत्सारयेत्तावदात्मस्वभावभूतासिद्धिर्मुक्तिः
80004 कुत इत्युभयोरन्वयः॥ ७०॥
80005
80006 विवेकवैराग्यगुरुप्रयत्न-
80007 मन्त्रैः स्वतन्त्रैः स्वचिदात्मगेहात्।
80008 नोत्सादयेच्चित्तपिशाचमेनं
80009 यावत्कुतस्तावदिहात्मसिद्धिः॥ ७१॥
80010
80011 शुभाशुभास्यं हतमानवौघं
80012 चिन्ताविषं कायकुकञ्चुकं च।
80013 अजस्रमच्छश्वसनाशनं च
80014 सर्वस्य नानाभयनाशदं च॥ ७२॥
80015
80016 इदानीं मनोऽहित्वेन रूपयंस्त्याजयति - शुभेति द्वाभ्याम्।
80017 शुभाशुभलक्षणमास्ये भवमास्यम्। शरीरावयवाद्यत्। दंस्ट्राद्वयं
80018 यस्य। अच्छः श्रमादिदोषापरामृष्टः श्वसनः प्राणवायुरशनं यस्य
80019 पवनाशनत्वात्। नानाविधं भयं नाशं मरणं च ददातीति
80020 नानाभयनाशदम्॥ ७२॥
80021
80022 हृदब्जदुःशाल्मलिकोतरस्थ-
80023 ममोघया चित्खगमन्त्रशक्त्या।
80024 नीत्वा शमं राम मनोमहाहिं
80025 भयं भृशं प्रोज्झ्य भवाभयात्मा [अभवात्मा इति पाठः]
80026 ॥ ७३॥
80027
80028 ईदृशं मनोलक्षणं महाहिममोघया चित्खगस्य चिदेकरसगरुडस्य

80029 बोधका ये सत्यं ज्ञानमनन्तं ब्रह्म इत्यादिमन्त्रास्तेषां शक्त्या शमं
80030 मूलाज्ञानेन सहोच्छेदं नीत्वा भयं भृशं निःशेषं प्रोज्झ्य विहाय
80031 अभवोऽभयो वा आत्मा भवेत्यर्थः ॥ ७३ ॥
80032
80033 अमङ्गलाकारधरः शरीर-
80034 शवावलीसंततसेवनेन ।
80035 दिगावलीसंभ्रमणश्रमार्तः
80036 श्मशानसेवी वपुषा क्षतेन ॥ ७४ ॥
80037
80038 तदेव चित्तं गृध्रत्वेन रूपयति - अमङ्गलेति द्वाभ्याम् ।
80039 शरीरलक्षणानां शवावलीनां संततं सेवनेनानुसंधानेन भक्षणेन
80040 च । काककङ्कचञ्चुप्रहारैरपमानव्ययशोकभयादिभिश्च क्षतेन वपुषा
80041 सुषुप्तौ श्मशानवृक्षं तत्सदृशसुप्तदेहं च सेवते तच्छीलः ॥ ७४ ॥
80042
80043 भोगामिषो दिक्ष्वभिधावमान
80044 उत्कन्धरो धीरविवृद्धगर्धः ।
80045 उड्डीय वै गच्छति चित्तगृध्रो
80046 देहद्रुमात्तन्निपुणं जयस्ते ॥ ७५ ॥
80047
80048 अधीरो बिवृद्धश्च गर्धोऽभिलाषो यस्य ईदृशश्चित्तगृध्रो यदि ते
80049 देहद्रुमादुड्डीय गच्छति तर्त्तार्हि ते निपुणं नितरां जय इत्यर्थः ॥ ७५ ॥
80050
80051 भ्रान्तं वनान्तेषु दिगन्तरेषु
80052 फलार्थिनं चञ्चलमाकुलाङ्गम् ।
80053 जन्मावनेर्जन्ममहिं प्रयातं
80054 संसारबन्धं जनतां हसन्तम् ॥ ७६ ॥
80055
80056 तदेव मन इदानीं मर्कटत्वेन रूपयति - भ्रान्तमिति द्वाभ्याम् । एकस्या
80057 जन्मभूमेर्जन्मनून्यन्तरं प्रयातम् । जनतां जनसमूहं
80058 तदीयसंसारबन्धं च हसन्तं स्वचेष्टितैर्विडम्बयन्तम् ॥ ७६ ॥
80059
80060 द्रुमेऽक्षिनासाकुसुमे भुजादि-
80061 शाखे विलोलाङ्गुलिजालपत्रे ।
80062 समुल्लसन्तं परिमारयान्त-
80063 र्मनोमहामर्कटमङ्ग सिद्ध्यै ॥ ७७ ॥
80064
80065 अक्षिनासयोः समाहारोऽक्षिनासं तदेव आसमन्तात्कुसुमानि यस्मिन् ।
80066 भुजकरादयः शाखा यस्मिन् । विलोलाङ्गुलिजालं पत्राणि यस्मिन् । ईदृशे
80067 देहवृक्षे समुल्लसन्तं मनोमहामर्कटं परितोऽभिरोधेन [परितो
80068 निरोधेन इत्यपि पाठः] मारयेत्यर्थः ॥ ७ ॥
80069
80070 अभ्युत्थितं सत्फलसंक्षयाय
80071 लसन्मुखासङ्गितडित्प्रकाशम् ।
80072 वर्षन्तमासारमनर्थसार्थ-
80073 मान्दोलितं वासनावात्ययान्तः ॥ ७८ ॥
80074
80075 इदानीं तदेव चित्तं मेघत्वेन रूपयति - अभ्युत्थितमिति द्वाभ्याम् ।
80076 सत्फलस्य परमार्थसुखस्य पक्वसस्यफलस्य च क्षयाय अकाले समुपस्थितम् ।
80077 मुखे मुखसदृशबहिर्मुखवृत्त्यग्रे आसङ्गी प्रतिबिम्बनेन
80078 विषक्तस्तडित्सदृशश्चिदाभासप्रकाशो यस्य । अनर्थसार्थरूपमासारं
80079 वर्षन्तम् । वासनानि वासनास्तल्लक्षणया वात्यया अन्तः आन्दोलितं परिवर्तितम् ॥
80080 ७८ ॥

80081
80082 संकल्पसंकल्पनवर्जनोग्र-
80083 मन्त्रप्रभावाद्धृदयाम्बरस्थम्।
80084 सोत्साहमुत्सादय चित्तमेघं
80085 बृहत्फलं प्राप्य भवालमाद्यः॥ ७९॥
80086
80087 हृदयाम्बरस्थमीदृशं चित्तमेघं संकल्पानां यानि सम्यक्कल्पनानि
80088 पुनःपुनःसमर्थनानि तेषां वर्जनरूपादुग्रमन्त्रप्रभावात् सोत्साहं
80089 उत्सारय तेन च बृहज्जीवन्मुक्तिफलं प्राप्य आद्यः पूर्वसिद्धस्वभावो
80090 नित्यमुक्तात्मैव अलं सम्यग्भवेत्यर्थः॥ ७९॥
80091
80092 ग्रन्थीकृतं कर्मभिरात्मसृष्टे-
80093 र्मन्त्रैरभेद्यं ज्वलनैरदग्धम्।
80094 पीडां परामात्मनि कल्पयन्तं
80095 समस्तजात्यन्तरदीर्घदाम॥ ८०॥
80096
80097 इदानीं तदेव चित्तं पाशत्वेन रूपयति - ग्रन्थीकृतमिति द्वाभ्याम्। आ
80098 आत्मसृष्टेरात्मोपादानकं कल्पादिसर्गं मर्यादीकृत्य
80099 अद्यतनकालपर्यन्तं कृतैः सुकृतदुष्कृतकर्मभिर्निरन्तरं
80100 ग्रन्थीकृतं गन्थिदानेन दृढीकृतम्। अत एव समस्तानां जात्यन्तराणां
80101 नानायोनिजन्मभेदानां क्रमाद्बन्धनाय दीर्घदामेव स्थितम्॥ ८०॥
80102
80103 संप्रोतनिःसंख्यशरीरमालं
80104 बलादसंकल्पनमात्रशस्त्रैः।
80105 छित्त्वा स्वयं राघव चित्तपाशं
80106 यथासुखं त्वं विहरास्तशङ्कः॥ ८१॥
80107
80108 अत एव संप्रोता निःसंख्याः शरीरमाला यस्मिन्। अस्तशङ्कःअ
80109 पुनर्जन्मशङ्काशून्यः॥ ८१॥
80110
80111 फूत्कारदग्धाखिलपान्थलोक-
80112 मत्यन्तदुष्प्रापपरप्रबोधम्।
80113 आशीविषं शोषितलोकखण्डं
80114 व्यात्यामिषोद्धूतशरीरदण्डम्॥ ८२॥
80115
80116 इदानीं तत्संकल्पमजगरत्वेन रूपयंस्तद्वधोपायमाह - फूत्कारेति
80117 द्वाभ्याम्। फूत्कारेण क्रोधादिरूपसविषश्वासेन दग्धा अखिलाः पान्थलोका
80118 दक्षिणोत्तरमार्गगा जीवा येन। आशीविषं विषधरम्। अत एव शोषिताः
80119 संतापिता लोकखण्डा भुवनभेदा येन। व्यात्या
80120 तृष्णालक्षणमुखव्यादानेन विषयामिषार्थं उद्धूतः
80121 कम्पितश्चतुर्विधशरीरदण्डो येन॥ ८२॥
80122
80123 आमन्थरं देहगुहासु गुप्तं
80124 संकल्पघोराजगरं जवेन।
80125 अकामनानाममहानलेन
80126 बलेन दग्ध्वा विभवो भव त्वम्॥ ८३॥
80127
80128 मोक्षोद्योगालसत्वादामन्थरं मन्दगतिमीदृशं संकल्पघोराजगरं
80129 अकामना परवैराग्यं तन्नाम्ना महता अनलेन वह्निना दग्ध्वा
80130 भस्मीकृत्य निजे पूर्णानन्दविभवः त्वं भवेत्यर्थः॥ ८३॥
80131
80132 चित्तेन चेतः शममाशु नीत्वा

80133 शुद्धेन घोरास्त्रमिवास्त्रयुक्त्या।
80134 चिराय साधो त्यज चञ्चलत्वं
80135 विमर्कटो वृक्ष इवाक्षतश्रीः ॥ ८४ ॥
80136
80137 वैराग्येण संकल्पजये चित्तशुद्धौ सत्यां तथैव बोधसमाधिक्रमेण
80138 चित्तजयोऽपि सिद्ध्यतीत्याह - चित्तेनेति। सहसा कृतार्थताबुद्ध्या
80139 प्रयत्नोपरमो माभूदिति चिरायेति। तत्फलमाह - त्यजेति ॥ ८४ ॥
80140
80141 अमलमिति च कृत्वा चेतसा वीतशङ्क-
80142 मुपशमितमनोऽन्तः सर्वमादेहमेव।
80143 तृणलवलघु पश्य&ल्लीलया हेयदृष्ट्या
80144 पिब विहर रमस्व प्राप्तसंसारपारः ॥ ८५ ॥
80145
80146 आत्यन्तिकचित्तोपशमो निःशेषं देहादावहंममताभिमानत्यागसिद्ध्या
80147 जीवन्मुक्तिविहारसुखं सिद्ध्यतीत्याशयेनोपसंहरति - अमलमिति। इति
80148 उक्तप्रकारेण चकारात्प्रागुपदिष्टतत्त्वावबोधेन च अन्तः
80149 प्रत्यगात्मन्युपशमितमनोऽमलं निरस्तरागादिमलं कृत्वा तादृशेन
80150 चेतसा आदेहं स्थूलसूक्ष्मकारणदेहपर्यन्तं सर्वमेव दृश्यं
80151 हेयदृष्ट्या तृणलवादपि लघु तुच्छतरं
80152 स्वाप्नशरीरादिवदत्यन्तोपेक्षार्हमसदेवेति पश्यन् प्राप्तसंसारपारस्त्वं
80153 प्रारब्धशेषभोगार्थया आत्मक्रीड आत्मरतिः क्रियावानेष ब्रह्मविदां
80154 वरिष्ठः इति श्रुतिदर्शितया लीलया लोकसंग्रहाय सोमादि पिब
80155 ऋत्विगादिमिर्यज्ञेषु विहर शास्त्राविरुद्धे लौकिकेपि रमस्व च न तेन तव
80156 [तत्र इति पाठः] पुनर्बन्धप्रसक्तिरित्यर्थः ॥ ८५ ॥
80157
80158 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे०
80159 मोक्षोपायेषूपशमप्रकरणे राघवाशयविनियोगो नाम पञ्चाशः
80160 सर्गः ॥ ५० ॥
80161
80162 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
80163 राघवाशयविनियोगो नाम पञ्चाशः सर्गः ॥ ५० ॥
80164
80165
80166 एकपञ्चाशः सर्गः ५१
80167
80168 श्रीवसिष्ठ उवाच।
80169
80170 क्षुरधारोपमानासु चित्तवृत्तिषु तिष्ठ मा ॥ १ ॥
80171
80172 उद्दालकमुनेः शान्ते पदे विश्रान्तिमिच्छतः।
80173 युञ्जानस्य मनोदोषैर्विक्षेपो बहुधेर्यते ॥ १ ॥
80174
80175 श्रवणमननाभ्यामवधारितेप्यात्मतत्त्वे चित्तविश्रान्तिमन्तरेण
80176 निर्विक्षेपजीवन्मुक्तिसुखाप्राप्तिरिति तदर्थं समाध्याभ्यसेष्वप्रमादेन
80177 बोधवर्धनमावश्यकमित्युद्दालकचरित्रवर्णनमुखेनोपदि##-
80178 परिदीर्घास्विति। ऐहिकामुष्मिकदूरस्थविषयासङ्गात्परिदीर्घासु
80179 वासनाप्रचुरत्वात्तन्वीषु प्रमाद्यतो झटित्येव
80180 समाधिसुखविच्छेदक्षतहेतुत्वात्सुतीक्ष्णासु
80181 आत्मप्रतिबिम्बग्रहणयोग्यतालक्षणनैर्मल्यात्सितासु अत एव
80182 क्षुरधारोपमानासु चित्तस्य वृत्तिषु चारित्र्येषु प्रमादाद्विश्वस्तो मा
80183 तिष्ठेत्यर्थः ॥ १ ॥
80184

80185 कालेन महता क्षेत्रे जातेयं बुद्धिवल्लरि।
80186 वृद्धिं विवेकसेकेन नय तां नयकोविद ॥ २ ॥
80187
80188 सत्कुलक्षेत्रे जातायां कायलतायां चित्तशुद्धिश्रवणादिदोहदोपायैरियं
80189 परमात्मपरिचयलक्षणा बुद्धिवल्लरी तव जाता तां
80190 बाह्यदृश्यव्यावृत्तिलक्षणविवेकामृतसेकेन वृद्धिं नयेत्यर्थः ॥ २ ॥
80191
80192 यावन्म्लायति नो कायलतिका कालभास्वता।
80193 भूतलेऽपतितां तावदेनामुद्धृत्य धारय ॥ ३ ॥
80194
80195 सा च बाल्यात्प्रभृति सिच्यमाना वर्धते वार्धकादिना कायलताम्लानौ
80196 पतनसंभावनात्तदुद्धारोऽप्यशक्यो दूरे तन्मञ्जरीवर्धनमित्याशयेनाह
80197 - यावदिति। भूतले अपतितां एनां कायलतां गुरुशुश्रूषाश्रवणादिना
80198 उद्धृत्य बुद्धिवल्लरीं पालयेत्यर्थः ॥ ३ ॥
80199
80200 मद्वाक्यार्थैकतत्त्वज्ञ मद्वाक्यार्थैकभावनात्।
80201 सुखमाप्नोषि सर्पारियथाभ्ररवभावनात् ॥ ४ ॥
80202
80203 विवेकसेकश्च वक्ष्यमाणाख्यानरूपमद्वाक्यार्थस्यैव श्रुत्वावधार्य
80204 पुनःपुनर्भावनं तत्रैव सर्वमननयुक्तीनां सत्त्वादित्याशयेनाह -
80205 मद्वाक्येति। सर्पारिर्मयूरो यथा अभ्ररवस्य मेघगर्जितस्य
80206 भावनात्सुखमाप्नोति तद्वदित्यर्थः ॥ ४ ॥
80207
80208 उद्दालकवदालूनं विशीर्णं भूतपञ्चकम्।
80209 कृत्वा कृत्वा धिया धीरधीरयान्तर्विचारय ॥ ५ ॥
80210
80211 तामेवाख्यायिकामवतार्य तदर्थविचारकर्तव्यतामाह - उद्दालकवदिति।
80212 देहाद्यारम्भकं बाह्यप्रपञ्चारम्भकं च भूतपञ्चकं
80213 तत्त्वंपदार्थशोधपरया धिया अन्नेन सोम्य शुङ्गेनापोमूलमन्विच्छ इति
80214 श्रुतिदर्शितयुक्त्या कारणव्यतिरिक्तकार्याङ्कुराप्लापादालूनं
80215 मूलाविद्याविशरणाद्विशीर्णं च कृत्वा तदधिष्ठानसन्मात्रन्वेषणे
80216 धीरेभ्योऽपि धीरया धिया अन्तर्विचारयेत्यर्थः ॥ ५ ॥
80217
80218 श्रीराम उवाच।
80219
80220 केन क्रमेण भगवन्मुनिनोद्दालकेन तत्।
80221 भूतपञ्चकमालूनं कृत्वान्तः प्रविचारितम् ॥ ६ ॥
80222
80223 श्रीवसिष्ठ उवाच।
80224
80225 शृणु राम यथापूर्वं भूतवृन्दविचारणात्।
80226 उद्दालकेन संप्राप्ता परमा दृष्टिरक्षता ॥ ७ ॥
80227
80228 जगज्जीर्णगृहस्यास्य कोणे कस्मिंश्चिदातते।
80229 भूमेरनिलदिग्ग्राम्नि भूभृद्भाण्डसमाकुले ॥ ८ ॥
80230
80231 भूभृत एव न्युब्जीकृतभाण्डानि तैः समाकुले इति
80232 गृहकोणसाम्योपपादकं विशेषणम् ॥ ८ ॥
80233
80234 गन्धमादनशैलेन्द्रनाम्नि काचित्किल स्थली।
80235 विद्यते कीर्णकुसुमा द्रुमकर्पूरकेसरा ॥ ९ ॥
80236

80237 पुष्पितद्रुमा एव कर्पूरसदृशपरागैः केसरैश्च सर्वतो
80238 व्याप्तत्वात्कर्पूरकेसरा यस्याम् ॥ ९ ॥
80239
80240 विचित्रवर्णविहगा नानावल्लीविलासिनी ।
80241 वनेचरव्याप्ततटी पुष्पकेसरभासिनी ॥ १० ॥
80242
80243 क्वचित्स्फीतमहारत्ना क्वचिल्लोलाम्बुजोत्पला ।
80244 क्वचिन्नीहारकबरी सरसीदर्पणा क्वचित् ॥ ११ ॥
80245
80246 सरस्यो महासरांस्येव दर्पणानि यस्याम् ॥ ११ ॥
80247
80248 तत्र कस्मिंश्चिदुदिते सानौ सरलपादपे ।
80249 आगुल्पाकीर्णकुसुमे स्निग्धच्छायमहाद्रुमे ॥ १२ ॥
80250
80251 सानौ प्रस्थप्रदेशे ॥ १२ ॥
80252
80253 उद्दालको नाम मुनिर्मौनी मानी महामतिः ।
80254 अप्राप्तयौवनः पूर्वमुवासोद्दामतापसः ॥ १३ ॥
80255
80256 मानी अवश्यं यत्नैः पुरुषार्थं साधयिष्यामीत्यभिमानवान्
80257 आगमानुमानादिमानकुशलश्च । महामतिरक्षुद्रमनाः ॥ १३ ॥
80258
80259 प्रथमं तु बभूवासावल्पप्रज्ञो विचारवान् ।
80260 अप्राप्तपदविश्रान्तिरप्रबुद्धः शुभाशयः ॥ १४ ॥
80261
80262 शुभाशयः प्रबोधानुकूलसुकृतसंभृतान्तःकरणः ॥ १४ ॥
80263
80264 ततः क्रमेण तपसा शास्त्रार्थनियमैः क्रमैः ।
80265 विवेक आजगामैनं नवर्तुरिव भूतलम् ॥ १५ ॥
80266
80267 क्रमैरभ्यासपरिपाकक्रमैः । नवर्तुराद्यर्तुर्वसन्तः ॥ १५ ॥
80268
80269 अथेमं चिन्तयामास संसारामयभीरुधीः ।
80270 एकान्त एव निवसन्कदाचित्कान्तमानसः ॥ १६ ॥
80271
80272 इमं वक्ष्यमाणप्रकारं चिन्तयामास । कान्तमानसः शुभचित्तः ।
80273 क्लान्तमानसः इति पाठे स्पष्टम् ॥ १६ ॥
80274
80275 किं तत्प्राप्यं प्रधानं स्याद्यद्विश्रान्तौ न शोच्यते ।
80276 यत्प्राप्य जन्मना भूयः संबन्धो नोपजायते ॥ १७ ॥
80277
80278 प्राप्यानां पुरुषार्थानां मध्ये प्रधानं प्राप्यं मोक्षाख्यं किं
80279 तत्स्यात् ॥ १७ ॥
80280
80281 कदाहं त्यक्तमनने पदे परमपावने ।
80282 चिरं विश्रान्तिमेष्यामि मेरुशृङ्ग इवाम्बुदः ॥ १८ ॥
80283
80284 त्यक्तानि मननानि मनोव्यापारा यत्र ॥ १८ ॥
80285
80286 कदा शममुपैष्यन्ति ममान्तर्भोगसंविदः ।
80287 आलोलकल्लोलरवा ऊर्मयोऽम्बुनिधाविव ॥ १९ ॥
80288

80289 भोगसंविदो भोगतृष्णाः ॥ १९ ॥
80290
80291 इदं कृत्वेदमप्यन्यत्कर्तव्यमिति कल्पनाम् ।
80292 कदान्तर्विहसिष्यामि पदविश्रान्तया धिया ॥ २० ॥
80293
80294 कदा विकल्पजालं मे न लगिष्यति चेतसि ।
80295 स्थितमप्युज्झितासङ्गं पयः पद्मदले यथा ॥ २१ ॥
80296
80297 आभासमात्रेण स्थितमप्युपेक्ष्यमाणत्वादुज्झितासङ्गम् ॥ २१ ॥
80298
80299 कदा बहुलकल्लोलां नावा परमया धिया ।
80300 परितीर्णो भविष्यामि मत्तां तृष्णातरङ्गिणीम् ॥ २२ ॥
80301
80302 मत्तां अविवेकप्रवृद्धाम् ॥ २२ ॥
80303
80304 कदेमां जागतैर्भूतैः क्रियमाणामसन्मयीम् ।
80305 क्रियामपहसिष्यामि बाललीलामिवाकुलाम् ॥ २३ ॥
80306
80307 क्रियां बाह्यप्रवृत्तिम् । आकुलां व्यग्रचित्ताम् ॥ २३ ॥
80308
80309 कदा विकल्पपर्यस्तं मनो दोलावदोलनम् ।
80310 शममेष्यति मे शान्तवातौजस इव भ्रमः ॥ २४ ॥
80311
80312 विकल्पैः पर्यस्तं विक्षिप्तम् । दोलेव अवदोलनं यस्य तदविश्रान्तम् ।
80313 शान्तवातौजसः प्रशान्तोन्मादवातरोगस्य भ्रमो विक्षिप्ततेव ॥ २४ ॥
80314
80315 कदोदितवपुर्भासा विहसञ्जागतीर्गतीः ।
80316 अन्तः संतोषमेष्यामि विराडात्मेव पूर्णधीः ॥ २५ ॥
80317
80318 उदितवपुष आविर्भूतस्वरूपस्य भासा स्वप्रकाशस्फुरणेन ।
80319 विराट्ब्रह्माण्डशरीर आत्मेव स्वान्तः पूर्णधीः ॥ २५ ॥
80320
80321 अन्तः समसमाकारः सौम्यः सर्वार्थनिस्पृहः ।
80322 कदोपशममेष्यामि मन्थमुक्तामृताब्धिवत् ॥ २६ ॥
80323
80324 समेन परमात्मना सम एकरसः समेन समाहितेन विष्णुना समः
80325 सश्रीकश्च आकारो यस्य । सर्वेष्वर्थेषु धर्मार्थकामेषु अमृतकौस्तुभादिषु
80326 च निस्पृहः । मन्थेन मथनविक्षेपेण मुक्तोऽमृताब्धिः क्षीरार्णवस्तद्वत् ॥
80327 २६ ॥
80328
80329 कदेमामचलां दृश्यश्रियमाशाशतात्मिकाम् ।
80330 सर्वां सुषुप्तवत्पश्यन्भविष्याम्यन्तराततः [अन्तरानत इति
80331 पाठः] ॥ २७ ॥
80332
80333 सुषुप्तवत्सन्मात्रात्मना पश्यन् ॥ २७ ॥
80334
80335 सबाह्याभ्यन्तरं सर्वं शान्तकल्पनया धिया ।
80336 पश्यंश्चिन्मात्रमखिलं भावयिष्याम्यहं कदा ॥ २८ ॥
80337
80338 भावयिष्यामि तद्भावनया स्थिरो भविष्यामि ॥ २८ ॥
80339
80340 कदोपशान्तचित्तात्मा चित्तामुपगतः पराम् ।

80341 परमालोकमेष्यामि जात्यन्धविगमादिव ॥ २९ ॥
80342
80343 परां चित्तां चिदेकरसताम् । परं परमात्मानं पुरःस्थितपुरुषान्तरं च ।
80344 जात्यन्ध इति भावप्रधानो निर्देशः ।
80345 जात्यन्धतासदृशानादिमूलाज्ञानापगमादिति भावः ॥ २९ ॥
80346
80347 कदाभ्यासोपलभ्येन चित्प्रकाशेन चारुणा ।
80348 दूरादालोकयिष्यामि तन्वीं कालकलामिमाम् ॥ ३० ॥
80349
80350 तन्वीं बाधितानुवृत्तिरूपत्वात्तुच्छामल्पावशिष्टां चायुःशेषलक्षणां
80351 कालकलामात्मास्पर्शितादूरादेवालोकयिष्यामीत्यर्थः ॥ ३० ॥
80352
80353 ईहितानीहितैर्मुक्तो हेयोपादेयवर्जितः ।
80354 कदान्तस्तोषमेष्यामि स्वप्रकाशपदे स्थितः ॥ ३१ ॥
80355
80356 कदाशाकौशिकीकीर्णा जाड्यजीर्णहृदम्बुजा ।
80357 क्षयमेष्यति कृष्णेयं कदा मे दोषयामिनी ॥ ३२ ॥
80358
80359 जाड्येन मौर्ख्येण हिमेन च जीर्णं जरितं हृदम्बुजं यया ।
80360 दोषोऽविद्यातमस्तल्लक्षणा यामिनी रात्रिः ॥ ३२ ॥
80361
80362 कदोपशान्तमननो धरणीधरकन्दरे ।
80363 समेष्यामि शिलासाम्यं निर्विकल्पसमाधिना ॥ ३३ ॥
80364
80365 निर्विकल्पसमाधिना शान्तमननश्चिदैकरस्यविगलितमनोवृत्तिः ॥ ३३ ॥
80366
80367 कदा मे मानमातङ्गः स्वाभिमानमहामदः ।
80368 सत्त्वावबोधहरिणा हतो नाशमुपैष्यति ॥ ३४ ॥
80369
80370 मानोहंकारस्तल्लक्षणो मातङ्गः स्वे स्वांशभूता अभिमानवृत्तय एव
80371 महान्तो मदप्रवाहा यस्य । सत्त्वं परमार्थसन्मात्रं तदवबोधलक्षणेन
80372 हरिणा सिंहेन ॥ ३४ ॥
80373
80374 निरंशध्यानविश्रान्तेर्मूकस्य मम मूर्धनि ।
80375 कदा तार्णं करिष्यन्ति कुलायं वनघूर्णिकाः ॥ ३५ ॥
80376
80377 निरंशे निर्विकल्पे ध्याने विश्रान्तिर्यस्य । मूकस्य मौनव्रतिनो मम मूर्धनि ।
80378 तार्णं तृणमयं कुलायं नीडम् । घूर्णिकाः पक्षिभेदाः ॥ ३५ ॥
80379
80380 कदा निःशङ्कमुरसि ध्यानधीरधियः खगाः ।
80381 मम विश्रान्तिमेष्यन्ति शैलस्थाण्वचलस्थितेः ॥ ३६ ॥
80382
80383 ध्याने धीरा स्थिरा धीर्यस्य । उरसि उरोलम्बिजटाग्ररचितनीडे इति यावत् ॥ ३६ ॥
80384
80385 तृष्णाकरञ्जजटिलां जन्मजर्जरगुल्मिकाम् ।
80386 संसारारण्यसरसीं त्यक्त्वा यास्याम्यहं कदा ॥ ३७ ॥
80387
80388 तृष्णालक्षणैस्तीररुहैः करञ्जैर्जटिलाम् । जन्मान्येव
80389 कामादिमृगसंचारजर्जराणि गुल्मान्तराणि यस्याम् ॥ ३७ ॥
80390
80391 इति चिन्तापरवशो वन उद्दालको द्विजः ।
80392 पुनः पुनस्तूपविशन्ध्यानाभ्यासं चकार ह ॥ ३८ ॥

80393
80394 न स लेभे समाधानप्रतिष्ठां प्रीतिदायिनीम् ॥ ३९ ॥
80395
80396 कदाचिद्बाह्यसंस्पर्शपरित्यागादनन्तरम् ।
80397 तस्यागच्छच्चित्तकपिः प्रोद्वेगं सत्त्वसंस्थितौ ॥ ४० ॥
80398
80399 प्रत्याहारेण बाह्यानां विषयसंस्पर्शानां त्यागादनन्तरं
80400 सत्त्वगुणप्रधानसमाधिसंस्थितौ प्रसक्तायां रजसा क्षोभ्यमाणं
80401 भयारत्यालस्यादिरूपं प्रोद्वेगमगमत् । अथवा सत्त्वसंस्थितौ
80402 सात्त्विकदेवादिभोग्ये विषये सात्त्विकवृत्तिसुखास्वादे वा प्रोद्वेगं
80403 मनोरथैश्चलनमगमत् ॥ ४० ॥
80404
80405 कदाचिदान्तरान् स्पर्शान्परित्यज्य मनःकपिः ।
80406 लोलत्वात्तस्य संयातो विषयं विषदग्धवत् ॥ ४१ ॥
80407
80408 आन्तरान् समाधिसुखस्पर्शान् । विषेण दग्धो मृतो यथा लोकान्तरं प्रयाति
80409 तद्वत् । तत्पक्षे आन्तरान् जाठराग्निसंबन्धिनः स्पर्शान् देहोष्मणः ॥ ४१ ॥
80410
80411 कदाचिदुदितार्काभं तेजो दृष्ट्वान्तरे मनः ।
80412 विषयोन्मुखतां यातं तस्य तामरसेक्षण ॥ ४२ ॥
80413
80414 आन्तरे हार्दब्रह्मणि उदितार्काभं तेजो दृष्ट्वा । तथा च श्रुतिः -
80415 नीहारधूमार्कानलानिलानां खद्योतविद्युत्स्फटिकशशीनाम् । एतानि रूपाणि
80416 पुरःसराणि ब्रह्मण्यभिव्यक्तिकराणि योगे इति ॥ ४२ ॥
80417
80418 आन्तरान्ध्यतमस्त्यागं कृत्वा विषयलम्पटम् ।
80419 तस्योड्डीय मनो याति कदाचिल्लस्तपक्षिवत् ॥ ४३ ॥
80420
80421 आन्तरस्यान्ध्यतमसोऽज्ञानान्धकारस्य ईषद्ब्रह्माभिव्यक्त्या त्यागं
80422 ईषत्प्रशमं कृत्वा तदानीमेव विषयवासनोद्बोधात्तल्लम्पटं
80423 भूत्वेत्यर्थः ॥ ४३ ॥
80424
80425 बाह्यानाभ्यन्तरान्स्पर्शांस्त्यक्त्वा निद्रां च तन्मनः ।
80426 तमस्तेजोन्तिके लेभे कदाचिच्छाश्वतीं स्थितिम् ॥ ४४ ॥
80427
80428 बाह्याभ्यन्तरस्पर्शौ व्याख्यातौ । तमसोऽज्ञानस्य तेजस
80429 आत्मज्योतिषश्चान्तराले संधौ लीनं सन्निद्रामेव शाश्वतीं चिरानुवृत्तां
80430 स्थितिं लेभे ॥ ४४ ॥
80431
80432 इति पर्याकुलस्यान्तः स खलु ध्यानवृत्तिषु ।
80433 दरीष्वन्वहमुग्रासु वातमग्न इव द्रुमः ॥ ४५ ॥
80434
80435 दरीषु ध्यानसंरूढमननः [मनसः पर्याकुलस्य इत्यपि पाठः]
80436 सः पर्याकुलस्य मनसो मध्ये मध्ये वातेन सन्निहितजले मग्नो मज्जितो द्रुमो
80437 यथा तथा तृष्णालक्षणैस्तीरतरङ्गकैर्दोलायितवपुः सन् संकटे अतिष्ठदिति
80438 परेण सहान्वयः ॥ ४५ ॥
80439
80440 अतिष्ठध्यानसंरूढमननः संकटे यथा ।
80441 दोलायितवपुस्तुच्छतृष्णातीरतरङ्गकैः ॥ ४६ ॥
80442
80443 अथ पर्याकुलमना विजहार मुनिर्गिरौ ।
80444 प्रत्यहं दिवसाधीशो महामेराविवैककः ॥ ४७ ॥

80445
80446 विजहार संचचार | महामेरौ
80447 सदैवार्कपादसंबन्धदर्शनात्तत्रार्कविहरणकल्पनयोपमोक्तिः ॥ ४७ ॥
80448
80449 समस्तभूतदुष्प्रापामेकदा प्राप कन्दराम् |
80450 संशान्तसर्वसंचारां मुनिर्मोक्षदशामिव ॥ ४८ ॥
80451
80452 समस्तभूतदुष्प्रापामत एव संशान्तसर्वसंचाराम् |
80453 कन्दरामोक्षदशासाधारणे विशेषणे | आसर्गसमाप्तेः कन्दरैवं विशेष्यते
80454 ॥ ४८ ॥
80455
80456 अपर्याकुलितां वातैरप्राप्तमृगपक्षिणीम् |
80457 अदृष्टां देवगन्धर्वैः परमाकाशशोभनाम् ॥ ४९ ॥
80458
80459 परमाकाशो ब्रह्मेव शोभमानाम् ॥ ४९ ॥
80460
80461 पुष्पप्रकरसंछन्नां मृदुशाद्वलकोमलाम् |
80462 ज्योतीरसाश्मसंप्रोतैः कृतां मरकतैरिव ॥ ५० ॥
80463
80464 ज्योतीरूपो रसश्चन्द्रस्तदश्मभिश्चन्द्रकान्तैः सह
80465 संप्रोतैर्घटितैर्मरकतमणिभिः कृतामिव ॥ ५० ॥
80466
80467 सुस्निग्धशीतलच्छायां प्रकटां रत्नदीपकैः |
80468 सुगुप्तां वनदेवीनामन्तःपुरकुटीमिव ॥ ५१ ॥
80469
80470 द्वारि सुस्निग्धशीतलच्छायाम् ॥ ५१ ॥
80471
80472 कुलम्बनाहिमालोकां नात्युष्णां नातिशीतलाम् |
80473 शारदस्योदितार्कस्य हेमगौरीं प्रभामिव ॥ ५२ ॥
80474
80475 कौ द्वारभूमौ लम्बन्ते प्रसरन्तीति कुलम्बनाः | अहिमाः
80476 शीतनिवारणमात्रक्षमा आलोका यस्याम् | अत एव नात्युष्णां नातिशीतलाम् |
80477 उदितार्कस्य बालसूर्यस्य | हेमेव गौरीं पीताम् ॥ ५२ ॥
80478
80479 बालालोकपरिम्लानां कोमलाशब्दमारुताम् |
80480 मञ्जरीजटिलोपेतां बालां मालावतीमिव ॥ ५३ ॥
80481
80482 बालेन आलोकेन परिम्लानां शुष्काम् | अनेन गुहा प्रा"मुखीति गम्यते | कोमलो
80483 मन्दः अशब्दश्च मारुतो यस्याम् | तेन प्रत्यग्भागेऽपि गवाक्षवत्ता गम्यते |
80484 मञ्जरीजटिलैस्तरुभिरुपेताम् | अनेन सुरभिता गम्यते | स्वयंवरोद्युक्तां
80485 मालावतीं बालां राजकन्यामिव स्थितामित्यर्थः ॥ ५३ ॥
80486
80487 उपशमपदवीमिवानुरूपां
80488 कमलजविश्रमणाय योग्यरूपाम् |
80489 कुसुमनिकरकोमलाभिरामां
80490 सरसिजकोटरकोमलां समन्तात् ॥ ५४ ॥
80491
80492 सरसिजकोटरमिव कोमलाम् | अत एव कमलजस्य धातुर्विश्रमणाय योग्यरूपाम्
80493 | समन्तात्कुसुमनिकरैश्च कोमलां रम्याम् | उपशमपदवीमिव
80494 सदैवाश्रयितुमनुरूपां कन्दरां प्रापेति पूर्वत्र संबन्धः ॥ ५४ ॥
80495
80496 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे०

80497 मोक्षोपायेषूपशमप्रकरणे उद्दालकमनोरथो नामैकपञ्चाशः
80498 सर्गः ॥ ५१ ॥
80499
80500 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
80501 उद्दालकमनोरथो नामैकपञ्चाशः सर्गः ॥ ५१ ॥
80502
80503
80504 द्विपञ्चाशः सर्गः ५२
80505
80506 स तां विवेश धर्मात्मा गन्धमादनकन्दराम् ।
80507 चित्रभ्रमणसंप्राप्तामलिः पद्मकुटीमिव ॥ १ ॥
80508
80509 गुहायामासनस्थेन समाधिं प्रविविक्षता ।
80510 चित्तप्रबोधनोपायाश्चिन्तिता इह वर्णिताः ॥ १ ॥
80511
80512 चित्रेण बहुविधेन भ्रमणेनान्वेषणेन । पद्मकुटीमिवेत्यनेन प्रविष्टस्य
80513 तत्र निरतिशयानन्दरसपानविश्रान्तिर्भविष्यतीति गम्यते ॥ १ ॥
80514
80515 समाधानोन्मुखतया प्रविशन्स व्यराजत ।
80516 सर्गव्यापारविरतावात्मपुर्यामिवाब्जजः ॥ २ ॥
80517
80518 आत्मनः पुर्यां सत्यलोकस्थायामपराजिताख्यायां
80519 भगवन्नाभिपद्मलक्षणायां वा ॥ २ ॥
80520
80521 चकारासनमम्लानैः पत्रैरन्तस्वगुच्छकम् ।
80522 मृदुमेघविधिर्वृन्दमम्भोदमिव तत्र सः ॥ ३ ॥
80523
80524 अन्ते मध्ये स्वं शरीरं गुच्छमिव यस्मिन्भासते तथाविधं अन्तेषु स्वानि
80525 तत्तत्पत्रसंबद्धानि पुष्पगुच्छानि वा यस्मिन् तथाविधमासनम् ।
80526 मेघान्विदधातीति मेघविधिरिन्द्रोऽम्भोदं मेघं वृन्दं कदम्बितमिव ।
80527 तत्पक्षे अन्तेषु प्रसृतानि स्वगुच्छानीव विद्युतो यस्मिन्निति योज्यम् ॥ ३ ॥
80528
80529 स तत्प्रस्तारयामास पृष्ठे चारु मृगाजितम् ।
80530 नीलरत्नतटे मेरुस्तारासारमिवाम्बरम् ॥ ४ ॥
80531
80532 तत्तस्यासनस्य पृष्ठे उपरि तत्स्वकक्षास्थं मृगाजिनमिति वा । तारा एव सारा
80533 बहुमूल्यरत्नानि यस्मिन् । अनेन तत्पृषताजिनमिति [पुरुषताजिनं इति
80534 पाठः] गम्यते ॥ ४ ॥
80535
80536 स तत्रोपाविशद्वृत्तीश्चेतसस्तनुतां नयन् ।
80537 अन्तःशुद्धवपुः शृङ्गे वृष्य मूक इवाम्बुदः ॥ ५ ॥
80538
80539 चेतसो वृत्तिर्जडविषयत्यागेन तनुतां लघुताम् । यथा अम्बुदो वृष्य
80540 वृष्ट्या स्वजाड्यं विहाय शुद्धवपुः शुभ्ररूपो मूको निर्गर्जनः सन्
80541 गिरिशृङ्गे उपविशति तद्वत् । वृष्येत्यसमासे ल्यप् छान्दसः । ऋष्यमूक इति
80542 पाठे ऋष्यमूकाख्ये सह्यशृङ्गे ॥ ५ ॥
80543
80544 बुद्धवत्सुदृढं बद्धपद्मासन उदङ्मुखः ।
80545 पार्ष्णिभ्यां वृषणौ धृत्वा चकार ब्राह्ममञ्जलिम् ॥ ६ ॥
80546
80547 बुद्धवत्प्रबुद्धकपिलादिवत् । पद्मासनग्रहणं सिद्धासनोपलक्षणम् ।
80548 पार्ष्णिभ्यां वृषणौ धृत्वेत्युक्तेस्तत्रैवोपपत्तेः । ब्राह्ममञ्जलिं

80549 ब्रह्मादिगुरुपरम्पराप्रणामाञ्जलिम् ॥ ६ ॥
80550
80551 वासनाभ्यः समाहृत्य मनोमृगमुपप्लुतम् ।
80552 निर्विकल्पसमाध्यर्थं चकारेमां विचारणाम् ॥ ७ ॥
80553
80554 उप समीपे विषयेषु प्लुतं धावितम् ॥ ७ ॥
80555
80556 अयि मूर्ख मनः कोऽर्थस्तव संसारवृत्तिभिः ।
80557 धीमन्तो न निषेवन्ते पर्यन्ते दुःखदां क्रियाम् ॥ ८ ॥
80558
80559 अयीति कोमलामन्त्रणे ॥ ८ ॥
80560
80561 अनुधावति यो भोगांस्त्यक्त्वा शमरसायनम् ।
80562 संत्यज्य मन्दारवनं स याति विषजङ्गलम् ॥ ९ ॥
80563
80564 मन्दारा देवतरुभेदास्तेषां वनम् ॥ ९ ॥
80565
80566 यदि यासि महीरन्ध्रं ब्रह्मलोकमथापि वा ।
80567 तन्न निर्वाणमायासि विनोपशमनामृतम् ॥ १० ॥
80568
80569 महीरन्ध्रं पातालम् । निर्वाणं निरतिशयसुखविश्रान्तिम् ॥ १० ॥
80570
80571 आशाशतावपूर्णत्वे त्वमेवं सर्वदुःखदम् ।
80572 त्यज्य याहि परं श्रेयः परमेकान्तसुन्दरम् ॥ ११ ॥
80573
80574 त्वं भोगाशाशतेनावपूर्णत्वे सति एवं प्रागुक्तरीत्या सर्वदुःखदं भवसि
80575 । अतः परं भोगाशास्त्यज्य त्यक्त्वा । ल्यप् छान्दसः ।
80576 निर्दुःखनिरतिशयानन्दरूपत्वादेकान्तसुन्दरं परं श्रेयो निर्वाणं याहि ॥
80577 ११ ॥
80578
80579 इमा विचित्राः कलना भावाभावमयात्मिकाः ।
80580 दुःखायैव तवोग्राय न सुखाय कदाचन ॥ १२ ॥
80581
80582 इष्टसंपादनं भावः अनिष्टनिवारणमभावः तत्प्रचुरा विचित्राः कलना
80583 विषयाः ॥ १२ ॥
80584
80585 शब्दादिकाभिरेताभिः किं मूर्ख हतवृत्तिभिः ।
80586 भ्रमस्यविरतं व्यर्थं मेघे मण्डूकिका यथा ॥ १३ ॥
80587
80588 हतशब्दो निन्दार्थः । मण्डूकिका यथा मेघे
80589 शब्दादिकाभिर्व्यर्थवृत्तिभिर्भ्रमति तथेत्यर्थः ॥ १३ ॥
80590
80591 मनोमण्डूकिके व्यर्थमियन्तं कालमन्धया ।
80592 भ्रमन्त्या भुवनं क्षिप्रं किं समासादितं त्वया ॥ १४ ॥
80593
80594 तदेव स्पष्टमाह - मन इति । भुवनं जगज्जलं च ॥ १४ ॥
80595
80596 यस्मात्किंचिदवाप्नोषि यस्मिन्वहसि निर्वृतिम् ।
80597 तस्मिंश्चेतः शमे मूर्ख नानुबध्नासि किं पदम् ॥ १५ ॥
80598
80599 किंचिदवाङ्मनसगम्यं विदेहकैवल्यसुखम् । निर्वृतिं
80600 जीवन्मुक्तिविश्रान्तिसुखं वहसि प्राप्नोषि तस्मिन् शमे

80601 सर्ववृत्त्युपरमलक्षणे समाधौ हे चेतः पदं व्यवसायं किं
80602 नानुबध्नासि ॥ १५ ॥
80603
80604 आगत्य श्रोत्रतां मूर्ख व्यर्थोत्थानोपबृंहिताम् ।
80605 धिया शब्दानुसारिण्या मृगवन्मा क्षयं व्रज ॥ १६ ॥
80606
80607 कलना दुःखायैवेति यदुक्तं तत्प्रत्येकं दृष्टान्तोदाहरणैः प्रपञ्चयति
80608 - आगत्येत्यादिना । व्यर्थेन बहिर्मुखतालक्षणेनोत्थानेन
80609 उपबृंहितामुपचितां श्रोत्रेन्द्रियतादात्म्यापत्तिरूपां श्रोत्रतामागत्य
80610 प्राप्य । प्राणन्नेव प्राणो नाम भवति वदन्वाक्पश्यंश्चक्षुः शृण्वन्
80611 श्रोत्रं इति लिङ्गादात्मनः श्रवणादिकाले श्रोत्रादिभावः श्रुतेरिव भावः ।
80612 लुब्धकगीतघण्टास्वनमोहितमृगवत् ॥ १६ ॥
80613
80614 त्वक्तामागत्य दुःखाय स्पर्शोन्मुखतया धिया ।
80615 मूर्ख मा बद्धतामेहि गजीलुब्धगजेन्द्रवत् ॥ १७ ॥
80616
80617 त्वक्तां त्वगिन्द्रियताम् । गजी करेणुस्तस्यां तत्स्पर्शलुब्धगजेन्द्रवत् ।
80618 सुशिक्षितया करिण्या वनगजेन्द्रं प्रलोभ्याकृष्य गर्तपातादिना हस्तिपका
80619 बध्नन्तीति प्रसिद्धम् ॥ १७ ॥
80620
80621 रसनाभावमागत्य गर्द्धेनान्ध दुरन्धसाम् ।
80622 मा नाशमेहि बडिशपिण्डीलम्पटमत्स्यवत् ॥ १८ ॥
80623
80624 हे अन्ध दुरन्धसां दुरन्नानां गर्द्धेनाभिलाषेण ॥ १८ ॥
80625
80626 चाक्षुषीं वृत्तिमाश्रित्य प्रभारूपचयोन्मुखीम् ।
80627 मा गच्छ दग्धतां मुग्ध कान्तिलुब्धपतङ्गवत् ॥ १९ ॥
80628
80629 चाक्षुषीं वृत्तिं चक्षुष्टाम् । प्रभा कान्तिस्तत्संबन्धी यो रूपचयो
80630 नानारूपभेदस्तदुन्मुखीं तत्प्रवणाम् ॥ १९ ॥
80631
80632 घ्राणमार्गमुपाश्रित्य शरीराम्भोजकोटरे ।
80633 गन्धोन्मुखतया बन्धं मा त्वं संश्रय भृङ्गवत् ॥ २० ॥
80634
80635 गजोन्मृदितपद्मगर्भस्थभृङ्गवत् ॥ २० ॥
80636
80637 कुरङ्गालिपतङ्गेभमीनास्त्वेकैकशो हताः ।
80638 सर्वैर्युक्तैरनर्थैस्तु व्याप्तस्याज्ञ कुतः सुखम् ॥ २१ ॥
80639
80640 एकैकसक्तयाप्येवमनर्थे सर्वसक्तस्य तव दुर्वारमेव
80641 निरतिशयदुःखमित्याह - कुरङ्गेति । अनर्थैरनर्थसाधनैः
80642 शब्दादिभिर्युक्तैर्मिलितैः । हे अज्ञेति चित्तसंबोधनम् ॥ २१ ॥
80643
80644 हे चित्त वासनाजालं बन्धाय भवतोहितम् ।
80645 स्वात्मनः सहजः फेनस्ततः कुकृमिणा यथा ॥ २२ ॥
80646
80647 कुत्सितेन कृमिणा कोशकारकीटेन सहजः स्वाभाविकः स्वलालाफेनः
80648 स्वात्मनो बन्धाय यथा कोशात्मना ततो विस्तारितस्तथा वासनाजालं स्वात्मनो
80649 बन्धाय ऊहितं कुवितर्कनिर्मितमित्यर्थः । भवतः अहितमिति वा छित्त्वा ततमिति
80650 लिङ्गविपरिणामेन योज्यम् ॥ २२ ॥
80651
80652 यदि शाम्यसि निर्मूलं तदनन्तो जयस्तव ॥ २३ ॥

कथं तर्हि प्रमादकृतस्यास्य बन्धस्य जयस्तत्राह - शरदभ्रेति |
प्रथमं कर्मोपासनादिभिः शरदभ्रवच्छुद्धिमागत्य ततः
श्रवणादिपरिपाकाज्ज्ञानोदयेन निर्मूलं यदि शाम्यसि तत्तदा अनन्तो जय
इत्यर्थः || २३ ||

क्षयोदयदशाधात्रीं पर्यन्तपरितापिनीम् |
जानन्नपि जगत्सृष्टिं न त्यक्ष्यसि विनंक्ष्यसि || २४ ||

वक्तव्यं सर्वं पिण्डीकृत्यकोक्त्याह - क्षयेति | क्षयोदयौ जन्ममरणे
दशा बाल्याद्या दारिद्र्याद्याश्च तासां धात्रीम् | पर्यन्ते मरणोत्तरमपि
नरकस्थावरादिगतिपरितापनशीलाम् | जगत्सृष्टिं जागतीं प्रवृत्तिम् || २४ ||

करोम्यथ किमर्थं वा तवैतदनुशासनम् |
विचारणवतः पुंसश्चित्तमस्ति हि नानघ || २५ ||

अथवा अहितस्य चित्तस्य नानुशासनं कार्यं किंतु बलान्निगृह्य
विचारेणोच्छेद एव कार्य इत्याशयेनाह - करोमीति | अनुशासनं
हितोपदेशम् || २५ ||

यावदज्ञानघनता तावत्प्रघनचित्तता |
यावत्प्रावृड्जलदता तावन्नीहारभूरिता || २६ ||

अथवा न चित्तोच्छेदेऽपि पृथग्यत्नः कार्यस्तस्य
मूलाज्ञानान्वयव्यतिरेकानुविधायितया तदुच्छेदेनैवोच्छेदः साध्य
इत्याशयेनाह - यावदिति त्रिभिः || २६ ||

यावदज्ञानतनुता तावच्चित्तस्य तानवम् |
प्रावृट्परिक्षयो यावत्तावन्नीहारसंक्षयः || २७ ||

उत्तरौ यावत्तावदिति निपातौ यावांस्तावानित्यर्थकौ || २७ ||

यावत्तानवमायातं शुद्धं चित्तं विचारतः |
तावत्तत्क्षीणमेवाहं मन्ये शारदमेघवत् || २८ ||

तानवं वासनाक्षयेण सौक्ष्म्यम् || २८ ||

अनुशासनमेतद्यदसतो नश्यतोऽथ वा |
क्रियते तन्नभोवारिपवनाहननैः समम् || २९ ||

अविवेकिनश्चित्तमनुशासनायोग्यमेव विवेकिनस्तु नश्यदवस्थं नष्टं वा
तत्सुतरां तथेत्याशयेनाह - अनुशासनमिति | नभसो वारिणः पवनस्य च
आहननैस्ताडनैः समं व्यर्थमिति यावत् || २९ ||

तस्मात्संक्षीयमाणत्वात्त्यजामि त्वामसन्मयम् |
मौर्ख्यं परममेवाहुः परित्याज्यानुशासनम् || ३० ||

उक्तमेवानुवादेनोपसंहरति - तस्मादिति || ३० ||

निर्विकल्पोऽस्मि चिद्दीपो निरहंकारवासनः |
त्वयाहंकारबीजेन न संबद्धोऽस्म्यसन्मय || ३१ ||

80705 आत्मनस्तदसंबन्धदर्शनमेव तत्याग इत्याशयेनाह - निर्विकल्प इति ॥ ३१
80706 ।।
80707
80708 अयं सोऽहमिति व्यर्थं दुर्दृष्टिरवलम्बिता।
80709 त्वया मूढविनाशाय शङ्काविषविषूचिका ॥ ३२ ॥
80710
80711 मम कोऽपराधो येन मां विनाशाय परित्यजसीति
80712 चेद्देहादावहंतादुर्दृष्ट्यवलम्बनमेवेत्याह - अयमिति। सा च
80713 दुर्दृष्टिः शङ्काविषप्रयुक्ता विषूचिकेव मिथ्याहेतुकापि मूढानां
80714 विनाशायैव संपद्यत इत्यपराध इत्यर्थः ॥ ३२ ॥
80715
80716 अनन्तस्यात्मतत्त्वस्य तन्वीति मनसि स्थितिः।
80717 न संभवति बिल्वान्तर्वासितादन्तिनोर्यथा ॥ ३३ ॥
80718
80719 कुतो मिथ्यात्वमिति चेदनुपपन्नत्वादेवेत्याह - अनन्तस्येति। इति एवंरूपे
80720 परिच्छिन्ने मनसि तन्वी परिच्छिन्ना स्थितिर्देहाद्यहंभावेन स्थितिर्न संभवति
80721 नोपपद्यत इत्यर्थः। वासिता करिणी दन्ती च तयोर्बिल्वान्तस्थितिर्यथा न संभवति
80722 तथेत्यर्थः ॥ ३३ ॥
80723
80724 महाश्वभ्रीव गम्भीरा दुःखदा वासनाश्रिता।
80725 त्वयैषा बत चित्तेति नैनामनुसराम्यहम् ॥ ३४ ॥
80726
80727 चित्तस्य त्याज्यत्वे हेत्वान्तरमप्याह - महाश्वभ्रीति। हे चित्त त्वया महती
80728 श्वभ्री जीर्णकूपादिरिव गम्भीरा अदृश्यतला
80729 कामक्रोधलोभादिसर्पवृश्चिकपिशाचालयत्वाद्दुःखदा दुर्वासनैव
80730 स्वाल्पत्वेनाश्रिता। वतेति खेदे। अहं तु एनां नानुसरामीति तदनुसारिणं त्वां
80731 त्यजामीत्यर्थः ॥ ३४ ॥
80732
80733 कः किलायं मुधा मोहो बालस्येवाविचारिणः।
80734 अयं सोऽहमिति भ्रान्तिस्त्वहंतापरिकल्पिता ॥ ३५ ॥
80735
80736 किं चायं देहः स आत्माहमिति भ्रान्तिस्तु या त्वया अहंतापरिकल्पिता अयं
80737 बालस्येवाविचारिणो मोहो विचारिणो मम कः किल। न कश्चिदपीति नास्त्येवेत्यर्थः
80738 ॥ ३५ ॥
80739
80740 पादाङ्गुष्ठाच्छिरो यावत्कणशः प्रविचारितम्।
80741 न लब्धोऽसावहं नाम कः स्यादहमिति स्थितः ॥ ३६ ॥
80742
80743 तन्नास्तित्वमेव विमृश्य विशदयति - पादाङ्गुष्ठादित्याना। कणशो
80744 विविच्येति शेषः ॥ ३६ ॥
80745
80746 भरिताशेषदिक्कुञ्जं यत्स्यामेकं जगत्त्रये।
80747 संवेदनमसंवेद्यं सर्वत्रविगतात्मकम् ॥ ३७ ॥
80748
80749 यद्यहंपदार्थो नास्त्येव तर्हि कस्त्वं तत्राह - भरितेति द्वाभ्याम्।
80750 भरिताशेषदिक्कुञ्जं दिक्कृतपरिच्छेदरहितम्। एकं वस्तुकृततद्रहितम्।
80751 असंवेद्यं क्रमसंवेद्यावस्थात्रयलक्षणकालकृतपरिच्छेदशून्यम्। अत
80752 एव सर्वत्र सर्वेषु प्रकारेषु विगतो वस्त्वन्तरात्मा यस्य। ईदृशं
80753 संवेदनमेवाहं स्यामित्यर्थः ॥ ३७ ॥
80754
80755 दृश्यते यस्य नेयत्ता न नाम परिकल्पना।
80756 नैकता नान्यतैवेह न महत्ता न चाणुता ॥ ३८ ॥

80757
80758 इयत्ता परिच्छिन्नं रूपम्। एकता एकत्वसंख्या। अन्यता अदन्यसंख्या।
80759 महत्ताणुते परिमाणे॥ ३८॥
80760
80761 वेद तत्त्वां स्वसंवेद्यमाततं दुःखकारणम्।
80762 विवेकजेन बोधेन तदिदं हन्यसे मया॥ ३९॥
80763
80764 यतोऽहं संवेदनात्मा तत्तस्मात्साक्षिभूतेन स्वेन संवेद्यं त्वां चित्तं वेद
80765 पश्यामि। ततो दुःखकारणत्वादेव इदं वक्ष्यमाणं विवेकमादाय हन्यसे
80766 ॥ ३९॥
80767
80768 इदं मांसमिदं रक्तमिमान्यस्थीनि देहके।
80769 इमे ते श्वासमरुतः कोऽसावहमिति स्थितः॥ ४०॥
80770
80771 विवेचनप्रकारमेव दर्शयति - इदमित्यादिना॥ ४०॥
80772
80773 स्पन्दो हि वातशक्तीनामवबोधो महाचितः।
80774 जरा मृतिश्च कायेऽस्मिन्कोऽसावहमिति स्थितः॥ ४१॥
80775
80776 स्पन्दांशः सर्वोऽपि वातशक्तीनां प्राणानाम्। अवबोधांशस्तु महाचितः
80777 परमात्मनः। जरा मृतिश्चेत्येते कायकोटौ॥ ४१॥
80778
80779 मांसमन्यदसृक्कान्यदस्थीन्यन्यानि चित्त हे।
80780 बोधोऽन्यः स्पन्दनं चान्यत्कोसावहमिति स्थितः॥ ४२॥
80781
80782 अन्यदहंपदार्थाद्व्यतिरिक्तम्॥ ४२॥
80783
80784 इदं घ्राणमियं जिह्वा त्वगियं श्रवणे इमे।
80785 इदं चक्षुरसौ स्पर्शः कोऽसावहमिति स्थितः॥ ४३॥
80786
80787 यथाभूततया नाहं मनो न त्वं न वासना।
80788 आत्मा शुद्धचिदाभासः केवलोऽयं विजृम्भते॥ ४४॥
80789
80790 यथाभूततया परमार्थतया विचारे मनः अहं न। न त्वं चित्तमहं
80791 वासनापि नाहम्। आत्मा तु सर्वथा अहंतया न स्पृष्ट इत्याह - आत्मेति॥ ४४
80792 ।।
80793
80794 अहमेवेह सर्वत्र नाहं किंचिदपीह वा।
80795 इत्येव सन्मयी दृष्टिर्नेतरो विद्यते क्रमः॥ ४५॥
80796
80797 तस्मिन्नात्मनि यद्यध्यारोपदृष्टिस्तर्ह्यहमेव सर्वत्राधिष्ठानमिति
80798 सर्वमेवाहम्। यद्यपवाददृष्टिस्तर्हि नाहं किंचिदपीति
80799 नैकदेहमात्रपरिच्छिन्नाहंभावलक्षण इतरोऽहंकारक्रमो विद्यत इत्यर्थः
80800 ॥ ४५॥
80801
80802 चिरमज्ञानधूर्तेन पोथितोऽस्मि त्वहंतया।
80803 वृकेण दृप्तेनाटव्यां लब्धेन पशुपोतकः॥ ४६॥
80804
80805 अज्ञानलक्षणेन धूर्तेन कितवेनाहंतया वञ्चनया चिरं पोथितः
80806 संक्लेशितोऽस्मि। लब्धेनेति भावे क्तः। विप्रलम्भेनेत्यर्थः। मृगपोतक इवेति
80807 शेषः। लब्ध्वेव इति पाठः साधुः। पोतको वत्सः॥ ४६॥
80808

80809 दिष्ट्येदानीं परिज्ञातो मयैवाज्ञानतस्करः।
80810 पुनर्न संश्रयाम्येनं स्वरूपार्थापहारिणम्॥ ४७॥
80811
80812 स्वं पारमार्थिकं यद्रूपं तल्लक्षणस्यार्थस्य धनस्यापहारिणम्॥ ४७॥
80813
80814 निर्दुःखो दुःखयोग्यस्य नाहं तस्य न चैष मे।
80815 कश्चिद्भवति शैलस्य तत्स्थ एव यथाम्बुदः॥ ४८॥
80816
80817 परस्परविरुद्धस्वभावयोः संबन्धोऽपि नास्ति दूरे ऐक्यमित्याशयेनाह -
80818 निर्दुःख इति। शैलस्याम्बुदो यथा कश्चिदपि न भवति तद्वत्॥ ४८॥
80819
80820 भूत्वा त्वहमिदं वच्मि वेद्मि तिष्ठामि यामि च।
80821 आत्मावलोकनेनाहमनहंकारतां गतः॥ ४९॥
80822
80823 यदि ते सर्वथाहंकारादिर्नास्ति तर्हि कथं वचनादिना व्यवहरसि तत्राह -
80824 भूत्वेति। नट इव तात्कालिकेन तद्भावकल्पनेनाहंकारो भूत्वा इदं
80825 त्वदुपदेशवचनादि वच्मि चक्षुरादिना वेद्मि॥ ४९॥
80826
80827 नूनमेवाहमेवैते मन्ये ज्ञाश्चक्षुरादयः।
80828 यान्तु तिष्ठन्तु वा देहे ममैते तु न किंचन॥ ५०॥
80829
80830 नूनं निश्चितमेव मन्ये। इमे चक्षुरादयस्तत्त्वतोऽहमेव। यदि
80831 मद्व्यतिरिक्तास्तर्ह्यज्ञा जडा देहे तिष्ठन्तु यान्तु वा नैते मम किंचनेत्यर्थः
80832 ॥ ५०॥
80833
80834 कष्टं कोऽयमहं नाम कथं केनोपकल्पितः।
80835 जगद्बालकवेतालस्तालोत्तालातुलाकृतिः॥ ५१॥
80836
80837 तालादप्युत्ताला दीर्घा अतुला आकृतिर्यस्य॥ ५१॥
80838
80839 एतावन्तं चिरं कालं व्यर्थमालुठितोऽवटे।
80840 अहमत्र तृणोन्मुक्ते दुरद्रौ हरिणो यथा॥ ५२॥
80841
80842 इदानीं प्राक्तनीमविचारदशामनुशोचति - एतावन्तमिति॥ ५२॥
80843
80844 स्वार्थमालोकने चक्षुर्यदितून्मुखतां गतम्।
80845 तदहं नाम कोसौ स्याद्योऽस्मिन्दुःखे न मोहितः॥ ५३॥
80846
80847 इदानीं प्रतीन्द्रियविषयसंबन्धमहंप्रत्ययास्पदं मृगयति -
80848 स्वार्थमित्यादिना॥ ५३॥
80849
80850 स्पर्शनाय निजे तत्त्वे यदि जाता त्वगुन्मुखी।
80851 तत्कोयं स्यादहं नाम कुपिशाच इवोदितः॥ ५४॥
80852
80853 निजे तत्त्वे विषये॥ ५४॥
80854
80855 रसेष्वभिनिषण्णेऽस्मिन्स्वक्रमे रसनेन्द्रिये।
80856 अहं मृष्टभुगित्येष कुतस्त्यः कुत्सितो भ्रमः॥ ५५॥
80857
80858 स्वक्रमे स्वविषये। सामान्ये एकवचनं पदसंस्कारपक्षाश्रयात्॥ ५५॥
80859
80860 शब्दशक्तिं गते श्रोत्रे वराके स्वार्थपीडिते।

80861 तदहंकारदुःखस्य निर्बीजस्य क आगमः ॥ ५६ ॥
80862
80863 शब्दशक्तिं शब्दलक्षणविषयम् । स्वार्थः श्रवणतृष्णा तेन पीडिते
80864 वशीकृते । आगमः प्रसङ्गः ॥ ५६ ॥
80865
80866 आत्मंभरित्वेन निजे घ्राणे स्वं गन्धमागते ।
80867 अहं घ्रातेति यो माता तं चौरं नैव वेद्म्यहम् ॥ ५७ ॥
80868
80869 आत्मंभरितया स्वोदरपूरकतया गर्धेनेति यावत् । मातात्राभिमन्ता ॥ ५७ ॥
80870
80871 मृगतृष्णाक्रमेणैषा भावना व्यर्थभाविनी ।
80872 भावस्तस्यामसत्यायां यः सोऽयमिति संभ्रमः ॥ ५८ ॥
80873
80874 एषा उक्तस्थलेषु प्रसिद्धा भावना अहंताकल्पना । तस्यां
80875 भावनायामसत्यायां निर्विषयायां सत्यामयं देहः सः अहमिति भावः ।
80876 संभ्रमो भ्रान्तिरेवेति सर्वथा देहाहंभाववासना त्याज्येत्यर्थः ॥ ५८ ॥
80877
80878 वासनाहीनमप्येतच्चक्षुरादीन्द्रियैः स्वतः ।
80879 प्रवर्तते बहिः स्वार्थे वासना नात्र कारणम् ॥ ५९ ॥
80880
80881 ननु वासनाभावे बाह्यप्रवृत्तीनां सर्वतोपरमः स्यादिति जीवनमेव
80882 पुरुषस्य न स्यात्तत्राह - वासनाहीनमपीति । एतत् शरीरं स्वार्थे जीवनहेतौ
80883 कर्मणि वासनाहीनमपि प्रवर्तते । दामव्यालकटानां
80884 प्राग्युद्धादिप्रवृत्तिवर्णनादिति भावः ॥ ५९ ॥
80885
80886 वासनारहितं कर्म क्रियते ननु चित्त हे ।
80887 केवलं नानुभूयन्ते सुखदुःखदृशोऽग्रगाः ॥ ६० ॥
80888
80889 यदि प्रवर्तते तर्हि तत्प्रयुक्तं दुःखमपि भविष्यत्येवेति वासनात्यागात्को
80890 गुणस्तत्राह - वासनेति । तात्कालिकभोगाभासे अहं दुःखीति नाभिमानः
80891 अग्रगाः भाविन्यस्तु सुखदुःखदृशो नानुभूयन्त इति तत्प्रयुक्ता
80892 शोकमोहभयविषादचिन्तोद्वेगादिसर्वसंतापशान्तिरेवास्य गुण इति भावः ॥
80893 ६० ॥
80894
80895 तस्मान्मूर्खाणीन्द्रियाणि त्यक्त्वान्तर्वासनां निजाम् ।
80896 कुरुध्वं कर्म हे सर्वं न दुःखं समवाप्स्यथ ॥ ६१ ॥
80897
80898 इदानीमिन्द्रियाणि संबोध्यामुमर्थं विविच्योपदिशति - तस्मादित्यादिना ॥ ६१
80899 । ।
80900
80901 भवद्भिरेव दुःखाय वासनावासिता मुधा ।
80902 बालैः पङ्कक्रीडनकं विनाशेनेव खिन्नता ॥ ६२ ॥
80903
80904 बालैः प्रथमं पङ्कक्रीडनकमिव पश्चात्तद्विनाशेन खिन्नतेव च
80905 भवद्भिर्विषयार्जने तद्विनाशे च दुःखायैव भोगवासनाऽज्ञात्मनि
80906 वासितेत्यर्थः ॥ ६२ ॥
80907
80908 वासनाद्या दृशः सर्वा व्यतिरिक्तास्तु नात्मनः ।
80909 जलादिव तरङ्गाद्या ज्ञस्यैवान्यस्य नानघ ॥ ६३ ॥
80910
80911 अत एव विदुषामज्ञानबाधिताः सह स्वकार्यैः शुद्धात्मैव संपन्ना इति न
80912 पृथक्संतीत्याह - वासनाद्या इति । आद्यपदेन

80913 तत्कार्यरागप्रवृत्त्यादिर्गृह्यते |ज्ञस्यैव ता न सन्ति
80914 नान्यस्याज्ञस्येत्यर्थः || ६३ ||
80915
80916 तृष्णयैव विनष्टाः स्थ व्यर्थमिन्द्रियबालकाः |
80917 कोशकारकुकृमयस्तन्तुनेव स्वयंभुवा || ६४ ||
80918
80919 अत एवाज्ञैस्तृष्णयैवेन्द्रियाणि नाशितानीत्याह - तृष्णयैवेति |
80920 स्वयंभुवा स्वत एवोद्भूतया || ६४ ||
80921
80922 तृष्णयैवेह लुठथ जरामरणसंकटे |
80923 भ्रमद्दृष्ट्येव शिखरिपथिकाः श्वभ्रभूमिषु || ६५ ||
80924
80925 इह अधःसंसारशिलाकण्टकभुवि लुठथ | यथा शिखरिपथिकाः
80926 पर्वतशिखरे गच्छन्तः पित्तवशाद्भ्रमन्त्या दृष्ट्या शिखरात्पतिता अधो
80927 विषमेषु लुठन्ति तद्वत् || ६५ ||
80928
80929 वासनैवेह भवतां हेतुरेकत्र बन्धने |
80930 रज्जुः शून्याशयप्रोता मुक्तानामातता यथा || ६६ ||
80931
80932 यथा मुक्तानां शून्ये छिद्रिते आशये गर्भे प्रोता आतता दीर्घा
80933 रज्जुस्तन्तुर्बन्धने हेतुस्तद्वत् || ६६ ||
80934
80935 कल्पनामात्रकलिता सत्यैषा हि न वस्तुतः |
80936 असंकल्पनमात्रेण दात्रेणेव विलूयते || ६७ ||
80937
80938 कल्पनाद्भ्रान्तिस्तन्मात्रेण कलिता संपादिता | एषा वासना || ६७ |
80939
80940 एषा हि भवतामेव विमोहाय क्षयाय च |
80941 वातलेखेव दीपानां स्फुरतामपि तेजसाम् || ६८ ||
80942
80943 भवतां चित्तेन्द्रियाणाम् | वर्धमाना विमोहाय | क्षयाय मरणादिदुःखाय |
80944 स्फुरतां तेजसामुल्काविद्युदादीनामपि || ६८ ||
80945
80946 हे चित्त सर्वेन्द्रियकोश तस्मा-
80947 त्सर्वेन्द्रियैरैक्यमुपेत्य नूनम् |
80948 आलोक्य चात्मानभसत्स्वरूपं
80949 निर्वाणमेवामलबोधमास्स्व || ६९ ||
80950
80951 तस्मादुक्तहेतोः सर्वेन्द्रियाणां कोशवदाधार हे चित्त त्वं सर्वेन्द्रियैः सह
80952 ऐक्यमैकमत्यमुपेत्य नूनं निश्चयेनात्मानं स्वमसत्स्वरूपं
80953 मिथ्याभूतमित्यालोक्य स्वसाक्षिनिर्वाणमलबोधमात्रं तत्त्वतो भूत्वा आस्स्व
80954 न भूयश्चित्तरूपमादत्स्वेत्यर्थः || ६९ ||
80955
80956 विषयविषविषूचिकामनन्तां
80957 निपुणमहंस्थितिवासनामपास्य |
80958 अभिमतपरिहारमन्त्रयुक्त्या
80959 भव विभवो भगवान्भियामभूमिः || ७० ||
80960
80961 सर्वशास्त्रतत्त्वज्ञाभिमता ये द्वैतवासनापरिहारास्तल्लक्षणया
80962 अभिलषितविषयत्यागलक्षणया मन्त्रयुक्त्या
80963 अनन्तामसंख्यदुःखामहंस्थितिरहंकारस्तद्वासनालक्षणां
80964 विषमविषसदृशाज्ञानप्रयुक्तां विषूचिकां निपुणमपास्य विभवो

विसंसारः सन् भियां मरणादिसर्वभयानामभूमिरनास्पदं
भगवान्पूर्णानन्दात्मैव भवेत्यर्थः ॥ ७० ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० उपशमप्रकरणे
उद्दालकविचारो नाम द्विपञ्चाशः सर्गः ॥ ५२ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
उद्दालकविचारो नाम द्विपञ्चाशः सर्गः ॥ ५२ ॥

त्रिपञ्चाशः सर्गः ५३

उद्दालक उवाच ।

अपारपर्यन्तवपुः परमाण्वणुरेव च ।
चिदचेत्या तदाक्रान्तौ न शक्ता वासनादयः ॥ १ ॥

वासनाभिरलेपित्वमहंकारेण चात्मनः ।
शरीरमनसोर्वैरमित्याद्यत्रोपपाद्यते ॥ १ ॥

परिच्छिन्नस्तिलादिः कुसुमादिभिर्वास्यते आत्मपितु(?) *?
विद्यते पारं परावधिः पर्यन्ताः पूर्वपश्चिमपार्श्वविधयश्च
यस्यास्तथाविधस्वरूपा । तथा स्थूलाः पृथिव्यप्तेजोवायवः कस्तूर्यादिना
वास्यन्ते चित्तु परमाणोरपञ्चीकृताकाशादव्याकृताकाशाच्चाणुः
सूक्ष्मतमा अतस्तस्या आक्रान्तौ ईषदपि स्पर्शे वासनादयो न शक्ता इत्यर्थः ।
साक्षत्तत्स्पर्शाशक्तावपि तच्चेत्यस्पर्शद्वारा
तत्संबन्धप्रसक्तिशङ्कावारणाय विशिनष्टि - अचेत्येति ॥ १ ॥

मनः शेमुष्यहंकारप्रतिबिम्बैर्जडेन्द्रियैः ।
वासनाविततः शून्या वेतालत्रासनोद्यताः ॥ २ ॥

ननु त्वदप्रकाशितविषये वासनोदयादर्शनात्त्वयैव वितातास्ताः कथं
त्वदस्पर्शिन्यस्तत्राह - मन इति । न मया ताः विततः किंतु
जडेन्द्रियैरुपात्तानां विषयाणां शेमुष्यां बुद्धौ अहंकारे च
चित्प्रतिबिम्बैर्हेतुभिस्तत्सूक्ष्मावस्थारूपा अत एव शून्या असद्रूपा अपि वेताला
इव त्रासनोद्यता वासनावितता विस्तारिता मनः अनुभवतीति परेणान्वयः ॥ २ ॥

तत्कृतेभ्यो विचारेभ्योऽनुभूतेभ्योऽपि भूरिशः ।
भूयोऽप्यनुभवत्यन्तरहं हि चिदलेपिका ॥ ३ ॥

जागरे भूरिशः कृतेभ्यो विषयविचारेभ्योऽनुभूतेभ्यश्च विषयेभ्यो
भूयोऽपि स्वप्नेऽन्तर्नाडीच्छिद्रान्तर्वासनामयानेव विषयांस्तन्मनः
अनुभवति । नच बुद्ध्यहंकारकृतेन मनोनुभूतेन वा मम लेपः । हि
यस्मादलेपिका चेदेवाहं न मन आदिसंघातात्मेत्यर्थः । तथाच श्रुतिः ##-
। ।

स्वदुर्भावोपरचितां देहः संसारसंस्थितिम् ।
गृह्णात्वथ त्यजतु वाप्यहं हि चिदलेपिका ॥ ४ ॥

एवं स्थूलदेहकृतेनापि न लेप इत्याह - स्वदुर्भावेति । दुर्भावा
दुश्चेष्टास्तैरुपरचिताम् ॥ ४ ॥

81017 चितो न जन्ममरणे सर्वगायाश्रितः किल।
81018 किं नाम म्रियते जन्तुर्मार्यते केन वापि किम्॥ ५॥
81019
81020 अत एव जन्ममरणे अपि स्वस्य न स्त इत्याह - चित इति। सर्वगत्वाच्चित्त्वाच्चेति
81021 हेतुगर्भे विशेषणे इति द्योतनाय किलेति निपातः। अविनाश्यदिवितीयात्मदर्शने
81022 वध्यघातकबुद्धिर्निर्विषयैव संपद्यत
81023 इत्यात्यन्तिकाभयसिद्धिरित्याशयेनाह - किं नामेति॥ ५॥
81024
81025 चितो न जीवितेनार्थः सर्वात्मा सर्वजीवितम्।
81026 किं प्राप्स्यति कदात्मैषा प्रायता यदि जीवितम्॥ ६॥
81027
81028 यस्य हि जीवितेनार्थास्तस्य मरणाद्भयं स्यान्न त्वसौ चित इत्याह - चित इति।
81029 यतः सर्वात्मा चिदेव सर्ववस्तूनां जीवितम्। एवमस्याः सर्वदेशकालवस्तुषु
81030 प्रायता विस्तृता स्वरूपचिदेव यदि जीवितं तदा तेन जीवितेन कदा
81031 किमन्यदप्राप्तं प्राप्स्यति यदर्थं तदिच्छेत्यर्थः॥ ६॥
81032
81033 जीव्यते म्रियते चेति कुविकल्पकमालिनी।
81034 कलना मनसामेव नात्मनो विमलात्मनः॥ ७॥
81035
81036 मरणजीवनयोर्मनःकल्पनामात्रत्वादपि न तद्द्वेषवाञ्छाप्रसक्तिरित्याह
81037 - जीव्यत इति॥ ७॥
81038
81039 यो ह्यहंभावतां प्राप्तो भावाभावैः स गृह्यते।
81040 आत्मनो नास्त्यहंभावो भावाभावाः कुतोऽस्य ते॥ ८॥
81041
81042 यो हि देहाहंभावतां प्राप्तः स
81043 देहभावाभावरूपैर्जन्ममरणैर्गृह्यते॥ ८॥
81044
81045 अहंभावो मुधा मोहो मनश्च मृगतृष्णिका।
81046 जडः पदार्थसंभारः कस्याहंकारभावना॥ ९॥
81047
81048 देहाहंभावना किमहंकारस्य उत मनस उत पदार्थवर्गस्य। तत्राद्यौ न
81049 प्रमाणवेद्यावित्यसद्रूपौ। पदार्थास्त्वत्यन्तजडा नाभिमानयोग्या इति
81050 निर्विषया निराश्रया च सेत्याह - अहंभाव इति। अहंभावोऽहंकारः॥ ९॥
81051
81052 रक्तमांसमयो देहो मनो नष्टं विचारणात्।
81053 जडाश्चित्तादयः सर्वे कुतोऽहंभावभावना॥ १०॥
81054
81055 उक्तमेवार्थं भङ्ग्यन्तरेण विस्तरेणाह - रक्तेत्यादिना॥ १०॥
81056
81057 आत्मंभरितया नित्यमिन्द्रियाणि स्थितान्यलम्।
81058 पदार्थाश्च पदार्थत्वे कुतोऽहंभावभावना॥ ११॥
81059
81060 आत्मंभरितया स्वस्वविषयमात्रव्यापृततालक्षणस्वोदरमात्रपूरकतया
81061 नाहंकारपुष्टिलक्षणपरोपकारितयेत्यर्थः। पदार्थत्वे पदार्थस्वरूपे॥ ११
81062 ।।
81063
81064 गुणा गुणार्थे वर्तन्ते प्रकृतौ प्रकृतिः स्थिता।
81065 सदेव सति विश्रान्तं कुतोऽहंभावभावना॥ १२॥
81066
81067 गुणाः सत्त्वादयो गुणानामर्थे प्रकाशप्रवृत्तिमोहलक्षणे स्वव्यापारे।
81068 प्रकृतौ गुणसाम्यावस्थालक्षणे स्वभावे। प्रकृतिः प्रधानाख्या माया।

81069 सद्ब्रह्म सति स्वात्मभूते सत्स्वभावे एव विश्रान्तम् ॥ १२ ॥
81070

81071 सर्वगं सर्वदेहस्थं सर्वकालमयं महत् ।
81072 केवलं परमात्मानं चिदात्मैवेह संस्थितः ॥ १३ ॥
81073

81074 इहास्मिन्देहे यश्चिदात्मा सोऽपि सर्वगत्वादिविशेषणं परमात्मानमेवाहमिति
81075 संधाय स्थितः । सोऽपि नाहंकारास्पदमित्यर्थः ॥ १३ ॥
81076

81077 एवं किमाकृतिः को वा किमादेशश्च किंकृतः ।
81078 किंरूपः किंमयः कोहं किं गृह्णामि त्यजामि किम् ॥ १४ ॥
81079

81080 एवं सति अहमित्येतद्देहमात्राभिमानी किमाकृतिः किंजातीयः
81081 कीदृशसंस्थानो वा तत्त्वतः को वा किमादेशः क इति निर्देशार्हः केन हेतुना
81082 वा कृतः किंवर्णः कस्य विकारः । तद्भावेन किं वा गृह्णामि अतद्भावेन
81083 किं वा त्यजामि ॥ १४ ॥
81084

81085 तेनाहं नाम नेहास्ति भावाभावोपपत्तिमान् ।
81086 अनहंकाररूपस्य संबन्धः केन मे कथम् ॥ १५ ॥
81087

81088 अतो निर्वक्तुमयोग्यत्वान्मिथ्यैवाहंकार इति नात्मनस्तत्संबन्ध इत्याह -
81089 तेनेति । भावत्वे अभावत्वे वा उपपत्तिमान् ॥ १५ ॥
81090

81091 असत्यलमहंकारे संबन्धः कस्य केन कः ।
81092 संबन्धाभावसंसिद्धौ विलीना द्वित्वकल्पना ॥ १६ ॥
81093

81094 द्वित्वकल्पना त्वमहमिति द्वैविध्यकल्पना ॥ १६ ॥
81095

81096 एवं ब्रह्मात्मकमिदं यत्किंचिज्जगति स्थितम् ।
81097 सदेवास्मि तदेवास्मि परिशोचामि किं मुधा ॥ १७ ॥
81098

81099 एवं सद्वस्तुव्यतिरिक्तेदंपदार्थपरिमार्गणेऽपि तस्य मिथयत्वमेव
81100 पर्यवस्यतीति सद्ब्रह्माद्वैतसाम्राज्यं प्रतिष्ठितमिति न शोकस्यावकाश
81101 इत्याह - एवमिति ॥ १७ ॥
81102

81103 एकस्मिन्नेव विमले पदे सर्वगते स्थिते ।
81104 अहंकारकलङ्कस्य कथं नामोदयः कुतः ॥ १८ ॥
81105

81106 सदद्वैतसिद्धिबलादप्यहंकारो निरसितुं शक्य इत्याशयेनाह -
81107 एकस्मिन्निति ॥ १८ ॥
81108

81109 नास्त्येव हि पदार्थश्रीरात्मैवास्तीह सर्वगः ।
81110 पदार्थलक्ष्म्यां सत्यां च संबन्धोस्ति न कस्यचित् ॥ १९ ॥
81111

81112 अस्तु वा पदार्थलक्ष्मीस्तथापि संबन्धो दुर्वच इति न
81113 तत्साधकप्रमाणादिप्रसरात्तत्सिद्धिरिति प्रौढिं निदर्शयन्नाह -
81114 पदार्थलक्ष्म्यामिति ॥ १९ ॥
81115

81116 इन्द्रियैरिन्द्रियैरङ्गैर्मनो मनसि वल्गति ।
81117 चिदलिप्तवपुः केन संबन्धः कस्य किं कथम् ॥ २० ॥
81118

81119 असंबन्धमेवोपपादयति - इन्द्रियैरिति । अङ्गैः स्वावयवत्वेन
81120 कल्पितैरिन्द्रियैरिन्द्रियैः सर्वेन्द्रियैर्मनो मनस्येव स्वप्नवद्वल्गति न

81121 बाह्यार्थान्स्प्रष्टुं क्षमते। चित्तु इन्द्रियैर्बाह्यार्थैश्च
81122 अलिप्ततनुरसङ्गस्वभावा। एवंच कस्य केन सह संबन्धः कथं वा केन
81123 वा सिद्ध्यतीत्यर्थः॥ २०॥
81124
81125 उपलायःशलाकानां संबन्धो न यथा मिथः।
81126 तथैकत्रापि दृष्टानां देहेन्द्रियमनश्चिताम्॥ २१॥
81127
81128 असंबन्धे दृष्टान्तमाह - उपलेति॥ २१॥
81129
81130 असदभ्युत्थिते व्यर्थमहंकारमहाभ्रमे।
81131 ममेदमिदमस्येति विपर्यस्तमिदं जगत्॥ २२॥
81132
81133 कुतस्तर्हि लौकिकानां ममेदं धनमित्यादिव्यवहारस्तत्राह - असदिति।
81134 विपर्यस्तं भ्रान्तम्॥ २२॥
81135
81136 अतत्त्वालोकजातेयमहंकारचमत्कृतिः।
81137 तापेन हिमलेखेव तत्त्वालोके विलीयते॥ २३॥
81138
81139 आत्मनो व्यतिरेकेण न किंचिदपि विद्यते।
81140 सर्वं ब्रह्मेति मे तत्त्वमेतत्तद्भावयाम्यहम्॥ २४॥
81141
81142 इति मे मम प्रतीचस्तत्त्वं यदनुभवसिद्धं वा तत्त्वम्॥ २४॥
81143
81144 अहंकारभ्रमस्यास्य जातस्याकाशवर्णवत्।
81145 अपुनःस्मरणं मन्ये नूनं विस्मरणं वरम्॥ २५॥
81146
81147 इदानीमहंकारमार्जनोपायमाह - अहंकारेति। प्राग्व्याख्यातम्॥ २५॥
81148
81149 समूलं संपरित्यज्य चिरायाहंकृतिभ्रमम्।
81150 तिष्ठाम्यात्मनि शान्तात्मा शरत्खं शरदीव खे॥ २६॥
81151
81152 शरत्खं शरदि खे निर्मले स्वस्वभाव इव॥ २६॥
81153
81154 ददात्यनर्थनिचयं विस्तारयति दुष्कृतम्।
81155 विस्तारयति संतापमहंभावोनुसंहितः॥ २७॥
81156
81157 सति तस्मिन्का क्षतिस्तामाह - ददातीत्यादिना॥ २७॥
81158
81159 स्फुरत्यहंकारघने हृद्व्योम्नि सलिलात्मनि।
81160 विकसत्यभितः कायकदम्बे दोषमञ्जरी॥ २८॥
81161
81162 सलिलात्मनि दुर्वासनासलिलगर्भे॥ २८॥
81163
81164 मरणं जीवितोपान्तं जीवितं मरणान्तगम्।
81165 भावोऽभावाद्व्यवच्छिन्नः कष्टेयं दुःखवेदना॥ २९॥
81166
81167 मरणं मरणादिपारलौकिकदुःखम्। जीवितं पुनर्जन्म तदुपान्तं
81168 तदवधिकम्। एवं जीवितमैहिकदुःखं मरणान्तगं मरणावधिकम्।
81169 भावो भोग्यवर्गः अभावान्नाशाद्व्यवच्छिन्नः खण्डितः॥ २९॥
81170
81171 इदं लब्धमिदं प्राप्स्यामीत्यार्तिर्दाहकारिणी।
81172 न शाम्यत्यर्करत्नानां ग्रीष्मेऽग्निरिव दुर्धियाम्॥ ३०॥

81173
81174 अर्करत्नानां सूर्यकान्तमणीनां ग्रीष्मकाले अग्निरिव न शाम्यति
81175 नित्यमुद्भवत्येवेत्यर्थः ॥ ३० ॥
81176
81177 नास्तीदमिदमस्तीति चिन्ता धावत्यहंकृतिम् ।
81178 जडाशया जडामभ्रमाला शैलावलीमिव ॥ ३१ ॥
81179
81180 जडाशया जडाश्रया जलाश्रया च । धावत्यनुसरति । शैलावलीपक्षे जडां
81181 गुरुतराम् ॥ ३१ ॥
81182
81183 अहंभावे परिक्षीणे शुष्कः संसारपादपः ।
81184 भूयः प्रयच्छत्यरसो न पाषाणवदङ्कुरम् ॥ ३२ ॥
81185
81186 न प्रयच्छति न जनयति । यतः अरसः रागलक्षणाङ्कुरजननशक्तिशन्यः अत
81187 एव पाषाण तुल्यः ॥ ३२ ॥
81188
81189 स्वतृष्णाकृष्णभोगिन्यो देहद्रुमकृतालयाः ।
81190 क्वापि यान्ति विचारात्मन्यागते विनतासुते ॥ ३३ ॥
81191
81192 विचारात्मनि विचाररूपे । विनतासुते गरुडे ॥ ३३ ॥
81193
81194 असदभ्युत्थिते विश्वे तज्जाते भ्रमसन्मये ।
81195 असन्मयपरिस्पन्दे त्वहं त्वं चेति कः क्रमः ॥ ३४ ॥
81196
81197 असतो मिथ्याभूतादज्ञानादभ्युत्थिते अत एव भ्रमादध्यासादेव सन्मये ।
81198 विश्वस्यासत्त्वेपि तत्प्रयुक्तो व्यवहारः सत्यः स्यादित्यत आह -
81199 असन्मयपरिस्पन्दे इति । भेदव्यवहारमात्रस्यासन्मयत्वे त्वमहमिति क्रमो
81200 भेदव्यवहारोऽपि कः ॥ ३४ ॥
81201
81202 इदं जगदुदेत्यादावकारणमकारणात् ।
81203 यदकारणमुद्भूतं [कारणमुच्छूनमित्यपि पाठः]
81204 तत्सदित्युच्यते कथम् ॥ ३५ ॥
81205
81206 अत एवाकारणं सत्यप्रयोजनशून्यमेव अकारणत्वानर्हदिवाज्ञानादुदेति ।
81207 ततः किं तत्राह - यदिति ॥ ३५ ॥
81208
81209 अपर्यन्तपुराकाले मृदि कुम्भ इवाकृतिः ।
81210 देहोऽभवदिदानीं तु तथैवास्ति भविष्यति ॥ ३६ ॥
81211
81212 एवंचोत्पत्तेः पुरो देहादेर्यादृशी स्थितिस्तादृश्येव सर्वदेति सिद्धमित्याह
81213 - अपर्यन्तेति । मृदि कुम्भरूपा आकृतिः संस्थानमिव । तुशब्दोऽप्यर्थे ॥
81214 ३६ ॥
81215
81216 मध्येतरपयोमात्रं कंचित्कालं चलाचलम् ।
81217 आद्यन्तसौम्यते त्यक्त्वा वारि वीचितया यथा ॥ ३७ ॥
81218
81219 उक्तेऽर्थे दृष्टान्तमाह - मध्येति । यथा वारि मध्येतरयोः
81220 पूर्वोत्तरकालयोरविकृतपयोमात्रं मध्ये तु कंचित्कालं चलाचलं
81221 चञ्चलं सदाद्यन्तयोः पूर्वोत्तरकालयोः प्रसिद्धे सौम्यते त्यक्त्वा वीचितया
81222 स्थितं वार्येव न वस्त्वन्तरं तद्वद्देहाद्यपि कालत्रयेऽपि ब्रह्मैव न
81223 वस्त्वन्तरमस्तीत्यर्थः ॥ ३७ ॥
81224

81225 अस्मिन्क्षणपरिस्पन्दे देहे विसरणोन्मुखे |
81226 तरङ्गे च निबद्धास्था ये हतास्ते कुबुद्धयः || ३८ ||
81227
81228 क्षणपरिस्पन्दे अस्मिन्देहे विसरणोन्मुखे तरङ्गे च ये अहंत्वेन
81229 निबद्धास्थास्ते कुबुद्धयस्तन्नाशेनैव हता इत्यर्थः || ३८ ||
81230
81231 प्राक्पुरस्ताच्च सर्वाणि सन्ति वस्तूनि नाभितः |
81232 मध्ये स्फुटत्वमेतेषां कैवास्था हतरूपिणी || ३९ ||
81233
81234 देशतः परिच्छिन्नत्वादपि देहादिवस्तुषु नास्था युक्तेत्याह - प्रागिति |
81235 मध्ये स्वाधिकरणवितस्त्यादिमितदेशमात्रे स्फुटत्वं विद्यमानतया
81236 प्रतीयमानत्वं तदपि कार्त्स्न्यैकदेशाभ्यां विकल्प्य विमर्शे दुर्वचमेवेति
81237 तत्रापि निर्विषयत्वाद्धतरूपिणी आस्था कैव | अनुचितैवेति भावः || ३९ ||
81238
81239 चित्तं पूर्वं पुरस्ताच्च चिद्देशं शान्तमित्यपि |
81240 सदसद्वा स्वसंलीनं मध्येऽस्मिन्किं तवोदितम् || ४० ||
81241
81242 उक्तं न्यायं लिङ्गेपि दर्शयंस्तस्यापि तथात्वमाह - चित्तमिति | चित्तं
81243 चित्तोपलक्षितं लिङ्गं स्वोत्पत्तेः पूर्वं पूर्वकाले पुरस्तात्पुरोदेशे च
81244 चिद्देहं स्वसाक्षिचिन्मात्रस्वभावम् | एवं उत्तरकाले देशान्तरे च शान्तं
81245 नष्टं इति अनयैव [अनयैवेत्यादिर्विचार्योंशः] देशतः परिच्छिन्नमपि
81246 खे संलीनमिवात्यन्ततिरोहितं सदसद्वेति दुर्वचम् | एवंविधं चित्तं मध्ये
81247 सांप्रतमेतद्देशे सद्व्यतिरिक्तं किमुदितम् | न किंचिदित्यर्थः || ४० ||
81248
81249 यथा स्वप्नविकारेषु यथा संभ्रमदृष्टिषु |
81250 यथा वा मदलीलासु यथा नौयानसंभ्रमे || ४१ ||
81251
81252 यदि स्थूलसूक्ष्मदेहाद्यसदेव कीदृशस्तर्हि तत्प्रतिभासस्तत्राह -
81253 यथेत्यादिना | संभ्रमाव्याघ्रचोरादिभयानि तद्दृष्टिषु असत्स्वपि
81254 व्याघ्रादिषु सर्वत्र व्याघ्रादिशङ्का भवति तद्वत् || ४१ ||
81255
81256 यथा धातुविकारेषु यथा चेन्द्रियविक्लवे |
81257 यथातिसंभ्रमानन्दे दोषावेशदशासु च || ४२ ||
81258
81259 धातुविकारेषु वातपित्तादिसन्निपातेषु | चक्षुरादीन्द्रियस्य तिमिरादौ विक्लवे दोषे
81260 द्विचन्द्रादिभ्रमे | अतिसंभ्रमहेतौ अतिप्रियतमलाभादिप्रयुक्ते आनन्दे |
81261 विधुरादीनां कामादिसोषावेशदशासु च यथा सदसतोर्भावाभावयो रूपं
81262 चलं प्रतीतिकालमात्रस्थायि किंचित्कामिन्यादिरूपं दृश्यते झटित्येव
81263 बाधात्क्षीयते च तथैव एषा भ्रान्तिरिति प्रेणान्वयः || ४२ ||
81264
81265 दृश्यते क्षीयते चैव रूपं सदसतोश्चलम् |
81266 तथैवेयमिह त्वेषा काले न्यूनातिरिक्तता || ४३ ||
81267
81268 यो विशेषस्तमाह - इह त्विति | स्वप्नादयोऽल्पकालाः जगद्भ्रमस्तु
81269 यावन्मोक्षमिति काले न्यूनातिरिक्ततैव विशेष इत्यर्थः || ४३ ||
81270
81271 सा च त्वया कृता नित्यं चित्त दुःखसुखोदये |
81272 यथा वियोगयामिन्यो मतयो हन्ति रागिणम् || ४४ ||
81273
81274 हे चित्त सा काले न्यूनातिरिक्तता त्वया व्यावहारिकवस्तुषु सत्यताभ्रान्त्या
81275 वियोगसंयोगाभ्यां नित्यं दुःखसुखयोरुदये निमित्ततया कृता सती त्वां
81276 हन्ति पीडयति | यथा असत्यपि भार्यापुत्रादिमरणे

81277 प्रतारकवाक्यादुत्पन्नास्तन्मरणमतयस्तत्कल्पितवियोगयामिन्यश्च रागिणं
81278 घ्नन्ति तद्वदित्यर्थः ॥ ४४ ॥
81279
81280 मयैवेहासदभ्यासान्मिथ्या सदिव लक्ष्यसे ।
81281 मृगतृष्णेव तेनैतत्त्वत्कृतं मत्कृतं भवेत् ॥ ४५ ॥
81282
81283 अथवा नायं तवापराधः किंतु त्वय्यहंभावाभ्यासिनो ममैवापराधो
81284 येन मिथ्याभूतमपि त्वं सदिव लक्ष्यसे । त्वत्कृतं च सर्वं मत्कृतं
81285 संपन्नमित्यर्थः ॥ ४५ ॥
81286
81287 यदिदं किंचिदाभोगि तत्सर्वं दृश्यमण्डलम् ।
81288 अवस्त्विति विनिर्णीय मनो यात्यमनःपदम् ॥ ४६ ॥
81289
81290 अत एव त्वदीयविवेकज्ञानादेव मदपराधरूपस्य तव शान्तिरित्याह -
81291 यदिदमिति ॥ ४६ ॥
81292
81293 अवस्त्विदमिति स्फारे रूढे मनसि निश्चये ।
81294 हेमन्त इव मञ्जर्यः क्षीयन्ते भोगवासनाः ॥ ४७ ॥
81295
81296 त्वद्धेतुभोगवासनानामपि तत एव क्षय इत्याह - अवस्त्विति ॥ ४७ ॥
81297
81298 चित्त्वाद्दृष्टात्मना नूनं संत्यक्तमननौजसा ।
81299 मनसा वीतरागेण स्वयं स्वस्थेन भूयते ॥ ४८ ॥
81300
81301 अथवा चित्प्रतिबिम्बग्रहणेन चित्त्वाद्वीतरागेण अत एव संत्यक्तमननव्यसनेन
81302 चरमसाक्षात्कारवृत्या दृष्टात्मना मनसा स्वयमेव स्वस्थेन
81303 मोक्षविश्रान्तिमता भूयते न मया सदैकरूपत्वादित्याशयेनाह -
81304 चित्त्वादित्यादिना ॥ ४८ ॥
81305
81306 परमात्मानले क्षिप्तं संवृत्यावयवं स्वयम् ।
81307 दग्ध्वात्मानमलं चित्तं शुद्धतामेति शाश्वतीम् ॥ ४९ ॥
81308
81309 चित्तं स्वयमेव बहिः प्रवृत्तं स्वावयवमिन्द्रियादि संवृत्य तत्त्वबोधेन
81310 परमात्मानलक्षिप्तं सदात्मानं चित्तस्वरूपं दग्ध्वा अलमत्यन्तं
81311 शाश्वतीं नित्यां शुद्धतामेतीत्यर्थः ॥ ४९ ॥
81312
81313 देहमन्यतया दृष्ट्वा त्यक्त्वा विषयवासनाम् ।
81314 विनाशमुररीकृत्य मनो जयति वीरवत् ॥ ५० ॥
81315
81316 यथा वीरः पुरुषो युद्धे स्वदेहं स्वर्गगामिस्वान्यतया दृष्ट्वा
81317 तद्देहसंबन्धिगृहक्षेत्रधनादिविषयवासनां च त्यक्त्वा
81318 मरणमप्यङ्गीकृत्य ब्रह्मलोकं जयति तद्वन्मनोऽपीत्यर्थः ॥ ५० ॥
81319
81320 मनः शत्रुः शरीरस्य शरीरं मनसो रिपुः ।
81321 एकाभावेन नश्येते आधाराधेयकार्यवत् ॥ ५१ ॥
81322
81323 इदानीं देहमनसोः परस्परतप्यतापकतया विरोधं
81324 परस्परतादात्म्याभिमानात्परस्पराभिवृद्ध्या
81325 परस्परोपजीव्यतामेकतराभिमानोच्छेदेनोभयोच्छेदं च विस्तरेण
81326 दर्शयितुमुपक्रमते - मन इति । शत्रुरिपुशब्दौ तापकपरौ । एकाभावेन
81327 एकतरवासनोच्छेदेन । यथा आधाराधेययोर्जलघटयोः कार्यभूतः संयोग
81328 एकतरनाशेन नश्यति तद्वत् ॥ ५१ ॥

81329
81330 रागद्वेषवतोर्नित्यमन्योन्यातिविरुद्धयोः।
81331 एतयोर्मूलकाषेण विनाशः परमं सुखम्॥ ५२॥
81332
81333 तथाच परस्परोपजीवित्वाद्रागवतोः परस्परोपतापकत्वाद्द्वेषवतोर्व्याघ्रयोः
81334 सतोर्वनहरिणस्येव एतयोः सतोर्न जीवस्य सुखं किंत्वेतयोर्मूलकाषेण
81335 मूलाज्ञाननाशेन विनाश एव परमं सुखमित्यर्थः॥ ५२॥
81336
81337 एतयोरेकसंस्थाने मृतिरित्येव या कथा।
81338 सा व्योम्न्यया स्त्रिया भुक्ता धरेति कथया समा॥ ५३॥
81339
81340 ननु मरणेन भोगायतनदेहनाशादेव सर्वदुःखपरिहारः किं न
81341 स्यात्तत्राह - एतयोरिति। देहनाशेऽप्येकस्य मनसः संस्थाने देहकल्पनाया
81342 अनिवारणान्मृतिरिति कथा व्योम्नि अया गच्छन्त्या स्त्रिया धरा भूमिर्भुक्ता
81343 ग्रस्ता इति कथया समा। असंभावितार्थेत्यर्थः। अयतेः क्विपि यलोपे टापि
81344 सवर्णदीर्घे आ तया अया। अयःस्त्रिया इति पाठे तु अयोविकारभूतया स्त्रीप्रतिमया
81345 व्योम्नि धरा भुक्तेति कथया समेत्यर्थः। अयःप्रतिमाया व्योम्नि गमनं तत्र
81346 धराभक्षणं च यथा अत्यन्तासंभावितं तथा मनसि सति मरणमपीति
81347 भावः॥ ५३॥
81348
81349 अकृत्रिमविरोधस्थौ यत्र संघटितावुभौ।
81350 धारा इव पतन्त्येव तत्रानर्थपरम्पराः॥ ५४॥
81351
81352 तयोः सतोः का क्षतिस्तत्राह - अकृत्रिमेति। युध्यतोरन्तराले स्थितस्य देहे
81353 खड्गशरादिधारा इव॥ ५४॥
81354
81355 मिथो विरुद्धसंसर्गे रतिमेत्यधमो हि यः।
81356 त्यक्तव्यः स पतद्वारावग्निराशावलेपने॥ ५५॥
81357
81358 मिथो विरुद्धे देहमनसी संसृज्येते अस्मिन्निति विरुद्धसंसर्गो
81359 वैषयिकसुखभोगस्तस्मिन् योऽधमो रतिमास्थामेति स पुरुषः अलेपने निरावरणे
81360 पतद्वारौ पतन्ति वारीणि समुद्रोदकानि यस्मिंस्तथाविधे अग्निराशौ वडवानले
81361 त्यक्तव्यः। स तत्रापि रतिमेष्यतीत्यर्थः॥ ५५॥
81362
81363 संकल्पेन मनः पुष्ट्वा शरीरं बालयक्षवत्।
81364 आयुरेवाशनान्यस्मै स्वदुःखानि प्रयच्छति॥ ५६॥
81365
81366 रागद्वेषवतोरिति यदुक्तं तत्र मनसो देहे रागद्वेषांशौ दर्शयति -
81367 संकल्पेनेति। मनः स्वसंकल्पेन बालो यक्षमिव शरीरं परिकल्प्य अस्मै आ
81368 आयुः यावदायुःकालं अशनं परिकल्प्य पुष्ट्वा स्वाभिनिवेशनिमित्तानि
81369 सर्वदुःखानि प्रयच्छतीत्यर्थः॥ ५६॥
81370
81371 तर्दुःखैस्तापितो देहो मनो हन्तुमथेच्छति।
81372 पुत्रोऽपि हन्ति पितरमाततायिपदं गतम्॥ ५७॥
81373
81374 देहस्यापि मनसि द्वेषांशं सहनिमित्तेन दर्शयति - तैरिति।
81375 दुर्विस्ऽयसेवनेन मनसि रागद्वेषशोकमोहपापादिजननेन
81376 तत्पीडयितुमिच्छतीत्यर्थः। ननु मनोजनितत्वात्पुत्रप्रायो देहः पितृस्थानीयं
81377 मनः कथं हन्तुमिच्छति तत्राह - पुत्र इति। उद्यतासिं विषाग्निं च
81378 शापोद्यतकरं तथा। आथर्वणेन हन्तारं पिशुनं चैव राजसु।
81379 भार्यातिक्रमिणं चैव विद्यात्सप्तातताियिनः। इति
81380 विष्णुकात्यायनोक्तानामाततायिनां पदं स्वपीडाव्यवसायं गतं

81381 प्राप्तमित्यर्थः ॥ ५७ ॥
81382
81383 नास्ति शत्रुः प्रकृत्यैव न च मित्रं कदाचन ।
81384 सुखदं मित्रमित्युक्तं दुःखदाः शत्रवः स्मृताः ॥ ५८ ॥
81385
81386 तस्य शत्रुतां लोकप्रसिद्धन्यायेनोपपादयति - नास्तीति ॥ ५८ ॥
81387
81388 देहो दुःखान्यनुभवन्स्वमनो हन्तुमिच्छति ।
81389 देहं मनः स्वदुःखानां संकेतं कुरुते क्षणात् ॥ ५९ ॥
81390
81391 संकेतं निकेतम् । भोगायतनमिति यावत् ॥ ५९ ॥
81392
81393 एवं मिथो दुःखदयोः श्लिष्टयोः कः सुखागमः ।
81394 एतयोर्देहमनसोर्जात्यैवातिविरुद्धयोः ॥ ६० ॥
81395
81396 विरोधमुपपादितमनूद्य तत्र सुखदौर्लभ्यमुक्तमुपसंहरति - एवमिति
81397 ॥ ६० ॥
81398
81399 मनस्येव परिक्षीणे न देहो दुःखभाजनम् ।
81400 तत्क्षयोत्कतया नित्यं देहोऽपि परिधावति ॥ ६१ ॥
81401
81402 मनसि क्षीणे तु न देहस्य दुःखप्रसक्तिरस्तीत्याह - मनसीति । अतस्तत्क्षये
81403 उत्कतया सोत्कण्ठतया ज्ञानतत्साधनोपायेषु परिधावति । यतते इति यावत् ॥ ६१ ॥
81404
81405 नष्टानष्टमनर्थाय शरीरं पदमापदाम् ।
81406 अलब्धात्मविवेकेन मनसा सुप्रजायते ॥ ६२ ॥
81407
81408 तर्हि मनोऽपि देहनाशायैव कुतो न यतते तत्राह - नष्टेति ।
81409 अलब्धात्मविवेकेन मनसा नष्टं नाशितमनाशितं वा शरीरमापदां
81410 पदं सदनर्थायैव सुप्रजायते इति तन्नाशान्मनसो नेष्टसिद्धिरित्यर्थः ॥ ६२ ॥
81411
81412 एते मनःशरीरे हि मिथः पीवरतां गते ।
81413 जडरूपे हि वपुषा पयोदसरसी यथा ॥ ६३ ॥
81414
81415 मिथः अनुग्रहादिति शेषः । सरस्यपि हविर्यज्ञादिनिष्पत्तिद्वारा
81416 पयोदानुग्राहिका क्वचित्संभवेदित्युपमोपपत्तिः ॥ ६३ ॥
81417
81418 मिथो दुःखाय संपन्ने एकरूपे द्विधा स्थिते ।
81419 व्यवहारपरे सार्धं लोके वार्यनलाविव ॥ ६४ ॥
81420
81421 मिथो विरुद्धयोरनयोः किमर्थं सहभाव इति चेद्वारिवह्न्यो पाकार्थमिव
81422 पुरुषस्य भोगमोक्षोपायव्यवहारार्थमित्याशयेनाह - मिथ इति ।
81423 विरुद्धतया द्विधा स्थिते अप्येते अन्योन्यतादात्म्याध्यासादेकरूपे सति दुःखाय
81424 दुःखानि भोक्तुं परिहर्तुं च साकं भोगमोक्षव्यवहारसाधनपरे
81425 संपन्ने इत्यर्थः ॥ ६४ ॥
81426
81427 चित्ते क्षयिणि संक्षीणे देहो ह्यामूलितो भवेत् ।
81428 वर्धमाने तरुरिव शतशाखः प्रवर्तते ॥ ६५ ॥
81429
81430 देहस्य चित्ताधीनतोक्तेः फलमाह - चित्ते इति ॥ ६५ ॥
81431
81432 क्षीयते मनसि क्षीणे देहः प्रक्षीणवासनः ।

81433 मनो न क्षीयते क्षीणे देहे तत्क्षपयेन्मनः || ६६ ||
81434
81435 संकल्पपादपं तृष्णालतं छित्त्वा मनोवनम् |
81436 विततां भुवमासाद्य विहरामि यथासुखम् || ६७ ||
81437
81438 अतो मन एव नाशयामीत्याह - संकल्पेति || ६७ ||
81439
81440 प्रक्षीयमाणमेवेदं न मनो मनसि स्थितम् |
81441 प्रशाम्यद्वासनाजालं प्रावृडन्त इवाम्बुदः || ६८ ||
81442
81443 संकल्पनाशे च मनो मनसि मनःस्वभावेन स्थितमिति
81444 प्रशाम्यद्वासनाजालं सत् प्रावृडन्तेऽम्बुद इव नङ्क्ष्यतीत्यर्थः || ६८ ||
81445
81446 धातूनां संनिवेशोऽयं देहनामा रिपुर्मम |
81447 प्रक्षीयमाणे मनसि गलत्वेषोऽवतिष्ठतु || ६९ ||
81448
81449 त्वगसृङ्मांसमेदोस्थिमज्जाशुक्राख्यानां धातूनां
81450 संनिवेशात्मकोऽयं देहो मनसि प्रक्षीयमाणे गलतु तिष्ठतु वा न
81451 काचित्क्षतिरित्यर्थः || ६९ ||
81452
81453 यदर्थं किल भोगश्रीर्वाञ्छते स्वकलेवरम् |
81454 तन्मे नापि न तस्याहं कोऽर्थः सुखलवेन मे || ७० ||
81455
81456 तिष्ठति देहे दुःखमपि किं न स्यादिति चेत्तत्संबन्धहेतोर्मनसो
81457 नाशात्संबन्ध एव नास्ति दूरे दुःखप्रसक्तिरित्याशयेनाह - यदर्थमिति ||
81458 ७० ||
81459
81460 नाहं देह इति त्वस्मिन्युक्तिमाकर्णय क्रमे |
81461 सर्वाङ्गेष्वपि सत्स्वेव शवः कस्मान्न वल्गति || ७१ ||
81462
81463 नाहं देह इत्यस्मिन् क्रम्यते बुध्यत इति
81464 क्रमोऽवश्यज्ञातव्यार्थस्तस्मिन्युक्तिमुपपत्तिम् | वल्गति दर्शनश्रवणादिना
81465 व्यवहरति || ७१ ||
81466
81467 तस्माद्देहादतीतोऽहं नित्योऽनस्तमितद्युतिः |
81468 यः सङ्गं भास्वता प्राप्य वेद्मि व्योमनि भास्करम् || ७२ ||
81469
81470 तस्माच्छवस्य बोधाद्यदर्शनात् | यो विभुत्वेन सूर्यमण्ड।एऽपि
81471 सत्त्वाद्भास्वता सङ्गं प्राप्य व्योमनि भास्करंवेद्मि स एव
81472 चिद्रूपोऽहमित्यर्थः || ७२ ||
81473
81474 नाज्ञोऽहं नच मे दुःखं नानर्थो न च दुःखिता |
81475 शरीरमस्तु मावास्तु स्थितोस्मि विगतज्वरः || ७३ ||
81476
81477 यत्रात्मा तत्र न मनो नेन्द्रियाणिन वासनाः |
81478 पामराः परितिष्ठन्ति निकटे न महीभृतः || ७४ ||
81479
81480 भूम्नि तु मन आदेः प्रसक्तिरेव नास्तीत्याह - यत्रेति | श्रेष्ठसंनिधौ
81481 क्षुद्राणामनवस्थाने लोकप्रसिद्धिमुदाहरति - पामरा इति | महीभृतो
81482 राज्ञः || ७४ ||
81483
81484 पदं तदनुयातोऽस्मि केवलोस्मि जयाम्यहम् |

81485 निर्वाणोस्मि निरंशोस्मि [निरीहोस्मि निरंशोस्मि इति व्युत्क्रमेण
81486 क्वचित्पठ्यते] निरीहोस्मि निरीप्सितः ॥ ७५ ॥
81487
81488 तत्पदमनुयातः प्राप्तोऽस्मि ॥ ७५ ॥
81489
81490 इदानीमस्य्यसंबद्धो मनोदेहेन्द्रियादिभिः ।
81491 पृथक्कृतस्य तैलस्य तिलैर्विगलनैरिव ॥ ७६ ॥
81492
81493 स्वस्मात्पदवरादस्माल्लीलया चलितस्य मे ।
81494 पृथक्कृतमतेः किंच परिवारो ह्ययं शुभः ॥ ७७ ॥
81495
81496 किंच प्रारब्धशेषभोगलीलया स्वात्मरूपात्पदवराद्व्यवहाराभासे चलितस्य
81497 पूर्ववासनया पृथक्कृतमतेरयं देहेन्द्रियादिर्मे परिवारः परिजन इव
81498 विनोदहेतुरित्यर्थः ॥ ७७ ॥
81499
81500 स्वच्छतोर्जितता सत्ता हृद्यता सत्यता ज्ञता ।
81501 आनन्दितोपशमिता सदा च मृदुभाषिता ॥ ७८ ॥
81502
81503 तस्यां लीलायां स्वच्छतादिगुणसंपदः स्वस्य हृदयवल्लभाः कान्ता इति
81504 रूपयति - स्वच्छतेत्यादित्रिभिः । ऊर्जितता पूर्णकामता । ज्ञता विदितात्मता ॥
81505 ७८ ॥
81506
81507 पूर्णतोदाराअ सत्या कान्तिमत्तैकतानता ।
81508 सर्वैकता निर्भयता क्षीणद्वित्वविकल्पता ॥ ७९ ॥
81509
81510 उदारता निर्लोभता । सत्या अबाधितस्वभावता ॥ ७९ ॥
81511
81512 नित्योदिताः समाः स्वस्थाः सुन्दर्यः सुभगोदयाः ।
81513 ममैकात्ममतेर्नित्यं कान्ता हृदयवल्लभाः ॥ ८० ॥
81514
81515 एता मम नित्यमुदिता अभ्युदयशालिन्यः कान्ताः ॥ ८० ॥
81516
81517 सर्वथा सर्वदा सर्वं सर्वस्मिन्संभवत्यतः ।
81518 सर्वं प्रति मम क्षीणे वाञ्छावाञ्छे सुखासुखे ॥ ८१ ॥
81519
81520 संभवति कल्पनयेति शेषः । अतः सर्वं विषयजातं प्रति वाञ्छावाञ्छे
81521 रागद्वेषौ । सुखासुखे तत्फले सुखदुःखे ॥ ८१ ॥
81522
81523 विगतमोहतया विमनस्तया
81524 गतविकल्पनचित्ततया स्फुटम् ।
81525 उपरमाम्यहमात्मनि शीतले
81526 घनलवः शरदीव नभस्तले ॥ ८२ ॥
81527
81528 अतोऽहं शरदि नभस्तले घनलवो मेघखण्ड इव शीतले निस्तापे आत्मनि
81529 दृश्यभावं परित्यज्य विश्राम्यामीत्यर्थः ॥ ८२ ॥
81530
81531 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे०
81532 मोक्षोपायेषूपशमप्रकरणे उद्दालकविचारविलासो नाम त्रिपञ्चाशः
81533 सर्गः ॥ ५३ ॥
81534
81535 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
81536 उद्दालकविचारविलासो नाम त्रिपञ्चासः सर्गः ॥ ५३ ॥

चतुःपञ्चाशः सर्गः ५४

श्रीवसिष्ठ उवाच।

इति निर्णीय ततया धिया धवलया मुनिः।
बद्धपद्मासनस्तस्थावर्धोन्मीलितलोचनः॥ १॥

दहनाप्लावनाद्यैः स्वां भावयन्वैष्णवीं तनुम्।
धूत्वा विकल्पान्विश्रान्तः समाधौ स इतीर्यते॥ १॥

धवलया विशुद्धया ततया अक्षुद्रया धिया इति उक्तरीत्या निर्णीय॥ १॥

ओमित्येतत्परं ब्रह्म निर्णीय स मुनिस्तदा।
ओंकारोच्चारितो येन तेनाप्तं परमं पदम्॥ २॥

स मुनिरुद्दालकः। येन ओंकार उच्चारितस्तेन परमं पदमाप्तं प्राप्तमेव।
यलोपासिद्धेः संधिरार्षः। यत ओमित्येतदक्षरं परस्य
ब्रह्मणोऽभिधानत्वात्प्रतीकत्वाच्च परमेव ब्रह्म इति निर्णीय तार उच्चैः स्वरो
यस्य तथाविधम्। ऊर्ध्वगतो ध्वनिर्यस्य तथाविधं ओङ्कारं अकरोत्
उच्चारितवानिति परेणान्वयः॥ २॥

ओंकारमकरोत्तारस्वरमूर्ध्वगतध्वनिम्।
सम्यगाहतलाङ्गूलं घण्टाकुण्डमिवारवम्॥ ३॥

सम्यगाहतं लङ्गूलं लम्बमानजिह्वाकारं लोहं यस्मिंस्तथाविधं
घण्टायाः कुण्डं मुखाकाशमारवं नादमिव॥ ३॥

ओमुच्चारयतस्तस्य संवित्तत्त्वे तदुन्मुखे।
यावदोंकारमूर्धस्थे वितते विमलात्मनि॥ ४॥

कियत्कालमोंकारमकरोत्तत्राह - ओंमिति। ओंकारं
पुनःपुनरुच्चारयतस्तस्योद्दालकस्य मूलाधारमारभ्य
ब्रह्मरन्ध्रपर्यन्तं प्रसिद्धायामस्योंकारस्य मूर्धस्थे
अर्धमात्रोपरमोर्ध्वमभिव्यक्ते [अर्धे मात्रोपरमो इति पाठः] वितते
अमलात्मनि ब्रह्मणि संविदोंकाराकारवृत्त्युपहितं चैतन्यं तत्त्वं
कूटस्थजीवचैतन्यं च यावत्तदुन्मुखे अखण्डब्रह्मचैतन्योन्मुखे
भवतस्तावत्कालमोंकारमकरोदिति पूर्वेण संबन्धः॥ ४॥

सार्धत्र्यंशात्ममात्रस्य प्रथमेंऽशे स्फुटारवे।
प्रणवस्य समाक्षुब्धप्राणारणितदेहके॥ ५॥

तत्र निर्विकल्पसमाधिप्रतिष्ठायोग्यतासिद्ध्यर्थं प्रथमं तेनैव प्रणवेन
स्थूलदेहस्य
शोषणादहनदुष्टभस्मांशनिरसनाप्लावनदिव्यदेहान्तरनिर्माणाद्यपि
प्रथमं तद्भावनया वृत्तमित्याह - सार्धत्र्यंशेत्यादिना।
सार्धत्र्यंशा अर्धमात्रासहिता अकारोकारमकाराख्या आत्ममात्राः
स्वावयवा यस्य तथाविधस्य प्रणवस्य प्रथमेंऽशे उदात्ते अकारभागे
स्फुटारवे उच्चैःस्वरेणाभिव्यक्ततारभावे अत एव
सम्यगाक्षुब्धैर्बहिर्निर्गमनोद्युक्तैः प्राणैर्मूलाधारमारभ्य
ओष्ठपुटावधि रणितदेहके जाते सति रेचकाख्यः प्राणनिष्क्रमणक्रमोऽखिलं

81589 कायं रिक्तीचकार रेचनेन शोषयामासेति द्वयोरर्थः ॥ ५ ॥
81590
81591 रेचकाख्योऽखिलं कायं प्राणनिष्क्रमणक्रमः ।
81592 रिक्तीचकार पीताम्बुरगस्त्य इव सागरम् ॥ ६ ॥
81593
81594 अतिष्ठत्प्राणपवनश्चिद्रसापूरिताम्बरे ।
81595 त्यक्तदेहः परित्यक्तनीडः खग इवाम्बरे ॥ ७ ॥
81596
81597 तस्य रेचितः प्राणपवनः क्वातिष्ठत्तत्राह - अतिष्ठदिति । चिद्रसेन
81598 ब्रह्मभावनाभिव्यक्तहार्दरसेन आपूरिते अम्बरे बाह्याकाशे ॥ ७ ॥
81599
81600 हृदयाग्निर्ज्वलज्ज्वालो ददाह निखिलं वपुः ।
81601 उत्पातपवनोद्भूतो दावः शुष्कमिव द्रुमम् ॥ ८ ॥
81602
81603 तदानीं भावनया यद्वृत्तं तदाह - हृदयाग्निरिति । प्राणानां
81604 निष्क्रमणसंघर्षणाद्धृदये भावनयोद्भूतो वह्निः । दवे अरण्ये भवो
81605 दावोऽग्निः ॥ ८ ॥
81606
81607 यावदित्थमवस्थैषा प्रणवप्रथमक्रमे ।
81608 बभूव न हठादेव हठयोगो हि दुःखदः ॥ ९ ॥
81609
81610 प्रणवस्य पूर्वोक्ते प्रथमक्रमे प्रथमेंशे । इदं च सर्वं भावनया
81611 वृत्तं न हठादेव । तत्कुतस्तत्राह - हठयोग इति । हठात्प्राणानां
81612 निर्गमने मूर्च्छामरणादिप्रसङ्गादिति भावः ॥ ९ ॥
81613
81614 अथेतरांशावसरे प्रणवस्य समस्थितौ ।
81615 निष्कम्पकुम्भको नाम प्राणानामभवत्क्रमः ॥ १० ॥
81616
81617 इतरोंश उकारभागस्तस्य अनुदात्तमन्द्रोच्चारणावसरे
81618 कुम्भस्थजलवन्निश्चलपूर्णत्वात्कुम्भको नाम क्रमः ॥ १० ॥
81619
81620 न बहिर्नान्तरे नाधो नोर्ध्वे नाशासु तत्र ते ।
81621 संक्षोभमगमन्प्राणां आपः संस्तम्भिता इव ॥ ११ ॥
81622
81623 उक्तं कुम्भकनाम विशदयति - न बहिरिति ॥ ११ ॥
81624
81625 दग्धदेहपुरो वह्निः शशामाशनिवत्क्षणात् ।
81626 अदृश्यत सितं भस्म शारीरं हिमपाण्डुरम् ॥ १२ ॥
81627
81628 अशनिवद्वैद्युताग्निवत् ॥ १२ ॥
81629
81630 यत्र कर्पूरशय्यायां सुप्तानीव सुखोचितम् ।
81631 शरीरास्थीनि लक्ष्यन्ते निष्पन्दानि सितानि च ॥ १३ ॥
81632
81633 यत्र यस्यामवस्थायां शरीरास्थीनि कर्पूरधूलिरचितायां शय्यायां
81634 सुप्तानीव भावनादृशा लक्ष्यन्ते ॥ १३ ॥
81635
81636 तद्भस्म पवनानीतं सास्थि वायुरयोजयत् ।
81637 स्वदेहे भृशमुत्सन्ने त्रिनेत्रव्रतवानिव ॥ १४ ॥
81638
81639 वात्या पवनैरूर्ध्वमानीतं सास्थि अस्थिसहितं तद्भस्म वायुरूर्ध्वप्रवाही
81640 चण्डपवनस्त्रिनेत्रस्य रुद्रस्य व्रतमस्थिभस्मधारणं तद्वानिव

81641 भृशमुत्सन्ने तपःकृश इव अलक्ष्ये स्वदेहे अयोजयत् | उद्धूलयामासेति
81642 यावत् || १४ ||
81643
81644 तच्चण्डपवनोद्धूतमावृत्य गगनं क्षणात् |
81645 शरदीवाभ्रमिहिका क्वापि भस्मास्थिमद्ययौ || १५ ||
81646
81647 तत् अस्थिमद्भस्म क्वापि ययौ || १५ ||
81648
81649 यावदित्थमवस्थैषा प्रणवस्यापरे क्रमे |
81650 बभूव न हठादेव हठयोगो हि दुःखदः || १६ ||
81651
81652 प्रणवस्य मध्यमभागसाध्ये कुम्भकाख्ये क्रमे इत्थमेषाप्यवस्था
81653 भावनयैव बभूव नतु हठात् || १६ ||
81654
81655 ततस्तृतीयावसरे प्रणवस्योपशान्तिदे |
81656 पूरणात्पूरको नाम प्राणानामभवत्क्रमः || १७ ||
81657
81658 तृतीयावसरे तृतीयभागोच्चारणावसरे | यद्यपि रेचकपूरककुम्भकेषु
81659 समग्रस्यैव प्रणवस्य साधनत्वं प्रसिद्धं तथापि रेचके आदिभाग एव
81660 तायते कुम्भके मध्यमभाग एव पूरके चरमभाग एव |
81661 कण्ठान्निर्गच्छता प्राणेन कण्ठ्यभागस्यैवाभिव्यक्तेः
81662 संकुचद्भ्यामोष्ठाभ्यामुकारभागस्यैवाभिव्यक्तेरोष्ठसंपुटिते
81663 मकारभागाभिव्यक्तौ पुनः प्रविशत्यपि प्राणे तत्संस्कारस्यैवानुवर्तनादिति
81664 तत्तद्भागावसरविभागोक्तिरिति बोध्यम् || १७ ||
81665
81666 अस्मिन्नवसरे प्राणाश्चेतनामृतमध्यगाः |
81667 व्योम्नि शीतलतामीयुर्हिमसंस्पर्शसुन्दरीम् || १८ ||
81668
81669 चेतना जीवचित् तस्यां भावितं यदमृतं तन्मध्यगाः | व्योम्नि बहिराकाशे ||
81670 १८ ||
81671
81672 क्रमाद्गगनमध्यस्थाश्चन्द्रमण्डलतां ययुः |
81673 धूमा गगनकोशस्थाः शीतलाम्बुदतामिव || १९ ||
81674
81675 गगनकोशस्था धूमा नीहारभागाः शीतलाम्बुदभावमिव || १९ ||
81676
81677 कलाकलापसंपूर्णे ते तस्मिंश्चन्द्रमण्डले |
81678 पुण्यराशाविवापूर्णे रसायनमहार्णवे || २० ||
81679
81680 अमृतमयानां कलानां कलापैः संघातैः संपूर्णे अत एव
81681 रसायनमहार्णवे तस्मिंश्चन्द्रमण्डले पुण्यराशौ
81682 धर्ममेघाख्यसमाधाविवाह्लादेनापूर्णे ते प्राणवायवो रसायनमया
81683 अमृतमयाः किरणधाराः संपन्ना इति परेणान्वयः || २० ||
81684
81685 रसायनमया धाराः संपन्नाः प्राणवायवः |
81686 मणियष्टिसमाकारा जालेष्विन्दोरिवांशवः || २१ ||
81687
81688 मणियष्टिः स्फटिकदण्डस्तत्समाकाराः || २१ ||
81689
81690 सा पपाताम्बराद्धारा शेषे शारीरभस्मनि |
81691 रसायनी हरशिरःपतितेव सुरापगा || २२ ||
81692

81693 शेषे पवनावधूतावशिष्टे | रसानामयनी प्रवहणी || २२ ||
81694
81695 उदभूदिन्दुबिम्बाभं चतुर्बाहुवपुस्तया |
81696 प्रस्फुरन्मन्दरादब्धेः पारिजात इव द्रुमः || २३ ||
81697
81698 तया धारया | मथनेन प्रस्फुरन्मन्दरो यस्मिंस्तथाविधादब्धेः पारिजातो
81699 द्रुम इव || २३ ||
81700
81701 उद्दालकशरीरं तन्नारायणतयोदितम् |
81702 प्रफुल्लनेत्रवक्त्राब्जमाबभौ दीप्तिसुन्दरम् || २४ ||
81703
81704 नारायणतया नारायणशरीरतया || २४ ||
81705
81706 रसायनमयाः प्राणास्तच्छरीरमपूरयन् |
81707 सलिलौघा इव सरो वृक्षं मधुरसा इव || २५ ||
81708
81709 मधौ वसन्ते पल्लवोद्गमहेतवो भौमा रसाः वृक्षमिव चेति परमोपमा ||
81710 २५ ||
81711
81712 अन्तःकुण्डलिनीं प्राणाः पूरयामासुराद्दताः |
81713 चक्रानुवर्तप्रसृतां पयांसीव सरिद्वराम् || २६ ||
81714
81715 चक्राकारैरनुवृत्तैरावर्तैः प्रसृतां प्रवहन्तीं सरिद्वरां गङ्गाम् |
81716 सरित्पतिम् इति पाठे प्रसृतमिति पाठ्यम् || २६ ||
81717
81718 प्रकृतस्थं बभूवास्य तच्छरीरं द्विजन्मनः |
81719 प्रावृट्शरीरविगमे धौतं तलमिवावनेः || २७ ||
81720
81721 दहनप्लावनादिना विष्णुशरीरात्मनोत्पत्तिकथनस्य प्रयोजनमाह -
81722 प्रकृतस्थमिति | यथा अवनेस्तलं शरदि चरमवृष्ट्या धौतं
81723 सद्यःशोषितं च सत् प्रावृट्कालप्रसिद्धस्य पङ्कशैवलादिदूषितस्य
81724 शरीरस्य स्वाकारस्य विगमे प्रसन्नं निर्मलं च सद्यवहारिणां
81725 प्रकृतयात्रादिकार्ययोग्यं भवति तथा अस्य तत् शरीरमपि
81726 दहनप्लावनादिभावनाधौतं विकलुषं सत्प्रकृतसमाधिकार्यस्थं
81727 बभूवेत्यर्थः || २७ ||
81728
81729 अथ पद्मासनगतः कृत्वा देहे स्थितिं दृढम् |
81730 आलान इव मातङ्गं निबद्धयेन्द्रियपञ्चकम् || २८ ||
81731
81732 पद्मासनबन्धेन स्थितिं कृत्वा देहे इन्द्रियपञ्चकं बद्ध्वा || २८ ||
81733
81734 निर्विकल्पसमाध्यर्थंव्यवसायमुपाददे |
81735 स्वभावं स्वच्छतां नेतुं शरत्काल इवामलम् || २९ ||
81736
81737 स्वभावं स्वात्मानं स्वमनो वा || २९ ||
81738
81739 प्रशान्तवातहरिणमाशादिगणगामिनम् |
81740 चिन्तया हृदयं निन्ये दूराद्रज्ज्वेव कीलकम् || ३० ||
81741
81742 स्वभावमेव विशिनष्टि - प्रशान्तेति | प्राणायामाभ्यासात्प्रशान्ताः
81743 प्राणादिवातहरिणा यस्मिन् | आशा तृष्णालोभ उत्कलिका
81744 प्रतीक्षेत्यादिभेदप्रसिद्धेन गणेन बहिर्गमनशीलं स्वभावं

81745 प्रशान्तवातहरिणं कृत्वा स्वच्छतां नेतुं व्यवसायमुपाददे इति
81746 पूर्वेणान्वयः | एवं कुर्वतो यद्वृत्तं तदाह - चिन्तयेति | तस्य हृदयं
81747 मनः पूर्वानुभूतगृहक्षेत्रपुत्रमित्रादिचिन्तया निन्ये | यथा
81748 अदृढनिखातमश्वादिबन्धनकीलकं तदाकृष्टया रज्ज्वा उत्खायापनीयते
81749 तद्वत् || ३० ||
81750
81751 धावमानमधो मत्तं चित्तं विमलमाकुलम् |
81752 बलात्संरोधयामास सेतुर्जलमिव द्रुतम् || ३१ ||
81753
81754 तदा स यच्चकार तदाह - धावमानमिति | धावमानं चित्तं
81755 विवेकबलाद्विमलं कृत्वा संरोधयामासेत्यर्थः | द्रुतं द्रवणोन्मुखं
81756 जलं सेतुरालिरिव | द्रुतं शीघ्रमिति वा || ३१ ||
81757
81758 निमिमील दृशावर्धं परिपक्ष्मलपक्ष्मके |
81759 निस्पन्दतारामधुरे संध्याकाल इवाम्बुजे || ३२ ||
81760
81761 ततः स किं चकार तदाह - निमिमीलेति | परस्पराग्रग्रथनात्परित उभयतः
81762 पक्ष्मलानि पक्ष्मवन्तीव पक्ष्माणि ययोस्तथाविधे | निस्पन्दाभ्यां
81763 ताराभ्यां कनीनिकाभ्यां मधुरे सुन्दरे दृशौ अर्धं निमिमील निमीलितवान्
81764 | अम्बुजपक्षे निस्पन्दौ तारे कनीनिके इव मधु रातः पिबत इति मधुरौ भ्रमरौ
81765 ययोस्ते || ३२ ||
81766
81767 सौम्यतामनयन्मौनी [क्षोभवैषम्यादिरहितताम्]
81768 प्राणापानजवं मुखे |
81769 श्वसनं श्रेयसे देशे प्रशस्तः समयो यथा || ३३ ||
81770
81771 तस्य प्रथमं राजयोगानुकूलं वाक्प्राणापाननिरोधमाह -
81772 सौम्यतामिति | यथा चक्रवर्तिनां जन्मादिनिमित्तभूतः प्रशस्तः समयो
81773 जगच्छ्रेयसे शुभसूचनाय शैत्यमान्द्यादिगुणं श्वसनं वायुं
81774 तज्जन्मदेशे समं स्तिमितं नयति तद्वत् | तथाचोक्तं भगवता -
81775 प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ इति || ३३ ||
81776
81777 तिलेभ्य इव तैलानि पृथक् चक्रे प्रयत्नतः |
81778 इन्द्रियाणीन्द्रियार्थेभ्यः कूर्मोऽङ्गानीव गोपयन् || ३४ ||
81779
81780 तस्य प्रत्याहारक्रममाह - तिलेभ्य इत्यादिना |
81781 इन्द्रियाणीत्येतद्गोपयन्नित्यत्रापि संबध्यते || ३४ ||
81782
81783 बाह्यस्पर्शानशेषेण जहौ दूरे स धीरधीः |
81784 सहसा कुण्डकच्छन्नो मणिर्दूरत्विषो यथा || ३५ ||
81785
81786 बाह्येति | कुण्डकेन अल्पपिठरेणाच्छन्नः पिहितो मणिर्दूरप्रसृतास्त्विषो
81787 रश्मीन् || ३५ ||
81788
81789 विलीनानान्तरांश्चक्रे स्पर्शानुज्झितदर्शनात् |
81790 रसान्विटपकोशस्थान्मार्गशीर्ष इव द्रुमः || ३६ ||
81791
81792 आन्तरान्मनोवासनारूपान् स्पर्शान्विषयानधिष्ठानतत्त्वे आकर्षणेन
81793 बाधाद्विलीनांश्चक्रे || ३६ ||
81794
81795 रुरोध गुदसंकोचान्नवद्वारानिलानथ |
81796 मुखसंस्थगितः कुम्भो रन्ध्रकोशनिवेतरान् || ३७ ||

81797
81798 पार्ष्णिना मूलाधारावष्टम्भेन गुदसंकोचान्नवद्वारानिलान् हृदये
81799 रुरोध। यथा अधोमुखपूर्णकुम्भो मुखे दृढं संस्थगितः
81800 पिहितोऽन्तर्वायुप्रवेशमन्तरेण च्छिद्रान्तरेभ्यो जलक्षरणायोगादितरान्
81801 रन्ध्रकोशान् रुणद्धि तद्वत्॥ ३७॥
81802
81803 स्वात्मरत्नप्रकाशाढ्यां स्पष्टां कुसुमलाञ्छिताम्।
81804 दधार कन्धरां धीरो मेरुः शृङ्गशिखामिव॥ ३८॥
81805
81806 स्वात्मैव रत्नं तत्प्रकाशेन स्वात्मनो रत्नानां प्रकाशैश्च आढ्याम्।
81807 रजस्तमोभ्यामनावरणात्स्पष्टाम्। प्रसन्नमुखपद्मकुसुमेन
81808 कल्पद्रुमकुसुमैश्च लाञ्छिताम्। यथा मेरुस्तथाविधां
81809 स्वशृङ्गलक्षणां शिखां धारयति तद्वत्॥ ३८॥
81810
81811 बभार हृदयाकाशे मनः संयममागतम्।
81812 विन्ध्यखात इवोन्मत्तं गजं युक्तिवशीकृतम्॥ ३९॥
81813
81814 धारणामाह - बभारेति। एकविषये धारणाध्यानसमाधयः
81815 संयमस्तं प्रति आगतमुन्मुखम्। युक्तिभिः प्रत्याहारोपायैर्वशीकृतम्॥ ३९
81816 ।।
81817
81818 शरन्नभोवदासाद्य निर्मलामतिसौम्यताम्।
81819 जहार परिपूर्णाब्धेर्निर्वातस्याचलां श्रियम्॥ ४०॥
81820
81821 धारणया चित्तप्रसादात्परिपूर्णात्मध्यानविश्रान्तिमाह -
81822 शरन्नभोवदिति॥ ४०॥
81823
81824 दुधावातिविकल्पौघान्प्रतिभासमुपेयुषः।
81825 पुरः परिस्फुरद्रूपान्मशकानिव मारुतः॥ ४१॥
81826
81827 ब्रह्माकारकतिपयचित्तवृत्तिधाराविच्छेदिनो मध्ये मध्ये
81828 प्रतिभासमुपेयुषो विपरीतभावनाविकल्पौघान् दुधाव निरस्तवान्॥ ४१॥
81829
81830 आगच्छतो यथाकामं प्रतिभासान्पुनः पुनः।
81831 अच्छिनन्मनसा शूरः खड्गेनेव रणे रिपून्॥ ४२॥
81832
81833 विकल्पौघे परालूने सोऽपश्यद्धृदयाम्बरे।
81834 तमच्छन्नविवेकार्कं लोलकज्जलमेचकम्॥ ४३॥
81835
81836 तमस्तमोगुणोद्रेकप्रयुक्तमन्धकारम्॥ ४३॥
81837
81838 तमप्युन्मार्जयामास सम्यक्स्वान्तविवस्वता।
81839 सम्यग्ज्ञानोदितेनाशु पवनेनेव कज्जलम्॥ ४४॥
81840
81841 सत्त्वगुणोद्भावनप्रदीप्तसम्यग्ज्ञानोदितेन स्वान्तं मनस्तद्रूपेण
81842 विवस्वता सूर्येण॥ ४४॥
81843
81844 तमस्युपरते कान्तं तेजःपुञ्जं ददर्श सः।
81845 शार्वरे तिमिरे शान्ते प्रातःसंध्यामिवाम्बुजम्॥ ४५॥
81846
81847 सत्त्वगुणोद्भावनव्यग्रस्य तदनुरूपस्तेजःपुञ्जभ्रमस्तस्याभूदित्याह ##-
81848

81849 तल्लुलाव स्थलाब्जानां वनं बाल इव द्विपः ।
81850 अपिबच्चाप्यसृक्पूरं वेताल इव वेगतः ॥ ४६ ॥
81851
81852 तत्किं तद्विरोधिरजोगुणाद्युद्भवेन लुलाव नेत्याह - अपिबदिति ।
81853 अधिष्ठानतत्त्वदर्शनेन बाधादग्रसदित्यर्थः । असृक्पूरं रक्तप्रवाहम् ।
81854 तेजसो लोहितवर्णत्वादसृगुपमा ॥ ४६ ॥
81855
81856 तेजस्युपरते तस्य घूर्णमानं मनो मुनेः ।
81857 निशाब्जवदगान्निद्रां लोलं क्षीबवदेव वा ॥ ४७ ॥
81858
81859 रजसा समाधानाच्चालितस्य चित्तस्य विषयालाभेन विलयान्निद्रामज्जनमाह ##-
81860 मदिरामत्तस्तद्वदेव वा ॥ ४७ ॥
81861
81862 मेघमालामिव मरुद्व्यालो नीलाब्जिनीमिव ।
81863 यामिनीमिव तीक्ष्णांशुस्तामप्याशु लुलाव सः ॥ ४८ ॥
81864
81865 व्यालशब्देन भुजंगनागपर्यायेण षिङ्गो गजो वा लक्ष्यते । लुलाव
81866 विवेकप्रबोधेनेति भावः ॥ ४८ ॥
81867
81868 निद्राव्यपगमे तस्य भावयामास तन्मनः ।
81869 व्योमश्यामलदृग्जन्तुर्नभसीव शिखण्डकान् ॥ ४९ ॥
81870
81871 व्योम श्यामलं पश्यतीति व्योमश्यामलदृक् । यदा सूर्यातपसंमुखे
81872 व्योम्नि प्रसारितदृष्टिर्जन्तुः
81873 केशोण्ड्रवटरकाभासमयूरशिखण्डकाकारान् विभावयति तद्वन्मनो
81874 नानावासनापरिकल्पितरूपवद्व्योम भावयामासेत्यर्थः ॥ ४९ ॥
81875
81876 पयोद इव तापिच्छं नीहारमिव मारुतः ।
81877 दीपस्तम इवाच्छात्म तदप्याशु ममार्ज सः ॥ ५० ॥
81878
81879 तापिच्छं तमालपुष्पं तद्धि वृष्ट्या शीर्यते श्यामतां च जहातीति ।
81880 अच्छात्म स्वच्छस्वभावं तद्व्योमापि ममार्ज ॥ ५० ॥
81881
81882 व्योमसंविदि [संविद्विनष्टायां इत्यपि पाठः] नष्टायां
81883 मूढं तस्याभवन्मनः ।
81884 निद्रायां तु विलीनायां मैरेयमदवानिव ॥ ५१ ॥
81885
81886 मूढं कश्मलोपहतम् ॥ ५१ ॥
81887
81888 मोहमप्येष मनसस्तं ममार्ज महाशयः ।
81889 यामिनीजनितं जाड्यं भुवनादिव भास्करः ॥ ५२ ॥
81890
81891 ममार्ज विशोध्यापनिन्ये ॥ ५२ ॥
81892
81893 ततस्तेजस्तमोनिद्रामोहादिपरिवर्जितम् ।
81894 कामप्यवस्थामासाद्य विशश्राम मनः क्षणम् ॥ ५३ ॥
81895
81896 कामपि वाचामगोचरां निर्विकल्पसमाध्यवस्थाम् । विशश्राम विश्रान्तिं
81897 प्राप । क्षणमल्पकालम् ॥ ५३ ॥
81898
81899 विश्रम्याशु पपाताङ्ग संविदं विश्वरूपिणीम् ।
81900 सेतुरुद्धं सरोवारि प्रतीपं स्वमिवास्पदम् ॥ ५४ ॥

81901
81902 विक्षेपसंस्कारप्राबल्यात्तत्र स्थैर्यं न प्रापेत्याह - विश्रम्येति। अङ्गेति
81903 संबोधनम्। विश्वरूपिणीं बाह्यप्रपञ्चसमाकारां वृत्तिसंविदं
81904 पपात प्रापेति यावत्। प्राग्बाह्याकारादाकृष्य पूर्णात्मनि निरुद्धस्य
81905 परावृत्य पुनर्बाह्याकारापत्तावनुरूपं दृष्टान्तमाह - सेत्विति।
81906 यथा सरोवारि कुल्याद्वारा केदारे प्रवेशितं केदारमापूर्य तत्सेतुरुद्धं
81907 सत्कुल्याद्वारा परावृत्य प्रतीपं प्रतिकूलप्रवाहं सत्पुनः स्वास्पदं सर
81908 एव प्रविशति तद्वदित्यर्थः॥ ५४॥
81909
81910 चिरानुसंधानवशात्स्वदनाच्च स्वसंविदः।
81911 ततश्चिन्मयतामागाद्धेम नूपुरतामिव॥ ५५॥
81912
81913 बाह्यसंविदः परावृत्य पुनः स्वसंविदं प्रति नीयमानस्य अन्तराले
81914 सविकल्पकसमाधिप्राप्तिमाह - चिरेति। प्राग्ध्यानादिना
81915 चिरानुसंधानवशात्समाधावानन्दानुभवेन स्वदनाच्च हेतोस्तत्संस्कारेण
81916 पुनस्तत्राकृष्यमाणं मनस्ततोऽन्तराले चिन्मयतां
81917 चित्प्रचुरसविकल्पसमाधिरूपतामागात्। यथा हेम चरणवलयतानुरूपां
81918 नूपुरतां याति तद्वदित्यर्थः॥ ५५॥
81919
81920 चित्तत्वमथ संत्यज्य चित्तं चित्तत्त्वतां गतम्।
81921 अन्यदेव बभूवाशु पङ्कः कुम्भस्थितो यथा॥ ५६॥
81922
81923 एवं सविकल्पकसमाधिना क्रमेण निरिन्धनाग्निवत् प्रक्षीयमाणं
81924 क्षीरोदकवच्चिदैकरस्यं जगामेत्याह - चित्तत्वमिति। चित्तं स्वीयं चित्तत्वं
81925 संत्यज्य चिदेव यत्तत्त्वं तद्भावं गतं सत् पूर्वावस्थातोऽन्यदेव बभूव।
81926 यथा कुम्भस्थितपङ्किलजलपङ्को जलशोषे कुम्भमालिप्य कुम्भभावमेव
81927 गच्छति तद्वदित्यर्थः॥ ५६॥
81928
81929 चेत्यं संत्यज्य चिच्छुद्धा चित्सामान्यमथाययौ।
81930 त्यक्तवीच्यादिभेदोऽब्धिर्वाःसामान्यमिवैकधीः॥ ५७॥
81931
81932 चित्तस्य चित्तभावापगमे तत्प्रतिबिम्बचितन्यस्य बिम्बचित्सामान्यैक्यं
81933 वृत्तमित्याह - चेत्यमिति। चेत्यं स्वावभास्यं वृत्त्याकारं संत्यज्य
81934 प्रतिबिम्बचिच्छुद्धा सती
81935 सर्ववृत्तिसाधारणसाक्षिचित्सामान्यभावमुपाययौ यतः सा एकधीः
81936 एकरसीभूता स्वोपाधिबुद्धिर्यस्यास्तथाविधेत्यर्थः॥ ५७॥
81937
81938 त्यक्तभूतौघमननं ततो विश्वंभरं महत्।
81939 चिदाकाशं ततः शुद्धं सोऽभवद्बोधमागतः॥ ५८॥
81940
81941 एवं निर्विकल्पसमाधिप्रतिष्ठितस्योद्दलकस्य तत्परिपाकात्तत्त्वसाक्षात्कारं
81942 तत्फलं ब्रह्म वेद ब्रह्मैव भवति इति श्रुतिदर्शितं ब्रह्मभावं च
81943 दर्शयति - त्यक्तेति। ततस्तदनन्तरं उद्दालकस्ततस्तादृशस्य
81944 समाधेर्बोधं तत्त्वसाक्षात्कारमागतः सन् विश्वंभरं
81945 सर्वजगदधिष्ठानं त्यक्तभूतौघमननं द्वैतप्रतिभासरहितं
81946 शुद्धं महच्चिदाकाशमभवत्॥ ५८॥
81947
81948 तत्र प्रापदथानन्दं दृश्यदर्शनवर्जितम्।
81949 अनन्तमुत्तमास्वादं रसायनमिवार्णव॥ ५९॥
81950
81951 तद्भाव एव निरतिशयानन्दावाप्तिरिति दर्शयति - तत्रेति।
81952 उत्तमैर्ब्रह्मादिभिरास्वाद्यत इत्युत्तमास्वादम्। रसानां

81953 सर्वविषयसुखकणानामयनमाधारभूतमर्णवमिव स्थितम् ॥ ५९ ॥
81954
81955 शरीरात्समवेतोऽसौ कामप्यवनिमागतः ।
81956 सत्तासामान्यरूपात्मा बभूवानन्दसागरः ॥ ६० ॥
81957
81958 तामेव दशां वर्णयति - शरीरादित्यादिना । शरीरात्सम्यगवमत्य इतो
81959 निर्गत इव शोधित इति यावत् ॥ ६० ॥
81960
81961 द्विजचेतनहंसोऽसावानन्दसरसि स्थितः ।
81962 अतिष्ठच्छरदच्छे खे कलापूर्ण इवोडुपः ॥ ६१ ॥
81963
81964 उडुपश्चन्द्रः ॥ ६१ ॥
81965
81966 बभूवावातदीपाभो लिपिकर्मार्पितोपमः ।
81967 वीतवीच्यम्बुधिप्रख्यो वृष्टमूकाम्बुदस्थितिः ॥ ६२ ॥
81968
81969 पूर्वं वृष्टः पश्चाच्छरदि मूको निर्गतजलश्च योऽम्बुदस्तत्सदृशस्थितिः ॥
81970 ६२ ॥
81971
81972 अथैतस्मिन्महालोके तिष्ठन्नुद्दालकश्चिरम् ।
81973 अपश्यद्व्योमगान्सिद्धानमरानपि भूरिशः ॥ ६३ ॥
81974
81975 तत्पदारूढो ब्रह्मलोकान्तसिद्धिगणान् पादपातेन प्रार्थयतोऽपि कटाक्षेणापि
81976 न पश्यतीत्येतद्दर्शयति - अथेत्यादिना ॥ ६३ ॥
81977
81978 आगतानि विचित्राणि सिद्धिजालानि चाभितः ।
81979 शक्रार्कपददातृणि नीरन्ध्राण्यप्सरोगणैः ॥ ६४ ॥
81980
81981 तानि नादरयांचक्रे सिद्धिवृन्दानि स द्विजः ।
81982 गम्भीरमतिरक्षुब्धो विलासानिव शैशवान् ॥ ६५ ॥
81983
81984 सिद्धिसार्थमनादृत्य तस्मिन्नानन्दमन्दिरे ।
81985 अतिष्ठदथ षण्मासान्दिक्तटेऽर्क इवोत्तरे ॥ ६६ ॥
81986
81987 आनन्दस्य मन्दिरे । तस्मिंस्तादृशसमाधौ । उत्तरे उतरायणाधारे दिक्तटेऽर्क
81988 इव षण्मासम् ॥ ६६ ॥
81989
81990 जीवन्मुक्तपदं तत्तद्यावत्संप्राप्तवान्द्विजः ।
81991 तत्र सिद्धाः सुराः साध्याः स्थिता ब्रह्महरादयः ॥ ६७ ॥
81992
81993 तत्तदुत्तरोत्कृष्टं सप्तमभूमिकाप्रतिष्ठम् । सुरा देवाः सिद्धा
81994 देवयोनिभेदाः साध्या गणदेवताः । सुरेभ्यस्तेषां पृथग्ग्रहणं
81995 गोबलीवर्दन्यायेन ॥ ६७ ॥
81996
81997 आनन्दे परिणामित्वादनानन्दपदं गतः ।
81998 नानन्दे न निरानन्दे ततस्तत्संविदाबभौ ॥ ६८ ॥
81999
82000 तस्मिंश्चानन्दे रसास्वादलक्षणचित्तपरिणामशून्यत्वान्न विद्यते
82001 आनन्दोऽस्येति व्युत्पन्नमनानन्दपदं गतः प्राप्तः । ततस्तस्माद्धेतोस्तस्य
82002 संविदात्मचैतन्यं न विषयिणामिव क्षुद्रानन्दे बभौ नापि निरानन्दे दुःखे
82003 किंतु स्वप्रकाशैकरसपूर्णमवतस्थे इत्यर्थः ॥ ६८ ॥
82004

82005 क्षणं वर्षसहस्रं वा तत्र लब्ध्वा स्थितिं मनः।
82006 रतिमेति न भोगौघे दृष्टस्वर्ग इवावनौ ॥ ६९ ॥
82007
82008 तत्प्राप्तौ न पुनः क्षुद्रानन्दस्पृहोद्भव इत्याह - क्षणमिति।
82009 दृष्टस्वर्गोऽनुभूतस्वर्गविभवः पुरुषः। अवनौ भूलोकसुखे ॥ ६९ ॥
82010
82011 तत्पदं सा गतिः शान्ता तच्छ्रेयः शाश्वतं शिवम्।
82012 तत्र विश्रान्तिमाप्तस्य भूयो नो भाधते भ्रमः ॥ ७० ॥
82013
82014 तदेव सर्वोत्कृष्टमिति वर्णयति - तदित्यादिना ॥ ७० ॥
82015
82016 तत्पदं साधवः प्राप्य दृश्यदृष्टिमिमां पुनः।
82017 नायान्ति खदिरोद्यानं लब्धचैत्ररथा इव ॥ ७१ ॥
82018
82019 तां महानन्दपदवीं चित्तादासाद्य देहिनः।
82020 दृश्यं न बहु मन्यन्ते राजानो दीनतामिव ॥ ७२ ॥
82021
82022 श्रवणमननसमाध्यरिष्कृताच्चित्तादासाद्य अपरोक्षतया प्राप्य। वित्तात् इति
82023 पाठे विचारितशास्त्रात् ॥ ७२ ॥
82024
82025 चेतस्तत्पदविश्रान्तं बुद्धं दृश्यदशां प्रति।
82026 कदर्थाद्बोधमायाति नायात्येवाथवानघ ॥ ७३ ॥
82027
82028 बुद्धं चित्तं दृश्यदशां समाधिव्युत्थानदशां प्रति कदर्थात्
82029 परेषां महतः प्रयत्नाद्बोधमायाति षष्ठभूमिकायाम्। नायात्येव
82030 सप्तमभूमिकायाम् ॥ ७३ ॥
82031
82032 उद्दालकोऽत्र षण्मासान्दूरोत्सारितसिद्धिभूः।
82033 उषित्वोन्मिषितोम्भोदकोशादर्को मधाविव ॥ ७४ ॥
82034
82035 अम्भोदकोशान्नीहारपटलात्। मधौ चैत्रे ॥ ७४ ॥
82036
82037 ददर्श संप्रबुद्धात्मा पुनः परमतेजसः।
82038 प्रणामलालसाः स्निग्धाश्चन्द्रबिम्बवपुर्धराः ॥ ७५ ॥
82039
82040 प्राग्दृष्टा एव रमणीर्द्युविमानपरम्पराश्च पुनर्ददर्शेति परेणान्वयः ॥
82041 ७५ ॥
82042
82043 रमणीर्गौरमन्दाररेणुभ्रमरचामराः।
82044 स्फुरत्पताकापटला द्युविमानपरम्पराः ॥ ७६ ॥
82045
82046 गौरमन्दाररेणच्छन्ना भ्रमराश्चामराणि च यासाम्। स्फुरन्ति
82047 पताकापटलानि यास्विति च साधारणे विशेषणे ॥ ७६ ॥
82048
82049 अस्मदादीन्मुनीन्दर्भपवित्राङ्ककराम्बुजान्।
82050 विद्याधरीभिर्वलितान्विद्याधरपतीनपि ॥ ७७ ॥
82051
82052 विद्याधरपतीनपि ददर्शेत्यनुकृष्यते ॥ ७७ ॥
82053
82054 ते तमूचुर्महात्मानमुद्दालकमुनिं तथा।
82055 प्रसादेन प्रणामान्नो भगवन्नवलोकय ॥ ७८ ॥
82056

82057 ते वैमानिका मुनयश्च तमुद्दलकमूचुर्हे भगवन् नः अस्मान्
82058 प्रणामात्प्रसादेनानुग्रहदृशा अवलोकय ॥ ७८ ॥
82059
82060 आरुह्येदं विमानं त्वमेहि त्रैविष्टपं पुरम् ।
82061 स्वर्ग एव हि सीमान्तो जगत्संभोगसंपदाम् ॥ ७९ ॥
82062
82063 एहि आगच्छ । स्वर्गस्यानुपेक्षायां हेतुमाहः - स्वर्ग एवेति ॥ ७९ ॥
82064
82065 आकल्पमुचितान्भुङ्क्ष्व भोगानभिमतान्विभो ।
82066 स्वर्गादिफलभोगार्थमेवाशेषतपःक्रियाः ॥ ८० ॥
82067
82068 आकल्पं द्विपरार्धावसानान्तकालम् । अनेनैव सर्वेषां
82069 तपःक्लेशादिसार्थक्यमित्याहुः - स्वर्गादीति ॥ ८० ॥
82070
82071 हारचामरधारिण्यो विद्याधरवराङ्गनाः ।
82072 पश्येमास्त्वामुपासीनाः करिण्यः करिणं यथा ॥ ८१ ॥
82073
82074 कामो धर्मार्थयोः सारः कामसाराः सुयोषितः ।
82075 वसन्त इव मञ्जर्यः स्वर्ग एव भवन्ति ताः ॥ ८२ ॥
82076
82077 धर्मार्थयोः फलत्वात्सारः ॥ ८२ ॥
82078
82079 एवं कथयतः सर्वानतिथीनित्यसौ मुनिः ।
82080 परिपूज्य यथान्यायमतिष्ठद्गतसंभ्रमम् ॥ ८३ ॥
82081
82082 गतसंभ्रमं मिथ्यात्वादिनिश्चयाद्विगतकुतुहलं यथा स्यात्तथा अतिष्ठत् ॥
82083 ८३ ॥
82084
82085 नाभ्यनन्दन्न तत्याज तां विभूतिं स धीरधीः ।
82086 भो सिद्धा व्रजतेत्युक्त्वा स्वव्यापारपरोऽभवत् ॥ ८४ ॥
82087
82088 स्वव्यापारः समाधिस्तत्परोऽभवत् ॥ ८४ ॥
82089
82090 अथ स्वधर्मनिरतं भोगेष्वरतिमागतम् ।
82091 तमुपास्य ययुः सिद्धा दिनैः कतिपयैः स्वयम् ॥ ८५ ॥
82092
82093 उपास्य चिरप्रतीक्षाप्रणामप्रशंसादिनोपचर्यं ॥ ८५ ॥
82094
82095 जीवन्मुक्तः स च मुनिर्विजहार यथासुखम् ।
82096 यावदिच्छं वनान्तेषु मुनीनामाश्रमेषु च ॥ ८६ ॥
82097
82098 मेरुमन्दरकैलासहिमवद्विन्ध्यसानुषु ।
82099 द्वीपोपवनदिक्कुञ्जजङ्गलारण्यभूमिषु ॥ ८७ ॥
82100
82101 ततःप्रभृति संप्राप्तपदमुद्दालको द्विजः ।
82102 गुहासु गिरिकुक्षीणामवसद्ध्यानलीलया ॥ ८८ ॥
82103
82104 संप्राप्तपदं यथा स्यात्तथा अवसत् । ध्यानलीलयेत्यनेन ध्यानमपि तस्य
82105 लीलैव न तेनापि तस्य साध्यमस्तीति सूचितम् ॥ ८८ ॥
82106
82107 कदाचिदह्ना मासेन कदाचिद्वत्सरेण च ।
82108 कदाचिद्वत्सरौघेण ध्यानासक्तो व्यबुध्यत ॥ ८९ ॥

82109
82110 ध्यानासक्तः समाधिमारूढः ॥ ८९ ॥
82111
82112 उद्दालकस्तदारभ्य व्यवहारपरोऽपि सन् ।
82113 सुसमाहित एवासौ चित्तत्त्वैकत्वमागतः ॥ ९० ॥
82114
82115 व्यवहारकालेऽपि सुसमाहित एव नाज्ञवद्विक्षेप वानित्यर्थः ॥ ९० ॥
82116
82117 चित्तत्त्वैकघनाभ्यासान्महाचित्त्वमुपेत्य सः ।
82118 बभूव सर्वत्र समस्तेजः सौरमिवावनौ ॥ ९१ ॥
82119
82120 चित्तत्त्वमन्तःकरणतद्वृत्त्यनुगततत्साक्षिचिन्मात्रं तस्यैव विविच्य
82121 दर्शनधारालक्षणात्समाधिरूढाभ्यासान्महाचित्त्वमपरिच्छिन्न##-
82122 स्नेहद्वेषवर्जनात्कारुण्यादविषमब्रह्मभावदर्शनाच्च समः । अनेन तस्य
82123 क्रमात्पञ्चमभूमेः षष्ठभूमिकाप्राप्तिरुक्ता ॥ ९१ ॥
82124
82125 चित्सामान्यचिराभ्यासात्सत्तासामान्यमेत्य सः ।
82126 दृश्येऽस्मिंश्चित्ररविवन्नास्तमायान्न चोदयम् ॥ ९२ ॥
82127
82128 अथास्य सप्तमभूमिकाविश्रान्तिं दर्शयति - चित्सामान्येति । सर्वथा
82129 दृश्यस्य तत्संस्कारस्य चोच्छेदे
82130 तत्प्रथारूपत्वलक्षणचित्त्वव्यवहारस्याप्युपरमात्स्वप्रकाशनिरति##-
82131 दृश्ये एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति न प्रेत्य संज्ञास्ति
82132 इत्यादिश्रुतिदर्शितमाविर्भावतिरोभावलक्षणमस्तमयमुदयं च नायात् ।
82133 तद्बीजाविद्याकामकर्मवासनानामत्यन्तोच्छेदादिति भावः ॥ ९२ ॥
82134
82135 शमपरपदलाभप्राप्तिसंशान्तचेता
82136 गलितजननपाशः [नाश इत्यपि पाठः] क्षीणसंदेहदोलः ।
82137 शरदि खमिव शान्तं व्याततं चोर्जितं च
82138 स्फुटममलमचेतस्तद्वपुः संबभार ॥ ९३ ॥
82139
82140 एतामेव स्थितिं प्रपञ्चयन्नुपसंहरति - शमेति ।
82141 सर्वविक्षेपोपशमनान्निरतिशयानन्दरूपपरपदलाभप्राप्तेश्च सम्यक्
82142 शान्तं गलितं मनो यस्य । अत एव सर्वकर्मबीजक्षयाद्गलितजननपाशः
82143 क्षीणाः संदेहदोलावस्थाश्च [संदेहाः दोला इत्यपि पाठः] यस्य
82144 तथाविधः सन् शरदि खमिव शान्तं प्रशान्ताविद्यामेघडम्बरम् ।
82145 व्याततमपरिच्छिन्नमत एव
82146 निरङ्कुशबृहत्त्वान्निरतिशयसत्तास्फूर्तिसुखोत्कर्षादूर्जितं निरावरणत्वात्
82147 स्फुटं प्राक्तनदशाया अत्यन्तविस्मरणादचेतस्तद्ब्रह्मस्वभावापन्नं
82148 वपुः स्वरूपं संबभार न प्रागिवोद्दालकवपुरित्यर्थः ॥ ९३ ॥
82149
82150 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे०
82151 मोक्षोपायेषूपशमप्रकरणे उद्दालकविश्रान्तिर्नाम चतुःपञ्चाशः
82152 सर्गः ॥ ५४ ॥
82153
82154 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
82155 उद्दालकविश्रान्तिर्नाम चतुःपञ्चाशः सर्गः ॥ ५४ ॥
82156
82157
82158 पञ्चपञ्चाशः सर्गः ५५
82159
82160 श्रीराम उवाच ।

82161
82162 आत्मज्ञानदिनैकार्क मत्संशयतृणानल।
82163 अज्ञानदाहशीतांशो सत्तासामान्यमीश किम्॥ १॥
82164
82165 सत्तासामान्यलक्ष्मास्य युक्त्या देहोज्ज्ञा(?)नक्रमः।
82166 त्यक्तदेहेन खिंखिन्या भूषाक्लृप्तिश्च वर्ण्यते॥ १॥
82167
82168 गुरुं स्तुतिभिः प्रसाद्य रामश्चरमपर्यायोक्तसत्तासामान्यं
82169 लक्षणैर्जिज्ञासमानः पृच्छति - आत्मज्ञानेति।
82170 अज्ञानप्रयुक्ततापत्रयलक्षणस्य दाहस्य संतापस्य शीतांशोः।
82171 अज्ञानान्धकारोच्छेदे तत्प्रयुक्तसंशयविपर्ययाद्युच्छेदे
82172 तत्प्रयुक्तसर्वदुःखोच्छेदे च त्वमेव समर्थ इति विशेषणत्रयतात्पर्यार्थः।
82173 ईशेत्युक्तिर्गुरावीश्वरदृष्टिरेव सदा कार्या न साधारणबुद्धिरिति द्योतनाय॥
82174 १॥
82175
82176 श्रीवसिष्ठ उवाच।
82177
82178 यदा संक्षीयते चित्तमभावात्यन्तभावनात्।
82179 चित्सामान्यस्वरूपस्य सत्तासामान्यता तदा॥ २॥
82180
82181 षष्ठभूमिकायां चिदवान्तरभेदान्परिमृज्य चित्सामान्यस्वरूपभूतस्य
82182 चेत्याभावस्यात्यन्तभावनाच्चेत्यसंस्काराणामात्यन्तिकोच्छेदे सति यदा
82183 चित्तं संक्षीयते तदा स्वमात्रसत्तया स्वतः सिद्ध्यन्ती परिशिष्टा
82184 चिदचिदुभयानुगतसत्तैव सत्तासामान्यमित्यर्थः॥ २॥
82185
82186 नूनं चेत्यांशरहिता चिद्यदात्मनि लीयते।
82187 असद्रूपवदत्यच्छा सत्तासामान्यता तदा॥ ३॥
82188
82189 सर्ववृत्तिप्रतिबिम्बिता चित् सर्वदृश्यबाधे चेत्यांशैर्वृत्तितद्विषयै रहिता
82190 सती यदा स्वात्मनि बिम्बचैतन्ये लीयते तदा तस्य बिम्बस्य असद्रूपं
82191 यस्मिंस्तदसद्रूपमाकाशस्तद्वदत्यच्छा सत्तासामान्यता बोध्येत्यर्थः॥ ३॥
82192
82193 यदा सर्वमिदं किंचित्सबाह्याभ्यन्तरात्मकम्।
82194 अपलप्य वसेच्चेतः सत्तासामान्यता तदा॥ ४॥
82195
82196 चेतश्चित्तवृत्त्यभिव्यक्ताखण्डचैतन्यम्॥ ४॥
82197
82198 यदा सर्वाणि दृश्यानि सत्तासामान्यवेदनम्।
82199 स्वरूपेण स्वरूपाभं सत्तासामान्यता तदा॥ ५॥
82200
82201 यदा सर्वाणि भूतानि स्वपारमार्थिकरूपेण स्वरूपमेव आभा स्वप्रथा यस्य
82202 नान्या तथाविधं सत्तासामान्यात्मकं वेदनं चिन्मात्रं भवतीति शेषः॥ ५
82203 ।।
82204
82205 कूर्मोऽङ्गानीव दृश्यानि लीयन्ते स्वात्मनात्मनि।
82206 अभावितान्येव यदा सत्तासामान्यता तदा॥ ६॥
82207
82208 अभावितानि भावनयत्नं विनैव सहजदृशेत्यर्थः॥ ६॥
82209
82210 दृष्टिरेषा हि परमा सदेहादेहयोः सदा।
82211 मुक्तयोः संभवत्येव तुर्यातीतपदोपमा॥ ७॥
82212

82213 एषा सप्तमभूमिकारूढदृष्टिर्यतस्तुर्यातीतपदोपमा अतः
82214 सदेहादेहमुक्तयोः समानस्वरूपस्थितौ विशेषोऽस्तीत्यर्थः || ७ ||
82215
82216 व्युत्थितस्य भवत्येषा समाधिस्थस्य चानघ |
82217 ज्ञस्य केवलमज्ञस्य न भवत्येष बोधजा || ८ ||
82218
82219 सेयं दृष्टिः पञ्चमादिभूमिकास्वपि समाधिस्थस्य भवति
82220 सप्तमभूमिकारूढस्य तु व्युत्थितस्यापि | केवलमज्ञस्य न भवत्येवेत्यर्थः
82221 || ८ ||
82222
82223 अस्यां दृशि स्थिताः सर्वे जीवन्मुक्ता महाशयाः |
82224 सिद्धा रसा इव भुवि व्योमवीथ्यामिवानिलाः || ९ ||
82225
82226 सर्वेऽपि जीवन्मुक्ता अस्यां दृशि स्थिताः सन्तो भुवि सिद्धा रसाः पारदादय इव
82227 व्योमवीथ्यामनिला इव च
82228 ऐहिकामुष्मिकभोगतृष्णारजोभिरस्पृष्टास्तिष्ठन्तीत्यर्थः || ९ ||
82229
82230 अस्मत्प्रभृतयः सर्वे नारदाद्याश्च राघव |
82231 ब्रह्मविष्णवीश्वराद्याश्च दृष्टावस्यां व्यवस्थिताः || १० ||
82232
82233 तानेवोदाहरति - अस्मत्प्रभृतय इति | अस्मत्प्रभृतयो भुवि नारदाद्या
82234 व्योमवीथ्यां ब्रह्माद्यास्तदूर्ध्वलोकेष्वित्यर्थः || १० ||
82235
82236 एतामालम्ब्य पदवीं समस्तभयनाशिनीम् |
82237 उद्दालकोऽसाववसद्यावदिच्छं जगद्गृहे || ११ ||
82238
82239 यावदिच्छमाप्रारब्धक्षयम् || ११ ||
82240
82241 अथ कालेन बहुना बुद्धिस्तस्य बभूव ह |
82242 विदेहमुक्तस्तिष्ठामि देहं त्यक्त्वेति निश्चलाः || १२ ||
82243
82244 निश्चला दृढा || १२ ||
82245
82246 एवं चिन्तितवानद्रेर्गुहायां पल्लवासने |
82247 बद्धपद्मासनस्तस्थावर्धोन्मीलितलोचनः || १३ ||
82248
82249 चिन्तितवान् चिन्तितार्थदृढनिश्चयवान्सन् || १३ ||
82250
82251 संयम्य गुदसंरोधाद्द्वाराणि नव चेतसः |
82252 मात्रास्पर्शान्विचिन्वानो भावितस्वाङ्गचिद्घनः || १४ ||
82253
82254 मात्रास्पर्शान्शब्दस्पर्शादिगोचरवृत्तिर्विचिन्वानो बदराणीवैकैकश
82255 उपसंहृत्य हृदि निवेशयन् हृदि निविष्टानां च तेषां परमार्थरूपो
82256 भावितः स्वाङ्गमिव स्वात्मनैकीकृतश्चिद्रूपो घनः
82257 सैन्धवधनवदेकरसो येन || १४ ||
82258
82259 संरुद्धप्राणपवनः समसंस्थानकन्धरः |
82260 तालुमूलतलालग्नजिह्वामूलो लसन्मुखः || १५ ||
82261
82262 समसंस्थाना कन्धरा कण्ठो यस्य | तालुमूलतले आलग्नेन कण्ठच्छिद्रे
82263 कवाटवन्निवेशितेन जिह्वामूलेनोन्नतमिव लसन्मुखं यस्य || १५ ||
82264

82265 न बहिर्नान्तरे नाधो नोर्ध्वे नार्थे न शून्यके ।
82266 संयोजितमनोदृष्टिर्दन्तैर्दन्तानसंस्पृशन् ॥ १६ ॥
82267
82268 अर्थे रूपादिविषये । न संयोजिते मनोदृष्टी येन ॥ १६ ॥
82269
82270 प्राणप्रवाहसंरोधसमः स्वच्छाननच्छविः ।
82271 अङ्ग चित्संविदुत्तानरोमकण्टकिताङ्गभूः ॥ १७ ॥
82272
82273 प्राणादिप्रवाहाणां संरोधेन
82274 समस्तक्रियाकृतदेहमनःकरणचाञ्चल्यशून्यः स्वच्छाननच्छविः
82275 प्रसन्नवदनः । अङ्गेति संबोधने । चित्संविदा चिद्रूपाब्रह्मानन्दानुभवेन
82276 उत्तानैरूर्ध्वर्जुभी रोमभिः कण्टकिता संजातकण्टका अङ्गभूर्यस्य ॥ १७ ॥
82277
82278 अङ्गचित्संविदाभ्यासाच्चित्सामान्यमुपाददे ।
82279 तदभ्यासादवापान्तरानन्दस्पन्दमुत्तमम् ॥ १८ ॥
82280
82281 तस्यानन्दाविर्भावे पूर्वोक्तमेव क्रममाह - अङ्गेति ।
82282 अङ्गेष्वन्तःकरणैकदेशभूतवृत्तिभेदेषु प्रतिबिम्बिता चित् अवच्छिन्ना
82283 संविदा च स्वोपाधिभूतवृत्तिभेदानां
82284 विलयाभ्यासाद्बिम्बभूतचित्सामान्यमुपाददे प्रविवेश ।
82285 बिम्बभूतचिन्मात्रानुसंधानाभ्यासाच्च अन्तर्हृदि उत्तमं
82286 सर्वोत्कृष्टमानन्दस्पन्दं अवाप अन्वभूदित्यर्थः ॥ १८ ॥
82287
82288 तदास्वादनतो लीनचित्सामान्यदशाक्रमम् ।
82289 विश्वंभरमनन्तात्म सत्तासामान्यमाययौ ॥ १९ ॥
82290
82291 तस्य पूर्ववत् सत्तासामान्यानुप्रवेशमाह - तदास्वादनत इति । यावन्न
82292 निरतिशयानन्दास्वादनं तावदेव चित्तं निरोधक्लेशासहिष्णुतया बहिः
82293 प्रवर्तते । आस्वादिते त्वानन्दे तत्रैव गुडपिपीलिकान्यायेनासक्तं स्वरूपमपि
82294 विस्मृत्य स्वानुगतं चित्सामान्यं निरतिशयस्वप्रकाशसत्तासामान्यभावं
82295 नयति स एव चित्सामान्यदशाक्रमस्य लयस्तस्य सत्तासामान्यप्राप्तिश्चेति
82296 भावः ॥ १९ ॥
82297
82298 तस्थौ समसमाभोगः परां विश्रान्तिमागतः ।
82299 अनानन्दसमानन्दमुग्धमुग्धमुखद्युतिः ॥ २० ॥
82300
82301 तत्रैव तस्यापुनरावर्तिनीं स्थितिमाह - तस्थाविति । समेभ्योऽपि सम
82302 आत्यन्तिकविक्षेपवैषम्यशून्य आभोगः स्वरूपं यस्य । न विद्यन्ते आनन्दाः
82303 समा यस्य तथाविधानन्देन प्रसन्नतमत्वान्मुग्धेभ्यः सुन्दरेभ्योऽपि
82304 मुग्धा मुखद्युतिर्यस्य तथाविधः सन् ॥ २० ॥
82305
82306 संशान्तानन्दपुलकः पदं प्राप्यामलं गतः ।
82307 चिरकालपरिक्षीणमननादिभवभ्रमः ॥ २१ ॥
82308
82309 आनन्दाविर्भावलिङ्गरोमाञ्चादीनामपि क्रमादुपरममाह - संशान्तेति
82310 । जीवन्नेव पदं प्राप्य प्रारब्धभोगहेतुमलशेषक्षयादमलं गतः सन् ॥
82311 २१ ॥
82312
82313 बभूव स महासत्त्वो लिपिकर्मार्पितोपमः ।
82314 समः कलावपूर्णेन शरदच्छाम्बरेन्दुना ॥ २२ ॥
82315
82316 कलाभिरवपूर्णेन ॥ २२ ॥

उपशशाम शनैर्दिवसैरसौ
कतिपयैः स्वपदे विमलात्मनि।
तरुरसः शरदन्त इवामले
रविकरौजसि जन्मदशातिगः॥ २३॥

न तस्य प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते इति श्रुत्युक्तरीत्या तत्रैव
तत्प्राणानां तप्तोदकौष्ण्यवत्क्रमादुपशममभिप्रेत्याह -
उपशशामेति। शरदन्ते हेमन्ते तरूणां रसो रविकरौजसीव विमले स्वपदे
उपशशाम॥ २३॥

गतसकलविकल्पो निर्विकारोऽभिरामः
सकलमलविलासोपाधिनिर्मुक्तमूर्तिः।
विगलितसुखमाद्यं तत्सुखं प्राप यस्मिं-
स्तृणमिव जलराशावूह्यते शक्रलक्ष्मीः॥ २४॥

प्राणाद्युपशमे परिशिष्टं तत्स्वरूपं वर्णयति - गतेत्यादिना।
अग्निविस्फुलिङ्गवत्प्रागुपाधिभिर्विगलितानि निःसृतानि
हैरण्यगर्भान्तविषयसुखानि यस्मात्तथाविधं आद्यं तद्वाचामगोचरं
सुखं स प्राप। यस्मिन्सुखे शक्रलक्ष्मीरप्यब्धौ तृणमिव ऊह्यते
[आद्ये स उह्यत इति च्छेदः] प्रवाह्यते तर्क्यते वा तद्दर्शिभिरित्यर्थः॥
२४॥

अपरिमितनभोन्तर्व्यापिदिग्व्यापि पूर्णं
भुवनभरणशीलं भूरिभव्योपसेव्यम्।
कथनगुणमतीतं सत्यमानन्दमाद्यं
परमसुखमनन्तं ब्राह्मणोऽसौ बभूव॥ २५॥

असौ ब्राह्मण उद्दालकः प्रतिब्रह्माण्डं भेदादपरिमितान्यनन्तानि
नभांसि अन्तः स्वोदरे व्याप्नुवन्ति या दिशस्ता अपि व्याप्तुं शीलमस्य। अनेन
देशकृतपरिच्छेदनिरासः। सर्वदा सर्ववस्तुषु पूर्णम्।
सर्ववस्त्वाधारभुवनानां भरणं धारणं पोषणं च शीलं यस्य।
अनेन सर्वाधिष्ठानतोक्त्या वस्तुकृतभेदनिरासः।
भूरिभिर्भव्यैर्भाग्यैरुत्तमजनैश्चोपसेव्यम्। कथनगुणं
वाक्प्रवृत्तिनिमित्तधर्मान् अतीतं अनन्तमाद्यं कालकृतपरिच्छेदहीनमत
एव सत्यादिलक्षणम्। आनन्दयति सुखैकरसीकरोत्यखिलमित्यानन्दं
भूमाख्यं परमसुखं बभूवेत्यर्थः॥ २५॥

गतवति पदमाद्यं चेतसि स्वच्छभावं
द्विजतनुरथ मासैः सोपविष्टैव षड्भिः।
रविकरपरितप्ता वातभांकाररम्या
तनुतरुभुजतन्त्री शैलवीणा बभूव॥ २६॥

अथ तच्चेतसि जीवे स्वच्छभावं निर्मलस्वरूपमाद्यं पदं गतवति सति तस्य
द्विजस्य तनुः शरीरं तत्रोपविष्टैव सती षड्भिर्मासै रविकरैः परितप्ता
शुष्का सती प्रवहद्वातघट्टनजैर्भांकारैः क्वणितै रम्या तनुतरूणां
बालवृक्षलक्षणानां भुजानां वादनयोग्याभिः शिरातन्त्रीभिः शैलस्य
पर्वतस्य वीणेव विलासहेतुर्बभूवेत्युत्प्रेक्षा॥ २६॥

अथ बहुतरकालेनैतदद्रेर्भुवं ता-
मुपययुरगकन्यासंयुता मातरः खात्।
अभिमतफलसिद्ध्यै संयुता एव सर्वा

82369 अनलमिव शिखानां पङ्क्तयः पिङ्गकेश्यः ॥ २७ ॥
82370

82371 अथ बहुतरकालेन । षण्मासेनेति यावत् । एतत् वृत्तम् । किम् ।
82372 खान्नभस्तलादगकन्यासंयुताः परस्परसहचारितानियमात्सर्वाः संयुताः
82373 सदा मिलिता एव स्थिता ब्राह्म्याद्या मातरः
82374 कस्यचिद्भक्तस्याभिमतफलसिद्ध्यै शिखानां ज्वालानां पङ्क्तयः
82375 अनलमिव तामद्रेर्भुवमुपययुः ॥ २७ ॥
82376

82377 दिनकरकरशुष्कं विप्रकंकालकं त-
82378 ज्झटिति मुकुटकोटौ खड्गखट्वाङ्गमध्ये ।
82379 सकलविबुधवन्द्या खिंखिनी देवदेवी
82380 निशि नवतरवृत्ता कान्तकान्तिं चकार ॥ २८ ॥
82381

82382 तासां मातृणां मध्ये निशि रात्रौ नवनवभूषावैचित्र्यान्नवतराणि
82383 लास्यादिवृत्तानि यस्यास्तथाविधा । सकलैर्ब्रह्मादिभिर्विबुधैर्वन्द्या ।
82384 देवानामपि देवी पूज्या । खिंखिनी चामुण्डा । दिनकरस्य करैः शुष्कं
82385 तद्विप्रस्योद्दालकस्य कंकालकं शवं झटिति उद्यतयोः
82386 खड्गखट्वाङ्गयोर्मध्ये अन्तरालस्थायां स्वमुकुटस्य किरीटस्य कोटौ
82387 कान्तकान्तिं भूषणं भूषणं चकारेत्यर्थः ॥ २८ ॥
82388

82389 इत्युद्दालकदेहकं सुविलसन्मायूरबर्हव्रज-
82390 व्यालोलाब्दलवे नवैर्विवलिते मन्दारमालागणैः ।
82391 शेते खिंखिनिका महाभगवती लीलाललामे लता-
82392 जाले भृङ्ग इवान्तपुष्पपटले पश्चादुपागच्छति ॥ २९ ॥
82393

82394 यस्य मूढदृष्टिकल्पितो मलमांसादिमयः स्थूलदेहोऽपि त्रिजगद्वन्द्याया
82395 देव्याः शिरोभूषणतया सर्वोत्कर्ष प्राप्तस्तेन सर्वोत्कृष्टं पदं
82396 प्राप्तमिति किं वाच्यमिति ज्ञानमाहात्म्योत्कर्ष दर्शयन्नाह - इतीति । इति
82397 उक्तरीत्या उद्दालकस्य कुत्सितो देहो देहकं सुष्ठु विलसति विराजमाने
82398 मायूरबर्हाणां व्रजः समूहस्तल्लक्षणा व्यालोलाः कम्पमाना अब्दलवा
82399 मेघखण्डा यस्मिन् । नवैः प्रत्यग्रैर्मन्दारमालागणैर्विवलिते वेष्टिते
82400 खिंखिनिकाख्याया महत्या भगवत्या लीलार्थे ललामे शिरोभूषणमाल्ये
82401 अन्तेषु अग्रभागेषु पुष्पपटलानि यस्य तथाविधे वेणीच्छलात्पश्चात्पृष्ठत
82402 उपागच्छति लताजाले भृङ्ग इव शेते सुखविश्रान्तिं भजते इत्युत्प्रेक्षा ॥ २९ ॥
82403

82404 एषोद्दालकचित्तवृत्तिकलनावल्ली विवेकस्फुर-
82405 त्स्वानन्दप्रविकासभासिकुसुमा हृत्कानने विस्तृता ॥
82406 रूढा यस्य कदाचिदेव विहरन्नप्येव सच्छायया
82407 नासावेति वियोगमेति सफलेनोच्चैस्तरां संगमम् ॥ ३० ॥
82408

82409 उक्तमुद्दालकाख्यानमुपसंहरंस्तत्परिशीलनपराणां
82410 संसारतापोपशमं परमपुरुषार्थफललाभं च दर्शयति - एषेति ।
82411 सर्वदृश्यविवेके स्फुरन्यः स्वानन्दः स एव प्रविकासैर्भासीनि कुसुमानि
82412 यस्यास्तथाविधा एषा दर्शितप्रकारा
82413 उद्दालकचित्तवृत्तेर्विदेहकैवल्यप्राप्त्यन्तसकलचरित्रस्य [उद्दालके
82414 चित्तवृत्तेः इति पाठः] कलना आदरनैरन्तर्याभ्यां शिक्षा तल्लक्षणा
82415 कल्पवल्ली यस्य हृत्कानने रूढा प्रादुर्भूता सती
82416 उत्तरोत्तरभूमिकाधिरोहणक्रमेण विस्तृता असौ पुरुषस्तापत्रयार्कसंकुले
82417 व्यवहारकान्तारे विहरन्संचरन्नपि सत्यशान्तिदान्त्यादिगुणसुरभिशीतलया
82418 सहजसंतोषलक्षणया छायया । अप्यर्थे एवकारः । कदाचिदपि वियोगं नैति न
82419 प्राप्नोत्येव । किंच स उच्चैस्तरां सर्वोत्कृष्टतमेन मोक्षफलेन संगमं
82420 पुनरावृत्तिरहितं स्वात्मभावेन संबन्धमेति प्राप्नोतीत्यवश्यं सा वल्ली

हृदि संरोप्य विस्तारणीयेत्यर्थः ॥ ३० ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये देवदूतोक्ते मो०
उपशमप्रकरणे उद्दालकनिर्वाणं नाम पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
उद्दालकनिर्वाणं नाम पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

षट्पञ्चाशः सर्गः ५६

श्रीवसिष्ठ उवाच ।

क्रमेणानेन विहरन्विचार्यात्मानमात्मना ।
विश्रान्तिमेहि वितते पदे पद्मदलेक्षण ॥ १ ॥

निर्मृष्टमायातिमिरः प्रबुद्धो ध्वस्तवासनः ।
व्यवहारप्रसक्तोऽपि समाधिस्थ इतीर्यते ॥ १ ॥

अनेन उक्तप्रकारेण विचारवैराग्यसमाध्यभ्यासक्रमेण विहरन् ॥ १ ॥

शास्त्रार्थगुरुचेतोभिस्तावत्तावद्विचार्यते ।
सर्वदृश्यक्षयाभ्यासाद्यावदासाद्यते पदम् ॥ २ ॥

शास्त्रश्रवणेन अर्थतत्त्वपरीक्षणेन गुरुवचनविश्वासेन स्वचित्तशोधनेन
च सर्वदृश्यबाधेन परमपदविश्रान्तिपर्यन्तमवश्यं विचारः कर्तव्य
इति तात्पर्यार्थः ॥ २ ॥

वैराग्याभ्यासशास्त्रार्थप्रज्ञागुरुमयक्रमैः
[गुरुयमक्रमैरिति पाठः । तत्र यमशब्देन मनोनिग्रहो
ज्ञेयः] ।
पदमासाद्यते पुण्यं प्रज्ञयैवैकयाथवा ॥ ३ ॥

संप्रबोधवती तीक्ष्णा कलङ्करहिता मतिः ।
सर्वसामग्र्यहीनापि पदं प्राप्नोति शाश्वतम् ॥ ४ ॥

प्रज्ञास्वरूपमाह - संप्रबोधवतीति । प्राप्नोति प्रापयति ॥ ४ ॥

श्रीराम उवाच ।

भगवन्भूतभव्येश कश्चिज्जातसमाधिकः ।
प्रबुद्ध इव विश्रान्तो व्यवहारपरोऽपि सन् ॥ ५ ॥

कश्चित्प्रबुद्धो व्यवहारपरोऽपि सन् जातसमाधिक इव विश्रान्त इत्यन्वयः ॥ ५ ॥

कश्चिदेकान्तमाश्रित्य समाधिनियतः स्थितः ।
तयोस्तु कतरः श्रेयानिति मे भगवन्वद ॥ ६ ॥

श्रीवसिष्ठ उवाच ।

इमं गुणसमाहारमनात्मत्वेन पश्यतः ।
अन्तःशीतलता यासौ समाधिरिति कथ्यते ॥ ७ ॥

82473
82474 अन्तःशीतलता पूर्णकामता ज्ञानप्रतिष्ठाफलं तल्लाभे
82475 विक्षेपप्रसक्त्यभावात्सैव समाधिरभिधीयत इत्यर्थः। मनसि सति
82476 दृश्यैर्विक्षेपहेतुः संबन्धः स्यान्नतु मम तदस्तीति निश्चित्येत्यर्थः ॥ ७ ॥
82477
82478 दृश्यैर्मनसि संबन्ध इति निश्चित्य शीतलः।
82479 कश्चित्संव्यवहारस्थः कश्चिद्ध्याने व्यवस्थितः ॥ ८ ॥
82480
82481 दृश्यैर्मननसंबन्धः इति पाठस्तु स्पष्ट एव ॥ ८ ॥
82482
82483 द्वावेतौ राम सुखितावन्तश्चेत्परिशीतलौ [संपन्नाविति पाठः]।
82484 अन्तःशीतलता या स्यात्तदनन्ततपःफलम् ॥ ९ ॥
82485
82486 समाधिस्थानकस्थस्य चेतश्चेद्वृत्तिचञ्चलम्।
82487 तत्तस्य [तत्तर्हीत्यर्थः] तत्समाधानं सममुन्मत्तताण्डवैः ॥
82488 १० ॥
82489
82490 उन्मत्तताण्डवस्थस्य चेतश्चेत्क्षीणवासनम्।
82491 तदस्योन्मत्तवृत्तं तत्समं बुद्धसमाधिना ॥ ११ ॥
82492
82493 व्यवहारी प्रबुद्धो यः प्रबुद्धो यो वने स्थितः।
82494 द्वावेतौ सुसमौ नूनमसंदेहं पदं गतौ ॥ १२ ॥
82495
82496 असंदेहं सर्वसंएधोच्छेदि परमपदं गतौ तत्र प्रतिष्ठितौ चेत्यर्थः ॥ १२
82497 ।।
82498
82499 अकर्तृ कुर्वदप्येतच्चेतः प्रतनुवासनम्।
82500 दूरं गतमना जन्तुः कथासंश्रवणे यथा ॥ १३ ॥
82501
82502 व्यवहारिणः कर्तृत्वप्रयुक्तो बन्धः किं न स्यात्तत्राह - अकर्त्रीति।
82503 प्रतनुवासनं निर्वासनम्। यथा कान्तादिकथासंश्रवणे अन्यत्र
82504 प्रसक्तमनाः कुर्वन्नपि रागादिविकारानुदयात्तत्प्रयुक्तैर्दोषैर्न बध्यते
82505 तद्वदित्यर्थः ॥ १३ ॥
82506
82507 अकुर्वदपि कर्तैव चेतः प्रघनवासनम्।
82508 निस्पन्दाङ्गमपि स्वप्ने श्वभ्रपातस्थिताविव ॥ १४ ॥
82509
82510 निस्पन्दान्यङ्गानि देहावयवा यस्य तथाविधमपि सुप्तस्य मनः
82511 श्वभ्रपातं तत्र स्थितौ च यथा कर्तृ तद्वत् ॥ १४ ॥
82512
82513 चेतसो यदकर्तृत्वं तत्समाधानमुत्तमम्।
82514 तं विद्धि केवलीभावं सा शुभा निर्वृतिः परा ॥ १५ ॥
82515
82516 निर्वृतिः सुखविश्रान्तिः ॥ १५ ॥
82517
82518 चेतश्चलाचलत्वेन परमं कारणं स्मृतम्।
82519 ध्यानाध्यानदृशोस्तेन तदेवानङ्कुरं कुरु ॥ १६ ॥
82520
82521 ध्यानाध्याने समाध्यसमाधी तद्दृष्ट्योः। अनङ्कुरं
82522 अङ्कुरबीजवासनाशून्यमिति यावत् ॥ १६ ॥
82523
82524 अवासनं स्थिरं प्रोक्तं मनोध्यानं तदेव तु।

82525 स एव केवलीभावः शान्ततैव च सा सदा ॥ १७ ॥
82526
82527 तनुवासनमत्युच्चैः पदायोद्यतमुच्यते ।
82528 अवासनं मनो कर्तृपदं तस्मादवाप्यते ॥ १८ ॥
82529
82530 तनुवासनं चतुर्थादिभूमिकासु क्षीयमाणवासनम् । अवासनं क्षीणवासनं
82531 पदं सप्तमभूमिकाप्रतिष्ठा ॥ १८ ॥
82532
82533 घनवासनमेतत्तु चेतः कर्तृत्वभाजनम् ।
82534 सर्वदुःखप्रदं तस्माद्वासनां तनुतां नयेत् ॥ १९ ॥
82535
82536 प्रशान्तजगदास्थोऽन्तर्वीतशोकभयैषणः ।
82537 स्वस्थो भवति येनात्मा स समाधिरिति स्मृतः ॥ २० ॥
82538
82539 प्रशान्ता जगति देहादिदृश्ये आस्था अहंममताभिनिवेशो यस्य । स्वस्थः
82540 स्वरूपप्रतिष्ठो येनोपायेन भवति ॥ २० ॥
82541
82542 चेतसा संपरित्यज्य सर्वभावात्मभावनाम् ।
82543 यथा तिष्ठसि तिष्ठ त्वं तथा शैले गृहेऽथवा ॥ २१ ॥
82544
82545 सर्वेषु भावेषु आत्मभावनां अहंममताध्यासम् । शैले समाहितो गृहे
82546 व्यवहरन्वा ॥ २१ ॥
82547
82548 गृहमेव गृहस्थानां सुसमाहितचेतसाम् ।
82549 शान्ताहंकृतिदोषाणां विजनावनभूमयः ॥ २२ ॥
82550
82551 अरण्यसदने तुल्ये समाहितमनोदृशाम् ।
82552 भवतामिह भूतानां भूतानां महतामिव ॥ २३ ॥
82553
82554 इह नित्यापरोक्षे प्रत्यगात्मनि भूतानां स्थितानाम् । महतां
82555 भूतानामाकाशादीनामिव ॥ २३ ॥
82556
82557 शान्तचित्तमहाभ्रस्य जनज्वालोज्ज्वलान्यपि ।
82558 नगराण्यपि शून्यानि वनान्यवनिपात्मज ॥ २४ ॥
82559
82560 शान्तचित्तमहाभ्रस्य शरदकाशकल्पस्येत्यर्थः ॥ २४ ॥
82561
82562 वृत्तिमच्चित्तमत्तस्य विजनानि वनान्यपि ।
82563 नगराणि महालोकपूर्णानि परवीरहन् ॥ २५ ॥
82564
82565 रागादिवृत्तिमता चितेन मत्तस्य ॥ २५ ॥
82566
82567 व्युत्थितं चित्तमभ्येति भ्रमस्यान्तः सुषुप्तताम् ।
82568 निर्वाणमेति निर्वाणं यथेच्छसि तथा कुरु ॥ २६ ॥
82569
82570 व्युत्थितं रागादिविक्षिप्तं चित्तं नानाविधविषयभ्रमस्यान्तर्लयेन
82571 पुनर्व्युत्थानसहस्रबीजभूतां सुषुप्ततामेति । निर्वाणं शान्तरागादिवासनं
82572 तु चित्तं निर्वाणं मोक्षमेति ॥ २६ ॥
82573
82574 सर्वभावपदातीतं सर्वभावात्मकं च वा ।
82575 यः पश्यति सदात्मानं स समाहित उच्यते ॥ २७ ॥
82576

82577 तर्हि प्राक्कथं व्यवहार्यव्यवहारिणोस्तत्त्वविदोस्तुल्यः समाधिरुक्तस्तत्राह
82578 - सर्वेति। तत्त्ववित्समाधौ सर्वभावपदातीतं पश्यति व्यवहारे तु
82579 सर्वभावात्मकं पश्यतीत्येकपिण्डमात्राहंमानाभावान्न तस्य रागादिरिति
82580 न विक्षेपप्रसक्तिरिति भावः॥ २७॥
82581
82582 ईहितानीहिते क्षीणे यस्यान्तर्वितताकृतेः।
82583 सर्वे भावाः समा यस्य स समाहित उच्यते॥ २८॥
82584
82585 उक्तमेवार्थं फलत आह - ईहितेति। ईहितानीहिते रागद्वेषौ॥ २८॥
82586
82587 सदात्मना सदेवेदं जगत्पश्यति नो मनः।
82588 यथा स्वप्ने तथैवास्मिञ्जाग्रत्यपि जनेश्वर॥ २९॥
82589
82590 कथं सर्वे भावाः समास्तद्दर्शयति - सदात्मनेति। तस्य मनो यथा
82591 स्वप्ने तथा जाग्रत्यपि इदं दृश्यं सदात्मना सदेव पश्यति। जगत्
82592 सद्व्यतिरिक्तरूपं नो पश्यतीत्यर्थः॥ २९॥
82593
82594 यथा विपणिकालोका विहरन्तोऽप्यसत्समाः।
82595 असंबन्धात्तथा ज्ञस्य ग्रामोपि विपिनोपमः॥ ३०॥
82596
82597 नगराण्यपि शून्यानीति यदुक्तं तदुपपादयति - यथेति। विपणिका
82598 पण्यवीथिका तत्र समवेता अपि बहवो जनाः स्वस्वकार्ये
82599 व्यवहरन्तोऽप्युदासीनस्यानुपकारित्वादसत्प्रायास्तद्वत्॥ ३०॥
82600
82601 अन्तर्मुखमना नित्यं सुप्तो बुद्धो व्रजन्नपि।
82602 पुरं जनपदं ग्राममरण्यमिव पश्यति॥ ३१॥
82603
82604 सर्वमाकाशतामेति नित्यमन्तर्मुखस्थितेः।
82605 सर्वथानुपयोग्यत्वाद्भूताकुलमिदं जगत्॥ ३२॥
82606
82607 भूतैः प्राणिभिः पृथिव्यादिभिश्चाकुलमपि बाधितत्वादाकाशतां
82608 शून्यताम्॥ ३२॥
82609
82610 अन्तःशीतलतायां तु लब्धायां शीतलं जगत्।
82611 विज्वराणामिव नृणां भवत्याजीवितस्थितेः॥ ३३॥
82612
82613 आजीवितस्थितेः यावज्जीवम्॥ ३३॥
82614
82615 अन्तस्तृष्णोपतप्तानां दावदाहमयं जगत्।
82616 भवत्यखिलजन्तूनां यदन्तस्तद्बहिः स्थितम्॥ ३४॥
82617
82618 यस्मादन्तर्यद्यादृशं तप्तं शीतलं वा चित्तं तदेव बहिर्जगदाकारेण
82619 स्थितमित्यर्थः॥ ३४॥
82620
82621 दयुः क्षमा वायुराकाशं पर्वताः सरितो दिशः।
82622 अन्तःकरणतत्त्वस्य भागा बहिरिव स्थिताः॥ ३५॥
82623
82624 तदेवाह - द्यौरिति॥ ३५॥
82625
82626 वटधाना वट इव यदन्तःस्थं सदात्मनः।
82627 तद्बहिर्भासते भास्वद्विकासे पुष्पगन्धवत्॥ ३६॥
82628

82629 न बहिष्ठं न [न वान्तस्थं इत्यपि क्वचित्पठ्यते] चान्तःस्थं
82630 क्वचित्किंचन विद्यते।
82631 यद्यथा कचितं चित्त्वात्तत्तथा तत्त्वमुत्थितम् ॥ ३७ ॥
82632
82633 अध्यारोपदृष्ट्योक्त्वा अपवाददृष्ट्या आह - न बहिष्ठमिति। कथं तर्हि
82634 तत्र जगदाकारभानं तत्राह - यदिति। यद्वस्तु प्राग्वासनाबलाद्यथा
82635 कचितं तथा तद्वेषेण परमार्थतत्त्वमेवोत्थितमित्यर्थः ॥ ३७ ॥
82636
82637 आत्मतत्त्वान्तरं भाति बहिष्ट्वेन जगत्तया।
82638 कर्पूरमिव गन्धेन संकोचे प्रविकासि च ॥ ३८ ॥
82639
82640 आत्मतत्त्वरूपं यदान्तरं वस्तु तदेव बहिष्ट्वेन जगत्तया भाति।
82641 तत्तदुपाध्यनुसारिसंकोचेऽपि सति प्रविकासि च भवति। यथा संपुटान्तःस्थं
82642 कर्पूरं गन्धरूपेण तथा भाति भवति चेत्यर्थः ॥ ३८ ॥
82643
82644 आत्मैव स्फुरति स्फारं जगत्त्वेनाप्यहंतया।
82645 बाह्यत्वेनान्तरत्वेन स च नासन्न सन्विभुः ॥ ३९ ॥
82646
82647 न असन् चक्षुराद्यदृश्याहंकारादिरूपः। नापि सन्
82648 तद्दृश्यबाह्यस्थूलरूपः। किंतु विभुरुभयानुस्यूतसन्मात्ररूप इत्यर्थः
82649 ॥ ३९ ॥
82650
82651 बहिष्ठेनान्तरं बाह्यमन्तःस्थेनान्तरस्थितम्।
82652 यथाविदितमात्मायं स्वचित्तमनुपश्यति ॥ ४० ॥
82653
82654 अत एवायमात्मा आन्तरं स्वचित्तमेव यथा विदितं पूर्वपूर्ववेदनानुसारेण
82655 बहिष्ठेन बहिर्मुखेन चक्षुरादिना बाह्यं जगदाकारमनुपश्यति।
82656 अन्तःस्थेन जाग्रद्वासनादिना आन्तरे हृदि स्थितं
82657 स्वप्नराज्याद्यनुपश्यतीत्यर्थः ॥ ४० ॥
82658
82659 सबाह्याभ्यन्तरं शान्तमात्मनो भेदितं जगत्।
82660 अहन्त्वादिस्थिते भेदे भूरिभङ्गभयं तु तत् ॥ ४१ ॥
82661
82662 न बहिष्ठं न चान्तःस्थमिति यदुक्तं तद्युक्त्यानुभावयति - सबाह्येति।
82663 सबाह्याभ्यन्तरं द्विविधमपि जगदुभयानुस्यूतसदात्मनः
82664 सकाशाद्भेदितं पृथक्कृतं सदसदेवेति शान्तं मृतमेवेत्यर्थः।
82665 तत्पृथक्करणाभावे तु तत्सत्तयैव बाह्याभ्यन्तरभेदे स्थिते सति
82666 तदहंममताध्यासात्तत्तद्भङ्गे भूरिभङ्गभयं भवेदित्यर्थः ॥ ४१ ॥
82667
82668 द्यौः क्षमा वायुराकाशं पर्वताः सरितो दिशः।
82669 कल्पादिरेव ज्वलितं सर्वमाधिहतात्मनः ॥ ४२ ॥
82670
82671 भूरिभङ्गभयमुपपादयति - द्यौरिति। तत्तदाधिभिर्हतात्मनो
82672 द्युक्षमादि सर्वं वस्तु तापत्रयज्वालाज्वलितं सत् तथाविधः कल्पादिः
82673 प्रलयारम्भसमय एव सदा संपद्यत इत्यर्थः ॥ ४२ ॥
82674
82675 यस्त्वात्मरतिरेवान्तः कुर्वन्कर्मेन्द्रियैः क्रियाः।
82676 न वशो हर्षशोकाभ्यां स समाहित उच्यते ॥ ४३ ॥
82677
82678 सन्मात्रात्मदर्शने तु कर्मेन्द्रियैर्व्यवहारेऽपि अभिमानाभावान्न
82679 हर्षशोकादिविक्षेपलेशस्यापि प्रसक्तिरिति सदासमाधिस्थतुल्यतैव
82680 फलतीत्याशयेनाह - यस्त्वित्यादिना ॥ ४३ ॥

82681
82682 यः सर्वगतमात्मानं पश्यन्समुपशान्तधीः ।
82683 न शोचति ध्यायति वा स समाहित उच्यते ॥ ४४ ॥
82684
82685 स पूर्वापरपर्यन्तां यः पश्यञ्जागतीं गतिम् ।
82686 दृष्टिष्वेतासु हसति स समाहित उच्यते ॥ ४५ ॥
82687
82688 पूर्वपर्यन्त उत्पत्तिः अपरपर्यन्तो नाशः तत्सहिताम् । एतासु
82689 मूढजनप्रसिद्धास्वहंममतादृष्टिषु ॥ ४५ ॥
82690
82691 समे परेऽपि नाहंता न जगज्जन्मनो मयि ।
82692 वीचिवृन्देष्विवातप्ता नाकाशे फलधातवः ॥ ४६ ॥
82693
82694 किमर्थं हसतीति चेदहंममेति
82695 दृष्टिगोचरयोरभिमानाभिमन्तव्यलक्षणयोरहंताजगतोराश्रयस्यैवासिद्
82696 ध्या मिथ्यात्वादित्याह - समे इति । ते हि सर्वानुभवसिद्धप्रत्यक्स्वभावे
82697 मयि वा स्यातां श्रुतिसिद्धब्रह्मस्वभावे वा । न तावन्मयि । दृशो
82698 दृश्याश्रयत्वायोगान्नापि परे ब्रह्मणि । असङ्गाद्वयकूटस्थस्वरूपे समे
82699 तस्मिन्नहंताजगज्जन्मादिवैषम्याधारत्वायोगात् । यथा
82700 शरदातपसंभिन्नेषु दूराद्दृश्यमानेषु वीचिवृन्देषु दृश्यमाना
82701 आतप्ता प्रतप्तद्रुतरजतप्राया विस्फुरन्ती पुञ्जीभूता कान्तिर्न
82702 वीचिवृन्देष्वन्तरस्ति समीपोपसर्पणे तेषु निमज्ज्यान्वेषणे चादर्शनात् । नापि
82703 तदन्तर्बहिष्ठे आकाशे असङ्गकूटस्थे चतुर्विधक्रियाफलधात्वदर्शनेन
82704 वीचिक्रियाजन्यफलाश्रयत्वस्य दूरनिरस्तत्वात् । अतः सा कान्तिरिवाहंताजगतो अपि
82705 निराश्रयत्वान्मिथ्यैवेत्यर्थः ॥ ४६ ॥
82706
82707 यस्यान्तरस्थिताहन्त्वं न विभागादि नो मनः ।
82708 न चेतनाचेतनत्वे सोऽस्ति नास्तीतरो जनः ॥ ४७ ॥
82709
82710 अहंताजगद्भेदं निरस्य तद्द्रष्टृभेदं निरस्यति - यस्येति । यस्य
82711 ज्ञस्य अन्तः आन्तरं प्रत्यगात्मरूपं न स्थितं अहन्त्वं यस्मिंस्तथाविधं
82712 संपन्नं दृश्यजगद्विभागादिकं मनश्च नास्ति तस्य तदधीनकल्पने
82713 चेतनाचेतने अपि न स्तः । अतः स एक एव सर्वात्मास्ति तदितरो
82714 जनश्चेतनधातुर्नास्ति । नान्योऽतोऽष्ति द्रष्टा इत्यादिश्रुतेरित्यर्थः ॥ ४७ ॥
82715
82716 व्योमस्वच्छो बहिष्ठेहां सम्यगाचरतीह यः ।
82717 हर्षामर्षविकारेषु काष्ठलोष्टसमः शमः ॥ ४८ ॥
82718
82719 तस्य लक्षणान्याह - व्योमेति द्वाभ्याम् । सम्यक्
82720 शास्त्रशिष्टाचाराविरोधेन । शमः शान्तिस्वभावः ॥ ४८ ॥
82721
82722 आत्मवत्सर्वभूतानि परद्रव्याणि लोष्टवत् ।
82723 स्वभावादेव न भयाद्यः पश्यति स पश्यति ॥ ४९ ॥
82724
82725 अर्थोऽतनुस्तनुर्वापि नासद्रूपेण चेत्यते ।
82726 सद्रूपो नानुभूतोऽज्ञे न ज्ञेनैव न तत्तया ॥ ५० ॥
82727
82728 तत्त्वज्ञस्यैव समदर्शित्वे उपपत्तिमाह - अर्थ इति । अज्ञेन मूढेन
82729 अतनुर्महान् हिरण्यगर्भैश्वर्यान्तस्तनुरल्पः काकिणीमात्रोपि वा
82730 कनककामिन्यादिरर्थो विषयः असद्रूपेण मिथ्यात्वेन न चेत्यते न दृश्यते
82731 तदधिष्ठानसद्रूपश्च नानुभूत इति न तत्तयासन्मात्रस्वभावेनापि चेत्यते ।
82732 ज्ञेन तत्त्वविदैव तथा दृश्यत इति तस्यैवोभयथापि समदर्शित्वमुपपद्यत

82733 इत्यर्थः ॥ ५० ॥
82734
82735 ईदृशाशयसंपन्नो महासत्त्वपदं गतः ।
82736 तिष्ठतूदेतु वा यातु मृतिमेतु न तत्स्थितिम् ॥ ५१ ॥
82737
82738 यस्याशये समदर्शनं निरूढं स सर्वत्र सर्वास्वप्यवस्थासु न
82739 हर्षविषादादिना लिप्यत इत्याह - ईदृशेत्यादिना । तिष्ठत्वकिंचनः । उदेतु
82740 ऐश्वर्याद्यभ्युदयं प्राप्नोतु वा । मृतिं पुत्रबान्धवादिमरणम् ।
82741 तत्स्थितिं अभ्युदयस्थितिं नैतु ॥ ५१ ॥
82742
82743 वसतूत्तमभोगाढ्ये स्वगृहे वा जनाकुले ।
82744 सर्वभोगोज्झिताभोगे सुमहत्यथवा वने ॥ ५२ ॥
82745
82746 उद्दाममन्मथं पानतत्परो वापि नृत्यतु ।
82747 सर्वसङ्गपरित्यागी सममायातु वा गिरौ ॥ ५३ ॥
82748
82749 उद्दाममन्मथमिति क्रियाविशेषणम् । समं निर्विकारम् ॥ ५३ ॥
82750
82751 चन्दनागुरुकर्पूरैर्वपुर्वा परिलिम्पतु ।
82752 ज्वालाजटिलविस्तारे निपतत्वथवाऽनले ॥ ५४ ॥
82753
82754 पापं करोतु सुमहद्बहुलं पुण्यमेव च ।
82755 अद्य वा मृतिमायातु कल्पान्तनिचयेन वा ॥ ५५ ॥
82756
82757 नासौ किंचिन्न तत्किंचित्कृतं तेन महात्मना ।
82758 नासौ कलङ्कमाप्नोति हेम पङ्कगतं यथा ॥ ५६ ॥
82759
82760 असौ समदर्शी । किंचिन्मरणदुःखादिविकारिदेहमन-आदिरहंताश्रयः ।
82761 अत-एव तेन न किंचित्कृतम् ॥ ५६ ॥
82762
82763 संवित्पुरुषशब्दार्थैः स कलङ्कैः कलङ्क्यते ।
82764 अहंत्वंवासनारूपैः शुक्तिकारजतोपमैः ॥ ५७ ॥
82765
82766 अज्ञेषु तर्हि कस्य कलङ्कस्तं दर्शयति - संविदिति । सकलङ्कैः
82767 शास्त्रानभ्यनुज्ञातसेवनदूषितैर्वासनारूपैरैन्द्रियकसंविद्भिस्तदायतनेन्
82768 अ पुरुषेण देहेन तद्भोग्यैः शब्दार्थरूपैर्विषयैश्च
82769 अहन्त्वमहंकारप्रधानलिङ्गात्मा ॥ ५७ ॥
82770
82771 समस्तवस्तुप्रशमात्सम्यग्ज्ञानाद्यथास्थितेः ।
82772 स्वभावस्योपशान्तोन्तःकलङ्कोऽसत्तया स्वतः ॥ ५८ ॥
82773
82774 कस्मादुपायादन्तःकलङ्कोपशमस्तमाह - समस्तेति । स्वभावस्य चित्तस्य
82775 कलङ्को बाधादसत्तया स्वतः प्रशान्तो भवतीति शेषः ॥ ५८ ॥
82776
82777 अहंत्ववासनानर्थप्रसूतेः संविदात्मनः ।
82778 पुरुषस्य विचित्राणि सुखदुःखानि जन्मनि ॥ ५९ ॥
82779
82780 संसारदुःखप्राप्तेस्तर्हि किं कारणं तदाह - अहंत्वेति ।
82781 अहंत्वाध्यासाद्वासनालक्षणानामनर्थानां प्रसूतेरुद्बोधात्पुरुषस्य
82782 जन्मनि सन्तीत्यर्थः ॥ ५९ ॥
82783
82784 रज्ज्वां सर्पभ्रमे शान्तेऽहिर्नेति निर्वृतिर्यथा ।

82785 अहंत्वभावसंशान्तौ तथान्तः समता मता ॥ ६० ॥
82786
82787 अत-एवाहन्त्वशान्त्या संसारदुःखनिवृत्तिरित्याह - रज्वामिति । समता
82788 सर्वदुःखवैषम्यशून्यता ॥ ६० ॥
82789
82790 यत्करोति यदश्नाति यद्ददाति जुहोति वा ।
82791 न तज्ज्ञस्य न तत्र ज्ञो मा करोतु करोतु वा ॥ ६१ ॥
82792
82793 दुष्कृतफलमिव सुकृतफलमपि ज्ञस्य नास्तीति तस्य सर्वकर्तव्यहानिरित्याह
82794 - यदित्यादिना ॥ ६१ ॥
82795
82796 कर्मणास्ति न तस्यार्थो नार्थस्तस्यास्त्यकर्मणा ।
82797 यथास्वभावावगमात्स आत्मन्येव संस्थितः ॥ ६२ ॥
82798
82799 अकर्मणा कर्मत्यागेन ॥ ६२ ॥
82800
82801 इच्छास्ततः समुद्यन्ति न मज्झर्य इवोपलात् ।
82802 याश्चोद्यन्ति च ताः सर्वाः स एवाप्स्विव वीचयः ॥ ६३ ॥
82803
82804 फलेच्छया हि तदुपाये कर्मणि प्रवृत्तिः स्यात्सैव तस्य पूर्णत्वान्नोदेतीत्याह
82805 - इच्छा इति । कदाचिद्वासनाभ्यासादुदिता अपीच्छाः परमार्थदृशा तस्य
82806 स्वात्मभूता एवेत्याह - याश्चेति ॥ ६३ ॥
82807
82808 सकलमिदमसावसौ च सर्वं
82809 जगदखिलं न विभागितात्र काचित् ।
82810 परमपुरुषपावनैकरूपी
82811 स सदिति तत्सदकिंचिदेव नासौ ॥ ६४ ॥
82812
82813 तस्य सर्वात्मतां सर्वस्य तदात्मतां च
82814 द्रढयन्नुभयोर्निष्प्रपञ्चचिन्मात्रतैव परमार्थतः फलितेति दर्शयति ##-
82815 काचिन्नास्ति । एवं भेदकानां कार्यकारणोपाधीनां तत्तत्साक्षीचिन्मात्रत्वे स
82816 तत्त्ववित् सर्वजगदधिष्ठानसन्मात्रमेव । यतोऽसौ परमः पूर्णत्वात्पुरुषः
82817 सर्वदोषास्पर्शाच्च पवनो यः परमात्मा तदेकरूपीति अनया रीत्या
82818 अकिंचित्सर्वद्वैतबन्धनिर्मुक्तसत्स्वरूपमात्रपरिशिष्टोऽसौ नित्यमुक्तः
82819 संपन्न इत्यर्थः ॥ ६४ ॥
82820
82821 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे०
82822 मोक्षोपायेषूपशमप्रकरणे ध्यानविचारो नाम षट्पञ्चाशः सर्गः ॥
82823 ५६ ॥
82824
82825 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे ध्यानविचारो
82826 नाम षट्पञ्चाशः सर्गः ॥ ५६ ॥
82827
82828
82829 सप्तपञ्चाशः सर्गः ५७
82830
82831 श्रीवसिष्ठ उवाच ।
82832
82833 यदात्ममरिचस्यान्तश्चित्त्वात्तीक्ष्णत्ववेदनम् ।
82834 तदहंतादि भेदादि देशकालादि चेत्यतः ॥ १ ॥
82835
82836 अज्ञातस्वस्वभावा चिद्दृक्त्वाद्दृश्यस्वभावताम् ।

82837 यां धत्ते सा चिदेवेति चिदन्यन्नेति वर्ण्यते ‖ १ ‖
82838
82839 एवं सर्वजगतश्चिदभेदे परमार्थतः सिद्धे व्यवहारेऽपि जगद्वैचित्र्यं
82840 तत्तद्रूपचित्स्वभाव एवेति फलितमित्याह - यदित्यादिना | आत्मैव
82841 स्वप्रकाशतैक्ष्यं मरिचं तस्य चित्त्वात्तैक्ष्ण्यप्रथारूपं यद्वेदनं
82842 तत्स्थानीयं अज्ञातब्रह्मस्वभाव एव अहंतात्वंतादिरूपं
82843 घटकुड्यभेदादिरूपं तदाधारदेशकालादिरूपं च जगदिति |
82844 अतश्चिदभेदसाधनात्फलितमित्यर्थः ‖ १ ‖
82845
82846 यदात्मलवणस्यान्तश्चित्त्वाल्लवणवेदनम् |
82847 तदहंतादि भेदादि देशकालादि मत्स्थितम् ‖ २ ‖
82848
82849 स्वतो यदन्तरात्मेक्षोश्चित्त्वान्माधुर्यवेदनम् |
82850 तदहंतादि भेदादि जगत्तत्त्वादि जृम्भितम् ‖ ३ ‖
82851
82852 तत्त्वादिना तत्तदाकारभेदेन जृम्भितमभिव्यक्तम् ‖ ३ ‖
82853
82854 स्वतो यदात्मदृषदश्चित्त्वात्काठिन्यवेदनम् |
82855 तदहंतादि भेदादि देशकालादितां गतम् ‖ ४ ‖
82856
82857 स्वतो यदात्मशैलस्य ज्ञतया जाड्यवेदनम् |
82858 तदहंतादि भेदादि भुवनादीति संस्थितम् ‖ ५ ‖
82859
82860 जाड्यं गौरवम् ‖ ५ ‖
82861
82862 स्वतो यदात्मतो यस्य चिद्द्रवत्वादिवर्तनम् |
82863 तदावर्ताद्यहंतादिभेदाद्याकारिता इव ‖ ६ ‖
82864
82865 आकारितास्तत्तदाकारवता इव स्थितमित्यनुषज्यते ‖ ६ ‖
82866
82867 स्वतो यदात्मवृक्षस्य शाखादिस्तस्य वेदनम् |
82868 तदहंतादि भेदादि भुवनादीव सत्स्फुरत् ‖ ७ ‖
82869
82870 सत् वर्तमानं तथा स्फुरद्भासमानम् ‖ ७ ‖
82871
82872 यदात्मगगनस्यान्तश्चित्त्वाच्छून्यत्ववेदनम् |
82873 तदहंतादि भेदादि भुवनादीति भावनम् ‖ ८ ‖
82874
82875 भावनं कल्पनम् ‖ ८ ‖
82876
82877 यदात्मगगनस्यान्तश्चित्त्वात्सौषिर्यवेदनम् |
82878 तदहंतादि भेदादि शरीरादि च दीपितम् ‖ ९ ‖
82879
82880 द्रव्याद्बहिःशून्यत्वम् मूर्तद्रव्यान्तश्छिद्रता तु सौषिर्यमिति भेदः ‖ ९ ‖
82881
82882 स्वतो यदात्मकुड्यस्य नैरन्तर्यं निरन्तरम् |
82883 तदहंतादिभेदेन चित्ताद्बहिरिव स्थितम् ‖ १० ‖
82884
82885 नैरन्तर्य निबिडता | बहिर्दृश्यत्वाच्चिद्व्यतिरिक्तमिवेत्यर्थः ‖ १० ‖
82886
82887 स्वतो यदात्मसत्तायाश्चित्त्वात्सत्त्वैकवेदनम् |
82888 तदहंतादि भेदादि चेतनानीतिवत्स्थितम् ‖ ११ ‖

82889
82890 चेतनानि चिदाभासाः ॥ ११ ॥
82891
82892 अन्तरात्मप्रकाशस्य स्वतो यदवभासनम् ।
82893 तदहंतादि चित्त्वादि जीव इत्येव वेद सः ॥ १२ ॥
82894
82895 चित्त्वं वृत्तिभेदभिन्नचिदाभासेष्वनुगतं सामान्यं वेद कल्पयति स जीवः
82896 ॥ १२ ॥
82897
82898 अन्तरस्ति यदात्मेन्दोश्चिद्रूपं चिद्रसायनम् ।
82899 स्वत आस्वादितं तेन तदहंतादिनोदितम् ॥ १३ ॥
82900
82901 रसायनममृतम् । स्वत आस्वादितं स्वप्रकाशतया अनुभूतम् ।
82902 उदितमाविर्भूतम् ॥ १३ ॥
82903
82904 परमात्मगुडस्यान्तर्यच्चित्स्वादूदयात्मकम् ।
82905 तदेवास्वाद्यते तेन स्वतोऽहंतादि नान्तरे ॥ १४ ॥
82906
82907 आन्तरे स्वात्मन्येव ॥ १४ ॥
82908
82909 परमात्ममणेश्चित्त्वाद्यदन्तः कचनं स्वयम् ।
82910 चेतनात्मपदे चान्तरहमित्यादि वेत्त्यसौ ॥ १५ ॥
82911
82912 चेतनारूपे आत्मपदे स्वरूपे ॥ १५ ॥
82913
82914 न च किंचन वेत्त्यन्तर्वेद्यस्यासंभवादिह ।
82915 न चास्वादयति स्वादु स्वाद्यस्यासंभवादयम् ॥ १६ ॥
82916
82917 मायिकजगदाकारानुभवस्य स्वप्रकाशस्वात्मानुभवमात्रत्वव्युत्पादनाय
82918 पश्यति वेत्त्यास्वादयत्यास्वाद्यते इति कर्मकर्तृभावव्यपदेशो न
82919 तद्भेदसाधनाशयेनेत्याह - न चेति ॥ १६ ॥
82920
82921 न च किंचिच्चिनोत्यन्तश्चेत्यस्यासंभवे सति ।
82922 विन्दते न च वा किंचिद्वेद्यस्यासंभवादसौ ॥ १७ ॥
82923
82924 चिनोति चैतन्यान्तरात्मना विकरोति । वेद्यस्य लभ्यस्य ॥ १७ ॥
82925
82926 असदाभास एवात्मा अनन्तो भरिताकृतिः ।
82927 स्थितः सदैवैकघनो महाशैल इवात्मनि ॥ १८ ॥
82928
82929 असन् आभासत इत्याभासो जगदाकारो यस्मिंस्तथाविध एव ॥ १८ ॥
82930
82931 अनया तु वचोभङ्ग्या मया ते रघुनन्दन ।
82932 नाहंतादिजगत्तादिभेदोस्तीति निदर्शितम् ॥ १९ ॥
82933
82934 तर्हि यदात्ममरिचस्येत्याद्युक्तेः कोऽभिप्रायस्तमाह - अनयेति ॥ १९ ॥
82935
82936 न चित्तमस्ति नो चेता न जगत्तादिविभ्रमः ।
82937 वृष्टमूकाम्बुदसितं शान्तं शाम्यति केवलम् ॥ २० ॥
82938
82939 पूर्वं वृष्टो वृष्टवान्पश्चाच्छरदि मूकस्तूष्णींभूतोऽम्बुद इव सितं
82940 शुद्धमधिष्ठानसन्मात्रतया परिशिष्टं बाधितं जगत् शान्तमेव

82941 शाम्यतीत्यर्थः ॥ २० ॥
82942
82943 यथावर्तादितामेति द्रवत्वाद्वारि वारिणि ।
82944 तदाहंतादितामेति ज्ञप्ता ज्ञप्तौ ज्ञ आत्मनि ॥ २१ ॥
82945
82946 ज्ञप्ता मायावी ज्ञः सर्वज्ञः स्वमायावृते ज्ञप्तिरूपे आत्मनि
82947 अहंतादिरूपतां जीवजगद्भावमिति यावत् ॥ २१ ॥
82948
82949 यथा द्रवत्वं पयसि यथा स्पन्दः सदागतौ ।
82950 अहंतादेशकालादि तथा ज्ञे ज्ञप्तिमात्रके ॥ २२ ॥
82951
82952 सदागतौ वायौ । परमार्थतो ज्ञप्तिमात्ररूपे ज्ञे सर्वज्ञेश्वरे ॥ २२ ॥
82953
82954 ज्ञो ज्ञतायां शिव ज्ञानं जानाति ज्ञानबृंहया ।
82955 ज्ञायतेऽहंतदि ज्ञेन जीवादीत्यभिजीवनैः ॥ २३ ॥
82956
82957 यदि जीवजगद्रूपे ज्ञप्तेरनन्ये तर्हि ज्ञप्ते जीवेश्वरभावयोः को
82958 विशेषस्तमाह - ज्ञ इति । ज्ञ ईश्वरो ज्ञतायामीश्वरभावे शिवं
82959 निरतिशयानन्दरूपं स्वरूपज्ञानं [स्वरूपज्ञानबृंहया इति
82960 मुद्रितपुस्तके पाठः] ज्ञानबृंहया अनावरणापरिच्छेदलक्षणया
82961 ज्ञानाभिवृद्ध्या सदैव जानाति । अहंतादि अहंकारस्थूलदेहरूपजीवभावे
82962 तु ज्ञेन चेतनभूतेनापि अभिजीवनैर्जीवनहेतुभिः
82963 प्राणकरणविषयसंबन्धाद्यासैर्जीवादिरूप एवात्मेति ज्ञायते न तत्त्वत इति
82964 विशेष इत्यर्थः ॥ २३ ॥
82965
82966 यथोदेति ययाऽज्ञस्य तृप्तिर्ज्ञानेन यादृशी ।
82967 अनन्ये वान्यता बुद्धा स तथा जृम्भते तया ॥ २४ ॥
82968
82969 अत-एव जीवस्य यथा यथा भ्रान्तिस्तथा तथेश्वरो विवर्तत इत्याह -
82970 यथेति । यया यया कामकर्मवासनया यादृशविषयज्ञानेन अज्ञस्य यथा
82971 येन येन दर्शनलाभोपभोगवैचित्र्यप्रकारेण यादृशी
82972 प्रियओदप्रमोदादिनानाप्रकारा तृप्तिरुपभोग उदेति अनन्ये स्वरूपे
82973 भोक्तृभोग्यभोगवैचित्र्यरूपा अन्यता वा ज्ञेन बुद्धा स परमेश्वरस्तया
82974 तया तदीयकामादिवासनया तथा तथा जृम्भते स्वगात्राणि विनामयति
82975 विवर्तते । वैचित्र्यं धत्ते इति यावत् ॥ २४ ॥
82976
82977 जीवनं ज्ञातता ज्ञाता जीवनं जीवजीवनम् ।
82978 अत्यन्तमस्ति नो भेदश्चिद्रूपत्वे ज्ञजीवयोः ॥ २५ ॥
82979
82980 यदा त्वनेन सच्छास्त्रसद्रूपदेशाद्भोग्यस्य जगतो ज्ञातता
82981 अधिष्ठानसन्मात्ररूपा स्फूर्तिरेव जीवनं सारः परमार्थस्थितिर्ज्ञाता
82982 जीवानां सर्वेषां यदधीनं जीवनं तादृशानन्दरूपमेव जीवनं
82983 भोक्तुः सारो ज्ञातस्तदा भोग्यभोक्त्रधिष्ठानयोर्द्वयोरपि चिद्रूपत्वे
82984 परिशिष्टे ज्ञजीवयोर्जीवेश्वर्योर्भेदोऽस्त्यन्तं नास्ति । सर्वथैव निवर्तत
82985 इत्यर्थः ॥ २५ ॥
82986
82987 यथा ज्ञजीवयोर्नास्ति भेदो नाम तथैतयोः ।
82988 भेदोऽस्ति न ज्ञशिवयोर्विद्धि शान्तमखण्डितम् ॥ २६ ॥
82989
82990 जीवेश्वरभेदकाज्ञाने नष्टे प्राज्ञतुरीयभेदोऽपि निवृत्त
82991 इत्यखण्डपूर्णानन्दैकरसचिन्मात्रसाम्राज्यं सिद्धमित्याह - यथेति ॥ २६
82992 । ।

82993
82994 सर्वं प्रशान्तमजमेकमनादिमध्य-
82995 माभास्वरं स्वदनमात्रमचेत्यचिह्नम् ।
82996 सर्वं प्रशान्तमिति शब्दमयी तु दृष्टि-
82997 र्बोधार्थमेव हि मुधैव तदोमितीदम् ॥ २७ ॥
82998
82999 निष्कृष्टार्थमनूद्योपसंहरति - सर्वमिति । सर्वं जगत् आसमन्तात्
83000 भास्वरं पूर्णस्वप्रकाशरूपं स्वदनमात्रमानन्दैकरसं
83001 चेत्यैर्विषयैश्चिह्नेन स्वव्यावर्तकधर्मेण च रहितं प्रशान्तं ब्रह्म
83002 तदेव सर्वं प्रशान्तमिति तात्कालिकशब्दमयी
83003 पदवाच्यार्थभेदसंसर्गगोचरा आहार्या भेददृष्टिः
83004 साक्षात्प्रयोजनशून्यत्वान्मुधैव । हि यस्मात्कारणाद्विरोधप्रतिसंधाने
83005 भागस्त्यागलक्षणाश्रयद्वारा लक्ष्यार्थाखण्डबोधार्थमेव ।
83006 तद्वाक्यबोधमखण्डार्थरूपं तु ओमिति ओंकार्ऽम् जगद्ब्रह्म चैकीकृत्य
83007 विराठिरण्यगर्भाव्याकृततुरीयात्मकान्
83008 अकासेकारमकारार्धमात्रापादांश्चतुर्धा विभज्य
83009 पूर्वपूर्वपादानुत्तरोत्तरेषु प्रविलाप्यार्धमात्रया यदद्वयं
83010 पूर्णानन्दैकरसं नित्यापरोक्षप्रत्यक्चिन्मात्ररूपं लक्ष्यते इदमेव न
83011 संसृष्टरूपमित्यर्थः ॥ २७ ॥
83012
83013 इत्यार्षे श्रीवासिष्ठमहारमायणे वाल्मीकीये दे०
83014 मोक्षोपायेषूपशमपकरणे भेदनिरासो नाम सप्तपञ्चाशः सर्गः ॥
83015 ५७ ॥
83016
83017 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे भेदनिरासो
83018 नाम सप्तपञ्चाशः सर्गः ॥ ५७ ॥
83019
83020
83021 अष्टपञ्चाशः सर्गः ५८
83022
83023 श्रीवसिष्ठ उवाच ।
83024
83025 अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
83026 किरातेशस्य सुरघोर्वृत्तान्तं विस्मयास्पदम् ॥ १ ॥
83027
83028 किरारेशस्य सुरघोर्निर्वेदोऽत्रोपवर्ण्यते ।
83029 माण्डव्येनोपदेशश्च सर्वत्यागाद्युपायतः ॥ १ ॥
83030
83031 अत्रास्मिन् शब्दमयी दृष्टिर्बोधार्थमेवेत्युक्तेऽर्थे ॥ १ ॥
83032
83033 उत्तरस्या दिशो मेदः कर्पूरपटलं भुवः ।
83034 संभूतं हसनं शार्वं शुक्लो वा चान्द्र आतपः ॥ २ ॥
83035
83036 सुरघोर्निवासदेशं वक्तुं तत्संनिहितं हिमवच्छृङ्गं वर्णयति -
83037 उत्तरस्या इत्यादिना । मेदः सार इति यावत् । भुवः संभूतं निर्गतं
83038 कर्पूराणां पटलं राशिः । शार्वं हसनं चान्द्र आतपो वेति
83039 प्रत्येकमुत्प्रेक्षा । अथवा दिशो मेदः हसनं चान्द्र आतपो वा भुवः भूमिं
83040 प्राप्य कर्पूरपटलं संभूतमित्यौत्प्रेक्षिकवैकल्पिकनानाहेतूपपाद्या
83041 एकैव विशिष्टोत्प्रेक्षा ॥ २ ॥
83042
83043 हिमाद्रेः शृङ्गमस्तीह कैलासो नाम पर्वतः ।
83044 शैलकुञ्जरनिर्मुक्तकलापस्येव नायकः ॥ ३ ॥

83045
83046 हिमाद्रेः शृङ्गमिति विशेषणान्मेरुसंनिहितप्रसिद्धरजतादेरयमन्य इति
83047 गम्यते। शैलकुञ्जरेण पर्वतश्रेष्ठेन हिमवता निर्मुक्तस्य धृतस्य
83048 शृङ्गपरम्परालक्षणस्य मुक्ताकलापस्य नायको मणिरिव स्थित इत्यर्थः।
83049 शैलस्थकुञ्जरेभ्यो निर्गलितस्य मुक्ताकलापस्य नायकः संग्राहको राशिरिवेति
83050 वा॥ ३॥
83051
83052 विष्णोः क्षीरोदक इव स्वर्गः सुरपतेरिव।
83053 अब्जजस्येव नाभ्यब्जं गृहं यः शशिमौलिनः॥ ४॥
83054
83055 नाभ्यब्जं विष्णुनाभिकमलम्। गृहं श्वशुरकल्पितमित्यर्थाद्गम्यते॥ ४॥
83056
83057 रुद्राक्षवृक्षदोलाभिः साप्सरोभिर्विभाति यः।
83058 लोलरत्नशलाकाभिर्लहरीभिरिवार्णवः॥ ५॥
83059
83060 रुद्राक्षवृक्षेषु लम्बमानाभिर्दिलाभिः प्रेङ्खोलिकाभिः।
83061 लोलरत्नशलाकाभिरिति लहरीणामपि विशेषणम्॥ ५॥
83062
83063 गणाङ्गनानामनिशं मत्तानां चरणैर्हताः।
83064 अशोका इव राजन्ते यत्राशोका विलासिनः॥ ६॥
83065
83066 गणाङ्गनानां प्रमथस्त्रीणाम्॥ ६॥
83067
83068 संचरञ्शंकरो दिक्षु भृगुष्विन्दुमणिद्रवैः।
83069 निवर्तन्ते प्रवर्तन्ते यत्राजस्रं च निर्झराः॥ ७॥
83070
83071 यत्र यासु दिक्षु संचरन् भवति तत्र भृगुषु प्रपातस्थलेषु प्रवर्तन्ते अन्यासु
83072 निवर्तन्ते॥ ७॥
83073
83074 यो लतावृक्षगुल्मौघवापीह्रदनदीनदैः।
83075 मृगैर्मृगगणैर्भूतैर्ब्रह्माण्डवदिवावृतः॥ ८॥
83076
83077 ब्रह्माण्डवदिवेति। उक्तार्थानामपि प्रयोगो दृश्यते। यथा
83078 द्वावपूपावानयेति महाभाष्योक्तिदर्शनात्। द्योतकानां बहूनामपि
83079 उद्यन्तं वा आदित्यमग्निरनुसमारोहति इतिवत्सहप्रयोगसंभवाद्वतिनोक्तेऽपि
83080 सादृश्ये इवशब्दप्रयोगः। अण्डवद्विराडाकारविशिष्टं ब्रह्मेवेति
83081 मतुबन्तं वा योज्यम्॥ ८॥
83082
83083 तस्य हेमजटा नाम किराताः संस्थिताः स्थले।
83084 पिपीलिका वटतरोर्मूलकोशगता इव॥ ९॥
83085
83086 तस्य हिमवच्छृङ्गस्य। स्थले मूलदेशे॥ ९॥
83087
83088 कैलासपादारण्यानां रुद्राक्षैस्तरुगुल्मकैः।
83089 वसन्ति धूकवत्क्षुद्रास्ते वै निकटजीविनः॥ १०॥
83090
83091 तेषां जीवनोपायमाह - कैलासेति। कैलासाख्यशृङ्गस्य पादाः
83092 प्रत्यन्तपर्वतास्तदीयानामरण्यानां संबन्धिभि रुद्राक्षैरन्यैश्च
83093 तरुगुल्मकैः फलपुष्पकाष्ठमूलाद्युपजीवनेन निकटजीविनः॥ १०॥
83094
83095 आसीत्तेषामुदारात्मा राजा परपुरंजयः।
83096 जयलक्ष्म्या भुज इव यः प्रजायाश्च दक्षिणः॥ ११॥

83097
83098 जयलक्ष्म्या भुज इव परपुरंजयः प्रजायाः पालने च दक्षिणो राजा
83099 वक्ष्यमाणविशेषणैर्ब्रह्मविद्याधिकारदर्शनाच्चासौ क्षत्रिय इति गम्यते ॥
83100 ११ ॥
83101
83102 सुरघुर्नाम बलवान्सुरघोरारिदर्पहा ।
83103 अर्कः पराक्रम इव मूर्तिमानिव मारुतः ॥ १२ ॥
83104
83105 पराक्रमे अर्क इवेति योजना ॥ १२ ॥
83106
83107 जितो वै राज्यविभवैर्धनैर्गुह्यकनायकः ।
83108 शतक्रतुगुरुर्बोधैः काव्यैरसुरदेशिकः ॥ १३ ॥
83109
83110 राज्यविभवैर्धनैश्च गुह्यकनायको राजराजो धनेश्वरोऽपि जितस्तेनेति शेषः ।
83111 काव्यै रसालंकारादिशालिप्रबन्धरचनैरसुरदेशिकः शुक्रः ॥ १३ ॥
83112
83113 स चक्रे राजकार्याणि निग्रहानुग्रहक्रमैः ।
83114 यथाप्राप्तान्यखिन्नाङ्गो दिनानीव दिवाकरः ॥ १४ ॥
83115
83116 तज्जाभ्यां सुखदुःखाभ्यामथ तस्याभ्यभूयत ।
83117 स्वगतिर्वागुराबन्धैः श्लिष्टाङ्गस्येव पक्षिणः ॥ १५ ॥
83118
83119 किमार्तं पीडयाम्येनं तिलान्यन्त्रमिवौजसा ।
83120 सर्वेषामेव भूतानां ममेवार्तिः प्रजायते ॥ १६ ॥
83121
83122 दुःखवशाच्चिन्ताशोकाद्युद्भवं दर्शयति - किमार्तमिति । एनं
83123 प्रजाजनम् ॥ १६ ॥
83124
83125 धनमस्मै प्रयच्छामि धनेनानन्दवाञ्जनः ।
83126 भवत्यहमिवाशेषस्तदलं मेऽतिनिग्रहैः ॥ १७ ॥
83127
83128 कर्तव्यसंशये प्रथमां कोटिं दर्शयति - धनमिति । तत्तस्माद्धेतोः ।
83129 आर्तायास्मै जनाय धनं प्रयच्छामि । अतिनिग्रहैश्च अलं । प्रयोजनं
83130 नास्तीत्यर्थः ॥ १७ ॥
83131
83132 अथवा निग्रहं प्राप्तं करोम्येतेन वै विना ।
83133 वर्तते न प्रजैवेयं विना वारि सरिद्यथा ॥ १८ ॥
83134
83135 द्वितीयां दर्शयति - अथवेति । एतेन निग्रहेण विना प्रजा न वर्तत एव ।
83136 स्वस्वमर्यादायामिति शेषः ॥ १८ ॥
83137
83138 हा कष्टमेव [कष्टमेव इत्यपि क्वचित्पाठः] निग्राह्यो
83139 नित्यानुग्राह्य एष मे ।
83140 दिष्ट्याद्य सुखवानस्मि कष्टमद्यास्मि दुःखवान् ॥ १९ ॥
83141
83142 निग्राह्यो वधबन्धादिना दण्ड्य ॥ १९ ॥
83143
83144 इति दोलायितं [लोलायितं इति पाठः] चेतो न विशश्राम भूपतेः ।
83145 एकत्राम्बुमहावर्ते चिरतृष्णमिव भ्रमत् ॥ २० ॥
83146
83147 एकत्र न विशश्राम । यथा तृषितनिद्राणस्य चिरतृष्णं मनः
83148 अम्बुमहावर्ते भ्रमति तद्वत् ॥ २० ॥

83149
83150 अथैकदा गृहं तस्य माण्डव्यो मुनिराययौ ।
83151 भ्रान्ताशेषककुप्कुञ्जो वासवस्येव नारदः ॥ २१ ॥
83152
83153 भ्रान्तान्यशेषाणि ककुप्कुञ्जानि दिङ्मण्डलानि येन ॥ २१ ॥
83154
83155 तमसौ पूजयामास पप्रच्छ च महामुनिम् ।
83156 संदेहदुर्द्रुमस्तम्भपरशुं सर्वकोविदम् ॥ २२ ॥
83157
83158 सुरघुरुवाच ।
83159
83160 भवदागमनेनास्मि मुने निर्वृतिमागतः ।
83161 परमां वसुधापीठं संप्राप्त इव माधवे ॥ २३ ॥
83162
83163 परमां निर्वृतिं सुखम् । माधवे वसन्ते विष्णौ वा ॥ २३ ॥
83164
83165 अद्य तिष्ठाम्यहं नाथ धन्यानां धुरि धर्मतः ।
83166 विकासि रविणेवाब्जं यत्त्वयास्म्यवलोकितः ॥ २४ ॥
83167
83168 भगवन्सर्वधर्मज्ञ चिरं विश्रान्तवानसि ।
83169 तदमुं संशयं छिन्धि ममार्कस्तिमिरं यथा ॥ २५ ॥
83170
83171 यदि विश्रान्तवान् गतश्रमोऽसि तत्तर्हि । अथवा परमपदे चिरं विश्रान्तवानसि
83172 तत्तस्माद्धेतोः ॥ २५ ॥
83173
83174 महतां संगमेनार्तिः कस्य नाम न नश्यति ।
83175 संदेहं तु परामार्तिमाहुरार्तिविदो जनाः ॥ २६ ॥
83176
83177 मन्त्रिग्रहानुग्रहजा मद्भृत्यवपुषि स्थिताः ।
83178 कषन्ति मामलं चिन्ता गजं हरिनखा इव ॥ २७ ॥
83179
83180 भृत्यग्रहणं शत्रुमित्रादिसर्वोपलक्षणम् । वपुषि विषये स्थिता निरूढाः ।
83181 कषन्ति पीडयन्ति ॥ २७ ॥
83182
83183 तद्यथा समतोदेति सूर्यांशुरिव सर्वदा ।
83184 मतौ मम मुने नान्या तथा करुणया कुरु ॥ २८ ॥
83185
83186 समता समदृष्टिः । अन्या विषमदृष्टिर्यथा नोदेति तथा ॥ २८ ॥
83187
83188 माण्डव्य उवाच ।
83189
83190 स्वयत्नेन स्वसंस्थेन स्वेनोपायेन भूपते ।
83191 एषा मनःपेलवता हिमवत्प्रविलीयते ॥ २९ ॥
83192
83193 वैराग्यत्यागादिरूपेण स्वयत्नेन श्रवणमननादिना स्वव्यञ्जकोपायेन ।
83194 स्वसंस्थेन स्वात्मबोधपर्यवसितेन । पेलवता मृदुता ।
83195 हर्षविषादस्थानकण्टकसहस्रवेधार्हतेति यावत् ॥ २९ ॥
83196
83197 स्वविचारणयैवाशु शाम्यत्यन्तर्मनोज्वरः ।
83198 शरदागममात्रेण मिहिका महती यथा ॥ ३० ॥
83199
83200 स्वेनैव मनसा स्वानि स्वशरीरगतानि च ।

83201 विचारयेन्द्रियाण्यन्तः कीदृशान्यथ कानि च ॥ ३१ ॥
83202
83203 स्वानि स्वीयानि पुत्रमित्रादीनि स्वशरीरगतानीन्द्रियाणि चादन्यानि च तत्त्वतः कानि
83204 युक्तितः कीदृशानि चेति विचारयेत्यर्थः ॥ ३१ ॥
83205
83206 कोऽहं कथमिदं किंवा कथं मरणजन्मनी ।
83207 विचारयान्तरेवं त्वं महत्तामलमेष्यसि ॥ ३२ ॥
83208
83209 अविचाराध्यस्तपरिच्छिन्नतापगमान्महत्ताम् ॥ ३२ ॥
83210
83211 विचारणा परिज्ञातस्वभावस्य सतस्तव ।
83212 हर्षामर्षदशाश्चेतस्तोलयिष्यन्ति नाचलम् ॥ ३३ ॥
83213
83214 स्रतः परमार्थवस्तुभूतस्य तव अचलं चेतो न तोलयिष्यन्ति । तुलायामिव
83215 नोन्नमनानमनाभ्यामनियतस्थितिं करिष्यन्तीत्यर्थः ॥ ३३ ॥
83216
83217 मनः स्वरूपमुत्सृज्य शममेष्यति विज्वरम् ।
83218 भूतपूर्ववपुर्भूत्वा तरङ्गः पयसीव ते ॥ ३४ ॥
83219
83220 विज्वरं ते मनः स्वं मनोरूपमुत्सृज्य भूतपूर्ववपुः
83221 पूर्वसिद्धब्रह्मस्वभावं भूत्वा शमं निर्विक्षेपतामेष्यति ॥ ३४ ॥
83222
83223 तिष्ठदेव मनोरूपं परित्यक्ष्यति तेऽनघ ।
83224 कलङ्कविकलं कालं मन्वन्तरगताविव ॥ ३५ ॥
83225
83226 तर्हि किं मनसः सत्तैव नङ्क्ष्यति नेत्याह - तिष्ठदेवेति । यथा
83227 पूर्वमनोरन्ते कलिकालं प्राप्य कलङ्कैः पापैर्विकलं भुवनं
83228 पुनर्मन्वन्तरगतौ सत्यां तिष्ठदेव कलङ्कं त्यजति तद्वन्मनोऽपि
83229 जीवन्मुक्तव्यवहारक्षमतया तिष्ठदेव पूर्वतनं मनोरूपं त्यजतीत्यर्थः
83230 ॥ ३५ ॥
83231
83232 अनुकम्प्या भविष्यन्ति श्रीमन्तः सर्व एव ते ।
83233 दृष्टतत्त्वस्य तुष्टस्य जनाः पितुरिवावनौ ॥ ३६ ॥
83234
83235 न केवलं दुःखनिवृत्तिरेव ज्ञानफलं किंतु निरतिशयानन्दसाम्राज्यमपि
83236 यत्र ब्रह्मादयोऽप्यनुकम्प्या इत्याह - अनुकल्प्या इति ॥ ३६ ॥
83237
83238 विवेकदीपदृष्टात्मा मेर्वब्धिनभसामपि ।
83239 अधो [अथो इति पाठः] करिष्यसि नृप महत्तामुत्तमार्थदाम् ॥ ३७
83240 ॥
83241
83242 यदा आकाशादीनामपि महत्ता तत्सत्ताधीना तदा तस्य निरतिशयं महत्त्वं
83243 किं वाच्यमित्याशयेनाह - विवेकेति । विवेकजन्येन ज्ञानदीपेन दृष्ट
83244 आत्मा येन ॥ ३७ ॥
83245
83246 महत्तामागते चेतस्तव संसारवृत्तिषु ।
83247 न निमज्जति हे साधो गोष्पदेष्विव वारणः ॥ ३८ ॥
83248
83249 कृपणं तु मनो राजन्पेलवेऽपि निमज्जति ।
83250 कार्ये गोष्पदतोयेऽपि जीर्णाङ्गो मशको यथा ॥ ३९ ॥
83251
83252 कृपणं कामकार्पण्यदूषितम् । पेलवे क्षुद्रेऽपि कार्ये । निमज्जति मुह्यति ॥ ३९ ॥

83253
83254 चेतोवासनया पङ्के कीटवत्परिमज्जसि |
83255 दृश्यमात्रावलम्बिन्या स्वया दीनतया तया || ४० ||
83256
83257 तया प्रसिद्धया || ४० ||
83258
83259 तावत्तावन्महाबाहो स्वयं संत्यज्यतेऽखिलम् |
83260 यावद्यावत्परालोकः परमात्मैव शिष्यते || ४१ ||
83261
83262 तर्हि कियत्सु विषयेषु कियत्कालं वा वैराग्यं कर्तव्यमिति चेत्तत्राह -
83263 तावदिति | स्वयंज्योतिरात्ममात्रपरिशेषानुभवपर्यन्तमित्यर्थः || ४१ ||
83264
83265 तावत्प्रक्षाल्यते धातुर्यावद्धेमैव शिष्यते |
83266 तावदालोक्यते सर्वं यावदात्मैव लभ्यते || ४२ ||
83267
83268 नानाश्रुतिशास्त्रपर्यालोचनमप्यात्मदर्शनपर्यन्तमेवेत्याह - तावदिति |
83269 धातुः स्वर्णाकरधातुः | सर्वमध्यात्मशास्त्रम् || ४२ ||
83270
83271 सर्वः सार्विकया बुद्ध्या सर्वं सर्वत्र सर्वदा |
83272 सर्वथा संपरित्यज्य स्वात्मनात्मोपलभ्यते || ४३ ||
83273
83274 सार्विकया सर्ववस्तुभूतया बुद्ध्या सर्वदा सर्वत्र देशे सर्वं दृश्यं
83275 सर्वथा परित्यज्य सर्वः पूर्णात्मा स्वात्मनैवोपलभ्यते न
83276 कदाचित्कुत्रचित्कथंचित्कतिपयविषयत्यागमात्रेणेत्यर्थः || ४३ ||
83277
83278 यावत्सर्वं न संत्यक्तं तावदात्मा न लभ्यते |
83279 सर्वावस्थापरित्यागे शेष आत्मेति कथ्यते || ४४ ||
83280
83281 उक्तमेवार्थं व्यतिरेकमुखेनापि द्रढयति - यावदिति | तत्कुतस्तत्राह -
83282 सर्वेति || ४४ ||
83283
83284 यावदन्यन्न संत्यक्तं तावत्सामान्यमेव हि |
83285 वस्तु नासाद्यते साधो स्वात्मलाभे तु का कथा || ४५ ||
83286
83287 सामान्यं लोकव्यवहारसाधारणं गोधनादि | अप्यर्थे एवकारः |
83288 यावदन्यत्तद्विरोधि वस्तु न संत्यक्तं तावन्नासाद्यते || ४५ ||
83289
83290 यत्र सर्वात्मनैवात्मा लाभाय यतति स्वयम् |
83291 त्यक्तान्यकार्यं प्राप्नोति तन्नाम नृप नेतरत् || ४६ ||
83292
83293 यत्र यस्मिन्विषये | तत् तं विषयम् || ४६ ||
83294
83295 स्वात्मावलोकनार्थं तु तस्मात्सर्वं परित्यजेत् |
83296 सर्वं किंचित्परित्यज्य यद्दृष्टं तत्परं पदम् || ४७ ||
83297
83298 सर्वं दृश्यं परित्यज्य यत्किंचित्सर्वथा परित्यक्तुमशक्यं दृष्टं
83299 तदेव परं पदमित्यर्थः || ४७ ||
83300
83301 सकलकारणकार्यपरम्परा-
83302 मयजगद्गतवस्तुविजृम्भितम् |
83303 अलमपास्य मनः स्ववपुस्ततः
83304 परिविलाप्य यदेति तदेव तत् || ४८ ||

83305
83306 मनः सकलकारणकार्यपरम्परामये जगति मणिषु सूत्रमिवानुगते सन्मात्रे
83307 स्वकल्पनया विजृम्भितं सद्व्यतिरिक्तं सर्वं रूपं अलं निःशेषमपास्य
83308 ततस्तदनन्तरं स्ववपुर्मनोरूपमपि मूलाज्ञाननाशाद्बाधेन परिविलाप्य
83309 यत्सच्चिन्मात्रैकरसं वस्तु एति प्राप्नोति तदेव तद्ब्रह्मरूपमित्यर्थः ॥ ४८ ॥
83310
83311 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे०
83312 मोक्षोपायेषूपशमप्रकरणे सुरघुवृत्तान्ते माण्डव्योपदेशो
83313 नामाष्टपञ्चाशः सर्गः ॥ ५८ ॥
83314
83315 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
83316 माण्डव्योपदेशो नामाष्टपञ्चाशः सर्गः ॥ ५८ ॥
83317
83318
83319 एकोनषष्टितमः सर्गः ५९
83320
83321 श्रीवसिष्ठ उवाच ।
83322
83323 इत्युक्त्वा भगवानेनं सुरघुं रघुनन्दन ।
83324 ययौ स्वमेव रुचिरं माण्डव्यो मौनमण्डलम् ॥ १ ॥
83325
83326 बाह्यमाभ्यन्तरं चैव दृश्यं संत्यजतो रहः ।
83327 इह राज्ञो विचारेण स्वात्मलाभ उदीर्यते ॥ १ ॥
83328
83329 गते वरमुनौ राजा गत्वैकान्तमनिन्दितम् ।
83330 धिया संचिन्तयामास को नामाहमिति स्वयम् ॥ २ ॥
83331
83332 उक्त्वा उपदिश्य । स्वं स्वीयं मौनमण्डलं मुन्यावासदेशम् ॥ १ ॥
83333
83334 नाहं मेरुर्न मे मेरुर्जगन्नाहं न मे जगत् ।
83335 नाहं शैला न मे शैला धरा नाहं न मे धरा ॥ ३ ॥
83336
83337 तत्रादौ बाह्ये दृश्ये आत्मतामात्मीयतां च विचार्य निरस्यति -
83338 नाहमित्यादिषड्भिः । जगत्पदेन ऊर्ध्वाधोलोका गृह्यन्ते ॥ ३ ॥
83339
83340 किरातमण्डलं नेदं मम नाहं च मण्डलम् ।
83341 निजसंकेतमात्रेण केवलं देश एव मे ॥ ४ ॥
83342
83343 निजः संकेतः सर्वजनसंमत्या पट्टाभिषेकादिना अहं राजेति कल्पना
83344 तावन्मात्रेण ॥ ४ ॥
83345
83346 त्यक्तो मयैष संकेतो नाहं देशोन वैष मे ।
83347 इदानीं नगरं शिष्टमेष एवात्र निश्चयः ॥ ५ ॥
83348
83349 अत्र एतस्मिन्नगरेऽपि संकेतत्यागादेष एव निश्चयः ॥ ५ ॥
83350
83351 पताकावनपङ्क्त्याढ्या भृत्योपवनसंकुला ।
83352 गजाश्वसामन्तयुता पुरी नाहं न मे पुरी ॥ ६ ॥
83353
83354 तमेव निश्चयं स्फुटमाह - पताकेति ॥ ६ ॥
83355
83356 व्यर्थसंकेतसंबन्धं संकेतविगमे क्षतम् ।

भोगवृन्दं कलत्रं च नाहं नैतन्ममाखिलम् ॥ ७ ॥

व्यर्थेन संकेतेन संबध्यत इति संबन्धम् ॥ ७ ॥

एवं सभृत्यं सबलं सवाहनपुरान्तरम् ।
नाहं राज्यं न मे राज्यं संकेतो ह्ययमाकुलः ॥ ८ ॥

आकुलः काकिणीकार्षापणसंबन्धवदन्धपरम्पराव्यवहारसिद्ध इति यावत् ॥
८ ॥

देहमात्रमहं मन्ये हस्तपादादिसंयुतम् ।
तदिदं तावदाश्वन्तरलमालोकयाम्यहम् ॥ ९ ॥

संकेतमात्रत्यागोपायेन बाह्यैः संबन्धं निरस्य अचेतनत्वहेतुना
देहेन्द्रियादिभिरपि तं निरसितुमारभते - देहमात्रमित्यादिना ॥ ९ ॥

तदत्र तावन्मांसास्थि नाहमेतदचेतनम् ।
न चैतन्मम संश्लेषमेत्यब्जस्य यथा जलम् ॥ १० ॥

संश्लेषं संबन्धमपि नैति । असङ्गत्वादित्यर्थः ॥ १० ॥

मांसं जडं न तदहं नैवाहं रक्तमप्यलम् ।
जडान्यस्थीनि नैवाहं न चैतानि मम क्वचित् ॥ ११ ॥

कर्मेन्द्रियाणि नैवाहं न च कर्मेन्द्रियाणि मे ।
जडं यत्किल देहेऽस्मिंस्तदहं नैव चेतनः ॥ १२ ॥

नाहं भोगा न मे भोगा न मे बुद्धीन्द्रियाणि च ।
जडान्यसत्स्वरूपाणि न च बुद्धीन्द्रियाण्यहम् ॥ १३ ॥

बुद्धिन्द्रियाणि ज्ञानेन्द्रियाणि ॥ १३ ॥

मूलं संसृतिदोषस्य मनो नाहं जडं हि तत् ।
अथ बुद्धिरहंकार इति दृष्टिर्मनोमयी ॥ १४ ॥

अथ बुद्धिरहंकार इति या दृश्यत इति दृष्टिः सापि नाहं न
ममेत्यनुषज्यते । यतः सा मनोमयी अन्तःकरणावस्था । भेदरूपेति यावत् ॥ १४
। ।

मनोबुद्धीन्द्रियाद्यन्तो भूतकोशश्चलद्वपुः ।
नाहमेवं शरीरादि शिष्टमालोकयाम्यहम् ॥ १५ ॥

शरीरादिमनोबुद्धिन्द्रियाद्यन्तो भूतकोशः स्थूलसूक्ष्मभूतसंघात
एवमुक्तरीत्या नाहम् । शिष्टमवशिष्टमालोकयामि । दृष्ट्वा विचारयामीति
यावत् ॥ १५ ॥

शेषस्तु चेतनो जीवः स चेच्चेत्येन चेतति ।
अन्येन बोध्यमानोऽसौ नात्मतत्त्ववपुर्भवेत् ॥ १६ ॥

चेतनः प्रमाता चेत्येन प्रमेयेण सह चेतति । तथाच अहमिदं चेत्यामीति
त्रिपुटीसाक्षिणा बोध्यमानोऽसौ प्रमाता नात्मनस्तत्त्ववपुस्तात्त्विकं रूपमिति
संभाव्यत इत्यर्थः ॥ १६ ॥

83409
83410 एवं त्यजामि संवेद्यं चेत्यं नाहं हि तत्किल।
83411 शेषो विकल्परहितो विशुद्धचिदहंस्थितः ॥ १७ ॥
83412
83413 एवमनयैव युक्त्या साक्षिसंवेद्यं प्रमितिं प्रमेयं च त्यजामि। हि
83414 यस्माच्चेत्यं नाहं किलेति प्रसिद्धम्। विशुद्धचित् शुद्धसाक्षी अहमात्मेति
83415 स्थितः। निश्चये प्रतिष्ठित इत्यर्थः ॥ १७ ॥
83416
83417 चित्रमेषोऽस्मि लब्धात्मा जातः कालेन कार्यवान्।
83418 एष सोऽहमनन्तात्मा नातोऽस्य परमात्मनः ॥ १८ ॥
83419
83420 तद्दर्शनमात्रेण कण्ठचामीकरवत्तल्लाभमाश्चर्यभूतं दर्शयति -
83421 चित्रमिति। कालेनानादिकालादारभ्य यतमानोऽप्यद्य कार्यवान्
83422 परमपुरुषार्थफलवान् जातोऽस्मीत्यर्थः ॥ १८ ॥
83423
83424 ब्रह्मणीन्द्रे यमे वायौ सर्वभूतगणे तथा।
83425 स एष भगवानात्मा तन्तुर्मुक्तास्विव स्थितः ॥ १९ ॥
83426
83427 एष ब्रह्मैष इन्द्रः इत्यादिश्रुतिगणाननुभवेन संवादयति - ब्रह्मणीति ॥
83428 १९ ॥
83429
83430 चिच्छक्तिरमला सैषा चेत्यामयविवर्जिता।
83431 भरिताशेषदिक्कुञ्जा भैरवाकारधारिणी ॥ २० ॥
83432
83433 अज्ञानां भयहेतुत्वाद्भैरवाकारधारिणी ॥ २० ॥
83434
83435 सर्वभावगता सूक्ष्मा भावाभावविवर्जिता।
83436 आब्रह्मभुवनान्तःस्था सर्वशक्तिसमुद्गिका ॥ २१ ॥
83437
83438 सर्वेषु भावेषु मनोवृत्तिषु गता। प्रतिबोधविदितं मतम् इति श्रुतेः ॥ २१ ॥
83439
83440 सर्वसौन्दर्यसुभगा सर्वप्राकाश्यदीपिका।
83441 सर्वसंसारमुक्तानां तन्तुराततरूपिणी ॥ २२ ॥
83442
83443 सर्वसौन्दर्यं निरतिशयानन्दस्तेन सुभगा पूर्णा। संसारलक्षणानां
83444 मुक्तानां मुक्ताफलानाम् ॥ २२ ॥
83445
83446 सर्वाकारविकाराढ्या सर्वाकारविवर्जिता।
83447 सर्वभूतौघतां याता सर्वदा सर्वतां गता ॥ २३ ॥
83448
83449 चतुर्दशविधान्येषा भूतानि भुवनोदरे।
83450 एतन्मयीयं कलना जागती वेदनात्मिका ॥ २४ ॥
83451
83452 भुवनसंख्यया चतुर्दशविधानि भूतानि धत्ते इति शेषः ॥ २४ ॥
83453
83454 मिथ्यावभासमात्रं तु सुखदुःखदशागतिः।
83455 नानाकारमयाभासः सर्वमात्मैव चित्परा ॥ २५ ॥
83456
83457 सोऽयमात्मा मम व्यापी सेयं यदवबोधनम्।
83458 सेयमाकलिताङ्गाभा करोति नृपविभ्रमम् ॥ २६ ॥
83459
83460 व्यापी जगदनुगतः। अवबोधनं मद्बुद्धिसाक्षी। सेयं

83461 चिद्द्रष्टृदृश्यमेदनाकलितशरीरा सती नृपोऽहमिति विभ्रमं करोति।
83462 प्राक्कृतवतीत्यर्थः॥ २६॥
83463
83464 अस्या एव प्रसादेन मनो देहरथे स्थितम्।
83465 संसारजाललीलासु याति वल्गति नृत्यति॥ २७॥
83466
83467 इदं मनःशरीरादि न किंचिदपि वस्तुतः।
83468 नष्टे न किंचिदप्यस्मिन्परिनश्यति पेलवे॥ २८॥
83469
83470 जगज्जालमयं नृत्तमिदं चित्तनटैस्ततम्।
83471 एतयैवैकया बुद्ध्या दृश्यते दीपलेखया॥ २९॥
83472
83473 एतया उक्तया साक्षीरूपया॥ २९॥
83474
83475 कष्टं मुधैव मे चिन्ता निग्रहानुग्रहस्थितौ।
83476 बभूव देहनिष्ठेह न किंचिदपि देहकम्॥ ३०॥
83477
83478 अहो त्वहं प्रबुद्धोऽस्मि गतं दुर्दर्शनं मम।
83479 दृष्टं द्रष्टव्यमखिलं प्राप्तं प्राप्यमिदं मया॥ ३१॥
83480
83481 सर्वं किंचिदिदं दृश्यं दृश्यते यज्जगद्गतम्।
83482 चिन्निष्पन्दांशमात्रांशान्नान्यत्किंचन शाश्वतम्॥ ३२॥
83483
83484 चितो यो निष्पन्दो मायया जीवभावभ्रमस्तदंशः
83485 सप्तदशकलिङ्गभ्रमस्तस्य मात्रा बाह्यान्तःकरणभेदभ्रमास्तदंशो
83486 जाग्रत्स्वप्नदृश्यभ्रमस्तस्मादन्यत्किंचिच्छाश्वतं कालत्रयाबाध्यं
83487 दृश्यं न विद्यत इत्यर्थः॥ ३२॥
83488
83489 क्व तौ कीदृग्विधौ वापि किंनिष्ठौ वा किमात्मकौ।
83490 निग्रहानुग्रहौ लोके हर्षामर्षक्रमौ तथा॥ ३३॥
83491
83492 एवं जगतो मृषात्वे निग्रहानुग्रहक्रमौ तत्प्रयोजकहर्षामर्षक्रमौ च
83493 निराश्रयौ निष्प्रकारौ निर्विषयौ निःस्वरूपौ च संपन्नावित्याह - क्वेति॥
83494 ३३॥
83495
83496 किं सुखं किं नु वा दुःखं सर्वं ब्रह्मेदमाततम्।
83497 अहमासं मुधा मूढ दिष्ट्या मूढोऽस्म्यहं स्थितः॥ ३४॥
83498
83499 स्वमोहेऽपगते सुखदुःखादिप्रसक्तिरेव नास्तीत्याह - किमिति।
83500 सांप्रतममूढः स्वरूपे स्थितोऽस्मीत्यर्थः॥ ३४॥
83501
83502 किमस्मिन्नेवमालोके शोच्यते किं विमुह्यते।
83503 किं प्रेक्ष्यते किं क्रियते स्थीयते वाथ गम्यते॥ ३५॥
83504
83505 एवमानन्दैकरसपूर्णस्वभावेनालोक्यते अनुभूयत इत्येवमालोकस्तस्मिन्।
83506 किंशब्दा आक्षेपे। शोकादिसंभावनैव नास्तीत्यर्थः॥ ३५॥
83507
83508 किंचिदेवमिदं नाम चिदाकाशं विराजते।
83509 नमो नमस्ते निस्तत्त्व दिष्ट्या दृष्टोऽसि सुन्दर॥ ३६॥
83510
83511 किंचिदलौकिकचमत्कारम्। इदं चिदाकाशम्॥ ३६॥
83512

83513 अहो नु संप्रबुद्धोऽस्मि सम्यग्ज्ञातमलं मया।
83514 नमो मह्यमनन्ताय सम्यग्ज्ञानोदयाय च॥ ३७॥
83515
83516 सम्यग्ज्ञाने उदय आविर्भावो यस्य तथाविधाय। चकारः
83517 पूर्वश्लोकनमस्कार्यसमुच्चयार्थः। सम्यग्ज्ञानलक्षणायाभ्युदयाय चेति
83518 वा॥ ३७॥
83519
83520 विगतरञ्जननिर्विषयस्थिति-
83521 र्गतभवभ्रमरञ्जितवर्जिते।
83522 स्थिरसुषुप्तकलाभिगतस्ततः
83523 समसमं निवसाम्यहमात्मनि॥ ३८॥
83524
83525 विगतरञ्जनत्वादेव निर्मृष्टावस्थात्रयविषयस्थितिरिति
83526 शोधितत्वंपदार्थनिर्देशः। गतभवभ्रमत्वादेव
83527 वियदाद्यध्यारोपरञ्जितवर्जिते इति शोधिततत्पदार्थनिर्देशः। भावे क्तः।
83528 स्थिरया सुषुप्तिकलया स्वाप्यययुक्त्येव उपाधिविगमादभिगत एकीभूत
83529 इत्यखण्डैक्यनिर्देशः। ततस्तस्मादहमात्मनि प्रत्यग्ब्रह्मणि
83530 समसममात्यन्तिकाभेदलक्षणपरमसाम्येन निवसामि न कदाचिदपि मे
83531 पुनर्वैषम्यप्रसक्तिरिति फलावस्थानिर्देशः॥ ३८॥
83532
83533 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे०
83534 मोक्षोपायेषूपशमप्रकरणे सुरघुवृ०
83535 सुरघुविश्रान्तिर्नामैकोनषष्टितमः सर्गः॥ ५९॥
83536
83537 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
83538 सुरघुविश्रान्तिर्नामैकोनषष्टितमः सर्गः॥ ५९॥
83539
83540
83541 षष्टितमः सर्गः ६०
83542
83543 श्रीवसिष्ठ उवाच।
83544
83545 इति हेमजटाधीशो लेभे पदमनुत्तमम्।
83546 विवेकाध्यवसायेन ब्राह्मण्यमिव गाधिजः॥ १॥
83547
83548 आदेहपातं सुरघोरसङ्गाचार उच्यते।
83549 जीवन्मुक्तस्य तस्याथ देहशान्तौ खवस्थितिः॥ १॥
83550
83551 गाधिजो विश्वमित्रः॥ १॥
83552
83553 अनर्थाकारकार्यासु नासीच्चेष्टासु खेदवान्।
83554 भूयोभूयः प्रयुक्तासु दिनमालास्विवेश्वरः॥ २॥
83555
83556 भूयोभूयः पुनःपुनः प्रयुक्तासु अनुष्ठितासु
83557 धर्मार्थप्राप्त्युपायचेष्टासु परिचेष्टितैर्दैवादनर्थाकाराणि विफलानि
83558 दुःखपर्यवसितानि वा कार्याणि फलानि यासां तथाविधासु सतीषु
83559 खेदवान्नासीत्। ईश्वरो दिनेश्वरः सूर्यः॥ २॥
83560
83561 ततःप्रभृति सोऽतिष्ठत्सर्वदा विगतज्वरः।
83562 समासमे स्वके कार्ये जलौघाग्र इवाचलः॥ ३॥
83563
83564 समासमे अनुग्रहनिग्रहरूपे निजे राजोचिते कार्ये यथा नदीमध्यगत्ऽह् पर्वतो

83565 निष्कम्पस्तिष्ठति तद्वत् ॥ ३ ॥
83566
83567 हर्षामऋसविनिर्मुक्तः प्रत्यहं कार्यमाहरन् ।
83568 उदारगम्भीरवपुर्जहाराम्बुनिधेः श्रियम् ॥ ४ ॥
83569
83570 कार्यमायव्ययादि । आहरन् कुर्वन् ॥ ४ ॥
83571
83572 सुषुप्तपदधर्मिण्या चित्तवृत्त्या व्यराजत ।
83573 निष्कम्पया प्रकाशिन्या दीपः स्वशिखयेव सः ॥ ५ ॥
83574
83575 सुषुप्ताविव निश्चलयेति यावत् ॥ ५ ॥
83576
83577 न निर्घृणो दयावान्नो न द्वन्द्वी नाथ मत्सरी ।
83578 न सुधीर्नासुधीर्नार्थी नानर्थी स बभूव ह ॥ ६ ॥
83579
83580 अमत्सरी इति पाठे अत्यन्तनिर्मत्सरवत्परदोषोपेक्षकः ॥ ६ ॥
83581
83582 समदर्शनया नित्यं वृत्त्याऽचापलधीरया ।
83583 अन्तःशीतलया रेजे परिपूर्णार्णविन्दुवत् ॥ ७ ॥
83584
83585 अचापलधीरयेति च्छेदः । परिपूर्णौ यौ अर्णविन्दू तद्वत् ॥ ७ ॥
83586
83587 सर्वं चित्तत्त्वकलनं जगदित्यवलोक्य सः ।
83588 प्रशान्तसुखदुःखश्रीस्तस्य पूर्णा मतिर्बभौ ॥ ८ ॥
83589
83590 स इत्यस्य समसमाधिस्थोऽभूदिति परेणान्वयः । तत्र हेतुर्यतस्तस्य परिपूर्णा
83591 मतिर्बभाविटि ॥ ८ ॥
83592
83593 उल्लसन्विकसन्पूर्णस्तिष्ठन्गच्छन्विशन्स्वपन् ।
83594 अभूतसमसमाधिस्थः प्रबुद्धश्चिल्लयं गतः ॥ ९ ॥
83595
83596 उल्लसन्वपुषा । विकसंश्चेतसा ॥ ९ ॥
83597
83598 स कुर्वन्विगतासङ्गं राज्यं राजीवलोचनः ।
83599 अतिष्ठदक्षताकारो भूरिवर्षशतान्यथ ॥ १० ॥
83600
83601 संनिवेशमिमं देहनामकं तदनु स्वयम् ।
83602 स जहौ तेजसाक्रान्तो रूपं हिमकणो यथा ॥ ११ ॥
83603
83604 आक्रान्तः शोषितः । रूपं मूर्ताकारम् ॥ ११ ॥
83605
83606 विवेश परमाद्यन्तकारणं कारणेश्वरम् ।
83607 प्रज्ञया सरितां वारि परिपूर्णमिवाम्बुधिम् ॥ १२ ॥
83608
83609 सर्वेषामेवान्तःकारणानां हिरण्यगर्भादीनामीश्वरं नियन्तारम् ।
83610 सर्वजगतामाद्यन्तयोः सृष्टिप्रलययोः कारणं परं ब्रह्म प्रज्ञया
83611 साक्षात्कारवृत्त्या जन्मादिहेतुबीजमर्णवमिव विवेशेत्यर्थः ॥ १२ ॥
83612
83613 अधिगतविमलैकरूपतेजा
83614 विजनदशां समुपेत्य शान्तशोकः ।
83615 अलमभवदसौ परस्वरूपं
83616 घटखमिवाम्बरसंयुतं महात्मा ॥ १३ ॥

83617
83618 तत्प्रविश्यासौ कीदृगभूत्तदाह - अधिगतेति। असौ सुरघुः प्रज्ञया
83619 अधिगतं स्वात्मतया प्राप्तं विमलमेकरूपमानन्दैकरसं तेजः
83620 स्वप्रकाशात्मरूपं येन तथाविधः सन् विजनां जन्मादिविक्रियाहीनां
83621 दशां समुपेत्य शान्तसर्वशोकः सन् घटभङ्गे घटखमम्बरेण
83622 महाकाशेन संयुतमेकीभूतमिव परस्वरूपएम्व अभवत्। तदेवास्य
83623 निर्वाणमित्यर्थः॥ १३॥
83624
83625 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे०
83626 मोक्षोपायेषूपशमप्रकरणे सुरघुवृत्तान्ते सुरघुनिर्वाणं नाम
83627 षष्टितमः सर्गः॥ ६०॥
83628
83629 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
83630 सुरघनिर्वाणं नाम सष्टितमः सर्गः॥ ६०॥
83631
83632
83633 एकषष्टितमः सर्गः ६१
83634
83635 श्रीवसिष्ठ उवाच।
83636
83637 एवमुत्पलपत्राक्ष राघवाघविपर्यये।
83638 पदमासादयाद्वन्द्वं विशोको भव भूतये॥ १॥
83639
83640 सहजैकसमाधानलक्षणप्रतिपत्तये।
83641 परिघेणात्र संवादः सुरघोरुपवर्ण्यते॥ १॥
83642
83643 हे राघव एव सुरघुवत्त्वमपि अघस्य हर्षशोकादिनिमित्तस्य पापस्य विपर्यये
83644 तत्त्वबोधेन समूलमुच्छेदे सति॥ १॥
83645
83646 एतां दृष्टिमवष्टभ्य न मनः परितप्यते।
83647 घोरे तमसि निर्मग्नं लब्धदीपं शिशुर्यथा॥ २॥
83648
83649 शिशुर्बाल इव घोरे अज्ञानतमसि निर्मग्नं मन एतां दृष्टिमवष्टभ्य
83650 लब्धदीपं प्राप्तप्रकाशं सन्न परितप्यते॥ २॥
83651
83652 विवेकावस्थया चेतस्तथैवायाति निर्वृतिम्।
83653 पतच्छ्वभ्रे दृढतृणप्रचयालम्बनादिव॥ ३॥
83654
83655 श्वभ्रे मोहान्धकूपे पतन्मनस्तथा तादृश्या सुरघूपवर्णितप्रकारयैव
83656 विवेकावस्थया दृढस्य तृणप्रचयस्य कक्षस्य आलम्बनादिव निर्वृतिं
83657 विश्रान्तिसुखम्॥ ३॥
83658
83659 अथैतां पावनीं दृष्टिं भावयित्वाप्युदाहरन्।
83660 नित्यमेकसमाधानो भव भूषितभूतलः॥ ४॥
83661
83662 भावयित्वा पुनःपुनः परिशीलनेन स्वयं
83663 दृढीकृत्यान्येभ्योऽप्युदाहरन्नुपदिशन्॥ ४॥
83664
83665 श्रीराम उवाच।
83666
83667 कथमेकसमाधानं कीदृशं वा मुनीश्वर।
83668 वाताहतमयूराङ्गरुहलोलं मनो भवेत्॥ ५॥

83669
83670 वातैराहतं मयूराङ्गरुहं बर्हमिव लोल चपलं मन एकसमाधानं
83671 कथं केन प्रकारेण भवेत् || ५ ||
83672
83673 श्रीवसिष्ठ उवाच |
83674
83675 शृणु तस्यैव सुरघोः प्रबुद्धस्य सतस्तदा |
83676 पर्णादस्य [परिघस्य नामान्तरमेतत्] च राजर्षे
83677 संवादमिममद्भुतम् || ६ ||
83678
83679 राघवैकसमाधानबोधितायोजितात्मनोः |
83680 परस्परं समालापमिमं प्रकथयामि ते || ७ ||
83681
83682 हे राघव एकसमाधाने बोधित आयोजित आत्मा ययोः || ७ ||
83683
83684 बभूव पारसीकानां पार्थिवः परवीरहा |
83685 परिघो नाम विख्यातः परिघः स्यन्दने यथा || ८ ||
83686
83687 पारसीका देशविशेषाः | पार्थिवो राजा | स्यन्दने रथे परिघोऽक्षदण्ड
83688 इवाधारभूतः || ८ ||
83689
83690 स बभूव परं मित्रं सुरघो रघुनन्दन |
83691 नन्दनोद्यानसंस्थस्य मदनस्येव माधवः || ९ ||
83692
83693 माधवो वसन्तः || ९ ||
83694
83695 कदाचित्परिघस्याभूदवर्षं मण्डले महत् |
83696 कल्पान्त इव संसारे प्रजादुष्कृतदोषजम् || १० ||
83697
83698 अवर्षमनावृष्टिः | किं राजदोषान्नेत्याह - प्रजेति || १० ||
83699
83700 विनेशुर्जनतास्तत्र बह्व्यः क्षुत्क्षामजीविताः |
83701 ज्वलिते विपिने वह्नौ यथा भूतपरम्पराः || ११ ||
83702
83703 तद्दुःखं परिघो दृष्ट्वा विषादमतुलं ययौ |
83704 तत्याजाश्वखिलं राज्यं दग्धं ग्राममिवाध्वगः || १२ ||
83705
83706 प्रजानाशप्रतीकारेष्वसमर्थो विरागवान् |
83707 जगाम विपिने कर्तुं तपोऽजिनमुनीन्द्रवत् || १३ ||
83708
83709 अजिनप्रधाना मुनीन्द्रा अजिनमुनीन्द्रास्तद्वत् || १३ ||
83710
83711 पौराणामपरिज्ञाते कस्मिंश्चिद्दूरकानने |
83712 समुवास विरक्तात्मा लोकान्तर इवापरे || १४ ||
83713
83714 अपरे द्वितीये लोकान्तरे परलोक इवेत्युत्प्रेक्षा || १४ ||
83715
83716 तपश्चरञ्छान्तमतिर्दान्तः कन्दरमन्दिरे |
83717 स्वयं शीर्णानि शुष्काणि तत्र पर्णान्यभक्षयत् || १५ ||
83718
83719 अतिविरक्तत्वात्पर्णकुट्यादिपरिग्रहोऽप्यस्य नाभूदिति सूचनाय कन्दरमन्दिरे
83720 इत्युक्तम् || १५ ||

83721
83722 चिरं हुताशवच्छुष्कपर्णान्येवाथ भक्षयन् ।
83723 पर्णाद इति नामासौ प्राप मध्ये तपस्विनाम् ॥ १६ ॥
83724
83725 असौ परिघः ॥ १६ ॥
83726
83727 ततःप्रभृति पर्णादनामा राजर्षिसत्तमः ।
83728 जम्बूद्वीपे बभूवासौ विख्यातो मुनिसद्मसु ॥ १७ ॥
83729
83730 ततो वर्षसहस्रेण तपसा दारुणात्मना ।
83731 प्रापदभ्यासवशतो ज्ञानमात्मप्रसादजम् ॥ १८ ॥
83732
83733 आत्मप्रसादश्चित्तशुद्धिरीश्वरानुग्रहश्च तस्माज्जातं तत्त्वज्ञानं
83734 प्रापत्प्राप्तवान् ॥ १८ ॥
83735
83736 बभूव विगतद्वन्द्वो निराशः शान्तमानसः ।
83737 नीरागो निरनुक्रोशो जीवन्मुक्तः प्रबुद्धधीः ॥ १९ ॥
83738
83739 विजहार यथाकामं त्रिलोकीमठिकामिमाम् ।
83740 सिद्धसाध्यैः समं साधो सहंसालिरिवाब्जिनीम् ॥ २० ॥
83741
83742 सिद्धैरारूढैः साध्यैरारूरुक्षुभिश्च कदाचित्परिवृतः । हंसैः सहितः
83743 सहंसोऽलिर्भ्रमरोऽब्जिनीं कमलिनीमिव ॥ २० ॥
83744
83745 एकदा तस्य सदनं हेमचूडमहीपतेः ।
83746 प्राप रत्नविनिर्माणं मेरोः शृङ्गमिवापरम् ॥ २१ ॥
83747
83748 हेमचूडः स्वर्णजटाख्यो देशस्तन्महीपतेः सुरघोः ॥ २१ ॥
83749
83750 ते तत्र प्राक्तने मित्रे पूजामकुरुतां मिथः ।
83751 पूर्णौ विज्ञातविज्ञेयौ मौर्ख्यगर्भाद्विनिर्गतौ ॥ २२ ॥
83752
83753 मौर्ख्यगर्भः संसारस्तस्माद्विनिर्गतौ जीवन्मुक्तावित्यर्थः ॥ २२ ॥
83754
83755 अहो नु बत कल्याणैः फलितं मम पावनैः ।
83756 संप्राप्तवानहं यत्त्वामित्यन्योन्यमथोचतुः ॥ २३ ॥
83757
83758 कल्याणैः सुकृतैः । फलितमिति भावे क्तः ॥ २३ ॥
83759
83760 आलिङ्गितशरीरौ तावन्योन्यानन्दिताकृती ।
83761 एकासने विविशतुश्चन्द्रार्काविव भूधरे ॥ २४ ॥
83762
83763 परिघ उवाच ।
83764
83765 परमानन्दमायातं चेतस्त्वद्दर्शनेन मे ।
83766 इन्दुबिम्ब इवोन्मग्नं मनः शीतलतां गतम् ॥ २५ ॥
83767
83768 चितिशक्तिप्रधाने आनन्दाविर्भावो मननशक्तिप्रधाने तापोपशम इति
83769 विशेषद्योतनाय चेतो मन इति भेकोक्तिः ॥ २५ ॥
83770
83771 अकृत्रिमसुखं प्रेम वियोगे शतशाखताम् ।
83772 प्रयाति पल्वलतटेऽच्छिन्नमूल इव द्रुमः ॥ २६ ॥

83773
83774 अच्छिन्नमूलश्छिन्नशाखो द्रुमः इवेति योज्यम् ॥ २६ ॥
83775
83776 विश्रब्धास्तान्कथालापांस्ता लीलास्तच्च चेष्टितम् ।
83777 संस्मृत्य प्राक्तनं साधो हृष्यामि च पुनःपुनः ॥ २७ ॥
83778
83779 विश्रब्धान् विश्वासगर्भान् । तान् प्राक्तनान्सुखदुःखकथालापान् ॥ २७ ॥
83780
83781 ज्ञानमेतन्मया प्राप्तं त्वया ज्ञातं यथाऽनघ ।
83782 माण्डव्यस्य प्रसादेन परमात्मप्रसादजम् ॥ २८ ॥
83783
83784 त्वया यथा माण्डव्यस्य प्रसादेन ज्ञातं तथैव मया परमात्मन
83785 ईश्वरस्य तपसाऽराधितस्य प्रसादजमेतज्ज्ञानं प्राप्तम् ॥ २८ ॥
83786
83787 अद्य कच्चिददुःखस्त्वं कच्चिद्विश्रान्तवानसि ।
83788 परमे कारणे मेराविव भूमण्डलाधिपः ॥ २९ ॥
83789
83790 परमे कारणे विवर्तोपादानत्वोपलक्षिते ब्रह्मणि
83791 कच्चिदुत्तरोत्तरभूमिकापरिपाकेन विश्रान्तवानसि ॥ २९ ॥
83792
83793 कच्चित्परमकल्याण आत्मारामतया तव ।
83794 प्रसादो जायते चित्ते शरदीव सरोम्भसि ॥ ३० ॥
83795
83796 प्रसादो रजस्तमोभ्यामनावरणम् ॥ ३० ॥
83797
83798 कच्चित्करोषि समया सुप्रसन्नगभीरया ।
83799 दृष्ट्या सुभग कार्याणि कार्याण्येव नराधिप ॥ ३१ ॥
83800
83801 कार्याणि सर्वजनहितत्वादवश्यकर्तव्यान्येव कार्याणि कर्माणि करोषि ॥ ३१ ॥
83802
83803 निराधिव्याधयो धीराः कच्चित्संपन्नशालयः ।
83804 जनतास्तव देशेषु तिष्ठन्ति विगतज्वरम् ॥ ३२ ॥
83805
83806 जनताः प्रजासमूहाः ॥ ३२ ॥
83807
83808 कच्चिदुद्दामफलिनी फलिनीव फलानता ।
83809 धरा तव फलापूरैर्भृशं धारयति प्रजाः ॥ ३३ ॥
83810
83811 धरा पृथ्वी उद्दामफलिनी उत्कृष्टसस्यादिफलवती फलैरानता फलिनी
83812 कल्पलतेव तव प्रजाः फलापूरैः काले काले
83813 तत्तदभिलषितफलपूरणैर्भृशमतिशयेन धारयति बिभर्ति पोषयति कच्चित् ॥
83814 ३३ ॥
83815
83816 कच्चित्तव दिगन्तेषु चन्द्रस्येवांशुपञ्जरम् ।
83817 तुषारनिकराकारं प्रसृतं पावनं यशः ॥ ३४ ॥
83818
83819 चन्द्रस्य अंशुपञ्जरं किरणजालमिव ॥ ३४ ॥
83820
83821 कच्चिद्गुणगणैरेता दिशो निर्विवरीकृताः ।
83822 त्वया सरोम्भसाऽबाह्या बिसानामिव भूमयः ॥ ३५ ॥
83823
83824 सरोम्भसा तडागोदकेन अवाह्याः स्वान्तर्गता बिसानां मृणालानां

83825 भूमय इव त्वया दिशो गुणगणैर्यशोभिर्निर्विवरीकृताः पूरिताः कच्चित् ॥ ३५ ॥
83826
83827 कच्चित्कलमकेदारकोणस्थानेषु हृष्यतीः।
83828 प्रतिग्रामं कुमार्यस्ते गायन्त्यानन्दनं यशः ॥ ३६ ॥
83829
83830 कलमकेदाराणां कोणाश्चतुष्कसंधयस्तत्रत्येष्वासन्दीस्थानेषु।
83831 हृष्यतीर्हृष्यन्त्यः। छान्दसो विभक्तिव्यत्ययः ॥ ३६ ॥
83832
83833 कुशलं तव धान्येषु धनेषु विभवेषु च।
83834 भृत्येषु च कलत्रेषु पुत्रेषु नगरेषु च ॥ ३७ ॥
83835
83836 आधिव्याधिविहीनेयं कच्चित्कायलता तव।
83837 फलं फलति पुण्याख्यं यदिहामुत्र चोदितम् ॥ ३८ ॥
83838
83839 इह ऐहिकफलत्वेन चोदितं कारीर्यादि। अमुत्र पारलौकिकफलत्वेन चोदितं
83840 ज्योतिष्टोमादि ॥ ३८ ॥
83841
83842 आपातरमणीयेषु वर्तेतात्यन्तवैरिषु।
83843 कच्चिद्विषयसर्पेषु सविरागं मनस्तव ॥ ३९ ॥
83844
83845 तव मनो विषयसर्पेषु कच्चित्सविरागं वर्तेत वर्तते ॥ ३९ ॥
83846
83847 अहो बत चिरं कालमावां विश्लेषमागतौ।
83848 कालेन श्लेषितौ भूयो वसन्ताद्रितटाविव ॥ ४० ॥
83849
83850 न ता जगति विद्यन्ते सुखदुःखदशाः सखे।
83851 जीवद्भिर्या न दृश्यन्ते संयोगजवियोगजाः ॥ ४१ ॥
83852
83853 इष्टानिष्टजनस्ऽम्योगजास्तद्वियोगजाश्च सुखदुःखदशाः ॥ ४१ ॥
83854
83855 तथैतास्वतिदीर्घासु दशास्वन्यत्वमागताः।
83856 भूयो वयमपि श्लिष्टाश्चित्रो हि नियतेर्विधिः ॥ ४२ ॥
83857
83858 अन्यत्वं वियोगमागताः प्राप्ताः। नियतेः प्राणिकर्मानुसारिण्या
83859 ईश्वरेच्छाया विधिर्विलासश्चित्रः अद्भुतः ॥ ४२ ॥
83860
83861 सुरघुरुवाच।
83862
83863 भगवन्नियतेरस्या गतिं सर्पगतेरिव।
83864 दैविक्याः को हि जानाति गम्भीरां विस्मयप्रदाम् ॥ ४३ ॥
83865
83866 परिघोक्तमर्थमनुमोदमानः सुरघुरपि तमेवाह - भगवन्नित्यादिना।
83867 दैविक्याः देव ईश्वरस्तदिच्छारूपायाः ॥ ४३ ॥
83868
83869 त्वमहं च व्यपोह्येति दूरे दूरदशासु च।
83870 अद्य संघटितौ भूयः किमसाध्यमहो विधेः ॥ ४४ ॥
83871
83872 देशतो दूरे कालतश्च दूरदशासु इति एवं व्यपोह्य वियोज्य ॥ ४४ ॥
83873
83874 वयं त्वद्य महासत्त्व भृशं कुशलिनः स्थिताः।
83875 त्वदागमनपुण्येन परां पावनतां गताः ॥ ४५ ॥
83876

83877 पश्य त्वदागमक्षीणपापानां पुण्यपादपैः।
83878 तथा फलितमस्माकं न यथा वयमाकुलाः॥ ४६॥
83879
83880 तथा तादृशचित्तसमाधानात्मना फलितं यथा वयं न व्याकुलाः
83881 सर्वव्याकुलतानिर्मुक्ताः कृतकृत्याः संपन्नाः॥ ४६॥
83882
83883 सर्वाः संपत्तयोऽस्माकं राजर्षे संस्थिताः पुरे।
83884 भवदागमनेनाद्य प्रयाताः शतशाखताम्॥ ४७॥
83885
83886 शतशाखतां। सर्वतः फलोन्मुखतामिति यावत्॥ ४७॥
83887
83888 विकिरति परितो रसायनाना-
83889 मिव निकरं मधुरं महानुभाव।
83890 तव वचनमवेक्षणं च पुण्यं
83891 परमपदप्रतिमो हि साधुसङ्गः॥ ४८॥
83892
83893 हे महानुभाव पुण्यं तव वचनमवेक्षणं दर्शनं च परितो
83894 रसायनानाममृतानां निकरं विकिरति वर्षतीव। हि यस्मात्साधूनां
83895 सङ्गः समागमः परमपदप्रतिमः। मोक्षसुखप्राप्तितुल्य इत्यर्थः॥ ४८॥
83896
83897 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये
83898 मोक्षोपायेषूपशमप्रकरणे सुरघुवृ० सुरघुपरिघसमागमो
83899 नामैकषष्टितमः सर्गः॥ ६१॥
83900
83901 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
83902 सुरघुपरिघसमागमो नामैकषष्टितमः सर्गः॥ ६१॥
83903
83904
83905 द्विषष्टितमः सर्गः ६२
83906
83907 श्रीवसिष्ठ उवाच।
83908
83909 अथैवंप्रायया तत्र विश्रम्भकथया चिरम्।
83910 प्राक्तनस्नेहगर्भिण्या स्थित्वोवाचायुधाभिधः॥ १॥
83911
83912 अज्ञानावरणे ध्वस्ते नित्यचित्स्फुरणस्थितेः।
83913 सदैवैकसमाधानं विदुषामत्र वर्ण्यते॥ १॥
83914
83915 आयुधस्याभिधेव अभिधा नाम यस्य स आयुधाभिधः परिघः॥ १॥
83916
83917 परिघ उवाच।
83918
83919 यद्यत्संसारजालेऽस्मिन्क्रियते कर्म भूमिप।
83920 तत्समाहितचित्तस्य सुखायान्यस्य नानघ॥ २॥
83921
83922 किमयं तत्त्वविदो व्यवहारसमाध्योः सुखतारतम्यं वक्ष्यत्युत नेति
83923 परीक्षणाय प्रथमं स्वानुभवमुद्घाटयति - यद्यदिति। अन्यस्य अज्ञस्य
83924 ॥ २॥
83925
83926 कच्चित्संकल्परहितं परं विश्रमणास्पदम्।
83927 परमोपशमं श्रेयः समाधिमनुतिष्ठसि॥ ३॥
83928

83929 एवं स्वानुभवमुद्घाट्य तत्सवाद्यसवादी वेति परानुभवं जिज्ञासमानः
83930 समाधौ विश्रान्त्याधिक्यमिव दर्शयन्पृच्छति - कच्चिदिति |
83931 विक्षेपदुःखानां परममुपशमं सांसारिकसुखेभ्यश्च श्रेयः
83932 प्रशस्यतरम् | सामान्ये व्यत्ययेन वा क्लीबता || ३ ||
83933
83934 सुरघुरुवाच |
83935
83936 एतन्मे ब्रूहि भगवन्सर्वसंकल्पवर्जितम् |
83937 परमोपशमं श्रेयः समाधिर्हि किमुच्यते || ४ ||
83938
83939 समाहितचित्तस्य सर्वं कर्म सुखायेति पश्यतस्ते समाधौ
83940 विश्रान्त्याधिक्यदर्शनं व्यवहारसमाधिभेदाभ्युपगमेन
83941 प्रश्नश्चानुपपन्न एवेति एवदनुभवसंवाद्येव ममाप्यनुभव
83942 इत्याशयेन सुरघुः संकल्परहितं परमोपशमं श्रेय इति
83943 तदुक्तांशस्यात्मस्वरूपेऽपि संभवात्तावदभ्युपगच्छन् विश्रमणास्पदं
83944 समाधिमनुतिष्ठसीत्यंशस्य समाधेयस्याविश्रमहेतोर्मनसो
83945 बाधितत्वादेवासंभवं मन्यमान आक्स्।इपति - एतदिदिति |
83946 सर्वसंकल्पवर्जितं परमोपशमं श्रेय इत्येतन्मे मह्यं युक्तत्वाद्ब्रूहि |
83947 समाधिरनुष्ठेय इति किमर्थं त्वयोच्यत इत्यर्थः || ४ ||
83948
83949 यो ज्ञो महात्मन्सततं तिष्ठन्व्यवहरंश्च वा |
83950 असमाहितचित्तोऽसौ कदा भवति कः किल || ५ ||
83951
83952 यो ज्ञस्तत्त्ववित् स व्यवहरन्नपि कः किंस्वरूपः किल | यतः
83953 सदैवानावृताद्वयचित्स्वभावोऽसौ कदा असमाहितचित्तो भवति | न
83954 कदाचिदपीत्यर्थः || ५ ||
83955
83956 नित्यं प्रबुद्धचित्तास्तु कुर्वन्तोऽपि जगत्क्रियाः |
83957 आत्मैकतत्त्वसंनिष्ठाः सदैव सुसमाधयः || ६ ||
83958
83959 यदि तु निश्चलात्मस्वरूपावस्थितिरेव समाधिस्तेऽभिमतः स्यात्तर्हि स सदैवास्तीति
83960 नानुष्ठेयं किंचिदस्तीत्याह - नित्यमिति || ६ ||
83961
83962 बद्धपद्मासनस्यापि कृतब्रह्माञ्जलेरपि |
83963 अविश्रान्तस्वभावस्य कः समाधिः कथं च वा || ७ ||
83964
83965 यदि त्वं मामज्ञं मन्यसे तदापि समाध्युपदेशोऽनुपपन्न इत्याशयेनाह
83966 - बद्धेति | कथं केनोपायेन वा | यत्र चित्तं समाधेयं
83967 तस्यैवापरिचयादित्यर्थः || ७ ||
83968
83969 तत्त्वावबोधो भगवन्सर्वाशातृणपावकः |
83970 प्रोक्तः समाधिशब्देन नतु तूष्णीमवस्थितिः || ८ ||
83971
83972 तत्त्वावबोध इति सम्यक् समूलसर्वाशाविषयबाधेन आत्मनः
83973 परमार्थस्वरूपे आधानं समाधिरिति व्युत्पत्तेरिति भावः || ८ ||
83974
83975 समाहिता नित्यतृप्ता यथाभूतार्थदर्शिनी |
83976 साधो समाधिशब्देन परा प्रज्ञोच्यते बुधैः || ९ ||
83977
83978 अबाधितात्मदर्शनरूपा परा प्रज्ञा || ९ ||
83979
83980 अक्षुब्धा निरहंकार द्वन्द्वेष्वननुपातिनी |

83981 प्रोक्ता समाधिशब्देन मेरोः स्थिरतराकृतिः ॥ १० ॥
83982
83983 तामेव फलतो वर्णयति - अक्षुब्धेति द्वाभ्याम् ॥ १० ॥
83984
83985 निश्चिन्ताधिगताभीष्टा हेयोपादेयवर्जिता ।
83986 प्रोक्ता समाधिशब्देन परिपूर्णा मनोगतिः ॥ ११ ॥
83987
83988 यतःप्रभृति बोधेन युक्तमात्यन्तिकं मनः ।
83989 तदारभ्य समाधानमव्युच्छिन्नं महात्मनः ॥ १२ ॥
83990
83991 सा तु मम पूर्वमेव सिद्धेति नानुष्ठेयेत्याशयेनाह - यत इत्यादिना ॥ १२ ॥
83992
83993 नहि प्रबुद्धमनसो भूत्वा विच्छिद्यते पुनः ।
83994 समाधिर्दूरमाकृष्टो बिसतन्तुः शिशोरिव ॥ १३ ॥
83995
83996 यथा दूरमाकृष्टो बिसतन्तुः क्रीडतः शिशोर्हस्ताद्विच्छिद्यते तद्वदिति
83997 व्यतिरेके दृष्टान्तः ॥ १३ ॥
83998
83999 समग्रं दिनमालोकाद्विरमत्यक्षयो यथा ।
84000 आजीवितान्तं नो प्रज्ञा तथा तत्त्वावलोकनात् ॥ १४ ॥
84001
84002 ननु ब्रह्माकारवृत्तिविच्छेदे व्युत्थानात्समाधिविच्छेदस्तस्य स्यात्तत्राह ##-
84003 विरमतीति संबध्यते । तथा प्रज्ञा ब्रह्माकारवृत्तिरपि आजीवितान्तं
84004 विदेहकैवल्यपर्यन्तं तत्त्वालोकनान्नो विरमति ।
84005 दृढसंस्कारबलादनुवर्तत एवेत्यर्थः ॥ १४ ॥
84006
84007 अजस्रमम्बुवहनाद्यथा नद्या न रुद्ध्यते ।
84008 तथा विज्ञानदृग्बोधात्क्षणमात्रं न रुद्ध्यते ॥ १५ ॥
84009
84010 स्वरूपाच्छादकस्याज्ञानस्य सकृदुदितया वृत्त्या निःशेषनाशे
84011 पुनरावरकाभावाद्वा तस्य न
84012 स्वरूपनिरोधलक्षणसमाधिभङ्गप्रसक्तिरित्याशयेनाह - अजस्रमिति । न
84013 रुद्ध्यते आवरणेन न प्रतिबध्यते ॥ १५ ॥
84014
84015 न विस्मरत्यविरतं यथा कालः कलागतिम् ।
84016 न विस्मरत्यविरतं स्वात्मानं प्राज्ञधीस्तथा ॥ १६ ॥
84017
84018 परमप्रेमास्पदत्वाद्वा सकृल्लभस्य तस्य न विस्मरणप्रसक्तिरित्याशयेनाह
84019 - न विस्मरतीति द्वाभ्याम् ॥ १६ ॥
84020
84021 न विस्मरति सर्वत्र यथा सततगो गतिम् ।
84022 न विस्मरति निश्चेयं चिन्मात्रं प्राज्ञ धीस्तथा ॥ १७ ॥
84023
84024 गतिं कालकला यद्वच्चिन्वाना समवस्थिता ।
84025 चिच्चितिश्चेत्यरहिता चिन्वाना गतयस्तथा ॥ १८ ॥
84026
84027 भग्नावरण आत्मैव यावज्जिवं स्वाकारवृत्तिपरम्परां जनयन्नेवास्ते
84028 इत्याशयेनाह - गतिमिति । कालस्य कला मूर्तिः सूर्यादिः ।
84029 चिच्चितिश्चैतन्यस्फूर्तिः । राहोः शिर इतिवदुपचारः । गतयः स्वाकारवृत्तिः ।
84030 छान्दसो विभक्तिव्यत्ययः ॥ १८ ॥
84031
84032 यथा सत्ताविहीनात्मा पदार्थो नोपलभ्यते ।

84033 तथात्मज्ञानहीनात्मा कालो ज्ञस्य न लभ्यते ॥ १९ ॥
84034
84035 बोधस्य तज्जिवनकालधर्मत्वाद्वा न विच्छेदप्रसक्तिरित्याशयेनाह -
84036 यथेति ॥ १९ ॥
84037
84038 न संभवति संसारे गुणहीनो गुणी यथा ।
84039 न संभवत्यात्मसंविद्वर्जितो ह्यात्मवांस्तथा ॥ २० ॥
84040
84041 अग्न्यौष्ण्यवत्तत्स्वभावत्वाद्वा न विच्छेदप्रसक्तिरित्याशयेनाह - न
84042 संभवतीति ॥ २० ॥
84043
84044 सर्वदैवास्मि संबुद्धः सर्वदैवास्मि निर्मलः ।
84045 सर्वदैवास्मि शान्तात्मा सर्वदास्मि समाहितः ॥ २१ ॥
84046
84047 भेदः केन समाधेर्मे जन्यते कथमेव वा ।
84048 आत्मनोऽव्यतिरेकेण नित्यमेव सदात्मता ॥ २२ ॥
84049
84050 भेदो विच्छेदः । मत्समाधेरात्मस्वरूपादव्यतिरेकेण हेतुनेत्यर्थः ।
84051 सदात्मता सत्ता सिद्धेत्यर्थः ॥ २२ ॥
84052
84053 तस्मात्कदाचिदपि मे नासमाधिमयं मनः ।
84054 न वा समाहितं नित्यमात्मतत्त्वैकसंभवात् ॥ २३ ॥
84055
84056 यदि मनोऽस्तीति मन्यसे तर्हि सदा समाहितमेव यदि तु नास्तीति तदा समाधिरपि
84057 मास्तु विक्षेपहेतोरेवाप्रसक्तेरित्याशयेनोपसंहरति - तस्मादिति ॥ २३ ॥
84058
84059 सर्वगः सर्वदैवात्मा सर्वमेव च सर्वथा ।
84060 असमाधिर्हि कोऽसौ स्यात्समाधिरपि कः स्मृतः ॥ २४ ॥
84061
84062 नित्यं समाहितधियः सुसमा महान्त-
84063 स्तिष्ठन्ति कार्यपरिणामविभागमुक्ताः ।
84064 तेनासमाहितसमाहितभेदभङ्ग्या
84065 नित्योदितः क्व नु स उत्तमवाक्प्रपञ्चः ॥ २५ ॥
84066
84067 सम्यक् पृथक्त्वबाधेनाहिता धीर्यैः । तेन हेतुना
84068 असमाहितसमाहितभेदभङ्ग्या प्रवृत्तस्त्वद्वाक्यप्रपञ्चः क्व नु
84069 कस्मिन्नर्थे व्यवतिष्ठेत । अतो मिथ्यैवोदित इत्यर्थः ॥ २५ ॥
84070
84071 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे०
84072 मोक्षोपायेषूपशमप्रकरणे समाधिनिश्चयो नाम द्विषष्टितमः
84073 सर्गः ॥ ६१ ॥
84074
84075 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरने
84076 समाधिनिश्चयो नाम द्विषष्टितमः सर्गः ॥ ६२ ॥
84077
84078
84079 त्रिषष्टितमः सर्गः ६३
84080
84081 परिघ उवाच ।
84082
84083 राजन्नूनं प्रबुद्धोऽसि प्राप्तवानसि तत्पदम् ।
84084 संशीतलान्तःकरणः पूर्णेन्दुरिव राजसे ॥ १ ॥

परिघेण परीक्ष्यात्र स्तुतः स सुरघुर्निजाम् ।
सहजस्थितिमेवात्र वर्णयामास विस्तरात् ॥ १ ॥

नूनं निश्चयेन प्रबुद्धस्तत्त्वविदसि । परीक्षणेन मया प्रबुद्धस्त्वमसीति वा
॥ १ ॥

आनन्दमधुसंपूर्णो [आनन्दमधुसंपूर्णलक्ष्म्या इति
पाठः] लक्ष्म्या च परया श्रितः ।
शीतलः स्निग्धमधुरो राजीवमिव राजसे ॥ २ ॥

आनन्दलक्षणेन मधुना मकरन्देन संपूर्णः । राजीवं पद्ममिव राजसे ॥
२ ॥

निर्मलो विततः पूर्णो गम्भीरः प्रकटाशयः ।
वेलानिलविलासेन मुक्तोऽब्धिरिव राजसे ॥ ३ ॥

निर्मलत्वादेव प्रकटः स्पष्टदृश्य आशयोऽन्तःप्रदेशो मनश्च यस्य ॥ ३ ॥

स्वच्छ आनन्दसंपूर्णो नष्टाहंकारवारिदः ।
स्फुटो विस्तीर्णगम्भीरः शरत्खमिव राजसे ॥ ४ ॥

सर्वत्र लक्ष्यसे स्वस्थः सर्वत्र परितुष्यसि ।
सर्वत्र वीतरागोऽसि राजन्सर्वत्र राजसे ॥ ५ ॥

सर्वत्र इष्टानिष्टविषये ॥ ५ ॥

सारासारपरिच्छेदपारगस्त्वं महाधिया ।
जानासि सर्वमेवेदं यथास्थितमखण्डितम् ॥ ६ ॥

परिच्छेदो विचार्य निर्णयस्तत्पारगः । अखण्डितमपरिच्छिन्नब्रह्मरूपम् ॥ ६ ॥

भावाभावपरिच्छेदतत्त्वज्ञमुदिताशयम् ।
गमागमदशालौल्यमुक्तं तव वपुः स्थितम् ॥ ७ ॥

तत्त्वज्ञेत्यन्तं संबोधनम् । उदिताशयमिति वा छेदः । गमागमौ
आरोहावरोहौ तत्प्रयोजिका भोगरागितादशा तया तत्प्रयुक्तलौल्येन च मुक्तम् ॥ ७
। ।

वस्तुनाऽवस्तुनेवान्तरमृतेनेव सागरः ।
अपुनःप्रक्षयायैव परे तृप्तोऽसि सुन्दर ॥ ८ ॥

न विद्यते वस्तु परमार्थवस्तु यस्मात्तथाविधेन वस्तुना स्वात्मना
स्वान्तःस्थेन अमृतेन सागर इव पदे स्वे महिम्नि तृप्तोऽसि ॥ ८ ॥

सुरघुरुवाच ।

न तदस्ति मुने वस्तु यत्रोपादेयतास्ति नः ।
यावतिकिंचिदिदं दृश्यं तावदेतन्न किंचन ॥ ९ ॥

तदुक्तं सर्वं युक्तिभिः समर्थयन्ननुमोदमानः सुरघुरुवाच - न
तदित्यादिना । न किंचन । अनृतमित्यर्थः ॥ ९ ॥

उपादेयस्य चाभावाद्धेयमप्यस्ति किं किल।
प्रतियोगि व्यवच्छेद्यं विना हेयं किमुच्यते॥ १०॥

उपात्तस्य त्यागो हि हानं तत्र प्रतियोगि हानप्रतिकूलं हानेन व्यवच्छेद्यं
विनाश्यं उपादानं विना हेयमिति किमुच्यते वक्तुं शक्यते। न किंचिदित्यर्थः
॥ १०॥

तुच्छत्वात्सर्वभावानामतुच्छत्वाच्च कालतः।
चिरं मम परिक्षीणे तुच्छातुच्छे मनःस्थिती॥ ११॥

ननु तुच्छं हेयमतुच्छमुपादेयं किं न स्यात्तत्राह - तुच्छत्वादिति।
यथाहुः बद्धमुक्तो महीपालो ग्राममात्रेण तुष्यति। स एव पूर्वं संपूर्णो न
राज्यं बहु मन्यते॥ इति॥ ११॥

देशकालवशादेव तुच्छस्यातुच्छतामिह।
अतुच्छस्य तु तुच्छत्वं वर्ज्ये निन्दास्तुती बुधैः॥ १२॥

इह मन्यन्ते इति शेषः। अतो न किंचित्तुच्छातुच्छबुद्ध्या निन्द्यं स्तुत्यं
वेत्याह - वर्ज्ये इति॥ १२॥

रागान्निन्दास्तुती लोके रागश्च परिवाञ्छितम्।
वाञ्छिते च महोदारं वस्तु शोभनबुद्धिना॥ १३॥

त्रैलोक्ये च स्त्रियः शैलाः समुद्रवनराजयः।
भूतानि वस्तुशून्यानि सारो नास्त्यत्र वस्तुतः॥ १४॥

वस्तुशब्दो भावप्रधानः। सत्यत्वशून्यानीत्यर्थः॥ १४॥

मांसास्थिदारुमृद्रत्नमये जगति जर्जरे।
वाञ्छनीयविहीनेऽस्मिञ्शून्ये किमिव वाञ्छ्यते॥ १५॥

अध्यात्मं मांसास्थिमये अधिभूतं च दारुमृद्रत्नादिमये। रत्नशब्दः
शिलापरः॥ १५॥

वाञ्छायां विनिवृत्तायां संक्षयो द्वेषरागयोः।
दिनलक्ष्म्यां व्यपेतायामालोकातपयोरिव॥ १६॥

अलमतिविततैर्वचःप्रपञ्चै-
रियमुचितेह सुखाय दृष्टिरेका।
उपशमितरसं समंमनोऽन्त-
र्यदि मुदितं तदनुत्तमा प्रतिष्ठा॥ १७॥

यदि सर्वमेवासारं किं तर्हि सारभूतं सेवितुमुचितं तदाह - अलमिति।
यदि मन उपशमितरसं सर्वतो नीरोगं समं विक्षेपवैषम्यरहितं
सदन्तः स्वात्मन्येव मुदितं तत्तर्हि सैवोत्तमा प्रतिष्ठा
विश्रान्तिरियमेवैकदृष्टिः सुखाय सदा सेवितुमुचितेत्यर्थः॥ १७॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये देवदूतोक्ते मो०
उपशमप्रकरणे सुरघुपरिघनिश्चयो नाम त्रिषष्टितमः सर्गः॥ ६३
।।

84189 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
84190 सुरघुपरिघनिश्चयो नाम त्रिषष्टितमः सर्गः ॥ ६३ ॥
84191
84192
84193 चतुःषष्टितमः सर्गः ६४
84194
84195 श्रीवसिष्ठ उवाच ।
84196
84197 सुरघुः परिघश्चैव विचार्येति जगद्भ्रमम् ।
84198 मिथः प्रपूजितौ तुष्टौ स्वव्यापारपरौ गतौ ॥ १ ॥
84199
84200 यैरुपायैरुपायज्ञो मनोदोषैर्न बाध्यते ।
84201 आत्मा चोद्ध्रियते दुःखात्त उपाया इहोदिताः ॥ १ ॥
84202
84203 इति वर्णितप्रकारेण विचार्य ॥ १ ॥
84204
84205 तदेव राघव श्रुत्वा परमं बोधकारणम् ।
84206 अनेनैव विबोधेन भव लब्धास्पदः स्फुटम् ॥ २ ॥
84207
84208 तत् वर्णितसंविवादरूपं बोधकारणं श्रुत्वा । एतावदेव श्रुत्वावधारितं
84209 बोधाय पर्याप्तमिति सूचनाय प्रथम एवकारः । एतावद्बोध एव
84210 सुप्रतिष्ठितः परमपदप्राप्तये पर्याप्त इति द्योतनाय द्वितीयः ॥ २ ॥
84211
84212 परया प्रज्ञया धीरविचारगततीक्ष्णया ।
84213 गलत्यलमहंकारकालमेघे हृदम्बरे ॥ ३ ॥
84214
84215 धीरैर्विद्वद्भिः सह विचारेण धीरेण निश्चलेन स्वविचारेण च गततीक्ष्णया
84216 प्राप्तनिशितभावया हृदम्बरे अहंकारलक्षणे कालमेघे गलति सति ॥ ३ ॥
84217
84218 समस्तलोकानुमते सफले ह्लादकारिणि ।
84219 निर्मले वितते चेतः शरत्काल उपस्थिते ॥ ४ ॥
84220
84221 समस्तेत्यादिविशेषणानि शरत्कालेऽपि योज्यानि ॥ ४ ॥
84222
84223 ध्येये शरण्ये सुगमे सकलानन्दसंपदि ।
84224 सुप्रसन्ने चिदाकाशे स्थीयते परमात्मनि ॥ ५ ॥
84225
84226 सर्वानर्थनिवर्तकत्वाच्छरण्ये ॥ ५ ॥
84227
84228 यो नित्यमध्यात्ममयो नित्यमन्तर्मुखः सुखी ।
84229 नित्यं चिदनुसंधानो मनःशोकैर्न बाध्यते ॥ ६ ॥
84230
84231 अध्यात्ममय आत्मैकविचारप्रचुरः । अन्तर्मुखो बाह्यासक्तिशून्यः ।
84232 चित्येवानुसंधानं पुनःपुनरादरादास्वादनं यस्य ॥ ६ ॥
84233
84234 व्यवहारपरोऽप्युच्चै रागद्वेषमयोऽपि सन् ।
84235 नान्तःकलङ्कमायाति पद्मो जलगतो यथा ॥ ७ ॥
84236
84237 रागद्वेषमयो रागद्वेषप्रचुर इव मूढैः कल्प्यमानोऽपि ॥ ७ ॥
84238
84239 सम्यग्विज्ञानवान्शुद्धो योऽन्तःशान्तमना मुनिः ।
84240 न बाध्यते स मनसा करिणेव मृगाधिपः ॥ ८ ॥

भोगैकशरणं दीनं न चित्तं ज्ञस्य विद्यते।
नन्दने दुर्द्रुम इव ज्ञचित्तं हि महावपुः ॥ ९ ॥

दुर्द्रुमो विषकण्टकवृक्षः। हि यस्माज्ज्ञस्य चित्तं महावपुः।
क्षुद्रसुखलवनिःस्पृहमिति यावत् ॥ ९ ॥

विरक्तो जन्ममरणे यथा दुःखी न मानवः।
परिज्ञाताखिलाविद्यं तथा चित्तं न दुःखितम् ॥ १० ॥

यथा विरक्तो मानवो जायामरणे सति कामुक इव न दुःखी तथा परितो विचार्य
ज्ञाता अखिला विषयेन्द्रियशरीरादिसर्वदृश्यरूपा अविद्या मिथ्याभ्रान्तिर्येन
तथाविधं ज्ञचित्तं न दुःखितं भवतीत्यर्थः ॥ १० ॥

परिज्ञातमनोमोहो जगद्भावोद्भवत्मना।
स्पृश्यते नैनसा साधो रजसेव नभस्तलम् ॥ ११ ॥

तस्य भाविदुःखहेतुपापसंबन्धोऽपि नास्तीत्याह - परिज्ञातेति। जगति
व्यवहारपदे भावः कर्तृत्वाभिमानस्तस्मादुद्भवतीति जगद्भावोद्भवं
तदात्मना एनसा पापेन ॥ ११ ॥

अविद्यासंपरिज्ञातमिदमेव महौषधम्।
अविद्याविततव्याधेस्तिमिरस्येव दीपकम् ॥ १२ ॥

अविद्यालक्षणजगदाकारविस्तीर्णव्याधेरविद्यामात्रं जगदिति
सम्यक्परिज्ञातं विचारजन्यं ज्ञानमेव महौषधमित्यर्थः ॥ १२ ॥

अविद्या संपरिज्ञाता यदैव हि तदैव हि।
सा परिक्षीयते भूयः स्वप्नेनेव हि भोगभूः ॥ १३ ॥

यथा स्वप्नोऽयमिति परिज्ञातेन स्वप्नेन तद्भोगभूः परिक्षीयते तद्वत् ॥ १३ ॥

व्यवहारपरोऽप्यन्तरसक्तमतिरेकधीः।
स्पृश्यते नैनसा साधुर्मत्स्येक्षणमिवाम्भसा ॥ १४ ॥

मत्स्यानामीक्षणं चक्षुरम्भसा न स्पृश्यते तद्वत्। तत्स्पर्शे
पिहिताक्षाणां तेषां जले दर्शनादिव्यवहारो न स्यादिति भावः ॥ १४ ॥

प्राप्ते चिद्भासुरालोके प्रक्षीणाऽज्ञानयामिनी।
शेमुषी परमानन्दमागता ज्ञस्य राजते ॥ १५ ॥

शेमुषी प्रज्ञा ॥ १५ ॥

अज्ञाननिद्रोपशमे जनो ज्ञानार्कबोधितः।
तत्प्रबोधमवाप्नोति पुनर्येन न मुह्यति ॥ १६ ॥

ज्ञायतेऽनेनेति ज्ञानं शास्त्रं तद्रूपेणार्केण बोधितः। तत्तादृशं
प्रबोधम् ॥ १६ ॥

दिनानि जीव्यते तानि सानन्दास्ते क्रियाक्रमाः।
आत्मचन्द्रोदिता येषु चिज्ज्योत्स्ना हृदयाम्बरे ॥ १७ ॥

84293 इदानीं विद्यां स्तौति - दिनानीत्यादिना | जीव्यते इति भावे लः | दिनानीति
84294 कालाध्वनोरत्यन्तसंयोगे द्वितीया नतु कर्मणि | येषु दिनेषु चिज्ज्योत्स्ना
84295 हृदयाम्बरे आह्लादयति विराजतेवेति शेषः || १७ ||
84296
84297 नरो मोहसमुत्तीर्णः सततं स्वात्मचिन्तया |
84298 अन्तःशीतलतामेति स्वामृतेनेव चन्द्रमाः || १८ ||
84299
84300 तानि मित्राणि शास्त्राणि तानि तानि दिनानि च |
84301 विरागोल्लासवान्येभ्य आत्मचित्तोदयः स्फुटम् || १९ ||
84302
84303 येभ्यो मित्रादिभ्यो निमित्तेभ्यो विरागोल्लासवान्
84304 आत्माकारवृत्तिलक्षणश्चित्ताभ्युदयः स्फुटं सिद्ध्यतीति शेषः || १९ ||
84305
84306 चिरं शोचन्ति ते दीना जन्मजङ्गलवीरुधः |
84307 आत्मावलोकने हेला येषामविगतैनसाम् || २० ||
84308
84309 हेला अवहेलनम् | उपेक्षेति यावत् | अविगतैनसामक्षीणपापानाम् || २० ||
84310
84311 आशापाशशतैर्बद्धं भोगोलपसुलालसम् |
84312 जराजर्जरिताकारं शोकोच्छ्वासकदर्थितम् || २१ ||
84313
84314 इत आरभ्य सर्वेषां द्वितीयान्तपदानां नवमश्लोकस्थे जीवबलीवर्द
84315 उत्तारयेदित्यत्र संबन्धः | उलपास्तृणविशेषाः || २१ ||
84316
84317 व्यूढदुःखमहाभारं जन्मजङ्गलजीवितम् |
84318 कुकर्मकर्दमालिप्तं मोहपल्वलशायिनम् || २२ ||
84319
84320 विशेषेण ऊढो दुःखमहाभारो येन || २२ ||
84321
84322 रागदंशावलीदष्टं कृष्टं तृष्णावरत्रया |
84323 मनोवणिङ्निकेतस्थं बन्धुबन्धननिश्चलम् || २३ ||
84324
84325 वरत्रया चर्ममय्या नासारज्ज्वा | मनोलक्षणस्य वणिजो निकेते आज्ञालक्षणे
84326 संकेते निवासे च स्थितम् | बन्धुजनलक्षणैर्बन्धनैर्निश्चलं चलितुमशक्तम्
84327 || २३ ||
84328
84329 पुत्रदारजराजीर्णे मग्नोन्मग्नं कुकर्दमे |
84330 श्रान्तं विगतविश्रामं भग्नमादीर्घवर्त्मनि || २४ ||
84331
84332 कुकर्दमे गोमयपङ्के || २४ ||
84333
84334 गमागमपरिक्षीणं संसारारण्यचारिणम् |
84335 अलब्धशीतलच्छायं तीव्रतापोपतापितम् || २५ ||
84336
84337 आकारभासुरं दीनं बाह्यैराक्रान्तमिन्द्रियैः |
84338 कर्मघण्टारवाक्रान्तं क्रान्तं दुष्कृतताडनैः || २६ ||
84339
84340 बहिराकारमात्रेण भासुरमन्तस्तु दीनम् |
84341 बाह्यैरिन्द्रियैश्चक्षुरादिभिराक्रान्तमारूढम् | कर्मपदेन
84342 काम्यकर्मप्रोचकार्थवादा लक्ष्यन्ते | तल्लक्षणेन घण्टारवेणाक्रान्तं
84343 भ्रमितम् || २६ ||
84344

84345 आविर्भावतिरोभावचक्रावर्तधुरोद्वहम् |
84346 अज्ञानविकटाटव्यां लुठितं सन्नगात्रकम् || २७ ||
84347
84348 चक्रावर्तधुरा शकटभारः | सा हि शकटचक्रैरावर्तते तदुद्वहम् || २७ ||
84349
84350 निजानर्थसदामग्नं सीदमानमकिंचनम् |
84351 सन्नाङ्गं कर्मभारेण करुणाक्रन्दकारिणम् || २८ ||
84352
84353 करुणं यथा स्यात्तथा आक्रन्दकारिणम् || २८ ||
84354
84355 राम जीवबलीवर्दमिमं संसारपल्वलात् |
84356 परमं यत्नमास्थाय चिरमुत्तारयेद्बलात् || २९ ||
84357
84358 चिरं परमं यत्नमास्थाय ज्ञानबलादुत्तारयेदित्यर्थः || २९ ||
84359
84360 तत्त्वावलोकनात्क्षीणे चित्ते नो जायते पुनः |
84361 जीवः कदाचन तदा भवेत्तीर्णभवार्णवः || ३० ||
84362
84363 उत्तारितस्य पुनः पङ्कमज्जनशङ्कां वारयति - तत्त्वेति || ३० ||
84364
84365 महानुभावसंपर्कात्संसारार्णवलङ्घने |
84366 युक्तिः संप्राप्यते राम स्फुटा नौरिव नाविकात् || ३१ ||
84367
84368 उत्तारणोपायज्ञानलाभस्तु सद्गुरोरभिगमनात्सिद्ध्यतीत्याशयेनाह -
84369 महानुभावेति || ३१ ||
84370
84371 यस्मिन्देशमरौ तज्ज्ञो नास्ति सज्जनपादपः |
84372 सफलः शीतलच्छायो न तत्र निवसेद्बुधः || ३२ ||
84373
84374 देशो मरुरिव देशमरुस्तस्मिन् || ३२ ||
84375
84376 स्निग्धशीतवचःपत्रे सच्छाये स्मितपुष्पके |
84377 क्षणाद्विश्रम्यते राम भृशं सुजनचम्पके || ३३ ||
84378
84379 सुजनलक्षणे चम्पकवृक्षे | विशेषणान्युभयसाधारण्येन योज्यानि || ३३ ||
84380
84381 तदभावे महामोहतापसंपत्तिदायिनि |
84382 किंचिज्जातविवेकेन स्वप्तव्यं नेह धीमता || ३४ ||
84383
84384 तदभावे स्वात्मलाभविश्रान्त्यभावे इह संसारे न स्वप्तव्यम् || ३४ ||
84385
84386 आत्मैव ह्यात्मनो बन्धुरात्मनात्मैवमुद्धरेत् |
84387 नात्मानमवलेपेन जन्मपङ्कार्णवे क्षिपेत् || ३५ ||
84388
84389 एवमनेनोपायेन उद्धरेदात्मानमित्यर्थः | अवलेपेन देहाभिमानगर्वेण || ३५
84390 | |
84391
84392 किमिदं कथमायातं किंमूलमिति किंक्षयम् |
84393 देहदुःखमिति प्राज्ञैः प्रेक्षणीयं प्रयत्नतः || ३६ ||
84394
84395 कस्मात्क्षयो यस्य किंक्षयम् | देहाधीनं दुःखं प्रेक्षणीयं स्वबुद्ध्या
84396 शास्त्रसज्जनसहायेन च विचारणीयम् | द्वावितिशब्दौ

84397 विचार्यविचारप्रकारबाहुल्यद्योतनार्थौ ॥ ३६ ॥
84398
84399 न धनानि न मित्राणि न शास्त्राणि न बान्धवाः ।
84400 नराणामुपकुर्वन्ति मग्नस्वात्मसमुद्धृतौ ॥ ३७ ॥
84401
84402 शास्त्राण्यनात्मशास्त्राणि ॥ ३७ ॥
84403
84404 मनोमात्रेण सुहृदा सदैव सहवासिना ।
84405 सह किंचित्परामृश्य भवत्यात्मा समुद्धृतः ॥ ३८ ॥
84406
84407 किं तर्ह्युपकरोति तदाह - मनोमात्रेणेति । सुहृदा परिशुद्धेनेति यावत् ॥
84408 ३८ ॥
84409
84410 वैराग्याभ्यासयत्नाभ्यां स्वपरामर्शजन्मना ।
84411 तत्त्वालोकनपोतेन तीर्यते भवसागरः ॥ ३९ ॥
84412
84413 शोच्यमानं जनैर्नित्यं दह्यमानं दुराशया ।
84414 नात्मानमवमन्येत प्रोद्धरेदेनमादरात् ॥ ४० ॥
84415
84416 नावमन्येत नोपेक्षेत ॥ ४० ॥
84417
84418 अहंकारमहालानं तृष्णारज्जुं मनोमदम् ।
84419 जन्मजम्बालनिर्मग्नं जीवदन्तिनमुद्धरेत् ॥ ४१ ॥
84420
84421 आलानं गजबन्धनस्तम्भः । जम्बाले पङ्के निर्मग्नम् ॥ ४१ ॥
84422
84423 अयमेतावतैवात्मा त्रातो भवति राघव ।
84424 यदपास्य विमूढत्वमहंकारः प्रमार्ज्यते ॥ ४२ ॥
84425
84426 विमूढत्वं स्वात्माज्ञानम् ॥ ४२ ॥
84427
84428 एतावतैव सन्मार्गे याति प्रकटतामलम् ।
84429 यदपास्य मनोजालमहंभावो विलूयते ॥ ४३ ॥
84430
84431 सतः परमात्मनो मार्गणं मार्गो बोधपर्यन्तो विचारस्तस्मिन् प्रकटतां
84432 स्फुटावलोकनताम् । मनोरचितं बाह्याध्यात्मिकासक्तिजालम् ॥ ४३ ॥
84433
84434 एतावतैव देवेशः परमात्मावगम्यते ।
84435 काष्ठलोष्टसमत्वेन देहो यदवलोक्यते ॥ ४४ ॥
84436
84437 तत्रापि दुस्त्यजदेहाभिमानत्याग एव मुख्य इत्याशयेनाह - एतावतैवेति ॥ ४४
84438 ॥
84439
84440 अहंकाराम्बुदे क्षीणे दृश्यते चिद्दिवाकरः ।
84441 ततस्तत्परिणामेन तत्पदं समवाप्यते ॥ ४५ ॥
84442
84443 तस्य दर्शनस्य परिणामेन भूमिकापरिपाकेन चिद्दिवाकरभावापत्त्या वा ॥ ४५
84444 ॥
84445
84446 यथा ध्वान्तसमुच्छेदे स्वयमालोकवेदनम् ।
84447 तथाहंकारविच्छेदे स्वयमात्मावलोकनम् ॥ ४६ ॥
84448

84449 अवलोकनं सिद्ध्यतीति शेषः ॥ ४६ ॥
84450
84451 अहंकारे परिक्षीणे यावस्था सुखमोदजा ।
84452 सावस्था भरिताकारा सा सेव्या संप्रयत्नतः ॥ ४७ ॥
84453
84454 सुखमोदो निरतिशयानन्दविश्रान्तिस्तज्जा ताद्रूप्येणाविर्भूता निर्विकल्पावस्था ॥
84455 ४७ ॥
84456
84457 परिपूर्णार्णवप्रख्या न वा गोचरमेति नः ।
84458 नोपमानमुपादत्ते नानुधावति रञ्जनम् ॥ ४८ ॥
84459
84460 तामेव वर्णयति - परुपूर्णेत्यादिना । रञ्जनं दृश्योपरागम् ॥ ४८ ॥
84461
84462 केवलं चित्प्रकाशांशकलिका स्थिरतां गता ।
84463 तुर्या चेत्प्राप्यते दृष्टिस्तत्तया सोपमीयते ॥ ४९ ॥
84464
84465 तयैव सोपमीयते नान्यत्तदुपमानमस्तीत्यर्थः ॥ ४९ ॥
84466
84467 अदूरगतसादृश्यात्सुषुप्तस्योपलक्ष्यते ।
84468 सावस्था भरिताकारा गगनश्रीरिवातता ॥ ५० ॥
84469
84470 केन तर्हि निदर्शनेन तत्संभावना स्यात्तदाह - अदूरेति । निर्विक्षेपत्वांशे
84471 सन्निहितात्सादृश्यादित्यर्थः । उप समीपे लक्ष्यते । अज्ञानावरणं चेत्तदा न
84472 स्यात्तर्हि तुर्यावस्थैव स्यादित्यनया रीत्येत्यर्थः ॥ ५० ॥
84473
84474 मनोहंकारविलये सर्वभावान्तरस्थिता ।
84475 समुदेति परानन्दा या तनुः पारमेश्वरी ॥ ५१ ॥
84476
84477 घटविलये तदाकाशस्य महाकाशत्वमिव मनोहंकारोपाधिविलये
84478 त्वंपदलक्ष्यस्य तत्पदलक्ष्यात्मस्वभावता सिद्ध्यतीत्याह - मन इति ॥ ५१ ॥
84479
84480 सा स्वयं योगसंसिद्धा सुषुप्तादूरभाविनी ।
84481 न गम्या वचसां राम हृद्येवेहानुभूयते ॥ ५२ ॥
84482
84483 सुषुप्त अदूरभाविनी संनिहिता हृद्येवानुभूयते स्वानुभवतिरिक्तं
84484 तत्परिचायकं नास्तीत्यर्थः ॥ ५२ ॥
84485
84486 अनुभूतिं विना तत्त्वं खण्डादेर्नानुभूयते ।
84487 अनुभूतिं विना रूपं नात्मनश्चानुभूयते ॥ ५३ ॥
84488
84489 यथा खण्डाद्यसाधारणगवादिस्वरूपपरिचये नानुभवादन्यन्मानं
84490 तथा आत्मन्यपीत्याह - अनुभूतिमिति । आत्मनो रूपं परमार्थस्वरूपम् ।
84491 चोऽप्यर्थः ॥ ५३ ॥
84492
84493 अखिलमिदमनन्तमात्मतत्त्वं
84494 दृढपरिणामिनि चेतसि स्थितेऽन्तः ।
84495 बहिरुपशमिते चराचरात्मा
84496 स्वयमनुभूयत एव देवदेवः ॥ ५४ ॥
84497
84498 इदमखिलमात्मतत्त्वमेव तर्हि तत्कथमनुभूयते तत्राह - दृढेति ।
84499 चेतसि बहिर्विषयेषूपशमिते अन्तः प्रत्यगात्मनि क्षीरोदकवदैकरस्येन
84500 दृढं परिणामिनि स्थिते निश्चले सति चराचराणामात्मा प्रत्यग्भूतो

84501 देवानां चक्षुरादीनां देवः साक्षितया प्रकाशयिता स्वयं
84502 साक्षादनुभूयत एव नात्र संशयः कार्य इत्यर्थः ॥ ५४ ॥
84503
84504 तदनु विषयवासनाविनाश-
84505 स्तदनु शुभः परमः स्फुटप्रकाशः ।
84506 तदनु च समतावशात्स्वरूपे
84507 परिणमनं महतामचिन्त्यरूपम् ॥ ५५ ॥
84508
84509 एवं चतुर्थभूमिकायामात्मानुभवे तदनु
84510 पञ्चमभूमिकायामात्यन्तिकविषयवासनाविनाशास्तदनु
84511 षष्ठभूमिकायां विनैव यत्नं शुभः परमपुरुषार्थरूपः स्वात्मनः
84512 स्फुटः प्रकाशः सदैव पूर्णभावानुभवः सिद्ध्यति । तदनु
84513 सप्तमभूमिकायां समाध्यसमाध्योः
84514 समतावशादात्यन्तिकवैषम्यनिवृत्तेः
84515 समुद्रान्तर्विलीनसैन्धवघनवत्सुखैकरसतया परिणमनं सिद्ध्यति तत्तु
84516 महतां ब्रह्मादीनामपि इयत्तयाऽचिन्त्यरूपम् । यतो वाचो निवर्तन्ते अप्राप्य
84517 मनसा सह इति श्रुतेरित्यर्थः ॥ ५५ ॥
84518
84519 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये देव०
84520 मोक्षोपायेषूपशमप्रकरणे उपदेशो नाम चतुःषष्टितमः सर्गः ॥ ६४
84521 ।।
84522
84523 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे उपदेशो
84524 नाम चतुःषष्टितमः सर्गः ॥ ६४ ॥
84525
84526
84527 पञ्चषष्टितमः सर्गः ६५
84528
84529 श्रीवसिष्ठ उवाच ।
84530
84531 मनसैव मनश्छित्त्वा यद्यात्मा नावलोक्यते ।
84532 ममेत्यहमिति त्यक्त्वा तत्तामरसलोचन ॥ १ ॥
84533
84534 सह्याख्यशैलस्तत्रात्रेराश्रमस्तत्र वर्ण्यते ।
84535 विलासभासयोर्जन्मकर्मशोकोदयक्रमः ॥ १ ॥
84536
84537 आत्मदर्शनोपायोपेक्षणे शोकमोहादिदुःखपरम्परा दुर्वारेत्यर्थे
84538 भासविलासाख्यायिकामवतारयिष्यन्नाह - मनसैवेति । यदि नावलोक्यते
84539 तत्तर्हि जगद्दुःखं यथा चित्रगतो रविर्नास्तमेति तथा नास्तमेतीति परेणान्वयः
84540 ॥ १ ॥
84541
84542 नास्तमेति जगद्दुःखं यथा चित्रगतो रविः ।
84543 आयात्यापदनन्तत्वं महार्णववदातता ॥ २ ॥
84544
84545 आपदनन्तत्वमपरिच्छेद्यत्वमायाति ॥ २ ॥
84546
84547 पुनःपुनरुपायाति जलकल्लोलकारणम् ।
84548 मेघनीलतमःश्यामा संसृतिप्रावृडाकुला ॥ ३ ॥
84549
84550 मेघैर्नीलतमोभिश्च श्यामा संसृतिलक्षणा प्रावृट् वर्षर्तुः ॥ ३ ॥
84551
84552 अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।

84553 संवादं सुहृदोः सह्यसानौ भासविलासयोः ॥ ४ ॥
84554
84555 सुहृदोर्मित्रयोः शुद्धचित्तयोश्च ॥ ४ ॥
84556
84557 अस्त्युत्सेधजिताकाशः पीठेन जितभूतलः ।
84558 तलेन जितपातालस्त्रिलोकविजयो गिरिः ॥ ५ ॥
84559
84560 पीठेन उपत्यकाभागेन तलेन भूम्यन्तः प्रविष्टमूलभागेन । जितशब्द
84561 आक्रान्तपरः ॥ ५ ॥
84562
84563 असंख्यकुसुमापूरोऽसंख्यनिर्मलनिर्झरः ।
84564 गुह्यकारक्षितनिधिः सह्यनामाऽविषह्यभाः ॥ ६ ॥
84565
84566 अविषह्या दृक्प्रसरप्रतिघातिनी भा रत्नादिदीप्तिर्यस्मिन् ॥ ६ ॥
84567
84568 मुक्तापटलसंपूर्णैर्भानुभासुरभित्तिभिः ।
84569 भासुरः काञ्चनतटैः कटैरिव सुरद्विपः ॥ ७ ॥
84570
84571 भानुभिः सूर्यरत्नादिकिरणैर्भासुरभित्तिभिर्दीप्तवप्रैः । पाटलभित्तिभिः इति
84572 पाठेऽप्येवम् । काञ्चनैस्तटैर्नितम्बैः कटैर्गण्डैः । जात्याख्यायां इति
84573 बहुवचनम् ॥ ७ ॥
84574
84575 क्वचित्पुष्पभरासारो धातुसारातततः क्वचित् ।
84576 क्वचित्फुल्लसरःसारो रत्नशालिशिलः क्वचित् ॥ ८ ॥
84577
84578 धातुसारैर्हरितालमनःशिलागैरिकादिभिराततः ॥ ८ ॥
84579
84580 इति रटन्निर्झरवानितः क्वणितकीचकः ।
84581 इतो रटद्गुहावात इतः षट्पदघुंघुमः ॥ ९ ॥
84582
84583 इत इत इति प्रदेशभेदोक्तिः ॥ ९ ॥
84584
84585 सानौ गीतोऽप्सरोवृन्दैर्वने मृगखगारवः ।
84586 अधित्यकायां मत्ताभ्रो गगनेषु खगारवः ॥ १० ॥
84587
84588 सानौ प्रस्थे । मत्तानीव गर्जन्त्यभ्राणि यस्मिन् ॥ १० ॥
84589
84590 विद्याधराश्रितगुहो भृङ्गगीताम्बुजाकरः ।
84591 किरातगीतपर्यन्तः खगगीतवनद्रुमः ॥ ११ ॥
84592
84593 स्कन्धेषु देवैर्वलितः पादेषु वलितो नरैः ।
84594 पाताले वलितो नागैर्जगद्गृहमिवापरम् ॥ १२ ॥
84595
84596 जगत्पदेन लोकत्रयवासिनो लक्ष्यन्ते । तेषां गृहमिव त्रैलोक्यलक्षणं
84597 ब्रह्माण्डगृहमिवेति वा स्थित इति शेषः ॥ १२ ॥
84598
84599 कन्दरेषु श्रितः सिद्धैर्निधानैरन्तराश्रितः ।
84600 चन्दनेषु श्रितो नागैः सिंहैः शृङ्गशिखासु च ॥ १३ ॥
84601
84602 निधानैर्निखातधनैः ॥ १३ ॥
84603
84604 पुष्पाभ्रसंवीतवपुः पुष्परेण्वभ्रपांसुलः ।

84605 पुष्पवात्याभ्रहृद्भ्रान्तः पुष्पपादपपाण्डुरः ॥ १४ ॥
84606
84607 अधःपतितपुष्पाणि सद्यःपतितपुष्पाणामन्तरिक्षस्था रेणवः
84608 पतमानपुष्पाणि वृक्षस्थपुष्पाणि चाभ्रत्वेन क्रमाद्वर्ण्यन्ते ॥ १४ ॥
84609
84610 धातुधूल्यभ्रकपिलो रत्नोपलतलस्थितैः ।
84611 मन्दारगैरिव पुरस्त्रीगणैरलमाश्रितः ॥ १५ ॥
84612
84613 मन्दारः कल्पवृक्षमेदस्तद्रैस्तदारूढैरिव ॥ १५ ॥
84614
84615 अभ्रनीलांशुकच्छन्ना मूकरत्नविभूषणाः ।
84616 शिलाः कनकसुन्दर्यो यत्र शृङ्गाभिसारिकाः ॥ १६ ॥
84617
84618 शिला एवाभिसारिकात्वेनोत्प्रेक्षते - अभ्रेति ।
84619 क्वणन्मञ्जीरादिखचितरत्नानामभिसारविरोधित्वान्मूकरत्नविभूषिताः ।
84620 शृङ्गैरभिसारिका इवाश्लिष्टत्वात् शृङ्गाभिसारिकाः ॥ १६ ॥
84621
84622 तत्रोत्तरतटे सानौ विनम्रफलपादपे ।
84623 रत्नपुष्करिणीजालवहन्निर्झरवारिणि ॥ १७ ॥
84624
84625 तत्र उत्तरतटे अत्रेराश्रमोऽस्तीति चतुर्थेन संबन्धः ॥ १७ ॥
84626
84627 चूतद्रुमलतोन्मुक्तपुष्पस्तबकदन्तुरे ।
84628 विफुल्लाङ्कोलपुन्नागनीलनीरजदिक्तटे ॥ १८ ॥
84629
84630 चूतद्रुमाणां लताभिः शाखाभिरुन्मुक्तैरूर्ध्वभागे प्रसारितैः
84631 पुष्पस्तबकैर्दन्तुरे उन्नतदन्तवस्थिते । नीलनीरजानि नीलोत्पलानि ॥ १८ ॥
84632
84633 लतावितानच्छन्नार्के रत्नांशुभग्भास्वरे ।
84634 स्रवज्जम्बूरसस्यूते स्वलोकाह्लादकारिणि ॥ १९ ॥
84635
84636 स्वर्लोकः स्वर्गस्थानमिवाह्लादकारिणि ॥ १९ ॥
84637
84638 ब्रह्मलोकसमः स्वर्गरम्यः शिवपुरोपमः ।
84639 अत्रेरस्त्याश्रमः श्रीमान्सिद्धश्रमहरो महान् ॥ २० ॥
84640
84641 महत्यत्राश्रमे तस्मिंस्तापसौ द्वौ बभूवतुः ।
84642 कोविदौ तु नभोमार्ग इव शुक्रबृहस्पती ॥ २१ ॥
84643
84644 महति विस्तीर्णे । कोविदौ विद्वांसौ । शुक्रबृहस्पती इति तयोर्नामनिर्देशोऽपि ॥ २१
84645 । ।
84646
84647 तयोरथैकास्पदयोस्तत्राभूतां सुतावुभौ ।
84648 फुल्लाङ्कुरौ शुद्धतनू सरस्यम्बुजयोरिव ॥ २२ ॥
84649
84650 अम्बुजयोः पद्मगुल्मयोः फुल्लारौ पुष्पप्रकृतिभूते कलिके इव ॥ २२ ॥
84651
84652 विलासभासनामानौ वृद्धिमाययतुः क्रमात् ।
84653 तौ पित्रोः पल्लवे दीर्घे लतापादपयोरिव ॥ २३ ॥
84654
84655 लतापादपयोः पल्लवे इव वृद्धिमाययतुः ॥ २३ ॥
84656

84657 आस्तामन्योन्यसुस्निग्धौ सुहृदौ वल्लभौ मिथः।
84658 तिलतैलवदाश्लिष्टौ तौ पुष्पामोदवत्स्थितौ॥ २४॥
84659
84660 नाऽयुक्तौ पुत्रयुक्तौ तु सुरक्ताविव दंपती।
84661 एकं द्वित्वमिवापन्नां सममासीत्तयोर्मनः॥ २५॥
84662
84663 नायुक्तौ न वियुक्तौ। पुत्रार्थ युक्तौ परस्परं च सुरक्तौ दंपती इव॥ २५॥
84664
84665 तौ तथान्योन्यमुदितौ मनोहरतराकृती।
84666 तस्थतुः स्वाश्रमे मौने सरोज इव षट्पदौ॥ २६॥
84667
84668 मौने मुद्रिते मुनियुक्ते च॥ २६॥
84669
84670 प्रापतुर्यौवनं बाल्यमुत्सृज्य नववल्लभौ।
84671 कालेनाल्पतरेणैव चन्द्रसूर्याविवोदितौ॥ २७॥
84672
84673 जग्मतुर्देहमुत्सृज्य ततस्तौ पितरौ तयोः।
84674 स्वर्गं जरार्तावुड्डीय नीडादिव विहंगमौ॥ २८॥
84675
84676 पञ्चत्वं गतयोः पित्रोर्दीनवक्त्रौ बभूवतुः।
84677 तप्ताङ्गौ विगतोत्साहौ पद्माविव जलोद्धृतौ॥ २९॥
84678
84679 पञ्चत्वं मरणं गतयोः सतोः॥ २९॥
84680
84681 तत्रौर्ध्वदैहिकं कृत्वा चक्राते परिदेवनम्।
84682 लोकस्थितिरलङ्घ्या हि महतामपि मानद॥ ३०॥
84683
84684 और्ध्वदैहिकमित्यनुशतिकादित्वादुभयपदवृद्धिः। परिदेवनं विलापम्॥
84685 ३०॥
84686
84687 कृत्वौर्ध्वदैहिकमथो व्यथयाभिभूतौ
84688 शोकोत्थया करुणयार्तगिरा विलप्य।
84689 चित्रार्पिताविव निरस्तसमस्तचेष्टौ
84690 तौ संस्थितौ सुखमशून्यहृदौ विवृत्तौ॥ ३१॥
84691
84692 निरस्तसमस्तचेष्टौ चेत्किं मृतौ नेत्याह - अशून्यहृदाविति। तथाच
84693 मूर्च्छितौ विवृतौ विवृत्तौ संपन्नावित्यर्थः॥ ३१॥
84694
84695 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मी० दे०
84696 मोक्षोपायेषूपशमप्रकरणे भासविलासवृत्तान्ते सह्यगिरिवर्णनं
84697 नाम पञ्चषष्टितमः सर्गः॥ ६५॥
84698
84699 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे सह्य
84700 गिरिवर्णनं नाम पञ्चषष्टितमः सर्गः॥ ६५॥
84701
84702
84703 षट्षष्तितमः सर्गः ६६
84704
84705 श्रीवसिष्ठ उवाच।
84706
84707 अतिशोकपराभूतौ तस्थतुर्दृढतापसौ।
84708 तापसंशुष्कसर्वाङ्गौ तावरण्यद्रुमाविव॥ १॥

84709
84710 अप्रबुद्धमतेरत्र दुःखाब्धौ परिवर्तनम् |
84711 भासस्य वचनेनात्र विस्तरेण प्रकाश्यते ॥ १ ॥
84712
84713 अरण्यद्रुमपक्षे तापेनातपसंबन्धिना ग्रीष्मातपेन दावाग्निना च
84714 संशुष्कसर्वाङ्गौ ॥ १ ॥
84715
84716 विरक्तौ विपिने कालं क्षेपयामासतुर्द्विजौ |
84717 वियूथाविव सारङ्गावनास्थामगतौ पराम् ॥ २ ॥
84718
84719 अनास्थां गृहक्षेत्रधनादावनासक्तिम् ॥ २ ॥
84720
84721 जग्मुर्दिनानि मासाश्च वर्षाण्यथ तयोस्तदा |
84722 क्रमाद्द्वावपि संयातौ जरां श्वभ्रद्रुमाविव ॥ ३ ॥
84723
84724 अप्राप्तविमलज्ञानौ चिराज्जर्जरतापसौ |
84725 तावेकदा संघटिताविदमन्योन्यमूचतुः ॥ ४ ॥
84726
84727 संघटितौ कंचित्कालं दैवाद्वियुज्य पुनर्मिलितौ ॥ ४ ॥
84728
84729 विलास उवाच |
84730
84731 जीविताग्र्यद्रुमफल हृदावासामृताम्बुधे |
84732 जगत्यस्मिन्महाबन्धो भास स्वागतमस्तु ते ॥ ५ ॥
84733
84734 जीविताग्र्यं श्रेष्ठं जीवनं तल्लक्षणद्रुमफलभूत हृदि आवासो यस्य
84735 तथाविधामृताम्बुधे इति मैत्र्यतिशयोद्दीपने विशेषणे ॥ ५ ॥
84736
84737 एतावत्यो दिनावल्यो मद्वियोगवता त्वया |
84738 वद क्व क्षपिताः साधो कच्चित्ते सफलं तपः ॥ ६ ॥
84739
84740 कच्चित्ते विज्वराः बुद्धिः कच्चिज्जातस्त्वमात्मवान् |
84741 कच्चित्फलितविद्यस्त्वं कच्चित्कुशलवानसि ॥ ७ ॥
84742
84743 आत्मवान् प्रबोधलब्धात्मा अत-एव फलितविद्यः ॥ ७ ॥
84744
84745 श्रीवसिष्ठ उवाच |
84746
84747 इत्युक्तवन्तं संसारसमुद्विग्नमलं तथा |
84748 प्राहाप्राप्तमहाज्ञानं सुहृत्सुहृदमादरात् ॥ ८ ॥
84749
84750 अलं स्पष्टं प्राह ॥ ८ ॥
84751
84752 भास उवाच |
84753
84754 साधो स्वागततात्रैव दिष्ट्या दृष्टोऽसि मानद |
84755 कुशलं तु कुतोऽस्माकं संसारे तिष्ठतामिह ॥ ९ ॥
84756
84757 यावन्नाधिगतं ज्ञेयं यावत्क्षीणा न चित्तभूः |
84758 यावत्तीर्णो न संसारस्तावन्मे कुशलं कुतः ॥ १० ॥
84759
84760 चित्ते भवतीति चित्तभूः कामसंकल्पादिः ॥ १० ॥

84761
84762 आशा यावदशेषेण न लूनाश्चित्तसंभवाः |
84763 वीरुधो दात्रकेणेव तावन्नः कुशलं कुतः || ११ ||
84764
84765 वीरुधो लतापाशाः | दात्रकेण शङ्कुलादिना || ११ ||
84766
84767 यावन्नाधिगतं ज्ञानं यावन्न समतोदिता |
84768 यावन्नाभ्युदितो बोधस्तावन्नः कुशलं कुतः || १२ ||
84769
84770 ज्ञानं शोधिततत्त्वं पदार्थज्ञानम् बोधोऽखण्डवाक्यार्थ इति भेदः || १२
84771 | |
84772
84773 आत्मलाभं विना साधो विना ज्ञानमहौषधम् |
84774 उदेति पुनरेवेयं दुःसंसृतिविषूचिका || १३ ||
84775
84776 शैशवाङ्कुरितोज्जृम्भान्नवयौवनपल्लवः |
84777 जराकुसुमितोऽभ्येति पुनः संसारदुर्द्रुमः || १४ ||
84778
84779 शैशवलक्षणमङ्कुरितस्योज्जृम्भणमुज्जृम्भस्तमतीत्येति ल्यब्लोपे हेतौ
84780 वा पञ्चमी || १४ ||
84781
84782 कायजीर्णतरोरस्माद्बान्धवाक्रन्दषट्पदा |
84783 जराकुसुमितोदेति [पुष्पसितेति पाठः] पुनर्मरणमञ्जरी || १५ ||
84784
84785 बान्धवानामाक्रन्दा एव षट्पदा लक्षणया तद्गुञ्जारवा यस्याम् | जरया
84786 कुसुमिता संजातकुसुमा || १५ ||
84787
84788 भुक्तकर्मर्तुविरसा पुराणदिवसोम्भिता |
84789 नीयते नीरसप्राया पुनः संवत्सरावली || १६ ||
84790
84791 मरणोत्तरं दैवान्नरकस्थावरतिर्यग्जन्मप्राप्तौ भुक्तानि दुष्कृतकर्माणि
84792 येषु तथाविधैः शीतोष्णवातवर्षादंशमशकादिसंकुलैर्वसन्तादि##-
84793 पुण्यसंचयानधिकारात्पूर्वसंचितपुण्यव्ययाद्धर्षामर्षासूयाकामादिदो
84794 षबहुलत्वाच्च शमदमाद्यसंभवेन ज्ञानस्यापि
84795 दौर्लभ्यात्केवलभोगैकलम्पटतया पुराणैः
84796 प्राग्बहुशोऽनुभूतत्वादभिनवविसयाभावात्पुरातनप्रायैरेव दिवसैः
84797 उम्भिता पूरिता अत-एव नीरसप्राया संवत्सरावली पुनर्वृथैव नीयते
84798 इत्यर्थः || १६ ||
84799
84800 महादरीषु देहाद्रेस्तृष्णाकण्टकितास्वपि |
84801 फलव्यालासु च पुनः क्रियासु परिलुठ्यते || १७ ||
84802
84803 दैवात्पुनर्मानुष्ये तत्रापि दुर्लभतमे ब्राह्मणादिशरीरे प्राप्तेऽपि सांप्रतिके
84804 देह इव भोगलम्पटतयैव भ्रमणं दुर्वारमित्याशयेनाह -
84805 महादरीष्विति | विषयभोगलक्षणानि फलान्येव व्याला यासु |
84806 तत्तृष्णासहस्रैः संजातकण्टकासु
84807 देहलक्षणस्याद्रेर्महाभीषणदरीप्रायच्छिद्रस्थेन्द्रियासक्तिषु
84808 ऐहिकामुष्मिकभोगोपायलौकिकवैदिकक्रियासु च परिलुठ्यते न
84809 तत्राप्यात्मविवेकसंभावनास्तीत्यर्थः || १७ ||
84810
84811 दुःखैः सुखलवाकारैर्दीर्घादीर्घैः शुभाशुभैः |
84812 अपर्याप्तागमापायाः प्रयान्त्यायान्ति रात्रयः || १८ ||

84813
84814 चिराल्पकालभोग्यत्वाभ्यां दीर्घादीर्घैर्दुःखैः अपर्याप्ता असमाप्ता
84815 आगमापाया यासु। रात्रिग्रहणं कालमात्रोपलक्षणम्। प्रयान्ति सर्वजन्मस्विति
84816 शेषः॥ १८॥
84817
84818 अयथार्थक्रियारम्भैः कदाशावेशपल्लवैः।
84819 क्षीयते कर्मभिस्तुच्छैरायुराहतकर्मभिः॥ १९॥
84820
84821 उक्तमेव तत्कारणमुखेनाह - अयथाअर्थेति। अयथार्था मिथ्याभूताः
84822 क्रियाभिरारभ्यन्त इति क्रियारम्भाः फलानि येषां तथाविधैः कर्मभिः
84823 आहतानि मृषाभूतानि कर्माणि येषां तथाविधैर्जन्तुभिरायुः क्षीयते
84824 विनाश्यते॥ १९॥
84825
84826 उन्मूलिताश्रयालानो मनोमत्तमतङ्गजः।
84827 तृष्णाकरेणुकोन्निद्रो दूरं विपरिधावति॥ २०॥
84828
84829 जन्मनि जन्मनि विवेकविरोधि प्राबल्यं तत्सहायदौर्बल्यं च प्रपञ्चयति ##-
84830 तदुन्मूलितं येन। तृष्णापदेन तद्विषयो लक्ष्यते। तल्लक्षणायां
84831 करेणुकायां सकामत्वादुन्निद्रो निर्निद्रः॥ २०॥
84832
84833 जिह्वाचपलतालग्नः कायद्रुममहालये।
84834 पतच्चिन्तामणौ वृद्धो गर्द्धगृध्रो विवर्धते॥ २१॥
84835
84836 व्यर्थ पतन् परमपुरुषार्थोपयोगी आयुर्लक्षणो विवेकलक्षणश्च
84837 चिन्तामणिर्यस्मात्तथाविधे कायलक्षणद्रुमस्थे महति हृदयलक्षणे आलये
84838 नीडे गर्द्धः स्वाद्वन्नाद्यभिलाषः स एव गृध्रः॥ २१॥
84839
84840 नीरसा निःसुखा लघ्वी पतत्पेलवगात्रिका।
84841 जीर्णपर्णसवर्णेयं क्षीयते दिवसावली॥ २२॥
84842
84843 श्रमदौर्बल्यामयादिना पतन्ति पेलवानि कार्याक्षमाणि भवन्ति गात्राणि
84844 यस्याम्। दिवसावलीपदेन तत्परिच्छिन्ना कायलता गृह्यते॥ २२॥
84845
84846 अवमानरजोध्वस्तमस्तंगतवपुःश्रियम्।
84847 मुखं धूसरतामेति हिमैः पद्ममिवाहतम्॥ २३॥
84848
84849 वार्धक्ये पुत्रभृत्यावमानैः रजोभिश्च ध्वस्तम्। अस्तं गता
84850 वपुःश्रीर्यस्य तथाविधम्। क्लीबे अमोऽलुक् छान्दसः॥ २३॥
84851
84852 शुष्यतः कायसरसः प्रगलद्यौवनाम्भसः।
84853 राजहंसः क्षणादायुरनिवर्ति पलायते॥ २४॥
84854
84855 राजहंस इवेति शेषः॥ २४॥
84856
84857 कालानिलबलोद्धूताज्जर्जराज्जीवितद्रुमात्।
84858 भोगपुष्पाणि दिवसपर्णानि निपतन्त्यधः॥ २५॥
84859
84860 भोगलक्षणानि पुष्पाणि दिवसरूपाणि पर्णानि च अधो निपतन्ति। अपयान्तीति यावत्
84861 ॥ २५॥
84862
84863 भोगभोगिश्रितेष्वन्तर्दुःखदर्दुरधारिषु।
84864 मनोमोहान्धकूपेषु पूरेषु विनिमज्जति॥ २६॥

84865
84866 भोगेषु निवृत्तेष्वपि भोगाशा तदशक्तिदुःखं
84867 तत्प्रयुक्तचिन्ताशोकमोहाधिश्च वर्धत एवेत्याशयेनाह - भोगेत्यादिना ॥
84868 २६ ॥
84869
84870 नानानुरञ्जनास्पृष्टा तृष्णा तरलपेलवा ।
84871 चैत्यमग्रपताकेव दूरं समधिरोहति ॥ २७ ॥
84872
84873 चैत्यं देवाद्यायतनम् । अग्रे बद्धा पताकेव दूरमुच्छ्रितं यथा स्यात्तथा ॥
84874 २७ ॥
84875
84876 अस्य संसारतन्त्रस्य बृहत्कालबिलास्पदः ।
84877 जीविताशामयं तन्तुमन्तकाखुर्निकृन्तति ॥ २८ ॥
84878
84879 संसारलक्षणस्य तन्त्रस्य प्रवाण्याः जीविताशाप्रचुरमायुस्तन्तुम् ॥ २८ ॥
84880
84881 यौवनोत्कटकल्लोला वहल्लोलासिफेनिला ।
84882 परावर्तमहावर्ता याति जीवितदुर्नदी ॥ २९ ॥
84883
84884 वहल्लोलासिसदृशक्रोधद्वेषभयादिना फेनिला । परावर्ता लोभतृष्णादिना
84885 भ्रमणान्येव महान्त आवर्ता यस्याः ॥ २९ ॥
84886
84887 कलाकुलजगत्कार्यकल्लोलाकुलसंकुला ।
84888 क्रियासरिदपर्यन्ता वहत्याकुलकोटरा ॥ ३० ॥
84889
84890 शिल्पतर्कनीतिशास्त्रादिभिः कलाकुलैः
84891 कौशलवृन्दैर्जगद्व्यवहारकार्यलक्षणैश्च कल्लोलैराकुला संकुला च क्रिया
84892 प्रवृत्तिस्तल्लक्षणा सरित् प्रतिजन्म एवमेव वहतीत्यर्थः ॥ ३० ॥
84893
84894 अनन्ता बन्धुजनतानद्यो गम्भीरकोटरे ।
84895 अजस्रं निपतन्त्येता वितते कालसागरे ॥ ३१ ॥
84896
84897 देहरत्नशलाकेयं नाशपङ्कार्णवोदरे ।
84898 न ज्ञायते क्व मग्नेति तात जन्मनि जन्मनि ॥ ३२ ॥
84899
84900 देह एव परमपुरुषार्थसाधनत्वाद्रत्नशलाका ॥ ३२ ॥
84901
84902 चिन्ताचक्रे चिरं बद्धं कुक्रियाचारचञ्चुरम् ।
84903 चेतो भ्रमति सामुद्रे गर्तावर्ते तृणं यथा ॥ ३३ ॥
84904
84905 गर्तावर्ते सच्छिद्रावर्ते ॥ ३३ ॥
84906
84907 उह्यमानमनन्तेषु चेतः कार्यमहोर्मिषु ।
84908 क्षणमेति न विश्रान्तिं चिन्ताताण्डविताशयम् ॥ ३४ ॥
84909
84910 इदं कृतं करोमीदं करिष्यामीदमित्यलम् ।
84911 कलनाजालवलिता मूर्च्छिता मतिपक्षिणी ॥ ३५ ॥
84912
84913 कलनाजाले वलिता बद्धा सती मूर्च्छिता मोहितः ॥ ३५ ॥
84914
84915 अयं सुहृदयं शत्रुरिति द्वन्द्वमहाद्विपः ।
84916 विनिकृन्तति मर्माणि यथा नीलोत्पलानि मे ॥ ३६ ॥

नीलोत्पलानि यथा विनिकृन्तति तथा मे मम मर्माण्यपि ॥ ३६ ॥

चिन्तानद्या महावर्ते वीचिकानिचये चिरम् ।
क्षणादुच्छूनतामेति मनोमीनः क्षणाद्गतिः ॥ ३७ ॥

उच्छूनतां विवृद्धिम् । क्षणान् अतन्ति गतयो यस्य स क्षणाद्गतिश्चपल
इत्यर्थः ॥ ३७ ॥

अनात्मीयानि दुःखानि भून्येवंविधान्ययम् ।
आत्मबुद्ध्या विचिन्वानो जनो गच्छति दीनताम् ॥ ३८ ॥

अनात्मीयान्यात्मासंस्पर्शीनि अनात्मदेहादिनिमित्तानि च । देहादावात्मबुद्ध्या ॥
३८ ॥

बहुविधसुखदुःखमध्यपाती
विततजरामरणप्रवातभग्नः ।
जगदुदरगिरौ लुठञ्जनोऽयं
गतरसपर्णवदेति जर्जरत्वम् ॥ ३९ ॥

सर्वजन्मसु दुःखस्थानानामानन्त्यं दर्शयन्नुपसंहरति -
बहुविधेति । जरामरणलक्षणेन प्रवातेन चण्डवायुना भग्नः
पुनःपुनरामर्दितो जगल्लक्षणे उदयगिरौ लुठन्नयं जनो गतरसपर्णवत्
शुष्कपर्णवत् ॥ ३९ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० उपशमप्रकरणे
भासविलासवृत्तान्ते अनित्यताप्रतिपादनं नाम षट्षष्टितमः सर्गः ॥
६६ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
अनित्यताप्रतिपादनं नाम षट्षष्टितमः सर्गः ॥ ६६ ॥

सप्तषष्टितमः सर्गः ६७

श्रीवसिष्ठ उवाच ।

एवं तौ कुशलप्रश्नं कृतवन्तौ परस्परम् ।
कालेनासाद्य विमलं ज्ञानं मोक्षं ततो गतौ ॥ १ ॥

देहात्मनोरसंबन्धं समर्थयितुमीर्यते ।
अन्तःसक्तिकृतो बन्धस्तत्त्यागाच्च निवार्यते ॥ १ ॥

एवमुक्तप्रकारसंसारासारताविचारबहुलं कुशलप्रश्नम् ॥ १ ॥

ततो वच्मि महाबाहो यथा ज्ञानेतरा गतिः ।
नास्ति संसारतरणे पाशबन्धस्य चेतसः ॥ २ ॥

पाशा इव बन्धा बन्धनहेतवो यस्मिंस्तथाविधस्य चेतसः संसरणं
संसारस्तस्य तरणे गतिरुपायः ॥ २ ॥

इदं भव्यमतेर्दुःखमनन्तमपि पेलवम् ।

84969 कुखगस्याऽतरोऽम्भोधिः सपरिर्गोष्पदायते ॥ ३ ॥
84970
84971 इदं वर्णितप्रकारं दुःखं भव्यमतेर्विवेकिनः पेलवं कोमलम् ।
84972 सुखोच्छेद्यमिति यावत् । अतरो दुस्तरः । सपरिर्गरुडस्य ॥ ३ ॥
84973
84974 देहातीता महात्मानश्चिन्मात्रस्वात्मनि स्थिताः ।
84975 दूराद्देहं समीक्षन्ते प्रेक्षको जनतामिव ॥ ४ ॥
84976
84977 देहद्वयाभिमानत्याय एव तदुच्छेदोपाय इत्याशयेनाह - देहातीता
84978 इत्यादिना ॥ ४ ॥
84979
84980 देहे दुःखातिसंक्षुब्धे का नः क्षतिरुपस्थिता ।
84981 रथे विधुरिते भग्ने सारथेः केव खण्डना ॥ ५ ॥
84982
84983 दुःस्थितिः इति पाठे दुःस्थितिः क्षतिरित्यर्थः ॥ ५ ॥
84984
84985 मनसि क्षुब्धतां याते चित्त्वस्याङ्ग किमागतम् ।
84986 तरङ्गजलसंताने वैपरीत्यं किमम्बुधेः ॥ ६ ॥
84987
84988 चित्त्वस्य चित्स्वभावस्यात्मनः । वैपरीत्यं पूर्णतास्वरूपप्रच्युतिः ॥ ६ ॥
84989
84990 केऽभवन्पयसां हंसाः पयसामुपलाश्च के ।
84991 काः शिलाः किल दारूणां के भोगाः परमात्मनः ॥ ७ ॥
84992
84993 अहंतात्यागे कस्यापि क्वापि ममताप्रसक्तिरेव नास्तीत्याशयेनाह -
84994 केऽभवन्नित्यादिना । नह्यचेतनानामसङ्गचितो वा ममताप्रसक्तिरस्तीति भवः ॥
84995 ७ ॥
84996
84997 संबन्धः क इव श्रीमन् शैलापरसमुद्रयोः ।
84998 अन्तरे गिरिसंबाधे कश्च चित्तत्त्वबन्धयोः ॥ ८ ॥
84999
85000 अन्तरे मध्ये । गिरिभिः संबाधे संकुलत्वेऽपि । चित्तत्त्वं परमात्मा बन्धः
85001 संसारस्तयोः कः संबन्धः । नह्याकाशः पाशैर्बध्यत इति भावः ॥ ८ ॥
85002
85003 अप्युत्सङ्गोह्यमानानि पद्मानि सरिदम्भसाम् ।
85004 कानि नाम भवन्तीह शरीराणि तथात्मनः ॥ ९ ॥
85005
85006 उत्सङ्गे अङ्के इव उह्यमानानि धार्यमाणान्यपि पद्मानि ॥ ९ ॥
85007
85008 संघट्टात्काष्ठपयसोर्यथोत्तुङ्गाः कणादयः ।
85009 देहात्मनोः समायोगात्तथैताश्चित्तवृत्तयः ॥ १० ॥
85010
85011 संघट्टादभिघातात् । समायोगादन्योन्यतादात्म्याध्यासात्
85012 सुखदुःखादिचित्तवृत्तयः ॥ १० ॥
85013
85014 संबन्धाद्दारुपयसां प्रतिबिम्बानि दारुणः ।
85015 यथा पयसि लक्ष्यन्ते शरीराणि तथात्मनि ॥ ११ ॥
85016
85017 देहसंबन्धस्याध्यासिकत्वे दृष्टान्तमाह - संबन्धादिति ।
85018 संबन्धात्संनिधिमात्रान्निमित्तात् ॥ ११ ॥
85019
85020 यथा दर्पणवीच्यादौ प्रतिबिम्बानि वस्तुतः ।

85021 नासत्यानि च सत्यानि शरीराणि तथात्मनः ॥ १२ ॥
85022
85023 दारुवार्युपलास्फोटे दुःखिता न यथा क्वचित् ।
85024 संयुक्तेषु वियुक्तेषु न तथा पञ्चसु क्षतिः ॥ १३ ॥
85025
85026 पञ्चसु देहाद्याकारपरिणतेषु भूतेषु कशाचन्दनादिसंयुक्तेषु
85027 स्त्रीपुत्रादिवियुक्तेषु च क्षतिर्दुःखदिप्रसक्तिः ॥ १३ ॥
85028
85029 दारुसंश्लेषितात्तोयात्कम्पशब्दादयो यथा ।
85030 प्रजायन्ते तथैवास्माद्देहाच्चित्परिबोधितात् ॥ १४ ॥
85031
85032 चिता संनिधिमात्रेणाधिष्ठाय परितो बोधितात् ॥ १४ ॥
85033
85034 न शुद्धजडयोरेताः संविदश्चिच्छरीरयोः ।
85035 एता ह्यज्ञानमात्रस्य तस्मिन्नष्टे चिदेव नः ॥ १५ ॥
85036
85037 भासमानाः सुखदुःखादिसंविदः कस्य तर्हीति चेन्न कस्यापीत्याह - नेति ॥
85038 १५ ॥
85039
85040 यथा न कस्यचिद्वारिदारुश्लेषेऽनुभूतयः ।
85041 तथा न कस्यचिद्देहदेहिसङ्गेऽनुभूतयः ॥ १६ ॥
85042
85043 अनुभूतयः सुखदुःखानुभवाः । देहदेहिनोर्देहतदभिमानिनोः सङ्गे ॥ १६
85044 । ।
85045
85046 अज्ञस्यायं यथा दृष्टः संसारः सत्यतां गतः ।
85047 न ज्ञस्यायं यथाभूतः संसारः सत्यतां गतः ॥ १७ ॥
85048
85049 तर्हि ज्ञाज्ञयोरविशेषः किं न स्यात्तत्राह - अज्ञस्येति ॥ १७ ॥
85050
85051 अन्तःसङ्गविहीनास्तु यथा स्नेहा दृषज्जले ।
85052 तथासक्तमनोवृत्तौ बाह्यभोगानुभूतयः ॥ १८ ॥
85053
85054 कीदृश्यस्तर्हि ज्ञस्य प्रारब्धभोगानुभूतयस्तत्राह - अन्तरिति ।
85055 अन्तःसङ्गोऽभिमानोऽन्तरनुप्रवेशश्च । स्नेहाः संबन्धाः । दृषदां
85056 जलानां च समाहारे ॥ १८ ॥
85057
85058 अन्तःसङ्गेन रहितो यद्वत्सलिलकाष्ठयोः ।
85059 संबन्धस्तद्वदेवान्तरसङ्गो देहदेहिनोः ॥ १९ ॥
85060
85061 असङ्गः परमार्थसङ्गशून्यः ॥ १९ ॥
85062
85063 अन्तःसङ्गेन रहितः संबन्धो जलकाष्ठयोः ।
85064 स देहदेहिनोश्चैवं प्रतिबिम्बाम्भसोस्तथा ॥ २० ॥
85065
85066 जलकाष्ठयोर्यद्वदिति शेषः । स संबन्धः । चकारोऽप्यर्थः । पूर्वं
85067 सलिलकाष्ठोपन्यासः संसर्गाभावे दृष्टान्तार्थ इह तादात्म्याभावे
85068 इत्यपौनरुक्त्यम् ॥ २० ॥
85069
85070 स्थिता सर्वत्र संवित्तिः शुद्धा संवेद्यवर्जिता ।
85071 द्वित्वोपलाञ्छिता त्वन्या दुःसंवित्तिर्न विद्यते ॥ २१ ॥
85072

85073 ननु सुखदुःखादिसंवित्तिनिषेधे संवित्त्यन्तराप्रसिद्धेः शून्यता
85074 स्यादित्याशङ्क्याह - स्थितेति | न विद्यते तद्विषयानिरूपणादित्यर्थः || २१ ||
85075
85076 अदुःखमेति दुःखित्वमन्तःसंवेदना स्फुटम् |
85077 स्फारो भवति वेतालो वेतालत्वेन भावितः || २२ ||
85078
85079 असतोऽप्यज्ञानाद्भ्रान्त्या अस्तीति भानं प्रसिद्धमित्याह - अदुःखमिति || २२ ||
85080
85081 असंबन्धोऽपि संबन्धो भवत्यन्तर्विनिश्चयात् |
85082 स्वप्नाङ्गनासुरतवत्स्थाणुवेतालसङ्गवत् || २३ ||
85083
85084 संबन्ध आध्यासिकयोगः | आद्यः संसर्गाध्यासे द्वितीयस्तादात्म्याध्यासे
85085 दृष्टान्तः || २३ ||
85086
85087 असत्प्रायो हि संबन्धो यथा सलिलकाष्ठयोः |
85088 तथैव मिथ्यासंबन्धः शरीरपरमात्मनोः || २४ ||
85089
85090 अन्तःसङ्गं विना नाम्बु काष्ठपातैः प्रगृह्यते |
85091 आत्माऽङ्गसङ्गरहितो देहदुःखैर्न दह्यते || २५ ||
85092
85093 अन्तःसङ्गं विना अहंताध्यासाभावात् | न प्रगृह्यते न पीड्यते
85094 यथेत्यर्थः | अङ्गसङ्गरहितो देहाध्यासशून्यः || २५ ||
85095
85096 देहभावनयैवात्मा देहदुःखवशे स्थितः |
85097 तत्यागेन ततो मुक्तो भवतीति विदुर्बुधाः || २६ ||
85098
85099 अन्तःसङ्गविहीनत्वाद्दुःखवन्त्यङ्ग नो यथा |
85100 पत्राम्बुमलदारूणि श्लिष्टान्यपि परस्परम् || २७ ||
85101
85102 दार्वन्तान्यर्थात्पल्वलपतितानि || २७ ||
85103
85104 अन्तःसङ्गेन रहिता यान्ति निर्दुःखतां पराम् |
85105 श्लिष्टान्यपि तथैवात्मदेहेन्द्रियमनांस्यलम् || २८ ||
85106
85107 रहिता रहितानि | शसश्छान्दसो डादेश। ता ता पिण्डानां प्रजुहोमीतिवत् || २८ ||
85108
85109 अन्तःसङ्गो हि संसारे [संसारः इत्यपि पाठः] सर्वेषां राम
85110 देहिनाम् |
85111 जरामरणमोहानां तरूणां बीजकारणम् || २९ ||
85112
85113 अन्तःसंसङ्गवाञ्जन्तुर्मग्नः संसारसागरे |
85114 अन्तःसंसक्तिमुक्तस्तु तीर्णः संसारसागरात् || ३० ||
85115
85116 अन्तःसंसङ्गवच्चित्तं शतशाखमिवोच्यते |
85117 अन्तःसंसङ्गरहितं विलीनं चित्तमुच्यते || ३१ ||
85118
85119 शतशाखमनन्तशाखम् | कामवृत्तीनामानन्त्यात् || ३१ ||
85120
85121 भग्नस्फटिकवद्विद्धि मनः सक्तमपावनम् |
85122 अभग्नस्फटिकाभासमसक्तं विद्धि मे मनः || ३२ ||
85123
85124 यथा भग्नमन्तर्विदीर्णं स्फटिकलिङ्गादि अपावनं पूजाद्ययोग्यं तद्वत् ||

३२ ॥

असक्तं निर्मलं चित्तं मुक्तं संसार्यपि स्फुटम् ।
सक्तं तु दीर्घतपसा युक्तमप्यतिबन्धवत् ॥ ३३ ॥

अन्तःसक्तं मनो बद्धं मुक्तं सक्तिविवर्जितम् ।
अन्तःसंसक्तिरेवैकं कारणं बन्धमोक्षयोः ॥ ३४ ॥

अन्तःसंसक्तिमुक्तस्य कुर्वतोऽपि न कर्तृता ।
गुणदोषवती तोये दारुवाहननौर्यथा ॥ ३५ ॥

दारूणि काष्ठभारा वाह्यन्ते उत्तार्यन्ते यया तथाविधा नौर्यथा स्वयं
दारुभूतापि
दारुगतैश्छेदभेददाहादिगुणदोषैर्जलगतैश्चलनपरिवर्तननैर्मल्यपङ्क
इलत्वादिगुणदोषैश्च न तद्वती तथेत्यर्थः ॥ ३५ ॥

अन्तःसंसक्तितो जन्तोरकर्तुरपि कर्तृता ।
सुखदुःखवति स्वप्ने संभ्रमोन्मुखता यथा ॥ ३६ ॥

संभ्रमोन्मुखता व्याघ्रादिभयपलायनादिव्याकुलता ॥ ३६ ॥

चित्ते कर्तरि कर्तृत्वमदेहस्यापि [कर्तृत्वं देहस्यापि हि इति
पाठश्चिन्त्यः] विद्यते ।
स्वप्नादाविव विक्षुब्धसुखदुःखदृशोपमम् ॥ ३७ ॥

अदेहस्य देहचेष्टाशून्यस्यापि स्वपुत्रमृत्ययुद्धादि पश्यतो जाग्रतोऽपि
स्वप्नादाविव कर्तृत्वं विद्यते । यतो विक्षुब्धसुखदुःखदर्शनेन
मुख्यकर्त्रुपममेव तदपीत्यर्थः ॥ ३७ ॥

अकर्तरि मनस्यन्तरकर्तृत्वं स्फुटं भवेत् ।
शून्यचित्तो हि पुरुषः कुर्वन्नपि न चेतति ॥ ३८ ॥

न चेतति नाभिमन्यते । नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित् इति
भगवद्वचनात् ॥ ३८ ॥

चेतसा कृतमाप्नोषि चेतसा न कृतं तु न ।
न क्वचित्कारणं देहो न च चित्तेन कर्तृता ॥ ३९ ॥

न चेति । हेतौ चकारः । नहि चित्ते कर्तृताशक्तिर्नास्ति येन देहः कर्ता
कल्प्येतेत्यर्थः ॥ ३९ ॥

असंसक्तमकर्तेव कुर्वदेव मनो विदुः ।
न कर्मफलभोक्तृत्वमसक्तं प्रतिपद्यते ॥ ४० ॥

अप्यर्थे द्वितीय एवकारः ॥ ४० ॥

ब्रह्महत्याश्वमेधाभ्यामसंसक्तो न लिप्यते ।
दूरस्थकान्तासंलीनमनाः कार्यैरिवाग्रगैः ॥ ४१ ॥

अग्रगैः पुरोगतैः शीतोष्णानुभवादिकार्यैः । तच्चोर्वश्यासक्तस्य पुरूरवसः
प्रसिद्धमिन्द्राहल्याख्याने च प्राक्प्रपञ्चितमिति भावः ॥ ४१ ॥

85177 अन्तःसंसक्तिनिर्मुक्तो जीवो मधुरवृत्तिमान् ।
85178 बहिःकुर्वन्नकुर्वन्वा कर्ता भोक्ता न हि क्वचित् ॥ ४२ ॥
85179
85180 मधुरवृत्तिर्निर्विक्षेपसौख्यं तद्वान् ॥ ४२ ॥
85181
85182 अन्तःसंसक्तिमुक्तं यन्मनः स्यात्तदकर्तृकम् ।
85183 तद्विमुक्तं प्रशान्तं तत्तद्युक्तं तदलेपकम् ॥ ४३ ॥
85184
85185 संसक्तित्यागमात्रेण सर्वे जीवन्मुक्तगुणा मनसि सिद्ध्यन्तीत्याशयेनाह -
85186 अन्तरिति ॥ ४३ ॥
85187
85188 तस्मात्सर्वपदार्थानां श्लिष्टानां निश्चितं बहिः ।
85189 सर्वदुःखकरीं क्रूरामन्तःसक्तिं विवर्जयेत् ॥ ४४ ॥
85190
85191 उपसंहरति - तस्मादिति । सर्वान्तरस्यात्मनो बहिर्बहिःश्लिष्टानां
85192 पञ्चकोशलक्षणानां भोग्यवर्गलक्षणानां च बन्धभूतानां
85193 सर्वपदार्थानां निरासे इदमेवैकं मुख्योपायतया निश्चितं
85194 यत्सर्वदुःखकरीमन्तःसक्तिं विवर्जयेत् । विवर्जनमित्यर्थः ॥ ४४ ॥
85195
85196 विरहितमलमन्तःसङ्गदोषेण चेतः
85197 शममुपगतमाद्यं व्योमवन्निर्मलाभम् ।
85198 सकलमलविमुक्तेनात्मनैकत्वमेति
85199 स्थिरमणिनिभमम्भोवारिणी वारिनीले ॥ ४५ ॥
85200
85201 अन्तःसङ्गः संसक्तिस्तद्दोषेणालमत्यन्तं विरहितमत##-
85202 प्रत्यक्तत्त्वमुपगतं चेत्परात्मना एकत्वमैकरस्यमेति । यथा स्थिरमणिः
85203 स्फटिकस्तन्निभमम्भः अरा निशितधारा येषां सन्ति ते अरिणः खड्गादय
85204 नीले यमुनादिवारिणि मिलितमेकत्वमेति तद्वदित्यर्थः ॥ ४५ ॥
85205
85206 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे०
85207 मोक्षोपायेषूपशमप्रकरणे अन्तःसंसङ्गविचारो नाम
85208 सप्तषष्टितमः सर्गः ॥ ६७ ॥
85209
85210 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
85211 अन्तःसंसङ्गविचारो नाम सप्तषष्टितमः सर्गः ॥ ६७ ॥
85212
85213 अष्टषष्टितमः सर्गः ६८
85214
85215 श्रीराम उवाच ।
85216
85217 कीदृशो भगवन्सङ्गः कथं बन्धाय वा नृणाम् ।
85218 कश्च मोक्षाय कथितः कथं वैष चिकित्स्यते ॥ १ ॥
85219
85220 लक्ष्मसंसक्त्यसंकक्त्योश्चिकित्सोपायसंयुतैः ।
85221 वन्ध्यावन्ध्याविभागश्च फलं चात्रोपवर्ण्यते ॥ १ ॥
85222
85223 कथं केन प्रकारेण किंप्रकारश्च बन्धाय कश्च कीदृशश्च मोक्षाय
85224 कथं केनोपायेन चिकित्स्यते ॥ १ ॥
85225
85226 श्रीवसिष्ठ उवाच ।
85227
85228 देहदेहिविभागैकपरित्यागेन भावनात् ।

85229 देहमात्रे तु विश्वासः सङ्गो बन्धार्ह उच्यते ॥ २ ॥
85230
85231 देहस्य क्षेत्रस्य देहिनः क्षेत्रज्ञस्य च यो जाड्यचित्स्वभावतालक्षणो विभागो
85232 विरुद्धस्वभावता तस्य
85233 एकपरित्यागेनात्यन्तापर्यालोचनेनान्योन्यतादात्म्यधर्मविनिमयभावनाद्देह
85234 मात्रे आत्मताविश्वासो यः स एव बन्धार्हो बन्धहेतुः सङ्ग इत्यर्थः ॥ २ ॥
85235
85236 अनन्तस्यात्मतत्त्वस्य सपर्यन्तत्वनिश्चये ।
85237 यत्सुखार्थित्वमन्त्ऽह् स सङ्गो बन्धार्ह उच्यते ॥ ३ ॥
85238
85239 लक्षणान्तराण्याह - अनन्तस्येत्यादिना । सपर्यन्तत्वं
85240 त्रिविधपरिच्छेदसहितत्वं तन्निश्चये सति
85241 स्वापरिच्छिन्नसुखस्वभावविस्मरणाद्यद्विषयेभ्यः सुखार्थित्वमित्यर्थः ॥
85242 ३ ॥
85243
85244 सर्वमात्मेदमखिलं किं वाञ्छामि त्यजामि किम् ।
85245 इत्यसङ्गस्थितिं विद्धि जीवन्मुक्ततनुस्थितिम् ॥ ४ ॥
85246
85247 तद्विरोधिनीमसङ्गस्थितिं लक्षयति - सर्वमिति ॥ ४ ॥
85248
85249 नाहमस्मि न चान्योऽस्ति मा भवन्तु भवन्तु वा ।
85250 सुखान्यसक्त इत्यन्तः कथ्यते मुक्तिभाङ्नरः ॥ ५ ॥
85251
85252 अहं अहंकारपरिच्छिन्नो नास्मि । मदन्यश्च नास्ति । अतो मिथ्याभूते देहादौ
85253 विषयसुखानि मा भवन्तु भवन्तु वा । अहं तु देहाद्यसङ्गस्वभाव इत्येवं
85254 दृढनिश्चयादसक्तः ॥ ५ ॥
85255
85256 नाभिनन्दति नैष्कर्म्यं नकर्मस्वनुषज्जते ।
85257 सुसमो यः फलत्यागी सोऽसंसक्त इति स्मृतः ॥ ६ ॥
85258
85259 नैष्कर्म्य सर्वकर्मत्यागम् । फलमनुलक्ष्य सज्जते अभिनिविशते । सुसमः
85260 सिद्ध्यसिद्ध्योरिति शेषः ॥ ६ ॥
85261
85262 आत्मतत्त्वैकनिष्ठस्य हर्षामर्षवशं मनः ।
85263 यस्य नायत्यसक्तोऽसौ जीवन्मुक्तः स कथ्यते ॥ ७ ॥
85264
85265 सर्वकर्मफलादीनां मनसैव न कर्मणा ।
85266 निपुणं यः परित्यागी सोऽसंसक्त इति स्मृतः ॥ ८ ॥
85267
85268 लोकसंग्रहस्यावश्यकत्वद्योतनाय न कर्मणेति ॥ ८ ॥
85269
85270 असंसङ्गेन सकलाश्चेष्टा नाना विजृम्भिताः ।
85271 चिकित्सिता भवन्तीह श्रेयः संपादयन्ति च ॥ ९ ॥
85272
85273 त्रीन्प्रश्नान्समाधाय चतुर्थप्रश्नं समाधत्ते - असंसङ्गेनेति । चेष्टा
85274 दुश्चेष्टाः नानाविधैः फलरागैर्विजृम्भिताः । श्रवणादिचेष्टाश्च
85275 निर्विघ्नतया श्रेयः संपादयन्ति ॥ ९ ॥
85276
85277 संसक्तिवशतः सर्वे वितता दुःखराशयः ।
85278 प्रयान्ति शतशाखत्वं श्वभ्रकण्टकवृक्षवत् ॥ १० ॥
85279
85280 इदानीं संसक्तिफलानि प्रपञ्चयति - संसक्तिवशत इत्यादिना ॥ १० ॥

85281
85282 रज्जुकृष्टघनघ्राणो यद्वत्या पथि गर्दभः।
85283 भारं वहति भीतात्मा तत्संसक्तिविजृम्भितम् ॥ ११ ॥
85284
85285 गर्दभानामपि नासारज्जुर्देशभेदे प्रसिद्धा।
85286 ग्राम्यपशुजन्ममात्रोपलक्षणमेतत्। एवमग्रेऽपि। संसक्तेर्विजृम्भितं
85287 फलविस्तारः ॥ ११ ॥
85288
85289 शीतवातातपक्लेशमेकदेशनिषण्णया।
85290 तरुर्वहति यत्तन्वा तत्संसक्तिविजृम्भितम् ॥ १२ ॥
85291
85292 एकदेशे निषण्णया तन्वा स्थावरदेहेन वहति। अनुभवतीति यावत् ॥ १२ ॥
85293
85294 धराविवरनिर्मग्नो यत्कीटः पीडिताङ्गकः।
85295 क्षिणोति विकलः कालं तत्संसक्तिविजृम्भितम् ॥ १३ ॥
85296
85297 क्षुत्क्षामकुक्षिः क्षपयत्यायुर्व्याघातभीरुधिः।
85298 पक्षी वृक्षशिखाशायी तत्संसक्तिविजृम्भितम् ॥ १४ ॥
85299
85300 व्याघातः शरपाषाणमृद्गुटिकाद्यभिघातस्तस्मात्प्रतिक्षणं
85301 भीरुर्भयवती धीर्यस्य ॥ १४ ॥
85302
85303 दूर्वाङ्कुरतृणाहारः किरातशरपीडया।
85304 जहाति यन्मृगो देहं तत्संसक्तिविजृम्भितम् ॥ १५ ॥
85305
85306 कृमिकीटत्वमायान्ति जायमानाः पुनः पुनः।
85307 यदिमा जनता जीर्णास्तत्संसक्तिविजृम्भितम् ॥ १६ ॥
85308
85309 जनताः पुण्यपापाधिकारिजनसमूहाः ॥ १६ ॥
85310
85311 उत्पत्योत्पत्य लीयन्ते तरङ्गिणि तरङ्गवत्।
85312 भूतानि यदनन्तानि तत्संसक्तिविजृम्भितम् ॥ १७ ॥
85313
85314 तरङ्गिणि तरङ्गवति जलाशये तरङ्गवत् ॥ १७ ॥
85315
85316 वीरुत्तृणदशां याता म्रियन्ते यत्पुनःपुनः।
85317 नरा विगतसंचारास्तत्संसक्तिविजृम्भितम् ॥ १८ ॥
85318
85319 वीरुत् लता ॥ १८ ॥
85320
85321 रसातलरसायोगात्तृणगुल्मलतादयः।
85322 जनयन्ति यदाकारं तत्संसक्तिविजृम्भितम् ॥ १९ ॥
85323
85324 रसाया भूमेस्तले निपतितस्य रसस्य जलस्य आयोगादुपयोगान्मूलैः पानात्।
85325 जनयन्तीति यत्तदिति संबन्धः ॥ १९ ॥
85326
85327 स्वानर्थान्तरसंकाशपदार्थशतसंकुला।
85328 यत्संसारनदी मत्ता तत्संसक्तिविजृम्भितम् ॥ २० ॥
85329
85330 स्वस्याः
85331 अनर्थान्तराण्यनर्थादनर्थान्तराण्यनर्थपरंपरास्तत्संकाशैर्विच्छेदभ्
85332 रान्तिनिपातादिविक्षेपसहस्रहेतुभिर्बाह्याभ्यन्तरपदार्थशतैः संकुला।

85333 मत्ता प्रवृद्धा ॥ २० ॥
85334
85335 संसक्तिर्द्विविधा प्रोक्ता वन्द्या वन्ध्या च राघव ।
85336 वन्ध्या सर्वत्र मूढानां वन्द्या तत्त्वविदां निजा ॥ २१ ॥
85337
85338 वन्द्या प्रशस्या । वन्ध्या पुरुषार्थफलशून्या ॥ २१ ॥
85339
85340 आत्मतत्त्वावबोधेन हीना देहादिवस्तुजा ।
85341 भूयः संसारसक्तिर्या दृढा वन्ध्येति कथ्यते ॥ २२ ॥
85342
85343 या दृढा संसारे सक्तिः सा वन्ध्या ॥ २२ ॥
85344
85345 आत्मतत्त्वावबोधेन सत्यभूतविवेकजा ।
85346 वन्द्या हि कथ्यते सक्तिर्भूयः संसारवर्जिता ॥ २३ ॥
85347
85348 शङ्खचक्रगदाहस्तो देवो विविधयेहया ।
85349 वन्द्यसंसक्तिवशतः परिपाति जगत्त्रयम् ॥ २४ ॥
85350
85351 वन्द्यसंसक्तेर्जीवन्मुक्तव्यवहारादिसर्वोत्कर्स्ऽनिर्वाहकत्वं प्रपञ्चयति ##-
85352
85353 अनारतनिरालम्बं व्योम वर्त्मनि पान्थताम् ।
85354 वन्द्यसंसक्तिवशतः करोति रविरन्वहम् ॥ २५ ॥
85355
85356 अनारतं संततम् । रविः पान्थतां करोति । संचरतीति यावत् ॥ २५ ॥
85357
85358 महाकल्पसमाधानचिरकल्पितकल्पनम् ।
85359 वन्द्यसंसक्तिवशतो ब्राह्मं स्फुरति वै वपुः ॥ २६ ॥
85360
85361 महाकल्पः प्राकृतप्रलयस्तत्र समाधानं विदेहकैवल्यविश्रान्तिस्तदर्थं
85362 चिरं द्विपरार्धकालं कल्पिताः सर्गादिकल्पना येन । ब्राह्मं हैरण्यगर्भं
85363 वपुः स्फुरति व्यवहरति ॥ २६ ॥
85364
85365 लीलया ललनालानलीनं भूतिविभूषितम् ।
85366 वन्द्यसंसक्तिवशतः शरीरं शाङ्करं स्थितम् ॥ २७ ॥
85367
85368 ललना गौरी तल्लक्षणे आलाने बन्धनस्तम्भे लीलयैव लीनं सक्तम् ॥ २७ ॥
85369
85370 विज्ञानगतयः सिद्धा लोकपालास्तथेतरे ।
85371 वन्द्यसंसक्तिवशतस्तिष्ठन्ति जगतोऽङ्गणे ॥ २८ ॥
85372
85373 विज्ञाने ब्रह्मतत्त्वबोधे गतिर्दृढप्रतिष्ठा येषाम् ॥ २८ ॥
85374
85375 धत्ते शारिरयन्त्रौघमन्या भुवनसंततिः ।
85376 वन्द्यसंसक्तिवशतो जरामृतिविवर्जितम् ॥ २९ ॥
85377
85378 लोकत्रयादन्या । भुवनसंततिपदेन महर्जनस्तपःसत्यादिलोकस्थास्तत्त्वविदो
85379 लक्षणयोच्यन्ते ॥ २९ ॥
85380
85381 मनः पतति भोगेषु गृध्रो मांसलवेष्विव ।
85382 वन्द्यसंसक्तिवशतो व्यर्थया रम्यशङ्कया ॥ ३० ॥
85383
85384 वन्ध्यसंसक्तेर्वन्ध्यात्वमुपपादयति - मन इति ॥ ३० ॥

85385
85386 संसक्तिवशतो वाति वायुर्भुवनकोटरे।
85387 पञ्चभूतानि तिष्ठन्ति वहतीयं जगत्स्थितिः॥ ३१॥
85388
85389 मुक्तामुक्तसाधारणं व्यवहारमात्रं संसक्तिनिर्वाह्यमिति प्रपञ्चयन्
85390 दर्शयति - संसक्तिवशत इत्यादिना॥ ३१॥
85391
85392 दिवि देवा भुवि नराः पाताले भोगिनोऽसुराः।
85393 ब्रह्माण्डोदुम्बरफले स्फुरन्मशकवत्स्थिताः॥ ३२॥
85394
85395 जायन्ते च म्रियन्ते च निपतन्त्यत्पतन्ति च।
85396 भूतानि यदनन्तानि तरङ्गिणि तरङ्गवत्॥ ३३॥
85397
85398 उत्पत्त्योत्पत्त्य लीयन्ते तत्संसक्तिविजृम्भितम्।
85399 भूतानि विरसं भूयो निर्झराम्बुकणा इव॥ ३४॥
85400
85401 विरसं यथा स्यात्तथा उत्पत्त्योत्पत्त्य॥ ३४॥
85402
85403 परस्परनिगीर्णाङ्गा जनता जाड्यजर्जरा।
85404 संभ्रान्ता प्रभ्रमत्यङ्ग शीर्णपर्णमिवाम्बरे॥ ३५॥
85405
85406 मात्स्यन्यायेन परस्परनिगीर्णाङ्गा॥ ३५॥
85407
85408 नक्षत्रचक्रं गगने द्रुमे मशकसंततिः।
85409 स्फुरत्यावर्तवृत्त्यैव पातालेऽङ्ग जलौघवत्॥ ३६॥
85410
85411 मशकसंततिरिवेति शेषः। अङ्गेत्यामन्त्रणे॥ ३६॥
85412
85413 पातोत्पातदशाजीर्णं कालबालककन्दुकम्।
85414 अद्यापि न जहातीन्दुर्जलमामलिनं वपुः॥ ३७॥
85415
85416 पातोत्पातौ उदयास्तमयौ वृद्धिक्षयौ पतनोत्पतने च सदैव तद्दशया
85417 जीर्णं शिथिलं अत-एव कालरूपबालकस्य कन्दुकभूतं जलं जलमयं
85418 लडयोरभेदाज्जडं च आमलिनं कलङ्कम्लानं चेति बहुदोषत्वाद्धातुं
85419 योग्यमपि वपुः संसक्तिवशादेवाद्यापि न जहाति॥ ३७॥
85420
85421 नानापारयुगावर्तदुःखालोकनकर्कशम्।
85422 न लुनाति मनःखण्डं दुःखिगीर्वाणमण्डलम्॥ ३८॥
85423
85424 नानाविधानामपाराणां युगावर्तदुःखानामालोकनेन
85425 पुनःपुनरनुभवेन कर्कशं कठोरं मनोलक्षणं खण्डकं
85426 छेदनचिकित्स्यं व्रणविशेषं तद्दुःखेन सदा दुःख्यपि
85427 गीर्वाणमण्डलमिन्द्रादिदेवसमूहः संसक्तिवशादेव न लुनाति च्छेदनेन न
85428 चिकित्सते॥ ३८॥
85429
85430 वासनामात्रवशतः परे व्योमनि केनचित्।
85431 इदमारचितं चित्रं विचित्रं पश्य राघव॥ ३९॥
85432
85433 संसक्तिश्च विवेकमात्रजन्यबोधेनोच्छेत्तुं शक्येति दर्शयितुं तद्विषयस्य
85434 जगतो वासनामात्रकल्पितत्वमाह - वासनेति॥ ३९॥
85435
85436 मनःसङ्गैकरङ्गेण शून्ये व्योम्नि जगन्मयम्।

85437 यदिदं रचितं चित्रं तत्सत्यं न कदाचन ॥ ४० ॥
85438
85439 मनसः सङ्गः संसक्तिस्तल्लक्षणेनैकेनैव रङ्गेण रञ्जकद्रव्येण ॥ ४० ॥
85440
85441 संसक्तमनसामस्मिन्संसारे व्यवहारिणाम् ।
85442 अत्ति तृष्णा शरीराणि तृणान्यग्निशिखा यथा ॥ ४१ ॥
85443
85444 तृष्णा शरीराण्यत्ति भक्षयति ॥ ४१ ॥
85445
85446 परिसक्तमतेर्देहान्सिकताः पत्युरम्भसाम् ।
85447 कः शक्तः परिसंख्यातुं त्रसरेणुगणं यथा ॥ ४२ ॥
85448
85449 संसक्तिदोषात्प्राप्तानां तृष्णया भक्षितानां देहानामानन्त्यमाह -
85450 परिसक्तेति । परितो विषयेषु सक्तमतेर्जीवस्य । अम्भसां पत्युः समुद्रस्य सिकताः
85451 परिसंख्यातुं गणयितुम् ॥ ४२ ॥
85452
85453 मुक्तालताया गङ्गाया मेरोरापादमस्तकम् ।
85454 तरङ्गमुक्ता गण्यन्ते न देहाः सक्तचेतसाम् ॥ ४३ ॥
85455
85456 मेरोरापादमस्तकं लम्बिन्या अत-एव मुक्तालतात्वेनोत्प्रेक्ष्याया
85457 गङ्गायास्तरङ्गलक्षणा मुक्ता गण्यन्ते कदाचिद्गणयितुं शक्यन्ते
85458 सक्तचेतसां देहास्तु नेत्यर्थः ॥ ४३ ॥
85459
85460 संसक्तमनसामेता रम्यान्तःपुरपङ्क्तयः ।
85461 रचिता रौरवा वीचिकालसूत्रादिनामिकाः ॥ ४४ ॥
85462
85463 अग्निशस्त्रादिप्रदीप्तत्वाद्रम्याः यातनाख्यनायिकाः
85464 संभोगस्थानत्वादन्तःपुरपङ्क्तयो रचिताः कर्मशिल्पिनेत्यर्थः ॥ ४४ ॥
85465
85466 सक्तचित्तं जनं दुःखशुष्कमिन्धनसंचयम् ।
85467 ज्वलतां नरकाग्नीनां विद्धि तेन ज्वलन्ति ते ॥ ४५ ॥
85468
85469 दुःखजालमिदं नाम यत्किंचिज्जगतीगतम् ।
85470 संसक्तमनसामर्थे तत्सर्वं परिकल्पितम् ॥ ४६ ॥
85471
85472 संसक्तचित्तमायान्ति सर्वा दुःखपरम्पराः ।
85473 जलकल्लोलवलिता महानद्य इवाम्बुधिम् ॥ ४७ ॥
85474
85475 संसक्तचित्तं प्रति आयान्ति ॥ ४७ ॥
85476
85477 मनःसंसर्गरूपिण्या भारभूतशरीरया ।
85478 क्षयोदयदशार्थिन्या सर्वं ततमविद्यया ॥ ४८ ॥
85479
85480 संसर्गः संसक्तिस्तद्विषयः अत-एव स्वयं शिरसि गृहीतः शिलादिभार
85481 इव अवश्यवोढव्यत्वेन भारभूतं शरीरं यया । क्षयो मरणं उदयो
85482 जन्म तदुभयदुर्दशां जीवस्य प्रार्थयन्त्येव स्थितया अविद्यया सर्वं
85483 दुःखजालं ततमित्यर्थः ॥ ४८ ॥
85484
85485 असंसङ्गेन भोगानां सर्वा राम विभूतयः ।
85486 परं विस्तारमायान्ति प्रावृषीव महापगाः ॥ ४९ ॥
85487
85488 संसक्तित्यागस्तु सर्वसुखावह इत्याह - असंसङ्गेनेत्यादिना ॥ ४९ ॥

85489
85490 अन्तःसंसङ्गमङ्गानामङ्गारं विद्धि राघव।
85491 अनन्तःसङ्गमङ्गानां विद्धि राम रसायनम्॥ ५०॥
85492
85493 अनन्तःसङ्गमन्तःसङ्गपरित्यागम्॥ ५०॥
85494
85495 संसङ्गेनान्तरस्थेन दह्यते प्रकृतिः स्वयम्।
85496 स्वकलोत्थे नैरकाङ्की पावकेन यथौषधिः॥ ५१॥
85497
85498 एरा एरकास्तृणविशेषास्तानवलम्बनाय काङ्क्षते इति एरकाङ्की। कर्मण्यण्।
85499 ओषधिर्लता यथा स्वं कलयन्ति मिश्रयन्ति यानि तृणानि तदुत्थेन पावकेन
85500 दह्यते तथा प्रकृतिकार्यदेहादिसंसङ्गात्प्रकृतिभूतः स्वयं जीवोऽपि
85501 दह्यत इत्यर्थः॥ ५१॥
85502
85503 सर्वत्रासक्तमाशान्तमनन्तमिव संस्थितम्।
85504 असत्कल्पं सदाभासं सुखायैव मनो भवेत्॥ ५२।
85505
85506 असक्तं मनः सर्वत्र सुखायैव। अनन्तमाकाशमिव संस्थितम्॥ ५२॥
85507
85508 विद्यादृशि प्रोदयमागतेन
85509 क्षयं त्वविद्याविषये गतेन।
85510 सर्वत्र संसक्तिविवर्जितेन
85511 स्वचेतसा तिष्ठति यः स मुक्तः॥ ५३॥
85512
85513 असत्कल्पतां सदाभासतां च विषयविभागेन विवृण्वन्नुपसंरति -
85514 विद्यादृशीति। प्रकृष्टमुदयं सूर्यादिवदविर्भावम्॥ ५३॥
85515
85516 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे०
85517 मोक्षोपायेषूपशमप्रकरणे सङ्गविचारयोगोपदेशो
85518 नामाष्टषष्टितमः सर्गः॥ ६८॥
85519
85520 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
85521 सङ्गविचारयोगोपदेशो नामाष्टषष्टितमः सर्गः॥ ६८॥
85522
85523
85524 एकोनसप्ततितमः सर्गः ६९
85525
85526 श्रीवसिष्ठ उवाच।
85527
85528 सर्वदा सर्वसंस्थेन सर्वेण सह तिष्ठता।
85529 सर्वकर्मरतेनापि मनः कार्यं विजानता॥ १॥
85530
85531 मनः सर्वार्थसंसक्तित्यागाच्चिन्मात्रसुस्थिरम्।
85532 चिन्मात्रशेषं येन स्यात्स क्रमोऽत्र निगद्यते॥ १॥
85533
85534 विजानता विवेकिना सर्वदा तत्तत्कालोचितसर्वव्यवहारसंस्थेन
85535 तत्तद्व्यवहारोचितेष्टमित्रभृत्यपुत्रदारादिना सर्वेण सह तिष्ठता
85536 अनिषिद्धलौकिकशास्त्रीयसर्वकर्मरतेनापि मनो वक्ष्यमाणलक्षणं
85537 कार्यमित्यर्थः। अथवा एकैककालदेशमित्रभृत्यादिसाह्येन
85538 कतिपयकर्मरतत्वापादकपरिच्छिन्नसंसक्तिनिवारणाय प्रथमं
85539 सर्वदेशकालादिसर्वोपकरणसंपत्त्या सर्वजगद्व्यवहारकर्मरतेनापि स्वेन
85540 भूत्वा पश्चाद्वक्ष्यमाणप्रकारं मनः कार्यमित्यर्थः॥ १॥

85541
85542 न सक्तमिह चेष्टासु न चिन्तासु न वस्तुषु ।
85543 नाकाशे नाप्यधो नाग्रे न दिक्षु न लतासु च ॥ २ ॥
85544
85545 चेष्टादिकालकलनान्तेषु मनः सक्तं न कार्यमिति संबन्धः । साध्यविषयासु
85546 चेष्टासु । अतीतविषयासु चिन्तासु । वर्तमानेषु वस्तुषु । अग्रे मध्ये । लतासु
85547 दिक्शाखाप्रायासु विदिक्षु ॥ २ ॥
85548
85549 न बहिर्विपुलाभोगे न चैवेन्द्रियवृत्तिषु ।
85550 नाभ्यन्तरे न च प्राणे न मूर्धनि न तालुनि ॥ ३ ॥
85551
85552 बहिराधिभौतिके । विपुले३ आभुज्यत इत्याभोगे कलत्रभृत्यादिविषये ।
85553 तद्भोगलक्षणास्विन्द्रियवृत्तिषु । आभ्यन्तरे आध्यात्मिके । प्राणमूर्धादीनि
85554 योगशास्त्रोक्तानि तत्तत्काम्यसिद्ध्यनुकूलानि धारणास्थानानि तेष्वपि ॥ ३ ॥
85555
85556 न भ्रूमध्ये न नासान्ते न मुखे न च तारके ।
85557 नान्धकारे न चाभासे न चास्मिन्हृदयाम्बरे ॥ ४ ॥
85558
85559 तारके दक्षिणाक्षिकनीनिकायाम् ॥ ४ ॥
85560
85561 न जाग्रति न च स्वप्ने न सुषुप्ते न निर्मले ।
85562 नासिते न च वा पीतरक्तादौ शबले न च ॥ ५ ॥
85563
85564 निर्मले शुद्धसत्त्वगुणे । असिते तमसि । पीतरक्तादौ रजसि । शबले गुणसमाहारे
85565 ॥ ५ ॥
85566
85567 न चले न स्थिरे नादौ न मध्ये नेतरत्र च ।
85568 न दूरे नान्तिके नाग्रे न पदार्थे न चात्मनि ॥ ६ ॥
85569
85570 चले कार्यवर्गे । स्थिरे कारणे अव्यक्ते । आदिमध्येतराः सर्गादिकालास्तेषु ।
85571 दूरादिषु दिक्परिच्छेदेषु । पदार्थे नामरूपसमाहारे । आत्मनि जीवे ॥ ६ ॥
85572
85573 न शब्दस्पर्शरूपेषु न मोहानन्दवृत्तिषु ।
85574 न गमागमचेष्टासु न कालकलनासु च ॥ ७ ॥
85575
85576 रूपान्तग्रहणं रसगन्धयोरप्युपलक्षणम् । मोहो विषयाभिलाषपारवश्यम्
85577 । आनन्दवृत्तयोविषयोपभोगफलानि तेष्वपि । गमागमचेष्टासु
85578 खेचरत्वादिसिद्धिषु । कालकलनासु अतीतानागतज्ञताचिरजीवनादिसिद्धिषु ॥ ७ ॥
85579
85580 केवलं चिति विश्रम्य किंचिच्चेत्यावलम्बिनि ।
85581 सर्वत्र नीरसमिव तिष्ठत्वात्मरसं मनः ॥ ८ ॥
85582
85583 किंचिच्चेत्यं निश्चला बुद्धिस्तदवलम्बिनि तत्साक्षिणि । आत्मरसं
85584 भूमानन्दप्रवणमत-एव सर्वत्र नीरसम् ॥ रसोऽप्यस्य परं दृष्ट्वा
85585 निवर्तते इति भगवद्वचनात् । इवकारस्तादृशमनःस्थितेरपि
85586 मिथ्यात्वद्योतनार्थः ॥ ८ ॥
85587
85588 तत्रस्थो विगतासङ्गो जीवोऽजीवत्वमागतः ।
85589 व्यवहारमिमं सर्वं मा करोतु करोतु वा ॥ ९ ॥
85590
85591 अजीवत्वं ब्रह्मताम् ॥ ९ ॥
85592

अकुर्वन्नपि कुर्वाणो जीवः स्वात्मरतिः क्रियाः।
क्रियाफलैर्न संबन्धमायाति खमिवाम्बुदैः॥ १०॥

स्वात्मरतिः स्वात्मैकप्रियः॥ १०॥

अथवा तमपि त्यक्त्वा चेत्यांशं शान्तचिद्घनः।
जीवस्तिष्ठतु संशान्तो ज्वलन्मणिरिवात्मनि॥ ११॥

चेत्याशं प्रागुक्तं बुद्धिसाक्षित्वम्॥ ११॥

निर्वाणमात्मनि गतः सततोदितात्मा
जीवोऽरुचिर्व्यवहरन्नपि रामभद्र।
नो सङ्गमेति गतसङ्गतया फलेन
कर्मोद्भवेन सहतीव च देहभारम्॥ १२॥

अरुचिर्व्यवहारफलेच्छाशून्यो जीवो गतसंगतया
सङ्गनिमित्ताविद्याकामकर्मवासनाशून्यतया हेतुना कर्मोद्भवेन फलेन
सङ्गं नो एति किंतु यावत्प्रारब्धक्षयं देहभारमात्रं सहतीव। तस्य
तावदेव चिरं यावन्न विमोक्ष्ये इत्यादिश्रुतेरिति भावः॥ १२॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे०
मोक्षोपायेषूपशमप्रकरणे शान्तिसमायातयोगोपदेशो
नामैकोनसप्ततितमः सर्गः॥ ६९॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
शान्तिसमायातयोगोपदेशो नामैकोनसप्ततितमः सर्गः॥ ६९॥


सप्ततितमः सर्गः ७०

श्रीवसिष्ठ उवाच।

असंसङ्गसुखाभ्याससंस्थितैर्विततात्मभिः।
व्यवहारिभिरप्यन्तर्वीतशोकभयैः स्थितम्॥ १॥

असङ्गसुखविश्रान्तो व्यवहारसमुद्भवैः।
यथा न दूयते दोषैस्तथा युक्त्योपपाद्यते॥ १॥

असंसङ्गसुखस्याभ्यासो निरन्तरमास्वादनं तत्र स्थितैर्विश्रान्तैः॥ १॥

प्रक्षुब्धाक्षुब्धदेहस्याविसंवादेन संविदः।
अन्तःपूर्णस्य वदने श्रीरिन्दोरिव लक्ष्यते॥ २॥

तेषां तथा स्थितिः केन लिङ्गेन ज्ञाता तदाह - प्रक्षुब्धेति। यतः
प्रक्षोभनिमित्तैः पुत्रधननाशबन्धनापमानादिभिः
प्रक्षुब्धदेहवल्लक्ष्यमाणस्यापि वस्तुतस्तद्रहितस्य संविदश्चित्तवृत्तेः।
परमार्थसुखे अविसंवादेन अविप्रलम्भेन हेतुना अन्तःपूर्णस्य। इन्दुपक्षे
ज्योतिश्चक्ररथादिगत्या प्रक्षुब्धदेहस्यापि स्वासने स्थिरत्वादक्षुब्धदेहस्य।
संवेदयतीति संवित्सूर्यस्तस्य अविसंवादेन
पौर्णमास्यामत्यन्तसांमुख्यादवैषम्येणान्तरमृतैः पूर्णस्य
वदनसदृशे बिम्बे॥ २॥

85645 चेत्यहीनं चिदालम्बं मनो यस्य गतज्वरम् ।
85646 तेनाम्बु कतकेनेव जनता संप्रसीदति ॥ ३ ॥
85647
85648 यदनुग्रहादन्येऽपि क्षोभमालिन्यान्मुच्यन्ते तस्य निर्विक्षोभत्वं किं
85649 वाच्यमित्याशयेनाह - चेत्येति ॥ ३ ॥
85650
85651 नित्यमात्मदृशा लीनो ज्ञः स्वस्थश्चञ्चलोऽपि सन् ।
85652 क्षुब्धो दृश्यत एवासौ प्रतिबिम्बार्कवन्मुधा ॥ ४ ॥
85653
85654 आत्मारामा महात्मानः प्रबुद्धः परमोदयाः ।
85655 बहिः पिच्छाग्रतरला अन्तर्मेरुरिवाचलाः ॥ ५ ॥
85656
85657 चित्तमात्मत्वमायातं सुखदुःखानुरञ्जनम् ।
85658 नोपैति रङ्गसंयुक्तो मसृणः स्फटिको यथा ॥ ६ ॥
85659
85660 विक्षोभदर्शनेऽपि तदभावे दृष्टान्तमाह - चित्तमिति । रङ्गो
85661 रञ्जकोपाधिर्जपाकुसुमादिः । मसृणः स्निग्धः ॥ ६ ॥
85662
85663 संसारदृष्टिरुदितं ज्ञातलोकपरावरम् ।
85664 न रञ्जयति सच्चित्तं जललेखा यथाम्बुजम् ॥ ७ ॥
85665
85666 उदितं निरतिशयानन्दाभ्युदयं प्राप्तवन्तम् । ज्ञातं लोकानां परं
85667 ईश्वरतत्त्वमवरं जीवतत्त्वं च येन ॥ ७ ॥
85668
85669 आत्मध्यानमयोऽध्याने प्रबोधं परमात्मनः ।
85670 कलनामलनिर्मुक्तः स्वसक्त इति कथ्यते ॥ ८ ॥
85671
85672 यावदयमन्तः स्वसक्तो न भवति तावद्वाह्येषु असंसक्तिर्दुर्लभेत्याशयेन
85673 स्वसंसक्तलक्षणमाह - आत्मेति । यदा अयं परमात्मनः प्रबोधं
85674 प्राप्य कलनाहेतुभिर्मलैर्निर्मुक्तः सन् अध्यानेऽपि निरतिशयानन्दातमनः
85675 स्वतःस्फुरणान्निर्विकल्पसमाधाविव सदैव आत्मध्यानमय इव सुखमग्नो
85676 भवति तदा स्वसक्त इति कथ्यत इत्यर्थः ॥ ८ ॥
85677
85678 आत्मारामतया जीवो यात्यसंसङ्गतामिह ।
85679 आत्मज्ञानेन संसङ्गस्तनुतामेति नान्यथा ॥ ९ ॥
85680
85681 ज्ञानपरिपाकोत्कर्षादात्मसक्त्युत्कर्षक्रमेण संसङ्गः क्षीयत इत्याह -
85682 आत्मारामतयेति ॥ ९ ॥
85683
85684 जाग्रत्येव सुषुप्तस्थो जीवो भवति राघव ।
85685 अस्यां दिशि गतोऽद्वन्द्वो नित्यानस्तमयोदयः ॥ १० ॥
85686
85687 अस्यां उक्तलक्षणायां स्वसंसक्तिदृशि गतः परिणतः । अद्वन्द्वः
85688 प्रियाप्रियरहितः ॥ १० ॥
85689
85690 अत्र प्रौढिमुपायातः सूर्यतामेति पावनीम् ।
85691 परिणामवशादिन्दुरमावास्यार्कतामिव ॥ ११ ॥
85692
85693 प्रौढिं अभ्यसक्रमात्प्ररूढताम् । परिणामः
85694 क्रमात्कलापचयस्तद्वशाज्जलमये मण्डले सूर्यप्रतिबिम्बात्मा इन्दुर्यथा
85695 अमावास्यायां स्वबिम्बभूतार्कतामेति तद्वदित्यर्थः ॥ ११ ॥
85696

85697 चित्ते चित्तदशाहीने या स्थितिः क्षीणचेतसाम् |
85698 सोच्यते शान्तकलना जाग्रत्येव सुषुप्तता || १२ ||
85699
85700 जाग्रत्येव सुषुप्तस्थ इति यदुक्तं तद्विशदयति - चित्ते इति || १२ ||
85701
85702 तां सुषुप्तदशामेत्य जीवन्व्यवहरन्नरः |
85703 सुखदुःखवरत्राभिर्न कदाचन कृष्यते || १३ ||
85704
85705 जाग्रत्येव सुषुप्तस्थो यः करोति जगत्क्रियाम् |
85706 तं यन्त्रपुत्रकमिव नायाति सुखदुःखदृक् || १४ ||
85707
85708 निरहंभावसाम्याद्यन्त्रपुत्रको नर्तकप्रतिमा तत्तुल्यदेहम् || १४ ||
85709
85710 चित्तस्य बाधिका शक्तिर्भावाभावोपतापदा |
85711 आत्मतामागते चित्ते तस्य किं बाधते कथम् || १५ ||
85712
85713 चित्तस्य बाधिका पीडाकरी अहंभावलक्षणैव शक्तिः सा हि
85714 अनिष्टानामिष्टानां च भावाभावभ्यामागमापायाभ्यामुपतापदा || १५ ||
85715
85716 सुषुप्तबुद्धिः कर्माणि पूर्वमेवावहेलया |
85717 कुर्वन्न बध्यते जीवो जीवन्मुक्ततया स्थितः || १६ ||
85718
85719 पूर्वं साधनदशामारभ्यैवावहेलया अभिनिवेशत्यागेन || १६ ||
85720
85721 सौषुप्तीं वृत्तिमाश्रित्य कुरु मा कुरु वानघ |
85722 कर्म प्रकृतिजं पाकवशादुपगतं स्थितम् || १७ ||
85723
85724 प्रकृतिर्वर्णाश्रमस्वभावस्तज्जं तदुचितं प्रारब्धपाकवशादुपगतं
85725 प्राप्तं लोकशास्त्रस्थितम् || १७ ||
85726
85727 नादानं न परित्यागः कर्मणोऽज्ञाय रोचते |
85728 तिष्ठन्त्यवगतात्मानो यथाप्राप्तानुवर्तिनः || १८ ||
85729
85730 ये त्वाश्रमोचितमपि कर्म त्याज्यएम्वेति मन्यन्ते तान्प्रत्याह - नादानमिति ||
85731 १८ ||
85732
85733 कुर्वन्नपि न कर्तासि सुषुप्त्यैकस्थया धिअया |
85734 अकर्तापि च कर्तासि यथेच्छसि तथा कुरु || १९ ||
85735
85736 यदि तत्त्वशो यदि वा अतत्त्वज्ञ इति पूर्वोत्तरवाक्ययोः शेषः || १९ ||
85737
85738 यथा न किंचित्कलयन्मञ्चके स्पन्दते शिशुः |
85739 तथा फलान्यकलयन्कुरु कर्माणि राघव || २० ||
85740
85741 न किंचित्प्रयोजनं कलयन्संकल्पयन् | सहजानन्दलीलयैव स्पन्दते || २० ||
85742
85743 अचेत्यचित्पदस्वस्थो [स्वच्छ इति पाठः] जाग्रत्यपि सुषुप्तधीः |
85744 यद्यत्करोति लब्धात्मा तस्मिंस्तस्य न कर्तृता || २१ ||
85745
85746 तच्छब्दो वीप्सितो बोध्यः || २१ ||
85747
85748 दशामासाद्य सौषुप्तीं स्वचित्ते च विवासनः |

85749 अन्तः शीतलतामेति ज्ञो रसेन यथा शशी ॥ २२ ॥
85750
85751 सुषुप्तस्थो महातेजाः पूर्णः पूर्णेन्दुबिम्बवत् ।
85752 समः सर्वास्ववस्थासु भवत्यद्रिर्यथर्तुषु ॥ २३ ॥
85753
85754 यथा अद्रिः षट्स्वपि ऋतुषु अविकृतत्वात्समस्तद्वत्सर्वासु
85755 आपत्संपदवस्थासु समो भवतीत्यर्थः ॥ २३ ॥
85756
85757 सुषुप्तसंस्थो धीरात्मा बहिरायाति लोलताम् ।
85758 क्रियासु नो भवत्कम्पः प्रस्पन्दित इवाचलः ॥ २४ ॥
85759
85760 धीरात्मा लौकिकवैदिकक्रियासु बहिरेवमेव लोलतामिवायाति नोऽन्तर्भवन् कम्पो
85761 यस्य तथाविधो भवति तथा वायुना बहिर्वृक्षतृणादौ प्रस्पन्दितोऽचलः
85762 पर्वतस्तद्वदित्यर्थः ॥ २४ ॥
85763
85764 सुषुप्तावस्थितो भूत्वा देहं विगतकल्मषः ।
85765 पातयाश्वथा वा दीर्घं कालं धारय शैलवत् ॥ २५ ॥
85766
85767 क्रियास्विव तस्य मरणजीवनयोरप्यविकारिता तुल्येत्याशयेनाह - सुषुप्तेति ॥
85768 २५ ॥
85769
85770 एषैव राम सौषुप्ती स्थितिरभ्यासयोगतः ।
85771 प्रौढा सती तुर्यमिति कथिता तत्त्वकोविदैः ॥ २६ ॥
85772
85773 ननु विदुषां सदैव तुर्यस्थितिर्युक्ता न सौषुप्ते सेति शङ्कामालक्ष्याह -
85774 एषैवेति ॥ २६ ॥
85775
85776 आनन्दमय एवान्तः प्रक्षीणसकलामयः ।
85777 अत्यन्तास्तं गतमना भवति ज्ञो महोदयः ॥ २७ ॥
85778
85779 तर्हि सौषुप्ती स्थितिरित्युक्तेः कोऽभिप्रायस्तमाह - आनन्दमय इति । निर्दुःखत्वे
85780 सति निरतिशयसुखसमृद्धता सौषुप्ते आनन्द *? ये
85781 सत्त्वात्तद्विवक्षया तथोक्तिरित्यर्थः ॥ २७ ॥
85782
85783 तत्रस्थो ज्ञः प्रमुदितः परमानन्दघूर्णितः ।
85784 लीलामिवेमां रचनां सदा समनुपश्यति ॥ २८ ॥
85785
85786 तत्स्थस्य कीदृशं जगद्दर्शनं तदाह - तत्रेति ॥ २८ ॥
85787
85788
85789
85790 वीतशोकभयायासो गतसंसारसंभ्रमः ।
85791 तुर्यावस्थामुपारूढो भूयः पतति नात्मवान् ॥ २९ ॥
85792
85793 ननु तां लीलां पश्यंस्तत्र स पुनः पतेदपि नेत्याह - वीतेति ॥ २९ ॥
85794
85795 प्राप्य स्वां पदवीं पुण्यां यथेदं भ्रमितं जगत् ।
85796 शैलसंस्थ इवाधःस्थं हसन्पश्यति धीरधीः ॥ ३० ॥
85797
85798 कुतो न पतति तत्राह - प्राप्येति । यतो दोषदृष्ट्या हसन्पश्यति न
85799 पुरुषार्थबुद्ध्येत्यर्थः ॥ ३० ॥
85800

85801 अस्यां तु तुर्यावस्थायां स्थितिं प्राप्याविनाशिनीम् ।
85802 आनन्दैकान्तलीनत्वादनानन्दपदं गतः ॥ ३१ ॥
85803
85804 अनानन्दमहानन्दकलातीतस्ततोऽपि हि ।
85805 मुक्त इत्युच्यते योगी तुर्यातीतं पदं गतः ॥ ३२ ॥
85806
85807 इत्थं यावज्जीवं तस्य तुरीयस्थितिमुक्त्वान्ते विदेहस्य तुर्यातीतस्थितिमाह -
85808 अनानन्देति । अनानन्दमवस्थात्रयपदं तदपेक्ष्य तुर्यपदं महानन्दमिति
85809 तज्जिवन्मुक्तस्य सदा भवति । विदेहमुक्तौ तु अनानन्दस्मरणायोगात्तदपेक्षया
85810 महत्त्वकलनायोगात्तदतीतस्ततोऽपि मुक्तस्तुर्यातीतपदं गत इत्युच्यत इत्यर्थः ॥
85811 ३२ ॥
85812
85813 परिगलितसमस्तजन्मपाशः
85814 सकलविलीनतमोमयाभिमानः ।
85815 परमरसमयीं प्रयाति सत्तां
85816 जलगतसैन्धवखण्डवन्महात्मा ॥ ३३ ॥
85817
85818 तामेव स्थितिं वर्णयन्नुपसंहरति - परिगलितेति । यतः सकला
85819 विलीनास्तमोमया अभिमाना यस्य अत-एव
85820 परिगलितसमस्तजन्महेतुकामकर्मवासनापाशो महात्मा
85821 जलगतसैन्धवखण्डवत्खिल्यभावविलयात्परमो रस्यत इति रस आनन्दो
85822 रसनैकवेद्यांशश्च तन्मयीं सत्तां परमार्थस्थितिं प्रयातीत्यर्थः ॥ ३३ ॥
85823
85824 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे०
85825 मोक्षोपायेषूपशमप्रकरणे असंसङ्गविकल्पोपदेशो नाम
85826 सप्ततितमः सर्गः ॥ ७० ॥
85827
85828 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
85829 असंसङ्गसविकल्पोपदेशो नाम सप्ततितमः सर्गः ॥ ७० ॥
85830
85831
85832 एकसप्ततितमः सर्गः ७१
85833
85834 श्रीवसिष्ठ उवाच ।
85835
85836 यावत्तुर्यपरामर्शस्तावत्केवलतापदम् ।
85837 जीवन्मुक्तस्य विषयो वचसां च रघूद्वह ॥ १ ॥
85838
85839 परस्याव्यवहार्यत्वात्तुर्यमत्रोपवर्ण्यते ।
85840 शरीरादिनिरासेन यथा मोहाज्जनिक्रमः ॥ १ ॥
85841
85842 तुर्यातीतपदस्य वागादिव्यवहाराविषयत्वं दर्शयितुं भूमिकां रचयति ##-
85843 चिन्मात्रपरिशेषावस्थितिलक्षणतुर्यस्य यावत्परामर्शः
85844 साक्षादनुभवस्तावन्मात्रं केवलतापदं जीवन्मुक्तस्य श्रुत्यादिवचसां च
85845 विषयः । वाक्यजन्याखण्डाकारवृत्तेस्तावत्येव पर्यवसानादिति भावः ॥ १ ॥
85846
85847 अत ऊर्ध्वमदेहानां मुक्तानां वचसां तथा ।
85848 विषयो न महाबाहो पुरुस्।आणामिवाम्बरम् ॥ २ ॥
85849
85850 तत ऊर्ध्वं अदेहानां मुक्तानां प्राप्यमपि तुर्यातीतपदं तेषां
85851 वेदवचसां च विषयो न तद्विषयतापादनहेतोर्मनसः क्षयात् । यथा
85852 वायुगम्यमम्बरमाकाशं पुरुषाणां मनुष्याणां विषयो न

85853 तद्वदित्यर्थः ॥ २ ॥
85854
85855 सा हि विश्रान्तिपदवी दूरेभ्योऽपि दवीयसी ।
85856 गम्या विदेहमुक्तानां खलेखेव नभस्वताम् ॥ ३ ॥
85857
85858 गम्या प्राप्या । खलेखा व्योमवीथी । नभस्वतां वायुनामिव ॥ ३ ॥
85859
85860 सुषुप्तावस्थया कंचित्कालं भुक्त्वा जगत्स्थितिम् ।
85861 तुर्यतामेति तदनु परमानन्दघूर्णितः ॥ ४ ॥
85862
85863 अतः सदेहमुक्तानां पञ्चमभूमिकाक्रमेण सप्तमान्तभूमिकास्वेव
85864 स्थितिरित्याह - सुषुप्तेति ॥ ४ ॥
85865
85866 तुर्यातीतदशां तज्ज्ञा यथा यान्त्यात्मकोविदाः ।
85867 तथाधिगच्छ निर्द्वन्द्वं पदं रघुकुलोद्वह ॥ ५ ॥
85868
85869 ज्ञानदार्ढ्यं तु तुर्यातीतपदविश्रान्तिपर्यन्तं त्वया कार्यं
85870 नान्तरालिकभूमिकामात्रपर्यवसितमित्याह - तुर्यातीतेति ॥ ५ ॥
85871
85872 सुषुप्तावस्थया राम भव संव्यवहारवान् ।
85873 चित्रेन्दोरिव ते न स्तः क्षयोद्वेगावरिन्दम ॥ ६ ॥
85874
85875 तत्र प्रथमं पञ्चमभूमिकैव
85876 शास्त्रीयव्यवहारनिर्वाहार्थमभ्यसनीयेत्याशयेनाह - सुषुप्तावस्थयेति ।
85877 क्षयो मृत्युः कलापचयश्च । उद्वेगो भयं राहूपरोधश्च ॥ ६ ॥
85878
85879 शरीरसंनिवेशस्य क्षये स्थैर्येच संविदः ।
85880 मा गृहाण भ्रमो ह्येष शरीरमिति जृम्भते ॥ ७ ॥
85881
85882 ननु देहनाशे संविन्नाशस्याप्यवर्जनात्कथं संविदात्मनो मे न
85883 क्षयस्तत्राह - शरीरेति । संविदः क्षयं स्थैर्यं चेति शेषः ॥ ७ ॥
85884
85885 देहनाशेन कोऽर्थस्ते कोऽर्थस्ते देहसंस्थया ।
85886 भव त्वं प्रकृतारम्भस्तिष्ठत्वेष यथास्थितम् ॥ ८ ॥
85887
85888 यदि देह इति भ्रमस्तर्हि स एव नश्यतां तत्राह - देहेति । प्रकृते
85889 स्वात्मबोधस्थैर्ये आरम्भः प्रयत्नो यस्य तथाविधो भव । एष देहः ॥ ८ ॥
85890
85891 ज्ञातवानसि तत्सत्यं बुद्धवानसि तत्पदम् ।
85892 प्राप्तवानसि रूपं स्वं विशोको भव भूतये ॥ ९ ॥
85893
85894 स्वात्मबोधे संदेहं वारयति - ज्ञातवानसीति । सत्यं
85895 जगदधिष्ठानतत्त्वम् । पदं अवस्थात्रयाधिष्ठानम् । स्वं रूपं
85896 अखण्डवाक्यार्थस्वरूपम् ॥ ९ ॥
85897
85898 ईप्सितानीप्सितं त्यक्त्वा शीतलालोकशोभया ।
85899 अन्धकारात्तथाम्भोदान्मुक्तं खमिव शोभते [शोभसे इति
85900 पाठश्चेदनुगुणः स्यात्] ॥ १० ॥
85901
85902 खं अर्थाच्छरद्राकाकाशम् ॥ १० ॥
85903
85904 मनस्तवात्मसंपन्नं नाधः समनुधावति ।

85905 योगमन्त्रतपःसिद्धः पुरुषः खादिवावनिम् ॥ ११ ॥
85906
85907 अधः अर्वाक्तनविषयसुखे। सिद्धः खेचरसिद्धिं प्राप्तः खात् खं विहाय
85908 यथा अवनिं न समनुधावति तद्वत् ॥ ११ ॥
85909
85910 इह शुद्धा चिदेवास्ति पारावारविवर्जिता।
85911 अयं सोऽहमिदं तन्म इति ते मास्तु विभ्रमः ॥ १२ ॥
85912
85913 पारावारे परार्वाचीतीरे। परिच्छेद इति यावत् ॥ १२ ॥
85914
85915 आत्मेति व्यवहारार्थमभिधा कल्पिता विभोः।
85916 नामरूपादिभेदस्तु दूरमस्मादलं गतः ॥ १३ ॥
85917
85918 यदि शुद्धा चिदेकैवास्ति तर्ह्यात्मेति तद्व्यतिरिक्ता अभिधा कथं तत्राह -
85919 आत्मेति ॥ १३ ॥
85920
85921 जलमेव यथाम्भोधिर्न तरङ्गादिकं पृथक्।
85922 आत्मैवेदं तथा सर्वं न भूतोयादिकं पृथक् ॥ १४ ॥
85923
85924 यथा समस्ताज्जलधौ जलादन्यन्न लभ्यते।
85925 तथैव जगतः स्फारादात्मनोऽन्यन्न लभ्यते ॥ १५ ॥
85926
85927 समस्तात्पूर्णाज्जलात्। जगतः स्फाराज्जगदात्मना विस्तृतात् ॥ १५ ॥
85928
85929 अयं सोऽहमिति प्राज्ञ क्व करोषि व्यवस्थितिम्।
85930 किं तत्त्वं किं च वा ते स्यात्किं तत्त्वं किं च वा न ते ॥ १६ ॥
85931
85932 देहादिभावेषु यत्त्वं यच्च ते तत्किम्। यत्र त्वं यच्च वा न ते तत्किम्।
85933 अध्यासदृशा कस्यापि
85934 त्वदात्मतायास्त्वत्संसृष्टतायाश्चासंभवादधिष्ठानदृशा सर्वत्रैव
85935 तत्संभवाच्चेति भावः ॥ १६ ॥
85936
85937 न द्वित्वमस्ति नो देहाः संबन्धो न च तैः स्थितः।
85938 संभाव्यते कलङ्को वा भानोरिव तमःपटैः ॥ १७ ॥
85939
85940 परमार्थतस्तु द्वित्वमेव नास्तीति तदधीना
85941 देहतत्संबन्धतदुपादानकलङ्कादिसंभावना दूरनिरस्तेत्याह - नेति ॥
85942 १७ ॥
85943
85944 द्वित्वमभ्युपगम्यापि कथयामि तवारिहन्।
85945 देहादिभिः सद्भिरपि न संबन्धो विभोर्भवेत् ॥ १८ ॥
85946
85947 अभ्युपगतेऽपि द्वैते देहादिसत्यत्वे च चिदात्मनस्तत्संस्पर्शो न संभवत्येवेति
85948 प्रौढिमादर्शयन्नाह - द्वित्वमित्यादिना ॥ १८ ॥
85949
85950 छायातपप्रसरयोः प्रकाशतमसोर्यथा।
85951 न संभवति संबन्धस्तथा वै देहदेहिनोः ॥ १९ ॥
85952
85953 आद्य एकप्रदेशप्रसरणलक्षणे संसर्गे द्वितीयस्तादात्म्ये दृष्टान्तः ॥ १९ ॥
85954
85955 यथा शीतोष्णयोर्नित्यं परस्परविरुद्धयोः।
85956 न संभवति संबन्धो राम देहात्मनोस्तथा ॥ २० ॥

85957
85958 अविनाभाविनोर्यस्तु संबन्धः कथमेतयोः ।
85959 जडचेतनयोर्देहदेहिनोरनुभूयते ॥ २१ ॥
85960
85961 मास्तु संयोगस्तादात्म्यं वा समवायस्तु किं न स्यात्तत्राह -
85962 अविनाभाविनोरिति । अयुतसिद्धयोरित्यर्थः ॥ २१ ॥
85963
85964 चिन्मात्रस्यात्मनो देहसंबन्ध इति या कथा ।
85965 सैषा दुरवबोधार्था दावाग्नौ जलधिर्यथा ॥ २२ ॥
85966
85967 या कथा उक्तिः । देहस्य चिदाश्रयत्वे विषयत्वायोगादस्फुरणापत्तेर्विषयत्वे
85968 चाश्रयत्वायोगात्समवायद्यसिद्धेर्विषयतासंबन्धस्य च
85969 मिथ्यार्थसाधारणस्य सत्यत्वायोगाद्दुरवबोधार्थेत्यर्थः । अग्नौ जलधिरिति
85970 कथेति शेषः ॥ २२ ॥
85971
85972 सत्यावलोकनेनैषा मिथ्यादृष्टिर्विनश्यति ।
85973 अवलोकनया साम्यमातपे जलधिर्यथा ॥ २३ ॥
85974
85975 तर्ह्यस्त्वध्यस्त एव संबन्धस्तत्राप्याह - सत्येति ।
85976 देहात्मसंबन्धाध्यासस्य आत्माधिष्ठानकत्वे आत्मदर्शनादेव बाधः
85977 स्यादित्यर्थः । साम्यं अध्यस्तवैषम्यं बाधं यथा यातीति शेषः ॥ २३ ॥
85978
85979 चिदात्मा निर्मलो नित्यः स्वावभासो निरामयः ।
85980 देहस्त्वनित्यो मलवांस्तेन संबध्यते कथम् ॥ २४ ॥
85981
85982 शुद्धमपापविद्धम् इत्यादिश्रुतिसिद्धस्वाभाविकशुद्ध्या विरोधादप्यात्मा
85983 नाशुद्धं देहादि स्पृशतीत्याह - चिदात्मेति ॥ २४ ॥
85984
85985 स्पन्दमायाति वातेन भूतैर्वा पीवरीकृतः ।
85986 देहस्तेन न संबन्धो मनागेव सहात्मना ॥ २५ ॥
85987
85988 नन्वात्मसंबन्धाभावे देहस्य स्पन्दादिः कथं मृतदेहे तददर्शनादिति
85989 चेत्तत्राह - स्पन्दमिति । वातेन प्राणवायुना । भूतैरन्नादिभिः
85990 प्राणावष्टम्भहेतुभिः पीवरीकृत उपचितः । आहितबल इति यावत् । तथाच स्पन्दे
85991 प्राणो बलं वा हेतुर्नात्मेत्यर्थः । अप्यर्थे एवकारः । न संबन्धो देहस्य ॥
85992 २५ ॥
85993
85994 सिद्धे द्वित्वेऽपि देहस्य न संबन्धस्य संभवः ।
85995 द्वित्वासिद्धौ तु सुमते कलनैवेदृशी कुतः ॥ २६ ॥
85996
85997 एवं द्वैतसत्यत्वाभ्युपगमे यदा न संबन्धस्तदा किं वक्तव्यं
85998 तदनभ्युपगमे इति प्रौढिवादमुपसंहरन्नाह - सिद्धे इति । सिद्धे सत्ये ॥
85999 २६ ॥
86000
86001 इत्येतदेव तत्सत्त्वे तत्रैवान्तःस्थितिं कुरु ।
86002 न बन्धोऽस्ति न मोक्षोऽस्ति कदाचित्कस्यचित्क्वचित् ॥ २७ ॥
86003
86004 ननु द्वित्वासिद्धिरेव कुत इत्याशङ्क्य संबन्धदूषणार्थं दर्शिता
86005 युक्तीस्तत्राप्यतिदिशति - इतीति । तस्य द्वित्वस्य सत्त्वे सत्यत्वे
86006 केनचिदाशङ्क्यमाने सति इति प्रागुक्तमेतदेव युक्तिजातमुपन्यसनीयम् ।
86007 द्वितीयसिद्धौ हि द्वित्वं स्यात् । द्वितीयं चिच्चेत्तत्र भेदकाभावः । जडं
86008 चेच्छायातपादिवद्विरोधात्पूर्वसिद्धचिद्विरुद्धं न सिद्ध्यति । चिच्च

86009 स्वासंबद्धं जडं साधयतीति कथा दुरवबोधार्था। अध्यस्तं
86010 चेत्सत्यचिदवलोकनमात्राद्विनश्येत्। निर्मलासङ्गत्वाद्यात्मस्वभावविरुद्धं
86011 च मलिनं जडं असङ्गेन कथं साध्येतेत्यादियुक्तीनामत्रापि साम्यादिति
86012 भावः। अतो द्वैतभ्रमं विहाय तत्र अद्वितीयचिन्मात्र एव स्थितिं कुरु। तत्र च
86013 बन्धमोक्षादिशङ्कैव नास्तीत्यर्थः॥ २७॥
86014
86015 सर्वमात्ममयं शान्तमित्येवं प्रत्ययं स्फुटम्।
86016 सबाह्याभ्यन्तरं राम सर्वत्र दृढतां नय॥ २८॥
86017
86018 कीदृशी सा स्थितिर्या मया कार्या तामाह - सर्वमिति॥ २८॥
86019
86020 सुखी दुःखी विमूढोऽस्मीत्येता दुर्दृष्टयः स्मृताः।
86021 आसु चेद्वस्तुबुद्धिस्ते तच्चिरं दुःखमिच्छसि॥ २९॥
86022
86023 सर्वात्मदृष्टिश्च विरुद्धदुर्दृष्टिनिरासे दृढीभवति
86024 नान्यथेत्याशयेनाह - सुखीति। तत् तर्हि॥ २९॥
86025
86026 यः क्रमः शैलतृणयोः कौशेयोपलयोस्तथा।
86027 साम्यं प्रति स एवोक्तः परमात्मशरीरयोः॥ ३०॥
86028
86029 ननु देहदुःखादयोऽपि प्रत्यक्षादिभिः पुरस्कृताः आत्मापि श्रुतियुक्तिभिः
86030 पुरस्कृतस्तदनयोस्तुल्यत्वे को विशेषो येनात्मदृष्टिमवलम्ब्य
86031 देहादिदृष्टिर्निरसनीयेत्युच्यते तत्राह - य इति। क्रमो विशेषः। यथा
86032 चक्षुषा दूराच्छैलतृणयोर्मध्ये महत्त्वात्स्थिरत्वाच्च शैलदृष्टिः सुकरा
86033 । चलत्वात्पेलवत्वाच्च तृणदृष्टिर्दुष्करा। यथा वा त्वचा
86034 मृदुत्वात्सुखस्पर्शत्वाच्च कौशेयस्पर्श उपादेयः
86035 कठोरत्वाद्दुःखदत्वाच्च उपलस्पर्शो हेयस्तथा अपरिच्छिन्नत्वात्सदा
86036 स्वप्रकाशत्वादानन्दरूपत्वाच परमातम्दृष्टिः सुकरा उपादेया च।
86037 देहाद्यनात्मदृष्टिस्तु पेलवत्वादस्थिरत्वान्मन-आदिसापेक्षत्वाच्च
86038 दुष्करा हेया चेति महदन्तरमस्तीति न साम्यमित्यर्थः॥ ३०॥
86039
86040 यथा तेजस्तिमिरयोर्न संबन्धो न तुल्यता।
86041 अत्यन्तभिन्नयो राम तथैवात्मशरीरयोः॥ ३१॥
86042
86043 विरुद्धत्वादपि संबन्धवत्साद्दृश्यमपि निरसितुं शक्यमित्याशयेनाह ##-
86044
86045 यथा शीतोष्णयोरैक्यं कथास्वपि न दृश्यते।
86046 जडप्रकाशयोः श्लेषो न तथात्मशरीरयोः॥ ३२॥
86047
86048 विरोधादेव तादात्म्यशङ्कायाः प्रसक्तिरेव नास्तीत्याशयेनाह - यथेति।
86049 श्लेषः संयोगस्तस्याप्यसंभवे ऐक्यं दूरनिरस्तमित्याशयः॥ ३२॥
86050
86051 देहश्चलति वातेन तेनैवायाति गच्छति।
86052 शब्दं करोति वातेन देहनाडीविलासिना॥ ३३॥
86053
86054 पूर्वमात्मसंबन्धाभावेऽपि देहचेष्टादेर्वातेन गतार्थतोक्ता अत्र तु
86055 आत्मैक्याभावेऽपीति न पौनरुक्त्यम्॥ ३३॥
86056
86057 शब्दः कचटतप्रायः स्फुरत्यन्तः समीरणैः।
86058 यथा प्रजायते वंशाद्देहरन्ध्रात्तथैव हि॥ ३४॥
86059
86060 देहरन्ध्रं कण्ठस्तदुद्गतैः प्राणसमीरणैः कण्ठताल्वादिस्थानेषु

86061 जिह्वादिनाभिहत्य निःसार्यमाणैः कवर्गचवर्गटवर्गादिः शब्दः स्फुरतीति
86062 प्रत्यक्षसिद्धमित्यर्थः | वंशात्सच्छिद्रकीचकात् || ३४ ||
86063
86064 कनीनिकापरिस्पन्दश्चक्षुःस्पन्दस्य मारुतात् |
86065 इन्द्रियस्फुरणात्सैव संवित्केवलमात्मनः || ३५ ||
86066
86067 एवं चक्षुरादिसर्वेन्द्रियस्पन्दोऽपि वायुत एव | आत्मनस्तु केवलं संविदेव
86068 कृत्यं नान्यदित्याह - कनीनिकेति | विषयप्रदेशे चक्षुःस्पन्दस्य
86069 निमित्तभूतः कनीनिकापरिस्पन्दोऽपि मारुतादेव | एवं
86070 सर्वेन्द्रियस्फुरणाज्जायमाना सा स्फूर्तिलक्षणा संविदेव केवलमात्मनो
86071 नान्यदित्यर्थः || ३५ ||
86072
86073 आकाशोपलकुड्यादौ सर्वत्रात्मदशा स्थिता |
86074 प्रतिबिम्बमिवादर्शे चित्त एवात्र दृश्यते || ३६ ||
86075
86076 यद्यपि सा संवित्सर्वगता सदातनी च तथापि चित्ततद्वृत्तिष्वेवाभिव्यक्ता
86077 नान्यत्रेत्याह - आकाशेति || ३६ ||
86078
86079 शरीरालयमुत्सृज्य यत्र चित्तविहंगमः |
86080 स्ववासनावशाद्याति तत्रैवात्मानुभूयते || ३७ ||
86081
86082 अत-एव तद्गमनादेवात्मनः परलोकगमनादिव्यवहारोऽपीत्याह -
86083 शरीरेति || ३७ ||
86084
86085 यत्र पुष्पं तत्र गन्धसंविदः संस्थिता यथा |
86086 यत्र चित्तं हि तत्रात्मसंविदः संस्थितास्तथा || ३८ ||
86087
86088 सर्वत्र स्थितमाकाशमादर्शे प्रतिबिम्बति |
86089 यथा तथात्मा सर्वत्र स्थितश्चेतसि दृश्यते || ३९ ||
86090
86091 अपामवनतं स्थानमास्पदं भूतले यथा |
86092 अन्तःकरणमेवात्मसंविदामास्पदं तथा || ४० ||
86093
86094 अवनतं निम्नम् | आत्मसंविदां चित्प्रतिबिम्बानाम् || ४० ||
86095
86096 सत्यासत्यं जगद्रूपमन्तःकरणबिम्बिता |
86097 आत्मसंवित्तनोतीदमालोकमिव सूर्यभा || ४१ ||
86098
86099 सत्यं व्यावहारिकम् | असत्यं प्रातिभासिकम् | अनेन जीवेनात्मनानुप्रविश्य
86100 नामरूपे व्याकरवाणि इति श्रुतेरिति भावः || ४१ ||
86101
86102 अन्तःकरणमेवातः कारणं भूतसंसृतौ |
86103 आत्मा सर्वातिगत्वात्तु कारणं सदकारणम् || ४२ ||
86104
86105 अन्तःकरणं तत्समष्ट्यात्मा हिरण्यगर्भः | प्रतिबिम्बद्वारा कारणं सदपि
86106 स्वतः अकारणम् || ४२ ||
86107
86108 अविचारणमज्ञानं मौर्ख्यमाहुर्महाधियः |
86109 संसारसंसृतौ सारमन्तःकरणकारणम् || ४३ ||
86110
86111 अन्तःकरणस्य तर्हि किं कारणं तदाह - अविचारणमिति |
86112 पर्यायत्रयोपादानं प्रसिद्धिद्योतनार्थम् || ४३ ||

86113
86114 असम्यक्प्रेक्षणान्मोहाच्चेतःसत्तां गृहीतवत् ।
86115 संमोहबीजकणिकां तमोऽर्कादिव दृश्यते ॥ ४४ ॥
86116
86117 असम्यक्प्रेक्षणादन्यथा ग्रहणसंस्कारबलान्मोहात् । संमोहानां
86118 भ्रमाणां बीजधानाभूताम् । चेतःसत्तां चित्ताकारपरिणामम् । यतः
86119 संमोहादर्कात्तम इवात्यन्तासंभावितापि जन्मजरामरणाद्यनर्थपरम्परा
86120 दृश्यत इत्यर्थः । अथवा अज्ञानं सर्वैः स्वात्मनि अहमज्ञ इति प्रत्यक्षं
86121 दृश्यते । यथा अर्कात्तद्वासि तमो राहुर्दृश्यते तद्वदित्यर्थः ॥ ४४ ॥
86122
86123 यथा भूतात्मतत्त्वैकपरिज्ञानेन राघव ।
86124 असत्तामेत्यलं चेतो दीपेनेव तमः क्षणात् ॥ ४५ ॥
86125
86126 केन तर्हि चित्तनाशस्तदाह - यथेति ॥ ४५ ॥
86127
86128 संसारकारणमितः स्वयं चेतो विचारयेत् ।
86129 जीवोऽन्तःकरणं चित्तं मनश्चेत्यादिनामकम् ॥ ४६ ॥
86130
86131 केनोपायेनात्मतत्त्वपरिज्ञानं तदाह - संसारेति । इत एतस्माद्धेतोः
86132 संसारकारणमज्ञानं इतः प्राप्तोऽधिकारी स्वयमिति वा यं विचारयेत्तमाह
86133 - जीव इति । जीवादीनि नामानि यस्य तम् ।
86134 आदिपदादुत्पत्तिप्रकरणोक्तनामान्तराणामपि संग्रहः ॥ ४६ ॥
86135
86136 श्रीराम उवाच ।
86137
86138 एताः संज्ञाः प्रभो ब्रह्मंश्चेतसो रूढ्ःइमागताः ।
86139 कथमित्येव कथय मयि मानद सिद्धये ॥ ४७ ॥
86140
86141 रूढि योगरूढिम् । कथं केन योगेन । सिद्ध्ये तदुक्तविचारसिद्धये ॥ ४७ ॥
86142
86143 श्रीवसिष्ठ उवाच ।
86144
86145 सर्वे भावा इमे नित्यमात्मतत्त्वैकरूपिणः ।
86146 चित्तात्तरङ्गकगणा जलैककलिता यथा ॥ ४८ ॥
86147
86148 तत्रादौ रूढियोगांशाभ्यां जीवनाम निर्वक्तुं वसिष्ठः पीठिकां रचयति
86149 - सर्वे भावा इत्यादिना । भावाः पदार्था आत्मतत्त्वेन सह
86150 ऐक्याध्यासादेकरूपिणः समष्टिचित्तादेवोत्पन्ना इति प्रागुक्तस्मारणम् ॥ ४८ ॥
86151
86152 आत्मा स्पन्दैकरूपात्मा स्थितस्तेषु क्वचित्क्वचित् ।
86153 तरङ्गेषु विलोलेषु पयोधेः सलिलं यथा ॥ ४९ ॥
86154
86155 उत्पन्नानां च स्थावरविभागे निमित्तमाह - आत्मेत्यादिना ॥ ४९ ॥
86156
86157 क्वचिदस्पन्दरूपात्मा स्थितस्तेषु महेश्वरः ।
86158 तरङ्गत्वमयातेषु जलभावो जलेष्विव ॥ ५० ॥
86159
86160 तत्रोपलादयो भावा अलोलाः स्वात्मनि स्थिताः ।
86161 सुराफेनवदुत्स्पन्दा लोलास्तु पुरुषादयः ॥ ५१ ॥
86162
86163 तत्र तेषु शरीरेषु सर्वशक्तिस्तदात्मनः ।
86164 कलिताऽज्ञानकलना तेनाज्ञानमसौ स्थितः ॥ ५२ ॥

86165
86166 कलितस्य कल्पितस्याज्ञानस्य कलना प्रसिद्धा। तेन हेतुना तत्स्वकल्पितमज्ञानं
86167 स्वयमेव भूत्वा प्रलयसुषुप्त्योः स्थितः॥ ५२॥
86168
86169 तदज्ञानमनन्तात्मभूषितं जीव उच्यते।
86170 स संसारे महामोहमायापञ्जरकुञ्जरः॥ ५३॥
86171
86172 अनन्तेनात्मना प्रतिबिम्बभावापन्नेन भूषितमिव स्फुरत। स एव
86173 रूढ्यंशेन जीव उच्यते॥ ५३॥
86174
86175 जीवनाज्जीव इत्युक्तोऽहंभावः स्यात्त्वहंतया।
86176 बुद्धिर्निश्चायकत्वेन संकल्पकलनान्मनः॥ ५४॥
86177
86178 तत्र योगांशमाह - जीवनादिति। प्राणधारणादित्यर्थः। अहंनाम
86179 निर्वक्ति - अहंभावादिति। सोऽहमित्यग्रे व्याहरत्तस्मादहंनामाभवत् इति
86180 श्रुतेः। नामान्तराण्यपि निराह - बुद्धिरित्यादिना॥ ५४॥
86181
86182 प्रकृतिः प्रकृतित्वेन देहो दिग्धतया स्थितः।
86183 जडः प्रकृतिभावेन चेतनः स्वात्मसत्तया॥ ५५॥
86184
86185 दिग्धतया उपचिततया। प्रकृतिभावेन अज्ञानांशप्राधान्येन।
86186 स्वात्मसत्तया चित्प्राधान्येन॥ ५५॥
86187
86188 जडाजडदृशोर्मध्यं यत्तत्त्वं पारमात्मिकम्।
86189 तदेतदेव नानात्वं नानासंज्ञाभिराततम्॥ ५६॥
86190
86191 जडाजडदृशोरज्ञानतत्साक्षिणोर्मध्यमान्तरालिकं साभासं
86192 मनस्तदेतदेव नानात्वं प्राप्य
86193 जीवबुद्धिमनश्चित्ताहंकारादिनानासंज्ञाभिराततमित्यर्थः॥ ५६॥
86194
86195 एवं स्वरूपं जीवस्य बृहदारण्यकादिषु।
86196 बहुधा बहुषु प्रोक्तं वेदान्तेषु किलानघ॥ ५७॥
86197
86198 परमात्मन एवोपाधिप्रवेशेन औपाधिकनानासंज्ञालाभे श्रुतीः
86199 प्रमाणयति - एवमिति। स एष इह प्रविष्ट आनखाग्रेभ्यः इत्युपक्रम्योक्तम्
86200 प्राणन्नेव प्राणो नाम भवति वदन्वाक् पश्यंश्चक्षुः शृण्वन् श्रोत्रं
86201 मन्वानो मनस्तान्यस्यैतानि कर्मनामान्येव इति। तथा स समानः सत्रभौ
86202 लोकावनुसंचरति ध्यायतीव लेलायतीव स धीः स्वप्नो भूत्वेमं
86203 लोकमतिक्रामति मृत्यो रूपाणि इति। तथा श्रुत्यन्तरे बुद्धेर्गुणेनात्मगुणेन
86204 चैव आराग्रमात्रो ह्यवरोऽपि दृष्टः। वालाग्रशतभागस्य शतधा कल्पितस्य
86205 च। भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते इति। तत्सृष्ट्वा
86206 तदेवानुप्राविशत्। तदनुप्रविश्य सच्च त्यच्चाभवत् इति। तैत्तिरीयके स एतं
86207 सीमानं विदार्यैतया द्वारा प्रापद्यत तस्मादिदन्द्रो नाम। यदेतद्धृदयं
86208 मनच्चैतत्संज्ञानमाज्ञानं विज्ञानं प्रज्ञानम् इत्याद्यैतरेयके।
86209 त्वमेकोऽसि बहूननुप्रविष्टः। एको देवो बहुधा विचार एकः सन् बहुधा विचार
86210 इत्यादिश्रुतिशतेषु च बहुधा प्रोक्तमित्यर्थः॥ ५७॥
86211
86212 अज्ञैस्त्वेतासु संज्ञासु कुविकल्पकुतार्किकैः।
86213 मोहाय केवलं मूढैर्व्यर्थमास्थाः प्रकल्पिताः॥ ५८॥
86214
86215 अत-एवावैदिककुतार्किकाणामन्यथान्यथा जीवस्वरूपकल्पना
86216 नादर्तव्येत्याशयेनाह - अज्ञैरिति। आस्थाः अभिनिवेशाः॥ ५८॥

86217
86218 एवमेष महाबाहो जीवः संसारकारणम् |
86219 मूकेनातिवराकेण देहकेनेह किं कृतम् || ५९ ||
86220
86221 एवं च न शुद्धात्मनः संसारिता नापि देहस्य किंत्वान्तरालिकस्य जीवस्यैवेति
86222 सिद्धमित्याशयेनाह - एवमिति | मूकेन वागादिशून्येन | जडेनेति यावत् || ५९
86223 | |
86224
86225 आधाराधेययोरेकनाशे नान्यस्य नष्टता |
86226 यथा तथा शरीरादिनाशे नात्मनि नष्टता || ६० ||
86227
86228 अत-एव देहनाशेऽपि न जीवनाश इत्याह - आधारेति | नाशे न इति च्छेदः ||
86229 ६० ||
86230
86231 एकपर्णरसे क्षीणे रसो नैति यथा क्षयम् |
86232 याति पर्णरसश्चार्करश्मिजालान्तरे यथा || ६१ ||
86233
86234 शरीरसंक्षये देही न क्षयं याति कस्यचित् |
86235 निर्वासनश्चेत्तद्व्योम्नि तिष्ठत्यात्मपदे तथा || ६२ ||
86236
86237 सवासनश्चेत् शरीरसंक्षये वासनायां तिष्ठति | निर्वासनश्चेद्व्योम्नि
86238 ब्रह्माकाशस्वभावे तिष्ठतीत्यर्थः || ६२ ||
86239
86240 देहनाशे विनष्टोऽस्मीत्येवं यस्याऽमतेर्भ्रमः |
86241 मातुः स्तनतटात्तस्य मन्ये वेताल उत्थितः || ६३ ||
86242
86243 अमतेर्मूर्खस्य यस्य | अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः इति
86244 श्रुतेरभयहेतौ देहनाशे भयहेतुत्वलक्षणविपरीतदर्शिनो मूढस्य मातुः
86245 स्तनादपि वेतालोत्थानसंभावनया स्तन्यपानेन जीवनमपि दुर्लभं
86246 स्यादित्याशयः || ६३ ||
86247
86248 यस्य ह्यात्यन्तिको नाशः स्यादसावुदितः स्मृतः |
86249 चित्तनाशो हि नाशः स्यात्स मोक्ष इति कथ्यते || ६४ ||
86250
86251 देहस्य जीवव्यतिरिक्तत्वान्मातु तन्नाशाद्भयं चित्तस्य
86252 जीवस्वरूपत्वात्तन्नाशात्तु जीवस्य भयं युक्तमेवेति चेत्तत्राह - यस्येति |
86253 यस्य उपाधेर्वज्रनिगडवद्बन्धनभूतस्यात्यन्तिको नाशः स्याचेदसौ जीवः
86254 स्मृतः प्रत्यभिज्ञातब्रह्मभावः सन्नुदितो
86255 निरतिशयानन्दलक्षणमभ्युदयं प्राप्तो भवति तादृशचित्तनाशो हि जीवस्य
86256 विनाशः स्यात्संभाव्यते स च तस्य मोक्षः परमपुरुषार्थ इति शास्त्रे कथ्यते
86257 | अतस्तस्मादपि भयसंभावना अत्यन्तमनुचितैवेत्यर्थः || ६४ ||
86258
86259 मृतो नष्ट इति प्रोक्तो मन्ये तच्च मृषा ह्यसत् |
86260 स देशकालान्तरितो भूत्वा भूत्वानुभूयते || ६५ ||
86261
86262 स जीवः | अनुभूयते पुनर्देहान्तरग्रहणे दृश्यते || ६५ ||
86263
86264 इहोह्यन्ते जनैरेवं तरङ्गान्तस्तृणैरिव |
86265 मरणव्यपदेशासु देशकालतिरोहितैः || ६६ ||
86266
86267 इह संसारे मरणव्यपदेशासु नदीषु तरङ्गान्तस्तृणायमानैर्जनैर्जीवैरिह
86268 संसारे देशकालतिरोहितैः स्वरूपैः एवं वर्णितप्रकारा मृतो नष्टो

86269 जातोऽभिवृद्धः सुखी दुःखीत्यादिभावा ऊह्यन्ते भ्रान्त्या वितर्क्यन्त इत्यर्थः
86270 || ६६ ||
86271
86272 वासनावस्थितो जीवो यात्युत्सृज्य शरीरकम् |
86273 कपिर्वनतरुं त्यक्त्वा तर्वन्तरमिवास्थितः || ६७ ||
86274
86275 तथा ऊहनवैचित्र्ये वासनावैचित्र्यं हेतुरित्याशयेनाह - वासनेति || ६७ ||
86276
86277 पुनस्तदपि संत्यज्य गच्छत्यन्यदपि क्षणात् |
86278 अन्यस्मिन्वितते देशे कालेऽन्यस्मिंश्च राघव || ६८ ||
86279
86280 इतश्चेतश्च नीयन्ते जीवा वासनया स्वया |
86281 चिरं तदपिजीविन्या धूर्त्या धात्र्येव बालकाः || ६९ ||
86282
86283 तान् जीवानपिधाय तिरस्कृत्य जीवितुं शीलं यस्याः सा तदपिजीविनी तथाविधया
86284 वासनया धूर्त्या | पुंयोगान्ङीष् | धूर्तासक्तया धात्र्या उपमात्रा || ६९ ||
86285
86286 वासनारज्जुवलिता जीर्णाः पर्वतकुक्षिषु |
86287 जरयन्त्यतिदुःखेन जीवितं जीवजीविकाः || ७० ||
86288
86289 वासनारज्जुभिर्वलिता वेष्टिताः जीवा एव परस्परोपयोगाज्जिविका जीवनोपायो येषां
86290 तथाविधा जीवाः पूर्वं जीर्णाः सांप्रतं जरयन्ति || ७० ||
86291
86292 जरठजरदुपोढदुःखभाराः
86293 परिणतिजर्जरजीविताश्च सत्यः |
86294 हृदयजनितवासनानुवृत्त्या
86295 नरकभरे जनताश्चिरं पतन्ति || ७१ ||
86296
86297 जनता जीवा हृदयविहितवासनानुवृत्त्या निमित्तेन जरठेभ्योऽपि जरन्तो जीर्णाः
86298 सन्त उपोढा दारिद्यरोगवियोगादिदुःखभारा यैस्तथाविधाः परिणत्या
86299 नानायोनिदुर्दशापरिणामैर्जर्जरं दुःखैः खण्डेन शिथिलीकृतमिव
86300 जीवितं यासां तथाविधाश्च सत्यो नरकभरेषु चिरं पतन्ति वसन्तीत्यहो
86301 वासनादोषप्रयुक्ता अनन्ता दुर्दशेत्यर्थः || ७१ ||
86302
86303 श्रीवाल्मीकिरुवाच |
86304
86305 इत्युक्तवत्यथ मुनौ दिवसो जगाम
86306 सायंतनाय विधयेऽस्तमिनो जगाम |
86307 स्नातुं सभा कृतनमस्करणा जगाम
86308 श्यामाक्षये रविकरैश्च सहाजगाम || ७२ ||
86309
86310 इत्यार्षे श्रीवासिष्ठमहारामाय।एन् वाल्मीकीये
86311 मोक्षोपायेषूपशमप्रकरणे संसारोपदेशो नामैकसप्ततितमः सर्गः
86312 || ७१ ||
86313
86314 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
86315 संसारोपदेशो नामैकसप्ततितमः सर्गः || ७१ ||
86316
86317 || त्रयोदशो दिवसः ||
86318
86319 द्विसप्ततितमः सर्गः ७२
86320

86321 श्रीवसिष्ठ उवाच।
86322
86323 देहे जाते न जातोऽसि देहे नष्टे न नश्यसि।
86324 त्वमात्मन्यकलङ्कात्मा देहस्तव न कश्चन॥ १॥
86325
86326 भौतिकत्वाच्छरीरस्य शोकमोहाद्ययोग्यता।
86327 दृश्यदर्शनसंबन्धः साक्षी शुद्धश्च वर्ण्यते॥ १॥
86328
86329 पूर्वार्धार्थे उत्तरार्धार्थो हेतुः॥ १॥
86330
86331 यः कुण्डबदरन्यायो या घटाकाशसंस्थितिः।
86332 तत्रैकस्मिन्क्षते क्षीणे द्वे इति व्यर्थकल्पना॥ २॥
86333
86334 ननु गौरोऽहं स्थूलोऽहमिति आत्मनि देहतादात्म्यानुभवाद्देहनाशे
86335 कथमात्मस्थितिस्तत्राह - य इति। संस्थितिर्मर्यादा सैवात्र ग्राह्या न
86336 तादात्म्यम्। तत्रैवं सति एकस्मिन्कुण्डे घटे वा क्षते नष्टे सति द्वे अपि क्षीणे इति
86337 मूढानां व्यर्थकल्पनेत्यर्थः॥ २॥
86338
86339 विनाशिनि विनष्टेऽस्मिन्देहे स्वां स्थितिमागते।
86340 विनश्यामीति यः खेदी तं धिगस्त्वन्धचेतसम्॥ ३॥
86341
86342 विनाशिनि नश्वरस्वभावे॥ ३॥
86343
86344 यादृशो रश्मिरथयोः स्नेहोद्वेगविवर्जितः।
86345 संबन्धस्तादृशो देहचित्तेन्द्रियमुखैश्चितेः॥ ४॥
86346
86347 यद्यात्मनो देहादितादात्म्यं नास्ति तर्हि कथं शाखाकम्पेन वृक्ष इव
86348 तत्प्रवृत्त्यायं संसरति तत्राह - यादृश इति। स्नेहः प्रीतियोग्यता उद्वेगो
86349 द्वेषयोग्यता ताभ्यां विवर्जितः॥ ४॥
86350
86351 गतेतरेतरापेक्षः सरःपङ्कामलाम्भसाम्।
86352 यथा राघव संबन्धस्तथा देहेन्द्रियात्मनाम्॥ ५॥
86353
86354 इतरेतरापेक्षा परस्परानुरागः॥ ५॥
86355
86356 यादृशोऽध्वा गताध्वानां निरास्थापरिदेवनः।
86357 संयोगो विप्रयोगश्च तादृशो देहदेहिनोः॥ ६॥
86358
86359 गताध्वानामध्वगानां आस्था अहंममताभिमानः परिदेवनं तद्वियोगजो
86360 विलापः तदुभयायोग्य इत्यर्थः॥ ६॥
86361
86362 यथा कल्पितवेतालविकारभयभीतयः।
86363 मिथ्यैव कल्पिता एते तथा स्नेहसुखादयः॥ ७॥
86364
86365 तत्कुतस्तत्राह - यथेति। कल्पितवेतालस्य विकाराः
86366 करालवदनदशनव्यादानादयस्तज्जन्यात्प्रथमभयात्पुनः##-
86367
86368 भूतपञ्चकसंपिण्डाद्रचिता जनताः पृथक्।
86369 एकस्मादेव विटपाद्विचित्रा इव पुत्रिकाः॥ ८॥
86370
86371 काष्ठेतरत्काष्ठभारे किंचिदन्यन्न दृश्यते।
86372 भूतपिण्डेतरद्देहे किंचिदन्यन्न दृश्यते॥ ९॥

86373
86374 भूतपञ्चकविक्षोभनाशोत्पादेषु हे जनाः।
86375 हर्षामर्षविषादानां किं भवन्तो वशं गताः॥ १०॥
86376
86377 को नामातिशयः पुंसां स्त्रीनाम्न्यपरनाम्नि च।
86378 पेलवे भूतसंघाते प्रोद्भूतजनपातवत्॥ ११॥
86379
86380 स्वदेहे स्नेहाद्ययोग्यत्वमुपपाद्य स्त्र्यादिपिण्डेऽपि तद्दर्शयति - क इति।
86381 पतङ्गवद्यामोहरागाभ्यां प्रोद्भूतानां जनानां विषयाग्नौ
86382 पातवद्दृश्यमाना चेष्टा येनातिशयेनोपपद्येत सोऽतिशयः को नामेत्यर्थः
86383 ॥ ११॥
86384
86385 संनिवेशांशवैचित्र्यमज्ञानामेव तुष्टये।
86386 तज्ज्ञानां तु यथाभूतभूतपञ्चकदर्शनम्॥ १२॥
86387
86388 सुकुमारसुन्दरावयवसंनिवेशविशेष एव सोऽतिशयो दृश्यते तत्राह -
86389 संनिवेश इति॥ १२॥
86390
86391 मिथः शिलापुत्रकयोर्यथैकोपलपुत्रयोः।
86392 श्लिष्टयोरपि नो रागस्तथा चित्तशरीरयोः॥ १३॥
86393
86394 भ्रात्रादिषु रागं वारयति - मिथ इति। एकोपलपुत्रयोरेकोपलजन्ययोः।
86395 श्लिष्टयोराश्लिष्टयोः॥ १३॥
86396
86397 मृत्पुंसां यादृशोऽन्योन्यमाशयः संगमे भवेत्।
86398 बुद्धिन्द्रियात्ममनसां संगमे तादृशोऽस्तु ते॥ १४॥
86399
86400 मृन्निर्मितानां पुंसां प्रतिमानां संगमे सत्यपि यादृशो
86401 ममतादिशून्य आशयो भावो भवेदित्याशयकल्पनयोक्तिः॥ १४॥
86402
86403 नान्योन्यस्नेहसंबन्धभाजनं शैलपुत्रकाः।
86404 देहेन्द्रियात्मप्राणाश्च कस्यात्र परिदेवना॥ १५॥
86405
86406 इतश्चेतश्च जातानि यथा संश्लेषयन्त्यलम्।
86407 तरङ्गास्तृणजालानि तथा भूतानि देहदृक्॥ १६॥
86408
86409 इतश्च इतश्च भिन्नप्रदेशयोर्जातानि तृणजालानि॥ १६॥
86410
86411 संयुज्यन्ते वियुज्यन्ते तृणान्यब्धिजले यथा।
86412 मुक्तान्तःकलनं देहे भूतान्यात्मनि वै तथा॥ १७॥
86413
86414 मुक्तान्तःकलनं निर्मुक्तरागाभिमानं यथा स्यात्तथा भूतानि
86415 पुत्रपश्वादिप्राणिनः पृथिव्यादीनि वा स्वारब्धे देहे स्वाधिष्ठाने आत्मनि च
86416 तथा संयुज्यन्ते वियुज्यन्ते चेत्यर्थः॥ १७॥
86417
86418 आत्मा चित्ततया देहभूतान्याश्लेषयन्स्थितः।
86419 तृणान्यावृत्तवृत्तान्तकलनोत्सिक्तमब्धिवत्॥ १८॥
86420
86421 यथा अब्धिरावृत्तवृत्तन्त आवर्ताकारस्तत्कल्पनेन उत्सिक्तमुपचितं वेषं
86422 प्राप्य तृणकाष्ठादीन्याश्लेषयन् स्थितस्तथा आत्मापि चित्ततया चित्तवेषं
86423 प्राप्येत्यर्थः॥ १८॥
86424

86425 प्रबोधाच्चेत्यतां त्यक्त्वा व्रजत्यात्मात्मतां स्वयम् ।
86426 स्वस्पन्दवशतो वारि त्यक्त्वाच्छत्वमिवाच्छतां ॥ १९ ॥
86427
86428 केनोपायेन तर्हि आत्मा भूताश्लेषनिमित्ताच्चित्तभावान्मुच्यते तमाह -
86429 प्रबोधादित्यादिना । त्यक्त्वा आच्छत्वमनच्छत्वम् । नञ्तत्पुरुषे नकारलोपे
86430 सवर्णदीर्घो नुडभावश्छान्दसः ॥ १९ ॥
86431
86432 ततो विश्लिष्टभूतौघो देहं संप्रति पश्यति ।
86433 वायुस्कन्धगतो जन्तुर्वसुधामण्डलं यथा ॥ २० ॥
86434
86435 विश्लिष्टभूतौघो मनःकृतभूताश्लेषनिर्मुक्तः । संप्रति प्रबोधकाले ।
86436 वायुस्कन्धे गतः खेचरो देवादिः ॥ २० ॥
86437
86438 पृथग्भूतगणं दृष्ट्वा देहातीतो भवत्यजः ।
86439 परं प्रकाशमायाति सूर्यकान्तिरिवाहनि ॥ २१ ॥
86440
86441 तत्फलमाह - पृथगिति ॥ २१ ॥
86442
86443 जानात्यथात्मनात्मानं मानमेयामयोज्झितम् ।
86444 मुक्तक्षीबतयेवान्तः स्वां संविदमनुस्मरन् ॥ २२ ॥
86445
86446 मुक्तक्षीबतया निर्मुक्तमदिरामदतया ॥ २२ ॥
86447
86448 आत्मैव स्पन्दते विश्वं वस्तुजातैरिवोदितम् ।
86449 तरङ्गकणकल्लोलैरनन्ताम्ब्वम्बुधाविव ॥ २३ ॥
86450
86451 एवंप्रायमहाबोधा वीतरागा गतैनसः ।
86452 जीवन्मुक्ताश्चरन्तीह महासत्त्वपदं गताः ॥ २४ ॥
86453
86454 यथा चरन्ति विविधैर्मणिरत्नैर्महोर्मयः ।
86455 निरस्तवासनाश्चित्तव्यवहारैस्तथोत्तमाः ॥ २५ ॥
86456
86457 विविधैर्मणिश्रेष्ठैः संबध्यमाना अपि तदनासक्त्या तेषु
86458 शिलाशकलादिसाम्येन यथा चरन्ति व्यवहरन्ति ॥ २५ ॥
86459
86460 न कूलकाष्ठैर्जलधिर्न रजोभिर्नभस्तलम् ।
86461 न म्लायति निजैर्लोकव्यवहारैरिहात्मवान् ॥ २६ ॥
86462
86463 यथा तद्वदिति पदे अत्राध्याहार्ये ॥ २६ ॥
86464
86465 गतैरभ्यागतैः स्वच्छैश्चपलैर्मलिनैर्जडैः ।
86466 न रागो नाम्बुधेर्द्वेषो भोगैश्चाधिगतात्मनः ॥ २७ ॥
86467
86468 स्वच्छैर्न रागो मलिनैर्न द्वेषः । विशेषणान्युभयत्र योज्यानि ।
86469 अधिगतात्मनस्तत्त्वविदः ॥ २७ ॥
86470
86471 यन्मनोमननं किंचित्समग्रं जगति स्थितम् ।
86472 तच्चेत्योन्मुखचित्तत्त्वविलासोल्लसनं विदुः ॥ २८ ॥
86473
86474 कुतो न रागस्तत्राह - यदिति । मनोमननं सर्वं चिद्विलास एवेति ते यतो
86475 विदुरित्यर्थः ॥ २८ ॥
86476

86477 यदहं यच्च भूतादि कालत्रितयभावि यत् |
86478 दृश्यदर्शनसंबन्धविस्तारैस्तद्विजृम्भते || २९ ||
86479
86480 यदहमादि सर्वं दृश्यदर्शनसंबन्धविस्तारैर्भाति तत्केवलं मन एव
86481 विजृम्भते नान्यदित्यर्थः || २९ ||
86482
86483 यद्दृश्यं तदसत्सद्वा दृष्टिमेकामुपाश्रितम् |
86484 अन्यत्त्वलेपकं तस्माद्धर्षशोकदृशौ कुतः || ३० ||
86485
86486 इह दृक् दृश्यं चेति द्वयमध्ये एकां दृष्टिमुपाश्रितं
86487 तदधीनसिद्धिकं यद्दृश्यं तदसत्सद्वेत्यनिर्णीतत्वाद्धर्षशोकायोग्यम् |
86488 अन्यत्स्वतःसिद्धं दृग्रूपं त्वलेपकमसङ्गमुत्पन्नाभ्यामपि
86489 हर्षशोकाभ्यां न युज्यत इति तयोरुभयथापि संभावनैव नास्तीत्यर्थः || ३०
86490 | |
86491
86492 असत्यमेवासत्यं हि सत्यं सत्यं सदेव हि |
86493 सत्यासत्यमसद्विद्धि तदर्थं किं नु मुह्यसि || ३१ ||
86494
86495 किंचासत्ये विषये हर्षशोकौ सत्ये वा सत्यासत्ये वा न त्रिष्वपि कल्पेषु
86496 तद्योग्यतेत्याह - असत्यमेवेति | असत्यमसत्यमेव | तत्र
86497 हर्षशोकयोर्निर्विषयता स्पष्टैव | सत्यं तु
86498 नित्यसत्त्वाल्लाभप्रयुक्तहर्षस्यापगमप्रयुक्तशोकस्य चायोग्यं स्पष्टमेव |
86499 यत्तु तृतीयं सत्यासत्यं तच्च विरुद्धैक्यायोगादसदेवेत्याद्यकल्पमेव
86500 प्रविशति | तथाच न किंचित्तद्योग्यं जगत्यस्तीति तद्विषये मोहोऽयुक्त एवेत्यर्थः
86501 || ३१ ||
86502
86503 असम्यग्दर्शनं त्यक्त्वा सम्यक्पश्य सुलोचन |
86504 न क्वचिन्मुह्यति प्रौढः सम्यगदर्शनवानिह || ३२ ||
86505
86506 दृश्यदर्शनसंबन्धविस्तारैस्तद्विजृम्भते |
86507 दृश्यदर्शनसंबन्धे यत्सुखं पारमात्मिकम् || ३३ ||
86508
86509 किंच भोगसुखार्थं सर्वैर्दृश्यदर्शनयोर्विषयेन्द्रिययोः संबन्ध
86510 इष्यते तत्राभिव्यज्यमानं पारमात्मिकमेव स्वप्रकाशत्वादनुभूत्यभिन्नं
86511 वृत्त्युपाधिकृतभेदतारतम्यादिनिरासेनाखण्डैक्ये ब्रह्मैव तदित्याह ##-
86512
86513 अनुभूतिमयं तस्मात्सारं ब्रह्मेति कथ्यते |
86514 दृश्यदर्शनसंबन्धे सुखसंविदनुत्तमा || ३४ ||
86515
86516 ददात्यज्ञाय संसारं ज्ञाय मोक्षं सदोदयम् |
86517 दृश्यदर्शनसंबन्धसुखमात्मवपुर्विदुः || ३५ ||
86518
86519 विषयाकारवृत्त्या आस्वाद्यमानं विषये रागादिदोषजननेन संसारं ददाति
86520 | तद्विवेकेनाखण्डैकात्मभावेन गृह्यमाणं तु मोक्षमित्यर्थः || ३५ ||
86521
86522 तद्दृश्यवलितं बन्धस्तन्मुक्तं मुक्तिरुच्यते |
86523 दृश्यदर्शनसंबन्धसुखसंविदनामया || ३६ ||
86524
86525 क्षयातिशयमुक्ता चेत्तन्मुक्तिः सोच्यते बुधैः |
86526 दृश्यदर्शनसंबन्धे यानुभूतिः स्वगोचरा || ३७ ||
86527
86528 क्षयातिशयौ पुण्यतारतम्यप्रयुक्तवृत्तिनाशवैशद्योत्कर्षप्रयुक्तौ

86529 तन्मुक्ता चेत् | स्वगोचरा अखण्डपूर्णानन्दस्फुरणात्मिका || ३७ ||
86530
86531 दृश्यदर्शननिर्मुक्ता तामालम्ब्य भवाभवः |
86532 सौषुप्ती दृष्टिरेषा हि यात्येवं स।प्रकाशते || ३८ ||
86533
86534 एवमुक्तस्वरूपालंबने सौषुप्ती स्वरूपावरणदृष्टिर्याति अपगच्छति | एषा
86535 स्वरूपदृष्टिः संप्रकाशते || ३८ ||
86536
86537 एवं च याति तुर्यत्वमेवं मुक्तिरिति स्मृता |
86538 दृश्यदर्शनमुक्तायां युक्तायां परया धिया || ३९ ||
86539
86540 दृश्यदर्शनसंबन्धसंविदस्यां तु राघव |
86541 नात्मा स्थूलो न चैवाणुर्न प्रत्यक्षो न चेतरः || ४० ||
86542
86543 दृश्यदर्शनसंबन्धसंवित् | एवं तुर्यत्वमेतीति पूर्वत्रान्वयः |
86544 तुर्यतालक्षणायां मुक्तौ यादृश आत्मा परिशिष्यते तं दर्शयति -
86545 अस्यां त्वित्यादिना || ४० ||
86546
86547 न चेतनो न च जडो न चैवासन्न सन्मयः |
86548 नाहं नान्यो न चैवैको नानेको नाप्यनेकवान् || ४१ ||
86549
86550 चेतनश्चैतन्यवान् | सन्मयः अस्तित्वाख्यद्वितीयभावविकारप्रचुरः | एकः
86551 एकत्वसंख्यागुणाश्रयः || ४१ ||
86552
86553 नाभ्याशस्थो न दूरस्थो नैवास्ति न च नास्ति च |
86554 न प्राप्यो नाति चाप्राप्यो न वा सर्वो न सर्वगः || ४२ ||
86555
86556 अभ्याशे समीपे तिष्ठतीत्यभ्याशस्थः | अस्ति सत्ताश्रयः || ४२ ||
86557
86558 न पदार्थो नापदार्थो न पञ्चात्मा न पञ्च च |
86559 यदिदं दृश्यतां प्राप्तं मनःशष्ठेन्द्रियास्पदम् || ४३ ||
86560
86561 न पदार्थो वाच्यत्वायोगात् | नापदार्थस्तुर्यादिपदलक्ष्यत्वात् | पञ्चानां
86562 भूतानामात्मा नेति न | पञ्चभूतस्वभावश्च नेत्यर्थः | उक्तार्थे
86563 उपपत्तिमाह - यदिदमिति || ४३ ||
86564
86565 तदतीतं पदं यत्स्यात्तन्न किंचिदिवेह तत् |
86566 यथाभूतमिदं सम्यग्ज्ञस्य संपश्यतो [संपश्यते इति
86567 मुद्रितपुस्तके पाठः] जगत् || ४४ ||
86568
86569 यथाभूतं यथास्थितं सम्यक् तत्त्वतः संपश्यतः || ४४ ||
86570
86571 सर्वमात्ममयं विश्वं नास्त्यनात्ममयं क्वचित् |
86572 काठिन्यद्रवणस्पन्दस्वावकाशावलोकनैः || ४५ ||
86573
86574 कथं तर्हि भूम्यादिभूतता दृश्यते तत्राह - काठिन्येति | आत्मैव
86575 स्वस्मिन् काठिन्यद्रवणस्य स्पन्दस्य खाख्यबृहच्छिद्रस्य अवकाशस्य
86576 प्रकाशस्य च अवलोकनैः क्रमाद्भूवार्यादिषु जगद्भावेषु नटवत्स्थित
86577 इत्यर्थः || ४५ ||
86578
86579 आत्मैव सर्वं सर्वेषु भूवार्यनिलखाग्निषु |
86580 सत्तैवास्ति न वस्तूनां या या राम चिता विना |

86581 व्यतिरिक्तं ततोऽस्मीति विद्धि प्रोन्मत्तजल्पितम् ॥ ४६ ॥
86582
86583 कथमात्मैवैवं स्थित इति निश्चितं तत्राह - सत्तैवेति। वस्तूनां या या
86584 सत्ता सा चिता तत्प्रथात्मना विना यतो नास्ति तत इत्यर्थः ॥ ४६ ॥
86585
86586 एको जगन्ति सकलानि समस्तकाल-
86587 कल्पक्रमान्तरगतानि गतागतानि।
86588 आत्मैव नेतरकलाकलनास्ति काचि-
86589 दित्थंमतिर्भव तयातिगतो महात्मन् ॥ ४७ ॥
86590
86591 उक्तं सर्वं पिण्डीकृत्योपसंहरति - एक इति। समस्ते काले अनन्तेषु
86592 कल्पक्रमेषु च अन्तरे मध्ये गतानि निविष्टानि जगन्ति तेषु सकलानि गतागतानि
86593 जीवसंसरणानि च एक आत्मैव। इतरकलाकलना काचिन्नास्त्येव। हे महात्मन्
86594 त्वं इत्थंमतिः संस्तया मत्या संसारमतिगतो भवेत्यर्थः ॥ ४७ ॥
86595
86596 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये देवदूतोक्ते
86597 मोक्षोपायेषूपशमप्रकरणे मोक्षस्वरूपोपदेशो नाम द्विसप्ततितमः
86598 सर्गः ॥ ७२ ॥
86599
86600 इति श्रीवासिष्ठम्हारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
86601 मोक्षस्वरूपोपदेशो नाम द्विसप्ततितमः सर्गः ॥ ७२ ॥
86602
86603
86604 त्रिसप्ततितमः सर्गः ७३
86605
86606 श्रीवसिष्ठ उवाच।
86607
86608 एवंविचारया दृष्ट्या द्वैतत्यागेन राघव।
86609 स्वभावः प्राप्यते तज्ज्ञैस्तज्ज्ञैश्चिन्तामणिर्यथा ॥ १ ॥
86610
86611 द्वे अहंभावने ग्राहेय् त्याज्याहंभावना परा।
86612 अहंभावत्रयापाये मुक्त्यनिच्छा न कीर्त्यते ॥ १ ॥
86613
86614 स्वभावः स्वस्वरूपावस्थितिलक्षणा मुक्तिः। तज्ज्ञैरात्मज्ञैः।
86615 तज्ज्ञैश्चिन्तामणितत्त्वज्ञैर्दैवैः ॥ १ ॥
86616
86617 अथेमामपरां दृष्टिं शृणु रामानया यथा।
86618 दृश्यस्यात्मानमचलं भविष्यसि च दिव्यदृक् ॥ २ ॥
86619
86620 सर्वाहंभावदृष्टिं दर्शयितुं प्रक्रमते - अथेति ॥ २ ॥
86621
86622 अहं खमहमादित्यो दिशोऽहमहमप्यधः।
86623 अहं दैत्या अहं देवा लोकाश्चाहमहं महः ॥ ३ ॥
86624
86625 महश्चन्द्रादिप्रभा ॥ ३ ॥
86626
86627 अहं तमोऽहमभ्राणि भूः समुद्रादिकं त्वहम्।
86628 रजो वायुरथाग्निश्च जगत्सर्वमिदं त्वहम् ॥ ४ ॥
86629
86630 रजो रेणुः ॥ ४ ॥
86631
86632 जगत्त्रयेऽहं सर्वत्र य आत्मैव किलास्थितः।

86633 कोऽहं किमन्यद्देहादि द्वित्वमेकस्य कीदृशम् ‖ ५ ‖
86634
86635 सर्वातिरिक्तः परिच्छिन्नः कोऽहम् | मदन्यद्देहादि किम् | सर्वभूतस्यैकस्य मम
86636 द्वित्वं स्वगतभेदरूपं कीदृशम् ‖ ५ ‖
86637
86638 इति निश्चयवानन्तर्भूतमात्मतया जगत् |
86639 पश्य हर्षविषादाभ्यां नावशः परिभूयसे ‖ ६ ‖
86640
86641 इति विचार्य निश्चयवान्संस्तदनन्तरं स्वान्तर्भूत जगदात्मतया पश्य ‖ ६ ‖
86642
86643 तन्मयेऽस्मिन्किल जगत्यखिले संस्थितेऽनघ |
86644 किमात्मीयं परं किं स्यात्कमलेक्षण कथ्यताम् ‖ ७ ‖
86645
86646 तन्मये आत्मसमये | स्वार्थे मयट् ‖ ७ ‖
86647
86648 किं तज्ज्ञव्यतिरेकेण विद्यते यदुपागतम् |
86649 हर्षमेतु विषादं वा विषादे ज्ञो जगन्मयः ‖ ८ ‖
86650
86651 यदुपागतं चेदिति शेषः | विषादे तु दृश्यमाने अज्ञ एवासौ | यतो जगन्मयो
86652 न चिन्मय इत्यर्थः ‖ ८ ‖
86653
86654 अहंकारदृशावेते सात्त्विके द्वेऽतिनिर्मले |
86655 तत्त्वज्ञानात्प्रवर्तेते मोक्षदे पारमार्थिके ‖ ९ ‖
86656
86657 एते वक्ष्यमाणे | संधिरार्षः ‖ ९ ‖
86658
86659 परोऽणुः सकलातीतरूपोऽहं चेत्यहंकृतिः |
86660 प्रथमा सर्वमेवाहमित्यन्योक्ता रघूद्वह ‖ १० ‖
86661
86662 अणुः आकाशवदस्थूलस्वभावः | सकलादवस्थात्रयदृश्यादतीतः ‖ १० ‖
86663
86664 अहंकारदृगन्या तु तृतीया विद्यतेऽनघ |
86665 देहोऽहमिति तां विद्धि दुःखायैव न शान्तये ‖ ११ ‖
86666
86667 विद्यते स्वभावतो न शास्त्रतः ‖ ११ ‖
86668
86669 अथ चैतत्त्रयमपि त्यक्त्वा सकलसिद्धये |
86670 यच्छेषं तदुपालम्ब्य तिष्ठावष्टब्धतत्परः ‖ १२ ‖
86671
86672 यत् शेषं शिष्यमाणं निरहंभावं पूर्णचिन्मात्रम् ‖ १२ ‖
86673
86674 सर्वातीतस्वरूपोऽपि सर्वसत्तातिगोऽपि च |
86675 असत्तापूरितजगदस्त्येवात्मा प्रकाशकः ‖ १३ ‖
86676
86677 शोधनेन सर्वातीतस्वरूपो बाधनेन तु सर्वासत्तां गतः | सर्वबाधे
86678 आत्मापरिशेषशङ्कां वारयति - असत्तेति | असत्तया जगद्बाधोपायेनैव
86679 स्वेन आपूरितं जगद्येन ‖ १३ ‖
86680
86681 स्वानुभूत्यैव पश्याशु स एवासि सदोदितः |
86682 साशयं हृदयग्रन्थिं त्यज तत्त्वविदांवर ‖ १४ ‖
86683
86684 युक्तयः शास्त्राणि गुरुवचनानि च दिक्प्रदर्शनमात्रं तत्परिचयस्तु

86685 स्वानुभवेनैवेत्याशयेनाह - स्वानुभूत्येति। आशया
86686 देहादिवासनास्तत्सहितं हृदयग्रन्थिमहंकारतादात्म्याध्यासम्॥ १४॥
86687
86688 नात्मास्त्यनुमया राम न चाप्तवचनादिना।
86689 सर्वदा सर्वथा सर्वं स प्रत्यक्षोऽनुभूतितः॥ १५॥
86690
86691 ननु तं त्वौपनिषदं पुरुस्ऽं पृच्छामि इति
86692 श्रुतेर्धर्माधर्मादिवच्छ्रुतितद्दर्शितयुक्तिमात्रविश्वासादलौकिक आत्मास्तीति
86693 ज्ञायते स कथं स्वानुभववेद्यः स्यात्तत्राह - नेति। न
86694 धर्मादिवदत्यन्तपरोक्षात्मसद्भावं प्रतिपादयितुं श्रुत्यादयः
86695 प्रवृत्ताः किंतु सर्वानुभवसिद्धसत्ताकमात्मानं विवेचयितुमिति भावः॥
86696 १५॥
86697
86698 यदिदं स्पर्शनं स्पन्दं किंचिद्यत्संविदाद्यपि।
86699 तत्सर्वमात्मा भगवान्दृश्यदर्शनवर्जितः॥ १६॥
86700
86701 सर्वेषां स प्रत्यक्ष इति यदुक्तं तदुपपादयति - यदिदमिति।
86702 बाह्याभ्यन्तरविषयेषु अन्तःकरणवृत्तिस्पन्दनात्स्पन्दि यद्दर्शनं
86703 साक्षादर्थप्रथारूपमपरोक्षं प्रसिद्धं यच्च
86704 किंचिदनुमित्युपमितिशाब्दसंविदाद्यपि प्रसिद्धं तत्सर्वं दृश्यस्य
86705 विषयस्य दर्शनस्यान्तःकरणवृत्त्युपाधेश्च वर्जने भगवान्स्वप्रकाश
86706 आत्मैव नित्यापरोक्षः सर्वानुभवसिद्धः परिशिष्यत इत्यर्थः। तथाच श्रुतिः
86707 प्रतिबोधविदितं मतममृतत्वं हि विन्दते इति॥ १६॥
86708
86709 न सन्नासन्नसौ देवो नाणुर्नापि महानसौ।
86710 नाप्येतयोर्दशोर्मध्यं स एवेदं च सर्वतः॥ १७॥
86711
86712 तस्य प्रत्यक्षपरोक्षवेद्यव्यक्ताव्यक्तोभयवैलक्षण्योक्त्या
86713 दृश्यदर्शननिर्मुक्ततामुपपादयति - न सन्नासन्निति। तस्मिन्
86714 जगद्बाधप्रदर्शनेनापि तदुपपादयति - स एवेति॥ १७॥
86715
86716 स एव चैवं वदति स च वक्तुं न युज्यते।
86717 न तदन्यदिदं तात पश्यात्मानमनामयम्॥ १८॥
86718
86719 एवं वागादिकर्मेन्द्रियप्रवृत्तिनिमित्ततया च तदव्यवहार्यं तं परिचीय
86720 वागादेस्तद्विषयस्य च तत्र बाधेन स एव परिशेष्य इत्याशयेनाह - स एवेति
86721 । इदं वागादि तद्व्यवहार्यं च॥ १८॥
86722
86723 नात्मायमयमप्यात्मा संज्ञाभेद इति स्वयम्।
86724 तेनैव सर्वगतया शक्त्या स्वात्मनि कल्पितः॥ १९॥
86725
86726 आत्मानात्मनामरूपविभागस्तेनैव स्वाज्ञानशक्त्या कल्पित इति
86727 बाध्यत्वोपपत्तिरित्याशयेनाह - नेति॥ १९॥
86728
86729 संस्थितः स हि सर्वत्र त्रिषु कालेषु भास्करः [भास्वरः इति
86730 पाठः]।
86731 सूक्ष्मत्वात्सुमहत्त्वाच्च केवलं न विभाव्यते॥ २०॥
86732
86733 नित्यापरोक्षस्वप्रकाशपूर्णस्वभावोऽपि सूक्ष्मत्वात्स्थूलासक्तबुद्धिभिः स न
86734 विभावयितुं शक्य इत्यर्थः॥ २०॥
86735
86736 सत्स्वनन्तपदार्थेषु जीवत्वेनाभिबिम्बति।

86737 आत्मा पुर्यष्टकादर्शे स्वभाववशतः स्वतः ॥ २१ ॥
86738
86739 स्थूलासक्तौ तु तस्य मोहात्पुर्यष्टकोपाधौ प्रतिबिम्बनेन
86740 जीवभावापत्तीर्निमित्तमित्याशयेनाह - सत्स्विति। सत्सु सर्गक्रमेणोत्पन्नेषु
86741 भोग्यभोगायतनाद्यनेकपदार्थेषु ॥ २१ ॥
86742
86743 पुर्यष्टकोदयादेव स्वयमात्मानुभूयते।
86744 सर्वदा सर्वसंस्थः खे घनास्पन्दादिवानिलः ॥ २२ ॥
86745
86746 अनुभूयते अहमित्यभिव्यक्तस्वरूपः क्रियते। घनेन मूर्तेन व्यजनादिना।
86747 आस्पन्दान्नोदनात् ॥ २२ ॥
86748
86749 चिदात्मा सर्वगो व्यापी न क्वचिन्नाम संस्थितः।
86750 यद्वत्सर्वपदार्थानां सत्ता तद्वन्महेश्वरः ॥ २३ ॥
86751
86752 नामेत्यवधारणे। क्वचिद्देहे एव संस्थित इति नेत्यर्थः ॥ २३ ॥
86753
86754 सति पुर्यष्टके तस्मिञ्जीवः स्फुरति नोपले।
86755 सति वायाविव रजः सति दीप इवेक्षणम् ॥ २४ ॥
86756
86757 परिच्छिन्नाहंतया स्फुरणे तु पुर्यष्टकं हेतुरित्याह - सतीति ॥ २४ ॥
86758
86759 इयं पुर्यष्टके स्वेच्छा स्वात्मन्येवात्मनि स्थिते।
86760 सति स्फुरत्यभ्युदिते भानाविव जनैषणा ॥ २५ ॥
86761
86762 पुर्यष्टके इयं प्रसिद्धा स्वेच्छाप्रीतिर्विचित्रभोगेच्छा च परमप्रेमास्पदे
86763 निरतिशयानन्दे स्वात्मनि स्थिते स्फुरति। यथा भानौ सूर्ये नभसि स्थिते सति
86764 सर्वजनानां तत्तत्क्रियाफलैषणा स्फुरति तद्वत्। आत्मनस्तु कामाय सर्वं
86765 प्रियं भवति इति श्रुतेरात्मैव सर्वव्यवहारदूरोऽपि
86766 प्रियाप्रियादिसर्वव्यवहारनिर्वाहक इत्यर्थः ॥ २५ ॥
86767
86768 यदि सूर्ये स्थिते व्योम्नि तादृशोचितसंस्थितिः।
86769 नश्यति व्यवहारोऽयं भास्करे तत्किमागतम् ॥ २६ ॥
86770
86771 अस्त्वेवं किं ततस्तत्राह - यदीति। तादृशे तत्तदेषणाफले उचिता अनुरूपा
86772 स्थितिर्यस्य ॥ २६ ॥
86773
86774 यद्यात्मनि स्थिते देवे तत्सत्ता लब्धसंस्थितिः।
86775 देहो नाशमुपायाति तत्किं नष्टमिहात्मनि [नष्टमिहात्मन इति
86776 पाठः] ॥ २७ ॥
86777
86778 न जायते न म्रियते नादत्ते नाभिवाञ्छति।
86779 न मुक्तो न च बद्धोऽयमात्मा सर्वस्य सर्वदा ॥ २८ ॥
86780
86781 आत्मा तर्हि स्वतः कीदृशस्तमाह - नेति ॥ २८ ॥
86782
86783 आत्माप्रबोधाभ्युदिता निरात्मन्यात्मतां गता।
86784 सर्परज्जुभ्रमाकारा भ्रान्तिर्दुःखाय केवलम् ॥ २९ ॥
86785
86786 अत-एव तस्याज्ञानादेवानर्थभ्रान्तिरित्याह - आत्मेति ॥ २९ ॥
86787
86788 अनादित्वान्न जातोऽयमजातत्वान्न नश्यति।

86789 आत्मात्मव्यतिरिक्तं तु नाभिवाञ्छत्यसंभवात् ‖ ३० ‖
86790
86791 प्रबोधे तर्हि कीदृशस्तमाह - अजातत्वादिति ‖ ३० ‖
86792
86793 दिक्कालाद्यनवच्छेदान्न बद्धोऽयं कदाचन |
86794 बन्धाभावे क्व मुक्तिः स्यादमोक्षस्तेन संस्थितः ‖ ३१ ‖
86795
86796 एवंगुणविशिष्टोऽयमात्मा सर्वस्य राघव |
86797 अविचारवशान्मूढो लोकोऽयं परिरोदिति ‖ ३२ ‖
86798
86799 एवंगुणविशिष्ट इत्थंस्वभाव इति यावत् ‖ ३२ ‖
86800
86801 सम्यगालोकिताशेषपूर्वापरजगत्क्रमः |
86802 मा शोकं गच्छ सुमते मौर्ख्योपगतलोकवत् ‖ ३३ ‖
86803
86804 मौर्ख्येणोपगता ये लोका जनास्तद्वत् ‖ ३३ ‖
86805
86806 द्वे एव कलने त्यक्त्वा मोक्षबन्धात्मिके यथा |
86807 विदुषा व्यवहर्तव्यं यन्त्रणेवात्ममौनिना ‖ ३४ ‖
86808
86809 यथा पर्वतदेशे जलयन्त्रेण पेषणे प्रवृत्ते तत्संनिधिमात्रेण
86810 तत्कुर्वाणेनेव स्थितेन आत्मना स्वतस्तु मौनिना कामादिव्यापारशून्येन
86811 पुरुषेण स्थीयते तथा विदुषा देहादिना व्यवहर्तव्यमित्यर्थः ‖ ३४ ‖
86812
86813 न मोक्षो नभसः पृष्ठे न पाताले न भूतले |
86814 मोक्षो हि चेतो विमलं सम्यग्ज्ञानविबोधितम् ‖ ३५ ‖
86815
86816 सम्यग्ज्ञानेन विबोधितं बोधात्ममात्रतां नीतम् ‖ ३५ ‖
86817
86818 सकलाशास्वसंसक्त्या यत्स्वयं चेतसः क्षयः |
86819 स मोक्षनाम्ना कथितस्तत्त्वज्ञैरात्मदर्शिभिः ‖ ३६ ‖
86820
86821 आशास्वाशास्यमानेषु विषयेष्वसंसक्त्या | स्वयं स्वपरिणामबोधवृत्त्या
86822 क्षयः ‖ ३६ ‖
86823
86824 यावत्प्रबोधो विमलो नोदितस्तावदेव सः |
86825 मौर्ख्याद्दीनतया राम भक्त्या मोक्षोभिवाञ्छ्यते ‖ ३७ ‖
86826
86827 दीनतया कार्पण्येन | भक्त्या नित्यप्राप्तेऽप्यप्राप्तिकल्पनया ‖ ३७ ‖
86828
86829 परं प्रबोधमासाद्य चित्ते चित्तत्त्वतां गते |
86830 दश मोक्षा न वाञ्छ्यन्ते किमुतैको हि मोक्षकः ‖ ३८ ‖
86831
86832 चित्तत्त्वतां पारमार्थिकचिन्मात्रताम् | स्वात्मव्यतिरिक्ता दशमोक्षाश्चेत्स्युस्तेऽपि
86833 न वाञ्छ्यन्ते किमुत एकोऽल्पो मोक्षो मोक्षको वाञ्छ्यते इत्यर्थः ‖ ३८ ‖
86834
86835 अयं मोक्षस्त्वयं बन्धः पेलवां कलनामिति |
86836 परित्यज्य महात्यागी स त्वमेव भवाभव ‖ ३९ ‖
86837
86838 हे अभव सः मोक्षस्त्वमेव भव ‖ ३९ ‖
86839
86840 परिगलितविकल्पनां प्रयातः

86841 सगरसुतौघनिखातमेखलाङ्कम् |
86842 अवनिवलयमन्तरस्तसङ्ग-
86843 श्चिरमनुपालय सर्वदोदितश्रीः || ४० ||
86844
86845 परिगलिता विकल्पना यत्र तथाविधां दशां प्रयातस्त्वं सगरसुतैर्निखाता
86846 मेखला समुद्रस्तदङ्कं तच्चिह्नितमवनिवलयं चिरमनुपालय |
86847 यतस्त्वमन्तः अस्तसङ्गस्ततस्ते राज्यादिपालनं न दोषायेत्यर्थः || ४० ||
86848
86849 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे०
86850 मोक्षोपायेषूपशमप्रकरणे स्वात्मविचारो नाम त्रिसप्ततितमः सर्गः ||
86851 ७३ ||
86852
86853 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे स्वामविचारो
86854 नाम त्रिसप्ततितमः सर्गः || ७३ ||
86855
86856
86857 चतुःसप्ततितमः सर्गः ७४
86858
86859 श्रीवसिष्ठ उवाच |
86860
86861 लीलयाऽपश्यति वपुः कालेनात्मनि जायते |
86862 रम्यस्यापश्यतो वक्रं हृदि दौरूप्यधीरिव || १ ||
86863
86864 प्रमादासंसृतिभ्रान्तिः प्रबोधात्पूर्णता सदा |
86865 जीवन्मुक्तिगुणालिश्च विस्तरेणात्र वर्ण्यते || १ ||
86866
86867 अविचारवशान्मूढो लोकोऽयं परिरोदिति इति यदुक्तं तदादौ प्रपञ्चयति -
86868 लीलयेत्यादिना |
86869 प्रलयसुषुप्त्योरज्ञानावृतत्वान्निरतिशयानन्दरूपत्वात्परमप्रेमास्पदं
86870 स्वस्वरूपमपश्यति आत्मनि कामकर्मवासनापरिपाकक्रमप्राप्तेन
86871 सर्गजागरादिकालेन लीलया चिद्विलासेनैव वपुः
86872 सूक्ष्मस्थूलसमष्टिव्यष्टिशरीरं जायते | यथा रम्यस्य
86873 कान्तापुत्रादेर्वक्रमपश्यतो विरहिपुरुषस्य हृदि
86874 म्लानिकार्श्यादिदौरूप्यापादिका दौर्मनस्यधीर्निरन्तरं जायते तद्वदित्यर्थः
86875 || १ ||
86876
86877 तद्वशादियमायाता महती मेदुरोदरा |
86878 माया मदमहाशक्तिः सुरास्वादलवादिव || २ ||
86879
86880 तस्य देहद्वयस्य वशात्तदहंभावाध्यासेन तद्वशताप्राप्तेरियं
86881 निरतिशयानर्थरूपा माया मिथ्याभूतैव रागलोभमोहादिर्मदस्य
86882 महाशक्तिरायाता || २ ||
86883
86884 तयानया विकारिण्या तदतद्भावभूतया |
86885 इदं संपन्नमखिलं तापादिव मरौ पयः || ३ ||
86886
86887 तयानया रागादिशक्त्या |
86888 प्रवृत्तिभोगपुण्यपापवासनाद्यनर्थपरम्पराविकारवत्या | तस्य
86889 परमात्मनः अतद्भावोऽन्यथाभावस्तेन भूतया लब्धसत्तया || ३ ||
86890
86891 मनो बुद्धिरहंकारो वासनाश्चेन्द्रियाण्यपि |
86892 एवंकलितनामाङ्कैः स्फुरत्यात्माब्धिरम्बुभिः || ४ ||

86893
86894 एवं कलितानि नामान्यङ्कानि रूपाणि च यैस्तथाविधैः स्वस्वरूपाम्बुभिः ॥ ४
86895 ।।
86896
86897 चित्ताहंकारयोर्द्वित्वं वचस्यस्ति न वस्तुतः ।
86898 यच्चित्तं स ह्यहंकारो योऽहंकारो मनो हि तत् ॥ ५ ॥
86899
86900 अनर्थप्राप्तिप्रकारमुक्त्वा तदुच्छेदोपायं वक्तुं
86901 प्रथममर्थचेतनाच्चित्तं
86902 तन्मननान्मनस्तदध्यवसायाद्बुद्धिस्तदभिमानादहंकार इति
86903 एकमेवान्तःकरणमङ्कुरकाण्डमूलप्ररोहशाखादिप्ररोहक्रमेण वृक्ष्ऽ
86904 इव सर्वतः प्रसृतमवतिष्ठत इत्याह - चित्तेति द्वाभ्याम् ॥ ५ ॥
86905
86906 व्यतिरिक्तं हिमाच्छौक्त्यमिति संकल्प्यते यथा ।
86907 मुधैव कल्प्यते भेदश्चित्ताहंकारयोस्तथा ॥ ६ ॥
86908
86909 मनोहंकारयोरन्तर्द्वयोरेकतरक्षये ।
86910 क्षीणे द्वे एव हि यथा पटशौक्लथे पटक्षये ॥ ७ ॥
86911
86912 ऐक्योक्तिफलमाह - मन इति ॥ ७ ॥
86913
86914 तुच्छां मोक्षधियं त्यक्त्वा बन्धबुद्धिं तथैषणाम् ।
86915 स्ववैराग्यविवेकाभ्यां केवलं क्षपयेन्मनः ॥ ८ ॥
86916
86917 इदानीं तदुच्छेदोपायमाह - तुच्छामिति ॥ ८ ॥
86918
86919 मोक्षो मेऽस्त्विति चिन्तान्तर्जाता चेदुत्थितं मनः ।
86920 मननोत्के मनस्युच्चैर्वपुर्दोषाय केवलम् ॥ ९ ॥
86921
86922 मोक्षेच्छा कुतस्त्याज्या तत्राह - मोक्ष इति । मनसि मननोत्के सति तदेव वपुः
86923 शरीराकारं भवति तच्च पुनर्बहिर्मुखतापादनाद्दोषायेत्यर्थः ॥ ९ ॥
86924
86925 आत्मन्यतीते सर्वस्मात्सर्वभूतेऽथवा तते ।
86926 को बन्धः कश्च वा मोक्षो निर्मूलं मननं कुरु ॥ १० ॥
86927
86928 परिच्छिन्नवपुर्भाव एवास्य दोषो न शुद्धात्मभावो जगदात्मभावो
86929 वेत्याशयेनाह - आत्मनीति । तस्मात्परिच्छेदमननमेव निर्मूलं
86930 कुर्वित्यर्थः ॥ १० ॥
86931
86932 वायुः स्पन्दनधर्मत्वाद्यदा चलति देहके ।
86933 तदा स्फुरति हस्ताङ्गरसनापल्लवावली ॥ ११ ॥
86934
86935 प्राणादिवाय्वधीनचलनादिधर्मकदेहादिवैलक्षण्यमात्मनो दर्शयति -
86936 वायुरित्यादिना । स्फुरति संचलति ॥ ११ ॥
86937
86938 पादपे पल्लवश्रेणीं चालयत्यनिलो यथा ।
86939 तथैवाङ्गावलीं वायुर्देहे संचालयत्यलम् ॥ १२ ॥
86940
86941 चित्सर्वव्यापिनी सूक्ष्मा न चला नैव चाल्यते ।
86942 न स्वतः स्पन्दमायाति देवाचल इवानिलैः ॥ १३ ॥
86943
86944 देवाचलो मेरुः ॥ १३ ॥

86945
86946 प्रतिबिम्बितसर्वार्था केवलं स्वात्मनि स्थिता ।
86947 प्रकाशयति बोधेन जगन्तीमानि दीपवत् ॥ १४ ॥
86948
86949 नन्वस्तु शुद्धात्मभावे एवं सर्वात्मभावे तु
86950 शाखाचलनाद्वृक्षस्येवात्मनश्चलनं दुर्वारमिति चेत्तत्राह -
86951 प्रतिबिम्बितेति । तथाच चलदनेकप्रतिबिम्बात्मभावापन्नापि स्फटिकशिला यथा
86952 कूटस्था तथा आत्मापीति भावः ॥ १४ ॥
86953
86954 तत्र कोऽयं मुधा मोहो भवतामतिदुःखदः ।
86955 अयं सोऽहं ममाङ्गानि ममेदं चेति दुर्धियाम् ॥ १५ ॥
86956
86957 तत्रैवमत्यन्तवैधर्म्ये सति अयं देहः स प्रसिद्धोऽहम् । इदं बाह्यं
86958 स्त्रीपुत्रादि च मम इति मोहः । भवतामिति रामेतरजनान्प्रत्युक्तिः । दुस्थिता
86959 धीर्येषाम् । यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञाः इति
86960 ध्यायत्यर्थं प्रति दुरः अगतित्वात् गैकारकेतरपूर्वपदस्य यण् नेष्यते
86961 इत्युक्तेर्न यण् ॥ १५ ॥
86962
86963 इति कल्लोलहतया दृशा नित्यमनित्यया ।
86964 ज्ञत्वकर्तृत्वभोक्तृत्वक्रिया समुपलभ्यते ॥ १६ ॥
86965
86966 एवमत्यन्तवैधर्म्येऽपि देहे ज्ञत्वादय आत्मनि कर्तृत्वादयश्च
86967 विरुद्धधर्मा अविद्याकल्लोलरागाद्युपहतया
86968 देहादितादात्म्यसंसर्गाध्यासप्रयुक्तत्वादनित्यया
86969 भ्रान्तिदृशैवोपलभ्यन्त इत्यर्थः ॥ १६ ॥
86970
86971 तत्रायमहमागन्ता भोक्ता कर्तेति जायते ।
86972 मुधैवाज्ञाततापोत्था मृगतृष्णेव वासना ॥ १७ ॥
86973
86974 उपलब्ध्यनुसारेणैवोत्तरोत्तरभ्रान्तिबीजभूता वासनापि जायत इत्याह -
86975 तत्रेति । अज्ञातः तूलाज्ञानावृतस्तापो मरुदातपस्तदुत्था ॥ १७ ॥
86976
86977 अज्ञतैषा मनोमत्तमृगं विषयतर्षुलम् ।
86978 असत्यैव हि सत्येव मृगतृष्णेव कर्षति ॥ १८ ॥
86979
86980 विज्ञाता सत्यरूपाङ्ग नाशं याति पलायते ।
86981 विप्रमध्यात्परिज्ञाता यथा चाण्डालकन्यका ॥ १९ ॥
86982
86983 अविद्या संपरिज्ञाता न चैनं [एनं मनोमृगम्] परिकर्षति ।
86984 मृगतृष्णा परिज्ञाता तर्षुलं नावकर्षति ॥ २० ॥
86985
86986 परमार्थावबोधेन समूलं राम वासना ।
86987 दीपेनेवान्धकारश्रीर्गलत्यालोक एति च ॥ २१ ॥
86988
86989 आलोकः अपरिच्छिन्नात्मप्रकाशः । एति आविर्भवति ॥ २१ ॥
86990
86991 नास्त्यविद्येति संजाते निश्चये शास्त्रयुक्तितः ।
86992 गलत्यविद्या तापेन तुषारकणिका यथा ॥ २२ ॥
86993
86994 देहस्यास्य जडस्यार्थे किं भोगैरितिनिश्चयः ।
86995 भिनत्त्याशामलं ज्ञाता पञ्जरं केसरी यथा ॥ २३ ॥
86996

86997 इतिनिश्चय इति बहुव्रीहिः | ज्ञाता तत्त्वज्ञः | आशाप्रयोजकं मलमज्ञानं
86998 भिनत्ति || २३ ||
86999
87000 आशापरिकरे राम नूनं परिहृते हृदा |
87001 पुमानागतसौन्दर्यो ह्लादमायाति चन्द्रवत् || २४ ||
87002
87003 आशायाः परिकरे परिवारभूते देहाभिमानादौ || २४ ||
87004
87005 परां शीतलतामेति वृष्टिधौत इवाचलः |
87006 निर्वृतिं परमां धत्ते प्राप्तराज्य इवाधमः || २५ ||
87007
87008 अधमो दरिद्रः || २५ ||
87009
87010 शोभते परया लक्ष्म्या शरदीव नभस्तलम् |
87011 आत्मन्येव न मात्युच्चैः कल्पस्यान्त इवार्णवः || २६ ||
87012
87013 न माति न संमितो भवति | न परिच्छिद्यत इति यावत् || २६ ||
87014
87015 भवत्यपेतसंरम्भो वृष्टिमूक इवाम्बुदः |
87016 तिष्ठत्यात्मनि संवेत्ता प्रशान्त इव वारिधिः || २७ ||
87017
87018 अपेतसंरम्भस्त्यक्तदुरभिनिवेशः | वर्षासु वृष्ट्या शरदि मूको
87019 गर्जनादिशून्यः || २७ ||
87020
87021 परं धैर्यमुपादत्ते स्थैर्यं मेरुरिवाचलः |
87022 राजते स्वच्छया लक्ष्म्या शान्तेन्धन इवानलः || २८ ||
87023
87024 धैर्यं विषयैरप्रधृष्यताम् | स्थैर्यं भयस्थानैरप्रकम्प्यताम् || २८ ||
87025
87026 भवत्यात्मनि निर्वाणः प्रशान्त इव दीपकः |
87027 तृप्तिमायाति परमां नरः पीतामृतो यथा || २९ ||
87028
87029 अन्तर्दीपो घट इव मध्यज्वाल इवानलः |
87030 स्फुरद्दीप्तिर्मणिरिव प्रयात्यन्तः प्रकाशताम् || ३० ||
87031
87032 सर्वात्मकं सर्वगतं सर्वेशं सर्वनायकम् |
87033 सर्वाकारं निराकारं स्वमात्मानं प्रपश्यति || ३१ ||
87034
87035 व्यवहारे सर्वाकारं परमार्थतो निराकारम् || ३१ ||
87036
87037 हसत्यलमतीतास्ताः [अतीताः स्वाः इत्यपि क्वचित्] पेलवा दिवसावलीः |
87038 यासु स्मरशरश्रेणीचपलं चित्तमास्थितम् || ३२ ||
87039
87040 सङ्गरङ्गविनिष्क्रान्तः शान्तमानमनोज्वरः |
87041 अध्यात्मरतिरासीनः पूर्णः पावनमानसः || ३३ ||
87042
87043 विषयिजनसङ्गाद्विषयानुरञ्जनाच्च विनिष्क्रान्तः || ३३ ||
87044
87045 निर्मृष्टकामपङ्काङ्कश्छिन्नबन्धनिजभ्रमः |
87046 द्वन्द्वदोषभयोन्मुक्तस्तीर्णसंसारसागरः || ३४ ||
87047
87048 शीतोष्णसुखदुःखादयो द्वन्द्वदोषाः || ३४ ||

87049
87050 प्राप्तानुत्तमविश्रान्तिर्लब्धालभ्यपरास्पदः |
87051 अनिवृत्तिपदं प्राप्तो मनसा कर्मणा गिरा || ३५ ||
87052
87053 अनिवृत्तिपुनरावृत्तिशून्यं पदं साम्राज्यम् | मनसेत्यादेरुत्तरत्रान्वयः ||
87054 ३५ ||
87055
87056 सर्वाभिवाञ्छितारम्भो न किंचिदपि वाञ्छति |
87057 सर्वानुमोदितानन्दो न किंचिदनुमोदते || ३६ ||
87058
87059 सर्वैर्जनैरुपादेयतया अभिवाञ्छित आरम्भश्चारित्र्यं यस्य |
87060 आनन्दश्चारित्र्यफलम् || ३६ ||
87061
87062 न ददाति न चादत्ते न स्तौति न च निन्दति |
87063 नास्तमेति न चोदेति न तुष्यति न शोचति || ३७ ||
87064
87065 अस्तं स्वरूपतिरोधानं नैति नोदेति | उदयं पुनः स्वरूपाविर्भावं च नैति
87066 सकृद्विभातत्वादित्यर्थः || ३७ ||
87067
87068 सर्वारम्भपरित्यागी सर्वोपाधिविवर्जितः |
87069 सर्वाशासंपरित्यागी जीवन्मुक्त इति स्मृतः || ३८ ||
87070
87071 सर्वैषणाः परित्यज्य चेतसा भव मौनवान् |
87072 धारा निरवशेषेण यथा त्यक्त्वा पयोधरः || ३९ ||
87073
87074 रामं प्रति तल्लक्षणानि शिक्षयति - सर्वैषणा इत्यादिना | निरवशेषेण
87075 निःशेषतया धाराः जलानि त्यक्त्वा पयोधरो यथा भवति तथेत्यर्थः || ३९ ||
87076
87077 न तथा सुखयत्यङ्ग संलग्ना वरवर्णिनी |
87078 यथा सुखयति स्वान्तमिन्दुशीता निराशता || ४० ||
87079
87080 एषणात्यागमेव प्रशंसति - न तथेत्यादिना || ४० ||
87081
87082 न तथेन्दुः सुखयति कण्ठलग्नोऽपि राघव |
87083 नैराश्यं सुखयत्यन्तर्यथा सकलशीतलम् || ४१ ||
87084
87085 सकलं जगच्छीतलं यस्मात्तत्सकलशीतलम् || ४१ ||
87086
87087 पुष्पपूर्णनवलतो न तथा राजते मधुः |
87088 यथोदारमतिर्मौनी नैराश्यसममानसः || ४२ ||
87089
87090 न हिमाद्रेर्न मुक्ताभ्यो न रम्भाभ्यो न चन्दनात् |
87091 न च चन्द्रमसः शैत्यं नैराश्याद्यदवाप्यते || ४३ ||
87092
87093 अपि राज्यादपि स्वर्गादपीन्दोरपि माधवात् |
87094 अपि कान्तासमासङ्गान्नैराश्यं परमं सुखम् || ४४ ||
87095
87096 तृणवन्नोपकुर्वन्ति यत्र त्रिभुवनश्रियः |
87097 सा परा निर्वृतिः साधो नैराश्यादुपलभ्यते || ४५ ||
87098
87099 आपत्करञ्जपरशुं पराया निर्वृतेः पदम् |
87100 पुष्पगुच्छं शमतरोरालम्बस्व निराशताम् || ४६ ||

87101
87102 गोष्पदं पृथिवी मेरुः स्थाणुराशाः समुद्रिकाः |
87103 तृणं त्रिभुवनं राम नैराश्यालंकृताकृतेः || ४७ ||
87104
87105 स्थाणुश्छिन्नावशिष्टतरुः | आशा दिशः | समुद्रिकाः क्षुद्रसंपुटिकाः || ४७
87106 | |
87107
87108 दानादानसमाहारविहारविभवादिकाः |
87109 क्रिया जगति हस्यन्ते निराशैः पुरुषोत्तमैः || ४८ ||
87110
87111 दानं लौकिकं शास्त्रीयं च | आदानं धनादेः स्वीकारः | समाहारः
87112 संग्रहेण कोशाद्युपचयः | विहारो धनव्ययेन पुत्रक्रीडनम् | विभवा
87113 वस्त्रालंकारान्नपानादिसंभारसंपत्तयस्तदादिकाः | हस्यन्ते
87114 वह्वायासतुच्छफलानर्थबीजस्य मूढैरन्यथाभिमतत्वेन हासयोग्यत्वादिति
87115 भावः || ४८ ||
87116
87117 पदं यस्य न बध्नाति कदाचित्कलना हृदि |
87118 तृणीकृतत्रिभुवनः केनासाधुपमीयते || ४९ ||
87119
87120 कलना आशा || ४९ ||
87121
87122 इदमेवास्त्विदं मास्तु ममेति हृदि रञ्जना |
87123 न यस्यास्ति तमात्मेशं तोलयन्ति कथं जनाः || ५० ||
87124
87125 आत्मनो मनस ईशं स्वाधीनचित्तम् | आत्मा स्वयमेवेशः सर्वेश्वरस्तं वा ||
87126 ५० ||
87127
87128 सर्वसंकटपर्यन्तमसंकटमलं सुखम् |
87129 सौभाग्यं परमं बुद्धेर्नैराश्यमवलम्ब्यताम् || ५१ ||
87130
87131 पर्यन्तं पारम् | बुद्धेः परमं सौभाग्यं सार्थक्यम् || ५१ ||
87132
87133 नाशास्तेनत्वमाशानां विद्धि मिथ्याभ्रमं जगत् |
87134 वहद्रथस्थदिक्चक्रपरावर्तवदुत्थितम् || ५२ ||
87135
87136 हे राम ते तव आशा न सन्ति | त्वं च आशानां संबन्धी नासि | अतो
87137 वैराग्यादिसाधनसंपत्त्या मुख्याधिकारित्वात्तत्त्वज्ञानसंपत्त्या जगत् वहति
87138 धावति रथे स्थितस्य पुंस उभयपार्श्वदिशोर्भ्रान्त्या
87139 तरुगुल्मादेश्चक्राकारपरावर्तवन्मिथ्याभ्रममात्रं विद्धित्यर्थः | अथवा
87140 न आशाऽवलम्ब्यताम् | आशानां स्तेनत्वं
87141 विवेकविज्ञानापहारेणात्मसुखविभ्रंशकत्वमेव | जागतं हि सुखं
87142 मूढैराशासहस्रैराशास्यते | जगत्तु मिथयभ्रमं वहति रथे
87143 स्थितयोश्चक्रयोरूर्ध्वाधोदिक्षु परावर्तो यद्वन्नेम्यवलम्बिपिपीलिकादेः
87144 पतनपेषणाद्यनर्थहेतुस्तद्वत्स्वावलम्बिनां
87145 जननमरणाद्यनर्थार्थमेवोत्थितं विद्धित्यर्थः | अथवा ननु
87146 उत्कृष्टसुखाशया
87147 निकृष्टसुखाशाप्रमोषदर्शनात्पूर्वपूर्वाशाप्रमोषार्थमाशान्तरो##-
87148 - नेति | उत्कृष्टाशानां निकृष्टास्तेनत्वं अभिप्रेत्य नैराश्यं
87149 मयोक्तमिति न विद्धि | यतो जगन्मिथ्यावस्तुष्वेव आशापरम्पराजननेन
87150 भ्रमयति तथाविधम् | उत्कर्षनिरूपकापकर्षस्यैवाप्रसिद्धेः | यतो
87151 वहद्रथस्थस्य दिक्चक्रेषु पर्यायेण परावर्तो भ्रमणं वहद्रथवेगेन
87152 दिङ्मोहो वा तद्वदुत्थितं तदित्यर्थः | अथवा न आशास्तेनत्वमाशानाम् | वित् हि

87153 इति च्छेदः। वित् आत्मवेत्ता किंचिदपि नाशास्ते न वाञ्छति। हि
87154 यस्माज्जगन्मिथ्याभ्रमम्। नाशास्यं पुरुषार्थरूपं जगत्यस्ति अतस्त्वं
87155 आशानां संबन्धी न भवेत्यर्थः। शेषं प्राग्वत्॥ ५२॥
87156
87157 किं मुह्यसि महाबाहो मूर्खवद्बोधितोऽपि सन्।
87158 ममेदं तदयं सोऽहमित्युद्भ्रान्तेन चेतसा॥ ५३॥
87159
87160 आत्यन्तिकनैराश्योपायमन्विष्य तददर्शनान्मुह्यमानमिव राममुपलक्ष्य
87161 देहादावहंममतात्याग एव प्रागुक्तस्तदुपाय इत्याग्रहेण स्मारयन्नाह ##-
87162 पूर्वोत्तरकालप्रसिद्धः अयं वर्तमानकाले प्रत्यक्ष अहमेवेति किं
87163 मुह्यसीत्यर्थः॥ ५३॥
87164
87165 आत्मैवेदं जगत्सर्वं नानातेह न विद्यते।
87166 एकरूपं जगज्ज्ञात्वा धीरैर्नाम न खिद्यते॥ ५४॥
87167
87168 अस्त्वेवं तथापि कथमाशाखेदनिवृत्तिस्तत्राह - आत्मैवेति॥ ५४॥
87169
87170 यथाभूतपदार्थौघदर्शनादेव राघव।
87171 परमाश्वासनं बुद्धेर्नैराश्यमधिगच्छति॥ ५५॥
87172
87173 यथाभूतानां यथार्थात्मभूतानां पदार्थौघानां दर्शनात्॥ ५५॥
87174
87175 भावाभावविसंवादमुक्तमाद्यन्तयोः स्थितम्।
87176 यद्रूपं तत्समालम्ब्य पदार्थानां स्थितिं कुरु॥ ५६॥
87177
87178 कीदृशं तर्हि सर्वपदार्थानां यथार्थरूपं तदाह - भावेति।
87179 विसंवादो विकल्पः॥ ५६॥
87180
87181 वैराग्यवीरमनसो मायेयमतिमोहिनी।
87182 पलाय्य याति संसारी मृगी केसरिणो यथा॥ ५७॥
87183
87184 सर्वविकल्पपरित्यागलक्षणमहावैराग्येण वीरं मनो यस्य तस्मात्॥ ५७॥
87185
87186 कान्तामुद्दाममदनां लोलां वनलतामिव।
87187 जर्जरोपलपाञ्चालीसमां पश्यति धीरधीः॥ ५८॥
87188
87189 एवं कामादिदोषा अपि पलायन्त इत्याशयेनाह - कान्तामिति। जर्जरा या
87190 उपलपाञ्चाली पाषाणप्रतिमा तत्समाम्॥ ५८॥
87191
87192 भोगा नानन्दयन्त्यन्तः खेदयन्ति न चापदः।
87193 दृश्यश्रियो हरन्त्यङ्ग नतमद्रिमिवानिलाः॥ ५९॥
87194
87195 हरन्ति धैर्यात्प्रच्यावयन्ति। अङ्गेति संबोधने॥ ५९॥
87196
87197 रक्तबालाङ्गनस्यापि ज्ञस्योदारधिया मुनेः।
87198 कणशः पांसुतां यान्ति मनसः स्मरसायकाः॥ ६०॥
87199
87200 रक्ता अनुरक्ता बालाङ्गना यस्मिंस्तथाविधस्यापि॥ ६०॥
87201
87202 रागद्वेषैः स्वरूपज्ञो नावशः परिकृष्यते।
87203 स्पन्द एवास्य नैताभ्यां किमुताक्रमणं भवेत्॥ ६१॥
87204

87205 स्वरूपमात्मतत्त्वं तज्ज्ञः ॥ ६१ ॥
87206
87207 समदृष्टलतालोलवनितोऽद्रिशिलाकृतिः ।
87208 रमते नैष भोगेषु पान्थो मरुमहीष्विव ॥ ६२ ॥
87209
87210 समं तुल्यरूपं यथा स्यात्तथा दृष्टे लता च लोलवनिता च येन । अत##-
87211
87212 अयत्नोपनतं सर्वं लीलयाऽसक्तमानसः ।
87213 भुङ्क्ते भोगभरं प्राज्ञस्त्वालोकमिव लोचनम् ॥ ६३ ॥
87214
87215 तर्हि किमाहाराद्यपि त्यजति तत्राह - अयत्नेति । सर्वमनिषिद्धान्नपानादि ।
87216 लीलया देहधारणमात्रनुकूलचेष्टया । असक्तमानसत्वे लोचनदृष्टान्तः ॥ ६३
87217 । ।
87218
87219 काकतालीयवत्प्राप्ता भोगाली ललनादिका ।
87220 स्वादिताप्यङ्ग धीरस्य न दुःखाय न तुष्टये ॥ ६४ ॥
87221
87222 गृहस्थस्य तत्त्वविदः स्वललनादिभोगास्वादेऽपि न
87223 कश्चिद्रागिवदतिशयभ्रमोऽस्तीत्याह - काकेति ॥ ६४ ॥
87224
87225 सम्यग्दृष्टपथं तज्ज्ञं सुखदुःखमती मनाक् ।
87226 द्वे वीच्याविव शैलेन्द्रं क्षोभं नेतुं न शक्नुतः ॥ ६५ ॥
87227
87228 सम्यक् दृष्टः परिचितः पन्थाः प्रत्यग्दृष्टिमार्गो येन तम् ।
87229 ऋक्पूरब्धूःपथाम् - इति अप्रत्यये भस्य टेर्लोपः । शैलेन्द्रं मन्दरम् ॥
87230 ६५ ॥
87231
87232 हेलयालोकयन्भोगान्मृदुर्दान्तो गतज्वरः ।
87233 स्वमेव पदमालम्ब्य सर्वभूतान्तरस्थितम् ॥ ६६ ॥
87234
87235 हेलया अवहेलनया । असत्यताबुद्ध्येत्यर्थः । आलोकयन् स्वमात्मपदमेवालम्ब्य
87236 तिष्ठतीति शेषः ॥ ६६ ॥
87237
87238 ज्ञस्तिष्ठति गतव्यग्रो व्यग्रेणापि समन्वितः ।
87239 जगन्ति जनयन्नेव ब्रह्मेवात्मपरायणः ॥ ६७ ॥
87240
87241 व्यग्रेण तत्तत्कालोचितक्रियाव्यापृतेनापि देहेन्द्रियादिना समन्वितो ज्ञस्तत्त्ववित्
87242 गतव्यग्रो निर्विक्षेप एव तिष्ठति । ब्रह्मा हिरण्यगर्भ इव ॥ ६७ ॥
87243
87244 आपतत्सु यथाकालं यथादेशं यथाक्रमम् ।
87245 सुखदुःखेषु न क्षोभमेति भूभृदृतुष्विव ॥ ६८ ॥
87246
87247 भूभृत् पर्वतः । ऋतुषु वसन्तादिषु ॥ ६८ ॥
87248
87249 मज्जतोऽपि बहुज्ञस्य राम कर्मेन्द्रियभ्रमैः ।
87250 असक्तमनसो नित्यं न किंचिदपि मज्जति ॥ ६९ ॥
87251
87252 कर्मेन्द्रियाणां वागादीनां भ्रमैर्व्यापारैर्विषयेषु मज्जतोऽपि ॥ ६९ ॥
87253
87254 कलङ्क्यन्तः कलङ्केन प्रोच्यते हेम नान्यथा ।
87255 भावासक्त्या समासक्त उक्तो जन्तुर्हि नान्यथा ॥ ७० ॥
87256

87257 अन्तर्दोषसङ्गस्यैव दूषकत्वं न बहिःसङ्गस्येत्यत्र दृष्टान्तमाह -
87258 कलङ्कीति। हेम अन्तःकलङ्केनैव कलङ्कि उच्यते अन्यथा बहिः पङ्कादिलेपेन
87259 तथा नोच्यते तद्वदित्यर्थः॥ ७०॥
87260
87261 शरीराद्व्यतिरिक्तं ज्ञं पश्यतः प्रविवेकिनः।
87262 विकर्तिताङ्गकस्यपि न किंचित्प्रविकर्तितम्॥ ७१॥
87263
87264 अन्तःसङ्गत्यागे देहदुःखादेरपि न प्रसक्तिरित्याह - शरीरादिति॥ ७१॥
87265
87266 सकृत्प्रभातं विमलं यज्ज्ञातं ज्ञातमेव तत्।
87267 नहि बन्धुः परिज्ञातः पुनरज्ञाततां व्रजेत्॥ ७२॥
87268
87269 देहातिरिक्तात्मविस्मरणे तर्हि पुनर्दुःखं स्यात्तत्राह - सकृदिति। न
87270 विस्मरणप्रसक्तिरित्यर्थः॥ ७२॥
87271
87272 सर्पभ्रान्तौ निवृत्तायां न रज्ज्वां सर्पभावना।
87273 पुनरेति यथा प्रावृण्नदी गिरितटाच्च्युता॥ ७३॥
87274
87275 विस्मरणाप्रसक्तौ सदृष्टान्तोपपत्तिकं कारणमाह - सर्पेत्यादिना॥ ७३
87276 ।।
87277
87278 न हेम तापशुद्धाङ्गं स्वभावमलमागतम्।
87279 कर्दमे मग्नमपि सत्समादत्ते मलं पुनः॥ ७४॥
87280
87281 अलमत्यन्तं स्वभावं हेममात्रतामागतं प्राप्तम्॥ ७४॥
87282
87283 क्षीणे स्वहृदयग्रन्थौ न बन्धोऽस्ति पुनर्गुणैः।
87284 यत्नेनापि पुनर्बद्धं केन वृन्ते च्युतं फलम्॥ ७५॥
87285
87286 वृक्षस्थवृन्ताच्च्युतं फलं पुनर्वृन्ते केन समर्थेनापि महतापि
87287 प्रयत्नेन पूर्ववद्बद्धम्। केनचिदित्यर्थः॥ ७५॥
87288
87289 अवच्छेदविचाराभ्यामभितः खण्डशो गतम्।
87290 पाषाणं च मणिं चैव संधातुं कस्य शक्तता॥ ७६॥
87291
87292 यथा पाषाणान्तर्गतं मणिं पाषाणच्छेदनेन मणितत्त्वविचारेण च
87293 अभितः अमण्यंशखण्डनतो गतं प्राप्तं पुनः पूर्ववत्तं पाषाणं
87294 मणिं च संधातुं कस्याभाग्यस्य शक्ततास्तीत्यर्थः॥ ७६॥
87295
87296 विज्ञातायामविद्यायां कः पुनः परिमज्जति।
87297 परिज्ञाय श्वपाकानां यात्रां कः प्रेक्षते द्विजः॥ ७७॥
87298
87299 यात्रां उत्सवसमाजगमनम्॥ ७७॥
87300
87301 शुद्धाम्भसि यथा क्षीरधीर्विचारान्निवर्तते।
87302 संसारवासना तद्वद्धीविचारान्निवर्तते॥ ७८॥
87303
87304 क्षीरधीर्दुग्धभ्रान्तिः। धीविचाराद्धीस्थात्मदर्शनात्॥ ७८॥
87305
87306 मध्वम्बुशङ्कया तावद्विप्रवर्यैः प्रपीयते।
87307 यावन्नात्र परिज्ञातं परिज्ञातं प्रहीयते॥ ७९॥
87308

87309 मधु मद्यम्। अम्बुशङ्कया जलभ्रान्त्या॥ ७८॥
87310
87311 रूपलावण्ययुक्तापि चित्रकान्तेव कामिनी।
87312 द्रव्यमात्रसमारम्भात्तत्त्वविद्भिर्विलोक्यते॥ ८०॥
87313
87314 चित्रलिखिता कान्ता स्त्रीप्रतिमेव॥ ८०॥
87315
87316 यथा मषीकुसुम्भादि स्त्रियाश्चित्रे तथैव हि।
87317 जीवत्या अपि केशोष्ठं कस्तां परि किल ग्रहः॥ ८१॥
87318
87319 यथा चित्रे स्त्रिया मषीकुसुम्भादिरङ्गभेदाः पञ्चभूतमात्रं तथा
87320 जीवत्याः केशोष्ठाद्यपीति तत्त्वतः स्त्र्यादिविषयो यथा
87321 अनुभूयमानाद्रूपात्तत्त्वतोऽन्यथैव वर्तते तथा स्वात्मानुभवोऽपि
87322 परमप्रेमास्पदत्वेन प्रसिद्धादानन्दरूपादन्यथैव किं न स्यादिति
87323 चेत्तत्राह - अनुभूत इति। यथा गुडस्य स्वादुर्मधुरसोऽनुभूतस्य गुडस्य
87324 अनुभवकारणस्य जिह्वादेरनुभवितुर्देवदत्तादेर्वा
87325 दाहविकर्तनादियत्नशतैरपि नासौ माधुर्यानुभवः किंतु तिक्ताद्यनुभव
87326 इत्यन्यथाकर्तुं न शक्यते आत्मनस्तात्त्विकानन्दानुभवोऽपि तथैवेत्यर्थः॥ ८२
87327 ।।
87328
87329 अनुभूतो गुडः स्वादुरपि दाहविकर्तनैः।
87330 न शक्यतेऽन्यथाकर्तुं तत्त्वालोकस्तथात्मनः॥ ८२॥
87331
87332 यदा सकृदप्यनुभूतो नान्यथाकर्तु शक्यस्तदा तदैकव्यसनितया
87333 सदैवानुभूयमानस्तु सुतरामित्याशयेनाह - परव्यसनिनीत्यादिना॥ ८३॥
87334
87335 परव्यसनिनी नारी व्यग्रापि गृहकर्मणि।
87336 तदेवास्वदयत्यन्तः परसङ्गरसायनम्॥ ८३॥
87337
87338 एवं तत्त्वे परे शुद्धे धीरो विश्रान्तिमागतः।
87339 न शक्यते चालयितुं देवैरपि सवासवैः॥ ८४॥
87340
87341 परव्यसनिनी नारी केन भर्त्रा बलीयसा।
87342 विस्मारिता स्वसंकल्पकान्तसङ्गमहोत्सवम्॥ ८५॥
87343
87344 जगत्समरसानन्दचिदालोकावलम्बनम्।
87345 केन विस्मार्यते बुद्धिस्तत्त्वज्ञस्य महात्मनः॥ ८६॥
87346
87347 जगत्पदेन जागताः सर्वे विषयानन्दभेदा लक्ष्यन्ते। ते सर्वे नानापुष्परसा
87348 मधुभाव इव यत्र समरसा भवन्ति तादृशस्वात्मानन्दचिदालोकस्य
87349 अवलम्बनं निरन्तरास्वादधारां प्राप्ता तत्त्वज्ञस्य बुद्धिः केन
87350 विस्मारयितुं शक्यत इत्यर्थः। तथाचोक्तं शिवधर्मोत्तरे -
87351 ज्ञानामृतरसो येन सकृदास्वादितो भवेत्। विहाय सर्वकार्याणि मनस्तत्रैव
87352 धावति॥ इति॥ ८६॥
87353
87354 समग्रसुखदुःखाढ्यं व्यवहारमखण्डितम्।
87355 कुर्वन्कुलजनायत्तो भर्तृश्वशुरखेदितः॥ ८७॥
87356
87357 व्यवहारं गृहकर्म अखण्डितं सदा कुर्वन् भर्त्रा श्वशुराभ्यां च
87358 खेदितः पीडितोऽपि परव्यसनवान्वधूलोक इति परेणान्वयः॥ ८७॥
87359
87360 यथा संकल्पकान्तेन भवत्यानन्दमन्थरः।

वधूलोको व्यसनवान्दुःखवृन्दैर्न बाध्यते ॥ ८८ ॥

तथा विगलिताविद्यो व्यवहारपरोऽप्यलम् ।
सम्यग्दृष्टिः सदाचारो मुदमेत्यन्तरात्मना ॥ ८९ ॥

छिद्यते न निकृत्ताङ्गो गलदश्रुर्न रोदिति ।
दह्यते न प्रदग्धोऽपि नष्टोऽपि न विनश्यति ॥ ९० ॥

तत्रापि सप्तमभूमिकामारूढस्य स्थैर्यातिशयमाह - छिद्यत इति ।
नष्टः विनष्टदेहोऽपि ॥ ९० ॥

व्यपगतसुखदुःखसंनिपातो
विधिविधुरेष्वपि संकटेष्वचित्तः ।
विलसतु सदने पुरोत्तमे वा
विततगिरौ विपिने तपोवने वा ॥ ९१ ॥

अचित्तो मनोनाशपर्यन्तभूमिकाप्रतिष्ठितः पुरुषधौरेयो विधिना
प्राक्तनप्रारब्धफलेन कर्मणा विधुरेषु भोगशून्येषु दारिद्र्यादिषु
माण्डव्यवच्छूलाधिरोहणादिसंकटेषु वा पुरोत्तमे सदने वा विततगिरौ
विपिने तपोवने वा निवसतु तथापि सदा व्यपगतसुखदुःखसंनिपात एवास्ते न
मनागपि सांसरिकैर्हर्षशोकैः स्पृश्यत इत्यर्थः ॥ ९१ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे०
मोक्षोपायेषूपशमप्रकरणे वैराग्योपदेशो नाम चतुःसप्ततितमः
सर्गः ॥ ७४ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
वैराग्योपदेशो नाम चतुःसप्ततितमः सर्गः ॥ ७४ ॥


पञ्चसप्ततितमः सर्गः ७५

श्रीवसिष्ठ उवाच ।

जनकः संस्थितो राज्ये व्यवहारपरोऽपि सन् ।
विगतज्वर एवान्तरनाकुलमतिः सदा ॥ १ ॥

महत्स्वप्यधिकारेषु हर्षशोकाद्यसङ्गिनः ।
इहोक्ता बहवो मुक्ता देवासुरनरादयः ॥ १ ॥

जनको वैदेहः ॥ १ ॥

पितामहो दिलीपस्ते सर्वारम्भपरोऽप्यलम् ।
वीतरागतयैवान्तर्बुभुजे भेदिनीं चिरम् ॥ २ ॥

निरञ्जनतया बुद्धो जनतां पालयंश्चिरम् ।
जीवन्मुक्ताकृतिर्नित्यं मनू राज्यमपालयत् ॥ ३ ॥

निरञ्जनतया रागादिकालुष्यरहिततया । बुद्धः प्रबुद्धो मनुः ॥ ३ ॥

विचित्रबलयुद्धेषु व्यवहारेषु भूरिषु ।
मान्धाता सुचिरं तिष्ठन्प्राप्तवान्वै परं पदम् ॥ ४ ॥

87413
87414 विचित्राणि बलानि सैन्यानि बाहुबलानि च येषु तथाविधेषु युद्धेषु ॥ ४ ॥
87415
87416 बलिः पातालपीठस्थः कुर्वन्सदिव संस्थितिम् ।
87417 सदा त्यागी सदाऽसक्तो जीवन्मुक्त इति स्थितः ॥ ५ ॥
87418
87419 सत् यथार्थमिव संस्थितिं व्यवहारम् । दिवसस्थितिम् इति पाठे सः दिवसानां
87420 पातालनिवासाय हरिणा नियमितानां स्थितिं पालनम् ॥ ५ ॥
87421
87422 नमुचिर्दानवाधीशोओ देवद्वन्द्वपरः सदा ।
87423 नानाचारविचारेषु क्वचिन्नान्तरतप्यत [मांतरलिप्यत इति पाठः]
87424 ॥ ६ ॥
87425
87426 देवैः सह द्वन्द्वे युद्धे मर्यादाव्युत्क्रमे वा परस्तत्परः । नानाविधानां
87427 देवासुराचाराणां विचारेषु विमर्शेषु ॥ ६ ॥
87428
87429 वासवाजौ तनुत्यागी वृत्रो विततमानसः ।
87430 अन्तःशान्तमना मानी चकार सुरसंगरम् ॥ ७ ॥
87431
87432 संगरं युद्धम् ॥ ७ ॥
87433
87434 कुर्वन्दानवकार्याणि पातालतलपालकः ।
87435 अनपायं निराक्रोशं प्रह्लादो ह्लादमागतः ॥ ८ ॥
87436
87437 निराक्रोशं वाचामगोचरं ह्लादं सुखम् ॥ ८ ॥
87438
87439 शम्बरैकपरोऽप्यन्तःशम्बरैकतयोदितः ।
87440 संसारशम्बरं राम शम्बरस्त्यक्तवानिदम् ॥ ९ ॥
87441
87442 शाम्बरं माया तदेकपरोऽप्यन्तःशम्बरं हार्दचिदाकाशस्तदेकतया उदित
87443 आविर्भूतः ॥ ९ ॥
87444
87445 असक्तबुद्धिर्हरिणा कुर्वन्दानवसंगरम् ।
87446 परां संविदमासाद्य कुशलस्त्यक्तवानिदम् ॥ १० ॥
87447
87448 कुशलः स एव अन्यो वा कुशलनामा दानवः ॥ १० ॥
87449
87450 सर्वामरमुखो वह्निः क्रियाजालपरो ह्यपि ।
87451 यज्ञलक्ष्मीश्चिरं भुङ्क्ते मुक्त एवेह तिष्ठति ॥ ११ ॥
87452
87453 पीयमानः सुरैः सर्वैः सोमः समरसाशयः ।
87454 क्वचिदेति न संसङ्गमाक्रान्तावम्बरं यथा ॥ १२ ॥
87455
87456 समं ब्रह्मैव रसो रसायनं पुनरुज्जिवनामृतमन्तर्यस्य । संसङ्गं
87457 सुखदुःखादिसंसर्गम् । आक्रान्तौ पद्भ्यामाक्रमणे । अम्बरमाकाशम् ॥ १२ ॥
87458
87459 बृहस्पतिर्देवगुरुर्दारार्थं चन्द्रयोध्यपि ।
87460 आचरन्दिवि चित्रेहां मुक्त एव ह्यवस्थितः ॥ १३ ॥
87461
87462 दारार्थं चित्रां ईहां देवपौरोहित्याधिकारचेष्टाम् ॥ १३ ॥
87463
87464 शुक्रोऽम्बरतलद्योती बुधः सर्वार्थपालकः ।

87465 निर्विकारमतिः कालं नयत्यसुरदेशिकः ॥ १४ ॥
87466
87467 बुधो विद्वान् । नीतिशास्त्रप्रणयनेन सर्वेषामर्थनामभिमतानां पालकः ॥
87468 १४ ॥
87469
87470 जगद्भूतगणाङ्गानि चिरं संचारयन्नपि ।
87471 सर्वदा सर्वसंचारी मुक्त एव समीरणः ॥ १५ ॥
87472
87473 जगन्ति ऊर्ध्वभुवनानि भूतगणानां प्राणिनिकायानामङ्गानि च ॥ १५ ॥
87474
87475 लोकाजवं जवीभावप्रोद्वेगज्ञोऽप्यखिन्नधीः ।
87476 ब्रह्मा सममना राम क्षिपयत्यायुराततम् ॥ १६ ॥
87477
87478 लोकानां प्राणिनां आजवं जवीभावा ऊर्ध्वाधोमध्यगतिभिः
87479 परिवर्तास्तत्प्रयुक्ताः प्रोद्वेगाश्च तज्ज्ञोऽपि । आततं द्विपरार्धकालविस्तीर्णम् ॥
87480 १६ ॥
87481
87482 रजामरणयुद्धादिद्वन्द्वसंगरलीलया ।
87483 चरती [चरतीहाचिरं इति पाठः] ह चिरं कालं मुक्तोऽपि
87484 भगवान्हरिः ॥ १७ ॥
87485
87486 मुक्तो नित्यमुक्तोऽपि ॥ १७ ॥
87487
87488 मुक्तेनापि त्रिनेत्रेण सौन्दर्यतरुमञ्जरी ।
87489 देहार्धे धार्यते गौरी कामुकेनेव कामिनी ॥ १८ ॥
87490
87491 इवकारेण न स कामुको नापि सा कामिनी किंतु ब्रह्मब्रह्मविद्ये एव ते इति
87492 ध्वनितम् ॥ १८ ॥
87493
87494 मुक्तयापि गले बद्धो गौर्या गौरस्त्रिलोचनः ।
87495 संशुद्ध इव मुक्तानां हारः शशिकलामलः ॥ १९ ॥
87496
87497 गुहो गहनधीर्वीरस्तारकादिरणक्रियाम् ।
87498 मुक्तोऽपि कृतवान्सर्वं ज्ञानरत्नैकसागरः ॥ २० ॥
87499
87500 गहनधीर्विचित्रदुरवगाहबुद्धिः ॥ २० ॥
87501
87502 भृङ्गीशो रक्तमांसं स्वं स्वमात्रे प्रवितीर्णवान् ।
87503 मुक्तयैव धिया राम धीरया ध्यानधौतया ॥ २१ ॥
87504
87505 भृङ्गीशोऽत्र भृङ्गीरिटिः शिवगणविशेषः । स हि देवीमनादृत्य
87506 शिवस्यैवाराधनपरः कुपितया देव्या
87507 मातृपितृभागात्ममांसास्थिमयदेहस्य स्वीयं मातृभागं
87508 परावृत्य याचितः स्वमात्रे देव्यै स्वं रक्तमांसमुत्कृत्य ददाविति
87509 पुराणेषु प्रसिद्धम् ॥ २१ ॥
87510
87511 मुनिर्मुक्तस्वभावोऽपि जगज्जङ्गलखण्डकम् ।
87512 नारदो विजहारेमं शीतया [अत्र लीलयेति पाठोऽपेक्षितः]
87513 कार्यशीलया ॥ २२ ॥
87514
87515 कार्य कलहकौतुकप्रवर्तनं तच्छीलया ॥ २२ ॥
87516

87517 जीवन्मुक्तमना मान्यो विश्वामित्रोऽप्ययं प्रभुः |
87518 वेदोक्तां मखनिर्माणक्रियां समधितिष्ठति || २३ ||
87519
87520 धारयत्यवनीं शेषः करोत्यर्को दिनावलीम् |
87521 यमो यमत्वं कुरुते जीवन्मुक्ततयैव हि || २४ ||
87522
87523 यमत्वं दण्डनम् || २४ ||
87524
87525 अन्येऽप्यस्मिंस्त्रिभुवने यक्षासुरनराः सुराः |
87526 शतशो मुक्ततां याताः सन्तस्तिष्ठन्ति संसृतौ || २५ ||
87527
87528 संस्थिता व्यवहारेषु विचित्राचारधारिषु |
87529 अन्तराशीतलाः केचित्केचिन्मूढाः शिलासमाः || २६ ||
87530
87531 विचित्रशोकमोहाद्यनर्थप्रसङ्गकेषु
87532 पुत्रदारधनभूत्यादिसंग्रहपूर्वकयुद्धवधबन्धाद्याचारधारिष्वपि
87533 राज्यादिव्यवहारेषु संस्थिता अन्तः आशीतलाः केचिन्मुक्ताः || २६ ||
87534
87535 परमं बोधमासाद्य केचित्काननमागताः |
87536 यथा भृगुभरद्वाजविश्वामित्रशुकादयः || २७ ||
87537
87538 केचित्तु चित्तविक्षेपनिवृत्त्यर्थं काननमाश्रिताः | तानुदाहरति -
87539 यथेत्यादिना || २७ ||
87540
87541 केचिद्राज्येषु तिष्ठन्ति च्छत्रचामरपालिताः |
87542 यथा जनकशर्यातिमान्धातृसगरादयः || २८ ||
87543
87544 केचिद्व्योमनि तिष्ठन्ति धिष्ण्यचक्रान्तरस्थिताः |
87545 यथा बृहस्पत्युशनश्चन्द्रसूर्यमुनीश्वराः || २९ ||
87546
87547 ग्रहनक्षत्रादीनां धिष्ण्यमाधारभूतं ज्योतिश्चक्रं तदन्तरे स्थिताः |
87548 मुनीश्वराः सप्तर्षयः || २९ ||
87549
87550 केचित्सुरपदे याता विमानावलिमास्थिताः |
87551 यथाग्निवायुवरुणयमतुम्बुरुनारदाः || ३० ||
87552
87553 केचित्पातालकुहरे जीवन्मुक्ता व्यवस्थिताः |
87554 यथा बलिसुहोत्रान्धप्रह्लादाह्लादपूर्वकाः || ३१ ||
87555
87556 तिर्यग्योनिष्वपि सदा विद्यन्ते कृतबुद्धयः |
87557 देवयोनिष्वपि प्राज्ञा विद्यन्ते मूर्खबुद्धयः || ३२ ||
87558
87559 तिर्यग्योनिषु गरुडहनुमज्जाम्बवदादयः || ३२ ||
87560
87561 सर्वं सर्वेण सर्वत्र सर्वथा सर्वदैव हि |
87562 संभवत्येव सर्वात्मन्यात्मन्याततरूपिणि || ३३ ||
87563
87564 ननु सात्त्विकतमत्वात्स्वभावतोऽभिव्यक्तज्ञानैश्वर्येषु देवयोनिषु कथं
87565 मूर्खाः संभवन्तीति चेत्सर्वशक्तेरीश्वरता [ईश्वरस्य इति पाठः]
87566 सर्वभावेन सर्वत्र सर्वप्रकारेण सर्वदा स्थितत्वात्सर्वात्मन्यात्मनि
87567 स्वप्नादावसंभावितसहस्रस्यापि दर्शनान्नासंभावना क्वापि कस्यचिदपि
87568 कार्येत्याह - सर्वमिति || ३३ ||

87569
87570 विधेर्विचित्रा नियतिरनन्तारम्भमन्थरा।
87571 संनिवेशांशवैचित्र्यात्सर्वं सर्वत्र दृश्यते॥ ३४॥
87572
87573 उक्तार्थं स्फुटमाह - विधेरिति॥ ३४॥
87574
87575 विधिर्दैवं विधिर्धाता सर्वेशः शिव ईश्वरः।
87576 इति नामभिरात्मा नः प्रत्यक्चेतन उच्यते॥ ३५॥
87577
87578 कोऽसौ विधिस्तमाह - विधिरिति। आद्यं विधिपदं विरिञ्चिद्वारा द्वितीयं
87579 विष्णुद्वारा परमात्मनो नामेति न पौनरुक्त्यम्। नः अस्माकं सर्वेषामात्मा।
87580 अन्तः इति पाठे तु कोशपञ्चकान्तस्थः। चिच्छक्तिशबलत्वाच्चेतनः॥ ३५॥
87581
87582 अस्त्यवस्तुनि वस्त्वन्तः काञ्चनं सिकतास्विव।
87583 अस्ति वस्तुन्यवस्त्वन्तर्मलं हेमकणेष्विव॥ ३६॥
87584
87585 यत्रात्यन्तमसंभाविते अपि वस्त्ववस्तुनी परस्परान्तः संभाविते तत्र
87586 किमन्यदसंभावितं स्यादित्याशयेनाह - अस्तीत्यादिना॥ ३६॥
87587
87588 अयुक्ते युक्तता युक्त्या प्रेक्ष्यमाणा प्रदृश्यते।
87589 पापस्य हि भयाल्लोको राम धर्मे प्रवर्तते॥ ३७॥
87590
87591 अत्यन्तायुक्ते पापेऽपि फलतो भीषणतया धर्मे पुरुषप्रवर्तकतालक्षणो
87592 महान्गुणो युक्त्या विमर्शे दृश्यत इत्यर्थः॥ ३७॥
87593
87594 असत्ये सत्यता साधो शाश्वती परिलक्ष्यते।
87595 शून्येन ध्यानयोगेन शाश्वतं पदमाप्यते॥ ३८॥
87596
87597 फलतः सत्यता। सर्वशून्यताध्याने ध्यानसाक्षिणः स्वप्रकाशात्मनो
87598 दुरपह्नवत्वादर्थादिव यथार्थतन्मात्रपरिशेषसिद्धेरिति भावः॥ ३८॥
87599
87600 यन्नास्ति तदुदेत्याशु देशकालविलासतः।
87601 शशकाः शृङ्गवन्तो हि दृश्यन्ते शम्बरस्थितौ॥ ३९॥
87602
87603 शम्बरस्थितौ ऐन्द्रजालिकसर्गे॥ ३९॥
87604
87605 ये वज्रसाराः सुदृढा दृश्यन्ते ते क्षयं गताः।
87606 कल्पस्यान्ते यथेन्द्वर्कधराब्धिविबुधादयः॥ ४०॥
87607
87608 वज्रसारा येषां कदाप्यसंभावितः क्षयस्तेऽपीत्यर्थः॥ ४०॥
87609
87610 इति पश्यन्महाबाहो भावाभावभवक्रमम्।
87611 हर्षामर्षविषादेहाः संत्यज्य समतां व्रज॥ ४१॥
87612
87613 प्रासङ्गिकस्य असंभावितसंभवोपपादनस्यापि प्रकृतमेव फलं
87614 दर्शयन्नुपसंहरति - इतीति॥ ४१॥
87615
87616 असत्सदेव भातीह सदसच्चापि दृश्यते।
87617 आस्थानास्थे परित्यज्य तेनाशु समतां व्रज॥ ४२॥
87618
87619 मुक्तौ राघव लोकेऽस्मिन्न प्राप्तिः संभवत्यलम्।
87620 अप्रवृत्तौ विवेकस्य मग्ना हि जनकोटयः॥ ४३॥

87621
87622 नन्वेवं सति विदेहमुक्तावपि पुनः संसारप्राप्तिः संभाविता स्यात्तत्राह ##-
87623 तत्त्वज्ञानस्याप्रवृत्तौ
87624 अज्ञानदशायामेवात्यन्तासंभावितानर्थकोटिसंभावनलक्षणे भ्रमे
87625 मग्नाः न मुक्तौ। तन्मज्जननिमित्ताज्ञानस्य नष्टत्वादिति भावः॥ ४३॥
87626
87627 मुक्तौ राघव लोकेऽस्मिन्प्राप्तिरस्ति सदैव हि।
87628 प्रवृत्त्या हि विवेकस्य विमुक्ता भूतकोटयः॥ ४४॥
87629
87630 नित्यप्राप्तात्मरूपत्वादपि मुक्तेर्नापायशङ्कास्ति
87631 विस्मृतकण्ठचामीकरवद्विवेकमात्रेण तल्लाभादित्याह - मुक्ताविति॥ ४४॥
87632
87633 प्रविवेकाविवेकाभ्यां सुलभालभ्यतां गता।
87634 मुक्तिर्मनःक्षयप्राप्त्या विवेकं तेन दीपय॥ ४५॥
87635
87636 प्रविवेकात्सुलभापि अविवेकादलभ्यतां गता मुक्तिः॥ ४५॥
87637
87638 आत्मावलोकने यत्नः कर्तव्यो भूतिमिच्छता।
87639 सर्वदुःखशिरश्छेद आत्मालोकेन जायते॥ ४६॥
87640
87641 भूतिं मुक्तिमिच्छता॥ ४६॥
87642
87643 नीरागा निरुपासङ्गा जीवन्मुक्ता महाधियः।
87644 संभवन्तीह बहुशः सुहोत्रजनका इव॥ ४७॥
87645
87646 पूर्वकालिकानां जीवन्मुक्तिसंभवेऽपि नेदानींतनानां सा
87647 संभावितेत्याशङ्कां वारयति - नीरागा इति। निरुपासङ्गा निरभिनिवेशाः
87648 । इहास्मिन्नपि काले॥ ४७॥
87649
87650 तस्मात्त्वमपि वैराग्यविवेकोदितधीरधीः।
87651 जीवन्मुक्तो विहर भो समलोष्टाश्मकाञ्चनः॥ ४८॥
87652
87653 द्विविधा मुक्तता लोके विद्यते देहधारिणाम्।
87654 सदेहैका विदेहान्या विभागोऽयं तयोः शृणु॥ ४९॥
87655
87656 इदानीं जीवन्मुक्तिविदेहमुक्त्योर्भेदनिमित्तं वक्तुमुपक्रमते -
87657 द्विविधेत्यादिना॥ ४९॥
87658
87659 असंसङ्गात्पदार्थानां मनःशान्तिर्विमुक्तता।
87660 सत्यसत्यपि देहे सा संभवत्यनघाकृते॥ ५०॥
87661
87662 तत्रादौ उभयसाधारणमुक्तिशब्दार्थं दर्शयति - असंसङ्गादिति॥ ५०॥
87663
87664 स्नेहसंक्षयमेवाङ्ग विदुः कैवल्यमुत्तमम्।
87665 तत्संभवति देहस्य भावे चाभाव एव च॥ ५१॥
87666
87667 तत्रोपपत्तिमाह - स्नेहेति। स्नेह आत्मताभ्रमात्प्रीतिस्तत्संक्षयम्॥ ५१॥
87668
87669 यो जीवति गतस्नेहः स जीवन्मुक्त उच्यते।
87670 सस्नेहजीवितो बद्धो मुक्त एव तृतीयकः॥ ५२॥
87671
87672 यत्नो यत्नेन कर्तव्यो मिक्षार्थं युक्तिपूर्वकम्।

87673 यत्नयुक्तिविहीनस्य गोष्पदं दुस्तरं भवेत् ॥ ५३ ॥
87674
87675 साधनचतुष्टयमध्ये यत्नेन पूर्वपूर्वसिद्धौ उत्तरोत्तरजयेऽपि यत्नः
87676 कर्तव्यः । युक्तयः
87677 प्रमाणतात्पर्यप्रमेयतत्त्वावधारणानुकूलास्तर्कास्तत्पूर्वकम् ॥ ५३ ॥
87678
87679 न त्वनध्यवसायस्य दुःखाय विपुलात्मने ।
87680 आत्मा परवशः कार्यो मोहमाश्रित्य केवलम् ॥ ५४ ॥
87681
87682 युक्त्यनिवृत्तो यत्न आत्मतत्त्वाध्यवसायपर्यन्तं कार्यो न सहसा अनध्यवसाये
87683 निर्वेदादन्तराले यत्नोपरमेण पुनरात्मा अनर्थवशे कार्यं इत्याह - न
87684 त्विति । अनध्यवसायस्य अनध्यवसाये सति यत्नानादरादित्यर्थः । षष्ठी
87685 चानादरे इति भावलक्षणे षष्ठी ॥ ५४ ॥
87686
87687 सुमहद्धैर्यमालम्ब्य मनसा व्यवसायिना ।
87688 विचारयात्मनात्मानमात्मनश्चिरसिद्धये ।
87689 वितताध्यवसायस्य जगद्भवति गोष्पदम् ॥ ५५ ॥
87690
87691 उक्तमेवार्थं स्फुटमाह - सुमहदिति । व्यवसायिना फलपर्यन्तं
87692 प्रयत्नानुपरमदृढनिश्चयवता । चिरसिद्धय इति । सति प्रतिबन्धे
87693 बहुभिर्जन्मभिर्वा सिद्धिमुद्दिश्येत्यर्थः ॥ ५५ ॥
87694
87695 यदुपगतः सुगतः पदं प्रधानं
87696 यदपगतोऽध्रुवतां नृपश्च कश्चित् ।
87697 यदुपगताः पदमुत्तमं महान्तः
87698 प्रयतनकल्पतरोर्महाफलं तत् ॥ ५६ ॥
87699
87700 यत्स्वयंज्योतिरात्ममात्रपरिशेषाख्यं पदम् । सुगतो बुद्धः शोभनं
87701 विवेकं गतः कपिलश्च बहु
87702 विचार्याप्यध्यवसातुमसामर्थ्याद्यस्मादपगतः सन्नात्मनोऽध्रुवतां
87703 क्षणिकविज्ञानसंतानात्मतां गुणत्रयसाम्यावस्थालक्षणं प्रधानं
87704 पदं वस्तु उपगतः । एवं कश्चिद्वेदनिन्दकत्वादग्राह्यनामा अर्हदाख्यो
87705 नृपः क्षत्रियोऽपि यदपगतः सन्नात्मानं चित्स्वभावमभ्युपगम्यापि
87706 देहपरिमाणत्वाभ्युपगमाद्धस्तिमशकशरीरानुप्रवेशे
87707 अवयवोपचयापत्त्या अध्रुवतामुपगत इत्यनुत्तमे एव मिथ्यापदे ते निमग्नाः ।
87708 महान्तो वेदरहस्यनिष्णातास्तु उत्तमं सत्यादिलक्षणं यत्पदमुपगता
87709 यथार्थतः प्राप्तवन्तस्तन्महद्भिर्यत्नप्राप्तं पदं वेदोक्तमार्गेण
87710 प्रयतनलक्षणस्य कल्पतरोर्महाफलमिति तथैवान्योऽपि प्रयतेतेत्यर्थः ॥ ५६ ॥
87711
87712 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे०
87713 मोक्षोपायेषूपशमप्रकरणे मुक्तामुक्तविचारो नाम पञ्चसप्ततितमः
87714 सर्गः ॥ ७५ ॥
87715
87716 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
87717 मुक्तामुक्तविचारो नाम पञ्चसप्ततितमः सर्गः ॥ ७५ ॥
87718
87719
87720 षट्सप्ततितमः सर्गः ७६
87721
87722 श्रीवसिष्ठ उवाच ।
87723
87724 ब्रह्मणः समुपायान्ति जगन्तीमानि राघव ।

87725 स्थैर्यं यान्त्यविवेकेन शाम्यन्त्येव विवेकतः ॥ १ ॥
87726
87727 इह संसारजलधिः स्त्रीवीचिरुपवर्ण्यते।
87728 ततस्तत्तरणोपायस्तीर्णे क्रीडा यथासुखम् ॥ १ ॥
87729
87730 अविज्ञाताद्ब्रह्मणः समुपायान्त्याविर्भवन्ति अविवेकेन स्थैर्ययान्ति।
87731 अनेनानर्थजन्मस्थित्योर्निमित्तं दर्शितम्। तन्निवृत्त्युपायमाह -
87732 शाम्यन्तीति ॥ १ ॥
87733
87734 जगज्जालजलावर्तवृत्तयो ब्रह्मवारिधौ।
87735 संख्यातुं केन शक्यन्ते भासां च त्रसरेणवः ॥ २ ॥
87736
87737 भासां जालसूर्यमरीचीनां संबन्धिनस्त्रसरेणवश्च संख्यातुं न
87738 शक्यन्ते ॥ २ ॥
87739
87740 असम्यक्प्रेक्षणं विद्धि कारणं जगतः स्थितौ।
87741 संसारशान्तये कान्त कारणं सम्यगीक्षणम् ॥ ३ ॥
87742
87743 हे कान्तेति रामसंबोधनम् ॥ ३ ॥
87744
87745 अयं हि परदुष्पारो घोरः संसारसागरः।
87746 विना युक्तिप्रयत्नाभ्यामस्माद्राम न तीर्यते ॥ ४ ॥
87747
87748 परं अत्यन्तं दुर्गमं पारं यस्य ॥ ४ ॥
87749
87750 यस्यायं सागरः पूर्णो मोहाम्बुभरपूरितः।
87751 अगाधमरणावर्तकल्लोलाकुलकोटरः ॥ ५ ॥
87752
87753 तमेव संसारसागरं वर्णयति - यस्येत्यादिना। अयं
87754 वक्ष्यमाणविविधविशेषणविशिष्टः संसारलक्षणः सागरो यस्य
87755 मोहाम्बुभरेण पूरितः सन् पूर्णस्तेनैव तन्निमग्ने न उत्तीर्यते चेदिति
87756 सप्तमेनान्वयः। अगाधैर्मरणलक्षणैरावर्तैः कल्लोलैर्बृहत्तरङ्गैश्च
87757 आकुलकोटरः ॥ ५ ॥
87758
87759 प्रभ्रमत्पुण्यडिण्डीरो ज्वलन्नरकवाडवः।
87760 तृष्णाविलोललहरिर्मनोजलमतङ्गजः ॥ ६ ॥
87761
87762 पुण्यान्येव डिण्डीराः फेना यस्य। वाडवो वडवानलः। जलोद्भवो
87763 मतङ्गजसदृशो यादोभेदः ॥ ६ ॥
87764
87765 आलीनजीवितसरिद्भोगरत्नसमुद्गकः।
87766 क्षुब्धरोगोरगाकीर्ण इन्द्रियग्राहघर्घरः ॥ ७ ॥
87767
87768 आ समन्ताल्लीना उपक्षीणा जीवितसरितो यत्र। इन्द्रियग्राहैर्घर्घरः
87769 कृतविक्षोभध्वनिः ॥ ७ ॥
87770
87771 पश्यास्मिन्प्रसृता राम वीचयश्चारुचञ्चलाः।
87772 इमा मुग्धाङ्गनानाम्न्यः शिखराकर्षणक्षमाः ॥ ८ ॥
87773
87774 तत्र स्त्रियो वीचित्वेन वर्णयति - पश्येत्यादिना।
87775 शिखरवद्धीराणामप्याकर्षणे क्षमाः ॥ ८ ॥
87776

87777 छदश्रीपद्मरागाढ्या नेत्रनीलोत्पलाकुलाः |
87778 दन्तपुष्पफलाकीर्णाः स्मितफेनोपशोभिताः || ९ ||
87779
87780 छदा रदनच्छदास्तच्छ्रीभिः पद्मरागाढ्याः |
87781 पुष्पफलैर्मुकुलैराकीर्णाः || ९ ||
87782
87783 केशेन्द्रनीलवलया भ्रूविलासतरङ्गिताः |
87784 नितम्बपुलिनस्फीताः कण्ठकम्बुविभूषिताः || १० ||
87785
87786 कण्ठलक्षणैः कम्बुभिः शङ्खैर्विभूषिताः || १० ||
87787
87788 ललाटमणिपट्टाढ्या विलासग्राहसंकुलाः |
87789 कटाक्षलोलगहना वर्णकाञ्चनवालुकाः || ११ ||
87790
87791 ललाटलक्षणैर्मणिपट्टैः रत्नफलकैराढ्याः | कटाक्षैर्लोलत्वाद्गहना
87792 दुरवगाहाः | वर्णा देहकान्तय एव काञ्चनवालुका यासाम् || ११ ||
87793
87794 एवं विलोललहरीभीमात्संसारसागरात् |
87795 उत्तिर्यते चेन्मग्नेन तत्परं पौरुषं भवेत् || १२ ||
87796
87797 सत्यां प्रज्ञामहानावि विवेके सति नाविके |
87798 संसारसागरादस्माद्यो न तीर्णो धिगस्तु तम् || १३ ||
87799
87800 अपारावारमाक्रम्य प्रमेयीकृत्य सर्वतः |
87801 संसाराब्धिं गाहते यः स एव पुरुषः स्मृतः || १४ ||
87802
87803 आक्रम्य तत्त्वदर्शनेन बाधित्वा | अत-एव तं प्रमेयब्रह्ममात्रं
87804 कृत्वा गाहते प्रविशति प्रत्यञ्चमपि तद्भावं नयतीति यावत् || १४ ||
87805
87806 विचार्यार्यैः सहालोक्य धिया संसारसागरम् |
87807 एतस्मिंस्तदनु क्रीडा शोभते राम नान्यथा || १५ ||
87808
87809 तदनु तत्त्वबोधानन्तरम् | एतस्मिन् ब्रह्मत्वमापन्ने जगति || १५ ||
87810
87811 इह भव्यो भवान्साधो विचारपरया धिया |
87812 त्वयाधुनैव तेनायं संसारः प्रविचार्यते || १६ ||
87813
87814 भवान् भव्यो धन्यः | यतस्त्वया तेन भव्यत्वेन अधुना अस्मिन्वयस्येव || १६ ||
87815
87816 भवानिव विचार्यादौ संसारमतिकान्तया |
87817 मत्या यो गाहते लोको नेहासौ परिमज्जति || १७ ||
87818
87819 गाहते प्रविशति ब्रह्मेति शेषः | लोकोऽधिकारिजनः || १७ ||
87820
87821 पूर्वं धिया विचार्यैते भोगा भोगिभयप्रदाः |
87822 भोक्तव्याश्चरमं राम गरुडेनेव पन्नगाः || १८ ||
87823
87824 पूर्वं भोगा उपेक्ष्या इति शेषः | यथा गरुडेनामृताहरणात्पूर्वं
87825 पन्नगा उपेक्षिताः पश्चान्मातृशापमोचनानन्तरं निःशङ्कं भुज्यन्ते
87826 तद्वत् || १८ ||
87827
87828 विचार्य तत्त्वमालोक्य सेव्यन्ते या विभूतयः |

ता उदर्कोदया जन्तोः शेषा दुःखाय केवलम् ॥ १९ ॥

लोकेऽप्ययं राजकीयविभूत्युपभोगे न्यायः प्रसिद्ध इत्याह - विचार्येति ।
तत्त्वं राजप्रसादानुग्रहादिरहस्यम् ॥ १९ ॥

बलं बुद्धिश्च तेजश्च दृष्टतत्त्वस्य वर्धते ।
सवसन्तस्य वृक्षस्य सौन्दर्याद्या गुणा इव ॥ २० ॥

तत्त्वबोधोत्तरमेव भोगजरणोपपादकविशेषणसंपत्तिर्न पूर्वमिति दर्शयति
- बलमिति ॥ २० ॥

घनरसायनपूर्णसुशीतया
विमलया समया सततं श्रिया ।
शिशिररश्मिरिवातिविराजसे
विदितवेद्य सुखं रघुनन्दन ॥ २१ ॥

रामस्य भोगजरणासमार्थ्यशङ्कावारणाय तत्त्वबोधसंपत्तिं दर्शयति
- घनेति । हे रघुनन्दन त्वं विदितवेद्यतया हेतुना इदानीं घनेन
रसायनेन आनन्दामृतेन पूर्णया सुशीतया निरस्तत्रिविधतापया श्रिया
शिशिररश्मिः पूर्णचन्द्र इव अतिविराजसे । चन्द्रपक्षे समया अभितः
पूर्णमण्डलत्वादवक्रया ॥ २१ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मोक्षोपायेषूपशमप्रकरणे
संसारसागरसाम्यप्रतिपादनं नाम षट्सप्ततितमः सर्गः ॥ ७६ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
संसारसागरसाम्यप्रतिपादनं नाम षट्सप्ततितमः सर्गः ॥ ७६ ॥

सप्तसप्ततितमः सर्गः ७७

श्रीराम उवाच ।

समासेन मुने भूयो दृष्टतत्त्वचमत्कृतेः ।
कथयोदारवृत्तान्ते कस्ते वचसि तृप्यति ॥ १ ॥

धार्या मन्दारमालेव विबुधैः शिरसोरसा ।
जीवन्मुक्तगुणैर्माला वसिष्ठेनात्र गुम्फ्यते ॥ १ ॥

समासेन तत्रतत्रोक्तानामेकत्र संग्रहेण । उदारं वृत्तान्तं चरित्रम् ।
लक्षणभूतान्गुणानिति यावत् ॥ १ ॥

श्रीवसिष्ठ उवाच ।

जीवन्मुक्तस्य बहुधा कथितं लक्षणं मया ।
भूयोऽपि त्वं महाबाहो कथ्यमानमिदं शृणु ॥ २ ॥

इदं संग्रहरूपम् ॥ २ ॥

सुषुप्तवदिदं नित्यं पश्यत्यपगतैषणः ।
असद्रूपमिवासक्तं सर्वत्राखिलमात्मवान् ॥ ३ ॥

87881 व्यवहारदृशा सुषुप्तवत्तमोमात्रम् | परमार्थदृशा तु
87882 बाधितानुवृत्तिमात्रत्वादसद्रूपमिव || ३ ||
87883
87884 कैवल्यमिव संप्राप्तः परिसुप्तमना इव |
87885 घूर्णमान इवानन्दी तिष्ठत्यधिगतात्मदृक् || ४ ||
87886
87887 नादत्तमप्युपादत्ते गृहीतमपि पाणिना |
87888 अन्तर्मुखतयोदात्तरूपया समया धिया || ५ ||
87889
87890 आदत्तं प्रथमं चक्षुरादिना उपात्तं पश्चात्पाणिना गृहीतमपि
87891 धनवस्त्रालंकारादि धिया नोपादत्ते | आदिकर्मणि निष्ठा | अत-एव
87892 तादेशानिष्टिः || ५ ||
87893
87894 यन्त्रपुत्रकसंचार इतीमं जनताक्रमम् |
87895 अन्तःसंलीनया दृष्ट्या पश्यन्हसति शान्तधीः || ६ ||
87896
87897 जनतायाः क्रमं व्यवहारं
87898 असङ्गोदासीनात्मसंनिधिमात्रप्रवृत्तत्वात्काष्ठादिप्रतिमासंचारसदृश
87899 इति पश्यन् || ६ ||
87900
87901 नापेक्षते भविष्यं च वर्तमाने न तिष्ठति |
87902 न संस्मरत्यतीतं च सर्वमेव करोति च || ७ ||
87903
87904 न तिष्ठति न आस्थां करोति || ७ ||
87905
87906 सुप्तः प्रबुद्धो भवति प्रबुद्धोऽपि च सुप्तवान् |
87907 सर्वं कर्म करोत्यन्तर्न करोति च किंचन || ८ ||
87908
87909 व्यवहारविषये सुप्तप्रायोऽपि स्वात्मनि प्रबुद्धो भवति | या निशा
87910 सर्वभूतानां तस्यां जागर्ति संयमी इति भगवद्वचनम् | व्यवहारे
87911 प्रबुद्धः कुशलतमोऽपि सुप्तवानेवास्ते न तत्कौशलफलेन रज्यत इत्यर्थः || ८
87912 | |
87913
87914 अन्तःसर्वपरित्यागी नित्यमन्तरनेषणः |
87915 कुर्वन्नपि बहिः कार्यं सममेवावतिष्ठते || ९ ||
87916
87917 अत-एव तस्य सदैव समा स्थितिरित्याह - अन्तरिति || ९ ||
87918
87919 बहिः प्रकृतसर्वेहो यथाप्राप्तक्रियोन्मुखः |
87920 स्वकर्मक्रमसंप्राप्तबन्धुकार्यानुवृत्तिमान् || १० ||
87921
87922 स्वकर्म तत्तद्देहवर्णाश्रमोचितं कर्म पितृपितामहादिक्रमसंप्राप्तं
87923 राज्यादिबन्धुकार्याणि दानमानादीनि च तन्मात्रानुवृत्तिमान् || १० ||
87924
87925 समग्रसुखभोगात्मा सर्वाशास्विव संस्थितः |
87926 करोत्यखिलकर्माणि त्यक्तकर्तृत्वविभ्रमः || ११ ||
87927
87928 समस्ताः सुखभोगा आत्मैव यस्य समस्तानां सुखभोगानां स्वयमात्मेति
87929 वा | अत-एवाज्ञदृशा भोगकाले सर्वविषयाशासु संस्थित आस्थावानिव
87930 भाति नाज्ञवद्भोक्तृत्वाभिमानेनेत्यर्थः || ११ ||
87931
87932 उदासीनवदासीनः प्रकृतः क्रमकर्मसु |

नाभिवाञ्छति न द्वेष्टि न शोचति न हृष्यति ॥ १२ ॥

कर्मसु प्राप्तमिष्टानिफलमिति शेषः ॥ १२ ॥

अनुबन्धपरे जन्तावसंसक्तेन चेतसा ।
भक्ते भक्तसमाचारः शठे शठ इव स्थितः ॥ १३ ॥

अनुबन्ध आनुकूल्यप्रातिकूल्याचरणं तत्परे ॥ १३ ॥

बालो बालेषु वृद्धेषु वृद्धो धीरेषु धैर्यवान् ।
युवा यौवनवृत्तेषु दुःखितेष्वनु दुःखितः ॥ १४ ॥

प्रवृत्तवाक्पुण्यकथो दैन्याद्यपगताशयः ।
धीरधीरुदितानन्दः पेशलः पुण्यकीर्तनः ॥ १५ ॥

पूर्वोक्तबालादिसमवृत्ते यो विशेषस्तमाह - प्रवृत्तेति । प्रवृत्ता
वाग्यस्य तथाविधः सन् पुण्याः कथाः कथयति न बालादिवद्वृथा
प्रलापीत्यर्थः । एवमन्यदप्यूह्यम् । पुण्यानि कीर्तनानि चरित्रवर्णनानि लोके
यस्य ॥ १५ ॥

प्राज्ञः प्रसन्नमधुरः पूर्णः स्वप्रतिभोदये ।
निरस्तखेददौर्गत्यः सर्वस्मिन्स्निग्धबान्धवः ॥ १६ ॥

सर्वस्मिन् जने ॥ १६ ॥

उदारचरिताकारः समः सौम्यसुखोदधिः ।
सुस्निग्धः शीतलस्पर्शः पूर्णचन्द्र इवोदितः ॥ १७ ॥

शीतलः सर्वतापहारी स्पर्शः सङ्गो यस्य ॥ १७ ॥

न तस्य सुकृतेनार्थो न भोगैर्न च कर्मभिः ।
न दुष्कृतैर्न भोगानां संत्यागेन न बन्धुभिः ॥ १८ ॥

न दुष्कृतैरिति निषिद्धाचरणपरिहारार्थम् । अत-एव
भोगानामनिषिद्धानाम् ॥ १८ ॥

न कार्यकारणारम्भैर्न निष्कृततया तथा ।
न बन्धेन न मोक्षेण न पातालेन नो दिवा ॥ १९ ॥

अवश्यकार्याणां ऐहिकामुष्मिकफलकारणानां कर्मणामारम्भैः ।
निष्कृततया भावे क्तः । निष्क्रियतया इति वा पाठः । दिवा स्वर्गेण ॥ १९ ॥

यथावस्तु यथादृष्टं जगदेकमयात्मकम् ।
तदा बन्धविमोक्षाणां न क्वचित्कृपणं मनः ॥ २० ॥

बन्धानां सांसारिकसुखानां विमोक्षाणां
सर्वदुःखतत्कारणनिवृत्तीनां च मध्येन क्वचित् कृपणं
कार्पण्ययुक्तं मनो भवतीत्यर्थः ॥ २० ॥

सम्यग्ज्ञानाग्निना यस्य दग्धाः संदेहजालिकाः ।
निःशङ्कमलमुड्डीनस्तस्य चित्तविहङ्गमः ॥ २१ ॥

87985 संदेहलक्षणा जालिकाः पञ्जराणि। तथाच सति मनसि कार्पण्यसंभावना
87986 स्यात्तदेव तस्य नास्तीत्यर्थः॥ २१॥
87987
87988 यस्य भ्रान्तिविनिर्मुक्तं मनः समरसं स्थितम्।
87989 नास्तमेति न चोदेति व्योमवत्सर्वदृष्टिषु॥ २२॥
87990
87991 समरसं ब्रह्मीभूतम्॥ २२॥
87992
87993 मञ्जूषायां निषण्णस्य यथा बालस्य चेष्टते।
87994 अङ्गावल्यनुसंधानवर्जितं यस्य वै तथा॥ २३॥
87995
87996 मनसोऽभावे कथं कायचेष्टाद्युपपत्तिस्तत्राह - मञ्जूषायामिति।
87997 दोलासुखशय्यायामित्यर्थः। तस्य हि स्वानन्दाविर्भावोल्लासादेवाङ्गचलनं
87998 तद्यथा महाराजो वा महाब्राह्मणो वा महाकुमारो वा अतिघ्नीमानन्दस्य
87999 गत्वा शयीत इति श्रुत्यादिप्रसिद्धमीश्वरनृत्यवत्॥ २३॥
88000
88001 घूर्णन्क्षीव इवानन्दी मन्दीभूतपुनर्भवः।
88002 अनुपादेयबुद्ध्या तु न स्मरत्यकृतं कृतम्॥ २४॥
88003
88004 अनुपादेयबुद्ध्या नियमेन कृताकृतस्मारिकायाः
88005 क्रियाफलोपादेयताबुद्धेरभावादित्यर्थः॥ २४॥
88006
88007 सर्व सर्वप्रकारेण गृह्णाति च जहाति च।
88008 अनुपादेयसर्वार्थो बालवच्च विचेष्टते॥ २५॥
88009
88010 सर्वमित्यादि बालपक्षेऽपि योज्यम्॥ २५॥
88011
88012 स तिष्ठन्नपि कार्येषु देशकालक्रियाक्रमैः।
88013 न कार्यसुखदुःखाभ्यां मनागपि हि गृह्यते॥ २६॥
88014
88015 कार्यप्रयुक्ताभ्यां सुखदुःखाभ्याम्॥ २६॥
88016
88017 बहिः प्रकृतसर्वार्थोऽप्यन्तः पुनरनीहया।
88018 न सत्तां योजयत्यर्थे न फलान्यनुधावति॥ २७॥
88019
88020 अर्थे बाह्यार्थे सत्तां सत्यताबुद्ध्या आस्थाम्। अत-एव फलान्यनुधावति॥
88021 २७॥
88022
88023 नोपेक्षते दुःखदशं न सुखाशामपेक्षते।
88024 कार्योदये नैति मुदं कार्यनाशे न खिद्यते॥ २८॥
88025
88026 उप समीपे संनिहितामपि दुःखदशां नेक्षते॥ २८॥
88027
88028 अपि शीतरुचावर्के सुतप्तेऽपीन्दुमण्डले।
88029 अप्यधः प्रसरत्यग्नौ [प्रतपति इति पाठः] विस्मयोऽस्य न जायते
88030 ॥ २९॥
88031
88032 अर्के शीतरुचौ जातेऽपि। इन्दुमण्डले सुतप्ते संपन्नेऽपि। अग्नौ अधः अधोमुखे
88033 प्रसरति ज्वलत्यपि। अस्य विस्मय आश्चर्यबुद्धिर्न जायते॥ २९॥
88034
88035 चिदात्मन इमा इत्थं प्रस्फुरन्तीह शक्तयः।
88036 इत्यस्याश्चर्यजालेषु नाभ्युदेति कुतूहलम्॥ ३०॥

कुतो न जायते तत्राह - चिदात्मन इति। शक्तयो मायाः॥ ३०॥

न दयादैन्यमादत्ते न क्रौर्यमनुधावति।
न लज्जामनुसंधत्ते नालज्जत्वं च गच्छति॥ ३१॥

लज्जा अपमानभैक्षचर्यादौ। अकार्येष्वलज्जत्वं न गच्छति॥ ३१॥

न कदाचन दीनात्मा नोद्धतात्मा कदाचन।
न प्रमत्तो न खिन्नात्मा नोद्विग्नो न च हर्षवान्॥ ३२॥

नास्य चेतसि सुस्फारे शरदम्बरनिर्मले।
कोपादयः प्रजायन्ते नभसीव नवाङ्कुराः॥ ३३॥

अनारतपतज्जातभूतायां जगतः स्थितौ।
क्व कथं किल कासौ स्यात्सुखिताऽसुखिताथवा॥ ३४॥

अनारतमविरतं पतन्ति म्रियन्ते जातान्युत्पन्नानि च भूतानि प्राणिनो यस्याम्।
अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् इति भगवद्दर्शितन्यायादिति
भावः। किंवृत्तत्रयं देशकालतः प्रकारतः स्वरूपतश्च
असंभावितत्वलाभाय॥ ३४॥

फेनाजवं जवीभावे जले भूतक्रमे तथा।
क्व किलेदं कुतः कोऽतः प्रसङ्गः सुखदुःखयोः॥ ३५॥

उक्तं दृष्टान्तेन समर्थयति - फेनेति। फेनानां तरङ्गप्रयुक्ते
आजवं जवीभावे भ्रमणे। इदं स्थैर्यं क्व कुतो वा। अतः सुखदुःखयोः
कः प्रसङ्गः॥ ३५॥

भावाभावैरपर्यन्तैरजस्रं जन्तुसंभवैः।
न विशीर्यन्ति नोद्यन्ति दृष्टिसृष्टिक्षमा नराः॥ ३६॥

न विशीर्यन्ति न नश्यन्ति न खिद्यन्ति च। नोद्यन्ति न जायन्ते न हृष्यन्ति च।
प्रातिभासिकस्य जगतो दृष्टिरेव सृष्टिस्तत्र क्षमाः अहमेवात्मनि
जगन्मायां सृजामीति पश्यन्तो जीवन्मुक्ताः॥ ३६॥

निमेषं प्रति यामिन्यां यथान्याः स्वप्नदृष्टयः।
क्षणोत्पत्तिविनाशिन्यस्तथैता लोकदृष्टयः॥ ३७॥

किंच प्रतिक्षणपरिणामिनो हि सर्वे भावाः इति न्यायात्प्रतिक्षणं
भिद्यमानेषु जगद्धर्मेष्वनुवर्तमानः स्थायी सदात्मा स्वप्न इव
स्वात्मन्येव दृश्यवान् षड्भावविकारान्प्रतिक्षणं कल्पयन्पश्यतीत्येव
तेषां निश्चये कुतो हर्षादिप्रसक्तिरित्याशयेनाह - निमेषमित्यादिना।
वीप्साद्योती प्रतिशब्दः कर्मप्रवचनीयः।
द्विर्वचनाव्ययीभावयोरन्यतरस्यावश्यं प्राप्तेस्तदकरणं छान्दसम्॥ ३७
। ।

अनारतसमुत्पत्तावनारतविनाशिनि।
कः क्रमो दग्धसंसारे कारुण्यानन्दयोरिह॥ ३८॥

क्रमणं क्रमः प्रसङ्गः॥ ३८॥

88089 शुभाशुभावात्सुखाभावे स्थितिं याते विलक्षणाः ।
88090 कीदृश्यः कथमायाताः क्व वा ता दुःखसंविदः ॥ ३९ ॥
88091
88092 किंच शुभकर्मफलेषु प्रसिद्धेषु सत्सु तद्विरोधिनः पुत्रवियोगदुःखादयः
88093 पदं लभेरन् जीवन्मुक्तानां शुभस्यैवाभावादुभयाप्रसक्तिरित्याह -
88094 शुभाभावादिति । विलक्षणाः शुभफलेभ्यो विलक्षणाः । किंवृत्तानि
88095 पूर्ववत् ॥ ३९ ॥
88096
88097 सुखसंवेदनान्तोत्था स्वबीजं वितनोति या ।
88098 शान्ता दुःखदशा सेयं कथमन्तर्हिते सुखे ॥ ४० ॥
88099
88100 या दुःखदशा सुखसंवेदनस्य सुखानुभवस्य अने उत्था लब्धसत्ताका सती
88101 स्वबीजं स्वकार्यं शोकमोहादि वितनोति विस्तारयति सेयं दुःखदशा
88102 शुभकर्माभावाच्छान्ते सुखे स्वयमपि शान्तैवेति निर्हेतुका कथं
88103 संभवेदिति पूर्वोक्तार्थस्यैव स्फुटीकरणम् ॥ ४० ॥
88104
88105 क्षीणाभ्यां सुखदुःखाभ्यां हेयोपादेययोः क्षये ।
88106 ईप्सितानीप्सिते क्व स्तो गलितेऽथ शुभाशुभे ॥ ४१ ॥
88107
88108 रम्यारम्यदृशोर्नाशाद्याते भोगामिवाञ्छने ।
88109 नैराश्ये संततं प्रौढे हिमवद्विगलेन्मनः ॥ ४२ ॥
88110
88111 किं ततस्तत्राह - रम्येति । याते अपगते सति । नैराश्ये प्रौढे निरूढे सति ॥
88112 ४२ ॥
88113
88114 आमूलान्मनसि क्षीणे संकल्पस्य कथा च का ।
88115 तिलेष्विवातिदग्धेषु तैलस्य कलना कुतः ॥ ४३ ॥
88116
88117 अस्तु मनोनाशस्ततोऽपि किं तत्राह - आमूलादिति ॥ ४३ ॥
88118
88119 भावेष्वभावघनभावनया महात्मा
88120 निर्मुक्तसंकलनमम्बरवत्स्थितेषु ।
88121 चित्तं प्रति स्वमुदितो विततैकरूपी
88122 ज्ञस्तिष्ठति स्वपिति जीवति नित्यतृप्तः ॥ ४४ ॥
88123
88124 अभावघनभावनय स्वव्यतिरिक्तं नाश्त्येवेति दृढनिश्चयेन सर्वेषु
88125 भावेषु दृश्यपदार्थेषु निर्मुक्तसंकलनं निःसंकल्पविकल्पं यथा
88126 स्यात्तथा अम्बरवत्सन्मात्रस्वभावेन स्थितेषु सत्सु
88127 परिच्छेदहेत्वभावाद्विततैकरूपि महात्मा ज्ञो नित्यतृप्तः सन् स्वेनैव
88128 निरतिशयानन्दात्मना मुदित आनन्दी सन्
88129 जाग्रत्स्वप्नयोर्यथाप्राप्तार्थालोचनमात्ररूपं चित्तं प्रति तिष्ठति तल्लये
88130 सुषुप्तौ स्वपिति यावत्प्रारब्धक्षयं च जीवतीत्यर्थः ॥ ४४ ॥
88131
88132 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे०
88133 मोक्षोपायेषूपशमप्रकरणे जीवन्मुक्तस्वरूपवर्णनं नाम
88134 सप्तसप्ततितमः सर्गः ॥ ७७ ॥
88135
88136 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
88137 जीवन्मुक्तस्वरूपवर्णनं नाम सप्तसप्ततितमः सर्गः ॥ ७७ ॥
88138
88139
88140 अष्टसप्ततितमः सर्गः ७८

88141
88142 श्रीवसिष्ठ उवाच।
88143
88144 यथालातपरिस्पन्दादग्निचक्रं प्रदृश्यते।
88145 असदेव सदाभासं चित्तस्पन्दात्तथा जगत्॥ १॥
88146
88147 चित्तस्पन्दाज्जगद्भ्रान्तिश्चित्तस्पन्दश्च यादृशः।
88148 योगश्च तन्निरोधार्थः सम्यगत्र निगद्यते॥ १॥
88149
88150 अलातस्य ज्वलदुल्मुकस्य परिस्पन्दाद्भ्रमणाद्रात्रावग्निमयं चक्रं
88151 भ्रान्त्या यथा दृश्यते तथेत्यर्थः॥ १॥
88152
88153 यथा जलपरिस्पन्दाद्व्यतिरिक्त इवाम्भसः।
88154 दृश्यते वर्तुलावर्तश्चित्तस्पन्दात्तथा जगत्॥ २॥
88155
88156 वर्तुलनाभ्याकार आवर्तः॥ २॥
88157
88158 यथा व्योम्नीक्षणस्पन्दात्पिच्छमौक्तिकमण्डलम्।
88159 दृश्यते सदिवासत्यं चित्तस्पन्दात्तथा जगत्॥ ३॥
88160
88161 ईक्षणयोर्नेत्रयोरातपसांमुख्येन स्पन्दात्पिच्छाकारमन्यतः
88162 स्पन्दान्मौक्तिकमण्डलमिव दृश्यते॥ ३॥
88163
88164 श्रीराम उवाच।
88165
88166 येन प्रस्पन्दते चित्तं येन न स्पन्दते तथा।
88167 तद्ब्रह्मन्ब्रूहि मे येन चिकित्सेयं तदेव हि॥ ४॥
88168
88169 येन स्वभावेन प्रस्पन्दते येनोपायेन न स्पन्दते॥ ४॥
88170
88171 श्रीवसिष्ठ उवाच।
88172
88173 यथा शौक्ल्यहिमे राम तिलतैललवौ यथा।
88174 यथा कुसुमसौगन्ध्ये तथौष्ण्यदहनौ यथा॥ ५॥
88175
88176 स्पन्दस्वभावश्चित्तात्पृथक्कृत्य वक्तुमशक्य इति दृष्टान्तैरेव तं
88177 दर्शयति - यथेत्यादिना। तिलश्च तैललवश्च तौ। यथाशब्दः समुच्चये॥ ५
88178 ।।
88179
88180 तथा राघव संश्लिष्टौ चित्तस्पन्दौ तथैव हि।
88181 अभिन्नौ केवलं मिथ्या भेदः कल्पित एतयोः॥ ६॥
88182
88183 अत्राप्याद्यस्तथाशब्दः समुच्चये द्वितीयो दार्ष्टान्तिकोपबन्धार्थः। सर्वत्र
88184 गुणगुण्यादावविचाराद्भेदसहिष्णुरभेद एव संश्लेषः। तत्र विचारे
88185 भेदांशो मिथ्या अभेदांशो वास्तव इति दर्शयति - अभिन्नाविति॥ ६॥
88186
88187 चित्तचित्तपरिस्पन्दपक्षयोरेकसंक्षये।
88188 स्वयं गुणगुणी [गुणो गुणी इति युक्तम्] स्थित्वा नश्यतो द्वौ न
88189 संशयः॥ ७॥
88190
88191 अभेदांश एव कल्पितः किं न स्यादित्याशङ्क्यां परिहरन्येन न स्पन्दते
88192 तथेति प्रश्नांशस्योत्तरमाह - चित्तेति। यः स्वयं कारणात्मा गुणो गुणी

88193 चेति विकल्पितस्तदात्मना स्थित्वैव द्वावपि गुणगुणिविकल्पौ नश्यन्तो न
88194 निरन्वयेनेत्यर्थः। तथाचैककारणात्मना स्थित्वैव
88195 गुणगुणिभेदनाशदर्शनाद्भेदांश एव कल्पितो नाभेदांश
88196 इत्येतन्मनःस्पन्दयोरेकतरनाशाधीनात्यन्तिकोभयनिवृत्यैव चित्तं न
88197 स्पन्दते नतु जीवति मनसि तत्स्पन्दो वारयितुं शक्य इत्येतच्च सिद्धमिति भावः॥
88198 ७॥
88199
88200 द्वौ क्रमौ चित्तनाशस्य योगो ज्ञानं च राघव।
88201 योगस्तद्वृत्तिरोधो हि ज्ञानं सम्यगवेक्षणम्॥ ८॥
88202
88203 अत-एव स्पन्दनिरोधेनोभयनाशार्थ ज्ञानक्रमश्च शास्त्रे दर्शित इत्याह
88204 - द्वौ क्रमाविति॥ ८॥
88205
88206 श्रीराम उवाच।
88207
88208 कदा कीदृक्कया युक्त्या प्राणापाननिबन्धया।
88209 योगनाम्न्या मनः शान्तिमेत्यनन्तसुखप्रदाम्॥ ९॥
88210
88211 तत्राद्यं क्रमं प्रथमं जिज्ञासमानो रामः पृच्छति - कदेति।
88212 प्राणापानयोर्निबन्धनं प्राणापाननिबन्धा। भावे गुरोश्च हलः
88213 इत्यप्रत्ययः। प्राणापाननिरोधलक्षणयेत्यर्थः॥ ९॥
88214
88215 श्रीवसिष्ठ उवाच।
88216
88217 देहेऽस्मिन्देहनाडीषु वातः स्फुरति योऽभितः।
88218 स्पन्देष्विव भुवो वारि स प्राण इति कीर्तितः॥ १०॥
88219
88220 आसर्गसमाप्तेरस्यैव प्रश्नस्योत्तरं वर्णयिष्यंश्चित्तस्पन्दस्य
88221 प्राणस्पन्दाधीनतां वक्तुं प्रथमं प्राणस्वरूपमाह -
88222 देहेस्मिन्नित्यादिना। देहनाडीषु द्वासप्ततिर्द्वासप्ततिः प्रतिशाखं
88223 नाडीसहस्राणि भवन्त्यासु व्यानश्चरति इति श्रुतेरित्यर्थः। यथा भुवः
88224 स्पन्देषु स्पन्दनमार्गभूतेषु विवरेषु वारि जलं सर्वतो व्याप्य स्फुरति तद्वत्॥
88225 १०॥
88226
88227 तस्य स्पन्दवशादन्तः क्रियावैचित्र्यमीयुषः।
88228 अपानादीनि नामानि कल्पितानि कृतात्मभिः॥ ११॥
88229
88230 ननु प्राणो बहिरेव याति देहे त्वपानादयोऽन्ये वायवः संचरन्ति तत्राह -
88231 तस्येति। ते प्राणस्यैव वृत्तिभेदा नान्ये इत्यर्थः॥ ११॥
88232
88233 आमोदस्य यथा पुष्पं शौक्ल्यस्य तु हिनं यथा।
88234 तथैव रस आधारश्चित्तस्याभिन्नतां गतः॥ १२॥
88235
88236 वारिदृष्टान्तोपपत्तये रस इति विशेषणम्। आपोमयः प्राणः इति
88237 एतमेवाङ्गिरसं मन्यन्ते प्राणो वा अङ्गानां रसः च श्रुतेरिति भावः।
88238 चित्तस्य कोशवत्सर्वतः संश्लेषेणाभिन्नतामिव गत आधारः।
88239 प्राणबन्धनं हि सोम्य मनः तस्य पुरुषविधतामन्वयं पुरुषविधः
88240 इत्यादिश्रुतेरिति भावः॥ १२॥
88241
88242 अन्तःप्राणपरिस्पन्दात्संकल्पकलनोन्मुखी।
88243 संवित्संजायते यैषा तच्चित्तं विद्धि राघव॥ १३॥
88244

88245 अत-एव तत्स्पन्दस्य चित्तस्पन्दहेतुतेत्याह - अन्तरिति | संकल्पग्रहणं
88246 वृत्तिमात्रोपलक्षणम् || १३ ||
88247
88248 प्राणस्पन्दाच्चितः स्पन्दस्तत्स्पन्दादेव संविदः |
88249 चक्रावर्तविधायिन्यो जलस्पन्दादिवोर्मयः || १४ ||
88250
88251 चितः स्पन्दश्चिदाभासव्याप्तवृत्तिभेदः | संविदस्तत्तद्विषयाकारप्रथाः ||
88252 १४ ||
88253
88254 चित्तं प्राणपरिस्पन्दमाद्दुरागमभूषणाः |
88255 तस्मिन्संरोधिते नूनमुपशान्तं भवेन्मनः || १५ ||
88256
88257 प्राणपरिस्पन्दं प्राणाधीनपरिस्पन्दम् | आगमभूसणाः प्राणबन्धनं हि
88258 सोम्य मनः प्राणाद्वा एष उदेति प्राणेऽस्तमेति प्राणं तर्हि वागप्येति प्राणं
88259 चक्षुः प्राणं श्रोत्रम् इत्यादिश्रुतिरहस्यज्ञाः || १५ ||
88260
88261 मनःस्पन्दोपशान्त्यायं संसारः प्रविलीयते |
88262 सूर्यालोकपरिस्पन्दशान्तौ व्यवहृतिर्यथा || १६ ||
88263
88264 अस्त्वेवं ततः किं तत्राह - मन इति || १६ ||
88265
88266 श्रीराम उवाच |
88267
88268 अनिशं चरतां देहगेहे गगनगामिनाम् |
88269 प्राणादीनां परिस्पन्दो वायूनां रोध्यते कथम् || १७ ||
88270
88271 देहलक्षणे स्वगेहे हृदयादिस्थानेषु द्वासप्ततिसहस्रनाडीभेदेषु च अनिशं
88272 चरतां गगनेषु मुखनासिकादिच्छिद्रेषु बाह्याकाशे च गमनशीलानाम् || १७ ||
88273
88274 श्रीवसिष्ठ उवाच |
88275
88276 शास्त्रसज्जनसंपर्कवैराग्याभ्यासयोगतः |
88277 अनास्थायां कृतास्थायां पूर्वसंसारवृत्तिषु || १८ ||
88278
88279 प्राणस्पन्दनिरोधे निरालम्बनसालम्बनादिराजयोगोपायान्वक्तुमुपक्रमते ##-
88280 आत्यन्तिकपरित्यागाद्यमनियमशमदमादिविरोध्यभ्यासाच्चात्यन्तमनास्थाया
88281 ं हृदि कृतप्रतिष्ठायां सत्याम् || १८ ||
88282
88283 यथाभिवाञ्छितध्यानाच्चिरमेकतयोदितात् |
88284 एकतत्त्वघनाभ्यासात्प्राणस्पन्दो निरुद्ध्यते || १९ ||
88285
88286 प्रथमं स्थूले शिखरे चन्द्रबिम्बे मणिदेवतामूर्त्यादौ वा यत्रैव मनोऽस्य
88287 रमते तत्रैव निरोधोऽभ्यसनीय इत्याह - यथाभिवाञ्छितेति | एकतया
88288 एकाग्रतया उदितात् | एकाग्रतालक्षणं परिणामं प्राप्येत्यर्थः | तदनन्तरं
88289 यत्कार्यं तदाह - एकतत्त्वेति || १९ ||
88290
88291 पूरकादिनिजायामाद्दृढाभ्यासादस्वेदजात् |
88292 एकान्तध्यानसंयोगात्प्राणस्पन्दो निरुद्ध्यते || २० ||
88293
88294 पूरककुम्भकरेचकक्रमेण प्राणनिरोधसहिताद्वा
88295 दुर्दान्तचित्तस्पन्दनिरोधः कार्य इत्याह - पूरकेति | पूरकादिना निजस्य
88296 स्वस्य प्राणस्यायामात् || २० ||

88297
88298 ओंकारोच्चारणप्रान्तशब्दतत्त्वानुभावनात् ।
88299 सुषुप्ते संविदो जाते प्राणस्पन्दो निरुद्ध्यते ॥ २१ ॥
88300
88301 दीर्घोच्चारितप्रणवतुर्यमात्रालम्बनयोगाद्वा संविदो बाह्यार्थसंवेदनस्य
88302 सुषुप्ते आत्यन्तिकोपरमे जाते सति ॥ २१ ॥
88303
88304 रेचके नूनमभ्यस्ते प्राणे स्फारे खमागते ।
88305 न स्पृशत्यङ्गरन्ध्राणि प्राणस्पन्दो निरुद्ध्यते ॥ २२ ॥
88306
88307 इदानीं रेचकपूरकयोरेकैकस्यापि श्वासप्रश्वासशिथिलीकरणे
88308 कालदैर्घ्याभिवर्धनसहितध्यानाभ्यासादपि तन्निरोध इत्याह - रेचके इति
88309 द्वाभ्याम् । स्फारे विपुलीभूते प्राणे छिन्नाभ्रवत् क्रमात् खं शून्यभावं
88310 बाह्याकाशं वा आगते अङ्गरन्ध्राणि नासाविवराणि न स्पृशति सति ॥ २२ ॥
88311
88312
88313
88314 पूरके नूनमभ्यस्ते पूराद्गिरिघनस्थिते ।
88315 प्राणे प्रशान्तसंचारे प्राणस्पन्दो निरुद्ध्यते ॥ २३ ॥
88316
88317 अन्तःपूरात्पूरणाद्गिरौ घना मेघा इव यावत्पूर्ति मन्दमुपचीयमाने स्थिते
88318 निश्चले सति ॥ २३ ॥
88319
88320 कुम्भके कुम्भवत्कालमनन्तं परितिष्ठति ।
88321 अभयसात्स्तम्भिते प्राणे प्राणस्पन्दो निरुद्ध्यते ॥ २४ ॥
88322
88323 पूर्यनन्तरं कुम्भके पूर्णकुम्भवदनन्तं कालं स्तम्भिते प्राणे
88324 परितिष्ठति सति । उक्तत्रिविधप्राणायामक्रमश्च पातञ्जले शास्त्रे प्रपञ्चितः
88325 तस्मिन्सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः । तस्मिन्प्रागुक्ते
88326 आसनजये सति बाह्यस्य वायोरायमनं श्वासः कौष्ठ्यस्य वायोर्निस्सारणं
88327 प्रश्वासः तयोर्गतिविच्छेद उभयाभावलक्षणः प्राणायामः कार्य इत्यर्थः
88328 । स तु बाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसंख्याभिः परिदृष्टो
88329 दीर्घसूक्ष्मः । यत्र प्रश्वासपूर्वको गतिनिरोधः स बाह्यः । यत्र
88330 श्वासपूर्वको गत्यभावः स आभ्यन्तरः । तृतीयः
88331 स्तम्भवृत्तिर्यत्रोभयाभावः सकृत्प्रयत्नाद्भवति । यथा तप्ते
88332 न्यस्तमुपले जलं सर्वतः संकोचमापद्यते तथा द्वयोर्युगपद्गत्यभाव इति ।
88333 त्रयोऽप्येते देशपरिदृष्टाः बहिस्तूललवस्पन्दादिना अन्तर्नाभ्यादिस्पन्दादिना
88334 च इयानस्य विषयो देश इति । कालेन परिदृष्टाः क्षणानामियत्तावधारणेन ।
88335 संख्याभिः परिदृष्टा एतावत्संख्यश्वासप्रश्वासकालैः प्रथमो
88336 द्वितीयस्तृतीय उद्घोधित इति । एवं मृदुरेवं मध्य एवं तीव्र इति च । स
88337 खल्वेवमभ्यस्तः प्राणायामः
88338 प्रविकस्वरतूलपिण्डवन्मन्दाकृष्टबिसतन्तुवद्वा दैर्घ्यसौक्ष्म्यापन्नैः
88339 प्राणैर्दीर्घः सूक्ष्मश्च भवतीत्यर्थः । अभ्यासात्स्तम्भिते प्राणे इत्यनेन च
88340 तत्परिपाकलभ्यश्चतुर्थोऽपि प्रकारः सूचितः । सोऽपि पतञ्जलिना दर्शितः
88341 बाह्याभ्यन्तरविषयाक्षेपी चतुर्थः इति । पूर्वोक्तोभयजयात्तदाक्षेपपूर्वकः
88342 प्राणगत्यभावः स्थिरश्चतुर्र्थः प्राणायाम इत्यर्थः ।
88343 प्राणायामप्रतिष्ठाफलमपि पतञ्जलिनोक्तम् ततः क्षीयते प्रकाशावरणम् ।
88344 धारणासु च योग्यता मनसः इति । तपि न परमं प्राणायामात्ततो
88345 विशुद्धिर्मलानां दीप्तिश्च ज्ञानस्येति भाष्यम् ॥ २४ ॥
88346
88347 तालुमूलगतां यत्नाज्जिह्वयाक्रम्य घण्टिकाम् ।
88348 ऊर्ध्वरन्ध्रगते प्राणे प्राणस्पन्दो निरुद्ध्यते ॥ २५ ॥

घण्टिकां व्यात्तास्यस्य जिह्वामूले स्तनवल्लम्बमानतया
दृश्यमानामिन्द्रयोनिम् | अन्तरेण तालुके य एष स्तन इवावलम्बते सेन्द्रयोनिः
इति श्रुतेः | तां परिवृत्तया
वर्धनाभ्यासादिप्रयत्नादन्तःप्राणसंचारमार्गे मूर्धरन्ध्रे
प्रवेश्यमानया जिह्वया आक्रम्य निषीड्याधःकृत्य प्राणे ऊर्ध्वरन्ध्रे
ब्रह्मरन्ध्रे गते प्रवेश्य धारिते सतीत्यर्थः | अनेन लम्बिकायोगसमुच्चिता
नभोधारणा दर्शिता | तत्प्रकारश्च भगवता स्कन्देनोक्तः रसनां तालुविवरे
निधायोर्ध्वमुखोऽमृतम् | धयन्निर्जरतां गच्छेदाषण्मासान्न संशयः
|| ऊर्ध्वजिह्वः स्थिरो भूत्वा सोमपानं करोति यः | मासार्धेन न संदेहो
मृत्युं जयति योगवित् || आकाशं च मरीचिवारिसदृशं
यद्ब्रह्मरन्ध्रस्थितं यन्नाथेन सदाशिवेन सहितं शान्तं हकाराक्षरम् |
प्राणं विलीय पञ्चघटिकं चित्तान्वितं धारयेदेषा
मोक्षकवाटपाटनपटुः प्रोक्ता नभोधारणा || इति || २५ ||

समस्तकलनोन्मुक्ते न किंचिन्नामसूक्ष्मखे |
ध्यानात्संविदि लीनायां प्राणस्पन्दो निरुद्ध्यते || २६ ||

समस्ताः कलना विकारास्तदुन्मुक्तेऽत-एव न किंचिन्नामनि सूक्ष्मे
हार्दाकाशे संविदि अन्तर्बाह्यसंवेदनवृत्तिमात्रे निर्विकल्पसमाधिना
लीनायां सत्याम् || २६ ||

द्वादशाङ्गुलपर्यन्ते नासाग्रे विमलाम्बरे |
संविद्दृशि प्रशाम्यन्त्यां प्राणस्पन्दो निरुद्ध्यते || २७ ||

नासाग्रोपलक्षितद्वादशाङ्गुलपरिमितबाह्याकाशे चक्षुर्मनसोर्निरोधाद्वा
तन्निरोधा इत्याह - द्वादशेति || २७ ||

अभ्यासादूर्ध्वरन्ध्रेण तालूर्ध्वं द्वादशान्तगे |
प्राणे गलितसंवृत्ते प्राणस्पन्दो निरुद्ध्यते || २८ ||

लम्बिकायोगाऽसमुच्चिताद्वा
उपायान्तराभ्यस्तात्प्रागुक्तनभोधारणात्तन्निरोधसिद्धिरित्याह -
अभ्यासादिति | द्वादशान्तं ब्रह्मरन्ध्रस्थानं तद्गे प्राणे गलितप्राये
संवृत्ते सति || २८ ||

भ्रूमध्ये तारकालोकशान्तावन्तमुपागते |
चेतने केतने बुद्धे प्राणस्पन्दो निरुद्ध्यते || २९ ||

एवं खेचरीमुद्रापि प्राणस्पन्दनिरोधहेतुरित्याह - भ्रूमध्ये इति |
तारकयोश्चक्षुःकनीनिकयोरालोकस्य तेजसश्चक्षुरिन्द्रियस्येति यावत् |
चिरनिरोधाच्छान्तौ उपरमे सति तथा जिह्वाग्रे प्राणे च प्रागुक्तरीत्या
कपालकुहरप्रवेशादन्तं द्वादशान्तमुपागते सति केतने भ्रूमध्ये
अविमुक्तस्थाने य एषोऽक्षरोऽनन्तः इति जाबालश्रुत्याअदिप्रसिद्धे चेतने
चिन्मात्रस्वभावे परमेश्वरे आत्मतया बुद्धे सतीत्यर्थः | खेचरीमुद्रापि
स्कन्देनोक्ता - कपालकुहरे जिह्वा प्रविष्टा विपरीतगा | भ्रुवोरन्तर्गता
दृष्टिर्मुद्रा भवति खेचरी || न पीड्यते स रोगेण न च लिप्येत कर्मणा |
बाध्यते न स कालेन यो मुद्रां वेत्ति खेचरीम् || इति || २९ ||

झटित्येव यदुद्भूतं ज्ञानं तस्मिन्दृढाश्रिते |
असंश्लिष्टविकल्पांशे प्राणस्पन्दो निरुद्ध्यते || ३० ||

88401 गुरोरीश्वरस्य वा अनुग्रहात्काकतालीयन्यायेन झटित्येवोद्भूते ज्ञाने
88402 झटित्येव चित्तविकल्पोपशमाद्वा तन्निरोध इत्याह - झटित्येवेति ॥ ३० ॥
88403
88404 चिरं कालं हृते कान्तव्योमसंवेदनान्मुने ।
88405 अवासनान्मनोध्यानात्प्राणस्पन्दो निरुद्ध्यते ॥ ३१ ॥
88406
88407 अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म
88408 दहरोऽस्मिन्नन्तराकाशः इत्यादिश्रुतिप्रसिद्धे दहराकाशे वा चिरं
88409 चित्तनिवेशात्तत्साक्षात्कारे तत्सिद्धिरित्याह - चिरमिति । तथाचोक्तं पातञ्जले
88410 - हृदये चित्तसंवित्स्वार्थसंयमात्पुरुषज्ञानम् इति च ॥ ३१ ॥
88411
88412 श्रीराम उवाच ।
88413
88414 ब्रह्मन् जगति भूतानां हृदयं तत्किमुच्यते ।
88415 इदं सर्वं महादर्शे यस्मिंस्तत्प्रतिबिम्बति ॥ ३२ ॥
88416
88417 हृदयशब्दस्य पुण्डरीकाकारमांसविशेषे मनसि परमात्मनि च
88418 प्रयोगदर्शनात्संदिहानस्य प्रश्नः । प्रतिबिम्बति आदर्शे प्रतिबिम्ब इव
88419 स्फुरति ॥ ३२ ॥
88420
88421 श्रीवसिष्ठ उवाच ।
88422
88423 साधो जगति भूतानां हृदयं द्विविधं स्मृतम् ।
88424 उपादेयं च हेयं च विभागोऽयं तयोः शृणु ॥ ३३ ॥
88425
88426 तत्र मांसमनसोः परिच्छिन्नत्वादैक्यमेव प्रकल्प्य द्वेधा विभागो बोध्यः
88427 ॥ ३३ ॥
88428
88429 इयत्तया परिच्छिन्ने देहे यद्वक्षसोऽन्तरम् ।
88430 हेयं तद्धृदयं विद्धि तनावेकतटे स्थितम् ॥ ३४ ॥
88431
88432 संविन्मात्रं तु हृदयमुपादेयं स्थितं स्मृतम् ।
88433 तदन्तरे च बाह्ये च न च बाह्ये न चान्तरे ॥ ३५ ॥
88434
88435 ननु आत्मनि हृदयशब्दो हृदयमात्रस्थितिकत्वाद्गौणः किं न
88436 स्यादित्याशङ्क्याह - तदन्तरे चेति ॥ ३५ ॥
88437
88438 तत्तु प्रधानं हृदयं तत्रेदं समवस्थितम् ।
88439 तदादर्शः पदार्थानां तत्कोशः सर्वसंपदाम् ॥ ३६ ॥
88440
88441 अस्मिन्द्यावापृथिवी अन्तरेव समाहिते इति श्रुतेरिति भावः ॥ ३६ ॥
88442
88443 सर्वेषामेव जन्तूनां संविद्धृदयमुच्यते ।
88444 न देहावयवैकांशो जडजीर्णोपलोपमः ॥ ३७ ॥
88445
88446 तस्मात्संविन्मये शुद्धे हृदये हृतवासनः ।
88447 बलान्नियोजिते चित्ते प्राणस्पन्दो निरुध्यते ॥ ३८ ॥
88448
88449 एभिः क्रमैस्तथान्यैश्च नानासंकल्पकल्पितैः ।
88450 नानादेशिकवक्त्रस्थैः प्राणस्पन्दो निरुध्यते ॥ ३९ ॥
88451
88452 अभ्यासेन निराबाधमेतास्ता योगयुक्तयः ।

88453 उपायतामुपायान्ति भव्यस्य भवभेदने ॥ ४० ॥
88454
88455 सहसा हठयोगे प्रवृत्तिं वारयितुमाह - अभ्यासेनेति । हठान्निरोधे तु
88456 रोगाद्या बाधा स्यादेवेति भावः ॥ ४० ॥
88457
88458 अभ्यासाद्दृढतां यातो वैराग्यपरिलाञ्छितः ।
88459 यथावासनमायामः प्राणानां सफलः स्मृतः ॥ ४१ ॥
88460
88461 यथावासनं यदा या या वासना उद्भवन्ति तदा तत्तन्निरोधायेत्यर्थः । अथवा
88462 मुमुक्षावासनायां मोक्षफलेन सफलो भोगवासनायां तु
88463 तत्तद्भोगसिद्धिवैचित्र्यफलेन सफल इत्यर्थः ॥ ४१ ॥
88464
88465 भ्रूनासातालुसंस्थासु द्वादशाङ्गुलिकोटिषु ।
88466 अभ्यासाच्छाम्यति प्राणो दूरे गिरिनदी यथा ॥ ४२ ॥
88467
88468 अत-एव तत्तत्सिद्धिफलभेदार्थपातञ्जलशास्त्रे
88469 भ्रूमध्यादिस्थानभेदेन धारणाभेदा दर्शिता इत्याशयेनाह -
88470 भ्रूनासेति \/ तालुसंस्था तालुसंस्थानं कण्ठाग्रादारभ्य
88471 द्वादशाङ्गुलिमितप्रदेशकोटिः सीमा द्वादशान्तः ।
88472 पुरुषभेदाद्बहुवचनम् । यथाह पतञ्जलिः नाभिचक्रे कायव्यूहज्ञानम्
88473 कण्ठकूपे क्षुत्पिपासानिवृत्तिः कूर्मनाड्यां स्थैर्यम् कण्ठकूपादधः
88474 कूर्मपृष्ठवदुन्नतप्रदेशे कूर्मनाडी प्रसिद्धा मूर्धज्योतिषि
88475 सिद्धदर्शनम् इत्यादि । शिरः कपालच्छिद्रे भास्वरज्योतिर्मूर्धज्योतिः । गिरिनदी
88476 निर्झरः । सा यथा दूरे गत्वा तत्रैव लीयते तद्वत् ॥ ४२ ॥
88477
88478 भूयोभूयश्चिराभ्यासाज्जिह्वाप्रान्तेन तालुनि ।
88479 घण्टिका स्पृश्यते प्राणो येनोच्चैर्निवहत्यलम् ॥ ४३ ॥
88480
88481 जिह्वयाक्रम्य घण्टिकाम् इति यत्प्रागुक्तं तत्रोपायमाह - भूय इति ।
88482 स्पृश्यते आक्रम्यते ॥ ४३ ॥
88483
88484 विकल्पबहुलास्त्वेते स्वाभ्यासेन समाधयः ।
88485 परमोपशमायाशु संप्रयान्त्यविकल्पताम् ॥ ४४ ॥
88486
88487 एतेषां समाधिभेदानां तत्तत्सिद्धिफलेषु विकल्पबहुलत्वेऽपि निष्कामस्य
88488 परमोपशमफले अविकल्पतैव सर्वेषामित्याह - विकल्पेति ॥ ४४ ॥
88489
88490 आत्मारामो वीतशोको भवत्यन्तःसुखः पुमान् ।
88491 अभ्यासादेव नान्यस्मात्तस्मादभ्यासवान्भव ॥ ४५ ॥
88492
88493 अभ्यासेन परिस्पन्दे प्राणानां क्षयमागते ।
88494 मनः प्रशममायाति निर्वाणमवशिष्यते ॥ ४६ ॥
88495
88496 वासनावलितं जन्म मोक्षं निर्वासनं मनः ।
88497 प्राणं च राम गृह्णाति यथेच्छसि तथा कुरु ॥ ४७ ॥
88498
88499 वासनावलितं मनो जन्मशरीरं तत्र प्राणं चाभिमानेन गृह्णाति ।
88500 निर्वासनं तु मोक्षम् ॥ ४७ ॥
88501
88502 प्राणस्पन्दो मनोरूपं तस्मात्संसृतिविभ्रमः ।
88503 तस्मिन्नेव शमं याते दीयते संसृतिज्वरः ॥ ४८ ॥
88504

88505 एवं उक्ताभ्यासप्रकारेण दीयते खण्ड्यते। चिकित्स्यत इति यावत्॥ ४८॥
88506
88507 विकल्पांशक्षयाज्जन्तोः पदं तदवशिष्यते।
88508 यतो वाचो निवर्तन्ते समस्तकलनान्विताः॥ ४९॥
88509
88510 यत्र सर्वं यतः सर्वं यत्सर्वं सर्वतश्च यत्।
88511 यत्र नेदं यतो नेदं यन्नेदं नेदृशं जगत्॥ ५०॥
88512
88513 इदं दृश्यं यत्र नेत्याधेयतया यतो नेत्युपादेयतया यन्नेति तादात्म्येन च
88514 सच्चिदात्मसंबन्धनिषेधान्न केनाप्यंशेन जगद्ब्रह्मसदृशमित्यर्थः॥
88515 ५०॥
88516
88517 विनाशित्वाद्विकल्पत्वाद्गुणित्वान्निर्गुणात्मनः।
88518 यस्य नो सदृशो दृष्टो दृष्टान्तः कश्चिदेव हि॥ ५१॥
88519
88520 अत-एव विनाशित्वादिधर्मके जगति न कश्चिदपि ब्रह्मणो
88521 दृष्टान्तोऽस्तीत्याह - विनाशित्वादिति॥ ५१॥
88522
88523 स्वादनी सर्वशालीनां दीपिका सर्वतेजसाम्।
88524 कलना सर्वकामानामन्तश्चिच्चन्द्रिकोदिता॥ ५२॥
88525
88526 यदि न कश्चिद्दृष्टान्तस्तर्हि कथं तत्परिचयस्तत्राह - स्वादनीति।
88527 रसरूपादिगोचरबाह्यवृत्तित्रिपुटीनां कामाद्यान्तरवृत्तित्रिपुटीनां च
88528 भासकतया तत्परिचेयमित्यर्थः॥ ५२॥
88529
88530 यस्मात्कल्पतरोबह्व्यः संसारफलपङ्क्तयः।
88531 अनारतं बहुरसा जायन्ते च पतन्ति च॥ ५३॥
88532
88533 फलमतः उपपत्तेः इति न्यायाद्विचित्रकर्मफलोदयक्षयनिमित्ततया वा
88534 तत्परिचेयमित्याह - यस्मादिति॥ ५३॥
88535
88536 तत्पदं सर्वसीमान्तमवलम्ब्य महामतिः।
88537 यः स्थितः स्थिरधीस्तज्ज्ञः स जीवन्मुक्त उच्यते॥ ५४॥
88538
88539 तत्परिचयावलम्बने पुरुषार्थसिद्धिं दर्शयन्नुपसंहरति - तदिति
88540 द्वाभ्याम्॥ ५४॥
88541
88542 विगतसर्वसमीहितकौतुकः
88543 समुपशान्तहिताहितकल्पनः।
88544 सकलसंव्यवहारसमाशयो
88545 भवति मुक्तमनाः पुरुषोत्तमः॥ ५५॥
88546
88547 विगतानि सर्वाणि समीहितकौतुकानि कामभोगोत्कण्ठा यस्य। अत-एव
88548 तदनुकूलप्रतिकूलेषु समुपशान्ता हिताहितवासना यस्य। अत-एव सकलेषु
88549 संव्यवहारेषु समो हर्षविषादशून्य आशयो यस्य। ईदृशो मुक्तमनाः
88550 पुरुषश्रेष्ठो भवति। भगवान्विष्णुरपि भवतीत्यर्थः॥ ५५॥
88551
88552 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० देवदूतोक्ते
88553 मोक्षोपायेषूपशमप्रकरणे योगवर्णनं नामाष्टसप्ततितमः सर्गः
88554 ॥ ७८॥
88555
88556 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे योगवर्णनं

88557 नामाष्टसप्ततितमः सर्गः ‖ ७८ ‖
88558
88559
88560 एकोनाशीतितमः सर्गह् ७९
88561
88562 श्रीराम उवाच ।
88563
88564 योगयुक्तस्य चित्तस्य शम एव निरूपितः ।
88565 सम्यग्ज्ञानमिदानीं मे कथयानुग्रहात्प्रभो ‖ १ ‖
88566
88567 उद्दिष्टौ चित्तनाशाय योगज्ञानक्रमौ हि यौ ।
88568 तयोराद्ये परिज्ञाते द्वितीयोऽत्र निरूप्यते ‖ १ ‖
88569
88570 द्वौ क्रमौ चित्तनाशस्य योगो ज्ञानं च राघव इत्युद्दिष्टक्रमयोर्मध्ये
88571 आद्यश्चित्तस्य शमो नाशप्रकारो निरूपितस्त्वयेत्यर्थः ‖ १ ‖
88572
88573 श्रीवसिष्ठ उवाच ।
88574
88575 अनाद्यन्तावभासात्मा परमात्मेह विद्यते ।
88576 इत्येको निश्चयः स्फारः सम्यग्ज्ञानं विदुर्बुधाः ‖ २ ‖
88577
88578 लक्षणस्वरूपसाधनादिभिः सम्यग्ज्ञानं प्रपञ्चयिष्यन्
88579 प्रथममात्मपरिचयेन जगद्बाधात्मतालक्षणं तल्लक्षणमाह -
88580 अनाद्यन्तेति । एकः असाधारणः । स्फारः अपरिच्छिन्नाकारः ‖ २ ‖
88581
88582 इमा घटपटाकाराः पदार्थशतपङ्क्तयः ।
88583 आत्मैव नान्यदस्तीति निश्चयः सम्यगीक्षणम् ‖ ३ ‖
88584
88585 एवं जगद्बाधेनात्मपरिचयात्मता वा तल्लक्षणमित्याह - इमा इति ‖ ३ ‖
88586
88587 असम्यग्वेदनाज्जन्म मोक्षः सम्यगवेक्षणात् ।
88588 असम्यग्वेदनाद्रज्जुः सर्पो नो सम्यगीक्षणात् ‖ ४ ‖
88589
88590 सम्यग्ज्ञानस्य मोक्षसमर्थतां दर्शयति - असम्यगिति । सम्यगीक्षणान्नो
88591 सर्पः । सर्पभावान्मोक्ष इति यावत् ‖ ४ ‖
88592
88593 संकल्पांशविनिर्मुक्ता संवित्संवेद्यवर्जिता ।
88594 संवित्त्याभिसमाख्याता मुक्तावस्तीह नेतरत् ‖ ५ ‖
88595
88596 मुक्तौ तर्हि किं परिशिष्यते तदाह - संकल्पेति । संवित्त्या
88597 स्वप्रकाशस्वभावेनैव अभितः सम्यक् आख्याता प्रथमाना । इह मुक्तौ ‖ ५ ‖
88598
88599 सा शुद्धरूपा विज्ञाता परमात्मेति कथ्यते ।
88600 शुद्धा त्वशुद्धरूपान्तरविद्येत्युच्यते बुधैः ‖ ६ ‖
88601
88602 अप्यर्थे तुशब्दः ‖ ६ ‖
88603
88604 संवित्तिरेव संवेद्यं नानयोर्द्वित्वकल्पना ।
88605 चिनोत्यात्मानमात्मैव रामैवं नान्यदस्ति हि ‖ ७ ‖
88606
88607 तथाचाविज्ञानकृत एव संवित्तिसवेद्ययोर्भेदो न वास्तव इत्याह -
88608 संवित्तिरेवेति । चिनोति अज्ञानात्संचिनोति ज्ञानात्तु परिचिनोतीत्यर्थह् ‖ ७ ‖

88609
88610 यथाभूतात्मदर्शित्वमेतावद्भुवनत्रये ।
88611 यदात्मैव जगत्सर्वमिति निश्चित्य पूर्णता ॥ ८ ॥
88612
88613 निष्कृष्टं सम्यग्ज्ञानस्वरूपमाह - यथाभूतेति ॥ ८ ॥
88614
88615 सर्वमात्मैव कौ दिष्टौ भावाभावौ क्व च स्थितौ ।
88616 क्व बन्धमोक्षकलने किमन्यद्राम शोच्यते ॥ ९ ॥
88617
88618 दिष्टौ निर्दिष्टौ । निष्कृष्य निरूपितावित्यर्थः । किमन्यदस्ति यदर्थं शोच्यते
88619 मूढैरिति शेषः ॥ ९ ॥
88620
88621 न चेत्यमन्यन्नो चित्तं ब्रह्मैवेदं विजृम्भते ।
88622 सर्वमेकं परं व्योम को मोक्षः कस्य बन्धता ॥ १० ॥
88623
88624 ब्रह्मेदं बृंहिताकारं बृहद्वृहदवस्थितम् ।
88625 ज्ञानादस्तमितद्वित्वं भवात्मैव त्वमात्मना ॥ ११ ॥
88626
88627 बृहतोऽपि बृहद्ब्रह्म स्वात्मन्येव मायया नटवद्बृंहिताकारं इदं
88628 दृश्यं व्यवस्थितम् ॥ ११ ॥
88629
88630 सम्यगालोकिते रूपे काष्ठपाषाणवाससाम् ।
88631 मनागपि न भेदोऽस्ति क्वासि संकल्पनोन्मुखः ॥ १२ ॥
88632
88633 सम्यक् अधिष्ठानसन्मात्ररूपेणालोकिते सति क्वासि । नह्येकरूपे हेयोपादेये
88634 संकल्पनं विकल्पनं वा संभवतीत्यर्थः ॥ १२ ॥
88635
88636 आदावन्ते च संशान्तं स्वरूपमविनाशि यत् ।
88637 वस्तु नामात्मनश्चैव तन्मयो भव राघव ॥ १३ ॥
88638
88639 अविनाशि यत्स्वरूपं तदेव वस्तु । नामेति प्रसिद्धौ । आत्मनश्च
88640 स्वरूपमेवंविधमतस्तन्मयो भवेत्यर्थः ॥ १३ ॥
88641
88642 परं व्योमेदमखिलं जगत्स्थावरजङ्गमम् ।
88643 सुखदुःखक्रमः कुत्र विज्वरो भव राघव ॥ १४ ॥
88644
88645 परं निरतिशयानन्दरूपं ब्रह्म ॥ १४ ॥
88646
88647 द्वैताद्वैतसमुद्भूतैर्जरामरणविभ्रमैः ।
88648 स्फुरत्यात्मभिरात्मैव चित्रैरम्ब्विव वीचिभिः ॥ १५ ॥
88649
88650 स्फुरति अज्ञस्येति शेषः ॥ १५ ॥
88651
88652 शुद्धमात्मानमालिङ्ग्य नित्यमन्तस्थया धिया ।
88653 यः स्थितस्तं क आत्मेहं भोगा बन्धयितुं क्षमाः ॥ १६ ॥
88654
88655 तं तत्त्वज्ञम् । के भोगाः ॥ १६ ॥
88656
88657 कृतस्फारविचारस्य मनोभोगादयोऽरयः ।
88658 मनागपि न भिन्दन्ति शैलं मन्दानिला इव ॥ १७ ॥
88659
88660 मनोभोगः कामस्तदादयः षडरयः ॥ १७ ॥

88661
88662 अविचारिणमज्ञानं मूढमाशापरायणम्।
88663 निगिरन्तीह दुःखानि बका मत्स्यमिवाजलम्॥ १८॥
88664
88665 अजलं जलान्निर्गतमल्पजलस्थं वा॥ १८॥
88666
88667 जगदात्मैव सकलमविद्या नास्ति कुत्रचित्।
88668 इति दृष्टिमवष्टभ्य सम्यग्रूपः स्थिरो भव॥ १९॥
88669
88670 नानात्वमस्ति कलनासु न वस्तुतोऽन्त-
88671 र्नानाविधासु सरसीषु जलादि नान्यत्।
88672 इत्येकनिश्चयमयः पुरुषो विमुक्त
88673 इत्युच्यते समवलोकितसम्यगर्थः॥ २०॥
88674
88675 जलादि आदिपदात्तरङ्गफेनबुद्बुदादि जलान्नान्यत्। यथेति शेषः। इति विविच्य
88676 समवलोकितसम्यगर्थस्तदेकनिश्चयप्रधानः पुरुष
88677 आत्यन्तिकचित्तनाशादिव्मुक्त इत्युच्यत इत्यर्थः॥ २०॥
88678
88679 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे०
88680 मोक्षोपायेषूपशमप्रकरणे सम्यग्ज्ञानलक्षणनिरूपणं
88681 नामैकोनाशीतितमः सर्गः॥ ७९॥
88682
88683 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
88684 सम्यग्ज्ञानलक्षणनिरूपणं नामैकोनाशीतितमः सर्गः॥ ७९॥
88685
88686
88687 अशीतितमः सर्गः ८०
88688
88689 श्रीवसिष्ठ उवाच।
88690
88691 इदमनः कलयतो भोगान्प्रति विवेकिनः।
88692 पुरःस्थितानपि सदा स्पृहैवाङ्ग न जायते॥ १॥
88693
88694 यस्मिन्विमर्शे सुदृढे दिव्यभोगेष्वपि स्पृहा।
88695 नोदेत्यपि पुरःस्थेषु स विमर्शोऽत्र वर्ण्यते॥ १॥
88696
88697 इदं वक्ष्यमाणं विमर्शोपदर्शनम्। पुरःस्थितानपि भोगान्प्रति स्पृहा न
88698 जायत एवेत्यन्वयः॥ १॥
88699
88700 चक्षुरालोकनायैव जीवस्तु सुखदुःखयोः।
88701 भारायैव बलीवर्दो भोक्ता द्रव्यस्य नायकः॥ २॥
88702
88703 तत्रादौ चक्षुषा इष्टानिष्टरूपे आलोचिते चक्षुरहंताभिनिवेशाज्जीवस्य
88704 सुखदुःखे दृश्येते तत्र चक्षुः प्रति स्वामितैवास्य नत्वहंतेति विमर्शेन
88705 दुःखादिप्रसक्तिरिति दर्शयति - चक्षुरिति। बलीवर्द एव भारवहनदुःखाय
88706 न तस्य भारद्रव्यस्य च नायकः। नह्यसौ बलीवर्द इत्यर्थः॥ २॥
88707
88708 नयने रूपनिर्मग्ने क्षोभः क इव देहिनः।
88709 गर्दभे पल्वले मग्ने कैव सेनापतेः क्षतिः॥ ३॥
88710
88711 स्वामित्वमपि तस्य न चक्षुमात्रे किंतु
88712 कार्यकरणसंघातकामकर्मवासनातत्फलभेदेष्वनन्तेषु। तत्र

88713 अहंकारबुद्धिमनःप्राणपरम्परया कथंचित्स्वत्वकोटिनिविष्टस्यैकस्य
88714 चक्षुषः कदाचिदनिष्टरूपसंप्रयोगे का वा गणना कुतो वास्य
88715 दुःखप्रसक्तिरित्याशयेनाह - नयने इति । गर्दभे सेनान्तर्गतरजकगर्दभे
88716 ॥ ३ ॥
88717
88718 रूपकर्दममेतन्मानयनास्वादयाधम ।
88719 नश्यत्येतन्निमेषेण भवन्तमपि हिंसति ॥ ४ ॥
88720
88721 स्वामित्वादेव तन्निवारयितुमपि शक्यमित्याशयेनाह - रूपेति । एतत्
88722 स्त्रीपुत्रादिसौन्दर्यलक्षणं रूपम् । हिंसति नाशयति । छान्दसो
88723 विकरणव्यत्ययः । हे अधम मूढतम ॥ ४ ॥
88724
88725 येनैव संख्या क्रियते येनैवाऽस्वाऽनुगम्यते ।
88726 तदीयैः कर्मभिः क्षिप्रं प्राज्ञः क्रूरो निबध्यते ॥ ५ ॥
88727
88728 प्राज्ञस्तर्हि कीदृशः क्वचिन्निबध्यते तत्राह - येनेति । क्रूरो निशितमतिः
88729 प्राज्ञस्तु येनान्तर्गतेन चिदात्मनैव सम्यक् ख्यानं संख्या प्रकाशो
88730 बाह्याभ्यन्तरार्थप्राप्त्या क्रियते येनैव अस्वा अनात्मभूता कोशपरम्परा
88731 आत्म तादात्म्यारोपेणानुगम्यते तदीयैः औदासीन्येन
88732 यथाप्राप्तार्थप्रकाशनलक्षणैः कर्मभिश्चरित्रैर्निबध्यते अभ्यासेन
88733 संबध्यते न मूढवद्रूपकर्दमास्वादनकर्मभिः । तथाच
88734 त्वमप्युदासीनं सद्रूपं प्रकाशय नतु तदास्वादयेत्यर्थः ॥ ५ ॥
88735
88736 उत्पन्नध्वंसि चापातमात्रहृद्यमसन्मयम् ।
88737 रूपमाश्रय मा नेत्र विनाशायाविनाशिने ॥ ६ ॥
88738
88739 उत्पन्नध्वंसि आपातमात्रहृद्यं चेति विशेषणे असन्मयमित्यस्योपपत्तये ।
88740 अविनाशिने अनिवार्याय विनाशाय मृत्युमुखप्रवेशाय ॥ ६ ॥
88741
88742 साक्षिवत्त्वंस्थितं नेत्र रूपमात्मनि तिष्ठति ।
88743 आलोकं कालवशतस्त्वमेकं किं प्रतप्यसे ॥ ७ ॥
88744
88745 किंच रूपविषये सदा सर्वार्थप्रकाशने निरपेक्षसमर्थेऽपि परमात्मनि
88746 उदासीने स्थिते सति हे नेत्र कालवशतः कदाचिदेव दीपाद्यालोकं प्राप्य
88747 प्रकाशयत् त्वमेवैकं किं किमर्थं प्रतप्यसे अतस्त्वमपि साक्षिवत्स्थितं
88748 सद्रूपं पश्येत्यर्थः ॥ ७ ॥
88749
88750 सलिलस्पन्दवद्दृष्टिः पिच्छिकेवाम्बरोत्थिता ।
88751 सुजातिबन्धा स्फुरति तव चित्त किमागतम् ॥ ८ ॥
88752
88753 इदानीं चक्षुषा भ्रान्त्या रूपे आलोकितेऽपि चित्तस्य तदभिनिवेशे हेतुर्नास्तीत्याह
88754 - सलिलेति । हे चित्त इयं विचित्ररूपदृष्टिर्नद्यादिसलिले नानाविधा
88755 नियतस्पन्दवैचित्र्यवदनियता । अम्बरे सूर्यालोकाभिमुखसाश्रुनेत्रनिरीक्षिता
88756 मयूरपिच्छिकेव मिथ्याभूता च गौरयमश्वोऽयं स्त्रीपिण्डोऽयमित्येव
88757 नानाविधसुजातिदुर्जातिविकल्पानुबन्धा चक्षुषः स्फुरति तत्र तव किमागतं
88758 येन त्वं रज्यसे तप्यसे चेत्यर्थः ॥ ८ ॥
88759
88760 कल्पाम्भसीव शफरी चित्ते स्फुरणधर्मिणि ।
88761 स्वयं स्फुरत्यहंकारस्त्वमयं प्रोत्थितः कुतः ॥ ९ ॥
88762
88763 अस्तु वा चित्ते चक्षुर्दृष्टार्थाकारा वृत्तिस्तथाप्यभिनिवेशहेतोरहंकारस्य
88764 निमित्तं नास्तीत्याह - कल्पेति । चित्ते स्वयं रूपाद्याकारः स्फुरति चेत्स्फुरतु

88765 नाम अयमहंकारस्त्वं कुतः प्रोत्थितः ॥ ९ ॥
88766
88767 आलोकरूपयोर्नित्यं जडयोः स्फुरतोर्मिथः ।
88768 आधाराधेययोश्चितं व्यर्थमाकुलता तव ॥ १० ॥
88769
88770 किंच स्त्रीपिण्डादिलक्षणं रूपं सूर्याद्यालोकमाश्रित्य स्फुरति सूर्यालोकश्च
88771 पिण्डाश्रित इत्यन्योन्यसंयोगे सौन्दर्यभ्रान्त्या कामादिना चित्तस्य व्याकुलता
88772 प्रसिद्धा सा च तयोश्चित्तेनासंबन्धाद्व्यर्थेत्यर्थः ॥ १० ॥
88773
88774 रूपालोकमनस्काराः परस्परमसङ्गिनः ।
88775 संपन्ना इव लक्ष्यन्ते वदनादर्शबिम्बवत् ॥ ११ ॥
88776
88777 असंबन्धमेव दृष्टान्तेन स्फुटयति - रूपेति । चक्षुषा बहिः
88778 रूपालोकनं मनसा चान्तःसंकल्पादयो मनस्कारा इति भिन्नदेशत्वादेवेति
88779 भावः । संपन्नाः संलग्ना इव ॥ ११ ॥
88780
88781 अज्ञानजन्तुना ह्येते श्लिष्टा जाता निरन्तराः ।
88782 अज्ञाने ज्ञानिगिलिते पृथक्तिष्ठन्त्यसन्मयाः ॥ १२ ॥
88783
88784 तत्संलग्नताभ्रान्तौ चाज्ञानमेव निमित्तमित्याह - अज्ञानेति ।
88785 पृथग्विश्लिष्टास्तु असन्मया बाधिताः सन्तः अधिष्ठानमात्रपरिशेषेण
88786 तिष्ठन्ति ॥ १२ ॥
88787
88788 मनःकल्पनया ह्येते सुसंबद्धाः परस्परम् ।
88789 रूपालोकमनस्कारा दारुणी जतुना यथा ॥ १३ ॥
88790
88791 दारुणी काष्ठे । जतुना लाक्षया ॥ १३ ॥
88792
88793 स्वमनोमननं तन्तुर्मनोभ्यासेन यत्नतः ।
88794 विचाराच्छेदमायाति च्छिन्नैवाज्ञानभावना ॥ १४ ॥
88795
88796 स्वमनोमननमेव तन्तुः कोशकारतन्तुवत्स्वबन्धनं स च
88797 मन्दमध्यमाधिकारिणोर्वैराग्यशमदमनिरोधादिमनोभ्यासेन यत्नतो
88798 विचाराच्छेदमायाति । मुख्याधिकारिणस्तु सहसोत्पन्नज्ञानेन तस्मिंश्छिन्ने
88799 सति स्वभावत एवाज्ञानभावना छिन्नैव नैव प्रवर्तत इत्यर्थः ॥ १४ ॥
88800
88801 अज्ञानसंक्षयात्क्षीणे मनसीमे पुनर्मिथः ।
88802 रूपालोकमनस्काराः संघट्टन्ते न केचन ॥ १५ ॥
88803
88804 तत्र द्वितीयस्यानायास इत्याह - अज्ञानेति ॥ १५ ॥
88805
88806 सर्वेषां चित्तमेवान्तरिन्द्रियाणां प्रबोधकम् ।
88807 तदेव तस्मादुच्छेद्यं पिशाच इव मन्दिरात् ॥ १६ ॥
88808
88809 प्रथमेन तु यत्नेन चित्तमुच्छेद्यमित्याह - सर्वेषामिति ॥ १६ ॥
88810
88811 चित्त वल्गासि मिथ्यैव दृष्टोऽन्तो भवतो मया ।
88812 आद्यन्तयोः सुतुच्छं त्वं वर्तमाने विनश्यसि ॥ १७ ॥
88813
88814 इदानीं चित्तमेव संबोध्य बोधयति - चित्तेत्यादिना । अन्तो बाधोपायः । यत
88815 आद्यन्तयोः सुतुच्छं अतो वर्तमानकालेऽपि विनश्यसि असदसि । नहि
88816 पूर्वोत्तरकालयोस्तुच्छो वन्ध्यापुत्रो वर्तमानकाले संभवतीत्यर्थः ॥ १७ ॥

88817
88818 मुधा पञ्चभिराकारैः किमन्तः परिवल्गसि।
88819 यस्त्वां स्वमिति जानाति तस्यैव परिवल्गसि॥ १८॥
88820
88821 पञ्चभिरिन्द्रियोपनीतैः शब्दाद्याकारैः। यस्त्वदभिमानी प्रमाता त्वां स्वं
88822 मदीयमिति जानाति तस्यैव त्वमुपकरणतया परिवल्गसि न
88823 त्वसङ्गोदासीनचिदेकरसस्य ममेत्यर्थः॥ १८॥
88824
88825 त्वद्वल्गनं मे कुमनो न मनागपि तुष्टये।
88826 मायामनःस्पन्द इव व्यर्थं वृत्तिषु दह्यसे॥ १९॥
88827
88828 तुष्टिग्रहणं विषादस्याप्युपलक्षणम्। ऐन्द्रजालिकमायाप्रयुक्ते मनसो
88829 नानाविषयदर्शनाकारस्पन्दे इव॥ १९॥
88830
88831 तिष्ठ वा गच्छ वा चित्त नासि मे न च जीवसि।
88832 प्रकृत्यासि मृतं नित्यं विचारात्सुमृतं स्मृतम्॥ २०॥
88833
88834 प्रकृत्या स्वीयमिथ्यास्वभावेनैव मृतं निरात्मकमसि विचारात्तु तथा
88835 स्मृतं सत् सुमृतं अत्यन्तासदसीत्यर्थः॥ २०॥
88836
88837 निस्तत्त्वं त्वं जडं भ्रान्तं शठं नित्यमृताकृते।
88838 मूढ एव त्वयाज्ञेन बाध्यो न प्रविचारवान्॥ २१॥
88839
88840 वयमज्ञातवन्तस्त्वां मौर्ख्येणाशु मृतं भवत्।
88841 मृतमस्काकमद्यासि दीपानां तिमिरं यथा॥ २२॥
88842
88843 एतावत्कालं वयं त्वां मृतं भवत् नैरात्म्येन वर्तमानं अज्ञातवन्तो
88844 न ज्ञातवन्तः। अद्य आत्मतत्त्वदर्शनकाले॥ २२॥
88845
88846 शठेन भवता दीर्घकालं देहगृहं मम।
88847 उपरुद्धमभूत्सर्वं साधुसंसर्गवर्जितम्॥ २३॥
88848
88849 साधवः शमदमविचारबोधादयस्तत्संसर्गवर्जितम्॥ २३॥
88850
88851 जडे प्रेतसमाकारे गते त्वयि मनःशठे।
88852 सर्वसज्जनसंसेव्यमिदं देहगृहं मम॥ २४॥
88853
88854 शमादय एव सज्जनाः॥ २४॥
88855
88856 पूर्वमेवासि नासीस्त्वं संप्रत्येव शठं जगत्।
88857 न भविष्यसि चेदानीं वेताल किं न लज्जसे॥ २५॥
88858
88859 हे जगद्रूप चित्तवेताल शठं त्वं पूर्वमेव नासीः संप्रति च नास्येव अग्रे
88860 च न भविष्यसि। एवं मया कालत्रये निषेध्यमानोऽपि इदानीमत्र स्थातुं किं न
88861 लज्जसे। अहो तव निर्लज्जतेत्यर्थः॥ २५॥
88862
88863 सह तृष्णापिशाचीभिः सह कोपादिगुह्यकैः।
88864 निर्गच्छ चित्तवेताल शरीरसदनान्मम॥ २६॥
88865
88866 यदि सलज्जोऽसि तर्हि निर्गच्छेत्याह - सहेति॥ २६॥
88867
88868 दिष्ट्या विवेकमात्रेण निर्गतो देहमन्दिरात्।

88869 प्रमत्तश्चित्तवेतालः कुवृकः कन्दरादिव ॥ २७ ॥
88870
88871 अहो नु चित्रं सुमहज्जडेन क्षणभङ्गिना ।
88872 मनःशठेन सर्वोऽयं नीतो विवशतां जनः ॥ २८ ॥
88873
88874 चित्तवञ्चितजनाननुशोचति - अहो इति ॥ २८ ॥
88875
88876 कस्ते पराक्रमः किं ते बलं कस्ते समाश्रयः ।
88877 यदि वल्गसि मामेकं जनानां बाधसे मृतम् ॥ २९ ॥
88878
88879 जनानां मध्ये मृतं मरणधर्मकदेहात्मदर्शनात्स्वतो मृतं
88880 बाधसे अयं कस्ते पराक्रमः । एकमद्वितीयात्मभूतं मां प्रति यदि वल्गसि
88881 आगन्तुं शक्नोषि तदा ते पराक्रम इति शेषः ॥ २९ ॥
88882
88883 सर्वथैवासि न मया दीनचित्तक मार्यसे ।
88884 मृतमित्यवबुद्धं त्वमद्य केवलमज्ञ हे ॥ ३० ॥
88885
88886 हे अज्ञ दीनचित्तक मया अद्य न मार्यसे यतः पूर्वमेव सर्वथैव त्वं
88887 मृतमिति अवबुद्धम् । अयमेव वध इत्यर्थः ॥ ३० ॥
88888
88889 एतावन्तमहं कालं त्वां ज्ञात्वा जीवदास्थिति ।
88890 श्लिष्टः प्रभूतसङ्गासु चिरं संसृतिरात्रिषु ॥ ३१ ॥
88891
88892 जीवदास्थिति जीवत इव आस्थितिः स्वरूपसत्ता यस्य तथाविधं ज्ञात्वा
88893 श्लिष्टस्त्वया सह तादात्म्येन संगतः ॥ ३१ ॥
88894
88895 चित्तं मृतं हि नास्तीदमित्यद्याधिगतं मया ।
88896 तेन त्वदाशां संत्यज्य तिष्ठाम्यात्मनि केवलम् ॥ ३२ ॥
88897
88898 दिष्ट्या चित्तं मृतमिति ज्ञातमद्य मया स्वयम् ।
88899 न शठेन समं नेयं समग्रं जीवितं निजम् ॥ ३३ ॥
88900
88901 बोधोत्तरं जीवन्मुक्तानां निश्चित्तमेवायुःशेषनयनमुचितमित्याह - न
88902 शठेनेति ॥ ३३ ॥
88903
88904 उत्सार्य देहसदनान्मनःशठमहं क्षणात् ।
88905 अहं स्वस्थः स्थितोऽस्म्यन्तर्वेतालपरिवर्जितः ॥ ३४ ॥
88906
88907 शठानां कामक्रोधलोभादीनां महं उत्सवभूतं मनो
88908 देहसदनादुत्सार्य ॥ ३४ ॥
88909
88910 चित्तवेताललब्धेन चिरं कालं मयात्मना ।
88911 कृता विकारा विविधाः स्वयं स्मृत्वा हसाम्यहम् ॥ ३५ ॥
88912
88913 चित्तवेतालेन लब्धेन विप्रलब्धेन आत्मना तदात्मभूतेन मया । इदानीं स्वयं
88914 परमार्थात्मभूतोऽह तान्विकारान्स्मृत्वा हसामीत्यर्थः ॥ ३५ ॥
88915
88916 चिरान्निपातितो दिष्ट्या विचारासिपरार्दितः ।
88917 हृद्देहाच्चित्तवेतालस्तालोतालसमुन्नतिः ॥ ३६ ॥
88918
88919 निपातितो निपात्येव मारितः ॥ ३६ ॥
88920

88921 प्रशान्ते चित्तवेताले पवित्रां पदवीं गते।
88922 दिष्ट्या शरीरनगरे सुखं तिष्ठामि केवलम्॥ ३७॥
88923
88924 कामादिमलाभावात्पवित्रां पदवीमिन्द्रियद्वारमार्ग गते प्राप्ते॥ ३७॥
88925
88926 मृतं मनो मृता चिन्ता मृतोऽहंकारराक्षसः।
88927 विचारमन्त्रेण समः स्वस्थस्तिष्ठामि केवलम्॥ ३८॥
88928
88929 समो निरस्तवैषम्यः सन्॥ ३८॥
88930
88931 किं मनो मे ममाशा का को मेऽहंकारको भवेत्।
88932 दिष्ट्या व्यर्थं कलतं मे नष्टमेतदशेषतः॥ ३९॥
88933
88934 कलत्रं पोष्यवर्गः॥ ३९॥
88935
88936 एकस्मै कृतकृत्याय नित्याय विमलात्मने।
88937 निर्विकल्पचिदाख्याय मह्यमेव नमो नमः॥ ४०॥
88938
88939 इदानीं परिशिष्टं निरतिशयानन्दैकरसमात्मानमतिशयेन नमस्यति -
88940 एकस्मै इत्यादिना॥ ४०॥
88941
88942 न शोकोऽस्ति न मोहोऽस्ति न चैवाहमहं स्वयम्।
88943 नच नाहं नचान्योऽहं मह्यमेव नमो नमः॥ ४१॥
88944
88945 अहमहं अहमभिमानप्रधानजडांशो नैव। नच नाहं
88946 अहंकारप्रत्यक्चिदात्मा नेति च न॥ ४१॥
88947
88948 न ममाशा न कर्माणि न संसारो न कर्तृता।
88949 न भोक्तृता न देहो मे मह्यमेव नमो नमः॥ ४२॥
88950
88951 नाहमात्मा न वा कोऽन्यो नाहमस्मि न चेतरः।
88952 सर्वमेवाहमेतस्मै मह्यमेव नमो नमः॥ ४३॥
88953
88954 आत्मा आत्मशब्दप्रत्ययविषयो न। तथाच बृहदारण्यकभाष्ये तद्वार्तिके च
88955 आत्मेत्येवोपासीतेत्यत्र इतिशब्द आत्मशब्दप्रत्ययविषयत्वनिवारणार्थ इत्युक्तम्।
88956 न वा अन्यः अनात्माहम्। कोऽन्यस्तत्त्वदृशा संभाव्यते यदहं स्याम्।
88957 एवमहंशब्दप्रत्ययविषयस्तदितरश्च नाहम्। एवंच स्वेतराप्रसिद्धेः
88958 स्वयमेव सर्वमिति सर्वमेवाहमित्यर्थः॥ ४३॥
88959
88960 अहमादिरहं धाता चिदहं भुवनान्यहम्।
88961 मम नास्ति व्यवच्छेदो मह्यमेव नमो नमः॥ ४४॥
88962
88963 आदिर्भुवनानां कारणम्। धाता धारयिता। व्यवच्छेदस्त्रिविधपरिच्छेदः॥
88964 ४४॥
88965
88966 निर्विकाराय नित्याय निरंशाय महात्मने।
88967 सर्वस्मै सर्वकालाय मह्यमेव नमो नमः॥ ४५॥
88968
88969 सर्वकालाय सनातनाय॥ ४५॥
88970
88971 नीरूपाय निराख्याय प्रकाशाय महात्मने।
88972 स्वयमात्मैकसंस्थाय मह्यमेव नमो नमः॥ ४६॥

88973
88974 समां सर्वगतां सूक्ष्मां जगदेकप्रकाशिनीम्।
88975 सत्तामुपगतोऽस्म्यन्तर्मह्यमेव नमो नमः॥ ४७॥
88976
88977 साद्र्यब्ध्युर्वी नदी सेयं नाहमेवाहमेव वा।
88978 जगत्सर्वं पदार्थाढ्यं मह्यमेव नमो नमः॥ ४८॥
88979
88980 अद्रयश्च अब्धयश्च उर्वी च नद्यश्च एतैः सहिता सा प्रसिद्धा इयं वर्तमाना
88981 दृश्यश्रीर्नाहम्। एवमतीतानागतपदार्थाढ्यं जगत्सर्वमपि
88982 नाहमहमेव वेति योज्यम्॥ ४८॥
88983
88984 व्यपगतमननं समाभिरामं
88985 प्रकटितविश्वमविश्वमप्यनन्तम् [अरूपं इति पाठः]।
88986 स्वयमजमजरं गुणादतीतं
88987 वपुरहमच्युतमीश्वरं नमामि॥ ४९॥
88988
88989 व्यपगतानि मननानि मनोविकल्पा यस्मादत एव समाभिरामं
88990 प्रकटितविश्वमनन्तं अच्युतम्। कुतः। उत्थितस्वरूपादप्रच्युतं ईष्टे
88991 अविद्यातत्कार्यनिरासे समर्थीभवतीतीश्वरं वपुः स्वरूपं नमामि।
88992 सर्वोत्कर्षेण प्रपन्नोऽस्मीत्यर्थः॥ ४९॥
88993
88994 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये देव०
88995 मोक्षोपायेषूपशमप्रकरणे दृश्यदर्शनसंबन्धो
88996 नामाशीतितमः सर्गः॥ ८०॥
88997
88998 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
88999 दृश्यदर्शनसंबन्धो नामाशीतितमः सर्गः॥ ८०॥
89000
89001
89002 एकाशीतितमः सर्गः ८१
89003
89004 श्रीवसिष्ठ उवाच।
89005
89006 एवं विचार्य बुद्ध्वान्तः पुनरित्थं विचार्यते।
89007 तत्त्वविद्भिर्महाबाहो ज्ञेय आत्मा महात्मभिः॥ १॥
89008
89009 यत्नैः प्राक्चित्तवेतालो देहगेहाद्विवासितः।
89010 इहानुभवयुक्तिभ्यां चित्तासत्तोपपाद्यते॥ १॥
89011
89012 आत्मा ज्ञेयः अवश्यं ज्ञातव्य इति विचारतत्त्वविद्भिः पुनरित्थं
89013 वक्ष्यमाणप्रकारेण विचार्यते चित्तमिति शेषः॥ १॥
89014
89015 आत्मैवेदं जगदिति सत्यं चित्तेन मार्जितम्।
89016 उत्थितं स्यात्कुतश्चित्तमहो चित्तमवस्तु यत्॥ २॥
89017
89018 येन चित्तेन आत्मैवेदमिति बोधेन जगन्मार्जितंतच्चितं कुत उत्थितं स्यात्
89019 यज्जगदन्तःपातेन स्वयमप्यवस्तु। अहो इत्याश्चर्ये॥ २॥
89020
89021 अविद्यत्वादचित्तत्त्वान्मायात्वाच्चासदेव हि।
89022 ध्रुवं नास्त्येव वा चित्तं भ्रमादन्यत्खवृक्षवत्॥ ३॥
89023
89024 अवस्तुत्वमेव साधयति - अविद्यत्वादिति।

89025 जडत्वाच्चित्तान्तरशून्यत्वान्मायाकार्यत्वाच्च ध्रुवं निश्चयेन चित्तं
89026 नास्त्येवेत्यसदेव। अथवा खवृक्षवद्भ्रमादेवान्यद्वस्तुतस्तु शुद्धं
89027 खगिवात्मैव तदित्यर्थः॥ ३॥
89028
89029 सिद्धः स्थाणुपरिस्पन्दो नौगतस्य यथा शिशोः।
89030 अबुद्धस्य न बुद्धस्य तथा चित्तमसन्मयम्॥ ४॥
89031
89032 यथा नैकागतस्य शिशोर्बालस्य स्थाणुपरिस्पन्दो
89033 भ्रान्तिमात्रसिद्धस्तद्वदबुद्धस्य चित्तं सिद्धमपि बुद्धस्यात्मविदो न
89034 सिद्धं किंत्वसन्मयमेवेत्यर्थः॥ ४॥
89035
89036 मौर्ख्यमोहभ्रमे शान्ते चित्तं नोपलभामहे।
89037 चक्रारोहभ्रमस्यान्ते पर्वतस्पन्दनं यथा॥ ५॥
89038
89039 तैलेक्ष्वादियन्त्रचक्रारोहणप्रयुक्तभ्रमस्यान्ते तदवरोहणोत्तरमित्यर्थः॥ ५
89040 ।।
89041
89042 एवं हि चित्तं नास्त्येव ब्रह्मैवास्ति तथात्मकम्।
89043 पदार्थभावनाश्चित्तात्तेनासत्या मयोज्झिताः॥ ६॥
89044
89045 यतो बाह्याभ्यन्तरपदार्थभावना असतश्चित्तात्प्रसृतास्तेन हेतुना असत्या इति
89046 मया उज्झितास्त्यक्ताः॥ ६॥
89047
89048 जातोऽस्मि शान्तसंदेहः स्थितोऽस्मि विगतज्वरः।
89049 तथा तिष्ठामि तिष्ठामि तथैव विगतैषणम्॥ ७॥
89050
89051 यथा येन पारमार्थिकस्वभावेन तिष्ठामि तथैवेदानीं स्वानुभवेनापि
89052 तिष्ठामि नान्यथाभूत इत्यर्थः॥ ७॥
89053
89054 चित्ताभावे परिक्षीणा बाल्यतृष्णादयो गुणाः।
89055 आलोकोपरमे चित्रा वर्णाख्या इव संविदः॥ ८॥
89056
89057 बाल्यं बालस्य कर्म चापलम्। वर्णान् रूपभेदानाख्यान्ति प्रथयन्ति
89058 तथाविधाश्चाक्षुषसंविद इव॥ ८॥
89059
89060 मृतं चित्तं गता तृष्णा प्रक्षीणो मोहपञ्जरः।
89061 निरहंकारता जाता जाग्रत्यस्मिन्प्रबुद्धवान्॥ ९॥
89062
89063 अस्मिन्नहमात्मनि जाग्रति अपगताज्ञाननिद्रे सति अहं प्रबुद्धवान्
89064 स्वाभाविकं स्वरूपमित्यर्थः॥ ९॥
89065
89066 एकमेव जगच्छान्तं नानात्वं न सदित्यपि।
89067 किमन्यद्विमृशाम्यन्तः कथयैवालमेतया॥ १०॥
89068
89069 जगत् शान्तं सदेकं ब्रह्मैव। एतया असद्विषयिण्या कथयैवालम्। प्रयोजनं
89070 नास्तीत्यर्थः॥ १०॥
89071
89072 निराभासमनाद्यन्तं पदं पावनमागतः।
89073 सौम्यः सर्वगतः सूक्ष्मः स्थित आत्मास्मि शाश्वतः॥ ११॥
89074
89075 निर्गत आभासश्चिदाभासलक्षणा जीवता यत्र॥ ११॥
89076

89077 यदस्ति यच्च नास्तीह चित्ताद्यात्माद्यवस्तु च।
89078 तत्खादच्छतरं शान्तमनन्ताग्राह्यमाततम्॥ १२॥
89079
89080 यल्लोके व्यवहारदृशा चित्तादिश्रुतिदृशा च आत्मब्रह्मचैतन्यादि च अस्तीति च
89081 प्रसिद्धम्। यच्च रज्जुसर्पादि वन्ध्यापुत्रादि च नास्तीति प्रसिद्धं वस्त्ववस्तु च
89082 तत्सर्वं खादाकाशादप्यच्छतरं निर्मलतरं अग्राह्यं स्वप्रकाशं
89083 ब्रह्मैवाततं तस्मिन्नेव सदसद्रूपविकल्पारोपादित्यर्थः॥ १२॥
89084
89085 चित्तं भवतु मा वान्तर्म्रियतां स्थितिमेतु वा।
89086 को विचारणयार्थो मे चिरं साम्योदितात्मनः॥ १३॥
89087
89088 विचाराकारको मौर्ख्यादहमासं मितस्थितिः।
89089 विचारेणामिताकारः क्व नामाहं विचारकः॥ १४॥
89090
89091 अहमेतावत्कालं मौर्ख्याद्विचारस्य अकारकः अकर्ता सन् मितस्थितिः
89092 परिच्छिन्नदेहादिस्वभाव आसम्। संप्रति विचारेण अमिताकारः सन् विचारकः
89093 अहं क्व नाम गत इति न निरूपयितुं शक्य इत्यर्थः॥ १४॥
89094
89095 मृतेऽपि मनसीयं मे विकल्पश्रीर्निरर्थिका।
89096 मनोवेतालवृत्त्यर्थं किमर्थमुपजायते॥ १५॥
89097
89098 मनसि मृते सति विचारकोऽस्ति न वेति विकल्पश्रीरपि निरर्थिका मनोवेतालस्य
89099 वृत्त्यर्थं पुनर्जीवनार्थं किमर्थमुपजायते। अतस्तामिमां प्रजहामीति
89100 परेण संबन्धः॥ १५॥
89101
89102 तामिमां प्रजहाम्यन्तः संकल्पकलनामिति।
89103 निर्णीयोमिति शान्तात्मा तिष्ठाम्यात्मनि मौनवत्॥ १६॥
89104
89105 ओमिति ओंकारलक्ष्ये तुरीये आत्मनि मौनवदिति स्थितिक्रियादृष्टान्तः॥ १६॥
89106
89107 अश्नन्गच्छन्स्वपंस्तिष्ठन्निति राघव चेतसा।
89108 सर्वत्र प्रज्ञया तज्ज्ञः प्रत्यहं प्रविचारयेत्॥ १७॥
89109
89110 कृतं विचारमुपसंहांस्तस्य सदैव कर्तव्यतामाह - अश्नन्निति।
89111 यथाहुः गच्छतस्तिष्ठतो वापि जाग्रतः स्वपतोऽपि वा। न विचारपरं चेतो
89112 यस्यासौ मृत उच्यते॥ इति॥ १७॥
89113
89114 प्रविचार्य स्वसंस्थेन स्वस्थेन स्वेन चेतसा।
89115 तिष्ठन्ति विगतोद्वेगं सन्तः प्रकृतकर्मसु॥ १८॥
89116
89117 प्रकृतकर्मसु स्वस्ववर्णाश्रमोचिताचारेषु॥ १८॥
89118
89119 विगतमानमदा मुदिताशयाः
89120 शरदुपोढशशाङ्कसमत्विषः।
89121 प्रकृतसंव्यवहारविहारिण-
89122 स्त्विह सुखं विहरन्ति महाधियः॥ १९॥
89123
89124 शरदा उपोढेन शशाङ्केन समा त्विट् प्रसन्नमुखकान्तिर्येषाम्॥ १९॥
89125
89126 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे०
89127 मोक्षोपायेषूपशमप्रकरणे चित्तासत्ताप्रतिपादनं नामैकाशीतितमः
89128 सर्गः॥ ८१॥

89129
89130 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
89131 चित्तासत्ताप्रतिपादनं नामैकाशीतितमः सर्गः ॥ ८१ ॥
89132
89133
89134 द्व्यशीतितमः सर्गः ८२
89135
89136 श्रीवसिष्ठ उवाच ।
89137
89138 विचार एवं विदुषा संवर्तेन कृतः पुरा ।
89139 कथितो मम विन्ध्याद्रौ तेनैव विदितात्मना ॥ १ ॥
89140
89141 इहेन्द्रियाणि च मनो व्यर्थचेष्टादिहेतुभिः ।
89142 वीतहव्येन बोध्यन्ते आत्मैकाग्र्यप्रसिद्धये ॥ १ ॥
89143
89144 कृतस्य विचारस्य सांप्रदायिकत्वं दर्शयति - विचार इति । संवर्तेन
89145 बृहस्पतिभ्रात्रा ॥ १ ॥
89146
89147 एतां दृष्टिमवष्टभ्य विचारपरया धिया ।
89148 संसारसागरादस्मात्तारतम्येन संतर ॥ २ ॥
89149
89150 तारतम्येन उत्तरोत्तरचित्तविश्रान्तिप्रकर्षऽपरिपाकप्रयुक्तभूमिकारोहणक्रमेण
89151 ॥ २ ॥
89152
89153 अथेमामपरां राम शृणु दृष्टिं पदप्रदाम् ।
89154 मुनिना वीतहव्येन ययाऽस्थितमशङ्कितम् ॥ ३ ॥
89155
89156 अपरां इन्द्रियमनःप्रबोधनरूपां यया दृष्ट्या वीतहव्येन मुनिना
89157 अशङ्कितं निःशङ्कं पदमास्थितमधिरूढमित्यर्थः । यथा इति पाठे
89158 येन प्रकारेण ॥ ३ ॥
89159
89160 वीतहव्यो महातेजा विबभ्राम वने पुरा ।
89161 विन्ध्यशैलदरीर्दीर्घा रविर्मेरुदरीरिव ॥ ४ ॥
89162
89163 विन्ध्यशैलदरीः समाध्यनुकूला अन्वेषमाणो विबभ्राम् ॥ ४ ॥
89164
89165 अस्मात्क्रियाक्रमाद्घोरात्संसारभ्रमदायिनः ।
89166 आधिव्याधिमयाकारात्कालेनोद्वेगमाययौ ॥ ५ ॥
89167
89168 कुतस्तस्य समाधीच्छाभूत्तत्राह - अस्मादिति ॥ ५ ॥
89169
89170 निर्विकल्पसमाध्यंशलभ्योदारपरेच्छया ।
89171 स जहार जगज्जीर्णां स्वव्यापारपरम्पराम् ॥ ६ ॥
89172
89173 जहार उपसंजहार । संन्यस्तवानिति यावत् ॥ ६ ॥
89174
89175 विवेश रम्भारचितं निजं पर्णोटजान्तरम् ।
89176 कृतगौरं सुसौगन्ध्यमलिनीलमिवोत्पलम् ॥ ७ ॥
89177
89178 रम्भारचितं कदलीदलनिर्मितम् । कृता गौराः श्वेताः पीताश्च कर्पूराः
89179 परागाश्च येन अत-एव सुसौगन्ध्यम् ॥ ७ ॥
89180

89181 तत्रासने समे शुद्धे स्वास्तीर्णहरिणाजिने ।
89182 विशश्रामाचले शान्ते वीतवर्ष इवाम्बुदः ॥ ८ ॥
89183
89184 शान्ते निस्तापे । अचलेशस्य हिमवतोऽन्ते प्रान्ते वा ॥ ८ ॥
89185
89186 बद्धपद्मासनस्तस्थौ पार्ष्ण्योरधिकराङ्गुलिः ।
89187 शृङ्गवच्छान्तचलनमतिष्ठत्स्पष्टकन्धरम् ॥ ९ ॥
89188
89189 पार्ष्ण्योः पादतलमूलयोरधि उपरि कराङ्गुलयो यस्य तथाविधः सन् ।
89190 असमर्थसमासश्छान्दसः । स्पष्टकन्धरं ऊर्द्ध्वीकृतग्रीवं यथा
89191 स्यात्तथा ॥ ९ ॥
89192
89193 स जहारालमालोकाद्दिग्विकीर्णं मनः शनैः ।
89194 विशन्मेरुदरीं सायं भानुर्भास इवोत्करम् ॥ १० ॥
89195
89196 दिक्षु इन्द्रियालोकान्निमित्ताद्विकीर्णं मनस्तन्निग्रहोपायेन जहार
89197 हृद्युपसंजहार । शनैर्वक्ष्यमाणप्रबोधनक्रामदित्यर्थः ॥ १० ॥
89198
89199 बाह्यानाभ्यन्तरांश्चैव स्पर्शान्परिजहत्क्रमात् ।
89200 इदमाकलयामास मनसा विगतैनसा ॥ ११ ॥
89201
89202 बाह्यानैन्द्रियकानाभ्यन्तरान्मानसांश्च विषयस्पर्शान्परिजहत्यजन्सन् ।
89203 नाभ्यस्ताच्छतुः इति नुम्निषधः । इदं वक्ष्यमाणमाकलयामास
89204 विचारयामास ॥ ११ ॥
89205
89206 अहो नु चञ्चलमिदं प्रत्याहृतमपि क्षणात् ।
89207 न मनः स्थैर्यमायाति तरङ्गप्रौढपर्णवत् ॥ १२ ॥
89208
89209 तरङ्गैः प्रौढेन प्रवाहितेन पर्णेन तुल्यं तरङ्गप्रौढपर्णवत् ॥ १२ ॥
89210
89211 चक्षुरादिभिरुद्दामै रूपैराहितसंभ्रमैः ।
89212 अजस्रमुत्पतत्येव वीटेव तलताडिता ॥ १३ ॥
89213
89214 चक्षुरादिभिराहितसंभ्रमैर्नानाविषयरूपैर्निमित्तैः उत्पतति नृत्यति ।
89215 वीष्टेव कन्दुक इव ॥ १३ ॥
89216
89217 त्यजदेवानुगृह्णाति वृत्तीरिन्द्रियवर्धिताः ।
89218 यस्मान्निवार्यते तस्मिन्प्रोन्मत्त इव धावति ॥ १४ ॥
89219
89220 पूर्वपूर्ववृत्तीस्त्यजदेव तत्तदनुसारिणीरुत्तरोत्तरवृत्तिर्गृह्णाति ॥ १४ ॥
89221
89222 घटात्पटमुपायाति पटाच्छकटमुत्कटम् ।
89223 चित्तमर्थेषु चरति पादपेष्विव मर्कटः ॥ १५ ॥
89224
89225 पञ्चद्वाराणि मनसश्चक्षुरादीन्यमून्यलम् ।
89226 दग्धेन्द्रियाभिधानानि तावदालोकयाम्यहम् ॥ १६ ॥
89227
89228 एवं चित्तदोषानालोच्य तन्निर्गमद्वाराण्यालोचितवानित्याह - पञ्चेति ।
89229 दग्धशब्दो निन्दार्थः । छान्दसत्वात् कुत्सितानि कुत्सनैः इति समासो नाश्रितः ॥
89230 १६ ॥
89231
89232 हे हे हतेन्द्रियगणाः किं मे बोधाय नेह वः ।

89233 वेला विलुलिताम्बूनामब्धीनामिव चञ्चलाः ॥ १७ ॥
89234
89235 इदानीमिन्द्रियाण्येव निर्भर्त्स्य बोधयति - हे हे इति । हे चञ्चलाः
89236 हतेन्द्रियगणाः मे मम बोधाय समाधिना चिरमात्मदर्शनाय वः वेला
89237 अवसरो नास्ति किम् ॥ १७ ॥
89238
89239 मा कुरुध्वमनर्थाय चापलं चपलाशयाः ।
89240 स्मरतातीतवृत्तीनि दुःखजालानि भूरिशः ॥ १८ ॥
89241
89242 रूपाणि मनसो यूयं जडा एव किलाधमाः ।
89243 जडे तूत्सिक्तता व्यर्थं मृगतृष्णेव वल्गति ॥ १९ ॥
89244
89245 यूयं मनस एव द्वारभेदेन कल्पितानि स्वरूपाणि । जडे रलयोरभेदाज्जले च
89246 उत्सिक्तता तरङ्गोत्सेकवत्तेव व्यर्थं वल्गति ॥ १९ ॥
89247
89248 असारात्मस्वरूपाणामनालोकवती सदा ।
89249 अन्धानामुद्धतिर्येयं सा दृश्यायैव जायते ॥ २० ॥
89250
89251 असारात्म अनृतं स्वरूपं येषां तथाविधानां भवतामनालोकवती
89252 [अनालोकवतामात्मज्ञानशून्यानां इति मूले टीकायां च पाठः]
89253 आत्मज्ञानशून्या या समुद्धतिर्दुर्विनयादमार्गे प्रवृत्तिः सेयमन्धानां
89254 सादृश्याय उपमार्थमेव जायते । अमार्गे धावतामन्धानां कूपे
89255 पातस्योपमा जायत इत्यर्थः ॥ २० ॥
89256
89257 चिदात्मा भगवान्सरं साक्षित्वेन करोम्यहम् ।
89258 हतेन्द्रियगणा यूयं किं निरर्थकमाकुलाः ॥ २१ ॥
89259
89260 यदि वयं जडाः कस्तर्हि दर्शनादिना सर्वव्यवहारं करोति तत्राह -
89261 चिदात्मेति ॥ २१ ॥
89262
89263 मिथ्यैव मे विवल्गन्ति नीरूपा नयनादयः ।
89264 अलातचक्रप्रतिमाः सर्परज्जुभ्रमोपमाः ॥ २२ ॥
89265
89266 नीरूपाः सत्यस्वरूपशून्याः ॥ २२ ॥
89267
89268 तेनात्मना बहुज्ञेन निर्ज्ञाताश्चक्षुरादयः ।
89269 मनागपि न संबन्धो द्युपातालतलाद्रिवत् ॥ २३ ॥
89270
89271 येन साक्षिणा बहुज्ञेन सर्वावभासकेन नयनादयः परिज्ञातास्तेन सह
89272 एषां मनागपि संबन्धो नास्ति । यथा द्युपातालतलयोः पातालाद्रिभ्यां दिवो
89273 वा पातालतलाद्रिभिस्तद्वदित्यर्थः ॥ २३ ॥
89274
89275 भीतः पान्थ इवाहिभ्यः पुक्कसेभ्य इव द्विजः ।
89276 दूरे तिष्ठति चिन्मात्रमिन्द्रियेभ्यस्त्वनामयम् ॥ २४ ॥
89277
89278 चिन्मात्रं चिदेकरसः प्रत्यगात्मा परग्भ्य इन्द्रियेभ्यो दूरं तिष्ठति ।
89279 पराञ्चि खानि व्यतृणत्स्वयंभूः इति श्रुतेरिति भावः ॥ २४ ॥
89280
89281 चित्सत्तामात्रकेणालं संक्षोभो भवतां मिथः ।
89282 तिष्ठति स्वैरमादित्ये दिनकार्यवतामिव ॥ २५ ॥
89283
89284 तर्हि कथमिन्द्रियव्यापारे आत्मनो निमित्तताप्रसिद्धिस्तत्राह - चित्सत्तेति ।

89285 दिनकार्याणि श्राद्धकृष्यादीनि तद्वताम् ॥ २५ ॥
89286
89287 चित्त चारण चार्वाक चतुर्दिक्कुक्षिभिक्षुक ।
89288 श्वेव व्यर्थमनर्थाय मैवं विहर हे जगत् ॥ २६ ॥
89289
89290 इदानीं चित्तं संबोध्य बोधयति - चित्तेत्यादिना । इन्द्रियाणां
89291 बहिर्मुखताप्रचारहेतुत्वाच्चारण । देहात्माभिमानित्वाच्चार्वाक । चतसृषु
89292 दिक्षु कुक्षिभरणाय भिक्षुक ॥ २६ ॥
89293
89294 अहं चिद्वदिति व्यर्थमसत्या तव वासना ।
89295 अत्यन्तभिन्नयोरैक्यं नास्ति चिन्मनसोः शठ ॥ २७ ॥
89296
89297 चिद्वत् चेतनमिति वासनाभ्रान्तिः ॥ २७ ॥
89298
89299 जीवाम्येवाहमित्येषा तवाहंकारदुर्मतिः ।
89300 मिथ्यैव जाता दुःखाय न सत्या सत्यवर्जिता ॥ २८ ॥
89301
89302 न सत्येति । नह्यहंकाराधीनजीवनं सत्यम् । असत्यपि तस्मिन् सुषुप्तौ
89303 जीवनदर्शनात् । इतोऽपि मिथैव सा यतः सत्येन परमात्मना वर्जिता । न प्राणेन
89304 नापानेन मर्त्यो जीवति कश्चन । इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ इति
89305 श्रुतेरित्यर्थः ॥ २८ ॥
89306
89307 अहंकारोदये सोऽस्मीत्येतां संरब्धतां त्यज ।
89308 न किंचिदपि मूर्ख त्वं किं व्यर्थं तरलायसे ॥ २९ ॥
89309
89310 अहंकारस्य अभिमानाख्यपरिणामस्य उदये जाते स
89311 कार्यकारणसंघातात्मास्मीत्येतां संरब्धतामभिमानम् ॥ २९ ॥
89312
89313 संविच्चित्त्वमनाद्यन्तं संविदोऽन्यन्न विद्यते ।
89314 देहेस्मिंस्तन्महामूर्ख किं त्वं स्याश्चित्तनामकम् ॥ ३० ॥
89315
89316 तवैव स्वरूपं दुर्लभं त्वया अभिमानेनान्यरक्षणं तु
89317 दूरनिरस्तमित्याशयेनाह - संविदिति ॥ ३० ॥
89318
89319 विषपर्यवसानेयं रसायनवदुत्थिता ।
89320 भोक्तृताकर्तृताशङ्का बत चित्त मुधैव हि ॥ ३१ ॥
89321
89322 परिणामे विषपर्यवसाना । भोगकाले रसायनवदुत्थिता ॥ ३१ ॥
89323
89324 मोपहासपदं गच्छ मूर्खेन्द्रियगणाश्रयम् ।
89325 न कर्ता त्वं न भोक्ता त्वं जडोऽस्यन्येन बोध्यसे ॥ ३२ ॥
89326
89327 इन्द्रियगणानामाश्रयणमाश्रयं कृत्वेति शेषः । अन्येन साक्षिणा ॥ ३२ ॥
89328
89329 कस्त्वं भवसि भोगानां के वा भोगा भवन्ति ते ।
89330 जडस्यात्मैव ते नास्ति बन्धुमित्रादि तत्कुतः ॥ ३३ ॥
89331
89332 भोगानुभवशक्तिशून्यस्य जडस्य मिथ्याभूतस्य च तव भोगाशा
89333 व्यर्थेत्याह - कस्त्वमिति ॥ ३३ ॥
89334
89335 यज्जडं तद्धि नस्त्येव सदेवासत्तयान्वितम् ।
89336 ज्ञत्वकर्तृत्वभोक्तृत्वमन्यत्वानामसंभवात् ॥ ३४ ॥

आत्मैव ते नास्तीत्येतदुपपादयति - यदिति। सत् परसत्तावशाद्विद्यमानतया भासमानमेव स्फटिके लौहित्यमिव स्वतः असत्तयान्वितम्। ज्ञत्वं च कर्तृत्वं च भोक्तृत्वं च मन्यते पूर्वापरमनुसंधत्ते इति मन्यस्तत्त्वं च तेषां चैतन्यमन्तरेणासंभवात्॥ ३४॥

प्रत्यक्चेतनरूपश्चेत्त्वं तदात्मैव ते वपुः।
भावाभावमयी चित्तसत्ता ते केव दुःखदा॥ ३५॥

तर्ह्यहं प्रत्यक्चैतन्यरूपमेव किं न स्यामिति चेत्तर्हि तव सदा निर्विकल्पैव स्थिर्युक्ता नतु दुःखदा कर्तृत्वभोक्तृत्वभावाभावविकल्पमयीत्याह - प्रत्यगिति। नच सर्वविकल्पत्यागे चित्तता तवास्तीति भावः॥ ३५॥

यथा कर्तृत्वभोक्तृत्वे मिथ्यैवाधिगते त्वया।
मया ते हि प्रमार्ज्येते शृणु युक्त्या कथं शनैः॥ ३६॥

अचेतनत्वे तु अयत्नेनैव कर्तृत्वादिकं प्रमार्जितुं शक्यमित्याह - यथेति॥ ३६॥

स्वयं तावद्भवानेष जडो नास्त्यत्र संशयः।
जडस्य कीदृक्कर्तृत्वं नृत्यन्तीह कथं शिलाः॥ ३७॥

शिलाः शिलापुत्रिकाः॥ ३७॥

उपजीव चिरं तस्माच्छुद्धं तद्भागमैश्वरम्।
जीवसीच्छसि हंसि त्वं वृथा यासि विवल्गसि॥ ३८॥

यदि ब्रूषे काष्ठप्रतिमा चेतनव्यापारमुपजीव्य नृत्यन्ती दृष्टेति तर्हि त्वमपि तदैश्वरं चिदाभासभागमुपजीव। तथाच प्रतिमानृत्यफलभोक्ता यथा चेतन एव न प्रतिमा तथा त्वत्कृतजीवनादिफलभोक्ता चिदात्मैवेति त्वं वृथा जीवनाद्यर्थं धावसीत्यर्थः॥ ३८॥

क्रियते यत्तु यच्छक्त्या तत्तेनैव कृतं भवेत्।
लुनाति दात्रं पुंशक्त्या लावकः प्रोच्यते पुमान्॥ ३९॥

दात्रं शङ्कुला॥ ३९॥

हन्यते यस्तु यच्छक्त्या स तेनैव हतो भवेत्।
निहन्ति खड्गः पुंशक्त्या हन्तैव प्रोच्यते पुमान्॥ ४०॥

पुमानेव हन्ता प्रोच्यत इत्यन्वयः॥ ४०॥

पीयते यस्तु यच्छक्त्या पीतं तेनैव तद्भवेत्।
पात्रेण पीयते पानं पाता यस्तूच्यते नरः॥ ४१॥

यस्तु नरः स एव पाता उच्यते न पात्रम्॥ ४१॥

प्रकृत्यैवासि सुजडः समस्तज्ञेन बोध्यसे।
तेनात्मैवात्मनात्मानं चिनोतीदं हि नो भवत्॥ ४२॥

चिनोति भोक्तृभोग्यकरणोपकरणादिभावेन स्वप्न इव संचिनोति। भवच्छब्दस्य सर्वनाम्नो नपुंसके भवदिति रूपम्॥ ४२॥

89389
89390 अनारतं बोधयति त्वामात्मा परमेश्वरः।
89391 बोधनीया बुधैर्मूढाः किलावृत्तिशतैरपि॥ ४३॥
89392
89393 बोधयति चिदाभासव्याप्त्या स्फोरयति। युक्तं चैतदित्याह - बोधनीया इति॥
89394 ४३॥
89395
89396 आत्मसत्तैव बोधैकरूपिणी स्फुरतीह हि।
89397 तयैव चित्तशब्दार्थावङ्गीकृत्य त्वया स्थितम्॥ ४४॥
89398
89399 अत-एव बोधसत्ताधीनस्तव नामरूपाभ्यामात्मलाभ इत्याह - आत्मेति॥
89400 ४४॥
89401
89402 एवं चित्त त्वमज्ञानादात्मशक्तेरुपागतम्।
89403 ज्ञाने त्वया विगलितं तीव्रे हिममिवातपे॥ ४५॥
89404
89405 तथाचात्मैव स्वाज्ञानात्त्वमिव संपन्नः स्वज्ञानात्त्वद्भावान्मुच्यत
89406 इत्याह - एवमिति। विगलितं भावे क्तः॥ ४५॥
89407
89408 तस्मान्मृतं त्वं मूढं त्वं नासि त्वं परमार्थतः।
89409 तदेवाहमिति व्यर्थमतो मास्त्वसुखाय ते॥ ४६॥
89410
89411 तदात्मैवाहमिति तादात्म्याध्यासो मास्तु। असुखाय जन्मादिदुःखाय॥ ४६॥
89412
89413 असत्या चित्तकलना इन्द्रजाललता इव।
89414 विज्ञानमात्रमेवेह ब्राह्ममङ्गं विजृम्भितम्॥ ४७॥
89415
89416 ब्राह्मं अङ्गं स्वरूपम्॥ ४७॥
89417
89418 नरामरजगद्रूपैर्ब्राह्मी शक्तिरुदेत्यलम्।
89419 सामुद्रकणकल्लोलजालैर्वेलेव वल्गति॥ ४८॥
89420
89421 शक्तिश्चिच्छक्तिसंवलिता माया। अत-एव वेलेव॥ ४८॥
89422
89423 चिन्मयश्चेद्भवेर्मूढ तत्तस्मात्परमात्पदात्।
89424 नित्यमव्यतिरिक्तं त्वं [व्यतिरिक्तस्त्वमित्येव पाठो युक्तः]
89425 किमन्यत्परिशोचसि॥ ४९॥
89426
89427 हे मूढ त्वं आत्मत्वबोधाच्चिन्मयश्चेद्भवेस्तत्तर्हि चितो
89428 भेदकारणाभावात्परमात्पदान्नित्यमव्यतिरिक्त एव॥ ४९॥
89429
89430 सर्वगं सर्वभावस्थं सर्वरूपं हि तत्पदम्।
89431 तत्प्राप्तौ सर्वमेवाज्ञ प्राप्तं भवति सर्वदा॥ ५०॥
89432
89433 तदा अप्राप्तविषयाभावादनुशोको निर्विषयो न संभाव्य इत्याशयेनाह -
89434 सर्वगमिति। सर्वेष्वतीतानागतभावेष्वपि स्थितम्।
89435 कालकृतपरिच्छेदशून्यमिति यावत्॥ ५०॥
89436
89437 न त्वमस्ति न देहोस्ति ब्रह्मास्तीह महत्स्फुरत्।
89438 अहंत्वमिति निःस्पन्दे स्फुरत्यार्तिर्हि कस्य का॥ ५१॥
89439
89440 तदा त्वं पृथङ्नास्ति। छान्दसः पुरुषव्यत्ययः। अहंत्वमित्याभासो

89441 निःस्पन्दे आत्मनि स्फुरति अतः कस्य का वा आर्तिः ॥ ५१ ॥
89442
89443 आत्मा चेत्त्वं तदात्मैव सर्वगोऽस्तीह नेतरः ।
89444 आत्मनोऽन्यज्जडत्वं चेत्तत्त्वं नास्त्यस्ति तद्वपुः ॥ ५२ ॥
89445
89446 उक्तकल्पद्वयं पुनः स्पष्टमाह - आत्मेति ॥ ५२ ॥
89447
89448 आत्मैव सर्वं त्रिजगत्तदन्यत्तु न किंचन ।
89449 तत्त्वं किंचित्त्वमात्मान्यद्यदि तत्त्वं न किंचन् ॥ ५३ ॥
89450
89451 तत्तस्माद्यदि त्वं किंचिदात्मान्यद्यदि भवसि तदा किंचन तत्त्वं
89452 परमार्थरूपं नेत्यर्थः ॥ ५३ ॥
89453
89454 अहं त्विदमहं तन्म इति व्यर्थं किमीहसे ।
89455 असद्वपुः किं स्फुरति शशशृङ्गेण को हतः ॥ ५४ ॥
89456
89457 अहं तु इदं बालशरीरम् । अहं तद्वृद्धशरीरम् । तद्बालशरीरसंबन्धि
89458 क्रीडोपकरणादि वृद्धशरीरसंबन्धिपुत्रपौत्रादि च मे मम इति व्यर्थं
89459 किमीहसे । नह्यात्मभूतस्य शरीरता वास्तवीत्यसद्वपुः किं स्फुरतीत्यर्थः ॥ ५४
89460 ॥
89461
89462 तृतीया कलना नास्ति चिज्जडांशेतरा शठ ।
89463 छायातपनयोर्मध्ये तृतीयेवानुरञ्जना ॥ ५५ ॥
89464
89465 तर्हि चिदचिद्व्यतिरिक्तं तृतीयं स्वरूपमहं किं न स्यां तत्राह -
89466 तृतीयेति । यथा जगति च्छायातपान्यतरानुरञ्जना सर्ववस्तुष्वस्त्येव तृतीया
89467 विधा नास्ति तद्वदित्यर्थः ॥ ५५ ॥
89468
89469 सत्यावलोकनाज्जाते चित्तजाड्यदृशोः क्षये ।
89470 संपद्यते यत्तु तज्जं स्वसंवेदनमात्रकम् ॥ ५६ ॥
89471
89472 तर्ह्ययं तत्त्वतः किंस्वरूपमिति चेच्चरमसाक्षात्कारवृत्त्या अविद्यया सह
89473 त्वदीयजाड्यस्य त्वदन्तर्गतचिदाभासस्य च क्षये
89474 चरमसाक्षात्कारवृत्त्याविर्भूतं यत्स्वप्रकाशपूर्णात्मरूपं तदेव
89475 त्वमित्याह - सत्येति । तज्जं तस्मात्सत्यावलोकमादाविर्भूतम् ॥ ५६ ॥
89476
89477 तेन मूढ न कर्तृत्वं न भोक्तृत्वं तवापि हि ।
89478 तदेवासि परं ब्रह्म त्यज मौर्ख्यं भवात्मवान् ॥ ५७ ॥
89479
89480 केवलं ज्ञत्वविषयमुपदेशार्थसिद्धये ।
89481 त्वया करणभूतेन करोत्यात्मेति कथ्यते ॥ ५८ ॥
89482
89483 यद्यहमात्मैव तर्हि मनसैवानुद्रष्टव्यं मनसैवेदमाप्तव्यं नेह
89484 नानास्ति किंचन इत्यादिश्रुतिषु मम आत्मोपकरणत्वं कथमुक्तं तत्राह ##-
89485 तत्त्वमसीत्याद्युपदेशानां प्रयोजनसिद्धये करणत्वेन कल्पितेन त्वया
89486 केवलं शुद्धं स्वतत्त्वं ज्ञत्वं चरमसाक्षात्कारस्तद्विषयं करोति ।
89487 यथा स्वमुखतत्त्वं दिदृक्षुर्दर्पणोपाध्यधिरूढेन स्वमुखेनैव
89488 करणेन मुखं पश्यति तद्वदिति भावः ॥ ५८ ॥
89489
89490 असत्स्वरूपं करणं जडं निरवलम्बनम् ।
89491 निःस्पन्दनं न स्पन्देत कर्तृसंबोधनं विना ॥ ५९ ॥
89492

89493 यदि त्वं करणस्वभावमेव स्वं मन्यसे तर्हि तव चलनेऽपि स्वतः सामर्थ्य
89494 नास्तीति कर्तृत्वाभिमानस्तव वृथैवेत्येतदुपपादयति -
89495 असत्स्वरूपमित्यादिना | निःस्पन्दनं स्वतः स्पन्दनशक्तिरहितम् |
89496 कर्तृसंबोधनं चैतन्यकृतं कर्तव्यार्थप्रकाशम् || ५९ ||
89497
89498 अकर्तुः करणस्यास्य शक्तिः काचिन्न विद्यते |
89499 दात्रस्य लावकाभावे कर्तुं किमिव शक्तता || ६० ||
89500
89501 अकर्तुं कर्त्रनधिष्ठितस्य || ६० ||
89502
89503 खड्गप्रहारविच्छेदक्रियायां पुंसि शक्तता |
89504 न खड्गे सुजडे चित्त सर्वाङ्गेष्वपि शक्तता || ६१ ||
89505
89506 सर्वाङ्गेषु आमूलाग्रं सर्वावयवेषु सर्वेष्वङ्गेषु उपकरणेषु सत्स्वपीति वा
89507 || ६१ ||
89508
89509 तस्मान्नासि सखे कर्तृ मा व्यर्थं दुःखभाग्भव |
89510 परार्थं क्लेशिता मूर्ख प्राकृतेषु न शोभते || ६२ ||
89511
89512 प्राकृतेषु पामरतुल्येषु प्रकृतिकार्येषु | आत्मनस्तु शोभत एव || ६२ ||
89513
89514 ईश्वरो नेदृशः शोच्यो यस्त्वया सदृशो भवेत् |
89515 नच तस्य कृतेनार्थो नाकृतेनेह कश्चन || ६३ ||
89516
89517 नन्वीश्वर एव मोहाज्जीवतां प्राप्तः अशनायादिना पीड्यमानः कथं
89518 मयोपेक्षणीय इति तदर्थं सर्वप्रयत्नैर्घटमानमहं तमनुशौचामीति
89519 चेत्तत्राह - ईश्वर इति | यस्त्वया सदृशः स एव त्वया शोचयः | ईश्वरस्तु
89520 नेदृश इत्यर्थः || ६३ ||
89521
89522 गर्वात्तुपकरोम्येनमिति केवलमल्पधीः |
89523 क्लिश्यते वसतां त्वर्थो न किंचिदुपयुज्यते || ६४ ||
89524
89525 गर्वात्कार्यकारणसंघाताभिमानादेनमात्मानमुपकरोमीति भ्रान्त्या त्वया
89526 अल्पा परिच्छिन्ना धीर्बुद्धिः क्लिश्यते पीड्यते | संघाते वसतां
89527 पञ्चप्राणमनोबुद्धिदशेन्द्रियाणां सर्वेषामचेतनत्वाद्भोगैर्नार्थ इति न
89528 किंचित्कस्यचिदुपयुज्यत इत्यर्थः || ६४ ||
89529
89530 कर्तुर्भोगेश्वरस्यैवमर्थे चेदनुवर्तसे |
89531 तदस्य काचिन्नेच्छेह तृप्तत्वात्सर्वदैव हि || ६५ ||
89532
89533 अतः परिशेषादीश्वरस्यार्थे त्वत्प्रवृत्तिर्वाच्या तत्र तूक्तमेवोत्तरमित्याह ##-
89534
89535 अकृत्रिमावभासेन सर्वगेन चिदात्मना |
89536 एकेनैवेदमापूर्णं कल्पनैवास्ति नेतरा || ६६ ||
89537
89538 कुतस्तस्य नेच्छेति चेत्पूर्णत्वादद्वयत्वाच्चेत्याह - अकृत्रिमेति || ६६ ||
89539
89540 एकानेकावभासेन समस्तेन तदात्मना |
89541 आत्मन्येवान्तरात्मान्तः क्रियते किं किमिष्यते || ६७ ||
89542
89543 सर्वस्य जगतः स्वात्मनि तेनैव कल्पितत्वेनाप्राप्तत्वाभावादपि तत्र तस्य
89544 नेच्छेत्याह - एकेति | आत्मना आत्मन्येवाविद्यकेन एकानेकावभासेन

89545 तज्जगद्रूपं क्रियते तत्र किं किमलभ्यं यदिष्यते || ६७ ||
89546
89547 त्वादृशस्य तु दृष्ट्यैव क्षुब्धता जायते मुधा |
89548 आलोक्य राजमहिषीं यूनो मदमयीं तथा || ६८ ||
89549
89550 यदि सर्वमीश्वरस्त्वं तर्हि तत्र कथं ममेच्छा तत्राह - त्वादृशस्येति |
89551 मूर्खस्येत्यर्थः || ६८ ||
89552
89553 आत्मना सह संबद्धं चेतः कर्त्रसि सुन्दर |
89554 किंतु नास्यासि संबन्धि कुसुमस्य यथा फलम् || ६९ ||
89555
89556 तर्हि तेनेश्वरेणैव संबध्य तदनुग्रहाद्भोगान् लप्स्यामि तत्राह -
89557 आत्मनेति | आत्मसंबन्धेच्छाया रमणीयत्वात्सुन्दरेति | अस्यात्मनः संबन्धि
89558 संबन्धयोग्यं नासि | यथा कुसुमादुत्पन्नमपि फलं
89559 कुसुमबहिर्मुखत्वात्तत्सौगन्धाद्युपभोगसंबन्धयोग्यं न भवति
89560 तदभिवृद्धौ कुसुमस्यैव तिरोभावात्तद्वत्त्वमपीत्यर्थः || ६९ ||
89561
89562 द्वितीयेन समं यैषा तत्तावद्भवनैकता |
89563 सा संबन्धगतिः प्रोक्ता प्राग्द्वित्वादधुनैकता || ७० ||
89564
89565 संबन्धयोग्यतामुपपादयितुं मुख्यसंबन्धलक्षणमाह - द्वितीयेनेति
89566 | एकस्य द्वितीयेन समं एकतरक्रियया उभयक्रियया च मिलनात्तस्य पूर्वस्य
89567 तावद्भवनमपरान्तर्भावस्तेन एकता वा सा संबन्धगतिः संबन्धस्य
89568 फलतो लक्षणमित्यर्थः | तदेव संक्षिप्याह - प्रागिति || ७० ||
89569
89570 नानाप्रकाररचना नानारूपक्रियोन्मुखी |
89571 सुखदुःखदशाऽहेतुर्भवान्नैकविधास्मृता || ७१ ||
89572
89573 तादृशे च मिथ्ये संबन्धे भवान् अहेतुः | यतस्तव स्वतो नैकविधा
89574 कार्यतश्च नानाप्रकाररचना नानारूपविहितनिषिद्धक्रियोन्मुखी
89575 सुखदुःखदशा आ समन्तात्स्मृता प्रसिद्धेत्यर्थः || ७१ ||
89576
89577 संबन्धः समयोर्दृष्टस्तथार्धसमयोरपि |
89578 न विलक्षणयोश्चान्यस्तस्मिन्सति जगत्क्षये || ७२ ||
89579
89580 समयोः क्षीरयोः | अर्धसमयोः क्षीरनीरयोः |
89581 विलक्षणयोर्वारिवह्न्योरिवात्यन्तविरुद्धयोः यतस्तस्मिन्विरुद्धसंनिपाते सति
89582 अन्य एकतरस्य नाश एव दृष्टो न संबन्धावस्थानमित्यर्थः || ७२ ||
89583
89584 द्रव्यान्तरगुणा द्रव्याण्याश्रयन्ति बहून्यलम् |
89585 संविदश्च्यवनं दुःखं संविदो मा च्युतो भव || ७३ ||
89586
89587 ननु शब्दस्पर्शरूपादिविरुद्धगुणवतामपि सूक्ष्मभूतानां
89588 पञ्चीकरणेन संबन्धवन्मम आत्मसंबन्धः किं न स्यात्तत्राह -
89589 द्रव्यान्तरेति | तत्र न परस्परविरुद्धता यतो द्रव्यान्तरगुणा अपि परस्परमेलने
89590 पञ्चीकृतद्रव्याण्याश्रयन्ति | तथा चाहुः शब्दैकगुणमाकाशं
89591 शब्दस्पर्शगुणो मरुत् | शब्दस्पर्शरूपगुणैस्त्रिगुणं तेज उच्यते |
89592 शब्दस्पर्शरूपरसगुणैरापश्चतुर्गुणाः | शब्दस्पर्शरूपरसगन्धैः
89593 पञ्चगुणा मही || इति | इह तु संविज्जाड्ययोर्विरोधाज्जडात्त्वत्तः
89594 संविदश्च्यवनं चेत्साधकाभावाज्जडांशो न सिद्ध्यत्येवेति
89595 त्वदसिद्धिप्रसङ्गदुःखम् | संविदः सकाशात्तव च्यवनं चेत्त्वया
89596 स्वनाशार्थमेवात्मसंबन्धोऽपेक्षितः स्यात् | अत आत्मसंबन्धमपेक्षमाण

उभयथापि त्वं संविदः सकाशान्मा च्युतो भवेत्यर्थः ॥ ७३ ॥

एतावतैकध्यानेन नित्यध्यानोऽथवात्मदृक् ।
अभावे दुःखदस्यान्तर्दृशा दृश्यस्य वस्तुनः ॥ ७४ ॥

अथवा अन्तर्दृशा संविदा दुःखदस्य दृश्यस्य त्वदादेर्वस्तुनः अभावे
नाशे सति निर्दुःखनिरतिशयानन्दात्ममात्रपरिशेषः । एतावता चेत्संतुष्यसि
तदा एकाग्रेण ध्यानेन नित्यध्यानश्चिरमविच्छिन्नसमाधिः सन्
आत्मदृगात्मदर्शी भवेत्यर्थः ॥ ७४ ॥

संकल्पोन्मुखतां विद्धि दुःखदां संविदश्च्युतिम् ।
जडेषूपलभूतेषु मनोदेहेन्द्रियादिषु ॥ ७५ ॥

समाधावेव तव सुखं ननु संकल्पोन्मुखत्वे । यतः संकल्पैर्निर्झरोदकं
शिलासु च्युतमिव देहादिषु च्युता संविदिन्द्रियद्वारैर्बहुधा विभज्यमाना
विशीर्यत इवेति तदेव दुःखमित्याह - संकल्पेति ॥ ७५ ॥

कीदृशी कर्तृता चित्त पुष्पं व्योम्नि कथं भवेत् ।
निरस्तकलना पङ्के मननध्वंसरूपिणि ॥ ७६ ॥

ननु नाहं संकल्पयामि किंत्वात्मैव कर्तृतास्वभावात्संकल्पयतीति
चेन्नैतदित्याह - कीदृशीत्यादिना ॥ ७६ ॥

नचैवात्मनि कर्तृत्वं संभवत्यम्बराङ्गवत् ।
अयं केवलमात्मैव नानानानातयात्मनि ॥ ७७ ॥

त्वत्कल्पितया नानानानातया आत्मा केवलं स्फुरत्येव न कल्पयतीत्यर्थः ॥ ७७ ॥

स्फुरत्यब्धिरिवाम्भोभिः फेनबुद्‌बुदवीचिभिः ।
आभासमात्रे सर्वस्मिन्स्फुरत्यस्मिंश्चिदात्मनि ॥ ७८ ॥

द्वितीया नास्ति कलना तप्ताङ्गार इवाम्बुधौ ।
कलनारहिते देवे देहे मनसि वा जडे ॥ ७९ ॥

यथा अम्बुधौ तप्ताङ्गारो नास्ति तद्वत् । एवमात्मदेवे कलनारहिते सति देहे
मनसि च जडे सति विवेकदृशा इदमन्यदिदमशुभमिदं नान्यदिदं
शुभमित्याद्यसत्कल्पना कल्पकाभावादेव नास्तीति संवेद्यरहिता संविदेव सा
नेतरदिति सिद्धमिति परेणान्वयः ॥ ७९ ॥

संवित्संवेद्यनिर्मुक्ता सारं सुन्दर नेतरत् ।
इदमन्यदिदं नान्यच्छुभं वाऽशुभमेव च ॥ ८० ॥

इत्यसत्कल्पना नास्ति यथा नभसि काननम् ।
संवेद्यरहितं संविन्मात्रमेवेदमाततम् ।
तत्रायमहमन्योऽयमित्यसत्कलना कथम् ॥ ८१ ॥

तदेव स्पष्टमाह - संवेद्येति ॥ ८१ ॥

अनादिमति नीरूपे सर्वगे विततात्मनि ।
आरोपयेत्कः कलनामृग्वेदं व्योम्नि को लिखेत् ॥ ८२ ॥

ऋग्वेदग्रहणं लेख्यमात्रोपलक्षणम् ॥ ८२ ॥

89649
89650 नित्योदिते सकलवस्तुपदार्थसारे
89651 संविस्थिते भरितनिर्भरभूरिदिक्कम् |
89652 आत्मन्यसत्यमिव साधु गतेऽमलत्वात्
89653 क्षीणौ सुखासुखलवौ मम वै स मोहः || ८३ ||
89654
89655 हे चित्त त्वया अमलत्वात्स्वनैर्मल्यात्सकलेषु वस्तुत्वेन प्रसिद्धेषु पदेष्वर्थेषु
89656 च सारभूते संविन्मात्रस्वभावस्थिते आत्मनि भरितानिर्भरभूरिदिक्कं यथा
89657 स्यात्तथा साधु असंदिग्धापरोक्षतया गते अवगते सति मम सुखासुखलवौ
89658 असत्यमिव मृगतृष्णोदकरज्जुसर्पशुक्तिरजतादिकमिव क्षीणौ यतः वै इति
89659 निश्चयेन स प्राक्तनसुखदुःखप्रत्ययो मोहो भ्रान्तिरेव न यथार्थ इत्यर्थः
89660 || ८३ ||
89661
89662 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे०
89663 मोक्षोपायेषूपशमप्रकरणे इन्द्रियानुशासनयोगोपदेशो नाम
89664 द्व्यशीतितमः सर्गः || ८२ ||
89665
89666 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
89667 इन्द्रियानुशासनयोगोपदेशो नाम द्व्यशीतितमः सर्गः || ८२ ||
89668
89669
89670 त्र्यशीतितमः सर्गः ८३
89671
89672 श्रीवसिष्ठ उवाच |
89673
89674 भूयो मुनिवरो धीरो धिया धवलमेधया |
89675 स्वमिन्द्रियगणं गुप्तो बोधयामास साध्विदम् || १ ||
89676
89677 समस्तदोषानर्थाप्तिश्चित्तेन्द्रियगणे सति |
89678 समस्तगुणसौख्याप्तिस्तदसत्त्वेऽत्र कीर्त्यते || १ ||
89679
89680 धवला शुद्धा मेधा धारणा यस्यास्तथाविधया धिया | गुप्तो रहःस्थः || १
89681 | |
89682
89683 तच्चेन्द्रियगणस्यार्थे शृणु वक्ष्यामि ते स्फुटम् |
89684 श्रुत्वा तद्भावनामेत्य परां निर्दुःखतां व्रज || २ ||
89685
89686 इन्द्रियगणस्यार्थे तत्तेन कृतं रहसि प्रबोधनं ते स्फुटं वक्ष्यामि || २ ||
89687
89688 भवतामात्मसत्तैषा दुःखायैवान्तदायिनी |
89689 असत्यामात्मनः सत्तां तद्भवन्तस्त्यजन्त्विति || ३ ||
89690
89691 हे इन्द्रियादिगणाः भवतामेषा अविचारदृशा प्रसिद्धा आत्मसत्ता स्वीया
89692 विद्यमानता जीवनकाले बहुतरानर्थदुःखायैव तदूर्ध्वं चान्तदायिनी
89693 पुनःपुनर्मृत्युनरकादिदायिनी तत्तस्मादिति प्राग्दर्शितविचारेण तामात्मनः
89694 असत्यां सत्तां त्यजन्तु || ३ ||
89695
89696 मदीयेनोपदेशेन सत्तैषा भवतां क्षयम् |
89697 गतैवेति स्फुटं मन्ये यूयं ह्यज्ञानसंभवाः || ४ ||
89698
89699 मदीयेन प्राक्कृतेनात्मतत्त्वोपदेशेन | हि यतो यूयमज्ञानसंभवाः |
89700 उपदेशेनाज्ञाने नष्टे न सत्तां लप्स्यथेत्यर्थः || ४ ||

89701
89702 स्वसत्ता स्फुटतां याति दुःखाय तव चित्तक।
89703 तप्तकाञ्चनरुल्लासो दाहायैव स्वपार्श्वयोः॥ ५॥
89704
89705 इदानीं चित्तं प्रत्यपि तथैवाह - स्वसत्तेति। तप्तकाञ्चनमिव ज्वलन् रौति
89706 ध्वनतीति तप्तकाञ्चनरुत् अग्निस्तस्मिन् लासः क्रीडा बालानां पक्षिणां वा
89707 पार्श्वयोर्दाहायैव॥ ५॥
89708
89709 पश्य त्वयि सति भ्रान्तजलकल्लोलसंकुलाः।
89710 विशन्ति कालजलधिं संसाअसरितां गणाः॥ ६॥
89711
89712 चित्तेन्द्रियगणसत्ताप्रयुक्तामनर्थपरम्परां दर्शयति - पश्येत्यादिना।
89713 लडयोरभेदाज्जडानां मूर्खाणां रागद्वेषादिकल्लोलैः संकुलाः॥ ६॥
89714
89715 पतन्त्यहमहमिकाविहितान्योन्यचिन्तिताः।
89716 कुतोऽपि दुःखावलयो धारा आसारगा इव॥ ७॥
89717
89718 अहमहमिकाः
89719 परस्पराहंकारास्ताभिर्विहितान्यन्योन्यवधपराजयपीडनादिचिन्तनानि यासु
89720 ताः॥ ७॥
89721
89722 परिस्फुरत्यपर्यन्ता हृदयोन्मूलनोद्यता।
89723 आक्रन्दकारिणी क्रूरा भावाभावविषूचिका॥ ८॥
89724
89725 भावाभावौ संपद्विपदौ॥ ८॥
89726
89727 कासश्वासरणद्भृङ्गा कलेवरजरद्द्रुमे।
89728 विकसत्यमलोद्योता जरामरणमञ्जरी॥ ९॥
89729
89730 कल्लोलव्यालवलिते शरीरश्वभ्रकोटते।
89731 घननीहारखे स्वान्तश्चिन्ताचपलमर्कटी॥ १०॥
89732
89733 कल्लोलैर्मनोरथतरङ्गैर्व्यालैर्वलिते शरीरश्वभ्रकोटरे हृदये।
89734 घननीहाराणि निबिडजाड्यानि खानीन्द्रियच्छिद्रद्वाराणि यस्य। चिन्तालक्षणा
89735 चपला जालरचनव्यग्रा मर्कटी ऊर्णनाभिकीटिका भ्रमतीति शेषः॥ १०॥
89736
89737 लोभनाट्यारटत्पक्षी तीक्ष्णया द्वन्द्वतुण्डया।
89738 कायजीर्णद्रुमादस्माद्गुणखण्डं निकृन्तति॥ ११॥
89739
89740 लोभलक्षणैर्नाट्यैः स्वविलासैरारटन् कूजन् पक्षी तीक्ष्णया
89741 सुखदुःखादिद्वन्द्वलक्षणया तुण्डया चञ्च्वा गुणखण्डं
89742 शान्तिदान्तिधर्मादिफलपुष्पलक्षणं गुणसमूहं निकृन्तति॥ ११॥
89743
89744 हृदयावकरं कीर्णमितश्चेतश्च कर्कशः।
89745 अपवित्रो दुराचारः कुरुते कामकुक्कुटः॥ १२॥
89746
89747 कामलक्षणः कुक्कुटो रागादिवासनाकीर्णं हृदयं मनस्तल्लक्षणं
89748 अवकरं उत्करं कुरुते पुनःपुनः पादाभ्यां विकिरतीत्यर्थः॥ १२॥
89749
89750 महत्यां मोहयामिन्यामुल्बणोऽज्ञानकौशिकः।
89751 श्मशान इव वेतालः परिवल्गति हृद्द्रुमे॥ १३॥
89752

89753 अज्ञानं भ्रान्तिज्ञानं तल्लक्षणः कौशिक उलूकः ॥ १३ ॥
89754
89755 एताश्चान्याश्च बह्व्योऽपि त्वयिन्द्रियगणे सति।
89756 पिशाच्य इव शर्वर्यां प्रवल्गन्त्यशुभश्रियः ॥ १४ ॥
89757
89758 त्वयि त्वसति हे साधो सर्वा एव शुभश्रियः।
89759 प्रभात इव पद्मिन्यः सालोकं विलसन्त्यलम् ॥ १५ ॥
89760
89761 इदानीं चित्तेन्द्रियगणासत्त्वे सर्वगुणसंपत्तिं दर्शयति - त्वयीत्यादिना।
89762 असत्त्वे साधुरेवेति तथा संबोधनम्। शुभश्रियो वक्ष्यमाणगुणश्रियः
89763 सालोकं विवेकालोकसहितं यथा स्यात्तथा। प्रभातपक्षेऽपि यथायोगं योज्यम्।
89764 एवमग्रेऽपि ॥ १५ ॥
89765
89766 प्रशान्तमोहमिहिकं राजते हृदयाम्बरम्।
89767 निर्मलालोकवलितं नीरजस्कतरान्तरम् ॥ १६ ॥
89768
89769 हृदयाम्बरं हार्दं ब्रह्म नीरजस्कतरमत्यन्तापगतरजोगुणमान्तरं
89770 मनो यस्मिन् ॥ १६ ॥
89771
89772 अशङ्कितनभःकोशपतिताकुलपूरवत्।
89773 नापतन्ति विकल्पौघाश्चिरं वैकल्यकारिणः ॥ १७ ॥
89774
89775 अशङ्कितं निःशङ्कमेव नभःकोशे पतिता निर्गता वाय्वादिना आकुलाश्च ये
89776 आसारपूरास्तद्वत् वैकल्यकारिणो विक्षेपहेतवो विकल्पौघा नापतन्ति ॥ १७ ॥
89777
89778 सर्वस्याह्लादनी शान्ता मैत्री परमपावनी।
89779 अभ्युदेति हृदो हृद्या सुतरोरिव मञ्जरी ॥ १८ ॥
89780
89781 अन्तश्छिद्रवती जाड्ययुक्तायुक्तगुणा स्वयम्।
89782 चिन्ता शोषमुपायाति हिमदग्धेव पद्मिनी ॥ १९ ॥
89783
89784 अन्तश्छिद्रमपूर्णता। जाड्ययुक्तेषु मूर्खेष्वेव आयुक्ता उपयोजिता
89785 विद्याकौशलादिगुणा यया। पद्मिनीपक्षे स्पष्टम् ॥ १९ ॥
89786
89787 आलोकः स्फुटतामन्तरायात्यज्ञानसंक्षये।
89788 प्रशाम्यत्यम्बुदे व्योम्नि शरदीवार्कमण्डलम् ॥ २० ॥
89789
89790 अन्तः आलोकः स्वीयज्ञानप्रकाशः। स्फुटतां प्रकटताम् ॥ २० ॥
89791
89792 प्रसन्नं स्फारगाम्भीर्यमक्षुब्धमपराहतम्।
89793 हृदयं समतामेति शान्तवात इवार्णवः ॥ २१ ॥
89794
89795 अपराहतं वैषम्यहेतुभिरपरिभूतं हृदयं मनः ॥ २१ ॥
89796
89797 अमृतापूरपूर्णेन नित्यानन्दमयेन च।
89798 स्थीयते पुरुषेणान्तः शीतेन शशिना यथा ॥ २२ ॥
89799
89800 संविदः स्फुटतामन्तरायान्त्यज्ञानसंक्षये।
89801 संविदंसैकविश्रान्तं समग्रं सचराचरम् ॥ २३ ॥
89802
89803 संविद आत्माकारवृत्तयः स्फुटतां पूर्णत्वापादकं विकासं यान्ति। तेन
89804 च सचाराचरं समग्रं जगद्बाधितं सत् संविदंशैकविश्रान्तं भवतीति

89805 शेषः ॥ २३ ॥
89806
89807 भाव्यते भरिताकारं वपुरानन्दमन्थरम् ।
89808 न भवत्यसुसङ्गानामाशापाशविधायिनाम् ॥ २४ ॥
89809
89810 वपुः आत्मस्वरूपं भरिताकारं पूर्णं भाव्यतेऽनुभूयते नतु
89811 आशापाशविधायिनां असुसङ्गानां प्राणसंबद्धानां देहादीनां पक्षे
89812 भवतीत्यर्थः । अथवा वपुः शरीरमानन्दाविर्भावमन्थरं
89813 सदमृतप्राशनेनेव भरिताकारं भाव्यते
89814 नत्वन्नपानाद्याशापाशविधायिनामसुसङ्गानां
89815 प्राणाद्यासङ्गपाप्मनां पक्षे भवतीत्यर्थः ॥ २४ ॥
89816
89817 दग्धानामिव पर्णानां रसानां पुनरागतिः ।
89818 पुंसां क्षपितसंसारजराजन्ममहाध्वनाम् ॥ २५ ॥
89819
89820 यथा तरोर्दावदग्धानां पर्णानां पुनर्वर्षासु पल्लवोदयेन आगमो भवति
89821 तद्वत् ज्ञानाग्निक्षपितसंसारजराजन्मोपल्क्षितमहाध्वनामपि पुंसां
89822 रसानामारोग्यतुष्टिपुष्टिकान्त्यादिगुणानां पुनरागमो भवतीत्यर्थः ॥ २५ ॥
89823
89824 अपुनर्भ्रमणायात्मद्रुमे विश्रम्यते चिरम् ।
89825 एवंप्रायास्तथान्याश्च भवन्ति गुणसंपदः ॥ २६ ॥
89826
89827 निरतिशयानन्दात्मनि पुनरावृत्तिरहिता विश्रान्तिरेव सर्वगुणसीमा
89828 तदानुषङ्गिका अन्ये गुणास्त्वनन्ता न वर्णयितुं शक्या इत्याशयेनोपसंहरति
89829 - अपुनरिति ॥ २६ ॥
89830
89831 असति त्वयि सर्वाशिन्सर्वाशाक्षयसंक्षये ।
89832 पक्षयोरेतयोश्चित्तसत्तासत्तास्वरूपयोः ॥ २७ ॥
89833
89834 एतयोरत्यन्तात्मभावेन स्थितिरात्यन्तिकनैरात्म्यस्वीकारो वेत्येतयोः
89835 पक्षयोर्मध्ये ॥ २७ ॥
89836
89837 येनैव पश्यसि श्रेयस्तमेवाङ्गीकुरु क्षणम् ।
89838 स्वात्मभावस्तव सुखं मन्ये मानवतां वर ॥ २८ ॥
89839
89840 तत्र प्रथमपक्षो वरीयानित्याह - स्वात्मेति ॥ २८ ॥
89841
89842 तमेव भावयाभावं सुखत्यागो हि मूढता ।
89843 यदि त्वस्ति भवेत्सत्यमन्तर्भावितचेतनम् ॥ २९ ॥
89844
89845 अभावं भावान्तरशून्यम् । ननु
89846 किमर्थमन्तर्भावितचेतनपूर्वसिद्धमनोरूपेणैव जीवनं मम नेच्छसि
89847 किमर्थं वा ममात्यन्तमभावमिवेच्छसि तत्राह - यदीत्यादिना । हे चित्त
89848 तव अन्तर्भावितचेतनं यत्प्रसिद्धं रूपमस्ति तद्यदि सत्यं भवेत्तर्हि तेन
89849 रूपेण जीवतस्तवाभावं क इच्छति । किंतु त्वं तेन रूपेण नास्त्यसि असदसि ।
89850 अहं सत्येन श्रुतिशास्त्रानुभवादिना विचार्य वदामि नापातदर्शनेनेत्यर्थः
89851 ॥ २९ ॥
89852
89853 जीवतस्तत्तवात्यन्तमभावं क इवेच्छति ।
89854 किंतु नास्त्यसि सत्येन वदामि तव सुन्दर ॥ ३० ॥
89855
89856 तेन मिथ्यैव जीवामीत्याशया मा सुखी भव ।

89857 पूर्वमेवासि नास्त्येव यावद्भ्रान्त्या त्वदस्तिता ॥ ३१ ॥
89858
89859 एतदत्यन्तात्मभावेनावस्थानं तवापि हितमित्याह - तेनेति । पूर्वं
89860 प्राथमकल्पिकमेवासि यावत् यतः ॥ ३१ ॥
89861
89862 सैवेदानीं विचारेण भृशं क्षयमुपागता ।
89863 एतावदेव ते रूपं साधो यदविचारणम् ॥ ३२ ॥
89864
89865 सैव भ्रान्तिः ॥ ३२ ॥
89866
89867 विचारे विहिते सम्यक्समरूपं समं स्थितम् ।
89868 अविचारात्प्रजातं त्वमनालोकात्तमो यथा ॥ ३३ ॥
89869
89870 समरूपं सन्मात्ररूपं समं विक्षेपवैषम्यशून्यं स्थितम् ।
89871 अनालोकात्प्रकाशाभावात् ॥ ३३ ॥
89872
89873 विचारेणोपशान्तं त्वमालोकेनतमो यथा ।
89874 एतावन्तं सखे कालं बभूवाल्पविवेकिता ॥ ३४ ॥
89875
89876 तवानेनाभिपीनत्वमभूद्दुःखैककारणम् ।
89877 मोहसंकल्पमात्रेण बालबेतालवद्भवेत् ॥ ३५ ॥
89878
89879 अनेन अल्पविवेकत्वेन हेतुना । नन्वसतः पीनत्वं कथं भवेत्तत्राह -
89880 मोहेति ॥ ३५ ॥
89881
89882 द्वन्द्वं चाद्यन्तसंकल्पक्षीणं क्षयि भव स्थितम् ।
89883 इदानीमुदितं नित्यं स्वप्राग्रूपे क्षयं गते ॥ ३६ ॥
89884
89885 पीनत्वं तत्प्रयुक्तं सुखदुःखादिद्वन्द्वं च अभूदिति पूर्वेणान्वयः । यतः
89886 स्रष्टुराद्यन्तसंकल्पेन संकल्पकाल एव क्षीणमतः क्षयीति
89887 द्वन्द्वविशेषणम् । यस्य विवेकस्य प्रसादेन इदानीं ज्ञानोदयकाले आविद्यके
89888 स्वप्राग्रूपे क्षयं गते सति नित्यमनाद्यन्तमात्मरूपमुदितं तस्मै विवेकाय
89889 नमो नम इति परेणान्वयः ॥ ३६ ॥
89890
89891 विवेकस्य प्रसादेन विवेकाय नमो नमः ।
89892 बहुधापि प्रबुद्धस्त्वं चित्तकाप्यनुबोधितः ॥ ३७ ॥
89893
89894 हे चित्तक त्वं स्वतोऽपि बहुधा प्रबुद्धः शास्त्रेणाप्यनुबोधितः ॥ ३७ ॥
89895
89896 चित्ततायां प्रनष्टायां स्थितस्त्वं परमेश्वरः ।
89897 प्राक्स्वरूपविलासस्ते श्रेयसे स्थितिमागतः ॥ ३८ ॥
89898
89899 प्रागपि त्वं परमेश्वरः स्थितः संप्रत्यपि प्रबोधतस्ते स्वरूपविलासः
89900 स्थितिमागत इति महेश्वर एवेति परेणान्वयः ॥ ३८ ॥
89901
89902 समस्तवासनोन्मुक्तः संप्रत्यसि महेश्वरः ।
89903 यस्याविवेकादुत्पत्तिः स विवेकाद्विनश्यति ॥ ३९ ॥
89904
89905 प्रकाशेन प्रयात्यन्तमनालोकोऽभवत्तमः ।
89906 अनिच्छतोऽपि ते साधो विचारे स्थितिमागते ॥ ४० ॥
89907
89908 सर्वतोऽयमुपायातो विनाशः सुखसिद्धये ।

89909 तस्मान्नास्त्यसि निर्णीतमिति सिद्धान्तयुक्तिभिः ॥ ४१ ॥
89910
89911 चित्तेन्द्रियेश्वर स्वस्ति भवते त्वन्तमागतः ।
89912 नित्यं पूर्वमभूताय नास्तिरूपाय संप्रति ॥ ४२ ॥
89913
89914 वित्त्वेति पाठे हे इन्द्रियेश्वर सिद्धान्तयुक्तिभिः इति वित्त्वा स्वरूपं लब्ध्वा
89915 अन्तं संसारपारमागतो भव । ते तुभ्यं स्वस्ति अस्तु । मनसः
89916 कालत्रयेऽप्यसत्त्वमाह - नित्यमिति ॥ ४२ ॥
89917
89918 भविष्यते च नोदर्कं स्वमनः स्वस्ति तेऽस्त्विति ।
89919 परिनिर्वामि शान्तोऽस्मि दिष्ट्यास्मि विगतज्वरः ॥ ४३ ॥
89920
89921 चित्तासत्तयैव परमपुरुषार्थसिद्धिं दर्शयति - परिनिर्वामीत्यादिना ॥ ४३ ॥
89922
89923 स्वात्मन्येवावतिष्ठेऽहं तुर्यरूपपदे स्थितः ।
89924 अतो नास्त्येव नास्त्येव संसारे चित्तमस्थिति ॥ ४४ ॥
89925
89926 आत्मा त्वस्त्वेव चास्त्वेव यस्मादन्यत्र विद्यते ।
89927 अयमात्माहमेवासौ नास्त्यन्यन्मद्दते क्वचित् ॥ ४५ ॥
89928
89929 स्फुरच्चिदेव बोधात्मा सर्वत्राहं स्थितः सदा ।
89930 अयमात्मेति कलना मन्ये नो निर्मलान्तरे ॥ ४६ ॥
89931
89932 शुद्धचिदेकरसे अयमात्मेति कलनापि यत्र दुर्लभा तत्र
89933 दूरेऽन्यकलनेत्याशयेनाह - अयमिति ॥ ४६ ॥
89934
89935 प्रतियोगिव्यवच्छेदकलनैकस्य वै कुतः ।
89936 अहं तेनायमात्मेति कलनामनुदाहरन् ।
89937 मौनी स्वात्मनि तिष्ठामि तरङ्ग इव वारिणि ॥ ४७ ॥
89938
89939 अत-एव तद्वाचामविषय इत्याह - अहमिति । अनुदाहरन् अनभिलपन् ॥ ४७ ॥
89940
89941 संशान्ताअसनमनाश्रितचेतनांश-
89942 मप्राणसंचरणमस्तमितांशदोषम् ।
89943 संवेद्यवर्जितमुपेत्य सुसंविदंशं
89944 शाम्यामि मौनमहमेव निरीहमन्तः ॥ ४८ ॥
89945
89946 अहं अन्तः स्वहृदि संवेद्येन जडांशेन वर्जितम् । तत्कारणाविद्याया अपि
89947 बाधात्संशान्तवासनम् । चिदाभासस्यापि
89948 पृथगनवस्थानादनाश्रितचेतनांशम् ।
89949 तदधीनक्रियाशक्तेरप्युपरमादप्राणसंचरणम् । भेदकाभावादेव
89950 अस्तगितांशभेदम् । सममेकरसम् । चिदंशं चिन्मात्रलक्षणम् ।
89951 जगद्बाधपरिशिष्टांशम् । उपेत्य निरीहं निर्मनश्चेष्टं मौनं
89952 निर्वाग्व्यापारं च शाम्यामि । विश्रान्तोऽस्मीत्यर्थः ॥ ४८ ॥
89953
89954 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे०
89955 मोक्षोपायेषूपशमप्रकरणे चित्तासत्ताविचारयोगोपदेशो नाम
89956 त्र्यशीतितमः सर्गः ॥ ८३ ॥
89957
89958 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
89959 चित्तासत्तविचारयोगोपदेशो नाम त्र्यशीतितमः सर्गः ॥ ८३ ॥
89960

89961
89962 चतुरशीतितमः सर्गः ८४
89963
89964 श्रीवसिष्ठ उवाच।
89965
89966 इति निर्णीय स मुनिर्वीतहव्यो विवासनः।
89967 आसीत्समाधावचलो विन्ध्यकन्दरकोटरे॥ १॥
89968
89969 समाधिर्वीतहव्यस्य धराविवरसंस्थितिः।
89970 हृदि विद्याधरेन्द्रत्वगणत्वाद्युपवर्ण्यते॥ १॥
89971
89972 इति उक्तप्रकारेण निर्णीय निश्चित्य॥ १॥
89973
89974 अपरिस्पन्दिताशेषसंविदानन्दसुन्दरः।
89975 बभावस्तंगतमनाः स्तिमिताम्भोधिशोभनः॥ २॥
89976
89977 अपरिस्पन्दितो यः अशेषः पूर्णः स्वप्रकाशसंविद्रूप आनन्दस्तद्रूपः सन्
89978 सुन्दरः॥ २॥
89979
89980 अन्तरेव शशामास्य क्रमेण प्राणसंततिः।
89981 ज्वालाजालपरिस्पन्दो दग्धेन्धन इवानलः [अनले इति पाठः]॥ ३॥
89982
89983 अनन्तर्निष्ठतां याते बाह्यार्थे चाप्यसंस्थिते।
89984 शेषेऽन्तर्लब्धसंस्थाने तस्यास्फुरितपक्ष्मणी॥ ४॥
89985
89986 तस्यार्धोन्मीलिते अक्षिणी वर्णयति - अनन्तरिति द्वाभ्याम्।
89987 नात्यन्तमन्तर्निष्ठतां निमीलनं याते। शेषे उन्मीलितांशातिरिक्तांशे॥ ४॥
89988
89989 घ्राणप्रान्तगताल्पाल्पसमालोके इवेक्षणे।
89990 अर्धकुड्मलितैः पद्मैः श्रियमाययतुः समाम्॥ ५॥
89991
89992 घ्राणप्रान्तो नासाग्रं तत्र गतः प्रसृतः अल्पादल्पः सम उभयतस्तुल्य
89993 आलोकः प्रकाशो ययोस्ते इव लक्ष्यमाणे ईक्षणे चक्षुषी॥ ५॥
89994
89995 समकायशिरोग्रीवस्थानकः स महामतिः।
89996 आसीच्छैलादिवोत्कीर्णश्चित्रार्पित इवाथवा॥ ६॥
89997
89998 तथाभितिष्ठतस्तस्य [तथापि तिष्ठतः इति पाठः]
89999 संवत्सरशतत्रयम्।
90000 कोटरे विन्ध्यकच्छस्य ययावर्धमुहूर्तवत्॥ ७॥
90001
90002 कच्छस्य निर्झरसंनिहितदेशस्य॥ ७॥
90003
90004 एतावन्तमसौ कालं नाबुद्ध्यत किलात्मवान्।
90005 जीवन्मुक्ततया ध्यानी न च तत्याज तां तनुम्॥ ८॥
90006
90007 तावत्कालं स सुभगो न प्राबुध्यत योगवित्।
90008 उदारैरम्बुदारावैरासारभरघर्घरैः॥ ९॥
90009
90010 आसारभराणां वर्षनिर्झरधारासंपातानां घर्घरैः स्वनैरपि॥ ९॥
90011
90012 पर्यन्तमण्डलाधीशमृगयानतबृंहितैः [आगत इत्युभयत्र

90013 पाठः] |
90014 पक्षिवानरनिर्हादैर्मातङ्गास्फोटनिःस्वनैः || १० ||
90015
90016 पर्यन्तवासिनां मण्डलाधीशानां सामन्तानां मृगयासु
90017 आनतानामागतानां [आगत इत्युभयत्र पाठः] गजानां
90018 बृंहितैर्गर्जितैः | सर्वत्र अपिशब्दो योज्यः || १० ||
90019
90020 सिंहसंरम्भरटितैर्निर्झरारावसील्कृतैः |
90021 विषमाशनिसंपातैर्जनकोलाहलैर्घनैः || ११ ||
90022
90023 सिंहानां संरम्भरटितैः सक्रोधगर्जनैः || ११ ||
90024
90025 प्रमत्तशरभास्फोटैर्भूकम्पतटघट्टनैः |
90026 वनदाहधमध्वानैर्जलौघाहतिवल्गनैः || १२ ||
90027
90028 भूकम्पेन विशीर्णानां तटानां गिरिवप्राणां घट्टनैरास्फालनैः |
90029 वनदाहेषु धमैरग्निसंयोगैस्तत्प्रयुक्तध्वानैश्च | जलस्य ओघैराहतय
90030 आस्फालनानि वल्गनानि वहनानि च तैरपि || १२ ||
90031
90032 महोपलतटाघातैर्धरणीतलमृज्जलैः |
90033 जलौघान्दोलनायातैस्तापैरनलकर्कशैः || १३ ||
90034
90035 धरणीतलात्प्रसृतैर्मृत्पङ्किलजलैः |
90036 अनलवत्कर्कशैस्तापैर्ग्रीष्मादितापैरपि न प्राबुध्यतेति सर्वत्र योज्यम् || १३ ||
90037
90038 केवलं वहति स्वैरं काले गलितकारणम् |
90039 परियान्तीषु वर्षासु लहरीष्विव वारिणी || १४ ||
90040
90041 गलितकारणं निष्प्रयोजनं काले वहति सति असौ प्रावृडोघविनुन्नेन
90042 पङ्केन उपर्युपरि प्रचीयमानेन अल्पेनैव कालेन उर्वीतले धरणीविवरे
90043 भूगर्भे कृतः प्रवेशित इति द्वयोरन्वयः || १४ ||
90044
90045 स्वल्पेनैव हि कालेन तस्मिन्पर्वतकन्दरे |
90046 प्रावृडोघविनुन्नेन पङ्केनोर्वीतले कृतः || १५ ||
90047
90048 तत्रासाववसद्भूमौ कोटरे संकटोदरे |
90049 पङ्कसंपीडितस्कन्धः पर्वतेषु शिला यथा || १६ ||
90050
90051 संपीडितः संश्लिष्टः स्कन्धो यस्येत्यर्थः | नहि तस्य समाध्सुखनिमग्नस्य
90052 पीडास्ति || १६ ||
90053
90054 शतत्रये स वर्षाणामथ याते स्वयंप्रभुः |
90055 व्यबुध्यतात्मरूपात्मा धराकोटरपीडितः || १७ ||
90056
90057 संविदेवास्य तं देहं जग्राहोर्वीनिपीडितम् |
90058 तनुः प्राणमयस्पन्दः प्राणसंसरणं विना || १८ ||
90059
90060 एवं संकटस्थस्य कथं जीवनमभूत्तत्राह - संविदेवेति |
90061 जीवनादृष्टलिङ्गदेहप्रतिबिम्बिता संविदेवास्य तं देहं जग्राह उपादाय
90062 पालितवती | प्राणमयः प्राणवृत्तिरूपः स्पन्दस्तु न जग्राह | यतस्तनुः
90063 सूक्ष्मः | प्राणसंसरणाभावादित्यर्थः || १८ ||
90064

90065 उत्पत्तिप्रौढिमासाद्य कलना हृदयान्तरे ।
90066 स्वमनोरूपिणी तस्य हृद्येवानुबभूव सा ॥ १९ ॥
90067
90068 वर्षशतत्रयानन्तरं तस्य यद्वृत्तं तदाह - उत्पत्तीति । अथ तस्य कलना
90069 जीवसंवित् प्रारब्धशेषभोगाय हृदयान्तर उत्पत्त्या उन्मेषक्रमेण
90070 प्रौढिं स्थौल्यमासाद्य स्वमनोरूपिणी भूत्वा वक्ष्यमाणं सर्व कल्पनया
90071 हृद्येव अनुबभूव अनुभूतवतीत्यर्थः ॥ १९ ॥
90072
90073 कैलासकानने कान्ते कदम्बस्य तरोस्तले ।
90074 मुनित्वं शतमब्दानां जीवन्मुक्तात्मनिर्मलम् ॥ २० ॥
90075
90076 यदनुबभूव तदेवाह - कैलासेत्यादिना ॥ २० ॥
90077
90078 विद्याधरत्वं वर्षाणां शतमाधिविवर्जितम् ।
90079 युगपञ्चकमिन्द्रत्वं प्रणतं सुरचारणैः ॥ २१ ॥
90080
90081 इन्द्रत्वं देवराजत्वम् ॥ २१ ॥
90082
90083 श्रीराम उवाच ।
90084
90085 शक्रत्वादिषु तेष्वस्य प्रतिभासेषु भो मुने ।
90086 नियमोऽनियमश्चैव दिक्कालनियतेः कथम् ॥ २२ ॥
90087
90088 कैलासकानने इत्यादिर्दिङ्नियमः युगपञ्चकमित्यादिः कालनियमः अल्पकाल
90089 एव हृदयप्रदेश एव तदनुभवादनियमश्च कथमुपपद्यते ।
90090 दिक्कालनियतेरन्यथाकर्तुमशक्यत्वादिति प्रश्नार्थः ॥ २२ ॥
90091
90092 श्रीवसिष्ठ उवाच ।
90093
90094 सर्वात्मिकैषा चिच्छक्तिर्यत्रोदेति यथा यथा ।
90095 तथा तत्राशु भवति तथात्मैकस्वभावतः ॥ २३ ॥
90096
90097 असार्वात्म्येन ज्ञातायां चिति अल्पयोरपि
90098 देशकालयोर्विस्तृतदेशकालान्तरकल्पनासामर्थ्ये भवत्येव नियतिविरोधो नतु
90099 सर्वात्मिकायां सर्वशक्तिसंपन्नायां परिज्ञातायामित्याशयेन परिहरति ##-
90100
90101 यथा यत्र यदा बुद्धौ नियमः स तदा स्थितः ।
90102 देशकालादिनियमक्रमाणां तन्मयात्मता ॥ २४ ॥
90103
90104 स्वबुद्ध्या अनुभूयमानयोरेव देशकालयोः संकोचवैपुल्यनियमानियमौ
90105 विरुद्धौ नाननुभूयमानेन सह अनुभूयमानस्य तौ ।
90106 अल्पतरनाडीकुहरेष्वल्पकाले
90107 विस्तृतदेशकालस्वप्नानुभवदर्"अनादित्याशयेनाह - यथेति । यत्र यदा
90108 बुद्धौ यथा अनुभवस्तदा तथा नियमः स्थित इत्यर्थः । तन्मयात्मता
90109 बुद्धिमयात्मन्यध्यस्तता यत इत्यर्थः । तन्मयात्मनाम् इति पाःए हेतुगर्भ
90110 विशेषणम् ॥ २४ ॥
90111
90112 तेन नानाविधान्येष जगन्ति परिदृष्टवान् ।
90113 हृदि संवेदनाकाशे वीतहव्यो विवासनः ॥ २५ ॥
90114
90115 तेनोक्तहेतुद्वयेन ॥ २५ ॥
90116

90117 सम्यग्बोधवतामेषा वासनैव न वासना ।
90118 ज्ञानाग्निदग्धाऽदग्धस्य कैव बीजस्य बीजता ॥ २६ ॥
90119
90120 बीजशक्तिनाशाद्दग्धस्य उपलभ्यमानत्वाददग्धस्य । भर्जितस्येति यावत् ॥ २६ ॥
90121
90122 कल्पमेकं गणत्वं स चन्द्रमौलेश्चकार ह ।
90123 समस्तविद्यानिपुणं त्रिकालामलदर्शनम् ॥ २७ ॥
90124
90125 शङ्कां समाधाय प्रस्तुतमेव वर्णयति - कल्पमित्यादिना । गणत्वं
90126 गाणपत्यम् ॥ २७ ॥
90127
90128 यो यादृग्दृढसंस्कारः स तं पश्यति तादृशम् ।
90129 जीवन्मुक्ततयैवैतद्वीतहव्योऽनुभूतवान् ॥ २८ ॥
90130
90131 जीवन्मुक्तस्यापि तस्य भोजकप्रारब्धकर्मोद्बोधितदृढसंस्कार एव
90132 देहभोगादिवैचित्र्यप्रतिभासे हेतुरित्याह - य इति ॥ २८ ॥
90133
90134 श्रीराम उवाच ।
90135
90136 एवं स्थिते मुनिश्रेष्ऽथ जीवन्मुक्तमतेरपि ।
90137 बन्धमोक्षदृशः सन्ति वीतहव्यात्मनो यथा ॥ २९ ॥
90138
90139 रामशङ्का स्पष्टा ॥ २९ ॥
90140
90141 श्रीवसिष्ठ उवाच ।
90142
90143 यथास्थितमिदं विश्वं शान्तमाकाशनिर्मलम् ।
90144 ब्रह्मैव जीवन्मुक्तानां बन्धमोक्षदृशः कुतः ॥ ३० ॥
90145
90146 दग्धपटन्यायेनासतः प्रारब्धशेषेण प्रतिभासो बाधितानुवृत्तिमात्रं न
90147 बन्ध इत्याशयेन परिहरति - यथास्थितमित्यादिना ॥ ३० ॥
90148
90149 एतत्संविन्नभो भाति यत्र यत्र यथा यथा ।
90150 तत्र तत्र तथा तावत्तावत्तद्विन्दते ततम् ॥ ३१ ॥
90151
90152 विदन्ते लभत इव ॥ ३१ ॥
90153
90154 तेनानुभूतानि बहून्यनुभूयन्त एव च ।
90155 जगन्ति सर्वात्मतया ब्रह्मरूपेण राघव ॥ ३२ ॥
90156
90157 ईश्वरस्यास्मदीयजगत्प्रतिभासवद्वा तस्य विनैव बन्धं तत्प्रतिभास
90158 इत्याशयेनाह - तेनेति ॥ ३२ ॥
90159
90160 धराकोटरनिर्मग्नवीतहव्यचिदात्मसु ।
90161 जगत्सु तेष्वसंख्येषु नीरूपेषु महात्मसु ॥ ३३ ॥
90162
90163 वीतहव्यहृदुपलक्षितचैतन्यस्यैवास्मदादिसर्वात्मत्वात्सर्वजन्तूनां
90164 जगदनुभवोऽपि तस्यैवेत्यपि सुवचमित्याशयेनाह - धरेत्यादिना । नीरूपेषु
90165 निःस्वरूपेषु प्रतिभासतो महात्मसु विशालतमेषु जगत्सु भुवनेषु यः
90166 शक्रोऽभूत् सोऽद्य दीनेसु देशविशेषेषु । दिनानां निवासो जनपद इत्यर्थे जातस्य
90167 तद्धितस्य जनपदे लुप् इति लुपि युक्तवद्भावाद्बहुवचनम् ॥ ३३ ॥
90168

90169 यः शक्रोऽनवबुद्धात्मा सोऽद्य दीनेषु पार्थिवः।
90170 कर्तुं प्रवृत्तो मृगयां क्षणेऽस्मिन्नपि कानने॥ ३४॥
90171
90172 यो हंसोऽनवबुद्धात्मा पाद्मे पैतामहेऽभवत्।
90173 स्थितः स एव दाशेन्द्रः कैलासवनकुञ्जके॥ ३५॥
90174
90175 पैतामहे पाद्मे कल्पे वीतहव्यस्य गाणपत्यकाले कैलासवनकुञ्जके
90176 तत्क्रीडाहंसो योऽभवत् स एव इदानीं दाशेन्द्रो निषादराजो भूत्वा
90177 स्थितोऽस्तीत्यन्वयः। एवमग्रेऽपि॥ ३५॥
90178
90179 यो राजानवबुद्धात्मा भूमेः सौराष्ट्रमण्डले।
90180 स एषोऽद्य स्थितोऽन्ध्राणां ग्रामे बहुलपादपे॥ ३६॥
90181
90182 श्रीराम उवाच।
90183
90184 मानसः किल सर्गोऽसौ वीतहव्यस्य तत्र ये।
90185 देहिनो भ्रान्तिपात्रं [भ्रान्तिमात्रं इति पाठः]
90186 चेत्तद्देहाकारिणः कथम्॥ ३७॥
90187
90188 गुरूक्तेः सर्वात्मताभिप्रायमप्रतिपद्यमानान् जनांस्तच्छङ्कोद्घाटकेन
90189 गुरुमुखेन बोधयिष्यन् रामः पृच्छति - मानस इति। तद्देहाकारिणः
90190 शक्रहंसादिदेहाकारिणः सचेतनाः कथमित्यर्थः॥ ३७॥
90191
90192 श्रीवसिष्ठ उवाच।
90193
90194 यदि भ्रान्त्येकमात्रात्म वीतहव्यस्य तज्जगत्।
90195 तदिदं नाम ते राम किं भूयः परिभासते॥ ३८॥
90196
90197 सर्वस्यापि जगतो मनःकार्यत्वस्य भ्रान्तिमात्रत्वस्य च बहुश उक्तत्वात्तुल्यत्वे
90198 यदिदं नाम ते प्रसिद्धं जगत्किं कथं सचेतनैर्युक्तं प्रतिभासत
90199 इत्यर्थः॥ ३८॥
90200
90201 इदमप्यङ्ग चिन्मात्रं मनोमात्रभ्रमोपमम्।
90202 तदपि व्योम चिन्मात्रं मनोमात्रं भ्रमोपमम्॥ ३९॥
90203
90204 द्वयोः साम्यमेव दर्शयति - इदमिति॥ ३९॥
90205
90206 वस्तुतस्तु न तद्राम जगन्नैव न चेतरत्।
90207 तवापि न जगत्सत्ता ब्रह्मेदं भाति केवलम्॥ ४०॥
90208
90209 एवमेतज्जगत्सदृशं न। इतरदेतद्विलक्षणं च न।
90210 सालक्षण्यवैलक्षण्ययोः प्रतियोगिसिद्धिमन्तरेणायोगादिति भावः॥ ४०॥
90211
90212 भावि भूतं भविष्यच्च यथेदं च तथेतरत्।
90213 जगत्सर्वमिदं दृश्यं संविन्मात्रमनोमयम्॥ ४१॥
90214
90215 संविन्मात्रत्वेनावशिष्टं यन्मनस्तदेव तन्मयम्॥ ४१॥
90216
90217 एवंरूपमिदं यावन्न परिज्ञातमीदृशम्।
90218 वज्रसारदृढं तावज्ज्ञातं सत्परमाम्बरम्॥ ४२॥
90219
90220 अज्ञानान्मन एवेदमित्थं संप्रविजृम्भते।

90221 प्रत्युल्लासविलासाभ्यां जलमम्बुनिधाविव ॥ ४३ ॥
90222
90223 प्रत्युल्लास उत्पत्तिर्विलासोवृद्ध्यादिपरिणामस्ताभ्याम् ॥ ४३ ॥
90224
90225 यथास्थितेनैव चिदम्बरेण
90226 स्वचित्तमेवैति मनोभिधानम् ।
90227 स्फारं कृतं तेन जगच्च दृश्य-
90228 मेवं ततं नैव ततं च किंचित् ॥ ४४ ॥
90229
90230 उक्तमर्थं संक्षिप्याह - यथास्थितेनेति । अविकृतेनैव
90231 चिदाकाशस्वभावेन मायया किंचिच्चेतयदिवात्मानं कल्पयच्चित्तं सत्तस्यैव
90232 पुनःपुनर्मननान्मनोभिधानमेति तेन च स्फारं जगत्संपन्नमिति एवं
90233 दृश्यं जगत्ततम् । परमार्थतस्तु किंचिदपि नैव ततमित्यर्थः ॥ ४४ ॥
90234
90235 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे०
90236 मोक्षोपायेषूपशमप्रकरणे वीतहव्यमनोजगद्वर्णनं नाम
90237 चतुरशीतितमः सर्गः ॥ ८४ ॥
90238
90239 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
90240 वीतहव्यमनोजगद्वर्णनं नाम चतुरशीतितमः सर्गः ॥ ८४ ॥
90241
90242
90243 पञ्चाशीतितमः सर्गः ८५
90244
90245 श्रीराम उवाच ।
90246
90247 अथ किं वीतहव्यः स्वं स्थितं तस्मिन्धरोदरे ।
90248 कथमुद्धृतवान्देहं स संपन्नश्च किं कथम् ॥ १ ॥
90249
90250 मुनेः पिङ्लमाविश्य समुद्धारस्तनोरिह ।
90251 जीवन्मुक्तस्थितिश्चान्त्यः समाधिश्चोपवर्ण्यते ॥ १ ॥
90252
90253 समुद्धारस्य तत्प्रकारस्य तदुत्तरचर्याया विदेहमुक्तपरिशिष्टतद्रूपस्य च
90254 चतुर्भिः किंवृत्तैः क्रमात्प्रश्नः ॥ १ ॥
90255
90256 श्रीवसिष्ठ उवाच ।
90257
90258 अनन्तरमनन्तात्म वीतहव्याभिधं मनः ।
90259 स्वमेवात्मचमत्कारमात्रं समवबुद्धवान् ॥ २ ॥
90260
90261 अनन्तात्म अपरिच्छिन्नब्रह्माकारं समवबुद्धवान् । समाधावित्यर्थः ॥ २ ॥
90262
90263 शार्वस्यास्य गणस्याभूत्प्राग्ज्योतिःस्मरणे स्वयम् ।
90264 इच्छा कदाचित्सकलप्राग्जन्मालोकनोन्मुखी ॥ ३ ॥
90265
90266 प्राक्तनं ज्योतिश्चिदात्मा तस्य स्मरणे ध्यानकाले ॥ ३ ॥
90267
90268 अशेषान्स ददर्शाथ नष्टानष्टान्स्वदेहकान् ।
90269 अनष्टानां ततो मध्यात्तत्तत्कोटरसंस्थितम् ॥ ४ ॥
90270
90271 नष्टानष्टान् कांश्चिन्नष्टान् कांश्चिदनष्टान् ।
90272 तत्तदनष्टदेहहृदयकोटरे जीवटोपाख्यानवक्ष्यमाणन्यायेन

90273 स्वकल्पनयैव संस्थितं वीतहव्यदेहमित्यर्थः ॥ ४ ॥
90274
90275 यदृच्छयैव प्रोद्धर्तुं देहं तस्याभवन्मतिः ।
90276 अपश्यत्ततथा तत्र पङ्के कीटमिव स्थितम् ॥ ५ ॥
90277
90278 शरीरं वीतहव्याख्यं धराकोटरपीडितम् ।
90279 प्रावृडोघोपनीतं तत्पृष्ठस्थपङ्कमण्डलम् ॥ ६ ॥
90280
90281 प्रावृष ओघेन पूरेण उपनीतं किंचिद्दूरं प्रवाहितम् । पृष्ठस्थेत्युक्त्या
90282 अधोमुखतया पातितमित्यपि गम्यते ॥ ६ ॥
90283
90284 तृणजालावकीर्णत्वग्देहपृष्ठमृदं तथा ।
90285 एतद्दृष्ट्वा महातेजा धराविवरयन्त्रितम् ॥ ७ ॥
90286
90287 तृणानां काशादीनां जालैरवकीर्णा निबद्धास्त्वग्देहपृष्ठमृदा
90288 [१] यस्य । देहपदेन तदवयवा लक्ष्यन्ते ॥ ७ ॥
90289
90290 भूयोऽपि चिन्तयामास धिया परमबोधया ।
90291 सर्वसंपीडिताङ्गत्वात्कायो मे प्राणवायुभिः ॥ ८ ॥
90292
90293 प्राणवायुभिः । तत्संचारैरिति यावत् ॥ ८ ॥
90294
90295 मुक्तश्चलितुमाकर्तुं शक्नोति न मनागपि ।
90296 तज्ज्ञात्वा प्रविशाम्याशु देहमेवं विवस्वतः ॥ ९ ॥
90297
90298 आकर्तुमीषदपि कर्तुम् । क्रियामनाक्त्वात्तच्छक्तिमनाक्त्वमिति न पौनरुक्त्यम् ।
90299 तत्तस्मात्तदुद्धारार्थमुपायं ज्ञात्वा । एवं परकायप्रवेशयोगप्रकारेण
90300 ॥ ९ ॥
90301
90302 तदीयः पिङ्गलो देहमुद्धरिष्यति मे ततः ।
90303 अथवा किं ममैतेन शाम्याम्यहमविघ्नतः ॥ १० ॥
90304
90305 तदीयस्तत्सेवकः । पिङ्गलाख्यो गणस्तदाज्ञया उद्धरिष्यति । तस्य
90306 चिन्तान्तरमाह - अथवेति । एतेन देहेन शाम्यामि विदेहमुक्त्येत्यर्थः ॥ १० ॥
90307
90308 निर्वामि स्वं पदं यामि कोऽर्थो मे देहलीलया ।
90309 इति संचिन्त्य मनसा वीतहव्यो महामते ॥ ११ ॥
90310
90311 तूष्णीं स्थित्वा क्षणं भूयश्चिन्तयामास भूतले ।
90312 उपादेयो हि देहस्य न मे त्यागो न संश्रयः ॥ १२ ॥
90313
90314 त्यागः संश्रयो वा नोपादेयो नापेक्षणीयो विशेषाभावात् ॥ १२ ॥
90315
90316 यादृशो देहसंत्यागस्तादृशो देहसंश्रयः ।
90317 तद्यावदस्ति देहोऽयं न यावदणुतां गतः ॥ १३ ॥
90318
90319 तदेवाह - यादृश इति । अणुतां धूलीभावम् ॥ १३ ॥
90320
90321 तावदेनमुपारुह्य किंचित्प्रविहराम्यहम् ।
90322 पिङ्गलेन शरीरं स्वमुद्धर्तुं तापनं वपुः ॥ १४ ॥
90323
90324 पिङ्गलेन पिङ्गलद्वारा उद्धर्तुम् । तापनं सौरं वपुः प्रविशामि ॥ १४ ॥

90325
90326 प्रविशामि नभःसंस्थं मुकुरं प्रतिबिम्बवत् |
90327 इत्यसौ मुनिरादित्यं विवेशानिलरूपधृक् || १५ ||
90328
90329 अनिलरूपधृक् सूक्ष्मीभूत इति यावत् || १५ ||
90330
90331 पुर्यष्टकवपुर्भूत्वा भस्त्राखमिव चानलः |
90332 भगवान्मुनिरप्येनं हृद्गतं मुनिनायकम् || १६ ||
90333
90334 पुर्यष्टकं प्राग्व्याख्यातं लिङ्गशरीरं तद्वपुः | भस्त्राखं
90335 चर्मपेश्याकाशम् | मुनिर्मननशीलो भगवान् सूर्यो हृद्गतं हृदि
90336 प्रविष्टं तं मुनिनायकं दृष्ट्वा तस्य कार्यं तत्पौर्वापर्यं च
90337 दृष्ट्वा विन्ध्यभूधरकोशगतं गतसंविदं मृतप्रायं मुनिकलेवरं
90338 ददर्शेति व्यवहितेनान्वयः || १६ ||
90339
90340 दृष्ट्वासौ चिन्तयन्कार्यं पौर्वापर्यमुदारधीः |
90341 विन्ध्यभुधरभूकोशमन्तर्मुनिकलेवरम् || १७ ||
90342
90343 तृणोपलपरिच्छन्नं ददर्श गतसंविदम् |
90344 ऋषेश्चिकीर्षितं ज्ञात्वा भानुर्गगनमध्यगः || १८ ||
90345
90346 ततो रविः किं चकार तदाह - ऋषेरिति || १८ ||
90347
90348 धरातो मुनिमुद्धर्तुमादिदेशाग्रगं गणम् |
90349 वीतहव्यमुनेः संवित्सा पुर्यष्टकरूपिणी || १९ ||
90350
90351 मुनिं मुनिशरीरम् | गणं पिङ्गलाख्यम् | सूर्यहृत्प्रविष्टा मुनेः
90352 संवित्किं चकार तदाह - वीतहव्येति || १९ ||
90353
90354 रविं वातमयी पूज्यं प्रणनामाशु चेतसा |
90355 भानुनाप्यभ्यनुज्ञातो मानपूर्वकमग्रगम् || २० ||
90356
90357 स मुनिर्भानुना हृद्येव बहुमानपूर्वकमभ्यनुज्ञातः सन्
90358 स्वकार्यार्थं प्रस्थितं पिङ्गलस्य आकारं शरीरं विवेश || २० ||
90359
90360 विवेश पिङ्गलाकारं विन्ध्यकन्दरगामिनम् |
90361 पिङ्गलोऽसौ नभस्त्यक्त्वा कुञ्जकुञ्जरसुन्दरम् || २१ ||
90362
90363 कुञ्जैर्लतागृहैः कुञ्जरैश्च सुन्दरम् || २१ ||
90364
90365 प्राप विन्ध्यवनं प्रावृण्मत्ताभ्राम्बरभासुरम् |
90366 उद्धार धराकोशान्नखनिष्कृष्टभूतलः || २२ ||
90367
90368 प्रावृषि मत्तान्यभ्राणि यस्मिंस्तथाविधमम्बरमिव | तत्पक्षे कुञ्जैः
90369 कुञ्जरैरिव च सुन्दरमिति योज्यम् | नखैर्निष्कृष्टं खातं भूतलं येन
90370 तथाविधः पिङ्गलः || २२ ||
90371
90372 कलेवरं मुनेः पङ्कान्मृणालमिव सारसः |
90373 मौनं पुर्यष्टकमथ स्वं विवेश कलेवरम् || २३ ||
90374
90375 मुनेः संबन्धि मौनं पुर्यष्टकं पिङ्गलदेहात्स्वं कलेवरं विवेश || २३
90376 | |

नभस्तलपरिभ्रान्तो विहङ्गम इवालवम् ।
प्रणेमतुर्मिथो मूर्तवीतहव्यनभश्चरौ ॥ २४ ॥

आलयं स्वनीडम् । मूर्तः प्राप्तमूर्तिर्वीतहव्यश्च नभश्चरपिङ्गलश्च
मिथः अन्योन्यं प्रणेमतुः ॥ २४ ॥

बभूवतुः स्वकार्यैकतत्परौ तेजसां निधी ।
जगाम पिङ्गलो व्योम मुनिश्च विमलं सरः ॥ २५ ॥

सरः स्नानार्थम् ॥ २५ ॥

तारकाकारकुमुदं सूर्यांशुकवदाकृति ।
वीतहव्यो ममज्जाशु सरस्युद्भिन्नपङ्कजे ॥ २६ ॥

सूर्येण अंशुकवती पीतरक्ताम्बरालंकृतेव आकृतिर्यस्य ।
बालार्करागरञ्जितोदकमिति यावत् ॥ २६ ॥

पङ्कपल्वललीलान्ते वने कलभको यथा ।
तत्र स्नात्वा जपं कृत्वा पूजयित्वा दिवाकरम् ।
मनोभूषितया तन्वा पूर्ववत्पुनराबभौ ॥ २७ ॥

पङ्कयुक्तेषु पल्वलेषु लीलाया अन्ते अवसाने । मनोभूषितया
मननादिव्यवहारवत्या ॥ २७ ॥

मैत्र्या तया समतया परया च शान्त्या
सत्प्रज्ञया मुदितया कृपया श्रिया च ।
युक्तो मुनिः सकलसङ्गविमुक्तचेता
विन्ध्ये सरित्तटगतो दिनमेव रेमे ॥ २८ ॥

दिनं दिनमात्रमेव रेमे न चिरम् । समाधिप्रच्युतस्तस्थावित्यर्थः ॥ २८ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे०
मोक्षोपायेषूपशमप्रकरणे वीतहव्यसमाधियोगोपदेशो नाम
पञ्चाशीतितमः सर्गः ॥ ८५ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
वीतहव्यसमाधियोगोपदेशो नाम पञ्चाशीतितमः सर्गः ॥ ८५ ॥

## षडशीतितमः सर्गः ८६

श्रीवसिष्ठ उवाच ।

दिनान्ते स समाधातुं पुनरेव मनो मुनिः ।
विवेश कांचिद्विततां विज्ञातां विन्ध्यकन्दराम् ॥ १ ॥

पुनः समाधिः षड्रात्रं जीवन्मुक्तस्थितिश्चिरम् ।
रागादिभ्योऽञ्जलिर्मुक्तौ समाधिश्चास्य वर्ण्यते ॥ १ ॥

विज्ञातां प्राक्परिचिताम् ॥ १ ॥

90429 तदेवात्मानुसंधानमत्यजन्सममिन्द्रियैः।
90430 चेतसा कल्यामास दृष्टलोकपरावरः॥ २॥
90431
90432 दृष्टे लोके परः सारः अवरः असारश्च येन॥ २॥
90433
90434 पूर्वमेवेन्द्रियगणो मया परिहृतः स्फुटम्।
90435 इदानीं चिन्तया नार्थः पुनर्विततया माम्॥ ३॥
90436
90437 यत्कलयामास तदाह - पूर्वमित्यादिना॥ ३॥
90438
90439 अस्तिनास्तीतिकलनां भङ्क्त्वा मृद्वीं लतामिव।
90440 शेषं तु बद्धसंस्थानस्तिष्ठाम्यचलशृङ्गवत्॥ ४॥
90441
90442 अस्तिनास्तीति द्विविधां दृश्यकलनाम्। शेषमवशिष्टं
90443 तदुभयसाक्षिचिन्मात्रमवलम्ब्येति शेषः। बद्धसंस्थानः
90444 समकायशिरोग्रीवो दृढासनश्च॥ ४॥
90445
90446 उदितोऽस्तं गत इव स्वस्तं गत इवोदितः।
90447 समः समरसाभासस्तिष्ठामि स्वच्छतां गतः॥ ५॥
90448
90449 उदितो जीवन्नप्यस्तं गतो मृत इवाज्ञदृशा तत्त्वदृशा तु तद्विपरीतः।
90450 समरसाभास एकरसचिन्मात्ररूपः॥ ५॥
90451
90452 प्रबुद्धोऽपि सुषुप्तस्थः सुषुप्तस्थः प्रबुद्धवत्।
90453 तुर्यमालम्ब्य कायान्तस्तिष्ठामि स्तम्भितस्थितिः॥ ६॥
90454
90455 प्रबुद्धो जाग्रदपि सुषुप्तस्थो द्वैतजालमपश्यन्। एवं सुषुप्तोऽपि
90456 स्वस्वरूपस्फुटानुभवात्प्रबुद्धवत्। तुर्यं स्थूलसूक्ष्मकारणनिर्मुक्तं
90457 पदम्॥ ६॥
90458
90459 स्थितः स्थाणुरिवैकान्ते स्वान्तान्ते सर्वतः स्थिते।
90460 सत्त्वसामान्यसाम्ये हि तिष्ठाम्यपगतामयः॥ ७॥
90461
90462 स्वान्तस्यान्ते पारभूते निर्मनने सर्वतः स्थिते पूर्णे सत्तासामान्यलक्षणे
90463 परमसाम्ये॥ ७॥
90464
90465 इति संचिन्त्य स ध्याने पुनस्तस्थौ दिनानि षट्।
90466 ततः प्रबोधमापन्नः क्षणसुप्त इवाध्वगः॥ ८॥
90467
90468 ततः सिद्धः स भगवान्वीतहव्यो महातपाः।
90469 विजहार चिरं कालं जीवन्मुक्ततया तदा॥ ९॥
90470
90471 सिद्धो व्युत्थानेऽपि समाहितस्थितिः॥ ९॥
90472
90473 वस्तु नाभिननन्दासौ निनिन्द न कदाचन।
90474 न जगाम तथोद्वेगं न च हर्षमवाप सः॥ १०॥
90475
90476 नाभिननन्द गुणदृशा। न निनिन्द दोषदृशा॥ १०॥
90477
90478 गच्छतस्तिष्ठतश्चैव तस्यैवमभवद्धृदि।
90479 विनोदाय विचित्तस्य कथा स्वमनसा सह॥ ११॥
90480

90481 कथा वक्ष्यमाणविचारलक्षणा | बाधितानुवृत्तस्वमनसा सह || ११ ||
90482
90483 अव्ययेन्द्रियवर्गेश मनः शमवता त्वया |
90484 पश्यानन्दसुखं कीदृग्विधमासादितं ततम् || १२ ||
90485
90486 अव्ययस्य विषयोपभोगप्रयुक्तसामर्थ्यव्ययरहितस्येन्द्रियवर्गस्य ईश स्वामिन्
90487 हे मनः आनन्दयत्याह्लादयति सर्वं जगदित्यानन्दं तथाविधं सुखम् |
90488 निरतिशयानन्दरूपं सु शोभनं खं आकाशमिति वा || १२ ||
90489
90490 एषैवाविरतं तस्मान्नीरागैव दशा त्वया |
90491 अवलम्ब्या परित्याज्यं चापलं चलतां वर || १३ ||
90492
90493 त्वया अग्रेऽपि एषैव नीरागैव दशा अवलम्ब्या |
90494 द्वावेकाराववधारणदार्ढ्याय || १३ ||
90495
90496 भो भो इन्द्रियचौरा हे हताशा हतनामकाः |
90497 युष्माकं नायमात्मास्ति न भवन्तस्तथात्मनः || १४ ||
90498
90499 हे हताशा इति आशानां पृथक् संबोधनम् | अयं मयानुभूयमान आत्मा
90500 युष्माकं नास्ति || १४ ||
90501
90502 व्रजतां वो विनाशांशमाशा वो विफलीकृताः |
90503 न समर्थाः समाक्रान्तौ भवन्तो भङ्गुराश्रयाः || १५ ||
90504
90505 एवं सदात्मसंबन्धाभावाद्वः स्वरूपमवशिष्टं विनाशांशं
90506 असत्त्वपक्षं व्रजताम् | समाक्रान्तौ ममेति शेषः || १५ ||
90507
90508 वयमात्मेति यैषा वो वो भभूव किल वासना |
90509 तत्त्वविस्मृतिजाता हि दृष्टरज्जुभुजङ्गवत् || १६ ||
90510
90511 प्राक्तर्ह्यस्माकं त्वत्समाक्रान्तौ कुतः सामर्थ्यमभूदिति
90512 चेदात्मतादात्म्याद्यध्यासबलादित्याह - वयमिति || १६ ||
90513
90514 अनात्मन्यात्मता सैषा सैषा वस्तुन्यवस्तुता |
90515 अविचारेण वै जाता विचारेण क्षयं गता || १७ ||
90516
90517 भवन्तोऽन्ये वयं चान्ये ब्रह्मान्यत्कर्तृता परा |
90518 अन्यो भोक्तान्य आदत्ते को दोषः कस्य कीदृशः || १८ ||
90519
90520 एवं विवेकदर्शने कस्यापि भवत्प्रयुक्तदोषसंबन्धोऽपि नास्त्येवेत्याह -
90521 भवन्त इति | भवन्तः करणभूताः | वयमभिमन्तारः | ब्रह्म अद्वयम् |
90522 कर्तृता प्राणप्रयुक्तक्रियानिमित्तता | भोक्ता चिदाभासः | आदत्ते मनः || १८ ||
90523
90524 वनेभ्यो दारु संजातं रज्जवो वेणुचर्मणः |
90525 वासी चायःफलान्येव तक्षा ग्रासार्थमुद्यतः || १९ ||
90526
90527 एवं चेत्कथं व्यवहारकार्यनिष्पत्तिरिति चेत्काकतालीयन्यायादिति
90528 गृहदृष्टान्तेनाह - वनेभ्य इत्यादिना | वेणुत्वचा
90529 काष्ठभारबन्धनम् | वासी प्रसिद्धा | चकारात्कुठारटङ्किकादयः | अयसः
90530 फलानि प्रयोजनानि लोककृदुदरभरणप्रयुक्तानीति यावत् | एवं तक्षा
90531 स्वग्रासार्थमुद्यतो न गृहसिद्धये || १९ ||
90532

इत्थं यथेह सामग्र्या स्वशक्तिस्थपदार्थया।
संपन्ना काकतालीया दृढा वरगृहाकृतिः॥ २०॥

एवं च भिन्नप्रयोजनैः क्रियाकारकैरर्थान्निष्पद्यमाना गृहाकृतिः
काकतालीयन्यायादेवेत्यर्थः॥ २०॥

संपन्नाः काकतालीयात्स्वशक्तिनियतेन्द्रियाः।
तथैव कलिका लोलं केव कस्यात्र खण्डना॥ २१॥

तथा इहापि कार्यकरणसंघाते
दर्शनश्रवणवचनादानादिफलकस्वस्वशक्तिभिर्नियतानि
ज्ञानकर्मेन्द्रियाणि यासां तथाविधाव्यवहारकार्यकलिकाः काकतालीयादेव
लोलं चलं यथा स्यात्तथा संपन्नाः। तत्र कस्य केव खण्डना क्षतिरस्ति। न
काचित्कस्यचिदित्यर्थः॥ २१॥

विस्मृतिर्विस्मृता दूरं स्मृतिः स्फुटमनुस्मृता।
सत्सज्जातमसच्चासत्क्षतं क्षीणं स्थितं स्थितम्॥ २२॥

विस्मृतिरविद्या। स्मृतिरात्मविद्या। तत्फलमाह - सदिति॥ २२॥

एवंविधेन भगवान्विचारेण महातपाः।
सोऽतिष्ठन्मुनिशार्दूलो बहून्वर्षगणानिह॥ २३॥

अपुनर्भवनायैव यत्र चिन्तान्तमागता।
मूढता च सुदूरस्था तत्रासाववसत्सदा॥ २४॥

अन्तं नाशमागता। तत्र तस्मिन् पूर्णानन्दस्वप्रकाशपदे॥ २४॥

यथाभूतपदार्थौघदर्शनोत्थमनर्थकम्।
ध्यानाश्वासनमालम्ब्य सोऽवसत्सुखगः सदा॥ २५॥

यथा स्थिते वस्तुनि कदाचिद्भ्रान्त्या विचित्रपदार्थौघदर्शनादुत्थं
प्रसक्तमनर्थकं व्यर्थमेवानाश्वासं वारयितुं
पुनःपुनर्ध्यानाश्वासनमालम्ब्येत्यर्थः॥ २५॥

हेयादेयसमासङ्गत्यागादानदृशोः क्षये।
वीतहव्यमुनेरासीदिच्छानिच्छातिगं मनः॥ २६॥

तस्य प्रारब्धशेषक्षये कीदृशं मन आसीत्तदाह - हेयेति।
हानयोग्यानामादानयोग्यानां च विषयाणां समासङ्गे प्राप्तावपि
हानादानदृशोः क्षये॥ २६॥

विदेहकेवलीभावे सीमन्ते जन्मकर्मणाम्।
संसारसङ्गसंत्यागरसासवनवेच्छया॥ २७॥

प्रतिभासमात्रेणापि स्थितस्य देहादिसंसारसङ्गस्य संत्यागे परिशिष्यमाणे
ब्रह्मरसमकरन्दे नवेच्छया उत्कण्ठया विवेशेति परेणान्वयः। संत्यागे
वाञ्छामापातिशायिनीं इति पाठे तु स्पष्टम्॥ २७॥

विवेश स तयैवान्ते सह्याद्रौ हेमकन्दरम्।
अपुनःसङ्गमायाशु जगज्जालमवेक्ष्य सः॥ २८॥

90585 तया वाञ्छया ॥ २८ ॥
90586
90587 बद्धपद्मासनः स्थित्वा तत्रोवाचात्मनात्मनि ।
90588 राग नीरागतां गच्छ द्वेष निर्द्वेषतां व्रज ॥ २९ ॥
90589
90590 सहजशत्रुषु रागद्वेषादिष्वपि निर्द्वेषतां मैत्रीं च भावयन् गन्तुकाम इव
90591 हितमुपदिशन् प्रणम्य तानामन्त्रयते - रागेत्यादिना ॥ २९ ॥
90592
90593 भवद्भ्यां सुचिरं कालमिह प्रक्रीडितं मया ।
90594 भोगा नमोस्तु युष्मभ्यां जन्म कोटिशतान्यहम् ॥ ३० ॥
90595
90596 भवद्भिर्लालितो लोके लालकैरिव बालकः ।
90597 इमामपि परां पुण्यां निर्वाणपदवीमहम् ॥ ३१ ॥
90598
90599 येन विस्मारितस्तस्मै सुखायास्तु नमो नमः ।
90600 त्वदुत्तप्तेन हे दुःख मयात्मान्विष्ट आदरात् ॥ ३२ ॥
90601
90602 सुखाय विषयसुखलवाय । त्वया उत्तप्तेन संतापितेन मया ॥ ३२ ॥
90603
90604 तस्मात्त्वदुपदिष्टोऽयं मार्गो मम नमोऽस्तु ते ।
90605 त्वत्प्रसादेन लब्धेयं शीतला पदवी मया ॥ ३३ ॥
90606
90607 तस्माद्गुरुणेव त्वया उपदिष्टोऽयं विवेकमार्गः ॥ ३३ ॥
90608
90609 दुःखनाम्ने दुःखतत्त्व सुखदात्मन्नमोस्तु ते ।
90610 कल्याणमस्तु ते मित्र संसारासारजीवित ॥ ३४ ॥
90611
90612 हे दुःखस्य तत्त्वभूत सुखद आत्मन् इदानीं ज्ञानजननोपकारिणं देहं
90613 प्रार्थ्यामन्त्रयति - कल्याणमित्यादिना ॥ ३४ ॥
90614
90615 देह स्थितिरियं यामो वयमात्मीयमास्पदम् ।
90616 प्रयोजनानां जन्तूनामहो नु विषमा गतिः ॥ ३५ ॥
90617
90618 हे देह इयमावयोर्वियुक्तिस्थितिरनादिनियतिस्वभावः । संयोगा विप्रयोगान्ताः इति
90619 न्यायादिति भावः । जन्तूनां प्राणिनां संबन्धिनां प्रयोजनानां
90620 स्वार्थानामियं गतिः रीतिर्विषमा । यल्लिप्सया अत्यन्तमित्रस्वजनानपि विहाय
90621 पुरुषा धावन्तीति भावः ॥ ३५ ॥
90622
90623 देहेनापि वियुज्येऽहं भूत्वा जन्मशतान्यपि ।
90624 मित्रकाय मया यत्त्वं त्यज्यसे चिरबान्धवः ॥ ३६ ॥
90625
90626 तदेव स्वस्याप्युपस्थितमित्याह - देहेनापीति ॥ ३६ ॥
90627
90628 त्वयैवात्मन्युपानीता सात्मज्ञानवशात्क्षतिः ।
90629 अधिगम्यात्मविज्ञानमात्मनाशः कृतस्त्वया ॥ ३७ ॥
90630
90631 नायं ममापराधस्त्वया स्वनाशार्थमेव मदुपकारः कृत
90632 इत्यनुशोचन्निवाह - त्वयैवेति ॥ ३७ ॥
90633
90634 देह नान्येन भग्नोऽसि त्वयैवैतदुपासितम् ।
90635 एकाकिन्यापि शुष्यन्त्या प्रशान्ते मयि दीनया ॥ ३८ ॥
90636

90637 एतत्त्वयैवोपासितमनुष्ठितम् | इदानीं तृष्णां [तृष्णीं इति
90638 मुद्रितपुस्तके पाठः] प्रार्थयते - एकाकिन्येति || ३८ ||
90639
90640 त्वया दुःखं न कर्तव्यं मातस्तृष्णे व्रजाम्यहम् |
90641 क्षन्तव्याः काम भगवन्विपरीतापराधजाः || ३९ ||
90642
90643 त्वज्जयार्थं त्वद्विपरीतवैराग्यसेवनाद्यपराधजा मद्दोषाः || ३९ ||
90644
90645 दिषा उपशमैकान्तं व्रजाम्यादिश मङ्गलम् |
90646 चिराच्चिराय चेदानीमम्ब तृष्णे किलावयोः || ४० ||
90647
90648 उपशमैकान्तं आत्यन्तिकोपशमम् | आदिश आशास्व | पुनरावृत्त्या
90649 तृष्णामुखदर्शनप्रसक्तिं वारयन्नाह - चिरादिति | चिरादपि चिराय |
90650 शाश्वत इति यावत् | इदानीं आरभ्येति शेषः || ४० ||
90651
90652 वियोगो योगदोषेण प्रणामोऽयं स पश्चिमः |
90653 नमः सुकृतदेवाय भवतेऽस्तु त्वया पुरा || ४१ ||
90654
90655 सुकृतं पुण्यं तल्लक्षणाय देवाय || ४१ ||
90656
90657 नरकेभ्यः समुत्तार्य स्वर्गेऽहमभियोजितः |
90658 कुकार्यक्षेत्ररूढाय नरकस्कन्धवाहिने || ४२ ||
90659
90660 कुकार्यं निषिद्धाचरणं तल्लक्षणे क्षेत्रे भूमौ रूढाय |
90661 नरकलक्षणानां स्कन्धानां बृहच्छाखानां वहनशीलाय || ४२ ||
90662
90663 शासनापुष्पभाराय नमो दुष्कृतशाखिने |
90664 येन सार्धं चिरं वह्न्यो भुक्ताः प्राकृतयोनयः || ४३ ||
90665
90666 शासनाः यातना एव पुष्पभारो यस्य || ४३ ||
90667
90668 अद्यप्रभृत्यदृश्याय तस्मै मोहात्मने नमः |
90669 प्रध्वनद्वंशमधुरवचसे पत्रवाससे || ४४ ||
90670
90671 प्रध्वनद्भिर्वंशैः कीचकैर्मधुरवचसे | शीर्णपत्राण्येव वासांसि
90672 यस्यास्तथाविधायै गुहालक्षणायै तपस्विन्यै || ४४ ||
90673
90674 नमो हुआतपस्विन्यै वयस्यायै समाधिषु |
90675 संसाराध्वनि खिन्नस्य त्वं ममाश्वासकारणम् || ४५ ||
90676
90677 आश्वासकारणमित्यजहल्लिङ्गं गुहाविशेषणम् || ४५ ||
90678
90679 आसीर्वयस्या सुस्निग्धा सर्वलोभापहारिणी |
90680 सर्वसंकटखिन्नेन दोषेभ्यो द्रवता मया || ४६ ||
90681
90682 सुस्निग्धा अत्यन्तस्नेहवती वयस्या आसीः अभूः | पूर्णात्मविश्रान्तिदानेन
90683 सर्वलोभापहारिणी | दोषेभ्यः समाधिविघ्नेभ्यः || ४६ ||
90684
90685 त्वमेका शोकनाशार्थमाश्रिता परमा सखी |
90686 संकटावटकुञ्जेषु हस्तालम्बनदायिने || ४७ ||
90687
90688 इदानीं दण्डकाष्ठगुणान्वर्णयंस्तन्नमस्यति - संकटेति | संकटे

90689 श्वसर्पादिभयेषु विषमप्रदेशेषु च। तथा अवटेषु गर्तेषु कुञ्जेषु च
90690 हस्तस्य आलम्बनदायिने॥ ४७॥
90691
90692 वार्धकैकान्तसुहृदे दण्डकाष्ठाय ते नमः।
90693 अस्थिपञ्जरमात्मीयं तथा रक्तान्त्रतन्तुकम्॥ ४८॥
90694
90695 इदानीं देहभागं सर्वं देहाय निवेदयति - अस्थीति॥ ४८॥
90696
90697 एतावन्मात्रसारैकं गृहीत्वा गच्छ देहक।
90698 पयःक्षोभप्रकारेभ्यः स्नानेभ्योऽपि नमोऽस्तु ते॥ ४९॥
90699
90700 एतावन्मात्रमेव सारं तत्त्वं यस्य तथाविधमेकं स्वमसाधारणभागं
90701 गृहीत्वा गच्छ स्वाः प्रकृतीः। हे देहक पयसो जलस्य
90702 त्वदीयमलदौर्गन्ध्यस्वेदादिना दूषणाद्ये क्षोभा
90703 अपराधास्तदीयप्रकारभेदरूपेभ्यस्ते स्नानेभ्यः
90704 शुचित्वसंपादनओपायेभोऽपि नमोऽस्तु॥ ४९॥
90705
90706 नमोस्तु व्यवहारेभ्यः संसृतिभ्यो नमोस्तु ते।
90707 एते भवन्तः सहजाः प्राक्तनाः सुहृदो मया॥ ५०॥
90708
90709 तथा भोजनशयनाभ्यञ्जनालंकरणादिव्यवहारेभ्यस्तत्सामग्री
90710 संपादनायेतस्ततो धावनलक्षणाभ्यस्ते संसृतिभ्यश्च नमोऽस्तु। हे
90711 प्राणाः सहजाः सुहृदः मया अद्य सुहृदां नमस्कारक्रमेण एते
90712 भवन्तोऽपि उत्कृता उत्कृष्टाः कृताः। नमस्कृता इति यावत्॥ ५०॥
90713
90714 क्रमेणाद्योत्कृताः प्राणाः स्वस्ति वोऽस्तु व्रजाम्यहम्।
90715 भवद्भिः सह चित्रासु मया बह्वीषु योनिषु॥ ५१॥
90716
90717 प्राक्तनसुहृत्त्वमेव वर्णयति - भवद्भिरिति॥ ५१॥
90718
90719 विश्रान्तं गिरिकुञ्जेषु श्रान्तं लोकान्तरेषु च।
90720 क्रीडितं पुरपीठान्तरुषितं पर्वतेषु च॥ ५२॥
90721
90722 पुराणां पीठानां सिद्धक्षेत्राणां चान्तः॥ ५२॥
90723
90724 स्थितं कार्यविलासेषु प्रस्थितं विविधाध्वसु।
90725 न तदस्ति जगत्कोशे भवद्भिः सह यन्मया॥ ५३॥
90726
90727 न कृतं न हृतं यातं न दत्तं नावलम्बितम्।
90728 इदानीं स्वां दिशं यान्तु भवन्तो याम्यहं प्रियाः॥ ५४॥
90729
90730 न कृतं न हृतं न दत्तं च हस्ताभ्याम्। न यातं पद्भ्याम्।
90731 नावलम्बितं मनसा च। भवन्तः स्वां दिशं प्रकृतिं यान्तु। अहं ब्रह्म
90732 यामि। हे प्रियाः॥ ५४॥
90733
90734 सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः।
90735 संयोगा विप्रयोगान्ताः सर्वे संसारवर्त्मनि॥ ५५॥
90736
90737 किमर्थमस्मान्प्रकृतिषु विलापयसि कार्यकरणसंघातात्मनैव स्थित्वा
90738 भोग्यनिचयानेव पूर्ववत्कुतो न प्राप्स्यामस्तत्राह - सर्वे इति। हे सर्वे
90739 प्राणादयः॥ ५५॥
90740

90741 अयं चाक्षुष आलोको विशत्वादित्यमण्डलम् ।
90742 विशन्तु वनपुष्पाणि सौगन्ध्यानन्दसंविदः ॥ ५६ ॥
90743
90744 इदानीं प्रत्येकमिन्द्रियादीनां प्राप्तव्याः प्रकृतिर्विभज्य दर्शयति -
90745 अयमित्यादिना । सौगन्ध्यानन्दसंवित्पदेन तत्करणं घ्राणेन्द्रियं लक्ष्यते ।
90746 वनपुष्पपदेन च गन्धमात्रसारा पृथिवी ॥ ५६ ॥
90747
90748 प्राणानिलस्तथा स्पन्दं विशत्वद्य प्रभञ्जनम् ।
90749 विशन्त्वाकाशकुहरं शब्दश्रवणशक्तयः ॥ ५७ ॥
90750
90751 इन्दुमण्डलमायान्तु रसनारसशक्तयः ।
90752 निर्मन्दर इवाम्भोधिर्गतार्क इव वासरः ॥ ५८ ॥
90753
90754 एवमिन्दुमण्डलपदेनापो ग्राह्या इति क्रमेण गताः कलाः पञ्चदश
90755 प्रतिष्ठाम् इति श्रुतिप्रदर्शितदिशा सर्वे स्वां स्वां प्रकृतिं यान्त्वित्यर्थः ।
90756 एवं युष्मासु उपाधिभूतेषु गतेषु
90757 भवत्प्रतिबिम्बितचिदाभासात्माजीवभूतोऽहमपि स्वबिम्बभूते
90758 प्रणवार्धमात्रालक्ष्ये ब्रह्मात्मनि प्रशाम्यामीत्याह - निर्मन्दर
90759 इत्यादिना ॥ ५८ ॥
90760
90761 शरदीव घनः स्वैरं प्राप्तः कल्पान्तसर्गवत् ।
90762 ओंकारान्ते स्वमननं प्रशाम्याम्यात्मनात्मनि ।
90763 दग्धेन्धन इवार्चिष्मान्निःस्नेह इव दीपकः ॥ ५९ ॥
90764
90765 स्वं ईरयति जनयतीति स्वैरं स्वोपादानं विलयेन प्राप्तो घन इव कल्पान्ते
90766 प्रलयकाले सर्गवत्प्रपञ्च इव च । स्वमननं सुष्ठु
90767 अमननमात्यन्तिकमनःशान्तिर्यथा स्यात्तथा ॥ ५९ ॥
90768
90769 व्यपगताखिलकार्यपरम्परः
90770 सकलदृश्यदशातिगतस्थितिः ।
90771 प्रणवशान्त्यनुसंसृतिशान्तधी-
90772 र्विगतमोहमलोऽयमहं स्थितः ॥ ६० ॥
90773
90774 दीर्घोच्चारितस्य प्रणवस्य ब्रह्मरन्ध्रे शान्तिमनुसृत्य शान्ता
90775 ब्रह्माकारतामात्रप्राप्त्या उपरता धीर्यस्य । तत एव
90776 विगतप्रारब्धप्रतिबद्धशिष्टाविद्यालेशमला ॥ ६० ॥
90777
90778 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे०
90779 मोक्षोपायेषूपशमप्रकरणे इन्द्रियवर्गनिराकरणोपदेशो नाम
90780 षडशीतितमः सर्गः ॥ ८६ ॥
90781
90782 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
90783 इन्द्रियवर्गनिराकरणोपदेशो नाम षडशीतितमः सर्गः ॥ ८६ ॥
90784
90785
90786 सप्ताशीतितमः सर्गः ८७
90787
90788 श्रीवसिष्ठ उवाच ।
90789
90790 एवं कलितवानन्तः प्रशान्तमननैषणः ।
90791 शनैरुच्चारयंस्तारं प्रणवं प्राप्तभूमिकः ॥ १ ॥
90792

90793 येन क्रमेण संप्राप्तो वीतगव्यो विदेहताम् ।
90794 प्रणवान्तं समालम्ब्य स क्रमोऽत्र निरूप्यते ॥ १ ॥
90795
90796 एवं वक्ष्यमाणक्रमेण तारमत्युच्चैःस्वरं प्रणवं
90797 शनैर्दैर्घ्यावादनेनोच्चारयन्सन् मननैषणाप्रशान्तिक्रमेण
90798 प्राप्तषष्ठसप्तमभूमिको भूत्वा अन्तः स्वहृदि ब्रह्म कलितवान्प्राप्तवान् ॥
90799 १ ॥
90800
90801 मात्रादिपादभेदेन प्रणवं संस्मरन्यतिः ।
90802 अधयरोपापवादेन स्वरूपं शुद्धमव्ययम् ॥ २ ॥
90803
90804 यतिः संन्यासी वीतहव्यः । ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानं
90805 भूतं भवद्भविष्यदिति सर्वमोंकार एव यच्चान्यत्त्रिकालातीतं तदप्योंकार
90806 एव इति माण्डुक्यश्रुतिदर्शितक्रमेण
90807 अकारोकारमकाराख्यमात्राभिरर्धमात्रया च कल्पितेन
90808 स्थूलसूक्ष्माव्याकृततुरीयलक्षणपादभेदेन प्रणवं संस्मरन्सन्
90809 पञ्चीकरणोक्तेन विराठिरण्यगर्भाव्याकृतलक्षणानां पादानां तुर्ये
90810 प्रथमं जागरितस्थानो बहिःप्रज्ञः इत्यादिश्रुत्युक्तदिशा अध्यारोपेण
90811 नान्तः प्रज्ञं न बहिःप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञं नाप्रज्ञं
90812 न प्रज्ञानधनम् इत्याद्यपवादेन च स्थूलसूक्ष्मकारणरूपानपि
90813 सबाह्याभ्यन्तरान्भागांस्त्यक्त्वा शुद्धमव्ययं स्वरूपं दृष्ट्वा
90814 प्रपञ्चोपशमं शिवं शान्तमद्वैतं चतुर्थं मन्यन्ते स आत्मा स
90815 विज्ञेयः इति श्रुत्युक्ते तुर्ये तत्रात्मनि तिष्ठन्सन् प्रणवपर्यन्तं
90816 दीर्घनिःस्वनतन्तुना सह इन्द्रियतन्मात्रजालं जहाविति षष्ठेन संबन्धः ॥ २
90817 ॥
90818
90819 सबाह्याभ्यन्तरान्भागान्स्थूलान्सूक्ष्मतरानपि ।
90820 त्रैलोक्यसंभवांस्त्यक्त्वा संकल्पाकल्पकल्पितान् ॥ ३ ॥
90821
90822 तिष्ठन्नक्षुभिताकारश्चैन्तामणिरिवात्मनि ।
90823 संपूर्ण इव शीतांशुर्विश्रान्त इव मन्दरः ॥ ४ ॥
90824
90825 कुम्भकारगृहे चक्रे संरोधित इव भ्रमात् ।
90826 अम्भोधिरिव संपूर्णस्तिमितस्फारनिर्मलः ॥ ५ ॥
90827
90828 भ्रमाद्भ्रमणात्संरोधिते सति कुम्भकारगृहे चक्रमिवाक्षुभिताकारः ॥ ५
90829 ॥
90830
90831 शान्ततेजस्तमःपुञ्जं विगतार्केन्दुतारकम् ।
90832 अधूमाभ्ररजःस्वच्छामनन्तं शरदीव खम् ॥ ६ ॥
90833
90834 तेजस्तमसोर्युगपच्छान्त्यप्रसिद्धेरभूतोपमेयम् ॥ ६ ॥
90835
90836 सहप्रणवपर्यन्तदीर्घनिःस्वनतन्तुना ।
90837 जहाविन्द्रियतन्मात्रजालं गन्धमिवानिलः ॥ ७ ॥
90838
90839 प्रणवस्य पर्यन्तोऽग्रभागस्तल्लक्षणेन दीर्घनिःस्वनतन्तुना सह
90840 जहाचित्यादिसर्वः स्थूलसूक्ष्मेतरानपि त्यक्त्वेत्यस्यैव प्रपञ्चः ॥ ७ ॥
90841
90842 ततो जहौ तमोमात्रं प्रतिभातमिवाम्बरे ।
90843 उत्तिष्ठत्प्रस्फुरद्रूपं प्राज्ञः कोपलवं यथा ॥ ८ ॥
90844

90845 तत उत्तुष्ठत् साक्षिणा प्रस्फुरद्रूपं तमोमात्रम् ॥ ८ ॥
90846
90847 प्रतिभातं ततस्तेजो निमेषार्धं विचार्य सः ।
90848 जहौ बभूव च तदा न तमो न प्रकाशकम् ॥ ९ ॥
90849
90850 तामवस्थामथासाद्य मनसा तन्मनस्तृणम् ।
90851 मनागपि प्रस्फुरितं निमिषार्धादशातयत् ॥ १० ॥
90852
90853 तां तमःप्रकाशशून्यामवस्थामासाद्य तत्कल्पनाहेतुं मनस्तृणं
90854 अशातयत् छिन्नवान् ॥ १० ॥
90855
90856 ततोऽङ्ग संविदं स्वस्थां प्रतिभासमुपागताम् ।
90857 सद्यो जातशिशुज्ञानसमानकलनामलम् ॥ ११ ॥
90858
90859 अङ्गेति संबोधने । प्रतिभासं निवातदीपवत्स्फुटप्रकाशतामालम्ब्य तामपि
90860 कलनां तत्प्ररोहात्प्रागेव निमेषार्धार्धभागेन कालेन जहौ । स एव
90861 चितश्चेत्यदशात्याग इत्यर्थः ॥ ११ ॥
90862
90863 निमेषार्धार्धभागेन कालेन कलनां प्रभुः ।
90864 जहौ चितश्चेत्यदशां स्पन्दशक्तिमिवानिलः ॥ १२ ॥
90865
90866 पश्यन्तीपदमासाद्य सत्तामात्रात्मकं ततः ।
90867 प्रसुप्तपदमालम्ब्य तस्थौ गिरिरिवाचलः ॥ १३ ॥
90868
90869 अनया रीत्या साक्षिमात्रपरिशेषलक्षणं पश्यन्तीपदमासाद्य तदेव
90870 वियदादिबाधपरिशिष्टसत्तामात्रात्मकं कारणतत्त्वमिति
90871 तद्भावस्थितिलक्षणं सुषुप्तपदमालम्ब्येत्यर्थः ॥ १३ ॥
90872
90873 ततः सुषुप्तसंस्थानं स्थित्वा स्थित्वा विभुर्मनाक् ।
90874 सुषुप्ते स्थैर्यमासाद्य तुर्यरूपमुपाययौ ॥ १४ ॥
90875
90876 एते एव षष्ठसप्तमभूमिके सदेहावस्थे । ततः साक्षिसदैकरस्ये
90877 निरतिशयाखण्डानन्दाविर्भावात्प्रारब्धशेषेण सहात्यन्तिकप्रतिभासनाशे
90878 विदेहकैवल्यावाप्तिं दर्शयति - तुर्यरूपमिति ॥ १४ ॥
90879
90880 निरानन्दोऽपि सानन्दः सच्चासच्चपि तत्र सः ।
90881 आसीन्न किंचित्किंचित्तत्प्रकाशस्तिमिरं यथा ॥ १५ ॥
90882
90883 ततः किमासीदिति चतुर्थप्रश्नस्योत्तरमाह - निरानन्द इत्यादिना ।
90884 विषयानन्दशून्योऽपि स्वरूपेणैव सानन्दः । स्वातिरिक्तसत्ताशून्योऽपि सद्रूप
90885 इत्येवं सर्व योज्यम् । यथा नक्तं दृशां तिमिरमेव प्रकाशस्तद्वत् ॥ १५ ॥
90886
90887 अचिन्मयं चिन्मयं च नेति नेति यदुच्यते ।
90888 ततस्तत्संबभूवासौ यद्गिरामप्यगोचरः ॥ १६ ॥
90889
90890 चेत्याभावादचिन्मयं स्वतश्चिदेव चिन्मयम् ॥ १६ ॥
90891
90892 तदसौ सुसमं स्फारं पदं परमपावनम् ।
90893 सर्वभावान्तरगतमभूत्सर्वविवर्जितम् ॥ १७ ॥
90894
90895 यच्छून्यवादिनां शून्यं ब्रह्म ब्रह्मविदां वरम् ।
90896 विज्ञानमात्रं विज्ञानविदां यदमलं पदम् ॥ १८ ॥

90897
90898 सर्ववादिभिर्नानाविकल्पैः स्वस्वसिद्धान्ततया विकल्पितमपि तदेवेत्याह -
90899 यदित्यादिना ॥ १८ ॥
90900
90901 पुरुषः सांख्यदृष्टीनामीश्वरो योगवादिनाम् ।
90902 शिवः शशिकलाङ्कानां कालः कालैकवादिनाम् ॥ १९ ॥
90903
90904 शशिकलाङ्कानां शैवानाम् । शिवमतस्थानाम् इति पाठेऽपि स एवार्थः ॥ १९ ॥
90905
90906 आत्मात्मनस्तद्विदुषां नैरात्म्यं तादृशात्मनाम् ।
90907 मध्यं माध्यमिकानां च सर्वं सुसमचेतसाम् ॥ २० ॥
90908
90909 तत् आत्मनो विदुषामात्मा । न लोकेति निषेधविषये षष्ठी छान्दसी । नैरात्म्यं
90910 क्षणिकविज्ञानसंतानः । स हि स्थायित्वेन भासमानो नास्त्येवेति नैरात्म्यम् ।
90911 तादृशात्मनां सौत्रान्तिकवैभाषिकाणाम् । माध्यमिकानां
90912 चिदचिन्मध्यमशून्यमात्रं तत्त्वमिति वादिनाम् । सुसमचेतसां
90913 जीवन्मुक्तानां सर्व निरवशेषपूर्णम् । शून्यवादिभिरुपक्रम्य
90914 सर्ववादिभिरुपसंहारस्तयोः परिच्छेदापरिच्छेदवादे परमावधिता
90915 इतरेषां तु आन्तरालिकमतानामुभयमिश्रणं तारतम्यवैचित्र्येणोत्थानमिति
90916 द्योतनायेति बोध्यम् ॥ २० ॥
90917
90918 यत्सर्वशास्त्रसिद्धान्तो यत्सर्वहृदयानुगम् ।
90919 यत्सर्वं सर्वगं सार्वं यत्तत्तत्सदसौ स्थितः ॥ २१ ॥
90920
90921 सर्वस्य तत्त्वं सार्वं ईदृशं यत्सत् असौ तत्सत् तद्भूत्वा स्थित इत्यर्थः ॥ २१ ॥
90922
90923 यदनुत्तमनिःस्पन्दं दीप्यते तेजसामपि ।
90924 स्वानुभूत्यैकमात्रं यद्यत्तत्तत्सदसुअ स्थितः ॥ २२ ॥
90925
90926 यत् अनुत्तमनिःस्पन्दमत्यन्तनिष्क्रियम् । व्योम्न्यपि जन्मादिक्रियासत्त्वात्ततोऽपि
90927 कूटस्थमित्यर्थः । तेजसामपि भासकतयेति शेषः । यत्स्वानुभूत्यैकमात्रं
90928 यत्तत्प्रसिद्धं सत् तदसाविति प्राग्वत् ॥ २२ ॥
90929
90930 यदेकं चाप्यनेकं च साञ्जनं च निरञ्जनम् ।
90931 यत्सर्वं चाप्यसर्वं च यत्तत्तत्सदसौ स्थितः ॥ २३ ॥
90932
90933 अजमजरमनाद्यनेकमेकं
90934 पदममलं सकलं च निष्कलं च ।
90935 स्थित इति स तदा नभःस्वरूपा-
90936 दपि विमलस्थितिरीश्वरः क्षणेन ॥ २४ ॥
90937
90938 स वीतहव्य इति उक्तक्रमेण मुक्तदृशा नभःस्वरूपादपि निर्मलस्थितिः
90939 सन्नजमजरमनाद्येकममलं निष्कलं पदं भूत्वा स्थितः । बद्धदृशा
90940 तु क्षणेन ईश्वरः सन् स्वकार्यभेदैरनेकं सकलं च भूत्वा स्थित इत्यर्थः ॥
90941 २४ ॥
90942
90943 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मोक्षोपायेषूपशमप्रकरणे
90944 वीतहव्यनिर्वाणो नाम सप्ताशीतितमः सर्गः ॥ ८७ ॥
90945
90946 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
90947 वीतहव्यनिर्वाणो नाम सप्ताशीतितमः सर्गः ॥ ८७ ॥
90948

90949
90950 अष्टाशीतितमः सर्गः ८८
90951
90952 श्रीवसिष्ठ उवाच ।
90953
90954 प्राप्य संसृतिसीमान्तं दुःखाब्धेः पारमागतः ।
90955 वीतहव्यः शशामैवमपुनर्मनने मुनिः ॥ १ ॥
90956
90957 वीतहव्ये विमुक्ते तत्प्राणानां हृदि सल्लयः ।
90958 वर्ण्यते देहसंशोषः कलानां कारणे लयः ॥ १ ॥
90959
90960 एवमुक्तरीत्या अपुनर्मनने आत्यन्तिकमनोनाशे सति ॥ १ ॥
90961
90962 तस्मिंस्तथोपशान्ते हि परां निर्वृतिमागते ।
90963 पयःकण इवाम्भोधौ स्वे पदे परिणामिनि ॥ २ ॥
90964
90965 परिणामिनि परिनिष्ठिते सति । अपरिणामिनीति वा छेदः ॥ २ ॥
90966
90967 तथैव तिष्ठन्निःस्पन्दः स कायो म्लानिमाययौ ।
90968 अन्तर्विरसतां प्राप्य मार्गशीर्षान्तपद्मवत् ॥ ३ ॥
90969
90970 मार्गशीर्षस्यान्ते हेमन्ते पद्मवत् ॥ ३ ॥
90971
90972 तस्य देहद्रुमान्तःस्थं त्यक्त्वा हृन्नीडमाययुः ।
90973 प्रोड्डीय विहगायन्तो यन्त्रोन्मुक्ता इवासवः ॥ ४ ॥
90974
90975 सर्वदेहव्यापिनां प्राणानां हृद्युपसंहारमाह - तस्येति । तस्य
90976 असवः प्राणा देहद्रुमस्यान्तःस्थं हृन्नीडं त्यक्त्वा बहिराययुरिति तु न
90977 व्याख्येयम् । न तस्य प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते ब्रह्मैव सन्
90978 ब्रह्माप्येति इत्यादिश्रुतिविरोधापत्तेः सर्वकर्मवासनानाशेनोत्क्रमणे
90979 बीजप्रयोजनयोरभावाच्चेति । विहगायन्तो विहगवदाचरन्तः । लोहितादित्वात्क्यम् ।
90980 यन्त्रेभ्य उन्मुक्ताः शिला इव ॥ ४ ॥
90981
90982 भूतेष्वेव प्रतिष्ठानि भूतानि सकलान्यलम् ।
90983 मांसास्थियन्त्रदेहस्तु वनावनितलेऽवसत् ॥ ५ ॥
90984
90985 इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति तद्यथा पेशस्करी पेशसो
90986 मात्रामुपादाय इत्यादिश्रुत्या तदनन्तरप्रतिपत्तौ रंहति परिष्वक्तः
90987 प्रश्ननिरूपणाभ्याम् इति वादरायणोक्तन्यायाच्च
90988 पूर्वजन्मानुष्ठिताग्निहोत्रादिकर्मसमवाय्यपूशब्दवाच्यसोमाज्यपयः##-
90989 आकाशादिक्रमेण पृथिव्यां व्रीहियवपुरुषयोषिदनुप्रवेशेन
90990 पुरुस्।आकारताप्राप्त्यवगमात्तासां भूतमात्राणां कारणानुप्रवेशमाह
90991 - भूतेष्वेवेति । सकलानि प्राणादिनामान्तषोडशकलासहितानि । यस्तु
90992 पितृमातृमलजः स्थूलतरांशः स तत्रैव स्थित इत्याह - मांसेति ॥ ५ ॥
90993
90994 चिदर्णवप्रतिष्ठा चिद्धातवो धातुषु स्थिताः ।
90995 स्वे स्वरूपे स्थितं सर्वं मुनावुपशमं गते ॥ ६ ॥
90996
90997 चित् लिङ्गे बिम्बिता जीवचित्स्वबिम्बभुते चिदर्णवे प्रविष्टेव ।
90998 धातवस्त्वगसृङ्मांसमेदोस्थिमज्जाशुक्राणि । धातुषु स्वोपादानेषु ॥ ६ ॥
90999
91000 एषा ते कथिता राम विचारशतशालिनी ।

91001 विश्रान्तिर्वीतहव्यस्य प्रज्ञयैनां विवेचय ॥ ७ ॥
91002
91003 उपसंहरति - एषेति ॥ ७ ॥
91004
91005 एवंप्रकारया चार्व्या स्वविचारणयेद्धया ।
91006 तत्त्वमालोक्य तत्सारमातिष्ठोत्तिष्ठ राघव ॥ ८ ॥
91007
91008 चार्व्या रमणीयया । वोतो गुणवचनात् इति ङीष् ॥ ८ ॥
91009
91010 यदेतदखिलं राम भवते वर्णितं मया ।
91011 यदिदं वर्णयाम्यद्य वर्णयिष्यामि यच्च वा ॥ ९ ॥
91012
91013 इदानीं भगवान्वसिष्ठः कृपातिशयेनोक्तोच्यमानवक्ष्यमाणग्रन्थस्य
91014 चिरायुर्भिः सर्वदर्शिभिरस्मदादिभिः सर्वप्रकारैरसकृत्कृतानां
91015 विचाराणां लोकशास्त्रश्रुतिभिरन्वयव्यतिरेकाभ्यां च परीक्ष्य भूयोभूयो
91016 दर्शनस्य च ऐकात्म्यदृष्टिमवलम्ब्य ज्ञानप्रतिष्ठाप्राप्तिरेव फलं
91017 नातः परं पुरुषैः संपाद्यमस्तीति निर्णीतमिति विश्वासदार्ढ्यायाह -
91018 यदेतदित्यादिना ॥ ९ ॥
91019
91020 त्रिकालदर्शिना नित्यं चिरं च किल जीवता ।
91021 विचारितं च दृष्टं च मया तदखिलं स्वयम् ॥ १० ॥
91022
91023 तदेताममलां दृष्टिमवलम्ब्य महामते ।
91024 ज्ञानमासादय परं ज्ञानान्मुक्तिर्हि लभ्यते ॥ ११ ॥
91025
91026 ज्ञानान्निर्दुःखतामेति ज्ञानादज्ञानसंक्षयः ।
91027 ज्ञानादेव परा सिद्धिर्नान्यस्माद्राम वस्तुतः ॥ १२ ॥
91028
91029 ज्ञानेन सकलामाशां विनिकृत्य समन्ततः ।
91030 शातिताशेषचित्ताद्रिर्वीतहव्यो मुनीश्वरः ॥ १३ ॥
91031
91032 शातितः खण्डितः अशेषः संस्कारशेषेणाप्यनवशेषितश्चित्ताद्रिर्येन
91033 तथाविधोऽभूरिति शेषः ॥ १३ ॥
91034
91035 वीतहव्यात्मिका संवित्संकल्पजगतीति सा ।
91036 अनुभूतवती दृश्यमिदमेव च तज्जगत् ॥ १४ ॥
91037
91038 ननु वीतहव्येन स्वहृदि संकल्पमयं जगत्तत्र गुणत्वं
91039 चानुभूतमित्युक्तं तज्जगदन्तर्गतं सूर्यं प्रविश्य तत्र्यपिङ्गलद्वारा
91040 एतज्जगद्भूप्रतिष्ठस्वदेहोद्धारः कथं कृतः । नहि
91041 स्वाप्नकुद्दालैर्जाग्रन्निधिखननं दृष्टमिति रामाशङ्कां
91042 लिङ्गैरालक्ष्याह - वीतहव्येति । सा वीतहव्यात्मिका संवित्
91043 [संतानसंवित् इति पाठः] स्वहृदयोपलक्षिते ब्रह्मणि
91044 इदमस्मदादिसाधारणमेव दृश्यं स्वसंकल्पजगती इत्यनुभूतवती
91045 नापूर्वमित्यर्थः ॥ १४ ॥
91046
91047 वीतहव्यो मनोमात्रं मनोहंत्वमिवैन्द्रियः ।
91048 मनो जगदिदं कृत्स्नमन्यतानन्यते तु के ॥ १५ ॥
91049
91050 इतश्चेदमेव तज्जगदित्याह - वीतहव्य इति । ऐन्द्रियः
91051 अस्मदादिचक्षुरादिदृश्यो वीतहव्योऽस्मदीयमनोमात्रम् । यतोऽस्मन्मन
91052 एवाहमिव त्वमिव भासते । मन एवेदं कृत्स्नं जगत्तत्रान्यतानन्यते के ।

91053 नहि वन्ध्याभेदेन तत्पुत्रा भिद्यन्ते न भिद्यन्ते एवेत्यर्थः ॥ १५ ॥
91054
91055 अधिगतपरमार्थः क्षीणरागादिदोषः
91056 सकलमलविकारोपाधिसङ्गाद्यपेतः ।
91057 चिरमनुसृतमन्तः स्वं स्वभावं विवेकी
91058 पदममलमनन्तं प्राप्तवान्शान्तशोकः ॥ १६ ॥
91059
91060 एवं रामं समाधाय प्रकृतमेवार्थमाह - अधिगतेति ।
91061 सकलेभ्योऽविद्याकामकर्मादिमलेभ्यस्तत्प्रयुक्तेन्द्रियविकारेभ्यो
91062 देहत्रयोपाधिभ्यस्तत्प्रयुक्तप्रियसङ्गादिभ्यश्चापेतो विवेकी स
91063 वीतहव्यश्चिरं चित्तशुद्ध्युपायानुष्ठानैः
91064 श्रवणमनननिदिध्यासनसाक्षात्कारसमाधिभूमिकाभ्यासैरन्तः
91065 स्वहृद्यनुभूतमनुसरणेनाभिमुखीकृतं
91066 स्वस्वभावभूतममलमनन्तं मोक्षपदं प्राप्तवानित्यर्थः ॥ १६ ॥
91067
91068 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे०
91069 मोक्षोपायेषूपशमप्रकरणे वीतहव्यविश्रान्तिर्नामाष्टाशीतितमः
91070 सर्गः ॥ ८८ ॥
91071
91072 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
91073 वीतहव्यविश्रान्तिर्नामाष्टाशीतितमः सर्गः ॥ ८८ ॥
91074
91075
91076 एकोननवतितमः सर्गः ८९
91077
91078 श्रीवसिष्ठ उवाच ।
91079
91080 वीतहव्यवदात्मानं नीत्वा विदितवेद्यताम् ।
91081 वीतरागभयोद्वेगस्तिष्ठ राघव सर्वदा ॥ १ ॥
91082
91083 अनिच्छाशान्तमोहानां नभोगत्यादिसिद्धिषु ।
91084 श्वापदाद्यैरधृष्यत्वं तत्तनोश्चात्र कीर्त्यते ॥ १ ॥
91085
91086 आत्मानं स्वम् । नीवह्योर्हरतेश्च इति कात्यायनवचनाद्द्विकर्मता ॥ १ ॥
91087
91088 त्रिंशद्वर्षसहस्राणि विजहार यथासुखम् ।
91089 वीतहव्यो वीतशोकस्तथा विहर राघव ॥ २ ॥
91090
91091 अन्ये च राजन्मुनयो ज्ञातज्ञेया महाधियः ।
91092 यथावसन्स्वराष्ट्रे त्वं तथैवास्व महामते ॥ ३ ॥
91093
91094 सुखदुःखक्रमैरात्मा न कदाचन गृह्यते ।
91095 सर्वगोऽपि महाबाहो किं मुधा परिशोचसि ॥ ४ ॥
91096
91097 बहवो विदितात्मानो विहरन्तीह भूतले ।
91098 न केचन वशं यान्ति दुःखस्याङ्ग भवानिव ॥ ५ ॥
91099
91100 अङ्गेति संबोधनम् ॥ ५ ॥
91101
91102 स्वस्थो भव भवोदारः समो भव सुखी भव ।
91103 सर्वगस्त्वं त्वमात्मैव तव नास्ति पुनर्भवः ॥ ६ ॥
91104

उदारः अन्तः सर्वत्यागशीलः ॥ ६ ॥

हर्षामर्षविकाराणां जीवन्मुक्ता भवादृशाः ।
न केचन वशं यान्ति मृगेन्द्राः शिखिनामिव ॥ ७ ॥

शिखिनां मयूराणाम् ॥ ७ ॥

श्रीराम उवाच ।

अनेनैव प्रसङ्गेण संशयोऽयं ममोदितः ।
शरत्काल इवाम्भोदं तं मे त्वं तनुतां नय ॥ ८ ॥

जीवन्मुक्तशरीराणां कथमात्मविदां वर ।
शक्तयो नेह दृश्यन्ते आकाशगमनादिकाः ॥ ९ ॥

शरीराणामित्युक्तेः सति प्रारब्धे वीतहव्यस्य विद्याधरादिभोग इव मानस्यः
सिद्धयः संभवन्त्येवेत्याशयः ॥ ९ ॥

श्रीवसिष्ठ उवाच ।

आकाशगमनादीनि यान्येतानि रघूद्वह ।
प्रमाणिताः पदार्थानां सहजाः खलु शक्तयः ॥ १० ॥

प्रमाणिताः प्रमाणैरुपलब्धाः । ता अग्नेरूर्ध्वज्वलनमिव देवयोनीनां
स्वभावसिद्धाः ॥ १० ॥

यद्विचित्रं क्रियाजालं दृश्यते गम्यते पुनः ।
राम वस्तुस्वभावोऽसौ न तदात्मविदां मतम् ॥ ११ ॥

नभोगमनादिक्रियाजालं वस्तुस्वभावस्तत्तद्योनिदेहस्वभावः
मशकादीनामपि नभोगति शक्तिदर्शनादिति भावः । मतं वाञ्छितम् ॥ ११ ॥

अनात्मविदमुक्तोऽपि नभोविहरणादिकम् ।
द्रव्यकर्मक्रियाकालशक्त्या [व्याख्यानुसारेण मन्त्रक्रियेति पाठो
युक्त इत्यवगम्यते] प्राप्नोति राघव ॥ १२ ॥

तर्हि मनुष्याणां योगसिद्ध्या नभोगमनादिप्राप्तिः कथं तत्राह -
अनात्मविदिति । मण्यौषधादिद्रव्यशक्त्या मन्त्रशक्त्या
योगाभ्यासादिक्रियाशक्त्या तत्परिपाककालशक्त्या च कदाचिदेव प्राप्नोति ।
दृष्टान्तार्थं वा कालग्रहणम् । यथा पिपीलिका ग्रीष्मान्तकालशक्त्या
पक्षोद्गमान्नभोगतिं प्राप्नोति तद्वत् ॥ १२ ॥

नात्मज्ञस्यैष विषय आत्मज्ञो ह्यात्मवान्स्वयम् ।
आत्मनात्मनि संतृप्तो नाविद्यामनुधावति ॥ १३ ॥

एष नभोगत्यादिर्न विषयोऽभिलाषयोग्यस्तुच्छत्वात् । आत्मवान् लब्धात्मा ।
अविद्यामाविद्यकं तुच्छफलम् ॥ १३ ॥

ये केचन जगद्भावास्तानविद्यामयान्विदुः ।
कथं तेषु किलात्मज्ञस्त्यक्ताविद्यो निमज्जति ॥ १४ ॥

अविद्यामपि ये युक्त्या साधयन्ति सुखात्मिकाम् ।

91157 ते ह्यविद्यामया एव नत्वात्मज्ञास्तथाक्रमाः || १५ ||
91158
91159 युक्त्या योगाभ्यासादिश्रमसहस्रेण | तथाक्रमास्तथाविधाः || १५ ||
91160
91161 तत्त्वज्ञोऽवाप्यतत्त्वज्ञो यः कालद्रव्यकर्मभिः |
91162 यथाक्रमं प्रयतते तस्योर्ध्वत्वादि सिद्ध्यति || १६ ||
91163
91164 तर्हि किं तत्त्वज्ञानां तत्संपादनशक्तिर्नास्त्येव नेत्याह - तत्त्वज्ञ इति |
91165 कालेन चिरकालप्रयत्नेन द्रव्यकर्मभिर्यथाशास्त्रोक्तक्रमं य एव प्रयतते
91166 तस्य ऊर्ध्वत्वं नभोगतिस्तदादि सिद्ध्यति || १६ ||
91167
91168 आत्मवानिह सर्वस्मादतीतो विगतैषणः |
91169 आत्मन्येव हि संतुष्टो न करोति न चेहते || १७ ||
91170
91171 न तस्यार्थो नभोगत्या न सिद्ध्या न च भोगकैः |
91172 न प्रभावेण नो मानैर्नाशामरणजीवितैः || १८ ||
91173
91174 प्रभावेण सर्वाधिपत्यनिग्रहानुग्रहसामर्थ्येन | मानैः
91175 स्वोत्कर्षख्यापनगर्वैः || १८ ||
91176
91177 नित्यतृप्तः प्रशान्तात्मा वीतरागो विवासनः |
91178 आकाशसदृशाकारस्तज्ज्ञ आत्मनि तिष्ठति || १९ ||
91179
91180 अशङ्क्तोपयातेन दुःखेन च सुखेन च |
91181 तृप्यत्यपगतासङ्गो जीवेन मरणेन च || २० ||
91182
91183 तृप्यति स्वाभाविकीं तृप्तिं न जहाति | जीवेन जीवनेन || २० ||
91184
91185 समुद्रः सरितेवान्तः क्रमसंप्राप्तवस्तुना |
91186 समेन विषमेणापि तिष्ठत्यात्मानमर्चयन् || २१ ||
91187
91188 समेन स्वानुकूलेन विषमेण प्रतिकूलेनापि
91189 प्रारब्धक्रमसंप्राप्तभोग्यवस्तुना | समुद्रपक्षे
91190 ओघतृणकाष्ठादिवस्तुना | अर्चयन् अखण्डाकारवृत्तिपुष्पैः पूजयन् || २१ ||
91191
91192 नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन |
91193 न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः || २२ ||
91194
91195 अर्थव्यपाश्रयः प्रयोजनोपजीवनम् || २२ ||
91196
91197 यस्तु वाऽभावितात्मापि सिद्धिजालानि वाञ्छति |
91198 स सिद्धिसाधकैर्द्रव्यैस्तानि साधयति क्रमात् || २३ ||
91199
91200 अभावितात्मा आत्मज्ञानलेशशून्योऽपि || २३ ||
91201
91202 सिद्ध्यतीत्थमिदं युक्त्यैवेत्ययं नियतेः क्रमः |
91203 त्र्यक्षादिभिः सुरवरैर्व्यर्थीकर्तुं न शक्यते || २४ ||
91204
91205 मणिमन्त्रादियुक्त्यैव आकाशगमनादि इत्थं सिद्ध्यतीति तत्तच्छास्त्रप्रसिद्धो
91206 नियतेः क्रमः तत्तन्नियतिकर्तृभिस्त्र्यक्षादिभिरपि व्यर्थीकर्तुं न शक्यते || २४
91207 | |
91208

91209 स्वभाव एष वस्तूनां स्वतःसिद्धिर्हि नान्यतः।
91210 नियतिं न जहात्येव शशाङ्क इव शीतताम्॥ २५॥
91211
91212 या तु देवादीनां स्वतः खेचरत्वादिसिद्धिरेष वस्तुस्वभावः अत-एव सा
91213 उत्पत्तिमारभ्य यावज्जीवं स्थायिनीत्याह - न जहात्येवेति॥ २५॥
91214
91215 सर्वज्ञोऽपि बहुज्ञोऽपि माधवोऽपि हरोऽपि च।
91216 अन्यथा नियतिं कर्तुं न शक्तः कश्चिदेव हि॥ २६॥
91217
91218 द्रव्यकालक्रियामन्त्रप्रयोगाणां स्वभावजाः।
91219 एतास्ताः शक्तयो राम यद्व्योमगमनादिकम्॥ २७॥
91220
91221 यथा विषाणि निघ्नन्ति मदयन्ति मधूनि च।
91222 वमयन्ति च शुक्तानि मदनानि फलानि च॥ २८॥
91223
91224 विषघ्नौषधादिद्रव्यशक्तिवदेव मणिमन्त्रादिशक्तिरपि
91225 स्वस्वकार्यसमर्थेव्याह - यथेति। विषघ्नद्रव्यमणिमन्त्रादिशक्तयो
91226 यथा विषाणि निघ्नन्ति। मधूनि यथा मदयन्ति। यथा शुक्तानि
91227 माक्षिकमधूनि मदनफलानि वा खादितानि वमयन्ति उद्गिरणं कारयन्ति॥ २८
91228 ।।
91229
91230 तथा स्वभाववशतो द्रव्यकालक्रियाक्रमाः।
91231 नियतं साधयन्त्याशु प्रयोगं युक्तियोजिताः [युक्तयोजिताः इति
91232 टीकानुगुणः पाठः]॥ २९॥
91233
91234 प्रयुज्यत इति प्रयोगं सिद्धिजातं नियतमवश्यं साधयन्ति।
91235 युक्तैर्योगादिकुशलैः पुरुषैर्योजिताः प्रयुक्ताः॥ २९॥
91236
91237 एतस्मात्समतीतस्य त्यक्ताविद्यस्य राघव।
91238 आत्मज्ञानस्य नास्त्यत्र कर्तृताकर्तृतानघ॥ ३०॥
91239
91240 एतस्माद्द्रव्यकालक्रियाक्रमलक्षणादविद्याविषयात्समतीतस्य त्यक्ताविद्यस्य
91241 बाधिताज्ञानस्य आत्मज्ञानस्य अत्र नभोगमनादिसिद्धिजाले कर्तृता
91242 कारणता अकर्तृता विरोधिता वा नास्तीत्यर्थः॥ ३०॥
91243
91244 द्रव्यदेशक्रियाकालयुक्तयः साधुसंविदः।
91245 परमात्मपदप्राप्तौ नोपकुर्वन्ति काश्चन॥ ३१॥
91246
91247 यथा आत्मज्ञानस्य क्रियाफले अनुपयोगस्तथा ज्ञानफले
91248 द्रव्यदेशक्रियादेरप्यनुपयोग इत्याह - द्रव्येति।
91249 साधुसंविदस्तत्त्वज्ञानस्य॥ ३१॥
91250
91251 यस्येच्छा विद्यते काचित्स सिद्धिं साधयत्यलम्।
91252 आत्मज्ञस्य तु पूर्णस्य नेच्छा संभवति क्वचित्॥ ३२॥
91253
91254 सर्वेच्छाजालसंशान्तावात्मलाभोदयो हि यः।
91255 तद्विरुद्धा कथं कस्मादिच्छा संजायतेऽनघ॥ ३३॥
91256
91257 कुतो न संभवति तत्राह - सर्वेति॥ ३३॥
91258
91259 यथोदेति च यस्येच्छा स तया यतते तथा।
91260 यथाकालं तदाप्नोति ज्ञो वाप्यज्ञतरोऽपि वा॥ ३४॥

91261
91262 निरिच्छोऽपि तत्त्वविल्कौतुकाद्यतते चेत्तस्य भवन्त्येव सिद्धय इत्याशयेनाह -
91263 यथेति ‖ ३४ ‖
91264
91265 वीतहव्येन यतितं नो ज्ञानेच्छेन किंचन ।
91266 ज्ञानेच्छेनाशु यतितं प्रोत्थितोऽसौ यथा वने ‖ ३५ ‖
91267
91268 वीतहव्यस्य तर्हि सिद्धयः कुतो न जातास्तत्राह - वीतहव्येनेति । सिद्धीच्छया
91269 नो यतितम् । तत्कुतस्तत्राह - ज्ञानेच्छेनेति । ज्ञानेच्छया
91270 इतरेच्छाप्रतिबन्धादित्यर्थः । ज्ञानेच्छया तु तेन यतितमेव । यथा असौ वने
91271 ज्ञानाभ्यासाय प्रोत्थित उद्युक्त इति प्राग्वर्णितमेवेत्यर्थः ‖ ३५ ‖
91272
91273 एवं कालक्रियाकर्मद्रव्ययुक्तिस्वभावजाः ।
91274 यथेच्छमेव सिद्ध्यन्ति सिद्धयः स्वाः क्रमार्जिताः ‖ ३६ ‖
91275
91276 याः फलावलयो येन संप्राप्ताः सिद्धिनामिकाः ।
91277 तास्तेनाधिगता राम निजात्प्रयतनद्रुमात् ‖ ३७ ‖
91278
91279 सिद्धिविषये ज्ञानविषये वा अनुपरतस्य प्रयत्नस्यावश्यफलवत्ता
91280 मुमुक्षुव्यवहारप्रकरणे विस्तरेण प्रपञ्चितेत्याह - याः फलेति ।
91281 यच्छब्दो वीप्सितो द्रष्टव्यः । संप्राप्ताः दृश्यन्त इति शेषः ‖ ३७ ‖
91282
91283 महतां नित्यतृप्तानां तज्ज्ञानां भावितात्मनाम् ।
91284 ईहितं संप्रयातानां नोपकुर्वन्ति सिद्धयः ‖ ३८ ‖
91285
91286 ईहितं सर्वाभिलषितं परमप्रेमास्पदमात्मसुखमिति यावत् ‖ ३८ ‖
91287
91288 श्रीराम उवाच ।
91289
91290 अयं मे संशयो ब्रह्मन्वीतहव्यस्य सा तनुः ।
91291 क्रव्यादैर्न कथं भुक्ता कथं क्लिन्ना न भूतले ‖ ३९ ‖
91292
91293 क्लिन्ना पङ्कादिक्लेदान्न विशीर्णेत्यर्थः ‖ ३९ ‖
91294
91295 तदैव वीतहव्योऽसौ कथं वनगतः प्रभो ।
91296 विदेहमुक्ततां शीघ्रं यथावदिति मे वद ‖ ४० ‖
91297
91298 तदा भूप्रवेशकाले एव । इति एतत्प्रश्नद्वयोत्तरं यथावद्वद ‖ ४० ‖
91299
91300 श्रीवसिष्ठ उवाच ।
91301
91302 या संविद्वलिता साधो वासनामलतन्तुना ।
91303 सुखदुःखदशादाहभागिनी भवतीह सा ‖ ४१ ‖
91304
91305 तत्र प्रथमप्रश्नस्योत्तरं वक्तुं भूमिकां रचयति - येति । या
91306 अज्ञसंविद्देहाहंभाववासनारूपेण रागादिमलदूषितेन तन्तुना वलिता
91307 दृढं वेष्टिता भवति सैव
91308 देहच्छेदभेदादिप्रयुक्तसुखदुःखदशालक्षणदाहभागिनीत्यर्थः ‖ ४१ ‖
91309
91310 निर्मुक्तवासना शुद्धसंविन्मात्रमयी तु सा ।
91311 तनुस्तिष्ठति तच्छेदे शक्ता नेह हि केचन ‖ ४२ ‖
91312

91313 सा जिवान्मुक्ततनुर्बाधितत्वादधिष्ठानशुद्धसंविन्मात्रमयी तिष्ठति | तस्य
91314 संविन्मात्रस्य च्छेदे कऽपि क्रव्यादादयो न शक्ताः |
91315 अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च इति भगवद्वचनादिति भावः || ४२ ||
91316
91317 शृणु युक्त्या कया योगी तनुच्छेदादिविभ्रमैः |
91318 नाक्रम्यते महाबाहो बहुवर्षशतैरपि || ४३ ||
91319
91320 उपपत्त्यन्तरं वक्तुं प्रतिजानीते - शृण्विति || ४३ ||
91321
91322 चेतः पदार्थे पतति यस्मिन्यसिन्यदा यदा |
91323 तन्मयं तद्भवत्याशु तस्मिंस्तस्मिंस्तदा तदा || ४४ ||
91324
91325 तथा द्दष्टारि हि मनो विकारमुपगच्छति |
91326 द्दष्टमित्रं सुहृद्यत्वं स्वयमित्यनुभूयते || ४५ ||
91327
91328 तथा हीति संबन्धः | द्दष्टः अरिर्द्वेष्टा येन तथाविधं मनः
91329 अरिद्वेषप्रतिबिममिव द्वेषादिविकारमुपगच्छति | द्दष्टमित्रं तु
91330 मनस्तदीयहृदयप्रीतिप्रतिबिम्बमिव सुष्ठु हृद्यत्वमुपगच्छति |
91331 इत्ययमर्थः सर्वैः स्वयं प्रत्यक्षमनुभूयत इत्यर्थः || ४५ ||
91332
91333 रागद्वेषविहीने तु पथिके पादपे गिरौ |
91334 भवत्यरागद्वेषं च स्वयमित्यनुभूयते || ४६ ||
91335
91336 अत-एव एकस्य रागद्वेषशून्यत्वे अन्यस्यापि न द्दश्यत इत्याह - रागेति
91337 | पथिके उदासीनपुरुषे पादपे गिरौ च विषये मनः अरागद्वेषं भवतीत्यर्थः
91338 || ४६ ||
91339
91340 मृष्टे लौल्यमुपादत्ते दुर्भोज्ये याति निःस्पृहम् |
91341 वैरस्यं याति कटुनि स्वयमित्यनुभूयते || ४७ ||
91342
91343 एवमचेतनेषु भोज्यादिष्वपि प्रीत्यप्रीत्यौदासीन्यानि
91344 तद्गतगुणदोषतदुभयाभावप्रतिबिमनादेव मनसि प्रसिद्धावित्याशयेनाह
91345 - मृष्टे इति | दुर्भोज्ये नीरसे निःस्पृहं स्पृहाभावम् |
91346 अर्थाभावेऽव्ययीभावे ह्रस्वः | वैरस्याभावस्याप्युपलक्षणमेतत् || ४७ ||
91347
91348 समसंविद्विलासाढ्ये यद्यदा यतिदेहके |
91349 हिंस्रचेतः पतत्याशु समतामेति तत्तदा || ४८ ||
91350
91351 अस्त्वेवं प्रकृते किं ततस्तत्राह - समेति | समो रागद्वेषवैषम्यशून्यो
91352 यः संविद्विलासस्तेन आढ्ये संपन्नतमे यतिदेहके योगिशरीरे यत् हिंस्राणां
91353 क्रव्यादानां चेतो यदा पतति तत् तदा आशु तत्कालमेव
91354 योगिसंवित्समताप्रतिबिम्बनादिव समतामेति | अतो न
91355 तत्कृतहिंसाप्रसक्तिरित्यर्थः | तथाचाहिंसाप्रतिष्ठां प्रस्तुत्य
91356 प्तञ्जलिनोक्तं तत्संनिधौ वैरत्यागः इति || ४८ ||
91357
91358 समसङ्गविमुक्तत्वाच्छेदादौ न प्रवर्तते |
91359 पान्थो व्यर्थं पथि ग्रामे यथा ग्रामीणकर्मणि || ४९ ||
91360
91361 हिंस्रोऽपि समस्य समदर्शिनो यतः सङ्गेन द्वेषादिभ्यो विमुक्तत्वात्कस्यापि
91362 च्छेदनादौ न प्रवर्तते | यथा ग्रामीणकर्मणि
91363 ग्रामसन्निहितवनलताच्छेदादौ पान्थो न प्रवर्तते तद्वत् || ४९ ||
91364

91365 योगिदेहसमीपात्तु गत्वा प्राप्नोति हिंस्रताम् |
91366 यद्यद्भवति तत्राशु तथारूपेंअ न संशयः || ५० ||
91367
91368 योगिदेहसमीपादन्यत्र गत्वा तत्र दोषादियुक्तं यद्यज्जन्तुजातं भवति
91369 तत्तदनुरूपां हिंस्रतां प्राप्नोति || ५० ||
91370
91371 इति हिंस्रैर्मृगव्याघ्रसिंहकीटसरीसृपैः |
91372 न च्छिन्ना वीतहव्यस्य तनुर्भूतलशालिनी || ५१ ||
91373
91374 इति एतस्मात्कारणद्वयात् || ५१ ||
91375
91376 सर्वत्र विद्यते संवित्काष्ठलोष्टोपलादिके |
91377 सत्तासामान्यरूपेण संस्थिता मूकबालवत् || ५२ ||
91378
91379 कथं क्लिन्ना न भूतले इति प्रश्नस्योत्तरमाह - सर्वत्रेत्यादिना || ५२ ||
91380
91381 पोप्ल्यमाना तरला केवलं परिदृश्यते |
91382 तन्वी पुर्यष्टकेष्वेव प्रतिबिम्बजलेष्विव || ५३ ||
91383
91384 तर्हि पुर्यष्टकेष्वेव कथं तदुपलभस्तत्राह - पोप्लूयमानेति |
91385 प्लवमानेव तरला परिणामसहस्रविस्ऽमा तन्वी परिच्छिन्ना च सा परिदृश्यते |
91386 असमाहितचित्तैरिति शेषः || ५३ ||
91387
91388 तेन भूजलवाय्वग्निसंवित्त्या समरूपया |
91389 निर्विकारं तनुर्नीता वीतहव्यस्य राघव || ५४ ||
91390
91391 तेन वीतहव्यस्य पुर्यष्टकेन तत्त्वबोधसमाधिभ्यां समरूपया
91392 अविषमस्वभावं नीतया भूजलादिसंवित्त्या तनुर्निर्विकारं
91393 सर्वविकारशून्यब्रह्मभावं नीता अतो न विकारं गतेत्यर्थः || ५४ ||
91394
91395 अन्यच्च शृणु मे राम स्पन्दो नाशस्य कारणम् |
91396 विकारः स च चित्तोत्थो वातजो वा जगत्स्थितौ || ५५ ||
91397
91398 अन्यद्युक्त्यन्तरमपि शृणु | तदेवाह - स्पन्द इत्यादिना | जगत्स्थितौ
91399 लोकव्यवहारे प्रसिद्ध इत्यर्थः || ५५ ||
91400
91401 प्राणानां प्राणनं स्पन्दस्तच्छान्तौ ते दृषत्समाः |
91402 यतः स्थिता धारणया तेनानष्टास्य सा तनुः || ५६ ||
91403
91404 ते प्राणा देहे दृषत्समा दृढीभूता यतो हेतोः स्थितास्तेन हेतुना || ५६ ||
91405
91406 सबाह्याभ्यन्तरं स्पन्दश्चित्तजो वातजोऽथवा |
91407 न यस्य विद्यते तस्य दूरस्थौ प्रकृतिक्षयौ || ५७ ||
91408
91409 बाह्यो हस्तपादादिराभ्यन्तरः प्राणादिस्तत्सहिते देहे | प्रकृतिर्वृद्ध्यादिः
91410 क्षयः अपक्षयादिश्च || ५७ ||
91411
91412 सबाह्याभ्यन्तरे शान्ते स्पन्दे तत्त्वविदां वर |
91413 धातवः संस्थितिं देहे न त्यजन्ति कदाचन || ५८ ||
91414
91415 धातवस्त्वगादयः | संस्थितिं पूर्वावस्थाम् || ५८ ||
91416

91417 संशान्ते देहप्रस्पन्दे चित्तवातमये तथा।
91418 धातवो मैरवं स्थैर्यं यान्ति संस्तम्भितात्मकाः ॥ ५९ ॥
91419
91420 मैरवं मेरुसंबन्धि। मेरुतुल्यमिति यावत् ॥ ५९ ॥
91421
91422 तथा च दृश्यते लोके स्पन्दशान्तौ दृढा स्थितिः।
91423 दारुणामिव धीराणां शवाङ्गानामचोपता ॥ ६० ॥
91424
91425 स्पन्दयतीति स्पन्दः प्राणस्तच्छान्तौ। शवाङ्गानां च अचोपता अकम्पता।
91426 चुप मन्दायां गतौ भावे घञ् ॥ ६० ॥
91427
91428 इति वर्षसहस्राणि देहा जगति योगिनाम्।
91429 न क्लिद्यन्ते न भिद्यन्ते मग्नवज्जलदा इव ॥ ६१ ॥
91430
91431 इति अनया युक्त्या। जलदा इव न क्लिद्यन्ते भूमग्नशिलावन्न भिद्यन्ते इति
91432 व्युत्क्रमेणान्वयः ॥ ६१ ॥
91433
91434 तदैव वीतहव्योऽसौ शृणु किं नोपशान्तवान्।
91435 देहमुत्सृज्य तत्त्वज्ञो ज्ञातज्ञेयवतां वरः ॥ ६२ ॥
91436
91437 चरमप्रश्नमनूद्योत्तरमाह - तदैवेत्यादिना। ज्ञातं ज्ञेयं ब्रह्म
91438 यैरुपायैस्तद्वतां परिज्ञातात्मवतां वा ॥ ६२ ॥
91439
91440 ये हि विज्ञातविज्ञेया वीतरागा महाधियः।
91441 विच्छिन्नग्रन्थयः सर्वे ते स्वतन्त्रास्तनौ स्थिताः ॥ ६३ ॥
91442
91443 स्वतन्त्रा अपराधीनाः। तस्य ह न देवाश्च नाभूत्या ईशते आत्मा ह्येषां स
91444 भवति इति श्रुतेः ॥ ६३ ॥
91445
91446 दैवं वापि च कर्माणि प्राक्तनान्यैहिकानि च।
91447 वासना वा न तेषां तच्चेतो नियमयन्त्यलम् ॥ ६४ ॥
91448
91449 स्वातन्त्र्यमेवोपपादयति - दैवमिति। प्राक्तनकर्मफलप्रदानोन्मुख
91450 ईश्वरो दैवं कर्मप्राधान्यवादे कर्मणि च तेषां प्रारब्धशेषभोगाय
91451 प्रवृत्तं चेतो न नियमयन्ति नान्यथा प्रवर्तयितुमीशते ॥ ६४ ॥
91452
91453 तेन तत्त्वविदां तात काकतालीयवन्मनः।
91454 यद्यद्भावयति क्षिप्रं तत्तदाशु करोत्यलम् ॥ ६५ ॥
91455
91456 काकतालीयवदाकस्मिकं प्रारब्धोपनीतं यद्यज्जीवनं मरणं वा ॥ ६५ ॥
91457
91458 काकतालीययोगेन वीतहव्यस्य संविदा।
91459 सांप्रतं जीवितं बुद्धं तदेवाशु स्थिरीकृतम् ॥ ६६ ॥
91460
91461 यदा तु तस्य प्रतिभा विदेहोन्मुक्ततां गता।
91462 तदा विदेहमुक्तोऽभूदसौ स्वातन्त्र्यसंस्थितिः ॥ ६७ ॥
91463
91464 यदा तु प्रारब्धसमाप्तौ प्रतिभा संविद्गता भावितवती ॥ ६७ ॥
91465
91466 विगतवासनमाशु विपाशता-
91467 मुपगतं मन आत्मतयोदितम्।
91468 यदभिवाञ्छति तद्भवति क्षणा-

91469 त्सकलशक्तिमयो हि महेश्वरः ॥ ६८ ॥
91470

91471 उक्तमेव संक्षिप्योपसंहरति - विगतेति । विपाशतामुपगतमत-एव
91472 वास्तवात्मस्वभावेनोदितं मनस्तदुपाधिर्जीव एव । हि यस्मात्सकलशक्तिमयो
91473 महेश्वरः शिव एव स्वयं जात इत्यर्थः । तथाचाहुः तुषेण बद्धो व्रीहिः
91474 स्यात्तुषाभावे तु तण्डुलः । पाशबद्धः सदा जीवः पाशमुक्तः सदाशिवः ॥
91475 इति ॥ ६८ ॥
91476

91477 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे०
91478 मोक्षोपायेषूपशमप्रकरणे सद्विलासविचारयोगोपदेशो
91479 नामैकोननवतितमः सर्गः ॥ ८९ ॥
91480

91481 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
91482 सद्विलासविचारयोगोपदेशो नामैकोननवतितमः सर्गः ॥ ८९ ॥
91483

91484

91485 नवतितमः सर्गः ९०
91486

91487 श्रीवसिष्ठ उवाच ।
91488

91489 यदा ह्यस्तंगतप्रायं जातं चित्तं विचारतः ।
91490 तदा हि वीतहव्यस्य जाता मैत्र्यादयो गुणाः ॥ १ ॥
91491

91492 मैत्र्यादिगुणसंपन्नस्तथा निष्कलतां गतः ।
91493 द्विविधश्चित्तनाशोऽत्र विस्तरेणोपवर्ण्यते ॥ १ ॥
91494

91495 अस्तंगतप्रायं भर्जितबीजवदङ्कुरशक्त्या अस्तं गतम् प्रतिभासतस्तु नास्तं
91496 गतमित्यर्थः ॥ १ ॥
91497

91498 श्रीराम उवाच ।
91499

91500 विचाराभ्युदयाच्चित्तस्वरूपेऽन्तर्हिते मुने ।
91501 मैत्र्यादयो गुणा जाता इत्युक्तं किं त्वया प्रभो ॥ २ ॥
91502

91503 इति त्वया किं किमभिप्रायमुक्तम् ॥ २ ॥
91504

91505 ब्रह्मण्यस्तं गते चित्ते कस्य मैत्र्यादयो गुणाः ।
91506 क्व वा परिस्फुरन्तीति वद मे वदतां वर ॥ ३ ॥
91507

91508 अस्तं गते बाधिते सति । कस्य किं बाधितस्य उत अधिष्ठानस्य क्व वा
91509 किंचिदाभासे उत बिम्बचिति स्फुरन्ति । नहि बाधिताया मृगतृष्णानद्या
91510 मरुभूमेर्वा शैत्यमाधुर्यपावनत्वादयो गुणाः संभवन्ति न वा
91511 तद्भासकं किंचिदस्तीति भावः ॥ ३ ॥
91512

91513 श्रीवसिष्ठ उवाच ।
91514

91515 द्विविधश्चित्तनाशोऽस्ति सरूपोऽरूप एव च ।
91516 जीवन्मुक्तः सरूपः स्यादरूपो देहमुक्तिजः ॥ ४ ॥
91517

91518 सरूपः स्फटिकभित्तिगतस्वप्रतिबिम्बे
91519 पुरुषान्तरभ्रमाभासवत्प्रतिभासमानतद्रूपसहितस्तद्रहितश्च ॥ ४ ॥
91520

91521 चित्तसतेह दुःखाय चित्तनाशः सुखाय तु।
91522 चित्तसत्तं क्षयं नीत्वा चित्तं नाशमुपानयेत्॥ ५॥
91523
91524 तामसैर्वासनाजालैर्व्याप्तं यज्जन्मकारणम्।
91525 विद्यमानं मनो विद्धि तद्दुःखायैव केवलम्॥ ६॥
91526
91527 चित्तस्य सत्ता तर्हि कीदृशी तामाह - तामसैरिति। तामसैः
91528 अबाधिताज्ञानप्रभवैः॥ ६॥
91529
91530 प्राक्तनं गुणसंभारं ममेति बहु मन्यते।
91531 यत्तु चित्तमतत्त्वज्ञं दुःखितं जीव उच्यते॥ ७॥
91532
91533 प्राक्तनमनाद्यध्याससिद्धं देहेन्द्रिय विषयादेर्गुणसंभारं
91534 धर्मजातमात्मसंसर्गाध्यासान्ममेत्यभिमन्यते॥ ७॥
91535
91536 विद्यमानं मनो यावत्तावद्दुःखक्षयः कुतः।
91537 मनस्यस्तं गते जन्तोः संसारोऽस्तमुपागतः॥ ८॥
91538
91539 दुःखमूलमवष्टब्धमस्मिन्नेव विनिश्चलम्।
91540 विद्यमानं मनो विद्धि दुःखवृक्षवनाङ्कुरम्॥ ९॥
91541
91542 अस्मिन्नज्ञजन्तावेव वासनाप्ररोहजालेरवष्टब्धं दृढप्रतिष्ठितं
91543 विद्यमानं मनो दुःखतरोर्मूलं विद्धि। दुःखवृक्षवनस्य अङ्कुराः
91544 प्ररोहा यस्मात्तथाविधम्॥ ९॥
91545
91546 श्रीराम उवाच।
91547
91548 नष्टं कस्य मनो ब्रह्मन्नष्टं वा कीदृशं भवेत्।
91549 कीदृशश्चास्य नाशः स्यात्सत्ता नाशस्य कीदृशी॥ १०॥
91550
91551 नाशस्य अभावतां गतस्य सत्ता विद्यमानता व्यवहारक्षमता कीदृशी
91552 किंलक्षणा॥ १०॥
91553
91554 श्रीवसिष्ठ उवाच।
91555
91556 चेतसः कथिता सत्ता मया रघुकुलोद्वह।
91557 अस्य नाशमिदानीं त्वं शृणु प्रश्नविदां वर॥ ११॥
91558
91559 कथिता तामसैर्वासनाजालैः इत्यादिग्रन्थेन॥ ११॥
91560
91561 सुखदुःखदशा धीरं साम्यान्न प्रोद्धरन्ति यम्।
91562 निःश्वासा इव शैलेन्द्रं चित्तं तस्य मृतं विदुः॥ १२॥
91563
91564 यं धीरं बाह्या आभ्यन्तरा वा सुखदशाः साम्यात्
91565 समस्वभावपूर्णानन्दैकरसस्वात्मप्रतिष्ठायाः सकाशान्न प्रोद्धरन्ति न
91566 चालयन्ति तस्य चित्तं मृतं नष्टं विदुः॥ १२॥
91567
91568 अयं सोहमयं नाहमिति चिन्ता नरोत्तमम्।
91569 खर्वीकरोति यं नान्तर्नष्टं तस्य मनो विदुः॥ १३॥
91570
91571 अयं सप्तवितस्तिमितो देहः स प्रसिद्धोऽहम्। अयं तदतिरिक्तः सर्वो नाहम्। इति
91572 चिन्ता भावना यं न खर्वीकरोति। न परिच्छिनत्तीति यावत्॥ १३॥

91573

91574 आपत्कार्पण्यमुत्साहो मदो मान्द्यं महोत्सवः।
91575 यं नयन्ति न वैरूप्यं तस्य नष्टं विदुर्मनः॥ १४॥
91576
91577 वैरूप्यं मुखवैवर्ण्यम्॥ १४॥
91578
91579 एष साधो मनोनाशो नष्टं चेह मनो भवेत्।
91580 चित्तनाशदशा चैषा जीवन्मुक्तस्य विद्यते॥ १५॥
91581
91582 लक्षणोक्तिमुपसंहरति - एष इति॥ १५॥
91583
91584 मनस्तां मूढतां विद्धि यदा नश्यति सानघ।
91585 चित्तनाशाभिधानं हि तदा सत्त्वमुदेत्यलम्॥ १६॥
91586
91587 मनस्तां परमार्थताभ्रान्त्या दृश्यमननयोग्यताम्। सत्त्वं
91588 शुद्धसत्त्वभावत्वम्॥ १६॥
91589
91590 तस्य सत्त्वविलासस्य चित्तनाशस्य राघव।
91591 जीवन्मुक्तस्वभावस्य कैश्चिच्चित्ताभिधा कृता॥ १७॥
91592
91593 कैश्चित्तद्व्यवहाराभासदर्शिभिः॥ १७॥
91594
91595 मैत्र्यादिभिर्गुणैर्युक्तं भवत्युत्तमवासनम्।
91596 भूयो जन्मविनिर्मुक्तं जीवन्मुक्तमनोऽनघ॥ १८॥
91597
91598 तदेव सत्त्वं जीवन्मुक्तमनोमैत्र्यादिभिर्गुणैर्युक्तं भवति॥ १८॥
91599
91600 व्याप्तं वासनया यत्स्याद्भूयो जननमुक्तया।
91601 जीवन्मुक्तमनाःसत्ता राम तत्सत्त्वमुच्यते॥ १९॥
91602
91603 वासनया ब्रह्माकारवासनया। सत्त्वनाम्ना व्यवह्रियते॥ १९॥
91604
91605 संप्रत्येवानुभूतत्वात्सत्त्वाप्त्या तन्वसंयुतः।
91606 सरूपोऽसौ मनोनाशो जीवन्मुक्तस्य विद्यते॥ २०॥
91607
91608 संप्रति व्युत्थानकाले। प्रतिभासतोऽनुभूतत्वात्सरूपः साकार इव सत्त्वस्य
91609 सन्मात्रस्वभावस्याप्त्या प्राप्त्या च तन्वसंयुतो
91610 देहादिपरिच्छेदमस्पृशन्मननीयाभावान्मनोनाशश्चासावित्यर्थः। अनेन
91611 सत्ता नाशस्य कीदृशीति प्रश्नांशः समाहितः॥ २०॥
91612
91613 मैत्र्यादयोऽथ मुदिताः शशाङ्क इव दीप्तयः।
91614 जीवन्मुक्तमनोनाशे सर्वदा सर्वथा स्थिताः॥ २१॥
91615
91616 अत-एव मैत्र्यादिगुणा अपि प्रतिभासतस्तत्रोपपन्ना इत्याह - मैत्र्यादय
91617 इति। मुदिताः प्रसन्नाः॥ २१॥
91618
91619 जीवन्मुक्तमनोनाशे सत्त्वनाम्नि हिमालये।
91620 वसन्त इव मञ्जर्यः स्फुरन्ति गुणसंपदः॥ २२॥
91621
91622 हिमस्य संतोषशैत्यस्य आलये॥ २२॥
91623
91624 अरूपस्तु मनोनाशो यो मयोक्तो रघुद्वह।

91625 विदेहमुक्त एवासौ विद्यते निष्कलात्मकः ॥ २३ ॥
91626
91627 द्वितीयं मनोनाशं दर्शयति - अरूपस्त्विति ॥ २३ ॥
91628
91629 समग्राग्र्यगुणाधारमपि सत्त्वं प्रलीयते।
91630 विदेहमुक्ते विमले पदे परमपावने ॥ २४ ॥
91631
91632 सत्त्वं प्रातिभासिकं मनः ॥ २४ ॥
91633
91634 विदेहमुक्तविषये तस्मिन्सत्त्वक्षयात्मके।
91635 चित्तनाशे विरूपाख्ये न किंचिदपि विद्यते ॥ २५ ॥
91636
91637 न किंचिदपि दृश्यम्। यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स
91638 भूमा इति श्रुतेरित्यर्थः ॥ २५ ॥
91639
91640 न गुणा नागुणास्तत्र न श्रीर्नाश्रीर्न लोलता।
91641 न चोदयो नास्तमयो न हर्षामर्षसंविदः ॥ २६ ॥
91642
91643 उक्तमेव प्रपञ्चयति - न गुणा इत्यादिना ॥ २६ ॥
91644
91645 न तेजो न तमः किंचिन्न संध्या दिनरात्रयः।
91646 न दिशो न च वाकाशो नाधो नानर्थरूपता ॥ २७ ॥
91647
91648 न वासना न रचना नेहानीहे न रञ्जना।
91649 न सत्ता नापि वाऽसत्ता नच साध्यं हि तत्पदम् ॥ २८ ॥
91650
91651 सत्ता भावः। असत्ता अभावः ॥ २८ ॥
91652
91653 अतमस्तेजसा व्योम्ना वितारेन्द्वर्कवायुना।
91654 तत्समं शरदच्छेन निःसंध्येनारजस्त्विषा ॥ २९ ॥
91655
91656 रजोभिस्त्विषा सूर्यज्योतिषा च रहितेन ॥ २९ ॥
91657
91658 ये हि पारं गता बुद्धेः संसाराचरणस्य [संसाराडम्बरस्य च इति
91659 पाठः] च।
91660 तेषां तदास्पदं स्फारं पवनानामिवाम्बरम् ॥ ३० ॥
91661
91662 आस्पदं प्रतिष्ठा ॥ ३० ॥
91663
91664 संशान्तदुःखमजडात्मकमेव सुप्त-
91665 मानन्दमन्थरमपेतरजस्तमो यत्।
91666 आकाशकोशतनवोऽतनवा महान्त-
91667 स्तस्मिन्पदे गलितचित्तलवा वसन्ति ॥ ३१ ॥
91668
91669 अजडात्मकमेव सत् सुप्तमिवोन्मेषादिक्रियारहितम्। अतनवो विदेहमुक्ताः।
91670 तस्मिन्पद गलितः प्रातिभासिकचित्तलवओऽपि येषां तथाविधाः सन्तस्तस्मिन्पदे
91671 वसन्ति। अपुनरावृत्त्या स्थिरीभवन्तीत्यर्थः ॥ ३१ ॥
91672
91673 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे०
91674 मोक्षोपायेषूपशमप्रकरणे चितोपदेशविचारयोगोपदेशो नाम
91675 नवतितमः सर्गः ॥ ९० ॥
91676

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
चित्तोपदेशविचारयोगोपदेशो नाम नवतितमः सर्गः ॥ ९० ॥

एकनवतितमः सर्गः ९१

श्रीराम उवाच ।

परमाकाशकोशाद्रिरूढलोकान्तरद्रुमम् ।
तारकापुष्पशबलं देवसुरविहंगमम् ॥ १ ॥

संसृतिव्रततेर्बीजं शरीरं तस्य मानसम् ।
प्राणस्पदो वासना च तद्बीजे इति वर्ण्यते ॥ १ ॥

ब्रह्मण्यध्यस्ते चतुर्दशभुवनाकारे जगति प्रसृताया जीवसंसरणलताया
बीजपरम्परावधि मूलोच्छेदोपायजिज्ञासया प्रष्टुकामो रामः प्रथमं
जगद्वनत्वेन वर्णयति - परमेत्यादिना । परमाकाशकोशस्य
निर्विशेषब्रह्मणोऽद्रिवदवरोधकत्वादद्रौ अव्याकृते रूढानि लोकान्तराणि
विचित्रभुवनब्रह्माण्डभेदा एव द्रुमा वृक्षा यस्मिन् । एवं
तारकापुष्पशबलमित्यादिविशेषणान्यपि वनरूपकोपपादकानि ॥ १ ॥

विद्युन्मञ्जरितोपान्तनीलनीरदपल्लवम् ।
सर्वर्तुरम्यचन्द्रार्कगणरम्यकदन्तुरम् ॥ २ ॥

विद्युद्भर्मञ्जरितेषु संजातमञ्जरीकेषु दिक्शाखाग्रेषु नीलादिवर्णा नीरदा
मेघा एव पल्लवास्ताम्रहरितादिवर्णपर्णानि यस्मिन् ।
चन्द्रार्कग्रहगणलक्षणै रम्यकैर्विकासरमणीयैः
पुष्पैर्दन्तुरमुन्नतदन्तं प्रहसदिव स्थितम् ॥ २ ॥

सप्ताब्धिवापीवलितं सरिच्छतमनोहरम् ।
चतुर्दशविधानन्तभूतजातोपजीवितम् ॥ ३ ॥

लोकभेदाच्चतुर्दशविधैः प्रत्येकमनन्तैर्भूतजातैरुपजीवितम् ॥ ३ ॥

जगत्काननमाक्रम्य स्थितायाः कृतजालकम् ।
ब्रह्मन्संसृतिमृद्वीकालताया वितताकृतेः ॥ ४ ॥

ईदृशं जगत्काननमाक्रम्य वासनाप्रतानैः सर्वतः संवेष्ट्य
कृतजालकं यथा स्यात्तथा स्थितायाः संसृतिर्जीवसंसरणं तल्लक्षणाया
मृद्वीका द्राक्स्।आ तल्लतायाः ॥ ४ ॥

जरामरणपर्वायाः सुखदुःखफलावलेः ।
आरूढमूलमालाया [प्ररूढेति पाठः] मोहसेकजलाञ्जलेः ॥ ५ ॥

जरामरणान्येव पर्वाणि काण्डग्रन्थयो यस्याः । पर्वशब्दः अकारान्तोऽपि
क्वचिदस्ति । मोहा एव सेकजलाञ्जलयो यस्याः ॥ ५ ॥

किं बीजमथ बीजस्य तस्य किं बीजमुच्यते ।
अथ तस्यापि किं बीजं बीजं तस्यापि किं भवेत् ॥ ६ ॥

बीजपरम्पराचतुष्टयप्रश्नः ॥ ६ ॥

91729 सर्वमेतत्समासेन पुनर्बोधविवृद्धये।
91730 सिद्धये ज्ञानसारस्य वद मे वदतांवर॥ ७॥
91731
91732 श्रीवसिष्ठ उवाच।
91733
91734 अन्तर्लीनघनारम्भशुभाशुभमहाङ्कुरम्।
91735 संसृतिव्रततेर्बीजं शरीरं विद्धि राघव॥ ८॥
91736
91737 अन्तर्लिङ्गदेहे लीनानि प्रच्छन्नानि घनारम्भाणि विचित्रानन्तकार्यारम्भकाणि
91738 शुभाशुभकर्माण्येव महान्तोऽङ्कुरा यस्मिन्॥ ८॥
91739
91740 शाखाप्रतानगहना फलपल्लवशालिनी।
91741 तेनेयं भवति स्फीता शरदीव वसुन्धरा॥ ९॥
91742
91743 इयं संसृतिव्रततिस्तेन तादृशशरीरेण स्फीता अभिवृद्धा भवति।
91744 वसुन्धरा सस्यसंपदेति शेषः॥ ९॥
91745
91746 भावाभावदशाकोशं दुःखरत्नसमुद्गकम्।
91747 बीजमस्य शरीरस्य चित्तमाशावशानुगम्॥ १०॥
91748
91749 तस्य किं बीजमुच्यते इति द्वितीयप्रश्नस्योत्तरमाह - भावेति। भावो
91750 विभवोपचयः। अभावस्तदपक्षयः। आशायाः वशं सदनुगं
91751 भृत्यभूतम्॥ १०॥
91752
91753 चित्तादिदमुदेत्युच्चैः सदसच्चाङ्गजालकम्।
91754 तथा चैतत्स्वयं स्वप्नसंभ्रमेष्वनुभूयते॥ ११॥
91755
91756 सद्वर्तमानमसदतीतानागतं च अङ्गजालकं शरीरजातम्।
91757 चित्ताच्छरीरोद्भवे स्वाप्नानुभवं प्रमाणयति - तथा चैतदिति॥ ११॥
91758
91759 यथा गन्धर्वसंकल्पात्पुरमेवं हि चेतसः।
91760 सवातायनमाकारभासुरं जायते वपुः॥ १२॥
91761
91762 यथा गन्धर्वाणां मुमूर्षोरुत्पादितप्रदर्शनसंकल्पाच्चेतसः
91763 सकाशादेव पुरं जायते तद्वद्वपुः शरीरमित्यर्थः॥ १२॥
91764
91765 यदिदं किंचिदाभोगि जागतं दृश्यतां गतम्।
91766 रूपं तच्चेतसः स्फारं घटादित्वं मृदो यथा॥ १३॥
91767
91768 किंच नात्रासंभावना युक्ता सर्वस्य जगतो
91769 हैरण्यगर्भमनोविकारमात्रत्वस्य सर्वश्रुतिपुराणप्रसिद्धत्वादित्याह -
91770 यदिदमिति॥ १३॥
91771
91772 द्वे बीजे चित्तवृक्षस्य वृत्तिव्रततिधारिणः।
91773 एकं प्राणपरिस्पन्दो द्वितीयं दृढभावना॥ १४॥
91774
91775 अथ तस्यापि किं बीजमिति तृतीयप्रश्नस्योत्तरमाह - द्वे इति। दृढा
91776 भावना वासना॥ १४॥
91777
91778 यदा प्रस्पन्दते प्राणो नाडीसंस्पर्शोद्यतः।
91779 तदा संवेदनमयं चित्तमाशु प्रजायते॥ १५॥
91780

91781 आद्यमुपपादयति - यदेति | संवेदनमयं चिद्विकारप्रायम् || १५ ||
91782
91783 यदा न स्पन्दते प्राणः शिरासरणिकोटरे |
91784 असंवित्तिवशात्तेन चित्तमन्तर्न जायते || १६ ||
91785
91786 शिरासरणयो द्वासप्ततिसहस्रनाडीमार्गास्तेषां कोटरे छिद्रे |
91787 असंवित्तिर्बाह्यसंवेदनसंस्कारानुद्बोधस्तद्वशात् || १६ ||
91788
91789 प्राणस्पन्दनमेवेदं चित्तद्वारेण दृश्यते |
91790 जगन्नामागतं व्योम्नि नीलत्वादिवदीदृशम् || १७ ||
91791
91792 हैरण्यगर्भचितो जगदाकारभावोऽपि समष्टिप्राणस्पन्दनप्रयुक्त एवेति
91793 स्वचित्तस्पन्ददृष्टान्तेन लक्ष्यत इत्याह - प्राणेति | दृश्यते लक्ष्यते || १७ ||
91794
91795 प्राणस्पन्दनसुप्ता च तच्छान्तिः शान्तिरुच्यते |
91796 प्राणसंस्पन्दनासंविद्याति वीटेव चोदिता || १८ ||
91797
91798 एवं समष्टिप्राणस्पन्दनविषये सुप्ता उपरता तस्याश्चितः शान्तिर्निष्क्रियतैव
91799 शान्तिर्जगत्प्रलयो मोक्षो वा उच्यत इत्यर्थः | वीटा कन्दुकः | चोदिता कराभिहता
91800 || १८ ||
91801
91802 संव्स्फुरति देहेषु प्राणस्पन्दप्रबोधिता |
91803 चक्रावर्तैरङ्गणेषु वीटेव करताडिता || १९ ||
91804
91805 सती सर्वगता संवित्प्राणस्पन्देन बोध्यते |
91806 सूक्ष्मात्सूक्ष्मतराकारा गन्धलेखेव वायुना || २० ||
91807
91808 संवित्संरोधने श्रेयः परमं विद्धि राघव |
91809 कारणाक्रमणं यत्र क्षोभस्तत्र न विद्यते || २१ ||
91810
91811 संविदः संरोधनमविक्षिप्तता | श्रेयो मोक्षः क्षोभकारऽनस्य
91812 प्राणस्पन्दस्य आक्रमणं प्राणायामाभ्यासेन नाशः || २१ ||
91813
91814 संवित्समुदितैवाशु याति संवेद्यमादरात् |
91815 संवेदनादनन्तानि ततो दुःखानि चेतसः || २२ ||
91816
91817 किमर्थ संरोधः संविदश्चित्ताकारेण समुद्भवे को दोषस्तत्राह -
91818 संविदिति | संवेद्यं बाह्यविषयं प्रति आदराद्रागाद्याति | ततश्च
91819 तदुपभोगसंवेदनादनन्तानि दुःखानीत्यर्थः || २२ ||
91820
91821 संसुप्तान्तरबोधाय संवित्संतिष्ठते यदा |
91822 लब्धं भवति लब्धव्यं तदा तदमलं पदम् || २३ ||
91823
91824 यदा तु बाह्यविषये संसुप्तप्राया सती आन्तरस्यात्मनो बोधाय संतिष्ठते
91825 उद्युक्ता भवति तदेत्यर्थः || २३ ||
91826
91827 तस्मात्प्राणपरिस्पन्दैर्वासनाचोदनैस्तथा |
91828 नो चेत्संविदमुच्छूनां करोषि तदजो भवान् || २४ ||
91829
91830 प्राप्तपरिस्पन्दैर्वासनानां चोदनै रागातिशयेनोद्भावनैश्च
91831 संविदमुच्छूनां मूढा यथा कुर्वन्ति तथा न करोषि चेत् | अथवा परिरत्र
91832 वर्जने | प्राणानां परिस्पन्दैः स्पन्दवर्जनैर्वासनानां

91833 चोदनैरपनोदनैश्च संविदं
91834 नोच्छूनामुच्छूनताप्रयुक्तमनस्त्वापत्तिशून्यां करोषि चेत्तर्हि भवानजो
91835 जन्मादिसर्वविक्रियाशून्यो मुक्त एवासीत्यर्थः ॥ २४ ॥
91836
91837 संविदुच्छूनतां चित्तं विद्धि तेनेदमाततम् ।
91838 अनर्थजालमालूनविशीर्णजनजीवकम् ॥ २५ ॥
91839
91840 आलूनाः खण्डिता विशीर्णा झर्झरिताश्च जनजीवका येन ॥ २५ ॥
91841
91842 योगिनश्चित्तशान्त्यर्थं कुर्वन्ति प्राणरोधनम् ।
91843 प्राणायामैस्तथा ध्यानैः प्रयोगैर्युक्तिकल्पितैः ॥ २६ ॥
91844
91845 योगशास्त्रोक्तैः
91846 सद्गुरुसंप्रदायादिसिद्धयुक्तिकल्पितैस्तदुपायाभ्यासप्रयोगैः ॥ २६ ॥
91847
91848 चित्तोपशान्तिफलदं परमं साम्यकारणम् ।
91849 सुभगं संविदः स्वास्थ्यं प्राणसंरोधनं विदुः ॥ २७ ॥
91850
91851 प्राणसंरोधनमेव फलामेदरूपेण प्रशंसति - चित्तेति ॥ २७ ॥
91852
91853 ज्ञानवद्भिः प्रकटितामनुभूतां च राघव ।
91854 चित्तस्योत्पत्तिमपरां वासनाजीवितां शृणु ॥ २८ ॥
91855
91856 चित्तस्य बीजान्तरं वर्णयितुं प्रतिजानीते - ज्ञानवद्भिरिति । प्रकटितां
91857 सम्यगुपदिष्टां स्वयं चानुभूताम् । वासनाभिराजीवितामुज्जीविताम् ॥ २८ ॥
91858
91859 दृढभावनया त्यक्तपूर्वापरविचारणम् ।
91860 यदादानं पदार्थस्य वासना सा प्रकीर्तिता ॥ २९ ॥
91861
91862 तत्रादौ वासनास्वरूपमाह - दृढेति । प्राक्तन्या दृढभावनया
91863 देहादिपदार्थानामहंममेत्यादिरूपसंस्कारात्मना यदादानं
91864 तच्चेत्त्यक्तपूर्वापरविचारणं भवति तदा सा वासयति देहादिभावेनात्मानं
91865 भावयतीति व्युत्पत्त्या वासना प्रकीर्तितेत्यर्थः । तथाच पूर्वापरविचारवतां
91866 जीवन्मुक्तानां देहादिसंस्कारो न वासनाविरोधिविचारास्कन्दितत्वेन् तेषां
91867 देहादिभावेन वासयितुमशक्यत्वादिति भावः ॥ २९ ॥
91868
91869 भावितस्तीव्रसंवेगादात्मना यत्तदेव सः ।
91870 भवत्याशु महाबाहो विगतेतरसंस्मृतिः ॥ ३० ॥
91871
91872 अज्ञात्मनस्तु विरोधाभावात्तीव्रसंवेगभावनादार्ढ्येन [वेग इति पदं
91873 क्वचिन्न पठ्यते] देहादिभावे वासयितुं शक्नोत्येवेत्याशयेनाह -
91874 भावित इति ॥ ३० ॥
91875
91876 तादृग्रूपः स पुरुषो वासनाविवशीकृतः ।
91877 यत्पश्यति तदेतत्तत्सद्वस्त्विति विमुह्यति ॥ ३१ ॥
91878
91879 सा देहादावात्मतामिव बाह्यार्थे सत्तामपि दर्शयतीत्याह - तादृगिति ।
91880 वसतीति वस्तु । तदात्मसत्तया वासयतीति वासनेति व्युत्पत्तेस्तत्रापि संभवादिति
91881 भावः ॥ ३१ ॥
91882
91883 वासनावेगवैवश्यात्स्वरूपं प्रजहाति तत् ।
91884 भ्रान्तं पश्यति दुर्दृष्टिः सर्वं मदवशादिव ॥ ३२ ॥

तत् वासनोपस्थापितं जगद्रूपं सर्वम् ॥ ३२ ॥

असम्यग्ज्ञानवानेव भवत्याधिपरिप्लुतः ।
अन्तस्थया वासनया विषेणेव वशीकृतः ॥ ३३ ॥

त्यक्तपूर्वापरविचारणमित्यस्य व्यावर्त्यमाह - असम्यगित्यादिना ॥ ३३ ॥

असम्यग्दर्शनं यस्मादनात्मन्यात्मभावनम् ।
यदवस्तुनि वस्तुत्वं तच्चित्तं विद्धि राघव ॥ ३४ ॥

सैव चितश्चित्तभावेन [चितः इति मुद्रितपुस्तके न लभ्यते]
वासनाप्रयुक्ता उत्पत्तिरित्याशयेनाह - असम्यगिति ॥ ३४ ॥

दृढाभ्यासपदार्थैकवासनादतिचञ्चलम् ।
चित्तं संजायते जन्मजरामरणकारणम् ॥ ३५ ॥

यदा न वास्यते किंचिद्धेयोपादेयरूपि यत् ।
स्थीयते सकलं त्यक्त्वा तदा चित्तं न जायते ॥ ३६ ॥

अत-एव वासनानाशाच्चितः स्वास्थ्यलक्षणा मुक्तिरित्याह - यदेति । न
वास्यते न सत्तां प्राप्यते ॥ ३६ ॥

अवासनत्वात्सततं यदा न मनुते मनः ।
अमनस्ता तदोदेति परमोपशमप्रदा ॥ ३७ ॥

यदा किंचिन्न संवित्तौ स्फुरत्यभ्रमिवाम्बरे ।
तदा पद्म इवाकाशे चित्तमन्तर्न जायते ॥ ३८ ॥

आकाशे पद्ममिव अन्तः चिति चित्तं न जायते ॥ ३८ ॥

यदा न भाव्यते भावः क्वचिज्जगति वस्तुनि ।
तदा हृदम्बरे शून्ये कथं चित्तं प्रजायते ॥ ३९ ॥

एतावन्मात्रकं मन्ये रूपं चित्तस्य राघव ।
यद्भावनं वस्तुनोऽन्तर्वस्तुत्वेन रसेन च ॥ ४० ॥

रसेन रागेण ॥ ४० ॥

न किंचित्कल्पनायोग्यं दृश्यं भावयतस्ततः ।
आकाशकोशस्वच्छस्य कुतश्चित्तोदयो भवेत् ॥ ४१ ॥

कल्पनाया युक्तिभिः समर्थनाया अयोग्यम् ॥ ४१ ॥

यदभावनमास्थाय यदभावस्य भावनम् ।
यद्यथावस्तुदर्शित्वं तदचित्तत्वमुच्यते ॥ ४२ ॥

इदानीमचित्ततां लक्षयति - यदिति । अभावनं बाह्यार्थास्मरणं
निरोधयोगमस्थाय सर्वदृश्यमार्जनलक्षणस्य अभावस्य यत्संपादकं
परमार्थात्मदर्शनाविर्भूतस्वरूपं तदित्यर्थः ॥ ४२ ॥

सर्वमन्तः परित्यज्य शीतलाशयवर्ति यत् ।

91937 वृत्तिस्थमपि तच्चित्तमसद्रूपमुदाहृतम् ॥ ४३ ॥
91938
91939 तर्हि जीवन्मुक्तानां सवृत्तिके चित्ते सति कथमचित्तत्वं तत्राह - सर्वमिति ।
91940 नहि दग्धपटाभासेन सपटत्वं वक्तुं शक्यमिति भावः ॥ ४३ ॥
91941
91942 वासनाया रसाध्यानाद्रागो यस्य न विद्यते ।
91943 तस्य चित्तमचित्तत्वं गतं सत्त्वं तदुच्यते ॥ ४४ ॥
91944
91945 विषयरसानामाध्यानप्रयुक्तो रागो रञ्जना । पटभस्मेव
91946 परिशिष्टमधिष्ठानं सत्त्वं तदुच्यत इत्यर्थः ॥ ४४ ॥
91947
91948 घना न वासना यस्य पुनर्जननकारिणी ।
91949 जीवन्मुक्तः स सत्त्वस्थश्चक्रभ्रमवदास्थितः ॥ ४५ ॥
91950
91951 तर्हि जीवन्मुक्तः कथं व्यवहारमास्थित इति
91952 चेत्कृतकार्यकुलालचक्रभ्रमवदित्याह - घनेति ॥ ४५ ॥
91953
91954 भृष्टबीजोपमा येषां पुनर्जननवर्जिता ।
91955 वासनारसनिर्हीना जीवन्मुक्ता हि ते स्थिताः ॥ ४६ ॥
91956
91957 सत्त्वरूपपरिप्राप्तचित्तास्ते ज्ञानपारगाः ।
91958 अचित्ता इति कथ्यन्ते देहान्ते व्योमरूपिणः ॥ ४७ ॥
91959
91960 देहान्ते प्रारब्धक्षये । तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये इति
91961 श्रुतेरिति भावः ॥ ४७ ॥
91962
91963 द्वे बीजे राम चित्तस्य प्राणस्पन्दनवासने ।
91964 एकस्मिंश्च तयोः क्षीणे क्षिप्रं द्वे अपि नश्यतः ॥ ४८ ॥
91965
91966 ननु वासनाबीजनाशेपि बीजान्तराच्चित्तोदयः किं न स्यात्तत्राह - द्वे इति ॥ ४८ ॥
91967
91968 मिथः कारणमेते हि बीजे जन्मनि चेतसः ।
91969 जलाङ्गीकरणे राम जलाशयघटाविव ॥ ४९ ॥
91970
91971 चेतसो जन्मनि एते मिथो मिलिते कारणं नैकैकमित्यर्थः । यथा घटाकाशेन
91972 जलाङ्गीकरणे जलाशयो घटश्च मिलितौ कारणं नैकैकं तद्वत् ॥ ४९ ॥
91973
91974 घना न वासना यस्य पुनर्जननकारिणी ।
91975 बीजाङ्कुरवदेते हि संस्थिते तिलतैलवत् ॥ ५० ॥
91976
91977 घना वासना एकैव आयस्य बलात्कृत्य पुनर्जननकारिणी नेत्यर्थः । बीजं
91978 तस्यापि किं भवेदिति चतुर्थप्रश्नस्याप्युत्तरमनवस्थां परिहरन्नाह -
91979 बीजाङ्कुरवदिति । एते प्राणस्पन्दनवासने तिलेषु तैलवत्परस्परान्त स्थे तथा
91980 बीजाङ्कुरन्यायेन कालाकाङ्क्षिक्रमे परस्परस्य कारणे इति परेणान्वयः ॥ ५०
91981 । ।
91982
91983 अविनाभाविनी नित्यं कालाकाङ्क्षिक्रमे तथा ।
91984 सर्वमुत्पादयत्येतच्चित्तकः संविदात्मकः ॥ ५१ ॥
91985
91986 एवं चित्तस्यापि तदुभय प्रति इन्द्रियसुखदुःखादिकं च प्रति कारणनास्तीत्याह
91987 - सर्वमिति ॥ ५१ ॥
91988

91989 यथाप्राणेन्द्रियानन्दमानन्दपवनावुभौ ।
91990 चित्तस्योत्पादिके सार्धं यदैते वासने तदा ॥ ५२ ॥
91991
91992 यथाक्रमं प्रथमं प्राणं तत इन्द्रियाणि ततस्तत्प्रयुक्तमानन्दमिति
91993 सर्वमित्यर्थः । एवं पूर्वोपभुक्तस्य विषयानन्दस्य तात्कालिकजीवनलक्षणस्य
91994 पवनस्पन्दस्य च वासनात्मनापि चित्तोत्पादकत्वमस्तीत्याह -
91995 आनन्दपवनाविति । यदा आनन्दपवनावुभौ वासने संपन्ने तदा सार्धं
91996 मिलित्वा चित्तस्योत्पादिके इत्यन्वयः ॥ ५२ ॥
91997
91998 आमोदपुष्पवत्तैलतिलवच्च व्यवस्थिते ।
91999 वासनावशतः प्राणस्पन्दस्तेन च वासना ॥ ५३ ॥
92000
92001 अतः परस्पराश्रयत्वं परस्परहेतुत्वं चानयोरुपपन्नमिति
92002 नानवस्थादोषप्रसक्तिरित्याशयेनोक्तमेव पुनराह - आमोदेत्यादि ॥ ५३ ॥
92003
92004 जायते चित्तबीजस्य तेन बीजाङ्कुरक्रमः ।
92005 वाअनोत्प्लवमानत्वात्संवित्प्रक्षोभकर्मणा ॥ ५४ ॥
92006
92007 बीजाङ्कुरक्रमो जायते । उपपन्न इति यावत् । उभयोश्चित्तोत्पादकत्वप्रकारं
92008 दर्शयति - वासनेति ॥ ५४ ॥
92009
92010 प्राणस्पन्दं बोधयति तेन चित्तं प्रजायते ।
92011 प्राणः स्पन्दनधर्मित्वात्स्पन्दते स्पृष्टहृद्गुणः ॥ ५५ ॥
92012
92013 स्पृष्टा नुन्ना हृद्गुणा रागादिवासना येन ॥ ५५ ॥
92014
92015 संविदं बोधयंस्तेन चित्तबालः प्रजायते ।
92016 एवं हि वासनाप्राणस्पन्दौ द्वौ तस्य कारणम् ॥ ५६ ॥
92017
92018 तयोरेकक्षये नाशो द्वयोश्चित्तस्य राघव ।
92019 सुखदुःखमनःस्पन्दं शारीरकबृहत्फलम् ॥ ५७ ॥
92020
92021 अत-एव एकस्मिंश्च तयोः क्षीणे इति प्रागुक्तमुपपन्नमित्याह - तयोरिति ।
92022 द्वयोस्तत्कार्यचित्तस्य च नाश इत्यर्थः । चित्तमेव वृक्षत्वेन वर्णयंस्तस्य
92023 वासनाक्षयादुन्मूलनमाह - सुखेत्यादिना । सुखदुःखाकुलं मननं
92024 मनस्तदेव स्पन्दो यस्य । शरीरमेव शारीरकम् ॥ ५७ ॥
92025
92026 कार्यपल्लविताकारं कृतिव्रततिवेष्टितम् ।
92027 तृष्णाकृष्णाहिवलितं रागरोगब्कालयम् ॥ ५८ ॥
92028
92029 अज्ञानमूलं सुदृढं लीनेन्द्रियविहंगमम् ।
92030 वासना क्षयमानीता चित्तवृक्षं क्षणेन हि ॥ ५९ ॥
92031
92032 क्षयमानीता वासना ईदृशं चित्तवृक्षं क्षणेन प्रपातयतीति
92033 परेणान्वयः ॥ ५९ ॥
92034
92035 प्रपातयति वातौघः कालपक्कफलं यथा ।
92036 पाण्डुरीकृतसर्वाशं स्थगिताखिलदर्शनम् ॥ ६० ॥
92037
92038 तदेव चित्तं वात्यारजःपुञ्जत्वेन रूपयंस्तस्य पवननिरोधादिव
92039 प्राणस्पन्दनिरोधात्प्रविलयं दर्शयति - पाण्डुरीकृतेत्यादिना ।
92040 पाण्डुरीकृतेत्यादिविशेषणानि श्लेषादिना उभयत्र योज्यानि । आशा दिशः

92041 उपचारा तृष्णावन्तश्च। स्थगितमाच्छादितमखिलदर्शनं पूर्णचिद्रूपं
92042 सर्वजननेत्रं च येन ॥ ६० ॥
92043
92044 विलोलजलदाकारमज्ञानावकरोत्थितम्।
92045 तृष्णातृणलवव्याप्तं स्तम्भाकृति शरीरकम् ॥ ६१ ॥
92046
92047 अवकर उत्करः। स्तम्भप्रायं शरीरकं प्रसिद्धं वात्यासंस्थानं च यस्य
92048 ॥ ६१ ॥
92049
92050 स्फुरत्तनु तनुक्षुब्दं सुखमुत्प्लवनं प्रति।
92051 अन्तःस्थितमहालोकमपश्यत्प्रविलीयते ॥ ६२ ॥
92052
92053 स्फुरद्भिस्तनुतनुभिरल्पाल्पैर्वृत्तिभेदैर्वात्यापोतैश्च क्षुब्धम्। सर्वदिक्षु
92054 उत्प्लवनं प्रति सुखं अनायासदक्षम्। अन्तः स्थितं महालोकं ब्रह्म
92055 सौरालोकं च अपश्यत् द्रष्टुमक्षमम्। ईदृशं चित्तवात्यारजः
92056 पवनस्पन्दरोधात् क्षणात्प्रविलीयत इत्यन्वयः ॥ ६२ ॥
92057
92058 पवनस्पन्दरोधाच्च राम चित्तरजः क्षणात्।
92059 वासनाप्राणपवनस्पन्दयोरनयोर्द्वयोः ॥ ६३ ॥
92060
92061 बीजान्तरमप्याह - वासनेति ॥ ६३ ॥
92062
92063 संवेद्यं बीजमित्युक्तं स्फुरतस्तौ यतस्ततः।
92064 हृदि संवेद्यमाप्यैव प्राणस्पन्दोऽथ वासना ॥ ६४ ॥
92065
92066 संवेद्यं प्रियाप्रियं शब्दादि। आप्य स्मृत्वा ॥ ६४ ॥
92067
92068 उदेति तस्मात्संवेद्यं कथितं बीजमेतयोः।
92069 संवेद्यसंपरित्यागात्प्राणस्पन्दनवासने ॥ ६५ ॥
92070
92071 समूलं नश्यतः क्षिप्रं मूलच्छेदादिव द्रुमः।
92072 संविदं विद्धि संवेद्यं बीजं धीरतया विना ॥ ६६ ॥
92073
92074 संविदभेदभावनमेव संवेद्यपरित्याग इत्याह - संविदमिति।
92075 तदेवोपपादयति - बीजमित्यादिना। संविदेव स्वीयां धीरतां परित्यज्य
92076 संवेद्यमिव संपन्नं सत् चित्तबीजम् ॥ ६६ ॥
92077
92078 न संभवति संवेद्यं तैलहीनस्तिलो यथा।
92079 न बहिर्नान्तरे किंचित्संवेद्यं विद्यते पृथक् ॥ ६७ ॥
92080
92081 नहि संविदं विना संवेद्यं संभवति। प्रसिद्ध्यतीत्यर्थः ॥ ६७ ॥
92082
92083 संवित्स्फुरन्ती संकल्पात्संवेद्यं पश्यति स्वतः।
92084 स्वप्ने यथात्ममरणं तथा देशान्तरस्थितिः ॥ ६८ ॥
92085
92086 चार्थे तथाशब्दः। यथा स्वप्ने आत्मनो मरणं देशान्तरस्थितिश्च
92087 स्वचमत्कारयोगेनैव। जाग्रत्संवेद्यमपि संविदस्तथेत्युत्तरत्रान्वयः ॥ ६८ ॥
92088
92089 स्वचमत्कारयोगेन संवेद्यं संविदस्तथा।
92090 स्ववेदनं स्वसंकल्पात्संविदो यत्र वर्तते ॥ ६९ ॥
92091
92092 यत्र यस्यां विवेकदशायां स्वतत्त्ववेदनं वर्तते तत् स्वसंवेदनमपि

92093 स्वसंकल्पादिजन्यं तथा स्वप्नवदेव | नह्यद्वये स्वसंवेदनं
92094 विवेकविचारादयो वा परमार्थतः संभवन्तीति || ६९ ||
92095
92096 जगज्जालमतो भाति तदिदं रघुनन्दन |
92097 यथा बालस्य वेतालः स्वसंकल्पोद्भवाद्भवेत् [ससङ्कल्पोद्भवात् इति
92098 पाठः] || ७० ||
92099
92100 स्वसंकल्पोद्भवाद्भ्रमात् || ७० ||
92101
92102 पुरुषत्वं यथा स्थाणोः संवेद्यं संविदस्तथा |
92103 यथा चन्द्रार्करश्मीनां दण्डता रेणुता तथा || ७१ ||
92104
92105 चन्द्रार्करश्मीनां वातायनप्रविष्टानां दण्डाकारता तदन्तरे
92106 भ्रमत्त्रसरेण्वाकारता च भवेत्तथा || ७१ ||
92107
92108 यथा नौस्थाचलस्पन्दः संवेद्यं संविदस्तथा |
92109 एतन्मिथ्या हि दुर्ज्ञानं सम्यग्ज्ञानाद्विलीयते || ७२ ||
92110
92111 दुर्ज्ञानं भ्रान्तिज्ञानम् | विलीयते बाध्यते || ७२ ||
92112
92113 रज्ज्वामिव भुजङ्गत्वं द्वीन्दुत्वं स्वीक्षितादिव |
92114 शुद्धैव संवित्त्रिजगत्संवेद्यं नान्यदस्त्यलम् || ७३ ||
92115
92116 स्वीक्षितान्निर्दोषदर्शनादिव | सम्यग्ज्ञानं तर्हि कीदृशं तदाह -
92117 शुद्धैवेति || ७३ ||
92118
92119 इत्यन्तर्निश्चयो रूढः सम्यग्ज्ञानं विदुर्बुधाः |
92120 पूर्वं दृष्टमदृष्टं वा यदस्याः प्रतिभासते || ७४ ||
92121
92122 तेन संमार्जनीयं यत्तद्दर्शयति - पूर्वमिति || ७४ ||
92123
92124 संविदस्तत्प्रयत्नेन मार्जनीयं विजानता |
92125 तदमार्जनमात्रं हि महासंसारसंगतम् || ७५ ||
92126
92127 महता संसारेण संगतं संबन्ध आत्मनः || ७५ ||
92128
92129 तत्प्रमार्जनमात्रं तु मोक्ष इत्यनुभूयते |
92130 संवेदनमनन्ताय दुःखाय जननात्मने || ७६ ||
92131
92132 संवेदनं वेद्यदर्शनम् | जननात्मने जन्मादिरूपाय दुःखाय || ७६ ||
92133
92134 असंवित्तिरजाड्यस्था सुखायाजननात्मने |
92135 अजडो गलितानन्दस्त्यक्तसंवेदनो भव |
92136 असंवेद्यप्रबुद्धात्मा यस्तु स त्वं रघूद्वह || ७७ ||
92137
92138 असंवित्तिर्वेद्यादर्शनं अजाड्ये चिदेकरसस्वभावे प्रतिष्ठिता अजननात्मने
92139 नित्यात्मस्वरूपाय यतो भवति अतस्त्वमपि त्यक्तसंवेदनः सन् अजडः गलित
92140 एकरसीभूतः पूर्णानन्दो भवेत्यर्थः | यः असंवेद्योऽपि स्वतः प्रबुद्ध
92141 आत्मा स एव त्वं भवसि नान्यः || ७७ ||
92142
92143 श्रीराम उवाच |
92144

92145 अजडश्चाप्यसंवित्तिः कीदृशो भवति प्रभो |
92146 असंवित्तौ च जाड्यं तत्कथं वा विनिवर्तते || ७८ ||
92147
92148 जाड्यत्यागे संवेदनपरिशेषः संवेदनत्यागे जाड्यपरिशेषो वा
92149 अवश्यंभावीत्यजडः असंवित्तिश्चेति विरुद्धस्वभाव एकः कथं भवतीति
92150 प्रश्नः | विरोधमेव स्फुटीकृत्य दर्शयति - असंवित्ताविति || ७८ ||
92151
92152 श्रीवसिष्ठ उवाच |
92153
92154 यः सर्वत्रानवस्थास्थो विश्रान्तास्थो न कुत्रचित् |
92155 जीवो न विन्दते किंचिदसंविदजडो हि सः || ७९ ||
92156
92157 सं सत्यतया बाह्यार्थवेदनं संविदिति
92158 व्युत्पत्तेर्बाधिताअर्थाभासैर्व्यवहाराभासं दर्शयन्नपि जीवन्मुक्तजीवः
92159 सर्वत्र वर्तमानविषये अनवस्थितास्थः कुत्रचित् अतीतानागतविषये च
92160 वासनाक्षयान्न विश्रान्तास्थ इति न किंचिद्वेद्यं विन्दत इति तदंशे
92161 काष्ठलोष्टवदसंविदित्युच्यते | स्वतस्तु
92162 स्वप्रकाशचिदेकरसपूर्णत्वादजडश्चेत्यर्थः || ७९ ||
92163
92164 संविद्वस्तुदृशालम्बः स यस्येह न विद्यते |
92165 सोऽसंविदजडः प्रोक्तः कुर्वन्कार्यशतान्यपि || ८० ||
92166
92167 संविच्छब्दस्य उक्तां व्युत्पत्तिं दर्शयन्नुक्तमेव समर्थयति - संविदिति
92168 | वस्तुदृशा सत्यत्वबुद्ध्या चितो बाह्यार्थालम्बनमेव संविदित्युच्यत
92169 इत्यर्थः | एतेन सर्वत्रानवस्थास्थ इति पदस्य तात्पर्यमुद्घाटितम् || ८० ||
92170
92171 संवेद्येन हृदाकाशो मनागपि न लिप्यते |
92172 यस्यासावजडा संविज्जीवन्मुक्तश्च कथ्यते || ८१ ||
92173
92174 विश्रान्तास्थो न कुत्रचिदित्यस्याप्यतीतविषये तात्पर्यमुद्घाटयंस्तदेवाह ##-
92175
92176 यदा न भाव्यते किंचिन्निर्वासनतयात्मनि |
92177 बालमूकादिविज्ञानमिव च स्थीयते स्थिरम् || ८२ ||
92178
92179 अनागतविषयेऽपि तस्य तमुद्घाटयति - यदेति द्वाभ्याम् || ८२ ||
92180
92181 तदा जाड्यविनिर्मुक्तमच्छवेदनमाततम् |
92182 आश्रितं भवति प्राज्ञो यस्माद्भूयो न लिप्यते || ८३ ||
92183
92184 समस्तवासनात्यागी निर्विकल्पसमाधितः |
92185 नीलत्वमिव खात्स्फार आनन्दः संप्रवर्तते || ८४ ||
92186
92187 शङ्कां समाधाय प्रकृतं समर्थयन्नाह - समस्तेति || ८४ ||
92188
92189 योगिनस्तत्र तिष्ठन्ति संवेदनमसंविदः |
92190 तन्मयत्वादनाद्यन्तं तदप्यन्तर्विलीयते || ८५ ||
92191
92192 नन्वन्याकारसंवेदनाभावेपि ब्रह्माकारवृत्तिरूपं संवेदनं
92193 समाधावपि दुर्वारमिति कथमसंवित्त्वं तत्राह - तन्मयत्वादिति |
92194 अनाद्यन्तमपरिच्छिन्नब्रह्माकारं तत्संवेदनमपि स्वेद्धेन ब्रह्मज्योतिषा
92195 बाध्यमानं तदन्तरेव विलीयत इत्यर्थः || ८५ ||
92196

92197 गच्छंस्तिष्ठन्स्पृशञ्जिघ्रन्नपि तेन स उच्यते।
92198 अजडो गलितानन्दस्त्यक्तसंवेदनः सुखी॥ ८६॥
92199
92200 एतां दृष्टिमवष्टभ्य कष्टया यत्नचेष्टया।
92201 तर दुःखाम्बुधेः पारमपारगुणसागर॥ ८७॥
92202
92203 कष्टया प्राणायामादिश्रमसाध्यया॥ ८७॥
92204
92205 यथा बीजाद्बृहद्वृक्षो व्योम व्याप्नोति कालतः।
92206 तथैवेदं स्वसंकल्पात्संवेद्यमसदुत्थितम्॥ ८८॥
92207
92208 चिदात्मा स्वात्मनः स्वयमेव मिथ्याभूतं बन्धं मोक्षं कल्पयतीत्याह
92209 - यथेत्यादिना॥ ८८॥
92210
92211 यदा संकल्प्य संकल्प्य संवित्स्वं विन्दते वपुः।
92212 तदास्य जन्मजालस्य सैव गच्छति बीजताम्॥ ८९॥
92213
92214 कदा कथमुत्थितं तदाह - यदेति। संकल्प्य संकल्प्य पुनःपुनः
92215 संकल्पं कृत्वा स्वं सांकल्पिकं वपुः स्वरूपं यदा विन्दते तदा॥ ८९॥
92216
92217 जनयित्वात्मनात्मानं मोहयित्वा पुनःपुनः।
92218 स्वयं मोक्षं नयत्यन्तः संवित्स्वं विद्धि राघव॥ ९०॥
92219
92220 अन्तः हृदिस्थं आत्मतत्त्वं वेत्तीति वित् पश्यत्सत् स्वयं कं मोक्षं नयति।
92221 हीति विद्वदनुभवप्रसिद्धौ॥ ९०॥
92222
92223 यदेव भावयत्येषा तदेव भवति क्षणात्।
92224 न भवद्भूमिकामुक्ता समायाति चिराद्वपुः॥ ९१॥
92225
92226 तर्हि इदानीमेव सर्वेषां संवित् स्वात्मभावनया स्वस्वरूपं स्वैरं कुतो
92227 नायाति तत्राह - नेति। भवन्तीति भवन्तो रागादयस्तद्भूमिकाभ्यः अमुक्ता
92228 सती चिरादपि स्वं वपुर्नायाति॥ ९१॥
92229
92230 देवो नासौ सुरो रक्षो यक्षः किं किन्नरो जनः।
92231 आत्मैवाद्यविलासिन्या जगन्नाट्यं प्रनृत्यति॥ ९२॥
92232
92233 अत-एवास्य देवगन्धर्वादयः कल्पितवेषा न वास्तवा इत्याह - देव इति।
92234 आद्यया आदिसिद्धया विलासिन्या स्वमायया॥ ९२॥
92235
92236 बद्ध्वात्मानं रुदित्वा च कोशकारकृमिर्यथा।
92237 चिरात्केवलतामेति स्वयं संवित्स्वभावतः॥ ९३॥
92238
92239 यथा मायावी नटः आत्मानं बध्नन्निव मोचयन्निव दर्शयति तद्वदित्याह
92240 - बद्ध्वेति॥ ९३॥
92241
92242 जगज्जलधिजालानां संविज्जलमलं गता।
92243 एषैवापूर्वदिक्चक्रं स्फुरत्यद्र्यादितां गता॥ ९४॥
92244
92245 अलं पर्याप्तिं गता संविदेव जगज्जलधिजालानां जलम्। अपूर्वं दिक्चक्रं
92246 दिङ्गाण्डलमप्येषैव। अद्र्यादितां पर्वतादिभावमेषैव गता॥ ९४॥
92247
92248 द्यौः क्ष्मा वायुराकाशं पर्वताः सरितो दिशः।

92249 इत्यस्या वीचयः प्रोक्ताः संवित्सलिलसंततेः ॥ ९५ ॥
92250
92251 संविन्मात्रं जगत्सर्वं द्वितीया नास्ति कल्पना।
92252 इत्येव सम्यग्ज्ञानेन संविद्गच्छति नान्यताम् ॥ ९६ ॥
92253
92254 नान्यतामनन्यतामद्वयतामित्यर्थः ॥ ९६ ॥
92255
92256 यदा न विन्दते किंचित्स्पन्दते न न वेपते।
92257 स्वात्मन्येव स्थितिं याति संविन्नो लिप्यते तदा ॥ ९७ ॥
92258
92259 कदास्याः सम्यग्ज्ञानं भवति तत्राह - यदेति। किंचिच्चलनं स्पन्दः
92260 सम्यक्कम्पनं वेपनमिति भेदः ॥ ९७ ॥
92261
92262 अथास्याः संविदो राम सन्मात्रं बीजमुच्यते।
92263 संविन्मात्रादुदेत्येषा प्राकाश्यमिव तेजसः ॥ ९८ ॥
92264
92265 एवं परिशोध्य परिशेषिता संविदन्तःकरणप्रतिबिम्बसंविदेवेति
92266 श्रोतृणां भ्रान्तिं वारयन्नग्निविस्फुलिङ्गन्यायेन तद्बीजभूतां
92267 सन्मात्ररूपां ब्रह्मसंविदं दर्शयति - अथेति। एषा प्रतिबिम्बसंवित्
92268 बिम्बभूतात्संविन्मात्ररूपाद्ब्रह्मणः सकाशादुदेति। यथा सूर्यादितेजसः
92269 सकाशात्प्रकाश एव प्राकाश्यं प्रभा उदेति तद्वत् ॥ ९८ ॥
92270
92271 द्वे रूपे तत्र सत्ताया एकं नानाकृति स्थितम्।
92272 द्वितीयमेकरूपं तु विभागोऽयं तयोः शृणु ॥ ९९ ॥
92273
92274 सन्मात्रमित्युक्ते अर्थक्रियासामर्थ्यलक्षणं घटपटादिनिष्ठं
92275 व्यावहारिकसत्त्वमेव तद्बीजं दर्शितमिति भ्रान्तिर्मा भूदिति तद्विलक्षणं
92276 दर्शयितुं सत्ताद्वैविध्यमाह - द्वे रूपे इत्यादिना ॥ ९९ ॥
92277
92278 घटता पटता चैव त्वत्ता मत्तेति कथ्यते।
92279 सत्तारूपविभागेन यत्तन्नानाकृति स्थितम् ॥ १०० ॥
92280
92281 घटत्वपटत्वादयस्त्वत्तामत्ताद्युपाधयश्चार्थक्रियाभेदेषु
92282 स्वरूपयोग्यतालक्षणा व्यावहारिकसत्ताविशेषा एवेत्याशयः ॥ १०० ॥
92283
92284 विभागं तु परित्यज्य सत्तैकात्मतया ततम्।
92285 सामान्येनैव सत्ताया रूपमेकमुदाहृतम् ॥ १०१ ॥
92286
92287 सामान्येन सर्वजगदधिष्ठानतालक्षणेन साधारणस्वभावेनैव ॥ १०१ ॥
92288
92289 विशेषं संपरित्यज्य सन्मात्रं यदलेपकम्।
92290 एकरूपं महारूपं सत्तायास्तत्पदं विदुः ॥ १०२ ॥
92291
92292 पदं वस्तुतत्त्वम् ॥ १०२ ॥
92293
92294 रूपं नानाकृतित्वेन सत्ताया न कदाचन।
92295 असंवेद्यं संभवति तस्मादेतदवस्तुकम् ॥ १०३ ॥
92296
92297 व्यावहारिकसत्त्वं तु न वास्तवमित्याह - रूपमिति। यतस्तद्घटत्वादिरूपं
92298 कपालचूर्णधूल्याद्यवस्थास्वसंवेद्यं नानुवर्तमानतया दृश्यते अतः
92299 सत्यं न संभवतीत्यर्थः ॥ १०३ ॥
92300

92301 एकरूपं तु यद्रूपं सत्ताया विमलात्मकम् ।
92302 न कदाचन तद्याति नाशं नापि च विस्मृतिम् ॥ १०४ ॥
92303
92304 सर्वावस्थानुगतं तु सद्रूपं न तथेत्याह - एकरूपमिति । नापि च
92305 विस्मृतिमित्यनेन तस्य सदा स्फुरद्रूपतया नित्यचिदेकरसता दर्शिता ॥ १०४ ॥
92306
92307 कालसत्ता कलासत्ता वस्तुसत्तेयमित्यपि ।
92308 विभागकलनां त्यक्त्वा सन्मात्रैकपरो भव ॥ १०५ ॥
92309
92310 अतीतानागतेष्वस्तीति व्यवहारादर्शनाद्वर्तमानकाल एव सर्ववस्तूनां सत्तेति
92311 केचित् । अवयवानामेव पुञ्जीभूयावयव्याकारेण स्फुरणात्कला अवयवा एव
92312 परमाणुरूपा जगत्सत्तेत्यपरे । अवयविष्वप्यनुगता सत्ता जातिरन्यास्तीत्यपरे ।
92313 एवमन्येऽप्यन्यथान्यथा स्वस्वबुद्ध्यनुसारेण कल्पयन्ति तत्कल्पितां
92314 विभागकलनामित्यर्थः ॥ १०५ ॥
92315
92316 कालसत्ता स्वसत्ता च प्रोन्मुक्तकलना सती ।
92317 यद्यप्युत्तमसद्रूपा तथाप्येषा न वास्तवी ॥ १०६ ॥
92318
92319 यद्यपि सर्वं जगदिव कालादिसत्ताप्यध्यस्तभेदकलनात्यागे
92320 सन्मात्रपरिशेषादुत्तमसत्तैव तथापि विभक्तरूपेण बाधार्हत्वान्न
92321 वास्तवीत्यर्थः ॥ १०६ ॥
92322
92323 विभागकलना यत्र विभिन्नपददायिनी ।
92324 नानाताकारणं दृष्ट्वा तत्कथं पावनं भवेत् ॥ १०७ ॥
92325
92326 सत्तासामान्यमेवैकं भावयत्सकलं वपुः ।
92327 परिपूर्णपरानन्दी तिष्ठाभरितदिग्भरः ॥ १०८ ॥
92328
92329 आ समन्ताद्भरिताः पूरिता दिग्भरा दिशस्तदाधेयसर्वपदार्थाश्च येन
92330 सत्तासामान्यरूपेण तथाविधः सन् ॥ १०८ ॥
92331
92332 सत्ता सामान्यमात्रस्य या कोटिः कोविदेश्वर ।
92333 सैवास्य बीजतां याता तत एव प्रवर्तते ॥ १०९ ॥
92334
92335 सामान्यमात्रस्य कोटिः परमावधिभूता या सत्ता सैव अस्य जगतः
92336 प्रतिबिम्बचितश्च बीजतां याता ॥ १०९ ॥
92337
92338 सत्तासामान्यपर्यन्ते यत्तत्कलनयोज्झितम् ।
92339 पदमाद्यमनाद्यन्तं तस्य बीजं न विद्यते ॥ ११० ॥
92340
92341 सत्तासामान्यस्य सर्वसत्तानां पर्यन्ते परावधौ ॥ ११० ॥
92342
92343 सत्ता लयं याति यत्र निर्विकारं च तिष्ठति ।
92344 भूयो नावर्तते दुःखे तत्र लब्धपदः पुमान् ॥ १११ ॥
92345
92346 सत्ता सद्धर्मतापि यत्र धर्मधर्मिविभागविलयाल्लयं याति तत्र लब्धपदो यो
92347 भवति स एव पुरुषार्थसाधनसमर्थत्वात्पुमान् । अन्यस्तु स्त्रीप्राय इति भावः ॥
92348 १११ ॥
92349
92350 तद्धेतुः सर्वहेतूनां तस्य हेतुर्न विद्यते ।
92351 संसारः सर्वसाराणां तस्मात्सारं न विद्यते ॥ ११२ ॥
92352

92353 तदेव परमपुरुषार्थतां दर्शयितुं प्रशंसति - तदित्यादिना ॥ ११२ ॥
92354
92355 तस्मिंश्चिद्दर्पणे स्फारे समस्ता वस्तुदृष्टयः ।
92356 इमास्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमाः ॥ ११३ ॥
92357
92358 सर्वे भावा इमे तत्र स्वदन्ते साधुवारिधेः [अत्र स्वादुवारिधेः इति
92359 टीकाकृदभिमतः पाठः स एव समीचीनः] ।
92360 षड्रसा इव जिह्वायाः प्रकटत्वं प्रयान्ति च ॥ ११४ ॥
92361
92362 तत्र तस्मिन्प्रत्यग्रूपे अध्यस्तत्वात्स्वदन्ते इन्द्रियप्रीतिं जनयन्ति ।
92363 स्वादुवारिधेरानन्दसमुद्रात्तस्मादेव । प्रकटत्वं सत्तां स्फुर्तिं च ॥ ११४ ॥
92364
92365 तस्मादच्छतरस्यापि चिदाकाशस्य वै पदम् ।
92366 सर्वेषां स्वादुजातीनामलमास्वादनं च तत् ॥ ११५ ॥
92367
92368 यस्मादस्वादुभूता अपि विषयास्तद्योगात्स्वदन्ते तस्मात्कारणात्तच्चिदाकाशस्य
92369 पदं स्वरूपं सर्वेषां स्वादुजातीनामानन्दानां प्रियाणां च मध्ये
92370 अलमत्यन्तमास्वादनमानन्दरूपं प्रियतमं चेत्यर्थः ॥ ११५ ॥
92371
92372 जायते वर्तते चैव वर्धते स्पृश्यतेऽथ वा ।
92373 तिष्ठन्ति च गलन्तीह तत्राङ्ग जगतां गणाः ॥ ११६ ॥
92374
92375 तस्मिन्नेव आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते । आनन्देन जातानि जीवन्ति ।
92376 आनन्दं प्रयन्त्यभिसंविशन्तीति
92377 श्रुत्युक्तजगज्जन्मादिकारणत्वलक्षणसमन्वयं दर्शयति - जायते इति ।
92378 वर्तते अस्ति स्पृश्यते विपरिणामेन । तिष्ठन्त्यपक्षयोन्मुखाः । श्रुतौ
92379 जन्मादित्रयग्रहणं षड्भावविकारोपलक्षणमित्याशयः ॥ ११६ ॥
92380
92381 तत्तद्गुरु गरिष्ठानां तत्तल्लघु लघीयसाम् ।
92382 तत्तत्स्थूलं स्थविष्ठानामणीयस्तदणीयसाम् ॥ ११७ ॥
92383
92384 गुरुलध्वादिवैचित्र्यस्यापि तदेव निर्वाहकमित्याशयेनाह - तत्तदिति ।
92385 द्वितीयास्तच्छब्दाः प्रसिद्धिपराः ॥ ११७ ॥
92386
92387 दवीयसां दविष्ठं तदन्तिकानां तदन्तिकम् ।
92388 कनीयसां कनीयस्तत्तज्ज्येष्ठं ज्यायसामपि ॥ ११८ ॥
92389
92390 दवीयसां दूरतराणां दविष्ठं दूरतमम् । दूरशब्दादिष्ठेयसुनोः
92391 स्थूलदूर - इत्यादिना यणादिपरलोपः पूर्वस्य गुणश्च । एवं युवाल्पयोः
92392 कन् प्रशस्यवृद्धयोर्ज्यादिशः ॥ ११८ ॥
92393
92394 तेजसामपि तत्तेजस्तमसामपि तत्तमः ।
92395 वस्तूनामपि तद्वस्तु दिशामप्यङ्ग दिक्परा ॥ ११९ ॥
92396
92397 तन्न किंचिच्च किंचिच्च तत्तदस्तीव नास्ति च ।
92398 तत्तद्दृश्यमदृश्यं च तत्तदस्मि न चास्मि च ॥ १२० ॥
92399
92400 न किंचिल्लोकप्रसिद्धम् । किंचिदल्पतरमपि प्रसिद्धं तदेव । अस्तीव
92401 भावात्मकम् । नास्त्यभावात्मकम् । अस्मि प्रत्यक्तया । न चास्मि अहंतया ।
92402 द्वितीयश्चकारो मम न ममेति चानुक्तसमुच्चयार्थः ॥ १२० ॥
92403
92404 राम सर्वप्रयत्नेन तस्मिन्परमपावने ।

पदे स्थितिमुपायासि यथा कुरु तथानघ ॥ १२१ ॥

यथा उपायासि । वर्तमानसामीप्ये भविष्यति लट् । तथा कुरु ॥ १२१ ॥

तदमलमजरं तदात्मतत्त्वं
तदवगतावुपशान्तिमेति चेतः ।
अवगतविततैकतत्स्वरूपो
भवभयमुक्तपदोऽसि तच्चिराय ॥ १२२ ॥

आत्मनस्तत्त्वं पारमार्थिकरूपं तदेव । तस्य अवगतौ साक्षादनुभवे सति च
तत उपशान्तिं भाधमेति । अतस्त्वं यदा अवगतविततैकतत्स्वरूपो भवसि
तत्तदैव चिराय अपुनरावृत्तये भवभयमुक्तपरमपदस्वरूप
एवासीत्यर्थः ॥ १२२ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे०
मोक्षोपायेषूपशमप्रकरणे संसृतिबीजविचारयोगोपदेशो
नामैकनवतितमः सर्गः ॥ ९१ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
संसृतिबीजविचारयोगोपदेशो नामैकनवतितमः सर्गः ॥ ९१ ॥

## द्विनवतितमः सर्गः ९२

श्रीराम उवाच ।

एतानि तानि प्रोक्तानि त्वया बीजानि मानद ।
कतमस्य प्रयोगेण शीघ्रं तत्प्राप्यते पदम् ॥ १ ॥

इहोक्तस्थितिभेदेषु यत्नगौरवलाघवम् ।
वासनादिक्षयज्ञानसहाभ्यास उदीर्यते ॥ १ ॥

एतानि तानि पूर्वोक्तानि संसृतिव्रततेर्देहादीनि बीजानि त्वयोक्तानि तेषां
कतमस्योपायस्य प्रयोगेण निवृत्त्या परमं पदं प्राप्यते इत्यर्थः । अथवा
एतानि संनिहितानि अथास्याः संविदो राम सन्मात्रं बीजमुच्यते इत्यादिना यानि
भूमिकाभेदरूपाणि मोक्षबीजानि त्वयोक्तानि तेषु कतमस्य प्रयोगेण
आश्रयणेन ॥ १ ॥

श्रीवसिष्ठ उवाच ।

एतेषां दुःखबीजानां प्रोक्तं यद्यन्मयोत्तरम् ।
तस्य तस्य प्रयोगेण शीघ्रमासाद्यते पदम् ॥ २ ॥

तत्र प्रथमव्याख्यानुसारेणोत्तरमाह - एतेषामिति ॥ २ ॥

सत्तासामान्यकोटिस्थे द्रागित्येव पदे यदि ।
पौरुषेण प्रयत्नेन बलात्संत्यज्य वासनाम् ॥ ३ ॥

द्वितीयानुसारेणाप्याह - सत्तेत्यादिना । सत्तासामान्यं
शोधिततत्पदार्थस्तस्य कोटिः पराकाष्ठा तत्स्थे
चिद्रूपशोधितत्वंपदार्थैक्येनाखण्डैकरसे पदे स्थितिं निश्चलतां चित्तस्य
बध्नासि चेदिति परेणान्वयः ॥ ३ ॥

92457
92458 स्थितिं बध्नासि तत्त्वज्ञ क्षणमप्यक्षयात्मिकाम् ।
92459 क्षणेऽस्मिन्नेव तत्साधु पदमासादयस्यलम् ॥ ४ ॥
92460
92461 किं भावनयैव नेत्याह - तत्त्वज्ञेति । तत्त्वतः साक्षात्कृत्येति यावत् ॥ ४ ॥
92462
92463 सत्तासामान्यरूपे वा करोषि स्थितिमङ्ग चेत् ।
92464 तत्किंचिदधिकेनेह यत्नेनाप्नोषि तत्पदम् ॥ ५ ॥
92465
92466 तत्राशक्तावप्याह - सत्तेति । शोधिते जगत्कारणतत्त्वे इत्यर्थः । किंचिदिति ।
92467 अखण्डैक्यबोधे यत्नापेक्षणादिति भावः ॥ ५ ॥
92468
92469 संवित्तत्त्वे कृतध्यानो यदि तिष्ठसि चानघ ।
92470 तद्यत्नेनाधिकेनोच्चैरासादयसि तत्पदम् ॥ ६ ॥
92471
92472 संवित्तत्त्वे शोधितत्वंपदार्थे । समानं पूर्वेण ॥ ६ ॥
92473
92474 संवेद्ये केवले ध्यानं न संभवति राघव ।
92475 सर्वत्र संभवादस्याः संवित्तेरेव सर्वदा ॥ ७ ॥
92476
92477 ननु शोधनेन संविदंशस्य हाने संवेद्यांशस्यैव ध्यानमप्युपायः
92478 किं न स्यादिति चेदशक्यत्वादित्याह - संवेद्ये इति । संवेद्येभ्यः पुरः
92479 स्फुरन्त्याः संविदः पिधातुमशक्यत्वात्तत्पिधाने
92480 संवेद्यस्फूर्तेरेवाभावेन तद्ध्यानायोगाच्चेति भावः ॥ ७ ॥
92481
92482 यच्चिन्तयसि यद्यासि यत्तिष्ठसि करोषि च ।
92483 तत्र तत्र स्थिता संवित्संविदेव तदेव सा ॥ ८ ॥
92484
92485 चिन्तनचिन्तनीयादीनां संविदधीनसिद्धिकत्वं दर्शयति - यदिति ।
92486 यच्चिन्तयसि तत्संविदेव । या चिन्ता सापि संविदेव ।
92487 संवित्तत्त्वकत्वात्सर्वस्येत्यर्थः ॥ ८ ॥
92488
92489 वासनासंपरित्यागे यदि यत्नं करोषि च ।
92490 तत्ते शिथिलतां यान्ति सर्वाधिव्याधयः क्षणात् ॥ ९ ॥
92491
92492 उपायान्तरमाह - वासनेति । चकारान्मनोनाशे च । तत्तर्हि ॥ ९ ॥
92493
92494 पूर्वेभ्यस्तु [पूर्वोक्तेभ्यः प्रयत्नेभ्यो इति टीकाकृत्संमतः
92495 पाठः] प्रयत्नेभ्यो विषमोऽयं हि संस्मृतः ।
92496 दुःसाध्यो वासनात्यागः सुमेरून्मूलनादपि ॥ १० ॥
92497
92498 किमसौ पूर्वोक्तेभ्यः सुगमो नेत्याह - पूर्वोक्तेभ्य इति ॥ १० ॥
92499
92500 यावद्विलीनं न मनो न तावद्वासनाक्षयः ।
92501 न क्षीणा वासना यावच्चित्तं तावन्न शाम्यति ॥ ११ ॥
92502
92503 असुकरत्वमुपपादयितुं परस्पराधीनतामाह - यावदिति ॥ ११ ॥
92504
92505 यावन्न तत्त्वविज्ञानं तावच्चित्तशमः कुतः ।
92506 यावन्न चित्तोपशमो न तावत्तत्त्ववेदनम् ॥ १२ ॥
92507
92508 एवं तत्त्वज्ञानेनापि सह परस्पराश्रयता अनयोरस्तीत्याह - यावदिति ॥ १२ ॥

यावन्न वासनानाशस्तावत्तत्त्वागमः कुतः।
यावन्न तत्त्वसंप्राप्तिर्न तावद्वासनाक्षयः॥ १३॥

तत्त्वज्ञानं मनोनाशो वासनाक्षय एव च।
मिथः कारणतां गत्वा दुःसाध्यानि स्थितान्यतः॥ १४॥

तस्माद्राघव यत्नेन पौरुषेण विवेकिना।
भोगेच्छां दूरतस्त्यक्त्वा त्रयमेतत्समाश्रयेत्॥ १५॥

कस्तर्हि तत्सिद्धावुपाय इति चेद्वैराग्यपूर्वकं सहैव त्रयाणामभ्यास इत्याह
- तस्मादिति॥ १५॥

सर्वथा [सर्व एते इति पाठः] ते समं यावन्न स्वभ्यस्ता
मुहुर्मुहुः।
तावन्न पदसंप्राप्तिर्भवत्यपि समाशतैः॥ १६॥

समं युगपत्। समाशतैर्वर्षशतैः॥ १६॥

वासनाक्षयविज्ञानमनोनाशा महामते।
समकालं चिराभ्यस्ता भवन्ति फलदा मुने॥ १७॥

एकैकशो निषेव्यन्ते यद्येते चिरमप्यलम्।
तन्न सिद्धिं प्रयच्छन्ति मन्त्राः संकीलिता इव॥ १८॥

संकीलिता मूर्च्छामरणादिमन्त्रशास्त्रोक्तदोषैः प्रतिबद्धाः॥ १८॥

चिरकालोपरचिता अप्येते सुधियापि च।
एकशः परमभ्येतुं न शक्ताः सैनिका इव॥ १९॥

उपरचिताः सेवादिना वशीकृत्य स्वकार्ये उद्योजिताः। परं शत्रुं
परमात्मानं च अभिमुखतया एतुं गन्तुम्। सैनिकाः सेनाभटा इव॥ १९॥

सममुद्योगमानीताः सन्त एते हि धीमता।
संसाराब्धिं निकृन्तन्ति जलान्यद्रितटानिव॥ २०॥

जलानि पूरात्मना मिलितानि॥ २०॥

वासनाक्षयविज्ञानमनोनाशाः प्रयत्नतः।
समं सेव्यास्तव चिरं तेन तात न लिप्यसे॥ २१॥

न लिप्यसे अलेपके स्वभावे स्थास्यसि॥ २१॥

त्रिभिरेतैश्चिराभ्यस्तैर्हृदयग्रन्थयो दृढाः।
निःशेषमेव त्रुट्यन्ति बिसच्छेदाद्गुणा इव॥ २२॥

हृदयग्रन्थयः अन्तःकरणतद्धर्मतादात्म्यसंसर्गाध्यासाः त्रुट्यन्ति
च्छिद्यन्ते। गुणास्तन्तव इव॥ २२॥

जन्मान्तरशताभ्यस्ता राम संसारसंस्थितिः।
सा चिराभ्यासयोगेन विना न क्षीयते क्वचित्॥ २३॥

92561 ननु त्रयाणामपि चिराभ्यासः किमर्थं तत्राह - जन्मान्तरेति | शतशब्द
92562 आनन्त्ये | संसारसन्ततिर्द्वैतवासना || २३ ||
92563
92564 गच्छन्शृण्वन्स्पृशञ्जिघ्रंस्तिष्ठञ्जाग्रत्स्वपंस्तथा |
92565 श्रेयसे परमायास्य त्रयस्याभ्यासवान्भव || २४ ||
92566
92567 वासनासंपरित्यागसमं प्राणनिरोधनम् |
92568 विदुस्तत्त्वविदस्तस्मात्तदाप्येवं समाहरेत् || २५ ||
92569
92570 त्रिभिः सह चतुर्थः प्राणायामोऽप्यभ्यसनीय इत्याह - वासनेति |
92571 समाहरेदभ्यसेत् || २५ ||
92572
92573 वासनासंपरित्यागाच्चित्तं गच्छत्यचित्तताम् |
92574 प्राणस्पन्दनिरोधाच्च यथेच्छसि तथा कुरु || २६ ||
92575
92576 प्राणायामचिराभ्यासैर्युक्त्या च गुरुदत्तया |
92577 आसनाशनयोगेन प्राणस्पन्दो निरुद्ध्यते || २७ ||
92578
92579 योगाभ्यासकुशलगुरूपदिष्टयुक्त्या स्वस्तिकाद्यासनजयेन
92580 हितमितमेध्याशनैर्यमनियमादियोगेन चेत्यर्थः || २७ ||
92581
92582 यथाभूतार्थदर्शित्वाद्वासना न प्रवर्तते |
92583 आदावन्ते च वस्तूनामविसंवादि यत्स्थितम् || २८ ||
92584
92585 सर्ववस्तूनामादावन्ते चकारान्मध्ये च अविसंवादि अविप्रलम्भि
92586 यत्सन्मात्ररूपं स्थितं स एव यथाभूतार्थस्तद्दर्शित्वादित्यर्थः || २८ ||
92587
92588 रूपं तद्दर्शनं ज्ञानं क्षीयते तेन वासना |
92589 निःसङ्गव्यवहारित्वाद्भवभावनवर्जनात् || २९ ||
92590
92591 निःसङ्गं बहिर्मुखजनसङ्गरहितं निःसंकल्पं च यथा
92592 प्राप्तव्यवहारशीलत्वात् | भवभावनानि सांसारिकमनोरथास्तेषां वर्जनात् ||
92593 २९ ||
92594
92595 शरीरनाशदर्शित्वाद्वासना न प्रवर्तते |
92596 वासनाविभवे नष्टे न चित्तं संप्रवर्तते || ३० ||
92597
92598 वासनालक्षणे विभवे धनसंचये नष्टे सति लज्जयेव न प्रवर्तते || ३० ||
92599
92600 संशान्ते पवनस्पन्दे यथा पांसुर्नभस्तले |
92601 यः प्राणपवनस्पन्दश्चित्तस्पन्दः स एव हि || ३१ ||
92602
92603 पांसोरिव चित्तस्यापि पवनाधीनस्पन्दत्वादिति भावः || ३१ ||
92604
92605 तस्माज्जगति जायन्ते पांसवोऽवकारादिव |
92606 प्राणस्पन्दजये यत्नः कर्तव्यो धीमतोच्चकैः || ३२ ||
92607
92608 अवकरात्पांसुराशेरिव || ३२ ||
92609
92610 उपविश्योपविश्यैकचित्तकेन मुहुर्मुहुः |
92611 अथवैनं क्रमं त्यक्त्वा चित्ताक्रमणमेव चेत् || ३३ ||
92612

92613 हठयोगाभ्यासाशक्तौ राजयोगोऽभ्यसनीय इत्याह - अथवेति ॥ ३३ ॥
92614
92615 रोचते तत्तदाप्नोषि कालेन बहुना पदम् ।
92616 न शक्यते मनो जेतुं विना युक्तिमनिन्दिताम् ॥ ३४ ॥
92617
92618 बहुनेति । दुर्दान्तस्य चित्तस्याल्पकालाभ्यासेन वशीकर्तुमशक्यत्वादिति भावः ।
92619 युक्तिं अध्यात्मविद्यासाधुसंगसहितं दर्शितं द्विविधं योगं विना ॥ ३४ ॥
92620
92621 अङ्कुशेन विना मत्तं यथा दुष्टं मतङ्गजम् ।
92622 अध्यात्मविद्याधिगमः साधुसङ्गम एव च ॥ ३५ ॥
92623
92624 तदेवाह - अध्यात्मेति ॥ ३५ ॥
92625
92626 वासनासंपरित्यागः प्राणस्पन्दनिरोधनम् ।
92627 एतास्ता युक्तयः पुष्टाः सन्ति चित्तजये किल ॥ ३६ ॥
92628
92629 याभिस्तज्जीयते क्षिप्रं धाराभिरिव भूरजः ।
92630 सतीषु युक्तिष्वेतासु हठान्नियमयन्ति ये ॥ ३७ ॥
92631
92632 यद्यपि प्राणसंरोधनं दुर्दान्तदमनोपायत्वाद्धठ एव तथापि
92633 सच्छास्त्रगुरूपदिष्टमार्गरहितोऽन्ये
92634 चोपवेशनशयनकायशोषणमन्त्रयन्त्रश्मशानसाधनादिसाहसरूपा
92635 हटा अत्र निवार्यन्त इति बोध्यम् ॥ ३७ ॥
92636
92637 चेतस्ते दीपमुत्सृज्य विनिघ्नन्ति तमोऽञ्जनैः ।
92638 विमूढाः कर्तुमुद्युक्ता ये हठाच्चेतसो जयम् ॥ ३८ ॥
92639
92640 ते निबध्नन्ति नागेन्द्रमुन्मत्तं बिसतन्तुभिः ।
92641 चित्तं चित्तस्य वाऽदूरं संस्थितं स्वशरीरकम् ॥ ३९ ॥
92642
92643 उक्तलक्षणां चतुर्विधां युक्तिं समुत्सृज्य उपायान्तरेण चित्तं
92644 चित्तसन्निहितं शरीरं ये साधयन्ति स्थिरीकर्तुं यतन्ते तान्पुरुषान् हठान्
92645 वृथाश्रमान्विदुः सांप्रदायिका इत्यर्थः ॥ ३९ ॥
92646
92647 साधयन्ति समुत्सृज्य युक्तिं ये तान्हठान्विदुः ।
92648 भयाद्भयमुपायान्ति क्लेशात्क्लेशं व्रजन्ति ते ॥ ४० ॥
92649
92650 किंच तेषां सच्छास्त्रमार्गविभ्रंशादनर्थपरम्परैव फलति न
92651 चित्तादिजय इत्याह - भयादिति ॥ ४० ॥
92652
92653 निर्धृतिं नाधिगच्छन्ति दुर्भगा इव जन्तवः ।
92654 भ्रमन्ति गिरिकूटेषु फलपल्लवभोजनाः ॥ ४१ ॥
92655
92656 निर्धृतिं सम्यग्धैर्यविश्रान्तिम् । दुर्भगाः पापिनो जन्तव इव ॥ ४१ ॥
92657
92658 मुग्धमुग्धधियो भीता वराका हरिणा इव ।
92659 मतिरालूनशीर्णाङ्गी तदीया पेलवाङ्गिका ॥ ४२ ॥
92660
92661 न क्वचिद्याति विश्वासं मृगी ग्रामगता यथा ।
92662 कल्लोलकलितं चेतस्तेषां जल इवाऽहिते ॥ ४३ ॥
92663
92664 आऽहिते भयस्थाने । अहिते इति वा च्छेदः ॥ ४३ ॥

92665
92666 प्रोह्यते प्रपतद्दूरं तृणं गिरिनदीष्विव।
92667 कालं यज्ञतपोदानतीर्थदेवार्चनभ्रमैः॥ ४४॥
92668
92669 प्रोह्यते रागादिना बलान्नीयते दूरम्। प्रपतद्विषयानुपातिस्वभावम्।
92670 निश्चितमोक्षफलकधर्ममेघाख्यसमाध्यभ्यासं विहाय
92671 बहुक्लेशाल्पफलकसंदिग्धमोक्षफलकयज्ञदानाद्यनुष्ठानमपि
92672 क्लेशमात्रमिति प्रकृतप्रशंसार्थमाह - कालमित्यादिना। कालं चिरं
92673 क्षपयन्तीति संबन्धः॥ ४४॥
92674
92675 चिरमाधिशतोपेताः क्षपयन्ति मृगा इव।
92676 आत्मतत्त्वं विधिवशात्कदाचित्केचिदेव ते॥ ४५॥
92677
92678 दुःखदोषशतादग्धा विदन्ति न विदन्ति वा।
92679 आगमापायिनोऽनित्या नरकस्वर्गमानुषैः॥ ४६॥
92680
92681 यतः दुःखानां रागादिदोषाणां च शतैरादग्धाः अतो न विदन्ति विदन्ति वा।
92682 अनित्या एकत्रास्थिराः। नरकस्वर्गमानुषैर्भोगभेदैर्निमित्तैः पातोत्पातकरा
92683 आकारा देहभेदा येषां तथाविधा भूत्वा क्षीयन्ते मरणादिना पीड्यन्ते॥ ४६॥
92684
92685 पातोत्पातकराकाराः क्षीयन्ते कन्दुका इव।
92686 इतो गच्छन्ति नरकं ततः स्वर्गमिहैव च॥ ४७॥
92687
92688 इहैव दंशमशकादिजन्मावृत्तिभिर्निवर्तन्ते परिवर्तन्ते॥ ४७॥
92689
92690 आवृत्तिभिर्निवर्तन्ते सरसीव तरङ्गकाः।
92691 तस्माच्चैतां परित्यज्य दुर्दृष्टिं रघुनन्दन॥ ४८॥
92692
92693 एतां वर्णितहटादिलक्षणाम्॥ ४८॥
92694
92695 शुद्धां संविदमाश्रित्य वीतरागः स्थिरो भव।
92696 ज्ञानवानेव सुखवान्ज्ञानवानेव जीवति।
92697 ज्ञानवानेव बलवांस्तस्माज्ज्ञानमयो भव॥ ४९॥
92698
92699 आश्रित्य ज्ञात्वा॥ ४९॥
92700
92701 संवेद्यवर्जितमनुत्तममाद्यमेकं
92702 संवित्पदं विकलनं कलयन्महात्मन्।
92703 हृद्येव तिष्ठ कलनारहितः क्रियां तु
92704 कुर्वन्नकर्तृपदमेत्य शमोदितश्रीः॥ ५०॥
92705
92706 विकलनं निर्विकल्पं निर्वासनं निर्विकारं च कलना चेतसो बाह्योन्मुखता
92707 तद्रहितस्तन्निरोधशीलः सन् हृदि हार्दे ब्रह्मण्येव तिष्ठ। व्युत्थानकाले तु
92708 यथोचितां क्रियां कुर्वन्नपि असंगशमेन उदिता श्रीः
92709 प्रागुक्तजीवन्मुक्तगुणसंपद्यस्य तथाविधः सन् अकर्तृपदमेत्य
92710 तिष्ठेत्यर्थः॥ ५०॥
92711
92712 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे०
92713 मोक्षोपायेषूपशमप्रकरणे संसृतिनिराकरणक्रमयोगोपदेशो
92714 नामद्विनवतितमः सर्गः॥ ९२॥
92715
92716 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे

92717 संसृतिनिराकरणक्रमयोगोपदेशो नाम द्विनवतितमः सर्गः ॥ ९२ ॥
92718
92719
92720 त्रिनवतितमः सर्गः ९३
92721
92722 श्रीवसिष्ठ उवाच ।
92723
92724 मनागपि विचारेण चेतसः स्वस्य निग्रहः ।
92725 मनागपि कृतो येन तेनाप्तं जन्मनः फलम् ॥ १ ॥
92726
92727 विचारप्रौढिवैराग्यसद्गुणैर्बोधसंस्थितौ ।
92728 विषयैरप्रधृष्यत्वाद्वर्ण्यतेऽत्र समास्थितिः ॥ १ ॥
92729
92730 तत्रादावल्पतरस्य पि विचारस्य चित्तनिग्रहस्य च रुच्युत्पादनप्रवर्तनद्वारा
92731 क्रमान्मोक्षे पर्यवसानं भवतीत्याह - मनागिति । जन्मनः
92732 फलमित्यनेन विचारशून्यस्य जन्मैव निष्फलमिति ध्वनितम् ॥ १ ॥
92733
92734 विचारकणिका यैषा हृदि स्फुरति पेलवा ।
92735 एषैवाभ्यासयोगेन प्रयाति शतशाखताम् ॥ २ ॥
92736
92737 तस्य तन्मसाफल्योपयोगितामुपपादयति - विचारेत्यादिना ।
92738 विचारकल्पवृक्षस्य कणिका अङ्कुरः ॥ २ ॥
92739
92740 किंचित्प्रौढविचारं तु नरं वैराग्यपूर्वकम् ।
92741 सं * *? न्ति गुणाः शुद्धः सरः पूर्णमिवाण्डजः ॥ ३ ॥
92742
92743 गुणाः प्रागुक्तशमदमादयः । अण्डजाः पक्षिणो मत्स्याश्च ॥ ३ ॥
92744
92745 सम्यग्विचारिणं प्राज्ञं यथाभूतावलोकिनम् ।
92746 आसादयन्त्यपि स्फारा नाविद्याविभवा भृशम् ॥ ४ ॥
92747
92748 यथाभूतं यथार्थमात्मतत्त्वमवलोकयितुं शीलमस्य । स्फाराः
92749 प्रचयप्रकर्षाभ्यां ख्याता अपि हैरण्यगर्भपदान्ता अविद्याकार्यभूता
92750 विभवा नासादयन्ति न प्रलोभयन्ति ॥ ४ ॥
92751
92752 किं कुर्वन्तीह विषया मानस्यो वृत्तयस्तथा ।
92753 आधयो व्याधयो वापि सम्यग्दर्शनसन्मतेः ॥ ५ ॥
92754
92755 किं कुर्वन्ति कं विकारं जनयन्ति । निर्विकारात्मभूतत्वात्तस्येति भावः ॥ ५ ॥
92756
92757 क्व [क्वोन्नमत् इति पाठः]
92758 भ्रमत्पवनापूरास्तडित्पटलपाटलाः ।
92759 पुष्करावर्तजलदा गृहीता बालमुष्टिभिः ॥ ६ ॥
92760
92761 तत्प्रलोभनासामर्थ्यमेवान्योक्तिभिर्द्रढयति - क्वेत्यादिना ।
92762 पुष्करावर्ताख्याः प्रलयजलदा बालमुष्टिभिः क्व गृहीताः ॥ ६ ॥
92763
92764 क्व नभोमध्यसंस्थेन्दुर्मुग्धैर्मणिसमुद्गकैः [सुन्दरैः]
92765 ।
92766 मुग्धयाऽङ्गनया बद्धो मुग्धेन्दीवरशङ्कया ॥ ७ ॥
92767
92768 मुग्धैर्विकाशरम्यैरिन्दीवरैः स्वनेत्रशोभापराभवशङ्कया

92769 तद्विकाशहेतुर्नभोमध्यसंस्थेन्दुर्मणिमयैः समुद्गकैः संपुटकैः
92770 क्व बद्धः ॥ ७ ॥
92771
92772 क्व कटप्रोच्चलद्भृङ्गमण्डलोत्पलशेखराः ।
92773 मुग्धस्त्रीश्वासमधुरैर्मशकैर्मथिता गजाः ॥ ८ ॥
92774
92775 कटेभ्यो गण्डस्थलेभ्यः प्रोच्चलन्ति
92776 भृङ्गमण्डलान्येवोत्पलसादृश्यादुत्पलानि शेखरेषु येषां तथाविधा
92777 गजा मुग्धस्त्रीश्वासैरपि पराणुद्यमानत्वात्तेष्वपि मधुरैः
92778 सौम्यैर्निर्वीर्यैरिति यावत् । मशकैः क्व मथिता निहताः । मुग्धस्त्रीभिः
92779 श्वासेन गजवधाय प्रेरणाद्वा मधुरैरुत्साहरम्यैः ॥ ८ ॥
92780
92781 क्वेभमुक्ताफलोल्लासलसत्सन्नखपञ्जराः ।
92782 सिंहाः समरसंरब्धा हरिणैः प्रविमर्दिताः ॥ ९ ॥
92783
92784 इभानां स्वविदारितगजानां मुक्ताफलसंबन्धिभिरुल्लासैः कान्तिभिर्लसन्तो
92785 नखरपञ्जरा येषाम् ॥ ९ ॥
92786
92787 क्व विषोल्लासनिर्यासदग्धोन्नतवनद्रुमाः ।
92788 क्षुधिताजगराः क्षुब्धैर्निगीर्णा बालदर्दुरैः ॥ १० ॥
92789
92790 विषस्योल्लास उपचयस्तत्प्रयुक्तैर्निर्यासप्रायैर्विषबिन्दुभिर्दग्धा उन्नता
92791 वनद्रुमा यैः अथवा सृक्किदेशात्स्वदेहे मुहुः प्रसृतार्धशुष्कविषोल्लासा
92792 एव निर्यासा येषां तथाविधाः श्यामत्वादुत्थितत्वाच्च
92793 दग्धशाखखर्जूरद्रुमप्रायाः । देश विशेषे द्रुमवदुत्थिता
92794 मनुष्यवत्कूजन्तः श्यामा अजगरविशेषा वृक्षभ्रान्त्या
92795 समीपगतान्मनुष्यादीन्परिवृत्तेन व्यात्तेन मुखेन झटिति ग्रसन्तीति प्रसिद्धम्
92796 । बालदर्दुरैः क्षुद्रभेकैः ॥ १० ॥
92797
92798 क्व प्राप्तभूतिको धीरो ज्ञातज्ञेयो विवेकवान् ।
92799 आक्रान्तः किल विक्रान्तो विषयेन्द्रियदस्युभिः ॥ ११ ॥
92800
92801 प्राप्तचतुर्थपञ्चमादिभूमिकः । विक्रान्त उत्तरभूमिकाजये उद्युक्तः ॥ ११ ॥
92802
92803 विचारधियमप्रौढां हरन्ति विषयारयः ।
92804 प्रचण्डपवनामृद्वीं कृत्तवृन्तां लतामिव ॥ १२ ॥
92805
92806 तत्पूर्वभूमिकास्वेवापक्वचित्तानां विघ्नप्रसक्तिर्नोत्तरत्रेत्याह - विचारेति ।
92807 कृत्तवृन्तां छिन्नप्रतानवतीम् [प्रतानवन्धनां इति पाठः] ॥ १२
92808 ।।
92809
92810 न विवेकलवं प्रौढं भङ्क्तुं शक्ता दुराशयाः ।
92811 कल्पक्षोभमहाधीरं शैलं मन्दानिला इव ॥ १३ ॥
92812
92813 दुष्टा आशयाः रागादिवृत्तयो भङ्क्तुं विनाशयितुं न शक्ताः । यथा
92814 अवान्तरकल्पक्षोभेषु महाधीरं मेर्वादिशैलं भङ्क्तुं मन्दानिला न
92815 शक्तास्तद्वत् ॥ १३ ॥
92816
92817 अगृहीतमहापीठं [महीपीठं इति पाठश्चिन्त्यः]
92818 विचारकुसुमद्रुमम् ।
92819 चिन्तावात्याविधुन्वन्ति नास्थिरस्थितिसुस्थितम् ॥ १४ ॥
92820

92821 न गृहीतं महत् पीठं मूलबन्धनं येन तम्। विचाराः कादाचित्का
92822 आर्तवकुसुमप्राया एव नतु फलितास्तथाविधद्रुमप्रायम्॥ १४॥
92823
92824 गच्छतस्तिष्ठतो वापि जाग्रतः स्वपतोऽपि वा।
92825 न विचारमयं चेतो यस्यासौ मृत उच्यते॥ १५॥
92826
92827 अत-एव विचारविच्छत्तिकाले प्रमादाद्रागादिमृत्युनाऽसौ ग्रस्यत
92828 इत्याशयेनाह - गच्छत इति। यस्य यदा तदा असौ मृत इति योज्यम्। तथा
92829 चोक्तं लैङ्गे - सा हानिस्तन्महच्छिद्रं सान्धता सा च मूकता।
92830 यत्क्षणं वा मुहूर्तं वा शिवमेकं न चिन्तयेत्॥ इति॥ १५॥
92831
92832 किमिदं स्याज्जगत्किं स्याद्देहमित्यनिशं शनैः।
92833 विचारयाध्यात्मदृशा स्वयं वा सज्जनैः सह॥ १६॥
92834
92835 स्वयमेक एकान्ते वा सज्जनैर्गुरुसतीर्थ्यादिभिः सह वा॥ १६॥
92836
92837 अन्धकारहरेणाशु विचारेण परं पदम्।
92838 दृश्यते विमलं वस्तु प्रदीपेनेव भास्वता॥ १७॥
92839
92840 विचारस्य फलावश्यंभावमाह - अन्धकारेति। प्रमादान्धकारहरेण॥
92841 १७॥
92842
92843 ज्ञानेन सर्वदुःखानां विनाश उपजायते।
92844 कृतालोकविलासेन तमसामिव भानुना॥ १८॥
92845
92846 ज्ञानफले द्वे आह - ज्ञानेनेति द्वाभ्याम्॥ १८॥
92847
92848 ज्ञाने प्रकटतां याते ज्ञेयं व्ययमुदेत्यलम्।
92849 रवावभ्युदिते भूमावालोक इव निर्मलः॥ १९॥
92850
92851 येन शास्त्रविचारेण ब्रह्मतत्त्वं प्रबुद्ध्यते।
92852 तद्धानमुच्यते ज्ञेयादभिन्नमिव संस्थितम्॥ २०॥
92853
92854 ज्ञानलक्षणमाह - येनेति।
92855 ज्ञेयब्रह्माकारत्वाद्भेदबाधरूपत्वाच्चाभिन्नमिव संस्थितं
92856 दृढप्रतिष्ठितम्॥ २०॥
92857
92858 विचारोत्थात्मविज्ञानं ज्ञानमङ्ग विदुर्बुधाः।
92859 ज्ञेयं तस्यान्तरेवास्ति माधुर्यं पयसो यथा॥ २१॥
92860
92861 सयग्ज्ञानसमालोकः पुमान्ज्ञेयमयः स्वयम्।
92862 भवत्यापीतमैरेयः सदा मदमयो यथा॥ २२॥
92863
92864 सदा ज्ञेयमयः अनुभूयमानब्रह्मानन्दप्रचुरः॥ २२॥
92865
92866 समं स्वरूपमममलं ज्ञेयं ब्रह्म परं विदुः।
92867 ज्ञानाभिगममात्रेण तत्स्वयं संप्रसीदति॥ २३॥
92868
92869 संप्रसीदति निरस्ताविद्यातत्कार्यपङ्कं भवति॥ २३॥
92870
92871 ज्ञानवानुदितानन्दो न क्वचित्परिमज्जति।
92872 जीवन्मुक्तो गतासङ्गः सम्राडात्मेव तिष्ठति॥ २४॥

सम्राट् राजाधिराजस्तदात्मेव पूर्णमनोरथः ॥ २४ ॥

ज्ञानवान्हृद्यशब्देषु वीणावंशरवादिषु ।
कामिन्याः कान्तगीतेषु संभोगमलिनेषु च ॥ २५ ॥

तस्य रागिजनस्पृहणीयेषु भावेष्वनासङ्गं प्रपञ्चयति -
ज्ञानवानित्यादिना । सर्वेषां सप्तम्यन्तानां रतिं न निबध्नातीति
व्यवहितेनान्वयः ॥ २५ ॥

वसन्तमदमत्तानां षट्पदानां स्वनेषु च ।
प्रावृट्प्रसरपुष्पेषु जलदस्तनितेषु च ॥ २६ ॥

प्रावृट्प्रसरप्रयुक्तपुष्पेषु ॥ २६ ॥

उत्ताण्डवशिखण्डेषु केकाकलरवेषु च ।
रणिताम्भोदखण्डेषु सारसक्कणितेषु च ॥ २७ ॥

कर्तर्यादिकरान्तेषु गम्भीरमुरजेषु च ।
ततावनद्धसुषिरचित्रवाद्यस्वनेषु च ॥ २८ ॥

कर्तरीसूचीशलाकासूत्रकण्टककरान्तापायवादनीयेषु वाद्यभेदेषु ।
तन्त्रीभिस्ततं वीणादि । चर्मणा अवनद्धं मुरजादि । सुषिरमन्तश्छिद्रं
वंशादि । चित्रं परिशेषाद्घनं कांस्यतालादि च यद्वाद्यं तत्स्वनेषु च ॥
२८ ॥

केषुचिन्न निबध्नाति रूक्षेषु मधुरेषु च ।
रणितेषु रतिं राम पद्मेष्विव निशाकरः ॥ २९ ॥

ज्ञानवान्बालकदलीस्तम्भपल्लवपालिषु [राजिषु इति पाठः] ।
सुरगन्धर्वकन्याङ्गलतानन्दनकेलिषु ॥ ३० ॥

बालकदलीस्तम्भानां पल्लवपङ्क्तयो यत्र । सुरगन्धर्वकन्यानामिवाङ्गानि
अवयवा यासां तथाविधलताशालिनन्दने केलिषु क्रीडासु ।
तासामङ्गलताभिर्नन्दने केलिषु वा ॥ ३० ॥

केषु क्वचिन्न बध्नाति स्वायत्तेष्वप्यसक्तधीः ।
राम स्पर्शरतिं धीरो हंसो मरुमहीष्विव ॥ ३१ ॥

स्पर्शरतिं भोगेच्छाम् ॥ ३१ ॥

ज्ञानवान्पिण्डखर्जूरकदम्बपनसादिषु ।
मृद्वीकौर्वारुकाक्षोटबिम्बजम्बीरजातिषु ॥ ३२ ॥

पिण्डखर्जूरादयः फलजातिभेदाः ॥ ३२ ॥

मदिरामधुमैरेयमाध्वीकासवभूमिषु ।
दधिक्षीरधृतामिक्षानवनीतौदनादिषु ॥ ३३ ॥

मदिरादयो मद्यजातिभेदाः । तप्ते पयसि दधिसेकात्पिण्डीभूतं
द्रव्यमाभिक्षा ॥ ३३ ॥

92925 षड्रसेषु विचित्रेषु लेह्यपेयविलासिषु |
92926 फलेष्वन्येषु मूलेषु शाकेष्वप्यामिषेषु च || ३४ ||
92927
92928 आमिषेषु मांसेषु || ३४ ||
92929
92930 केषुचिन्नानुबध्नाति तृप्तमूर्तिरसक्तधीः |
92931 आस्वादनरतिर्विप्रः स्वशरीरलवेष्विव || ३५ ||
92932
92933 स्वशरीरलवेषु स्वमांसखण्डेष्विव || ३५ ||
92934
92935 ज्ञानवान्यमचन्द्रेन्द्ररुद्रार्कानिलसद्मसु |
92936 मेरुमन्दरकैलाससह्यदर्दुरसानुषु || ३६ ||
92937
92938 दिक्पालपङ्क्तिपाठाद्रुद्र ईशानः || ३६ ||
92939
92940 कौशेयदलजालेषु चन्द्रबिम्बकलादिषु |
92941 कल्पपादपकुञ्जेषु देहशोभाविलासिषु || ३७ ||
92942
92943 कौशेयानीव मृदुस्निग्धानि दलजालानि पल्लवसमूहा येष्विति
92944 प्राक्तनसानुविशेषणम् | देहशोभया दिव्यशरीरसंपत्त्या विलसनशीलेषु || ३७
92945 | |
92946
92947 रत्नकाञ्चनकुड्येषु मुक्तामणिमयेषु च |
92948 तिलोत्तमोर्वशीरम्भामेनकाङ्गलतासु च || ३८ ||
92949
92950 कुड्यपदेन तदवयविनो गृहा लक्ष्यन्ते || ३८ ||
92951
92952 केषुचिद्दर्शनं श्रीमान्नाभिवाञ्छत्यसक्तधीः |
92953 परिपूर्णमना मानी मौनी शत्रुषु चाचलः || ३९ ||
92954
92955 अचलः द्वेषाद्यप्रकम्प्यः || ३९ ||
92956
92957 ज्ञानवान्कुन्दमन्दारकह्लारकमलादिषु |
92958 कुमुदोत्पलपुन्नागकेतक्यगुरुजातिषु || ४० ||
92959
92960 कुन्दादिषु पुष्पजातिषु || ४० ||
92961
92962 कदम्बचूतजम्ब्वम्रकिंशुकाशोकशाखिषु |
92963
92964 कदम्बादिवृक्षजातिषु | जपादिगुल्मवल्लीजातिषु || ४१ ||
92965
92966 चन्दनागुरुकर्पूरलाक्षामृगमदेषु च |
92967 काश्मीरजलवङ्गैलाकङ्कोलतगरादिषु || ४२ ||
92968
92969 चन्दनादिष्वङ्गरागभेदेषु | लाक्षा अलक्तकरसः || ४२ ||
92970
92971 केषुचिन्न निबध्नाति सौगन्ध्यरतिमेकधीः |
92972 समबुद्धिरविक्षोभो मद्यामोदेष्विव द्विजः || ४३ ||
92973
92974 द्विजो मद्यामोदेष्विव रतिं न निबध्नाति प्रियाप्रिययोः समबुद्धिः |
92975 अप्रियेष्वविक्षोभश्च || ४३ ||
92976

92977 अब्धौ गुडगुडारावे प्रतिश्रुत्खस्वने गिरौ।
92978 निनादे च मृगेन्द्राणां न क्षुभ्यति मनागपि॥ ४४॥
92979
92980 एवं भयहेतुध्वनिभ्यस्तस्य भयं न जायत इत्याह - अब्धावित्यादिना।
92981 प्रतिश्रुत्प्रतिध्वनिस्तद्रूपे खस्वने आकाशजशब्दे॥ ४४॥
92982
92983 द्विषद्भेरीनिनादेन पटहारणितेन च।
92984 कटुकोदण्डघोषेण न बिभेति मनागपि॥ ४५॥
92985
92986 पटह आडम्बराख्यो वाद्यविशेषः॥ ४५॥
92987
92988 मत्तवारणबृंहासु वेतालकलनासु च।
92989 पिशाचरक्षःक्ष्वेडासु मनागपि न कम्पते॥ ४६॥
92990
92991 मत्तवारणानां बृंहासु गर्जितेषु। बृंहेः गुरोश्च हलः इत्यप्रत्ययः।
92992 वेतालानां कलनासु कलहादिध्वनिषु। पिशाचरक्षसां क्ष्वेडासु सिंहनादेषु
92993 ॥ ४६॥
92994
92995 अशनिस्वनघोषेण नगस्फोटरवेण च।
92996 ऐरावणनिनादेन सम्यग्ध्यानी न कम्पते॥ ४७॥
92997
92998 ऐरावण ऐरावतस्तस्य निनादेन॥ ४७॥
92999
93000 वहत्क्रकचकाषेण सितासिदलनेन च।
93001 शराशनिनिपातेन कम्पते न स्वरूपतः॥ ४८॥
93002
93003 वहतश्चलतः क्रकचस्य काषेण घर्षणेन। स्वरूपतः
93004 स्वरूपस्थितिलक्षणात्समाधेर्न कम्पते न चलतीत्यर्थः॥ ४८॥
93005
93006 नानन्दमेत्युपवने न खेदमुपगच्छति।
93007 न खेदमेति मरुषु नानन्दमुपगच्छति॥ ४९॥
93008
93009 पूताङ्गारसमाकल्पसैकतेष्वपि धन्वसु।
93010 पुष्पप्रकरसंछन्नमृदुशाद्वलभूमिषु॥ ५०॥
93011
93012 पूतैर्भस्मापसरणेनोज्ज्वलितैरङ्गारैः समानि अकल्पान्यसह्यानि सैकतानि
93013 येषु तथाविधेषु धन्वसु मरुदेशेषु॥ ५०॥
93014
93015 क्षुरधारासु तीक्ष्णासु शय्यासु च नवोत्पलैः।
93016 उन्नताचलदेशेषु कूपकोशतलेषु च॥ ५१॥
93017
93018 कूपकोशस्य कूपोदरस्य तलेष्वधोभूमिषु॥ ५१॥
93019
93020 शिलास्वर्कांशुरूक्षासु मृद्वीषु ललनासु च।
93021 संपत्स्वापत्सु चोग्रासु रमणेषूत्सवेषु च॥ ५२॥
93022
93023 अर्कांशुरूक्षासु प्रतप्तासु कठनासु च। रमणेषु क्रीडनेषु॥ ५२॥
93024
93025 विहरन्नपि नोद्वेगी नानन्दमुपगच्छति।
93026 नतर्मुक्तमना नित्यं कर्मकर्तेव तिष्ठति॥ ५३॥
93027
93028 भारवहनादिकर्मकर्ता श्रान्तः पुरुषो भारोत्तारण इवान्तर्मुखमना

93029 विश्रान्तिसुखमनुभवन्नदासीनस्तिष्ठतीत्यर्थः ॥ ५३ ॥
93030
93031 अयःसंकुचिताङ्गासु नरकारण्यभूमिषु ।
93032 परस्परेरितानन्तकुन्ततोमरवृष्टिषु ॥ ५४ ॥
93033
93034 अयोयन्त्रैः संकुचिताङ्गासु माण्डव्यस्येव प्रारब्धशेषोपनीतासु
93035 नरकारण्यभूमिषु ॥ ५४ ॥
93036
93037 न बिभेति न वादत्ते वैवश्यं न च दीनताम् ।
93038 समः स्वस्थमना मौनी धीरस्तिष्ठति शैलवत् ॥ ५५ ॥
93039
93040 वैवश्यं व्याकुलताम् ॥ ५५ ॥
93041
93042 अपवित्रमपथ्यं च विषसिक्तं मलाद्यपि ।
93043 भुक्त्वा जरयति क्षिप्रं क्लिन्नं नष्टं च मृष्टवत् ॥ ५६ ॥
93044
93045 मलादि गोमयाद्यपि । क्लिन्नं सार्द्रीभूतम् । नष्टं गतरसमपि । मृष्टं
93046 परिष्कृतमन्नं तद्वत् ॥ ५६ ॥
93047
93048 बिम्बप्रतिविषाकल्कक्षीरेक्षुसलिलान्धसाम् ।
93049 असक्तबुद्धिस्तत्त्वज्ञो भवत्यास्वादने समः ॥ ५७ ॥
93050
93051 सद्योबुद्धिहरत्वेन प्रसिद्धस्य बिम्बफलस्य प्रतिविषाणां
93052 विषप्रायाणामाकल्कानां सर्वतः कषायाणां क्षीरस्येक्षोः सलिलस्य अन्धस
93053 ओदनस्य च आस्वादने विषयसमस्तुल्यचित्तो भवतीत्यर्थः ॥ ५७ ॥
93054
93055 मैरेयमदिराक्षीररक्तमेदोरसासवैः ।
93056 रूक्षास्थितृणकेशान्तैर्न हृष्यति न कुप्यति ॥ ५८ ॥
93057
93058 रक्षःपिशाचादिष्वपि जीवन्मुक्तानां संभवात्तत्साधारण्येनाह -
93059 मैरेयेति ॥ ५८ ॥
93060
93061 जीवितस्यापि हर्तारं दातारं चैकरूपया ।
93062 दृशा प्रसादमाधुर्यशालिन्या परिपश्यति ॥ ५९ ॥
93063
93064 तस्य शत्रुमित्रयोरपि समदृष्टिमाह - जीवितस्येति । जीवितस्य दातारमित्यपि
93065 संबन्धः ॥ ५९ ॥
93066
93067 स्थिरास्थिरशरीरेषु रम्यारम्येषु वस्तुषु ।
93068 न हृष्यति ग्लायति वा सदा समतयेद्धया ॥ ६० ॥
93069
93070 स्थिरेषु चिरस्थायिषु देवादिशरीरेष्वस्थिरेषु मर्त्यादिशरीरेषु च । रम्यारम्येषु
93071 तद्भोग्यवस्तुषु च । समतया इद्धया दीप्तया ॥ ६० ॥
93072
93073 मुक्तास्थत्वादनास्थेयरूपत्वाज्जगतः स्थितौ ।
93074 नूनं विदितवेद्यत्वान्नीरागत्वात्स्वचेतसः ॥ ६१ ॥
93075
93076 चेतसो नीरागत्वाद्विदितवेद्यत्वाच्च हेतोर्जगत् स्थितौ मुक्तास्थत्वाद्विषयाणां च
93077 मिथ्यात्वेन आस्थायामयोग्यरूपत्वाच्च अक्षस्य विषयस्थितौ प्रसरं सदा
93078 विचाररससेवनात्कदाचिदपि न ददाति । कस्यचिदपि न ददातीति द्वयोरन्वयः ॥ ६१ ॥
93079
93080 न कस्यचिन्नो कदाचिदक्षस्य विषयस्थितौ ।

93081 ददाति प्रसरं साधुराधिप्रोज्झितया धिया ॥ ६२ ॥
93082
93083 अतत्त्वज्ञमविश्रान्तमलब्धात्मानमस्थितम् [अस्थितिं इति
93084 पाठः] ।
93085 निगिरन्तीन्द्रियाण्याशु हरिणा इव पल्लवम् ॥ ६३ ॥
93086
93087 किं तर्हि इन्द्रियाणि निगिरन्ति तमाह - अतत्त्वज्ञमिति द्वाभ्याम् ॥ ६३ ॥
93088
93089 उह्यमानं भवाम्भोधौ वासनावीचिवेल्लितम् ।
93090 निगिरन्तीन्द्रियग्राहा महाक्रन्दपरायणम् ॥ ६४ ॥
93091
93092 विचारिणं भव्यपदं विश्रान्तिधियमात्मनि ।
93093 न हरन्ति विकल्पौघा जलौघा इव पर्वतम् ॥ ६५ ॥
93094
93095 लोभादिविकल्पा अप्यात्मज्ञं न चालयन्तीत्याह - विचारिणमित्यादिना ॥ ६५ ॥
93096
93097 सर्वसंकल्पसीमान्ते विश्रान्ता ये परे पदे ।
93098 तेषां लब्धस्वरूपाणां मेरुरेव तृणायते ॥ ६६ ॥
93099
93100 जगज्जरत्तृणलवो विषं चामृतमेव च ।
93101 क्षणः कल्पसहस्रं च सममाततचेतसाम् ॥ ६७ ॥
93102
93103 आततचेतसां पूर्णात्माकारविस्तृतचित्तानाम् ॥ ६७ ॥
93104
93105 संविन्मात्रं जगदिति मत्वा मुदितबुद्धयः ।
93106 संविन्मयत्वादन्तस्थजगत्का विहरन्त्यमी ॥ ६८ ॥
93107
93108 सर्वस्य जगत आन्तरप्रत्यङ्गात्रत्वदर्शनादन्तस्थजगत्काः ॥ ६८ ॥
93109
93110 संविन्मात्रपरिस्पन्दे जागते वस्तुपञ्जरे ।
93111 किं हेयं किमुपादेयमिह तत्त्वविदां मतम् ॥ ६९ ॥
93112
93113 संविदेवेदमखिलं भ्रान्तिमन्यां त्यजानघ ।
93114 संविन्मयवपुः स्फारं किं जहाति किमीहते ॥ ७० ॥
93115
93116 ईहते इच्छति । उपादत्ते इति यावत् ॥ ७० ॥
93117
93118 यदेतज्जायते [जीयते इति पाठश्चिन्त्यः]
93119 भूमेर्भविष्यत्पल्लवाङ्कुरम् ।
93120 तत्संविदेव प्रथते तथा तत्त्वाङ्कुरस्थितम् ॥ ७१ ॥
93121
93122 अतीते स्पृहाया अदर्शनादज्ञहरिणस्पृहणीयं वर्तमानं भूमेः
93123 सकाशाद्यत्पल्लवाङ्कुरप्रायं विषयजातं जायते यच्च भविष्यत्तत्सर्व
93124 तत्त्वज्ञ दृशा यथा संविदेव प्रथते तथा वियदादितत्त्वाङ्कुरमिव स्थितं
93125 शब्दस्पर्शादिविषयान्तरमपीत्यर्थः ॥ ७१ ॥
93126
93127 आदावन्ते च यन्नास्ति वर्तमानेऽपि तस्य च ।
93128 कंचित्काललवं दृष्टा सत्तासौ संविदो भ्रमः ॥ ७२ ॥
93129
93130 उक्तार्थसिद्धौ युक्तिमाह - आदाविति । चकारस्त्वर्थे । तस्य वर्तमाने मध्ये
93131 कंचित्काललवं दृष्टा संविदो भ्रम एवेत्यर्थः ॥ ७२ ॥
93132

93133 इति मत्वा धियं त्यक्त्वा भावाभावानुपातिनीम् |
93134 निःसङ्गसंविद्घनरूपो भव भावान्तमागतः || ७३ ||
93135
93136 इति उक्तमर्थं मत्वा मननेन दृढीकृत्य भावाभावविकल्पानुपातिनीं
93137 धियं त्यक्त्वा || ७३ ||
93138
93139 कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि |
93140 कर्म कुर्वन्नकुर्वन्वा निःसङ्गः सन्न लिप्यते || ७४ ||
93141
93142 केवलैरासङ्गदोषशून्यैः | कुर्वन्व्युत्थानकाले | अकुर्वन्समाधिकाले || ७४ ||
93143
93144 गतसङ्गेन मनसा कुर्वन्नपि न लिप्यते |
93145 सुखदुःखैर्महाबाहो मनोरथदशास्विव || ७५ ||
93146
93147 मनोरथदशासु मनोराज्यविभवेषु नष्टेष्वनष्टेषु वा यथा
93148 सुखदुःखैर्न लिप्यते तद्वत् || ७५ ||
93149
93150 गतसङ्गां मतिं कुर्वन्कुर्वन्नप्यङ्गयष्टिभिः |
93151 न लिप्यते सुखैर्दुःखैर्मनोरथदशास्विव || ७६ ||
93152
93153 अकर्त्रभोक्त्रात्मदर्शनेन मतिं गतसङ्गां कुर्वन् | अङ्गयष्टिभिः
93154 शरीराद्युपकरणैः कुर्वन्व्यवहरन्नपि || ७६ ||
93155
93156 गतसङ्गमना दृष्ट्या पश्यन्नपि न पश्यति |
93157 एतदन्यस्थचित्तत्वाद्बालेनाप्यनुभूयते || ७७ ||
93158
93159 अन्यस्थचित्तत्वादिति अन्यव्यासक्तचित्तत्वात्पश्यन्नपि न पश्यतीत्येतद्बालेन
93160 अपिशब्दादन्यैश्च सर्वैरनुभूयत इत्यर्थः | अन्यत्रमना अभूवं
93161 नादर्शमन्यत्रमना अभूवं नाश्रौषम् इति श्रुतिरप्यत्र संवादिनीति भावः
93162 || ७७ ||
93163
93164 गतसङ्गमना जन्तुः पश्यन्नेव न पश्यति |
93165 न शृणोत्यपि शृण्वंश्च न स्पृशत्यपि च स्पृशन् || ७८ ||
93166
93167 न जिघ्रत्यपि संजिघ्रन्नुन्मिषन्निमिषन्नपि |
93168 पदार्थे च पतत्येव बलात्पतति नाप्ययम् || ७९ ||
93169
93170 उन्मिषन्नेत्रे उन्मीलयन्नपि निमिषन्ननुन्मीलयन्नेव | एवं कर्मेन्द्रियगणे च
93171 पदार्थे स्वस्वविषये संस्कारबलात्पतत्यपि सति अयं न पतति || ७९ ||
93172
93173 देशान्तरस्थचेतोभिरेतदात्मगृहस्थितैः |
93174 अप्रौढमतिभिः साधु मूर्खैरप्यनुभूयते || ८० ||
93175
93176 एतत्पश्यतोऽप्यदर्शनादिदेशान्तरस्थचेतोभिरन्यत्र गतमानसैरात्मनः
93177 स्वस्य गृहे स्थितैर्मूर्खैः पामरैरप्रौढमतिभिर्बालपश्वादिभिश्च
93178 साधु सम्यगनुभूयत इति नात्र विवाद इत्यर्थः || ८० ||
93179
93180 सङ्गः कारणमर्थानां सङ्गः संसारकारणम् |
93181 सङ्गः कारणमाशानां सङ्गः कारणमापदाम् || ८१ ||
93182
93183 तथाच संसक्तिपूर्वकं पदार्थदर्शनमेव
93184 बन्धहेतुर्नासंसक्तचित्तस्येत्याशयेनाह - सङ्ग इति || ८१ ||

93185
93186 सङ्गत्यागं विदुर्मोक्षं सङ्गत्यागादजन्मता।
93187 सङ्गं त्यज त्वं भावानां जीवन्मुक्तो भवानघ॥ ८२॥
93188
93189 मोक्षं वर्तमानदेहादिसंबन्धनिवृत्तिम्। अजन्मता
93190 भाविदेहादिबन्धनिवारणमिति भेदः॥ ८२॥
93191
93192 श्रीराम उवाच।
93193
93194 सर्वसंशयनीहारशरन्मारुत हे मुने।
93195 सङ्गः कुमुच्यते ब्रूहि समासेन मम प्रभो॥ ८३॥
93196
93197 किमिति सामान्ये नपुंसकम्। प्रश्नः स्पष्टः॥ ८३॥
93198
93199 श्रीवसिष्ठ उवाच।
93200
93201 भावाभावे पदार्थानां हर्षामर्षविकारदा।
93202 मलिना वासना यैषा सा सङ्ग इति कथ्यते॥ ८४॥
93203
93204 इष्टानिष्टपदार्थानां भावाभावे संयोगे वियोगे च हर्षामर्षविकारदा
93205 रागादिवासनैव सङ्ग इति कथ्यते इत्यर्थः॥ ८४॥
93206
93207 जीवन्मुक्तशरीरणामपुनर्जन्मकारिणी।
93208 मुक्ता हर्षविषादाभ्यां शुद्धा भवति वासना॥ ८५॥
93209
93210 तामसङ्गाभिधां विद्धि यावद्देहं च भाविनी।
93211 त * * *? क्रियते कर्म न तद्बन्धाय वै पुनः॥ ८६॥
93212
93213 यावद्देहं प्रारभशेषक्षयपर्यन्तम्॥ ८६॥
93214
93215 अजीवन्मुक्तरूपाणां दीनानां मूढचेतसाम्।
93216 युक्ता [युक्तामर्थविषादाभ्यां इति पाठः] हर्षविषादाभ्यां
93217 बन्धनी वासना भवेत्॥ ८७॥
93218
93219 सैवोक्ता सङ्गशब्देन पुनर्जननकारिणी।
93220 तया यत्क्रियते कर्म तद्बन्धायैव केवलम्॥ ८८॥
93221
93222 एवं रूपं परित्यज्य सङ्गं स्वात्मविकारदम्।
93223 यदि तिष्ठसि निर्व्यग्रः कुर्वन्नपि न लिप्यसे॥ ८९॥
93224
93225 निर्व्यग्रः स्वस्थः॥ ८९॥
93226
93227 हर्षामर्षविषादाभ्यां यदि गच्छसि नान्यताम्।
93228 वीतरागभयक्रोधस्तदसङ्गोऽसि राघव॥ ९०॥
93229
93230 समाहारद्वन्द्वगर्भेतरेतरयोगद्वन्द्वविवक्षणाद्धर्षामर्षविषादाभ्याम्
93231 इति द्विवचनम्। अन्यतां वैरूप्यम्॥ ९०॥
93232
93233 दुःखैर्न ग्लानिमायासि यदि हृष्यसि नो सुखैः।
93234 आशावैवश्यमुत्सृज्य तदसङ्गोऽसि राघव॥ ९१॥
93235
93236 आशया वैवश्यं पारवश्यम्॥ ९१॥

93237
93238 विहरन्व्यवहारेषु सुखदुःखदशासु च ।
93239 न विमुञ्चसि सत्साम्यं तदसङ्गोऽसि राघव ॥ ९२ ॥
93240
93241 सत्साम्यं ब्रह्मैकरस्यं न विमुञ्चसि यदीत्यनुषङ्गः ॥ ९२ ॥
93242
93243 संवेद्यो यदि चैवात्मा वेदिते लक्ष्यते समः ।
93244 यथाप्राप्तानुवर्ती च तदसङ्गोऽसि राघव ॥ ९३ ॥
93245
93246 आत्मा चित्तस्वभावः ॥ ९३ ॥
93247
93248 असङ्गतामनायासाज्जीवन्मुक्तस्थितिं स्थिराम् ।
93249 अवलम्ब्य समः स्वस्थो वीतरागो भवानघ ॥ ९४ ॥
93250
93251 जीवन्मुक्तमतिर्मौनी निगृहीतेन्द्रियग्रहः ।
93252 अमानमदमात्सर्यमार्यस्तिष्ठति विज्वरम् ॥ ९५ ॥
93253
93254 निगृहीताः इन्द्रियलक्षणा गृह्णन्ती * *? हाः पाशा येन ॥ ९५ ॥
93255
93256 सदा समग्रेऽपि हि वस्तुजाले
93257 समाशयोऽप्यन्तरदीनसत्त्वः ।
93258 व्यापारमात्रात्सहजात्क्रमस्थान्न
93259 किंचिदप्यन्यदसौ करोति ॥ ९६ ॥
93260
93261 भोगविक्षेपादिहेतौ वस्तुजाले सदा समग्रे प्रचुरतरे सत्यपि समाशयः ।
93262 अन्तर्बहिरप्यदीनं स्पृहा याञ्चादिदैन्यवर्जितं सत्त्वं यस्य
93263 स्ववर्णाश्रमोचितसहजक्रमस्थाद्व्यापारमात्रादन्यत्किंचिदप्यसौ न करोति ॥
93264 ९६ ॥
93265
93266 यदेव किंचित्प्रकृतं क्रमस्थं
93267 कर्तव्यमात्मीयमसौ तदेव ।
93268 संसर्गसंबन्धविहीनयैव
93269 कुर्वन्न खेदं रमते धियान्तः ॥ ९७ ॥
93270
93271 संसर्गः क्रियाभिनिवेशः संबन्धः फलाभिलाषस्तद्विहीनयैव धिया अन्तः
93272 स्वात्मनि रमते ॥ ९७ ॥
93273
93274 अथापदं प्राप्य सुसंपदं वा
93275 महामतिः स्वप्रकृतं स्वभावम् ।
93276 जहाति नो मन्दरवेल्लितोऽपि
93277 शौक्ल्यं यथा क्षीरमयाम्बुराशिः ॥ ९८ ॥
93278
93279 स्वं स्वीयं प्रकृतं पूर्वसिद्धं
93280 शान्तिदान्तिप्रसादसमदर्शनादिस्वभावं नो जहाति । यथा मन्दरेण वेल्लितो
93281 मथितोऽपि क्षीरमयाम्बुराशिः सहजं शौक्ल्यं न जहाति तद्वत् ॥ ९८ ॥
93282
93283 संप्राप्य साम्राज्यमथापदं वा
93284 सरीसृपत्वं सुरनाथतां वा ।
93285 तिष्ठत्यखेदोदयमस्तहर्षं
93286 क्षयोदयेष्विन्दुरिवैकरूपः ॥ ९९ ॥
93287
93288 आपदं दारिद्र्यादि । सरीसृपत्वं डुण्डुभादियोनिम् । अखेदोदयं अस्तहर्षं

चेति स्थितिक्रियाविशेषणे। क्षयोदयेषु कलानामुपचयापचयकालेषु
उदयास्तमयकालेषु वा॥ ९९॥

निरस्तसंरम्भमपास्तभेदं
प्रशान्तनानाफलवल्गुवेषम्।
विचारयात्मानमदीनसत्त्वो
यथा भवस्युत्तमकार्यनिष्ठः॥ १००॥

दर्शितलक्षणजीवन्मुक्तिसुखप्राप्तौ रागद्वेषभेदवासनाक्षयाभ्याससहित
आत्मविचार एवोपाय इति तमेव रामायोपदिशन्नुपसंहरति - निरस्तेति।
संरम्भः क्रोधः। त्रीण्यपि क्रियाविशेषणानि। यथा येन विचारेण
उत्तमकार्यमवश्यसंपाद्यं चरमपुरुषार्थस्तन्निष्ठो भवसि तथा
विचारयेत्यर्थः॥ १००॥

तयोदितप्रसरविलासशुद्धया
गतज्वरं पदमवलम्बयामलम्।
धियेद्धया पुनरिह जन्मबन्धनै-
र्न बध्यसे समधिगतात्मदृश्यया॥ १०१॥

तया विचारणया उदितप्रसरस्य समाधेर्विलासेन सर्ववासनाक्षयाच्छुद्धया
समधिगतमात्मरूपं दृश्यमवश्यद्रष्टव्यं वस्तु यया तथाविधया
अत-एव अविद्यातत्कार्यदाहक्षमतया इद्धया दीप्तया धिया गतज्वरं
निर्दुःखनिरतिशयानन्दरूपं परमपदमवलम्बय अध्यास्व। तदवलम्बने
पुरावृत्तिशङ्कावारणायाह - पुनरिहेति।
तस्मात्तत्त्वसाक्षात्कारेणैवाविद्यातत्कार्यसर्वानर्थोपशमनान्नित्यनिरतिशया
नन्दस्वरूपे प्रतिष्ठेति सिद्धम्॥ १०१॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये देवदूतोक्ते
द्वात्रिंशत्साहस्र्यां संहितायां मोक्षोपायेषु उपशमप्रकरणे
समदर्शनं नाम त्रिनवतितमः सर्गः॥ ९३॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणे
समदर्शनं नाम त्रिनवतितमः सर्गः॥ ९३॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवर्यश्रीमत्सर्वज्ञसरस्वती##-
श्रीमदानन्दबोधेन्द्रसरस्वत्याख्यभिक्षुणा विरचिते
श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे उपशमप्रकरणं
संपूर्णम्॥

॥ समाप्तमिदं उपशमप्रकरणम्॥

श्रीः

योगवासिष्ठः।

श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशाख्यव्याख्यासंवलितः।

निर्वाणप्रकरणस्य पूर्वार्धम् ६।

93341 प्रथमः सर्गः १
93342
93343 श्रीवाल्मीकिरुवाच।
93344
93345 उपशमप्रकरणादनन्तरमिदं शृणु।
93346 त्वं निर्वाणप्रकरणं ज्ञातं निर्वाणदायि यत्॥ १॥
93347
93348 शिवमभयमनाद्यनन्तमध्यं परमसुखाद्वयबोधमात्रसारम्।
93349 उपरतसकलभ्रं विशुद्धं निजमहसा स्फुरदात्मतत्त्वमीडे॥ १॥
93350
93351 उत्पत्तिस्थित्युपशमाख्यैस्त्रिभिः प्रकरणैर्जगज्जन्मस्थितिलयबोधकानां अथात
93352 आदेशो नेतिनेति इत्यादिसर्वप्रपञ्चनिषेधकानां च
93353 वेदान्तवाक्यानामध्यारोपापवादन्यायेनात्मतत्त्वव्युत्पादकतया
93354 वासनाक्षयमनोनाशपर्यन्तज्ञानेन परमपुरुषार्थे तात्पर्यपर्यवसानं
93355 दर्शितम्। अथेदानीं यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा यो
93356 वै भूमा तत्सुखम् यतो वाचो निवर्तन्ते अप्राप्य मनसा सह आनन्दं ब्रह्मणो
93357 विद्वान्न विमेति कुतश्चन तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्ममयमात्मा
93358 ब्रह्म सर्वानुभूः निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्। अमृतस्य
93359 परं सेतुं दग्धेन्धनमिवानलम् इत्यादिश्रुतितात्पर्यसिद्धं
93360 प्रागुक्तसर्वसाधनसाध्यसाक्षात्कारज्ञानफलं निर्वाणं व्युत्पादयितुं
93361 निर्वाणाख्यमिदं प्रकरणं श्रावयितुं भगवान् श्रीवाल्मीकिरुवाच##-
93362
93363 मुनिवाक्यादिहोत्थानं श्रोतृणामाह्निकी क्रिया।
93364 श्रुतार्थचिन्तानिद्राभ्यां रात्रियापनमीर्यते॥ १॥
93365
93366 तत्रादौ पूर्वोत्तरप्रकरणयोर्हेतुतासंगतिं सूचयन् वक्तव्यं प्रतिजानीते##-
93367 मृल्लोहविस्फुलिङ्गादिदृष्टान्तैः वाचारम्भणं विकारो नामधेयं त्रीणि
93368 रूपाणीत्येव सत्यम् इति श्रुतिप्रदर्शितन्यायेनैव अन्नेन सोम्य
93369 शुङ्गेनापोमूलमन्विच्छाद्भिः सोम्य शुङ्गेन तेजोमूलमन्विच्छ तेजसा सोम्य
93370 शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः
93371 सत्प्रतिष्ठाः स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा इति
93372 श्रुतितात्पर्यविषये ऐकात्म्ये पर्यवसानव्युत्पादनपरप्रकरणत्रयानन्तरं
93373 तत्फलीभूतस्य सत्यं ज्ञानमनन्तं ब्रह्म नित्यं विज्ञानमानन्दं ब्रह्म
93374 आनन्दो ब्रह्मेति व्यजानात् इत्यादिश्रुतिदर्शितस्वरूपलक्षणस्य तत्त्वमसि श्वेतकेतो
93375 अयमात्मा ब्रह्म सर्वानुभूः इत्यादिमहावाक्यार्थस्य [तद्बोधकफल इति
93376 पाठः।] तद्बोधफलनिर्वाणस्वरूपस्य च व्युत्पादकत्वान्निर्वाणाख्यं
93377 प्रकरणं शृण्वित्यर्थः॥ १॥
93378
93379 कथयत्येवमुद्दामवचने मुनिनायके।
93380 श्रवणैकरसे मौनस्थिते राजकुमारके॥ २॥
93381
93382 प्रतिज्ञातमर्थं प्रस्तुतकथामेवावलम्ब्य
93383 वर्णयिष्यन्नुपशमप्रकरणोपदेशान्ते दशरथसभायां यद्वृत्तं तदाह##-
93384 षोडशस्थेनान्वयः। मुनिनायके वसिष्ठे। राजकुमारके रामे॥ २॥
93385
93386 मुनिवागर्थनिक्षिप्तमनस्यस्ततपःक्रिये।
93387 राजलोके गतस्पन्दे चित्रार्पित एव स्थिते॥ ३॥
93388
93389 अस्ता त्यक्ता तपो मानसं बाह्यार्थालोचनं क्रिया शरीरचेष्टा च येन। तदेवाह##-
93390
93391 वसिष्ठवचसामर्थं विचारयति सादरम्।
93392 लसदङ्गुलिभङ्गेन मुनिसार्थं स्फुरद्भ्रुवि॥ ४॥

93393
93394 अङ्गुलिभङ्गेन उत्क्षिप्ततर्जनीचेष्टाभिनयेन। स्फुरद्भ्रुवि। सभ्रूभङ्गमिति यावत्
93395 ॥ ४॥
93396
93397 विस्मयालोकनोल्लासप्रोत्फुल्लनयनालिनि।
93398 पुरन्ध्रिवर्गे गम्भीरतरुमञ्जरितां गते॥ ५॥
93399
93400 विस्मयः परमाश्चर्यरूपः प्रत्यगात्मा तदालोकनोल्लासेन गम्भीरा
93401 मकरन्दत्वादनासक्तभ्रमरैर्निष्कम्पशब्दा या तरुमञ्जरी तद्भावमिव गते॥ ५॥
93402
93403 खे वासरचतुर्भागदेशे दिनकरे स्थिते।
93404 किंचिज्ज्ञानोदयात्सौम्ये किंचिच्छममुपेयुषि॥ ६॥
93405
93406 यत्र वासरस्य चतुर्थभागमात्रावशेषो लक्ष्यते तस्मिन्देशे प्रदेशे श्रवणायेव
93407 स्थिते। अतएव किंचिज्ज्ञानोदयादिव सौम्ये दृष्टिप्रिये
93408 किंचित्तापोपशममुपेयुषीवेत्युत्तरादनुकृष्यान्वयः॥ ६॥
93409
93410 श्रवणयिव संशान्ते वितानस्पन्दमालिते।
93411 मौनं मरुति मन्दारमधुरामोददायिनि॥ ७॥
93412
93413 श्रवणायेव संशान्ते इत्येतद्देहलीदीपन्यायेन मरुतीत्यत्रापि संबध्यते।
93414 कुसुमवितानस्पन्देन मालिते स्रग्विणि। अतएव मन्दारमधुरामोददायिनि॥ ७॥
93415
93416 पुष्पदामसुषुप्तासु महाभ्रमरपङ्क्तिषु।
93417 ज्ञातज्ञेयतया नूनं सम्यग्ध्यानवतीष्विव॥ ८॥
93418
93419 मुक्ताजालकलापान्तर्गतास्वन्तरभूमिषु।
93420 कचत्यपगतस्पन्दं तोये श्रोतुमिवास्थिते॥ ९॥
93421
93422 मुक्तामयानां जालकलापानां जालाकारवापीवरणानां [वरणं
93423 वृतिराच्छादनं वा।] अन्तर्गतासु अन्तरभूमिषु मध्यस्थवापीप्रदेशेषु
93424 श्रोतुमास्थिते सोत्कण्ठ इव अपगतस्पन्दं निश्चलं कचति
93425 मुक्तादिप्रभाभिर्दीप्यमाने सति॥ ९॥
93426
93427 गृहान्तरं प्रविष्टेषु गवाक्षे दूरमंशुषु।
93428 विश्रामार्थमिवादीर्घं नभःपान्थेषु शीतलम्॥ १०॥
93429
93430 अंशुषु रविरश्मिषु शीतलं गृहान्तरं श्रवणशालामध्यं विश्रामार्थमिव
93431 प्रविष्टेषु। देशतः कालतश्च आदीर्वं नभसि पान्थेषु। चिरदूरप्रचारश्रान्तेष्विति
93432 यावत्॥ १०॥
93433
93434 मुक्ताजालप्रभाजालभस्मनोद्धूलितात्मनि।
93435 शंसतीव शमं शाम्यद्दिनदेहे दिवातपे॥ ११॥
93436
93437 शाम्यतो दिनस्य देहभूते मुक्ताजालकानां प्रभाजाललक्षणेन भस्मना
93438 उद्धूलितात्मनि तदन्तःप्रविष्टे दिवातपे तपस्विलक्षणे स्वात्मनि शमं शान्तिगुणं
93439 शंसति सूचयतीव सति॥ ११॥
93440
93441 करे लीलासरोजेषु शेखरेषु च भूभृताम्।
93442 श्रुत्वा सुरसमामोदादवृत्तिषु मनस्स्विव॥ १२॥
93443
93444 भूभृतां राज्ञां करे पाणौ शेखरेषु शिरस्सु च स्थितेषु लीलासरोजेषु शोभना

रसा यस्मिंस्तत्सुरसं वसिष्ठोपदेशं श्रुत्वा आमोदादानन्दाविर्भावात्तेषां
मनस्स्विव अवृत्तिषु निमीलनोन्मुखेषु सत्सु ॥ १२ ॥

बालकेष्वज्ञलोकेषु लीलापक्षिषु सादरम् ।
भोजनार्थं वधूलोकमुपरुन्धत्स्वनारतम् ॥ १३ ॥

लीलापक्षिषु पञ्जरस्थशुकादिषु उपरुन्धत्सु । त्वरयत्स्विति यावत् ॥ १३ ॥

भ्रमद्भ्रमरपक्षोत्थवातधूतरजस्यलम् ।
कौमुदे परिविश्रान्ते चामरेष्वक्षिपक्ष्मसू ॥ १४ ॥

कौमुदे ईषद्विकासोन्मुखकुमुदसंबन्धिनि भ्रमद्भ्रमराणां
पक्षोत्थैर्वातैरुद्धूते रजसि चामरेष्वक्षिपक्ष्मसु च परितो विश्रान्ते सति ॥ १४ ॥

रश्मिष्वगगुहोन्मुक्तच्छायाजालभयादिव ।
गवाक्षादिष्विवोड्डीय प्रविष्टेषु गृहान्तरम् ॥ १५ ॥

सूर्यरश्मिषु अगानां मेर्वादिपर्वतानां गुहाभ्य
उन्मुक्ताच्छायासमूहात्मकात्तमसो भयादिव उड्डीय पलाय्य गवाक्षादिषु द्वारेषु
निलयनाय गृहान्तरं गृहमध्यं प्रविष्टेष्विव ॥ १५ ॥

आसीद्दिनचतुर्भागसत्तावेदनतत्परः ।
भेरीपठहशङ्खानां दिङ्मुखापूरको ध्वनिः ॥ १६ ॥

दिनचतुर्थभागस्य सत्ता परिशेषस्तस्यावेदने तत्परः ॥ १६ ॥

तेन तत्तारमप्याशु वचोऽन्तर्धानमाययौ ।
मौनं जलदनादेन मायूर इव निखनः ॥ १७ ॥

तेन ध्वनिता तत्तारमपि मुनेरिदं मौनं वासिष्ठं वचः अन्तर्धानमाययौ ॥ १७ ॥

आक्षुब्धा क्षुब्धपक्षालिः पञ्जरस्था खगावली ।
भूकम्पे तरसाऽऽतालीपल्लवेव वनावली ॥ १८ ॥

तरसा जवेन [बलेन इति पाठः] आक्षुब्धा संचलिता जातेत्यर्थः । आतालीपल्लवा
आकम्पिततालीदला वनावलीव ॥ १८ ॥

आययुर्भयवित्रस्ता बाला धात्रीकुचान्तरम् ।
सारवं प्रावृषीवाब्धाः प्रोन्नतं शृङ्गकोटरम् ॥ १९ ॥

सारवं रोदनशब्दसहितं यथा स्यात्तथा शृङ्गकोटरं
शृङ्गद्वयमध्यमिव ॥ १९ ॥

उत्तस्थुरवतंसेभ्यो भूभृतां भ्रमरस्रजः ।
ईषत्करालवाहाभ्यः सरिद्भ्योऽम्बुकणा इव ॥ २० ॥

ईषत्करालः क्षुब्धो वाहः प्रवाहो यासां ताभ्यः । भ्रमराणां
रजोगौरत्वद्योतनायाम्बुकणदृष्टान्तः ॥ २० ॥

एवं प्रक्षुभिते तस्मिन्गृहे दाशरथे तदा ।
प्राप्ते वासरवृद्धत्वे शान्तशङ्खस्वने शनैः ॥ २१ ॥

93497 वासरस्य वृद्धत्वे चतुर्थे वयसि प्राप्ते सति ॥ २१ ॥
93498
93499 संहरन्प्रस्तुतं वस्तु वचो मधुरवृत्तिमत् ।
93500 उवाच मुनिशार्दूलः सभामध्ये रघूद्वहम् ॥ २२ ॥
93501
93502 प्रस्तुतं वस्तु वक्तव्यार्थं संहरन्नुपसंहरन् ॥ २२ ॥
93503
93504 राघवानघ वाग्जालं मयैतत्प्रविसारितम् ।
93505 तेन चित्तखगं बद्ध्वा क्रोडीकृत्यात्मतां नय ॥ २३ ॥
93506
93507 क्रोडीकृत्य हृदि रुद्ध्वेति यावत् ॥ २३ ॥
93508
93509 कच्चिद्गृहीतो भवता मद्गिरामर्थ ईदृशः ।
93510 त्यक्त्वा दुर्बोधमक्षीणो हंसेनेवाम्भसः पयः ॥ २४ ॥
93511
93512 अक्षीणः अक्षयो मद्गिरामर्थः । हंसेन अम्भसः । अम्भः परित्यज्येति ल्यब्लोपे
93513 पञ्चमी ॥ २४ ॥
93514
93515 विचार्यैतदशेषेण स्वधियैवं पुनः पुनः ।
93516 अनेनैव पथा साधो गन्तव्यं भवताधुना ॥ २५ ॥
93517
93518 अनेन वासनाक्षयमनोनाशप्राणसंरोधज्ञानाभ्यासपथा ॥ २५ ॥
93519
93520 अनयैव धिया राम विहरन्नैव बध्यसे ।
93521 अन्यथाधः पतस्याशु विन्ध्यखाते यथा गजः ॥ २६ ॥
93522
93523 सुगृहीतं धिया राम मद्वचो न करोषि चेत् ।
93524 तत्पतस्यवटे त्यक्तदीपो वान्धो निशास्विव ॥ २७ ॥
93525
93526 यथा अन्धस्त्यक्तदीपो वा पुरुषोऽवटे गर्ते पतति तद्वत् ॥ २७ ॥
93527
93528 असङ्गेन यथाप्राप्तो व्यवहारोऽस्य सिद्धये ।
93529 इत्येव शास्त्रसिद्धान्तमादायोदारवान्भव ॥ २८ ॥
93530
93531 असामदुक्तार्थस्य सिद्धये यथाप्राप्तो व्यवहारः असङ्गेन कार्य इत्येवं
93532 सर्वशास्त्रपरमतात्पर्यविषयं सिद्धान्तमादाय मनसिकृत्य उदारवान्
93533 अपरिच्छिन्नात्मबोधवान्भवेत्यर्थः ॥ २८ ॥
93534
93535 हे सभ्या हे महाराज रामलक्ष्मणभूमिपाः ।
93536 सर्व एव भवन्तोऽद्य तावद्व्यापारमाह्निकम् ॥ २९ ॥
93537
93538 कुर्वन्त्वयं हि दिवसः प्रायः परिणताकृतिः ।
93539 शेषं विचारयिष्यामो विचार्यं प्रातरागताः ॥ ३० ॥
93540
93541 प्रातः श्वः समायामागताः सन्तः । धातुरांबन्धे प्रत्ययाः इति भविष्यति क्तः ॥
93542 ३० ॥
93543
93544 श्रीवाल्मीकिरुवाच ।
93545
93546 इत्युक्ता मुनिना तेन सा सर्वैव तदा सभा ।
93547 प्रोत्तस्थौ पद्मवदना सविकासेव पद्मिनी ॥ ३१ ॥
93548

93549 इति उक्ता आज्ञप्ता | पद्मानीव पद्मान्येव च वदनानि यस्याः || ३१ ||
93550
93551 राजानः स्तुतराजानः कृतराघववन्दनाः |
93552 परिष्टुते वसिष्ठे ते जग्मुरात्मनिवेशनम् || ३२ ||
93553
93554 स्तुतो राजा दशरथो यैस्ते स्तुतराजानः | वसिष्ठे परिष्ठुते सर्वैः प्रणम्य
93555 प्रशंसिते सति || ३२ ||
93556
93557 विश्वामित्रेण सहितो वसिष्ठो मन्तुमाश्रमम् |
93558 उत्तस्थावासनाच्छ्रीमान्नमस्कृतनभश्चरः || ३३ ||
93559
93560 नमस्कृता नभश्चरा देवा येन || ३३ ||
93561
93562 दशरथप्रभृतयो राजानो गुनयस्तथा |
93563 यथानुरूपं वक्तारमनुगम्य मुनिं चिरम् || ३४ ||
93564
93565 वक्तारमुपदेष्टारम् | चिरमाश्रमान्तमनुगम्य || ३४ ||
93566
93567 आपृच्छ्य केचिद्गगनं ययुः केचिद्वनान्तरम् |
93568 केचिद्राजगृहं सन्तो भृङ्गाः पद्मोत्थिता इव || ३५ ||
93569
93570 वक्तारमुपदेष्टारम् | चिरमाश्रमान्तमनुगम्य || ३५ ||
93571
93572 वसिष्ठपादयोस्त्यक्त्वा पुष्पाञ्जलिमनाविलम् |
93573 दारैरनुगतो राजा प्रविवेश गृहान्तरम् || ३६ ||
93574
93575 अनाविलं निर्मलम् || ३६ ||
93576
93577 रामलक्ष्मणशत्रुघ्नाः प्राप्तस्य स्वाश्रमं गुरोः |
93578 अभ्यर्च्य चरणौ भक्त्या त्वाजग्मुर्नृपमन्दिरम् || ३७ ||
93579
93580 अनाविलं निर्मलम् || ३७ ||
93581
93582 सदनानि समासाद्य श्रोतारः सर्व एव ते |
93583 समुरानर्चुरभ्येयुर्देवान्विप्रान्पितृंस्तथा || ३८ ||
93584
93585 देवान्पितृंश्च आनर्चुः | विप्रान् अतिथीन् अभ्येयुः अभिमुखं आ ईयुः |
93586 अभिगमनादिना पूजनाय खीचकुरित्यर्थः | अभ्येतुः इति पाठे तु अभ्येतुरतिथिवर्गस्य
93587 मध्ये विप्रानानर्चुरित्येवं योज्यम् || ३८ ||
93588
93589 यथाक्रमं स्वभृत्यान्तैर्विप्राद्यैश्च परिच्छदैः |
93590 समं बुभुजिरे भोज्यं वर्णधर्मक्रमोदितम् || ३९ ||
93591
93592 परिच्छदैः परिवारैः राह || ३९ ||
93593
93594 अस्तं गते दिनकरे समं दिवसकर्मभिः |
93595 अभ्यागते रात्रिकरे समं रजनिकर्मभिः || ४० ||
93596
93597 स्थित्वा तल्पेषु कौशेयशयनेष्वासनेषु च |
93598 भूचरा मुनिराजानो राजपुत्रा महर्षयः || ४१ ||
93599
93600 संसारोत्तरणोपायं वसिष्ठवदनेरितम् |

93601 यथावदेकाग्रधियश्चिन्तयामासुरादृताः ॥ ४२ ॥
93602
93603 ततः प्रहरमात्रेण निद्रामामुद्रिताननाः ।
93604 उत्स्वप्नसुन्दरीमीयुः पद्मा इव दिनार्थिनः ॥ ४३ ॥
93605
93606 भाविशुभसूचकत्वादुत्कृष्टस्वप्नैः सुन्दरीं रमणीयाम् । तथा च श्रुतिः अथ
93607 यत्र देव इव राजेव अहमेवेदं सर्वोऽस्मीति मन्यते सोऽस्य परमो लोकः इति
93608 स्वाप्नसार्वात्म्यदर्शनस्य भाविमोक्षफलसूचकतां दर्शयति । दिनार्थिनो
93609 राज्यतिक्रमणकामा इति यावत् ॥ ४३ ॥
93610
93611 रामलक्ष्मणशत्रुघ्नाः प्रहरत्रयमेव तत् ।
93612 वासिष्ठमुपदेशं ते चिन्तयामासुरक्षतम् ॥ ४४ ॥
93613
93614 प्रहरस्यार्धमात्रं ते तत आमुद्रितेक्षणाः ।
93615 उत्स्वप्नमाययुर्निद्रां क्षणाद्विद्रावितश्रमाम् ॥ ४५ ॥
93616
93617 इति शुभमनसां विवेकभाजामधिगतसारतयोदिताशयानाम् ।
93618 अभजत विरतिं तदा वियामा मलिननिशाकरवक्त्रतां जगाम ॥ ४६ ॥
93619
93620 अधिगतसारतया आत्मतत्त्वप्रबोधेन उदितः सविकास आशयो येषां रामादीनाम् ।
93621 त्रियामा रात्रिः । विरतिमुपरमं अभजत प्राप । अतएवारुणकिरणव्याप्त्या मलिनो
93622 निशाकर एव वक्त्रं यस्यास्तद्भावं जगाम ॥ ४६ ॥
93623
93624 इत्यर्षि श्रीवासिष्ठमहारामायणे वाल्मीकीये देवदूतोक्ते मोक्षोपायेषु
93625 निर्वाणप्रकरणे पूर्वार्धे दिनसव्यवहारवर्णनं नाम प्रथमः सर्गः ॥ १ ॥
93626
93627 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
93628 दिवसव्यवहारवर्णनं नाम प्रथमः सर्गः ॥ १ ॥
93629 द्वितीयः सर्गः २
93630
93631 श्रीवाल्मीकिरुवाच ।
93632
93633 ततः क्लिन्नेन्दुवदना पर्याकुलतमःपदा ।
93634 क्षीयमाणा बभौ श्यामा विवेक इव वासना ॥ १ ॥
93635
93636 इह रामादिभिः प्रातर्वसिष्ठस्य सभानयः ।
93637 उक्तार्थस्मरणात्तत्त्वे विश्रामश्चोपवर्ण्यते ॥
93638
93639 क्लिन्नो म्लान इन्दुरेव वदनं यस्याः । क्षीयमाणा मरणोन्मुखी ॥ १ ॥
93640
93641 पूर्वे ध्वस्ततयालोकं दृश्यमाने परेऽचले ।
93642 शवालीकावतंलाभं तापको निकरो दधौ ॥ २ ॥
93643
93644 ततो निकरो निर्गच्छत्किरणस्तापकः सूर्यः प्राङ्मुखैर्जनैर्दृश्यमाने पूर्वे
93645 पूर्वदिक्स्थे अचले शृङ्गभेदैर्ध्वस्ततया प्रतिबद्धतया
93646 तत्तदन्तरालनिर्गतमालोकं शयाः प्रसारितहस्तास्तदाभं तु अलीको मिथ्याकल्पितो
93647 अवतंसः किरीटादिशिरोभूषणं तदाभमालोकं दधाविति द्वन्द्वे विभज्यान्वयः ॥
93648 २ ॥
93649
93650 अवश्यायकणाकर्षी परामृष्टेन्दुमण्डलः ।
93651 ज्योत्स्नाकवलनालोको बभौ पाभातिकोऽनिलः ॥ ३ ॥
93652

93653 ज्योत्स्नानां कवलनाय आलोकश्चक्षुःप्रसार इव सौरालोको यस्येति सूर्यस्य
93654 तदीयचक्षुष्ट्वारोपादियमुक्तिः। अनेन क्षुत्तृषार्त इवेत्युत्प्रेक्षा गम्यते॥ ३॥
93655
93656 रामलक्ष्मणशत्रुघ्ना उत्थायानुचरैः सह।
93657 ययुर्वन्दितसंध्यास्ते पुण्यं वासिष्ठमाश्रमम्॥ ४॥
93658
93659 अस्नातानां श्रवणानधिकारात्स्नात्वा वन्दितसंध्याः। एवमग्रेऽपि॥ ४॥
93660
93661 तत्र वन्दितसंध्यस्य निर्गतस्यापि सद्मतः।
93662 मुनेर्ववन्दिरे पादौ पदोर्दत्वार्घ्यसंततिम्॥ ५॥
93663
93664 निर्गतस्य निर्गमिष्यतः॥ ५॥
93665
93666 क्षणात्तत्सदनं मौनं मुनिब्राह्मणराजभिः।
93667 हस्त्यश्वरथयानैश्च शनैर्नीरन्ध्रतां ययौ॥ ६॥
93668
93669 नीरन्ध्रतां निरवकाशताम्॥ ६॥
93670
93671 अथासौ मुनिशार्दूलस्तयैव सह सेनया।
93672 गृहं दाशरथं काले रामाद्यनुगतो ययौ॥ ७॥
93673
93674 तत्रैनं पूर्वसंबन्धः कृतसंध्यो महीपतिः।
93675 दूरमार्गं विनिर्गत्य पूजयामास सादरम्॥ ८॥
93676
93677 गृहप्रवेशात्पूर्वमेव संबध्नाति मेलयतीति पूर्वसंबन्धस्त्वरोत्साहो यस्य
93678 तथाविधो महीपतिर्दशरथः॥ ८॥
93679
93680 पुष्पमुक्तामणिव्रातैर्भूयोऽत्यधिकभूषिताम्।
93681 सभां प्रविश्य ते सर्वे विविशुर्विष्टरालिषु॥ ९॥
93682
93683 विष्टरालिषु आसनपङ्क्तिषु। वृक्षासनयोर्विष्टरः इति षत्वम्॥ ९॥
93684
93685 अथ तस्मिन्नवसरे ह्यस्तनाः सर्व एव ते।
93686 श्रोतारः समुपाजग्मुर्नभश्चरमहीचराः॥ १०॥
93687
93688 ह्यस्तनाः पूर्वेद्युर्भवाः॥ १०॥
93689
93690 विवेश सा सभा सौम्या कृतान्योन्याभिवन्दना [अभिवादना इति पाठः।
93691 ] ।
93692 बभौ राजसमाभोगा शान्तवातेव पद्मिनी॥ ११॥
93693
93694 राज्ञा सम आभोगः संस्थानस्थितिर्यस्याः। राजानं यतवाक्कायचेष्टं दृष्ट्वा
93695 सर्वेऽपि तथा आसन्निति भावः॥ ११॥
93696
93697 यथाप्रदेशमेवाशु निविष्टेषु यथासुखम्।
93698 तेषु तद्देशयोगेषु विप्रर्षिमुनिराजसु॥ १२॥
93699
93700 तद्देशयोगेषु सभाप्रदेशप्रविष्टेषु विप्रादिषु यथाप्रदेशं
93701 प्रात्यहिकक्लृप्तप्रदेशानुक्रमेण निविष्टेषूपविष्टेषु सत्सु॥ १२॥
93702
93703 मृदुनि स्वागतरवे शनैः शममुपागते।
93704 सभाकोणोपविष्टेषु शान्तशब्देषु बन्दिषु॥ १३॥

93705
93706 मृदुनि परस्परस्वागतप्रश्नरवे ॥ १३ ॥
93707
93708 तरसैवोदितेष्वाशु श्रोतुमभ्यागतेष्विव ।
93709 गवाक्षादिव जालेषु प्रविष्टेष्वर्करश्मिषु ॥ १४ ॥
93710
93711 उदितेष्वर्करश्मिषु श्रोतुमिव तरसैवाभ्यागतेषु गवाक्षाद्गवाक्षं प्राप्येव
93712 तज्जालच्छिद्रेषु प्रविष्टेषु सत्सु ॥ १४ ॥
93713
93714 सत्वरप्रविशच्छ्रोतृहस्तस्पर्शघटोद्भवे ।
93715 मुक्ताजालझणत्कारे निद्रायामिव शाम्यति ॥ १५ ॥
93716
93717 सत्वं सभां प्रविशतां श्रोतृणां हस्तस्पर्शैरङ्गघट्टनैश्चोद्भवो यस्य
93718 तथाविधे मुक्ताजालकभूषणादिझणत्कारे निद्रायामिव निस्पन्दभावाच्छाम्यति सति
93719 ॥ १५ ॥
93720
93721 कुमारः शंकरस्येव कचो देवगुरोरिव ।
93722 प्रह्लाद इव शुक्रस्य सुपर्ण इव शार्ङ्गिणः ॥ १६ ॥
93723
93724 दृष्टेर्भक्तिगौरवोत्कण्ठाद्यतिशयद्योतनाय बहून्युपमानानि ॥ १६ ॥
93725
93726 वसिष्ठस्यानने रामः शनैर्दृष्टिं न्यवेशयत् ।
93727 भ्रमन्तीमम्बरोपान्ते फुल्लपद्म इवालिनीम् ॥ १७ ॥
93728
93729 अम्बरे भ्रमन्तीमलिनीं भ्रमरीं फुल्ले पद्मे उदयादिकालो निवेशयति तद्वत् ॥ १७ ॥
93730
93731 मुनिस्त्वनुज्झितेनाथ तेनैव रघुनन्दनम् ।
93732 क्रमेणोवाच वाक्यज्ञो वाक्यं वाक्यार्थकोविदम् ॥ १८ ॥
93733
93734 तेन प्रागनुक्रान्तेनैव क्रमेण ॥ १८ ॥
93735
93736 श्रीवसिष्ठ उवाच ।
93737
93738 कच्चित्स्मरसि यत्प्रोक्तं ह्यो मया रघुनन्दन ।
93739 वाक्यमत्यन्तगुर्वर्थं परमार्थावबोधनम् ॥ १९ ॥
93740
93741 ह्यः पूर्वेद्युः ॥ १९ ॥
93742
93743 इदानीमवबोधार्थमन्यच्च रिपुमर्दन ।
93744 उच्यमानं मयेदं च शृणु शाश्वतसिद्धये ॥ २० ॥
93745
93746 वैराग्याभ्यासवशतस्तथा तत्त्वावबोधनात् ।
93747 संसारस्तीर्यते [संसारात्तीर्यत इति पाठः ।] तेन तेष्वेवाभ्यासमाहर ॥
93748 २१ ॥
93749
93750 प्रागुक्तक्रममेवानुक्रम्य दर्शयति-वैराग्येत्यादिना ॥ २१ ॥
93751
93752 सम्यक्तत्त्वावबोधेन [सम्यक्कृतावबोधेन इति पाठः ।] कुर्बोधे
93753 क्षयमागते ।
93754 गलिते वासनावेशे विशोकं प्राप्यते पदम् ॥ २२ ॥
93755
93756 दिक्कालाद्यनवच्छिन्नमदृष्टोभयकोटिकम् ।

93757 एकं ब्रह्मैव हि जगत्स्थितं द्वित्वमुपागतम् ॥ २३ ॥
93758
93759 दिक्कालाद्यनवच्छिन्नं त्रिविधपरिच्छेदशून्यम् । तस्यैव विवरणं अदृष्टेति । न
93760 दृष्टे देशतः कालतो वा उभे कोटी पूर्वापरावधी द्वैतं च यस्य । उभशब्दस्य
93761 समासे द्विवचनलुकि उभयोऽन्यत्र इत्ययच् ॥ २३ ॥
93762
93763 सर्वभावानवच्छिन्नं यन्न ब्रह्मैव विद्यते ।
93764 शान्तं समसमाभासं तत्रान्यत्वं कथं भवेत् ॥ २४ ॥
93765
93766 समेषु साधारणेषु गोत्वादिष्वप्यनुगतत्वात्समसमाभासता [समसमासत्ता
93767 तत्प इति पाठः ।] तत्परिशेषेण प्रथमानम् ॥ २४ ॥
93768
93769 इति मत्वाहमित्यन्तर्मुक्त्वा मुक्तवपुर्महान् ।
93770 एकरूपः प्रशान्तात्मा साक्षात्स्वात्मसुखो भव ॥ २५ ॥
93771
93772 इति उक्तब्रह्मस्वभावं मत्वानिश्चित्य अहमित्यभिमानं मुक्त्वा स्वात्मैव सु
93773 शोभनं खमाकाशमानन्दो वा यस्य तथाविधो भव ॥ २५ ॥
93774
93775 नास्ति चित्तं न चाविद्या न मनो नच जीवकः ।
93776 एताः स्वकलना राम कृता ब्रह्मण एव ताः ॥ २६ ॥
93777
93778 स्वाः कलनाः कल्पनाः ॥ २६ ॥
93779
93780 याः संपदो याश्च दृशो याश्चितो यास्तदेषणाः ।
93781 ब्रह्मैव तदनाद्यन्तमब्धिवत्प्रविजृम्भते ॥ २७ ॥
93782
93783 संपदो भोग्याः । दृशस्तद्भोगवृत्तयः । चितस्तत्प्रतिफलितचिदाभासाः स्मृतयो
93784 वा । तेषां भोगानामेषणाः स्पृहाः ॥ २७ ॥
93785
93786 पाताले भूतले स्वर्गे तृणे प्राण्यम्बरेऽपि च ।
93787 दृश्यते तत्परं ब्रह्म चिद्रूपं नान्यदस्ति हि ॥ २८ ॥
93788
93789 पातालादिदेशभेदे तृणादिवस्तुभेदे चकाराद्भूतादिकालभेदे च तदेव
93790 सर्वदृश्यात्मना दृश्यते नान्यदित्यर्थः ॥ २८ ॥
93791
93792 उपेक्ष्यहेयोपादेयबन्धवो विभवा वपुः ।
93793 ब्रह्मैव विगताद्यन्तमब्धिवत्प्रविजृम्भते ॥ २९ ॥
93794
93795 उपेक्ष्याः हेया उपादेया इति सामान्यतः । तत्राप्युत्तरोत्तरमुपादेयतमा बन्धवो
93796 विभवाः वपुरित्येवंप्रकारेणेत्यर्थः ॥ २९ ॥
93797
93798 यावदज्ञानकलना यावदब्रह्मभावना ।
93799 यावदास्था जगज्जाले तावच्चित्तादिकल्पना ॥ ३० ॥
93800
93801 किं सदैव तथा विजृम्भते नेत्याह-यावदित्यादिना ॥ ३० ॥
93802
93803 देहे यावदहंभावो [अत्रैको यावच्छब्दोऽवधारणार्थः साकल्यार्थो वा
93804 सकले दृश्ये इति ममैवेदमिति वान्वयः ।] दृश्येऽस्मिन्यावदात्मना ।
93805 यावन्ममेदमित्यास्था तावच्चित्तादिविभ्रमः ॥ ३१ ॥
93806
93807 आत्मना स्वेन ममेदमित्यास्था । क्रियत इति शेषः ॥ ३१ ॥
93808

93809 यावन्नोदितमुच्चैस्त्वं सज्जनासङ्गसङ्गतः ।
93810 यावन्मौर्ख्यं न संक्षीणं तावच्चित्तादिनिम्नता ॥ ३२ ॥
93811
93812 उच्चैस्त्वं पूर्णता । चित्तादिप्रयुक्ता निम्नता नीचता ॥ ३२ ॥
93813
93814 यावच्छिथिलतां यातं नेदं भुवनभावनम् ।
93815 सम्यग्दर्शनशक्त्यान्तस्तावच्चित्तादयः स्फुटाः ॥ ३३ ॥
93816
93817 यावदज्ञत्वमन्धत्वं वैवश्यं विषयाशया ।
93818 मौर्ख्यान्मोहसमुच्छ्रायस्तावच्चित्तादिकल्पना ॥ ३४ ॥
93819
93820 अज्ञत्वरूपमन्धत्वम् ॥ ३४ ॥
93821
93822 यावदाशाविषामोदः परिस्फुरति हृद्वने ।
93823 प्रविचारचकोरोऽन्तर्न तावत्प्रविशत्यलम् ॥ ३५ ॥
93824
93825 आशालक्षणो विषगन्धः । तावत् प्रकृष्टात्मविचारलक्षणश्चकोरोऽन्तर्न प्रविशति ॥
93826 ३५ ॥
93827
93828 भोगेष्वनास्थमनसः शीतलामलनिर्वृतेः ।
93829 छिन्नाशापाशजालस्य क्षीयते चित्तविभ्रमः ॥ ३६ ॥
93830
93831 तृष्णामोहपरित्यागान्नित्यशीतलसंविदः ।
93832 पुंसः प्रशान्तचित्तस्य प्रबुद्धा त्यक्तचित्तभूः ॥ ३७ ॥
93833
93834 अनास्थया त्यक्ता चित्तभूः प्रबुद्धा प्रबोधफलवती भवति नात्यक्तेत्यर्थः ॥ ३७ ॥
93835
93836 असंस्तुतमिवानास्थमवस्तु परिपश्यतः ।
93837 दूरस्थमिव देहं स्वमसन्तं चित्तभूः कुतः ॥ ३८ ॥
93838
93839 चित्तानुदय एव तत्याग इत्याशयेनाह-असंस्तुतमिति । असंस्तुतमनुपयुक्तं
93840 दूरस्थमवस्तु अतएवासन्तमभ्रपुरुषाकारमिव स्वं देहमनास्थं
93841 परिपश्यतश्चित्तस्य भवनंन् चित्तभूः कुतः ॥ ३८ ॥
93842
93843 भावितानन्तचित्तत्त्वरूपरूपान्तरात्मनः ।
93844 स्वान्तावलीनजगतः शान्तो जीवादिविभ्रमः ॥ ३९ ॥
93845
93846 भावितं श्रवणमनननिदिध्यासनसाक्षात्कारैः [त्कारैरुपरकृत ।]
93847 परिष्कृतमनन्तचिन्मात्ररूपं संसारप्रसिद्धरूपाद्रूपान्तरमात्मा च यस्य ।
93848 स्वान्ते मनसि अवलीनं जगद्यस्य ॥ ३९ ॥
93849
93850 असम्यग्दर्शने शान्ते मिथ्याभ्रमकरात्मनि ।
93851 उदिते परमादित्ये परमार्थैकदर्शने ॥ ४० ॥
93852
93853 असम्यग्दर्शने सम्यग्दर्शनविरोधिनि अज्ञाने मिथ्याभ्रमान्करोति
93854 तथाविधस्वभावे नष्टे सति ॥ ४० ॥
93855
93856 अपुनर्दर्शनायैव दग्धसंशुष्कपर्णवत् ।
93857 चित्तं विगलितं विद्धि वह्नौ घृतलवं यथा ॥ ४१ ॥
93858
93859 जीवन्मुक्ता महात्मानो ये परावरदर्शिनः ।
93860 तेषां या चित्तपदवी सा सत्त्वमिति कथ्यते ॥ ४२ ॥

93861
93862 चित्ताभावे कथं व्यवहारस्तत्राह-जीवन्मुक्ता इत्यादिना। चित्तपदवी जले शुष्के
93863 सिकतासु जलरेखेव चित्तप्रचाररेखा॥ ४२॥
93864
93865 जीवन्मुक्तशरीरेषु वासना व्यवहारिणी।
93866 न चित्तनाम्नी भवति सा हि सत्त्वपदं गता॥ ४३॥
93867
93868 निश्चेतसो हि तत्त्वज्ञा नित्यं समपदे स्थिताः।
93869 लीलया प्रभ्रमन्तीह सत्त्वसंस्थितिहेलया॥ ४४॥
93870
93871 प्रभ्रमन्ति व्यवहरन्ति। सत्त्वसंस्थितिप्रयुक्तया हेलया अनास्थया॥ ४४॥
93872
93873 शान्ता व्यवहरन्तोऽपि सत्त्वस्थाः संयतेन्द्रियाः।
93874 नित्यं पश्यन्ति तज्ज्योतिर्न द्वैतैक्येन वासना॥ ४५॥
93875
93876 तर्हि किं तेषां वासनया व्यवहारपरमार्थोभयदर्शनाद्द्वैतैक्येनेत्याह##-
93877 संभवतीत्यर्थः॥ ४५॥
93878
93879 अन्तर्मुखतया सर्वं चिद्वह्नौ त्रिजगत्तृणम्।
93880 जुह्वतोऽन्तर्निवर्तन्ते मुनेश्चित्तादिविभ्रमाः॥ ४६॥
93881
93882 तदेव स्पष्टमाह-अन्तर्मुखतयेति॥ ४६॥
93883
93884 विवेकविशदं चेतः सत्त्वमित्यभिधीयते।
93885 भूयः फलति नो मोहं दग्धबीजमिवाङ्कुरम्॥ ४७॥
93886
93887 अतएवाज्ञचित्तात्सत्त्वस्य वैलक्षण्यमित्याशयेनाह-विवेकेति॥ ४७॥
93888
93889 यावत्सत्त्वं विमूढान्तः पुनर्जननधर्मिणी।
93890 चित्तशब्दाभिधानोक्ता विपर्यस्यति बोधतः॥ ४८॥
93891
93892 विमूढानां जनानामन्तश्चित्तशब्दाभिधानोक्ता सा भवति तावदेव
93893 पुनर्जननधर्मिणी। बोधतस्तु सा सत्त्वं सती विपर्यस्यति। जन्मनिवृत्तिलक्षणं
93894 विपरीतकार्यं करोतीत्यर्थः॥ ४८॥
93895
93896 प्राप्तप्राप्यो भवान्नाम सत्त्वभावमुपागतम्।
93897 चित्तं ज्ञानाग्निना दग्धं न भूयः परिरोहति॥ ४९॥
93898
93899 चित्तं तवेति शेषः॥ ४९॥
93900
93901 संरोहतीषणाविद्धं यथा परशुनाग्निना।
93902 न तु ज्ञानाग्निनिर्दग्धं प्रबोधविशदं मनः॥ ५०॥
93903
93904 कीदृशं तर्हि भूयः संरोहति तदाह-संरोहतीति। ईषणा एषणा
93905 वित्तपुत्रलोकविषयास्ताभिराविद्धं खचितम्। यथा परशुना च्छिन्नमग्निना
93906 दग्धमपि तृणादि अन्तर्बीजशक्त्या विद्धं भूयः प्ररोहति तद्वत्। निर्दग्धं
93907 निर्दग्धैषणाबीजशक्तिकम्॥ ५०॥
93908
93909 ब्रह्मबृंहैव हि जगज्जगच्च ब्रह्मबृंहणम्।
93910 विद्यते नानयोर्भेदश्चिद्धनब्रह्मणोरिव॥ ५१॥
93911
93912 ज्ञानाग्निना कुतो जगद्बीजशक्तिदाहस्तत्राह-ब्रह्मेति। हि यस्माज्जगद्ब्रह्मण एव

93913 मोहाद्बृंहा आरोपितरूपेण वृद्धिः। यस्माच्च ज्ञानाज्जगदपि
93914 वास्तवब्रह्मस्वभावाभिवृद्धिकं यतश्च अनयोर्ब्रह्मजगतोरज्ञानमात्रकृतो
93915 भेदस्तन्नाशे न विद्यते अतो न प्ररोहतीत्यर्थः॥ ५१॥
93916
93917 चिदन्तरस्ति त्रिजगन्मरिचे तीक्ष्णता यथा।
93918 नातश्चिज्जगती भिन्ने तस्मात्सदसती मुधा॥ ५२॥
93919
93920 त्रिजगच्चिदन्तश्चिद्रूपेणैवास्ति यथा तीक्ष्णतैकरसे मरिचे तीक्ष्णता तद्वत्।
93921 अतस्तत्त्वदृशा चिज्जगती न भिन्ने। तस्मात्सदसती वस्तुप्ररोहप्रलयौ मुधा
93922 मायाप्रयुक्तभ्रान्तिरेवेत्यर्थः॥ ५२॥
93923
93924 शब्दशब्दार्थसंकेतवासनेह न संविदा।
93925 चिद्व्योमत्वादुभे भातस्त्यजातः सदसन्मती॥ ५३॥
93926
93927 तर्हि असद्वा इदमग्र आसीत्ततो वै सदजायत इत्यादिश्रौताः घटोऽस्ति घटो
93928 नास्तीत्यादिलौकिकाश्च सदसच्छब्दाः किं निरर्थकाः नेत्याह-शब्देति। इह
93929 श्रौतलौकिकव्यवहारे परस्परव्यावृत्ताः शब्दा व्यावृत्तेष्वर्थेषु संकेतिता इति
93930 वक्तृश्रोतृवासनैव व्यावृत्त्याकारेण भासते। [सदसच्छब्दकृता इति
93931 पाठः।] तदंशशब्दकृता संविदा प्रमा न। अवस्तुभूताया व्यावृत्तेः
93932 शब्दार्थत्वाभावात्। एवं व्यावृत्त्यपगमे उभे सदसच्छब्दवाच्ये
93933 अव्यावृत्ताननुगतचिद्व्योमत्वादेव परमार्थतो भात इति तदेव
93934 परमार्थवस्तुशब्दार्थ इत्यर्थः॥ ५३॥
93935
93936 अचिन्मयत्वान्नासि त्वं स्वात्मा किमिव रोदिषि।
93937 अचिन्मयत्वे जगतामभावे कल्पनं कुतः॥ ५४॥
93938
93939 एवं सदसद्विकल्पत्यागेन चिन्मात्रदर्शने
93940 देहाद्यात्मताभ्रमप्रयुक्तजननमरणाद्यनर्थप्राप्तिप्रयुक्तरोदनस्यापि न
93941 प्रसक्तिरित्याह-अचिन्मयत्वादिति। त्वं त्वमिति व्यवह्रियमाणं रामाभिधं
93942 सदसत्स्वभावं शरीरमात्मा स्वयं नासि अचिन्मयत्वात्। सर्वस्य जगतः अचिन्मयत्वे
93943 अभावे चावगते देहादिकल्पनैव तव कुत इत्यर्थः॥ ५४॥
93944
93945 चिन्मयं चेत्सदा सर्वं तच्चित्त्वं प्रविचारय।
93946 शुद्धं सत्त्वमनाद्यन्तं तत्राङ्ग कलना [कल्पना इत्यपि पाठः।]
93947 कुतः॥ ५५॥
93948
93949 यदि तु चिद्व्यावृत्तिलक्षणजाड्यमात्रपरित्यागच्चिन्मयमेव जगदिति मन्यसे तदा
93950 चित्त्वं चित्स्वभावं प्रविचारय। तच्च सम्यग्विचार्यमाणं शुद्धं
93951 त्रिविधपरिच्छेदशून्यमेकरसम्। तत्र देहाद्यनथकलना कुत इत्यर्थः॥ ५५॥
93952
93953 चिदात्मासि निरंशोऽसि पारावारविवर्जितः।
93954 रूपं स्मर निजं स्फारं माऽस्मृत्या संमितो भव॥ ५६॥
93955
93956 अस्मृत्या चित्स्वरूपविस्मरणेन संमिराः परिच्छिन्नः॥ ५६॥
93957
93958 तां स्वसत्तां गतः सर्वमसर्वं भावयोदयी।
93959 तादृग्रूपोऽसि शान्तोऽसि चिदसि ब्रह्मरूप्यसि॥ ५७॥
93960
93961 तां सत्तां पूर्णचित्स्वभावस्थितिं गतः सन् उदयी निरतिशयानन्दलाभादुयुदयवान्
93962 भूत्वा असर्वं परिच्छिन्नं जगत्सर्वं पूर्णस्वभावं भावय संपादय॥ ५७॥
93963
93964 चिच्छिलोदरमेवासि नासि नानास्यथाप्यसि।

93965 योसि सोसि न सोसीव सदस्यसदसि स्वभाः ॥ ५८ ॥
93966
93967 नानासि नानाभावेन आस्ते तच्छीलः नासि अथापि तद्बाधावधित्वादसि परिशिष्यसे । तत्र
93968 सर्ववाङ्मनसप्रवृत्तिनिमित्तापगमाद्योसि सोसि । तर्हि किमत्यन्तपरोक्षो नेत्याह##-
93969
93970 यः पदार्थविशेषोऽन्तर्न त्वं न ह्येव सोऽस्ति ते ।तदस्यतदसि
93971 स्वस्थश्चिद्घनात्मन्नमोऽस्तु ते ॥ ५९ ॥
93972
93973 सदस्यसदसीत्यंशं विवृणोति-य इति । यः सर्वपदार्थानां विशेषो
93974 व्यावृत्तिलक्षणोऽन्तःपरिच्छेदः स एव अलीकत्वादसच्छब्दार्थः । स त्वं न भवसीति
93975 सदसीत्यस्यार्थः । स एव तद्व्यावृत्तसद्धर्मत्वेन कल्प्यमानो व्यावहारिकैः सत्तेति
93976 व्यपदिश्यते स ते नास्त्येवेत्यसदसीत्यस्यार्थः इत्याशयेन सदस्यसदसीत्युक्त इत्यर्थः ॥
93977 ५९ ॥
93978
93979 आद्यन्तवर्जितविशालशिलान्तरालसंपीडचिद्घनवपुर्गगनामलस्त्वम्
93980 [संपीनत्विद्धन इति मूले टीकायां च पाठः ।] ।
93981 स्वस्थो भवाजठरपल्लवकोशलेखा लीलास्थिताखिलजगज्जय ते नमस्ते ॥ ६० ॥
93982
93983 आद्यन्तवर्जितं विशालं स्फटिकशिलान्तरालमिव संपीडं [कल्पना इत्यपि
93984 पाठः ।] निबिडं यच्चिद्धनं तद्वपुस्तत्स्वभावस्त्वं न
93985 दुःखादिविक्रियाभागिति मत्वा स्वस्थो भव । आसमन्ताद्विस्तीर्णे त्वदीयचिच्छिलाजठरे
93986 प्रतिबिम्बितपल्लवकोश इव कल्पिताया मायाया रेखासदृशवासनाभेदेषु मनोलीलया
93987 स्थितान्यखिलानि जगन्ति यस्मिंस्तथाविध हे राम ते तादृशाय नम इत्यर्थः ॥ ६० ॥
93988
93989 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
93990 विश्रान्तिसुदृढीकरणं नाम द्वितीयः सर्गः ॥ २ ॥
93991
93992 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये देव० मोक्षोपायेषु निर्वाणप्रकरणे
93993 पू० विश्रान्तिसुदृढीकरणं नाम द्वितीयः सर्गः ॥ २ ॥
93994 तृतीयः सर्गः ३
93995
93996 श्रीवसिष्ठ उवाच ।
93997
93998 भाविभूरितरङ्गाणां पयोवृन्दमिवाम्बुधौ ।
93999 या चिद्वहत्यनन्तानि जगन्त्यनघ सो भवान् ॥ १ ॥
94000
94001 ब्रह्मजीवमनोदेहजगतामैक्यदर्शनात् ।
94002 सर्वद्वैतभ्रमे शान्ते पूर्णैकस्थितिरुच्यते ॥
94003
94004 तत्रादौ सर्वकल्पनाप्रतिभासनिमित्तं चित्स्वरूपमात्मेति परिचाययति-भावीति ।
94005 अम्बुधौ भाविनां जायमानानां भूरितरङ्गभेदकल्पनानामास्पदं
94006 पयोवृन्दं जलसामान्यमिव या चित् अनन्तानि जगन्ति वहति सा । उ इति संभावनायाम् ।
94007 सैवात्मेति संभावयेत्यर्थः ॥ १ ॥
94008
94009 भव भावनया मुक्तो भावाभावविवर्जितः ।
94010 चिदात्मन्संस्थिताः क्वेव वद ते वासनादयः ॥ २ ॥
94011
94012 तत्संभावनोत्तरं द्वैतभावनात्यागमात्रेण निष्प्रपञ्चं निर्वासनं च
94013 तत्स्वरूपमनुभावयति-भवेति ॥ २ ॥
94014
94015 जीवोऽयं वासनादीदमिति चित्कचति स्वतः ।
94016 इतरोक्त्यर्थयोरत्र कः प्रसङ्गोऽङ्ग कथ्यताम् ॥ ३ ॥

तत्स्वरूपे परिचिते जीववासनाजगद्विभागाश्चित् एव कचनभेदकल्पना न
पृथक्सन्तीत्यनुभवितुं शक्यत इत्याह-जीव इति। इतरोक्तेरचिदर्थकशब्दस्य
तदर्थस्य च। अत्र एवंरूपे चिद्वस्तुनि॥ ३॥

महातरङ्गगम्भीरभासुरात्मचिदर्णवः।
रामाभिधोर्मिस्तिमितः सम सौम्योऽसि व्योमवत्॥ ४॥

रमन्ते योगिनो यस्मिन्नित्यानन्दे चिदात्मनि। इति रामपदेनासौ परं ब्रह्माभिधीयते॥
इति व्युत्पादितान्वर्थरामाभिधानः॥ ४॥

यथा न भिन्नमनलादौष्ण्यं सौगन्ध्यमम्बुजात्।
कार्ष्ण्यं कज्जलतः शौक्ल्यं हिमान्माधुर्यमिक्षुतः॥ ५॥

तत्र दृश्यस्य दृगव्यतिरेकं दृग्धर्मत्वोपपादकदृष्टान्तैः साधयति##-

आलोकश्च प्रकाशाङ्गादनुभूतिस्तथा चितेः।
जलाद्वीचिर्यथाऽभिन्ना चित्स्वभावात्तथा जगत्॥ ६॥

प्रकाशाङ्गात्तेजसः। अनुभूतिर्वृत्तिप्रतिबिम्बचैतन्यम्। तथाशब्दः
पूर्वदृष्टान्तसमुच्चये। यथा अभिन्नेति च्छेदः॥ ६॥

चितो न भिन्नोऽनुभवो भिन्नो नानुभवादहम्।
न मत्तो भिद्यते जीवो न जीवाद्भिद्यते मनः॥ ७॥

उक्तमेवार्थमध्यासक्रमोद्घाटनेन स्फुटं दर्शयति-चित इत्यादिना। चितो
मूलाधिष्ठानब्रह्मचितः। अनुभवो मायावृत्त्या रूढचिदाभासः। अहं
व्यष्टिसमष्ट्यहंकारः। एवमग्रेऽपि शरीरान्ते बोध्यम्॥ ७॥

मनसो नेन्द्रियं भिन्नं पृथग्देहश्च नेन्द्रियात्।
न शरीराज्जगद्भिन्नं जगतो नान्यदस्ति हि॥ ८॥

न शरीरादिति। समष्टिशरीरे जगतोऽन्तर्भावादित्याशयः॥ ८॥

एवं प्रवर्तितमिदं महच्चक्रमिदं चिरम्।
नच प्रवर्तितं किंचिन्न च शीघ्रं च नो चिरम्॥ ९॥

इदं प्रस्तुतमिदं दृश्यमानं जगच्चक्रं चितैव
स्वरूपमोहादध्यासपरम्परया प्रवर्तितमित्यर्थः। परमार्थदृशा तु न
किंचिदपि प्रवर्तितम्॥ ९॥

स्ववेदनमनन्तं च सर्वमेवमखण्डितम्।
विद्यते व्योमनि व्योम न कस्मिंश्चिन्न किंचन॥ १०॥

शून्यं शून्ये समुच्छूनं ब्रह्म ब्रह्मणि बृंहितम्।
सत्यं विजृम्भते सत्ये पूर्णे पूर्णमिव स्थितम्॥ ११॥

तस्य निरतिशयपूर्णतामेव भङ्गिभेदैर्वर्णयति-शून्यमिति॥ ११॥

रूपालोकमनस्कारान्कुर्वन्नपि न किंचन।
ज्ञः करोत्यनुपादेयान्न ज्ञस्यैव हि कर्तृता॥ १२॥

ज्ञस्य कर्तृता नैव ॥ १२ ॥

यदुपादेयबुद्ध्या च तद्दुःखाय सुखाय ते ।
भावाभावेन नादेयमकर्तृ सुखदुःखयोः ॥ १३ ॥

यत् उपादेयबुद्ध्या विषयजातमादीयते तदेव ते दुःखाय सुखाय च भवति । भाव
उपादेयताबुद्धिस्तदभावेन तु न किंचिदादेयं नाम भवति । अनात्तं च
सुखदुःखयोरकर्तृ प्रसिद्धमिति न दुःखादिप्रसक्तिरित्यर्थः । अथवा भावानां
दृश्यानामभावेन असत्त्वेन नादेयं किंचिदस्तीति तत् सुखदुःखयोरकर्त्रित्वर्थः ॥
१३ ॥

यथा नानाप्यनानैव खं खे खानीति वाग्गणः ।
सार्थकोऽप्यतिशून्यात्मा तथात्मजगतोः क्रमः ॥ १४ ॥

नानात्वेन प्रतीयमानानां भावानां कथमभावस्तत्राह-यथेति ॥ १४ ॥

अन्तर्व्योमामलो बाह्ये सम्यगाचारचञ्चुरः ।
हर्षामर्षविकारेषु काष्ठलोष्टसमस्थितिः ॥ १५ ॥

काष्ठलोष्टसमस्थितिर्भवेति शेषः ॥ १५ ॥

य एवातितरां शत्रुः सत्वरं मारणोद्यतः ।
तमेवाकृत्रिमं मित्रं यः पश्यति स पश्यति ॥ १६ ॥

शत्रुशरीरेऽपि स्वस्यैवात्मत्वात्स्वशरीर इव तत्राप्यकृत्रिमप्रीतिरात्मदर्शिनो
भवतीत्याह-य एवेति । मित्रं प्रियतमम् ॥ १६ ॥

समूलकाषं कषति नदीतट इव द्रुमम् ।
यः सौहृदं मत्सरं च स हर्षामर्षदोषहा ॥ १७ ॥

तत एव हर्षामर्षदोषनिवृत्तिरित्याह-समूलेति । यो नदी स्वतटे विद्यमानं
द्रुममिव सौहृदं मत्सरं च समूलकाषं कषति समूलमुन्मूलयति स एव
हर्षामर्षदोषाणां हन्ता भवतीत्यर्थः । समूलोपपदात्कषेर्णमुलि कषादिषु
यथाविध्यनुप्रयोगः ॥ १७ ॥

रागद्वेषविकाराणां स्वरूपं चेन्न भाव्यते ।
ततः सन्तोऽप्यसद्रूपाः सेविता अप्यसेविताः ॥ १८ ॥

रागद्वेषयोस्तत्कार्यविकाराणां च स्वरूपं तत्त्वं चेन्न भाव्यते न विचार्यते
ततस्तर्हि सन्तः अरागद्वेषत्वेन प्रसिद्धा अपि जना असद्रूपाः ।
रागद्वेषतत्त्वापरिज्ञाने तन्मूलोच्छेदासंभवेन पुनस्तेषां
रागद्वेषप्ररोहापरिहारात् । अतस्ते सेविता अपि वृथेत्यर्थः ॥ १८ ॥

यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।
हत्वापि स इमाँल्लोकान्न हन्ति न निबध्यते ॥ १९ ॥

किं तर्हि तत्त्वं तयोरिति चेदहंकार एव । अतस्तत्परित्यागे
आत्यन्तिकरागद्वेषनिवृत्तिरित्याशयेन गीतावाक्यमुदाहरति-यस्येति ॥ १९ ॥

यन्नास्ति तस्य सद्भावप्रतिपत्तिरुदाहृता ।
मायेति सा परिज्ञानादेव नश्यत्यसंशयम् ॥ २० ॥

अहंकारस्य तु तत्त्वमज्ञानमेव तन्निवृत्तिस्तु स्वात्मपरिज्ञानादित्याशयेन तत्र
मायाशब्दार्थप्रसिद्धिं दर्शयन्नाह-यदिति ॥ २० ॥

निःस्नेहदीपवच्छान्तो यस्यान्तर्वासनाभरः ।
तेन चित्रकृतेनेव जितं ज्ञेनाविकारिणा ॥ २१ ॥

यस्य वासनाभरः शान्तस्तेन जितम् । स किं जयः सत्यः नेत्याह-चित्रकृतेनेति ।
यथा चित्रकृतेन राज्ञा चित्रलिखितशत्रुशिरश्छिन्दता जितमिव तथा
नित्यनिरस्तसंसारनिरासबोधान्नित्यसिद्धाद्वितीयपूर्णात्मना जितमित्यर्थः ॥ २१ ॥

यस्यानुपादेयमिदं समस्तं पदार्थजातं सदसद्दशासु ।
न दुःखदाहाय सुखाय नैव विमुक्त एवेह सजीव एव ॥ २२ ॥

यस्य पुरुषधोरेयस्य इदं समस्तं भोग्यपदार्थजातं सदसद्दशासु
आविर्भावतिरोभावावस्थासु वैभवदारिद्यदशासु आरोपापवाददशासु वा
मिथ्यात्वात्तत्त्वत आत्मतया नित्यलब्धत्वाद्वा अनुपादेयं
सत्तद्वियोगसंयोगप्रयुक्ताय दुःखदाहाय सुखाय च न भवति किंतु इह सजीवो
जीवन्नपि मुक्त एवेत्यर्थः ॥ २२ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये देव० मोक्षोपायेषु
निर्वाणप्रकरणे पू० ब्रह्मैक्यप्रतिपादनं नाम तृतीयः सर्गः ॥ ३ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
ब्रह्मैक्यप्रतिपादनं नाम तृतीयः सर्गः ॥ ३ ॥
चतुर्थः सर्गः ४

श्रीवसिष्ठ उवाच ।

मनो बुद्धिरहंकार इन्द्रियादि तथानघ ।
अचेत्यचिन्मयं सर्वं क्व ते जीवादयः स्थिताः ॥ १ ॥

निरस्यान्याः पराग्दृष्टीर्वसिष्ठेनेह राघवः ।
प्रत्यग्दृष्टौ स्थिरीकृत्य पृष्टः संशयशान्तये ॥

रामस्य प्रत्यग्दृष्टिमुद्घाटयिष्यन्वसिष्ठः प्रथममाध्यात्मिकेषु मन##-

एकेनैवात्मना दत्ता नानातेयं महात्मना ।
यथैकेनैव चन्द्रेण तिमिराप्पात्रदर्पणैः [तिमिरं नेत्ररोगविशेषः ।]
॥ २ ॥

तत्रोपपत्तिमाह-एकेनेति । दत्ता स्वसत्तासंसर्गाध्यासेन प्रापिता ॥ २ ॥

भोगतृष्णाविषावेशो यदैवोपशमं गतः ।
तदैवमस्तमज्ञानमान्ध्यं ध्वान्तक्षयादिव ॥ ३ ॥

मन-आद्यनुगतप्रत्यक्तत्त्वदर्शनादेव तत्र विश्रान्तस्य
बाह्यार्थभोगतृष्णाक्षये बाह्यसर्ववस्त्वनुगतसन्मात्रस्यापि प्रत्यगभेदेन स्वत
एव भानाद्बाह्याध्यासनिमित्तमप्यज्ञानं क्षीयत इत्याशयेनाह-भागेति ।
एवमुक्तरीत्या प्रत्यक्तत्त्वदर्शनेन भोगतृष्णाविषावेशो यदैवोपशमं
गतस्तदैवाज्ञानमस्तं निरस्तमित्यर्थः । आन्ध्यं चक्षुषो
विषयप्रथनासामर्थ्यम् ॥ ३ ॥

94173 अध्यात्मशास्त्रमन्त्रेण तृष्णाविषविषूचिका।
94174 क्षीयते भावितेनान्तः शरदा मिहिका यथा॥ ४॥
94175
94176 अन्तर्भावितेन सम्यग्विचारितेन॥ ४॥
94177
94178 मौर्ख्ये क्षीणे क्षतं विद्धि चित्तं राम सबान्धवम्।
94179 विलीनाम्बुधरे व्योम्नि जाड्यं शाम्यत्यविघ्नतः॥ ५॥
94180
94181 मौर्ख्यमज्ञानम्। जाड्यं शैत्यम्॥ ५॥
94182
94183 अचित्तत्वं गते चित्ते क्षीयते वासनाभ्रमः।
94184 हारमुक्तासमावेशश्छिन्ने तन्ताविवानघ॥ ६॥
94185
94186 रघुनाथ विघाताय शास्त्रार्थं भावयन्ति ये।
94187 कृमिकीटत्वयोग्याय चेतसा संमिलन्ति ते॥ ७॥
94188
94189 एवं सर्ववेदान्तशास्त्ररहस्यभूतां प्रत्यग्दृष्टिं सम्यगुद्धाट्य
94190 तद्विपरीतदर्शनं शास्त्रार्थविघातकं निन्दति-रघुनाथेति। दर्शितं
94191 शास्त्रार्थं शास्त्ररहस्यं उपेक्ष्येति शेषः। ये तद्विघातायान्यथा भावयन्ति ते
94192 कृमिकीटत्वयोग्याय पापाय चेतसा रागादिहेतुदुर्बुद्ध्या मिलन्ति॥ ७॥
94193
94194 नवतामरसाकारकान्तलोचनलोलता।
94195 शान्ते मौर्ख्येऽक्षता वाते चलता सरसो यथा॥ ८॥
94196
94197 तां दुर्बुद्धिं व्यवहितसर्गे प्रपञ्चयिष्यमाणां प्रतीकेनोदाहरन्
94198 मौर्ख्यक्षयात्तत्क्षयं दर्शयति-नवेति। स्त्र्यादिपिण्डेषु दुर्बुद्धिकल्पितेति शेषः
94199 ॥ ८॥
94200
94201 स्थिरतामुपयातोऽसि भावाभावविवर्जितः।
94202 पदे परमविस्तारे नभसीव प्रभञ्जनः॥ ९॥
94203
94204 इदानीं रामस्य दर्शितप्रत्यग्दृष्टौ स्थिरीभावं लिङ्गैरुपलक्ष्याह##-
94205
94206 मन्ये मद्वचनैर्बोधमागतोऽसि रघूद्वह।
94207 विगताज्ञाननिद्रोऽन्तर्नृपतिः पटहैरिव॥ १०॥
94208
94209 पटहैर्वैतालिकानां प्रबोधनवाद्यभेदैः॥ १०॥
94210
94211 सामान्ये च लगन्त्येव जने कुलगुरोर्गिरः।
94212 अत्युदारमतौ राम न लगन्ति कथं त्वयि॥ ११॥
94213
94214 इदानीं स्वकृतस्योपदेशस्य साफल्यदर्शनाद्रामं स्वं च प्रशंसन्नाह##-
94215
94216 यत्रोपादेयवाक्यत्वं भावितं स्वेन चेतसा।
94217 मद्वचोऽन्तर्विशत्युच्चैस्तप्ते क्षेत्रे यथा पयः॥ १२॥
94218
94219 यत्र मयि त्वया उपादेयवाक्यत्वमाप्ततमत्वं भावितं चिन्तितमतो
94220 मद्वचस्तवान्तर्हृदि विशति॥ १२॥
94221
94222 वयमिह हि महानुभाव नित्यं कुलगुरवो भवतां रघूद्वहानाम्।
94223 मदुदितमिदमाशु धार्यमार्य शुभवचनं हृदि हारवत्त्वयेति॥ १३॥
94224

94225 इदानीं फलपर्यवसितस्वोपदिष्टार्थस्यापि स्मरणेन धारणं स्वस्य
94226 कुलपूज्यत्वान्माननीयशासनत्वख्यापनेन विधत्ते-वयमिति। भवतां
94227 सर्वेषामिक्ष्वाकूणां विशेषतश्च रघूद्वहानां वयं कुलगुरव इति हेतोस्त्वया
94228 मदुदितमिदं शुभं वचनं धार्यं पुनःपुनश्चिन्तनेन दृढीकृत्येत्यर्थः
94229 ॥ १३ ॥
94230
94231 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये मोक्षोपायेषु निर्वाणप्रकरणे पू०
94232 चित्ताभावप्रतिपादनं नाम चतुर्थः सर्गः ॥ ४ ॥
94233
94234 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
94235 चित्ताभावप्रतिपादनं नाम चतुर्थः सर्गः ॥ ४ ॥
94236 पञ्चमः सर्गः ५
94237
94238 श्रीराम उवाच।
94239
94240 अहो अहं गतश्चित्त्वं भवद्वाक्यार्थभावनात्।
94241 शान्तं जगज्जालमिदमग्रस्थमपि नाथ मे ॥ १ ॥
94242
94243 इह प्रबुद्धः श्रीरामो विश्रान्तः परमे सुखे।
94244 गुरोः पुरः स्वानुभवं वर्णयामास विस्तरात् ॥
94245
94246 चित्त्वं चिद्रेकरसपूर्णात्मभावम् ॥ १ ॥
94247
94248 परामन्तः प्रयातोऽस्मि परमात्मनि निर्वृतिम्।
94249 दीर्घावग्रहसंतप्तं वृष्ट्येव वसुधातलम् ॥ २ ॥
94250
94251 दीर्घेण चिरकाला नुवृत्तेनावग्रहेण वृष्टिप्रतिबन्धेन संतप्तम् ॥ २ ॥
94252
94253 शाम्यामि शीतलाकारः सुखं तिष्ठामि केवलम्।
94254 प्रसादमनुयातोऽहं [यातोऽस्मि इति पाठः।] सरो निर्वारणं यथा ॥ ३ ॥
94255
94256 निर्वारणं निर्गतगजम्। निर्विक्षोभनिमित्तमिति यावत् ॥ ३ ॥
94257
94258 सम्यक्प्रसन्नमखिलं दिङ्मण्डलमिदं मुने।
94259 यथाभूतं प्रपश्यामि निर्नीहारमिवाधुना ॥ ४ ॥
94260
94261 यथाभूतं यथार्थभूतसन्मात्रस्वभावम् ॥ ४ ॥
94262
94263 जातोऽस्मि गतसंदेहः शान्ताशामृगतृष्णिकः।
94264 रागनीरागनिर्मुक्तो [रागनीहार इति पाठः।] मृष्टजङ्गलशीतलः ॥ ५
94265 ॥
94266
94267 रागैर्विषयरञ्जनैर्नीरागैस्तद्विरोधिवैराग्यादिवृत्तिभिश्च निर्मुक्तः। मृष्टं
94268 निर्मृष्टनीहाररजस्कं शरत्कालजङ्गलमिव शीतलः ॥ ५ ॥
94269
94270 आत्मनैवान्तरानन्दं तत्प्राप्तोऽस्म्यन्तवर्जितम्।
94271 रसायनरसास्वादो यत्र नाथ तृणायते ॥ ६ ॥
94272
94273 रसायनममृतं तद्रसास्वादोऽपि यत्र यस्मिन्नानन्दे तृणायते
94274 तृणवन्नीरसीभवति उपेक्ष्यो भवति वा ॥ ६ ॥
94275
94276 अद्याहं प्रकृतिस्थोऽस्मि स्वस्थोऽस्मि मुदितोऽस्मि च।

लोकारामोऽस्मि रामोऽस्मि नमो मह्यं नमोस्तु ते ॥ ७ ॥

प्रकृतिः पारमार्थिकस्वभावस्तत्स्थः । लोका आरमन्ते विश्राम्यन्ति यस्मिन्सुखे
तदहमस्मि । एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति इति श्रुतेः । अतएव
रमन्ते योगिनो यत्रेति प्राग्दर्शितव्युत्पत्त्या रामोऽस्मि । स्वनामसार्थक्यं ममाद्य
संपन्नमित्यर्थः । तादृशाय मह्यं तत्प्रदर्शकाय ते तुभ्यं च नमः ॥ ७ ॥

ते संशयास्ताः कलनाः सर्वमस्तं गतं मम ।
रात्रिवेतालसंसारः प्रभात इव भास्करे ॥ ८ ॥

कलना भ्रमाः । रात्रौ बालभ्रान्तिकल्पितो वेतालस्य संसारः संचारः कुटुम्बं वा
॥ ८ ॥

निर्मले हृदि विस्तीर्णे संपन्ने हिमशीतले ।
मनो निर्वृतिमायातं सरसी शरदीव मे ॥ ९ ॥

मनः शरदि सरसी महासर इव निर्वृतिं निर्विक्षेपविश्रान्तिमायातं प्राप्तम् ॥ ९ ॥

कलङ्क आत्मनः कस्मात्कथं चेत्यादिसंशयः ।
नूनं निर्मूलतां यातो मृगाङ्काग्रे यथा तमः ॥ १० ॥

चिदेकरसस्यात्मनः अज्ञानादिकलङ्कः कस्मान्निमित्तादागतः कथं स्वप्रकाशे
तिष्ठति सः असङ्गमपरिच्छिन्नं च तं कथमाच्छादयति कथं च कूटस्थस्य
सांसारिकविकारानुभव इत्यादिसंशयः
सर्वसंशयमूलभूताज्ञानापगमान्निर्मूलतां यातः ॥ १० ॥

सर्वमात्मैव सर्वत्र सर्वदा भाविताकृतिः ।
इदमन्यदिदं चान्यदित्यसत्कलना कुतः ॥ ११ ॥

भाविताकृतिः स्फुरदाकारः ॥ ११ ॥

कोऽभवं प्रागहं तादृक्तृष्णानिगडयन्त्रितः ।
अन्तरात्मानमेवेति विहसामि विकासवान् ॥ १२ ॥

अहं सांप्रतं विकासवान्सन्ननुभूयमानमशनायाद्यतीतमात्मानमन्तरा
विनैव प्राक्तृष्णानिगडयन्त्रितः कः अभवमिति विहसामि ॥ १२ ॥

आ इदानीं स्मृतं सम्यग्यथैष सकलोऽस्म्यसौ ।
यस्त्वद्वागमृतापूरस्नातेनायमहं स्थितः ॥ १३ ॥

आ इति स्मरणद्योतको निपातः । निपात एकाजनाङ् इति प्रगृह्यत्वादसंधिः ।
त्वद्वागमृतापूरस्नातेन मया अयमहं यो यथा परमार्थतः स्थित एष
सकलश्चास्मि तथा इदानीं स्मृतमित्यन्वयः ॥ १३ ॥

अहो नु विततां भूमिमधिरूढोऽस्मि पावनीम् ।
इहस्थ एव यत्रार्को न पातालमिव स्थितः ॥ १४ ॥

अहमिहस्थ एव सन् कांचिद्विततामपरिच्छिन्नां ब्रह्मलोकभूमिमधिरूढोऽस्मि । यत्र
यस्यां भूमावर्कः सूर्यः पातालमास्थित इवात्यन्तमधोदेशस्थितोऽपि न भवति ।
कार्यब्रह्मलोकाद्धि सोऽधःस्थितो न परब्रह्मलोकात् । न तत्र सूर्यो भाति न
चन्द्रतारकम् इत्यादिश्रुतेरिति भावः ॥ १४ ॥

94329 मह्यं सत्तामुपेताय भावाभावभवार्णवात्।
94330 नमो नित्यं नमस्याय जयाम्यात्मात्मनात्मनि॥ १५॥
94331
94332 भावाभावभवार्णवात्। ल्यब्लोपे पञ्चमी। भावाभावलक्षणं भवार्णवं
94333 निस्तीर्य तत्पारभूतां तदधिष्ठानसन्मात्रतामुपेतायेत्यर्थः। यतोऽहमात्मना
94334 आत्मनि स्वे महिम्नि जयामि सर्वोत्कर्षेण वर्ते अतः सर्वैर्नित्यं सर्वदा नमस्याय।
94335 नमस्कर्तुमर्हायेत्यर्थः॥ १५॥
94336
94337 अनुभववशतो हृदब्जकोशे स्फुटमलितां समुपागतेन नाथ।
94338 तव वरवचसेह वीतशोकां चिरमुदितां च दशामुपागतोऽस्मि॥ १६॥
94339
94340 हे नाथ अहं हृदब्जकोशे स्फुटमलितां भ्रमरवत्स्थिरतामुपागतेन तव
94341 वरवचसा इह अस्मिन्देशे काले च स्वानुभववशतो वीतशोकां चिरं सदैवोदितां
94342 मुदितां वा जीवन्मुक्तदशामुपागतोऽस्मीत्यर्थः॥ १६॥
94343
94344 इत्यार्षे श्रीवासिष्ठमहारायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाणप्रकरणे
94345 पू० राघवविश्रान्तिवर्णनं नाम पञ्चमः सर्गः॥ ५॥
94346
94347 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशेनिर्वाणप्रकरणे पू०
94348 राघवविश्रान्तिवर्णनं नाम पञ्चमः सर्गः॥ ५॥
94349 षष्ठः सर्गः ६
94350
94351 श्रीवसिष्ठ उवाच।
94352
94353 भूय एव महाबाहो शृणु मे परमं वचः।
94354 यत्तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया॥ १॥
94355
94356 देहात्मप्रविवेकोऽत्र दुःखं देहात्मदर्शनात्।
94357 मूढानामङ्गनासङ्गान्मोहवृद्धिश्च वर्ण्यते॥
94358
94359 इत्थं श्रीरामे सम्यक्प्रबुद्धेऽप्यन्येषां श्रोतृणां तथैव प्रबोधजननाय
94360 प्रवर्तमानो भगवान्वसिष्ठो वक्ष्यमाणदेहात्मविवेकादिश्रवणे
94361 राममप्यनुकूलयन्नाह-भूय एवेत्यादिना। प्रीयमाणाय
94362 उपदेशतात्पर्यगोचरनिरतिशयानन्दात्मानुभवलक्षणप्रीतिभाजनाय ते
94363 सर्वजनहितकाम्यया यद्वक्ष्यामि तच्छृण्वित्यर्थः॥ १॥
94364
94365 भेदमभ्युपगम्यापि शृणु बुद्धिविवृद्धये।
94366 भवेदल्पप्रबुद्धानामपि नो दुःखिता यथा॥ २॥
94367
94368 ननु श्रोतृश्रावयितृश्रोतव्यादिभेदानां बाधितत्वात्कथं मे श्रवणे
94369 प्रवृत्तिः किंवा तत्फलं तत्राह-भेदमिति। बाधितानुवृत्त्या
94370 भेदाभ्युपगमेन श्रवणे प्रवृत्तिसिद्धिस्तव
94371 बोधाभिवृद्धिरल्पप्रबुद्धोद्धारश्च तत्फलमित्यर्थः॥ २॥
94372
94373 यस्याज्ञानात्मनोऽज्ञस्य देह एवात्मभावना।
94374 उदितेति रुषैवाक्षरिपवोऽभिभवन्ति तम्॥ ३॥
94375
94376 तत्रादौ श्रोतृणामिन्द्रियजयासामर्थ्यात्तैराकृष्यमाणस्य मनसः पूर्णात्मनि
94377 प्रतिष्ठा कथं स्यादिति जिज्ञासां लिङ्गैरुपलक्ष्य यस्त्वविज्ञानवान्भवत्ययुक्तेन
94378 मनसा सदा। तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः। यस्तु विज्ञानवान्भवति
94379 युक्तेन मनसा सदा। तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः इति
94380 श्रुतिद्वयोक्तदिशैव तां क्रमेण परिहरति-यस्येति द्वाभ्याम्।

94381 इत्येतस्मादेवासदात्मभावेनापराधादतिरुषा अक्षाणि रिपवः शत्रवो भूत्वा
94382 तमज्ञमभिभवन्ति पराभावयन्ति ॥ ३ ॥
94383
94384 यस्य ज्ञानात्मनो ज्ञम्य सत्येवात्मनि संस्थितिः ।
94385 संतुष्ट्यैवाक्षसुहृदो न घ्नन्ति तमनिन्दितम् ॥ ४ ॥
94386
94387 संतुष्ट्या सत्यात्मदर्शनोपकारजनितसंतोषेणेव अक्षाणि सुहृदो मित्राणि भूत्वा
94388 न घ्नन्ति किंतु ज्ञानाभिवृद्ध्यनुकूलाचरणेन पालयन्तीत्यर्थः ॥ ४ ॥
94389
94390 पदार्थे स्फुरतो यस्य न स्तुतिर्निन्दनादृते ।
94391 स देहं देहदुःखार्थमादत्ते [दुःखार्त इत्युभयत्र पाठः ।] केन
94392 हेतुना ॥ ५ ॥
94393
94394 स्फुरतो व्यवहरतो यस्य पुंसो भोग्यपदार्थे सदैव दोषदर्शनान्निन्दनादृते
94395 कुत्सनं विना स्तुतिः प्रशस्ततबुद्धिर्न भवत्येव स
94396 पुमान्देहसंबन्धिदुःखार्थं [दुःखार्तं इत्युभयत्र पाठः ।] देहं
94397 केन हेतुना आत्मतया आदत्ते । तत्र हेतुर्नास्तीत्यर्थः ॥ ५ ॥
94398
94399 नात्मा शरीरसंबन्धी शरीरमपि नात्मनि ।
94400 मिथो विलक्षणावेतौ प्रकाशतमसी यथा ॥ ६ ॥
94401
94402 इदानीं देहात्मैक्यभ्रमवारणाय युक्तीः प्रस्तौति-नात्मेत्यादिना ।
94403 जडचित्त्वाभ्यां विरुद्धयोर्देहात्मनोराधाराधेयभावादिसंबन्धोऽपि
94404 दुर्लभस्तादात्म्यं तु दूरे निरस्तमित्याशयः ॥ ६ ॥
94405
94406 सर्वैर्भावविकारैस्तु नित्योन्मुक्तस्त्वलेपकः ।
94407 नात्मास्तमेति भगवान्न चोदेति सदोदितः ॥ ७ ॥
94408
94409 एवं निर्विकारत्वसविकारत्वादिकृतविरोधादपि न तत्प्रसक्तिरित्याह-सर्वैरिति ॥ ७ ॥
94410
94411 जडस्याज्ञस्य तुच्छस्य कृतघ्नस्य विनाशिनः ।
94412 शरीरकोपलस्यास्य यद्भवत्यस्तु तत्तथा ॥ ८ ॥
94413
94414 आत्माधीनं स्वप्रथोपकारं प्राप्यात्मन एव दुःखभोजकत्वात्कृतघ्नस्य ॥ ८ ॥
94415
94416 आदत्ते तत्कथं नित्यं चिन्मयत्वं सदोदितम् ।
94417 ययोरेकपरिज्ञाने जडतैवाऽपरस्थिता ॥ ९ ॥
94418
94419 ननु चिन्मयत्वमपि देहस्यैव धर्मोऽस्तु तथा च न कोऽपि विरोध इत्याशङ्क्याह##-
94420 शक्यं तत्परिचये च जडतैव अपरस्य देहस्य स्थितेति तत्स्वभावविरुद्धं
94421 चिन्मयत्वं कथमादत्ते इत्यर्थः ॥ ९ ॥
94422
94423 तयोः कीदृग्विधा भूता समानसुखदुःखता ।
94424 यौ समौ समधर्माणौ न कदाचन तौ कथम् ॥ १० ॥
94425
94426 नन्वात्मनो मानसदुःखभोगेन देहे कार्श्यं जायमानं दृश्यते देहे च
94427 ताडनादिना आत्मनो दुःखभोग इति तयोः समानसुखदुःखतादर्शनात्तादात्म्यं
94428 किं न स्यात्तत्राह-तयोरिति । यौ आत्मदेहौ वह्न्ययः पिण्डाविव समौ अविविक्तौ
94429 परस्परधर्मविनिमयात्समधर्माणौ भासेते विविक्तौ तु तौ न कदाचन तथा
94430 भासेते तयोः कीदृग्विधा कथं च समानसुखदुःखता भूता परमार्थसत्या
94431 वक्तुं शक्येत्यर्थः ॥ १० ॥
94432

94433 यावप्यसक्तावन्योन्यं मिथः संनमितौ [सगमितौ इति पाठः |] कथम्
94434 |
94435 कथं स्थूलोऽणुरूपः स्यादणुः स्थूलः कथं भवेत् || ११ ||
94436
94437 किं च असङ्गेन परमसूक्ष्मेण आत्मना स्थूलस्य देहस्य संगम एव दुर्लभो दूरे
94438 ऐक्यमित्याह-यावपीति || ११ ||
94439
94440 एकोदये द्वितीयस्य न सत्ता दिनरात्रयोः |
94441 ज्ञानं नाज्ञानतामेति च्छाया नायाति तापताम् || १२ ||
94442
94443 परस्परोपघातिस्वभावत्वादपि नैक्यप्रसक्तिरित्याह-एकेति || १२ ||
94444
94445 सद्ब्रह्म नासद्भवति विचित्रास्वपि दृष्टिषु |
94446 मनागपि न संश्लेषः सर्वगस्यापि देहिनः || १३ ||
94447
94448 सद्ब्रह्म असद्देहादिरूपं न भवति | सतश्च देहिनो देहाधिष्ठानप्रतीचः
94449 स्वाध्यस्तेन देहादिना मनागपि न संश्लेषः || १३ ||
94450
94451 देहेन देहगस्यापि [देह्निः क्वापि इति पाठः |] कमलस्येव वारिणा |
94452 मनागपि न संश्लेषो ब्रह्मणो देहसत्तया [एतदग्रे जगत्यात्मनिकः
94453 किंचिन्नात्ततो देहकस्य च | तदा तच्च मुधैवैष सुखदुःखक्रमः कुतः || इति
94454 प्रक्षिप्तः श्लोको मुद्रितपुस्तके लभ्यते |] || १४ ||
94455
94456 उक्तमेव दृष्टान्तोपदर्शनाय पुनराह-देहेनेति | कुतो न संश्लेषस्तत्राह##-
94457 भगवत्पादैः यत्र हि यदध्यासस्तत्कृतेन गुणेन दोषेण वा अणुमात्रेणापि स न
94458 संबध्यते इति || १४ ||
94459
94460 तद्गतस्याप्यतद्वृत्तेरम्बरस्येव वायुतः |
94461 जरा मरणमापच्च सुखदुःखे भवाभवौ || १५ ||
94462
94463 अतद्वृत्तेः अलेपकत्वात्तद्विलक्षणस्वभावस्याम्बरस्य वायुतो यथा
94464 शोषकम्परजोलेपादयो दोषा न सन्ति तद्वद्देहादित आत्मनो जरादयो मनागपि न
94465 सन्तीत्यर्थः || १५ ||
94466
94467 मनागपि न सन्तीह तस्मात्त्वं निर्वृतो भव |
94468 स्थितो देहतयाप्युच्चैः पातोत्पातमयो [महाभ्रमः इति पाठः |]
94469 भ्रमः || १६ ||
94470
94471 देहतया देहात्मदृष्ट्या स्थितोऽपि मरणजन्मादिभ्रमो ब्रह्मात्मदृष्ट्या
94472 ब्रह्मणि अप्सु वीचिचय इव भ्रह्ममात्रो दृश्यत इत्यर्थः || १६ ||
94473
94474 दृश्यते केवलं ब्रह्मण्यप्सु वीचिचयो यथा |
94475 आत्मसत्तोपजीवित्वादात्मानुभवतीह हि || १७ ||
94476
94477 देहयन्त्रं [इदमर्धं पूर्वान्वयि |] पयःसत्तामात्राद्रूर्मिमिव स्थितम् |
94478 आधारस्पन्दनेनाङ्ग यथा क्षोभो न वा भवः || १८ ||
94479
94480 यथा पयः स्वसत्तयैव स्थितमूर्मित्वमनुभवतीव तद्वत् | यथा प्रतिबिम्बस्य
94481 आधारस्पन्दनेन हेतुना क्षोभे सति सूर्यादेर्मनागपि क्षोभो नास्ति तथा देहेन
94482 चिदाभासक्षोभेऽपि देहिनो देहसाक्षिण इत्यर्थः || १८ ||
94483
94484 सूर्यादेः प्रतिबिम्बस्य तथा देहेन देहिनः |

94485 सम्यग्दृष्टे यथाभूते वस्तुन्येवाभिजायते ॥ १९ ॥
94486
94487 सम्यग्दृष्टे तु वस्तुन्येव स्थितिरभिजायते। देहमयोऽज्ञानविभ्रमश्च लयमेति ॥ १९
94488 ॥
94489
94490 स्थितिर्देहमयो ज्ञानविभ्रमो लयमेति च।
94491 देहदेहवतोर्ज्ञानाद्यथाभूतार्थयोः स्थितिः ॥ २० ॥
94492
94493 यथाभूतार्थयोर्विमर्शे
94494 निष्कृष्टपरमार्थस्वभावयोर्देहतत्साक्षिणोर्ज्ञानाद्देहस्यासत्तात्मिका
94495 तत्साक्षिणश्च सत्तात्मिका स्थितिरुदेति प्रकटीभवति ॥ २० ॥
94496
94497 सत्तासत्तात्मिकोद्भेति दीपाद्दीपपदार्थयोः।
94498 असम्यग्दर्शिनो [असम्यग्ज्ञानिन इति पाठः।] देहस्यावर्तपरिवर्तनैः ॥
94499 २१ ॥
94500
94501 द्रीपेनाद्यते प्रस्यत इति दीपात् तमः प्रदीपश्च तादृशयोः। परस्परोत्थिति
94502 स्वभावपदार्थभूतयोरित्यर्थः। इदानीमज्ञस्य जगद्दर्शनप्रकारं निन्दितुं
94503 प्रपञ्चयति-असम्यग्दर्शिन इत्यादिना ॥ २१ ॥
94504
94505 अन्तःशून्याः स्फुरन्तीह ते मोहार्जुनपादपाः।
94506 अपर्यालोचितात्मार्था अपरामृष्टसंविदः ॥ २२ ॥
94507
94508 स्पन्दन्ते चेतितोन्मुक्तास्तृणवन्मूढबुद्धयः।
94509 अनास्वादितचित्तत्वाज्जडाः सर्वे खघ्रायुभिः ॥ २३ ॥
94510
94511 चेतिता चेतनया तयोन्मुक्ताः। भावे घञन्ताच्चितेर्मत्वर्थे इनिस्ततस्तल्।
94512 नह्यचेतनदेहात्मभूताश्चेतना इति वक्तुं योग्या इति भावः। यदि ते अचेतनास्तर्हि
94513 कथं वदन्ति तृणकाष्ठाहरणादिना व्यवहरन्ति च तत्राह-अनास्वादितेत्यादिना।
94514 ते सर्वे जडा अपि खैर्मुखनासिकादिच्छिद्रैस्तत्संचारिभिर्वायुभिश्च यत्र यत्र
94515 प्रदेशे कीचकवदुदितेन नोदनेन आक्रान्तास्तत्र रटन्ति प्रस्फुरन्ति संचरन्ति चेति
94516 परेणान्वयः ॥ २३ ॥
94517
94518 यत्र तत्रोदिताक्रान्ता रटन्ति प्रस्फुरन्ति च।
94519 तृणकाष्ठादिकं सर्वमाहरन्ति त्यजन्ति च ॥ २४ ॥
94520
94521 सशब्दस्पर्शरूपाढ्यास्तरङ्गतरलाङ्गकाः।
94522 जडाः सन्तः स्फुरद्रूपा भृशं स्फाररसासवाः ॥ २५ ॥
94523
94524 शब्दस्पर्शसहितरूपादिविषयलाभेनैव आढ्याः कृतार्थमन्याः। स्फारो रसो
94525 भोगाभिनिवेश एव आसवमिवोन्मादको येषाम् ॥ २५ ॥
94526
94527 सविहारागमापाया महौघा इव दुर्धियः।
94528 सर्वेषामेव चैतेषां स्थितैवैषा पिदव्यया ॥ २६ ॥
94529
94530 यथा नाद्यादिमहौघा अचेतना अपि विहारागमापायादिचेष्टासहितास्तद्वद्दुर्धियोऽपि
94531 किमेषामात्मचिन्नास्त्येव न किंतु विद्यमानाप्यबोधाद्व्यर्थाऽसंपन्नेत्याह##-
94532
94533 किंत्वबोधवशादस्याः परां कृपणतां गता।
94534 श्वाससंततयो ह्यज्ञाल्लोहकारदृतेर्यथा ॥ २७ ॥
94535
94536 अज्ञान्मूर्खात्। निःसरन्त्य इति शेषः ॥ २७ ॥

94537
94538 स्पन्दमात्रार्थमेवाशु दृश्यन्ते नार्थकारिणाः।
94539 तर्जनं गर्जनं मूढाद्धनुर्दण्डगुणादिव॥ २८॥
94540
94541 जठराग्निस्पन्दमात्रार्थम्। एवं मूढान्निष्पद्यमानं परतर्जनं गर्जनं च न
94542 चेतनतालिङ्गं मरणाद्यनर्थमात्रहेतुत्वाद्धनुर्गुणविस्फारवदित्याह##-
94543
94544 श्रूयते मरणायैव चिद्बोधपरिवर्जितम्।
94545 फलभोगोऽपि यो मूढात्तदरण्यतरोरिव॥ २९॥
94546
94547 फलभोगः फललाभः॥ २९॥
94548
94549 तस्मिन्विश्रमणं यत्तच्छिलाफलहके यथा।
94550 तेन यत्संगमः स स्यात्स्थाणुना भुवि जङ्गले॥ ३०॥
94551
94552 शिलाफलहके तप्तशिलाफलके यथा तथा। स्थाणुना छिन्नतरुमूलेन॥ ३०॥
94553
94554 तदर्थं यत्कृतं किंचित्तद्व्योम लकुटैर्हतम्।
94555 तस्मिन्यदधमे दत्तं तत्यक्तं किं न कर्दमे॥ ३१॥
94556
94557 कृतमुपकृतं स्वेन तत्। लकुटैर्दण्डैः। हतं ताडितम्॥ ३१॥
94558
94559 तेन सार्धं कथा यत्तत्कौलेयाह्वानमम्बरे।
94560 अज्ञानमापदां निष्ठा का हि नापदजानतः॥ ३२॥
94561
94562 कौलेयः श्वा। कुलकुक्षीत्यादिना विहितस्य ढकञः कलोपश्छान्दसः।
94563 इदमज्ञनिन्दनमज्ञानस्य हेयताप्रदर्शनार्थं दयया न त्वज्ञेषु
94564 द्वेषादित्याशयेनाह-अज्ञानमिति॥ ३२॥
94565
94566 इयं संसारसरणिर्वहत्यज्ञ प्रमादतः।
94567 अज्ञस्योग्राणि दुःखानि सुखान्यपि दृढानि च॥ ३३॥
94568
94569 पुनःपुनर्निवर्तन्ते युगं प्रत्यचला इव।
94570 शरीरधनदारादावास्थां समनुबध्नतः॥ ३४॥
94571
94572 युगं युगोपलक्षितं लाङ्गलं रथं वा प्रति अचला इव दृढानि दुरुल्लङ्घनानि
94573 च॥ ३४॥
94574
94575 इदं [इदं तु दुःखं इति पाठः।] दुर्दुःखमज्ञस्य न कदाचन
94576 शाम्यति।
94577 अनात्मनि शठे देहे आत्मभावमुपेयुषि॥ ३५॥
94578
94579 असद्बोधमयी माया कथं नामानि नश्यति।
94580 दुर्भावस्वञ्चितधियो वस्तुन्यन्धस्य दुर्मतेः॥ ३६॥
94581
94582 दुष्टैर्भावैः सुष्नुः अञ्चिता व्याप्ता धीर्यस्य॥ ३६॥
94583
94584 अवस्तुनि सनेत्रस्य लुठतश्च पदे पदे।
94585 विषमुत्पद्यते चन्द्रादामोदः कुसुमादिव॥ ३७॥
94586
94587 अवस्तुन्यसद्वस्तुनि सनेत्रस्य पश्यत इति यावत्॥ ३७॥
94588

94589 कण्टकश्चैति पयसो दूर्वाङ्कुर इव स्थलात् ।
94590 देहशाल्मलिभोगिन्यो मनोमातङ्गशृङ्खलाः ॥ ३८ ॥
94591
94592 पयसः क्षीरात्कण्टकश्च एति आगच्छति । उत्पद्यत इति यावत् । देहलक्षणस्य शाल्मलेः
94593 कोटरे निवसन्त्यो भोगिन्यः सर्पिणीभूता आशाः प्रसूयन्ते रागलोभदैन्यादिसर्पान् ।
94594 अथवा मनोगातङ्गस्य शृङ्खलाभूता आशा दुःखानि प्रसूयन्ते इति
94595 आन्तरबाह्यविषयभेदेनाशाभेदं प्रकल्प्य रूपकद्वयं योज्यम् ॥ ३८ ॥
94596
94597 अज्ञस्याशाः प्रसूयन्ते सुकृष्टादिव शालयः ।
94598 नरकश्रीरिहाज्ञानं कुष्कृतव्यालवेष्टितम् ॥ ३९ ॥
94599
94600 सुकृष्टात्क्षेत्रात् । न विद्यते ज्ञानं यस्य सः अज्ञानस्तं नरकश्रीः परिपालयति
94601 प्रतीक्षते ॥ ३९ ॥
94602
94603 परिपालयति प्रीता मयूरी वारिदं यथा ।
94604 नेत्रलोलालिनीलोला स्फुरिताधरपल्लवा ॥ ४० ॥
94605
94606 मूर्खार्थमेव विकसत्यङ्गना विषवल्लरी ।
94607 अज्ञस्य हृदि सद्भूमावेव [सद्भूमाविव पेलवपल्लवः इति पाठः ।]
94608 पेलवपल्लवा ॥ ४१ ॥
94609
94610 हृदि मनोलक्षणायां सद्भूमौ ॥ ४१ ॥
94611
94612 विद्यते पतगच्छायो रागविद्रुमदुर्द्रुमः ।
94613 तरुच्छदलसद्धूमः शस्त्रजालरदोल्मुकः ॥ ४२ ॥
94614
94615 तरुच्छदः पल्लवस्तत्स्थानापन्नयोः स्फुरदोष्ठयोर्लसन्तो निश्वासधूमा यस्य ।
94616 शस्त्रजालमिव कटकटायमाना रदा दन्ता एवोल्मुका यस्य । द्वेष एव दावाग्निर्यस्य ।
94617 हृन्मनस्तल्लक्षणे मरौ निर्जलारण्ये ज्वलति भस्मीभवतीव ॥ ४२ ॥
94618
94619 ज्वलति द्वेषदावाग्निर्हृन्मरौ कायतापदः ।
94620 अज्ञमात्सर्यमनसि परापवदनच्छदा ॥ ४३ ॥
94621
94622 मात्सर्यजलपूर्णे मनसि मानसे । मात्सर्यमानसेऽज्ञस्येति पाठः साधुः ॥ ४३ ॥
94623
94624 ईर्ष्याकमलिनी चिन्ताषट्पदा विलसत्यलम् ।
94625 प्रतिजन्मप्रमृष्टोग्रदुःखकल्लोलविभ्रमम् ॥ ४४ ॥
94626
94627 प्रमृष्टा नानाप्रतीकारोपायवेलोपसर्पणेन मार्जिता उग्रदुःखकल्लोलविभ्रमा यत्र
94628 तं जडमज्ञं जलमयं समुद्रं च मरणलक्षणो वाडवो वडवानलः ॥ ४४ ॥
94629
94630 जडमेव समभ्येति पुनर्मरणवाडवः ।
94631 जन्म बाल्यं व्रजत्येतद्यौवनं युवता जराम् ॥ ४५ ॥
94632
94633 जन्मादीनामुत्तरोत्तरमनर्थप्रापकत्वमेवेत्याह-जन्मेत् ॥ ४५ ॥
94634
94635 जरा मरणमभ्येति मूढस्यैव पुनः पुनः ।
94636 जगज्जीर्णारघट्टेऽस्मिन्नज्ज्वा संसृतिरूपया ॥ ४६ ॥
94637
94638 आरघट्टे यन्त्रे घटीयन्त्रे ॥ ४६ ॥
94639
94640 मज्जनोन्मज्जनैरज्ञो यन्त्रे कलशतां गतः ।

94641 यदेव गोष्पदापूरं ज्ञधियः पेलवं जगत् ॥ ४७ ॥
94642
94643 गोष्पदमापूरयतीति गोष्पदापूरम् । अल्पजलप्रायमित्यर्थः ॥ ४७ ॥
94644
94645 तदेवापारपर्यन्तमगाधममहात्मनः ।
94646 धियोऽदृश इवाज्ञस्य दीर्घं जठरकोटरात् ॥ ४८ ॥
94647
94648 अमहात्मनः परिच्छिन्न देहात्मदर्शिनः अपारपर्यन्तमगाधं च भवति । अतः
94649 अदृशः अन्धस्येव अज्ञस्य धियो
94650 जठरकोटरादुदरभरणासक्तिबन्धनवशादपरं दीर्घं संसाराब्धिपारं न
94651 प्रयान्तीत्यन्वयः ॥ ४८ ॥
94652
94653 न प्रयान्त्यपरं पारं विहङ्ग्यः पञ्जरादिव ।
94654 भावमात्रपरावृत्तवासनाभारनाभयः ॥ ४९ ॥
94655
94656 कुतो न प्रयान्ति तत्राह-भावेत्यादिना । पराञ्चि खानि
94657 व्यतृणत्स्वयंभूस्तस्मात्पराङ् पश्यति नान्तरात्मन् इति श्रुतेर्बाह्येषु
94658 विषयमात्रेषु परावृत्तवासनाभाराक्रान्तहृदयनाभयः सत्यो विषयपङ्केषु
94659 मग्ना जन्मचक्रस्य नेमयो नेमिस्थानीयेन्द्रियगणा उद्धृत्य स्पष्टीकर्तुं
94660 शोधयितुं न शक्यन्ते ॥ ४९ ॥
94661
94662 स्पष्टीकर्तुं न शक्यन्ते जन्मचक्रस्य नेमयः ।
94663 अज्ञेनेन्द्रियगृध्रार्थं [अज्ञानेन्द्रिय इति पाठः ।]
94664 रागान्मृगयुणा तनुः ॥ ५० ॥
94665
94666 गृध्रपदेन मृगयोपयोगिनः श्येना ग्राह्याः । तनुः स्वदेहपरम्परा ।
94667 दूराद्दूरदेशकालयोरपि सर्वदा सर्वत्रेति यावत् । रागान्मृगयाव्यसनात् ॥ ५० ॥
94668
94669 संसारारण्य आस्तीर्णा दूरादामिषपिण्डवत् ।
94670 भूतशैलमयी दृष्टिर्मृन्मांसलवमात्रिका ॥ ५१ ॥
94671
94672 आमिषपिण्डवदिति वतिप्रयोगो भ्रान्तिदृशा भेदाभावे
94673 सादृश्याभावादित्याशयेनाह-भूतेति । भूतमयी मनुष्यपश्वादिप्राणिप्रचुरा
94674 हिमवान्विन्ध्यो मलय इत्यादिशैलप्रचुरा च दृष्टिर्वस्तुतो मांसलवमात्रिका
94675 मृल्लवमात्रिका चेति विभज्य व्युत्क्रमेण संबन्धः । मोहात्तत्त्वापर्यालोचनादेव
94676 गौरश्वः पुरुषो माता भ्राता हिमवान्मलय इत्यादिकल्पनया संलक्ष्यते इत्यर्थः ॥
94677 ५१ ॥
94678
94679 मोहात्संलक्ष्यते चित्रपदार्थानन्तरञ्जनः ।
94680 जयत्यनल्पसंकल्पकल्पनाकल्पपादपः ॥ ५२ ॥
94681
94682 अतएव चित्रैः पदैरर्थैश्च अनन्तानि रञ्जनानि यस्य
94683 तथाविधोऽनल्पसंकल्पकलनालक्षणः कल्पपादपो जयति । अत्यन्तासद्भिरपि पदार्थैः
94684 सर्वकामपूरणसमर्थत्वात्सर्वोत्कर्षेण वर्तत इत्यर्थः ॥ ५२ ॥
94685
94686 अज्ञानात्प्रसृता यस्माज्जगत्पर्णपरम्पराः ।
94687 यस्मिंस्तिष्ठन्ति राजन्ते विशन्ति विलसन्ति च ॥ ५३ ॥
94688
94689 इदानीं तादृशकल्पवृक्षकोटिव्याप्तं संसारवनखण्डं वर्णयति##-
94690
94691 विचित्ररचनोपेता भूरिभोगिविहङ्गमाः ।
94692 यत्र जन्मानि पर्णानि कर्मजालं च कोरकम् ॥ ५४ ॥

पर्णानि पल्लवाः। कोरकं कलिका। छान्दसी क्लीबता॥ ५४॥

फलानि पुण्यपापानि मञ्जर्यो विभवश्रियः।
अज्ञानेन्दूदये नैता योषिदोषधयः स्फुटम्॥ ५५॥

योषिल्लक्षणा ओषधयो लता अस्मिन्वर्णितलक्षणे संसारवनखण्डे। परां
शोभामुपागताः॥ ५५॥

संसारवनखण्डेऽस्मिन्परां शोभामुपागताः।
जन्मजालकलापूर्णस्तमःकालकृतोदयः॥ ५६॥

अज्ञानस्येन्दुत्वमुक्तमुपपादयति-जन्मेति। तमःकाले विवेकसूर्यास्तमयकाले।
शून्ये निष्प्रपञ्चे ब्रह्मणि नभसि च उदितात्मा प्रकाशमानः। दोषाया
रत्रेर्दोषाणां चेशः॥ ५६॥

शून्योदितात्मा दोषेशो जयत्यज्ञानचन्द्रमाः।
अज्ञानेन्दोः प्रसादेन वासनामृतशालिना॥ ५७॥

तर्पिताशाचकोरेण चित्तरत्नरसैषिणा।
राजहंसविलासिन्यः प्रालेयशिशिराङ्गिकाः॥ ५८॥

तर्पिताः पोषिता आशालक्षणाश्चकोरा येन। चित्तलक्षणं यद्रत्नं द्युमणिस्तदीयो रसो
विषयास्वादनामृतं तदेषिणा। सूर्यमण्डलान्तर्गतेनैवामृतेन शुक्लपक्षे
चन्द्रपूर्तीरिति भावः॥ ५८॥

भान्ति कान्ताकुमुद्वत्यो लोललोचनषट्पदाः।
धम्मिल्लतिमिरोल्लासा लसत्पाण्डुपयोधराः॥ ५९॥

रामारजन्यो राजन्ते तन्मौर्ख्येण विजृम्भितम्॥ ६०॥

रामालक्षणारजन्यो रात्रयो यद्राजन्ते तद्द्रष्टॄणां मौर्ख्येणैव विजृम्भितम्।
तच्छोभाकारेण परिणतं न तत्र शोभनं किंचिद्वस्तुतोऽस्तीति भावः॥ ६०॥

आपातमात्रमधुरत्वमनर्थसत्त्वमाद्यन्तवत्त्वमखिलस्थितिभङ्गुरत्वम्।
अज्ञानशाखिन इति प्रसृतानि राम नानाकृतीनि विपुलानि फलानि तानि॥ ६१॥

अज्ञानमेव सर्वानर्थहेतुरिति दर्शयन्नुपसंहरति-आपातेति। हे राम
यद्विषयेषु प्रसिद्धमापातमात्रमधुरत्वमनर्थपर्यवसानत्वमाद्यन्तवत्त्वं
देशतः परिच्छिन्नत्वमखिलस्थितिषु भङ्गुरत्वं नश्वरत्वं च
तत्सर्वमज्ञानलक्षणस्य शाखिनो वृक्षस्य इति एवंविधानि नानाकृतीनि फलानि
बीजाङ्कुरपरम्परया जगदाकारेण प्रसृतानि। तस्मादज्ञानमेव
तन्मूलमुच्छेद्यमिति भावः॥ ६१॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये देवदूतोक्ते मोक्षोपायेषु
निर्वाणप्रकरणे पू० मोहमाहात्म्यं नाम षष्ठः सर्गः॥ ६॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
मोहमाहात्म्यं नाम षष्ठः सर्गः॥ ६॥

सप्तमः सर्गः ७

94745 श्रीवसिष्ठ उवाच।
94746
94747 यन्मुक्तावलिता रत्नभूषिता भान्ति योषितः।
94748 मदेन्दावुदिते क्षुब्धकामक्षीरार्णवोर्मयः॥ १॥
94749
94750 कामादिभिरनर्थादिष्वर्थता रम्यतावहाः।
94751 विस्तरेणात्र वर्ण्यन्ते अज्ञानस्य विभूतयः॥
94752
94753 तत्र सर्वविवेकापहारिण्यः सद्योनर्थगर्तपातिन्यः प्रस्तुताः स्त्रिय एवाज्ञानस्य
94754 कामस्य च महाविभूतय इत्याशयेन ता एव प्रथमं वर्णयति-यदित्यादिना। अस्य
94755 यच्छब्दस्य सर्वेषु श्लोकेषु प्रतिवाक्यं संबध्यमानस्य
94756 सप्तषष्ठितमसर्गोपान्त्यश्लोकार्धे तदज्ञानविजृम्भितमित्यत्र संबन्धः।
94757 मदलक्षणे इन्दौ उदिते सति योषितः क्षुब्धस्य कामक्षीरार्णवस्योर्मय इव यद्भान्ति
94758 तदज्ञानस्य विजृम्भितं विभूतिरिति प्रतिवाक्यं योज्यम्॥ १॥
94759
94760 सौवर्णाम्भोजकोशस्थलोलालिपटलश्रियम्।
94761 धारयन्ति दृशः स्त्रीणां कपोलतलदोलिताः॥ २॥
94762
94763 यद्धारयन्ति तदप्यज्ञानविजृम्भितम्॥ २॥
94764
94765 उद्यानवनखण्डेषु भूमौ कृतमदा मधौ।
94766 हृद्याः सुमनसो भान्ति दासा इव मनोभुवः॥ ३॥
94767
94768 मधौ वसन्ते वनखण्डेषु तरुषु भूमौ च मनोभुवो दासा आज्ञाप्या इव
94769 कृतमदाः कामिनां जनितोन्मादाः॥ ३॥
94770
94771 क्रव्यादगृध्रगोमायुकौलेयकवलाङ्गिकाः।
94772 स्त्रियः समुपमीयन्ते चन्द्रचन्दनपङ्कजैः॥ ४॥
94773
94774 क्रव्यादाः क्रव्यमात्राहारा व्याघ्रादयः। गृध्रगोमाय्वादयस्तु लाभे
94775 अन्नाद्यप्यश्नन्तीति पुनर्ग्रहणम्॥ ४॥
94776
94777 सौवर्णकलशाम्भोजकलिकामातुलुङ्गवत्।
94778 दृश्यते स्त्रीस्तनश्रेणी रक्तपूतिसुगन्धिका॥ ५॥
94779
94780 रक्तपूतिगन्ध एव सुगन्धो यस्यास्तथाविधा स्त्रीणां स्तनश्रेणिः
94781 सौवर्णकलशादिवद्यद्दृश्यते तदज्ञानविजृम्भितम्॥ ५॥
94782
94783 रसायनेन्दुनिस्यन्दमधुबिम्बासवद्रवैः।
94784 ओष्ठाभिधो मांसलवो लालाक्त उपमीयते॥ ६॥
94785
94786 इन्दुनिस्यन्दोऽमृतम्॥ ६॥
94787
94788 अल्पाल्पाष्ठीवदाकारा भुजाक्रूरास्थिशङ्कवः।
94789 महाबाहुलताशब्दैर्वर्ण्यन्ते कविभिः शुभैः॥ ७॥
94790
94791 प्रत्येकं विभज्य दर्शने अल्पाल्पा अष्ठीवन्तः पर्वाणि तदाकाराश्च
94792 भुजाशब्दवाच्याः क्रूरा अस्थिशङ्कवः॥ ७॥
94793
94794 कदलीस्तम्भसम्भारसुन्दरीभिस्तथा [तदूरुभिस्तथा भृता इति पाठः।
94795 ] भृता।
94796 कुचशोभोचितानन्दा तोरणालिर्विराजते॥ ८॥

तथा कदलीस्तम्भावेव संभार उरुसामग्री यासां तथाविधाभिः सुन्दरीभिर्मृता
कुचकलशशोभाया उचितो द्रष्टृनेत्रानन्दो यस्याः सकाशात्तथाविधा
तोरणालिर्मन्मथागारतोरणस्रग्भूता काञ्ची यद्विराजते तदप्यज्ञानविजृम्भितमिति
प्राग्वत् ॥ ८ ॥

आपातमन्दमधुरा मध्ये द्वन्द्वानुबन्धिनी ।
शीघ्रावसानविरला लक्ष्मीरप्यभिवाञ्छ्यते ॥ ९ ॥

आपाते आरम्भे मन्दानां मधुरा आपाततोऽल्पमधुरा वा । मध्ये व्ययकाले
रागद्वेषादिद्वन्द्वानुपातिनी । शीघ्रमवसानं क्षयो यस्याः । कतिपयजनेषु
दृश्यत्वाद्विरला ईदृशी लक्ष्मीरपि यदभिवाञ्छ्यते तदिति प्राग्वत् ॥ ९ ॥

समुपैति मतिर्दुःखं सुखं च शतशाखताम् ।
दुःखशाखास्तु जायन्ते नानाकर्मफलाः श्रियः ॥ १० ॥

यन्मतिर्दुःखं समुपैति यच्च सुखं शतशाखतां समुपैति यच्च
नानाकर्मफलाः श्रियो दुःखान्येव शाखा यासां तथाविधा जायन्ते तदपीति
प्राग्वत् ॥ १० ॥

बद्धजालघनाकाराः कारार्थमिव रज्जवः ।
दच्छदः सदृशा वाचः प्रतानगहने स्थिताः ॥ ११ ॥

श्रीणामज्ञानविजृम्भितत्वे तत्फलककाम्यकर्मसु प्रवर्तकानां
कर्मकाण्डवचसां सुतरां तथात्वमित्याशयेनाह-वद्धेति । प्रतानानि
काम्यकर्मविस्तारास्तल्लक्षणे गहने अरण्ये स्थिता लता इव
बद्धैर्नानाफलकामजालैर्घनाकारा निविडाकारा अतएव देवादिऋणिनां कर्मिणां
कारागृहरक्षणार्था रज्जव इव स्थिताः । दतां दन्तानां छदावोष्ठौ
तत्सदृशाः । रागचापलप्रधाना इति यावत् । ईदृशाः
कर्मकाण्डवाचोऽप्यविद्याविजृम्भितमित्यर्थः । छदशब्दस्य समासे
विभक्तेरलुग्विसर्गश्च च्छान्दसः । इदं च यामिमां पुष्पितां वाचम् इत्यादिना
भगवता गीतासु स्फुटीकृतम् ॥ ११ ॥

संतप्त मोहमिहिका कार्यासारविसारिणी ।
यमुना प्रावृषीवैति तिमिरश्यामला चिरम् ॥ १२ ॥

मोहवशात्स्वत एव काम्येषु प्रवृत्तानां पुनः शास्त्रेणापि
प्रवर्तनमन्धोन्मत्तस्य स्वतः कूपे पततो बलात्पातनमिवानुचितमित्याशयेन
मोहात्स्वतःप्रवृत्तिं दर्शयति-संततेति । कार्याणि
प्रवृत्तयस्तल्लक्षणैरासारैर्विसारिणी विस्तीर्णा मोहलक्षणा मिहिका स्वतः श्यामला
प्रावृषि रजसा च कलुषा तत्रापि निशि तिमिरेणात्यन्तश्यामला यमुना यथा एति
प्रवहति तद्वत्स्वत एवैति । पुरुषमन्धीकृत्य विषयेषु प्रवर्तयतीत्यर्थः ॥ १२ ॥

कटूकृतान्तःकरणो नानासुखविशारदः ।
वर्धते हि गतस्नेहं जन्मप्रतिविषारसः ॥ १३ ॥

भोगे प्रवृत्तस्य च विषयेषु पुत्रपौत्रादिषु च रागोऽभिवर्धत इत्याह-कट्विति ।
आपाततो नानासुखविशारदः परिणामे
दुःखपर्यवसानाद्द्वेषमात्सर्यचिन्तादिजननाच्च गतस्नेहं यथा स्यात्तथा
कटूकृतान्तःकरणो जन्मलक्षणायाः प्रतिविषाया विषवल्ल्या रस इव
पल्लवोपचयप्रदो रागो वर्धते ॥ १३ ॥

94849 व्याधूतजर्जराकीर्णजगतापर्णराजयः |
94850 स्वकर्मपवना वान्ति नानावकररेणवः || १४ ||
94851
94852 ततश्च क्रमात्पुत्रादीनां मरणे तद्वियोगदुःखपरम्परा भवतीत्याशयेनाह##-
94853 पुत्रादिपरिजनसमूहा एव पर्णराजयो यैस्तथाविधा नानाविधा अवकररेणव इव
94854 विवेकदृष्टिहारिणो विक्षेपभेदा येषु तथाविधाः स्वदुष्कर्मपरिपाकलक्षणाः
94855 पवना वान्ति || १४ ||
94856
94857 कालः कवलितानन्तजगत्पक्वफलोऽप्ययम् |
94858 घस्मराचारजठरः कल्पैरपि न तृप्यति || १५ ||
94859
94860 ततः स्वस्यापि मृत्युरिति सदैवैवं जन्मपरम्परया मृत्युमुखे प्रवेश
94861 इत्याह-काल इति || १५ ||
94862
94863 मोहमारुतमापीय त्वचा विषमचारिणः |
94864 स्फुरन्तीहाहयश्चित्राः शीतलाचलदीप्तयः || १६ ||
94865
94866 एवं परिवर्तमानानज्ञजीवान् अहित्वेनोत्प्रेक्षते-मोहेति | शीतलस्य
94867 त्रिविधतापशून्यस्याचलस्य च ब्रह्मणो दीप्तयः प्रकाशयमाना जीवा इव संसारे
94868 चित्रा अहयः सर्पा एव | तत्कुतः | यत एते मोहलक्षणं मारुतमापीयान्तः पूरयित्वा
94869 स्थिताः पुनर्वियुज्यमानया नानादेहलक्षणया त्वचा चोपलक्षिता विषमचारिणः
94870 कुटिलगतयः स्फुरन्ति | संचलन्तीत्यर्थः || १६ ||
94871
94872 चिन्तापिशाचोपहता विवेकेन्दूदयं विना |
94873 तमसेव निरालोका याति यौवनयामिनी || १७ ||
94874
94875 तैः प्रतिजन्म प्राप्यमाणं यौवनमपि मोक्षसाधनेषु
94876 विवेकवैराग्यश्रवणादिष्वनुपयोजनाद्वृथैवेत्याशयेनाह-चिन्तेति | याति तेषामिति
94877 शेषः || १७ ||
94878
94879 जिह्वा जर्जरतामेनि प्राकृतानुनयज्वरैः |
94880 पद्मकोटरकोणस्थमपि सूत्रं हिमैरिव || १८ ||
94881
94882 एवं तदीयजिह्वादीनामपि वैयर्थ्यानर्थते दर्शयति-जिह्वेत्यादिना | प्राकृतानां
94883 पामराणां स्त्रीपुत्रादीनामनुनयः कोपापनयनं तत्प्रयुक्तैर्ज्वरैः संतापैः
94884 जिह्वोपमानत्वोपपत्तये सूत्रपदेन तद्दृढावष्टब्धमन्तर्दलं लक्ष्यते | उक्तो
94885 न्यायश्चक्षुराद्यङ्गेष्वपि ज्ञेयः || १८ ||
94886
94887 दुःखशोकमहाष्ठीलः कष्टकण्टकसंकटः |
94888 सहस्रशाखतां याति दारिद्र्यदृढशाल्मलिः || १९ ||
94889
94890 अष्ठीला ग्रन्थयः || १९ ||
94891
94892 अन्तःशून्योन्नतिध्वस्तचित्तचैत्यकृतालयः |
94893 मायाबहुलयामिन्यां लोभोलूको विवल्गति || २० ||
94894
94895 सत्यवस्त्वनवलम्बनादन्तःशून्यः सकोटरश्च स्वोन्नतिभारेण
94896 भुग्नश्चित्तलक्षणश्चैत्यवृक्षस्तत्र कृतालयः मायालक्षणायां
94897 बहुलयामिन्यां कृष्णपक्षनिशायाम् || २० ||
94898
94899 पूर्वं गृहीत्वा कर्णाभ्यां स्फुरन्ती परिनिश्चयम् [परितश्च य इति
94900 पाठः |] |

94901 जराजर्जरमार्जारी यौवनाखुं निकृन्तति ॥ २१ ॥
94902
94903 पूर्वमारम्भकाले कर्णाभ्यां कर्णसंनिहितकपोलयोर्गृहीत्वा ॥ २१ ॥
94904
94905 निःसारा क्रमशः क्रान्तधराधरसमुन्नतिः ।
94906 डिण्डीरपिण्डिकेवेयं सृष्टिरायाति पुष्टताम् ॥ २२ ॥
94907
94908 अज्ञानादेव पुनः सृष्टिप्रसरं दर्शयति-निःसारेत्यादिना । क्रमशः क्रान्ता
94909 रचयितुमुपक्रान्ता धराधराणां धराधर इव च समुन्नतिर्यया । डिण्डीरस्य
94910 फेनस्य पिण्डिका तादृशी प्रसिद्धा सृष्टिर्जगद्दृष्टिः ॥ २२ ॥
94911
94912 आभासपुष्पधवला जगत्पल्लवशालिनी ।
94913 सत्तालता विकसिता धर्मार्थफलधारिणी ॥ २३ ॥
94914
94915 आभासश्चिदाभासप्रकाशस्तल्लक्षणपुष्पैर्धवला उज्ज्वला सत्ता
94916 व्यावहारिकसत्यतालक्षणा लता ॥ २३ ॥
94917
94918 सुराचलमहास्थूणं चन्द्रसूर्यगवाक्षकम् ।
94919 गगनाच्छादनं चारु ध्रियते त्रिजगद्गृहम् ॥ २४ ॥
94920
94921 सुराचलोपलक्षितपर्वता एव महान्तः स्थूणाः स्तम्भा यस्य । गमनमेवाच्छादनं
94922 च्छदिर्यस्य ॥ २४ ॥
94923
94924 संसारसरसि स्फारे चरन्ति प्राणषट्पदाः ।
94925 शरीरपुष्करेष्वन्तश्चिद्रूपरसपायिनः ॥ २५ ॥
94926
94927 स्फारे विस्तीर्णे संसारसरसि जातेषु शरीरपुष्करेषु अन्तःस्थचिद्रूपरसपानशीलाः
94928 प्राणषट्पदाश्चरन्ति एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति आनन्देन
94929 जातानि जीवन्ति इत्यादिश्रुतेरिति भावः ॥ २५ ॥
94930
94931 नभोमार्गमहानीलकुट्टिमैकान्तशालिनी ।
94932 भुवनौदररभ्यान्तः स्फुरत्यादित्यदीपिका ॥ २६ ॥
94933
94934 नभोमार्गलक्षणे महति नीलमणिनिर्मिते कुट्टिमे कृत्रिमभूभागे एकान्तं शालिनी
94935 शोभमाना भुवनोदरे रमणीयतरा आदित्यदीपिका स्फुरति दीप्यते
94936 यत्तदप्यविद्याविजृम्भितमिति सर्वत्र ॥ २६ ॥
94937
94938 आशातन्तुनिबद्धाङ्गी जागती जीर्णपक्षिणी ।
94939 स्ववासनाशलाकेऽन्तर्निबद्धेन्द्रियपञ्जरे ॥ २७ ॥
94940
94941 जागती जगदन्तर्गतजीवराशिलक्षणा जीर्णपक्षिणी स्ववासनाशलाके इन्द्रियपञ्जरे देहे
94942 यन्निबद्धा तदपि ॥ २७ ॥
94943
94944 अनारतपतज्जालभूतपर्णपरम्परा ।
94945 स्पन्दते मरुताऽऽमृष्टा संसृतिव्रततिश्चिरम् ॥ २८ ॥
94946
94947 मरुता प्राणेन आमृष्टा कम्पिता ॥ २८ ॥
94948
94949 सृष्टेः कतिपयं कालं प्रहृष्टाः कुलशालिनः ।
94950 अधःकृतोग्रनरकपङ्काः शङ्कोज्झिताः क्षणम् ॥ २९ ॥
94951
94952 अधः पाताले स्पष्टं प्रदर्शनाय धात्रा कृतोग्रनरकपङ्काः सन्तोऽपि

94953 तत्पतनशङ्कोज्झिताः सन्तो यत्प्रहृष्टास्तदपीति प्राग्वत् | अथवा
94954 स्वात्मतादात्म्याध्यासेन अधःकृतास्तिरस्कृता इव उग्रा
94955 रक्तमांसमलमूत्रादिदेहनरकपङ्का यैस्तथाविधास्तच्छङ्कोज्झिताः सन्तो
94956 वयं कुलशालिनो महाशया इत्याद्यभिमानैर्यत्प्रहृष्टास्तदित्यर्थः || २९ ||
94957
94958 भुक्तेन्दुखण्डकणिकानीननीरदशैवले |
94959 स्वर्गमार्गसरस्यन्तः स्फुरन्ति सुरसा रसाः || ३० ||
94960
94961 स्वर्गलक्षणेऽभ्रमार्गस्थसरसि सुरा देवास्तद्रूपाः सारसपक्षिणो यत्स्फुरन्ति तदपि ||
94962 ३० ||
94963
94964 नानाफलालिमलिना वासनाजालमालिता |
94965 स्पन्दामोदमयी स्फीता क्रियाविकसितालिनी || ३१ ||
94966
94967 यच्च नानाकाम्यफललक्षणैरलिभिर्मलिना क्रियालक्षणा अब्जिनी विकसिता तदपि || ३१ ||
94968
94969 वराकी सृष्टिशफरी स्फुरन्ती भवपल्वले |
94970 कृतान्तवृद्धगृध्रेण शठेन विनिगृह्यते || ३२ ||
94971
94972 शफरी प्रोष्ठ्याख्या क्षुद्रमत्स्यजातिः || ३२ ||
94973
94974 तरङ्गफेनमालेव सैवान्येव च भङ्गुरा |
94975 श्वःश्वोऽपरेन्दुलेखेव समुदेति विचित्रता || ३३ ||
94976
94977 श्वः श्वः अपरा प्रतिदिनं भिन्नपरिमाणा इन्दुलेखेव || ३३ ||
94978
94979 भूरिभूतशराबाणि क्षणभङ्गानि कुर्वता |
94980 इदं कालकुलालेन चक्रं संपरिवर्त्यते || ३४ ||
94981
94982 क्षणभङ्गानि अचिरनश्वराणि || ३४ ||
94983
94984 असंख्यातानि कल्पानि संजातान्यचले पदे |
94985 जगज्जङ्गलजालानि दग्धानि युगवह्निना || ३५ ||
94986
94987 कल्पानि सर्वव्यवहारसमर्थानि | अचले पदे ब्रह्मणि | युगवह्निना युगान्ताग्निना || ३५ ||
94988
94989 भावाभावैरपर्यन्तैः सुखदुःखदशाशतैः |
94990 वैपरीत्यं प्रयात्येवमजस्रं जागती स्थितिः || ३६ ||
94991
94992 वैपरीत्यं विपरिणामम् || ३६ ||
94993
94994 क्षुब्धैर्युगपरावर्तैर्वासनाशृङ्खलोम्भिता |
94995 महाशनिनिपातैश्च न भग्नाऽबुद्धधीरता || ३७ ||
94996
94997 एतादृशानर्थपरम्परादर्शनेऽप्यज्ञानां कुतो न निर्वेदोद्भयस्तत्राह##-
94998 मौर्ख्यदार्ढ्यलक्षणा धीरता यतो न कैश्चिदपि भग्नेत्यर्थः || ३७ ||
94999
95000 शतशो विद्रुतारिघ्नैर्दनुपुत्रैरभिष्टुताम् |
95001 भवभग्नतया[तयां इति तय गतौ इत्यस्य रूपम् | भग्नरयां इति पाठः |
95002 ] मैन्द्रीं तनुं वहति वासना || ३८ ||
95003
95004 या वासना ज्ञानेनाज्ञानबाधेऽप्यधिकारप्रारब्धबलादिन्द्रादिशरीरं

95005 मन्वन्तरकालपर्यन्तं धत्ते तस्याः केनान्येन भङ्गप्रसक्तिरित्याशयेनोदाहरति##-
95006 पुनर्युद्धाभिकाङ्क्षया धारयन्ति पालयन्तीति
95007 विद्रुतारिध्रास्तथाविधैर्दनुपुत्रैरप्यभिष्टुतां भवे पुनर्जन्मादिविषये
95008 भग्नस्तयो वेगो यस्यास्तथाविधामपि ऐन्द्रीं तनुं वासना यद्वहति यावदधिकारं
95009 धारयति तदपीत्यर्थः ॥ ३८ ॥
95010
95011 विशत्यविरतं भूतसर्गपांसुपरम्परा ।
95012 नित्यं नियतिवात्येयं कालव्यालगलान्तरम् ॥ ३९ ॥
95013
95014 भूतसर्ग एव पांसुपरम्परा यस्यां तथाविधा नियतिलक्षणा वात्या काललक्षणस्य
95015 व्यालस्य गलान्तरं यद्विशति तदपि । सर्पाणां वायुभक्षकत्वप्रसिद्धेरुत्प्रेक्षा ॥ ३९
95016 । ।
95017
95018 पदार्थाम्भसि सर्वाणि फलफेनानि सर्वतः ।
95019 पतन्त्यविरतापातमभाववडवामुखे ॥ ४० ॥
95020
95021 अभावो नाशस्तल्लक्षणे वडवाग्निमुखे यत्पतन्ति तदपि ॥ ४० ॥
95022
95023 स्फुरन्त्याकस्मिकोद्धूताविचित्रद्रव्यशक्तयः ।
95024 स्वभावमात्रसंपन्नाः स्पन्दश्रिय इवाम्भसः ॥ ४१ ॥
95025
95026 स्वस्य भावः अधिष्ठानसत्ता तावन्मात्रेण संपन्ना लब्धस्वरूपा
95027 आकस्मिकेनातर्क्येण वासनावैचित्र्येणोद्धूताश्चालिता यत्स्फुरन्ति प्रसरन्ति तदपि ॥ ४१ ॥
95028
95029 भूतमौक्तिकसंपूर्णान्बृहतः सुबहूनपि ।
95030 जगत्कलभकानत्ति कृतान्तोद्रिक्तकेसरी ॥ ४२ ॥
95031
95032 कलभकान् मत्तगजान्यदत्ति तदपि ॥ ४२ ॥
95033
95034 कुलशैलफला मेघपक्षपुञ्जाः फलामृजः ।
95035 जायन्ते च म्रियन्ते च ध्रियन्ते च जगत्खगाः ॥ ४३ ॥
95036
95037 कुलशैला हिमवदादय उपभोग्यत्वान्महत्त्वाच्च फलानि येषाम् । मेघा एव
95038 नभोगत्याकारसादृश्याभ्यां पक्षपुञ्जा येषाम् । फलानि आमृजन्ति सर्वतः
95039 परिशोधयन्ति विचिन्वन्तीति फलामृजः । मृजेर्बाहुलकात्कः । गच्छन्ति
95040 उत्तरायणदक्षिणायनादिमार्गेण सदा भ्रमन्तीति जगन्ति जीवास्तल्लक्षणाः खगाः
95041 पक्षिणो यज्जायन्ते यस्मियन्ते यत् ध्रियन्ते यावन्मरणं जीवन्ति
95042 तदप्यज्ञानविजृम्भितमित्यर्थः । अत्र कुलाचलानां मूलमध्याग्रभागानां
95043 नागमर्त्यदेवैरुपभोग्यत्वात्फलत्वोत्प्रेक्षा मेघानां च दक्षिणायनमार्गपर्वसु
95044 धूमत्वेनाभ्रमेघत्वादिना चोर्ध्वाधोगतिनिर्वाहकत्वात्पक्षत्वोत्प्रेक्षा बोध्या ॥ ४३
95045 । ।
95046
95047 चिद्भित्तौ स्पन्दशुभ्रायां रङ्गैः पञ्चभिरिन्द्रियैः ।
95048 उन्मीलयति संसारचित्राणि विधिचित्रकृत् ॥ ४४ ॥
95049
95050 दृष्टिसृष्टिपक्षमवलम्ब्याह-चिदिति ।
95051 स्पन्दैश्चाक्षुषादिवृत्तिव्याप्तिभिर्निरस्तावरणस्पष्टत्वाच्छुभ्रायाम् । रङ्गैः
95052 रङ्गद्रव्यस्थानीयैः पञ्चभिर्बहिरिन्द्रियैर्विदधाति दृष्टिमात्रेण सृजतीति
95053 विधिर्द्रष्टा स एव चित्रकृत् ॥ ४४ ॥
95054
95055 अजस्रगत्वरीं सर्वपरिवर्तविधायिनीम् ।
95056 निमेषशतभागाङ्गीमसद्दुःसाधिताङ्कुराम् ॥ ४५ ॥

95057
95058 तस्यां दृष्टिसृष्टौ स्थावरजङ्गमयोरनुभवे यो विशेषस्तं प्रथमं
95059 स्थावरेषु दर्शयति-अजस्रेति द्वाभ्याम् | स्थावरजातयः स्वस्यात्मनः समुत्थानं
95060 जगदाकारेण विवर्तस्तत्कारिणीमजस्रगत्वरत्वादिविशेषणविशिष्टां सूक्ष्मां
95061 कालस्य कलनां ध्यानेनैवान्तरेण बहिः स्फुटव्यवहाराक्षमेणानुभवेन
95062 अन्ववेक्ष्य स्थिता इति द्वयोरर्थः || ४५ ||
95063
95064 सूक्ष्मां कालस्य कलनां स्वसमुत्थानकारिणीम् |
95065 ध्यानेनैवान्ववेक्ष्यैताः स्थिताः स्थावरजातयः || ४६ ||
95066
95067 रागद्वेषसमुत्थेन भावाभावमयेन च |
95068 जरामरणरोगेण जीर्णा जङ्गमजातयः || ४७ ||
95069
95070 ततो जङ्गमेषु विशेषं दर्शयति-रागेति || ४७ ||
95071
95072 सुदुष्कृतोत्तमध्यानचारिण्यो धरणीतले |
95073 नियस्या नियतं कालं पीड्यन्ते कीटपङ्क्तयः || ४८ ||
95074
95075 तेष्वपि कृमिकीटादीनां दुःखानुभवातिशयं सनिमित्तं दर्शयति##-
95076 चरितुं शीलं यासां तथाविधाः || ४८ ||
95077
95078 क्षणेनादृश्य एवेदं निगिरत्यखिलं सुखी |
95079 सुदुर्लक्ष्यबिलः कालव्यालो विपुलभोगवान् || ४९ ||
95080
95081 स यद्यदेवासृजत तत्तदत्तुमध्रियत इति श्रुतेः कालकवलनीयत्वं
95082 स्थावरजङ्गमानां समानमित्याह-क्षणेनेति || ४९ ||
95083
95084 कालेन किंचिदालक्ष्य स्वशरीराकुलीकृताः |
95085 शीतवातातपप्रौढाः प्रोल्लसत्पुष्पदीप्तयः || ५० ||
95086
95087 एवं स्थावरेषु नियतकालं
95088 फलपुष्पादिपरिणामशालित्वमनिवार्यशीतवातातपादिसहत्वं च विशेष इति
95089 दर्शयति-कालेनेति सार्धेन | श्वभ्रं भूविलं तत्र प्रविष्टो विग्रहः
95090 शरीरमूलभागो यषां तथाविधाः स्थावराः किंचिद्बोजकं
95091 स्वपरादृष्टमालक्ष्य निमित्तीकृत्य मनुष्यपक्षिसर्पादिभिः स्वशरीरे
95092 आकुलीकृताः पीडिता वसन्तादिकालभेदेन प्रोल्लसत्पुष्पदीप्तयः फलप्रदाश्च अतएव
95093 शीलिनस्तपःशमदमतितिक्षौदार्यादिशीलवन्त इव चरन्ति कालं नयन्ति || ५० ||
95094
95095 फलप्रदाश्चरन्तीह शीलिनः श्वभ्रविग्रहाः |
95096 पयः पटलविश्रान्तत्रैलोक्याम्भोजकोटरे || ५१ ||
95097
95098 इदानीं लोकत्रयमम्भोजत्रयत्वेन कल्पयित्वा तत्रत्यचरप्राणिनिकायं
95099 भ्रमरसमूहत्वेनोत्प्रेक्षते-पय इत्यर्धाभ्याम् | यद्यपि पृथिव्येव
95100 पद्मपत्रवज्जले प्रतिष्ठिता पुराणादिप्रसिद्धा नान्तरिक्षद्युलोकौ तथापि तयोरपि
95101 त्रिवृत्कृतजलकार्यत्वाज्जलभागप्रतिष्ठितत्वमस्त्येवेति सूचनाय पटलपदम् || ५१ ||
95102
95103 करोति घुंघुमं भूरि भूतभ्रमरपेटिका |
95104 ब्रह्माण्डभैक्ष्यभाण्डेयं काली भगवती क्रिया || ५२ ||
95105
95106 घुंघुमं गुञ्जाध्वनिम् | भ्रमरपेटिका भ्रमरसमूहः | इदानीं फलनियतां
95107 प्राणिक्रियां कालीत्वेन ब्रह्माण्डं च तदीयभिक्षापात्रत्वेन चतुर्विधभूतग्रामं
95108 च तदीयभैक्ष्यभावेनोत्प्रेक्षते-ब्रह्माण्डेति | कालस्य स्त्री काली पूर्वगृहीतां

95109 भूतभिक्षां स्वभर्त्रे कालाय दत्वैव दत्वैव पुनः पुनर्दत्वा अन्यामन्यां
95110 भूतभिक्षां जिघृक्षतीत्यर्थः ॥ ५२ ॥
95111
95112 स्वयं दत्वैव दत्वैव भूतभिक्षां जिघृक्षति ।
95113 तिमिरालीककबरी इन्द्वर्कचपलेक्षणा ॥ ५३ ॥
95114
95115 इदानीं क्रियाफलभूतां त्रिलोकीं वृद्धकामिनीत्वेन वर्णयति-तिमिरेत्यादिना ।
95116 अलीकपदं व्याजार्थे ॥ ५३ ॥
95117
95118 ब्रह्मोपेन्द्रमहेन्द्रादिधरागिरिवरादिका ।
95119 ब्रह्मतत्त्वैकपिटका लम्बमानपयोधरा ॥ ५४ ॥
95120
95121 ब्रह्मोपेन्द्रमहेन्द्रादिका आन्तरचेतनस्वभावेन धरागिरिवरादिका
95122 बाह्यस्थूलदेहस्थानीयजडस्वभावेन । ब्रह्मतत्त्वमेवैकं हृदि विस्फोट इव
95123 बन्धनैः पिधाय सदा गोप्यं यस्याः ॥ ५४ ॥
95124
95125 चिच्छक्तिमातृका स्थूला तरला घनचापला ।
95126 तारकाजालदशना संध्यारुणतरा धरा ॥ ५५ ॥
95127
95128 चिच्छक्तिश्चिदाभासः सैव मातेव पोषयित्री यस्याः । अतएव स्थूला ॥ ५५ ॥
95129
95130 समस्तपद्मिनीहस्ता शतक्रतुपुरानना ।
95131 सप्ताब्धिमुक्तालतिका नीलाम्बरपरीवृता ॥ ५६ ॥
95132
95133 समस्ताः पद्मिन्यो विसलता हस्ता यस्याः । नीलमम्बरं नभस्तदेवाम्बरमुत्तरीयं
95134 तेन परीवृता । वृञः क्विपि नहिवृतिवृधि इत्यादिना परेदीर्घः । आपं चैव
95135 हलन्तानाम् इति भागुरिमते टाप् ॥ ५६ ॥
95136
95137 जम्बूद्वीपमहानाभिर्वनश्रीरोमराजिका ।
95138 भूत्वा भूत्वा विनश्यन्ती त्रिलोकीवृद्धकामिनी ॥ ५७ ॥
95139
95140 असकृज्जायते नष्टा भूरिविभ्रमकारिणी ।
95141 मग्नमन्यैरथोन्मग्नं भीमे कालमहार्णवे ॥ ५८ ॥
95142
95143 इदानीं कालं महार्णवत्वेन वर्णयति-मग्नमिति । निष्ठाद्वयं भावे ॥ ५८ ॥
95144
95145 प्रतिकल्पक्षणं क्षीणैर्ब्रह्माण्डस्फुटबुद्बुदैः ।
95146 कालेऽगाधरसस्यन्दे स्थित्वा स्थित्वा पुनःपुनः ॥ ५९ ॥
95147
95148 कल्पा एव क्षणाः । वीप्सायामव्ययीभावः । अगाधः रसस्यन्दो
95149 भ्रान्तिसहस्रतृष्णाजलस्यन्दो यस्मिन् ॥ ५९ ॥
95150
95151 कल्पमात्रनिमेषेणोड्डीनाः कारणसारसाः ।
95152 उत्पत्त्योत्पत्त्य नाशिन्यः संतप्ताः सृष्टिविद्युतः ॥ ६० ॥
95153
95154 कारणभूतहिरण्यगर्भसारसाः । सारससंबन्धात्कालस्य नदत्वकल्पना गम्यते ।
95155 मेघत्वेन तं कल्पयति-उत्पत्त्योत्पत्त्येति ॥ ६० ॥
95156
95157 कालमेघे स्फुरन्त्येताश्चित्प्रकाशवनोद्यमाः ।
95158 प्रपतद्भूतविहगाः पतन्त्यविरतभ्रमाः ॥ ६१ ॥
95159
95160 चित्प्रकाशस्य वननं वनः संभजनं तेन उद्यमः प्रकाशशक्तिर्यासाम् । तस्य

95161 भासा सर्वमिदं विभाति इति श्रुतेः ॥ ६१ ॥
95162
95163 कालतालात्किलोत्तालाद्ब्रह्माण्डफलपालयः ।
95164 उन्मेषकृतवैरिञ्चसृष्टयो देवनायकाः ॥ ६२ ॥
95165
95166 उत्तालादयुन्नतात्काललक्षणात्तालवृक्षात्प्रपतन्तो भूतानि प्राणिनस्तल्लक्षणा
95167 विहगाः काका येभ्यस्तथाविधाः । ब्रह्माण्डलक्षणानां फलानां पालयः
95168 पङ्क्तयः प्रपतन्ति । अतर्कितहेतुकत्वसूचनात्काकतालीयन्यायोऽत्रोत्प्रेक्षितः ।
95169 देवनायका विष्णुरुद्रेश्वरसदाशिवाख्याः ॥ ६२ ॥
95170
95171 निमेषकृतसंहाराः सन्ति केचन कुत्रचित् ।
95172 निमेषोन्मेषसंक्षीणकल्पजालाः सहस्रशः ॥ ६३ ॥
95173
95174 रुद्राः केचन विद्यन्ते तस्मिंश्चित्परमे पुनः ।
95175 तेऽपि यस्य निमेषेण भवन्ति न भवन्ति च ॥ ६४ ॥
95176
95177 चिद्रूपे परमे परमकारणे । ते रुद्रा अपि ॥ ६४ ॥
95178
95179 तादृशोऽप्यस्ति देवेशो ह्यनन्तेयं क्रियास्थितिः ।
95180 अनन्तसंकल्पमये शून्ये च ब्रह्मणः पदे ॥ ६५ ॥
95181
95182 इयं रुद्रान्ता क्रियास्थितिः कर्मोपासनफलभावस्थितिरनन्ता असंख्याता । नन्विदं
95183 कथं संभाव्यत इति चेन्मायायां सर्वसंभवान्नात्रासंभावना
95184 युक्तेत्याशयेनाह-अनन्तेति ॥ ६५ ॥
95185
95186 न संभवन्ति का नाम शक्तयश्चित्रपूरकाः [इत्वाभावश्छान्दसः ।]
95187 ।
95188 एवमक्षीणसंकल्पलब्धार्थभरभासुरा ।
95189 जागती कल्पना येयं तदज्ञानविजृम्भितम् ॥ ६६ ॥
95190
95191 चित्रस्य आश्चर्यसहस्रस्य पूरकाः । अज्ञानविभूतिप्रपञ्चनमुपसंहरति##-
95192
95193 याः संपदो यदुत संततमापदश्च यद्बाल्ययौवनजरामरणोपतापाः ।
95194 यन्मज्जनं च सुखदुःखपरम्पराभिरज्ञानतीव्रतिमिरस्य विभूतयस्ताः ॥
95195 ६७ ॥
95196
95197 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये देवदूतोक्ते मोक्षोपायेषु
95198 निर्वाणप्रकरणे पू० अज्ञानमाहात्म्यं नाम सप्तमः सर्गः ॥ ७ ॥
95199
95200 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
95201 अज्ञानमाहात्म्यं नाम सप्तमः सर्गः ॥ ७ ॥
95202 अष्टमः सर्गः ८
95203
95204 श्रीवसिष्ठ उवाच ।
95205
95206 संसारवनखण्डेऽस्मिंश्चित्पर्वततटे स्थिता ।
95207 कीदृशी सृष्ट्यविद्याख्या लता विकसिता कदा ॥ १ ॥
95208
95209 वर्णिता कारणाविद्या जगद्यस्या विभूतयः ।
95210 कार्याविद्या भवारण्ये लतात्वेनेह वर्ण्यते ॥
95211
95212 तत्रादौ विषयं निर्दिश्य वर्णनप्रकारं प्रस्तौति-संसारेति । कूटस्थत्वाच्चिदेव

95213 पर्वतस्तत्तटे स्थिता। कारणाविद्याव्यावृत्तये सृष्ट्यविद्याख्येति। कदा कीदृशीति
95214 कालभेदेन विकासवैचित्र्यद्योतनार्थम्। तद्वर्णयामः श्रूयतामिति शेषः॥ १॥
95215
95216 बृहत्पर्वतपर्वाढ्या ब्रह्माण्डत्वक्समावृता।
95217 देहयष्टिरियं यस्यास्त्रिलोकी लोककासिनी॥ २॥
95218
95219 बृहन्तो मेर्वादयः पर्वता एव पर्वाणि काण्डसंधयस्तैराढ्या।
95220 ब्रह्माण्डपदेन तदावरणानि गृह्यन्ते तल्लक्षणत्वग्भिः समावृता। लोकैर्जनैः
95221 कासिनी पत्राङ्कुरादिविकासवती। इयं त्रिलोकी यस्या देहयष्टिः संस्थानम्॥ २॥
95222
95223 सुखं दुःखं भवो भावो ज्ञानमज्ञानमेव च।
95224 अत्रैतान्युरुवृत्तानि मूलानि च फलानि च॥ ३॥
95225
95226 भवो जन्म। भावः स्थितिः। अत्र अविद्यालतायाम्। उरुवृत्तानि प्रतिदिनं
95227 वृद्धिस्वभावानि॥ ३॥
95228
95229 सुखादविद्योदेत्युच्चैस्तदेवान्ते प्रयच्चति।
95230 दुःखादविद्योदेत्युच्चैस्तदेवैषा फलत्यलम्॥ ४॥
95231
95232 मूलत्वं फलत्वं च सुखादेरुपपादयति-सुखादित्यादिना।
95233 भुज्यमानात्संपत्यादिसुखादग्रेऽपि मे इतोऽधिका संपद्भूयादिति रागलक्षणा
95234 अविद्योदेति सा च यज्ञदानादिधर्मद्वारा सुखं फलति। दारिद्र्यादिदुःखाच्च
95235 धनतृष्णादिलक्षणा अविद्योदेति। सा च पापवासनया
95236 दुष्प्रतिग्रहचौर्याद्यधर्मप्रवृत्तिद्वारा पुनस्ततोऽधिकं दुःखं फलतीत्यादि
95237 सर्वत्रोह्यम्। एवकारः सर्वत्र भिन्नक्रमः। फलत्येवेति योज्यम्॥ ४॥
95238
95239 भवादविद्योदेत्येषा तमेव फलति स्फुटम्।
95240 भावात्सत्तामवाप्नोति तमेव फलति क्षणम्॥ ५॥
95241
95242 अज्ञानाद्वृद्धिमायाति तदेव स्यात्फलं स्फुटम्।
95243 ज्ञानेनायाति संवित्तिस्तामेवान्ते प्रयच्छति॥ ६॥
95244
95245 ज्ञानेन प्रत्यक्तत्त्वविमर्शेन संवित्तिरुत्तरोत्तरभूमिकाधिरोहलक्षणा
95246 ज्ञानवृद्धिः। अन्ते सप्तमभूमिकायाम्॥ ६॥
95247
95248 नानाविधोल्लासवती वासना मोदशालिनी।
95249 घनप्रवालतरला तनुरस्या विजृम्भते॥ ७॥
95250
95251 प्रासङ्गिकमुपपाद्य प्रस्तुतां लतामेव वर्णयति-नानाविधेति॥ ७॥
95252
95253 दिवसव्यूहकुसुमा यामिनीलोलषट्पदा।
95254 अजस्रं स्पन्दमानैषा प्रपतद्भूतपल्लवा॥ ८॥
95255
95256 नानाविधोल्लासवतीत्येतत्प्रपञ्चयति-दिवसेत्यादिना। रागादिना प्रपतन्ति
95257 प्रधावमानानि भूतानि प्राणिन एव पल्लवा यस्याः॥ ८॥
95258
95259 आगत्यागत्य पतति विवेककरिणीं क्वचित्।
95260 विधूयते धूतरजाः प्रसक्तिं पुनरेति च॥ ९॥
95261
95262 आगत्यागत्य कर्मवायुना पुनःपुनर्भ्रमित्वा
95263 क्वचित्कस्मिंश्चिदधिकारिभूतपल्लवांशे विवेकलक्षणां करिणीं प्रति पतति। तया च
95264 कदाचिद्विचारशुण्डाग्रेण तदालम्बनविषयतरुविश्लेषणेन विधूयते कम्प्यते।

95265 धूतरजाः निरस्तदुर्वासनापरागापि दैवात्तत्कराच्युता पुनर्विषयतरुणा प्रसक्तिमेति ॥
95266 ९ ॥
95267
95268 जायमानप्रवालाढ्या संजाताङ्कुरदन्तुरा ।
95269 सर्वर्तुकुसुमोपेता समग्ररसशालिनी ॥ १० ॥
95270
95271 जायमानैर्मित्रपश्वादिप्रवालैराढ्या । संजातैः पुत्रपौत्राद्यङ्कुरैश्च दन्तुरा
95272 आनन्दस्मितास्या ॥ १० ॥
95273
95274 जन्मपर्वाहिनीरन्ध्रा विनाशच्छिद्रचञ्चुरा ।
95275 भोगाभोगरसापूर्णा विचारैकघुणक्षत ॥ ११ ॥
95276
95277 जन्मलक्षणेषु पर्वसु दुःखरोगाद्यहिभिर्नीरन्ध्रा निरवकाशा । विनाशा मरणानि
95278 तल्लक्षणेषु शाखासंधिच्छिदेषु बलाद्विदीर्यमाणेव चञ्चुरा व्याकुला । भोगानां
95279 विषयाणामाभोगोऽनुभवस्तद्विषयेण रसेन रागमकरन्देनापूर्णा ॥ ११ ॥
95280
95281 विकसन्त्यः प्रतिदिनं चन्द्रार्कावलयोऽभितः ।
95282 व्योम्नि वातविलोलानि पुष्पाण्यस्याः किल ग्रहाः ॥ १२ ॥
95283
95284 सर्वर्तुकुसुमोपेतेतेति यदुक्तं तद्विवृणोति-विकसन्त्य इति । ग्रहा नवग्रहरूपाः
95285 चन्द्रार्कसहिता आवलयो ज्योतिःपङ्क्तयः ॥ १२ ॥
95286
95287 अस्याः प्रस्फुरिताकाराः कोरकत्वमुपागताः ।
95288 पूरिताकाशकोशायास्तारका रघुनन्दन ॥ १३ ॥
95289
95290 चन्द्रार्कदहनालोका यस्यास्तत्कौसुमं रजः ।
95291 अनेनेयं हि रौराङ्गी स्त्रीव चेतांसि कर्षति ॥ १४ ॥
95292
95293 चन्द्रार्कदहनानामालोकाः प्रकाशा यस्यास्तत् प्रसिद्धं कौसुमं कुसुमसंबन्धि
95294 रजः । अनेन रजसा चेतांसि कर्षति । मनोहरा भातीति यावत् ॥ १४ ॥
95295
95296 मनोमातङ्गविधुता संकल्पकलकोकिला ।
95297 इन्द्रियव्यालसंबाधा तृष्णात्वगुपरञ्जिता ॥ १५ ॥
95298
95299 नीलाकाशतमालाङ्गसंश्रयेणोन्नतिं गता ।
95300 रोदसीजानुसुस्तम्भा भुवनोद्यानभूषिता [भूस्थिता इति पाठः ।] ॥ १६ ॥
95301
95302 नीलाकाशलक्षणस्य तमालवृक्षस्याङ्गसंश्रयेणोन्नतिं विस्तारं गता । रोदस्यौ
95303 द्यावापृथिव्यौ ते एव संकुचितजान्वाकाराः सुस्तम्भाः परितो मूलावष्टम्भा
95304 यस्याः ॥ १६ ॥
95305
95306 अधोब्रह्माण्डखण्डेषु [अधोभुवनखण्डेषु इति पाठष्टीकानुगुणः ।
95307 ] स्वालवालेन जालिता ।
95308 विधृताशेषजलधिजलक्षीरादिसेचना ॥ १७ ॥
95309
95310 सप्ताब्धिखातलक्षणेन शोभनेनालवालेन विधृताशेषजलधिजलक्षीरादिसेचना सती
95311 अधोभुवनखण्डेषु मूलसंतानैर्जालिता ॥ १७ ॥
95312
95313 त्रयीविलोलभ्रमरा रमणीपुष्पपुञ्जिका ।
95314 चित्स्पन्दवातचलिता क्रियाविपुलपुत्तिका ॥ १८ ॥
95315
95316 त्रयी काम्यकर्मकाण्डलक्षणा वेदत्रयी तया विलोला रागिजना एव भ्रमरा यस्याः ।

95317 अतएव तदुपभोग्या रमण्यः स्त्रियः पुष्पपञ्जानि यस्याः | क्रियाशब्देन
95318 स्वाभाविकप्रवृत्तिपरा जना लक्ष्यन्ते | त एव विपुला बहुला मूलपत्रकाण्डादिषु
95319 भ्रमन्त्यः पुत्तिकाः सूक्ष्मकीटजातयो यस्याम् || १८ ||
95320
95321 कुकर्माजगरव्याप्ता स्वर्गश्रीपुष्पमण्डपा |
95322 जीवजीवननीरन्ध्रा नानामोदमदप्रदा || १९ ||
95323
95324 कुकर्म शास्त्रनिषिद्धक्रिया | जीवानां जीवनैर्जीवनोपायैर्नीरन्ध्रा पूर्णा | तस्याः
95325 प्रसिद्धलताविलक्षणान्यपि बहुविधवैचित्र्याणि दर्शयति-नानेत्यादिना |
95326 नानाविधैरामोदैर्विषयवासनागन्धैर्मदप्रदा मूढानाम् || १९ ||
95327
95328 नानोपशमवैचित्र्यनानाकुसुमभासिनी |
95329 नानाफलावलीव्याप्ता नानावर्षविकासिनी || २० ||
95330
95331 विवेकिनां तु नानोपशमवैचित्र्यलक्षणनानाकुसुमभासिनी | वेषेण
95332 पुष्पफलमकरन्दरजोवर्षेण विकासिनी || २० ||
95333
95334 नानालवालवलया नानाविहगधारिणी |
95335 नानापरागपरुषा नानाभूधरजालिका || २१ ||
95336
95337 नानाकलाकुड्मलिनी नानावनगणोत्थिता |
95338 नानागिरितटारूढा नानादलनिरन्तरा || २२ ||
95339
95340 जाता च जायमाना च म्रियमाणा तथा मृता |
95341 अर्धच्छिन्ना तथाऽच्छिन्ना नित्यमच्छेदिनी तथा || २३ ||
95342
95343 नित्यं प्रवाहरूपेणाच्छेदिनी || २३ ||
95344
95345 अतीता वर्तमाना च सत्येवासत्यवत्सदा |
95346 नित्यमत्यन्ततरुणी नित्यं शोषमुपेयुषी || २४ ||
95347
95348 नित्यमभीक्ष्णम् | तरुणी पल्लविता || २४ ||
95349
95350 महाविषलतैषा हि संसारविषमूर्च्छनाम् |
95351 ददाति रभसाश्लिष्टा परामृष्टा विनश्यति || २५ ||
95352
95353 परामृष्टा विचारिता सती विनश्यति || २५ ||
95354
95355 स्फीतेऽन्तर्गलिता तस्य अज्ञेऽन्तः संस्थितान्विता |
95356 इतो जलमितः शैला इतो नागाः सुरा इतः || २६ ||
95357
95358 तस्य विचारयितुः स्फीते पूर्णात्मनि अन्तर्गलिता बाधिता | अज्ञे तु अन्तः अन्विता
95359 सर्वतोऽनुवृत्तैव संस्थिता | तदनुवृत्तिमेव प्रपञ्चयति-इत इत्यादिना || २६ ||
95360
95361 इतः पृथ्वीत्वमायाता तथेतो द्युतया स्थिता |
95362 इतश्चन्द्रार्कतां प्राप्ता तथेतस्तारकाकृतिः || २७ ||
95363
95364 इतस्तम इतस्तेज इतः खमित उर्वरा |
95365 इतः शास्त्रमितो वेदा इतो द्वयविवर्जिता || २८ ||
95366
95367 उर्वरा सस्याढ्या भूः | इतः प्रलयसुषुप्त्योर्द्वयविवर्जिता || २८ ||
95368

95369 क्वचित्खगतयोड्डीना क्वचिद्देवतयोत्थिता।
95370 क्वचित्स्थाणुतया रूढा क्वचित्पवनतां गता ॥ २९ ॥
95371
95372 क्वचिन्नरकसंलीना क्वचित्स्वर्गविलासिनी।
95373 क्वचित्सुरपदं प्राप्ता क्वचित्कृमितया स्थिता ॥ ३० ॥
95374
95375 नरकात्मना पातालकुहरे संलीना ॥ ३० ॥
95376
95377 क्वचिद्विष्णुः क्वचिद्ब्रह्मा क्वचिद्रुद्रः क्वचिद्रविः।
95378 क्वचिदग्निः क्वचिद्वायुः क्वचिच्चन्द्रः क्वचिद्यमः ॥ ३१ ॥
95379
95380 यत्किंचनाङ्ग भुवनेषु महामहिम्नाव्याप्तं जरत्तृणलवत्वमुपागतं
95381 वा।
95382 दृश्यं स्फुरन्ननु हराद्यपि तामविद्यां विद्धि क्षयाय
95383 तदतीततयात्मलाभः ॥ ३२ ॥
95384
95385 महामहिम्ना प्रभावोत्कर्षेणाव्याप्तं हरादिसर्वसंहार्यव्याकृतान्तं
95386 प्रभावाल्पतया जरत्तृणलवत्वमुपागतं वा यत्किंचन दृश्यं स्फुरदस्ति तां
95387 सर्वामविद्यां तत्त्वबोधेन क्षयाय बाधाय विद्धि। तदतीततया तद्बाधेन आत्मनो
95388 लाभो मोक्ष इत्यर्थः ॥ ३२ ॥
95389
95390 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाणप्रकरणे पू०
95391 अविद्यालताविलासोपदेशो नामाष्टमः सर्गः ॥ ८ ॥
95392
95393 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
95394 अविद्यालताविलासोपदेशो नामाष्टमः सर्गः ॥ ८ ॥
95395
95396 नवमः सर्गः ९
95397
95398 श्रीराम उवाच।
95399
95400 आकारजातमुदितं शुद्धं हरिहराद्यपि।
95401 अविद्यैवेत्यहं श्रुत्वा ब्रह्मन्भ्रममिवागतः ॥ १ ॥
95402
95403 गुणत्रयविभागोऽत्र हरादेः शुद्धसत्त्वता।
95404 विद्याविद्यास्वरूपं च तदतीतं च वर्ण्यते ॥
95405
95406 दृश्यं स्फुरन्ननु हराद्यपि तामविद्यां विद्धि इति यदुक्तं तत्र हरादिशरीरस्य
95407 ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्। ऊर्ध्वरेतं विरूपाक्षं
95408 विश्वरूपाय वै नमो नमः घृतरीतिघनीभूतसच्चिदानन्दविग्रह
95409 इत्यादिश्रुतिस्मृतिषु परब्रह्मत्वसच्चिदानन्दरूपत्वप्रसिद्धेः ईशानः
95410 सर्वविद्यानामीश्वरः सर्वभूतानाम्
95411 इत्यादिश्रुतिप्रसिद्धसर्वविद्याधिपत्यविरोधाद्वासुदेवमूर्तेः पुराणेषु
95412 तुरीयत्वपरब्रह्मत्वादिप्रसिद्धेश्चाविद्यात्वमसंभावयन्प्रसङ्गात्तद्##-
95413 भ्रममिव मिथ्याभ्रान्तिमागतस्तमपनयेति शेषः ॥ १ ॥
95414
95415 श्रीवसिष्ठ उवाच।
95416
95417 संवेद्येनापरामृष्टं शान्तं सर्वात्मकं च यत्।
95418 तत्सच्चिदाभासमयमस्तीह कलनोज्झितम् ॥ २ ॥
95419
95420 तत्र निर्विकारशुद्धचितो घृतवत्स्वतो घनीभावस्य मूर्ताकारस्य

95421 चाघटनान्मायाधीनविवर्तप्रयुक्तत्वे सिद्धे श्रुतस्य परब्रह्मत्वस्याविरोधाय
95422 तत्प्रयोजको मायांशः स्वच्छसूक्ष्मतमस्वरूपानावरकः कल्प्यः स एव
95423 शुद्धसत्त्वमित्युच्यते। तस्य च स्वच्छतमत्वाच्चित्प्रतिबिम्बग्राहितया
95424 सर्वविद्योद्दीपकत्वात्स्वरूपानावरकत्वाच्च न सर्वविद्याधिपत्यविरोधः। यत्र त्वस्य
95425 सर्वमात्मैवाभूत्तत्केन कं पश्येत्। भूयश्चान्ते विश्वमायानिवृत्तिः
95426 इत्यादिश्रुत्या अस्मदीयतत्त्वज्ञानबाध्यत्वाच्चाविद्यात्वमिति नात्रासंभावना
95427 युक्तेत्याशयेनोत्तरं वक्तुकामो वसिष्ठस्तत्कल्पनाक्रममनुक्रमिष्यन्नधिष्ठानं
95428 प्रथमं दर्शयति-संवेद्येनेति। संवेद्येन जगदाकारेण अपरामृष्टं
95429 सर्वजगत्संस्कारसंभृतमायाशबलत्वात्सर्वात्मकमतएव सच्चित्प्रकाशप्रचुरं
95430 सन्मात्रमस्ति सर्गात्प्रागित्यर्थः॥ २॥
95431
95432 समुदेति स्वतस्तस्मात्कला कलनरूपिणी।
95433 जलादावर्तलेखेव स्फुरज्जलतयोदिता॥ ३॥
95434
95435 कलनं जगत्संस्कारोद्बोधस्तल्लक्षणा कला चिदाभासस्फूर्तिः सर्गादिकाले समुदेति
95436 स्वसत्तया स्थितैव ईषत् पृथगिव गुणिगुणभेदव्यवहारयोग्यतया आविर्भवति। अतएव
95437 तदनुरूपो दृष्टान्त आवर्तलेखेवेति॥ ३॥
95438
95439 सूक्ष्मा मध्या तथा स्थूला चेति सा कल्प्यते त्रिधा।
95440 पश्चान्मनस्तया तेन ज्ञातैव वपुषा पुनः॥ ४॥
95441
95442 सा च कला सूर्यात्पृथक् प्रौढातपमन्दातपच्छायाभेदेषु तेजोपकर्ष इव सूक्ष्मा
95443 मध्या स्थूला चेति त्रिधा कल्प्यत इत्यर्थः। सूक्ष्मकल्पनात्पश्चात्तेन कल्पयित्रा
95444 मनस्तया हिरण्यगर्भतया मध्या ज्ञाता पुनस्तदनन्तरं वपुषा
95445 स्थूलविराडाकारेण ज्ञाता तथैव तिष्ठतीति परेणान्वयः॥ ४॥
95446
95447 तिष्ठत्येतास्ववस्थासु भेदतः कल्प्यते त्रिधा।
95448 सत्त्वं रजस्तम इति एषैव प्रकृतिः स्मृता॥ ५॥
95449
95450 यत एषा अव्याकृतोपाधिप्रकृतिरेव त्रिधा स्थिता अतएवासु सूक्ष्माद्यवस्थास्वपि
95451 त्रिधा कल्प्यत इत्यन्वयः॥ ५॥
95452
95453 अविद्यां प्रकृतिं विद्धि गुणत्रितयधर्मिणीम्।
95454 एषैव संसृतिर्जन्तोरस्याः पारं परं पदम्॥ ६॥
95455
95456 प्रश्नोत्तरानुगुण्याय प्रकृतेरविद्यात्वमाह-अविद्यामिति॥ ६॥
95457
95458 अत्र ते ये त्रयः प्रोक्ता गुणास्तेऽपि त्रिधा स्मृताः।
95459 सत्त्वं रजस्तम इति प्रत्येकं भिद्यते गुणः॥ ७॥
95460
95461 कार्यकारणाविद्यासाधारण्येनैकैकस्य गुणस्यावान्तरत्रैविध्यमाह-अत्रेति॥ ७॥
95462
95463 नवधैवं विभक्तेयमविद्या गुणभेदतः।
95464 यावत्किंचिदिदं दृश्यमनयैव तदाश्रितम्॥ ८॥
95465
95466 ऋषयो मुनयः सिद्धा नागा विद्याधराः सुराः।
95467 इति भागमविद्यायाः सात्त्विकं विद्धि राघव॥ ९॥
95468
95469 तत्र प्रथमविभागे सत्त्वांशमुदाहरति-ऋषय इति॥ ९॥
95470
95471 सात्त्विकस्यास्य भागस्य नागविद्याधरास्तमः।
95472 रजस्तु मुनयः सिद्धाः सत्त्वं देवा हरादयः॥१०॥

95473
95474 तदवान्तरविभागे त्रीनप्युदाहरति-सात्त्विकस्येति ॥ १० ॥
95475
95476 सत्त्वजातौ देवयोनावविद्या प्राकृतैर्गुणैः ।
95477 निर्मलं पदमायाताः सत्त्वं हरिहरादयः ॥ ११ ॥
95478
95479 हरादीनां सत्त्वगुणान्तर्गतशुद्धसत्त्वदेहत्वे उपपत्तिमाह-सत्त्वजाताविति ।
95480 निर्मलं कदाप्यविद्यावरणशून्यं स्वात्मपदं स्वाभाविक्यैव विद्यया
95481 सदैवायाता अतस्ते शुद्धसत्त्वमित्यर्थः । एतेन विधिहरयो राजसतामसशरीरत्वेन
95482 मूढजनप्रसिद्धिर्निरस्ता । सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष
95483 एक इहास्य धत्ते । स्थित्यादये हरिविरिञ्चिहरेति संज्ञाः श्रेयांसि तत्र खलु
95484 सत्त्वतनोर्नृणां स्युः ॥ इति भागवतादिवाक्यानि । तथा यस्य तमः साक्षाच्छरीरं
95485 सात्त्विको गुणः । पालनाय त्रिमूर्तीनां स विष्णुः स्यान्न चापरः ॥ इति स्कान्दवचनं च
95486 सृष्ट्याद्युपकरणे शरीरत्वोपचारेण द्वाभ्यामेकस्य वरगोष्ठीन्यायेन
95487 प्रशंसार्थानि नेतरयोरपकृष्टतापराणि ।
95488 सर्वज्ञत्वसत्यसंकल्पतास्वभक्तप्रबोधकत्वनिःश्रेयसहेतुत्वानां त्रिमूर्तिष्वपि
95489 श्रुतिस्मृतिपुराणेषु प्रसिद्धतमत्वात् । अयं परस्त्वयं नेति संरम्भाभिनिवेशिनः
95490 । यातुधानाश्च जायन्ते पिशाचाश्च न संशयः ॥ इत्यपकर्षदर्शनस्य
95491 निन्दितत्वात्त्रिमूर्तीनामीश्वरकोटित्वेनैकतया
95492 अपकर्षायोग्यत्वात्सर्वोत्कर्षप्रयोजकशुद्धसत्त्वशरीरत्वमेवोचितमिति भावः ॥ ११ ॥
95493
95494 सात्त्विकः प्राकृतो भागो राम तज्ज्ञो हि यो भवेत् ।
95495 न समुत्पद्यते भूयस्तेनासौ मुक्त उच्यते ॥ १२ ॥
95496
95497 अतएव तदुपासकानामपि ज्ञानप्राप्त्या पुनर्जन्मनिवृत्तिः प्रसिद्धेत्याह##-
95498 अतएव त्रिमूर्तीनामावरणाभावादनागन्तुकी जीवन्मुक्तेत्याह-तेनेति । असौ
95499 हरिहरादिः ॥ १२ ॥
95500
95501 तेन रुद्रादयो ह्येते सत्त्वभागा महामते ।
95502 तिष्ठन्ति मुक्ताः पुरुषा यावद्देहं जगत्स्थितौ ॥ १३ ॥
95503
95504 यावद्देहं महात्मानो जीवन्मुक्ता व्यवस्थिताः ।
95505 विदेहमुक्ता देहान्ते स्थास्यन्ति परमेश्वरे ॥ १४ ॥
95506
95507 परमेश्वरे शुद्धब्रह्मस्वभावे ॥ १४ ॥
95508
95509 भाग एष त्वविद्याया एवं विद्यात्वमागतः ।
95510 बीजं फलत्वमायाति फलमायाति बीजताम् ॥ १५ ॥
95511
95512 प्रश्नसमाधानमुपसंहृत्य प्रस्तुतमेव प्रस्तौति-भाग इति । कार्याविद्या
95513 फलं तत्प्रलये बीजतां कारणाविद्यात्वमायाति ॥ १५ ॥
95514
95515 उदेत्यविद्या विद्यायाः सलिलादिव बुद्बुदः ।
95516 विद्यायां लीयतेऽविद्या पयसीव हि बुद्बुदः ॥ १६ ॥
95517
95518 कार्याविद्योदयलयाधारत्वादपि विद्याशरीराणां तेषामविद्यात्वमेवेत्याह##-
95519 सकाशात्कार्याविद्यालक्षणसृष्टिरुदेति तत्रैव प्रलये लीयते ॥ १६ ॥
95520
95521 पयस्तरङ्गयोर्द्वित्वभावनादेव भिन्नता ।
95522 विद्याविद्यादृशोर्भेदभावनादेव भिन्नता ॥ १७ ॥
95523
95524 एवं च विद्याविद्याभेदोऽपि कल्पित एवेति सिद्धमित्याह-पय इति ॥ १७ ॥

पयस्तरङ्गयोरैक्यं यथैव परमार्थतः।
नाविद्यात्वं न विद्यात्वमिह किंचन विद्यते॥ १८॥

किंच विद्यादृशा विद्याविद्योभयबाधे सुतरां
तद्भेदप्रसक्तिर्नास्तीत्याशयेनाह-नाविद्यात्वमिति॥ १८॥

विद्याविद्यादृशौ त्यक्त्वा यदस्तीह तदस्ति हि।
प्रतियोगिव्यवच्छेदवशादेतद्रघूद्वह॥ १९॥

विद्याविद्यादृशौ तद्भेदविरोधादिदृष्टी। ननु अविद्यादृशो बाध्यत्वादस्तु
त्यागः विद्यादृशस्तु बाधिकायाः केन त्यागस्तत्राह-प्रतियोगीति।
बाधेनाविद्याया असत्त्वापत्तौ तन्निरूपितबाधकताया
असिद्धेर्व्यावृत्तिप्रसिद्धेर्व्यावर्त्यप्रतियोगिप्रसिद्ध्यधीनत्वाच्चेत्यर्थः॥ १९॥

विद्याविद्यादृशौ न स्तः शेषे बद्धपदो भव।
नाविद्यास्ति न विद्यास्ति कृतं कल्पनयानया॥ २०॥

शेषे परिशिष्टचिन्मात्रे॥ २०॥

किंचिदस्ति न किंचिद्यच्चित्संविदिति तत्स्थितम्।
तदेवाविदिताभासं सदविद्येत्युदाहृतम्॥ २१॥

कोऽसौ शेषस्तं दर्शयंस्तदेशप्राग्बोधादविद्येति कल्पितमित्याह-किंचिदिति।
नास्ति किंचित्स्वातिरिक्तं यत्र तन्नकिंचित्॥ २१॥

विदितं सत्तदेवेदमविद्याक्षयसंज्ञितम्।
विद्याभावादविद्याख्यामिथ्यैवोदेति कल्पना॥ २२॥

मिथः स्वान्ते तयोरन्तश्छायातपनयोरिव।
अविद्यायां विलीनायां क्षीणे द्वे एव कल्पने॥ २३॥

स्वान्ते मनसि मिथः अन्योन्यं छायातपनयोरिव विरुद्धयोस्तयोर्विद्याविद्ययोर्मध्ये
अविद्यायामन्तः अन्तरे चिति बाधेन विलीनायां सत्याम्॥ २३॥

एते राघव लीयेते अवाप्यं परिशिष्यते।
अविद्यासंक्षयात्क्षीणो विद्यापक्षोऽपि राघव॥ २४॥

अवाप्यं विद्याफलमभिव्यक्तं पूर्णानन्दरूपम्। ननु विद्यापि निराबाधत्वात्कुतो
न परिशिष्यते तत्राह-अविद्यासंक्षयादिति। इन्धनसंक्षयादग्निरिवेति भावः॥ २४
॥

यच्छिष्टं तन्न किंचिद्वा किंचिद्वापीदमाततम्।
तत्रैवं दृश्यते सर्वं न किंचन च दृश्यते॥ २५॥

सर्वबाधात्मकत्वान्न किंचित्परमार्थसद्रूपत्वात्किंचित्। अतएव तद्दर्शनमेव
तत्त्वतः सर्वदर्शनं सर्वबाधदर्शनं चेत्याह-तत्रैवमिति। एवमुक्तेन
तात्त्विकरूपेण। मायिकरूपेण तु न किंचिदपि दृश्यते॥ २५॥

वटश्च वटधानायामिव पुष्पफलादिमान्।
सर्वशक्तिर्हि किंचित्त्वं सर्वशक्तिसमुद्गकम्॥ २६॥

95577 अज्ञानावृतदशायामपि तस्यैवाकिंचित्त्वेऽपि
95578 वटबीजवद्व्याकृताव्याकृतावस्थयोः स्थूलसूक्ष्मीभूतसर्वात्मकतालक्षणं
95579 किंचित्त्वं प्रसिद्धमित्याह-वटश्चेत्यादिना ॥ २६ ॥
95580
95581 नभसोऽप्यधिकं शून्यंन् नच शून्यं चिदात्मकम् ।
95582 सूर्यकान्ते यथा वह्निर्यथा क्षीरे घृतं तथा ॥ २७ ॥
95583
95584 तत्रेदं संस्थितं सर्वं देशकालक्रमोदये ।
95585 यथा स्फुलिङ्गा अनलाद्यथा भासो दिवाकरात् ॥ २८ ॥
95586
95587 तत्र सत्त्वादेव देशकालक्रमोदये तस्मान्निर्यान्तीति परेणान्वयः ।
95588 अतएवाग्निविस्फुलिङ्गादिन्यायेन जीवानामुपाधिभिः सह ततो निर्गमनं श्रुतिषु
95589 प्रसिद्धमित्याशयेनाह-यथेत्यादिना ॥ २८ ॥
95590
95591 तस्मात्तथेमा निर्यान्ति स्फुरन्त्याः संविदश्चितः ।
95592 यथाम्भोधिस्तरङ्गाणां यथामलमणिस्त्विषाम् ॥ २९ ॥
95593
95594 तस्मात्तत्र स्थितत्वादेव ब्रह्मसंविदः सकाशादिमाः प्रसिद्धा जीवचितो निर्यान्ति ।
95595 अतएव तद्ब्रह्म सर्वजीवसंविदां कोश इत्याह-यथेति ॥ २९ ॥
95596
95597 कोशो नित्यमनन्तानां तथा तत्संविदां त्विषाम् ।
95598 सबाह्याभ्यन्तरे सर्वं वस्तुन्यस्त्येव वस्तुसत् ॥ ३० ॥
95599
95600 त्विषां भ्रमस्थानीयानाम् । निर्गमनावधित्वोक्तेर्मणिप्रभादृष्टान्ताच्च
95601 जीवजगतोर्ब्रह्मणो बहिरवस्थानप्रसक्तिं वारयन्नाह-सबाह्याभ्यन्तरमिति ।
95602 वस्तुन्येवास्तीति संबन्धः । यतो वस्तुसत् वस्त्वधीनसत्ताकम् ॥ ३० ॥
95603
95604 सर्वदैवाविनाशात्म कुम्भानां गगनं यथा ।
95605 यथा मणेरयःस्पन्दे अयस्कान्तस्य कर्तृता ॥ ३१ ॥
95606
95607 वस्तु च सर्वदैव अविनाशात्मत्रिविधपरिच्छेदरहितमिति यावत् । तथा च जीवनिर्गमनं
95608 कुम्भाकाशोदरे [इदं सप्तम्यन्तमधिकमिव प्रतीयते ।]
95609 कुम्भनिर्गमनात्कुम्भाकाशनिर्गमनमिवौपचारिकं संपन्नमित्याशयेनाह##-
95610
95611 अकर्तुरेव हि तथा कर्तृता तस्य कथ्यते ।
95612 मणिसंनिधिमात्रेण यथायः स्पन्दते जडम ।
95613 तत्सत्तया तथैवायं देहश्चेतत्यचिद्वपुः ॥ ३२ ॥
95614
95615 तत्र स्थितं जगदिदं जगदेकबीजे चिन्नाम्नि संविदितकल्पितकल्पनेन ।
95616 लोलोर्मिजालमिव वारिणि चित्ररूपं खादप्यरूपवति यत्र न किंचिदस्ति ॥ ३३ ॥
95617
95618 उक्तमर्थं संक्षिप्योपसंहरति-तत्रेति । तत्र अज्ञाते ब्रह्मणि
95619 पूर्वपूर्वसंविदितजगत्कल्पितवासनाप्रयुक्तेनोत्तरोत्तरकल्पनेनेदं जगत्स्थितम् । यत्र
95620 यस्मिन् ज्ञाते खादाकाशादप्यरूपिणि मूर्तामूर्तरूपशून्ये नान्यत्किंचिदस्तीत्यर्थः
95621 ॥ ३३ ॥
95622
95623 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये देवदूतोक्ते मोक्षोपायेषु
95624 निर्वाणप्रकरणे पू० विद्यानिराकरणं नाम नवमः सर्गः ॥ ९ ॥
95625
95626 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
95627 विद्यानिराकरणं नाम नवमः सर्गः ॥ ९ ॥
95628 दशमः सर्गः १०

95629
95630 श्रीवसिष्ठ उवाच।
95631
95632 तस्मान्नकिंचिदेवेदं जगत्स्थावरजंगमम्।
95633 नकिंचिद्भूततां प्राप्तं यत्किंचिदिति विद्धि हे ॥ १॥
95634
95635 अविद्याबन्धविभ्रान्तिः स्थावरेषु मनःस्थितिः।
95636 बुद्धिपूर्वाद्विचाराच्च बन्धमोक्षः प्रपञ्च्यते ॥
95637
95638 तस्माज्जगज्जीवभेदस्याज्ञातब्रह्ममात्रत्वाज्ज्ञाते तस्मिन्निदं नकिंचिदेवेत्यर्थः ॥
95639 १॥
95640
95641 यत्र काचिन्न कलना भावाभावमयात्मिका।
95642 तदिदं राम जीवादि सर्वं व्यर्थं किमीहसे ॥ २॥
95643
95644 इदं जीवादि सर्वं यत्र भावाभावमयात्मिका काचित्कलना नास्ति तत्तादृशं
95645 ब्रह्मैव। एवं च व्यर्थं किमीहसे इच्छसि ॥ २॥
95646
95647 संबन्धोऽयमसावन्तर्हृदि यो व्यपदिश्यते।
95648 न तं लभामहे सर्पं रज्जुसर्पभ्रमादिव ॥ ३॥
95649
95650 संबन्धो देहे बाह्यभोग्ये चाहंममतालक्षणः। न तं लभामहे विमर्शेनेति
95651 शेषः ॥ ३॥
95652
95653 अपरिज्ञात आत्मैव भ्रमतां समुपागतः।
95654 ज्ञात आत्मत्वमायाति सीमान्तः सर्वसंविदाम् ॥ ४॥
95655
95656 भ्रमतां जगद्भ्रान्तिम् ॥ ४॥
95657
95658 अविद्येत्युच्यते लोके चिच्चेत्यमलमाश्रिता।
95659 चेत्यातीतात्मतामेति सर्वोपाधिविवर्जिता ॥ ५॥
95660
95661 चेत्यबीजभूतं मलं स्वसत्तारोपेणाश्रिता। एति विद्ययेति शेषः ॥ ५॥
95662
95663 चित्तमात्रं हि पुरुषस्तस्मिन्नष्टे च नश्यति।
95664 स्थिते तिष्ठति चात्मायं घटे सति घटाम्बरम् ॥ ६॥
95665
95666 एवमविद्यास्वरूपमुक्त्वा तत्कार्योपाधिना आत्मनो बन्धभ्रमं दर्शयति##-
95667 नश्यतीव। एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति विनाशमेवापीतो भवति
95668 इत्यादिश्रुतेः। घटाम्बरं यथेति शेषः ॥ ६॥
95669
95670 गच्छन्पश्यति गच्छन्तं स्थितं तिष्ठञ्छिशुर्यथा।
95671 भ्रान्तमेवमिदं चेतः पश्यत्यात्मानमाकुलम् ॥ ७॥
95672
95673 एवं गत्यादिकमपि चित्तधर्मं स्वात्मन्यारोपयतीत्याह-गच्छन्निति। अयमात्मा
95674 एवं भ्रान्तमिदं चेतश्चित्तमेव आकुलमात्मानं पश्यति ॥ ७॥
95675
95676 कोशकारवदात्मानं वासनातनुतन्तुभिः।
95677 वेष्टयच्चैव चेतोऽन्तर्बालत्वान्नावबुध्यते ॥ ८॥
95678
95679 अतएव तद्गतवासनाभिः स्वं बध्नातीत्याह-कोशेति। कोशकारः कृमिविशेषः।
95680 बालत्वाद्विवेकशून्यत्वात् ॥ ८॥

श्रीराम उवाच।

मौर्ख्यमत्यन्तघनतामागतं समवस्थितम्।
स्थावरादि तनु प्राप्तं कीदृशं भवति प्रभो॥ ९॥

बालपदोक्ताविवेकप्रसङ्गादविवेकपरमावधीनां स्थावराणां चित्तस्थितिं
जिज्ञासुः श्रीरामः पृच्छति-मौर्ख्यमिति। समवस्थितमवलम्बितम्॥ ९॥

श्रीवसिष्ठ उवाच।

अमनस्त्वमसंप्राप्तं मनस्त्वादपि च च्युतम्।
तटस्थं रूपमाश्रित्य स्थितैषा स्थावरेषु चित्॥ १०॥

अमनस्त्वं सुषुप्ताविव सुखदुःखसंवेदनायोग्यतापादकं मनोलयम्।
पूर्वापरपरामर्शक्षममननयोग्यतालक्षणमनस्त्वादपि च्युतम्। तटस्थं
मुग्धतालक्षणं रूपमाश्रित्य। चित् जीवचित्॥ १०॥

तत्र दूरस्थिता मुक्तिर्मन्ये वेद्यविदां वर।
सुप्तपुर्यष्टका यत्र चित्स्थिता दुःखदायिनी।
मूकान्धजडवत्तत्र सत्तामात्रेण तिष्ठति॥ ११॥

सुप्तं विवेकाक्षमम्। पुर्यष्टकपदेन तदन्तर्गतं बाह्यान्तःकरणजातं लक्ष्यते।
अतएव दुःखप्रतीकाराक्षमत्वाद्बहुदुःखदायिनी। मूकपदेन कर्मेन्द्रियशून्यता।
अन्धपदेन ज्ञानेन्द्रियप्रचारशून्यता। जडपदेन
मानसप्रसारणशून्यतोपलक्ष्यते॥ ११॥

श्रीराम उवाच।

सत्ताद्वैततया यत्र संस्थिता स्थावरेषु चित्।
तत्रादूरस्थिता मुक्तिर्मन्ये वेद्यविदां वर॥ १२॥

ज्ञानकर्मेन्द्रियव्यापारशून्यतया सत्तामात्रेण चित् स्थिता चेत्तादृशस्थितौ
योगिनामिव शीघ्रमेव वासनाक्षयमनोनाशसंभवाददूरस्थिता मुक्तिरुचितेति
दूरस्थिता मुक्तिरिति वदतस्तव कोऽभिप्राय इत्याशयेन रामः पृच्छति-सत्तेति॥ १२॥

श्रीवसिष्ठ उवाच।

बुद्धिपूर्वं विचार्येदं यथावस्त्ववलोकनात्।
सत्तासामान्यबोधो यः स मोक्षश्चेदनन्तकः॥ १३॥

शास्त्रविहितकर्मानुष्ठानकृतचित्तशुद्धिसाधनचतुष्टयसंपत्तिसहकृतश्रवण्
अमननिदिध्यासनजन्यतत्त्वसाक्षात्कारकृतसमूलवासनाक्षयमनोनाशाभ्यां
सत्तासामान्यस्थितिर्हि मोक्षः स चानन्तदुष्कृतदुर्वासनाबीजसंभूतानां
नारकिप्रायाणां स्थावराणां शास्त्राधिकारिजन्मदौर्लभ्याद्दुर्लभतर इति
श्रीवसिष्ठः स्वोक्तेरभिप्रायं वर्णयति-बुद्धिपूर्वमित्यादिना॥ १३॥

परिज्ञाय परित्यागो वासनानां य उत्तमः।
सत्तासामान्यरूपत्वं तत्कैवल्यपदं विदुः॥ १४॥

परिज्ञायात्मतत्त्वमिति शेषः॥ १४॥

95733 विचार्यार्यैः सहालोक्य शास्त्राण्यध्यात्मभावनात् |
95734 सत्तासामान्यनिष्ठत्वं यत्तद्ब्रह्म परं विदुः || १५ ||
95735
95736 शास्त्राणि आर्यैर्गुरुसतीर्थ्यादिभिः सह विचार्य
95737 अध्यात्मभावनान्मननपूर्वकनिदिध्यासनात्तत्त्वमालोक्य || १५ ||
95738
95739 अन्तः सुप्ता स्थिता मन्दा यत्र बीज इवाङ्कुरः |
95740 वासना तत्सुषुप्तत्वं विद्धि जन्मप्रदं पुनः || १६ ||
95741
95742 स्थावरेषु तद्दूरतरमित्युपपादयति-अन्तरित्यादिना |सुषुप्तत्वमिव सुषुप्तत्वम् || १६
95743 | |
95744
95745 अन्तः संलीनमननं परितः सुप्तवासनम् |
95746 सुषुप्तं जडधर्मापि जन्म दुःखशतप्रदम् || १७ ||
95747
95748 जडधर्मापि पाषाणादिभाववद्वृत्तिशून्यमपि || १७ ||
95749
95750 स्थावरादय एते हि समस्ता जडधर्मिणः |
95751 सुषुप्तपदमारूढा जन्मयोग्याः पुनः पुनः || १८ ||
95752
95753 यथा बीजेषु पुष्पादि मृदो राशौ घटो यथा |
95754 तथान्तः संस्थिता साधो स्थावरेषु स्ववासना || १९ ||
95755
95756 स्थावरेषु वासनैव नास्तीति मन्दाशङ्कां परिहरति-यथेति | पुष्पादीति
95757 व्युत्क्रमादुक्तिः | अङ्कुरादिपुष्पान्तमित्यर्थः || १९ ||
95758
95759 यत्रास्ति वासनाबीजं तत्सुषुप्तं न सिद्धये |
95760 निर्बीजा वासना यत्र तत्तुर्यं सिद्धिदं स्मृतम् || २० ||
95761
95762 निर्बीजा ज्ञानाग्निभर्जितबीजशक्तिः || २० ||
95763
95764 वासनायास्तथा वह्नेर्ऋणव्याधिद्विषामपि |
95765 स्नेहवैरविषाणां यः शेषः स्वल्पोऽपि बाधते || २१ ||
95766
95767 अतएवाल्पापि वासना परिशिष्टा वह्न्यादिशेषवत्क्रमादभिवृद्ध्या
95768 महानर्थहेतुर्भवतीति निःशेषं तत्क्षयः कार्य इत्याशयेनाह-वासनाया इति || २१
95769 | |
95770
95771 निर्दग्धवासनाबीजसत्तासामान्यरूपवान् |
95772 सदेहो वा विदेहो वा न भूयो दुःखभाग्भवेत् || २२ ||
95773
95774 चिच्छक्तिर्वासनाबीजरूपिणी स्वापधर्मिणि |
95775 स्थिता रसतया नित्यं स्थावरादिषु वस्तुषु || २३ ||
95776
95777 चिच्छक्तिरावृतचिद्रूपा वासना बीजशक्तिः रसतया बीजे अङ्कुरशक्तिलक्षणो
95778 भर्जननाश्यो रस इव || २३ ||
95779
95780 बीजेषूल्लासरूपेण जाड्येन जडरूपिषु |
95781 द्रव्येषु द्रव्यभावेन काठिन्येनेतरेषु च || २४ ||
95782
95783 सैव बीजादिसर्वकारणेषु नानारूपेण स्थितेत्याह-बीजेष्वित्यादिना | उल्लासो
95784 भूजलयोगादुत्फुल्लता तेन लिङ्गेन रूप्यते अनुभूयते

95785 इत्युल्लासरूपमङ्कुरजननशक्तिस्तदात्मना द्रव्येषु धनरत्नादिषु द्रव्यभावेन
95786 स्पृहणीयताप्रयोजकभव्यभावेन। द्रव्यं च भव्ये इत्यनुशासनात्। इतरेषु
95787 शिलादिषु बालेन [पापेन इति पाठः।] कुलमितिवदभेदान्वयः॥ २४॥
95788
95789 भस्मन्यथानित्यरूपा पांसुष्वप्यणुरूपिणी।
95790 असितेष्वसितस्थित्या सितधारतयासिषु॥ २५॥
95791
95792 भस्मनि पांसुष्वप्यनित्यरूपा पूर्वतनकाष्ठलोष्टादिध्वंसरूपा।
95793 अणुरूपिण्यप्यसितेषु मलिनेष्वक्षाधारे चासितस्थित्या मालिन्यमार्दवरूपया स्थित्या।
95794 असिषु खड्गादिषु सितधारतया तीक्ष्णधारतया॥ २५॥
95795
95796 आत्मा शक्तिः पदार्थेषु तथा घटपटादिषु।
95797 सर्वत्र सत्तासामान्यरूपमाश्रित्य तिष्ठति॥ २६॥
95798
95799 घटपटादिषु सर्वत्र सर्ववस्तुष्वात्मैव सत्तासामान्यरूपं गृहीत्वा
95800 जलाहरणशीतनिवारणादिनानाशक्तिः संस्तिष्ठतीत्यर्थः॥ २६॥
95801
95802 इतीयमखिला दृश्यदशामापूर्य संस्थिता।
95803 यथा घटापटा प्रावृडम्बरालम्बिनी तथा॥ २७॥
95804
95805 घटा मेघजालमेव पट आच्छादको यस्यास्तथाविधा प्रावृड् वर्षर्तुः॥ २७॥
95806
95807 स्वरूपमस्याश्चैवैतत्कथितं प्रविचारितम्।
95808 असर्वं सर्वतो व्यापि सदिवासन्मयात्मकम्॥ २८॥
95809
95810 आत्मदृष्टिरदृष्टैषा संसारभ्रमदायिनी।
95811 दृष्टा सती समग्राणां दुःखानां क्षयकारिणी॥ २९॥
95812
95813 अस्या अज्ञानावृतचिच्छक्तेः। असन्मयात्मकमसत्यमायाविकारतादात्म्यापन्नम्॥
95814 २८॥ २९॥
95815
95816 अस्यास्त्वदर्शनं यत्तदविद्येत्युच्यते बुधैः।
95817 अविद्या हि जगद्धेतुस्ततः सर्वं प्रवर्तते॥ ३०॥
95818
95819 अस्या आत्मदृष्टेरदर्शनं दर्शनविरोध्यावरणरूपम्॥ ३०॥
95820
95821 अविद्या रूपरहिता यावदेवावलोक्यते।
95822 तावदेव गलत्याशु तुहिनाणुर्यथातपे॥ ३१॥
95823
95824 रूपरहिता स्वरूपशून्या॥ ३१॥
95825
95826 यथा नरो गलन्निद्रो यावत्कलनया मनाक्।
95827 विमृशत्याशयं तावन्निद्रा तस्य विलीयते॥ ३२॥
95828
95829 दृष्टान्तान्तराण्यप्याह-यथेत्यादिना। आशयं स्वचित्तवृत्तान्तम्॥ ३२॥
95830
95831 यथा कीदृगवस्त्वेतदिति यावद्विकल्प्यते।
95832 अविद्या क्षीयते तावदालोकेनान्धता यथा॥ ३३॥
95833
95834 तत्त्वपर्यालोचने सर्पादिभ्रमनिवृत्तिरप्यत्र दृष्टान्त इत्याशयेनाह-यथेति।
95835 अवस्तु सर्पादि कीदृक्। किं वास्तवमुत मद्भ्रान्तिकल्पितमिति यावद्विकल्प्यते
95836 विमृश्यते। अन्धता तमःकृतदर्शनशक्तिप्रतिबन्धः॥ ३३॥

95837

95838 दीपहस्तो यथाभ्येति तमोरूपदिदृक्षया।
95839 तथा विलीयते सर्वं तमस्तापैर्घृतं यथा॥ ३४॥
95840
95841 अभ्येति चेदिति शेषः। यथा तमो विलीयते तथा सर्वं साविद्यं जगत्॥ ३४॥
95842
95843 न च संलक्ष्यते दीपे तमसो रूपनिश्चयः।
95844 उदेति केवलं ध्वान्तध्वंसो विमलमूर्तिमान्॥ ३५॥
95845
95846 तमोरूपादर्शननिदर्शनं विवृणोति-नचेति। दीपे आनीयमाने सतीति शेषः॥ ३५॥
95847
95848 एवमालोक्यमानैषा क्वापि याति पलायते।
95849 असद्रूपा ह्यवस्तुत्वाद्दृश्यते ह्यविचारणात्॥ ३६॥
95850
95851 मन्दमालोक्यमाना मन्दं याति सम्यगालोक्यमाना पलायते॥ ३६॥
95852
95853 आलोक आगते यादृक्तमस्तद्दृश्यते तथा।
95854 याऽवस्तुत्वे त्वविद्यायास्त्ववस्तुत्वं प्रतीयते॥ ३७॥
95855
95856 कुतस्तस्या आस्तुत्वमिति चेत्स्वप्रतीतिवलादेवेत्याह-आलोक इति। आलोके आगते सति तत्तमो
95857 यादृक् असद्रूपं दृश्यते तथा या अविद्याप्यसती दृश्यते। ननु न तमस आलोकेन
95858 बाधः। त्रैकालिकत्वाप्रतीतेः। किंतु औष्ण्येन जलशैत्यस्येव तिरोभावमात्रम्।
95859 आलोकापगमे पुनस्तद्दर्शनादिति। तमसोऽवस्तुत्वे तु अस्तु तत्तथा। अविद्यायास्त्ववस्तुत्वं
95860 त्रैकालिकबाधानुभवेन प्रतीयत एवेत्यर्थः॥ ३७॥
95861
95862 यावन्नालोक्यते तावन्न किंचिदपि दृश्यते।
95863 आलोकिते यथाऽविद्या तत्तथा प्रतिपद्यते॥ ३८॥
95864
95865 किंचिच्छुक्तिरज्ज्वाद्यपि वा रजतसर्पाद्यपि वा यावद्विचार्य नालोक्यते तावत्तत्त्वतो न
95866 दृश्यते। आलोकिते तु यथा यावत्स्वभावा अविद्या यथा च वस्तुतत्त्वं वर्तते तत्तथैव
95867 प्रतिपद्यत इत्यर्थः॥ ३८॥
95868
95869 रक्तमांसास्थियन्त्रेऽस्मिन्कः स्यामहमिति स्वयम्।
95870 यावद्विचार्यते तावत्सर्वमाशु विलीयते॥ ३९॥
95871
95872 कथं विमृश्यालोकनं कार्यं तदाह-रक्तेति॥ ३९॥
95873
95874 आद्यन्तयोरसद्रूपे नूनं परिहृते हृदा।
95875 सर्वस्मिन्नेवयः शेषस्तमविद्याक्षयं विदुः॥ ४०॥
95876
95877 एवं विचारवता हृदा मनसा आद्यन्तयोरसद्रूपे सर्वस्मिन् दृश्ये परिहृते सति
95878 यः शिष्यते इति शेषश्चिदात्मा। अध्यस्तबाधस्याधिष्ठानाव्यतिरेकादिति भावः॥ ४०॥
95879
95880 तन्न किंचिच्च किंचिद्वा तत्सद्ब्रह्मैव शाश्वतम्।
95881 तद्वस्तु तदुपादेयं यदविद्या निवर्तते॥ ४१॥
95882
95883 रूपं स्वनाम्न एवास्या ज्ञायते निःस्वभावकम्।
95884 नहि जिह्वागतस्वाद्यस्वादोऽन्यस्मात्प्रतीयते॥ ४२॥
95885
95886 बाध्यस्य निःस्वरूपत्वे तद्बाधस्यात्ममात्रत्वे वा न प्रमाणान्तरं मृग्यम्।
95887 माया अविद्यादिनाम्नस्ताद्दृशस्वाप्राद्यर्थेष्वेव रूढत्वादित्याह-रूपमिति॥ ४२
95888 ।।

95889
95890 नाविद्या क्वचिदप्यस्ति ब्रह्मैवेदमखण्डितम् |
95891 सदसत्कलनास्फारमशेषं येन मण्डितम् || ४३ ||
95892
95893 एतावदेवाविद्याया नेदं ब्रह्मेति निश्चयः |
95894 एतदेव क्षयो यस्या ब्रह्मेदमिति निश्चयः || ४४ ||
95895
95896 एवं सति फलितं निष्कृष्टमविद्यातत्क्षययोः स्वरूपमाह-एतावदिति |
95897 अविद्यायाः स्वरूपमिति शेषः || ४४ ||
95898
95899 घटपटशकटावभासजालं न विभुरितीत्युदितेह सा त्वविद्या |
95900 घटपटशकटावभासजालं विभुरिति चेद्गलितैव सा त्वविद्या || ४५ ||
95901
95902 तदेव विवृण्वन्नुपसंहरति-घटेति | घटः पटः शकटं
95903 चेत्याद्यवभासमानं जगज्जालं विभुरपरिच्छिन्नसच्चिदात्मा न
95904 किंत्वन्यदित्यादिरारोपितदृष्टिरेवाविद्या तदपवादेनापरिच्छिन्नसन्मात्रदृष्टिरेव
95905 तत्क्षय इत्यर्थः || ४५ ||
95906
95907 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये देव० मोक्षोपायेषु निर्वाणप्रकरणे
95908 पू० अविद्याचिकित्सा नाम दशमः सर्गः || १० ||
95909
95910 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
95911 अविद्याचिकित्सा नाम दशमः सर्गः || १० ||
95912 एकादशः सर्गः ११
95913
95914 श्रीवसिष्ठ उवाच |
95915
95916 पुनःपुनरिदं राम प्रबोधार्थं मयोच्यते |
95917 अभ्यासेन विना साधो नाभ्युदेत्यात्मभावना || १ ||
95918
95919 जीवन्मुक्ता यया दृष्ट्या स्थिता हरिहरादयः |
95920 सर्वं ब्रह्मेति सा दृष्टी रामायात्रोपदिश्यते ||
95921
95922 उपदिष्टस्यैवार्थस्य पुनःपुनर्भङ्ग्यन्तरेणोपदेश
95923 उपदेश्यार्थव्युत्पत्तिदार्ढ्यार्थः | दृष्टफला हि
95924 श्रवणादयोऽवघातादिवद्यावत्फलोदयमावर्तनीयाः | तथा हि भगवतो
95925 बादरायणस्य सूत्रम् आवृत्तिरसकृदुपदेशात् इति | इति रहस्य
95926 जामितादोषपरिहारेणोत्साहजननायोद्घाटयन्प्रकृतामविद्याक्षये परिशिष्टां
95927 दृष्टिं श्रोतुं राममभिमुखीकरोति-पुनःपुनरिति || १ ||
95928
95929 अज्ञानमेतद्बलवदविद्येतरनामकम् |
95930 जन्मान्तरसहस्रोत्थं घनं स्थितिमुपागतम् || २ ||
95931
95932 कुतो नाभ्युदेति तत्राह-अज्ञानमिति | सहस्रपदमानन्त्यपरम् | तथा
95933 चानन्तकोटिजन्माभ्यस्तद्वैतवासनास्थिरीकृतत्वान्न
95934 सकृदुपदेशात्सूच्छेदमित्यर्थः || २ ||
95935
95936 सबाह्याभ्यन्तरं सर्वैरिन्द्रियैरनुभूयते |
95937 भावाभावेषु देहस्य तेनातिघनतां गतम् || ३ ||
95938
95939 चक्षुरादिप्रबलतरबाह्याभ्यन्तरबहुप्रमाणग्राह्यद्वैतरूपत्वाच्च
95940 प्राबल्यमित्याह-सबाह्याभ्यन्तरमिति | देहस्य भावे जीवनजागराद्यवस्थासु

95941 इन्द्रियैः। अभावे मरणप्रलयाद्यवस्थासु साक्षिणा सदानुभूयते।
95942 अतिघनतामतिप्राबल्यम्॥ ३॥
95943
95944 आत्मज्ञानं तु सर्वेषामिन्द्रियाणामगोचरम्।
95945 सत्तां केवलमायाति मनःषष्ठेन्द्रियक्षये॥ ४॥
95946
95947 ज्ञानस्य च सामग्र्या दौर्लभ्यं दर्शयति-आत्मेति द्वाभ्याम्॥ ४॥
95948
95949 प्रोल्लङ्घ्येन्द्रियजां वृत्तिं यत्स्थितं तत्कथं किल।
95950 याति प्रत्यक्षतां जन्तोः प्रत्यक्षातीतवृत्तिमत्॥ ५॥
95951
95952 प्रोल्लङ्घ्य अतिक्रम्य॥ ५॥
95953
95954 त्वमविद्यालतामेतां प्ररूढां हृदयद्रुमे।
95955 ज्ञानाभ्यासविलासासिपातैश्छिन्धि स्वसिद्धये॥ ६॥
95956
95957 अतएव पुनःपुनरुपदेशस्य मननाद्यभ्यासस्य चाविद्यालतानानाप्रतानच्छेदनेन
95958 सार्थक्यमित्याशयेनोपसंहरति-त्वमिति॥ ६॥
95959
95960 यथा विहरति ज्ञातज्ञेयो जनकभूपतिः।
95961 आत्मज्ञानाभ्यासपरस्तथा विहर राघव॥ ७॥
95962
95963 निश्चयोऽयमभूत्तस्य कार्याकार्यविहारिणः।
95964 जाग्रतस्तिष्ठतो वापि तज्ज्ञानां तेन सत्यता॥ ८॥
95965
95966 अयं मदनुभवानुसारी निश्चयः कार्येण बहिर्व्यवहारेण अकार्येण समाधिना च
95967 विहारिणस्तस्याभूत्। तदेवाभ्यासफलं ज्ञानं तेन ज्ञानेनैवाभिव्यक्तस्य
95968 स्वरूपस्य सत्यता नापातज्ञानेनेत्यर्थः॥ ८॥
95969
95970 निश्चयेन हरिर्येन विविधाचारकारिणा।
95971 योनिष्ववतरत्युर्व्यां तत्तज्ज्ञत्वमुदाहृतम्॥ ९॥
95972
95973 योनिषु गर्भवासादिकृच्छ्रेष्ववतरति। अवतरन्नपि न तत्प्रयुक्तदुःखैः स्पृश्यत
95974 इत्यर्थः। एवमुत्तरेष्वप्यूह्यम्॥ ९॥
95975
95976 निश्चयो यस्त्रिनेत्रस्य कान्तया सह तिष्ठतः।
95977 ब्रह्मणो वाप्यरागस्य स ते भवतु राघव॥ १०॥
95978
95979 यो निश्चयः सुरगुरोर्वाक्पतेर्भार्गवस्य च।
95980 दिवाकरस्य शशिनः पवनस्यानलस्य च॥ ११॥
95981
95982 नारदस्य पुलस्त्यस्य मम चाङ्गिरसस्तथा।
95983 प्रचेतसो भृगोश्चैव क्रतोरत्रेः शुकस्य च॥ १२॥
95984
95985 अन्येषामेव विप्रेन्द्र राजर्षीणां च राघव।
95986 यो निश्चयो विमुक्तानां जीवतां ते भवत्वसौ॥ १३॥
95987
95988 एवकारो जीवतामित्यनेन संबध्यते॥ १३॥
95989
95990 श्रीराम उवाच।
95991
95992 येनैते भगवन्धीरा निश्चयेन महाधियः।

95993 विशोकाः संस्थितास्तन्मे ब्रह्मन्प्रब्रूहि तत्त्वतः ॥ १४ ॥
95994
95995 प्रश्नः स्पष्टः ॥ १४ ॥
95996
95997 श्रीवसिष्ठ उवाच ।
95998
95999 राजपुत्र महाबाहो विदिताखिलवेद्य हे ।
96000 स्फुटं शृणु यथा पृष्टमयमेषां हि निश्चयः ॥ १५ ॥
96001
96002 अयं वक्ष्यमाणप्रकारः ॥ १५ ॥
96003
96004 यदिदं किंचिदाभोगि जगज्जालं प्रदृश्यते ।
96005 तत्सर्वममलं ब्रह्म भवत्येतद्व्यवस्थितम् ॥ १६ ॥
96006
96007 तमेवाह-यदिदमित्यादिना । व्यवस्थितं मायिकाव्यवस्थितरूपत्यागेन
96008 पारमार्थिकस्वरूपे स्थितम् ॥ १६ ॥
96009
96010 ब्रह्म चिद्ब्रह्म भुवनं ब्रह्म भूतपरम्पराः ।
96011 ब्रह्माहं ब्रह्म मच्छत्रुर्ब्रह्म सन्मित्रबान्धवाः ॥ १७ ॥
96012
96013 संक्षिप्योक्तमेव विस्तराद्विशिष्य दर्शयति-ब्रह्मेति ॥ १७ ॥
96014
96015 ब्रह्म कालत्रयं तच्च ब्रह्मण्येव व्यवस्थितम् ।
96016 तरङ्गमालयाम्भोधिर्यथात्मनि विवर्धते ॥ १८ ॥
96017
96018 विवर्धते विजृम्भते ॥ १८ ॥
96019
96020 तथा पदार्थलक्ष्म्येत्थमिदं ब्रह्म विवर्धते ।
96021 गृह्यते ब्रह्मणा ब्रह्म भुज्यते ब्रह्म ब्रह्मणा ॥ १९ ॥
96022
96023 सर्वक्रियाकारकफलानां ब्रह्मतैवेत्याशयेनाह-गृह्यत इति ॥ १९ ॥
96024
96025 ब्रह्म ब्रह्मणि बृंहाभिर्ब्रह्मशक्त्येव बृंहति ।
96026 ब्रह्म मच्छत्रुरूपं मे ब्रह्मणोऽप्रियकृद्यदि ॥ २० ॥
96027
96028 ब्रह्मशक्त्या मायया । बृंहाभिर्विवर्तैः । बृंहति वर्धत इव । अनया दृशा न
96029 क्वचिद्द्वेषरागादिप्रसक्तिरित्याशयेनाह-ब्रह्मेति । अप्रियकृदनिष्टकर्तृ ॥ २० ॥
96030
96031 तद्ब्रह्मणि ब्रह्मनिष्ठं किमन्यत्कस्यचित्कृतम् ।
96032 रागादीनामवस्थानं कल्पितानां खवृक्षवत् ॥ २१ ॥
96033
96034 तत्तर्हि ॥ २१ ॥
96035
96036 असंकल्पेन नष्टानां कः प्रसङ्गोऽत्र वर्धते ।
96037 ब्रह्मण्येव हि सर्वस्मिंश्चरणस्पन्दनादिकम् ॥ २२ ॥
96038
96039 अत्र ब्रह्मणि । सर्वस्मिन् पूर्णे । चरणस्पन्दनं गमनं तदादिकम् ॥ २२ ॥
96040
96041 स्फुरति ब्रह्म सकलं सुखितादुःखिते कुतः ।
96042 ब्रह्म ब्रह्मणि संतृप्तं ब्रह्म ब्रह्मणि संस्थितम् ॥ २३ ॥
96043
96044 यतः सकलं ब्रह्म सुखैकरसं स्फुरत्यतो दुःखितादि कुतः ॥ २३ ॥

96045
96046 स्फुरति ब्रह्मणि ब्रह्म नाहमस्मीतरात्मकः ।
96047 घटो ब्रह्म पटो ब्रह्म ब्रह्माहमिदमाततम् ॥ २४ ॥
96048
96049 अतो रागविरागाणां मृषेव कलनेह का ।
96050 मरणब्रह्मणि स्वैरं देहब्रह्मणि संगते ॥ २५ ॥
96051
96052 अनया दृशा आत्यन्तिकीमभयप्राप्तिमाह-मरणेति ॥ २५ ॥
96053
96054 दुःखितानाम कैव स्याद्रज्जुसर्पभ्रमोपमा ।
96055 संभोगादौ सुखं ब्रह्मण्यास्थिते देहब्रह्मणि ॥ २६ ॥
96056
96057 एवमात्यन्तिकी भोगरागनिवृत्तिरपि सिध्यतीत्याह-संभोगेति ॥ २६ ॥
96058
96059 संपन्नमेतन्म इति मुधा स्यात्कलना कुतः ।
96060 वीच्यम्भसोः स्पन्दवतोर्न त्वन्यदम्बुनो यथा ॥ २७ ॥
96061
96062 कलना इच्छा । स्पन्दवतोः सतोरम्बुनोऽन्यद्यथा किंचिदपि नास्ति तथेत्यर्थः ॥ २७ ॥
96063
96064 त्वत्तामत्ते तथा न स्तो ब्रह्मणि स्पन्दरूपिणी ।
96065 यथावर्तमृते तोये न किंचिन्म्रियते क्वचित् ॥ २८ ॥
96066
96067 स्पन्दो रागद्वेषादिना चलनं तद्रूपिणी । तत्प्रयोजके इति यावत् । आवर्तस्य मृते नाशे ॥
96068 २८ ॥
96069
96070 मृतिब्रह्मत्वमायाते देहब्रह्मणि वै तथा ।
96071 यथा चलाचले तोये त्वत्तामत्ते न तिष्ठतः ॥ २९ ॥
96072
96073 तथा देहब्रह्मणि मृतिब्रह्मत्वमायातेऽपि न किंचिन्म्रियते इत्यर्थः ।
96074 जडरूपापरित्यागेनैव सर्वपर्यायेषु ब्रह्मता मा ग्राहीति तन्निषेधति-यथेति ।
96075 चलाचले चञ्चले चले अचले चेति वा ॥ २९ ॥
96076
96077 तथा जडाजडे रूपे न स्थिते परमात्मनि ।
96078 कटकत्वं यथा हेम्नो यथावर्तो जलस्य च ॥ ३० ॥
96079
96080 जडरूपाभावे प्रतियोग्यप्रसिद्धावजडमिति तद्व्यावृत्तरूपस्याप्यप्रसक्तेरिति
96081 भावः ॥ ३० ॥
96082
96083 तदतद्भावरूपेयं तथा प्रकृतिरात्मनः ।
96084 इदं हि जीवभूतात्म जडरूपमिदं भवेत् ॥ ३१ ॥
96085
96086 तस्यैव अतदिव भावो यया तथारूपा प्रकृतिर्मायिकः स्वभावस्तद्वशादेव
96087 जीवजडरूपभेदकल्पनेत्याह-इदमिति ॥ ३१ ॥
96088
96089 इत्यज्ञानात्मनो मोहो न च ज्ञानात्मनः क्वचित् ।
96090 अज्ञस्य दुःखौघमयं ज्ञस्यानन्दमयं जगत् ॥ ३२ ॥
96091
96092 अतएव तत्त्वविदः सर्वं जगदानन्दैकरसमेवेत्याह-अज्ञस्येति ॥ ३२ ॥
96093
96094 अन्धं भुवनमन्धस्य प्रकाशं तु स चक्षुषः ।
96095 जगदेकात्मकं ज्ञस्य मूर्खस्यातीव दुःखदम् ॥ ३३ ॥
96096

96097 शिशोरिव स्फुरद्यक्षा निशा पुंसस्तु केवला।
96098 अस्मिन्ब्रह्मघटे नित्यमेकस्मिन्सर्वतः स्थिते ॥ ३४ ॥
96099
96100 यथा निशा रात्रिः शिशोर्बालस्य दृशा स्फुरन्स्वभ्रान्तिपरिकल्पितो यक्षो यस्यां
96101 तथाविधा। पुंसो युववृद्धपुरुषस्य केवला निर्यक्षा। ब्रह्मलक्षणे
96102 पूर्णामृतघटे ॥ ३४ ॥
96103
96104 न किंचिन्म्रियते नाम न च किंचन जीवति।
96105 यथोल्लासविलासेषु न नश्यति न जायते ॥ ३५ ॥
96106
96107 तरङ्गादिमहाम्भोधौ भूतवृन्दं तथात्मनि।
96108 इदं नास्तीदमस्तीति भ्रान्तिर्नामात्मनात्मनि ॥ ३६ ॥
96109
96110 शक्तिर्निर्हेतुकैवान्तः स्फुरति स्फटिकांशुवत्।
96111 जगच्छक्त्यात्मनात्मैव ब्रह्म स्वात्मनि संस्थितम् ॥ ३७ ॥
96112
96113 शक्तिर्मायास्फटिकस्यांशुरनेकप्रतिबिम्बग्रहणयोग्यतापादकस्वच्छता सैव
96114 यथा नानाप्रतिबिम्बतत्तद्गुणक्रियादिवैचित्र्यात्मना अन्तः स्फुरति तद्वत्सा
96115 जगदात्मना तत्तत्पदार्थशक्त्यात्मना च स्फुरति प्रथते। सा च प्रथा आत्मैव तच्च
96116 ब्रह्म स्वात्मन्येवाद्वये संस्थितम् ॥ ३७ ॥
96117
96118 तरङ्गकणजालेन पयसीव पयो घनम्।
96119 शरीरनाशेन कथं ब्रह्मणो मृतधीर्भवेत् ॥ ३८ ॥
96120
96121 अतएव शरीरनाशेन नात्मनाश इति दृष्टान्तेनोपपादयति चतुर्भिः ॥ ३८ ॥
96122
96123 ब्रह्मणो व्यतिरिक्तं हि न शरीरादि विद्यते।
96124 पयसो व्यतिरेकेण तरङ्गादि महार्णवे ॥ ३९ ॥
96125
96126 यः कणो या च कणिका या वीचिर्यस्तरङ्गकः।
96127 यः फेनो या च लहरी तद्यथा वारि वारिणि ॥ ४० ॥
96128
96129 यो देहो या च कलना यद्दृश्यं यौ क्षयाक्षयौ।
96130 या भावरचना योऽर्थस्तया तद्ब्रह्म ब्रह्मणि ॥ ४१ ॥
96131
96132 कलना इन्द्रियव्यापारः। दृश्यं भोग्यम्। क्षयाक्षयौ विपत्संपदौ। भावा
96133 हर्षविषादादयस्तद्रचना। अर्थः पुरुषार्थभोगः ॥ ४१ ॥
96134
96135 संस्थानरचना चित्रा ब्रह्मणः कनकादिव।
96136 नान्यरूपा विमूढानां मृषैव द्वित्वभावना ॥ ४२ ॥
96137
96138 मनो बुद्धिरहंकारस्तन्मात्राणीन्द्रियाणि च।
96139 ब्रह्मैव सर्वं नानात्म सुखं दुःखं न विद्यते ॥ ४३ ॥
96140
96141 अयं सोऽहमिदं चित्तमित्याद्यर्थोत्थया गिरा।
96142 शब्दप्रतिश्रवेणाद्राविवात्मात्मनि जृम्भते ॥ ४४ ॥
96143
96144 यथा एक एव शब्दः अद्रौ पर्वतसंनिधौ प्रतिश्रवेण प्रतिध्वन्यात्मना द्विरुक्त इव
96145 जृम्भते तथा देहचित्तबाह्यार्थादिरूपनामभेदेनात्मैव जृम्भत इत्यर्थः ॥ ४४ ॥
96146
96147 ब्रह्मैवाज्ञातमज्ञत्वमभ्यागतमिव स्थितम्।
96148 तथा हि दृश्यते स्वप्ने चेतसात्मात्मनात्मनः ॥ ४५ ॥

96149
96150 अज्ञत्वं जीवजगद्भावम् | तत्र आत्मनि चैव विचित्राश्च हि इति बादरायणोक्तं
96151 स्वप्नदृष्टान्तमाह-तथाहीति || ४५ ||
96152
96153 अभावितं ब्रह्मतया ब्रह्माज्ञानमलं भवेत् |
96154 अभावितं हेमतया यथा हेम च मृद्भवेत् || ४६ ||
96155
96156 अज्ञानस्यात्यन्तविरुद्धासंभावितकारिता लोके प्रसिद्धैवेत्याह-अभावितमिति || ४६
96157 | |
96158
96159 स्वयं प्रभुर्महात्मैव ब्रह्म ब्रह्मविदो विदुः |
96160 अपरिज्ञातमज्ञानमज्ञानामिति कथ्यते || ४७ ||
96161
96162 अतएव तदज्ञदृशैवाज्ञानरूपं न तत्त्वज्ञदृशेत्याह-स्वयंप्रभुरिति ||
96163 ४७ ||
96164
96165 ज्ञातं ब्रह्मतया ब्रह्म ब्रह्मैव भवति क्षणात् |
96166 ज्ञातं हेमतया हेम हेमैव भवति क्षणात् || ४८ ||
96167
96168 ब्रह्मात्मा सर्वशक्तिर्हि तद्यथा भावयत्यलम् |
96169 निर्हेतुकः स्वयं शक्त्या तत्तथाशु प्रपश्यति || ४९ ||
96170
96171 आत्मा स्वयं ब्रह्म यथा जीवजगद्रूपेण तात्त्विकब्रह्मरूपेण वा भावयति || ४९ ||
96172
96173 अकर्मकर्तृकरणमकारणमनामयम् |
96174 स्वयंप्रभुं महात्मानं ब्रह्म ब्रह्मविदो विदुः || ५० ||
96175
96176 अतएव तत्त्वविदो न जीवजगद्भावेन पश्यन्तीत्याह-अकर्मेति | स्वबोधात्स्वभावे
96177 स्वयं प्रभवतीति स्वयं प्रभुस्तम् || ५० ||
96178
96179 अपरिज्ञातमज्ञानामज्ञानमिति कथ्यते |
96180 परिज्ञातं भवेज्ज्ञानमज्ञानपरिनाशनम् || ५१ ||
96181
96182 बन्धुरेवापरिज्ञातो ह्यबन्धुरिति कथ्यते |
96183 परिज्ञातो भवेद्बन्धुरबन्धुभ्रमनाशनात् || ५२ ||
96184
96185 इदं त्वयुक्तमित्यन्तर्ज्ञाते सोदेति भावना |
96186 यस्मादयुक्ताद्वैरस्याद्यया किल विरज्यते || ५३ ||
96187
96188 तर्हि जीवजगतोर्ब्रह्ममात्रताभावना सहसैव सर्वेषां कुतो नोदेति वैराग्याभावादिति
96189 चेतद्धेतव एव तर्ह्युच्यन्तां तत्राह-इदं त्वित्यादिना | इदं
96190 जीवजगद्रूपमयुक्तं विचारासहमिति ज्ञाते सति सा ब्रह्मभावना उदेति |
96191 यस्माद्धेतोरयुक्ताच्छुक्तिरजतादेर्वैरस्यप्रसिद्धेर्यया विचारणया जगत इव
96192 भोग्यवर्गादपि विरज्यते पुरुष इत्यर्थः || ५३ ||
96193
96194 द्वैतं त्वसत्यमित्यन्तर्ज्ञाते सोदेति भावना |
96195 तस्माद्वैताच्च वैरस्याद्यया किल विरज्यते || ५४ ||
96196
96197 उक्ता विचारणा जगद्विषये तत्पदार्थशोधनतया पर्यवस्यतीत्याशयेन जगदंशे
96198 उक्तमेव स्फुटमाह-द्वैतमिति || ५४ ||
96199
96200 अयं नाहमिति ज्ञाते स्फुटे सोदेति भावना |

96201 मिथ्याहंकारता तस्माद्यया नूनं विरज्यते ॥ ५५ ॥
96202
96203 जीवांशेऽपि सा त्वंपदार्थशोधनतया पर्यवस्यतीत्याशयेन तदंशेऽप्युक्तं
96204 स्फुटयति-अयमिति । अयं देहादिकार्यकारणसंघातो नाहमिति ज्ञाते सति ॥ ५५ ॥
96205
96206 ब्रह्मैवाहमिति ज्ञाने सत्ये सोदेति भावना ।
96207 तस्मिन्सत्ये निजे रूपे यथान्तः परिलीयते ॥ ५६ ॥
96208
96209 पदार्थशोधफलभूताखण्डवाक्यार्थबोधतयापि सा पर्यवस्यतीत्याशयेन तस्मिन्
96210 जीवजगद्भावयोर्बाधलक्षणं लयं स्फुटयति-ब्रह्मैवेति ॥ ५६ ॥
96211
96212 सति विस्तारजे तस्मिन्ब्रह्मेदमिति वेद्म्यहम् ।
96213 त्वमहंत्वादिबाधे तत्सदित्यादि जगद्गतम् ॥ ५७ ॥
96214
96215 अखण्डाकारबोधे सति स्थितमपि जगत्सदेकरसं ब्रह्मैव न
96216 पूर्ववद्दुःखरूपमित्याशयेनाह-सतीति द्वाभ्याम् । तस्मिन्नखण्डवाक्यार्थे
96217 विस्तारजे अपरिच्छिन्नस्वभावेनाविर्भूते सति त्वंत्वमहंत्वमादिपदादिदंत्वं च
96218 तेषां बाधे सति तत् प्राक् प्रसिद्ध सत् आदिपदाद्भाति प्रियं मान रूपमिति
96219 पञ्चरूपमिदं जगद्गतं वस्तुजातं ब्रह्मैवेति वेद्मीत्यर्थः ॥ ५७ ॥
96220
96221 सत्यं सर्वप्रकाराढ्यं ब्रह्मेदमिति वेद्म्यहम् ।
96222 न मे दुःखं न कर्माणि न मे मोहो न वाञ्छितम् ॥ ५८ ॥
96223
96224 समः स्वस्थो विशोकोऽस्मि ब्रह्माहमिति सत्यता ।
96225 कलाकलङ्कमुक्तोऽस्मि सर्वमस्मि निरामयः ॥ ५९ ॥
96226
96227 तत्स्वभावस्थितमेव परमपुरुषार्थतया वर्णयति-सम इत्यादिना ॥ ५९ ॥
96228
96229 न त्यजामि न वाञ्छामि ब्रह्माहमिति सत्यता ।
96230 अहं रक्तमहं मांसमहमस्थीन्यहं वपुः ॥ ६० ॥
96231
96232 त्वंतत्पदार्थशोधनमपि परिच्छेदपारोक्ष्यनिरासायैव तन्निरासेन
96233 सार्वात्म्यलाभे तु रक्तमांसादिरूपदेहादिरप्यात्मैवेति न
96234 निरासार्हमित्याशयेनाह-अहं रक्तमित्यादिना ॥ ६० ॥
96235
96236 चिदहं चेतनं चाहं ब्रह्माहमिति सत्यता ।
96237 द्यौरहं खमहं सार्कमहमाशा भुवोऽप्यहम् ॥ ६१ ॥
96238
96239 अहं घटपटाकारो ब्रह्माहमिति सत्यता ।
96240 अहं तृणमहं चोर्वी गुल्मोऽहं काननाद्यहम् ॥ ६२ ॥
96241
96242 शैलसागरसार्थोऽहं ब्रह्मैकत्वं किल स्थितम् ।
96243 आदानदानसंकोचपूर्विका भूतशक्तयः ॥ ६३ ॥
96244
96245 शैलाः सागराः सार्थः प्राणिसङ्घश्चाहम् । भूतशक्तयः प्राणिधर्माः ॥ ६३ ॥
96246
96247 सर्वमेव चिदेआत्मास्मि ब्रह्मण्याततरूपधृक् ।
96248 लतागुल्माङ्कुरादीनामहंसंभवनैषिणाम् ॥ ६४ ॥
96249
96250 संभवनमङ्कुरकाण्डप्रतानशाखाद्याविर्भावस्तदेषिणाम् ॥ ६४ ॥
96251
96252 चिदात्मान्तर्गतं शान्तं परं ब्रह्म रसात्मकम् ।

96253 यस्मिन्सर्वं यतः सर्वं यत्सर्वं सर्वतश्च यत् ॥ ६५ ॥
96254
96255 यो मतः सर्व एकात्मा परं ब्रह्मेति निश्चयः ।
96256 चिदात्मा ब्रह्म सत्सत्यमृतं ज्ञ इति नामभिः ॥ ६६ ॥
96257
96258 प्रोच्यते सर्वगं तत्त्वं चिन्मात्रं चेत्यवर्जितम् ।
96259 आभासमात्रममलं सर्वभूतात्मबोधकम् ॥ ६७ ॥
96260
96261 सर्वत्रावस्थितं शान्तं चिद्ब्रह्मेत्यनुभूयते ।
96262 मनोबुद्धीन्द्रियव्रातसमस्तकलनान्वितम् ॥ ६८ ॥
96263
96264 अनुभूयते । ब्रह्मविद्भिरिति शेषः । ननु प्रतिपुरुषं मनोबुद्धीन्द्रियवृत्तिभेदेन
96265 चिति भेदानुभवात्कथं सा ब्रह्म स्यात्तत्राह-मन इत्यादिना । समस्तासु कलनासु
96266 वृत्तिष्वन्वितमनुगतम् ॥ ६८ ॥
96267
96268 भेदं त्यक्त्वा स्वमाभासं चिद्ब्रह्माहमनामयम् ।
96269 शब्दादीनामशेषाणां कारणानां जगत्स्थितेः ॥ ६९ ॥
96270
96271 स्वं प्रत्यक्स्वरूपमेव मा प्रमा तदाभासं स्वप्रकाशम् । शब्दादीनां
96272 तत्कारणानामाकाशादीनां तत्कृतजगत्स्थितेश्च तत्त्वावकाशकं
96273 सत्ताप्रथास्वरूपम् ॥ ६९ ॥
96274
96275 तत्त्वावकाशकं स्वच्छं चिद्ब्रह्मास्मि न मे क्षयः ।
96276 अनारतगलत्स्वच्छचिद्धारागहनात्मकम् ॥ ७० ॥
96277
96278 समस्तकलनान्वितत्वमुपपादयन्नक्तमेव स्फुटमाह-अनारतेति ।
96279 अग्निविस्फुलिङ्गधारावद्वृत्त्युपाधिधाराभिरनारतं गलन्त्यो निःसरन्त्यो
96280 याश्चिद्धारास्तासां गहनात्मकमाकरस्थानीयं प्रत्यगात्मरूपम् ॥ ७० ॥
96281
96282 आलोकः सुमनोमौनं चिद्ब्रह्मास्म्यमृतं परम् ।
96283 अनारतगलद्रूपं नित्यं चानुभवामृतम् ॥ ७१ ॥
96284
96285 सुमनसां योगिनां मौनमनुभूयमानमप्यभिलपितुमशक्यम् । अमृतं परं
96286 निरविषयानन्दरूपम् । एतदपि पूर्ववदुपपादयन्नुक्तमेवाह-अनारतेति ।
96287 अहंकारलक्षणानि निःशेषाणि समस्तानि भोक्तृचक्राणि प्रति
96288 तत्तद्भोगवृत्तिधारोपाधिभिर्मधुधारावदनारतगलद्रूपं
96289 कूटस्थनित्यानुभवानन्दैकरसं चिद्ब्रह्माहमित्यन्वयः ॥ ७१ ॥
96290
96291 अहंनिःशेषचक्राणि चिद्ब्रह्माहमलेपकम् ।
96292 सुषुप्तसदृशं शान्तमालोकविमलात्मकम् ॥ ७२ ॥
96293
96294 नित्यं चानुभवामृतमित्येतत्समाधिनिष्ठानुभवेनोपपादयन्नाह-सुषुप्तेति ॥
96295 ७२ ॥
96296
96297 संभोगोत्तममाभासं चिद्ब्रह्मास्म्यपवासनम् ।
96298 खण्डादिस्वादुसंवित्तिरीषन्मात्रा तु तिष्ठति ॥ ७३ ॥
96299
96300 संभोगा मानुषानन्दादिहैरण्यगर्भान्तविषयसुखानि तेभ्योऽप्युत्तमम् । आभासं
96301 सर्वतः प्रकाशमानम् । संभोगोत्तममिति यदुक्तं तदुपपाद्यानुभावयति##-
96302 खण्डशर्करादिस्वादुसंवित्तिरीषन्मात्राखण्डरसस्य जिह्वातः
96303 कण्ठोपसर्पणपर्यन्तात्पतरदेशकालपरिच्छिन्ना तिष्ठति सैव तु
96304 स्वपरिच्छेदहेतुषु चित्तचेत्यचेतयितृषु स्वप्रकाशानन्दैकरसतयावबुद्धेषु सत्सु

परिच्छेदोपाधिच्युतावपि च्युतिरहितात्मा तदेव निरतिशयानन्दं ब्रह्माहमित्यन्वयः
॥ ७३ ॥

चित्तादिष्ववबुद्धेषु तद्धि ब्रह्माहमच्युतः।
कान्तासंसक्तचित्तस्य चन्द्रे समुदिते सति ॥ ७४ ॥

ननु ज्ञानस्य विषयोपाधिनिर्मुक्ता स्थितिरेवाप्रसिद्धेत्याशङ्क्य तत्प्रसिद्धिं
दर्शयति-कान्तेति। निशि कान्तासंसक्तचित्तस्य चन्द्रोदये सति
चन्द्रकान्तोभयदर्शने अन्तराले देशे चितो
विच्छेदाननुभवाच्चन्द्राकारप्रत्ययपर्यन्तमविच्छिन्नसत्तात्मकं निर्विषयं
चिद्ब्रह्म प्रसिद्धं तदेवाहमित्यर्थः ॥ ७४ ॥

चन्द्रप्रत्ययसत्त्वात्म चिद्ब्रह्माहमनामयम्।
भूमिष्ठनरदृष्टीनां लग्नानां खे निशाकरे ॥ ७५ ॥

भूमिष्ठेति तस्यैव स्फुटीकरणम् ॥ ७५ ॥

या खस्था ननु चिच्छक्तिस्तच्चिद्ब्रह्मास्ति निर्मलम्।
सुखदुःखादिकलनाविकलो निर्मलस्तथा ॥ ७६ ॥

खस्था आन्तरालिकनभःप्रदेशस्था। उदासीनानां
सुखदुःखाद्याकारवृत्त्यन्तरशून्यतादशायां निर्विषयस्वात्मप्रथा
प्रसिद्धैवेत्याशयेनाह-सुखेति ॥ ७६ ॥

सत्यानुभवरूपात्म चिद्ब्रह्मात्मास्मि शाश्वतः।
असंस्तुताध्वगालोके मनस्यन्यत्र संस्थिते ॥ ७७ ॥

एवमिहस्थस्य पुंसोऽन्यत्र दूरस्थे विषये न संस्तुतः
संपादितोऽध्वगानामन्तरालमार्गस्थानां पदार्थानामालोको येन तथाविधे मनसि
संस्थिते सति अन्तराले देशे अनागस्का विषयसंस्पर्शापराधशून्या या
प्रतीतिश्चिन्मात्रं तदित्यर्थः ॥ ७७ ॥

या प्रतीतिरनागस्का तच्चिद्ब्रह्मास्मि सर्वगः।
भूवार्यनिलबीजानां संबन्धेऽङ्कुरकर्मसु ॥ ७८ ॥

संबन्धे मेलने सति अङ्कुरलक्षणेषु कर्मसु कार्येषु उद्गमनीया
बहिर्निर्गमनानुकूला या चिच्छक्तिस्तद्ब्रह्मेत्यर्थः ॥ ७८ ॥

शक्तिरुद्गमनीयान्तस्तच्चिद्ब्रह्माहमाततम्।
खर्जूरनिम्बबिम्बानां स्वयमात्मनि तिष्ठताम् ॥ ७९ ॥

खर्जूरादीनां फलानामात्मनि स्वीये जडस्वभावे तिष्ठतां रसभेदानां
स्वयमन्तर्लीना रासनादिवृत्त्यभिव्यक्ता प्रथारूपा या स्वादसत्ता तदेव
ब्रह्मेत्यर्थः ॥ ७९ ॥

या स्वादसत्ता लीनान्तस्तद्ब्रह्म चिदहं समः।
खेदानन्दविमुक्तान्तः संवित्तिर्मननोदया ॥ ८० ॥

किंच यैव संवित्तिरिष्टलाभालाभयोः खेदानन्दवती प्रसिद्धा सैव
शास्त्रानुसारिमननोदयविशोधिता सती खेदानन्दविनिर्मुक्ता चेत्तदेव ब्रह्मेत्याह##-

लाभालाभविधौ तुल्या चिद्ब्रह्मास्मि निरामयम्।

96357 यावद्भूम्यर्कमेतावद्दृष्टिसूत्रं यदाततम् ॥ ८१ ॥
96358
96359 भूमिष्ठस्यादित्यं पश्यतः पुंसो यावद्भूम्यर्कं भूमिमारभ्यार्कपर्यन्तं
96360 यत् दृष्टिश्चक्षुस्तल्लक्षणं सूत्रमाततं विस्तीर्णमस्ति तस्य यन्मध्यं
96361 नेत्रसूर्योभयासंलग्नभागस्तत्सदृशं विषयप्रकाशनसमर्थमपि
96362 तद्विनिर्मुक्तमित्यर्थः ॥ ८१ ॥
96363
96364 तन्मध्यसदृशं शान्तं निर्मलं चिदहं ततम् ।
96365 जाग्रत्यपि सुषुप्तेऽपि तत्स्वप्नेऽपि तथोदितम् ॥ ८२ ॥
96366
96367 एवमवस्यात्रयसाक्षिरूपमेव तत्परित्यागे तुर्यभूतं ब्रह्मेत्याह-जाग्रतीति ॥ ८२ ॥
96368
96369 तुर्यं रूपमनाद्यन्तं चिद्ब्रह्माहमनामयम् ।
96370 पुंसां क्षेत्रशतोत्थानामिक्षूणां स्वादुवत्स्थितम् ॥ ८३ ॥
96371
96372 सर्वेषां पुंसामन्तः एकरूपं स्थितम् ॥ ८३ ॥
96373
96374 सर्वेषामेकरूपं तच्चिद्ब्रह्मास्मि समः स्थितः ।
96375 सर्वगा प्रकृता स्वच्छरूपा भानोरिव प्रभा ॥ ८४ ॥
96376
96377 आलोककारिणी कान्ता चिद्ब्रह्मेदमहं ततम् ।
96378 संभोगानन्दलववदमृतास्वादशक्तिवत् ॥ ८५ ॥
96379
96380 स्वानुभूत्यैकमात्रं यच्चिद्ब्रह्मास्मि तदव्ययम् ।
96381 प्रोताङ्गमपि गुप्तास्यं देहे तन्तुर्बिसे यथा ॥ ८६ ॥
96382
96383 तस्य आनखाग्रसर्वाङ्गव्याप्तिं देहच्छेदादावच्छेद्यतां चाह##-
96384
96385 छेदे भेदे स्फुरद्रूपं चिद्ब्रह्माहमनामयम् ।
96386 आक्रान्तभुवनाप्यभ्रमालेव स्पन्दशालिनी ॥ ८७ ॥
96387
96388 भुवनानि लोका जलानि च । वृत्तिवायूपाधिस्पन्दास्पन्दशालिनि ॥ ८७ ॥
96389
96390 दुर्लक्ष्याणुमयाकारा चिच्छक्तिरहमातता ।
96391 अनुभूतिमयान्तस्था स्नेहमात्रोपलक्षिता ॥ ८८ ॥
96392
96393 दुर्लक्ष्या अणवह् सूक्ष्मा जीवा जलकणाश्च तन्मयः कल्पिताकारो यस्याः ।
96394 अनुभूतिमयोऽनुभवमात्रगम्योऽन्तस्थः सारो यस्याः । स्नेहश्चिक्कणता परप्रेमा च
96395 तन्मात्रोपलक्षिता ॥ ८८ ॥
96396
96397 क्षीराद्धृतस्य सत्तेव चिदहं क्षयवर्जिता ।
96398 कटकाङ्गदकेयूररचना तदतन्मयी ॥ ८९ ॥
96399
96400 तदतन्मयी हेम्नि हेमसत्तेवेति शेषः ॥ ८९ ॥
96401
96402 हेम्नीव संस्थिता देहे चिद्ब्रह्मात्मास्मि सर्वगः ।
96403 पदार्थौघस्य शैलादेर्बहिरन्तश्च सर्वदा ॥ ९० ॥
96404
96405 सत्तासामान्यरूपेण या चित्सोऽहमलेपकः ।
96406 सर्वासामनुभूतीनामादर्शो यो ह्यकृत्रिमः ॥ ९१ ॥
96407
96408 अनुभूतीनामनुभववृत्तिभेदानाम् ॥ ९१ ॥

अगम्यो मललेखानां तच्चित्तत्त्वमहं महत् ।
सर्वसंकल्पफलदं सर्वतेजः प्रकाशकम् ॥ ९२ ॥

सर्वोपादेयसीमान्तं चिदात्मानमुपास्महे ।
सर्वावयवविश्रान्तं समस्तावयवातिगम् ॥ ९३ ॥

सर्वेषामुपादेयानामुपादानस्यात्मार्थत्वात्तत्सीमान्तम् ॥ ९३ ॥

अनारतकचद्रूपं चिदात्मानमुपास्महे ।
घटे पटे तटे कूपे स्पन्दमानं सदा तनौ ॥ ९४ ॥

घटपटादौ सद्रूपेण स्थितम् । तनौ चतुर्विधदेह स्पन्दमानं स्फुरद्रूपं
चेष्टानिमित्तभूतं वा । जाग्रदवस्थायामपि सुषुप्तमिव परमार्थतो निर्विशेषतया
स्थितम् ॥ ९४ ॥

जाग्रत्यपि सुषुप्तस्थं चिदात्मानमुपास्महे ।
उष्णमग्नौ हिमे शीतं मृष्टमन्ने शितं क्षुरे ॥ ९५ ॥

अग्न्यौष्ण्यादिसत्तात्मनामपि चित एव स्फुरणात्परमार्थतः सैव तानीत्याशयेनाह##-

कृष्णं ध्वान्ते सितं चन्द्रे चिदात्मानमुपास्महे ।
आलोकं बहिरन्तस्थं स्थितंवस्तुनि ॥ ९६ ॥

अदूरमपि दूरस्थं चिदात्मानमुपास्महे ।
माधुर्यादिषु माधुर्यं तीक्ष्णादिषु च तीक्ष्णताम् ॥ ९७ ॥

प्रत्यगात्मत्वाददूरमप्यज्ञानाद्दूरस्थम् ॥ ९७ ॥

गतं पदार्थजातेषु चिदात्मानमुपास्महे ।
जाग्रत्स्वप्नसुषुप्तेषु तुर्यातुर्यातिगे पदे ॥ ९८ ॥

गतमिति पूर्वान्वयि ॥ ९८ ॥

समं सदैव सर्वत्र चिदात्मानमुपास्महे ।
प्रशान्तसर्वसंकल्पं विगताखिलकौतुकम् ॥ ९९ ॥

कौतुकं कामः ॥ ९९ ॥

विगताशेषसंरम्भं चिदात्मानमुपास्महे ।
निष्कौतुकं निरारम्भं निरीहं सर्वमेव च ॥ १०० ॥

संरम्भः क्रोधः । कौतुकं भोगोत्कण्ठा । आरम्भो यत्नः । ईहा चेष्टा । सर्वं
निरवशेषम् ॥ १०० ॥

निरंशं निरहंकारं चिदात्मानमुपास्महे ।
सर्वस्यान्तःस्थितं सर्वमप्यपारैकरूपिणम् ॥ १०१ ॥

अपर्यन्तचिदारम्भं चिदात्मानमुपागतः ।
त्रैलोक्यदेहमुक्तानां तन्तुमुन्नतमाततम् ॥ १०२ ॥

अपर्यन्तानां प्रतिबिम्बचिता आरम्भा यस्मात्तम् । त्रैलोक्यस्थानां देहलक्षणानां

96461 मुक्तानां तन्तुम् ॥ १०२ ॥
96462
96463 प्रचारसंकोचकरं चिदात्मानमुपागतः ।
96464 लीनमन्तर्बहिःस्वाप्तान्क्रोडीकृत्य जगत्खगान् ॥ १०३ ॥
96465
96466 प्रचाराचारौ [अत्र प्रचारावित्येवापेक्षितम् ।
96467 कृतैकशेषद्विवचनान्तप्रचारशब्देन द्वन्द्वस्तेन
96468 प्रचारशब्दाज्जाग्रत्स्वप्नयोर्लाभः । अत्राचारग्रहणं चिन्त्यम् ।] जाग्रत्स्वप्नौ
96469 संकोचः सुषुप्तिस्तत्करम् । अन्तर्बहिश्च स्वेन आप्तान्व्याप्तान्
96470 जगल्लक्षणान्खगान्पक्षिणः क्रोडीकृत्यान्तर्भाव्य लीनं प्रच्छन्नतया स्थितम् ॥
96471 १०३ ॥
96472
96473 चित्रं बृहज्जालमिव चिदात्मानमुपागतः ।
96474 सर्वं यत्रेदमस्त्येव नास्त्येव च मनागपि ॥ १०४ ॥
96475
96476 सदसद्रूपमेकं तं चिदात्मानमुपागतः ।
96477 परमप्रत्ययं पूर्णमास्पदं सर्वसंपदाम् ॥ १०५ ॥
96478
96479 सर्गे सर्वसत्तानिर्वाहकत्वात्सद्रूपं प्रलये सर्वासत्तानिर्वाहकत्वादसद्रूपमिति
96480 भावः । परमप्रत्ययमत्यन्तविश्वासार्हं चिदेकरसं वा । सर्वासां संपदां
96481 सुखलवानामास्पदं प्रतिष्ठाम् ॥ १०५ ॥
96482
96483 सर्वाकारविहारस्थं चिदात्मानमुपागतः ।
96484 स्नेहाधारमथोऽशान्तं [प्रकृतिभाङ्गाभावच्छान्दसः ।]
96485 जडवाताहतिभ्रमैः ॥ १०६ ॥
96486
96487 स्नेहस्तैलं निरुपाधिप्रेमा च तदाधारम् । जडानां देहादीनां वातानां
96488 प्राणानां वृष्टिवातानां चाहतिरध्यासोऽभिघातश्च
96489 तत्प्रयुक्तैर्भ्रमैरशान्तमविनष्टम् । भ्रान्तदृशा तैर्युक्तं तत्त्वदृशा तु
96490 मुक्तं च ॥ १०६ ॥
96491
96492 युक्तं मुक्तं च चिद्दीपं बहिरन्तरुपास्महे ।
96493 हृत्सरःपद्मिनीकन्दं तन्तुं सर्वाङ्गसुन्दरम् ॥ १०७ ॥
96494
96495 हृत्सरसि पद्मिनीकन्दवन्निगूढम् । सर्वेषां हस्तपादाद्यङ्गानां सुन्दरं
96496 दृढविष्टम्भकं तन्तुं रज्जुवदाधारम् ॥ १०७ ॥
96497
96498 जनताजीवनोपायं चिदात्मानमुपागतः ।
96499 अक्षीरार्णवसंभूतमशशाङ्कमुपस्थितम् ॥ १०८ ॥
96500
96501 प्रसिद्धामृतवैलक्षण्यमाह-अक्षीरार्णवेति ॥ १०८ ॥
96502
96503 अहार्यममृतं सत्यं चिदात्मानमुपास्महे ।
96504 शब्दरूपरसस्पर्शगन्धैराभासमागतम् ॥ १०९ ॥
96505
96506 अहार्यं गरुडादिभिरपहर्तुमशक्यम् । आभासं अभिव्यक्तिम् ॥ १०९ ॥
96507
96508 तैरेव रहितं शान्तं चिदात्मानमुपागतः ।
96509 आकाशकोशविशदं सर्वलोकस्य रञ्जनम् ॥ ११० ॥
96510
96511 रञ्जनं स्वव्याप्त्या अभिव्यञ्जकम् ॥ ११० ॥
96512

96513 न रञ्जनं न चाकाशं चिदात्मानमुपागतः।
96514 महामहिम्ना सहितं रहितं सर्वभूतिभिः।
96515 कर्तृत्वे वाप्यकर्तारं चिदात्मानमुपागतः॥ १११॥
96516
96517 अखिलमिदमहं ममैव सर्वं त्वहमपि नाहमथेतरच्च नाहम्।
96518 इति विदितवतो जगत्कृतं मे स्थिरमथवास्तु गतज्वरो भवामि॥ ११२॥
96519
96520 तादात्म्याध्यारोपदृशा अखिलमहम्। संसर्गाध्यारोपदृशा तु ममैव सर्वम्।
96521 अपवाददृशा तु अहंत्वारोपनिमित्तमहंकारोऽपि नाहम्। इतरत्तु सुतरां नाहं
96522 इत्यध्यारोपापवादाभ्यां तत्त्वं विदितवतो मे मम जगत्कृतं कृत्रिमं
96523 मायामयं वा अस्तु अथवा स्थिरमकृत्रिममात्मैव वास्तु उभयथाप्यहं गतज्वरो
96524 भवामीत्यर्थः॥ ११२॥
96525
96526 इत्यार्षे श्रीवा० रामायणे वाल्मीकीये देव० मोक्षोपायेषु निर्वाणप्रकरणे पू०
96527 जीवन्मुक्तनिश्चययोगोपदेशो नामैकादशः सर्गः॥ ११॥
96528
96529 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
96530 जीवन्मुक्तनिश्चययोगोपदेशो नामैकादशः सर्गः॥ ११॥
96531
96532 द्वादशः सर्गः १२
96533
96534 श्रीवसिष्ठ उवाच।
96535
96536 इति निश्चयवन्तस्ते महान्तो विगतैनसः।
96537 सत्याः सत्ये पदे शान्ते समे सुखमवस्थिताः॥ १॥
96538
96539 बहिर्नीरागनिःसङ्गामन्तःस्वच्छात्मभास्वराम्।
96540 जनकादिस्थितिं रामो गुरुप्रोक्तामिहाग्रहीत्॥
96541
96542 ते जनकादयो जीवन्मुक्ताः अन्तः सत्ये पदे शोधिततत्पदार्थे व्यवस्थिताः॥ १॥
96543
96544 इति पूर्णधियो धीराः समनीरागचेतसः।
96545 न निन्दन्ति न नन्दन्ति जीवितं मरणं तथा॥ २॥
96546
96547 बहिः पूर्णा धीः शोधितत्वंपदार्थो येषाम्। अतएवान्तर्बहिश्च समानीरागचेतसः॥
96548 २॥
96549
96550 इत्यलक्ष्यचमत्कारा नारायणभुजा इव।
96551 ऋजवः स्खलिताकारा अपरा इव मेरवः॥ ३॥
96552
96553 अलक्ष्ये सूक्ष्मतमेऽपि तक्ष्ये वेधनचमत्कारो येषाम्। अतएव नारायणभुजा इव
96554 स्थिताः। स्खलिताकारा नम्रस्वभावाः अपरा मेरव इव स्थिराः॥ ३॥
96555
96556 रेमिरे वनखण्डेषु द्वीपेषु नगरेषु च।
96557 देवोपवनमालासु स्वर्गेषु च सुरा इव॥ ४॥
96558
96559 तेषां समदृष्ट्या विहारं प्रपञ्चयति-रेमिरे इत्यादिना॥ ४॥
96560
96561 भ्रेमुः कुसुमपूर्णासु दोलान्दोलचलासु च।
96562 विचित्रवनलेखासु मेरुशृङ्गशिखासु च॥ ५॥
96563
96564 दोलानामान्दोलनैश्चलासु॥ ५॥

96565
96566 चक्रुर्विजितशत्रूणि चामरच्छत्रवन्ति च |
96567 विचित्रार्थानि राज्यानि चित्राचारमयानि च || ६ ||
96568
96569 विचित्रा अर्थास्त्रिवर्गा येषु तानि || ६ ||
96570
96571 अनुजग्मुरिमान्सर्वान्नानाचारविचेष्टितान् |
96572 श्रुतिस्मृत्युदितारम्भामितिकर्तव्यतामिति || ७ ||
96573
96574 नानाचारा बहुविधशिष्टाचारास्तैर्विचेष्टितानुष्ठितान्धर्माननुजग्मुः |
96575 स्वयमप्यनुष्ठितवन्त इत्यर्थः | इति इत्थमेव श्रुतिस्मृत्युदिता आरम्भाः प्रयत्ना
96576 यस्यास्तथाविधामितिकर्तव्यताम् | साङ्गं यागादीति यावत् | अनुजग्मुः || ७ ||
96577
96578 ईदृशीरमणीयेषु ललनाहास्यहारिषु |
96579 विहाराहाररम्येषु भोगाभोगेषु भूषिताः || ८ ||
96580
96581 ईदृशीभिर्दृष्टादृष्टसाधनसंपद्भिः रमणीयेषु भोगानामाभोगेषु
96582 कलापेषु || ८ ||
96583
96584 विविशुश्चारुचूतासु मन्दारवलितासु च |
96585 अप्सरोगीतपूर्णासु नन्दनोद्यानभूमिषु || ९ ||
96586
96587 विविशुर्निर्विविशुः || ९ ||
96588
96589 सचराचरभूतेषु विश्रान्ताखिलजन्तुषु |
96590 यज्ञक्रियाकलापेषु गार्हस्थ्येषु यथाक्रमम् || १० ||
96591
96592 चराचरभूतैः सहितेषु सर्वभुवनेषु | विश्रान्ताः सुखिता अखिला जन्तवो
96593 यैस्तथाविधेषु | यज्ञक्रियाकलापेषु गार्हस्थ्येषु च | अयं वा आत्मा सर्वेषां
96594 भूतानां लोकः | यथैव क्षुधिता बाला मातरं पर्युपासते | एवं सर्वाणि
96595 भूतान्यग्निहोत्रमुपासते इत्यादिश्रुतेरिति भावः || १० ||
96596
96597 तेरुर्हतगजेन्द्रासु भ्रान्तभूरिशिवासु च |
96598 भेरीभांकारभीमासु संग्रामार्णववीथिषु || ११ ||
96599
96600 तेरुर्निस्तेरुः || ११ ||
96601
96602 तस्थुः परुषचित्तासु हृतवित्तोद्धतासु च |
96603 संरम्भक्षोभरौद्रीषु सर्वासु द्वन्द्वरीतिषु || १२ ||
96604
96605 परुषाणि क्रूराणि क्लेशराहानि चित्तानि यासु हृतवित्तैः शत्रुभिरुद्धतासु परिभूतासु
96606 | द्वन्द्वरीतिषु विपत्स्विति यावत् || १२ ||
96607
96608 मनस्तेषां तु नीरागमनुपाधि गतभ्रमम् |
96609 असक्तं मुक्तमाशान्तं परं सत्वपदं गतम् || १३ ||
96610
96611 न ममज्जुः क्वचिदपि संकटेषु महत्स्वपि |
96612 महदप्युपयातेषु कुलशैलाः सरस्स्विव || १४ ||
96613
96614 महदपि ऐश्वर्यमिति शेषः | कुलशैला हिमवदादयः || १४ ||
96615
96616 नोल्ललास विलासिन्या श्रिया परमकान्तया |

96617 परिपूर्णेन्दुलक्ष्म्येव जलराशी रघूद्वह ॥ १५ ॥
96618
96619 जलराशिरिति व्यतिरेके दृष्टान्तः । ढ्रलोपे इति दीर्घः ॥ १५ ॥
96620
96621 न मम्लौ दुःखशोकेन ग्रीष्मेणेव वनस्थलम् ।
96622 जहर्ष च न भोगौघैरवश्यायैरिवौषधीः ॥ १६ ॥
96623
96624 ते हि केवलमव्यग्राः कुर्वन्तः काममञ्जरी ।
96625 इष्टानिष्टफलं राम नाभिलेषुर्न तत्यजुः ॥ १७ ॥
96626
96627 अव्यग्राः कर्तृत्वाभिनिवेशरहिताः । काम्यन्त इति कामा भोगास्तल्लक्षणा मञ्जरीः
96628 कुर्वन्तोऽनुभवन्तः ॥ १७ ॥
96629
96630 नोदगुः कार्यसंपत्तावाक्रान्ता नास्तमाययुः ।
96631 जहृषुर्न सुखप्राप्तौ मम्लुर्नैव च संकटे ॥ १८ ॥
96632
96633 शत्रुजयादिकार्यसंपत्तौ सत्यां न उदगुरुत्कर्षं प्रापुः । शत्रुभिराक्रान्ताश्च
96634 अस्तमपकर्षं नाययुः ॥ १८ ॥
96635
96636 मुमुहुर्न विमोहेषु न ममज्जुर्विपत्क्रमैः ।
96637 न जहर्षुः शुभैः शोकै रुरुदुर्न भवानिव ॥ १९ ॥
96638
96639 विमोहेषु विमोहहेतुषु कृच्छ्रेषु । विपदां क्रमैराक्रमणैः ॥ १९ ॥
96640
96641 प्राकृताचारसंप्राप्ते कुर्वन्तः कर्म केवलम् ।
96642 स्थिता विगतसंरम्भमपरा इव मेरवः ॥ २० ॥
96643
96644 प्रकृत एव प्राकृतः स्वस्ववर्णोचित आचारस्तेन संप्राप्ते विषये ॥ २० ॥
96645
96646 तां त्वं दृष्टिमवष्टभ्य राघवाऽघविनाशिनीम् ।
96647 अनहंकृत्यहंकारो विहरस्व यथाक्रमम् ॥ २१ ॥
96648
96649 अनहंकृतौ अहकारनिष्कृष्टशुद्धचिन्मात्रे अहंकार आत्मबुद्धिर्यस्य
96650 तथाविधः सन् ॥ २१ ॥
96651
96652 यथाभूतामिमामेव पश्यन्सर्गपरम्पराम् ।
96653 मेरुस्थितोऽब्धिगम्भीरः सममास्स्व गतभ्रमः ॥ २२ ॥
96654
96655 यथाभूतां यथास्थिताम् । मेरुरिव स्थितः स्थिरः ॥ २२ ॥
96656
96657 चिन्मात्रं सर्वमेवेदमित्थमाभासतां गतम् ।
96658 नेह सत्यमसत्यं वा क्वचिदस्ति न किंचन ॥ २३ ॥
96659
96660 कीदृशं तद्यथाभूतदर्शनं तदाह-चिन्मात्रमिति ॥ २३ ॥
96661
96662 महत्तामलमालम्ब्य त्यक्त्वेदमवहेलया ।
96663 असक्तबुद्धिः सर्वत्र भव भव्य भवक्षयी ॥ २४ ॥
96664
96665 महत्तां ब्रह्मताम् ॥ २४ ॥
96666
96667 किं रोदिषि घनोद्वेगं मूढवच्चानुशोचसि ।
96668 भ्रमस्युद्भ्रान्तचित्तश्च सौम्यावर्ते तृणं यथा ॥ २५ ॥

96669
96670 श्रीराम उवाच।
96671
96672 अहो न भगवन्नूनं सम्यग्जातमलक्षयः।
96673 त्वत्प्रसादात्प्रबुद्धोऽस्मि सूर्यसङ्गादिवाम्बुजम्॥ २६॥
96674
96675 रामवाक्यानि स्पष्टानि॥ २६॥
96676
96677 भ्रान्तिरस्तं गता नूनं मिहिका शरदीव मे।
96678 संशान्ताखिलसंदेहः करिष्ये वचनं तव॥ २७॥
96679
96680 व्यपगतमदमोहो मानमात्सर्यमुक्तश्चिरतरमुदितात्मा शान्तशोकश्चिरेण।
96681 पुनरसुखमगच्छन्स्वच्छयैकान्तबुद्ध्या यदिह वदसि साधो
96682 तत्करिष्येऽविशङ्कं॥ २८॥
96683
96684 न विद्यते सुखं यस्मात्तदसुखं बद्धात्मताभ्रमम्। एकान्तबुद्ध्या
96685 निश्चितबुद्ध्या यत् इह अस्मिन्नपदिष्टार्थविषये दार्ढ्यसाधनं अन्यद्वा
96686 राज्यपरिपालनादिकर्तव्यतया वदसि तत् अविशङ्कं करिष्ये॥ २८॥
96687
96688 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाणप्रकरणे
96689 पूर्वार्धे जीवन्मुक्तसंशयनिरूपणं नाम द्वादशः सर्गः॥ १२॥
96690
96691 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
96692 जीवन्मुक्तसंशयनिरूपणं नाम द्वादशः सर्गः॥ १२॥
96693
96694 त्रयोदशः सर्गः १३
96695
96696 श्रीराम उवाच।
96697
96698 सम्यग्ज्ञानविलासेन वासनाविलयोदये।
96699 जीवन्मुक्तपदे ब्रह्मन्नूनंन् विश्रान्तवानहम्॥ १॥
96700
96701 वर्णितस्तत्त्वबोधेन वासनाविलयक्रमः।
96702 प्राणरोधेन तं वक्तुं पीठिकात्रोपरच्यते॥
96703
96704 उपशमप्रकरणे दर्शितयोर्वासनाक्षयहेत्वोर्ज्ञानयोगक्रमयोर्मध्ये
96705 उत्तमाधिकारिविषयेण ज्ञानविलासेन वासनाविलयफलं प्राप्य कृतार्थोऽपि रामो
96706 मन्दमध्यमाधिकारिणामुपकाराय योगक्रमेणापि वासनानाशप्रकारं
96707 जिज्ञासमानः पृच्छति-सम्यगिति द्वाभ्याम्॥ १॥
96708
96709 प्राणस्पन्दनिरोधेन वासनाविलयोदये।
96710 जीवन्मुक्तपदे ब्रह्मन्वद विश्रम्यते कथम्॥ २॥
96711
96712 श्रीवसिष्ठ उवाच
96713
96714 संसारोत्तरणे युक्तिर्योगशब्देन कथ्यते।
96715 तां विद्धि द्विप्रकारां त्वं चित्तोपशमधर्मिणीम्॥ ३॥
96716
96717 पृष्टस्योत्तरं वक्तुं वसिष्ठोऽपि उपशमप्रकरणोक्तमेव
96718 राजयोगहठयोगप्रकारद्वयं स्मारयन्प्रतिजानीते-संसारेति द्वाभ्याम्॥ ३॥
96719
96720 आत्मज्ञानं प्रकारोऽस्या एकः प्रकटितो भुवि।

96721 द्वितीयः प्राणसंरोधः शृणु योऽयं मयोच्यते ॥ ४ ॥
96722
96723 श्रीराम उवाच ।
96724
96725 सुलभत्वाददुःखत्वात्कतरः शोभनोऽनयोः ।
96726 येनावगतमात्रेण भूयः क्षोभो न बाधते ॥ ५ ॥
96727
96728 तत्र प्रथमं तयोः कतरस्य सुकरत्वमिति विशेषं पृच्छति-सुलभत्वादिति ।
96729 क्षोभो विक्षेपः ॥ ५ ॥
96730
96731 श्रीवसिष्ठ उवाच ।
96732
96733 प्रकारौ द्वावपि प्रोक्तौ योगशब्देन यद्यपि ।
96734 तथापि रूढिमायातः प्राणयुक्तावसौ भृशम् ॥ ६ ॥
96735
96736 प्राणयुक्तौ प्राणनिरोधे । असौ योगशब्दः ॥ ६ ॥
96737
96738 एको योगस्तथा ज्ञानं संसारोत्तरणक्रमे ।
96739 समावुपायौ द्वावेव प्रोक्तावेकफलप्रदौ ॥ ७ ॥
96740
96741 असाध्यः कस्यचिद्योगः कस्यचिज्ज्ञाननिश्चयः ।
96742 मम त्वभिमतः साधो सुसाध्यो ज्ञाननिश्चयः ॥ ८ ॥
96743
96744 कस्यचित्सुकुमारचित्तस्य प्राणसंरोधदुःखासहिष्णोर्हठयोगोऽसाध्यः ।
96745 कठोरचित्तस्य विचाराकुशलस्य ज्ञाननिश्चयोऽसाध्यः । मम शुद्धचित्तस्य
96746 विचारकुशलस्य ज्ञाननिश्चयः सुसाध्योऽभिमत इत्यर्थः ॥ ८ ॥
96747
96748 अज्ञानं पुनरज्ञातं स्वप्नेष्वपि न तद्भवेत् ।
96749 ज्ञानं सर्वास्ववस्थासु नित्यमेव प्रवर्तते ॥ ९ ॥
96750
96751 विचाराकुशलता हि ज्ञानाज्ञानस्वरूपविवेकासामर्थ्ये स्यात् । तत्तु प्रमाणकुशलस्य
96752 स्वप्नेऽप्यसंभावितमित्याशयेनाह-अज्ञानमिति । प्रवर्तते स्वत एव प्रथते ।
96753 तथाचाज्ञनस्य सदैव साक्षिणा प्रसिद्धत्वाज्ज्ञानस्य च स्वप्रकाशतया
96754 स्वतःप्रसिद्धेर्वैधर्म्यस्य चानुभवादेव प्रसिद्धेर्विवेकसंभवाज्ज्ञानं
96755 सुकरं योगस्तु न तथेति दुष्कर इति भावः ॥ ९ ॥
96756
96757 धारणासनदेशादिसाध्यत्वेन सुसाध्यताम् ।
96758 नायाति योगो ह्यथवा विकल्पो नैव शोभनः ॥ १० ॥
96759
96760 प्रशस्तदेशकालविषयादिबाह्यहेतुसापेक्षत्वादपि योगो दुष्कर इत्याह-धारणेति ।
96761 धारणादेशो बाह्यो गिरिकूटचन्द्रतारादिर्हृदयकण्ठतालुमूलभ्रमध्यादिश्च ।
96762 आसनदेशस्तु समे शुचौ शर्करवह्निवालुकाविवर्जिते शब्दजलाश्रयादिभिः ।
96763 मनोनुकूले न तु चक्षुपीडने गुहानिरुद्धाश्रयणे प्रयोजयेत् ॥ इति
96764 श्रुतिस्मृतिशास्त्रप्रसिद्धस्तत्साध्यत्वेन योगः सुसाध्यतां नायाति । निरुत्साहानां
96765 मन्दमतीनां मूर्खाणां पुरुषापसदानामिव न धीरस्य समर्थस्य
96766 यतमानस्याधिकारिणः शास्त्रीये साधने सुसाध्यत्वकष्टसाध्यत्वविकल्पचिन्ता
96767 युक्तेत्याह-अथवेति ॥ १० ॥
96768
96769 द्वावेव किल शास्त्रोक्तौ ज्ञानयोगौ रघूद्वह ।
96770 तत्रोक्तं भवते ज्ञानमन्तस्थं ज्ञेयनिर्मलम् ॥ ११ ॥
96771
96772 एवमवान्तरप्रश्नं निरस्य पूर्वप्रश्नोत्तरं वक्तुमुपक्रमते-द्वावित्यादिना ॥

११ ॥

प्राणापानतया रूढो दृढदेहगुहाशयः ।
अनन्तसिद्धिदः साधो योगोऽयं बुद्धिदः शृणु ॥ १२ ॥

प्राणापानतया प्राणापानयोः समतासंपत्तिरूपेण रूढः प्रसिद्धः
सिद्धिकामानां खेचरत्वाद्यनन्तसिद्धिदः । ज्ञानकामानां तु बुद्धिदः
साक्षात्कारहेतुः । अतस्तं शृण्वित्यर्थः ॥ १२ ॥

मुखानिलस्फुरणनिरोधसंभवस्थितिं गतो नृपसुत चेतसाऽक्षये ।
समाहितस्थितिरिह योगयुक्तितः परे पदे प्रगलितगीर्निवत्स्यसि ॥ १३ ॥

तमेव समाधिसुखविश्रान्तिफलकीर्तनेनापि प्ररोचयन्नाह-मुखेति । हे नृपसुत
त्वं चेतसा उद्युक्तचित्तेन मुखानिलस्य प्राणस्य यत्स्फुरणं संचरणं तन्निरोधेन
संभवति सिद्ध्यति तथाविधां स्थितिं प्रतिष्ठां गतः सन् इह प्रत्यग्रूपे अक्षरे परे
पदे योगश्चित्तवृत्तिनिरोधस्तदभ्यासयुक्तितः समाहितस्थितिः सन्
विगलितगीर्वागगोचरनिरतिशयानन्दरूपो भूत्वा निवत्स्यसि स्थास्यसि ॥ १३ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये देव० मोक्षोपायेषु निर्वाणप्रकरणे
पू० ज्ञानविचारयोगोपदेशो नाम त्रयोदशः सर्गः ॥ १३ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
ज्ञानविचारयोगोपदेशो नाम त्रयोदशः सर्गः ॥ १३ ॥

चतुर्दशः सर्गः १४

श्रीवसिष्ठ उवाच ।

अस्ति तावदनन्तस्य तस्य क्वचिदयं किल ।
जगद्रूपः परिस्पन्दो मृगतृष्णा मराविव ॥ १ ॥

सुरसंसच्छ्रुतस्यात्र भुशुण्डस्य दिदृक्षया ।
वसिष्ठगमनं मेरुस्तच्छृङ्गं चात्र वर्ण्यते ॥

प्रस्तुतं प्राणायामादियोगक्रमं भुशुण्डोक्तिप्रपञ्चनेन विस्तराद्वर्णयिष्यन्
भुशुण्डाख्यायिकामारभते-अस्तीत्यादिना । तस्य योगिविश्रान्तिस्थानत्वेन
वर्णितस्य परमपदस्य क्वचिदविद्यावृतप्रदेशे पादोऽस्य विश्वा भूतानि इति
श्रुतेर्जगद्रूपो ब्रह्माण्डाकारः परिस्पन्दो विवर्तः ॥ १ ॥

तत्र कारणतां यातो ब्रह्मा कमलसंभवः ।
स्थितः पितामहत्वेन सृष्टभूतभरभ्रमः ॥ २ ॥

तत्र ब्रह्माण्डे मनुप्रजापतिप्रभृतीनां कारणतां यातः ॥ २ ॥

तस्याहं मानसः पुत्रो वसिष्ठः श्रेष्ठचेष्टितः ।
ऋक्षचक्रे ध्रुवधृते निवसामि युगं प्रति ॥ ३ ॥

ऋक्षचक्रे नक्षत्रचक्रे सप्तर्षिलोके । युगशब्देन युगसमूहो वैवस्वतमन्वन्तरं
लक्ष्यते ॥ ३ ॥

सोऽहं कदाचिदास्थाने स्वर्गे तिष्ठञ्छतक्रतोः ।
श्रुतवान्नारदादिभ्यः कथां सुचिरजीविनाम् ॥ ४ ॥

96825
96826 शतक्रतोरिन्द्रस्य आस्थाने सभायाम् ॥ ४ ॥
96827
96828 कथाप्रसङ्गे कस्मिंश्चिदथ तत्राभ्युवाच ह ।
96829 शातातपो नाम मुनिर्मौनी मानी महामतिः ॥ ५ ॥
96830
96831 मौनी अल्पभाषिता । मानी माननार्हः प्रमाणकुशलश्च ॥ ५ ॥
96832
96833 मेरोरीशानकोणस्थे पद्मरागमये दिवि ।
96834 अस्ति कल्पतरुः श्रीमाञ्छृङ्गे चूत इति श्रुतः ॥ ६ ॥
96835
96836 यदुवाच तदाह-मेरोरित्यादिना । पद्मरागमये शृङ्गे दिवि नभादेशे चूत इति
96837 श्रुतो विश्रुतः कल्पतरुरस्ति ॥ ६ ॥
96838
96839 तस्य कल्पतरोर्मूर्ध्नि दक्षिणस्कन्धकोटरे ।
96840 कलधौतलताप्रोते विद्यते विहगालयः ॥ ७ ॥
96841
96842 कलधौते हेमरूप्ये तन्मयीभिः कल्पलताभिः प्रोते ॥ ७ ॥
96843
96844 तस्मिन्निवसति श्रीमान्भुशुण्डो नाम वायसः ।
96845 वीतरागो बृहत्कोशे ब्रह्मेव निजपङ्कजे ॥ ८ ॥
96846
96847 स यथा जगतां कोशे जीवतीह सुराश्चिरम् ।
96848 चिरंजीवी तथा स्वर्गे न भूतो न भविष्यति ॥ ९ ॥
96849
96850 स दीर्घायुः स नीरागः स श्रीमान्स महामतिः ।
96851 स विश्रान्तमतिः शान्तः स कान्तः कालकोविदः ॥ १० ॥
96852
96853 यतो विश्रान्तमतिरत एव शान्तः ॥ १० ॥
96854
96855 स यथा जीवति खगस्तथेह यदि जीव्यते ।
96856 तद्भवेज्जीवितं पुण्यं दीर्घं चोदयमेव च ॥ ११ ॥
96857
96858 तत्तथाविधं दीर्घं जीवितं साधनदशायां पुण्यं फलदशायामुदयं
96859 परमपुरुषार्थाभ्युदययुक्तं च भवेत् । संभावनायां लिङ् ॥ ११ ॥
96860
96861 इति तेन भुशुण्डोऽसौ भूयः पृष्टेन वर्णितः ।
96862 यथावदेव देवानां सभायां सत्यमुक्तवान् ॥ १२ ॥
96863
96864 भूयोऽपि मया पृष्टेन तेन शातातपेन इति उक्तप्रकारेणैव भुशुण्डो वर्णितः ।
96865 तदुक्तेः प्रशंसामात्रत्वशङ्कां वारयति-सत्यमुक्तवानिति ॥ १२ ॥
96866
96867 कथावसरसंशान्तावथ याते सुरव्रजे ।
96868 भुशुण्डं विहगं द्रष्टुमहं यातः कुतूहलात् ॥ १३ ॥
96869
96870 भुशुण्डः संस्थितो यत्र मेरोः शृङ्गं तदुत्तरम् ।
96871 संप्राप्तवान्क्षणेनाहं पद्मरागमयं बृहत् ॥ १४ ॥
96872
96873 रत्नगैरिककान्तेन तेजसा वह्निवर्चसा ।
96874 मध्वासवरसेनेव रञ्जयत्ककुभां गणम् ॥ १५ ॥
96875
96876 तदेव शृङ्गं वर्णयति-रत्नेत्यादिना । रत्नैर्गैरिकैश्च कान्तेन ।

96877 मध्वासवप्रयुक्तेन रसेन मदेनेव ककुभां दिशां गणं रञ्जयत् लोहितीकुर्वत् |
96878 क्षीबा हि लोहितायमानाः प्रसिद्धाः || १५ ||
96879
96880 कल्पान्तज्वलनोज्ज्वालापिण्डाद्रिमिव संचितम् |
96881 इन्द्रनीलशिखाधूममालोकारुणिताम्बरम् || १६ ||
96882
96883 कल्पान्तज्वलनादुद्गतानां ज्वालानां पिण्ड एवाद्रिः संपन्न इवेत्युत्प्रेक्षा |
96884 संचितं शोभोपचितम् | इन्द्रनीलानां शिखा इव ऊर्ध्वप्रसृताः प्रभा एव धूमा
96885 यस्येत्युत्प्रेक्षायामुपपत्तिः || १६ ||
96886
96887 सर्वेषामेव रागाणां राशिमद्राविव स्थितम् |
96888 सर्वसंध्याभ्रजालानां घनमेकमिवाकरम् || १७ ||
96889
96890 सर्वेषां रागाणां लौहित्यानां सर्वेषां प्राणिनां रागाणां दर्शनेच्छानां
96891 वा || १७ ||
96892
96893 उत्क्रान्तिं कुर्वतो मेरोर्ब्रह्मनाड्येव निर्गतम् |
96894 मूर्धानमागतं कान्तं वाडवं जठरानलम् || १८ ||
96895
96896 ब्रह्मनाड्या सुषुम्नया उत्क्रान्तियोगेन ब्रह्मरन्ध्रं भित्त्वा निर्गमनं
96897 कुर्वतश्चिकीर्षतो मेरोर्जठरान्निर्गतं मूर्धानं शिरःप्रदेशमागतं वाडवं
96898 वडवाग्निकल्पं जठरानलमिव स्थितमित्युत्प्रेक्षा || १८ ||
96899
96900 सुमेरुवनदेव्येव नवालक्तकरञ्जितम् |
96901 लीलयाऽऽदातुमिन्दुं खेनीतं हस्तशिखाङ्गुलिम् || १९ ||
96902
96903 सुमेरुवनदेव्या लीलया क्रीडाकौतुकेन इन्दुमादातुं ग्रहीतुं खे नीतं
96904 प्रसारितमलक्तकरसरञ्जितं हस्तस्य शिखावत्संहतमङ्गुलिजातमिव || १९ ||
96905
96906 ज्वालाभिरिव मालाभिररुणाभिः पयोमुखम् |
96907 खं गन्तुमिव सस्पन्दं शैलस्थमिव वाडवम् || २० ||
96908
96909 मालाभिरिव ग्रथिताभिर्ज्वालाभिः खं गन्तुमिव सस्पन्दं चलितमत एव शैलस्थं
96910 पर्वतमारूढं हव्यवाहकत्वादग्निहोत्राद्याहुतिपयो मुखे यस्य तथाविधं
96911 वाडवं ब्राह्मणसंबन्धिनमध्वराग्निमिव स्थितम् | शृङ्गपक्षे पयो
96912 निर्झरोदकं मुखे अग्रभागे यस्य || २० ||
96913
96914 ताराः स्प्रष्टुमिवाकाशमङ्गुलीभिरिव त्रिभिः |
96915 कचदंशुनखाग्राभिः परिचुम्बदिवोन्नतम् || २१ ||
96916
96917 कचद्रत्नांशुनखाग्राभिस्त्रिभिः शृङ्गाग्राङ्गुलिभिस्तारा अश्विन्यादीः स्प्रष्टुं
96918 स्पृष्ट्वा गणयितुमिव आकाशं परिचुम्बत् व्याप्नुवदिव उन्नतम् || २१ ||
96919
96920 गर्जज्जीमृतमुरजं भूभृतानां तु मण्डपम् |
96921 हसत्कुसुमगुच्छाढ्यं ध्वनत्षट्पदपेटकम् || २२ ||
96922
96923 मुरजा वाद्यभेदाः | भुवा वनभूम्या भृतानां पुष्टानां वनलक्ष्मीणां
96924 नृत्यमण्डपमिव स्थितम् | ध्वनत्षट्पदपेटकं भ्रमरसमूहो यस्मिन् || २२ ||
96925
96926 दन्ततालदलावल्या परिहासादिव स्फुरत् |
96927 दोलालोलाप्सरोवृन्दमुदारमदमन्मथम् || २३ ||
96928

96929 दन्तपङ्क्तिवद्विकसन्त्या तालपत्राणामावल्या पङ्क्त्या। उदारौ मदमन्मथौ
96930 सर्वप्राणिनां यस्मिन्॥ २३॥
96931
96932 शिलाविश्रान्तविबुधमिथुनाश्रितकन्दरम्।
96933 वराम्बराजिनं शुभ्रगङ्गायज्ञोपवीति च॥ २४॥
96934
96935 तापसत्वेनोत्प्रेक्षते-वरेति॥ २४॥
96936
96937 तापसं पिङ्गलमिव वेणुदण्डधरं स्थितम्।
96938 गङ्गानिर्झरनिर्ह्रादि लतागृहगतामरम्॥ २५॥
96939
96940 गन्धर्वगीतसुभगमामोदमधुरानिलम्।
96941 फुल्लहेमाम्बुजोत्तंसं तारारत्नविभूषितम्।
96942 व्योम्नः पारमिव प्राप्तं पिङ्गलं भैरवं शिरः॥ २६॥
96943
96944 पारं ऊर्ध्वावधिम्॥ २६॥
96945
96946 सितहरितपीतपाटलधवलैर्वनकुसुमराशिनवरङ्गैः।
96947 दिवि विहितामलचित्रं लीलाचलममरयुवतिवर्गस्य॥ २७॥
96948
96949 सितहरितादिवर्णैर्वनकुसुमराशिलक्षणैः प्रतिदिनं नवै रङ्गै रञ्जकद्रव्यैर्दिवि
96950 व्योम्नि विहितानि लिखितानीव अमलानि चित्राणि येन तथाविधममरयुवतिवर्गस्य लीलाचलं
96951 क्रीडापर्वतभूतं भैरवं शिरः शृङ्गमहं संप्राप्तवानिति
96952 प्राक्तनचतुर्दशश्लोकेन सर्वेषामन्वयः॥ २७॥
96953
96954 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मी० दे० मोक्षो० निर्वाण प्र० पू०
96955 भुशुण्डोपाख्याने मेरुशिखरवर्णनं नाम चतुर्दशः सर्गः॥ १४॥
96956
96957 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
96958 मेरुशिखरवर्णनं नाम चतुर्दशः सर्गः॥ १४॥
96959 पञ्चदशः सर्गः १५
96960
96961 श्रीवसिष्ठ उवाच।
96962
96963 कुसुमापूर्णकल्पाभ्रकुन्तले तस्य मूर्धनि।
96964 कल्पाङ्गमहमद्राक्षं शाखाचक्रमिव स्थितम्॥ १॥
96965
96966 शृङ्गे कल्पतरुश्चूतः पुष्पपक्ष्यादिसंपदः।
96967 स्कन्धे काककुलं तत्र भुशुण्डश्चेह वर्ण्यते॥
96968
96969 कुसुमापूर्णानि कल्पाभ्राण्येव कुन्तलाः केशा यस्मिंस्तथाविधे तस्य शृङ्गस्य
96970 मूर्धनि शिरोदेशे प्राणिनामभिलषितार्थं पूरणाय कल्पन्त इति कल्पान्यङ्गानि
96971 शाखाद्यवयवा यस्य तथाविधं परितः
96972 समप्रसृतशाखापङ्क्तित्वाच्छाखाचक्रमिव स्थितम्। परं
96973 वैचित्र्यमागतमित्यन्तद्वादशश्लोकोक्तविशेषणविशिष्टमर्थात् शातातपोक्तं
96974 चूततरुमहमद्राक्षमिति संबन्धः॥ १॥
96975
96976 पुष्परेण्वभ्रवलितं रत्नस्तबकदन्तुरम्।
96977 उत्सेधनिर्जिताकाशं शृङ्गे शृङ्गमिवार्पितम्॥ २॥
96978
96979 पुष्परेणुलक्षणैरभ्रैर्वलितं व्याप्तम्। उत्सेद्धन्नैन्नत्यम्। शृङ्गे
96980 प्राग्वर्णितमेरुशृङ्गे॥ २॥

96981
96982 ताराद्विगुणपुष्पौघं मेघद्विगुणपल्लवम् ।
96983 रश्मिद्विगुणरेण्वभ्रं तडिद्द्विगुणमञ्जरीम् ॥ ३ ॥
96984
96985 न केवलमुत्सेधेनैव निर्जिताकाशं किंतु तारादिद्विगुणपुष्पौघादिनापीत्याह##-
96986 ह्रस्वनिषेधश्छान्दसः कपो लोपः ॥ ३ ॥
96987
96988 स्कन्धेषु किन्नरीगीतद्विगुणभ्रमरस्वनम् ।
96989 दोलालोलाप्सरोलोकद्विगुणीकृतपल्लवम् ॥ ४ ॥
96990
96991 दोलालोलाप्सरोलोकानामोष्ठकरपदपल्लवैर्द्विगुणीकृतपल्लवम् ॥ ४ ॥
96992
96993 सिद्धगन्धर्वसंघातद्विगुणोत्थविहंगमम् ।
96994 रत्नकान्त्यच्छनीहारद्विगुणत्वग्वृतांशुकम् ॥ ५ ॥
96995
96996 कामरूपत्वात्स्वैरविहारार्थं कृतविहङ्गमवेषैः
96997 सिद्धगन्धर्वसंघातैर्द्विगुणं यथा स्यात्तथा उत्था निष्पन्ना विहङ्गमा यस्मिन् ।
96998 रत्नकान्तिलक्षणया अच्छनीहारद्विगुणया त्वचा वृतांशुकं परिहितवस्त्रमिव
96999 स्थितम् ॥ ५ ॥
97000
97001 चन्द्रबिम्बसमाश्लेषद्विगुणाङ्गबृहत्फलम् ।
97002 मूलसंलीनकल्पाभ्रद्विगुणीकृतपर्वकम् ॥ ६ ॥
97003
97004 औन्नत्यातिशयेन चन्द्रबिम्बसमाश्लेषादमृतरसपूर्त्येव द्विगुणाङ्गानि अतएव
97005 बृहन्ति फलानि यस्य । स्कन्धमूलेषु संलीनैः कल्पाभ्रैर्द्विगुणीकृतानीव पर्वाणि
97006 यस्य ॥ ६ ॥
97007
97008 सुरसंवलितस्कन्धं पत्रविश्रान्तकिन्नरम् ।
97009 निकुञ्जकुञ्जजीमूतं कच्छसुप्तसुरादिकम् ॥ ७ ॥
97010
97011 स्वाकारविपुलं भृङ्गानुत्सार्य वलयस्वनैः ।
97012 अप्सरोभ्रमरीभिश्च गृहीतकुसुमान्तरम् ॥ ८ ॥
97013
97014 अप्सरोलक्षणभ्रमरीभिर्वलयस्वनैः कटकक्वणितैर्भृङ्गानुत्सार्य गृहीताः
97015 कुसुमानामान्तरा मकरन्दाः यस्य । चकारः प्राक्तनविशेषणैरस्य समुच्चयार्थः
97016 ॥ ८ ॥
97017
97018 सुरकिंनरगन्धर्वविद्याधरवरान्वितम् ।
97019 जगज्जालमिवानन्तदशाशाकाशपूरकम् ॥ ९ ॥
97020
97021 जगज्जालं ब्रह्माण्डमिव स्थितम् । अनन्तानामनवधीनां दशानामाशानां
97022 दिशां परिपूरकम् ॥ ९ ॥
97023
97024 नीरन्ध्रकलिकाजालं नीरन्ध्रमृदुपल्लवम् ।
97025 नीरन्ध्रविकसत्पुष्पं नीरन्ध्रवनमालितम् ॥ १० ॥
97026
97027 नीरन्ध्रमञ्जरीपुञ्जं नीरन्ध्रमणिगुच्छकम् ।
97028 नीरन्ध्रांशुकरत्नाढ्यं लताविलसनाकुलम् ॥ ११ ॥
97029
97030 अंशुकैर्दिव्यवस्त्रै रत्नैश्चाढ्यमिवार्थिकामप्रपूरकम् । लतानां विलसनं
97031 लास्यम् ॥ ११ ॥
97032

97033 सर्वत्र कुसुमापूरैः सर्वत्र फलपल्लवैः।
97034 सर्वामोदरजःपुञ्जैः परं वैचित्र्यमागतम्॥ १२॥
97035
97036 तस्य कक्षेषु कुञ्जेषु लतापत्रेषु पर्वसु।
97037 पुष्पेष्वालयसंलीनान्विहगान्दृष्टवानहम्॥ १३॥
97038
97039 कक्षेषु स्कन्धशाखासंधिषु कुञ्जेषु लतावृतशाखाग्रेषु॥ १३॥
97040
97041 निशानाथकलाखण्डमृणालशकलैधितान्।
97042 अर्जुनाम्भोजिनीकन्दकवलान्ब्रह्मसारसान्॥ १४॥
97043
97044 विहगेषु विशेषमाह-निशानाथेति। निशाकरकलानां
97045 खण्डामृणालशकलानीव तैरेधितान्वर्धितान् तथा अर्जुनाः शुभ्रा अम्भोजिनीकन्दा
97046 अपि अवलानि ग्रासा येषां तथाविधान् ब्रह्मवाहनभूतान्सारसान् हंसान्॥ १४॥
97047
97048 विरंचेरथ हंसानां पोतकान्सामगायिनः।
97049 ओंकारवेदसुहृदो ब्रह्मविद्यानुशासनान्॥ १५॥
97050
97051 ओंकारस्य वेदानां च रहस्यार्थालोचनसहायत्वात्सुहृदो मित्रभूतान्
97052 परापरब्रह्मविद्यास्वनुशासनं गुरुमुखाद्विधिनाध्ययनं येषाम्॥ १५॥
97053
97054 उद्गीर्णमन्त्रनिचयान्स्वाहाकारनिभस्वनान्।
97055 अस्थिनैकतडित्पुञ्जनीलमेघसमोपमान्॥ १६॥
97056
97057 अग्निवाहनशुकास्तत्र वर्णयति-उद्गीर्णेत्यादिना। अस्थि शङ्खः नैकान्यनेकानि
97058 तडित्पुञ्जानि नीलमेघाश्च वर्णतः समा उपमा येषाम्॥ १६॥
97059
97060 देवैर्निरीक्षितान्नित्यं यज्ञवेदिलतादलान्।
97061 शुकान्कार्शानवाञ्छ्यामाञ्छिशूञ्छिखिशिखाशिखान्॥ १७॥
97062
97063 यज्ञवेदिषु आस्तीर्णानां हरितकुशलतानां दलानीव श्यामान् हरितान्
97064 कृशानुरग्निस्तद्वाहनभूतान् शुकानहं दृष्टवानिति सर्वत्रानुषज्यते।
97065 मयूरपोतान्वर्णयति-शिशूनित्यादिना। शिखिनः अग्नेः शिखेव भास्वराः शिखा
97066 येषाम्॥ १७॥
97067
97068 गौरीरक्षितबर्हौघान्कौमारान्वरबर्हिणः।
97069 स्कन्दोपन्यस्तनिःशेषशैवविज्ञानकोविदान्॥ १८॥
97070
97071 व्योम्नैव जातनष्टानां महतां व्योमपक्षिणाम्।
97072 बन्धूनाबद्धनिलयाञ्छरदभ्रसमाकृतीन्॥ १९॥
97073
97074 व्योम्नैव जातानां तत्रैव नष्टानां मरणपर्यन्तं भूमावनवतरतां अत एव
97075 बलाधिक्यान्महतामत एव व्योमपक्षिनाम्ना प्रसिद्धानां पक्षिजातिभेदानां
97076 नित्यं क्रीडासहायत्वाद्बन्धून् आबद्धनिलयान् कृतनीडान्॥ १९॥
97077
97078 विरंचिहंसजानन्यानन्यानग्निशुकोद्भवान्।
97079 कौमारबर्हिजानन्यानन्यानम्बरपक्षिजान्॥ २०॥
97080
97081 द्वितुण्डांश्च भरद्वाजान्हेमचूडान्विहंगमान्।
97082 कलविङ्कबलान्गृध्रान्कोकिलान्क्रौञ्चकुक्कुटान्॥ २१॥
97083
97084 भासचाषबलाकादीन्बहूनन्यांश्च राघव।

97085 भूतौघं जगतीवाहं दृष्टवांस्तत्र पक्षिणः ॥ २२ ॥
97086
97087 भूतौघं प्राणिजातम् । तत्र तस्मिन्वृक्षे ॥ २२ ॥
97088
97089 दक्षिणस्कन्धशाखायां स्थितायां वै दवीयसि ।
97090 अथाहं दृष्टवान्पुष्टपत्रायामम्बरस्थितः ॥ २३ ॥
97091
97092 पुष्टानि घनानि पत्राणि यस्याः ॥ २३ ॥
97093
97094 काले काकोलवलयं मञ्जरीजालमालितम् ।
97095 लोकालोकाचलेऽरण्ये कल्पाभ्रौघमिव स्थितम् ॥ २४ ॥
97096
97097 काले दक्षिणशाखादर्शनानन्तरकाले काकोला द्रोणकाकाख्याः
97098 काकजातिभेदास्तेषां वलयं मण्डलम् । कल्पाभ्राणि संवर्तमेघास्तदोघमिव
97099 स्थितम् ॥ २४ ॥
97100
97101 तत्र पश्याम्यहं यावदेकान्ते स्कन्धकोटरे ।
97102 विचित्रकुसुमास्तीर्णे विविधामोदशालिनि ॥ २५ ॥
97103
97104 पुण्यकृद्योषितां स्वर्गे प्रियस्तबककवासिताः ।
97105 अपरिक्षुभिताकाराः सभायां वायसाः स्थिताः ॥ २६ ॥
97106
97107 पुण्यकृतां जनानां योषितां भोग्यानामप्सरसां स्वर्गे रतिसुखभोगयोग्ये
97108 स्कन्धकोटरे इति पूर्वेणान्वयः । शान्त्यादिगुणशालित्वादपरिक्षुभिताकाराः ॥ २६ ॥
97109
97110 विभेद्यमेघा वातेन समेनेवापसारिताः ।
97111 तेषां मध्ये स्थितः श्रीमान्भुशुण्डः प्रोन्नताकृतिः ॥ २७ ॥
97112
97113 मेघा वातेन वायुना समेन समभागेन विभेद्य छित्त्वा अपसारिताः कोटरे
97114 प्रवेशिता इव ॥ २७ ॥
97115
97116 मध्ये च काचखण्डानामिन्द्रनील इवोन्नतः ।
97117 परिपूर्णमना मानी समः सर्वाङ्गसुन्दरः ॥ २८ ॥
97118
97119 मानी मान्यः ॥ २८ ॥
97120
97121 प्राणस्पन्दावधानेन नित्यमन्तर्मुखः सुखी ।
97122 चिरंजीवीति विख्यातश्चिरजीविततया तया ॥ २९ ॥
97123
97124 प्राणस्पन्दस्यावधानेन निरोधेन । तया प्रसिद्धतमया ॥ २९ ॥
97125
97126 जगद्विदितदीर्घायुर्भुशुण्ड इति विश्रुतः ।
97127 युगागमापायदशादर्शनप्रौढमानसः ॥ ३० ॥
97128
97129 प्रतिकल्पं च गणयन्खिन्नश्चक्रपरम्पराम् ।
97130 जन्मनां लोकपालानां शर्वशक्रमरुत्वताम् ॥ ३१ ॥
97131
97132 लोकपालप्रायापाठात् शर्वा ईशानाः शक्रा इन्द्राः मरुत्वन्तो मरुत्सखा
97133 अग्नयस्तेषां जन्मनां चक्रपरम्परां गणयन् खिन्नो निर्विण्णः ॥ ३१ ॥
97134
97135 संस्मर्ता समतीतानां सुरासुरमहीभृताम् ।
97136 प्रसन्नगम्भीरमनाः पेशलः स्निग्धमुग्धवाक् ॥ ३२ ॥

97137
97138 पेशलश्चतुरः ॥ ३२ ॥
97139
97140 अव्यक्तवक्ता विज्ञाता निर्ममो निरहंकृतिः ।
97141 सुहृद्बन्धुस्तथा मित्रं मृत्युपुत्रो गुरुप्रभुः ।
97142 सर्वदा सर्वथा सत्यं सर्वं सर्वस्य संस्तवे ॥ ३३ ॥
97143
97144 अव्यक्तानामस्फुटानां सूक्ष्मतमार्थानां स्फुटीकृत्य वक्ता । यतस्तेषां
97145 विज्ञाता मृत्योः पुत्र इव परमप्रियः । बुद्ध्या गुरोर्बृहस्पतेरपि प्रभुः
97146 समर्थः । कुतोऽयं सर्वेषां सुहृदादिस्तत्राह-सर्वदेति । यतोऽयं सर्वस्य
97147 प्राणिजातस्य सर्वारोपाधिष्ठानत्वात्सर्वथा सर्वप्रकारेणापि सर्वदा सत्यं सर्वस्य
97148 संस्तवे वर्णनप्रसङ्गे च सर्वमत इत्यर्थः ॥ ३३ ॥
97149
97150 सौम्यः प्रसन्नमधुरो रसवान्महात्मा हृद्यः सरोवर
97151 इवान्तरखण्डशैत्यः ।
97152 हृत्पुण्डरीककुहरं व्यवहारवेत्ता
97153 गाम्भीर्यमच्छमजहात्प्रकटाशयश्रीः ॥ ३४ ॥
97154
97155 पक्षद्वयेऽपि विशेषणानि स्पष्टानि । हृत्पुण्डरीकस्य कुहरं । दहराकाशरूप
97156 इत्यर्थः । तस्य भूताकाशशङ्कावारणायाह-व्यवहारवेत्तेति । सरःपक्षे
97157 हृदि मध्ये पुण्डरीकाणामाधारभूतं कुहरं निखातं यस्य । वयः
97158 पक्षिणस्तेषामवहारो विश्रान्तिस्तद्वेत्ता । निर्मलतमत्वात्प्रकटाशयश्रीः ॥ ३४ ॥
97159
97160 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मोक्षोपायेषु निर्वाणप्रकरणे पू०
97161 भुशुण्डोपाख्याने भुशुण्डदर्शनं नाम पञ्चदशः सर्गः ॥ १५ ॥
97162
97163 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
97164 भुशुण्डदर्शनं नाम पञ्चदशः सर्गः ॥ १५ ॥
97165
97166 षोडशः सर्गः १६
97167
97168 श्रीवसिष्ठ उवाच ।
97169
97170 अथ तस्याहमपतं दीप्यमानवपुः पुरः ।
97171 किंचिद्विक्षोभितसभः खान्नक्षत्रमिवाचले ॥ १ ॥
97172
97173 पुरःप्राप्तवसिष्ठेन पूजितेनासनादिभिः ।
97174 भुशुण्डजन्मकर्मादिः कृतः प्रश्नोऽत्र वर्ण्यते ॥
97175
97176 अथाहं तस्य भुशुण्डस्य पुरः स्वात् अचले नक्षत्रमिव श्रपतं अवातरम् ॥ १ ॥
97177
97178 चुक्षोभ वायसास्थानं नीलोत्पलसरःसमम् ।
97179 मत्पातमन्दवातेन भूकम्पेनेव सागतः ॥ २ ॥
97180
97181 किंचिद्विक्षोभितसभ इत्येतद्विवृणोति-चुक्षोमेति ।वायसानामास्थानं सभा ॥ २ ॥
97182
97183 अशङ्कितमपि प्राप्तं दर्शनान्मामनन्तरम् ।
97184 भुशुण्डस्तु वसिष्ठोऽयं प्राप्त इत्यवबुद्धवान् ॥ ३ ॥
97185
97186 अशङ्कितमवितर्कितासंभावितागमनमपि मां प्राप्तम् । अवबुद्धवान्
97187 त्रिकालदर्शित्वादेवेति भावः ॥ ३ ॥
97188

97189 पत्रपुञ्जात्समुत्तस्थौ मेघशाव इवात्रलात् ।
97190 हे मुने स्वागतमिति प्रोवाच मधुराक्षरम् ॥ ४ ॥
97191
97192 मेघशावः सूक्ष्मो मेघ इवेति यावत् ॥ ४ ॥
97193
97194 संकल्पमात्रजाताभ्यां कराभ्यां कुसुमाञ्जलिम् ।
97195 मह्यमाशु तदैवादान्मेघो हैममिवोत्करम् ॥ ५ ॥
97196
97197 तदैव स्वागतोक्तिकाल एव । हिममेव हैमं शिशिरमासारोत्करमिव ॥ ५ ॥
97198
97199 इदमासनमित्युक्त्वा नवं कल्पतरुच्छदम् ।
97200 उपानीतवति त्यक्तभृत्ये वायसनायके ॥ ६ ॥
97201
97202 त्यक्तमृत्ये । भृत्यद्वारा आसनानयनमकृत्वा
97203 स्वयमेवासनमादरादुपानीतवतीत्यर्थः ॥ ६ ॥
97204
97205 भुशुण्ड उत्थिते स्वीयकलापक्षेषु पक्षिषु ।
97206 उपविष्टं मुनिं दृष्ट्वा स्वासनोन्मुखदृष्टिषु ॥ ७ ॥
97207
97208 उत्थितान्तं पूर्वान्वयि । स्वीयाः कलाः कान्तय इव प्रसरन्तः पक्षा येषां
97209 तथाविधेषु पक्षिषु तत्सभावायसेषु ॥ ७ ॥
97210
97211 समन्तात्खगवृन्देन भुशुण्डेन समं ततः ।
97212 तस्मिन्कल्पलतापुञ्जे ह्युपविष्टोऽहमासने ॥ ८ ॥
97213
97214 ततस्तदनन्तरमहं भुशुण्डेन सममुपविष्टः ॥ ८ ॥
97215
97216 अर्घ्यपाद्यादि संपाद्य भुशुण्डस्तुष्टमानसः ।
97217 मामुवाच महातेजाः सौहृदान्मधुराक्षरम् ॥ ९ ॥
97218
97219 भुशुण्ड उवाच ।
97220
97221 अहो भगवताऽस्माकं प्रसादो दर्शितश्चिरात् ।
97222 दर्शनामृतसेकेन यत्सिक्ताः सद्द्रुमा वयम् ॥ १० ॥
97223
97224 प्रसादोऽनुग्रहः । सद्द्रुमाः पुण्यवृक्षायमाणाः कल्पवृक्षसहिता वा । वयमिति
97225 निकृष्टजातिताद्योतनाय जात्याख्यायाम्- इति बहुवचनम् ॥ १० ॥
97226
97227 मत्पुण्यचिरसंभारप्रेरितेन त्वयाधुना ।
97228 मुने मान्यैकमान्येन कुतश्चागमनं कृतम् ॥ ११ ॥
97229
97230 कुतः कस्मात्प्रदेशात् ॥ ११ ॥
97231
97232 कच्चिदस्मिन्महामोहेचिरं विहरतस्तव ।
97233 अखण्डितैव समता स्थिता चेतसि पावने ॥ १२ ॥
97234
97235 ममामोहे मूलाज्ञानकार्ये जगति ॥ १२ ॥
97236
97237 किमर्थमद्यागमनक्लेशेनात्मा कदर्थितः ।
97238 वचनश्रवणोत्कानामाज्ञां नो वक्तुमर्हसि ॥ १३ ॥
97239
97240 आज्ञापनवचनश्रवणे उत्कानामुत्कण्ठितानां नः । आज्ञां आज्ञाप्यमर्थम् ॥ १३

97241 ||
97242
97243 त्वत्पाददर्शनादेव सर्वं ज्ञातं मया मुने |
97244 त्वदागमनपुण्येन वयमायोजितास्त्वया || १४ ||
97245
97246 चिरंजीवितचर्चाभिर्वयं वः स्मृतिमागताः |
97247 तेनेदमास्पदं पादैस्त्वं पवित्रितवानयम् || १५ ||
97248
97249 सर्वं ज्ञातमिति यदुक्तं तदेव स्फुटयति-चिरमिति | चिरं जीवितं येषां
97250 तद्विषयाभिश्चर्चाभिर्विचारणाभिरिन्द्रसभायां जाताभिः || १५ ||
97251
97252 ज्ञातत्वदागमोऽप्येवं त्वां पृच्छामीह यन्मुने |
97253 भवद्वाक्यामृतास्वादवाञ्छितं प्रविजृम्भते || १६ ||
97254
97255 यदि ज्ञातस्तर्हि किमर्थं पृच्छसि तत्राह- भवद्वाक्येति || १६ ||
97256
97257 इत्युक्तवानसौ पक्षी भुशुण्डश्चिरजीवितः |
97258 त्रिकालामलसंवेदी तत्र प्रोक्तमिदं मया || १७ ||
97259
97260 श्रीवसिष्ठ उवाच |
97261
97262 विहंगम महाराज सत्यमेतत्त्वयोच्यते |
97263 द्रष्टुमभ्यागतोऽस्म्यद्य त्वामेव चिरजीवितम् || १८ ||
97264
97265 आशीतलान्तःकरणो दिष्ट्या कुशलवानसि |
97266 पतितोऽसि न बुद्धात्मा भीषणां भववागुराम् || १९ ||
97267
97268 पतितः प्रविष्टः || १९ ||
97269
97270 तदेतं संशयं छिन्धि भगवन्मम सत्यतः |
97271 कस्मिन्कुले भवाञ्जातो ज्ञातज्ञेयः कथं भवान् || २० ||
97272
97273 भगवन् उत्पत्तिं च विनाशं च भूतानामागतिं गतिम् | वेत्ति विद्यामविद्यां च स
97274 वाच्यो भगवानिति || इत्युक्तज्ञानसंपन्नः || २० ||
97275
97276 कियदायुश्च ते साधो वृत्तं स्मरसि किंच वा |
97277 केनायं वा निवासस्ते निर्दिष्टो दीर्घदर्शिनः || २१ ||
97278
97279 वृत्तमतिक्रान्तकल्पान्तचरित्रम् | अयं एतद्वृक्षरूपो निवसत्यस्मिन्निति निवासः || २१ ||
97280
97281 भुशुण्ड उवाच |
97282
97283 यत्पृच्छसि मुने सर्वं तदिदं वर्णयाम्यहम् |
97284 अनुद्वेगितया यत्नात्कथा श्राव्या महात्मना || २२ ||
97285
97286 श्राव्या श्रोतव्या || २२ ||
97287
97288 युष्मद्विधास्त्रिभुवनप्रभुपूज्यरूपा आकर्णयन्ति यमुदारधियो महान्तः |
97289 तेनाशुभं प्रकथितेन विनाशमेति मेघास्पदेन विभवेन यथार्कतापः || २३ ||
97290
97291 यं वृत्तान्तं युष्मद्विधा आकर्णयन्ति तेन वृत्तान्तेन प्रकथितेन
97292 वक्तॄनामन्येषां च श्रोतॄणामशुभं विनाशमेति | यथा मेघास्पदेन

97293 वृष्टिच्छायावनादिविभवेनार्कतापो विनाशमेति तद्वत् ॥ २३ ॥
97294
97295 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाणप्रकरणे पू०
97296 वसिष्ठभुशुण्डसमायोगो नाम षोडशः सर्गः ॥ १६ ॥
97297
97298 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
97299 वसिष्ठभुशुण्डसमायोगो नाम षोडशः सर्गः ॥ १६ ॥
97300 सप्तदशः सर्गः १७
97301
97302 श्रीवसिष्ठ उवाच ।
97303
97304 अथ राम भुशुण्डोऽसौ न प्रहृष्टो न वक्रधीः ।
97305 सर्वाङ्गसुन्दरः श्यामः प्रावृषीव पयोधरः ॥ १ ॥
97306
97307 उपवर्ण्य भुशुण्डोऽत्र जीवन्मुक्तोचितैर्गुणैः ।
97308 पृष्टार्थं विस्तराद्वक्तुं प्रवृत्त इति कथ्यते ॥
97309
97310 अथ भुशुण्ड इदमाहेति सर्गान्त्यश्लोकेन संबध्यते । हृष्ट
97311 इष्टलाभप्रयुक्तहर्षवान् । वक्रधीः अनृजुबुद्धिः ॥ १ ॥
97312
97313 स्निग्धगम्भीरवचनः स्मितपूर्वाभिभाषणः ।
97314 करस्थबिल्वफलवत्प्रतोलितजगत्त्रयः ॥ २ ॥
97315
97316 प्रतोलितं तुलयेव इयत्तया निश्चितं जगत्त्रयं येन ॥ २ ॥
97317
97318 तृणवद्दृष्टसकलः प्रमेयीकृतसंसृतिः ।
97319 लोकाजवं जवीभावे दृष्टज्ञानपरावरः ॥ ३ ॥
97320
97321 तृणवद्दृष्टं सकलं भोगवृन्दं येन । लोकानां आजवं जवीभावे
97322 कामानुधावने विषये सम्यग्विचार्य प्रमेयीकृता फलत्वेन निश्चिता
97323 जन्ममरणादिसंसृतिर्येन । दृष्टं ज्ञानेन परमवरं च ब्रह्म येन ॥ ३ ॥
97324
97325 धीरस्थिरमहाकारो विश्रान्तिं गतमन्द्रः ।
97326 परिपूर्णमनाः शुद्धः क्षीरार्णव इवागतः ॥ ४ ॥
97327
97328 अमृतोत्पादनानन्तरं गतो मन्दरो यस्मात्तथाविधः क्षीरार्णव इव
97329 विश्रान्तिमागतः ॥ ४ ॥
97330
97331 परिविश्रान्तधीः शान्तः परमानन्दघूर्णितः ।
97332 आविर्भावतिरोभावतज्ज्ञः संसारजन्मनाम् ॥ ५ ॥
97333
97334 बहिः परिविश्रान्तधीः अन्तः परमानन्दघूर्णितः । संसारे जन्म येषां
97335 तथाविधानां सर्ववस्तूनामाविर्भावतिरोभावौ तत् तन्निमित्तं
97336 मायातत्त्वमात्मतत्त्वं च जानातीति आविर्भावतिरोभावतज्ज्ञः ॥ ५ ॥
97337
97338 सरभसवदनाभिरामरूपः प्रियमधुरोचितगानहृद्यवाक्यः ।
97339 स्वयमिव नवमाश्रितः शरीरं सकलभयापहरं प्रहर्षयुक्तः ॥ ६ ॥
97340
97341 प्रियं मधुरं च श्रवणोचितं वीणागानमिव हृद्यं वाक्यं यस्य
97342 साक्षात्कारमात्रात्सकलभयापहरं स्वयं ब्रह्मैव जगदुद्धाराय नवं
97343 शरीरमाश्रितः । अत एव सहजानन्दप्रहर्षयुक्तो भुशुण्डः प्रश्नोत्तरकथनाय
97344 सरभसेन सोद्योगेन वदनेनाभिरामरूपः सन्निदमाहेति परेणान्वयः ॥ ६ ॥

97345
97346 इदममलगिरा समाह शुद्धममृतमनुज्झितसंभ्रमक्रमेण।
97347 कथयितुमखिलं निजं स्वरूपं मधुपमिव स्तनितेन मुग्धमेघः॥ ७॥
97348
97349 स भुशुण्डो मा मां प्रति शुद्धममृतमखिलं
97350 निजस्वरूपमनुज्झितसंभ्रमेणात्यक्तविनयोपचारोत्साहादिपरिष्कारेण क्रमेण
97351 कथयितुममलगिरा इदं वक्ष्यमाणवृत्तान्तमाह। यथा मुग्धः सुन्दरो मेघः
97352 स्तनितेन स्वगर्जितरवेण मधुपं मकरन्दपानरसिकं भ्रमरं प्रति तदेवाह
97353 तद्वत्। तथा च प्रागेव प्रबुद्धब्रह्मानन्दरसिके मयि तदुक्तिर्नोपदेशः
97354 किंत्वनुवादमात्रमिति भावः॥ ७॥
97355
97356 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० निर्वाणप्रकरणे पू०
97357 भुशुण्डोपाख्याने भुशुण्डस्वरूपवर्णनं नाम सप्तदशः सर्गः॥ १७॥
97358
97359 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
97360 भुशुण्डस्वरूपवर्णनं नाम सप्तदशः सर्गः॥ १७॥
97361
97362
97363 अष्टादशः सर्गः १८
97364
97365 भुशुण्ड उवाच।
97366
97367 अस्त्यस्मिञ्जगति श्रेष्ठः सर्वनाकनिवासिनाम्।
97368 देवदेवो हरो नाम देवदेवाभिवन्दितः॥ १॥
97369
97370 स्वजन्म वक्तुमत्रादौ हरस्तद्गणमातृकाः।
97371 तासां पानोत्सवोन्मादा भुशुण्डेनात्र वर्णिताः॥
97372
97373 तत्र कस्मिन्कुले भवान्जात इति प्रथमप्रश्नस्योत्तरं वक्तुं भूमिकां रचयति##-
97374 ज्ञानैश्वर्यबलादिगुणैरुत्कृष्टतमो देवानामपि देव इज्य उपास्यश्च देवानां
97375 देवैर्ब्रह्मादिभिरप्यभितः सर्वतः सदा च वन्दितो नमस्कृतः स्तुतश्चेति
97376 त्रिभिर्विशेषणैः सर्वांशेऽपि तस्यैवोत्कर्षपरमावधित्वमिति दर्शितम्।
97377 अनेनार्थाद्वक्ष्यमाणब्रह्मविद्यारम्भे मङ्गलमपि कृतं बोध्यम्॥ १॥
97378
97379 षट्पदश्रेणिनयना यस्योच्चस्तबकस्तनी।
97380 विलासिनी शरीरार्धे लता चूततरोरिव॥ २॥
97381
97382 षट्पदानां श्रेणिरिव नयनानि यस्याः॥ २॥
97383
97384 हिमहारसिता यस्य लहरीस्तबकोम्भिता।
97385 आवेष्टितजटाजूटा गङ्गाकुसुममालिका॥ ३॥
97386
97387 हिममिव हार इव च सिता लहरीलक्षणैः स्तबकैरुम्भिता पूरिता। गुम्फितेति यावत्॥ ३॥
97388
97389 क्षीरसागरसंभूतः प्रसृतामृतनिर्झरः।
97390 प्रतिबिम्बकरः श्रीमान्यस्य चूडामणिः शशी॥ ४॥
97391
97392 प्रतिबिम्बकरो दर्पणभूतश्चूडामणिः॥ ४॥
97393
97394 अनारतशिरश्चन्द्रप्रस्रवेणामृतीकृतः।
97395 यस्येन्द्रनीलवत्कालकूटः कण्ठे विभूषणम्॥ ५॥
97396

97397 अनारतं शिरश्चन्द्रस्यामृतप्रस्रवेण
97398 निरस्तविषशक्तिराहितसंजीवनशक्तिश्चेत्यमृतीकृतः ॥ ५ ॥
97399
97400 धूलिलेखामहावर्तं स्वच्छपावकसंभवम् ।
97401 परमाणुमयं भस्म यस्य ज्ञानजलं सितम् ॥ ६ ॥
97402
97403 तथा यस्य स्वच्छात्स्वाक्षिपावकाज्जगत्प्रलयहेतोः संभवतीति तथाविधं धूलिलेखा
97404 धूलिश्रेणिरूपा महान्तः प्रलयवात्यावर्ता यस्मात्तथाविधं स्थूलभूतानां
97405 सूक्ष्मसूक्ष्मप्रवेशक्रमेण परमसूक्ष्माव्यक्तमात्रपरिशेषात्परमाणुमयं
97406 सितं शुभ्रं तत्साक्षिचिन्मात्रलक्षणजलप्लावितत्वाज्ज्ञानजलं मायालक्षणं
97407 भस्म यस्य मायाशबलब्रह्मणो विभूषणमित्यनुषज्यते । हरः संक्षुभ्यैनं
97408 भजति भसितोद्धूलनविधिं इति भगवत्पादाः ॥ ६ ॥
97409
97410 निर्मलानि जितेन्दूनि मृष्टानि घटितानि च ।
97411 यस्यास्थीन्येव रत्नानि देहकान्तमयानि च ॥ ७ ॥
97412
97413 मृष्टानि शाणोल्लेखनेन मणिवच्छोधितानि । अत एव मालाद्याकारेण घटितानि ।
97414 देहेषु कान्तानि मनोरमाणि ब्रह्मादिशरीराणि तन्मयानि तद्विकारभूतानीत्यर्थः ॥ ७ ॥
97415
97416 सुधाकरसुधाधौतं नीलनीरदपल्लवम् ।
97417 तारकाबिन्दुशबलं यस्य चाम्बरमम्बरम् ॥ ८ ॥
97418
97419 नीला नीरदा मेघा एव पल्लवानि दशा यस्य । अम्बरमाकाशं दिश इति यावत् । अम्बरं
97420 वस्त्रम् ॥ ८ ॥
97421
97422 भ्रमच्छिवाङ्गनापक्वमहामांसौदनाकुलम् ।
97423 बहिर्भूतं गृहं यस्य श्मशानं हिमपाण्डुरम् ॥ ९ ॥
97424
97425 भ्रमन्तीभिः शिवाङ्गनाभिः क्रोष्ट्रीभिः
97426 पक्वैर्महामांसैर्नरामिषैर्बल्योदनैश्च आकुलम् । ग्रामनगरादिभ्यो बहिर्भूतम् ।
97427 भ्रमन्तीभिः शिवाभिः कल्याणवेषाभिरङ्गनाभिः
97428 पक्वैर्महद्भिर्मृष्टतमत्वात्प्रशस्यैर्मांसौदनादिभोज्यैश्चाकुलं व्याप्तं
97429 सर्वदोषेभ्यो बहिर्भूतमित्यपि श्लेषादारोप्यते ॥ ९ ॥
97430
97431 कपालमालाभरणाः पीतरक्तवसासवाः ।
97432 आन्त्रस्रग्दामवलिता बन्धवो यस्य मातरः ॥ १० ॥
97433
97434 मातरो वक्ष्यमाणाः । प्रेम्णा बध्नन्तीति बन्धवः सदा क्रीडासहायाः ॥ १० ॥
97435
97436 प्रस्फुरन्मूर्धमणयश्चरन्तो मसृणाङ्गकाः ।
97437 भुजगा वलया यस्य प्रकचत्कनकत्विषः ॥ ११ ॥
97438
97439 चरन्तः पर्यायेण तत्तदङ्गभूषणाय प्रसर्पन्तः । मसृणाङ्गकाः
97440 स्निग्धसर्वाङ्गाः दीप्यमानस्वर्णकान्तयः ॥ ११ ॥
97441
97442 दृक्पातदग्धशैलेन्द्रं जगत्कवललालसम् ।
97443 भैरवाचरितं यस्य लीला संत्रासितासुरम् ॥ १२ ॥
97444
97445 यस्य भैरवं भीषणमाचरितं चरित्रम् । तदेवावयुत्योदाहरति##-
97446
97447 स्वस्थीकृतजगज्जातस्वव्यापारस्थचेतसः ।
97448 यदृच्छया करस्पन्दो यस्यासुरपुरक्षयः ॥ १३ ॥

97449
97450 सत्यसंकल्पत्वात्कल्याणचिन्तनेनैव स्वस्थीकृतं जगज्जातं येन तथाविधमत एव
97451 स्वव्यापारः समाधिस्तत्स्थं चेतो यस्य तथाविधस्य यस्य यदृच्छया
97452 समाधिभङ्गे यः करस्पन्दः सोऽप्यासुराणि पुराणि क्षिणोत्यसुरैः सह
97453 नाशयतीत्यासुरपुरक्षयस्तथाविधो भवतीति विशेषः ॥ १३ ॥
97454
97455 एकाग्रमूर्तयः स्नेहरागद्वेषविवर्जिताः ।
97456 स्वशना यस्य ते शैलाः सरसा अपि नीरसाः ॥ १४ ॥
97457
97458 यस्य समाधिकाले प्रसिद्धमैकाग्र्यं पृथिवीशैलरूपतन्मूर्तिषु प्रत्यक्षं
97459 दृश्यत इत्याशयेनाह-एकाग्रेति । स्नेहरागद्वेषादिसर्वदोषविवर्जिताः रसा
97460 पृथिवी रसो जलं च तत्सहिता इति सरसा अपि स्वशनाः शोभनाशनतृप्ता इव नीरसा
97461 अशनायापिपासादितृष्णाशून्यास्ते प्रसिद्धा मेरुहिमवदादयः शैला यस्य हरस्य
97462 एकाग्रभूता ध्यानमूर्तयः प्रसिद्धा इत्यर्थः ॥ १४ ॥
97463
97464 शिरःखुराः खुरकराः करदन्तमुखोदराः ।
97465 ऋक्षोष्ट्राजाहिवक्त्राश्च प्रमथा यस्य लालकाः ॥ १५ ॥
97466
97467 इदानीं तस्य गणान्सर्वाङ्गेषु सर्वशक्तिमतो वर्णयति-शिर इति । शिरांसि खुरा
97468 धावनखण्डनादिखुरशक्तियन्ति येषाम् । तथा खुराश्च करा
97469 विचित्रशिल्पादिकरशक्तिमन्तो येषाम् । तथा कराश्च दन्तमुखोदरं
97470 चर्वणभक्षणावपनादिशक्तिमन्तो येषाम् । ऋक्षा भल्लूकाः उष्ट्रा अजाः अहयः
97471 सर्पास्तेषामिव वक्त्राणि येषां तथाविधाः प्रमथा यस्य लालकाः क्रीडासहाया
97472 इत्यर्थः ॥ १५ ॥
97473
97474 तस्य नेत्रत्रयोद्भासिवदनस्यामलप्रभाः ।
97475 यथा गणास्तथैवान्याः परिवारो हि मातरः ॥ १६ ॥
97476
97477 यथा गणास्तथैव सर्वाङ्गेषु सर्वशक्तिमत्यो नानाकाराननाश्च मातरस्तस्य
97478 परिवारः ॥ १६ ॥
97479
97480 नृत्यन्ति मातरस्तस्य पुरो भूतगणानताः ।
97481 चतुर्दशविधानन्तभूतजातैकभोजनाः ॥ १७ ॥
97482
97483 भुवनसंख्यया चतुर्दशविधानि स्वसंख्यया अनन्तानि भूतजातान्येकं
97484 मुख्यभोजनमन्नं यासाम् ॥ १७ ॥
97485
97486 खरोष्ट्राकारवदना रक्तमेदोवसासवाः ।
97487 दिगन्तरविहारिण्यः शरीरावयवस्रजः ॥ १८ ॥
97488
97489 रक्तमेदोवसाः आसव इव सदा पेया यासाम् । शरीरावयवाः शवहस्तपादादयः स्रजो
97490 यासाम् ॥ १८ ॥
97491
97492 वसन्तगिरिकूटेषु व्योम्नि लोकान्तरेषु च ।
97493 अवटेषु श्मशानेषु शरीरेषु च देहिनाम् ॥ १९ ॥
97494
97495 जया च विजया चैव जयन्ती चापराजिता ।
97496 सिद्धा रक्तालम्बुसा च उत्पला चेति देवताः ॥ २० ॥
97497
97498 तत्कल्पस्थानां तासां नामान्याह-जया चेत्यादिना । देवता मातृदेव्यः ॥ २० ॥
97499
97500 सर्वासामेव मातृणामष्टावेतास्तु नायिकाः ।

97501 आसामनुगतास्त्वन्यास्तासामनुगताः पराः ॥ २१ ॥
97502
97503 ननु शतकोट्यस्तु चामुण्डाः इत्यादिबहुसंख्यत्वे तासां प्रसिद्धे
97504 कथमष्टावित्युच्यते तत्राह-सर्वासामेवेति ॥ २१ ॥
97505
97506 तासां मध्ये महार्हाणां मातृणां मुनिनायक।
97507 अलम्बुसेति विख्याता माता मानद विद्यते ॥ २२ ॥
97508
97509 तासां मध्ये सप्तमी या विद्यते तस्यास्तु वाहनं चण्डाख्यः काको विद्यत इति
97510 परेणान्वयः ॥ २२ ॥
97511
97512 वज्रास्थितुण्डश्चण्डाख्य इन्द्रनीलाचलोपमः।
97513 तस्यास्तु वाहनं काको वैष्णव्या गरुडो यथा ॥ २३ ॥
97514
97515 इत्यष्टैश्वर्ययुक्तास्ता मातरो रौद्रचेष्टिताः।
97516 कदाचिन्मिलिता व्योम्नि सर्वाः केनापि हेतुना ॥ २४ ॥
97517
97518 इति उक्तलक्षणा मातः। केनापि विहारहेतुना ॥ २४ ॥
97519
97520 उत्सवं परमं चक्रुः परमार्थप्रकाशकम्।
97521 वामस्रोतोगता एतास्तुम्बुरुं रुद्रमाश्रिताः ॥ २५ ॥
97522
97523 चित्तैकाग्र्यद्वारा समाधौ परमार्थभूतस्वात्मतत्त्वप्रकाशकं पानोत्सवम्।
97524 वामस्रोतो वाममार्गेण परशक्त्याराधनप्रकारस्तद्गतास्तुम्बुरुनामानं
97525 रुद्रमूर्तिभेदमाराध्यत्वेनाश्रिताः। तुम्बुरं रुद्रं वामस्रोतो
97526 वामभागस्तद्गताः सत्य आश्रिता इति वा ॥ २५ ॥
97527
97528 पूजयित्वा जगत्पूज्यौ देवौ तुम्बुरुभैरवौ।
97529 विचित्रार्थाः कथाश्चक्रुर्मदिरामदतोषिताः ॥ २६ ॥
97530
97531 अथेयमाययौ तासां कथावसरतः कथा।
97532 अस्मानुमापतिर्देवः किं पश्यत्यवहेलया ॥ २७ ॥
97533
97534 कथावसरतः परस्परसंवादकथाप्रयुक्तरुद्रकृतमात्रवहेलनप्रसङ्गेन
97535 कथा वाक् आययौ। तामेव दर्शयति-अस्मानिति ॥ २७ ॥
97536
97537 प्रहावं दर्शयामोऽस्य पुनर्नास्मांम्त्वसौ यथा।
97538 दृष्टमात्रमहाशक्तिः करिष्यत्यवधीरणम् ॥ २८ ॥
97539
97540 अथासौ उमापतिर्दृष्टमात्रा महती शक्तिरसात्प्रभावो येन तथाभूतः सन्
97541 अस्मानुद्दिश्य यथा पुनः अवधीरणमवहेलनां न करिष्यति तथा अस्य प्रभावं
97542 दर्शयाम इत्यन्वयः ॥ २८ ॥
97543
97544 इति निश्चित्य ता देव्यो विवर्णवदनाङ्गिकाम्।
97545 उमामेव वशीकृत्य प्रोक्षयामासुरादृताः ॥ २९ ॥
97546
97547 उमां रुद्रशक्तिं वशीकृत्य स्वमूर्त्यन्तरत्वात्स्वाधीनां कृत्वा यज्ञे पशुमिव
97548 समन्त्रेणाम्भसा प्रोक्षयामासुः। विवर्णवदनाङ्गिकामित्यनेन
97549 वदनाद्यङ्गानां वर्णान्तरापादनेन सहसा पत्या उमा प्रोक्षितेति
97550 परिज्ञातुमशक्यत्वापादनं सूच्यते ॥ २९ ॥
97551
97552 माययापहृतां भर्तुरङ्गाद्रङ्गमुपागताम्।

97553 तामालोलकचां देव्यः शेपुरोदनतां गताम् ॥ ३० ॥
97554
97555 रङ्गं मातृमण्डलमध्यम् । ओदनतां गतां कर्तुं शेपुरिव ।
97556 मातृणामुमामूर्त्यन्तरत्वेन स्वात्मनि मुख्यशापायोगात्परिहासक्रीडात्वाच्च न
97557 स्वमूर्त्यवहेलनादोषोऽपि । ओदनतां ओदनादिसर्वभक्ष्यभोज्यलेह्यपेयात्मतां गतां
97558 कर्तुमिति शेषः ॥ ३० ॥
97559
97560 पार्वतीप्रोक्षणदिने तस्मिंस्तत्र महोत्सवः ।
97561 बभूव तासां सर्वासां नृत्यगेयमनोहरः ॥ ३१ ॥
97562
97563 अत्यानन्दमनुद्दामरवमेवाम्बरं बभौ ।
97564 दीर्घावयवविक्षेपविकासिजघनोदराः ॥ ३२ ॥
97565
97566 अन्या जहसुरुद्दामतालक्ष्वेडाघनारवम् ।
97567 लसदङ्गविकारं च ध्वनत्सगिरिकाननाः ॥ ३३ ॥
97568
97569 तालः करतालः क्ष्वेडा सिंहनादस्ताभ्यां घनारवं यथा स्यात्तथा जहसुः ॥ ३३ ॥
97570
97571 अन्या जगुर्ध्वनच्छैलगृहमापानतोषिताः ।
97572 वारीव रववद्रञ्जज्जगन्मण्डलकोटरे ॥ ३४ ॥
97573
97574 ध्वनन्तः शैला गृहाश्च यस्मिन्कर्मणि तद्यथा भवति तथा । चन्द्रोदयरागेण
97575 रञ्जत् रववत् ध्वनच्च समुद्रवारीव जगर्जुः ॥ ३४ ॥
97576
97577 अन्याः पानं पपुः पुष्टचर्चिताङ्गशिरःखुरम् ।
97578 लीलाघुरघुरारावरणदाकाशकोटरे ॥ ३५ ॥
97579
97580 चन्दनादिना रक्तवसासवादिना वा चर्चितान्यनुलिप्तानि पुष्टान्यङ्गानि शिर##-
97581
97582 पपुरुदगुरथोच्चैः सत्वरा जग्मुरूचुर्जहसुरपुरहौषुः पेतुरुच्चैर्ववल्गुः ।
97583 ननृतुरनिशमादुः स्वादु मांसं च देव्यस्त्रिभुवनमपवृत्तं
97584 चक्रुरुन्मत्तवृत्ताः ॥ ३६ ॥
97585
97586 तासामुन्मत्तवृत्तान्येव कानिचिदभिलपन्नुपसंहरति-पपुरिति । पपुः पेयानि ।
97587 अपुः परस्परं ररक्षुः । परस्परमुखे अग्नौ वा अहौषुः । अपवृत्तं परिवृत्तं
97588 स्वाचारशिक्षया अपगतसद्वृत्तं वा ॥ ३६ ॥
97589
97590 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाणप्रकरणे पू०
97591 भु० मातृव्यवहारवर्णनं नामाष्टादशः सर्गः ॥ १८ ॥
97592
97593 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
97594 मातृव्यवहारवर्णनं नामाष्टादशः सर्गः ॥ १८ ॥
97595 एकोनविंशः सर्गः १९
97596
97597 भुशुण्ड उवाच ।
97598
97599 इत्युत्सवे वर्तमाने तासां वाहास्त उत्तमाः ।
97600 तथैव मत्ता जहसुर्ननृतुः पपुरप्यसृक् ॥ १ ॥
97601
97602 ब्राह्मी हंस्यां चण्डयोगात्स्वजन्म भ्रातृभिः सह ।
97603 ब्राह्म्याः प्रसादाज्ज्ञानाप्तिः पितुः स्थानाप्तिरुच्यते ॥
97604

97605 तासां मातृणाम् | वाहा वाहनभूताश्चण्डादयः || १ ||
97606
97607 तत्रैकत्रासवोन्मत्ताः काश्चिन्ननृतुरम्बरे |
97608 रथहंस्यः स्थिता ब्राह्म्यः काकश्चालम्बुसारथः || २ ||
97609
97610 तत्र तस्मिन्नुत्सवे ब्राह्म्यो ब्रह्माणीसंबन्धिन्यो रथहंस्यः अलम्बुसाया रथो
97611 वाहनभूतश्चण्डाख्यः काकश्च एकत्र स्थिता ननृतुः || २ ||
97612
97613 नृत्यन्तीनां च हंसीनां पिबन्तीनामथासवम् |
97614 तले चाब्धितटानां तु रतिः सम्यगजायत || ३ ||
97615
97616 अब्धितटानां वेलानां तले समभूप्रदेशे इति उद्दीपनविभावोक्तिः | रतिरनुरागः || ३ ||
97617
97618 संजातरतयो मत्ताः सर्वा हंस्यः क्रमेण ताः |
97619 रेमिरे सह काकेनाप्यथ मत्तास्तदा किल || ४ ||
97620
97621 मत्तत्वादेवोत्कृष्टजातीनामपि हंसीनां निकृष्टजातीयेनापि काकेन सह
97622 रतिरनुचितापि संपन्नेति सूचनायापिशब्दः || ४ ||
97623
97624 सप्तानां कुलहंसीनां दयितो वायसस्त्वसो |
97625 क्रमेणारमतैकत्र यावदन्योन्यमीप्सितम् || ५ ||
97626
97627 एकत्रेति वीप्सितम् | एकैकस्यां हंस्यां
97628 यावदन्योन्यमीप्सितमिच्छापूर्तिस्तावदरसतेत्यथः || ५ ||
97629
97630 अथ ता गर्भधारिण्यो बभूवुरतितोषिताः |
97631 देव्यश्च कृतनृत्यास्ताः सुप्रशान्तमथाययुः || ६ ||
97632
97633 अथ कृतोत्सवकृत्यास्ता देव्यो मातरश्च
97634 स्वमायाचेष्टाऽविमर्शात्सुप्रशान्तमक्रुध्यन्तं रुद्रं ययुः || ६ ||
97635
97636 ददुरोदनतां यातमीश्वराय प्रियामुमाम् |
97637 भोजनाय महामायां देव्यस्ताः शूलपाणये || ७ ||
97638
97639 अत एव ओदनतां यातामुमां तस्मै ईश्वराय भोजनाय ददुः || ७ ||
97640
97641 प्रिया मे भोजने दत्तेत्येवं च शशिशेखरः |
97642 बुद्ध्वा बभूव रुषितो यदा मातृगणं प्रति || ८ ||
97643
97644 यदा शशिशेखरो मे प्रिया भोजने दत्तेति बुद्ध्वा मातृगणं प्रति रुषितो बभूव
97645 तदा ता मातरस्तां पार्वतीं स्वाङ्गदानेन स्वस्वाङ्गैः शिर##-
97646 द्वयोरन्वयः || ८ ||
97647
97648 तदा तास्तां समुत्पाद्य स्वाङ्गदानेन वै पुनः |
97649 ददुर्भूयो विवाहेन पार्वतीमिन्दुमौलये || ९ ||
97650
97651 ततो देव्यो हरश्चैव परिवारस्तथैतयोः |
97652 सर्वे संतुष्टमनसः स्वां स्वामुपययुर्दिशम् || १० ||
97653
97654 एतयोर्देवीहरयोः | मातृणां देव्यंशत्वेनैकीकारादेकशेषे द्विवचनम् || १० ||
97655
97656 अन्तर्वत्न्यो बभूवस्ता ब्राह्म्यो हंस्यो मुनीश्वरम् |

97657 वृत्तान्तं कथयामासुर्ब्राह्म्या देव्या यथास्थितम् ॥ ११ ॥
97658
97659 अन्तर्वत्न्यो गर्भिण्यः ॥ ११ ॥
97660
97661 ब्राह्म्युवाच ।
97662
97663 हे वत्स्यः सांप्रतं वत्सवयो मे रथकर्मणि ।
97664 न समर्था भवन्त्यो हि खैरं चरत सांप्रतम् ॥ १२ ॥
97665
97666 वत्सवत्यो गर्भिण्यः ॥ १२ ॥
97667
97668 इति गर्भालसा हंसीरुक्त्वा देवी दयापरा ।
97669 निर्विकल्पसमाधाने ब्राह्मी तस्थौ यथासुखम् ॥ १३ ॥
97670
97671 इति उक्ता तदनुग्रहाय संचारं विहाय निर्विकल्पाख्ये समाधाने समाधौ ॥ १३ ॥
97672
97673 अजनाभिसरोजान्तवैरिञ्चकमलाकरे ।
97674 गर्भालसा विचेरुस्ता राजहंस्यो मुनीश्वर ॥ १४ ॥
97675
97676 अजस्य विष्णोर्नाभिसरोजस्यान्ते मूले वैरिञ्चस्य कमलस्याकरे उत्पत्तिस्थाने विचेरुः ॥ १४
97677 ।।
97678
97679 एवं विपक्वगर्भास्ता नाभीकमलपल्लवे ।
97680 सुवते स्म मृदून्यण्डान्यथ वल्ल्य इवाङ्कुरान् ॥ १५ ॥
97681
97682 नाभिकमलस्य पल्लवे किसलयप्रदेशे ॥ १५ ॥
97683
97684 तानि कालं समासाद्य ततोऽण्डान्येकविंशतिः ।
97685 गर्भाक्रान्त्या द्विधा जग्मुर्ब्रह्माण्डानीव सारवत् ॥ १६ ॥
97686
97687 गर्भाक्रान्त्या परिपक्वगर्भपादविक्षेपेण द्विधा जग्मुः अभिद्यन्त । यथा सारवत्
97688 सारवन्ति व्यत्ययेनैकवचनम् । ब्रह्माण्डानि स्वर्णरजतखर्पराभ्यामभिद्यन्त
97689 तद्वत् ॥ १६ ॥
97690
97691 अण्डेभ्यस्तेभ्य एवं हि जाता वयमिमे मुने ।
97692 भ्रातरश्चण्डतनया वायसा एकविंशतिः ॥ १७ ॥
97693
97694 ते संजाता गता वृद्धिं तस्मिन्कमलपल्लवे ।
97695 संजातपक्षाः संपन्ना गगनोड्डयने क्षमाः ॥ १८ ॥
97696
97697 मातृभिः सह हंसीभिर्ब्राह्मी भगवती ततः ।
97698 चिरमाराधिता सम्यक्समाधिविरता सती ॥ १९ ॥
97699
97700 ज्ञातज्ञेयः कथं भवान् इत्यस्य प्रश्नस्योत्तरं वक्तुमुपक्रमते##-
97701
97702 प्रसादपरया काले भगवत्या ततः स्वयम् ।
97703 तथाङ्गानुगृहीता स्मो येन मुक्ता वयं स्थिताः ॥ २० ॥
97704
97705 तथा तादृशेन तत्त्वसाक्षात्कारकलेनै अनुगृहीताः स्मः ॥ २० ॥
97706
97707 संशान्तमनसः शान्ता एकान्ते ध्यानसंस्थितौ ।
97708 तिष्ठाम इति निश्चित्य पितुः पार्श्वे वयं गताः ॥ २१ ॥

तिष्ठामः स्थास्याम इति निश्चित्य पितुः पार्श्वे विन्ध्यकच्छे ‖ २१ ‖

आलिङ्गितास्ततः पित्रा पूजितालम्बुसा वयम् ।
तया दृष्टाः प्रसादेन संस्थितास्तत्र संयताः ‖ २२ ‖

पूजिता अलम्बुसा यैः । संयता विनयादिगुणयन्विताः ‖ २२ ‖

चण्ड उवाच ।

पुत्राः कच्चिदपर्यन्तवासनातन्तुगुण्ठितात् ।
भवन्तो निर्गता नूनमस्मात्संसारजालकात् ‖ २३ ‖

संसारलक्षणाज्जालकात्पक्षिबन्धनानायान्निर्गताः कच्चिदितीष्टप्रश्ने ‖ २३ ‖

नो चेद्वयं भगवतीं तदिमां भृत्यवत्सलाम् ।
प्रार्थयामो यथा यूयं भवथ ज्ञानपारगाः ‖ २४ ‖

तत्तदर्थम् । भवथ भविष्यथ ‖ २४ ‖

काका ऊचुः ।

तात ज्ञातमलं ज्ञेयं ब्राह्म्या देव्याः प्रसादतः ।
किंत्वेकान्तस्थितेः स्थानमभिवाञ्छाम उत्तमम् ‖ २५ ‖

एकान्ते स्थितेरवस्थानस्य योग्यं स्थानं निवासमभिवाञ्छामः ‖ २५ ‖

चण्ड उवाच ।

सर्वरत्नगणाधारः समस्तसुरसंश्रयः ।
अस्ति ह्येव महोत्सेधो मेरुर्नाम महीधरः ‖ २६ ‖

लसच्चन्द्रार्कदीपस्य भूतवृन्दकलत्रिणः ।
ब्रह्माण्डमण्डपस्यान्तःस्तम्भः कनकनिर्मितः ‖ २७ ‖

मेरुमेव वर्णयति-लसदित्यादिना । भूतवृन्दैः प्राणिसमूहैः कलत्रिणः
कुटुम्बिनो ब्रह्माण्डलक्षणस्य मण्डपस्य गृहस्य अन्तःस्तम्भो मध्यस्तम्भः
‖ २७ ‖

सौवर्णचन्द्रपीठाढ्यो रत्नाढ्य शिखराङ्गुलिः ।
ध्वनद्द्वीपाब्धिवलयो भुवेवोन्नमितो भुजः ‖ २८ ‖

सौवर्णेन चन्द्राकारेण पीठेन मूलबन्धाङ्गसदृशेन किंपुरुषादिवर्षगणेन
आढ्यः संपन्नः रत्नमयैरङ्गुलीयकैराढ्याः शिखराण्येवाङ्गुलयो यस्य
ध्वनन्तो द्वीपा अब्धयश्च वलया यस्य । ईदृशो भुवा उन्नमित ऊर्ध्वीकृतो भुज
इव स्थितः ‖ २८ ‖

वृतः कुलाद्रिसामन्तैर्जम्बूद्वीपासने स्थितः ।
राजा चन्द्रार्कनयने भ्रमयञ्छैलसंससि ‖ २९ ‖

तमेव राजत्वेन वर्णयति-वृत इत्यादिभिः । जम्बूद्वीपलक्षणे आसने सिंहासने
राजा शैलानामिति शेषः । अत एव शैलसंससि चन्द्रार्कलक्षणे नयने भ्रमयन् ‖ २९ ‖

तारौघमालतीमाल्यो दिग्दशैकाम्बराम्बरः।
नागजातिद्वयस्थात्मा नाकनायकभूषणः॥ ३०॥

तारौघा एव मालतीमाल्यानि यस्य। दिश एव दशा यस्य
तथाविधमेकमम्बरमाकाशमेवाम्बरं वस्त्रं यस्य। नागशब्दार्थभूतस्य
सर्पगजजातिद्वयस्य आधारः [नागजातिद्वयस्य स्था स्थितिर्यस्मिन्नेवंविध आत्मा
स्वरूपं यस्येति समासे फलितोऽयमर्थः। स्था इत्यत्र भावे क्विप्।]। नाकनायका
इन्द्रादय एव भूषणानि यस्य॥ ३०॥

दिगङ्गनाभिरभितो रम्याभिः पुरभूषणैः।
एष निस्यन्दिभिः शीतैर्वीजितो घनचामरैः॥ ३१॥

घना मेघास्तल्लक्षणैर्नीलश्वेतादिचामरैः॥ ३१॥

षोडशास्य सहस्राणि योजनानामधः क्षितौ।
स्थिताः पादाः प्रपूज्यन्ते नागासुरमहोरगैः॥ ३२॥

अशीतिश्च सहस्राणि देहोऽस्यार्केन्दुलोचनः।
पूज्यते नाकसदने सुरगन्धर्वकिंनरैः॥ ३३॥

पूज्यते सेव्यते॥ ३३॥

चतुर्दशविधान्येनं गृहस्थमिव बान्धवाः।
उपजीवन्ति भूतानि मिथो दृष्टपुरास्पदम्॥ ३४॥

ब्रह्मर्षयो देवर्षयो राजर्षयो देवाः पितरो गन्धर्वाः किन्नरा अप्सरसो विद्याधरा
यक्षा रक्षांसि प्रमथा गुह्यका नागाश्चेति चतुर्दशविधानि
भूतान्यतिविस्तीर्णत्वान्मिथो न दृष्टानि पुराणि आस्पदानि स्थानानि च यत्र तद्यथा
स्यात्तथा उपजीवन्ति॥ ३४॥

अस्य त्वीशानदिग्भागे पद्मरागमयं बृहत्।
विद्यते शृङ्गमपरो दिवाकर इवोदितः॥ ३५॥

अस्यास्ति पृष्ठे भूतौघवृतः कल्पतरुर्महान्।
जगतः शिखरादर्शे प्रतिबिम्बमिव स्थितः॥ ३६॥

शिखरलक्षणे विद्रुमादर्शे जगतः प्रतिबिम्बमिव स्थितः कल्पतरुः॥ ३६॥

तस्यास्ति दक्षिणस्कन्धे शाखा कनकपल्लवा।
रत्नस्तबकनीरन्ध्रा चन्द्रबिम्बोल्लसत्फला॥ ३७॥

चन्द्रबिम्बानीवोल्लसन्ति फलानि यस्याम्॥ ३७॥

तत्र पूर्वं मया नीडं कृतमासीत्स्फुरन्मणि।
देव्यां ध्याननिषण्णायां यस्मिन्किल रमे सुताः॥ ३८॥

स्फुरन्तो मणयो यस्मिंस्तथाविधं नीडम्॥ ३८॥

रत्नपुष्पदलच्छन्नं रसायनफलान्वितम्।
चिन्तामणिशलाकाभिर्विहितालिन्दसंस्थिति॥ ३९॥

97813 चिन्तामणिशलाकाभिर्विहिता अलिन्दसंस्थितिर्बहिर्द्वारप्रकोष्ठरचना यस्मिन् ॥ ३९ ॥
97814
97815 बुद्धिपूर्वसमाचारैः संपूर्णं काकपुत्रकैः ।
97816 शीतलाभ्यन्तरं हृदं पूरितं कुसुमोत्करैः ॥ ४० ॥
97817
97818 बुद्धिपूर्वसमाचारैर्विचारपूर्वव्यवहारशीलैः ॥ ४० ॥
97819
97820 तद्गच्छत सुता नीडं दुर्गं नाकवतामपि ।
97821 भोगं मोक्षं च तत्रस्था निर्विघ्नमलमाप्स्यथ ॥ ४१ ॥
97822
97823 नाकवतां देवानामपि दुर्गम् ॥ ४१ ॥
97824
97825 इत्युक्त्वास्मान्पिता तत्र चुचुम्बाभ्यालिलिङ्ग च ।
97826 ददौ देव्या यदानीतमस्मभ्यं च तदामिषम् ॥ ४२ ॥
97827
97828 आमिषं मांसम् ॥ ४२ ॥
97829
97830 तद्भुक्त्वा चरणौ देव्याः पितुश्चैवाभिवाद्य च ।
97831 विन्ध्यकच्छाद्वयंन् तस्मात्स्थानादालम्बुसात्प्लुताः ॥ ४३ ॥
97832
97833 आलम्बुसादलम्बुसानिवासात् ॥ ४३ ॥
97834
97835 क्रमेणाकाशमुल्लङ्घ्य निर्गत्याम्बुदकोटरैः ।
97836 पवनस्कन्धमासाद्य वन्दितव्योमचारिणः ॥ ४४ ॥
97837
97838 वन्दिता व्योमचारिणो देवा यैः ॥ ४४ ॥
97839
97840 परिहृत्य दिनाधीशं लोकान्तरपुरं गताः ।
97841 स्वर्गमुल्लङ्घ्य याताः स्मो ब्रह्मलोकं मुनीश्वर ॥ ४५ ॥
97842
97843 अस्माल्लोकाल्लोकान्तरं स्वर्गस्ततपुरममरावतीम् ॥ ४५ ॥
97844
97845 प्रणामपूर्वं तत्रैतद्यथावत्तत्पितुर्वचः ।
97846 मात्रे च भगवत्यै च ब्राह्म्यै चाशु निवेदितम् ॥ ४६ ॥
97847
97848 तत्र ब्रह्मलोके ॥ ४६ ॥
97849
97850 ताभ्यां सस्नेहमालिङ्ग्य गच्छतेत्याज्ञयैधिताः ।
97851 वयं कृतनमस्कारा ब्रह्मलोकाद्विनिर्गताः ॥ ४७ ॥
97852
97853 गच्छतेति आज्ञया-आज्ञादानेनाशिषा च एधिता वर्धिताः ॥ ४७ ॥
97854
97855 उल्लङ्घ्य लोकपालानां पुरीस्तपनभास्वराः ।
97856 आकाशगामिनो लोलाः पवनस्कन्धचारिणः ॥ ४८ ॥
97857
97858 तपनवद्भास्वराः ॥ ४८ ॥
97859
97860 इमं कल्पतरुं प्राप्य निजं नीडं प्रविश्य च ।
97861 दूरस्थबाधास्तिष्ठामो मुने मौनमवस्थिताः ॥ ४९ ॥
97862
97863 मौनं यथा स्यात्तथा अवस्थिताः । सदा समाधिपरा इति यावत् ॥ ४९ ॥
97864

97865 जाता यथा वयमिमे स्थितिमागताश्च संप्राप्य बोधमुपशान्तधियो यथावत्।
97866 एतत्तदुक्तमविखण्डमलं मया ते शेषेण मां समनुशाधि महानुभाव॥
97867 ५०॥
97868
97869 उक्तमुपसंहरति-जाता इति। हे महानुभाव वयं जाताः। यथा च
97870 यथावद्बोधं संप्राप्य स्थितिमेतत्स्थाननिवासमागताश्चेत्येतत्प्रश्नत्रयोत्तरं
97871 सर्वमविखण्डं यथा स्यात्तथा ते तुभ्यमुक्तम्। अतः परं शेषेणावशिष्टेन
97872 कियदायुश्च ते साधो वृत्तं स्मरसि किं च वा इति प्रश्नद्वयोत्तरेणान्येन
97873 वक्तव्यनिमित्तेन मां सम्यगनुशाधि आज्ञापय तदपि तुभ्यं वदिष्यामीत्यर्थः॥
97874 ५०॥
97875
97876 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाणप्र० पू०
97877 भुशुं० आलयलाभो नामैकोनविंशतितमः सर्गः॥ १९॥
97878
97879 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धेआलयलाभो
97880 नामैकोनविंशतितमः सर्गः॥ १९॥
97881
97882
97883 विंशः सर्गः २०
97884
97885 भुशुण्ड उवाच।
97886
97887 आसीत्किंचित्पुरा कल्पे जगद्यच्चिरमास्थितम्।
97888 संनिवेशेन चैतद्वदद्यापि च न दूरगम्॥ १॥
97889
97890 प्रतिकल्पं जगत्साम्यं भ्रातॄणां निधनं तथा।
97891 प्रलयेऽपि भुशुण्डोऽत्र स्वचित्तस्थैर्यमुक्तवान्॥
97892
97893 तत्र वृत्तं स्मरसि किंच वा इति प्रश्नस्य विस्तरेणोत्तरं वक्तुकामो
97894 वक्ष्यमाणबहुकल्पस्वजीवनोक्तेः इम कल्पतरुं प्राप्य निजनीडं प्रविश्य च
97895 इत्याद्युक्तेश्च पूर्वोत्तरविरोधाशङ्का मा भूदिति कल्पवृक्षमेर्वादीनां
97896 प्रतिकल्पं संस्थानसाम्यादैक्यवाद इत्याशनं दर्शयति-आसीदित्यादिना। पुरा
97897 अस्यज्जन्महेतौ कल्पे यत् किंचिज्जगत् पदार्थवृन्दं चिरमास्थितं तत्संनिवेशेन
97898 अवयवसंस्थानाकृत्यादिना एतद्वत् एतत्कल्पीयपदार्थवदेव आसीत्। अतस्तदद्यापि न
97899 दूरगं अभेदारोपात्सन्निहितमेवंति बुद्ध्या इमं कल्पतरुमित्यादिनिर्देश इत्यर्थः॥
97900 १॥
97901
97902 तदेतद्वृत्तमभ्यासाद्वर्तमानेन वर्णितम्।
97903 मया मुनीन्द्र बोधाय प्राग्जन्मसाम्यदर्शिना॥ २॥
97904
97905 तत्तस्माद्वृत्तमतीतमपि जगद्भ्रान्त्यभ्यासाद्वर्तमानेन जगता ऐक्येन वर्णितम्॥ २
97906 ।।
97907
97908 अद्य मे फलितं पुण्यैश्चिरकालोपसंभृतैः।
97909 निर्विघ्नमेव पश्यामि यद्भवन्तं मुने ततः॥ ३॥
97910
97911 तत्र दीर्घकथाप्रस्तावे पूजाविलम्बो मा भूदिति प्रथमं पूजास्वीकारं प्रार्थयितुं
97912 स्तुत्या अभिमुखीकरोति-अद्येति द्वाभ्याम्॥ ३॥
97913
97914 इदं नीडमिमां शाखामहं चायमयं द्रुमः।
97915 अद्य पावनतां प्राप्तान्येतानि तव दर्शनात्॥ ४॥
97916

97917 इमां शाखामनुगतमिदं नीडम् | एतानीति नपुंसकमनपुंसकेन इति
97918 नपुंसकैकशेषः || ४ ||
97919
97920 इदमर्घ्यमिदं पाद्यं गृहीत्वा विहगार्पितम् |
97921 नूनं पावनतां नीत्वा शेषेणादिश चाशु भोः || ५ ||
97922
97923 शेषेणावशिष्टसेवाविषयेण निमित्तेन आदिश प्रश्नान्वक्तुमित्यर्थः || ५ ||
97924
97925 श्रीवसिष्ठ उवाच |
97926
97927 इदमर्घ्यं च पाद्यं च भूयो दत्तवति स्वयम् |
97928 भुशुण्डविहगे तस्मिन्निदं रामाहमुक्तवान् || ६ ||
97929
97930 भूयः द्वितीयवारम् | उक्तवान् पृष्टवान् || ६ ||
97931
97932 भ्रातरस्ते विहङ्गेश तादृक्सत्त्वा महाधियः |
97933 इह कस्मान्न दृश्यन्ते त्वमेवैको हि दृश्यसे || ७ ||
97934
97935 भुशुण्ड उवाच |
97936
97937 तिष्ठतामिह नः कालो महानतिगतो मुने |
97938 युगानां पङ्क्तयः क्षीणा दिवसानामिवानघ || ८ ||
97939
97940 एतावताथ कालेन सर्व एव ममानुजाः |
97941 तनूस्तृणमिव त्यक्त्वा शिवे परिणताः पदे || ९ ||
97942
97943 तनूः शरीराणि || ९ ||
97944
97945 दीर्घायुषो महान्तोऽपि सन्तोऽपि बलिनोऽपि च |
97946 सर्व एव निगीर्यन्ते कालेनाकलितात्मना || १० ||
97947
97948 अकलितात्मना अलक्षितस्वरूपेण || १० ||
97949
97950 श्रीवसिष्ठ उवाच |
97951
97952 स्कन्धव्यूढार्कशशिषु वहत्स्वविरतं जवात् |
97953 वातस्कन्धातिवातेषु कच्चित्तात न खिद्यसे || ११ ||
97954
97955 स्कन्धेषु मालेव व्यूढा अर्का द्वादशादित्याः शशिनश्च यैस्तथाविधेषु
97956 वातस्कन्धप्रवाहादिमरुदतिक्रामिषु प्रलयवायुभेदेषु || ११ ||
97957
97958 दग्धोदयास्तशैलेन्द्रवनव्यूहै रवेः करैः |
97959 चिरमत्यन्तमासन्नैः कच्चित्तात न खिद्यसे || १२ ||
97960
97961 इन्दोरथ करैः शीतैः पाषाणीकृतवारिभिः |
97962 आसन्नकरकापातैः कच्चित्तात न खिद्यसे || १३ ||
97963
97964 पाषाणवद्घनीकृतानि वारीणि यैस्तथाविधैरिन्दोः
97965 करैरासन्नप्रलयाम्बुदकरकापातैऽस्च || १३ ||
97966
97967 अजस्रमिह विश्रान्तैः कल्पजीमूतमण्डलैः |
97968 परशुच्छेदनीहारैः कच्चित्तात न खिद्यसे || १४ ||

इह मेरुशिखरे विश्रान्तैः परशूनपि छिन्दन्ति क्षतधारान्कुर्वन्ति शिलीभूता नीहारा
येभ्यस्तैः ॥ १४ ॥

विषमैर्जागतैः क्षोभैरुच्चैस्तरपदस्थितः।
कथं न क्षोभमायाति कल्पवृक्षोऽयमुन्नतः ॥ १५ ॥

भुशुण्ड उवाच।

निरालम्बास्पदा ब्रह्मन्सर्वलोकावहेलिता।
तुच्छेद्यं सर्वभूतानां मध्ये विहगजीविका ॥ १६ ॥

कृच्छ्रकालेषु महतामपि खेदः संभावितः किं पुनर्विहगाधमयोनिज तस्य
मम तथापि विवेकप्रभावान्न खेदप्रसक्तिरिति वक्तुं स्वयोनिजीविकाया
इतरजीविकापेक्षया फल्गुतामाह-निरालम्बेति। निरालम्ब आकाशस्तदास्पदा ॥ १६ ॥

ईदृशेषु च भूतेषु निर्जनेषु [निर्जरेषु इति पाठः।] वनेषु च।
कल्पितास्थास्थितिर्धात्रा शून्ये वा व्योमवर्त्मनि ॥ १७ ॥

ईदृशेषु फल्गुष्वपि भूतेषु योनिषु। धात्रा आस्थया प्रीत्या स्थितिर्जीविका कल्पिता
तच्चित्रमित्यर्थः। इवार्थे वाशब्दः ॥ १७ ॥

कथमस्यां प्रभो जातौ जातस्य चिरजीविनः।
आशापाशनिबद्धस्य विहगस्य विशोकिता ॥ १८ ॥

वयं तु भगवन्नित्यमात्मसंतोषमास्थिताः।
न कदाचन नीरूपे मुह्यामो जातविभ्रमैः ॥ १९ ॥

नीरूपे निःस्वरूपे ॥ १९ ॥

स्वभावमात्रसंतुष्टाः कष्टैर्मुक्ता विचेष्टितैः।
क्षिपामः केवलं कालमस्मिन्ब्रह्मन्निजालये ॥ २० ॥

कष्टैः क्लेशफलैः परपीडादिविचेष्टितैर्मुक्ताः ॥ २० ॥

न जीवितान्न मरणात्कर्मदेहस्य रोधनम्।
यथा स्थितेन तिष्ठामस्तथैवास्तंगतेहिताः ॥ २१ ॥

जीविताज्जीवनात्। देहस्य कर्म ऐहिकामुष्मिकफलार्था क्रियाम्। नापि मरणाद्देहस्य
रोधनं नाशं वाञ्छामेत्युभयत्र शेषः। यथा इदानीं स्थितेन
नित्यसिद्धनिरतिशयानन्दात्मस्वभावेन तिष्ठामस्तथैवाग्रेऽपि तेनैवास्तंगतेहिताः
पूर्णकामाः स्थास्याम इत्यर्थः ॥ २१ ॥

आलोकिता लोकदशा दृष्टा दृष्टान्तदृष्टयः।
नूनं संत्यक्तमस्माकं मनसा चञ्चलं वपुः ॥ २२ ॥

लोकानां दशा जन्ममरणाद्यनर्थदशा। मिथ्यात्वनिर्णायिकाः
स्वप्नादिदृष्टान्तदृष्टयो दृष्टाः ॥ २२ ॥

अनारतनिजालोके नित्यं चापरितापिनि।
कल्पागस्योपरि सदा वेद्मि कालकलागतिम् ॥ २३ ॥

98021 तत्र तावत्कल्पान्तपर्यन्तं कल्पवृक्षप्रभावादेव नास्माकं
98022 खेदप्रसक्तिरित्याह-अनारतेत्यादिना। कल्पागस्य कल्पवृक्षस्य॥ २३॥
98023

98024 रत्नगुच्छप्रकाशाढ्ये ब्रह्मन्कल्पलतागृहे।
98025 प्राणापानप्रवाहेण वेद्मि कल्पमखण्डितम्॥ २४॥
98026

98027 प्रकाशबहुलत्वादविज्ञेयदिनरात्रिविभागेऽत्र कथं कालकलागतिं वेत्सि तत्राह##-
98028

98029 अविज्ञातदिवारात्रौ ह्यस्मिन्नुच्चैः शिलोच्चये।
98030 जानामि निजया बुद्ध्या लोककालक्रमस्थितिम्॥ २५॥
98031

98032 सारासारपरिच्छेदि बोधाद्विश्रान्तिमागतम्।
98033 निरस्तचापलं शान्तं सुस्थिरं मे मुने मनः॥ २६॥
98034

98035 मनःस्थैर्यबलादपि न मे खेदप्रसक्तिरित्याशयेनाह-सारेति॥ २६॥
98036

98037 संसारव्यवहारोत्थैराशापाशैरसन्मयैः।
98038 उद्गारैरिव बूकाकोन वैवश्यं व्रजाम्यहम्॥ २७॥
98039

98040 उद्गारध्वनिप्रायैरल्पध्वनिभिः प्राकृतो भूकाक इव नाहं वैवश्यं भयं
98041 व्रजाति॥ २७॥
98042

98043 परोपशमधर्मिण्या वयमालोकशीतया।
98044 पश्यन्तो जागतीं मायां धिया धैर्यमुपागताः॥ २८॥
98045

98046 धीरत्वादपि नास्माकं खेदप्रसक्तिरित्याह-परेति॥ २८॥
98047

98048 भीमास्वपि महाबुद्धे दशास्वचलबुद्धयः।
98049 विनिर्मलोपलाकाराः संप्राप्तासु यथाक्रमम्॥ २९॥
98050

98051 दशाक्रममनुसृत्य भीमास्वपि दशासु संप्राप्तासु विनिर्मलोपलः
98052 स्फटिकादिस्तदाकारास्तत्सदृशाः॥ २९॥
98053

98054 इयमारम्भसुभगा तरला जागती स्थितिः।
98055 भूयो भूयः परामृष्टा न च किंच न बाधते॥ ३०॥
98056

98057 जगत्तत्त्वस्य भूयो विमर्शबलादपि न खेदप्रसक्तिरित्याह-इयमिति॥ ३०॥
98058

98059 सर्वाण्येव प्रयान्त्येव समायान्ति च वा न वा।
98060 भगवन्भूतजालानि भयमस्माकमत्र किम्॥ ३१॥
98061

98062 जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च इति भगवद्दर्शितदिशा
98063 सर्वसाधारणे दुःखेअपरिहार्यतानिश्चयाद्वा न भयप्रक्तिरित्याह-सर्वाणीति। वा
98064 अथवा न वा प्रयान्ति न वा समायान्ति। परमार्थदृशेत्यर्थः॥ ३१॥
98065

98066 भूतजालतरङ्गिण्या विशन्त्याः कालसागरे।
98067 वयं संसारसरितस्तटस्था अप्यनादृताः॥ ३२॥
98068

98069 तत्त्वज्ञस्य स्वस्य तटस्थतया सर्वभूतसंसारद्रष्टृत्वात्तत्रादराभावाच्च न
98070 भयप्रसक्तिरित्याह-भूतेति॥ ३२॥
98071

98072 नोज्झामो न च गृह्णीमस्तिष्ठामो नेह च स्थिताः।

98073 मृदुपादा दृशा क्रूरा वयमस्मिन्द्रुमे स्थिताः ॥ ३३ ॥
98074
98075 व्यवहारमात्रसिद्धये सकण्टकभुवीव सावधानतया संसारे
98076 क्रमणान्मृदुपादाः। तत्त्वदृशा संसारोच्छेदित्वात्क्रूराः ॥ ३३ ॥
98077
98078 वीतशोकभयायासैस्त्वादृशैः पुरुषोत्तमैः।
98079 तुष्टैरनुगृहीताः स्मः संस्थिता विगतामयाः ॥ ३४ ॥
98080
98081 महतामनुग्रहादपि न नः खेदप्रसक्तिरित्याह-वीतेति ॥ ३४ ॥
98082
98083 ततस्ततश्च पर्यस्तं लुठितं न च वृत्तिषु।
98084 नापरामृष्टतत्त्वार्थमस्माकं भगवन्मनः ॥ ३५ ॥
98085
98086 व्यवहारमात्रसिद्धये ततस्ततः पर्यस्तमपि रागादिवृत्तिषु न लुठितम् ॥ ३५ ॥|
98087
98088 निर्विकारे गतक्षोभे चात्मन्युपशमं गते।
98089 चित्तरङ्गाः प्रबुद्धाः स्मः पर्वणीव महाब्धयः ॥ ३६ ॥
98090
98091 चितः सर्वतो ब्रह्माकारवृत्तिचन्द्रोदयोद्रिक्तबोधा एव तरङ्गा येषां तथाविधाः
98092 सन्तः पर्वणि महाब्धय इव प्रबुद्धाः स्मः ॥ ३६ ॥
98093
98094 भवदागमनाद्ब्रह्मन्निदानीं मुदिताशयाः।
98095 मन्दरोद्धूतसर्वाङ्गः क्षीरोदो येन तन्यते ॥ ३७ ॥
98096
98097 तादृशा वयं इदानीं भवदागमनाद्धेतोः। येनोद्देशेन क्षीरोदः क्षीरसागरो
98098 मन्दरोद्धूतसर्वाङ्गो निर्मथ्यमानस्तन्यते तेनामृतेन मुदिताशयाः संपन्ना
98099 इत्यर्थः। खन्यते इति पाठेऽप्यवदार्यते मथ्यत इत्येवार्थः ॥ ३७ ॥
98100
98101 नातः परतरं किंचिन्मन्ये कुशलमात्मनः।
98102 सन्तो यदनुगम्यन्ते संत्यक्तसकलैषणाः ॥ ३८ ॥
98103
98104 आपातमात्ररम्येभ्यो भोगेभ्यः किमवाप्यते।
98105 सत्सङ्गचिन्तामणितः सर्वसारमवाप्यते ॥ ३९ ॥
98106
98107 सर्वसारं ज्ञानम् ॥ ३९ ॥
98108
98109 स्निग्धगम्भीरमसृणमधुरोदारधीरवाक्।
98110 त्रैलोक्यपद्मकोशेऽस्मिंस्त्वमेकः षट्पदायसे ॥ ४० ॥
98111
98112 अधिगतपरमात्मनोऽपि मन्ये भवदवलोकनऽसान्तदुष्कृतस्य।
98113 मम सफलमिहाद्य जन्म साधो सकलभयापहरो हि साधुसङ्गः ॥ ४१ ॥
98114
98115 भवदवलोकनेन शान्तं दुष्कृतं दुष्टप्रारब्धं यस्य तथाविधस्य मम
98116 जन्म अद्य सफलं निरतिशयानन्दफलयुक्तमभूदित्यर्थः ॥ ४१ ॥
98117
98118 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० निर्वाणप्रकरणे पू०
98119 भुशुण्डोपाख्याने भुशुण्डस्वरूपनिरूपणं नाम विंशः सर्गः ॥ २० ॥
98120
98121 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
98122 भुशुण्डस्वरूपनिर्वाणं नाम विंशः सर्गः ॥ २० ॥
98123
98124 एकविंशः सर्गः २१

भुशुण्ड उवाच।

युगक्षोभेषु घोरेषु वात्यासु विषमासु च।
सुस्थिरः कल्पवृक्षोऽयं न कदाचन कम्पते॥ १॥

कल्पवृक्षस्य माहात्म्यं प्रलये धारणास्थितिः।
नियतिर्भूरिचित्रार्थस्मृतिश्चात्रोपवर्ण्यते॥

अगम्योऽयं समग्राणां लोकान्तरविहारिणाम्।
भूतानां तेन तिष्ठाम इह साधो सुखेन वै॥ २॥

स्वाश्रयकल्पवृक्षमाहात्म्योपवर्णने युगान्तोत्पातादिषु स्वस्य
खेदाप्रसक्तिप्रपञ्चनमुखेन वृत्तं स्मरसि किंच वेति प्रश्नोत्तरं
वक्तुमुपक्रमते-युगक्षोभेष्वित्यादिना॥ १॥ २॥

हिरण्याक्षो धरापीठं द्वीपसप्तकवेष्टितम्।
यदा जहार तरसा नाकम्पत तदा तरुः॥ ३॥

यद्यपि धरया सह कल्पवृक्षस्यापि हरणं विद्यत एव तथापि
दिव्यप्रभावबलान्नाकम्पतेत्याशयः॥ ३॥

यदा लोलायितवपुर्बभूवामरपर्वतः।
सर्वतो दत्तसाम्याद्रिस्तदा नाकम्पत द्रुमः॥ ४॥

सर्वतो दत्ताः साम्याय स्तम्भोपष्टम्भशिलावदद्रयो यस्य तथाविधोऽमरपर्वतः।
अर्थाद्वराहेण पुनर्भूमिप्रतिष्ठापनदशायामिति गम्यते॥ ४॥

भुजावष्टम्भविनमन्मेरुर्नारायणो यदा।
मन्दरं प्रोद्दधाराद्रिं तदा नाकम्पत द्रुमः॥ ५॥

भुजेति। अत्रापि चतुर्भुजो द्वाभ्यां भुजाभ्यां मेरुमवष्टभ्येतराभ्यां मन्दरं
प्रोद्दधारेति गम्यते॥ ५॥

यदा सुरासुरक्षोभपतच्चन्द्रार्कमण्डलम्।
आसीज्जगदतिक्षुब्धं तदा नाकम्पत द्रुमः॥ ६॥

सुरासुरयोः क्षोभस्तीव्रसंग्रामस्तेन पतच्चन्द्रार्कमण्डलम्॥ ६॥

उन्मूलिताद्रीन्द्रशिला यदोत्पातानिला ववुः।
आधूतमेरुतरवस्तदा नाकम्पत द्रुमः॥ ७॥

यदा क्षीरोदलोलाद्रिकन्दरानिलकम्पिताः।
कल्पाभ्रपङ्क्यश्चेरुस्तदा नाकम्पत द्रुमः॥ ८॥

क्षीराब्धौ लोलस्य मन्दराद्रेः कन्दरानिलैरिव कम्पिताः॥ ८॥

यदा समन्ततो मेरुः कालनेमिभुजान्तरे।
किंचिदुन्मूलितोऽतिष्ठत्तदा नाकम्पत द्रुमः॥ ९॥

कालनेमिभुजान्तरे प्रकम्पितस्तारकामये संग्रामे प्रसिद्धः॥ ९॥

98177 पक्षीशपक्षपवना अमृताक्रान्तिसंगरे ।
98178 यदा ववुः पतत्सिद्धास्तदायं नापतद्द्रुमः ॥ १० ॥
98179
98180 अमृताक्रान्तिरमृताहरणं तदर्थे संगरे । पतन्तः सिद्धा येभ्यः ॥ १० ॥
98181
98182 यदा शेषाकृतिं रुद्रो नसमाप्तैकचेष्टिताम् ।
98183 ययौ गरुत्मान्ब्रह्माण्डं तदा नाकम्पत द्रुमः ॥ ११ ॥
98184
98185 गरुडस्य जातमात्रस्य सर्वे लोकाः प्रकम्पिताः । प्रकम्पिता मही सर्वा सप्तद्वीपाश्च
98186 कम्पिताः । तदुत्पातान्निमज्जन्तीं भुवं नावमिवाम्भसि । दधौ सहस्रैः शिरसां
98187 संकर्षणवपुर्हरः ॥ इति कथामनुसृत्याह-यदेति । रुद्रः संकर्षणरुद्रः ।
98188 अद्यापि न समाप्तं एकं भूमिधारणलक्षणं चेष्टितं चरित्रं
98189 यस्यास्तथाविधां शेषाकृतिं यदा ययौ यदा चोत्प्लुत्य गरुत्मान् ब्रह्माण्डं
98190 ययौ तदापि नाकम्पतेत्यर्थः ॥ ११ ॥
98191
98192 यदा कल्पानलशिखाः शैलाब्धिसकलोल्बणः ।
98193 शेषः फलाभिस्तत्याज तदा नाकम्पत द्रुमः ॥ १२ ॥
98194
98195 शैलानामब्धीनां सकलानां प्राणिनां चोल्बणा दुःसहाः कल्पानलशिखाः
98196 फणाभिर्मुखैस्तत्याज उज्जगार । संकर्षणमुखाग्निनैवान्ते प्रलयस्य पुराणेषु
98197 प्रसिद्धेः ॥ १२ ॥
98198
98199 एवंरूपे द्रुमवरे तिष्ठतामाप्दः कुतः ।
98200 अस्माकं मुनिशार्दूल दौःस्थित्येन किलापदः ॥ १३ ॥
98201
98202 दौःस्थित्येन दुष्टस्थाननिवासेन ॥ १३ ॥
98203
98204 श्रीवसिष्ठ उवाच ।
98205
98206 कल्पान्तेषु महाबुद्धे वहत्सूत्पातवायुषु ।
98207 प्रपतत्स्विन्दुभार्केषु कथं तिष्ठसि विज्वरः ॥ १४ ॥
98208
98209 इन्दौ भेषु नक्षत्रेष्वर्केषु च प्रपतत्सु । तथा च तदानीं प्रलये भूलोकान्तस्य
98210 दाहान्न मेरुकल्पवृक्षादिभिस्त्राणप्रत्याशेति भावः ॥ १४ ॥
98211
98212 भुशुण्ड उवाच ।
98213
98214 यदा पपात कल्पान्ते व्यवहारो जगत्स्थितौ ।
98215 कृतघ्न इव सन्मित्रं तदा नीडं त्यजाम्यहम् ॥ १५ ॥
98216
98217 कल्पान्ते सहस्रमहायुगपर्यन्ते ॥ १५ ॥
98218
98219 आकाश एव तिष्ठामि विगताखिलकल्पनः ।
98220 स्तब्धप्रकृतिसर्वाङ्गो मनो निर्वासनं यथा ॥ १६ ॥
98221
98222 स्तब्धप्रकृतीनि निश्चलस्वभावानि सर्वाङ्गानि यस्य ॥ १६ ॥
98223
98224 प्रतपन्ति यदादित्याः शकलीकृतभूधराः ।
98225 वारुणीं धारणां बद्ध्वा तदा तिष्ठामि धीरधीः ॥ १७ ॥
98226
98227 सामान्यत उक्तामाकाशे स्थितिं धारणाभेदैर्विशिष्य प्रपञ्चयति-प्रतपन्तीति ।
98228 अत्यन्तशीतलरार्वदिङ्गण्डलव्याप्यपरिच्छेद्यजलात्मा वरुण एवाहमस्मीति चित्ते

98229 निरन्तरं धारणं वारुणीधारणेत्युच्यते। तया हि वरुणमात्मानं सदा मन्यत इति
98230 । पार्वत्यादिधारणा अप्येवमेवोह्याः। पृथिव्यादिपञ्चभूतधारणाप्रकारं
98231 वसिष्ठः स्वयमेवोत्तरार्धे विस्तरेण वक्ष्यति॥ १७॥
98232
98233 यदा शकलिताद्रीन्द्रा वान्ति प्रलयवायवः।
98234 पार्वतीं धारणां बद्ध्वा खे तिष्ठाम्यचलं तदा॥ १८॥
98235
98236 अचलमिति क्रियाविशेषणम्॥ १८॥
98237
98238 जगद्गलितमेर्वादि यात्येकार्णवतां यदा।
98239 वायवीं धारणां बद्ध्वा संप्लवेऽचलधीस्तदा॥ १९॥
98240
98241 चले वायावेवात्मधीर्यस्य तथाविधः सन् नभसि संप्लवे॥ १९॥
98242
98243 ब्रह्माण्डपारमासाद्य तत्त्वान्ते विमले पदे।
98244 सुषुप्तावस्थया तावत्तिष्ठाम्यचलरूपया॥ २०॥
98245
98246 क्रियत्कालं तथा संप्लवसे तत्राह-ब्रह्माण्डेति। ब्रह्माण्डस्य
98247 स्थूलसूक्ष्मसमष्टेः पारं परमावधिभूतमव्याकृतमासाद्य तत्त्वानां
98248 चतुर्विंशतीनां षड्विंशतीनां षट्त्रिंशतां वा नामादिप्राणान्तानां वा अन्ते
98249 भूमाख्ये पदे सुषुप्तवदेकरसनिर्विकल्पसमाध्यवस्थया॥ २०॥
98250
98251 यावत्पुनः कमलजः सृष्टिकर्मणि तिष्ठति।
98252 तत्र प्रविश्य ब्रह्माण्डं तिष्ठामि विहगालये॥ २१॥
98253
98254 कियत्कालं तादृशसमाधौ स्थितिरिति चेत्तत्राह-यावदिति। तत्र पुनः
98255 सृष्टिकर्मणि विहगानामस्माकमालये एतत्कल्पवृक्षस्थानापन्ने तिष्ठामि॥ २१॥
98256
98257 श्रीवसिष्ठ उवाच।
98258
98259 यथा तिष्ठसि पक्षीन्द्र धारणाभिरखण्डितः।
98260 कल्पान्तेषु तथा कस्मान्नान्ये तिष्ठन्ति योगिनः॥ २२॥
98261
98262 अन्येऽपि योगिनस्तथा कस्मान्न तिष्ठन्ति किमर्थमाधिकारिकशरीरान्तरं मुक्तिं वा
98263 गच्छन्ति। तेनैव शरीरेण त्वमिव कुतो न तिष्ठन्तीत्यर्थः॥ २२॥
98264
98265 भुशुण्ड उवाच।
98266
98267 ब्रह्मन्नियतिरेषा हि दुर्लङ्घ्या पारमेश्वरी।
98268 मयेदृशेन वै भाव्यं भाव्यमन्यैस्तु तादृशैः॥ २३॥
98269
98270 अत्र तत्तत्प्रबलप्रारब्धानुसारिणी सत्यसंकल्परूपा ईश्वरनियतिरेव
98271 व्यवस्थाहेतुर्नान्येत्याह-ब्रह्मन्निति॥ २३॥
98272
98273 न शक्यते तोलयितुमवश्यं भवितव्यता।
98274 यद्यथा तत्तथैतद्धि स्वभावस्यैव निश्चयः॥ २४॥
98275
98276 तोलयितुं इदमित्थमेवेति बुद्ध्या परिच्छेत्तुम्। यथा यादृशप्रारब्धोपनतं
98277 तत्तथैव। स्वभावस्य नियतेः॥ २४॥
98278
98279 मत्संकल्पवशेनैव कल्पे कल्पे पुनः पुनः।
98280 अस्मिन्नेव गिरेः शृङ्गे तरुरित्थं भवत्ययम्॥ २५॥

98281
98282 प्रतिकल्पमेतत्तरुनिर्माणेऽपि भोजकादृष्टमूलभूतमत्संकल्प एव
98283 निमित्तमित्याह-मदिति ॥ २५ ॥
98284
98285 श्रीवसिष्ठ उवाच ।
98286
98287 अत्यन्तमोक्षदीर्घायुर्भवान्निर्देशनायकः ।
98288 ज्ञानविज्ञानवान्धीरो योगयोग्यमनोगतिः ॥ २६ ॥
98289
98290 मोक्ष इव दीर्घमपरिच्छेद्यमायुर्यस्य । मोक्षेण जीवन्मुक्त्या वा उपलक्षितं
98291 दीर्घमायुर्यस्य । अत एव चिरंतनार्थानां निर्देशविषये नायकः श्रेष्ठः ॥ २६ ॥
98292
98293 दृष्टानेकविधानल्पसर्गसङ्गमागमः ।
98294 किं किं स्मरसि कल्याण चित्रमस्मिञ्जगत्क्रमे ॥ २७ ॥
98295
98296 दृष्टाः प्रत्येकमनेकविधा उत्पत्तयश्च येन । अत्रास्मिंस्त्वद्दृष्टे जगत्क्रमे
98297 चित्रमाश्चर्यभूतं किं किं स्मरसि तद्वदेत्यर्थः ॥ २७ ॥
98298
98299 भुशुण्ड उवाच ।
98300
98301 बृहत्तर शिलावृक्षामजाततृणवीरुधम् ।
98302 अशैलवनवृक्षौघां स्मरामीमां धरामधः ॥ २८ ॥
98303
98304 हे बृहत्तर । मेरोरधः ॥ २८ ॥
98305
98306 दशवर्षसहस्राणि दशवर्षशतानि च ।
98307 भस्मसारभरापूर्णां संस्मरामि धरामधः ॥ २९ ॥
98308
98309 अनुत्पन्नदिवाधीशामज्ञातशशिमण्डलाम् [अजात इति पाठः ।] ।
98310 अविभक्तदिवालोकां संस्मरामि धरामधः ॥ ३० ॥
98311
98312 दिवाधीशः सूर्यः मेरुप्रभामिरविभक्तः अपृथग्भूतः पृथगसन्निति यावत् ।
98313 दिवालोको दिनहेतुः प्रकाशः ॥ ३० ॥
98314
98315 मेरुरत्नतलोद्द्योतैरर्धप्रकटकोटरम् ।
98316 लोकालोकमिवाढ्याद्रिभुवनं संस्मराम्यहम् ॥ ३१ ॥
98317
98318 अर्धं प्रकटं सप्रकाशं कोटरं यस्य अत एव लोकालोकमिव स्थितम् । आढ्याः
98319 क्वचित्प्रकाशसंपन्ना अद्रयो यस्मिंस्तथाविधं भुवनम् ॥ ३१ ॥
98320
98321 प्रवृद्धासुरसंग्रामे क्षीयमाणान्तरामिह ।
98322 पलायमानामभितः संस्मरामि धरामिमाम् ॥ ३२ ॥
98323
98324 पलायमानां लक्षणया पलायमानजनाकीर्णाम् ॥ ३२ ॥
98325
98326 चतुर्युगानि चाक्रान्तामसुरैर्मत्तकाशिभिः ।
98327 दैत्यान्तःपुरतां प्राप्तां संस्मरामि धरामिमाम् ॥ ३३ ॥
98328
98329 चतुर्युगानीति कालवाचित्वादत्यन्तसंयोगे द्वितीया ॥ ३३ ॥
98330
98331 अत्यन्तान्तरितान्तान्तसमस्तापरमण्डलाम् ।
98332 अजदेवत्रयीशेषां संस्मरामि जगत्कुटीम् ॥ ३४ ॥

98333
98334 अत्यन्तमन्तरितानि समुद्रेणाच्छादितान्यन्तान्तक्रमेण समस्तान्यपरमण्डलानि
98335 मेर्वतिरिक्तदेशा यस्याम् | मेरौ च अजा ब्रह्मविष्णुरुद्राख्या देवत्रयी शिष्यत इति शेषो
98336 यस्याम् || ३४ ||
98337
98338 चतुर्युगार्धमपरं नीरन्ध्रां वनपादपैः |
98339 अदृष्टेतरनिर्माणां संस्मरामि धरामिमाम् || ३५ ||
98340
98341 चतुर्युगानामर्धं युगद्वयपर्यन्तं न दृष्टं वृक्षेतरनिर्माणं यस्याम् ||
98342 ३५ ||
98343
98344 एवं चतुर्युगं साग्रं नीरन्ध्रैरचलैर्वृताम् |
98345 अप्रवृत्तजनाचारां संस्मरामि धरामिमाम् || ३६ ||
98346
98347 साग्रं चतुर्थांशाधिकं चतुर्युगं नीरन्ध्रैर्निबिडैरचलैः पर्वतैर्वृताम् |
98348 पृथुचक्रवर्तिना हि धनुष्कोट्या पर्वतानुत्सार्य पश्चाद्भूमिः समीकृतेति
98349 पुराणेषु प्रसिद्धम् || ३६ ||
98350
98351 दशवर्षसहस्राणि मृतदैत्यास्थिपर्वतैः |
98352 आकीर्णां परितः पूर्णां संस्मरामि धरामिमाम् || ३७ ||
98353
98354 भयादन्तर्हिताशेषवैमानिकनभश्चराम् |
98355 द्यां च निर्वृक्षनिःशेषां संस्मरामि तमोमयीम् || ३८ ||
98356
98357 द्यां अन्तरिक्षादिलोकान् चकाराद्धरां निर्वृक्षनिःशेषाम् | निर्ऋक्षेति पाठे दिव
98358 एव विशेषणम् | ऋक्षाणि ताराः | तमोमयीं तमःप्रचुरामित्यप्युभयविशेषणम् ||
98359 ३८ ||
98360
98361 अनगस्त्यामगस्त्याशामेकपर्वततां गताम् |
98362 मत्ते विन्ध्यमहाशैले संस्मरामि जगत्कुटीम् || ३९ ||
98363
98364 मलयदर्दुरसह्याद्रिविभाजकाभावादेकपर्वततां गताम् | मत्ते मेरुस्पर्धया
98365 अभिवृद्धे सति || ३९ ||
98366
98367 एतांश्चान्यांश्च वृत्तान्तान्संस्मरामि बहूनपि |
98368 किं तेन बहुनोक्तेन सारं संक्षेपतः शृणु || ४० ||
98369
98370 असंख्यातान्मनून्ब्रह्मन्स्मरामि शतशो गतान् |
98371 सर्वान्संरम्भबहुलांश्चतुर्युगशतानि च || ४१ ||
98372
98373 संरम्भैः प्रभावातिशयैर्बहुलान् || ४१ ||
98374
98375 एकमेव स्वयं शुद्धं पुरुषासुरवर्जितम् |
98376 आलोकनिचयं चैकं कंचित्सर्गं स्मराम्यहम् || ४२ ||
98377
98378 आश्चर्यान्तरमाह-एकमेवेति | यदा विराड्ब्रह्माण्डशरीर उत्पन्नमात्रः
98379 स्वात्मतत्त्वं पर्यालोचयितुं कंचित्कालं समाहितचित्तोऽभूत्सावस्थात्रोच्यते | पुरुषैः
98380 सुरादिभिरसुरैश्च वर्जितम् | आलोकानां प्रकाशस्वभावानां तैजसानामेकं
98381 निचयं समष्टिं च तदात्मकं ब्रह्माण्डम् || ४२ ||
98382
98383 सुरापं ब्राह्मणं मत्तं निषिद्धसुरशूद्रकम् |
98384 बहुनाथसतीकं च कंचित्सर्गं स्मराम्यहम् || ४३ ||

98385
98386 कलियुगसर्गस्थितिं स्मरन्नाह-सुरापेति | सुरापा ब्राह्मणा यस्मिन् | निषिद्धा
98387 निन्दिताः सुरा देवा यैस्तथाविधाः शूद्रका असच्छूद्रा यस्मिन् | बहुनाथा
98388 अनेकभर्तृकाः सत्यः स्त्रियो यस्मिन् || ४३ ||
98389
98390 वृक्षनीरन्ध्रभूपीठमकल्पितमहार्णवम् |
98391 स्वयंसंजातपुरुषं कंचित्सर्गं स्मराम्यहम् || ४४ ||
98392
98393 आश्चर्यान्तरमाह-वृक्षेति | समुद्रनिर्मातुः प्रियव्रतस्योत्पत्तेः
98394 प्रागवस्थायामिदं प्रसिद्धम् | स्त्रीपुंससङ्गं विना मानस्या सृष्ट्या स्वयमेव
98395 संजाता भृग्वादिपुरुषा यस्मिन् || ४४ ||
98396
98397 अपर्वतमभूमिं च व्योमस्थामरमानवम् |
98398 अचन्द्रार्कप्रकाशाढ्यं कंचित्सर्गं स्मराम्यहम् || ४५ ||
98399
98400 भुवि जले मग्नायां जनलोकादिप्रकाशबहललोकव्यवहारमात्रोपलक्षिते काले या
98401 स्थितिस्तां स्मरन्नाह-अपर्वतमिति | व्योमस्था अमरा देवां मानवा
98402 योगसिद्धाश्च यस्मिन् || ४५ ||
98403
98404 अनिन्द्रममहीपालममध्यस्थाधमोत्तमम् |
98405 सममन्धककुप्चक्रं कंचित्सर्गं स्मराम्यहम् || ४६ ||
98406
98407 न विद्यन्ते मध्यस्था अधमा उत्तमाश्च यस्मिन् | अत एव समं अन्धानि ककुभां
98408 दिशां चक्राणि यस्मिन्निति पूर्वकल्पान्त्यमन्वन्तरान्तदशोपलक्षितजगत्स्थित्युक्तिः || ४६
98409 | |
98410
98411 सर्गप्रारम्भकलना विभागो भुवनत्रये |
98412 कुलपर्वतसंस्थानं जम्बूद्वीपं पृथक्स्थितम् || ४७ ||
98413
98414 एतत्कल्पवृत्तान्तस्मरणं तु एतत्कल्पायुषां बहूनामस्तीति प्रपञ्चयन्नाह##-
98415 बालैरपि हि तास्तात स्मर्यन्ते इत्यत्रान्वयः | आदौ सर्गप्रारम्भार्थं कलना स्रष्टुः
98416 संकल्पस्ततो भुवनत्रये द्वीपाद्यवान्तरप्रदेशभेदानां विभजनं विभागस्ततः
98417 कुलपर्वतानां संस्थानं यथायोग्यप्रदेशकल्पनं ततः पृथक्स्थितं
98418 जम्बूद्वीपं प्रविश्य ब्राह्मणादिवर्णानां तद्धर्माणां धियां
98419 तत्तद्योग्यविद्याभेदानां च सृष्टिरिति यथायोगं क्रमो बोध्यः || ४७ ||
98420
98421 वर्णधर्मधियां सृष्टिविभागो मण्डलावनेः |
98422 ऋक्षचक्रकसंस्थानं ध्रुवनिर्माणमेव च || ४८ ||
98423
98424 जन्मेन्दुभास्करादीनामिन्द्रोपेन्द्रव्यवस्थितिम् |
98425 हिरण्याक्षापहरणं वराहोद्धरणं क्षितेः || ४९ ||
98426
98427 क्षितेर्वराहेणोद्धरणम् || ४९ ||
98428
98429 कल्पनं पार्थिवानां च वेदानयनमेव च |
98430 मन्दरोन्मूलनं चाब्धेरमृतार्थं च मन्थनम् || ५० ||
98431
98432 देवदानवमनुष्यादिषु प्रत्येकं पार्थिवानां कल्पनम् | मत्स्यावतारे वेदानयनम् ||
98433 ५० ||
98434
98435 अजातपक्षो गरुडः सागराणां च संभवः |
98436 इत्यादिका याः स्मृतयः स्वल्पातीतजगत्क्रमाः |

98437 बालैरपि हि तास्तात स्मर्यन्ते तासु को ग्रहः ॥ ५१ ॥
98438
98439 स्मर्यन्त इति स्मृतयः अवश्यस्मर्तव्यार्थाः मद्दृष्टानेककल्पापेक्षया
98440 एतत्कल्पमात्रनिष्पन्नत्वात्स्वल्पा अतीतजगत्क्रमाः। बालैर्मदपेक्षया
98441 अत्यल्पवयस्कैरेतत्कल्पजैरपि भवदादिभिः स्मर्यन्त एवेत्यर्थः ॥ ५१ ॥
98442
98443 गरुडवाहनं विहगवाहनं विहगवाहनं वृषभवाहनम्।
98444 वृषभवाहनं गरुडवाहनं कलितवानहं कलितजीवितः ॥ ५२ ॥
98445
98446 कल्पान्तरेषु स्वदृष्टान्यश्चियान्तराण्यपि वदन्नुपसंहरति-गरुडवाहनमिति।
98447 कलितं प्राप्तं जीवितं दीर्घायुर्येन तथाविधः अहं एतत्कल्पे प्रसिद्धं
98448 गरुडवाहनं विहगो विहगोत्तमो हंसस्तद्वाहनं चतुर्मुखीभूय
98449 देवदैत्यादिसर्गाधिकारं निष्पादयन्तं कलितवान्दृष्टवान्। तथा विहगवाहनं
98450 ब्रह्माणं वृषभवाहनं रुद्रीभूय संहाराधिकारं कुर्वाणं कल्पितवान्।
98451 एवं वृषभवाहनं रुद्रं च गरुडवाहनं विष्णुशरीरं धृत्वा
98452 पालनाधिकारं कुर्वाणं कलितवानिति महदाश्चर्यरहस्यमेतदित्यर्थः ॥ ५२ ॥
98453
98454 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वाणप्रकरणे पू०
98455 भुशुण्डो० चिरजीवितवृत्तान्तकथनं नामैकविंशः सर्गः ॥ २१ ॥
98456
98457 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
98458 चिरजीवितवृत्तान्तकथनं नामैकविंशः सर्गः ॥ २१ ॥
98459
98460 द्वाविंशः सर्गः २२
98461
98462 भुशुण्ड उवाच।
98463
98464 ततो जगति जातेषु भगवन्युष्मदादिषु।
98465 भरद्वाजपुलस्त्यात्रिनारदेन्द्रमरीचिषु ॥ १ ॥
98466
98467 वसिष्ठस्याष्टजन्मादिसमार्धसमसर्गकाः।
98468 क्षीरोदमथनाद्याश्च भूयो दृष्टा इहोदिताः ॥
98469
98470 ततस्तदनन्तरं किंचिद्दूरेष्वतीतकालेषु तथा अद्यतनसर्गेषु जातेषु युष्मदादिषु
98471 भगीरथशुकाद्यन्तेषु स्मरणे कैव गणनेति सप्तमे सर्वेषां सप्तम्यन्तानां
98472 संबन्धः ॥ १ ॥
98473
98474 पुलहोहालकाद्येषु ऋतुभृग्वङ्गिरस्सु च।
98475 सनत्कुमारभृङ्गीशस्कन्देभवदनादिषु ॥ २ ॥
98476
98477 सनत्कुमारान्तेषु ब्रह्मर्षिषु। भृग्वङ्गिरःप्रभृतिषु सिद्धर्षिषु।
98478 स्कन्देभवदनादिषु शिवपार्षदेषु ॥ २ ॥
98479
98480 गौरीसरस्वतीलक्ष्मीगायत्र्याद्यासु भूरिषु।
98481 मेरुमन्दरकैलासहिमवद्दर्दुरादिषु ॥ ३ ॥
98482
98483 गौर्यादिषु तच्छक्तिषु। मेर्वादिषु गिरिषु ॥ ३ ॥
98484
98485 हयग्रीवहिरण्याक्षकालनेमिबलादिषु।
98486 दिरण्यकशिपुक्राथबलिप्रह्लादकादिषु ॥ ४ ॥
98487
98488 हयग्रीवादिषु दान्वेषु। हिरण्याक्षादिषु दैत्येषु ॥ ४ ॥

98489

98490 शिबिन्यङ्कुपृथूलाख्यवैन्यनाभागकेलिषु।
98491 नलमान्धातृसगरदिलीपनहुषादिषु॥ ५॥
98492

98493 शिविप्रभृतिषु राजसु॥ ५॥
98494

98495 आत्रेयव्यासवाल्मीकिशुकवात्स्यायनादिषु।
98496 उपमन्युमणीमङ्कीभगीरथशुकादिषु॥ ६॥
98497

98498 आत्रेयादिषु मुनिषु॥ ६॥
98499

98500 अल्पकातीतकालेषु किंचिद्दूरेषु केषुचित्।
98501 तथाद्यतनसर्गेषु स्मरणे गणनैव का॥ ७॥
98502

98503 गणनैव केति न तत्र विस्मरणसंभावनाप्यस्तीति भावः॥ ७॥
98504

98505 मुने ते ब्रह्मपुत्रस्य जन्माष्टकमिदं किल।
98506 संस्मराम्यष्टमे सर्गे तस्मिंस्त्वं मम संगतः॥ ८॥
98507

98508 अष्टमे सर्गे जन्मनि कल्पे वा मम संगतो मया सह मिलितः अभूः॥ ८॥
98509

98510 कदाचिज्जायसे व्योम्नः कदाचिज्जायसे जलात्।
98511 कदाचिद्वायुतः शैलात्कदाचिज्जायसेऽनलात्॥ ९॥
98512

98513 किमष्टस्वपि जन्मसु ब्रह्मपुत्र एव नेत्याह-कदाचिदिति॥ ९॥
98514

98515 यादृशो यादृशाचारो यादृक्संस्थानदिग्गणः।
98516 सर्गोऽयं तादृशानेव त्रीन्सर्गान्संस्मराम्यहम्॥ १०॥
98517

98518 सर्वेषु कल्पेषु तत्तदधिकारिपुरुषाणां समाननामरूपत्वेऽपि न सर्वेषां
98519 पदार्थानां सर्वसंनिवेशाचारसाम्यनियमः किंतु काकतालीयन्यायेन
98520 कदाचित्साम्यमित्याशयेनाह-यादृश इति॥ १०॥
98521

98522 एकरूपाखिलाचारसंनिवेशधरामरान्।
98523 समकालान्स्थिरस्थैर्यान्दशसर्गान्स्मराम्यहम्॥ ११॥
98524

98525 समकालान् तुल्यायुषः। स्थिराणि असुरैरविचालितानि स्थैर्याणि
98526 नियतकालतत्तत्पदावस्थानानि देवानां येषु॥ १॥
98527

98528 अन्तर्धानं गता धात्री वारपञ्चकमुद्धृता।
98529 मुने पञ्चसु सर्गेषु कूर्मेणैव पयोनिधेः॥ १२॥
98530

98531 आचारसाम्यमुक्त्वा तद्वैषम्यमाह-अन्तर्धानमिति। अन्तर्धानं जले निमज्जनेन
98532 तिरोधानम्। धात्री भूः। कूर्मेणैव न वराहेण॥ १२॥
98533

98534 मन्दराकर्षणावेगपर्याकुलसुरासुरम्।
98535 स्मरामि द्वादशं चेदममृताम्भोधिमन्थनम्॥ १३॥
98536

98537 सर्वौषधिरसोपेतां बलिग्राहस्तदा दिवः।
98538 वारत्रयहिरण्याक्षो नीतवान्वसुधामधः॥ १४॥
98539

98540 दिवः स्वर्गाद्बलिं करं गृह्णातीति बलिग्राहः। करदीकृतसर्वदेवगण इति यावत्।

98541 अधः पातालम् ॥ १४ ॥
98542
98543 रेणुकात्मजतां गत्वा षष्टवारमिमं हरिः ।
98544 बहुसर्गान्तरेणापि चकार क्षत्रियक्षयम् ॥ १५ ॥
98545
98546 बहुभिः परशुरामावतारशून्यैः सर्गैरन्तरेण व्यवधानेनापि ॥ १५ ॥
98547
98548 शतं कलियुगानां च हरेर्बुद्धदशाशतम् ।
98549 शौकराजतयैवाप्तं स्मरामि मुनिनायक ॥ १६ ॥
98550
98551 शौकः कीकटदेशविशेषस्तद्राजतया । शुद्धोदनाख्यतद्राजपुत्रतयेति यावत् ॥ १६ ॥
98552
98553 त्रिंशत्त्रिपुरविक्षोभान्द्वौ दक्षाध्वरसंक्षयौ ।
98554 दशशक्रविघातांश्च चन्द्रमौलेः स्मराम्यहम् ॥ १७ ॥
98555
98556 त्रिंशत्सु कल्पेषु त्रिंशत्संख्याकांस्त्रिपुराणां विक्षोभान्दाहान् । प्रतिकल्पं
98557 स्वायंभुवेऽन्तरे चाक्षुषे च प्रसिद्धौ द्वौ दक्षाध्वरसंक्षयौ । दशानां
98558 शक्राणां चन्द्रमौलेः कृतापराधानां पदात्प्रच्याव्य गिरिगुहासु
98559 निरोधलक्षणान्सवज्रभुजस्तम्भलक्षणान्वा विधातान्दण्डान् ॥ १७ ॥
98560
98561 बाणार्थमष्टौ संग्रामाञ्ज्वरप्रमथमन्त्रकान् ।
98562 विक्षोभितसुरानीकान्स्मरामि हरिशर्वयोः ॥ १८ ॥
98563
98564 ज्वराणां माहेश्वरवैष्णवाख्यज्वरभेदानां प्रमथानां च मन्त्रकान्
98565 आमन्त्रयितृन् । शौर्योत्साहजननेन प्रवर्तकानिति यावत् । क्षुरप्रमथमन्त्रकान् इति
98566 पाठे तु क्षुरप्रान् बाणविशेषान्मथ्नन्ति छिन्दन्तीति क्षुरप्रमथास्तथाविधा
98567 मन्त्रका मन्त्रास्त्राणि येष्वित्यर्थः ॥ १८ ॥
98568
98569 युगंप्रति धियां पुंसां न्यूनाधिकतया मुने ।
98570 क्रियाङ्गपाठवैचित्र्ययुक्तान्वेदान्स्मराम्यहम् ॥ १९ ॥
98571
98572 युगं प्रति युगे युगे । कर्मप्रवचनीयेन प्रतिना वीप्सा द्योत्यते ।
98573 पुंसामध्येतृपुरुषाणां धियां बुद्धीनां न्यूनाधिकतया
98574 ब्रह्मचर्यगुरुशुश्रूषाभूमिशयनादिक्रियाणां शिक्षाद्यङ्गानां
98575 सावधानस्वरवर्णाद्युच्चारणलक्षणपाठानां च
98576 न्यूनाधिकताकृतप्रभाववैचित्र्यैर्युक्तान् ॥ १९ ॥
98577
98578 एकार्थानि समग्राणि बहुपाठानि मेऽनघ ।
98579 पुराणानि प्रवर्तन्ते प्रसृतानि युगंप्रति ॥ २० ॥
98580
98581 प्रतिद्वापरान्तनिर्मातृभेदाद्बहुपाठानि ॥ २० ॥
98582
98583 पुनस्तानेव तानेवमन्यानपि युगे युगे ।
98584 वेदादिवित्प्रचितानितिहासान्स्मराम्यहम् ॥ २१ ॥
98585
98586 वेदादिविद्भिर्व्यासवाल्मीकिप्रभृतिभिः प्रचितान् पुनः पुनस्तानेव
98587 भारतरामायणादीनितिहासान् ॥ २१ ॥
98588
98589 इतिहासं महाश्चर्यमन्यं रामायणाभिधम् ।
98590 ग्रन्थलक्षप्रमाणं च ज्ञानशास्त्रं स्मराम्यहम् ॥ २२ ॥
98591
98592 महारामायणाभिधं ब्रह्मणा वसिष्ठविश्वामित्रादिभ्य उपदिष्टं

98593 ज्ञानशास्त्रम् ॥ २२ ॥
98594
98595 रामवद्व्यवहर्तव्यं न रावणविलासवत् ।
98596 इति यत्र धियां ज्ञानं हस्ते फलमिवार्पितम् ॥ २३ ॥
98597
98598 कृतं वाल्मीकिना चैतदधुना यत्करिष्यति ।
98599 अन्यच्च प्रकटं लोके स्थितं ज्ञास्यसि कालतः ॥ २४ ॥
98600
98601 यदन्यच्च वसिष्ठरामसंवादरूपं महारामायणं द्वात्रिंशत्सहस्रमितं
98602 करिष्यति तदपि दिव्यज्ञानबलादनुभूतं स्मरामि त्वमपि कालतो ज्ञास्यसि ॥ २४ ॥
98603
98604 वाल्मीकिनाम्ना जीवेन तेनैवान्येन वा कृतम् ।
98605 एतच्च द्वादशं वारं क्रियते विस्मृतिं गतम् ॥ २५ ॥
98606
98607 एतद्वसिष्ठरामसंवादरूपं तेन पूर्वकल्पीयेनान्येन वा वाल्मीकिनाम्ना जीवेन
98608 प्राक्कृतमेव विस्मृतिं व्यवहर्तृरूपरोच्छेदेनोच्छेदं गतं सांप्रतं
98609 द्वादशानां पूरणं द्वादशं वारं क्रियते ॥ २५ ॥
98610
98611 द्वितीयमेतस्य समं भारतं नाम नामतः ।
98612 स्मरामि प्राक्तनव्यासकृतं जगति विस्मृतम् ॥ २६ ॥
98613
98614 व्यासाभिधेन जीवेन तेनैवान्येन वा कृतम् ।
98615 एतत्तु सप्तमं वारं क्रियते विस्मृतिं गतम् ॥ २७ ॥
98616
98617 आख्यानकानि शास्त्राणि निवृत्तानि युगंप्रति ।
98618 विचित्रसंनिवेशानि संस्मरामि मुनीश्वर ॥ २८ ॥
98619
98620 भूयस्तान्येव तान्येव तथान्यानि युगे युगे ।
98621 साधो पदार्थजालानि प्रपश्यामि स्मरामि वै ॥ २९ ॥
98622
98623 राक्षसक्षतये विष्णोर्महीमवतरिष्यतः ।
98624 अधुनैकादशं जन्म रामनाम्नो भविष्यति ॥ ३० ॥
98625
98626 अधुना संनिहितत्रेतायुगे ॥ ३० ॥
98627
98628 नारसिंहेन वपुषा हिरण्यकशिपुं हरिः ।
98629 जघान वारत्रितयं मृगेन्द्र इव वारणम् ॥ ३१ ॥
98630
98631 वसुदेवगृहे विष्णोर्भुवो भारनिवृत्तये ।
98632 अधुना षोडशं जन्म भविष्यति मुनीश्वर ॥ ३२ ॥
98633
98634 अधुना एतच्चतुर्युगान्तर्गतद्वापरान्ते ॥ ३२ ॥
98635
98636 जगन्मयी भ्रान्तिरियं न कदाचन विद्यते ।
98637 विद्यते तु कदाचिच्च जलबुद्बुदवत्स्थिता ॥ ३३ ॥
98638
98639 बहिरिदं जायत इति भ्रान्तिरेवेत्याशयेनाह-जगन्मयीति ॥ ३३ ॥
98640
98641 दृश्यभ्रान्तिरनित्येयमन्तस्था संविदात्मनि ।
98642 जायते लीयते चाशु लोला वीचिरिवाम्भसि ॥ ३४ ॥
98643
98644 समैकसंनिवेशानि बहूनि विषमाणि च ।

98645 तथार्धसमरूपाणि त्रिजगन्ति स्मराम्यहम् ॥ ३५ ॥
98646
98647 प्रतिसर्गं लोकादीनां संनिवेशादिसाम्यनियमोऽप्यौत्सर्गिक इत्याह-समेति ॥ ३५ ॥
98648
98649 तान्येव तादृक्कर्माणि तथान्याचरणानि च ।
98650 तत्कर्माणि तथान्यानि भूतानीह स्मराम्यहम् ॥ ३६ ॥
98651
98652 मन्वाद्यधिकारिपुरुषसंनिवेशचारित्र्यादिष्वपि साम्यमौत्सर्गिकमेवेत्याह##-
98653
98654 प्रतिमन्वन्तरं ब्रह्मन्विपर्यस्ते जगत्क्रमे ।
98655 संनिवेशेऽन्यथाजाते प्रयाते संश्रुते जने ॥ ३७ ॥
98656
98657 संश्रुते प्रख्याते ॥ ३७ ॥
98658
98659 ममान्यान्येव मित्राणि अन्य एव च बन्धवः ।
98660 अन्य एव नवा भृत्या अन्य एव समाश्रयाः ॥ ३८ ॥
98661
98662 अन्य एव समाश्रया निवासाः ॥ ३८ ॥
98663
98664 कदाचिदहमेकान्ते विन्ध्यकच्छकृतालयः ।
98665 कदाचित्सह्यनिलयः कदाचिद्दर्दुरालयः ॥ ३९ ॥
98666
98667 समाश्रयभेदमेव प्रपञ्चयति-कदाचिदित्यादिना ॥ ३९ ॥
98668
98669 कदाचिद्धिमवद्वासी कदाचिन्मलयाचलः ।
98670 कदाचित्प्राक्तनेनैव संनिवेशेन भूधरम् ॥ ४० ॥
98671
98672 मलये अचलः स्थिरः ॥ ४० ॥
98673
98674 चूतवृक्षे च शाखायां प्राप्य नीडं करोम्यहम् ।
98675 अनाद्यन्तेषु यातेषु युगेषु मुनिनायक ॥ ४१ ॥
98676
98677 प्राप्येत्यस्य प्राक्तनेन भूधरमित्यनेनान्वयः । अनाद्यन्तेषु असंख्येयेषु ॥ ४१ ॥
98678
98679 प्राक्तनेनैव जातोऽयं संनिवेशेन पादपः ।
98680 देहं त्यक्त्वा सुखं साधो नातः परिणतिं गतः ॥ ४२ ॥
98681
98682 अतः प्राक्तनसंनिवेशात्परिणतिं संनिवेशान्तरं न गतः । तर्हि त्वमिव पादपोऽपि
98683 किं चिरजीवी नेत्याह-देहं त्यक्त्वेति ॥ ४२ ॥
98684
98685 तदीयेनैव जातोऽयं संनिवेशेन पादपः ।
98686 ताते जीवति यैवाभूच्छोभास्य सुतरोस्तथा ॥ ४३ ॥
98687
98688 एवं च पादपजीवैक्येऽपि तात्पर्यं किंतु शोभासंनिवेशसाम्यादभेदोपचार इति
98689 सूचयन्नाह-तदीयेनेति । ताते चण्डे ॥ ४३ ॥
98690
98691 कृतप्राक्संनिवेशोऽयमहं स्थितिमिहागतः ।
98692 नेहाभूदुत्तरा पूर्वं ककुन्नायं च भूधरः ॥ ४४ ॥
98693
98694 एवं दिग्भूधरयोरैक्यप्रत्यभिज्ञापि संनिवेशसाम्यादेवेत्याह-नेहेति ॥ ४४ ॥
98695
98696 दिगुत्तराभूदन्येयं पूर्वमेव महीधरः ।

98697 एकैकदेहसंस्थानवीतब्रह्मनिशागमः ॥ ४५ ॥
98698
98699 पूर्वं उत्तरा दिक् अन्यैवाभूदियमन्या । एवं भूधरोऽप्यन्य
98700 एवाभूदित्यावृत्तिविपरिणामाभ्यामन्वयः । तर्हि तथैव त्वमपि प्रतिकल्पमन्यः
98701 समानसंनिवेशश्च किं न स्यास्तत्राह-एकेति । अहं एकश्चासौ एकेनैव
98702 देहसंस्थानेन वीता ब्रह्मनिशागमा यस्य तथाविधः ॥ ४५ ॥
98703
98704 ध्यानान्ते तत्त्व एवैनं सर्गमालोक्य वेव्यहम् ।
98705 अर्कादिर्क्षसंचारान्मेर्वादिस्थानका दिशः ॥ ४६ ॥
98706
98707 तत्कुतस्तत्राह-ध्यानान्त इति । यतः कल्पान्ते प्रागुक्तधारणापूर्वकं
98708 स्थिरीकृतस्य ध्यानस्य निर्विकल्पकसमाधेरन्ते अवसाने पुनर्जातमेनं सर्गमालोक्य
98709 स एवायं मेरुः स एवायं पादप इति प्रत्यभिज्ञायमाने तत्त्वे एव एनं सर्गं वेद्मि
98710 । यद्यहमन्यः स्यां तत्तावगाहिनी प्रत्यभिज्ञैव न स्यादिति भावः । एवं
98711 पूर्वसंस्थानादन्यथा संस्थानताग्रहणादपि तद्द्रष्टुर्मम न नाश
98712 इत्याशयगर्भा दिगुत्तराभूदन्येयम् इत्युक्तिमुपपादयति-अर्कादिरिति । दिशः
98713 प्राच्यादयः अर्कसोमादेर्क्षाणां नक्षत्राणामुदयास्तमयादिनियतसंचाराच्च
98714 नियतोत्तरदिक्स्थितमेर्वादिस्थानकाः प्रसिद्ध्यन्ति ॥ ४६ ॥
98715
98716 संस्थानमन्यथा तस्मिन्स्थिते यान्ति दिशोऽन्यथा ।
98717 न सन्नासज्जगन्मन्ये भ्रमयन्केवलं धियः ॥ ४७ ॥
98718
98719 सर्गान्तरे तु ता दिशस्तस्मिन्मेरावेवान्यथा प्रकारान्तरेण स्थिते सति
98720 चित्रपटलिखितमेर्वाद्यधीना दिशस्तत्परिवर्तन इव अन्यथा संस्थानं
98721 व्यत्यस्तस्थितिं यान्तीत्यर्थः । एवं दिशामनियतस्थित्या मिथ्यात्वे
98722 तदनुसारिनियतावयवसंनिवेश घटितस्य सर्वस्यापि जगतोऽनिर्वचनीयतालक्षणं
98723 मिथ्यात्वं प्रतिभातीत्याह-न सदित्यादिना ॥ ४७ ॥
98724
98725 आत्मस्पन्दचमत्कारविभवोऽयं विजृम्भते ।
98726 पुत्रः पितृत्वमायाति मित्रं यात्यरितां तथा ॥ ४८ ॥
98727
98728 आत्मनः स्पन्दचमत्कारो मायिकविक्षेपशक्तिस्तद्विभवः । जागतेषु पदार्थेषु
98729 दिक्कृतव्यवस्थाव्यत्यास इव कालकृतव्यवस्थाव्यत्यासोऽपि दृश्यत
98730 इत्येतत्प्रपञ्चयन्दर्शयति-पुत्र इत्यादिना ॥ ४८ ॥
98731
98732 स्त्रीत्वं च शतशो यातान्पुंसश्चैव स्मराम्यहम् ।
98733 कलौ कृतयुगाचारान्कृते कलियुगस्थितिम् ॥ ४९ ॥
98734
98735 त्रेतायां द्वापरे चैव संस्मरामि मुनीश्वर ।
98736 अदृष्टवेदवेदार्थान्स्वसंकेतविहारिणः ॥ ५० ॥
98737
98738 त्रेतायां द्वापरे च कृतयुगाचारान्कलियुगस्थितिं चेत्यनुकृष्यान्वयः ।
98739 कलियुगस्थितिमेव संक्षिप्य विवृणोति-अदृष्टेति ॥ ५० ॥
98740
98741 सर्गान्निरर्गलाचारान्क्वचित्कांश्चित्स्मराम्यहम् ।
98742 ध्यातरि ब्रह्मणो ब्रह्मन्ससुरासुरमानुषम् ॥ ५१ ॥
98743
98744 क्वचित्कृतयुगादावपि । तथाहि । कृतयुगेऽपि पुष्करेण बलस्य निकृत्याद्यूते जयो
98745 विनापराधमेकवस्त्रेण सभार्यस्य निर्वासनं च प्रसिद्धम् ॥ ५१ ॥
98746
98747 चतुर्युगसहस्रान्ते जगच्छून्यं स्मराम्यहम् ।
98748 मनोमनननिर्माणान्पार्थिवाकारवर्जितान् ।

98749 व्याप्तान्वायुमयैर्भूतैर्दश सर्गान्स्मराम्यहम् ॥ ५२ ॥
98750
98751 हे ब्रह्मन् चतुर्युगसहस्रस्यान्ते अवसाने वेधसि जगद्रूपसंहारक्रमेणाप्सु शयित्वा
98752 योगनिद्राच्छलेन ब्रह्मणः परमात्मनो ध्यातरि सति ससुरासुरमानुषं
98753 जगच्छून्यमसत्तामिवापन्नं स्मरामीत्यर्थः। एवं प्रलीनेऽपि
98754 जगत्यैन्दवमनोमनननिर्माणान् प्रागुक्तान् वातमयैर्वायुप्रायैर्भूतैः
98755 प्राणिभिर्व्याप्तान् ॥ ५२ ॥
98756
98757 विचित्रसंस्थानविशेषदेशान्विचित्रकार्याकुलभूतकोशान्।
98758 विचित्रविन्यासविलासवेषान्स्मराम्यहं ब्रह्मदिनेष्वशेषान् ॥ ५३ ॥
98759
98760 उक्तं सर्वं संक्षिप्योपसंहरति-विचित्रेति। अहं ब्रह्मदिनेषु कल्पेषु
98761 विचित्रस्थानविशेषयुक्ता देशा येषु तथाविधान्विचित्रकार्याकुलभूतानां
98762 कोशभूतान् अशेषान्सर्वान्सर्गान्स्मरामीत्यर्थः ॥ ५३ ॥
98763
98764 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाणप्रकरणे पू०
98765 भुशुं० चिरजीवितवर्णनं नाम द्वाविंशः सर्गः ॥ २२ ॥
98766
98767 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
98768 चिरजीवितवर्णनंन् नाम द्वाविंशतितमः सर्गः ॥ २२ ॥
98769
98770 त्रयोविंशः सर्गः २३
98771
98772 श्रीवसिष्ठ उवाच।
98773
98774 अथासौ वायसश्रेष्ठो जिज्ञासार्थमिदं मया।
98775 भूयः पृष्टो महाबाहो कल्पवृक्षलताग्रके ॥ १ ॥
98776
98777 त्यक्तेषु येषु दोषेषु नरं मृत्युर्न बाध्यते।
98778 यत्परं च मनः कार्यं तत्सर्वमिह कीर्त्यते ॥
98779
98780 इदं वक्ष्यमाणम्। प्रच्छेर्गौणे कर्मणि क्तः ॥ १ ॥
98781
98782 चरतां जगतः कोशे व्यवहारवतामपि।
98783 कथं विहगराजेन्द्र देहं मृत्युर्न बाधते ॥ २ ॥
98784
98785 कथं कीदृशदोषत्यागगुणार्जनप्रकारेण ॥ २ ॥
98786
98787 भुशुण्ड उवाच।
98788
98789 जानन्नपि हि सर्वज्ञ ब्रह्मञ्जिज्ञासयेव माम्।
98790 पृच्छसि प्रभवो नित्यं भृत्यं वाचालयन्ति हि ॥ ३ ॥
98791
98792 वाचालयन्ति मुखरयन्ति। मृत्यवाक्पटुतां प्रश्नमुखेन ख्यापयन्तीति यावत् ॥ ३ ॥
98793
98794 तथापि यत्पृच्छसि मां तत्ते प्रकथयाम्यहम्।
98795 आज्ञाचरणमेवाहुर्मुख्यमाराधनंन् सताम् ॥ ४ ॥
98796
98797 दोषमुक्ताफलप्रोक्ता वासनातन्तुसंततिः।
98798 हृदि न ग्रथिता यस्य मृत्युस्तं न जिघांसति ॥ ५ ॥
98799
98800 तत्र सर्वदोषाधारवासनानाश एव मुख्यो मृत्युतरणोपाय इत्याह-दोषेति।

98801 यथा त्यक्तहाराद्याभरणंन् चोरा न जिघांसन्ति तद्वदित्यर्थाद्गम्यते ॥ ५ ॥
98802
98803 निःश्वासवृक्षक्रकचाः सर्वदेहलताघुणाः ।
98804 आधयो यं न भिन्दन्ति मृत्युस्तं न जिघांसति ॥ ६ ॥
98805
98806 निःश्वासलक्षणा देहवृक्षच्छेदनाः क्रकचा येभ्यः । सर्वासां देहलतानां
98807 देहवृक्षशाखाभूतहस्तपादादीनां घुणाः काष्ठकीटभूताः आधयो मनो
98808 व्यथाः ॥ ६ ॥
98809
98810 शरीरतरुसर्पौघाश्चिन्तार्पितशिरःफणाः ।
98811 आशा यं न दहन्त्यन्तर्मृत्युस्तं न जिघांसति ॥ ७ ॥
98812
98813 शरीरतरोः कोटरस्थसर्पौघभूताः अत एव चिन्तालक्षणा अर्पिताः शिरसि फणा यैः ।
98814 न दहन्ति अर्थात्स्वविषाग्निना ॥ ७ ॥
98815
98816 रागद्वेषविषापूरः स्वमनोबिलमन्दिरः ।
98817 लोभव्यालो न भुङ्क्ते यं मृत्युस्तं न जिघांसति ॥ ८ ॥
98818
98819 न भुङ्क्ते न दशति ॥ ८ ॥
98820
98821 पीताशेषविवेकाम्बुः शरीराम्भोधिवाडवः ।
98822 न निर्दहति यं कोपस्तं मृत्युर्न जिघांसति ॥ ९ ॥
98823
98824 शरीराम्भोधेर्वाडवो वडवाग्निभूतः । अत एव पीताशेषविवेकाम्बुः ॥ ९ ॥
98825
98826 यन्त्रं तिलानां कठिनं राशिमुग्रमिवाकुलम् ।
98827 यं पीडयति नानङ्गस्तं मृत्युर्न जिघांसति ॥ १० ॥
98828
98829 आकुलं व्यग्रम् । तिलानां राशिं कर्मयन्त्रं कर्त्रिव उग्रमिति क्रियाविशेषणम् ॥ १० ॥
98830
98831 एकस्मिन्निर्मले येन पदे परमपावने ।
98832 संश्रिता चित्तविश्रान्तिस्तं मृत्युर्न जिघांसति ॥ ११ ॥
98833
98834 ब्रह्मात्मविश्रान्तिरेवात्यन्तिकमृत्युजयोपाय इत्याशयेनाह-एकस्मिन्निति ॥ ११ ॥
98835
98836 वपुःखण्डाभिपतितं शाखामृगमिवोदितम् ।
98837 न चञ्चलं मनो यस्य तं मृत्युर्न जिघांसति ॥ १२ ॥
98838
98839 वपुर्लक्षणे पुष्पितवनखण्डे अभिपतितः शाखामृग इव उदितमूर्जितम् ।
98840 छान्दसं क्लीवत्वम् ॥ १२ ॥
98841
98842 एते ब्रह्मन्महादोषाः संसारव्याधिहेतवः ।
98843 मनागपि न लुम्पन्ति चित्तमेकं समाहितम् ॥ १३ ॥
98844
98845 दोषानुपसंहरंस्तज्जयहेतुगुणान्वक्तुं प्रथमं समाधानमेव मुख्यो गुण
98846 इत्याशयेन तं प्रशंसति-एते इत्यादिना ॥ १३ ॥
98847
98848 आधिव्याधिसमुत्थानि चलितानि महाभ्रमैः ।
98849 न विलुम्पन्ति दुःखानि चित्तमेकं समाहितम् ॥ १४ ॥
98850
98851 नास्तमेति न चोदेति न संस्मृतिर्न विस्मृतिः ।
98852 न सुप्तं न च जाग्रत्स्याच्चित्तं यस्य समाहितम् ॥ १५ ॥

98853
98854 अन्धीकृतहृदाकाशाः कामकोपविकारजाः ।
98855 चिन्ता न परिहिंसन्ति चित्तं यस्य समाहितम् ॥ १६ ॥
98856
98857 न ददाति न चादत्ते न जहाति न याचते ।
98858 कुर्वदेव च कार्याणि चित्तं यस्य समाहितम् ॥ १७ ॥
98859
98860 कर्माणि कुर्वत् यथाशास्त्रं व्यवहरदपि ॥ १७ ॥
98861
98862 ये दुरर्था दुरारम्भा दुर्गुणा दुरुदाहृताः ।
98863 दुष्क्रमास्ते न कृन्तन्ति चित्तं यस्य समाहितम् ॥ १८ ॥
98864
98865 दुष्टा अर्था अर्जनीयधनादयः आरभ्यन्त इत्यारम्भाः कृषिगृहधनादयः ।
98866 गुणा रागद्वेषादयः । उदाहृता मर्मप्रकाशनोक्तयः । क्रमा नीतयः । न
98867 कृन्तन्ति दुष्टफलेन न परितापयन्ति ॥ १८ ॥
98868
98869 आभान्ति विपुलार्थानि महान्ति गुणवन्ति च ।
98870 सर्वाण्येवानुधावन्ति चित्तं यस्य समाहितम् ॥ १९ ॥
98871
98872 आभान्ति प्रकाशमानानि विपुलार्थानि बहुलाभानि सर्वाण्येव सुखानीति शेषः ।
98873 अनुधावन्ति अनुसरन्ति ॥ १९ ॥
98874
98875 यदुदर्कहितं सत्यमनपायि गतभ्रमम् ।
98876 दुरीहितदृशोन्मुक्तं तत्परं कारयेन्मनः ॥ २० ॥
98877
98878 उदर्क औत्तरकालिकं सुखं तस्मै हितम् । दुरीहितदृशा भोगाभिलाषदृष्ट्या
98879 उन्मुक्तं स्वात्मलाभलक्षणं तत्परम् ॥ २० ॥
98880
98881 यददृष्टमशुद्धेन चित्तवैधुर्यदायिना ।
98882 अनेकत्वपिशाचेन तत्परं कारयेन्मनः ॥ २१ ॥
98883
98884 चित्तस्य वैधुर्यं पुरुषार्थविधुरता तद्दायिना । अनेकत्वं
98885 भेददृष्टिस्तल्लक्षणपिशाचेन यत्सौख्यं न दृष्टं तत्परम् ॥ २१ ॥
98886
98887 आदौ मध्ये तथान्ते च चिराय परमोचितम् ।
98888 यच्चारु मधुरं पथ्यं तत्परं कारयेन्मनः ॥ २२ ॥
98889
98890 आदौ चारुसुखारम्भम् मध्ये अर्धपरिपाकेऽपि मधुरम् अन्ते पथ्यं
98891 सर्वदुःखनिवर्तकं ज्ञानं तत्परम् ॥ २२ ॥
98892
98893 यदनन्तं मनःपथ्यंन् तथ्यमाद्यन्तमध्यगम् ।
98894 समस्तसाधुभिर्जुष्टं तत्परं कारयेन्मनः ॥ २३ ॥
98895
98896 आद्यन्तमध्यगं सर्वावस्थास्वनुगतमात्मसुखम् ॥ २३ ॥
98897
98898 यद्बुद्धेः परमालोकमाद्यं यदमृतं परम् ।
98899 यदनुत्तमसौभाग्यं तत्परं कारयेन्मनः ॥ २४ ॥
98900
98901 न विद्यते उत्तमं यस्मात्तथाविधं सौभाग्यं नित्यनिरतिशयानन्द इत्यर्थः ॥ २४ ॥
98902
98903 सामरासुरगन्धर्वे सविद्याधरकिन्नरे ।
98904 ससुरस्त्रीगणे स्वर्गे न किंचित्सुस्थिरं शुभम् ॥ २५ ॥

98905
98906 अनुत्तमसौभाग्यत्वमेवेतरसुखानित्यतादिप्रपञ्चनेन साधयति-सामरेत्यादिना
98907 ॥ २५ ॥
98908
98909 सतरौ सनराधीशे सपर्वतपुरव्रजे।
98910 साम्बुधौ भूतले तात न किंचिच्छोभनं स्थिरम् ॥ २६ ॥
98911
98912 सनागे सासुरव्यूहे सासुरस्त्रीगणे तथा।
98913 समस्त एव पाताले न किंचिच्छोभनंन् स्थिरम् ॥ २७ ॥
98914
98915 सस्वर्गे ससुरालोके सपाताले सदिक्तटे।
98916 जगत्यस्मिंस्तु सर्वस्मिन्न किंचिच्छोभनं स्थिरम् ॥ २८ ॥
98917
98918 एवं लोकत्रयस्याशुभतामुक्त्वा तद्धटितजगत एव तदाह-सस्वर्ग इति ॥ २८ ॥
98919
98920 आधिव्याधिविलोलासु दुःखौघवलितासु च।
98921 क्रियासु नित्यतुच्छासु न किंचित्सुस्थिरं शुभम् ॥ २९ ॥
98922
98923 क्रियाशब्देन तत्फलानि लक्ष्यन्ते ॥ २९ ॥
98924
98925 तरलीकृतचित्तासु हृदयानन्दिनीषु च।
98926 चिन्तासु धीविकारासु न किंचित्सुस्थिरं शुभम् ॥ ३० ॥
98927
98928 चिन्तापदमपि मानसक्रियामात्रपरं तत्फलोपलक्षकम् ॥ ३० ॥
98929
98930 हृत्क्षीरोदकसंस्पन्दमन्दरेषु चलेष्वपि।
98931 स्वसंकल्पविकल्पेषु न किंचित्सुस्थिरं शुभम् ॥ ३१ ॥
98932
98933 हृन्मनस्तल्लक्षणस्य क्षीरोदकस्य संस्पन्दे क्षोभणे मन्दरायमाणेषु। इदं
98934 मानसक्रियामात्रोपलक्षणम् ॥ ३१ ॥
98935
98936 अनारतागमापायपरास्वसिशिरास्वपि।
98937 चित्राकारासु चेष्टासु न किंचित्सुस्थिरं शुभम् ॥ ३२ ॥
98938
98939 अतिचित्राकारासु अत्यद्भुतासु। अत एवासिशिरास्वसिधाराप्रायासु इन्द्रियादिचेष्टासु ॥ ३२ ॥
98940
98941 न वरमेकमहीतलराजता न च वरं विबुधामररूपता।
98942 न च वरं धरणीतलनागता स्थितिमुपैति हि यत्र सतां मनः ॥ ३३ ॥
98943
98944 एवमशाश्वतत्वात्तुच्छत्वाच्च न जागतं किमपि सुखं विवेकिभिः
98945 स्पृहणीयमित्याह-न वरमित्यादिना। एका अनन्यराजता सर्वमहीतलराजता न
98946 वरम्। एवं विबुधा अभिज्ञतमा ये अमरा इन्द्रबृहस्पत्यादयस्तद्रूपता
98947 स्वर्गराज्याद्यपीति यावत् धरण्यास्तले पाताले सर्वधरणीधारणसमर्था
98948 शेषनागता पातालराज्यमपीति यावत्। यत्र सतां विवेकिनां मनः स्थितिं
98949 पूर्णकामतया विश्रान्तिमुपैति तथाविधं किमपि न भवतीत्यर्थः ॥ ३३ ॥
98950
98951 न वरमाकुलशास्त्रविचारणं न च वरं परकार्यविवेचनम्।
98952 न वरमग्र्यकथाक्रमवर्णनं स्थितिमुपैति हि यत्र सतां मनः ॥ ३४ ॥
98953
98954 एवं दुरूहत्वाद्विस्तृतत्वाच्चाकुलताहेतुनानाशास्त्राणां
98955 चतुर्दशविद्यास्थानानां विचारणं निष्कर्षसामर्थ्यलक्षणं पाण्डित्यमपि न
98956 वरम्। एवं परेषां कार्याणां बुद्धिसौष्ठवाद्विचार्य विवेचनसामर्थ्यलक्षणं

98957 लोकानुरजनसामर्थ्यमपि न वरम्। अग्र्याणां भारतादिकथानां क्रमस्य
98958 वर्णनादिसामर्थ्यमपि न वरमिति पूर्ववत्॥ ३४॥
98959
98960 न वरमाधिमयं चिरजीवितं न च वरं मरणं दृढमूढता।
98961 न च वरं नरको न च विष्टपं स्थितिमुपैति हि न क्वचिदाशयः॥ ३५॥
98962
98963 यदि आधिप्रचुरत्वाज्जीवितं न वरं तर्हि सर्वाधिनिवृत्तिमत्त्वान्मरणं वरं
98964 स्यात्तत्राह-दृढमूढतेति। सर्वदुःखनिदानमूढतादार्ढ्यात्तदपि न
98965 वरमित्यर्थः। तर्हि भोगेन सर्वदुःखक्षयकरत्वान्नको वरमस्त्विति चेन्नेत्याह##-
98966 भावः। विष्टपं सर्वभुवनाधिपत्यम्॥ ३५॥
98967
98968 इति विविधजगत्क्रमाः समस्ताः खलु मतिमूढतया नरस्य रम्याः।
98969 चलतरकलनाहिते पदार्थे कथमुपयान्ति चिरस्थितिं महान्तः॥ ३६॥
98970
98971 नरस्य विवेकिनः पुरुषस्य इति अनेन प्रकारेण विचार्यमाणा विविधजगत्क्रमाः
98972 समस्ताः सर्वेऽपि न रम्याः। हि यस्माद्धेतोस्ते जगत्क्रमाश्चलतरकलनया
98973 अशाश्वतत्वबुद्ध्या आहिते गृहीते पदार्थे महान्तः कथं
98974 चिरस्थितिमात्यन्तिकविश्रान्तिं यान्तीत्यर्थः॥ ३६॥
98975
98976 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० निर्वाण० पू० भुशुंडो०
98977 समाधानसंकल्पनिराकरणं नाम त्रयोविंशः सर्गः॥ २३॥
98978
98979 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पू०
98980 समाधानसङ्कल्पनिराकरणं नाम त्रयोविंशः सर्गः॥ २३॥
98981 चतुर्विंशः सर्गः २४
98982
98983 भुशुण्ड उवाच।
98984
98985 एकैव केवला दृष्टिर्निरापाया गतभ्रमा।
98986 विद्यते सर्ववित्त्वेषु सर्वश्रेष्ठा समुन्नता॥ १॥
98987
98988 देहनाडीक्रमोपेता षट्चक्रहृदयान्विता।
98989 प्राणस्पन्दविभागाढ्या प्राणचिन्तेह वर्ण्यते॥
98990
98991 यदि जगति न किंचिच्छोभनं स्थिरं तर्हि किं तच्छोभनं स्थिरं च यत्र
98992 विवेकिनश्चित्तविश्रान्तिस्तदाह-एकैवेत्यादिना। सर्वेषु वित्त्वेषु ज्ञानेषु मध्ये
98993 सर्वाशे श्रेष्ठा समुन्नता। सहसा दुरारोहेति यावत्॥ १॥
98994
98995 आत्मचिन्ता समस्तानां दुःखानामन्तकारिणी।
98996 चिरसंभृतदुःस्वप्नसंसारभ्रमहारिणी॥ २॥
98997
98998 आत्मचिन्ता साक्षात्कारपर्यन्त आत्मविचारः। चिरमनादिकालादारभ्य
98999 कामकर्मवासनासंभूतस्य दुःस्वप्नकल्पस्य संसारभ्रमस्य हरणशीला॥ २॥
99000
99001 निष्कलङ्कमनोमार्गविपुलाङ्गणचारिणी।
99002 तथा समस्तदुःखानां चिन्तानर्थविनाशिनी॥ ३॥
99003
99004 निरस्तमायदिकलङ्का प्रत्यक्प्रवणं मन एव मार्गो यत्र तथाविधे
99005 मनसोऽप्यमार्गे अगम्ये वा निरतिशयभूमानन्दलक्षणे प्रत्यगात्माङ्गणे
99006 संचरणशीला। तथा उपस्थितसर्वदुःखानां
99007 भाविदुःखानुसंधानप्रयुक्तचिन्तादिसर्वानर्थानां च विनाशिनी॥ ३॥
99008

99009 ज्योत्स्नयेवान्धकाराणामलमन्तः प्रजायते।
99010 सा स्वात्मचिन्ता भगवन्सर्वसंकल्पवर्जिता॥ ४॥
99011
99012 अन्धकाराणां तत्कार्यभ्रान्तिभिः सह परिगणनाद्बहुवचनम्। अलमत्यन्तमन्तो
99013 नाशस्तयेति शेषः॥ ४॥
99014
99015 युष्मदादिषु सुप्रापा दुष्प्रापैवास्मदादिषु।
99016 समस्तकलनातीतं परां कोटिमुपागतम्॥ ५॥
99017
99018 दुष्प्रापैवेत्यवधारणे हेतुमाह-समस्तेत्यादिना॥ ५॥
99019
99020 पदमासादयन्त्येतत्कथं सामान्यबुद्धयः।
99021 आत्मचिन्ताविलासिन्यास्तस्याः सख्यो महामुने॥ ६॥
99022
99023 सामान्यबुद्धयः अविशुद्धप्राकृतबुद्धयः। तर्हि सा तव कथं सुलभा जातेति
99024 चेत्तत्सखीसमाश्रयणादित्याशयेन प्राणचिन्तां वर्णयितुं पीठिकां रचयति##-
99025
99026 किंचित्साम्यमुपायाता विज्ञानशशिशीतलाः।
99027 आत्मचिन्तासमानानां विविधानां मुनीश्वर॥ ७॥
99028
99029 आत्मचिन्तावयस्यानां मध्यादेकतमा मया।
99030 सर्वदुःखक्षयकरी सर्वसौभाग्यवर्धिनी॥ ८॥
99031
99032 कारणं जीवितस्येह प्राणचिन्ता समाश्रिता।
99033
99034 श्रीवसिष्ठ उवाच।
99035
99036 इत्युक्तवन्तं विहगं भुशुण्डं पुनरप्यहम्।
99037 जानन्नपीदमव्यग्रः पृष्टवान्क्रीडया मुनिम्॥ ९॥
99038
99039 रीडया कौतुकेन॥ ९॥
99040
99041 सर्वसंशयविच्छेदिन्नत्यन्तचिरजीवित।
99042 यथार्थं ब्रूहि मे साधो प्राणचिन्ता किमुच्यते॥ १०॥
99043
99044 किं कीदृशी॥ १०॥
99045
99046 भुशुण्ड उवाच।
99047
99048 सर्ववेदान्तवेत्तासि सर्वसंशयनाशकः।
99049 मामेतत्परिहासार्थं मुने पृच्छसि वायसम्॥ ११॥
99050
99051 अथवा भवतामेव भगवन्परिशिक्षितुम्।
99052 पुनः प्रत्युत्तराणीदं का मे क्षतिरुपस्थिता॥ १२॥
99053
99054 भवतां पूज्यानां युष्मदादीनां संनिधौ इदं प्राणदर्शनं परिशिक्षितुं
99055 विशेषतः परिज्ञातुं पुनः प्रत्युत्तराणि। त्वत्प्रश्नस्य प्रत्युत्तरं वदानि।
99056 लोडुत्तमः॥ १२॥
99057
99058 भुशुण्डजीवितकरं भुशुण्डस्वात्मलाभदम्।
99059 शृणु प्राणसमाधानं वक्ष्यमाणमिदं मया॥ १३॥
99060

99061 देहगेहवर्णनक्रमेण वक्ष्यमाणम् ॥१३ ॥
99062
99063 पश्येदं भगवन्सर्वं देहगेहं मनोरमम् ।
99064 त्रिप्रकारमहास्थूणं नवद्वारसमावृतम् ॥ १४ ॥
99065
99066 वातपित्तकफलक्षणत्रिप्रकारा महान्तः स्थूणा विष्टम्भकाष्ठानि यस्य ॥ १४ ॥
99067
99068 पुर्यष्टककलत्रेण तन्मात्रस्वजनेन च ।
99069 अहंकारगृहस्थेन सर्वतः परिपालितम् ॥ १५ ॥
99070
99071 पुर्यष्टकं प्राग्वाख्यातम् । तत्पुर्यष्टकमात्रं स्वजना बान्धवाश्च यस्य ॥ १५ ॥
99072
99073 अन्तः पश्यसि सत्कर्णशष्कुलीचन्द्रशालिकम् ।
99074 शिरोरुहाच्छादनवद्विपुलाक्षिगवाक्षकम् ॥ १६ ॥
99075
99076 अन्तः साक्षितया त्वं मया वर्ण्यमानं देहगेहं पश्यसि साक्षादनुभवसि । सत्यौ
99077 कर्णशष्कुलीद्वयलक्षणे चन्द्रशालिके शिरोगृहे यस्मिन् । शिरोरुहैः
99078 केशैराच्छादनवत् ॥ १६ ॥
99079
99080 आस्यप्रधानसुद्वारं भुजपार्श्वोपमन्दिरम् ।
99081 दन्तालिकेसरस्रग्भिर्भूषितद्वारकोटरम् ॥ १७ ॥
99082
99083 भुजौ पार्श्वे च उपमन्दिराणि मन्दिरपक्षभागा यस्य ।
99084 दन्तालिर्दन्तपङ्क्तिस्तल्लक्षणकेसरमालाभिर्भूषितं प्रधानद्वारबिलं यस्य ॥ १७ ।
99085
99086 अनारतं रूपरसस्पर्शनद्वारपालवत् ।
99087 संकुलालोकवलितं तारालिन्दकृतस्थिति ॥ १८ ॥
99088
99089 रूपरसग्रहणं सर्वबाह्यविषयोपलक्षणम् । तान् स्पर्शयन्ति अन्तर्निवेदयन्ति यानि
99090 ज्ञानेन्द्रियाणि तल्लक्षणद्वारपालवत् । तत्र त्वचः सर्वाङ्गव्याप्त्या
99091 सर्वद्वारपालत्वमिति अधोद्वारयोरपि तद्वत्त्वं बोध्यम् । सर्वत्र संकुलेन
99092 लिङ्गदेहव्याप्तिद्वारा व्याप्तेन आत्मालोकेन वलितं व्याप्तम् । विशेषतश्च जागरे तारे
99093 अक्ष्णोः कनीनिके तल्लक्षणयोरलिन्दयोरूर्ध्वतमद्वारप्रकोष्ठयोः कृता
99094 स्वामिस्थितिर्यस्मिन् । इन्धो ह वै नामैष योऽयं दक्षिणेऽक्षन्पुरुषः नेत्रस्थं जाग्रतं
99095 विद्यात् इति श्रुतेरिति भावः ॥ १८ ॥
99096
99097 रक्तमांसवसादिग्धं स्नायुसंततिवेष्टितम् ।
99098 स्थूलास्थिकाष्ठसंबद्धं सुकुड्यं सुसमाहितम् ॥ १९ ॥
99099
99100 रक्तमांसवसाभिर्वारिमृद्गोमयैरिव दिग्धमुपलेपेनोपचितम् । स्नायवः
99101 शिरास्तत्संततिभिर्वेष्टितं रुद्धम् । अत एव सुकुड्यम् ॥ १९ ॥
99102
99103 इडा च पिङ्गला चास्य देहस्य मुनिनायक ।
99104 सुस्थिते कोमले मध्ये पार्श्वकोष्ठे निमीलिते ॥ २० ॥
99105
99106 अस्य देहस्य मध्ये इडा पिङ्गला चेति द्वे कोमले सूक्ष्मे नाड्यौ
99107 वामदक्षिणपार्श्वकोष्ठे निमीलिते अनभिव्यक्ते नासापुटयोः
99108 प्राणसंचारलिङ्गेनाभिव्यक्ते सुस्थिते ॥ २० ॥
99109
99110 पद्मयुग्मत्रयं यन्त्रमस्थिमांसमयं मृदु ।
99111 ऊर्ध्वाधोनालमन्योन्यमिलत्कोमलसद्दलम् ॥ २१ ॥
99112

99113 तत्र सर्वप्राणशक्तीनामाश्रयभूतं
99114 द्वासप्ततिसहस्रसंख्याकनाडीप्रभेदमूलजालकं पुरीतन्नामकं
99115 संपुटितसनालपद्मयुग्मत्रयाकारं हृत्पद्मयन्त्रत्रयंन् दर्शयति##-
99116 संपुटीभावेन मिलत्कोमलसद्दलमत एव यन्त्रं प्रत्येकं यन्त्राकारम् ॥ २१ ॥
99117
99118 सेकेन विकसत्पत्रं सकलाकाशचारिणा ।
99119 चलन्ति तस्य पत्राणि मृदु व्याप्तानि वायुना ॥ २२ ॥
99120
99121 नासाग्रादिपादान्तसकलदेहाकाशचारिणा चन्द्राख्यापानवाय्वमृतसेकेन विकसन्ति
99122 पत्राणि दलानि यस्यतत् । एवं प्राणसंचारेण पत्राणि ईषत्संकुचन्तीत्यर्थाद्गम्यते ।
99123 अत एव तस्य यन्त्रस्य पत्राणि प्राणापानवायुना व्याप्तानि सन्ति मृदु चलन्ति
99124 प्रत्युच्छ्वासनिःश्वासमीषत्संकुचन्ति विकसन्ति चेत्यर्थः ॥ २२ ॥
99125
99126 चलत्सु तेषु पत्रेषु स मरुत्परिवर्धते ।
99127 वाताहते लतापत्रजाले बहिरिवाभितः ॥ २३ ॥
99128
99129 किं ततस्तत्राह-चलत्स्विति । परिवर्धते परितः
99130 प्रसारात्पुरीतत्संबद्धसर्वनाडीच्छिद्रेषु प्रविश्य बहुलीभवतीत्यर्थः । यथा
99131 बहिररण्यादौ लतापत्रजाले वातेनाहते सति वायुः परितः प्रसरति तद्वदित्यर्थः ॥ २३ ॥
99132
99133 वृद्धिं नीतः स नाडीषु कृत्वा स्थानमनेकधा ।
99134 ऊर्ध्वाधोवर्तमानासु देहेऽस्मिन्प्रसरत्यथ ॥ २४ ॥
99135
99136 एवं वृद्धिं नीतः स
99137 हृदयपायुनाभिकण्ठसर्वाङ्गलक्षणमनेकधास्थानं कृत्वा कल्पयित्वा
99138 प्राणादिपञ्चसंज्ञः सन् ऊर्ध्वाधोवर्तमानासु द्विसप्ततिसहस्रप्रतिशाखासु
99139 एकोत्तरशतनाडीषु प्रविश्य देहे प्रसरतीत्यर्थः ॥ २४ ॥
99140
99141 प्राणापानसमानाद्यैस्ततः स हृदयानिलः ।
99142 संकेतैः प्रोच्यते तज्ज्ञैर्विचित्राचारचेष्टितैः ॥ २५ ॥
99143
99144 तदेवाह-प्राणेति ॥ २५ ॥
99145
99146 हृत्पद्मयन्त्रत्रितये समस्ताः प्राणशक्तयः ।
99147 ऊर्ध्वाधः प्रसृता देहे चन्द्रबिम्बादिवांशवः ॥ २६ ॥
99148
99149 तैः प्राणैः सह प्राणशक्तीनामपि सर्वाङ्गे प्रसरं दर्शयति-हृत्पद्मेति ॥
99150 २६ ॥
99151
99152 यान्त्यायानित् विकर्षन्ति हरन्ति विहरन्ति च ।
99153 उत्पतन्ति पतन्त्याशु ता एताः प्राणशक्तयः ॥ २७ ॥
99154
99155 तासामन्नरसस्य देहव्यापनाय नाडीषु व्यापारमाह-यान्तीति ॥ २७ ॥
99156
99157 स एष हृत्पद्मगतः प्राण इत्युच्यते बुधैः ।
99158 अस्य काचिन्मुने शक्तिः प्रस्पन्दयति लोचने ॥ २८ ॥
99159
99160 हृदयमेव मुख्यस्थानं प्राणस्यैव मुख्यता अन्ये तद्वृत्तिभेदास्तद्द्वारेण
99161 प्राण एव सर्वशरीरेन्द्रियादिचेष्टाः शक्तिभेदैः करोतीत्याह-स एष इत्यादिना ॥ २८
99162 । ।
99163
99164 काचित्स्पर्शमुपादत्ते काचिद्वहति नासया ।

99165 काचिदन्नं जरयति काचिद्वक्ति वचांसि च ॥ २९ ॥
99166
99167 बहुनात्र किमुक्तेन सर्वमेव शरीरके ।
99168 करोति भगवान्वायुर्यन्त्रेहामिव यान्त्रिकः ॥ ३० ॥
99169
99170 यन्त्रेहां प्रतिमादियन्त्रस्य नृत्यादिचेष्टाम् । यान्त्रिको यन्त्रसूत्रधारः ॥ ३० ॥
99171
99172 तत्रोर्ध्वाधोद्विसंकेतौ प्रसृतावनिलौ मुने ।
99173 प्राणापानाविति ख्यातौ प्रकटौ द्वौ वरानिलौ ॥ ३१ ॥
99174
99175 ऊर्ध्वगमनमधोगमनमिति द्विविधसंकेतवन्तौ ॥ ३१ ॥
99176
99177 तयोरनुसरन्नित्यं मुने गतिमहं स्थितः ।
99178 शीतोष्णवपुषोर्नित्यं नित्यमम्बरपान्थयोः ॥ ३२ ॥
99179
99180 एवं सर्वमौपोद्घातिकमुपवर्ण्य स्वयं क्रियमाणां प्राणचिन्तां दर्शयति##-
99181 त्वाध्यात्मिकपरिच्छेदत्यागेनाधिदैविकसूत्रात्मरूपतदात्मभावधारणया
99182 आसङ्गपाप्मदूषितसर्वेन्द्रियव्रतपरित्यागे तन्मात्रव्रताचरणम् ।
99183 वागादीन्द्रियाणां हि वचनादिस्वस्वविषयव्यसनितावृतं तच्चासङ्गपाप्मदूषितमिति
99184 श्रमलक्षण मृत्युना भग्नम् । प्राणस्य तु मुखनासिकादिस्थानेषु संचरणमेव
99185 व्रतं तच्च न विषयासङ्गदूषितमिति न श्रमात्मना भज्यत इति प्राण एवैको
99186 व्रतभङ्गशून्यो मृत्युना न ग्रस्यते ।
99187 अतस्तदात्मताधारणतद्व्रतमात्राचरणलक्षणात्प्राणचिन्तनात्स्वस्य
99188 जितमृत्युतेत्याशयः । इयं च प्राणचिन्ता प्राणव्रतधारणसहिता बृहदारण्यके
99189 अथातो व्रतमीमांसा इत्यादिना तस्मादेकमेव व्रतं चरेत्प्राण्याच्चैवापान्याच्च
99190 नेत्पाप्मा मृत्युराप्नुवत् इति यद्युचरेत्समापिपयिषेत्तेनो एतस्यै देवतायै सायुज्यंन्
99191 सलोकतां जयति इत्यन्तेन ग्रन्थेन प्रपञ्चिता तत एवावगन्तव्या ।
99192 तयोरुपासनीयगुणान्तराण्यप्याह-शीतोष्णवपुषोरित्यादिना ॥ ३२ ॥
99193
99194 कलेवरमहायन्त्रवाहयोः श्रमहीनयोः ।
99195 हृदाकाशार्कशशिनोस्त्वग्नीषोमस्वरूपयोः ॥ ३३ ॥
99196
99197 श्रमहीनयोरिति । तानि मृत्युः श्रमो भूत्वोपयेमे अथेममेव नाप्नोद्योयं
99198 मध्यमः प्राणः इति श्रुतेरिति भावः ॥ ३३ ॥
99199
99200 शरीरपुरपालस्य मनसो रथचक्रयोः ।
99201 अहंकारनृपस्यास्य प्रशस्येष्टतुरङ्गयोः ॥ ३४ ॥
99202
99203 तयोर्ममानुसरतः प्राणापानाभिधानयोः ।
99204 गतिं शरीरमरुतोराशरीरमरुद्धयोः ॥ ३५ ॥
99205
99206 आशरीरं यावज्जीवमरुद्धयोरविच्छिन्नोपासनयोः । तथाच प्राक् श्रुतिरुदाहृता
99207 यद्युच्चरेत्समापिपयिषेत् इति । न विच्छिन्द्यादिति हि तदर्थः ॥ ३५ ॥
99208
99209 जाग्रत्स्वप्नसुषुप्तेषु सदैव समरूपयोः ।
99210 सुषुप्तसंस्थितस्येव ब्रह्मन् गच्छन्ति वासराः ॥ ३६ ॥
99211
99212 समरूपयोरिति । अभ्यासातिशयेन बहिरन्तश्च
99213 द्वादशषोडशाङ्गुलप्रदेशमात्रपरिमितसंचारयोरित्यर्थः ॥ ३६ ॥
99214
99215 सहस्रविनिकृत्ताङ्गाद्बिसतन्तुलवादपि [विनिभक्ताङ्गा इति पाठः ।] ।
99216 दुर्लक्ष्या विद्यमानापि गतिः सूक्ष्मतराऽनयोः ॥ ३७ ॥

प्राणायामाभ्यासात्तयोः सूक्ष्मतमत्वापादनाच्च
नोत्क्रमणादिप्रसक्तिरित्याशयेनाह-सहस्रेति। अथवा
नाड्यन्तःसंचारोऽनयोर्मुखनासिकासंचार इव कुतो न लक्ष्यते तत्राह-सहस्रेति।
यथा केशः सहस्रधा भिन्नस्तावतानिम्ना तिष्ठति इति
श्रुतेर्नाडीनामेवातिसूक्ष्मत्वाहुर्लक्षत्वे तदन्तरनयोर्गतिः सुतरां
दुर्लक्ष्येत्याशयः॥ ३७॥

अविरतगतयोर्गतिं विदित्वा हृदि मरुतोरनुसृत्य चोदितां ताम्।
न पुनरिह हि जायते महात्मन्मुदितमनाः पुरुषः प्रणष्टपाशः॥ ३८॥

वर्णितां प्राणचिन्तां वर्णयिष्यमाणप्रकारप्रश्नस्यावसरं
सूचयन्नुपसंहरति-अविरतेति। हृदि हृदयादिस्थानेष्वविरतं गतं संचारो
ययोस्तयोर्मरुतोः प्राणापानयोश्चोदितां नानाश्रुतिषु तत्तत्प्राणोपास्तिप्रकरणे
अनेकधा विहितां निर्दोषत्वगतश्रमत्वाभग्नव्रतत्वसंवर्गाद्यनेकगुणविशिष्टां
गतिमनुसृत्यवक्ष्यमाणप्रकारेणोपास्य प्रणष्टमृत्युपाशः सन्
पुरुषस्तत्त्वज्ञानेन जीवन्मुक्तो भूत्वा इह संसारे पुनर्न जायत इत्यर्थः। हिशब्दः
प्राणाद्युपास्तीनामपि निष्कामानुष्ठितानां ज्ञानद्वारा मुक्तिहेतुत्वं श्रुतिषु
प्रसिद्धमिति द्योतनार्थः॥ ३८॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मोक्षोपायेषु निर्वाण० प्र० पू०
भुशुण्डोपाख्याने प्राणविचारणं नाम चतुर्विंशः सर्गः॥ २४॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
प्राणविचारणं नाम चतुर्विंशः सर्गः॥ २४॥

पञ्चविंशः सर्गः २५

श्रीवसिष्ठ उवाच।

इत्थं स कथयन्पक्षी पृष्टस्तत्र पुनर्मया।
कीदृशी प्राणवातस्य गतिरित्येव राघव॥ १॥

प्राणपानगतिष्वत्र रेचकादिप्रकल्पनम्।
प्राणापानोदयलयस्थानं ब्रह्म च वर्ण्यते॥

प्रश्नावसरप्रदानसूचितश्चिन्तनीयप्राणगतिप्रकारभेदो मया पृष्ट इत्याह##-

भुशुण्ड उवाच।

जानन्नपि मुने सर्वं किं मां पृच्छसि लीलया।
यथापृष्टमहं वच्मि शृणु तत्रापि मद्वचः॥ २॥

प्राणोऽयमनिशं ब्रह्मन्स्पन्दशक्तिः सदागतिः।
सबाह्याभ्यन्तरे देहे प्राणोऽयमुपरि स्थितः॥ ३॥

एकः प्राणशब्दो रूढः अपरस्तु प्राणगतिरिति यौमिकस्तल्लक्षणपरः।
लक्षणानुसारेणैवोर्ध्वस्थानमभिनीय दर्शयति-अयमुपरि स्थित इति॥ ३॥

अपानोऽप्यनिशं ब्रह्मन्स्पन्दशक्तिः सदागतिः।
सबाह्याभ्यन्तरे देहे त्वपानोऽयमवाक्स्थितः॥ ४॥

99269 एवमपानपदमप्येकं यौगिकं पूर्ववत्सर्वम् ॥ ४ ॥
99270

99271 जाग्रतः स्वपतश्चैव प्राणायामोऽयमुत्तमः ।
99272 प्रवर्तते यतस्तज्ज्ञ तत्तावच्छ्रेयसे शृणु ॥ ५ ॥
99273

99274 एवं लक्षणतो भेदंन् प्रदर्श्य तद्वतिष्वयत्नतः सदैव
99275 प्राणायामत्वसिद्धिचिन्तनं दर्शयति-जाग्रत इत्यादिना ॥ ५ ॥
99276

99277 बाह्योन्मुखत्वं प्राणानं यद्धृदम्बुजकोटरात् ।
99278 स्वरसेनास्तयत्नानां तं धीरा रेचकं विदुः ॥ ६ ॥
99279

99280 तत्र हृदयान्मूर्धपर्यन्तं प्रश्वासगत्यर्धमान्तररेचकत्वेन चिन्तनीयम् ।
99281 मूर्धादिबहिर्द्वादशाङ्गुलपर्यन्तं त्वर्धं बाह्यपूरकत्वेनेत्याह-बाह्येति
99282 द्वाभ्याम् ॥ ६ ॥
99283

99284 द्वादशाङ्गुलपर्यन्तं बाह्यमाक्रमतामधः ।
99285 प्राणानामङ्गसंस्पर्शो यः स पूरक उच्यते ॥ ७ ॥
99286

99287 बाह्यात्परापतत्यन्तरपाने यत्नवर्जितः ।
99288 योऽयं प्रपूरणः स्पर्शो विदुस्तमपि पूरकम् ॥ ८ ॥
99289

99290 एवं बाह्याद्देशादपाने अन्तः परापतति प्रविशति यो नासाग्रादिमूर्धपर्यन्तो यश्च
99291 मूर्धादिहृदयपर्यन्तो वायोः स्पर्शस्तं द्विविधमप्यन्तःपूरकः विदुरित्यर्थः ॥
99292 ८ ॥
99293

99294 अपानेऽस्तंगते पाणो यावन्नाभ्युदितो हृदि ।
99295 तावत्सा कुम्भकावस्था योगिभिर्यानुभूयते ॥ ९ ॥
99296

99297 इदानीमन्तःकुम्भकं कल्पिताकल्पितसाधारण्येन लक्षयति-अपाने इति । अस्तंगते
99298 प्रशान्ते सति ॥ ९ ॥
99299

99300 रेचकः कुम्भकश्चैव पूरकश्च त्रिधा स्थितः ।
99301 अपानस्योदयस्थाने द्वादशान्तादधो बहिः ॥ १० ॥
99302

99303 बहिरपि च रेचकादीन्दर्शयितुमुपक्रमते-रेचक इत्यादिना । अपानस्योदयस्थाने
99304 नासाग्राद्बहिर्द्वादशाङ्गुलपर्यन्ते ॥ १० ॥
99305

99306 स्वभावाः सर्वकालस्थाः सम्यग्यत्नविवर्जिताः ।
99307 ये प्रोक्ताः स्फारमतिभिस्ताञ्छृणु त्वं महामते ॥ ११ ॥
99308

99309 स्वत एव भवन्तीति स्वभावा ये रेचकादयः प्रोक्ताः ॥ ११ ॥
99310

99311 द्वादशाङ्गुलपर्यन्ताद्बाह्यादभ्युदितः प्रभो ।
99312 यो वातस्तस्य तत्रैव स्वभावात्पूरकादयः ॥ १२ ॥
99313

99314 अभ्युदितः अभिमुखं स्थितः । तस्य वातस्य । तत्र बाह्यप्रदेश एव ।
99315 बाह्यपूरकादयश्चिन्तनीया इति शेषः ॥ १२ ॥
99316

99317 मृदन्तरस्थानिष्पन्नघटवद्या स्थितिर्बहिः ।
99318 द्वादशाङ्गुलपर्यन्ते नासाग्रसमसंमुखे ॥ १३ ॥
99319

99320 तत्र बाह्यवाय्वन्तरपानस्यैकीभावेन निश्चलप्रायां स्थितिं कुम्भकत्वेन

99321 कल्पयति-मृदन्तरस्थेति सार्धेन ॥ १३ ॥
99322
99323 व्योम्नि नित्यमपानस्य तं विदुः कुम्भकं बुधाः ।
99324 बाह्योन्मुखस्यवायोर्या नासिकाग्रावधिर्गतिः ॥ १४ ॥
99325
99326 तस्य पूर्वप्राणभावेन हृदयादारभ्य नासाग्रपर्यन्ता या गतिस्तां
99327 बाह्यपूरकत्वेनापि कल्पयेदित्याह-बाह्योन्मुखस्येति ॥ १४ ॥
99328
99329 तं बाह्यपूरकं त्वाद्यं विदुर्योगविदो जनाः ।
99330 नासाग्रादपि निर्गत्य द्वादशान्तावधिर्गतिः ॥ १५ ॥
99331
99332 ततो बहिर्गतिं बाह्यपूरकान्तरतयाकल्पयति-नासाग्रादिति ॥ १५ ॥
99333
99334 या वायोस्तं विदुर्धीरा अपरं बाह्यपूरकम् ।
99335 बहिरस्तंगते प्राणे यावन्नापान उद्गतः ॥ १६ ॥
99336
99337 बहिरित्यादिः पूर्वोक्तानुवादः ॥ १६ ॥
99338
99339 तावत्पूर्णं समावस्थं बहिष्ठं कुम्भकं विदुः ।
99340 यत्तदन्तर्मुखत्वं स्यादपानस्योदयं विना ॥ १७ ॥
99341
99342 बाह्यरेचकद्वयकल्पनप्रकारमाह-यत्तदिति । उदयं प्रस्पन्दं विना । तथा च
99343 प्रस्पन्दपूर्वक्षणे यदन्तर्मुखत्वं प्रस्पन्दोन्मुखत्वं तमित्यर्थः ॥ १७ ॥
99344
99345 तं बाह्यरेचकं विद्याच्चिन्त्यमानं विमुक्तिदम् ।
99346 द्वादशान्ताद्यदुत्थाय रूपपीवरता परा ॥ १८ ॥
99347
99348 द्वादशान्ताद्बाह्यद्वादशाङ्गुलचरमभागात् । नासाग्रपर्यन्तमपानस्य चलनेन
99349 स्वरूपाभिव्यक्त्या पीवरता ॥ १८ ॥
99350
99351 अपानस्य बहिष्ठं तमपरं पूरकं विदुः ।
99352 बाह्यानाभ्यन्तरांश्चैतान्कुम्भकादीननारतम् ॥ १९ ॥
99353
99354 प्राणापानस्वभावांस्तान्बुद्ध्वा भूयो न जायते ।
99355 अष्टावेते महाबुद्धे रात्रिंदिवमनुस्मृताः ॥ २० ॥
99356
99357 बुद्ध्वा उपास्य भूयो न जायत इत्यवश्यभाविज्ञानफलेन स्तुतिः-अष्टाविति ।
99358 यद्यपि बहिरन्तश्च रेचकपूरकयोः प्रत्येकं द्वैविध्यकथनात्कुम्भकाभ्यां सह
99359 दश भवन्ति तथापि कुम्भकयोः प्राधान्यादङ्गाष्टकाभिप्रायेणेयमुक्तिः ॥ २० ॥
99360
99361 स्वभावा देहवायूनां कथिता मुक्तिदा मया ।
99362 गच्छतस्तिष्ठतो वापि जाग्रतः स्वपतोऽपि वा ॥ २१ ॥
99363
99364 एतदभ्यासात्प्राणनिरोधोऽपिकाले भवतीत्याह-गच्छत इति ॥ २१ ॥
99365
99366 एते निरोधमायन्ति प्रकृत्याऽतिचलानिलाः ।
99367 यत्करोति यदश्नाति बुद्ध्यैवालमनुस्मरन् ॥ २२ ॥
99368
99369 कर्तृत्वभोक्तृत्वाभिमानोऽप्यनेन नश्यतीत्याशयेनाह-यत्करोतीति ॥ २२ ॥
99370
99371 कुम्भकादीन्नरः स्वान्तस्तत्र कर्ता न किंचन ।
99372 अव्यग्रमस्मिन्व्यापारे बाह्यं परिजहन्मनः ॥ २३ ॥

99373

99374 बाह्यदृष्टिपरित्यागादन्तरात्मदर्सनोदयेन परमपदप्राप्तिरप्यनेन
99375 सिद्ध्यतीत्याह-अव्यग्रमिति | अस्मिन् प्राणचिन्तनव्यापारे संसक्तमत एव
99376 बाह्यमर्थं परिजहत्यजत् || २३ ||
99377

99378 दिनैः कतिपयैरेव पदमाप्नोति केवलम् |
99379 एतदभ्यसतः पुंसो बाह्ये विषयवृत्तिषु || २४ ||
99380

99381 न बध्नाति रतिं चेतः श्वदृतौ ब्राह्मणो यथा |
99382 एतां दृष्टिमवष्टभ्य ये स्थिताः कृतबुद्धयः || २५ ||
99383

99384 श्वदृतौ श्वचर्मभस्त्रायां तद्गतक्षीरादाविति यावत् || २५ ||
99385

99386 प्राप्तप्राप्तव्यमखिलं तैरखिन्नास्त एव हि |
99387 तिष्ठता गच्छता नित्यं स्वपता जाग्रता तथा || २६ ||
99388

99389 एषा चेत्प्रेक्ष्यते दृष्टिस्तन्न बन्धनमाप्यते |
99390 प्राणापानानुसरणप्राप्तबोधवतामलम् || २७ ||
99391

99392 प्राणापानयोरनुसरणमनुसारश्चिन्तनं तेन प्राप्तबोधवतां पुंसां
99393 संशान्तमलमोहेन चित्तेन अन्तर्हृदयस्थे इह प्रत्यगात्मनि || २७ ||
99394

99395 संशान्तमलमोहेन स्वस्थेनान्तरिहोष्यते |
99396 सर्वारम्भान्सदा स्वच्छः कुर्वन्वापि बुधो जनाः || २८ ||
99397

99398 प्राणापानगतिं प्राप्य सुस्वस्थः सुखमेधते |
99399 प्राणस्याभ्युदयो ब्रह्मन्पद्मपत्राद्धृदि स्थितात् || २९ ||
99400

99401 प्राणस्याभ्युदय इत्यादिः पूर्वोक्तानुवादः || २९ ||
99402

99403 द्वादशाङ्गुलपर्यन्ते प्राणोऽस्तं यात्ययं बहिः |
99404 अपानस्योदयो बाह्याद्द्वादशान्तान्महामुने || ३० ||
99405

99406 अस्तंगतिरथाम्भोजमध्ये हृदयसंस्थिते |
99407 प्राणो यत्र समायाति द्वादशान्ते नभःपदे || ३१ ||
99408

99409 हृदयसंस्थिते अम्भोजमध्ये अस्तंगतिरपानस्येति शेषः | प्राणो यत्र
99410 यस्मिन्नभःपदे समायाति समाप्यते || ३१ ||
99411

99412 पदात्तस्मादपानोऽयं खादेति समनन्तरम् |
99413 बाह्याकाशोन्मुखः प्राणो वहत्यग्निशिखा यथा || ३२ ||
99414

99415 तस्मात् खात् पदात् अपान एति उद्गच्छति | प्राणापानयोरग्नीषोमात्मकत्वं यदुक्तं
99416 तदौष्ण्यशैत्योर्ध्वाधोमुखत्वप्रदर्शनेनोपपादयति-बाह्येत्यादिना || ३२ ||
99417

99418 हृदाकाशोन्मुखोऽपानो निम्ने वहति वारिवत् |
99419 अपानश्चन्द्रमा देहमाप्याययति बाह्यतः || ३३ ||
99420

99421 प्राणः सूर्योऽग्निरथवा पचत्यन्तरिदं वपुः |
99422 प्राणो हि हृदयाकाशं तापयित्वा प्रतिक्षणम् || ३४ ||
99423

99424 तयोः सूर्यचन्द्रात्मकता वा चिन्त्येत्याशयेन तामप्युपपादयति-प्राण इत्यादिना ||

99425 ३४ ॥
99426
99427 मुखाग्रगगनं पश्चात्तापयत्युत्तमो रविः।
99428 अपानेन्दुर्मुखाग्रं तु प्लावयित्वा हृदम्बरम् ॥ ३५ ॥
99429
99430 पश्चादाप्याययत्येष निमेषसमनन्तरम्।
99431 अपानशशिनोऽन्तस्था कला प्राणविवस्वता ॥ ३६ ॥
99432
99433 कला चरमो भागः। यत्र यस्मिन्हार्दे ब्रह्मणि स्थित्वा ग्रस्ता तद्ब्रह्मासाद्य ॥ ३६ ॥
99434
99435 यत्र ग्रस्ता तदासाद्य पदं भूयो न शोच्यते।
99436 प्राणार्कस्य तथान्तस्था यत्रापानसितांशुना ॥ ३७ ॥
99437
99438 यत्र यस्मिन्द्वादशाङ्गुलपर्यन्तबाह्याकाशोपलक्षिते ब्रह्मणि विद्यमानेनापानेन
99439 ग्रस्ता तद्ब्रह्मपदमासाद्येत्यर्थः ॥ ३७ ॥
99440
99441 ग्रस्ता तत्पदमासाद्य न भूयो जन्मभाङ्नरः।
99442 प्राण एवार्कतां याति सबाह्याभ्यन्तरेऽम्बरे ॥ ३८ ॥
99443
99444 एकस्यैव वायोः पर्यायेण शक्तिद्वयोदयश्चिन्तनीय इत्याह-प्राण एवेत्यादिना ॥ ३८
99445 ॥
99446
99447 आप्यायनकरीं पश्चाच्छशितामधितिष्ठति।
99448 प्राण एवेन्दुतां त्यक्त्वा शरीराप्यायकारिणीम् ॥ ३९ ॥
99449
99450 आप्यायनमाप्यायो ह्लादनम् ॥ ३९ ॥
99451
99452 क्षणादायाति सूर्यत्वं संशोषणकरं पदम्।
99453 अर्कतां संपरित्यज्य न यावच्चन्द्रतां गतः ॥ ४० ॥
99454
99455 तत्र बहिर्द्वादशाङ्गुलपर्यन्ते प्रसृतः प्राणो यावदर्कतामौष्ण्यंन् परित्यज्य
99456 चन्द्रतां शैत्यं न गतः सा प्राणापानयोः संध्यवस्था। तस्यां देहाद्बहिः
99457 प्राणलयादात्मनो निर्देहत्वनिष्क्रियत्वनिर्मनस्त्वादयो वास्तवस्वभावाः
99458 संभावयितुं शक्यत्वाद्विचार्यन्ते। तत्र बाह्यकुम्भके
99459 देहादिदेशपरिच्छेदाभावाच्चन्द्रसूर्यात्मकप्राणापानक्रियाप्रयुक्तायुः##-
99460 ॥ ४० ॥
99461
99462 प्राणस्तावद्विचार्यन्तेऽदेशकाले न शोच्यते।
99463 हृदि चन्द्रार्कयोर्ज्ञात्वा नित्यमस्तमयोदयम् ॥ ४१ ॥
99464
99465 एवमन्तःकुम्भकेऽपि हृदि प्राणापानसंधौ प्रतिष्ठितस्य मनसो
99466 निजाधिष्ठानपरमात्मतत्त्वबोधावश्यंभावान्न जन्मादिप्रसक्तिरित्याह##-
99467
99468 आत्मनो निजमाधारं न भूयो जायते मनः।
99469 सोदयास्तमयं सेन्दुं सरश्मिं सगमागमम् ॥ ४२ ॥
99470
99471 आत्मनो मनसः आधारमधिष्ठानं परमात्मानम्। अथवा हृदयस्थः स्वात्मैव
99472 प्राणसूर्यः स एवापानात्मकचन्द्रतया
99473 उदयास्तमयतद्रश्मिभूतव्यानादिवृत्तिभेदाद्यात्मना विवर्तते न तद्व्यतिरिक्तः
99474 कश्चिदस्तीत्युपासनं स्वात्मदर्शने हेतुरित्याह-सोदयास्तमयमिति ॥ ४२ ॥
99475
99476 हृदये भास्करं देवं यः पश्यति स पश्यति।

99477 न क्षीणं नापरिक्षीणं बहिष्टं सिद्धये तमः ॥ ४३ ॥
99478
99479 ननु किं हृद्यात्मसाक्षात्कारेण बाह्यतमसा बहिरेवापरिच्छिन्नस्यात्मन
99480 आवृतत्वात्तत्क्षयाय बाह्यज्योतिरेव किं नान्विष्यते तत्राह-नेति ॥ ४३ ॥
99481
99482 हार्दं तु क्षपयेद्ध्वान्तं यत्क्षये सिद्धिरुत्तमा ।
99483 बाह्ये तमसि संक्षीणो लोकालोकः प्रजायते ॥ ४४ ॥
99484
99485 हार्दं त्विति । बाह्यध्वान्तकल्पनापि हार्दध्वान्तवशादेवेति तत्क्षये
99486 तत्क्षयोऽर्थसिद्ध इति भावः । बाह्यज्योतिषा बाह्यतमःक्षपणं तु
99487 रूपादिदर्शनहेतुरेव न बहिरात्मदर्शने हेतुरित्याशयेनाह-बाह्ये इति । लोक्यत इति
99488 लोको जगद्रूपम् ॥ ४४ ॥
99489
99490 हार्दे तु तमसि क्षीणे स्वालोको जायते मुने ।
99491 हार्दान्धकारक्षयदं परिज्ञातं विमुक्तिदम् ॥ ४५ ॥
99492
99493 सोदयास्तमयं यत्नात्प्राणार्कमवलोकयेत् ।
99494 अपानेन्दुः प्रयात्यस्तं यत्र हृत्पद्मकोटरे ॥ ४६ ॥
99495
99496 उक्ते बाह्यान्त। कुम्भकप्रतिष्ठे प्ररोचनाय प्रपञ्चयिष्यन् भूमिकां रचयति##-
99497
99498 पदात्तस्मादुदेत्यन्तः प्राणार्को बहिरुन्मुखः ।
99499 अपानेऽस्तंगते प्राणः समुदेति हृदम्बुजात् ॥ ४७ ॥
99500
99501 छायायां गलिताङ्गायां तत्रैवाशु यथातपः ।
99502 प्राणे त्वस्तंगते बाह्यादपानः प्रोदितः क्षणात् ॥ ४८ ॥
99503
99504 आतपे परितो नष्टे छायेवानुपदं तथा ।
99505 प्राणजन्मावनौ नष्टमपानं विद्धि सन्मते ॥ ४९ ॥
99506
99507 अपानजन्मभूमौ च प्राणं नष्टमवेहि हि ।
99508 अस्तंगतवति प्राणे त्वपानेऽभ्युदयोन्मुखे ॥ ५० ॥
99509
99510 उदयोन्मुखतैव निरोद्धव्येत्याशयः ॥ ५० ॥
99511
99512 बहिः कुम्भकमालम्ब्य चिरं भूयो न शोच्यते ।
99513 अपानेऽस्तंगते प्राणे किंचिदभ्युदयोन्मुखे ॥ ५१ ॥
99514
99515 अन्तःकुम्भकमालम्ब्य चिरं भूयो न शोच्यते ।
99516 प्राणरेचकमालम्ब्य अपानाद्दूरकोटिगम् ॥ ५२ ॥
99517
99518 अपानादपानोदयस्थानाद्द्वादशाङ्गुलस्थानाद्दूरकोटिगं
99519 षोडशा"ण्गुलभागप्रसारिणमित्यर्थः ॥ ५२ ॥
99520
99521 स्वच्छं कुम्भकमभ्यस्य न भूयः परितप्यते ।
99522 अपाने रेचकाधारं प्राणपूरान्तरास्थितम् ॥ ५३ ॥
99523
99524 निःशेषवायुरेचनात्स्वच्छम् । नासाविवरेणान्तः प्रविशत्यपाने बाह्यरेचकाधारं
99525 प्राणस्य पूरणं प्राणपूरस्तदर्थमन्तः आस्थितं प्रविष्टं स्वसंस्थं
99526 देहान्तर्गतं पूरकं दृष्ट्वा उपास्य ॥ ५३ ॥
99527
99528 स्वसंस्थं पूरकं दृष्ट्वा न भूयो जायते नरः ।

99529 प्राणापानावुभावन्तर्यत्रैतौ विलयं गतौ ॥ ५४ ॥
99530
99531 यत्र हार्दे ब्रह्मणि ॥ ५४ ॥
99532
99533 तदालम्ब्य पदं शान्तमात्मानं नानुतप्यते ।
99534 प्राणभक्षोन्मुखेऽपाने देशं कालं च निष्कलम् ॥ ५५ ॥
99535
99536 इदानीम् अर्कतां संपरित्यज्य न यावच्चन्द्रतां गतः इत्यत्र अदेशकालेन शोच्यते इति
99537 यदुक्तं तद्विवृण्वन् बाह्यकुम्भकोक्तस्य
99538 देशकालबाधस्यान्तःकुम्भकेऽप्यनुकर्षं दर्शयति-प्राणभक्षोन्मुख
99539 इत्यादिना । बहिः प्राणलयाधिष्ठानचिति अन्तः प्राणनिगमापादानचिति वा बाधेन
99540 देशं कालं चात्तदन्तर्वर्तिवस्तुजातं च निष्कलं चिन्मात्रमेवेति विचार्येत्यर्थः ॥ ५५
99541 ।।
99542
99543 विचार्य बहिरन्तर्वा न भूयः परिशोच्यते ।
99544 अपानभक्षणपरे प्राणे हृदि तथा बहिः ॥ ५६ ॥
99545
99546 देशं कालं च संप्रेक्ष्य न भूयो जायते मनः ।
99547 यत्र प्राणो ह्यपानेन प्राणेनापान एव च ॥ ५७ ॥
99548
99549 निगीर्णौ बहिरन्तश्च देशकालौ च पश्यतौ ।
99550 क्षणमस्तंगतप्राणमपानोदयवर्जितम् ॥ ५८ ॥
99551
99552 देशकालौ प्राणापानाभ्यां सहैव निगीर्णाविति पश्येत्यर्थः ।
99553 तादृशावस्थाप्राणापानसंधिक्षणे सर्वप्राणिनामप्यस्ति योगिनस्तु तद्विदुर्नान्ये
99554 इत्याह-क्षणमित्यादिना ॥ ५८ ॥
99555
99556 अयत्नसिद्धबाह्यस्थं कुम्भकं तत्पदं विदुः ।
99557 अयत्नसिद्धो ह्यन्तस्थकुम्भकः परमं पदम् ॥ ५९ ॥
99558
99559 विदुः । योगिन इति शेषः ॥ ५९ ॥
99560
99561 एतत्तदात्मनो रूपं शुद्धैषा परमैव चित् ।
99562 एतत्तत्तत्सदाभासमेतत्प्राप्य न शोच्यते ॥ ६० ॥
99563
99564 पुष्पस्यान्तरिवामोदः प्राणस्यान्तरवस्थितम् ।
99565 न स प्राणं न वाऽपानं चिदात्मानमुपास्महे ॥ ६१ ॥
99566
99567 एवं क्रियाभेदभिन्नप्राणचिन्ताप्रकारमुक्त्वा तन्निरूढ्यनन्तरं
99568 प्राणापानाद्यान्तरतदधिष्ठानचिदात्मोपासनं कर्तव्यमित्याशयेनाह##-
99569 किं प्राणलयोपलक्षितोऽपानात्मा सः नेत्याह-न वाऽपानमिति । तथा च
99570 तत्परिचयार्थं प्राणस्यान्तरवस्थितमित्युक्तं नतूपासनोपाधितयेति भावः ॥ ६१ ॥
99571
99572 जलस्यान्तरिवास्वादमपानस्यान्तरस्थितम् ।
99573 न सप्राणंन् न वाऽप्राणं [न वाऽपानं इति पाठश्चिन्त्यः]
99574 चिदात्मानमुपास्महे ॥ ६२ ॥
99575
99576 आस्वाद्यत इत्यास्वादो माधुर्यमिव । सप्राणं सजीवम् । अप्राणं निर्जीवम् ॥ ६२ ॥
99577
99578 प्राणक्षयस्योपान्तस्थमपानक्षयकोटिगम् ।
99579 अपानप्राणयोर्मध्यं चिदात्मानमुपास्महे ॥ ६३ ॥
99580

99581 प्राणस्य प्राणनं प्रोच्चैः परं जीवस्य जीवनम् ।
99582 देहस्य धारणं धुर्यं चिदात्मानमुपास्महे ॥ ६४ ॥
99583
99584 प्राणस्येति । स उ प्राणस्य प्राणः इत्यादिशुतेः । प्राणनादिव्यापारे निमित्तमिति
99585 सर्वपर्यायार्थः ॥ ६४ ॥
99586
99587 मनसो मननं सत्यं बुद्धेरेकावबोधनम् ।
99588 अहंकृतेरहंकारं चिदात्मानमुपास्महे ॥ ६५ ॥
99589
99590 यस्मिन्सर्व यतः सर्वं यत्सर्वं सर्वतश्च यत् ।
99591 यच्च सर्वमयं नित्यं तच्चित्तत्त्वमुपास्महे ॥ ६६ ॥
99592
99593 आलोकालोकनं पुण्यं सर्वपावनपावनम् ।
99594 न च भावनमन्नूनं तच्चित्तत्वमुपास्महे ॥ ६७ ॥
99595
99596 आलोकालोकनं ज्योतिषो ज्योतिः । भावैर्मनोबुद्ध्यादिविकारैर्नमत् नम्रीभवत्
99597 पूर्वस्वभावात्प्रच्यवत् न च । नूनमिति निश्चये ॥ ६७ ॥
99598
99599 (अपानोऽस्तं [प्रक्षिप्तोऽयं क्वचित्पठ्यते ।] गतो यत्र प्राणो
99600 नाभ्युदितः क्षणम् ।
99601 कलाकलङ्करहितं तच्चित्तत्त्वमुपास्महे ॥)
99602 नापानोऽभ्युदितो यत्र प्राणश्चान्तमुपागतः ।
99603 नासाग्रगगनावर्तं तच्चित्तत्त्वमुपास्महे ॥ ६८ ॥
99604
99605 नासाग्रोपलक्षितद्वादशाङ्गुलप्रदेशगगनं आवर्तः
99606 प्राणापानप्रवाहसंधिर्यस्य । विरुद्धप्रवाहद्वयसंधौ ह्यावर्ता भवन्ति ॥ ६८ ॥
99607
99608 यत्र प्राणोऽस्तमायाति यत्रापानोऽस्तमेति च ।
99609 यत्र द्वावप्यनुत्पन्नौ तच्चित्तत्त्वमुपास्महे ॥ ६९ ॥
99610
99611 इदानीं बाह्यान्तः प्रदेशोपाधिभेदमपहाय यतश्चोदेति सूर्योऽस्तं यत्र च गच्छति
99612 । तं देवाश्चक्रिरे धर्मं स एवाद्य स उ श्व एतद्वै तत् इति श्रुत्यर्थ मनसिकृत्वाह##-
99613
99614 प्राणापानोद्भवस्थाने बाह्याभ्यन्तरमास्थिते ।
99615 ये द्वे योगिपदाधारस्तच्चित्तत्त्वमुपास्महे ॥ ७० ॥
99616
99617 ये द्वे प्राणापानोद्भवस्थाने योगिभिः पद्येते गम्येते इति पदे
99618 तदाधारस्तदधिष्ठानं यच्चित्तत्त्वं तदित्यर्थः ॥ ७० ॥
99619
99620 प्राणापानरथारूढं प्राणापानमनाततम् ।
99621 यच्छक्तिरूपं शक्तीनां तच्चित्तत्त्वमुपास्महे ॥ ७१ ॥
99622
99623 यत्प्राणापानोपाधिरथारूढमनाततं परिच्छिन्नं सत् प्राणापानसमाहारः
99624 प्राणनापाननशक्तिर्भवति एवं करणान्तरशक्तीनामपि यच्छक्तिरूपं
99625 भवतीत्यर्थः ॥ ७१ ॥
99626
99627 हृत्प्राणकुम्भकं देवं बहिश्चापानकुम्भकम् ।
99628 पूरकांशविसृष्टं यत्तच्चित्तत्त्वमुपास्महे ॥ ७२ ॥
99629
99630 प्राणापानकुम्भकभावेन तत्तद्विसर्गरिचकादिभावेन च तदेव विवर्तत इति
99631 तदेवोपास्यमित्याह-हृदिति ॥ ७२ ॥
99632

99633 प्राणापानपरामर्शं सत्ताबोधं विरूपकम् ।
99634 यत्प्राप्यं प्राणमननात्तच्चित्तत्त्वमुपास्महे ॥ ७३ ॥
99635
99636 प्राणापानयोः परामर्शश्चालनं तस्मिन्निमित्तभूतं तत्सत्ताबोधरूपं
99637 चेत्यर्थः । एवं प्राणोपास्तिफलमपि तदेवेत्युपास्यमित्याह-यत्प्राप्यमिति ॥ ७३ ॥
99638
99639 यत्प्राणपवनस्पन्दो यत्स्पन्दानन्दकारकम् ।
99640 कारणं कारणानां यत्तच्चित्तत्त्वमुपास्महे ॥ ७४ ॥
99641
99642 इन्द्रियाणां विषयप्रदेशोपसर्पणं स्पन्दस्तदुपभोगश्चानन्दस्तयोः कारणम् ॥
99643 ७४ ॥
99644
99645 यदखिलकलनाकलङ्कहीनं परिवलितं च सदा कलागणेन ।
99646 स्वनुभवविभवं पदं तदग्र्यं सकलसुरप्रणतं परं प्रपद्ये ॥ ७५ ॥
99647
99648 अखिलकलनाकलङ्कहीनं परमार्थतः । आपातदर्शिदृशा तु सदा जीवोपाधिभूतेन
99649 प्राणादिषोडशकलागणेन परिवलितं वेष्टितम् । सम्यगनुभवः स्वनुभवः स एव
99650 विभवो निरतिशयैश्वर्यं यस्य तथाविधं परमात्मपदमुक्तप्रकारेण प्रपद्ये
99651 उपासे इत्यर्थः ॥ ७५ ॥
99652
99653 इत्यार्षे श्रीवा० रामायणे वाल्मी० दे० मोक्षोपायेषु निर्वाणप्रकरणे पू०
99654 भुशुण्डोपाख्याने समाधिवर्णनं नाम पञ्चविंशः सर्गः ॥ २५ ॥
99655
99656 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
99657 समाधिवर्णनं नाम पञ्चविंशः सर्गः ॥ २५ ॥
99658
99659 षड्विंशः सर्गः २६
99660
99661 भुशुण्ड उवाच ।
99662
99663 एषा हि चित्तविश्रान्तिर्मया प्राणसमाधिना ।
99664 क्रमेणानेन संप्राप्ता स्वयमात्मनि निर्मले ॥ १ ॥
99665
99666 इत्थं स्वस्यात्मविज्ञानं निरूप्य प्राणचिन्तया ।
99667 भुशुण्डेनात्र कथ्यन्ते चिरजीवितहेतवः ॥
99668
99669 अनेनोक्तप्रकारेण ॥ १ ॥
99670
99671 एतां दृष्टिमवष्टभ्य संस्थितोऽस्मि महामुने ।
99672 न चलामि निमेषांशमपि मेरुविचालतः ॥ २ ॥
99673
99674 मेरोर्विचलनं विचालस्तस्मादपि ॥ २ ॥
99675
99676 गच्छतस्तिष्ठतो वापि जाग्रतः स्वपतोऽपि वा ।
99677 स्वप्नेऽपि न चलत्येष सुसमाधिर्ममात्मनि ॥ ३ ॥
99678
99679 नित्यानित्यासु लोलासु जगत्स्थितिषु सुस्थितः ।
99680 अन्तर्मुखोऽस्मि तिष्ठामि स्वकामेनात्मनात्मनि ॥ ४ ॥
99681
99682 जगत्स्थितिषु इष्टानिष्टलक्षणासु सुस्थितो निर्विक्षेपः । स्वकामेन स्वच्छन्देन ॥ ४ ॥
99683
99684 अपि संरुध्यते वायुरपि वा सलिलं गतेः ।

99685 नैतस्मात्सुसमाधानाद्विरुद्धं संस्मराम्यहम् ॥ ५ ॥
99686
99687 वायुः प्रवहाख्यो ज्योतिश्चक्राधारः। सलिलं महानदीनाम्। गतेः
99688 प्रवहणात्संरुद्ध्यते संरुद्ध्येतापीत्यर्थः। विरुद्धं व्युत्थापकं विषयजातम् ॥
99689 ५ ॥
99690
99691 प्राणापानानुसरणात्परमात्मावलोकनात्।
99692 अशोकमनुजातोऽस्मि पदमाद्यं महातपः ॥ ६ ॥
99693
99694 हे महातपः ॥ ६ ॥
99695
99696 आमहाप्रलयाद्ब्रह्मन्नुन्मज्जननिमज्जनम्।
99697 अहमद्यापि भूतानां पश्यञ्जीवामि धीरधीः ॥ ७ ॥
99698
99699 न भूतं न भविष्यं च चिन्तयामि कदाचन।
99700 दृष्टिमालम्ब्य तिष्ठामि वर्तमानामिहात्मना ॥ ८ ॥
99701
99702 वर्तमानां नित्यवर्तमानस्वभावां साक्षिदृष्टिम्। आत्मना मनसा ॥ ८ ॥
99703
99704 यथा प्राप्तेषु कार्येषु परित्यक्तफलैषणः।
99705 सुषुप्तसमया बुद्ध्या परितिष्ठामि केवलम् ॥ ९ ॥
99706
99707 निरभिमानत्वेन सुषुप्तसमया ॥ ९ ॥
99708
99709 भावाभावमयीं चिन्तामीहितानीहितान्विताम्।
99710 विमृश्यात्मनि तिष्ठामि चिरं जीवाम्यनामयः ॥ १० ॥
99711
99712 विमृश्य हेयतया निश्चित्य। तेन चिरं जीवामि ॥ १० ॥
99713
99714 प्राणापानसमायोगसमयं समनुस्मरन्।
99715 स्वयमात्मनि तुष्यामि चिरं जीवाम्यनामयः ॥ ११ ॥
99716
99717 समायोगः संधिस्तत्समयं तत्र विभातं ब्रह्मेति यावत् ॥ ११ ॥
99718
99719 इदमद्य मया लब्धमिदं प्राप्स्यामि सुन्दरम्।
99720 इति चिन्ता न मे तेन चिरं जीवाम्यनामयः ॥ १२ ॥
99721
99722 न स्तौमि न च निन्दामि क्वचित्किंचित्कदाचन।
99723 आत्मनोऽन्यस्य वा साधो तेनाहं शुभमागतः ॥ १३ ॥
99724
99725 आत्मनः स्वस्यान्यस्य वा। चेष्टितमिति शेषः ॥ १३ ॥
99726
99727 न तुष्यति शुभप्राप्तौ नाशुभेष्वपि खिद्यते।
99728 मनो मम समं नित्यं तेनाहं शुभमागतः ॥ १४ ॥
99729
99730 शुभंन् प्रस्तावाज्जीवनम् ॥ १४ ॥
99731
99732 परमं त्यागमालम्ब्य सर्वमेव सदैव हि।
99733 जीवितादि मया त्यक्तं तेनाहं शुभमागतः ॥ १५ ॥
99734
99735 परं सर्वद्वैतबाधलक्षणं त्यागम्। जीवितं जीवनाभिनिवेशस्तदादि ॥ १५ ॥
99736

99737 प्रशान्तचापलं वीतशोकं स्वस्थं समाहितम् ।
99738 मनो मम मुने शान्तं तेन जीवाम्यनामयः ॥ १६ ॥
99739
99740 काष्ठं विलासिनीं शैलं तृणमग्निं हिमं नभः ।
99741 समं सर्वत्र पश्यामि तेन जीवाम्यनामयः ॥ १७ ॥
99742
99743 किमद्य मम संपन्नं प्रातर्वा भविता पुनः ।
99744 इति चिन्ताज्वरो नास्ति तेन जीवाम्यनामयः ॥ १८ ॥
99745
99746 संपन्नं प्राप्तम् ॥ १८ ॥
99747
99748 जरामरणदुःखेषु राज्यलाभसुखेषु च ।
99749 न बिभेमि न हृष्यामि तेन जीवाम्यनामयः ॥ १९ ॥
99750
99751 अयं बन्धुः परश्चायं ममायमयमन्यतः ।
99752 इति ब्रह्मन्न जानामि तेन जीवाम्यनामयः ॥ २० ॥
99753
99754 अन्यतः अन्यस्य ॥ २० ॥
99755
99756 सर्वं सर्वपदाभासमनाद्यन्तमनामयम् ।
99757 अहं चिदिति जानामि तेन जीवाम्यनामयः ॥ २१ ॥
99758
99759 सर्व चिदेव । सर्वपदं नानावस्त्विवावभासत इति सर्वपदाभासम् ॥ २१ ॥
99760
99761 आहरन्विहरंस्तिष्ठन्नुत्तिष्ठन्नुच्छ्वसन्स्वपन् ।
99762 देहोऽहमिति नो वेद्मि तेनास्मि चिरजीवितः ॥ २२ ॥
99763
99764 आहरन् आददानः ॥ २२ ॥
99765
99766 इमं सांसारमारम्भं सुषुप्तपदवत्स्थितः ।
99767 असन्तमिव जानामि तेन जीवाम्यनामयः ॥ २३ ॥
99768
99769 संसारे भवं सांसारमारम्भं कार्यम् ॥ २३ ॥
99770
99771 यथाकालमुपायातावर्थानर्थौ समौ मम ।
99772 हस्ताविव शरीरस्थौ तेन जीवाम्यनामयः ॥ २४ ॥
99773
99774 यथाकालं प्रारब्धोपस्थापितभोगकालानुसारेणोपायातौ प्राप्तौ ॥ २४ ॥
99775
99776 अपरिचलया शक्त्या सुदृशा स्निग्धमुग्धया ।
99777 ऋजु पश्यामि सर्वत्र तेन जीवाम्यनामयः ॥ २५ ॥
99778
99779 स्वरूपान्न परिचलतीत्यपरिचलया मनःस्थैर्यशक्त्या । सुदृशा
99780 सर्वभूतेष्वात्मौपम्यदृष्ट्या । ऋजु अकुटिलम् । तथा चोक्तं भारते-सर्वं
99781 जिह्मं मृत्युपदमार्जवं ब्रह्मणः पदम् । एतावान् ज्ञानविषयः प्रलापः किं
99782 करिष्यति ॥ इति ॥ २५ ॥
99783
99784 आपादमस्तकान्तेऽस्मिन्न देहे ममता मम ।
99785 त्यक्ताहंकारपङ्क्तस्य तेन जीवाम्यनामयः ॥ २६ ॥
99786
99787 यत्करोमि यदश्नामि तत्त्यक्त्वा तद्गतोऽपि मे ।
99788 मनो नैष्कर्म्यमादत्ते तेन जीवाम्यनामयः ॥ २७ ॥

तत् तदभिमानं त्यक्त्वा शरीरेण तद्वतोऽपि मे मनो
नैष्कर्म्यमकर्तृभोक्तृस्वभावतामादत्ते स्वीकरोति ‖ २७ ‖

यदा यदा मुने किंचिद्विजानामि तदा तदा ।
मतिरायाति नौद्धत्यं तेन जीवाम्यनामयः ‖ २८ ‖

औद्धत्यमविनीततां नायाति ‖ २८ ‖

करोमीशोऽपि नाक्रान्तिं परितापे न खेदवान् ।
दरिद्रोऽपि न वाञ्छामि तेन जीवाम्यनामयः ‖ २९ ‖

ईशः परेषामाक्रमणसमर्थोऽप्याक्रान्तिं परिभवं न करोमि । एवं परकृते
परितापे सहनशीलत्वान्न खेदवान् ‖ २९ ‖

पश्यद्रूपे शरीरेऽस्मिन्भूतस्थात्मा चिदास्पदः ।
भूतवृन्दमहं साम्यात्तेन जीवाम्यनामयः ‖ ३० ‖

पश्यद्रूपे चेतनप्राये अस्मिञ्शरीरे भासमानेप्यहं चिदास्पदश्चिन्मात्रदर्शी
[अस्याग्रे-न शरीरात्मदर्शी इति पाठः समुपलभ्यते ।] । एवं च
चिदात्मनः सर्वभूतेषु साम्यात्सर्वभूतस्थात्मा सन् भूतवृन्दं स्वशरीरमिव
पश्यामीत्यध्याहृत्य योज्यम् ‖ ३० ‖

आशापाशविनुन्नायाश्चित्तवृत्तेः समाहितः ।
संस्पर्शं न ददाम्यन्तस्तेन जीवाम्यनामयः ‖ ३१ ‖

सर्वदा समाहितः सन् आशापाशविनुन्नायाश्चित्तवृत्तेः अन्तर्हृदि संस्पर्श
प्रवेशं न ददामि ‖ ३१ ‖

असत्तां जगतः सत्तामात्मनः करबिल्ववत् ।
सुप्तः प्रबुद्धः पश्यामि तेनास्मि चिरजीवितः ‖ ३२ ‖

बाह्यदृष्टिविषये सुप्तः सन् जगतः असत्तां पश्यामि अन्तस्तु प्रबुद्धः सन् आत्मनः
सत्तां करबिल्ववत्पश्यामीत्यन्वयः ‖ ३२ ‖

जीर्णं भिन्नं श्लथं क्षीणं क्षुब्धं क्षुण्णं क्षयं गतम् ।
पश्यामि नववत्सर्वं तेन जीवाम्यनामयः ‖ ३३ ‖

श्लथं शिथिलावयवम् । क्षीणं कृशाङ्गम् । क्षुब्धं व्यापृतावयवम् ।
क्षुण्णं संचूर्णितावयवम् ।
सर्वमतीतानागतवर्तमानवस्तुनित्यनिर्विकारात्ममात्रत्वदृशा नववत्पश्यामि ‖ ३३
। ।

सुखितोऽस्मि सुखापन्ने दुःखितो दुःखिते जने ।
सर्वस्य प्रियमित्रं च तेन जीवाम्यनामयः ‖ ३४ ‖

आपद्यचलधीरोऽस्मि जगन्मित्रं च संपदि ।
भावाभावेषु नैवास्मि तेन जीवाम्यनामयः ‖ ३५ ‖

भावाः कलानामिव वित्तादीनामुपचया अभावास्तत्क्षयाश्च त्रेषु नैवाभिनिविष्टोऽस्मि
‖ ३५ ‖

नाहमस्मि न चान्यो मे नाहमन्यस्य कस्यचित् ।
इति मे भावितं चित्तं तेन जीवाम्यनामयः ॥ ३६ ॥

अहं जगदहं व्योम देशकालक्रमावहम् ।
अहं क्रियेति मे बुद्धिस्तेन जीवाम्यनामयः ॥ ३७ ॥

घटश्चिच्चित्पटश्चित्खं चिद्वनं शकटं च चित् ।
चित्सर्वमिति मे भावस्तेन जीवाम्यनामयः ॥ ३८ ॥

किं सर्वत्र जाड्यमनपोह्यैवाहंबुद्धिस्ते नेत्याह-घट इति ॥ ३८ ॥

इत्यहं मुनिशार्दूल त्रिलोककमलालिकः ।
भुशुण्डो नाम काकोलः कथितश्चिरजीवितः ॥ ३९ ॥

उपसंहरति-इतीति । मेरुकर्णिकावासित्वात् श्यामत्वाच्च त्रिलोककमलस्य अलिरिव अलिकः
॥ ३९ ॥

ब्रह्मार्णवे विलुलितं त्रिजगत्तरङ्गमुत्पादनाद्यभिभवेन विभिन्नरूपम् ।
आलीनमुन्नमितमाकुलदृश्यदृश्यमालोकयन्प्रकलयंश्च चिरं स्थितोऽस्मि
॥ ४० ॥

उत्पादनानि सर्गाः । आदिपदाद्वृद्धिविपरिणामापक्षयास्तल्लक्षणेनाभिभवेन
परस्परप्रतिघातेन विभिन्नानि वैचित्र्यं प्राप्तानि रूपाणि यस्य तत् । एवंरीत्या
पुनःपुनरुन्नमितमालीनं चाकुलं परिभ्रमत्साक्षिदृश्यबुद्धिमनैन्द्रियाणां
दृश्य जगद्व्युत्थानकाले आलोकयन् समाधिकाले प्रकलयन् विलापयंश्च चिरं
स्थितोऽस्मीत्यर्थः ॥ ४० ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाणप्रकरणे पू०
भुशुं०चिरजीवितहेतुकथनं नाम षड्विंशः सर्गः ॥ २६ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
चिरजीवितहेतुकथनं नाम षड्विंशः सर्गः ॥ २६ ॥

सप्तविंशः सर्गः २७

भुशुण्ड उवाच ।

एतत्ते कथितं ब्रह्मन्यथास्मि यदिहास्मि च ।
त्वदाज्ञामात्रसिद्ध्यर्थं धार्ष्ट्येन ज्ञानपारग ॥ १ ॥

भुशुण्डस्य प्रशंसात्र यियासोस्तेन पूजनम् ।
वसिष्ठस्य नभोगत्या स्वलोकाप्तिश्च वर्ण्यते ॥

यथा येन प्रकारेण अस्मि चिरं जीवामि । परमार्थत इह कार्यकरणसंघाते यदस्मि
तच्च कथितमित्यर्थः । धार्ष्ट्येन वैयात्येन ॥ १ ॥

श्रीवसिष्ठ उवाच ।

अहो नु चित्रं भगवन्भवता भूषणं श्रुतेः ।
आत्मोदन्तः प्रकथितः परं विस्मयकारणम् ॥ २ ॥

आत्मोदन्तः स्ववृत्तान्तः ॥ २ ॥

99893
99894 धन्यास्ते ये महात्मानमत्यन्तचिरजीवनम् |
99895 भवन्तं परिपश्यन्ति द्वितीयमिव पद्मजम् ॥ ३ ॥
99896
99897 यावदद्य दृशो धन्याः स्वात्मोदन्तमखण्डितम् |
99898 यथावत्पावनं बुद्धेः सर्वं कथितवानसि ॥ ४ ॥
99899
99900 ये भवन्तं प्रपश्यन्ति तेषां दृशो धन्याः | यावदद्येति
99901 स्वदृशोश्चिरस्थितिसार्थक्याभिप्रायम् ॥ ४ ॥
99902
99903 प्रभातं दिक्षु सर्वासु दृष्टा विबुधभूतयः |
99904 भवानिव जगत्यस्मिन्न महानवलोकितः ॥ ५ ॥
99905
99906 विबुधानां देवानां विदुषां च भूतयो ज्ञानैश्वर्यसंपदो दृष्टाः ॥ ५ ॥
99907
99908 कथंचित्प्राप्यते कश्चिद्भ्रान्त्वेव हि महाजनः |
99909 न भवानिव भव्यात्मा सुलभो जगति क्वचित् ॥ ६ ॥
99910
99911 भ्रान्त्वा यत्नेन चिरमन्विष्यापि महांस्तत्त्वज्ञो जनः कथंचित्प्राप्यते | तत्रापि
99912 भवानिव न सुलभः ॥ ६ ॥
99913
99914 वंशखण्डे हि कस्मिंश्चिज्जायते मौक्तिकं यथा |
99915 जगत्खण्डे हि कस्मिंश्चिद्दृश्यते त्वादृशस्तथा ॥ ७ ॥
99916
99917 वंशखण्डे वेणुवने | वेणूनामप्यष्टसु मुक्ताकरेषु परिगणनात् ॥ ७ ॥
99918
99919 मया तु सुमहत्कार्यमद्य संपादितं शुभम् |
99920 पुण्यदेहविमुक्तात्मा यद्भवानवलोकितः ॥ ८ ॥
99921
99922 तदस्तु तव कल्याणं प्रविशात्मगुहां शुभाम् |
99923 मध्याह्नसमयो यन्मे व्रजामि सुरमन्दिरम् ॥ ९ ॥
99924
99925 मध्याह्नपदेन माध्याह्निकं कर्म लक्ष्यते | सुरमन्दिरं सप्ताषलोकं
99926 स्वगृहम् ॥ ९ ॥
99927
99928 इत्याकर्ण्य भुशुण्डोऽसौ जग्राहोत्थाय पादपात् |
99929 संकल्पिताभ्यां हस्ताभ्यामुपात्तं हेमपल्लवम् ॥ १० ॥
99930
99931 कल्पवृक्षलतापुष्पकेसरेण हिमत्विषा |
99932 तत्पात्रं मौक्तिकार्घ्येण पूरयामास पूर्णधीः ॥ ११ ॥
99933
99934 मौक्तिकलक्षणेनार्घ्येण अर्घार्थजलेन ॥ ११ ॥
99935
99936 तेनार्घ्यपाद्यपुष्पेण त्रिनेत्रमिव मामसौ |
99937 आपादमस्तकं भक्त्या पूजयामास पूर्वजः ॥ १२ ॥
99938
99939 त्रिनेत्रमिवेत्युपमानान्नित्यं शिवपूजापरतापि तस्य गम्यते | पूर्वजश्चिरन्तनः ॥ १२ ॥
99940
99941 अनुव्रज्याकदर्थेन खगेन्द्रालमिति ब्रुवन् |
99942 विष्टरादहमुत्थाय ततः खगवदाप्लुतः ॥ १३ ॥
99943
99944 हे खगेन्द्र अनुव्रज्यालक्षणेन कदर्थेन श्रमेण अलमिति ब्रुवन्नहमाप्लुत उड्डीनः

99945 ॥ १३ ॥
99946
99947 व्योम्नि योजनमात्रं तु मदनुव्रज्यया गतः ।
99948 करं करेणावष्टभ्य बलात्संरोधितः खगः ॥ १४ ॥
99949
99950 संरोधितो निवर्तितः ॥ १४ ॥
99951
99952 मयि याते क्षणेनैव गगनाध्वन्यदृश्यताम् ।
99953 निवृत्तोऽसौ विहंगेन्द्रो दुस्त्यजा संगतिः सताम् ॥ १५ ॥
99954
99955 अन्योन्यमपि कस्मिंश्चित्तरङ्गक इवाम्बुधौ ।
99956 व्योमन्यदृश्यतां यातो खगस्मृत्या मुनीनहम् ॥ १६ ॥
99957
99958 आवामन्योन्यमप्यदृश्यतां यातौ । ततः अहं खगस्य भुशुण्डस्य स्मृत्वा
99959 अविच्छिन्नस्मरणेनोपलक्षितः सन्सप्तर्षिमण्डलं प्राप्य मुनीन्दृष्टवानिति शेषः
99960 ॥ १६ ॥
99961
99962 सप्तर्षिमण्डलं प्राप्य जायया परिपूजितः ।
99963 याते कृतयुगस्यादौ पुरा वर्षशतद्वये ॥ १७ ॥
99964
99965 जायया अरुन्धत्या । उक्ताया भुशुण्डसंगतेः कालमाह-याते इति ॥ १७ ॥
99966
99967 संगतोऽहं भुशुण्डेन मेरोः शृङ्गद्रुमेऽभवम् ।
99968 अद्य राम कृते क्षीणे त्रेता संप्रति वर्तते ॥ १८ ॥
99969
99970 मध्ये त्रेतायुगस्यास्य जातस्त्वं रिपुमर्दन ।
99971 पुनरद्याष्टमे वर्षे तत्रैवोपरि भूभृतः ।
99972 मिलितोऽभूद्भुशण्डो मे तथैवाजररूपवान् ॥ १९ ॥
99973
99974 भूभृतः मेरोः ॥ १९ ॥
99975
99976 इति संकथितं चित्रं भुशुण्डोदन्तमुत्तमम् ।
99977 श्रुत्वा विचार्य चैवान्तर्यदयुक्तं तत्समाचर ॥ २० ॥
99978
99979 उपसंहरति-इतीति ॥ २० ॥
99980
99981 श्रीवाल्मीकिरुवाच ।
99982
99983 इति सुमतिभुशुण्डसत्कथां यो विमलमतिः प्रविचारयिष्यतीह ।
99984 भवभयबहुलाकुलास्थितां स प्रसभमसत्सरितं तरिष्यतीति ॥ २१ ॥
99985
99986 इतीति । इति इमां सुमतेर्भुशुण्डस्य सत्कथां यः प्रविचारयिष्यति स इहास्मिन्नेव शरीरे
99987 भवा जन्मादयस्तद्भयैर्बहुला अत एवाकुला ये जीवास्तैरास्थितां इति इमां
99988 प्रसिद्धामसत्सरितं मायानदीं तरिष्यति । प्रसभमिति पौरुषप्राधान्यद्योतनार्थम्
99989 ॥ २१ ॥
99990
99991 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाणप्रकरणे पू०
99992 भुशुं० समाप्तिर्नाम सप्तविंशः सर्गः ॥ २७ ॥
99993
99994 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
99995 समाप्तिर्नाम सप्तविंशतितमः सर्गः ॥ २७ ॥
99996

अष्टाविंशः सर्गः २८

श्रीवसिष्ठ उवाच।

एवं भुशुण्डवृत्तान्तः कथितस्ते मयानघ।
अनया प्रज्ञया तीर्णो भुशुण्डो मोहसंकटात्॥ १॥

आख्यायिकाभिसंबन्धो देहानियतिवर्णकम्।
आपातभ्रान्तिमात्रत्वं देहादेश्चात्र वर्ण्यते॥

वर्णिताया भुशुण्डाख्यायिकायाः प्रकृतोपदेशसंबन्धं दर्शयति##-

एतां दृष्टिमवष्टभ्य स्वप्राणाभ्यासपूर्विकाम्।
भुशुण्डवन्महाबाहो भव तीर्णमहार्णवः॥ २॥

प्राणाभ्यासोऽत्र प्राणस्य निरोध उपास्तिर्वा तत्पूर्विकाम्। महार्णव इति विपुलः
संसारो निगीर्याध्यवसितः॥ २॥

यथा ज्ञानेन योगेन संतताभ्यासजन्मना।
भुशुण्डः प्राप्तवान्प्राप्यं तथासादय तत्पदम्॥ ३॥

असक्तबुद्धयः सर्वे भुशुण्डवदवस्थितिम्।
प्राप्नुवन्ति परे तत्त्वे प्राणापानावलोकिनः॥ ४॥

प्राणापानावलोकिनः उक्तोपास्तिशीलाः॥ ४॥

एता विचित्रा भवता श्रुता विज्ञानदृष्टयः।
इदानीं धियमालम्ब्य यथेच्छसि तथा कुरु॥ ५॥

यथेच्छसि योगपूर्विकामुपास्तिपूर्विकां वा स्वात्मप्रतिष्ठां तथा कुरु॥ ५॥

श्रीराम उवाच।

भगवन्भवता भूमिभास्वता ज्ञानरश्मिभिः।
हार्दमुद्दामदौरात्म्यं प्रमृष्टमखिलं तमः॥ ६॥

आस्तां योगोपास्ती त्वदुपदेशश्रवणादेव स्वस्य तत्त्वबोधः सिद्ध इति सूचयन् रामः
कथाप्रसञ्जितदेहगेहस्वरूपमेव जिज्ञासमानः पृच्छति-भगवन्नित्यादिना।
भूमिभास्वता भूमाववत्तीर्णेन सूर्येण। उद्दामानि दौरात्म्यानि
अनात्मस्वात्मत्वदर्शनानि तत्प्रयुक्तदुश्चेष्टितानि च यस्मात्तथाविधं हार्दं
तमः॥ ६॥

प्रबुद्धाः स्मः प्रहृष्टाः स्मः प्रविष्टाः स्मः स्वमास्पदम्।
स्थिताः स्मो ज्ञातविज्ञेया भवन्तो ह्यपरा इव॥ ७॥

अपरा द्वितीया भवन्त इव॥ ७॥

अहो भुशुण्डचरितं परं विस्मयकारकम्।
भगवन्भवता प्रोक्तमुत्तमार्थावबोधनम्॥ ८॥

भुशुण्डचरिते ब्रह्मन्नेतस्मिन्कथिते त्वया।
यच्छरीरगृहं प्रोक्तं मांसचर्मास्थिनिर्मितम्॥ ९॥

100049
100050 तत्केन नाम रचितं कुतो वा तत्समुत्थितम् ।
100051 कथं वा स्थितिमायातं को वा तत्रावतिष्ठते ॥ १० ॥
100052
100053 कर्तुर्निमित्तस्य स्थितिप्रकारस्य तदन्तःस्थस्य स्वामिनश्च प्रश्नाः ॥ १० ॥
100054
100055 श्रीवसिष्ठ उवाच ।
100056
100057 परमार्थावबोधाय दोषापाकरणाय च ।
100058 शृणु राघव तत्त्वेन वक्ष्यमाणमिदं मया ॥ ११ ॥
100059
100060 अस्थिस्थूणं नवद्वारं रक्तमांसावलेपनम् ।
100061 शरीरसदनं राम न केनचिदिदं कृतम् ॥ १२ ॥
100062
100063 तत्राद्यस्योत्तरमाह-अस्थीति ॥ १२ ॥
100064
100065 आभासमात्रमेवेदमित्थमेवावभासते ।
100066 द्विचन्द्रविभ्रमाकारं सदसच्च व्यवस्थितम् ॥ १३ ॥
100067
100068 नन्वीश्वरोऽस्य देहस्य निर्माता श्रुतिपुराणाख्यायिकाप्रसिद्धः जीवस्तु
100069 स्वकर्मोपभोगायास्य निर्मापकस्तौ कथमपलप्येते तत्राह-आभासमात्रमिति ।
100070 इत्थमेव । विनैव निर्मातारमित्यर्थः । न हि जले चन्द्राभासो निर्मातारमपेक्षते नापि
100071 तैमिरिककल्पितद्वितीयचन्द्रविभ्रमस्तद्वदित्यर्थः । ईश्वरस्य निर्मातृत्वं तु
100072 श्रौतं न मुख्यम् । पुरुषनिःश्वसितदृष्टान्तदर्शनात् । जीवस्य
100073 निर्मापयितृत्वमपि तथा । अबुद्धिपूर्वत्वादनिष्टनिर्मापणायोगाच्चेति भावः ॥ १३ ॥
100074
100075 द्विचन्द्रदर्शनविधौ चन्द्रद्वित्वं सदैव हि ।
100076 वस्तुतश्चैक एवेन्दुः स्थितो देहस्तथैव हि ॥ १४ ॥
100077
100078 देहस्य मिथ्यात्वं तु प्रतीतिकालमात्रस्थितिकत्वाच्चन्द्रद्वित्ववदेव सिद्धमित्याह##-
100079 हि यस्मात्तथैव । वस्तुतस्तु सदैव ह्येक एवेन्दुरित्यन्वयः ॥ १४ ॥
100080
100081 देहप्रत्ययकाले हि देहोऽयं समवस्थितः ।
100082 असन्नेव च सत्तस्मात्प्रोक्तः सदसदात्मकः ॥ १५ ॥
100083
100084 उक्तमेव स्पष्टमाह-देहेति । परमार्थसदधिष्ठानकतया उपचारात्सत् ॥ १५ ॥
100085
100086 स्वप्ने स्वप्नावबोधः संस्त्वन्यदा स मुधैव हि ।
100087 बुद्बुदो बुद्बुदविधौ सत्यो मिथ्यैव चान्यदा ॥ १६ ॥
100088
100089 असतः सत्त्वभ्रान्तिः क्व दृष्टा तत्राह-स्वप्न इति । मुधा मिथ्यैव ।
100090 बुद्बुदविधौ बुद्बुदप्रतीतिसत्त्वे ॥ १६ ॥
100091
100092 देहो देहविधौ सत्यो ह्यसत्य इतरद्विधौ ।
100093 प्रतिभासविधौ तावज्जलं सदसदन्यदा ॥ १७ ॥
100094
100095 इतरद्विधौ शुद्धात्मदर्शनसत्त्वे । जलं मृगतृष्णिकोदकम् ॥ १७ ॥
100096
100097 प्रतिभासविधौ देहः सन्नसंश्चान्यदा स्मृतः ।
100098 आभासमात्रमेवेदमित्थं संप्रति भासते ॥ १८ ॥
100099
100100 प्रतिभासविधाविति प्रसाधितार्थनिगमनत्वान्न पौनरुक्त्यम् ॥ १८ ॥

अयं नामाहमित्यन्तर्गृहीतमननं स्थितम् |
मांसास्थिमयनिर्माणदेहोऽहमिति विभ्रमम् || १९ ||

आभासमात्रतामुपपादयंस्तदभिमानं त्याजयति-अयमिति |
प्राग्गृहीतदेहाकारं मननमेव संस्कारदार्ढ्यात्पुनः पुनर्देहाकारेण स्थितम्
||१९ ||

त्यज संकल्पनिर्माणदेहाः सन्ति सहस्रशः |
सुखतल्पगतो येन स्वप्नदेहेन दिक्तटान् || २० ||

त्यजेति पूर्वान्वयि | संकल्पनिर्माणदेहानेवोदाहृत्य देषामसत्यतां दर्शयति##-

परिभ्रमसि हे राम स देहस्ते क्व संस्थितः |
जागरायां मनोराज्ये येन स्वर्गपुरान्तरम् || २१ ||

जागरायां जागरे | छान्दसं स्त्रीत्वम् || २१ ||

परिभ्रमसि मेरुं वा स देहस्ते क्व संस्थितः |
स्वप्नेष्वपि च यः स्वप्नस्तत्र येन महीतटान् || २२ ||

परिभ्रमसि हे राम स देहस्ते क्व संस्थितः |
मनोराज्यं मनोराज्ये महद्विभवभूमिषु || २३ ||

मनोराज्यान्तःकल्पिते मनोराज्यान्तरे महतीषु विभवभूमिषु | आन्महतः
समानाधिकरणजातीययोः इत्यात्वे कर्तव्ये तदभावश्छान्दसः |
महतामिन्द्रचन्द्रादीनां वा विभवभूमिषु || २३ ||

परिभ्रमसि येनेह स देहस्ते क्व संस्थितः |
गतैर्देहैर्मनोराज्ये या विचित्रा जगत्क्रियाः || २४ ||

गतैः कल्पनाविलयमनुविलीनैः || २४ ||

प्रकरोषि महाबाहो ते देहास्ते क्व संस्थिताः |
विलासिन्यानुरागिण्या येन संकल्पकान्तया || २५ ||

निर्वृतिं यासि देहेन स देहस्ते क्व संस्थितः |
एते राम यथा देहा मनसः सदसन्मयाः || २६ ||

निर्वृतिं संभोगसुखं यासीति योग्यतया वर्तमानकालोक्तिः | एवं
भविष्यत्स्वप्नमनोराज्यदेहा अप्युदाहार्याः | तेषु
मिथ्यात्वसांकल्पिकत्वादेर्निश्चितत्वात्प्रस्तुतदेहेऽपि तथात्वं साधयति-एते इति || २६ ||

तथैव तादृशाचारो देहोऽयं मनसः स्मृतः |
इदं धनमयं देहो देशोऽयमिति विभ्रमः || २७ ||

अहंताध्यासविषये देहे दर्शितो न्यायो ममताध्यासगोचरे धनादावपि सम
इत्याशयेनाह-इदं धनमिति || २७ ||

तत्सर्वं चित्तवीर्यस्य संकल्पस्य विजृम्भितम् |
दीर्घस्वप्नमिमं विद्धि दीर्घं वा चित्तविभ्रमम् || २८ ||

100153 या तु देहादौ स्वप्नादिवैधर्म्यबुद्धिः सा चिरानुवृत्तिमात्रा न तु
100154 सत्यत्वासांकल्पिकत्वादिप्रयुक्तेत्याशयेनाह-दीर्घेति || २८ ||
100155
100156 दीर्घं वापि मनोराज्यं संसारं रघुनन्दन |
100157 प्रबोधमेष्यसि यदा परमात्मेच्छया स्वया || २९ ||
100158
100159 अत एवास्य तत्त्वज्ञानेन बाध्यत्वमुपपन्नमित्याशयेनाह-प्रबोधमिति || २९ ||
100160
100161 द्रक्ष्यसि त्वं तदा सम्यगिदमर्कोदये यथा |
100162 स्वप्नसंकल्पजालेन यथान्यैव जगत्स्थितिः || ३० ||
100163
100164 सम्यक् आत्ममात्रपरिशेषेण द्रक्ष्यसि | यथा अर्कोदये प्रबुद्धः स्वाप्नार्थान्पश्यति
100165 तद्वत् || ३० ||
100166
100167 तथैवेयं हि संकल्पकलना काचिदेव हि |
100168 यथा पूर्वं मयोत्पत्तिः प्रोक्ता कमलजन्मनः || ३१ ||
100169
100170 काचिदनिर्वचनीया मिथ्यैवेत्यर्थः | उक्तेऽर्थे च प्रागुत्पत्तिप्रकरणे विस्तरोक्तं
100171 स्मारयति-यथेति || ३१ ||
100172
100173 मनसः स्वयमेवान्तःसंकल्पकलनोद्भवा |
100174 विचित्ररचनोपेतं मनस्तत्रात्तविभ्रमम् || ३२ ||
100175
100176 संकल्पकलनामात्रं तथेदमवभासनम् |
100177 यथा कल्पित आभासो मनसोऽब्जजतां गतः || ३३ ||
100178
100179 ऐन्दवोपाख्यानोक्तमपि स्मर्तव्यमित्याह-यथा कल्पित इति || ३३ ||
100180
100181 देहाद्विचिन्तितो देहः स्थितोऽन्यस्तद्वदेव हि |
100182 प्राक्प्रवाहचिराभ्यस्तो वासनातिशयेन यः || ३४ ||
100183
100184 पूर्वदेहादुत्क्रान्तिकाले विचिन्तितो यो देहः || ३४ ||
100185
100186 तथैव दृश्यते देहस्तथाऽऽकृत्युदयेन सः |
100187 पौरुषेण प्रयत्नेन संकल्पो ह्यमेव चित् || ३५ ||
100188
100189 तथाऽऽकृत्युदयेन तादृशसंस्थानसंपत्त्या | पौरुषेण प्रयत्नेन मनः
100190 प्रत्यङ्मुखीकृत्य स्वात्मदर्शने अयं देहजगदाकारः संकल्पश्चिदेवेत्यन्वयः
100191 || ३५ ||
100192
100193 अन्यथा भाव्यते राम भूयते तदिहान्यथा |
100194 अयं सोऽयं ममायं च संसार इति भाविते || ३६ ||
100195
100196 अन्यथा भाव्यते यदीति शेषः | तत्तर्हि अन्यथा भूयते इति भाविते तथैवानुभूयत इति
100197 शेषः || ३६ ||
100198
100199 सत्यो यो भाव्यते राम भावनादार्ढ्यसंभवः |
100200 भावितं तीव्रवेगेन यदेवाशु तदेव हि || ३७ ||
100201
100202 तदेव हि दृश्यते इति परेणान्वयः || ३७ ||
100203
100204 सर्वत्र दृश्यते राम कान्तेवात्यन्तवल्लभा |

100205 अहर्व्यावृत्तिरभ्यस्ता यथा स्वप्नेषु दृश्यते ॥ ३८ ॥
100206
100207 अह्नि व्यवृत्तिर्व्यापृतिर्यथाभ्यस्ता ॥ ३८ ॥
100208
100209 तथायं भावनाभ्यस्तः संसारोऽप्यवलोक्यते ।
100210 यथा स्वप्नावनौ क्षिप्रमहर्यदवभासते ॥ ३९ ॥
100211
100212 क्षिप्रं शीघ्रप्रध्वंसी क्षणादिः अहस्त्रिंशद्घटिकादीर्घोऽवभासते ॥ ३९ ॥
100213
100214 तथेदमल्पकालस्थमपि संलक्ष्यते स्थिरम् ।
100215 व्योमन्येव यथा तापतप्ते संदृश्यते सरित् ॥ ४० ॥
100216
100217 स्थिरं शाश्वत्रम् । व्योमनि मरुभूम्याकाशे । सरित् मृगतृष्णानदी ॥ ४० ॥
100218
100219 धराप्यविद्यमानापि संकल्पाद्दृश्यते तथा ।
100220 दृश्यते दृष्टिवैरूप्याद्यथा व्योमनि पिच्छिका ॥ ४१ ॥
100221
100222 धरा भूः । अपिशब्दादन्तरिक्षं त्रिलोकी च । पिच्छिका नर्हमुष्टिः ॥ ४१ ॥
100223
100224 तथैवेयं जगल्लक्ष्मीर्दुर्ज्ञानादवभासते ।
100225 दृश्यते समया दृष्ट्या न यथा व्योम्नि पिच्छिका ॥ ४२ ॥
100226
100227 दुर्ज्ञानाद्भ्रमात् ॥ ४२ ॥
100228
100229 सम्यग्दृष्ट्या जगल्लक्ष्मीस्तथेयं नावभासते ।
100230 भीरुरभ्येति न यथा स्वसंकल्पेषु संभ्रमम् ॥ ४३ ॥
100231
100232 भीरुरपि स्वसंकल्पेषु स्वमनोराज्यकल्पितहस्तिव्याघ्रादिषु । संभ्रमं भयम् ॥ ४३ ॥
100233
100234 स्वसंकल्पे हि संसारे न तथैते भयं सुधीः ।
100235 स्व एव हि स्वभावोऽयमित्थं संप्रति भासते ॥ ४४ ॥
100236
100237 स्वभावः आत्मा । संप्रति बहिर्मुखदशायाम् ॥ ४४ ॥
100238
100239 संसारसरणिस्थित्यां कस्मात्कोऽत्र बिभेति किम् ।
100240 स एव किंचित्संशोध्यः शुद्ध्या विमलतां गते ॥ ४५ ॥
100241
100242 यद्बिभेति तदपि भयं किम् । न किंचित्स्वात्मव्यतिरिक्तमस्तीत्यर्थः । यो बिभेति स एव
100243 किंचित्संशोध्यो विवेचनीयः ॥ ४५ ॥
100244
100245 तस्मिन्न दृश्यते राम मोहोऽयं जगतः स्थितः ।
100246 सम्यगालोकमात्रेण स्वभावः शुद्धिमृच्छति ॥ ४६ ॥
100247
100248 अयं भयादिलक्षणो मोहः अद्वये शुद्धात्मनि न दृश्यते । तथा च श्रुतिः##-
100249 । द्वितीयाद्वै भयं भवति इति । केन तर्ह्युपायेनात्मा शुद्ध्यति तमाह-सम्यगिति ।
100250 स्वभाव आत्मा ॥ ४६ ॥
100251
100252 न गृह्णाति मलं भूयस्ताम्रतामिव काञ्चनम् ।
100253 आभासमात्रमेवेदं न सन्नासज्जगत्त्रयम् ॥ ४७ ॥
100254
100255 पुनरशुद्धिप्राप्तिशङ्कां वारयति-नेति । स्वभावतः काञ्चनं भ्रान्त्या
100256 ताम्रतया गृहीतं तापादिना स्वरूपाभिव्यक्तौ पुनस्ताम्रत्वमिवेत्यर्थः । कुतोऽस्य

दर्शनमात्राच्छुद्धिरिति चेद्दृश्यमलस्याभासमात्रत्वादित्याह##-

इत्यन्यकलनात्यागः सम्यगालोकनं विदुः।
मरणं जीवितं स्वर्गो ज्ञानमज्ञानमेव च॥ ४८॥

इति अस्माद्धेतोः सम्यगालोकनमेवान्यकलनायास्त्यागो निवृत्तिरिति विदुरिति
पूर्वेणान्वयः। सम्यगीक्षणं तर्हि कीदृशं तदाह-मरणमित्यादिना॥ ४८॥

चिदाभासादृते नास्तीत्येकता सम्यगीक्षणम्।
त्वमहंतादिसंसार इति मे न दिशो दश॥ ४९॥

चिदाभासाच्चित्प्रकाशादृते विना पृथङ्‌ नास्तीत्येकता चिन्मात्रपरिशेषः फलतः
सम्यगीक्षणमित्यर्थः। त्वंता स्वातिरिक्तचेतनता। अहंता
स्वदेहमात्रपरिच्छिन्नचेतनता आदिपदात्त्वंताहंताभिमानविषय आध्यात्मिकः
कार्यकारणकलापः संसारयत्यात्मानं लोकान्तरेषु विषयेषु च भ्रमयतीति संसारो
विषयकलापस्तदाधारा दश दिशश्चेति सर्वं दृश्यजातं मे मत्संबन्धिनः
पृथक् न सन्ति किंतु स्वाभासं स्वप्रकाशात्मस्वरूपमेवास्तीत्यन्वयः॥ ४९॥

सर्वं स्वाभासमेवेति सम्यगालोकनं विदुः।
सदसन्मयसंसारे यथा भूतार्थदर्शनात्॥ ५०॥

सम्यगालोकनफलमाह-सदसन्मयेति। राद्ब्रह्म असती माया तदुभयोपादानके॥
५०॥

नास्तमेति न चोदेति सम्यगालोकनान्मनः।
निर्णीय सर्वभावानामसत्त्वं सत्त्वमेव च॥ ५१॥

असत्त्वं बाधम्। सत्त्वमधिष्ठानसन्मात्रपरिशेषम्॥ ५१॥

निष्कामं शान्तिमभ्येति सम्यगालोकनान्मनः।
न निन्दति न च स्तौति न हृष्यति न शोचति॥ ५२॥

निष्कामं आप्तकामत्वादकामम्॥ ५२॥

शीतलां सत्यतामेति सम्यगालोकनान्मनः।
अवश्यमेव मर्तव्यं सर्वैरेव हि बन्धुभिः॥ ५३॥

शीतलामुपशान्ततापत्रयाम्। स्वस्य मुक्तावपि बन्धुजनानां
बन्धानिवृत्तेस्तदीयमरणादिदर्शनजस्तापो दुर्वारस्तत्राह-अवश्यमेवेत्यादिना
॥ ५३॥

इति बन्धुवियोगेषु किं वृथा परितप्यसे।
अवश्यमेव च मया मर्तव्यमिति निश्चयः॥ ५४॥

अज्ञातादशायां स्वमरणाशङ्कातापोऽप्यनेनोपायेन परिहर्तुं शक्य
इत्याशयेनाह-अवश्यमेवेति॥ ५४॥

इत्यात्ममरणप्राप्तौ किं मुधा परितप्यसे।
अवश्यमेव जातेन किंचित्सुविभवादिकम्॥ ५५॥

प्राप्तव्यं पुरुषेणेति हर्षस्यावसरो हि कः।
सर्वस्यैव हि संसारे नरस्य व्यवहारिणः॥ ५६॥

100309
100310 अर्थायाता भवत्यापच्छोकस्यावसरो हि कः।
100311 बृंहत्युदेति स्फुरति बुद्बुदौघ इवार्णवे॥ ५७॥
100312
100313 आपत् दारिद्र्यदुर्दशाद्या। अर्थादिव आयाता भवत्येव। बृंहति वर्धते॥ ५७॥
100314
100315 इदं हि जगतां जालं किमत्र परिदेवना।
100316 सत्सदेव सदैवैतदसदेवासदेव हि॥ ५८॥
100317
100318 असदपि सदैव असदेव न कदाचित्सत्त्वमापन्नमिति मायाविक्रियावैचित्र्यमात्रात्मके
100319 प्रपञ्चे किमन्यदस्ति यत्परिदेव्यते इत्यर्थः। अहं अहंकारात्मा नास्मि॥ ५८॥
100320
100321 क्रियावैचित्र्यमात्रे तु किमन्यत्परिदेव्यते।
100322 नाहमस्मि न चाभूवं भविष्यामि न सोऽधुना॥ ५९॥
100323
100324 देहोऽयं चित्रदोषोत्थः किमन्यत्परिदेव्यते।
100325 देहाच्चेदन्य एवाहं चिदाभासस्तदङ्ग हे॥ ६०॥
100326
100327 चित्रात्कामकर्मवासनाविद्यादोषादुत्थः चिदाभासश्चित्प्रकाशः। अङ्गेति
100328 कोमलामन्त्रणे॥ ६०॥
100329
100330 कौ तौ मे सदसद्भावौ यन्निष्ठं परितप्यते।
100331 इति निश्चयवत्स्वान्तं सम्यग्ज्ञानात्मनो मुनेः॥ ६१॥
100332
100333 ये निष्ठे उदर्कफले निमित्तभूते यस्मिन्परितापे इति क्रियाविशेषणम्॥ ६१॥
100334
100335 नास्तमेति न चोदेति न [न चान्तं इति पाठः।] शान्तं परितप्यते।
100336 परतामेव नाशान्तामनुत्तमपदे स्थितः॥ ६२॥
100337
100338 अनुत्तमपदे स्थितो ब्रह्मवित् सर्वभावेषु नाशान्तां बाधपरिशिष्टां परतां
100339 ब्रह्मतामेव आदत्ते स्वीकरोति न प्रतीतिकालिकीं खरताम्। यथा तित्तिरी नीडनिर्माणाय
100340 तृणानां मूलतः खरभागान्परित्यज्य मृद्वीं तृणकोटिमेवादत्ते
100341 तद्वदित्यर्थः॥ ६२॥
100342
100343 आदत्ते तित्तिरी मृद्वीं तृणकोटिमिवामलाम्।
100344 एतदर्थमसत्येऽस्मिन्नास्था कार्या मनागपि॥ ६३॥
100345
100346 एतदर्थं संसारस्य खरभागपरिहारार्थम्॥ ६३॥
100347
100348 सुरज्ज्वेव बलीवर्दो बध्यते जन्तुरास्थया।
100349 अतस्त्वया दृढमिदमिति निर्णीय बुद्धितः॥ ६४॥
100350
100351 इदमग्रभूतं ब्रह्म इति उक्तयुक्त्या निर्णीय॥ ६४॥
100352
100353 आस्थारहितया बुद्ध्या विहर्तव्यमिहानघ।
100354 कर्तव्यमेव कर्तव्यमकर्तव्यमुपेक्ष्यते॥ ६५॥
100355
100356 तर्हि किमास्थां परित्यज्य यथेष्टाचरणं कर्तव्यं नेत्याह-कर्तव्यमेवेति।
100357 विहितमेवेत्यर्थः॥ ६५॥
100358
100359 आस्थानास्थे परित्यज्य लीलयैव महाधिया।
100360 आभासमात्रमेवेदं यस्य च प्रतिभासते॥ ६६॥

100361
100362 लीलया अश्रमेण ॥ ६६ ॥
100363
100364 सोऽन्तः शीतलतामेति दिनान्ते भुवनं यथा।
100365 प्रतिभासं परित्यज्य पदार्थपटलव्रजे ॥ ६७ ॥
100366
100367 दिनान्ते सौरतापोपरमे। सर्वानुगतसन्मात्रदर्शने उपायमाह-प्रतिभासमिति।
100368 विशेषाकारमित्यर्थः। पदार्थानां पञ्चभूतानां पटलं समूहस्तदात्मके
100369 घटपटादिविषयव्रजे ॥ ६७ ॥
100370
100371 आभासमात्रसामान्यमिदमालोकयानघ।
100372 आभासमात्रकं राम चित्तामर्शकलङ्कितम् ॥ ६८ ॥
100373
100374 चित्तस्य आमर्शेन विशेषकल्पनेन कलङ्कितमभूदिति शेषः ॥ ६८ ॥
100375
100376 ततस्तदपि संत्यज्य निराभासो भवोत्तम।
100377 चिदाकाशमयो नित्यं सर्वगः सर्ववर्जितः ॥ ६९ ॥
100378
100379 तत्सन्मात्ररूपमाभासमपि संत्यज्य स्वात्मव्यतिरेकबुद्ध्या त्यक्त्वा
100380 निराभासस्त्रिपुटीशून्यः। सर्वगः पूर्णः ॥ ६९ ॥
100381
100382 आभासस्य परित्यागे भवस्येकान्तनिर्मलः।
100383 नाहमस्मि न मे भोगाः सत्या इत्यभिभाविते ॥ ७० ॥
100384
100385 निराभासतासिद्ध्युपायभूतं चिन्तनद्वयमाह-नाहमित्यादिना। अभितो भाविते
100386 चिन्तिते सति ॥ ७० ॥
100387
100388 नेदमाडम्बरं व्यर्थमनर्थायावभासते।
100389 अहमेव हि वा सर्वं चिदित्येवं विभाविते ॥ ७१ ॥
100390
100391 चिति सर्वबाधचिन्तनं सर्वस्य चिदात्मभावचिन्तनं वेति द्वे चिन्तने ॥ ७१ ॥
100392
100393 नेदमाडम्बरं व्यर्थमनर्थायावभासते।
100394 दर्शनद्वयमप्येतत्सत्यमत्यन्तसिद्धिदम् ॥ ७२ ॥
100395
100396 यदेकमेतयोर्वेत्सि रम्यं तद्राम संश्रय।
100397 द्वाभ्यामेवाथ वै ताभ्यां दर्शनाभ्यामिहानघ ॥ ७३ ॥
100398
100399 ऐच्छिकसमुच्चयेऽप्यनयोर्न विरोधः। फलत ऐकरूप्यादित्याशयेनाह##-
100400
100401 विहरन्कुरु कल्याण रागद्वेषपरिक्षयम्।
100402 यत्किंचिदुदितं लोके यन्नभस्यथ वा दिवि ॥ ७४ ॥
100403
100404 रागादिदोषक्षयवत्येव चिन्तनद्वयं सफलं नान्यस्मिन्नित्याह-कुर्वित्यादिना।
100405 रागादिक्षयमेव प्रधानफलैः स्तौति-यत्किंचिदिति ॥ ७४ ॥
100406
100407 तत्सर्वं प्राप्यते राम रागद्वेषपरिक्षयात्।
100408 रागादिहतया बुद्ध्या यादृग्राम विचेष्टितम् ॥ ७५ ॥
100409
100410 तत्तदेव प्रयात्याशु मूढानां विपरीतताम्।
100411 द्वेषदोषोर्मिरुद्धासु न गुणाश्चित्तवृत्तिषु ॥ ७६ ॥
100412

100413 पदं कुर्वन्ति दग्धासु स्थलीषु हरिणा इव ।
100414 रागो द्वेषश्च सर्पौ द्वौ न विलीनौ मनोबिले ॥ ७७ ॥
100415
100416 पदं स्थितिम् ॥ ७७ ॥
100417
100418 यस्य कल्पतरोस्तस्मात्किं नामाङ्ग न लभ्यते ।
100419 ये हि प्राज्ञाः [प्राज्ञा विनियताः इति पाठः ।] स्वनियता विदग्धाः
100420 शास्त्रशालिनः ॥ ७८ ॥
100421
100422 किं नाम दुःखफलमिति शेषः ॥ ७८ ॥
100423
100424 रागद्वेषमयास्ते वै जम्बुकास्ते धिगस्तु तान् ।
100425 मद्धनं भुक्तमन्येन धनं त्यक्तं मयाऽन्यतः ॥ ७९ ॥
100426
100427 शास्त्रशालिनोऽपि भूत्वेति शेषः । ते जनाः । ते अरण्ये प्रसिद्धा जम्बुकाः । एवार्थे
100428 वैशब्दः । रागद्वेषक्रमं समूलमाह-मद्धनमिति । अन्यतः
100429 अन्यस्मादवश्यग्राह्यं धनं प्रमादात्त्यक्तम् ॥ ७९ ॥
100430
100431 इति संव्यवहारेहाः के रागद्वेषयोः क्रमाः ।
100432 धनानि बन्धवो मित्रं पुनरायान्ति यान्ति च ॥ ८० ॥
100433
100434 इति इत्थं लब्धनष्टधनादिविषये अभिनिवेशात्तद्ग्रहणार्थं
100435 वधबन्धनादिसंव्यवहारेहालक्षणा रागद्वेषयोः क्रमाः के तुच्छा इत्यर्थः ।
100436 कुतस्तुच्छास्तत्राह-धनानीत्यादिना ॥ ८० ॥
100437
100438 किमेतेषु नरः प्राज्ञो रज्यते वा विरज्यते ।
100439 भावाभावभवाभोगा मायेयं पारमेश्वरी ॥ ८१ ॥
100440
100441 प्रियविषयभावेन अप्रियाभावेन च भवस्याभोगो यस्याम् ॥ ८१ ॥
100442
100443 संसाररचना सर्वा संसक्तं पातयत्यलम् ।
100444 न धनं न जनो नात्मा सत्यं राघव वस्तुतः ॥ ८२ ॥
100445
100446 संसक्तं लम्पटम् ॥ ८२ ॥
100447
100448 मिथ्यैव मिथ्यावसितमितीदं परिलक्ष्यते ।
100449 आद्यन्तयोः सर्वमसन्मध्येऽप्यस्थिरमाधिमत् ॥ ८३ ॥
100450
100451 इति वक्ष्यमाणयुक्त्या मिथ्येत्यवसितं मिथ्यैव परिलक्ष्यते । तां युक्तिमाह##-
100452 ८३ ॥
100453
100454 क्व बध्नाति रतिं प्राज्ञो ह्यन्यकल्पितखद्रुमे ।
100455 एकेन कल्पिता खे स्त्री भुङ्क्ते तां दूरगोऽपरः ॥ ८४ ॥
100456
100457 तुच्छे संसारे इति बन्धयोग्यत्वे दृष्टान्तमाह-अन्येत्यादिना ॥ ८४ ॥
100458
100459 इतीयमङ्ग संसाररचना तेन मा भ्रम ।
100460 भूताजवं जवीभावमिममाततमाकुलम् ॥ ८५ ॥
100461
100462 गन्धर्वपुरनिर्माणविलासेन समं विदुः ।
100463 स्वप्नसंकल्पपुरवदसदेवेदमुत्थितम् ॥ ८६ ॥
100464

100465 विदुः प्राज्ञाः ॥ ८६ ॥
100466
100467 सर्वत्र संस्थमेवेदं सुषुप्तमिव विच्युतम् ।
100468 परिपश्यसि संसारदीर्घस्वप्नपुरद्रुमम् ॥ ८७ ॥
100469
100470 कल्पनायाः सर्वत्र संभवादधिष्ठानचित्सद्भावाच्च सर्वत्र संस्थम् । विच्युतं
100471 स्वप्नादिभावापन्नं सुषुप्तमिव ॥ ८७ ॥
100472
100473 अज्ञाननिद्रालुठनस्वभावात्मकमच्युतम् ।
100474 संसारस्वप्नसंभ्रान्तो भवानयमिह स्थितः ॥ ८८ ॥
100475
100476 अच्युतमजस्रानुस्यूतम् । पूर्वान्वयि । भवान् शुभवांस्त्वं एनां निद्रां
100477 त्यजेत्युत्तरान्वयि ॥ ८८ ॥
100478
100479 तदेनां विततां निद्रां घनाज्ञानमयात्मिकाम् ।
100480 त्यजालक्ष्मीमिवावाप्तनिधानः पुरुषोत्तमः ॥ ८९ ॥
100481
100482 प्रबोधमेहि पश्य स्वमात्मानमुदितं सदा ।
100483 निर्विकल्पं चिदाभासं प्रातः पद्मं रविं यथा ॥ ९० ॥
100484
100485 चिदाभासं चित्प्रकाशम् ॥ ९० ॥
100486
100487 प्रबुध्यस्व प्रबुध्यस्व पुनः पुनरयं मया ।
100488 प्रबोध्यसे महाबाहो पश्यात्मार्कमनामयम् ॥ ९१ ॥
100489
100490 मयैतेनाभिवृष्टेन शीतेन ज्ञानवारिणा ।
100491 सुशब्दशालिना राम ह्यनेनैवासि बोधितः ॥ ९२ ॥
100492
100493 मया मेघस्थानीयेन । सुशब्दपदं श्लेषाद्गर्जनमप्याह ॥ ९२ ॥
100494
100495 बोधमासादय परं प्रबोधोऽद्यैव राघव ।
100496 सत्यमालोकयालीकं त्यक्त्वेमं जागतं भ्रमम् ॥ ९३ ॥
100497
100498 अद्यैव प्रकृष्टो बोधो यस्य तथाविधः सन् सत्यं स्वतत्त्वमालोकय ॥ ९३ ॥
100499
100500 न ते जन्म न ते दुःखं न दोषास्ते न ते भ्रमाः ।
100501 सर्वं संकल्पमुत्सृज्य तिष्ठात्मनि सुसंस्थितः ॥ ९४ ॥
100502
100503 परिगलितविकल्पदोषजालस्त्वमसि सुसारसुषुप्तसौम्यदृष्टिः ।
100504 अतिविततमिदं सुशुद्धये त्वं समुपशमात्मनि तिष्ठ हे महात्मन् ॥ ९५ ॥
100505
100506 उपसंहरति-परिगलितेति । सुसारं सुषुप्तमिव सौम्या निर्विक्षेपा दृष्टिर्यस्य
100507 तथाविधस्त्वं इदं नित्यापरोक्षमतिविततं ब्रह्मैवासि अतः सुशुद्धये
100508 समुपशमात्मनि तस्मिन्नेव समाहितस्तिष्ठेत्यर्थः ॥ ९५ ॥
100509
100510 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाणप्रकरणे पू०
100511 परमार्थयोगोपदेशो नामाष्टाविंशः सर्गः ॥ २८ ॥
100512
100513 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
100514 परमार्थयोगोपदेशो नामाष्टाविंशः सर्गः ॥ २८ ॥
100515
100516 एकोनत्रिंशः सर्गः २९

100517
100518 श्रीवाल्मीकिरुवाच।
100519
100520 इत्याकर्णयति स्वस्थसमचेतसि राघवे।
100521 विश्रान्ते स्वात्मनि स्वैरं परमानन्दमागते॥१॥
100522
100523 रामस्य बोधाद्विश्रान्तिः पुनरुक्तार्थविस्तरः।
100524 कैलासे प्राक् शिवेनेत्थं स्वोपदेशश्च कीर्त्यते॥१॥
100525
100526 इत्थं सानुग्रहं श्रीवसिष्ठेनोपदेशचमत्कारैः प्रतिवोधितस्य श्रीरामस्य
100527 अन्येषां च श्रोतृणां तत्त्वसाक्षात्कारोदयेन मुहूर्तार्ध
100528 स्वरूपविश्रान्तिसमाधिना निष्कम्पस्थितिं श्रीवाल्मीकिरुवाच##-
100529
100530 तत्रस्थेषु च सर्वेषु तेषूपशमशालिषु।
100531 राघवस्यात्मविश्रान्तेः स्थित्यर्थं वचनामृतम्॥२॥
100532
100533 तत्रस्थेषु स्वात्मनि विश्रान्तेष्विति विभक्तिविपरिणामेन योज्यम्। मुनेर्वचनामृतं
100534 विररामेति परेणान्वयः॥२॥
100535
100536 विरराम मुनेर्वारि सस्येष्वम्बुधरादिव।
100537 अथ याते मुहूर्तार्धे राघवे प्रतिबोधिते॥३॥
100538
100539 यथा वृष्टितर्पितेषु सस्येषु अम्बुधराद्वारि विरमति तद्वद्बोधिते
100540 समाधेर्व्युत्थापितं अर्थाद्वसिष्ठेनैवेति गम्यते॥३॥
100541
100542 पुनराह तमेवार्थं वसिष्ठो वदतां वरः।
100543
100544 श्रीवसिष्ठ उवाच।
100545
100546 राम सम्यक्प्रबुद्धोऽसि स्वात्मानमसि लब्धवान्॥४॥
100547
100548 पुनस्तमेवार्थं दृढीकारायाहेत्यर्थः॥४॥
100549
100550 एवमेवावलम्ब्यार्थं तिष्ठ नेह पदं कृथाः।
100551 इदं संसारचक्रं हि नाभौ संकल्पमात्रके॥५॥
100552
100553 अर्थं परमार्थमात्मतत्त्वम्। इह संसारे पदं स्थितिं मा कृथाः।
100554 तत्रोपायमाह-इदमिति॥५॥
100555
100556 संरोधितायां वहनाद्रघुनन्दन रुद्ध्यते।
100557 क्षोभितायां मनोनाभ्यामिदं संसारचक्रकम्॥६॥
100558
100559 क्षोभितायां रागद्वेषादिना विक्षेपं प्रापितायाम्॥६॥
100560
100561 प्रयत्नाद्रोधितमपि प्रवहत्येव वेगतः।
100562 परं पौरुषमास्थाय बलं प्रज्ञां च युक्तितः॥७॥
100563
100564 पौरुषं अभ्यासवैराग्यदार्ढ्यलक्षणम्॥७॥
100565
100566 नाभिं संसारचक्रस्य चित्तमेव निरोधयेत्।
100567 प्रज्ञासौजन्ययुक्तेन शास्त्रसंवलितेन च॥८॥
100568

100569 पौरुषेण न यत्प्राप्तं न तत्क्वचन लभ्यते।
100570 दैवैकपरतां त्यक्त्वा बालबोधोपकल्पिताम्॥ ९॥
100571
100572 निजं प्रयत्नमाश्रित्य चित्तमादौ निरोधयेत्।
100573 आविरिञ्चात्प्रवृत्तेन भ्रमेणाज्ञानरूपिणा॥ १०॥
100574
100575 असदेव सदाभासमिदमालक्ष्यतेऽनघ।
100576 अज्ञानभ्रमविस्तारमात्रकाकृतयोऽनघ॥ ११॥
100577
100578 आकृतयः दृश्यजगदाकाराः॥ ११॥
100579
100580 इमे देहा भ्रमन्तीह सर्वधर्मात्समुत्थिताः।
100581 संकल्पः पुनरस्त्वेव देहस्यार्थे कदाचन॥ १२॥
100582
100583 सर्वे धर्मा विकल्पा यस्मात्। सर्वधर्मा संकल्पस्तस्मात्। धर्मादनिच्केवलात् इत्यनिचो
100584 विषये तदभावश्छान्दसः। अत एव नैतद्देहनाशमात्रेणेष्टसिद्धिर्यतः
100585 पुनर्देहपरंपरोत्पादकः संकल्पोऽस्त्येव। तर्हि संकल्पत्यागे क उपाय इति
100586 चेत्तमाह-देहस्यार्थे इत्यादिना॥ १२॥
100587
100588 सुखदुःखविचारित्वं न कार्यं राम धीमता।
100589 दुःखम्लानमुखः क्लेदी प्रसन्नात्क्लेदवर्जितात्॥ १३॥
100590
100591 देहसुखदुःखचिन्तापरं नरं चित्रलिखितनरादप्यधमत्वेन निन्दति##-
100592
100593 अपि चित्रनराद्देहनरस्तुच्छतरः स्मृतः।
100594 आधिव्याधिपरिम्लाने स्वयं क्लेदिनि नाशिनि॥ १४॥
100595
100596 न तथा स्थिरता देहे चित्रपुंसो यथा किल।
100597 विनाशितो हि चित्रस्थो देहो नश्यति नान्यथा॥ १५॥
100598
100599 किल प्रसिद्धम्। निर्निमित्तनश्वरत्वमप्यस्य चित्रदेहादधिको दोष इत्याह-विनाशित
100600 इति॥ १५॥
100601
100602 अवश्यनाशो मांसात्मा स्वयं देहो विनश्यति।
100603 क्पालितः सुस्थिरां शोभामादत्ते चित्रमानवः॥ १६॥
100604
100605 स्वयं विनैव निमित्तमित्यर्थः॥ १६॥
100606
100607 देहस्तु पालितोऽप्युच्चैर्नश्यत्येव न वर्धते।
100608 तेन श्रेष्ठश्चित्रदेहो नायं संकल्पदेहकः॥ १७॥
100609
100610 संकल्पकृतो देहकः॥ १७॥
100611
100612 ये गुणाश्चित्रदेहे हि न ते संकल्पदेहके।
100613 चित्रदेहादपि जडाद्योऽयं तुच्छतरः किल॥ १८॥
100614
100615 तस्मिन्मांसमये देहे कैवास्था भवतोऽनघ।
100616 दीर्घसंकल्पदेहोऽयं तस्मिन्नास्था महामते॥ १९॥
100617
100618 नास्था युक्तेति शेषः॥ १९॥
100619
100620 स्वप्नसंकल्पजाहेहादपि तुच्छतरो ह्ययम्।

100621 अल्पसंकल्पजो दीर्घैः सुखदुःखैर्न गृह्यते ॥ २० ॥
100622

100623 इदानीं स्वात्ममानोरथिकदेहेभ्योऽप्यस्य तुच्छतरतामाह-स्वप्नेत्यादिसार्धेन ॥
100624 २० ॥
100625

100626 दीर्घसंकल्पजश्चायं दीर्घदुःखेन दुःखितः ।
100627 देहो हि संकल्पमयो नायमस्ति न वास्ति नः ॥ २१ ॥
100628

100629 अयं स्वयमेव नास्ति । अथवा नः अस्मदीयतया नास्ति । आत्मनोऽसङ्गाद्वयत्वादिति
100630 भावः ॥ २१ ॥
100631

100632 किं व्यर्थमेतदर्थं हि मूढोऽयं क्लेशभाजनम् ।
100633 यथा चित्रमये पुंसि क्षते क्षीणे न तत्क्षतिः ॥ २२ ॥
100634

100635 अतश्चित्रादिदेहक्षतिरिव नास्यापि क्षतिः शोच्येत्याह-यथेति । तस्यात्मनः क्षतिर्न ॥
100636 २२ ॥
100637

100638 तथा संकल्पपुरुषे क्षते क्षीणे न तत्क्षतिः ।
100639 यथा मनोराज्यमये क्षते क्षीणे न तत्क्षतिः ॥ २३ ॥
100640

100641 यथा द्वितीये शशिनि क्षते क्षीणे न तत्क्षतिः ।
100642 यथा स्वप्नसमारम्भे क्षते क्षीणे न तत्क्षतिः ॥ २४ ॥
100643

100644 यथा नद्यातपजले क्षते क्षीणे न तत्क्षतिः ।
100645 संकल्पमात्ररचिते प्रकृत्यैव च नाशिनि ॥ २५ ॥
100646

100647 तथा शरीरयन्त्रेऽस्मिन्क्षते क्षीणे न तत्क्षतिः ।
100648 दीर्घस्वप्नमये ह्यस्मिंश्चित्तसंकल्पकल्पिते ॥ २६ ॥
100649

100650 भूषिते दूषिते देहे न हि किंचिच्चितः क्षतम् ।
100651 न चिदन्तमुपायाति नात्मा चलति राघव ॥ २७ ॥
100652

100653 कुतो न क्षतं तत्राह-न चिदिति ॥ २७ ॥
100654

100655 न ब्रह्म विकृतिं याति किंवा देहक्षये क्षतम् ।
100656 भ्रमच्चक्रोपरिष्ठो हि पूर्वचक्रोपचक्रवत् ॥ २८ ॥
100657

100658 पूर्वस्य स्वाधिष्ठितचक्रस्य उपमाभूतं परितः समीपस्थं वा
100659 महच्चक्रमुपचक्रं तद्वत् । स्वचक्रवैपरीत्येन भ्रमद्दिक्चक्रं यथा
100660 पश्यतीत्यर्थः ॥ २८ ॥
100661

100662 यथा पश्यति दिक्चक्रं भ्रमदत्यन्तमोहितः ।
100663 अकस्मादेव रूढेन मिथ्याज्ञानेन वल्गता ॥ २९ ॥
100664

100665 तत्रस्थेन तथैवेदं दृश्यते देहचक्रकम् ।
100666 भ्रमितं च भ्रमद्रूपं पतद्रूपं प्रपातितम् ॥ ३० ॥
100667

100668 तत्रस्थेन मिथ्याज्ञानचक्रस्थेन जीवेन ॥ ३० ॥
100669

100670 हतं च हन्यमानं च दृश्यते देहचक्रकम् ।
100671 धीरतामलमालम्ब्य घनभ्रममिमं त्यजेत् ॥ ३१ ॥
100672

100673 देहचक्रकं देहपरम्पराचक्रम् ॥ ३१ ॥
100674
100675 संकल्पेन कृतो देहो मिथ्याज्ञानेन सन्नसन् ।
100676 असत्येन कृतं यस्मान्न तत्सत्यं कदाचन ॥ ३२ ॥
100677
100678 प्रतीतितः सन्नपि परमार्थतः असन् । असत्येनाज्ञानादिना कृतं यस्माद्धेतोः ॥ ३२ ॥
100679
100680 असदभ्युत्थितो देहो रज्ज्वामिव भुजंगधीः ।
100681 असत्यामेव सत्यां च करोत्यपि जगत्क्रियाम् ॥ ३३ ॥
100682
100683 जडेन राम क्रियते यन्न तत्कृतमुच्यते ।
100684 कुर्वन्नपि तदा देहो न कर्ता क्वचिदेव हि ॥ ३४ ॥
100685
100686 तत्कृतं नैवोच्यते यदेति शेषः । चेतनवज्जडे अपराधारोपादर्शनादित्यर्थः ॥ ३४ ॥
100687
100688 निरीहो हि जडो देहो नात्मनोऽस्याभिवाञ्छितम् ।
100689 कर्ता न कश्चिदेवातो द्रष्टा केवलमस्य सःइ ॥ ३५ ॥
100690
100691 इच्छातो हि कर्तृत्वं स्यात् सा तु न जडे देह निर्विकारे आत्मनि वा संभवतीत्याह##-
100692
100693 यथा दीपो निवातस्थः स्वात्मन्येवावतिष्ठते ।
100694 साक्षिवत्सर्वभावेषु तथा तिष्ठेज्जगत्स्थितौ ॥ ३६ ॥
100695
100696 अकर्त्रात्मनिश्चयफलमाह-यथेति ॥ ३६ ॥
100697
100698 यथा दिवसकर्माणि भास्करः स्वस्थ [स्वस्थः स्वच्छ इति पाठौ ।] एव
100699 सन् ।
100700 करोत्येवमिमां राम कुरु पार्थिवसंस्थितिम् ॥ ३७ ॥
100701
100702 तर्हि कथं राज्यसंस्थितिसिद्धिस्तत्राह-यथेति ॥ ३७ ॥
100703
100704 अस्मिन्नसन्मये देहगृहे शून्ये समुत्थिते ।
100705 सत्तामुपगते मिथ्याबालकल्पितयक्षवत् ॥ ३८ ॥
100706
100707 देहसत्यतादर्शने तु तदभिमानलक्षणाहंकारस्यावर्जनात्तद्भृत्यता
100708 स्यादेवेत्याह-अस्मिन्नित्यादिना ॥ ३८ ॥
100709
100710 कुतोऽप्यागत्य निःसारः सर्वसज्जनवर्जितः ।
100711 अहंकारः कुवेतालः प्रविष्टश्चित्तनामकः ॥ ३९ ॥
100712
100713 प्रविष्टः स्यादिति शेषः ॥ ३९ ॥
100714
100715 अस्य मा भृत्यतां गच्छ त्वमहंकारदुर्मतेः ।
100716 अस्य भृत्यतया राम निरयः प्राप्यते फलम् ॥ ४० ॥
100717
100718 स्वसंकल्पविलासेन देहगेहे दुराकृतिः ।
100719 उन्मत्तचित्तवेतालः परिवल्गति लीलया ॥ ४१ ॥
100720
100721 सत्यहंकारे अनर्थान्तरमप्याह-स्वसंकल्पेत्यादिना ॥ ४१ ॥
100722
100723 शून्यं देहगृहं प्राप्य चित्तयक्षेण तत्कृतम् ।
100724 भीता येन महान्तोऽपि समाधिनियताः स्थिताः ॥ ४२ ॥

100725
100726 चित्तवेतालमुद्वास्य स्वशरीरकमन्दिरात् ।
100727 संसारशून्यनगरे न बिभेति कदाचन ॥ ४३ ॥
100728
100729 चित्तभूताभिभूतेऽस्मिन्ये शरीरगृहे रताः ।
100730 चित्रमद्यापि ते कस्माद्धटिता आत्मवत्स्थिताः ॥ ४४ ॥
100731
100732 देहगृहे रता आसक्तास्ते अनन्तकोटिदेहेषु नष्टेषु अद्यापि देहेन आत्मवत्तादात्म्येन
100733 घटिताः कस्मात्स्थिताः । सदैव तद्घटनदुःखे अनुभूयमानेऽपि तद्विघटने
100734 यत्नं न कुर्वन्ति तच्चित्रमित्यर्थः ॥ ४४ ॥
100735
100736 ग्रस्ते चित्तपिशाचेन देहसद्मनि ये मृताः ।
100737 पिशाचस्येव या बुद्धिर्नापिशाचस्य राघव ॥ ४५ ॥
100738
100739 ये मृतास्तेषामिति शेषः ॥ ४५ ॥
100740
100741 अहंकारबृहद्यक्षगृहे दग्धशरीरके ।
100742 विहरन्नास्थया साधो न तु वै तत्किले स्थिरम् ॥ ४६ ॥
100743
100744 सदैव तापत्रयवह्निदग्धे शरीरके आस्थया विहरन् ना पुरुषः पिशाच एवेति
100745 विभक्तिविपरिणामेनानुषज्यते । तत्रास्था कुतो न युक्ता तत्राह-न त्विति ॥ ४६ ॥
100746
100747 अहंकारानुचरतां त्यक्त्वा विततया धिया ।
100748 अहंकारास्मृतिं प्राप्य स्वात्मैवाश्ववलम्ब्यताम् ॥ ४७ ॥
100749
100750 प्रथममहंकारस्यानुचरतां भृत्यतां त्यक्त्वा ततो
100751 योगभूमिकाभ्यासादहंकारस्य अस्मृतिं आत्यन्तिकविस्मृतिं प्राप्य ॥ ४७ ॥
100752
100753 अहंकारपिशाचेन ग्रस्ता ये निरयैषिणः ।
100754 तेषां मोहमदान्धानां न मित्राणि न बाधवाः ॥ ४८ ॥
100755
100756 न मित्राणीति । अहंकारिणां विनयदौर्लभ्यादौद्धत्यावश्यंभावाच्च न
100757 कश्चित्स्निह्यतीति भावः ॥ ४८ ॥
100758
100759 अहंकारोपहतया बुद्ध्या या क्रियते क्रिया ।
100760 विषवल्लया इव फलं तस्याः स्यान्मरणात्मकम् ॥ ४९ ॥
100761
100762 विवेकधैर्यहीनेन स्वाहंकारमहोत्सवः ।
100763 मूर्खेणालम्बितो येन नष्टमेवाशु विद्धि तम् ॥ ५० ॥
100764
100765 फलं कलहजनवैरादिरूपमत एव मरणात्मकम् ॥ ४९ ॥ ५० ॥
100766
100767 अहंकारपिशाचेन वराका ये वशीकृताः ।
100768 त एते नरकाग्नीनां राघवेन्धनतां गताः ॥ ५१ ॥
100769
100770 तस्य परलोकेऽपि दुःखमेवेत्याह-अहंकारेति ॥ ५१ ॥
100771
100772 अहंकारोरगो यस्य परिस्फूर्जति कोटरे ।
100773 स्वदेहपादपोऽधीरैरचिरेण निपात्यते ॥ ५२ ॥
100774
100775 यस्य स्वदेहपादपस्य कोटरे हृदि स स्वदेहपादपः । बहुष्वेकवचनं जात्यैक्यात् ।
100776 अधीरैरिति च्छेदः ॥ ५२ ॥

100777
100778 अहंकारपिशाचोऽस्मिन्देहे तिष्ठतु यातु वा।
100779 त्वमेनमालोकय मा मनसा महतां वर॥ ५३॥
100780
100781 मा आलोकय॥ ५३॥
100782
100783 अवधूतो ह्यवज्ञातश्चेतसैव तिरस्कृतः।
100784 अहंकारपिशाचस्ते नेह किंचित्करिष्यति॥ ५४॥
100785
100786 अनवलोकनमात्रेण किं स्यात्तत्राह-अवधूत इति॥ ५४॥
100787
100788 देहालये स्फुरत्यस्मिन् राम चित्तपिशाचके।
100789 अस्यानन्तविलासस्य किमिवागतमात्मनः॥ ५५॥
100790
100791 आत्मनस्तदनुसरणादेवानर्थः। उपेक्षितस्तु स स्थितोऽप्यकिंचित्कर इत्याह-देहालये
100792 इति॥ ५५॥
100793
100794 चित्तयक्षाभिभूतानां याः पुंसां विततापदः।
100795 शक्यन्ते परिसंख्यातुं न ता वर्षशतैरपि॥ ५६॥
100796
100797 चित्तेति प्रकृताहंकारस्यैव वृत्यन्तरेऽप्यनर्थकारिताख्यानाय निर्देशः॥ ५६॥
100798
100799 हा हा मृतोऽस्मि दग्धोऽस्मीत्येता वै दुःखवृत्तयः।
100800 अहंकारपिशाचस्य शक्तयोऽन्यस्य नानघ॥ ५७॥
100801
100802 सर्वगोऽपि यथाकाशः संबन्धो नेह केनचित्।
100803 सर्वगोऽपि तथैवात्मा नाहंकारेण संगतः॥ ५८॥
100804
100805 अहमित्यात्मैवानुभूयत इति नैयायिकादीनां भ्रान्तिं वारयति-सर्वग इति।
100806 संबध्यत इति संबन्धः। संश्लिष्ट इत्यर्थः॥ ५८॥
100807
100808 यत्करोति यदादत्ते देहयन्त्रमिदं चलम्।
100809 वातरज्जुयुतं राम तदहंकारचेष्टितम्॥ ५९॥
100810
100811 वातरज्जुः सूत्रात्मा प्राणः॥ ५९॥
100812
100813 वृक्षोत्पत्तौ यथा हेतुरकर्त्रपि किलाम्बरम्।
100814 आत्मसंस्थस्तथेहात्मा चित्तचेष्टासु कारणम्॥ ६०॥
100815
100816 यद्यहंकार एव सर्वचेष्टानिमित्तं नात्मा तर्हि केनेषितं पतति प्रेषितं मनः केन
100817 प्राणः प्रथमः प्रति युक्तः। ऊर्ध्वं प्राणः प्रथमः प्रैति युक्तः। ऊर्ध्वं
100818 प्राणमुन्नयत्यपानं प्रत्यगस्यति। मध्ये चामनमासीनं विश्वेदेवा उपासते
100819 इत्यादिश्रुतिविरोधस्तत्राह-वृक्षोत्पत्ताविति। आत्मसंस्थः स्वे महिम्नि प्रतिष्ठितः
100820 कारणं श्रुतिभिरुपचर्यत इत्यर्थः॥ ६०॥
100821
100822 आत्मसंस्निधिमात्रेण स्फुरत्यात्तवपुर्मनः।
100823 दीपसंनिधिमात्रेण कुड्यरूपमिवामलम्॥ ६१॥
100824
100825 उपचारे मन-आदीनां सत्तास्फूर्तिप्रदत्वमेव निमित्तमित्याह-आत्मेति।
100826 आत्तवपुर्लब्धसत्ताकं कल्पितस्थूलदेहं च॥ ६१॥
100827
100828 अपि विश्लिष्टयो राम नित्यमेवात्मचित्तयोः।

100829 द्यावापृथिव्योरिव कः संबन्धः प्रकटान्धयोः ॥ ६२ ॥
100830
100831 प्रकटान्धयोश्चिज्जडयोः ॥ ६२ ॥
100832
100833 चपलस्पन्दनेराभिरात्मशक्तिभिरावृतम् ।
100834 चित्तमात्मेति मौर्ख्येण दृश्यते रघुनन्दन ॥ ६३ ॥
100835
100836 नन्वसंबन्धे मन-आदेः सत्तास्फूर्त्यसिद्धिः संबन्धे
100837 त्वात्मासङ्गत्वासिद्धिरित्याशङ्क्याह-चपलेति । चपलस्पन्दनानीरयन्ति प्रेरयन्तीति
100838 चपलस्पन्दनेरास्तथाविधाभिरात्मनः प्राणस्य शक्तिभिरावृतं वशीकृतं
100839 चित्तं तादात्म्याध्यासलक्षणेन प्राणस्य शक्तिभिरावृतं वशीकृतं चित्तं
100840 तादात्म्याध्यासलक्षणेन मौर्ख्येणाज्ञानेन दृश्यते न वस्तुवृत्तेनेत्यर्थः ।
100841 नाभिः इति पाठे चित्तविशेषणम् ॥ ६३ ॥
100842
100843 आत्मा प्रकाशरूपो हि नित्यः सर्वगतो विभुः ।
100844 चित्तं शठमहंकारं विद्धि हार्दं बृहत्तमः ॥ ६४ ॥
100845
100846 असङ्गत्वोपपादनायविरुद्धत्वमेव प्रपञ्चयति-आत्मेति । शठं वञ्चकम् ॥
100847 ६४ ॥
100848
100849 आत्मासि वस्तुतस्त्वं हि सर्वज्ञो न मनो भृशम् ।
100850 दूरे कुरु मनोमोहं किमेतेनाभिसंगतः ॥ ६५ ॥
100851
100852 पिशाचोऽपि मनो राम शून्यदेहगृहे स्थितः ।
100853 भावयत्येष दुष्टात्मा मौनमुत्तम संस्पृशन् ॥ ६६ ॥
100854
100855 हे उत्तम मनःपिशाच आत्मानमसंस्पृशन्नपि मौनं तूष्णीमेव
100856 स्वसंस्पृष्टं भावयतीत्यन्वयः ॥ ६६ ॥
100857
100858 भवप्रदमकल्याणं धैर्यसर्वस्वहारिणम् ।
100859 मनःपिशाचमुत्सृज्य योऽसि स त्वं स्थिरो भव ॥ ६७ ॥
100860
100861 चित्तयक्षदृढाक्रान्तं न शास्त्राणि न बान्धवाः ।
100862 शक्नुवन्ति परित्रातुं गुरवो न च मानवम् ॥ ६८ ॥
100863
100864 संशान्तचित्तवेतालं गुरुशास्त्रार्थबान्धवाः ।
100865 शक्नुवन्ति समुद्धर्तुं स्वल्पपङ्कान्मृगं यथा ॥ ६९ ॥
100866
100867 संशान्तेति । शुद्धचित्तमिति यावत् । मृगं मृगसदृशं वत्सम् ॥ ६९ ॥
100868
100869 अस्मिञ्जगच्छून्यपुरे सर्वमेव प्रदूषितम् ।
100870 देहगेहं प्रमत्तेन चित्तयक्षेण वल्गता ॥ ७० ॥
100871
100872 चित्तवेतालवलिता समस्ता देहखण्डजा ।
100873 इयं जगदरण्यानी शून्या कस्य न भीतये ॥ ७१ ॥
100874
100875 देहलक्षणे खण्डे परिच्छिन्नभागे जाता ॥ ७१ ॥
100876
100877 जगन्नगर्यामस्यां तु शान्तचित्तपिशाचकम् ।
100878 देहगेहं कतिपयैः सेव्यते सद्भिरेव यत् ॥ ७२ ॥
100879
100880 समस्तेत्युत्सर्गः । क्वचिदन्यथात्वमपि यतो दृष्टमित्याह-जगदिति । यत् यतः ॥ ७२

100881 ||
100882
100883 इह संश्रूयते या या दिक् सैव रघुनन्दन |
100884 प्रमत्तमोहवेतालैः पूर्णा देहश्मशानकैः || ७३ ||
100885
100886 अत एवाज्ञदेहाः श्मशानतुल्या इति निन्दति-इहेति || ७३ ||
100887
100888 अस्यां जगदरण्यान्यां मुह्यन्तं मुग्धबालवत् |
100889 स्वयमाराध्य धैर्यांशमात्मनात्मानमुद्धरेत् || ७४ ||
100890
100891 धैर्यांशमाराध्य दृढमवलम्ब्य || ७४ ||
100892
100893 जगज्जरदरण्येऽस्मिंश्चरद्भूतमृगव्रजे |
100894 धृतिं तृणरसै राम मा गच्छ मृगपोतवत् || ७५ ||
100895
100896 तृणसदृशैरसारैर्विषयरसैर्धृतिं कृतार्थताबुद्धिम् || ७५ ||
100897
100898 अस्मिन्महीतलारण्ये चरन्ति मृगपोतकाः |
100899 त्वमज्ञानगजं भुक्त्वा सैंहीं वृत्तिमुपाश्रय || ७६ ||
100900
100901 मृगपोतकसदृशा अन्ये मूढा विषयतृणानि चरन्ति चेच्चरन्तु नाम || ७६ ||
100902
100903 अन्ये नरमृगा मुग्धा जम्बूद्वीपे स्वजङ्गले |
100904 विहरन्ति यथा राम तथा मा विहरानघ || ७७ ||
100905
100906 अत्यल्पकालशिशिरे कर्दमालेपदायिनि |
100907 न मङ्क्तव्यं बन्धुरूपे महिषेणेव पल्वले || ७८ ||
100908
100909 ननु बन्धुजनैः समानशीलतया सदैवावस्थानं सुखं दृष्टं तत्र को
100910 दोषस्तत्राह-अत्यल्पेति | विशेषणान्युभयत्र योज्यानि || ७८ ||
100911
100912 भोगाभोगा बहिष्कार्या आर्यस्यानुसरेत्पदम् |
100913 प्रविचर्य महार्थं स्वमेकमात्मानमाश्रयेत् || ७९ ||
100914
100915 अपवित्रस्य तुच्छस्य दुर्भगस्य दुराकृतेः |
100916 देहस्यार्थे न मङ्क्तव्यं चिन्ताचण्ण्दी सुदारुणा || ८० ||
100917
100918 न मङ्क्तव्यमासक्तिकर्दमे इति शेषः | यतस्तन्मग्ना चिन्तालक्षणा चण्डी कोपना
100919 सुदारुणा राक्षसी खादतीत्यर्थः || ८० ||
100920
100921 अन्येन रचितो देहो यक्षेणान्येन संश्रितः |
100922 दुःखमन्यस्य भोक्तान्यश्चित्रेयं मौर्ख्यचक्रिका || ८१ ||
100923
100924 अन्येन कर्मणा | यक्षेणाहंकारेण | अन्यस्य मनसः | अन्यो जीवः | मौर्ख्यस्य
100925 चक्रिकापरिवर्तमाना परंपरा चित्रा | आश्चर्यरूपेत्यर्थः || ८१ ||
100926
100927 यथैकरूपा घनता दृषदोऽस्यात्मनस्तथा |
100928 सत्तामात्रैकसामान्यादितरस्याप्यसंभवात् || ८२ ||
100929
100930 सदेकघनत्वादपि नात्मनि दुःखतद्भोगभोक्तृशरीरादिरूपान्तरावकाश
100931 इत्याशयेनाह-यथेत्यादित्रिभिः | इतरस्य सद्रूपेतररूपस्य सदितरत्वस्यैव
100932 असदलीकादिपदैः प्रसिद्धेरिति भावः || ८२ ||

यथोपलस्य घनता मानसादि तथात्मनः ।
सत्तामात्रादभिन्नत्वादभावादस्य संस्थितेः ॥ ८३ ॥

यथा उपलस्य घनता काठिन्यं नोपलात्पृथक्सती तथा मानसं
समष्टिव्यष्टिमनः समूहः । आदिपदात्तत्कार्यस्थूलप्रपञ्चश्च । तत्कुतः ।
सत्तामात्रस्वभावादभिन्नत्वात्पृथक् अस्य मानसादेः संस्थितेरभावादित्यर्थः ॥
८३ ॥

यथोपलस्योपलता घटस्य घटता यथा ।
सत्तामात्रादभिन्नैव मानसादि तथात्मनः ॥ ८४ ॥

अयं च न्यायः प्रत्येकं घटतन्मानसवृत्त्यादिष्वपि योज्य इति सदद्वैतमेव
प्रसिद्धमित्याह-यथेति ॥ ८४ ॥

अत्रेमामपरां दृष्टिं महामोहविनाशिनीम् ।
शृणु या कथिता पूर्वं मम कैलासकन्दरे ॥ ८५ ॥

अत्रास्मिन्नर्थे इमां वक्ष्यमाणमानसशिवपूजालक्षणां दृष्टिं शृणु ॥ ८५ ॥

संसारदुःखशान्त्यर्थं देवेनार्धेन्दुमौलिना ।
अस्तीन्दुकरसंभारभासुरः पारगो दिवः ॥ ८६ ॥

तत्रादौ कैलासवर्णनमुखेन कथां प्रस्तौति-अस्तीत्यादिना । इन्दुकराणां
संभारः संघात इव भासुरः ॥ ८६ ॥

कैलासो नाम शैलेन्द्रो गौरीरमणमन्दिरम् ।
तत्रास्ते भगवान्देवो हरश्चन्द्रकलाधरः ॥ ८७ ॥

तं पूजयन्महादेवं तस्मिन्नेव गिरौ पुरा ।
कदाचिदवसं गङ्गातटे विरचिताश्रमः ॥ ८८ ॥

तपोर्थं तापसाचारे चिराय रचितस्थितिः ।
सिद्धसंघातवलितः कृतशास्त्रार्थसंग्रहः ॥ ८९ ॥

तापसैराचर्यत इति तापसाचारः कृच्छ्रचान्द्रायणादिस्तस्मिन्नियता स्थितिर्यस्य
तथाविधः सन् ॥ ८९ ॥

पुष्पार्थं स्यूतपुटिकः पुस्तकव्यूहसंग्रही ।
एवंगुणविशिष्टस्य कैलासवनकुञ्जके ॥ ९० ॥

तपः प्रचरतो राम मम कालोऽत्यवर्तत ।
अथैकदा कदाचित्तु बहुलस्याष्टमे दिने ॥ ९१ ॥

बहुलस्य श्रावणकृष्णपक्षस्याष्टमे दिने । रात्रेरग्रे मुखे प्रदोषे
पूजाजपध्यानादिना क्षयमागते सति ॥ ९१ ॥

गते श्रावणपक्षस्य रात्र्यग्रे क्षयमागते ।
दिक्षु संशान्तरूपासु काष्ठमौनस्थितास्विव ॥ ९२ ॥

प्राणिसंचारादयुपरमात्संशान्तरूपासु दिक्षु करादिचेष्टयाप्यर्थानिवेदनं
काष्ठमौनव्रतं तत्र स्थितास्विव ॥ ९२ ॥

100985
100986 खड्गच्छेद्यान्धकारेषु कुञ्जेषु गहनेषु च।
100987 एतस्मिन्नन्तरे तत्र यामार्धे प्रथमे गते॥ ९३॥
100988
100989 गहनेषु वनेषु॥ ९३॥
100990
100991 समाधिं तनुतां नीत्वा स्थितोहं बाह्यमग्नदृक्।
100992 अपश्यं कानने तेजो झटित्येव समुत्थितम्॥ ९४॥
100993
100994 तनुतां ईषद्बहिःप्रवणतामिति यावत्॥ ९४॥
100995
100996 शुभ्राभ्रशतसंकाशं चन्द्रबिम्बगणोपमम्।
100997 प्रकटीकृतदिक्कुञ्जं तदालोक्य मया स्मयात्॥ ९५॥
100998
100999 स्मयात् विस्मयात्॥ ९५॥
101000
101001 अन्तःप्रकाशशालिन्या बहिर्दृष्ट्यावलोकितम् [बुद्धिदृष्ट्या इति पाठः।
101002 ] ।
101003 यावत्पश्यामि तं सानुं प्राप्तश्चन्द्रकलाधरः॥ ९६॥
101004
101005 बहिर्दृष्ट्या अवलोकितमन्तर्विचारितमित्यर्थः। विचार्य च यावत्तं पुरस्थं सानुं
101006 प्रस्थदेशं पश्यामि तावत्तत्र प्राप्त इत्यर्थः॥ ९६॥
101007
101008 गौरीकरार्पितकरो नन्दिप्रोत्सारिताग्रगः।
101009 शिष्यान्संबोध्य तत्रस्थानगृहीत्वार्घ्यं सुसंयतः॥ ९७॥
101010
101011 सुसंयतः सावधानः॥ ९७॥
101012
101013 अगमं सुमनास्तस्य दृष्टिपूतमहं पुरः।
101014 तत्र पुष्पाञ्जलिं दत्त्वा दूरादेव त्रिलोचनः॥ ९८॥
101015
101016 सुमनाः संतुष्टमनाः। पुरः पुरोदेशम्॥ ९८॥
101017
101018 दत्तार्घ्येण मया देवः संप्रणम्याभिवन्दितः।
101019 ततश्चन्द्रप्रभासख्या ऋज्व्या शीतलया तया॥ ९९॥
101020
101021 सम्यक् साष्टाङ्गं प्रणम्याभिवन्दितः स्तुतः। स्वभाग्यमहोदयं
101022 स्वस्मिंस्तदनुग्रहदृष्टिपातं वर्णयति-तत इति। तया
101023 स्वानुभूतालौकिकनिरतिशयानन्दाविर्भावचमत्कारकारिण्या॥ ९९॥
101024
101025 दृशा सर्वार्तिहारिण्या चिरमस्म्यास्पदीकृतः।
101026 पुष्पसानूपविष्टाय तस्मै त्रैलोक्यसाक्षिणे॥ १००॥
101027
101028 अर्घ्यं पुष्पं तथा पाद्यमभ्युपेत्यार्पितं मया।
101029 मन्दारपुष्पाञ्जलयो विकीर्णा बहवः पुरः॥ १०१॥
101030
101031 अभ्युपेत्य अभिमुखं समीपे गत्वा॥ १०१॥
101032
101033 नानाविधिर्नमस्कारैः स्तोत्रैश्चाभ्यर्चितः शिवः।
101034 ततो भगवती गौरी तादृश्यैव सपर्यया॥ १०२॥
101035
101036 तादृश्या शिवपूजासदृश्या सपर्यया पूजया॥ १०२॥

101037
101038 संपूजिता सखीयुक्ता गणमण्डलिका तथा।
101039 पूजान्ते पूर्णशीतांशुरश्मिशीतलया गिरा॥ १०३॥
101040
101041 तदाज्ञया तत्र सानावुपविष्टं भाम्॥ १०३॥
101042
101043 तत्रोपविष्टं प्रोवाच मामर्धेन्दुकलाधरः।
101044 ब्रह्मन्प्रशमशालिन्यः प्राप्तविश्रान्तयः पदे॥ १०४॥
101045
101046 तत्र कुशलप्रश्ने कर्तव्ये सर्वकौशल्यपरमकाष्ठां परमात्मनि
101047 चित्तविश्रान्तिमेव भगवान्प्रथममनुजिघृक्षया पृच्छति-ब्रह्मन्निति॥ १०४॥
101048
101049 कच्चित्कल्याणकारिण्यः संविदस्ते स्थिताः परे।
101050 कच्चित्तपस्ते निर्विघ्नं कल्याणमनुवर्तते॥ १०५॥
101051
101052 संविदश्चित्तवृत्तयः। परे परमात्मवस्तुनि॥ १०५॥
101053
101054 कच्चित्प्राप्यमनुप्राप्तं कच्चिच्छाम्यन्ति भीतयः।
101055 एवंवादिनि देवेशे सर्वलोकैककारिणि॥ १०६॥
101056
101057 गिरानुनयशालिन्या मयोक्तं रघुनन्दन।
101058 त्र्यक्षानुस्मृतिकल्याणवतामिह महेश्वर॥ १०७॥
101059
101060 अनुनयो विनयस्तच्छालिन्या॥ १०७॥
101061
101062 न किंचिदपि दुष्प्रापं न च काश्चन भीतयः।
101063 त्वदनुस्मरणानन्दपरिघूर्णितचेतसाम्॥ १०८॥
101064
101065 न ते सन्ति जगत्कोशे प्रणमन्ति न ये पुनः।
101066 ते देशास्ते जनपदास्ता दिशस्ते च पर्वताः॥ १०९॥
101067
101068 जगत्कोशे ते प्राणिनो न सन्ति ये न प्रणमन्ति। सर्वेऽपि प्रणमन्त्येवेत्यर्थः। ते देशाः
101069 प्रशस्ततमा इत्यर्थः। अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वाः
101070 इतिवत्प्राशस्त्यलाभः॥ १०९॥
101071
101072 त्वदनुस्मरणैकान्तधियो यत्र स्थिता जनाः।
101073 फलं भूतस्य पुण्यस्य वर्तमानस्य सेचनम्॥ ११०॥
101074
101075 भूतस्य प्राक्संचितस्य पुण्यस्य वृक्षस्थानीयस्य फलं तनोति अनन्तकोटिगुणतया
101076 विस्तारयति। वर्तमानस्यैतद्देहारभ्यस्य सेचनममृतसेकेनेवाभिवर्धनं तनोति॥
101077 ११०॥
101078
101079 तनोति चैष्यतो बीजं त्वदनुस्मरणं प्रभो।
101080 ज्ञानामृतैककलशो धृतिज्योत्स्नानिशाकरः॥ १११॥
101081
101082 एष्यतः करिष्यमाणस्य वृद्ध्यर्थं बीजं तनोति॥ १११॥
101083
101084 अपवर्गपुरद्वारं त्वदनुस्मरणं प्रभो।
101085 त्वदनुस्मरणोदारचिन्तामणिमता मया॥ ११२॥
101086
101087 सर्वासामापदां मूर्ध्नि दत्तं भूतपते पदम्।
101088 इत्युक्त्वा सुप्रसन्नं तं भगवन्तं महेश्वरम्॥ ११३॥

सर्वासां वर्तमानानामेष्यन्तीनां च ॥ ११३ ॥

अवोचं प्रणतो भूत्वा यद्राम तदिदं शृणु ।
भगवंस्त्वत्प्रसादेन पूर्णा मे सकला दिशः ॥ ११४ ॥

पूर्णा इष्टार्थैरिति शेषः ॥ ११४ ॥

किंतु पृच्छामि देवेश संदेहे तत्र निर्णयम् ।
ब्रूहि प्रसन्नया बुद्ध्या त्यक्तोद्वेगमनामयम् ॥ ११५ ॥

त्यक्ता उद्वेगाश्चित्तक्षोभहेतवो यस्मिंस्तथाविधं देवार्चनविधानं ब्रूहीति
परेणान्वयः ॥ ११५ ॥

सर्वपापक्षयकरं सर्वकल्याणवर्धनम् ।
देवार्चनविधानं तत्कीदृशं भवति प्रभो ॥ ११६ ॥

ईश्वर उवाच ।

शृणु ब्रह्मविदां श्रेष्ठ देवार्चनमनुत्तमम् ।
वदामि मुच्यते येन कृतेन सकृदेव हि ॥ ११७ ॥

पूर्णा मे सकला दिश इत्युक्त्या वसिष्ठस्य
विषयभोगाभिलाक्षशून्यताद्योतनात्सर्वपापक्षयकरं सर्वकल्याणवर्धनमिति
विशेषणाभ्यां च
सर्वानर्थनिवृत्त्युपलक्षितनिरतिशयानन्दरूपमोक्षसाधनविषय एवायं प्रश्न
इति निश्चितवान्सर्वज्ञः परमकारुणिक ईश्वरः सर्वभावेन प्रपन्नाय वसिष्ठाय
परमपुरुषार्थसाधनं तत्त्वज्ञानमेव
सर्वदेवार्चनपरमरहस्यभूतमुपदेष्टुकामः प्रतिजानीते-शृण्विति ॥ ११७ ॥

कच्चिद्वेत्सि महाबाहो देवः कः स्यादिति द्विज ।
न देवः पुण्डरीकाक्षो न च देवस्त्रिलोचनः ॥ ११८ ॥

तत्र वक्ष्यमाणदेवार्चनानुरूपमलौकिकदेवस्वरूपमुपदेष्टुं शिष्यस्य
तद्बुभुत्सां जनयन्पृच्छति-कच्चिदिति । महाबाहो
निरन्तरदेवार्चनसफलीकृतबाहो इति बाहुसापेक्षबाह्यपूजामात्रशूरताद्योतनाय
संबोधनम् । ननु प्रसिद्धा एव पुण्डरीक्षाक्षत्रिलोचनादयो देवाः किमेतावत्यपि
विषये भगवान्मामनभिज्ञं संभावयतीति मन्यमानस्य वसिष्ठस्य
परिच्छिन्नेषु श्रद्धाजाड्यं प्रथममपनेतुमाह-न देव इत्यादिना ॥ ११८ ॥

न देवः कमलोद्भूतो न देवस्त्रिदशेश्वरः ।
न देवः पवनो नार्को नानलो न निशाकरः ॥ ११९ ॥

कमलोद्भूतो ब्रह्मा । त्रिदशेश्वर इन्द्रः । निशाकरग्रहणं
तत्कलाधीनशरीरकत्रयस्त्रिंशत्कोटिदेवदेहोपलक्षणम् ॥ ११९ ॥

न ब्राह्मणो नाऽवनिपो नाहं न त्वं द्विजोत्तम ।
न देवो देहरूपो हि न देवश्चित्तरूपधृक् ॥ १२० ॥

पुनर्नाहं न त्वमिति निषेधो रुद्रवसिष्ठयोस्तत् यद्रोदयन्ति तस्माद्रुद्राः । यदहं
वसिष्ठोऽस्मि तत्त्वं वसिष्ठोऽसि इत्यादिश्रुतिषु मुख्यसमष्टिप्राणताप्रसिद्धेः कतम
एको देव इति प्राणः इति प्राणस्यैव सर्वदेवात्मकत्वश्रुतेश्च प्राणभावेन

101141 प्राप्तदेवतात्वनिवारणार्थम्। एवं नैनद्देवा आप्नुवन्पूर्वमर्शत् इत्यादिश्रुतिषु
101142 आध्यात्मिकेषु चक्षुरादिषु देवशब्ददर्शनात्। त्वचे स्वाहा लोमभ्यः स्वाहा
101143 इत्यादिमन्त्रलिङ्गाच्च देहाद्याध्यात्मिकभावानामपि प्रसक्तं देवतात्वं
101144 वारयति-देहरूप इति॥ १२०॥
101145
101146 न देवः कमलारूपी नापि देवो भवेन्मतिः।
101147 अकृत्रिममनाद्यन्तं देवनं देव उच्यते॥ १२१॥
101148
101149 आध्यात्मिकप्रस्तावात्कमलात्र देहादिशोभा। मतिग्रहणं
101150 सर्वाध्यात्मिकभावोपलक्षणार्थम्। तत्तुल्यन्यायादाधिभौतिकेष्वपि
101151 सर्वभावेष्वदेवत्वमुक्तं बोध्यम्। कस्तर्हि देवस्तमाह-अकृत्रिममिति।
101152 डुकृञो ड्वितः क्त्रिः क्रेर्मम्नित्यम् इति मप्। कृत्रिमं क्रियासाध्यं तद्विलक्षणं
101153 परमार्थदेवनं निरतिशयप्रमोदश्चित्प्रकाशो देव इत्यर्थः।
101154 पुण्डरीकाक्षादिमत्यन्ता हि चित्प्रकाशाधीनसत्तास्फूर्तिकत्वात्तस्मिन्नध्यस्तास्तेषां
101155 चित्प्रकाशात्पृथक्करणे स्वरूपसिद्धिरेव दुर्लभा दूरे देवत्वमिति तेष्वपि
101156 सत्ताप्रकाश एवानावृतः स्फुरन्सर्वत्रैको देवस्तदभिव्यक्त्यतिशयादेव
101157 पुण्डरीकाक्षादयोऽपि अभिभूतजाड्यत्वाद्वह्निशब्देन ज्वलदङ्गारा इव देवा उच्यन्त
101158 इति न श्रुतिस्मृत्यादिवादविरोधोऽपीति भावः॥ १२१॥
101159
101160 आकारादिपरिच्छिन्ने मिते वस्तुनि तत्कुतः।
101161 अकृत्रिममनाद्यन्तं देवनं चिच्छिवं विदुः॥ १२२॥
101162
101163 आकारादिना देशतो वस्तुतश्च परिच्छिन्ने मिते कालतः परिच्छिन्ने तत् देवनं कुतः।
101164 अयं भावः। देवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिष्विति
101165 दशस्वर्थेषु प्रसिद्धाद्दीव्यतेः पचाद्यचि देवशब्दव्युत्पादनात्संकोचे
101166 मानाभावान्मायिकनिरङ्कुशैश्वर्यस्वच्छन्दक्रीडाविजिगीषाव्यवहार##-
101167 द्युतिमोदावेव मुख्यावर्थौ तौ च नित्यनिरतिशयानन्दस्वप्रकाशे ब्रह्मण्येव
101168 संभवतो न परिच्छिन्नेषु जडेष्विति। अतः अकृत्रिमं चिच्छिवमेव देवं तत्त्वतो
101169 विदुरित्यर्थः॥ १२२॥
101170
101171 तदेव देवशब्देन कथ्यते तत्प्रपूजयेत्।
101172 तदेवास्ति यतः सर्वं सत्तासत्तात्मरूपधृक्॥ १२३॥
101173
101174 यतः सर्वं जगज्जीवतत्संसाररूपं तत्सत्तयैव सत्तात्मरूपधृक् न स्वत इति
101175 तदेवास्ति नान्यदित्यर्थः॥ १२३॥
101176
101177 अज्ञातशिवतत्त्वानामाकाराद्यर्चनं कृतम्।
101178 योजनाध्वन्यशक्तस्य क्रोशाध्वा परिकल्प्यते॥ १२४॥
101179
101180 तर्हि किं पुण्डरीकाक्षाद्याकारार्चनविधिर्व्यर्थ एव नेत्याह-अज्ञातेति कृतं
101181 विहितम्॥ १२४॥
101182
101183 इयत्तादिपरिच्छिन्नं रुद्रादेः प्राप्यते फलम्।
101184 अकृत्रिममनाद्यन्तं फलमानन्द आत्मनः॥ १२५॥
101185
101186 आत्मनस्तत्त्वतः साक्षात्कारान्तपूजनेन प्रसन्नादित्यर्थः॥ १२५॥
101187
101188 अकृत्रिमफलं त्यक्त्वा यः कृत्रिमफलं व्रजेत्।
101189 त्यक्त्वा स मन्दारवनं कारञ्जं याति काननम्॥ १२६॥
101190
101191 कृत्रिमकामभोगानात्मपूजनात्सिद्ध्यन्तीति तदर्थं कृत्रिमपूजैव कार्या
101192 तत्राह-अकृत्रिमेति॥ १२६॥

101193
101194 बोधः साम्यं शम इति पुष्पाण्यग्राणि तत्र च।
101195 शिवं चिन्मात्रममलं पूज्यं पूज्यविदो विदुः॥ १२७॥
101196
101197 अकृत्रिमपूजने तर्हि का सामग्री तामाह-बोध इति। साम्यं सर्वत्रात्मौपम्येन
101198 दर्शनम्॥ १२७॥
101199
101200 शमबोधादिभिः पुष्पैर्देव आत्मा यदर्च्यते।
101201 तत्तु देवार्चनं विद्धि नाकारार्चनमर्चनम्॥ १२८॥
101202
101203 आत्मसंवित्तिरूपं तु त्यक्त्वा देवार्चनं जनाः।
101204 कृत्रिमार्चासु ये सक्ताश्चिरं क्लेशं भजन्ति ते॥ १२९॥
101205
101206 ज्ञातज्ञेया हि ये सन्तो बालक्रीडोपमं च ते।
101207 आत्मध्यानादृते ब्रह्मन्कुर्वन्तो देवपूजनम्॥ १३०॥
101208
101209 ज्ञातज्ञेया ये कदाचिदात्मध्यानादुत्थिताः सन्तः साकारदेवपूजनं
101210 कुर्वन्तश्चेद्दृश्यन्ते तत्ते बालक्रीडोपमं कुर्वन्ति न कृत्रिमभोगाशयेत्यर्थः॥
101211 १३०॥
101212
101213 आत्मैव देवो भगवाञ्छिवः परमकारणम्।
101214 ज्ञानार्चनेनाविरतं पूजनीयः स सर्वदा॥ १३१॥
101215
101216 त्वमेतच्चेतनाकाशमात्मानं जीवमव्ययम्।
101217 स्वभावं विद्धि न त्वन्यः पूज्यः पूजात्मपूजनम्॥ १३२॥
101218
101219 त्वं जीवं स्वभावकृत्रिमं अव्ययं चेतनाकाशं चिदाकाशं ब्रह्म विद्धि न
101220 त्वन्यः अनात्मा पूज्यः। यतो ज्ञानलक्षणमात्मपूजनमेव मुख्यपूजा
101221 नान्येत्यर्थः। यथाहुः देहो देवालयः प्रोक्तो जीवो देवः सदाशिवः।
101222 त्यजेदज्ञाननिर्माल्यं सोहंभावेन पूजयेत्॥ इति॥ १३२॥
101223
101224 श्रीवसिष्ठ उवाच।
101225
101226 चेतनाकाशमात्रात्म यथा जगदिदं प्रभो।
101227 यथा तच्चेतनस्यैव जीवादित्वं तदुच्यताम्॥ १३३॥
101228
101229 तदेवास्ति यतः सर्वं सत्तासत्तात्मरूपधृक्। इति ब्रह्मण एव
101230 जगज्जीवतत्संसरणसत्तात्मनावस्थानमुक्तं तत्रोपपत्तिं जिज्ञासुर्वसिष्ठः
101231 पृच्छति-चेतनेति॥ १३३॥
101232
101233 ईश्वर उवाच।
101234
101235 चिद्व्योमेइव किलास्तीह पारावारविवर्जितम्।
101236 सर्वत्रासंभवच्चेत्यं यत्कल्पान्तेऽवशिष्यते॥ १३४॥
101237
101238 तत्र चित्सत्तायाश्चेत्यानधीनत्वं तावत्सर्वचेत्यप्रलयेऽप्यनपायात्प्रसिद्धमिति
101239 तदधीनभानस्य चेत्यस्य भानान्तरमिव न सत्तान्तरमपि युक्तमित्युपापत्तिमाह##-
101240 सर्गकालेऽपि असंभवच्चेत्यं
101241 पारादिपरिच्छेदशून्यत्वात्प्रलयकालवदित्यनुमानलक्षणात्रोपपत्तिर्दर्शिता बोध्या
101242 ॥ १३४॥
101243
101244 यद्यत्स्वयं प्रकचति तस्य स्वकचनस्य तु।

101245 स्वयं यत्स्पन्दितं नाम तेनेदं जगदित्यलम् ॥ १३५ ॥
101246
101247 कथं तर्हि जगद्रूपप्रतिभासस्तत्राह-यद्यदिति । तस्यापरिच्छिन्नत्वादेव
101248 मायावरणान्तः [मायावरणासंभवादिति पाठः ।]
101249 असंमानान्मायिकवासनादिमार्गेण यत्स्पन्दितं स्पन्दनमिव प्रसिद्धं तेनेदं
101250 जगदिति अलं भाति । तथाहि-यद्यत्सूर्यचन्द्रप्रदीपेन्द्रियमन-आदि स्वयं
101251 प्रकचति बहलीभूतप्रकाशं भवति तस्य स्वकचनस्य स्वबिम्बे असंमानात्स्वयं
101252 यद्बिम्बाद्बहिः प्रभाकारेण स्पन्दितं स्पन्दनं नाम प्रसिद्धं तदेव
101253 नीलपीतादितद्विषयरूपं जगदित्यलमत्यन्तं प्रसिद्धमित्यर्थः ॥ १३५ ॥
101254
101255 इत्येवं स्वप्नपुरवज्जगद्भाति चिदात्मकम् ।
101256 एवं चिद्व्योममात्रात्म जगदच्छं न भित्तिमत् ॥ १३६ ॥
101257
101258 इति उक्तरीत्या एवं विचित्ररूपं जगच्चिदात्मकमेव सत्स्वप्नपुरवच्चिदिव भाति भ्रान्त्या
101259 । एवं मदुक्तरीत्या परमार्थतो विमृष्टं तु जगन्न भित्तिमत् अमूर्तमच्छं
101260 चिद्व्योममात्रामैवेत्यर्थः ॥ १३६ ॥
101261
101262 अत्यन्तासंभवाच्चेत्यं दृश्यं चिद्व्योममात्रकम् ।
101263 चित्त्वात्कचति सर्गादौ यत्तज्जगदिति स्मृतम् ॥ १३७ ॥
101264
101265 तर्हि किं चिदेव चेत्याकारेण परिणतं स्वं पश्यति नेत्याह-अत्यन्तेति ।
101266 अपरिणामित्वादद्वयत्वाच्चात्यन्तासंभवाचेत्यमप्यावृतचित्स्वभावाद्यदन्यथा
101267 कचति प्रथते तदेव दृश्यं जगदित्यर्थः ॥ १३७ ॥
101268
101269 तस्मात्स्वप्नपुराकारं यदिदं भासते जगत् ।
101270 तत्र चिद्व्योममात्रात्मन्यन्यता नाम का कुतः ॥ १३८ ॥
101271
101272 चिन्मात्रमेव गिरयश्चिन्मात्रं जगदम्बरम् ।
101273 चिन्मात्रमात्मा जीवश्च चिन्मात्रं भूतसंततिः ॥ १३९ ॥
101274
101275 अत एवारोपितरूपबाधेन चिन्मात्रस्वरूपं द्रष्टव्यमित्याह##-
101276
101277 चिद्व्योममात्रादितरत्सर्गादौ सर्ववेदने ।
101278 भिन्नस्वर्गे पुरे वापि किं संभवति कथ्यताम् ॥ १४० ॥
101279
101280 स्वर्गे ऊर्ध्वलोकेषु पुरे स्वनगरे वा अपिशब्दात्पातालेषु वा चिद्भिन्नं किं संभवति
101281 तत्कथ्यतां निरूपणकुशलैः । अचितः स्वतःसत्तास्फूर्तिसत्त्वे
101282 अचित्त्वव्याघातात्तदभावे अलीकत्वादलीकस्य चित्तास्फूर्तिसत्त्वे अचित्त्वव्याघातात्तदभावे
101283 अलीकत्वादलीकस्य
101284 चिताप्युज्जीवनादर्शनाच्चितोऽसङ्गत्वेनाचित्संबन्धाद्ययोगात्साधकान्तरस्य
101285 चाप्रसिद्धेरिति भावः ॥ १४० ॥
101286
101287 आकाशं परमाकाशं ब्रह्माकाशं जगच्चितिः ।
101288 इति पर्यायनामानि तत्र पादपवृक्षवत् ॥ १४१ ॥
101289
101290 ननु यजति ददाति जुहोति इत्यादिशब्दान्तरात्मकर्मभेद इव चित् आकाशं
101291 जगदित्यादिनामान्तराद्भेदोऽस्त्विति चेत्तत्राह-आकाशमिति ।
101292 भूताकाशाव्याकृताकाशाद्यर्थत्रयपरत्वेनाभिप्रेतानां
101293 त्रयाणामप्याकाशशब्दानां काशृदीप्ताविति धात्वर्थानुगमेन
101294 चिन्मात्रवचनत्वसंभवाद्गमेरपि ये गत्यर्थास्ते ज्ञानार्था । इत्यनुशासनात्
101295 वर्तमाने पृषन्महद्वृहज्जगच्छतृवच इति क्विपि द्वित्वादिनिपातनेऽपि
101296 ज्ञानार्थत्वानपायाच्चित्पर्यायनामतोपपत्तेरिति भावः ॥ १४१ ॥

एवं द्वौ स्वप्नसंकल्पमायाभिः स्वनुभूयते |
तदा किल चिदाकाशमेव भाति जगत्तया || १४२ ||

तदेति दर्शनाद्यदेत्यध्याहार्यम् | एवंरीत्या द्वौ द्वैतं स्वप्नादिभिः समं
यदानुभूयते तत्त्वदृशा तदेत्यर्थः || १४२ ||

यथैतत्संविदाकाशं स्वप्ने भाति जगद्वपुः |
तथेदं जाग्रदाख्येऽपि स्वप्ने भाति तदेव नः || १४३ ||

यथा स्वप्नपुरे चित्खं वर्जयित्वेतरत्क्वचित् |
न किंचित्संभवत्येवं जाग्रत्येवं महाचितः || १४४ ||

द्वितीय एवं शब्दः अपिशब्दार्थे || १४४ |

यतो न संभवत्यन्यच्चेत्यंन् किंचित्ततोऽखिलम् |
चित्तं संचेत्यमप्येतदचेत्यं सज्जगत्स्थितम् || १४५ ||

अखिलं चित्तं संचेत्यमपि जगत् अचेत्यं सन्मात्रमेव स्थितम् || १४५ ||

परमाकाशकलनं त्रिजगत्स्वयमुत्थितम् |
स्वप्नवद्विद्धि चिद्व्योम्नि न त्वेतद्वैतवत्स्थितम् || १४६ ||

परमाकाशस्य ब्रह्मणः कलनं बहु स्यां प्रजायेय इति श्रुतिदर्शित आद्यसंकल्प
एव त्रिजगद्भूत्वा स्वयमुत्थितं द्वैतवत् द्वैतवाद्यभिमतसत्यवस्तुवदित्यर्थः || १४६
| |

यथा चिद्व्योममात्रात्म स्वप्ने घटपटादिकम् |
सर्गादावेव सर्गोऽयं तथा चिद्व्योममात्रकम् || १४७ ||

जगत्सामान्ये उक्तं न्यायं घटपटादिविशेषेऽपि दर्शयति-यथेत्यादिना | सर्गो
घटपटादिः || १४७ ||

शुद्धसंवित्तिमात्रत्वादृतेऽन्यत्स्वप्नपत्तने |
यथा न विद्यते किंचित्तथास्मिन्भुवनत्रये || १४८ ||

याः काश्चन दृशो ये ये भावाभावास्त्रिकालगाः |
सदेशकालचित्तास्तत्सर्वं चिद्व्योममात्रकम् || १४९ ||

स एष देवः कथितो यः परः परमार्थतः |
यस्त्वं सोऽहमशेषं वा जगदेव च योऽखिलः || १५० ||

स ज्ञानेन पूज्यो देवः प्रथमप्रश्नोत्तरत्वेन कथितः || १५० ||

सर्वस्य वस्तुजातस्य जगतोऽन्यस्य ते मम |
देहो हि चेतनाकाशं परमात्मैव नेतरत् || १५१ ||

देहः पारमार्थिकस्वरूपम् || १५१ ||

संकल्पने स्वप्नपुरे शरीरं चिद्व्योमतोऽन्यन्न यथास्ति किंचित् |
तथेह सर्गे प्रथमैकसर्गान्मुने प्रभृत्यस्ति न रूपमन्यत् || १५२ ||

101349 उक्तमनूद्योपसंहरति-संकल्पन इति | प्रथमादेकस्य हिरण्यगर्भस्य
101350 सर्गात्प्रभृति प्रवृत्ते इहास्मिन्सर्गे तथा
101351 संकल्पनस्वप्नपुरशरीरादिवदेवान्यद्रूपं नास्ति || १५२ ||
101352
101353 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वाणप्रकरणे पू० जगतः
101354 परमात्ममयत्ववर्णनं नामैकोनत्रिंशः सर्गः || २९ ||
101355
101356 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे जगतः
101357 परमात्ममयत्ववर्णनं नामैकोनत्रिंशः सर्गः || २९ ||
101358
101359 त्रिंशः सर्गः ३०
101360
101361 ईश्वर उवाच |
101362
101363 एवं सर्वमिदं विश्वं परमात्मैव केवलम् |
101364 ब्रह्मैव परमाकाशमेष देवः परः स्मृतः || १ ||
101365
101366 चितः सर्वात्मता सर्वभोक्तृभावेन संस्थितिः |
101367 यथा जीवदशां प्राप्ता चित्तच्चाप्यत्र वर्ण्यते ||
101368
101369 चेतनाकाशमात्रात्म यथा सर्वमिदं प्रभो इति यत्त्वया पृष्टं तस्येदमुत्तरं
101370 वर्णितमित्याह-एवमिति | कच्चिद्वेत्सि महाबाहो देव कः स्यादिति द्विज इति मया
101371 त्वत्पृष्टदेवार्चनविधानमूलरहस्यं यत्त्वां प्रति पृष्टं
101372 तदप्येतदेवेत्याह-एष देव इति || १ ||
101373
101374 तदेतत्पूजनं श्रेयस्तस्मात्सर्वमवाप्यते |
101375 तदेव सर्गभूः सर्वमिदं तस्मिन्व्यवस्थितम् || २ ||
101376
101377 परिच्छिन्नदेवार्चनं परिच्छिन्नफलमेतदर्चनं तु
101378 सर्वकामावसानभूमिभूमानन्दप्राप्तिफलमिति सर्वोत्कृष्टमित्याह-तदेतदिति |
101379 सर्गभूः सर्वजगत्सर्गारोपाधिष्ठानम् || २ ||
101380
101381 अकृत्रिममनाद्यन्तमद्वितीयमखण्डितम् |
101382 अबहिः साधनासाध्यं सुखं तस्मादवाप्यते || ३ ||
101383
101384 तत्र बहुवित्तव्ययायाससाध्यताशङ्कां परिहरति-अबहिरिति | अबहिः साधनं च
101385 तदसाध्यं चेति विग्रहः || ३ ||
101386
101387 प्रबुद्धस्त्वं मुनिश्रेष्ठ तेनेदं तव कथ्यते |
101388 नातिदेवार्चने योग्यः पुष्पधूपचयो महान् || ४ ||
101389
101390 प्रबुद्धो विवेकी मुख्याधिकारीति यावत् | अतिशयितो देवः अतिदेवस्तदर्चने || ४ ||
101391
101392 अव्युत्पन्नधियो ये हि बालपेलवचेतसः |
101393 कृत्रिमार्चामयं तेषां देवार्चनमुदाहृतम् || ५ ||
101394
101395 मूर्त्यादिरूपदेवार्चने तर्हि केऽधिकारिणस्तानाह-अव्युत्पन्नेति | अत एव
101396 तदनुरूपमेव कृत्रिमप्रतिमादि तत्सामग्री चेत्याह-कृत्रिमेति | अर्चा प्रतिमा
101397 तत्प्रचुरम् || ५ ||
101398
101399 शमबोधाद्यभावे हि पुष्पाद्यैर्वार्चयन्ति हि |
101400 मिथ्यैव कल्पितैरेवमाकारे कल्पितात्मके || ६ ||

101401
101402 तच्च शाल्योदनालाभे क्रोद्रवाशनमिवेत्याह-शमेति ॥ ६ ॥
101403
101404 स्वसंकल्पकृतैः कृत्वा क्रमैरर्चनमादृताः ।
101405 बालाः संतोषमायान्ति पुष्पधूपलवार्चनैः ॥ ७ ॥
101406
101407 अर्चनं कृत्वा संतोषमायान्ति प्राप्नुवन्ति ॥ ७ ॥
101408
101409 स्वसंकल्पकृतैरर्थैः कृत्वादेवार्चनं मुधा ।
101410 यतः कुतश्चिन्मिथ्यात्म फलमात्रं नयन्ति ते ॥ ८ ॥
101411
101412 यतः कुतश्चित्स्वप्नप्रायविमानाप्सरः प्रभृतिसाधनान्मिथ्यात्मकमेव
101413 स्वर्गादिफलमासादयन्तीति मुधेत्यस्योपपत्तिः ॥ ८ ॥
101414
101415 पुष्पधूपार्चनं ब्रह्मन्कल्पितं बालबुद्धिषु ।
101416 यत्स्याद्भवादृशां योग्यमर्चनं तद्वदाम्यहम् ॥ ९ ॥
101417
101418 अस्मदादिस्त्वसौ कश्चिद्देवो मतिमतां वर ।
101419 देवस्त्रिभुवनाधारः परमात्मैव नेतरत् ॥ १० ॥
101420
101421 वयं आदिः कारणं यस्य सोऽस्मदादिरस्मत्कल्पितप्रपञ्चान्तर्गतः असौ
101422 चक्षुरादिदृश्यमूर्तिरूपो देवः कश्चिदनिर्वचनीयो मायामय एवेत्यर्थः । कस्तर्हि
101423 पारमार्थिको देवस्तमाह-देव इति ॥ १० ॥
101424
101425 शिवः सर्वपदातीतः सर्वसंकल्पनातिगः ।
101426 सर्वसंकल्पवलितो न सर्वो न च सर्वकः ॥ ११ ॥
101427
101428 सर्वेभ्यो ब्रह्मविष्णुरुद्रादिदेवेभ्योऽप्यतीतसंकल्पना मनोवृत्तयस्तदतिगः । यतो
101429 वाचो निवर्तन्ते अप्राप्य मनसा सह इति श्रुतेः । यस्तु सर्वैर्विषयभोगसंकल्पैर्वलितो
101430 वेष्टितो ब्रह्मविष्ण्वादिपदरूपः स न साधनतोऽपि सर्वो न फलतोऽपि सर्व कं
101431 भोगसुखं यस्मिंस्तथाविधः । स्वस्वकर्मोपासनतारतम्यानुसारेणैव
101432 भोगसामग्र्यास्तत्फलसुखलवस्य च तत्र लाभादित्यर्थः ॥ ११ ॥
101433
101434 दिक्कालाद्यनवच्छिन्नः सर्वारम्भप्रकाशकृत् ।
101435 चिन्मात्रमूर्तिरमलो देव इत्युच्यते मुने ॥ १२ ॥
101436
101437 आत्मदेवस्तु पूजनदशायां फलदशायां च
101438 नित्यनिरतिशयपरमार्थसत्यपूर्णानन्दैकस्वभाव एवेति स एव देव इत्युक्तियोग्य
101439 इत्याह-दिक्कालेति ॥ १२ ॥
101440
101441 संवित्सर्वकलातीता सर्वभावान्तरस्थिता ।
101442 सर्वसत्ताप्रदा देवी सर्वसत्तापहारिणी ॥ १३ ॥
101443
101444 ब्रह्म ब्रह्मन्सदसतोर्मध्यं तद्देव उच्यते ।
101445 परमात्मपराभिख्यं तत्सदोमित्युदाहृतम् ॥ १४ ॥
101446
101447 सदसतोर्भावाभावयोर्वर्तमानतदन्यकालयोर्मूर्तामूर्तयोः
101448 कारणकार्ययोर्व्यावहारिकप्रातिभासिकयोर्वा
101449 आन्तरालिकसाक्षिचिन्मात्ररूपत्वादधिष्ठानत्वाद्वा मध्यम् ।
101450 परमसूर्यचन्द्राग्निकरणज्योतिर्भ्य उत्कृष्ट आत्मैव परा सर्वावद्योतनक्षमा
101451 अभिख्या प्रकाशो यस्य तत्तथाविधं सत् ओमिति पदेन श्रुतिषु
101452 विराडादिपादत्रयात्मकसर्वप्रपञ्चप्रविलापनेन शिवमद्वैतं चतुर्थं मन्यन्ते

स आत्मा स विज्ञेयः इत्युदाहृतमित्यर्थः ॥ १४ ॥

महासत्तास्वभावेन सर्वत्र समतां गतम् ।
महाचिदिति संप्रोक्तं परमार्थ इति श्रुतम् ॥ १५ ॥

स्थितं सर्वत्र सर्वं तु लतास्वन्तर्यथा रसः ।
सत्तासामान्यरूपेण महासत्तात्मनापि च ॥ १६ ॥

व्यवहारे सर्वत्रानुगमात्सत्तासामान्यरूपेण । सर्वबाधे तु महासत्तात्मना ॥ १६ ॥

यच्चित्तत्त्वमरुन्धत्या यच्चित्तत्त्वं तवानघ ।
यच्चित्तत्त्वं च पार्वत्या यच्चित्तत्त्वं गणेषु च ॥ १७ ॥

तस्यैव सर्वेषां देवतादीनामात्मत्वादपि मुख्यं देवत्वमित्याह-यदित्यादिना ॥
१७ ॥ १८ ॥

चित्तत्त्वं यन्ममेदं च चित्तत्त्वं यज्जगत्त्रये ।
तद्देव इति तत्त्वज्ञा विदुरुत्तमबुद्धयः ॥ १८ ॥

तस्यैव सर्वेषां देवतादीनामात्मत्वादपि मुख्यं देवत्वमित्याह-यदित्यादिना ॥
१७ ॥ १८ ॥

पादपाण्यादिमानन्यो यो वा देवः प्रकल्प्यते ।
संविन्मात्रादृते ब्रह्मन्किंसारः किल कथ्यताम् ॥ १९ ॥

तस्यैव विमर्शे सर्वदेवतासारत्वाद्देवत्वमित्याह-पादेति । किंसारः स इति शेषः
॥ १९ ॥

चिन्मात्रमेव संसारसारः सकलसारताम् ।
गतः स देवः सर्वोऽहं तस्मात्सर्वमवाप्यते ॥ २० ॥

स सर्वः पूर्णो देव एवाहं न परिच्छिन्न इत्यर्थः ॥ २० ॥

न स दूरे स्थितो ब्रह्मन्न दुष्प्रापः स कस्यचित् ।
संस्थितः स सदा देहे सर्वत्रैव च खे तथा ॥ २१ ॥

स करोति च चाश्नाति स बिभर्ति प्रयाति च ।
स निःश्वसिति संवेत्तासोऽङ्गान्यङ्गानि वेत्ति च ॥ २२ ॥

स एव सर्वकर्ता सर्वभोक्ता चेत्याह-स करोतीत्यादिना ॥ २२ ॥

सोऽस्यां विचित्रचेष्टायां प्रकाशिन्यां च तद्वशात् ।
तत्स्वरूपनिबद्धायां पुर्यामास्ते मुनीश्वर ॥ २३ ॥

पुर्यामास्ते । स एष इह प्रविष्ट आनखाग्रेभ्यः इति श्रुतेरिति भावः ॥ २३ ॥

शरीरावसथायां च चलायां तत्प्रसादतः ।
सोऽस्यां गहनकोशायां हृद्गुहायां गुहेश्वरः ॥ २४ ॥

शरीरमावसथो महागृहं यस्यास्तथाविधायाम् । गहना दुर्विवेका
अन्नमयादिबहिःकोशा यस्यास्तथाविधायाम् । हृद्बुद्धिः सैव गूहतीति गुहा तस्याम् ।
आनन्दमयकोशगुहेश्वरः ॥ २४ ॥

मनःषष्ठेन्द्रियाचारसत्तातीतामलात्मनः।
तस्य संव्यवहारार्थं संज्ञा चिदिति कल्पिता॥ २५॥

उपदेशसंव्यवहारार्थम्॥ २५॥

स एष चिन्मयः सूक्ष्मः सर्वव्यापी निरञ्जनः।
इमं भास्वरमाभासं करोति न करोति च॥ २६॥

भास्यारोपे करोतीव तदपवादे न करोति। नित्यभानस्य कृतत्वाभावादित्यर्थः॥ २६॥

सा चिदत्यन्तविमला जगदर्थं जगत्क्रियाम्।
इमां रञ्जयति प्राज्ञ रसेनेव मधुर्लताम्॥ २७॥

रञ्जयति शोभयति। मधुर्वसन्तः॥ २७॥

चारवो ये चमत्काराश्चितश्चिति यथास्थितम्।
चमत्कुर्वन्ति किल ते तेन केचिन्नभोभिधाः॥ २८॥

चमत्कारा आरोप्ये सत्तास्फूर्तिप्रदानरूपाः। चिति मायाशबले यत्स्थितं
पूर्वकामकर्मवासनानुसारेण नियतं चमत्कुर्वन्त्याविर्भावयन्ति।
तांश्चिच्चमत्कारानेव नामकल्पनया व्यपदिशति-केचिदित्यादिना। सर्गभेदेन
नभोबहुत्वोक्तिः॥ २८॥

केचिज्जीवाभिधानाश्च केचिच्चित्ताभिधानकाः।
केचित्कलाभिधानाश्च केचिद्देशाभिधानकाः॥ २९॥

केचित्क्रियाभिधानाश्च केचिद्द्रव्याभिधानकाः।
केचिद्भावविकारादिजात्यौचित्याभिधानकाः॥ ३०॥

भावविकारा जायतेऽस्ति वर्धते विपरिणमतेऽपक्षीयते नश्यति इति यास्कोक्ताः
आदिपदाद्गुणभेदास्तेषां जात्या वैचित्र्येण औचित्येन च विचित्राभिधानकाः॥ ३०॥

प्रकाशाभिधानाः केचित्केचिच्छैलतमोभिधाः।
अर्केन्द्राद्यभिधाः केचित्केचिद्यक्षाभिधानकाः॥ ३१॥

तानेव प्रपञ्चयति-प्रकाशेति॥ ३१॥

निरिच्छस्वस्वभावेन वसन्तेन यथाङ्कुरः।
तन्यते तद्वदेवेयं जगल्लक्ष्मीश्चिदात्मना॥ ३२॥

चितः किं स्वभोगेच्छया जगत्सृष्टिर्नेत्याह-निरिच्छेति। तथा चोक्तं
श्रीमद्गौडपादाचार्यैः-भोगार्थं सृष्टिरित्येके क्रीडार्थमिति चापरे।
देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा॥ इति। नचैवं सोऽकामयत बहु स्यां
प्रजायेय इत्यादिश्रुतिविरोधः। अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो
यजुर्वेदः इत्यादिश्रुत्यन्तरे इच्छाप्रयत्नाद्यनपेक्षनिःश्वसितप्रायत्वोक्तेः तदैक्षत
बहु स्यां प्रजायेय इति समानतात्पर्यकश्रुत्यन्तरानुगुण्याय
चाकामयतेत्युक्तेरचेतनप्रधानादिकर्तृकताशङ्कावारणमात्रतात्पर्यकत्वात्।
तथा च भगवतो बादरायणस्य सूत्रम् कामाच्च नानुमानापेक्षा इति॥ ३२॥

चिदेवासु समग्रासु सर्वदैवैकिकैव हि।
त्रैलोक्याम्भोधिसंस्थासु शरीरजलजालिका॥ ३३॥

101557
101558 त्रैलोक्यलक्षणानामम्भोधीनां संस्थासु तात्त्विकस्थितिषु विचार्यमाणासु चिदेव
101559 शरीरं वास्तवतत्त्वं तद्रूपा जलजालिका जलसमूहस्थानीया नान्यदित्यर्थः ॥ ३३ ॥
101560
101561 शरीरपङ्कजभ्रान्तमनोभ्रमरसंभृताम् ।
101562 आस्वादयति संकल्पमधुसत्तां चिदीश्वरी ॥ ३४ ॥
101563
101564 तस्या मनःसंकल्पकृतभोक्त्रादित्रिपुटीप्रकाशकत्वमेव
101565 भोक्तविवेकाद्भोक्तृत्वमिति कल्प्यत इत्याशयेनाह-शरीरेति । ईश्वरी
101566 स्वारोपितसर्वावभासनसमर्था ॥ ३४ ॥
101567
101568 ससुरासुरगन्धर्वं सशैलार्णवकं जगत् ।
101569 चिति स्थितं प्रवहति जलावर्ते जलं यथा ॥ ३५ ॥
101570
101571 एवं कर्तृत्वमपि तस्याः
101572 स्वाध्यारोपितकारकपरिभ्रमणप्रधानिमित्तत्वमेवेत्याशयेनाह-ससुरासुरेति ।
101573 प्रवहति परिवर्तते ॥ ३५ ॥
101574
101575 बन्धचित्तमयाचारचारुचञ्चुरचक्रिकम् ।
101576 संसारचक्रं चिच्चक्रे भ्राम्यति भ्रमभाजनम् ॥ ३६ ॥
101577
101578 बध्नातीति बन्धस्तथाविधो यश्चित्तमयः कर्तृत्वभोक्तृत्वरूप आचारस्तेन
101579 चारवश्चञ्चुराश्चपलाश्च व्यष्टिजीवसंसरणचक्रिका यस्मिंस्तथाविधं
101580 जीवसमष्टि संसारचक्रं मायाशबले चिच्चक्रे भ्राम्यति ॥ ३६ ॥
101581
101582 चिच्चतुर्भुजरूपेण जघानासुरमण्डलम् ।
101583 कालो जलदखण्डेन सायुधेन यथाऽऽतपम् ॥ ३७ ॥
101584
101585 वर्णितलक्षणं चित एव सर्वकर्तृभोक्तृत्वं विशिष्य वर्णयति-चिदित्यादिना ।
101586 कालो वर्षर्तुः सायुधेनैन्द्रधनुर्वज्रयुक्तेन जलदखण्डवेषेणातपमिव ॥ ३७ ॥
101587
101588 चिल्लिनेत्रतया ब्रह्मन्वृषशीतांशुचिह्नया ।
101589 गौरीकमलिनीवक्त्रपद्मषट्पदतां गता ॥ ३८ ॥
101590
101591 विष्णोः पद्मालितामेत्य चिद्ध्यानाधीनमानसा ।
101592 त्रयी नलिन्याः सरसीं धत्ते पैतामहीं स्थितिम् ॥ ३९ ॥
101593
101594 विष्णोर्नाभिपद्मे अलितां भ्रमरत्वमिव एत्य प्राप्य । त्रयी वेदास्तल्लक्षणाया
101595 नलिन्याः सरसीं महासरोभूतां स्थितिं मूर्तिम् ॥ ३९ ॥
101596
101597 चितो ब्रह्मन्विचित्राणि शरीराणीह भूरिशः ।
101598 पत्राणीव तरोर्हेम्नि केयूरादिक्रियेव च ॥ ४० ॥
101599
101600 केयूरादीनां क्रियानिर्मितिरिव ॥ ४० ॥
101601
101602 चित्समस्तसुरानीकपरिवन्दितपादया ।
101603 त्रैलोक्यचूडामणितां धत्ते वासवलीलया ॥ ४१ ॥
101604
101605 चूडामणितां वन्द्यतामिति यावत् ॥ ४१ ॥
101606
101607 चित्सुभास्वरतामेत्य त्रैलोक्योदरडम्बरे ।
101608 पतत्युदेति संयाति स्वात्मन्येवाब्धिवारिवत् ॥ ४२ ॥

सुभास्वरतां सूर्यादितेजोरूपताम् ॥ ४२ ॥

चिच्चन्द्रिका चतुर्दिक्षु अवभासं वितन्वती ।
विकासयति निःशेषभूतसत्ताकुमुद्वतीम् ॥ ४३ ॥

साक्षादपि तस्या आह्लादप्रथानिमित्ततामाह-चिच्चन्द्रिकेति ॥ ४३ ॥

चिद्दर्पणमहालक्ष्मीस्त्रिजगत्प्रतिबिम्बितम् ।
गृह्णात्यनुग्रहेणान्तः स्वगर्भमिव गर्भिणी ॥ ४४ ॥

महती लक्ष्मीः स्वच्छभास्वरतालक्षणा शोभा वैष्णवी माया वा ॥ ४४ ॥

चिच्चतुर्दशभूतानां मण्डलानि महान्ति च ।
भूतीकरोति वारिश्रीः समुद्रस्वमिवाम्बुधिः ॥ ४५ ॥

चतुर्दशभुवनस्थायां भूतानाम् । भूतीकरोति सत्तां संपादयति । यथा वारिश्रीः
रसशक्तिः अम्बुधिर्जलसमूहरूपा सती समुद्रस्वं समुद्रस्वरूपसत्तां संपादयति
तद्वत् ॥ ४५ ॥

विचित्रालोककुसुमा घनसंकल्पपल्लवा ।
व्योमकेदारिकारूढा सत्तौघफलशालिनी [अत्र फलदायिनीति पाठो
व्याख्यानुगुणः स्यात् ।] ॥ ४६ ॥

इदानीं तामेव चितं लतात्वेन रूपयति-व्योमेत्यादिना । व्योमात्र
मायाकाशस्तल्लक्षणायां केदारिकायां क्षेत्रभक्तौ रूढा हिरण्यगर्भात्मना
अङ्कुरिता । सत्तौघाः सर्वपदार्थसत्यतास्तल्लक्षणफलदायिनी ॥ ४६ ॥

जीवजालरजःपुञ्जवासनारसरञ्जिता ।
संवेदनत्वग्वलिता चित्तेहाकलिकाकुला ॥ ४७ ॥

संवेदनानि सविकल्पज्ञानानि । चित्तेहाश्चित्तवृत्तयः ॥ ४७ ॥

अतीतासंख्यत्रिजगत्केसरोज्ज्वलरूपिणी ।
अनारतस्पन्दमहाविलासोल्लासहासिनी ॥ ४८ ॥

सर्वर्तुपर्वपरुषा जडशैलादिगुल्मका ।
विग्रहग्रन्थिवलिता मूलाग्रपरिवर्तिता ॥ ४९ ॥

जडाः शैलादय एव गुल्मका मूलप्ररोहा यस्याः । विग्रहाश्चतुर्विधशरीराण्येव
ग्रन्थयस्तैर्वलिता । आमूलाग्रं प्रवृत्तिप्रतानैः परिवर्तिता वेष्टिता ॥ ४९ ॥

चिल्लतेयं विकसिता पेलवं सदसद्वपुः ।
विचित्रं दृश्यकुसुमं परामर्शासहं बहु ॥ ५० ॥

पेलवमित्यादिविशेषणविशिष्टं दृश्यकुसुमं अनया जन्यत इति परेणान्वयः ।
सदसद्वपुरित्यस्य परामर्शासहमित्युपपत्तिः ॥ ५० ॥

अनयेह हि सर्वत्र च्छायाच्छमिव जयन्ते ।
मन्यते तन्यते वस्तु गीयते क्रियतेऽपि च ॥ ५१ ॥

छाया चन्द्रादिकान्तिरिवाच्छं स्फुटं दृश्यकुसुमम् । मन्यते

101661 अभिमानविषयीक्रियते। तन्यते विस्तार्यते॥ ५१॥
101662
101663 महाचितानया नित्यं भासन्ते भास्करादयः।
101664 देहाः स्वदन्ते च मिथस्तत्सच्चिज्जडविभ्रमैः॥ ५२॥
101665
101666 तस्याश्रितः सत् सत्यं चित् चेतनम्। जडं
101667 चेत्यविवेकप्रयुक्तैर्भोक्तृभोग्यताविभ्रमैर्दम्पत्योर्देहा वस्तुतोऽमङ्गलरूपा अपि
101668 मिथः स्वदन्ते प्रीतिविषया भवन्ति॥ ५२॥
101669
101670 चिता चावर्तवर्तिन्या सिद्धन्येव प्रनृत्यति।
101671 जगज्जालरजोलेखा तत्सत्ता दृश्यदेहिनी॥ ५३॥
101672
101673 आवर्तो वात्यावर्तस्तद्वर्तिन्या चितैव सिद्धा तत्सत्तयैव दृश्यदेहिनी
101674 दर्शनयोग्याकारवती जगज्जालरजोलेखा अन्या चिद्व्यतिरिक्तेव भूत्वा प्रनृत्यति॥ ५३॥
101675
101676 चित्सर्वं जगदारम्भमिमं प्रकटयत्यलम्।
101677 त्रैलोक्यदीक्पकशिखादीपो वर्णाश्रयं यथा॥ ५४॥
101678
101679 त्रैलोक्यप्रकाशनदीपकशिखाभूता चित्। दीपः प्रसिद्धो वर्णाश्रयं
101680 रूपवद्द्रव्यं यथा प्रकटयति तद्वत्॥ ५४॥
101681
101682 चिच्चन्द्रबिम्बे विमले शशवत्प्राप्य संगमम्।
101683 सर्वत्र लक्ष्यतामेति पदार्थश्रीर्जगद्गता॥ ५५॥
101684
101685 चिदधीनप्रकाशतामेव जगतः प्रपञ्चयति-चिच्चन्द्रबिम्बे इत्यादिना॥ ५५॥
101686
101687 चिद्रसायनसेकेन पदार्थपटलावली।
101688 रूपमेति फलं चैव प्रावृट्सिक्तेव सल्लता॥ ५६॥
101689
101690 चिच्छाययैव सर्वस्य जाड्यं सम्यगुदेति च।
101691 सर्वस्यास्य शरीरस्य गृहस्येव तमस्त्विह॥ ५७॥
101692
101693 ननु चिद्यदि रसायनमिव पदार्थपटलावलीं सर्वतो व्याप्य स्फुरति तर्हि तत्र जाड्यं
101694 न स्यात्। न हि सर्वतो रसार्द्रे शुष्कतायाः प्रसक्तिरस्तीति तत्राह-चिच्छाययैवेति।
101695 यथा पञ्चीकरणेन गृहस्यापि सर्वतस्तेजोव्याप्तिसत्त्वात्तदन्तस्तमःप्रसक्त्यभावेऽपि
101696 तैजसमास्वरताया भूतान्तरभागैरभिभवाद्बहिरभिव्यक्तसौरालोकव्याप्तौ
101697 तत्प्रयुक्तच्छायया अन्तस्तम उदेति तथा घटाद्यधिष्ठानचिद्भास्वरताया
101698 अप्यध्यस्तेनाभिभवाद्बहिश्चाक्षुषवृत्त्याद्यभिव्यक्तचिद्व्याप्त्या स्फुरणे
101699 तच्छायया अन्तर्जाड्यमुदेतीत्यर्थः॥ ५७॥
101700
101701 चिच्चमत्कृतयो देहे न भवेयुरिमा यदि।
101702 त्रैलोक्यदेहास्त्यक्त्वैते न स्पृशेयुः किलाकृतिम्॥ ५८॥
101703
101704 तथा च यथा सौराद्यालोकवशादेव गृहप्रासादाद्याकृतिवैचित्र्यसिद्धिस्तथा
101705 देहान्तरभिव्यक्तप्रमातृचिच्चमत्कृतिवशादेव
101706 गवाश्वपटपटाद्याकृतिवैचित्र्यसिद्धिर्नान्यथेत्याह-चिच्चमत्कृतय इति।
101707 त्रैलोक्यदेहास्त्रैलोक्यान्तर्गताः साकारपदार्थाः एते छायाजाड्ये त्यक्त्वा
101708 आकृतिमाकारमपि न स्पृशेयुः साधकान्तराभावादित्यर्थः॥ ५८॥
101709
101710 चिदाकाशप्रकाशेऽस्मिन्संकल्पशिशुधारिणि।
101711 क्रियाकुलवधूर्देहगृहे स्फुरति चञ्चला॥ ५९॥
101712

101713 क्रिया विहितानिषिद्धेषु प्रवृत्तिः सैव कुलवधूः ॥ ५९ ॥
101714
101715 चिदालोकं विना कस्य रसनाग्रे स्फुरन्नपि ।
101716 कथं कदा प्रकटतामेति दृष्टः क्व वा रसः ॥ ६० ॥
101717
101718 उक्तमर्थमनुभावयितुं व्यतिरेकमुखेनापि प्रसिद्धोदाहरणेषु समर्थयति##-
101719 किंवृत्तत्रयेण प्रकारकालदेशानां निरासः ॥ ६० ॥
101720
101721 शृण्वङ्ग स्वाङ्गशाखोऽपि कुन्तलालिलतोऽप्यलम् ।
101722 चिन्मज्जनं विना देहवृक्षः क इव राजते ॥ ६१ ॥
101723
101724 स्वाङ्गानि शाखाः यस्य । कुन्तलालिः केशसमूहो लता यस्मिन् । चिन्मज्जनं चिद्व्याप्तिं
101725 विना ॥ ६१ ॥
101726
101727 वर्धते विलुठत्यत्ति चिच्चराचरकारिणी ।
101728 चिदेवास्तीतरन्नास्ति चिन्मात्रमिदमुत्थितम् ॥ ६२ ॥
101729
101730 एवं च
101731 चिदधीनजन्मवृद्ध्यादिसर्वभावत्वाज्जगज्जलाधीनसर्वभावस्तरङ्गादिर्जलमिव
101732 चिदेव परमार्थत इति सिद्धमित्युपसंहरति-वर्धत इति ॥ ६२ ॥
101733
101734 श्रीवसिष्ठ उवाच ।
101735
101736 इत्युक्तवांस्तदा त्र्यक्षः सुधांशुस्वच्छया गिरा ।
101737 पुनः पृष्टो मया राम सुधांशुस्वच्छया गिरा ॥ ६३ ॥
101738
101739 यदि सर्वगता देव चिदस्त्येका तदात्मकः ।
101740 तदयं चावनिस्फारमयान्धेव न चेतति ॥ ६४ ॥
101741
101742 यद्येका चिदेवास्ति तर्त्तर्हि तदात्मकः अयं देहो निद्रामूर्च्छामरणेषु
101743 चकारादृदृश्यान्तरे च अवनिस्फारमयी मृत् प्रचुरभूतविकारभूता अन्धा
101744 नेत्रादिहीनाभित्तिरिव न चेतति तत्कथमित्यर्थः ॥ ६४ ॥
101745
101746 अयं चित्वान्पुरा भूत्वा चिद्धीनः संप्रति स्थितः ।
101747 इतीयं कल्पना लोके प्रत्यक्षानुभवा कथम् ॥ ६५ ॥
101748
101749 तदेव स्पष्टं पुनराह-अयमिति । अयं देहादिः पुरा कृश्यभावात्पूर्वं
101750 जीवनदशायां च चित्त्वान् चेतनावान् । तसौ मत्वर्थे इति भत्वाज्जश्त्वाभावः । भूत्वा
101751 संप्रति दृश्यमरणादिदशायां चिद्धीनः स्थित इतीयं कल्पना कथं
101752 चितोऽविनाशिस्वभावत्वादपरिणामित्वाच्च कथमपि जाड्यायोगादिति प्रश्नार्थः ॥ ६५ ॥
101753
101754 ईश्वर उवाच ।
101755
101756 शृण्वेतदखिलं ब्रह्मन्यदा पृष्टं वदामि ते ।
101757 महानयं त्वया प्रश्नः कृतो ब्रह्मविदां वर ॥ ६६ ॥
101758
101759 यथा तच्चेतनस्यैव जीवादित्वं तदुच्यतामिति प्राक्तनप्रश्नोत्तरमश्रुत्वैव
101760 प्रश्नान्तरे वसिष्ठेन कृते द्वयोरप्युत्तरं सहैव वक्तुकाम ईश्वर उवाच##-
101761
101762 चिदस्ति हि शरीरेह सर्वभूतमयात्मिका ।
101763 चलोन्मुखात्मिकैका तु निर्विकल्पा परा स्मृता ॥ ६७ ॥
101764

101765 वक्ष्यमाणोपोद्घातेन प्रथमं बिम्बप्रतिबिम्बचिद्द्वैविध्यं देहे दर्शयति##-
101766 विज्ञानमयशब्दवाच्यकर्तृभोक्तृस्वभावेत्यर्थः। परा कूटस्थचित्तु निर्विकल्पा
101767 ॥ ६७ ॥
101768
101769 संकल्पबुद्धा सैवान्तः स्वयमन्येव संस्थिता।
101770 संकल्पितेतरवरा दौःशील्यं स्त्री यथा गता ॥ ६८ ॥
101771
101772 तस्याश्चलस्वभावत्वमिव भेदोऽप्युपाधिकृत एवेत्याशयेनाह-संकल्पेति।
101773 हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि इति
101774 श्रुतिदर्शितसंकल्पेन स्वात्मानमेव जीवात्मा बुद्धा बुद्धवती। आदिकर्मणि क्तः
101775 कर्तरि च इति कर्तरि क्तः। यथा सुशीलैव स्त्री स्वप्ने संकल्पित तरो वर उपपतिर्यया
101776 तथाविधा सती दौःशील्यं गता सती द्वितीयेव संपन्ना तद्वत् ॥ ६८ ॥
101777
101778 स एव हि पुमान्कोपाद्यथेहान्य इव क्षणात्।
101779 भवत्येवं विकल्पाङ्का चित्स्वरूपान्यतां गता ॥ ६९ ॥
101780
101781 पुमान् मनुष्यः अन्यो राक्षस इव क्रूरो भवति तद्वत् ॥ ६९ ॥
101782
101783 विकल्पकल्पिता ब्रह्मंश्चित्स्वरूपपरिच्युता।
101784 जाड्यं क्रमाद्भावयन्ती प्रयाति कलनापदम् ॥ ७० ॥
101785
101786 एवंरीत्या स्वरूपात्परिच्युता चित् क्रमाज्जाढ्यं जडतादात्म्यं भावयन्ती सती
101787 कलनायाः सविकल्पबुद्धेः पदं विषयतां प्रयाति स्वकल्पनयैवेत्यर्थः ॥ ७० ॥
101788
101789 चित्स्वयं चेत्यतामेति साकाशपरमाणुताम्।
101790 शब्दबीजात्मिकां पश्चाद्वाततन्मात्रगामिनी ॥ ७१ ॥
101791
101792 आकाशसहितानि परमाणूनि सूक्ष्मभूतानि तद्भावरूपां
101793 शब्दस्पर्शरूपरसगन्धरूपभोग्यानां बीजात्मिकां चेत्यतां
101794 मायोपलक्षितचिद्विषयतां एति पश्चाद्वाततन्मात्रं समष्टिप्राणभावस्तद्गामिनी
101795 भवति ॥ ७१ ॥
101796
101797 देशकालविभागान्ता तन्मात्रवलिता क्रमात्।
101798 जीवो भूत्वा भवत्याशु बुद्धिः पश्चादहं मनः ॥ ७२ ॥
101799
101800 तथाभूतायास्तस्याः
101801 पञ्चीकरणप्रयुक्तस्थूलभूतात्मकसमष्टिव्यष्टिस्थूलदेहभावं
101802 तदन्तर्लिङ्गदेहे जीवभावं तत्र बुद्ध्यादिभावं च दर्शयति-देशेति।
101803 तन्मात्रैः सूक्ष्मभूतैः पञ्चीकरणेन वलिता संवलिता सती
101804 सप्तद्वीपचतुर्दशलोकात्मकदेशविभागान्ता
101805 निमेषादिद्विपरार्धावधिकालविभागान्ता च क्रमाद्भवति। ततस्तत्र
101806 प्राणधारणाज्जीवो भूत्वा बुद्धिरहंकारो मनः अर्थाच्चित्तं च भवतीत्यर्थः ॥ ७२ ॥
101807
101808 मनस्त्वं समुपायाता संसारमवलम्बते।
101809 चण्डालोऽस्मीति मननाच्चण्डालत्वमिव द्विजः ॥ ७३ ॥
101810
101811 संकल्पिताऽप्रबोधेन जाड्याऽविश्वप्रबोधिनी।
101812 शबलं रूपमासाद्य संकल्पाद्यात्यनारतम् ॥ ७४ ॥
101813
101814 ब्रह्मचिदेव अप्रबोधेनाज्ञानेन शबलं रूपमासाद्य देहजीवाकारेण संकल्पिता
101815 सती तत्प्रयुक्तजाड्येन अविश्वप्रबोधिनी असर्वज्ञा भूत्वा
101816 पुनःपुनर्भोगसंकल्पादनारतं याति संसरति ॥ ७४ ॥

अनन्तसंकल्पमयी जाड्यसंकल्पपीवरा ।
चिज्जाड्यान्मोदमायाति पयः पाषाणतामिव ॥ ७५ ॥

पयो जलं पाषाणतां करकात्वमिव मोहं जीवताभ्रममायाति ॥ ७५ ॥

ततश्चित्तं मनोमोहो मायेति विहिताभिधा ।
जाड्यं निपुणमाश्रित्य संसारे जायते मुने ॥ ७६ ॥

मोहमान्द्यमुपायाता तृष्णानिगडपीडिता ।
कामक्रोधभयोपेता भावाभावातिपातिनी ॥ ७७ ॥

भावो विभवः । अभावो दारिद्र्यं तदनुपातिनी ॥ ७७ ॥

त्यक्तानन्तनिजाभोगा व्यवच्छेदविकारिणी ।
दुःखदावानलातप्ता शोकाशिवकृशाशया ॥ ७८ ॥

व्यवच्छेदेषु भार्यापुत्रादिवियोगेषु शोकादिविकारिणी । शोकैरशिवैश्च कृशायशा
कृपणा ॥ ७८ ॥

इयमस्मीति भावेन शून्येन विकलीकृता ।
देहमात्रगृहीतास्था परं दैन्यमुपागता ॥ ७९ ॥

इयं प्रत्यक्षदुःखमोहादिस्वभावैवाहमस्मीति भावेन भ्रमेण ॥ ७९ ॥

मग्ना मोहमहापङ्के जीर्णेव वनदन्तिनी ।
भावाभावलतादोला परिलोलशरीरका ॥ ८० ॥

असारापारसंसारविकारव्यवहारिणी ।
तापोपतप्तहृदया रागतेजोनुरञ्जिता ॥ ८१ ॥

रागेण तेजसा क्रोधेन चानुरञ्जिता ॥ ८१ ॥

निजयूथपरिभ्रष्टा मृगीवावशतां गता ।
आविर्भावोदिताकारा तिरोभावेऽस्तमागता ॥ ८२ ॥

विभवानां भूतमात्राणां वा आविर्भावे उदिताकारा हृष्टा अभिव्यक्ता वा । अस्तं
दैन्यं तिरोभावं वा ॥ ८२ ॥

स्वसंकल्पोपयातासु भीता संभ्रमदृष्टिषु ।
पलायते वाप्यन्यासु वेतालेष्विव बालिका ॥ ८३ ॥

उष्ट्रीव मधुरं विन्दुं वाञ्छते भावितं सुखम् ।
अवान्तरपरिभ्रष्टा दोषाद्दोषं पतत्यधः ॥ ८४ ॥

यथा उष्ट्री कण्टकनिम्बपत्रादिषु चर्व्यमाणेषु स्ववासनाभावितं बिन्दुमल्पतरं
मधुरं रसं काङ्क्षते तद्वद्दुःखबहुलेषु विषयेषु सुखं काङ्क्षत इत्यर्थः ।
अथवा यथा उष्ट्री
विषमप्राण्शुवप्रप्ररूढवृक्षाग्रसंबद्धमधुपटलप्रसृतमधुबिन्दुलेहन्
अ-वाञ्छया वृक्षमारुरुक्षुर्युगपत्पुरः##-
तद्वत्पततीत्यर्थः ॥ ८४ ॥

101869 परं वैषम्यमायाति संकटात्संकतं गता ।
101870 दुःखाद्दुःखं निपतिता विपदो विपदि स्थिता ॥ ८५ ॥
101871
101872 नानानर्थगणोपेत्ता चेष्टापरवशाशया ।
101873 कष्टात्कष्टमनुप्राप्ता परितापानुतापिनी ॥ ८६ ॥
101874
101875 नरकादिभूमिषु कष्टात्कष्टमनुप्राप्ता ॥ ८६ ॥
101876
101877 क्रमादाबद्धवैदग्ध्याद्वैदग्ध्याङ्गमुपागता ।
101878 विचित्रबन्धनिर्माणपराक्रमपदं गता ॥ ८७ ॥
101879
101880 क्रमान्मानुष्यलाभेपि बाल्यात्प्रभृति
101881 व्यवहारकौशलाभ्यासाद्वैदग्ध्यात्कौशलाद्वैदग्ध्याङ्गं
101882 काव्यनाटकतर्काद्यभ्यासमुपागता सती विचित्रस्य खबन्धस्य
101883 धनगृहक्षेत्रपरिवारादेर्निर्माणे यः पराक्रमस्तत्पदमेव गता न
101884 मोक्षोपयोगिविवेकपदमित्यर्थः ॥ ८७ ॥
101885
101886 सर्वतः शङ्कते भीता प्राणात्ययमुपागता ।
101887 क्षीणतोयेव शफरी विवर्तनपरायणा ॥ ८८ ॥
101888
101889 एवं क्रमेण वयःपारं प्राप्य प्राणात्ययमुपागता सती सर्वतो भीता शङ्कते ।
101890 विवर्तनं भूमौ लुठनं तत्परायणा ॥ ८८ ॥
101891
101892 बाल्ये विवशसर्वार्था यौवने चिन्तयाऽऽवृता ।
101893 वार्धकेऽप्यतिदुःखार्ता मृता कर्मवशईकृता ॥ ८९ ॥
101894
101895 संक्षेपोक्तं प्रपञ्चयति-बाल्ये इति । विवशाः पराधीनाः सर्वे अर्था भोगा
101896 यस्याः । चिन्तया वित्तविषयादिचिन्तया । आवृता पिहितविवेका ॥ ८९ ॥
101897
101898 जायते स्वर्गनगरे नागी पातालकोटरे ।
101899 आसुरी दैत्यविवरे नरस्त्री वसुधातले ॥ ९० ॥
101900
101901 कर्मगतीरेव प्रपञ्चयति-जायत इत्यादिना ॥ ९० ॥
101902
101903 राक्षसी राक्षसाधारे वानरी वनकोटरे ।
101904 सिंही गिरीन्द्रशिखरे किन्नरी कुलपर्वते ॥ ९१ ॥
101905
101906 कुलपर्वते हिमवदादौ ॥ ९१ ॥
101907
101908 विद्याधरी देवगिरौ व्याली च वनगर्तके ।
101909 लता तरौ खगी नीडे वीरुत्सानौ वने मृगी ॥ ९२ ॥
101910
101911 देवगिरौ मेरौ । वीरुत् गुल्मिनी ॥ ९२ ॥
101912
101913 शेते नारायणोऽम्भोधौ ध्यानी ब्रह्मपुरेऽब्जजः ।
101914 कान्तागतो हरः शैले स्वर्गे सुरवरो हरिः ॥ ९३ ॥
101915
101916 नारायणादीनामपि जीवगतिषु प्रपञ्चनं पदमेव हि तन्नित्यमनित्यापदिनः
101917 स्मृताः इत्यादिशिवपुराणानुरोधात् । नारायणादिसाल्प्यमुक्तजीवविषये वा योज्यम् ।
101918 अथवा इत आरभ्य न जीवगतयः प्रपञ्चन्ते किंतु चितेः
101919 सर्वव्यापारकर्तृतैवेत्यदोषः । कान्तया गतः अर्धाङ्गसंगतः ॥ ९३ ॥
101920

101921 दिनं करोति तीक्ष्णांशुर्वर्षत्यम्बुधरो जलम् |
101922 करोति श्वसनं संवित्सपर्वतमहोदधिम् || ९४ ||
101923
101924 श्वसनादिपदैर्वाय्वादिव्यापारा लक्ष्यन्ते || ९४ ||
101925
101926 ऋतुचक्रं प्रवहति सहसा कालमण्डलम् |
101927 दिनरात्रितयोपैति तेजस्तिमिरतां क्रमात् || ९५ ||
101928
101929 ऋतुघटितं संवत्सरचक्रम् | कालमण्डलं युगमन्वन्तरादि || ९५ ||
101930
101931 क्वचिद्बीजरसोल्लासात्क्वचित्पाषाणमौनिनी |
101932 क्वचिन्नदी रसवती क्वचित्कुमुदविस्तृतिः || ९६ ||
101933
101934 क्वचिद्वृक्षादौ बीजात्मकस्तदङ्कुरताहेतू रसात्मकश्चोल्लासो यस्याः |
101935 पाषाणैर्मौनिनी निश्चला || ९६ ||
101936
101937 क्वचित्फलावलीपाकैः क्वचित्काष्ठानलादिभिः |
101938 क्वचिच्छैत्यहिमद्वारि क्वचित्खादि न किंचन || ९७ ||
101939
101940 तृतीयान्तपदद्वयानन्तरमुपलक्षितेत्यध्याहार्यम् | शैत्येन हिममिवाचरत् हिमत्
101941 वारि जलं यस्याः | खं आकाशं आदिपदाद्वायुश्च अन्यत्र किंचन || ९७ ||
101942
101943 क्वचिदुज्ज्वलिताकारा क्वचित्कष्टा शिला क्वचित् |
101944 क्वचिन्नीलाथ हरिता क्वचिदग्निः क्वचिन्मही || ९८ ||
101945
101946 कष्टा कुशकण्टकादिदुर्गमा || ९८ ||
101947
101948 सर्वात्मत्वात्सर्वगत्वात्सर्वशक्तित्वयोगतः |
101949 सर्वत्वादेवंरूपैव खादप्यच्छैव सा परा || ९९ ||
101950
101951 सर्वशक्तित्वं माया तद्योगतः | सर्वत्वादेवंरूपा जगद्रूपैव | सर्वनाम्नो
101952 वृत्तिमात्रे पुंवद्भावश्छान्दसत्वान्न कृतः | परमार्थतस्तु खादप्यच्छैव
101953 सा चिदित्यर्थः || ९९ ||
101954
101955 चिच्चिनोति यथात्मानं येन यत्र यदा यदा |
101956 तत्तथानुभवत्यम्बु स्पन्दाद्वीच्यादितां यथा || १०० ||
101957
101958 चित् आत्मानं स्वं येन भावेन यत्र यथा चिनोति विवर्तेनोपचयं नयति तथा तं
101959 भावमनुभवतीत्यर्थः || १०० ||
101960
101961 हंसी क्रौञ्ची बकी काकी सारसी तुरगी वृकी |
101962 बकी बलाका हरिणी वानरी किन्नरी शुनी || १०१ ||
101963
101964 तान्भावान्पुनः प्रपञ्चयति-हंसीत्यादिना |
101965 पुनर्बकीग्रहणमतिदीर्घपादचञ्चुजात्यन्तरसंग्रहार्थम् | एवं
101966 बलाकाग्रहणमप्यतिधवलतूलकण्ठजातिग्रहणाय || १०१ ||
101967
101968 वटीका पिङ्गली शाली मक्षिका भ्रमरी शुकी |
101969 धीः श्रीर्ह्रीः प्रीती रतिश्च शंबरी शर्वरी शशी || १०२ ||
101970
101971 वटीकादयः पक्षिजातिभेदाः | शाली शारिका | प्रीती रतिरिति ढ्रलोपे इति दीर्घः | शम्बरी
101972 माया || १०२ ||

101973
101974 एतास्वन्यासु चान्यासु परिभ्रमति योनिषु।
101975 विवर्तमानसंसारे जलावर्ते तृणं यथा॥ १०३॥
101976
101977 योनिषु देहभेदेषु॥ १०३॥
101978
101979 बिभेत्यथ स्वसंकल्पात्स्वशब्दादिव गर्दभी।
101980 नानया सदृगन्यास्ति मुग्धा बाला चलाऽबला॥ १०४॥
101981
101982 अबला दुर्बला॥ १०४॥
101983
101984 एषा सा कथिता तुभ्यं जीवशक्तिर्महामुने।
101985 प्राकृताचारविवशा वराकी पशुधर्मिणी॥ १०५॥
101986
101987 कर्मात्मेत्यभिधां प्राप्ता शोच्याख्य परमात्मनः।
101988 अनन्तं दुःखबहुलं स्वयं विभ्रममाश्रिता॥ १०६॥
101989
101990 कर्मात्मा कर्मानुसारस्वभावा। तथा च श्रुतिः यथाकारी यथाचारी तथा भवति
101991 साधुकारी साधुर्भवति पापकारी पापो भवति पुण्यो वै पुण्येन कर्मणा भवति
101992 पापः पापेन इति॥ १०६॥
101993
101994 असदेवानयाक्रान्तं विनाशि सहजं मलम्।
101995 तण्डुलेनेव कञ्चूकमनन्ययाऽव्यवस्थितम् [कञ्चूकमित्यत्रार्षो
101996 दीर्घश्छन्दोनुरोधात्।]॥ १०७॥
101997
101998 अनन्यया स्वातिरिक्तसत्तास्फूर्तिशून्यया अविद्यया अव्यवस्थितमनियतम्॥ १०७॥
101999
102000 अनन्तविभवभ्रष्टा दौर्भाग्यपरितापिनी।
102001 शोचन्ती प्राप्य जीवत्वं भर्तृहीनेव नायिका॥ १०८॥
102002
102003 भर्तृहीना नायिकेवानाथा स्थितेति शेषः॥ १०८॥
102004
102005 जडगतेरवलोकय शक्ततां निजपदस्मरणेन विनेह चित्।
102006 व्रजति कष्टमधः पतनाय या यदरघट्टघटीघनपीठवत्॥ १०९॥
102007
102008 हे राम त्वं जडगतेरविद्यायाः शक्ततां सामर्थ्यमवलोकय। यद्यस्माद्धेतोर्या
102009 पूर्णब्रह्मस्वभावापि चित् अरघट्टस्य घटीयन्त्रस्य घटीषु प्रविष्टं
102010 घनपीठमाकाशस्तेन तुल्यं तद्वत् निजस्य निरतिशयानन्दपूर्णभावस्य
102011 घनसमुद्रादिसकलजलोपलक्षितसर्वजगदन्तर्भावनसामर्थ्यस्य च स्मरेण विना
102012 देहमात्रपरिच्छिन्नाहं घटीमात्रपरिच्छिन्नमहं भोगनिमित्तपुण्यव्यये
102013 अल्पजलक्षरणे च मम रिक्ततैव संपन्नेति मन्यमाना पुनः पुनः स्वपतनाय
102014 अधोधोव्रजति तत्कष्टमित्यर्थः॥ १०९॥
102015
102016 इत्यार्षे श्रीवा०रामायणे वाल्मीकीये दे० मो० निर्वाणप्रकरणे पू० शिवपूजोपाख्याने
102017 चेत्योन्मुखचिद्विचारो नाम त्रिंशः सर्गः॥ ३०॥
102018
102019 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
102020 चेत्योन्मुखचिद्विचारो नाम त्रिंशः सर्गः॥ ३०॥
102021
102022 एकत्रिंशः सर्गः ३१
102023
102024 ईश्वर उवाच।

102025
102026 चिनोत्यलीकमेवैवं सदुःखास्मीति भावनात् |
102027 चित्स्वप्रक्षीवतामोहपतिता संभ्रमे यथा || १ ||
102028
102029 जीवतादिनिषेधेन सा शुद्धा चित्प्रदर्श्यते |
102030 मनःप्राणेन्द्रियद्वारा बहिरन्तःप्रथा यया ||
102031
102032 एवं वर्णितप्रकारं जीवजगद्भावमलीकमसदेवाज्ञानाच्चिनोति आरोपेण संचिनोति |
102033 स्वप्ने क्षीबता मदिरामदस्तत्कृते संमोहे पतिता || १ ||
102034
102035 अमृतापि मृतास्मीति विपर्यस्तमतिर्वधूः |
102036 यथा रोदित्यनष्टैव नष्टास्मीति तथैव चित् || २ ||
102037
102038 वधूर्मुग्धा || २ ||
102039
102040 अकारणं विपर्यस्ता मतिर्भ्रान्तमपि स्थिरम् |
102041 यथा जगत्पश्यतीदं तथाहंताभ्रमाच्चितिः || ३ ||
102042
102043 भ्रान्तं कुलालचक्रादि यथा स्थिरं निश्चलं पश्यति तथा जगदपि स्थिरं पश्यति || ३
102044 | |
102045
102046 चित्तं हि कारणं त्वस्याः संसारानुभवे चितेः |
102047 न च तत्कारणं किंचिच्चित्त्वान्यत्वात्यसंभवात् || ४ ||
102048
102049 तच्चित्तं किंचिद्वस्तु न | कुतः | चित्त्वस्य तदन्यत्वस्य च अत्यन्तमसंभवात् | अचित्त्वे
102050 जगदन्तःपातेन तत्कल्पनाहेतुत्वायोगादित्यर्थः || ४ ||
102051
102052 एवं हि कारणाभावाच्चेत्यस्यासंभवादिति |
102053 नासौ चित्तं ततश्चेत्यं यन्नतश्चेत्यते यया || ५ ||
102054
102055 चित्तासत्त्वादेव तच्चेत्यजगतोऽप्यसत्त्वं सिद्धमित्याह-एवमिति | यया चिता चित्तं
102056 यन्नतश्चेत्यते असौ चित् चित्तं तदधीनं चेत्यं च न किंतु शुद्धैवेत्यर्थः || ५ ||
102057
102058 न दृश्यदर्शनद्रष्टृरूपं तैलमिवोपले |
102059 न कर्तृकर्मकरणं दृशीन्दाविव कृष्णता || ६ ||
102060
102061 चित्तनेषेधादेव चिति चक्षुरादिप्रयुक्तदृश्यदर्शनद्रष्टृरूपत्रिपुटीनिषेधोऽपि
102062 सिद्ध इत्याह-नेत्यादिना | दृशि चिति || ६ ||
102063
102064 न मातृमेयमानानि नभसीव नवाङ्कुरः |
102065 न चिच्चेतनचेत्यादि नन्दने खदिरो यथा || ७ ||
102066
102067 चिच्चित्तवृत्तिश्चेतनस्तदाश्रयश्चेत्यानि तद्विषयाः |
102068 आदिपदान्मन्तृमतिमन्तव्यबुद्धिबोधबोद्धव्या अहंकर्त्रहंकाराहंकार्याणि
102069 गृह्यन्ते || ७ ||
102070
102071 नाहंत्वत्वंवतत्त्वादि पर्वतत्वमिवाम्बरे |
102072 सदेहत्वान्यदेहत्वे शङ्खत्वमिव कज्जले || ८ ||
102073
102074 तत्त्वं परोक्षवस्त्वन्तरत्वम् | आदिपदात्तदाश्रयतद्व्याप्यतत्संबन्धा गृह्यन्ते || ८
102075 | |
102076

102077 नानाऽनाना न चाप्यन्तरणाविव सुमेरवः ।
102078 न च शब्दार्थशब्दश्रीर्महोषरलता यथा ॥ ९ ॥
102079
102080 नाना जीवभेदा अनाना प्रतिदेहमात्माभेदाध्यासाश्चापि न । अणौ अन्तः सुमेरव इव ।
102081 शब्दा नामानि अर्थारूपाणि तेषां शब्दश्रीः कथापि नास्ति ॥ ९ ॥
102082
102083 नेति नेति न चैवार्कमण्डले रजनी यथा ।
102084 न वस्तुतावस्तुते च तुषारे तु यथोष्णता ॥ १० ॥
102085
102086 अथात आदेशो नेति नेति इत्यादयः शास्त्रीयसर्वदृश्यनिषेधा अपि
102087 तत्त्वप्रदर्शनपर्यन्तमेव । दृष्टे तु चित्तत्त्वे प्रतियोग्यप्रसिद्धेस्तेऽपि न
102088 संभवन्तीत्याह-नेतीति । वस्त्वतिरिक्तौ वस्तुताऽवस्तुताख्यधर्मावपि न स्तः ॥ १० ॥
102089
102090 न शून्यताशून्यते वा शिलाकोश इव द्रुमः ।
102091 शून्यताशून्यता नाम महती ख इवाखता ॥ ११ ॥
102092
102093 शिलायाः कोशे गर्भे । खे यथा प्रसिद्धा महती शून्यता अशून्यता च केवलं
102094 केवलीभावलक्षणा स्वरूपस्वच्छतैव विमर्शे अवशिष्यते नाणुमात्रमपि भिन्ना
102095 तथा चित्यपीति परेणान्वयः ॥ ११ ॥
102096
102097 केवलं केवलीभावस्वच्छतैवावशिष्यते ।
102098 न चित्तात्कस्यचिद्दोषाज्जातयैतदवाप्यते ॥ १२ ॥
102099
102100 ननु तर्हि हिरण्यगर्भात्मकं समष्टिचित्तमेवास्याश्रितः सर्वानर्थहेतुर्दोषः ।
102101 यस्मात्तत एव निमित्ताच्चतुर्विधशरीरेषु जातया अनया एतत्संसारदुःखमवाप्यते । न
102102 च तदस्माभिरुच्छेत्तुं शक्यमित्याशङ्क्याह-न चित्तादिति । चिद्दोषाच्चितो
102103 दोषभूतात् कस्य हिरण्यगर्भस्य चित्तान्निमित्ताज्जातया एतद्दुःखमवाप्यत इति न किंतु
102104 तेन सृष्टा ये देहेन्द्रियविषयास्तेषु सर्वेष्वहंममेति सत्या इति च
102105 भावनामात्रेणायं प्रकृतः संसारलक्षणोऽनर्थः स्थित इत्यर्थः ॥ १२ ॥
102106
102107 तत्सर्वभावनामात्रेणानर्थः प्रकृतः स्थितः ।
102108 तज्ज्ञेऽप्यभावनामात्रेणानर्थ उपशाम्यति ॥ १३ ॥
102109
102110 अत एव तत्त्वज्ञे अभावनामात्रादुपशाम्यतीत्याह-तज्ज्ञेऽपीति ॥ १३ ॥
102111
102112 तज्ज्ञेऽप्यभावनामात्राद्दतेऽन्यत्रोपयुज्यते ।
102113 न तृणं न च त्रैलोक्यमिति स्वायत्तताऽत्र या ॥ १४ ॥
102114
102115 अत एव तृणमिवापवदितुं शक्योऽपि त्रैलोक्यपदार्थो भावनाबलादेवातत्त्वविदां
102116 दुःसाध्यः स्थित इत्याह-न तृणमिति ॥ १४ ॥
102117
102118 स्वायत्त एव चैषोऽर्थो दुःसाध्यो भावनास्थितः ।
102119 यद्यन्न साध्यते पुंसा तत्कथं क्वेव लभ्यते ॥ १५ ॥
102120
102121 नन्वतिसुलभो भावनात्यागः स्वत एव कुतो न सिद्ध्यति तत्राह-यद्यदिति ।
102122 तृणमात्रस्यापि करप्रसारणयत्नं विना लाभादर्शनादिति भावः ॥ १५ ॥
102123
102124 निर्विकल्पाद्वितीया चिद्यासौ सकलगा सती ।
102125 परमैका परा साच्छा दीपिका तेजसामपि ॥ १६ ॥
102126
102127 भावनामात्रत्यागे परमपुरुषार्थरूपा परमार्थचित्सर्वत्र सुलभेत्याशयेन तां
102128 वर्णयति-निर्विकल्पेत्यादिना ॥ १६ ॥

सैषावभासनकरी सर्वगा नित्यनिर्मला |
नित्योदिता निर्मनस्का निर्विकारा निरञ्जना || १७ ||

घटे पटे वटे कुड्ये शकटे वानरे खरे |
असुरे सागरे भूते नरे नागे च संस्थिता || १८ ||

साक्षिवत्तिष्ठति सती स्पन्दते न च कुत्रचित् |
दीपः प्रकाशनायेव करोति न पुनः क्रियाम् || १९ ||

यथा दीपः पदार्थप्रकाशनाय स्वरूपस्थित्यैव प्रभवति न तु कांचन क्रियां
करोति तद्वच्चिदपीत्यर्थः || १९ ||

मलिनाप्यमुनैषा साऽविकल्पाढ्या विकल्पिनी |
जडेवाप्यजडाभासा न सर्वा सर्वगैव च || २० ||

एषा एवंप्रभावापि सा चित् अमुना देहादिभावनेनैव अमलिनापि मलिना संपन्ना |
एवमविकल्पाढ्यापि विकल्पिनीति सर्वत्र योज्यम् || २० ||

निर्विकल्पा परा सूक्ष्मा चिच्चिनोति स्वसंविदम् |
वातावाताङ्गमर्मादि यथा यन्त्रादिवेष्टने || २१ ||

इदानीं सर्वगतायाः सूक्ष्मतमायाश्चित एकैकस्मिन्देह एव आनखाग्रं
विशेषव्याप्तिलक्षणे उपचये युक्तिमाह-निर्विकल्पेति | निर्विकल्पा
विशेषाभिमानादिविकल्पास्पर्शिनी परा सर्वगता सूक्ष्माचित् वाते प्राणप्रधाने
लिङ्गदेहे आवाता प्रतिबिम्बभावेनानुगता सती अङ्गानि हस्तपादादीनि मर्माणि
हृदयादिस्थानानि आदिपदाद्द्विसप्ततिसहस्रनाडीभेदं च व्याप्य सर्वगतां
स्वसंविदं तावन्मात्रे आकृष्येव चिनोति उपचयं नयति | यथा
दीर्घसूक्ष्मकौशेयादितन्तुस्तर्कुयन्त्रादिसूचीवेष्टने अतिदीर्घमपि स्वं तावन्मात्रे
उपसंहृत्य बदराद्याकारमुपचयं नयति तद्वदित्यर्थः || २१ ||

रूपालोकमनस्कारवलिता चिदबोधतः |
बोधतश्चैव भवति निद्रां सदसती यतः || २२ ||

अत एव जाग्रतः पुरुषस्य चिद्बही रूपाद्यालोकनैरन्तर्मनस्कारैश्च वलिता सती बोधतो
बोधपक्षे भवति | निद्रां यतो गच्छतस्तु स्वप्ने वासनामयरूपालोकमनस्कारवलिता
सती अन्तर्बोधतो बहिस्त्वबोधत इति पक्षद्वयेऽपि भवति | सुषुप्तौ
त्वज्ञानमात्रसाक्षित्वान्न किंचिदवेदिषमित्युत्थितस्य परामर्शाच्च सदसती
सत्यप्यसत्प्राया अबोधपक्ष एव भवतीत्यर्थः || २२ ||

सा परैव चिदत्यच्छा चिन्तामायाति चेतनात् |
साधुरेव यथाऽसाधुर्भाविते दुर्जनैषणाः || २३ ||

सा अत्यच्छा ब्रह्मचिदेव देहाद्यात्मता चेतना
तदनुकूलप्रतिकूलप्राप्तिपरिहारचिन्तामायाति | यथा साधुरेव दुर्जनसंगत्या चिरं
चित्ते भाविते संस्कृते सति दुर्जनैषणाह् प्राप्य असाधुर्भवति तद्वदित्यर्थः || २३ ||

मलेन स्वर्णमायाति ताम्रतां मलमार्जनात् |
पुनः कनकतामेति यथा चित्परमा तथा || २४ ||

अत एव पुनर्ब्रह्मात्मताभाविते चित्ते स ब्रह्मैव भवतीत्याशयेन दृष्टान्तमाह##-

102181 स्वारोपशान्त्या स्वादर्शो यथैति प्रतिमास्थितिम् ।
102182 तथा सर्गमिवागम्य बोधात्स्वं याति तत्पदम् [चित्पदं इति पाठः ।] ॥
102183 २५ ॥
102184
102185 यथा शोभन आदर्शो दर्पणः स्वारोपितमलस्य मार्जनेन शान्त्या प्रतिमास्थितिं
102186 पुनः पुनः प्रतिबिम्बाभिव्यक्तियोग्यां स्थितिं स्वच्छतामेति
102187 तद्वच्चिदप्यज्ञानाज्जडजीवभावादिसर्गमिवागम्य । वा ल्यपि इत्यनुनासिकलोपविकल्पः
102188 । आगत्य स्थिता तत्त्वबोधात्तत्कैवल्यपदं यातीत्यर्थः ॥ २५ ॥
102189
102190 अभाववेदनादस्याः संसारः संप्रवर्तते ।
102191 स्वभाववेदनादेष त्वसदेवोपशाम्यति ॥ २६ ॥
102192
102193 अभावः असदज्ञानं तद्वेदनात् ॥ २६ ॥
102194
102195 यदा चित्त्वाच्चिनोत्यन्तरन्यतामसतीं तदा ।
102196 अहंतामिव संप्राप्य नश्यतीवाप्यनाशिनी ॥ २७ ॥
102197
102198 अन्यतां भेदम् । उदरमन्तरं कुरुते अथ तस्य भयं भवति इति श्रुतेरिति भावः ॥ २७
102199 ॥
102200
102201 ईषत्स्पन्दादधो याति भृगुप्रान्तात्तरोः फलम् ।
102202 यथा तथैष संवित्तेरधःपातो महानिव ॥ २८ ॥
102203
102204 ईषत्स्पन्दाद्वृन्तवियोजकप्रच्युतिमात्रात् । भृगुर्गिरितटं तत्प्रान्तात् । एष जीवभावः
102205 ॥ २८ ॥
102206
102207 रूपादीनां तु सत्तैषा चित एवामलैव चित् ।
102208 द्वित्वैकत्वे त्वबोधोत्थे बोधेन विलयं गते ॥ २९ ॥
102209
102210 चित एवेति । अध्यस्तस्याधिष्ठानव्यतिरिक्तसत्त्वाभावादिति भावः । द्वित्वैकत्वे
102211 भेदाभेदाध्यासौ ॥ २९ ॥
102212
102213 सत्तामात्रेण चित्तस्य बोधश्चित्तेन्द्रियादिषु ।
102214 आलोकसत्तामात्रेण व्यवहारः क्रियास्विव ॥ ३० ॥
102215
102216 चित्तस्य चित्तसाक्षिणः ॥ ३० ॥
102217
102218 वातात्कनीनिकास्पन्दस्तद्दीप्तिर्दृष्टिरुच्यते ।
102219 तद्बाह्यवति तद्रूपपरूपबोधस्तु चित्परा ॥ ३१ ॥
102220
102221 सामान्येनोक्तं विशिष्य चक्षुरादिषु विभज्योपपादयंश्चित एव सर्वत्र फलीभावं
102222 दर्शयति-वातादित्यादिना । चित्संनिधिप्रेरिताद्वातात्
102223 व्यानवायोर्निमित्ताच्चक्षुःकनीनिकयोः स्पन्दो भवति । तस्यां स्थिता
102224 दीप्तिस्तैजसमिन्द्रियं दृष्टिश्चक्षुरित्युच्यते । तया कुल्याद्वारा जलमिव बाह्यं
102225 बहिःप्रापणीयं यदन्तःकरणं तद्वति तद्व्याप्ते घटादौ तद्रूपस्य
102226 तत्समानाकारस्य रूपस्य नीलपीतादेर्घटाद्याकारस्य च यो बोधः सत्ताप्रथा सा परा
102227 चिदेवेत्यर्थः ॥ ३१ ॥
102228
102229 त्वङ्मारुतौ जडौ तुच्छौ तत्सङ्गः स्पर्श उच्यते ।
102230 मननं स्पर्शसंवित्तिस्तत्संवित्तिस्तु चित्परा ॥ ३२ ॥
102231
102232 एवं स्पार्शनत्रिपुटीस्थलेऽपि त्वङ्मारुतौ जडौ तुच्छौ स्वतः सत्तास्फूर्तिशून्यौ ।

102233 अतश्चिदधीनसत्तास्फूर्तिबलादेव तयोः सङ्गः स्पर्शेन्द्रियकल्पनानिमित्तत्वात्स्पर्श
102234 उच्यते। तद्द्वारा तत्संयुक्तशीतोष्णादिद्रव्येषु मननं तदाकारा मनोवृत्तिः
102235 स्पर्शसंवित्तिरित्युच्यते। तत्संवित्तिस्तदवच्छिन्ना विषयान्तत्रिपुटीप्रथा तु परा
102236 साक्षिचिदेवेत्यर्थः॥ ३२॥
102237
102238 गन्धतन्मात्रपवनसंबन्धो गन्धसंविदः।
102239 आसां तु मनसा हीनं वेदनं परमैव चित्॥ ३३॥
102240
102241 एवं घ्राणेन्द्रियात्मना गन्धात्मना च विभक्तस्य गन्धतन्मात्रस्य
102242 नासाप्रवेशिपवनेन कृतः संबन्धो गन्धसंविदां
102243 गन्धाकारान्तःकारणवृत्तीनां निमित्तत्वाद्गन्धसंविदः। आसां त्रिपुटीनां
102244 मनसा हीनं विविक्तं यत्प्रथालक्षणं वेदनं सा परमा साक्षिचिदेवेत्यर्थः॥ ३३॥
102245
102246 शब्दतन्मात्रश्रवणवातसङ्गान्मनो विना।
102247 सुषुप्तसदृशी संवित्परमा चिदुदाहृता॥ ३४॥
102248
102249 एवं शब्दतन्मात्रस्य श्रवणेन्द्रियस्य व्यानवातस्य च सङ्गादुत्पन्ना
102250 मनोवृत्तयः शब्दसंवित्तयस्तासु मनोशं विना विहाय सुषुप्तसदृशी निर्विकारा
102251 या साक्षिसंवित्सा परमा चित्। एवं रासनत्रिपुटीसक्षिचिदपि विविच्य द्रष्टव्येति भावः॥
102252 ३४॥
102253
102254 क्रियोन्मुखत्वं संकल्पात्संकल्पो मननक्रमः।
102255 मननं चित्तकालुष्यमात्मा चिन्निर्मला भवेत्॥ ३५॥
102256
102257 एवं
102258 कर्मेन्द्रियप्रवृत्तिनिमित्तसंकल्पात्मकमनोवृत्तितन्मालिन्यसाक्षितयाप्यात्मचिद्विवे
102259 चनीयेत्याह-क्रियोन्मुखत्वमिति॥ ३५॥
102260
102261 चित्प्रकाशात्मिका नित्या स्वात्मन्येवावसंस्थिता।
102262 इदमन्तर्जगद्धत्ते सन्निवेशं यथा शिला॥ ३६॥
102263
102264 एवं चान्तर्बहिश्च सर्वद्वैतस्फूर्तेः साक्षिचिन्मात्रात्मकत्वे सर्वं द्वैतं
102265 तस्यामेवाध्यस्तमिति फलितमित्याह-चिदिति। यथा स्फटिकशिला स्वान्तर्गतं
102266 वनगिरिनद्यादि प्रतिबिम्बसंनिवेशं धत्ते तद्वत्॥ ३६॥
102267
102268 अद्वितीया दधानेदं विकारादिविवर्जितम्।
102269 नास्तमेति न चोदेति स्पन्दते नो न वर्धते॥ ३७॥
102270
102271 विकारादिविवर्जितमिति क्रियाविशेषणम्। अधिष्ठानतत्त्वात्मना विकारादिविवर्जितमिति वा॥
102272 ३७॥
102273
102274 संकल्पाज्जीवतामेत्य निःसंकल्पात्मनात्मना।
102275 चिज्जडं नो जडं भावं भावयन्ती स्वसंस्थिता॥ ३८॥
102276
102277 चित् जडं जगत् नो जडमजडं वास्तवभावं भावयन्ती सती स्वयं स्वरूपे स्थिता
102278 भवतीत्यर्थः॥ ३८॥
102279
102280 रथस्त्वस्याश्चितेर्जीवो जीवस्याहंकृती रथः।
102281 अहंकृते रथो बुद्धिस्ततो बुद्धेर्मनो रथः॥ ३९॥
102282
102283 इदानीं चितो बहिःसंसरणे रथपरम्परां कल्पयन्नाह-रथ इति द्वाभ्याम्॥ ३९॥
102284

102285 मनसस्तु रथः प्राणः प्राणस्याक्षगणो रथः।
102286 अक्षौघस्य रथो देहो देहस्य स्पन्दनो रथः॥ ४०॥
102287
102288 स्पन्दनः कर्मेन्द्रियगणः॥ ४०॥
102289
102290 स्पन्दनं कर्म संसारे जरामरणपञ्जरम्।
102291 एवं प्रवर्तितं चक्रमिदमादिविभूतिजम्॥ ४१॥
102292
102293 सर्वेषामपि रथानां संसारे स्पन्दनं भ्रमणमेव कर्म। साध्यमित्यर्थः।
102294 जरामरणोपलक्षिता देहा एव पञ्जराणि यत्र तथाविधं जीवखगदोलाचक्रं
102295 आदेर्मूलकारणस्येश्वरस्य विभूत्या मायैश्वर्येण जातम्॥ ४१॥
102296
102297 प्रतिभासत एवात्मन्यसत्स्वप्न इवाततः।
102298 मनागपि न सत्यात्म मृगतृष्णाम्बुवत्स्थितम्॥ ४२॥
102299
102300 मायिकत्वमेवोपपादयति-प्रतिभासत इति॥ ४२॥
102301
102302 रथस्त्वत्र स्मृतः प्राणः कल्पनाया मुनीश्वर।
102303 यत्र प्राणमरुत्तत्र मननं परितिष्ठति॥ ४३॥
102304
102305 मनसस्तु रथः प्राण इति यदुक्तं तत्र वक्ष्यमाणार्थोपयुक्तं विशेषं
102306 वक्तुमुपपत्तिमाह-रथ इति। कल्पनाया मानसकल्पनाया निमित्तत्वादिति शेषः।
102307 तदेव दर्शयति-यत्रेत्यादिना॥ ४३॥
102308
102309 आलोकश्रीः स्थिता यत्र रूपं तत्रैव राजते।
102310 प्राणो बली स्थितो यत्र तदेव परिवेपति॥ ४४॥
102311
102312 बली सूत्ररूपत्वात्सर्वधारणचालनसमर्थः॥ ४४॥
102313
102314 यत्प्रयाति वनं वात्या तदेव परिघूर्णते।
102315 मनस्याकाशसंलीने न प्राणः परिवेपति॥ ४५॥
102316
102317 एवं मनसोऽपि प्राणक्रियानिमित्तत्वमस्तीति व्यतिरेकमुखेनाह-मनसीति। आकाशे
102318 हार्दाकाशे संलीने सति॥ ४५॥
102319
102320 तेजस्यसत्तामायाते न रूपमिव राजते।
102321 प्राणे प्रशान्ते मरुति मनोन्तर्न मनागपि॥ ४६॥
102322
102323 रूपं यथा न राजते तद्वदित्यर्थः। एवं प्राणनिरोधादपि मनो निरुध्यत इत्याह##-
102324
102325 वात्यायामुपशान्तायां रजो न परिकम्पते।
102326 यत्र प्राणो मरुद्याति मनस्तत्रैव तिष्ठति॥ ४७॥
102327
102328 अत एव तस्य तद्रथत्वमुक्तमित्याह-यत्रेति॥ ४७॥
102329
102330 यत्र यत्रानुसरति रथस्तत्रैव सारथिः।
102331 प्राणसंप्रेरितं चित्तं याति देशान्तरे क्षणात्॥ ४८॥
102332
102333 क्षेपणोन्मुक्तपाषाण इव तत्रान्यथा क्षयि।
102334 यत्र पुष्पं तत्र गन्धो यत्राग्निस्तत्र सोष्णता॥ ४९॥
102335
102336 क्षेपणं यन्त्रविशेषः। अन्यथा प्राणनिरोधे मनः क्षयि। क्षीयत इत्यर्थः॥ ४९॥

यत्र प्राणो मरुद्याति यत्रेन्दुस्तत्र तच्छविः ।
संवित्तिः पवनस्पन्दान्नाडीसंस्पर्शनश्च सः ॥ ५० ॥

प्राणः समष्टिव्यष्टिरूपः । इन्दुश्चन्द्रस्तदंशभूतं मनश्च । छविश्चन्द्रिका
मनोवृत्तयश्च । अत एव चाक्षुषादिसंवित्तिषु प्रत्येकं वायोरपि निमित्तता
प्राङ्न्योपदर्शितेत्याशयेनाह-संवित्तिरिति । सर्वाङ्गेष्वन्नरसप्रवेशार्थं
सर्वनाडीसंस्पर्शनश्च स पवनः ॥ ५० ॥

संवित्तिस्फारता चित्तं मनस्तत्प्राणकोटरे ।
सर्वत्र विद्यते संविद्योमस्वच्छा जडाजडे ॥ ५१ ॥

चित्तमनोघटितलिङ्गशरीरात्मके तस्मिन् प्राणकोटरे चितो बिम्बप्रतिबिम्बभावेन
द्विगुणीकरणेन स्फारतापि तत्तस्मादेवोपपन्नेत्याह-संवित्तीति ॥ ५१ ॥

क्षुभ्यन्तीव तु सा प्राणस्पन्दादित्यनुभूयते ।
सत्तामात्रस्वरूपेण जडेषु समवस्थिता ॥ ५२ ॥

तत्रोपपत्तिमाह-क्षुभ्यन्तीवेति । स्फुटाभिव्यक्त्या संचलन्तीव यतो लिङ्गे
चिदनुभूयते इत्यर्थः ॥ ५२ ॥

प्राणसंबोधिता [प्राणसंबोधितो वेत्ति वेदनात्मतया जडः इति मूले
पाठः जडोऽपि देहः प्राणसंबोधितः सन्नित्यादिर्व्याख्यापाठश्चान्यत्र ।
] वेत्ति वेदनात्मतया जडे ।
नानास्फारसमुल्लासैर्यः पूर्वं परिवल्गति ।
प्राणेऽतीते त्वमननः स एवाशु न वेपति ॥ ५३ ॥

जडेऽपि देहे प्राणसंबोधिता सती सर्गादिवेदनात्मतया आध्यासिकचित्तादात्म्यबलेन
वेत्ति । यो देहः पूर्वं जीवनदशायां परिवल्गति व्यवहरति स एव न वेपति न कम्पते ॥
५३ ॥

पुर्यष्टके चित्परमा स्वे मुने प्रतिबिम्बति ।
आदर्श एव प्रतिमा दृश्यते नोपलादिषु ॥ ५४ ॥

भूतान्तःकरणप्राणज्ञानकर्मेन्द्रियैर्युतम् । अविद्याकामकर्माढ्यं लिङ्गं
पुर्यष्टकं विदुः । तस्मिन्पुर्यष्टके ॥ ५४ ॥

मनः पुर्यष्टकं विद्धि सर्वकार्यैककारणम् ।
तदेव भेदैः कथितमन्यैः स्वाशयकल्पितैः ॥ ५५ ॥

ननु प्राणनिमित्तो मनसि चित्प्रतिबिम्ब उक्त इदानीं तु पुअर्यष्टके स उच्यते तत्कथं न
विरोधस्तत्राह-मन इति । अन्यैराचार्यैः स्वाशयकल्पितैः शिष्यबोधनोपायैः ॥ ५५
। ।

यस्मादुदेति कलनाकुलदृश्यजालं यत्तत्र च स्थितवदित्यनुभूतमुच्चैः ।
यस्मान्मनो विपरिवर्तति देहदृष्ट्या सर्वं तु तत्परमवस्त्विति विद्धि विश्वरम्
॥ ५६ ॥

इदानीं जीवतदुपाधितद्भोग्यलक्षणस्य विश्वस्योत्पत्तिस्थितिलयेषु
चिदेकरससन्मात्रब्रह्माधीनत्वात्परमार्थतो ब्रह्मैव
तदित्यनुभावयन्नुपसंहरति-यस्मादिति । यस्माद्धेतोस्तत्र चित्येवोदेति ।
यद्यस्मात्तत्रैव स्थितवत् । चकारात्तत्रैव लीयते । यस्माद्धेतोर्मन एव देहदृष्ट्या

विपरिवर्तति भ्रमति। छान्दसं परस्मैपदम्। तत्तस्माद्विश्वं परमवस्तु
ब्रह्मैव नान्यदिति विद्धीत्यर्थः॥ ५६॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाणप्रकरणे पू०
मनःप्राणैक्यप्रतिपादनं नामैकत्रिंशः सर्गः॥ ३१॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
मनःप्राणैक्यप्रतिपादनं नामैकत्रिंशः सर्गः॥ ३१॥

द्वात्रिंशः सर्गः ३२

ईश्वर उवाच।

मुने शृणु कथं कार्यकारिणी स्पन्दशालिनी।
चरन्ती च तनुं पुंसामुपैति परमाभिधाम्॥ १॥

विचेष्टयति देहादि यथा पुर्यष्टकं गता।
यथा देहान्तरं याति तत्सर्वमिह वर्ण्यते॥

परमा चित् प्रागुक्तरीत्या पुंसां तनुं पुर्यष्टकं चरन्ती प्रविष्टा सती कथं कया
रीत्या कार्याणि ऐहिकपारलौकिककर्माणि करोति तच्छीला कथं च
तदनुकूलदेहादिस्पन्दशालिनी सती अभिधां चलति स्नाति भुङ्क्ते यजते ब्राह्मणः
क्षत्रियो देवदत्त इत्यादिशब्दाभिलापयोग्यतां उपैति तत्सर्वं कथयामि
शृण्वित्यर्थः॥ १॥

प्राक्तनैस्तैर्निहन्त्येव स्वमनोमननेहितैः।
कर्मवातैर्विचित्रेहैः परिपीवरतां गतैः॥ २॥

देहस्पन्दे चित्प्रतिबिम्बजीवचलनं हेतुस्तच्चलने च तदुपाधिपुर्यष्टकरूपमनस्तया
परिणता वास्तवचित्स्वभावतिरोधात्री मायाशक्तिर्हेतुस्तस्या मनोरूपेण परिणतौ
पूर्वपूर्वदेहान्तपरिणामसंचितकर्मराशिरेव हेतुः। बृहदारण्यके
[बृहदारण्यके पञ्चमाध्याये [द्वितीयटिप्पणीनिर्दिष्टा श्रुतत्तु
निर्णयसागरीयबृहदारण्यके तृतीयाध्याये द्वितीयब्राह्मणान्ते समुपलभ्यते
पूर्वसंशोधकैस्तु पञ्चमाध्यायगतेति यदुक्तं तत्प्रमादविलसितमिति मन्यामहे
। तृतीयटिप्पण्यां च हेतुष्वितिपदमादर्शाधारेणामाद्भिर्विनिवेशितम्।] द्वितीये
ब्राह्मणे।]-कर्म हैवतदूचतुः [तत्तत्र विचारावस्थायामेकान्ते स्थित्वा
कर्म हैवाश्रयं पुनः पुनः कार्यकरणोपादानहेतुमूचतुः। न केवलमूचतुरपि
तु कालेश्वराद्यभ्युपगतेषु हेतुषु यत्तौ प्रशशंमतः कर्म हैव
तत्प्रशशंसतुरिति।] कर्मैव तत्प्रशशंसतुः इति
ग्रहातिग्रहरूपबन्धहेतुत्वस्य [ग्रहाः प्राणजिह्वावाक्चक्षुः
श्रोत्रमनोहस्तत्वचः। अतिग्रहा अपानरसनामरूपशब्दकामकर्मस्पर्शसंज्ञाः।
] कर्मस्वेव व्यवस्थापनादित्याशयेनाह-प्राक्तनैरित्यादिना।
शक्तिरनादिमायारूपा ब्रह्मशक्तिः। स्वावरणशक्त्या स्वाश्रयं ब्रह्मनिहन्त्येव
नास्ति न भातीति प्रतीतियोग्यतां नीत्वा प्राक्तनैरनादिकालादारभ्य
संचयात्परिपीवरतामतिपुष्टतां
गतैर्विचित्रेहैर्बहुविधकामवासनान्वितैर्मननैस्तैर्मानसैरीहितैः
कायवाक्चेष्टारूपैश्च विहितनिषिद्धकर्मव्रातैर्निमित्तैर्मनस्तया
पुर्यष्टकात्मकमनोभावेन गता परिणता सती चितेः स्वाधिष्ठानचित्सत्तातश्चिदिव
स्वस्वभावबलाज्जडेव मिश्रभावमागता भूत्वा ज्ञानकर्मव्यवहारोचिता सती
स्वशक्तिभूतया अनया ज्ञानकर्मेन्द्रियादिप्रणाड्या सा मायाशक्तिरेव
द्रष्टदर्शनदृश्यादिनवविधसंसाररूपेण स्फुरति नृत्यति नान्यत्किंचिदिति
द्वयोरर्थः॥ २॥

102441
102442 मनस्तया गता शक्तिः सज्जडेवागता चितेः।
102443 सा स्फुरत्यनया ब्रह्मन्नुचिता शक्तिभूतया॥ ३॥
102444
102445 अस्याः प्रसादादिह सा चित्कलङ्कवती मुने।
102446 जगद्गन्धर्वनगरं करोति न करोति च॥ ४॥
102447
102448 अस्या मायाशक्तेः अविचारलक्षणाद्विचारलक्षणाच्च प्रसादात्क्रमात्करोति न करोति चेति
102449 संबन्धः॥ ४॥
102450
102451 चित्ताद्यसत्तया देहो मूकस्तिष्ठति कुड्यवत्।
102452 तत्सत्तया हि स्फुरति नभःसंप्रेरिताश्मवत्॥ ५॥
102453
102454 तर्हि ब्रह्मचित्संनिधानाद्देह एव सर्वं करोतु किं चित्तादिकल्पनया तत्राह##-
102455
102456 यथा स्फुरत्यतिजडमयोऽयस्कान्तसंनिधौ।
102457 तथा स्फुरति जीवोऽयं सति सर्वगते परे॥ ६॥
102458
102459 जीवस्य प्राणकर्मेन्द्रियव्यापारेषु ब्रह्म संनिधिमात्रेण साधारणं
102460 निमित्तमित्याह-यथेति॥ ६॥
102461
102462 सर्वस्थयात्मशक्त्यैव जीव एष स्फुरत्यलम्।
102463 मुकुरो बिम्बमादत्ते द्रव्यात्मन्यस्थितादपि॥ ७॥
102464
102465 बुद्ध्यादि प्रथायां ज्ञानेन्द्रियप्रयोजनेषु च प्रतिबिम्बार्पणेनासाधरणं
102466 निमित्तमित्याशयेनाह-सर्वस्थयेति। आत्मरूपया चिच्छक्त्यैव स्फुरति
102467 स्वपरप्रथासमर्थो भवति। ननु भौतिकत्वाद्द्रव्यस्वभावे स्थितं जीवोपाधिभूतं
102468 लिङ्गमद्रव्यस्वभावाद्ब्रह्मणः सकाशात्कथं प्रतिबिम्बमादत्ते द्रव्ये
102469 द्रव्यस्यैव प्रतिबिम्बननियमदर्शनादिति चेत्तत्राह-मुकुर इति। मुकुरेण
102470 द्रव्यस्वभावे अस्थितादपि गुणक्रियाजात्यादेः प्रतिबिम्बादावदर्शनान्न द्रव्यादेव
102471 प्रतिबिम्बो ग्राह्य इति नियम इत्यर्थः॥ ७॥
102472
102473 प्रविस्मृतस्वभावत्वाज्जीवोऽयं जडतां गतः।
102474 मोहाद्विस्मृतभावत्वाच्छूद्रतामिव सद्द्विजः॥ ८॥
102475
102476 यदि ब्रह्मप्रतिबिम्बो जीवस्तर्हि कथं तस्य अज्ञाननिद्रालस्यादिजाड्यानुभवः। न हि
102477 सूर्यप्रतिबिम्बे अभास्वरतासंभव इत्याशङ्क्याह-प्रविस्मृतेति॥ ८॥
102478
102479 प्रविस्मृतस्वभावा हि चिच्चित्तत्वमुपागता।
102480 मोहापहतचित्तत्वात्सुमहानिव दीनताम्॥ ९॥
102481
102482 चित्तत्वं चित्तधर्मं जाढ्यमालिन्यादि। सुमहान् गाधिलवणहरिश्चन्द्रादिरिव॥ ९॥
102483
102484 जडयाऽवशया देहो वातशक्तिसमानया।
102485 संचाल्यते तदनया वारीव वीचिमालया॥ १०॥
102486
102487 चित्ततादात्म्याध्यासाच्चित्तधर्मदैन्यादि
102488 प्राप्तिवत्प्राणतादात्म्याध्यासात्तद्धर्मदेहसंचलनहेतुत्वमप्यस्याः
102489 सिद्धमित्याह-जडयेति। वातशक्तिः प्राणस्तत्तादात्म्यापत्त्या तत्समानतया॥ १०॥
102490
102491 कर्मात्मना वराकेण जीवेन मनसामुना।
102492 चाल्यन्ते देहयन्त्राणि पाषाणा इव वायुना॥ ११॥

102493
102494 कर्मात्मना उक्तरीत्या क्रियास्वभावत्वमापन्नेन मनसा मननशक्तिमता।
102495 उपाधिपारवश्याद्वराकेणात्यन्तदीनेन। यथा
102496 नौकास्तम्भनिबद्धदीर्घपटाद्युपाधिपरवशेन वायुना नौकास्थाः पाषाणा
102497 अभिमतं देशं प्रति चाल्यन्ते तद्वत्॥ ११॥
102498
102499 शरीरशकटानां हि कर्षणे परमात्मना।
102500 मनःप्राणोदयौ ब्रह्मन्कृतौ कर्मकृतौ दृढौ॥ १२॥
102501
102502 मनःप्राणोदयौ मनःप्राणशक्तिकर्मकृतौ भृत्यौ बलीवर्दौ वा॥ १२॥
102503
102504 चिज्जडं तूररीकृत्य रूपं जीवत्वमेत्य च।
102505 मनोरथमुपारुह्य वहत्प्राणतुरंगमम्॥ १३॥
102506
102507 स्वाप्नव्यवहारसाधारण्याय मनस एव रथत्वं कल्प्यम् मुख्यामुख्यप्राणानां
102508 तु तुरङ्गमत्वमित्याशयेनाह-चिदिति॥ १३॥
102509
102510 क्वचिज्जातपदार्थत्वं क्वचिन्नष्टपदार्थताम्।
102511 क्वचिद्बहुपदार्थत्वं क्वचिदेकपदार्थताम्॥ १४॥
102512
102513 क्वचित् जाग्रत्स्वप्नयोर्जातपदार्थत्वमाविर्भूतपदार्थत्वं बहुपदार्थत्वं च।
102514 क्वचित्सुषुप्ते नष्टपदार्थतां तिरोभूतसर्वपदार्थतां अविद्यैकपदार्थतां च गते
102515 वेति परेणान्वयः॥ १४॥
102516
102517 गतेव भिन्नेवास्त्येवमत्यजन्ती निजं पदम् [पदमित्यत्र वपुरिति पाठो
102518 व्याख्यानुगुणः स्यात्।]।
102519 जलतेव तरङ्गत्वं सैवासदसदोदिता॥ १५॥
102520
102521 किं सा दुग्धं दधिभावेनेव जीवजगद्भावेन परिणामान्नष्टा नेत्याह-अस्तीति।
102522 एवं परिणतापि निजं पारमार्थिकं वपुः स्वरूपमत्यजन्ती सती तत्त्वदृशा
102523 असज्जाग्रदिव व्यवहारदृशाप्यसत्स्वप्न इव च आ उदिता ईषद्विकसितेत्यर्थः॥ १५॥
102524
102525 उपजीव्यात्मनो रूपं परं स्फुरति वृत्तिषु।
102526 आलोकमुपजीव्येमं रूपश्रीर्दृश्यगा यथा॥ १६॥
102527
102528 आत्मन्यध्यस्तत्वादेवात्मसत्तामेवोपजीव्य मनोवृत्तिप्रतिफलितात्म चिद्बलेनैव
102529 मनोरूपं जीवजगत्प्रथत इत्याह-उपजीव्येति॥ १६॥
102530
102531 परमात्मनि चित्तत्त्वे स्थिते सति निरामये।
102532 जीवो जीवति सालोकं दीपे सति गृहं यथा॥ १७॥
102533
102534 चिदेव तत्त्वं पारमार्थिकं रूपं यस्य तथाविधे॥ १७॥
102535
102536 आधयो व्याधयश्चैव प्रयान्त्यस्य प्रपीनताम्।
102537 अपामिव तरङ्गत्वं वीचित्वस्येव फेनता॥ १८॥
102538
102539 एवं देहचेष्टाहेतुता चित उपपादिता। इदानीं तस्या देहान्तरप्राप्तिप्रकारं वक्तुं
102540 वैराग्याय च देहनिमित्तदुःखानि प्रपञ्चयति-आधय इत्यादिना॥ १८॥
102541
102542 आधिव्याधिभिराकीर्णशरीराम्भोजषट्पदः।
102543 जीवो वैषम्यमायाति तरङ्गत्वे यथा पयः॥ १९॥
102544

102545 वैषम्यं दैन्यदुःखादि ॥ १९ ॥
102546
102547 चिच्छक्तिः सर्वशक्तित्वान्नाहं चिदिति भावनात् ।
102548 अत्र सैवैति वैवश्यं सूर्यो दीप्तैरिवाम्बुदैः ॥ २० ॥
102549
102550 अत्र देहे । यथा सूर्यो दीप्तैः
102551 स्वप्रकाशितैरेवाम्बुदैर्मेघैस्तिरोधानम्लानिखण्डितत्वादिवैवश्यं
102552 द्रष्टृदृष्ट्या तद्वत् ॥ २० ॥
102553
102554 वैवश्याच्च्यवती मौढ्यान्न विन्दत्यात्मसंविदम् ।
102555 घनजाढ्यपराभूतः स्वाङ्गावदलनं यथा ॥ २१ ॥
102556
102557 च्यवती ज्ञानानधिकृतयोनिष्ववतरन्ती । शप्श्यनोरिति नुमोऽभावश्छान्दसः । यथा
102558 घनेन मदिरादिमदजाड्येन पराभूतः पुरुषः खड्गादिना स्वाङ्गावदलनं न
102559 विन्दति नानुसंधत्ते तद्वत् ॥ २१ ॥
102560
102561 प्राप्य चाप्यनुसंधानमस्या मोहो विनश्यति ।
102562 घनमोहरतो जन्तुः स्वकार्यस्मरणं यथा ॥ २२ ॥
102563
102564 कदा तर्हि चितो मोहो नश्यति तदाह-प्राप्येति । यथा मदादिघनमोहरतो जन्तुः
102565 कालेन स्वकर्मस्मरणं प्राप्य निर्मोहो भवति तद्वत् ॥ २२ ॥
102566
102567 यदाङ्गसंविदां वातस्पन्दशक्तिः प्रमोषतः ।
102568 न करोत्यनुसंधानं कुष्ठी स्पन्दैषणं यथा ॥ २३ ॥
102569
102570 इदानीं देहत्यागप्रकारं वक्तुमुपक्रमते-यदेति । यदा वातस्य प्राणस्य
102571 स्पन्दशक्तिः अङ्गसंविदां आनखाग्राल्लिङ्गोपाधिद्वारा प्रविष्टजीवसंविदां
102572 हृदि लिङ्गस्योपसंहारेण प्रमोषतो निमित्ताद्धस्तपादादेरनुसंधानं न करोति ।
102573 यथा कुष्ठी गलितानामङ्गुल्यादीनां स्पन्दैषणं न करोति तद्वत् । तदा हृदि
102574 स्थितं भुशुण्डोपाख्याने वर्णितं पद्मपत्रं प्राणसंचारानुकूलतया न स्फुरति
102575 न कम्पत इति परेणान्वयः ॥ २३ ॥
102576
102577 असंवित्स्पन्दतो देहे पद्मपत्रं हृदि स्थितम् ।
102578 न स्फुरत्यपरामृष्टं दारुपात्रं यथा बहिः ॥ २४ ॥
102579
102580 यथा यज्ञे ऋत्विग्भिरपरामृष्टं दारुपात्रं न स्पन्दते तद्वत् ॥ २४ ॥
102581
102582 निःस्पन्दे पद्मपत्रेऽन्तः प्राणाः शान्तिं प्रयान्त्यमी ।
102583 तालवृन्ते यथाऽस्पन्दे बहिः पवनशक्तयः ॥ २५ ॥
102584
102585 शान्तिं तेजसि विलयम् । मनः प्राणे प्राणस्तेजसि इति श्रुतेः ॥ २५ ॥
102586
102587 प्राणे शान्तेतरस्पर्शे [शान्तेऽन्तरस्पर्शादित्यपि पाठः ।] जीवो
102588 निष्पूर्णमूकताम् ।
102589 याति शान्ते नभोवायौ न दृश्यत्वं यथा रजः ॥ २६ ॥
102590
102591 रूपोपाधिविलयान्निरर्गलं पूर्णो नामोपाधिविलयान्मूकश्च यः कारणात्मा
102592 तद्भावं याति ॥ २६ ॥
102593
102594 विरजं विगताधारं मनो हि शिष्यते मुने ।
102595 तिष्ठत्यात्मपदं लब्ध्वा जलादितरुबीजवत् ॥ २७ ॥
102596

102597 रजोगुणप्रधानस्वाधारप्राणोपरमादेव विरजं विगताधारं च मनोपि सहैव
102598 प्राणेन कारणात्मपदं लब्ध्वा तद्भावेनैव शिष्यते। तर्हि किं सर्वथा गतं
102599 नेत्याह-तिष्ठतीति।
102600 जलादिभूतमात्रोपष्टब्धपार्थिवतरुबीजवत्पुनर्देहाविर्भावोन्मुखं
102601 तिष्ठतीत्यर्थः॥ २७॥
102602
102603 इति वैकल्यमायातैः कारणौघैः समन्ततः।
102604 पुर्यष्टके शमं याते देहः पतति निश्चलः॥ २८॥
102605
102606 स एवास्या देहत्याग इत्याह-इतीति॥ २८॥
102607
102608 चिच्चेत्यचेतनान्मोहात्स्पन्दमायान्ति वासनाः।
102609 तदीरिता स्मरत्यन्तरन्यद्विस्मरति स्वयम्॥ २९॥
102610
102611 पुर्यष्टकस्य तर्हि केन हेतुनोद्भव इतिचेद्धृत्पद्मस्पन्दात्तत्स्पन्दश्च
102612 पूर्वपूर्वभोक्त्रादिभावस्मृतेः। सा च वासनास्पन्दाद्वासनास्पन्दे च
102613 स्वरूपाज्ञानकृतं चितश्चेत्याकारचेतनं हेतुरिति तत्त्वोन्मुखत्वय
102614 चितश्चेत्याकारता प्रतिपत्तिलक्षणा बहिर्मुखतैव प्रथमं पौरुषयत्नेन
102615 निरोद्धव्येत्याशयेनाह-चिच्चेत्यचेतनादिति॥ २९॥
102616
102617 हृत्पद्मपत्रस्फुरणात्स्फुटं पुर्यष्टकं भवेत्।
102618 हृत्पद्मयन्त्रे वहनाद्रुद्धे पुर्यष्टकं क्षयि॥ ३०॥
102619
102620 वहनाच्चलनाद्रुद्धे। निश्चले सतीति यावत्॥ ३०॥
102621
102622 देहे पुर्यष्टकं यावदस्ति तावत्स जीवति।
102623 शान्ते पुर्यष्टके देहो मृत इत्युच्यते द्विज॥ ३१॥
102624
102625 विरुद्धमलसंबोधाच्छेदभेददशावशात्।
102626 न प्रस्फुरति हृत्पद्मयन्त्रमभ्यन्तरे यदा॥ ३२॥
102627
102628 परस्परविरुद्धानां वातपित्तकफाख्यानां मलानां रागद्वेषादिवासनामलानां
102629 च संबोधात् प्रकोपात् शस्त्रादिकृतदेहच्छेदभेदादिवशाच्च। अभ्यन्तरे
102630 देहमध्ये॥ ३२॥
102631
102632 तदा पुर्यष्टकं शान्तिमुपैति गगने शनैः।
102633 संरोधिते वातयन्त्रे यथा पवनसंततिः॥ ३३॥
102634
102635 वातयन्त्रे व्यजनादौ॥ ३३॥
102636
102637 स्वसंवित्तिवशाज्जीवो वैवश्यमुपगच्छति।
102638 पद्मयन्त्रं शरीरस्थं प्रवाहं याति नित्यदा॥ ३४॥
102639
102640 स्वस्य संवित्तिः संकल्पस्तद्वशात् वैवश्यं मरणादि दुःखसहस्रम्। सर्वैकान्य
102641 किं यत्तदः काले दा इति दाप्रत्ययविधानान्नित्यदेति च्छान्दसम्॥ ३४॥
102642
102643 वासना विमला येषां हृदयान्नापसर्पति।
102644 स्थिरैकरूपजीवास्ते जीवन्मुक्ताश्चिरायुषः॥ ३५॥
102645
102646 अत एव भोगवासनाशून्येषु तत्संकल्पाभावान्न मृत्युवश्यतेत्याह-वासनेति।
102647 विमला रागादिमलरहिता॥ ३५॥
102648

102649 संरुद्धे पद्मयन्त्रे हि प्राणे शान्तिमुपागते।
102650 देहः पतत्यधैर्योऽयं काष्ठलोष्टसमः क्षितौ॥ ३६॥
102651
102652 यथैव व्योम मरुति लीनं पुर्यष्टकं भवेत्।
102653 तथैव तत्रैव तदा लयमेति मनो मुने॥ ३७॥
102654
102655 व्योममरुति हृद्व्योमवायौ प्राणे॥ ३७॥
102656
102657 सुचिराभ्यस्तभावं तु वासनाखचितं मनः।
102658 यत्र तत्र भ्रमत्स्वर्गनरकादि प्रपश्यति॥ ३८॥
102659
102660 एवं लीनस्य मनसः पुनः स्वर्गनरकादिभोजकादृष्टप्रबोधितस्य हार्दाकाशे एव
102661 चक्षुषो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्यो
102662 निर्गमनयमलोकादिगमनस्वर्गनरकभोगादिकं स्वकल्पनैव न तु बहिः स्वर्गादयो
102663 नामान्ये सन्तीत्याशयेनाह-सुचिरेति।
102664 सुचिरमनादिकालादभ्यन्तस्तत्तद्भोगयोग्यशरीरादिभावो येन। यत्र तत्रेति
102665 स्वगदिर्नियतदेशसत्त्वनिराकरणार्थम्॥ ३८॥
102666
102667 शरीरं शवतामेति मनोमारुतवर्जितम्।
102668 गते गृहजने दूरं गृहं संशून्यतामिव॥ ३९॥
102669
102670 सर्वगा चिच्चेतनतो जीवीभूय मनःस्थिता।
102671 पुर्यष्टकवपुर्भूत्वा साऽऽतिवाहिकदेहिनी॥ ४०॥
102672
102673 तस्या देहान्तरग्रहणक्रममाह-सर्वगेति। सर्वगा ब्रह्मचिदेव अनेन
102674 जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि इति
102675 श्रुत्युक्तचेत्याकारानुप्रवेशचेतनतः॥ ४०॥
102676
102677 तन्मात्रपञ्चकं चित्तं क्रोडीकृत्य व्यवस्थिता।
102678 स्वप्नभ्रमवदाकारं भावात्स्थूलं प्रपश्यति॥ ४१॥
102679
102680 तन्मात्राणि सूक्ष्मभूतानि तेषां पञ्चानां संघातात्मकं
102681 चित्तमातिवाहिकदेहाख्यं पुर्यष्टकम्। भावात्संकल्पनात्॥ ४१॥
102682
102683 दृढभावनया पश्चात्तत्रैव रसशालिनी।
102684 आतिवाहिकदेहत्वं विस्मरत्यखिलं क्षणात्॥ ४२॥
102685
102686 रसशालिनी अहंताशक्तिमती॥ ४२॥
102687
102688 असत्येव शरीरेऽस्मिन्कृतकृत्रिमभावना।
102689 नयत्यसत्यं सत्यत्वं सत्यं चासत्यतामपि॥ ४३॥
102690
102691 अस्मिन् उक्तलक्षणे स्थूलदेहे। असत्यं जगत्सत्यत्वं नयति आरोपेण प्रापय्ति। सत्यं
102692 स्वीयब्रह्मभावम्। असत्यतां नास्ति न भातीति स्वप्रतीतियोग्यताम्॥ ४३॥
102693
102694 सर्वगा हि चिदंशेन जीवीभूयाभवन्मनः।
102695 मनः पुर्यष्टकरथमाक्रामति ततो जगत्॥ ४४॥
102696
102697 चित्तसंसरणे क्रममाह-सर्वगेति। अंशेन बुद्धिप्रतिबिम्बितांशेन॥ ४४॥
102698
102699 पुर्यष्टकं वातमयं देहमुत्थापयत्यलम्।
102700 हृत्स्पन्दिवेताल इव जीवतीत्युच्यते तदा॥ ४५॥

102701
102702 वातमयं सूत्रभूतप्राणप्रचुरम् | यदा उत्थापयति तदा हृदि प्रविश्य स्पन्दी
102703 स्पन्दनशीलो वेतालो यस्य तथाविधः श इव जीवतीत्युच्यते जनैरित्यर्थः || ४५ ||
102704
102705 क्षीणे पुर्यष्टके चित्तं यदा व्योमनि लीयते |
102706 तदा स्फुरति देहोऽयं मृत इत्युच्यतेऽपि च || ४६ ||
102707
102708 व्योमनि हार्दाकाशे ब्रह्मणि | स्फुरति काष्ठलोष्टादिवदचेतनः स्फुटो भवति || ४६ ||
102709
102710 स्वभाववशतो जीवो विस्मृत्या शक्तिमृच्छति |
102711 वैवश्यात्कालवशतः पर्णं जर्जरतामिव || ४७ ||
102712
102713 स्वस्याऽजरामरब्रह्मरूपतां विस्मृत्य जरठदेहगतामशक्तिं स्वयं ऋच्छति
102714 प्राप्नोति || ४७ ||
102715
102716 जीवशक्त्या परामृष्टे निरुद्धे पद्मयन्त्रके |
102717 प्राणे संरोधमायाते म्रियते मानवो मुने || ४८ ||
102718
102719 ततः पूर्ववन्म्रियत इत्याह-जीवशक्त्येति | जीवसंबन्धिन्या प्रागुक्तस्मृतिशक्त्या
102720 अपरामृष्टे अत एव चलनान्निरुद्धे सति || ४८ ||
102721
102722 यथा जातानि जातानि चान्यान्यन्यानि कालतः |
102723 वृक्षात्पर्णानि शीर्यन्ते शरीराणि तथा नृणाम् || ४९ ||
102724
102725 पुनः पुनर्नानाशरीरग्रहणं तत्र संसरणं जरामरणान्तमेव
102726 बोध्यमित्याशयेनाह-यथेति | नृणां जीवानाम् || ४९ ||
102727
102728 जायन्ते च म्रियन्ते च शरीराणि शरीरिणाम् |
102729 पादपानां च पर्णानि का तत्र परिदेवना || ५० ||
102730
102731 चिदम्बुधौ स्फुरन्त्येता देहबुद्बुदपङ्क्तयः |
102732 इतश्चान्या इतश्चान्या एतास्वास्था न धीमतः || ५१ ||
102733
102734 सर्वगापि चिदेतस्मिंश्चेतसि प्रतिबिम्बति |
102735 पदार्थमन्तरादत्ते नान्यो हि मुकुराद्दते || ५२ ||
102736
102737 उक्तमेवोपसंहर्तुमनुवदति-सर्वगेति || ५२ ||
102738
102739 चिदमलनभसि प्रयत्नरूपाः परिवितते तदतन्मयाः स्फुरन्ति |
102740 कलकलमुखराः स्फुटाभिरामा विविधशरीरविमोहतापनाय || ५३ ||
102741
102742 परितो वितते पूर्णे चिदमलनभसि प्रयत्नरूपाः
102743 पूर्वतनस्वीयशुभाशुभप्रयत्नपरिणतिरूपाः | अत एव सुखदुःखफलभोगे
102744 हास्यरोदनादिकलकलैः कोलाहलैर्मुखराः | तदतन्मयाश्चिदचित्प्रचुरजीवजगद्रूपाः
102745 कल्पनाः स्फुटाभिरामा आपातरमणीया विविधैः शरीरैर्जननमरणादिभ्रान्त्या
102746 आत्मविमोहतापनाय स्फुरन्ति | प्रतिभासन्त इत्यर्थः || ५३ ||
102747
102748 इत्यार्षे श्रीवा०रामायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाणप्रकरणे पू०
102749 देहपातविचारो नाम द्वात्रिंशः सर्गः || ३२ ||
102750
102751 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
102752 देहपातविचारो नाम द्वात्रिंशः सर्गः || ३२ ||

102753
102754 त्रयस्त्रिंशः सर्गः ३३
102755
102756 श्रीवसिष्ठ उवाच।
102757
102758 चन्द्रार्धशेखरधर चित्तत्त्वस्य महात्मनः।
102759 अनन्तस्यैकरूपस्य द्वित्वं कथमुपागतम्॥ १॥
102760
102761 यथा जीवजगद्भेदा मोहसंकल्पकल्पिताः।
102762 विचारेणैव संभाव्यास्तथा तर्कैरिहोच्यते॥
102763
102764 सर्वगापि चिदेतस्मिंश्चेतसि प्रतिबिम्बतीति यदुक्तं यच्च दृढभावनया
102765 पश्चात्तत्रैव रसशालिनीत्याद्युक्तं तत्रोभयत्राप्यनुपपत्तिं वसिष्ठः शङ्कते##-
102766 चन्द्रार्धशेखरधर। अर्धशब्दस्य षोडशतमभागनिष्ठत्वेन
102767 समांशवाचित्वाभावेनानपुंसकत्वात् अर्धं नपुंसकम् इत्यस्याप्रवृत्तेः
102768 षष्ठीतत्पुरुषः। अनन्तस्य दिक्कालवस्तुकृतपरिच्छेदशून्यस्य एकरूपस्य
102769 सजातीयविजातीयस्वगतभेदशून्यस्य चिल्लक्षणस्य तत्त्वस्य सजातीयजीवरूपं
102770 विजातीयजडजगद्रूपं च द्वित्वं कथमुपागतम् किं स्वत उत परतः। नाद्यः।
102771 अविकारत्वादनवयवत्वाच्च। नापि द्वितीयः। द्वितीयस्यैवाप्रसिद्धेरिति भावः॥ १॥
102772
102773 कथं च तन्महादेव रूढं पर्यायसंकुलम्।
102774 भवेद्दुःखोपघाताय प्रज्ञया विनिवारितम्॥ २॥
102775
102776 यदि तु निर्निमित्तमेव तदा गतमिति ब्रूषे तर्हि संकोचे
102777 मानाभावादनन्तकोटिभिस्तत्पर्यायैर्बन्धनैः संकुलं व्याप्तं चिरानुवृत्त्या
102778 रूढं तत् प्रज्ञया तत्त्वबोधेनैकत्वागन्तुकत्वाभ्यां दुर्बलतमेन कथं
102779 विनिवारितं सत् आत्यन्तिकदुःखोपघाताय भवेत्।
102780 निर्निमित्तस्यैकस्याप्युच्छेदाप्रसिद्धेः कथंचिदेकस्योच्छेदेऽप्यन्येषामनन्तानां
102781 तादृशबन्धानां परिशेषात्पुनःपुनरन्यान्यनिर्निमित्तबन्धोत्पत्तेर्दुर्वारत्वाच्च
102782 न प्रागुक्तब्रह्मशक्तिमायानिमित्तं मिथ्याभूतमेव तदिति न कश्चिद्दोष इति युक्तम्।
102783 सा ह्यागन्तुकी वा स्यात्सहजा वा आद्येऽपि स्वत उत्पन्ना उत परसंबन्धाधेयेति विमर्शे
102784 अनिर्मोक्षानवस्थादिदोषापत्तेः। सहजाया अग्न्यौष्ण्यशक्तिवत्सति
102785 ब्रह्मण्यपनेतुमशक्त्या अनिर्मोक्षतादवस्थ्यात् ऐकरस्यश्रुतिवैरस्यप्रसङ्गाच्च।
102786 किं च मायाशक्तेर्मिथ्यात्वे अत्यन्तासत्त्वादसतः कार्योत्पादकत्वायोगात्स एव
102787 समुत्थितो निर्हेतुकद्वैतोत्पादवादः। सत्यत्वे ज्ञानेन
102788 निवृत्त्ययोगादनिर्मोक्षदोषानिर्मोक्ष इत्युभयतस्पाशा रज्जुः। न च निष्कर्षे
102789 सत्त्वासत्त्वातिरिक्ता तृतीया विधा केनचिद्व्यवस्थापयितुं शक्या। तयैव विधया
102790 ज्ञानोत्तरमपि द्वैतस्यानिवार्यत्वात्। न हि तृतीया सा ज्ञेन प्रथमा द्वितीया वा
102791 कर्तुं शक्या। ज्ञानस्याकारकत्वादन्यस्यान्यात्मतायोगात्##-
102792 । ।
102793
102794 ईश्वर उवाच।
102795
102796 सर्वशक्ति हि तद्ब्रह्म सदेकं विद्यते यदा।
102797 तदा निर्मूल एवायं द्वित्वैकत्वकलोदयः॥ ३॥
102798
102799 न वयं जीवजगदादिद्वैतं प्रमाणैरुपपादयितुं प्रवृत्ताः किंतु
102800 मोहादनादिकालादारभ्य भ्रान्त्या प्रसक्तं
102801 तदध्यारोपापवादन्यायमाश्रित्यापवदितुम्। तत्राध्यारोपे सर्गादौ
102802 यत्कामकर्मवासनादिनिमित्तकारणानां ब्रह्माविद्याद्युपादानकारणानां
102803 वियदादिक्रमस्य व्यष्टिसमष्टिस्थूलसूक्ष्मादिविभागकोशभेदादीनां कल्पनं तत्
102804 सर्वं स्वयमसत्यमपि सत्यवस्तुपरिचयोपायतया श्रुत्या कल्पितं

102805 परमार्थसत्यप्रयोजनाविसंवादितया इतरवादिकल्पनापेक्षया उत्कृष्टमिति
102806 श्रोतॄणां विश्वासजननाय लोकदृशैवोपपत्तिभिः शास्त्रेषु समर्थ्यते। परिचिते तु
102807 सर्वात्मके सर्वप्रतीचि तस्याद्वितीयताबोधनाय परमार्थदृष्टिमेवावलम्ब्यापोद्यत
102808 एवेति तस्मिन्नेकत्वमभ्युपेत्य तद्विरुद्धद्वित्वासंभवोद्भावनं तव
102809 स्वाभ्युपगतविरुद्धं सिद्धान्तविरुद्धं चेति कथं न पश्यसीत्याशयेन
102810 श्रीभगवान्समाधत्ते-सर्वशक्तीत्यादिना। यदा ब्रह्म व्यवहारदृशा
102811 सर्वशक्ति परमार्थदृशा तु एकं सदेव विद्यत इति व्यवस्थितं
102812 दृष्टिद्वयमङ्गीकृतं तदा द्वित्वैकत्वलक्षणायाः कलायाः
102813 सर्वशक्त्यैकदेशादुदयो यस्य तथाविधस्तदापेक्षो निर्मूल एव।
102814 यस्माद्व्यवहारदृशा अध्यारोपः परमात्मदृशाऽपवादः न
102815 तावद्व्यवहारदृष्ट्या यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः इति
102816 श्रुत्योपपादितात्सर्वज्ञात्सर्वशक्तिमतो जीवजगद्द्वैतागमोऽनुपपन्नः।
102817 धर्मिग्राहकमानेन तस्य तत्स्वभावस्यैव निर्णयात्।
102818 तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्। यत्र नान्यत्पश्यति नान्यच्छृणोति
102819 नान्यद्विजानाति स भूमा इति श्रुतिदर्शितपरमार्थदृष्टिगम्ये तु न कदाचिदपि
102820 द्वित्वं तद्विरोध्येकत्वं वा प्रसक्तमिति तत्र तदनुपपत्त्युद्भावनं
102821 निर्मूलमेवेत्यर्थः॥ ३॥
102822
102823 सति द्वित्वे किलैकं स्यात्सत्येकत्वे द्विरूपता।
102824 कले द्वे अपि चिद्रूपे चिद्रूपत्वात्तदप्यसत्॥ ४॥
102825
102826 ननु नेह नानास्ति किंचन न तु तद्द्वितीयमास्ति ततोऽन्यद्विभक्तम् विभुं
102827 चिदानन्दमरूपमद्भुतम् इत्यादिश्रुतिभिर्द्वित्वमेव निषिध्यते
102828 नैकत्वमित्यविरुद्धमेकत्वं कथं द्वित्वतुल्यकक्षतया निषिध्यते तत्राह-सतीति।
102829 सति प्रसिक्ते द्वित्वे तद्व्यावृत्तये एकत्वं कल्प्यते। सति चैकत्वे तदेवैकत्वान्तरसहितं
102830 द्वित्वमिति कल्प्यत इति परस्परसापेक्षकल्पनत्वात्तुल्यकक्षे एव ते।
102831 तत्रैकत्वलक्षणधर्मस्यापि तदतिरिक्तस्य कल्पने
102832 चिदैकरस्यव्याघातप्रसङ्गात्तदप्यसदेवेत्यर्थः॥ ४॥
102833
102834 एकाभावादभावोऽत्र एकत्वद्वित्वयोर्द्वयोः।
102835 एकं विना न द्वितीयं न द्वितीयं विनैकता॥ ५॥
102836
102837 कार्यकारणयोरेकसारत्वादेकरूअप्ता।
102838 फलान्तस्यापि बीजादेर्विकारादिह कल्पना॥ ६॥
102839
102840 इदानीं व्यवहारपरमार्थदृष्ट्योरुपदेशादिव्यवहाराय मिश्रणेऽपि
102841 सत्ताद्वैविध्यकल्पनान्न परमार्थसति व्यावहारिकसत्तया जीवजगद्द्वैतविरोध
102842 इत्याह-कार्येति। बीजादेः पुनः फलान्तस्य यथा स एवायमिति
102843 प्रत्यभिज्ञायमानैकस्वभावे अनुगतद्रव्ये विकारान्नानात्वकल्पना
102844 तद्वदुपपत्तेरित्यर्थः॥ ६॥
102845
102846 चित्त्वं चेत्यविकल्पेन स्वयं स्फुरति तन्मयम्।
102847 विकारादि तदेवान्तस्तत्सारत्वान्न भिद्यते॥ ७॥
102848
102849 यदि तु सर्वविकाराणां परमार्थसत्ताव्यतिरिक्ता व्यावहारिकसत्ता नाभ्युपेयते तदा
102850 सुतरां द्वैतं चिद्विकल्प एव फलित इति राहुशिरोद्वैतविरोधोद्भावनतुल्यस्त्वदाक्षेप
102851 इत्याशयेनाह-चित्त्वमिति। अन्तः स एव सारः परमार्थो यस्य तत्त्वात्। एवं च
102852 मायातत्कार्याणां पृथक्सत्त्वपक्षः अपृथक्सत्त्वपक्षः
102853 असत्त्वपक्षस्तृतीयविधापक्षो वा
102854 नानावादिकल्पितप्रधानपरमाणुक्षणिकाक्षणिकविज्ञानशून्यतादिपक्षो वा यः
102855 कश्चित्त्वयाभ्युपगम्यतां तथाप्यसङ्गाद्वयचिन्मात्रास्पर्शी स सर्वोऽपि
102856 चिदधीनसिद्धिकश्चिद्विकल्पमात्रमिति चितः कदापि बन्धप्रसक्तिरेव यत्र दुर्लभा

102857 तत्राऽनिर्मोक्षोद्भावनं दूरनिरस्तमेवेति भावः ॥ ७ ॥
102858
102859 विकारादिविकल्पोऽयं तत उत्थाय वस्तुषु ।
102860 याति सार्थकतां नानाकार्यकारणतादिभिः ॥ ८ ॥
102861
102862 तत्सारत्वमेवोपपादयति-विकारादीति । यतोऽयं
102863 षड्भावविकारलक्षणस्तदाश्रयघटादिलक्षणश्च विकल्पस्ततः सद्वस्तुनः
102864 सकाशादेवोत्थाय आविर्भूय जलाहरणाद्यर्थक्रियाकारणत्वादिभिः सार्थकतां
102865 भोगपर्यवसानं याति । भोगश्च चिदवसानतैवेति तन्मात्रसारतेत्यर्थः ॥ ८ ॥
102866
102867 तरङ्गाः सलिले येऽपि तोये शैलस्य ते समाः ।
102868 शशशृङ्गसमः सोऽपि यस्य सत्यः शशाङ्कुरः ॥ ९ ॥
102869
102870 एवं जगतो विकल्पनामात्रत्वे केचिज्जलतरङ्गादयो व्यावहारिकाः
102871 मरुमरीचिकातोयतरङ्गाः प्रातिभासिकाः
102872 वन्ध्यापुत्रशशशृङ्गादयस्त्वत्यन्तासन्त
102873 इत्यवान्तरवैलक्षण्यविकल्पोऽप्यज्ञस्यैवेत्याह-तरङ्गा इति । यस्य तत्त्वविदःइ
102874 शशादुद्भिन्नो वीहियवाद्यङ्कुरोऽपि ब्रह्मैवेति सत्यस्तस्य ये सलिले
102875 प्रसिद्धास्तरङ्गास्ते शैलस्य मूर्ध्नि कल्पिते तोये ये तरङ्गास्तैः समाः । स शैलोऽपि
102876 शशशृङ्गसमः । स्वतोऽसत्त्वस्य ब्रह्मसत्तया सत्त्वकल्पनस्य च त्रिष्वपि
102877 साम्यादित्यर्थः ॥ ९ ॥
102878
102879 वस्तुबोधोऽत्र संधत्ते तत्रालं वाग्विकल्पनैः ।
102880 व्यवच्छेदादि दुश्छेद्यं वचोवाच्यात्किल द्विज ॥ १० ॥
102881
102882 यस्त्वत्र जगत्यबोधकृतः सर्वपदार्थानां परस्परव्यावृत्तिलक्षणो
102883 व्यवच्छेदस्तं वस्तुबोधस्तत्त्वसाक्षात्कार एव संधत्ते स्फुटितशकलानि
102884 संधानेनैवैकतां नयति । तत्र ईदृशे विषये वाग्विकल्पनैर्युक्त्युपन्यासैः अलं
102885 साध्यं नास्ति । यतः अनपगते अज्ञाने वचोवाच्याद्युक्तिसहस्रादपि
102886 अपरोक्षभ्रमसिद्धं व्यवच्छेदादि द्वैतं दुरुच्छेद्यमित्यर्थः ॥ १० ॥
102887
102888 ब्रह्मणः सर्वशक्तित्वं तत्त्वतो न विभिद्यते ।
102889 तरङ्गकणकल्लोलजलौघ इव वारिणः ॥ ११ ॥
102890
102891 तत्त्वदृशा दर्शने तु ब्रह्मणः सर्वशक्तित्वं सर्वजगदाकारमायिकरूपं
102892 तन्मात्रं तत्त्वतो न विभिद्यते । तत्रैव तिरोभवतीत्यर्थः ॥ ११ ॥
102893
102894 पुष्पपल्लवपत्रादि लताया नेतरद्यथा ।
102895 द्वित्वैकत्वजगत्त्वादि त्वन्त्वाहन्त्वं तथा चितेः ॥ १२ ॥
102896
102897 तथा च अपागादग्नेरग्नित्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव
102898 सत्यम् इति श्रुतिदर्शितन्यायेन लताद्यैक्यदर्शने तदीयपुष्पपल्लवादिभेदानामिव
102899 तत्त्वदर्शने जगद्भेदानामप्यनृतत्वे त्वत्प्रश्नोऽतिनिरालम्बन इत्याह##-
102900
102901 देशकालविकारादिः कृतो भेदश्चितस्तु यः ।
102902 तच्चिदेतदसत्प्रोक्तं न प्रश्नोऽत्र तवोचितः ॥ १३ ॥
102903
102904 यो भेदः कृतः तत्सः चित् चिदेव चिद्वत्वमेव नास्ति तत्र द्वित्वं
102905 कथमुपागतमित्येतत्त्वया असत्प्रोक्तम् । अत्र असद्विषये तव प्रश्नो नोचित इत्यर्थः ॥ १३ ॥
102906
102907 देशकालक्रियासत्तानियत्वाद्याश्च शक्तयः ।
102908 चिदात्मिका एव चितः सत्त्वात्संपतिताः स्वतः ॥ १४ ॥

यतश्चितः सत्त्वादेव संपतिताः संपन्नसत्ताका अतश्चिदात्मिका एव || १४ ||

चित्तत्त्वं चित्तचेत्येहं चिद्ब्रह्माद्यभिधा स्मृता |
यथा वीच्याद्यभिधार्हं स्थितमम्बुतरङ्गकम् || १५ ||

चित्तं चेत्यं तदीहाश्च तेषां समाहारो रूपप्रपञ्चश्चित्तत्त्वमेव | एवं
ब्रह्मादिस्तम्बपर्यन्ता अभिधा नाम प्रपञ्चोऽपि चिदेव स्मृता | अम्बुतरङ्गकं
अम्बुतरङ्गानुगतं रससामान्यं यथा वीच्याद्यभिधार्हं स्थितं तद्वत् || १५ ||

असंभवत्तरङ्गस्य चिद्विलासमहाम्बुधेः |
तरङ्गितत्वमिव यत्तत्तावच्चेत्यसङ्गिता || १६ ||

तरङ्गितत्वमिव यद्विवर्तनं तदेव चेत्यसंबन्ध इत्यर्थः || १६ ||

तदेतत्परमं ब्रह्म सत्येश्वरशिवादिभिः |
शून्यैकपरमात्मादिनामभिः परिगीयते || १७ ||

शून्यपदेन असद्वा इदमग्र आसीत् इति श्रुतिस्थमसत्पदं लक्ष्यते || १७ ||

एवं रूपपदातीतं यद्रूपं परमात्मनः |
यत्तु नामाहममलं विषयो न गिरां च तत् ||१८ ||

मत्तत्त्वं परमार्थतस्तदेवेत्याह-एवमिति | रूपाणि पदानि नामानि च तदतीतं यत्
अहम् | तुशब्दः पुरोदृश्यमानसाकाररूपव्यावृत्त्यर्थः | तत् गिरां वाचां
चान्मनसां चन विषयः || १८ ||

यदिदं दृश्यते तस्यास्तल्लताया महाचितेः |
फलपल्लवपुष्पादि न भिन्नं तन्मयं यतः || १९ ||

यदिदं दृश्यते जगत् तत् तस्याश्चितेश्चिल्लक्षणाया लतायाः
फलपल्लवपुष्पादीत्यन्वयः || १९ ||

महाविद्योपनयना चिद्भवत्यभिधा सती |
सा जीवत्वेन बाह्यत्वं तदा द्वीन्द्विव पश्यति || २० ||

यदि तु अनृतमेव जीवजगद्भावं विवेकाय पृच्छसि तदा शृणु | सा चित् महती
अविद्या उपनयनं विचित्रवर्णरञ्जितोपनेत्रं यस्यास्तथाविधा यदा भवति तदा
जीवत्वेन अभिधीयत इत्यभिधा तथाविधा सती द्वीन्द्विव स्वबाह्यत्वं
बाह्यजीवजगद्भावं पश्यतीत्यर्थः || २० ||

स्वयमान्यैवमस्मीति भावयित्वा स्वभावतः |
अन्यतामिव संयाति स्वविकल्पात्मिकां स्वतः || २१ ||

अन्या अब्रह्माचिद्रूपास्मि || २१ ||

अकलङ्केन रूपेण रूपं यत्सकलङ्कवत् |
संसारसरितं प्राप्य चेतनेनैव चेतति || २२ ||

अकलङ्केनैव रूपेण स्थितापि सकलङ्कवद्यत्पुर्यष्टकरूपं कल्पितं तेन
संसारसरितं प्राप्य औपाधिकचेतनेनैव चेतति न निष्कलङ्कचेतनेनेत्यर्थः || २२ ||

102961 चिद्वपुः स्वयमेतेन ह्येकतामेति जीवताम् |
102962 चित्तत्त्वस्यावभासेन जीवो जीवति तन्मयः || २३ ||
102963
102964 एतेन पुर्यष्टकेन एकतां तादात्म्याध्यासलक्षणां जीवतां एति | तन्मयश्चित्प्रचुरः
102965 सन् जीवति प्राणनादिक्रियां लभते || २३ ||
102966
102967 आतिवाहिकदेहोऽपि जीवतां समुपागतः |
102968 भावनापञ्चकं भूत्वा द्रव्यमस्मीति वेत्त्यलम् || २४ ||
102969
102970 इत्थं सर्वगापि चिदेतस्मिंश्चेतसि प्रतिबिम्बतीत्येतदाक्षेपांशं समाधाय
102971 दृढभावनया पश्चात्तत्रैव रसशालिनीत्येतदाक्षेपांशं समाधातुं तस्य
102972 स्थूलदेहप्राप्तिक्रममाह-आतिवाहिकेति | भावनापञ्चकं
102973 पाञ्चभौतिकस्थूलदेहसंस्कारात्मकं भूत्वा देहलाभाय
102974 व्रीहियवतिलमाषादिद्रव्यमहं संपन्नमस्मीति वेत्ति | त इह व्रीहियवास्तिलमाषा इति
102975 जायन्ते इति श्रुतेरित्यर्थः | श्रुतौ इतिशब्दो भाविदेहानुकूलद्रव्यमात्रोपलक्षणार्थः
102976 | तेन स्थावरस्वेदजादिदेहप्राप्तिस्थले तत्तद्बीजानुकूलजलादिद्रव्यभावोऽप्यस्य भवतीति
102977 द्योतनाय द्रव्यमस्मीति वेत्तीति सामान्योक्तिः || २४ ||
102978
102979 तद्द्रव्यं प्राणिना भुक्तमाशु गच्छति वीर्यताम् |
102980 ततोऽहं प्राणवाञ्जातो वेत्तीत्यनुभवात्मकम् || २५ ||
102981
102982 वीर्यतां रेतस्त्वम् | वृक्षादौ तु बीजभावम् | ततः स्त्रियां निषेकक्रमेणाहं
102983 प्राणवान् स्थूलदेहो जातोऽस्मीति वेत्तीत्यर्थः || २५ ||
102984
102985 अहंतादिक्रमेणाशु पञ्चकानुभवभ्रमात् |
102986 स्थावरं जंगमं सर्वं वेत्ति तत्तद्भवत्यलम् || २६ ||
102987
102988 अनुभवात्मकं ब्रह्मैव उक्तेनाहंतादिक्रमेण पञ्चानां सङ्घः पञ्चकं
102989 स्थूलदेहस्तदनुभवभ्रमाच्चक्षुरादिद्वारा बाह्यं स्थावरं जंगमं च वेत्ति
102990 पुनस्तद्वासनया स्वयमपि तत्तद्भवतीत्यर्थः || २६ ||
102991
102992 काकतालीययोगेन दृढाभ्यासक्षयेण च |
102993 वासनान्तरसंश्लेषात्सूक्ष्ममाकारमुज्झति || २७ ||
102994
102995 ननु पूर्वमशकादिदेहत्यागे तद्देहाकारवासनात्मना सूक्ष्मतया स्थितस्य
102996 पुर्यष्टकस्य दृढाभ्यस्तमशकाकारस्य सौक्ष्म्यस्य च कथं
102997 निवृत्तिर्हस्त्याकारस्य स्थौल्यस्य चानभ्यस्तस्य कथं लाभस्तत्राह-काकतालीयेति
102998 | यथा आकस्मिके काकतालसंबन्धे काकमरणप्रयोजकं कर्मैव निमित्तं नान्यत्
102999 तथा दृढाभ्यस्तवासनाभिभवे चिरव्यवहितहस्त्याद्यहंभाववासनोद्भवे च
103000 कर्मैव निमित्तम् | उद्भूतहस्तिवासनान्तरसंश्लेषात्तु चिराभ्यस्तमपि
103001 सूक्ष्ममशकाकारमुज्झतीत्यर्थः || २७ ||
103002
103003 द्वित्वस्वसंविदा द्वित्वमेकस्यैव प्रवर्तते |
103004 पुंसो वेतालसंकल्पाद्वेताल इव भासुरः || २८ ||
103005
103006 विरोधिवासनोद्भवेन पूर्ववासनोपमर्दे उत्तरस्याभ्यासेन दार्ढ्ये च
103007 दृष्टान्तानाह-द्वित्वेत्यादिना || २८ ||
103008
103009 अद्वित्ववेदनाद्द्वित्वमात्मनोऽपि निवर्तते |
103010 न करोमीति संकल्पात्पुरुषस्येव कर्तृता || २९ ||
103011
103012 द्वित्वसंकल्पतो द्वित्वमेकस्यैव प्रवर्तते |

103013 अदिव्त्वसंविदा द्वित्वमनेकस्यापि नश्यति ॥ ३० ॥
103014
103015 अनेकस्य जगतोऽपि ॥ ३० ॥
103016
103017 परमात्मतया द्वित्वं न किलात्मनि विद्यते ।
103018 अविकारादिमत्त्वेन सर्वगत्वेन सर्वदा ॥ ३१ ॥
103019
103020 यत्स्वसंकल्परचितमसंकल्पक्षयं हि तत् ।
103021 यथा मुने मनोराज्यं गन्धर्वनगरं यथा ॥ ३२ ॥
103022
103023 असंकल्पात् क्षयो यस्य तथाविधम् । हि प्रसिद्धम् ॥ ३२ ॥
103024
103025 तथा संकल्पने क्लेशो न संकल्पविनाशने ।
103026 संकल्पयक्षो गन्धर्वपुर्याः सृष्टौ न तु क्षये ॥ ३३ ॥
103027
103028 किंचेत्यर्थे तथाशब्दः । संकल्पने मानसप्रयत्नेन रचने क्लेशः श्रमोऽस्ति न तु
103029 संकल्पस्य विनाशने । औदासीन्यमात्रेण स्वत एव तत्सिद्धेः । प्रसिद्धश्चायमर्थ
103030 इत्याह-संकल्पयक्ष इति । गन्धर्वोऽत्र मनस्तत्पुर्या मनोरथरचितपुर्याः
103031 सृष्टौ संकल्प एवासंभावितरचनासमर्थत्वाद्यक्षो दिव्यशिल्पी प्रसिद्धः न तु
103032 तत्क्षये इत्यर्थः ॥ ३३ ॥
103033
103034 पुष्टसंकल्पमात्रेण यदिदं दुःखमागतम् ।
103035 तदसंकल्पमात्रेण क्षयि कात्र कदर्थना ॥ ३४ ॥
103036
103037 कदर्थना क्लेशः ॥ ३४ ॥
103038
103039 यत्किंचिदपि संकल्प्य नरो दुःखे निमज्जति ।
103040 न किंचिदपि संकल्प्य सुखमव्ययमश्नुते ॥ ३५ ॥
103041
103042 संकल्पव्यालनिर्मुक्ता न यदा तव चेतना ।
103043 न तदा नन्दनोद्याने त्वमुच्चैः परिराजसे ॥ ३६ ॥
103044
103045 उच्चैः सर्वगुणोत्कृष्टे नन्दनोद्याने स्थितोऽपीति शेषः । न परिक्षीणक्लेशो राजसे ॥ ३६ ॥
103046
103047 स्वविवेकानिलैः कृत्वा संकल्पजलदक्षयम् ।
103048 परां निर्मलतामेहि शरदीव नभोन्तरम् ॥ ३७ ॥
103049
103050 संकल्पनाशने तर्हि क उपायस्तमाह-स्वविवेकेति ॥ ३७ ॥
103051
103052 संकल्पसरितं मत्तां मणिमन्त्रेण शोषय ।
103053 तत्रोह्यमानमात्मानं समाश्वास्य भवामनाः ॥ ३८ ॥
103054
103055 संकल्पानिलनिर्धूतं भ्रान्तं पर्णतृणांशवत् ।
103056 भूताकाशे चिदात्मानमवलम्ब्य विलोकय ॥ ३९ ॥
103057
103058 पर्णतृणस्य अंशाः खण्डास्तद्वद्भ्रान्तम् । भूताकाशे सर्वभूतहृदाकाशे ॥
103059 ३९ ॥
103060
103061 स्वसंकल्पनकालुष्यं विनिवार्यात्मनात्मनः ।
103062 परं प्रसादमासाद्य परमानन्दवान् भव ॥ ४० ॥
103063
103064 सर्वशक्तिमयो ह्यात्मा यद्यथा भावयत्यलम् ।

103065 तत्तथा पश्यति तदा स्वसंकल्पविजृम्भितम् ॥ ४१ ॥
103066
103067 यद्वस्तु ॥ ४१ ॥
103068
103069 संकल्पमात्रमेवेदं जगन्मिथ्यात्वमुत्थितम् ।
103070 असंकल्पनमात्रेण ब्रह्मन्क्कापि विलीयते ॥ ४२ ॥
103071
103072 संकल्पवातवलितं जन्मजालकदम्बकम् ।
103073 असंकल्पानिलस्पर्शाद्विश्राम्यति परे पदे ॥ ४३ ॥
103074
103075 संकल्पलक्षणेन पुरोवातेन वलितं कन्दलितं जन्मलक्षणानां जालानां
103076 जलधराणां कदम्बकं असंकल्पलक्षणस्य पाश्चात्यानिलस्य स्पर्शात्परे पदे
103077 ब्रह्माकाशे विश्राम्यति । विलीयत इति यावत् ॥ ४३ ॥
103078
103079 तृष्णाकरञ्जलतिकामिमां रूढिमुपागताम् ।
103080 संकल्पमूलोद्धरणात्परिशोषवतीं कुरु ॥ ४४ ॥
103081
103082 प्रतिभाससमुत्थानं प्रतिभासपरिक्षयम् ।
103083 यथा गन्धर्वनगरं तथा संसृतिविभ्रमः ॥ ४५ ॥
103084
103085 अविद्याकामसंकल्पनाशेऽपि यदि जगद्भासेत तर्हि तत्प्रतिभासमात्रमिति
103086 जीवन्मुक्तानुभवसिद्धो दृष्टसृष्टिपक्षः परिशिष्यत इत्याशयेनाह##-
103087
103088 प्रभुरस्मीति विस्मृत्य तावच्छोचति भूमिपः ।
103089 भूमिपोऽस्मीति संजाता यावन्नास्य हृदि स्मृतिः ॥ ४६ ॥
103090
103091 यावदज्ञानं तावदेव जगत्प्रतिभासः शोकहेतुर्न तदुत्तरकालमित्याशयेनाह##-
103092
103093 नास्य तज्जातया ब्रह्मन्प्राक्स्मृतिर्वर्तमानया ।
103094 शरदेवोपगतया प्रावृड् जाड्यापवारिणी ॥ ४७ ॥
103095
103096 ननु तत्त्वविदोऽपि प्राक्तनचिराभ्यस्तसंसारस्मृतिपरम्परया वर्तमाना ब्रह्मास्मीति
103097 स्मृतिराच्छाद्येत तथा च पुनः संसारशोकप्रसङ्ग इत्याशङ्क्याह-नास्येति ।
103098 अस्य भूमिपस्य तत्त्वविदश्च तस्मादाप्तोपदेशाज्जातया वर्तमानया भूपोऽस्मि
103099 ब्रह्मास्मीति स्मृत्या बाधिता प्राक्तनदुःखस्मृतिः स्वजाड्येन अपवारिणी
103100 आच्छादनसमर्था न । यथा उपगतया शरदा निरस्ता प्रावृड्
103101 मेघजाड्येनापवारणसमर्था न भवति तद्वैदित्यर्थः ॥ ४७ ॥
103102
103103 घनप्रवाहयाऽकस्माच्चित्तेहा सैव वर्धते ।
103104 य एवोच्चैःस्वरस्तन्त्र्याः स एवाक्रामति श्रुतिम् ॥ ४८ ॥
103105
103106 कोऽस्याः प्राबल्ये हेतुरिति चेन्मनननिदिध्यासनाभ्यासलक्षणपौरुषप्रयत्नकृत##-
103107 चित्तवृत्तिरकस्माद्धनप्रवाहा सैव वर्धते इतराभिभवसमर्था भवति । यथा
103108 तारमन्द्रतन्त्रीस्वरयोर्मध्ये य एव उच्चैःस्वरः स एवान्यमभिभूय श्रुतिं
103109 श्रोत्रं आक्रामति । श्रूयत इत्यर्थः ॥ ४८ ॥
103110
103111 अहमेकोऽहमात्मास्मीत्येकां भावय भावनाम् ।
103112 तया भावनया युक्तः स एव त्वं भवस्यलम् ॥ ४९ ॥
103113
103114 सेयमहं ब्रह्मास्मीति स्मृतिरेवाविच्छेदेन संतता मुख्या मम मानसपूजा न
103115 बाह्येत्याशयेनाह-अहमिति । एकः अद्वितीय एवाहं शिवो देवः स च
103116 अहंत्वदहंकारोपलक्षित आत्मा नित्यापरोक्षचिदेकरसोऽस्मीत्येकामविच्छिन्नां

103117 भावनां स्मृतिधारां भावय। तया एवंरूपया देवपूजाभावनया युक्तः स
103118 शिव एव त्वं अलं नितरां भवसि नान्यया पूजयेत्यर्थः॥ ४९॥
103119
103120 एवं ह्यसंभवदिदं त्वविरागभास्वत्तत्सत्त्वमुत्तमपदं परमेकदेवः।
103121 पूजासु पूजकसुपूजनपूज्यरूपं किंचिन्नकिंचिदिव चित्तपदैकमूर्तिः॥ ५०॥
103122
103123 एवमुक्तरीत्या इदं बाह्यपूजनं त्वादृशानामसंभवदेव। हि यस्मादविरागेषु
103124 तुच्छफलरागिष्वेव भास्वत्प्रकाशमानम्। त्वद्योग्यस्तु उत्तमपदं
103125 तत्परमार्थसत्त्वं परं ब्रह्मैव एको देवः। यत्पूजासु पूजकः पूजाद्रव्यस्वामी
103126 सुष्ठु षोडशोपचारैः पूजनं पूज्यं प्रतिमालिङ्गादि च किंचित् नकिंचित्तुच्छमिव
103127 भवति। यतः सा सामग्री चित्तस्य पदानि
103128 संकल्पास्तदेकमूर्तिर्मनःकल्पनामात्रमित्यर्थः॥ ५०॥
103129
103130 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाणप्रकरणे पू०
103131 द्वैतैक्यप्रतिपादनं नाम त्रयस्त्रिंशः सर्गः॥ ३३॥
103132
103133 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
103134 द्वैतैक्यप्रतिपादनं नाम त्रयस्त्रिंशः सर्गः॥ ३३॥
103135
103136 चतुस्त्रिंशः सर्गः ३४
103137
103138 ईश्वर उवाच।
103139
103140 इत्थं स्थितमिदं विश्वं सदसद्देवरूपि च।
103141 द्वैतैक्यपदनिर्मुक्तं युक्तं द्वैतैक्यमप्यतः॥ १॥
103142
103143 सौषुप्तमिह तुर्यं च तुर्यातीतपदं तथा।
103144 उपदिश्येश्वरोऽन्यत्र विश्रान्त इति वर्ण्यते॥
103145
103146 इत्थमनया देवपूजया पूज्यमानं विश्वं बाधदृशा असत् अधिष्ठानदृशा सत्
103147 देवरूपि च युक्तम्। तत्त्वतो द्वैतैक्यपदनिर्मुक्तं व्यवहारे द्वैतैक्यरूपं च
103148 युक्तमिति सर्वविरोधपरिहार इत्यर्थः॥ १॥
103149
103150 चितेः कलङ्कवैरूप्यमिति संसारतां गतम्।
103151 अकलङ्कमसंसारि तच्चाभिन्नाद्वयात्मकम्॥ २॥
103152
103153 कुतो वा द्वैतैक्यरूपि कुतो वा तन्निर्मुक्तं तदाह-चितेरिति। कलङ्को मोहस्तत्कृतं
103154 वैरूप्यं जडभाव इति कल्पनादित्यर्थः। असंसारि इति दर्शनादिति शेषः॥ २॥
103155
103156 इयमस्मीति संप्राप्तकलङ्का चिन्निबध्यते।
103157 एतामेव कलां बुद्ध्वा स्वकाभिन्नां विमुच्यते॥ ३॥
103158
103159 तदेव स्पष्टमाह-इयमिति। इयं दृश्यदेहादिरूपा। एतां
103160 दृश्यप्रथासमर्थां चित्कलाम्॥ ३॥
103161
103162 चिदर्थाकारताभावाद्द्वित्वासत्त्वं समुज्झति।
103163 सुखादिमिलितां धत्ते न सत्यां सदिति क्षणात्॥ ४॥
103164
103165 अर्थाकारतारा अर्थाकारस्य भावाद्भावनानिमित्ताद्द्वित्वं प्राप्य
103166 स्वमखण्डसत्त्वं समुज्झति विस्मरति। देहसुखदुःखादिभिर्मिलितां न
103167 सत्यामसत्यामेव स्वस्थितिं सदिति धत्ते सेयं सकलङ्कस्थितिः॥ ४॥
103168

103169 शुद्धा निरंशा सत्या वाऽसत्या वेत्येवमादिभिः।
103170 विमुक्ता नामशब्दार्थैः सर्वैः सर्वात्मिकापि खम्॥ ५॥
103171
103172 अकलङ्कस्थितिमाह-शुद्धेति। सत्या वा असत्या वा
103173 इत्येवमादिभिर्विकल्पनामशब्दार्थैः सर्वैर्विमुक्ता व्यवहारे सर्वनामरूपात्मिकापि
103174 खं शून्यस्वभावा सेत्यर्थः॥ ५॥
103175
103176 सर्वं निरुपमं शान्तं मनसैतल्लिमार्गगम्।
103177 ब्रह्मेदं बृंहितं ब्रह्म शक्त्याऽऽकाशविकासया॥ ६॥
103178
103179 उक्तनिष्कलङ्कस्थितिप्रतिष्ठार्थं सुषुप्त्यादि भूमिकाभेदान्दर्शयितुमुपक्रमते##-
103180 विकसतीत्याकाशविकासा तथाविधया स्वमायाशक्त्या जाग्रत्स्वप्नसुषुप्तिलक्षणैः
103181 सृष्टिस्थितिसंहारलक्षणैरध्यात्माधिभूताधिदैवलक्षणैर्वा त्रिभिर्मार्गैः
103182 प्रवृत्तं जगन्मनसैव जृम्भितम्॥ ६॥
103183
103184 मनसा मनसि च्छिन्ने स्वेन्द्रियावयवात्मनि।
103185 सत्यालोकाज्जगज्जाले प्रच्छन्ने विलयं गते॥ ७॥
103186
103187 अतो मनश्छेदेनैवास्य च्छेद इत्याह-मनसेति। सत्यस्यालोकात्साक्षात्कारात्॥ ७॥
103188
103189 छिद्यते शीर्णसंसारकलना कल्पनात्मिका।
103190 भृष्टबीजोपमा सत्ता जीवस्य इतिनामिका॥ ८॥
103191
103192 एवं तत्त्वबोधेन कल्पनाभिः सह मनसि च्छिन्ने प्रथमं यस्यां भूमिकायां
103193 जीवन्मुक्तस्य स्थितिर्भवति तां लक्षणैर्नाम्ना च दर्शयति##-
103194 महिमानमिति वीतशोकः इति श्वेताश्वतरकाठकश्रुत्योश्छान्दोग्ये
103195 स्वपितिनामनिर्वचने स्वं अपि इतीति विभागे च इतिपदेन व्यवहृतत्वादितिनामिकेत्यर्थः।
103196 यद्यप्यज्ञसुषुप्तावपि स्वपितिनामास्ति तथापि
103197 तत्त्वबोधेनाज्ञानलिङ्गादिबाधाद्यस्योपाधेर्यस्यामविद्यायां
103198 लयस्तयोरभावादप्ययबोधकस्यापिशब्दस्य निवृत्तौ स्वरूपप्राप्त्यर्थक इतिशब्द
103199 एवावशिष्टस्तन्नाम संपद्यत इति भावः॥ ८॥
103200
103201 पश्यन्ती नाम कलितोत्सृजन्ती चेत्यचर्वणाम्।
103202 मनोमोहाभ्रनिर्मुक्ता शरदाकाशकोशवत्॥ ९॥
103203
103204 एवं सर्वदृश्यबाधेनापरोक्षदृङ्मात्रपरिशेषात्पश्यन्ती इत्यपि तस्या
103205 नामान्तरमित्याह-पश्यन्तीति। चेत्यस्य चित्तविषयस्य चर्वणां पुनःपुनः
103206 प्रीत्यानुस्मरणं उत्सृजन्ती त्यजन्ती॥ ९॥
103207
103208 शुद्धा चिद्भावमात्रस्था चेत्यचिच्चापलं गता।
103209 समस्तसामान्यवती भवतीर्णभवार्णवा॥ १०॥
103210
103211 प्राक्चेत्यचिच्चापलं गतापि सांप्रतं चित्स्वभावमात्रस्था समस्तस्य सामान्यं
103212 सत्ता तद्वती तन्मात्रेण परिशिष्टेति यावत्। भवे जीवद्दशायामेव तीर्णो भवार्णवो
103213 यस्याम्॥ १०॥
103214
103215 अपुनर्भवसौषुप्तपदपाण्डित्यपीवरी।
103216 परमासाद्य विश्रान्ता विश्रान्ता विततए पदे॥ ११॥
103217
103218 सौषुप्तमितिपदस्य सुष्ठु निरतिशयानन्दात्मकं सुप्तं स्वलाभरूपमिति
103219 छान्दोग्यकृतव्युत्पत्त्यनुरूपं यत्पाण्डित्यं पण्डा शास्त्रजन्यं ज्ञानं तां
103220 इतः प्राप्तः पण्डितस्तस्य भावः पाण्दित्यं यश्च श्रोत्रियोऽवृजिनोऽकामहतः इति

103221 श्रुत्युपदर्शितलक्षणविद्वदनुभवसिद्धं स यो मनुष्याणां राद्धः इत्यादिना
103222 मानुषानन्दादिहैरण्यगर्भानन्दान्तशतशतगुणोत्तरोत्तरोत्कृष्टविषयानन्द##-
103223 अथवा सौषुप्तपदस्य सौषुप्तस्थानस्य यत्पाण्डित्यं
103224 निरस्तस्वाविद्यामौर्ख्यचिदेकघनपूर्णानन्दस्वप्रकाशस्वरूपं तेन पीवरी | अत एव
103225 भागत्यागलक्षणयां महासुप्तपदनामिकापि सेति भावः || ११ ||
103226
103227 एतत्ते मनसि क्षीणे प्रथमं कथितं पदम् |
103228 द्वितीयं शृणु विप्रेन्द्र शक्तेरस्याः सुपावनम् || १२ ||
103229
103230 उत्तरं स्थानं वर्णयिष्यन्वर्णितं प्रथमं स्थानमुपसंहरति-एतदिति |
103231 शक्तेश्छिच्छक्तेर्दृढीकाराद्वा || १२ ||
103232
103233 एषैव मनसोन्मुक्ता चिच्छक्तिः शान्तिशालिनी |
103234 सर्वज्योतिस्तमोमुक्ता वितताकाशसुन्दरी || १३ ||
103235
103236 ज्योतिर्भिः सूर्यचन्द्राग्निवाक्करणरूपैस्तमोभिरन्धकाराज्ञानतत्कार्यैश्च मुक्ता ||
103237 १३ ||
103238
103239 घनसौषुप्तलेखावच्छिलान्तःसन्निवेशवत् |
103240 सैन्धवान्तस्थरसवद्वातान्तःस्पन्दशक्तिवत् || १४ ||
103241
103242 तस्याः पूर्वापेक्षया ये विशेषास्तानाह-घनेति | सर्वेषां [सर्वेषां
103243 पदानां इति शेषः |] परां परिणतिमित्युत्तरत्रोपमानतया संबन्धः || १४ ||
103244
103245 कालेनायाति तत्रैव परां परिणतिं यदा |
103246 शून्यशक्तिरिवाकाशे परमाकाशगा तदा || १५ ||
103247
103248 यदा पूर्वभूमिकैवाभ्यासवशाद्घनसौषुप्तादिवत्परां परिणतिं याति तदा
103249 आकाशे विद्यमाना शून्यशक्तिः परमाकाशं
103250 चिदेकघनब्रह्माकाशभावमागतेव भूत्वा चेत्यांशोन्मुखतां त्यजतीति
103251 परेणान्वयः | स्वतो व्युत्थानशून्यता भवतीत्ययं पूर्वापेक्षया फलतोऽपि विशेष
103252 इति भावः || १५ ||
103253
103254 चेत्यांशोन्मुखतां नूनं त्यजत्यम्ब्विव चापलम् |
103255 वातलेखेव चलनं पुष्पलेखेव सौरभम् || १६ ||
103256
103257 कालताकाशते त्यक्त्वा सकलए सकलाकला |
103258 न जडा नाजडा स्फारा धत्ते सत्तामनामिकाम् || १७ ||
103259
103260 क्रिया हि कालस्य कला | परिच्छिन्नमवकाशसापेक्षं वस्त्वाकाशस्य कला ताभ्यां
103261 सकले कालताकाशते तत्परित्यागादेव त्यक्त्वा सकलं दृश्यमात्रं न कलयतीति
103262 सकलाकला | व्यावर्तनीयजडाभावान्नाजडा | अनामिकां शब्दाभिलापायोग्यां
103263 वक्ष्यमाणविशेषणां सत्तां धत्ते || १७ ||
103264
103265 दिक्कालाद्यनवच्छिन्नमहासत्तापदं गताम् |
103266 तुर्यतुर्यांशकलितामकलङ्कामनामयाम् || १८ ||
103267
103268 जाग्रत्स्वप्नसुषुप्तिभ्यस्तुर्यो यो विराढिरण्यगर्भाव्याकृतेभ्यस्तुर्योंऽशस्तेन
103269 कलितां प्रथमानाम् || १८ ||
103270
103271 कांचिदेव विशालाक्ष साक्षिवत्समवस्थिताम् |
103272 सर्वतः सर्वदा सर्वप्रकाशस्वादुतत्पराम् || १९ ||

103273
103274 अत एव सर्वनिमित्तकसार्वकालिकसर्ववस्तुगोचरेभ्यः प्रकाशेभ्यः प्रथाभ्यः
103275 स्वादुभ्यश्चानन्देभ्यश्च तत्परां तादृशोत्कर्षवतीं स्पृहणीयतरां च ॥ १९ ॥
103276
103277 एषा द्वितीया पदता कथिता तव सुव्रत ।
103278 तृतीयं शृणु वक्ष्यामि पदं पदविदां वर ॥ २० ॥
103279
103280 उक्तां तुर्याख्यां द्वितीयभूमिकामुपसंहृत्य तृतीयामवतारयति-एषेति ।
103281 पदं भूमिकाम् ॥ २० ॥
103282
103283 एषा दृक्चेत्यवलनादनामार्थापदं गता ।
103284 ब्रह्मात्मेत्यादिशब्दार्थादतीतोदेति केवला ॥ २१ ॥
103285
103286 तस्यां पूर्वापेक्षया ये विशेषास्तानाह-एषेत्यादिना । दृक् ब्रह्माकारा
103287 अखण्डवृत्तिश्चेत्यं तद्व्याप्तं ब्रह्म तयोर्वलनात् क्षीरोदकवदेकीभावान्नमयति
103288 गोचरयतीति नामग्राहकांशः अर्थ्यते गम्यते इत्यर्थो
103289 ग्राह्यांशस्तदुभयशून्यतापदं गता । अत एव
103290 ब्रह्मात्मेत्यादिपदवाक्यार्थादतीता । तथा च संप्रज्ञातसमाधिगम्यैव पूर्वा
103291 भूमिका इयं त्वसंप्रज्ञातसमाधिप्रतिष्ठागम्येति विशेष इति भावः ॥ २१ ॥
103292
103293 स्थैर्येण कालतः स्वस्था निष्कलङ्का परात्मना ।
103294 तुर्यातीतादिनामत्वादपि याति परं पदम् ॥ २२ ॥
103295
103296 स्थैर्येण षड्भावविकारराहित्येन कालतोऽपि स्वस्था स्थिरा । तमसोऽपि परेण आत्मना
103297 स्वेनैव निरस्तकलङ्का । या अतिशयितं परं पदं परमपुरुषार्थ इत्यर्थः ॥ २२ ॥
103298
103299 सा परा परमा काष्ठा प्रधानं शिवभावतः ।
103300 चित्येका निरवच्छेदा तृतीया पावनी स्थितिः ॥ २३ ॥
103301
103302 सर्वेषां पराणां परा परमा काष्ठा अवधिः शिवभावतः
103303 परममङ्गलत्वात्सर्वेभ्यो मङ्गलेभ्यः प्रधानम् । एका मुख्या निरवच्छेदा
103304 विच्छित्तिरहिता चिति स्थितिस्तृतीयेत्यर्थः ॥ २३ ॥
103305
103306 चिरमस्यां प्रतिष्ठायां सर्वाध्वाध्वगदूरगा ।
103307 सा ममाप्यङ्ग वचसां न समायाति गोचरम् ॥ २४ ॥
103308
103309 अस्यां प्रतिष्ठायां भूमिकायां स्थितिः सा सर्वेभ्यः
103310 शैवशास्त्रप्रसिद्धषडध्वभ्यः
103311 श्रुतिप्रसिद्धधूमार्चिराद्यध्वभ्यस्तदध्वगेभ्यस्तैरध्वभिरुपास्ति##-
103312 गोचरं विषयतां न समायाति किंतु स्वयमेवानुभूयत इत्यर्थः ॥ २४ ॥
103313
103314 त्रिमार्गकलनातीतमिति ते कथितं मुने ।
103315 तिष्ठ तस्मिन्पदे नित्यमिति देवः सनातनः ॥ २५ ॥
103316
103317 त्रिभ्यो जाग्रदादिमार्गेभ्यः कलनायास्तत्सापेक्षतुर्यत्वसंख्यायाश्चातीत इति
103318 एवंरूपो देवः सनातनो नित्यो नान्यः । अतोऽन्यदार्तं इति श्रुतेरिति भावः ॥ २५ ॥
103319
103320 एतन्मयमिदं विश्वं मुने तन्मयवेदनात् ।
103321 सत्यसंवेदनान्नेदं न च नेदं मुनीश्वर ॥ २६ ॥
103322
103323 तन्मयवेदनात्तदुपादानकत्वदर्शनात् एतन्मयम् ।
103324 उपादानातीताद्वितीयसत्यसंवेदनात्तु इदं नेदं च । द्विविधविकल्पातीतमित्यर्थः ॥ २६ ॥

103325
103326 नेदं प्रवर्तते किंचिन्नेदं किंचिन्निवर्तते ।
103327 शान्तं समसमाभासं प्रथते स्वस्य कोशवत् ॥ २७ ॥
103328
103329 तदेव स्पष्टमाह-नेदमिति । स्वस्य कोश उदरं तद्वत् ॥ २७ ॥
103330
103331 अद्वैतैक्यादसंक्षोभाद्धनचेतनया तया ।
103332 अविकारादिमत्त्वाच्च नित्यानित्यतया चिरम् ॥ २८ ॥
103333
103334 कुतस्तत्समेभ्योऽपि समाभासं तत्र हेतुमाह-अद्वैतैक्यादिति द्वाभ्याम् ।
103335 प्रलयाब्धिवद्द्वैतैक्याभावेऽपि स्वात्मनि संक्षोभः स्यान्नेत्याह##-
103336 सैन्धवखण्डे द्रवत्वादिविकारस्तद्रस एव दृष्टस्तद्वत्किंचन स्यात्तत्राह##-
103337 यस्मात्तादृशतया ॥ २८ ॥
103338
103339 चिद्धनत्वाच्छिशुशिलाकोशानां जगतामपि ।
103340 मनागपि न भेदोऽस्ति सतामप्यसतामपि ॥ २९ ॥
103341
103342 सतामसतामपि शिशुकल्पितनभः शिलाकोशानां जगतामपि चिद्धनत्वान्न मनागपि
103343 भेदोऽस्तीति समसमाभासमिति सुष्ठूक्तमिति भावः ॥ २९ ॥
103344
103345 समस्तं सुशिवं शान्तमतीतं वाग्विलासतः ।
103346 ओमित्यस्य च तन्मात्रातुर्या स परमा गतिः ॥ ३० ॥
103347
103348 उक्तमेव तुर्यातीतत्वमुपपादयन्नुपसंहरति-समस्तमिति । ओमित्यस्याक्षरस्य
103349 विराडादिभिरकारादिमात्राभेदेन कल्पितैश्चतुर्भिः पादैः प्रविभक्तस्य या
103350 नादबिन्दुशक्तिशान्ताख्यास्तस्या अर्धमात्राया मात्रास्तासु तुर्या शान्ताख्या सा
103351 परमा गतिः । तस्यां हि ओतानुज्ञात्रनुज्ञाऽविकल्पाख्यासु स्थितिषु अविकल्पाख्या
103352 तुरीयतुरीया तापनीयश्रुतौ परमा गतिर्व्युत्पादितेति भावः ॥ ३० ॥
103353
103354 श्रीवाल्मीकिरुवाच ।
103355
103356 इत्युक्तवानमलदृक्परिणामतोऽस्मिन् पारे पदे समुपशान्तरवाभिधाने ।
103357 तूष्णीमतिष्ठदमुना मुनिना च सार्धं विश्रान्तवृत्तिरथ तत्र
103358 मुहूर्तमीशः ॥ ३१ ॥
103359
103360 ईशः शिव इति वर्णितप्रकारेणोक्तवानुपदिष्टवान्सन् अथ अमुना वसिष्ठेन मुनिना
103361 चादन्यैः स्कन्दनन्द्यादिभिश्च सार्धं सम्यगुपशान्तो रवः
103362 प्रणवार्धमात्राचरमभागो यत्रेति व्युत्पत्त्या शान्तरवाभिधाने अस्मिन्
103363 सर्वसंसारपारे तुरीयतुरीयपदे अमला या दृग् भूमानन्दचित् तदैकरस्येन
103364 परिणामतो विश्रान्ता वृत्तिर्यस्य तथाविधः संस्तत्र वसिष्ठाश्रमे मुहूर्तं
103365 तूष्णीं निश्चेष्ट एवातिष्ठत् । मनसः परमपदविश्रान्तौ
103366 तदधीनसर्वेन्द्रियचेष्टानां कुण्ठीभावादिति भावः ॥ ३१ ॥
103367
103368 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाणप्रकरणे पू०
103369 परमेश्वरोपदेशो नाम चतुस्त्रिंशः सर्गः ॥ ३४ ॥
103370
103371 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
103372 परमेश्वरोपदेशो नाम चतुस्त्रिंशः सर्गः ॥ ३४ ॥
103373
103374 पञ्चत्रिंशः सर्गः ३५
103375
103376 श्रीवसिष्ठ उवाच ।

103377
103378 ततो मुहूर्तेन हरो गौरीकमलिनीसरः |
103379 मद्विकासोन्मुखं स्वैरं विकासं बहिराददे || १ ||
103380
103381 ब्रह्मविष्णुहरादीनामत्र यः परमः पिता |
103382 महादेवः परात्मासौ पूज्यसीमान्त ईर्यते ||
103383
103384 भक्तवात्सल्यातिशयान्मम विकासे प्रबोधने उन्मुखो मद्भाग्योदयेन प्रेरितः सन्
103385 बहिर्विकासं नेत्रोन्मीलनं आददे स्वीचकार || १ ||
103386
103387 दृक्चयो द्योतयामास मुखाकाशतलोदितः |
103388 बोधं समुद्गकादर्क अंशुराशिरिवोद्गतः || २ ||
103389
103390 हरस्य मुखलक्षणे निर्मलत्वात्त्रिपुण्ड्रशरदभ्ररेखाङ्कितत्वाच्चाकाशतले उदितो
103391 दृशां चन्द्रसूर्याग्निलक्षणनेत्रायां चयो बोधं समाधेः प्रबुद्धतां
103392 द्योतयामास | यथा समुद्गकान्मेघसंपुटकाद् द्यावाभूमिसंपुटाद्वा उद्गतः
103393 अंशूनां राशिरर्कोऽहर्द्योतयति तद्वदित्यर्थः | अर्क अंशुराशिरित्युत्वविषये यत्वं
103394 छान्दसम् || २ ||
103395
103396 ईश्वर उवाच |
103397
103398 मुने मननमाहूय स्वसत्तैवाशु मीयताम् |
103399 त्वमर्थं माहरानर्थं पवनः स्पन्दतामिव || ३ ||
103400
103401 तत्र भगवांस्तत्त्वबोधोपयोगितया उपायोपेयसारौ प्रथममाह-मुने इति | हे
103402 मुने त्वया प्रथमं मननं विचारमाहूय संनिधाप्य स्वस्य प्रतीचः सत्ता
103403 पारमार्थिकरूपमेवाशु मीयतां प्रमाणैर्निर्धार्यताम् | तत्र प्रतीचि अनर्थं
103404 बहिर्मुखत्वापादनेन सर्वानर्थमूलं त्वमर्थ युष्मत्प्रत्यययोग्यमचिदंशं
103405 मा आहर | यथा अचलमेवाकाशं पवनः स्पन्दतां नयंस्तापरजोजाढ्यादिभाज
103406 करोति तादृशमिति त्वमर्थोपमा || ३ ||
103407
103408 द्रष्टव्यमिह यत्किंचित्तद्दृष्टं किं समं भ्रमैः |
103409 न हि हेयमुपादेयं चेह पश्यामि तद्विदः || ४ ||
103410
103411 ननु त्वमर्थेष्वपि द्रष्टव्यं हेयमुपादेयं च वहस्ति तत्कुतो नादर्तव्यं तत्राह##-
103412 भवति इत्यादिश्रुतेरात्मदर्शनेनैव सर्वद्रष्टव्यानां तत्त्वतो
103413 दृष्टत्वाद्दृष्टैरदृष्टैर्वाभ्रमैः समं सह किं प्रयोजनम् |
103414 तद्विदस्तत्त्वविदः | इह भ्रान्तिविषये || ४ ||
103415
103416 शान्त्यशान्तिमयानेतान्विकल्पान्दलयन्नसिः |
103417 धीरोसि नान्यथास्थित्वा त्वमेव भव चात्मदृक् || ५ ||
103418
103419 उपात्ता इष्टार्थाः प्रहीणा अनिष्टाश्च चित्ताश्वासनहेतुत्वाच्छान्तिमयास्त एव विपरीता
103420 विक्षेपहेतुत्वादशान्तिमयास्तानेतान्विकल्पान् दलयंस्त्वमेव धीरः असिरसि | अन्यथा तु
103421 न धीरोऽसि | अतः आस्थित्वा आस्थां विधाय आत्मदृक् चाद्धीरश्च भव | तथा च
103422 दृश्याकारानास्कन्दितचिदात्मस्वभावावस्थितिरेव मुख्यः कल्प इति भावः || ५ ||
103423
103424 इमां दृश्यदशामाशु बाह्यबोधाय वा पुनः |
103425 समाश्रित्य मदुक्तं त्वं शृणु तूष्णीं स्थितेन किम् || ६ ||
103426
103427 तत्र चेत्त्वमसमर्थस्तर्हि तत्प्राप्तये कंचित्कालं श्रवणाद्यनुकूलां कतिपयामेव
103428 बाह्यदृष्टिमवलम्ब्य निरन्तरं तत्त्वप्रापतये यतस्व न कदाचिदपि

103429 प्रमादादुपरमस्वेत्याह-इयामिति। बाह्यबोधाय सूर्यो यथा सर्वलोकस्य चक्षुर्न
103430 लिप्यते चाक्षुषैर्बाह्यदोषैः। एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन
103431 बाह्यः इति श्रुतौ अलेपकत्वसमर्थनाय सर्वप्रपञ्चबाह्यत्वेन दर्शितस्यात्मनो
103432 बोधाय तूष्णीमात्मलाभप्रयत्नं विना स्थितेनावस्थितेन किं। कः पुरुषार्थ
103433 इत्यर्थः॥ ६॥
103434
103435 इत्युक्त्वा बाह्यबोधस्त्वं मा भवेति त्रिशूलधृक्।
103436 प्राणेनेदं देहगेहं परिस्फुरति यन्त्रवत्॥ ७॥
103437
103438 बाह्याकारदर्शनानां मध्ये देहात्मतादर्शनमेव महाननर्थः
103439 सर्वानर्थबीजं चेति तदेव मम त्याजयितुं भगवान् प्रवृत्त इति वसिष्ठ आह##-
103440 यस्य तथाविधो मा भवेत्याशयेन वक्ष्यमाणदेहात्मताभ्रमनिरासोपायमाहेति
103441 पूरयित्वा व्याख्येयम्। त्रिटितो वा ग्रन्थोऽत्रान्वेष्यः। तत्र देहस्य क्रियाशक्तिरिव
103442 चेतनशक्तिरपि परायत्तेति नात्मप्रसक्तिरित्याशयेन प्राणाधीना देहचेष्टेत्याह##-
103443
103444 प्राणहीनं परिस्पन्दं त्यक्त्वा तिष्ठति मूकवत्।
103445 चालनी पावनी शक्तिः शक्तिः संवेदनी चितिः॥ ८॥
103446
103447 देहस्य चालनी चलनानुकूला क्रियाशक्तिः पावनी पवनप्रयुक्ता संवेदनी शक्तिस्तु
103448 आत्मचितिरेवेत्यर्थः॥ ८॥
103449
103450 सा मूर्ता खादपि स्वच्छा सत्सत्तैवात्र कारणम्।
103451 चिनश्यतः प्राणदेहौ वियोगान्मरुदेव च॥ ९॥
103452
103453 तत्र क्रियाशक्तेर्मूलमाश्रयश्च विनश्यतः। चिच्छक्तिस्तु न विनश्यतीत्याह##-
103454
103455 चिदात्मा खादपि स्वच्छो न विनश्यति किं भ्रमैः।
103456 मनःप्राणमये देहे चित्तत्त्वं परिजायते॥ १०॥
103457
103458 कुतो न विनश्यति तत्रोपपत्तिमाह-मनःप्राणमये इति। लिङ्गदेहसंवलिते इति यावत्
103459 । परिजायते निरावरणमभिव्यज्यते॥ १०॥
103460
103461 मुकुरे ह्यमलाभासे प्रतिबिम्बं प्रवर्तते।
103462 सदप्यग्रगतं वस्तु प्रतिबिम्बक्रियां विना॥ ११॥
103463
103464 स्थूलदेहमात्रस्य तु न चिदभिव्यक्तिसमर्थता मलिनत्वादिति दृष्टान्तेनोपपादयति##-
103465
103466 यथा नास्ति मलोपेते मुकुरे मुनिनायक।
103467 तथा नास्ति गतप्राणे विद्यमानेऽपि देहके॥ १२॥
103468
103469 सर्वगापि चिदुच्छूनबोधात्स्पन्दादिकं प्रति।
103470 बोधात्कलङ्कविमला चिदेव परमं शिवम्॥ १३॥
103471
103472 अत एव सर्वगतापि चिन्मायाकलङ्कावृतत्वाल्लिङ्गदेहादन्यत्र बाह्यक्रियासु
103473 स्वतत्त्वबोधे चासमर्था लिङ्गदेहे अनादृतत्वात्तद्वृत्तिद्वारा
103474 तदुभयसमर्थेत्याह-सर्वगेति।
103475 बाह्याकारेणोच्छूनाद्बोधाद्बुद्धिवृत्तेर्निमित्ताद्देहघटस्पन्दादिकं प्रति
103476 समर्था। ब्रह्माकारबोधात्तु मायाकलङ्कविमला [कलङ्कं विहाय
103477 विमलेत्यर्थः।] स्वयमेव परमं शिवं परमकल्याणं कैवल्याख्यं
103478 व्यवतिष्ठत इत्यर्थः॥ १३॥
103479
103480 विदुर्देवं तदाभासं सर्वसत्तार्थदं तथा।

103481 स हरिः स शिवः सोऽजः स ब्रह्मा स सुरेश्वरः || १४ ||
103482
103483 अत एवाभिव्यक्ता चिदेव सर्वसत्तास्फूर्तिनिमित्तत्वाद्दीव्यति द्योतत इति व्युत्पत्त्या देव इति
103484 विद्वत्पक्ष इत्याह-विदुरिति | तस्या आभासमभिव्यक्तं रूपम्
103485 तदभिव्यक्त्युत्कर्षादेव हरिहरादिदेवानामप्युत्कृष्टदेवत्वमित्याशयेनाह-स
103486 हरिरिति | अजो हिरण्यगर्भः | ब्रह्मा चतुर्मुखः || १४ ||
103487
103488 अनिलानलचन्द्रार्कवपुः स परमेश्वरः |
103489 स एष सर्वगो ह्यात्मा चित्खनिश्चेतनः स्मृतः || १५ ||
103490
103491 चित्खनिः सर्वचैतन्याकारः || १५ ||
103492
103493 देवेशो देवभृद्धाता देवदेवो दिवः पतिः |
103494 महाचितः समुल्लासं मुह्यन्तीव न केचन || १६ ||
103495
103496 ये नाम केचन महाचितः समुल्लासं निरतिशयामभिव्यक्तिं प्राप्य न मुह्यन्तीव
103497 मिथ्यामोहपरवशा न भवन्ति त एते जगति ब्रह्मविष्णुहरादयः परमदेवाः
103498 प्रसिद्धा इत्यर्थः || १६ ||
103499
103500 ये नाम ते जगत्येते ब्रह्मविष्णुहरादयः |
103501 परस्मात्परिनिर्याता ब्रह्मविष्णुहरादयः || १७ ||
103502
103503 यस्तु परब्रह्मदेवस्तद्दृष्ट्या गुणैकदेशाभिमानिन एते
103504 सृष्ट्यादिकार्यार्थमाविर्भूता विस्फुलिङ्गप्राया लक्ष्यन्त इत्याशयेनाह##-
103505
103506 कणास्तप्तायस इव वारिधेरिव बिन्दवः |
103507 तेष्विव भ्रमभूतेषु जातेष्विव परात्पदात् || १८ ||
103508
103509 उपाध्युपहितप्राधान्याभ्यां क्रमाद्दृष्टान्तौ | इदं
103510 चाशास्त्रीयव्यवहारदृशोक्तं विमर्शदृशा तु
103511 ब्रह्मादीनामप्याविर्भावसर्गादिचेष्टानुग्रहोपदेशब्रह्माण्डाधिपत्य##-
103512
103513 स्थितेषु भ्रमबीजेषु कल्पनाजालकर्तृषु |
103514 सहस्रशतशाखेयमविद्योदेति पीवरी || १९ ||
103515
103516 वेदवेदार्थवेदादिजीवजालजटावली |
103517 ततस्तस्या अनन्तायाः प्रसृतायाः पुनः पुनः || २० ||
103518
103519 वेदा वेदार्थाः सर्गादिक्रमाः साङ्गोपाङ्गक्रियाकलापा उपासनभेदा
103520 ब्रह्मतत्त्वव्युत्पादनोपायभेदाश्च तदधिकारिणो जीवास्तेषां
103521 कामकर्मवासनाजननमरणाद्यनर्थजटाश्चेत्येतेषामावली पङ्क्तिरूपा अविद्येति
103522 पूर्वत्रान्वयः | अविद्याविलासभेदास्त्वानन्त्याद्वक्तुमशक्या इत्याह-तत इति || २० ||
103523
103524 संपन्नदेशकालायाः क्रमः स्याद्वर्णनासु कः |
103525 ब्रह्मविष्णुहरादीनामतोऽयं परमः पिता || २१ ||
103526
103527 वर्णनासु कः पुरुषः क्रमत इति क्रमः समर्थः स्यात् | न कश्चिदित्यर्थः | अथवा
103528 क्रम्यत इति क्रमः प्रयोजनम् | किं प्रयोजनं स्यान्न किंचिदित्यर्थः | यतो
103529 ब्रह्मविष्ण्वादयोऽपि तदधीनशरीरोपाधिपरिग्रहा अतः अयं चिदात्मा
103530 महादेवस्तेषामपि पितेत्यर्थः | तथा चाथर्वशिरःश्रुतिः ध्यायीतेशानं
103531 प्रध्यायितव्यम् | सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्ते सर्वाणि
103532 चेन्द्रियाणि सहभूतैः न कारणं कारणानां धाता ध्याता कारणं तु ध्येयः

103533 सर्वैश्वर्येण संपन्नः सर्वेश्वरश्च शंभुराकाशमध्ये इति।
103534 पुराणेष्वप्युक्तम् त्रयस्ते कारणात्मानो जाताः साक्षान्महेश्वरात्। तपसा तोषयित्वा
103535 तं पितरं परमेश्वरम्। परस्परस्माज्जायन्ते परस्परजयैषिणः॥ इति॥ २१॥
103536
103537 मूलबीजं महादेवः पल्लवानामिव द्रुमः।
103538 सर्वसत्त्वाभिधः सर्वः सर्वसंवेदनैककृत्॥ २२॥
103539
103540 महत्यपरिच्छिन्ने आत्मज्ञानयोगैश्वर्ये महीयते पूज्यते सर्वोत्कर्षेण वर्तत इति
103541 महादेवः। तथा च श्रुतिः यः सर्वान्भावान्परित्यज्यात्मज्ञानयोगैश्वर्ये महति
103542 महीयते तस्मादुच्यते महादेवः इति। सर्वेषां सत्त्वानां बलानि अभिधाश्च यस्य॥ २२
103543 ।।
103544
103545 सर्वसत्ताप्रदो भास्वान्वन्द्योऽभ्यर्च्यश्च तद्विदः।
103546 प्रत्यक्षवस्तुविषयः सर्वत्रैव सदोदितः॥ २३॥
103547
103548 तद्विदस्तं परिचितवतः पुंसः प्रत्यक्षं प्रतीन्द्रियं प्रतिवस्तु च स्फुरद्रूपत्वात्स
103549 एव विषयो नान्यः॥ २३॥
103550
103551 संवेदनात्मकतया गतया सर्वगोचरम्।
103552 न तस्याह्वानमन्त्रादि किंचिदेवोपयुज्यते॥ २४॥
103553
103554 संनिधानार्थमाह्वानं प्रकाशनार्थं च मन्त्रा उपयुज्यन्ते। सर्वगते सदा
103555 स्फूर्तिरूपे तु तस्मिन्नाह्वानमन्त्रयोः प्रयोजनमस्तीति भावः।
103556 आदिपदात्प्रतिष्ठापनावगुण्ठनावरोधनादिपरिग्रहः॥ २४॥
103557
103558 नित्याहूतः स सर्वस्थो लभ्यते सर्वतः स्वचित्।
103559 यां यां वस्तुदशां याति तत एव मुने शिवम्॥ २५॥
103560
103561 तत एव लभ्यते॥ २५॥
103562
103563 स्वरूपं समवाप्नोति रूपालोकमनोदृशाम्।
103564 आद्यं पूज्यं नमस्कार्यं स्तुत्यमर्घ्यं सुरेश्वरम्॥ २६॥
103565
103566 रूपाणां तदालोकनानां तन्मननलक्षणानां मनसां तत्साक्षिदृशश्च
103567 स्वरूपं स्वयमेव आप्नोति धत्ते नान्यदित्यर्थः। अतस्तमेव
103568 सर्वपूजादिव्यवहाराणामाद्यं पुरःस्फूर्तिकं देवं पूजादियोग्यं विद्धि॥ २६॥
103569
103570 एनं तं विद्धि वेद्यानां सीमान्तं महतामपि।
103571 एतमात्मानमालोक्य जराशोकभयापहम्।
103572 संभृष्टबीजवज्जन्तुर्न भूयः परिरोहति॥ २७॥
103573
103574 एवं वेद्यानामप्ययमेव सीमेत्याह-एनमिति॥ २७॥
103575
103576 सकलजन्तुषु यत्त्वभयप्रदं विदितमाद्यमुपास्यमयत्नतः।
103577 त्वमजमात्मगतं परमं पदं भवसि किं परिमुह्यसि दृष्टिषु॥ २८॥
103578
103579 यत् सकलजन्तुषु विदितं सत् अभयप्रदं यत्सर्वस्मादाद्यं यत् अयत्नत उपास्यं
103580 तदजं पदं त्वमेव भवसि अतः किं बाह्यदृष्टिषु परिमुह्यसीत्यर्थः॥ २८॥
103581
103582 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वाणप्रकरणे पू०
103583 महादेवस्य पूज्यसीमान्तत्वकथनं नाम पञ्चत्रिंशः सर्गः॥ ३५॥
103584

103585 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
103586 महादेवस्य पूज्यसीमान्तत्वकथनं नाम पञ्चत्रिंशः सर्गः ॥ ३५ ॥
103587
103588 षट्त्रिंशः सर्गः ३६
103589
103590 ईश्वर उवाच ।
103591
103592 ततश्चिद्रूपमेवैकं सर्वसत्तान्तरास्थितम् ।
103593 स्वानुभूतिमयं शुद्धं देवं रुद्रेश्वरं विदुः ॥ १ ॥
103594
103595 सर्वविश्वोद्भवात्तस्य सर्वाकारेण च स्थितेः ।
103596 सर्वास्पर्शाद्विशुद्धेश्च सर्वैश्वर्यं प्रपञ्च्यते ॥
103597
103598 यत एतमात्मानमालोक्य न भूयः परिरोहति ततो हेतोर्दृष्टमात्रः संसाररुजं
103599 द्रावयतीति रुद्रः स चासौ ईष्टे सर्वस्य जगत इतीश्वरः स्वामी तं विदुर्ब्रह्मविदः ।
103600 तथा च श्रुतिः स दृष्टो मृडयाति नः । ध्रुवा अस्मिन्गोपतौ स्यात् इति ॥ १ ॥
103601
103602 बीजं समस्तबीजानां सारं संसारसंसृतेः ।
103603 कर्मणां परमं कर्म चिद्धातुं विद्धि निर्मलम् ॥ २ ॥
103604
103605 चिद्धातुं चित्सारम् ॥ २ ॥
103606
103607 कारणं कारणौघानामकारणमनाविलम् ।
103608 भावनं भावनौघानामभाव्यमभवात्मकम् ॥ ३ ॥
103609
103610 क्रियाशक्त्याः कारणम् । स्वसत्तया सर्वभावानां भावनं सत्ताप्रदम्
103611 परमार्थतस्तु अकारणमभाव्यमभवात्मकं च ॥ ३ ॥
103612
103613 चेतनं चेतनौघानां चेतनात्मनि चेतनम् ।
103614 स्वं चेत्यचेतनं चेत्यपरमं भूरिभावनम् ॥ ४ ॥
103615
103616 चेतनौघानां सर्वबुद्धिवृत्तीनां चेतनं प्रकाशकम् । चेतनात्मनि जीवेऽप्यन्तः
103617 सारभूतं चेतनं चिद्रूपम् । स्वं प्रत्यग्भूतं चेत्यानां बाह्यवेद्यानामपि
103618 चेतनं बुद्धिवृत्तिव्याप्तिकृताभिव्यक्त्या प्रथयितारम् । चेत्यानां
103619 परममधिष्ठानतत्त्वभूतम् । भूरिभावनं आत्मानमेव मायया बहुत्वेन
103620 भावितवन्तम् ॥ ४ ॥
103621
103622 आलोकालोकममलमनालोक्यमलोकजम् ।
103623 आलोकं बीजबीजौघं चिद्घनं विमलं विदुः ॥ ५ ॥
103624
103625 आलोकानां चक्षुरादीनामादित्यादीनां चालोकं प्रकाशकम् । तच्छुक्लं ज्योतिषां
103626 ज्योतिः इति श्रुतेः । अनालोक्यं चक्षुःसूर्याद्यप्रकाश्यम् । आलोकजमलौकिकम् । आलोकं
103627 प्रकाशम् । एकमेव बीजं बीजौघात्मना स्थितम् ॥ ५ ॥
103628
103629 असत्यं सन्मयं शान्तं सत्यासत्यविवर्जितम् ।
103630 महासत्तादिसत्तान्ते चिन्मात्रं विद्धि नेतरत् ॥ ६ ॥
103631
103632 न विद्यते सत् पृथिव्यप्तेजोवाय्वाकाशं च यत्र । सत्येन व्यावहारिकेणासत्येन
103633 प्रातिभासिकेन चावस्थात्रयेण विवर्जितम् । महासत्ता जगत्सत्ता आदिसत्ता
103634 कारणाव्याकृतसत्ता तयोरन्ते बाधे तत्साक्षि यच्चिन्मात्रं तदेव विद्धीत्यर्थः ॥ ६ ॥
103635
103636 स्वयं भवति रागात्मा रञ्जको रञ्जनं रजः ।

103637 स्वयमाकाशमप्याशु कुड्यं भवति मण्डितम् ॥ ७ ॥
103638
103639 रञ्जनबीजावस्थायां रागात्मा विषयस्मृतौ चित्तक्षोभकत्वाद्रजकः ।
103640 विषयसंबन्धे रञ्जनम् । तद्वियोगे चित्तमालिन्यहेतुत्वाद्रजः । आकाश अमूर्तरूपोऽपि
103641 कुड्यं मूर्तं चित्रादिरञ्जितं भवति ॥ ७ ॥
103642
103643 अस्मिंश्चिच्चेतसि स्फारे जगन्मरुमरीचयः ।
103644 स्फुरिताः प्रस्फुरिष्यन्ति प्रस्फुरन्ति च कोटयः ॥ ८ ॥
103645
103646 स्वसत्तामात्रसंपन्नं पदमस्मिन्स्वतेजसि ।
103647 न किंचन च संपन्नमन्यदौष्ण्यादिवानले ॥ ९ ॥
103648
103649 अस्मिन्स्वतेजसि स्वप्रकाशे स्वसत्तामात्रेण जगत्पदं संपन्नमपि किंचन न
103650 संपन्नं वस्त्वन्तराभावाद्यथा अनले ज्वालाङ्गारविस्फुलिङ्गप्रभादिवैचित्र्यं
103651 संपन्नमपि औष्ण्यैकस्वभावाद्वह्नेरन्यन्न तद्वदित्यर्थः ॥ ९ ॥
103652
103653 गर्भीकृतमहामेरुं परमाणुसमं विदुः ।
103654 आच्छादितमहामेरुं परमाणुसमं विदुः ॥ १० ॥
103655
103656 अत एव अणोरणीयान्महतो महीयान् इति श्रुतिः सर्वविरुद्धधर्माणां तत्र समावेशं
103657 दर्शयतीत्याशयेनाह-गर्भीकृतेति । गर्भीकरणं गौणमिति
103658 शङ्कावारणायाच्छादितेत्यर्धेन तद्व्याख्यानम् ॥ १० ॥
103659
103660 गर्भीकृतमहाकल्पो निमेषोऽसावुदाहृतः ।
103661 आक्रान्तकल्पेनानेन न संत्यक्ता निमेषता ॥ ११ ॥
103662
103663 कालतोऽप्यस्मिन्दैर्घ्यसौक्ष्म्यमविरुद्धमित्याह-गर्भीकृतेति । आक्रान्तः
103664 सर्वतोव्याप्तः कल्पो द्विपरार्धान्तकालो येन । अत्रापि प्राग्वदपौनरुक्त्यम् ॥ ११ ॥
103665
103666 वालाग्रकादप्यणुना व्याप्तानेनाखिला मही ।
103667 सप्ताब्धिवसनाप्युर्वी [वलनापीति इति पाठः ।] नास्यान्तमधिगच्छति ॥ १२
103668 ॥
103669
103670 उक्तं प्रपञ्चयति-वालाग्रेत्यादिना ॥ १२ ॥
103671
103672 अकुर्वन्नेव संसाररचनां कर्तृतां गतः ।
103673 कुर्वन्नेव महाकर्म न करोत्येव किंचन ॥ १३ ॥
103674
103675 द्रव्यमप्येष निर्द्रव्यो निर्द्रव्योऽपि हि द्रव्यवान् ।
103676 अकायोऽपि महाकारो महाकायोऽप्यकायवान् ॥ १४ ॥
103677
103678 महाकायो ब्रह्माण्डशरीरः ॥ १४ ॥
103679
103680 अद्याप्येष सदा प्रातः प्रातरप्यद्यतां गतः ।
103681 न वाद्यमद्य न प्रातस्त्वद्य प्रातश्च वा सदा ॥ १५ ॥
103682
103683 अद्यशब्दवाच्यषष्टिघटिकात्मकोऽपि प्रातः आद्यत्रिमुहूर्तमात्रात्मा परमार्थतस्तु
103684 न वा आद्यं मुहूर्त न वा अद्य नापि प्रातः । अद्यप्रातरादिशब्दानां यदि
103685 तत्तदधिष्ठानचिति लक्षणा तदा सदैव स तत्तच्छब्दयोग्य इत्यर्थः ॥ १५ ॥
103686
103687 भिंडिं भिंडिं खिले मत्ता पुरुपिच्छिलिसालघम् ।
103688 विविच्चलित्सदालोका लासो गुलुगुलुः शिली ॥ १६ ॥

एवमुन्मत्तबालादिप्रलपितनिरर्थकापशब्दजालमपि स एवेति तेषु कांश्चिदनुकृत्य
दर्शयति-भिण्डिमिति ॥ १६ ॥

इत्याद्यनर्थकं वाक्यं तथा सत्यं स एव च ।
न तदस्ति न यत्सत्यं न तदस्ति न यत्त्वसौ [न यन्मृषा इति पाठः ।] ॥
१७ ॥

तथा सत्यं सार्थकं वेदशास्त्रादिशब्दजालमपि स एव । उक्तं सर्वं पिण्डीकृत्य
व्यतिरेकमुखेनाप्याह-न तदस्तीति ॥ १७ ॥

यस्मिन्सर्वं यतः सर्वं यः सर्वं सर्वतश्च यः ।
यश्च सर्वमयो नित्यं तस्मै सर्वात्मने नमः ॥ १८ ॥

अयमेव प्रह्लादेनापि प्राग्दृष्ट्वा प्रणत इति स्मारयन्नुपसंहरति-यस्मिन्निति ॥
१८ ॥

यत्रान्तरालगहनेन विलासवत्या हेलाविलोलघनसर्जितयामलेन ।
मल्लेन पल्लवदलामलमालितानां लक्ष्मीलताऽविरलिता वलितेव मुष्टिः ॥ १९ ॥

यात्रारोपादसतोऽपि सत्ता भवतीति यदुक्तं सत्संभावनाय यथा यत्रानर्थका अपि
श्लोकाः सार्थका भवन्तीति दृष्टान्तप्रदर्शनमभिप्रेत्यानर्थकं
श्लोकमुदाहरति-यत्रेति । यत्र इत्यादिकानां शब्दानामर्थश्रीः सत्यरूपिणीति
उत्तरसर्गाद्येनान्वयस्तत्रैतद्व्याख्यास्यामः ॥ १९ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये देव० मोक्षोपायेषु निर्वाणप्रकरणे
पू० परमेश्वरवर्णनं नाम षट्त्रिंशः सर्गः ॥ ३६ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
परमेश्वरवर्णनं नाम षट्त्रिंशः सर्गः ॥ ३६ ॥

सप्तत्रिंशः सर्गः ३७

ईश्वर उवाच ।

इत्यादिकानां शब्दानामर्थश्रीः सत्यरूपिणि ।
तस्मिन्सर्वेश्वरे सर्वसत्तामणिसमुद्गके ॥ १ ॥

सद्योगादसतां सत्ता शिवस्यानन्तशक्तयः ।
प्रधानशक्तेर्नियतेर्नृत्यं चात्रोपवर्ण्यते ॥

यस्मिन्नीश्वरे इत्यादिकानां सर्गान्तोदाहृतश्लोकप्रभृतीनां शब्दानामर्थश्रीः
सत्यरूपिणी सत्यप्राया भवति तस्मिन्सर्वजगत्सत्तालक्षणस्य मणेः समुद्गके
संपुटप्राये मायाशबले सर्वेश्वरे का विमलाभासाः शक्तयो न कचन्तीति
परेणान्वयः । तस्य श्लोकस्य लोकतः परमार्थतश्च यथा सत्यार्थता तथा वर्ण्यते ।
तत्र लोकतस्तावत्कश्चिद्वृक्षोऽनेन वर्ण्यते । पल्लवैः
किसलयैर्दलैर्हरितपत्रैश्चामलैरम्लानैर्मालितानां लतानां मल्लेन कान्तेन । सर्वतो
लताभिरालिङ्गितेनेति यावत् । अत एवान्तरालेषु स्कन्धकोटरशाखान्तरालेषु करालेषु
गहनेन दुष्प्रवेशेन । दुरारोहेणेति यावत् । स्वयं चामलेन अम्लानेनानेन तरुणा
पुष्पफलपल्लवभ्रमरखगादिसमृद्ध्या विलासवत्या हेलया अवहेलनेन विलोलानि
तरलितानि घनानां मेघानां
विद्युत्संवलनस्निग्धशिशिरश्यामतासौन्दर्यातिशयविभ्रमसर्जितानि यया ।

103741 गर्जितयेति पाठे सौन्दर्यातिशयाभिमानप्रयुक्तगर्जनानि ययेति योज्यम् | अथाविधया
103742 स्वलक्ष्म्या वृक्षान्तरेषु वनान्तरेषु सर्वजगति वा प्रसिद्धा लक्ष्मीलता
103743 स्वात्मन्येवोपसंग्रहाद्वलिता संकोचिता मुष्टिरिवाऽविरलिता घनीकृतेत्यर्थः | अथवा
103744 भगवान् विष्णुरत्र वर्ण्यते | पल्लवैर्दलैऽस्चामलया वनमालया मालितानां
103745 पुरुषाणां मध्ये मल्लेन श्रेष्ठेनामलेन परमार्थतो वसनभूषणादिना च
103746 निर्मलेन | अन्तराले जठरे चतुर्दशभुवनभरितत्वाद्गहनेन विष्णुना
103747 जगन्मोहनसौन्दर्यविलासवत्या प्राग्वदेव हेलाविलोलघनगर्जितया स्वदेहलक्ष्म्या
103748 स्वमालिङ्गन्ती लक्ष्मीलक्षणाललनापि वलिता मुष्टिरिवाविरलिता अपृथक्कृतेत्यर्थः |
103749 परमार्थतोऽप्यन्तरालेविचित्रकामकर्मवासनागहनेनाज्ञानलक्षणेन गलेन
103750 पल्लवप्रायैः सूक्ष्मभूतैस्तत्कार्यैर्दलप्रायैः स्थूलभूतैर्भुवनमदैश्च
103751 [भुवनामोदैरित्यपि पाठः |] मालितानां जगतां या लक्ष्मीलता सा हेलया
103752 लीलया नभसि विलोलानां घनानां गर्जितमिव गर्जितं यस्यास्तथाविधया
103753 महावाक्यश्रुत्या विलसनं विलासस्तद्वत्या ब्रह्मविद्याकरिण्या मल्लेन
103754 प्रतिमल्लताडनाय वलिता मुष्टिरिव अविरलिता चिदेकघनीकृता |
103755 एवमर्थान्तराण्यप्यस्य श्लोकस्य सुधीभिरूह्यानि | इत्यादिकानामित्यत्र
103756 आदिपदादनर्थकत्वेन प्रसिद्धतमानि जरद्गवदशदाडिमादिवाक्यानि गृह्यन्ते |
103757 जरद्गवः कम्बलपादुकाभ्यां द्वारि स्थितो गायति मद्रकाणि | तं ब्राह्मणी
103758 पृच्छति पुत्रकामा राजन् रुमायां लशुनस्य कोऽर्घः || अस्यापि लौकिकः
103759 पारमार्थिको वार्थो ब्रह्मसत्तयैव कल्पयितुं शक्यते | तथाहि | लौकिकस्तावत्##-
103760 वाहीकः स्वगृहद्वारि स्थितः सन्मद्रकाणि मद्रदेशप्रसिद्धगीतानि गायति | तं
103761 काचिल्लशुनचिकित्स्यरोगयुक्तेन पुत्रेण सह लवणाकरं प्रति केनचिदावश्यकेन
103762 कार्येण गमिष्यन्ती तत्र पुत्रजीवनकामा ब्राह्मणी लवणाकरादयमागत इति लोकेभ्यः
103763 श्रुत्वा हे राजन्निति सबहुमानं संबोध्य रुमायां लवणाकरे लशुनस्य कोऽर्घः
103764 किं समर्घं लशुनमुत महर्घमिति पृच्छतीत्यर्थः | पारमार्थिकोऽपि##-
103765 विषयभोगार्थ स्थितो जरद्गवसदृशो जीवो वैषयिकाण्येव मद्रकाणि
103766 स्त्रीपुत्रादिमङ्गलगीतानि बहिर्मुखो गायति न मनागपि स्वतत्त्वं दिदृक्षते
103767 तमेतादृशमुपलभ्य पुंनाम्नः संसारनरकान्नायत इति पुत्रो
103768 ब्रह्मात्मताबोधस्तत्कामा ब्राह्मणीव [भुवनामोदैरित्यपि पाठः |]
103769 ब्राह्मणी श्रुतिः पृच्छति-हे राजन् स्वयं ज्योतिष्ट्वेन विराजमान स्वचैतन्येन
103770 सर्वं जगद्रञ्जयंश्च हे आत्मन् रुमायां
103771 सर्वाविद्याकामकर्मबीजविनाशकत्वाल्लवणाकरोषरप्राये त्वत्स्वरूपे परमशुद्धे
103772 अत्यन्तापवित्रत्वाद्ब्राह्मणाभोग्यलशुनतुल्यस्य भोग्यस्य कोऽर्घो मौल्यविचारस्तव |
103773 तस्मात्परित्यज्य बाह्यदृष्टिं स्वात्मारामो भवेत्याशयेन कोऽयमात्मेति
103774 वयमुपास्महे | कतरः स आत्मा किं कारणं ब्रह्म कुतः स्म जाताः इत्यादि
103775 पृच्छतीत्यर्थः | एवं दशदाडिमादिवाक्येष्वप्यर्थसत्ता ऊह्या | भिंडिं
103776 भिंडिमिति श्लोकस्य तु
103777 बालमत्ताद्यव्यक्तजल्पितानुकरणस्यानुकार्यैरेवार्थैरर्थवत्ता | अनुकार्यस्य
103778 त्वव्यक्तत्वादेव न वाक्यतेति || १ ||
103779
103780 का नाम विमलाभासास्तस्मिन्परमचिन्मणौ |
103781 न कचन्ति विचिन्वन्ति विचित्राणि जगन्ति याः || २ ||
103782
103783 या बीजशक्तयो जगन्ति विचिन्वन्ति आरोपयन्ति ताः शक्तयः का नाम विमलाभासाः
103784 स्फुटा भूत्वा न कचन्ति नाविर्भवन्ति || २ ||
103785
103786 एषा बीजकणान्तस्था चित्सत्ता स्ववपुर्मयम् |
103787 लब्ध्वा मृत्कालवार्यादि करोत्यङ्कुरमोदनम् || ३ ||
103788
103789 ताः शक्तीरेव युक्त्योदाहरति-एषेत्यादिना | व्रीह्यादिबीजकणान्तस्था एषा ऐश्वरी
103790 चित्सत्ता क्षेत्रे परिष्कृतमृत्कालवार्यादिसहकारिकारणानि लब्ध्वा
103791 प्रथममङ्कुरं करोति क्रमेण तण्डुलीभूय साक्षात्पुरुषभोज्यमोदनं
103792 करोतीत्यर्थः || ३ ||

103793
103794 फेनावर्तविवर्तान्तर्वर्तिनी रसरूपिणी ।
103795 कठिनेन्द्रियसंबन्धे करोति स्पन्दमम्भसाम् ॥ ४ ॥
103796
103797 फेनाः आवर्ताः विवर्ताश्च अन्तर्वर्तिनो यस्याः । तेष्वन्तर्वर्तिनी अनुगता वा
103798 रससामान्यरूपिणी ऐश्वरशक्तिः कठिनशिलातलादिसंबन्धे
103799 निम्नदेशोपसर्पणलक्षणे जिह्वेन्द्रियसंयोगे तूदरोपसर्पणरूपं स्पन्दं करोति ॥ ४
103800 । ।
103801
103802 एषा कुसुमगुच्छेषु रसरूपेण संस्थिता ।
103803 कचति घ्राणरन्ध्रेषु करोति परिफुल्लताम् ॥ ५ ॥
103804
103805 रसरूपेण मकरन्दसंवलितगन्धरूपेण नासापुटयोः परिफुल्लताम् ॥ ५ ॥
103806
103807 शिलाङ्गस्था [चित्सत्ता तु शिलाङ्गाभामिति पाठः । मूलस्थपाठे तु चित्सत्तेति
103808 विशेष्यमुपक्रमलब्धमिति बोध्यम् ।] शिलाङ्गाभामसतीं सत्यतापदम् ।
103809 सर्गाधारदशां धत्ते गिरीन्द्रः स्थितिलीलया ॥ ६ ॥
103810
103811 शिलाङ्गा प्रतिमा तदाभाम् । शिलाव्यतिरेकेण पृथगसतीम् ।
103812 व्यावहारिकसत्यतापदम् । सृज्यत इति सर्गः कार्यं तदाधारः शिलेति
103813 भेदविकल्पदशामविकृतैव धत्ते । यथा अविकृतो
103814 गिरीन्द्रस्तृणवृक्षलतादिकार्याणि धत्ते तद्वदित्यर्थः ॥ ६ ॥
103815
103816 पगे नो। ८६० अन्द् ८६१ रेपेअत्
103817
103818 पवनस्पन्दकोशात्मरूपिणीव त्वगिन्द्रियम् ।
103819 संसाधयत्यात्मसुतं पितेवात्मतयानया ॥ ७ ॥
103820
103821 एवं पवनलक्षणो यः स्पन्दानां सर्वक्रियाणां कोशस्तदात्मस्वरूपा त्वगिन्द्रियं
103822 स्पर्शग्रहणाय संसाधयत्यनुकूलयति । यथा पिता आत्मसुतं स्वकार्ये प्रवर्तयति
103823 तद्वत् । अनया रीत्या इन्द्रियान्तरेष्वपि प्रवृत्तिशक्तयो बोध्या इत्यर्थः ॥ ७ ॥
103824
103825 अशेषसारसंपिण्डमध्यात्मानं स्वसिद्धये ।
103826 भावयित्वा नकिंचित्त्वमिव खत्वं करोत्यलम् ॥ ८ ॥
103827
103828 यथा प्रवृत्तिशक्त्या संसरति तथा निवृत्तिशक्त्या अशेषस्य जगतः साराणां
103829 सत्तानां संपिण्डं एकघनमात्मानमधिकृत्य श्रवणमननाद्युपायैः
103830 स्वसिद्धये मोक्षाय भावयित्वा नेतिनेतीति सर्वप्रतिषेधेन नकिंचित्त्वं शून्यत्वमिव
103831 सर्वस्य करोति ॥ ८ ॥
103832
103833 स्वसत्ताप्रतिबिम्बाभमाकाशमुकुरोदरे ।
103834 धत्ते कल्पनिमेषाङ्कं कालाख्यममलं वपुः ॥ ९ ॥
103835
103836 आमहापञ्चमेशानं परिणाममया इमे ।
103837 इदमित्थमिदं नेति नियतिर्भवति स्वयम् ॥ १० ॥
103838
103839 सर्वशक्तिभेदानेकीकृत्य तत्कार्येयत्तामवधारयति-आमहेति । ब्रह्मा विष्णुश्च
103840 रुद्रश्च ईश्वरश्च सदाशिवः इत्युत्कर्षपरम्परायां पञ्चममीशानं
103841 सदाशिवमभिव्याप्य नियतिः सर्वकार्यव्यवस्थापिका मूलशक्तिः ॥ १० ॥
103842
103843 साक्षिणि स्फार आभासे गृहे दीप इव क्रियाः ।
103844 सत्ये तस्मिन्प्रकाशन्ते जगच्चित्रपरम्पराः ॥ ११ ॥

103845
103846 कथं तन्नियतिः स्वयं भवतीति चेन्नियमेन तत्प्रथाहेतुत्वादित्याह-साक्षिणीति ।
103847 स्फारेऽपरिच्छिन्ने । आभासे ज्योतिषि ॥ ११ ॥
103848
103849 परमाकाशनगरनाट्यमण्डपभूमिषु ।
103850 स्वशक्तिवृत्तं संसारं पश्यन्ती साक्षिवत्स्थिता ॥ १२ ॥
103851
103852 आकाशनगरं गन्धर्वपुरं तत्रत्यनाट्यमण्डपभूमिप्रायजाग्रदादिषु ॥ १२ ॥
103853
103854 श्रीवसिष्ठ उवाच ।
103855
103856 शिवस्यास्य जगन्नाथ शक्तयः काः कथं स्थिताः ।
103857 साक्षिता का च किं तासां वृत्तं स्यात्किंयदेव तत् ॥ १३ ॥
103858
103859 का इति सामान्यविषयभागप्रश्नः । कथमिति प्रातिस्विकप्रकारभेदप्रश्नः ॥ १३ ॥ १४ ॥
103860
103861 ईश्वर उवाच ।
103862
103863 अप्रमेयस्य शान्तस्य शिवस्य परमात्मनः ।
103864 सौम्य चिन्मात्ररूपस्य सर्वस्यानाकृतेरपि ॥ १४ ॥
103865
103866 इच्छासत्ता व्योमसत्ता कालसत्ता तथैव च ।
103867 तथा नियतिसत्ता च महासत्ता च सुव्रत ॥ १५ ॥
103868
103869 सोऽकामयत बहु स्याम् इति श्रुतेः प्रथममिच्छासत्ताभिव्यक्ता ततो व्योमाभिव्यक्तौ
103870 तत्सत्ता तत्र कालात्मनः सूत्रस्याभिव्यक्तौ कालसत्ता ततो
103871 नियतसंस्थानभूतभौतिकाविर्भावे नियतिसत्ताभिव्यज्यते तासु सर्वास्वनुगता
103872 महासत्तेति भावः ॥ १५ ॥
103873
103874 ज्ञानशक्तिः क्रियाशक्तिः कर्तृताऽकर्तृतापि च ।
103875 इत्यादिकानां शक्तीनामन्तो नास्ति शिवात्मनः ॥ १६ ॥
103876
103877 ऐश्वरानसाधारणशक्तिभेदानुक्त्वा जीवसाधारणांस्तानाह-ज्ञानशक्तिरिति ।
103878 कर्तृता प्रवृत्तिशक्तिरकर्तृता निवृत्तिशक्तिश्च क्रियाशक्तेरवान्तरभेदौ ।
103879 यद्यपीच्छाशक्तिरपि जीवेऽस्ति तथापि ज्ञानेश्वरवत्क्रियां विना स्वविषयं साधयतीति
103880 क्रियाशक्तिपरवशा तत्रैवान्तर्भूतेति भावः । इति सामान्येन परिगणिता अपि
103881 प्रातिस्विकरूपेण गणयितुमशक्या इत्याह-इत्यादिकानामिति । एतेन
103882 चतुर्थप्रश्नस्याप्युत्तरमुक्तमेव ॥ १६ ॥
103883
103884 श्रीवसिष्ठ उवाच ।
103885
103886 शक्तयः कुत एवैता बहुत्वं कथमासु च ।
103887 उदयश्च कथं देव भेदाभेदश्च कीदृशः ॥ १७ ॥
103888
103889 अद्वितीये शक्तिशक्तिमत्त्वभेदे एव निमित्तं दुर्वचम् दूरे
103890 शक्त्यवान्तरभेदवैचित्र्यादीति मन्यमानो वसिष्ठ आक्षिपति-शक्तय इति ।
103891 शक्तितद्वतोर्भेदोऽभेदश्च विरुद्धः कीदृशः । किमुपपत्तिक इत्यर्थः ॥ १७ ॥
103892
103893 ईश्वर उवाच ।
103894
103895 शिवस्यानन्तरूपस्य सैषा चिन्मात्रतात्मनः ।
103896 एषा हि शक्तिरित्युक्ता तस्माद्भिन्ना मनागपि ॥ १८ ॥

मायिकविकल्पककल्पनाप्रयुक्तचिद्भेदा एव शक्तय इत्युच्यन्ते ते वस्तुतः
शिवादभिन्ना एवेति न कश्चिद्विरोध इत्याशयेनेश्वरः समाधत्ते-शिवस्येति।
अनन्तरूपस्येति। माया हि स्वरूपतोऽनन्तं शिवं गुणतः शक्तितः कार्यतश्चानन्तं
कुर्वाणा तस्यानन्त्यं वर्धयतीव न तु विहन्तीति भावः। मनागपि विकल्पनाद्भिन्ना
न वस्तुत इत्यर्थः॥ १८॥

ज्ञत्वकर्तृत्वभोक्तृत्वसाक्षित्वादिविभावनात्।
शक्तयो विविधं रूपं धारयन्ति बहूदकम्॥ १९॥

विभावनाद्विकल्पनात्। तरङ्गादिभेदविकल्पैर्बहु उदकमिव बहूदकम्॥ १९॥

एवं जगति नृत्यन्ति ब्रह्माण्डे नृत्यमण्डपे।
कालेन नर्तकेनेव क्रमेण परिशिक्षिताः॥ २०॥

ऋतुमासादिकालनियतिक्रमेण परिशिक्षिता नटा इव॥ २०॥

यैषा परपराभासा सैषा नियतिरुच्यते।
क्रियाथ कृतिरिच्छा वा कालेत्यादिकृताभिधा॥ २१॥

पराभिधाना परार्धद्वयकाला। अपराभिधाना अवान्तरकल्पतदवयवरूपा। सा
ईश्वरस्य क्रियेति कृतिर्यत्न इति अथवा इच्छेति कामं वादिनः कल्पयन्तु अस्माभिः
कलनामात्रत्वात्कालः कल्पनात्कल्प इति विकल्पपर्यायनामभिरेव कृताभिधेत्यर्थः
॥ २१॥

आमहारुद्रपर्यन्तमिदमित्थमिति स्थितेः।
आतृणापद्मजस्पन्दं नियमान्नियतिः स्मृता॥ २२॥

तस्यां कालशक्तौ नियतिपदं व्युत्पादयति-आमहेति। द्विविधो हि नियमः।
इदमित्थं संस्थानमित्याकारनियमो विकारनियमश्च। तत्राद्य आतृणं
आमहारुद्रपर्यन्तम् द्वितीयस्तु आतृणमापद्मजस्पन्दमित्युभयथा
नियमनान्नियतिशब्दवाच्येत्यर्थः॥ २२॥

नियतिर्नित्यमुद्वेगवर्जिताऽपरिमार्जिता।
एषा नृत्यति वै नृत्यं जगज्जालकनाटकम्॥ २३॥

यावत्तत्त्वबोधेनाऽपरिमार्जिता तावन्नृत्यतीत्यर्थः॥ २३॥

नानारसविलासाढ्यं विवर्ताभिनयान्वितम्।
कल्पक्षणहतानेकपुष्करावर्तघर्घरम्॥ २४॥

तन्नृत्ये नाटकलक्षणानि दर्शयति-नानेत्यादिना। कल्पः प्रलयस्तल्लक्षणे
नाट्योपरमक्षणे हता विद्युदाघातवादिता अनेके पुष्करावर्ताख्या मेघा एव
घर्घरा वाद्यभेदा यत्र॥ २४॥

सर्वर्तुकुसुमाकीर्णं धारागोलकमन्दिरम्।
भूयोभूयः पतद्वर्षभूरिस्वेदजलोत्करम्॥ २५॥

धारा वर्षधारास्तद्युक्तं ब्रह्माण्डगोलकमेव महानाट्यमन्दिरं यस्य॥ २५॥

पयोदपल्लवालोलनीलाम्बरकृतभ्रमम्।
पूर्णं संशुद्धसप्ताब्धिरत्नौघवलयाकुलम्॥ २६॥

103949
103950 पयोदा मेघा एव पल्लवा दशाप्रान्तास्तैरालोलं यन्नीलमम्बरमाकाशं तदेव
103951 श्लेषान्नीलवस्त्रं तेन कृता दिनरात्र्यादिनानावेषभ्रमा यत्र।
103952 संशुद्धैर्निर्णिक्तैः सप्ताब्धिलक्षणैः रत्नौघखचितवलयैराकुलम्॥ २६॥
103953
103954 यामपक्षदिनप्रेक्षाकटाक्षोद्भासिताम्बरम्।
103955 मज्जनोन्मज्जनव्यग्रकुलाद्रिकुलशेखरम्॥ २७॥
103956
103957 मज्जनं वलयैस्तिरोधानम् उन्मज्जनमुद्घाटनं ताभ्यां व्यग्राणि
103958 कुलाद्रिकुलान्येव शेखराणि शिरोग्राणि यत्र॥ २७॥
103959
103960 भ्रमच्छशिमणिप्रोतगङ्गामुक्ताफलत्रयम्।
103961 संदृष्टादृष्टसंध्याभ्रविलोलकरपल्लवम्॥ २८॥
103962
103963 मुक्ताफलत्रयपदेन हारत्रयं लक्ष्यते॥ २८॥
103964
103965 अनारतरणल्लोललोकालंकारकोमलम्।
103966 भूरिभूतलपातालनभस्तलपदक्रमम्॥ २९॥
103967
103968 लोका जना भुवनानि वा तल्लक्षणैरलंकारैः कोमलं मञ्जुलम्। पदैः क्रम्यन्त इति
103969 पदक्रमाः नटीपादविन्यासस्थानादिभेदाः॥ २९॥
103970
103971 मग्नोन्मग्नमहानेकताराघर्मकणोत्करम्।
103972 चन्द्रार्ककुण्डलस्पन्दस्मितस्फुटनभोमुखम्॥ ३०॥
103973
103974 मग्ना अस्तमिता उन्मग्ना उदिताश्च महत्यो भास्वरास्तारा एव घर्मकणोत्कराः
103975 स्वेदबिन्दुसमूहा यत्र। चन्द्रार्ककुण्डलयोः स्पन्दैः स्मितैरीषद्धास्यैः स्फुटं
103976 व्यक्तीकृतं नभोलक्षणं नटीमुखं यत्र॥ ३०॥
103977
103978 कल्पितानेकब्रह्माण्डकपाटकवितानकम्।
103979 सुखदुःखदशादोषभावाभावरसान्तरम्॥ ३१॥
103980
103981 ब्रह्माण्डपदेन तद्भित्तयो लक्ष्यन्ते। ता एव कपाटकानीव वितानकानि तिरस्करिण्यो
103982 यत्र। लुठन्तः असुरव्याकुलीकृता ऊर्ध्वाधो लोकान्तरव्यूहा एव ध्वनन्तः
103983 मुक्तागुम्फितदशा उत्तरीयान्तरीयपटपल्लवा यत्र।
103984 सुखदुःखयोराविर्भावादिदशास्तन्निमित्तदोषाश्च भावाः स्थायिभावा
103985 अभावास्तद्भिन्ना विभावाः संचारिभावा रसान्तराणि शृङ्गारादिरसभेदाश्च
103986 यत्र। स्थायिभावानामेव विभावादिभिर्व्यज्यमानानां
103987 रसत्वमित्यालंकारिकसिद्धान्तादिति भावः॥ ३१॥
103988
103989 अस्मिन्विकारवलिते नियतेर्विलासे संसारनाम्नि चिरनाटकनाट्यसारे
103990 साक्षी सदोदितवपुः परमेश्वरोऽयमेकः स्थितो न च तया न च तेन भिन्नः॥ ३२॥
103991
103992 एवं नाटकं वर्णयित्वा तद्द्रष्टारं विमर्शे स्वमात्रपरिशेषं परमात्मानं
103993 दर्शयति-अस्मिन्निति। विकारैः
103994 प्रसिद्धैर्नाट्यशास्त्रप्रसिद्धस्वेदस्तम्भरोमाञ्चादिविकारैश्च वलिते नियतेर्नट्या
103995 अस्मिन्संसारनाम्नि चिरनाटकनाट्यसारे विलासे साक्षी साक्षाद्द्रष्टा प्रभुस्थानीयः
103996 अयं प्रत्यग्रूपः परमेश्वर एक एव स्थितः स च तया नट्या तेन नाट्येन च न
103997 परमार्थतो भिन्न इत्यर्थः॥ ३२॥
103998
103999 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वाणप्रकरणे पू०
104000 नियतिनृत्यं नाम सप्तत्रिंशः सर्गः॥ ३७॥

104001
104002 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
104003 नियतिनृत्यं नाम सप्तत्रिंशः सर्गः ॥ ३७ ॥
104004
104005 अष्टत्रिंशः सर्गः ३८
104006
104007 ईश्वर उवाच।
104008
104009 एष देवः स परमः पूज्य एष सदा सताम्।
104010 चिन्मात्रमनुभूत्यात्मा सर्वगः सर्वसंश्रयः ॥ १ ॥
104011
104012 शिवस्यानन्तचिन्मूर्तेर्बहिर्ध्यानेन पूजनम्।
104013 ज्ञानेन च महापुण्यंन् विमुक्तिफलमीर्यते ॥
104014
104015 स एष नियतिनाटकसाक्षी चिदात्मैव परमो देवः ॥ १ ॥
104016
104017 घटे पटे वटे कुड्ये शकटे वानरे स्थितः।
104018 शिवो हरो हरिर्ब्रह्मा शक्रो वैश्रवणो यमः ॥ २ ॥
104019
104020 तस्य वक्ष्यमाणप्रकारेण पूजने सर्वदेवपूजनमन्तर्भवतीत्याशयेन तस्य
104021 सर्वात्मतामाह-घटे इति ॥ २ ॥
104022
104023 बहिरन्तश्च सर्वात्मा सदा स्वात्मा सुबुद्धिभिः।
104024 विविधेन क्रमेणैष भगवान्परिपूज्यते ॥ ३ ॥
104025
104026 विविधेन वक्ष्यमाणबाह्याभ्यन्तरभेदेन क्रमेण ॥ ३ ॥
104027
104028 बहिस्तावन्महाबुद्धे क्रमेण परिपूज्यते।
104029 येन तच्छृणु तत्त्वज्ञ श्रोष्यस्यन्तःक्रमं ततः ॥ ४ ॥
104030
104031 पूजाक्रमेषु सर्वेषु देहगेहं पवित्रकम्।
104032 त्याज्यं देहावबोधात्म परं यत्नात्पवित्रकम् ॥ ५ ॥
104033
104034 शास्त्रोक्तसंस्कारैः स्नानाचमनादिभिश्च पवित्रकमपि देहगेहं यत्नात्त्याज्यम्।
104035 देहस्यावबोधः साक्षिचित्प्रकाशस्तद्रूपं परं पवित्रकं यत्नात्परिशोध्य
104036 ग्राह्यमिति शेषः ॥ ५ ॥
104037
104038 पूजनं ध्यानमेवान्तर्नान्यदस्त्यस्य पूजनम्।
104039 तस्मात्त्रिभुवनाधारं नित्यं ध्यानेन पूजयेत् ॥ ६ ॥
104040
104041 पूजनसाधनं क्रिया च ध्यानमेव ॥ ६ ॥
104042
104043 चिद्रूपं सूर्यलक्षाभं समस्ताभासभासनम्।
104044 अन्तस्थचित्प्रकाशं स्वमहंतासारमाश्रयेत् ॥ ७ ॥
104045
104046 समस्तानामाभासानां सूर्यादितेजसां बुद्धिवृत्तीनां च भासनम्। अहंतायाः
104047 सारं शोधितमन्तस्थचित्प्रकाशम् ॥ ७ ॥
104048
104049 अपारपरमाकाशविपुलाभोगकन्धरम्।
104050 अनन्ताधस्तनाकाशकोशपादसरोरुहम् ॥ ८ ॥
104051
104052 आकाशादपि विपुलाभोगा कन्धरा कण्ठादूर्ध्वभागो यस्य। अनन्तो

104053 योऽधस्तनाकाशकोशः स पादसरोरोहे यस्य ॥ ८ ॥
104054

104055 अनन्तदिक्तटाभोगभुजमण्डलमण्डितम् ।
104056 नानाविधमहालोकगृहीतपरमायुधम् ॥ ९ ॥
104057

104058 नानाविधेषु परितो ब्रह्माण्डेषु ये सत्यादयो महान्तो लोकास्ते दिग्भुजगृहीतानि
104059 परमायुधानि यस्य ॥ ९ ॥
104060

104061 हृत्कोशकोणविश्रान्तब्रह्माण्डौघपरम्परम्
104062 प्रकाशपरमाकाशपारगापारविग्रहम् ॥ १० ॥
104063

104064 तर्हि ते किं ब्रह्माण्डाद्बाह्याः नेत्याह-हृत्कोशेति । प्रकाशरूपः
104065 परमाकाशात्तमसः पारगः स्वयमपारो विग्रहः स्वरूपं यस्य ॥ १० ॥
104066

104067 अध ऊर्ध्वं चतुर्दिक्षु विदिक्षु च निरन्तरम् ।
104068 ब्रह्मेन्द्रहरिरुद्रेशप्रमुखामरमण्डितम् ॥ ११ ॥
104069

104070 इदमप्यधस्तनादिब्रह्माण्डभेदेन ब्रह्मेन्द्रादिभेदादुपपाद्यम् ॥ ११ ॥
104071

104072 इमां भूतश्रियं तस्य रोमालिं प्रविचिन्तयेत् ।
104073 विविधारम्भकारिण्यस्त्रिजगद्यन्त्ररज्जवः ॥ १२ ॥
104074

104075 भूतश्रियं चतुर्विधभूतशोभाम् । त्रिजगद्गतसर्वपदार्थचेष्टनाय रचिता
104076 यन्त्ररज्जव इव इच्छाद्याः शक्तयस्तस्य शरीरगा नाड्यश्चिन्तनीयाः ॥ १२ ॥
104077

104078 इच्छाद्याः शक्तयस्तस्य चिन्तनीयाः शरीरगाः ।
104079 एष देवः स परमः पूज्य एष सदा सताम् ॥ १३ ॥
104080

104081 चिन्मात्रमनुभूत्यात्मा सर्वगः सर्वसंश्रयः ।
104082 घटे पटे वटे कुड्ये शकटे वानरे स्थितः ॥ १४ ॥
104083

104084 शिवो हरो हरिर्ब्रह्मा शक्रो वैश्रवणो यमः ।
104085 अनन्तैकपदाधारसत्तामात्रैकविग्रहः ॥ १५ ॥
104086

104087 रूपभेदैरनन्तानां पदानामाधारो वाच्यस्तद्भेदपरित्यागे एकपदस्याधारो
104088 लक्ष्या या सत्ता तन्मात्रैकविग्रहः ॥ १५ ॥
104089

104090 विवर्तितजगज्जालः कालोऽस्य द्वारपालकः ।
104091 सशैलभुवनाभोगमिदं ब्रह्माण्डमण्डलम् ॥ १६ ॥
104092

104093 द्वारपालकः अविशुद्धिकाले मनसोऽन्तः प्रवेशनिरोधको विशुद्धौ तु प्रवेशानुकूल
104094 इति ॥ १६ ॥
104095

104096 देहकोणोऽस्य कस्मिंश्चित्स्वाङ्गावयवतां गतम् ।
104097 विचिन्तयेन्महादेवं सहस्रश्रवणेक्षणम् ॥ १७ ॥
104098

104099 स्वाङ्गे मायाशबलरूपे । अवयवतामेकदेशताम् । अथवा सर्वप्राणिनां
104100 श्रवणेक्षणशिरःपाण्याद्यवयवास्तस्यैवेति विश्वरूपं चिन्तनीयमित्याह##-
104101

104102 सहस्रशिरसं शान्तं सहस्रभुजभूषणम् ।
104103 सर्वत्रेक्षणशक्त्याढ्यं सर्वतो घ्राणशक्तिकम् ॥ १८ ॥
104104

104105 सर्वतः स्पर्शनमयं सर्वतो रसनान्वितम् |
104106 सर्वत्र श्रवणाकीर्णं सर्वत्र मननान्वितम् || १९ ||
104107
104108 सर्वतो मननातीतं सर्वतः परमं शिवम् |
104109 सर्वदा सर्वकर्तारं सर्वसंकल्पितार्थदम् || २० ||
104110
104111 तथा चिन्तनेऽप्यसङ्गाद्वयता वस्तुतस्तस्य न विस्मर्तव्येत्याह-सर्वत इति || २० ||
104112
104113 सर्वभूतान्तरावस्थं सर्वं सर्वैकसाधनम् |
104114 इति संचिन्त्य देवेशमर्चयेद्विधिवत्ततः || २१ ||
104115
104116 सर्वस्य एकं साधनं सत्तास्फूर्तिपदम् | इति उक्तप्रकारेण || २१ ||
104117
104118 विधानमर्चनस्येदं शृणु ब्रह्माविदां वर |
104119 स्वसंविदात्मा देवोऽयं नोपहारेण पूज्यते || २२ ||
104120
104121 उपह्रियत इत्युपहारो गन्धपुष्पादिस्तेन उपहारेण पूज्यते || २२ ||
104122
104123 न दीपेन न धूपेन न पुष्पविभवार्पणैः |
104124 नान्नदानादिदानेन न चन्दनविलेपनैः || २३ ||
104125
104126 तदेव प्रपञ्चयति-नेति || २३ ||
104127
104128 न च कुङ्कुमकर्पूरबोगैश्चित्रैर्न चेतरैः |
104129 नित्यमक्लेशलभ्येन शीतलेनाऽविनाशिना || २४ ||
104130
104131 इतरैश्छत्रचामरदर्पणाद्यर्पणैः || २४ ||
104132
104133 एकेनैवाऽमृतेनैष बोधेन स्वेन पूज्यते |
104134 एतदेव परं ध्यानं पूजैषैव परा स्मृता || २५ ||
104135
104136 अखण्डसाक्षात्कारवृत्तिधारारूढेन स्वेन स्वात्मकेन बोधेन |
104137 पूर्वोक्तचिन्तनमप्येतदङ्गमितीयमेव सर्वपूजाभ्यः प्रधानेत्याशयेनाह##-
104138
104139 यदनारतमन्तस्थशुद्धचिन्मात्रवेदनम् |
104140 पश्यञ्शृण्वन्स्पृशञ्जिघ्रन्नश्नन्गच्छन्स्वपन्श्वसन् || २६ ||
104141
104142 अस्याः कालनियमोऽपि नास्तीति सदैव कार्येत्याह-पश्यन्निति || २६ ||
104143
104144 प्रलपन्विसृजन्गृह्णन्शुद्धसंविन्मयो भवेत् |
104145 ध्यानामृतेन संपूज्य स्वयमात्मानमीश्वरम् || २७ ||
104146
104147 उक्तज्ञानाधारात्मना ध्यानामृतेन || २७ ||
104148
104149 परमास्वादयुक्तेन मुक्तेन कुसुमेहितैः |
104150 ध्यानोपहार एवात्मा [आत्मध्यानं इति पाठः |] ध्यानं ह्यस्य
104151 समीहितम् || २८ ||
104152
104153 परमास्वादयुक्तेनेति अयं भावः-पुष्पादिविषयार्पणं हि देवस्य न
104154 साक्षादविच्छिन्नसुखार्पणं किंतु परम्परयाऽल्पतरतदीयसुखाभिव्यञ्जनं
104155 क्षुधितस्य व्रीहिमुष्ट्यर्पणमिव न तथा प्रीतये भवति | इदं तु प्रतीचः स्वयमेव
104156 शोधनेन निरतिशयानन्दरूपतामाविर्भाव्य तस्य नित्यनिरतिशयस्यात्यन्तैकरस्येन

104157 शिवायार्पणरूपं पूजनं परमास्वादनयुक्तमिति तदेव तादृशदेवस्यानुरूपं
104158 पूजनं समीहितं न पुष्पादीत्यर्थः ॥ २८ ॥
104159
104160 ध्यानमर्घ्यं च पाद्यं च शुद्धसंवेदनात्मकम् ।
104161 ध्यानसंवेदनं पुष्पं सर्वं ध्यानपरं विदुः ॥ २९ ॥
104162
104163 अतएवोक्तलक्षणध्यानेनैव सर्वोपचारसिद्धिरित्याह-ध्यानमिति ।
104164 ध्यानाभिव्यक्तं संवेदनं चैतन्यं पुष्पप्रयोजनरूपत्वात्पुष्पम् । एवं
104165 सर्वमुपचारं संवेदनमेव विदुः । असंविदितोपचारभोगाप्रसिद्धेरिति ॥ २९ ॥
104166
104167 विना तेनेतरेणायमात्मा लभ्यत एव नो ।
104168 ध्यानात्प्रसादमायाति सर्वभोगसुखश्रियः ॥ ३० ॥
104169
104170 प्रसादं स्वरूपाभिव्यक्तिम् । किं ततस्तत्राह-सर्वेति । सर्वेषां
104171 मनुष्यादिहिरण्यगर्भान्तानां भोगसुखश्रियः अयं प्रसन्न आत्मा भुङ्क्ते इति
104172 परेणान्वयः । यो वेद निहितं गुहायां परमे व्योमन् । सोऽश्नुते सर्वान्कामान्सह इति
104173 श्रुतेः इति श्रुतेः ॥ ३० ॥
104174
104175 अयमात्मा मुने भुङ्क्ते देहरूपो गृहे यथा ।
104176 ध्यानेनानेन सुमते निमेषांस्तु त्रयोदश ॥ ३१ ॥
104177
104178 यथा देहरूपो देहाभिमानी स्वगृहे भोगान्भुङ्क्ते तद्वत् । तेनापि
104179 विषयसंस्पर्शजन्यवृत्त्यभिव्यक्तात्मसुखस्यैवानुभवात् । ब्रह्मात्मसुखे
104180 सर्वसुखानामन्तर्भावादिति भावः । इदानीं तत्त्वसाक्षात्काराभावेऽपि
104181 यथोक्तध्यानमात्रेणापि तदुत्कर्षानुसारिफलोत्कर्षमाह-ध्यानेनेत्यादिना ॥ ३१ ॥
104182
104183 मूढोऽपि पूजयित्वेशं गोप्रदानफलं लभेत् ।
104184 पूजयित्वा निमेषाणां शतमेकमिति प्रभुम् ॥ ३२ ॥
104185
104186 अश्वमेधस्य यज्ञस्य फलं प्राप्नोति मानवः ।
104187 पूजयित्वा स्वमात्मानं घटिकार्धमिति प्रभुम् ॥ ३३ ॥
104188
104189 अश्वमेधसहस्रस्य फलं प्राप्नोति मानवः ।
104190 ध्यानबल्युपहारेण स्वयमात्मानमात्मना ॥ ३४ ॥
104191
104192 घटिकां पूजयेद्यस्तु राजसूयं लभेत सः ।
104193 मध्याह्नपूजनादित्थं राजसूयैकलक्षभाक् ॥ ३५ ॥
104194
104195 ननु घटिकार्धध्याने अश्वमेधसहस्रफलं चेद्घटिकाध्याने ततोऽप्यधिकं
104196 फलं वाच्यम् । तत्कथमेकराजसूयफलकीर्तनम् । न ह्यश्वमेधाद्राजसूयस्य
104197 फलमधिकम् । बृहदारण्यके भुज्युप्रश्ने क्वन्वश्वमेधयाजिनो गच्छन्तीति
104198 द्वात्रिंशतं वै देवरथाह्न्यान्ययं लोकः इत्यादिना
104199 पृथिवीसमुद्रादिपरिमाणमुक्त्वा ततः परतस्तद्यावती क्षुरस्य धारा यावद्वा
104200 मक्षिकायाः पत्रं तावानन्तरेणाकाशः इति ब्रह्माण्डखर्परद्वयसंधिमुक्त्वा
104201 तानिन्द्रः सुपर्णो भूत्वा वायवे प्रायच्छत्तान्वायुरात्मनि स्थित्वा
104202 तत्रागमयद्यत्राऽश्वमेधयाजिनोऽभवन् इत्यश्वमेधयाजिनां
104203 ब्रह्माण्डखर्परसंधिद्वारा वायुना बहिर्निःसार्य
104204 सर्वकर्मफलोत्कर्षस्थानप्रापणश्रवणविरोधात् । ब्रह्महत्याश्वमेधाभ्यां न
104205 परं पुण्यपापयोः इति प्रसिद्धेः । पूर्वरामायणे इलोपाख्याने नाश्वमेधात्परो
104206 यज्ञः प्रियश्चैव महात्मनः इति श्रीरामवचनविरोधाच्छारीरके इतरकर्मिणां
104207 धूमादिमार्गेण चन्द्रमण्डलप्राप्तिरेवाश्वमेधयाजिन एकस्य त्वर्चिरादिमार्गेण
104208 ब्रह्मलोकावाप्तिरिति सिद्धान्ताधिकरणाच्चाश्वमेधस्य राजसूयापेक्षया

104209 फलाधिक्यस्य सिद्धत्वादिति चेत् | नैष दोषः | परस्य
104210 पूर्वाविरोधेनाबाधकत्वादेवोपपत्तेः | यत्र
104211 घटिकार्धपूजनेनाश्वमेधसहस्रफलं तत्र घटिकामात्रपूजनेन तस्य
104212 द्वैगुण्यं प्राप्तमेव तत्र राजसूयफलं स्वाराज्यलक्षणं
104213 श्रूयमाणमितरेषामश्वमेधयाजिनां स्वाराज्ये पर्यवस्यतीति प्रजाभ्यो राज्ञ इव
104214 महान् भोगोत्कर्षो घटिकापूजकस्य सिद्ध्यति | न चात्र
104215 तक्रकौण्डिन्यन्यायाश्रयणंन् युक्तम् | वाक्यवैयर्थ्यप्रसङ्गात् | तथा चेदृशे
104216 विषये महाभाष्ये उक्तम् | असति खल्वपि संभवे बाधनं भवति अस्ति च संभवो
104217 यदुभयं स्यादिति | नप्यत्रापच्छेदाधिकरणन्यायावसरः |
104218 अदक्षिणत्वरार्ववेदसदक्षिणत्वयोरिव ब्रह्मलोकतत्स्वाराज्यफलयोर्विरोधाभावादिति
104219 विशेषद्योतनाय तुशब्दः || ३५ ||
104220

104221 दिवसं पूजयित्वैवं परे धाम्नि वसेन्नरः |
104222 एषोऽसौ परमो योग एषा सा परमा क्रिया |
104223 बाह्यसंपूजनं प्रोक्तमेतदुत्तममात्मनः || ३६ ||
104224

104225 दिवसमिति | चिरैकाम्ये ज्ञानोदयावश्यंभावादिति भावः || ३६ ||
104226

104227 एतत्पवित्रमखिलाघविघातहेतुं यस्त्वाचरिष्यति नरः क्षणमप्यखिन्नः |
104228 तं वन्दयिष्यति सुरासुरलोकपूगः प्राप्तास्पदं जगति मामिव मुक्तमात्मन् ||
104229 ३७ ||
104230

104231 उक्तां बाह्यपूजां प्रशंसन्नुपसंहरति-एतदिति | हे आत्मन् इति प्रेमार्तिः शयेन
104232 वसिष्ठसंबोधनम् | एतदुक्तलक्षणं पूजनं यस्तु नर-अखिन्नो
104233 विक्षेपखेदशून्यः सन् क्षणमप्याचरिष्यति तं क्रमात्सर्वबन्धमुक्तमत एव
104234 प्राप्तास्पदं सुरासुरलोकपूगो जगति मामिव वन्दयिष्यति | अभिवादनस्तुत्यादिना
104235 पूजयिष्यतीत्यर्थः || ३७ ||
104236

104237 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये देव० मोक्षोपायेषु निर्वाणप्रकरणे
104238 पूर्वार्धे बाह्यपूजनं नामाष्टत्रिंशः सर्गः || ३८ ||
104239

104240 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
104241 बाह्यपूजनं नामाष्टत्रिंशः सर्गः || ३८ ||
104242 एकोनचत्वारिंशः सर्गः ३९
104243

104244 ईश्वर उवाच |
104245

104246 पावनं पावनानां यद्यत्सर्वतमसां क्षयः |
104247 तदिदानीं प्रवक्ष्येऽहमन्तःपूजनमात्मनः || १ ||
104248

104249 शब्दादिविषयैः प्राप्तैरङ्गप्रत्यङ्गभासितुः |
104250 प्रत्यगात्मशिवस्यात्र ह्यन्तः पूजोपवर्ण्यते ||
104251

104252 सर्वेषां तमसामज्ञानानां क्षयहेतुत्वात्क्षयः || १ ||
104253

104254 गच्छतस्तिष्ठतश्चैव जाग्रतः स्वपतोऽपि च |
104255 सर्वाचारगता पूजा नित्यं ध्यानात्मिका त्वियम् || २ ||
104256

104257 सर्वेष्वाचारेषु व्यवहारेषु गता अनुगता || २ ||
104258

104259 नित्यमेव शरीरस्थमिमं ध्यायेत्परं शिवम् |
104260 सर्वप्रत्ययकर्तारं स्वयमात्मानमात्मना || ३ ||

सर्वेषां प्रत्ययानां कर्तारं संनिधिमात्रेण जनयितारं बोधयितारं च ॥ ३ ॥

शयानमुत्थितं चैव व्रजन्तमथवा स्थितम् ।
स्पृशन्तमभितः स्पृश्यं त्यजन्तमथवाऽभितः ॥ ४ ॥

स्पृश्यं स्पर्शादिविषयं स्पृशन्तं भुञ्जानम् अथवा उद्वेगात्त्यजन्तम् ॥ ४ ॥

भुञ्जानं संत्यजन्तं च भोगानाभोगपीवरान् ।
बाह्यार्थपरिकर्तारं सर्वकार्यस्वरूपदम् ॥ ५ ॥

तदेव स्पष्टमाह-भुञ्जानमिति । बाह्यार्थानां जाग्रदादिविषयाणां
परिकर्तारं स्वाध्यारोपेण निर्मातारम् । सर्वेषां कार्याणां स्वरूपदं
स्वसत्ताप्रदम् ॥ ५ ॥

देहलिङ्गेषु शान्तस्थंन् त्यक्तलिङ्गान्तरादिकम् ।
यथाप्राप्तार्थसंवित्त्या बोधलिङ्गं प्रपूजयेत् ॥ ६ ॥

स्वदेहलक्षणेषु लिङ्गेषु । तथाहि पद्माद्यासनस्थः पुरः
प्रसारितपाणिर्बद्धाञ्जलिर्देहः शिवलिङ्गाकारो भवतीति प्रसिद्धम् । अत एव त्यक्तं
मृद्दारुशिलादि लिङ्गान्तरं आदिपदात्प्रतिमान्तरं च यत्र । शान्ते
निर्विक्षेपस्वभावे स्थितं बोधलिङ्गम् ॥ ६ ॥

प्रवाहपतितार्थस्थः स्वबोधस्नानशुद्धिमान् ।
नित्यावबोधार्हणया बोधलिङ्गं प्रपूजयेत् ॥ ७ ॥

प्रारब्धप्रवाहपतितेष्वर्थेषु भोगेषु स्थितः । प्रसक्ताशुद्धिरपि
पुनःपुनरसङ्गविशुद्धात्मबोधलक्षणेन स्नानेन सदा शुद्धिमान् ॥ ७ ॥

आदित्यभावनाभोगभाविताम्बरभास्वरम् ।
शशाङ्कभावनाभोगभावितेन्दुतयोदितम् ॥ ८ ॥

तादृशपूजने यदि मनस्तमसि मज्जति तदान्तर्बहिश्च सर्वनभः
परिपूर्णमखण्डितमद्वयमादित्यमण्डलं स्वं भावयेत् यदि तु परितापेनिमज्जति
तदा तादृशचन्द्रमण्डलतया उदितं स्वं भावयेदित्याह-आदित्येति ।
आदित्यात्मना भावनात्कल्पितेनाभोगेन विस्तृतस्वसंस्थानेन भाविते पूर्णे
हार्दबाह्याम्बरे भास्वरम् ॥ ८ ॥

प्रतिभासपदार्थौघनित्यावगतसंविदम् ।
द्वारैर्वहन्तं शारीरैर्मुखे प्राणस्वरूपिणम् ॥ ९ ॥

बाह्यान्तरबुद्धिवृत्तिप्रतिभासेषु तद्भासितपदार्थौघेषु चानुस्यूता या
नित्यावगतरूपा संवित्तद्रूपम् । वहन्तं स्वाभासान् बहिर्विषयदेशे प्रापयन्तम् ॥ ९
॥

रसीकृत्य रसं प्राणस्वान्तोदात्ततुरङ्गमम् ।
प्राणापानरथारूढं गूढमन्तर्गुहाशयम् ॥ १० ॥

रस्यत इति रसः शब्दादिविषयस्तं स्वानन्दरसेनैवं रसीकृत्य मधुरीकृत्य
आस्वादयन्तमिवेति शेषः । प्राणस्वान्तलक्षणौ उदात्तौ उत्कृष्टौ तुरङ्गमौ यस्य ॥
१० ॥

104313 ज्ञातारं ज्ञेयदृष्टीनां कर्तारं सर्वकर्मणाम् ।
104314 भोक्तारं सर्वभोज्यानां स्मर्तारं सर्वसंविदाम् ॥ ११ ॥
104315

104316 सम्यक्संविदिताङ्गौघं भावाभावनभावितम् ।
104317 आभासभास्वरं भूरि सर्वगं चिन्तयेच्छिवम् ॥ १२ ॥
104318

104319 यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः । क्षेत्रं क्षेत्री तथा कृत्स्नं
104320 प्रकाशयति इति भगवदुक्तरीत्या सम्यक्संविदितसर्वाङ्गौघम् ।
104321 भावैर्विषयभावनैरभावनैश्च भावितं लक्षितम् । आसासेभ्यः
104322 सर्वप्रकाशेभ्योऽपि भूरि भास्वरम् । विशेष्यस्य सापेक्षत्वे
104323 सामर्थ्याविघातात्समासः ॥ १२ ॥
104324

104325 निष्कलं सकलं चैव देहस्थं व्योमचारिणम् ।
104326 अरञ्जितं रञ्जितं च नित्यमङ्गाङ्गसंविदम् ॥ १३ ॥
104327

104328 निष्कर्षे निष्कलमन्यथा सकलम् । व्योम्नि हृदयाकाशे चरणशीलम् ।
104329 अङ्गाङ्गसंविदं प्रत्यङ्गव्यापि बोधरूपम् ॥ १३ ॥
104330

104331 मनोमननशक्तिस्थं प्राणापानान्तरोदितम् ।
104332 हृत्कण्ठतालुमध्यस्थं भ्रनासापुटपीठगम् ॥ १४ ॥
104333

104334 तदेव विवृणोति-मनोमननेति ॥ १४ ॥
104335

104336 षट्त्रिंशत्पदकोटिस्थमुन्मन्यन्तदशातिगम् ।
104337 कुर्वन्तमन्तःशब्दादींश्चोदयन्तं मनःखगम् ॥ १५ ॥
104338

104339 षट्त्रिंशत्पदानि शैवशास्त्रप्रसिद्धषट्त्रिंशत्तत्त्वानि तेषां चरमस्थानस्थम् ।
104340 कालीरौद्रीकलविकरणीत्यादिशक्तिविभागे उन्मन्या मनोन्मन्या अन्तदशामप्यतिगतम् ।
104341 शिवयोगप्रसिद्धा वा उन्मन्यन्तदशा सबीजसमाधिरूपा तदतिगतम् । चोदयन्तं
104342 प्रेरयन्तम् ॥ १५ ॥
104343

104344 विकल्पिन्यविकल्पे च द्विविधे वाक्पथे स्थितम् ।
104345 तिले तैलमिवाङ्गेषु सर्वेष्वेवान्तरं स्थितम् ॥ १६ ॥
104346

104347 व्यवहारे विकल्पिनि निर्बीजसमाधिमोक्षयोरविकल्पे च वाच्यलक्षरूपे वाक्पथे ॥ १६ ॥
104348

104349 कलाकलङ्करहितं कठिनं च कलागणैः ।
104350 एकदेशे सुहृत्पद्मे सर्वदेहे च संस्थितम् ॥ १७ ॥
104351

104352 कालगणैर्भूतमात्राभिः स्थूलदेहात्मना परिणतैः कठिनं मूर्तं च ॥ १७ ॥
104353

104354 चिन्मात्रममलाभासं कलाकलनकल्पनम् ।
104355 प्रत्यक्षदृश्यं सर्वत्र स्वानुभूतिमयात्मकम् ॥ १८ ॥
104356

104357 कलाकलनानामध्यासविकल्पानां कल्पनमधिष्ठानम् । अधिकरणे ल्युट् ॥ १८ ॥
104358

104359 प्रत्यक्चेतनमात्मीयमर्थित्वेन पुनः स्थितम् ।
104360 पदार्थानामुपेत्याशु क्षणाद्द्वित्वमिवागतम् ॥ १९ ॥
104361

104362 पुनः स्वस्वरूपविस्मरणाद्भोगार्थित्वेन स्थितम् । स्वातिरिक्तपदार्थानां वेषं
104363 स्वयमेवोपेत्य आशु क्षणात्स्वसंकेतादेव द्वित्वमागतमिव स्थितम् ॥ १९ ॥
104364

104365 सहस्तपादावयवः सकेशनखदन्तकः |
104366 स्वदेहसंविदाभासो देवोऽयमिति भावयेत् ‖ २० ‖
104367
104368 स्वदेहसंविद आभासाः परिचायिका यस्य ‖ २० ‖
104369
104370 विचित्राः शक्तयो बह्व्यो नानाचारा मनोदशाम् |
104371 उपासते मामनिशं पत्न्यः कान्तमिवोत्तमम् ‖ २१ ‖
104372
104373 मनो मे द्वारपालोऽयं निवेदितजगल्लयः |
104374 चिन्तेयं मे प्रतीहारी द्वारस्था शुद्धरूपिणी ‖ २२ ‖
104375
104376 सन्मात्रगोचरत्वाच्छुद्धरूपिणी ‖ २२ ‖
104377
104378 शक्तिर्ममात्मिका बुद्धिः क्रिया चैव वराङ्गना |
104379 ज्ञानानि च विचित्राणि भूषणान्यङ्गगानि मे ‖ २३ ‖
104380
104381 आत्मिका आत्मवत्परप्रीतिविषयीकृता बुद्धिर्ज्ञानशक्तिः | क्रिया प्राणशक्तिः |
104382 विचित्राणि शास्त्रीयाणि लौकिकानि च ज्ञानानि भूषणानि ‖ २३ ‖
104383
104384 कर्मेन्द्रियाणि द्वाराणि बुद्धीन्द्रियगणैः सह |
104385 अयं सोऽहमनन्तात्मा व्यवच्छेदोज्झिताकृतिः ‖ २४ ‖
104386
104387 तिष्ठामि भरितैकात्मा पूर्णः सर्वावपूरकः |
104388 इति दैवीमुपाश्रित्य स्वच्छामात्मचमत्कृतिम् ‖ २५ ‖
104389
104390 दैवीमलौकिकीमात्मचमत्कृतिं प्रत्यक्तत्त्वपरिचयम् ‖ २५ ‖
104391
104392 दैवत्वपरिपूर्णोऽन्तरदीनात्मावतिष्ठते |
104393 नास्तमेति न चोदेति न तुष्यति न कुप्यति ‖ २६ ‖
104394
104395 तादृशपूजापरिपाकफलान्याह-नास्तमेतीत्यादिना ‖ २६ ‖
104396
104397 न तृप्तिं न क्षुधं याति नाभिवाञ्छति नोज्झति |
104398 समः समसमाचारः समाभासः समाकृतिः ‖ २७ ‖
104399
104400 अन्तः समः बहिश्च समेर्जीवन्मुक्तैः सम आचारो यस्य ‖ २७ ‖
104401
104402 सौम्यतामलमायातः समन्तात्सुन्दराशयः |
104403 आदेहमेक एवासावव्युच्छिन्नमहामतिः [अव्युत्पन्न इत्यपि पाठः |] ‖ २८
104404 | |
104405
104406 देवार्चनं करोत्येव दीर्घदीर्घमहर्निशम् |
104407 चित्तत्त्वचलितो देहो देवोऽस्य समुदाहृतः ‖ २९ ‖
104408
104409 कोऽस्य देवः कथमादेहमर्चयतीति तत्राह-चित्तत्वेत्यादिना ‖ २९ ‖
104410
104411 यथाप्राप्तेन सर्वेण तमर्चयति वस्तुना |
104412 समया सर्वया बुद्ध्या चिन्मात्रं देवचित्परम् ‖ ३० ‖
104413
104414 वस्तुना त्रिपुटीरूपेण | देवचिद्भ्य ऐन्द्रियकवृत्तिप्रतिबिम्बचिद्भ्यः परं
104415 तद्बिम्बभूतम् ‖ ३० ‖
104416

104417 यथाप्राप्तक्रमोत्थेन सर्वार्थेन समर्चयेत्।
104418 मनागपि न कर्तव्यो यत्नोऽत्रापूर्ववस्तुनि॥ ३१॥
104419
104420 सर्वेणार्थेन बाह्याभ्यन्तरवस्तुना। अपूर्ववस्तुनि गन्धपुष्पाद्युपचारवस्तुनि॥ ३१॥
104421
104422 प्राप्तदेहतया नित्यं तथार्थक्रिययाऽनया।
104423 कामसंसेवनेनाऽथ पूजयेच्छोभनं विभुम्॥ ३२॥
104424
104425 प्राप्तदेहतया प्राप्तब्राह्मणक्षत्रियादिस्वशरीरोचितया यथाशास्त्रमर्थक्रियया
104426 व्यवहारेण। काम्यन्त इति कामा देहधारणमात्रनिमित्तान्नपानादयस्तेषां
104427 संसेवनेन॥ ३२॥
104428
104429 भक्ष्यभोज्यान्नपानेन नानाविभवशालिना।
104430 शयनासनयानेन यथाप्तेनार्चयेच्छिवम्॥ ३३॥
104431
104432 तदेव स्पष्टमाह-भक्ष्येति॥ ३३॥
104433
104434 कान्तान्नपानसंभोगसंभारादिविलासिना।
104435 सुखेन सर्वरूपेण संबुद्ध्याऽऽत्मानमर्चयेत्॥ ३४॥
104436
104437 संबुद्ध्य तत्त्वतो ज्ञात्वा। तथा च यावत्तदज्ञानं तावद्विषयसुखोपभोगेन
104438 प्रसंजितव्यमिति भावः॥ ३४॥
104439
104440 आधिव्याधिपरीतेन मोहसंरम्भशालिना।
104441 सर्वोपद्रवदुःखेन प्राप्तेनात्मानमर्चयेत्॥ ३५॥
104442
104443 एवं यथाप्राप्तदुःखभोगेऽपि पूजाबुद्धिरेव कार्या नोद्वेग इत्याह-आधीति॥ ३५॥
104444
104445 समस्तैश्च समस्तानां चेष्टानां जगतः स्थितेः।
104446 मृतिजीवितस्वप्नाद्यैः प्राप्तैरात्मानमर्चयेत्॥ ३६॥
104447
104448 जगतः स्थितेः संबन्धिनां समस्तानां चेष्टानां फलैरिति शेषः॥ ३६॥
104449
104450 दारिद्र्येणाथ राज्येन प्रवाहपतितात्मना।
104451 विचित्रचेष्टापुष्पेण शुद्धात्मानं समर्चयेत्॥ ३७॥
104452
104453 नानाकलहकल्लोलललनोल्लासशालिना।
104454 रागद्वेषविलासेन सौम्यमात्मानमर्चयेत्॥ ३८॥
104455
104456 सतां हृदयगामिन्या रूढया शशिशीतया।
104457 मैत्र्या माधुर्यधर्मिण्या हृत्स्थमात्मानमर्चयेत्॥ ३९॥
104458
104459 तर्हि किं कलहादिपरेणापि भाव्यं नेत्याह-सतामिति॥ ३९॥
104460
104461 उपेक्षया करुणया सदा मुदितया हृदि।
104462 शुद्धया शक्तिपद्धत्या बोधेनात्मानमर्चयेत्॥ ४०॥
104463
104464 कलहाद्यप्रसक्तावुपायमाह-उपेक्षयेति। शक्तिः क्रोधादिनिग्रहसामर्थ्यं
104465 तत्पद्धत्या॥ ४०॥
104466
104467 आकस्मिकोपयातेन स्थितेनानियतेन च।
104468 भोगाभोगैकभोगेन प्राप्तेनात्मानमर्चयेत्॥ ४१॥

104469
104470 एवं भोगलम्पटेनापि न भाव्यमित्याशयेनाह-आकस्मिकेति। भोगाभोगेषु
104471 भोगसमूहेष्वेकस्य कस्यचित्कदाचिद्भोगेन॥ ४१॥
104472
104473 भोगानामनिषिद्धानां निषिद्धानां च सर्वदा।
104474 त्यागेन वातिरागेण स्वात्मानं शुद्धमर्चयेत्॥ ४२॥
104475
104476 अनिषिद्धानां निषिद्धानां च सर्वदा त्यागेनेति मुख्यः कल्पः। अथवा
104477 क्वचिदनिषिद्धानां रागेणेति गौणः॥ ४२॥
104478
104479 ईहितानीहितौघेन युक्तायुक्तमयात्मना।
104480 त्यक्तेनात्तेन चार्थेन ह्यर्थानामीशमर्चयेत्॥ ४३॥
104481
104482 अयुक्तमयात्मना त्यक्तेन युक्तमयात्मना आत्तेनेति व्युत्क्रमेणान्वयः।
104483 अर्थनामीशं भोक्तारम्॥ ४३॥
104484
104485 नष्टं नष्टमुपेक्षेत प्राप्तं प्राप्तमुपाहरेत्।
104486 निर्विकारतयैतद्धि परमार्चनमात्मनः॥ ४४॥
104487
104488 इदानीं मुख्यार्चनसारमाह-नष्टमित्यादिना। उपेक्षेत नानुशोचेत्॥ ४४॥
104489
104490 सर्वदैव समग्रासु चेष्टानिष्टासु दृष्टिषु।
104491 परमं साम्यमाधाय नित्यात्मार्चाव्रतं चरेत्॥ ४५॥
104492
104493 सर्वं विन्देत सुशुभं सर्वं विद्याच्छुभाशुभम्।
104494 सर्वमात्ममयं कुर्यान्नित्यात्मार्चाव्रतं चरेत्॥ ४६॥
104495
104496 ब्रह्मैवेति दृष्ट्या सर्वं शुभमेवेति विन्देत गृह्णीयात्।
104497 ब्रह्मसंवलितमायामयत्वदृष्ट्या तु सर्वं शुभाशुभं संमिश्रमिति विद्यात्।
104498 उभयथापि साम्येन वैषम्यदर्शननिमित्ताभावादात्मैवात्ममयमिति वा
104499 आत्मप्रचुरमात्ममयमिति वा कुर्यात्पश्येत्॥ ४६॥
104500
104501 आपातरमणीयं यद्यच्चापातसुदुःसहम्।
104502 तत्सर्वं सुसमं बुद्ध्वा नित्यात्मार्चाव्रतं चरेत्॥ ४७॥
104503
104504 उक्तरीत्या सुसमं बुद्ध्वा॥ ४७॥
104505
104506 अयं सोहमयं नाहं विभागमिति संत्यजेत्।
104507 सर्वं ब्रह्मेति निश्चित्य नित्यात्मार्चाव्रतं चरेत्॥ ४८॥
104508
104509 इति विभागं भेदम्॥ ४८॥
104510
104511 सर्वदा सर्वरूपेण सर्वाकारविकारिणा।
104512 सर्वं सर्वप्रकारेण प्राप्तेनात्मानमर्चयेत्॥ ४९॥
104513
104514 सर्वदा प्राप्तेन सर्वाकारविकारिणा सर्वप्रकारेण सर्वरूपेण नाम्ना च सर्वं
104515 सर्वात्मकमात्मानमर्चयेत्॥ ४९॥
104516
104517 अनीहितं परित्यज्य परित्यज्य तथेहितम्।
104518 उभयाश्रयणेनापि नित्यमात्मानमर्चयेत्॥ ५०॥
104519
104520 मिथ्यात्वबुद्ध्या परित्यज्य स्वात्ममात्रताबुद्ध्या उभयोराश्रयणेन स्वीकारेणापि॥

५० ॥

न वाञ्छता न त्यजता दैवप्राप्ताः स्वभावतः ।
सरितः सागरेणेव भोक्तव्या भोगभूमयः ॥ ५१ ॥

भोगभूमयः सुखदुःखहेतवो विषयाः ॥ ५१ ॥

उद्वेगो नानुगन्तव्यस्तुच्छाऽतुच्छासु दृष्टिषु ।
व्योम्ना चित्रपदार्थेषु पतितो ह्याततेष्विव ॥ ५२ ॥

तुच्छातु अपमानादिदृष्टिषु अतुच्छासु वधबन्धसर्वस्वनाशादिदृष्टिषु पतित
आपतितः प्रसक्त उद्वेगो नानुगन्तव्यः । पतितेषु इति पाठे आपतितेषु
चिरमाततेष्वनुवृत्तेषु ऋजुवक्रशीतदाहादिचित्रपदार्थेषु व्योम्नेवेति दृष्टान्ते
योज्यम् ॥ ५२ ॥

देशकालक्रियायोगाद्यदुपैति शुभाशुभम् ।
अविकारं गृहीतेन तेनैवात्मानमर्चयेत् ॥ ५३ ॥

आत्मार्चनविधानेऽस्मिन्प्रोक्ता द्रव्यश्रियस्तु याः ।
एकेनैव समेनैता रसेन परिभाविताः ॥ ५४ ॥

ननु विचित्रदुःखरागद्वेषादिविकारहेतवः शुद्ध्यशुद्धिकटुतिक्तादिविषमरसा
भोग्यद्रव्यश्रियः कथमविकारं ग्रहीतुं शक्या इति चेदेकेन समरसेन सर्वेषां
वैषम्यनिरासेन मधुरीकरणादित्याशयेनाह-आत्मार्चनेति । परिभाविता
आप्लाविताः सत्यो न अम्लानकट्व्यः किंतु मधुरैकरसा भवन्तीति परेणान्वयः ॥ ५४ ॥

नाम्लानकट्व्यो नो तिक्ता न कषायाश्च काश्चन ।
चित्रैरपि रसैर्दिग्धा मधुरा एव ताः किल ॥ ५५ ॥

समता मधुरा यस्या [रम्येति पाठः ।] रसशक्तिरतीन्द्रिया ।
तया यद्भावितं चेत्यममृतं तत्क्षणाद्भवेत् ॥ ५६ ॥

आनन्दैकरसविवर्तत्वेन समतादर्शनाद्वा तासामविकारेण
ग्रहणसिद्धिरित्याशयेनाह-समतेति । रसशक्तिः रसो वै सः इति श्रुतिदर्शित आत्मा ॥
५६ ॥

समतामृतरूपेण यद्यन्नाम विभाव्यते ।
तत्तदायाति माधुर्यं परमिन्दोरिव च्युतम् ॥ ५७ ॥

इन्दोश्च्युतममृतमिव ॥ ५७ ॥

समताकाशवद्भूत्वा यत्तु स्याल्लीनमानसम् ।
अविकारमनायासं तदेवार्चनमुच्यते ॥ ५८ ॥

ब्रह्मैक्यदर्शनलक्षणया समतया स्वयमाकाशवद्भूत्वा लीनमानसं यथा
स्यात्तथा यदवस्थानं तदेव मुख्यमर्चनमित्यर्थः ॥ ५८ ॥

पूर्णेन्दुनेव पूर्णेन भाव्यं समसमत्विषा ।
स्वच्छेन चिद्घनैकेन ज्ञेनाप्युपलरूपिणा ॥ ५९ ॥

उपलरूपिणा स्फटिकशिलावन्निर्मलदृढेन ॥ ५९ ॥

104573 अन्तराकाशविशदो बहिःप्रकृतकार्यकृत् ।
104574 रञ्जनामिहिकामुक्तः संपूर्णो ज्ञ उपासकः ॥ ६० ॥
104575
104576 ईदृशो ज्ञस्तत्त्वविदेव उपासको मुख्यो मत्पूजक इत्यर्थः ॥ ६० ॥
104577
104578 स्वप्नेऽप्यदृष्टहृल्लेखमज्ञानाभ्रपरिक्षये ।
104579 शान्ताहंतादिमिहिकं ज्ञः शरद्व्योम राजते ॥ ६१ ॥
104580
104581 न दृष्टो हृदयं लिखतीति हृल्लेखः कामो विद्युदादिश्च यस्मिन् । ज्ञस्तत्त्वविदेव
104582 शरद्व्योम ॥ ६१ ॥
104583
104584 सोमार्कमस्तमितमानसमातृमेयं सद्यःप्रसूतशिशुवेदनवद्वितानम् ।
104585 पश्यन्प्रशान्तमतिचेतनचित्तबीजं जीवन्ननुत्तमपदस्थित एव तिष्ठ ॥ ६२ ॥
104586
104587 आनन्दामृतपरिपूर्णत्वात्सोम एव
104588 सन्निष्कलङ्कस्वप्रकाशातिशयादर्कस्तथाविधम् । अस्तमितानि मानसं
104589 मनोवृत्तिर्माता मेयं च यत्र तथाभूतम् । सद्यःप्रसूतस्य
104590 शिशोर्वेदनवद्वितानं विगतविकल्पविस्तारं चेतनस्य चिदाभासस्य चित्तस्य च बीजं
104591 मूलभूतं स्वात्मशिवं प्रशान्तमति यथा स्यात्तथा पश्यन्सन् त्वमनुत्तमे
104592 जीवन्मुक्तपदे स्थितस्तद्भावेनैव तिष्ठ । सैव परा पूजेत्यर्थः ॥ ६२ ॥
104593
104594 देशकालकरणक्रमोदितैः सर्ववस्तुसुखदुःखविभ्रमैः ।
104595 नित्यमर्चय शरीरनायकं तिष्ठ शान्तसकलेहया धिया ॥ ६३ ॥
104596
104597 विस्तरोक्तं संक्षिप्योपसंहरति-देशेति । शान्ता सकला ईहा मनोरथा
104598 यस्यास्तथाविधया धिया स्वात्मनि तिष्ठ । सैव मुख्या शिवपूजेत्यर्थः ॥ ६३ ॥
104599
104600 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाणप्रकरणे पू०
104601 देवार्चनविधिर्नामैकोनचत्वारिंशः सर्गः ॥ ३९ ॥
104602
104603 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
104604 देवार्चनविधिर्नामैकोनचत्वारिंशः सर्गः ॥ ३९ ॥
104605
104606 चत्वारिंशः सर्गः ४०
104607
104608 ईश्वर उवाच ।
104609
104610 यथाकालं यथारम्भं न करोषि करोषि यत् ।
104611 चिन्मात्रस्य शिवस्यान्तस्तदेवार्चनमात्मनः ॥ १ ॥
104612
104613 पूज्यपूजकपूजादिविकल्परहितः शिवः ।
104614 परिशुद्धचिदात्मैव देवतातत्त्वमीर्यते ॥
104615
104616 आत्मविदः कृताकृतं सर्वमपि कर्म शिवार्चनमेवेत्याह-यथाकालमिति ।
104617 यथारम्भं यथाशक्ति ॥ १ ॥
104618
104619 तेनैवाह्लादमायाति याति प्रकटतां तथा ।
104620 तथा स्थितेन रूपेण स्वेनैव स्वयमीश्वरः ॥ २ ॥
104621
104622 तत्कुतस्तत्राह-तेनैवेति ।तेन तादृशपूजनेनैव तथा स्थितेन पारमार्थिकेन
104623 स्वरूपेण आह्लादं निरतिशयानन्दस्वरूपाभिव्यक्तिम् ।
104624 प्रकटतामावरणभङ्गमायाति ॥ २ ॥

रागद्वेषादिशब्दार्थानात्मन्यन्यतयामले।
संभवन्ति पृथग्रूपावह्नौ वह्निकणा इव॥ ३॥

ननु स्वाभाविकचेष्टा सर्वापि रागद्वेषमूलतयानर्थहेतुः सा कथं पूजनं
स्यादिति चेत्स्वात्मव्यतिरेकेण रागद्वेषविकल्पादर्शनादेवेत्याह-रागेति॥ ३॥

यद्यद्राजत्वदीनत्व सुखदुःखादिवेदनम्।
आत्मीयं परकीयं च तत्तदर्चनमात्मनः॥ ४॥

राजत्वं संपत्। दीनत्वं दारिद्र्यम्। आदिपदादशनायापिपासादयो गृह्यन्ते। तेषां
वेदनमध्यारोपणम्। देवे पुष्पपत्राद्यारोपणस्यैव पूजात्वप्रसिद्धेरिति भावः॥ ४
।।

विश्वसंवित्तिरेवार्चा नित्यस्यात्मन एव च।
घटाद्यात्मतया ब्रह्म स्वयमात्मा तथैव च॥ ५॥

तथा च नित्यस्य शिवस्य आत्मनः प्रतीचश्च वियदादिलक्षणस्य जाग्रदादिलक्षणस्य च
विश्वस्य संवित्तिरारोप एवार्चा। यथा वियदादिक्रमेण ब्रह्म
घटाद्यात्मतयालंक्रियते स्वयं प्रत्यगात्मा च तथैव जाग्रदादिक्रमेण
घटाद्यात्मतयैवालंक्रियत इत्यर्थः॥ ५॥

शिवं शान्तमनाभासमेकं भास्वरमागतम्।
जगत्प्रत्ययवत्सर्वमात्मरूपमिदं स्थितम्॥ ६॥

एवं चैकं शिवरूपं प्रत्यगात्मरूपं वा जगत्प्रत्ययवदागतमिदं सर्वं
तद्भासाभास्वरं तत्स्थित्या स्थितमियर्थः॥ ६॥

अहो नु चित्रमात्मैव घटाद्यन्यद्व्यवस्थितम्।
जीवादिस्वस्वभावोऽन्तर्नूनंन् विस्मृतिमानिव॥ ७॥

एवं विमर्शे प्रत्यगात्मैव स्वान्तर्विस्मृतिमानिव भूत्वा जीवादिस्वस्वभावः
अन्यद्घटादिजगद्रूपं च स्थितं नान्यत्किंचिदित्यर्थः॥ ७॥

सर्वात्मकस्यानन्तस्य शिवस्यान्तः किलात्मनः।
पूज्यपूजकपूजाख्यो विभ्रमः प्रोदितः कुतः॥ ८॥

एवं तत्त्वतो दर्शने पूज्यपूजकादित्रिपुटी सर्वापि बाधिता भवतीत्याह##-

नियताकारता शान्ते न च संभवतीश्वरे।
यत्र संकल्प्यते ब्रह्मन्पूज्यपूजामयः क्रमः॥ ९॥

यत्र यस्यां नियताकारतायां पूज्यपूजादिमयः क्रमः संकल्प्यते सा नियताकारता
परिच्छिन्नसंस्थानता न संभवति॥ ९॥

पूज्यपूजाद्यवच्छिन्नो देवो नित्यामलात्मनः।
सर्वशक्तेरनन्तस्य नेश्वरत्वस्य भाजनम्॥ १०॥

नित्यामलात्मन इति हेतुगर्भमीश्वरत्वविशेषणम्॥ १०॥

त्रिजगत्प्रसृताच्छाच्छसंविद्रूपस्य [प्रसृतात्यच्छेति पाठः।]
चात्मनः।

104677 नेश्वरस्याकृतेर्ब्रह्मन्व्यपदेशो हि युज्यते ॥ ११ ॥
104678
104679 ईश्वरस्य आकृतेरिति व्यधिकरणे षष्ठ्यौ । व्यपदेशो वाचाभिलापोऽपि न युज्यते ॥ ११ ॥
104680
104681 देशकालपरिच्छिन्नो येषां स्यात्परमेश्वरः ।
104682 अस्माकमुपदेश्यास्ते न विपश्चिद्विपश्चिताम् ॥ १२ ॥
104683
104684 हे विपश्चिदिति संबोधनम् । विपश्चिद्भ्योऽपि विपश्चितामिति वा ॥ १२ ॥
104685
104686 तदीयां दृष्टिमुत्सृज्य तथेमामवलम्ब्य च ।
104687 समः स्वच्छमनाः शान्तो वीतरागो निरामयः ॥ १३ ॥
104688
104689 इमां मदुक्तामपरिच्छिन्नदृष्टिमवलम्ब्य कामोपभोगैरर्चयंस्तिष्ठेति
104690 परेणान्वयः ॥ १३ ॥
104691
104692 कामोपहारैरभितो यथाप्राप्तैरखिन्नधीः ।
104693 आत्मानमर्चयंस्तिष्ठ सुखदुःखशुभाशुभैः ॥ १४ ॥
104694
104695 अधिगतवसि साधौ चैकमेवानुरूपं त्वयि तरलितजीवे जन्मदुःखादि किंचित् ।
104696 न लगति परिशून्ये सर्वतः स्फाटिकाङ्के नवसदन इवाङ्के निष्कलङ्के
104697 कलङ्कः ॥ १५ ॥
104698
104699 तरलितः शोधनेन देहात्पृथक्कृतो जीवो येन तथाविधे साधौ अमानित्वादिगुणवति
104700 अत एवानुरूपमेकं स्वतत्त्वमुक्तपूज्यपूजकादितत्त्वविमर्शेनाधिगतवति । अत एव
104701 निरस्तमायाकलङ्के परितस्तत्कार्यप्रपञ्चशून्ये च त्वयि जन्मदुःखादि किंचिन्न
104702 लगति । यथा स्फाटिकशिला सर्वावयवके अङ्के समीपे परितो
104703 नीलरक्तादिवस्त्वन्तरशून्ये नवसदने लेपतः प्रतिबिम्बतो वा नैल्यादिरञ्जनकलङ्को
104704 न लगति तद्वदित्यर्थः ॥ १५ ॥
104705
104706 इत्यार्षे श्रीवासिष्ठमहारामायणे बाल्मीकीये दे० मो० निर्वाणप्रकरणे पू०
104707 देवतातत्त्वविचारो नाम चत्वारिंशः सर्गः ॥ ४० ॥
104708
104709 एकचत्वारिंशः सर्गः ४१
104710
104711 श्रीवसिष्ठ उवाच ।
104712
104713 शिवः किमुच्यते देव परंब्रह्म किमुच्यते ।
104714 आत्मा किमुच्यते नाथ परमात्मा किमुच्यते ॥ १ ॥
104715
104716 शास्त्राचार्यादिसाफल्यं नामभेदप्रकल्पनम् ।
104717 अध्यारोपक्रमः पश्चादपवादः प्रदर्श्यते ॥
104718
104719 यदुक्तं नेश्वरस्याकृतेर्ब्रह्मन्व्यपदेशो हि युज्यते इत्यादिना
104720 पूज्यतत्त्वमरूपकमव्यपदेश्यं तस्य शिवादिशब्दैरपि कथं व्यपदेश
104721 इत्याशयेन पृच्छति-शिव इति । यदि शिवादिशब्दप्रवृत्तिनिमित्तकं कंचिदपि
104722 धर्मं तन्न स्पृशति तर्हि शिव इति किंनिमित्तमुच्यते । एवं परंब्रह्मेत्याद्यपि
104723 किंनिमित्तमुच्यत इत्यर्थः ॥ १ ॥
104724
104725 तत्सत्किंचिन्न किंचिच्च शून्यं विज्ञानमेव च ।
104726 इत्यादिभेदो भगवंस्त्रिलोकेश किमुच्यते ॥ २ ॥
104727
104728 ओंतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः इत्यादिव्यपदेशेषु भिनत्तीति भेदः

परस्परव्यावर्तकप्रवृत्तिनिमित्तकनामविशेषः किंनिमित्तमुच्यत इत्यर्थः ॥ २ ॥

ईश्वर उवाच ।

अनाद्यन्तमनाभासं सत्किंचिदिह विद्यते ।
इन्द्रियाणामगम्यत्वाद्यन्न किंचिदिव स्थितम् ॥ ३ ॥

पृष्टेषु नामसुसदिति नाम्नस्तावत्प्रवृत्तिनिमित्तमन्यन्न वाच्यम् । तदर्थे
व्यावर्त्यस्याप्रसिद्ध्यैव व्यावृत्त्यनपेक्षणात् । स्वत एवासद्व्यावृत्तत्वेन
प्रवृत्तिनिमित्तताकृततद्व्यावृत्तिकत्वाभावाच्च । अन्यथा
तत्प्रवृत्तिनिमित्तस्याप्यसतः सद्व्यावर्तकत्वायोगात्सत्त्वेऽवश्यं वक्तव्ये
तुल्यन्यायेन तत्रापि सच्छब्दप्रवृत्तिनिमित्तमन्यदेव वाच्यमेवं तत्र
तत्रापीत्यनवस्थापातात् । एवं किंचिन्नकिंचिच्छब्दयोरपि इन्द्रियावेद्यत्वेन
तद्वेद्यधर्मैर्निर्देष्टुमशक्यत्वाद्व्यावृत्तिनिरपेक्षतयैव तत्र
प्रवृत्तिसंभवः । न ह्यव्यावृत्तं व्यावर्तकधर्मशून्यं वा शब्दाः न
बोधयन्त्येवेति शक्यं वक्तुम् । अव्यावृत्तनिर्धर्मकादिशब्दानां बोधकत्वस्य
सर्वानुभवसिद्धत्वात् । न हि निर्धर्मकत्वं धर्मः अव्यावृत्तं च व्यावृत्तेभ्यो
व्यावृत्तमिति वक्तुं शक्यम् । स्वमाता वन्ध्येतिवद्व्याहतत्वात् । एवं च
शिवादिशब्दानामपि निर्दोषनिरतिशयानन्दस्वरूपमात्रे निमित्तनिरपेक्षैव
प्रवृत्तिस्तुल्य न्यायादुपपन्ना । तत्स्वरूपप्रयुक्तैव वा शिवे दुःखादिव्यावृत्तिपीति
न नामभेदानुपपत्तिरित्याशयेनोत्तरमाह-अनाद्यन्तमिति ।
अनाद्यन्तमाद्यन्तपरिच्छेदाभ्यां स्वतो व्यावृत्तम् ।
अनाभासमाभासान्तरनिरपेक्षं स्वयंज्योतिः । ईदृशं सद्वस्तु इह स्वे महिम्नि
स्वत एव विद्यते न देशकालधर्मज्योतिरादिपरापेक्षसत्तया पराधीनव्यावृत्त्या
चेत्यर्थः । इवकारस्तत्र किंचित्त्वादेरपि मिथ्यात्वद्योतनार्थः ॥ ३ ॥

श्रीवसिष्ठ उवाच ।

यदिन्द्रियाणां बुद्ध्यादियुक्तानामप्यदृश्यताम् ।
गतं तत्कथमीशान त्वशङ्केनोपगम्यते ॥ ४ ॥

मनोबुद्ध्यहंकारचित्तानामिन्द्रियगृहीतार्थमात्रगोचरसंकल्प##-
बुद्ध्याद्यगम्यत्वमप्यर्थादुक्तमेव । न च बुद्ध्याप्यगम्यस्य बोधे
कश्चिदुपायः संभवतीति सतोऽपि तस्य बोधोपायासंभवात् अशङ्केन
उपायासंभवशङ्कारहितेनाधिकारिणा तद्ब्रह्म कथमुपगम्यते अधिगम्यते ।
साक्षात्क्रियत इत्यर्थः ॥ ४ ॥

ईश्वर उवाच ।

यो मुमुक्षुरविद्यांशः केवलो नाम सात्त्विकः ।
सात्त्विकैरेव सोऽविद्याभागैः शास्त्रादिनामभिः ॥ ५ ॥

प्रमाणजन्यया शुद्धसात्त्विकभागपरिणामरूपया ब्रह्माकारवृत्त्या
अविद्यावरणमपनीयते । आवरणापगमे तु ब्रह्म स्वप्रकाशत्वादेव तत्त्वतो भाति । स
एवास्य साक्षात्कारो न बुद्धिवृत्त्यभिव्यक्तचिद्व्याप्तिरूपो
मुमुक्षुर्मोक्षेच्छुर्मनोलक्षणः शमदमादिसाधनपरिशुद्धत्वात्केवलः
सात्त्विकोऽविद्यांशः स सच्छास्त्रसद्गुरुसत्सङ्गादिनामभिः
सात्त्विकैरेवाविद्याभागैः संपादितया श्रेष्ठया
श्रवणमनननिदिध्यासनसाक्षात्कारान्तस्ववृत्तिपरम्परया
बहुतरजन्मसंचितयज्ञदानादिसुकृतसंभृतत्वाच्छ्रेष्ठां स्वकार्याविद्यां
क्षालयन्नेव चिरं तिष्ठति ॥ ५ ॥

104781 अविद्यां श्रेष्ठया श्रेष्ठां क्षालयन्निह तिष्ठति।
104782 मलं मलेनापहरन्युक्तिज्ञो रजको यथा॥ ६॥
104783
104784 काकतालीयवत्पश्चादविद्याक्षय आगते।
104785 प्रपश्यत्यात्मनैवात्मा स्वभावस्यैष निश्चयः॥ ७॥
104786
104787 किं ततस्तत्राह-काकेति। ततश्चिराभ्यासात्काकतालीयन्यायेन
104788 भाग्यपरिपाकादुत्थितया पूर्णब्रह्माकारवृत्त्या अविद्यायाः क्षये निःशेषोच्छेदे
104789 आगते सति अनावरण आत्मा आत्मनैवात्मानं प्रपश्यति।
104790 वास्तवस्वप्रथास्वभावएवावतिष्ठत इत्यर्थः। आत्मस्वभावस्य एष
104791 उक्तस्वप्रकाशस्वरूपपरिशेष एव निश्चयः असंदिग्धाविपर्यस्तसाक्षात्कारो
104792 नान्यादृश इत्यर्थः। अथवा अविद्यास्वभावस्यैव उक्तप्रकार एव क्षयनिश्चयो
104793 नान्यादृश इत्यर्थः॥ ७॥
104794
104795 यथाकथंचिदङ्गारे निघृष्य क्षालयञ्छिशुः।
104796 करनैर्मल्यमाप्नोति कार्ष्ण्याङ्गारक्षये यथा॥ ८॥
104797
104798 अविद्यांशेनैवाविद्याक्षये आत्मनैवात्मनैर्मल्यसिद्धौ च दृष्टान्तमाह##-
104799 अङ्गारयोः क्षयात्प्रक्षालितेऽपि हस्ते पुनःपुनस्तन्निघर्षणेन करनैर्मल्यं
104800 प्राप्नोति। निघर्षणोपजनितरेणुपरम्परालक्षणकार्ष्ण्येनाङ्गारयोः क्षये तु
104801 क्षालयन्पुनरङ्गारालाभात्करस्य स्वतःसिद्धमेव नैर्मल्यं सौन्दर्यं स्वत एव
104802 प्राप्नोति यथा तथा सात्त्विकस्तामसश्चाविद्याभागः शास्त्राद्यैः स्वभागान्तरैः
104803 सहायैर्यथाकथंचिदात्मानं विचारयेच्चेद्द्वयोरपि भागयोर्नाशो
104804 निर्मलात्मोदयश्च सिद्ध्यतीत्यर्थः॥ ८॥
104805
104806 यथाकथंचिच्छास्त्राद्यैर्भागैर्भागं विचारयेत्।
104807 सात्त्विकस्तामसो भागो द्वयोरात्मोदयस्तथा॥ ९॥
104808
104809 पश्यत्यात्मानमात्मैव विचारयति चात्मना।
104810 आत्मैवेहास्ति नाविद्या इत्यविद्याक्षयं विदुः॥ १०॥
104811
104812 ननु बुद्ध्या आत्मा विचार्य निर्धार्यते तत्कुतो न बुद्धिदृश्यतात्मन इति चेन्न।
104813 बुद्धेर्जडाया विचारादौ स्वातन्त्र्यं किंत्वात्मैव
104814 बुद्ध्याद्युपायैर्विचारादिनाऽविद्यां बाधित्वा स्वयं प्रथत इत्याह-पश्यतीति॥ १०
104815 ।।
104816
104817 यावत्किंचिदिदं वस्तु नाना नात्मावगम्यताम्।
104818 क्रमा गुरूपदेशाद्या नात्मज्ञानस्य कारणम्॥ ११॥
104819
104820 अत एव गुरुशास्त्रादिनानाभेदा न आत्मा नाप्यात्मज्ञानहेतवः आत्मस्वरूपस्य
104821 तज्ज्ञानस्य साधनानपेक्षत्वादित्याशयेनाह-यावदिति॥ ११॥
104822
104823 गुरुर्हीन्द्रियवृत्तात्मा ब्रह्म सर्वेन्द्रियक्षयात्।
104824 यद्वस्तु यत्क्षये प्राप्यं तत्तस्मिन्सति नाप्यते॥ १२॥
104825
104826 तत्रोपपत्त्यन्तरमाह-गुरुरिति इन्द्रियैर्वृत्तं घटितं यत्पुर्यष्टकं तदात्मा॥
104827 १२॥
104828
104829 अकारणान्यपि प्राप्ता भृशं कारणतां द्विज।
104830 क्रमा गुरूपदेशाद्या आत्मज्ञानस्य सिद्धये॥ १३॥
104831
104832 तर्हि किं गुर्वादयो व्यर्था नेत्याह-अकारणानीति। सिद्धये

104833 विस्मृतकण्ठचामीकरवल्लाभाय ॥ १३ ॥
104834
104835 क्रमे गुरूपदेशानां प्रवृत्ते शिष्यबोधतः ।
104836 अनिर्देश्योऽप्यदृश्योऽपि स्वयमात्मा प्रसीदति ॥ १४ ॥
104837
104838 प्रसीदति अभिव्यक्तो भवति ॥ १४ ॥
104839
104840 शास्त्रार्थैर्बुध्यते नात्मा गुरोर्वचनतो न च ।
104841 बुध्यते स्वयमेवैष स्वबोधवशतस्ततः ॥ १५ ॥
104842
104843 एवमावश्यकत्वे कथमकारणत्वोक्तिस्तत्राह-शास्त्रार्थैरिति ॥ १५ ॥
104844
104845 गुरूपदेशशास्त्रार्थैर्विना चात्मा न बुध्यते ।
104846 एतत्संयोगसत्तैव स्वात्मज्ञानप्रकाशिनी ॥ १६ ॥
104847
104848 प्रकाशिनी अभिव्यञ्जिका ॥ १६ ॥
104849
104850 गुरुशास्त्रार्थशिष्याणां चिरसंयोगसत्तया ।
104851 अहनीव जनाचार आत्मज्ञानं प्रवर्तते ॥ १७ ॥
104852
104853 कर्मबुद्धीन्द्रियाद्यन्तसुखदुःखादिस।क्षये ।
104854 शिव आत्मेति कथितस्तत्सदित्यादिनामभिः ॥ १८ ॥
104855
104856 अत एव बोधनिरस्तसर्वामङ्गलः परमानन्दात्मा स्वत एव शिवशब्दार्हो न
104857 प्रवृत्तिनिमित्तसापेक्ष इत्युक्तमित्याह-कर्मेति ॥ १८ ॥
104858
104859 यत्रेदमखिलं नास्ति तद्रूपेणैव चास्ति वा ।
104860 तदाकाशादच्छतरमनन्तं सदिवास्ति हि ॥ १९ ॥
104861
104862 जगत् बाधे नास्ति । आरोपे चास्ति । तदधिष्ठानतत्त्वं अस्ति हि अस्त्येव ।
104863 व्यावहारिकराद्वैलक्षण्यात्सदिव ॥ १९ ॥
104864
104865 अविश्रान्ततया यत्र तनुविद्यैर्मुमुक्षिभिः ।
104866 विचित्रशुद्धमननकलङ्ककलितात्मभिः ॥ २० ॥
104867
104868 शिवब्रह्मसदादिनामकल्पनापि जीवन्मुक्तानामधिकारिप्रबोधनायैवेत्याह##-
104869 तत्त्वस्य च मननं तल्लक्षणो यः शुद्धात्मनि कलङ्कस्तद्युक्त आत्मा मनो येषाम् ॥
104870 २० ॥
104871
104872 अदूर एव तिष्ठद्भिर्जीवन्मुक्तस्य दृक्पथे ।
104873 मोक्षोपासकबोधाय शास्त्रार्थरचनाय च ॥ २१ ॥
104874
104875 परमार्थस्य अदूरे संनिहिते जीवन्मुक्तस्य दृक्पथे तिष्ठद्भिः । मोक्षाय
104876 [मोक्षस्योपासका इति पाठः ।] स्वोपासका ये भक्तास्तेषां बोधाय
104877 शास्त्रार्थस्य तत्त्वतज्ज्ञानतदुपायानां रचनाय सम्यगुपपादनाय ॥ २१ ॥
104878
104879 ब्रह्मेन्द्ररुद्रप्रमुखैर्लोकपालैः सुपण्डितैः ।
104880 पुराणवेदसिद्धान्तसिद्धये भावितात्मभिः ॥ २२ ॥
104881
104882 पुराणानां वेदानां सिद्धान्तानां बादरायणसूत्रादीनां सिद्धये सार्थक्याय ॥
104883 २२ ॥
104884

104885 चिद्ब्रह्म शिव आत्मेशपरमात्मेश्वरादिका |
104886 एतस्मिन्कल्पिता संज्ञा निःसंज्ञे पृथगीश्वरे || २३ ||
104887
104888 पृथक् संज्ञा कल्पिता || २३ ||
104889
104890 एवमेतज्जगत्तत्त्वं स्वं तत्त्वं शिवनामकम् |
104891 सर्वथा सर्वदा सर्वसर्वं यत्सुखमास्व भो || २४ ||
104892
104893 भो वसिष्ठ वियदादिजगदारोपाधिष्ठानत्वाज्जगत्तत्त्वम्
104894 अवस्थात्रयारोपाधिष्ठानत्वात्स्वं तत्त्वं च यत्सर्वदा सर्वप्रकारैः सर्ववस्तूनां
104895 सर्वभावनिर्वाहकं तत्केवलं ब्रह्मसुखमेव नाणुमात्रमप्यन्यदस्तीति निश्चित्य
104896 त्वमास्व || २४ ||
104897
104898 शिव आत्मा परं ब्रह्मेत्यादिशब्दैस्तु भिन्नता |
104899 पुरातनैर्विरचिता तस्य भेदो न वस्तुतः || २५ ||
104900
104901 एवं देवार्चनं नित्यं ज्ञः कुर्वन्मुनिनायक |
104902 यत्रास्मदादयो बृत्यास्तत्प्रयान्ति परं पदम् || २६ ||
104903
104904 एवमुक्तस्थितिरूपं देवार्चनम् | यत्र यस्मिन्परमशिवपदे अस्मदादय
104905 एकैकगुणाभिमानिनो भृत्या इव सृष्ट्यादिकर्मनियताः || २६ ||
104906
104907 श्रीवसिष्ठ उवाच |
104908
104909 अविद्यमानमेवेदं विद्यमानमिव स्थितम् |
104910 यथा तन्मे समासेन भगवन्वक्तुमर्हसि || २७ ||
104911
104912 इदानीं वसिष्ठः शुद्धचिति जीवभावतत्संसरणारोपक्रमं जिज्ञासुः पृच्छति##-
104913
104914 ईश्वर उवाच |
104915
104916 योऽसौ ब्रह्मादिशब्दार्थः संविदं विद्धि केवलम् |
104917 स्वच्छमाकाशमप्यस्य [आकाशमपि मध्यस्थं इति पाठः |] स्थूलं
104918 मेरुरणोरिव || २८ ||
104919
104920 उत्तरोत्तरारोपे स्थौल्योपचयं वक्तुं परमसूक्ष्मरूपं मूलं दर्शयति##-
104921 भावः || २८ ||
104922
104923 सा वेद्यमिह गच्छन्ती याति चिन्नामयोग्यताम् |
104924 अप्यवेद्यवती नूनमुन्मन्यन्तपदस्थिता || २९ ||
104925
104926 सा चिद्वेद्यगोचरसंस्कारोद्बोधाद्वेद्यकल्पनोन्मुखी यदा भवति तदा चेतनाच्चिदिति
104927 क्रिया नामयोग्या भवतीत्यर्थः | उन्मन्यन्तपदे
104928 निर्विकल्पसमाधिप्रसिद्धचिदानन्दैकरसस्वभावे स्थितापि || २९ ||
104929
104930 क्षणाद्भावितवेद्यत्वादहन्तामनुगच्छति |
104931 पुरुषत्वात्पुमान्स्वप्ने वनवारणतामिव || ३० ||
104932
104933 अस्याहन्तादिरूपाया देशतां कालतां गताः |
104934 संपद्यन्ते ततः शून्यरूपिण्यः सख्य एव ताः || ३१ ||
104935
104936 इयत्तापौर्वापर्यावगाहनाद्देशतां कालतां च गताः कल्पनाः संपद्यन्ते

104937 ताश्चाहंतायाः सख्य इत्युत्प्रेक्षा ॥ ३१ ॥
104938
104939 ताभिः संवलिता सैव सत्ता जीवाभिधानिका ।
104940 भवति स्पन्दविज्ञाना पवनस्येव लेखिका ॥ ३२ ॥
104941
104942 ताभिर्देशकालकल्पनाभिः संवलिता सा
104943 अहंतास्पदगोचरसंस्कारोद्बोधात्स्पन्दविज्ञाना सती पवनस्य लेखिकेवान्तः
104944 प्राणस्पन्दा सती जीवाभिधानिका भवति । जीव प्राणधारणे इति
104945 धात्वर्थानुगमादित्यर्थः ॥ ३२ ॥
104946
104947 जीवशक्तिस्तथाभूता निश्चयैकविलासिनी ।
104948 बुद्धितामनुयाता सा भवत्यज्ञपदे स्थिता ॥ ३३ ॥
104949
104950 एवं निश्चयसंस्कारोद्बोधाद्बुद्ध्यादिशब्दवाच्यापि भवतीत्याह-जीवेति ॥ ३३ ॥
104951
104952 शब्दशक्त्या क्रियाशक्त्या ज्ञानशक्त्यानुगम्यते ।
104953 प्रत्येकं प्रस्फुरत्यन्तरप्रदर्शितरूपया ॥ ३४ ॥
104954
104955 ततः कायिकवाचिकमानसिकव्यवहारसंस्कारोद्बोधाच्छब्दादिशक्त्या
104956 अहंतानुगम्यते । न प्रदर्शितमत्यन्तपिहितं तात्त्विकमात्मरूपं यया ॥ ३४ ॥
104957
104958 मिलित्वैष गणः क्षिप्रं स्मृतिं समनुकूलयन् ।
104959 मनो भवति भूतात्मबीजं संकल्पशाखिनः ॥ ३५ ॥
104960
104961 आतिवाहिकदेहोक्तिभाजनं तद्विदुर्बुधाः ।
104962 अन्तस्थया ब्रह्मशक्त्या ज्ञरूपं स्वात्मनात्मदृक् ॥ ३६ ॥
104963
104964 अन्तस्थया अनावृतसाक्षिरूपया ब्रह्मशक्त्या व्याप्तं जानातीति ज्ञ इति
104965 प्रमातृरूपं संपद्यते । तच्चात्मनः स्वप्रकाशताबलादेवेत्याह##-
104966
104967 संपद्यमाना एवास्मिंश्चेतसीमा हि शक्तयः ।
104968 पश्चादिह बहिष्ठास्ता उद्यन्त्यनुदिता अपि ॥ ३७ ॥
104969
104970 एवमन्तःकल्पना बाह्यदृश्यसत्ताकल्पनायां हेतुरित्याह-संपद्यमाना इति ।
104971 ताः वक्ष्यमाणाः ॥ ३७ ॥
104972
104973 वातसत्ता स्पन्दसत्ता स्पर्शसत्ता तथैव च ।
104974 त्वक्सत्ता तेजसां सत्ता तथा सत्ताप्रकाशिनी ॥ ३८ ॥
104975
104976 तेजःसत्तायाः प्रकाशिनी चक्षुःसत्ता ॥ ३८ ॥
104977
104978 रूपसत्ता जलसत्ता स्वादुसत्ता तथैव च ।
104979 तथैव रससत्ता च गन्धसत्ता तथैव च ॥ ३९ ॥
104980
104981 रसयतीति रसो रसनेन्द्रियं तत्सत्ता ॥ ३९ ॥
104982
104983 भूसत्ता हेमसत्ता च पिण्डसत्ता च पीवरी ।
104984 देशसत्ता कालसत्ता सर्वाढ्याकारवर्जिता ॥ ४० ॥
104985
104986 हेमशब्देन रजतस्वर्णमये ब्रह्माण्डखर्परे ग्राह्ये । पीवरी अतिमहती
104987 ब्रह्माण्डपिण्डसत्ता ॥ ४० ॥
104988

104989 सर्वसत्तागणं चैतत्क्रोडीकृत्य स्वरूपवत् ।
104990 स्फुरत्याश्रित्य पत्रादि बीजं बीजादितां गतम् ॥ ४१ ॥
104991
104992 स्वरूपवत्तादात्म्येन क्रोडीकृत्य संगृह्य । यथा बीजमुत्तरोत्तरपरिणामेन
104993 बीजादितां गतमङ्कुरकाण्डशाखापत्रादि क्रोडीकृत्य स्फुरति तद्वत् ।
104994 बीजाद्बीजादितां इति पाठे बीजन्ति उत्तरोत्तरबीजानि
104995 येभ्यस्तादृशानामङ्कुरकाण्डादिपरम्पराणामादितां निदानतां गतम् ॥ ४१ ॥
104996
104997 एतत्पुर्यष्टकं विद्धि देहोऽयं चातिवाहिकः ।
104998 अपारबोधमेतत्तु स्फुरत्यङ्ग विभागवत् ॥ ४२ ॥
104999
105000 एतदुक्तं सर्वसत्ताक्रोडीकृतस्वरूपं पुर्यष्टकं स्थूलादिदेहत्रयात्मकम् ।
105001 अयमेव वासनात्मना आतिवाहिको देहः । अपारोऽपरिच्छिन्नो बोधश्चित्स्वरूपं यस्य
105002 तथाविधं ब्रह्मैव एतत् उक्तविभागवत्स्फुरति नान्यदित्यर्थः ॥ ४२ ॥
105003
105004 एवमाद्यङ्ग संपन्नं संपन्नं न च किंचन ।
105005 न ज्ञानं न च तद्रूपं न विदाचितचेतनम् ॥ ४३ ॥
105006
105007 एवमारोपक्रमं प्रपञ्चापवादं दर्शयति-एवमादीति ।
105008 संपन्नमज्ञदृशा । तत्त्वदृशा तु न किंचन संपन्नम् । तत् पुर्यष्टकरूपम् ।
105009 विदा तत्र तत्र चिदाभासेनाचितं चेतनमपि न ॥ ४३ ॥
105010
105011 परं परे प्रस्फुरितं केवलं केवलात्म सत् ।
105012 जलपीठस्य जठरे जलद्रवविलासवत् ॥ ४४ ॥
105013
105014 जलपीठस्य जलाधारस्य । समुद्रस्येति यावत् ॥ ४४ ॥
105015
105016 संवित्संवेदनैकात्म पृथगेतदचेतनम् ।
105017 संपद्यते परिज्ञातं संकल्पनगरोपमम् ॥ ४५ ॥
105018
105019 कथमिदं विज्ञातं तत्राह-संविदः पृथक्कृतं तु अचेतनं
105020 भासकशून्यमित्युभयथापि न जीवतीत्यर्थः ॥ ४५ ॥
105021
105022 संवेदनात्परिज्ञानाच्छिवतामेव गच्छति ।
105023 अज्ञातमेव वा यत्तत्कथं गच्छति वस्तुताम् ॥ ४६ ॥
105024
105025 किंचेदं ज्ञातं सद्वास्तवं स्यादज्ञातं वा नोभयथापीत्याह-संवेदनादिति
105026 । संवेदनादित्यस्य व्याख्या-परिज्ञानादिति ॥ ४६ ॥
105027
105028 अथैतद्विन्दते स्वान्तःसंकल्पादंशतां स्वतः ।
105029 तन्मात्रसत्ता तस्याणोरेतां पश्यति देहके ॥ ४७ ॥
105030
105031 अथ यदि कश्चिद्ब्रूयात्स्वतश्चिन्मात्रस्वभावमपि एतद्वस्तु बहु स्यां प्रजायेयेति
105032 संकल्पात्स्वान्तरेव दृश्यांशतां विन्दते इति तर्हि संकल्पकल्पितस्य
105033 मिथ्यात्वात्तस्याणोः परमसूक्ष्मस्यात्मनस्तन्मात्रस्वभावेन सत्ता प्रथमकल्पिते
105034 देहके सूक्ष्मदेहे एव चिराभ्यासात्स्थूलतां पश्यति ॥ ४७ ॥
105035
105036 सर्वं स्थूलत्वमापन्नं तदेवाशु प्रपश्यति ।
105037 तस्य तन्मात्ररन्ध्राणि यथादेशं प्रपश्यति ॥ ४८ ॥
105038
105039 स्थूलदेहसंबन्धाच्च सर्वमान्तरं कोशचतुष्टयं बाह्यविषयजातं च
105040 स्थूलत्वमापन्नं तद्ब्रह्मैव स्वकल्पनया पश्यति । बाह्यरूपादिदर्शने च तस्य

105041 देहस्य चक्षुरादिलक्षणानि तन्मात्रद्वाराणि यथाविषयं व्यवस्थितानि प्रपश्यति ॥ ४८
105042 ।।
105043

105044 ततः पुरुषरूपैकभावनात्पुरुषाकृतिम् ।
105045 काकतालीयवद्दृष्ट्वा तुष्टं पुष्टं भवत्यलम् ॥ ४९ ॥
105046

105047 ततो हस्तपादाद्यवयवसंघाते आन्तरकोशेषु च
105048 पुरुषाकारेणैकत्वभावनात्पुरुषाकृतिं पश्यति । तेन
105049 चाकस्माद्व्यवहारक्षमतां दृष्ट्वा तुष्टं पुष्टं च भवति ॥ ४९ ॥
105050

105051 जीवदेतदवस्थाकं स्थितं पश्यति देहकम् ।
105052 असन्तमेव गन्धर्वपुरं स्वप्ननरं यथा ॥ ५० ॥
105053

105054 श्रीवसिष्ठ उवाच ।
105055

105056 गन्धर्वनगराकारमपि स्वप्ननरोपमम् ।
105057 जगद्दुःखाय दुःखस्य कात्र युक्तिः परिक्षये ॥ ५१ ॥
105058

105059 मिथ्येति ज्ञातमपि जगद्दुःखं जनयत्येव अतो दुःखचिकित्सा
105060 मिथ्यात्वज्ञानादन्यैव वाच्येति मन्यमानो वसिष्ठः पृच्छति-गन्धर्वेति ॥ ५१
105061 ।।
105062

105063 ईश्वर उवाच ।
105064

105065 वासनावशतो दुःखं विद्यमाने च सा भवेत् ।
105066 अविद्यमानं च जगन्मृगतृष्णाम्बुभङ्गवत् ॥ ५२ ॥
105067

105068 वासनाक्षयपर्यन्तं दृढतरमिथ्यात्वनिश्चय एव दुःखनिवृत्त्युपायो नापातत
105069 इत्याशयेनोत्तरमाह-वासनेति ॥ ५२ ॥
105070

105071 अतः किं वास्यते केन कस्य वा वासना कुतः ।
105072 कथं स्वप्ननरेणाङ्ग मृगतृष्णाम्बु पीयते ॥ ५३ ॥
105073

105074 अत्यन्तासत्त्वदृढनिश्चये आश्रयविषयाद्यभावादेव वासनानुदयसिद्धिरित्याह##-
105075

105076 सद्रष्टरि तु साहान्ते समनोमननादिके ।
105077 अविद्यमाने जगति यत्सत्तत्परिदृश्यते ॥ ५४ ॥
105078

105079 द्रष्ट्रादिसहिते जगत्यविद्यमाने सति यद्दृङ्मात्रं सत्तदेव वा शिष्यते ॥ ५४ ॥
105080

105081 यत्र नो वासना नैव वासको नैव वास्यता ।
105082 केवलं केवलीभावः संशान्तकलनभ्रमः ॥ ५५ ॥
105083

105084 यस्य सत्योऽप्यसत्यो वा शून्य एव हि यक्षकः ।
105085 विलीनस्तस्य कैवल्यात्किमन्यदवशिष्यते ॥ ५६ ॥
105086

105087 सत्यो व्यावहारिकः असत्यः प्रातिभासिको वा यक्षको यस्य प्रौढस्य दृशा
105088 शून्यत्वान्नित्यविलीनः ॥ ५६ ॥
105089

105090 शून्य एव हि वेताल इवेत्थं चित्तवासना ।
105091 उदितेयं जगन्नाम्नीं तच्छान्तौ शान्तिरक्षता ॥ ५७ ॥
105092

105093 अहन्तायां जगति च मृगतृष्णाजले च यः।
105094 सास्थस्तं धिग्घतनरं नोपदेश्यस्त्वसाविति ॥ ५८ ॥
105095
105096 जीवं विवेकिनमिहोपदिशन्ति तज्ज्ञा नो बालमुद्भ्रमसन्मयमार्यमुक्तम्।
105097 अज्ञं प्रशास्ति किल यः कनकावदातां स स्वप्नदृष्टपुरुषाय सुतां ददाति
105098 ॥ ५९ ॥
105099
105100 कुतो नोपदेश्यस्तत्राह-जीवमिति। तज्ज्ञा आत्मज्ञा विवेकिनं
105101 प्राप्ताधिकारिविशेषणमुपदिशन्ति न त्वप्राप्ताधिकारत्वादुद्भ्रमं
105102 बहुतरभ्रान्तिशालिनमार्यैर्मुक्तमुपेक्षितमसद्देहाद्यभिमानित्वादसन्मयं
105103 बालं यः अज्ञं प्रशास्ति उपदिशति स कनकवदवदातां सुन्दरीं स्वसुतां
105104 स्वप्नदृष्टपुरुषाय ददाति। सोऽपि मूर्ख एवेति यावत् ॥ ५९ ॥
105105
105106 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वाणप्रकरणे पू०
105107 जगन्मिथ्यात्वप्रतिपादनं नामैकचत्वारिंशः सर्गः ॥ ४१ ॥
105108
105109 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
105110 जगन्मिथ्यात्वप्रतिपादनं नामैकचत्वारिंशः सर्गः ॥ ४१ ॥
105111
105112 द्विचत्वारिंशः सर्गः ४२
105113
105114 श्रीवसिष्ठ उवाच।
105115
105116 ततः स जीवो भगवन्दृष्टवान्देहसंभ्रमम्।
105117 आदिसर्गे नभःसंस्थः कामवस्थामुपैति हि ॥ १ ॥
105118
105119 समष्टिव्यष्टिसंसारकॢप्तिरीशादिपूर्विका।
105120 मायैवेत्युपदिश्यात्र शंभुः स्वनिलयं ययौ ॥
105121
105122 जीवदेतदवस्थाकं स्थितं पश्यति देहकम् इत्यन्ते योऽध्यारोप उक्तस्तच्छेषं
105123 जिज्ञासुर्वसिष्ठः पृच्छति-तत इति। आदिसर्गे कल्पाद्यध्यासक्रमे। उक्तानुवादः
105124 पूर्वानुसंधानार्थः ॥ १ ॥
105125
105126 ईश्वर उवाच।
105127
105128 परस्मात्परमे व्योम्नि पूर्वोक्तक्रमतो वपुः।
105129 जीवः पश्यति संपन्नं स च स्वप्ननरो यथा ॥ २ ॥
105130
105131 स च जीवः स्वप्ननरो यथा सूक्ष्मतमनाडीषु विस्तृततमं ब्रह्माण्डं पश्यति
105132 तद्वत्परमसूक्ष्मे चिदाकाशेऽपि पश्यतीत्यर्थः ॥ २ ॥
105133
105134 सर्वगत्वाच्चिद्घनस्य कार्यं स्वप्ननरोऽपि हि।
105135 यथा करोत्याशु तथा जीवोऽद्यापि शरीरधृक् ॥ ३ ॥
105136
105137 उक्तमेव दृष्टान्ताशयं विवृणोति-सर्वगत्वादिति। नाडीछिद्रान्तः प्रवेशेऽपि
105138 सर्वशक्तिमतः सत्त्वादिति भावः। कार्यं ब्रह्माण्डं यथा करोति तथा अद्यापि
105139 सर्वेषां प्रसिद्धमित्यर्थः ॥ ३ ॥
105140
105141 सनातनोऽहमव्यक्तः पुमानित्यभिधां ततः।
105142 करोत्यात्मनि तेनाशु प्रथमः प्रथितः पुमान् ॥ ४ ॥
105143
105144 स एवादिसर्गे समष्ट्युपाधिको हिरण्यगर्भाख्यः स्वात्मनि बाह्यवस्तुषु च

105145 नामभेदमपि कथयतीत्याह-सनातन इति ॥ ४ ॥
105146
105147 एवं स सर्गे कस्मिंऽस्चित्प्रथमोऽथ सदाशिवः।
105148 कस्मिंश्चिद्विष्णुरित्युक्तो नाभ्युत्पन्नः पितामहः ॥ ५ ॥
105149
105150 तस्यैव सात्त्विकराजसतामसकल्पेषु सदाशिवादिमूर्तिप्राथम्येनेतरकल्पकत्वं
105151 नियतमित्याह-एवमिति ॥ ५ ॥
105152
105153 पितामहः स कस्मिंश्चित्कस्मिंश्चिदपि चेतरः।
105154 स च संकल्पपुरुषः संकल्पान्मूर्तिमास्थितः ॥ ६ ॥
105155
105156 आकाशप्रभवो ब्रह्मेति पूर्वरामायणोक्तेर्नाभ्युत्पत्तिनियमः पितामहस्य
105157 नास्तीत्याशयेनाह-पितामह इति। इतरो दुर्गाभैरवविनायकादिः। तेषामपि
105158 तत्तन्माहात्म्यप्रतिपादकपुराणादिभागेषु ब्रह्माद्युद्भवहेतुत्वप्रसिद्धेः। स
105159 उक्तः सदाशिवादिपुरुषः संकल्पमयः। सोऽकामयत बहु स्यां प्रजायेय इति
105160 श्रुत्युक्तमायिकसंकल्परूपः ॥ ६ ॥
105161
105162 पुष्टः प्रथमसंकल्पस्तां मनोमूर्तिमास्थितः।
105163 यद्यथा कल्पयत्याशु तत्तथानुभवत्यलम् ॥ ७ ॥
105164
105165 प्रथमसंकल्प एव सूक्ष्मभूतसर्गद्वारा पुष्टः
105166 संस्तत्कालसमष्टिव्यष्टिमनोरूपमास्थितो हिरण्यगर्भादिरूपः सन्
105167 यद्भुवनप्रजासर्गादि यथा कल्पयति तत्तथा व्यवहारक्षममनुभवतीत्यर्थः ॥ ७ ॥
105168
105169 तत्त्वसद्रूपमखिलं शून्यवेतालको यथा।
105170 भ्रमदृष्ट्या तु सद्रूपमित्यहंता जगद्गतिः ॥ ८ ॥
105171
105172 तत्त्वदृष्ट्या असद्रूपं भ्रमदृष्ट्या तु सद्रूपं सत्यमिव भाति ॥ ८ ॥
105173
105174 द्रष्टादिपुरुषस्त्वेवं स्वयं संपद्यते हि यः।
105175 स निमेषं प्रति व्योम समुदेत्यथ नीयते ॥ ९ ॥
105176
105177 एवमुक्तरीत्या य आदिपुरुषः स्वसृष्टस्य द्रष्टा संपद्यते स निमेषं प्रति
105178 निमेषलक्ष्यकालेऽपि स्वरूपपर्यालोचनमात्रेण व्योम चिदाकाशमात्रं समुदेति। अथ
105179 स्वरूपविस्मरणे निमेषमात्रेणैव अनन्तमपारं च संसारं प्रति नीयते ॥ ९ ॥
105180
105181 निमेष एव कल्पो यो महाकल्पपरम्पराम्।
105182 प्रतिभासविपर्यासमात्रेणानुभवत्यलम् ॥ १० ॥
105183
105184 कल्पः कल्पनासमर्थः। प्रतिभासस्य विपर्यासः पराक्प्रवणता तन्मात्रेण ॥ १० ॥
105185
105186 परमाणौ परमाणौ व्योम्नि व्योम्नि क्षणे क्षणे।
105187 सर्गकल्पमहाकल्पभावाभावा भवन्ति ते ॥ ११ ॥
105188
105189 व्योम्नि सूचीछिद्राद्याकाशेऽपि ॥ ११ ॥
105190
105191 दृश्यन्ते केचिदन्योन्यं साधर्म्याद्वासनागतेः।
105192 मिथः केचिन्न दृश्यन्ते दृष्टेनाथ सदात्मना ॥ १२ ॥
105193
105194 ते च सर्गभेदा यावतां जीवानां तुल्यकालं तुल्यगोचरवासनोद्भवस्तावतां मिथो
105195 दर्शनादिव्यवहारसंवादिनः। अन्येषां तच्छून्या
105196 इत्यैन्दवोपाख्यानन्यायमाश्रित्याह-दृश्यन्त इति। अदर्शनं च

कल्पितरूपांशे। अधिष्टानांशे तु सर्वेषां नित्यापरोक्षतैवेत्याह-दृष्टेनेति॥
१२॥

सर्गाः सर्गेण सर्वत्र संभवन्ति न ते शिवे।
भवन्ति परमे व्योम्नि व्योमरूपा इति स्वयम्॥ १३॥

तत्र युक्तिमाह-सर्गा इति। यतः सर्गेण सर्गात्मना स्थितेन जीवेन संभाव्यमानाः
सन्त एव सर्गाः संभवन्ति न तु ते शिवे परमार्थस्वभावे परमे व्योम्नि। तत्र
तेषां व्योमरूपत्वस्यैव पर्यवसानादित्यर्थः॥ १३॥

स्वयं च सदसद्रूपा लीयन्ते स्वप्नशैलवत्।
सर्गैर्न देश आक्रान्तो न च कालो न कर्तृता॥ १४॥

ननु सर्गा ब्रह्मसत्तानिरपेक्षाः स्वसत्तया वा देशकालसंबन्धबललब्धसत्तया वा
सन्तु तत्राह-स्वयं चेति। सदसद्रूपा नैकतरनियतस्वभावाः। एवं देशः
कालश्च सर्गैः प्राङ् नाक्रान्तः। तयोरपि सर्गान्तर्गतत्वात्सर्गसापेक्षरूपत्वेन
सर्गाधीनकल्पनत्वाच्चेत्यर्थः। तर्हि सर्ग एव स्वस्य
कालादिसंबन्धरूपमन्यादृशं वा सत्त्वं करोतु तत्राह-न कर्तृतेति।
सर्गाणामिति विपरिणामेनानुषङ्गः॥ १४॥

न चैते सत्स्वरूपा वा न कल्प्यं नापि च क्षणः।
न चेदं जायते किंचिन्न च किंचन नश्यति॥ १५॥

तर्हि सर्गाः स्वयमेव यावत्प्रलयं सत्स्वरूपाः सन्तु तत्राह-न चैते इति।
सर्गसत्पदयोः पर्यायत्वापत्तेर्नाशानापत्तेः। नाभावो विद्यते सतः इति
भगवत्सिद्धान्तादिति भावः। तर्हि सर्गे सत्त्वमध्यस्तमेवास्तु तत्राह-न
कल्प्यमिति। असतः सत्त्वाध्यासाधिष्ठानत्वासंभवादिति भावः। तर्हि
वैनाशिकमतवत्तत्तत्क्षणरूपमेव सत्त्वं धारयानुगतमस्तु तत्राह-नापीति।
क्षणरूपस्य सत्त्वस्य प्रतीतिकालपर्यन्तमनवस्थितेरत्यन्ताप्रतीतस्य सत्त्वं अलीकस्यापि
तदापत्तेरिति भावः। एतेन आद्यन्तक्षणसंबन्धलक्षणौ जन्मनाशावपि सर्गस्य
निरस्तावित्याशयेनाह-न चेदमिति॥ १५॥

सर्वं संकल्परूपेण चिच्चमत्कुरुते चिति।
स्वप्नपत्तननिर्माणपातोत्पातनवज्जगत्॥ १६॥

एवं चास्मत्सिद्धान्त एव शरणमित्याशयेन प्रागुक्तं स्मारयति-सर्वमिति॥ १६॥

न देशकालक्रमणं करोति च मनागपि।
यथा संकल्पशैलेन देशकालाद्यनन्तकम्॥ १७॥

कथं तर्हि देशकालाक्रान्तताप्रत्ययस्तत्राह-यथेत्यादिना॥ १७॥

आक्रान्तमपि नाक्रान्तं तथैव जगता सता।
अथ [अप्यनाक्रान्तमिति पाठः।] नाक्रान्तमाक्रान्तमिव
संकल्पमेरुणा॥ १८॥

यथा उच्चैः स्थितेन संकल्पमेरुणा नाक्रान्तमेव अथापि संकल्पकाले आक्रान्तमिव
प्रतिभासते तद्वदिति परेणान्वयः॥ १८॥

यथोच्चैर्देशकालादि तथैव जगता सता।
संपद्यते यथा योऽसौ पुरुषः सर्वकारकः॥ १९॥

105249 अत एव संकल्पानुसारेणैव पुरुषकीटस्थावरादिजन्मवैचित्र्यमित्याह-संपद्यत
105250 इति | सर्वकारकः ऐहिकामुष्मिकसर्वक्रियासमर्थः || १९ ||
105251
105252 अनेनैव क्रमेणेह कीटः संपद्यते क्षणात् |
105253 तस्थुषामेवमेवेह जातयो हि चतुर्विधाः || २० ||
105254
105255 तस्थुषां स्थावराणां योनिरपि संपद्यते | एवमेव अण्डजादिचतुर्विधजातयः
105256 संपद्यन्त इत्यर्थः || २० ||
105257
105258 रुद्राद्यास्तृणपर्यन्ताः संपद्यन्ते क्षणं प्रति |
105259 परमाणूपमाः सन्ति तथा केचिदणूपमः || २१ ||
105260
105261 क्षणं प्रति मायाधिष्ठातुः संकल्पक्षणे एव | वासनासौक्ष्म्यात्परमाणूपमा
105262 ईषद्विकासे त्रसरेणूपमाः सर्गाः सांप्रतं सन्ति || २१ ||
105263
105264 एष एव क्रमस्तेषां सति वाऽसति सर्गके |
105265 अस्याः संसारमायाया एवंभूतार्थभावनात् || २२ ||
105266
105267 वर्तमानसर्गवदेवातीतानागतानामपि क्रमो बोध्य इत्याह-एष एवेति | तेषां
105268 रुद्रादितृणान्तानाम् | कथं तर्हि सर्गोपरमस्तत्राह-अस्या इति | एवंभूतस्य
105269 परमार्थतत्त्वस्य भावनात्साक्षात्कारात् || २२ ||
105270
105271 भेदोपशान्तावभ्यासाद्भवत्युपगतः शिवः |
105272 निमेषशतभागार्धमात्रमेव परा चितिः || २३ ||
105273
105274 क्षणलेशमात्रमपि चिदात्मनो बहिर्मुखत्वे कल्पकोटिविस्तृतानर्थोदय इत्याह##-
105275
105276 स्वरूपतश्चेल्लुठिता सैषोदेत्यनवस्थितिः |
105277 सा ज्ञरूपा शिलाकाश इव चित्स्वात्मनि स्थिता || २४ ||
105278
105279 लुठिता प्रच्युता | चितः स्वरूपप्रतिष्ठैव ब्रह्मतेत्याह-सेति | ज्ञस्तत्त्ववित् तेन
105280 रूप्यते अनुभूयत इति ज्ञरूपा || २४ ||
105281
105282 तदनाद्यवभासात्म ब्रह्मशब्देन गीयते |
105283 अस्मिन्प्रौढिं गते सर्गे महाचिद्द्योतनं न च || २५ ||
105284
105285 अभिमानवृद्ध्या यथा यथा सर्गः प्रौढिं गच्छति तथा तथा
105286 चिदात्मविद्योतनह्रासः परिच्छेदाधिक्यप्रयुक्ता आत्मनः क्षुद्रता चेत्याह##-
105287
105288 संगतासत्यदिग्देशकालांशपरमाणुता |
105289 जीवतामागता भूततन्मात्रवलनाक्रमात् || २६ ||
105290
105291 संगतैरसत्यैर्दिग्देशकालकृतैरंशैः परिच्छेदैः परमा मशकपुत्तिकाद्यन्ता
105292 अणुता क्षुद्रता च | आत्मन इति शेषः | परमाणुना इति पाठे तु परमेणाणुना
105293 लिङ्गोपाधिना ब्रह्मचिज्जीवतामागता सती
105294 भूततन्मात्रशब्दितदेहेन्द्रियादिवलनाक्रमात् हे अङ्ग मृगी वीरुल्लता वा
105295 कीटदेवासुरादिकं वा भवतीति परेणान्वयः || २६ ||
105296
105297 भवत्यङ्ग मृगीवीरुत्कीटदेवासुरादिकम् |
105298 यस्मिन्नित्ये ततेऽनन्ते दृढे स्रगिव तिष्ठति || २७ ||
105299
105300 अत एव दृढसूत्रे स्रगिव विश्वं सदसद्ग्रथितं तिष्ठतीत्याह-यस्मिन्निति || २७ ||

सदसद्ग्रथितं विश्वं विश्वगे विश्वकर्मणि।
न तद्दूरे न निकटे नोर्ध्वे नाधो न तेन मे।
न पूर्वं नाद्य न प्रातर्न सन्नासन्न मध्यमम्॥ २८॥

विवेके तु तत्सर्वदिक्कालादिपरिच्छेदनिर्मुक्तमेवेत्याह-न तदिति। ते त्वदीयं न। मे
मदीयं च न। माध्यमं सदसत्पक्षान्तरालिकमनिर्वचनीयम्॥ २८॥

अनुभवकलनामृतेऽस्य माता भवति न सर्वविकल्पनेष्वसत्सु।
फलदुरुविभवा प्रमाणमाला स्थितिमुपयाति न वारिणीव वह्निः॥ २९॥

अत एव स्वानुभवमात्रमेव तत्र मानं न तु लौकिकं मातृमानादि तत्र क्रमत
इत्याह-अनुभवेति। एवं सर्वविकल्पनेष्वसत्सु अस्य स्वानुभवरूपां कलनां
स्वप्रकाशचैतन्यमृते विना अन्यो माता अनुभविता न भवति। या तु लौकिकी
फलन्त्युरवो व्यवहारविभवा यस्याः सकाशात्तथाविधा प्रमाणमाला सा वारिणि
वह्निरिव तत्र स्थितिं नोपयाति। तत्र त्रिपुटीमात्रस्य बाधादित्यर्थः॥ २९॥

यथापृष्टं मुने प्रोक्तं त्वयि कल्याणमस्तु ते।
दिशं प्रयामोऽभिमतामागच्छोत्तिष्ठ पार्वति॥ ३०॥

उपदेश्यान्तरापरिशेषं दर्शयन्नीश्वरः स्वोपदिष्टार्थमाशिषापि
वसिष्ठमनुगृह्योपदेशमुपसंहृत्योत्तस्थावित्याह-यथेति॥ ३०॥

श्रीवसिष्ठ उवाच।

इत्युक्त्वा नीलकण्ठोऽसौ त्यक्तपुष्पाञ्जलौ मयि।
ततार परिवारेण सममम्बरकोटरम्॥ ३१॥

ततार पुप्लुवे॥ ३१॥

तस्मिन्गते त्रिभुवनाधिपतावुमेशे स्थित्वा क्षणं तदनु संस्मृतिपूर्वमेव।
अङ्गीकृतं नवपवित्रधिया मयात्मदेवार्चनं शमवतैव जिहासितं तत्॥ ३२
॥

पूर्वमेव शमवता मया तस्य श्रीगुरोरीश्वरस्यानुस्मृतिपूर्वकमेव तदुपदिष्टं
नित्यापरोक्षदेवार्चनं नवया परिष्कृतया श्रद्धादिपवित्रया च धिया
मयानुष्ठेयत्वेनाङ्गीकृतं तत्प्राक्तनं जडदेवार्चनं जिहासितं चेत्यर्थः॥ ३२
॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाणप्रकरणे पू०
परमात्माभिधानं नाम द्विचत्वारिंशः सर्गः॥ ४२॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
परमात्माभिधानं नाम द्विचत्वारिंशः सर्गः॥ ४२॥

त्रिचत्वारिंशः सर्गः ४३

श्रीवसिष्ठ उवाच।

एतदुक्तं परं तेन स्वयमेव च वेद्म्यहम्।
राम त्वमपि जानीषे यथेदं समवस्थितम्॥ १॥

105353 इह श्रुत्वा सवैराग्यं रामः स्वात्मशिवार्चनम्।
105354 प्रबुद्धः कृतकृत्यं स्वं तत्प्रतिष्ठमवर्णयत्॥
105355
105356 ईऽस्वरोपदिष्टं तत्त्वदर्शनपर्यवसितं स्वात्मशिवार्चनं श्रीरामस्य
105357 श्रद्धातिशयसिद्धये प्रशंसन्स्वयमपि तदेव पुनरुपदिशति-एतदित्यादिना।
105358 परं सर्वोत्कृष्टम्। इदं जगत्तत्त्वम्॥ १॥
105359
105360 यत्रालीकमलीकेन किलालीके विलोक्यते।
105361 तस्यां संसारमायायां किं सत्यं किमसन्मयम्॥ २॥
105362
105363 यत्र मायायां अलीके भ्रमे अलीकोपाधिघटितत्वादलीकेन जीवेन अलीकमसदेव
105364 जगद्विलोक्यते॥ २॥
105365
105366 यथा येन विकल्पेन यद्विकल्पेन कथ्यते।
105367 तथा तेनात्मकल्पेन नगताऽप्यनुभूयते॥ ३॥
105368
105369 तत्र कविकल्पितेन मेरुत्वेन राजादेर्वर्णने तथानुभवो दृष्टान्त इत्याह-यथेति।
105370 विविधं कल्पयतीति विकल्पेन येन कविना यस्मिन् राजादौ मेर्वादिविविधभावकल्पनं
105371 यद्विकल्पस्तेन काव्यरचनया यथा यथा कथ्यते तथा तथा श्रुत्वा आत्मानं
105372 कल्पयतीत्यात्मकल्पो राजादिस्तेन स्वस्मिन्नगता मेरुता कल्पवृक्षता वाप्यनुभूयते।
105373 कथमन्यथा काव्यार्थानुभवचमत्कारास्वादस्तस्य बहुवित्तलाभमानादिकं च
105374 कवेः स्यादिति भावः॥ ३॥
105375
105376 यथा द्रवत्वं पयसि यथा स्पन्दो नभस्वति।
105377 यथा नभसि शून्यत्वं तथा सर्गत्वमात्मनि॥ ४॥
105378
105379 विविधकल्पना चाज्ञातस्यात्मनः स्वभाव एवेत्याशयेन दृष्टान्तान्तराण्याह##-
105380
105381 ततः प्रभृति तेनैव क्रमेणार्चनमात्मनः।
105382 अद्य यावद्गतव्यग्रः कुर्वन्नहमवस्थितः॥ ५॥
105383
105384 एवं स्वाभाविकस्यैव विकल्पाध्यारोपस्यार्चनत्वचिन्तनं
105385 तदाप्रभृत्यद्यपर्यन्तं कुर्वन्नेव स्थित इत्याह-तत इति॥ ५॥
105386
105387 अनेनार्चाविधानेन मयेमे राम वासराः।
105388 अखिन्नेनातिवाह्यन्ते व्यवहारपरा अपि॥ ६॥
105389
105390 यथाप्राप्तैः क्रियाचारकुसुमैरात्मनोऽर्चनम्।
105391 व्युच्छिन्नमपि व्युच्छिन्नं न कदाचिदहर्निशम्॥ ७॥
105392
105393 सुषुप्तिकाले व्युच्छिन्नमपि कदापि न व्युच्छिन्नम्। तदापि सुखमहमस्वाप्सं न
105394 किंचिदवेदिषमित्युत्थितप्रतिसंधानहेत्वविद्यावृत्तिपुष्पत्रयार्चनसद्भावादिति
105395 भावः॥ ७॥
105396
105397 ग्राह्यग्राहकसंबन्धे सामान्ये सर्वदेहिनाम्।
105398 योगिनः सावधानत्वं यत्तदर्चनमात्मनः॥ ८॥
105399
105400 तर्ह्यज्ञानामपि तादृशशिवार्चनं सदैवास्तीति कस्तव तेभ्यो विशेषस्तत्राह##-
105401
105402 दृष्ट्यानया रघुपते सङ्गमुक्तेन चेतसा।
105403 संसारविरलारण्ये विहरास्मिन्न खिद्यसे॥ ९॥
105404

105405 सा च सावधानता आसङ्गत्याग एवेति दर्ऽसयन्नर्चने द्दष्टफलबाहुल्यकीर्तनेन
105406 रामं प्रवर्तयति-द्दष्ट्येति ॥ ९ ॥
105407
105408 दुःखे महति संप्राप्ते धनबन्धुवियोगजे।
105409 एतां द्दष्टिमवष्टभ्य विचारं कुरु सुव्रत ॥ १० ॥
105410
105411 त्यक्तस्यासङ्गस्य पुनरनुत्पादे विचारदार्ढ्यं हेतुरित्याह-दुःखे इति ॥ १० ॥
105412
105413 सुखदुःखे न कर्तव्ये धनबन्धूदयक्षये।
105414 एवंप्राया एव सर्वा नित्यं संसारद्दष्टयः ॥ ११ ॥
105415
105416 सुखदुःखे हर्षविषादौ। एवंप्राया ईद्दशा नश्वरा एव ॥ ११ ॥
105417
105418 जानास्येव गतिं चित्रां विषयाणां प्रमाथिनीम्।
105419 यथायान्ति यथा यान्ति यथा परिभवन्ति च ॥ १२ ॥
105420
105421 प्रथममायान्ति ततो यान्ति। स्वव्यसनासङ्गेन पुरुषं परिभवन्ति च ॥ १२ ॥
105422
105423 एवमेव प्रवर्तन्ते प्रेमाणि च धनानि च।
105424 एवमेवावहीयन्ते निमित्तैरविचारितैः ॥ १३ ॥
105425
105426 अविचारितैरतर्कितैः ॥ १३ ॥
105427
105428 न तास्तव न तासां त्वं निर्मलान्तर्जगत्क्रियाः।
105429 इदमित्थं जगत्किंचित्किं मुधा परितप्यसे ॥ १४ ॥
105430
105431 हे निर्मल ता जगत्क्रियास्तवान्तर्न तासां त्वमन्तर्न किंचित्तुच्छमेव ॥ १४ ॥
105432
105433 त्वमिहासि जगद्रूपं चिन्मात्रवितताकृते।
105434 निजावयवकावृत्तौ कः क्रमो हर्षशोकयोः ॥ १५ ॥
105435
105436 यदि तु जगतस्तुच्छतां नेच्छसि तर्ह्यात्मैव जगदिति पश्य। तथादर्शनेऽपि तव
105437 बन्धादिवियोगे स्वावयवपरिवर्तन इव न हर्षशोकप्रसक्तिरित्याह-त्वमिति ॥ १५ ॥
105438
105439 तात चिन्मात्ररूपोऽसि न ते भिन्नमिदं जगत्।
105440 अतस्तव कथं कुत्र हेयोपादेयकल्पना ॥ १६ ॥
105441
105442 इति चिच्चक्रचाञ्चल्ये चिन्मये जगदम्बुधौ।
105443 तरङ्गजाले चाम्भोधौ कः क्रमो हर्षशोकयोः ॥ १७ ॥
105444
105445 इति उक्तरीत्या चिद्रूपे जगच्चक्रचाञ्चल्ये ॥ १७ ॥
105446
105447 चिदेकतानतामेत्य सौषुप्तीमागतः स्थितिम्।
105448 अद्यप्रभृति राम त्वं तुर्यावस्थात्मको भव ॥ १८ ॥
105449
105450 उक्तार्चनस्य परमकाष्ठायां रामं स्थापयति-चिदेकतानतामिति ॥ १८ ॥
105451
105452 समः समसमाभासो भास्वद्वपुरुदारधीः।
105453 तिष्ठात्मार्चारतो नित्यं परिपूर्ण इवार्णवः ॥ १९ ॥
105454
105455 स्वयं समः सर्ववैषम्यनिर्मुक्तः। समेन ब्रह्मणा समा ऐकरस्यापन्ना
105456 जगदाभासा यस्य ॥ १९ ॥

105457
105458 एतत्त्वं श्रुतवान्सर्वं स्थितस्त्वं परिपूर्णधीः ।
105459 यदिच्छसीतरत्प्रष्टुं तत्पृच्छ रघुनन्दन ॥ २० ॥
105460
105461 यत्पृष्टं प्रथमे कल्पे तदद्य परिचोदय ।
105462
105463 श्रीराम उवाच ।
105464
105465 इदानीं संशयो ब्रह्मन्विनिवृत्तो विशेषतः ॥ २१ ॥
105466
105467 प्रथमे कल्पे विचारारम्भे वैराग्यप्रकरणे त्वया यत्पृष्टं ये प्रश्नाः
105468 कृतास्तेषु अद्य किंचिदवशिष्टं चेदस्ति तर्हि तत्परिचोदय पृच्छ ॥ २१ ॥
105469
105470 ज्ञातं ज्ञातव्यमखिलं जाता तृप्तिरकृत्रिमा ।
105471 न मुनेऽस्ति मलं द्वित्वं न चेत्यं न च कल्पनम् ॥ २२ ॥
105472
105473 मलमज्ञानम् । द्वित्वं जीवब्रह्मभेदः । कल्प्यते येन तत्कल्पनं मनः ॥ २२ ॥
105474
105475 तदा ममाभूदज्ञानं प्रशान्तमधुना तु तत् ।
105476 कलङ्क आत्मनोऽस्तीति तदज्ञानवऽसेन या ॥ २३ ॥
105477
105478 भ्रान्तिरासीदिदानीं सा निवृत्ता त्वत्प्रसादतः ।
105479 न जायते न म्रियते न चैवात्मा कलङ्कितः ॥ २४ ॥
105480
105481 सर्वं च खल्विदं ब्रह्ममयमित्युदितोऽस्म्यलम् ।
105482 प्रश्नेभ्यः संशयेभ्यश्च वाञ्छितेभ्यश्च सर्वतः ॥ २५ ॥
105483
105484 ब्रह्मैव ब्रह्ममयं ब्रह्मविवर्तो वा । वाञ्छितेभ्यश्च निवृत्तमिति शेषः ॥ २५ ॥
105485
105486 शुद्धं मे निर्मलं चेतस्त्वष्टा यन्त्रभ्रमादिव ।
105487 सर्वाचारोपदेशेषु प्राप्तप्रोक्तेषु साधुभिः ॥ २६ ॥
105488
105489 त्वष्टा यन्त्रे आरोप्य भ्रमणं भ्रमस्तल्लक्षितं तक्षणं [तक्षणं इति पदं
105490 क्वचिन्न पठ्यते ।] तस्मात्सूर्यबिम्बमिव शुद्धं भास्वरम् । साधुभिः
105491 प्राप्तेभ्य उपगतेभ्यः शिष्येभ्यः प्रोक्तेषु सर्वेषामाचाराणां
105492 साधनानामुपदेशेषु निराकाङ्क्षी ॥ २६ ॥
105493
105494 निराकाङ्क्षी स्थितोऽस्म्यन्तः सुमेरुः कनकेष्विव ।
105495 न तदस्त्यस्ति यत्राशा न तदस्ति यदीप्सितम् ॥ २७ ॥
105496
105497 चिरलभ्ये आशा । अनुपदलभ्ये ईप्सेति भेदः ॥ २७ ॥
105498
105499 न तदस्ति यदादेयं हेयं मध्यं चराचरे ।
105500 इदं हेयमुपादेयमिदं सदिदमप्यसत् ॥ २८ ॥
105501
105502 मध्यमुपेक्ष्यम् ॥ २८ ॥
105503
105504 इति चिन्ताभ्रमः शान्तो निपुणं परमो मुने ।
105505 न स्वर्गमभिवाञ्छामि द्वेष्मि वापि न रौरवम् ॥ २९ ॥
105506
105507 रौरवं नरकविशेषं चापि न द्वेष्मि ॥ २९ ॥
105508

105509 आत्मन्येव हि तिष्ठामि मन्दराद्रिरिवाभ्रमः |
105510 कणशः कीर्णत्रिजगत्क्षीरसागरसंसृतिः || ३० ||
105511
105512 कणशः परमाणुशो विभज्य कीर्णानि विक्षिप्तानि विनाशितानीति यावत् त्रिजगन्ति येन
105513 तथाविधस्य क्षीरसागरस्य संसृतिः सर्वतो व्याप्तिरिव व्याप्तिर्यस्य | औत्प्रेक्षिकमेतत् |
105514 अथवा कणशः प्रसृतैर्यशःक्षीरलवैः कीर्णानि सिक्तानि त्रिजगन्ति यया
105515 तथाविधामनुवंशक्षीरसागरे संसृतिर्व्यवहारो यस्य तथाविधश्चिरसंभ्रान्तो
105516 रामलक्षणो मन्दराचलो बोधामृतोत्पत्त्या कृतार्थः | सांप्रतं विश्रान्त
105517 उपरतभ्रमो वृत्त इति परेणान्वयः || ३० ||
105518
105519 विश्रान्तश्चिरसंभ्रान्तो निर्भ्रमो राम मन्दरः |
105520 अवस्त्विदमिदं वस्तु पश्येति कलनास्त्यलम् || ३१ ||
105521
105522 इदं जगत् इत्थं यथा दृष्टप्रकारमेव नान्यत्तत्त्वमस्तीति येन मूढेन ज्ञातं
105523 तस्य हृदि कुसंदेहजालेन ज्वलितेव अधिकं संतापिनी इदं वस्तु इदमवस्तु इति कलना
105524 अलमस्ति हे मुनीश्वर त्वमिति मदुक्तार्थं स्वानुभवसंवादाय पश्येति
105525 परेणान्वयः || ३१ ||
105526
105527 हृदि तस्य कुसंदेहजालेन ज्वलिताधिकम् |
105528 इदमित्थं जगदिति ज्ञातं येन मुनीश्वर || ३२ ||
105529
105530 स यत्र याति कार्पण्यं जगतस्तन्न लभ्यते |
105531 विचित्राकुलकल्लोलाज्जडाद्वृत्तिविवर्जितात् || ३३ ||
105532
105533 स तादृशमूढपुरुषो यत्र यस्मिन् धनादिविषये कार्पण्यं याति जगतः संबन्धि
105534 तद्वस्तु तत्त्वदृशा न लभ्यतेऽस्माभिरिति शेषः | यतो वयं विचित्रा
105535 अशनायादिलक्षणा आकुलाः कल्लोलाः षडूर्मयो
105536 यस्मिंस्तथाविधाच्छुद्धचिदाकारवृत्तिविवर्जिताज्जडाद्भवसागरात्त्वत्प्रसादेन
105537 तीर्णाः स्म इति परेणान्वयः || ३३ ||
105538
105539 त्वत्प्रसादेन भगवंस्तीर्णाः स्मो भवसागरात् |
105540 संपदामवधिर्ज्ञातो दृष्टः सीमान्त आपदाम् || ३४ ||
105541
105542 सर्वसारेऽप्यदीनाः स्मः पूर्णाः स्मः परमेश्वर |
105543 ययावभेद्यामपरैर्दलिताशामतङ्गजम् |
105544 संसारसागरे सम्यग्वीरतामागतं मनः || ३५ ||
105545
105546 सर्वसारे भूमानन्दविषयेऽपि नित्यलब्धत्वाददीनाः स्मः |
105547 अस्मन्मनःसंसारलक्षणे समरे दलितः आशामतङ्गजो येन तथाविधं सत्
105548 परैरभेद्यां सम्यग्वीरतां ययौ || ३५ ||
105549
105550 परिगलितविकल्पतामुपेतं प्रगलितवाञ्छमदीनसारसत्त्वम् |
105551 त्रिजगति यदतिप्रसन्नरूपं प्रमुदितमन्तरनुत्तमं मनो मे || ३६ ||
105552
105553 पूर्णां मनःस्थितिमेव वर्णयन्नुपसंहरति-परिगलितेति |
105554 अदीनसारमकार्पण्यदृढं सत्त्वं स्थैर्यं यस्य | त्रिजगति प्रसिद्धानि
105555 पूर्णचन्द्रक्षीरसागरशरदाकाशादीनि यानि प्रसन्नरूपाणि
105556 तान्यतिक्रान्तमतिप्रसन्नरूपम् | सापेक्षसमासश्छान्दसः | अन्तःप्रमुदितमत
105557 एवानुत्तमं मे मनः स्थितमित्यर्थः || ३६ ||
105558
105559 इत्यार्षे श्रीवा०रामायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाणप्रकरणे पू०
105560 विश्रान्तिवर्णनं नाम त्रिचत्वारिंशः सर्गः || ४३ ||

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
विश्रान्तिवर्णनं नाम त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

चतुश्चत्वारिंशः सर्गः ४४

श्रीवसिष्ठ उवाच ।

केवलेनेन्द्रियैः सार्धं वर्तमानार्थवर्तिना ।
असंगमेन मनसा यत्करोषि न तत्कृतम् ॥ १ ॥

इहासङ्गक्षयोपाया वाञ्छात्यागादयः पुनः ।
मनःक्षयान्ता गुरुणा ज्ञानदार्ढ्यार्थमीरिताः ॥

रामेण स्वस्य तत्त्वबोधविश्रान्तौ वर्णितायामपि तत्परिपाकात्प्राक् प्रच्युतिर्मा भूदिति
शिलानिखातस्थूणादार्ढ्याय संधिकीलपरम्परामिव जीवन्मुक्तलक्षणभूतां
प्रागुक्तसाधनपरम्परामेव प्रतिष्ठापयिष्यन् श्रीवसिष्ठः प्रागुक्ते
यथाप्राप्तव्यवहारोपभोगादिलक्षणे शिवार्चनेऽपि सर्वारम्भा हि दोषेण
धूमेनाग्निरिवावृताः इति न्यायेन
प्रमादाद्धिंसापरानिष्टादिप्रसक्तेरवर्जनाद्भोगस्यानर्थहेतुत्वाच्च स्यादेव
पुनर्जननाद्यनर्थ इत्याशङ्कां वारयन्नाह-केवलेनेति । केवलेन रागादिरहितेन
अतएव असंगमेन कर्तृत्वाभिमानलक्षणक्रियासंगमशून्येन ॥ १ ॥

यथा प्राप्तिक्षणे वस्तु प्रथमे तुष्टये तथा ।
न प्राप्त्येकक्षणादूर्ध्वमिति को नानुभूतवान् ॥ २ ॥

ननु विषयाणां तुष्टिजनकत्वनियमात्कथं तेषु रागस्त्यक्तुं शक्य
इत्याशङ्क्याह-यथेति । प्राप्तिक्षणातिरिक्तपूर्वोत्तरकालयोस्तेषु
तुष्टिहेतुत्वव्यभिचारान्नायं नियम इति भावः ॥ २ ॥

वाञ्छाकाले यथा वस्तु तुष्टये नान्यदा तथा ।
तस्मात्क्षणसुखे सक्तिं बालो बध्नाति नेतरः ॥ ३ ॥

अतएव चिरानर्थे क्षणिकसुखे आसङ्गोऽपि न युक्त इत्याह-वाञ्छेति ।
वाञ्छापदेन लाभो लक्ष्यते ॥ ३ ॥

वाञ्छाकाले तुष्टये यत्तत्र वाञ्छैव कारणम् ।
तुष्टिस्त्वतुष्टिपर्यन्ता तस्माद्वाञ्छां परित्यज ॥ ४ ॥

यदा वस्तुलाभकृतः क्षणिकोऽपि वाञ्छानिरोधः सुखहेतुस्तदा
आत्यन्तिकवाञ्छोच्छेदो निरतिशयानन्दहेतुरित्यर्थादागतम् तथा च
वाञ्छैवानर्थ इत्याशयेनाह-वाञ्छाकाले इति । तुष्टिरानन्दः ।
अतुष्टिस्तुष्टिविरोधिवाञ्छैव पर्यन्तो विच्छेदो यस्यास्तथाविधा ॥ ४ ॥

यदि तत्पदमाप्तोऽसि कदाचित्कालपर्ययात् ।
तदहंभावनारूपे न मङ्क्तव्यं त्वया पुनः ॥ ५ ॥

ननु पूर्णानन्दं पदं प्राप्तोऽहं तस्मै मह्यं
पुनर्विषयवाञ्छात्यागोपदेशस्ते किमर्थस्तत्राह-यदीति । पुनः
कालान्तरेऽप्यहंभावपङ्के निमज्जनं मा भूदिति तत्पदस्थितिदार्ढ्यार्थः
पुनरुपदेश इत्यर्थः ॥ ५ ॥

105613 आत्मज्ञानाचलस्याग्रे राम विश्रान्तवानसि |
105614 अहंभावमहाश्वभ्रे न पुनः पातमर्हसि || ६ ||
105615
105616 यत्स्मृतानन्तसदृष्टेर्ज्ञत्वमेरुशिरःस्थितेः |
105617 पुनर्गर्भानुकारान्तःपाताले पतनं कुतः || ७ ||
105618
105619 सत्यपि दार्ढ्ये पुनर्मज्जनं किं नाशङ्क्यते तत्राह-यदिति | यद्यस्माद्धेतोः
105620 गर्भो मातृकुक्षिगतः पिण्डस्तमनुसृत्य करोति जन्माद्यनर्थमिति
105621 गर्भानुकारोऽहंभावस्तल्लक्षणेऽन्तःपाताले |
105622 दृढीभूतज्ञानस्यावश्यमविद्यानर्थबीजोच्छेदित्वादिति भावः || ७ ||
105623
105624 दृश्यते ते स्वभावोऽयं समतासत्यतामयः |
105625 मन्ये क्षीणविकल्पोऽसि जातोऽसि हतकालिकः || ८ ||
105626
105627 अन्येषामुपकाराय वा मयेदमुक्तं तव त्वज्ञानं नष्टमिति मया
105628 समतादिलिङ्गैर्लक्षितमेवेत्याशयेनाह-दृश्यत इति | कालिका अविद्या || ८ ||
105629
105630 स्वभावे संस्थितो राम इत्यावेदयतीव मे |
105631 सौम्य पूर्णार्णवप्रख्या समता निर्मला तव || ९ ||
105632
105633 आशा यातु निराशत्वमभावं यातु भावनम् |
105634 अमनस्त्वं मनो यातु तवासङ्गेन जीवतः || १० ||
105635
105636 न सञ्जनमसङ्गस्तेन जीवतः | अनुमोदने आशिषि वा लोट् || १० ||
105637
105638 यां यां वस्तुदृशं यासि तस्यां तस्यामवस्थितम् |
105639 सत्तासामान्यरूपेण ब्रह्म बृंहितचिद्धनम् || ११ ||
105640
105641 न मनोरथभङ्गान्निराशत्वाद्याशासे किंतु सर्वतो
105642 निरतिशयानन्दब्रह्मलाभादित्याशयेनाह-यां यामिति || ११ ||
105643
105644 अज्ञातात्मा निबद्धोऽसि विज्ञातात्मा न बध्यसे |
105645 राम त्वं स्वात्मनात्मानं बोधयस्व बलादतः || १२ ||
105646
105647 बलात् मननादिदार्ढ्यात् || १२ ||
105648
105649 यत्र न स्वदते वस्तु स्वदते च यथागतम् |
105650 अवासनत्वं तद्विद्धि साम्यमाकाशकोमलम् || १३ ||
105651
105652 इदानीं निर्वासनत्वस्य स्वानुभवगम्यं लक्षणमाह-यत्रेति | वस्तु भोगसुखम् |
105653 यथागतं प्रारब्धोपनीतं दुःखमपि || १३ ||
105654
105655 वासनारहितैरन्तरिन्द्रियैराहर क्रियाः |
105656 न विक्रियामवाप्नोषि खवत्क्षोभशतैरपि || १४ ||
105657
105658 खवत् आकाशवत् || १४ ||
105659
105660 ज्ञाता ज्ञानं तथा ज्ञेयं त्रयमेकतयात्मनि |
105661 शान्तात्मानुभवाऽभव्यं न भूयो भवभागसि || १५ ||
105662
105663 अभव्यं दुःखाद्यपि त्रिपुट्येकीकारेणात्मतया अनुभव | तेन तस्य प्रतिकूलता
105664 शाम्यतीति भावः || १५ ||

चित्तोन्मेषनिमेषाभ्यां संसारप्रलयोदयौ।
वासनाप्राणसंरोधादनिमेषं मनः कुरु॥ १६॥

दुःखादौ प्रातिकूल्यविकल्पनं मनःकृतमिति तदेव वा भुशुण्डोक्तयुक्त्या
निरोद्धव्यमित्याशयेनाह-चित्तेति॥ १६॥

प्राणोन्मेषनिमेषाभ्यां संसृतेः प्रलयोदयौ।
तमभ्यासप्रयोगाभ्यामुन्मेषरहितं कुरु॥ १७॥

मौर्ख्योन्मेषनिमेषाभ्यां कर्मणां प्रलयोदयौ।
तद्विलीनं कुरु बलाद्गुरुशास्त्रार्थसंयमैः॥ १८॥

अज्ञानमेव वा प्रवृत्तिद्वारानर्थनिदानमिति तदेव ज्ञानदार्ढ्येन
निरसनीयमित्याह-मौर्ख्येति॥ १८॥

यथा वातरजःसङ्गस्पन्दात्खं भाववेदनम्।
तथा चितश्चेत्यतया स्पन्दादिदमुपस्थितम्॥ १९॥

चित्तोन्मेषनिमेषाभ्यामिति यदुक्तं तद्दृष्टान्तेन स्फुटयति-यथेत्यादिना।
यथा खमाकाशं वातस्य रजसां च सङ्गात्स्पन्दाच्च
मलिनचलनादिस्वभाववेदनं संपन्नं तथा चितश्चित्तलक्षणात्स्पन्दाच्चेत्यतया
इदमनर्थजातमुपस्थितमित्यर्थः॥ १९॥

दृश्यदर्शनसंबन्धस्पन्देनेयं जगद्गतिः।
स्फुरत्यालोककुड्यादिसंगजा वर्णधीरिव॥ २०॥

उक्तेऽर्थे अन्वयव्यतिरेकौ द्र्शयति-दृश्येति द्वाभ्याम्।
नानाच्छिद्रप्रविष्टसौरालोककुड्यसंबन्धजा चित्रवर्णधीरिव॥ २०॥

दृश्यदर्शनसंबन्धस्पन्दाभावे न जायते।
वेदना भवदाभासा चित्रपुंसाभिवाशये॥ २१॥

भवतीति भवज्जगत्तदाभासा। यथा चित्रलिखितपुंसामाशये हृदि भावनैव न
जायते तद्वत्॥ २१॥

चित्तस्पन्दोत्थिता माया तदभावे विलीयते।
पयःस्पन्दोत्थिता वीचिस्तदभावे विनश्यति॥ २२॥

त्यागेन वासनांशस्य बोधाद्वा प्राणरोधनात्।
चित्ते निस्पन्दतां याते कुतः स्पन्दस्य संभवः॥ २३॥

स्पन्दस्य कौटस्थ्यच्युतिरूपस्य॥ २३॥

असंवित्स्पन्दमात्रेण याति चित्तमचित्तताम्।
प्राणानां वा निरोधेन तदेव च परं पदम्॥ २४॥

ह्यर्थे चशब्दः॥ २४॥

दृश्यदर्शनसंबन्धे यत्सुखं पारमार्थिकम्।
तदन्तैकान्तसंवित्त्या ब्रह्मदृष्ट्या मनःक्षयः॥ २५॥

105717 बोधाद्वा इति मध्यमोपायमुक्तं विवृणोति-दृश्येति। विषयेन्द्रियसंबन्धे
105718 यत्सुखं प्रसिद्धं तत्परमार्थतो ब्रह्मसुखमेव। एतस्यैवानन्दस्यान्यानि भूतानि
105719 मात्रामुपजीवन्ति इति श्रुतेः। अतस्तस्यान्तः
105720 परमावधिर्मानुषानन्दमारभ्योत्तरोत्तरं शतगुणोत्कर्षेण श्रुत्या दर्शितः यतो
105721 वाचो निवर्तन्ते अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान्न बिभेति कदाचन इति।
105722 तदेकान्तं तन्मात्रपूर्णतातत्संवित्तिरूपया ब्रह्मदृष्ट्या मनःक्षयः
105723 सिद्ध्यतीत्यर्थः॥ २५॥
105724
105725 यत्र नाभ्युदितं चित्तं तत्तत्सुखमकृत्रिमम्।
105726 न स्वर्गादौ संभवति मरौ हिमगृहं यथा॥ २६॥
105727
105728 तत्तत्सुखं ब्रह्मसुखं तच्च स्वर्गादिभोगभूमौ न संभवति। तत्र चित्तस्य
105729 कामासूयादिकलुषत्वादित्यर्थः। हिमं शिशिरजलं तस्य गृहं सरः॥ २६॥
105730
105731 चित्तोपशमजं स्फारमवाच्यं वचसा सुखम्।
105732 क्षयातिशयनिर्मुक्तं नोदेति न च शाम्यति॥ २७॥
105733
105734 न वाच्यं वक्तुमशक्यम्। स्वानुभवैकगम्यमित्यर्थः॥ २७॥
105735
105736 बोधाद्भवति चित्तान्तो दुर्बोधाच्चित्तवेदिता।
105737 बालवेतालवत्तेन मोहश्रीर्घनतां गता॥ २८॥
105738
105739 चित्तस्यान्तो नाशः। यतो दुर्बोधाद्भ्रान्तिवशादेव चित्तवेदिता चित्तसद्भावप्रतीतिः
105740 बोधेन तु भ्रान्तिर्नश्यतीति युक्तश्चित्तनाश इति भावः। बालकल्पितवेतालवत्। तेन
105741 दुर्बोधेन॥ २८॥
105742
105743 विद्यमानमपि ह्येतच्चित्तं बोधाद्विलीयते।
105744 सदप्यसदिवाभाति ताम्रं हेमीकृतं यथा॥ २९॥
105745
105746 ननु ज्ञानिनामपि व्यवहारदर्शनाच्चित्तमस्त्येव तत्कथं ज्ञानेन नष्टम्
105747 सत्त्वनष्टत्वयोर्युगपदेकत्र विरोधात्तत्राह-विद्यमानमपीति॥ २९॥
105748
105749 ज्ञस्य चित्तं न चित्ताख्यं ज्ञचित्तं सत्त्वमुच्यते।
105750 नामार्थान्यत्वभाक्चित्तं बोधात्ताम्रसुवर्णवत्॥ ३०॥
105751
105752 नामतोऽर्थतश्चान्यत्वं भजत इत्यन्यत्वभाक्॥ ३०॥
105753
105754 न संभवति चित्तत्वं तेन तत्प्रविलीयते।
105755 भ्रमः शाम्यति बोधेन नाभावो विद्यते सतः॥ ३१॥
105756
105757 भ्रान्तिबीजत्वमेव चित्तस्य चित्तता सा बोधेन प्रविलीयत इत्यर्थः। घटादिनाशेऽपि
105758 कपालाद्यात्मना परिशेषद्रशनात्सतः स्वरूपेण नाशः क्वाप्यप्रसिद्ध एवेत्याह##-
105759
105760 अवस्त्वेव विकल्पात्म चित्तादि शशशृङ्गवत्।
105761 सर्वं तदात्मनस्तस्मात्तद्धि बोधाद्विलीयते॥ ३२॥
105762
105763 वस्तुबोधस्यावस्तुकल्पितांशमात्रबाधकत्वप्रसिद्धेरपि न
105764 सत्त्वांशबाधकत्वप्रसक्तिरित्याह-अवस्त्वेवेति। चित्तादि सर्वं तत्
105765 पारमार्थिकस्यात्मनो विवर्त इति शेषः॥ ३२॥
105766
105767 चित्तं सत्त्वं समायातं किंचित्कालं जगत्स्थितौ।
105768 विहृत्य तुर्यावस्थायां तुर्यातीतं भवत्यतः॥ ३३॥

तर्हि किं जीवन्मुक्तचित्तस्य व्यवहारक्षमावस्था वास्तव्येव नेत्याह-चित्तमिति।
विहारसमाधिसाक्षात्कारपर्यन्ता तदवस्था न वास्तवी किंतु
प्रारब्धप्रतिबद्धाविद्यालेशकृतबाधितानुवृत्तिः।
विदेहकैवल्याविर्भूततुर्यातीतावस्थैव तस्य वास्तवीति भावः॥ ३३॥

ब्रह्मैव भूरिभवनभ्रमविभ्रमौघैरित्थं स्थितं
सममनेकतयैकमेव।
सर्वात्म संभवति नेतरदङ्ग किंचिच्चित्तादिकं च न हृदीव हि संनिवेशः॥
३४॥

तत्तुर्यातीतं ब्रह्म यावन्न ज्ञातं तावच्चित्तजगदादि मिथ्यावेषेण स्थितं
सर्वात्मकं भवति न चित्तादिकं नाम किंचिदितरद्वस्त्वन्तरमस्तीति ज्ञानमात्रेण
तन्मात्रस्वभावपरिशेषश्चित्तादेर्युक्त एवेत्याशयेनाह-ब्रह्मैवेति। यथा हृदि
मनोरथपरिकल्पितप्रासादोपवनवाप्यादिसंनिवेशस्तत्रासमावेशादेव नास्ति
तद्वत्परमसूक्ष्मे अच्छिद्रचिदेकरसघने ब्रह्मण्यपि जगदसमावेशादेव
नास्तीत्यर्थः॥ ३४॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वाणप्रकरणे पूर्वार्धे
चित्तसत्तासूचनं नाम चतुश्चत्वारिंशः सर्गः॥ ४४॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
चित्तसत्तासूचनं नाम चतुश्चत्वारिंशः सर्गः॥ ४४॥
पञ्चचत्वारिंशः सर्गः ४५

श्रीवसिष्ठ उवाच।

अत्रेमामवबोधाय विस्मयोल्लासकारिणीम्।
अपूर्वां संक्षेपाद्राम रम्यां कथां शृणु॥ १॥

स्वानन्दरससंपूर्णं त्रिजगत्कल्पनास्पदम्।
इह बिल्वफलत्वेन परं ब्रह्मोपवर्ण्यते॥

कथां बिल्वाख्यानाख्याम्॥ १॥

योजनानां सहस्राणि विपुलं विमलं स्फुटम्।
युगैरप्यजरद्रूपमस्ति बिल्वफलं महत्॥ २॥

न जीर्यत इत्यजरद्रूपं स्वभावो यस्य॥ २॥

अविनाशरसाधारं सुधामधुरसारवत्।
पुराणमपि बालेन्दुदलमार्दवसुन्दरम्॥ ३॥

सुधेवसुधापेक्षया वा अतिमधुरसारवत्।
बालेन्दोरङ्कुरप्रायात्प्रतिदिनमुपचीयमानानि दलानीव याः कलास्तानीव मार्दवेन
त्वङ्नयनसुखस्पर्शतया सुन्दरम्॥ ३॥

व्यूहमध्यमहामेरुं मन्दराद्रिरिवाचलम्।
महाकल्पान्तवात्याया अपि वेगैरचालितम्॥ ४॥

भुवनव्यूहमध्यगतमहामेरुरिव मेढीभूतम्। मन्दराद्रिरिवाचलं दृढम्॥
४॥

105821

105822 योजनायुतकोटीनां कोटिलक्षशतैरपि।
105823 वैपुल्येनापरिच्छेद्यं मूलमाद्यं जगत्स्थितेः॥ ५॥
105824

105825 प्रागुक्तं सहस्रपदमसंख्यपरमिति व्याचष्टे-योजनेति। जगतः
105826 स्थितेर्विधारणस्य नियमनस्य च मूलम्॥ ५॥
105827

105828 यस्य बिल्वफलस्योच्चैर्ब्रह्माण्डानि समीपतः।
105829 हरन्ति लीलां शैलाधो राजिकाकणपद्धतेः॥ ६॥
105830

105831 हरन्ति वहन्ति। राजिका सूक्ष्मसर्षपास्तत्काणानां पद्धतेः पङ्क्तेः॥ ६॥
105832

105833 स्पन्दमानरसापूरां स्वाद्वीं रसचमत्कृतिम्।
105834 यस्यातिशेते नो कश्चिदपि राघव षड्रसः॥ ७॥
105835

105836 षड्रसः षडिन्द्रियभोग्यब्रह्मलोकान्तसुखलवः प्रसिद्धो वा॥ ७॥
105837

105838 न कदाचन पाकेन पातं तेन समेति यत्।
105839 सदैव पक्वमप्यङ्ग जरसा यन्न बाध्यते॥ ८॥
105840

105841 तेन तादृशरसयुक्तेनापि पाकेन यत् पातं पतनं न समेति। तर्हि किं स्वस्थान एव
105842 जीर्यति नेत्याह-सदैवेति॥ ८॥
105843

105844 ब्रह्मविष्ण्विन्द्ररुद्राद्या जरठाः केचिदेव न।
105845 यस्योत्पत्तिं विजानन्ति मूलं वा वृन्तमेव च॥ ९॥
105846

105847 जरठाश्चिरायुषः॥ ९॥
105848

105849 अदृष्टाङ्कुरवृक्षस्य त्वदृष्टकुसुमाकृतेः।
105850 अस्तम्भमूलशाखस्य फलस्यास्य महाकृतेः॥ १०॥
105851

105852 एकपिण्डघनाकारविततस्थौल्यशालिनः।
105853 यस्योत्पत्तिविकारादिपरिणामो न दृश्यते॥ ११॥
105854

105855 विततमतिविस्तीर्णं यत्स्थौल्यं बृहत्ता तच्छालिनः॥ ११॥
105856

105857 समस्तफलसारस्य फलस्यास्य महाकृतेः।
105858 न मज्जा नाष्ठि विततो निर्विकारो निरञ्जनः॥ १२॥
105859

105860 समस्तेषु फलेषु पुरुषार्थेषु च सारस्य श्रेष्ठस्य। अष्ठि बीजं नास्ति॥ १२॥
105861

105862 शिलान्तरिव नीरन्ध्रः स्पन्दमानेन्दुबिम्बवत्।
105863 रसं स्वसंविदास्वाद्यं स्पन्दमान इवामृतम्॥ १३॥
105864

105865 शिलाया अन्तःप्रदेश इव नीरन्ध्रो घनः। विज्ञानघम एव इति श्रुतेः।
105866 स्पन्दमानेन्दुबिम्बवत् स्वसंविदामृतमिवास्वाद्यं निरतिशयानन्दरसं
105867 स्पन्दमानः॥ १३॥
105868

105869 कोशः सकलसौख्यानां शीतलालोककारकः।
105870 शैलाभोऽमृतपिण्डाभो मज्जा आत्मफलस्थितेः॥ १४॥
105871

105872 कोश इति। एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति इति श्रुतेः। आत्मनो

105873 मानुषानन्दादिहैरण्यगर्भानन्दान्तकर्मफलस्थितेर्मज्जा सारः ॥ १४ ॥
105874
105875 तस्मात्परममज्जा तु यासौ स्वात्मचमत्कृतिः ।
105876 अनन्तरक्षितो नित्यमनन्यः श्रीफलं गतः ॥ १५ ॥
105877
105878 तस्माद्धैरण्यगर्भानन्दफलादपि परमस्याव्यक्तस्य मज्जा । अनन्तेन
105879 त्रिविधपरिच्छेदशून्यस्वभावेनैव रक्षितः । स्वात्मकमेव श्रीफलं बिल्वं गतः
105880 स चानन्यः । अद्वय एवेत्यर्थः ॥ १५ ॥
105881
105882 स्वसंनिवेशवैचित्र्यमन्यत्वफलतां गताम् ।
105883 अत्यजन्त्या तया तन्व्या स्थूलयाप्यतिबालया ॥ १६ ॥
105884
105885 अनन्यत्वमेवोपपादयितुं चमत्कृतिपदस्वारस्यं प्रकटयति##-
105886 भेदजातस्य फलतां परमप्रयोजनतां गतः चिदेकरसमज्जारूपं पारमार्थिकं
105887 स्वसंनिवेशत्रैलक्षण्यमत्यजन्त्यैव इदं भेदादि स्वयमुत्पाद्य भावितमिति
105888 परेणान्वयः । प्रकारान्तरैरपि तस्याश्चमत्कृतित्वोपपादनाय
105889 तन्व्येत्यादिविरुद्धविशेषणानि । अणोरणीयस्त्वात्तन्व्या । महतो महीयस्त्वात्स्थूलया ।
105890 चिरंतनत्वेऽपि वृद्ध्यादिविकाराभावादतिबालया ॥ १६ ॥
105891
105892 इयमस्मीति कलनादसदप्यन्यतामलम् ।
105893 भेदाद्यसंभवदिदं स्वयमुत्पाद्य भावितम् ॥ १७ ॥
105894
105895 असतोऽपि भेदस्योत्पादने को हेतुस्तमाह-इयमिति । इयमहमस्मीति अनिदमि
105896 इदन्ताध्यास एव तद्धेतुरित्यर्थः । अन्यथा पृथक्त्वं
105897 तदापादकमलमविद्यामेवंभूतभुवनभेदादिरूपेणोत्पाद्येत्यर्थः ।
105898 असंभवदित्यनेन स्वप्रकाशचिदेकरसे मलस्यैव संभवो नास्ति सुतरां
105899 तत्कार्यभेदस्येति द्योत्यते ॥ १७ ॥
105900
105901 अहंकलासमुदयसमनन्तरमेव सा ।
105902 वलिताकाशशब्दाङ्गत्रैलोक्यपरमाणुभिः ॥ १८ ॥
105903
105904 स्वोत्पादितैर्भूतभुवनादिभेदैरहंतोत्पादनद्वारा आभिमानिकं संवलनं सा
105905 लभत इत्याह-अहमिति । अहंकला अहंकारस्तस्याः समुदयो
105906 व्यष्टिसमष्टिरूपेणोद्भवस्तत्समनन्तरम् । आकाशस्तद्गुणः शब्दश्चाङ्गे
105907 द्रव्यगुणैकदेशौ येषां
105908 तथाविधैस्त्रैलोक्योपलक्षितव्यष्टिसमष्टिशरीरपरमाणुभिः ॥ १८ ॥
105909
105910 इत्यनुक्रमतो याता संविच्छक्तिस्वरूपताम् ।
105911 मज्जा प्राक् संनिवेशं स्वं तमेवाप्य समुज्झती ॥ १९ ॥
105912
105913 स्वस्वरूपापरित्यागेनैवंरूपापत्तिरेवास्या महती आत्मचमत्कृतिरित्थं मया
105914 वर्णितेत्युपसंहरति-इतीति । शक्तिर्व्यबहारसमर्थता तत्स्वरूपताम् ॥ १९ ॥
105915
105916 संविच्छक्त्या तया तत्र ततस्तरलरूपया ।
105917 निज एव समे रूपे दृगित्थं संप्रसारिता ॥ २० ॥
105918
105919 समे निर्विकारे निजे रूपे एव इत्थं जगदाकारा दृक् संप्रसारिता ॥ २० ॥
105920
105921 इदं व्योम महानन्तमियं कालमयी कला ।
105922 इयं नियतिरित्युक्ता क्रियेयं स्पन्दरूपिणी ॥ २१ ॥
105923
105924 इत्थं च वियदादिसर्वमियमेव नान्यदस्याः किंचिदिति द्रष्टव्यमित्याह##-

105925
105926 अयं संकल्पविस्तारस्त्वयमाशान्तरभ्रमः ।
105927 रागद्वेषस्थितिरियं हेयोपादेयधीरियम् ॥ २२ ॥
105928
105929 आध्यात्मिकार्था अपीयमेवेत्याह-अयमिति ॥ २२ ॥
105930
105931 इयं त्वत्ता त्वियं मत्ता तत्तेयं संस्थिता स्वयम् ।
105932 ब्रह्माण्डौघोऽयमूर्ध्वस्थः स्वयमङ्गोर्ध्वमप्यधः ॥ २३ ॥
105933
105934 अयं पुरः पार्श्वतोऽयं पश्चादाराहवीयसी ।
105935 इदं भूतं वर्तमानं भविष्यत्त्विदमित्यपि ॥ २४ ॥
105936
105937 लिङ्गभेदः आत्मा ब्रह्मेत्यादिविशेष्यपदमध्याहृत्य योज्यः । दवीयसी दूरतरा ॥
105938 २४ ॥
105939
105940 इदमन्तःस्थितानल्पकल्पनाम्भोरुहालयम् ।
105941 ब्रह्माण्डमण्डपापीडक्रीडामण्डपमण्डलम् ॥ २५ ॥
105942
105943 अन्तःस्थिता अनन्ताः कल्पनाम्भोरुहाणामालया जीवा यस्मिंस्तथाविधम् ॥ २५ ॥
105944
105945 अनन्तकलनातत्त्वपरिपल्लविता हरेः ।
105946 हृदब्जकर्णिका चेयं लोकपद्माक्षमालिका ॥ २६ ॥
105947
105948 अनन्तैः कलनातत्त्वैः रचनरहस्यैः परितः पल्लविता ॥ २६ ॥
105949
105950 इयं कीर्णमहारुद्रगणापूरितकोटरा ।
105951 दीर्घाभ्रसरणिर्भ्रान्तिध्वंसनेभ्यः प्रभाविनी ॥ २७ ॥
105952
105953 कीर्णैः सर्वतोव्याप्तैर्महारुद्रगणैः पूरितकोटरा । अभ्रसरणिराकाशपदवी ।
105954 अस्मिन्महत्यर्णवेऽन्तरिक्षे भवा अधि । नीलग्रीवाः शितिकण्ठाः शर्वाः इति श्रुतेरिति
105955 भावः । भ्रान्ता विषयलम्पटाः स्वर्तिणस्तेषां ध्वंसनेभ्यः अधःपतनेभ्यो
105956 निमित्तेभ्यः प्रभाविनी प्रतापवती प्रकाशवती वा । नक्षत्रपात्रे नभःपथे
105957 प्रभानुवृत्तिदर्शनादित्यर्थः ॥ २७ ॥
105958
105959 इयं मेरुः ककुभ्यत्र जगत्पङ्कजकर्णिका ।
105960 स्फुरदिन्दुमधूल्लासलम्पटामरषट्पदा ॥ २८ ॥
105961
105962 अत्र अस्यामुत्तरस्यां ककुभि दिशि । इन्दुलक्षणस्य मधुन उल्लासे अमृतमकरन्दे
105963 लम्पटाः अमरलक्षणाः षट्पदा यस्माम् ॥ २८ ॥
105964
105965 इयमुद्दामसौगन्ध्यस्वर्गश्रीपुष्पमञ्जरी ।
105966 जगज्जरठवृक्षस्य रजोनरकमूलिनः ॥ २९ ॥
105967
105968 रजोगुणकार्यरागादिना नरकैर्दुःखैश्च मूलिनो मूलवतो जगज्जरठवृक्षस्य
105969 उद्दामसौगन्ध्या स्वर्गश्रीलक्षणा पुष्पमञ्जरी इयमेवेत्यर्थः ॥ २९ ॥
105970
105971 इयं च तारार्किंजल्का ब्रह्मार्णवतटस्थिता ।
105972 अपारापारपर्यन्ताव्योमलीलासरोजिनी ॥ ३० ॥
105973
105974 ऊर्ध्वमपारा परितश्चापारपर्यन्ता । व्योमलीला व्योमाकारा सरोजिनी कमलिनी सरसी वा
105975 इयमेवेत्यर्थः ॥ ३० ॥
105976

105977 इयं क्रियापरिग्राहा तरङ्गतरलावली।
105978 सर्गावर्तविधानस्थभूरिभूतपरम्परा॥ ३१॥
105979
105980 क्रियाः कर्माण्येव परितो ग्राहा यस्याम्। तरङ्गा इव तरला मासर्त्वावली यस्याम्।
105981 सर्गः प्रजोत्पादनं तल्लक्षणे आवर्तानां विधाने कार्ये तिष्ठतीति तत्स्था
105982 भूरिभूतपरम्परा यस्याम्॥ ३१॥
105983
105984 इयत्तया प्रसरिणी क्षणकल्पादिपल्लवा।
105985 तेजःकेसरिणी कालनलिनी व्योमपङ्कजा॥ ३२॥
105986
105987 इयत्तया प्राण्यायुःपरिमाणेन प्रसरिणी विस्तृता। तेजोभिरग्न्यादित्यचन्द्रादिभिः
105988 केसरिणी। व्योमैव पङ्कजं यस्यास्तथाविधा कालनलिनी इयमेव॥ ३२॥
105989
105990 इमा भावविकाराढ्या जरामृतिविषूचिकाः।
105991 विद्याविद्याविलासाढ्या इमाः शास्त्रार्थदृष्टयः॥ ३३॥
105992
105993 इति सा तस्य बिल्वस्य निजमज्जाचमत्कृतिः।
105994 संकल्पसंनिवेशान्तरेवैव कृतसंस्थितिः॥ ३४॥
105995
105996 इति वर्णितप्रकाराः सर्वे सा निजमज्जाचमत्कृतिरेव।
105997 एवंप्रकारैर्व्यष्टिसमष्टिसंकल्पसंनिवेशस्यान्तःकृतसंस्थितिः॥ ३४॥
105998
105999 शान्ता स्वस्था निराबाधा सौम्या भावनयोज्झिता।
106000 कर्तृत्वमप्यकर्तृत्वं कृत्वाऽकृत्वेव संस्थिता॥ ३५॥
106001
106002 एषैकिकैव विविधेव विभाव्यमाना नैकात्मिका न विविधा ननु सैव सैव।
106003 सत्यास्थिता सकलशान्तिसमैकरूपा सर्वात्मिकातिमहती [महतीति
106004 निरूपशक्तिः इति मुद्रितपुस्तके पाठः।] चितिरूपशक्तिः॥ ३६॥
106005
106006 बिल्वाख्यायिकां समाप्य स्वरूपेणैव चितं वर्णयन्नुपसंहरति-एषेति।
106007 एकत्वसंख्याया अपि द्वैतापादकत्वान्नैकात्मिका नापि विविधा किंतु सैव एकत्वं
106008 सैवैका। वीप्सया सजातीयविजातीयनिवृत्तिर्वा। सकलस्य द्वैतविकल्पस्य शान्त्या
106009 समैकरूपा। अनेन स्वगतभेदस्यापि व्यावृत्तिः। अतिमहती ब्रह्मशब्दलक्ष्या
106010 चितिरूपा शक्तिरेवेत्थं व्युत्पादितेत्यर्थः॥ ३६॥
106011
106012 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाणप्रकरणे पू०
106013 बिल्वोपाख्याने पञ्चचत्वारिंशः सर्गः॥ ४५॥
106014
106015 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
106016 बिल्वोपाख्याने पञ्चचत्वारिंशः सर्गः॥ ४५॥
106017
106018 षट्चत्वारिंशः सर्गः ४६
106019
106020 श्रीराम उवाच।
106021
106022 भगवन्सर्वसारज्ञ त्वयैषा बिल्वरूपिणी।
106023 महाचिद्घनसत्तेह कथितेति मतिर्मम॥ १॥
106024
106025 इह शिल्पिमनोदृष्टपद्मिनीखण्डमण्डितम्।
106026 शिलोदरमिव ब्रह्म प्रपञ्चाभासमीर्यते॥
106027
106028 श्रीरामः स्वस्य बिल्वाख्यानतात्पर्यबोधं दर्शयति-भगवन्निति द्वाभ्याम्॥ १॥

चिन्मज्जारूपमखिलमहंतादीदमाततम् ।
न मनागपि भेदोऽस्ति द्वैतैक्यकलनात्मकः ॥ २ ॥

श्रीवसिष्ठ उवाच ।

यथा ब्रह्माण्डकूश्माण्डमज्जामेर्वादिसंस्थितिः ।
तथा चिद्विल्वमज्जेयं ब्रह्माण्डादिजगत्स्थितिः ॥ ३ ॥

नाहंतादिमात्रं चिद्विल्वमज्जा किंतु ब्रह्माण्डादिसर्वमपीति निःसंकोचं
बोध्यमित्याशयेन वसिष्ठ उवाच-यथेत्यादिना ॥ ३ ॥

सृष्टिचिद्विल्वमज्जा स्यात्स्वाधारान्यत्वसंभवे ।
विनाशः सर्वगस्यास्य न चैतत्संभवत्यलम् ॥ ४ ॥

चिद्विल्वस्य मज्जेत्युक्ते अन्तःप्रदेशस्थावयवानां रसघनः परिणामविशेष इति
कस्यचिद्भ्रान्तिं वारयति-सृष्टिरिति । यथा बिल्वखर्परं मज्जाया आधारस्तथा
सृष्टिलक्षणमज्जाया आधेयायाः स्वाधारस्य खर्परस्थानीयस्यान्यत्वसंभवे
तदन्तःपरिणामरूपा मज्जा स्यात् । तत्र सर्वगस्यास्य चिदात्मनः कार्त्स्न्येनैकदेशेन
वा परिणामित्वे विनाशो दुर्वारः । न चैतन्निरवयवे मुख्योऽन्तःप्रदेशः परिणामो
वा संभवतीति न मज्जाशब्दः परिणामपर इत्यर्थः ॥ ४ ॥

चितेर्मरीचबीजस्य जगदाख्या चमत्कृतिः ।
स्थिता सौषुप्तसौम्यान्तः शिलान्तःसंनिवेशवत् ॥ ५ ॥

तर्हि किंपर इति चेद्विवर्तलक्षणचमत्कारपर इत्याशयेनाह-चितेरिति । शिलान्तः
शिल्पिमनःकल्पितपद्मवनसंनिवेशवदित्यर्थः ॥ ५ ॥

अत्रेमामिन्दुवदन चित्रां विस्मयकारिणीम् ।
वर्ण्यमानां मया रम्यामन्यामाख्यायिकां शृणु ॥ ६ ॥

दृष्टान्तं विवरीतुं ब्रह्मशिलाख्यायिकां प्रस्तौति-अत्रेति ॥ ६ ॥

स्निग्धा स्पष्टा मृदुस्पर्शा महाविस्तारशालिनी ।
निबिडा नित्यमक्षुब्धा क्वचिदस्ति महाशिला ॥ ७ ॥

तस्यामन्तः प्रफुल्लानि पद्मानि सुबहून्यपि ।
सरस्यामिव रम्याणि तान्यनन्तानि सन्ति वै ॥ ८ ॥

मनःकल्पनानामानन्त्यादनन्तानि ॥ ८ ॥

अन्योन्यप्रोतपत्राणि मिथो विघटितानि च ।
मिथश्चोपनिगूढानि गूढानि प्रकटानि च ॥ ९ ॥

उपनिगूढानि संश्लिष्टानि ॥ ९ ॥

अधोमुखान्यूर्ध्वमुखान्यपि तिर्ङ्मुखानि च ।
मिथोमिलितमूलानि मिथःप्रोतमुखान्यपि ॥ १० ॥

कर्णिकाजालमूलानि मूलान्तःकर्णिकानि च ।
ऊर्ध्वमूलान्यधोमूलान्यमूलानीतराणि च ॥ ११ ॥

106081 दृष्टवैपरीत्येनापि मनःकल्पनसंभवादाह-कर्णिकेति। कर्णिकाजालेषु मूलानि
106082 येषाम्। इतराणि कानिचिदमूलानि च॥ ११॥
106083
106084 तेषां च निकटे सन्ति शङ्खाः शतसहस्रशः।
106085 चक्रौघाश्च महाकाराः पद्मवत्संनिवेशिनः॥ १२॥
106086
106087 शङ्खाः पद्ममुकुलवत्संनिवेशिनः। चक्रौघास्तु विकसितपद्मवत्संनिवेशिन
106088 इत्यर्थाद्गम्यते॥ १२॥
106089
106090 श्रीराम उवाच।
106091
106092 सत्यमेतन्मया दृष्टा तादृशी सा महाशिला।
106093 शालग्रामे हरेर्धाम्नि विद्यते परिवारिणी॥ १३॥
106094
106095 स्वयं तीर्थयात्रायां शालग्रामक्षेत्रे दृष्टां शिलां गुरुवाक्यात्स्मरन् रमः
106096 सैवात्र भगवता जगत्कल्पनासहितब्रह्मदृष्टान्तत्वेनोदाहृतेति मन्यमान
106097 आह-सत्यमेतदिति। परिवारिणी पद्मवनलाञ्छनपरिवृता॥ १३॥
106098
106099 श्रीवसिष्ठ उवाच।
106100
106101 एवमेतद्विजानासि दृष्टवानसि तां शिलाम्।
106102 यो यश्च तत्र वै प्राणः समस्तादृगनन्तरः॥ १४॥
106103
106104 दृष्टान्तदार्ष्टान्तिकसंबन्धस्त्वया सम्यग्बुद्ध इत्यनुमोदमानो वसिष्ठ आह##-
106105 तादृग्दार्ष्टान्तिकभूतश्चिदात्मा यो यादृशस्वभावः। अनन्तरो
106106 निरवकाशचिद्घनः। समः प्राणस्यापि प्राणो निरतिशयानन्दरूपस्तत्र तस्मिन्नपि
106107 विषये दृष्टवानसीति विजानासि॥ १४॥
106108
106109 मया त्वियमपूर्वैव शिलेह कथिता तव।
106110 यस्यामन्तर्महाकुक्षौ सर्वमस्ति च नास्ति च॥ १५॥
106111
106112 मया तु न त्वद्दृष्टशिला दृष्टान्तत्वेनाभिप्रेता किंत्वपूर्वा ब्रह्मैव शिलात्वेन
106113 परिकल्प्य बिल्वमिवोपन्यस्तेति उपाये तात्पर्यविसंवादेऽपि नोपेये विसंवाद
106114 इत्याशयेनाह-मया त्विति॥ १५॥
106115
106116 चिच्छिलैषा मयोक्ता ते यस्यामन्तर्जगन्ति वै।
106117 घनत्वैकात्मकत्वादिवशादेषा शिलैव चित्॥ १६॥
106118
106119 चिदात्मनि गौण्या शिलाशब्दप्रयोगनिमित्तान्गुणान्दर्शयति-घनत्वेति।
106120 आदिपदादभेद्यत्वैकरसत्वकूटस्थत्वादिपरिग्रहः॥ १६॥
106121
106122 अप्यत्यन्तघनाङ्गायाः सुनीरन्ध्राकृतेरपि।
106123 विद्यतेऽन्तर्जगद्वृन्दं व्योम्नीव विपुलानिलः॥ १७॥
106124
106125 अपिशब्दाभ्यां सूचितो विरोधो मायया परिहर्तव्यः॥ १७॥
106126
106127 द्यौः क्षमा वायुराकाशं पर्वता सरितो दिशः।
106128 सन्ति तस्यां शिलायां च सुषिरं न मनागपि॥ १८॥
106129
106130 अस्यामेव घनाङ्गात्म जगत्पद्मं विजृम्भते।
106131 एतस्माद्वस्तुतो नान्यदन्यच्छुद्धात्मकं च वा॥ १९॥
106132

106133 जगदेव मया तत्र पद्मवनत्वेनोत्प्रेक्षितमित्याह-अस्यामेवेति। तच्च जगदन्यदिव
106134 भातमपि वस्तुतो नान्यत् शुद्धचिदात्मकं च वा न किंतु मायैवेत्यर्थः॥ १९॥
106135
106136 शङ्खपद्मादिकं लोकं पाषाणे लिख्यते यथा।
106137 भूतं भवद्भविष्यच्च शिलायां शालभञ्जिका॥ २०॥
106138
106139 तेषां च निकटे सन्ति शङ्खाः शतसहस्रशः इति यदुक्तं तत्तात्पर्यमाह##-
106140 भव्यं सर्वं जगत्। तत्र शालभञ्जिका वस्तुतो यथा वास्तवीव अस्तीति परेणान्वयः॥
106141 २०॥
106142
106143 तथास्ति तत्र तत्सर्वं संस्थानं वस्तुतो यथा।
106144 उपलान्तः संनिवेशो नानात्माप्येकपिण्डताम्॥ २१॥
106145
106146 यथादत्ते तथैषा चित्पिण्डाकारैकिकां घनाम्।
106147 यथा पद्मः शिलाकोशादभिन्नस्तद्वपुर्मयः॥ २२॥
106148
106149 आदत्ते स्वीकरोति तथा एषा चिदपि घनां एकिकां एकपिण्डतां स्वीकरोतीत्यर्थः॥ २२॥
106150
106151 तथा सर्गश्चितो रूपादभिन्नोऽपि वपुर्मयः।
106152 सुषुप्तावस्थया चक्रपद्मलेखाः शिलोदरे॥ २३॥
106153
106154 तत्स्वरूपादभिन्नोऽपि वपुर्मयः परिच्छिन्नाकार इव भातीत्यर्थः। सुषुप्तावस्थया
106155 टङ्कच्छेदात्प्रागनभिव्यक्तयेत्यर्थः॥ २३॥
106156
106157 यथा स्थिताश्चितेरन्तस्तथेयं जगदावली।
106158 शिलान्तः पद्मलेखाली मरिचान्तश्चमत्कृतिः॥ २४॥
106159
106160 नोदेति नास्तमायाति यथा सर्गस्तथा चितौ।
106161 यथा पुरन्ध्र्यां मर्त्योऽन्तर्मज्जा वा बिल्वगा यथा॥ २५॥
106162
106163 सतोः शिलामरिचयोर्नोदेति नास्तमायाति तथेत्यर्थः। पुरन्ध्र्यां सुचरित्रायां
106164 स्त्रियामन्तर्मनसि मर्त्यस्तत्कान्तः सदैवास्ति॥ २५॥
106165
106166 तथाऽनन्तविकाराढ्या चितौ ब्रह्माण्डमण्डली।
106167 विकारादि तदेवेति मुधैवोक्तिरनर्थिका॥ २६॥
106168
106169 यदा विकारिणां ब्रह्माण्डानां चिन्मात्रत्वं तदा
106170 तद्विकारभुवनशरीरादिभेदानां चिन्मात्रत्वमर्थसिद्धमिति
106171 तदुक्तिरर्थशून्यत्वान्मुधा निष्फलैव॥ २६॥
106172
106173 तत्तां समुपयात्याशु जलबिन्दुरिवाम्भसि।
106174 अनन्तत्वाच्चितेरेतद्विकारादि चितेरिति॥ २७॥
106175
106176 कुतोऽर्थशून्या तत्राह-तत्तामिति। यत एतद्विकारादि आशु ब्रह्माण्डानां
106177 चिन्मात्रतादर्शनक्षण एव तत्तां चिन्मात्रतां समुपयाति न
106178 पृथगणुमात्रमप्यवशिष्यत इति हेतोः॥ २७॥
106179
106180 उक्त्या संपद्यते यच्च तल्लयेन विलीयते।
106181 ब्रह्मैवेदं विकारादि विकाराद्यर्थवर्जितम्॥ २८॥
106182
106183 कविवर्णितगन्धर्वनगरवैचित्र्यवदुक्तिमात्रसिद्धत्वादपि तस्य
106184 प्रत्येतृचिन्मात्रत्वमित्याह-उक्त्येति। स भूरिति व्याहरन् भुवमसृजत। एत इति वै

106185 प्रजापतिर्देवानसृजत असृग्रमिति मनुष्यानिन्दव इति पितॄन् इत्यादिश्रुत्या
106186 भुवनादिसर्गस्य नामपूर्वकत्वोक्तेरेव नामलयन लयोऽप्यूह्यः ॥ २८ ॥
106187
106188 वर्जनावर्जनेऽर्थस्य ब्रह्मैवानन्ततावशात् ।
106189 ब्रह्म स्थितं विकारादि ब्रह्मैवोत्पादितं क्रमात् ॥ २९ ॥
106190
106191 विकाराद्यर्थवर्जनमपि न वस्त्वन्तरमित्याह-वर्जनेति ॥ २९ ॥
106192
106193 अत्रान्यार्थमिदं विद्धि मृगतृष्णाम्भसा समम् ।
106194 बीजं पुष्पफलान्तस्थं बीजान्तर्नान्यदात्मकम् ॥ ३० ॥
106195
106196 पुष्पफलपर्यन्ते स्वकार्ये बीजवत्सर्वत्र चित्सत्तानुवृत्तिदर्शनादपि सर्वं
106197 चिदेवेत्याह-बीजेत्यादिना ॥ ३० ॥
106198
106199 यादृशी बीजसत्ता सा भवन्ती यात्यथोत्तरम् ।
106200 चिद्घने चिद्घनत्वं यत्स एव त्रिजगत्क्रमः ॥ ३१ ॥
106201
106202 अङ्कुरादिपूर्वपूर्वविकारेषु भवन्ती विद्यमानैव अथ उत्तरकालं
106203 काण्डशाखापल्लवादि याति ॥ ३१ ॥
106204
106205 एकत्वमेतयोर्द्वित्वमेकाभावे द्वयोः क्षतिः ।
106206 जगदन्यभवोद्भूतिर्न कदाचित्तदीदृशम् ॥ ३२ ॥
106207
106208 द्वैतस्यैकत्वकल्पनाधीनकल्पनत्वादप्यकल्पितचिन्मात्रं तत्त्वमित्याह-एकत्वमिति
106209 । एतयोर्बीजतत्कार्ययोः अन्यभवश्चिद्व्यतिरिक्तजाड्यकल्पना तदधीनोद्भूतिः ।
106210 तच्चिद्रूपं तु कदाचिदपि ईदृशं जाड्यस्वभावं न संभवतीत्यर्थः ॥ ३२ ॥
106211
106212 चिदचिन्न कदाचिच्च द्वयमन्तर्मिथोऽद्वयम् ।
106213 महाशिलान्तरे भेदो लेखात्मास्ति यथा [यतो बहु इति पाठः ।] बहुः ।
106214 तदन्यानन्यमज्जादि चिद्घने त्रिजगत्तथा ॥ ३३ ॥
106215
106216 तदेव स्फुटयन् प्रकृते योजयति-चिदिति । मज्जादिबिल्वे इति शेषः ॥ ३३ ॥
106217
106218 रेखोपरेखावलिता यथैका पीवरी शिला ।
106219 तथा त्रैलोक्यवलितं ब्रह्मैकमिति दृश्यते ॥ ३४ ॥
106220
106221 एकं ब्रह्म इति प्रसिद्धजगद्रूपेण दृश्यते ॥ ३४ ॥
106222
106223 एतच्छिलान्तरब्जादि यथा नित्यं सुषुप्तकम् ।
106224 नास्तमेति न चोदेति तथाऽहंता जगद्गतिः ॥ ३५ ॥
106225
106226 सुषुप्तकं शिल्पिवासनामात्रम् ॥ ३५ ॥
106227
106228 यथा शिलान्तर्लेखादि भिद्यते न शिलान्तरात् ।
106229 तत्सारत्वाज्जगत्कर्तृ कर्तृत्वादिजगच्चितिः ॥ ३६ ॥
106230
106231 यथा शिलान्तरब्जानां स्पन्दास्पन्दभवाभवाः ।
106232 विषयत्वं न गच्छन्ति कर्तारो जगतस्तथा ॥ ३७ ॥
106233
106234 जगत्कर्तृ जीवेश्वररूपं तदीयं कर्तृत्वादिजगच्च चितिश्चिदेव । भवाभवा
106235 आविर्भावतिरोभावाः ॥ ३७ ॥
106236

106237 नेदं कदाचित्क्रियते न कदाचन नश्यति।
106238 अद्रिवत्प्रभवोल्लासविलासावेदनात्मकम्॥ ३८॥
106239
106240 शिला यथा तत्त्वदर्शने विषयत्वं न गच्छन्ति तथा आत्मतत्त्वदर्शनेऽपि कर्तार
106241 इत्यर्थः॥ ३८॥
106242
106243 यथा यत्र यदाकारं तथा तत्र तदेव हि।
106244 ब्रह्मसत्तात्मकं सर्वं सुषुप्तस्थमिव स्थितम्॥ ३९॥
106245
106246 अद्रिवद्गिरिकूटवदविकारित्वादित्यर्थः। अतएव शिला नानाशिल्पिनां
106247 विरुद्धमानसकल्पनाभेद इव ब्रह्मापि नानाजीवविरुद्धकल्पनाभेदेऽपि
106248 तत्तद्रूपमेवावतिष्ठत इत्याह-यथेति। यदाकारं कल्प्यत इति शेषः॥ ३९॥
106249
106250 भूरिभावविकाराढ्यो योऽयं जगदुरुभ्रमः।
106251 सुषुप्तमेव तद्विद्धि शिलान्तः पङ्कजादिवत्॥ ४०॥
106252
106253 सुषुप्तस्थं यथा प्रतिजीवं विचित्रस्वाप्नार्थकल्पनाभेदमविरोधेन सहते
106254 तद्वदित्यर्थः। सुषुप्तमनुन्मिषितवासनमात्रमेव॥ ४०॥
106255
106256 नित्यं सुषुप्तपदमेव जगद्विलासः सम्यक्प्रशान्तसमचिद्घनखात्मकत्वात्।
106257 पद्माः शिलान्तरिव सर्गदशास्त्वसारा दृष्टा न देहमुपयान्ति कदाचिदेव॥ ४१
106258 ।।
106259
106260 आख्यायिकातात्पर्यं संक्षिप्योपसंहरति-नित्यमिति। चिद्घनं यद्ब्रह्म खं
106261 तदात्मकत्वात्। असारास्तुच्छाः शिलान्तः पद्मा इव सर्गादिदशा आत्मनि दृष्टा अपि
106262 कदाचिदपि देहं स्वरूपस्थितिं नोपयान्त्येवेत्यर्थः॥ ४१॥
106263
106264 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाणप्रकरणे पू०
106265 शिलाकोशोपदेशो नाम षट्चत्वारिंशः सर्गः॥ ४६॥
106266
106267 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
106268 शिलाकोशोपदेशो नाम षट्चत्वारिंशः सर्गः॥ ४६॥
106269
106270 सप्तचत्वारिंशः सर्गः ४७
106271
106272 श्रीवसिष्ठ उवाच।
106273
106274 चित्तत्त्वस्य फलस्येव चितः स्वापापरक्रमात्।
106275 स्वसत्तासंनिवेशेन यः स सर्ग इति स्थितः॥ १॥
106276
106277 इह बिल्वशिलाख्यानतात्पर्यमुपवर्ण्यते।
106278 मयूराण्डरसे बर्हवर्णसंस्थानभेदवत्॥
106279
106280 बिल्वदृष्टान्तवशादचिद्रूपमेव तदन्तर्बीजमज्जादीनामिव स्वगतभेदेन तत्र
106281 तत्समसत्ताकसर्गोद्भवश्चात्रोक्त इति तात्पर्यभ्रमो मा भूदिति तत्तात्पर्यं
106282 वर्णयति-चित्तत्त्वस्येति। चिद्रूपं तत्त्वं यावत्स्वस्वरूपप्रतिसंधानशून्यं
106283 तावदेव सर्गगर्भमिति द्योतनायाचेतनफलदृष्टान्तः। सर्गश्च चितः
106284 प्रसिद्धस्वापादपरः स्वापः स्वप्न एव
106285 युगवत्सरादिक्रमात्स्वसत्ताकल्पितसंनिवेशेन प्रवृत्तो न चित्समसत्ताकः
106286 स्वगतभेद इत्यर्थः॥ १॥
106287
106288 देशकालक्रियादीनामपि तन्मयरूपतः।

106289 इदमन्यदिदं चान्यदिति नात्रोपपद्यते ॥ २ ॥
106290
106291 तर्हि किं चित्तत्त्वादन्य एव सर्गः एतदपि दुर्वचमित्याह-देशेति ॥ २ ॥
106292
106293 समस्तशब्दशब्दार्थवासनाकलनाविदः ।
106294 एकात्मत्वादसच्चेदमिति संकथ्यते कथम् ॥ ३ ॥
106295
106296 तर्हि किमसदेवेदं सर्गादि तदपि दुर्वचमित्याह-समस्तेति । समस्तानां
106297 शब्दानां तदर्थानां तद्वासनानां तत्प्रयुक्तसंकल्पविकल्पादिकलनानां च
106298 वेदितुरवस्थात्रयेऽप्येकात्मत्वात्सत्यत्वे अत्यन्तासतस्तेन वेदनादर्शनादित्यर्थः ॥ ३ ॥
106299
106300 फलस्यान्तःसंनिवेशो नामानुक्रमतो यथा ।
106301 चितः स्वसत्ताघनताऽनाना नाना स्थिता तथा ॥ ४ ॥
106302
106303 तस्माच्चिदधीनप्रातिभासिकानुक्रमवैचित्र्याशयेनैव फलत्वेनोत्प्रेक्षणमित्याह##-
106304
106305 अनानैवापि नानैव क्षुब्धेवाक्षुभितैव च ।
106306 यथा फलान्तः स्वासत्ता चिदन्तः सिद्धयस्तथा ॥ ५ ॥
106307
106308 तत्राऽनानात्वाद्यंश एव प्राथम्याद्वास्तव इत्याह-अनानैवेति । क्षुब्धा
106309 विकृतेव । सिद्धयः संनिवेशनिष्पत्तयः ॥ ५ ॥
106310
106311 जगन्नगरमादर्शे चितः स्वं प्रतिबिम्बितम् ।
106312 कचतीवाऽकचदपि शिलान्तःसंनिवेशवत् ॥ ६ ॥
106313
106314 शिलाख्यानस्य तात्पर्यं दर्शयति-जगदिति । शिलान्तःसंनिवेशवज्जगदिति
106315 यदुक्तं तस्याप्यादर्शे प्रतिबिम्बितं नगरमिव चितः स्व स्वं रूपमेव अकचदपि
106316 कचतीत्यर्थे तात्पर्यमित्यर्थः ॥ ६ ॥
106317
106318 परमे चिन्मणौ सन्ति जगत्कोटिशतान्यपि ।
106319 चिन्तामणावनन्तानि फलानीवार्पितान्यलम् ॥ ७ ॥
106320
106321 मायिकानन्तशक्तिमत्त्वाद्वा चिन्तामणौ चिन्तकमनोरथफलानीव चिति सर्वं जगदस्तीति
106322 तत्तात्पर्यं वर्णनीयमित्याह-परमे इति । अर्पितानीति श्रुतिषु
106323 अरनाभिनिदर्शनोपन्यासादिति भावः ॥ ७ ॥
106324
106325 चित्समुद्गक एवेदं तदङ्गोत्कीर्णमाततम् ।
106326 जगन्मौक्तिकमाभाति तदंशमयमन्यवत् ॥ ८ ॥
106327
106328 कल्पितविकारांशांशिभावेन मुक्ताशुक्तिसंपुटके मुक्तानामिव वा चिति जगत्स्थितौ
106329 तात्पर्यमित्याह-चित्समुद्गक इति । तदङ्गे तद्गर्भे उत्कीर्णमिव तदङ्गोत्कीर्णम् ।
106330 तदेवाह-तदंशमयमिति ॥ ८ ॥
106331
106332 अहोरात्रं विकरयन्वेदनावेदनान्यलम् ।
106333 चिदादित्यः स्थितो भास्वाञ्जगद्द्रव्याणि दर्शयन् ॥ ९ ॥
106334
106335 आदित्यः स्वस्वरूपाविर्भावतिरोभावात्मकमहोरात्रविभागमिव चिन्मणिशिलापि
106336 स्ववेदनावेदनात्मकजगद्द्रव्यप्रकाशनाप्रकाशने स्वात्मनि करोतीत्यर्थे वा
106337 तत्तात्पर्यमित्याह-अहोरात्रमिति । विकरयन्विकलयन् । विकुर्वन्निति यावत् ॥ ९ ॥
106338
106339 समुद्रकोटरावर्तपयःस्पन्दविलासवत् ।
106340 अनानैव च नाना चिच्छिलान्तःसंनिवेशवत् ॥ १० ॥

106341
106342 समुद्रस्य कोटरे गर्भे आवर्ततरङ्गादिस्पन्दभेदानां
106343 समुद्रमात्रत्ववज्जगद्भेदानां चिन्मात्ररूपत्वे वा तत्तात्पर्यमित्याह-समुद्रेति
106344 ॥ १० ॥
106345
106346 यदस्ति तच्चिति शिलाशरीरे शालभञ्जिका।
106347 यन्नास्ति तच्चिति शिलाशरीरे शालभञ्जिका ॥ ११ ॥
106348
106349 वर्तमानसर्गस्यातीतानागतसर्गस्य च तुल्यतया चिन्मात्रस्वरूपताप्रदर्शन वा
106350 तत्तात्पर्यमित्याह-यदस्तीति। शालभञ्जिका उत्कीर्णा नुत्कीर्णा वा प्रतिमा ॥ ११ ॥
106351
106352 भावाभावेषु यत्सत्यं चिन्मज्जाकल्पमेव तत्।
106353 मज्जसारा पदार्थश्रीस्तन्मयं स्यात्तदेव हि ॥ १२ ॥
106354
106355 बिल्वाख्यानस्यापि जगतश्चित्सारत्वे तात्पर्यमित्याशयेनाह-भावेति। यत्सत्यं
106356 तत्वं तत् चिद्रूपमज्जाकल्पमेव। पदार्थश्रीर्बिल्वादिफलपदार्थश्रीर्मज्जैव सारो
106357 यस्यास्तथाविधा प्रसिद्धेत्यर्थः ॥ १२ ॥
106358
106359 पद्मनानादिशब्दार्थस्त्यक्त्वा यद्वच्छिलोदरम्।
106360 नाना तद्वदिदं नाना तदेतन्मयमद्वयम् ॥ १३ ॥
106361
106362 शिलोदरात्पृथक्करणे पद्मनानादिशब्दार्थासत्त्ववच्चितः पृथक्करणे
106363 जगदसत्त्वे वा तत्तात्पर्यमित्याह-पद्मेति ॥ १३ ॥
106364
106365 नानाप्येकतयाऽनाना पद्मबिम्बं शिलोदरम्।
106366 यथा तदविभागात्म तथेदं चिद्घनान्तरम् ॥ १४ ॥
106367
106368 तदेतन्मयमद्वयमित्यंशं स्फुटयति-नानेति। यदि चितो न पृथक् क्रियते तर्हि
106369 नानापि जगच्चिदात्मैकतया अनानैव भवति यथा तादृशं शिलोदरमित्यर्थः ॥ १४ ॥
106370
106371 यथाऽमलपयःकोशः स्थलधियां तु भानुभाः।
106372 सन्नेवासन्निवैवं चिन्नैव त्वं सदसद्वपुः ॥ १५ ॥
106373
106374 यथा मरुमरीच्यादिर्मृगदृशा अमलः पयःकोशो जलराशिः। स्थलधियां
106375 स्थलमेवेदमिति बुद्धिमताम्। विदुषां दृष्ट्या तु भानुभाः सूर्यातप एव। तत्र
106376 सन्नेव आतपादिरसन्जलादिरिवेति सदसद्वपुर्यथा भाति एवं चित्स्वभावस्त्वमपि भासि।
106377 वस्तुतस्तु त्वं नैव सदसद्वपुरित्यर्थः ॥ १५ ॥
106378
106379 यथा सम्यक् पयोराशिः कोटरे कलनोन्मुखम्।
106380 द्रवत्वात्स्पन्दतेऽस्पन्दं तथेदं चिद्घनान्तरम् ॥ १६ ॥
106381
106382 यथा पयोराशिः कोटरमध्ये द्रवत्वात्स्पन्दते तथा अस्पन्दमपि चिद्घनस्य आन्तरं
106383 स्पन्दत इवेत्यर्थः ॥ १६ ॥
106384
106385 चिच्छिलाशङ्खपद्मौघस्तन्मयत्वेऽप्यतन्मयः।
106386 जगद्विद्धि सपद्मादिपदार्थं चिच्छिलान्तरम् ॥ १७ ॥
106387
106388 तर्हि तत्र पद्मादेः शिलामयत्वमिव जागतशङ्खपद्मादेश्चिन्मयता कुतो न
106389 विभाव्यते तत्राह-चिच्छिलेति। अतन्मयस्तदबोधादिति शेषः। अतएव त्वं तथा
106390 बुद्ध्यस्वेत्याह-जगदिति ॥ १७ ॥
106391
106392 महाशिलाघनोऽप्येष चिद्घनस्थं शिलोदरम्।

106393 अरन्ध्रो निर्द्वयोऽच्छोऽजः संशान्तः संनिवेशवत् ॥ १८ ॥
106394
106395 दृष्टान्तीकृतशिलाघनोऽपि परमार्थदृष्ट्या चिच्छिलोदरमेव
106396 संपन्नमित्याह-महाशिलेति। अतएव तत्र शिल्पियत्नसहस्रेणापि
106397 रन्ध्रादिसंभावनापि नास्तीत्याशयेन विशिनष्टि-अरन्ध्र इति।
106398 संनिवेशवन्मिथ्यासनिवेशेन भासत इत्यर्थः ॥ १८ ॥
106399
106400 तपतीदं जगद्ब्रह्म शरत्काल इवामलम्।
106401 स्फुरतीदं जगद्ब्रह्म सौम्यः सोम इव द्रुतः ॥ १९ ॥
106402
106403 यथा शरत्कालस्तपति अमृतद्रुतः सोमः स्फुरतीति कालात्मकयोरेव
106404 सूर्यसोमयोरवान्तरभेदकल्पनया क्रियाकारकभावेन व्यपदेशस्तथा ब्रह्म
106405 जगत्प्रकाशयति जगदात्मना स्फुरतीति च व्यपदेश इत्याह-तपतीति। सौम्यो
106406 नयनानन्दः ॥ १९ ॥
106407
106408 ब्रह्मणीदं सुषुप्ताभं नास्त्यनाशं शिलाब्जवत्।
106409 ब्रह्मत्वं ब्रह्मणि यथा तथैवेदं जगत्स्थितम् ॥ २० ॥
106410
106411 एवं च ब्रह्मात्मना जगन्नित्यनष्टं स्थितमिति वा उत्प्रेक्षितुं
106412 शक्यमित्याशयेनाह-ब्रह्मणीति। वासनामात्ररूपत्वात्सुषुप्ताभम्। यथा
106413 शिलाब्जमब्जात्मना नित्यमसच्छिलात्मना नित्यं सत्तद्वदित्यर्थः ॥ २० ॥
106414
106415 नानयोर्विद्यते भेदस्तरुपादपयोरिव।
106416 यानीमानि जगन्तीह नान्यत्तानि चिदाकृतेः ॥ २१ ॥
106417
106418 चिदात्मना सत्त्वे जगद्ब्रह्मशब्दार्थयोर्भेदो नास्तीत्याह-नानयोरिति ॥ २१ ॥
106419
106420 भावाभावादि नास्त्येषां तस्या इव कदाचन।
106421 ब्रह्मैव जगदाभासं मरुतापो यथा जलम् ॥ २२ ॥
106422
106423 एषां जगताम्। तस्याश्चिदाकृतेरिव ॥ २२ ॥
106424
106425 ब्रह्मैवालोकनाच्छुद्धं भवत्यम्बु यथातपः।
106426 मेर्वादिस्तृणगुल्मादेश्चित्तादेर्जगतोऽपि च ॥ २३ ॥
106427
106428 मेर्वादिस्थूलतमोपि पदार्थस्तत्त्वदृशा आलोकनाच्छुद्धमस्थौल्यादिधर्मकं
106429 ब्रह्मैव भवति। यथा करकाद्यम्बु केवलं पयो भवति तद्वत्। अतो
106430 बहिस्तृणगुल्मादेर्ब्रह्माण्डान्तस्य अन्तश्चित्तादेर्हिरण्यगर्भान्तस्यापि च जगतः
106431 परमं यदम्बिवोत्तरोत्तरं सूक्ष्मतमं भूतसूक्ष्माव्याकृताक्षरान्तं
106432 तद्विभागेनान्ते यद्रूपं परिशिष्यते तदेव परं विदुर्ब्रह्मविद इति परेणान्वयः ॥
106433 २३ ॥
106434
106435 परमाम्बुविभागेन यद्रूपं तत्परं विदुः।
106436 तत्समूहस्तदेवोच्चैश्चित्तं मेरुतृणादिकम् ॥ २४ ॥
106437
106438 स्थूलस्य विमर्शे सूक्ष्ममात्रत्वे युक्तिमाह-तत्समूह इति। पञ्चीकृतं
106439 ह्यपञ्चीकृतसमूहः। अपञ्चीकृतभूतानि तु चित्तमेवेत्येवं क्रमेण
106440 बोध्यमित्यर्थः ॥ २४ ॥
106441
106442 यत्सौक्ष्म्येऽपि हि सारात्म स्थौल्ये सारतरं हि तत्।
106443 यथा रसात्मिका शक्तिः परमाणुतयाऽनघ ॥ २५ ॥
106444

106445 सौक्ष्म्ये सत्सारत्वादेव तत्स्थौयेऽपि सत्यतरत्वलक्षणसारतरताप्रपञ्चे
106446 पामरैरनुभूयत इत्याह-यत्सौक्ष्म्येऽपीति। अतएवाप्परमाणुगतरसशक्तेः
106447 स्थूलजले इन्द्रियगोचरतेव घटादौ ब्रह्मसत्तायास्तद्गोचरतेत्याह-यथेति। पायसी
106448 स्थूलजलनिष्ठा सती योग्येति शेषः॥ २५॥
106449
106450 स्थिता जगत्पदार्थेषु पायसी ब्रह्मता तथा।
106451 रसशक्तिर्यथा नानातृणगुल्मलताम्भसाम्॥ २६॥
106452
106453 स्थूलवैचित्र्येण सत्तावान्तरसामान्यात्मना सत्तावैचित्र्येत्येतादृशा दृष्टान्ताः
106454 कल्प्या इत्याशयेनाह-रसशक्तिरित्यादिना॥ २६॥
106455
106456 तथा नानातयोदेति सैवासैवेव ब्रह्मता।
106457 यैषा रूपविलासानामालोकपरमाणुता॥ २७॥
106458
106459 रूपविलासानां नीलपीतादिरूपवैचित्र्याणामालोकपरमाणुता सूक्ष्मतमरूपं
106460 सामान्यं यथा तथेत्यनुषज्यते॥ २७॥
106461
106462 गुणगुण्यर्थसत्तात्मरूपिण्यासां परात्मता।
106463 चिति चित्तेऽस्ति मेर्वादि तदभिव्यञ्जनात्मनि॥ २८॥
106464
106465 पिच्छपक्षौघकाठिन्यं मयूराण्डरसे यथा।
106466 चिति तत्त्वेऽस्ति नानाता तदभिव्यञ्जनात्मनि॥ २९॥
106467
106468 परात्मता ब्रह्मसत्तापि आसां घटादिव्यक्तीनां गुणिगुणरूपावान्तरवैजात्यार्थं
106469 सत्तात्मरूपिणी भवतीति शेषः। आविर्भावदशायां कार्यात्मना
106470 कारणमेवास्तीतिवत्तिरोभावदशायामपि कारणात्मना कार्यमप्यस्त्येवेत्येतदपि
106471 दृष्टान्तेनोपपादयति-चितीति। सर्वथा तिरोभावे मायाशबलचिति अर्धतिरोभावे
106472 चित्ते मेर्वादिस्थूलकार्यजातमस्ति। यथा पिच्छानि पक्षौघाः काठिन्यं च
106473 मयूरोपादानभूते तदण्डरसे सन्ति तद्वदित्यर्थः॥ २८॥ २९॥
106474
106475 विचित्रपिच्छिकापुञ्जो मयूराण्डरसे यथा।
106476 यथा नानात्मिके ह्येव बर्ह्यण्डरसबर्हिते॥ ३०॥
106477
106478 विवेकदृष्ट्या भेददृष्ट्या॥ ३०॥
106479
106480 विवेकदृष्ट्या दृष्टे ते तथा ब्रह्म जगत्स्थितम्।
106481 सनानातोऽप्यनानातो यथाऽण्डरसबर्हिणः॥ ३१॥
106482
106483 तथा च तत्र कल्पितभेदो यथा न वास्तवाभेदविरोधी तद्वदत्रापीत्याह-सनानात
106484 इति। अण्डे रसरूपो बर्हिणो मयूरः॥ ३१॥
106485
106486 अद्वैतद्वैतसत्तात्मा तथा ब्रह्मजगद्भ्रमः।
106487 यथा सदसतोः सत्ता समतायामवस्थितिः॥ ३२॥
106488
106489 तर्हि किं द्वैताद्वैतात्मकमेव ब्रह्म अस्तु यथा ब्रह्म वास्तवं जगदिति च
106490 भ्रमस्तथा द्वैताद्वैतात्मकम्। नैतावता वैषम्यप्रसक्तिः। यथा सदसतोः
106491 सत्तासमतायामवस्थितिस्तथा तन्निरूपणादित्यर्थः॥ ३२॥
106492
106493 यतः सदसतो रूपं भावस्थं बिद्धि तं परम्।
106494 नानाऽनानात्मकमिदं त्वनुभूतं नसंभवम्॥ ३३॥
106495
106496 ननु वैषम्यपरिहाराय सत्तासमतायामेवावस्थानमिति कुतः।

106497 अभावमात्रतापत्तिलक्षणशून्यत्वेऽपि वैषम्यपरिहारादित्याशङ्क्याह-यत इति।
106498 रूपं तत्त्वं भावस्थं सद्वस्तु पर्यवसन्नं न शून्यनिष्ठम्। अभावस्यापि
106499 सदधीननिरूपणत्वात्। तं भावं च परं ब्रह्मैव विद्धि। तस्य
106500 चाद्वयत्वान्नानाऽनानात्मकं भिन्नाभिन्नस्वभावमिदं जगद्रूपं न संभवो
106501 यस्य तन्नसंभवमनुपपन्नम्। नञर्थस्य नशब्दस्य बहुव्रीहिः॥ ३३॥
106502
106503 चिज्जगद्वलनं पश्य बर्ह्यण्डे रसबर्हिणम्।
106504 यथा जगति चित्तत्त्वं चित्तत्त्वे यज्जगत्तथा।
106505 नानाऽनानात्मकैकं च मयूराण्डरसो यथा॥ ३४॥
106506
106507 एवमनुपपन्नस्यापि बर्ह्यण्डरसदृष्टान्तेनैवैकरस्यं नेयमित्याशयेनाह##-
106508 चित्तत्त्वे जगदन्तर्लीनं तथा रसे बर्हीति पश्येत्यर्थः॥ ३४॥
106509
106510 नानापदार्थभ्रमपिच्छपूर्णा जगन्मयूराण्डरसश्चिदाद्या।
106511 मयूररूपं त्वमयूरमन्तः सत्तापदं विद्धि कुतोऽस्ति भेदः॥ ३५॥
106512
106513 उपमोक्तमर्थं रूपकेणैकीकृत्य दर्शयन्भेदं निरस्यति-नानेति।
106514 नानाविधपदार्थभ्रमलक्षणैः पिच्छैः पूर्णा आद्या ब्रह्मचिदेव
106515 जगल्लक्षणमयूराण्डस्य रसः। तत्र भासमानं जगन्मयूररूपं तु
106516 अमयूररूपं सत्तालक्षणं पदं परमार्थवस्तु विद्धि। तत्र च भेदः
106517 कुतोऽस्तीत्यर्थः॥ ३५॥
106518
106519 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये देव० मोक्षो० निर्वाणप्रकरणे
106520 पूर्वार्धे चिद्घनोपदेशो नाम सप्तचत्वारिंशः सर्गः॥ ४७॥
106521
106522 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पू० चिद्घनोपदेशो
106523 नाम सप्तचत्वारिंशः सर्गः॥ ४७॥
106524
106525 अष्टचत्वारिंशः सर्गः ४८
106526
106527 श्रीवसिष्ठ उवाच।
106528
106529 यत्रानुदितरूपात्म सर्वमस्तीदमाततम्।
106530 मयूर इव बीजेऽन्तस्तदहंतादिगादि च॥ १॥
106531
106532 यत्सत्तास्फूर्तिसौख्यानि प्रतिबिम्बन्ति कल्पिते।
106533 तत्सच्चिदानन्दवनं ब्रह्म निष्कृष्य वर्ण्यते॥
106534
106535 मयूररसदृष्टान्तात्तिरोभूतजगद्वैचित्र्यगर्भं चिदचित्संवलितं
106536 बीजशक्तिमदव्याकृतमेव तत्त्वं न ततः परं शुद्धमस्तीति व्यामोहो मा भूदिति
106537 तदधिष्ठानं निर्विशेषभूमानन्दरूपं निष्कृष्य परिचाययितुं श्रीवसिष्ठ
106538 उवाच-यत्रेति। बीजे अण्डे अन्तर्मयूर इव वर्णितमन्तरहंतादि बहिर्दिगादि वियदादि
106539 च सर्वं जगद्यत्र शुद्धे कालत्रयेऽप्यनुदितरूपात्म अनुत्पन्नस्वरूपमेवास्ति
106540 तदेवोक्तदृष्टान्ततात्पर्यविषयो न शबलमित्यर्थः॥ १॥
106541
106542 यत्र नाभ्युदितं किंचित्तत्र सर्वं च विद्यते।
106543 तदत्राप्यङ्गिराः स्वर्गसुखसारेण बिम्बति॥ २॥
106544
106545 यत्र परमार्थतः किंचिन्नाभ्युदितं तत्रैव सर्वं जगदविद्यया विद्यते
106546 तदेवात्रास्मिन्देहेऽपि अङ्गिराः अङ्गानां रसभूतः प्राणः सन्
106547 स्वर्गादिवैषयिकसुखसारेण चित्तवृत्तिभेदेन विचित्रभोगाकारतया
106548 स्फटिकमुकुरादौ चन्द्र इव् बिम्बति। तथा च

106549 विषयसुखानुभवबलात्तद्बिम्बभूतनिरतिशयानन्दसद्भावोऽनुमेय इत्यर्थः ॥ २ ॥
106550

106551 तथा च मुनयो देवा गणाः सिद्धा महर्षयः ।
106552 आस्वादयन्तः स्वं रूपं सदा तुर्यपदे स्थिताः ॥ ३ ॥
106553

106554 सर्वसाधारण्येन तत्सद्भावे अनुमानप्रमाणमुक्त्वा
106555 विदुषामनुभवप्रमाणमप्याह-तथा चेति । स्वं रूपं
106556 स्वात्मभूतभूमानन्दम् ॥ ३ ॥
106557

106558 एते ये स्तब्धनयनदृष्टयो निर्निमेषिणः ।
106559 ते दृश्यदर्शनासङ्गस्पन्दत्यागे व्यवस्थिताः ॥ ४ ॥
106560

106561 सर्वैरपि कुतो नानुभूयत इति
106562 चेद्दृश्यदर्शनासङ्गात्प्राणस्पन्दकृतविक्षेपाच्चेति गृहाण । अतएव
106563 तदुभयपरिहाराय नासाग्रनिरुद्धदृष्टयः प्राणनिरोधपराश्च योगिनो
106564 दृश्यन्त इत्याह-एते इति । स्तब्धे नयने गोलके दृष्टी तद्गतेन्द्रियं च येषाम् ॥ ४ ॥
106565

106566 नास्थिता भावना येषां स्थितानामपि कर्मसु ।
106567 संवित्संवेद्यसंबन्धस्पन्दत्यागे च ये स्थिताः ॥ ५ ॥
106568

106569 इदं त्वनारूढषष्ठादिभूमिकानाम् । आरूढषष्ठसप्तमभूमिकास्तु
106570 व्यवहरन्तोऽपि समाहितैः पूर्वभूमिकागतैस्तुल्यमात्मसुखं
106571 सदैवास्वादयन्तीत्याह-नास्थिता इति । कर्मसु व्यवहारेषु स्थितानामपि येषां
106572 षष्ठादिभूमिकागतानां बाह्यार्थसत्यताभावना न आस्थिता ईषदपि स्थिता । ये च
106573 पूर्वभूमिकागताः संवित्संवेद्यसंबन्धत्यागलक्षणसमाधौ स्थिताः येषां
106574 प्राणो मनश्च न स्पन्दते ते च चित्तचेत्यसमासङ्गयोस्त्यागो यस्मिंस्तथाविधे
106575 भूमानन्दपदे तुल्यतया स्थिता इति सार्धद्वयस्यार्थः ॥ ५
106576

106577 प्राणो न स्पन्दते येषां चित्रस्थवपुषामिव ।
106578 मनो न स्पन्दते येषां चित्रस्थवपुषामिव ॥ ६ ॥
106579

106580 चित्तचेत्यसमासङ्गत्यागे ते स्वपदे स्थिताः ।
106581 स्पन्दात्संसाधयन्त्यर्थं तेनांशेनेश्वरो यथा ॥ ७ ॥
106582

106583 षष्ठादिभूमिकागता अन्तर्ब्रह्माकाराखण्डवृत्तिधारास्पन्दात्तेनांशेन
106584 निरतिशयानन्दास्वादनलक्षणं परमपुरुषार्थं यथा संसाधयन्ति तथैव
106585 बहिश्चित्तचेत्यादिस्पन्दाद्व्यवहारसंस्थितिमपि कुर्वन्ति । यथा जगदीश्वरोऽन्तः सदैव
106586 स्वरूपानन्दप्रतिष्ठोऽपि बहिर्मायया जगद्व्यवस्थां पालयति तद्वदित्यर्थः ॥ ७ ॥
106587

106588 तथैव चित्तचेत्यादिस्पन्दात्कुर्वन्ति संस्थितिम् ।
106589 यथा ह्लादयति स्वच्छः [स्वस्थ इति पाठः ।] पल्लवं रश्मिरैन्दवः ॥
106590 ८ ॥
106591

106592 तेषां व्यवहारे दृश्येषु बाह्यविषयेषु दर्शनानां बुद्धिवृत्तीनां संगमे
106593 त्रिपुट्यामप्यभिव्यक्तो निरतिशयानन्दात्मान्तर्ह्लादयत्येवेति सर्वोऽपि व्यवहारः
106594 सुखरूप एव । यथा ऐन्दवो रश्मिस्तरुपल्लवमन्तः प्रविश्य ह्लादयति तद्वदित्यर्थः
106595 ॥ ८ ॥
106596

106597 तथात्मा ह्लादयत्यन्तर्दृश्यदर्शनसंगमे ।
106598 बिम्बाद्दूरं प्रयातस्य भित्तावपतितस्य च ॥ ९ ॥
106599

106600 अन्तःस्वरूपसुखं तु तेषां सुतरां निर्विक्षेपमित्यत्रापि दृष्टान्तमाह##-

106601 यद्रूपं तदेव परमात्मनो निर्विक्षेपाह्लादरूपं तैरनुभूयत इत्यर्थः ॥ ९ ॥
106602
106603 यदिन्दोस्तेजसो रूपं तद्रूपं शुद्धसंविदः ।
106604 न दृश्यं नोपदेशार्हं नात्यासन्नं न दूरगम् ॥ १० ॥
106605
106606 केवलानुभवप्राप्यं चिद्रूपं शुद्धमात्मनः ।
106607 न देहो नेन्द्रियप्राणौ न चित्तं न च वासना ॥ ११ ॥
106608
106609 तदेव देहादिसर्वोपाधिनिर्मुक्तमात्मनस्तत्त्वमित्याह-न देह इत्यादिना ॥ ११ ॥
106610
106611 न जीवो नापि च स्पन्दो न संवित्तिर्न वै जगत् ।
106612 न सन्नासन्न मध्यं च शून्याशून्यं न चैव हि ॥ १२ ॥
106613
106614 न देशकालवस्त्वादि तदेवास्ति न चेतरत् ।
106615 एतैः सर्वैर्विनिर्मुक्तं हृदि कोशशतेन च ॥ १३ ॥
106616
106617 देशकालवस्तु निरूप्य त्रिविधपरिच्छेदादिना ब्रह्मैवास्ति । एतैर्देहादिभिः । शतशब्द
106618 आनन्त्यपरः । भूतभाविदेहकोशानां हृदि वासनात्मना स्थितनामानन्त्यात् ॥ १३ ॥
106619
106620 यत्रैतत्स्पन्दते दृश्यं तत्तदात्मपदं भवेत् ।
106621 यच्च नाद्यं न कल्पान्तं न वस्त्वाद्यनिलादिभिः ॥ १४ ॥
106622
106623 एवं कोशशतेन हृदि चित्ते यत्र यस्मिन्सति एतद्दृश्यमाविर्भावतिरोभावादिना
106624 स्पन्दते तत्सन्मात्रमेवात्मपदं भवेत् संभावितमित्यर्थः । एवं
106625 कार्यकारणविलक्षणं तत्संभावनीयमित्याह-यच्चेति । यद्ब्रह्म आद्यं
106626 महाकल्पादिकाले भवमव्याकृताख्यं कारणम् । तथ कल्पान्तं
106627 प्राकृतादिप्रलयरूपं च न । सर्गकालेऽपि इह एतस्मिन् लोके अमुत्र परलोके वा
106628 अनिलादिभिः शोषणदहनक्लेदनभेदनादिविकारैः क्वचित्सद्रूपादन्यच्चा न भवतीति
106629 सविकारवस्तु आदिपदात्तद्विकाराश्च यन्न भवतीत्यर्थः ॥ १४ ॥
106630
106631 इह चामुत्र सद्रूपादन्यथा भवति क्वचित् ।
106632 जायन्ते च म्रियन्ते च देहकुम्भाः सहस्रशः ॥ १५ ॥
106633
106634 ननु देहादिविकारैस्तदनुगतसद्रूपस्यापि विकारः किं न स्यात्तत्राह-जायन्ते चेति ॥
106635 १५ ॥
106636
106637 सबाह्याभ्यन्तरस्यास्य नात्माकाशस्य खण्डना ।
106638 तच्च देहादि सकलमात्मैवात्मविदां वर ॥ १६ ॥
106639
106640 तर्हि किं देहादि पृथगस्ति नेत्याह-तच्चेति ॥ १६ ॥
106641
106642 केवलं बोधवैरूप्यादीषत्पृथगिव स्थितम् ।
106643 विष्वगात्ममयं विश्वं ज्ञातं बुद्ध्या सुसिद्धया ॥ १७ ॥
106644
106645 विष्वक् सर्वतः सुसिद्धया श्रवणाद्युपायपरिष्कृतया ॥ १७ ॥
106646
106647 प्रज्वलन्नपि कार्येषु निर्वाणो निर्ममो भव ।
106648 यदिदं दृश्यते किंचिज्जगत्स्थावरजंगमम् ॥ १८ ॥
106649
106650 अतएव व्यवहरन्नपि निर्विकारात्मदर्शनान्नित्यमुक्तात्मस्वरूपस्तिष्ठेत्याह##-
106651
106652 तत्सर्वं ब्रह्म निर्धर्म निर्गुणं निर्मलात्मकम् ।

106653 निर्विकारमनाद्यन्तं नित्यं शान्तं समात्मकम् ॥ १९ ॥
106654
106655 कालक्रियाकरणकर्तृनिदानकार्यजन्मस्थितिप्रलयसंस्मरणादि सर्वम् ।
106656 ब्रह्मेति दृष्टवत एव तवात्मदृष्ट्या भूयोऽपि किं भ्रमणमङ्ग
106657 समङ्ग एव ॥ २० ॥
106658
106659 हे अङ्ग कालादि सर्व जगद्ब्रह्मेत्यात्मदृष्ट्या दृष्टवतस्तव किं भूयोपि
106660 ब्रमणं संभवति नैवं संभवतीत्यर्थः । यतस्त्वं वस्तुतः सममविषमं
106661 स्वरूपं गच्छति [गच्छसीति पाठः ।] सदैव प्राप्तवानसीति समङ्ग एव ।
106662 ब्रह्मैव सन् ब्रह्माप्येति इति श्रुतेरिति भावः ॥ २० ॥
106663
106664 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षो० निर्वाणप्रकरणे पूर्वा०
106665 ब्रह्मैकात्मप्रतिपादनं नामाष्टचत्वारिंशः सर्गः ॥ ४८ ॥
106666
106667 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
106668 ब्रह्मैकात्मप्रतिपादनं नामाष्टाचत्वारिंशः सर्गः ॥ ४८ ॥
106669 एकोनपञ्चाशः सर्गः ४९
106670
106671 श्रीराम उवाच ।
106672
106673 यदि नास्ति विकारादि ब्रह्मन्ब्रह्मणि बृंहिते ।
106674 तदिदं कथमाभाति भावाभावमयं जगत् ॥ १ ॥
106675
106676 विकारेभ्यो विवर्तस्य वैलक्षण्यमिहोच्यते ।
106677 अप्रबोधादविद्यास्ति प्रबोधे नास्ति सेति च ॥
106678
106679 विकारारम्भाभ्यां विवर्तस्य लक्षणतो भेदं जिज्ञासमानो रामः पृच्छति##-
106680 त्रिविधपरिच्छेदशून्ये इति यावत् ॥ १ ॥
106681
106682 श्रीवसिष्ठ उवाच ।
106683
106684 अपुनःप्रागवस्थानं यत्स्वरूपविपर्ययः ।
106685 तद्विकारादिकं तात यत्क्षीरादिषु वर्तते ॥ २ ॥
106686
106687 तत्र कारणे कार्योद्भवः पञ्चधा अतिरोहितप्रागवस्थः १ प्रतिबद्धप्रागवस्थः २
106688 प्रच्छन्नप्रागवस्थः ३ अप्रच्छन्नप्रागवस्थः ४ विनष्टप्रागवस्थ ५ श्चेति । आद्यो
106689 मृदादेर्घटादिभावः । द्वितीयो जलस्य हिमकरकाभावः । तृतीयो रज्ज्वाः
106690 सर्पभावः । चतुर्थो जलस्य तरङ्गभावः । पञ्चमो दुग्धस्य दधिभावः ।
106691 तत्रान्त्य एव जन्मादिभावविकारः परिणामश्च इतरे तु विवर्तभेदा एवेत्याशयेन
106692 प्रथमं वसिष्ठो विकारलक्षणमाह-अपुनरिति । यत्क्षीरव्रीह्यादिषु
106693 दधिवैतुष्यादिलक्षणं कार्य पुनः प्राक्तनक्षीरादिभावावस्थानशून्यं
106694 क्षीरादिस्वरूपविपर्ययरूपं विद्यते तदेव
106695 विकारसंस्कारपरिणामादिशब्दवाच्यमित्यर्थः ॥ २ ॥
106696
106697 पयस्तां पुनरभ्येति दधित्वान्न पुनः पयः ।
106698 बुद्धमाद्यन्तमध्येषु ब्रह्म ब्रह्मैव निर्मलम् ॥ ३ ॥
106699
106700 ब्रह्मणि जगल्लक्षणं कार्यं तु न तथा तद्वैधर्म्यादित्याह-अबुद्धमिति ॥ ३ ॥
106701
106702 क्षीरादेरिव तेनास्ति ब्रह्मणो न विकारिता ।
106703 अनाद्यन्तविभागस्य न चैषोऽवयविक्रमः ॥ ४ ॥
106704

106705 अस्तु तर्हि परमाणुभिर्द्व्यणुकादीनामिवावयव्यारम्भक्रमस्तत्राह-अनाद्यन्तेति।
106706 आद्यन्तलक्षणदैशिकपरिच्छेदवत्सु क्रियासंयोगादिविभागवत्सु
106707 चावयवेष्ववयव्यारम्भक्रमः स्यान्न तद्विलक्षणस्य ब्रह्मणः स इत्यर्थः। एतेन
106708 बहूनां संयुक्तानां समवेतानां वा स्वेषु स्वाश्रयसमवेते वा समवाये
106709 नैककार्यजनकत्वमारम्भकत्वम्। यथा तन्तूनां पटं प्रति। यथा वा
106710 कारणगुणानां कार्यगुणं प्रतीति वैशेषिकाद्यमिमतलक्षणं सूचितम्। तथा च
106711 कणादसूत्रम् द्रव्याणि द्रव्यान्तरमारभन्ते गुणाश्च गुणान्तरम् इति॥ ४॥
106712
106713 समस्याद्यन्तयोर्येयं दृश्यते विकृतिः क्षणात्।
106714 संविदः संभ्रमं विद्धि नाविकारेऽस्ति विक्रिया॥ ५॥
106715
106716 ब्रह्मणि जगतस्तु परिशेषाद्विवर्तत्वमेव सिद्धमिति तल्लक्षणेन दर्शयति##-
106717 तदसंस्पर्शिवैषम्यप्रतिभासो विवर्त इति तल्लक्षणमिति भावः॥ ५॥
106718
106719 न संवेद्यं न संवित्तिस्तत्र ब्रह्मणि विद्यते।
106720 तद्ब्रह्मशब्दकथितं निःसंबन्धचिदात्मवत्॥ ६॥
106721
106722 तदसंस्पर्शं दर्शयति-न संवेद्यमिति॥ ६॥
106723
106724 यादृगाद्यन्तयोर्वस्तु तादृगेव तदुच्यते।
106725 मध्ये यस्य यदन्यत्वं तदबोधाद्विजृम्भितम्॥ ७॥
106726
106727 मध्ये विकारासंस्पर्शः कथं ज्ञायत इति
106728 चेदाद्यन्तयोस्तदसंस्पर्शस्वभावावधारणादेव लिङ्गादित्याह-यादृगिति॥ ७॥
106729
106730 आत्मा त्वाद्यन्तमध्येषु समः स्वत्र सर्वदा।
106731 स्वमप्यन्यत्वमायाति नात्मतत्त्वं कदाचन॥ ८॥
106732
106733 आत्मवस्तु प्रकाशस्वाभाव्येन समता सर्वानुभवसिद्धा। अनात्मभावश्च
106734 तस्यात्यन्तासंभाव्य इत्याह-आत्मा त्विति॥ ८॥
106735
106736 अरूपत्वात्तथैकत्वान्नित्यत्वादयमीश्वरः।
106737 वशं भावविकाराणां न कदाचन गच्छति॥ ९॥
106738
106739 श्रीराम उवाच।
106740
106741 विद्यमाने सदैकस्मिन्ब्रह्मण्येकान्तनिर्मले।
106742 संविद्भ्रमस्वरूपाया अविद्यायाः क आगमः॥ १०॥
106743
106744 चित्प्रकाशैकरसे ब्रह्मणि तद्विरुद्धस्वभावाया अविद्यायाः कथं प्रसक्तिर्येन तत्र
106745 जगद्विवर्तः स्यादिति प्रबुद्धदृशा रामः शङ्कते-विद्यमाने इति॥ १०॥
106746
106747 श्रीवसिष्ठ उवाच।
106748
106749 ब्रह्मतत्त्वमिदं सर्वमासीदस्ति भविष्यति।
106750 निर्विकारमनाद्यन्तं नाविद्यास्तीति निश्चयः॥ ११॥
106751
106752 न प्रबुद्धदृशा अविद्यासद्भावं ब्रूमः किंत्वबुद्धव्युत्पादनाय
106753 कल्पनयेत्याशयेनोत्तरमाह-ब्रह्मतत्त्वमिति। सर्वं पूर्णम्॥ ११॥
106754
106755 यस्तु ब्रह्मेति शब्देन वाच्यवाचकयोः क्रमः।
106756 तत्रापि नान्यताभावमुपदेष्टुं क्रमो ह्यसौ॥ १२॥

न अन्यताया भावं सद्भावं वदामः किंतूपदेष्टुमसौ क्रमः कल्पित इत्यर्थः ॥
१२ ॥

त्वमहं जगदाशाश्च द्यौर्भूश्चाप्यनलादि वा ।
ब्रह्ममात्रमनाद्यन्तं नाविद्यास्ति मनागपि ॥ १३ ॥

नामैवेदमविद्येति भ्रममात्रमसद्विदुः ।
न विद्यते या सा सत्या कीदृग्नाम भवेत्किल ॥ १४ ॥

श्रीराम उवाच ।

उपशमप्रकरणे ह्यस्तने तु त्वयेरितम् ।
अविद्येयं तथेत्थं च विचार्यत इति प्रभो ॥ १५ ॥

यद्यविद्या नास्त्येव तर्ह्युपशमप्रकरणे यथा भ्रान्तिरविद्येयं तथेत्थं च
विचार्यते इति त्वयैवाविद्यासद्भावमङ्गीकृत्योक्तमिति रामः शङ्कते##-

श्रीवसिष्ठ उवाच ।

एतावन्तमबुद्धस्त्वमभूः कालं रघूद्वह ।
कल्पिताभिः किलैताभिर्बोधितोसि स्वयुक्तिभिः ॥ १६ ॥

तत्तु तवाबोधदशायां त्वद्बुद्ध्यनुसारिकल्पनयोक्तमिदानीं तु त्वं प्रबुद्ध इति न
तत्कल्पनावसर इत्यविरोध इत्याह-एतावन्तमिति ॥ १६ ॥

अविद्येयमयं जीव इत्यादिकलनाक्रमः ।
अप्रबुद्धप्रबोधाय कल्पितो वाग्विदां वरैः ॥ १७ ॥

अप्रबुद्धं मनो यावत्तावदेव भ्रमं विना ।
न प्रबोधमुपायाति तदाक्रोशशतैरपि ॥ १८ ॥

भ्रममविद्यादिशास्त्रीयव्यवहारकल्पनाम् । तत् मनः ॥ १८ ॥

युक्त्यैव बोधयित्वैष जीव आत्मनि योज्यते ।
यद्युक्त्यासाद्यते कार्यं न तद्यत्नशतैरपि ॥ १९ ॥

युक्तीनामसंभावनादिपुरुषदोषनिरासकत्वादिति भावः ॥ १९ ॥

सर्वं ब्रह्मेति यो ब्रूयादप्रबुद्धस्य दुर्मतेः ।
स करोति सुहृद्वृत्त्या स्थाणोर्दुःखनिवेदनम् ॥ २० ॥

सत्सु तु दोषेषु तत्त्वोपदेशो व्यर्थ इत्याशयेनाह-सर्वमिति ॥ २० ॥

युक्त्या प्रबोध्यते मूढः प्राज्ञस्तत्त्वेन बोध्यते ।
मूढः प्राज्ञत्वमायाति न युक्त्या बोधनं विना ॥ २१ ॥

एतावन्तमबुद्धस्त्वं कालं युक्त्या प्रबोधितः ।
इदानीं संप्रबुद्धस्त्वं मया येनावबोध्यसे ॥ २२ ॥

येन यादृशोपदेशेनावबोध्यरो तं शृण्विति शेषः ॥ २२ ॥

106809 ब्रह्माहं त्रिजगद्ब्रह्म त्वं [ब्रह्मत्वं ब्रह्मदृश्यभूरित्यपि
106810 पाठः ।] ब्रह्म खलु दृश्यभूः ।
106811 द्वितीया कलना नास्ति यथेच्छसि तथा कुरु ॥ २३ ॥
106812
106813 तमेवाह-ब्रह्मेति । यथेच्छसीति । ऐच्छिकेन व्यवहारेण न
106814 वास्तवब्रह्मत्वहानिरिति भावः ॥ २३ ॥
106815
106816 असंवेद्यमहासंवित्कोटिमात्रं जगत्त्रयम् ।
106817 एकप्रत्ययवानन्तः कुर्वन्नपि न लिप्यसे ॥ २४ ॥
106818
106819 कोटिः सर्वभ्रान्तिबाधावधिस्तन्मात्रम् । एकेति । तत्र को मोहः कः शोक
106820 एकत्वमनुपश्यतः इत्यादिश्रुतेरिति भावः ॥ २४ ॥
106821
106822 भारूपश्चेतनो व्यापी परमात्माहमित्ययम् ।
106823 राघवानुभवान्तस्त्वं तिष्ठन्गच्छञ्छ्वसन्स्वपन् ॥ २५ ॥
106824
106825 हे राघव त्वं तिष्ठन् गच्छन् श्वसन् स्वपंश्च अन्तः अहंभावरूप
106826 आत्मेत्यनुभव ॥ २५ ॥
106827
106828 निर्ममो निरहंकारो बुद्धिमानसि साधु चेत् ।
106829 तद्ब्रह्म [तद्ब्रह्मावेदनं इति पाठः ।] वेदनं शान्तं
106830 सर्वभूतस्थितं भव ॥ २६ ॥
106831
106832 वेदनं चिदेकरसं ब्रह्म भव ॥ २६ ॥
106833
106834 तदनाद्यन्तमाभासं सत्त्वमेव परं पदम् ।
106835 स्थितोऽसि सर्वगैकात्मशुद्धसंविन्मयात्मकः ॥ २७ ॥
106836
106837 सर्वगैकात्मशुद्धसंविन्मयात्मकः स त्वमेव । तच्छ्रुतिप्रसिद्धमनाद्यन्तं
106838 परं पदं सन् स्थितोऽसि ॥ २७ ॥
106839
106840 यद्ब्रह्मात्मापि तुर्यश्च याऽविद्या प्रकृतिश्च या ।
106841 तदभिन्नसदैकात्म यथा कुम्भशतेषु मृत् ॥ २८ ॥
106842
106843 यद्ब्रह्मेति । आत्मेति तुर्य इत्यपि च प्रसिद्धम् । या च अविद्या प्रकृतिश्चकाराज्जगदिति च
106844 प्रसिद्धा तत्सर्वमभिन्नसन्मात्रैकात्मकमित्यर्थः ॥ २८ ॥
106845
106846 नात्मनः प्रकृतिर्भिन्ना घटान्मृन्मयता यथा ।
106847 सन्मृन्मात्रं यथा चान्तरात्मैवं प्रकृतिः स्थिता ॥ २९ ॥
106848
106849 यथा घटस्य मृन्मयता सद्वास्तवं मृन्मात्रं तथा प्रकृतिरित्यर्थः ॥ २९ ॥
106850
106851 आवर्तः सलिलस्येव यः स्पन्दस्त्वयमात्मनः ।
106852 प्रोक्तः प्रकृतिशब्देन तेनैवेह स एव हि ॥ ३० ॥
106853
106854 स्पन्दो विवर्तनम् । तेन सन्मात्रस्वभावेनेह स्वविवर्ते स आत्मैवास्ति
106855 नाणुमात्रमप्यन्यदित्यर्थः ॥ ३० ॥
106856
106857 यथैकः स्पन्दपवनौ नाम्ना भिन्नौ न सत्तया ।
106858 तथैकमात्मप्रकृती नाम्ना भिन्ने न सत्तया ॥ ३१ ॥
106859
106860 सत्तया वस्तुवृत्तेन ॥ ३१ ॥

106861
106862 अबोधादेतयोर्भेदो बोधेनैव विलीयते।
106863 अबोधात्सन्मयो याति रज्वां सर्पभ्रमो यथा॥ ३२॥
106864
106865 सन्मयः सन्मात्रः। याति। रूपान्तरमिति शेषः॥ ३२॥
106866
106867 चित्क्षेत्रे कलनाबीजं यदेतत्पतति स्फुरन्।
106868 चित्ताङ्कुरं तदेतस्माद्भाविसंसारखण्डकः॥ ३३॥
106869
106870 तदेव चित्ताङ्कुरं तस्मात्स्फुरन् भाविसंसारवनखण्डकः संपद्यत इत्यर्थः॥
106871 ३३॥
106872
106873 एतदेवात्मविज्ञानाद्दग्धं सद्वासनाजलैः।
106874 संसिक्तमपि यत्नेन न भवत्यङ्कुरक्षमम्॥ ३४॥
106875
106876 एतत्कलनाबीजमेव॥ ३४॥
106877
106878 नो चेत्पतति चित्क्षेत्रे कलनाबीजकं ततः।
106879 चित्ताङ्कुरा न जायन्ते सुखदुःखलवद्रुमाः॥ ३५॥
106880
106881 नो पतति चेत् सुखदुःखफलाः शरीरद्रुमा येभ्यस्तथाविधाश्चित्ताङ्कुरा न जायन्ते
106882 ॥ ३५॥
106883
106884 द्वित्वं जगत्यसदुपात्तमबोधजातं बोधक्षयं जहिहि बोधमुपागतोऽसि।
106885 आत्मैकभावविभवेन भवाभयात्मा नास्त्येव दुःखमिति नः परमार्थसारः
106886 ॥ ३६॥
106887
106888 उपक्रान्तमुपदेशरहस्यमुपसंहरति-द्वित्वमिति। हे राम जगति असत्
106889 भ्रान्त्युपात्तं द्वित्वं जहिहि त्यज। आ च हौ इति चकाराज्जहातेरिः। यतस्त्वं
106890 बोधमुपागतोऽसि आत्मैकभावलक्षणेन निरतिशयानन्दविभवेन अभ्यात्मा भव।
106891 दुःखं तु कालत्रयेऽपि नास्त्येवेति नः परमार्थसार उपदेश इत्यर्थः॥ ३६॥
106892
106893 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये देव० मोक्षोपायेषु निर्वाणप्रकरणे
106894 पूर्वा० संसृतिविचारयोगो नामैकोनपञ्चाशः सर्गः॥ ४९॥
106895
106896 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
106897 संसृतिविचारयोगो नामैकोनपञ्चाशः सर्गः॥ ४९॥
106898
106899 पञ्चाशः सर्गः ५०
106900
106901 श्रीराम उवाच।
106902
106903 ज्ञातं ज्ञातव्यमखिलं दृष्टं द्रष्टव्यमक्षतम्।
106904 परेण परिपूर्णाः स्मो ब्रह्मज्ञानामृतेन ते॥ १॥
106905
106906 इह कल्पनया जीवे लिङ्गपुर्यष्टकोद्भवः।
106907 वर्णितोऽक्षैस्तथा तस्य बाह्यार्थग्रहणक्रमः॥
106908
106909 भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः इति श्रुतेस्तत्त्वसाक्षात्कारेण स्वयं
106910 छिन्नसर्वसंशयोऽपि रामः परेषामुपकाराय तत्संशयपदं प्रष्टुकामः
106911 प्रथमं स्वानुभवमभिलप्य दर्शयति-ज्ञातमित्यादिना। वयं ते
106912 त्वत्संबन्धिना ब्रह्मज्ञानामृतेन परिपूर्णाः स्मः॥ १॥

106913
106914 पूर्णात्पूर्णमिदं पूर्णं पूर्णात्पूर्णं प्रसूयते।
106915 पूर्णेनापूरितं पूर्णं स्थिता पूर्णे च पूर्णता॥ २॥
106916
106917 स्वानुभवेन पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते। पूर्णस्य
106918 पूर्णमादाय पूर्णमेवावशिष्यते इति श्रुतिं संवादयति-पूर्णादिति।
106919 पूर्णाद्ब्रह्मणः सकाशादुपाधौ प्रविश्य आनखाग्रात्पूर्णमिदं जीवरूपं
106920 परमार्थतः पूर्णं ब्रह्मैव। यतः पूर्णाद्यद्वियदादिक्रमेण प्रसूयते
106921 व्यष्टिसमष्ट्युपाधिरूपं तदपि पूर्णमेव प्रसूयते। तद्यदा महावाक्योत्थेनाहं
106922 ब्रह्मास्मीति ज्ञानेन समूलोपाधिपरिच्छेदापनयनात्पूर्णेन ब्रह्मणा पूर्णमेव
106923 जीवतत्त्वमखण्डैक्येनापूरितं तदा कल्पिता पूर्णता भ्रमस्यापगमात्पूर्णस्य
106924 पूर्णतैव प्राक्स्थितैवावस्थितेत्यर्थः॥ २॥
106925
106926 लीलयेदं तु पृच्छामि भूयोबोधाभिवृद्धये।
106927 बालस्येव पिता ब्रह्मन्न कोपं कर्तुमर्हसि॥ ३॥
106928
106929 भूयसां जनानां बोधाभिवृद्धये बालस्य लीलाप्रश्ने पित्वे कोपं कर्तुं नार्हसि
106930 ॥ ३॥
106931
106932 श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च।
106933 विद्यमानमपि ब्रह्मन्दश्यमानमपि स्फुटम्॥ ४॥
106934
106935 सर्वेषां प्राणिनां
106936 हृद्येवार्थानुभवोल्लेखदर्शनात्प्रियाप्रियदर्शनजन्यसुखदुःखयोर्हृद्यनुभ्
106937 अवाच्चिरानुभूतानामपि बाह्यार्थानां हृद्येव स्मृतिदर्शनाच्च हृद्येव
106938 बाह्यार्थानामप्यनुभवो वाच्यः। तत्र श्रोत्रचक्षुरादीन्द्रियाणां बाह्यार्थान्
106939 हृद्यानेतुमशक्तेरचेतनत्वेन च स्वयं बहिर्गत्वानुभूयागत्याख्यातुमशक्तेश्च
106940 श्रोत्रादिगोलकातिरिक्तेन्द्रियाभ्युपगमो व्यर्थः। नवान्तःकरणावच्छिन्नं
106941 जीवचैतन्यमेवेन्द्रियप्रणाड्या निर्गत्य बाह्यघटादि व्याप्य तदनुभवतीति कल्पनापि
106942 युक्ता। तथा सति बहिरेवानुभवोल्लेखापत्तेः।
106943 प्रियाप्रियदर्शनप्रयुक्तसुखदुःखानामपि बहिरुदयापत्तेः।
106944 कालान्तरेऽन्तःस्मृत्यनापत्तेश्च। अन्तर्विषयप्रवेशमन्तरेणान्तरनुभवयोगात्। न
106945 च बहिरन्तःकरणवृत्तिर्विषयालिङ्गनेन तदाकारलाञ्छनं संस्काराख्यं
106946 गृहीत्वान्तः प्रविश्य नट इव तदाकारं विडम्बयन्ती तदनुभावयति स्मारयति
106947 वेत्युच्यत इति कल्पनापि युक्ता। घटाद्याकारानुभवानां तल्लाञ्छनविषयत्वकल्पने
106948 भ्रमप्रमयोरविऽसेषापत्तेः सर्वत्रैवानाश्वासप्रसङ्गात्।
106949 घटादेर्बाह्यत्वानुभवानापत्तेश्च। इत्थं चानुभव आन्तरो घटादिश्च बाह्य
106950 इत्यनयोरसंबन्धान्न कथंचिदपि बाह्यार्थस्यानुभवारोहणमुपपादयितुं
106951 शक्यम्। अतएव नैयायिकादयोऽनुभवस्य विषयैः सह विषयविषयिभावलक्षणः
106952 स्वरूपसंबन्ध एव न संश्लेषादिलक्षण इत्याचक्षते-न च सोऽपि युक्तः।
106953 असंबद्धस्वूपस्य सर्वान्विषयान्प्रत्यविशिष्टत्वेन विषयव्यवस्थाऽयोगात्। नचात्मा
106954 मनसा संयुज्यते मन इन्द्रियेणेन्द्रियमर्थेनेति क्रमेण
106955 स्वाश्रयसंयुक्तसंयुक्तसंयोगादिपरम्परासंबन्धव्यवस्थया व्यवस्था।
106956 अननुगतस्य परम्परासंबन्धस्य
106957 स्मृत्यनुमित्याद्यनुगततत्तद्विषयव्यवस्थापकत्वायोगात्। परम्परासंबन्धेन
106958 बाह्यार्थापरोक्ष्यानिर्वाहात्तस्यैव व्यवस्थापकत्वे
106959 स्वरूपसंबन्धकल्पनवैयर्थ्याच्च। एतेन संनिकर्षद्वारा योऽर्थो
106960 यज्ज्ञानव्यक्तिजनकः स तद्विषय इति व्यवस्थापि प्रत्युक्ता। इन्द्रियादीनागपि
106961 तद्विषयत्वप्रसङ्गात्।
106962 तस्मादघटितघटनासमर्थमायाशक्तिबलादेवान्तर्बाह्यार्थानुभवओ वाच्यः
106963 तथा सति किं कर्णादिगोलकातिरिक्तेन्द्रियाभ्युपगमेनेति यथानुभवं तद्द्वारैव
106964 चिदात्मा बाह्यार्थमनुभवतीति स्यात्। तथा सति मृतशरीरेऽपि कर्णादीनां

106965 सर्वगतस्य सदात्मनश्च सत्त्वात्तत्रापि बाह्यार्थान्कुतो नानुभवतीति रामः
106966 शङ्कते-श्रोत्रमित्यादिना। श्रोत्रादिशब्दा गोलकपराः। अतएव स्फुटं
106967 दृश्यमानमपीति विशेषणम्॥ ४॥
106968
106969 कथं मृतस्य वै जन्तोर्विषयं स्वं न पश्यति।
106970 जीवतश्च कथं सर्वं विषयं स्वं प्रपश्यति॥ ५॥
106971
106972 कथं घटादिबाह्यत्वमिन्द्रियाणि जडान्यपि।
106973 शरीरेऽनुभवन्त्यन्तः पुनर्नानुभवन्त्यपि॥ ६॥
106974
106975 यदि कश्चिद्ब्रूयाच्चक्षुरादीन्द्रियाणि स्वयं बहिर्निर्गत्य घटादीनां
106976 बाह्यत्वमनुभूयान्तः प्रविश्य कथयन्तीति तत्राह-जडानीति। न तेषां
106977 पृथक्चेतनत्वं कथनसामर्थ्यं वा अस्तीति भावः। यदि कश्चिद्ब्रूयादिन्द्रियाणि
106978 बाह्यार्थं हृदि नीत्वा स्थापयन्तीति तत्राप्याह-पुनरिति। हृद्यर्थस्थापने
106979 पुनःपुनर्हृदि तदनुभवः स्याद्घटादेर्हृदयाद्बहिर्निःसारणादर्शनादिति
106980 भावः॥ ६॥
106981
106982 अयःशलाकोपमयोर्घटादीन्द्रिययोः किल।
106983 अश्लिष्टयोरन्तरसौ कथं तन्नोदिता मिथः॥ ७॥
106984
106985 ननु घटादिविषयजातं कर्तृ प्रथमं चक्षुरादीन्द्रियजातं स्वदेशमाकर्षति।
106986 तच्चाकृष्टमिन्द्रियं विषयं संवेष्ट्यान्तर्हृदिस्थाय भोक्त्रे
106987 केनचिदंशेनान्तर्नयति घ्राणमिव गन्धमिति कल्पनामाशङ्क्याह-अय इति।
106988 विषयाः संश्लिष्येन्द्रियाण्याकर्षयेयुर्नासंश्लिष्य असंश्लिष्टरज्ज्वादीनां
106989 घटाद्याकर्षकत्वादर्शनात्। नच गोलकप्रदेशानुपसर्पिणां घटादीनां
106990 तत्संश्लेषः संभवति। नापीन्द्रियाणां रज्जुवद्घटसंश्लेषस्तदाकर्षकत्वं वा
106991 प्रसिद्धम्। भिन्नप्रदेशनिखातायःशलाकाद्वयवद्भिन्नदेशत्वादित्याह##-
106992 परस्पराकर्षणशीलता तत्रापि नेत्राद्यल्पविवरान्तर्घटादिस्थूलप्रवेशकता कथं
106993 सर्वानुभवविरुद्धेत्यर्थः॥ ७॥
106994
106995 जानन्नपि यदेतान्वै विशेषाञ्छतधा पुनः।
106996 पृच्छामि तदशेषेण कथयस्वानुकम्पया॥ ८॥
106997
106998 ननु तत्त्वबोधेन च्छिन्नसर्वसंशयस्य तव कथं मायामये
106999 सर्वानुपपत्तिभाजनेऽस्मिन्व्यवहारे ईदृशः संशयस्तत्राह-जानन्नपीति।
107000 शतधा बहुधा पुनः पृच्छामि। अज्ञानग्रहार्थमित्यर्थः॥ ८॥
107001
107002 श्रीवसिष्ठ उवाच।
107003
107004 इन्द्रियाद्यपि चित्तादि घटाद्यपि न किंचन।
107005 पृथक् संभवतीहाङ्ग निर्मलाच्चेतनादृते॥ ९॥
107006
107007 अत्यल्पमिदमुच्यते यद्गोलकातिरिक्तानीन्द्रियाणि न सन्तीति। यतः सम्यग्विमर्शे
107008 चिद्व्यतिरेकेण प्रमातृप्रमाणप्रमेयविभागाः केऽपि न निरूपयितुं केनापि वादिना
107009 शक्यन्त इत्याशयेन वसिष्ठः प्रथमं समाधत्ते-इन्द्रियादीति॥ ९॥
107010
107011 गगनादपि याऽच्छा चित्तया रूपं स्वमात्मना।
107012 चित्त्वात्पुर्यष्टकत्वेन भाववृत्त्यैव भावितम्॥ १०॥
107013
107014 यदि तु कल्पनया द्रष्टुर्दृश्यस्य चोपपत्तिं मन्यसे तर्हि
107015 इन्द्रियादिघटितपुर्यष्टकत्वेनापि पूर्वपूर्ववासनानुसारेण कल्पनोपपत्तेर्न
107016 किंचिदनुपपन्नमित्याशयेनाह-गगनादपीति। तथा चिता आत्मना

107017 मायाशबलस्वभावेन पुर्यष्टकत्वेन स्वं रूपं भाववृत्त्या
107018 पूर्वपूर्ववासनानुसारेण भावितं कल्पितमित्यर्थः ॥ १० ॥
107019
107020 तदेव च प्रकृतितां गतं जगदवस्थितेः ।
107021 तस्या अवयवाज्जातमिन्द्रियादि घटादि च ॥ ११ ॥
107022
107023 उक्तोऽर्थे मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् । अस्यावयवभूतैस्तु
107024 व्याप्तं सर्वमिदं जगत् इति श्रुतिं प्रमाणयति-तदेव चेति ॥ ११ ॥
107025
107026 पुर्यष्टकत्वमायातं यच्चित्तं स्वस्वभावतः ।
107027 स्व एवावयवस्तस्मिन्घटादि प्रतिबिम्बति ॥ १२ ॥
107028
107029 एवं चेन्द्रियद्वारा बहिर्निर्गतेन पुर्यष्टकघटकेन चित्तेन घटादिव्याप्त्या
107030 स्ववृत्तिप्रतिबिम्बितघटादेर्बाह्यत्वाकारेणैव हृदये नीत्वा प्रदर्शनं तथैव
107031 कालान्तरे स्मृतिः स्वप्ने चान्तर्गतस्यैव बाह्यत्वेनानुभवश्चेति
107032 सर्वमुपपन्नमित्याशयेनाह-पुर्यष्टकत्वमिति । एवंरीत्या
107033 पुर्यष्टकत्वमायातं चिद्रूपं तत्त्वमेव पुर्यष्टकस्य चित्तादिघटितस्वभावतः
107034 स्वयमेव स्वः चित्तवृत्त्याख्योऽवयवो भवति । तस्मिन्नवयवे घटादि बाह्यं
107035 बाह्याकारेणैव प्रतिबिम्बति । मृतदेहे तु पुर्यष्टकघटितस्य लिङ्गात्मनो जीवस्य
107036 स्वकल्पनयैव लीलोपाख्यानोपदर्शितरीत्या निर्गमनान्न दर्शनादिसामर्थ्यमिति
107037 सर्वदोषपरिहार इति भावः ॥ १२ ॥
107038
107039 श्रीराम उवाच ।
107040
107041 जगत्सहस्रनिर्माणमहिम्नो दर्पणस्य च ।
107042 पुर्यष्टकस्य भगवन्रूपं कथय कीदृशम् ॥ १३ ॥
107043
107044 यद्येवं तर्हि पञ्चीकृतभूतभागेन जगदाकारेण
107045 परिणमतोऽपञ्चीकृतभूतकार्यलिङ्गभागेन तत्प्रतिबिम्बग्रहदर्पणभूतस्य च
107046 पुर्यष्टकस्यैव किं रूपं तदेव कथयेति रामः पृच्छति-जगदिति ॥ १३ ॥
107047
107048 श्रीवसिष्ठ उवाच ।
107049
107050 अनाद्यन्तं जगद्बीजं यद्ब्रह्मास्ति निरामयम् ।
107051 भारूपं शुद्धचिन्मात्रं कलाकलनवर्जितम् ॥ १४ ॥
107052
107053 तत्स्वरूपं वक्तुं वसिष्ठस्तन्मूलमज्ञातं ब्रह्मतत्त्वं निर्दिशति##-
107054
107055 कलनोन्मुखतां यातमन्तर्जीव इति स्मृतः ।
107056 स जीवः खलु देहेऽस्मिंश्चिनोति स्पन्दते स्फुटम् ॥ १५ ॥
107057
107058 तद्ब्रह्म वियदादिभूतसूक्ष्मं सृष्ट्वा तेनापञ्चीकृतेन लिङ्गं पञ्चीकृतेन
107059 ब्रह्माण्डं च सृष्ट्वा तदन्तःप्रतिबिम्बलक्षणकलनोन्मुखतां यातं सत्
107060 सूत्रप्राणानामभिमानेन धारणाज्जीव इति स्मृतोऽभूदित्यर्थः । चिनोति
107061 वासनोपचयनाङ्गोपचयेन चोपचितो भवति । उपचितश्च बाह्यान्तर्व्यापारात्मना
107062 स्पन्दते चेत्यर्थः ॥ १५ ॥
107063
107064 अहंभावादहंकारो मननान्मन उच्यते ।
107065 बोधनिश्चयतो बुद्धिरिन्द्रदृष्टेस्तथेन्द्रियम् ॥ १६ ॥
107066
107067 तस्यैवाभिमानादिव्यापारभेदेन नामभेदानाह-अहंभावादित्यादिना ॥ १६ ॥
107068

107069 देहभावनया देहो घटभावनया घटः।
107070 एष एव स्वभावात्मा जनैः पुर्यष्टकं स्मृतः॥ १७॥
107071
107072 सर्वव्यापारसाधारणस्वभावात्मा पुर्यष्टकमिति नाम्ना स्मृतः॥ १७॥
107073
107074 ज्ञत्वकर्तृत्वभोक्तृत्वसाक्षित्वाद्यभिपातिनी।
107075 या संविज्जीव इत्युक्ता तद्धि पुर्यष्टकं विदुः॥ १८॥
107076
107077 ज्ञानेन्द्रियव्यापारेण ज्ञत्वं कर्मेन्द्रियव्यापारेण कर्तृत्वं
107078 तत्फलसुखदुःखाश्रयत्वेन भोक्तृत्वं सर्वस्यौदासीन्येन प्रकाशेन साक्षित्वम्।
107079 आदिपदाद्धोगकरणत्वायतनत्वादिपरिग्रहः। एतदभिपातिनी अध्यासेनैतद्धर्मिका या
107080 संवित्सैव चित्प्राधान्येन जीव इत्युक्ता जडांशप्राधान्येन तदेव पुर्यष्टकं
107081 विदुरित्यर्थः॥ १८॥
107082
107083 काले काले ततो जीवस्त्वन्योन्यो भवति स्वतः।
107084 भाविताकारयानन्तवासनाकणिकोदयम्॥ १९॥
107085
107086 अतएव स्वतादात्म्यभावितबुद्ध्याकाराणां कालभेदेन भेदाज्जीवोऽपि
107087 कामक्रोधहर्षविषादाद्यनुरञ्जितो नानेव भवतीत्याह-काले काले इति।
107088 अनन्तवासनाकणिकोदयमाकारमृच्छतीति परेणान्वयः॥ १९॥
107089
107090 पुर्यष्टकस्वभावेन कालेनाकारमृच्छति।
107091 यथावासनतः सेकाद्बीजं पल्लवतामिव॥ २०॥
107092
107093 तस्यैव समष्टिव्यष्टिजीवस्य बीजस्याङ्कुरकाण्डपल्लवादीव सर्वं जगदाकार
107094 इत्याशयेनाह-यथेति॥ २०॥
107095
107096 आकारोऽहं शरीरादि स्थावरादि चरादि च।
107097 नाहमाद्यश्चिदात्मेति मिथ्या ज्ञानेन चेतति॥ २१॥
107098
107099 अतएवाद्यश्चिदात्मा नाहं किंतु शरीराद्याकार एवाहमिति मिथ्याज्ञानेन चेतति
107100 पश्यति॥ २१॥
107101
107102 भ्रमत्येव जगज्जीवो वासनावलितश्चिरम्।
107103 ऊर्ध्वाधोगमनैरब्धौ काष्ठं वीचिहतं यथा॥ २२॥
107104
107105 कश्चिद्विशुद्धजातित्वाद्भवबन्धादनन्तरम्।
107106 बुद्ध्वात्मानं समभ्येति पदमाद्यन्तवर्जितम्॥२३॥
107107
107108 कश्चित्सनकादितुल्यः कल्पादावेव प्राक्कल्पीयभवबन्धादनन्तरमाद्ये
107109 जन्मन्येवेत्यर्थः। अयं च सर्वो विभागः सात्त्विकराजसादिजीवभेदवर्णने
107110 उत्पत्तिप्रकरणे व्याख्यातः॥ २३॥
107111
107112 कश्चित्कालेन बहुना भुक्तयोनिगणातुरः।
107113 आत्मज्ञानवशादेति परमं पदमात्मनः॥ २४॥
107114
107115 एवंरूपश्च सुमते जीवो यातः शरीरताम्।
107116 नेत्रादिना घटाद्यन्तर्यथा वेत्ति तथा शृणु॥ २५॥
107117
107118 कथं घटादिबाह्यत्वमिन्द्रियाणि जडान्यपीति यत्पृष्टं तत्सामान्यतः
107119 समाहितमपि विशेषेण समाधत्ते-एवंरूप इत्यादिना॥ २५॥
107120

107121 चित्त्वस्य कलनान्तस्य संप्रयातस्य जीवताम् ।
107122 मनःषष्ठेन्द्रियग्रामो देहोऽयमवतिष्ठते ॥ २६ ॥
107123
107124 चित्त्वस्य चैतन्यस्य कलनान्तस्य पुर्यष्टके प्रतिबिम्बतया परिच्छेद्यस्यानखाग्रेभ्यो
107125 व्याप्तौ परिमातृतयावतिष्ठते । तेन सदा जीवचैतन्यं देहपरिमितं
107126 देहान्तर्गतमेव सुखदुःखादिसंबन्धादनुभवति ना बाह्यम् ॥ २६ ॥
107127
107128 यदान्यः सर्वदेहेभ्यः खे पतत्यक्षरूपिणा ।
107129 तदा तज्जीवसंस्पर्शाज्जीवात्मैकत्वमृच्छति ॥ २७ ॥
107130
107131 यदा तु अन्यो बाह्यघटादिर्द्रष्टव्यो भवति तदा तडागादुद्रिक्तं जलं
107132 कुल्याद्वारेणेव सर्वदेहेभ्य उद्रिक्तं चक्षुराद्यक्षरूपिणा द्वारेण बाह्ये
107133 घटादिपर्यन्ते खे बाह्याकाशे पतति निर्गच्छतीत्यर्थः । किं ततस्तत्राह-तदेति ।
107134 तदा तद्घटादिनयनादिद्वारनिर्गतजीवेन स्वाकारवृत्तिव्याप्तिद्वारा
107135 संस्पर्शाद्यापनाज्जीवचैतन्येन सहैकत्वमाध्यासिकचित्तादात्म्यलक्षणं
107136 विषयत्वमृच्छति गच्छति ॥ २७ ॥
107137
107138 बाह्यार्थवेदने नित्यं संबन्धोऽक्षस्य कारकः ।
107139 समन्वितस्य चित्तेन न मुक्तस्य कदाचन ॥ २८ ॥
107140
107141 स चाक्षस्य संबन्धश्चित्तेन समन्वितस्य जीवत एव बाह्यार्थवेदने कारको भवति न
107142 मृतस्य मुक्तस्य वेत्यर्थः ॥ २८ ॥
107143
107144 यद्यदच्छतरं तस्मिन्नभःस्थं प्रतिबिम्बति ।
107145 जीवेन भवति श्लिष्टो बहिर्जीवोऽप्यजीवति ॥ २९ ॥
107146
107147 अस्तु बहिरेवं तथापि कथमन्तस्तदनुभवस्तत्राह-यद्यदित्यादिना ।
107148 यद्यदन्तःकरणवृत्तिरूपं नयनरश्मिरूपं वा स्वच्छतरं वस्तु
107149 तस्मिन्बाह्यनभःस्थं घटादि प्रतिबिम्बति स च प्रतिबिम्बो वृत्त्यन्तर्गतेन जीवेन
107150 श्लिष्टो भवति । तर्हि बहिष्ठ एवाहं घटमनुभवामीति कुतो नानुभूयते तत्राह##-
107151 नलोपश्छान्दसः । अनुव्यचलदितिवत्तिङन्तोत्तरपदः समासो वा । यत्र
107152 प्राणव्याप्तिस्तत्रैवाहंतावमर्शो न बहिरित्यर्थः ॥ २९ ॥
107153
107154 निघृष्टनवरत्नाभे यदा नयनतारके ।
107155 तदा तयोर्बाह्यगतः पदार्थः प्रतिबिम्बति ॥ ३० ॥
107156
107157 अस्त्वेवं तर्हि घटे प्रथाफलोपपत्तिस्तथापि कथमन्तर्हृदि
107158 घटाकारानुप्रवेशस्तत्राह-निघृष्टेति । यदा नयनतारके
107159 पटलादिदोषराहित्याच्छाणनिघृष्टनूतनेन्द्रनीलाभे भवतस्तदा
107160 तयोस्तारकयोर्घटप्रतिबिम्बसहिता चित्तावृत्तिः प्रविशतीति बाह्यगतो
107161 घटादिपदार्थः प्रतिबिम्बतीत्युच्यते ॥ ३० ॥
107162
107163 जीवेन भवति श्लिष्टः प्रतिबिम्बतया ततः ।
107164 जीवज्ञेयत्वमायाति बाह्यं वस्त्विति राघव ॥ ३१ ॥
107165
107166 स चैवं नयनतारकानुप्रविष्टः पदार्थो हार्देनाहमभिमानवता जीवेन हृदि
107167 प्रतिबिम्बतया श्लिष्टो भवतीत्यर्थः । इति अनया रीत्या घटादि बाह्यं वस्तु
107168 बहिरवभासमानमेवान्तर्हृदि अहंकारसंवलितजीवज्ञेयत्वमायातीत्यर्थः ॥ ३१ ॥
107169
107170 यत्संश्लेषमुपायाति तद्बालोऽपि हि विन्दति ।
107171 पशुर्वा स्थावरो वापि जीवः कस्मान्न वेत्स्यति ॥ ३२ ॥
107172

107173 चेतनस्यार्थसंस्पर्शे वेदननियमो बालपश्वादिष्वपि प्रसिद्ध इत्याह-यदिति।
107174 स्थावरेष्वपि गुल्मविशेषे स्पर्शमात्रेण पत्रसंपुटीकरणदर्शनात्तद्वेदनं
107175 सर्वत्रानुमीयत इति भावः॥ ३२॥
107176
107177 अच्छस्य नयनस्याथो रश्मयो जीववेष्टिताः।
107178 क्रोडीकुर्वन्त्यलं दृश्यं जीवस्तत्त्वेन विन्दति॥ ३३॥
107179
107180 दूरस्थविषयस्य कथं गोलकसंस्पर्श इति पामरशङ्कामपाकुर्वन्नाह##-
107181 जीववेष्टिताः सन्तः पुरोवर्तिविषयं क्रोडीकुर्वन्त्यालिङ्गन्ति॥ ३३॥
107182
107183 एष एव क्रमः स्पर्शे संबन्धः प्रत्ययोद्भवः।
107184 रसे गन्धे च कथितो जीवसंस्पर्शसंभवः॥ ३४॥
107185
107186 चक्षुष्युक्तं क्रमं स्पर्शादावप्यतिदिशति-एष एवेति॥ ३४॥
107187
107188 शब्दस्त्वाकाशनिष्ठत्वात्कर्णाकाशगतः क्षणात्।
107189 जीवाकाशं विशत्यन्तरित्थमिन्द्रियसंविदः॥ ३५॥
107190
107191 शब्दे विशेषमाह-शब्दस्त्विति। शब्दस्य वृत्तिप्रतिबिम्बनं विनापि
107192 साक्षाच्छ्रोत्रद्वारान्तःप्रवेशोऽपि संभवतीति भावः। इत्थं गन्धस्यापि
107193 पवनद्वारान्तःप्रवेशसंभवोऽस्तु नामेत्याशयेन
107194 यथासंभवमुक्तन्यायमुपसंहरति-इत्थमिति॥ ३५॥
107195
107196 श्रीराम उवाच।
107197
107198 दृश्यते मानसादर्शे यन्त्वदार्वौदरेषु तत्।
107199 प्रतिबिम्बितमेतन्मे ब्रूहि ब्रह्मन्किमात्मकम्॥ ३६॥
107200
107201 इदानीं रामः प्रसङ्गात्सर्वेषां प्रतिबिम्बानां स्वरूपं जिज्ञासुः पृच्छति##-
107202 काचकांस्यमणिजलादियन्त्वदारूणामौदरेषु उदरान्निर्गतेषु नवपल्लवादिषु
107203 यत्प्रतिबिम्बितघटमुखप्रभादि एतत् किमात्मकं तन्मे ब्रूहीत्यर्थः॥ ३६॥
107204
107205 श्रीवसिष्ठ उवाच।
107206
107207 अत्यन्तजडयोरेव जीवयोरिव तन्मिथः।
107208 प्रतिबिम्बं दृशो भ्रान्तिं विद्धि वेद्यविदां वर॥ ३७॥
107209
107210 यत्र बिम्बस्य सत्यत्वेऽपि चित्प्रतिबिम्बभूतयोर्व्यष्टिसमष्टिजीवयोर्बिम्बातिरिक्तं रूपं
107211 भ्रान्तिमात्रसिद्धं न निर्वक्तुं शक्यं
107212 तत्रात्यन्तजडयोर्मुखदर्पणयोर्घटचित्तवृत्त्योर्वा परस्परसापेक्षं
107213 प्रतिबिम्बस्वरूपं दुर्वचमिति किं वाच्यमित्याशयेनोत्तरमाह-अत्यन्तेति।
107214 दृशश्चैतन्यात्मनो भ्रान्तिं विद्धि॥ ३७॥
107215
107216 तावन्मात्रं जगत्त्वेतद्विश्वासो मा तवास्त्विह।
107217 अहमित्यादिस्तरङ्गो वर्तमानं सदा जलम्॥ ३८॥
107218
107219 न केवलं प्रतिबिम्बमात्रं भ्रान्तिरपि तु जगदपीत्याह-तावदिति। अप्यर्थे
107220 तुशब्दः। तावन्मात्रं भ्रान्तिमात्रम्। अतएव तव इह जगति विश्वासो मास्तु।
107221 अहमित्यादिः प्रपञ्चस्तरङ्गस्थानीयश्चिज्जलात्पृथगसन्नित्यर्थः। वर्तमानं तु
107222 सदा चिज्जलमेवेत्यर्थः॥ ३८॥
107223
107224 पराम्भोधौ तु नास्त्येव देशकालक्रियादिकम्।

107225 तन्मयैकतया नित्यमात्मा सर्वत्र सर्वगः ॥ ३९ ॥
107226
107227 नित्यमसक्तमतिर्मुदितात्मा शान्तमृषासुखदुःखविदन्तः ।
107228 तिष्ठ निविष्टमतिः समतायामस्तसमस्तभवामयमायः ॥ ४० ॥
107229
107230 हे राम त्वं नित्यमसक्तमतिः सन् शान्ता मृषाभूतसुखदुःखे वेत्तीति
107231 मृषासुखदुःखविद्बुद्धिर्यस्य तथाविधश्च भूत्वा अस्ता समस्ता
107232 भवलक्षणामयरुपा माया यस्य तथाविधः सन् समतायां ब्रह्मस्वभावे
107233 निविष्टमतिस्तिष्ठेत्यर्थःइ ॥ ४० ॥
107234
107235 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मी० दे० मो० निर्वाणप्रकरणे पूर्वा०
107236 अक्षसंवेदनविचारयोगोपदेशो नाम पञ्चाशः सर्गः ॥ ५० ॥
107237
107238 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पू०
107239 अक्षसंवेदनविचारयोगोपदेशो नाम पञ्चाशः सर्गः ॥ ५० ॥
107240 एकपञ्चाशः सर्गः ५१
107241
107242 श्रीवसिष्ठ उवाच ।
107243
107244 न पुनर्भवतः पूर्वं संपन्नाश्चक्षुरादयः ।
107245 यथा कमलजस्यैतत्सर्वमेव त्वया श्रुतम् ॥ १ ॥
107246
107247 जीवः खानि मनो देहः पुर्यष्टकमिति भ्रमः ।
107248 अबोधादेव बोधे तु ब्रह्मैवैकमितीर्यते ॥
107249
107250 फलनोन्मुखतां यातमित्यादिना वर्णितमहंकारदेहेन्द्रियादीनां प्रागसतां
107251 कल्पनं जीवसमष्टेः पद्मजस्येव व्यष्टेस्तवापि तुल्यमिति तात्पर्यं त्वया
107252 ज्ञातमेवेति वक्ष्यमाणोपोद्घाताय प्रथममनुवदति-न पुनरिति । अप्यर्थे पुनः
107253 शब्दः । कमलजस्येव भवतोऽपि सृष्टेः
107254 पूर्वमनाद्यन्तमित्यादिवर्णितब्रह्मस्वभावे स्थितस्य चक्षुरादयो न संपन्ना
107255 इत्येतत्सर्वमेव त्वया मद्वचनतात्पर्यं श्रुतम् । अवधारितमित्यर्थः ॥ १ ॥
107256
107257 ब्रह्मपुर्यष्टकस्यादावर्थसंविद्यथोदिता ।
107258 पुर्यष्टकस्य सर्वस्य तथैवोदेति सर्वदा ॥ २ ॥
107259
107260 एवं पुर्यष्टककल्पनोत्तरं व्यवहार्यार्थकल्पनमपि समष्टिवदेव
107261 व्यष्टीनामित्याह-ब्रह्मेति । ब्रह्मा हिरण्यगर्भः समष्टिपुर्यष्टकं तस्य यथा
107262 सर्गादौ व्यवहर्तव्यार्थसंविदुदिता तथा सर्वस्य व्यष्टिपुर्यष्टकस्याप्युदेति ॥ २ ॥
107263
107264 विद्धि पुर्यष्टकं जीवो यो गर्भस्थेन्द्रियोदयः ।
107265 यद्यथा भावयत्याशु तत्तथा परिपश्यति ॥ ३ ॥
107266
107267 तदेव गर्भस्थितिमारभ्य दर्शयति-विद्धीति । यो व्यष्टिजीवो ग्रभस्थ एव
107268 चक्षुरादीन्द्रियोदयविशिष्टः पुर्यष्टकात्मा षष्ठे मासि संपद्यते स तदारभ्य
107269 यद्यथा व्यवहर्तव्यं वस्तु भावयति तथा तत्स्ववासनया परिपश्यतीत्यर्थः ॥ ३ ॥
107270
107271 इन्द्रियाणीन्द्रियार्थाख्यं विद्धि संवेदनं स्वकम् ।
107272 संपन्नं च यथा तत्ते प्रोक्तमाद्यमनःस्थितौ ॥ ४ ॥
107273
107274 एवं च आद्यमनःस्थितौ हिरण्यगर्भमनोव्यापारे यथा स्वकं संवेदनं
107275 इन्द्रियाणि इन्द्रियार्थाख्यं च संपन्नं तथा तत्ते तवापि व्यष्टेः संपन्नमिति मया
107276 प्रोक्तं फलतीत्यर्थः ॥ ४ ॥

शुद्धा संवित्संभवन्ती संवेदनमनिन्दितम् ।
ततोऽहंवेदनानन्तजीवपुर्यष्टकान्विता ॥ ५ ॥

सर्गात्पूर्वं संभवन्ती व्यष्टिसमष्ट्योरेकैव शुद्धा संवित् ततस्तदनन्तरं
अहंवेदनालक्षणानन्तजीवपुर्यष्टकान्विता सास्तु तथापि
संवेदनस्वरूपमनिन्दितमेवेत्यर्थः ॥ ५ ॥

न त्वेकत्वादनन्तत्वादवेद्यत्वादनामये ।
अभावत्वादनेकत्वादशून्यत्वात्परा स्थिता ॥ ६ ॥

वेद्यदोषात्संवेद्रं तत् कुतो न निन्द्यते इति चेद्वेद्यस्य परमार्थतोऽसत्त्वादित्याह##-
त्वित्यन्वयः । नास्तित्वे च अभावत्वादयस्त्रयो हेतवः ।
अभावत्वाद्देशकालकृतपरिच्छेदवत्त्वादनेकत्वाद्वस्तुकृतपरिच्छेदवत्त्वाद##-

चेत्यादिबुद्ध्या तत्किंचिन्न मनस्तां च गच्छति ।
न च जीवत्वमायाति न च पुर्यष्टकात्मिका ॥ ७ ॥

ननु संवेदनमेव मनस्तादिभावं गच्छतीत्युक्ते तत्रमनस्तादीनामसत्यत्वे
संवेदनमेवासत्यं किं न स्यात्तत्राह-चेत्यादीति ।
चेत्यमन्तत्व्यादिगोचरबुद्धिवृत्त्यध्यारोपमात्रं तन्न वास्तवमनस्ताप्राप्तिः
सेत्यर्थः ॥ ७ ॥

नविद्यादिविलासोऽस्ति सोस्ति नास्तीव यः सदा ।
परमात्मेति कथितो मनःषष्ठेन्द्रियातिगः ॥ ८ ॥

तर्हि विद्याविलासाविर्भूतस्वरूपत्वात्पूर्वं तदप्यसत्किं न स्यात्तत्राह-नेति ।
आदिपदाच्चरमप्रमाणमननादिपरिग्रहः । यो मूढैर्नास्तीवेति कल्प्यते स
परमात्मा सदास्ति ॥ ८ ॥

तस्मात्संपद्यते जीवश्चिन्मूर्तिर्मननात्मकः ।
भ्रमः केवलमित्याद्य उपदेशाय गीयते ॥ ९ ॥

यद्यद्वितीय एव सः तर्हि तस्मात्सर्व एत आत्मानो व्युच्चरन्ति इति श्रुत्या
अग्निविस्फुलिङ्गन्यायेन जीवसंपत्तिः कथमुक्तेति चेदुपदेशाय कल्पनयेत्याह##-

यतः कुतश्चित्संपन्ने त्वविद्यामय आमये ।
उपदेश्योपदेशेन प्रविलीने विचारणात् ॥ १० ॥

अतएवाविद्यारोगस्य न मूलं चिन्त्यं किंतु चिकित्सैव चिन्तनीयेति
मूलकल्पनादिश्चिकित्सोपाय एव न वास्तव इत्याह-यत इति । प्रविलीने सति
स्वरूपज्ञानमेवावशिष्यत इति परेणान्वयः ॥ १० ॥

प्रशान्तसकलाकारं ज्ञानं तत्रावशिष्यते ।
यत्राकाशमपि स्थूलमणाविव महाचलः ॥ ११ ॥

यत्रोद्यदाचारमपि सदप्यसदिव स्थितम् ।
जगज्जान्विषयांस्त्यक्त्वा काये त्वं तिष्ठ निर्मले ॥ १२ ॥

उद्यदाचारं निष्पद्यमानव्यवहारार्थ क्रियाशालीति
सद्यावहारिकसत्यमप्यसच्छून्यमिव यत्र स्थितं तत्र त्वं जगज्जान्
विषयांस्त्यक्त्वा निर्मले जीवन्मुक्तः काये स्त्येऽवतिष्ठ ॥ १२ ॥

107329
107330 असन्मयमविद्याया रूपमेव तदेव हि |
107331 यद्वीक्षिता सती नूनं नश्यत्येव न दृश्यते || १३ ||
107332
107333 इदानीमविद्यायाः स्वरूपमाह-असन्मयमिति || १३ ||
107334
107335 आलोकितं नाम कथमवस्तु किल लभ्यते |
107336 प्रयत्नेनापि संप्राप्तं मृगतृष्णाम्बुकैरिव || १४ ||
107337
107338 मृगतृष्णाम्बुकैरिव संप्राप्तं दृष्टान्तोऽप्यप्रसिद्ध इत्यर्थः || १४ ||
107339
107340 असदेव सदेवासदज्ञानादस्य सत्यता |
107341 ज्ञानाद्यथास्थितं वस्तु दृश्यते नश्यति भ्रमः || १५ ||
107342
107343 असदेव सद्भाति यतः असदज्ञानादेवास्य सत्यतेत्यन्वयः || १५ ||
107344
107345 अविद्याया विचारोऽयं जीवपुर्यष्टकादिका |
107346 अप्यत्यन्तमसत्यायाः कल्पना कल्पितात्मनः || १६ ||
107347
107348 सत्यात्मनः संनिधानादत्यन्तमसत्याया अप्यविद्यायाः कल्पना कल्पितेत्यर्थः || १६ ||
107349
107350 तस्यास्त उपदेशाय सेयं जीवादिकल्पना |
107351 कृता शास्त्रैः प्रबोधाय तां त्वमेकमनाः शृणु || १७ ||
107352
107353 तस्य ते जीवस्योपदेशाय तस्याः अविद्याया हेतोर्जीवादिकल्पना कृता || १७ ||
107354
107355 जीवत्वमिव संप्राप्ता पुर्यष्टकपदस्थिता |
107356 कला कलङ्ककलिता चितिराबोधनोन्मुखी || १८ ||
107357
107358 आबोधनोन्मुखी बाह्यार्थदर्शनोत्सुका सती यद्यथा भावयतीति परेणान्वयः
107359 बाह्यार्थदर्शनोत्सुका सती यद्यथा भावयतिति परेणान्वयः || १८ ||
107360
107361 यद्यथा भावयत्याशु तत्तथानुभवत्यलम् |
107362 सत्यो भवत्वसत्यो वा बालेन निशि यक्षकः || १९ ||
107363
107364 बालेन संभावितो यक्षक इव सत्यः असत्यो वा भवतु | अयं तु पञ्चतन्मात्रस्य
107365 पञ्चीकरणात्मिकां देहकलनां सत्तया सत्यतया संभावयतीत्युत्तरेणान्वयः || १९
107366 | |
107367
107368 पञ्चतन्मात्रकलनां संभावयति सत्तया |
107369 तत्रात्मनि तथा रन्ध्रान्प्रपश्यति तथोदितान् || २० ||
107370
107371 तत्रात्मनि देहात्मनि रन्ध्रान् इन्द्रियद्वाराणि | छान्दसं पुंस्त्वम् || २० ||
107372
107373 एभ्य एव समुत्पन्नं बहिःस्थं भूतपञ्चकम् |
107374 पश्यत्यनन्यदन्याभं शाखाशतमिवाङ्कुरः || २१ ||
107375
107376 एभ्यः पञ्चतन्मात्रेभ्यः परमार्थतोऽन्यदेवान्याभमिन्द्रियद्वारैः पश्यति || २१ ||
107377
107378 इदमन्तरिदं बाह्यमिति निश्चयवांस्ततः |
107379 जीवो भावं यथादत्ते तत्तथा द्रढयत्यथ || २२ ||
107380

107381 तत्र इदमिन्द्रियमनःप्राणादि अन्तः। इदं घटादि बाह्यम्। भावं वासनाम्॥ २२॥
107382
107383 रश्मिजालमिवेन्दोर्यदात्मनः प्रतिभासनम्।
107384 बाह्यस्पर्शतया तेन तदेवाशूररीकृतम्॥ २३॥
107385
107386 तत्र विषयेन्द्रियसंयोगाभिव्यक्तं स्वात्मसुखमेव विषयसुखतया
107387 संभावयतीत्याह-रश्मिजालमिति॥ २३॥
107388
107389 मरिचस्येव यत्तैक्ष्ण्यं शून्यत्वमिव खस्य यत्।
107390 आत्मनो वेदनं यच्च तदेवान्यदिव स्थितम्॥ २४॥
107391
107392 एवं स्वाभाविकं स्ववेदनमेव विषयसंनिकर्षाज्जातमहंकारात्मनो धर्म इति
107393 संभावयतीत्याह-मरिचस्येति॥ २४॥
107394
107395 अत्रैव निश्चयं बद्ध्वा नियमः सुदृढीकृतः।
107396 अनेनेत्थमनेनेत्थं भाव्यमित्यवखण्डितम्॥ २५॥
107397
107398 अत्र सांसारिकविषयभोगेष्वेव पुरुषार्थपर्यवसाननिश्चयं बद्ध्वा
107399 ऐहलौकिकपारलौकिककर्माचरणनियमः सुदृढीकृतः। अनेन लौकिककर्मणा।
107400 अनेन वैदिककर्मणा। अवखण्डितं नश्वरं सुखमुद्दिश्येत्यर्थः॥ २५॥
107401
107402 स्वभावेतरनामासौ स्वसंकल्पमयात्मकः।
107403 कश्चित्कदाचिद्भवति स्वभावेनैव नान्यथा॥ २६॥
107404
107405 तत्रैकः प्रवृत्तिनियमः स्वाभाविकरागादिकृतः इतरस्तु शास्त्रकृतः।
107406 द्विविधोऽप्ययं संकल्पमयात्मकस्तयोः कदाचित्कश्चिदेव
107407 स्वाभाविकपुरुषयत्नेनैवेतरं जित्वा भवति नान्यथेत्यर्थः॥ २६॥
107408
107409 आत्मनैवेदमखिलं संपन्नं द्वैतमद्वयम्।
107410 खण्डो मधुरसेनेव मृदेव च महाघटः॥ २७॥
107411
107412 तत्रोभयत्राप्यज्ञ आत्मैव स्वभावशास्त्रान्यतरानुसारी
107413 तत्तद्व्यापारसाधनफलात्मना विवर्तत इत्याह-आत्मनैवेति। खण्डः
107414 मधुसारशर्कराविशेषः॥ २७॥
107415
107416 संनिवेशविकारादिदेशकालादिसंभवात्।
107417 संभवत्यत्र नत्वीशे देशकालाद्यसंभवात्॥ २८॥
107418
107419 यद्यपि खण्डघटौ पूर्वतनद्रवपिण्डावस्थयोर्विनाशाद्विकारौ तथापि
107420 माधुर्यमृत्स्वरूपाविनाशात्तदंशे विवर्तदृष्टान्तौ। नहि तद्वद्ब्रह्मणि
107421 विकारः संभवति तद्वैधर्म्यादित्याह-संनिवेशेति। अत्र मधुमृदादौ। ईशे
107422 ब्रह्मणि॥ २८॥
107423
107424 इतः पुष्पमितः पत्रमहमित्युदितो यथा।
107425 खण्डे स्वात्मनि नः सत्तारसोऽद्वित्वे द्वितां वहन्॥ २९॥
107426
107427 अथवा खण्डो मधुरसेनेवेति वाक्ये खण्डो वनखण्डः मधुरसेन
107428 वसन्तद्रवेणेत्यर्थः तथा चाविकार एव वृक्षविकारहेतुर्जलभागो दृष्टान्त
107429 इत्याशयेनाह-इत इति। यथा वृक्षप्रविष्टो रसो जलमितः पत्रमितः पुष्पमहमिति
107430 वैचित्र्येणोदितः सन् अद्वित्वेऽपि द्वितां वहन् दृष्टस्तथा नः स्वात्मनि
107431 प्रसिद्धसत्तारूपं ब्रह्मापि इतः पत इतः कुड्यमहमित्यादितो भेदात्
107432 सर्वजगदात्मना आत्मनि द्वित्वमाहरद्विद्धीति परेणान्वयः॥ २९॥

107433
107434 इतः पट इतः कुड्यमहमित्यादितस्तथा।
107435 सर्वात्मनात्मनि ब्रह्म विद्धि त्वं द्वित्वमाहरत्॥ ३०॥
107436
107437 अद्याङ्कुरोऽहमद्यार्करुगहं त्वद्य वारिदः।
107438 यथेति तिष्ठत्यम्भोदस्तथात्मा सदसद्वपुः॥ ३१॥
107439
107440 यथा वा अम्भोदो मेघः अद्य ग्रीष्मे अर्करुगेवाहमिति ताद्रूप्येण तिष्ठति। तत
107441 आद्यवर्षारम्भे वारिदानावसरे वारिदोऽहमिति तिष्ठति। ततो
107442 भूमिप्रवेशेनाङ्कुरान्तर्जलात्मना प्रवेशे अद्याङ्कुरोहमिति तिष्ठति। तथा आत्मापि
107443 कालभेदेन भावाभावाकारो भूत्वा तिष्ठतीत्यर्थः॥ ३१॥
107444
107445 इति भाव्यमनेनेदमित्थं सर्वेश्वरे ततम्।
107446 क्रमं खण्डयितुं लोके कस्य नामास्ति शक्तता॥ ३२॥
107447
107448 अयं च जगद्विवर्तनियमक्रमः कल्पितोऽपि न केनचिदन्यथा कर्तुं शक्य इत्याह-इतीति
107449 । सर्वेश्वरे ब्रह्मणि। ततं प्रसिद्धम्॥ ३२॥
107450
107451 आदर्शस्वच्छ आकाशे नैव स्वः प्रतिबिम्बति।
107452 व्यतिरेकासंभवतः कचत्येव हि केवलम्॥ ३३॥
107453
107454 एवं वस्तुस्वभावनियतिरपि वस्तुभेदभिन्ना नान्यथा कर्तुं
107455 शक्येत्याशयेनाकाशादिस्वभावस्याज्ञातब्रह्मस्वभावस्य च वैलक्षण्यमाह##-
107456 प्रतिबिम्बति। कुतः। व्यतिरेकासंभवतः आकाशे आकाशकार्ये भूतान्तरे वा
107457 आकाशभेदाभावात्। किंतु केवलमाकाशं निष्प्रतिबिम्बदर्पणोदरवत्स्वच्छतया
107458 कचति। दीप्यत एवेत्यर्थः॥ ३३॥
107459
107460 ब्रह्मणि त्वात्मनात्मैव स्थितः कचति बिम्बति।
107461 द्वैतीभवत्यदेहोऽपि चिन्मयत्वात्स्वभावतः॥ ३४॥
107462
107463 साविद्यं ब्रह्म तु न तथेत्याह-ब्रह्मणीति। कचति सर्ववस्तुशक्त्यादिरूपेण
107464 दीप्यते। जीवरूपेण प्रतिबिम्बति। भेदकल्पनया च द्वैतीभवति॥ ३४॥
107465
107466 यद्यथैवात्मकचनं वेत्ति तं भवतात्मना।
107467 असत्यमपि तन्नेह व्यभिचारी कदाचन॥ ३५॥
107468
107469 अस्त्वेवं किं ततस्तत्राह-यदिति। तत्र सर्गादौ यद्वस्तु स्वभावेनात्मकचनं
107470 वृत्तं तं स्वभावमसत्यमपि भवता सत्येनात्मनाअ स्त्यं वेत्ति स च नियमो न
107471 कदाचन व्यभिचारीति सर्वापि नियतिः सिद्धेत्यर्थः॥ ३५॥
107472
107473 हेमत्वकटकत्वे द्वे सत्यासत्यस्वरूपिणी।
107474 हेम्नि भाण्डगते यद्वच्चित्त्वाचित्त्वे तथात्मनि [हमेभाण्डगते इति पाठः।
107475 ] ॥ ३६॥
107476
107477 सत्यानृतमिथुनीभावे वाचारम्भणश्रुतिदर्शितन्यायेन दृष्टान्तमाह##-
107478
107479 सर्वगत्वाच्चितेश्चित्त्वं नित्यं मनसि विद्यते [वेद्यते इति पाठः।]।
107480 हेमत्वं कटकस्येव जडभावः स्थितोऽन्यदा॥ ३७॥
107481
107482 अतएव प्रथमकार्ये मनसि चिज्जडोभयरूपता दृश्यते तत्र यन्नित्यं
107483 तत्सत्यमित्याह-सर्वगत्वादिति। अन्यदा कदाचिदित्यर्थः॥ ३७॥
107484

107485 चित्त्वजाड्यात्मकं चित्तं दृढं भावयति स्वयम् |
107486 यथा यदैव यद्भावं तथा भवति तत्तदा || ३८ ||
107487
107488 चित्तजाड्येति पाठे चित्तस्य जाड्यं जडदेहविषयाकारस्तदात्मकं चित्तं
107489 दृढभावनया यदैव यथा देवनरस्थावरादिना येन प्रकारेण यदा यद्भावं
107490 भवति तदा तथैव तद्भावं भवति | अनुभवतीत्यर्थः || ३८ ||
107491
107492 काले काले चिता जीवस्त्वन्योन्यो भवति स्वयम् |
107493 भाविताकारवानन्तर्वासनाकलिकोदयात् || ३९ ||
107494
107495 अतएव कालभेदेन जीवस्याहमाकारभेदानुभव इत्याह-काल इति | चिता
107496 अन्तर्वासनाकलिकानामुदयाद्विकासाद्वैचित्र्येण भाविताकारवान्सन् अन्योऽन्यो भवति ||
107497 ३९ ||
107498
107499 स्वप्ने दृष्टो यथा ग्रामो याति सत्तान्यतेक्षणात् |
107500 देहाद्देहं तथा याति देहोऽयं प्रतिभात्मकः || ४० ||
107501
107502 यथा स्वप्ने दृष्टो ग्रामो वनादिसत्तान्यतेक्षणाद्वनादिभावं याति तथा
107503 देहभूतोऽयं जीवोऽपि देहाद्देहान्तरभावं याति | यतः स्वप्नवदेव प्रतिभासात्मक
107504 इत्यर्थः || ४० ||
107505
107506 प्रतिभासो यथा स्वप्ने नरः कुड्यं पटो भवेत् |
107507 भवत्यसत्यमेवेदं देहान्तरमिदं स्वतः || ४१ ||
107508
107509 यथा स्वप्ने प्रतिभासत इति प्रतिभासो दृश्यमानो नरो झटिति कुड्यं भूत्वा पटो
107510 भवेत्तथा मरणमूर्च्छायामपि प्रतिभासमानमिदं देहान्तरं भवतीत्यर्थः ||
107511 ४१ ||
107512
107513 असत्यमेव म्रियते त्वसत्यं जायते पुनः |
107514 जीवः स्वप्रतिभासेन स्वप्नवत्स्वान्यरूपवत् || ४२ ||
107515
107516 नन्वयं देहः प्रत्यक्षं म्रियते दह्यते च स कथं देहान्तरं भवेत्तत्राह##-
107517 दाहादिदर्शनं स्वाविद्याकल्पितस्यैव न तद्वासनामयस्येति भावः |
107518 स्वस्यान्यरूपवद्देहान्तरवदित्यर्थः || ४२ ||
107519
107520 कालेनैतादृशं रूपमिदं नान्यत्वमेति वै |
107521 प्रकृतं निश्चयारूढं भ्रमन्त्येते भवः स्वतः || ४३ ||
107522
107523 तर्हि किं यौवनवार्धक्यवद्देहान्तरमप्येतद्देहस्य कालिकः परिणामः नेत्याह##-
107524 प्रकृतमिदं शरीरं बाल्याद्यवस्थामेदेपि तदेवेदमिति
107525 प्रत्यभिज्ञानिश्चयारूढम् | एते भूतभाविदेहास्तु न |
107526 प्रत्यभिज्ञानाभावादन्येनान्ये सन्ति न सन्तीत्यादिभ्रान्तिं गच्छन्ति अतस्तेषां स्वतो
107527 जीवत एव भवः वासनया समुद्भव इत्यर्थः || ४३ ||
107528
107529 वस्तु दृष्टमदृष्टं च स्वप्ने समनुभूयते |
107530 जीवस्वप्ने जगद्रूपं विद्धि वेद्यविदां वर || ४४ ||
107531
107532 ननु कदापि प्रागदृष्टे देवादिशरीरभावे क्वास्य वासना तत्राह-वस्त्विति | इदं
107533 तु जगद्रूपं जीवस्वप्नेऽन्तर्गतं विद्धि | तस्य तत्र आवसथास्त्रयः स्वप्नाः इति
107534 श्रुतेरित्यर्थः | इदं तु स्वप्ने अननुभूतस्यापि दर्शनमिह
107535 जन्मन्यननुभूताभिप्रायेण | दृष्टं चादृष्टं च श्रुतं चाश्रुतं
107536 चानुभूतं चाननुभूतं च सर्वं पश्यति इति श्रुतिमवलम्ब्योक्तम् | वस्तुतस्त्वनादौ

107537 संसारे नाननुभूतं किंचिदस्तीति मरणकाले
107538 भाविदेहारम्भककर्मोद्बोधितवासनानुसारेणैव देहान्तरोद्भव इति बोध्यम् ॥ ४४ ॥
107539
107540 अजाग्रद्दृष्टिदृष्टो यः स्वाभिधानादिनेरितः ।
107541 न स्वप्नो विद्यते तस्मादच्छात्मा चितिमात्रकम् ॥ ४५ ॥
107542
107543 तर्हि वाक्यजन्यब्रह्मसाक्षात्कारलभ्यब्रह्मभावोपि देहान्तरवद्वासनामयः
107544 स्वप्न एव किं न स्यात्तत्राह-अजाग्रदिति । यः शिवमद्वैतं चतुर्थं मन्यन्ते इति
107545 स्वाभिधानादिना ईरितः अजाग्रद्दृष्ट्या तुरीयया दृष्टः परमात्मा तस्य
107546 उक्तलक्षणस्त्रिविधः स्वप्न एव न विद्यते जाग्रति कदापि तदनुभवाभावेन
107547 तद्वासनाऽप्रसिद्धेस्तस्य वासनामयत्वायोगात्तस्मादसावच्छात्मा
107548 चैतन्यमात्रमित्यर्थः ॥ ४५ ॥
107549
107550 अद्यापूर्वाभिधं स्वप्ने यथा पश्यति नान्यथा ।
107551 अग्रदृष्टं तथैवार्थं चेतनं चित्प्रपश्यति ॥ ४६ ॥
107552
107553 स एव चिदात्मा चेतनं जीवो भूत्वा अद्य अपूर्वाभिधममिनवं वर्तमानमर्थं
107554 यथा चित्स्वभावादेव पश्यति नान्यथा तथैवाग्रे दृष्टमप्यर्थं
107555 प्रपश्यतीत्यर्थः ॥ ४६ ॥
107556
107557 प्राक्तनी वासनाद्यापि पौरुषेणावजीयते ।
107558 ह्यःकुकर्माद्य यत्नेन प्रयाति हि सुकर्मताम् ॥ ४७ ॥
107559
107560 अत एवादृष्टविषयेऽपि भावनाप्रचयेन दृढीकृतवासना पूर्वदृष्टविषयां
107561 वासनां जयतीति पुरुषप्रयत्नप्राबल्यं प्रदर्शितमित्याह-प्राक्तनीति ॥ ४७ ॥
107562
107563 मोक्षादृते न शाम्यन्ति जीवतां चक्षुरादयः ।
107564 उन्मज्जन्ति निमज्जन्ति केवलं देशकालतः ॥ ४८ ॥
107565
107566 एवं जीवस्य वासनापरिणतिलक्षणो देहादिबन्दो वर्णितः । इदानीं कदा तच्छान्तिरिति
107567 वाञ्छायामाह-मोक्षादिति ॥ ४८ ॥
107568
107569 चितः स्वकलनात्तस्य देहोग्र इव तिष्ठति ।
107570 पश्चात्माभावितोऽसत्यो महायक्षः शिशोरिव ॥ ४९ ॥
107571
107572 मोक्षं विनैव देहादिनिवृत्तिः किं न स्यात्तत्राह-चित इति । यतश्चितो यावन्मोक्षं
107573 देहाकारकलना वासना तिष्ठत्येव । स्वकलनैवैतस्य जीवस्य पश्चात्मा देहोऽग्रे
107574 तिष्ठतीव । यथा शिशोर्भावितो महायक्षोऽग्रे तिष्ठति तद्वद्दुर्निवार इत्यर्थः ॥ ४९ ॥
107575
107576 मनोबुद्धिरहंकारस्तथा तन्मात्रपञ्चकम् ।
107577 इति पुर्यष्टकं प्रोक्तं देहोऽसावातिवाहिकः ॥ ५० ॥
107578
107579 इदानीं कथंचित् स्थूलदेहनिवारणेपि मोक्षं विना लिङ्गदेहलक्षणं पुर्यष्टकं
107580 दुर्निवारमित्याशयेन तद्दर्शयति-मन इति ॥ ५० ॥
107581
107582 अमूर्त एव चित्तात्मा खत्वमस्यातिपीनता ।
107583 वाततास्य महागुल्मो देहतास्य सुमेरुता ॥ ५१ ॥
107584
107585 ननु शास्त्रे ज्ञानेन्द्रियं कर्मेन्द्रियं प्राणा भूतानि
107586 अन्तःकरणमविद्याकामकर्माणि पुर्यष्टकमित्युक्तं तत्तु
107587 पञ्चीकृताकाशवाय्वादिलिङ्गघटितस्थूलान्तं मूर्तरूपमपि
107588 स्यात्तत्कथममूर्तमनोबुद्ध्याद्यष्टकमएव पुर्यष्टकमुक्तं तत्राह-अमूर्त

107589 एवेति। त्वदुक्तं मूर्तपुर्यष्टकं तदा स्याद्यदि पञ्चीकरणेनामूर्तानां
107590 तन्मात्राणां स्थौल्यं स्यात्। अयं तु तन्मात्ररूपो लिङ्गात्मा अमूर्त एव। अस्य
107591 खत्वं पञ्चीकृताकाशत्वमतिपीनतानिरवधिकं स्थौल्यं तच्च न संभवति।
107592 नह्यमूर्तवासनाकोटीनामपि मेलने स्थौल्यं दृष्टं यदास्य खत्वमेव
107593 दुर्लभं तदा स्थूलवातता महान् गुल्मो वृक्ष इवात्यन्तमसंभाविता। एवं
107594 स्थूलतेजोजलपृथ्वीतापि। एवं च स्थूलभूतानामेवासंभवे अस्य
107595 परमाणोरप्यतिसूक्ष्मस्य देहता सुमेरुतेवात्यन्तासंभावितेति न भौतिकदेहान्तं
107596 पुर्यष्टकं वर्ण्यत इत्यर्थः॥ ५१॥
107597
107598 विरजस्त्वक्रमेणैव निरवस्थस्तु मुक्तिभाक्।
107599 सुषुप्ततैकावस्थास्य जडाः क्रोडीकृता यया॥ ५२॥
107600
107601 मुक्त्यनुपयोगादपि न मोक्षशास्त्रेऽत्र स्थूलसद्भावकल्पना युक्तेत्याशयेनाह##-
107602 विरजस्त्वे शमादिसाधनसंपत्तौ वाक्याज्ज्ञानोदयक्रमेण
107603 मनःकल्पितस्वप्नप्रायप्रपञ्चस्य तन्मूलाज्ञानस्य च बाधे
107604 स्वकार्यकारणावस्थाबन्धद्वयशून्यस्य मुक्तिरुपपद्यते।
107605 स्थूलभूतभौतिकमूर्तप्रपञ्चाभ्युपगमे तु तादृशस्य ज्ञानेन
107606 बाधादर्शनान्न मुक्तिरुपपद्यत इत्यर्थः एवं च निष्कर्षे स्वप्नसुषुप्ती द्वे
107607 एवावस्थे न जाग्रन्नाम्नी स्थूलविषया अन्या अवस्था केनचिदुपपादयितुं
107608 शक्येत्याशयेन ते विभज्य दर्शयति-सुषुप्ततेति सार्धेन। यया जडाः
107609 सर्वदेहादिप्रपञ्चा वासनात्मनोपसंहृत्य क्रोडीकृताः॥ ५२॥
107610
107611 स्वप्नमाम्नी तथावस्था देहप्रत्ययशालिनी।
107612 आमोक्षं भ्रमतीहायमिति स्थावरजंगमैः॥ ५३॥
107613
107614 इति एवं परिदृश्यमानप्रकारेण स्थावरजंगमैराकारैरातिवाहिकदेह एव
107615 आमोक्षाद्भ्रमतीत्यर्थः॥ ५३॥
107616
107617 कदाचिद्धि सुषुप्तस्थः कदाचित्स्वप्नवत्स्थितः।
107618 आतिवाहिकदेहोऽयं सर्वस्यैवावतिष्ठते॥ ५४॥
107619
107620 यदा सुषुप्तभावस्थो भाविदुःस्वप्नवेधितः।
107621 तदा कालानलसमस्तिष्ठत्यनुदिताकृतिः॥ ५५॥
107622
107623 भाविभिर्दुःस्वप्नैर्वासनात्मनान्तःप्रविष्टैर्वेधितो विद्ध इव गतस्मृतिरत
107624 एवानुदिताकृतिश्चित्प्रतिबिम्बखचितत्वादुपसंहृतजगत्त्वाच्च कालानलसमो
107625 दीप्तस्तिष्ठति। अनेनान्तर्ज्ञानशून्यनैयायिकादिषुषुप्तिः प्रयुक्ता॥ ५५॥
107626
107627 स्थावराद्यास्ववस्थासु कल्पवृक्षदशासु च।
107628 भवत्येव सुषुप्तस्थो घनमोहशिलाघनः॥ ५६॥
107629
107630 तत्र स्थावरादिनिकृष्टावस्थासु जाड्याधिक्यात्सुषुप्तिप्राचुर्यमित्याह##-
107631 पुण्याधिक्यात्कृमिकीटक्षुत्तृषादिदुःखाभावादानन्दाधिक्येपि न
107632 मनुष्यादिवत्प्रबोधोऽस्तीति तमस्वितैवेत्यर्थः॥ ५६॥
107633
107634 सुषुप्ततास्य जडता स्वप्नोत्थेयं हि संसृतिः।
107635 यः प्रबोधोऽस्य सा मुक्तिस्तज्जाग्रद्या तु तुर्यता॥ ५७॥
107636
107637 तथा च चित्तजाड्यप्रकर्ष एव सुषुप्तिश्चित्तभ्रमणमेव संसृतिश्चित्तस्य तत्त्वबोध
107638 एव बन्धमुक्तिस्तुर्यतैवास्य जाग्रदिति पर्यवसन्नमित्याह-सुषुप्ततेत्यादिना॥ ५७॥
107639
107640 जीवप्रबोधान्मुक्तिर्हि प्रबोधात्परमात्मताम्।

107641 सोऽभ्येति क्षालितमलं ताम्रं कनकतामिव ॥ ५८ ॥
107642
107643 जीवप्रबोधान्मुक्तिर्या सा चेह द्विविधोच्यते ।
107644 एका जीवन्मुक्ततेति द्वितीया देहमुक्तता ॥ ५९ ॥
107645
107646 जीवन्मुक्तिर्हि तुर्यत्वं तुर्यातीतं पदं ततः ।
107647 बोधो जीवः प्रबोधोऽयं स च बुद्धिप्रयत्नतः ॥ ६० ॥
107648
107649 प्रबोधः उत्कृष्टचिन्मात्रब्रह्मरूपो भवति । स च बोधो बुद्धेः पुरुषप्रयत्नतः ॥
107650 ६० ॥
107651
107652 ज्ञातप्रमाणो जीवोन्तर्यो जानातीह तन्मयः ।
107653 पश्यतीमं भयं चैव सुदीर्घस्वप्नविभ्रमम् ॥ ६१ ॥
107654
107655 तत्त्वतो यावान्यश्चेति ज्ञातप्रमाणो जीवः सर्वान्तर्यो जानाति भासयति साक्षी तन्मय
107656 एव भवतीत्यर्थः । यस्त्वज्ञातप्रमाणः सोऽपि परमार्थतः स्वस्थ
107657 एवाज्ञानाच्छिलावद्दृढीकृते स्वहृदये सुदीर्घस्वप्नविभ्रमं तीव्रं भयं
107658 पश्यतीति परेणान्वयः ॥ ६१ ॥
107659
107660 मिथ्योदितः स्वहृदये स्वस्थ एव शिलीकृते ।
107661 जीवानामन्तरे त्वन्यन्न किंचिच्चित्कलां विना ॥ ६२ ॥
107662
107663 तर्हि किं जीवानां हृदये वास्तवं भयमस्ति नेत्याह-जीवानामित्यादिना ॥ ६२ ॥
107664
107665 तामेवान्यतया पश्यन्मुधैव परिशोचति ।
107666 जीवाणोरन्तरे त्वन्यन्न किंचित्परमाद्दते ॥ ६३ ॥
107667
107668 यत्र तत्र जगद्दृष्टमहो मायाविजृम्भितम् ।
107669 स्थाल्यन्तः क्वथदम्बूनां यथा नाना भ्रमोदयः ॥ ६४ ॥
107670
107671 जीवाणूनां तथैवान्तर्मिथ्यासंसरणोदयः ।
107672 बन्धोस्य वासनाबन्धो मोक्षः स्याद्वासनालयः ॥ ६५ ॥
107673
107674 वासनान्तोऽस्य सौषुप्ती स्वप्ने विस्फुरति स्थितिः ।
107675 घनवासनमोहोऽयं जीवः स्थावरतादिभाक् ॥ ६६ ॥
107676
107677 अस्य जीवाणोः सौषुप्ती स्थितिर्वासनानामन्तोऽवधिः । तुर्यतुर्यातीतयोर्निर्वासनत्वात् । स च
107678 स्वप्ने स्फुरति वैचित्र्येण स्फुटीभवतीत्यर्थः । कथं स्फुटीभवति तदाह-घनेति
107679 ॥ ६६ ॥
107680
107681 मध्यस्थवासनस्तिर्यक्पुरुषस्तनुवासनः ।
107682 यदान्तर्जीवितेनान्तो बहिर्जाता घटादयः ॥ ६७ ॥
107683
107684 तस्य वासनाक्षुधोत्कर्षादुत्तरोत्तरं शुभयोनिप्राप्तिरित्याह-मध्यस्थेति । पुरुषो
107685 मनुष्यगन्धर्वदेवगन्धर्वादिः । वासनानां क्षयतारतम्येन
107686 वैचित्र्यस्फुटीभावमुक्त्वा ग्राह्यग्रहणादिवैचित्र्येणापि तमाह-यदेत्यादिना ।
107687 यदा यस्मिन् सुषुप्तिविच्युतिकाले देहान्तः आनखाग्रव्याप्तप्राणाहंभावलक्षणेन
107688 जीवितेन एतावान् देहपरिमित एवाहमित्यन्तः परिच्छेदो भवति तदा घटादयः
107689 पदार्था बहिर्जाताः संपन्नाः ॥ ६७ ॥
107690
107691 जीवैक्यादुभयोः सत्ता ग्राह्यग्राहकयोस्तदा ।
107692 आत्मानात्मसमालीढो बहिरन्तर्यदा चिता ॥ ६८ ॥

107693
107694 सन्तु बहिः किं ततस्तत्राह-जीवैक्यादिति | तदा
107695 चक्षुरादिद्वारनिर्गतान्तःकरणद्वारा निर्गतेन वृत्त्यवच्छिन्नजीवेन घटादीनां
107696 व्याप्तौ घटमहं जानामीति ग्राह्यग्राहकयोर्वासनात्मिका सत्ता तत्तद्वैचित्र्येण
107697 स्फुटीभवतीत्यर्थः | एतदेव स्पष्टमाह-आत्मेति | अन्तः स्थित आत्मा जीवो यदा
107698 बहिरनात्मसमालीढो भवति तदा चिता ग्राह्यग्राहकवासना
107699 मृगतृष्णेवाध्यस्तविभागेन सोदया उदेतीत्यर्थः || ६८ ||
107700
107701 तदा ग्राह्यग्रहणधीर्मृगतृष्णेव सोदया |
107702 नेह संत्यज्यते किंचिन्नेह किंचिन्न गृह्यते || ६९ ||
107703
107704 एवं हेयोपादेयवैचित्र्यमपि वासनाध्यस्तमेव न वास्तवमित्याह-नेहेति || ६९ ||
107705
107706 बाह्यान्तरकलाकारश्चिदात्मैकः प्रकाशते |
107707 त्रिजगच्चिच्चमत्कारस्त्वलं भेदविकल्पनैः |
107708 शोभिताः स्मश्चिति चिरात्सबाह्यान्तर्न [सबाह्याद्यं न इति पाठः |]
107709 विद्यते || ७० ||
107710
107711 शोभितास्तत्त्वबोधेन विराजमानाः | सबाह्याभ्यन्तरं जगच्चिद्व्यतिरिक्तं न विद्यते
107712 कालत्रयेऽपीत्यर्थः || ७० ||
107713
107714 अब्धिर्यथा जलमपास्त समस्तभेदः खादच्छमेव सकलं
107715 द्रवमेकशुद्धम् |
107716 सर्वं तथेदमपहस्तितभेदजातमाद्यं परं पदमनामयमेव बुद्धम् ||
107717 ७१ ||
107718
107719 यथा अब्धिः समुद्रस्तत्त्वतो विमृष्टः अपास्तसमस्ततरङ्गबुद्बुदादिभेदः
107720 खादाकाशादप्यच्छं सकलमेकं शुद्धं जलमेव तथा इदं सर्व जगत्तत्त्वतो
107721 बुद्धं सत् अपहस्तितं निरस्तं वासनावस्थावैचित्र्यभेदजातं यस्य
107722 तथाविधमनामयं परं पदमेवेत्यर्थः || ७१ ||
107723
107724 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये देव० मोक्षोपायेषु निर्वाणप्रकरणे
107725 पू० इन्द्रियार्थोपलम्भविचारो नामैकपञ्चाशः सर्गः || ५१ ||
107726
107727 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
107728 इन्द्रियार्थोपलम्भविचारो नामैकपञ्चाशः सर्गः || ५१ ||
107729
107730 द्विपञ्चाशः सर्गः ५२
107731
107732 श्रीवसिष्ठ उवाच |
107733
107734 यो जीवस्यादितः स्वप्नो नानाकलनकोमलः |
107735 तमिमं विद्धि संसारं न सत्यं नाप्यसन्मयम् || १ ||
107736
107737 जीवस्वप्नो जगत्तत्रासंसक्त्या तत्परिक्षयः |
107738 तदर्थमर्जुनाख्यानं वसिष्ठेनावतार्यते ||
107739
107740 ननु स्वप्नः सर्वेषां जीवानां प्रत्येकं भिन्नः जाग्रत्प्रपञ्चस्तु सर्वेषां
107741 साधारणः सर्वैः स्वप्नवैधर्म्येणानुभूयमानः कथं स्वप्नः स्यात्तत्राह##-
107742 स्वप्नस्तमेवममस्माकं जाग्रदिति कल्पितं संसारं विद्धि || १ ||
107743
107744 न पुंस इव जीवस्य स्वप्नः संभवति क्वचित् |

107745 तेनैते जाग्रतो भावा जाग्रत्स्वप्नकृतोऽत्र हि ॥ २ ॥
107746
107747 किमर्थमेवं कल्प्यत इति चेद्व्यष्टीनामिव समष्टेः स्वप्नान्तराप्रसिद्धेरित्याह##-
107748 जाग्रत्स्वप्नोभयस्थानकृतोदया न स्वप्नतो भिद्यन्त इत्यर्थः ॥ २ ॥
107749
107750 जीवस्वप्नमिमं दीर्घं क्षिप्रताप्रतिभासतः ।
107751 असत्यमप्यवस्तुत्वाद्विद्धि वेद्यविदां वर ॥ ३ ॥
107752
107753 असत्यत्वावस्तुत्वाभ्यामपि तस्य स्वप्नतां साधयन्वैधर्म्यानुभवे निमित्तं
107754 दर्शयति-जीवस्वप्नमिति । अस्मदीयस्वप्नवत्क्षिप्रबाध्यताया अप्रतिभासतो
107755 हेतोर्दीर्घम् । तथा च तैर्घ्यमेव वैधर्म्यभ्रमहेतुरिति भावः ॥ ३ ॥
107756
107757 स्वप्नात्स्वप्नान्तरमिव गच्छन्तो जीवजीवकाः ।
107758 असत्यमेव पश्यन्ति घनसत्यतयानघ ॥ ४ ॥
107759
107760 अजडे जडता तात जडे चाजडतोदिता ।
107761 असत्ये सत्यता जीवजीवानुभवमोहतः ॥ ५ ॥
107762
107763 वस्तुस्वभाववैपरीत्यदर्शनादप्यस्य स्वप्नतेत्याह-अजडे इति । अजडे ब्रह्मणि
107764 भूतभुवनादिजडता तथा जडे चाहंकारादिदेहान्ते आत्मत्वाभिमानादजडता उदिता ।
107765 जीवस्य समष्टेरेकदेशभूता ये व्यष्टिजीवास्तदनुभवलक्षणान्मोहतो भ्रान्तेः ॥ ५ ॥
107766
107767 भानोरप्यन्तरखिलं पश्यन्तस्त्रिजगद्भ्रमम् ।
107768 भ्रमन्ति स्वप्नसंभ्रान्ता इव जीवा भिदालिभिः ॥ ६ ॥
107769
107770 जीवाः भिदालिभिर्भेदकल्पनपरम्पराभिर्भ्रमन्ति ॥ ६ ॥
107771
107772 सर्वगत्वादनन्तत्वात्स्वस्य जीवस्य जीवतः ।
107773 यद्भावयन्ति चेतन्ति तदेवाश्विति सत्यवत् ॥ ७ ॥
107774
107775 कल्पितभेदेषु सत्यत्वारोपे कारणमाह-सर्वगत्वादिति । व्यष्टित्वादेव
107776 जीवतोऽप्यत्यन्तजीवभूतस्य स्वस्य परमार्थतः सर्वगत्वादनन्तत्वादपरिच्छेदेन
107777 सत्यत्वाच्च यद्यद्भावयन्ति तदेव आशु तत्संसक्त्या स्वसत्तारोपेण सत्यवच्चेतन्ति ।
107778 तथा च तत्संसक्तित्यागात्तत्सत्यताभ्रमनिवृत्तौ बुद्धतत्त्वस्य जीवन्मुक्तिः
107779 सिद्ध्यतीति भावः ॥ ७ ॥
107780
107781 पुण्डरीकाक्षनिर्दिष्टामसंसक्तिगतिं शुभाम् ।
107782 यामालिङ्ग्य महाबाहो जीवन्मुक्तो महामुनिः ॥ ८ ॥
107783
107784 अयमेवार्थो भगवद्गीतायां भगवताप्यर्जुनायोपदिष्ट इत्याह-पुण्डरीकाक्षेति ।
107785 शुभां शृण्विति शेषः ॥ ८ ॥
107786
107787 पाण्डोः पुत्रोऽर्जुनो नाम सुखं जीवितमात्मनः ।
107788 क्षिपयिष्यति निर्दुःखं तथा क्षेपय जीवितम् ॥ ९ ॥
107789
107790 तदर्थमर्जुनाख्यायिकामवतारयति-पाण्डोरिति । सुखं जीवन्मुक्तिसुखविशिष्टम् ।
107791 जीवितमाशु क्षिपयिष्यति क्षेप्स्यति । स्वार्थे णिचि गुणाभावश्छान्दसः ॥ ९ ॥
107792
107793 श्रीराम उवाच ।
107794
107795 भविष्यति कदा ब्रह्मन्सोऽर्जुनः पाण्डुनन्दनः ।
107796 कीदृशीं च हरिस्तस्य कथयिष्यत्यसक्तताम् ॥ १० ॥

श्रीवसिष्ठ उवाच।

अस्ति सन्मात्रमात्मेति परिकल्पितनामकम्।
स्थितमात्मन्यनाद्यन्ते नभसीव महानभः॥ ११॥

अर्जुनावतारे कारणं वक्तुं सर्वमूलमनुक्रामति-अस्तीत्यादिना। स्थितमिति। स्वे
महिम्नि प्रतिष्ठितः इति श्रुतेः॥ ११॥

दृश्यते विमले तस्मिन्नयं संसारविभ्रमः।
कटकादि यथा हेम्नि तरङ्गादि यथाम्भसि॥ १२॥

चतुर्दशविधा भूतजातयः प्रस्फुरन्त्यलम्।
तस्मिन्संसारजालेऽस्मिञ्जाले ऽसकुनयो यथा॥ १३॥

तस्मिन्दृश्यमाने संसारजाले। शकुनयः पक्षिणः॥ १३॥

तत्रैते यमचन्द्रार्कशक्राद्याः शंसितक्रमाः।
भूतपञ्चकसंसारलोकपालत्वमागताः॥ १४॥

तत्र तासु भूतजातिषु मध्ये शंसितः श्रुतिस्मृत्यादिवर्णितः क्रमश्चरित्रं येषाम्
। भूतपञ्चकं पञ्चीकृततन्मात्रपञ्चकं तल्लक्षणे संसारे लोकपालत्वं
तत्तल्लोकाधिपत्यम्॥ १४॥

इदं पुण्यमुपादेयं हेयं पापमिदं त्विति।
तैः स्वसंकल्पघटिताद्वेदनात्स्थापिता स्थितिः॥ १५॥

इदं श्रुतिस्मृतिसमाचारविहितं पुण्यमुपादेयम् इदं तन्निषिद्धं पापं हेयमिति
स्वाधिकारानुरूपसंकल्पघटिताद्वेदनात्स्थितिर्मर्यादा स्थापिता॥ १५॥

तस्याद्य यावदनघ प्रवाहपतिते निजे।
कर्मण्यचलसंकाशस्थिरं चित्तमवस्थितम्॥ १६॥

अस्त्वेवं किं ततस्तत्राह-तस्येति। तस्य वक्ष्यमाणयमस्य अद्य यावदेतावत्कालं
स्वीये अधिकारकर्मणि अचलवत्स्थिरं चित्तं मनः अवस्थितम्॥ १६॥

भगवान्स यमः किंचिद्गते प्रतिचतुर्युगे।
तपः प्रकुरुते भूतदलनात्पापशङ्कया॥ १७॥

प्रतिचतुर्युगम्। वीप्सायामव्ययीभावः। कदाचित्किंचित्तपः प्रकुरुते। प्रतिचतुर्युगं
किंचिद्गते द्वापरान्ते इति वा॥ १७॥

कदाचिदष्टौ वर्षाणि दश द्वादश वापि च।
कदाचित्पञ्चसप्तादि कदाचित्षोडशापि च॥ १८॥

तत्र कालनियमो नास्तीत्याह-कदाचिदिति॥ १८॥

उदासीनवदासीने तस्मिन्नियमसंस्थितौ।
न हिनस्ति जगज्जाले मृत्युर्भूतानि कानिचित्॥ १९॥

तस्मिन् यमे नियमसंस्थितौ तपसि आसीने सति मृत्युः कानिचिदपि भूतानि न हिनस्ति॥ १९
॥

107849
107850 तेन नीरन्ध्रभूतौघनिःसंचारं महीतलम् ।
107851 भवति प्रावृषि स्वेदी कुञ्जरो मशकैरिव ॥ २० ॥
107852
107853 तेनाहिंसनेन हेतुना महीतलं नीरन्ध्रैर्बहुभिर्भूतौघैर्निःसंचारं
107854 संचारायोग्यं भवति । स्वेदी स्वेदवान् ॥ २० ॥
107855
107856 अथैतानि विचित्राणि भूतानि बहुयुक्तिभिः ।
107857 क्षिपयन्ति सुरा राम भुवो भारनिवृत्तये ॥ २१ ॥
107858
107859 सुरा विष्ण्वादिदेवाः युक्तिभिः अंशावतारभारतयुद्धाद्युपायैः क्षिपयन्ति
107860 हिंसनेन विरलीकुर्वन्तीति यावत् ॥ २१ ॥
107861
107862 एवं युगसहस्राणि व्यवहारशतानि च ।
107863 समतीतान्यनन्तानि भूतानि च जगन्ति च ॥ २२ ॥
107864
107865 अयं च भारावतारादिव्यवहारो बहुशो वृत इत्याह-एवमिति ॥ २२ ॥
107866
107867 वैवस्वतोऽद्य तु यमो य एष पितृनायकः ।
107868 अनेन त्वधुना साधो परिक्षीणेषु केषुचित् ॥ २३ ॥
107869
107870 युगेष्वघविघाताय वर्षाणि द्वादशात्मना ।
107871 व्रतचर्येह कर्तव्या दूरास्तजनकर्षणा ॥ २४ ॥
107872
107873 अघानां पापानां विघाताय । कर्तव्या भविष्यतीति शेषः । दूरेऽस्तं जनानां
107874 कर्षणं पीडनं यस्याम् ।अस्माद्विशेषणाद्व्रतचर्या
107875 अहिंसादिघटितनिर्विकल्पसमाधिरूपेति गम्यते ॥ २४ ॥
107876
107877 तेनेयमुर्वी नीरन्ध्रा भूतैर्मर्त्यैरमृत्युभिः ।
107878 दीना प्रपन्ना गुल्मेव भारभूतैर्भविष्यति ॥ २५ ॥
107879
107880 प्रपन्नगुल्मा वनगुल्मसंकीर्णेति यावत् ॥ २५ ॥
107881
107882 भूभारपरिभूताङ्गी हरिं शरणमेष्यति ।
107883 कान्ता दस्युपराभूता दीना पतिमिव प्रिया ॥ २६ ॥
107884
107885 हरिर्देहद्वयेनाथ महीमवतरिष्यति ।
107886 देवांशैरखिलैः सार्धं नरनारायणं गतैः ॥ २७ ॥
107887
107888 नरं नारायणं च गतैरनुगतैः । साहाय्यार्थमवतीर्णैरिति याव्त् ॥ २७ ॥
107889
107890 वसुदेवसुतस्त्वेको वासुदेव इति श्रुतः ।
107891 देहो भविष्यति हरेर्द्वितीयः पाण्डवोऽर्जुनः ॥ २८ ॥
107892
107893 युधिष्ठिर इति ख्यातो धर्मपुत्रो भविष्यति ।
107894 अम्भोधिमेखलाभूपः पाण्डोः पुत्रः स धर्मवित् ॥ २९ ॥
107895
107896 अम्भोधिमेखलाया भूमेर्भूपो राजा । अम्भोधिमेखलां भुवं पातीति वा ।
107897 आतोऽनुपरार्गे कः ॥ २९ ॥
107898
107899 दुर्योधन इति ख्यातस्तस्य भ्राता पितृव्यजः ।
107900 भविष्यति दृढद्वन्द्वो भीमो बभ्रुरहेरिव ॥ ३० ॥

107901
107902 तस्य पितृव्यजो भ्राता भविष्यति। तस्य द्वन्द्वः प्रतियोद्धा भीमो भविष्यतीति योज्यम्।
107903 बभ्रुर्नकुलः। अहेः सर्पस्येव॥ ३०॥
107904
107905 अन्योन्यं हरतोरुर्वीं तयोः संग्रामलोलयोः।
107906 अष्टादशात्राक्षौहिण्यो घटिष्यन्त्यत्र भीषणाः॥ ३१॥
107907
107908 आसमन्तात् त्रायत् इति आत्रा सेना तदक्षौहिण्यः। अत्र भारतयुद्धे कुरुक्षेत्रे वा
107909 घटिष्यन्ति॥ ३१॥
107910
107911 तत्क्षयेण विभारत्वं भुवो विष्णुः करिष्यति।
107912 राघवाऽर्जुनदेहेन बृहद्गाण्डीवधन्वना॥ ३२॥
107913
107914 हे राघव बृहद्गाण्डीवं धनुर्यस्य। धनुषश्च इत्यनङ्।
107915 तथाविधेनार्जुनदेहेन विभारत्वं भारावतरणं करिष्यतीति पूर्वत्रान्वयः॥ ३२॥
107916
107917 विष्णोरर्जुननामादौ प्राकृतं भावमास्थितः।
107918 हर्षामर्षान्वितो देहो नरधर्मा भविष्यति॥ ३३॥
107919
107920 नरधर्मा अज्ञप्राय इति यावत्॥ ३३॥
107921
107922 सेनाद्वयगतान्दृष्ट्वा स्वजनान्मरणोन्मुखान्।
107923 विषादमेष्यत्युद्योगं युद्धाय न करिष्यति॥ ३४॥
107924
107925 स्वजनान्बन्धून्॥ ३४॥
107926
107927 तमर्जुनाभिधं देहं प्राप्तकार्यैकसिद्धये।
107928 हरिर्बुद्धेन देहेन बोधयिष्यति राघव॥ ३५॥
107929
107930 बुद्धेन स्वतः सिद्धात्मबोधेन कृष्णदेहेन॥ ३५॥
107931
107932 न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः।
107933 अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे॥ ३६॥
107934
107935 बोधनप्रकारमेव विस्तराद्वर्णयति-न जायत इत्यादिना। आद्यन्तविकारयोर्निषेधे
107936 मध्यतनविकारचतुष्टयं प्रसक्तं वारयति-नायमिति। भाविजन्मादिप्रतिषेधो॥
107937 ३६॥
107938
107939 य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम्।
107940 उभौ तौ न विजानीतो नायं हन्ति न हन्यते॥ ३७॥
107941
107942 एनमुक्तस्वभावमात्मानं यो हन्तारं वेत्ति यश्च हतं मन्यते तावुभौ
107943 नात्मानं तत्त्वतो विजानीतः। अज्ञानमेव हन्तृहन्तव्यताभ्रान्तिनिमित्तमिति यावत्॥ ३७
107944 ।।
107945
107946 अनन्तस्यैकरूपस्य सतः सूक्ष्मस्य खादपि।
107947 आत्मनः परमेशस्य किं कथं केन नश्यति॥ ३८॥
107948
107949 त्रिभिः किंवृत्तैर्नाश्यनाशप्रकारनाशहेतूनां प्रतिक्षेपः॥ ३८॥
107950
107951 अनन्तमव्यक्तमनादिमध्यमात्मानमालोकय संविदात्मन्।
107952 संविद्वपुः स्फारमलब्धदोषमजोऽसि नित्योऽसि निरामयोऽसि॥ ३९॥

107953
107954 स्फारमपरिच्छिन्नमतएवालब्धदोषं संविद्वपुश्चैतन्यस्वरूपमेवासि।
107955 अतएवाजोऽसि। नित्योसि निरस्ताज्ञानतत्कार्यकलङ्काञ्जनश्चासीति न
107956 बन्धुसंसक्तितन्मरणादिसंभावनाप्रयुक्तं दुःखं तवोचितमिति भावः॥ ३९॥
107957
107958 इत्यार्षे श्रीवासिष्ठमहारामा० वा० दे० मोक्षो० निर्वाणप्रकरणे पू० अर्जुनोपाख्याने
107959 नरनारायणावतारकथनं नाम द्विपञ्चाशः सर्गः ५२
107960
107961 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
107962 नरनारायणावतारकथनं नाम द्विपञ्चाशः सर्गः॥ ५२॥
107963 त्रिपञ्चाशः सर्गः ५३
107964
107965 श्रीभगवानुवाच।
107966
107967 अर्जुन त्वं न हन्ता त्वमभिमानमलं त्यज।
107968 जरामरणनिर्मुक्तः स्वयमात्मासि साश्वतः॥ १॥
107969
107970 वर्ण्यतेऽहंकृतेस्त्यागः सङ्गत्यागादिलक्षणम्।
107971 उपास्यज्ञेयरूपे च दशाभेदव्यवस्थिते॥
107972
107973 तत्रादौ स्वबन्धुहन्ताहमित्यादिरूपोऽहंताभिमानः एते मदीया बान्धवा
107974 इत्यादिममताभिमानश्च तव सर्वदुःखनिदानमिति स एव त्याज्य इत्याह-अर्जुनेति।
107975 हे अर्जुन त्वं जरामरणादिषड्डूर्मिनिर्मुक्तः अतएव शाश्वतः स्वबन्ध्वादीनां
107976 सर्वभूतानां स्वयं साक्षादात्मासि। अतस्त्वं कस्यापि न हन्ता। अहं
107977 हन्तेत्यभिमानमलमत्यन्तं त्यजेत्यर्थः॥ १॥
107978
107979 यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते।
107980 हत्वापि स इमा&ल्लोकान्न हन्ति न निबध्यते॥ २॥
107981
107982 अभिमानत्यागफलमाह-यस्येति। यस्य वधादिप्रवृत्तिकाले
107983 अहममुंघातयामीत्यहंकृतो भावो नास्ति उत्तरकालं च यस्य
107984 बुद्धिस्तत्फलहर्षविषादादिना न लिप्यते स पुरुष इमान्सर्वान् लोक्यन्त इति
107985 लोकाश्चतुर्विधभूतजातयस्तान्हत्वा प्राणैर्वियोज्यापि कमपि न हन्ति। सर्वत्र
107986 शाश्वतैकात्मतत्त्वस्य वधादिविकारास्पर्शिनस्तथैव सत्त्वात् देहादीनां च
107987 मायामात्रत्वेन नित्यमसत्त्वादेव वन्ध्यापुत्रस्येव वधाप्रसक्तेरिति भावः।
107988 अतस्तत्प्रयुक्तपापफलेनापि न निबध्यते यथेश्वर इत्यर्थः॥ २॥
107989
107990 यैव संजायते संविदन्तः सैवानुभूयते।
107991 अयं सोऽहमिदं तन्म इत्यन्तः संविदं त्यज॥ ३॥
107992
107993 हन्तृत्वादिधर्मकदेहादितादात्म्यभ्रान्तिसंवेदनवशादेव
107994 तद्धर्महन्तृत्वादेरात्मनि प्रतिभासो न स्वतः अतस्तदेव प्रथमं त्यजेत्याह##-
107995 संविद्बुद्धिवृत्तिर्देहाद्यभिमानरूपा अन्यादृशी वा। अहं
107996 कार्यकारणसंघातः। स हन्ता अहं। इदमेतद्देहादिसंबन्धि तद्बन्ध्वादि मे
107997 मम। इत्येवं संविदं भ्रान्तिवृत्तिं त्यजेत्यर्थः॥ ३॥
107998
107999 अनयैव च युक्तोऽस्मि नष्टोऽस्मीति च भारत।
108000 अभितः सुखदुःखाभ्यामवशः परितप्यसे॥ ४॥
108001
108002 अनया उक्तलक्षणया संविदा हन्तृत्वादिभिर्युक्तोऽस्मि। तत्प्रयुक्तपापैश्च नष्टः।
108003 बन्धुनाशाद्यैहिकानर्थैर्नरकपाताद्यामुष्मिकानर्थैश्च युक्तोऽस्मीति च भ्रान्त्या
108004 सुखदुःखाभ्यां परितप्यसे॥ ४॥

108005
108006 स्वात्मांशैः क्रियमाणानि गुणैः कर्माणि भागशः।
108007 अहंकारविमूढात्मा कर्ताहमिति मन्यते॥ ५॥
108008
108009 स्वात्मनः अंशवत्परिच्छेदकत्वेनांशास्तैः सत्त्वादिगुणविकारैर्देहेन्द्रियादिभिः
108010 क्रियमाणानि कर्माणि॥ ५॥
108011
108012 चक्षुः पश्यतु कर्णश्च शृणोतु त्वक्स्पृशत्विदम्।
108013 रसना च रसं यातु कात्र कोऽहमिति स्थितिः॥ ६॥
108014
108015 विमर्शे तु चक्षुरादीनामेव रूपादिविषये प्रवृत्तिर्नात्मन इति न तत्कृतैरस्य
108016 कर्तृत्वप्रसक्तिरित्याशयेनाह-चक्षुरिति।
108017 अत्रास्मिंश्चक्षुरादिकरणकार्यसंघाते अहं कः न कश्चिदिति। अहमिति स्थितिः का। न
108018 युक्तेत्यर्थः॥ ६॥
108019
108020 कलनाकर्मणि रते मनस्यपि महात्मनः।
108021 न कश्चिदत्राहमिति क्लेशभागे क एव ते॥ ७॥
108022
108023 कलना संकल्पादिस्तल्लक्षणे स्वकर्मणि रते प्रसक्ते सत्यपि अत्रास्मिन्मन##-
108024 प्रविष्टो यदर्थं शोचसि स नास्त्येवेत्यर्थः॥ ७॥
108025
108026 बहुभिः समवायेन यत्कृतं तत्र भारत।
108027 एकोऽभिमानदुःखेन हासायैव हि गृह्यते॥ ८॥
108028
108029 यत्र संघातकृते कार्ये तदन्तर्गतस्याप्येकैकस्य संघाताभिमानदुःखेन शोके
108030 उपहास्यता तत्र किं वाच्यं तद्बहिर्भूतस्य तदनुशोचने इत्याशयेनाह##-
108031 दुःखमेकः शोचितुमर्हति इति॥ ८॥
108032
108033 कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि।
108034 योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये॥ ९॥
108035
108036 किं च निरहंकारस्य फलासङ्गरहितं कायिकादित्रि विधं शास्त्रीयं कर्म
108037 चित्तशुद्धिद्वारा ज्ञानोद्दीपकत्वात्परमपुरुषार्थायैव भवतीति न ते
108038 स्वधर्माद्युद्धादुःखप्रसक्तिरित्याह-कायेनेति। योगिनोऽत्रारुरुक्षवः [अत्र
108039 मुमुक्षव इति पाठः।]॥ ९॥
108040
108041 अहन्त्वविषचूर्णेन येषां कायो न मारितः।
108042 कुर्वन्तोऽपि हरन्तोऽपि न च ते निर्विषूचिकाः॥ १०॥
108043
108044 न मारितो मरणाय व्यापारितः। पुनः पुनर्मृत्युहेतुभोगलाम्पट्येन प्रवर्तित
108045 इत्यर्थः। निर्विषूचिकाः निरस्तरागाद्यामयाः। लौकिकं शास्त्रीयं कर्म
108046 कुर्वन्तोऽप्यानुषङ्गिकं तत्फलं हरन्त उपभुञ्जाना अपि न च ते कुर्वन्तो
108047 हरन्तश्चेत्यर्थः॥ १०॥
108048
108049 न क्वचिद्राजते कायो ममतामेध्यदूषितः।
108050 प्राज्ञोऽप्यतिबहुज्ञोऽपि दुःशील इव मानवः॥ ११॥
108051
108052 क्वचिल्लौकिके शास्त्रीये वा व्यवहारे न राजते। अनर्थानास्कन्दितपुरुषार्थाय न कल्पत
108053 इति यावत्॥ ११॥
108054
108055 निर्ममो निरहंकारः समदुःखसुखः क्षमी।
108056 यः स कार्यमकार्यं वा कुर्वन्नपि न लिप्यते॥ १२॥

कार्यमवश्यकर्तव्यं शास्त्रीयं कर्म। अकार्यमनावश्यकं लौकिकम्। नतु
निषिद्धमप्रसक्तेः॥ १२॥

इदं च ते पाण्डुसुत स्वकर्म क्षात्रमुत्तमम्।
अपि क्रूरमतिश्रेयः सुखायैवोदयाय च॥ १३॥

क्षात्रं क्षत्रियाणां विहितं संग्रामेष्वपलायनं बन्धुवधरूपत्वात् क्रूरमपि
चित्तशुद्धिद्वारा ब्रह्मज्ञानादिसुखायैव। तथा
धर्मयशोराज्यस्वर्गाद्यभ्युदयाय चेत्यति श्रेय एवेत्यर्थः॥ १३॥

अपि कुत्सितमप्यन्यदप्यधर्ममयक्रमम्।
श्रेष्ठं ते स्वं यथा कर्म तथेहामृतवान्भव॥ १४॥

तर्हि यद्बन्धुवधादन्यद्द्रोणभीष्मकृपादिगुरुवधरूपं कुत्सितं कर्म
तन्मया कथं कार्यमित्यर्जुनस्य तत्राधर्मत्वशङ्कां सत्यशपथाशिषा
निवारयन्नाह-अपीति। पूजार्हेषु
तद्विपरीतशस्त्रोद्यमनप्रकरणाद्यधर्मबहुलक्रममपि ते स्वं युद्धकर्म यथा
येन सत्येन शास्त्रप्रामाण्येन श्रेष्ठं तथा तेन सत्येन इहास्मिन्युद्धे अमृतवान्
अमरणधर्मा विजयी भवेत्यर्थः॥ १४॥

मूर्खस्यापि स्वकर्मैव श्रेयसे किमु सन्मतेः।
मतिर्गलदहंकारा पतितापि न लिप्यते॥ १५॥

यत्र अज्ञस्यापि स्वधर्मः श्रेयसे तत्र तत्त्वज्ञस्य
तस्मान्नरकादिप्रसक्तिर्दूरापास्तैव। पातित्यावहैर्महापातकादिकोटिभिरपि
निरहंकारमतेर्लेपाभावादित्याशयेनाह-मूर्खस्यापीति॥ १५॥

योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनंजय।
निःसङ्गस्त्वं यथाप्राप्तकर्मवान्न निबध्यसे॥ १६॥

किं च राज्यलाभादिलोभप्रयुक्ते युद्धे लोभगूलाअनि पापानि रसमूलास्तथाऽऽमयाः इति
न्यायेन कदाचिदधर्मप्रसक्तिः स्यात्फलात्सङ्गत्यागेन
सिद्ध्यसिद्धिसमतालक्षणयोगस्थस्य तु तत्प्रसक्तिरपि नास्तीति तां
योगस्थितिमुपदिशति-योगस्थ इति॥ १६॥

शान्तब्रह्मवपुर्भूत्वा कर्म ब्रह्ममयं कुरु।
ब्रह्मार्पणसमाचारो ब्रह्मैव भवसि क्षणात्॥ १७॥

अथवा वक्ष्यमाणलक्षणब्रह्मार्पणबुद्ध्या कृतं शास्त्रीयमिदं कर्म न ते
बन्धायेत्याह-शान्तेति॥ १७॥

ईश्वरार्पितसर्वार्थ ईश्वरात्मा निरामयः।
ईश्वरः सर्वभूतात्मा भव भूषितभूतलः॥ १८॥

निर्विशेषब्रह्मतत्त्वज्ञानेन तदसामर्थ्ये सगुणेश्वरार्पणबुद्ध्या वा कर्म कुरु
ततोऽपि न कर्मबन्ध इत्याह-ईश्वरेति॥ १८॥

संन्यस्तसर्वसंकल्पः समः शान्तमना मुनिः।
संन्यासयोगयुक्तात्मा कुर्वन्मुक्तमतिर्भव॥ १९॥

अथवा सर्वसंकल्पत्यागलक्षणसंन्यासयोगयुक्त्यापि न ते

108109 कर्मबन्धप्रसक्तिरित्याह-संन्यस्तेति ॥ १९ ॥
108110
108111 अर्जुन उवाच ।
108112
108113 सङ्गत्यागस्य भगवंस्तथा ब्रह्मार्पणस्य च ।
108114 ईश्वरार्पणरूपस्य संन्यासस्य च सर्वशः ॥ २० ॥
108115
108116 एवमुपदिष्टोऽर्जुनः सङ्गत्यागादीनां तल्लक्षणैर्विभागं जिज्ञासुः पृच्छति##-
108117
108118 तथा ज्ञानस्य योगस्य विभागः कीदृशः प्रभो ।
108119 क्रमेण कथयैतन्मे महामोहनिवृत्तये ॥ २१ ॥
108120
108121 श्रीभगवानुवाच ।
108122
108123 सर्वसंकल्पसंशान्तौ प्रशान्तघनवासनम् ।
108124 न किंचिद्भावनाकारं यत्तद्ब्रह्म परं विदुः ॥ २२ ॥
108125
108126 आअत्यन्तिकसङ्गत्यागस्य तत्त्वपरिज्ञानमन्तरेणायोगाद्ब्रह्मात्मतत्त्वमेव
108127 भगवान् प्रथमं लक्षणेन निर्दिशति-सर्वेति । तथा च
108128 निर्विकल्पसमाधिपरिपाकसाक्षात्कारानुभवसिद्धं निष्प्रपञ्चं
108129 प्रत्यगात्मरूपमेव ब्रह्मेत्यर्थः ॥ २२ ॥
108130
108131 तदुद्योगं विदुर्ज्ञानं योगं च कृतबुद्धयः ।
108132 ब्रह्म सर्वं जगदहं चेति ब्रह्मार्पणं विदुः ॥ २३ ॥
108133
108134 तदुद्योगं तदाकारावहितचित्तवृत्तिमज्ञाननिवृत्तिफलोपहितां
108135 ज्ञानामाहुस्तदनुकूलधारामात्ररूपां तु योगमित्यर्थः । ब्रह्मण्यभिमन्तव्यस्य
108136 जगतस्तदभिमन्तुरहंकारस्य च बाधो मुख्यं ब्रह्मार्पणमित्याह-ब्रह्मेति ॥
108137 २३ ॥
108138
108139 अन्तःशून्यं बहिःशून्यं पाषाणहृदयोपमम् ।
108140 शान्तमाकाशकोशाच्छं न दृश्यं न दृशः परम् ॥ २४ ॥
108141
108142 ब्रह्मणि जगदहंकारयोर्बाधोपपत्तये तत्राध्यस्तत्वं वक्तुं
108143 ब्रह्मस्वरूपमाह-अन्तःशून्यमित्यादिना । न दृश्यमिति । सर्वदृश्यनिषेधे
108144 दृशोऽपि दृश्यत्वान्निषेधः किं न स्यादित्याशङ्क्याह-न दृशः परमिति ।
108145 दृशो दृश्यतानिषेधो वा तदा स्यादय्दि दृशः परं दृगन्तरं स्यात् नतु
108146 तदस्तीत्यर्थः ॥ २४ ॥
108147
108148 तत ईषद्यदुत्थानमीषदन्यतयोदितम् ।
108149 स जगत्प्रतिभासोऽयमाकाशमिव शून्यता ॥ २५ ॥
108150
108151 ततस्ताद्दृशस्वभावादीषदन्यतयोदितं यत्समुत्थानं सोऽयं जगत्प्रतिभासः स
108152 गन्धर्वनगराकाशमिव । शून्यतैवेत्यर्थः ॥ २५ ॥
108153
108154 भावोऽहमिति कोऽप्येष प्रत्येकमुदितश्चितेः ।
108155 कोटिकोट्यंशकलितः क इत्रैनं प्रति ग्रहः ॥ २६ ॥
108156
108157 संन्यासोपवर्णनोपपत्त्यर्थं ब्रह्मणि जगदारोपवदेव तदंशेषु जीवेषु
108158 प्रत्येकमहंभावाध्यास इति न तत्राग्रहो युक्त इत्याह-भाव इति द्वाभ्याम् ॥ २६ ॥
108159
108160 अपृथग्भूत एवैष पृथग्भूत इव स्थितः ।

108161 पृथक्त्वं हि न पर्यन्तो नाहमित्यवगच्छति ॥ २७ ॥
108162
108163 एषः अहमिति भावः स्वाधिष्ठानादपृथग्भूत एव। हि यस्माद्धेतोः पृथक्त्वं
108164 पर्यन्तः परिच्छेदः स च ब्रह्मणि न। असंश्च नाहमिति कश्चिदवगच्छति।
108165 तथाचावगन्तृत्वेन पृथक्त्वोपपत्तिः पृथक्त्वेन
108166 चावगन्तृत्वोपपत्तिरित्यवश्यमन्यतरस्मिन् हेये निरुपपत्तिकं पृथक्त्वमेव
108167 हेयमिति भावः ॥ २७ ॥
108168
108169 यथेहाहं तथेहास्ति घटादीहापि मर्कटः।
108170 स्वमीहैवं तथाम्भोधिः किमहंतां प्रति ग्रहः ॥ २८ ॥
108171
108172 अहंतायामुक्तो न्यायो घटादिममतेहायामपि योज्य इति
108173 दर्शयंस्तन्मूलाहंताग्रहत्यागमेव द्रढयति-यथेति। यथा अहमीहा
108174 अहंभावो न पृथगस्ति तथा इह प्रतीति घटादिममतेहालक्षणो मर्कटोपि पृथङ्
108175 नास्तीति नञनुषङ्गेण योज्यम्। तथा च द्विविधापीहा अम्भोधिरिव पूर्णं
108176 स्वमात्मैवेति नाहंताग्रहो युक्त इत्यर्थः ॥ २८ ॥
108177
108178 विकल्पभेदे स्फुरिते संवित्सारमयात्मनि।
108179 वैचित्र्येण विचित्रेपि किमेकत्वेऽपि नो ग्रहः ॥ २९ ॥
108180
108181 किंचाहंममतादिसर्वविकल्पभेदे तत्तद्विषयवैचित्र्येण विचित्रे स्फुरितेऽपि
108182 तत्सत्तास्फूर्तिनिमित्ते अवस्थात्रयानुगते संवित्सारमात्रस्वभावे
108183 सर्वविकल्पागमापायसाक्षिणि प्रत्यगात्मन्येकत्वमपि स्फुरत्येव। एवं सति
108184 तत्राप्याग्रहो युक्तः स कुतो नो न क्रियत इत्यर्थः ॥ २९ ॥
108185
108186 इति ज्ञातविभागस्य बुद्धौ तस्य परिक्षयः।
108187 कर्मणां यः फलत्यागस्तं संन्यासं विदुर्बुधाः ॥ ३० ॥
108188
108189 इति उक्तरीत्या विमृश्य ज्ञातसारासारविभागस्य पुरुषस्य बुद्धौ
108190 तस्याहंममताग्रहस्य यः परिक्षयस्तेन चार्थसिद्धः
108191 सर्वकर्मफलेष्वस्पृहालक्षणस्त्यागः ॥ ३० ॥
108192
108193 त्यागः संकल्पजालानामसंसङ्गः स कथ्यते।
108194 समस्तकलनाजालस्येश्वरत्वैकभावना ॥ ३१ ॥
108195
108196 तेन च सर्वसंकल्पत्यागलक्षणः असंसङ्गः सिद्ध्यतीति प्रथमप्रश्नोप्युत्तरित
108197 इत्याह-त्याग इति। चतुर्थप्रश्नस्योत्तरमाह-समस्तेति। सर्वस्य द्वैतजालस्य
108198 वाचारम्भणश्रुत्युक्तन्यायेन तदुपादानेश्वरमात्रात्वभावनेत्यर्थः ॥ ३१ ॥
108199
108200 गलितद्वैतनिर्भासमेतदेवेश्वरार्पणम्।
108201 अबोधवशतो भेदो नाम्नैवैषां चिदात्मनि ॥ ३२ ॥
108202
108203 तत्रोपपत्तिमाह-अबोधवशत इति ॥ ३२ ॥
108204
108205 बोधात्मा किल शब्दार्थो जगदेकं न संशयः।
108206 अहमाशा जगदहं स्वमहं कर्म चाप्यहम् ॥ ३३ ॥
108207
108208 तद्दृढीकाराय भगवान् स्वस्य सार्वात्म्यलक्षणां विभूतिमाह-अहमाशा
108209 इत्यादिना। गच्छतीति जगत् चरम्। स्वं कर्माश्रयः ॥ ३३ ॥
108210
108211 कालोऽहमहमद्वैतं द्वैतं चाहमहं जगत्।
108212 मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।

108213 मामिवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥ ३४ ॥
108214

108215 अद्वैतं परं द्वैतमपरं रूपं तन्नियम्यं जगच्चाहमेवेत्यर्थः। एवं द्विरूपे
108216 मयि अधिकारतारतम्येन मनो यस्य स मन्मनाः भव। तादृशे मयि तथैव
108217 भक्तः श्रवणकीर्तनादिनवविधभक्तिमान्भव। तादृशस्य मे ज्ञानयज्ञेन
108218 कर्मयज्ञेन वा यजनशीलो भवेत्यर्थः। एवमुक्तप्रकारद्वयेनापि युक्त्वा मयि
108219 चित्तं निवेश्य मामेवात्मानं स्वात्मभूतमेष्यसि साक्षात्परम्परया च
108220 प्राप्स्यसीत्यर्थः ॥ ३४ ॥
108221

108222 अर्जुन उवाच।
108223

108224 द्वे रूपे तव देवेश परं चापरमेव च।
108225 कीदृशं तत्कदा रूपं तिष्ठाम्याश्रित्य सिद्धये ॥ ३५ ॥
108226

108227 एवमुक्तोऽर्जुनस्ते द्वे रूपे तद्युक्तियोग्यमधिकारं कालविभागं च जिज्ञासमानः
108228 पृच्छति-द्वे इति ॥ ३५ ॥
108229

108230 श्रीभगवानुवाच।
108231

108232 सामान्यं परमं चैव द्वे रूपे विद्धि मेऽनघ।
108233 पाण्यादियुक्तं सामान्यं शङ्खचक्रगदाधरम् ॥ ३६ ॥
108234

108235 सामान्यं सर्वजनसाधारणं सुबोधमित्यर्थः ॥ ३६ ॥
108236

108237 परं रूपमनाद्यन्तं यन्ममैकमनामयम्।
108238 ब्रह्मात्मपरमात्मादिशब्देनैतदुदीर्यते ॥ ३७ ॥
108239

108240 परं अशुद्धचित्तैर्दुरधिगमम् ॥ ३७ ॥
108241

108242 यावदप्रतिबुद्धस्त्वमनात्मज्ञतया स्थितः।
108243 तावच्चतुर्भुजाकारदेवपूजापरो भव ॥ ३८ ॥
108244

108245 तत्क्रमात्संप्रबुद्धस्त्वं ततो ज्ञास्यसि तत्परम्।
108246 मम रूपमनाद्यन्तं येन भूयो न जायते ॥ ३९ ॥
108247

108248 ततश्चित्तशुद्धिक्रमत् ॥ ३९ ॥
108249

108250 यदि वा वेद्यविज्ञातो भावस्तदरिमर्दन।
108251 तन्ममात्मानमात्मानमात्मनश्चाशु संश्रय ॥ ४० ॥
108252

108253 तुशब्दार्थे वाशब्दः। इदं च सगुणभजनं मया तुभ्यं चित्तशुद्ध्यभावं
108254 संभाव्योक्तं यदि तु तव भावश्चित्तं वेद्यं वेदनार्हं विज्ञातम्। भावे क्तः।
108255 विज्ञानैकस्वभावं ब्रह्म यस्य तथाविधः शुद्ध इति मन्यसे तत्तर्हि मम
108256 ईश्वरस्य आत्मानं पारमार्थिकस्वरूपभूतं शोधिततत्पदार्थं आत्मनः स्वस्य
108257 च आत्मानं शोधितत्वंपदार्थरूपं चैकरसीकृत्याखण्डपरिपूर्णात्मानं
108258 संश्रय। बुद्ध्वा तन्निष्ठो भवेत्यर्थः ॥ ४० ॥
108259

108260 इदं चाहमिदं चाहमिति यत्प्रवदाम्यहम्।
108261 तदेतदात्मतत्त्वं तु तुभ्यं ह्युपदिशाम्यहम् ॥ ४१ ॥
108262

108263 अहमाशा जगदहमित्यादिविभूत्युपदेशस्यापि तत्तदधिष्ठानस्वतत्त्वपरिशोधन
108264 एव तात्पर्यमित्याह-इदं चाहमिति ॥ ४१ ॥

108265
108266 मन्ये साधुविबुद्धोसि पदे विश्रान्तवानसि |
108267 संकल्पैरवमुक्तोऽसि सत्यैकात्ममयो भव || ४२ ||
108268
108269 मदुपदेशावबोधेन तव सद्य एव स्वरूपे विश्रान्तिः सेत्स्यतीत्युत्साहजननाय
108270 सिद्धवत्कृत्याह-मन्ये इति || ४२ ||
108271
108272 सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि |
108273 पश्य त्वं योगयुक्तात्मा सर्वत्र समदर्शनः || ४३ ||
108274
108275 आत्मानमधिष्ठानत्वेनानुगतम् | आत्मन्यध्यस्तानि || ४३ ||
108276
108277 सर्वभूतस्थमात्मानं भजत्येकत्वमात्मनः |
108278 सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते || ४४ ||
108279
108280 सर्वथा सर्वप्रकारेण समाधिवृत्त्य व्यवहारवृत्त्या वा वर्तमानोऽपि || ४४ ||
108281
108282 एकत्वं सर्वशब्दार्थ एकशब्दार्थ आत्मनः |
108283 आत्मापि च न सन्नासद्वतो यस्याशु तस्य तत् || ४५ ||
108284
108285 सर्वभूतस्थमात्मानं इति श्लोकस्य तात्पर्यं स्वयमेव वर्णयति-एकत्वमिति |
108286 सर्वभूतेष्वधिष्ठानतया स्थितमात्मानं पश्यति तदा स
108287 सर्वशब्दस्यार्थोऽधिष्ठानव्यतिरिक्तस्यालाभादेकत्वं भजते स च एकशब्दार्थ
108288 आत्मनः प्रतीचः स्वभावे पर्यवसन्नः स आत्मापि च न सत् मूर्तभूतत्रयस्वभावः
108289 नाप्यसत् सूक्ष्मभूतद्वयस्वभावः किंतु भूमानन्दचिदेकस्वभावो
108290 यस्यानुभवं गतस्तस्याशु तदवगमसमकालमेव तज्जन्मादिसर्वविक्रियारहितं
108291 भूमानन्दात्मकं कैवल्यं पर्यवस्यतीति तत्तात्पर्यमित्यर्थः || ४५ ||
108292
108293 त्रैलोक्यचेतसामन्तरालोको यः प्रकाशकः |
108294 अनुभूतिमुपारूढः सोऽहमात्मेति निश्चयः || ४६ ||
108295
108296 तस्य केनाप्यननुभवादत्यन्तपरोक्षतां प्रसक्तां वारयति-त्रैलोक्येत्यादिना || ४६
108297 | |
108298
108299 त्रैलोक्यपयसामन्तर्यो रसानुभवः स्थितः |
108300 गव्यानामब्धिजानां च सोऽयमात्मेति भारत || ४७ ||
108301
108302 त्रैलोक्यस्थानां पयसां जलानाम् | गोर्विकारा गव्यानि तेषां दुग्धादीनाम् |
108303 अब्धिजानां लवणादीनां चकारादिक्षुमध्वादीनां च जिह्वाग्रसंनिकृष्टानां यो
108304 रसानुभवः सोऽयमात्मैवेति न पारोक्ष्यप्रसक्तिरित्यर्थः || ४७ ||
108305
108306 अन्तः सर्वशरीराणां यः सूक्ष्मोनुभवः स्थितः |
108307 मुक्तोऽनुभवनीयेन सोऽयमात्मास्ति सर्वगः || ४८ ||
108308
108309 अनुभवनीयेन विषयजातेन मुक्तो रहितः अतएव दुर्लक्ष्यत्वात्सूक्ष्मः || ४८ ||
108310
108311 समग्रपयसामन्तर्यथा घृतमिव स्थितम् |
108312 तथा सर्वपदार्थानां देहानां संस्थितः परः || ४९ ||
108313
108314 सर्वपदार्थनामन्तरधिष्ठानतया देहानामन्तस्तु प्रकाशकतया च संस्थितः ||
108315 ४९ ||
108316

108317 सर्वाम्भोनिधिरत्नानां सबाह्याभ्यन्तरे यथा।
108318 तेजस्तथास्मि देहानामसंस्थित इव स्थितः॥ ५०॥
108319
108320 देहान्तःस्थितिं दृष्टान्तेन विशदयति-सर्वेति। यथा सर्वरत्नानामन्तर्गतं
108321 तेजो बहिरपि प्रकाशयति तद्वदित्यर्थः॥ ५०॥
108322
108323 यथा कुम्भसहस्राणां सबाह्याभ्यन्तरे नभः।
108324 जगत्त्रयशरीराणां तथात्माहमवस्थितः॥ ५१॥
108325
108326 असंस्थित इवेत्युक्तितात्पर्यविषयमलेपकत्वं दृष्टान्तान्तरेण विशदयति-यथेति
108327 ॥ ५१॥
108328
108329 मुक्ताफलशतौघानां तन्तुः प्रोतवपुर्यथा।
108330 तथायं देहलक्षाणां स्थित आत्मास्त्यलक्षितः॥ ५२॥
108331
108332 सर्वदेहेष्वन्तः स्थित्वान्तर्यामितया विधारकत्वेऽप्यलक्ष्यत्वे दृष्टान्तमाह##-
108333
108334 ब्रह्मादौ तृणपर्यन्ते पदार्थनिकुरम्बके।
108335 सत्तासामान्यमेतद्यत्तमात्मानमजं विदुः॥ ५३॥
108336
108337 तत्राधिष्ठानात्मना निर्विकारस्थितिर्ब्रह्मता सैव वास्तवी। या तु मुक्तासु
108338 तन्तुवदन्तर्यामितया स्थितिर्या च रत्नेषु प्रभावत्प्रकटजीवतया स्थितिस्ते उभे
108339 अध्यस्तसापेक्षे जगद्व्यवहारार्थे कल्पिते इति न वास्तवं हन्तव्यं हन्ता
108340 तत्प्रयुक्तपापं तत्फलप्रदो वा स्वात्मातिरिक्त इत्याशयेनाह-ब्रह्मादाविति त्रिभिः
108341 ॥ ५३॥
108342
108343 तदीषत्स्फुरिताकारं ब्रह्म ब्रह्मैव तिष्ठति।
108344 अहन्तादि जगत्तादि क्रमेण भ्रमकारिणा॥ ५४॥
108345
108346 आत्मैवेदं जगद्रूपं हन्यते हन्ति वात्र किम्।
108347 शुभाशुभैर्जगद्दुःखैः किमस्यार्जुन लिप्यते॥ ५५॥
108348
108349 प्रतिबिम्बेष्विवादर्शसमं साक्षिवदास्थितम्।
108350 नश्यत्सु न विनश्यन्तं यः पश्यति स पश्यति॥ ५६॥
108351
108352 अध्यस्तैर्वधादिदोषैरलेपे दृष्टान्तान्तरमाह-प्रतिबिम्बेष्विति॥ ५६॥
108353
108354 इदं चाहमिदं नेति इतीदं कथ्यते मया।
108355 एवमात्मास्मि सर्वात्मा मामेवं विद्धि पाण्डव॥ ५७॥
108356
108357 सर्वदेहेषु अहमहमिति प्रथमानश्चिदंश एवाहं जडदेहेन्द्रियविषयांशो
108358 नाहमिति विभागोक्तिरपि दर्पणप्रतिबिम्बितेष्वनेकदर्पणान्तरेषु घटादिषु
108359 व्यावृत्तदर्पणस्वरूपपरिचयाय दर्पणादर्पणविभागोक्तिवदेवेत्याह-इदं
108360 चाहमिति। इतिशब्द आद्योऽर्थविभागप्रकारपरः द्वितीयस्तूक्तिविभागप्रकारपर
108361 इत्यपौनरुक्त्यम्। एवं दर्प।ङ्वदेवालेपकोऽद्वय एवात्मा एवात्मा सन्नहं
108362 सर्वात्मास्मि॥ ५७॥
108363
108364 इमाः सर्वाः प्रवर्तन्ते सर्गप्रलयविक्रियाः।
108365 आत्मन्यहंताचित्तस्थाः पयःस्पन्दा इवाम्बुधौ॥ ५८॥
108366
108367 अहंता अभिमानवृत्तिस्तद्वति चित्ते तिष्ठन्तीति तत्स्थाः॥ ५८॥
108368

108369 यथोपलत्वं शैलानां दारुत्वं च महीरुहाम् ।
108370 तरङ्गाणां जलत्वं च पदार्थानां तथात्मता ॥ ५९ ॥
108371
108372 आत्मता पारमार्थिकीत्यर्थः ॥ ५९ ॥
108373
108374 सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
108375 यः पश्यति तथात्मानमकर्तारं स पश्यति ॥ ६० ॥
108376
108377 अकर्तारं प्रतिबिम्बचेष्टासु दर्पणवदेवाव्यापृतमित्यर्थः ॥ ६० ॥
108378
108379 नानाकारविकारेषु तरङ्गेषु यथा पयः ।
108380 कटकादिषु वा हेम भूतेष्वात्मा तथाऽर्जुन ॥ ६१ ॥
108381
108382 नानातरङ्गवृन्दानि यथा लोलानि वारिणि ।
108383 कटकादीनि वा हेम्नि भूतान्येवं परात्मनि ॥ ६२ ॥
108384
108385
108386 पदार्थजातं भूतानि बृहद्ब्रह्म च भारत ।
108387 एकमेवाखिलं विद्धि पृथक्त्वं न मनागपि ॥ ६३ ॥
108388
108389 दर्पणतत्प्रतिबिम्बवदेकमेव ॥ ६३ ॥
108390
108391 किं तद्भावविकाराणां गम्यमस्ति जगत्त्रये ।
108392 क्व ते वापि जगत्किं वा किं मुधा परिमुह्यसि ॥ ६४ ॥
108393
108394 यदा निर्विकारं ब्रह्मैवैकं तदा जन्मादिभावविकाराणां
108395 गम्यमात्माश्रयभूतं किमन्यदस्ति । ते बन्धुवधादिभावविकारा वा क्व सन्ति ।
108396 जगदपि किं वान्यदस्ति । न किंचिदित्यर्थः ॥ ६४ ॥
108397
108398 इति श्रुत्वाऽभयं त्वन्तर्भावयित्वा सुनिश्चितम् ।
108399 जीवन्मुक्ताश्चरन्तीह सन्तः समरसाशयाः ॥ ६५ ॥
108400
108401 अन्तः अभयं ब्रह्म भावयित्वा सम्यगनुभूय ॥ ६५ ॥
108402
108403 निर्मानमोहा जितसङ्गदोषा अध्यात्मनित्या विनिवृत्तकामाः ।
108404 द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञैर्गच्छन्त्यमूढाः पदमव्ययं तत् ॥
108405 ६६ ॥
108406
108407 तेषामेवोक्तलक्षणविशिष्टानां विदेहकैवल्यावाप्तिरपीत्याशयेनाह##-
108408
108409 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मी० दे० मो० निर्वाणप्रकरणे पू०
108410 अर्जुनोपाख्याने अर्जुनोपदेशो नाम त्रिपञ्चाशः सर्गः ॥ ५३ ॥
108411
108412 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे
108413 पूर्वार्धेऽर्जुनोपदेशो नाम त्रिपञ्चाशः सर्गः ॥ ५३ ॥
108414
108415 चतुःपञ्चाशः सर्गः ५४
108416
108417 श्रीभगवानुवाच ।
108418
108419 भूय एव महाबाहो शृणु मे परमं वचः ।
108420 यत्तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया ॥ १ ॥

सुखदुःखादिसंबन्धे हेतुर्हानक्रमस्तथा।
यदालम्ब्य च तद्धानं तत्सर्वमिह कीर्त्यते॥

द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञैस्तत्पदं गच्छन्तीत्युक्तं तत्र
द्वन्द्वसंबन्धे को हेतुः कश्च तद्विमोक्षोपायः किमालम्ब्य
चेत्याशङ्कापरिहारद्वारेणात्मतत्त्वमुपदेष्टुकामो भगवानुवाच-भूय एवेति
। प्रीयमाणाय प्रीत्या श्रोतुकामाय उपदिश्यमानार्थग्रहणेन संतुष्यते च॥ १॥

मात्रास्पर्शा हि कौन्तेय शीतोष्णसुखदुःखदाः।
आगमापायिनो नित्यास्तांस्तितिक्षस्व भारत॥ २॥

तत्रादौ विषया एव सुखदुःखरूपा इत्यभेदभ्रमं वारयन्नाह-मात्रास्पर्शा
इति। मीयन्ते विषया एभिरिति मात्रा इन्द्रियाणि तेषां विषयसंस्पर्शास्ते
शीतोष्णाद्यनुभावनप्रयुक्तसुखदुःखहेतवः। अथवा स्पृश्यन्त इति स्पर्शाः
शब्दादयः। शीतोष्णग्रहणमुदाहरणार्थम्। यथा शीतं ग्रीष्मे सुखदमुष्णं
दुःखदं ते पुनः शिशिरे विपरीते इति न विषयाः सुखदुःखरूपा इत्यर्थः। एवं
दुःखहेतून्प्रदर्श्य तन्निवारणोपायमाह-तांस्तितिक्षस्वेति।
तितिक्षोक्तिर्वैराग्यस्याप्युपलक्षणम्। तथा च प्रियेषु विरज्यस्व अप्रियेषु
तितिक्षस्वेत्यर्थः॥ २॥

ते तु नैकात्मनश्चान्ये क्वाऽतो दुःखं क्व वा सुखम्।
अनाद्यन्तेऽनवयवे कुतः पूरणखण्डने॥ ३॥

यया बुद्ध्या तद्विरागतितिक्षे सिध्यतस्तामाह-ते त्विति। ते मात्राः स्पर्शाश्च ते
सुखदुःखे वा। चकारादन्यदपि। एकात्मनः
अद्वयपूर्णानन्दस्वभावात्स्वात्मनोऽन्ये न अतः। एवंबोधादित्यर्थः। किं च
प्रियतमधनपुत्रादिसंपदा पूर्णोऽहमिति भ्रान्त्या आभिमानिकं सुखं
तद्वियोगाद्यप्रियसंपत्त्या खण्डितोऽहमिति दुःखं च स्यात्ते अपि निरवयवे
पूरणखण्डनासंभवदर्शने निवर्तेते इत्याह-अनाद्यन्ते इति॥ ३॥

संस्थिता स्पर्शमात्राख्या मात्रास्पर्शभ्रमात्मकः।
समदुःखसुखो धीरः सोऽमृतत्वाय कल्पते॥ ४॥

यस्य स्पर्शानां विषयाणां मात्राणामिन्द्रियाणां चाख्यानमाख्या
सत्यताप्रतीतिः संस्थिता उपशान्ता भवति स मात्रास्पर्शभ्रमात्मको जीवो धीरस्यास्तीति
धीरस्तत्त्वदर्शी समदुःखसुखो भूत्वा अमृतत्वाय कल्पत इत्यर्थः॥ ४॥

सर्वत्वादात्मनश्चैते सुभेदाः संस्थिता इव।
असद्रूपास्त्वसद्रूपं कथं सोढुं न शक्यते॥ ५॥

नन्वप्रिया दुःखादयः कथं स्वं प्रतिकूलवेदनीयतास्वभावं जह्युर्येन ते
सह्याः स्युस्तत्राह-सर्वत्वादिति। निरतिशयानन्दैकरसस्यात्मन एव सर्वत्वादेते
दुःखादिभेदाः शोभना भेदाः सुभेदाः प्रियतमधनपुत्रादिभेदा इव संस्थिता
न प्रतिकूलवेदनीयतां भजन्ते। प्राक्तनेन तु प्रातिकूल्यस्वभावेनासद्रूपा इत्यर्थः॥
५॥

मनागपि न विद्यन्ते सुखदुःखे तु सर्वशः।
सर्वत्वादात्मतत्त्वस्य सत्ता कथमनात्मनः॥ ६॥

तदेव स्फुटीकृत्य समर्थयति-मनागपीति॥ ६॥

108473 नासतो विद्यते भावो नाभावो विद्यते सतः ।
108474 नास्त्येव सुखदुःखादि परमात्मास्ति सर्वगः ॥ ७ ॥
108475
108476 नन्वसदपि दुःखाद्यात्मन्युत्पद्यते असत एव स्वकारणसमवायः स्वसत्तासंबन्ध
108477 आद्यक्षणसंबन्धो वा उत्पत्तिरिति कणभक्षाक्षचरणाद्युक्तिं प्रतिक्षिपति-नासत
108478 इति । असतो दुःखादेर्भावः सत्ता न विद्यते । सतः अभावः असत्ता च न विद्यते ।
108479 स्वभाववैपरीत्यायोगात् । वाचारम्भणादिश्रुत्या विकारमात्रस्यासत्त्वनिश्चयात् । ननु
108480 सर्वविकाराणामसत्त्वे
108481 पिण्डाद्यन्यतमविकारानालिङ्गितप्रकृतिमृदाद्यदर्शनात्तस्याप्यसत्त्वे
108482 शून्यतापरिशेषः किं न स्यादिति चेन्न । विकारेष्वनुगतसद्बुद्धेर्निर्विषयत्वायोगेन
108483 विकारासत्त्वेऽपि शून्यपरिशेषानापत्तेः । यदि तदप्यसदेव स्यात्तर्हि घटः असन् पटः
108484 असन्नित्येवान्ववर्त्स्यत् । सत्सदित्येव चानुवर्तते अतस्तन्मात्रमेव परिशिष्यते । यस्तु
108485 विकारेषु सदिदमित्यमिमानः सोऽधिष्ठानसत्तानुवेधादेव न स्वत इति सुखदुःखादि
108486 नास्त्येवेत्यर्थः ॥ ७ ॥
108487
108488 सत्त्वासत्त्वमती त्यक्त्वा चैतयोर्जगदात्मनोः ।
108489 त्यक्त्वा न किंचिन्मध्ये च शेषे बद्धपदो भव ॥ ८ ॥
108490
108491 जगतः सत्त्वमतिं निरतिशयानन्दात्मनः असत्त्वमतिं च त्यक्त्वा
108492 तयोर्जगदात्मनोर्मध्ये अन्तराले उभयसंघटनानिमित्तं मनस्तमश्चातितुच्छमिति
108493 त्यक्त्वा शिष्यत इति शेषश्चिदात्मा तस्मिन् बद्धपदः प्रतिष्ठितो भव ॥ ८ ॥
108494
108495 न हृष्यति सुखैरात्मा दुःखैर्ग्लायति नोऽर्जुन [अत्र संधिरार्षः ।] ।
108496 दृश्यदृक्चेतनात्मापि शरीरान्तर्गतोऽपि सन् ॥ ९ ॥
108497
108498 दृशयानि हर्षग्लान्यादीनि साक्षितया पश्यतीति दृश्यदृक् । नहि दृश्यास्ते
108499 दृग्धर्मा भवितुमर्हन्तीति भावः ॥ ९ ॥
108500
108501 जडं चित्तादि दुःखस्य भाजनं देहतां गतम् ।
108502 न चैतस्मिन्क्षते क्षीणे किंचिदेवात्मनः क्षतम् ॥ १० ॥
108503
108504 किं तर्हि दुःखहर्षादिभाजनं तत्राह-जडमिति । एतस्मिन् चित्तादौ ॥ १० ॥
108505
108506 जडं देहादि दुःखादेर्यदिदं भोक्तृसंस्थितम् ।
108507 तन्मायाभ्रममेवाङ्ग विद्ध्यबोधवशोत्थितम् ॥ ११ ॥
108508
108509 इदं चित्तादिघटितं जीवरूपम् ॥ ११ ॥
108510
108511 न किंचिदेव देहादि न च दुःखादि विद्यते ।
108512 आत्मनो यत्पृथग्भूतं किं केनातोऽनुभूयते ॥ १२ ॥
108513
108514 यदिदं कथयाम्यत्र तेनैवातो विनश्यति ।
108515 भ्रान्तिर्दुःखमबोधोत्था सम्यग्बोधेन भारत ॥ १३ ॥
108516
108517 यदिदं दुःखं तदबोधोत्थभ्रान्तिरतस्तेन सम्यग्बोधेनैव विनश्यति । अत्र
108518 दृष्टान्तं कथयामीत्यन्वयः ॥ १३ ॥
108519
108520 यथा रज्ज्वामहिभयं बोधान्नश्यत्यबोधजम् ।
108521 तथा देहादिदुःखादि बोधान्नश्यत्यबोधजम् ॥ १४ ॥
108522
108523 विष्वग्विश्वमजं ब्रह्म न नश्यति न जायते ।
108524 इति सत्यं परं विद्धि बोधः परम एष सः ॥ १५ ॥

कीदृशः स बोधस्तमाह-विष्वगिति। विश्वं विष्वक् पूर्णं ब्रह्मैव॥ १५॥

ब्रह्माम्बुधौ तरङ्गत्वं किंचिद्भूत्वा विलीयते।
ब्रह्मावर्ते स्फुरस्यद्य ब्रह्मैवासि निरामयम्॥ १६॥

अद्य बोधोदयकाले॥ १६॥

यावत्कालक्रियादेशास्त्वमहंसैनिका इव।
ब्रह्मणीव परिस्पन्दा नात्र स्तः सदसद्भ्रमौ॥ १७॥

कृत्स्नवाची यावच्छब्दः। कालदीनां द्वन्द्वसमासः। सदसद्भ्रमौ
भावाभावविकल्पौ॥ १७॥

जहि मानं मदं शोकं भयमीहां सुखासुखे।
द्वैतमेतदसद्रूपमेकः सद्रूपवान्भव॥ १८॥

पुरुषाक्षौहिणीनां च क्षयेणानुभवात्मना।
ब्रह्मणा बृंहितं शुद्धं ब्रह्म ब्रह्ममयं कुरु॥ १९॥

त्वत्करिष्यमाणपुरुषाक्षौहिणीक्षयात्मनापि ब्रह्मणैव बृंहितं अतः
अनुभवात्मना शुद्धं ब्रह्मैव ब्रह्ममयं कुर्वित्यर्थः॥ १९॥

असंविदन्सुखं दुःखं लाभालाभौ जयाजयौ।
शुद्धं [युद्ध्यन्ब्रह्मैकतां गच्छ ब्रह्माब्धिं स्पन्द भारत इति
पाठान्तरम्।] ब्रह्मैकतां गच्छ ब्रह्माब्धिस्त्वं हि भारत॥ २०॥

लाभालाभसमो भूत्वा भूत्वा नूनं न किंचन।
खण्डवात इवास्पन्दी प्रकृतं कार्यमाचर॥ २१॥

नूनं तत्त्वनिश्चयेन न किंचन जागतं देहादिरूपं भूत्वा। खण्डवातो
गुहापरिच्छिन्नो वायुरिव॥ २१॥

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्।
यत्करिष्यसि कौन्तेय तदात्मेति स्थिरो भव॥ २२॥

सर्वक्रियाणां ब्रह्मैवेति निश्चयस्थैर्यमेव मदर्पणमित्याशयेनाह-यदिति॥
२२॥

यन्मयो यो भवत्यन्तः स तदाप्नोत्यसंशयम्।
ब्रह्मसत्यमवाप्तुं त्वं ब्रह्मस्त्यमयो भव॥ २३॥

यन्मयः यदाकारचित्तः॥ २३॥

अनपेक्षफलं ब्रह्म भूत्वा ब्रह्मेति भावितम्।
क्रियते केवलं कर्म ब्रह्मज्ञेन यथागतम्॥ २४॥

अपेक्षाया अभावः अनपेक्षम्। अर्थाभावेऽव्ययीभावः सर्वकामोपरमस्तद्रूपं
फलं परमपुरुषार्थः स्वयं भूत्वा केवलं वृथा चेष्टारूपं ब्रह्मेति
भावनाबाधितं कर्म क्रियते॥ २४॥

कर्मण्यकर्म यः पश्यत्यकर्मणि च कर्म यः।

108577 स बुद्धिमान्मनुष्येषु स चोक्तः कृत्स्नकर्मकृत् ॥ २५ ॥
108578
108579 यः पुमान्कर्मण्युक्तरीत्या अकर्म निष्क्रियं ब्रह्म पश्यत्यकर्मणि ब्रह्मणि
108580 चाविच्युतप्रतिष्ठारूपं कर्म अवश्यं कर्तव्यं पश्यति स बुद्धिमान्विवेकी स एव
108581 च स्वरूपतः फलतश्च कृत्स्नं पूर्णं कर्म करोतीति कृत्स्नकर्मकृदुक्तो
108582 विद्वद्भिरित्यर्थः ॥ २५ ॥
108583
108584 मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ।
108585 योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनंजय ॥ २६ ॥
108586
108587 कर्मफलानि लाभादीनि हेतवः प्रवृत्तिनिमित्तानि यस्य तथाविधो मा भूः । अकर्मणि
108588 प्राप्तकर्माकरणेऽपि ते सङ्ग आसक्तिर्माभूत् । योगस्थः
108589 प्रागुक्तसिद्ध्यसिद्धिसमदृष्टिप्रतिष्ठितः ॥ २६ ॥
108590
108591 कर्मासक्तिमनाश्रित्य तथा नाश्रित्य मूढताम् ।
108592 नैष्कर्म्यमप्यनाश्रित्य समस्तिष्ठ यथास्थितम् ॥ २७ ॥
108593
108594 मूढतां तत्त्वदृष्टौ प्रमादम् ॥ २७ ॥
108595
108596 त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः ।
108597 कर्मण्यभिप्रवृत्तोऽपि नैव किंचित्करोति सः ॥ २८ ॥
108598
108599 आसक्तिमाहुः कर्तृत्वमकर्तुरपि तद्भवेत् ।
108600 मौर्ख्ये स्थिते हि मनसि तस्मान्मौर्ख्यं परित्यजेत् ॥ २९ ॥
108601
108602 मौर्ख्ये उक्तप्रमादे स्थिते सत्यवश्यमासक्तिर्भवेदेव ततोऽनर्थपरम्परेत्यर्थः ॥
108603 २९ ॥
108604
108605 परं तत्त्वज्ञमाश्रित्य निरासक्तेर्महात्मनः ।
108606 सर्वकर्मरतस्यापि कर्तृतोदेति न क्वचित् ॥ ३० ॥
108607
108608 तत्त्वदर्शनाप्रमादे तु निरासक्तेः स्वत एवाकर्तृता सिद्ध्यतीत्याह-परमिति ॥ ३० ॥
108609
108610 अकर्तृत्वादभोक्तृत्वमभोक्तृत्वात्समैकता ।
108611 समैकत्वादनन्तत्वं ततो ब्रह्मत्वमाततम् [ब्रह्मत्वमागतम् इति पाठः
108612 ।] ॥ ३१ ॥
108613
108614 तेन च भूमिकाक्रमाद्विदेहकैवल्यान्तं सिद्ध्यतीत्याह-अकर्तृत्वादिति ॥ ३१ ॥
108615
108616 नानातामलमुत्सृज्य परमात्मैकतां गतः ।
108617 कुर्वन्कार्यमकार्यं च नैव कर्ता त्वमर्जुन ॥ ३२ ॥
108618
108619 अकार्यं प्रमादान्निषिद्धं च कुर्वन् ॥ ३२ ॥
108620
108621 यस्य सर्वे समारम्भाः कामसंकल्पवर्जिताः ।
108622 ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥ ३३ ॥
108623
108624 समः सौम्यः स्थिरः स्वस्थः शान्तः सर्वार्थनिस्पृहः ।
108625 यस्तिष्ठति स सव्यग्रोऽप्यलमव्यग्रतां गतः ॥ ३४ ॥
108626
108627 सव्यग्रः सक्रियोऽपि सः । अव्यग्रतामक्रियताम् ॥ ३४ ॥
108628

108629 निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान्।
108630 यथाप्राप्तानुवर्ती त्वं भव भूषितभूतलः॥ ३५॥
108631
108632 अलब्धस्य लाभो योगः लब्धस्य पालनं क्षेमस्तदुभयचिन्ताशून्यः॥ ३५॥
108633
108634 कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन्।
108635 इन्द्रियार्थान्विमूढात्मा मिथ्याचारः स उच्यते॥ ३६॥
108636
108637 त्यक्तसर्वकर्मणो मानसविषयासङ्गसत्त्वे दाम्भिक एव स संन्यास इत्याह##-
108638
108639 यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन।
108640 कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते॥ ३७॥
108641
108642 समनस्केन्द्रियनिग्रहवतो यथाशास्त्रं व्यवहरतोऽपि
108643 फलासङ्गत्यागात्संन्यासफलमस्त्येवेत्याशयेन तं प्रशंसन्नाह-यस्त्विति॥
108644 ३७॥
108645
108646 आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत्।
108647 तद्वत्कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न कामकामी॥ ३८॥
108648
108649 तस्मान्निगृहीतसर्वेन्द्रियस्य संन्यासिन एव सर्वकामोपरमात्परमपुरुषार्थो
108650 नान्यस्येत्युपसंहरति-आपूर्यमाणमिति। यद्वत् आपो नद्य आपूर्यमाणं
108651 समुद्रं प्रविशन्ति तद्भावमापन्ना विलीयन्ते तद्वदचले ब्रह्मणि प्रतिष्ठा यस्यतं
108652 संन्यासिनं सर्वे कामा मिथ्यात्वबुद्धिबाधितविषयाः सन्तः प्रविशन्त्यात्मन्येव
108653 विलीयात्ममात्रतामापद्यन्ते स एव सर्वानर्थशान्तिलक्षणं मोक्षमाप्नोति न तु
108654 काम्यन्त इति कामा विषयास्तत्कामनाशील इत्यर्थः॥ ३८॥
108655
108656 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मी० दे० मो० निर्वाणप्रकरणे पू०
108657 अर्जुनोपाख्याने आत्मज्ञानोपदेशो नाम चतुष्पञ्चाशः सर्गः॥ ५४॥
108658
108659 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
108660 आत्मज्ञानोपदेशो नाम चतुष्पञ्चाशः सर्गः॥ ५४॥
108661
108662 पञ्चपञ्चाशः सर्गः ५५
108663
108664 श्रीभगवानुवाच।
108665
108666 न कुर्याद्भोगसंत्यागं न कुर्याद्भोगभावनम्।
108667 स्थातव्यं सुसमेनैव यथाप्राप्तानुवर्तिना॥ १॥
108668
108669 देहनाशेऽप्यनाशात्मा मूढतत्त्वज्ञयोः समः।
108670 मूढो जन्मादिभाग् भ्रान्त्या ज्ञस्तु नेत्यत्र वर्ण्यते॥
108671
108672 भुज्यन्त इति भोगा देहधारणहेतवोऽन्नपानादयस्तेषां संत्यागं न कुर्यात्।
108673 हितमितमेध्याशनादयुपादद्यादित्यर्थः। भोगानां भावनं चिन्तां
108674 तत्सौष्ठवसंपादनव्यसनितां च न कुर्यात्। तल्लाभालाभादिषु सुसमेनैव
108675 स्थातव्यमित्यर्थः॥ १॥
108676
108677 अनात्मन्यात्मतां देहे मा भावय भवात्मनि।
108678 आत्मन्येवात्मतां सत्ये भावयाऽभवरूपिणि॥ २॥
108679
108680 एवं देहात्मभावनापि न कार्येत्याह-अनात्मनीति। भवात्मनि

108681 जन्मादिविक्रियास्वभावे ॥ २ ॥
108682
108683 देहनाशे महाबाहो न किंचिदपि नश्यति ।
108684 आत्मनाशो हि नाशः स्यान्न चात्मा नश्यति ध्रुवः ॥ ३ ॥
108685
108686 न हि शीर्यत्यचित्तात्मा त्यक्तसर्वपरिग्रहः ।
108687 कर्मण्यभिप्रवृत्तोऽपि नैव किंचित्करोति सः ॥ ४ ॥
108688
108689 उक्तेऽर्थे अशीर्यो न हि शीर्यते इति श्रुतिं प्रमाणयन्नाभिमानिकपरिग्रह एव
108690 शीर्णतादिदेहधर्माणामात्मनि प्रसञ्जकः तत्त्यागे तु न शीर्णतादिप्रसक्तिरित्याह##-
108691 युद्धादौ ॥ ४ ॥
108692
108693 आसक्तिमाहुः कर्तृत्वमकर्तुरपि तद्भवेत् ।
108694 मौर्ख्यस्थिते हि मनसि तस्मान्मौर्ख्यं परित्यजेत् ॥ ५ ॥
108695
108696 मौर्ख्यस्थिते अज्ञतापन्ने ॥ ५ ॥
108697
108698 परं तत्त्वज्ञमाश्रित्य निरासक्तेर्महात्मनः ।
108699 सर्वकर्मरतस्यापि कर्तृतोदेति न क्वचित् ॥ ६ ॥
108700
108701 तत्रोपायमाह-परमिति ॥ ६ ॥
108702
108703 अविनाशमनाद्यन्तमात्मानमजरं विदुः ।
108704 नश्यत्यात्मेति दुर्बोधो मा तवास्त्विह [तवास्त्वतिदुःखद इति पाठः ।]
108705 दुःखदः ॥ ७ ॥
108706
108707 न तथा परिपश्यन्ति विदितात्मान उत्तमाः ।
108708 पश्यन्त्यनात्मनात्मानं स्वमात्मन्यात्ममानिनः ॥ ८ ॥
108709
108710 तथा आत्मा नश्यतीत्येवंप्रकारेण न परिपश्यन्ति । कुतो न पश्यन्ति । यतस्ते
108711 आत्मन्येवाअत्ममानिनः स्वमात्मानमनात्मदेहादिरूपं न पश्यन्तीत्यर्थः ॥ ८ ॥
108712
108713 अर्जुन उवाच ।
108714
108715 एवं चेत्त्रिजगन्नाथ मूढानामपि मानद ।
108716 देहनाशे समुत्पन्ने इष्टं नष्टं न किंचन ॥ ९ ॥
108717
108718 नन्वेवं सति मूढा देहाद्यात्मबुद्ध्या पश्यन्तु नाम तथापि तेषां तन्नाशे
108719 आत्मनाशो नास्त्येवेति मरणादिर्नानर्थः स्यादित्यर्जुनः शङ्कते-एवं चेदिति ।
108720 इष्टं प्रियतमं वस्तु न किंचन नष्टम् । दृष्टं इति पाठे
108721 यथार्थदृष्टिगम्यम् ॥ ९ ॥
108722
108723 श्रीभगवानुवाच ।
108724
108725 एवमेतन्महाबाहो न किंचिन्नश्यति क्वचित् ।
108726 आत्मैवास्त्यविनाशात्मा किं तस्य क्व विनश्यति ॥ १० ॥
108727
108728 इष्टापत्त्या भगवान्परिहरति-एवमेतदित्यादिना ॥ १० ॥
108729
108730 इदं नष्टमिदं युक्तमिति मोहभ्रमादृते ।
108731 अन्यत्तथा न पश्यामि वन्ध्यास्त्रीतनयं यथा ॥ ११ ॥
108732

108733 कथं तर्हि देहनाशपुत्रलाभादेरनर्थत्वमर्थत्वं वा तेषां तत्राह-इदमिति।
108734 युक्तं लब्धम्। स्वप्नेपि पुत्रमरणजन्मभ्रमादनर्थादिव्यवहारदर्शनादिति
108735 भावः॥ ११॥
108736
108737 नासतो विद्यते भावो नाभावो विद्यते सतः।
108738 उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः॥ १२॥
108739
108740 अतएव सतोऽसत्त्वविरोधान्न देहादेः सत्त्वमिति प्रागुक्तमित्याह-नासत इति। उभयो
108741 सदसतोः। सत्सदेव असदसदेव न स्वभावविपर्यय इति अन्तो
108742 निर्णयस्तत्त्वदर्शिभिर्दृष्टो न मूढैरित्यर्थः॥ १२॥
108743
108744 अविनाशि तु तद्विद्धि येन सर्वमिदं ततम्।
108745 विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति॥ १३॥
108746
108747 एवं यत्सत्तदविनाशि यद्विनाशितदसदेवेति नासतो बन्धुदेहादेर्युद्धे नाशे
108748 कश्चिदनर्थ इत्याशयेनाह-अविनाशीति द्वाभ्याम्॥ १३॥
108749
108750 अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः।
108751 अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत॥ १४॥
108752
108753 आत्मा चैकोऽस्ति न द्वित्वमसतः संभवः कुतः।
108754 अविनाशस्त्वनन्तोऽसौ सतो नाशो न विद्यते॥ १५॥
108755
108756 अद्वयत्वाद्विनाशकाप्रसिद्धेरपि नात्मनाशप्रसक्तिरित्याह-आत्मेति॥ १५॥
108757
108758 द्वित्वैकत्वपरित्यागे शेषं यत्परिशिष्यते [यदवशिष्यते इति पाठः।]।
108759 शान्तं सदसतोर्मध्यं तदस्तीह परं पदम्॥ १६॥
108760
108761 एकत्वं कारणं सच्छब्दवाच्यं द्वित्वं कार्यमसदनृतं
108762 तयोर्मध्यमान्तरमधिष्ठानसन्मात्रम्॥ १६॥
108763
108764 अर्जुन उवाच।
108765
108766 तन्मृतोऽस्मीति भगवन्किंकृता तु  नृणां स्थितिः।
108767 कथं स्थितौ च लोकानां तौ स्वर्गनरकौ प्रभो॥ १७॥
108768
108769 एवमपरिच्छिन्नस्यात्मनो मरणादिपरिच्छेददुःखादिभ्रमे को हेतुरित्यर्जुनः
108770 पृच्छति-तदिति। तत्तर्हि। किंकृता केन हेतुना प्राप्ता। स्थितिर्नियतिः। तस्यां च
108771 स्थितौ स्वर्गः सुखं नरको दुःखं च किंकृतौ॥ १७॥
108772
108773 श्रीभगवानुवाच।
108774
108775 भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च।
108776 एतत्तन्मात्रजालात्मा जीवो देहेषु तिष्ठति॥ १८॥
108777
108778 एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति इति श्रुतितात्पर्येण
108779 भगवान्समाधत्ते-भूमिरिति।
108780 पञ्चभूतमात्रानिर्मितमनोबुद्ध्यादिघटितव्यष्टिसमष्टिस्थूल##-
108781 जन्ममरणसुखदुःखादिभ्रमनियतिनिमित्तमित्यर्थः॥ १८॥
108782
108783 स कृष्यते वासनया रज्ज्वेव पशुपोतकः।
108784 स तिष्ठति शरीरान्तः पञ्जरे विहगो यथा॥ १९॥

108785
108786 तस्य विचित्रदेहपरिग्रहे तत्तदनुरूपचेष्टावैचित्र्ये च निमित्तमाह-स इति ॥ १९ ॥
108787
108788 स कालदेशतो देहाज्जर्जरत्वमुपागतात् ।
108789 वासनावशतो याति प्लक्षपर्णाद्रसो यथा ॥ २० ॥
108790
108791 पूर्वदेहाद्देहान्तरगमनेऽपि वासनैव निमित्तमित्याह-स इति ॥ २० ॥
108792
108793 श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ।
108794 गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥ २१ ॥
108795
108796 आशेते अस्मिन्नित्याशयः पूर्वशरीरं पुष्पादि च तस्मात् ॥ २१ ॥
108797
108798 वासनावत्त्वमेवास्य देहो नेतरयुक्तिजः ।
108799 क्षीयते वासनात्यागे क्षीणे भवति तत्पदम् ॥ २२ ॥
108800
108801 अतएवास्य स्थूलदेहोऽपि वासनात्मक एव चिरानुवृत्त्या स्थौल्यभ्रम इत्याशयेनाह##-
108802
108803 वासनावान्परापुष्टो भूत्वा भ्राम्यति योनिषु ।
108804 जीवो भ्रमभराभारो मायापुरुषको यथा ॥ २३ ॥
108805
108806 परेणात्मभूतेनैवान्नपानादिना आपुष्टः अथवा वासनावा&ल्लिङ्गदेहः परेण
108807 परमात्मना अवच्छेदप्रतिबिम्बभावाभ्यां द्वैगुण्येन प्रवेशादापुष्टः ।
108808 अभिव्यक्तो भूत्वेत्यर्थः । मायया ऐन्द्रजालिकपुरुषो यथा खे भ्राम्यति तद्वत् ।
108809 भ्रमभरमाविभर्तीति कर्मण्यण् ॥ २३ ॥
108810
108811 अक्षस्वभावानखिलाञ्छरीराद्वासनावशः ।
108812 जीवो गृहीत्वा संयाति पुष्पाद्गन्धमिवानिलः ॥ २४ ॥
108813
108814 श्रोत्रं चक्षुः स्पर्शनं चेति यदुक्तं तद्विवृणोति-अक्षस्वभावानिति ।
108815 स्वभावान् शब्दादिग्रहणशक्तीः ॥ २४ ॥
108816
108817 देहो निस्पन्दतामेति जीवे कौन्तेय निर्गते ।
108818 निस्पन्दावयवाभोगः शान्तवात इव द्रुमः ॥ २५ ॥
108819
108820 तदेव लोके मरणं प्रसिद्धमित्याह-देह इति ॥ २५ ॥
108821
108822 अचेष्टं छेदभेदादिदोषैरायात्यदृश्यताम् ।
108823 मृत इत्युच्यते तेन देहो विगतजीवितः ॥ २६ ॥
108824
108825 स जीवः प्राणमूर्तिः खे यत्र यत्रावतिष्ठते ।
108826 तं तं स्ववासनाभ्यासात्पश्यत्याकारमाततम् ॥ २७ ॥
108827
108828 खे चिदाकाशे भूताकाशे वा यत्र यत्र यस्मिन् यस्मिन् देहदेशकालभोग्याद्याकारे
108829 अवतिष्ठते भोजकादृष्टोद्भावितवारानो भवति तं तमाकारं पश्यति ॥ २७ ॥
108830
108831 अयं देहो हि जीवेन त्वसन्नेवावलोकितः ।
108832 अस्य नाशे त्वमप्येवं पश्य मा वा सुषुप्तवत् ॥ २८ ॥
108833
108834 अस्य देहस्य नाशेऽप्येवमसत्त्वं पश्य । अथवा सुषुप्तवद्देहं तन्नाशं
108835 तदसत्त्वं च मा पश्य । यथा सुषुप्तो न किंचित्पश्यति तद्वदित्यर्थः ॥ २८ ॥
108836

108837 यथैव पश्यत्याकारांस्तेषां नाशांस्तथैव सः |
108838 आदिसर्गे भावनया किलैष्वेवं विभावतः || २९ ||
108839
108840 प्रतियोगिनां वासनाकल्पितत्वे तन्नाशानामपि तादृशत्वमेवादिसर्गादारभ्य
108841 क्लृप्तमित्याह-यथैवेति | आदिसर्गे हि चतुर्मुखेन एषु सर्गेषु गवाश्वाद्याकारेषु
108842 भावनया पूर्वसर्गानुभववासनयैव विभावतो विभावनाया वशादेवंरूपं
108843 कल्पितं नतु मृद्दण्डाद्यादाय कुलालवत्किंचिन्निर्मितम् | किलेतु
108844 श्रुतिपुराणप्रसिद्धौ || २९ ||
108845
108846 झटित्युद्भवकाले हि यद्यथा दृश्यते पुरः |
108847 आनिपातं तदेवास्या अविनाभाविसंविदः || ३० ||
108848
108849 ननु उत्पत्तिकाले जगद्वासनामयं मिथ्याभूतमस्तु स्थितिकाले
108850 त्वर्थक्रियासमर्थत्वात्सर्वजनीनरात्यतानुभवाच्च वास्तवमेवेत्याशङ्क्याह##-
108851 सत्यं वा पुरो दृऽस्यते आविनाशं तदेव तथास्वभावमेव भवति न
108852 स्वभावान्तरं भजते | अस्यास्तदधिष्ठानभूतायास्तदविनाभाविसंविदो
108853 यथोत्पन्नरूपस्थितिहेतुत्वात्संविद्विनाभावेन तेषां सत्ताया अदर्शनाच्चेति भावः ||
108854 ३० ||
108855
108856 प्राक्तनं वासनामूलं पुरुषार्थेन जीयते |
108857 यत्नेनाद्यतनेनाशु ह्यस्तनायतनं यथा || ३१ ||
108858
108859 देहाद्याकाराणां वासनामयत्वमस्तु किं ततस्तत्राह-प्राक्तनमिति |
108860 अशुभवासनाकल्पितदेहाद्याकारस्य शुभवासनाभ्यासप्रसूतब्रह्माकारवृत्त्या
108861 समूलनाशस्तत्फलमिति भावः | पुरुषार्थेन
108862 श्रवणमननादिपुरुषप्रयत्नजनितेनाखण्डाकारज्ञानेन जीयते बाध्यते |
108863 अद्यतनेन प्रायश्चित्तादियत्नेन ह्यस्तनमायतनमधर्मानुष्ठानं यथा जीयते
108864 तद्वत् | अद्यतनेन दाहयत्नेन ह्यस्तनमायतनं तृणगृहं यथा नाश्यते
108865 तद्वदिति वा || ३१ ||
108866
108867 य एव पुरुषार्थेन दृष्टो बलवता क्षणात् |
108868 पूर्वोत्तरविशेषांशः स एव जयति स्फुटम् || ३२ ||
108869
108870 ननु बहूनां ज्ञानाय यतमानानां प्रयत्नः प्रबलाभिः
108871 पूर्वतनकामक्रोधादिवासनाभिर्विनाश्यमानो दृश्यत इति नोत्तरत्वं प्राबल्ये
108872 हेतुरिति चेत्तत्राह-य एवेति | धर्मार्थकाममोक्षेषु मध्ये य एव ममायं
108873 पुरुषार्थ आवश्यक इत्यभिनिवेशेन दृष्टः स एव पूर्वोत्तरप्रयत्नयोर्विशेषांशो
108874 जये प्रयोजकः | तहा च तेषां मोक्षाभिनिवेशमान्द्याद्भोगाभिनिवेशदार्ढ्याच्च
108875 पराभव इति भावः || ३२ ||
108876
108877 अपि स्फुटति विन्ध्याद्रौ वाति वा प्रलयानिले |
108878 पौरुषं हि यथाशास्त्रमतस्त्याज्यं न धीमता || ३३ ||
108879
108880 अतएव शास्त्रीये प्रयत्ने दृढाभिनिवेशः कार्य इत्याह-अपीति || ३३ ||
108881
108882 नरकस्वर्गसर्गादिवासनावशतोऽभितः |
108883 प्रपश्यति चिराभ्यस्तं जीवो जरठमोहधीः || ३४ ||
108884
108885 तन्मान्द्ये पूर्ववासनावैचित्र्यात्सुखदुःखानर्थपरम्परा सर्वतो
108886 दुर्वारैवेत्याशयेनाह-नरकेति | जरठमोहधीः अनाद्यज्ञानमूढबुद्धिः || ३४
108887 | |
108888

108889 अर्जुन उवाच।
108890
108891 नरकस्वर्गसर्गादिसंभ्रमेषु जगत्पते।
108892 किमस्य कारणं ब्रूहि जीवस्य जगतः स्थितेः॥ ३५॥
108893
108894 तमेवाशयं अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः। ईश्वरप्रेरितो
108895 गच्छेत्स्वर्गं वा नरकं तु वा॥ इति
108896 व्यासवाक्यादिप्रसिद्धकारणान्तरसंदेहनिरासेन स्फुटं जिज्ञासुरर्जुनः
108897 पृच्छति-नरकेति। जगतः स्थितेः स्थितिनिमित्तस्यास्य जीवस्य॥ ३५॥
108898
108899 श्रीभगवानुवाच।
108900
108901 स्वप्नोपमाना तेनेह श्रेयसे वासना क्षयः।
108902 चिराभ्यासवशात्प्रौढा संसारभ्रमकारिणी॥ ३६॥
108903
108904 न हेत्वन्तरं संभावनीयमीश्वरकामकर्मादीनामपि वासनानुसारेणैव
108905 सुखदुःखप्रापकत्वाद्वासनैवासाधारणी चिराभ्यासनिरूढा संसृतिहेतुरिति
108906 तत्क्षय एव परमपुरुषार्थार्थिना सर्वप्रयत्नैः कार्य इत्याशयं
108907 स्फुटीकुर्वन्भगवानाह-स्वप्नेति। शास्त्रीयप्रयत्नं विना
108908 चिराभ्यासवशात्प्रौढा स्वप्नोपमाना वासनैव येन हेतुना संसारभ्रमदायिनी
108909 तेन हेतुना तत्त्वज्ञानाभ्यासेन समूलवासनाक्षयः श्रेयस इत्यन्वयः॥ ३६॥
108910
108911 अर्जुन उवाच।
108912
108913 किमुत्था देवदेवेश क्षीयते वासना कथम्।
108914
108915 श्रीभगवानुवाच।
108916
108917 मौर्ख्यमोहसमुत्थाना त्वनात्मन्यात्मभावना।
108918 आत्मज्ञानान्महाबोधाद्विलयं याति वासना॥ ३७॥
108919
108920 वासनामूलं ज्ञातुकामोऽर्जुनः पृच्छति-किमुत्थेति। अज्ञानमेव तन्मूलं
108921 ज्ञानादेव समूलतन्नाश इति भगवानाह-मौर्ख्येति॥ ३७॥
108922
108923 भावितात्मासि कौन्तेय सत्यं विज्ञातवानसि।
108924 अयं सोहं जना एते मयेति त्यज वासनाम्॥ ३८॥
108925
108926 तत्र विचारादात्मस्वरूपपरिचयस्ते वृत्तस्तदार्ढ्येन
108927 देहतत्संबन्धिबन्ध्वादिष्वहंममेति। वासनाक्षयमात्रं कर्तव्यं परिशिष्यत
108928 इत्याह-भावितेति॥ ३८॥
108929
108930 अर्जुन उवाच।
108931
108932 वासनाविलये जीवो विलीनो भवति स्वयम्।
108933 यो हि यत्सत्तयोच्छूनस्तन्नाशात्स विलीयते॥ ३९॥
108934
108935 ननु वासनामयमेव लिङ्गं तत्प्रतिबिम्बो जीवस्तदुत्थस्तस्य वासनाक्षये क्षय एव
108936 स्यादित्यनर्थयैव तत्त्वज्ञानं वासनाक्षयश्चेत्याशयेनार्जुनः शङ्कते##-
108937
108938 जीवे विलयमायाते देशकालान्यथाकृतौ।
108939 कोऽसौ भाजनतामेति जन्मनो मरणस्य च॥ ४०॥
108940

जन्मनः परमानन्दाविर्भावलक्षणपरमपुरुषार्थस्य मरणस्य
आत्यन्तिकानर्थनाशस्य च को भाजनतामेति न कश्चिदिति लक्षणया व्याख्येयम्।
प्रसिद्धजन्ममरणे तु न ग्राह्ये। तत्त्वज्ञस्य समूलवासनानाशे
तत्प्रसक्त्यभावात्पूर्वापरग्रन्थाननुगुणत्वाच्च ॥ ४० ॥

श्रीभगवानुवाच।

स्वयं कल्पितसंकल्पमात्मरूपं यदविलम्।
तदेव वासनाकारं जीवं विद्धि महामते ॥ ४१ ॥

भवेदयं दोषो यदि प्रतिबिम्बमात्रसंसारी जीवः स च बिम्बादन्यो
भूतमात्राधीनजन्मादिदेशकालभेदभिन्न इत्यभ्युपगतं स्यात्। नत्वेवं किंतु
ब्रह्मैव परमार्थतः शुद्धमनृतया स्वाविद्यया पिहितं स्वतत्त्वमजानत्
स्वात्मन्येव जीवजगद्भेदकल्पनया संसरतीव तदेव शास्त्रीयश्रवणादिप्रयत्नेन
स्वतत्त्वं बुद्ध्वा सवासनाविद्यां विधूय स्वस्वभावेऽवतिष्ठते सैवास्य मुक्तिरिवेति
श्रौतः सिद्धान्तः। तत्र तु न कश्चित्वदुद्भावितो दोष इत्याशयेन
भगवान्समाधत्ते-स्वयमित्यादिना ॥ ४१ ॥

अनायत्तमसंकल्पमात्मरूपं यदव्ययम्।
प्रबोधाद्वासनामुक्तं तन्मोक्षं विद्धि भारत ॥ ४२ ॥

अनायत्तमनन्याधीनम् ॥ ४२ ॥

जीवन्नेव महाबाहो तत्त्वं प्रेक्ष यथास्थितम्।
वासनावागुरोन्मुक्तो मुक्त इत्यभिधीयते ॥ ४३ ॥

सा च समूलवासनामुक्तिर्यावद्देहधारणं जीवन्मुक्तिरिति प्रसिद्धा इहैव
त्वयाप्यनुभवितुं शक्येति न मुक्तिफलभाजि संशयः कार्य इत्याशयेनाह##-

यो न निर्वासनो नूनं सर्वधर्मपरोऽपि सः।
सर्वज्ञोऽप्यभितो बद्धः पञ्जरस्थो यथा खगः ॥ ४४ ॥

स च मोक्षो न कर्मभिर्न बाह्यविषयगोचरपाण्डित्यैर्वा लभ्यः किं
त्वात्मज्ञानेनैवेत्याशयेनाह-य इति ॥ ४४ ॥

दुर्दर्शनस्य गगने शिखिपिच्छिकेव सूक्ष्मा परिस्फुरति यस्य तु वासनान्तः।
मुक्तः स एव भवतीह हि वासनैव बन्धो न यस्य ननु तत्क्षय एव मोक्षः ॥ ४५ ॥

उक्तसमाधानं संक्षिप्योपसंहरति-दुर्दर्शनस्येति।
स्वमायापिहितत्वाद्दुर्दर्शनस्य अनयस्य अप्राप्तवेदान्तप्रमाणस्य यस्य
परमात्मनो गगने ऐन्द्रजालिकशिखिपिच्छिकेव नाना भ्रमदायिनी सूक्ष्मवासना
अन्तः परिस्फुरति जीवजगदाकारेण प्रथते स एव तु अधिकारिशरीरे वेदान्तनयं
प्राप्योत्पन्नतत्त्वज्ञानः समूलवासनाबन्धान्मुक्तो भवति। इहास्मिन्परमात्मनि।
ननु [इहं हेत्वर्थकम्।] यतः समूला वासनैव बन्धस्तत्क्षय एव
मोक्षश्चेत्यर्थः ॥ ४५ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० निर्वाणप्रकरणे पू० अर्जुनोपाख्याने
जीवतत्त्वनिर्णयो नाम पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
जीवतत्त्वनिर्णयो नाम पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

108993 षट्पञ्चाशः सर्गः ५६
108994
108995 श्रीभगवानुवाच।
108996
108997 इति निर्वासनत्वेन जीवन्मुक्ततयार्जुन।
108998 अन्तः शीतलतामेत्य बन्धुदुःखमलं त्यज॥ १॥
108999
109000 जीवन्मुक्तिप्रतिष्ठाऽस्मिन्नर्जुनायोपदिश्यते।
109001 चित्सत्तत्त्वं जगद्रूपं मनश्चित्रं च विस्तरात्॥
109002
109003 बन्धुदुःखं बन्धुवधदुःखम्॥ १॥
109004
109005 जरामरणनिःशङ्क आकाशविशदाशयः।
109006 त्यक्तेष्टानिष्टसंकल्पो वीतरागो भवानघ॥ २॥
109007
109008 प्रवाहपतितं कार्यमिदं किंचिद्यथागतम्।
109009 कुरु कार्याणि कर्माणि न किंचिदिह नश्यति॥ ३॥
109010
109011 प्रवाहपतितं शिष्टव्यवहारपरम्परागतं कार्यमवश्यकर्तव्यमिदं
109012 युद्धमन्यानि चावश्यकानि यागदानादीनि कर्माणि कुरु न काचित्तेन तत्त्वबोधस्य
109013 क्षतिरित्यर्थः॥ ३॥
109014
109015 प्रवाहपतितं कर्म स्वमेव क्रियते तु यत्।
109016 जीवन्मुक्तस्वभावोऽयं सा जीवन्मुक्तता तथा॥ ४॥
109017
109018 स्वं स्वधर्मरूपमेव। सा प्रसिद्धा जीवन्मुक्तता तथा तादृश्येव न
109019 देहचेष्टामात्रत्यागरूपेत्यर्थः॥ ४॥
109020
109021 इदं कर्म त्यजामीदमाश्रयामीति निर्णयः।
109022 मूढस्य मनसो रूपं ज्ञानिनस्तु समा स्थितिः॥ ५॥
109023
109024 प्रवाहपतितं कर्म कुर्वन्तः शान्तचेतसः।
109025 जीवन्मुक्ताः सुषुप्तस्थाः स्फुरन्त्यत्र सुषुप्तवत्॥ ६॥
109026
109027 सुषुप्ता इव स्वात्मनि निःसंकल्पास्तिष्ठन्तीति सुषुप्तस्थाः
109028 सुषुप्तात्मवन्निर्विशेषस्वयंज्योतिरात्ममात्रावशेषाः स्फुरन्ति॥ ६॥
109029
109030 स्थिरां संस्थितिमायान्ति कूर्माङ्गानीव सर्वशः।
109031 इन्द्रियाणीन्द्रियार्थेभ्यो हृदि यस्य स्वभावतः॥ ७॥
109032
109033 अन्यदपि सुषुप्तिसाम्यं जीवन्मुक्तस्य लक्षणेस्तीऽत्याह-स्थिरामिति।
109034 ज्ञानबाधितत्वात्तुच्छेभ्य इन्द्रियार्थेभ्यो विषयेभ्यः स्वतः प्रयत्नं विनैव
109035 व्यावृत्तानीन्द्रियाणि यस्य हृदि हृत्स्थे परमात्मनि मनसा सह स्थिरां निश्चलां
109036 संस्थितिमैकरस्येन स्थैर्यमायान्ति। यथा कूर्मस्य शिरःपादाद्यङ्गानि अल्पेऽपि
109037 विक्षेपे झटित्येवान्तः प्रविशन्ति तद्वत्। स तथाविधो जीवन्मुक्त इत्यर्थः॥ ७॥
109038
109039 विश्वात्मनि तथा विश्वं कालत्रयमयोदितम्।
109040 अभित्ति त्रिजगच्चित्रं कुरुते चित्तचित्रकृत्॥ ८॥
109041
109042 कथं तर्हि जीवन्मुक्ताः व्यवहारकाले जगत् पश्यन्तीति
109043 चेन्मनोराज्यपरिकल्पितनिर्मित्तिकचित्रवैचित्र्यवदेवेति प्रदर्शनाय
109044 जगत्सर्वमासर्गान्तं मनोरचितचित्ररूपेण वर्णयितुमुपक्रमते-विश्वात्मनीति।

109045 चित्तलक्षणश्चित्रकृत् शिल्पी विश्वाधिष्ठाने आत्मनि तथा तेन तेन
109046 सर्वजनप्रसिद्धानन्तवैचित्र्येण विश्वं कृत्स्नं अभित्ति भित्तिरहितं त्रिजगच्चित्रं
109047 कुरुते इत्यन्वयः ॥ ८ ॥
109048
109049 व्योम्नि व्योमात्मकमपि प्रस्फुटं वृत्तिवर्तिभिः ।
109050 चित्तचित्रकरेणादौ चित्रं चित्रं वितानितम् ॥ ९ ॥
109051
109052 व्योम्नि अज्ञानाकाशे व्योमात्मकमज्ञानमात्रस्वरूपत्वात्प्रथितुमयोग्यमपि
109053 साभासान्तःकरणवृत्तिलक्षणवर्तिकाभिः प्रस्फुटमभिव्यक्तं चित्रमद्भुतं
109054 चित्रं वितानितं विस्तारितम् ॥ ९ ॥
109055
109056 पश्चाद्भित्तिः कृता व्योमरूपा चासावहो भ्रमः ।
109057 अपूर्वैवातिमायेयं तृणकुड्यमयी शुभा ॥ १० ॥
109058
109059 अद्भुतत्वमेव प्रसिद्धचित्रवैधर्म्येण दर्शयति-पश्चादिति । समष्टिमनसा
109060 सत्यसंकल्पत्वात्संकल्पसमकालमेव जगच्चित्रं कृतं ततः
109061 पश्चाद्भित्तिस्तदाधारः कृता व्योमरूपा अमूर्ताकाशरूपाचित्रधारणे
109062 अयोग्यैवेत्याश्चर्यं अत एवायं भ्रम इत्यर्थः । अहो भ्रम इति पदयोरर्थं
109063 क्रमात्प्रपञ्चयति-अपूर्वैवेत्यादिना । इयं विरचना अपूर्वैव अतिशयिता माया
109064 अतिमाया । तृणकुड्यमिवात्यन्तमसारापि भ्रान्तदृशा शुभा ॥ १० ॥
109065
109066 न मनागपि भेदोऽस्ति स्फुटमप्युपलब्धयोः ।
109067 इमा या उपलक्ष्यन्ते भित्तयश्चित्तचित्रजाः ॥ ११ ॥
109068
109069 आश्चर्यान्तरं दर्शयति-न मनागपीति । प्रसिद्धेषु चित्रेषु चित्रेभ्यो भिन्ना
109070 भित्तयो भवन्ति । इमास्तु याश्चित्तचित्रजा व्योमादिभित्तय उपलक्ष्यन्ते तासां
109071 स्फुटमप्युपलब्धयोराधाराधेययोश्चित्तत्वाविशेषान्मनागपि भेदो
109072 नास्तीत्याश्चर्यमित्यर्थः ॥ ११ ॥
109073
109074 व्योम्नः शून्यतमा विद्धि तास्तामरसलोचन ।
109075 क्षणेन चेतसि यथा भ्रान्तौ लोकक्षयोदयौ ॥ १२ ॥
109076
109077 अहो भ्रम इत्यत्राहो इत्यंशं प्रपञ्च्य भ्रम इत्यंशं प्रपञ्चयति-व्योम्न
109078 इत्यादिना । ता मनश्चित्ररचनाः व्योम्नः शून्यतमाः अत्यन्तासत्या इति यावत् । हे
109079 तामरसलोचन । तत्र क्षणिकस्वप्नजगल्लयं दृष्टान्तमाह-क्षणेनेति ।
109080 घटिकायाः षष्ठो भागः क्षणः ॥ १२ ॥
109081
109082 आत्मा जगत्तथैवेदं सबाह्याभ्यन्तरं नभः ।
109083 चिरंतनमनोराज्यं यत्तस्मात्किल सत्यता ॥ १३ ॥
109084
109085 आत्मा मनस्तत्कार्यं जगच्च तथा स्वप्नवदेव नभः शून्यमसदेवेत्यर्थः ।
109086 कुतस्तर्हि जनानां सत्यताप्रतीतिस्तत्राह-चिरंतनेति । चिरानुवृत्तत्वादित्यर्थः ।
109087 किलेति नेदं तत्त्वमिति सूचनाय ॥ १३ ॥
109088
109089 किं त्वनालोकितेऽपि स्यात्सत्यं नास्त्येव विभ्रमे ।
109090 क्रमेणालोकतः सत्यमालोकेन विलीयते ॥ १४ ॥
109091
109092 किं तर्हि तत्त्वं तदाह-किं त्विति । विभ्रमे भ्रान्तिकल्पितपदार्थजाते यत्
109093 सत्यसंकल्पत्वं कालत्रयेऽपि नास्त्येव तत् अनालोकिते तत्त्वतः अदृष्टे तत्त्वज्ञानात्प्राक्
109094 किं स्यादपि । न स्यादेवेत्यर्थः । यत्तु वसन्तादिकालक्रमेण बाल्याद्यवस्थाक्रमेण
109095 षड्भावविकारक्रमेण वा आलोकनादर्थक्रियासामर्थ्यलक्षणमन्यद्वा
109096 व्यावहारिकसत्यत्वं प्रसिद्धं तत्तत्त्वदर्शनलक्षणेनालोकेन विलीयते । यथा

109097 सौरालोकेन दृश्यमानं शरदभ्रमण्डलं तेनैव शोष्यमाणं विलीयते
109098 तद्वदिति परेणान्वयः ॥ १४ ॥
109099
109100 दृश्यमानमपि क्षामं शरदीवाभ्रमण्डलम् ।
109101 चित्तचित्रकृतश्चित्रे संस्थिताश्चित्रपुत्रिकाः ॥ १५ ॥
109102
109103 एवं मनश्चित्रस्य भ्रान्तिमात्रत्वेन बन्धुवधादिक्लेशमालिन्यं युक्तमित्याह##-
109104
109105 भित्त्यभावादनाकारा बहिस्त्रिभुवनादिकाः ।
109106 न ताः सन्ति न वासि त्वं किं केन परिरोध्यते ॥ १६ ॥
109107
109108 परिरोध्यते हन्यते ॥ १६ ॥
109109
109110 रोध्यरोधकसंमोहं त्यक्त्वा खे विमलो भव ।
109111 प्रवृत्तिरेव न व्योम्नः प्रवृत्तिश्चैव खात्मिका ॥ १७ ॥
109112
109113 रोध्यरोधकसंमोहं वध्यघातकभ्रमं तत्प्रयुक्तशोकमालिन्यमिति यावत् । खे
109114 ब्रह्माकाशे । यतो व्योम्नश्चिदाकाशस्य वधादिप्रवृत्तिरेव नास्ति । या तु प्रातिभासिकी
109115 प्रवृत्तिः सा च खात्मिका ब्रह्माकाशरूपैव ॥ १७ ॥
109116
109117 अतः कालक्रियाकुड्यकलादिविमलं नभः ।
109118 चित्तसंस्थं यथा चित्रं सरूपमखिलात्मकम् ॥ १८ ॥
109119
109120 कला चित्ररचनाकौशलं आदिपदात्तद्वैचित्र्यभेदाच्च विमलं नाभो ब्रह्मैव । यथा
109121 चित्तसंस्थं मनोराज्यचित्रमखिलप्रपञ्चात्मकमपि शून्यत्वान्नभःस्वरूपं
109122 तथा परिदृश्यमानमपि जगद्व्योम्नः शून्यतममित्युत्तरेणान्वयः ॥ १८ ॥
109123
109124 व्योम्नः शून्यतमं विद्धि तथेदमखिलं जगत् ।
109125 चित्तभित्तौ कृतं चित्रं यच्चिच्चित्रकरेण तत् ॥ १९ ॥
109126
109127 इदानीमज्ञाता चिदेव चित्रकरश्चित्तं तु तद्भित्तिरित्युत्प्रेक्षणेऽपि शून्यत्वमेव
109128 पर्यवस्यतीत्याह-चित्तेति ॥ १९ ॥
109129
109130 सर्वशून्यतया व्योम्नो मनागपि न भिद्यते ।
109131 यथा प्रकचतश्चित्ते जगन्निर्माणसंक्षयौ ॥ २० ॥
109132
109133 तत्रापि मनोराज्यक्षणिकजगदेव दृष्टान्त इत्याह-यथेति ॥ २० ॥
109134
109135 क्षणेनैव तथैवेमौ भुविस्थाविति विद्धि हे ।
109136 अद्य क्षीणा मनोराज्ये नानानुभवनात्मनि ॥ २१ ॥
109137
109138 तव नानानुभवनात्मनि मनोराज्ये क्षणभावितमोहेन परिकल्पिता
109139 वध्यघातकभावादिकल्पना अद्य मदुपदेशात्क्षीणा ॥ २१ ॥
109140
109141 क्षणभावितमोहेन कल्पना परिकल्पिता ।
109142 असदेव मनोराज्यं कर्तुं शक्तं यथा मनः ॥ २२ ॥
109143
109144 ननु क्षणभावितमोहेन कथमनाद्यनन्तकल्पविस्तीर्णसंसारलक्षणं मनोराज्यं
109145 कृतं तत्राह-असदेवेति । यथा असतोऽपि जन्मादिकरणे मनः शक्तं तथा
109146 क्षणस्य कल्पीकरणेपि बलवत् समर्थमित्यर्थः ॥ २२ ॥
109147
109148 क्षणस्य कल्पीकरणे तथैव बलवन्मनः ।

109149 क्षणं कल्पीकरोत्येतत्तच्चाल्पं कुरुते बहु ॥ २३ ॥
109150
109151 क्षणं कल्पीकरोत्येतत् तत् असदुत्पादयतीत्येतच्चाश्चर्यमल्पमेव। यस्मात्ततोपि बहु
109152 आश्चर्यं यदसदपि जगत्सत्कुरुते इतीदृशमनःसामर्थ्यादिवेयं
109153 जगद्भ्रान्तिरुत्थितेत्यन्वयः ॥ २३ ॥
109154
109155 असत्सत्कुरुते क्षिप्रमितीयं भ्रान्तिरुत्थिता।
109156 क्षणेनैव मनोराज्यं प्रतिभातं स्वभावतः ॥ २४ ॥
109157
109158 तदेवाह-क्षणेनैवेति ॥ २४ ॥
109159
109160 यद्विचित्रात्म तदिदं जगज्जालमिति स्थितम्।
109161 सर्गे निर्वाणनिष्ठत्वान्निमेषमयमुत्थितम् ॥ २५ ॥
109162
109163 एवं निर्वाणे नित्यमुक्ते आत्मन्यध्यस्तत्वात्प्रतिभामात्रतो जातत्वात्तुच्छं
109164 निमेषमयं क्षणिकमप्युत्थितं जगदजानद्भिः अत्र ईदृश एव सर्गे
109165 भ्रान्तैर्वज्रसारता दुरुच्छेदता कल्पिता ॥ २५ ॥
109166
109167 प्रतिभामात्रतोऽत्रैव [प्रतिभासात्ततोऽत्रैव इति पाठः।] कल्पिता
109168 वज्रसारता।
109169 प्रतिभासविपर्यासमात्रं ह्यविदिताकृतेः ॥ २६ ॥
109170
109171 सा च न युक्तेत्याह-प्रतिभासेति। अविदिताकृतेः अज्ञाततत्त्वस्यात्मनः इदं
109172 जगत्प्रतिभासविपर्यासोऽन्यथाप्रतिभासस्तावन्मात्रम्। ईदृशस्यास्य
109173 प्रवृत्तावध्यारोपे निवृत्तौ बाधे वा का वज्रसारता। न काचिदित्यर्थः ॥ २६ ॥
109174
109175 प्रवृत्तौ वा निवृत्तौ वा कैव सा वज्रसारता।
109176 चित्तचित्रकृतश्चित्थं जगच्चित्रं कदा स्थितम् ॥ २७ ॥
109177
109178 स्थितस्य हि निरासे प्रयत्नापेक्षा इदं तु कदापि क्वापि न स्थितमेवेत्याह##-
109179
109180 अकुड्यमप्यरङ्गाढ्यमिदं स्फारमिवाग्रतः।
109181 अहो नु चित्रं निर्भित्ति चित्रमुज्ज्वलमुत्थितम् ॥ २८ ॥
109182
109183 विना स्वकारणसामग्रीतः स्वतश्चासदप्यग्रतः स्फुरतीत्याश्चर्यमित्याह##-
109184
109185 सुरञ्जनं जगदिति स्फुटं दृष्टिविलोभनम्।
109186 नानातमोमषीलेखं नानातेजोंशुरञ्जनम् ॥ २९ ॥
109187
109188 कथं पुरःस्थितं तदाह-सुरञ्जनमित्यादिना। सुष्ठु रञ्जयत्यासञ्जयतीति
109189 सुरञ्जनम्। दृष्टिग्रहणमिन्द्रियमन-आद्युपलक्षणम् ॥ २९ ॥
109190
109191 नानाकल्पाङ्गावयवं नानारागानुरञ्जितम्।
109192 नानादृष्टिविलासाढ्यं नानानुभवलोचनम् ॥ ३० ॥
109193
109194 कल्पास्तदङ्गयुगादीनि चावयवा यस्य ॥ ३० ॥
109195
109196 नानाग्रहोग्रकचनं नानाकाराग्रपश्चिमम्।
109197 व्योमनीलसरः फुल्लताराचन्द्रार्कपङ्कजम् ॥ ३१ ॥
109198
109199 सूर्योदयास्तादिकालेषु नानाकारे अग्रपश्चिमे प्राचीप्रतीच्यौ यस्मिन्। तत्र
109200 चित्रपद्मवनादि वर्णयति-व्योमेत्यादिना ॥ ३१ ॥

109201
109202 विचित्ररचनोद्युक्तमेघालीपत्रमञ्जरि |
109203 प्रकोष्ठकाभिलिखितसुरासुरनृपुत्रिकम् |
109204 परमालोकमङ्कोलयुवताकाशकुड्यकम् || ३२ ||
109205
109206 शरदादिकालभेदेन विचित्ररचनाभिः उत् ऊर्ध्वं युक्ता मेघालीलक्षणाः पत्राणि
109207 मञ्जर्यश्च यस्मिन् | लोकत्रयलक्षणेषु प्रकोष्ठकेषु चित्रकोष्ठमेदेषु अभितो
109208 लिखिताः सुरासुरमनुष्यलक्षणाः पुत्रिका यस्मिन् | परम उत्कृष्टो
109209 यश्चन्द्रसूर्याद्यालोकस्तल्लक्षणेन मङ्कोलेन सुधालेपेन युवतेव विराजमानता
109210 यस्य तथाविधमाकाशलक्षणं कुड्यं भित्तिर्यस्मिन् || ३२ ||
109211
109212 आकाश एव रचिता प्रतिभैकरङ्गा मुग्धा जगत्त्रयमनोहरपुत्रिकेयम् |
109213 चिन्मात्रचक्रपरिरञ्जितसर्वलोका लीलाकुला चपलचित्तकचित्रकर्त्रा || ३३ ||
109214
109215 इदानीं त्रिलोकीमेव देवनटीरूपां चित्रपुत्रिकां परिकल्प्य वर्णयति-आकाश
109216 एवेत्यादिपञ्चभिः | चपलेन कामुकेन चित्तकलक्षणेन चित्रकर्त्रा
109217 स्वाधिष्ठानब्रह्माकाशे एव इयं वर्ण्यमाना जगत्त्रयलक्षणा मनोहरा नटी
109218 पुत्रिका रचिता | प्रतिभा नवनवोन्मेषशालिनी बुद्धिरेव एको मुख्यो रङ्गो
109219 नृत्यशाला यस्याः | नृत्यशालाप्रदीपस्थानीयस्य साक्षिचतन्यस्य चक्रैरिव स्फुरत्
109220 प्रतिबिम्बग्राहिभिर्बुद्धिवृत्याभरणैः परितो रञ्जिताः प्रकाशिता लोका यया |
109221 नृत्यहावभावविलासादिलीलाभिराकुला || ३३ ||
109222
109223 हेमाचलाङ्गलतिका घनकेशपाशा चन्द्रार्कलोचनविचालनदृष्टलोका |
109224 धर्मार्थकामविनियन्त्रितशास्त्रवस्त्रा पातालजालचरणोन्नतभूनितम्बा || ३४ ||
109225
109226 पुनस्तामेव विशिनष्टि-हेमेति | तदण्डमभवद्धैमं सहस्रार्कसमप्रभम् इति
109227 पुराणोक्तेर्हेममयं ब्रह्माण्डमेवाचला दृढा अङ्गलतिका यस्याः | घना
109228 मेघा एव केशपाशा यस्याः | धर्मार्थकामार्थानि विनियन्त्रितानि व्यावर्तनानि
109229 ययोस्तथाविधे प्रवृत्तिनिवृत्तिशास्त्रे द्वे वस्त्रे यस्याः | पातालजालानि सप्तपातालानि
109230 ऊरुजानुजङ्घागुल्फपादपार्ष्ण्यङ्गुलिरूपसप्तावयवकौ चरणौ यस्याः | उन्नता
109231 भूर्नितम्बो यस्याः || ३४ ||
109232
109233 ब्रह्मेन्द्ररुद्रहरिबाहुचतुष्टयोग्रा सत्त्वावृतोन्नतकुचस्फुरदङ्गयष्टिः |
109234 सुव्यालवेष्टितमहीतलपद्मपीठा पत्रीकृताचलमहाभुवनोदरी च || ३५ ||
109235
109236 ब्रह्मादिबाहुचतुष्टयेन उग्रा समर्था |
109237 सत्त्वगुणलक्षणकञ्चुकावृताभ्यामुन्नताभ्यां विवेकवैराग्यकुचाभ्यां
109238 स्फुरन्ती अङ्गयष्टिर्यस्याम् | सुव्यालैः शेषादिभिर्वेष्टितं महीतलमेव पद्माकारं
109239 पीठमासनं यस्याः | गोरोचनाकस्तूर्यादिनानावर्णपत्ररचनास्थानीयाः कृता
109240 अचला मेर्वञ्जनहिमवदादिनानावर्णपर्वता यस्मिंस्तथाविधं महाभुवनं
109241 मध्यलोक एव उदरं यस्याः || ३५ ||
109242
109243 रात्र्यन्धकारचपलत्वहराक्षिचेष्टा ताराकरालपुलका पविदन्तपङ्क्तिः |
109244 चञ्चच्चतुर्दशविधातुलभूतजातरोमाञ्चना प्रलयवादकदम्बपुष्पा || ३६ ||
109245
109246 रात्र्यन्धकारस्य मेरुप्रदक्षिणीकरणलक्षणं यच्चपलत्वं तद्धरति
109247 अनुहरत्यपनयति च चन्द्रार्कलक्षणाक्षिचेष्टा यस्याः | पविर्विद्युदेव
109248 दन्तपाङ्क्तिर्यस्याः | भुवनभेदाच्चतुर्दशविधमतुलं परस्परविसदृशं
109249 भूतजातमेवाविर्भवद्रोमाञ्चनं यस्याः | तेषु भूतेषु प्रसिद्धा
109250 भूतभुवनाद्रिप्रलयवाता एव सर्वतः प्रसारितसद्बुद्धिकेसरत्वाच्छ्रोतॄणां
109251 वैराग्यसद्वासनासौगन्ध्याधायकत्वाच्चापादलम्बिकदम्बमालापुष्पाणि यस्याः ||
109252 ३६ ||

109253
109254 जीवान्विता गगन एव कृता विचित्रा व्योमात्मिका चिरविलक्षणचित्रकर्त्रा।
109255 चित्तेन चित्रपरिकर्मविदा त्रिलोकी नानाविलासवलिता वरपुत्रिकेति॥ ३७॥
109256
109257 जीवेन व्यष्टिसमष्ट्यात्मना अन्विता। चित्रस्य परिकर्माणि उपकरणभूतानि
109258 विचित्रवासनाकामकर्माणि विन्दति प्राप्नोति तथाविधेन अतएवाचिरादेव विलक्षणानां
109259 चित्राणां कर्त्रा निर्माणसमर्थेन चित्तेन इति एवं वर्णितरूपा त्रिलोकीलक्षणा
109260 वरपुत्रिका स्वाधिष्ठानचिद्गगन एव कृतेत्युपसंहारः॥ ३७॥
109261
109262 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मी० दे० मो० निर्वाणप्रकरणे पू०
109263 अर्जुनोपाख्याने चित्तवर्णनं नाम षट्पञ्चाशः सर्गः॥ ५६॥
109264
109265 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
109266 चित्तवर्णनं नाम षट्पञ्चाशः सर्गः॥ ५६॥
109267
109268 सप्तपञ्चाशः सर्गः ५७
109269
109270 श्रीभगवानुवाच।
109271
109272 इदं विद्धि महाश्चर्यमर्जुनेह हि यत्किल।
109273 पूर्वं संजायते चित्रं पश्चाद्भित्तिरुदेति हि॥ १॥
109274
109275 जायतेऽत्र यया दृष्ट्या सद्यो निर्वासनं मनः।
109276 सुखाद्वयात्मशेषश्च सा दृष्टिरुपदिश्यते॥
109277
109278 तत्र प्राग्दर्शितां जगत्याश्चर्यतादृष्टिमेव प्रथमं वासनाशैथिल्योपयोगितया
109279 वर्णयति-इदमिति। अभित्तौ निराश्रय एव मनसा जगदाकारकलनात्पूर्वं
109280 जगच्चित्रं जायते पश्चात्तदन्तर्गता भूतभुवनात्मकविराड्भित्तिस्तदाधारतया
109281 कल्प्यमाना उदेति। व्यष्टिसमूहस्य समष्टेर्विराजो व्यष्ट्यधीनकल्पनत्वाद्वा
109282 पश्चादुदयः॥ १॥
109283
109284 अभित्तावुत्थिते चित्रे दृश्यते भित्तिरातता।
109285 अहो विचित्रा मायेयं मग्नं तुम्बं शिला प्लुता॥ २॥
109286
109287 अत्यन्तमसंभावितरूपत्वादियं माया असंभावितत्वं च विरुद्धत्वादित्याशयेन
109288 प्रसिद्धां तादृशमायामुदाहरति-मग्नमिति। तुम्ब्याः फलं तुम्बम्। फले
109289 लुक्। तत्किल जले मग्नं शिला तु प्लुता इति यथा स्वप्नेन्द्रजालादावेवोपपद्यते
109290 तद्वदित्यर्थः॥ २॥
109291
109292 चित्तस्थचित्रसदृशे व्योमात्मनि जगत्त्रये।
109293 व्योमात्मनस्ते किमियमहन्ताव्योमतोदिता॥ ३॥
109294
109295 आस्तां जगच्चित्रस्याश्चर्यता तस्मिन् शून्यात्मनि
109296 चिद्व्योमात्मनस्तवाहन्तोदयस्ततोऽप्याश्चर्यभूत इत्याह-चित्तस्थेति॥ ३॥
109297
109298 सर्वं व्योमकृतं व्योम्ना व्योम्नि व्योम विलीयते।
109299 भुज्यते व्योमनि व्योम व्योम व्योमनि चाततम्॥ ४॥
109300
109301 यदि तु जगत्यपि चिद्व्योमतामेव पश्यसि तर्हि सा दृष्टिरेवं
109302 पर्यवसन्नेत्याश्चर्यमेवेत्याह-सर्वमिति॥ ४॥
109303
109304 वेष्टितं वासनारज्ज्वा दीर्घसंसृति दामवत्।

109305 वासनोद्वेष्टनेनैव तदिहोद्वेष्ट्यतेऽर्जुन ॥ ५ ॥
109306
109307 दीर्घं संसृति भ्रमणं यत्र तथाविधं तज्जगच्चित्रं दामवत् प्रसृतया
109308 वासनारज्वा वेष्टितं तच्चिद्व्योमापीह जगति वासनोद्वेष्टनादेवोद्वेष्ट्यत इत्यर्थः ॥
109309 ५ ॥
109310
109311 प्रतिबिम्बं यथादर्शे तथेदं ब्रह्मणि स्वयम् ।
109312 अगम्यं छेदभेदादेराधारानन्यतावशात् ॥ ६ ॥
109313
109314 अस्य ज्ञानातिरिक्तोपायदुरुच्छेद्यताप्यधिष्ठानदार्ढ्यबलादेव न स्वत इत्याह##-
109315
109316 अनन्यच्छेदभेदादि ब्रह्मणि ब्रह्मणाम्बरम् ।
109317 किं कथं कस्य केनैव छिद्यते वा क्व भिद्यते ॥ ७ ॥
109318
109319 अतएव ब्रह्मानन्यतादर्शनबलादेव जगतः
109320 सर्वच्छेदभेदादिव्यवहारायोग्यतादर्शनेन सर्ववासनाः समूलमुच्छेद्या
109321 इत्याशयेनाह-अनन्यदिति । यदा ब्रह्मणि प्रतिभातं छेदभेदादिव्यवहारजातं
109322 तद्विषयीभूतं जगच्च ब्रह्मणा अनन्यत्सच्चिदम्बरमेव तदा केन कर्त्रा करणेन वा
109323 केन प्रकारेण कस्य फलस्यार्थे क्व देशे काले वा किं छिद्यते भिद्यते वा ।
109324 छेदादिव्यवहारवादानां ब्रह्मातिरिक्तविषयदर्शनादित्यर्थः ॥ ७ ॥
109325
109326 तेनेह वासनाभावो बोधात्संपन्न एव ते ।
109327 यो न निर्वासनो नूनं सर्वधर्मपरोऽपि सन् ॥ ८ ॥
109328
109329 तेनानेनोपायेन बोधात्ते वासनानामपि ब्रह्मातिरेकेणाभावः संपन्न एव ।
109330 ईदृग्ज्ञानाभावे तु वासनाबन्धो दुरुच्छेद एवेति प्रागुक्तं स्मारयति-य इति ॥ ८
109331 ॥
109332
109333 सर्वज्ञोऽप्यतिबद्धात्मा पञ्जरस्थो यथा हरिः ।
109334 यस्यास्ति वासनाबीजमत्यल्पं चितिभूमिगम् ॥ ९ ॥
109335
109336 हरिः सिंहो हरितवर्णः शुको वा । अणुमात्रमपि वासना न स्थाप्या ।
109337 अनर्थसहस्रबीजत्वादित्याशयेनाह-यस्येति ॥ ९ ॥
109338
109339 बृहत्संजायते तस्य पुनः संसृतिकाननम् ।
109340 अभ्यासाद्धृदि रूढेन सत्यसंबोधवह्निना ।
109341 निर्दग्धं वासनाबीजं न भूयः परिरोहति ॥ १० ॥
109342
109343 निःशेषं दग्धम् ॥ १० ॥
109344
109345 दग्धं [व्याख्यानुसारादत्र निर्दग्धवासनाबीजमिति पाठोऽपेक्षितः ।]
109346 तु वासनाबीजं न निमज्जति वस्तुषु ।
109347 सुखदुःखादिषु स्वच्छं पद्मपत्रमिवाम्भसि ॥ ११ ॥
109348
109349 निर्दग्धानि वासनाबीजानि यस्य तथाविधं मनः ॥ ११ ॥
109350
109351 शान्तात्मा विगतभयोज्झितामिताशो निर्वाणो गलितमहामनोविमोहः ।
109352 सम्यक्त्वं श्रुतमवगम्य पावनं तत्तिष्ठात्मन्यपहतिरेकशान्तिरूपः ॥ १२
109353 ॥
109354
109355 उक्तोपदेशक्रममुपसंहरन्नर्जुनं निर्वासनस्थितौ प्रतिष्ठापयति-शान्तात्मेति
109356 । हे अर्जुन त्वं उज्झिताः अमिता आशा येन तथाविधः सन् पावनं तत् प्रसिद्धं

109357 भगवद्गीतारूपं श्रुतं मदुपदेशं सम्यगवगम्य गलितमहामनोविमोहः सन्
109358 अपहतिरपगतबन्धुवधादिक्लेशो भूत्वा निर्वासनात्मनि शान्तात्मा गलितचित्त
109359 एकशान्तब्रह्मरूपः अतएव विगतभयो निर्वाणः परमनिर्वृतस्तिष्ठेत्यर्थः ॥ १२ ॥
109360
109361 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० निर्वाणप्रकरणे पू० अर्जुनोपाख्याने
109362 अर्जुनविश्रान्तिवर्णनं नाम सप्तपञ्चाशः सर्गः ॥ ५७ ॥
109363
109364 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
109365 अर्जुनविऽस्रान्तिवर्णनं नाम सप्तपञ्चाशः सर्गः ॥ ५७ ॥
109366
109367 अष्टपञ्चाशः सर्गः ५८
109368
109369 अर्जुन उवाच ।
109370
109371 नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत ।
109372 स्थितोऽस्मि गतसंदेहः करिष्ये वचनं तव ॥ १ ॥
109373
109374 तत्त्वबोधेन साविद्यवासनाक्षयसंभवः ।
109375 इहोपपाद्यते तेनाप्यर्जुनस्य कृतार्थता ॥
109376
109377 हे अच्युत त्वत्प्रसादात् अनुग्रहप्रयुक्तत्वदुपदेशान्मोहः सवासनाज्ञानं नष्टः ।
109378 विस्मृतकण्ठचामीकरस्येव स्वतःसिद्धात्मतत्त्वस्य स्मृतिरिव स्मृतिः
109379 साक्षात्कारो लब्धा तया च सर्वसंदेहबीजनाशाद्गतबन्धुवधादिकर्तृतासंदेहः
109380 स्थितोस्मि अतस्तत्त्वावस्थितिविषयं यथाप्राप्तव्यवहारकर्तव्यताविषयं च तव
109381 वचनं करिष्ये पालयिष्यामीत्यर्थः ॥ १ ॥
109382
109383 श्रीभगवानुवाच ।
109384
109385 वृत्तयो यदि बोधेन संशान्ता हृदये स्फुटम् ।
109386 तच्चित्तं शान्तमेवान्तर्विद्धि सत्त्वमुपागतम् ॥ २ ॥
109387
109388 एवमर्जुनेन कृतार्थत्वे दर्शितेपि स्वोपदिष्टतत्त्वबोधेन
109389 समूलसर्ववासनाक्षयमुपपत्तिभिर्द्रढयिष्यन् श्रीभगवानुवाच-वृत्तय
109390 इत्यादिना । तत्त्वबोधेन हृदये रागादिवृत्तयो यदि सर्वात्मना शान्तास्तत्तर्हि
109391 सवासनात्मकं चित्तं शान्तं तत् सत्त्वं निर्वासनत्वमुपगतमिति विद्धि । तथा च
109392 श्रुतिः-यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतो
109393 भवत्यत्र ब्रह्म समश्नुते इति ॥ २ ॥
109394
109395 अत्र तच्चेत्यरहितं प्रत्यक्चेतननामक्रम् ।
109396 यत्त्वशेषविनिर्मुक्तं यत्सर्वं सर्वतश्च यत् ॥ ३ ॥
109397
109398 अत्र अस्यां सत्त्वावस्थायां प्रत्यक्चेतनात्मकं यद्व्यवहारे सर्वं
109399 तत्त्वतस्त्वशेषविनिर्मुक्तं तद्ब्रह्म चेत्यरहितं भवतीति शेषः ॥ ३ ॥
109400
109401 न केचन विदन्त्येते तत्पदं जागतादयः ।
109402 भूतलाद्गगनोड्डीनं विहंगममिवोन्नतम् ॥ ४ ॥
109403
109404 जागताश्चक्षुरादयोऽज्ञजनाश्च [अयमादिशब्दार्थः ।] केचन तत्पदं न
109405 विदन्ति । उन्नतमूर्ध्वदेशगतम् ॥ ४ ॥
109406
109407 प्रत्यक्चेतनमाभासं शुद्धं संकल्पवर्जितम् ।
109408 अगम्यमेनमात्मानं विद्धि दूरं दृशामिव ॥ ५ ॥

109409
109410 आभासं महाभूतादित्रयोदशबिघक्षेत्रावभासकम् | अगम्यमविषयम् | दृशां
109411 दूरमसंनिकृष्टमिव || ५ ||
109412
109413 सर्वातीतं यदत्यच्छं विना शुद्धं स्ववासना |
109414 न शक्नोति पदं द्रष्टुं जनदृष्टिरणूनिव || ६ ||
109415
109416 तद्दर्शने च श्रवणाद्यवधृततद्भावनास्वभ्यस्ता निदिध्यासनाख्या
109417 आवश्यकीत्याह-सर्वातीतमिति | चित्स्वभावादत्यच्छम् | असङ्गत्वाच्छुद्धम् || ६ ||
109418
109419 यत्प्राप्तौ सर्व एवेमे क्षीणा घटपटादयः |
109420 वराकी वासना तत्र किं करोतु परे पदे || ७ ||
109421
109422 यत्र घटादिस्थूलानामपि बाधस्तत्र परमसूक्ष्मवासनानां
109423 स्थितिरसंभावितैवेत्याह-यत्प्राप्ताविति || ७ ||
109424
109425 यथाऽनलगिरिं प्राप्य हिमलेशो विलीयते |
109426 शुद्धमासाद्य चित्तत्त्वमविद्या लीयते तथा || ८ ||
109427
109428 क्व वराकी रजस्तुच्छा वासना भोगबन्धनम् |
109429 क्व पूरितजगज्जालश्चित्तत्त्वविपुलानिलः || ९ ||
109430
109431 रजो रेणुरिव तुच्छा क्षुद्रा || ९ ||
109432
109433 तावत्स्फुरत्यविद्येयं नानाकारविकारिणी |
109434 यावन्न संपरिज्ञातः शुद्धः स्वात्माऽयमात्मना || १० ||
109435
109436 सर्वा दृश्यदृशः क्षीणाः स्वच्छतैवोदिता तथा |
109437 नभसीव पदे तस्मिन्स्वात्मन्यखिलपूरणे || ११ ||
109438
109439 स्वात्मनि स्वोदरे अखिलं पूरयति ग्रसति तथाविधे || ११ ||
109440
109441 समग्राकाररूपं तत्समग्राकारवर्जितम् |
109442 वागतीतं परं वस्तु केन नामोपमीयते || १२ ||
109443
109444 समग्राकारः पूर्णता तद्रूपम् | समस्तैर्जगदाकारैर्वर्जितम् || १२ ||
109445
109446 विषयविषविषूचिकामतस्त्वं निपुणमहंस्थितिवासनामपास्य |
109447 अभिमतपरिहारमन्त्रयुक्त्या भव विभवो भगवान्भियामभूमिः || १३ ||
109448
109449 हे अर्जुन त्वमतः पूर्णात्मदर्शनादेवाभिमतानां कामानां परिहारो
109450 निवृत्तिस्तल्लक्षणाया मन्त्रयुक्त्या विषयविषप्रयुक्तविषूचिकारूपां
109451 सदाप्रवृत्तिहेतुमहंस्थितिमन्तःकरणस्थां वासनां निपुणमपास्य विभवः
109452 विगतसंसारबन्धो भियां सर्वानर्थानामभूमिरभयस्वभावो भगवानहमेव
109453 भवेति सर्वभगवद्गीतार्थस्यान्ते संग्रहेणोपदेशः || १३ ||
109454
109455 श्रीवसिष्ठ उवाच |
109456
109457 इति गदितवति त्रिलोकनाथे क्षणमिव मौनमुपस्थिते पुरस्तात् |
109458 अथ मधुप इवाऽसिताब्जखण्डे वचनमुपैष्यति तत्र पाण्डुपुत्रः || १४ ||
109459
109460 मौनमुपगम्य पुरस्तात्स्थिते सति || १४ ||

109461
109462 अर्जुन उवाच।
109463
109464 परिगलितसमस्तशोकभारा परमुदयं भगवन्मतिर्गतेयम्।
109465 मम तव वचनेन लोकभर्तुर्दिनपतिना परिबोधिताब्जिनीव॥ १५॥
109466
109467 इत्युक्त्वोत्थाय गाण्डीवधन्वा स हरिसारथिः।
109468 अर्जुनो गतसंदेहो रणलीलां करिष्यति॥ १६॥
109469
109470 गाण्डीवं धनुर्यस्य सोऽर्जुनः। गाण्ड्यजगात्संज्ञायाम् इति मत्वर्थे वः।
109471 धनुषश्च इत्यनङ्॥ १६॥
109472
109473 करिष्यति क्षतगजवाजिसारथिद्रुतक्षरद्रुधिरमहानदीं भुवम्।
109474 शरोत्करप्रसरमहारजःस्थलीतिरोहितद्युमणिविलोचनां दिवम्॥ १७॥
109475
109476 सोऽर्जुनो भुवं क्षताः गजवाजिसारथयो द्रुताः शीघ्रं प्रवाहिता यासु तथाविधाः
109477 क्षरद्रुधिरमहानद्यो यस्यां तथाविधां करिष्यति। दिवं च
109478 शरोत्करप्रसरैर्महारजोनिर्मितस्थल्या च तिरोहितं द्युमणिः सूर्यस्तल्लक्षणं
109479 विलोचनं यस्यास्तथाविधां करिष्यतीत्यर्थः॥ १७॥
109480
109481 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वाणप्रकरणे पू०
109482 अर्जुनोपाख्याने अर्जुनकृतार्थता नामाष्टपञ्चाशः सर्गः॥ ५८॥
109483
109484 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
109485 अर्जुनकृतार्थता नामाष्टपञ्चाशः सर्गः॥ ५८॥
109486
109487 अर्जुनोपाख्यानं समाप्तम्।
109488
109489 एकोनषष्टितमः सर्गः ५९
109490
109491 श्रीवसिष्ठ उवाच।
109492
109493 एतां दृष्टिमवष्टभ्य राघवाऽघविनाशिनीम्।
109494 तिष्ठ निःसङ्गसंन्यासब्रह्मार्पणमयात्मकः॥ १॥
109495
109496 जीवन्मुक्तपदेऽस्पन्दा चेत्यमुक्ता चितः स्थितिः।
109497 सुस्थिरा स्याद्यया दृष्ट्या सा दृष्टिरिह वर्ण्यते॥
109498
109499 अघविनाशिनीं सर्वपापक्षयकरीम्। निःसङ्गतालक्षणो यः संन्यासः
109500 सर्वत्यागस्त्वंपदार्थशोधः सर्वजगतो ब्रह्मणि वाधलक्षणं यद्ब्रह्मार्पणं
109501 तत्पदार्थशोधस्तदुभयपरिशिष्टाखण्डमहावाक्यार्थसच्चिदानन्दैकरसभूमात्
109502 मा तिष्ठेत्यर्थः॥ १॥
109503
109504 यस्मिन्सर्वं यतः सर्वं यः सर्वं सर्वतश्च यः।
109505 यश्च सर्वमयो नित्यमात्मानं विद्धि तं परम्॥ २॥
109506
109507 यस्मिन् सर्वं स्थितौ। यतः सर्वं सृष्टौ। यः सर्वं संहारे। सर्वतश्च यः
109508 कालत्रयेऽपि। एवं सर्वानित्यप्रपञ्चमयोऽपि यो नित्यः परस्तमेवात्मानं विद्धि न
109509 परिच्छिन्नस्वभावमित्यर्थः॥ २॥
109510
109511 दूरस्थमप्यदूरस्थं सर्वगं तत्स्थमेव च।
109512 तत्स्थः सत्तामवाप्नोषि तदेवास्यस्तसंशयः॥ ३॥

109513
109514 सर्वप्रपञ्चबहिर्भावाद्दूरस्थमपि सर्वान्तरत्वात्सर्वस्यादूरस्थम्।
109515 एवमाकाशवत्सर्वगमपि तत्स्थं जातिवत्तत्तद्वस्तुपर्याप्तमेव। इत्थं
109516 सर्वप्रकारेणापि तदेवैकमस्ति नान्यदिति सिद्धे त्वं परिच्छिन्नरूपेणापि
109517 तस्मिंस्तिष्ठसीति तत्स्थस्तत्सत्तयैव सत्तामवाप्नोषि न स्वातन्त्र्येण। एवं सति किं तव
109518 परिच्छेदाभिमानेन स एवापरिच्छिन्नसन्मात्रस्त्वमसि। अतोऽस्तपरिच्छेद्संशयो
109519 भवेत्यर्थः॥ ३॥
109520
109521 यत्संवेद्यविनिर्मुक्तं संवेदनमनिर्मितम्।
109522 चेत्यमुक्तं चिदाभासं तद्विद्धि परमं पदम्॥ ४॥
109523
109524 द्विविधं हि चिदात्मनो रूपं विवेकिभिरनुभूयते। एकं चित्ततद्वृत्तिप्रतिबिम्बितं
109525 चेत्यार्थप्रथारूपं चित्तनिर्मितम्। अपरं च
109526 चित्ततद्वृत्तितद्विषयाणामागमापायादिसर्वावस्थासाक्षिसंविद्रूपमनिर्मितं
109527 नित्यसिद्धम्। तदुभयमपि चेत्येन संवेद्यं त्रिपुट्या च विनिर्मुक्तं चेत्तत्परमं
109528 पदं ब्रह्मैव संपन्नमिति विद्धीत्यर्थः॥ ४॥
109529
109530 सा परा परमा काष्ठा सा दृशां दृगनुत्तमा।
109531 सा महिम्नां च महिमा गुरूणां सा तथा गुरुः॥ ५॥
109532
109533 सा चेत्यसंवेद्यविनिर्मुक्तसंवित्स्थितिः। यतो वाचो निवर्तन्ते इत्यादिश्रुतिप्रोक्ता
109534 आनन्दोत्कर्षपरम्परायाः परमा काष्ठा। महिम्नां महत्त्वानाम्। गुरूणां
109535 मान्यानां परमा गुरुः। नातः परमस्तीत्यर्थः॥ ५॥
109536
109537 स आत्मा तच्च विज्ञानं स शून्यं ब्रह्म तत्परम्।
109538 तच्छ्रेयः स शिव शान्तः सा विद्या सा परा स्थितिः॥ ६॥
109539
109540 योऽयमन्तश्चितेरात्मा सर्वानुभवरूपकः।
109541 यत्र स्वदन्ते सर्वाणि स्वात्मद्रव्याणि सत्तया॥ ७॥
109542
109543 स जगत्तिलतैलात्मा स जगद्गृहदीपकः।
109544 स जगत्पादपरसः स जगत्पशुपालकः॥ ८॥
109545
109546 सैव सर्वजगत्सार इत्याह-स इत्यादिना॥ ८॥
109547
109548 स तन्तुर्भूतमुक्तानां परिप्रोतहृदम्बरः।
109549 स भूतमरिचौघानां परमा तीक्ष्णता तथा॥ ९॥
109550
109551 स पदार्थे पदार्थत्वं स तत्त्वं यदनुत्तमम्।
109552 स सतो वस्तुनः सत्त्वमसत्त्वं वा सतः स्वतः॥ १०॥
109553
109554 स एव सर्वपदार्थानामसाधारणं स्वरूपमित्याह-स इति। सत्त्वं सम्यक्त्वम्॥
109555 १०॥
109556
109557 यः स्ववित्तिविचित्रेण स्वयमात्मैव लभ्यते।
109558 सर्व एव जगद्भावा अविचारेण चारवः॥ ११॥
109559
109560 स कः। यः स्वस्य वित्तिस्तात्त्विकरूपेण बोधस्तद्रूपेण विचित्रेणालौकिकेनोपायेन सर्वं
109561 स्वयमात्मैव नान्यदिति लभ्यत इत्यर्थः॥ ११॥
109562
109563 अविद्यमानाः सद्भावा विचारविशरारवः।
109564 अहमादौ जगज्जाले मिथ्याभ्रमभरात्मनि॥ १२॥

109565
109566 सतः परमात्मनो भावा विकल्पा विचारविशरारव इत्युक्तं तत्र कीदृशेन विचारेण
109567 जगद्भावा विशीर्यन्ते तं दर्शयति-अहमित्यादिना ॥ १२ ॥
109568
109569 को नु भूत्वाऽनुबध्नामि वृत्तिं कथमवाप धीः।
109570 आद्यमध्यान्तमानानि संकल्पकलनान्यहम् ॥ १३ ॥
109571
109572 वृत्तिमास्थाम्। ननु धीरेव शुद्धस्यापि तव आस्थाबन्धे निमित्तं भविष्यति।
109573 तत्राह-कथमिति। धीर्बुद्धिरप्यसङ्गाद्वयं मां कथमवाप। तत्प्राप्तौ नास्ति
109574 हेतुरित्यर्थः। प्राप्नोति वा सा तथापि तत्कृता आदिमध्यान्तादिपरिच्छेदाः
109575 संकल्पकलनानि चाहमेव न मद्व्यतिरेकेण सन्तीति विचारे ब्रह्मणो मे
109576 नेयत्ताप्रसक्तिरित्याशयेनाह-आद्येति ॥ १३ ॥
109577
109578 ब्रह्माकाशमनाद्यन्तं केवेयत्ता ममात्मनः।
109579 इति निश्चयवानन्तः सम्यग्व्यवहृतिर्बहिः ॥ १४ ॥
109580
109581 एवं विचारवतो लोकशास्त्राविरुद्धव्यवहारकालेऽपि सा स्थितिर्नापैतीयाशयेनाह##-
109582
109583 उदयास्तमयोन्मुक्तस्थितिरन्तः स सर्वदा।
109584 नास्तमेति न चोदेति मनः समसमस्थितम् ॥ १५ ॥
109585
109586 यस्य मनः समेभ्योपि समे ब्रह्मणि स्थितं स महात्मा सर्वदा
109587 अन्तरुदयास्तमयोन्मुक्तस्थितिरिति परेणान्वयः ॥ १५ ॥
109588
109589 यस्य खस्येव शून्यत्वं स महात्मेह तद्वपुः।
109590 भावाद्वैतपदारूढः सुषुप्तपरया धिया ॥ १६ ॥
109591
109592 व्यवहारकाले तादृशस्थित्यप्रच्युतावुपपत्तिमाह-भावेति। यतोऽयं
109593 भावनयैत्राद्वयपदारूढो न व्यवहारत इत्यर्थः। तथाचाहुः भावाद्वैतं सदा
109594 कुर्यात्क्रियाद्वैतं न कर्हिचित्। अद्वैतं त्रिषु लोकेषु नाद्वैतं गुरुणा सह ॥ इति ॥ १६ ॥
109595
109596 व्यवहार्यपि संक्षोभं नैत्यादर्शनरो यथा।
109597 आदर्शपुरुषस्येव व्यवहारवतोऽपि च ॥ १७ ॥
109598
109599 न यस्य हृदयोल्लेखो मनागपि स मुक्तिभाक्।
109600 अविभागमिवादर्शे चिन्मणौ प्रतिबिम्बति ॥ १८ ॥
109601
109602 हृदयोल्लेखो मानापमानादिदुःखम्। कथं तस्मिंश्चिन्मणौ जीवन्मुक्ते
109603 व्यवहारः प्रसरति तत्रादर्श एव दृष्टान्त इत्याह-अविभागमिति। इवकारो
109604 भिन्नक्रमः। यथा आदर्शं दृश्यमानो जनव्यवहारः अविभागमादर्शस्य
109605 वैचित्र्यविभागविकारमकृत्वैव प्रतिबिम्बति तद्वच्चिन्मणावपीत्यर्थः ॥ १८ ॥
109606
109607 चितेः परमनैर्मल्याद्व्यवहारो यथा गतः।
109608 चिच्चमत्कृतिरेवेयं जगदित्यवभासते ॥ १९ ॥
109609
109610 नेहास्त्यैक्यं न च द्वित्वं ममादेशोऽपि तन्मयः।
109611 वाच्यवाचकशिष्येहागुरुवाक्यैश्चमत्कृतैः ॥ २० ॥
109612
109613 वाच्यवाचकशिष्यतदीहागुरुतद्वाक्याद्याख्यानकल्पनाचमत्कारैर्मम
109614 आदेशस्त्वदुपदेशोऽपि तन्मयश्चिन्मय एव ॥ २० ॥
109615
109616 आत्मनात्मनि शान्तैव चिच्चमत्कुरुते चिति।

109617 चित्प्रस्पन्दो हि संसारस्तदस्पन्दः परं पदम् ॥ २१ ॥
109618
109619 चमत्कुरुते विवर्तते । प्रस्पन्दो विवर्त एव ॥ २१ ॥
109620
109621 चित्स्पन्दशमनेनेयंन् परिशाम्यति संसृतिः ।
109622 महाचित्ते नतेऽर्थोंऽशभावा यो भावनाक्षयः ॥ २२ ॥
109623
109624 ते तव महति अपरिच्छिन्ने ब्रह्माकारे चित्ते नते परिणते सति यः अंशभावस्य
109625 जीवजगल्लक्षणैकदेशभावस्य योऽपगमः सोऽर्थः परमपुरुषार्थः स एव
109626 भावनाक्षयो वासनाक्षयश्चेत्यर्थः ॥ २२ ॥
109627
109628 असन्नपि स्वभावं तत्संवित्स्पन्द उदाहृतम् ।
109629 शून्यत्वमजडं यत्तत्परमाहुश्चितेर्वपुः ॥ २३ ॥
109630
109631 यद्यस्माद्धेतोः असन्नपि संवित्स्पन्द उदाहृतं जडस्वभावमापादयति
109632 तत्तस्माद्धेतोः स्पन्दशून्यत्वमेव अजडं तत्परमं चितेर्वपुः
109633 स्वरूपमित्यनुभवनिष्ठा आहुः ॥ २३ ॥
109634
109635 तत्त्वेन भावनायत्ता संसृतिः सानुभूयते ।
109636 अभावनामात्रलयात्सा च निःसाररूपिणी ॥ २४ ॥
109637
109638 अनात्मदर्शनरूपा या संसृतिःइ सा अनात्मजगदाकारस्य तत्त्वेन याथार्थ्येन या
109639 भावना तदायत्ता तथैवानुभूयते । तदभावनामात्रेण भावनालयात्सा
109640 जीवन्मुक्तसंसृतिर्दग्धपटवन्निःसाररूपिणी न बन्धक्षमेत्यर्थः ॥ २४ ॥
109641
109642 केवलं केवलीभावात्तद्रूपा सैव शिष्यते ।
109643 चित्स्पन्दमेव संसारचक्रप्रवहणं विदुः ॥ २५ ॥
109644
109645 कथं तर्हि जीवन्मुक्तौ सा शिष्यते तदाह-केवलमिति ।
109646 केवलीभावान्निःस्पन्दचिन्मात्रीभावात्सा संसृतिस्तद्रूपा चिद्रूपैव शिष्यते
109647 अतश्चित्स्पन्दमेव मातृमानादिरूपं संसारमाहुरित्यर्थः ॥ २५ ॥
109648
109649 मातृमानप्रमेयादि कटकादीव हेमनि ।
109650 पृथगस्ति न च स्पन्दश्चितेर्या संसृतिर्भवेत् ॥ २६ ॥
109651
109652 स च न चितः पृथगस्तीत्यबोध एव संसृतिः पर्यवस्यति ॥ २६ ॥
109653
109654 चित्तमेव चितिस्पन्दस्तदबोधो हि संसृतिः ।
109655 अबोधमात्रे चित्स्पन्दः कटकत्वमिवोत्थितम् ॥ २७ ॥
109656
109657 बोधमात्रविलीनेऽस्मिञ्छुद्धा चिद्राम शिष्यते ।
109658 स्वभावबोधमात्रेण क्षीयते भोगवासना ॥ २८ ॥
109659
109660 स्वभावः स्वात्मतत्त्वं तद्बोधमात्रेण ॥ २८ ॥
109661
109662 भोगाभावनमेवेह परमं ज्ञत्वलक्षणम् ।
109663 इतो नाभिमताः सर्वे ज्ञस्य भोगाः स्वभावतः ॥ २९ ॥
109664
109665 भोगवासनाक्षयात्सहजसिद्धभोगानामचिन्तनमेव ज्ञत्वस्य जीवन्मुक्तताया
109666 लक्षणम् । कुतोऽसौ भोगान्न भावयति तत्राह-इत इति ॥ २९ ॥
109667
109668 भवन्ति कोऽतितृप्तो हि दुरन्नं किल वाञ्छति ।

109669 एतदेव परं विद्धि ज्ञत्वस्यापरलक्षणम् ॥ ३० ॥
109670
109671 भवन्तीति पूर्वान्वयि। को न भूत्वेत्यादिना वर्णितेभ्यो विवेकादिलक्षणेभ्यः अपरं
109672 लक्षणम् ॥ ३० ॥
109673
109674 स्वभावेनैव भोगानां यत्किलानमिवाञ्छनम्।
109675 चित्तत्स्पन्दैव सर्वात्मरूपिण्यस्तीति निश्चयः ॥ ३१ ॥
109676
109677 इदानीं लक्षणान्तरमाह-चिदिति। मदीयात्मचिदेव तेन भोक्तृभोग्यभोगाकारेण
109678 स्पन्दते इति तत्स्पन्दा भूत्वा सर्वात्मरूपिणी अस्तीति योऽन्तर्निश्चयः स्वभ्यासः सन्
109679 प्ररूढः स एव ज्ञत्वलक्षणमित्यर्थः ॥ ३१ ॥
109680
109681 योऽन्तः प्ररूढः स्वभ्यासो ज्ञत्वशब्देन स स्मृतः।
109682 यो न भुङ्क्ते भुज्यमानानपि भोगान्स बुद्धिमान्।
109683 लोकानुरोधसिद्ध्यर्थं स हन्ति लगुडैर्नभः ॥ ३२ ॥
109684
109685 या तु तस्य सर्वजनवद्देहधारणनिमित्ते भोगे प्रवृत्तिः सा वृथा चेष्टैवेत्याह##-
109686 बुद्धिमांस्तत्त्ववित् भ्रान्त्या नभोहननप्रसक्तलोकानुरोधसिद्ध्यर्थं स्वयमपि
109687 लगुडैर्नभो हन्ति तद्वत्तस्य वृथा चेष्टैव सेत्यर्थः ॥ ३२ ॥
109688
109689 विना कृत्रिमया बुद्ध्या न सिद्धिरवगम्यते ॥ ३३ ॥
109690
109691 ननु सा यदि वृथा चेष्टा तर्हि सर्वजनभोक्तृभोग्यभोगाकारपरिणतात्मचिदेव
109692 सर्वात्मरूपेति प्रागुक्तबुद्धिरपि सर्वजननभोलगुडहननं
109693 मदीयमेवेतिवद्भ्रान्तिबुद्धित्वात्कृत्रिमैवेति सा कथं लक्षणत्वेनोक्ता तत्राह##-
109694 सर्वात्मभावदर्शनं परिच्छिन्नात्मदृष्टिनिरासद्वारा तत्त्वावगमोपयुक्तमिति
109695 तल्लक्षणमुक्तमित्यर्थ ॥ ३३ ॥
109696
109697 क्वचिदात्मावलोके च स्वाङ्गावदलनैरपि।
109698 चिच्चेत्यं चेत्यकोटिस्था तावत्पश्यति विभ्रमम् ॥ ३४ ॥
109699
109700 तर्हि देहात्मबुद्धिनिरासद्वारा तत्त्वदर्शनोपयोगित्वात्
109701 हस्तगदादिस्वाङ्गानामवदलनादिसाहसक्रियापि तल्लक्षणं किं न स्यात्तत्राह##-
109702 सर्वात्मतादर्शनवत्स्वात्मावलोके उपयोगः प्रसिद्ध स्यात्तदा तदपि लक्षणं
109703 स्यान्नतु तदस्तीत्यर्थः। अथवा अकृत्रिमयेति च्छेदः। आत्मावलोके स्वरूपाविर्भावे
109704 अकृत्रिमयाऽपरिच्छिन्नाकारशून्यया अखण्डब्रह्माकारबुद्ध्या विना
109705 स्वाङ्गावदलनैः स्वाङ्गावदलनसदृशसाहसकोटिभिरपि सिद्धिरूपयोगो
109706 नावगम्यत इत्यर्थः। तत्कुतस्तत्राह-चिदिति त्रिभिः। इयं चित् यावदबोधात्मा
109707 अज्ञानच्छन्ना भवति तावच्चेत्यकोटिस्था स्वप्रकाशबुद्ध्यादिकोट्यनुप्रविष्टा सती
109708 स्वयमपि स्पन्दरूपिणीव भूत्वा चेत्यं बाह्यविषयं प्रतिस्पन्दते तेन विभ्रमं
109709 पश्यति ॥ ३४ ॥
109710
109711 इदं यावदबोधात्मा स्पन्दते स्पन्दरूपिणी।
109712 सम्यग्बोधोदयोन्तः स्यात्स्पन्दास्पन्ददशाक्रमः ॥ ३५ ॥
109713
109714 यदा अन्तः सम्यग्बोधोदयः स्यात्तदा स्पदास्पन्ददशाक्रमः साभिधानकः
109715 स्वनाम्ना सह क्वापि याति बाध्यत इत्यर्थः ॥ ३५ ॥
109716
109717 क्वापि याति च संशान्तदीपवत्साभिधानकः।
109718 चितः प्रशान्तरूपाया दीपिकायाः स्वभावतः ॥ ३६ ॥
109719
109720 स्पन्दास्पन्दमयी नेह कथैवास्ति मनागपि।

यदस्पन्दस्य मरुतो न सन्नासन्न मध्यगम् ॥ ३७ ॥

आत्यन्तिकप्राणचेष्टोपरमोऽपि स एवेत्याह-यदिति। मध्यगमनिर्वचनीयमपि रूपं यन्न ॥ ३७ ॥

रूपं तदेवासंवित्तिस्पन्दायाः प्रशमं चितेः।
अभिन्नः स्याच्चितः स्पन्दः शुद्धचित्स्फाररूपधृक् ॥ ३८ ॥

न विद्यते असंवित्तिरज्ञानं स्पन्दश्च यस्याश्चितेः। प्रथमं मोक्षाख्यं विदुरित्यर्थः। यदा चित्तात्मा चितः स्पन्दः शुद्धचितः स्फाररूपं ब्रह्माकार स्तस्य धृग्भवति तदा न वन्धाय न माक्षाय ॥ ३८ ॥

न बन्धाय न मोक्षाय स्थित आत्मनि केवलम्।
चिच्चेन्निरर्थसंवित्तिनिर्वाणे न च विन्दते ॥ ३९ ॥

चित् निरर्थे व्यर्थे संवित्तिश्चित्ताकारो निर्वाणं तदुपरमश्च ते द्वे दशे न विन्दते चेत् ॥ ३९ ॥

तद्बन्धमोक्षपक्षादेर्नामापीह न विद्यते।
मोक्षोऽस्त्वित्येव बोधोऽन्तः पूर्णता क्षयकारणम् ॥ ४० ॥

तत्तर्हि ॥ ४० ॥

समास्त्वित्यपि बन्धस्ते श्रेयोऽसंवेदनं परम्।
यदनाभासमजडं तद्विद्धि परमं पदम् ॥ ४१ ॥

स मोक्षो मास्तु समा निर्विक्षेपा चिदस्त्विति वा इच्छापि बन्धः। किं तर्हि श्रेयस्तदाह-श्रेय इति सपादेनार्धद्वयेन ॥ ४१ ॥

चितः स्वरूपं संस्थानमचेत्योन्मुखतात्मकम्।
यः संकल्पनशब्दार्थरूपः स्पन्दो महाचितः ॥ ४२ ॥

कस्तर्हि बन्धमोक्षादिकव्यवहारार्हः पदार्थस्तमाह-य इति ॥ ४२ ॥

बन्धमोक्षादिकार्होऽसौ प्रेक्ष्यमाणः प्रणश्यति।
प्रेक्षणादेव संशान्ते त्वहंभावे निरास्पदे ॥ ४३ ॥

न विद्मः केन किं कस्य बध्यते वाथ मुच्यते।
संकल्प एव रचिते बुधश्चेदविभागवान् ॥ ४४ ॥

कस्तर्हि चितः संकल्पस्पन्दत्यागे उपायस्तमाह-संकल्प एवेति। बुधो विवेकी स्वरचिते संकल्प एव चेदिदं मया संकल्पितमिदं नेति पूर्वापरविमर्शेन विभागं जहाति तत्तर्हि जातोपि संकल्पो बहिःस्पन्दजननाक्षमो वृथा नश्यतीत्यर्थादिव सर्वमवारितमसंकल्पमस्पन्दं च जातमेवेत्यर्थः ॥ ४४ ॥

तदसंकल्पमस्पन्दं सर्वं जातमवारितम्।
स्पन्दे स्पन्दमये वाते तन्मयत्वात्सदा चिता ॥ ४५ ॥

एवं चिता प्रबुद्धचैतन्येन स्पन्दे संक्षीणे स्पन्दमये वाते च संक्षीणे सति तन्मूलः संसारोऽपि क्षीण एवेत्याह-स्पन्दे इति ॥ ४५ ॥

संक्षीणे न च संसारो निस्पन्दे चिद्घने स्थिते।

109773 चित्तेज एव चित्स्पन्द इति बुद्धे निरन्तरम् ॥ ४६ ॥
109774
109775 अथवा चित्प्रकाशव्यतिरेकेण स्पन्दोऽन्यो नास्तीति दर्शनादपि तन्निवृत्तिरित्याह-चिदिति
109776 ॥ ४६ ॥
109777
109778 व्यतिरिक्तश्चितः स्पन्दो न किंचिदवशिष्यते।
109779 न ज्ञो मोहमुपादत्ते सर्वगत्वात्स्वसंविदः ॥ ४७ ॥
109780
109781 मोहं स्वचलनादिभ्रमम् ॥ ४७ ॥
109782
109783 यत्रोदेति प्रसभमनिशं सर्गसंवित्तिसत्ता यस्मिन्नेते सकलकलनाकारपङ्क्ता
109784 गलन्ति।
109785 उद्यन्त्येते स्वदनसुभगं यत्र सर्वोपलम्भा ध्यानेनैवं तमवगमय
109786 प्रत्यगात्मानमन्तः ॥ ४८ ॥
109787
109788 अनिशं यस्मिन् प्रसभं वार्यमाणा अपि बलात् सर्वजगदाकारोपलम्भाः स्वदनं
109789 तत्प्रयुक्तानन्दास्वादस्तेन सुभगं यथा स्यात्तथा उद्यन्ति उत्पद्यन्ते। तथा
109790 उक्तसर्वसंवित्तीनां सत्तास्थितिरपि यत्रोदेति। एते उक्तसंवित्तिरूपाः
109791 सकलकलनाकारपङ्क्ता यस्मिन्गलन्ति लीयन्ते च तं प्रत्यगात्मानमेवमुक्तप्रकारेण
109792 ध्यानेन विचारेणावगमय पश्येत्यर्थः ॥ ४८ ॥
109793
109794 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाणप्रकरणे पू०
109795 प्रत्यगात्मावबोधो नामैकोनषष्टितमः सर्गः ॥ ५९ ॥
109796
109797 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
109798 प्रत्यगात्मावबोधो नामैकोनषष्टितमः सर्गः ॥ ५९ ॥
109799
109800 षष्टितमः सर्गः ६०
109801
109802 श्रीवसिष्ठ उवाच।
109803
109804 एवमाद्यं परं तत्त्वं चिद्घनं परमं पदम्।
109805 तत्स्था एते महारूपा ब्रह्मविष्णुहरादयः ॥ १ ॥
109806
109807 अद्वितीयस्य शुद्धस्य परस्य निजमायया।
109808 सर्वाकारैः स्थितिरिह विभूतिरुपदिश्यते॥
109809
109810 वर्णितब्रह्मणो विभूतीः प्रपञ्चयिष्यंस्तत्र मुख्यान्प्रथमं निर्दिशति##-
109811 मानुषादिहरान्तेष्विति भावः ॥ १ ॥
109812
109813 विभूतिभिः स्फुरन्त्युच्चैर्जनास्तुष्टा नृपा इव।
109814 आकाशगमनाद्याभिः क्रीडाभिः क्रीड्यते चिरम् ॥ २ ॥
109815
109816 नृपा मानुषानन्दविभवपूर्णा इवेति
109817 तैत्तिरीयश्रुतिदर्शितानन्दोत्कर्षक्रमप्रथमभूमिकानिर्देशः। तदुक्तभूमिकासु
109818 सुखोत्कर्षमाह-आकाशेति। क्रीड्यते तत्स्थेनैव जनेनेति परेणान्वयः ॥ २ ॥
109819
109820 तत्स्थेनैव जनेनेह स्वर्गे स्वर्गौकसो (स्वर्गौकसा यथा इत्युभयत्र पाठः
109821 ) यथा।
109822 तत्प्राप्याङ्ग न म्रियते तत्प्राप्याङ्ग न शोच्यते ॥ ३ ॥
109823
109824 तस्मिन्ब्रह्मणि आनन्दस्फूर्तिविरोधिमालिन्यक्षयतारतम्येन तिष्ठतीति तत्स्थो

109825 मनुष्यगन्धर्वादिर्जनस्तेन। स्वर्गौकसो [स्वर्गौकसा थ्था इत्युभयत्र पाठः।
109826 ] यथेति तदुत्तरगन्धर्वाद्युत्तरभूमिकोदाहरणार्थम्।
109827 तत्सर्वानन्दोत्कर्षावधिभूतं ब्रह्म तत्त्वबोधेन प्राप्य। अङ्गेति संबोधने॥ ३॥
109828
109829 तत्प्राप्य जीव्यते नाङ्ग तत्प्राप्याङ्ग न रुध्यते।
109830 अपारपरमाकाशरूपिणः परमात्मनः॥ ४॥
109831
109832 न जीव्यते प्राणधारणनिमित्तैरशनायादिभिर्न पीड्यते। न रुध्यते कुड्यादिभिः॥ ४॥
109833
109834 सत्तासामान्यरूपं चेन्मनागपि विभाव्यते।
109835 तत्त्वं निमेषमात्रेण जन्तुर्मुक्तमना मुनिः।
109836 कुर्वन्संसारकर्माणि न भूयः परितप्यसे॥ ५॥
109837
109838 तत्तत्त्वं जन्तुः साधारणजन्तुशरीरोऽपि यदि स्यात्तथापि न परितप्यसे किं
109839 पुनरुत्तमशरीर इत्युत्तरेणान्वयः॥ ५॥
109840
109841 श्रीराम उवाच।
109842
109843 मनो बुद्धिरहंकारश्चित्तं यत्र क्षयं गतम्।
109844 सत्तासामान्यमाभातं मनस्वी स किमुच्यते॥ ६॥
109845
109846 यद्विभावनाज्जन्तुर्न परितप्यते तत्सत्तासामान्यरूपं किं निर्विशेषमुत सविशेषम्।
109847 आद्ये तस्य विभूतिवर्णनगसंगतम्। द्वितीये तत्प्राप्य जन्तुर्न परितप्यते
109848 इत्यात्यन्तिकपरितापोच्छेदवर्णनमयुक्तमित्याशयेन रामः पृच्छति-मन इति।
109849 मनोबुद्ध्यासि सर्वद्वैतं यत्र क्षयं गतं तन्निर्विशेषमाभातं
109850 पूर्णचिन्मात्रमेव सत्तासामान्यमिति त्वयोच्यते उत मनस्वी मन##-
109851
109852 श्रीवसिष्ठ उवाच।
109853
109854 यद्ब्रह्म सर्वदेहस्थं भुङ्क्ते पिबति वल्गति।
109855 आदत्ते विनिहन्त्यन्तः संवित्संवेद्यवर्जितम्॥ ७॥
109856
109857 नात्र प्रपञ्चबाधोत्तरपरिशिष्टनिर्विशेषमिति वा तत्पूर्वकालिकं सविशेषमिति वा
109858 विभज्य सत्तासामान्यमुक्तं किंतु सर्वजीवभावेष्वीश्वरभावे मुक्तौ च
109859 यदनुस्यूतमखण्डदण्डायमानं सन्मात्रं तदेवोक्तं तदेव जगतस्तत्त्वम्। तत्र
109860 तु त्वदभिप्रेतो न कश्चिद्विरोध इत्याशयेन वसिष्ठः समाधत्ते-यदिति।
109861 आदत्तेऽन्तर्जाग्रत्स्वप्नसर्गकाले। विनिहन्ति सुषुप्तिप्रलययोः। संविन्संवेद्यवर्जितं
109862 तुरीयतायाम्॥ ७॥
109863
109864 तत्सर्वगतमाद्यन्तरहितं स्थितमर्जितम्।
109865 सत्तासामान्यमखिलं वस्तुतत्त्वमिहोच्यते॥ ८॥
109866
109867 स्थितमेव् कण्ठवामीकरवद्बोधेनार्जितम्॥ ८॥
109868
109869 तत्स्थितं खतया व्योम्नि शब्दे शब्दतया स्थितम्।
109870 स्पर्शे स्थितं स्पर्शतया त्वचि तत्त्वक्तया स्थितम्॥ ९॥
109871
109872 तदेव वियदादिकार्यानुस्यूतं तद्विभूतितयोपवर्ण्यते
109873 सार्वात्म्यप्रदर्शनायेत्याह-तदित्यादिना॥ ९॥
109874
109875 रसे लीनं रसतया रसनायां तु तत्तया।
109876 रूपे रूपतया दृष्टं नेत्रे लीनं च दृक्तया॥ १०॥

तत्तया रसनेन्द्रियतया। नेत्रे चक्षुरिन्द्रिये॥ १०॥

घ्राणे घ्राणतया दृष्टं गन्धे गन्धतयोदितम्।
पुष्टं कायतया काये भूमावपि च भूतया॥ ११॥

पयस्तया च पयसि वायौ वायुतया स्थितम्।
तेजस्तया तेजसि च बुद्धौ बुद्धितया गतम्॥ १२॥

मनस्तया मनस्यन्तरहंकृत्याप्यहंकृतौ।
रूढं संविदि संवित्त्या चित्ते चित्ततयोत्थितम्॥ १३॥

अहंकृत्या अहंकारतया। संविदि बुद्धौ। संवित्त्या बुद्धितया॥ १३॥

वृक्षे वृक्षतया लग्नं पटे पटतयोदितम्।
घटे घटतया रूढं वटे वटतयोत्थितम्॥ १४॥

स्थावरे स्थावरत्वेन जंगमत्वेन जंगमे।
पाषाणत्वेन पाषाणे चेतनत्वेन चेतने॥ १५॥

चेतने चतुर्विधभूतेषु॥ १५॥

अमरेष्वमरत्वेन नरत्वेन नरेषु च।
तिर्यक्त्वेन च तिर्यक्षु क्रिमित्वेन क्रिमिस्थितौ॥ १६॥

तत्र विशेषाकारसत्तापि तदेवेत्याह-अमरेष्विति॥ १६॥

कालक्रमे कालतया ऋतावृतुतया तथा।
त्रुटिक्षणनिमेषादौ संस्थितस्तत्तया विभुः॥ १७॥

कालस्य क्रमे युगसंवत्सरत्वादिभेदे। ऋतावित्यादिस्तत्प्रपञ्चः॥ १७॥

शुक्ले शुक्लतया जातं कृष्णे कृष्णतया स्थितम्।
क्रियासु स्पन्दरूपेण नियतौ नियमेन च॥ १८॥

नियमेन नियतितया॥ १८॥

संस्थितः संस्थितौ स्थित्या नाशे नाशतया स्थितः।
उत्पत्तिरूपेणोत्पत्तावास्थितः परमेश्वरः॥ १९॥

बाल्येन बाल्ये विश्रान्तो यौवने यौवनेन च।
जरसा च जरारूपे मरणे मरणेन च॥ २०॥

बाल्येनेत्यादयो भावप्रधाननिर्देशः॥ २०॥

इति सर्वपदार्थानामभिन्नः परमेश्वरः।
कल्लोलसीकरोर्मीणामब्धाविव पयोभरः॥ २१॥

पयोभरो जलसामान्यमिव॥ २१॥

नानातैषां त्वसत्यैव सत्येनानेन चैव हि।
कल्पिता चित्स्वभावेन वेतालः शिशुना यथा॥ २२॥

109929
109930 कथमयमेवैको नानात्वेन स्थित इति चेत्स्वाज्ञानभ्रान्तिकल्पनयैव न वस्तुत
109931 इत्याह-नानातेति ॥ २२ ॥
109932
109933 सर्वत्र संस्थितिमता विगतामयेन व्याप्तं मयेदमखिलं विविधैर्विलासैः ।
109934 चिद्रूपिणैव कलना कलितात्मनेति मत्वोपशान्तमतिरास्स्व सुखं महात्मन् ॥ २३ ॥
109935
109936 श्रीवाल्मीकिरुवाच ।
109937
109938 इत्युक्तवत्यथ मुनौ दिवसो जगाम सायंतनाय विधयेऽस्तमिनो जगाम ।
109939 स्नातुं सभा कृतनमस्करणा जगाम श्यामाक्षये रविकरैश्च सहाजगाम ॥
109940 २४ ॥
109941
109942 हे महात्मन् सर्वत्र संस्थितिमता चिद्रूपिणा मया आत्मना स्वेनैवेयं जगत्कलना
109943 कलिता कल्पिता । इदमखिलं मयैव विविधैर्विलाप्तैर्व्याप्तं ममैवेयं विभूतिर्न
109944 मद्यतिरिक्तं किंचिदस्तीति मत्वा उपशान्ता मतिर्यस्य तथाभूत आस्स्व । स्वमहिन्नि
109945 तिष्ठेत्यर्थः ॥ २३ ॥ २४ ॥
109946
109947 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाणप्रकरणे पू०
109948 विभूतियोगोपदेशो नाम षष्टितमः सर्गः ॥ ६० ॥
109949
109950 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
109951 विभूतियोगोपदेशो नाम षष्टितमः सर्गः ॥ ६० ॥
109952
109953 षोडशो दिवसः ॥ १६ ॥
109954
109955 एकषष्टितमः सर्गः ६१
109956
109957 श्रीराम उवाच ।
109958
109959 यथास्माकं मुने स्वप्नपुरपत्तनमण्डलम् ।
109960 तथैव पद्मजादीनां यदि देहपरिग्रहः ॥ १ ॥
109961
109962 इह प्रसाध्यते युक्त्या स्वप्नमायासमं जगत् ।
109963 सर्वत्र चाविरोधेन भ्रान्त्या सर्वस्य संभवः ॥
109964
109965 यदि सर्व जगत्परमात्मनः स्वप्नसदृशी भ्रान्तिकल्पितविभूतिस्तर्हि ब्रह्मादिदृशा
109966 स्वप्नवद्भ्रान्तिरित्येव भासते । अस्मदादिदृशा तु न स्वप्नतुल्यः किंतु दृढतरः
109967 सत्य इत्येव भासत इति वैषम्ये को हेतुः । न च दीर्घकालानुवृत्त्यास्माकं तथा
109968 भातीति तत्समाधानं युक्तम् । ब्रह्मादीनां परार्धद्वयायुषां ततोपि चिरकालं
109969 संसारानुवृत्त्या सत्यतादाढ्याधिक्यापत्तेरित्याशयेन रामः पृच्छति##-
109970
109971 तथैवेदं च संजातं यदि सर्वमसन्मयम् ।
109972 तदस्माकं दृढतरः प्रत्ययः कथमुत्थितः ॥ २ ॥
109973
109974 अस्माकं अस्माकमेव प्रपञ्चे दृढतरः सत्यताप्रत्ययः कथमुत्थितो न
109975 पद्मजादीनामित्यर्थः ॥ २ ॥
109976
109977 श्रीवसिष्ठ उवाच ।
109978
109979 अस्मत्सर्गवदाभाति पूर्वसर्गः प्रजापतेः ।
109980 आजीवप्रतिभासात्मा विद्यते न तु वास्तवः ॥ ३ ॥

अबाधितचिरानुवृत्तिरेव सत्यताभ्रमदार्ढ्यहेतुर्न बाधितचिरानुवृत्तिरित्याशयेन
वसिष्ठः समाधत्ते-अस्मदिति। यदायं पद्मजः पूर्वमुपासकावस्थोऽभूत्तदा
तत्त्वज्ञानाभावादस्य प्रजापतेस्तदानींतनः पूर्वसर्ग
इदानीमस्मदनुभूयमानसर्गवदेव
आसमन्ताच्चतुर्विधभूतग्रामलक्षणजीवप्रतिभासात्मा सत्य एवाभाति तथापि
सांप्रतं तस्य तत्त्वज्ञानबाधितत्वाद्वास्तवो न विद्यते ॥ ३ ॥

सर्वगत्वाच्चितेः सर्वं जीवः सर्वत्र संसृतिः।
सा चासम्यग्दर्शनोत्था सम्यग्दर्शननाशिनी ॥ ४ ॥

यावदज्ञानं तावच्चितेः सर्वगत्वात्सर्वं जीवो भवति। सर्वत्र च संसृतिः सत्येव
भवति। सा च सम्यग्दर्शनविरोध्यज्ञानोत्था सम्यग्दर्शनेन नष्टुं
शीलमस्यास्तथाविधेत्यर्थः ॥ ४ ॥

स्वप्नाभः प्रतिभासोऽस्य य एष समुपस्थितः।
अहंताप्रत्ययैकात्मा स एवातिदृढं स्थितः ॥ ५ ॥

अतएवास्य प्रजापतेस्तत्त्वज्ञानबाधितः स्वप्नाभः पेलवः प्रपञ्चप्रतिभासो यः
समुपस्थितः सः अज्ञास्मदाद्यहंताप्रत्ययेनैकात्मा एकीभूतः सन् अतिदृढं
स्थितः ॥ ५ ॥

स्वप्ने क्षिप्रविनाशित्वं यथा पुंसा न दृश्यते।
सर्वस्वप्ने तथैवैतद्ब्रह्मणामिह लक्ष्यते ॥ ६ ॥

तर्हि प्रजापतिभिः स्वकल्पितप्रपञ्चस्य तत्त्वबोधेन क्षिप्रविनाशिता कुतो नानुभूयत
इति चेद्भोजकादृष्टेन प्रतिबन्धादित्याशयेनाह-स्वप्ने इति। यथा सुप्तपुंसा
स्वाप्नभोगप्रदकर्मप्रतिरुद्धत्वात्स्वप्ने विद्यमानमपि क्षिप्रविनाशित्वं न
दृश्यते तथा समष्टिस्वप्ने जगत्यपि ब्रह्मणां पद्मजानामिह विनाशित्वबोधे
प्रतिबन्धो लक्ष्यत इत्यर्थः ॥ ६ ॥

स्वप्नोऽयं पुरुषस्यास्य प्रतिभासस्य यो भवेत्।
रामाऽस्मदादिसर्वात्मा भवेत्तादृश एव च ॥ ७ ॥

हे राम अस्य सुप्तपुरुषस्य प्रतिभासस्य प्रतीतेरयं प्रसिद्धः स्वप्नः
अस्मदादिसर्वजीवजगदात्मा यादृशोऽनाद्यनन्तप्रवाहरूप इत्येव भवेत्प्रजापतेरपि
तादृश एव भवेदित्यर्थः ॥ ७ ॥

यत्स्वप्नपुरुषाज्जातं तत्स्वप्नपुरुषात्मकम्।
भवतीत्यनुभूतं हि यद्बीजं तत्फलं यथा ॥ ८ ॥

अस्तु तादृशः किं ततस्तत्राह-यदिति। यथा तस्याम्रादेर्बीजमेव
तज्जन्यवृक्षफलात्मना परिणतं न वस्त्वन्तरं तद्वदित्यर्थः ॥ ८ ॥

असत्यमेव तद्विद्धि यदसत्येन साध्यते।
असत्येऽर्थे समर्थेऽपि न युक्तं भावनं घनम् ॥ ९ ॥

अस्त्वेवं ततोऽपि किं तत्राह-असत्यमेवेति। असत्येन मनःपुरुषेण यत्साध्यते
तदसत्यमेवेति सिद्धम् अतो जन्मान्तरस्वर्गनरकाद्यर्थक्रियासमर्थेऽपि घनं
सत्यत्वभावनं न युक्तमित्यर्थः ॥ ९ ॥

येन तेन परित्याज्यमसद्भावनभावनम्।

110033 दृढप्रत्ययितं स्वप्नपुरुषाद्यत्समुत्थितम् ॥ १० ॥
110034
110035 येन हेतुना न युक्तं तेन हेतुना दृढप्रत्ययितमपि परित्याज्यम् ॥ १० ॥
110036
110037 भवत्यात्मनि सर्गादि दृढप्रत्ययमेव तत् ।
110038 निमेषमात्रः पौरोऽयं सर्गस्वप्नः पुरः स्थितः ॥ ११ ॥
110039
110040 किंचास्मदादीनामपि स्वाप्नसर्गादि यद्भासते तत्तदानीं दृढप्रत्ययमेव भवति
110041 न मिथ्याबुद्धिवत्तदा दृश्यते नैतावतास्य सत्यतेत्यर्थः । अभ्युपेत्य प्राजापत्यस्य
110042 सर्गस्य दीर्घकालस्थायित्वमिदं सर्वमुक्तम् । वस्तुतस्तु तस्य दैर्घ्यमपि
110043 हरिश्चन्द्रस्वप्नदैर्घ्यवदल्पकालेऽपि संभवतीत्याह-निमेषमात्र इति । वार्षिकः
110044 पूर इव प्रवृद्धः पौरः अयं प्राजापत्यः सर्गस्वप्नः ॥ ११ ॥
110045
110046 तस्मिन्निमेष एवास्मिन्कल्पता परिकल्प्यते ।
110047 सुदीर्घस्वप्नखण्डोऽयं यथोदेति प्रजापतेः ॥ १२ ॥
110048
110049 प्रजापतेरिव सर्वेषामपि स्वस्वप्नेषु तदानीं दीर्घप्रपञ्चताप्रत्ययोऽस्त्येवेत्याह##-
110050
110051 सर्गाख्यः सर्वभूतानां प्रत्येकमुदितस्तथा ।
110052 चित्तत्त्वस्यैव भावेन सर्गवर्गपरम्परा ॥ १३ ॥
110053
110054 चिदधीनप्रसिद्धिकत्वरूपं दृश्यत्वं मिथ्यात्वे प्रयोजकं तच्चोभयत्रापि
110055 समानमित्याशयेनाह-चित्तत्त्वस्येति ॥ १३ ॥
110056
110057 स्फुरत्यम्भो द्रवत्वेन यथावर्तविवर्तनैः ।
110058 यथा स्वप्नात्मिकैवेयं सर्गलक्ष्मीर्न वास्तवी ॥ १४ ॥
110059
110060 तदा संभवतीदं वै तत्पदं प्रलयं गतम् ।
110061 यद्यथा यादृशं दृष्टं तत्तादृग्विद्यते तथा ॥ १५ ॥
110062
110063 तत्प्राजापत्यं पदं सर्गादिसहितं प्रलय गतमत्यन्तासदेवेति न निरोधो न चोत्पत्तिर्न
110064 बद्धो न च साधकः । न मुमुक्षुर्न वै मुक्तिरित्येषा परमार्थता ॥ इतीदं प्रसिद्धं
110065 श्रुतिवचनं संभवतीत्यर्थः । नन्वत्यन्तासदेवेदं चेत्कथं व्यवहारार्हमिति
110066 चेत्तथा दृष्टत्वादेव नात्र पर्यनुयोज्यमस्तीत्याह-यद्यथेति ॥ १५ ॥
110067
110068 न हि पर्यनुयोक्तव्याः स्वप्नविभ्रमरीतयः ।
110069 न तदस्ति जगत्यस्मिन्यन्न संभवति भ्रमे ॥ १६ ॥
110070
110071 अज्ञानस्याघटितघटनासामर्थ्यादपि न पर्यनुयोज्यतेत्याह-न तदिति ॥ १६ ॥
110072
110073 विचित्रास्त्रिषु लोकेषु दृश्यन्ते वस्तुदृष्टयः [वस्तुसृष्टयः इति पाठः ।
110074 ] ।
110075 जलमध्ये ज्वलत्यग्निर्यथाब्धौ वडवानलः ॥ १७ ॥
110076
110077 असंभावितानां बहूनां जगति दर्शनमुदाहरति-विचित्रा इत्यादिना ॥ १७ ॥
110078
110079 नगराण्यम्बरे सन्ति यथा वैमानिकाश्रयाः ।
110080 शिलास्वब्जानि जायन्ते हेमाद्राविव पादपाः ॥ १८ ॥
110081
110082 हेमाद्रौ निर्मृत्तिके ॥ १८ ॥
110083
110084 एकान्ते सर्वपुण्यानि सन्ति कल्पतरौ यथा ।

110085 शिलाः फलन्ति फलिवद्यथा रत्नगुलुच्छकाः ॥ १९ ॥
110086

110087 एकान्ते एकदेशे सर्वाणि पुण्यानि पुण्यफलभूतान्यभिलषितवस्तूनि । पण्यानि इति पाठे
110088 पणनं व्यवहारस्तद्योग्यवस्तूनि । पुष्पाणि इति पाठे तु स्पष्टम् । यथाशब्दाः
110089 सर्वत्रोदाहरणार्थाः । फलिवद्वृक्षवत् । रत्नगुलुच्छकाश्चिन्तामणिगुच्छाः ॥ १९ ॥
110090

110091 शिलान्तः प्राणिनः सन्ति भेका इव शिलान्तरे ।
110092 दृषदो वारि निर्याति चन्द्रकान्तोपलादिव ॥ २० ॥
110093

110094 निमेषेण घटो याति पटतां स्वापसंविदि ।
110095 असत्यमपि बुध्येत स्वप्ने स्वमरणं यथा ॥ २१ ॥
110096

110097 स्वापसंविदि स्वप्ने ॥ २१ ॥
110098

110099 आकस्मिकं जलं व्योम्नि ध्रियते भूतगं यथा ।
110100 वितानमिव खे वारि तिष्ठति स्वर्णदी यथा ॥ २२ ॥
110101

110102 स्वर्णदी मन्दाकिनी ॥ २२ ॥
110103

110104 उड्डीयन्ते शिलाः स्थूलाः पक्षवन्तो यथाद्रयः ।
110105 शिलान्तः प्राप्यते सर्वं ननु चिन्तामणेरिव ॥ २३ ॥
110106

110107 चिन्तितानि फलन्त्याशु देवोद्यानान्तरेष्विव ।
110108 तान्येव न फलन्त्याशु मोक्षादीनां च राघव ॥ २४ ॥
110109

110110 न फलन्ति नोत्पद्यन्ते । यथा मोक्ष उत्पद्यतां ब्रह्म नश्यतु प्रपञ्चः सत्योऽस्तु
110111 भोगाः शाश्वताः सन्तु नियतिर्भज्यतां वेदा अप्रमाणीभवन्तु इत्यादीनां विषये
110112 सत्यसंकल्पानां चिन्तितान्यपि न फलन्तीत्यर्थः ॥ २४ ॥
110113

110114 अचेतनोऽपि कुरुते कर्म यन्त्रपुमानिव ।
110115 एवमाद्यास्तथान्ये च विचित्रारम्भविभ्रमाः ॥ २५ ॥
110116

110117 असंभवाः असंभाविता अन्ये च विचित्रारम्भविभ्रमाः
110118 शम्बरगन्धर्वादिमायाविलासैर्दृष्टा इत्यन्वयः ॥ २५ ॥
110119

110120 दृष्टाः शम्बरगन्धर्वविलासैरप्यसंभवाः ।
110121 देशकालक्रियाद्रव्यरत्नसंचरणीयजाः ॥ २६ ॥
110122

110123 देशे दूरत्वादौ चन्द्रप्रादेशिकत्वादयः काले औत्पातिकनभःकबन्धादयो
110124 मन्त्रप्रयोगादिक्रियया औषधादिद्रव्यै रत्नैर्मणिभिः संचरणीयैः
110125 पिशाचमदाद्यनुप्रवेशैश्च जातास्ते ते विचित्रारम्भविभ्रमा दृष्टा इत्यर्थः ॥ २६ ॥
110126

110127 अर्था गन्धर्वजनिता अनन्ताः सत्यसंभवाः ।
110128 असंभवः संभवोऽयमपि भाव्युपपद्यते ॥ २७ ॥
110129

110130 सत्येभ्य इवार्थक्रियासंभवो येभ्यस्तथाविधा दृष्टा इति पूर्वेणान्वयः ।
110131 इदानीमसंभवोऽप्ययं ब्रह्माण्डनाशादिर्भावी संभवतीति संभव उपपद्यते ॥
110132 २७ ॥
110133

110134 संभवोऽसंभवः सम्यक् सिद्धये स्वप्नविभ्रमः ।
110135 न तदस्ति न यत्सत्यं न तदस्ति न यन्मृषा ॥ २८ ॥
110136

110137 एवमिदानीं संभवोऽपि सर्गरूपः स्वप्नविभ्रमः प्रलये तत्त्वबोधे चासंभवः
110138 सन् सिद्धये स्वरूपविश्रान्तये भवतीत्यर्थः। एवं च ब्रह्मात्मना दर्शने नासत्यं
110139 किंचिदस्ति जगदात्मना दर्शने तु न सत्यं किंचिदस्तीति फलितमित्याह-न तदिति॥ २८
110140 ।।
110141
110142 सर्वं सर्वेण सर्वत्र स्वप्ने सर्गाभिधानके।
110143 स्वप्ने निमग्नधीर्जन्तुः पश्यति स्थिरतां यथा॥ २९॥
110144
110145 सर्गस्वप्ने मग्नबुद्धिः पश्यति स्थिरतां तथा।
110146 भ्रामाद्भ्रमान्तरं गच्छन्स्वप्नात्स्वप्नान्तरं व्रजन्।
110147 अतिस्थिरप्रत्ययभागिह जीवो विमुह्यति॥ ३०॥
110148
110149 श्वभ्रान्तरं श्वभ्रनिपातदोषात् संप्राप्नुवन्मुग्धमृगः प्रयाति।
110150 मोहं यथा पातमयैकरूपं जीवस्तथा संसृतिपातमूढः॥ ३१॥
110151
110152 यथा मुग्धो मृगः श्वभ्रेषु निपातयतीति
110153 श्वभ्ननिपातस्तथाविधात्स्वमोहदोषाच्छ्वभ्राच्छ्वभ्रान्तरं प्रयाति तथा
110154 संसृतौ पातयन्तीति संसृतिपाता रागादयस्तान् मूढो जीवः पातमयतया
110155 एकरूपं न मृगवन्मध्ये निर्गमनमस्ति यत्र तथाविधं मोहं
110156 देहादिगर्तप्रवेशभ्रमं प्रयातीत्यर्थः॥ ३१॥
110157
110158 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये देव० मोक्षो० निर्वाणप्रकरणे
110159 पूर्वार्धे जगत्स्वप्नकथनं नामैकषष्टितमः सर्गः॥ ६१॥
110160
110161 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
110162 जगत्स्वप्नकथनं नामैकषष्टितमः सर्गः॥ ६१॥
110163
110164 द्विषष्टितमः सर्गः ६२
110165
110166 श्रीवसिष्ठ उवाच।
110167
110168 अत्र राघव वक्ष्येऽहमितिहासमिमं शृणु।
110169 यद्वृत्तं कस्यचिद्भिक्षोः किंचिन्मननशालिनः॥ १॥
110170
110171 विचित्रवासनायोगान्नानादेहाप्तिविभ्रमम्।
110172 वर्ण्यते जीवटाख्याने भिक्षुमानसचेष्टितम्॥
110173
110174 अत्र अस्मिन् भ्रमाद्भ्रमान्तरं गच्छन्निति वर्णितेऽर्थे उदाहरणभूतमितिहासं
110175 पुरावृत्तम्। यद्वृत्तं संपन्नम्॥ १॥
110176
110177 आसीत्कश्चिन्महाभिक्षुः समाध्यभ्यासतत्परः।
110178 नित्यं स्वव्यवहारेण क्षपयत्यखिलं दिनम्॥ २॥
110179
110180 महान् शान्तिदान्तिवैराग्यादिसंपन्नो भिक्षुः परिव्राट्। स्वव्यवहारेण
110181 स्वाश्रमोचितश्रवणमननादिव्यवहारेण॥ २॥
110182
110183 समाध्यभ्यासशुद्धं तत्तस्य चित्तं क्षणेन यत्।
110184 चिन्तयत्याशु तद्भावं गच्छत्यम्ब्विव वीचिताम्॥ ३॥
110185
110186 समाधिश्चित्तस्य ध्येयाकारदार्ढ्येन पूर्वस्वरूपशून्यत्वापादनं
110187 तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिरिति पतञ्जलिवचनात्।
110188 तदभ्यासेन शुद्धं पूर्ववासनात्यागक्षमम्। अम्बु जलं वीचितामिव॥ ३॥

110189
110190 कदाचित्स समाधानविरतोऽतिष्ठदेकधीः।
110191 किंचित्संचिन्तयामास स्वासनस्थः क्रियाक्रमम्॥ ४॥
110192
110193 एकधीरेकाग्रचित्तः॥ ४॥
110194
110195 तस्य चिन्तयतो जाता प्रतिभेयमिति स्वतः।
110196 भावयाम्याशु लीलार्थं सामान्यजनवृत्तिताम्॥ ५॥
110197
110198 सामान्यजनाः शास्त्रसंस्कारहीनास्तद्वृत्तितां चित्तचेष्टानुसारिताम्॥ ५॥
110199
110200 इति संचिन्त्य चेतोऽस्य स्थितं किंचिन्नरान्तरम्।
110201 स्पन्दसंस्थानसंत्यागमात्रेणावर्तनेऽम्बिव॥ ६॥
110202
110203 नरान्तरं यतिधर्मानियन्त्रितपामरपुरुषान्तररूपम्। यथा अम्बु आवर्तने कृते
110204 प्राक्तनप्रवाहस्पन्दस्य समसंस्थानस्य च संत्यागमात्रेण
110205 नाभ्याकारमावर्ताख्यरूपान्तरेण तिष्ठति तद्वत्॥ ६॥
110206
110207 तेन चित्तनरेणाथ कृतं नामात्मवाञ्छया।
110208 जीवटोऽस्मीति सहसा काकतालीयवस्थितम्॥ ७॥
110209
110210 तत्र नान्तरीयकीं नामकल्पनामाह-तेनेति॥ ७॥
110211
110212 जीवटो विजहाराथ स स्वप्नपुरुषश्चिरम्।
110213 स्वप्ननिर्माणनगरे कस्मिंश्चित्पुरवीथिषु॥ ८॥
110214
110215 तत्र पानं पपौ मत्तो भृङ्गः पद्मरसं यथा।
110216 लीलयैव दृढं हृष्टः सुष्वाप घननिद्रया॥ ९॥
110217
110218 हृष्टो मत्तः॥ ९॥
110219
110220 स्वप्ने ददर्श विप्रत्वं पाठानुष्ठानतुष्टिमत्।
110221 प्रतिभामात्रसंपन्नां चित्ते देशान्तराप्तिवत्॥ १०॥
110222
110223 पाठैरध्ययनैः सत्कर्मानुष्ठानैश्च तुष्टिमत् संतुष्टं न पृथग्जनचरित्रेण
110224 ॥ १०॥
110225
110226 कदाचित्स द्विजश्रेष्ठस्त्वहर्व्यापारनिष्ठया।
110227 सुष्वापान्तर्व्यवहृतिर्बीजतायामिव द्रुमः॥ ११॥
110228
110229 अहर्व्यापारनिष्ठया श्रान्त इति शेषः। अन्तःसंस्कारात्मना लीना व्यवहृतिर्यस्य।
110230 यथा बीजतायां द्रुमोऽन्तर्गतविटपादिसंस्कार आस्ते तद्वत्॥ ११॥
110231
110232 द्विजोऽपश्यत्स्वयं स्वप्ने सामन्तत्वमथात्मनि।
110233 स सामन्तः कृताहारः कदाचिद्घननिद्रया॥ १२॥
110234
110235 सामन्तत्वं माण्डलिकराजताम्॥ १२॥
110236
110237 अपश्यद्राजतां स्वप्ने ककुब्वलयपालिनीम्।
110238 लालितां भोगपूगेन पुष्पौघेण लतामिव॥ १३॥
110239
110240 कृताहारो भुक्तवान् सन् सुप्तो घननिद्रया राजतां साम्राज्यम्। ककुभां दिशां

110241 वलयानि पालयितुं शीलं यस्यास्तथाविधाम् ॥ १३ ॥
110242
110243 स कदाचिन्नृपः स्वस्थः सुष्वापास्तमितेहितः ।
110244 पुरोभाविनिजाचारः स्वकार्यमिव कारणे ॥ १४ ॥
110245
110246 पुरोभावी फलदानायोपस्थितो निजः स्वीयः स्त्र्यासक्तिरूप आचारो यस्य । स्वकार्य
110247 वृक्षादि । कारणे बीजे ॥ १४ ॥
110248
110249 अपश्यत्स्वात्मनि स्वप्ने सुरस्त्रीत्वमनिन्दितम् ।
110250 वृक्षकोशरसोल्लासे मञ्जरीत्वमिवोदितम् ॥ १५ ॥
110251
110252 बहुपुरुषसंभोगेऽप्यनिन्दितं सुरस्त्रीत्वमप्सरस्त्वम् । रसोल्लासे
110253 चेतनत्वकल्पनयोक्तिर्लक्षणया वृक्षजीवोक्तिर्वा ॥ १५ ॥
110254
110255 सा सुरस्त्री रतिश्रान्ता निद्रां गाढामुपागता ।
110256 मृगीत्वमात्मनि स्वैरमावर्तत्वमिवाम्बुता ॥ १६ ॥
110257
110258 मृगीनयनसौन्दर्याभिलाषवासनया मृगीत्वमपश्यदित्यनुकृष्यते । अम्बुता
110259 अम्बुसाम्यावस्था ॥ १६ ॥
110260
110261 सा मृगी लोलनयना कदाचिन्निद्रया हृता ।
110262 स्वप्ने ददर्श वल्लीत्वं स्वाभ्यासाद्दृढमात्मनि ॥ १७ ॥
110263
110264 तिर्यञ्चोऽपि प्रपश्यन्ति स्वप्नं चित्तस्वभावतः ।
110265 दृष्टानां च श्रुतानां च चेतःस्मरणमक्षतम् ॥ १८ ॥
110266
110267 तिरश्चां स्वप्नदर्शनमस्ति न वेति संदिहानान्प्रत्याह-तिर्यञ्च इति । चित्तस्य
110268 दृष्टश्रुतसंस्कारग्राहित्वात्सति संस्कारे
110269 स्मृतिवत्स्वाप्नस्याप्यवर्जनादित्याशयः ॥ १८ ॥
110270
110271 सा बभूव लतापुष्पफलपल्लवशालिनी ।
110272 वनदेवी वनोद्यानलतागृहविलासिनी ॥ १९ ॥
110273
110274 लतापल्लवासक्तिवशाल्लता बभूव । वनदेवीनां वने प्रसिद्धलतागृहमिव
110275 विलसनशीला ॥ १९ ॥
110276
110277 बीजान्तस्थाङ्कुराकाररूपयेहाधिरूढया ।
110278 सापश्यदन्तःसंवित्त्या स्फुटं लवनमात्मनः ॥ २० ॥
110279
110280 सा लता कंचित्कालमन्तःसंवित्त्या साक्षिचैतन्येन निद्राजडतां सुषुप्तिमनुभूय
110281 बीजान्तस्थाया भाव्यङ्कुराकाराया धियो रूपमिव स्वरूपं यस्यास्तथाविधया
110282 स्वप्नोन्मुख्या धिया भ्रमराकारोद्बुद्धसंस्कारया आत्मानं
110283 भ्रमरमपश्यदित्यन्वयः ॥ २० ॥
110284
110285 कंचित्कालं सुषुप्तस्थं कलया जडतां घनाम् ।
110286 अनुभूय ददर्शाथ स्वात्मानं भ्रमरं स्थिरम् ॥ २१ ॥
110287
110288 षट्पदो विजहाराथ वने वनलतास्वसौ ।
110289 पद्मिनीषु च फुल्लासु तरुणीष्विव वल्लभः ॥ २२ ॥
110290
110291 प्रियाबिम्बाधरस्वादुरसवत्कौसुमं मधु ।
110292 भ्रमत्कुसुमसंघासु मुक्तावल्लीविलासिषु ॥ २३ ॥

कौसुमं मधु मकरन्दं पपौ इति शेषः ॥ २३ ॥

स बभूव सरोजिन्यां व्यसनी बिसनालगः ।
क्वचिदेव रतिं ह्येति चेतो जडमतेरपि ॥ २४ ॥

व्यसनी अत्यासक्तः सन् विसस्य नालगो नालसंलग्नः ॥ २४ ॥

तामाजगाम नलिनीं परिलोलयितुं गजः ।
रम्यवस्तुक्षयायैव मूढानां जृम्भते पदम् ॥ २५ ॥

पदं व्यवसितम् । जृम्भते वर्धते ॥ २५ ॥

नलिनी मर्दिता सैव समं तेन स षट्पदः ।
गतो दन्तान्तरं व्रीहिरिव चूर्णत्वमाययौ ॥ २६ ॥

तेन गजेन सा भ्रमराश्रिता नलिनी मर्दितैव । तेन नालेन समं स षट्पदो गजस्य
दन्तान्तरं गतः सस्यसंलग्नकृष्णव्रीहिरिव चर्व्यमाणश्चूर्णत्वमाययौ ॥ २६ ॥

भ्रमरो वारणालोकाद्वारणालोकभावनात् ।
ददर्शात्मानमामोदमत्तहस्तितयोदितम् ॥ २७ ॥

वारणस्यालोकादवलोकनावारणस्यालोक्यत इत्यालोक आकारस्तद्भावनादात्मानं
मत्तहस्तितया उदितं संपन्नं ददर्श ॥ २७ ॥

शुष्कसागरगम्भीरे गजः खाते पपात ह ।
तमोघनघने शून्ये संसार इव जीवकः ॥ २८ ॥

स गजः खाते हस्तिपकनिर्मितगर्ते । घनेभ्यः शृङ्खलादिबन्धेभ्योऽपि घने
कठोरे संसारे जीवक इव पारवश्यदुःखान्यनुभवन् ॥ २८ ॥

बभूव वल्लभो राज्ञो महापरबलान्तकः ।
सदा मदबलक्षीबो घूर्णोतीव निशाचरः ॥ २९ ॥

निशाचर इत्युत्तरान्वयि ॥ २९ ॥

कदाचिदसिनिस्त्रिंशच्छिन्नः सोऽस्तमुपाययौ ।
विवेकानिलनिर्लूनरूपो जीव इवात्मनि ॥ ३० ॥

स कदाचिदुपस्थिते निशायुद्धे चरतीति निशाचरः
सन्नसिभिर्दीर्घखङ्गैर्निर्गतास्त्रिंशद्भ्योऽङ्गुलिभ्यो निस्त्रिंशाः
कृपाणिकास्ताभिश्च च्छिन्नः सन्नस्तं मृत्युमुपाययौ । जीवो
जीवोपाधिर्देहाद्यभिमान इव ॥ ३० ॥

पश्यन्गजघटाकुम्भस्थलाग्रोच्चलितानलीन् ।
गण्डस्थभ्रमराभ्यासाद्गजो भूयोऽप्यभूदलिः ॥ ३१ ॥

गजघटानां हस्तिसमूहानां कुम्भस्थलाग्रेभ्य उच्चलितानुड्डीनान् ।
अभ्यासाच्चिरपरिशीलनसंस्कारात् । अल्युड्डयनदर्शनसंस्कारोद्बोधितादित्याशयः ॥
३१ ॥

सेवमानो वनलतां पुनरायात्स पद्मिनीम् ।

110345 दुस्त्यजो हि दुरभ्यासो वासनानामबोधिनः ॥ ३२ ॥
110346
110347 पुनः पूर्ववासनयेत्यर्थः। अबोधिनः अज्ञस्य। शेषे षष्ठी नतु कर्तरि। नलोकेति
110348 निषेधात्॥ ३२ ॥
110349
110350 तत्र हस्तिखुराक्रान्तः पुनः संचूर्णतां ययौ।
110351 पार्श्वस्थहंससंवित्त्या बभूव कलहंसकः ॥ ३३ ॥
110352
110353 संवित्त्या दर्शनेन। तदुद्बोधितवासनयेति यावत्॥ ३३ ॥
110354
110355 कलहंसश्चिरतरं योनिष्वन्यासु संल्लुठन्।
110356 कदाचिद्बहुभिर्हंसैः संगतो विजहार ह ॥ ३४ ॥
110357
110358 योनिष्वन्यासु संल्लुठन्नित्युक्त्या। हंसः पद्मवने भूत्वा विंध्यकच्छे च
110359 वारणः। हरिणो देहयन्त्रादौ इत्यादिवक्ष्यमाणदिशा अन्तराले पञ्चाशीतिजन्मानि
110360 जातानीति गम्यते। तथा चात्रोक्तहंसजन्मद्वयानन्तरं रुद्रतां गतः
110361 संसारशतपर्यन्ते रुद्रः सोऽहं व्यवस्थितः इति वक्ष्यति। स कदाचित्
110362 पुनर्हसजन्मप्राप्तोऽन्यैर्हंसैः संगतो विजहारेत्यर्थः॥ ३४ ॥
110363
110364 ब्राह्महंसात्मिका संवित्सशब्दार्थवती मनाक्।
110365 तत्र पुष्टास्य तस्यान्तः प्रागण्डरसबर्हिवत्॥ ३५ ॥
110366
110367 तत्र हंससंसदि ब्रह्महंसगुणाकारादिवर्णनश्रवणात् सशब्दा तन्नामसहिता
110368 तदाकारार्थवती चेति द्वेधापि ब्राह्महंसात्मिका संवित् अहमपीदृशो
110369 ब्राह्महंसः स्यामिति वासना तत्र तस्मिन् जन्मनि तस्य हंसभूतस्यास्य
110370 भिक्षुमनसः प्राग् वर्णिताण्डरसस्थबर्हिवत् पुष्टा। घनीभूतेत्यर्थः॥ ३५ ॥
110371
110372 स तच्चिन्तां चरन्मृतो दृढं व्याधिघुणाहतः।
110373 तत्संवित्त्यनुसंधानाज्जातः पद्मजसारसः ॥ ३६ ॥
110374
110375 स तां ब्राह्महंसचिन्तामेव दृढं चरन्नावर्तयन् व्याधिघुणाभिहतो भृतः
110376 पद्मजस्य सारसो लक्षणया हंसो वाहनमित्यर्थः॥ ३६ ॥
110377
110378 तत्रातिसततविवेकवतो विलासैः संबोधितो विगतलौकिकवस्तुदृष्टिः।
110379 मुक्तः स्थितो ननु युगान्तविधौ विदेहमुक्तेन तेन किमु भावि विभाव्यमेतत्॥ ३७
110380 ।।
110381
110382 तत्र तस्मिन् जन्मनि ब्रह्मलोके च अतिशयेन संततैर्विवेकवतः
110383 प्रजापतेर्विवेकवैराग्यतत्त्वज्ञानादयुपदेशविलासैः सम्यग्बोधितः। अत एव विगता
110384 लौकिकवस्तुषु भोग्यवर्गेषु सारतादृष्टिर्यस्य तथाविधः सन् मुक्तो जीवन्मुक्तो
110385 भूत्वा स्थितः। एवं जीवतैव निरतिशयानन्दमोक्षसुखे लब्धे सति। ब्रह्मणा सह ते
110386 सर्वे संप्राप्ते प्रतिसंचरे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्। इति
110387 श्रुतेर्युगान्तविधौ द्विपरार्धावसाने ब्रह्मणा सह विदेहमुक्तेन तेन हंसेन
110388 किमधिकं भावि साध्यम्। एतत् सुधीभिर्विभाव्यं चिन्त्यम्। उ इति वितर्के। ज्ञानेनेहैव
110389 समूलानर्थनिवृत्तेर्निरतिशयानन्दवाप्तेश्च
110390 संपादितत्वात्तदतिरिक्तपुरुषार्थाभावाच्चास्य कृतकृत्यत्वादित्यर्थः॥ ३७ ॥
110391
110392 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
110393 भिक्षुसंसारोदाहरणं नाम द्विषष्टितमः सर्गः॥ ६२ ॥
110394
110395 इत्यार्षे श्रीवासिष्ठमहा० वा० दे० मो० निर्वा० पू० जीवटोपाख्याने स्वप्नशतरुद्रीये
110396 भिक्षुसंसारोदाहरणं नाम द्विषष्टितमः सर्गः॥ ६२ ॥

110397
110398
110399 त्रिषष्टितमः सर्गः ६३
110400
110401 श्रीवसिष्ठ उवाच।
110402
110403 स कदाचिद्ददर्शाथ रुद्रं रुद्रपुरे खगः।
110404 वैरिञ्चनलिनीनाललीलालाभेन लीलया॥ १॥
110405
110406 रुद्रभूतेन तेनात्र पूर्वदेहप्रबोधनम्।
110407 तेषां च शतरुद्रत्वमैकात्म्यं चेह वर्ण्यते॥
110408
110409 स हंसो लीलया अनायासेनैव वैरिञ्चासननलिनीनाले लीलाः क्रीडास्तल्लाभेन।
110410 पद्मजसामीप्यमुक्तिपदप्राप्तिबलेनेति यावत्। कदाचित्पद्मजेन सह रुद्रपुरं गतो
110411 रुद्रं ददर्श॥ १॥
110412
110413 तत्र बुद्धिरभूत्तस्य रुद्रोऽहमिति निश्चिता।
110414 प्रतिबिम्बवदादर्शे द्रागित्येव हि बिम्बिता॥ २॥
110415
110416 तत्र रुद्रस्य ज्ञानयोगैश्वर्यादिसर्वगुणोत्कर्षदर्शनात्तस्य हंसस्याहमपि
110417 रुद्राहंभावनया रुद्रः स्यामिति निश्चिता बुद्धिरभूत्। ननु जीवन्मुक्तस्य
110418 निर्वासनस्य हंसस्य कथं रुद्रत्वस्पृहा। तद्भावनाभ्यासेन देहत्यागेन पुना
110419 रुद्रशरीरधारणं च। यदि तु भरतस्य त्रिजन्मभिः इति न्यायेन तस्य
110420 नानादेहभोग्यप्रारब्धशेषाद्देहान्तरधारणं तर्हि
110421 रुद्राहंभावधारणवर्णनस्यानुपयोगप्रसङ्गात् रुद्रस्येश्वरतया तद्भावस्य
110422 कर्मफलत्वायोगाच्चेति चेत्तत्राह-प्रतिबिम्बवदिति। नायं मुख्यो रुद्रभावः
110423 किंतु प्रतिबिम्बवत्सारूप्यमुक्तिः सा च कर्मोपास्तिफलं भवत्येव-देवो भूत्वा
110424 देवानप्येति इति श्रुतेरिति भावः॥ २॥
110425
110426 रुद्रभूतवपुस्तत्र तनुं तत्याज तामसौ।
110427 गन्धः पवनतां गच्छन्कुसुमस्तबकं यथा॥ ३॥
110428
110429 नाप्येतज्जन्मान्तरं किंतु प्रारब्धशेषोपनीतयेच्छया
110430 योगिवन्मानसदेहान्तरकल्पनेन पूर्वदेहत्यागमात्रमित्याशयेनाह##-
110431
110432 स रुद्रो रुद्रभवने विजहार यथेच्छया।
110433 तैस्तैः शिवपुराचारैर्गणकोटिगरिष्ठया॥ ४॥
110434
110435 गणकोटिषु गरिष्ठया श्रेष्ठया। गाणपत्यपदव्येति यावत्॥ ४॥
110436
110437 रुद्रस्त्वनुत्तमज्ञानविलासैकतया तया।
110438 स्वमशेषं च वृत्तान्तमपश्यत्प्राक्तनं धिया॥ ५॥
110439
110440 सारूप्यमुक्तौ जगत्संहारादिव्यापाराधिकाराभावेऽपि ज्ञानैश्वर्यादिना
110441 प्रसिद्धरुद्रसाम्यमस्त्येवेत्याशयेनाह-रुद्रस्त्विति।
110442 अनुत्तमज्ञानैरैश्वर्यविलासैश्च प्रसिद्धरुद्रेणैकतया साम्येन॥ ५॥
110443
110444 निरावरणविज्ञानवपुः स भगवांस्तदा।
110445 उवाच स्वयमेकान्ते स्वस्वप्रशतविस्मितः॥ ६॥
110446
110447 स्वयमेकान्ते स्वमनस्येवोवाच॥ ६॥
110448

110449 अहो नु चित्रा मायेयं तता विश्वविमोहिनी ।
110450 असत्यैवापि सद्रूपा मरुभूमिषु वारिवत् ॥ ७ ॥
110451
110452 इति प्रथममाज्ञातं चिद्योऽहं चित्ततां गतः ।
110453 सर्वसंपन्नसर्वज्ञगगनादिविभावनात् ॥ ८ ॥
110454
110455 आ इति स्मरणद्योतको निपातः । अहं प्रथमं प्राक्तनपारमार्थिकस्थित्या चिदेव । ततो
110456 मायया चित्ततां बहु स्यां प्रजायेय इति सर्गसंकल्पवृत्तितां गत
110457 इत्यादीदमाज्ञातं स्मृतमित्यर्थः । तादृशसंकल्पादेवाहं सर्वसंपन्नः
110458 संश्चिदंशे सर्वज्ञो जडांशे गगनादिविभागवांश्च जात इत्यर्थः ॥ ८ ॥
110459
110460 यदृच्छया स्थितो जीवो भूततन्मात्ररञ्जितः ।
110461 कस्मिंश्चिदभवत्सर्गे भिक्षुरक्षुभितोऽभितः ॥ ९ ॥
110462
110463 ततो यदृच्छया व्यष्टिसमष्टिलिङ्गस्थूलदेहे चिदाभासात्मनानुप्रवेशे भूतैः
110464 स्थूलैस्तन्मात्रैः सूक्ष्मैश्च तैर्देहैस्तादात्म्यसंसर्गाध्यासेन
110465 तद्गतवासनावैचित्र्यैश्चित्रपट इव रञ्जितः सन् जीवो भूत्वाहं स्थित इत्यर्थः । स च
110466 जीवः अनादिकालाज्जन्मपरम्परामनुभवन्कस्मिंश्चित्सर्गे
110467 वैराग्यसमाधिपाटवादभित्तो विषयैरक्षुभितो भिक्षुः परिव्राडभवत् ॥ ९ ॥
110468
110469 तेनावयवबन्धेन बहिः स्वैरविहारिणी ।
110470 लीलाऽविलुलिताकारा यदा रम्येति भावतः ॥ १० ॥
110471
110472 आत्मज्ञानशून्यस्य तस्य रम्ये बाह्यवस्तुनीदंग्रहेणाहंग्रहेण वा
110473 चित्तनिरोधाभ्यासपाटवेन पूर्वदेहादेरात्यन्तिकविस्मरणशाक्त्युद्भवं
110474 दर्शयति-तेनेत्यादिना । तेन भिक्षुणा बद्धपद्मासनस्थैर्येण
110475 स्थूलदेहावयवानां हस्तपादादीनां लिङ्गदेहावयवानां प्राणेन्द्रियादीनां च
110476 बन्धेन निरोधेन बहिर्देवतादिविषये चित्तस्य यदा यैव मानसपूजादिलीला रम्येति
110477 भावतः अविलुलिताकारा आरभ्यते तदा स तदभ्यासवशात्तामेव लीलां
110478 तत्तद्विरुद्धसर्वभावोपमर्देनान्वभूदिति परेणान्वयः ॥ १० ॥
110479
110480 सर्वभावोपमर्देन तदभ्यासवशात्तदा ।
110481 तामेव सोऽन्वभूद्भिक्षुस्त्यक्त्वान्यं मननोदयम् ॥ ११ ॥
110482
110483 चमत्कृतिश्चेतसि या रूढा सैव विजृम्भते ।
110484 वल्ली त्यजति नैदाघी पीतमप्यम्बु माध्वम् ॥ १२ ॥
110485
110486 रूढया उत्तरचमत्कृत्या रूढाया अपि पूर्वचमत्कृतेरुपमर्दे
110487 दृष्टान्तमाह-वल्लीति । नैदाघी निदाघोष्णचमत्कृतिव्याप्ता वल्ली माधवं
110488 वसन्तकालिकं पीतमप्यम्बु हरितभावचमत्कारं त्यजति शुष्यतीति यावत् ॥ १२ ॥
110489
110490 स भिक्षुर्जीवटो भूत्वा जन्तुर्जरठवासनः ।
110491 तेषु देहेषु बभ्राम रन्ध्रेष्विव पिपीलिका ॥ १३ ॥
110492
110493 तस्यैव
110494 सिद्धस्याप्यशास्त्रीयमानसखेलनप्रवृत्तावनर्थपरम्परोदयोऽभूदित्याह-स
110495 इत्यादिना । तेषु देहेषु योनिषु । जरठवासन इत्यनेन शास्त्रीयवासनाशैथिल्ये
110496 अनाद्यनर्थवासनोद्भवोऽवश्यंभावीति सूच्यते ॥ १३ ॥
110497
110498 आत्मनि द्विजभक्तत्वात्सोऽपश्यद्द्विजतामथ ।
110499 भावाभावविपर्यासे बलवानेव वर्धते ॥ १४ ॥
110500

110501 तानेव सनिमित्तं प्रपञ्चयति-आत्मनीत्यादिना। भावस्योद्भूतस्य
110502 अभावस्यानुद्भूतस्य च विपर्यासे वैपरीत्ये साध्ये अभ्यासपाटवादिबलवानेव
110503 वासनाचयोवर्धते उद्भवति अन्यस्तिरोभवतीत्यर्थः॥ १४॥
110504

110505 सामन्ततामवापासौ विप्रः संततचिन्तिताम्।
110506 सातत्येन रसः पीतः फलतामेति पादपे॥ १५॥
110507

110508 राज्यार्थं धर्मकार्याणां कर्तृत्वात्सोऽभवन्नृपः।
110509 सकामुकतया राजा सुरस्त्रीत्वमवाप ह॥ १६॥
110510

110511 धर्मप्रचयसहितया कामुकतया॥ १६॥
110512

110513 लोला लोचनलोभेन सा मृगी रसशालिनी।
110514 बभूव वासनामोहश्चाहो दुःखाय जन्तुषु॥ १७॥
110515

110516 लोचनपदेन मृगलोचनसौन्दर्यं लक्ष्यते तल्लोभेन लोला। रसशालिनी रञ्जिता॥ १७॥
110517

110518 मृगी सा बत चित्तस्था बभूव विपिने लता।
110519 अवश्यंभावि लवनं लतिकाऽनुबभूव ह॥ १८॥
110520

110521 लवनं छेदनम्॥ १८॥
110522

110523 अन्तःसंज्ञाचिराभ्यस्तं भ्रमरत्वमथात्मनि।
110524 साऽपश्यत्सावमर्देन तदा तद्भावभाविता॥ १९॥
110525

110526 सावमर्देन छेदनावमर्दसहितलतादेहेन॥ १९॥
110527

110528 सवारणखरक्षोदमनुभूयाथ भावितम्।
110529 भूयोभूयः प्रबभ्राम महासंसृतिसंभ्रमान्॥ २०॥
110530

110531 भूयोभूय इत्यनेनान्तरालिकानि वारणालिहंसादीनि नवतिजन्मानि स्मृतान्युच्यन्ते॥ २०
110532 ॥
110533

110534 संसारशतपर्यन्ते रुद्रः सोऽहमहं स्थितः।
110535 अस्मिन्संसारसंरम्भे स्वमनोमात्रसंभ्रमे॥ २१॥
110536

110537 स भिक्षुरहं सन्नेव रुद्रोऽहमिति स्थितः॥ २१॥
110538

110539 एवमत्यन्तचित्रासु संसारारण्यभूमिषु।
110540 बह्वीष्वहमतिभ्रान्तस्त्वशून्यास्विव भूरिशः॥ २२॥
110541

110542 अशून्यासु सत्यास्विव भातासु॥ २२॥
110543

110544 कस्मिंश्चिदभवं सर्गे त्वहं जीवटनामकः।
110545 कस्मिंश्चिद्ब्राह्मणश्रेष्ठः कस्मिंश्चिद्वसुधाधिपः॥ २३॥
110546

110547 हंसः पद्मवने भूत्वा विन्ध्यकच्छे च वारणः।
110548 हरिणो देहयन्त्रादौ दशामहमिमां गतः॥ २४॥
110549

110550 विन्ध्यकच्छे वारणो हरिणश्चाभवम्। इत्थं देहयन्त्रे आदिपदान्मनोयन्त्रे
110551 चाहमिमां वर्णितरूपां दशां गतः॥ २४॥
110552

110553 अत्र वर्षसहस्राणि चतुर्युगशतानि च |
110554 समतीतान्यनन्तानि दिनर्तुचरितानि च || २५ ||
110555
110556 मम प्रथमसर्गकालादारभ्य परात्पदाच्चिदेकरसरूपाच्चलितस्य
110557 प्रच्युतस्यात्रास्मिन्संसारे वर्षसहस्राणि चतुर्युगशतानि च अनन्तानि
110558 समतीतान्यनन्तानि दिनर्तुचरितानि च || २५ ||
110559
110560 मम प्रथममेव प्राक्चलितस्य परात्पदात् |
110561 तत्त्वज्ञानितया रूढो भिक्षुत्व योग्यताक्रमः || २६ ||
110562
110563 मम भिक्षुत्वे तत्त्वज्ञानितया भवितुं यो योग्यताक्रमः
110564 श्रवणमननाद्यभ्यासरूपो रूढोऽपि प्रमादादतिक्रम्य भूयोभूयश्च
110565 जन्मपरंपरया ब्रह्महंसतां गतः स एव प्राक्तनोऽभ्यस्यत इत्यभ्यासक्रमो
110566 रुद्रसंगमोदयाद्रुद्रत्वे तत्त्वज्ञानफलेन फलित इति द्वयोरन्वयः || २६ ||
110567
110568 भूयोभूयोऽप्यतिक्रम्य गतश्च ब्रह्महंसताम् |
110569 स एव प्राक्तनोऽभ्यासः फलितः संगमोदयात् || २७ ||
110570
110571 दृढाभ्यासो य एवास्य जीवस्योदेत्यविघ्नतः |
110572 सोऽत्यन्तमरसेनापि तमेवाश्वनुधावति || २८ ||
110573
110574 अत एव शास्त्रीयसाधनाभ्यासो ज्यायान् यो विरुद्धैरनेकजन्मभिर्व्यवहितोऽपि
110575 पुनरुद्भूय पुरुषार्थं साधयत्येवेत्याह-दृढाभ्यास इति | सः
110576 अत्यन्तमरसेन जन्मसहस्रेण व्यवहितोऽपीति शेषः || २८ ||
110577
110578 काकतालीययोगेन कदाचित्साधुसंगमात् |
110579 अशुभो भावनाभ्यासो जीवस्य विनिवर्तते || २९ ||
110580
110581 तर्ह्यशुभोऽपि भावनाभ्यासस्तुल्ययुक्त्या शुभाभ्यासव्यवहितोऽपि
110582 पुनरुद्भवेत्तत्राह-काकतालीयेति || २९ ||
110583
110584 संगत्यधिगतं चैष केवलं स्वोदयं प्रति |
110585 प्राक्तनो वासनाभ्यासो हातुरुद्यममीक्षते || ३० ||
110586
110587 तर्ह्यशुभवासनावच्छुभवासनाभ्यासोऽपि स्वयमेव
110588 प्राक्तनसंस्कारादुद्भविष्यति तद्बलादेवायं पुरुषः अशुभवासनां हास्यति चेति
110589 पुरुषप्रयत्नविधानं व्यर्थमित्याशंक्याह-संगतीति | हातुर्दुर्वासनाजालं
110590 जिहासतः पुंस एष प्राक्तनः सद्वासनाभ्यासः कालान्तरे स्वोदयं प्रति
110591 सत्पुरुषप्रयत्नमीक्षते प्रतीक्षते न तं विनोद्भवतीत्यर्थः || ३० ||
110592
110593 यच्चेहाभ्यस्यतेऽजस्रं यच्च देहान्तरेऽपि च |
110594 जाग्रत्स्वप्नेष्वसदपि तत्सदित्यनुभूयते || ३१ ||
110595
110596 स च यत्नोऽनेकजन्माभ्यस्त एव सद्वासनादार्ढ्येन दुर्वासनाक्षयसमर्थो भवति न
110597 सहसैवेत्याशयेनाह-यच्चेति | असदपीत्यनेन
110598 मिथ्यार्थविषयदेवतोपास्त्यादिप्रयत्नोऽपि यत्र
110599 जाग्रत्स्वप्नकालसत्यतानुभवयोग्यदेवताभावादिफलसमर्थो भवति तत्र किं
110600 वाच्यं परमार्थवस्तुगोचरः श्रवणादिप्रयत्नः
110601 प्रमाणगम्यपरमार्थसत्यस्वभावलाभाय भवतीति सूच्यते || ३१ ||
110602
110603 तत्तदर्थक्रियाकारि दुःखाय च सुखाय च |
110604 उदेति भावनं तस्माद्भावनाभावनं जयः || ३२ ||

110605
110606 अतएवानात्मविषयः शास्त्रीयोऽपि भावनाभ्यासो दुःखमिश्रितसुखायैवेति
110607 सर्वभावनोच्छेद एवास्यात्यन्तिकानर्थजयो
110608 नान्तरालिकदेवत्वादिप्राप्तिरित्याशयेनाह-तत्तदिति। तां तां
110609 देवताशरीरतद्भोगाद्यर्थक्रियां करोति तच्छीलं भावनमनात्मचिन्तनम्॥ ३२॥
110610
110611 भावनैव स्वमात्मानं देहोऽयमिति पश्यति।
110612 असत्तामात्रविस्तारं गुल्मकत्वमिवाङ्कुरः॥ ३३॥
110613
110614 किंचानात्मभावनाकृत एवायमनर्थः स कथं तद्भीरुणा सेव्य
110615 इत्याशयेनाह-भावनैवेति॥ ३३॥
110616
110617 भावना प्रेक्ष्यमाणैषा न किंचिदिह शिष्यते।
110618 न च विद्यत एवेति तद्भ्रमेणालमस्तु नः॥ ३४॥
110619
110620 सा तत्त्वदर्शनमात्रेण सूच्छेदेत्याह-भावनेति। न वा तदुच्छेदः साध्योऽस्ति
110621 नित्योच्छिन्नत्वादसत इत्याह-न चेति॥ ३४॥
110622
110623 भ्रमस्य जागतस्यास्य जातस्याकाशवर्णवत्।
110624 असंवेदनमात्रैकं मार्जनायालमस्तु नः॥ ३५॥
110625
110626 असन्मयीस्वरूपैषा परं सत्तैव लालनी।
110627 वर्तते चेद्विनोदाय किंचित्सा न करिष्यति॥ ३६॥
110628
110629 अथवा मास्त्वसंवेदनं तत्त्वज्ञानबाधितस्य संवेदनेऽपि बाधिताहेरिव
110630 भयजननासामर्थ्येनानर्थत्वाभावात्प्रत्युत लीलाहेतुत्वाच्चेत्याह-असन्मयीति##-
110631 कौतुकहेतुरेव परं इति प्रातिभासिकसत्तया वर्तते चेत्तर्हि विनोदायैव।
110632 किंचिदणुमात्रमप्यनर्थं सा न करिष्यतीत्यर्थः॥ ३६॥
110633
110634 तत्तान्सर्वान्स्वसंसारानुत्थायालोकयाम्यहम्।
110635 सम्यगालोकदानेन तेभ्य एकीकरोम्यहम्॥ ३७॥
110636
110637 तत्तस्मात्कौतुकवशादेवोत्थाय गत्वा सम्यगालोकस्य प्रबोधस्य दानेन तेभ्य
110638 उपाधिभ्यो विविक्तं स्वात्मानमेकीकरोमि॥ ३७॥
110639
110640 इति संचिन्त्य रुद्रोऽसौ तं सर्गं प्रजगाम ह।
110641 यत्र भिक्षुर्विहारस्थः सुप्तः शव इव स्थितः॥ ३८॥
110642
110643 बोधयित्वाथ तं भिक्षुं चेतसा चेतनेन च।
110644 योजयामास सस्मार भिक्षुरप्यात्मनो भ्रमम्॥ ३९॥
110645
110646 बोधयित्वा जागरूकं कृत्वा चेतसा स्वचित्तांशेन चित्तेन चेतनेन
110647 स्वांशचिदाभासलक्षणेन तत्त्वज्ञजीवेन च योजयामास। अत एव भिक्षोर्जागरणेन
110648 नास्मदादिस्वापप्रपञ्चस्येव जीवटादिरुद्रान्तशरीराणां तत्प्रपञ्चानां च
110649 निरनुवृत्तिबाधप्रसङ्गो निरस्तः। सर्वत्र रुद्रांशजीवप्रवेशकल्पनेन
110650 तदीयसत्यसंकल्पबलेन विचित्रभोजकादृष्टशेषबलेन च बाधितानामपि
110651 सर्वेषामाकल्पान्तमनुवृत्तिसंभवादिति॥ ३९॥
110652
110653 रुद्रमात्मानमालोक्य जीवटादिमयं तथा।
110654 बोधादविस्मयार्होऽपि स भिक्षुर्विस्मयं ययौ॥ ४०॥
110655
110656 बोधात्तत्त्वदर्शनात्। अल्पकाले चिरकालानेकजन्मानुभवलक्षणस्य

110657 स्वाप्नरुद्रशरीराद्यनुवृत्तिलक्षणस्य चाश्चर्यस्य दर्शनाद्विस्मयं ययौ ॥ ४० ॥
110658
110659 अथ रुद्रस्तथा भिक्षुर्द्वाविवोत्थाय जग्मतुः ।
110660 क्वापि जीवटसंसारं चिदाकाशैककोणगम् ॥ ४१ ॥
110661
110662 जीवटसंसारं ब्रह्माण्डान्तरम् ॥ ४१ ॥
110663
110664 तत्र तद्भुवनं गत्वा तद्द्वीपं तच्च मण्डलम् ।
110665 विषयं तत्पुरं तच्च तं च पाणावसिग्रहम् ॥ ४२ ॥
110666
110667 तत्र लीलोपाख्यानवर्णितरीत्या प्रविश्य भुवनं भूलोकं गत्वा तत्रापि
110668 तज्जीवटास्पदं द्वीपम् । विषयं मण्डलान्तर्गतदेशम् । तच्च गृहम् । तत्र गृहे
110669 पाणौ असेर्ग्रहणं ग्रहो यस्य तथाविधं तं जीवटं च ददृशतुः ॥ ४२ ॥
110670
110671 सुप्तं ददृशतुर्नष्टसंज्ञं जीवटकं शवम् ।
110672 स्थापयित्वा वपुर्भावं प्रभान्तं भवभूमिषु ॥ ४३ ॥
110673
110674 शवमिव सुप्तम् । तत्रत्यजनानां स्वदर्शनायोग्यत्वाद्रुद्रभिक्षुवपुषो भावो
110675 जीवटबोधनाभिप्रायस्तम् । रुद्रस्य या कोटिसूर्याभा प्रभा तदन्तं च सर्व
110676 स्वप्रभावं स्थापयित्वा अन्तर्धानशक्त्या गोपयित्वा । भवभूमिषु
110677 जीवटसंसृतिप्रदेशेषु ॥ ४३ ॥
110678
110679 तं प्रबोध्य नियोज्याशु चेतसा चेतनेन च ।
110680 एकरूपास्त्रिरूपास्ते रुद्रजीवटभिक्षुकाः ॥ ४४ ॥
110681
110682 चेतसेत्यादिपूर्ववत् । अन्तरेकरूपाः । बहिस्त्रिरूपाः ॥ ४४ ॥
110683
110684 बोधवन्तोऽप्यबुद्धाभा विस्मिता अप्यविस्मिताः ।
110685 बभुस्तूष्णींस्थिताश्चित्रकृताकारा इव क्षणम् ॥ ४५ ॥
110686
110687 चित्रकृताकाराश्चित्रलिखिता इव ॥ ४५ ॥
110688
110689 अथ जग्मुश्च ते सर्वे क्वचिद्व्योमनि संस्थितम् ।
110690 विप्रसंसारमारब्धं परिभूतसघुंघुमम् ॥ ४६ ॥
110691
110692 व्योमनि चिदाकाशे संस्थितमध्यस्तम् । आरब्धं जीवटचित्तपरिणामरूपम् । परितो
110693 भूतैः प्राणिभिः सघुंघुमं सशब्दम् ॥ ४६ ॥
110694
110695 ते तत्र भुवनं गत्वा तद्द्वीपं तच्च मण्डलम् ।
110696 विषयं तच्च तं ग्रामं प्रापुस्तं ब्राह्मणालयम् ॥ ४७ ॥
110697
110698 ते तत्रेत्यादि पूर्ववत् ॥ ४७ ॥
110699
110700 विप्रं ते ददृशुः सुप्तं कलत्रवलितं गृहे ।
110701 कण्ठे गृहीतं ब्राह्मण्या बहिर्जीवमिव स्थितम् ॥ ४८ ॥
110702
110703 कलत्रं पोष्यवर्गस्तद्वलितम् । बहिर्गतं जीवमिव प्रियतमम् ॥ ४८ ॥
110704
110705 तं प्रबोध्य नियोज्याशु चेतसा चेतनेन च ।
110706 तत्स्थास्ते बहवोऽप्यन्ये सविस्मयविविस्मयाः ॥ ४९ ॥
110707
110708 अथ जग्मुश्चिदाकाशकचितं चेतितं चितेः ।

110709 सामन्तं नृपसंसारं भ्रमणाभोगसुन्दरम् ॥ ५० ॥
110710

110711 चितेश्चित्ताकारविवृत्तायाश्चेतितं परिणतिरूपम् ॥ ५० ॥
110712

110713 ततस्ते भुवनं प्राप्तास्तद्द्वीपं तच्च मण्डलम् ।
110714 सामन्तं ददृशुर्मत्तं सुप्तं पर्यङ्कपङ्कजे ॥ ५१ ॥
110715

110716 पर्यङ्कलक्षणे पङ्कजे ॥ ५१ ॥
110717

110718 हेमावदातं हेमाङ्ग्या निहितं कुचकोटरे ।
110719 भ्रमर्येवान्वितं पद्मकोशसुप्तं मधुव्रतम् ॥ ५२ ॥
110720

110721 कान्ताभिरभ्यावलितं मञ्जरीभिरिव द्रुमम् ।
110722 दीपजालकमध्यस्थं रत्नौघ इव काञ्चनम् ॥ ५३ ॥
110723

110724 तं प्रबोध्य नियोज्याशु चेतसा चेतनेन च ।
110725 तत्स्थास्ते बहवोऽप्येके सविस्मयविविस्मयाः ॥ ५४ ॥
110726

110727 तत्स्थास्तत्र स्थिताः सन्तः ॥ ५४ ॥
110728

110729 अथ ते राजसंसारं जग्मुस्तत्र विबोध्य तम् ।
110730 चेतसैवमथान्यासु भ्रेमुः संसारभूमिषु ॥ ५५ ॥
110731

110732 चेतसा आतिवाहिकशरीरेणैव । अत्रान्तराले सुप्तानां संबोधनमात्रं मृतानां तु
110733 संजीवनमपि बोध्यम् ॥ ५५ ॥
110734

110735 प्राप्य तां ब्रह्महंसेहां रुद्रतां सर्व एव ते ।
110736 समाजग्मुर्विरिजुश्च रुद्राणामुत्तमं शतम् ॥ ५६ ॥
110737

110738 ब्रह्महंसरूपां ईहां चित्तपरिणतिम् । रुद्रचित्तचेतनांशैरेव
110739 चित्तचेतनवत्त्वाज्ज्ञानैश्वर्यसंपन्नत्वाच्चोत्तमम् । ते सर्वे देहा रुद्राणां शतम् ॥
110740 ५६ ॥
110741

110742 एकसंविद्विन्नतनु चित्रचेष्टितवेष्टितम् ।
110743 एकरूपमनेकाभं रूपं तत्पारमेश्वरम् ॥ ५७ ॥
110744

110745 तदेवाह-एकेति ॥ ५७ ॥
110746

110747 रुद्राणां तच्छतमथ निरावरणचिन्मयम् ।
110748 सर्वसंसारसंबन्धि स्थितं सर्वजगत्स्थितम् ॥ ५८ ॥
110749

110750 प्रातिभासिकसर्वसंसारस्य संबन्धि आधारभूतम् । सर्वजगदन्तश्च
110751 स्वयमन्तर्यामितया स्थितम् ॥ ५८ ॥
110752

110753 शतरुद्रशतानीह [दशरुद्रशतानीति पाठष्टीकानुकूलः ।] सन्ति राम
110754 महान्ति हि ।
110755 एतदेकादशं विद्धि संसारं प्रतिसंस्थितम् ॥ ५९ ॥
110756

110757 ईदृश्येव सहस्राणि सहस्रशो ये रुद्रा अधिभूम्याम् इत्यादिश्रुतिप्रसिद्धानां
110758 रुद्राणां स्थितिरित्याशयेनाह-शतेति । भिक्षुरुद्रकल्पितशतजगतां मध्ये
110759 एतत्त्वां मां च प्रति अनुभूयमानतया संस्थितं जगत् एकादशं
110760 भ्रामररुद्रसंसारं विद्धि ॥ ५९ ॥

यो योऽभितः स जीवस्य संसारः समुदेति हि।
तत्राप्रबुद्धा जीवौघाः पश्यन्ति न परस्परम्॥ ६०॥

ननु भिक्षुस्वप्नसंसाराः सर्वेपि सर्वैः कुतो नानुभूयन्ते तत्राह-यो य इति। स
उक्तलक्षणो जीवस्य यो यः संसारः अभितः समुदेति। तत्र तेषु संसारेषु॥ ६०॥

मिलन्ति हि मनोबुद्धास्तरङ्गा इव वारिधौ।
अप्रबुद्धास्तु तन्मात्रनिष्ठा लोष्टवदास्थिताः॥ ६१॥

मनसा बुद्धास्तत्त्वविदस्तु तैर्जीवैः सह मिलन्तीति सर्वं पश्यन्तीत्याशयः॥ ६१॥

यथा द्रवत्वाद्वीच्यम्बु त्वन्योन्यं संमिलत्यलम्।
तथा प्रबुद्धा जीवौघा मिथश्चित्त्वान्मिलन्त्यलम्॥ ६२॥

मेलने च हेतुः स्थौल्यापगम इत्याशयेनाह-यथेति॥ ६२॥

प्रत्येकमुदिते चैते संसारे जीवराशयः।
चिद्धातोः सर्वगत्वेन त्वसत्याः सत्यवत्स्थिताः॥ ६३॥

सर्वजीवतत्त्वभूतब्रह्मैक्यलाभ एव
सर्वैस्तदीयकल्पितरूपात्मकजीवैर्मिलनमित्याशयेनाह-प्रत्येकमिति।
चिद्धातोश्चित्सारस्य ब्रह्मणः॥ ६३॥

यद्यदाखन्यते भूमेस्तत्तन्नाम यथा नभः।
सर्वगायाश्चितेर्यद्यदुह्यते तत्तथैव चित्॥ ६४॥

उह्यते अपोह्यते तत्त्वदर्शनेन सत्यत्वादपनीयते तत्तथा नभोवदेव चित्परिशिष्यते॥ ६४
।।

सर्वप्रपञ्चभूतानि यथानुभवसीह हि।
तथेह सर्वभूतात्म चित्त्वं सर्वत्र विद्यते॥ ६५॥

नभस इव चितः सर्वत्र सत्त्वमनुभावयति-सर्वेति। सर्वे प्रपञ्चा
विशेषविभागास्तद्युक्तानि पञ्चभूतानि यथा सर्वत्रानुभवसि तथा
सर्वभूतात्मभूतसत्तारूपं चित्त्वमपि सर्वत्र विद्यते तदनुभवेत्यर्थः॥ ६५॥

यच्छालभञ्जिका वृक्षे शैले श्वभ्रे गत्ऽन्तकम्।
प्रेक्ष्यते तद्वदेकात्मा तथा चिति जगत्स्थितम्॥ ६६॥

तस्य सर्वगतत्वे तत्र च सर्वकल्पने दृष्टान्तमाह-यदिति। यद्यथा वृक्षे
काष्ठे शैले शिलास्तम्भे वा टङ्कच्छेदेन
शिल्पिभिस्तत्तदाकारप्रतिमानुकूलश्वभ्रे कृते अन्तकं
पुरुषहस्तितुरगाद्याकारपरिच्छेदं गते सति तदेव पुरुषादिविचित्ररूपा शालभञ्जिका
प्रेक्ष्यते तद्वदेकात्मा सद्रूपः सर्वाकारः प्रेक्ष्यते चिद्रूपे तस्मिंश्च जगत्तथा
स्थितं प्रेक्ष्यत इत्यर्थः॥ ६६॥

अवेदने परे शुद्धे वेदनं यज्जगत्स्थितम्।
अकारणमचैतन्यं शून्यत्वेन यथा नभः॥ ६७॥

वृक्षादौ टङ्कश्वभ्रकृतः परिच्छेद इह तु किंकृतः स तत्राह-अवेदने
इति। अवेदने अविषये परे शुद्धे यद्वेदनं विषयतापादनमन्यथाज्ञानं तदेव

110813 जगदिति परिच्छेदनिमित्तं स्थितमित्यर्थः। चिदेकरसे ब्रह्मणि
110814 यज्जगदाकारमचैतन्यं जाड्यं तदकारणं निर्निमित्तमेवेति नभ इव शून्यत्वेन
110815 स्थितम्॥ ६७॥
110816
110817 विद्यते वेदनं दृश्यबन्धो मोक्षस्त्ववेदनम्।
110818 यदेव रुचिरं ते स्यात्तदेवाशु दृढीकुरु॥ ६८॥
110819
110820 तथा च तादृशवेदनमेवास्य दृश्यबन्धस्तन्निवृत्तिरेव मोक्ष इति
110821 फलितमित्याह-विद्यत इति॥ ६८॥
110822
110823 सर्गासर्गौ बन्धमोक्षौ वेदनावेदनात्मकौ।
110824 अभिन्नौ बोधनाच्चोभौ यथेच्छसि तथा कुरु॥ ६९॥
110825
110826 बोधनात्तदुभयसाक्षिणः॥ ६९॥
110827
110828 असंवित्तेस्तु यन्नास्ति तन्नाशे का कदर्थना।
110829 तूष्णींभावेन यत्प्राप्यं प्राप्तमेवाशु विद्धि तत्॥ ७०॥
110830
110831 असंवित्तेरदर्शनमात्राद्यन्नास्ति तस्य अनर्थस्य नाशे का कदर्थना आयासः। यच्च
110832 सुखं तूष्णींभावेन प्राप्यं तदाशु प्राप्तमेव। तत्राप्यायासापेक्षा नास्तीत्यर्थः
110833 ॥ ७०॥
110834
110835 यद्वै वेदनमात्रात्म तदङ्गावेदनक्षयम्।
110836 तद्वेदनं वेदनाया यदिष्टं तत्समाचरेत्॥ ७१॥
110837
110838 यज्जगद्रूपं वेदनमात्रात्म तत् अवेदनमदर्शनमेव क्षयो यस्य तथाविधम्।
110839 तत्तस्या जगद्वेदनाया यद्वेदनं साक्षिचैतन्यं तत्प्राप्तमेवेत्यनुषज्जते##-
110840
110841 वीचिर्यथाम्भसः स्पन्दो जगच्चैव तथा चितौ।
110842 एतावन्मात्र एवात्र भेदो यद्रघुनन्दन॥ ७२॥
110843
110844 दृष्टान्ताद्दार्ष्टान्तिके यद्वैलक्षण्यंन् तद्दर्शयति-एतावन्मात्र इति। भेदो
110845 वैलक्षण्यम्॥ ७२॥
110846
110847 देशकालस्वरूपेषु सत्सु वीच्यादिताम्भसि।
110848 जगदादौ तु देशाद्या असन्तो जगतीक्षिताः॥ ७३॥
110849
110850 तदेवाह-देशेति। जगत आदौ विवर्तोपादाने ब्रह्मणि देशाद्याः पूर्वमसन्तः
110851 पश्चादारोप्यमाणाः कार्यभूतजगत्कोटावेवेक्षिताः॥ ७३॥
110852
110853 आभास्वरं त्रिजगदित्यतिभाति भास्वत्स्वं वेदनं विदनमेव चितेः स्वरूपम्।
110854 वाचि स्थितं भवति चैतदुपोह भेदक्लिष्टं प्रशान्तवचनस्तु शिवः परात्मा॥
110855 ७४॥
110856
110857 भास्वत्स्वप्रकाशं यत्स्वमात्मरूपं वेदनं चैतन्यं
110858 तदेवाविद्यावरणादाभास्वरमीषत्प्रकाशमिव संपन्नं त्रिजगदित्यतिक्रम्य
110859 स्वरूपमन्यथा भाति। चितेश्चिद्रूपस्य तस्य पारमार्थिकं स्वरूपं विदनं
110860 ज्ञानमेव न जडम्। एतद्भेदक्लिष्टं त्रिजगत्। अन्नेन सोम्य
110861 शुंगेनाऽपोमूलमन्विच्छ इत्यादिश्रुतिदर्शितोपायैरुपोह उपसंहर।
110862 तथोपसंहृतं तु तत् वाचारम्भणं विकारो नामधेयम् इति श्रुतिदर्शितदिशा वाचि
110863 वाङ्मात्रे स्थितं भवति। प्रशान्तं वचनं वाङ्मात्रमपि यत्र तथाविधस्तु
110864 परः शिवः परमात्मेत्यर्थः॥ ७४॥

110865
110866 संवेदनं सर्व इतीह शब्दादर्थादभिन्नौ न कदाचिदेतौ।
110867 वीच्यम्भसी द्वे इति नोचितोक्तिर्यस्याज्ञतायां त्विदमेव युक्तम्॥ ७५॥
110868
110869 एवं संवेदनमात्मचैतन्यं सर्वो जगदिति च शब्दादर्थाच्चभिन्नौ संपन्नौ न
110870 कदाचिदेतौ द्वौ स्तः। यस्योक्तरूपस्यात्मनः अज्ञतायामिदमेव युक्तं न तु
110871 ज्ञतायामित्यर्थः॥ ७५॥
110872
110873 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मी॰ दे॰ मो॰ निर्वाणप्रकरणे पू॰
110874 जीवटोपाख्याने स्वप्नशतरुद्रीयकथनं नाम त्रिषष्टितमः सर्गः॥ ६३॥
110875
110876 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
110877 स्वप्नशतरुद्रीयकथनं नाम त्रिषष्टितमः सर्गः॥ ६३॥
110878
110879 चतुःषष्टितमः सर्गः ६४
110880
110881 श्रीराम उवाच।
110882
110883 जीवटब्राह्मणादीनां हंसादीनां मुनीश्वर।
110884 भिक्षुस्वप्नशरीराणां संपन्नं किमतः परम्॥ १॥
110885
110886 तैस्तैर्देहैः पुनस्तेषां शेषभोगोऽत्र वर्ण्यते।
110887 ततो रुद्रगणत्वाप्तिः संकल्पस्थिरताक्रमः॥
110888
110889 भिक्ष्वादिरुद्रान्तदेहेष्वान्तरालिकाष्टनवतिदेहेषु भोजकप्रारब्धशेषाः सन्ति न वेति
110890 सदेहात्तद्वृत्तान्तं रामः पृच्छति-जीवटेति। किं संपन्नं
110891 स्वाप्नशरीरवद्बाध उताग्रे व्यवहारोऽपि संपन्न इत्यर्थः॥ १॥
110892
110893 श्रीवसिष्ठ उवाच।
110894
110895 रुद्रेण सह संभूय प्रबुद्धाः सर्व एव ते।
110896 मिथश्च दृष्टसंसारा रुद्रांशाः सुखिनः स्थिताः॥ २॥
110897
110898 ते रुद्रांशा मिथश्च दृष्टपूर्वोत्तरसंसाराः सन्तः कृतकृत्यत्वात्सुखिनः
110899 स्थिताः॥ २॥
110900
110901 तेन रुद्रेण तां मायामवलोक्य यथोदिताम्।
110902 स्वांशास्तामेव संसारस्थितिं ते प्रेषिताः पुनः॥ ३॥
110903
110904 तेन कौतुकदर्शनाय प्रथमं प्रवृत्तेन रुद्रेण। तां जीवटादिसंसारस्थितिमेव॥
110905 ३॥
110906
110907 श्रीरुद्र उवाच।
110908
110909 गच्छताशु निजं स्थानं तत्र भुक्त्वा कलत्रकैः।
110910 कंचित्कालं समं भोगान्मत्सकाशमुपैष्यथ॥ ४॥
110911
110912 भविष्यथ मदंशा ये गणा मत्पुरभूषणाः।
110913 ततो महाप्रलयतो यास्यामस्तत्परं पदम्॥ ५॥
110914
110915 महाप्रलयतो द्विपरार्धावसानतः प्रारब्धक्षये भोजकाविद्यालेशेन सह।
110916 जगत्प्रतिभासक्षयतो वा॥ ५॥

110917
110918 श्रीवसिष्ठ उवाच।
110919
110920 इत्युक्त्वा भगवान् रुद्रस्तेषां सोऽन्तरधीयत।
110921 अन्त्यसंसारसंख्यानं रुद्राणां मध्यमाययौ॥ ६॥
110922
110923 तेषां स्वेषां रुद्राणां तदानीमन्त्यरुद्रसंसारस्य यत्संख्यानं दर्शनं
110924 यत्साक्षिचैतन्यमभूत्तन्मध्यमान्तरालिकं जीवटादिसंसारं प्रत्येकमाययौ
110925 स्वप्नसाक्षीव जागरमित्यर्थः॥ ६॥
110926
110927 प्रययुः स्वास्पदं तेऽपि जीवटब्राह्मणादयः।
110928 स्वकलत्रैः समं देहं क्षपयित्वाथ कालतः॥ ७॥
110929
110930 रुद्रलोकं समासाद्य भविष्यन्ति गणोत्तमाः।
110931 कदाचिद्व्योम्नि दृश्यन्ते तारकाकारकारिणः॥ ८॥
110932
110933 भविष्यन्तीत्युक्तेर्वसिष्ठरामसंवादकाले ते स्वस्वसंसारे एव स्थिता इति गम्यते॥ ८॥
110934
110935 श्रीराम उवाच।
110936
110937 भिक्षुसंकल्परूपास्ते जीवटब्राह्मणादयः।
110938 कथं सत्यत्वमायाताः संकल्पार्थे क्व सत्यता॥ ९॥
110939
110940 प्राग्बहुशः पृष्टार्थस्यैव विशेषजिज्ञासया प्रश्नः स्पष्टः॥ ९॥
110941
110942 श्रीवसिष्ठ उवाच।
110943
110944 संकल्पसत्यता त्वंशे त्यज संकल्पसत्यताम्।
110945 तत्र यन्नास्ति तन्नास्ति यतः सर्वात्म तत्पदम्॥ १०॥
110946
110947 अंशे अधिष्ठानचिदंश एव। अध्यस्तांशे तु संकल्पस्य सत्यतां विवेकेन त्यज।
110948 तत्र सदसत्संवलितसांकल्पिकार्थे यत्सदतिरिक्तरूपं पूर्वोत्तरकालयोर्नास्ति तदेव
110949 नास्ति तत्पदमधिष्ठानं तु यतः सर्वात्म ततोस्त्येवेति तत्सत्तयैव
110950 भोजकादृष्टोद्बोधितसांकल्पिकार्थस्यार्थक्रियासामर्थ्यमित्यर्थः॥ १०॥
110951
110952 यत्स्वप्ने दृश्यते यच्च संकल्पैरवलोक्यते।
110953 तत्तथा विद्यते तत्र सर्वकालं तदात्मकम्॥ ११॥
110954
110955 सर्वकालं यत्सदधिष्ठानं तदात्मकं भूत्वा तद्देशकालात्मतया तत्र सदा
110956 विद्यते॥ ११॥
110957
110958 तद्देशकालात्मतया गत्वा देशान्तरं यथा।
110959 देशाद्देशान्तरं यद्वन्न गत्यात्मादिकं विना॥ १२॥
110960
110961 गत्वा देशान्तरं यथेत्येतद्विवृणोति-देशादिति। यथा
110962 मथुरादिदेशाद्देशान्तरं पाटलिपुत्रादि तत्र विद्यमानमपि गतिर्गमनमात्मा
110963 स्वस्थं मनः आदिपदाच्चक्षुरादिपाटवमहरादिकालस्तद्विवेकोपदेष्टा पुरुष
110964 इत्यादिकं कारणकलापं विना न लभ्यते तथा स्वप्नोऽपि तत्र जाग्रत्सुषुप्त्योः
110965 स्वप्नान्तरे वा न लभ्यते इति परेणान्वयः॥ १२॥
110966
110967 न लभ्यते तथा स्वप्नो विना तत्र न लभ्यते।
110968 सर्वमस्ति चितः कोशे यद्यथालोकयत्यसौ॥ १३॥

110969
110970 चितः कोशे कोशसदृशे सर्ववासनाकरे अज्ञाने यथा यथा आलोकयति
110971 भोजकादृष्टोद्बोधितवासनाभिः पर्यालोचयति तथा तथा चित् अविक्षतं समग्रं
110972 तद्विषयरूपं दृश्यतया आप्नोति ॥ १३ ॥
110973
110974 चित्तथा तदवाप्नोति सर्वात्मत्वादविक्षतम् ।
110975 संकल्पः स्वप्नकस्त्वङ्ग यया च दशयाप्यते ॥ १४ ॥
110976
110977 सर्वस्य स्वप्नसंकल्पादेर्युगपद्दर्शने तर्हि क उपायस्तमाह-संकल्प इति ।
110978 आप्यते तां दशां शृण्विति शेषः ॥ १४ ॥
110979
110980 परमभ्यासयोगाभ्यां विना त्वेतन्न लभ्यते ।
110981 येषां तु योगविज्ञानदृष्टयः फलिताः स्थिताः ॥ १५ ॥
110982
110983 परमिति । अभ्यासयोगपरिपाकदशैव सेत्यर्थः । तत्रेश्वराणां विनाप्यभ्यासं स्वत
110984 एव योगसिद्धिफलमस्तीति विशेषमाह-येषां त्विति ॥ १५ ॥
110985
110986 सर्वं सर्वत्र पश्यन्ति ते यतः शंकरादयः ।
110987 इदमग्रगतं वस्तु तथा संकल्पितं मया ॥ १६ ॥
110988
110989 अभ्यासयोगयोः संकल्पितार्थलाभे तदैकाग्र्यसंपादकत्वेनैवोपयोगः ।
110990 ऐकाग्र्याभावे तु चित्तमनेकार्थव्यासक्तमेकमपि स्वसांकल्पिकमर्थं न लभत
110991 इत्यसत्यसंकल्पतास्य संपन्नेत्याशयेनाह-इदमित्यादिना । मया
110992 ऐकाग्र्यशून्येन न आप्यं प्राप्तुं शक्यं यतश्चित्तं
110993 संकल्पिततदन्योभयाश्रयादुभयभ्रंशं प्राप्नोति नैकत्र
110994 स्थिरीभवतीत्युत्तरेणान्वयः ॥ १६ ॥
110995
110996 नाप्यं यतोभयभ्रशं स प्राप्नोत्युभयाश्रयात् ।
110997 सर्वं ह्यभिमतं कार्यमेकनिष्ठस्य सिद्ध्यति ॥ १७ ॥
110998
110999 यत इत्यत्र यलोपस्यासिद्धत्वात्संधिरार्षः । उक्तमेवार्थं सामान्योक्तिभिः
111000 समर्थयति-सर्वमित्यादिना ॥ १७ ॥
111001
111002 दक्षिणां ककुभं गच्छन्कः प्राप्नोत्युत्तरां दिशम् ।
111003 संकल्पार्थपरैरेव संकल्पार्थोऽवगम्यते ॥ १८ ॥
111004
111005 ककुभं दिशम् ॥ १८ ॥
111006
111007 अग्रस्थार्थपरैरग्रे संस्थितोर्थोऽवगम्यते ।
111008 अग्रस्थे बुद्धिसंस्थे यः संकल्पं प्राप्तुमिच्छति ॥ १९ ॥
111009
111010 तदासावेकनिष्ठत्वाभावात्तन्नाशयेद्द्वयम् ।
111011 तस्मादेकार्थनिष्ठत्वाद्भिक्षुजीवेन रुद्रताम् ॥ २० ॥
111012
111013 प्रकृते योजयति-तस्मादिति ॥ २० ॥
111014
111015 प्राप्य सर्वात्मना लब्धं तथा सर्वं तथास्थितेः ।
111016 भिक्षुसंकल्पजीवास्ते प्रत्येकं तज्जगत्पृथक् ॥ २१ ॥
111017
111018 तथा प्रसिद्धरुद्रवदेव सार्वज्ञ्येन सर्वं लब्धम् । अस्यापि तथा स्थितेः । ते
111019 आन्तरालिका जीवटादयोऽष्टनवतिभिक्षुसंकल्पजीवाः प्रत्येकं यतः स्थितास्तज्जगच्च
111020 पृथक्पृथक् ततोऽन्योन्यं न पश्यन्ति ॥ २१ ॥

पश्यन्ति चैते नान्योन्यं रुद्रज्ञानादृते ततः।
अप्रबुद्धाः प्रजायन्ते जीवा जीवान्तबोधिनः॥ २२॥

तर्हि ते रुद्रसंनिधौ कथमन्योन्यं दृष्टवन्तस्तत्राह-अप्रबुद्धा इति।
जीवानामन्ताः संसारभेदास्तद्बोधिनस्तस्य रुद्रस्येच्छया प्रजायन्ते॥ २२॥

तदिच्छयाशु तद्रूपा बहुरूपाश्च ते इह।
इह विद्याधरोऽहं स्यामहं स्यामिह पण्डितः॥ २३॥

तथा तद्रूपा बहुरूपाश्च ते तदिच्छयैव जायन्ते इत्यर्थः। प्रातिस्विकसंसारदर्शने
तु तेषामेवेच्छा हेतुरित्याह-इहेति॥ २३॥

इत्येकध्यानसाफल्यं दृष्टान्तोऽस्यां क्रियास्थितौ।
एकत्वं च बहुत्वं च मौर्ख्यं पाण्डित्यमेव वा॥ २४॥

अन्येषामपि जीवानामस्यां प्रसिद्धायां क्रियास्थितौ
तत्तद्व्यवहारव्यवस्थायामयं भिक्षुसंकल्पसर्ग एव दृष्टान्तः। अयं जीवो
धारणाध्यानयत्नानुसारेण यद्यदिष्टं तत्तत्सर्व क्रमेण युगपच्च यथेच्छं
कर्तुं समर्थ इत्याह-एकत्वमित्यादिना॥ २४॥

देवत्वं मानुषत्वं च देशकालक्रियाक्रमैः।
तुल्यकालमलं कर्तुं धारणाध्यानयत्नतः॥ २५॥

देशकालक्रियाक्रमैस्तुल्यकालं वा कर्तुमलं समर्थः॥ २५॥

सर्वशक्त्यः [बह्वादित्वान्ङीष् शक्तियष्ट्योरीकगिति
सूत्रस्थभाष्यस्थकैयटोक्तेः।] स्वरूपत्वाज्जीवस्यास्त्येकशक्तिता।
अनन्तश्चान्तपृक्तश्च [युक्तश्च इति पाठः।] स्वभावोऽस्य स्वभावतः
॥ २६॥

तत्र हेतुमाह-सर्वेति। यतोऽयं जीवः परमार्थतोऽनन्तः अतोऽस्य सर्वशक्तयः सन्ति
यतश्चायमेकैकदेहाभिमानलक्षणेनान्तेन परिच्छेदेन पृक्तः
अतोऽस्यैककार्यमात्रशक्तितास्ति। शक्तिस्वभावानुसारतश्च तत्तत्कार्यस्वभावोऽस्य
व्यवस्थित इत्यर्थः॥ २६॥

सविकासः ससंकोचोऽहिंस्रस्तेन चिदात्मनः।
यदिच्छति तदस्याङ्ग जन्तुः संपद्यते स्वयम्॥ २७॥

अत एव प्राणिकर्मानुसारेण स्वर्गनरकाद्यनर्थसहस्रसर्गात्मना सविकासः
सर्वप्राणिसंहारेण प्रलयात्मना च ससंकोचो जगदीश्वरः अहिंस्रो
हिंसाप्रयुक्तवैषम्यनैर्घृण्यदोषशून्यः यतोऽयं जन्तुर्जीवसङ्घः स्वयं
यदिच्छति तदेव स्वेच्छानुसारादस्य चिदात्मन ईश्वरस्य संकल्पात्संपद्यते न तेन
किंचित्कस्यचिदनिष्टं क्रियत इत्यर्थः। तथा च भगवतो वादरायणस्य सूत्रम्
वैषम्यनैर्घृण्ये न सापेक्षत्वात् इति॥ २७॥

स्वयं संपादितैरेभिर्देशकालक्रियाक्रमैः।
योगिन्यो योगिनश्चेह तिष्ठन्त्यन्यत्र यत्र च॥ २८॥

इदानीं धारणाध्यानयत्नफलमैच्छिकीमेकधानेकधावस्थितिमुदाहरणेन
प्रपञ्चयति-स्वयं संपादितैरित्यादिना।
तत्तद्देशकालानुसारिप्राण्यनुग्रहनिग्रहक्रीडाद्याधिकारिकक्रियाक्रमैः। इह

111073 स्वगृहे अन्यत्र यत्रेच्छन्ति तत्र च नानादेहादिकल्पनया तिष्ठन्ति ॥ २८ ॥
111074
111075 इह वामुत्र भोगेन दृष्टमेतदनेकशः ।
111076 कार्तवीर्यो गृहे तिष्ठन्सर्वेषां भयदोऽभवत् ॥ २९ ॥
111077
111078 इह लोके अमुत्र स्वर्गादिषु वा योगिनो युगपत्प्रारब्धभोगेन तिष्ठन्तीति पूर्वेणान्वयः
111079 । एतदेवंविधं योगिनां चरित्रम् । सर्वेषां चोरादीनां तत्र तत्र संनिधानेन
111080 भयदः शास्ता अभवत् । तच्च भगवतो दत्तात्रेयस्य प्रसादाल्लब्धं योगसामर्थ्यं
111081 तस्य मार्कण्डेयपुराणादौ प्रसिद्धम् ॥ २९ ॥
111082
111083 विष्णुः क्षीरोदधौ तिष्ठन्जायते पुरुषो भुवि ।
111084 पश्वर्थं यान्ति तिष्ठन्त्यो योगिन्यो योगिनीगणे ॥ ३० ॥
111085
111086 जायते जन्मादिना व्यवहरति । स्वर्लोके योगिनीगणमध्ये तिष्ठन्त्य एव भूलोके
111087 पशुपेयाद्युपहारग्रहणार्थं यान्ति ॥ ३० ॥
111088
111089 शक्रः स्वर्गासने तिष्ठन्याति यज्ञार्थमुर्विकाम् ।
111090 सहस्रमेकं भवति तथा चास्मिञ्जनार्दनः ॥ ३१ ॥
111091
111092 अस्मिन्रामावतारे जनार्दनो जनस्थाने चतुर्दशसहस्रराक्षसवधाय सहस्रं
111093 संपन्नः पुनरेको भवति ॥ ३१ ॥
111094
111095 नृणां शतानि भक्तानां मानुष्यं याति तन्नतैः ।
111096 एकः सहस्रं भवति तथा चैष जनार्दनः ॥ ३२ ॥
111097
111098 तेषां भक्तानां नतैर्नमस्कारादिना प्रार्थनैः । भक्तानां नृणां शतानि
111099 अनुग्रहीतुं पुनर्यदुकुले मानुष्यं याति । तत्र च कुरुसभायां
111100 दुर्योधनादिव्यामोहनायैकः सहस्रं भवति ॥ ३२ ॥
111101
111102 अंशावतारलीलाभिः कुरुते जागतीं स्थितिम् ।
111103 एकः कान्तासहस्राणि तुल्यकलं निमेषवत् ॥ ३३ ॥
111104
111105 कान्तानां सहस्राणि षोडशसहस्रं तुल्यकालमुपभुङ्क्ते इति शेषः । तत्र
111106 दृष्टान्तः-निमेषवदिति । यथा निमी राजर्षिर्विदेहतामापन्नः सर्वप्राणिनां
111107 नेत्रेषु वसन् युगपन्निमेषणानि करोति तद्वत् ॥ ३३ ॥
111108
111109 एवं ते भिक्षुसंकल्पा जीवटब्राह्मणादयः ।
111110 रुद्रविज्ञानवशतः स्वसंकल्पपुरीं गताः ॥ ३४ ॥
111111
111112 वर्णितरीत्या प्रकृतेऽपि बोध्यमित्याह-एवमिति । रुद्रस्य विज्ञानमभ्यनुज्ञा
111113 तद्वशतः । तत्संकल्पानुसारिण्येव रुद्रस्याभ्यनुज्ञा तद्बलादित्यर्थः ॥ ३४ ॥
111114
111115 तत्र भुक्त्वा चिरं भोगान्प्राप्य रुद्रपुरं ततः ।
111116 गणतामावसन्तस्ते स्थास्यन्ति सपरिच्छदाः ॥ ३५ ॥
111117
111118 नित्यं प्रफुल्लनवकल्पलतालयेषु रुद्रेण साकमुरुरत्नगुलुच्छकेषु ।
111119 नानाजगत्सु च तदा शिवपत्तनेषु विद्याधरीष्वमरमौलिधराश्च रेजुः ॥ ३६ ॥
111120
111121 तेषामपि तदा स्वगृहे सर्वभुवनेषु च बहुदेहकल्पनेनैच्छिकविहारो
111122 युगपत्प्रवृत्त इत्याह-नित्यमिति । ते गणा उरुरत्नगुलुच्छकेषु बहुरत्नस्तबकेषु
111123 प्रफुल्लनवकल्पलतागृहेषु रुद्रेण साकं तथा नानाविधेषु जगत्सु भुवनेषु तथा
111124 शिवेषु कैलासवैकुण्ठब्रह्मलोकादिपत्तनेषु नगरेषु च विहरन्तो

111125 गीतवादित्रनाट्यादिकुशलासु विद्याधरीषु मध्ये अमरैर्मौलिषु ध्रियन्ते सर्वत्र
111126 प्रणम्यन्त इत्यमरमौलिधराः। अमरं मरणनिवारकममृतपूर्णं चन्द्रं
111127 मौलौ धारयन्तीति वा अमरमौलिधराः सन्तो रेजुर्बभुः॥ ३६॥
111128
111129 इत्यार्षे श्रीवासिष्ठमहारामा० वाल्मीकीये दे०मोक्षोपायेषु निर्वाणप्रकरणे पू०
111130 गणत्वप्राप्तिर्नाम चतुःषष्टितमः सर्गः॥ ६४॥
111131
111132 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
111133 गणत्वप्राप्तिर्नाम चतुःषष्टितमः सर्गः॥ ६४॥
111134
111135 स्वप्नशतरुद्रीयं समाप्तम्।
111136 पञ्चषष्टितमः सर्गः ६५
111137
111138 श्रीवसिष्ठ उवाच।
111139
111140 ईषद्दृष्टो यथा तेन भिक्षुणा चेतसि भ्रमः।
111141 भूतं प्रयत्नमेवैष पृथक्कृत्वा सुपश्यति॥ १॥
111142
111143 भिक्षुन्यायोऽत्र सर्वेषु जीवेषु सम उच्यते।
111144 रात्रावन्वेष्यता भिक्षोः सभोत्थानं च वर्ण्यते॥
111145
111146 सर्वस्याभासजीवस्य मृतिजन्ममयी स्थितिः।
111147 भवत्येव चिदाकाशरूपिण्येवाकृतिं गता॥ २॥
111148
111149 यथावर्णितप्रकारस्तेन भिक्षुणा स्वचेतसि यो भ्रम ईषद्दृष्टः आपाततश्चिन्तितः
111150 एष भिक्षुस्तं भ्रमं स्वं भूतं प्राक्तनं शुभाशुभकर्मलक्षणं
111151 प्रयत्नमेव फलावस्थायां पृथक् स्वात्मनो व्यतिरिक्तमिव कृत्वा सुष्टु स्पष्टं
111152 प्रपश्यति। नाणुमात्रमप्यन्यदस्तीत्यर्थः॥ १॥ २॥
111153
111154 पृथक्कृत्यैक्यमभ्येति स्वात्मा संसारखण्डकम्।
111155 सर्व एव मृतो जन्तुः पृथक्स्वप्ननिभात्मकम्॥ ३॥
111156
111157 एवमेव सर्वेषामपि जीवानां मरणकालोद्बुद्धं स्वकर्मैव स्वप्न इव जगदात्मना
111158 आमोक्षं भातीति बोध्यमित्याह-सर्व एवेति॥ ३॥
111159
111160 एवंततस्वरूपोऽपि देही चामोक्षमाकुलः।
111161 जीवयूथं मया तुभ्यं कथितं कथयाऽनया॥ ४॥
111162
111163 एवं भिक्ष्वात्मेव ततमपरिच्छिन्नं स्वरूपं यस्य तथाविधोऽपि देही देहपरिच्छिन्न
111164 इव आमोक्षमाकुलस्तिष्ठतीत्यर्थः। अनया भिक्षुकथया॥ ४॥
111165
111166 परात्प्रस्पन्दितात्मेति न भिक्षू राम केवलम्।
111167 मोहान्मोहान्तरं याति जीवोऽहरहरेव नः॥ ५॥
111168
111169 परात्पूर्णस्वरूपात्प्रस्पन्दितात्मा सर्वोऽपि जीव इति एवंप्रकार एव न केवलं
111170 भिक्षुरित्यर्थः। अहरहः प्रतिदिनं स्वप्ने नः अनुभवसिद्धमेवेत्यर्थः॥ ५॥
111171
111172 पर्वताग्रपरिभ्रष्टो ह्यधोध उपलो यथा।
111173 परमात्मपरिभ्रष्टो जीवः स्वप्नमिमं दृढम्॥ ६॥
111174
111175 पश्यत्यस्मादपि स्वप्नाद्याति स्वप्नान्तरं पुनः।
111176 स्वप्नात्स्वप्ने विनिपतन्मृषैवेदं दृढं किल॥ ७॥

इदं जन्मादिदुःखं क्वचित्केनचिन्निमित्तेन परिपश्यतीति परेणान्वयः ॥ ७ ॥

परिपश्यति जीवोऽन्तर्मायया जर्जरीकृतः ।
क्वचित्केनचिदेवेह कदाचिदपि वा स्वयम् ॥ ८ ॥

देहनाम्नोऽहमित्यन्तो मुच्यते स्वं प्रपद्यते ।

श्रीराम उवाच ।

अहो नु विषमो मोहो जीवस्यास्योपजायते ॥ ९ ॥

इदानीं बन्धमोक्षतत्त्वं संक्षिप्याह-देहेति । देहनाम्नोऽहमित्यभिमान एवान्तो
बन्धः स्वात्मलाभ एव मोक्ष इति निष्कर्ष इत्यर्थः । किंचित्प्रष्टुकामो रामो
वर्णितार्थप्रबोधमाश्चर्याभिनयेन व्यनक्ति अहो इत्यादिना ॥ ९ ॥

यथा सुप्तस्य स्तोकेन नानाकारविकारया ।
मिथ्याज्ञानोग्रयामिन्या मायया निपतत्यलम् ॥ १० ॥

स्तोकेनाल्पेनापि मदश्रमादिनिमित्तेन सुप्तस्य मनः स्वाप्नमायया यथा
अलमत्यन्तं भीमं वैषम्यं दुःखसंकटं निपतति तच्च
निजवत्सत्यवत्स्वीयवद्वा उच्यते तद्वदहो आश्चर्यमिति परेणान्वयः ॥ १० ॥

अहो नु खलु वैषम्यं भीमं निजवदुच्यते ।
भगवन्सर्वदा सर्वं सर्वदैव जगत्स्थितौ ॥ ११ ॥

सर्व सर्वत्र सर्वदा संभवतीति च त्वया यदुक्तं तदप्यनुभवारूढं
ममाभूदित्याह-भगवन्निति ॥ ११ ॥

त्वया संभवतीत्युक्तं यथा तच्चानुभूयते ।
एवंगुणविशिष्टात्मा तन्मोहात्मा स भिक्षुकः ॥ १२ ॥

एवमुपदिष्टार्थाभिनन्दनेन गुरुं प्रतोष्य त्वयायं भिक्षुर्मद्बोधाय
कल्पयित्वोक्त उत क्वचिदस्तीति संदेहेन कौतुकात्पृच्छति-एवंगुणविशिष्टेति ।
तन्मोहात्मा तादृशजीवटादिमोहात्मा ॥ १२ ॥

क्वचिदस्ति न वास्त्यन्तरालोक्य कथयाशु मे ।

श्रीवसिष्ठ उवाच ।

अद्य रात्रौ समाधिस्थस्त्रिलोकीमठिकामिमाम् ॥ १३ ॥

अन्तर्योगेन आलोक्य त्वद्बोधाय यद्यपि कल्पयित्वा मया भिक्षुरुक्तस्तथापि
तद्वाक्यस्यानृतत्वायोगात्क्वचित्संभावित एव सः । तस्य च योगेनाधुना दर्शने
उत्थाने विलम्बः स्यादित्याशयेन वसिष्ठस्तत्कालोचितमुवाच-अद्येति ॥ १३ ॥

भिक्षुरेकोऽस्तिनास्तीति प्रेक्ष्य प्रातर्वदाम्यहम् ।

वाल्मीकिरुवाच ।

मुनौ चैवं कथयति बहिर्मध्याह्नडिण्डिमः ॥ १४ ॥

उत्थानयोग्यमध्याह्नबोधको डिण्डिमो वाद्यभेदस्तद्ध्वनिरिति यावत् ॥ १४ ॥

उदभूत्प्रलयक्षुब्धघनगर्जितमांसलः ।
तत्यजुः पादयोस्तस्य पुष्पाञ्जलिपरम्पराः ॥ १५ ॥

घनगर्जितमिव मांसलः पुष्टः । तस्य वसिष्ठस्य ॥ १५ ॥

मृपाः पौरा विटपिनः पुष्पं वातधुता इव ।
पूजयित्वा मुनिश्रेष्ठानुदतिष्ठन्स्वविष्टरात् ॥ १६ ॥

वातेन धुताः कम्पिता विटपिन इव ॥ १६ ॥

सभा तदनु सोत्तस्थौ सप्रणामपरम्परा ।
क्रमेण ह्यस्तनेनैव जग्मुः खेचरभूचराः ॥ १७ ॥

ह्यस्तनेन पूर्वेद्युर्भवेन ॥ १७ ॥

स्वास्पदेषु यथाशास्त्रमहर्व्यापारमादृताः ।
सर्वे संपादयामासुर्निजधर्मं क्रमोचितम् ॥ १८ ॥

अहर्व्यापारमाह्निकं निजधर्मं संपादयामासुः ॥ १८ ॥

चिन्तयन्तो मुनिप्रोक्तं महीचरनभश्चराः ।
ज्ञानं क्षपां क्षणमिव निन्युः कल्पमिवापि च ॥ १९ ॥

मुनिप्रोक्तं ज्ञानं शास्त्रं चिन्तयन्तः अभ्यस्यन्तः ।
उपदिष्टार्थानुसंधानसुखेन क्षणमिव पुना
रामपुष्टार्थश्रवणेच्छौत्कण्ठ्येन निद्राभावात्कल्पमिव च ॥ १९ ॥

प्रातः पुनः प्रसृतकार्यपरम्परेऽस्मिञ्जाते जने
खचरभूचरभूतसङ्घः ।
आख्यानलोकरचनेन तथैव तस्थावन्योन्यसंवदनपूजितपूज्यलोकः ॥ २० ॥

खचरभूचरभूतसङ्घो रात्रिमतिवाह्य प्रातर्जने प्रसृतस्वस्वकार्यपरंपरे
जाते सति दशरथसभामागत्य तथा पूर्वेद्युर्वदेव पुनः आख्यानलोकरचनेन
व्याख्यानश्रवणोचितसभासंनिवेशक्रमरचनेन तस्थौ ॥ २० ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाणप्रकरणे पू०
विद्योत्तरविस्मयवर्णनं नाम पञ्चषष्टितमः सर्गः ॥ ६५ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
विद्योत्तरविस्मयवर्णनं नाम पञ्चषष्टितमः सर्गः ॥ ६५ ॥
षट्षष्टितमः सर्गः ६६

वाल्मीकिरुवाच ।

वसिष्ठमुनिसंयुक्ता विश्वामित्रादिसंयुताः ।
स्थिताः खेचरसिद्धौघा विऽस्रान्ता नृपनायकाः ॥ १ ॥

अन्विष्टस्यात्र यत्नेन भिक्षोर्दर्शनमुच्यते ।
तादृशानां तथान्येषां मुनीनां भूतभाविनाम् ॥

111281 स्थिता उपविष्टाः। ततो नृपास्ततो नायकाः सामन्तादयश्च विश्रान्ता उपविष्टाः ॥ १ ॥
111282
111283 सरामलक्ष्मणा सैव तथैवाथ सभा बभौ।
111284 सौम्या समसमाभोगा शान्तवातेव पद्मिनी ॥ २ ॥
111285
111286 पद्मिनी पद्मवती सरसी ॥ २ ॥
111287
111288 अनवेक्ष्य वचः प्रश्नमुवाचाथ मुनीश्वरः।
111289 बोधयन्ति बलादेव सानुकम्पा हि साध्वः ॥ ३ ॥
111290
111291 प्रश्नमनवेक्ष्य अप्रतीक्ष्य वच उवाच। प्रातर्वदाम्यहमिति स्वयं प्रतिज्ञातत्वादिति
111292 भावः ॥ ३ ॥
111293
111294 श्रीवसिष्ठ उवाच।
111295
111296 राजन् रघुकुलाकाशशशाङ्क रघुनन्दन।
111297 ह्यो मया ज्ञाननेत्रेण स भिक्षुः प्रेक्षितश्चिरम् ॥ ४ ॥
111298
111299 चिरं प्रेक्षितोऽन्विष्टः। चिरमन्विध्य प्रेक्षित इति वा ॥ ४ ॥
111300
111301 ध्यानेनाहं चिरं भ्रान्तस्तादृग्भिक्षुदिदृक्षया।
111302 द्वीपानि सप्त विपुलां [पृथ्वीम्।] कुलशैलसपर्वताम् ॥ ५ ॥
111303
111304 यावत्कुतश्चिदप्येवं भिक्षुर्लब्धो न तादृशः।
111305 कथं किल मनोराज्यं बहिरप्युपलभ्यते ॥ ६ ॥
111306
111307 यावन्न लब्धस्तावदहं चिरं भ्रान्त इति पूर्वेणान्वयः ॥ ६ ॥
111308
111309 ततस्त्रिभागशेषायां रात्र्यां पुनरहं धिया।
111310 उत्तराशान्तरं यातो बेलावात इवार्णवम् ॥ ७ ॥
111311
111312 उत्तरस्या आज्ञाया दिश आन्तरं देशं यातो मनसा पर्यालोचितवानिति यावत् ॥ ७ ॥
111313
111314 जिननामैष तत्रास्ति श्रीमान् जनपदो महान्।
111315 वल्मीकोपरि तत्रास्ति विहारो जनसंश्रयः ॥ ८ ॥
111316
111317 वल्मीकाख्याज्जनपदादुपरि परतो जिननामा एष प्रसिद्धो जनपदोऽस्ति तत्र जनपदे
111318 विहाराख्यो जनसंश्रयो बहुजनाश्रयो देशोऽस्ति ॥ ८ ॥
111319
111320 तस्मिन्विहारे स्वकुटीकोशे कपिलमूर्धजः।
111321 भिक्षुर्दीर्घदृशो नाम स्थित एव समाधये ॥ ९ ॥
111322
111323 दृक्शब्दाद्भागुरिमतेन हलन्ताट्टापि दीर्घे दृशे यस्येति व्युत्पाद्यम् ॥ ९ ॥
111324
111325 एकविंशतिरात्रं च तस्यैवं स्थितिशालिनः।
111326 दृढार्गलं गृहं ध्यानभङ्गभीता विशन्ति नो ॥ १० ॥
111327
111328 तस्य गृहं कुटीं ध्यानभङ्गभीताः प्रिया अपि भृत्या नो विशन्ति किल ॥ १० ॥
111329
111330 भृत्याः प्रियाः किल तथा संतिष्ठति स भिक्षुकः।
111331 अद्यैव तस्य संवेत्तुं नियतेरीदृशी स्थितिः ॥ ११ ॥
111332

111333 तस्य भिक्षोः। संवेत्तुं विदेहकैवल्याय चरमसाक्षात्कारं प्राप्तुम्। तत्कुतः। यतो
111334 नियतेस्तदायुर्नियन्तुर्विधातुः॥ ११॥
111335
111336 रात्रयो ध्याननिष्ठस्य गतास्तस्यैकविंशतिः।
111337 स तु वर्षसहस्राणि तथा चित्तेन भूतवान्॥ १२॥
111338
111339 तथा प्राग्वर्णितप्रकारेण॥ १२॥
111340
111341 कस्मिंश्चित्प्राक्तने कल्पे भिक्षुरेवं पुराऽभवत्।
111342 अद्य त्विह द्वितीयोऽस्मिंस्तृतीयो नोपलभ्यते॥ १३॥
111343
111344 एवं एवंविधः। अद्यास्मिन्कल्पे। अयं द्वितीयः। तृतीयो नोपलभ्यते तदानीं
111345 मयेत्यर्थः॥ १३॥
111346
111347 मया तु पुनरन्विष्य चेतसा चतुरात्मना।
111348 तादृग् भिक्षुस्तृतीयोऽन्यो जगत्पद्मोदरालिना॥ १४॥
111349
111350 जगत्पद्मे अलिना अलिवद्भ्रमता मया अस्मिन् सर्गे तृतीयो नोपलभ्यत इति पूर्वेण परेण
111351 वा अन्वयः॥ १४॥
111352
111353 अस्मात्सर्गात्ततो लब्धस्तृतीयस्तादृशाशयः।
111354 अथान्ये लीलया सर्गा मया संप्रेक्षितास्ततः॥ १५॥
111355
111356 अथ मया लीलया अस्मात्सर्गादन्ये सर्गाः संप्रेक्षितास्तत्र तृतीयस्तादृगाशयो
111357 लब्ध इत्यन्वयः॥ १५॥
111358
111359 यावत्तस्मिंश्चिदाकाशकोशशायिनि सर्गके।
111360 तृतीयो विद्यते भिक्षुर्ब्राह्मश्च सदृशक्रमः॥ १६॥
111361
111362 तदेवाह-यावदिति। ब्राह्मस्तत्रत्यब्रह्मणा निर्मित एतत्सदृश एव भुवनक्रमो
111363 विद्यते॥ १६॥
111364
111365 एवं तेनैव तेनैव संनिवेशेन भूरिशः।
111366 भविष्यन्त्यभवन्सर्वे पदार्थाः सर्गसंततौ॥ १७॥
111367
111368 एवं ब्रह्माण्डभेदेन सदृशे पदार्थक्रमे तादृशभिक्षवोऽप्यनन्ताः
111369 संभवन्तीत्याशयेनाह-एवमिति॥ १७॥
111370
111371 अस्यां सभायामपि ये मुनयो ब्राह्मणास्तथा।
111372 भाव्यमेवं समाचारैस्तैरन्यैरप्यनेकशः॥ १८॥
111373
111374 अस्मिन्नर्थे मुमुक्षुव्यवहारोक्तमेवार्थं पुनः प्रपञ्चयन्नाह-अस्यामित्यादिना
111375 । तैरप्येवं भिक्षुसदृशसमाचारैः स्वसदृशसमाचारैश्च भाव्यम्। अन्यैरपि
111376 एतन्मुनिसमाचारैर्भिक्षुसमाचारैश्च भाव्यमित्यर्थः॥ १८॥
111377
111378 नारदेनामुना भाव्यं पुनरन्येन चामुना।
111379 एवं कलनकर्मभ्यां युक्तेनान्येन भूरिशः॥ १९॥
111380
111381 कलनंन् ज्ञानं कर्म चरित्रं ताभ्यां युक्तेन॥ १९॥
111382
111383 एवं जन्मादिना भाव्यं व्यासेनापि शुकेन च।
111384 शौनकेन पुनर्भाव्यं क्रतुना पुलहेन च॥ २०॥

111385

111386 अगस्त्येन पुलस्त्येन भृगुणाऽङ्गिरसापि च।
111387 एत एव तथान्ये च एवंरूपक्रियास्पदम्॥ २१॥
111388

111389 एवंविधस्य रूपस्य संस्थानस्य क्रियाणां चास्पदं भविष्यन्तीत्यर्थः॥ २१॥
111390

111391 चिराच्चिराद्भविष्यन्ति मायेयं वितता यतः।
111392 सदृशाचारजन्मानस्त एवान्ये च भूरिशः॥ २२॥
111393

111394 भूयोभूयो विवर्तन्ते सर्गेष्वप्स्विव वीचयः।
111395 अत्यन्तसदृशाः केचित्केचिदर्धसमक्रमाः॥ २३॥
111396

111397 केचिदीषत्समाः केचिन्न कदाचित्पुनस्तथा।
111398 एवमेषातिवितता महतामपि मोहिनी॥ २४॥
111399

111400 क्षणेनेहास्ति नो कर्म प्रतिपत्तिर्हि जृम्भते।
111401 क्वैकविंशत्यहोरात्रा अनन्ताकृतयोऽनघ॥ २५॥
111402

111403 क्षणे निरवयवकालात्मनि ईहा मानसचेष्टापि नास्ति। देहादिचेष्टालक्षणं कर्म च
111404 दूरनिरस्तत्वादेव नास्ति। किं तर्हि प्रतिपत्तिर्भ्रान्तिरेव केवलं जृम्भते। तदेवेह
111405 भिक्षुचरित्रे स्पष्टमित्याह-क्वेति। अनन्ता जीवटादिसर्गाकृतयस्तासामलं
111406 सम्यगुपलम्भश्च क्व॥ २५॥
111407

111408 क्व तासामुपलम्भोऽलमहो भीमा मनोगतिः।
111409 प्रतिभामात्रमेवेदमित्थंन् विकसितं स्थितम्॥ २६॥
111410

111411 नानाकलहकल्लोलं जले प्रातरिवाम्बुजम्।
111412 जातं संवेदनादेव शुद्धादिदमशुद्धिमत्।
111413 संसारजालमखिलं सार्चिर्वह्निकणादिव॥ २७॥
111414

111415 प्रातरम्बुजमिव विकसितम्। तत्पक्षे भ्रमरादीनां नानाकलहा जलकल्लोलाश्च पश्येति
111416 योज्यम्। अर्चिर्भिः सहवर्तमानः सार्चिर्महानग्निर्वह्निकणादिव
111417 शुद्धात्संवेदनादेवेदमशुद्धिमज्जगज्जातम्॥ २७॥
111418

111419 प्रत्येकमेवमुदितः प्रतिभासखण्डः खण्डान्तरेष्वपि च तस्य
111420 विचित्रखण्डः।
111421 सर्वे स्वयं ननु च तेऽपि मिथो न मिथ्या सर्वात्मनि स्फुरति कारणकारणेऽस्मिन्॥
111422 २८॥
111423

111424 एवं भिक्षुमनसीव सर्वजीवमनःस्वपि प्रत्येकं जगद्रूपः प्रतिभासखण्ड
111425 उदितस्तस्य तस्यान्तर्जीवखण्डान्तरेष्वपि च विचित्रः सर्गखण्ड उदित इत्यनवस्थैव
111426 मायादृशेत्यर्थः। ते प्राथमिकखण्डाः स्वयं तेपि च तदन्तर्गतजगत्खण्डा
111427 मिथः स्वस्वव्यवहारदृशा न मिथ्या सत्या एव। किं स्वतो नेत्याह-सर्वात्मनीति।
111428 सर्वात्मन्यास्मिंश्चित्सत्तैकरसे परमात्मनि तादात्म्येन स्फुरति सति। तेन
111429 स्वतत्त्वबोधेन तद्भावत्यागे तु न किंचित्सत्यमित्यर्थः॥ २८॥
111430

111431 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मी० दे० मो० निर्वाणप्र० पू० जीवटोपाख्याने
111432 भिक्षुसंसृतिकथनं नाम षट्षष्टितमः सर्गः॥ ६६॥
111433

111434 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
111435 भिक्षुसंसृतिकथनं नाम षट्षष्टितमः सर्गः॥ ६६॥
111436 सप्तषष्टितमः सर्गः ६७

दशरथ उवाच।

मुनिनायक तं भिक्षुं गत्वा संबोधयन्त्वमी।
नरा मत्प्रहिताः शीघ्रं चानयन्तु कुटीगतम्॥ १॥

भिक्षोः समाधौ मुक्तस्य देहनाशोऽत्र वर्ण्यते।
भिक्षुभ्रान्तिवदन्येषां बन्धो मोक्षश्च बोधतः॥

संबोधयन्तु समाध्व्युत्थापयन्तु। अमी मत्प्रहिता मया प्रेषिता नरा मन्त्रिणो
भवदाज्ञया आनयन्तु॥ १॥

श्रीवसिष्ठ उवाच।

राजंस्तस्य महाभिक्षोः स देहः प्राणवर्जितः।
क्लेदो वैवर्ण्यमायातो नासौ जीवितभाजनम्॥ २॥

अद्यैव तस्य संवेत्तुं नियतेरेष निश्चयः इति मदुक्तं विस्मृत्य त्वयेदं
पृष्टमिति सूचयन्वसिष्ठ उवाच-राजन्निति। क्लेदः
प्राणोपष्टम्भकान्नरसभागः शोषेण वैवर्ण्यमायातः॥ २॥

तस्य भिक्षोस्तु जीवोऽसौ भूत्वा पद्मजसारसः।
जीवन्मुक्तः स्थितो भूयो नासौ संसृतिभाजनम्॥ ३॥

स तर्हि त्वदीयसत्यसंकल्पेन प्रजीवतु तत्राह-तस्येति। सत्येव
तद्देहभोग्यप्रारब्धशेषे मत्संकल्पः प्रवर्तते नान्यथेति भावः॥ ३॥

तद्गृहे मासपर्यन्ते बलान्निष्कासितार्गलाः।
अन्तराले तु तिष्ठन्ति भृत्या भिक्षुदिदृक्षवः॥ ४॥

मासपर्यन्तं गृहार्गलं न निष्कासनीयमिति भिक्षुणा आज्ञप्तैरन्तरालवासिभिस्त
द्भृत्यैर्गुप्तत्वादपि त्वन्मन्त्रिभिस्तत्प्रबोधनं कर्तुमशक्यमित्याह##-
भिक्षुदेहदिदृक्षवो भृत्या बहिर्द्वारान्तराले तिष्ठन्ति। बलाद्भिक्ष्वाज्ञाबलादिति
वा॥ ४॥

ततो नष्टाङ्गसंधानं कायं निष्काल्यते जले।
त्यक्ष्यन्त्यन्यं करिष्यन्ति भिक्षुमक्षुण्णमानसम्॥ ५॥

ततो मासान्ते कायं भिक्षुशरीरं निष्काल्य निःसार्य जले त्यक्ष्यन्ति मज्जयिष्यन्ति।
तस्यां कुट्यामन्यं तत्कायाकारशिलाप्रतिमारूपं भिक्षुं
पूजाभक्त्यादिव्यवहारप्रवर्तनाय करिष्यन्ति। दृढत्वादक्षुण्णं मानसं
भक्तमनःकल्पितदेवतारूपम्। कर्मधारयः॥ ५॥

अनेनैवं सदेहेन भिक्षुर्मुक्तो व्यवस्थितः।
कथं प्रबोध्यते नष्टं तद्विहारे शरीरकम्॥ ६॥

एवमुक्तरीत्या मुक्तः। विहारे प्राणचेष्टादिव्यापारविषये नष्टं मृतम्॥ ६॥

एषा [एवातिवितता मायेति पाठः।] गुणमयी माया दुर्बोधेन दुरत्यया।
नित्यं सत्यावबोधेन सुखेनैवातिवाह्यते॥ ७॥

प्रश्नं प्रासङ्गिकमुक्त्वा प्रस्तुतमेवावलम्बते-एषेत्यादिना। दुर्बोधेन

111489 भ्रान्तिपरम्पराहेतुविक्षेपशक्त्या। अतिवाह्यते निरस्यते ॥ ७ ॥
111490
111491 असत्येव कृतारम्भा हेम्नः कटकता यथा।
111492 प्रतिभासविपर्यासमात्रकारणकोदया ॥ ८ ॥
111493
111494 असती अविद्यमानैव कृतजगदारम्भा। हेम्नः कटकतयेव प्रतिभासस्य यो
111495 विपर्यासोऽन्यथाभावस्तन्मात्रकारणको विभ्रमोदयो यस्याः ॥ ८ ॥
111496
111497 परमात्मनि वाचेयमित्थं मायानुमीयते।
111498 तरङ्गालीव पयसि प्रेक्षामात्रविनाशिनी ॥ ९ ॥
111499
111500 वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् इत्यादिदृष्टान्तश्रुतिवाचा
111501 दार्ष्टान्तिकमायापि इत्थमनृतस्वभावैवानुमीयते ॥ ९ ॥
111502
111503 ज्ञो हि दृश्यतया दीर्घस्वप्नात्स्वप्नान्तरं व्रजेत्।
111504 एवं जीवत्वमायाति विवेकात्सर्वमात्मदृक् ॥ १० ॥
111505
111506 ज्ञः परमात्मा एवं अविवेकाज्जीवत्वमायाति  स च स्वविवेकात्सर्वमात्मेति
111507 पश्यतीत्यात्मदृक् चिन्मात्रः परिशिष्यत इत्यर्थः ॥ १० ॥
111508
111509 यो यस्य प्रतिभासः स्यादात्मैव स स्वबोधतः।
111510 स एवोदेति संसारः करञ्जवनगुल्मदृक् [गुल्मधृगिति पाठः।] ॥ ११
111511 । ।
111512
111513 सः स्वबोधत आत्मैव। अबोधतस्तु स एव संसारात्मना उदेति ॥ ११ ॥
111514
111515 प्रत्येकं भूतमुदितं कृतं संसारमण्डलम्।
111516 भिक्षोः स्वप्नान्तर इव परां भङ्गिमिवाम्भसः ॥ १२ ॥
111517
111518 भूतं प्राणिनिकायं प्रति प्रत्येकं संसारमण्डलं भ्रान्त्या उदितं कृतम्।
111519 यथा भिक्षोः स्वप्नान्तरे अम्भसो भङ्गिं आवर्ततरङ्गादिविभागमिव विद्धीत्यर्थः
111520 ॥ १२ ॥
111521
111522 प्रस्तुतः पद्मजादेव जगत्स्वप्नो यथोदितः।
111523 तथैवास्वच्छचित्तोत्थो रूढः सर्वजनं प्रति ॥ १३ ॥
111524
111525 समष्टेर्हिरण्यगर्भस्य मनोमात्रनिर्माणत्वादयं सर्गः स्वप्न एव चेद्व्यष्टेरपि
111526 तथैव भवितुमर्हति। अस्वच्छचित्तादुत्थित इति परः स्थिर इव भासत इत्याह-प्रस्तुत
111527 इति ॥ १३ ॥
111528
111529 पितामहवदाभाति सर्गः स्वप्नविलासवत्।
111530 प्रत्येकमुदितस्तेन ब्रह्माण्डानीव कोटिशः ॥ १४ ॥
111531
111532 चित्तशुद्धौ तु पितामहस्येव पितामहवत् स्वप्नविलासवदसत्य आभाति तेन
111533 तादृशभानेन ज्ञायते। प्रत्येकमयं ब्रह्माण्डानीव कोटिश उदित इति निश्चीयत
111534 इत्यर्थः ॥ १४ ॥
111535
111536 स्फुरन्यथा तथा वास्मिञ्जीवः पश्यति विभ्रमम्।
111537 हृदयेऽयंन् समर्थं च स्वप्नवद्दीर्घमान्तरम् ॥ १५ ॥
111538
111539 अयं जीवो व्यष्टिप्रपञ्चरूपेण समष्टिप्रपञ्चरूपेण वा
111540 साधारणप्रपञ्चरूपेण प्रत्येकमसाधारणप्रपञ्चरूपेण वा यथा तथा वा

111541 स्फुरन्नस्तु तथापि हृदये प्रतिभानसमर्थ दीर्घ विभ्रमं पश्यतीति स
111542 स्वप्नवन्मिथ्यैवेत्यर्थः ॥ १५ ॥
111543
111544 चित्सत्तामात्रमासाद्य प्रतीतिच्युतमात्रतः ।
111545 जरामरणदुःखानां क्वचिद्भाजनतां गतः ॥ १६ ॥
111546
111547 दीर्घस्वप्नदर्शने निमित्तमाह-चित्सत्तामात्रमिति । तत्त्वतः
111548 प्रतीतेश्च्युतमावृत्तं तावन्मात्रतश्चित्सत्तामात्रमासाद्य आश्रित्य
111549 क्वचित्कस्मिंश्चिद्देवनरतिर्यगादिदेहे ॥ १६ ॥
111550
111551 पातालं ब्रह्मलोकं वा चित्तत्सुकृतशालिनी ।
111552 चित्तांशस्पन्दमात्रेण कृत्वा कृत्वेव संस्थिता ॥ १७ ॥
111553
111554 तत्तत्र स्वप्ने विचित्रसुकृतशालिनी जीवचित् स्वचित्तांशस्पन्दमात्रेणाधः पातालं वा
111555 ऊर्ध्वं ब्रह्मलोकं वा कृत्वा कृत्वा भुञ्जाना संस्थितेत्यर्थः ॥ १७ ॥
111556
111557 चित्स्पन्दरूपिणी जीवनामरूपं गतात्मनि ।
111558 अन्यत्र च विलुठति गत्वा संभ्रमहारिणी ॥ १८ ॥
111559
111560 परमात्मचिदेव प्राणकल्पनया तदधीनस्पन्दरूपिणी भूत्वा तद्द्वारेण
111561 जीवनामकं रूपं गता सती आत्मनि देहाकारसंभ्रमहारिणी अन्यत्र बहिश्च गत्वा
111562 विषयाकारसंभ्रमहारिणी भूत्वा विलुठति ॥ १८ ॥
111563
111564 चित्तेति परमात्मा न परमात्मा न वा न किम् ।
111565 जीवदेहादिनाम्नोऽस्य प्रतिबिम्बादिवार्हता ॥ १९ ॥
111566
111567 अस्त्वेवमस्य भ्रान्त्या जीवादिनामरूपभेदस्तथापि परमात्मैवैषः
111568 अध्याससहस्रैरप्यधिष्ठानस्यान्यत्वायोगादिति परमपुरुषार्थफलं
111569 जीवब्रह्मैक्यं दृढीकरोति-चित्तेतीति । प्रत्यगात्मा
111570 चित्तेत्युपाध्याकारभ्रान्तिमात्रापराधात्किं परमात्मा ब्रह्म न परं वा ब्रह्म
111571 किं आत्मा प्रत्यगात्मा न किमस्य ब्रह्मणो मुखस्य दर्पणे
111572 प्रतिबिम्बनादिवौपाधिकजीवनाम्नो देवदत्तयज्ञदत्तादेर्देहनाम्न
111573 आदिपदात्प्राणवाक्चक्षुरादिनाम्नश्चाहर्ता न किंतु अभेदेऽप्युपाधिवशात्सर्वं
111574 संभवत्येव । तथा च श्रुतिः स एष इह प्रविष्ट आनखाग्रेभ्यः प्राणन्नेव प्राणो
111575 नाम भवति वदन्वाक् पश्यंश्चक्षुः शृण्वन् श्रोत्रं मन्वानो मन इति
111576 तान्येतस्य कर्मनामान्येव इति ॥ १९ ॥
111577
111578 ब्रह्मण्येव परं ब्रह्म जगद्दृष्ट्यैव संस्थितम् ।
111579 शुद्धाकाशमिवाकाशे जले जलमिवामलम् ॥ २० ॥
111580
111581 एवमैक्यदर्शने जगद्दृष्ट्या व्यवहारदृष्ट्यैव परं ब्रह्म ब्रह्मण्येव
111582 संस्थितं किं पुनः परमार्थदृष्ट्या समूलोपाधिबाधे तद्वाच्यमिति भावः ॥ २०
111583 ।।
111584
111585 लोको ब्रह्मण एवायं जगद्रूपेषु तिष्ठति ।
111586 बिभेत्यन्यतया बोधात्प्रतिबिम्बादिवार्भकः ॥ २१ ॥
111587
111588 किं च दर्पणादौ मुखादत्यन्तमिन्ने मुखस्य स्थितावन्यथाभ्रान्तिसंभावनापि
111589 स्यात् । अयं जीवलोकस्तु स्वात्मभूतस्याभयस्य ब्रह्मण एव मूर्तामूर्तात्मकेषु
111590 जगद्रूपेषु तिष्ठतीति न तत्संभावनापि तथापि अन्यतया आत्मन्यतिरिक्तमन्यन्मम
111591 भयहेतुरस्तीति बोधाद्बिभेतीत्याश्चर्यमित्यर्थः ॥ २१ ॥
111592

स्पन्देऽस्पन्दीकृते चेह स्वतः संज्ञा विलीयते।
साप्यलं परिणामेन लीयतेऽग्नौ घृतं यथा॥ २२॥

अन्यताबोधे च बुद्धिस्पन्दो हेतुरिति बुद्धिस्पन्दे समाध्यभ्यासेन अस्पन्दीकृते
भेदबुद्धिलक्षणा संज्ञा स्वत एव बुद्धौ विलीयते सा बुद्धिरप्यलं
पूर्णब्रह्माकारेण चरमसाक्षात्कारलक्षणपरिणामेनाग्नौ हुतं घृतमिव
तदिद्धे ब्रह्मणि विलीयत इत्यर्थः॥ २२॥

चित्स्पन्द एव चित्स्पन्दे सर्वात्मनि विजृम्भितः।
स्पन्दास्पन्दौ जृम्भणादि कल्पितं नात्र वास्तवम्॥ २३॥

बोधमात्रात् कथं कुद्दालकोटिदुर्भेद्यं जगद्विलीयत इति
चेदवास्तवचित्स्पन्दमात्रत्वादित्याह-चित्स्पन्द एवेति॥ २३॥

न स्पन्दोऽस्तीह नास्पन्दो नैकता वापि न द्विता।
शुद्धं चिन्मात्रसर्वस्वं यथैवास्ति तथा स्थितम्॥ २४॥

कल्पितमिति कथं ज्ञातमिति चेत्तत्त्वदृशा तददर्शनादित्याह-नेति॥ २४॥

सारेण तु विचारेण सर्वशब्दार्थयोः समे।
चिन्मात्रमेव ज्ञातेऽयं नास्तीत्यपि न विद्यते॥ २५॥

सर्वशब्दस्य तदर्थस्य च समे एकरसे स्वभावे ज्ञाते सति चिन्मात्रमेव
परमार्थसत्यम्। नास्तीति अभावभूतोऽप्ययं प्रपञ्चो न विद्यते दूरे भाव इत्यर्थः
॥ २५॥

भेदवेदनयोदेति भेदः प्रकृतिलाञ्छनम्।
अभेदबोधादखिले गलिते शिष्यते परम्॥ २६॥

नानातैवास्य बोधेन स बोधस्त्वनवेक्षणात्।
पृच्छकं चैवमस्त्येव तस्मान्निःशङ्कता परा॥ २७॥

यथोक्तैव वस्तुस्थितिर्न केनचिदन्यथाकर्तु शक्येति वसिष्ठः प्रतिजानीते-नानातेति।
एवकारौ भिन्नक्रमौ। हे राम त्वं अबोधेनैव नानातासि। स त्वमबोधरूपाया
नानाताया अनवेक्षणात्तु बोधः पूर्णचिद्रूप एवासि। अस्मिन्नर्थे यं कं च पृच्छ।
एवमेवास्ति परमार्थः। तस्मादेव तव मम अन्यस्य च परा निःशङ्कता
प्रतिष्ठितेत्यर्थः॥ २७॥

ततः स्वप्नो न जागर्तिर्न सुषुप्तिर्न तुर्यता।
न बन्धोस्ति न मोक्षोस्ति नान्यथाकल्पनात्मकम्॥ २८॥

ततस्तादृशनिःशङ्कताबलादेव जाग्रदादिसर्वावस्थाद्वैतापलापः प्रवृत्त
इत्याह-तत इति॥ २८॥

शान्तिरेका जगन्नाम्नी शान्तिरेवमवस्थिता।
अबोधोऽसत्य एवातः क्व द्रष्टृदृश्यदर्शनम्॥ २९॥

अबोधवशादेव द्रष्टृदृश्यादित्रिपुटीजगत्। यदा त्वबोधः असत्य एव तदा
शुद्धात्मरूपा तच्छान्तिरेवैका जगन्नाम्नी। यतः सा शान्तिरेव गच्छति सर्वतो
व्याप्नोतीति व्युत्पत्त्या एवं जगन्नामयोग्यतया व्यवस्थिता।
द्रष्टृदृश्यदर्शनात्मिका त्रिपुटी तु अत्यन्ताप्रसिद्धेति नासौ तदा
जगन्नाम्नीत्यर्थः॥ २९॥

111645
111646 स्पन्दोऽप्यस्पन्द एव स्यान्निःसंकल्पतया च ते।
111647 न स्पन्दास्पन्दयोर्भिन्ना संकल्परहितैव चित्॥ ३०॥
111648
111649 ननु चित्तप्राणादिस्पन्दस्य बोधमात्रेण कथं निवृत्तिरिति
111650 चेत्तद्धेतुसंकल्पक्षयादेवेत्याह-स्पन्द इति॥ ३०॥
111651
111652 द्वैतैक्यविकला [विकसद्रूप इति पाठः।] रूपसंकल्पश्चिदभावनात्।
111653 स च भावनमात्रेण गतो ब्रह्मैव शिष्यते॥ ३१॥
111654
111655 चितः अभावनाददर्शनाद्द्वैतैक्यादिरूपसंकल्प उदितः स च भावनमात्रेण
111656 दर्शनमात्रेण गत इति द्वैतैक्यरहिता चिद्ब्रह्मैव शिष्यत इत्यन्वयः॥ ३१॥
111657
111658 चिच्चन्द्रबिम्बे संकल्पकलङ्कः स्फुरतीव यः।
111659 नासौ कलङ्कस्तद्विद्धि चिद्घनस्य घनं वपुः॥ ३२॥
111660
111661 तद्दर्शनप्रकारमाह-चिच्चन्द्रबिम्बे इति॥ ३२॥
111662
111663 चिद्घनस्य न सन्नासन्स्थीयतां यत्तते पदे।
111664 इत्यदोषमहाबोधसारसंग्रहणं कृतम् [कुरु इति
111665 पाठश्चेद्व्याख्यानुगुणः स्यात्।]॥ ३३॥
111666
111667 नासौ कलङ्क इत्यर्थे युक्तिमाह-चिद्घनस्येति। त्वया चिद्घनस्य तते पदे
111668 स्थीयताम्। यद्यस्मात्पूर्णभावावस्थानात्संकल्पादिस्त्वदैकरस्यमापन्नः
111669 पृथङ् न सन् त्वदात्मना च सन् भवति इति अनयैव युक्त्या
111670 सर्ववस्तूनामात्मैकरस्यसंपादकनिर्दोषबोधसारस्य संग्रहणं
111671 सम्यगवलम्बनं कुरु॥ ३३॥
111672
111673 चिच्चन्द्रबिम्बासंकल्पकलङ्कामृतविग्रहः।
111674 त्वया भव्येन संस्पृष्टो भावाभावक्षयात्मना॥ ३४॥
111675
111676 हे चिच्चन्द्रबिम्ब हे असंकल्पकलङ्क। भावाभावक्षयात्मना भव्येन त्वया
111677 संस्पृष्टः सर्वोपि पदार्थः अमृतविग्रहः संपद्यते। अहो ते
111678 माहात्म्यमित्यर्थः॥ ३४॥
111679
111680 भावाभावादिकलनां नीत्वा चिन्मयतां चितः।
111681 समोल्लासविलासान्तः समाश्वस यथासुखम्॥ ३५॥
111682
111683 चितः समोल्लासविलासस्यान्तः सम्यगाश्वस विश्रान्तिं भज॥ ३५॥
111684
111685 स्पन्दास्पन्दौ कल्पनाकल्पना वा चित्ताम्नायो विद्धि नामाब्धिनाम्ना।
111686 सर्वाकारा निर्वृतिः शान्तिसत्ता पूर्णापूर्णे ह्येकमेवास्थितेति॥ ३६॥
111687
111688 हे राम त्वं अब्धिनाम्ना आनन्दसमुद्राख्येन स्वरूपेण स्थितः सन् स्पन्दास्पन्दौ
111689 कल्पना संकल्पः अकल्पना विकल्पो वेति यावांश्चित्ताम्नायश्चित्तभ्रान्तिभेदः स
111690 सर्वोपि सर्वाकारा निर्वृतिः सुखैकरसा शान्तिसत्तैव तथा तथा आस्थिता। इमे च
111691 पूर्णापूर्णे दशे एकमेव मे स्वरूपमिति विद्धि॥ ३६॥
111692
111693 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वाणप्रकरणे पू०
111694 ब्रह्मैक्यप्रतिपादनं नाम सप्तषष्टितमः सर्गः॥ ६७॥
111695
111696 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे

111697 ब्रह्मैक्यप्रतिपादनं नाम सप्तषष्टितमः सर्गः ॥ ६७ ॥
111698
111699 अष्टषष्टितमः सर्गः ६८
111700
111701 श्रीवसिष्ठ उवाच ।
111702
111703 सुषुप्तमौनवान्भूत्वा त्यक्त्वा चित्तविलासिताम् ।
111704 कलनामलनिर्मुक्तस्तिष्ठावष्टब्धतत्पदः ॥ १ ॥
111705
111706 मौनं चतुर्विधं त्वत्र लक्षणैरुपवर्ण्यते ।
111707 सुषुप्तमौनं तत्रापि तुर्यातीतप्रतिष्ठितम् ॥
111708
111709 चित्तविलासितां चित्तस्य स्वाभाविकप्रवृत्त्यनुसारिताम् ॥ १ ॥
111710
111711 श्रीराम उवाच ।
111712
111713 वाङ्वौनमक्षमौनं च काष्ठमौनं च वेद्म्यहम् ।
111714 सुषुप्तमौनं मौनेश ब्रह्मन्ब्रूहि किमुच्यते ॥ २ ॥
111715
111716 वागादीनां मौनं संयमः । काष्ठमिव मौनं काष्ठमौनम् । सर्वेषु मौनेषु
111717 ईशिषे समर्थो भवसीति मौनेश ॥ २ ॥
111718
111719 श्रीवसिष्ठ उवाच ।
111720
111721 द्विविधः प्रोच्यते राम मुनिर्मुनिवरैरिह ।
111722 एकः काष्ठतपस्वी स्याज्जीवन्मुक्तस्तथेतरः ॥ ३ ॥
111723
111724 द्विविधा इति । त्वद्विदितानां त्रयाणां काष्ठतपस्विनां
111725 तारतम्यभेदानामनात्मज्ञतया एककोटितैवेति भावः ॥ ३ ॥
111726
111727 अभावितायां शुष्कायां क्रियायां बद्धनिश्चयः ।
111728 हठाज्जितेन्द्रियग्रामो मुनिः स्यात्काष्ठतापसः ॥ ४ ॥
111729
111730 तमेव प्रकटयति-अभावितायामिति । भावितमात्मतत्त्वपर्यालोचनं
111731 तच्छून्यायां शुष्कायां तदनुभवरसशून्यायां
111732 कृच्छ्रचान्द्रायणादिक्रियायाम् ॥ ४ ॥
111733
111734 यथाभूतमिदं बुद्ध्वा भावितात्मात्मनि स्थितः ।
111735 लोकोपमोपि तृप्तोऽन्तर्यः स मुक्तमुनिः स्मृतः ॥ ५ ॥
111736
111737 व्यवहारे इतरतपस्विलोकोपमोऽप्यन्तर्निरतिशयानन्दास्वादतृप्तः ॥ ५ ॥
111738
111739 एतयोर्यो भवेद्भावः शान्तयोर्मुनिनाथयोः ।
111740 चित्तनिश्चयरूपात्मा मौनशब्देन स स्मृतः ॥ ६ ॥
111741
111742 प्रकृत्यर्थं व्युत्पाद्य प्रत्ययार्थं व्युत्पादयति-एतयोरिति ॥ ६ ॥
111743
111744 चतुष्प्रकारमाहुस्तं मौनं मौनविदो जनाः ।
111745 वाङ्मौनमक्षमौनं च काष्ठं सौषुप्तमेव च ॥ ७ ॥
111746
111747 तत्राद्यं त्रेधा विभज्य चतुष्प्रकारं मौनं मुनय आहुरित्यर्थः ॥ ७ ॥
111748

111749 वाङ्मौनं वचसां रोधो बलादिन्द्रियनिग्रहः।
111750 अक्षमौनं परित्यागश्चेष्टानां काष्ठसंज्ञकम्॥ ८॥
111751
111752 तेषां प्रत्येकं लक्षणान्याह-वाङ्मौनमित्यादिना। इन्द्रियनिग्रहोऽक्षमौनम्॥
111753 ८॥
111754
111755 मनोमौनं पञ्चमं च तन्मृतौ काष्ठतापसे।
111756 भावे सुषुप्तमौनाख्यं जीवन्मुक्तोऽनुजीवति॥ ९॥
111757
111758 एवं विभागपर्यालोचने मनोमौनमपि पञ्चमं यद्यपि संभवति तथापि तत्
111759 काष्ठतापसे मृतो मूर्च्छासुषुप्त्योरेव संभवति नान्यदेति तत्तैर्न
111760 परिगणितमित्यर्थः। त्वर्थे चः। भावे आत्मतत्त्वानुभवे॥ ९॥
111761
111762 त्रिषु मौनविशेषेषु विषयः काष्ठतापसः।
111763 सुषुप्तमौनावस्थायां सा तुर्या सैव मुक्तधीः॥ १०॥
111764
111765 विषयः अधिकृतः। तुर्या चतुर्थी। मुक्तेषु जीवन्मुक्तेषु धीयत इति मुक्तधीः॥ १०॥
111766
111767 वाङ्मौनं मौनमित्येतत्सिद्धं तच्च मनः किल।
111768 मलिनं जीवबन्धाय तत्रस्थः काष्ठतापसः॥ ११॥
111769
111770 यद्यपि त्रिषु मौनेषु मौनत्वं सिद्धं तथापि तानि
111771 मलिनमनोदृढनिश्चयरूपाण्येवेति जीवस्य बन्धायैवेत्याह-वागिति॥ ११॥
111772
111773 अस्मत्संस्मरणं वापि दृश्यं वाङ्मयमस्पृशन्।
111774 अपश्यन्नेव पश्यन् हि काष्ठमौनी तु तिष्ठति॥ १२॥
111775
111776 तर्हि तद्वान्काष्ठतापसः समाधौ कथं तिष्ठति तदाह-अस्मदिति।
111777 बलान्मनोनिग्रहेणान्तरस्पदोऽहंभावस्य संस्मरणमनुसंधानमस्पृशन्
111778 बहिरपि दृश्यं रूपप्रपञ्चं वाङ्मयं नाम प्रपञ्चं
111779 चास्पृशान्नज्ञानावृतमात्मानमपश्यन्नेव सुषुप्ताविव
111780 नित्यात्मदृग्विलोपाभावाद्भस्मच्छन्नाग्निवत्साक्षिमात्रज्योतिषा
111781 पश्यंस्तिष्ठतीत्यर्थः॥ १२॥
111782
111783 प्रस्फुरच्चित्तकलनमेतन्मौनत्रयं स्मृतम्।
111784 भवन्ति मौनिनस्तत्र न तज्ज्ञास्तत्स्थलीलया॥ १३॥
111785
111786 व्युत्थानकाले त्वेतन्मौनत्रयं प्रस्फुरच्चित्तचलनमेव। तत्र प्राक्तनास्त्रयो मौनिनो
111787 भवन्ति तज्ज्ञास्तु चित्तबाधान्न तत्स्थनिरोधव्युत्थानादिलीलया तत्र भवन्तीत्यर्थः॥
111788 १३॥
111789
111790 नात्रोपादेयताज्ञानमेतन्मौनत्रये किल।
111791 लीलया कथितं तेन तज्ज्ञाः कुप्यन्तु वा न वा॥ १४॥
111792
111793 अथवा तत्स्थलीलयेत्यस्य पूर्णात्मस्थितिलीलया। तज्ज्ञास्तुच्छप्राक्तनमौनत्रये
111794 बन्धरूपमेवेदं निरस्यमिति तु कुप्यन्तु चिदानन्दविलास एवेति बुद्ध्या न वा कुप्यन्तु
111795 तथापि तेषामत्रोपादेयताज्ञानमेव नास्तीत्यर्थे तात्पर्यमित्याह-नात्रेति॥ १४॥
111796
111797 इदं सुषुप्तमौनं तु जीवन्मुक्तमितिस्थितम्।
111798 अपुनर्जन्मनो जन्तोः शृणु श्रवणभूषणम्॥ १५॥
111799
111800 जीवन्मुक्तानां मितिरनुभवस्तत्र स्थितम्। जन्तोर्भवतीति शेषः। अतस्त्वमपि शृणु॥

१५ ॥

नात्र संयम्यते प्राणस्त्रिविधो नापि योज्यते ।
नोल्लस्यन्ते न ग्लायन्ते समस्तेन्द्रियसंविदः ॥ १६ ॥

तत्त्वदर्शने सिद्धे अयत्नेनैव तत्सिद्ध्यतीति न पूर्वमौनक्लेशसापेक्षतेत्याह##-
निरोधक्लेशेन न ग्लायन्ते ॥ १६ ॥

नानाताकलनेयं च न वल्गति न शाम्यति ।
चेतो न चेतो नाचेतो न सन्नासन्न चेतरत् ॥ १७ ॥

तस्य ज्ञानबाधितं चित्तं कथमवतिष्ठते तदाह-चेत इति ॥ १७ ॥

अविभागमनभ्यासं यदनाद्यन्तमास्थितम् ।
ध्यायतोऽध्यायतश्चैतत्सौषुप्तं मौनमुच्यते ॥ १८ ॥

विभाजकविकल्पक्षयात्तारतम्यविभागाभावाच्चाविभागम् ।
अतएवानभ्यासमभ्यासनिरपेक्षम् । अपरिच्छिन्नात्मरूपत्वादनाद्यन्तम् ॥ १८ ॥

यथाभूतमिदं बुद्ध्वा जगन्नानात्वविभ्रमम् ।
यथास्थितमसंदेहं सौषुप्तं मौनमेव तत् ॥ १९ ॥

जगदिति नानात्वविभ्रमो यस्मिंस्तत् इदं आत्मतत्त्वं यथास्थितं बुद्ध्वा ॥ १९ ॥

अनेकसंविद्रूपात्म शिवेनैवेदमाततम् ।
इत्यास्थितमनन्तं यत्सौषुप्तं मौनमुच्यते ॥ २० ॥

अनेकधा संविद्रूपाणामात्मा यः शिवस्तेनैवाततं पूर्णं आस्थितभवस्थानं
यत्तदित्यर्थः ॥ २० ॥

आकाशं नैव चाकाशं सर्वमस्ति च नास्ति च ।
इति चित्तं समं शान्तं यत्तन्मौनं सुषुप्तवत् ॥ २१ ॥

शून्यरूपत्वाभावान्नैव चाकाशे ॥ २१ ॥

सर्वशून्यं निरालम्बं शान्तिविज्ञप्तिमात्रकम् ।
न सन्नासदिति यस्यामासितं मौनमुत्तमम् ॥ २२ ॥

यस्यां जीवन्मुक्तदशायामासितमवस्थानम् ॥ २२ ॥

भावाभावादशादेशविशेषैर्वितथोत्थितैः ।
संविदो यदनाभासस्तन्मौनं परमं विदुः ॥ २३

भावाभावादिविशेषैः संविदोऽनाभासः अविवर्तः ॥ २३ ॥

अत्यन्तमसतैवान्तश्चेतसाऽवृत्तिरूपिणा ।
यदनावर्तनं संविद्वृत्तेस्तन्मौनमक्षयम् ॥ २४ ॥

बाधितत्वादत्यन्तमसतैव ॥ २४ ॥

नाहमस्मि न चान्योऽस्ति न मनो न च मानसम् ।
इति संविदसंवित्तिरविच्छिन्नातिमौनिता ॥ २५ ॥

111853
111854 मानसं विकल्पनम् | इति बाधितस्य संविदा असंवित्तिरप्रतिभासः || २५ ||
111855
111856 अहमस्मि जगत्यस्मिन्स्वस्ति शब्दार्थमात्रकम् |
111857 सत्तासामान्यमेवेति सौषुप्तं मौनमुच्यते || २६ ||
111858
111859 स्वस्ति अनामयं शब्दार्थमात्रकं सर्वं सत्तासामान्यमेव || २६ ||
111860
111861 यस्मात्संविदमेव स्यात्स्वान्यादिकलना कुतः |
111862 अनन्तमेव सौषुप्तं सर्वं मौनमतस्ततम् || २७ ||
111863
111864 यस्माद्धेतोः अमा सर्वबाधकस्वाकारचरमवृत्तिप्रमाशून्या तामपि ग्रसन्तीव
111865 स्यात्तस्मात्स्वस्य अन्यस्य आदिपदाद्भेदस्य च || २७ ||
111866
111867 सुषुप्तमौनमेवेदमनन्तत्वात्प्रबोधवत् |
111868 तुर्यमेवामलं विद्धि तुर्यातीतमथापि च || २८ ||
111869
111870 अविद्याबाधात्तुर्य तद्बाधकवृत्तीनामपि बाधात्तुर्यातीतम् || २८ ||
111871
111872 सौषुप्तैकसयाधानस्तथा तुर्यसमाधिकः |
111873 तुर्यातीतसमाधिर्वा जाग्रत्यपि भवन्ति वै || २९ ||
111874
111875 प्रागुक्तसप्तविधज्ञानभूमिकानां मध्ये पञ्चम्यादय एतास्तिस्रो भूमिकाः
111876 समाधिभेदरूपाः जाग्रति अपिशब्दात्स्वप्नस्थेऽपि तत्त्वविदि पर्यायेण भवन्तीत्याह##-
111877 || २९ ||
111878
111879 तुर्यस्थ एव सकलामलशान्तिवृत्तिर्जाग्रत्यपि व्यवहरन्निपुणं समन्तात् |
111880 नित्यं सदेह उत वापि विदेह एव ब्रह्मन्नभोभवत एव किलास्ति साधो || ३० ||
111881
111882 हे ब्रह्मन् ब्रह्मभूत हे साधो जाग्रति समन्तान्निपुणं व्यवहरन्सदेहोऽपि उत वा
111883 त्यक्तव्यवहारः समाधिस्थोऽपि जीवन्मुक्तः सकलामलशान्तिवृत्तिनित्यं तुर्यस्थ एव
111884 तथा विदेह एव | इयं च स्थितिः स्थूलसूक्ष्माकारद्वयबाधानाभो भवतीति
111885 नभोभवन् यस्तस्यैवास्ति नान्यस्येत्यर्थः | अथवा नभ इत्यपि संबोधनमेव | इयं
111886 स्थितिस्तथा भवत एवास्ति नान्यस्येत्यर्थः | अथवा भवतस्तवैवास्तीति रामं प्रति
111887 सिद्धवत्कारोक्तिः || ३० ||
111888
111889 ओमित्युदस्तभववासनमेकमास्स्व न त्वं न चाहमपि नान्यदिहास्ति सत्यम् |
111890 सर्वं च विद्यत इतीह किलान्तराभं ज्ञस्तिष्ठ चिद्गगनकोशकलैकनिष्ठः || ३१
111891 | |
111892
111893 हे राम त्वं ओमिति माण्डूक्योपनिषदुक्तरीत्या
111894 विराडादिपादमात्राप्रविलापनेनोदस्तभववासनमेकं तुर्यरूपमास्स्व | सर्वं च
111895 विद्यत इतीह किल यत्प्रसिद्धं तत् आन्तरो नाड्यन्तरनुभूयमानः स्वप्नस्तदाभं
111896 बुद्ध्वा ज्ञो जीवन्मुक्तस्त्वं चिद्गगनकोशकलैकनिष्ठस्तिष्ठेत्यर्थः || ३१ ||
111897
111898 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाणप्रकरणे पू०
111899 महामौनयत्नोपदेशो नामाष्टषष्टितमः सर्गः || ६८ ||
111900
111901 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
111902 महामौनयत्नोपदेशो नामाष्टषष्टितमः सर्गः || ६८ ||
111903
111904

111905 एकोनसप्ततितमः सर्गः ६९
111906
111907 श्रीराम उवाच।
111908
111909 कुतः शतत्वमायातं रुद्राणां मुनिनायक।
111910 ये गणास्ते तु ये रुद्रा उत नेति वदाशु मे॥ १॥
111911
111912 गणानामपि रुद्रत्वं मुक्तानामैच्छिकी स्थितिः।
111913 योगात्प्राणस्य विलयो मृतेस्तूद्भूतिरुच्यते॥
111914
111915 प्राप्य तां ब्रह्महंसेहां रुद्रतां सर्व एव ते। समाजग्मुर्विरिजुश्च
111916 रुद्राणामुत्तमं शतम्॥ इति शतानामप्युत्तमरुद्रता प्रागुक्ता तदुत्तरसर्गे च
111917 रुद्राज्ञया तेषु तेषु देहेषु प्रारब्धशेषं भुक्तवतां तेषाम्। तत्र भुक्त्वा चिरं
111918 भोगान्प्राप्य रुद्रपुरं ततः। गणतामावसंतस्ते स्थास्यन्ति सपरिच्छदाः इत्युक्तं
111919 तत्र रुद्रेच्छया शतरुद्रमूर्तीनां गणत्वमेकैव रुद्रमूर्तिरिति संदेहानो रामः
111920 पृच्छति-कुत इति। रुद्राणां शतत्वं कुत आगतम्। किं गणैः सह
111921 परिगणनादुत तद्व्यतिरिक्तरुद्राणामेव परिगणनात्। एवार्थे तुशब्दः। ये
111922 गणास्त्वयोक्तास्त एव ये रुद्रा उक्तास्ते उत न। अन्ये एव रुद्रा इत्यर्थः॥ १॥
111923
111924 श्रीवसिष्ठ उवाच।
111925
111926 स्वप्नानां भिक्षुणा दृष्टं शतं शतशरीरकम्।
111927 सर्वमुद्देशतो ज्ञातं तत उक्तं न तन्मया॥ २॥
111928
111929 तत्र प्रथमकल्पमेवावलम्ब्य वसिष्ठ उत्तरमाह-स्वप्नानामिति। उद्देशतः
111930 प्राग्वर्णिततत्तज्जन्मादिप्रस्तावतस्त्वया ज्ञातमेव ततस्तन्मया रुद्रशतसंख्याने
111931 नामतो विशिष्य नोक्तम्॥ २॥
111932
111933 य आकाराश्च ते स्वप्ने तत्तद्गणशतं स्मृतम्।
111934 तदेतद्रुद्रशतकं रुद्रा अपि गणा विधौ॥ ३॥
111935
111936 भिक्षुस्वप्ने ये जीवटाद्याकारास्तदाकारमेवोत्सर्गतो गणशतमिति स्मृतम्।
111937 तदेवैतद्रुद्रशतकमपि भोगैश्वर्यसाम्याद्रुद्रांशत्वाच्च भवति। ननु गणा इति
111938 रुद्रस्य सेवकाः पार्षदा उच्यन्ते ते कथं मुख्यरुद्राः स्युः।
111939 स्वामिभृत्यभावयोर्विरुद्धयोरेकत्रासंभवात्। किं च शततमस्य
111940 मुख्यरुद्रत्वाद्गणत्वाभावाद्गणशतमित्युक्तिश्चानुपपन्नैवेति चेत्तत्राह-रुद्र
111941 अपीति। ते शतं स्वयं रुद्रा अपि पूर्वसिद्धस्येश्वरकोटिभूतरुद्रस्य परिचर्यादिविधौ
111942 गणा एव भवन्ति। तेषां कर्मफलभोगैश्वर्यप्राप्तेस्तदधीनत्वादित्यर्थः॥ ३॥
111943
111944 श्रीराम उवाच।
111945
111946 एकस्माद्भगवंश्चित्तात्कथं चित्तशतं कृतम्।
111947 तत्स्वप्नकृतरुद्रेण दीपाद्दीपशतं यथा॥ ४॥
111948
111949 बोधयित्वा तु तं भिक्षुं चेतसा चेतनेन च इत्यादिना भिक्षुस्वप्रकृतेन शततमेन
111950 रुद्रेण स्वचित्तचैतन्यदानेन भिक्ष्वादीनां बोधनं यत्प्रागुक्तं
111951 तदन्यत्रादर्शनादसंभावयन् रामः पृच्छति-एकस्मादिति॥ ४॥
111952
111953 श्रीवसिष्ठ उवाच।
111954
111955 निरावरणसद्भावा यद्यथा कल्पयन्ति हि।
111956 तत्तथानुभवन्त्येव रसावरणसंविदः॥ ५॥

अनीश्वरेष्वज्ञेषु तददर्शनेऽपि ईश्वरेषु मुक्तेषु न तदसंभावना युक्तेति
परिहरति-निरावरणेति | ज्ञानैश्वर्येण निरावरणा योगैश्वर्येण सद्भावाः
सत्यसंकल्पाः | रसो वै सः रसं ह्येवायं लब्ध्वानन्दी भवति इति श्रुतेः | रसो
भूमानन्दस्तं आसमन्तात्सांकल्पिकार्थसत्तालाभाय वृणोति स्वीकरोति तथाविधा
या माया प्रतिबिम्बसंवित् सार्वज्ञ्यसर्वशक्तत्वाख्या तद्बलादित्यर्थः || ५ ||

सर्वात्मनः सर्वगत्वाद्यद्यथा यत्र भाव्यते |
तथानुभूयते तत्र तत्तथा ज्ञतया धिया || ६ ||

सार्वात्म्यबलादपि तेषां सर्वभावितार्थसिद्धिरित्याह-सर्वात्मन इति || ६ ||

श्रीराम उवाच |

कपालमालाभरणो भस्मशाली दिगम्बरः |
श्मशाननिलयो ब्रह्मन्कामुकश्च किमीश्वरः || ७ ||

एवमैश्वर्ये सति हरिहरादयः किमर्थं
मानुषयोन्याद्यवतारश्मशानवासादिकदर्थनां स्वस्य कल्पयन्ति शुभमेव कुतो
न कल्पयन्तीत्याशयेन रामः पृच्छतिकपालेति | भस्मना शालते शोभते तच्छीलः |
ईश्वरः सर्वशक्तिसंपन्नोऽपि सन् किं किमर्थमेवास्ते इत्यर्थः || ७ ||

श्रीवसिष्ठ उवाच |

महेश्वराणां सिद्धानां जीवन्मुक्तशरीरिणाम् |
न क्रियानियमोऽस्तीह स ह्यज्ञस्यैव कल्पितः || ८ ||

क्रियाः शास्त्रीया एव मङ्गलरूपा एव सुखभोगफला एव कार्या इति न नियमस्तेषां
विधिकिंकरत्वाभावात् | अज्ञदृक्प्रसिद्धमङ्गलानामपि सर्वेषां तत्त्वदृशा
अमङ्गलतमत्वाविशेषात् | अशुभकर्माभावेन दुःखसामग्र्यापि तेषां
दुःखभोगानुदयात्सर्वस्य सुखरूपत्वाविशेषाच्चेति भावः || ८ ||

अज्ञस्तु [अज्ञः तुदितचित्तत्वात् इत्यपि विग्रहः केषाञ्चन संमतः स च
टीकाकर्त्रसंमतत्वादादर्शान्तरेष्वप्यलब्धत्वादयुक्तत्वाच्च
नादृतोऽस्माभिः |] दितचित्तत्वात्क्रियानियमनं विना |
गच्छन्न्यायेन मात्स्येन परं दुःखं प्रयाति हि || ९ ||

सुज्ञास्त्विष्टेष्वनिष्टेषु न निमज्जन्ति वस्तुषु |
यतेन्द्रियत्वाद्बुद्धत्वान्निर्वासनतया तथा || १० ||

दितचित्तत्वात् रागद्वेषलोभादिदोषसहस्रखण्डितचित्तत्वान्मात्स्येन मत्स्येषु
प्रसिद्धेन दुर्बलस्वपरजातिग्रसनन्यायेन गच्छन् क्रियानियमनं विना परं जन्म
परंपरानरकादिदुःखं प्रयाति | हि इति शास्त्रप्रसिद्धौ || ९ || १० ||

काकतालीयवद्रूढां क्रियां कुर्वन्ति ते सदा |
न कुर्वन्त्यपि वै किंचिन्नैषां क्वचिदपि ग्रहः || ११ ||

रूढां अकस्मात्प्रादुर्भूताम् | ग्रहः आसङ्गः || ११ ||

काकतालीयतो विष्णुरेवंकर्मोदितः पुरा |
एवंकर्मा त्रिनयन एवंकर्माअम्बुजोद्भवः || १२ ||

112009 एवंकर्मा मानुष्यादिजन्मकर्मा ॥ १२ ॥
112010
112011 न निन्द्यमस्ति नानिन्द्यं नोपादेयं न हेयता।
112012 न चात्मीयं न च परं कर्म ज्ञविषयं क्वचित् ॥ १३ ॥
112013
112014 न हेयता कस्यचिदिति शेषः। आत्मीयं स्ववर्णाश्रमोचितम्। परं तदन्यत्। ज्ञाः
112015 सिद्धास्तान्विषिणोति बध्नातीति विषयस्तथाविधं न क्वचिदित्यर्थः ॥ १३ ॥
112016
112017 अग्न्यादीनां यथौष्ण्यादि सर्गादौ रूढिमागतम्।
112018 हरादीनां तथा कर्म द्विजातीनां च जातयः ॥ १४ ॥
112019
112020 तर्हि कथं हरस्य प्रसिद्धहरचरित्रवेषक्रियानियमो हरेर्वा तच्चरित्रवेषादिनियमो
112021 भवदादीनां च ब्राह्मणोत्तमचर्यानियमः। काकतालीयन्याये
112022 तदघटनादित्याशङ्क्याह-अग्न्यादीनामिति। जातयस्तत्तज्जात्युचितकर्मनियमः।
112023 मुख्येश्वरेच्छारूपानादिनियतिरेव तद्व्यवस्थापिकेत्यर्थः ॥ १४ ॥
112024
112025 सर्गे प्ररूढिमायाते संकेतवशतः पृथक्।
112026 अनुभूतिफलाश्चर्याः कल्पिताः कल्पिताः स्वयम् ॥ १५ ॥
112027
112028 अज्ञानां तु चर्या नाग्न्यादिक्रियावन्नियताः सर्गादावभिव्यक्ताः किंतु सर्गे
112029 रूढिमायाते सति तत्तद्वर्णादिविभागसंकेतवशतः पृथक्
112030 ऐहिकपारलौकिकसुखदुःखानुभूतिफलाः शास्त्रीयाः स्वाभाविक्यश्च
112031 रागादिवशात्स्वयं कल्पिता इति वैषम्यमित्यर्थः ॥ १५ ॥
112032
112033 विदेहमुक्तविषयं तुर्यमौनमतो मया।
112034 नोक्तं तव परं मौनं सदेहस्य रघूद्वह ॥ १६ ॥
112035
112036 एवं प्रश्नं समाधाय प्रस्तुतेषु मौनेषु वक्तव्यशेषं दर्शयति-विदेहेति।
112037 सदेहस्य प्रसिद्धाच्चतुर्विधमौनात्परं तव नोक्तं तच्छृण्विति परेणान्वयः ॥ १६
112038 ।।
112039
112040 खादप्यतितरामच्छमात्माकाशं चिदात्मकम्।
112041 तत्ताप्राप्तिः परं श्रेयः सा कथं प्राप्यते शृणु ॥ १७ ॥
112042
112043 तत्तायास्तद्भावस्य प्राप्तिः परं श्रेयो मोक्षः ॥ १७ ॥
112044
112045 सम्यग्ज्ञानावबोधेन नित्यमेकसमाधिना।
112046 संख्ययैवावबुद्धा ये ते स्मृताः सांख्ययोगिनः ॥ १८ ॥
112047
112048 तत्प्राप्तौ सांख्ययोगावुपाय इति वर्णयिष्यन्सांख्ययोगिनो लक्षयति-सम्यगिति।
112049 संख्यया विवेकविचारप्रयुक्तराजयोगेन ॥ १८ ॥
112050
112051 प्राणाद्यनिलसंशान्तौ युक्त्या ये पदमागताः।
112052 अनामयमनाद्यन्तं ते स्मृता योगयोगिनः ॥ १९ ॥
112053
112054 कर्मयोगिनो लक्षयति-प्राणेति। युक्त्या प्राग्वर्णितहठयोगेन ॥ १९ ॥
112055
112056 उपादेयं तु सर्वेषां शान्तं पदमकृत्रिमम्।
112057 तत्केचित्संख्यया प्राप्ताः केचिद्योगेन देहतः ॥ २० ॥
112058
112059 उपादेयं फलीभूततत्त्वसाक्षात्कारेण प्राप्तव्यम्। सर्वेषां द्विविधानामपि
112060 योगिनाम्। देहतः अनेनैव देहेन ॥ २० ॥

112061
112062 एकं सांख्यं च योगं च यः पश्यति स पश्यति।
112063 यत्सांख्यैः प्राप्यते स्थानं परं योगैस्तदेव हि॥ २१॥
112064
112065 फलत एतदेव स्फुटयति-यदिति॥ २१॥
112066
112067 यत्र प्राणमनोवृत्तिरत्यन्तं नोपलभ्यते।
112068 वासनावागुरोत्क्रान्ता तद्विद्धि परमं पदम्॥ २२॥
112069
112070 ननु विभिन्नरूपयोस्तयोः कुत एकं फलं तत्राह-यत्रेति।
112071 प्राणमनोवृत्त्योरुभयोरप्यात्यन्तिकविलयोपलक्षितत्वादुभयवासनावागुरोत्क्रान्ता
112072 स्थितिरेव तत्परमं पदं तत इत्यर्थः॥ २२॥
112073
112074 वासनां चित्तमेवाहुः कारणं तद्धि संसृतेः।
112075 तदकारणतामेति विलीयोभयकर्मसु॥ २३॥
112076
112077 एकफलत्वे ओदनसिद्धौ वह्निजलयोरिव सांख्ययोगयोः समुच्चयो युक्तो न विकल्प इति
112078 चेत्तत्राह-वासनामिति।
112079 संसृतेर्बाह्यान्तःकरणप्राणादिचेष्टायास्तद्वासनापुञ्जात्मकं मन एव
112080 कारणं तच्च सांख्येन योगेन वा एकेनैव विलीय तत्त्वज्ञानात्मना
112081 परिणतमुभयोः करणप्राणयोरपि कर्मसु व्यापारेषु
112082 अकारणतामेतीत्येकैकेनोभयफलसिद्धेर्न समुच्चय इत्यर्थः॥ २३॥
112083
112084 मनः पश्यति वै देहं बालो वेतालकं यथा।
112085 स्वात्मानं विलयं नीत्वा न भूयस्तं प्रपश्यति॥ २४॥
112086
112087 देहाहंतादर्शनपूर्विकैव सर्वा संसृतिस्तन्मूलं मनस्तच्छान्तौ
112088 सर्वसंसृतिशान्तिरुपपन्नेत्याह-मन इति॥ २४॥
112089
112090 मनो मुधैवाभ्युदितमसदेवानवेक्षणात्।
112091 स्वप्ने स्वमरणाकारं प्रेक्ष्यमाणं न विद्यते॥ २५॥
112092
112093 आत्मदर्शनेन तर्हि कथं मनसो नाश इति चेत्तददर्शनजन्यत्वादित्याह-मन इति
112094 ॥ २५॥
112095
112096 मनोभवस्तु संसारः क्व ममाहं क्व संततिः [संसृतिः।]।
112097 उपदेश्योपदेशादिबन्धमोक्षौ च तत्कुतः॥ २६॥
112098
112099 ज्ञानेन मनोबाधे तत्कार्याहंममतादिबन्धमोक्षान्ताः सर्वाः कल्पना बाध्यन्त
112100 इत्याह-मनोइभव इति। क्व कुत इत्यनयोः प्रतिपदमन्वयः॥ २६॥
112101
112102 एकतत्त्वघनाभ्यासः प्राणानां विलयस्तथा।
112103 मनोविनिग्रहश्चेति मोक्षशब्दार्थसंग्रहः॥ २७॥
112104
112105 इदानीमुत्तमाधममध्यमाधिकारिक्रमेण मोक्षसाधनत्रयं
112106 सर्वशास्त्रार्थतात्पर्यसंग्रहेण दर्शयति-एकेति॥ २७॥
112107
112108 श्रीराम उवाच।
112109
112110 यदि हि प्राणविलयो मुने मोक्षस्य कारणम्।
112111 मृता एव विमुच्यन्ते तन्मन्ये सर्वजन्तवः॥ २८॥
112112

112113 तेषु मध्यमं राम आक्षिपति-यदीति। मरणे सर्वेषां प्राणविलयप्रसिद्धेरिति
112114 भावः॥ २८॥
112115
112116 श्रीवसिष्ठ उवाच।
112117
112118 त्रिष्वेतेषु प्रयोगेषु मनःप्रशमनं वरम्।
112119 साध्यं विद्धि तदेवाशु यथा भवति तच्छिवम्॥ २९॥
112120
112121 त्रयोऽप्युपाया मनोनाशद्वारैव मोक्षहेतवो मरणे च न मनोनाशः प्राणनाशो
112122 वा किंतु मूर्च्छाकाले विलीनसैन्धववदविद्यायां
112123 वासनात्मनावस्थानमुत्क्रमणकाले पुनराविर्भावः। सविज्ञानो भवति
112124 सविज्ञानमेवान्ववक्रामतीति श्रुतेस्तृणजलायुकादृष्टान्तप्रसिद्धेर्विलीनानां
112125 प्राणानां चक्षुरादिद्वारेणोत्क्रमणासंभवाच्च। न च
112126 स्थूलदेहरूपाधाराभावाद्बाहिर्निर्गतानां विलयः। बाह्याकाशे
112127 सहोत्क्रान्ताभिर्भूतमात्राभिस्तात्कालिकव्यवहारयोग्यदेहकल्पन##-
112128 मनःप्रशमनमेव वरं श्रेष्ठं साध्यं विद्धि॥ २९॥
112129
112130 यदा निर्वाणनं प्राणास्त्यजन्तीदं शरीरकम्।
112131 तदानुभूय तन्मात्रैर्यान्ति व्योमनि संगमम्॥ ३०॥
112132
112133 यदा प्राणा निर्वाणनं वण शब्दे उपशान्तघुर्घुराराविमदं शरीरकं त्यजन्ति
112134 तदा वासनाकामकर्मोपस्थापितं भाविदेहाकारमनुभूय बाह्यव्योमनि
112135 तादृशदेहारम्भानुकूलैस्तन्मात्रैर्भूतमात्राभिः संगमं यान्ति। तथा च
112136 श्रुतिः सविज्ञानो भवति सविज्ञानमेवान्ववक्रामति इति। तद्यथा पेशस्कारी पेशसो
112137 मात्रामुपादायान्यन्नवतरं कल्याणतरं रूपं तनुते एवमेवायमात्मेदं
112138 शरीरं निहत्याविद्यां गमयित्वाऽन्यन्नवतरं कल्याणतरं रूपं कुरुते पित्र्यं वा
112139 गान्धर्वं वा दैवं वा प्राजापत्यं वा ब्राह्मं वान्येषां वा भूतानाम् इति च।
112140 श्रुतौ पेशस्कारी स्वर्णकारः पेशसः स्वर्णस्य मात्रां शकलान्युपादायेत्यर्थः॥
112141 ३०॥
112142
112143 वासनासात्मकान्येव विद्धि तन्मात्रकाणि वै।
112144 तदात्मकैर्मनोवद्भिः प्राणैः श्लिष्यन्ति नेतरैः॥ ३१॥
112145
112146 तर्हि ता भूतगात्रा बहिर्जीवान्तरप्राणैः सहापि कुतो न श्लिष्यन्ति तत्राह-वासनेति।
112147 तत्तज्जीववासनामात्रात्मकानि तानि
112148 तादृशवासनावन्मनोविशिष्टप्राणैरेवसंश्लिष्यन्ति नेतरैरिति व्यवस्थितमित्यर्थः
112149 ॥ ३१॥
112150
112151 सवासनास्तूत्पद्यन्ते प्राणा मुञ्चन्ति देहकम्।
112152 तद्व्योमवायुसंश्लेषं यान्ति दुःखाय गन्धवत्॥ ३२॥
112153
112154 प्राणादेहान्तरे तद्देहवासनासहिता एवोत्पद्यन्ते। यतः पूर्वदेहमपि
112155 भाविदेहवासनासहिता एव मुञ्चन्ति। देहान्तरे च तदीयहार्दव्योम्ना
112156 तदन्तर्गतवायुभिश्च संश्लेषं यान्ति। यथा कुसुमगन्धस्तिलेषु
112157 प्रतिविशस्तद्गततैलेन संश्लेषं यातीति यन्त्रनिष्पीडनादिदुःखाय भवति तद्वत्॥ ३२॥
112158
112159 मनः साम्बुरिवाम्भोधौ न शाम्यति सवासनम्।
112160 नामनस्काः संभवन्ति प्राणाः सूर्य इव त्विषः॥ ३३॥
112161
112162 अत एव मरणमात्रेण न मनोनाश इति न प्राणनाशोऽपीत्याह-मन इति। यथा
112163 साम्बुर्घटः अम्भोधौ मग्नो बाह्यजनैरदृश्यमानोऽपि न शाम्यति न नश्यति।
112164 मनःप्राणयोः समनियतत्वं व्यतिरेकमुखेनान्वयमुखेन च दर्शयति##-

112165
112166 न जहाति मनः प्राणान्विना ज्ञानेन कर्हिचित् ।
112167 तृणान्तरेणैव विना तृणाङ्गमिव तित्तिरिः ॥ ३४ ॥
112168
112169 ज्ञानादवासनीभावं स्वनाशं प्राप्नुयान्मनः ।
112170 प्राणात्स्पदं च नादत्ते ततः शान्तिर्हि शिष्यन्ते ॥ ३५ ॥
112171
112172 अत एव ज्ञानाद्वासनाक्षये उभयनाश इत्याह-ज्ञानादिति ॥ ३५ ॥
112173
112174 ज्ञानात्सर्वपदार्थानामसत्त्वं समुदेत्यलम् ।
112175 ततोऽङ्ग वासनानाशाद्वियोगः प्राणचेतसोः ॥ ३६ ॥
112176
112177 ततो न पश्यति मनः प्रशान्तं देहतां पुनः ।
112178 स्वनाशेन पदं प्राप्तं वासनैव मनो विदुः ॥ ३७ ॥
112179
112180 कथं ज्ञानेन वासनानाश इति चेत्तद्धेतुद्वैतबाधादित्याह-ज्ञानादिति ॥ ३६ ॥ ३७
112181 ॥
112182
112183 चेतो हि वासनामात्रं तदभावे परं पदम् ।
112184 तत्त्वं संपद्यते ज्ञानं ज्ञानमाहुर्विचारणम् ॥ ३८ ॥
112185
112186 इत्यस्याः संसृते राम पर्यन्तः संप्रवर्तते ।
112187 स्वयं विवेकमात्रेण रज्जुसर्पभ्रमाकृतेः ॥ ३९ ॥
112188
112189 तदपि ज्ञानं सवासनं सर्वं बाधित्वा आत्मतत्त्वमेव संपद्यते तच्च तत्त्वं
112190 विचारणं रलयोरभेदाद्विगतचालनमचलं ज्ञानमेव शिष्यत इत्यनुभवनिष्ठा
112191 आहुः ॥ ३८ ॥ ३९ ॥
112192
112193 एकार्थाभ्यसनप्राणरोधचेतःपरिक्षयाः ।
112194 एकस्मिन्नेव संसिद्धे संसिद्ध्यन्ति परस्परम् ॥ ४० ॥
112195
112196 प्रस्तुतमुपादत्ते-एकेति । एकोऽर्थोऽद्वयं तत्त्वं तदभ्यसनं श्रवणाद्यावर्तनम्
112197 ॥ ४० ॥
112198
112199 तालवृन्तस्य संस्पन्दे शान्ते शान्तो यथानिलः ।
112200 प्राणानिलपरिस्पन्दे शान्ते शान्तं तथा मनः ॥ ४१ ॥
112201
112202 प्राणः शरीरविलये प्रयाति व्योमवायुताम् ।
112203 यथा वासितमेवेदं सर्वं पश्यति तत्र वा ॥ ४२ ॥
112204
112205 सति शरीरे प्राणोत्क्रमणे अस्त्वयं क्रमः यत्र शरीरस्यैव शापच्छेदादिना
112206 नाशस्तत्र कः क्रमस्तमाह-प्राण इति । व्योमवायुतां
112207 बाह्याकाशस्थवायुमिलनात्तद्भावम् । तत्र बाह्याकाशे ॥ ४२ ॥
112208
112209 यथा विदेहाः पश्यन्ति प्राणा व्योमनि देहकम् ।
112210 समनस्कास्तथाचारं सर्वं चानुभवन्ति ते ॥ ४३ ॥
112211
112212 यथा यादृशं कर्मोद्भावितवासनामयं सुरनरपश्वादिदेहकं पश्यन्ति तथा
112213 तदनुरूपमेव आचारं व्यवहारमनुभवन्ति ॥ ४३ ॥
112214
112215 शान्ते वातपरिस्पन्दे यथा गन्धः प्रशाम्यति ।
112216 तथा शान्ते मनःस्पन्दे शाम्यन्ति प्राणवायवः ॥ ४४ ॥

112217
112218 अविनाभाविनी नित्यं जन्तूनां प्राणचेतसी।
112219 कुसुमामोदवन्मिश्रे तिलतैले इव स्थिते॥ ४५॥
112220
112221 तिलतैले संक्रान्तकुसुमामोदवन्मिश्रे॥ ४५॥
112222
112223 मनसः स्पन्दनं प्राणः प्राणस्य स्पन्दनं मनः।
112224 एतौ विहरतो नित्यमन्योन्यं रथसारथी॥ ४६॥
112225
112226 रथसारथी इव अन्योन्यस्पन्दनं विहरतः संपादयतः॥ ४६॥
112227
112228 आधाराधेयवच्चैतावेकाभावे विनश्यतः।
112229 कुरुतश्च स्वनाशेन कार्यं मोक्षाख्यमुत्तमम्॥ ४७॥
112230
112231 आधाराधेयवत् अग्न्यौष्ण्यवत्॥ ४७॥
112232
112233 एकतत्त्वघनाभ्यासाच्छान्तं शाम्यत्यलं मनः।
112234 तल्लीनत्वात्स्वभावस्य तेन प्राणोऽपि शाम्यति॥ ४८॥
112235
112236 शान्तं बाधितद्वैतवासनम्। प्राणस्वभावस्य तस्मिन्मनसि लीनत्वादेकीभूतत्वात्॥
112237 ४८॥
112238
112239 विचार्य यदनन्तात्मतत्त्वं तन्मयतां नय।
112240 मनस्ततस्तल्लयेन तदेव भवति स्थिरम्॥ ४९॥
112241
112242 तस्मिन्नात्मतत्त्वे लयेन तदात्मतत्त्वमेव स्थिरं भवति॥ ४९॥
112243
112244 यदेवातितरां श्रेयोऽनुपलम्भोपलम्भयोः।
112245 द्वयोरप्यसतोस्तत्र शेषे वापि स्थितो भव॥ ५०॥
112246
112247 अनुपलम्भोऽज्ञानम् उपलम्भस्तद्बाधिका ब्रह्माकारा
112248 वृत्तिस्तयोर्द्वयोरप्यसतोर्निवृत्तयोर्यः शिष्यत इति शेषस्तत्र चिन्मात्रे
112249 प्राणधारणया वा स्थिरो भवेत्यर्थः॥ ५०॥
112250
112251 एकस्मिन्सुदृढे तत्त्वे तावद्भावं विभावयेत्।
112252 भावोऽभावत्वमायाति स्वभ्यासाद्यावदाततम्॥ ५१॥
112253
112254 कियत्कालमेकतत्त्वभावना धार्या तत्राह-एकस्मिन्निति। भावं
112255 तदाकारवृत्तिधाराम्। यावद्भावः सा वृत्तिधारापि चरमसाक्षात्कारप्लुष्टा सती
112256 अभावत्वमायाति तावदित्यर्थः॥ ५१॥
112257
112258 प्रत्याहारवतां चेतः स्वयं भोग्यक्षयादिव।
112259 विलीयते सह प्राणैः परमेवावशिष्यते॥ ५२॥
112260
112261 भोग्यक्षयादाहारक्षयात्स्वयं देह इव विलीयते॥ ५२॥
112262
112263 यदेकतानं भवति चेतस्तद्द्रवति क्षणात्।
112264 शान्ताशेषविशेषौघं चिराभ्यासस्वभावतः॥ ५३॥
112265
112266 धारणान्तैः पञ्चभिरङ्गैर्मनसो बाह्याकारक्षये सति
112267 धारणादिभिस्त्रिभिर्ब्रह्मैकतानतासंपत्त्या निर्विकल्पसमाधिपरिपाकेन
112268 ब्रह्मभावः सिद्ध्यतीत्याह-यदेकतानमिति॥ ५३॥

112269
112270 अविद्येयं तु नास्तीति बुद्ध्वा युक्तियुतं धिया।
112271 ज्ञानादेव परावाप्तिस्तदभ्यासस्ततः परम्॥ ५४॥
112272
112273 अश्रुते अमते च ध्यानधारणाद्यभ्यासायोगाच्छ्रवणमननाभ्यां
112274 द्वैतजातमविद्यैव सा च नास्त्येव तत्त्वज्ञानादेव परावाप्तिरिति
112275 प्रमाणप्रमेयासंभावनादोषनिरासपर्यन्तं बुद्ध्वा ततः परं
112276 ध्यानधारणादिना ज्ञानाभ्यासः कार्य इत्यर्थः॥ ५४॥
112277
112278 चित्ते शन्ते शाम्यतीयं संसारमृगतृष्णिका।
112279 जरामुपगते मेघे मिहिका तन्मयी यथा॥ ५५॥
112280
112281 मेघे जरामपक्षयं शरदि उपगते सति ततो हेतोरागता तन्मयी। तत आगत इत्यर्थे
112282 हेतुमनुष्येभ्योऽन्यतरस्याम् इत्यनुवर्तमाने मयट् च इति मयट्॥ ५५॥
112283
112284 चित्तमात्रमविद्येति कुरु तेनैव तत्क्षयम्।
112285 तद्रूपं राम चित्तात्मा नाभावो हि परं पदम्॥ ५६॥
112286
112287 ब्रह्माकारपरिणतेन तेन चित्तेनैव तस्य चित्तस्य क्षयं कुरु। तस्य चित्तक्षयस्य रूपं
112288 तु चित्ताधिष्ठानमात्मैव न शून्यता। हि यस्मात्तदभावः परं पदं
112289 परमपुरुषार्थो न भवतीत्यर्थः॥ ५६॥
112290
112291 मुहूर्तमेव निर्वाणं यदि चेतः परे पदे।
112292 तत्तत्परिणतं विद्धि तत्रैवास्वादमागतम्॥ ५७॥
112293
112294 अप्यर्थे एवकारः। निर्वाणं विश्रान्तम्। तत्तर्हि तद्ब्रह्मैव परिणतं विद्धि
112295 नत्वध्यस्तस्याधिष्ठानव्यतिरिक्तं स्वरूपमस्तीति तत्रैव
112296 निरतिशयस्वप्रकाशानन्दास्वादमागतं सन्न व्युत्थानमिच्छतीत्यर्थः।
112297 तथाचोक्तं शिवधर्मोत्तरे ज्ञानामृतरसो येन सकृदास्वादितो भवेत्। विहाय
112298 सर्वकार्याणि मनस्तत्रैव धावति॥ इति॥ ५७॥
112299
112300 यदि सांख्येन विश्रान्तं चेतो योगेन वापि ते।
112301 क्षणं तत्सत्त्वतां यातं न भूय इह जायते॥ ५८॥
112302
112303 इदमेव प्रस्तुतयोः सांख्ययोगयोरेकं फलमित्याह-यदिति॥ ५८॥
112304
112305 चेतो विगलिताविद्यं सत्त्वशब्देन कथ्यते।
112306 दग्धसंसारबीजं तन्न ददात्यन्तरं पुनः॥ ५९॥
112307
112308 सत्त्वशब्दार्थ स्वयमेवाह-चेत इति। अन्तरं ब्रह्मभावविच्छेदम्॥ ५९॥
112309
112310 कश्चिद्विगलिताविद्यः सत्त्वस्थः शान्तवासनः।
112311 परं शून्योपमं सद्यो ज्योतिः पश्यति शाम्यति॥ ६०॥
112312
112313 तद्दर्शनोन्मुखजना विरला एवेत्याह-कश्चिदिति। अज्ञदृशा
112314 असंभावनाच्छून्योपमम्। ज्ञदृशा तु परं ज्योतिः॥ ६०॥
112315
112316 विगलितात्मपदं विगलन्मनः सुभग सत्त्वमितीह हि कथ्यते।
112317 न पुनरेति कलामलिनं पदं कनकतामिव ताम्रमुपागतम्॥ ६१॥
112318
112319 उक्तमेवार्थमनुवदन्नुपसंहरति-विगलितेति। हे सुभग
112320 उक्तत्रिविधोपायाभ्यासैर्विगलितान्यात्मनो जाग्रत्स्वप्नसुषुप्तिलक्षणानि

112321 भ्रान्तितद्बीजदर्शनपदानि यस्य तथाविधं स्वयं चाविद्याक्षयाद्विगलद्बाधितं
112322 दग्धपटवत् प्रतिभासमात्रशिष्टं मन इह जीवन्मुक्त्यवस्थायां सत्त्वमिति कथ्यते
112323 | तच्च वासनाबीजशक्तिदाहात् पुना रागद्वेषाभिमानादिकलाभिर्मलिनं संसारपदं
112324 न एति | यथा स्पर्शमणिसङ्गात्कनकतामुपागतं ताम्रं पुनः
112325 कलङ्ककलनामलिनं ताम्रपदं नैति तद्वदित्यर्थः || ६१ ||
112326
112327 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० निर्वा० पू०
112328 प्राणमनःसंयोगविचारणं नामैकोनसप्ततितमः सर्गः || ६९ ||
112329
112330 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
112331 प्राणमनःसंयोगविचारणं नामैकोनसप्ततितमः सर्गः || ६९ ||
112332
112333 सप्ततितमः सर्गः ७०
112334
112335 श्रीवसिष्ठ उवाच |
112336
112337 जीवोऽजीवो भवत्याशु याति चित्तमचित्तताम् |
112338 विचारादित्यविद्यान्तो मोक्ष इत्यभिधीयते || १ ||
112339
112340 मायाभ्रान्त्यनवस्थाने चिदात्मपरिशुद्धये |
112341 वेतालराजसंवादकथोदाहियते शुभा || १ ||
112342
112343 चित्ते शान्ते शाम्यतीयं संसारमृगतृष्णिकेत्युक्तं चित्तशान्तौ च विचार एव
112344 ज्ञानोदयपर्यन्त उपाय इत्याह-जीव इति | इति अनेनोपायेन संपन्नो यः
112345 कार्यकारणाविद्ययोरन्तो नाशः स मोक्ष इत्यभिधीयते || १ ||
112346
112347 मृगतृष्णाजलमिव मनोऽहंतादि दृश्यते |
112348 असदेव मनागेव तद्विचारात्प्रलीयते || २ ||
112349
112350 उक्तार्थाऽसंभावनाहेतुं प्रपञ्चे दार्ढ्यभ्रमं वारयति-मृगतृष्णेति ||
112351 २ ||
112352
112353 संसृतिस्वप्नविभ्रान्तौ वेतालोदाहृतानिमान् |
112354 प्रश्नानाकर्णय शुभान्प्रसङ्गात्स्मृतिमागतान् || ३ ||
112355
112356 असदेव मनागेवेत्युक्तार्थस्य समर्थनायाख्यायिकामवतारयति-संसृतीति || ३ ||
112357
112358 अस्ति विन्ध्यमहाटव्यां वेतालो विपुलाकृतिः |
112359 स किंचिन्मण्डलं गर्वादाजगाम जिघांसया || ४ ||
112360
112361 गर्वाद्वधयोग्येष्वज्ञजनेष्वनादरात् || ४ ||
112362
112363 स वेतालोऽवसत्पूर्वं कस्मिंश्चित्सज्जनास्पदे |
112364 बहुबल्युपहारेण नित्यतृप्ततया सुखी || ५ ||
112365
112366 संक्षिप्योक्तं विस्तारयितुं पुनरादित आरभ्याह-स इति | सज्जनस्य राज्ञ आस्पदे
112367 देशे किरातराज्ये कर्कटीव राजकृतेन बहुवध्यजनबल्युपहारेण नित्यतृप्ततया
112368 निर्विक्षेपसमाधिसुखी || ५ ||
112369
112370 निर्निमित्तं निरागस्कं पुरोऽप्यभ्यागतं न सः |
112371 क्षुधितोऽपि नरं हन्ति सन्तो हि न्यायदर्शकाः || ६ ||
112372

112373 स कालेनाटवीगेहो जगाम नगरान्तरम् ।
112374 न्याययुक्त्या जनं भोक्तुं क्षुधा समभिचोदितः ॥ ७ ॥
112375
112376 कालेन तत्र वध्यजनालाभकालेन । अटवी गेहं यस्य ॥ ७ ॥
112377
112378 तत्र प्राप स भूपालं रात्रिचर्याविनिर्गतम् ।
112379 तमाह घनघोरेण शब्देनोग्रनिशाचरः ॥ ८ ॥
112380
112381 रात्रिचर्या निशि नगरे दुष्टजनपरिज्ञानाय चोरादिवधाय च संचारस्तदर्थं
112382 विनिर्गतम् ॥ ८ ॥
112383
112384 वेताल उवाच ।
112385
112386 राज&ल्लब्धोऽसि भीमेन वेतालेन मयाधुना ।
112387 क्व गच्छसि विनष्टोऽसि भव भोजनमद्य मे ॥ ९ ॥
112388
112389 राजोवाच ।
112390
112391 हे रात्रिचर निर्न्याय्यंन् मां चेदत्सि बलादिह ।
112392 तत्ते सहस्रधा मूर्धा स्फुटिष्यति न संशयः ॥ १० ॥
112393
112394 निर्न्याय्यं न्यायापेतक्रमेणात्सिचेत् ॥ १० ॥
112395
112396 वेताल उवाच ।
112397
112398 न त्वामद्म्यहमन्यायं न्यायोऽयं हि मयोच्यते ।
112399 राजासि सकलाशाश्च पूरणीयास्त्वयार्थिनाम् ॥ ११ ॥
112400
112401 सकलाः आशास्यन्त इत्याशा अभिलषितार्थाः । किलेति [मूले किल इति
112402 टीकाकृत्पाठोऽस्मिन्निकटवर्त्यादर्शान्तरेषु न दृश्यते ।]
112403 धर्मशास्त्रप्रसिद्धौ ॥ ११ ॥
112404
112405 ममैतामर्थितां राजन्संभवार्थां प्रपूरय ।
112406 प्रश्नानिमान्मयोक्तांस्त्वं सम्यगाख्यातुमर्हसि ॥ १२ ॥
112407
112408 अज्ञश्चेदपराधसहस्रं सुलभंन् सुज्ञश्चेन्नापराध्यत्येव । स च
112409 सत्यप्यपराधसहस्रे पालनीय इति परीक्षणाय प्रश्नपरिपूरणमेव प्रार्थयते##-
112410 परवधप्रवृत्तिः स्वस्य नास्तीति दर्शितम् ॥ १२ ॥
112411
112412 कस्य सूर्यस्य रश्मीनां ब्रह्माण्डान्यणवः कृशाः ।
112413 कस्मिन्स्फुरन्ति पवने महागगनरेणवः ॥ १३ ॥
112414
112415 सर्वेषां प्रश्नानामापाततोऽर्थः स्पष्टः । तात्पर्यतस्तूत्तरसर्गे स्फुटीकरिष्यते ॥ १३
112416 ॥
112417
112418 स्वप्नात्स्वप्नान्तरं गच्छञ्छतशोऽथ सहस्रशः ।
112419 त्यजन्न त्यजति स्वच्छं कः स्वरूपं प्रभास्वरम् ॥ १४ ॥
112420
112421 उत्तरोत्तरस्वप्ने पूर्वपूर्वसत्यतां त्यजन्नपि तत् प्रकाशकं स्वच्छं
112422 सत्यात्मस्वरूपं न त्यजति ॥ १४ ॥
112423
112424 रम्भास्तम्भो यथा पत्रमात्रमेवं पुनः पुनः ।

112425 अन्तरन्तस्तथान्तश्च तथा कोऽणुः स एव हि ॥ १५ ॥
112426
112427 यथा रम्भायाः कदल्याः स्तम्भः अन्तरन्तस्तथा तदन्तश्च पत्रमात्रं
112428 वल्कलमात्रम् । दृष्टान्ते तत्सदृशवल्कलान्तरं दार्ष्टान्तिके स एवेति विशेष इति
112429 भावः ॥ १५ ॥
112430
112431 ब्रह्माण्डाकाशभूतौघसूर्यमण्डलमेरवः ।
112432 अपरित्यजतोऽणुत्वं कस्याणोः परमाणवः ॥ १६ ॥
112433
112434 भूतौघपदेन तदाधारभुवनानि लक्ष्यन्ते । अतिमहत्त्वेन प्रसिद्धा ये
112435 ब्रह्माण्डाकाशादयोऽपि यस्याणोरपेक्षया परमा अणवः अत्यन्तक्षुद्राः ॥ १६ ॥
112436
112437 कस्यानवयवस्यैव परमाणुमहागिरेः ।
112438 शिलान्तर्निबिडैकान्तरूपमज्जा जगत्त्रयी ॥ १७ ॥
112439
112440 परमाणोः सूक्ष्मस्यैव सतो महतो गिरेः । निबिडं घनतरं यत् सत्तैकान्तरूपं
112441 तदेव मज्जा सारो यस्याः ॥ १७ ॥
112442
112443 इति कथयसि चेन्न मे दुरात्मंस्तदिह निगीर्य भवन्तमात्मघातिन् ।
112444 फलमिव तव मण्डलं ग्रसेयं प्रसभमुपेत्य जगद्यथा कृतान्तः ॥ १८ ॥
112445
112446 इति षट् प्रश्नान् मे न कथयसि चेद्दुष्टो देहादिरेव आत्मा यस्य तथाविध
112447 अतएवापरिच्छिन्नमात्मानं परिच्छेदेन घातितवानसीत्यात्मघातिन्
112448 तत्तस्मादकथनापराधादेव भवन्तं फलमिव निगीर्य प्रसभं बलात्तव
112449 मण्डलं मण्डलस्थजनान् ग्रसेयम् । ग्रसेऽहमिति पाठे
112450 विकरणपदव्यत्ययश्छान्दसः ॥ १८ ॥
112451
112452 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाणप्रकरणे पू०
112453 वेतालप्रश्नो नाम सप्ततितमः सर्गः ॥ ७० ॥
112454
112455 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
112456 वेतालप्रश्नो नाम सप्ततितमः सर्गः ॥ ७० ॥
112457
112458 एकसप्ततितमः सर्गः ७१
112459
112460 श्रीवसिष्ठ उवाच ।
112461
112462 इत्युक्तवति वेताले वक्तुं प्रश्नान्विहस्य सः ।
112463 उवाच वचनं राजा दन्तांशुधवलाम्बरः ॥ १ ॥
112464
112465 आद्यप्रश्नसमाधानं विस्तरेणात्र वर्ण्यते ।
112466 अनन्तकोटिब्रह्माण्डफलवृक्षादिकल्पनैः ॥
112467
112468 प्रसिद्धब्रह्माण्डानां त्रसरेणुत्वमित्यल्पदृष्ट्या त्वयोक्तं
112469 वक्ष्यमाणकल्पनया कोटिकोटिगर्भब्रह्माण्डानामपि तत्र
112470 त्रसरेणुत्वसंभवादित्याशयेन विहस्य दन्तानामंशुभिः
112471 प्रभाभिर्धवलान्यम्बराणि वस्त्राण्याकाशं च यस्य तथाविधः सन् ॥ १ ॥
112472
112473 राजोवाच ।
112474
112475 आस्ते कदाचिच्चेदं हि ब्रह्माण्डमजरं फलम् ।
112476 उत्तरोत्तरं दशगुणभूतत्वक्परिवेष्टितम् ॥ २ ॥

112477
112478 तत्रादौ कस्य सूर्यरश्मीनां ब्रह्माण्डास्त्रसरेणवः इति प्रथमप्रश्नस्योत्तरं
112479 वक्तुमभिज्ञतमत्वाभिमानं वेतालस्य तिरस्कुर्वन्कंचित्कल्पनाचमत्कारं राजा
112480 दर्शयति-आस्ते इत्यादिना। इदं त्वया मया चाश्रितं ब्रह्माण्डयज्ञदृष्ट्या
112481 अजरमुत्तरोत्तरं दशगुणाभिर्भूतत्वग्भिर्भूजलाद्यावरणैः परिवेष्टितम्॥ २॥
112482
112483 तादृशानां सहस्राणि फलानि यत्र सन्ति हि।
112484 अत्युच्चैस्तादृशी शाखा विपुला चलपल्लवा॥ ३॥
112485
112486 इदं ब्रह्माण्डं १ ईदृशब्रह्माण्डसहस्रगर्भाणि पञ्चीकृतमहाभूतानि २
112487 तद्गर्भा गन्धतन्मात्रा ३ उत्तरोत्तरं तद्गर्भाणि रसादितन्मात्राणि ७ तद्गर्भं
112488 हैरण्यगर्भं मनः ८ अतीतानागतानन्ततद्गर्भा भूतमात्राराशयः ९ तद्गर्भाः
112489 कल्पकालाः १० तद्गर्भा उत्तरोत्तरस्य दिनभूता
112490 ब्रह्मविष्णुरुद्राणामायुःकालास्तदात्मानस्त एव १३ अनन्तकोटीनां तेषां
112491 सत्तास्फूर्तिव्यवहारप्रवर्तकं मायाशबलं ब्रह्म १४
112492 इत्येतांश्चतुर्दशपदार्थानिह
112493 क्रमात्फलशाखादिचतुर्दशकल्पनाभिर्निदर्शयति-तादृशानामित्यादिना।
112494 चलानि पल्लवानीव भुवनानि यस्याम्॥ ३॥
112495
112496 तादृशानां सहस्राणि शाखानां यत्र सन्त्यथ।
112497 तादृशोऽस्ति महावृक्षो दुर्लक्ष्यो विपुलाकृतिः॥ ४॥
112498
112499 तादृशानां सहस्राणि यत्र सन्ति महीरुहाम्।
112500 तादृशं वनमत्युच्चैरनन्ततरुगुल्मकम्॥ ५॥
112501
112502 तादृशानां सहस्राणि वनानां यत्र सन्त्यथ।
112503 तादृगस्ति बृहच्छृङ्गमत्युच्चैर्भरिताकृति॥ ६॥
112504
112505 शृङ्गपदेनात्र तत्प्रधानो गिरिरेवोच्यते। विपुलतमत्वात्सर्वतो भरिताकृति॥ ६॥
112506
112507 तादृशानां सहस्राणि शृङ्गाणां यत्र सन्त्यथ।
112508 तादृशोऽस्त्यतिविस्तीर्णो देशो विपुलकोटरः॥ ७॥
112509
112510 तादृशानां सहस्राणि देशानां यत्र सन्त्यथ।
112511 तादृगस्ति बृहद्द्वीपं महाह्रदनदीयुतम्॥ ८॥
112512
112513 महाह्रदनदीवदाविर्भूतानाविर्भूतप्रवहणप्राणादिवायुचेष्टाभिर्युतम्॥ ८॥
112514
112515 तादृशानां सहस्राणि द्वीपानां यत्र सन्त्यथ।
112516 तादृगस्ति महीपीठं विचित्ररचनान्वितम्॥ ९॥
112517
112518 विचित्राभिर्नामादिरचनाभिरन्वितम्॥ ९॥
112519
112520 तादृशानां सहस्राणि पृथ्वीनां यत्र सन्त्यथ।
112521 तादृगस्ति महास्फारं महाभुवनडम्बरम्॥ १०॥
112522
112523 तादृशानां सहस्राणि जगतां यत्र सन्त्यथ।
112524 तादृगस्ति महच्चाण्डं चण्डमम्बरपीठवत्॥ ११॥
112525
112526 तादृशानां सहस्राणि यत्राण्डानि करण्डकाः।
112527 तादृशोऽस्ति गतस्पन्दो विपुलाब्धिश्च सागरः॥ १२॥
112528

112529 तादृक्सागरलक्षाणि तरङ्गो यत्र पेलवः ।
112530 तादृशः स्वविलासात्मा निर्मलोऽस्ति महार्णवः ॥ १३ ॥
112531
112532 तादृगब्धिसहस्राणि वस्योदरजलान्यथ ।
112533 तादृशोऽस्ति पुमान्कश्चिदत्युच्चैर्भरिताकृतिः ॥ १४ ॥
112534
112535 पुमान् विष्णुः ॥ १४ ॥
112536
112537 तादृशानां नृणां लक्षैर्यस्य मालोरसि स्थिता ।
112538 प्रधानं सर्वसत्तानां तादृशोऽस्ति परः पुमान् ॥ १५ ॥
112539
112540 परः पुमान् रुद्रः ॥ १५ ॥
112541
112542 तादृशानां सहस्राणि पुरुषाणां महात्मनाम् ।
112543 स्फुरन्ति मण्डले यस्य स्वतनूरुहजालवत् ॥ १६ ॥
112544
112545 तनूरुहाः केशलोमानि तज्जालवत् । तथा च श्रुतिः-यथा सतः पुरुषात्केशलोमानि
112546 तथाऽक्षरात्संभवतीह विश्वम् इति ॥ १६ ॥
112547
112548 तादृशोऽस्ति महादित्यः शतमन्यासु दृष्टिषु ।
112549 या एताः कलनाः सर्वास्ता एतास्तस्य दीप्तयः ॥ १७ ॥
112550
112551 प्रत्यग्दृष्टेरन्यासु पराग्दृष्टिषु या एता रुद्रादिब्रह्माण्डान्ताः
112552 शतमसंख्याः कलनाः प्रतिभासास्ता एताः सर्वप्राणिप्रत्यक्षास्तस्यादित्यस्य
112553 दीप्तयो रश्मयः ॥ १७ ॥
112554
112555 अस्यादित्यस्य दीप्तीनां ब्रह्माण्डास्त्रसरेणवः ।
112556 मय चित्सूर्य इत्युक्तः सर्वमेतत्तपत्यसौ ॥ १८ ॥
112557
112558 मया चिदात्मा इति एवंप्रभावः सूर्य इति त्वत्प्रश्नोत्तरत्वेनोक्त एतत्सर्वं जगदसौ
112559 तपति प्रकाशयति ॥ १८ ॥
112560
112561 विज्ञानात्मैव परमो भास्करो भाविताशयः ।
112562 इमे ये भुवनाभोगास्तस्यैव त्रसरेणवः ॥ १९ ॥
112563
112564 भुवनाभोगा ब्रह्माण्डाः ॥ १९ ॥
112565
112566 विज्ञानपरमार्कस्य भासा भान्ति भवन्ति च ।
112567 इमा जगदहर्लक्ष्म्यः क्वचिल्लक्ष्म्यो रवेरिव ॥ २० ॥
112568
112569 भान्ति स्फूर्तिं लभन्ते । भवन्ति सत्तां च लभन्ते ॥ २० ॥
112570
112571 विज्ञानमात्रकचितात्मनि जन्तुजाए त्रैलोक्यमण्डपमणेरविकासभाजि ।
112572 चिज्जन्मनोर्भवनसंभ्रमतावलेखाः सन्तीह रे न हि मनागपि शान्तमास्स्व ॥
112573 २१ ॥
112574
112575 रे वेताल वर्णितशबलब्रह्मलक्षणस्य त्रैलोक्यमण्डपमणेः सूर्यस्य
112576 पारमार्थिकतत्त्वभूते मुख्याधिकारिषु विज्ञानं
112577 शास्त्रजन्याखण्डाकारसाक्षात्कारस्तन्मात्रेण कचितात्मनि स्वात्मतया प्रथमाने
112578 अनधिकारिजन्तुमात्रे तु अविकासभाजि अस्फुटे इह प्रत्यगात्मनि
112579 अग्निविस्फुलिङ्गवच्चिज्जन्मनोर्जीवजगतोर्भवनस्य पृथक्सत्तायाः
112580 कर्तृत्वभोक्तृत्वाद्यनन्तसंभ्रमतानां चावलेखा उल्लेखाः सन्ति ।

112581 परमार्थदृशा तु मनागपि न सन्ति। अतस्त्वं शान्तप्रश्नाडम्बरमास्स्वेत्यर्थः॥
112582 २१॥
112583
112584 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये देव० मोक्षोपायेषु निर्वाणप्रकरणे
112585 पू० वेतालप्रथमप्रश्नोत्तरवर्णनं नामैकसप्ततितमः सर्गः ॥७१॥
112586
112587 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
112588 वेतालप्रथमप्रश्नोत्तरवर्णनं नामैकसप्ततितमः सर्गः॥७१॥
112589 द्विसप्ततितमः सर्गः ७२
112590
112591 राजोवाच।
112592
112593 कालसत्ता नभःसत्ता स्पन्दसत्ता च चिन्मयी।
112594 शुद्धचेतनसत्ता च सर्वमित्यादि पावनम्॥१॥
112595
112596 इहावशिष्टप्रश्नानां पञ्चानामुत्तरं क्रमात्।
112597 वेतालायाप्रमत्ताय राजा सम्यगुदीर्यते॥
112598
112599 एवं प्रथमं प्रश्नं समाधाय कस्मिन् स्फुरन्ति पवने महागगनरेणवः इति
112600 द्वितीयप्रश्नं राजा समाधत्ते-कालसत्तेत्यादिना। तत्र गगनपदेन
112601 प्रसिद्धगगनस्यैव ग्रहणं विवक्षितमुतमहत्पदविशेषितत्वाद्गौण्या
112602 महाकालरूपश्चित्संवलितमायाकाश उत स्पन्दशक्तिप्रधानः सूत्रात्माकाशः उत
112603 ततो निष्कृष्टः शुद्धचिदाभासलक्षणो जीवाकाशः अन्यो वास्तु सर्वेष्वपि कल्पेषु
112604 तत्तत्सत्ता एव सूक्ष्मतमत्वात्तेषां रेणवस्त्वयोक्ता इत्याह-कालसत्तेति। स्पन्दः
112605 क्रियाशक्तिप्रधानः सूत्रात्मा तत्सत्ता। शुद्धचेतनस्ततो
112606 निष्कृष्टश्चिदाभासस्तत्सत्ता चेत्यादि सर्वं सूक्ष्मत्वात्पावनं निर्दोषं रजः
112607 परमात्ममहावायौ कल्पितानेकविकारचञ्चलं स्फुरतीति परेणान्वयः॥१॥
112608
112609 परमात्ममहावायौ रजः स्फुरति चञ्चलम्।
112610 कुसुमाङ्ग इवामोदस्तदतद्रूपकं स्वतः॥२॥
112611
112612 ननु परमात्मन एव सर्वानुगतसत्तारूपत्वात्तत्र कालादिसत्ता
112613 स्फुरतीत्याधाराधेयभावेन व्यपदेशः कथं तत्राह-कुसुमाङ्ग इति। यथा
112614 कुसुममेव स्वाङ्गे आमोदाख्यं भेदं स्वत एव परिकल्प्य कुसुमे
112615 आमोदरूपकमिव तदाधेयतया स्थितं तद्वत्परमार्थसत्तैव
112616 कालादिसत्ताभेदात्मतां स्वात्मनि परिकल्प्य स्थितेत्यर्थः॥२॥
112617
112618 जगदाख्ये महास्वप्ने स्वप्नात्स्वप्नान्तरं व्रजत्।
112619 रूपं त्यजति नो शान्तं ब्रह्मशान्तत्वबृंहणम्॥३॥
112620
112621 स्वप्नात्स्वप्नान्तरं गच्छन्नित्यादितृतीयप्रश्नस्योत्तरमाह-जगदाख्ये इति।
112622 शान्तं प्रशान्ततत्तत्स्वप्नदोषमसङ्गज्योतीरूपम्। अत एव तथा बोधमात्राद्ब्रह्म
112623 शान्तत्वबृंहणम्॥३॥
112624
112625 रम्भास्तम्भो यथा पत्रमात्रमेवान्तरान्तरम्।
112626 अन्तरन्तस्तथेदं हि विश्वं ब्रह्म विवर्त्यपि॥४॥
112627
112628 रम्भास्तम्भो यथा पत्रमात्रमिति चतुर्थं प्रश्नं समाधत्ते-रम्भास्तम्भ
112629 इति। अन्तः अन्तः ब्रह्मणि विवर्ति विवर्तनशीलम्। अपिशब्दादवान्तरकारणेषु
112630 परिणामशीलं च। अतः सोऽणुस्ततोऽप्यन्तरन्तरित्यर्थः॥४॥
112631
112632 सद्ब्रह्मात्मादिभिः शब्दैर्यदेताभिर्विगीयते।

112633 शून्यमव्यपदेशं ते न तत्किंचिच्च किंचन ॥ ५ ॥
112634
112635 विवर्तजगद्बृंहणादिनिमित्तादेव तत्तद्ब्रह्मात्मादिशब्दगोचरता न तु वस्तुतः
112636 सर्वधर्मशून्यत्वादित्याह-ब्रह्मेति ॥ ५ ॥
112637
112638 या या विभाव्यते सत्ता सा सानुभवनिर्मितान् ।
112639 रम्भास्तम्भवदेतावच्चिन्मात्रममलं ततम् ॥ ६ ॥
112640
112641 अत एव पटसत्ता तन्तुसत्तायां पर्यवस्यति तन्तुसत्ता कार्पाससत्तायां सा च
112642 तत्फलसत्तायां सा गुल्मसत्तायां सा बीजमृज्जलादिसत्तायामित्यादिक्रमेण या या
112643 सत्ता विभाव्यते सा सा तत्तदनुभवनिर्मितानाकारान्विहाय रम्भास्तम्भवदेव
112644 तत्तदनुभवरूपे चिन्मात्रे पर्यवस्यतीत्यतस्तदेवामलं जगदाकारेण ततं
112645 विस्तृतमित्यर्थः ॥ ६ ॥
112646
112647 सूक्ष्मत्वादप्यलभ्यत्वात्परमात्मा परोऽणुकः ।
112648 अनन्तत्वादसावेव प्राप्तो मेर्वादिमूलताम् ॥ ७ ॥
112649
112650 तत्राणुपदप्रवृत्तौ निमित्तमाह-सूक्ष्मत्वादिति । एवं सौक्ष्म्येऽपि न
112651 पूर्णताहानिरिति ब्रह्माण्डादयोऽपि तद्दृष्ट्या अतिपरिच्छिन्नत्वात्परमाणुप्राया इति
112652 ब्रह्माण्डाकाशभूतौपेत्यादिपञ्चमप्रश्नोऽपि दत्तोत्तरः संवृत्त
112653 इत्याशयेनाह-अनन्तत्वादिति । मेर्वादिपदेन प्रश्नोक्ता मेर्वन्ताः पञ्च
112654 व्युत्क्रमेण गृह्यन्ते तेषां मूलतामाधारताम् ॥ ७ ॥
112655
112656 अणोरप्यत्यनन्तस्य पुंसोऽस्य जगदाद्यपि ।
112657 परमाणुवदाभाति प्रतीतत्वादरूपवत् ॥ ८ ॥
112658
112659 जगदादि ब्रह्माण्डादिपञ्चकं
112660 प्रतीतत्वादणुतरतत्तदाकारवृत्तिपरिच्छिन्नचित्कणपरिच्छेद्यत्वादरूपवन्निः##-
112661 परमाणुवदेवेति ॥ ८ ॥
112662
112663 परोऽणुरेषोऽलभ्यत्वात्पूरकत्वान्महागिरिः ।
112664 सर्वावयवरूपोऽपि निरस्तावयवः पुमान् ॥ ९ ॥
112665
112666 कस्यानवयवस्यैव परमाणुमहागिरेः इति षष्ठप्रश्नं समाधत्ते-परोऽणुरिति ।
112667 अलभ्यत्वाच्चक्षुरादिकरणैरग्राह्यत्वात् । एष परोऽणुः पूरकत्वात् सर्वतो व्याप्तो
112668 महागिरिः । अध्यारोपदृशा सर्वं मूर्तामूर्तं अवयवरूपं यस्य तथा ।
112669 नेतिनेत्यपवादेन निरस्तावयवः ॥ ९ ॥
112670
112671 अस्य वै ज्ञप्तिमात्रस्य मज्जामात्रं जगत्त्रयी ।
112672 विज्ञानमात्रमध्यं हि साधो विद्धि जगत्त्रयम् ॥ १० ॥
112673
112674 तत्र शिलान्तर्निबिडैकान्तरूपमज्जाजगत्त्रयीत्यंशं प्रकटयति-अस्येति । हि
112675 यस्माज्जगत्त्रयं द्यावापृथिवी अन्तरेव समाहिते इत्यादिश्रुतिषु
112676 हार्दाकाशरूपविज्ञानमात्रस्य मध्यमान्तरं मज्जावत्प्रसिद्धमिति विद्धीत्यर्थः
112677 ॥ १० ॥
112678
112679 विज्ञानमात्रकलनाकलितं जगन्ति शान्तस्वभावसुकुमारमनन्तरूपम् ।
112680 वेतालबालक पदं तदलङ्घनीयमेवं स्वयं समनुभावय शान्तमास्स्व ॥
112681 ११ ॥
112682
112683 सर्वप्रश्नानां निरासेन प्रौढ्या वेतालं
112684 परिभवन्निवोक्तार्थसंक्षेपेणोपसंहरति-विज्ञानेति । हे वेतालबालक जगन्ति

112685 विज्ञानमात्रस्य कलनानां स्वकौशलानां कलितं प्रकटनं
112686 तच्चात्मविज्ञानरूपं
112687 भवादृशैर्वेतालचाटभटैरलङ्घनीयमनास्कन्दनीयमेव अतो मदुक्त्या
112688 त्वमेवंस्वभावमात्मानमनुभावय स्वानुभवमारोहय।
112689 शान्तदर्पमास्स्वेत्यर्थः॥ ११॥
112690
112691 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाणप्रकरणे पू०
112692 वेतालप्रश्नभेदो नाम द्विसप्ततितमः सर्गः॥ ७२॥
112693
112694 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
112695 वेतालप्रश्नभेदो नाम द्विसप्ततितमः सर्गः॥ ७२॥
112696
112697 त्रिसप्ततितमः सर्गः ७३
112698
112699 श्रीवसिष्ठ उवाच।
112700
112701 इति राजमुखाच्छ्रुत्वा वेतालः शान्तिमाययौ।
112702 भावितात्मतया तत्र विचारोचितया धिया॥ १॥
112703
112704 उपदिश्यात्र वेतालप्रश्ननिर्णयसंस्थितिम्।
112705 भगीरथस्य वृत्तान्तस्तत्रान्योऽप्यत्र वर्ण्यते॥
112706
112707 तत्र तस्मिन् राजनि विचारोचितया धिया अनुमितया भावितात्मतया तत्त्वज्ञतया निमित्तेन।
112708 वेतालपक्षे वा सर्वं योज्यम्॥ १॥
112709
112710 उपशान्तमना भूत्वा मत्वैकान्तमनिन्दितम्।
112711 बभूवाविचलध्यानी विस्मृत्य विषमां क्षुधाम्॥ २॥
112712
112713 अविचलध्यानी। समाधिस्थ इति यावत्॥ २॥
112714
112715 एतद्राम मयोक्तं ते वेतालप्रश्नजालकम्।
112716 एवंक्रमेण चिदणौ तेनेदं संस्थितं जगत्॥ ३॥
112717
112718 एवंक्रमेण राजवर्णितक्रमेण॥ ३॥
112719
112720 विदणोः कोशगं विश्वं विचारेण विलीयते।
112721 कायो वेतालकस्येव शिष्यते यत्पदं तु तत्॥ ४॥
112722
112723 बालभ्रान्तिकल्पितवेतालकस्य काय इव विलीयते॥ ४॥
112724
112725 संहृत्य सर्वतश्चित्तं स्तिमितेनान्तरात्मना।
112726 स्वभावापतितं कुर्वन्निरिच्छं तिष्ठ शान्तधीः॥ ५॥
112727
112728 चित्तं सर्वत उपसंहृत्य स्वो भावः परमात्मा तदापतितं तत्प्रतिष्ठितं कुर्वन्॥
112729 ५॥
112730
112731 आकाशविशदं कृत्वा मनसैव मनो मुने।
112732 तिष्ठैकशमशान्तात्मा सर्वत्र समदर्शनः॥ ६॥
112733
112734 हे मुने मननशील राम एकस्मिन् वस्तुनि शमः सर्ववृत्तिलयस्तेन
112735 शान्तात्मोपरतचित्तः अत एव सर्वत्र समं ब्रह्म पश्यतीति समदर्शनः॥ ६॥
112736

112737 स्थिरबुद्धिरसंमूढो यथाप्राप्तानुवर्तिनः।
112738 राज्ञो भगीरथस्येव दुःसाध्यमपि सिद्ध्यति॥ ७॥
112739
112740 असंमूढान्तं पूर्वान्वयि। नन्वेवं स्थितस्य मे कथं देहयात्रासिद्धिस्तत्राह##-
112741 ७॥
112742
112743 संपूर्णशान्तमनसः परितृप्तवृत्तेर्नित्यं समे सुखमयात्मनि
112744 तिष्ठतोऽन्तः।
112745 सिद्ध्यन्ति दुर्लभतरा अपि वाञ्छितार्था गङ्गावतार इव सागरखातवस्तु॥ ८॥
112746
112747 यथा सगरांशुमद्दिलीपादिदुर्लभतरोऽपि सागराणां सगरपुत्राणां
112748 तत्खातसमुद्रस्य च वस्तु संजीवनमणिप्रायो गङ्गावतारः
112749 शान्तितृप्तिसमदर्शित्वादिगुणसंपन्नस्य भगीरथस्यानायासेन
112750 सिद्धस्तद्वदित्यर्थः॥ ८॥
112751
112752 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाणप्रकरणे पू०
112753 वेतालाख्यानं नाम त्रिसप्तवितमः सर्गः॥ ७३॥
112754
112755 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
112756 वेतालाख्यानं नाम त्रिसप्ततितमः सर्गः॥ ७३॥
112757
112758 चतुःसप्ततितमः सर्गः ७४
112759
112760 श्रीराम उवाच।
112761
112762 यथा चित्तचमत्कृत्या राज्ञो गङ्गावतारणम्।
112763 भगीरथस्य संपन्नं तन्मे कथय भो प्रभो॥ १॥
112764
112765 भगीरथस्यात्र गुणाश्चिन्ता चाथ विचारजा।
112766 त्रितलेन च संवादो जिहासातोऽत्र वर्ण्यते॥
112767
112768 चित्तस्य पूर्णतादिलक्षणया चमत्कृत्या॥ १॥
112769
112770 श्रीवसिष्ठ उवाच।
112771
112772 आसीद्भगीरथो नाम राजा परमधार्मिकः।
112773 भुवः समुद्रयुक्ताया मण्डलीतिलकोपमः॥ २॥
112774
112775 समुद्रयुक्ताया भुवो राजा स्वीयकोसलमण्डल्यास्तु तिलकोपमः॥ २॥
112776
112777 संकल्पानन्तरं प्राप्ता यथाभिमतमर्थिनः।
112778 चन्द्रप्रसन्नवदनादस्माच्चिन्तामणेरिव॥ ३॥
112779
112780 तस्य दानशौण्डतां वर्णयति-संकल्पानन्तरमिति। अर्थिनो याचका
112781 अस्माद्भगीरथाद्याञ्चासंकल्पानन्तरमेव समीपगमनवाक्प्रयोगादिश्रमं
112782 विनैव यथाभिलषितमर्थं प्राप्ताः प्राप्तवन्तः। गत्यर्थाकर्मक- इति कर्तरि क्तः।
112783 चन्द्रप्रसन्नवदनादित्यनेन दानोत्साहान्मुखे प्रसादातिशय एव न त्वस्य
112784 धनव्ययदुःखान्म्लानिरिति द्योत्यते॥ ३॥
112785
112786 साधूनां यो व्यवस्थार्थं धनान्यविरतं ददौ।
112787 तृणमात्रमुपादत्ते क्वचिच्चिन्तामणिर्यथा॥ ४॥
112788

112789 अपात्रेषु दानं वारयति-साधूनामिति। एवं व्ययशीलस्य कथं
112790 धनप्राप्तिस्तत्राह-तृणमात्रमिति। क्वचित् आयस्थाने स्वधर्मतः प्राप्तं
112791 तृणमात्रमप्युपादत्ते। पौनरुक्त्यातृणोपादानाप्रसिद्धेश्च चिन्तामणिपदेन
112792 कामधेनुर्लक्ष्यते॥ ४॥
112793
112794 वज्रसारमिव प्रोतमुज्ज्वलन्नेमि योऽभिनत्।
112795 अधो मणिरयोयन्त्रं सर्वदुर्जनचेष्टितम्॥ ५॥
112796
112797 यथा वज्रवेधनमणिः अधः अधोभागे अयसा यन्त्र्यते बध्यते इत्ययोयन्त्रं
112798 वज्रसारं दृढतरं वज्रान्तरं परिभ्रमन्त्या स्वकान्त्या उज्ज्वलन्ती प्रकाशमाना
112799 यन्त्रचक्रनेमिर्यस्मिन्कर्मणि तद्यथा भवति तथा भित्त्वा स्वप्रोतं तं गुणयोग्यं
112800 करोति तथा यो भगीरथो बलवत्तरमपि सर्वं दुर्जनं तच्चेष्टितं च
112801 तद्देशास्कन्दनेन स्वप्रतापेनोज्ज्वलन्ति रथनेम्यङ्कितानि च मण्डलानि
112802 यस्मिन्कर्मणि तद्यथा भवति तथा शस्त्रास्त्रप्रोतं निगृह्य अधः पाददेशे
112803 निगडाद्ययोभिर्यन्त्र्यते इत्ययोयन्त्रं कृत्वा अभिनत् भित्त्वेव गुणपूर्ण
112804 चकारेत्यर्थः। वज्रसारमपि इति पाठेऽपि रूपकेणायमेव तात्पर्यार्थः॥ ५॥
112805
112806 अधूमवह्निदेहश्रीः श्रान्तोऽपि दैन्यमप्यलम्।
112807 तमोऽहरन्नृणां नैशं द्युमणिर्वेश्मनामिव॥ ६॥
112808
112809 दिवानिशं प्रजापालनाय सर्वतः परिभ्रमणात्स्वयं श्रान्तोऽपि
112810 नृणामधर्मप्रवृत्तिहेतुं तमोगेहान्धकारं दैन्यं दारिद्र्यमप्यहरत्। यथा
112811 द्युमणिर्वेश्मनां नैशं तमो व्यवहारदैन्यं च हरति तद्वत्। विशेषणे उभयत्र
112812 योज्ये॥ ६॥
112813
112814 किरन्नग्निकणासारमभितः स्वप्रतापजम्।
112815 मध्याह्नसूर्यकान्ताग्निरिव ज्वलति योऽरिषु॥ ७॥
112816
112817 स्वस्य प्रतापः पराक्रमः अतितप्तता च तस्माज्जातमग्निकणानामासारं धारां
112818 किरन्सन् योऽरिषु मध्याह्नकाले उद्भूतः सूर्यकान्तशिलाग्निरिव ज्वलति। अग्निपक्षे अराः
112819 अग्राण्येषां सन्तीति अरिणस्तृणादयस्तेषु॥ ७॥
112820
112821 मृदुशीतलसंस्पर्शो यः समाह्लादयन्मनः।
112822 सुज्ञानां द्रवति स्निग्धस्येन्दोरिन्दुमणिर्यथा॥ ८॥
112823
112824 सुज्ञा ब्रह्मतत्त्वविदस्तेषां संनिधौ। इन्दुमणिश्चन्द्रकान्तः॥ ८॥
112825
112826 जगद्यज्ञोपवीतस्य स्वर्गपातालवाहिनः।
112827 गङ्गावाहस्य येनास्यां तृतीयः पूरितो गुणः॥ ९॥
112828
112829 येन गङ्गावाहस्य गङ्गाप्रवाहलक्षणस्य जगद्यज्ञोपवीतस्य तृतीयो गुणस्तन्तुः
112830 अस्यां पृथिव्यां गङ्गावतारणेन पूरितः॥ ९॥
112831
112832 अगस्त्यशोषितोऽम्भोधिर्गङ्गापूरेण पूरितः।
112833 येन दुष्पूरभूतोऽपि महासार्थोऽर्थिनामिव॥ १०॥
112834
112835 सर्वदिगन्तवर्तिनामर्थिनां महान् सार्थः संघो धनेनेव॥ १०॥
112836
112837 गङ्गासोपानपद्धत्या येन पातालवासिनः।
112838 योजिता ब्रह्मणो लोके बान्धवा लोकबन्धुना॥ ११॥
112839
112840 भूतद्रोहित्वाद्ब्रह्मदण्डनिर्दग्धत्वाच्च पातालवासिनः अधोगतिं प्राप्ता

112841 बान्धवाः सगरपुत्रा येन गङ्गालक्षणया सोपानपद्धत्या ब्रह्मणो लोके योजिता
112842 आरोपिताः ॥ ११ ॥
112843
112844 ब्रह्माणं शंकरं जह्नुं तपसाराधयंश्च यः ।
112845 भूयोभूयो ययौ खेदमशून्याध्यवसायिनः ॥ १२ ॥
112846
112847 अशून्याध्यवसायिनः अविच्छिन्नदृढनिश्चयात् स्वमनसः सकाशात् ॥ १२ ॥
112848
112849 यौवने वर्तमानस्य तस्य भूमिपतेरपि ।
112850 प्रविचारयतो लोकयात्रां पर्याकुलामिमाम् ॥ १३ ॥
112851
112852 अपिशब्दात्तवेवेति गम्यते ॥ १३ ॥
112853
112854 सुविरागचमत्कारविचारकणिकोदभूत् ।
112855 वयस्यपि च तारुण्ये दैवाद्वल्ली मराविव ॥ १४ ॥
112856
112857 यौवने विचारवैराग्योदयोऽतिदुर्लभ इति द्योतनाय मराविवेति ॥ १४ ॥
112858
112859 एकान्ते चिन्तयामास महीपतिरसाविति ।
112860 जगद्यात्रामिमां नित्यमसमञ्जसमाकुलम् ॥ १५ ॥
112861
112862 इति वक्ष्यमाणप्रकारेण इमां जगद्यात्रां चिन्तयामास । चिन्ताप्रकारमेवाह##-
112863
112864 पुनर्दिनं पुनः श्यामा दानादानशतं पुनः ।
112865 तदेव भुक्तविरसं लक्ष्यते कर्म कुर्वताम् ॥ १६ ॥
112866
112867 श्यामा रात्रिः । बहुशो भुक्तं विरसं च फलं यस्य तत्तथाविधमेव सर्वेषां
112868 कुर्वतां लक्ष्यते न त्वपूर्वं परमपुरुषार्थफलं चेत्यर्थः ॥ १६ ॥
112869
112870 येन प्राप्तेन लोकेऽस्मिन्न प्राप्यमवशिष्यते ।
112871 तत्कृतं सुकृतं मन्ये शेषं कर्म विषूचिका ॥ १७ ॥
112872
112873 तत्तत्प्राप्तिसाधनं कृतं कर्म विषूचिकेवाशुद्धिदुःखफलमेवेत्यर्थः ॥ १७ ॥
112874
112875 पुनः पुनः पर्युषितं कर्म कुर्वन्न लज्जते ।
112876 मूढबुद्धिरबुद्धिस्तु कः कुर्यात्किल बालवत् ॥ १८ ॥
112877
112878 अथैकदोद्विग्नमनाः कदाचिल्लितलं गुरुम् ।
112879 एकान्तं संसृतेर्भीतः समपृच्छद्भगीरथः ॥ १९ ॥
112880
112881 अथ उक्तचिन्तानन्तरं संसृतेः सकाशादेकान्तमत्यन्तं भीतः सन् ॥ १९ ॥
112882
112883 भगीरथ उवाच ।
112884
112885 अन्तःशून्यासु सुचिरं भ्रमत्संसारवृत्तिषु ।
112886 अरण्यानीषु चैतासु भृशं खिन्ना वयं विभो ॥ २० ॥
112887
112888 भ्रमतां जीवानां रागद्वेषादिसंसारवृत्तिषु तत्फलभूतास्वेतासु
112889 स्वर्गनरकमानुष्याद्यरण्यानीषु च ॥ २० ॥
112890
112891 जरामरणमोहादिरूपाणां भवकारिणाम् ।
112892 भगवन्सर्वदुःखानां कथमन्तः प्रजायते ॥ २१ ॥

112893
112894 त्रितल उवाच।
112895
112896 चिरसाम्यात्मनोत्तेह्व निर्विभागविलासिना।
112897 राजन् ज्ञेयावबोधेन पूर्णेन भरितात्मना॥ २२॥
112898
112899 साधनचतुष्टयश्रवणमननाद्युपायैश्चिराभ्यस्तं
112900 यत्साम्यविक्षेपवैषम्यशून्यंन् समाधिस्तदात्मना अनादिसिद्धब्रह्माकारेण च
112901 उत्थेनाविर्भूतेन ज्ञेयस्य प्रत्यक्तत्त्वस्यावबोधेन सर्वदुःखानि क्षीयन्ते इति
112902 परेणान्वयः॥ २२॥
112903
112904 क्षीयन्ते सर्वदुःखानि त्रुट्यन्ति ग्रन्थयोऽभितः।
112905 संशयाः समतां यान्ति सर्वकर्माणि चानघ॥ २३॥
112906
112907 ज्ञेयं विदुरथात्मानं संशुद्धं ज्ञप्तिरूपिणम्।
112908 स च सर्वगतो नित्यं नास्तमेति न चोदयम्॥ २४॥
112909
112910 उदयं च नैति॥ २४॥
112911
112912 भगीरथ उवाच।
112913
112914 चिन्मात्रं निर्गुणं शान्तमस्ति निर्मलमच्युतम्।
112915 देहादि नेतरत्किंचिदिति वेद्मि मुनीश्वर॥ २५॥
112916
112917 एवमुपदिष्टो भगीरथो विवेकेन स्वयमेवात्मतत्त्वमन्तः पर्यालोच्यापाततो निश्चित्य
112918 तत्र विक्षेपबाहुल्याच्चित्तस्य प्रतिष्ठामलभमानः स्वावगतांशं गुरवे
112919 निवेदयंस्तत्स्फुटीभावे विक्षेपोपशमे चोपायं पृच्छति-चिन्मात्रमिति।
112920 अस्तीत्यनेन असत्त्वोपपादकोऽज्ञानांशो मे नष्ट इति सूचितम्।
112921 देहेन्द्रियप्राणमनोबुद्ध्यविद्यान्तमितरत्किंचिदात्मा नेत्यपि
112922 त्वद्वचनविश्वासात्स्वोपपत्त्या च वेद्मि॥ २५॥
112923
112924 किं तत्र प्रतिपत्तिर्मे स्फुटतामेति नेतरा।
112925 एतावन्मात्रसंवित्तिः स्यामहं भगवन्कथम्॥ २६॥
112926
112927 तत्राभानापादकोऽज्ञानांश इतरावभासहेतुर्विक्षेपांशश्च स्वस्य न नष्ट इति
112928 दर्शयति-किमिति। अत्र अनयोः सदसद्विवेकबोधयोर्मध्ये इतरा आद्या
112929 सदात्मबोधरूपा प्रतिपत्तिः स्फुटतां करतलामलकवत्स्पष्टतां नैति तत्र किं
112930 कारणम्। अहं सर्वविक्षेपशान्त्या एतावन्मात्रसंवित्तिश्च कथं केनोपायेन
112931 स्यामित्यर्थः॥ २६॥
112932
112933 त्रितल उवाच।
112934
112935 ज्ञानेन ज्ञेयनिष्ठत्वमेति चेतो हृदम्बरे।
112936 ततः सर्ववपुर्भूत्वा भूयो जीवो न जायते॥ २७॥
112937
112938 तत्र भगीरथस्य राज्याद्यभिमानादेव तत्तद्विषयेषु
112939 चित्तधावनाद्विक्षेपस्तत्प्राबल्यादेव न स्फुटात्मप्रतिपत्तिरिति निश्चित्य
112940 त्रितलस्तत्परित्याजनाय प्रथमं गीतोक्तामानित्वादिसाधनान्युपदिशति-ज्ञानेनेति।
112941 ज्ञायते अनेनेति ज्ञानममानित्वादि तेन ज्ञेयंन् यत्तत्प्रवक्ष्यामि इत्यादि##-
112942 पूर्णस्वभावान्न प्रच्यवत इत्यर्थः॥ २७॥
112943
112944 असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु।

112945 नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥ २८ ॥
112946
112947 अमानित्वादिषु कानिचिदवयुत्यानुवादव्याख्याभ्यां प्रपञ्चयति-असक्तिरित्यादिना ॥
112948 २८ ॥
112949
112950 आत्मनोऽनन्ययोगेन तद्भावनमनारतम् ।
112951 विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥ २९ ॥
112952
112953 मयि चानन्ययोगेन भक्तिरव्यभिचारिणी इत्यस्य तात्पर्यार्थं दर्शयति-आत्मन इति ।
112954 निष्कृष्टात्मचिन्तनमेवात्र भगवद्भक्तिर्न
112955 गुणचरित्रश्रवणकीर्तनादिर्भगवदभिप्रेतेत्यर्थः ॥ २९ ॥
112956
112957 अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।
112958 एतज्ज्ञानमिति प्रोक्तमज्ञानं तदतोऽन्यथा ॥ ३० ॥
112959
112960 अध्यात्मज्ञाननित्यत्वं श्रवणमनननिदिध्यासनाभ्यासः । तत्त्वज्ञानेनार्थस्य
112961 परमात्मतत्त्वस्य दर्शनं स्फुटाभिव्यक्तिर्या त्वया पृष्टा सा
112962 सर्वसाधनफलीभूता ॥ ३० ॥
112963
112964 रागद्वेषक्षयाकारं संसारव्याधिभेषजम् ।
112965 अहंभावोपशान्तौ तु राजन् ज्ञानमवाप्यते ॥ ३१ ॥
112966
112967 सर्वेषामेव साधनानामनहंकारलक्षणं साधनं मूलम् । अहंकारे सति
112968 अमानित्वादेर्दुःसंपादत्वादित्याशयेनाह-अहंभावेति ॥ ३१ ॥
112969
112970 भगीरथ उवाच ।
112971
112972 शरीरेऽस्मिंश्चिरारूढो गिरौ तरुरिव स्वके ।
112973 अहंभावो महाभाग वद मे त्यज्यते कथम् ॥ ३२ ॥
112974
112975 तर्हि तत्परित्यागोपायमेव मे वदेति पृच्छति-शरीर इति ॥ ३२ ॥
112976
112977 त्रितल उवाच ।
112978
112979 पौरुषेण प्रयत्नेन त्यक्त्वा भोगौघभावनाम् ।
112980 गत्वा विकसितां सत्तामहंकारो विलीयते ॥ ३३ ॥
112981
112982 विकसितामकामोपहतत्वेन स्फुटीभूतां सत्तां शुद्धात्माकारतां गत्वा स्थितस्येति
112983 शेषः ॥ ३३ ॥
112984
112985 यन्त्रणापञ्जरं यावद्भग्नं लज्जादिनाखिलम् ।
112986 अकिंचनत्वशेषेण स्फुटा तावदहंकृतिः ॥ ३४ ॥
112987
112988 त्यक्तराज्यं मां जना न बहुमन्यन्ते शत्रवश्चोपहसिष्यन्ति
112989 सर्वाभिलषितपूरणसमर्थोऽहं कथं भिक्षामटिष्यामि कथं कदन्नपानादिना
112990 जीविष्यामीत्यादिचिन्ताप्रयुक्तलज्जाभिमानादिना कृतं गृहे पूर्ववदेव
112991 नियन्त्रणालक्षणं पञ्जरं यावदकिंचनत्वशेषेण सर्वत्यागेन न भग्नंन्
112992 तावदहंकृतिः स्फुटा अत्यन्तविकसिता नृत्यतीत्यर्थः ॥ ३४ ॥
112993
112994 सर्वमेतद्धिया त्यक्त्वा यदि तिष्ठसि निश्चलः ।
112995 तदहंकारविलये त्वमेव परमं पदम् ॥ ३५ ॥
112996

तत् तर्हि ॥ ३५ ॥

शान्ताशेषविशेषणो विगतभीः संत्यक्तसर्वैषणो गत्वा
नूनमकिंचनत्वमरिषु त्यक्त्वा समग्रां श्रियम् ।
शान्ताहंकृतिरस्तदेहकलनस्तेष्वेव भिक्षामटन्मामप्युज्झितवानलं यदि
भवस्युच्चैस्त्वमुच्चैरसि ॥ ३६ ॥

सर्वत्यागमेवावश्यकर्तव्यतया प्रपञ्चयति-शान्तेति । शान्तान्यनन्तानि
छत्रचामरादीनि राजविशेषणानि यस्य तथाविधः सन्नूनमत्यन्तमकिंचनः सन्
समग्रां श्रियमरिषु त्यक्त्वा अस्तदेहाभिमानस्तेष्वरिष्वेव भिक्षामटन्सन् मां
गुरुमपि अलं पूर्णः सन् प्रष्टव्यार्थपरिशेषाभावादुज्झितवान्न तु शुश्रूषणेन ।
यावदायुस्त्रयो वन्द्या वेदान्तो गुरुरीश्वरः
इत्यादिशास्त्राप्रामाण्यप्रसङ्गादीदृशलक्षणसंपन्नो यदि भवसि तर्हि
सर्वमुमुक्षुगुणैरुच्चैर्भूतस्त्वमुच्चैः सर्वोत्कृष्टं ब्रह्मैवासि न ते
संसारसंभावनापीत्यर्थः ॥ ३६ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाणप्रकरणे पू०
भगीरथोपदेशो नाम चतुःसप्ततितमः सर्गः ॥ ७४ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
भगीरथोपदेशो नाम चतुःसप्ततितमः सर्गः ॥ ७४ ॥

पञ्चसप्ततितमः सर्गः ७५

श्रीवसिष्ठ उवाच ।

अथ तस्य गुरोर्वक्त्रादित्याकर्ण्य भगीरथः ।
मनस्याहितकर्तव्यः स्वव्यापारपरोऽभवत् ॥ १ ॥

मखव्याजेन सर्वस्वत्यागो राज्ञोऽत्र वर्ण्यते ।
भैक्षचर्या क्वचिच्छैले त्रितलेन समं स्थितिः ॥

मनसि आहितं निश्चितं वक्ष्यमाणं कर्तव्यं येन तथाविधः सन् ॥ १ ॥

ततः कतिपयेष्वेव वासरेषु गतेषु सः ।
अग्निष्टोममखं चक्रे सर्वत्यागैकसिद्धये ॥ २ ॥

अग्निष्टोमग्रहणंन् विश्वजित्पर्यन्तानां सोमसंस्थानामुपलक्षणम् ॥ २ ॥

गोभूम्यश्वहिरण्यादि ददौ धनमशेषतः ।
द्विजेभ्यो निजबन्धुभ्यो गुण्यगुण्यविचारयन् ॥ ३ ॥

अगुणि श्रुताध्ययनादिविकलमपि अविचारयन् । तद्विचारे विलम्बापत्तेः ॥ ३ ॥

दिवसत्रयमात्रेण सर्वमेव परित्यजन् ।
असुमात्रावशेषोऽसावासीद्राजा भगीरथः ॥ ४ ॥

असवः प्राणास्तन्मात्रावशेषः ॥ ४ ॥

अथ सर्वार्थरिक्तं तत्खिन्नप्रकृतिपौरकम् ।
सीमान्तिने तृणमिव राज्यंन् स्वमरये ददौ ॥ ५ ॥

113049
113050 सीमान्तिने सीमान्ते संनिहिताय ‖ ५ ‖
113051
113052 आक्रान्ते द्विषता राज्ये मुनिः सद्मनि मण्डले |
113053 अधोवासोवशेषोऽसौ निर्जगाम स्वमण्डलात् ‖ ६ ‖
113054
113055 अधोवासः कौपीनाच्छादनं तदवशेषः ‖ ६ ‖
113056
113057 यत्र न ज्ञायते नाम्ना यत्र न ज्ञायते मुखात् |
113058 तत्र ग्रामेष्वरण्येषु दूरेषूवास धैर्यवान् ‖ ७ ‖
113059
113060 यत्र स्वयं दृष्टोऽपि जनैर्भगीरथनाम्ना न ज्ञायते | यत्र च
113061 जनमुखात्स्वनामापि न ज्ञायते न श्रूयते तत्र तादृशेषु ‖ ७ ‖
113062
113063 इत्यल्पेनैव कालेन प्रशान्तसकलैषणः |
113064 परमेण शमेनासावाप विश्रान्तिमात्मनि ‖ ८ ‖
113065
113066 इति अनया रीत्या वर्तमानः ‖ ८ ‖
113067
113068 भ्रमन्द्वीपानि भूपीठे कदाचित्कालयोगतः |
113069 अवशः शत्रुणाक्रान्तं स्वमेव प्राप तत्पुरम् ‖ ९ ‖
113070
113071 द्वीपानि नद्यन्तरितानि मण्डलानि | अवशः सन् दर्शनाधीनचित्तः ‖ ९ ‖
113072
113073 नानागारांश्च तत्रासौ प्रवाहपतितांश्च तान् |
113074 पौरांश्च मन्त्रिणश्चैव शमी भिक्षामयाचत ‖ १० ‖
113075
113076 प्रवाहपतितान् क्रमप्राप्तान् नानागारान् | छान्दसं पुंस्त्वम् | प्राप्येति शेषः ‖ १० ‖
113077
113078 विविदुस्ते नृपं पौरा मन्त्रिणश्च भगीरथम् |
113079 पूजयामासुरथ तं सविषादाः सपर्यया ‖ ११ ‖
113080
113081 विविदुः परिचिक्युः ‖ ११ ‖
113082
113083 प्रभो राज्यं गृहाणेति प्रार्थितोऽप्यरिणा मुनिः |
113084 नादत्तेऽनादृताशेषस्तृणमप्यशनादृते ‖ १२ ‖
113085
113086 अनादृतमशेषं राज्यं येन ‖ १२ ‖
113087
113088 कतिचिद्दिवसांस्तत्र नीत्वाऽन्यत्र जगाम सः |
113089 भगीरथोऽयं हा कष्टमिति लोकेन शोचितः ‖ १३ ‖
113090
113091 शोचितः शोकविषयीकृतः ‖ १३ ‖
113092
113093 अथान्यत्रोपशान्तात्मा परिविश्रान्तधीः सुखी |
113094 आत्मारामं कदाचित्तु स प्राप त्रितलं गुरुम् ‖ १४ ‖
113095
113096 स्वमेव स्वागतं कृत्वा तेन सार्धं भगीरथः |
113097 कंचित्कालमुवासाद्रौ वने ग्रामे पुरे जने ‖ १५ ‖
113098
113099 स्वमेव गुरुमिति पूर्वान्वयि | स्वागतग्रहणंन् वन्दनाद्युपलक्षणम् ‖ १५ ‖
113100

113101 समतामुपयातौ तौ गुरुशिष्यौ समौ स्थितौ।
113102 कलयामासतुः स्वस्थौ विनोदं देहधारणम्॥ १६॥
113103
113104 विनोदं कुतूहलभूतं देहधारणम्॥ १६॥
113105
113106 किमयं धार्यते देहः किं वानेनोज्झितेन नः।
113107 यथाक्रमं यथाचारं तिष्ठत्वेष यथास्थितम्॥ १७॥
113108
113109 यथाक्रमं यथाशास्त्रोक्तक्रमम्। यथाचारं वृद्धाचारमनुसृत्य च तिष्ठतु
113110 ॥ १७॥
113111
113112 इति निश्चित्य तिष्ठन्तौ तौ वनाद्वनगामिनौ।
113113 अनानन्दं परानन्दं नासुखं न च मध्यमम्॥ १८॥
113114
113115 न विद्यन्ते विषयानन्दा यत्र तथाविधं परानन्दं प्रापतुरिति शेषः। तदेव
113116 विशिनष्टि-नासुखमिति। असुखं दुःखं तद्रहितम्। मध्यमं
113117 सुखदुःखोभयशून्यान्तरालावस्था तद्भिन्नम्॥ १८॥
113118
113119 धनानि वाजिविभवाद्यैश्वर्यं चाष्टधोदितम्।
113120 सिद्धैरप्यर्पितं तुष्टैर्मेनाते जर्जरं तृणम्॥ १९॥
113121
113122 तयोर्मानुषभोगोष्विव दिव्यभोगेष्वपि वैराग्यदार्ढ्यं दर्शयति-धनानीति।
113123 तच्चरितसंतुष्टैः सिद्धैर्ब्रह्मादिभिरर्पितं दत्तमणिमादिभेदेनाष्टधा उदितं
113124 प्रसिद्धमैश्वर्यं च जर्जरं जीर्णतमं तृणमिव मेनाते॥ १९॥
113125
113126 स्वकर्मणैव देहोऽयं यावत्सत्त्वमनिच्छया।
113127 धारणीय इति स्वेन कर्मणैवाथ तस्थतुः॥ २०॥
113128
113129 स्वारम्भकेण प्रारब्धकमेणैव यावत्सत्त्वं यावदायुर्धारणीय इति निश्चित्य
113130 तस्थतुः॥ २०॥
113131
113132 अभिननन्दतुरागतमुत्तमौ निजसमाचरणक्रमजं मुनी।
113133 सुखमसौख्यमभीप्सितवर्जितौ समसमेऽतिसमौ शमिनौ स्वतः॥ २१॥
113134
113135 तौ मुनी निजेन पूर्वसमाचरणक्रमेण जातं सुखमसौख्यं दुःखमपि
113136 अभिननन्दतुः। यतस्तौ समेभ्योऽपि समे ब्रह्मणि अतिसमौ एकरसीभूतौ सन्तौ
113137 स्वतस्तत्स्वभावादेव शमिनौ परमशान्तिमन्तौ॥ २१॥
113138
113139 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाणप्रकरणे पू०
113140 भगीरथनिर्वाणं नाम पञ्चसप्ततितमः सर्गः॥ ७५॥
113141
113142 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
113143 भगीरथनिर्वाणं नाम पञ्चसप्ततितमः सर्गः॥ ७५॥
113144
113145 षट्सप्ततितमः सर्गः ७६
113146
113147 श्रीवसिष्ठ उवाच।
113148
113149 अथैकदा पुरे श्रेष्ठे कस्मिंश्चिन्मण्डलान्तरे।
113150 अनपत्यं नृपं मृत्युरहन्मत्स्य इवामिषम्॥ १॥
113151
113152 पुनर्भगीरथस्येह राज्यप्राप्तिरुदीर्यते।

113153 आराध्य ब्रह्मरुद्रादीन् गङ्गायाश्चावतारणम् ॥
113154
113155 कोसलमण्डलाद्भगीरथास्पदमण्डलाच्च मण्डलान्तरे। अहन् हतवान्। आमिषं
113156 क्षुद्रमत्स्यादि ॥ १ ॥
113157
113158 तत्र प्रकृतयः खिन्ना नष्टदेशक्रमा नृपम्।
113159 अन्विष्यन्ति स्म संयुक्तं गुणलक्ष्म्या विशालया ॥ २ ॥
113160
113161 नष्टो देशस्य क्रमः पालनमर्यादा येषां तथाविधाः सन्तः पालनसमर्थया
113162 गुणलक्ष्म्या संयुक्तं नृपमन्विष्यन्ति स्म ॥ २ ॥
113163
113164 तं भगीरथमासाद्य स्थिरं भिक्षाचरं मुनिम्।
113165 परिज्ञाय समानीय सैन्ये चक्रुर्महीपतिम् ॥ ३ ॥
113166
113167 सर्वगुणलक्ष्मीसमन्वितोऽयमिति परिज्ञाय प्रत्यभिज्ञाय तत्रागते सैन्येऽभिषिच्य
113168 महीपतिं चक्रुः ॥ ३ ॥
113169
113170 भगीरथः क्षणेनैव प्रावृषीवाम्बुना सरः।
113171 वलितः सेनया गुर्व्या झटित्याशिश्रिये गजम् ॥ ४ ॥
113172
113173 झटिति गजं आशिश्रिये आरुरोह ॥ ४ ॥
113174
113175 भगीरथो जगन्नाथो जयतीति जनारवैः।
113176 नीरन्ध्रतामुपाजग्मुर्गिरीन्द्राणां महागुहाः ॥ ५ ॥
113177
113178 नीरन्ध्रतां पूर्णताम् ॥ ५ ॥
113179
113180 तत्र तं पालयन्तं तद्राज्यं राजानमादृताः।
113181 आजग्मुः प्राक्प्रकृतयः प्राहुरित्थं नृपाधिपम् ॥ ६ ॥
113182
113183 तस्मिन्नेव काले दैवात्कोसलराज्यहारिणोऽपि मरणादयोध्यास्था अपि प्रकृतयो
113184 भगीरथमागत्यप्रार्थयामासुरित्याह-तत्रेति। भगीरथस्यैव प्राक्तना
113185 मन्त्रिपुरोहितादिप्रकृतयः ॥ ६ ॥
113186
113187 प्रकृतय ऊचुः।
113188
113189 राजन्नस्माकमधिपो यस्त्वया स पुरस्कृतः।
113190 मृत्युना विनिगीर्णोऽसौ मत्स्येनेवामिषं मृदु ॥ ७ ॥
113191
113192 राज्यं त्यजता त्वया यः सीमान्तवासी अरिः राज्यदानेन पुरस्कृतः असौ ॥ ७ ॥
113193
113194 तत्तत्पालयितुं राज्यं प्रसादं कर्तुमर्हसि।
113195 अप्रार्थितोपयातानां त्यागोऽर्थानां च नोचितः ॥ ८ ॥
113196
113197 तत्तस्माद्धेतोस्तत्प्राक्तनं राज्यम् ॥ ८ ॥
113198
113199 श्रीवसिष्ठ उवाच।
113200
113201 इति संप्रार्थितो राजा तदङ्गीकृत्य तद्वचः।
113202 सप्तसागरचिह्नायाः स बभूव भुवः पतिः ॥ ९ ॥
113203
113204 समः शान्तमना मौनी वीतरागो विमत्सरः।

113205 प्राप्तकार्यैककरणः स तिरोहित विस्मयः || १० ||
113206
113207 मौनी मितहितसत्यवाक् | तिरोहितस्तत्त्वज्ञानेन बाधितो विस्मयो महत्यपि कौतुके
113208 आश्चर्यताबुद्धिर्यस्य || १० ||
113209
113210 पातालतलनष्टानां सागराकारकारिणाम् |
113211 पितामहानां गङ्गाम्बु शुश्रुवे तारणक्षमम् || ११ ||
113212
113213 अश्वान्वेषणाय भूमेः खननात्सागराकारं गर्तं कर्तुं शीलं येषाम् |
113214 कपिलक्रोधाग्निना पातालतले नष्टानां भस्मीभूतानां स्वपितामहानां
113215 गङ्गाम्बु प्लावनेन जलाञ्जलिदानेन च तारणक्षमं न प्राकृतं जलमिति
113216 तार्क्ष्यवचनं जनपरम्परया तेन शुश्रुवे इत्यर्थः || ११ ||
113217
113218 तदा किल स्वर्गनदी वहति स्म न भूतले |
113219 पितृणां भूतविख्योऽभूत्तेन गङ्गाजलाञ्जलिः || १२ ||
113220
113221 तदानीं भूतले गङ्गा स्थितैव तत्रैव जलाञ्जलिः कुतो न दत्त इत्याशङ्क्याह##-
113222 विख्या प्रख्यातिर्यस्य तथाविधोऽभूदित्यर्थः || १२ ||
113223
113224 भगीरथेन च महीमवतारयितुं दिवः |
113225 गङ्गां गृहीतो नियमस्ततःप्रभृति भूभृता || १३ ||
113226
113227 ततस्तच्छ्रवणदिनात्प्रभृति || १३ ||
113228
113229 ततो राज्यं परित्यज्य मन्त्रिणां भूपतिः शमी |
113230 तपसे कार्यकार्येहो जगाम विजनं वनम् || १४ ||
113231
113232 गङ्गावतरणकार्यार्थं यत्तप-आदि कार्यं तदर्था ईहा चेष्टा यस्य || १४ ||
113233
113234 तत्र वर्षसहस्रैश्च समाराध्य पुनः पुनः |
113235 ब्रह्माणं शंकरं जह्नुं भुवि गङ्गामयोजयत् || १५ ||
113236
113237 अयोजयत् अवतार्य संयोजितवान् || १५ ||
113238
113239 ततः प्रभृत्यमलतरङ्गभङ्गिनी जगत्पतेः शशिविभृदङ्गसङ्गिनी |
113240 नभस्तलान्निपतति गां त्रिमार्गगा महात्मनामिव बहुपुण्यसंततिः || १६ ||
113241
113242 जगत्पतेः शशिविभृतः शिवस्याङ्गसंगिनी शिरसि संगता |
113243 सापेक्षत्वादसमर्थत्वेऽपि समासश्छान्दसः | जगत्पेतेर्ब्रह्मणो वा नियोगादिति
113244 शेषः | नभस्तलाद्गां भूमिं निपतति | महात्मनां स्वर्गिणां बह्वी
113245 पुण्यसंततिरिवेत्युत्प्रेक्षा || १६ ||
113246
113247 स्फुरत्तरङ्गभङ्गिनी स्वफेनपुञ्जहासिनी प्रसन्नपुण्यमञ्जरीयुतेव
113248 धर्मसंततिः |
113249 भगीरथे महीपतौ यशःप्रचारवीथिका तदा हि सा त्रिमार्गगा महीतले बभूव
113250 || १७ ||
113251
113252 भगीरथे महीपतौ संजातस्य शाश्वतस्य यशस आसमुद्रं प्रचारार्थं वीथिका इति
113253 रूपकोत्प्रेक्षा || १७ ||
113254
113255 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाणप्रकरणे पू०
113256 गङ्गावतरणं नाम षट्सप्ततितमः सर्गः || ७६ ||

113257
113258 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
113259 गङ्गावतरणं नाम षट्सप्ततितमः सर्गः ॥ ७६ ॥
113260
113261 सप्तसप्ततितमः सर्गः ७७
113262
113263 श्रीवसिष्ठ उवाच ।
113264
113265 एतामवष्टभ्य दृशं भगीरथधिया धृताम् ।
113266 समः स्वस्थो यथाप्राप्तं कार्यमाहर शान्तधीः ॥ १ ॥
113267
113268 चूडालाख्यानमुक्तार्थद्रढिम्नेत्रावतार्यते ।
113269 शिखिध्वजस्य माहात्म्यं विवाहक्रीडनक्रमाः ॥
113270
113271 भगीरथेन पश्चाद्राज्यकाले धिया धृताम् ॥ १ ॥
113272
113273 इदं पूर्वं परित्यज्य क्रोडीकृत्य मनःखगम् ।
113274 शान्तमात्मनि तिष्ठ त्वं शिखिध्वज इवाचलः ॥ २ ॥
113275
113276 इदं विभवजातं परित्यज्य । मनःखगं क्रोडीकृत्य हृदि निरुद्ध्य ॥ २ ॥
113277
113278 श्रीराम उवाच ।
113279
113280 कोऽसौ शिखिध्वजो नाम कथं वा लब्धवान्पदम् ।
113281 एतन्मे कथय ब्रह्मन्भूयो बोधविवृद्धये ॥ ३ ॥
113282
113283 श्रीवसिष्ठ उवाच ।
113284
113285 द्वापरे भवतां पूर्वमिदानीं च भविष्यतः ।
113286 तेनैव संनिवेशेन दंपती स्निग्धतां गतौ ॥ ४ ॥
113287
113288 दंपती जायापती पूर्वकल्पे द्वापरे अभूताम् । इदानीमष्टाविंशे
113289 चतुर्युगेऽग्रिमद्वापरे तेनैव संनिवेशेन भविष्यतः ॥ ४ ॥
113290
113291 श्रीराम उवाच ।
113292
113293 यत्पूर्वमासीद्भगवंस्तदिदानीं तथैव हि ।
113294 भविष्यति किमर्थं वै वद मे वदतां वर ॥ ५ ॥
113295
113296 भूतभविष्यतोः सादृश्ये को हेतुरिति रामप्रश्नार्थः ॥ ५ ॥
113297
113298 श्रीवसिष्ठ उवाच ।
113299
113300 जगन्निर्माणनियतेरस्या ब्रह्मादिसंविदः ।
113301 ईदृश्यवस्थितिर्नित्यमनिवार्यस्वभावजा ॥ ६ ॥
113302
113303 जगन्निर्माणे नियतिरूपाया ब्रह्मादीनां सत्यसंकल्पसंविदः । अनिवार्यस्वभाव एव
113304 तद्धेतुरित्यर्थः ॥ ६ ॥
113305
113306 यदन्यद्बहुशो भूत्वा पुनर्भवति भूरिशः ।
113307 अभूत्वैव भवत्यन्यः पुनश्च न भवत्यलम् ॥ ७ ॥
113308

113309 ईदृशीत्युक्तं प्रपञ्चयति-यदिति | यथा एकस्मिन्नाम्रतरौ अन्यदन्यत्फलं
113310 बहुशो भूत्वा पुनः पुनस्तादृशमेव भूरिशो भवति | स्कन्धवटस्तु अभूत्वैव
113311 भवति स च छिन्नः पुनस्तस्मिन्न भवति || ७ ||
113312
113313 अन्यत्प्राक्संनिवेशाढ्यं सादृश्येन विवल्गति |
113314 सदृशा विषमाश्चैव यथा सरसि वीचयः || ८ ||
113315
113316 ता एवान्याश्च दृश्यन्ते व्यवस्थाः संसृतौ तथा |
113317 तस्माद्राजेव भूयोऽपि वक्ष्यमाणकथेश्वरः || ९ ||
113318
113319 संसृतौ शिखिध्वजादिसंसारेऽपि तथेत्यर्थः | राजा अतीतशिखिध्वज इव
113320 वक्ष्यमाणकथायां वर्ण्यत्वेन ईश्वरो नायकः || ९ ||
113321
113322 भविष्यति महातेजास्तद्वृत्तान्तमिमं शृणु |
113323 द्वापरे पूर्वमभवदतीते सप्तमे मनौ || १० ||
113324
113325 चतुर्युगे चतुर्थे तु सर्गेऽस्मिन्कुरुणां कुले |
113326 जम्बूद्वीपे प्रसिद्धस्य विन्ध्यस्यादूरसंस्थिते || ११ ||
113327
113328 कुरुणां कुरुदेशाधिपतीनां कुर्वपत्यानां च कुले वंशे | तद्राजप्रत्ययस्य
113329 बहुषु लुक् | नामि दीर्घाभावश्छान्दसः || ११ ||
113330
113331 मालवानां पुरे श्रीमाञ्छिखिध्वज इतीश्वरः |
113332 धैर्यौदार्यदशायुक्तः क्षमाशमदमान्वितः || १२ ||
113333
113334 मालवानां पुरे उज्जयिन्यामिति यावत् || १२ ||
113335
113336 शूरः शुभसमाचारो मौनी गुणगणाकरः |
113337 आहर्ता सर्वयज्ञानां जेता सर्वधनुष्मताम् || १३ ||
113338
113339 कर्ता सकलकार्याणां भर्ता पूर्ववपुर्भुवः |
113340 पेशलस्निग्धमधुरो विदग्धः प्रीतिसागरः || १४ ||
113341
113342 सकलानां वापीकूपतडागारामादिकार्याणाम् | विदग्धो लोकशास्त्रनिष्णातः || १४ ||
113343
113344 सुन्दरः शान्तसुभगः प्रतापी धर्मवत्सलः |
113345 वदिता विनयार्थानां दाता सकलसंपदाम् || १५ ||
113346
113347 शान्तश्चासौ सुभगः सौभाग्यलक्षणयुक्तश्च विनयार्थानां परेषामपि
113348 विनयशिक्षाहेतूनां वाक्यानां वदिता वक्ता || १५ ||
113349
113350 भोक्ता सत्सङ्गसहितः सुश्रोता सकलश्रुतेः |
113351 वेदासौ माननाशून्यः स्त्रैणं तृणवदस्पृशन् || १६ ||
113352
113353 सर्वं वेद जानाति तथापि मानना अभिज्ञताभिमानस्तच्छून्यः | स्त्रैणं
113354 स्त्रीव्यसनादि || १६ ||
113355
113356 पितरि स्वर्गमापन्ने बाल एवोत्तमौजसा |
113357 कृत्वा षोडशवर्षाणि स्वयंन् दिग्विजयं वशी || १७ ||
113358
113359 उत्तमेन ओजसा स्वबाहुवीर्येण | अनेन पिता माण्डलिक एवासीदसौ स्वबाहुवीर्येणैव
113360 सम्राट् संपन्न इति गम्यते || १७ ||

नूनं साम्राज्यसंपत्त्या भूमण्डलमयोजयत् |
अतिष्ठद्विगताशङ्कं पालयन्धर्मतः प्रजाः || १८ ||

साम्राज्यप्रयुक्तया संपत्त्या | तदा हि क्वापि दस्यूनामभावात्प्रजानां धनं
वर्धत इति विगतजेतव्यशत्रुसद्भावाशङ्कम् || १८ ||

स धीमान्मन्त्रिभिः सार्धं यशसा शुक्लयन्दिशः |
अथ गच्छत्सु वर्षेषु वसन्ते प्रोल्लसत्यलम् || १९ ||

वर्षेषु गच्छत्सु | यौवने प्राप्ते सतीति यावत् | अथास्य चेतः कान्तां प्रति समुत्सुकं
बभूवेति पञ्चमेन संबन्धः || १९ ||

पुष्पेषु जृम्भमाणेषु स्फुरत्सु शशिरश्मिषु |
मञ्जरीजालदोलासु विटपान्तःपुरान्तरे || २० ||

विटपः शाखा तल्लक्षणे अन्तःपुरान्तरे मञ्जरीजालदोलासु अलिनां मिथुनेषु
गायत्स्विति व्यवहितेनान्वयः || २० ||

रजःकर्पूरधवले वलद्दलकपाटके |
आमोदविलसत्पुष्पगुलुच्छकवितानके || २१ ||

तदेवान्तःपुरं तत्सामग्रीकल्पनेन वर्णयति-रज इति || २१ ||

गायत्सु गहनेषूच्चैर्मिथुनेष्वलिनां मिथः |
आवाति मधुरे वायौ शशिशीकरशीतले || २२ ||

शशिना शीकरैश्च शीतले || २२ ||

कदलीकन्दलीकच्छतलपल्लवलासिनि |
कान्तां प्रति बभूवास्य वसच्चेतः समुत्सुकम् || २३ ||

कदली प्रसिद्धा | कन्दल्यो गुल्मभेदास्तेषां कच्छप्रायेषु तलेषु पल्लवेषु च लासिनि
लास्य शीले इति शैत्यमान्द्योपपादकं वायोर्विशेषणम् | वसदित्युक्त्या पूर्वमेव
गुणसौन्दर्यादिश्रवणाच्चूडालायामनुरक्तमिति गम्यते || २३ ||

क्षीबं कुसुमसंभारसौगन्ध्यमधुरासवैः |
मनो नान्यास्पदं चक्रे सवसन्तमिवोदितम् || २४ ||

कुसुमसंभाराणां सौगन्ध्यलक्षणैर्मधुरैरासवैः क्षीबं मत्तं सत्
सवसन्तं वनमिव उदितं रागपल्लवितं मनः अन्यास्पदं
कान्तातिरिक्तविषयावलम्बनं न चक्रे || २४ ||

उद्यानवनदोलासु लीलाकमलिनीषु च |
कदा प्रणयिनीं मुग्धां हेमाब्जमुकुलस्तनीम् || २५ ||

तदौत्सुक्यप्रकारं प्रपञ्चयति-उद्यानेत्यादिना || २५ ||

करिष्ये कामिनीमङ्के पर्यङ्के कुङ्कुमाङ्किताम् |
कदा कमलवल्लीनां दोलास्वलिरिवालिनीम् || २६ ||

आलोलां तां निवेक्ष्यामि बालां भुजलतानुगाम् |

113413 मृणालहारकुन्देन्दुवृन्दवल्ल्यभिलाषिणी ॥ २७ ॥
113414
113415 निवेक्ष्यामि परिणेष्यामि । ममेव तस्या अपि स्वाभिलाषप्रयुक्तसंतापः कदा स्याद्येन
113416 शीघ्रं घटना स्यादित्याशयेनाह-मृणालेति । वृन्दवल्ल्यः
113417 पुष्पितलतागृहात्मना वृन्दीभूता वल्ल्यस्तदभिलाषिणी ॥ २७ ॥
113418
113419 मत्कृते मदनातप्ता कदा स्यादिन्दुसुन्दरी ।
113420 इति चिन्तापरो भूत्वा कुसुमावचयोन्मुखः ॥ २८ ॥
113421
113422 विजहार वनान्तेषु कुसुमोपवनेषु च ।
113423 वनोपवनलेखासु लीलाकमलिनीषु च ॥ २९ ॥
113424
113425 वल्लीवलयगेहेषु विविधोद्यानभूमिषु ।
113426 वनोपवनविन्यासवर्णनावलितासु च ॥ ३० ॥
113427
113428 वनानामुपवनानां च गुणानुवर्णने आवलितासु कथासु चारमतेति सप्तमीनां
113429 संबन्धः ॥ ३० ॥
113430
113431 शृङ्गाररसगर्भासु कथास्वरमतोन्मनाः ।
113432 हृदि हारलसत्कायविलोलालकवल्लरीः ॥ ३१ ॥
113433
113434 कुमारीः पूजयामास सुवर्णकलशस्तनीः ।
113435 एतन्मन्ये विदुर्भव्या मन्त्रिणो नृपनिश्चयम् ॥ ३२ ॥
113436
113437 कुमारीः हृदि पूजयामास बहुमेने सांकल्पिकभूषणैरलंचक्रे वा । मन्ये
113438 इत्यव्ययं वितर्के । वितर्कवचनं वसिष्ठस्य वाक्यालंकारार्थम् ॥ ३२ ॥
113439
113440 इङ्गिताकारवेदित्वमेव मन्त्रिपदं परम् ।
113441 अथ तस्य विवाहाय मन्त्रिवर्गो विचारयन् ॥ ३३ ॥
113442
113443 मन्त्रिणां पदं लक्षणम् । परस्परानुरागगुणशीलकुलादिसंपत्तिं विचारयन् ॥ ३३ ॥
113444
113445 सुराष्ट्राधिपतेः कन्यां ययाचे यौवतान्विताम् ।
113446 नवयौवनसंपन्नां भार्यात्वे विधिनोत्तमाम् ॥ ३४ ॥
113447
113448 युवतीनां समूहो यौवतम् । भस्याढे तद्धिते इति पुंवद्भावः । तेनान्विताम् । नवेन
113449 यौवनेन वयसा च संपन्नाम् ॥ ३४ ॥
113450
113451 उपयेमे स तामात्मसदृशीं प्रतिमामिव ।
113452 चूडालेति भुवि ख्याता नाम्ना नृपतिसुन्दरी ॥ ३५ ॥
113453
113454 प्रतिमां प्रतिच्छायामिव सदृशीमनुरूपाम् ॥ ३५ ॥
113455
113456 सा तं भर्तारमासाद्य रेजे फुल्लेव पद्मिनी ।
113457 नीलनीरजनेत्रां तां चूडालां स शिखिध्वजः ॥ ३६ ॥
113458
113459 स्नेहाद्विकासयामास सूर्यो देवो यथाब्जिनीम् ।
113460 अवर्धत तयोः प्रीतिरन्योन्यार्पितचेतसोः ॥ ३७ ॥
113461
113462 विकासयामास प्रसादयामास ॥ ३७ ॥
113463
113464 हावभावविलासाढ्यैरङ्गैर्नवलतेव सा ।

113465 सुमन्त्र्यर्पितसर्वार्थः स सुखी सुस्थितप्रजाः || ३८ ||
113466
113467 हावभावादयः शृङ्गारचेष्टाभेदास्तदाढ्यैरङ्गैर्नवलतेव सा शुशुभे इति
113468 शेषः | शोभनै राजचित्तानुवर्तिभिरनुरक्तैर्मन्त्रिभिरर्पिताः सर्वे उपभोग्यार्था
113469 यस्मै | अथवा शोभनैर्धार्मिकैर्मन्त्रिभिः सर्वेभ्योऽर्थिभ्यः अर्पिताः सर्वे
113470 अभिलषितार्था यस्य | अत एव सुस्थितप्रजास्तत्पालनविक्षेपरहितः सन् रेमे || ३८ ||
113471
113472 राजहंस इवाब्जिन्या रेमे दयितया तया |
113473 अन्तःपुरेषु दोलासु लीलाकमलिनीषु च || ३९ ||
113474
113475 उद्यानेषु विहारेषु लतापुष्पग्रहेषु च |
113476 कदम्बवनलेखासु चन्दनागुरुवीथिषु || ४० ||
113477
113478 चन्दनागुरु सुगन्धितासु वीथिषु चन्दनागुरुवृक्षाणां पङ्क्तिषु च || ४० ||
113479
113480 मन्दारदामलोलासु कदलीकन्दलीषु च |
113481 पुरान्तेषु वनान्तेषु दिगन्तेषु सरस्सु च || ४१ ||
113482
113483 जंगलेषु जनान्तेषु जम्बूजम्बीरजातिषु |
113484 बभूवाह्लादकं सर्वं तयोरन्योन्यचेष्टितम् || ४२ ||
113485
113486 सद्वर्षयोर्धुरवरैर्दयुभूम्योरिव कान्तयोः |
113487 नित्यमेव [नित्यमेवावियुक्तत्वात् इति पाठः |]
113488 वियुक्तत्वात्प्रियत्वाच्चेष्टितस्य च || ४३ ||
113489
113490 धुरवरैर्बलीवर्दैः कृष्टेषु क्षेत्रेषु सत् रमणीयं वर्षं
113491 वृष्टिर्ययोस्तथाविधयोर्मेघसस्यसंपत्कान्तयोर्द्युभूम्योरिव || ४३ ||
113492
113493 मिथः कलाकलापस्य कोविदौ तौ बभूवतुः |
113494 स्वरूपमेकमेवैतौ दधतुर्मित्रतां गतौ || ४४ ||
113495
113496 मिथः अन्योन्यस्माच्छिक्षणादन्योन्यसाम्यार्थित्वाच्च कोविदौ प्राज्ञतरौ अत एव
113497 सर्वगुणसांम्यादनुरागेण ताद्रूप्यरञ्जनाच्च जीवैक्यमिव संपन्नमित्याह##-
113498
113499 अन्योन्यहृदयस्थत्वादिव संक्रान्तमक्षतम् |
113500 सर्वशास्त्रार्थवैदग्ध्यं चित्राद्यपि मुखात्प्रभोः || ४५ ||
113501
113502 अन्योन्यहृदयस्थत्वाद्देहद्वयसंक्रान्तमेकमेव जीवस्वरूपम् |
113503 चित्रादिशिल्पवैदग्ध्यमपि तत्तच्छिल्पकुशलानां मुखादागृह्य अभ्यस्य || ४५ ||
113504
113505 बालः कालादिवागृह्य साऽसीत्सर्वार्थपण्डिता |
113506 नृत्यवाद्यादि यावच्च चूडालावदनादसौ || ४६ ||
113507
113508 यथा बालो बटुः द्वादशवर्ष वेदब्रह्मचर्यमिति शास्त्रनियतकालाद्वेदविद्यां
113509 गृह्णाति तद्वत् | सा चूडाला | असौ शिखिध्वजः || ४६ ||
113510
113511 अशिक्षत बभूवाथ कलानामतिकोविदः |
113512 अमावास्यामिवेन्द्वर्कावन्योन्यविलसत्कलौ || ४७ ||
113513
113514 अमावास्यां प्राप्येति शेषः | इन्द्वर्काविव मिथो हृदयसंस्थौ सन्तौ
113515 ऐक्यमुपागतौ || ४७ ||
113516

113517 मिथो हृदयसंस्थौ तौ द्वावप्यैक्यमुपागतौ ।
113518 तौ संस्थितावेकरसावन्योन्यं दयितावुभौ ॥ ४८ ॥
113519
113520 मिश्रितक्षीरोदकवदेकरसौ ॥ ४८ ॥
113521
113522 पुष्पामोदाविवाभिन्नौ भूतलस्थौ शिवाविव ।
113523 वैदग्ध्यसुन्दरमती सर्वशास्त्रार्थपण्डितौ ॥ ४९ ॥
113524
113525 भूतलस्थौ भूमाववतीर्णौ शिवौ गौरीशंकराविव ॥ ४९ ॥
113526
113527 कार्यार्थं च भुवं प्राप्तौ कमलाकमलाधवौ ।
113528 स्नेहात्प्रसन्नमधुरौ समविज्ञातवादिनौ ॥ ५० ॥
113529
113530 सह प्रत्येकं वा पुष्टं संदेहपदं लोकशास्त्ररहस्यं समं तुल्यकालं
113531 तुल्यविषयं च विज्ञातं वक्तुं शीलं ययोस्तौ ॥ ५० ॥
113532
113533 अनुवृत्तिपरावास्तां लोकवृत्तान्ततद्विदौ ।
113534 कलाकलापसंपन्नौ लसद्रसरसायनौ ।
113535 शीतलस्निग्धमुग्धाङ्गौ शशाङ्कौ द्वाविवोदितौ ॥ ५१ ॥
113536
113537 परस्परगुरुद्विजाभिज्ञादीनां चानुवृत्तिः प्रियहितविनयाद्याचारस्तत्परौ ।
113538 लोकवृत्तान्तस्य तस्य शास्त्रैकगम्यधर्मरहस्यस्य च विदौ । लसन्ति
113539 शृङ्गारादिनवरसलक्षणानि रसायनानि ययोस्तौ ॥ ५१ ॥
113540
113541 रेजे लसच्च रतिभोगविलासकान्तमन्तःपुरेषु मिथुनं तदनुत्तमश्रि ।
113542 ब्रह्माण्डखण्डकुहरेष्विव राजहंसयुग्मं विकासिमदमन्मथमन्दचारि ॥
113543 ५२ ॥
113544
113545 ब्रह्माण्डखण्डस्य ब्रह्माण्डावयवस्य सत्यलोकस्य कुहरेषु गम्भीरसरस्सु
113546 राजहंसयोर्युग्मं मिथुनमिव ॥ ५२ ॥
113547
113548 इत्यार्षे श्रीवासिष्ठमहारामा० वा० दे० मो० निर्वाण० पू० चूडालोपाख्याने
113549 शिखिध्वजविलासकथनं नाम सप्तसप्ततितमः सर्गः ॥ ७७ ॥
113550
113551 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
113552 शिखिध्वजविलासवर्णनं नाम सप्तसप्ततितमः सर्गः ॥ ७७ ॥
113553
113554 अष्टसप्ततितमः सर्गः ७८
113555
113556 श्रीवसिष्ठ उवाच ।
113557
113558 एवं बहूनि वर्षाणि मिथुनं निर्भरस्पृहम् ।
113559 रेमे यौवनलीलाभिरमन्दाभिर्दिने दिने ॥ १ ॥
113560
113561 तयोः क्रमेण वैराग्यं सच्छास्त्राभ्यासनिष्ठता ।
113562 चूडालाया विवेकोऽत्र ज्ञानलाभश्च वर्ण्यते ॥
113563
113564 निर्भरस्पृहं दृढप्रेम । मिथुनं तत्स्त्रीपुंसद्वन्द्वम् ॥ १ ॥
113565
113566 अथ यातेषु बहुषु वर्षेष्वावृत्तिशालिषु ।
113567 शनैर्गलिततारुण्ये भिन्नकुम्भादिवाम्भसि ॥ २ ॥
113568

113569 अथ शनैस्तारुण्ये गलति सति तद्युग्मं इति निर्णीय अध्यात्मसंमतं शास्त्रं
113570 विचारयामासेति दशमे एकादशे च संबन्धः ॥ २ ॥
113571
113572 तरङ्गनिकराकारभङ्गुरव्यवहारिणि ।
113573 पातः पक्वफलस्येव मरणं दुर्निवारणम् ॥ ३ ॥
113574
113575 निर्णयहेतुं प्रथमं तत्कृतं विचारं प्रपञ्चयति-तरङ्गेत्यादिना ।
113576 तरङ्गनिकराकारेण भङ्गुरेण देहेन व्यवहरणशीले देहिनि । मरणं
113577 देहवियोगः ॥ ३ ॥
113578
113579 हिमाशनिरिवाम्भोजे जरा निपतनोन्मुखी ।
113580 आयुर्गलत्यविरतं जलं करतलादिव ॥॥ ४ ॥
113581
113582 कुतो दुर्निवारणं तत्राह-हिमाशनिरिति ॥ ४ ॥
113583
113584 प्रावृषीव लतातुम्बी तृष्णैका दीर्घतां गता ।
113585 शैलनद्या रय इव संप्रयात्येव यौवनम् ॥ ५ ॥
113586
113587 तृष्णाभोगतत्साधनतृष्णाप्रावृषि कटुतुम्बीलतेव दीर्घतां गता वर्धते इति
113588 यावत् । रयोऽत्र वार्षिकपूरः ॥ ५ ॥
113589
113590 इन्द्रजालमिवासत्यं जीवनं जीर्णसंस्थिति ।
113591 सुखानि प्रपलायन्ते शरा इव धनुश्च्युताः ॥ ६ ॥
113592
113593 जीव्यते अस्मिन्निति जीवनं देहादि ॥ ६ ॥
113594
113595 पतन्ति चेतो दुःखानि तृष्णा गृध्र इवामिषम् ।
113596 बुद्बुदः प्रावृषीवाप्सु शरीरं क्षणभङ्गुरम् ॥ ७ ॥
113597
113598 दुःखान्याध्यात्मिकादीनि तृष्णा च चेतः पतन्ति निपत्य तुदन्तीति यावत् ॥ ७ ॥
113599
113600 रम्भागर्भ इवासारो व्यवहारो विचारगः ।
113601 सत्वरं युवता याति कान्तेवाप्रियकामिनः ॥ ८ ॥
113602
113603 अप्रियां [अत्राप्रियं सपत्नीसंग्रहणं कामयत इति व्याख्यानं युक्तं ।
113604 यथास्थितव्याख्यायां पुंवद्भावानुपपत्तिः ।] सपत्नीं कामयते यस्तस्य
113605 कान्ता प्रियतमेव ॥ ८ ॥
113606
113607 बलादरतिरायाता वैरस्यमिव पादपम् ।
113608 तदिह स्याच्छुभाकारं स्थिरं किमतिशोभनम् ॥ ९ ॥
113609
113610 अरतिरिष्टविषयालाभनिमित्तं दौर्मनस्यम् । वैरस्यं रसशोषः । इहास्मिन् संसारे ॥ ९
113611 । ।
113612
113613 यदासाद्य पुनश्चेतो दशासु न विदूयते ।
113614 इति निर्णीय युग्मं तत्संसारव्याधिभेषजम् ॥ १० ॥
113615
113616 दशासु जन्ममरणादिदुर्दशासु । तद्युग्मं मिथुनं इति विचार्य तत्र
113617 अध्यात्मशास्त्रमेव संसारव्याधिभेषजं निर्णीय तदेव विचारयामासेत्यन्वयः ॥
113618 १० ॥
113619
113620 चिरं विचारयामास शास्त्रमध्यात्मसंमतम् ।

113621 आत्मज्ञानैकमात्रेण संसृत्याख्या विषूचिका || ११ ||
113622
113623 संशाम्यतीति निश्चित्य तावास्तां तत्परायणौ |
113624 तच्चित्तौ तद्गतप्राणौ तन्निष्ठौ तद्विदाश्रयौ || १२ ||
113625
113626 तद्विदा अध्यात्मशास्त्रविद एवाश्रयः शरणं ययोस्तौ || १२ ||
113627
113628 तदा तदर्चनपरौ तदीहौ तौ विरेजतुः |
113629 तत्रैवातिघनाभ्यासौ बोधयन्तौ परस्परम् || १३ ||
113630
113631 तत्प्रीतौ तत्समारम्भावन्योन्यं तौ बभूवतुः |
113632 अथ साविरतं राम रमणीयपदक्रमान् || १४ ||
113633
113634 तस्मिन्नध्यात्मशास्त्र एव सम्यक् तच्चिन्तनं तच्छ्रवणमन्योन्यं तत्प्रबोधनम्
113635 इत्यादिः समारम्भो ययोस्तौ | सा चूडाला || १४ ||
113636
113637 श्रुत्वाध्यात्मविदां वक्त्राच्छास्त्रार्थांस्तारणक्षमान् |
113638 इत्थं विचारयामास स्वमात्मानमहर्निशम् || १५ ||
113639
113640 इत्थं वक्ष्यमाणप्रकारेण || १५ ||
113641
113642 अव्यापृता व्यापृता वा धिया धवलयेद्धया |
113643 प्रेक्षे तावत्स्वमात्मानं किमहं स्यामिति स्वयम् || १६ ||
113644
113645 अव्यापृता त्यक्तशारीरव्यापारा | प्रेक्षे विविच्य पश्येयम् | अस्मिन्
113646 कार्यकारणसंघाते अहं चेतनधातुः किं स्याम् || १६ ||
113647
113648 कस्यायमागतो मोहः कथमभ्युत्थितः क्व वा |
113649 देहस्तावज्जडो मूढो नाहमित्येव निश्चयः || १७ ||
113650
113651 अयं संसारलक्षणो मोहो भ्रमः कस्यागतः | यस्य हि भ्रान्तिरागता स तन्निवारणे
113652 स्वस्थः स्यात्स एव क इत्यर्थः | कथं [कथं नैर्निमित्तैरिति पाठः |] वेति
113653 निमित्तजिज्ञासा | क्वेति तन्मूलजिज्ञासा | मूले हि परिज्ञाते तदुच्छेदेनोच्छेत्तुं स
113654 शक्यः || १७ ||
113655
113656 आबालमेतत्संसिद्धं मतौ चैवानुभूयते |
113657 कर्मेन्द्रियगणश्चास्मादभिन्नावयवात्मकः || १८ ||
113658
113659 मतौ स्थूलोहं गौरोहमित्यादिबुद्धिवृत्तौ सत्यामेवानुभूयते न स्वत इति तस्य
113660 जडत्वमित्यर्थः | अस्माद्देहादभिन्नहस्तपादाद्यवयवात्मकः || १८ ||
113661
113662 अवयवावयविनोर्न भेदो जड एव च |
113663 बुद्धीन्द्रियगणोऽप्येवं जड एवेति दृश्यते || १९ ||
113664
113665 बुद्धीन्द्रियगणोपि एवं शरीरावयवात्मक एव | यद्यप्यणवश्चेति सूत्रे
113666 इन्द्रियप्राणादयः सूक्ष्मा लिङ्गदेहावयवा एव न स्थूलदेहावयवा इति
113667 वादरायणेन सिद्धान्तितं तथापि तेषां
113668 देहावयवत्वेनैवापण्डितपामरमनुभवादवयववद्देहसंयुक्तत्वाच्च
113669 तदवयववज्जडत्वमेवेत्याशयः || १९ ||
113670
113671 प्रेर्यते मनसा यस्माद्यष्ट्येव भुवि लोष्टकः |
113672 मनश्चैवं जडं मन्ये संकल्पात्मकशक्ति [कथं नैर्निमित्तैरिति

113673 पाठः |] यत् || २० ||
113674
113675 मन-आदेरपि जडदेहादिप्रेरकत्वात्तत्संयोगयोग्यद्रव्यतया यष्ट्यादिवज्जडत्वं
113676 सिद्धमित्याह-प्रेर्यत इत्यादिना || २० ||
113677
113678 क्षेपणैरिव पाषाणः प्रेर्यते बुद्धिनिश्चयैः
113679 बुद्धिर्निश्चयरूपैवं जडा सत्तैव निश्चयः || २१ ||
113680
113681 जडा सत्ता जाड्यस्वभावैवेति निश्चयः | क्षेपणै रज्जुयन्त्रैः || २१ ||
113682
113683 खातेनेव सरिन्नूनं साऽहंकारेण वाह्यते |
113684 अहंकारोऽपि निःसारो जड एव शवात्मकः || २२ ||
113685
113686 खातेन वप्रद्वयान्तरालिकनिम्नदेशेन | सा बुद्धिर्वाह्यते प्रेर्यते || २२ ||
113687
113688 जीवेन जन्यते यक्षो बालेनेव भ्रमात्मकः |
113689 जीवश्च चेतनाकाशो वातात्मा हृदये स्थितः || २३ ||
113690
113691 जीवेन प्राणावच्छिन्नचिदाभासेन जन्यते अध्यस्यते | तथा च
113692 यक्षदेहवत्तस्याध्यस्तत्वादेव जडत्वमित्यर्थः | वातात्मा प्राणोपाधिः || २३ ||
113693
113694 सुकुमारोऽन्तरन्येन केनापि परिजीवति |
113695 अहो नु ज्ञातमेतेन चेत्योल्लेखकलङ्किना || २४ ||
113696
113697 अन्तरन्येन स्वान्तर्यामिबिम्बचैतन्येन परिपूर्णो जीवति | चेत्योल्लेखः साक्षिभावेन
113698 विषयप्रकाशनं तेन कलङ्किना दूषितप्रायेण || २४ ||
113699
113700 जीवो जीवति जीर्णेन चिद्रूपेणात्मरूपिणा |
113701 चेत्यभ्रमवता जीवश्चिद्रूपेणैव जीवति || २५ ||
113702
113703 जीर्णेन चिरंतनेन || २५ ||
113704
113705 आमोदः पवनेनेव खातेनेव सरिद्रयः |
113706 असत्यजडचेत्यांशचयनाच्चिद्वपुर्जडम् || २६ ||
113707
113708 चेत्योल्लेखकलङ्किनेति तत्रोपपत्तिमाह-असत्येति |
113709 चयनात्तादात्म्यसंसर्गाध्यासाच्चिद्वपुश्चित्स्वभावमपि तज्जडमिव
113710 संपन्नमित्यर्थः || २६ ||
113711
113712 महाजलगतो ह्यग्निरिव रूपं स्वमुज्झति |
113713 सद्वासद्वा यदाभाति चित्समाधौ सति स्वतः || २७ ||
113714
113715 महाजलं तप्तजलं सामुद्रं वा तद्गतोऽग्निरिव स्वं भास्वररूपमुज्झति मुञ्चति |
113716 अत एव सत्तांशे चिद्वैलक्षण्यमिव लब्धा घटः सन्पटः सन्निति सत्ता
113717 घटपटाद्यचिदाकारसमरसानुभूयते | घटाद्याकारस्य मृदादौ लये घटो
113718 नास्ति पटो नास्तीति सत्ताकारमप्युज्झन्ती अभावतामप्यापद्यत इति भावः | चित्समाधौ
113719 चेत्यैकाग्र्ये सद्रूपमसद्रूपं वा यदेव वासनोपनीतं स्वत आभाति तदेव
113720 क्षणादलं पूर्णं स्वरूपमुत्सृज्य तत्क्षणात्स्वयं भवतीति परेणान्वयः || २७ ||
113721
113722 स्वरूपमलमुत्सृज्य तदेव भवति क्षणात् |
113723 एवं चिद्रूपमप्येतच्चेत्योन्मुखतया स्वयम् || २८ ||
113724

113725 एवमुक्तरीत्या परमार्थतश्चिद्रूपमपि अविद्यावरणादध्यासपरंपरया जडं
113726 शून्यमसत्कल्पं च संपन्नं जगद्रूपं बुद्धावनावृतस्वभावेन
113727 चैतन्येनैव तत्तदाकारवृत्तिव्याप्त्या मूलविद्यावरणभङ्गद्वारा प्रबोध्यत इति
113728 परेणान्वयः ॥ २८ ॥
113729
113730 जडं शून्यमसत्कल्पं चैतन्येन प्रबोध्यते।
113731 इति संचिन्त्य चूडाला केनैषा चित्प्रचेतनी ॥ २९ ॥
113732
113733 तर्हि मूलाविद्यावरणभङ्गेनैषा ब्रह्मचित्केनोपायेन दृश्यस्वप्नं विहाय
113734 प्रबोधवती स्यादिति चिन्तितवतीत्याह-इतीति ॥ २९ ॥
113735
113736 इति संचिन्तयामास चिरायेत्थं व्यबुध्यत।
113737 अहो नु चिरकालेन ज्ञातं ज्ञेयमनामयम् ॥ ३० ॥
113738
113739 इत्थं वर्ण्यमानप्रकारेण व्यबुध्यत। आत्मतत्त्वमित्यर्थः ॥ ३० ॥
113740
113741 यद्वै विज्ञेयतां कृत्वा न कश्चिद्धीयते पुनः।
113742 एते हि चिद्विलासान्ता मनोबुद्धीन्द्रियादयः ॥ ३१ ॥
113743
113744 कश्चिदपि पुरुषो न हीयते परमपुरुषार्थात्प्रच्युतो न भवतीत्यर्थः। अथवा
113745 कश्चिदपि काम्योऽर्थो न हीयते न हानिं प्राप्यते। तत्प्राप्त्यैव
113746 सर्वकामावाप्तेरित्यर्थः। अथवा किंचिद्वस्तु दुःखसाधनमिति बुद्ध्या न हीयते न
113747 त्यज्यते। सर्वस्याप्यानन्दैकरसत्वसंपत्तेरित्यर्थः।
113748 हानासंभवोक्तिरुपादानस्याप्युपलक्षणम्। चिद्विलासस्य अन्ताः परिच्छेदहेतवः ॥ ३१
113749 ।।
113750
113751 असन्तः सर्व एवाहो द्वितीयेन्दुपदस्थिताः।
113752 महाचिदेकैवास्तीह महासत्तेति योच्यते ॥ ३२ ॥
113753
113754 द्वितीयस्य तैमिरिकदृष्टिपरिकल्पितस्येन्दोः पदे स्थाने स्थिताः। भ्रान्तिकल्पिता इति यावत्
113755 ॥ ३२ ॥
113756
113757 निष्कलङ्का समा शुद्धा निरहंकाररूपिणी।
113758 शुद्धसंवेदनाकारा शिवं सन्मात्रमच्युतम् ॥ ३३ ॥
113759
113760 शुद्धं संवेदनमेव आकारः स्वरूपं यस्याः। शिवं
113761 भूमानन्दरूपत्वात्परममङ्गलं तादृशस्वभावात्कदाप्यप्रच्युतमित्यच्युतम्
113762 ॥ ३३ ॥
113763
113764 सकृद्विभाता विमला नित्योदयवती सदा।
113765 सा ब्रह्मपरमात्मादिनामभिः परिगीयते ॥ ३४ ॥
113766
113767 सकृन्मूलाविद्यावरणभङ्गेण विभाता न पुनः केनाप्याव्रियत इति सकृद्विभाता
113768 । अत एव नित्योदयवती परिगीयते वेदान्ताद्यध्यात्मशास्त्रेषु लक्षणया ॥ ३४ ॥
113769
113770 चेत्यचेतनचित्तादि नास्या भिन्नं न मानतः।
113771 तयैषा चेत्यते चिच्छ्रीः सैषाद्या चिदिति स्मृता ॥ ३५ ॥
113772
113773 चेत्यादित्रिपुटीजालमस्याः सकाशाद्भिन्नं वस्तु न। यत एषा त्रिपुटी तया साक्षिभूतया
113774 चेत्यते न तु मानतः सिद्धा सैषा साक्षिचित् त्रिपुटी प्रवृत्तेः प्रागेव
113775 स्वतःसिद्धत्वादाद्या ॥ ३५ ॥
113776

113777 अचेत्यं यदिदं चित्त्वं तत्तस्या रूपमक्षतम् ।
113778 मनोबुद्धीन्द्रियाद्यर्थरूपैः सैव विजृम्भते ॥ ३६ ॥
113779
113780 विजृम्भते विवर्तते ॥ ३६ ॥
113781
113782 तरङ्गकणकल्लोलकलनेयं चिदात्मनि ।
113783 जगद्रूपपदार्थानां सत्ता स्फुरति मातरि ॥ ३७ ॥
113784
113785 मनोबुद्ध्यादिविवर्तैश्चिदात्मनि मातरि प्रमातृभावापन्ने सति तत्र
113786 तरङ्गादिकलनाप्राया जगद्रूपभूतभौतिकपदार्थानां सत्त्वा अस्तिता स्फुरति ॥ ३७ ॥
113787
113788 यदिदं तत्परं रूपं तस्याः खलु महाचितेः ।
113789 शुद्धचिन्मणिवत्सा हि सेयं समसमोदिता ॥ ३८ ॥
113790
113791 यदिदं जगत्सत्तारूपं प्रसिद्धं तत्तस्या अधिष्ठानभूताया महाचितेरेव परं
113792 रूपं रूपान्तरम् । खलु शब्दो द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च
113793 इत्यादिश्रौतप्रसिद्धिद्योतनार्थः । यतः सा हि
113794 चित्स्फटिकमणिवज्जगत्प्रतिबिम्बमसङ्गैव धत्ते । सेयं जगत्सत्ता च व्यावहारिकेषु
113795 प्रातिभासिकेषु च समसमा स्वस्वाधिष्ठानानुसारिणी उदिता ॥ ३८ ॥
113796
113797 अनन्ययैव या शक्त्या जगज्जृम्भिकया स्थिता ।
113798 सत्ता मायातिरेकेण नान्या संभवतीह हि ॥ ३९ ॥
113799
113800 अत एव जगत्सत्ताया अधिष्ठानसत्तान्यत्वनिरूपणायोगान्मायामात्रत्वमित्याह##-
113801
113802 विचित्रतेव भाण्डानां ननु हेमतया यथा ।
113803 सा तथोदेति तद्रूपमात्मानं चेतति स्वयम् ॥ ४० ॥
113804
113805 अत एव नामरूपविशेषप्रलये जगत्सत्ता मायाशबलब्रह्मसत्तात्मनैव परिशिष्यते ।
113806 मायाबाधे तु आनन्दैकरससन्मात्ररूपमात्मानं स्वयमनुभवतीत्याह##-
113807 हेमसत्तात्मनैवोदेति तथेत्यर्थः ॥ ४० ॥
113808
113809 स्वचित्तेन द्रवत्वेन तरङ्गादित्वमम्बुषु ।
113810 महाचितौ जगच्चित्तादुदेतीवानुदेत्यपि ॥ ४१ ॥
113811
113812 सत्तायां दर्शितन्यायेनैव जगद्वैचित्र्यस्फुरणरूपचिद्भेदानामपि विषयाकारभेदे
113813 मिथ्यात्वपर्यालोचने अपरिच्छिन्नपरब्रह्मचिन्मात्रता पर्यवस्यतीत्याशयेनाह##-
113814 सिद्धेषु समुद्राद्यम्बुषु तरङ्गादि अनुद्यदप्युदेतीव तथा महाचितौ ब्रह्मण्यपि
113815 समष्टिचित्ताज्जगदनुद्यदप्युदेतीत्यर्थः । अनुदेतीति नञस्तिङन्तेन सहेति
113816 योगविभागात्समासश्छान्दसो वा ॥ ४१ ॥
113817
113818 तदात्मैव यथा यातो रूपवान् जलधौ द्रवात् ।
113819 एवं चिन्मात्रमेवाहमनहंभावमाततम् ॥ ४२ ॥
113820
113821 अस्त्वेवं किं ततस्तत्राह-तदिति । तत्तत्र स्वप्ने चिद्रूप आत्मैव चित्तकल्पितजलरूपेण
113822 रूपवान् संस्तरङ्गादिद्रव्यभेदान्यथा यातस्तत्रात्मव्यतिरिक्तं नाणुमात्रमपि
113823 किंचिदस्ति । एवं चिन्मात्रमेवाहं जगद्धानविशेषभेदैः संपन्नो न
113824 परमार्थतः पूर्णचिदात्मनो मत्तो
113825 व्यतिरिक्तमणुमात्रमप्यस्तीत्यहंभावस्याप्यपरिशेषादनहंभावं
113826 चिन्मात्रमेवाततं विस्तीर्णमित्यर्थः ॥ ४२ ॥
113827
113828 न तस्य जन्ममरणे न तस्य सदसद्गती ।

113829 न नाशः संभवत्यस्य चिन्मात्रनभसः क्वचित् ॥ ४३ ॥
113830
113831 मरणं देहवियोगो नाशो ध्वंस इति भेदः । सदसद्गती स्वर्गनरकौ ॥ ४३ ॥
113832
113833 अच्छेद्योऽयमदाह्योऽयं चिदादित्योऽतिनिर्मलः ।
113834 आहो नु चिरकालेन शान्तास्मि परिनिर्वृता ॥ ४४ ॥
113835
113836 तत्र प्रस्तुतविचारस्यावधौ विश्रान्तिं दर्शयति-अच्छेद्य इति ॥ ४४ ॥
113837
113838 निर्वामि भ्रमनिर्मुक्तमासे निर्मन्दराब्धिवत् ।
113839 असदाभासमत्यच्छमनन्तमजमच्युतम् ॥ ४५ ॥
113840
113841 आसे तासस्त्योः इति सलोपः । असन् दृश्याभासो यस्मिन् ॥ ४५ ॥
113842
113843 आत्माकाशमनावाधममलं परमं चिरम् ।
113844 अनन्तमिदमाकाशं फलौघाश्चाफलादिकाः ॥ ४६ ॥
113845
113846 चिरं कालिकपरिच्छेदरहितम् । अनन्तं देशवस्तुकृतपरिच्छेदरहितम् ।
113847 ब्रह्मादिस्तम्बपर्यन्तप्राणिकर्मफलौघाश्चकारात्तत्साधनव्यापाराः अफलादिका
113848 निष्फलसाधना वृथा चेष्टाश्च इदमाकाशमेव नान्यत् ॥ ४६ ॥
113849
113850 सुरासुरयुतं विश्वमेतन्मयमकृत्रिमम् ।
113851 पुंस्त्वकर्ममयी सेना सर्वं मृन्मात्रकं यथा ॥ ४७ ॥
113852
113853 पुंस्त्वं कुलालादिपुरुषजातिस्तत्कर्ममयी तन्निर्मिता । अथवा पुंस्त्वं प्रतिमायां
113854 कल्पिता पुरुषजातिः कर्म तदनुरूपचलनादि तन्मयी तत्प्रचुरा बालनिर्मितमृत्सेना ॥
113855 ४७ ॥
113856
113857 द्रष्टृदृश्यमयी सत्ता चिन्मात्रैक्यमयी तथा ।
113858 इदमैक्यमिदं द्वित्वमहं नाहमितीति च ॥ ४८ ॥
113859
113860 क इव भ्रमसंमोहः कथं कस्य कुतः क्व वा ।
113861 स्वमनन्तमनायासमुपशान्तास्मि संस्थिता ॥ ४९ ॥
113862
113863 किंवृत्तचतुष्टयं प्रकारभोक्तृनिमित्ताधिकरणसंभावनाप्रतिषेधार्थम् ।
113864 स्वं पारमार्थिकं रूपं प्राप्येति शेषः ॥ ४९ ॥
113865
113866 निर्वाणपरिनिर्वाणा गतमासे गतज्वरम् ।
113867 अचेतनं चेतनं वा योऽयमाभाति चेतति ॥ ५० ॥
113868
113869 निर्वाणे मोक्षसुखे परितो निर्वाणा निर्वृता । गतभवज्वरं गतं
113870 कण्ठचामीकरवत्प्राप्तं स्वरूपमेवाहमासे । यदचेतनं चेतनं वा आभाति ।
113871 योऽयं तद्भोक्ता चेतति तदुभयं भासमानात्माभिन्नं यद्ब्रह्म तद्रूपं ख
113872 चिदाकाशमेवेति परेणान्वयः ॥ ५० ॥
113873
113874 भासमानात्म तद्रूपं खं महाचिति संस्थितम् ।
113875 नेदं नाहं न चान्यच्च न भावाभावसंभवः ।
113876 शान्तं सर्वं निरालम्बं केवलं संस्थितं परम् ॥ ५१ ॥
113877
113878 किं इदंताहंतान्यत्तादिजगत्स्वभावमत्यक्त्वैव ब्रह्म नेत्याह-नेदमिति ॥ ५१ ॥
113879
113880 इत्थंविचारणपरा परमप्रबोधाद्बुद्ध्वा यथास्थितमिदं परमात्मतत्त्वम्

113881 ।
113882 संशान्तरागभयमोहतमोविलासा शान्ता बभूव शरदम्बरलेखिकेव ॥ ५२ ॥
113883
113884 उक्तमेव संक्षिप्योपसंहरति-इत्थमिति ।
113885 परमप्रबोधादात्यन्तिकमोहनिद्रापगमात् संशान्ता रागादयस्तमोविलासा
113886 अवस्थात्रयस्वप्ना यस्याः ॥ ५२ ॥
113887
113888 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० निर्वाणप्रकरणे पूर्वार्धे
113889 चूडालाप्रबोधो नामाष्टसप्ततितमः सर्गः ॥ ७८ ॥
113890
113891 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
113892 चूडालाप्रबोधो नामाष्टसप्ततितमः सर्गः ॥ ७८ ॥
113893
113894 एकोनाशीतितमः सर्गः ७९
113895
113896 श्रीवसिष्ठ उवाच ।
113897
113898 दिनानुदिनमित्येषा स्वात्मारामतया तया ।
113899 नित्यमन्तर्मुखतया बभूव प्रकृतिस्थिता ॥ १ ॥
113900
113901 अपूर्वश्रीमतीं दृष्ट्वा पृष्टया धरणीभृता ।
113902 चूडालया स्वशोभाया हेतुर्बोधोऽत्र वर्ण्यते ॥
113903
113904 एवं विचारेणोत्पन्नस्य
113905 तत्त्वज्ञानस्याभ्यासाद्दिनक्रमेणोत्तरोत्तरभूमिकाप्रतिष्ठामाह##-
113906 रूपं तस्मिन् स्थिता प्रतिष्ठिता ॥ १ ॥
113907
113908 नीरागा निरुपासङ्गा निर्द्वन्द्वा निःसमीहिता ।
113909 न जहाति न चादत्ते प्रकृताचारचारिणी ॥ २ ॥
113910
113911 तस्यास्तत्प्रतिष्ठालक्षणान्याह-नीरागेत्यादिना ॥ २ ॥
113912
113913 परितीर्णभवाम्भोधिः शान्तसंदेहजालिका ।
113914 परमात्ममहालाभपरिपूर्णान्तरात्मना ॥ ३ ॥
113915
113916 परिपूर्णो देहादान्तरान्मनसोऽप्यान्तरः प्रत्यगात्मा यस्याः ॥ ३ ॥
113917
113918 विश्रान्ता सुचिरं श्रान्ता घनलब्धपदान्तरे ।
113919 सर्वोपमातीततया जगामाव्यपदेश्यताम् ॥ ४ ॥
113920
113921 सुचिरं प्राक्संसारश्रान्ता तदा निरतिशयानन्दघने ज्ञानलब्धे पदान्तरे
113922 परमपदे विश्रान्ता ॥ ४ ॥
113923
113924 इति सा भामिनी तस्य चूडाला वरवर्णिनी ।
113925 स्वल्पेनैव हि कालेन ययौ विदितवेद्यताम् ॥ ५ ॥
113926
113927 यथायमागतः कश्चिज्जागतः स्पन्दविभ्रमः ।
113928 तथा विलीयते सर्वं तत्त्वज्ञानवति स्वयम् ॥ ६ ॥
113929
113930 कथमल्पकालिकेन बोधेनानादेर्महत्तमस्य च भ्रमस्य निवृत्तिस्तत्राह-यथेति ।
113931 कश्चिदनिर्वचनीयस्वरूपः स्पन्दविभ्रमः अविदुषि अकस्मादेवागतस्तथा
113932 तत्त्वज्ञानवति सर्वं निःशेषमकस्मादेव विलीयत इत्यर्थः । दीर्घपाठे यथा

113933 विलीयते तथा तत्त्वज्ञानवती बभूवेति कथंचिद्व्याख्येयम् ॥ ६ ॥
113934
113935 अदृष्टसकले शान्ते पदे विश्रान्तिमेत्य सा ।
113936 रराज शरदच्छाभ्रमालेव गतसंभ्रमा ॥ ७ ॥
113937
113938 न दृष्टं सकलद्वैतं यत्र तथाविधे पदे ॥ ७ ॥
113939
113940 अनाकुला समालोकमसंबन्धात्मनात्मनि ।
113941 जरद्गवीव शैलाग्रं सतृणं प्राप्य संस्थिता ॥ ८ ॥
113942
113943 यथा जरद्गवी वृद्धा गौर्दुरारोहतमं सतृणोदकं [मूलस्थं
113944 तृणपदमुदकस्याप्युपलक्षणमित्यर्थः ।] समालोकं
113945 तुल्यातपचन्द्रिकोपभोगशैलाग्रं दैवात्प्राप्य अनाकुला संस्थिता भवति तद्वत्सापि
113946 समालोकं जाग्रदादिसर्वावस्थास्वेकरूपप्रकाशं प्रत्यगात्मानं
113947 जाग्रदाद्यसंबन्धात्मना स्वभावेन प्राप्य तस्मिन्नेवात्मन्यनाकुला
113948 संस्थितेत्यर्थः ॥ ८ ॥
113949
113950 स्वविवेकघनाभ्यासवशादात्मोदयेन सा ।
113951 शुशुभे शोभना पुष्पलतेवाभिनवोद्गता ॥ ९ ॥
113952
113953 आत्मनस्तत्त्वदर्शनप्रयुक्तेनोदयेन पूर्णानन्दस्वरूपाविर्भावेण ॥ ९ ॥
113954
113955 अथ तामनवद्याङ्गीं कदाचित्स शिखिध्वजः ।
113956 अपूर्वशोभामालोक्य स्मयमान उवाच ह ॥ १० ॥
113957
113958 स्मयमानो विस्मयस्मेरास्यः ॥ १० ॥
113959
113960 भूयो यौवनयुक्तेव मण्डितेव पुनः पुनः ।
113961 अधिकं राजसे तन्वि जगद्राजवती यथा ॥ ११ ॥
113962
113963 जगत् जगती । वर्तमाने पृषन्महद्बृहज्जगच्छतृवच्च इति शतृवद्भावातिदेशात्
113964 उगितश्च इति स्त्रियां ङीप् छान्दसत्वान्न कृतः । राजवती राजवन्ती पूर्णचन्द्रवती वा
113965 यथा राजते तद्वद्राजसे ॥ ११ ॥
113966
113967 प्रपीतामृतसारेव लब्धा लभ्यपदेव च ।
113968 आनन्दापूरपूर्णेव राजसे नितरां प्रिये ॥ १२ ॥
113969
113970 उपशान्तं च कान्तं च दधाना सुन्दरं वपुः ।
113971 अभिभूयेन्दुमायासि श्रियं कामपि कामिनि ॥ १३ ॥
113972
113973 अभोगकृपणं शान्तमूर्जितं समतां गतम् ।
113974 गम्भीरं च प्रशान्तं च चेतः पश्यामि ते प्रिये ॥ १४ ॥
113975
113976 ऊर्जितं विवेकोर्जितम् । शान्तं शमादिगुणवत् । प्रशान्तमुपरतचापलम् ॥ १४ ॥
113977
113978 तृणीकृत्य त्रिभुवनं पीताखिलजगद्रसम् ।
113979 अनन्तोड्डामरं सौम्यं मनः पश्यामि ते प्रिये ॥ १५ ॥
113980
113981 न केनचिन्महाभागे विभवानन्दवस्तुना ।
113982 चेतस्तव तुलामेति मरुक्षीराब्धिसुन्दरम् ॥ १६ ॥
113983
113984 मरुरिव निर्जलजाड्यतया क्षीराब्धिरिव पूर्णतया च सुन्दरम् ॥ १६ ॥

113985
113986 तैरेव बालकदलीमृणालाङ्कुरकोमलैः ।
113987 अङ्गैः स्थितिमनुप्राप्तैर्वृद्धिं यातेव लक्ष्यसे ॥ १७ ॥
113988
113989 स्थितिमचापल्यमुपायातैस्तैः प्राक्तनैरेवाङ्गैरवयवैस्तेजोतिशयेन वृद्धिं
113990 यातेव ॥ १७ ॥
113991
113992 तथा तेनैव तेनैव संनिवेशेन संस्थिता ।
113993 अन्यतामुपयातासि लतेव ऋतुपर्यये ॥ १८ ॥
113994
113995 ऋतुपर्यये शिशिरात्यये ॥ १८ ॥
113996
113997 किं त्वया पीतममृतं प्राप्तं साम्राज्यमेव वा ।
113998 अमृत्युमेव संप्राप्ता प्रयोगायोगयुक्तितः ॥ १९ ॥
113999
114000 प्रयोगो रसायनादिप्रयोगः आयोगो मन्त्रादिसिद्धिः युक्तयो
114001 राजयोगहटयोगोपायास्ताभ्य इति ततः ॥ १९ ॥
114002
114003 राज्याच्चिन्तामणेर्वापि त्रैलोक्याद्वा त्वयाधिकम् ।
114004 अप्राप्तं किमनुप्राप्तं नीलोत्पलविलोचने ॥ २० ॥
114005
114006 चूडालोवाच ।
114007
114008 नाकिंचित्किंचिदाकारमिदं त्यक्त्वाहमागता ।
114009 नकिंचित्किंचिदाकारं तेनास्मि श्रीमती स्थिता ॥ २१ ॥
114010
114011 एवं राज्ञा पृष्टा चूडाला स्वशोभातिशयनिमित्तं परिच्छिन्नदेहात्मतात्यागः
114012 पूर्णाद्वितीयब्रह्मात्मलाभश्चेति गूढोक्त्या प्रथममुत्तरमाह-नाकिंचिदिति ।
114013 अहमिदं सर्व मूढजनप्रसिद्धमिदं शरीरात्मत्वं त्यक्त्वा न विद्यन्ते अकिंचित्
114014 अशेषाः किंचिन्नामरूपाकारा यस्मिंस्तथाविधं ब्रह्मात्मत्वं तत्त्वबोधेन
114015 आगता न तु मन्त्ररसायनादिसाधनमात्रेण । किंचित्किंचिदल्पं तुच्छं च
114016 तत्तत्सिद्ध्याकारं तेनेत्यर्थः । अथवा अहं किंचित्किंचिदाकारं
114017 जाग्रत्स्वप्नावस्थाद्वयं नागता नाप्यकिंचित्किंचिदाका सुषुप्तरूपं किंतु
114018 इदमवस्थात्रयमपि त्यक्त्वा तुरीयस्वभावमागता तेन हेतुनेत्यर्थः । अथवा अहं
114019 कर्मोपासनादिना किंचित्किंचिदाकारं इन्द्रचन्द्रादिहिरण्यगर्भान्तं पदं
114020 भावनाकृततादात्म्यसिद्ध्या नागता । नाप्यकिंचित्किंचिदाकारमव्यक्तरूपं
114021 किंत्विदं सर्वं त्यक्त्वा स्वस्वरूपा एवावस्थिता तेन हेतुनेत्यर्थः । अथवा अहमिदं
114022 लिङ्गदेहपरिच्छिन्नं जीवाकारं त्यक्त्वा यन्नाकिंचित्किंचित्सर्वात्मक आकारो यस्य
114023 तथाविधं परमार्थतो नकिंचित्किंचिदाकारं च ब्रह्म तदागता प्राप्तवती तेन
114024 हेतुनेत्यर्थः ॥ २१ ॥
114025
114026 इदं सर्वं परित्यज्य सर्वमन्यन्मयाश्रितम् ।
114027 यत्तत्सत्यमसत्यं च तेनास्मि श्रीमती स्थिता ॥ २२ ॥
114028
114029 उक्तमेवार्थं भङ्ग्यन्तरेण पुनराह-इदमिति । इदं परिच्छिन्नं सर्वं
114030 परित्यज्य सर्वमपरिच्छिन्नमन्यन्मया आश्रितम् । किं तत् । यत्तत् सत्यमबाधितं न
114031 विद्यते सन्मूर्तं त्यदमूर्तं [अन्यदमूर्तं च इति पाठः ।] च प्रपञ्चरूपं
114032 यत्रेत्यसत्यं च तेनेति प्राग्वत् ॥ २२ ॥
114033
114034 यत्किंचिद्यन्न किंचिच्च तज्जानामि यथास्थितम् ।
114035 यथोदयं यथानाशं तेनास्मि श्रीमती स्थिता ॥ २३ ॥
114036

114037 नकिंचित्किंचिदाकारमिति स्वोक्तिं भङ्ग्यन्तरेण वर्णयति-यदिति | यद्वस्तु उदयः
114038 सर्गस्तमनतिक्रम्येति यथोदयन् सृष्टिदृशा दृश्यमानं किंचित्परिच्छिन्नं
114039 यदेव च यथानाशं प्रलयदृशा दृश्यमानं नकिंचिच्च भवति तद्यथा येन
114040 कूटस्थभूमानन्दस्वभावेन स्थितं जानामीत्यर्थः || २३ ||
114041
114042 भोगैरभुक्तैस्तुष्यामि भुक्तैरिव सुदूरगैः |
114043 न हृष्यामि न कुप्यामि तेनास्मि श्रीमती स्थिता || २४ ||
114044
114045 एकैवाकाशसंकाशे केवले हृदये रमे |
114046 न रमे राजलीलासु तेनास्मि श्रीमती स्थिता || २५ ||
114047
114048 हृदयपदेन हार्दं ब्रह्म लक्ष्यते || २५ ||
114049
114050 आत्मन्येव हि तिष्ठामि ह्यासनोद्यानसद्मसु |
114051 न भोगेषु न लज्जासु तेनाहं श्रीमती स्थिता || २६ ||
114052
114053 आसनोद्यानादिषु देहे स्थितेऽप्यहं पूर्णात्मन्येव तिष्ठामि न तु
114054 भूषणसन्मानादिशारीरमानसभोगेषु तदलाभप्रयुक्तलज्जासु वा || २६ ||
114055
114056 जगतां प्रभुरेवास्मि नकिंचिन्मात्ररूपिणी |
114057 इत्यात्मन्येव तुष्यामि तेनाहं श्रीमती स्थिता || २७ ||
114058
114059 इदं चाहमिदं नाहं सत्या चाहं न चाप्यहम् |
114060 सर्वमस्मि न किंचिच्च तेनाहं श्रीमती स्थिता || २८ ||
114061
114062 इदं देहादि चात्तदुपभोग्यमधिष्ठानदृशा आरोपितदृशा तु नाहम् || २८ ||
114063
114064 न सुखं प्रार्थये नार्थं नानर्थं नेतरां स्थितिम् |
114065 यथाप्राप्तेन हृष्यामि तेनाहं श्रीमती स्थिता || २९ ||
114066
114067 नानर्थं जिहासामीति शेषः || २९ ||
114068
114069 तनुविद्वेषराजाभिः प्रज्ञाभिः शास्त्रदृष्टिभिः |
114070 रमे सह वयस्याभिस्तेनाहं श्रीमती स्थिता || ३० ||
114071
114072 वयस्याभिः सखीभूताभिः | तनुः कृशीभूतो विद्वेषो रागश्च
114073 याभिस्तथाविधाभिः स्वप्रज्ञाभिः शास्त्रदृष्टिभिश्च सह रमे | अथवा
114074 शास्त्रदृष्टिभिः करणैस्तनुरल्पीभूतो विद्वेषो रागश्च यासां
114075 तथाविधाभिर्वयस्याभिः सखीभिः सह रमे || ३० ||
114076
114077 पश्यामि यन्नयनरश्मिभिरिन्द्रियैर्वा चित्तेन चेह हि तदङ्ग नकिंचिदेव |
114078 पश्यामि तद्विरहितं तु नकिंचिदन्तः पश्यामि सम्यगिति नाथ चिरोदयास्मि || ३१ ||
114079
114080 अङ्ग हे नाथ इह जगति अहं नयनरश्मिभिरन्यैर्वा इन्द्रियैश्चित्तेन च यत्पश्यामि
114081 तन्नकिंचिदनृतमेव | तेनेन्द्रियमनोदृश्येन विरहितं तु नकिंचिन्निष्प्रपञ्चं
114082 वस्तु अन्तः पश्यामि | यतो हेतोरिति वर्णितरीत्या अन्तर्बहिश्च सम्यगबाधितरूपं
114083 पश्यामि | तेन हेतुना चिरं संततमुदिता परमाभ्युदयश्रीमती अस्मीत्यर्थः || ३१ ||
114084
114085 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मी० दे० मोक्षोपायेषु निर्वाणप्रकरणे पू०
114086 चू० चूडालात्मलाभो नामैकोनाशीतितमः सर्गः || ७९ ||
114087
114088 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे

114089 चूडालात्मलाभो नामैकोनाशीतितमः सर्गः ॥ ७९ ॥
114090 अशीतितमः सर्गः ८०
114091
114092 श्रीवसिष्ठ उवाच ।
114093
114094 एवमात्मनि विश्रान्तां वदन्तीं तां वराननाम् ।
114095 अबुद्ध्वा तद्गिरामर्थं विहस्योवाच भूपतिः ॥ १ ॥
114096
114097 अज्ञेन राज्ञा तद्वाक्यस्यासंबद्धत्ववर्णनम् ।
114098 खेचरत्वादिसिद्धीनां बीजं चात्र निरूप्यते ॥
114099
114100 एवं वर्णितप्रकारेण स्वशोभातिशये निमित्तानि वदन्तीम् ॥ १ ॥
114101
114102 शिखिध्वज उवाच ।
114103
114104 असंबद्धप्रलापासि बालासि वरवर्णिनि ।
114105 रमसे राजलीलाभी रमस्वावनिपात्मजे ॥ २ ॥
114106
114107 बाला अप्रौढबुद्धिरसि । परबोधानुकूलवाक्योच्चारणे अकुशलेति यावत् ॥ २ ॥
114108
114109 किंचित्यक्त्वा न किंचिद्यो गतो प्रत्यक्षसंस्थितम् ।
114110 त्यक्तप्रत्यक्षसद्रूपः स कथं किल शोभते ॥ ३ ॥
114111
114112 असंबद्धप्रलापतामेव नाकिंचित्किंचिदित्याद्युक्तेर्दर्शयति-किंचिदिति ।
114113 साकारस्यैव शोभा प्रसिद्धा । यस्त्वाकारसामान्यं त्यक्त्वा निराकारतां गतः स
114114 शून्यप्रायः कथं शोभेतेत्यर्थः ॥ ३ ॥
114115
114116 भोगैरभुक्तैस्तुष्टोऽहमिति भोगान्जहाति यः ।
114117 रुषेवासनशय्यादीन्स कथं किल शोभते ॥ ४ ॥
114118
114119 भोगैरभुक्तैस्तुष्यामीति यत्त्वयोक्तं तदप्यसंबद्धमित्याह-भोगैरिति । रुषा
114120 क्रोधेनेव ॥ ४ ॥
114121
114122 भोगाभोगे परित्यज्य खे शून्ये रमते तु यः ।
114123 एक एवाखिलं त्यक्त्वा स कथं किल शोभते ॥ ५ ॥
114124
114125 एकैवाकाशसंकाशे केवले हृदये रमे इति यत्त्वयोक्तं तदप्यसंगतमित्याह##-
114126 मित्रभृत्यादीनामाभोजनमाभोगश्चेत्यनयोः समाहारं परित्यज्य तत्साधनं
114127 वित्ताद्यखिलं च त्यक्त्वा य एक एव शून्ये खे पिशाचवद्रमते स किल शोभते इति
114128 कथं संगच्छतामित्यर्थः ॥ ५ ॥
114129
114130 वसनाशनशय्यादीन्सर्वान्संत्यज्य धीरधीः ।
114131 यस्तिष्ठत्यात्मनैवैकः स कथं किल शोभते ॥ ६ ॥
114132
114133 धीरधीः अतिक्रोधादिव धैर्यमात्रबलेन शीतोष्णक्षुत्तृषादिदुःखानि सहमान
114134 इत्यर्थः ॥ ६ ॥
114135
114136 नाहं देहोऽन्यथा चाहं नकिंचित्सर्वमेव च ।
114137 एवं प्रलापो यस्यास्ति स कथं किल शोभते ॥ ७ ॥
114138
114139 इदं चाहमिदं नाहमिति यदुक्तं तदप्यसंबद्धमित्याह-नाहमिति ॥ ७ ॥
114140

114141 यत्पश्यामि न पश्यामि तत्पश्याम्यन्यदेव यत् |
114142 प्रलाप इत्यसंन्यस्य स कथं किल शोभते || ८ ||
114143
114144 पश्यामि यन्नयनरश्मिभिरिन्द्रियैर्वेत्यन्ते यदुक्तं तत्तु सुतरामसंगतमिति नैते
114145 शोभाहेतव इत्युपसंहरति-यदिति || ८ ||
114146
114147 तस्माद्बालासि मुग्धासि चपलासि विलासिनि |
114148 नानालापविलासेन क्रीडामि क्रीड सुन्दरि || ९ ||
114149
114150 प्रविहस्याट्टहासेन शिखिध्वज इति प्रियाम् |
114151 मध्याह्ने स्नातुमुत्थाय निर्जगामाङ्गनागृहात् || १० ||
114152
114153 कष्टं नात्मनि विश्रान्तो मद्वचांसि न बुद्धवान् |
114154 राजेति खिन्ना चूडाला स्वव्यापारपराभवत् || ११ ||
114155
114156 कष्टमिति | न चेदिहावेदीन्महती विनष्टिः इत्यादिश्रुतेरिति भावः || ११ ||
114157
114158 तदा तथाङ्ग तत्राथ तादृगाशययोस्तयोः |
114159 ताभिः पार्थिवलीलाभिः कालो बहुतिथो ययौ || १२ ||
114160
114161 अङ्गेति रामसंबोधने || १२ ||
114162
114163 एकदा नित्यतृप्ताया निरिच्छाया अपि स्वयम् |
114164 चूडालाया बभूवेच्छा लीलया स्वगमागमे || १३ ||
114165
114166 खे गमागमो देववत्संचारस्तद्विषये इच्छा बभूव |
114167 तादृशप्रारब्धशेषबलादिति भावः || १३ ||
114168
114169 खगमागमसिद्ध्यर्थमथ सा नृपकन्यका |
114170 सर्वभोगाननादृत्य समागम्य च निर्जनम् || १४ ||
114171
114172 एकैवैकान्तनिरता स्वासनावस्थिताङ्गिका |
114173 ऊर्ध्वगप्राणपवनचिराभ्यासं चकार ह || १५ ||
114174
114175 एकैवेति | अर्थाद्राज्ञः शत्रुजयाय द्वित्रिहायनं प्रवासकाले इति गम्यते | अन्यथा
114176 तत्पराधीनायास्तस्या कान्तनिरतत्वाद्ययोगात् | ऊर्ध्वगस्य प्राणपवनस्य चिरं
114177 खेचरसिद्ध्यनुकूलं भ्रूमध्यादिदेशे निरोधाभ्यासम् || १५ ||
114178
114179 श्रीराम उवाच |
114180
114181 यदिदं दृश्यते किंचिज्जगत्स्थावरजंगमम् |
114182 स्पन्दच्युतं क्रियानाम्नः कथमित्यनुभूयते || १६ ||
114183
114184 खेचरसिद्धिप्रयोजकक्रियाप्रसंगेन रामः क्रियासामान्ये निमित्तं
114185 जिज्ञासुराक्षिपति-यदिदमिति | यदिदं स्थावरं जंगमं च जगत्तत्सर्वं
114186 स्पन्दच्युतं क्रियया निष्पादितं दृश्यते | विना कर्त्रादिकारकस्पन्दं
114187 कस्याप्युत्पत्तेरदर्शनात् तत्रैवं सति क्रियानाम्नः स्पन्दस्य कथं निष्पत्तिः | किं
114188 सक्रियादुत कूटस्थात् | आद्ये आत्माश्रयोऽनवस्था वा | द्वितीये व्याघातः अविरामः
114189 फलानवस्था चेति कथं क्रियानाम्नो वस्तुन उत्पत्तिरनुभूयते अनुभवपथमारोहति
114190 तद्वदेत्यर्थः || १६ ||
114191
114192 कस्य स्पन्दविलासस्य घनाभ्यासस्य मे वद |

114193 ब्रह्मन्खगमनाद्येतत्फलं यत्नैकशालिनः ॥ १७ ॥
114194
114195 एवमाक्षिप्य प्रस्तुतं पृच्छति-कस्येति । एतत्खगमनादिसिद्धिजातं कस्य
114196 स्पन्दविलासस्य फलं तदपि वदेत्यर्थः ॥ १७ ॥
114197
114198 आत्मज्ञो वाप्यनात्मज्ञः सिद्ध्यर्थं लीलयाथवा ।
114199 कथं संसाधयत्येतद्यथा तद्वद मे प्रभो ॥ १८ ॥
114200
114201 अनात्मज्ञः सिद्ध्यर्थं आत्मज्ञो लीलया वा एतत्सिद्धिजातं कथं केन क्रमेण
114202 संसाधयति तदपि वदेत्यर्थः ॥ १८ ॥
114203
114204 श्रीवसिष्ठ उवाच ।
114205
114206 त्रिविधं संभवत्यङ्ग साध्यं वस्त्विह सर्वतः ।
114207 उपादेयं च हेयं च तथोपेक्ष्यं च राघव ॥ १९ ॥
114208
114209 भवेदयमात्माश्रयानवस्थादिको दोषो यदि क्रियास्वरूपमात्रसिद्धये कारकापेक्षा
114210 स्यात् । न तु तथा किंतु क्रियासाध्यस्य फलस्य । फलनिष्पत्तये हि प्रवृत्तानि कारकाणि
114211 नान्तरीयकतया क्रियामवलम्बन्ते । तया हि फलस्य साध्यता कारकाणां साधनता च
114212 व्यपदेष्टुं शक्यते । तथा च साध्यसाधनोभयविलक्षणा क्रिया न
114213 साध्यापेक्षितसाधनेभ्यः साधनान्तरमपेक्षत इति तस्यां सक्रियं कूटस्थं वा
114214 कारणमिति विकल्पो निरवकाश एवेत्याशयेन वसिष्ठ उत्तरप्रश्नसमाधानानुकूलं
114215 गौणमुख्यसाधारणं क्रियासाध्यं विभज्य दर्शयति-त्रिविधमिति ।
114216 उपादानबुद्धिविषयीभूतं वस्तु उपादेयं प्रवृत्तिविषयः । हानबुद्धिवेद्यं
114217 हेयं निवृत्तिविषयः । उपेक्षाबुद्धिगम्यमुपेक्ष्यं तच्चौदासीन्येऽपि
114218 क्रियोपचारादनेनोपेक्षयायमनर्थः कृत इति लोके व्यवहारदर्शनाद्गौणं
114219 साध्यम् ॥ १९ ॥
114220
114221 आत्मभूतं प्रयत्नेन उपादेयं च साध्यते ।
114222 हेयं संत्यज्यते ज्ञात्वा उपेक्ष्यं मध्यमेतयोः ॥ २० ॥
114223
114224 तेषु फलवैलक्षण्यंन् दर्शयति-आत्मभूतमिति । आत्मनः स्वस्य भूतमनुकूलम्
114225 । एतयोर्हेयोपादेययोर्मध्यमर्न्तरालिकम् ॥ २० ॥
114226
114227 यद्यदाह्लादनकरमादेयंन् तच्च सन्मते ।
114228 तद्विरुद्धमनादेयमुपेक्ष्यंन् मध्यमं विदुः ॥ २१ ॥
114229
114230 आह्लादनकरं साक्षात्परम्परया वा सुखानुकूलम् । दुःखनिवारणसाधनस्यापि
114231 सुखानुकूलत्वादेव तत्साधनोपादानसिद्धेरिति भावः । तद्विरुद्धं सुखविघाति ।
114232 दुःखस्यापि स्वास्थ्यसुखविघातित्वादेव द्वेष्यत्वादिति भावः ॥ २१ ॥
114233
114234 सन्मतेर्विदुषो ज्ञस्य सर्वमात्ममयं यदा ।
114235 त्रय एते तदा पक्षाः संभवन्ति न केचन ॥ २२ ॥
114236
114237 त्रय एते साध्यभेदा अज्ञानामेवेत्याह-सन्मतेरिति ॥ २२ ॥
114238
114239 केवलं सर्वमेवेदं कदाचिल्लीलया तया ।
114240 उपेक्षापक्षनिक्षिप्तमालोकयति वा न वा ॥ २३ ॥
114241
114242 विदुषस्तृतीयकल्पाभ्युपगमेऽपि न कश्चिद्दोष इत्याशयेनाह-केवलमिति ॥ २३ ॥
114243
114244 ज्ञस्योपेक्षात्मकं नाम मूढस्यादेयतां गतम् ।

114245 हेयं स्फारविरागस्य शृणु सिद्धिक्रमः कथम् ॥ २४ ॥
114246

114247 एकमेव वस्तु एकस्यैव पुरुषस्य बोधरागवैराग्यावस्थाभेदेन
114248 [मूढविरागावस्थेति पाठः ।] त्रेधा संपद्यत इत्याशयेनाह-ज्ञस्येति
114249 । एवं सिद्ध्यर्थं लीलयाथवा इति प्रश्नांशयोरुपपत्तिमुक्त्वा कथं
114250 संसाधयत्येतदित्यंशसमाधानं श्रावयति-शृण्वित्यादिना ॥ २४ ॥
114251

114252 देशकालक्रियाद्रव्यसाधनाः सर्वसिद्धयः ।
114253 जीवमाह्लादयन्तीह वसन्त इव भूतलम् ॥ २५ ॥
114254

114255 तत्र सिद्धितारतम्ये चिराचिरयत्नापेक्षायां च निमित्तान्याह-देशेति ॥ २५ ॥
114256

114257 मध्ये चतुर्णामेवैषां क्रियाप्राधान्यकल्पना ।
114258 सिद्ध्यादिसाधने साधो तन्मयास्ते यतः क्रमाः ॥ २६ ॥
114259

114260 एषां देशादीनां चतुर्णां मध्ये श्रीशैलाद्युत्तमदेशादिचतुष्टयमेलने
114261 शीघ्रं सिद्धिलाभाद्योगमन्त्रजपादिक्रियाया इतरदेशाद्यनुष्ठितक्रियापेक्षया
114262 प्राधान्यस्योत्कर्षस्य कल्पना भवति । फलोत्कर्षोऽपि तदनुसार्येवेत्याह##-
114263 तन्मयास्तादृशक्रियोत्कर्षानुसारिण इत्यर्थः ॥ २६ ॥
114264

114265 गुटिकाञ्जनखड्गादिक्रियाक्रमनिरूपणम् ।
114266 तत्रासतां च दोषोऽत्र विस्तारः प्रकृतार्थहा ॥ २७ ॥
114267

114268 अस्त्वेवं किं ततस्तत्राह-गुटिकेति । तत्र खगमनादिसाधनानि
114269 सिद्धगुटिकासिद्धाञ्जनसिद्धखड्गसिद्धपादुकादीन्यपि
114270 उड्डामरतन्त्रयोगिनीकल्पादिविस्तृतबहुग्रन्थप्रसिद्धानि सन्ति । कथं
114271 संसाधयन्त्येतद्यथावद्वद मे प्रभो इति त्वदीयप्रश्नस्य तत्क्रियाक्रमनिरूपणं
114272 कर्तव्यमिति चेदभिप्रायस्तर्ह्यविस्तृतोक्त्या तदसंभवात्तद्विस्तारः कार्यः । तेन तत्र
114273 तासु सिद्धिषु विषये असतामजिज्ञासूनामतत्त्वविदां च त्वदतिरिक्तश्रोतॄणां
114274 दैवादभिलाषोदये तत्रैव प्रवृत्त्या महान्दोषः स्यात्तवापि स विस्तारः
114275 प्रकृतस्यात्मतत्त्वश्रवणार्थस्य विघ्नरूपत्वाद्विघात इति न
114276 तन्निरूपणमत्रोचितमित्यर्थः ॥ २७ ॥
114277

114278 रत्नौषधितपोमन्त्रक्रियाक्रमनिरूपणम् ।
114279 आस्तामेव किलैषोऽपि विस्तारः प्रकृतार्थहा ॥ २८ ॥
114280

114281 एष न्यायो मणिमन्त्रादिसाध्यसिद्धिक्रमनिरूपणे
114282 श्रीशैलादिसिद्धदेशनिवाससाध्यसिद्धिक्रमनिरूपणे च योज्य इत्याह-रत्नेति
114283 द्वाभ्याम् ॥ २८ ॥
114284

114285 श्रीशैले सिद्धदेशे च मेर्वादौ वा निवासतः ।
114286 सिद्धिरित्यपि विस्तारः कृतार्थ प्रकृतार्थहा ॥ २९ ॥
114287

114288 हे कृतार्थेति रामसंबोधनं तासां सिद्धीनां त्वादृशदृष्ट्या तुच्छतेति
114289 द्योतनार्थम् ॥ २९ ॥
114290

114291 तस्माच्छिखिध्वजकथाप्रसङ्गपतितामिमाम् ।
114292 प्राणादिपवनाभ्यासक्रियां सिद्धिफलां शृणु ॥ ३० ॥
114293

114294 तर्हि मत्प्रश्नो व्यर्थः संपन्न इति रामस्य विषादो मा भूदिति
114295 प्रस्तुतज्ञानदार्ढ्योपयोग्यानुषङ्गिकखगमादिसिद्धिसाधनं
114296 वर्ण्यमानकथासंबद्धमविस्तारं प्राणायामक्रमं श्रावयति-तस्मादिति ॥

३० ॥

अन्तस्था ह्यखिलास्त्यक्त्वा साध्यार्थेतरवासनाः ।
गुदादिद्वारसंकोचान्स्थानकादिक्रियाक्रमैः ॥ ३१ ॥

तत्रादौ यमनियमप्रतिष्ठे तद्बीजप्रदर्शनेन संक्षिप्याह-अन्तस्था इति
साध्यार्था इतराः साधनार्थाश्च वासनास्त्यक्त्वा स्थानकानि सिद्धाद्यासनानि
आदिपदात्समकायशिरोग्रीवतानिश्चलतानासाग्रसंप्रेक्षणमित्यादि##-

भोजनासनशुद्ध्या च साधुशास्त्रार्थभावनात् ।
स्वाचारात्सुजनासङ्गात्सर्वत्यागात्सुखासनात् ॥ ३२ ॥

तमेव क्रियाक्रममवयुत्या प्रपञ्चयति-भोजनेति । साधु
सम्यग्योगशास्त्रार्थस्य भावनात्परिशीलनात् ॥ ३२ ॥

प्राणायामघनाभ्यासाद्राम कालेन केनचित् ।
कोपलोभादिसंत्यागाद्भोगत्यागाच्च सुव्रत ॥ ३३ ॥

त्यागादाननिरोधेषु भृशं यान्ति विधेयताम् ।
प्राणाः प्रभुत्वात्तज्ज्ञस्य पुंसो भृत्या इवाखिलाः ॥ ३४ ॥

त्यागे रेचने आदाने पूरके निरोधे कुम्भके च भृशमभ्यस्तेषु तज्ज्ञस्य योगिनः ।
प्रभुत्वात्प्राणस्वामित्वसंपत्तेर्लौकिककस्य पुंसः प्रभोर्भृत्या इव अखिलाः प्राणा
विधेयतां स्वाधीनतां यान्तीत्यर्थः ॥ ३४ ॥

राज्यादिमोक्षपर्यन्ताः समस्ता एव संपदः ।
देहानिलविधेयत्वात्साध्याः सर्वस्य राघव ॥ ३५ ॥

प्राणानां स्वाधीनत्वे तत्संबद्धसिद्धीनामपि स्वाधीनता सिद्ध्यतीत्याह-राज्येति
। सर्वस्याधिकारिणः ॥ ३५ ॥

परिमण्डलिताकारा मर्मस्थानं समाश्रिता ।
आन्त्रवेष्टनिका नाम नाडी नाडीशताश्रिता ॥ ३६ ॥

इदानीं सर्वसिद्धीनां देहानिलविधेयत्वमुक्तमुपपादयितुं
सर्वदेहप्रसृतद्वासप्ततिसहस्रशाखप्रधाननाडीशताश्रितां
मूलाधारादारभ्य आब्रह्मरन्ध्रं सप्तसु चक्रेष्वनुप्रविश्य निर्गतां मूलाधारे
सार्धत्रिवलयवेष्टनान्तःसुप्तकुण्डलिनीशक्तिगर्भां सुषुम्नानाडीं वर्णयति##-
परिवेष्टितत्वात्परिमण्डलिताकारा अत एवान्त्राणामपि नाडीभिर्वेष्टनादान्त्रवेष्टनिका
नाम ॥ ३६ ॥

वीणाग्रावर्तसदृशी सलिलावर्तसंनिभा ।
लिप्यार्धोंकारसंस्थाना कुण्डलावर्तसंस्थिता ॥ ३७ ॥

तां मूलाधारे स्वान्तर्गतकुण्डलिनीसंस्थानानुकूल्येन वर्णयति-वीणेति ।
वीणादन्डस्याग्रे मूलभागे प्रसिद्धो रेखात्मकस्तन्त्रीमूलपरिवर्तनरूपः
सलिलपरिवर्तनरूपो वा य आवर्तस्तत्सदृशी । लिप्या लेखनेन प्रदर्शने तु
ओंकारस्यार्धमर्धोंकारस्तस्य संस्थानमिव संस्थानं यस्याः । द्रविडाक्षरे
पूर्वार्धमिव नागराक्षरे उत्तरार्धमिव वा तत्संस्थानं लेख्यमित्यर्थः । अर्ध
नपुंसकम् इत्येकदेशिना समासः । ओमाङोश्च इति पररूपम् ॥ ३७ ॥

देवासुरमनुष्येषु मृगनक्रखगादिषु ।

कीटादिष्वब्जजान्तेषु सर्वेषु प्राणिषूदिता ॥ ३८ ॥

इयं च न मनुष्येष्वेव किंतु सर्वप्राणिशरीरेष्वित्याह-देवेति ॥ ३८ ॥

शीतार्तसुप्तभोगीन्द्रभोगवद्बद्धमण्डला ।
सिता कल्पाग्निविगलदिन्दुवद्बद्धकुण्डली ॥ ३९ ॥

शीतेनार्तः शीतार्तिनिवारणाय दृढबद्धमण्डल इति यावत् । तथाविधस्य सुप्तस्य
भोगीन्द्रस्य भोगः कायस्तद्वद्बद्धं मण्डलं यया । सिता शुभ्रा । कल्पाग्निना
विगलता अन्तर्वलयाकाररेखास्फुटितेनेन्दुना तुल्यं बद्धा कुण्डलीवलयाकृतिर्यया ।
अथवा कल्पते जरणसमर्थो भवतीति कल्पोऽग्निर्जाठराग्निस्तेन विगलन् यो मूर्ध्नि
योगशास्त्रप्रसिद्धश्चन्द्रः स एव विलीय मूलाधारे प्रसृतो घनीभूय तत्र
बद्धकुण्डलाकृतिस्तद्वत्स्थितेत्युत्प्रेक्षा ॥ ३९ ॥

ऊरोर्भ्रूमध्यरन्ध्राणि स्पृशन्ती वृत्तिचञ्चला ।
अनारतं च सस्पन्दा पवमानेन तिष्ठति ॥ ४० ॥

ऊरुपदेन ऊरुमूलसंधिर्गुदं लक्षणयोच्यते । तत आरभ्य भ्रूमध्यपर्यन्तं
यानि रन्ध्राणि तानि स्पृशन्ती तेष्वनुस्यूता मनोवृत्तिभिरन्तश्चञ्चला बहिश्च
पवमानेन प्राणादिना सस्पन्दा ॥ ४० ॥

तस्यास्त्वभ्यन्तरे तस्मिन्कदलीकोशकोमले ।
या परा शक्तिः स्फुरति वीणावेगलसद्गतिः ॥ ४१ ॥

तस्या मूलेऽन्तःसार्धत्रिवलयाकारां कुण्डलिनीसंज्ञां चिच्छक्तिं दर्शयति##-
पराख्या सर्वशब्दमूलभूता गतिः शब्दब्रह्मात्मिका स्फूर्तिः सैव
प्राणसङ्गान्नाभिहृदयकण्ठदेशेषूत्तरोत्तरं व्यक्ततरा पश्यन्ती मध्यमा
वैखरीत्यादिभेदान् भजते इति । तथाचोक्तं मन्त्रशास्त्रे चैतन्यं सर्वभूतानां
शब्दब्रह्मेति यद्विदुः । तत्प्राप्य कुण्डलीरूपं प्राणिनां देहमध्यगम् ।
वर्णात्मनाविर्भवति गद्यपद्यादिभेदतः इति । सांबेनाप्युक्तम् या सा
मित्रावरुणसदनादुच्चरन्ती त्रिषष्टिं वर्णानत्र प्रकटकरणैः
प्राणसङ्गात्प्रसूते । तां पश्यन्तीं प्रथममुदितां मध्यमां बुद्धिसंस्थां
वाचं वक्त्रे करणविशदां वैखरीं च प्रपद्ये ॥ इति ॥ ४१ ॥

सा चोक्ता कुण्डलीनाम्ना कुण्डलाकारवाहिनी ।
प्राणिनां परमा शक्तिः सर्वशक्तिजवप्रदा ॥ ४२ ॥

सर्वासां प्राणेन्द्रियबुद्ध्यादिशक्तीनामपि
सत्तास्फूर्तिप्रवृत्तिनिर्वाहकत्वाज्जवप्रदा ॥ ४२ ॥

अनिशं निःश्वसद्रूपा रुषितेव भुजंगमी ।
संस्थितोर्ध्वीकृतमुखी स्पन्दनाहेतुतां गता ॥ ४३ ॥

तत्र कथं प्राणशक्तिर्जवप्रदा तदाह-अनिशमिति । सैव
स्वमुखात्प्राणमूर्ध्वं क्षिपति अपानं चाध आकर्षतीत्यनिशं
निःश्वसद्रूपेत्यर्थः ॥ ४३ ॥

यदा प्राणानिलो याति हृदि कुण्डलिनीपदम् ।
तदा संविदुदेत्यन्तर्भूततन्मात्रबीजभूः ॥ ४४ ॥

कथं बुद्धिशक्तिजवप्रदा तदाह-यदेति । यदा हृदि स्थितः प्राणः कुण्डलिन्या
आकृष्टः सन् अपानवृत्त्या कुण्डलिनीपदं याति तदा

114401 भूततन्मात्राण्यपञ्चीकृतभूतान्येव बीजमुपादानं यस्य तथाविधे अन्तःकरणे
114402 भवतीति भूर्जीवसंवित्
114403 स्मृतिसंकल्पाध्यवसायाभिमानरागादिवृत्तिभेदैरन्तरुदेतीत्यर्थः ॥ ४४ ॥
114404
114405 यथा कुण्डलिनी देहे स्फुरत्यब्ज इवालिनी ।
114406 तथा संविदुदेत्यन्तर्मृदुस्पर्शवशोदया ॥ ४५ ॥
114407
114408 कथं चेन्द्रियशक्तिजवप्रदा तदाह-यथेति । एवं
114409 प्राणबुद्ध्योराहितज्ञानक्रियास्वशक्तिः कुण्डलिनी देहे मृदुः स्पर्शो
114410 विषयसंनिकर्षो येषां तेषां चक्षुरादीनां वशोदया सती देहे यथा यथा
114411 यादृशभोजकादृष्टसामग्रीवैचित्र्येण स्फुरति तथा तथा
114412 तत्तदिन्द्रियैरर्थविशेषस्फूर्तितत्फलभोगादिलक्षणा संविदुदेतीत्यर्थः ॥ ४५ ॥
114413
114414 स्पर्शनं मृदुनान्योन्यालिङ्गिका तत्र यन्त्रयोः ।
114415 यथा संविदुदेत्युच्चैस्तथा कुण्डलिनी जवात् ॥ ४६ ॥
114416
114417 कथं मृदुस्पर्शवशानुगा तदाह-स्पर्शनमिति । कुण्डलिनी जवात्तथा स्फुरति
114418 यथा मृदुना चक्षुरादिना विषयस्पर्शनं प्रथममुदेति । तथा च तत्र यन्त्रं
114419 कार्यकरणसंघातं युनक्तीति यन्त्रयुः प्रमाता तस्य वृत्तिद्वारा बहिर्निर्गतस्य
114420 बाह्यविषयेण सह अन्योन्यमालिङ्गनमन्योन्यालिङ्गिका । भावे ण्वुल् ।
114421 वृत्तिव्याप्तिप्रयुक्ता व्याप्तिरुदेति । तया च यथा विषयावरणभङ्गे उच्चैः स्फुटतरा
114422 संविद्घटादिप्रथा उदेति तथा तेन तेन प्रकारेणेत्यर्थः ॥ ४६ ॥
114423
114424 तस्यां समस्ताः संबद्धा नाड्यो हृदयकोशगाः ।
114425 उत्पद्यन्ते विलीयन्ते महार्णव इवापगाः ॥ ४७ ॥
114426
114427 तत्र मूलाधारस्थायाः कुण्डलिन्याश्चक्षुरादिप्रवर्तने नाड्यो
114428 द्वारमित्याशयेनाह-तस्यामिति । उत्पद्यन्ते प्रसार्यन्ते [प्रतीयन्ते इति पाठः ।
114429 ] । विलीयन्ते संकुचन्ति ॥ ४७ ॥
114430
114431 नित्यं पातोत्सुकतया प्रवेशोन्मुखया तया ।
114432 सा सर्वसंविदां बीजं ह्येका सामान्युदाहृता ॥ ४८ ॥
114433
114434 कथमुत्पद्यन्ते विलीयन्ते च तदाह-नित्यमिति । प्राणात्मना ऊर्ध्वपातोत्सुकतया
114435 अपानात्मना अधःप्रवेशोन्मुखया तया । उक्तमुपसंहरति-सेति । सामानी
114436 साधारणी । समानशब्दाद्भावे स्वार्थे वा ष्यञि ङीषि हलस्तद्धितस्य इति यलोपः ॥ ४८
114437 ॥
114438
114439 श्रीराम उवाच ।
114440
114441 आकल्पादनवच्छिन्ना चित्संवित्सर्वमस्ति हि ।
114442 तस्मात्कुण्डलिनीकोशात्केनार्थेनोदयः स्फुटः ॥ ४९ ॥
114443
114444 अपरिच्छिन्नायाश्चितो मूलाधारे नाडीमूले
114445 परिच्छिन्नकुण्डलिन्याख्यस्वांशादुद्भवः कथं किमर्थं चेति राम
114446 पृच्छति-आकल्पादिति । कालतः सर्वमिति वस्तुतश्चापरिच्छिन्नः ।
114447 देशकृतपरिच्छेदाभावस्यापि वस्तुकृतपरिच्छेदाभावऽन्तर्भाव
114448 इत्याशयेनोभयोरेवोपादानम् ॥ ४९ ॥
114449
114450 श्रीवसिष्ठ उवाच ।
114451
114452 सर्वत्र सर्वदा सर्वं चित्संविद्विद्यतेऽनघ ।

114453 किंत्वस्या भूततन्मात्रवशादभ्युदयः क्वचित् ॥ ५० ॥
114454
114455 वसिष्ठस्तु तर्हि कालकृतपरिच्छेदाभावोऽपि तत्रान्तर्भूत एवेति पृथगुपादानं
114456 व्यर्थम् यदि स्पष्टीकरणाय तस्य पृथगुपादानं तर्हि
114457 देशकृतपरिच्छेदाभावेऽपि तत्समानमिति त्रितयानुवादव्याजेन दर्शयन्निराकाराया
114458 निर्विषयायाश्च चितो जीवाकारेण घटादिगोचरतया वाभिव्यक्त्यर्थं तदा
114459 संविदुदेत्यन्तर्भूततन्मात्रबीजभूरित्युक्तार्थं विस्तराद्विवरिष्यन्
114460 स्थूलसूक्ष्मदेहद्वयाकारपरिणतभूतसापेक्षैव चितो विशेषाभिव्यक्तिरित्याह##-
114461
114462 सर्वत्र विद्यमानापि देहेषु तरलायते ।
114463 सर्वगोऽप्यातपः सौरो भित्त्यादौ वै विजृम्भते ॥ ५१ ॥
114464
114465 ननु देशकृतपरिच्छेदाभावे संवित्सर्वत्र भासेतेत्याशङ्क्योपाधिवशादेव
114466 तस्याः स्फुटीभाव इति सदृष्टान्तमाचष्टे-सर्वत्रेति ।तरलायते बुद्धौ
114467 अवच्छेदप्रतिबिम्बनाभ्यां द्विगुणीकृत्य प्रवेशाद्बहलीभूता
114468 जलसूर्यकवद्बुद्धिचाञ्चल्याच्चञ्चलीभवतीत्यर्थः । तत्रोपाधिकृतबहलीभावेन
114469 स्फुटीभावे दृष्टान्तमाह-सर्वग इति ॥ ५१ ॥
114470
114471 क्वचिन्नष्टं क्वचित्स्पष्टं क्वचिदुच्छन्नतां गतम् ।
114472 वस्तु वस्तुनि दृष्टं तत्तत्सद्भावैर्विजृम्भितम् ॥ ५२ ॥
114473
114474 तत्राप्युपाधिमालिन्यतारतम्येन चिदभिव्यक्तितारतम्यमित्याह-क्वचिदिति ।
114475 मृच्छिलादिवस्तुनि तच्चिद्वस्तु अविद्याजाड्येनाभिभवात्तप्तवारिस्थशैत्यमिव
114476 नष्टमदर्शनं गतम् । देवमनुष्यादिलिङ्गे तु स्पष्टमभिव्यक्तम् ।
114477 वृक्षादिलिङ्गेषूत्कृष्टां छन्नतां बहिः संवेदनविवेकाक्षमतां गतं
114478 दृष्टम् । चिदंश इव न सत्तांशे तारतम्यमित्याह-तदिति । तेषां
114479 त्रिविधोपाधीनां सर्वानुभवसिद्धैः सद्भावैरेव लिङ्गैस्तत्सर्वत्र
114480 विजृम्भितमनभिभूतमित्यर्थः ॥ ५२ ॥
114481
114482 एतद्भूयः क्रमेणाहं शृणु वक्ष्यामि तेऽनघ ।
114483 देहे स्वे च यथोदेति भृशं संविन्मयक्रमः ॥ ५३ ॥
114484
114485 उक्तमेवाभिव्यक्तितारतम्यं क्रमादासर्गसमाप्तेर्निरूपयितुं प्रतिजानीते-एतदिति ।
114486 स्वे मनुष्यादिदेहे चात्पशुस्थावरादिदेहे यथा यादृशतारतम्येन ॥ ५३ ॥
114487
114488 चेतनाचेतनं भूतजातं व्योम तथाखिलम् ।
114489 सर्वं चिन्मात्रसन्मात्रं शून्यमात्रं यथा नभः ॥ ५४ ॥
114490
114491 तदुपोद्घातेन सूक्ष्मस्थूलभूताध्यासप्रपञ्चनाय सर्वाधिष्ठानसच्चिदेकरसं
114492 सर्वप्रपञ्चतद्धर्मशून्यमात्मतत्त्वमादौ निर्दिशति-चेतनेति । नभो
114493 नभोवदसङ्गं विभु सूक्ष्मं च ॥ ५४ ॥
114494
114495 तद्धि चिन्मात्रसन्मात्रमविकारं स्वनामयम् ।
114496 क्वचित्स्थितं संविदेव भूततन्मात्रपञ्चकम् ॥ ५५ ॥
114497
114498 तस्मिंस्तथैव स्थिते मायाकल्पितैकदेशे आकाशादिसूक्ष्मभूतानां
114499 क्रमादध्यासात्तदेव भूतमात्रात्मरूपकं स्थितमित्याह-तद्धीति ॥ ५५ ॥
114500
114501 तत्पञ्चधा गतं द्वित्वं लक्षसे त्वं स्वसंविदम् ।
114502 अन्तर्भूतविकारादि दीपाद्दीपशतं यथा ॥ ५६ ॥
114503
114504 तत् तन्मात्रपञ्चकं प्राणो मनोबुद्धिर्ज्ञानेन्द्रियं कर्मेन्द्रियमिति पञ्चधा

114505 गतं लिङ्गशरीरं प्रतिबिम्बतया प्रविश्य दीपाद्दीपशतमिव संपन्नस्त्वं
114506 स्वसंविदमन्तर्भूता जन्मादिविकारा आदिपदाज्जाग्रदाद्यवस्थाभेदाश्च
114507 यस्मिंस्तथाविधं द्वित्वं जीवभावमिति यावत् । लक्षसे लक्षयसि । छान्दस
114508 उपग्रहव्यत्ययः ॥ ५६ ॥
114509
114510 स्वसत्तामात्रकेणैव संकल्पलवरूपिणा ।
114511 पञ्चकानि व्रजन्तीह देहत्वं तानि कानिचित् ॥ ५७ ॥
114512
114513 कानिचिल्लि"ण्णारम्भपरिशिष्टानि पञ्चकानि जीवस्य
114514 देवमनुष्याद्याकारवासनानुसारिसंकल्पलवरूपिणा स्वसत्तामात्रकेणैव
114515 पञ्चीकरणद्वारा स्थूलदेहत्वं व्रजन्ति ॥ ५७ ॥
114516
114517 कानिचित्तिर्यगादित्वं हेमादित्वं च कानिचित् ।
114518 कानिचिद्देशतादित्वं द्रव्यादित्वं च कानिचित् ॥ ५८ ॥
114519
114520 देहप्रकारणाद्धेमादित्वं धत्तूरादिस्थावरशरीरताम् । अथवा
114521 तिर्यगादित्वमित्यादिपदादेव स्थावरदेहपरिग्रहः । हेमादित्वमित्यनेन
114522 स्वर्णरजतखर्परोपलक्षितब्रह्माण्डत्वं तदन्तर्गतभुवनादिभोग्यतां चेत्यर्थः
114523 ॥ ५८ ॥
114524
114525 एवं हि पञ्चकस्पन्दमात्रं जगदिति स्थितम् ।
114526 चित्संविदत्र सर्वत्र विद्यते रघुनन्दन ॥ ५९ ॥
114527
114528 अस्त्वेवं किं ततस्तत्राह-एवं हीति । स्थितं सिद्धम् । तर्ह्यधिष्ठानचैतन्यं
114529 सर्वत्रास्तीति घटाद्यपि चेतनं किं न स्यात्तत्राह-चिदिति ॥ ५९ ॥
114530
114531 केवलं पञ्चकवशाद्देहादौ चेतनाभिधा ।
114532 जडस्पन्दाभिधा क्वापि स्थावरादौ जडाभिधा ॥ ६० ॥
114533
114534 पञ्चकवशाच्चैतन्याभिव्यञ्जकप्राणादिपञ्चकघटितलिङ्गदेहप्राधान्यादेव
114535 मनुष्यदेहादौ मुख्या चेतनाभिधा । क्वापि तिर्यक्षु लिङ्गस्थूलदेहयोः
114536 समप्राधान्याज्जडस्पन्दाभिधा जडचेतनाभिधा । स्थावरादौ तु
114537 लिङ्गस्यान्तःसंवेदनमात्रत्वेन बहिर्जनैश्चेतनत्वाविभावनाज्जडाभिधा
114538 प्रसिद्धेत्यर्थः ॥ ६० ॥
114539
114540 यथा स्तब्धः स्थितो वीचिरिव स्थलमिवास्थितः ।
114541 पञ्चकेषु तथैतच्चिल्लोलरूपा जडान्विता ॥ ६१ ॥
114542
114543 त्रिष्वपि चित्कथं तारतम्येन स्थितेत्यत्र दृष्टान्तमाह-यथेति । यथा दिवा विलीनो
114544 धृतसमुद्रः सायं शिशिरपवनसंपर्कद्विलातटे क्रमाद्घनीभावात् स्तब्धो
114545 निश्चलः स्थितः सन् द्रवप्रदेशे वीचिरिव चलः । ईषद्घनप्रदेशे ईषच्चलः ।
114546 अत्यन्तघनप्रदेशे स्थलमिवाचलश्च स्थितः तथैवैषा
114547 चिन्नरतिर्यक्स्थावरदेहरूपेषु पञ्चकेषु लोकरूपा ईषल्लोला अत्यन्तजाड्यान्विता च
114548 स्थितेत्यर्थः ॥ ६१ ॥
114549
114550 इतः सौम्य इतो लोलः किमब्धिरिति नो यथा ।
114551 विकल्पादौ तथैवैतत्पञ्चकं हि जडाजडम् ॥ ६२ ॥
114552
114553 यथा क्वचिद्घनीभावेन लोलत्वाभावेऽपि तस्य नाब्धित्वव्याघातस्तथा
114554 स्थावरादिभावेऽपि न चिद्रूपताक्षतिरित्याह-इति इति । नो इति काकुः । किमब्धिरिति
114555 व्यपदेशो न भवति किंतु भवत्येव यथा तथैवैतत्सुरनरतिर्यग्विकल्पादौ
114556 चैतन्यमक्षतमित्यर्थः । अथवा यं जडाजडविकल्पोऽध्यस्तपञ्चकधर्म एव न

114557 चिद्धर्मस्तस्यानिर्धर्मकत्वादित्याशयेनाह-पञ्चकं हीति ॥ ६२ ॥
114558
114559 देहादिपञ्चकं जीवः स्पन्दः शैलादिकं जडम् ।
114560 स्थावराद्यनिलस्पन्दि स्वभाववशतोऽनघ ॥ ६३ ॥
114561
114562 पञ्चके स्वभाववशत ईदृशा बहवो विकल्पा दृष्टा इत्याह-देहादीति ।
114563 देहाद्याकारपरिणतं पञ्चकं प्राणधारणाधीनस्पन्दचैतन्याभ्यां
114564 जीवश्चेतनस्तत्प्रयोजकः स्पन्दः शैलादिकं जडमेव । स्थावरादिशरीरं तु
114565 बाह्यानिलाधीनस्पन्दि अन्तश्चेतनमित्यादिव्यवस्थितविकल्पाः स्वभाववशतो दृष्टा
114566 इत्यर्थः ॥ ६३ ॥
114567
114568 वाचः पर्यनुयोक्तव्याः स्वभावाद्रघुनन्दन ।
114569 शीतोष्णादि हिमाग्न्यादि वाक्चेति परिदृश्यते ॥ ६४ ॥
114570
114571 ननु स्वः स्वात्मको भावः स्वभावः स कथं विरुद्धविकल्पात्मकः स्यात् । विरोधो हि
114572 परसापेक्षः । स्वो भावस्त्वनन्यापेक्षः । यदि स्वीयो भावः स्वभावस्तथाप्यसौ
114573 स्वमात्रसापेक्षो न परसापेक्ष इति कथं परसापेक्षस्य विकल्पस्य स्वरूपं निमित्तं
114574 वा स्यादिति यदि पर्यनुयुज्यते तर्हि त्वया स्वभावं विहाय वाचः पर्यनुयोक्तव्याः । ता
114575 एव हि चिज्जडादिशब्दरूपाः । स्वाः पुनरुक्तायै स्वार्थं व्यावर्तयन्त्यश्चैतन्यजाड्ये
114576 विरुद्धे गमयतः । एवं शीतोष्णादिधर्मपरा हिमाग्न्यादिधर्मिपरा वाक्च सर्वापि
114577 इति एवं प्रकारैव सर्वत्र परिदृश्यत इत्यर्थः । स्वभावादिति ल्यब्लोपे कर्मणि
114578 पञ्चमी ॥ ६४ ॥
114579
114580 गृहीतवासनांशानां पुष्टाभावविकारिणाम् ।
114581 स्थितयः पञ्चकानां हि योज्याः पर्यनुयोजने ॥ ६५ ॥
114582
114583 अथवा वागपि न पर्यनुयोज्या तस्या वासनाकल्पितविकल्पवत्पञ्चकार्थानुवादित्वेन
114584 तत्पराधीनत्वात् । किंतु गृहीतवासनांशानां तत्तद्विरुद्धविकल्पभावेन
114585 विकारिणां लिङ्गात्मनां पञ्चकानां स्थितय एव पर्यनुयोजने योज्या इत्याह##-
114586
114587 वासनास्तु विपर्यस्ता इतो नेतुमितश्च ताः ।
114588 पुंसा प्राज्ञेन शक्यन्ते सुखं पर्यनुयोजितुम् ॥ ६६ ॥
114589
114590 अथवा न तासामप्यपराधः । पूर्वपूर्वविरुद्धविकल्पसहस्रवासनानुसारित्वात् । अतः
114591 प्राज्ञेन विरुद्धविकल्पनामूलमन्विष्यता पुंसा चित्तमित इतश्च
114592 विरुद्धविकल्पसहस्रेषु नेतुं विपर्यस्ता विक्षिप्ता वासना एव पर्यनुयोजितुं शक्यन्ते
114593 न स्वभावादय इत्याह-वासना इति ॥ ६६ ॥
114594
114595 अशुभे वा शुभे वापि तेन पर्यनुयोज्यते ।
114596 प्रबुद्धवासनं चान्यत्पञ्चकं सुप्तवासनम् ॥ ६७ ॥
114597
114598 पुंसामशुभे तिर्यक्स्थावरादिभावे शुभे देवादिभावे वा प्रबुद्धवासनं
114599 सुप्तवासनं च पञ्चकं तिष्ठति । तेन वासनैव तद्धेतुः पर्यनुयोज्यत इत्यन्वयः ॥
114600 ६७ ॥
114601
114602 यत्र पर्यनुयोगस्य फलं समनुभूयते ।
114603 तत्र तं संप्रयुञ्जीत नाकाशं मुष्टिभिः क्षिपेत् ॥ ६८ ॥
114604
114605 किं च वासनापर्यनुयोगस्य तत्क्षयोपाये प्रवर्तकत्वेन सफलता ।
114606 स्वभावादिपर्यनुयोगस्य न किंचित्फलमस्तीत्याह-यत्रेति ॥ ६८ ॥
114607
114608 तृणाग्रनिष्ठा मेर्वाद्याः पञ्चकानां हि राशयः ।

114609 विवेकनिष्ठाः कीटाद्या एते स्थावरजंगमाः ॥ ६९ ॥
114610
114611 अत एव वासनाक्षये पूर्णात्मलाभान्मेर्वाद्याः स्वर्णराशयोऽपि तृणाग्रस्ये
114612 निष्ठेव निष्ठा तुच्छता येषां ते तृणाग्रनिष्ठाः संपद्यन्ते। विवेकनिष्ठा
114613 देवादिभोगशालिदेहा अपि कीटाद्या इव तुच्छतराः संपद्यन्त इत्याह-तृणाग्रेति ॥
114614 ६९ ॥
114615
114616 प्रसुप्तवासनाः केचिद्यथा स्थावरजातयः।
114617 प्रबुद्धवासनाः केचिद्यथा नरसुरादयः ॥ ७० ॥
114618
114619 अत एव वासनास्वापप्रबोधतारतम्यादेव पञ्चकेषु
114620 स्थावरादिवैचित्र्यमित्युदाहृत्य दर्शयति-प्रसुप्तेति द्वाभ्याम् ॥ ७० ॥
114621
114622 सवासनाविलाः केचिद्यथैते तिर्यगादयः।
114623 प्रक्षिप्तवासनाः केचिद्यथैते मोक्षगामिनः ॥ ७१ ॥
114624
114625 वासनाभिराविलेनास्वच्छेन चित्तेन सहिताः सवासनाविलाः।
114626 प्रक्षिप्तवासनास्त्यक्तवासनाः ॥ ७१ ॥
114627
114628 अथ स्वास्वेव संवित्सु मनोबुद्ध्यादिकाः कृताः।
114629 हस्तपादादिसंयुक्तैः संज्ञाः पञ्चकराशिभिः ॥ ७२ ॥
114630
114631 वासनावैचित्र्यादेव देवनरादिपञ्चकराशिराकाशभूमिगमनादिविचित्रव्यवहार##-
114632 स्वासु संवित्स्वेव नरादियोग्यव्यवहारोचिता
114633 मनोबुद्ध्यहंकारचित्तचक्षुःश्रोत्रप्राणरसनस्पर्शादिका अन्तर्बाह्यकरणरूपाः
114634 संज्ञाः संकेताः कृताः अत एव ताः प्रतिप्राणिविचित्रस्वभावा दृश्यन्त इति
114635 भावः ॥ ७२ ॥
114636
114637 तिर्यगादिभिरप्यन्यैरन्याः संज्ञाः प्रकल्पिताः।
114638 स्थावरादिभिरप्यन्यैरन्यान्याः संविदः कृताः ॥ ७३ ॥
114639
114640 तिर्यग्भिः पश्वादिभिस्तु चत्वारः पादाः शृङ्गे पुच्छं चेति। पक्षिभिस्तु चञ्चुः
114641 पक्षौ पुच्छं पादौ चेति। सर्पैस्तु फणा भोगः पुच्छमिति।
114642 कृमिकीटैर्दंशमशकादिभिश्च स्वस्ववासनानुरूपव्यवहारयोग्या
114643 अवयवादिसंकेताः कल्पिता इत्यर्थः ॥ ७३ ॥
114644
114645 इति साधो स्फुरन्तीमे चित्राः पञ्चकराशयः।
114646 रूपैराद्यन्तमध्येषु चलाचलजडाजडैः ॥ ७४ ॥
114647
114648 आद्यन्तमध्येषु चलैर्विकारिभिर्जडैश्च। अधिष्ठानसद्रूपेण तु अचलैरजडैश्च ॥ ७४
114649 । ।
114650
114651 एषामेकोऽभिसंकल्पः परमाणुर्महीपते।
114652 बीजमाकाशवृक्षाणां सर्गाणां तेष्विमानि तु ॥ ७५ ॥
114653
114654 एवं पञ्चकाख्यलिङ्गभेदाननन्तानुपवर्ण्य तेष्वेकतमस्य
114655 कस्यचित्कर्मोपासनसमुच्चयानुष्ठानफलसमष्ट्यहंभावं प्राप्तस्य
114656 कश्चिदेकः संकल्पपरमाणुरस्य संसारनभोवृक्षस्य बीजमित्याह-एषामिति।
114657 समष्टिगोचरत्वादभिव्याप्तः संकल्पोऽभिसंकल्पस्तल्लक्षणः परमाणुः
114658 सर्गरूपाणामाकाशवृक्षाणां बीजं तेषु च सर्गाकाशवृक्षेषु इमानि
114659 पञ्चकानीत्यहो मायेत्यर्थः ॥ ७५ ॥
114660

114661 इन्द्रियाणि च पुष्पादि विष्यामोदवर्ति हि।
114662 इच्छाभ्रमर्यो राजन्यो मञ्जर्यश्चञ्चलक्रियाः॥ ७६॥
114663
114664 सर्गाणामाकाशवृक्षत्वं यदुक्तं तत्पुष्पतदामोदादिकल्पनयोपपादयति##-
114665 विषयलक्षणेष्वामोदेषु वर्तनशीलं तत् प्रधानमिति यावत्। चञ्चलानां
114666 कर्मेन्द्रियाणां क्रियाः॥ ७६॥
114667
114668 लोकान्तराणि स्वच्छानि गुल्मा मूलं समेरवः।
114669 पल्लवा नीलजलदा लता लोला दिशो दश॥ ७७॥
114670
114671 स्वच्छानि स्वर्गादिलोकान्तराणि गुल्मा विटपाः। समेरवो मेरुसहिताः सर्वे पर्वता
114672 मूलम्॥ ७७॥
114673
114674 वर्तमानानि भूतानि भविष्यन्ति च यानि तत्।
114675 जयन्ति तान्यसंख्यानि फलानि रघुनन्दन॥ ७८॥
114676
114677 भूतानि चतुर्विधशरीराणि। तत्तस्य वृक्षस्य॥ ७८॥
114678
114679 पञ्चबीजास्त एते हि राम पञ्चकपादपाः।
114680 स्वयंन् स्वभावाज्जायन्ते स्वयंन् नश्यन्ति कालतः॥ ७९॥
114681
114682 स्वभावात्स्वविवेकशून्यादात्मनः॥ ७९॥
114683
114684 स्वयंन् नानात्वमायान्ति चिरं जाड्यात्स्फुरन्ति च।
114685 स्वविविक्ताः शमं यान्ति तरङ्गा इव वारिधौ॥ ८०॥
114686
114687 स्वस्माद्विविक्ता विवेकदृष्ट्या दृष्टाः॥ ८०॥
114688
114689 इतो यान्ति समुत्सेधमितो यान्ति शमं स्वयम्।
114690 एते जाड्यविवेकाभ्यां तरङ्गा इव तोयधौ॥ ८१॥
114691
114692 श्लोकद्वयोक्तमेव संगृह्याह-इत इति। इतः पराग्दृष्टेः। इतः प्रत्यग्दृष्टेः
114693 ॥ ८१॥
114694
114695 ये विवेकवशमालयं गता राम पञ्चकविलासराशयः।
114696 तेन भूय इह यान्ति संस्थितिं प्रभ्रमन्ति जगतीतरे मुहुः॥ ८२॥
114697
114698 हे राम ये पञ्चकविलासराशयः आलयं निर्वासननाशपर्यन्तं विवेकवशं
114699 गतास्ते इह संसारे भूयो जन्ममरणदेहधारणादिसंस्थितिं न यान्ति। इतरे तु जगति
114700 यथापूर्वं प्रभ्रमन्त्येवेत्यर्थः॥ ८२॥
114701
114702 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाणप्रकरणे पू०
114703 चू० पञ्चकविलासो नामाशीतितमः सर्गः॥ ८०॥
114704
114705 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
114706 पञ्चकविलासो नामाशीतितमः सर्गः॥ ८०॥
114707
114708 एकाशीतितमः सर्गः ८१
114709
114710 श्रीवसिष्ठ उवाच।
114711
114712 एतत्पञ्चकबीजं तु कुण्डलिन्यां तदन्तरे।

114713 प्राणमारुतरूपेण तस्यां स्फुरति सर्वदा ॥ १ ॥
114714
114715 कुण्डलिन्याः प्रसङ्गेन रोगोद्भवशमक्रमाः ।
114716 सिद्धिसिद्धेक्षणोपायाद्यशेषमिह वर्ण्यते ॥
114717
114718 यदा प्राणानिलो याति हृदि कुण्डलिनीपदम् । तदा
114719 संविदुदेत्यन्तर्भूततन्मात्रबीजभूः इति बुद्धिशक्तिजवप्रदत्वोपपादने
114720 भूततन्मात्रबीजभूरित्यंशस्य स्फुटीकरणाय कृतं
114721 स्थूलसूक्ष्मपञ्चकविचारं संगमयन् खेचरादिसिद्धिबीजप्राणाभ्यासोपयुक्तं
114722 प्रस्तुतकुण्डलिन्यां प्राणाद्युद्भवप्रकारं प्रदर्शयति-एतदिति । तस्य
114723 स्थूलदेहात्मकस्य पञ्चकस्यान्तरे मूलाधारे तस्यां प्राग्वर्णितायां
114724 कुण्डलिन्यामेतस्य लिङ्गात्मकपञ्चकस्य बीजमुपादानं भूतसूक्ष्मं प्रथमं
114725 प्राणपञ्चकरूपेण स्फुरतीत्यर्थः ॥ १ ॥
114726
114727 सान्तःकुण्डलिनीस्पन्दस्पर्शसंवित्कलामला ।
114728 कलोक्ता कलनेनाशु कथिता चेतनेन चित् ॥ २ ॥
114729
114730 सा प्राणरूपेणान्तःस्फुरिता कुण्डलिनी मारुतधर्मेण स्वधर्मेण च स्पन्दः
114731 स्पर्शः संविदिति त्रिरूपकल्पना भूत्वा कला चिज्जीवो मनःसंकल्पो बुद्धिरहंकारः
114732 पुर्यष्टकं लिङ्गमित्यादिनामानि कलनादिव्यापारोपाधिभिर्लभत इत्याह-सान्तरिति
114733 त्रिभिः ॥ २ ॥
114734
114735 जीवनाज्जीवतां याता मननाच्च मनःस्थिता ।
114736 संकल्पाच्चैव संकल्पा बोधाद्बुद्धिरिति स्मृता ॥ ३ ॥
114737
114738 अहंकारात्मतां याता सैषा पुर्यष्टकाभिधा ।
114739 स्थिता कुण्डलिनी देहे जीवशक्तिरनुत्तमा ॥ ४ ॥
114740
114741 अपानतामुपागत्य सततं प्रवहत्यधः ।
114742 समाना नाभिमध्यस्था उदानाख्योपरि स्थिता ॥ ५ ॥
114743
114744 तत्र स्पन्दशक्तेः प्रधानवृत्तितत्स्थानत्रैविध्यं दर्शयति-अपानतामिति ॥ ५ ॥
114745
114746 अधस्त्वपानरूपैव मध्ये सौम्यैव सर्वदा ।
114747 पुष्टाप्युदानरूपैव पुंसः स्वस्थैव तिष्ठति ॥ ६ ॥
114748
114749 वृत्तिभेदप्रयोजनान्याह-अध इति । अपानगमनाद्येव प्रयोजनमित्यर्थः ।
114750 अपानोदानाभ्यामाकृष्यमाणापि स्वयंन् सौम्या निश्चलैव । तदवष्टब्धत्वादेव
114751 पुष्टा बलवत्यप्यूर्ध्ववृत्तिरुदानरूपैव सती स्वस्थैव तिष्ठति न लिङ्गं
114752 बहिरुत्क्रामयतीत्यर्थः ॥ ६ ॥
114753
114754 सर्वयत्नमधो याति यदि यत्नान्न धार्यते ।
114755 तत्पुमान्मृतिमायाति तया निर्गतया बलात् ॥ ७ ॥
114756
114757 एवमधोवृत्तेरपि सा विष्टम्भिकेत्याह-सर्वप्रयत्नमिति । यदि सामान्यवृत्त्या
114758 न धार्यते तर्हि सा जीवसंविदपानवृत्त्या सर्वयत्नं यथा स्यात्तथा
114759 आकृष्यमाणा अधोमार्गेण बहिर्याति । किं ततस्तदाह-तदिति ॥ ७ ॥
114760
114761 समस्तैवोर्ध्वमायाति यदि युक्त्या न धार्यते ।
114762 तत्पुमान्मृतिमायाति तया निर्गतया बलात् ॥ ८ ॥
114763
114764 प्रागुक्तं स्पष्टमाह-समस्तैवेति ॥ ८ ॥

114765
114766 सर्वथात्मनि तिष्ठेच्चेत्यक्त्वोर्ध्वाधोगमागमौ |
114767 तज्जन्तोर्हीयते व्याधिरन्तर्मारुतरोधतः || ९ ||
114768
114769 अत एव प्राणापानगतिनिरोधाभ्यासेन सर्वाङ्गे समानवृत्त्येतरवृत्तिजये
114770 सर्वव्याधिक्षयमृत्युजयसिद्धिरित्याह-सर्वथेति | आत्मनि देहे || ९ ||
114771
114772 सामान्यनाडीवैधुर्यात्सामान्यव्याधिसंभवः |
114773 प्रधाननाडीवैधुर्यात्प्रधानव्याधिसंभवः || १० ||
114774
114775 एकशतं प्रधाननाड्यस्तच्छाखास्तु सामान्यनाड्यस्तास्वन्नरसप्रापिकायाः
114776 समानवृत्तेर्यत्रैव
114777 कफपित्ताद्युपचयाद्वैदुर्यमव्यापारस्तत्रैवेतरवायुभिर्वैषम्येणान्नरसाकर्षण्
114778 आदल्परोगाणां महारोगाणां च संभव इत्याह-सामान्येति || १० ||
114779
114780 श्रीराम उवाच |
114781
114782 किंविनाशाः किमुत्पादाः शरीरेऽस्मिन्मुनीश्वर |
114783 आधयो व्याधयश्चैव यथावत्कथयाशु मे || ११ ||
114784
114785 कस्माद्विनाशो येषां ते किंविनाशाः | एवं किमुत्पादाः || ११ ||
114786
114787 श्रीवसिष्ठ उवाच |
114788
114789 आधयो व्याधयश्चैव द्वयं दुःखस्य कारणम् |
114790 तन्निवृत्तिः सुखं विद्यात्तत्क्षयो मोक्ष उच्यते || १२ ||
114791
114792 तेषां निवृत्तिरौषधानुनयैस्तात्कालिकोपशमः | सुखरूपस्यात्मनः
114793 परिशेषात्सुखम् | तेषां मूलतो ज्ञानेन नाशो मोक्ष इत्यर्थः || १२ ||
114794
114795 मिथः कदाचिज्जायेते कदाचित्सममेव च |
114796 पर्यायेण कदाचिच्च आधिव्याधी शरीरके || १३ ||
114797
114798 मिथः अन्योन्यनिमित्तकत्वात्क्रमसंलग्ने | कदाचिद्युगपदुत्पन्नाद्बाह्यनिमित्तात्समं
114799 युगपत् | कदाचित्सुखान्तरिते पर्यायेण || १३ ||
114800
114801 देहदुःखं विदुर्व्याधिमाध्याख्यं वासनामयम् |
114802 मौर्ख्यमूले हि ते विद्यात्तत्त्वज्ञाने परिक्षयः || १४ ||
114803
114804 मौर्ख्यमज्ञानं तन्मूले || १४ ||
114805
114806 अतत्त्वज्ञानवशतः स्वेन्द्रियाक्रमणं विना |
114807 हृदि तानवमुत्सृज्य रागद्वेषेष्वनारतम् || १५ ||
114808
114809 तत्र आध्युद्भवनिमित्तान्याह-अतत्त्वज्ञानेति | आक्रमणं निग्रहस्तं विना |
114810 तदभावादित्यर्थः | हृदि चित्ते तानवं स्तिमितवायुप्रायां स्वास्थ्यहेतुं
114811 सूक्ष्मतामुत्सृज्य रागद्वेषेषु प्रसक्तेरिति शेषः || १५ ||
114812
114813 इदं प्राप्तमिदं नेति जाड्याद्वा घनमोहदाः |
114814 आधयः संप्रवर्तन्ते वर्षासु मिहिका इव || १६ ||
114815
114816 इदं प्राप्तमिदं न प्राप्तमिति चिन्ताया इति शेषः | भयशोकनिमित्तप्राप्तौ

114817 तत्प्रतीकारोपायापरिज्ञानलक्षणं घनं मोहं ददतीति घनमोहदाः ॥ १६ ॥
114818
114819 भृशं स्फुरन्तीष्विच्छासु मौर्ख्ये चेतस्यनिर्जिते ।
114820 दुरन्नाभ्यवहारेण दुर्देशाक्रमणेन च ॥ १७ ॥
114821
114822 इदानीं शारीरव्याध्युद्भवहेतूनाह-भृशमित्यादिना । इच्छामौर्ख्ये आन्तरे
114823 तद्धेतू । दुरन्नादयस्तु बाह्याः । दुर्देशाः श्मशानादयः ॥ १७ ॥
114824
114825 दुष्कालव्यवहारेण दुष्क्रियास्फुरणेन च ।
114826 दुर्जनासङ्गदोषेण दुर्भाबोद्भावनेन च ॥ १८ ॥
114827
114828 दुष्टेषु निशीथप्रदोषादिकालेष्वशनव्यवायादिव्यवहारेण । दुर्भावा
114829 विषसर्पव्याघ्रतस्करादिशङ्कास्तेषां मनस्युद्भावनेन ॥ १८ ॥
114830
114831 क्षीणत्वाद्वा प्रपूर्णत्वान्नाडीनां रन्ध्रसंततौ ।
114832 प्राणे विधुरतां याते काये तु विकलीकृते ॥ १९ ॥
114833
114834 नाडीनामन्नरसाप्रवेशेन क्षीणत्वाद्विगुणरसवातादिप्रवेशेन प्रपूर्णत्वाद्वा
114835 विधुरतां कफपित्तादिप्रकोपेन व्याकुलताम् । आघातादिना विकलीकृते ॥ १९ ॥
114836
114837 दौःस्थित्यकारणं दोषाद्व्याधिर्देहे प्रवर्तते ।
114838 नद्याः प्रावृण्निदाघाभ्यामिवाकारविपर्ययः ॥ २० ॥
114839
114840 दौःस्थित्यमस्वास्थ्यं तत्कारणं व्याधिः स देहस्याकारविपर्ययः ॥ २० ॥
114841
114842 प्राक्तनी चैहिकी वापि शुभा वाप्यशुभा मतिः ।
114843 यैवाधिका सैव तथा तस्मिन्योजयति क्रमे ॥ २१ ॥
114844
114845 सा चाधिव्याधिसामग्री प्राक्तनैहिककर्मानुसारेण मिलतीत्याह-प्राक्तनीति ॥ २१ ॥
114846
114847 आधयो व्याधयश्चैवं जायन्ते भूतपञ्चके ।
114848 कथं शृणु विनश्यन्ति राघवाणां कुलोद्वह ॥ २२ ॥
114849
114850 द्विविधो व्याधिरस्तीह सामान्यः सार एव च ।
114851 व्यवहारस्तु सामान्यः सारो जन्ममयः स्मृतः ॥ २३ ॥
114852
114853 सामान्यः पेलवः सारो दृढतरश्च । व्यवह्रियत इति व्यवहारः
114854 क्षुत्तृषास्त्रीपुत्रलालसादिस्तत्संभवश्च । जन्ममयो जन्मादिविक्रियामूलम् ॥ २३ ॥
114855
114856 प्राप्तेनाभिमतेनैव नश्यन्ति व्यावहारिकाः ।
114857 आधिक्षयेणाधिभवाः क्षीयन्ते व्याधयोऽप्यलम् ॥ २४ ॥
114858
114859 अभिमतेनान्नपानस्त्रीपुत्रादिना ॥ २४ ॥
114860
114861 आत्मज्ञानं विना सारो नाधिर्नश्यति राघव ।
114862 भूयो रज्ज्ववबोधेन रज्जुसर्पो हि नश्यति ॥ २५ ॥
114863
114864 आधिर्व्याधिः भूयो भूयसा लोकपरिशीलनाद्रज्जुतत्त्वप्रत्ययपर्यन्तेनावबोधेन ॥ २५
114865 ॥
114866
114867 आधिव्याधिविलासानां राम साराधिसंक्षयः ।
114868 सर्वेषां मूलहा प्रावृण्नदीव तटवीरुधाम् ॥ २६ ॥

प्रावृण्नदी सर्वेषां तटवीरुधामिव सर्वेषामाधिव्याधिविलासानां
सारव्याधिसंक्षयो मूलहा मूलोच्छेदीत्यन्वयः॥ २६॥

अनाधिजा व्याधयस्तु द्रव्यमन्त्रशुभक्रमैः।
चिकित्सकादिशास्त्रोक्तैर्नश्यन्त्यन्यैरिहाथवा॥ २७॥

सामान्यव्याधिष्वनाधिजव्याधयः सुचिकित्स्या इत्याशयेनाह-अनाधिजा इति।
अन्यैर्वृद्धपरम्परोपदिष्टैश्चिकित्सनैः॥ २७॥

स्नानमन्त्रौषधोपाया वक्तुश्चाधिगतानि च।
त्वया चिकित्साशास्त्राणि किमन्यदुपदिश्यते॥ २८॥

लोलार्कादितीर्थेषु स्नानम्। मन्त्रा औषधानीत्याद्युपायाः। वक्तुश्च
वृद्धजनादधिगतान्यौषधानि चिकित्साशास्त्राणि च त्वया ज्ञायन्त एवेति शेषः॥ २८
।।

श्रीराम उवाच।

आधेः कथं भवेद्व्याधिः कथं च स विनश्यति।
द्रव्यादितरया युक्त्या मन्त्रपुष्यादिरूपया॥ २९॥

आधिभ्यो व्याधिजन्मप्रकारं तच्चिकित्सोपायं च रामः पृच्छति-आधेरिति।
द्रव्यादौषधादितरया मन्त्रपुण्यादिरूपयेति स्वसंभावनयोक्तिः॥ २९॥

श्रीवसिष्ठ उवाच।

चित्ते विधुरिते देहः संक्षोभमनुयात्यलम्।
तथाहि रुषितो जन्तुरग्रमेव न पश्यति॥ ३०॥

तत्र प्रथमं तदुद्भवप्रकारमाह-चित्ते इत्यादिना। विधुरिते आधिभिः क्षुब्धे।
उक्तमर्थं दृष्टान्तेनोपपादयति-तथाहीति सार्धेन। अग्रं पुरोमार्गम्॥ ३०॥

अनवेक्ष्य पुरो मार्गममार्गमनुधावति।
प्रकृतं मार्गमुत्सृज्य शरार्तो हरिणो यथा॥ ३१॥

संक्षोभात्साम्यमुत्सृज्य वहन्ति प्राणवायवः।
देहे गजप्रविष्टेन पयांसीव सरित्तटे॥ ३२॥

दार्ष्टान्तिकेऽपि तथैव आधिकृतात्संक्षोभात्प्राणवायवः साम्यमुत्सृज्यामार्गेण
वहन्ति। यथा गजस्य प्रविष्टेन प्रवेशेन क्षुब्धानि पयांसि सरितस्तटे अमार्गे वहन्ति
तद्वत्॥ ३२॥

असमं वहति प्राणे नाड्यो यान्ति विसंस्थितिम्।
असम्यक्संस्थिते बूपे यथा वर्णाश्रमक्रमाः॥ ३३॥

असमं विषमम्। विसंस्थितिं कफपित्तादिपूर्णताप्रयुक्तविषमसंस्थानताम्॥ ३३॥

काश्चिन्नाड्यः प्रपूर्णत्वं यान्तिं काश्चिच्च रिक्तताम्।
प्राणाऽऽविधुरिते देहे सर्वतः सरितो यथा॥ ३४॥

तदेवाह-काश्चिदिति। प्राणैराविधुरिते सर्वतो विह्वलीकृते देहे। सरितो नाड्यः

114921 स्रोतांसिव ॥ ३४ ॥
114922
114923 कुजीर्णत्वमजीर्णत्वमतिजीर्णत्वमेव वा ।
114924 दोषायैव प्रयात्यन्नं प्राणसंचारदुष्क्रमात् ॥ ३५ ॥
114925
114926 यथा काष्ठानि नयति प्राचीदेशं सरिद्रयः ।
114927 तथान्नानि नयत्यन्तः प्राणवातः स्वमाश्रयम् ॥ ३६ ॥
114928
114929 समानाख्यः प्राणवातः स्वमाश्रयं सर्वं शरीरं भुक्तान्यन्नानि रसीकृत्य
114930 नयति । मध्ये तु समान एष ह्येतद्धुतमन्नं समं नयतीति श्रुतेरिति भावः ॥ ३६ ॥
114931
114932 यान्यन्नानि निरोधेन तिष्ठन्त्यन्तःशरीरके ।
114933 तान्येव व्याधितां यान्ति परिणामस्वभावतः ॥ ३७ ॥
114934
114935 धातुवैषम्यपरिणामस्वभावतः ॥ ३७ ॥
114936
114937 एवमाधेर्भवेद्व्याधिस्तस्याभावाच्च नश्यति ।
114938 यथा मन्त्रैर्विनश्यन्ति व्याधयस्तत्क्रमं शृणु ॥ ३८ ॥
114939
114940 उपसंहरति-एवमिति । अभावान्नाशात् ॥ ३८ ॥
114941
114942 यथा विरेकं कुर्वन्ति हरीतक्यः स्वभावतः ।
114943 भावनावशतः कार्यं तथा यरलवादयः ॥ ३९ ॥
114944
114945 हरीतक्याः फलानि हरीतक्यः । फले लुकि हरीतक्यादिषु व्यक्तिः इति नियमान्न वचने
114946 युक्तवद्भावः । तथा यरलवादयो वायुवह्निभूजलादिबीजात्मका मन्त्रवर्णा
114947 मान्त्रिकभावनावशतो नाडीषु
114948 व्याध्याकारपरिणतान्नरसानाभुत्सारणपाचनादिकार्यं कुर्वन्तीत्यर्थः ॥ ३९ ॥
114949
114950 शुद्धया पुण्यया साधो क्रियया साधुसेवया ।
114951 मनः प्रयाति नैर्मल्यं निकषेणेव काञ्चनम् ॥ ४० ॥
114952
114953 आध्युपशमोपायानाह-शुद्धयेत्यादिना ॥ ४० ॥
114954
114955 आनन्दो वर्धते देहे शुद्धे चेतसि राघव ।
114956 पूर्णेन्दावुदिते ह्यत्र नैर्मल्यं भुवने यथा ॥ ४१ ॥
114957
114958 सत्त्वशुद्ध्या वहन्त्येते क्रमेण प्राणवायवः ।
114959 जरयन्ति तथान्नानि व्याधिस्तेन विनश्यति ॥ ४२ ॥
114960
114961 आधिव्याध्योरिति प्रोक्तौ नाशोत्पत्तिक्रमौ त्वयि ।
114962 कुण्डलिन्याः कथायोगादधुना प्रकृतं शृणु ॥ ४३ ॥
114963
114964 प्रासङ्गिकप्रश्नोत्तरमुपसंहृत्य प्रकृतं सिद्धिहेतुनिरूपणं प्रस्तौति##-
114965
114966 पुर्यष्टकपराख्यस्य जीवस्य प्राणनामिकाम् ।
114967 विद्धि कुण्डलिनीमन्तरामोदस्येव मञ्जरीम् ॥ ४४ ॥
114968
114969 पुर्यष्टकाख्यस्य लिङ्गात्मनो जीवस्याधारभूताम् ॥ ४४ ॥
114970
114971 तां यदा पूरकाभ्यासादापूर्य स्थीयते समम् ।
114972 तदैति मैरवं स्थैर्यं कायस्यापीनता तथा ॥ ४५ ॥

114973
114974 आपूर्य कूर्मनाड्यां प्राणमवष्टभ्येत्यर्थः। तथा च पतञ्जलेः सूत्रम्
114975 कूर्मनाड्यां स्थैर्यम् इति। कण्ठकूपादध उरसि कूर्माकारा नाडी तस्यां
114976 कृतसंयमः स्थैर्यं लभते यथा सर्पो गोधा वेति तद्भाष्यम्। कायस्यापीनता
114977 गरिमाख्या सिद्धिरपि तथा तादृशी भैरवी सिद्ध्यतीत्यर्थः॥ ४५॥
114978
114979 यदा पूरकपूर्णान्तरायतप्राणमारुतम्।
114980 नीयते संविदेवोर्ध्वं सोढुं घर्मक्लमं श्रमम्॥ ४६॥
114981
114982 केन तर्ह्यूर्ध्वं नभोगतिसिद्धिस्तदाह-यदेत्यादिना। यदा पूरकेण पूर्णे
114983 देहान्तरायतो मूलाधारादारभ्य ब्रह्मरन्ध्रपर्यन्तं
114984 दीर्घीकृत्योर्ध्वमाकृष्टः प्राणमारुतो यस्मिन्कर्मणि तद्यथा स्यात्तथा संवित्
114985 कुण्डलिनी प्राणनिरोधोद्भूतमूष्माणं तत्प्रयुक्तं शारीरं क्लमं मानसं
114986 श्रमं चाभ्यासपाटवेनामृताप्लावनेन च सोढुं सह्यं कर्तुमूर्ध्वं नीयते॥
114987 ४६॥
114988
114989 सर्पीव त्वरितैवोर्ध्वं याति दण्डोपमां गता।
114990 नाडीः सर्वाः समादाय देहबद्धा लतोपमाः॥ ४७॥
114991
114992 नीयमाना च सा आकर्षणाद्दण्डोपमां दीर्घतां गता सती सर्पीव
114993 त्वरितैवोर्ध्वमभ्यासपाटवाद्याति। कथं याति तदाह-नाडीरिति॥ ४७॥
114994
114995 तदा समस्तमेवेदमुत्प्लावयति देहकम्।
114996 नीरन्ध्रं पवनापूर्णं भस्त्रेवाम्बु ततान्तरम्॥ ४८॥
114997
114998 तदा नाडीद्वारा नीरन्ध्रं निरवकाशं यथा स्यात्तथा पवनेनापूर्णं
114999 लघुत्वमापन्नं समस्तमापादमस्तकमिदं देहकं
115000 कूपादूर्ध्वमाकृष्यमाणा चर्मभस्त्रा ततं व्याप्तमान्तरमन्तःप्रदेशो येन
115001 तथाविधमम्ब्विव उत् ऊर्ध्वं प्लावयति उड्डीनं करोति
115002 तदेवास्याकाशगमनमित्यर्थः॥ ४८॥
115003
115004 इत्यभ्यासविलासेन योगेन व्योमगामिना।
115005 योगिनः प्राप्नुवन्त्युच्चैर्दीना इन्द्रदशामिव॥ ४९॥
115006
115007 इति एवंविधेनाभ्यासविलासेन योगेन कायाकाशसंबन्धसंयमलक्षणेन। तथा च
115008 भगवतः पतञ्जलेः सूत्रम् कायाकाशयोः
115009 संबन्धसंयमाल्लघुतूलसमापत्तेश्चाकाशगमनम् इति तद्भाष्यं च यत्र
115010 कायस्तत्राकाशं कायस्य तेन संबन्धः प्राप्तिस्तत्र कृतसंयमो योगी जित्वा
115011 तत्संबन्धं लघुतूलादिषु आपरमाणुभ्यः समापत्तिं लब्ध्वा जितसंबन्धो
115012 लघुर्लघुत्वाच्च जले पदाभ्यां विहरति ततस्तूर्णनाभितन्तुमात्रे विहृत्य रश्मिषु
115013 विहरति ततो यथेष्टमाकाशगतिरस्य भवति इति॥ ४९॥
115014
115015 ब्रह्मनाडीप्रवाहेण शक्तिः कुण्डलिनी यदा।
115016 बहिरूर्ध्वं कपाटस्य द्वादशाङ्गुलमूर्धनि॥ ५०॥
115017
115018 इदानीं सिद्धदर्शनोपायमाह-ब्रह्मनाडीत्यादिना। यदा रेचकेन
115019 प्रयोगेणोर्ध्वमाकृष्टा कुण्डलिनी शक्तिर्ब्रह्मनाडी सुषुम्ना तदन्तः
115020 प्राणप्रवाहेण शीर्षकपालद्वयसंधिलक्षणस्य कपाटस्य
115021 बहिर्द्वादशाङ्गुलमिते मूर्धनि षोडशान्ताख्ये स्थाने मुहूर्तमात्रं स्थितिमाप्नोति
115022 तदा व्योमगानां सिद्धानां दर्शनं भवतीति परेणान्वयः। तथा च भगवतः
115023 पतञ्जलेः सूत्रम् मूर्धज्योतिषिसिद्धदर्शनम् इति। तद्भाष्यं च शिरःकपाले
115024 अन्तश्छिद्रं प्रभास्वरत्वाज्ज्योतिस्तत्र संयमात्सिद्धानां

115025 द्यावापृथिव्योरन्तरालचारिणां दर्शनमिति ॥ ५० ॥
115026
115027 रेचकेन प्रयोगेण नाड्यन्तरनिरोधिना।
115028 मुहूर्तं स्थितिमाप्नोति तदा व्योमगदर्शनम् ॥ ५१ ॥
115029
115030 श्रीराम उवाच।
115031
115032 दर्शनं कीदृशं ब्रह्मन्नयनांशुगणं विना।
115033 अदिव्यानामिन्द्रियाणां तत्त्वमेवं कथं भवेत् ॥ ५२ ॥
115034
115035 आदिव्यानामिन्द्रियाणामिति भावलक्षणे षष्ठी चानादरे इति षष्ठ्यौ।
115036 यदास्मदादीनामिन्द्रियाणामदिव्यानां सतां सत्यपि तत्संनिकर्षे सिद्धानां तत्त्वं
115037 तद्गोचरत्वं दुर्लभं तदा नयनांशुगणं चाक्षुषप्रभासंनिकर्षं विना
115038 षोडशान्ते प्राणधारणमात्रेण सिद्धानां दर्शनं कथं भवेत्तच्च
115039 कीदृशमित्यर्थः ॥ ५२ ॥
115040
115041 श्रीवसिष्ठ उवाच।
115042
115043 न केचन महाबाहो भूचरेण नभस्वतः।
115044 अदिव्येनाश्रिता ज्ञानैर्दृश्यन्ते पुरुषेन्द्रियैः ॥ ५३ ॥
115045
115046 तत्र कथं भवेदित्यंशमिष्टापत्त्या वसिष्ठः परिहरति-न केचनेति। नभस्वतो
115047 नभस्वन्तो वायुभूताः। सिद्धा आश्रिता ज्ञानैर्मलिनैः
115048 पुरुषेन्द्रियैरदिव्येनोपायान्तरेण वा न दृश्यन्त इति सत्यमेव त्वयोक्तमित्यर्थः ॥ ५३
115049 ।।
115050
115051 विज्ञानाद्दूरसंस्थेन बुद्धिनेत्रेण राघव।
115052 दृश्यन्ते व्योमगाः सिद्धाः स्वप्नवत्स्वार्थदा अपि ॥ ५४ ॥
115053
115054 केन तर्हि दृश्यन्ते तदाह-विज्ञानादिति।
115055 विज्ञानाद्योगाभ्याससंस्कृतमनसः ॥ ५४ ॥
115056
115057 स्वप्नावलोकनं यद्वत्तद्वत्सिद्धावलोकनम्।
115058 केवलोऽथ विशेषोऽयं सिद्धप्राप्तौ स्थिरार्थता ॥ ५५ ॥
115059
115060 कीदृशमिति प्रश्नांशस्योत्तरमाह-स्वप्नावलोकनमिति। स्थिरार्थता
115061 संवादवरदानफलावाप्त्यादिव्यवहारक्षमार्थता स्वप्नापेक्षया विशेष इत्यर्थः
115062 ॥ ५५ ॥
115063
115064 मुखाद्बहिर्द्वादशान्ते रेचकाभ्यासयुक्तितः।
115065 प्राणे चिरं स्थितिं नीते प्रविशत्यपरां पुरीम् ॥ ५६ ॥
115066
115067 इदानीं परकायप्रवेशो येनोपायेन सिद्ध्यति तमाह-मुखादिति। द्वादशान्ते
115068 द्वादशाङ्गुलिपरिमितप्रान्ते ॥ ५६ ॥
115069
115070 श्रीराम उवाच।
115071
115072 वद स्वभावस्य कथं ब्रह्मन्नचलसंस्थितिः।
115073 वक्तारः सानुकम्पा हि दुष्प्रश्नेऽपि न खेदिनः ॥ ५७ ॥
115074
115075 विशेषोऽयं सिद्धप्राप्तौ स्थिरार्थता इति यदुक्तं तत्र स्वभाव एव हेतुर्वाच्यः
115076 सर्वस्य जगतो मायामयत्वादनियतस्थितित्वं प्राग्बहुशस्त्वयैव घटस्य पटता

115077 दृष्टा इत्यादिना व्युत्पादितं तत्र स्वभावस्यैकस्य नियतस्थितिः कथमिति रामः
115078 पृच्छति-वदेति || ५७ ||
115079
115080 श्रीवसिष्ठ उवाच |
115081
115082 शक्तिर्या तु स्वभावाख्या यथा स्फुरति चात्मनः |
115083 सर्गादिषु तथैवासौ स्थितिं यातीति निश्चयः || ५८ ||
115084
115085 सत्यसंकल्पस्येश्वरस्य सर्गादिकालसंकल्पप्रयुक्ता वस्तुस्वभावनियतिरपि
115086 यावत्सर्गकालमेव न प्रलये सास्तीति न सर्वनियतिभङ्गवादविरोध इत्याशयेन
115087 प्रागुक्तमेव स्मारयन् वसिष्ठस्तदुत्तरमाह-शक्तिरिति || ५८ ||
115088
115089 अवस्तुत्वादविद्याया वस्तुशक्तिरपि क्वचित् |
115090 भिद्यते दृश्यते ह्यङ्ग वसन्ते शारदं फलम् || ५९ ||
115091
115092 कालभेदेनेव देशभेदेनापि वस्तुशक्तेरनियतता दृष्टेत्याह-अवस्तुत्वादिति |
115093 क्वचित्कामरूपदेशादौ शारदं व्रीह्यादिफलम् || ५९ ||
115094
115095 सर्वमेवमिदं ब्रह्म नानाऽनानातया स्थितम् |
115096 जृम्भते व्यवहारार्थं केवलं कथितस्थिति || ६० ||
115097
115098 नानाऽनानातया अनियतस्वभावतया स्थितं सर्वमेवेदं ब्रह्म | ब्रह्म
115099 स्वभावेनैव नियतैकरूपं नान्येनेत्यर्थः | कथं तर्हि
115100 वेह्नेरूर्ध्वज्वलनादिनियतिस्तत्राह-जृम्भते इति |
115101 प्राणिकर्मतत्फलोपभोगव्यवहारार्थमज्ञातं ब्रह्मैव कंचित्कालं तथा तथा
115102 नियतस्थिति भूत्वा जृम्भत इत्यर्थः || ६० ||
115103
115104 श्रीराम उवाच |
115105
115106 सूक्ष्मच्छिद्रादिगत्यर्थं पूरणार्थं च खस्य वा |
115107 अणुतां स्थूलतां वापि कायोऽयं नीयते कथम् || ६१ ||
115108
115109 इदानीमणिमाख्या महिमाख्या च सिद्धिः केनोपायेन सिद्ध्यतीति रामः पृच्छति##-
115110
115111 श्रीवसिष्ठ उवाच |
115112
115113 काष्ठक्रकचयोः श्लेषाद्यथा छेदः प्रवर्तते |
115114 द्वयोः संघर्षणादग्निः स्वभावाज्जायते तथा || ६२ ||
115115
115116 अस्य प्रश्नस्योत्तरमुत्तरसर्गे विस्तराद्वर्णयिष्यंस्तदुपोद्घाततया देहे
115117 अग्नीषोमव्याप्तिं निरूपयिष्यन् प्राणापानयोः संघर्षादन्तराले जाठराग्निनिष्पत्तौ
115118 दृष्टान्तमाह-काष्ठेति | छेदो द्वैधीभावः | द्वयोः प्राणापानयोः |
115119 अग्निर्जाठरः || ६२ ||
115120
115121 मांसं कुयन्त्रजठरे स्थितं श्लिष्टमुखं मिथः |
115122 ऊर्ध्वाधःसंमिलत्स्थूलद्व्यम्भःस्थैरिव वैतसम् || ६३ ||
115123
115124 प्राणापानयोः संघर्षणोपपत्तये अन्योन्याकर्षकत्वे कारणमाह##-
115125 नाभेरूर्ध्वमधश्च संमिलत् अत एव मिथः
115126 श्लिष्टमुखमामाशयपक्वाशयभस्त्राद्वयरूपं स्थूलं मांसं
115127 दिविस्थैरूर्ध्वमाकाशसंस्थैरम्भःस्थैरधो जले निमग्नैश्च भागैः
115128 परस्परश्लिष्टैरुपलक्षितमधोऽम्भसा ऊर्ध्वं वायुना च विरुद्धदेशयोः

115129 कृष्यमाणं वैतसं कुञ्जमिव कम्पमानं स्थितं वर्तत इत्यर्थः ॥ ६३ ॥
115130
115131 तस्य कुण्डलिनी लक्ष्मीर्निलीनान्तर्निजास्पदे ।
115132 पद्मरागसमुद्गस्य कोशे मुक्तावली यथा ॥ ६४ ॥
115133
115134 अस्तु तत्किं ततस्तत्राह-तस्येति । तस्य मांसस्याधस्तनभस्त्राभागस्य
115135 मूलभागरूपे निजे आस्पदे मूलाधारे प्रागुक्ता कुण्डलिनी सर्वस्य
115136 कार्यकारणसंघातस्य प्राणप्रदत्वाल्लक्ष्मीः ॥ ६४ ॥
115137
115138 आवर्तफलमालेव नित्यं सलसलायते ।
115139 दण्डाहतेव भुजगी समुन्नतिविवर्तिनी ॥ ६५ ॥
115140
115141 जपकाले आवर्त्यमाना रुद्राक्षादिफलमालेव नित्यमभीक्ष्णं
115142 प्राणापानोद्गिरणनिगिरणाभ्यां सलसलायते कम्पेनाव्यक्तरवं जनयति ।
115143 अव्यक्तानुकरणाड्डाचि बहुलग्रहणात् करोत्यर्थे क्यङ् । समुन्नतिरूर्ध्वमुखता
115144 तया विवर्तिनी परिवर्तनशीला ॥ ६५ ॥
115145
115146 द्यावापृथिव्योर्मध्यस्था क्रियेव स्पन्दधर्मिणी ।
115147 संविन्मधुविबोधार्को हृत्पद्मपुटषट्पदी ॥ ६६ ॥
115148
115149 द्यावापृथिव्योर्मध्ये प्राणिनामूर्ध्वाधोगतिहेतुर्विहितनिषिद्धक्रियेव
115150 प्राणापानयोरूर्ध्वाधोगतिहेतुत्वात्स्पन्दधर्मिणी । चाक्षुषादिभविल्लक्षणानां
115151 मधूनां रूपादिविषयास्वादानां विबोधे अर्क इव स्थिता ॥ ६६ ॥
115152
115153 तत्सर्वं शक्तिपद्मादि बाह्येनाभ्यन्तरैस्तया ।
115154 हृदि व्याधूयते वातैः पत्रवृन्दमिवाभितः ॥ ६७ ॥
115155
115156 शक्तयो ज्ञानकर्मेन्द्रियादिशक्तयः । प्रागुक्तं हृत्पद्ममादिपदान्नाडीजालं च
115157 हृदि आभ्यन्तरैर्वातैस्तया व्याधूयते कम्प्यते । यथा बाह्येन वातेन
115158 तरुपत्रवृन्दं व्याधूयते तद्वदित्यर्थः ॥ ६७ ॥
115159
115160 यद्वद्व्योम स्फुरत्यङ्ग स्वभावात्तत्र वायवः ।
115161 बलवन्मृदु यत्किंचिद्भृशं कवलयन्ति तत् ॥ ६८ ॥
115162
115163 बाह्यं व्योम यद्वद्विशालं स्फुरति तत्र च स्वभावादेव वायवो
115164 बलवत्काष्ठपाषाणादिमृदपर्णतृणादि च कवलयन्तीव कालेन जरयन्ति
115165 तद्वदन्तर्व्योम्न्यपि प्राणवायवो भुक्तमन्नादि जरयन्तीत्यर्थः ॥ ६८ ॥
115166
115167 वातैराहन्यमानं तत्पद्मादि तरलायते ।
115168 हृद्यन्यान्यैति कार्येण पल्लवादि यथा तरोः ॥ ६९ ॥
115169
115170 जरणप्रकारमेवाह-वातैरिति । तत्प्रागुक्तं हृत्पद्मनाडीभस्त्रादि
115171 प्राणवातैराहन्यमानं ध्मायमानं लोहकारभस्त्रेव तरलायते । तरलायमानस्य
115172 तस्य हृदि अन्तःप्रविष्टस्यान्नस्य प्रथमं रसो रसाद्रक्तं रक्तान्मांसं
115173 मांसात्त्वक् त्वचो मेदो मेदसो मज्जा मज्जाभ्योऽस्थीन्यस्थिभ्यः शुक्रमिति
115174 विचित्रकार्येणान्यस्या अन्या परिणतिरेति । यथा वसन्ते तरोरन्तःप्रविष्टभौमरसस्य
115175 पल्लवा मञ्जर्यः पुष्पाणि फलानीत्यादि एति तद्वदित्यर्थः ॥ ६९ ॥
115176
115177 देहेष्वाजरणं सर्वरसानां पवनोऽन्वहम् ।
115178 जनयत्यग्निमन्योन्यसंघर्षाद्वनवेणुवत् ॥ ७० ॥
115179
115180 तत्र सप्तस्वपि धातुस्थानेषूत्तरोत्तरपरिणामसिद्धये

115181 परस्परसंघर्षाज्जाठराग्नेरभिव्यक्तिरस्तीत्याशयेनाह-देहेष्विति। आजरणं
115182 जरणपरम्परया चरमधातुपरिणामपर्यन्तमित्यर्थः॥ ७०॥
115183
115184 स्वभावशीतवातात्मा देहस्तेनौष्ण्यमेत्यथ।
115185 उदितेन स सर्वाङ्गे भुवनं भानुना यथा॥ ७१॥
115186
115187 स देहः सर्वाङ्गे उदितेन प्रदीप्तेन तेन जाठराग्निना औष्ण्यमेति॥ ७१॥
115188
115189 सर्वतो विचरेदस्मिंस्तत्तेजस्तारकाकृति।
115190 हृत्पद्महेमभ्रमरो योगिनां चिन्त्यतां गतम्॥ ७२॥
115191
115192 तस्यैव सर्वदेहव्यापिनो जाठराग्नेर्हृत्पद्मे तारकाकारेण योगिभिरुपासनं क्रियत
115193 इत्याह-सर्वत इति। अस्मिन् देहे॥ ७२॥
115194
115195 तत्प्रकाशमयं ज्ञानं चिन्तितं सत्प्रयच्छति।
115196 येन योजनलक्षस्थं वस्तु नित्यं हि दृश्यते॥ ७३॥
115197
115198 तदेव चिद्रूपेण चिन्त्यमानं व्यवहितविप्रकृष्टसर्वपदार्थदर्शनसिद्धिं
115199 जनयतीत्याह-तदिति॥ ७३॥
115200
115201 तस्याग्नेर्वाडवस्येव जलं संशुष्कमिन्धनम्।
115202 मांसपङ्कजखण्डाढ्यंन् हृत्सरः कोशवासिनः॥ ७४॥
115203
115204 तस्याग्नेरिन्धनमाह-तस्येति। वाडवस्याग्नेः सामुद्रं जलमिव मांसलक्षणैः
115205 पङ्कजखण्डैराढ्यं यद्धृत्सरस्तत्कोशशायिनस्तस्य जाठरस्याग्नेरपि
115206 शारीरमन्नरसरूपं जलं संशुष्कं ज्वलनयोग्यमिन्धनमित्यर्थः॥ ७४॥
115207
115208 यदच्छंन् शीतलत्वं च तदस्यात्मेन्दुरुच्यते।
115209 इतीन्दोरुत्थितः सोऽग्निरग्नीषोमौ हि देहकः॥ ७५॥
115210
115211 देहे इन्धनभूतमिन्द्वंशं लक्षणेन विभज्य देहस्याग्नीषोमात्मकत्वमाह##-
115212
115213 सर्वं तूष्णात्मकं किंचित्तेजोऽर्काग्न्यभिधं विदुः।
115214 शीतात्मकं तु सोमाख्यमाभ्यामेव कृतं जगत्॥ ७६॥
115215
115216 बहिरपि जगत्प्रकाशौष्ण्याभ्यां शैत्यजाड्याभ्यां चाग्नीषोमात्मकं
115217 ज्ञेयमित्याह-सर्वमिति॥ ७६॥
115218
115219 विद्याविद्यास्वरूपेण सर्वं सदसदात्मना।
115220 जगद्वा येन निर्वृत्तं तदेवैवं विभज्यते॥ ७७॥
115221
115222 अथवा चिज्जडोभयघटितं सदसदात्मकमविद्याशबलं ब्रह्मैव जगदाकारेण
115223 निर्वृत्तमिति तदेवैवं प्रकाशजाड्यात्मना अग्नीषोमरूपेण विभक्तमित्याह##-
115224
115225 संवित्प्रकाशं विद्यादि सूर्यमग्निं विदुर्बुधाः।
115226 असज्जाड्यं तमो विद्याद्याहुः सोमं मनीषिणः॥ ७८॥
115227
115228 तं विभागमेव स्फुटमाह-संविदिति। विद्यां आत्मतत्त्वस्फूर्तिम्।
115229 आदिपदाद्वाह्यार्थप्रथां च॥ ७८॥
115230
115231 श्रीराम उवाच।
115232

115233 वह्निर्वाय्वात्मनः सोमादुदेतीति मुनीश्वर।
115234 सोमस्योत्पत्तिमधुना वद मे वदतां वर॥ ७९॥
115235
115236 देहेष्वाजरणं सर्वरसानां पवनोऽन्वहम्।
115237 जनयत्यग्निमन्योन्यसंघर्षाद्वनवेणुवत् इति त्वदुक्त्या देहे बहिश्च
115238 प्रत्यक्षेणाग्न्यादित्यादेर्वाय्वधीनोद्भवोदयादिदर्शनाद्वह्निर्वाय्वात्मनः
115239 सोमादुदेतीत्ययमर्थो मया बुद्ध इति शेषः। शेषः स्पष्टः॥ ७९॥
115240
115241 श्रीवसिष्ठ उवाच।
115242
115243 अग्नीषोमौ मिथः कार्यकारणे च व्यवस्थिते।
115244 पर्यायेण समं चैतौ प्रजीषेते परस्परम्॥ ८०॥
115245
115246 परस्परं पर्यायेण प्रजीषेते जिगीषेते। जेः सनि द्वित्वकुत्वयोरभावश्छान्दसः।
115247 अज्झनगमाम् इति दीर्घः। प्रजीवेते इति पाठे तु परस्परमुपजीवत इत्यर्थः॥ ८०॥
115248
115249 जन्माङ्गबीजाङ्कुरवत्तथा दिवसरात्रिवत्।
115250 स्थितिश्छायातपसमा केवला सैतयोर्भवेत्॥ ८१॥
115251
115252 अनयोर्जन्मबीजाङ्कुरवत्परस्परोपादानकं दिवसरात्रिवत्परस्परनिमित्तकं च।
115253 स्थितिस्तु छायातपसमा परस्परोपघातिनीत्यर्थः॥ ८१॥
115254
115255 तुल्यकालोपलम्भासावित्थं छायातपस्थितिः।
115256 केवलैकोपलम्भाढ्या स्थितिर्दिवसरात्रिवत्॥ ८२॥
115257
115258 दृष्टान्तभेदोपन्यासस्य तात्पर्यान्तरमाह-तुल्येति। युगपदुलम्भे
115259 छायातपस्थितिः पर्यायेणोपलम्भे दिनरात्रिस्थितिर्दृष्टान्त इत्यर्थः॥ ८२॥
115260
115261 कार्यकारणभावश्च द्विविधः कथितोऽनयोः।
115262 सद्रूपपरिणामोत्थो विनाशपरिणामजः॥ ८३॥
115263
115264 दृष्टान्तयोः कार्यकारणभावद्वयपरत्वपक्षेऽप्यवान्तरभेदान्तरद्वयेऽपि
115265 तात्पर्यमस्तीत्याह-कार्यकारणभावश्चेति॥ ८३॥
115266
115267 एकस्माद्यद्द्वितीयस्य संभवोऽङ्कुरबीजवत्।
115268 कार्यकारणभावोऽसौ सद्रूपपरिणामजः॥ ८४॥
115269
115270 तयोराद्यमुपपादयति-एकस्मादिति॥ ८४॥
115271
115272 एकनाशे द्वितीयस्य यद्भावो दिनरात्रिवत्।
115273 कार्यकारणभावोऽसौ विनाशपरिणामजः॥ ८५॥
115274
115275 द्वितीयमुपपादयति-एकेति। भाव उत्पत्तिः॥ ८५॥
115276
115277 सद्रूपपरिणामस्य मृद्घटक्रमसंस्थितेः।
115278 अक्षोपलम्भादितरत्प्रमाणं नोपयुज्यते॥ ८६॥
115279
115280 आद्ये कार्यदशायां कारणसत्त्वे मृदात्मकोऽयं घट इत्यादि प्रत्यक्षं
115281 प्रमाणमित्याह-सद्रूपेति। यद्यप्यनुमानादीनामपि संभवोऽस्ति तथापि
115282 प्रत्यक्षसिद्धेऽर्थे न ते मृग्यन्ते इत्यनुपयोगोक्तिः। तदुक्तं न्यायवाचस्पत्ये न हि
115283 करिणि दृष्टे चीत्कारेण तमनुमिमते मिमातारः इति। सिद्धिसत्त्वेन
115284 पक्षतारूपकारणाभावादित्याशयः॥ ८६॥

विनाशपरिणामस्य दिनरात्रिक्रमस्थितेः।
अभावोऽप्येकवस्तुस्थो गतो मुख्यप्रमाणताम्॥ ८७॥

एवं द्वितीयेऽपि कार्यदशायां कारणासत्त्वे दिवारात्रिं नोपलभामहे इत्यनुपलब्धिः
प्रमाणमित्याह-विनाशेति। एकवस्तुस्थः एकवस्तुमात्रग्राहिप्रत्यक्षाविरुद्धः॥
८७॥

अनास्था नास्ति कर्तृत्वमित्याद्याऽऽयुक्तिवादिनः।
अवज्ञया बहिष्कार्याः स्वानुभूत्यपलापिनः॥ ८८॥

ननु कार्यं कुर्वत् कारणमुच्यते। तत्कर्तृत्वं च कारणस्य
तदभिनिवेशलक्षणायामास्थायां दृष्टम्। न च प्रकाशनमात्रोपक्षीणस्य
दिनस्य रात्रिनिर्माणे आस्थास्तीति नास्ति कर्तृत्वम्। एवं रात्रेरपि दिनकर्तृत्वं
नास्तीत्यभावपरिणामेन कार्यकारणभावो निर्मलः। एवमचेतनस्य मृदादेर्न
घटादिजनने आस्था संभवति। तस्याश्चेतनधर्मत्वात्।
किंचानुपमर्दितान्मृत्पिण्डान्न घटो निष्पद्यते। उपमर्दे तु मृत्पिण्डो
नश्यत्येवेति किं सद्रूपेण परिणमेत। न च पिण्डघटव्यतिरिक्ता उभयानुगता
मृन्नाम काचित्तत्र तृतीयास्ति। किं च बीजादिस्थितं निनंक्षु नश्यन्नष्टं वा
अङ्कुरं जनयेत्। नाद्यः। कुसूलादौ तत्प्रसङ्गात्। न द्वितीयतृतीयौ। तदा
स्वत्राणेऽप्यसमर्थं परमुत्पादयितुं समर्थमिति का वाचो युक्तिः। चतुर्थस्तु कल्पः
सर्वानुभवबाधित इति न कस्माच्चित्कस्यचिदुत्पत्तिर्विनाशो वा किंतु स्वभावत एव
सर्वमुत्पद्यते विनश्यति च तत्र पौर्वापर्यदर्शनादविवेकिनां
कार्यकारणभावविकल्पा इत्यादिदुर्युक्तिवादिनः स्वानुभवविरोधोद्भावनेनैव
निरसनीया इत्याह-अनास्थेति। इत्यादिरायुक्तिर्दुर्युक्तिस्तद्वादिनः। अवज्ञया
अवमानेन। स्वानुभूत्यपलापिता च तेषामित्थं वर्णनीया।
अनास्थादियुक्तिबुद्धिरकर्तृत्वादिबुद्धिं जनयति चेत्तयोरेव
कार्यकारणभावस्तवानुभवसिद्ध इति कथं तत्सामान्यापलापः। यदि न जनयति
तर्हि तथा स्वानुभववतस्तव परबुबोधयिषया युक्त्युपन्यासः स्वानुभवविरुद्धः
प्रलाप इति। एवं रात्रिरपि चरमभावविकारात्मना अभावपरिणामेन दिनस्य
कारणमिति स्वानुभवसिद्धमेव। न च नाशो न भावविकारः। उत्पत्त्यादेरिव तस्यापि
भावधर्मत्वानुभवात्। एवं बीजाङ्कुराद्यवस्थास्वनुगतं
द्रव्यमप्यबाधितप्रत्यभिज्ञानुभवसिद्धं नापलापार्हम्। तदेव स्थितं
निनंक्षु नश्यन्नष्टमित्याद्यवस्थाभेदं स्वात्मन्यनुभवदङ्कुरादेः कारणं
नावस्थाभेदेषु इति तत्र द्रव्यभेदांस्तेषां
निर्हेतुकोपेत्त्यादीन्निष्प्रमाणकानतिगौरवग्रस्तांश्च प्रलपन्तो मूर्खा अवज्ञयैव
बहिष्कार्या इत्यर्थः॥ ८८॥

प्रत्यक्षवदभावोऽपि प्रमैव रघुनन्दन।
अग्न्यभावोऽपि शीइतस्य प्रमाणं सर्वजन्तुषु॥ ८९॥

अनुपलब्धेः प्रामाण्यसंदेहं वारयति-प्रत्यक्षवदिति। प्रमैव प्रमाणमेव।
न चाभावे प्रभाकरणत्वमन्यत्र न दृष्टमिति भ्रमितव्यम्। तेजोऽभावस्य
शीतानुमितौ लिङ्गविधया करणत्वप्रसिद्धेरित्याह-अग्न्यभाव इति॥ ८९॥

अग्निर्धूमतया भागाद्यां प्रयाति पयोदताम्।
सद्रूपपरिणामेन तदग्निः सोमकारणम्॥ ९०॥

बहिरग्नेः सद्रूपपरिणामेन सोमकारणत्वमुदाहरति-अग्निरिति। तत् तत्र॥ ९०॥

अग्निर्नष्टतया [असौ नष्टतया शैल्याद्वायुतामेव याति यत् इति पाठः
अग्निर्नष्टतया इति मूलपाठे तु वायुभावमित्यध्याहारलब्धं ज्ञेयम्।]

115337 शैत्यादसावेव प्रयाति यत् |
115338 विनाशपरिणामेन तदग्निः सोमकारणम् || ९१ ||
115339
115340 अभावपरिणामेनापि तदुदाहारति-अग्निरिति | असौ अग्निर्यद्वायुभावं प्राप्नोति |
115341 यदा वा अग्निरुद्वायति वायुमेवाप्येति इति श्रुतेः || ९१ ||
115342
115343 सप्ताम्बुधिपयः पीत्वा धूमोद्गारेण वाडवः |
115344 पयोदतां प्रयातेन तदेव जनयत्यलम् || ९२ ||
115345
115346 सरूपपरिणामेनाग्नीषोमयोः परस्परकारणत्वमेकैकत्रोदाहरति-सप्तेत्यादिना |
115347 वाडवो वडवानलः पयोदतां प्रयातेन स्वेनैव तत्सप्ताम्बुधिपय एव जनयति |
115348 क्षीरदधिघृतादीनामपि रसात्मकसोमरूपत्वात्सर्वत्र पयोवाधः || ९२ ||
115349
115350 अर्कः पीत्वा निशानाथमामावास्यं पुनः पुनः |
115351 उद्गिरत्यमले पक्षे मृणालमिव सारसः || ९३ ||
115352
115353 आ अमावास्यामित्यामावास्यम् | आङ्मर्यादाभिविध्योः इत्यव्ययीभावे
115354 नपुंसकह्रस्वः | कृष्णपक्षे अमावास्यापर्यन्तमित्यर्थः | अमले शुक्ले पक्षे || ९३ ||
115355
115356 पीत्वामृतोपमं शीतं प्राणः सोममुखागमे |
115357 अभ्रागमात्पूरयति शरीरं पीनतां गतः || ९४ ||
115358
115359 सोमो मुखमिव शोभमानो यत्र तथाविधवसन्तग्रीष्मागमे प्राणः सोष्मा
115360 वायुर्भौमं पयः पीत्वा वर्षर्तावभ्रागमात्तद्वेषेण पीनतां गतः सन् वृष्ट्या
115361 पुनर्जगच्छरीरं पूरयति | अथवा आध्यात्मिक एव प्राणः सोमस्यापानस्य
115362 मुखादन्नपानादेरुदरे आगमने सति अमृतोपमं तद्रसं पीत्वा पीनतां गतः
115363 सन्नभ्रवद्व्याप्तसर्वनाडीजालागमनाच्छरीरं पूरयत्याप्याययति | स एवास्य
115364 पुनः सोमपरिणाम इत्यर्थः | तदपानेनाजिघृक्षत्तदावयत्सैषोऽन्नस्य ग्रहः इति
115365 श्रुतेरिति भावः | सोमं सुखागमे इति पाठे तु प्राणोऽग्निभूतो यजमानप्राणोऽध्वरे
115366 अमृतोपमं शीतं सोमरसं पीत्वान्ते धूमादिमार्गेण सुखस्य स्वर्गस्यागमे
115367 अभ्रस्य चन्द्रसन्निहिताकाशलक्षणमार्गपर्वण आगमनाच्चन्द्रं प्राप्य
115368 तद्भावं प्राप्तः कलाभिः स्वशरीरं पूरयति स एवास्य पौर्णमास्यां पीनतां
115369 गतः पुनः सोमपरिणाम इत्यर्थः | धूमादिमार्गश्चन्द्रभावश्च श्रुत्यैव
115370 दर्शितः | अथ यत्रेमे प्रातरिष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्ति
115371 धूमाद्रात्रिं रात्रेरपरपक्षमपरपक्षाद्यान् षट्दक्षिणैति मासांस्तानैते
115372 संवत्सरमभिप्राप्नुवन्ति मासेभ्यः पितृलोकं
115373 पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो राजा तद्देवानामन्नम् इति |
115374 तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा संभवति इति च
115375 पञ्चाग्नि विद्यायाम् || ९४ ||
115376
115377 जलमप्युदपां भोगे प्रयात्यर्कस्य रश्मिताम् |
115378 सद्रूपपरिणामेन तज्जलं वह्निकारणम् || ९५ ||
115379
115380 यदि मन्यसे न वायुर्भौमं रसं शोषयति किं त्वर्करश्मय एव तं पिबन्ति
115381 रात्रावप्यूष्मरूपेण तेषां सत्त्वादिति तदा त एवोदाहरणमित्याशयेनाह##-
115382 रश्मितां सरूपपरिणामेन याति | शुक्लरूपेण तत्रापामनुगमदर्शनात् |
115383 यदादित्यस्य लोहितं रूपं तेजस्तद्रूपं यच्छुक्लं तदपाम् इति श्रुतेरिति भावः || ९५ ||
115384
115385 नाशात्मकतया तोयमौष्ण्यत्वादेति ह्यग्निताम् |
115386 विनाशपरिणामेन तत्तोयं वह्निकारणम् || ९६ ||
115387
115388 यस्तु तत्र शैत्यद्रवत्वयोर्नाश औष्ण्यरौक्ष्ययोश्चोद्भवस्तदंशे

115389 विनाशपरिणामिताप्यस्तीति संकीर्णोदाहरणमिदमित्याह-नाशात्मकतयेति ॥ ९६ ॥
115390
115391 अग्नेर्विनाशे सद्रूपपरिणामो निशाकरः ।
115392 इन्दोर्विनाशे सद्रूपपरिणामो हुताशनः ॥ ९७ ॥
115393
115394 सर्वत्राग्नीषोमात्मके परिणामे उभयरूपसंकीर्णतापि सूक्ष्मदृशा लक्षयितुं
115395 शक्येत्याशयेनाह-अग्नेरिति द्वाभ्याम् ॥ ९७ ॥
115396
115397 हुताशो नाशमागत्य सोमो भवति वै तथा ।
115398 दिवसो नाशमागत्य रात्रिर्भवति वै यथा ॥ ९८ ॥
115399
115400 तमःप्रकाशयोश्छायातपयोर्दिनरात्रयोः ।
115401 मध्ये विलक्षणं रूपं प्राज्ञैरपि न लभ्यते ॥ ९९ ॥
115402
115403 तर्हि तमःप्रकाशयोश्छायातपादौ च किमनुगतं रूपं येन सद्रूपपरिणामता
115404 तत्र स्यादिति चेत् तद्वह्मैव तच्चाभिज्ञतमैरपि शृङ्गग्राहिकया न लभ्यत
115405 इत्याह-तम इति । मध्ये अनुगतं व्यावृत्ततमःप्रकाशविलक्षणं
115406 सन्मात्ररूपम् । अथवा मध्ये संधौ उभयविलक्षणम् । दिनरात्रयोरिति
115407 समासान्तश्छान्दसः ॥ ९९ ॥
115408
115409 संधिरप्यविलोपः स्यादेतयोरेव तद्वपुः ।
115410 भावाभावैर्यथैकास्थानिष्ठावेतौ तथैव हि ॥ १०० ॥
115411
115412 ननु तमःप्रकाशयोः संधिरुभयविलोपात्मा शून्यरूपस्तत्र नोभयविलक्षणं
115413 किंचिद्रूपमस्तीत्याशङ्क्याह-संधिरिति । अनयोः संधिरपि अवलोपः
115414 अशून्यरूपः स्यात् । यतस्तत्संधिरूपमेतयोरेव वपुः परस्परसंलग्नं स्वरूपम् ।
115415 न हि शून्ययोः संधिर्नाम भवति । न वा निर्निमित्ता सतोः शून्यता कथं तर्हि तौ
115416 संधौ वर्तेते इति चेत् । यथा पूर्वोत्तरकालयोर्भावाभावैः ।
115417 उदाहरणबाहुल्याद्बहुवचनम् । परस्परनिरपेक्षनिरूपणेन भावरूपेण
115418 सापेक्षनिरूपणेनाभावरूपेण च तम इदं प्रकाशाभावरूपमेकमेव वस्तु
115419 प्रकाशश्चायं तमोऽभावरूपमेकमेव वस्त्विति सर्वानुभवादेतावेकास्थानिष्ठौ
115420 स्थितौ तथैव हि संधावपि वर्तेते । नाणुमात्रमप्यन्यथाभूतावित्यर्थः ॥ १०० ॥
115421
115422 द्वाभ्यां चैतन्यजाड्याभ्यां भूतानि प्रस्फुरन्ति हि ।
115423 यथा तमःप्रकाशाभ्यामहोरात्रा महीतले ॥ १०१ ॥
115424
115425 चिद्रूपजडरूपाभ्यामारब्धेयं जगत्स्थितिः ।
115426 जलामृताभ्यां मिश्राभ्यां शीता तनुरिवन्दवी ॥ १०२ ॥
115427
115428 यथा विरुद्धाविरुद्धतमःप्रकाशघटिता अहोरात्रास्तथा चिज्जडोभयघटिताः
115429 सर्वव्यवहारा इत्याह-चिद्रूपेति । जलमये बिम्बे सूर्यकरद्वारा
115430 सूर्यबिम्बस्थितामृतात्मककलाभिः क्रमेण पूरणादुभयारब्धा ऐन्दवी तनुरिव ॥
115431 १०२ ॥
115432
115433 प्रकाशमनलं सूर्यन् चिद्रूपं विद्धि राघव ।
115434 जडात्मकं तमोरूपं विद्धि सोमशरीरकम् ॥ १०३ ॥
115435
115436 चिज्जडोभयांशशाभ्यामेव प्रकाशाप्रकाशतया आविर्भूताभ्यां
115437 जगतोऽग्नीषोमात्मकतेत्याह-प्रकाशमिति ॥ १०३ ॥
115438
115439 चित्सूर्ये निर्मले दृष्टे नाम नश्येद्भवोदयम् ।
115440 व्योमसूर्ये बहिर्दृष्टे यथा कृष्णनिशातमः ॥ १०४ ॥

115441
115442 बहिः सूर्योदयात्तम इवान्तश्चरमवृत्त्या
115443 चिदादित्योदयाज्जगन्मूलतमोनिवृत्तिरित्याह-चित्सूर्ये इति। भवस्योदयो
115444 यस्मात्तद्भवोदयंन् तमः॥ १०४॥
115445
115446 सोमदेहे जडे दृष्टे चिन्निजे सत्यवद्भवेत्।
115447 निशीथे विलसत्यब्जे यथा सौरप्रभाभरः॥ १०५॥
115448
115449 निजे प्रत्यगात्मनि जडे सोमदेहे दृष्टे सति तत्तादात्म्येन स्फुरन्त्यपि
115450 चित्तद्गुणत्वमिवापन्ना गुणान्तरवत्तत्सत्तयैव सती भूत्वा स्वसत्तया असत्यवद्भवेत्।
115451 यथा निशीथे अर्धरात्रेऽब्जे चन्द्रे विलसति तदनुप्रवेशेन स्फुरन्
115452 सौरप्रभाभरश्चन्द्रधर्मचन्द्रिकात्वेन संपन्नश्चन्द्रसत्तया सन्निव भूत्वा
115453 स्वसत्तया असत्यवद्भवति तदानीं सौरप्रभाभरो नास्तीति सर्वजनानुभवादिति
115454 भावः॥ १०५॥
115455
115456 सोमं प्रकटयत्यग्निश्चिद्देहस्य चिरं प्रभाम्।
115457 स्वसंविन्मयमिन्दुश्चिद्देहस्थं रूपमर्कजम्॥ १०६॥
115458
115459 दृष्टान्तदार्ष्टान्तिकयोरुपपत्तिं फलं चाह-सोममिति। चन्द्रमण्डले
115460 प्रविष्टः सूर्यप्रभारूपोऽग्निः सोमं जलमयं चन्द्रबिम्बं प्रकटयति
115461 स्फुरद्रूपं करोति। देहे तु जीवभावेनानुप्रविष्टा चिद्देहस्य चिरं
115462 यावदायुःप्रभामहंभावादिना प्रथां करोति यथा प्रकाशयत्येकः कृत्स्नं
115463 लोकमिमं रविः। क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत॥ इति
115464 भगवद्वचनात्। एवमन्योन्यमेलने तादात्म्याध्यासादर्कजं रूपं
115465 प्रभामण्डलमिन्दुर्भवति। चिच्च स्वसंविन्मयं मनुष्योऽहं चेतन
115466 इत्यादिस्वानुभवानुसारिदेहस्थं रूपं भवतीत्यन्वयः॥ १०६॥
115467
115468 चिन्निष्क्रिया त्वनामा सा केवला नोपलभ्यते।
115469 आलोक इव दीपेन देहेनैवावगम्यते॥ १०७॥
115470
115471 इतोऽपि तस्या देहधर्मत्वभ्रम इत्याह-चिदिति। नमयति संकोचयतीति नाम
115472 उपाधिस्तच्छून्या॥ १०७॥
115473
115474 चितश्चेत्योन्मुखत्वेन लाभः सैव च संसृतिः।
115475 निश्चेत्यायाः शोभो लाभो निर्वाणं वा तदेव हि॥ १०८॥
115476
115477 अज्ञानावृतायाश्चितश्चेत्योपाध्युन्मुखप्रथानियमादेवानर्थप्राप्तिरित्याह##-
115478
115479 अन्योन्यलब्धसद्वाक्यावेवं कुड्यप्रकाशवत्।
115480 अग्नीषोमाविमौ ज्ञेयौ संपृक्तौ देहदेहिनौ॥ १०९॥
115481
115482 एवमुक्तरीत्या कुड्यसौरप्रकाशवदन्योन्यसंवलनाधीनसद्रूपेण
115483 वाग्व्यवहारविषयत्वादिमौ देहदेहिनावप्यग्नीषोमात्मकौ ज्ञेयौ॥ १०९॥
115484
115485 अतिशायिनि निर्वाणे जाड्ये चैवातिशायिनि।
115486 अग्नीषोमस्य चैवाङ्ग स्थितिर्भवति केवला॥ ११०॥
115487
115488 तयोरसंवलिता प्रत्येकं स्थितिः क्व प्रसिद्धा तदाह-अतिशायिनीति।
115489 निर्वाणमुपाधिनिवृत्त्या आनन्दाविर्भावस्तस्मिन्नतिशायिनि आत्यन्तिके सिद्धे अग्नेः
115490 केवला स्थितिर्भवति। जाड्ये त्वतिशायिनि जलशिलादिभावे सोमस्य केवला
115491 स्थितिर्भवतीत्यर्थः॥ ११०॥
115492

प्राणोऽग्निरुष्णप्रकृतिरपानः शीतलः शशी।
छायातपवदित्येतौ संस्थितौ मुखमार्गगौ॥ १११॥

प्राणापानयोरप्यग्नीषोमात्मकत्वं प्रागुक्तं प्रकृतोपयोगाय स्मारयति##-

अपाने शीतले सत्तामेत्युष्णः प्राणपावकः।
प्रतिबिम्बमिवादर्शे स च तस्मिंस्तथैव हि॥ ११२॥

तयोः कुड्यालोकवदन्योन्यतादात्म्यस्थितिं दर्शयति-अपाने इति॥ ११२॥

चिदग्निः पद्मपत्रस्थं सोमं वाचात्मकं त्विषा।
जनयत्यनुभूत्येह कुड्यालोकं यथा बहिः॥ ११३॥

मूलप्राणकुण्डलिनीरूपश्चिदग्निराधारादिकण्ठान्तचतुर्दलादिपद्मपत्रस्थं
परादिवैखरीपर्यन्तवाचात्मकम्। त्विषा अर्थप्रकाशनशक्त्या। अनुभूत्या
विवक्षापक्षे त्वर्थप्रथारूपया स्फूर्त्या। यथा बहिः सूर्य इति शेषः॥ ११३॥

संसृत्यादौ यथा काचित्संविच्छीतोष्णरूपिणी।
अग्नीषोमाभिधां प्राप्ता सैव सर्गे नृणामिह॥ ११४॥

यथा सर्गादौ मायाशबलं ब्रह्म संविच्छीतोष्णरूपिणी
ब्रह्माण्डाकारेणग्नीषोमाभिधां प्राप्ता तथा नृणां व्यष्टिदेहानां
सर्गेऽपीत्यर्थः॥ ११४॥

यत्र सोमकला ग्रस्ता क्षणं सूर्येण षोडशी।
मुखाद्वितस्तिमात्रं स्यात्तत बद्धपदो भव॥ ११५॥

अस्त्वेवं ब्रह्माण्डमिव शरीरमप्यग्नीषोमात्मकं किं ततः कार्य तत्राह##-
प्रतिपदादितिथिषु क्रमेण ग्रसति एकां ध्रुवाख्यां चिद्रूपां परिशेषयति ततः
शुक्लपक्षे क्रमेणोष्णा उद्गिरति ताभिः क्रमेण पूर्यमाणा ध्रुवा कला पूर्णः सोमो
जायते। तथा हृदि स्थितः प्राणसूर्योऽपानरूपस्य सोमस्य मुखनासिकाद्वारा
प्रविष्टाः शीताः पञ्चदशकला ग्रसित्वा मुखाद्बहिर्ध्रुवाख्यामेकां कलां
परिशेष्य पुनस्ता उष्णा उद्गिरति। ताभिः सा पूर्यमाणा बहिरपानाख्यः सोमो जायते।
तत्र बहिःप्राणापानसंधिकालः पूर्णमासी हृदि त्वमावास्या। अन्तरालदेशे
इडापिङ्गलयोः प्रत्येकमूर्ध्वाधोभागप्रतिशाखानाडीषट्के प्राणसूर्यस्य
प्रवाहाद्द्वे अयने मेषादयो द्वादश मासास्तदन्तराले संक्रान्तौः। अपानसोमस्य
प्रवाहाच्चैत्रादयो मासा विष्कम्भादयो योगा अन्यानि च पर्वाणि निष्पद्यन्ते इति
योगिनां प्रत्यक्षम्। अन्यैस्तु स्वरोदयादिशास्त्रतो ज्ञेयम्। एवं स्थिते
वक्ष्यमाणदेहाणुतास्थौल्याद्युपयोगिधारणाभेदाः प्रथमं त्रिभिः
श्लोकैरुपदिश्यन्ते। यत्र मुखाद्बहिर्देशे सूर्येणाग्रस्ता ध्रुवाख्या
सोमस्यापानस्य षोडशी कला प्राणेनोद्गीर्णाभिः कलाभिः पूर्यमाणा क्षणं
प्राच्यां पूर्णमासीचन्द्र इव वितस्तिमात्रं स्यात्तत्र
भुशुण्डोपाख्यानोक्तबाह्यकुम्भकेन मनोधारणया बद्धपदः स्थिरो
भवेत्यर्थः॥ ११५॥

नूनं सूर्यपदं प्राप्तो यत्र सोमो हृदम्बरे।
नूनं केवलया स्थित्या तत्र बद्धपदो भव॥ ११६॥

तथा यत्र हृदम्बरे कलाग्रासेन क्रमाद्ग्रस्यमानोऽपानाख्यः
सोमोऽमावास्यायामिव केवलया शुद्धचिद्रूपध्रुवाख्यकलात्मिकया स्थित्या तिष्ठति
तत्रान्तः कुम्भकेन बद्धपदो भव॥ ११६॥

115545 उष्णमग्निश्चिदादित्यः शैत्यं सोम उदाहृतम् |
115546 यत्रैतौ प्रतिबिम्बस्थौ तत्र बद्धपदो भव || ११७ ||
115547
115548 इदानीमर्धरेचकेनार्धपूरकेण वा अन्तराले प्राणस्योभयतो निरोधेन
115549 बिम्बप्रतिबिम्बवत्तुल्यरूपतामापाद्य धारणामाह-उष्णमिति || ११७ ||
115550
115551 शरीरे सोमसूर्याग्निसंक्रान्तिज्ञो भवानघ |
115552 तत्र संक्रान्तिकाला हि बाह्यास्तृणसमाः स्मृताः || ११८ ||
115553
115554 यथा वसन्तग्रीष्मवर्षाशरत्सु क्रमेण शीतस्यौष्ण्येन ग्रासात्सोमस्याग्निसंक्रान्तिः
115555 | शरद्धेमन्तशिशिरेषु क्रमादौष्ण्यस्य शैत्येन ग्रासादग्नेः सोमसंक्रान्तिस्तयोः
115556 संधी विषुवतौ सूर्यस्य च मेषादिषु संक्रान्तिस्तथा शरीरेऽपि अपानशैत्यस्य
115557 जठराग्निना ग्रासे सोमस्याग्निसंक्रान्तिः | प्राणौष्ण्यस्य बहिःशैत्येन ग्रासादग्नेः
115558 सोमसंक्रान्तिः | सूर्यस्य संक्रान्तयस्तु प्रागुक्तास्ता जानातीति तज्ज्ञो भवेति
115559 पूर्वोक्तधारणाङ्गं विधिः | प्रासङ्गिकं तज्ज्ञानस्य
115560 प्रसिद्धसंक्रान्तिस्नानदानादिफलेभ्य उत्कृष्टतमफलकीर्तनं प्रधानफलेन
115561 स्तुतिर्वा || ११८ ||
115562
115563 संक्रान्तिमुत्तरमथायनमङ्ग सम्यक्कालं तथा विषुवतौ यदि देहवातैः |
115564 अन्तर्बहिष्ठमिव वेत्सि यथानुभूतं तच्छोभसेऽत्र न पुनः परमभ्युपेतः
115565 || ११९ ||
115566
115567 उक्ताङ्गज्ञानमनूद्य तत्राधिकारिप्रवृत्तये प्ररोचयति-संक्रान्तिमिति | कालं
115568 अयनद्वयात्मकं संवत्सरं देहवातैः |
115569 प्राणापानयोर्द्वादशनाडीशाखानुसारिगतिभेदाद्बहुवचनम् | बहिःप्रसिद्धे
115570 संवत्सरे स्थितमिवान्तरमपि योगाभ्यासाद्यथानुभूतं प्रत्यक्षमनुभूतं
115571 घटादीव स्फुटं यदि वेत्सि तत्तर्हि अत्र योगिकथासु शोभसे | परं
115572 मदुपदिष्टादन्यदभ्युपेतो व्यासङ्गान्तरे प्रवृत्तस्तु शोभसे इति
115573 तदेकप्रवणताविधिः || ११९ ||
115574
115575 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मी० दे० मोक्षोपायेषु निर्वाणप्रकरणे पू०
115576 चू० अग्नीषोमविचारणं नामैकाशीतितमः सर्गः || ८१ ||
115577
115578 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
115579 अग्नीषोमविचारणं नामैकाशीतितमः सर्गः || ८१ ||
115580
115581 द्व्यशीतितमः सर्गः ८२
115582
115583 श्रीवसिष्ठ उवाच |
115584
115585 अणुतां स्थूलतां वापि यथा गच्छति योगिनाम् |
115586 देहो नाम तथा सम्यग्वक्ष्यमाणमिदं शृणु || १ ||
115587
115588 अणुतास्थूलतोपाया ज्ञानसाध्यंन् च योगिनः |
115589 परकायाप्तिभोगाश्च वर्ण्यन्त इह युक्तिभिः ||
115590
115591 एवमग्नीषोमात्मकत्वं देहादेः परिज्ञाय
115592 धारणात्रयाभ्यासपरिष्कृतप्राणमनःशरीरस्य सोमसूर्याग्निसंक्रमादिदर्शिनो
115593 योगिनो देहस्याणिमादिसिद्धिप्राप्तिप्रकारान् वक्तुंन् प्रतिजानीते-अणुतामिति || १ ||
115594
115595 हृद्यब्जचक्रकोशोर्ध्वं प्रस्फुरत्यानलः कणः |
115596 हेमभ्रमरवत्सांध्यविद्युल्लव इवाम्बुदे || २ ||

115597
115598 तत्रादावणुत्वप्राप्तये देहस्य विलापनाय नाभ्युपरिदेशे ज्वलतो जाठरानलस्य
115599 हृत्पद्मनालसूक्ष्मच्छिद्रद्वारा प्रविश्य हृदयाकाशं हृत्पद्मकर्णिकायां
115600 परमात्मन आसनभूतां शिखां दर्शयति-हृदीति। अब्जकोऽसस्योर्ध्वकर्णिकोपरि
115601 । तथा च तैत्तिरीयाणामुपनिषदि तस्य मध्ये महानग्निर्विश्वार्चिर्विश्वतोमुखः इति।
115602 जाठरानलं प्रस्तुत्य श्रूयते तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थिता।
115603 नीलतोयदमध्यस्थाद्विद्युल्लेखेव भास्वरा। नीवारशूकवत्तन्वी पीता
115604 भास्वत्यणूपमा। तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः इति। विद्युल्लवस्य
115605 सांध्य इति विशेषणंन् पीतत्वप्रकर्षबोधनार्थम्॥ २॥
115606
115607 स प्रवर्धनसंवित्त्या वात्ययेवाशु वर्धते।
115608 संविद्रूपतया नूनमर्कवद्याति चोदयम्॥ ३॥
115609
115610 स आनलः कणः प्रवर्धनस्य संवित्त्या सर्वं देहं व्याप्य यथा ज्वलति तथा
115611 वर्धनोपायज्ञानेन। स च संवर्धितो नाग्निवद्देहं दहति किंतु संविद्रूपतया
115612 अर्कवदुदयं प्रकाशातिशयंन् याति॥ ३॥
115613
115614 संध्याभ्रप्रथमार्काभो वृद्धिमभ्यागतः क्षणात्।
115615 गालयत्यखिलं साङ्गं देहं हेम यथानलः॥ ४॥
115616
115617 संध्यायां प्रत्यूषे अभ्रे आकाशे प्रथममुदितो योऽर्कस्तदाभः। गालयति गलितं
115618 करोति। साङ्गं हस्तपादाद्यङ्गसहितं देहम्। पार्थिवं गन्धभागं काठिन्यं
115619 च तदुपादानजलभागे उपसंहरतीत्यर्थः॥ ४॥
115620
115621 जलस्पर्शासहो युक्त्या गलयेत्प्रपदादपि।
115622 बाह्य एवानलः स्पर्शात्स्वान्ते वस्तुविशेषतः॥ ५॥
115623
115624 एवं प्रपदात्पादाग्रपर्यन्तमपि गलयेद्द्रवीकुर्यात्। ततः शोषणयुक्त्या
115625 वस्तुविशेषतः अग्निस्वभावविशेषाज्जलस्य स्पर्शं शैत्यं न सहते इति
115626 जलस्पर्शासहः सोऽनलः स्पर्शात्स्वौष्ण्यबलाद्द्रवत्वोपसंहारयुक्त्या जलमपि
115627 गलयेत् शोषयेत्। एवंरीत्या देहाद्बाह्यः सन् स्वान्ते मनोरूपे
115628 आतिवाहिकदेहमात्रेऽवतिष्ठते इति शेषः॥ ५॥
115629
115630 स शरीरद्वयं पश्चाद्विधूय क्वापि लीयते।
115631 विक्षोभितेन प्राणेन नीहारो वात्यया यथा॥ ६॥
115632
115633 एवं पार्थिवमाप्यं च शरीरद्वयं विधूय स्थितः सोऽग्निर्विक्षोभितेन
115634 प्राणेनोपसंहृतः क्वापि लीयते यदा वा अग्निरुद्वायति वायुमेवाप्येति इति
115635 श्रुतेरित्यर्थः॥ ६॥
115636
115637 आधारनाडीनिर्हीना व्योमस्थैवावशिष्यते।
115638 शक्तिः कुण्डलिनी वह्नेर्धूमलेखेव निर्गता॥ ७॥
115639
115640 तदानीं कुण्डलिनीशक्तिरपि मूलाधारस्थसुषुम्नानाडीहीना
115641 तत्संस्कारशाल्यातिवाहिकदेहाकाशेऽवतिष्ठत इत्याह-आधारेति। वह्नेर्निर्गता
115642 धूमलेखेव॥ ७॥
115643
115644 क्रोडीकृतमनोबुद्धिमयजीवाद्यहंकृतिः।
115645 अन्तःस्फुरच्चमत्कारा धूमलेखेव नागरी॥ ८॥
115646
115647 तत्र स्थिता च सा क्रोडीकृता संकलिता मनोबुद्धिमये जीवादिघटितलिङ्गशरीरे
115648 अहंकृतिर्यया तथाविधा। अन्तः स्फुरन् चित्प्रकाशचमत्कारः

115649 स्वेच्छाविहारशक्तिचमत्कारश्च यस्यास्तथाविधा सती सूक्ष्मतमे विसनालच्छिद्रे
115650 शैलादौ च यत्रैव प्रविश्य निर्गन्तुं युज्यते तत्र प्रविश्य निर्यातीत्याह##-
115651
115652 विसे शैले तृणे भित्तावुपले दिवि भूतले।
115653 सा यथा योज्यते यत्र तेन निर्यात्यलं तथा॥ ९॥
115654
115655 संवित्तिः सैव यात्यङ्ग रसाद्यन्तं यथाक्रमम्।
115656 रसेनापूर्णतामेति तन्त्रीभार इवाम्बुना॥ १०॥
115657
115658 एवं सूक्ष्मीभावप्रकारमुक्त्वा
115659 स्थूलीभावेनैच्छिकनानाशरीरकल्पनाप्रकारमाह-रसेनेत्यादिना। सा कुण्डलिनी
115660 योगिनो जीवशक्तिर्वह्नौ प्रागुपसंहृतं जलभागं यदा मुञ्चति तदा रसेन
115661 सर्वतः आपूर्णतामेति। यथा तन्त्रीं चर्मरज्जुं बिभर्तीति तन्त्रीभारो
115662 भस्त्रारूपश्चर्मविशेषः कूपे क्षिप्तोऽम्बुना आपूर्णतामेति तद्वत्॥ १०॥
115663
115664 रसापूर्णा यमाकारं भावयत्याशु तत्तथा।
115665 धत्ते चित्रकृतो बुद्धौ रेखा राम यथा कृतिम्॥ ११॥
115666
115667 एवं रसापूर्णा सती प्रागुपसंहृतं पार्थिवभागं यमाकारं कर्तुं भावयति
115668 तद्योगशक्त्या तथा कृत्वा धत्ते इत्यर्थः॥ ११॥
115669
115670 दृढभाववशादन्तरस्थीन्याप्नोति सा ततः।
115671 मातृगर्भनिषण्णेषु सुसूक्ष्मेवाङ्कुरस्थितिः॥ १२॥
115672
115673 तत्रास्थ्यादिकल्पनाप्रकारमाह-दृढेति। मातृगर्भनिषण्णेषु कललेषु
115674 सुसूक्ष्मा बीजशक्तिरस्थिहस्तपादाद्यङ्कुरस्थितिरिव॥ १२॥
115675
115676 यथाभिमतमाकारं प्रमाणं वेत्ति राघव।
115677 जीवशक्तिरवाप्नोति सुमेर्वादि तृणादि च॥ १३॥
115678
115679 यथाभिमतं स्वेच्छानुसारि सुमेर्वादि महत् तृणाद्यल्पं वा आकारमवाप्नोति॥ १३
115680 ।।
115681
115682 श्रुतं त्वया योगसाध्यमणिमाद्यर्थसाधनम्।
115683 ज्ञानसाध्यमिदानीं त्वं शृणु श्रवणभूषणम्॥ १४॥
115684
115685 योगसिद्ध्यनुसारेण स्थूलसूक्ष्मभावप्राप्तिक्रममुक्तमुपसंहृत्य
115686 ज्ञानसिद्ध्या तद्विलक्षणं तं वक्तुं परमप्रकृतं श्रावयति-श्रुतमिति॥
115687 १४॥
115688
115689 एकं चिन्मात्रमस्तीह शुद्धं सौम्यमलक्षितम्।
115690 सूक्ष्मात्सूक्ष्मतरं शान्तं न जगन्न जगत्क्रिया॥ १५॥
115691
115692 तच्चिनोत्यात्मनात्मानं संकल्पोन्मुखतां गतम्।
115693 यदा तदा जीव इति प्रोक्तमाविलतां गतम्॥ १६॥
115694
115695 चिनोत्यध्यासेनोपचिनोति॥ १६॥
115696
115697 असत्यमेव संकल्पभ्रमेणेदं शरीरकम्।
115698 जीवः पश्यति मूढात्मा बालो यक्षमिवोद्धतम्॥ १७॥
115699
115700 जीवः पश्यति स एवास्य स्थूलभाव इति भावः॥ १७॥

115701
115702 यदा तु ज्ञानदीपेन सम्यगालोक आगतः।
115703 संकल्पमोहो जीवस्य क्षीयते शरदभ्रवत्॥ १८॥
115704
115705 सौक्ष्म्यप्राप्तिक्रममाह-यदा त्वित्यादिना॥ १८॥
115706
115707 शान्तिमायाति देहोऽयं सर्वसंकल्पसंक्षयात्।
115708 तदा राघव निःशेषं दीपस्तैलक्षये यथा॥ १९॥
115709
115710 शान्तिं बाधम्॥ १९॥
115711
115712 निद्राव्यपगमे जन्तुर्यथा स्वप्नं न पश्यति।
115713 जीवो हि भाविते सत्ये तथा देहं न पश्यति॥ २०॥
115714
115715 भाविते साक्षात्कृते॥ २०॥
115716
115717 अतत्त्वे तत्त्वभावेन जीवो देहावृतः स्थितः।
115718 निर्देहो भवति श्रीमान् सुखी तत्त्वैकभावनात्॥ २१॥
115719
115720 अनात्मनि शरीरादावात्मभावनमङ्ग यत्।
115721 सूर्याद्यालोकदुर्भेदं हार्दं तद्दारुणं तमः॥ २२॥
115722
115723 लौकिकसूर्याद्यालोकैर्दुर्भेदं नाशयितुमशक्यम्॥ २२॥
115724
115725 आत्मन्येवात्मभावेन सर्वव्यापि निरञ्जनम्।
115726 चिन्मात्रममलोऽस्मीति ज्ञानादित्येन नश्यति॥ २३॥
115727
115728 केन तर्ह्यादित्येन तन्नाशस्तमाह-आत्मन्येवेति॥ २३॥
115729
115730 अन्ये च विदितात्मानो भावयन्ति यथैव यत्।
115731 तत्तथैवाशु पश्यन्ति दृढभावनया तया॥ २४॥
115732
115733 अस्यां ज्ञानसिद्धावपि दृढायां जीवन्मुक्तानामैच्छिकं विनोदाय
115734 स्थूलसूक्ष्मप्रातिभासिकदेहकल्पनं सिद्ध्यतीत्याह-अन्ये चेति॥ २४॥
115735
115736 दृढभावानुसंधानाद्विमूढा अपि राघव।
115737 विसं नयन्त्यमृतताममृतं विषतामपि॥ २५॥
115738
115739 विमूढा विषकीटादयः। अमृतताममृतवदाहारताम्। अमृतं
115740 पयोन्नादिविषमिश्रितमिदमिति दृढभ्रान्त्या विषताम्॥ २५॥
115741
115742 एवं यथा यदेवेह भाव्यते दृढभावनात्।
115743 भूयते हि तदेवाशु तदित्यालोकितं मुहुः॥ २६॥
115744
115745 इति ईदृशं तदुदाहरणं मुहुर्बहुशो लोके आलोकितमित्यर्थः॥ २६॥
115746
115747 सत्यभावनदृष्टोऽयन् देहो देहो भवत्यलम्।
115748 दृष्टस्त्वसत्यभावेन व्योमतां याति देहकः॥ २७॥
115749
115750 व्योमतां ब्रह्माकाशताम्॥ २७॥
115751
115752 अणिमादिपदप्राप्तौ ज्ञानयुक्तिरिति श्रुता।

115753 भवता साधुना राम युक्तिमन्यामिमां शृणु || २८ ||
115754
115755 सैवास्य निरतिशया अणिमादिसर्वसिद्धय इत्याशयेनोपसंहरति-अणिमादीति अन्यां‌न्
115756 परकायंन् प्रविश्य भोगप्राप्तिलक्षणाम् || २८ ||
115757
115758 रेचकाभ्यासयोगेन जीवः कुण्डलिनीगृहात् |
115759 उद्‍धृत्य योज्यते यावदामोदः पवनादिव || २९ ||
115760
115761 तत्रादौ पूर्वदेहपरित्यागोपायमाह-रेचकेति | उद्‍धृत्य बहिर्निःसार्य परदेहे
115762 यावद्योज्यते तावदयं देहस्त्यज्यत इति परेणान्वयः | यथा बाह्यपवनसंक्रान्तः
115763 पुष्पामोदः पवनादाकृष्य घ्राणे योज्यते तद्वत् || २९ ||
115764
115765 त्यज्यते विरतस्पन्दो देहोऽयंन् काष्ठलोष्टवत् |
115766 देहेऽपि जीवेऽपि मतावासेचक इवादरः || ३० ||
115767
115768 विरतस्पन्द उपरतचेष्टः काष्ठलोष्टवद्भवति | परेषां देहे जीवे मतावपि
115769 तत्संपदं भोक्तुमयं स्वजीवो विनिवेश्यते | यथा आसेचकः पुरुषः
115770 करस्थकुम्भोदकेन यमेव तरुं लतां वा आसेक्तुमिच्छति तमेवासिञ्चति तद्वदन्नापि
115771 यथाभिमतयेच्छया आदर इत्यन्वयः || ३० ||
115772
115773 स्थावरे जंगमे वापि यथाभिमतयेच्छया |
115774 भोक्तुं तत्संपदं सम्यग्जीवोऽन्तर्विनिवेश्यते || ३१ ||
115775
115776 इति सिद्धिऽस्रियं भुक्त्वा स्थितं चेत्तद्वपुः पुनः |
115777 प्रविश्यते स्वमन्यद्वा यद्यत्तात विरोचते || ३२ ||
115778
115779 इति उक्तरीत्या परदेहे सिद्धिश्रियं भुक्त्वा स्थितेन योगिना तत् पूर्वतनं स्वं वपुः
115780 स्थितं चेत्पुनस्तत्प्रविश्यते नो चेदन्यद्वा यद्यद्यावद्विरोचते तत्तत्तावत्कालं
115781 प्रविश्यत इत्यर्थः || ३२ ||
115782
115783 देहादयस्तथा बिम्बान्व्याप्तवत्याखिलानथ |
115784 संविदा जगदापूर्य संपूर्ण स्थीयतेऽथवा || ३३ ||
115785
115786 अथवा योगिना अथ परकायभोगानन्तरं स्वान्तःकरणवैपुल्यापादनेन जगदापूर्य
115787 देहादयः | व्यत्ययेन द्वितीयार्थे प्रथमा |
115788 स्थावरजंगमसर्वदेहादिप्रतिबिम्बोपाधींस्तत्प्रतिबिम्बजीवांस्तथा
115789 तद्बिम्बोपाधिसत्त्वादिगुणांस्तदवच्छिन्नचिल्लक्षणान्बिम्बांश्चेत्यखिलानपि
115790 व्याप्तवत्या स्वात्मसंविदा संपूर्णं यथा स्यात्तथा स्थीयत इत्यर्थः || ३३ ||
115791
115792 ज्ञात्वा सदाभ्युदितमुज्झितदोषमीशो यद्यद्यथा समभिवाञ्छति
115793 चित्प्रकाशः |
115794 प्राप्नोति तत्तदचिरेण तथैव राम सम्यक्पदं विदुरनावरणत्वमेव || ३४ ||
115795
115796 उपसंहरति-ज्ञात्वेति | ईशो योगैश्वर्यसंपन्नो जीवचित्प्रकाशः सदाभ्युदितं
115797 नित्यस्वप्रकाशमुज्झितसर्वदोषं स्वतत्त्वं ज्ञात्वा यद्यथा समभिवाञ्छति
115798 तत्तदचिरेण तथैव प्राप्नोति | एवं सति तत्त्वविदो नाल्पसिद्धीर्बहुमन्यन्ते
115799 किंत्वनावरणत्वमेव निरतिशयानन्दं सम्यक्पदं विदुरित्यर्थः || ३४ ||
115800
115801 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मी० दे० मो० निर्वाणप्रकरणे पू० च०
115802 अणिमादिलाभयोगोपदेशो नाम द्व्यशीतितमः सर्गः || ८२ ||
115803
115804 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे

अणिमादिलाभयोगोपदेशो नाम द्व्यशीतितत्तमः सर्गः ॥ ८२ ॥
त्र्यशीतितमः सर्गः ८३

श्रीवसिष्ठ उवाच ।

अणिमादिगुणैश्वर्ययुक्ता सा नृपभामिनी ।
एवं बभूव चूडाला घनाभ्यासवती सती ॥ १ ॥

चूडाला एवं प्रागुक्तरीत्या प्राणधारणादिघनाभ्यासवती सती
अणिमादिगुणैश्वर्ययुक्ता बभूव ॥ १ ॥

जगामाकाशमार्गेण विवेशाम्बुधिकोटरम् ।
चचार वसुधापीठं गङ्गेवामलशीतला ॥ २ ॥

तदैश्वर्यमेवावयुत्या प्रपञ्चयति-जगामेत्यादिना । मोहकालुष्यस्य
तापत्रयस्य चोपशमादमला शीतला च ॥ २ ॥

क्षणमप्यगता भर्तुर्वक्षसश्चेतसस्तथा ।
सर्वेषूवास राज्येषु लक्ष्मीरिव जगत्सु च ॥ ३ ॥

तस्याः कायव्यूहादिकल्पनैश्वर्यमाह-क्षणमपीति । अगता अवियुक्ता । राज्येषु
राष्ट्रेषु जगत्सु भुवनेषु चोवास ॥ ३ ॥

आकाशगामिनी श्यामा विद्युत्प्रारम्भभूषणा ।
बभ्राम मेघमालेव गिरिमाला महीतले ॥ ४ ॥

विद्युतां प्रारम्भा उन्मेषा इव द्योतमानानि भूषणानि यस्याः ॥ ४ ॥

काष्ठं तृणोपलं भूतं खं वातमनलं जलम् ।
निर्विघ्नमविशत्सर्वं तन्तुर्मुक्ताफलं यथा ॥ ५ ॥

मेरोरुपरि शृङ्गाणि लोकपालपुराणि च ।
दिग्व्योमोदररन्ध्राणि विजहार यथासुखम् ॥ ६ ॥

दिशां व्योम्नश्चोदरे यावन्ति भुवनरन्ध्राणि प्रसिद्धानि तानि सर्वाणीत्यर्थः ॥ ६ ॥

तिर्यग्भूतपिशाचाद्यैः सहनागामरासुरैः ।
विद्याधराप्सरःसिद्धैर्व्यवहारं चकार सा ॥ ७ ॥

सर्वभूतरुतज्ञतया संभाषणादिव्यवहारम् ॥ ७ ॥

यत्नेन तं च भर्तारमात्मज्ञानामृतं प्रति ।
बहुशो बोधयामास चूडाला न विवेद सः ॥ ८ ॥

बहुशः प्रतिबोधयामासेति व्यवहितेन संबन्धश्छान्दसः ॥ ८ ॥

कलाविदग्धा मुग्धा च बालेयंन् गृहिणी मम ।
इत्येवं केवलं राजा स चूडालां विवेद ताम् ॥ ९ ॥

एतावतापि कालेन तामेवंगुणशालिनीम् ।
बालो विद्यामिव नृपश्चूडालां न विवेद सः ॥ १० ॥

115857 यथा वेदाध्ययनकाले बालो वेदविद्यां
115858 सर्वपुरुषार्थानुकूलार्थप्रकाशनादिगुणशालिनीं न वेद तद्वत् ॥ १० ॥
115859
115860 साप्यलब्धात्मविश्रान्तेस्तां सिद्धिश्रियमात्मनः ।
115861 दर्शयामास नो राज्ञः शूद्रस्येव मखक्रियाम् ॥ ११ ॥
115862
115863 श्रीराम उवाच ।
115864
115865 महत्याः सिद्धयोगिन्यास्तस्या अपि शिखिध्वजः ।
115866 यत्नेन प्राप नो बोधं बुध्यतेऽन्यः कथं प्रभो ॥ १२ ॥
115867
115868 सर्वसिद्धिशालिन्यास्तस्याश्चेद्भर्तृबोधने अशक्तिस्तर्ह्यन्येषां सिद्धिशून्यानां
115869 गुरूणां शिष्यबोधने शक्तिर्दूरापास्तेति रामः शङ्कते-महत्या इति । तस्या अपि
115870 यत्नेन उपदेशप्रयासेन ॥ १२ ॥
115871
115872 श्रीवसिष्ठ उवाच ।
115873
115874 उपदेशक्रमो राम व्यवस्थामात्रपालनम् ।
115875 ज्ञप्तेस्तु कारणं शुद्धा शिष्यप्रज्ञैव राघव ॥ १३ ॥
115876
115877 तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् इत्यादिशास्त्रोक्तमर्यादा व्यवस्था
115878 तन्मात्रपालनं गुरुकृत उपदेशक्रमो न त्वसावनधिकारिण्यपि ज्ञानं
115879 बलाज्जनयितुं शक्नोतीत्यर्थः । प्रज्ञाग्रहणं साधनचतुष्टयसहितप्रज्ञापरम् ॥
115880 १३ ॥
115881
115882 न श्रुतेन न पुण्येन ज्ञायते ज्ञेयमात्मनः ।
115883 जानात्यात्मानमात्मैव सर्पः सर्पपदानि व ॥ १४ ॥
115884
115885 श्रुतेन अनात्मशास्त्रप्रावीण्येन । पुण्येन चित्तशुद्ध्यनङ्गेन काम्यकर्मवर्गेण ।
115886 अथवा श्रुतेन शाब्देन परोक्षज्ञानेन । आत्मनस्तत्त्वभूतं ज्ञेयं ब्रह्म न
115887 ज्ञायते इतरवस्तुवन्न विषयीक्रियते । पुण्येनापि स्वर्गभोगवन्न विनैव विचारं
115888 ज्ञानं जन्यते किंतु ताभ्यां विचारे जनिते चरमसाक्षात्कारवृत्त्या
115889 रूढेनात्मनैवात्मा आत्मानं जानातीत्यर्थः । सर्पपदानि सर्प इव । इवार्थे वशब्दः
115890 ॥ १४ ॥
115891
115892 श्रीराम उवाच ।
115893
115894 एवंस्थिते वाथ मुने कथमेतज्जगत्स्थितौ ।
115895 क्रमो गुरूपदेशाख्यः स्वात्मज्ञानस्य कारणम् ॥ १५ ॥
115896
115897 तर्हि गुरूपदेशाख्यः क्रमः कथं केन द्वारेण ॥ १५ ॥
115898
115899 श्रीवसिष्ठ उवाच ।
115900
115901 अत्यन्तकृपणः कश्चित्किराटो धनधान्यवान् ।
115902 अस्ति विन्ध्याटवीकक्षे [कच्छे इत्यपि पाठः ।] कुटुम्बी ब्राह्मणो यथा ॥
115903 १६ ॥
115904
115905 स्थूलारुन्धतीनिदर्शनन्यायेन शिष्यबुद्धेः प्रत्यक्प्रवणताव्यसनापादनद्वारा
115906 गुरूपदेशादेर्ज्ञानकारणतेति वक्तुं वसिष्ठः किराटोपाख्यानमाह##-
115907
115908 तस्यैकदा निपतिता गच्छतो विन्ध्यजङ्गले ।

115909 एका वराटिका राम तृणजालकसंवृते ॥ १७ ॥
115910
115911 कार्पण्यात्स प्रयत्नेन सर्वं तृणतुषादिकम् ।
115912 कपर्दकार्थमभितो दुधाव दिवसत्रयम् ॥ १८ ॥
115913
115914 कार्पण्यात् स्वीयकृपणतास्वभावात् । दुधाव शोधयामास ॥ १८ ॥
115915
115916 कपर्दकाः स्युर्भवता चत्वारोऽष्टौ च कालतः ।
115917 ततः शतं सहस्रं च सहस्रे चेति चेतसा ॥ १९ ॥
115918
115919 तस्यान्वेषणोद्योगहेतुमभिप्रायमाह-कपर्दका इति । लाभे सति मम हस्ते भवता
115920 अनेन कपर्दकेन किंचित्क्रीत्वा तद्विक्रयाच्चत्वारः कपर्दकाः स्युस्ततोऽष्टौ ततः
115921 शतं ततः सहस्रं ततो द्वे सहस्रे चेति चेतसा कलयंश्चिन्तयन्सन् ॥ १९ ॥
115922
115923 कलयञ्जङ्गले दीनो रात्रिंदिवमतन्द्रितः ।
115924 जनहाससहस्राणि बुबुधे न परं तु सः ॥ २० ॥
115925
115926 अल्पार्थमप्यारब्धो दृढोद्योगो
115927 मूढजनहासदर्शनादिविघ्नैरखण्डितश्चेन्महाफलो भवतीति सूचयन्नाह##-
115928
115929 ततो दिनत्रयस्यान्ते तेन तस्माच्च जङ्गलात् ।
115930 पूर्णेन्दुबिम्बप्रतिमो लब्धश्चिन्तामणिर्महान् ॥ २१ ॥
115931
115932 तं प्राप्य तुष्टहृदयः समागम्य गृहं सुखम् ।
115933 प्राप्ताखिलजगद्भूतिः शान्तसर्वतया स्थितः ॥ २२ ॥
115934
115935 प्राप्ता अखिला जगद्भूतयः सांसारिकभोगा येन । शान्ताः सर्वे दारिद्याद्यनर्था
115936 यस्य तादृशतया स्थितः ॥ २२ ॥
115937
115938 एवं यथा किराटेन कपर्दान्वेषणेन तत् ।
115939 रत्नं लब्धंन् जगन्मूल्यमहोरात्रमखेदिना ॥ २३ ॥
115940
115941 जगदेव मूल्यं यस्य तथाविधं तद्रत्नम् ॥ २३ ॥
115942
115943 तथा श्रुतोपदेशेन स्वात्मज्ञानमवाप्यते ।
115944 अन्यदन्विष्यते चान्यल्लभ्यते हि गुरुक्रमात् ॥ २४ ॥
115945
115946 तथा गुरूपदेशक्रमादन्यच्छाब्दं परोक्षप्रायमन्विष्यते । अन्यन्नित्यापरोक्षं
115947 लभ्यते ॥ २४ ॥
115948
115949 ब्रह्म सर्वेन्द्रियातीतं श्रुतादीन्द्रियसंविदः ।
115950 तेनोपदेशादनघ नात्मतत्त्वमवाप्यते ॥ २५ ॥
115951
115952 कथमन्यत्तदाह-ब्रह्मेति । श्रुतादि शब्दश्रवणतच्छाब्दबोधादि
115953 इन्द्रियप्रयोज्याः संविदश्चित्तवृत्तयः । गुरूपदेशाच्च शाब्दवृत्तय एव जन्यन्ते ।
115954 तासां मध्ये अत्यन्तस्वच्छतमायां चरमवृत्तौ नित्यापरोक्षब्रह्मस्फुरणं तु
115955 शिष्यबुद्धिस्वच्छताब्रह्मस्वभावोभयप्रयुक्तमेव नोपदेशस्तत्कारणमित्यर्थः
115956 ॥ २५ ॥
115957
115958 गुरूपदेशं च विना नात्मतत्त्वागमो भवेत् ।
115959 केन चिन्तामणिर्लब्धः कपर्दान्वेषणं विना ॥ २६ ॥
115960

115961 तथापि आचार्यवान्पुरुषो वेद इत्यादिश्रुतेर्गुरूपदेश आवश्यक इत्याह##-
115962
115963 तत्त्वस्यास्य महार्थस्य गुरूपकथनं गतम्।
115964 अकारणं कारणतां मणेरिव कपर्दकः॥ २७॥
115965
115966 अन्वेषणद्वारा कपर्दक इव मननद्वारा
115967 गुरूपकथनमकारणमप्यवश्यफलदर्शनात्कारणतां गतमित्यर्थः॥ २७॥
115968
115969 पश्य राघव मायेयंन् मोहिनी महतामपि।
115970 अन्यदन्विष्यते यत्नादन्यदासाद्यते फलम्॥ २८॥
115971
115972 अन्यत्करोति पुरुषः फलमन्यदेव प्राप्नोति यत्त्रिषु जगत्स्ववलोक्यते च।
115973 तस्मादनन्तरभवस्य जगद्भ्रमस्य श्रेयोऽतिवाहनमसङ्गमनिच्छयैव॥
115974 २९॥
115975
115976 एवमकारणमेव गुरूपदेशाद्यात्मलाभस्य कारणम् लब्धे त्वात्मनि
115977 प्रारब्धशेषोपनीतस्य जगद्भ्रमस्योपेक्षयैव क्षयः सिध्यतीति न
115978 यत्नापेक्षेत्याह-अन्यदिति। त्रिषु जगत्सु यद्यस्माद्धेतोरेवमवलोक्यते श्रूयते च
115979 तस्मादात्मलाभादनन्तरं भवस्य प्रारब्धशेषोपनीतस्य जगद्भ्रमस्य तु
115980 असङ्गं यथा स्यातथा अनिच्छया उपेक्षणेनातिवाहनमेव श्रेय इत्यर्थः॥ २९॥
115981
115982 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मी० दे० मोक्षोपायेषु निर्वाणप्रकरणे पू०
115983 चू० किराटोपाख्यानं नाम त्र्यशीतितमः सर्गः॥ ८३॥
115984
115985 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
115986 किराटोपाख्यानं नाम त्र्यशीतितमः सर्गः॥ ८३॥
115987 चतुरशीतितमः सर्गः ८४
115988
115989 श्रीवसिष्ठ उवाच।
115990
115991 ततः शिखिध्वजो राजा तत्त्वज्ञानपदं विना।
115992 आजगाम परं मोहं तमोन्धत्वमिवाप्रजाः॥ १॥
115993
115994 शिखिध्वजस्य वैराग्यं चूडालाश्वासनं वने।
115995 निशि चैकस्य निर्याणं मन्दरे स्थितिरीर्यते॥
115996
115997 तत्त्वज्ञानरूपं पदं विश्रान्तिस्थानं विना। अप्रजाः नष्टसंततिः पुमान्
115998 शोकादितमसा अन्धत्वमिव॥ १॥
115999
116000 दुःखाग्निदीपितमना मनागपि विभूतिषु।
116001 तास्वभीष्टोपनीतासु न रेमेऽग्निशिखास्विव॥ २॥
116002
116003 अभीष्टैः सामन्तादिभिरुपनीतासु रत्नादिविभूतिषु॥ २॥
116004
116005 एकान्तेषु दिगन्तेषु निर्झरेषु गुहासु च।
116006 आजगाम रतिं जन्तुर्मुक्तेषुर्व्याधतो यथा॥ ३॥
116007
116008 मुक्त इषुर्यस्मै तथाविधो दैवादविद्धो जन्तुर्मृगादिर्व्याधतो भीतो यथा
116009 एकान्तादिषु रतिमेति तद्वत्॥ ३॥
116010
116011 राघव त्वमिवाशेषाः सान्त्वानुनयबोधनैः।
116012 प्रार्थितः कार्यते भृत्यैर्महीपो दिवसक्रियाः॥ ४॥

अशेषा दिवसक्रियाः कार्यते हक्रोरन्यतरस्याम् इत्यणौ कर्तुर्णौ कर्मत्वे कर्मणि लः ॥
४ ॥

नित्यमुद्दामवैराग्यः परिव्राडिव शान्तधीः ।
खिद्यते च महाभोगान्स भोक्तुं च श्रियं स्थितः ॥ ५ ॥

परिव्राडिव स्थितः स महाभोगान् श्रियं च भोक्तुं खिद्यते । चः पूर्ववाक्यार्थेन
सहास्य समुच्चयार्थः ॥ ५ ॥

ददावतितरां दानं गोभूमिकनकादिकम् ।
देवेभ्यो ब्राह्मणेभ्यश्च स्वजनेभ्यश्च मानद ॥ ६ ॥

चचार च तपः कर्तुं कृच्छ्रचान्द्रायणादिकम् ।
परिबभ्राम तीर्थानि वनान्यायतनानि च ॥ ७ ॥

देहमनःशोधनं कर्तुं कृच्छ्रचान्द्रायणादिकं तपश्चकार ॥ ७ ॥

स तथापि विशोकत्वं न मनागपि लब्धवान् ।
अनिधानां खनन्भूमिं निधानार्थी निधिं यथा ॥ ८ ॥

रात्रिंदिवं महानेष शुष्यत्येव कृशानुना ।
चिन्तया चिन्तयामास संसारव्याधिभेषजम् ॥ ९ ॥

चिन्तया चिन्तालक्षणेन कृशानुना ॥ ९ ॥

चिन्तापरवशो दीनो राज्यंन् स्वस्य विषोपमम् ।
महाविभवमप्यग्रे नापश्यत्खिन्नया धिया ॥ १० ॥

अथैकदैकान्तगतां चूडालामङ्कमागताम् ।
इदं मधुरया वाचा समुवाच शिखिध्वजः ॥ ११ ॥

शिखिध्वज उवाच ।

भुक्तं राज्यं चिरं कालं भुक्ता विभवभूमयः ।
अधुनास्मि विरागेण युक्तो गच्छामि काननम् ॥ १२ ॥

विभवभूमयो वैभवपदानि ॥ १२ ॥

न सुखानि न दुःखानि नापदो न च संपदः ।
क्रोडीकुर्वन्ति तन्वङ्गि कुनिं मननिवासिनम् ॥ १३ ॥

क्रोडीकुर्वन्ति श्लिष्यन्ति ॥ १३ ॥

न देशभङ्गसंमोहो न संग्रामे जनक्षयः ।
राज्यादप्यधिकं मन्ये सुखं वननिवासिनाम् ॥ १४ ॥

सुखाधिक्ये हेतून्दर्शयति-न देशेति ॥ १४ ॥

स्तबकस्तनधारिण्यो रक्तपल्लवपाणयः ।
मञ्जरीजालहारिण्यो लोलशुभ्राम्बुदांशुकाः ॥ १५ ॥

116065 इदानींन्नराजीश्चूडालोपमात्वेन स्वीकृत्य वर्णयति-स्तबकेत्यादिपञ्चभिः |
116066 प्रायेण सर्वत्र रूपकाणि || १५ ||
116067
116068 स्वपरागाङ्गरागिण्यः कृतकौसुममण्डनाः |
116069 आसेव्यकाञ्चनशिलानितम्बतटशोभिताः || १६ ||
116070
116071 कृतानि कुसुमान्येव कौसुमानि मण्डनानि याभिः | आसेव्याः काञ्चनशिला एव
116072 नितम्बतटास्तैः शोभिताः || १६ ||
116073
116074 तरङ्गमौक्तिकप्रोतसरिन्मुक्तालतावृताः |
116075 लतावयस्यावलिता मुग्धमुग्धमृगात्मजाः || १७ ||
116076
116077 तरङ्गलक्षणमौक्तिकैः प्रोताभिः सरिन्मुक्तालताभिरावृताः | मुग्धमुग्धा
116078 भृगा एवात्मजाः शिशवो यासाम् || १७ ||
116079
116080 स्वभावोद्दामसौगन्ध्या वितीर्णफलभोजनाः |
116081 षट्पदश्रेणिनयनाः पुष्पापूरलताङ्गिकाः || १८ ||
116082
116083 क्षुधितेभ्यो वितीर्णादि दत्तानि फलभोजनानि याभिः | पुष्पैरापूर्यन्त इति पुष्पापूरा
116084 लता एव बाह्वाद्यङ्गानि यासाम् || १८ ||
116085
116086 आस्वाद्यस्पन्दतां याताः शीतलामलगात्रिकाः |
116087 रमयन्ति त्वमिव मां वनवीथ्यो वरानने || १९ ||
116088
116089 त्वदधर इव आस्वाद्यः स्यन्दस्तरङ्गप्रस्रावो यासां तद्भावं याताः | वनवीथ्यो
116090 वनराज्यः || १९ ||
116091
116092 यथा विविक्तमेकान्ते मनो भवति निर्वृतम् |
116093 न तथा शशिबिम्बेषु न च ब्रह्मेन्द्रसद्मसु || २० ||
116094
116095 अस्मिन्सन्मन्त्रणे तन्वि न विघ्नं कर्तुमर्हसि |
116096 भर्तुर्विघटयन्तीच्छां न स्वप्नेऽपि कुलस्त्रियः || २१ ||
116097
116098 अस्मिन्वनगमनविषये सन्मन्त्रणे उत्तमविचारे || २१ ||
116099
116100 चूडालोवाच |
116101
116102 प्राप्तकालं कृतं कार्यं राजते नाथ नेतरत् |
116103 वसन्ते राजते पुष्पं फलं शरदि राजते || २२ ||
116104
116105 तस्य वैराग्यदार्ढ्यं जिज्ञासमाना प्राक्तनीं कामासक्तिमेव
116106 वयोनुरूपतावर्णनेनानुमन्यमानेव स्थूणाविचालनन्यायेन विचालयन्ती
116107 चूडालोवाच-प्राप्तेत्यादिना || २२ ||
116108
116109 जराजरठदेहानां युक्तो वनसमाश्रयः |
116110 न यूनां त्वादृशामेव तेनैतन्मे न रोचते || २३ ||
116111
116112 यौवनेन महाराज न यावद्द्वयमुज्झिताः |
116113 पुष्पौघेणेव तरवस्तावच्छोभामहे गृहे || २४ ||
116114
116115 गृहे शोभामहे | वसावेति यावत् | अस्मदो द्वयोश्च इति बहुवचनम् || २४ ||
116116

116117 पुष्पधाना पुष्पमितजरसा सह काननम् ।
116118 समं गृहाद्गमिष्यामो हंसा इव सरोवरात् ॥ २५ ॥
116119
116120 पुष्पाणि धीयन्ते धार्यन्ते यासु लतासु तदीयशिरोगतपुष्पैर्मितया तुलितया जरसा सह
116121 पुष्पसिताभिर्लताभिर्मैत्री तत्साम्यदशायामेव युक्तेति भावः ॥ २५ ॥
116122
116123 अप्राप्तकालं नृपतेः प्रजापालनमुज्झतः ।
116124 राजन्यस्यैव रन्ध्रस्य महदेनो भविष्यति ॥ २६ ॥
116125
116126 रन्ध्रस्य राज्यच्छिद्रस्य निमित्तमिति शेषः । एनः पापम् ॥ २६ ॥
116127
116128 अप्राप्तकारिणं भूपं रोधयन्ति च वै प्रजाः ।
116129 रोधयन्ति ह्यकार्येभ्यः प्रभुं भृत्याः परस्परम् ॥ २७ ॥
116130
116131 रोधयन्ति निवारयन्ति ॥ २७ ॥
116132
116133 शिखिध्वज उवाच ।
116134
116135 अलमुत्पलपत्राक्षि विघ्नेनाभिमतस्य मे ।
116136 विद्धि मां गतमेवेतो दूरमेकान्तकाननम् ॥ २८ ॥
116137
116138 एवं विचालितोऽप्यविचलवैराग्यः शिखिध्वजस्तामनुनयति-अलमित्यादिना ॥ २८ ॥
116139
116140 बाला त्वमनवद्याङ्गि नागन्तव्यंन् वनं त्वया ।
116141 पुंसामपि हि मृद्वङ्गि दुर्विगाह्यो वनाश्रयः ॥ २९ ॥
116142
116143 वनाश्रयो वनप्रदेशो दुःखेन विगाह्यः प्रवेष्टुं शक्यः ॥ २९ ॥
116144
116145 समर्था न वनावासे योषितः कठिना अपि ।
116146 कानने पुष्पमञ्जर्यः सोढुं शस्त्रालिमक्षमाः ॥ ३० ॥
116147
116148 कठिनाः कठोराङ्ग्योऽपि । यथा कानने जाता उपवनजाताभ्यः कठोरा अपि
116149 पुष्पमञ्जर्यः शस्त्रालिं सोढुमक्षमास्तद्वदित्यर्थः । शक्तालिम् इति पाठे
116150 शक्तानां बलवतां पक्षिणामालिं पङ्क्तिमिति व्याख्येयम् ॥ ३० ॥
116151
116152 भवत्या पालयन्त्येह राज्ये स्थातव्यमुत्तमे ।
116153 कुटुम्बभारोद्वहनं पत्यौ याते व्रतं स्त्रियः ॥ ३१ ॥
116154
116155 यत्त्वयोक्तं अप्राप्तकालं नृपतेः इति तस्यापि दोषस्य परिहारस्तयैव कार्य
116156 इत्याशयेनाह-भवत्येति ॥ ३१ ॥
116157
116158 श्रीवसिष्ठ उवाच ।
116159
116160 इत्युक्त्वा दयितां राजा तामिन्दुवदनां वशी ।
116161 उत्तस्थौ स्नातुमखिलं दिनकार्यं चकार च ॥ ३२ ॥
116162
116163 अथोज्झितप्रजाचेष्टो रविरस्ताचलं ययौ ।
116164 शिखिध्वजो वनमिव समस्तजनदुर्गमम् ॥ ३३ ॥
116165
116166 उपमेययोर्विशेषणे उपमानयोरपि योज्ये ॥ ३३ ॥
116167
116168 संहृत्य विततं रूपं तमेवानुययौ प्रभा ।

116169 नाथं भवननिष्क्रान्तं चूडालेवानुरागिणी ॥ ३४ ॥
116170
116171 आययौ यामिनी श्यामा भुवनं भस्मधूसरम् ।
116172 धृतव्योमापगं शर्वं संश्लेषा यमुनेव सा ॥ ३५ ॥
116173
116174 धृता व्योमापगा स्वसखी गङ्गा येन तथाविधं शर्वं संश्लिष्यति स्वयमपि
116175 कामादालिङ्गतीति संश्लेषा तथाविधा यमुनेवेत्युत्प्रेक्षा । श्याद्यधा इति श्लिषः
116176 कर्तरि णः ॥ ३५ ॥
116177
116178 दिक्षु संध्याब्ददन्तासु [संध्याभ्रदन्तासु इति पाठः ।] स्थितासु
116179 कृतमण्डलम् ।
116180 तमालबालकाङ्कासु ज्योत्स्नाहासोदयाङ्कितम् ॥ ३६ ॥
116181
116182 तमाललक्षणबालका अङ्के यासां तासु दिक्षु यमुनाचरित्रदर्शनादिव
116183 ज्योत्स्नाहासोदयाङ्कितं परितः कृतमण्डलं च यथा स्यात्तथा स्थितासु ।
116184 इतःप्रभृति सर्वेषां सप्तम्यन्तानां तारागणो ददृशे इत्यत्र संबन्धः ॥ ३६ ॥
116185
116186 गच्छतोरपरं पारं दंपत्योर्मैरवं पदम् ।
116187 देवोद्यानमयं रन्तुं दिनश्रीदिननाथयोः ॥ ३७ ॥
116188
116189 दिनश्रीश्च दिननाथश्च तद्रूपयोर्दपत्योर्देवोद्यानप्रचुरं मैरवं
116190 मेरुसंबन्धि अपरं पारं उत्तरार्धं रन्तुं गच्छतोः सतोः ॥ ३७ ॥
116191
116192 आगच्छतोरिदं पारं ह्यघतीक्ष्णकरोज्झितम् ।
116193 निशानिशानायकयोर्दंपत्योर्मैरवं पुनः ॥ ३८ ॥
116194
116195 तथा अघैर्घर्मोपतापभोजकैः पापैस्तन्निमित्तैस्तीक्ष्णकरैश्चण्डातपैश्चोज्झितं
116196 भैरवमिदं पारं निशानिशानायकलक्षणयोर्दंपत्योः रन्तुमागच्छतोः सतोः ॥
116197 ३८ ॥
116198
116199 तारागणोऽथ ददृशे विकीर्णो व्योमकुट्टिमे ।
116200 मुक्तो मङ्गललाजानां दिग्वधूभिरिवाञ्जलिः ॥ ३९ ॥
116201
116202 दिग्वधूभिर्मुक्त उत्सृष्टो मङ्गललाजानामञ्जलिरिव व्योमलक्षणे कुट्टिमे
116203 सौधतले तारागणो ददृशे ॥ ३९ ॥
116204
116205 चन्द्रानना तमःश्यामा श्रान्ता कुसुमहासिनी ।
116206 यामिनी यौवनं प्राप सरोजमुकुलस्तनी ॥ ४० ॥
116207
116208 स्वनाथान्वेषणेन तदुदयप्रतीक्षया च श्रान्ता कुमुदादिकुसुमैर्हसवती । यौवनं
116209 स्वयौवनफलमिति यावत् ॥ ४० ॥
116210
116211 कृतसंध्यासमाचारः सहचूडालयेष्टया ।
116212 सुष्वाप शयने भूयो मैनाक इव सागरे ॥ ४१ ॥
116213
116214 अथार्धरात्रसमये देशे निःशब्दतां गते ।
116215 घनन्निद्राशिलाकोशनिलीने सकले जने ॥ ४२ ॥
116216
116217 स तस्यां संप्रसुप्तायां शयने कोमलांशुके ।
116218 भृशं निद्राविमूढायां भ्रमर्यामिव पङ्कजे ॥ ४३ ॥
116219
116220 संप्रसुप्तायां तस्यां चूडालायां भृशं निद्रया विमूढायां सत्याम् ॥ ४३ ॥

116221
116222 तत्याज दयितां सुप्तामङ्काद्राजा शिखिध्वजः।
116223 स्वैरं स्वैरं मुखं राहोर्दिशं चान्द्रप्रभामिव॥ ४४॥
116224
116225 यथा राहोर्मुखं चन्द्रमोक्षकाले स्वैरं स्वैरं शनैः शनैश्चान्द्रप्रभां
116226 प्राचीं दिशं प्रति त्यजति तद्वत्॥ ४४॥
116227
116228 उत्तस्थौ शयनाल्लीनवधूकार्धाञ्चलांशुकात्।
116229 सलक्ष्मीकान्तिलोलोर्मेर्हरिः क्षीरार्णवादिव॥ ४५॥
116230
116231 लीना वधूर्यस्मिंस्तल्लीनवधूकं तथाविधमर्धाञ्चलमर्धभागो यस्य
116232 तथाविधमंशुकं प्रावरणवस्त्रं यस्मिंस्तथाविधाच्छयनात्पर्यङ्कात्।
116233 लक्ष्म्याः कान्तिभिः सहिताः सलक्ष्मीकान्तयो लोलाश्चोर्मयो
116234 यस्मिंस्तथाविधात्क्षीणार्णवादिव॥ ४५॥
116235
116236 वीरक्रमार्थं यामीति तत्रैवानुचरव्रजम्।
116237 योजयित्वा जगामासौ पुरान्निर्गत्य पूर्णधीः॥ ४६॥
116238
116239 वीरक्रमश्चोरदुष्टनिग्रहार्था निशाचर्या तत्र वीरक्रम एवानुचरव्रजं योजयित्वा
116240 नियुज्य। पूर्णधीर्निस्पृहः॥ ४६॥
116241
116242 राज्यलक्ष्मि नमस्तुभ्यमित्युक्त्वा मण्डलाद्गतः।
116243 विवेशोग्रामरण्यानीमेको नद इवार्णवम्॥ ४७॥
116244
116245 उग्रां भीषणाम्। अरण्यानीं महदरण्यम्। हिमारण्ययोर्महत्त्वे इत्यानुक्॥ ४७॥
116246
116247 घनान्धकारगुल्माढ्या क्षुद्रभूतौघकर्कशा।
116248 सारण्यानी निशा सार्धं समं तेनातिवाहिता॥ ४८॥
116249
116250 घनैरन्धकारसदृशैरन्धकारलक्षणैश्च गुल्मैराढ्या सा अरण्यानी निशा च
116251 तेनातिवाहिता उत्तीर्णा॥ ४८॥
116252
116253 प्रातः शून्यामरण्यानीं स नीत्वा विततं दिनम्।
116254 सममर्केण कस्यांचिद्विशश्राम वनावनौ॥ ४९॥
116255
116256 अर्केण समं विशश्रामेत्युक्त्या आसायं जगामैवेति गम्यते॥ ४९॥
116257
116258 भानावदृश्यतां याते तत्र स्नानादिपूर्वकम्।
116259 किंचित्फलादिकं भुक्त्वा तां निनाय तमस्विनीम्॥ ५०॥
116260
116261 तमस्विनीं रात्रिम्॥ ५०॥
116262
116263 पुनः प्रातः पुराण्युच्चैर्मण्डलानि गिरीन्नदीः।
116264 जवादुल्लङ्घयामास राजा द्वादशशर्वरीः॥ ५१॥
116265
116266 ततो मन्दरशैलस्य तटस्थं जनदुर्गमम्।
116267 प्राप काननमत्यन्तदूरस्थजनतापुरम्॥ ५२॥
116268
116269 अत्यन्तदूरस्था जनता जनसमूहाः जनपदा इति यावत् पुराणि च यस्मात्॥ ५२॥
116270
116271 रटत्प्रणालसलिलवापीबलितपादपम्।
116272 शीर्णविद्यालयज्ञातभूतपूर्वद्विजाश्रमम्॥ ५३॥

116273
116274 रटन्ति सशब्दं प्रवहन्ति वंशप्रणालद्वारा सलिलानि
116275 याभ्यस्तथाविधाभिर्वापीभिर्बलिता बलवत्तराः कृताः पादपा यस्मिन्। पूर्वं
116276 भूता भूतपूर्वा द्विजाश्रमा यस्मिन्॥ ५३॥
116277
116278 क्षुद्रप्राणिविनिर्मुक्तसिद्धसेव्यलतालयम्।
116279 आपूर्णपादपलतं प्राणवृत्तिकरैः फलैः॥ ५४॥
116280
116281 तत्रैकस्मिन्समे शुद्धे स्थले सलिलमालिते।
116282 शीतले शाद्वलश्यामे स्निग्धे सफलपादपे॥ ५५॥
116283
116284 शाद्वलैर्हरिततृणवत्प्रदेशैः श्यामे। नडशादाड्वलच्॥ ५५॥
116285
116286 समञ्जरीभिर्वल्लीभिः स चकारोटजालयम्।
116287 प्रावृट्कालः सविद्युद्भिर्नीलाभ्रैरिव पञ्जरम्॥ ५६॥
116288
116289 उटजः पर्णशाला तद्रूपमालयम्॥ ५६॥
116290
116291 मसृणं वैणवं दण्डं फलभोजनभाजनम्।
116292 अर्घपात्रं पुष्पभाण्डमक्षमालां कमण्डलुम्॥ ५७॥
116293
116294 कन्थां शीतापनोदाय बृसीं चैवमृगाजिनम्।
116295 आनीयायोजयत्तस्मिन्मठिकामन्दिरे नृपः॥ ५८॥
116296
116297 यत्किंचिदन्यद्वा वस्तु योग्यं तापसकर्मणि।
116298 तत्तत्र स्थापयामास जगतीव क्रमं विधिः॥ ५९॥
116299
116300 विधिर्धाता जगति स्वसृष्टब्रह्माण्डे क्रमं व्यवहारसाधनजातमिव॥ ५९॥
116301
116302 संध्यापूर्वं जपं प्रातः प्रहरे स तदाकरोत्।
116303 पुष्पोच्चयं द्वितीये तु स्नानं देवार्चनं ततः॥ ६०॥
116304
116305 पुष्पाणामुच्चयं संचयम्। फलमूलकुशकाष्ठादीनामप्युपलक्षणमेतत्। ततः
116306 तृतीये इत्यर्थः॥ ६०॥
116307
116308 पश्चाद्वनफलं किंचिद्वनकन्दं विसादि च।
116309 भुक्त्वा जप्यपरो भूत्वा निनायैको निशां वशी॥ ६१॥
116310
116311 इति दिवसमखेदं मन्दरोपान्तकच्छे विरचित उटजेऽन्तर्मालवेशो निनाय।
116312 नवनृपतिविलासं तं न सस्मार कं वा स्फुरति हृदि विवेके राज्यलक्ष्म्यो
116313 हरन्ति॥ ६२॥
116314
116315 उक्तमनूद्योपसंहरति-इतीति। मलवेशः शिखिध्वज इति वर्णितप्रकारेण
116316 मन्दरोपान्तकच्छे विरचिते उटजे अन्तःस्थितः सन्नखेदं दिवसं बहून्
116317 दिवसान्निनाय। तं प्रागनुभूतं नवं नृपतिविलासं न सस्मार। तत्कुतस्तत्राह##-
116318 वाञ्छाजननेन वशीकर्तुं शक्नुवन्ति। न कंचिदपीत्यर्थः॥ ६२॥
116319
116320 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मी० दे० मोक्षोपायेषु निर्वाणप्रकरणे पू०
116321 चू० शिखिध्वजप्रव्रज्या नाम चतुरशीतितमः सर्गः॥ ८४॥
116322
116323 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
116324 शिखिध्वजप्रव्रज्या नाम चतुरशीतितमः सर्गः॥ ८४॥

पञ्चाशीतितमः सर्गः ८५

श्रीवसिष्ठ उवाच।

एवं शिखिध्वजः पूर्णमठिकायां वने स्थितः।
इदानीं शृणु चूडाला सा किं कृतवती गृहे॥ १॥

राज्ञ्या प्रबुद्धया राज्ञोऽन्वेषणं पथि दर्शनम्।
भाव्यर्थदर्शनं काले बोधनं चोपवर्ण्यते॥

उक्तमनूद्य वक्ष्यमाणकथया संगमयति-एवमिति॥ १॥

तत्रार्धरात्रसमये दूरं याते शिखिध्वजे।
हरिणी ग्रामसुप्तेव चूडाला बुबुधे भयात्॥ २॥

ग्रामसुप्तेवेति राजवियोगभीत्या सदा जाग्रत्यपि दैवान्निद्रया हृतेति द्योतनार्थम्॥ २॥

अपश्यत्पतिनिर्हीना शयनं शून्यतां गतम्।
अभास्करमपूर्णेन्दु शान्तशोभमिवाम्बरम्॥ ३॥

पत्या निर्हीना त्यक्ता॥ ३॥

उत्तस्थौ किंचिदाम्लानवदना खेदशालिनी।
कुसिक्तेव महावल्ली निरुत्साहाङ्गपल्लवा॥ ४॥

कुत्सितेना क्षारकर्दमादिजलेन सिक्ता। विशेषणं साधारणं योज्यम्॥ ४॥

न प्रसन्ना न विमला बभूवाकुलतां गता।
दिनश्रीरिव नीहारधूसरा सा व्यतिष्ठत॥ ५॥

क्षणं शय्योपविष्टैव चिन्तयामास चिन्तया।
कष्टं राज्यं प्रभुस्त्यक्त्वा वनं यातो गृहादिति॥ ६॥

इति चिन्तया वक्ष्यमाणं चिन्तयामासेत्यर्थः॥ ६॥

तन्मयेहाद्य किं कार्यं तत्समीपं व्रजाम्यहम्।
भर्तैव गतिरुद्दिष्टा विधिना प्रकृता स्त्रियः॥ ७॥

तदेवाह-तदिति। विधिना शास्त्रेण भर्तैव प्रकृता प्रथमा गतिः शरणं
उद्दिष्टा विहिता। असति हि भर्तरि पुत्रादयो गतिरिति भावः॥ ७॥

इति संचिन्त्य भर्तारमनुगन्तुं समुत्थिता।
चूडाला वातरन्ध्रेण निर्गत्याम्बरमाययौ॥ ८॥

वातरन्ध्रं वातायनं तेन॥ ८॥

बभ्रामाम्बरमार्गेण वातस्कन्धेन योगिनी।
कुर्वती सिद्धसार्थस्य मुखेनान्येन्दुविभ्रमम्॥ ९॥

अन्येन्दुविभ्रमं द्वितीयचन्द्रभ्रान्तिम्॥ ९॥

116377 ददर्शाथ यथायातं रात्रौ खड्गधरं पतिम् ।
116378 भ्रमन्तमेकमेकान्ते वेतालसमयोदितम् ॥ १० ॥
116379
116380 वेतालयोग्ये समये निशि उदितं प्रकाशमानम् ॥ १० ॥
116381
116382 तादृशं पतिमालोक्य स्थित्वा गगनकोटरे ।
116383 भविष्यच्चिन्तयामास सर्वं भर्तुरखण्डितम् ॥ ११ ॥
116384
116385 भर्तुः भविष्यत् भाविपदार्थजातम् ॥ ११ ॥
116386
116387 यथा येन यदा यत्र यावत्कार्यंन् यथोदयम् ।
116388 यथा च निर्वृतिः स्फारा गन्तव्या तेन राघव ॥ १२ ॥
116389
116390 भविष्यदेवप्रकारनिमित्तकालदेशक्रियेयत्ताभ्युदयनिःश्रेयसपर्यन्तैर्विभज्य
116391 चिन्तितवतीत्याह-यथेति । स्फारा निर्वृतिर्भूमानन्दविश्रान्तिः ॥ १२ ॥
116392
116393 अवश्यं भवितव्यं तद्भर्तुर्दृष्ट्वा पुरः स्थितम् ।
116394 तदेव संवादयितुं गमनात्सा न्यवर्तत ॥ १३ ॥
116395
116396 पुरः स्थितमिव योगबलादपरोक्षं दृष्ट्वा संवादयितुम् । तदनुरूपमाचरितुमिति
116397 यावत् ॥ १३ ॥
116398
116399 आस्तां ममाद्य गमनं काले नातिचिरेण हि ।
116400 मयास्य पार्श्वे गन्तव्यं नियतेरेष निश्चयः ॥ १४ ॥
116401
116402 इति संचिन्त्य चूडाला प्रविश्यान्तःपुरं पुनः ।
116403 सुष्वाप शयने शंभोः शिरसीवन्दवी कला ॥ १५ ॥
116404
116405 केनचित्कारणेनासौ गतः संप्रति भूपतिः ।
116406 इति पौरं जनं सर्वमाश्वास्यातिष्ठदङ्गना ॥ १६ ॥
116407
116408 राज्यं ररक्ष भर्तुस्तत्क्रमेण समदर्शनत् ।
116409 यथा कालेन केदारं पक्वं कलमगोपिका ॥ १७ ॥
116410
116411 कलमगोपिका शालिपालिका ॥ १७ ॥
116412
116413 तयोस्तदाऽवहत्कालो दंपत्योः स्थितयोस्तथा ।
116414 अदृष्टान्योन्यमुखयो राज्यकाननपालयोः ॥ १८ ॥
116415
116416 अवहत् अगमत् ॥ १८ ॥
116417
116418 जगामाथ दिनं पक्षो मासोऽथ ऋतुवत्सरः ।
116419 शिखिध्वजस्य विपिने चूडालायाः स्वमन्दिरे ॥ १९ ॥
116420
116421 कथमगमत्तदाह-जगामेति । ऋतुसहितो वत्सरः ॥ १९ ॥
116422
116423 बहुनात्र किमुक्तेन वर्षाण्यष्टादशाङ्गना ।
116424 चूडालोवास सदने वनगुच्छे शिखिध्वजः ॥ २० ॥
116425
116426 अथ यातेषु बहुषु वेषेषु जरसा वृते ।
116427 शिखिध्वजे महाशैलतटकोटरवासिनि ॥ २१ ॥
116428

116429 भर्तुः कषायपाकं तदालक्ष्य पालितं चिरात्।
116430 तदा तस्याथ यातेषु वर्षेषु जरसा वने [जरसा वृते इति पाठः। वने इति
116431 पाठे जरसोपलक्षितस्येति। वृते इति पाठे शिखिध्वजे जरसा वृते सतीति चान्वयः
116432 ‌‌]॥ २२॥
116433
116434 कषायाणां रागादिवासनानां पाकमालक्ष्य तत्तावत्कालं तया पालितं
116435 प्रतीक्षितमिति यावत्। तदेत्यादिरुक्तानुवादो वक्ष्यमाणार्थः॥ २२॥
116436
116437 तदा तस्यात्मकार्यस्य भवितव्यतया तथा।
116438 भर्तुः समीपगमने मम कालोऽयमित्यथ॥ २३॥
116439
116440 आत्मकार्यस्य स्वभर्तृबोधस्य तथा वक्ष्यमाणप्रकारेण स्वोपदेशेनैव
116441 भवितव्यतया॥ २३॥
116442
116443 संचिन्त्य मन्दरोपान्तं गन्तुं बुद्धिं चकार सा।
116444 चचारान्तःपुराद्रात्रौ ततार नभसः पथम्॥ २४॥
116445
116446 ततार पुप्लुवे॥ २४॥
116447
116448 जगाम वातस्कन्धेन गच्छन्ती खे ददर्श सा।
116449 कल्पवृक्षांशुकच्छन्नरत्नस्तबकभूषिताः॥ २५॥
116450
116451 नन्दनोद्याननिलया रक्ताः सिद्धाभिसारिकाः।
116452 परामृष्टेन्दुशकलान्प्रालेयकणवर्षिणः॥ २६॥
116453
116454 रक्ताः कान्तेष्वनुरक्ताः। परामृष्टानीन्दोः शकलानि कला यैः॥ २६॥
116455
116456 सिद्धोत्तमात्तसौगन्ध्यान्स्पर्शयामास मारुतान्।
116457 चन्द्रबिम्बामृताम्भोधेर्महावीचिपरम्पराम्॥ २७॥
116458
116459 सिद्धोत्तमेभ्यः आत्तानि गृहीतानि मन्दारमालाहरिचन्दनकस्तूर्यादिसौगन्ध्यानि
116460 यैस्तथाविधान्मारुतान् स्पर्शयामास पस्पर्श।
116461 चन्द्रबिम्बलक्षणस्यामृताम्भोधेर्महावीचिपरंपराभूतां निर्मलज्योत्स्नाम्।
116462 अम्बरस्य आन्तरतामन्तर्वर्तितां गता सती ददर्श॥ २७॥
116463
116464 अपश्यन्निर्मलज्योत्स्नामम्बरान्तरतां गता।
116465 मेघान्तरेण गच्छन्ती मेघलग्नाश्च विद्युतः॥ २८॥
116466
116467 अवियुक्ताः स्वभर्त्रा सा भूयो भूयो व्यलोकयत्।
116468 उवाच चात्मनैवाहो यावज्जीवं शरीरिणाम्॥ २९॥
116469
116470 स्वभर्त्रा मेघेन अवियुक्ताः विद्युतो व्यलोकयत्। आत्मना मनसैवोवाच। किमुवाच
116471 तदाह-अहो इत्यादिना॥ २९॥
116472
116473 न स्वभावः शमं याति ममाप्युत्कण्ठितं मनः।
116474 कदा मृगेन्द्रस्कन्धं तं प्रणयप्रवणं पुनः॥ ३०॥
116475
116476 पश्यामि कान्तमित्युक्तं ममाप्युत्कण्ठते मनः।
116477 मञ्जरीजालवलितास्तरुं वल्ल्यः स्वकं पतिम्॥ ३१॥
116478
116479 मम मनः उक्तं विवेकैर्बोध्यमानमपि इति उत्कण्ठते॥ ३१॥
116480

116481 न मुञ्चन्ति क्षणमिति ममाप्युत्कण्ठते मनः।
116482 यथेयमग्रजा कान्तमेति सिद्धाभिसारिका॥ ३२॥
116483
116484 अग्रे श्रेष्ठे देवयोतौ जाता अग्रजा॥ ३२॥
116485
116486 तथा कदाहमेष्यामि ममापीति मनः स्थितम्।
116487 इमे मन्दाश्च मरुत एते च शशिनः कराः॥ ३३॥
116488
116489 वनराजय एताश्च ममाप्युत्कण्ठयन्त्यहो।
116490 हे चित्ताङ्गमुधैवान्तः किं त्वं ताण्डवितं स्थितम्॥ ३४॥
116491
116492 अङ्ग जड। मुधा व्यर्थमेव ताण्डवितं सत्किं स्थितमसीत्यर्थः॥ ३४॥
116493
116494 सा व्योमनिर्मला साधो क्व ते याता विवेकिता।
116495 अथवा चित्त भर्तारं स्वं प्रत्युत्कण्ठसे सखे॥ ३५॥
116496
116497 अथवा नायं दोष इति शेषः। कुतस्तत्राह-भर्तारमिति॥ ३५॥
116498
116499 तिष्ठोत्कण्ठाभिवलितं किं समुत्कण्ठितेन मे।
116500 किं वृथोत्कण्ठसे वामे भर्ता यातो जरां भवेत्॥ ३६॥
116501
116502 इदानीं देहं प्रत्याह-किमिति। वामे हे स्त्रीशरीर यदालिङ्गनाद्यर्थं
116503 समुत्कण्ठसे स ते भर्ता जरां यातस्त्वन्निरपेक्ष एव भवेत् संभाव्यत् इत्यर्थः॥ ३६
116504 ।।
116505
116506 तपस्वी कृशगात्रश्च भवेन्निर्वासनस्तथा।
116507 मनो राज्याद्यभोगेभ्यो मन्येऽस्यामूलतां गतम्॥ ३७॥
116508
116509 राज्यादीनामभोगेभ्यः अभोगार्थं अस्य मनः अमूलतां निर्मूलतां गतं मन्ये
116510 संभावये॥ ३७॥
116511
116512 वासनालतिका प्रावृण्नदी नदगता यथा।
116513 एकान्तरत एकात्मा नीरसः शान्तवासनः॥ ३८॥
116514
116515 तथा अस्य वासनालतिका यथा प्रावृण्नदी क्षुद्रा महानदगता सती न
116516 पृथगवशिष्यते तथा संपन्नेति शेषः। एकान्ते रतः आसक्तः अत एव एकात्मा। नीरसो
116517 निरिच्छः॥ ३८॥
116518
116519 मन्ये भवति मे भर्ता शुष्कवृक्षसमस्थितिः।
116520 तथापि चित्त कोत्कण्ठा भवतोत्कण्ठयान्वितम्॥ ३९॥
116521
116522 एवं नैराश्यप्रदर्शनान्निरुत्साहं मनः पुनरुज्जीवयन्तीवाह-तथापीति।
116523 अस्त्वेवंविधः सः तथापि हे चित्त का तवोत्कण्ठा। अहं योगेन वक्ष्यमाणोपायेन
116524 भर्तुर्मतिमुद्बोध्य तत्त्वज्ञीकृत्य प्रारब्धशेषभोगोत्कण्ठया युतं पतिं
116525 भवता सह श्लेषयिष्यामि न त्वयोत्कण्ठा कार्येति परेणान्वयः॥ ३९॥
116526
116527 मतिमुद्बोध्य योगेन श्लेषयिष्याम्यहं पतिम्।
116528 प्रमृष्टकलनं भर्तुः समीकृत्य मनो मुनेः॥ ४०॥
116529
116530 तदेव स्पष्टमाह-प्रमृष्टेति॥ ४०॥
116531
116532 राज्य एव नियोक्ष्यामि निवत्स्यावः सुखं चिरम्।

116533 अहो नु चिरकालेन मनोरथमिमं शुभम् ॥ ४१ ॥
116534
116535 अहमासादयिष्यामि यद्भर्ता समचिन्तितः ।
116536 समग्रानन्दवृन्दानामेतदेवोपरि स्थितम् ॥ ४२ ॥
116537
116538 यद्यस्माद्धेतोर्भर्ता तत्त्वबोधान्मया समं तुल्यरूपमन्तर्बाह्यार्थचिन्तितं यस्य
116539 तथाविधः संपत्स्यत इति शेषः । तदेव प्रशंसन्त्याह-समग्रेति ॥ ४२ ॥
116540
116541 यत्समानमनोवृत्तिसङ्गमास्वादने सुखम् ।
116542 इति चिन्तयती व्योम्ना चूडालोल्लङ्घ्य पर्वतान् ॥ ४३ ॥
116543
116544 देशानब्दान्दिगन्तांश्च प्राप मन्दरकन्दरम् ।
116545 अदृश्यैव नभःस्थैव प्रविवेश वनान्तरम् ॥ ४४ ॥
116546
116547 अब्दाम्मेघान् । वनान्तरं वनमध्यम् ॥ ४४ ॥
116548
116549 वात्येव पादपलतास्पन्दवेद्यगमागमा ।
116550 वनैकदेशे कस्मिंश्चित्कृतपर्णोटजे पतिम् ॥ ४५ ॥
116551
116552 पादपानां लताना च स्पन्देन वेद्यावनुमेयौ गमागमौ यस्याः ॥ ४५ ॥
116553
116554 दृष्ट्वा योगेन बुबुधे देहान्तरमिवास्थितम् ।
116555 हारकेयूरकटककुण्डलादिविभूषितः ॥ ४६ ॥
116556
116557 योगेन समाहितचित्तेनेति यावत् । यो हारकेयूरादिभूषितः सन् मेरुकान्तिरभवत्तमेव
116558 अत्र मन्दरोटजे कृशाङ्गत्वादिलक्षणं ददर्शेति परेण संबन्धः ॥ ४६ ॥
116559
116560 अभवन्मेरुकान्तिर्यस्तमेवात्र ददर्श सा ।
116561 कृशाङ्गं कृष्णवर्णं च जीर्णपर्णमिव स्थितम् ॥ ४७ ॥
116562
116563 कज्जलाम्बुभरस्नातं भृङ्गीशमिव निस्पृहम् ।
116564 चीराम्बरधरं शान्तमेकाकिनमवस्थितम् ॥ ४८ ॥
116565
116566 भृङ्गीशं प्रसिद्धं रुद्रद्वारपालमिव ॥ ४८ ॥
116567
116568 स्थलीनिषण्णं पुष्पाणि ग्रथयन्तं जटाङ्कितम् ।
116569 तमालोक्यानवद्याङ्गी चूडाला पीवरस्तनी ॥ ४९ ॥
116570
116571 देवातिथिसमर्चनाय पुष्पाणि मालां ग्रथयन्तम् । जटाभिरङ्कितं चिह्नितम् ॥ ४९ ॥
116572
116573 किंचिज्जातविषादैवमुवाचात्मनि चेतसा ।
116574 अहो नु विषमं मौर्ख्यं तदनात्मज्ञतात्मकम् ॥ ५० ॥
116575
116576 अनात्मज्ञता अज्ञानं तदात्मकम् ॥ ५० ॥
116577
116578 एवंविधाः समायन्ति दशा मौर्ख्यप्रसादतः ।
116579 अयं स राजा लक्ष्मीवान्यतो मेऽतिप्रियः पतिः ॥ ५१ ॥
116580
116581 यतो यस्माद्धेतोर्मे अतिप्रियः पतिर्मोहघनेन हृदि क्षुण्णामभिहतामिमां
116582 दशामभ्यागतस्तत्तस्माद्धेतोरिहास्मिन्नुटजे अद्यैव अवश्यं नाथं पतिं
116583 विदितवेद्यतां तथा भोगमोक्षश्रियं नयामि प्रापयामीति परेणान्वयः ॥ ५१ ॥
116584

116585 हृदि मोहघनक्षुण्णामिमामभ्यागतो दशाम्।
116586 तदवश्यमिहाद्यैव नाथं विदितवेद्यताम्॥ ५२॥
116587
116588 नयाम्यत्र न संदेहो भोगमोक्षश्रियं तथा।
116589 इदं रूपं परित्यज्य रूपेणान्येन केनचित्॥ ५३॥
116590
116591 सकाशमस्य गच्छामि बोधंन् दातुमनुत्तमम्।
116592 बालेयं मम कान्तेति मदुक्तं न करोत्यलम्॥ ५४॥
116593
116594 किमर्थमिदं रूपं परित्याज्यं तत्राह-बालेति॥ ५४॥
116595
116596 तस्मात्तापसरूपेण बोधयामि पतिं क्षणात्।
116597 भर्ता कषायपाकेन परिपक्वमतिः स्थितः॥ ५५॥
116598
116599 प्रागेव कुतस्तपस्विवेषेण स न बोधितस्तत्राह-भर्तेति॥ ५५॥
116600
116601 चेतस्यस्याद्य विमले स्वं तत्त्वं प्रतिबिम्बति।
116602 इति संचित्य चूडाला बभूव द्विजदारकः॥ ५६॥
116603
116604 द्विजदारको ब्राह्मणपुत्रः॥ ५६॥
116605
116606 ईषद्ध्यानाद्गतान्यत्वं क्षणादम्बुतरङ्गवत्।
116607 पपात विपिने तस्मिन्द्विजपुत्रकरूपिणी॥ ५७॥
116608
116609 कथं बभूव तदाह-ईषदिति। प्रागुक्ताग्नीषोमधारणान्वितादीषद्ध्यानात्।
116610 अन्यत्वं पुंस्त्वम्॥ ५७॥
116611
116612 भर्तुरध्याजगामाग्रं मन्दस्मितलसन्मुखी।
116613 ददर्श द्विजपुत्रं तं पुरो यातं शिखिध्वजः॥ ५८॥
116614
116615 अग्रं पुरोदेशम्॥ ५८॥
116616
116617 वनान्तरादुपायातं तपो मूर्तिमिवास्थितम्।
116618 द्रवत्कनकगौराङ्गं मुक्ताहारविभूषितम्॥ ५९॥
116619
116620 मूर्तिमास्थितं तप इव द्रवत्कनकमिव गौराणि पीतस्वच्छान्यङ्गानि यस्य॥ ५९॥
116621
116622 शुक्लयज्ञोपवीताङ्गं शुक्लाम्बरयुगावृतम्।
116623 कमण्डलुधरं कान्तं पुरो यातं शिखिध्वजः॥ ६०॥
116624
116625 व्याप्तप्रकोष्ठद्विगुणेनाक्षसूत्रेण चारुणा।
116626 भूमावलग्नगात्रेण किष्कुमात्रेण च स्थितम्॥ ६१॥
116627
116628 व्याप्तः प्रकोष्ठान्मणिबन्धाद्द्विगुणो बहिर्देशो येन। अतएव किष्कुमात्रेण
116629 हस्तमात्रेण द्वैगुण्ये वितस्तिमात्रेण वा अत
116630 एवानतिदैर्घ्याद्भूमावलग्नगात्रेणाऽक्षसूत्रेणाक्षमालया स्थितमुपलक्षितम्॥ ६१॥
116631
116632 कुन्तलव्याप्तमूर्धानं सालिमालमिवाम्बुजम्।
116633 भासयन्तं प्रदेशं तं शारीरैर्दीप्तिमण्डलैः॥ ६२॥
116634
116635 कुण्डलाभषितमुखं नवमर्कमिवोदितम्।
116636 शिखासंप्रोतमन्दारं शृङ्गस्थेन्दुमिवाचलम्॥ ६३॥

116637
116638 शृङ्गस्थः शृङ्गसंलग्नप्राय इन्दुर्यस्य तथाविधमचलं पर्वतमिव
116639 स्थितम् ॥ ६३ ॥
116640
116641 कान्तोपशान्तवपुषमूर्जितं विजितेन्द्रियम् ।
116642 हिमाभभस्मतिलकं भूषितालोकसुन्दरम् ॥ ६४ ॥
116643
116644 मेरुहेमतटीलीनपूर्णेन्दुमिव चञ्चलम् ।
116645 तमालोक्य द्विजसुतं समुत्तस्थौ शिखिध्वजः ॥ ६५ ॥
116646
116647 मेरुहेमतटीपदेन तत्रस्थो गङ्गाप्रवाहो लक्ष्यते । तत्र लीनः प्रतिबिम्बितः
116648 पूर्णेन्दुस्तमिव चञ्चलम् ॥ ६५ ॥
116649
116650 देवपुत्रागमधिया संपरित्यक्तपादुकः ।
116651 देवपुत्र नमस्कार इदमासनमास्यताम् ॥ ६६ ॥
116652
116653 इत्यस्य दर्शयामास पाणिना पत्रविष्टरम् ।
116654 ददौ च द्विजपुत्रस्य् पुष्पमुष्टिं करोत्करे ॥ ६७ ॥
116655
116656 पत्रनिर्मितं विष्टरमासनम् । करोत्करे करतले ॥ ६७ ॥
116657
116658 चन्द्रः कुमुदखण्डस्य प्रालेयमिव पल्लवे ।
116659 हे राजर्षे नमस्तुभ्यमिति द्विजसुतोऽवदत् ॥ ६८ ॥
116660
116661 कुमुदखण्डस्य पल्लवे प्रालेयं हिमकणजालमिव ॥ ६८ ॥
116662
116663 गृहीत्वा कुसुमान्यस्माद्विवेश पत्रविष्टरे ।
116664
116665 शिखिध्वज उवाच ।
116666
116667 देवपुत्र महाभाग कुत आगमनं कृतम् ।
116668 दिवसः सफलो मन्ये यत्त्वामद्यास्मि दृष्टवान् ॥ ६९ ॥
116669
116670 यद्यस्मात्त्वामद्यास्मिन्दिवसे दृष्टवानस्मि ॥ ६९ ॥
116671
116672 इदमर्घ्यमिदं पाद्यं पुष्पाणीमानि मानद ।
116673 इमा प्रग्रथिता माला गृह्यन्तां भद्रमस्तु ते ॥ ७० ॥
116674
116675 श्रीवसिष्ठ उवाच ।
116676
116677 इत्युक्त्वा पाद्यमर्घ्यं च माला पुष्पाणि चानघ ।
116678 शिखिध्वजस्तदिष्टायै ददौ देव्यै यथाखिलम् ॥ ७१ ॥
116679
116680 अखिलं शास्त्रोक्तमनतिक्रम्येति यथाखिलम् । पदार्थानतिवृत्तौ
116681 यथार्थेऽव्ययीभावः ॥ ७१ ॥
116682
116683 चूडालोवाच ।
116684
116685 सुबहूनि परिभ्रान्तो भूतलायतनान्यहम् ।
116686 त्वत्तः पूजा यथा प्राप्ता मयेयं न तथान्यतः ॥ ७२ ॥
116687
116688 न तथान्यतः प्राप्तेत्यनुषज्यते ॥ ७२ ॥

पेशलेनानुरूपेण प्रश्रयेणामुनानघ।
मन्येऽहं नूनमत्यन्तचिरंजीवी भविष्यसि॥ ७३॥

प्रश्रयेण विनयेन। एतैर्हि लक्षणैर्मनुजाश्चिरजीविनो भवन्तीति भावः॥ ७३॥

शान्तेन मनसोदारमारादुन्मुक्तकल्पनम्।
निर्वाणर्थं तपः साधो कच्चित्संभृतवानसि॥ ७४॥

आरात् दूरे उन्मुक्ताः कल्पनाः फलसंकल्पा यस्मिन्। अत एवोदारं निर्वाणार्थं तपः
संभृतवान् संचितवानसि। कच्चिदिति इष्टप्रश्ने निपातः॥ ७४॥

असिधारासमं सौम्य शान्तव्रतमिदं तव।
स्फीतं यद्राज्यमुत्सृज्य महावननिषेवणम्॥ ७५॥

शान्तानामक्रोधनानां यतिवनस्थानां व्रतभूतमिदं
महावननिषेवणमसिधारासमं क्रूरमत्यन्तावधाननिर्वाह्यं चेत्यर्थः॥ ७५॥

शिखिध्वज उवाच।

जानासि भगवन्सर्वं देवस्त्वं कोऽत्र विस्मयः।
श्रियैव लोकोत्तरया ज्ञायसे चिह्नरूपया॥ ७६॥

राज्यत्यागनिर्वाणार्थतपश्चरणयोरज्ञातयोः प्रशंसनायोगात्तस्य तपसा
सर्वज्ञतां संभावयन् राजा द्विजसुतं रूपादिसंपदा प्रशंसति##-

एतान्यङ्गानि ते चन्द्राद्घटितानीति मे मतिः।
अथवा किं समालोकादमृतेनेव सिञ्चसि॥ ७७॥

अथवा किं बहुना सम्यगालोकाद्वीक्षणाद्देहकान्तितश्चामृतेन सिञ्चसीव॥ ७७॥

अस्ति मे दयिता कान्ता पाति मद्राज्यमद्य तत्।
तवेव तस्या दृष्टानि तान्यङ्गानीह सुन्दर॥ ७८॥

उपशान्तं च कान्तं च वपुरापादमस्तकम्।
शृङ्गं शुभ्राम्बुदेनेव पुष्पेणाच्छादयामुना॥ ७९॥

शृङ्गं मेरुशिखरम्। अमुना मद्दत्तमालारूपेण॥ ७९॥

निष्कलङ्केन्दुसंकाशमङ्गमादित्यतेजसा।
मन्ये ते ग्लानिमायाति सुमनःपत्रपेलवम्॥ ८०॥

सुमनसां पुष्पाणां पत्रं दलमिव पेलवं सुकुमारं ते अङ्गम्॥ ८०॥

देवार्चनायोपचितमिदमित्थं सितं मया।
अङ्ग त्वदङ्गसङ्गेन तत्प्रयातु कृतार्थताम्॥ ८१॥

इदं पुष्पजातमित्थं दृश्यमानवैचित्र्येण सितं ग्रथितम्। षिञ् बन्धने कर्मणि
क्तः। अङ्गेति संबोधने। तत्तस्माद्देवस्य तवार्चनादित्यर्थः॥ ८१॥

जीवितं याति साफल्यं स्वमभ्यागतपूजया।
देवादप्यधिकं पूज्यः सतामभ्यागतो जनः॥ ८२॥

देवार्चनादप्यतिथिपूजनमधिकमिति तदेकमपि जन्मसाफल्यहेतुः त्वत्पूजनेतु मे
द्वयमपि युगपत्संपन्नमिति सुतरां जीवितसाफल्यमित्यांशयेनाह-जीवितमिति ॥
८२ ॥

तत्कस्त्वं कस्य पुत्रस्त्वं किमायातोऽस्यनुग्रहात् ।
एतन्मे संशयं छिन्धि विमलेन्दुसमानन ॥ ८३ ॥

तत्तस्मान्मद्दत्तपूजाग्रहणाद्नन्तरमिति शेषः ॥ ८३ ॥

ब्राह्मण उवाच ।

राजन्मे शृणु वक्ष्यामि यथापृष्टमखण्डितम् ।
को नाम परिपृच्छन्तं विनीतं वञ्चयेतुमान् ॥ ८४ ॥

पुष्टमनतिक्रम्य यथापृष्टम् ॥ ८४ ॥

अस्त्यस्मिञ्जगतीकोशे शुद्धात्मा नारदो मुनिः ।
पुण्यलक्ष्म्या मुखे कान्ते कर्पूरतिलकोपमः ॥ ८५ ॥

पुण्यलक्ष्म्याः कान्ते रम्ये मुखे सुरभितरं यत्कर्पूरतिलकं तदुपमा यस्य । अनेन
नारदो गौराङ्ग इति गम्यते ॥ ८५ ॥

स कदाचिन्मुनिर्देवो गुहायां ध्यानमास्थितः ।
तत्र हेमतटे गङ्गा वहत्युरुतरङ्गिणी ॥ ८६ ॥

गुहायां मेरोरिति शेषः ॥ ८६ ॥

मेरुलक्ष्म्यां स्फुरद्रूपा भान्ति हारलता यथा ।
एकदा नारदमुनिर्ध्यानान्ते स सरित्तटे ॥ ८७ ॥

ध्वनद्वलयमश्रौषील्लीलाकलकलारवम् ।
किमेतदित्यसौ किंचिज्जातप्रायकुतूहलः ॥ ८८ ॥

ध्वनन्ति वलयानि यस्मिंस्तथाविधं लीलाकलकलारवं जलक्रीडाकोलाहलध्वनिम् ।
संभावनाप्राचुर्याद्यर्थः प्रायशब्दोऽप्यदन्तोऽस्ति । तदस्मिन्नत्रं प्राये
संज्ञायाम् प्रायभवः रूपात्प्रायादिति पाणिनिजैमिनिप्रभृतिभिः प्रयोगात् ॥ ८८ ॥

हेलयालोकयन्नद्यामपश्यल्ललनागणम् ।
रम्भातिलोत्तमाप्रायं निर्यातं जललीलया ॥ ८९ ॥

निर्यातं जलान्निर्गतम् । जललीलया जलसेचनादिक्रीडया ॥ ८९ ॥

क्रीडन्तं त्यक्तवसनं देशे पुरुषवर्जिते ।
काञ्चनाम्भोजमुकुलसंकाशैः स्तनमण्डलैः ॥ ९० ॥

परिवेल्लितमन्योन्यं फलकान्तं द्रुमं यथा ।
द्रुतहेमरसापूरनिर्भराभोगभासुरैः ॥ ९१ ॥

अन्योन्यं परिवेल्लितं वेष्टितम् । संघट्टितमिति यावत् । द्रुतस्य हेमरसस्य य
आपूरनिर्भरः प्रवाहातिशयस्तादृशेन आभोगेन कान्तिसंस्थानेन
भासुरैरुरुभिः स्वात्मकस्य काममन्दिरस्य स्तम्भसंचयं कुर्वन्तमिति

116793 परेणान्वयः ॥ ९१ ॥
116794
116795 कुर्वन्तमुरुभिः काममन्दिरस्तम्भसंचयम् ।
116796 निर्मलीकृतचन्द्रेण व्याप्तां व्योमविलासिनीम् ॥ ९२ ॥
116797
116798 स्वजलनैर्मल्यान्निर्मलीकृतेन प्रतिबिम्बचन्द्रेण सर्वतो व्याप्तां
116799 व्योमविलासिनीमापगां मन्दाकिनीं देहलावण्यरसप्रवाहेण तर्जयन्तं
116800 न्यग्भावयन्तमिवेत्युत्प्रेक्षा ॥ ९२ ॥
116801
116802 लावण्यरसपूरेण तर्जन्यन्तमिवापगाम् ।
116803 प्राकारैरमरोद्यानरथचक्रैर्मनोभुवः ॥ ९३ ॥
116804
116805 मनोभुवः कामस्य अमरोद्याने नन्दनवने क्रीडायां
116806 रथचक्रभूतैर्नितम्बतटलक्षणैः सेतुभिर्निरोधादुत्पथे अर्पितं गङ्गाम्बु येन ॥
116807 ९३ ॥
116808
116809 उत्पथार्पितगङ्गाम्बु नितम्बतटसेतुभिः ।
116810 सर्वत्र दृष्टसर्वाङ्गं विश्वरूपमिव स्थितम् ॥ ९४ ॥
116811
116812 यतः स्वच्छतमत्वादन्योन्यादर्शतां गतं अतः सर्वतः प्रतिबिम्बितसर्वाङ्गं
116813 सर्वत्र दृष्टसर्वाङ्गं सत् सर्वतः पाणिपादं तत्सर्वतोक्षिशिरोमुखम् इति
116814 प्रसिद्धकालात्मनः कल्पतरोर्भगवतः सकाशादुत्थितं विश्वरूपमिव
116815 स्थितमित्यर्थः ॥ ९४ ॥
116816
116817 प्रतिबिम्बितसर्वाङ्गमन्योन्यादर्शतां गतम् ।
116818 कालकल्पतरोर्वर्षविटपात्पक्षपल्लवात् ॥ ९५ ॥
116819
116820 विश्वरूपं दर्शयितुर्भगवतः कालात्मकत्वं च विश्वूपभीतेनार्जुनेन को
116821 भवानुग्ररूपः इति पृष्टेन भगवता कालोऽस्मि लोकक्षयकृत्प्रवृद्धो
116822 लोकान्यमाहर्तुमिह प्रवृत्तः इति स्ववचनेनैव दर्शितम् । अतस्तमेव काला त्मानं
116823 सर्वकल्पनाफलदातृत्वात्कल्पतरुत्वेन रूपयति-वर्षविटपादित्यादिना । वर्षाणि
116824 प्रभवादयः षष्टिसंवत्सरा विटपाः स्कन्धाः यस्य । एतेनायनद्वयस्य मासानां
116825 च शाखात्वमर्थादुक्तमेव ॥ ९५ ॥
116826
116827 विविधर्तुलताजालाद्दिनश्रीकलिकाकुलात् ।
116828 आलोकपुष्परजसो जाताद्गगनकानने ॥ ९६ ॥
116829
116830 विविधा भिन्नलक्षणा ऋतवो लताजालानि अवान्तरशाखासमूहा यस्य ।
116831 गगनमव्यक्ताकाशस्तल्लक्षणे कानने नन्दने जातात् ॥ ९६ ॥
116832
116833 स्फुरज्जलखगप्रोतात्सप्ताब्ध्येकालवाडकात् ।
116834 स्तनस्तबकवृन्देषु स्पर्धयातिरसान्वितम् ॥ ९७ ॥
116835
116836 स्फुरद्भिर्जलमयचन्द्रपरिणामशरीरत्वाज्जलखगैर्देवैः प्रोताद्व्याप्तात् ।
116837 सप्ताप्यब्धय एकमालवाडकमालवालकं डलयोरभेदादालवालं यस्य
116838 तथाविधात्कालकल्पतरोर्विष्णोरुद्भूतं विश्वरूपमिव स्थितमिति पूर्वत्रान्वयः ।
116839 पुनर्ललनागणमेव विशिनष्टि-स्तनेति । परस्परस्तनस्तबकवृन्देषु
116840 अम्भोजमुकुलेषु च सौन्दर्यसाम्यदर्शनप्रयुक्तस्पर्धया
116841 नालादुद्धृत्योद्धृत्यास्फालनात्संपूर्णं दलितान्यम्भोजमुकुलपल्लवानि येनेति
116842 परेणान्वयः ॥ ९७ ॥
116843
116844 उद्धृत्योद्धृत्य संपूर्णदलिताम्भोजपल्लवम् ।

116845 आलोलालककेशाक्षितारकादिमधुव्रतम् ॥ ९८ ॥
116846
116847 अर्थान्मुखपद्मेषु आलोला अलकाश्चूर्णकुन्तलाः केशा दीर्घकुन्तला अक्षितारका
116848 आदिपदाल्लालाटिकाखचितगूरुत्मतेन्द्रनीलमणयश्च मधुव्रता भ्रमरा यस्मिन् ॥ ९८ ॥
116849
116850 अमृतापद्विघाताय कोशसंचयकारिभिः ।
116851 दुष्प्रापे भूतसंघानां विकसत्कनकाम्बुजे ॥ ९९ ॥
116852
116853 पुनः कीदृशं ललनागणं तदाह-अमृतेत्यादिना ।
116854 अमृतकलाकोशसंग्रहकारिभिः सुरैर्देवैरमृतस्य
116855 राहुगरुडाद्यपहर्तृप्रयुक्तानामापदां विघाताय गुप्ते एकान्तभूते
116856 मेरोर्गुहान्तरे एकत्रोपसंहृतं चन्द्रबिम्बकलापूरमिव स्थितम् । तत्र गुप्ते इति
116857 यदुक्तं तदुपपत्तये विशिनष्टि-दुष्प्रापे इति । अन्यानि विशेषणानि
116858 अमृतनिधानयोग्यस्थानताप्रदर्शनार्थानि ॥ ९९ ॥
116859
116860 पद्मिनीपल्लवाच्छन्ने गुप्ते मेरोर्गुहान्तरे ।
116861 शीतले स्वर्धुनीतीरे तोयोन्मृष्टमले सुरैः ॥ १०० ॥
116862
116863 चन्द्रबिम्बकलापूरमेकत्रैवोपसंहृतम् ।
116864 स्त्रैणमालोक्य तत्कान्तं सहसैव मनो मुनेः ॥ १०१ ॥
116865
116866 ईदृशं कान्तं स्त्रैणं स्त्रीसमूहमालोक्य मुनेर्मनस्तदनन्तरमानन्दितं
116867 प्रमत्तं सत् न आश्रितो विवेकांशो येन तथाविधं बभूवेति परेणान्वयः ॥ १०१ ॥
116868
116869 अनाश्रितविवेकांशं बभूवानन्दितं स्फुरत् ।
116870 आनन्दवलिते चित्ते क्षुब्धे प्राणानिले स्थिते ॥ १०२ ॥
116871
116872 बभूव तस्य हृष्टस्य मदनस्खलितं तदा ।
116873 फलं रसापूर्णमिव ग्रीष्मान्त इव तोयदः ॥ १०३ ॥
116874
116875 चित्ते विकारात्सर्वाङ्गिं प्राणक्षोभस्तेन सर्वाङ्गसारस्य रेतसः स्खलनं
116876 वृत्तमित्याह-बभूवेति । तत्र दृष्टान्तानाह-फलमित्यादिना ॥ १०३ ॥
116877
116878 प्रत्यग्रपादपश्छिन्नलतावृन्त इवोत्तम ।
116879 अवश्यायकणस्पन्दी शशाङ्क इव वा मुनिः ॥ १०४ ॥
116880
116881 छिन्नं क्षतं लतावृन्तं शाखामूलस्थानं यस्य तथाविधः प्रत्यग्रस्तरुणः
116882 पादपो वटादिरिव । उत्तमएति राजसंबोधनम् ॥ १०४ ॥
116883
116884 बिसं द्विधापातमिव गलत्साररसोऽभवत् ।
116885
116886 शिखिध्वज उवाच ।
116887
116888 तादृशोऽपि बहुज्ञोपि जीवन्मुक्तोऽप्यसौ मुनिः ॥ १०५ ॥
116889
116890 द्विधापातं सद्योद्विधाखण्डितं बिसं मृणालमिव वा गलन् सारभूतो रसः
116891 शुक्रं यस्य । राजप्रश्नः स्पष्टः ॥ १०५ ॥
116892
116893 निरिच्छोऽपि निरागोपि न किंचिदुपमोऽप्यलम् ।
116894 सबाह्याभ्यन्तरं नित्यमाकाशविशदोपि च ॥ १०६ ॥
116895
116896 नारदोपि कथं ब्रह्मन् मदनस्खलितोऽभवत् ।

116897
116898 चूडालोवाच।
116899
116900 सर्वस्या एव राजर्षे भूतजातेर्जगल्लये॥ १०७॥
116901
116902 तत्त्वज्ञानामपि प्रबलतरप्रारब्धेन
116903 विवेकांशनिरोधात्कदाचिद्देहधर्मानुवर्तनमस्त्येवेत्युत्तरमाह-सर्वस्या
116904 एवेत्यादिना॥ १०७॥
116905
116906 देवादेरपि देहोयं द्वयात्मैव स्वभावतः।
116907 अज्ञमस्त्वथ तज्ज्ञं वा यावत्स्वान्तं शरीरकम्॥ १०८॥
116908
116909 यावत्स्वान्तं स्वनाशपर्यन्तम्॥ १०८॥
116910
116911 सर्वमेव जगत्यङ्ग सुखदुःखमयं स्मृतम्।
116912 तृप्त्यादिना पदार्थेन केनचिद्वर्धते सुखम्॥ १०९॥
116913
116914 सुखदुःखमयत्वमेव दृष्टान्तैर्दर्शयति-तृप्त्यादिनेति॥ १०९॥
116915
116916 आलोक इव दीपेन महाम्बुधिरिवेन्दुना।
116917 क्षुधादिना पदार्थेन दुःखं केनचिदेव हि॥ ११०॥
116918
116919 दुःखं वर्धत इत्यनुकृष्यते॥ ११०॥
116920
116921 तमो मेघपटेनेव स्वभावो ह्यत्र कारणम्।
116922 स्वरूपे निर्मले सत्ये निमेषमपि विस्मृते॥ १११॥
116923
116924 यथा मेघलक्षणेन पटेन उपचितेन निशि तमो वर्धते तद्वत्। यत्र तत्त्वज्ञानामपि
116925 क्षणं स्वरूपविस्मरणे ईदृशानर्थास्तत्राज्ञानां किं वाच्यमित्याशयेनाह##-
116926
116927 दृश्यमुल्लासमाप्नोति प्रावृषीव प्रयोधरः।
116928 अनारतानुसंधानादप्युन्मेषमविस्मृते॥ ११२॥
116929
116930 अत एव सदैव दृश्यानुल्लासाय सदैव समाधिना स्वरूपाविस्मरणशीलेन
116931 भाव्यमित्याशयेनाह-अनारतेति। उन्मेषो निमेषद्वयान्तरालकालस्तावन्मात्रमपि
116932 ॥ ११२॥
116933
116934 स्वरूपे नोल्लसत्येष चित्ते दृश्यपिशाचकः।
116935 यथा तमःप्रकाशाभ्यामहोरात्रौ स्थितिं गतौ॥ ११३॥
116936
116937 तथैव सुखदुःखाभ्यां शरीरं स्थितिमागतम्।
116938 एवं हि सुखदुःखे द्वे जन्मकारणदर्शनात्॥ ११४॥
116939
116940 एवं ज्ञाज्ञयोः प्रारब्धफलभोगसाम्येपि रञ्जनारञ्जनकृतो विशेषोऽस्त्येवेति
116941 दृष्टान्ताभ्यामुपपादयति-एवमित्यादिना। जन्मकारणस्य देहाद्यात्मभावस्य
116942 दर्शनात्॥ ११४॥
116943
116944 अज्ञस्य गाढतां याते पटे कुङ्कुमवद्दृढम्।
116945 तज्ज्ञस्य त्वङ्ग लगतो मनागपि न तद्वशात्॥ ११५॥
116946
116947 तज्ज्ञस्य तु तद्वशात्तत्त्वज्ञानवशात्। मनागपि न लगतः॥ ११५॥
116948

116949 यथा शुभाशुभौ रागादिनाक्रान्ततरौ मणेः ।
116950 पुरःस्थवस्तुभावेन रञ्जनां स्फटिको यथा ॥ ११६ ॥
116951
116952 यथा मणेः स्फटिकस्यान्तः रागेण तादात्म्यानुरञ्जनेन ।
116953 आदिपदात्तत्प्रयुक्तेन्द्रनीलपद्मरागाद्यध्यासेन आक्रान्ततरौ अतिशयेन
116954 संक्रान्तावपि शुभाशुभौ कुङ्कुमनील्यादिवर्णौ पटस्येव रागेण रञ्जनया
116955 आदिपदाच्छुद्ध्यशुद्ध्यादिना च यथा मणेर्न लगतस्तद्वदित्यर्थः । इदानीं
116956 स्फटिकादपि तस्य स्वच्छतरत्वाद्विशेषमाह-पुरःस्थेति । स्फटिकः
116957 पुरःस्थजपाकुसुमादिवस्तुभावेन तात्कालिकीं रञ्जनामपि यायात् । तज्ज्ञस्तु तामपि
116958 नैतीत्यर्थः ॥ ११६ ॥
116959
116960 तज्ज्ञस्तथा नैति बोधाज्जीवन्मुक्तमतिर्मुनिः ।
116961 वस्तुनः श्लेषमात्रेण घनरञ्जितमेति धीः ॥ ११७ ॥
116962
116963 अज्ञस्य गाढतां याते इति यदुक्तं तद्विवृणोति-वस्तुन इत्यादिना । घनं
116964 रञ्जितं रञ्जनम् । धीः अज्ञस्येति शेषः ॥ ११७ ॥
116965
116966 गतेऽपि वस्तुनि दृढं बुद्धिर्यत्परितापिता [] ।
116967 गतेऽपि कुङ्कुमे वस्त्रं तदीयमनुरञ्जनम् ॥ ११८ ॥
116968
116969 तत्कुतस्तत्राह-गतेऽपीति । यद्यस्माद्धेतोः परितापिता भवतीत्यर्थः ॥ ११८ ॥
116970
116971 न जहाति यथा मूढस्तथा विषयरञ्जनम् ।
116972 अनेनैव क्रमेणैतौ बन्धमोक्षौ व्यवस्थितौ ॥ ११९ ॥
116973
116974 विषयरञ्जनं न जहाति । तथा च बुद्धौ विषयरञ्जनवासनोपचय एव
116975 बन्धस्तत्क्षय एव मोक्ष इति फलितमित्याह-अनेनेति ॥ ११९ ॥
116976
116977 भावनातानवं मोक्षो बन्धो हि दृढभावना ।
116978
116979 शिखिध्वज उवाच ।
116980
116981 स्वोत्पत्तिकारणप्राप्तौ कथं दुःखं सुखं च वा ॥ १२० ॥
116982
116983 दूरस्थानां पुत्रराज्यादीनाम् । अपिपदात्संनिहितानां
116984 चलाभनाशादिस्वोत्पत्तिकारणप्राप्तौ तदभिमानिनः सुखं दुःखं च केन क्रमेण
116985 जायते तद्वदेति राजा पृच्छति-स्वोत्पत्तीति ॥ १२० ॥
116986
116987 अभ्युदेतीति वद मे दूरस्थानामपि प्रभो ।
116988 अत्युदारमतीवाच्छं बह्वर्थं वचनं तव ॥ १२१ ॥
116989
116990 श्रोतुं तृप्तिं न गच्छामि मयूरोऽभ्ररवेष्विव ।
116991
116992 चूडालोवाच ।
116993
116994 स्वोत्पत्तिकारणं हृद्यं लब्ध्वा कायाक्षिपाणिभिः ॥ १२२ ।
116995
116996 तत्रादौ सुखोत्पत्तिप्रकारं वर्णयति-स्वेति । संनिहितविषये
116997 कायाक्षिपाणिभिर्दूरस्थविषये शब्दानुमानादिना च लब्ध्वा उपलभ्य ॥ १२२ ।
116998
116999 सुखसंविदियं बाला नूनमुल्लसति स्वतः ।
117000 हृद्गता क्षोभमायाता जीवं कुण्डलिनीगतम् ॥ १२३ ॥

117001
117002 अपरिच्छिन्नस्वतत्त्वानभिज्ञत्वाद्वला इयं हृद्गता बुद्धिस्था
117003 आत्मसुखसंविद्बुद्धेः क्षोभात् क्षोभायाता सती प्राग्वर्णितरीत्या
117004 कुण्डलिनीमुखप्रभवप्राणविधायकत्वात्कुण्डलिनीगतं जीवं भोक्तारं प्रति
117005 स्वतः प्रत्यगात्मतत्त्वात्वेवाग्निविस्फुलिङ्गवदुल्लसति आविर्भवति ।
117006 एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति इति श्रुतेरिति भावः ॥ १२३ ॥
117007
117008 जीवस्य नियता नाड्यः पृथग्देहे स्थितिं गताः ।
117009 प्राणावपूरिता नाडीर्जीव आक्रामति स्फुरन् ॥ १२४ ॥
117010
117011 हृत्स्थस्य भोक्तुर्नयनरसनश्रोत्रादिप्रतिनियतभोगस्थानागमने
117012 मार्गभेदमाह-जीवस्येति ॥ १२४ ॥
117013
117014 संस्पर्शैकप्रबुद्धात्मा [प्रवाहात्मा इति पाठष्टीकानुगुणः ।] रसो
117015 द्रुमलता इव ।
117016 सुखप्रबोधसंचारे दुःखबोधागमे तथा ॥ १२५ ॥
117017
117018 तत्तद्विषयसंस्पर्शेन तदेकाग्रप्रवाहात्मा सन्निति पूर्वत्रान्वयः । जीवस्य
117019 नाडीद्वारा सर्वदेहप्रवेशे दृष्टान्तमाह-रस इति । यथा मूले सिक्तो रसो जलं
117020 नाडीद्वारा द्रुमलताः सर्वप्रदेशेष्वनुप्रविशति तद्वदित्यर्थः ॥ १२५ ॥
117021
117022 जीवस्य नियता नाड्यः पृथग्देहस्थितिं गताः ।
117023 सुखिनः प्रस्फुरत्येषा धीरताशु न दुःखिनः ॥ १२६ ॥
117024
117025 पृथङ्नियता नैकरूपा इत्यर्थः । कुत एतज्ज्ञानं तत्राह-सुखिन इति । सुखिनः
117026 सुखानुभवे प्रवृत्तस्य जीवस्य धीरता स्वस्थता प्रस्फुरति न तु दुःखिनो
117027 दुःखानुभवे प्रवृत्तस्य । स हि अस्वस्थं तरलं
117028 दंदह्यमानमिवात्मानमनुभवतीत्यतस्तस्य
117029 पित्तोष्मादिसंतापकरसपूर्णस्तरलश्च नाडीमार्गोऽनुमीयते इत्यर्थः ॥ १२६ ॥
117030
117031 ये हि मार्गाः सुवेषस्य कुवेषस्य न ते शुभाः ।
117032 यावत्प्रमाणं जीवोऽयं संशाम्यत्यपरिस्फुरन् ॥ १२७ ॥
117033
117034 अत एव लोकेऽपि सुवेषस्य भोगे प्रवृत्तस्य राजादेः संमृष्टाः
117035 कर्पूरचन्दनोदकसिक्ताः कीर्णकुसुमा धूपकस्तूर्यादिसुरभिणो मार्गाः प्रसिद्धाः
117036 कुवेषस्य नीचस्य तु तद्विपरीता इत्याह-ये हीति । एवं चायं जीवो यावत्कालं
117037 तरलतरनाडीमार्गाननुप्रवेशेन अपरिस्फुरन् स्वयं तरलताशून्यो भवति तावदस्य
117038 न दुःखप्रसक्तिः । तदास्य स्रक्चन्दनाद्याकारवृत्त्यालपं
117039 स्वात्मसुखक्रमभिव्यज्यते । ब्रह्माकारवृत्त्या तु पूर्णमित्यवान्तरवैलक्षण्येपि
117040 विक्षेपाभावात्संशाम्यत्येवेति स्वग्र्यावस्थमेनं तावत्कालं मुक्तमेवावेहि ।
117041 आविर्भूतसुखा स्वसतैव मुक्तिरिति तल्लक्षणसत्त्वादिति भावः ॥ १२७ ॥
117042
117043 तावत्प्रमाणमेवैनं मुक्तं मुक्तमवेहि वै ।
117044 यावत्प्रमाणमधिकं स्फुरति क्षुब्धमारुतम् ॥ १२८ ॥
117045
117046 तावत्प्रमाणमेवैनं बद्धं बद्धमवेहि मे ।
117047 सुखदुःखकलास्पन्दो बन्धो जीवस्य नेतरः ॥ १२९ ॥
117048
117049 तर्हि विषयसुखानुभवकाले कृतो जीवस्य न मुक्ततानुभवस्तत्रा-सुखेति ।
117050 दुःखग्रहणं दृष्टान्तार्थम् । दुःखस्यैव विषयसुखस्यापि कलनं
117051 कलानुभवस्तदर्थं रागाद्यश्चित्तस्य बहिःस्पन्दो यश्च सुखविच्छित्तौ
117052 तरलीभावस्तदुपायार्जनायानर्थसहस्रे स्पन्दः स एव जीवस्य बन्धो न त्वितरः

117053 सुखविश्रान्त्यंशोऽपीति क्षणमात्रमपि सुखविश्रान्त्या तदभावे मोक्षः स्यादेवेति
117054 संसरणासंसरणाभ्यां बन्धमोक्षयोर्द्वेधा व्यवस्थितिर्मयोक्तेति परेणान्वयः
117055 ॥ १२९ ॥
117056
117057 तदभावे हि मोक्षः स्यादिति द्वेधा व्यवस्थितिः ।
117058 सुखदुःखदशे यावदानीते नेन्द्रियैः शठैः ॥ १३० ॥
117059
117060 उक्तमेवार्थं प्रपञ्चयति-सुखदुःखेत्यादिना ॥ १३० ॥
117061
117062 तावत्सुखसमः सौम्यो जीवस्तिष्ठति शान्तवत् ।
117063 सुखमालोक्य वा दुःखमक्षातीतश्चलद्वपुः ॥ १३१ ॥
117064
117065 अक्षातीत इन्द्रियागम्यः स्वप्रकाश इति यावत् ॥ १३१ ॥
117066
117067 समुल्लसति जीवोऽन्तर्दृष्ट्वेन्दुमिव तोयधिः ।
117068 जीवः क्षुभ्यति दृष्टेन संविदाङ्ग सुखादिना ॥ १३२ ॥
117069
117070 दृष्टेन सुखादिना सुखतत्साधन्विषयतदुपायधनादिना तद्रागसंविदा क्षुभ्यति
117071 । अङ्गेति संबोधने ॥ १३२ ॥
117072
117073 आमिषेणेव मार्जारो मौर्ख्यमेवात्र कारणम् ।
117074 शुद्धेन बोध्यबोधेन स्वात्मज्ञानमयात्मना ॥ १३३ ॥
117075
117076 मौर्ख्यं निरतिशयानन्दस्वतत्त्वाज्ञानमेवात्र क्षोभे कारणम् । केन तर्हि
117077 तन्निवृत्त्या विश्रान्तिस्तदाह-शुद्धेनेत्यादिना । बोध्योऽवश्यबोद्धव्यः स्वात्मा
117078 तद्बोधेन ॥ १३३ ॥
117079
117080 सुखदुःखादि नास्तीति तेनासौ याति सौम्यताम् ।
117081 न तत्सुखादि नो तन्मे मुधा चायमहं स्थितः ॥ १३४ ॥
117082
117083 सौम्यतां विश्रान्तिम् ॥ १३४ ॥
117084
117085 इति जीवः प्रबुद्धो हि निर्वाणं याति शाम्यति ।
117086 सुखाद्यवस्त्वतद्रूपमित्यन्तर्बोधसंविदा ॥ १३५ ॥
117087
117088 न तदुन्मुखतां याति जीवः शाम्यति केवलम् ।
117089 सर्वमेव चिदाकाशं ब्रह्मेति घननिश्चये ॥ १३६ ॥
117090
117091 स्थितिं याते शमं याति जीवो निःस्नेहदीपवत् ।
117092 दीपवच्छममायाति सुखादिस्नेहसंक्षये ॥ १३७ ॥
117093
117094 सुखादिषु स्नेहो रागस्तत्संक्षये ॥ १३७ ॥
117095
117096 सर्वमेवमिति ज्ञानाज्जीवोऽद्वित्वविभावनात् ।
117097 सर्वमाकाशमेवेति बुद्ध्वा क्षोभं न गच्छति ॥ १३८ ॥
117098
117099 सर्वं जगत् एवं चिन्मात्रमेवेति ज्ञानात् । अद्वित्वमैक्यं तद्विभावनात् । आकाशं
117100 शून्यम् ॥ १३८ ॥
117101
117102 जीवस्यानेन शून्यस्य कः किल क्षोभविभ्रमः ।
117103 जीवेनेदृग्विधेनैव यथा प्रथमसर्गतः ॥ १३९ ॥
117104

117105 अनेन ब्रह्मैक्यविभावनेन हेतुना पृथक्ताशून्यस्य बन्धशून्यस्य वा। कथं
117106 तर्ह्यस्य क्षोभविभ्रम आगतस्तत्राह-जीवेनेति। ईदृग्विधेन कल्पितेनैव आद्यजीवेन
117107 हिरण्यगर्भेण एव सर्वजीवात्मनाहं संसरिष्याम्येवं स्वतत्त्वबोधादहं
117108 क्रमेण मुक्तो भविष्यामीति स्वकल्पनयैव बन्धमोक्षमार्गौ कल्पयित्वा स
117109 एवानुवर्त्यत इत्यर्थः॥ १३९॥
117110
117111 स्वयं संविदितो मार्गस्तेनैवाद्यापि गच्छति।
117112
117113 शिखिध्वज उवाच।
117114
117115 सुखसंचारयोग्यासु जीवे सरति नाडिषु॥ १४०॥
117116
117117 प्रश्नः स्पष्टः॥ १४०॥
117118
117119 देवपुत्र भवत्येव तद्वीर्यच्यवनं कथम्।
117120
117121 चूडालोवाच।
117122
117123 जीवः क्षोभयति क्षुब्धः प्राणादिपवनावलिम्॥ १४१॥
117124
117125 स्त्रीपिण्डदर्शनाद्रागवासनोद्बोधेन क्षुब्धः सन्॥ १४१॥
117126
117127 संविदा ज्ञांशमात्रेण सेनामिव महीपतिः।
117128 वातस्पन्देन भेदोऽन्तर्मज्जासारश्च संस्थितः॥ १४२॥
117129
117130 कथं क्षोभयति तत्राह-संविदा ज्ञांशमात्रेणेति। प्रवृत्तिस्वभावानां
117131 प्राणादीनामधिष्ठात्र्या जीवसंविदः अङ्कुरितरागादिवृत्त्यनुरोध
117132 एवाभ्यनुज्ञारूपा आज्ञा तदंशमात्रेणेत्यर्थः। भेदोस्त्याद्यन्तःसंचारिणो
117133 व्यानवातस्य स्पन्देन प्रेरणेन सर्वाङ्गसंस्थितो भेदोन्तर्गतः सारो मज्जासारश्च
117134 आशु प्रकृष्टसौगन्ध्यमिवानुगतं रजः स्वं सूक्ष्मांशं त्यजति। यथा
117135 छिन्नवृन्तं पत्रफलादिकं स्वान्तर्गतजलांशमन्तर्वातस्पन्देन त्यजति
117136 तद्वदित्यर्थः॥ १४२॥
117137
117138
117139 त्यजत्याशु प्रसौगन्ध्यं रजः पत्रफलादिकम्।
117140 चलितं तत्त्वधो याति गर्जादिव घनादि खे॥ १४३॥
117141
117142 तत्तु त्यक्तं रजः सर्वाङ्गेभ्यश्चलितं सन्नाडीद्वारा अधो मूलाधारस्थानं याति।
117143 यथा सर्वतः खे प्रसृतं जलं गर्जयतीति गर्जः पुरोवातस्तस्मान्निमित्तादेकीभूय
117144 घनमभ्रं आदिपदान्मेघाद्यवस्थं भूत्वा वर्षणोन्मुखं
117145 सधधोऽसन्निहितदेशं याति तद्वदित्यर्थः॥ १४३॥
117146
117147 देहनाडीप्रणालेन याति शुक्रं बहिः स्वतः।
117148
117149 शिखिध्वज उवाच।
117150
117151 देवपुत्र महाज्ञोऽसि वेत्सि पूर्वां च तत्स्थितिम्॥ १४४।
117152
117153 स्वतः स्वभावतः। देवादेरपि देहोऽयं द्वयात्मैव स्वभावतः इति यत्त्वयोक्तं तत्र
117154 स्वभावशब्दार्थः क इति राजा पृच्छति-देवपुत्रेति। महांश्चासौ ज्ञश्च
117155 महाज्ञः आत्मतत्त्वविदसि। आत्मज्ञानात् पूर्वं सांसारिकपदार्थसंस्थितिं च
117156 तर्कादिकौशल्येन वेत्सि॥ १४४॥

ज्ञायसे वचनादेव स्वभावो हि किमुच्यते।

चूडालोवाच।

आद्यसर्गे यथा सद्यः स्फुरितं ब्रह्म ब्रह्मणि॥ १४५॥

कथमहमीदृक्तया ज्ञातस्तत्राह-ज्ञायसे इति। सर्गादिकाले सर्गोन्मुखं
ब्रह्म प्राक्तनप्राणिकर्मानुसारेण यादृग्यादृग्धर्मकं यद्यत्पदार्थात्मना
स्वात्मनि स्फुरितं तस्य पदार्थस्य आप्रलयं तादृग्धर्मकत्वनियतिः
स्वभावशब्दार्थ इत्याह-आद्यसर्गे इति॥ १४५॥

घटावटपटाद्यात्म तथैवाद्यव्यवस्थितम्।
काकतालीयवद्वारिबुद्बुदोत्पत्तिनाशवत्।
घुणाक्षरवदुच्छूनं तं स्वभावं विदुर्बुधाः॥ १४६॥

सांप्रतिकघटादिस्वभाववैचित्र्यं दृष्टसामग्रीवैचित्र्यादपि संभाव्येत।
सर्गादौ तु तन्निरूपणासंभवात्काकागमनक्षणे दैवात्तच्छिरसि तालप्तनमिव तेन
तस्य मरणमिव चादृष्टमात्रप्रयुक्तमिति
बोधनायाद्यसर्गानुधावनमित्याशयं दर्शयति-काकेति। समासाच्च तद्विषयात्
इतीवार्थद्वयविषयात्समासातृतीये इवार्थे च्छप्रत्ययः। सांप्रतिकेऽपि
प्रतिवस्तुदेशकालनियते स्वभाववैचित्र्ये न दृष्टसामग्रीयत्ता निरूपयितुं
शक्येत्याशयेन दृष्टान्तान्तरमाह-वारिबुद्बुदेति। मायामात्रत्वादाकस्मिको
वासोऽस्त्वित्याशयेन दृष्टान्तान्तरमाह-घुणाक्षरवदिति॥ १४६॥

अस्मिन्स्वभाववशतो जगति प्ररूढे देहा भ्रमन्ति परितो विविधा विकाराः।
प्रक्षीणवासनतया न भवन्ति केचिद्भूयो भवन्ति च पुनस्त्वितरे घनास्थाः॥
१४७॥

उक्तलक्षणस्वभाववशतः प्ररूढे अस्मिन् जगति विविधविकारात्मका
अण्डजादिचतुर्विधा देहा भ्रमन्ति। तेषु केचिज्ज्ञानदेहास्ते प्रक्षीनवासनतया भूयो
जन्मने न भवन्ति। इतरे अज्ञानदेहास्तु भूयो जन्मने भवन्ति। यतस्ते भोगेष्वेव
घनास्था इत्यर्थः॥ १४७॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वाणप्रकरणे पू० चू०
सुखविचारयोगोपदेशो नाम पञ्चाशीतितमः सर्गः॥ ८५॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
सुखविचारयोगोपदेशो नाम पञ्चाशीतितमः सर्गः॥ ८५॥

षडशीतितमः सर्गः ८६

चूडालोवाच।

आत्मस्वभाववशतो जातं जगदिदं महत्।
स्थितिं वासनयाभ्येत्य धर्मधर्मवशे स्थितम्॥ १॥

कुम्भे कुम्भस्यजन्मात्र वृद्धिर्ब्रह्मसमागमः।
तदा शिष्यस्य सार्वज्ञ्यमित्यादिरिह वर्ण्यते॥

यथावर्णितलक्षणः स्वभावः सर्ववस्तुषु आप्रलयं प्रसिद्धस्तथा
मायाशबलस्यात्मनः सर्गादिस्वभावः श्रुत्यादिप्रसिद्धस्तद्वशत इत्यर्थः।

117209 भोगार्थं सृष्टिरित्येके क्रीडार्थमिति चापरे | देवस्यैष स्वभावोऽयमाप्तकामस्य
117210 का स्पृहा इतिभगवद्गौडपादाः || १ ||
117211
117212 वासनाह्रासमानीय धर्माधर्मैर्न गृह्यते |
117213 ततो न जायते जन्तुरिति नो दर्शनं मुने || २ ||
117214
117215 वासनानां ह्रासं ज्ञानाभ्यासेनापक्षयम् | नः दर्शनमनुभव इत्यशः || २ ||
117216
117217 शिखिध्वज उवाच |
117218
117219 अत्युदारं महार्थं च वक्षि त्वं वदतां वर |
117220 अनुभूतिमुपारूढं गूढं च परमार्थवत् || ३ ||
117221
117222 इत्थमनुभवचमत्कारे कीर्तिते तत्प्रकारं श्रोतुकामो राजा तां प्रशंसमानः
117223 प्रस्तुतकथाशेषं संक्षिप्य समापयेत्याह-अत्युदारमित्यादिना || ३ ||
117224
117225 त्वद्वाक्यविभवेनाद्य श्रुतेनानेन सुन्दर |
117226 पीतेनेवामृतेनाहमन्तर्यातोऽस्मि शीतताम् || ४ ||
117227
117228 तत्समासेन तां तावदात्मोत्पत्तिं वदाशु मे |
117229 ततः श्रोष्यामि यत्नेन ज्ञानगर्भां गिरं तव || ५ ||
117230
117231 तेन पद्मजपुत्रेण मुनिना नारदेन तत् |
117232 क्व कृतं वीर्यमार्येण कथयाद्य यथास्थितम् || ६ ||
117233
117234 क्व कस्मिकृतं स्थापितम् || ६ ||
117235
117236 चूडालोवाच |
117237
117238 ततो निबध्नता तेन मनोमत्तमतङ्गजम् |
117239 विवेकविपुलालाने शुद्धया धीवरत्रया || ७ ||
117240
117241 आलाने गजबन्धस्तम्भे | धीलक्षणया वरत्रया चर्मरज्ज्वा || ७ ||
117242
117243 तद्वीर्यं कल्पकालाग्निगलितेन्दुद्रवोपमम् |
117244 रसानां पारदादीनां दिव्यानामनुरञ्जनम् || ८ ||
117245
117246 कल्पकालसंबन्धिना अग्निना गलितस्येन्दोर्द्रव उपमा यस्य |
117247 पारदकाञ्चनरूप्यादीनां रसानां शंभुवीर्याणामनुरञ्जनमनुकारि
117248 सदृशमिति यावत् || ८ ||
117249
117250 मुनिना पार्श्वगे कुम्भे स्फाटिके विलसद्रुचौ |
117251 अद्भुते विद्रुताकारं चन्द्रे चन्द्र इवार्पितम् || ९ ||
117252
117253 तत्र शैले बृहत्कान्ते स्थूलः पार्श्वेषु चाभितः |
117254 गम्भीरकुक्षिः सुदृढश्चोपलाहननक्षमः || १० ||
117255
117256 तत्र शैले मेरौ | पार्श्वेष्वभितश्च स्थूलो विपुलः अत एव गम्भीरकुक्षिः |
117257 उपलेष्वाहननमास्फालनं तत्र क्षमः | आस्फाल्यमानोऽप्यस्फुटन्निति सुदृढत्वे
117258 उपपत्तिः | ईदृशःइ स कुम्भस्तेन नारदेन संकल्पजेन क्षीरेण पूरित इति
117259 परेणान्वयः || १० ||
117260

117261 संकल्पितेन क्षीरेण स कुम्भस्तेन पूरितः ।
117262 अमृतापूरभिन्नेन विधिनेवामृतार्णवः ॥ ११ ॥
117263
117264 स्वसंकल्पसृष्टामृतापूरात्मना भिन्नेन विभक्तेन विधिना स्रष्ट्रा
117265 अरण्यश्चार्णवाविति ब्रह्मलोके श्रुतिप्रसिद्धोऽमृतार्णवो यथा पूरितस्तद्वदित्यर्थः
117266 ॥ ११ ॥
117267
117268 तत्र मासाद्गतो वृद्धिं मुनिमन्दाहुतिक्रमः ।
117269 अमृताब्धौ शुभो गर्भ इन्दोरिन्दुरिवानुजः ॥ १२ ॥
117270
117271 तत्र क्षीरे स्नेहोत्सुकं मुनिं मन्दं अग्निकार्याहुतिषु क्रमयति प्रवर्तयतीति
117272 मुनिमन्दाहुतिक्रमः अमृताब्धौ इन्दोरनुजः प्रतिबिम्बेन्दुरिव ववृधे ॥ १२ ॥
117273
117274 इन्दुं मास इवापूर्णं कालेन सुषुवे घटः ।
117275 गर्भं कमलपत्राक्षं प्रसूनमिव माधवः ॥ १३ ॥
117276
117277 मासः आपूर्णमिन्दुमिव ॥ १३ ॥
117278
117279 परिपूर्णसमस्ताङ्गः कुम्भाद्गर्भो विनिर्ययौ ।
117280 इन्दुः सूक्ष्मादिवाम्भोधेरपरः क्षयवर्जितः ॥ १४ ॥
117281
117282 सूक्ष्माद्घटपरिच्छिन्नादम्भोधेः क्षीरार्णवात्क्षयवर्जितोऽपर इन्दुरिव ॥ १४ ॥
117283
117284 दिनैः कतिपयैरेव वृद्धिमभ्याजगाम सः ।
117285 अप्रमेयाङ्गसौन्दर्यः शुक्लपक्षे शशी यथा ॥ १५ ॥
117286
117287 सर्वसंस्कारसंपन्ने स तस्मिन्नारदो मुनिः ।
117288 भाण्डाद्भाण्ड इवाशेषं विद्याधनमयोऽजयत् ॥ १६ ॥
117289
117290 सर्वैर्जातकर्माद्युपनयनान्तैः संस्कारैः संपन्ने तस्मिन्पुत्रे ॥ १६ ॥
117291
117292 दिनैः कतिपयैरेव विज्ञाताशेषवाङ्मयम् ।
117293 चकारैनं मुनिवरः प्रतिबिम्बमिवात्मनः ॥ १७ ॥
117294
117295 विज्ञातान्यशेषाणि वाङ्मयानि विद्यास्थनानि येन तथाविधम् ॥ १७ ॥
117296
117297 तेनाराजत पुत्रेण मुनिना मुनिनायकः ।
117298 रत्नाद्रौ प्रतिबिम्बेन संध्योदित इवोडुराट् ॥ १८ ॥
117299
117300 रत्नाद्रौ स्फटिकाचले । संध्योदितः पूर्ण इति यावत् ॥ १८ ॥
117301
117302 अथैनं पुत्रमादाय ब्रह्मलोकं स नारदः ।
117303 जगामाथ स्वपितरं ब्रह्माणं चाभ्यवादयत् ॥ १९ ॥
117304
117305 कृताभिवन्दनं ब्रह्मा पौत्रमादाय तं तदा ।
117306 अभिवादितवेदादिं स्वयमङ्के न्यवेशयत् ॥ २० ॥
117307
117308 ग्रहणधारणसौष्ठवपरिष्टानाय अभिमुखं वादितं वादयित्वा परीक्षितं
117309 वेदादिसर्वविद्यास्थानं यस्य तथाविधं प्रीत्याङ्के न्यवेशयेत् ॥ २० ॥
117310
117311 अथाशीर्वादमात्रेण सर्वज्ञं ज्ञानपारगम् ।
117312 पौत्रं तं कुम्भनामानं चकार कमलोद्भवः ॥ २१ ॥

117313
117314 ज्ञानायां पारं परमावधिभूतं तत्त्वज्ञानं तत्र विश्रान्तं चकार ॥ २१ ॥
117315
117316 साधो सोऽहमयं कुम्भः पौत्रोऽहं पद्मजन्मनः ।
117317 पुत्रोऽहं नारदमुनेः कुम्भनामास्मि कुम्भजः ॥ २२ ॥
117318
117319 हे साधो स कुम्भः अयं त्वत्पुरस्थोऽहम् । ननु स्त्रीणां परदैवतस्य स्वभर्तुः
117320 समक्षं धर्मज्ञया वैदर्भ्या चूडालया कथमिदमनृतमुच्यते ।
117321 शतमश्वानृते हन्ति सहस्रं तु गवानृते । आत्मानं स्वजनं हन्ति पुरुषः
117322 पुरुषानृते ॥ इति हि पूर्वरामायणे श्रीरामवचनम् । योऽन्यथा
117323 सन्तमात्मानमन्यथा प्रतिपादयेत् । किं तेन न कृतं पापं चोरेणात्मापहारिणा इति
117324 महाभारते भरतं प्रति शकुन्तलावचनं चेत्थं कुप्येतेति चेत् । नैष दोषः ।
117325 उपदेक्ष्यमाणब्रह्मविद्याप्ररोचनार्थस्य तद्वाक्यस्य
117326 तात्पर्यविषयार्थाबाधेनानृतत्वाभावात् बबरः प्रवाहणिरकामयत । स्तेनं
117327 मनोऽनृतवादिनी वाक् । ग्रावाणः प्लवन्ते
117328 इत्यादिवैदिकार्थवादवाक्यवत्प्रामाण्योपपत्तेः । तत्त्वज्ञानबलेन
117329 सार्वात्म्यप्राप्तेर्वा अहं मनुरभवं सूर्यश्च इत्यादिवामदेवोक्तिवत्सोऽहमयं
117330 कुम्भ इत्याद्युक्तिर्नानृता । न च भर्तृवञ्चनादोषः । कर्मणा मनसा वाचा सदा
117331 भर्तुर्हितं चरेत् इति वचनाद्भर्तुर्विद्याविश्वासजननेन परमहितस्यास्य वाक्यस्य
117332 वञ्चनात्वाभावादिति ॥ २२ ॥
117333
117334 निवसाम्यब्जजपुरे पित्रा सह यथासुखम् ।
117335 चत्वारः सुहृदो वेदा मम लीलाविलासिनः ॥ २३ ॥
117336
117337 मातृष्वसा मे गायत्री मम माता सरस्वती ।
117338 ब्रह्मलोके मम गृहं पौत्रस्तत्रास्मि सुस्थितः ॥ २४ ॥
117339
117340 साक्षान्मातुरभावात्पितुर्मात्रादय एव स्वस्य मात्रादय इत्याशयेनाह##-
117341
117342 यथाकाममशेषेण जगन्ति विहराम्यहम् ।
117343 लीलया परिपूर्णत्वान्न तु कार्येण केनचित् ॥ २५ ॥
117344
117345 धरां पतति मे पादौ पततो न महीतले ।
117346 रजः स्पृशन्ति नाङ्गानि ग्लानिं नायाति मे वपुः ॥ २६ ॥
117347
117348 उक्तार्थविश्वासार्थं स्वस्यां देवलिङ्गानि दर्शयति-धरामिति । मयि धरां
117349 पतति भूलोके संचरति सति मे पादौ महीतले न पततः ॥ २६ ॥
117350
117351 अद्याकाशपथा गच्छन्दृष्टवांस्त्वामहं पुरः ।
117352 इह तेनागतोऽस्म्यङ्ग सर्वं कथितवानिति ॥ २७ ॥
117353
117354 एषोऽहमित्यखिलमेव यथानुभूतं ते वर्णितं ननु मया वनवासतज्ज्ञ ।
117355 सन्तो हि संकथनमार्यजनोत्तमेषु निर्मान्त्यलं सुभगसंव्यवहारदक्षाः ॥
117356 २८ ॥
117357
117358 उक्तिमुपसंहरति-एष इति । हे वनवासतज्ज्ञ वनवासगुणांस्तत्फलं
117359 चित्तशुद्धिं च जानन् अहमेष उक्तप्रकारजन्मादिमानित्यखिलमेव त्वत्पृष्टं ते
117360 यथानुभूतं मया वर्णितम् । पादादौ ते इत्यादेशश्छान्दसः । आर्यजनोत्तमेषु
117361 पृच्छत्सु सन्तः संकथनं निर्मान्ति कुर्वन्त्येव । यतस्ते सुभगैः सद्भिः सह
117362 प्रश्नोत्तरकथनसंव्यवहारे दक्षा अतस्त्वं यद्यदभीप्सितं तत्तत्कामं पृच्छ
117363 अहं तद्वक्तुं दक्षोऽस्मीति भावः ॥ २८ ॥
117364

117365 श्रीवाल्मीकिरुवाच।
117366
117367 इत्युक्तवत्यथ मुनौ दिवसो जगाम सायंतनाय विधयेऽस्तमिनो जगाम।
117368 स्नातुं सभा कृतनमस्करणा जगाम श्यामाक्षये रविकरैश्च सहाजगाम॥
117369 २९॥
117370
117371 इत्यार्षे श्रीवासिष्ठमहारामा० वा० दे० मो निर्वाणप्रकरणे पू० चूडालोपाख्याने
117372 कुम्भजननकथनं नाम षडशीतितमः सर्गः॥८६॥
117373
117374 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
117375 कुम्भजननकथनं नाम षडशीतितमः सर्गः॥८६॥
117376
117377 अष्टादशो दिवसः
117378
117379 सप्ताशीतितमः सर्गः ८७
117380
117381 शिखिध्वज उवाच।
117382
117383 सर्गे स्फुरद्भिर्मत्पुण्यैर्मन्ये संप्रेषितो भवान्।
117384 अलक्ष्यैः संभृतैरद्रौ बृहद्वातैरिवाम्बुदः॥१॥
117385
117386 कुम्भप्रशंसा राज्ञोऽत्र निजदुःखनिवेदनम्।
117387 शिष्यत्वमुपदेश्यार्थे विश्वासश्चोपवर्ण्यते॥
117388
117389 सर्गे जन्मपरम्परालक्षणे संसारे। संभृतैः संचितैर्दैवाद्युगपत्परिपाकेन
117390 फलदानाय स्फुरद्भिर्मत्पुण्यैर्भवानद्रावस्मिन् मन्दराचले संप्रेषित इति मन्ये
117391 संभावयामि। बृहद्वातैः पुरोवातैः॥१॥
117392
117393 अद्य तिष्ठाम्यहं साधो धन्यानां धुरि धर्मतः।
117394 अमृतस्यन्दिवचसा यत्त्वयास्मि समागतः॥२॥
117395
117396 त्वदुपदेशान्ममावश्यंभाविनी कृतार्थतेति सूचनाय सिद्धवत्कृत्याह##-
117397
117398 न केचन तथा भावाश्चेतः शीतलयन्ति मे।
117399 राज्यलाभादयोऽप्येते यथा साधुसमागमः॥३॥
117400
117401 निरर्गलरसो यत्र सामान्येन विजृम्भते।
117402 मुक्तरागादिमननं तत्कल्पनसुखावहम्॥४॥
117403
117404 राज्यलाभाद्यपेक्षया साधुसमागमे उत्कर्षं दर्शयति-निरर्गलेति। यत्र
117405 यस्मिन्साधुसमागमे निरर्गलरसः अपरिच्छिन्नो ब्रह्मानन्दो मुक्तरागादिमननं
117406 यथा स्यात्तथा सामान्येन दरिद्रादिसर्वजनसाधारण्येन विजृम्भते।
117407 तद्राज्यलाभादिकं तु कल्पनमात्रेण तुच्छसुखावहं न निरर्गलसुखावहं
117408 साधारणं चेत्यर्थः॥४॥
117409
117410 श्रीवसिष्ठ उवाच।
117411
117412 एवंवादिनि सैवास्य वाक्यमाक्षिप्य भूपतेः।
117413 भूयः प्रोवाच चूडाला मुनिदारकरूपिणी॥५॥
117414
117415 आक्षिप्य निरुध्य। विवक्षितार्थसमाप्तेः पूर्वमेवेति यावत्॥५॥
117416

117417 चूडालोवाच।
117418
117419 आस्तामेषा कथा तावत्सर्वं ते वर्णितं मया।
117420 त्वं मे कथय हे साधो कस्त्वमद्रौ करोषि किम्॥ ६॥
117421
117422 एषा मत्प्रशंसाकथा आस्ताम्। सर्वं त्वत्पृष्टमिति शेषः॥ ६॥
117423
117424 कियत्पर्यवसानेयं भवतो वनवासिता।
117425 सत्यं कार्यं च नोऽसत्यं वक्तुं जानन्ति तापसाः॥ ७॥
117426
117427 कियान्कालः पर्यवसानभवधिर्यस्याः सा कियत्पर्यवसाना। कार्यं
117428 वनवाससाध्यं प्रयोजनं च सत्यं वद न प्रच्छादय। यतस्तापसास्त्वादृशा
117429 असत्यं वक्तुं नो जानन्ति न जानन्ति॥ ७॥
117430
117431 शिखिध्वज उवाच।
117432
117433 देवपुत्रोऽसि जानासि सर्वमेव यथस्थितम्।
117434 लोकवृत्तान्ततज्ज्ञोऽसि किमन्यत्कथयाम्यहम्॥ ८॥
117435
117436 संसारभयभीतत्वान्निवसामि वनान्तरे।
117437 जानतोपि हि मामार्य कथयाम्येव ते मनाक्॥ ९॥
117438
117439 मनाक् ईषत्। संक्षेपेणेत्यर्थः॥ ९॥
117440
117441 शिखिध्वजोऽहं भूपालस्त्यक्त्वा राज्यमिहास्थितः।
117442 भृशं भीतोस्मि तत्त्वज्ञ संसृतौ जन्मनः पुनः॥ १०॥
117443
117444 आस्थितस्तप इति शेषः। हे तत्त्वज्ञ पुनर्जन्मनो भीतः॥ १०॥
117445
117446 सुखं पुनः पुनर्दुःखं पुनर्मरणजन्मनी।
117447 भवतस्तेन तप्येऽहं तत्त्वज्ञ वनवीथिषु॥ ११॥
117448
117449 भवतः जायेते। तप्ये संतप्तोऽस्मि तपश्चरामि च॥ ११॥
117450
117451 भ्रमन्नपि दिगन्तेषु चरन्नपि परंतपः।
117452 नासादयामि विश्रान्तिमेकां निधिमिवाधनः॥ १२॥
117453
117454 अयत्नोऽप्यफलोऽप्येको ह्यपूर्णोऽप्यस्तसंगतिः।
117455 शुष्याम्यत्र वने साधो घुणक्षुण्ण इव द्रुमः॥ १३॥
117456
117457 अयत्नः कुण्ठितप्रयत्नः। अफलः अप्राप्तफलः। एकोऽसहायः। अस्ता
117458 राज्यकालप्रसिद्धा साधुसंगतिर्लतादिसंगतिश्च येन। घुणैः काष्ठकीतैः
117459 क्षुण्णः क्षतः॥ १३॥
117460
117461 इमामखण्डितां सम्यक् क्रियां संपादयन्नपि।
117462 दुःखाद्दुःखं गच्छामि दुःखौघममृतं मे विषं स्थितम्॥ १४॥
117463
117464 इमामुपवासदेवातिथिपूजादिरूपाम्। अखण्डितां नियतकालावच्छिन्नाम्। विद्यां
117465 चाविद्यां च यस्तद्वेदोभयं सह। अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते
117466 इत्यादिश्रुतेरमृतं अमृतत्वहेतुरिति विश्रान्तये परिगृहीतमपि
117467 कर्मसमुच्चितमुपासनं मे विश्रान्त्यजननाद्विषमिव स्थितं तत्कस्य हेतोस्तद्वद्दति
117468 भावः॥ १४॥

117469
117470 चूडालोवाच।
117471
117472 पितामहमहं पूर्वं कदाचित्पृष्टवानिदम्।
117473 यत्क्रियाज्ञानयोरेकं श्रेयस्तद्ब्रूहि मे प्रभो॥ १५॥
117474
117475 कर्मसमुच्चितोपासनान्मुक्तिरिति राज्ञो भ्रमो यावन्न निवार्यते
117476 तावदयमुपदिष्टमप्यात्मतत्त्वं न प्रतिपत्स्यत इति तन्निवारणाय स्वस्य
117477 पितामहोपदिष्टं क्रमं श्रावयति-पितामहमिति। क्रियाज्ञानयोर्मध्ये यदेकं
117478 मुक्तिकारणं तद्ब्रूहीत्यर्थः॥ १५॥
117479
117480 ब्रह्मोवाच।
117481
117482 ज्ञानं हि परमं श्रेयः कैवल्यं तेन वेत्त्यलम्।
117483 कालातिवाहनायैव विनोदायोदिता क्रिया॥ १६॥
117484
117485 वेत्ति प्रत्यक्षमनुभवति। क्रिया तु स्वर्गादिभोगविनोदाय प्रवृत्तापि तस्य
117486 फल्गुत्वादपुरुषार्थतया अनर्थानुपार्जनेनायुःकालापनोदनायैव श्रुत्या उदिता
117487 उक्तेत्यर्थः। तथा च श्रुतिः कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः। एवं त्वयि
117488 नान्यथेतोऽस्ति न कर्म लिप्यते नरे इति॥ १६॥
117489
117490 अलब्धज्ञानदृष्टीनां क्रिया पुत्रपरायणम्।
117491 यस्य नास्त्यम्बरं पट्टं कम्बलं किं त्यजत्यसौ॥ १७॥
117492
117493 अत एवेयं श्रुतिः विद्यां चाविद्यां चेति श्रुतिश्च ज्ञानानधिकारिविषया। तत्र
117494 मृत्युतरणं स्वाभाविकदुश्चेष्टाव्यावृत्तिरमृतत्वं
117495 चापेक्षिकमभिप्रेतमित्याशयेनाह-अलब्धेति। पौत्रस्याप्यपत्यत्वात्पुत्रेत्युक्तिः॥
117496 १७॥
117497
117498 वासनामात्रसारत्वादज्ञस्य सफलाः क्रियाः।
117499 सर्वा एवाफला ज्ञस्य वासनामात्रसंक्षयात्॥ १८॥
117500
117501 ननु ज्ञानिनोपि स्ववर्णाश्रमोचितकर्मकुर्वाणा दृश्यन्ते
117502 तत्कथमलब्धज्ञानदृष्टीनामेव क्रियाशरणं तत्राह-वासनेति।
117503 श्रद्दधानो रागी वा विहितनिषिद्धकर्मफलं भुङ्क्ते। न च
117504 कर्तृत्वभोक्तृत्ववासनानाशे श्रद्धा सृष्टो वा संभवतीति भावः।
117505 मात्रशब्दः कार्त्स्न्यपरः॥ १८॥
117506
117507 सर्वा हि वासनाभावे प्रयान्त्यफलतां क्रियाः।
117508 अशुभाः फलवन्त्योपि सेकाभावे लता इव॥ १९॥
117509
117510 किमशुभा अपि क्रियास्तथैव। ओमित्याह-सर्वा हीति। फलवन्त्योऽपीति।
117511 यत्रारब्धफला अपि क्रिया बाधितानुवृत्तिमात्रेण सफलशुष्कलताप्राया भवन्ति
117512 तत्रानारब्धफला नश्यन्तीति किं वाच्यम्। तरवो यत्र दह्यन्ते तृणानां तत्र का
117513 कथा इति न्यायादिति भावः॥ १९॥
117514
117515 ऋत्वन्तरे यथा याति विलयं पूर्वमार्तवम्।
117516 तथैव वासनानाशे नाशमेति क्रियाफलम्॥ २०॥
117517
117518 ऋत्वन्तरे ग्रीष्मशरदादौ। पूर्वमार्तवमृतुलिङ्गं नीहारजलधरादि॥ २०॥
117519
117520 न स्वभावेन फलति यथा शरलता फलम्।

117521 क्रिया निर्वासना पुत्र फलं फलति नो तथा ॥ २१ ॥
117522
117523 निर्वासनापि क्रिया कुतो न फलतीति चेत्काशलतावत्स्वभावादेवेत्याह-नेति ॥ २१ ॥
117524
117525 सयक्षवासनो बालो यक्षं पश्यति नान्यथा ।
117526 सदुःखवासनो मूढो दुःखं पश्यति नान्यथा ॥ २२ ॥
117527
117528 सुखदुःखभोगयोग्योऽहमिति वासनैव वा तत्तदुद्भवबीजं यक्षभ्रान्तिफले
117529 बालयक्षवासनावदित्याशयेनाह-सयक्षेति ॥ २२ ॥
117530
117531 आकारभासुराप्युच्चैर्न ददाति फलं क्रिया ।
117532 शुभाशुभा वा तज्ज्ञस्य फुल्ला शरलता यथा ॥ २३ ॥
117533
117534 वासना चेह नास्त्येव साहंकारादिरूपिणी ।
117535 असत्यैवोदिता मौर्ख्यान्मरुभूमाविवाम्बुधिः ॥ २४ ॥
117536
117537 ननु अज्ञदशायामर्थक्रियासमर्थत्वात्सत्याया वासनायाः कथं ज्ञानेन
117538 बाधस्तत्राह-वासनेति । इह अज्ञदशायामपि ॥ २४ ॥
117539
117540 यस्य मौर्ख्यं क्षयं यातं सर्वं ब्रह्मेति भावनात् ।
117541 नोदेति वासना तस्य प्राज्ञस्येवाम्बुधिर्मरौ ॥ २५ ॥
117542
117543 प्राक्तनवासनानाशेऽपि ज्ञानोदयोत्तरमुत्पन्नया तया क्रिया फलतु तत्राह##-
117544
117545 वासनामात्रसंत्यागाज्जरामरणवर्जितम् ।
117546 पदं भवति जीवोऽन्तर्भूयो जन्मविवर्जितम् ॥ २६ ॥
117547
117548 पदं परमपुरुषार्थवस्तु ॥ २६ ॥
117549
117550 सवासनं मनो ज्ञेयं ज्ञानं निर्वासनं मनः ।
117551 ज्ञानेन ज्ञेयमभ्येत्य पुनर्जीवो न जायते ॥ २७ ॥
117552
117553 पितामहोक्तिमुपसंहरति-ज्ञानेनेति ॥ २७ ॥
117554
117555 चूडालोवाच ।
117556
117557 ज्ञानमेव परं श्रेय इति ब्रह्मादयोऽपि ते ।
117558 प्राहुर्महान्तो राजर्षे त्वं किमज्ञानवान्स्थितः ॥ २८ ॥
117559
117560 अज्ञानवान् ज्ञानं विहाय तप एव मोक्षहेतुरिति निश्चित्य किं स्थित इत्यर्थः ॥ २८ ॥
117561
117562 इतः कमण्डलुरितो दण्डकाष्ठमितो बृसी ।
117563 इत्यनर्थविलासेऽस्मिन्रमसे किं महीपते ॥ २९ ॥
117564
117565 विवेकहीनस्य बहिर्मुखस्य दण्डकमण्डल्वाद्यल्पमपि ममतादिविषयतया
117566 अनर्थायालमित्याशयेनाह-इत इति ॥ २९ ॥
117567
117568 कोऽहं कथमिदं जातं कथं शाम्यति चेति भोः ।
117569 राजन्नावेक्षसे कस्मात्किमज्ञ इव तिष्ठसि ॥ ३० ॥
117570
117571 यदि तपोऽप्यनर्थो हेयस्तर्हि क उपादेयस्तमाह-कोऽहमिति । नावेक्षसे न विचारयसि ॥
117572 ३० ॥

117573
117574 कथं बन्धः कथं मोक्ष इति प्रश्नानुदाहरन् ।
117575 पारावारविदां पादान्कस्माद्राजन्न सेवसे ॥ ३१ ॥
117576
117577 विचार इव गुर्वभिगमनसेवनपरिप्रश्नादयोऽप्युपादेया इति दर्शयति-कथमिति ।
117578 संसारसमुद्रस्य पारं परतीरं सन्मात्ररूपः शोधिततत्पदार्थः ।
117579 अवारमपरतीरं चिन्मात्ररूपः
117580 शोधितत्वंपदार्थस्तदखण्डैक्यलक्षणवाक्यार्थविदामित्यर्थः । अथवा
117581 पारावारः परमानन्दसमुद्रस्तद्विदामित्यर्थः ॥ ३१ ॥
117582
117583 दुःस्पन्दसंविदा शैलकोटरे क्रिययानया ।
117584 जीवितं क्षिपयन्किं त्वं शिलाकीटवदास्थितः ॥ ३२ ॥
117585
117586 दुःस्पन्दा व्रतोपवासशीतोष्णादिदुःखदप्रवृत्त्युन्मुखी आत्मसंविद्यस्यां
117587 तथाविधया अनया तपःक्रियया जीवितमायः क्षिपयन् ॥ ३२ ॥
117588
117589 साधूनां समदृष्टीनां परिप्रश्नेन सेवया ।
117590 संगमेन च सा युक्तिर्लभ्यते मुच्यते यया ॥ ३३ ॥
117591
117592 सा त्वदभिलषितविश्रान्तिसुखप्रदा ज्ञानयुक्तिः ॥ ३३ ॥
117593
117594 साधुनैव समं ग्रासं भुञ्जानो वनकोटरे ।
117595 तिष्ठावष्टब्धदुश्चेष्टो धराविवरकीटवत् ॥ ३४ ॥
117596
117597 तर्हि मयेदानीं कथं स्थेयं तदाह-साधुनैवेति । अवष्टब्धा
117598 निरुद्धास्तपःक्लेशादिबहिर्मुखदुश्चेष्टा येन तथाविधः सन् साधुना गुरुणा
117599 सममेव ग्रासमाहारं भुञ्जानस्तत्सेवापरस्तदुपदिष्टार्थे
117600 धराविवरकीटवन्निश्चलस्तिष्ठेत्यर्थः ॥ ३४ ॥
117601
117602 श्रीवसिष्ठ उवाच ।
117603
117604 कान्तया देवरूपिण्या तयैवं प्रतिबोधितः ।
117605 अश्रुपूर्णमुखो वाक्यं शिखिध्वज उवाच ह ॥ ३५ ॥
117606
117607 शिखिध्वज उवाच ।
117608
117609 अहो नु बोधितोऽस्म्यद्य चिरात्सुरसुत त्वया ।
117610 मौर्ख्यादार्यसमासङ्गं मुक्त्वाहमवसं वने ॥ ३६ ॥
117611
117612 अहो नु मे क्षयं यातं मन्ये पापमशेषतः ।
117613 यत्त्वमेव समागत्य संप्रबोधयसीह माम् ॥ ३७ ॥
117614
117615 गुरुस्त्वं मे पिता त्वं मे मित्रं त्वं मे वरानन ।
117616 शिष्यो नमस्करोम्यद्य पादौ तव कृपां कुरु ॥ ३८ ॥
117617
117618 यदुदारतमं वेत्सि यस्मिन् ज्ञाते न शोच्यते ।
117619 भवामि निर्वृतो येन तद्ब्रह्मोपदिशाशु मे ॥ ३९ ॥
117620
117621 निर्वृतः सुखविश्रान्तः ॥ ३९ ॥
117622
117623 घटज्ञानादयो ज्ञाने विभागाः सन्त्यनेकशः ।
117624 ज्ञानानां परमं ज्ञानं कतरत्तारकं भवेत् ॥ ४० ॥

ज्ञानमेव परं श्रेय इति यत्त्वया परमं ज्ञानं तारकमुक्तं तदेतेषां
ज्ञानानां मध्ये कतरद्भवेत् । किमीदृशं तटस्थविषयमेव
तज्ज्ञानमुतान्यादृशमिति भावः ॥ ४० ॥

चूडालोवाच ।

यद्युपादेयवाक्योऽहं राजर्षे तद्वदामि ते ।
यथा ज्ञानमिदं किंचिन्न वक्ष्ये स्थाणुकाकवत् ॥ ४१ ॥

श्रद्धस्वसोम्येति श्रुतेरश्रद्दधानेषु कृतोऽप्युपदेशः स्थाणोरग्रे
काकरुतवद्व्यर्थो निन्द्यश्चेति प्रथमं श्रद्दधानो भवेत्याह-यदीति । तत्तर्हि
इदं त्वत्पृष्टं ज्ञानं यथा यादृशं तद्वदामि वक्ष्यामि ॥ ४१ ॥

अनुपादेयवाक्यस्य वक्तुः पृष्टस्य लीलया ।
व्रजन्त्यफलतां वाचस्तमसीवाक्षसंविदः ॥ ४२ ॥

लीलया अनास्थया पृष्टस्य वक्तुर्वाचः । अक्षसंविदश्चक्षुःसंनिकर्षाः ॥ ४२ ॥

शिखिध्वज उवाच ।

यद्वक्षि तदुपादेयं मया विधिरिव श्रुतेः ।
अविचारितमेवाशु सत्यमेतद्वचो मम ॥ ४३ ॥

श्रुतेः स्वर्गकामो यजेतेत्यादिविधिर्निर्दोषप्रामाण्येन निश्चितः
शिष्टैर्मुक्तसंशयमुपादीयते तद्वदुपादेयमित्यर्थः । अविचारितं
प्रामाण्यसंशयेनादिकल्पितम् ॥ ४३ ॥

चूडालोवाच ।

यथा बालः पितुर्वाक्यं मुक्तहेतूपपादनम् ।
आदत्ते हि तथैव त्वं गृहाणैतद्वचो मम ॥ ४४ ॥

मुक्तं हेतुभिरुपपादनं यस्य तथाविधमपि प्रमाणबुद्ध्या यथा आदत्ते ॥ ४४ ॥

श्रवणानन्तरं बुद्ध्या शुभमित्येव भावयन् ।
शृणु गीतमिव त्यक्त्वा हेत्वर्थित्वं वचो मम ॥ ४५ ॥

शुभं स्वहितमित्येव भावयन् । कर्णसुखावहं गीतं गानमिव प्रीत्या शृणु ॥ ४५
॥

स्वचरितसदृशं तथोदयन्त्याश्चिरसमयेन विबोधनं च बुद्धेः ।
भवभयसुतरं महामतीनां शृणु कथयामि कथाक्रमं मनोज्ञम् ॥
४६ ॥

तत्रादौ देहाद्यभिमानत्याजनाय दुःखनिदानोपदर्शनाय च मणिकाचोपाख्यानं
हस्तिकाख्यानं च श्रावयितुमवतारयति-स्वचरितेति । स्वस्य तव चरितेन सदृशं
तथा मन्दमतीनामपि बुद्धेश्चिरसमयेन विचारोदयद्वारा उदयन्त्या
बुद्धेर्विबोधनं महामतीनां च सद्य एव भवभयं सुतरं यस्मात्तथाविधम् ।
विशेषणपरनिपातश्छान्दसः । ईदृशं कथाक्रमं कथयामि शृण्वित्यर्थः ॥
४६ ॥

117677 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाण० पू० चू०
117678 शिखिध्वजावबोधो नाम सप्ताशीतितमः सर्गः ॥ ८७ ॥
117679
117680 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
117681 शिखिध्वजावबोधो नाम सप्ताशीतितमः सर्गः ॥ ८७ ॥
117682
117683
117684 अष्टाशीतितमः सर्गः ८८
117685
117686 चूडालोवाच ।
117687
117688 अस्ति कश्चित्पुमान् श्रीमान् स्थानं नित्यविरुद्धयोः ।
117689 गुणलक्ष्म्योरशेषेण यथाब्धिर्वाडवाम्बुनोः ॥ १ ॥
117690
117691 मौर्ख्याच्चिन्तामणिं प्राप्तमुपेक्ष्य तपसा चिरात् ।
117692 काचं कश्चिन्मणिभ्रान्त्या जग्राहेति कथोच्यते ॥
117693
117694 नित्या परस्परविरुद्धयोः औदार्यवैराग्यसर्वस्वत्यागादिगुणस्य लक्ष्म्याः
117695 संपदश्च स्थानमावासभूतः । यथा अब्धिर्वडवानलस्य अम्बुनश्च्य विरुद्धयोः
117696 स्थानं तद्वत् ॥ १ ॥
117697
117698 कलावानस्त्रकुशलो व्यवहारविचक्षणः ।
117699 सर्वसंकल्पसीमान्तो न तु जानाति तत्पदम् ॥ २ ॥
117700
117701 तत्परमात्मपदं तु न जानाति ॥ २ ॥
117702
117703 अनन्तयत्नसंसाध्ये स चिन्तामणिसाधने ।
117704 प्रवृत्तो वाडवो वह्निरब्धिसंशोषणे यथा ॥ ३ ॥
117705
117706 सा किं चकार तदाह-अनन्तेति ।
117707 अनन्तैस्तपोजपदेवताप्रार्थनान्वेषणादिगोचरैर्यत्नैः संसाध्ये चिन्तामणेः
117708 साधने तप-आदौ प्रवृत्तः ॥ ३ ॥
117709
117710 तस्य यत्नेन महता कालेनाध्यवसायिनः ।
117711 सिद्धश्चिन्तामणिः किंवा न सिद्ध्यत्युद्यतात्मनाम् ॥ ४ ॥
117712
117713 अध्यवसायिनो दृढनिश्चयवतस्तस्य महता तीव्रायासेन यत्नेनाल्पकालेनैव
117714 चिन्तामणिः सिद्धोऽग्रे स्थितः । दृढोद्योगे फलावश्यंभावनियम इति दर्शयति##-
117715
117716 प्रवृत्तिमुद्यमं प्रज्ञां प्रयुङ्क्ते चेदखेदवान् ।
117717 अकिंचनोऽपि शक्तत्वं समवाप्नोत्यविघ्नतः ॥ ५ ॥
117718
117719 प्रज्ञामिति । आश्रित्येति शेषः ॥ ५ ॥
117720
117721 मणिमग्रे स्थितप्रायं हस्तप्राप्यं ददर्श सः ।
117722 मेरावुदयशृङ्गस्थो मुनिरिन्दुमिवोदितम् ॥ ६ ॥
117723
117724 यथा कश्चिदुदयाचलशृङ्गस्थो मुनिस्तत्रैवोदितमिन्दुं हस्तप्राप्यमपि भ्रान्त्या
117725 मेरावुदितं दूरतरस्थमिव दुष्प्रापं पश्यति तद्वद्दर्शेत्यर्थः ॥ ६ ॥
117726
117727 बभूव मणिराजेन्द्रे न तु निश्चयवानसौ ।
117728 राज्ये द्रागिति संप्राप्ते सुदीन इव पामरः ॥ ७ ॥

117729
117730 अत एव मणिराजानां इन्द्रे ईश्वरे तस्मिंश्चिन्तामणौ निश्चयवान्स न बभूव।
117731 सुदीनो दरिद्रतमः॥ ७॥
117732
117733 इदं संचिन्तयामास मनसा स्मयशालिना।
117734 संप्राप्तोपेक्षया दीर्घदुःखसंभ्रमशालिना॥ ८॥
117735
117736 स्मयो विस्मयस्तच्छालिना। संभ्रमशालिना भ्रान्तेन मनसा। इदं
117737 वक्ष्यमाणप्रकारम्॥ ८॥
117738
117739 अयं मणिर्मणिर्नायं मणिश्चेत्तद्भवेन्न सः।
117740 स्पृशामि न स्पृशाम्येनं कदाचित्स्पर्शतो व्रजेत्॥ ९॥
117741
117742 अयं मणिरिति आपातज्ञानम्। नायं मणिरिति भ्रमः। मणिश्चेत्स्यात्तर्हि स
117743 मत्प्रत्यक्षो न भवेत् तर्हि परीक्षणाय स्पृशामि स्पृशेयमितीच्छाभिलाषः। न
117744 स्पृशामि न स्पृशेयम्। यतः कदाचिन्मणिश्चेदभाग्यस्य मम
117745 स्पर्शतोऽन्तर्धानं व्रजेत्॥ ९॥
117746
117747 नैतावतैव कालेन मणीन्द्रः किल सिद्ध्यति।
117748 यत्नेन जीवितान्तेन सिद्ध्यतीत्यागमक्रमः॥ १०॥
117749
117750 इति शङ्कायां बीजमाह-नैताव्रतेति। आगमोऽत्रैतिह्यं तत्क्रमः॥ १०॥
117751
117752 कृपणः कूणितेनाक्ष्णा लोलालातलतोपमम्।
117753 रत्नालोकं प्रपश्यामि द्विचन्द्रत्वमिव भ्रमात्॥ ११॥
117754
117755 कथं तद्वि प्रत्यक्षं रत्नालोकदर्शनं तत्राह-कृपण इति। कृपणोऽहं
117756 स्वरार्पण्यवशात्कूणितेन भ्रान्तिसंकुचितेनाक्ष्णा लोलालातकल्पिपलतोपमं
117757 रत्नालोकं भ्रमात्प्रपश्यामि॥ ११॥
117758
117759 कुत एतावती स्फीता भाग्यसंपन्ममागता।
117760 अधुनैव यदाप्नोमि मणीन्द्रं सर्वसिद्धिदम्॥ १२॥
117761
117762 भाग्यं पुण्यंन् तत्संपत्॥ १२॥
117763
117764 केचिदेव महान्तस्ते महाभाग्या भवन्ति हि।
117765 येषामल्पेन कालेन भवन्त्यभिमुखाः श्रियः॥ १३॥
117766
117767 अहमल्पतपाः साधुवराको मानुषः किल।
117768 सिद्धयः कथमायान्ति मामभाग्यैकभाजनम्॥ १४॥
117769
117770 एवं विकल्पसंकल्पैश्चिरमज्ञः परामृशन्।
117771 न मणिग्रहणे यत्नमकार्षीन्मौर्ख्यमोहितः॥ १५॥
117772
117773
117774 न यदा येन लब्धव्यं न तत्प्राप्नोत्यसौ तदा।
117775 चिन्तामणिरवाप्तोऽपि दुर्धिया हेलयोज्झितः॥ १६॥
117776
117777 कुतो नाकार्षीत्तत्राह-न यदेति। लब्धव्यं यदिति शेषः॥ १६॥
117778
117779 इति तस्मिन्स्थिते यातो मणिरुड्डीय सिद्धयः।
117780 त्यजन्ति ह्यवमन्तारं शरो गुणमिवोज्झितः॥ १७॥

किमर्थमुड्डीय गतस्तत्राह-सिद्धयः त्यजन्ति हीति। यथा मौर्व्या उज्झितः शरो
गुणं नोर्वी त्यजति तद्वत्॥ १७॥

हत्वा प्राज्ञपदं पुंसः संयान्ति किल सिद्धयः।
आगताः संप्रयच्छन्ति सर्वं यान्त्यसहृत्यलम्॥ १८॥

ननु त्वया स पुरुषो व्यवहारविचक्षण इति कथोपक्रमे उक्तं तस्य सा विचक्षणता
मणिसिद्धिकाले क्व गता तत्राह-हत्वेति। सिद्धय आगताः सत्यः पुंसः
प्राज्ञपदं विचक्षणतां संप्रयच्छन्ति। असहति असहमाने उपेक्षके तु पुंसि अलं
यान्ति। अपगच्छन्त्यश्च। सर्व तस्य प्राक्तनमपि प्राज्ञपदं विचक्षणत्वं हत्वा
विनाश्य संयान्ति किलेत्यर्थः। यथाहुः न देवा दण्डमादाय
दण्डयन्त्यपराधिनम्। बुद्धिं तस्यापकर्षन्ति तेनासौ दण्ड्यते स्वतः इति॥ १८॥

पुमान्भूयः क्रियायत्नं चक्रे रत्नेन्द्रसाधने।
नोद्विजन्ते स्वकार्येषु जना अध्यवसायिनः॥ १९॥

ददर्शाथ कचद्रूपं काचखण्डमखण्डितम्।
हसद्भिर्वञ्चकैः सिद्धैः पुरस्कृतमलक्षितैः॥ २०॥

हसद्भिः परिहासपरैरत एव वञ्चकैः सिद्धैः पुरस्कृतमग्रे स्थापितम्॥ २०॥

अयं चिन्तामणिरिति मूढस्तस्मिन्स वस्तुताम्।
बुबुधे मोहितो ह्यज्ञो मृदं हेमेति पश्यति॥ २१॥

वस्तुतां उपादेयताम्॥ २१॥

अष्टौ षष्ठं द्विषं मित्रं रज्जुं सर्पं स्थलं जलम्।
चन्द्रौ द्वौ कुरुते चित्तगतो मोहोऽमृतं विषम्॥ २२॥

मोहस्यान्यथाकारितां प्रसिद्धामुदाहरति-अष्टाविति। अष्टौ
पदार्थान्कदाचित्संख्याव्यामोहात् षष्ठं षट् कुरुते। एवं द्विषं मित्रं कुरुते
इत्यादि योज्यम्॥ २२॥

तं दग्धमणिमादाय प्राक्तनीं च श्रियं जहौ।
सर्वं चितामणेरस्मात्प्राप्यते किं धनैरिह॥ २३॥

दग्धशब्दो निन्दापरः। श्रियं धनधान्यादिसंपदम्॥ २३॥

देशोऽयमसुखो रूक्षो जनैः पापिभिरावृतः।
किं तद्गेहं गतप्रायं किं नाम मम बन्धवः॥ २४॥

एवं देशगृहवन्ध्वादीनपि भ्रमात्स जहावित्याह-देश इति। रूक्षः
स्निग्धजनशून्यः। गतप्रायं जीर्णमिति यावत्॥ २४॥

दूरं गत्वा यथाकामं सुखं तिष्ठामि संपदा।
इत्यादाय मणिं मूढः शून्यकाननमाययौ॥ २५॥

मणिं काचखण्डम्।॥ २५॥

तत्र काचकणेनासौ तेन तामाप्दं ययौ।
कज्जलाद्रेरिव निभा मौर्ख्यस्यैवाङ्ग या समा॥ २६॥

या आपत् कज्जलाद्रेर्निभा कान्तिरिव गाढनीला। मौर्ख्यस्यैव या समा अनुरूपा।
मृत्युरूपेति यावत्॥ २६॥

दुःखानि मौर्ख्यविभवेन भवन्ति यानि नैवापदो न च जरामरणेन तानि।
सर्वापदां शिरसि तिष्ठति मौर्ख्यमेकं कृष्णं जनस्य वपुषामिव
केशजालम्॥ २७॥

तस्मान्मौर्ख्यमेव दुःखहेतुषु पराकाष्ठेत्युपसंहरति-दुःखानीति।
मौर्ख्यविभवेन यानि दुःखानि प्रसिद्धानि तानि सर्वस्वनाशादेरापदः
सकाशान्नापि जरया मरणेन वा भवन्ति मौर्ख्यापगमे
तत्त्वविदामापदादिसहस्रेभ्योऽपि दुःखादर्शनात् हेमपर्यङ्के शयानस्यापि सति
मौर्ख्ये दुःखसहस्रदर्शनाच्च। अतः सर्वापदां शिरसि मौर्ख्यमेवैकं तिष्ठति
। यथा जनस्य सर्वस्य शिरसि कृष्णं केशजालं तिष्ठति तद्वदित्यर्थः॥ २७॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मोक्षो० निर्वाणप्रकरणे पू० चूडा०
मणिकाचोपाख्यानं नामाष्टाशीतितमः सर्गः॥ ८८॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
मणिकाचोपाख्यानं नामाष्टाशीतितमः सर्गः॥ ८८॥

एकोननवतितमः सर्गः ८९

चूडालोवाच।

अथेममपरं रम्यं वृत्तान्तं शृणु भूमिप।
परं प्रबोधनं बुद्धेः साधो सदृशमात्मनः॥ १॥

बद्धविन्ध्यगजेन्द्रस्य यत्नाच्छित्त्वापि बन्धनम्।
अनिघ्नतो रिपुं प्राप्तं खाते पातोऽत्र वर्ण्यते॥

अत्र हस्तिकाख्यानमपि निदर्शनमतस्तदपि शृण्वित्याह-अथेति।
वृत्तान्तमाख्यानम्। आत्मनस्तव सदृशम्॥ १॥

अस्ति विन्ध्यवने हस्ती महायूथपयूथपः।
आगस्त्या शुद्धया बुद्ध्या विन्ध्येनेवोदितः स्वतः॥ २॥

अगस्त्यस्येयमागस्ती तया। सूर्यतिष्य-इति यलोपः। चिरस्याज्ञापरिपालनाच्छुद्धया
प्रसन्नया अनुग्रहबुद्ध्या विंध्येन [विन्ध्यात्मना स्वेन
प्राक्तनोन्नतरूपेणेत्यर्थः।] स्वतः प्राक्तनोन्नतरूपेणोदितः प्रादुर्भूत
इवेत्युत्प्रेक्षा॥ २॥

वज्रार्चिर्विषमौ दीर्घौ तस्यास्तां दशनौ सितौ।
कल्पानलशिखातुल्यौ सुमेरून्मूलनक्षमौ॥ ३॥

वज्रस्यार्चिषी ज्वाले इव विषमौ तीक्ष्णौ॥ ३॥

स बद्धो लोहजालेन हस्तिपेन किलाभितः।
मुनीन्द्रेणेव विन्ध्याद्रिरुपेन्द्रेणेव वा बलिः॥ ४॥

लोहमयेन जालेन। मुनीन्द्रेण अगस्त्येन॥ ४॥

117885
117886 निबद्धो यन्त्रणामाप शस्त्रकुम्भार्दितो गजः।
117887 तां जगाम व्यथां धीरो नवाग्नौ पुरमेति याम्॥ ५॥
117888
117889 यन्त्रणां नियन्त्रणाम्। कदाप्यसंभावितत्वादलौकिकत्वाच्च नवे अपूर्वे
117890 हरशराग्नौ दह्यमानं त्रिपुरं यां व्यथामेति ताम्॥ ५॥
117891
117892 रिपौ हस्तिपके दूरादपश्यति स वारणः।
117893 अयःसमुद्गके यस्मिन्निनाय दिवसत्रयम्॥ ६॥
117894
117895 समुद्गके जालसंपुटे॥ ६॥
117896
117897 खेदान्निगडनिर्भेदे यत्नवान्स मतंगजः।
117898 चकार किंकिणीक्वाणं मुखोद्घातैरथान्यदा॥ ७॥
117899
117900 किंकिणीनामिव क्वाणं ध्वनिम्॥ ७॥
117901
117902 दन्ताभ्यां यत्नतस्ताभ्यां मुहूर्तद्वितयेन सः।
117903 बभञ्ज शृङ्खलाजालं स्वर्गार्गलमिवासुरः॥ ८॥
117904
117905 स्वर्गस्यामरावत्या अर्गलं कवाटविष्कम्भम्। असुरो बलिरिव॥ ८॥
117906
117907 तं तस्य निगडच्छेदमपश्यद्दूरतो रिपुः।
117908 बलेः स्वर्गावदलनं हरिर्मेरुतलादिव॥ ९॥
117909
117910 तस्य विच्छिन्नपाशस्य मूर्ध्नि तालतरो रिपुः।
117911 पपात क्रमतः स्वर्गं हरिर्मेरोर्बलेरिव॥ १०॥
117912
117913 रिपुर्हस्तिपकः॥ तालतरोस्तालतरुमारुह्य ततस्तस्य हस्तिनो मूर्ध्नि पपात। यथा
117914 बलियज्ञे पदत्रयमितां भुवं प्रतिगृह्य प्रथमेन पदेन भुवं द्वितीयेन
117915 स्वर्गमिति क्रमतस्तृतीयपादपूर्तये भेरोः सकाशाद्बलेर्मूर्ध्नि पपात
117916 तद्वदित्यर्थः॥ १०॥
117917
117918 स पतन्पादपद्माभ्यामप्राप्य करिणः शिरः।
117919 पपातोर्व्यां फलं पक्वं वाताहतमिवाकुलः॥ ११॥
117920
117921 तं पुरः पतितं दृष्ट्वा महेभः करुणां ययौ।
117922 स्फुरत्स्फारगुणाः सन्तः सन्ति तिर्यग्गतावपि॥ १२॥
117923
117924 करुणादयाम्॥ १२॥
117925
117926 पतितं दलयामीति किं नाम मम पौरुषम्।
117927 वारणोऽपीति कलयन्न जघान स तं रिपुम्॥ १३॥
117928
117929 इति कलयंश्चिन्तयन्सन्॥ १३॥
117930
117931 केवलं निगडव्यूहं विदार्याभिजगाम ह।
117932 विततं सेतुमुत्सार्य विपुलौघ इवाम्भसः॥ १४॥
117933
117934 निगडव्यूहं शृङ्खलजालम्॥ १४॥
117935
117936 दयामाश्रित्य मातङ्गो भङ्क्त्वा जालं जगाम ह।

117937 विदार्य मेघसंघातं नभसीव दिवाकरः ॥ १५ ॥
117938
117939 गते गजे समुत्तस्थौ हस्तिपः स्वस्थदेहधीः ।
117940 गजेनैव समं तस्य व्यथा दूरतरं गता ॥ १६ ॥
117941
117942 स्वस्थो देहो धीश्च यस्य तथाविधः सन् ॥ १६ ॥
117943
117944 प्रोच्चलत्तालशिखरात्स तथा पतितोऽपि सन् ।
117945 न भेदमाप दुर्भेदा मन्ये देहा दुरात्मनाम् ॥ १७ ॥
117946
117947 भेदं शिरःपादादिभङ्गम् ॥ १७ ॥
117948
117949 वर्धते प्रावृषीवाभ्रं कुकार्येष्वसतां बलम् ।
117950 आसीदधिकमुत्साही स च चंक्रमणे तदा ॥ १८ ॥
117951
117952 चक्रमणे पद्भ्यां चलने ॥ १८ ॥
117953
117954 वारणारिरसिद्धाङ्गो गतेभो दुःखमाययौ ।
117955 आगत्योपगतेऽन्तर्धिं निधान इव वर्धनः ॥ १९ ॥
117956
117957 न सिद्धे अङ्गे स्वप्रयुक्तोपायौ यस्य । अत एव गतेभः ॥ १९ ॥
117958
117959 सोऽन्वियेष गजं यत्नाद्गुल्मकान्तरितं वने ।
117960 पयोदपिण्डितं भोक्तुं राहुरिन्दुमिवाम्बरे ॥ २० ॥
117961
117962 पयोदैः पिण्डितं छन्नम् ॥ २० ॥
117963
117964 चिरेणालभतेभेन्द्रं कस्मिंश्चित्कानने स्थितम् ।
117965 विश्रान्तं तं तरुतले समरादिव निर्गतम् ॥ २१ ॥
117966
117967 अथ यत्र स्थितो नागस्तत्र तद्बन्धनक्षमम् ।
117968 परया राजसामग्र्या गजलम्पटभूमया ॥ २२ ॥
117969
117970 तत्र सन्निधौ । गजे लम्पटानामासक्तजनानां भूमा बाहुल्यं यस्यां तथाविधया
117971 राजप्रयुक्तया खातसामग्र्या ॥ २२ ॥
117972
117973 स खातवलयं चक्रे हस्तिपः काननेऽभितः ।
117974 सर्वदिक्कं विधिर्भूमौ समुद्रवलयं यथा ॥ २३ ॥
117975
117976 विधिः स्रष्टा ॥ २३ ॥
117977
117978 उपर्यस्थगयद्बाललतौघेन स तं शठः ।
117979 शून्यतातन्तुजालेन शरत्काल इवाम्बरम् ॥ २४ ॥
117980
117981 शठो वञ्चकः । शून्यतापिधायकतन्तुजालप्रायेण शुभ्राभ्रपटलेन
117982 शरत्कालोऽम्बरमिव तं खातमुपरि बाललताजालेनास्थगयत् आच्छादितवान् ॥ २४ ॥
117983
117984 दिनैः कतिपयैरेव वारणो विहरन्वने ।
117985 तस्मिन्निपतितः खाते शुष्काब्धाविव पर्वतः ॥ २५ ॥
117986
117987 व्रजन्पर्याकृतौ कूपे पातालतलभीषणे ।
117988 खातशुष्काब्ध्यधोभागे गजरत्नसमुद्गके ॥ २६ ॥

117989
117990 पर्याकृतौ वलयाकारे तस्मिन् कूपे खातशुष्काब्ध्यधोभागे व्रजन्नपि स गजः इति
117991 अनया रीत्या गजरत्नसमुद्गके भूयो दृढं बद्धः सन्नद्यापि तिष्ठतीति
117992 परेणान्वयः ॥ २६ ॥
117993
117994 इति भूयो दृढं बद्धस्तेन हस्तिपकेन सः ।
117995 तिष्ठत्यद्यापि दुःखेन भूसद्मनि यथा बलिः ॥ २७ ॥
117996
117997 अहनिष्यत्पुरैवासौ यद्यग्रे पतितं रिपुम् ।
117998 तन्नालप्स्यत्ततो दुःख गजः खातनिबन्धनम् ॥ २८ ॥
117999
118000 यद्यहनिष्यत् ततस्तदा खातनिबन्धनं दुःखं नालक्ष्यत ॥ २८ ॥
118001
118002 मौर्ख्यादागामिन कालं वर्तमानक्रियाक्रमैः ।
118003 अशोधयन्नरो दुःखं याति विन्ध्यगजो यथा ॥ २९ ॥
118004
118005 अत एव बुद्धिमानागामिकालमिदानीमेव
118006 शास्त्रीयपुरुषप्रयत्नैर्दुःखबीजसंमार्जनेन शोधयेदित्याह-मौर्ख्यादिति ॥ २९
118007 ।।
118008
118009 मुक्तोऽस्मि शस्त्रनिगडादिति तुष्टो हि वारणः ।
118010 दूरस्थोऽपि पुनर्बद्धो मौर्ख्यं क्व च न बाधते ॥ ३० ॥
118011
118012 यावत्सर्वदुःखनिदानमज्ञानं नोच्छिन्नं तावत्प्रयत्नसहस्रैः कृतोऽपि
118013 दुःखोपशमो व्यर्थ एवेत्याशयेनाह-मुक्तोऽस्मीति । किलार्थे चशब्दः ॥ ३० ॥
118014
118015 मौर्ख्यं हि बन्धनमवेहि परं महात्मन्बद्धो न बद्ध इति चेतसि
118016 तद्विमुक्त्यै ।
118017 आत्मोदयं त्रिजगदात्ममयं समस्तं मौर्ख्ये स्थितस्य सहसा ननु
118018 सर्वभूमिः ॥ ३१ ॥
118019
118020 तस्मादज्ञानमेव मूलबन्धस्तन्निवृत्तिरद्वितीयात्मतत्त्वज्ञानदेवेति
118021 दर्शयन्नुपसंहरति-मौर्ख्यमिति । हे महात्मन् न बद्धा सदा बन्धशून्यः
118022 स्वयं बद्ध इति चेतसि यन्मौर्ख्यं तदेव परं बाधनमतस्त्वं तद्विमुक्त्यै
118023 आध्यात्मिकाधिदैविकाधिभौतिकत्रिविधपरिच्छेदात्मना आत्मबन्धनभूतं
118024 त्रिजगदात्मनः सकाशादेवोदयो जन्म यस्य तथाविधं समस्तमात्ममयं विद्धि ।
118025 तहा वेदने आत्मव्यतिरिक्तापरिशेषादात्मा नित्यमुक्त एव भवति । ईदृशवेदनाभावे
118026 तु मौर्ख्ये स्थितस्य पुंस आत्मैव सहसा सर्वबन्धादिदुःखबीजानां भूमिः
118027 प्ररोहक्षेत्रं भवतीत्यर्थः ॥ ३१ ॥
118028
118029 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मोक्षो० निर्वाणप्रकरणे पू० चू०
118030 हस्तिकोपाख्यानं नामैकोननवतितमः सर्गः ॥ ८९ ॥
118031
118032 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
118033 हस्तिकोपाख्यानं नामैकोननवतितमः सर्गः ॥ ८९ ॥
118034
118035
118036 नवतितमः सर्गः ९०
118037
118038 शिखिध्वज उवाच ।
118039
118040 मणिसाधकविन्ध्येभबन्धनाद्यमरात्मज ।

118041 सूचितं यत्कथाजालं पुनर्मे प्रकटीकुरु ॥ १ ॥
118042
118043 मणिकाचशुभाख्यानतात्पर्यमिह विस्तात् ।
118044 विवृणोति पुरो राज्ञश्चूडाला कुम्भरूपिणी ॥
118045
118046 हे अमरात्मज देवपुत्र त्वया यत् मणिसाधककथाजालं स्वचरित्रसममित्युक्त्या
118047 मत्प्रतिबोधनोपाय इति सूचितं तत्प्रकटीकुरु ॥ १ ॥
118048
118049 चूडालोवाच ।
118050
118051 वाक्यार्थदृष्टेर्निष्पत्त्या हृद्गृहे चित्तभित्तिषु ।
118052 शृणु स्वयं कथां चित्रां चित्रमुन्मीलयामि ते ॥ २ ॥
118053
118054 हृद्धृदयं तल्लक्षणे गृहे चितलक्षणासु भित्तिषु चित्रां कथामेवोन्मीलितं
118055 रेखामात्रेण कृतं चित्रं व्याख्यावर्णवैचित्र्येणोन्मीलयामीत्यर्थः ॥ २ ॥
118056
118057 योऽसौ शास्त्रार्थकुशलस्तत्त्वज्ञाने त्वपण्डितः ।
118058 रत्नसंसाधकः प्रोक्तः स त्वमेव महीपते ॥ ३ ॥
118059
118060 तत्रादावस्ति कश्चित् पुमान् श्रीमानित्यादिनोक्तो मणिसाधकः स त्वमेवेत्याह##-
118061
118062 तज्ज्ञो भवसि शास्त्रेषु रविर्मेरुतटेष्विव ।
118063 तत्त्वज्ञाने तु विश्रान्तो न त्वं दृषदिवाम्भसि ॥ ४ ॥
118064
118065 त्वयि कलावान् शास्त्रकुशल इत्याद्युक्तलक्षणमस्तीत्याह-तज्ज्ञ इति ॥ ४ ॥
118066
118067 विद्धि चिन्तामणिं साधो सर्वत्यागमकृत्रिमम् ।
118068 तमन्तं सर्वदुःखानां त्वं साधयसि शुद्धधीः ॥ ५ ॥
118069
118070 कोऽसौ चिन्तामणिर्यत्साधनेऽहं प्रवृत्तस्तमाह-विद्धीति ॥ ५ ॥
118071
118072 सर्वत्यागेन शुद्धेन सर्वमासाद्यतेऽनघ ।
118073 सर्वत्यागो हि साम्राज्यं किं चिन्तामणितो भवेत् ॥ ६ ॥
118074
118075 तस्य चिन्तामणित्वमुपपादयति-सर्वत्यागेनेति । साम्राज्यमात्यन्तिकी पूर्णकामता ॥
118076 ६ ॥
118077
118078 सिद्धः सर्वपरित्यागः साधो संसाध्यतस्तव ।
118079 खर्वीकृतजगद्भूतिर्विद्यास्वात्मोदयस्तथा ॥ ७ ॥
118080
118081 खर्वीकृता तुच्छीकृता हैरण्यगर्भपदान्ता जगत्प्रसिद्धा
118082 भूतिरैश्वर्यपरम्परा येन तथाविधो विद्यालक्षणः स्वात्मोदयो
118083 निरतिशयानन्दाभ्युदयो यस्मात्तथाविधश्च सर्वपरित्यागः । चार्थे तथाशब्दः ॥ ७
118084 । ।
118085
118086 संत्यक्तं भवता राज्यं सदारधनबान्धवम् ।
118087 ब्रह्मणेव जगत्सर्गव्यापारः स्वनिशागमे ॥ ८ ॥
118088
118089 कथं सिद्धस्तदाह-संत्यक्तमिति । ब्रह्मणा वेधसा ॥ ८ ॥
118090
118091 स्वदेशस्यातिदूरस्थमागतोऽसि ममाश्रमम् ।
118092 भुवोऽन्तमिव विश्रान्त्यै वैनतेयः सकच्छपः ॥ ९ ॥

118093
118094 कच्छपग्रहणं गजन्यग्रोधशाखयोरप्युपलक्षणम् | वैनतेयस्येयं कथा
118095 भारतादौ प्रसिद्धा || ९ ||
118096
118097 केवलं सर्वसंत्यागे शेषिताहंमतिस्त्वया |
118098 मृष्टाखिलकलङ्केन स्वसत्तेवानिलेन खे || १० ||
118099
118100 अहंमतिरभिमानरूपा अविद्या | मृष्टा अखिला अभ्रनीहारादिकलङ्का येन
118101 शारदानिलेन || १० ||
118102
118103 मनोमात्रे हृदस्त्यक्ते जगदायाति पूर्णताम् |
118104 त्यागात्यागविकल्पैस्त्वं खमम्भोदैरिवावृतः || ११ ||
118105
118106 अहंमतिपरित्यागे परिशिष्टः पूर्णानन्दात्मा परमपुरुषार्थः स्वत एव हृदि
118107 साक्षात्स्फुरतीति सर्वत्याग एव मोक्षः पर्यवसितः परमानन्दश्चिन्तामणिर्न तल्लाभे
118108 तदुपेक्ष्यान्यदन्वेषितव्यमित्याशयेनाह-मनोमात्रे इति | त्वं तु
118109 त्यक्तृत्वाभिमानपरिशेषात्यागात्यागविकल्पैरावृत्त इति न पूर्णतां प्राप्त
118110 इत्याह-त्यागात्यागविकल्पैरिति || ११ ||
118111
118112 नायं स परमानन्दः सर्वत्यागो महोदयः |
118113 कोऽप्युच्चैरन्य एवासौ चिरसाध्यो महानिति || १२ ||
118114
118115 विकल्पवशादेव प्राप्तेऽपि सर्वत्यागे अविश्वासस्तवाभूदित्याह-नायमिति || १२ ||
118116
118117 चिन्तयेति गते वृद्धिं संकल्पग्रहणे शनैः |
118118 वात्ययेव वनस्पन्दे त्यागः प्रोड्डीय ते गतः || १३ ||
118119
118120 इति चिन्तया संकल्पग्रहणे चिरं वृद्धिं गते सति स ते सर्वत्यागः प्रोड्डीय गतः ||
118121 १३ ||
118122
118123 त्यागिता स्यात्कुतस्तस्य चिन्तामप्यावृणोति यः |
118124 पवनस्पन्दयुक्तस्य निःस्पन्दत्वं कुतस्तरोः || १४ ||
118125
118126 यश्चिन्तामपि आ ईषदपि वृणोति स्वीकरोति || १४ ||
118127
118128 चिन्तैव चित्तमित्याहुः संकल्पेतरनामकम् |
118129 तस्यामेव स्फुरन्त्यां तु चित्तं त्यक्तं कथं भवेत् || १५ ||
118130
118131 चित्तत्याग एव मुख्यः सर्वत्यागः चिन्तायां तु सत्यां चित्तं दुस्त्यजम् चित्तेन तु
118132 संकल्पद्वारा जगदेव संगृहीतमिति न कस्यापि त्यागस्ते प्रतिष्ठित इत्याशयेनाह##-
118133
118134 चित्ते चिन्तागृहीते तु त्रिजगज्जालके क्षणात् |
118135 कथमासाद्यते साधो सर्वत्यागो निरञ्जनः || १६ ||
118136
118137 संकल्पग्रहणेनान्तस्त्यागः प्रोड्डीय ते गतः |
118138 शब्दसंश्रवणेनाङ्ग यथा ग्रामविहंगमः || १७ ||
118139
118140 ग्रामविहंगमः कपोतादिः || १७ ||
118141
118142 निश्चिन्तत्वं परं सर्वं त्याग आदाय ते गतः |
118143 आमन्त्र्यापूजितो जन्तुः स दुःखं न करोति किम् || १८ ||
118144

118145 सर्वत्यागस्य फलं निश्चिन्तत्वं त्यागेनापगच्छता नीतमिवेत्युत्प्रेक्षते##-
118146 किं पुनः प्रार्थनासहस्रैरागतस्यापूजने इत्याशयेनाह-आमन्त्र्येति ॥ १८ ॥
118147
118148 सर्वत्यागमणावेवं गते कमललोचन ।
118149 तपःकाचमणिर्दृष्टस्त्वया संकल्पचक्षुषा ॥ १९ ॥
118150
118151 ततः कोऽसौ काचखण्डो यो मया मणिबुद्ध्या गृहीतस्तमाह-तप इति ॥ १९ ॥
118152
118153 त्वया तस्मिंस्तपस्येव दुःखे दृष्टिभ्रमोदिते ।
118154 ग्राह्यैकभावना बद्धा जलेन्दौ शशिनो यथा ॥ २० ॥
118155
118156 दुःखहेतुत्वाद्दुःखे ग्राह्यमित्येव भावना दृढनिश्चयः । जलेन्दौ
118157 प्रतिबिम्बचन्द्रे सत्यशशिनो भावनेव बद्धेत्यर्थः ॥ २० ॥
118158
118159 अवासनमनासक्त्या कृतानन्ता सवासना ।
118160 आद्यन्तमध्यविषमा दुःखायैव तपःक्रिया ॥ २१ ॥
118161
118162 पूर्वमवासनं यथा स्यात्तथा अनासक्त्या सर्वत्यागमुपक्रम्य पश्चादनन्ता
118163 सवासना तपःक्रिया कृता सा च वृथा । गृहधनदारादित्यागादादौ विषमा अन्ते
118164 फलासंङ्गविषमा मध्ये वनवासशीतवातादिसहनाद्विषमेति दुःखायैवेत्यर्थः
118165 ॥ २१ ॥
118166
118167 अमितानन्दमुत्सृज्य सुसाध्यं यः प्रवर्तते ।
118168 मिते वस्तुनि दुःसाध्ये स्वात्महा स शठः स्मृतः ॥ २२ ॥
118169
118170 अमितात्मानन्दं सुसाध्यं च सर्वत्यागमुत्सृज्य मिते दुःसाध्ये च तप आदिवस्तुनि
118171 यः प्रवर्तते स शठः अमितात्मस्वरूपविघातित्वात्स्वात्महेत्यर्थः ॥ २२ ॥
118172
118173 सर्वत्यागं समारभ्य न चैष साधितस्त्वया ।
118174 तथा दुःखैकताज्ञानबद्धेन वनसद्मनि ॥ २३ ॥
118175
118176 वनसद्मनि तथा वर्णितप्रकारतपोदुःखैस्तदेकताप्रयोजकाज्ञानेन च बद्धेन
118177 त्वया एष प्राक् समारब्धः सर्वत्यागो न साधितः ॥ २३ ॥
118178
118179 राज्यबन्धाद्विनिष्क्रम्य प्रसरद्दुःखपूरितात् ।
118180 वनवासाभिधैः साधो बद्धोऽसि दृष्टबन्धनैः ॥ २४ ॥
118181
118182 द्विगुणा एव ते चिन्ताः शीतवातातपादयः ।
118183 बन्धनादधिकं मन्ये वनवासमजानताम् ॥ २५ ॥
118184
118185 वनवासमजानतां प्रागननुभूतवतां सुकुमाराणां वनवासं
118186 बन्धनादधिकं दुःखं मन्ये ॥ २५ ॥
118187
118188 चिन्तामणिर्मया प्राप्त इत्यलं बुद्धवानसि ।
118189 न लब्धवान्भवान्साधो स्फटिकस्यापि खण्डिकाम् ॥ २६ ॥
118190
118191 खण्डिकां शकलमपि ॥ २६ ॥
118192
118193 इत्येतदङ्ग मणियत्नकथासमानं सम्यङ्गया प्रकथितं तव पद्मनेत्र ।
118194 तद्बोध्यमेवममलं स्वयमेव बुद्ध्वा यद्वेत्सि तत्परिणतिं नय चित्तकोशे ॥ २७
118195 । ।
118196

118197 उपपातिमणिसाधकचरित्रसाम्यमुपसंहरति-इत्थमिति। अङ्ग हे पद्मनेत्र मया
118198 इत्येवं तव चरित्रं मणिप्रयत्नकथया समानं सम्यक् प्रकटितं स्फुटीकृतम्।
118199 तन्मणिकाचदार्ष्टान्तिकमेवं मदुक्तरीत्या त्वं स्वयमेव विचार्य तत्त्वतो बुद्ध्वा
118200 सर्वत्यागं तपो वा यदेव चिन्तामणिवदमलं निर्दोषं वेत्सि तदेव स्वचित्तकोशे
118201 निधाय फलप्राप्तिपर्यन्तां परिणतिं नयेत्यर्थः॥ २७॥
118202
118203 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मोक्षो० निर्वाण० पू० चू०
118204 चिन्तामणिसाधकवृत्तान्तविवरणं नाम नवतितमः सर्गः॥ ९०॥
118205
118206 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
118207 चिन्तामणिसाधकवृत्तान्तविवरणं नाम नवतितमः सर्गः॥ ९०॥
118208
118209 एकनवतितमः सर्गः ९१
118210
118211 चूडालोवाच।
118212
118213 इदानीं राजशार्दूल वस्तुसंप्रतिपत्तये।
118214 शृणु विन्ध्येभवृत्तान्तविवृतिं स्मयकारिणीम्॥ १॥
118215
118216 इह विन्ध्येभवृत्तान्तदार्ष्टान्तिकमुदीर्यते।
118217 कुम्भेन राज्ञश्चरितं बोधान्तत्यागसिद्धये॥
118218
118219 वस्तुनस्तत्त्वस्य सम्यक् प्रतिपत्तये बोधाय। स्मयो विस्मयस्तत्कारिणीम्॥ १॥
118220
118221 योऽसौ विन्ध्यवने हस्ती सोऽस्मिन्भूमितले भवान्।
118222 यौ वैराग्यविवेकौ तौ द्वौ तस्य दशनौ सितौ॥ २॥
118223
118224 यौ तस्य द्वौ दशनौ तौ वैराग्यविवेकाख्यावित्यन्वयः॥ २॥
118225
118226 यश्चासौ वारणाक्रान्तितत्परो हस्तिपः स्थितः।
118227 तदज्ञानं तवाक्रान्तितत्परं तव दुःखदम्॥ ३॥
118228
118229 अतिशक्तोऽप्यशक्तेन दुःखाद्दुःखं भयाद्भयम्।
118230 हस्ती हस्तिपकेनेव राजन्मौर्ख्येण नीयसे॥ ४॥
118231
118232 अतिशक्तो बलवानपि त्वमशक्तेन दुर्बलेनापि मौर्ख्येण दुःखाद्दुःखं
118233 भयाद्भयं नीयसे॥ ४॥
118234
118235 यल्लोहवज्रसारेण वारणः परियन्त्रितः।
118236 तदाशापाशजालेन भवानापदमावृतः॥ ५॥
118237
118238 स बद्धो लोहजालेनेत्युक्तिं प्रकटयति-यदिति। परितो यन्त्रितो बद्ध इति यत्। भवान्
118239 पादावभिव्याप्येत्यापदमावृतः। राज्यपालनकाले तदित्यर्थः॥ ५॥
118240
118241 आशा हि लोहरज्जुभ्यो विषमा विपुला दृढा।
118242 कालेन क्षीयते लोहं तृष्णा तु परिवर्धते॥ ६॥
118243
118244 यद्द्वन्द्वं प्रेक्षते वैरी गजमारादलक्षितः।
118245 प्रेक्षते त्वां तदज्ञानं क्रीडार्थं बद्धमेककम्॥ ७॥
118246
118247 रिपौ हस्तिपके दूरादपश्यतीत्यनेन सूचितं तद्दर्शनमुदाहरति-यदिति। द्वन्द्वे
118248 रहस्ये। अज्ञानस्य चेतनत्वमारोप्य वादोऽयम्॥ ७॥

118249
118250 यद्बभञ्ज गजः शत्रोः शृङ्खलाजालबन्धनम् ।
118251 तत्तत्याज भवान्भोगभूमिं राज्यमकण्टकम् ॥ ८ ॥
118252
118253 दन्तभ्यां यत्नतस्ताभ्यामित्युक्तेस्तात्पर्यमाह-यदिति ॥ ८ ॥
118254
118255 कदाचित्सुकरं शस्त्रशृङ्खलाबन्धभेदनम् ।
118256 न त्वस्य मनसः साधो भोगाशाविनिवारणम् ॥ ९ ॥
118257
118258 यदिभे पाटयत्युच्चैर्बन्धं हस्तिपकोऽपतत् ।
118259 त्वयि त्यजति तद्राज्यमज्ञानं पतितं कृतम् ॥ १० ॥
118260
118261 स पतन्पादपद्माभ्यामप्राप्य करिणः शिरः । पपातोर्व्यामिति यदुक्तं
118262 तदप्यज्ञाने दर्शयति-यदिभे इति । पतितं यथा भवति तथा कृतं त्वया
118263 पातितमिव जर्जरीकृतमित्यर्थः ॥ १० ॥
118264
118265 यदा विरक्तः पुरुषो भोगाशां त्यक्तुमिच्छति ।
118266 तदा प्रकम्पतेऽज्ञानं छेद्ये वृक्षे पिशाचवत् ॥ ११ ॥
118267
118268 तदेव स्पष्टयति-यदेति ॥ ११ ॥
118269
118270 यदा विवेकी पुरुषो भोगान्संत्यज्य तिष्ठति ।
118271 तदा पलायतेऽज्ञानं छिन्ने वृक्षे पिशाचवत् ॥ १२ ॥
118272
118273 भोगौघे नूनमुन्मुक्ते पतत्यज्ञानसंस्थितिः ।
118274 पादपे क्रकचच्छिन्ने कुलायस्तद्गतो यथा ॥ १३ ॥
118275
118276 यदा वनं प्रयातस्त्वं तदाऽज्ञानं क्षतं त्वया ।
118277 पतितं सन्न निहतं मनस्त्यागमहासिना ॥ १४ ॥
118278
118279 क्षतं शिथिलीभूतमपि मनस्त्यागतत्त्वज्ञानेन निर्मनस्कता तल्लक्षणेन महासिना
118280 न निहतं तदानीमेव ते चूडालोक्तिश्रवणात्तत्त्वबोधावसरोऽभूदिति भावः ॥ १४ ॥
118281
118282 तेन भूयः समुत्थाय स्मृत्वा परिभवं कृतम् ।
118283 तपःप्रपञ्चखातेऽस्मिन्गहने त्वं नियोजितः ॥ १५ ॥
118284
118285 तेन त्वदुपेक्षिताज्ञानेन ॥ १५ ॥
118286
118287 तदैवाघातयिष्यस्त्वं यद्यज्ञानं तथागतम् ।
118288 राज्यत्यागविधौ तत्त्वां नाहनिष्यत्क्षयं गतम् ॥ १६ ॥
118289
118290 राज्यत्यागविधौ तदैव तथागतं पतितमज्ञानं यद्यघातयिष्यस्तत्तदैव क्षयं
118291 गतं सत्त्वां तपःखातपातेन नाहनिष्यदित्यर्थः ॥ १६ ॥
118292
118293 यत्खातवलयस्तेन वैरिणा हस्तिनः कृतः ।
118294 तत्तपोदुःखमखिलमज्ञानेन तवार्पितम् ॥ १७ ॥
118295
118296 सखातवलयं चक्रे इत्युक्तेस्तात्पर्यमाह-यदिति ॥ १७ ॥
118297
118298 या तस्य राजराजश्रीर्गजारेर्नृपसत्तम ।
118299 सा त्वदज्ञाननृपतेश्चिन्ताभ्यन्तरचारिणी ॥ १८ ॥
118300

118301 परया राजसामग्र्या गजलम्पटभूमयेत्यत्रोक्तां राजसामग्रीं स्फुटयति-या
118302 तस्येति। तस्य गजारेर्हस्तिपकस्य राजप्रयुक्ता श्रीः खातसामग्री संपत् या उक्ता सा तु
118303 अवज्ञानं विचारानादरस्तल्लक्षणस्य हस्तिपकनृपतेः अभ्यन्तरचारिणी
118304 अन्तरङ्गैश्वर्यभूता। चिन्तैव ह्यविवेकस्य सर्वस्वमिति भावः॥ १८॥
118305
118306 त्वं गजेन्द्रस्त्वयं साधो दीर्घे वनेऽगजोऽपि सन्।
118307 अज्ञानवैरिणा तेन निक्षिप्तस्तरसाभितः॥ १९॥
118308
118309 हे साधो त्वमगजोऽपि सन्नयमुक्तविवेकसंपन्नो गजेन्द्रः अनेनाज्ञानलक्षणेन
118310 वैरिणा अभितः खाते तरसा निक्षिप्तः॥ १९॥
118311
118312 यत्खातवलयो बाललताभिरवगुण्ठितः।
118313 आवृतं तत्तपोदुःखमीषत्सज्जनवृत्तिभिः॥ २०॥
118314
118315 उपर्यस्थगयद्बाललतौघेन स तं शठः इत्यस्य तात्पर्यं स्फुटयति-यदिति।
118316 सज्जनवृत्तिभिः शान्तिक्षान्त्यादिगुणैः साधुजनसमागमैश्च ईषदावृतम्॥ २०॥
118317
118318 इत्यद्यापि तपःखाते दुःखे ह्यस्मिन्सुदारुणे।
118319 स्थितोऽसि पातालतले नृप बद्धो यथा बलिः॥ २१॥
118320
118321 इति भूयो दृढं बद्धस्तेन हस्तिपकेन सः। तिष्ठत्यद्यापि दुःखेन भूसद्मनि
118322 यथा बलिः इत्युपसंहारस्य तात्पर्यं वर्णयन्नुपसंहरति-इत्यद्यापीति॥ २१॥
118323
118324 गजस्त्वमाशा निगडानि वैरी मोहो निखातः पुनरुग्रबन्धः।
118325 महीतलं विन्ध्य उदन्त इत्थं त्वदीय उक्तः कुरु यत्करोषि॥ २२॥
118326
118327 उक्तमनुक्तं च पिण्डीकृत्याह-गज इति। त्वं गजः। आशास्तव निगडानि। मोहो
118328 वैरी हस्तिपकः। उग्रे तपसि निर्बन्ध एव निखातः महीतलं विन्ध्यः। इत्थं त्वदीय
118329 उदन्तो वृत्तान्तो मया हस्तिकाख्यानेनोक्तः। एवं परिज्ञाय तपःखातादुद्गम्य
118330 तस्य रिपोर्नाशाय यत्करोषि तत्कुरु मा विलम्बस्वेत्यर्थः॥ २२॥
118331
118332 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मी० दे० मो० निर्वाणप्र० पू० चू०
118333 हस्तिकाख्यानतात्पर्यविवरणं नामैकनवतितमः सर्गः॥ ९१॥
118334
118335 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
118336 हस्तिकाख्यानतात्पर्यविवरणं नामैकनवतितमः सर्गः॥ ९१॥
118337
118338
118339 द्विनवतितमः सर्गः ९२
118340
118341 चूडालोवाच।
118342
118343 यदुक्तं नयशालिन्या तया विदितवेद्यया।
118344 तदा चूडालया ज्ञानं तत्कस्मान्नोररीकृतम्॥ १॥
118345
118346 इह कुम्भवचः श्रुत्वा सर्वत्यागपरो नृपः।
118347 त्यक्त्वा वनादिवह्नौ स्वं सर्वं भाण्डमदीदहत्॥
118348
118349 यदा त्वं वनं प्रस्थितस्तदैवाज्ञानं पतितं सन्न निहतमिति त्वयोक्तं तत्र
118350 तदानीं मम मनस्त्यागोपायः केनोपदिष्टो यो मयोपेक्षित इति राजशङ्कां
118351 वितर्कयन्ती चूडालोवाच-यदुक्तमिति॥ १॥
118352

118353 सा हि तत्त्वविदां मुख्या यद्यद्वक्ति करोति च।
118354 तत्सर्वं सत्यमेवाङ्ग तदनुष्ठेयमादरात्॥ २॥
118355
118356 तस्या अतत्त्ववित्त्वानृतवादिनीत्वादिशङ्कां वारयति-सा हीति। अनुष्ठेयमभूदिति
118357 शेषः॥ २॥
118358
118359 अथ चेद्वचनं तस्यास्त्वया नानुष्ठितं नृप।
118360 तत्सर्वसंपरित्यागः कस्मान्न निपुणीकृतः॥ ३॥
118361
118362 यदि आत्मबुद्ध्या चिरं जीवेद्गुरुबुद्ध्या विशेषतः। परबुद्धिर्विनाशाय स्त्रीबुद्धिः
118363 प्रलयंकरी इति वचनात्स्त्रीबुद्धिमुपेक्ष्यात्मबुद्धिनिश्चितं सर्वत्यागमेव
118364 वह्वमंस्थास्तर्हि स एव त्वया कुतो न स्थिरीकृत इत्याह-अथ चेदिति॥ ३॥
118365
118366 शिखिध्वज उवाच।
118367
118368 राज्यं त्यक्तं गृहं त्यक्तं देशस्त्यक्तस्तथाविधः।
118369 दारास्त्यक्तास्तथाप्यङ्ग सर्वत्यागो न किं कृतः॥ ४॥
118370
118371 राज्यादिपरित्यागमात्रेण सिद्धः सर्वपरित्यागः साधो संसाध्यतस्तव।
118372 खर्वीकृतजगद्भूतिर्विद्या स्वात्मोदयस्तथा इति त्वयैवोक्तम्। न च मया त्यक्तं
118373 राज्यादि पुनः स्वीकृतम्। तत्कथं मया सर्वत्यागो न निपुणीकृत इति शिखिध्वजः
118374 पृच्छति-राज्यमिति॥ ४॥
118375
118376 चूडालोवाच।
118377
118378 धनं दारा गृहं राज्यं भूमिश्छत्रं च बान्धवाः।
118379 इति सर्वं न ते राजन्सर्वत्यागो हि कस्तव॥ ५॥
118380
118381 केवलं सर्वसंत्यागे शेषिताहंमतिस्त्वया इति मया प्रागुक्तमेवास्योत्तरम्।
118382 विवेकाभावात्त्वसौ न प्रतिपन्नस्तदयं वनाश्रमकुटीकमण्डल्वादिपरिग्रहशेषेपि
118383 निःशेषं त्याजिते कथंचिद्विवेकं प्राप्याहंकारग्रन्थिं परित्यज्य पूर्णो
118384 भविष्यतीति मन्यमाना शनैस्तद्बुद्धिं विचारभवतारयन्ती गूढाभिसन्धिनैव
118385 चूडालोवाच-धनमिति। यत्स्वसंबन्धि सर्व च तत्यागे सर्वत्यागः सिद्ध्येत्। न च
118386 राज्यादयस्ते स्वसंबन्धिनः सर्व वा। अहंकारो हि राज्यादिकं ममेति
118387 कल्पयंस्तत्स्वामितां मन्यते न त्वात्मेति प्रप्त्यभावान्न सर्वत्यागस्तव सिद्ध इति
118388 भावः॥ ५॥
118389
118390 तवास्त्येवापरित्यक्तः सर्वस्माद्भाग उत्तमः।
118391 तं परित्यज्य निःशेषमायास्यसि विशोकताम्॥ ६॥
118392
118393 यद्यहंकारे तादात्म्यारोपादात्मा राज्यादिस्वामितां प्रतिपन्न इत्युच्येत तर्हि
118394 तत्त्यागादेव राज्यादित्यागः सिद्ध्येन्नान्यथा। स च त्वया न त्यक्त इत्याशयेनाह##-
118395
118396 शिखिध्वज उवाच।
118397
118398 राज्यं चेन्मम नो सर्वं तत्सर्वं वनमेव मे।
118399 शैलवृक्षादिगुल्माढ्यं तदप्येतत्त्यजाम्यहम्॥ ७॥
118400
118401 श्रीवसिष्ठ उवाच।
118402
118403 इति राम वदन्नेव कुम्भवाक्यप्रणोदितः।
118404 निमेषान्तरमात्रेण वशी वीरः शिखिध्वजः॥ ८॥

118405
118406 उक्ताशयमप्रतिपद्यमानः पूर्वं परित्यक्तत्वादेव राज्यादौ तवेदानीं
118407 राज्यादिसंबन्धो नास्तीति न त्यागार्हता। शैलवृक्षादीनां त्विदानीं परिग्रहान्न
118408 तत्त्यागमन्तरेण तव सर्वत्यागसिद्धिरित्यस्याशय इति मन्यमानः शिखिध्वज
118409 उवाच-राज्यमिति। एवमग्रेऽपि राज्ञस्तात्पर्यभेदभ्रम ऊह्यः॥ ७॥ ८॥
118410
118411 प्रममार्ज वनास्थां तां कृतः सुदृढनिश्चयः।
118412 प्रावृडोघस्तटगतां रजोलेखाभिवात्मना॥ ९॥
118413
118414 प्रावृडोवो वर्षाप्रवाहः। रजोलेखां पांसुराजिमिव॥ ९॥
118415
118416 शिखिध्वज उवाच।
118417
118418 सवृक्षाद्रिवनश्वभ्राद्विपिनादपि वासना।
118419 परित्यक्ता मया नूनं परित्यागः स्थितो मम॥ १०॥
118420
118421 वासनाममता परित्यक्ता तेन मम त्यागः स्थितः संपन्नः॥ १०॥
118422
118423 कुम्भ उवाच।
118424
118425 अद्रेस्तटं वनं श्वभ्रं सलिलं पादपस्थलम्।
118426 इत्यादि तव नो सर्वं सर्वत्यागः कथं तव॥ ११॥
118427
118428 कुम्भाशयः पूर्ववत्॥ ११॥
118429
118430 तवास्त्येवापरित्यक्तः सर्वस्माद्भाग उत्तमः।
118431 तं परित्यज्य निःशेषं परामायास्यशोकताम्॥ १२॥
118432
118433 शिखिध्वज उवाच।
118434
118435 एतच्चेन्मम नो सर्वं तत्सर्वं स्वाश्रमो मम।
118436 वापीस्थलोटजयुतस्तमेवाशु त्यजाम्यहम्॥ १३॥
118437
118438 त्यागाद्वनादि तव नो रीत्या त्वं स्वयमेव विचार्य तत्त्वतो बुद्ध्वा सर्वत्यागं तपो वा
118439 यदेव चिन्तामणिवदमलं निर्दोषं वेत्सि तदेव स्वचित्तकोशे निधाय
118440 फलप्राप्तिपर्यन्तां परिणतिं नयेत्यर्थः॥ २७॥
118441
118442 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
118443 चिन्तामणिसाधकवृत्तान्तविवरणं नाम नवतितमः सर्गः॥ ९०॥
118444
118445
118446 एकनवतितमः सर्गः ९१
118447
118448 चूडालोवाच।
118449
118450 इदानीं राजशार्दूल वस्तुसंप्रतिपत्तये।
118451 शृणु विन्ध्येभवृत्तान्तविवृतिं स्मयकारिणीम्॥ १॥
118452
118453 इह विन्ध्येभवृत्तान्तदार्ष्टान्तिकमुदीर्यते।
118454 कुम्भेन राज्ञश्चरितं बोधान्तत्यागसिद्धये॥
118455
118456 वस्तुनस्तत्त्वस्य सम्यक् प्रतिपत्तये बोधाय। स्मयो विस्मयस्तत्कारिणीम्॥ १॥

योऽसौ विन्ध्यवने हस्ती सोऽस्मिन्भूमितले भवान्।
यौ वैराग्यविवेकौ तौ द्वौ तस्य दशनौ सितौ॥ २॥

यौ तस्य द्वौ दशनौ तौ वैराग्यविवेकाख्यावित्यन्वयः॥ २॥

यश्चासौ वारणाक्रान्तितत्परो हस्तिपः स्थितः।
तदज्ञानं तवाक्रान्तितत्परं तव दुःखदम्॥ ३॥

अतिशक्तोऽप्यशक्तेन दुःखाद्दुःखं भयाद्भयम्।
हस्ती हस्तिपकेनेव राजन्मौर्ख्येण नीयसे॥ ४॥

अतिशक्तो बलवानपि त्वमशक्तेन दुर्बलेनापि मौर्ख्येण दुःखाद्दुःखं
भयाद्भयं नीयसे॥ ४॥

यल्लोहवज्रसारेण वारणः परियन्त्रितः।
तदाशापाशजालेन भवानापदमावृतः॥ ५॥

स बद्धो लोहजालेनेत्युक्तिं प्रकटयति-यदिति। परितो यन्त्रितो बद्ध इति यत्। भवान्
पादावभिव्याप्येत्यापदमावृतः। राज्यपलनकाले तदित्यर्थः॥ ५॥

आशा हि लोहरज्जुभ्यो विषमा विपुला दृढा।
कालेन क्षीयते लोहं तृष्णा तु परिवर्धते॥ ६॥

यद्द्वन्द्वं प्रेक्षते वैरी गजमारादलक्षितः।
प्रेक्षते त्वां तदज्ञानं क्रीडार्थं बद्धमेककम्॥ ७॥

रिपौ हस्तिपके दूरादपश्यतीत्यनेन सूचितं तद्दर्शनमुदाहरति-यदिति। द्वन्द्वे
रहस्ये। अज्ञानस्य चेतनत्वमारोप्य वादोऽयम्॥ ७॥

यद्वभञ्ज गजः शत्रोः शृङ्खलाजालबन्धनम्।
तत्तत्याज भवान्भोगभूमिं राज्यमकण्टकम्॥ ८॥

दन्तभ्यां यत्नतस्ताभ्यामित्युक्तेस्तात्पर्यमाह-यदिति॥ ८॥

कदाचित्सुकरं शस्त्रशृङ्खलाबन्धभेदनम्।
न त्वस्य मनसः साधो भोगाशाविनिवारणम्॥ ९॥

यदिभे पाटयत्युच्चैर्बन्धं हस्तिपकोऽपतत्।
त्वयि त्यजति तद्राज्यमज्ञानं पतितं कृतम्॥ १०॥

स पतन्पादपद्माभ्यामप्राप्य करिणः शिरः। पपातोर्व्यामिति यदुक्तं
तदप्यज्ञाने दर्शयति-यदिभे इति। पतितं यथा भवति तथा कृतं त्वया
पातितमिव जर्जरीकृतमित्यर्थः॥ १०॥

यदा विरक्तः पुरुषो भोगाशां त्यक्तुमिच्छति।
तदा प्रकम्पतेऽज्ञानं छेद्ये वृक्षे पिशाचवत्॥ ११॥

तदेव स्पष्टयति-यदेति॥ ११॥

यदा विवेकी पुरुषो भोगान्संत्यज्य तिष्ठति।
तदा पलायतेऽज्ञानं छिन्ने वृक्षे पिशाचवत्॥ १२॥

भोगौघे नूनमुन्मुक्ते पतत्यज्ञानसंस्थितिः।
पादपे क्रकचच्छिन्ने कुलायस्तद्गतो यथा॥ १३॥

यदा वनं प्रयातस्त्वं तदाऽज्ञानं क्षतं त्वया।
पतितं सन्न निहतं मनस्त्यागमहासिना॥ १४॥

क्षतं शिथिलीभूतमपि मनस्त्यागतत्त्वज्ञानेन निर्मनस्कता तल्लक्षणेन महासिना
न निहतं तदानीमेव ते चूडालोक्तिश्रवणात्तत्त्वबोधावसरोऽभूदिति भावः॥ १४॥

तेन भूयः समुत्थाय स्मृत्वा परिभवं कृतम्।
तपःप्रपञ्चखातेऽस्मिन्गहने त्वं नियोजितः॥ १५॥

तेन त्वदुपेक्षिताज्ञानेन॥ १५॥

तदैवाघातयिष्यस्त्वं यद्यज्ञानं तथागतम्।
राज्यत्यागविधौ तत्त्वां नाहनिष्यत्क्षयं गतम्॥ १६॥

राज्यत्यागविधौ तदैव तथागतं पतितमज्ञानं यद्यघातयिष्यस्तत्तदैव क्षयं
गतं सत्त्वां तपःखातपातेन नाहनिष्यदित्यर्थः॥ १६॥

यत्खातवलयस्तेन वैरिणा हस्तिनः कृतः।
तत्तपोदुःखमखिलमज्ञानेन तवार्पितम्॥ १७॥

सखातवलयं चक्रे इत्युक्तेस्तात्पर्यमाह-यदिति॥ १७॥

या तस्य राजराजश्रीर्गजारेर्नृपसत्तम।
सा त्ववज्ञाननृपतेश्चिन्ताभ्यन्तरचारिणी॥ १८॥

परया राजसामग्र्या गजलम्पटभूमयेत्यत्रोक्तां राजसामग्रीं स्फुटयति-या
तस्येति। तस्य गजारेर्हस्तिपकस्य राजप्रयुक्ता श्रीःखातसामग्री संपत् या उक्ता सा तु
अवज्ञानं विचारानादरस्तल्लक्षणस्य हस्तिपकनृपतेः अभ्यन्तरचारिणी
अन्तरङ्गैश्वर्यभूता। चिन्तैव ह्यविवेकस्य सर्वस्वमिति भावः॥ १८॥

त्वं गजेन्द्रस्त्वयं साधो दीर्घे वनेऽगजोऽपि सन्।
अज्ञानवैरिणा तेन निक्षिप्तस्तरसाभितः॥ १९॥

हे साधो त्वमगजोऽपि सन्नयमुक्तविवेकसंपन्नो गजेन्द्रः अनेनाज्ञानलक्षणेन
वैरिणा अभितः खाते तरसा निक्षिप्तः॥ १९॥

यत्खातवलयो बाललताभिरवगुण्ठितः।
आवृतं तत्तपोदुःखमीषत्सज्जनवृत्तिभिः॥ २०॥

उपर्यस्थगयद्बाललतौघेन स तं शठः इत्यस्य तात्पर्यं स्फुटयति-यदिति।
सज्जनवृत्तिभिः शान्तिक्षान्त्यादिगुणैः साधुजनसमागमैश्च ईषदावृतम्॥ २०॥

इत्यद्यापि तपःखाते दुःखे ह्यस्मिन्सुदारुणे।
स्थितोऽसि पातालतले नृप बद्धो यथा बलिः॥ २१॥

इति भूयो दृढं बद्धस्तेन हस्तिपकेन सः। तिष्ठत्यद्यापि दुःखेन भूसद्मनि
यथा बलिः इत्युपसंहारस्य तात्पर्यं वर्णयन्नुपसंहरति-इत्यद्यापीति॥ २१॥

118561 गजस्त्वमाशा निगडानि वैरी मोहो निखातः पुनरुग्रबन्धः।
118562 महीतलं विन्ध्य उदन्त इत्थं त्वदीय उक्तः कुरु यत्करोषि॥ २२॥
118563
118564 उक्तमनुक्तं च पिण्डीकृत्याह-गज इति। त्वं गजः। आशास्तव निगडानि। मोहो
118565 वरी हस्तिपकः। उग्रे तपसि निर्बन्ध एव निखातः। महीतलं विन्ध्यः। इत्थं तवदीय
118566 उदन्तो वृत्तान्तो मया हस्तिकाख्यानेनोक्तः। एवं परिज्ञाय तपःखातादुद्गम्य
118567 तस्य रिपोर्नाशाय यत्करोषि तत्कुरु मा विलम्बस्वेत्यर्थः॥ २२॥
118568
118569 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मी० दे० मो० निर्वाणप्र० पू० चू०
118570 हस्तिकाख्यानतात्पर्यविवरणं नामैकनवतितमः सर्गः॥ ९१॥
118571
118572 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
118573 हस्तिकाख्यानतात्पर्यविवरणं नामैकनवतितमः सर्गः॥ ९१॥
118574
118575 द्विनवतितमः सर्गः ९२
118576
118577 चूडालोवाच।
118578
118579 यदुक्तं नयशालिन्या तया विदितवेद्यया।
118580 तदा चूडालया ज्ञानं तत्कस्मान्नोररीकृतम्॥ १॥
118581
118582 इह कुम्भवचः श्रुत्वा सर्वत्यागपरो नृपः।
118583 त्यक्त्वा वनादिवह्नौ स्वं सर्वं भाण्डमदीदहत्॥
118584
118585 यदा त्वं वनं प्रस्थितस्तदैवाज्ञानं पतितं सन्न निहतमिति त्वयोक्तं तत्र इदानीं
118586 मम मनस्त्यागोपायः केनोपदिष्टो यो मयोपेक्षित इति राजशङ्कां वितर्कयन्ती
118587 चूडालोवाच-यदुक्तमिति॥ १॥
118588
118589 सा हि तत्त्वविदां मुख्या यद्यद्वक्ति करोति च।
118590 तत्सर्वं सत्यमेवाङ्ग तदनुष्ठेयमादरात्॥ २॥
118591
118592 तस्या अतत्त्ववित्त्वानृतवादिनीत्वादिशङ्कां वारयति-सा हीति। अनुष्ठेयमभूदिति
118593 शेषः॥ २॥
118594
118595 अथ चेद्वचनं तस्यास्त्वया नानुष्ठितं नृप।
118596 तत्सर्वसंपरित्यागः कस्मान्न निपुणीकृतः॥ ३॥
118597
118598 यदि आत्मबुद्ध्या चिरं जीवेद्गुरुबुद्ध्या विशेषतः। परबुद्धिर्विनाशाय स्त्रीबुद्धिः
118599 प्रलयंकरी इति वचनात्स्त्रीबुद्धिमुपेक्ष्यात्मबुद्धिनिश्चितं सर्वत्यागमेव
118600 बह्वमंस्थास्तर्हि स एव त्वया कुतो न स्थिरीकृत इत्याह-अथ चेदिति॥ ३॥
118601
118602 शिखिध्वज उवाच।
118603
118604 राज्यं त्यक्तं गृहं त्यक्तं देशस्त्यक्तस्तथाविधः।
118605 दारास्त्यक्तास्तथाप्यङ्ग सर्वत्यागो न किं कृतः॥ ४॥
118606
118607 राज्यादिपरित्यागमात्रेण सिद्धः सर्वपरित्यागः साधो संसाध्यतस्तव।
118608 खर्वीकृतजगद्भूतिर्विद्या स्वात्मोदयस्तथा इति त्वयैवोक्तम्। न च मया त्यक्तं
118609 राज्यादि पुनः स्वीकृतम्। तत्कथं मया सर्वत्यागो न निपुणीकृत इति शिखिध्वजः
118610 पृच्छति-राज्यमिति॥ ४॥
118611
118612 चूडालोवाच।

118613
118614 धनं दारा गृहं राज्यं भूमिश्छत्रं च बान्धवाः।
118615 इति सर्वं न ते राजन्सर्वत्यागो हि कस्तव॥ ५॥
118616
118617 केवलं सर्वसंत्यागे शेषिताहंमतिस्त्वया इति मया प्रागुक्तमेवास्योत्तरम्।
118618 विवेकाभावात्त्वसौ न प्रतिपन्नस्तदयं वनाश्रमकुटीकमण्डल्वादिपरिग्रहशेषेपि
118619 निःशेषं त्याजिते कथंचिद्विवेकं प्राप्याहंकारग्रन्थिं परित्यज्य पूर्णो
118620 भविष्यतीति मन्यमाना शनैस्तद्बुद्धिं विचारभवतारयन्ती गूढाभिसन्धिनैव
118621 चूडालोवाच-धनमिति। यत्स्वसंबन्धि सर्व च तत्यागे सर्वत्यागः सिद्ध्येत्। न च
118622 राज्यादयस्ते स्वसंबन्धिनः सर्व वा। अहंकारो हि राज्यादिकं ममेति
118623 कल्पयंस्तत्स्वामितां मन्यते न त्वात्मेति प्राप्त्यभावान्न सर्वत्यागस्तव सिद्ध इति
118624 भावः॥ ५॥
118625
118626 तवास्त्येवापरित्यक्तः सर्वस्माद्भाग उत्तमः।
118627 तं परित्यज्य निःशेषमायास्यसि विशोकताम्॥ ६॥
118628
118629 यद्यहंकारे तादात्म्यारोपादात्मा राज्यादिस्वामितां प्रतिपन्न इत्युच्येत तर्हि
118630 तत्त्यागादेव राज्यादित्यागः सिद्ध्येन्नान्यथा। स च त्वया न त्यक्त इत्याशयेनाह##-
118631
118632 शिखिध्वज उवाच।
118633
118634 राज्यं चेन्मम नो सर्वं तत्सर्वं वनमेव मे।
118635 शैलवृक्षादिगुल्माढ्यं तदप्येतत्त्यजाम्यहम्॥ ७॥
118636
118637 उक्ताशयमप्रतिपद्यमानः पूर्वं परित्यक्तत्वादेव राज्यादौ तवेदानीं
118638 राज्यादिसंबन्धो नास्तीति न त्यागार्हता। शैलवृक्षादीनां त्विदानीं परिग्रहान्न
118639 तत्त्यागमन्तरेण तव सर्वत्यागसिद्धिरित्यस्याशय इति मन्यमानः शिखिध्वज
118640 उवाच-राज्यमिति। एवमग्रेऽपि राज्ञस्तात्पर्यभेदभ्रम ऊह्यः॥ ७॥
118641
118642 श्रीवसिष्ठ उवाच।
118643
118644 इति राम वदन्नेव कुम्भवाक्यप्रणोदितः।
118645 निमेषान्तरमात्रेण वशी वीरः शिखिध्वजः॥ ८॥
118646
118647 प्रममार्ज वनास्थां तां कृतः सुदृढनिश्चयः।
118648 प्रावृडोघस्तटगतां रजोलेखामिवात्मना॥ ९॥
118649
118650 प्रावृर्डोर्वो वर्षाप्रवाहः। रजोलेखां पांसुराजिमिव॥ ९॥
118651
118652 शिखिध्वज उवाच।
118653
118654 सवृक्षाद्रिवनश्वभ्राद्विपिनादपि वासना।
118655 परित्यक्ता मया नूनं परित्यागः स्थितो मम॥ १०॥
118656
118657 वासनाममता परित्यक्ता तेन मम त्यागः स्थितः संपन्नः॥ १०॥
118658
118659 कुम्भ उवाच।
118660
118661 अद्रेस्तटं वनं श्वभ्रं सलिलं पादपस्थलम्।
118662 इत्यादि तव नो सर्वं सर्वत्यागः कथं तव॥ ११॥
118663
118664 कुम्भाशयः पूर्ववत्॥ ११॥

118665
118666 तवास्त्येवापरित्यक्तः सर्वस्माद्भाग उत्तमः।
118667 तं परित्यज्य निःशेषं परामायास्यशोकताम् ॥ १२ ॥
118668
118669 शिखिध्वज उवाच।
118670
118671 एतच्चेन्मम नो सर्वं तत्सर्वं स्वाश्रमो मम।
118672 वापीस्थलोटजयुतस्तमेवाशु त्यजाम्यहम् ॥ १३ ॥
118673
118674 त्यागाद्वनादि तव नो सर्वमित्यस्तु नाम तथापि तवाश्रमसद्भावात्कथं
118675 सर्वत्यागः सिद्ध इति मामाहेति मन्यमानः शिखिध्वज उवाच-एतच्चेदिति।
118676 अप्यर्थक एवकारः ॥ १३ ॥
118677
118678 श्रीवसिष्ठ उवाच।
118679
118680 इति राम वदन्नेव कुम्भवाक्यप्रबोधितः।
118681 निमेषध्यानमात्रेण वशी वीरः शिखिध्वजः ॥ १४ ॥
118682
118683 प्रममार्जाश्रमास्थां तां संविदा शुद्धया हृदि।
118684 स्फुरन्तीं स्फुरणेनैव रजोलेखामिवानिलः ॥ १५ ॥
118685
118686 आश्रमे आस्थां ममतां प्रममार्ज ॥ १५ ॥
118687
118688 शिखिध्वज उवाच।
118689
118690 स वृक्षोटजवीरुत्काद्वासना स्वाश्रमादपि।
118691 परित्यक्ता मया नूनं सर्वत्यागः स्थितो मम ॥ १६ ॥
118692
118693 कुम्भ उवाच।
118694
118695 वृक्षो वापी स्थलं गुल्ममुटजं व्रततीवृतिः।
118696 इति किंचिन्न ते सर्वं सर्वत्यागः कुतस्तव ॥ १७ ॥
118697
118698 कुम्भाशयो राजाशयश्च प्राग्वत् ॥ १७ ॥
118699
118700 तवास्त्यन्योऽपरित्यक्तः सर्वस्माद्भाग उत्तमः।
118701 तं परित्यज्य निःशेषं परामायास्यशिकताम् ॥ १८ ॥
118702
118703 शिखिध्वज उवाच।
118704
118705 एतच्चेन्मम नो सर्वं तत्सर्वं भाजनादि मे।
118706 चर्मकुड्यकुटीरादि तत्तावत्संत्यजाम्यहम् ॥ १९ ॥
118707
118708 कुड्यानि भित्तयः। अल्पा कुटी कुटीरः ॥ १९ ॥
118709
118710 श्रीवसिष्ठ उवाच।
118711
118712 इत्युक्त्वा स समुत्तस्थावविक्षुब्धमतिः शमी।
118713 विष्टरादवदातात्मा शृङ्गादिव शरद्घनः ॥ २० ॥
118714
118715 विष्टरादासनात्। वृक्षासनयोर्विष्टरः इति षत्वम्। अवदातात्मा शुद्धचित्तः ॥ २० ॥
118716

118717 कुम्भस्त्वालोकयन्नेव तत्क्रियाः सस्मितः स्वयम् ।
118718 आसने लोककार्येषु स्वस्पन्दन इवांशुमान् ॥ २१ ॥
118719
118720 अंशुमान् सूर्यः स्वस्य स्पन्दने रथे इवासने आलोकयन्नेव स्थित इति शेषः ॥ २१ ॥
118721
118722 यत्करोति करोत्वेतदस्यैतत्पावनं परम् ।
118723 इति तूष्णीं स्थितः कुम्भः शिखिध्वजमवैक्षत ॥ २२ ॥
118724
118725 शिखिध्वजस्तु तत्सर्वं भाण्डोपस्करमाश्रमात् ।
118726 एकत्रैवानयामास भुवो वार्यब्धिभूरिव ॥ २३ ॥
118727
118728 अब्धिभूः समुद्रोदरनिम्नभूमिरुन्नतभुवो वृष्टिनद्यादिवारि यथा एकत्रानयति
118729 तद्वत् ॥ २३ ॥
118730
118731 तत्संस्थाप्येन्धनैः शुष्कैर्ज्वालयामास पावकम् ।
118732 करैः संचारवानर्कः सूर्यकान्तपदं यथा ॥ २४ ॥
118733
118734 करैः किरणैः संचारवान् संक्रान्तोऽर्को यथा सूर्यकान्तशिलास्थानपावकं
118735 ज्वालयति तद्वत् । अणौ ज्वलेरकर्मकत्वाण्णौ कर्तुः पावकस्य कर्मता ।
118736 भाण्डोपस्करस्यापि तत्फलभस्मीभावाश्रयत्वात्कर्मता विवक्षिता ।
118737 ज्वलेर्मित्त्वविकल्पादुपधाह्रस्वाभावः ॥ २४ ॥
118738
118739 भाण्डोपस्करजालं तदग्नौ त्यक्त्वा विवेश सः ।
118740 ध्वंसिकायं जगद्धुत्वा मेरुशृङ्गे यथा रविः ॥ २५ ॥
118741
118742 विवेश बृस्यामिति शेषः । ध्वंसिका मन्वन्तरसंधिप्रलयस्तत्र यथा रविः
118743 स्वप्रदीपितेऽग्नौ जगद्धुत्वा मेरुशृङ्गे उपविशति तद्वत् ॥ २५ ॥
118744
118745 एतावन्तं मया कालं वृत्ता यत्त्वं पतिप्रिये ।
118746 अजातबुद्धिभेदेन तेनैव कृतमस्तु ते ॥ २६ ॥
118747
118748 इदानीमक्षमालां त्यक्तुकामः कृतोपकारविवरणदोषं परिहरंस्तामाह##-
118749 स्वार्थसाधनबुद्धेर्भेद उच्छेदो यस्य तथाविधेन मया त्वं यत् एतावन्तं कालं
118750 वृत्ता परिवर्तनश्रमं प्रापिता तेनैव ते तव मत्सेवनं कृतं पर्याप्तमस्तु ॥ २६
118751 । ।
118752
118753 भ्रान्तौ तु विनिवर्तिन्यां नाधुनोपकरोषि माम् ।
118754 मन्त्राटव्यां चिरं भ्रान्तं विह्वतं कार्यवर्त्मसु ॥ २७ ॥
118755
118756 अधुना तु तपोजपादिकर्तव्यताभ्रान्तौ विनिव्र्तिन्यामपगतायां सत्यां मां
118757 नोपकरोषि अतो न त्वां श्रमेण योजयामीति विश्राम्येत्यर्थः । अहमपि त्वया सह
118758 जपभ्रमेण नानामन्त्राटवीषु भ्रान्तः संप्रति विश्रमिष्यामीत्याह##-
118759 ॥ २७ ॥
118760
118761 दृष्टानि धर्मस्थानानि विश्राम्याम्यधुना सखि ।
118762 इत्यक्षमालां ज्वलने चिक्षेपोक्त्वा शिखिध्वजः ॥ २८ ॥
118763
118764 धर्मस्थानानि तपोवनसिद्धिक्षेत्रादीनि ॥ २८ ॥
118765
118766 कल्पान्ताग्राविव व्योम तारालीं पवनोऽमलाम् ।
118767 मया नरमृगेण त्वं चिरं वनमृगाच्च्युतम् ॥ २९ ॥
118768

118769 यथा पवनः कल्पान्ताग्नौ व्योम्नस्तारालीं नक्षत्रमालां क्षिपति तद्वत्।
118770 अनेनाक्षमाला स्फाटिकीति गम्यते। मृगाजिनं प्रत्याह-मयेति॥ २९॥
118771
118772 अबोधेन धृतं बृस्यामिदमेव मृगाजिनम्।
118773 इदानीं गच्छ तुच्छाय पन्थानः सन्तु ते शिवाः॥ ३०॥
118774
118775 वृस्यां कुशासने। इदमेव तवोपकृतमस्त्विति शेषः। तुच्छाय
118776 मूलकारणमायास्वभावाय। पन्थानः अवान्तरकारणप्रविलयलक्षणा मार्गाः॥
118777 ३०॥
118778
118779 वह्निना व्योमतां गच्छ सतारं व्योम ते समम्।
118780 तद्बृस्यङ्गात्कराभ्यां स धृत्वा चर्मजहाविति॥ ३१॥
118781
118782 सतारं व्योम ते सममित्युक्त्या पृषतस्य तच्चर्म शुक्लबिन्दुचित्रमिति गम्यते। तस्य
118783 हि सतारव्योमताप्राप्तिरनुरूपैवेति॥ ३१॥
118784
118785 नृपोऽग्नावम्बुधेर्वातो दववह्नाविवाचलात्।
118786 महावृत्तेन भवता त्वया वारि धृतं मम॥ ३२॥
118787
118788 नृप इत्युक्त्वा बृस्यङ्गाच्चर्माकृष्य कराभ्यामग्नौ जहाविति पूर्वत्रान्वयः।
118789 यथा प्रलयवातः अचलानम्बुधेराकृष्य दववह्नौ त्यजति तद्वत्। इदानीं
118790 कमण्डलुं त्यक्तुकामः कृतज्ञताख्यापनाय प्रशंसति##-
118791 शतृप्रत्ययान्तोऽयं भवच्छब्दः॥ ३२॥
118792
118793 साधो कमण्डलो सम्यङ् न ते प्रतिकृतं कृतम्।
118794 सौहृदस्य मनोज्ञस्य सौजन्यस्यस्थिरस्य च॥ ३३॥
118795
118796 प्रतिकृतं प्रत्युपकरणं न कृतम्। सौहृदादिपदान्यपि यथासंभवं
118797 श्लेषेण योज्यानि॥ ३३॥
118798
118799 साधुत्वस्य च सर्वस्य त्वमेव परमास्पदम्।
118800 येनैव वह्निना देहं संशोध्याभ्यागतोऽसि माम्॥ ३४॥
118801
118802 येनैवेति। अनेन स कमण्डलुः पूर्वं कस्माच्चिच्छ्रोत्रियाच्छुद्ध्यर्थं वह्निदाहेन
118803 संशोध्य स्वयं गृहीतः स्थितः स पुनर्दाहेन संशोध्यान्यस्मै श्रोत्रियाय दत्त
118804 इति गम्यते॥ ३४॥
118805
118806 तेनैव गच्छ हे मित्र पन्थानः सन्तु ते शिवाः।
118807 इत्युक्त्वा श्रोत्रियायैव कमण्डलुमदात्तदा॥ ३५॥
118808
118809 अग्नये महते वापि दातव्यं साधु यद्भवेत्।
118810 मूर्खस्येव मतिर्गुप्ते नित्यमेव पतस्यधः॥ ३६॥
118811
118812 यदुपकरणं साधु प्रतिपत्त्यर्हं भवेत्तदग्नये महते वापि दातव्यं दानेन
118813 प्रतिपाद्यमिति नियमादित्यर्थः। बृसीं धक्ष्यंस्तस्यां तदुचितं दोषमाह##-
118814 त्वमपि सदा स्वप्रच्छन्ने अधोदेशे पतसि॥ ३६॥
118815
118816 उचिता ते गतिः सैव बृसिके भस्मतां व्रज।
118817 इत्युक्त्वादाय बृसिकामग्नावेव स मृद्विकाम्॥ ३७॥
118818
118819 अतो हे बृसिके मूर्खमतेरिव ते सैव दाहसंतापगतिरुचिता अतो भस्मतां
118820 व्रजेत्यर्थः। इत्युक्त्वा मृद्विकां मृदुतमां बृसीं भासुरे अग्नावेव तत्याजेति

परेणान्वयः ॥ ३७ ॥

शुद्ध्यर्थमासनार्थं वै चिति तत्याज भासुरे ।
यत्त्याज्यमचिरेणैव त्यक्तत्वं किल तत्सदा ॥ ३८ ॥

किमर्थं सर्वं तत्याज तदाह-शुद्ध्यर्थमिति । चित्तशुद्ध्यर्थं चिति
ब्रह्मचैतन्ये । आसनार्थम् । विश्रान्त्यर्थं चेत्यर्थः । कुम्भं प्रत्याह##-
विलम्बितव्यमित्यर्थः ॥ ३८ ॥

विस्तरः क्रियते सद्भिरुपादेये इति स्थितिः ।
शीघ्रमग्नाविदं सर्वं भाण्डजातं त्यजाम्यहम् ॥ ३९ ॥

तत्कुतस्तत्राह-विस्तर इति । यतः सद्भिर्विद्यमानैस्तैर्भाण्डैरुपादेय
संग्रहयोग्ये उपकरणान्तरेपि विस्तरः क्रियते इति लोके वस्तुस्थितिः प्रसिद्धा ।
अतोऽहमिदं सर्वं भाण्डजातं शीघ्रमेवाग्नौ त्यजामि ॥ ३९ ॥

एकवारं दहत्यग्निर्दाह्यं भवति तुष्टये ।
साधो क्रियोपकरणं निष्क्रियाय त्यजाम्यहम् ।
न खेदस्तत्र कर्तव्यो नन्वयोग्यं बिभर्ति कः ॥ ४० ॥

यतः सर्वदाह्यं भाण्डमेकवारं युगपदेव दहति चेन्मम तुष्टये
सर्वत्यागसंतोषाय भवतीत्यर्थः । ननु हे कुम्भ तत्र मत्कृतसर्वत्यागविषये
त्वया खेदो न कर्तव्यः । यतो लोकेपि अयोग्यं को बिभर्ति धारयति । तथा चाक्रियस्य
मम क्रियोपकरणमयोग्यमेवेति न धारणयोग्यमिति भावः ॥ ४० ॥

इत्युक्तवान्झटिति भोजनभाजनाद्यं सर्वं जुहाव वनवासविलासयोग्यम् ।
तद्भाण्डजालमनले सममेव राजा कल्पान्ततेजसि जगज्ज्वलतीव कालः ॥ ४१ ॥

राजा शिखिध्वज इति उक्तवान्सन्सर्वं भोजनभाजनमाद्यं प्रधानं यस्य
तथाविधं तत्सर्वं वनवासविलासयोग्यं भाण्डजालं समं युगपदेव अनले
झटिति जुहाव । यथा कालो ज्वलति कल्पान्ततेजसि जगद्युगपदेव जुहोति तद्वदित्यर्थः ॥ ४१
॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाणप्रकरणे पू०
चू० सर्वत्यागकरणं नाम द्विनवतितमः सर्गः ॥ ९२ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
सर्वत्यागकरणं नाम द्विनवतितमः सर्गः ॥ ९२ ॥

त्रिनवतितमः सर्गः ९३

श्रीवसिष्ठ उवाच ।

अथोत्थाय ददाहासौ शुष्कं तत्तृणमन्दिरम् ।
अज्ञेन स्वेन मनसा वृथा संकल्पकल्पितम् ॥ १ ॥

दग्धोपकरणं देहं त्यक्तुकामः शिखिध्वजः ।
विनिवार्यात्र कुम्भेन चित्तत्यागाय बोध्यते ॥

स्वेन मनसा वृथा ममतासंकल्पेन कल्पितं समर्थितं तत् कुटीरूपं
तृणमन्दिरम् ॥ १ ॥

118873 शिष्टं यत्किंचिदभवत्तत्सर्वं स शिखिध्वजः ।
118874 असंरब्धमना मौनी क्रमेण समया धिया ॥ २ ॥
118875
118876 पिठरशरावकुशकाष्ठसंचयादि यत्किंचिदभवत्तत्सर्वं
118877 ददाहेत्यादिपरेणान्वयः ॥ २ ॥
118878
118879 ददाह च स चिक्षेप तत्याज च बभञ्ज वा ।
118880 भाण्डजातं स्ववसनं भोजनाद्यपि तुष्टवत् ॥ ३ ॥
118881
118882 स्वस्य वसनं कल्कलम् । भुज्यते यस्मिंस्तद्भोजनं पत्रपुटकाद्यपि ॥ ३ ॥
118883
118884 स बभूवाश्रमस्तस्य दृष्टनष्टजनस्थितिः ।
118885 वीरभद्रबलध्वस्तदक्षयज्ञाश्रमोपमः ॥ ४ ॥
118886
118887 पूर्वं दृष्टा पधान्नष्टा अदर्शनं प्राप्ता जनस्थितिर्यत्र । पूर्वकाल इति समासः ॥
118888 ४ ॥
118889
118890 आश्रमात्ते मृगगणास्त्यक्तरोमन्थमुद्ययुः ।
118891 साग्निदाहात्पुरवराद्भीतभीतजना इव ॥ ५ ॥
118892
118893 तदेवोपपादयति-आश्रमादिति ॥ ५ ॥
118894
118895 भाण्डजातं दहत्यग्नौ सहशुष्केन्धनेन तत् ।
118896 केवलाकृतिरस्नेहस्तुष्टिमानाह भूपतिः ॥ ६ ॥
118897
118898 केवलाकृतिर्देहमात्रावशिष्टः ॥ ६ ॥
118899
118900 शिखिध्वज उवाच ।
118901
118902 वासनां तत्र संत्यज्य सर्वत्यागी स्थितो ह्यहम् ।
118903 अहो नु चिरकालेन देवपुत्र प्रबोधितः ॥ ७ ॥
118904
118905 वासनां ममताम् । तत्र सर्वोपकरणे । प्रबोधितस्त्वयेति शेषः ॥ ७ ॥
118906
118907 संपन्नः केवलः शुद्धः सुखेनोद्बोधवानहम् ।
118908 किं नाम किल वस्त्वेतद्भवेत्सांकल्पिकक्रमम् ॥ ८ ॥
118909
118910 सांकल्पिको ममतासंकल्पप्रयुक्तः संग्रहक्रमो यस्य
118911 तथाविधमेतदुपकरणजातं किं नाम न किचित्सारभूतमुपादानार्हमित्यर्थः ॥ ८ ॥
118912
118913 यावद्यावत्प्रहीयन्ते विविधा बन्धहेतवः ।
118914 तावत्तावत्समायाति परमां निर्वृतिं मनः ॥ ९ ॥
118915
118916 तत्यागसुखमभिनयन्नाह-यावद्यावदिति ॥ ९ ॥
118917
118918 शाम्यामि परिनिर्वामि सुखितोऽस्मि जयाम्यहम् ।
118919 विबन्धाः प्रक्षयं याताः सर्वत्यागो मया कृतः ॥ १० ॥
118920
118921 दिगम्बरो दिक्सदनो दिक्समोऽयमहं स्थितः ।
118922 देवपुत्र महात्यागात्किमन्यदवशिष्यते ॥ ११ ॥
118923
118924 विविधा बन्धा बन्धहेतवो विषयाः ॥ १० ॥ ११ ॥

118925
118926 कुम्भ उवाच।
118927
118928 सर्वमेव न संत्यक्तं त्वया राजन् शिखिध्वज।
118929 सर्वत्यागपरानन्दे मा मुधाभिनयं कुरु॥ १२॥
118930
118931 बाह्योपकरणत्यागमात्रेण भ्रान्त्या बालस्येव तस्य
118932 सर्वत्यागसुखाभिनयमसहमानः कुम्भ उवाच-सर्वमेवेति। अभिनयं
118933 व्यञ्जकचेष्टाविशेषम्॥ १२॥
118934
118935 तवास्त्येवापरित्यक्तः सर्वस्माद्भाग उत्तमः।
118936 यं परित्यज्य निःशेषं परामायास्यशोकताम्॥ १३॥
118937
118938 तवेत्यादि प्राग्वत्॥ १३॥
118939
118940 श्रीवसिष्ठ उवाच।
118941
118942 इति श्रुतवता तेन किंचित्संचिन्त्य भूभृता।
118943 इदमुक्तं महाबाहो राम राजीवलोचन॥ १४॥
118944
118945 शिखिध्वज उवाच।
118946
118947 इन्द्रियव्यालसंघातो रक्तमांसमयाकृतिः।
118948 शिष्यते सर्वसंत्यागे देहो मे देवतात्मज॥ १५॥
118949
118950 तदुत्थाय पुनर्देहं भृगुपातादविघ्नतः।
118951 विनाशात्मकतां नीत्वा सर्वत्यागी भवाम्यहम्॥ १६॥
118952
118953 श्रीवसिष्ठ उवाच।
118954
118955 इत्युक्त्वा देहमग्रस्थे श्वभ्रे त्यक्तुमसौ जवात्।
118956 करोति यावदुत्थानं तावत्कुम्भोऽप्युवाच ह॥ १७॥
118957
118958 श्वभ्रे भृगौ॥ १७॥
118959
118960 कुम्भ उवाच।
118961
118962 राजन्किमिति देहं त्वं निरागस्कं महावटे।
118963 त्यजस्यज्ञो हि वृषभः कुपितो हन्ति तर्णकम्॥ १८॥
118964
118965 निरागस्कं निरपराधम्। महावटे भृगौ। तर्णकं स्ववत्सम॥ १८॥
118966
118967 जडो वराको मूकात्मा तपस्वी देहको ह्ययम्।
118968 न कश्चन तवैतस्मिन्मा [एकस्मिन् इति पाठः।] मुधैव तनुं त्यज॥ १९॥
118969
118970 निरागस्कतामेव दर्शयति-जड इति। तव अपराध इति शेषः॥ १९॥
118971
118972 आत्मन्येवैष मूकात्मा ध्यानवानवतिष्ठते।
118973 संचाल्यते परेणैव तरङ्गेणैव काष्ठकम्॥ २०॥
118974
118975 क्षोभयत्यन्य एवैनं निग्रहार्हो मुहुर्बलात्।
118976 तपस्विनं यथैकान्तं संस्थितं मत्ततस्करः॥ २१॥

यस्यापराधस्तमन्यं दर्शयति क्षोभयतीति। स एव निग्रहार्हो दण्ड्यः॥ २१॥

सुखदुःखादिभूत्या हि नापराधि शरीरकम्।
नात्मनः फलवानात्मस्पन्दे वृक्षोऽपराधवान्॥ २२॥

ननु सुखदुःखोद्भवस्थानत्वात्कुतः शरीरं नापराधि तदाह-सुखेति। भूत्या
उत्पत्तिस्थानतामात्रेण। तत्र दृष्टान्तमाह-नेति। यथा फलवांस्तरुर्वायुकृते
आत्मस्पन्दे फलादिपाते सति न तदभिमान्यात्मा अपराधवान् भवति॥ २२॥

वातः फलशिरःपुष्पपातनं कुरुते स्फुरन्।
तरुणा साधुना धीरापराद्धं किमात्मनः॥ २३॥

यतः स्फुरन्वात एव फलानां शिरःपल्लवानां पुष्पाणां च बलात्पातनं कुरुते
इति स एवापराधी। तरुणा साधुना किमपराद्धं तद्वद्देहेनापि साधुनात्मनः
किमपराद्धमित्यर्थः॥ २३॥

त्यक्तेनापि शरीरेण किल तामरसेक्षण।
सर्वत्यागो न ते याति निष्पत्तिं विषमो हि सः॥ २४॥

हि यस्मात्स सर्वत्यागः पुनरधिकारिदेहदौर्लभ्येन ज्ञानदौर्लभ्याद्विषमो
दुःसाध्य एव संपद्यत इत्यर्थः॥ २४॥

भृगौ केवलमेतत्त्वं निरागस्कं शरीरकम्।
मुधा क्षिपसि नो देहत्यागे तत्त्यागिता भवेत्॥ २५॥

तस्य देहक्षोभकस्याहंकारस्य त्यागिता नो भवेन्न सिद्ध्येदित्यर्थः॥ २५॥

येनायं क्षोभ्यते देहो मत्तेभेनेव पादपः।
तत्संत्यजसि चेत्पापं तन्महात्यागवान्भवान्॥ २६॥

तस्मिंस्त्यक्ते भवेत्यक्तं सर्वं देहादि भूपते।
नो चेन्निमग्नमप्येतद्भूयोभूयः प्ररोहति॥ २७॥

एतद्देहादि निमग्नं जलमज्जनादिना नाशितमपि तस्माद्देहचालकादेव
जन्मकर्मबीजभूतात् प्ररोहति॥ २७॥

शिखिध्वज उवाच।

केनायं चाल्यते देहः किं बीजं जन्मकर्मणाम्।
कस्मिंस्त्यक्ते [भवेत्यक्तं सर्वं देहादि सुन्दर इति पाठः।]
परित्यक्तं सर्वं भवति सुन्दर॥ २८॥

कुम्भ उवाच।

साधो न देहत्यागेन न राज्यत्यजनेन च।
न चोटजादिशोषेण सर्वत्यागो भवेन्नृप॥ २९॥

यत्सर्वं सर्वतो यच्च तस्मिन्सर्वैककारणे।
सर्वस्मिन्संपरित्यक्ते सर्वत्यागः कृतो भवेत्॥ ३०॥

सर्ववासनास्पदत्वात्सर्वम्। सर्वविषयेषु प्रसृतत्वात्सर्वतः। संकल्पेन

119029 सर्वजनकत्वात्सर्वैककारणे ॥ ३० ॥
119030
119031 शिखिध्वज उवाच ।
119032
119033 सर्वं सर्वगतं सर्वहेयं त्याज्यं च सर्वदा ।
119034 सर्वं किमुच्यते ब्रूहि सर्वतत्त्वविदां वर ॥ ३१ ॥
119035
119036 सर्वत्र हेयं सर्वदा च त्याज्यं त्यक्तुं योग्यं यत्सर्वं त्वयोच्यते तत्किमित्यर्थः ॥
119037 ३१ ॥
119038
119039 कुम्भ उवाच ।
119040
119041 साधो सर्वगताकारं जीवप्राणादिनामकम् ।
119042 न जडं नाजडं भ्रान्तं चित्तं सर्वमिति स्मृतम् ॥ ३२ ॥
119043
119044 चित्प्राधान्येन जीवनामकं क्रियाप्राधान्येन प्राणादिनामकं चित्तं लिङ्गम् ॥ ३२ ॥
119045
119046 चित्तमेव भ्रमं विद्धि विद्धि चेतो नरं नृप ।
119047 चित्तं विद्धि जगज्जालं चित्तं सर्वमिति स्मृतम् ॥ ३३ ॥
119048
119049 नरं व्यवहर्तृपुरुषम् ॥ ३३ ॥
119050
119051 राज्यादेरथ देहादेराश्रमादेर्महीपते ।
119052 सर्वस्यैव मनो बीजं तरुबीजं तरोरिव ॥ ३४ ॥
119053
119054 सर्वस्य बीजे संत्यक्ते सर्वं त्यक्तं भवत्यलम् ।
119055 संभवासंभवाद्भूप सर्वत्यागो भवेदिति ॥ ३५ ॥
119056
119057 तत्त्यागे सर्वत्यागसंभवात्तदत्यागे सर्वत्यागासंभवात् ॥ ३५ ॥
119058
119059 सर्वधर्माद्यधर्म वा राज्यादि विपिनादि वा ।
119060 सचित्तस्य परं दुःखं निश्चित्तस्य परं सुखम् ॥ ३६ ॥
119061
119062 सर्वे धर्मादयः अधर्मा वा राज्यादितत्फलभोगस्थानानि वा सचित्तस्य परं
119063 दुःखमेव ॥ ३६ ॥
119064
119065 इदं विवर्तते सर्वं चित्तमेव जगत्तया ।
119066 देहाद्याकारजालेन बीजं वृक्षतया यथा ॥ ३७ ॥
119067
119068 विवर्तते परिणमते ॥ ३७ ॥
119069
119070 पादपः पवनेनेव भूकम्पेनेव पर्वतः ।
119071 भस्त्रा भस्त्राभरेणायं देहश्चित्तेन चाल्यते ॥ ३८ ॥
119072
119073 भस्त्राध्मानदृतिः । भस्त्राभरेण कमरिण ॥ ३८ ॥
119074
119075 सर्वभूतोपभोगानां जरामरणजन्मनाम् ।
119076 महामुनीनां सुदृढं चित्तं विद्धि समुद्गकम् ॥ ३९ ॥
119077
119078 सर्वभूतप्रसिद्धानामुपभोगानां जरामरणादीनां देहधर्माणाम् ।
119079 महामुनिपदेन तद्धर्माः शमदमादयो लक्ष्यन्ते । तेषां च तत्र तत्र
119080 निरूढवासनं चित्तमेवाश्रय इत्यर्थः ॥ ३९ ॥

इदं प्रवर्तते सर्वं चित्तमेव जगत्तया |
देहाद्याकारजालेन चित्तं जीवो मनोमयम् || ४० ||

अशान्तं चित्तमेव मननान्मनोमयमन्तः प्राणचेष्टया जीवश्च भूत्वा बहिः
स्थूलदेहतद्व्यवहाराद्याकारजालेन भवतीत्यर्थः || ४० ||

बुद्धिर्महदहंकारः प्राणश्चेत्यादिभिर्मुने |
क्रियानुरूपैरभिधाव्यापारैः शान्तमुच्यते || ४१ ||

तदेवान्तः शान्तं महदहंकारः प्राणः प्राज्ञात्मा चेत्यादिभिः
क्रियानुरूपैरभिधाव्यापारैरुच्यत इत्यर्थः || ४१ ||

चित्तं सर्वमिति प्राहुस्तस्मिंस्त्यक्ते महीपते |
सर्वाधिव्याधिसीमान्तः सर्वत्यागः कृतो भवेत् || ४२ ||

चित्तत्यागं विदुः सर्वत्यागं त्यागविदां वर |
तस्मिन्सिद्धे महाबाहो सत्यं किं नानुभूयते || ४३ ||

सत्यं परमार्थभूतभूमानन्दरूपं किं नानुभूयते | अनुभूयत एवेत्यर्थः ||
४३ ||

चित्ते त्यक्ते लयं याति द्वैतमैक्यं च सर्वतः |
शिष्यते परमं शान्तमच्छमेकमनामयम् || ४४ ||

द्वैतं कार्यविभागाविर्भावपरम्परा | ऐक्यं कारणे तिरोभावक्रमश्च लयं
बाधं याति || ४४ ||

अस्याश्चित्तं विदुः क्षेत्रं संसृतेः सस्यसंततेः |
क्षेत्रे त्वक्षेत्रतां याते शालेः क इव संभवः || ४५ ||

चित्तमेव विचित्रेहं भावाभावविलासिना |
विवर्ततेऽर्थभावेन जलमूर्मितया यथा || ४६ ||

अर्थभावेन पदार्थाकारेण || ४६ ||

चित्तोत्सादनरूपेण सर्वत्यागेन भूपते |
सर्वमासाद्यते सम्यक् साम्राज्येनेव सर्वदा || ४७ ||

सर्वत्यागस्य विषयो यथैवान्योऽस्ति ते तथा |
त्वमप्यन्यस्य भवसि त्यागिन्गृह्णासि वै नृप || ४८ ||

स चायं सर्वत्यागो न परिच्छिन्नात्मग्रहणे सिद्ध्यतीत्याशयेनाह-सर्वेति | हे
त्यागिन् नृप परिच्छिन्नस्य तव यथा अन्यः सर्वत्यागस्य विषयोऽस्ति तथा
त्वमप्यन्यस्य त्वत्त्यागिनस्त्यागविषयो भवसि | तथा च त्याज्यमेवात्मतया गृह्णासीति
न ते सर्वत्यागः सिध्यतीत्यर्थः || ४८ ||

सूत्रं मुक्ताफलेनेव जगज्जालं त्रिकालकम् |
सर्वमन्तः कृतं तेन येन सर्वं समुज्झितम् || ४९ ||

अपरिच्छिन्नात्मग्रहणे तु त्वमेव सर्वस्यात्मेति तवान्येन
त्यागायोगात्त्याज्यकोट्यनिविष्टेन त्वया सर्वत्यागे सर्वं स्वायत्तीकृत्य

119133 लब्धमित्याह-सूत्रमिति ॥ ४९ ॥
119134
119135 येन सर्वं परित्यक्तं तस्मिञ्छून्येऽपि संस्थितम् ।
119136 जगत्सर्वं त्रिकालस्थं तन्तौ मुक्तावली यथा ॥ ५० ॥
119137
119138 ननु सर्वं त्यजता सर्वशून्यतैवावलम्बिता तत्कथं सर्वं स्वायत्तं लब्धं
119139 स्यात्तत्राह-येनेति । यद्यपि सर्व त्यक्त्वा स सर्वशून्यतामापन्नस्तथापि तेन
119140 त्यक्तं जगदाश्रयान्तरालाभात्तमेवाश्रित्य यावद्व्यवहारं सत्तास्फूर्ती लभत इति
119141 स एव व्यवहर्तृदृशा त्रिकालस्थसर्वलब्धेत्युच्यत इति भावः ॥ ५० ॥
119142
119143 अस्नेहेनेव दीपेन येन सर्वं समुज्झितम् ।
119144 सस्नेहेनेव दीपेन तेन सर्वं प्रकाशितम् ॥ ५१ ॥
119145
119146 अत एव सर्वत्यागे सर्वबाधादव्यवहार्यदृशा
119147 आत्यन्तिकस्नेहक्षयान्निर्वाणदीपदृष्टान्तं सर्वगतस्वरूपज्योतिषैव
119148 सर्वव्यवहारप्रकाशनाद्व्यवहारदृशा सस्नेहदीपदृष्टान्तं चाह##-
119149
119150 स्थितं सर्वं परित्यज्य यः शेतेऽस्नेहदीपवत् ।
119151 स राजते प्रकाशात्मा समः सस्नेहदीपवत् ॥ ५२ ॥
119152
119153 तदेव स्फुटयति-स्थितमिति ॥ ५२ ॥
119154
119155 समस्तवस्तुनिष्कासे यथा त्वमवशिष्यसे ।
119156 सर्वत्यागे कृते तादृग्विज्ञानमवशिष्यते ॥ ५३ ॥
119157
119158 सर्वत्यागे शून्यतापत्तिं वारयति-समस्तेति । समस्तानां वस्तूनां
119159 राज्यारण्योपकरणानां निष्कासे त्यागे ॥ ५३ ॥
119160
119161 समस्तवस्तुदाहेऽपि यथा त्वं नेतरो नृप ।
119162 सर्वत्यागत एवाङ्ग तथा निर्वाणमुच्यते ॥ ५४ ॥
119163
119164 परिशिष्टचितः स्वातिरिक्तत्वात्स्वस्य ततः कः पुरुषार्थस्तत्राह-समस्तेति । यथा
119165 निर्वाणं परमपुरुषार्थोपि त्वत्तो नेतरदित्यर्थः ॥ ५४ ॥
119166
119167 सर्वत्यागो हि शून्यात्मा आश्रयः सर्वसंविदाम् ।
119168 अनन्तानामुदाराणां खमिवेदं दिवौकसाम् ॥ ५५ ॥
119169
119170 तस्य त्यक्तसर्वप्रपञ्चशून्यत्वेपि सर्वसंविदां तदन्तर्भावोऽस्त्येवेति न
119171 जाड्यसिक्तिरित्याह-सर्वत्यागो हीति । दिवौकसां सूर्यचन्द्रनक्षत्रादीनाम् ॥ ५५ ॥
119172
119173 सर्वत्यागरसापाने जरामरणभीतयः ।
119174 न काश्चन प्रबाधन्ते खस्येव व्योमलेखिकाः ॥ ५६ ॥
119175
119176 सर्वत्यागरसस्य आपाने ईषदप्यास्वादने कृते यथा असङ्गोदासीनस्य खस्य
119177 व्योमलेखिकाश्छिद्रकारिकाष्टंकिकाः काश्चिदपि न प्रबाधन्ते तद्वत् ॥ ५६ ॥
119178
119179 सर्वत्यागो महत्त्वस्य कारणं निर्मलद्युतेः ।
119180 सर्वं त्यजसि चेद्यस्माद्बुद्धिस्थैर्यं बृहत्तमम् ॥ ५७ ॥
119181
119182 निर्मला द्युतिः स्वरूपस्फूर्तिर्यस्मात्तथाविधस्य महत्त्वस्य । तत्कुतस्तत्राह##-
119183
119184 सर्वत्यागः परानन्दो दुःखमन्यत्सुदारुणम् ।

119185 इत्योमित्युररीकृत्य यदिच्छसि तदाचर ॥ ५८ ॥
119186
119187 इति विमृश्येति शेषः। ओंमित्यस्य विवरणं-उररीकृत्येति ॥ ५८ ॥
119188
119189 सर्वं त्यजति यस्तस्य सर्वमेवोपतिष्ठते।
119190 यथैवाम्बु विशत्यग्नौ तथैवायाति वारिधौ ॥ ५९ ॥
119191
119192 सर्वत्यागे वैभवहानिं वारयति-सर्वमिति। सर्वं विभवजातं
119193 प्रारब्धोपनीतमुपतिष्ठते। वारिधौ अम्बु यथा यथा वडवाग्नौ विशति तथा तथा
119194 नदीभ्य आयात्येव तद्वदित्यर्थः ॥ ५९ ॥
119195
119196 सर्वत्यागान्तरेवास्ति ज्ञानमात्मप्रसादकम्।
119197 यच्छून्यं किल भाण्डस्य तत्र रत्नादि तिष्ठति ॥ ६० ॥
119198
119199 सर्वस्याज्ञानतत्कार्यस्य यस्त्यागस्तदन्तरेवात्मप्रसादकं ज्ञानमवश्यमस्ति।
119200 भाण्डस्य मध्ये यद्रत्नादिशून्यं स्थलं तत्रैव रत्नादि तिष्ठतीति किल
119201 प्रसिद्धमित्यर्थः ॥ ६० ॥
119202
119203 सर्वस्यागवशादेव हतकाले कलावपि।
119204 शाक्येन विगताशङ्कं मुनिना मेरुवत्स्थितम् ॥ ६१ ॥
119205
119206 कलौ पापिष्ठतमेऽपि काले वेदबाह्यत्वादतिनीचेनापि शाक्येन
119207 सर्वत्यागवशान्मेरुवत्स्थितं यदा तदा पुण्ये द्वापरकाले वेदमार्गावलम्बिना
119208 पुण्यतमेन त्वया विगताशङ्कं व्योमवत्स्थेयमिति किं वाच्यमिति द्योतनाय हतेति ॥
119209 ६१ ॥
119210
119211 सर्वत्यागो महाराज सर्वसंपत्समाश्रयः।
119212 न गृह्णाति हि यत्किंचित्सर्वं तस्मै प्रदीपते ॥ ६२ ॥
119213
119214 सर्वासां संपदा समाश्रयो निवासस्थानम् ॥ ६२ ॥
119215
119216 कृत्वा सर्वपरित्यागं शान्तः स्वस्थो वियत्समः।
119217 सौम्यो भवसि यद्रूपस्तद्रूपो भव भूपते ॥ ६३ ॥
119218
119219 सर्वं परित्यज्य महास्वभाव त्यजस्यथो येन च तद्विहाय।
119220 त्यागाभिमानं च मलं विमुच्य विमुक्तरूपो भव भूमिपाल ॥ ६४ ॥
119221
119222 हे महास्वभा भूमिपाल त्वं प्रथमं त्याज्यं सर्व मन्सा परित्यज्य अथो अनन्तरं
119223 येन त्यजसि तन्मनश्च विहाय तदनन्तरं त्यागाभिमानलक्षणमहंकारमलं च
119224 विमुच्य जीवन्मुक्तरूपो भवेत्यर्थः ॥ ६४ ॥
119225
119226 इत्यार्षे श्रीवासिष्ठमहारामा० वाल्मी० दे० मोक्षो० निर्वाणप्रकरणे पू० चू०
119227 शिखिध्वजावबोधनं नाम त्रिनवतितमः सर्गः ॥ ९३ ॥
119228
119229 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
119230 शिखिध्वजावबोधनं नाम त्रिनवतितमः सर्गः ॥ ९३ ॥
119231
119232 चतुर्नवतितमः सर्गः ९४
119233
119234 श्रीवसिष्ठ उवाच।
119235
119236 एवं वदति वै कुम्भे चित्तत्यागं मुहुर्मुहुः।

119237 अन्तर्विचारयन्सौम्यो राजा वचनमब्रवीत् ॥ १ ॥
119238
119239 इह चित्तं परित्यक्तुं तन्मूलपरिशोधने ।
119240 देहादिवेद्यबाधेन पूर्णचिच्छेष ईर्यते ॥
119241
119242 चित्तत्यागं चित्तत्यागोपायम् ॥ १ ॥
119243
119244 शिखिध्वज उवाच ।
119245
119246 हृदयाकाशविहगो हृदयद्रुममर्कटः ।
119247 भूयोभूयो निरस्तं हि समभ्येत्येव मे मनः ॥ २ ॥
119248
119249 निरस्तं न ममेति त्यक्तमपि । अप्यर्थो हिशब्दः ॥ २ ॥
119250
119251 जानामि चैतदादातुं मत्स्यं जाल इवाकुलम् ।
119252 त्यागमस्य न जानामि चित्तं द्रव्य इवोत्तम ॥ ३ ।
119253
119254 एतच्चित्तमादातुं ममतया स्वीकर्तुं जानामि द्रव्य इवास्मिन्मूर्तत्वाभावादस्य
119255 त्यागं तु न जानामि । हे उत्तम ॥ ३ ॥
119256
119257 चित्तस्यादौ स्वरूपं मे यथावद्भगवन्वद ।
119258 ततश्चित्तपरित्यागं यथावद्वद मे प्रभो ॥ ४ ॥
119259
119260 स्वरूपं त्यागार्हं पिण्डीकृतं सामान्यरूपम् ॥ ४ ॥
119261
119262 कुम्भ उवाच ।
119263
119264 वासनैव महाराज स्वरूपं विद्धि चेतसः ।
119265 चित्तशब्दस्तु पर्यायो वासनाया उदाहृतः ॥ ५ ॥
119266
119267 कुम्भस्तदेवाह-वासनैवेति । रागवासनेत्यर्थः । उदाहृतो लोके । तथा च लौकिका
119268 आहुरपूपेषु मम वासनास्ति मण्डकेष्वस्य चित्तमिति ॥ ५ ॥
119269
119270 त्यागस्तस्यातिसुकरः सुसाध्यः स्पन्दनादपि ।
119271 राज्यादप्यधिकानन्दः कुसुमादपि सुन्दरः ॥ ६ ॥
119272
119273 सुकर इति । औदासीन्यमात्रेण तत्सिद्धिरिति भावः । राज्यादपीति । तथा चाहुः यच्च
119274 कामसुखं लोके यच्च दिव्यं महत्सुखम् । तृष्णाक्षयसुखस्यैते नार्हतः
119275 षोडशीं कलाम् । इति । सुन्दरो हृद्यः ॥ ६ ॥
119276
119277 मूर्खस्य तु मनस्त्यागो नूनं दुःसाध्यतां गतः ।
119278 पामरस्येव साम्राज्यं तृणस्येव सुमेरुता ॥ ७ ॥
119279
119280 कुतस्तर्हि स सर्वैर्न क्रियते तत्राह-मूर्खस्येति ॥ ७ ॥
119281
119282 शिखिध्वज उवाच ।
119283
119284 स्वरूपं वेद्मि चित्तस्य वासनामयमाकुलम् ।
119285 त्यागः स मन्ये दुःसाध्यो वज्रनिर्गिलनादपि ॥ ८ ॥
119286
119287 वेद्मि त्वद्वचसेत्यर्थः । वज्रस्य निर्गिलनान्निगिरणादपि दुःसाध्यः । सति मौर्ख्ये
119288 औदासीन्यस्यैव दुष्करत्वादिति भावः ॥ ८ ॥

119289
119290 संसृत्यामोदपुष्पस्य दुःखदाहानलस्य च।
119291 जगदब्जमृणालस्य मोहमारुतखस्य च॥ ९॥
119292
119293 जगल्लक्षणं यदब्जं तन्मृणालस्य। जालेति पाठेऽपि जले भवं जालमिति व्युत्पत्त्या
119294 अब्जमेवार्थः। सर्वपर्यायैः कारणमेवोपलक्ष्यते॥ ९॥
119295
119296 शरीरयन्त्रवाहस्य हृत्पद्मभ्रमरस्य च।
119297 अयत्नाच्चेतसस्त्यागो यथा भवति तद्वद॥ १०॥
119298
119299 शरीरयन्त्रं वहति प्रवर्तयतीति कर्मण्यण्। यथा येनोपायेन भवति॥ १०॥
119300
119301 कुम्भ उवाच।
119302
119303 सर्वनाशोऽस्य यः साधो चेतसः संसृतिक्षयः।
119304 स एव चित्तसंत्याग इत्युक्तं दीर्घदर्शिभिः॥ ११॥
119305
119306 सर्वस्य वक्ष्यमाणमूलाङ्कुरशाखापल्लवादेर्नाशः स एव संसृतेरपि क्षयः
119307 स एव चित्तस्य संत्यागो न तु बाह्यार्थत्यागवन्ममतानिवर्तनमित्यर्थः।
119308 दीर्घदर्शिभिरपरिच्छिन्नात्मदर्शिभिः॥ ११॥
119309
119310 शिखिध्वज उवाच।
119311
119312 चित्तत्यागादहं मन्ये चित्तनाशः सुसिद्धये।
119313 अभावः शतशो व्याधेः कथमस्यानुभूयते॥ १२॥
119314
119315 उक्तमर्थं विमृश्यानुवादेनानुमोदमानः शिखिध्वजस्तत्रोपपत्तिमाह-चित्तेति।
119316 चित्तं हि व्याधिः। न हि व्याधेः शतशोपि ममतावर्जनलक्षणेन
119317 त्यागेनाभावोऽनुभूयते किंतु चिकित्सयोच्छेदेनैव। अतस्तदुच्छेदाय
119318 तन्मूलशाखापल्लवादि वदेत्यर्थः॥ १२॥
119319
119320 कुम्भ उवाच।
119321
119322 अहंबीजश्चित्तद्रुमः सशाखाफलपल्लवः।
119323 उन्मूलय समूलं तमाकाशहृदयो भव॥ १३॥
119324
119325 अहमज्ञातात्मा बीजं यस्य। सशाखाफलपल्लवस्य द्रुमस्योन्मूलने
119326 तत्स्थानाकाशमिव निरावरणविक्षेपं हृदयं यस्य तथाविधो भव॥ १३॥
119327
119328 शिखिध्वज उवाच।
119329
119330 चेतसः किं मुने मूलं कोऽङ्कुरः कोऽस्य संभवः।
119331 काः शाखाः के च वा स्कन्धाः कथमुन्मूल्यते च सः॥
119332
119333 संभवत्यस्मिन्निति संभवः क्षेत्रम्॥ १४॥
119334
119335 कुम्भ उवाच।
119336
119337 अहमर्थोदयो योऽयं स चित्तावेदनात्मकः।
119338 एतच्चित्तद्रुमस्यास्य विद्धि बीजं महामते॥ १५॥
119339
119340 अहमर्थादज्ञातात्मनः उदयो यस्य तथाविधो योऽयं स चित्तावेदनात्मकोऽभिमानी

प्रसिद्धः। एतदेवेति बीजलिङ्गेन निर्देशः। बीजं मूलम्॥ १५॥

परमात्मपदं क्षेत्रं क्षेत्रं मायामयस्य तत्।
एतस्मात्प्रथमोद्भिन्नादङ्कुरोऽनुभवाकृतिः॥ १६॥

कोऽस्य संभव इति प्रश्नस्योत्तरमाह-परमात्मपदमिति। परमात्मनः पदं
नीडं माया सैव क्षेत्रम्। यतस्तत्सर्वस्यैव मायामयप्रपञ्चस्य
क्षेत्रमतश्चेतसोऽपि तदेव क्षेत्रमित्यर्थः। कोऽङ्कुर इत्यस्योत्तरमाह-एतस्मादिति।
एतस्मात्प्रथमोत्पन्नान्मूलात्परिच्छिन्नोऽहमिति निश्चयात्मा
चिदाभासव्याप्तत्वादनुभवात्मकोऽङ्कुरो जायत इत्यर्थः॥ १६॥

निश्चयात्मा निराकारो बुद्धिरित्येव सोच्यते।
अस्य बुद्ध्यभिधानस्य याङ्कुरस्य प्रपीनता॥ १७॥

तस्यैवोपचयेन चित्तद्रुमात्मना परिणतिरित्याह-अस्येति।
देहाद्याकृतिस्मरणाच्चित्तनाम तन्मननाच्च मन इत्यभिधा यस्यास्तथाविधा
पीनता जायत इति परेणान्वयः॥ १७॥

संकल्परूपिणी तस्याश्चित्तनाममनोभिधा।
जीवो मिथ्योपलम्भात्मा शून्यात्मा ह्युपलोपमः॥ १८॥

तस्य वृक्षस्य जीवमाह-जीव इति। परमार्थतो निर्विकारत्वात्सर्वविकारशून्यात्मा
अत एवोपलोपमो मिथ्याभूतचित्ततद्धर्मसंबन्धोपलम्भात्मा साक्षीत्यर्थः॥ १८॥

स्तम्भः कायोऽयमेतस्य स्नाय्वस्थिरसरञ्जितः।
देशान्तरेऽङ्कुरोद्देशे कालस्पन्दोऽस्य वासना॥ १९॥

स्तम्भो मूलाच्छाखापर्यन्तो मध्यप्रदेशः। अयं कायः शरीरमेव।
मूलस्तम्भदेशाद्देशान्तरे अग्रदेशे
स्कन्धशाखादिप्ररोहार्थमङ्कुरोद्देशेऽङ्कुरारम्भे चिकीर्षिते वसन्तादिकाल इव
तत्तद्भोगप्रदकर्मपरिपाककाले रागद्वेषप्रवृत्याद्यङ्कुरपल्लवाद्याकारेण
स्पन्दते यो रसः सोऽस्य वासनैवेत्यर्थः॥ १९॥

शाखायाश्चित्तवृक्षस्य दीर्घा दूरगतास्तताः।
इन्द्रियाण्यल्पभोगाश्च भावाभावात्मयोनयः॥ २०॥

अस्य चित्तवृक्षस्य या दीर्घा दूरगतास्तता विस्तृताश्च शाखास्ता इन्द्रियाणि
भावाभावा जन्ममरणानि तदात्मनोऽनर्थसहस्रस्य योनयः कारणीभूता
भोगाश्च अस्य महान्तो विटपौघा अवान्तरशाखासमूहा इति परेणान्वयः॥ २०॥

विटपौघा महान्तोऽस्य शुभाशुभफलाकुलाः।
ईदृशस्यास्य चित्तस्य दुर्वृक्षस्य प्रतिक्षणम्॥ २१॥

शाखाविलवनं कुर्वन्मूलकाषे भरं कुरु।

शिखिध्वज उवाच।

चित्तद्रुमस्य शाखादेः कुर्वाणोऽहं विकर्तनम्॥ २२॥

विषयभोगासंगच्छेदनलक्षणं शाखाविलवनं
कुर्वन्नसङ्गाद्द्वितीयात्मदर्शनलक्षणे मूलकाषे भरं यत्नातिशयं कुर्वित्यर्थः
। तत्र शाखालवने मूलकाषे चोपायं राजा पृच्छति-चित्तेति॥ २२॥

119393
119394 कथं करोमि मूलस्य निःशेषकषणं मुने।
119395
119396 कुम्भ उवाच।
119397
119398 वासना विविधाः शाखाः फलस्पन्दादिनान्विताः॥ २३॥
119399
119400 ततः शाखालवनोपायं कुम्भ आह-वासना इति॥ २३॥
119401
119402 अभाविता भवन्त्यन्तर्लूनाः संविद्दलेन ते।
119403 असंसक्तमना मौनी शान्तवादविचारणः॥ २४॥
119404
119405 अभाविता आसक्तित्यागेनानुभाविता अन्तर्विचारसंविद्दलेन लूना भवन्ति।
119406 उक्तमेवार्थं जीवन्मुक्तेषु लक्षणतया दर्शयति-असंसक्तेति॥ २४॥
119407
119408 संप्राप्तकारी यः सोऽन्तर्लूनश्चित्तलतो भवेत्।
119409 चित्तद्रुमलताजालं पौरुषेण विकर्तयन्॥ २५॥
119410
119411 शाखालवनाभ्यासे दृढे सति मूलकाषे योग्यो भवतीत्याह-चित्तद्रुमेति।
119412 लताजालं शाखासमूहम्॥ २५॥
119413
119414 यस्तिष्ठति स मूलस्य योग्यो निकषणे भवेत्।
119415 गौणं शाखाविलवनं मुख्यं मूलविकर्तनम्॥ २६॥
119416
119417 गौणमङ्गम्। मुख्यं प्रधानम्॥ २६॥
119418
119419 चित्तवृक्षस्य तेन त्वं मूलकाषपरो भव।
119420 मुख्यत्वेन महाबुद्धे मूलदाहमलं कुरु॥ २७॥
119421
119422 मुख्यत्वेन प्राधान्येन। प्रधानासंपादने यत्नप्रसाधितस्याप्यङ्गस्य
119423 वैकल्यप्रसङ्गादिति भावः॥ २७॥
119424
119425 चित्तकण्टकखण्डस्य भवत्येवमचित्तता।
119426
119427 शिखिध्वज उवाच।
119428
119429 अहंभावात्मनश्चित्तद्रुमबीजस्य हे मुने।
119430 कोऽनलो दहनाख्योऽस्मिन्कर्मण्यर्थकरो भवेत्॥ २८॥
119431
119432 त्वं चित्तलक्षणस्य कण्टकखण्डस्य करञ्जवनस्य अलं निरवशेषं मूलदाहं
119433 कुर्विति पूर्वत्रान्वयः। एवं कृते अचित्तता भवति। तद्दाहस्य
119434 प्रसिद्धेनानलेनासिद्धेरनलान्तरं जिज्ञासुः पृच्छति-अहंभावात्मन इति।
119435 अर्थकरः समर्थः॥ २८॥
119436
119437 कुम्भ उवाच।
119438
119439 राजन्स्वात्मविचारोऽयं कोऽहं स्यामिति रूपधृक्।
119440 चित्तदुर्द्रुमबीजस्य दहने दहनः स्मृतः॥ २९॥
119441
119442 कोऽहं स्यामिति विचारादिसाक्षात्कारान्तरूपधृक्॥ २९॥
119443
119444 शिखिध्वज उवाच।

119445
119446 मुने मया स्वया बुद्ध्या बहुशः प्रविचारितम् ।
119447 यावन्नाहं जगन्नोर्वीवनमण्डलमण्डितम् ॥ ३० ॥
119448
119449 मया स्वबुद्ध्यैव बाह्यार्था देहाद्यहंकारान्ता आध्यात्मिकार्थाश्च अनात्मानः
119450 अनृताश्चेति ज्ञातास्तथाप्यन्तरात्मतत्त्वापरिचयाज्जडेऽप्यहंकारे
119451 पुनःपुनरात्मताभ्रान्तिर्न निवर्तत एवेति न विश्राम्यामीत्याह-मुने
119452 इत्यादिषड्भिः । यावदिति साकल्ये । सर्वं जगद्बहुशः प्रविचारितमित्यर्थः । तदेव
119453 विशिष्याह-नाहमित्यादि । उर्व्या तदन्तर्गतवनमण्डलादिभिश्च मण्डितं
119454 जगन्नाहमिति संक्षिप्योक्तिः ॥ ३० ॥
119455
119456 नाद्रेस्तटं न विपिनः न पर्णस्पन्दनादि च ।
119457 जडत्वान्न च देहानि न मांसास्थ्यसृगादि च ॥ ३१ ॥
119458
119459 तदेव विस्तरेणाह-नाद्रेरित्यादि । जडत्वादिति सर्वत्र हेतुः ॥ ३१ ॥
119460
119461 कर्मेन्द्रियाण्यपि न च न च बुद्धीन्द्रियाणि च ।
119462 न मनो नापि च मतिर्नाहंकारश्च जाड्यतः ॥ ३२ ॥
119463
119464 कटकत्वं यथा हेम्नि तथाहंत्वं चिदात्मनि ।
119465 जडं त्वसद्रूपतया तेन तन्नास्ति हे मुने ॥ ३३ ॥
119466
119467 अहंकारे जडत्वं नास्तीति शङ्कां विवर्तत्वहेतुना वारयन् जडस्य स्वतः
119468 सेद्धुमशक्त्या चित्यध्यासात्सिद्धौ मिथ्यात्वं पर्यवस्यतीत्याह-कटकत्वमिति ।
119469 तथा अहंत्वं विवर्त इति शेषः । जडं तु शुक्तिरजतमृगतृष्णादि असद्रूपतया
119470 प्रसिद्धमिति शेषः । तेन जडत्वहेतुना तदहंत्वादि नास्ति मिथ्यैवेत्यर्थः ॥ ३३ ॥
119471
119472 संनिवेशनिवासात्मा सर्वार्थादिः परे पदे ।
119473 विद्यते नान्यदन्यत्वान्नभसीव महाद्रुमः ॥ ३४ ॥
119474
119475 ब्रह्माण्डादेरुक्तजडवर्गायाधिष्ठानसद्रूपादन्यत्वादपि असत्त्वमित्याह##-
119476 न विद्यते । तथात्वं कुत इति चेद्यतो
119477 ब्रह्माण्डादिजडवर्गश्चतुर्दशभुवनादिसंनिवेशानां निवासात्मा आधारः
119478 सर्वेषामर्थानां शब्दादिविषयाणामादिः कारणभूतः । न च चिदात्मा
119479 विभक्तस्वभावो निर्विभागसत्तासामान्यरूपत्वादित्यर्थः ॥ ३४ ॥
119480
119481 जानन्नपीति भगवन्नहंत्वमलमार्जनम् ।
119482 अन्तर्यज्ज्ञं न जानामि तेन तप्ये चिरं मुने ॥ ३५ ॥
119483
119484 इति अनया रीत्या अहंत्वलक्षणस्य मलस्य मार्जनं जानन्नपि अन्तः प्रत्यगेकरसं यत्
119485 ज्ञं साक्षिचैतन्यं तन्न जानामि ॥ ३५ ॥
119486
119487 कुम्भ उवाच ।
119488
119489 एतावन्मात्रकं वृन्दं यदि न त्वं महीपते ।
119490 जडत्वात्तन्महाबुद्धे योऽसि तद्वद मेऽनघ ॥ ३६ ॥
119491
119492 इदानीं परिशेषादेव साक्षिचैतन्यं परिचाययिष्यन्कुम्भ उवाच-एतावदिति ।
119493 एतावन्मात्रकमहंकारपर्यन्तं दृश्यवृन्दम् ॥ ३६ ॥
119494
119495 शिखिध्वज उवाच ।
119496

119497 चिन्मात्रमहमच्छात्मवेदनं विदुषां वर।
119498 यत्र भावाः स्वदन्ते ते निर्णीयन्ते च येन वा ॥ ३७ ॥
119499
119500 अज्ञातृभोक्तृत्वादिना प्रसिद्धान्तरान्तरकोशपरम्परावधौ यत्रानन्दैकरसे
119501 चिन्मात्रे सति अनानन्दा जडरूपाश्च भावाः शब्दादिविषयाः स्वदन्ते। येन वा
119502 बुद्धिवृत्त्युपारूढेन इष्टानिष्टविभागेन निर्णीयन्ते ॥ ३७ ॥
119503
119504 एवंरूपस्य मे लग्नं नूनं मलमकारणम्।
119505 सकारणं वाहमिति यत्पदं च न वेद्म्यहम् ॥ ३८ ॥
119506
119507 विवेकदृशा पर्यालोचने एवंरूपस्य मे मम देहादिकोइशगणे अहमिति
119508 तादात्म्याभिमानलक्षणं मलं लग्नं इदं सकारणमकारणं वेति अहं न वेद्मि
119509 यत्पदं ब्रह्म तच्च न वेद्मीत्यर्थः ॥ ३८ ॥
119510
119511 असदेतद्रात्मीयं प्रमार्ष्टुं मलमात्मनः।
119512 मुने यदा न शक्नोमि तेन तप्ये सुदारुणम् ॥ ३९ ॥
119513
119514 कुम्भ उवाच।
119515
119516 ब्रूहि किं तन्महाबाहो लग्नं तव मलं महत्।
119517 स्थितोऽसि येन संसारी सता वाप्यथवाऽसता ॥ ४० ॥
119518
119519 सत्ता सत्येन असता मिथ्याभूतेन वा येन मलेन हेतुना संसारी स्थितोऽसि ॥ ४० ॥
119520
119521 शिखिध्वज उवाच।
119522
119523 चित्तद्रुमस्य यद्बीजमहंभावश्च मे मलम्।
119524 तच्च त्यक्तुं न जानामि त्यक्तं त्यक्तमुपैति माम् ॥ ४१ ॥
119525
119526 तत्सत्यं मिथ्येति वा न जानामि किंतु चित्तद्रुमस्य सर्वानर्थफलस्य मूलमिति
119527 सामान्यतोऽहंभावश्चान्ममभावश्चेति विशेषतोपि जानामि। तच्च त्यक्तुं
119528 निरसितुमुपायं न जानामि। ननु नाहं न ममेति बुद्धिरेव तत्त्यागोपायः प्रसिद्धः
119529 प्राक्त्वयैव वनादिषु दर्शितः स कथमपलप्यते तत्राह-त्यक्तं त्यक्तमिति। तथा
119530 पुनः पुनस्त्यक्तमपि मूलोच्छेदाभावात्पुनःपुनर्मामुपैति। अतस्तन्मूलं
119531 तदुच्छेदोपायं च वदेत्याशयः ॥ ४१ ॥
119532
119533 कुम्भ उवाच।
119534
119535 कारणाज्जायते कार्यं यत्तत्सर्वत्र संभवेत्।
119536 अन्यत्त्वसद्द्विचन्द्राभं दृष्टमेतन्न विद्यते ॥ ४२ ॥
119537
119538 तत्र सत्यस्य कूटस्थत्वात्कारणता न संभवत्येव। असत्यस्य तु कारणतोक्तिरसत्येव
119539 कारणे कार्यमुत्पन्नमित्यर्थे पर्यवसिता सती
119540 कार्यस्यासत्यतामेवापादयतीत्यात्मैक्यपर्यवसितेति रहस्यं तद्बुद्ध्यनुसारेणैव
119541 बोधयिष्यन् कुम्भो लोकप्रसिद्ध्यनुरूपमहंकारणं त्वं स्वबुद्ध्यैवान्विष्य
119542 कथयेत्याह-कारणादिति द्वाभ्याम्। अन्यत्तु कारणं विनैव जातं कार्य
119543 द्विचन्द्राभमसदेव। यत एतत्सम्यग्दृष्टं चेन्न विद्यत इत्यर्थः ॥ ४२ ॥
119544
119545 कारणाज्जायते कार्यमहंभावाद्भवाङ्कुरः।
119546 इति कारणमन्विष्य कथयस्व ममाधुना ॥ ४३ ॥
119547
119548 यथा अहंभावात्कारणान्मन-आदिलक्षणो भवाङ्कुरः कार्यं जायते इति

119549 एवंविधमेवाहंभावस्यापि कारणं स्वबुद्ध्याऽन्विष्य मम कथयस्वेत्यर्थः ॥
119550 ४३ ॥
119551
119552 शिखिध्वज उवाच ।
119553
119554 मुनेऽहमिति दोषस्य वेदनं वेद्मि कारणम् ।
119555 तद्यथोपशमं याति तन्मे वद मुनीश्वर ॥ ४४ ॥
119556
119557 एवं पृष्टो राजा चिरं स्वबुद्ध्यान्विष्यासति देहाद्याकारवेदने
119558 तत्राहंताभिमानायोगात्तद्वेदनमेव तत्कारणमिति निश्चित्य प्रत्युवाच-मुने इति ॥
119559 ४४ ॥
119560
119561 चितश्चेत्योन्मुखत्वेन दुःखायायमहंस्थितः ।
119562 चेत्योपशमनं ब्रूहि मुने तदुपशान्तये ॥ ४५ ॥
119563
119564 चितश्चेत्योन्मुखत्वेन हेतुना अयं देहादिरहंभावेन स्थितः सन् दुःखाय
119565 संपन्नोऽतश्चेत्यदेहादिरेव चितस्तद्वेदनाभावेपि हेतुरित्यभिप्रेत्य तदुपशान्तये
119566 चेत्योपशमनोपायं ब्रूहीत्याह-चेत्येति ॥ ४५ ॥
119567
119568 कुम्भ उवाच ।
119569
119570 कारणं कारणज्ञोऽसि वेदनस्य वदाशु मे ।
119571 ततस्त्वां बोधयिष्यामि कारणाकारणक्रमम् ॥ ४६ ॥
119572
119573 यदि वेदनस्य वेद्योन्मुखत्वे वेद्यमेव कारणमिति कारणज्ञोऽसि तर्हि
119574 तत्स्वाभिप्रेतमाशु वद । ततस्त्वदुक्त्यनन्तरं त्वदभिप्रेतं कारनमकारणमेव
119575 येन क्रमेण संपद्यते तं क्रमं त्वां बोधयिष्यामीत्यर्थः ॥ ४६ ॥
119576
119577 वेद्यवेदनरूपस्य चेत्यसंचेतनस्य मे ।
119578 अकारणं कारणतां यद्यातं तव तद्वद ॥ ४७ ॥
119579
119580 पृष्ठमेवार्थं स्फुटीकर्तुं पुनरनुवदति-वेद्येति । सामान्यतो
119581 वेद्यवेदनरूपस्य विशेषतश्चेत्यसंचेतनस्य मिथ्यात्वादकारणं
119582 कारणत्वाक्षममेव वेद्यं कारणतां यातमिति यत्तवाभिप्रेतं तद्वदेत्यर्थः ॥ ४७
119583 । ।
119584
119585 शिखिध्वज उवाच ।
119586
119587 चेत्यचेतनरूपस्य वेद्यसंवेदनाकृतेः ।
119588 इयं पदार्थसत्तेह देहादिः कारणं मुने ॥ ४८ ॥
119589
119590 शिखिध्वजः पृष्टं स्वाभिप्रेतं स्फुटमाह-चेत्येति ।
119591 देहादिर्बाह्याध्यात्मिकपदार्थसत्ता ॥ ४८ ॥
119592
119593 शरीरादितयोदेति वेदनं वस्तुसत्तया ।
119594 असत्याभासया स्पन्दो यथा पवनलेखया ॥ ४९ ॥
119595
119596 वेदनस्य देहादिसत्ता कथं कारणं तत्राह-शरीरेति । यतो वेदनं
119597 शरीरादिवस्तुसत्तया निमित्तभूतया स्वयमपि मूषानिषिक्तधातुद्रव इव
119598 शरीराद्याकारेणोदेति । अमूर्ते वेदने मूर्तदेहाद्याकारताया
119599 वास्तवत्वायोगाद्विशिनष्टि-असत्याभासयेति ॥ ४९ ॥
119600

119601 असत्तां वस्तुसत्ताया नावगच्छाम्यहं यथा।
119602 अहंत्ववेदनं चित्तबीजं समुपशाम्यति॥ ५०॥
119603
119604 यथा चित्तबीजमहंत्ववेदनं समुपशाम्यति तथा देहादिवस्तुसत्ताया असत्त्वं
119605 नावगच्छामि। अतस्तदसत्त्वं यथावगम्यते तथोपदिशेति भावः॥ ५०॥
119606
119607 कुम्भ उवाच।
119608
119609 विद्यते यदि देहादिवस्तुसत्ता तदस्ति ते।
119610 अभावाद्देहसत्तादेः किंनिष्ठं तव वेदनम्॥ ५१॥
119611
119612 एवं पृष्टः कुम्भो वेदनस्य विषयाकारेणोत्पत्तिभ्रमवारणाय
119613 देहादिदृश्यासत्त्वं प्रतिजानीते-विद्यते इति। देहादिवस्तुसत्ता यदि विद्यते तत्तर्हि ते
119614 तवाभिमतं वेदनस्य तन्निमित्तं तदाकारत्वं स्यात् तदेव दुर्लभमिति वेदनं
119615 किनिष्ठं किंविषयम्। निर्विषयमेवेत्यर्थः॥ ५१॥
119616
119617 शिखिध्वज उवाच।
119618
119619 यस्योपलभ्यते किंचित्स्वरूपं कलनात्मकम्।
119620 असद्रूपं कथं तत्स्यात्प्रकाशः स्यात्कथं तमः॥ ५२॥
119621
119622 प्रत्यक्षमुपलभ्यमानस्य देहादेः कथमपलाप इति राजा पृच्छति-यस्येति।
119623 सत्त्वेवोपलभ्यमानस्यासत्त्वप्रतिज्ञा विरुद्धेति दृष्टान्तेनाप्याह-प्रकाश इति॥
119624 ५२॥
119625
119626 हस्तपादादिसंयुक्तः क्रियाफलविलासवान्।
119627 सदानुभूयमानोऽयं देहो नास्ति कथं मुने॥ ५३॥
119628
119629 कुम्भ उवाच।
119630
119631 कारणं यस्य कार्यस्य भूमिपाल न विद्यते।
119632 विद्यते नेह तत्कार्यं तत्संवित्तिस्तु विभ्रमः॥ ५४॥
119633
119634 नोपलम्भनमात्रेण दृश्यसत्तानिर्णयौ। भ्रान्तोपलम्भेषु व्यभिचारात्। किंतु
119635 सत्सु कारणेषु यस्य कार्यस्योपलम्भस्तस्य सत्त्वम्। तानि चास्य न सन्तीत्याह##-
119636
119637 कारणेन विना कार्यं शरीरं न कदाचन।
119638 विद्यते यस्य नो बीजं तद्द्रव्यं क्वेव जायते॥ ५५॥
119639
119640 अकारणं तु यत्कार्यं सदिवाग्रेऽनुभूयते।
119641 तद्द्रष्टुर्विभ्रमाद्विद्धि मृगतृष्णाजलोपमम्॥ ५६॥
119642
119643 अविद्यमानमेव त्वं विद्धि मिथ्याभ्रमोदितम्।
119644 नातियत्नवतोऽप्येतन्मृगतृष्णाम्बु लभ्यते॥ ५७॥
119645
119646 शिखिध्वज उवाच।
119647
119648 असतो द्वीन्दुबिम्बादेर्न युक्तं कारणेक्षणम्।
119649 वन्ध्यातनयसर्वाङ्गमण्डनं कस्य राजते॥ ५८॥
119650
119651 तर्हि किमसौ देहादिर्वन्ध्यापुत्रदेहादिवत्यन्तासन्नेव स्यादिति राजा शङ्कते-असत
119652 इति॥ ५८॥

119653
119654 कुम्भ उवाच।
119655
119656 कारणेन विना कार्यं शरीराद्यस्थिपञ्जरम्।
119657 अविद्यमानमेवेदं विद्ध्यसंभवतो नृप॥ ५९॥
119658
119659 अशरीरं शरीरेष्वनवस्थेष्ववस्थितम् इत्यादिश्रुतेस्तथैव
119660 विद्वदनुभवात्कारणानिरूपणाचेष्टापत्तिरेवेयमिति कुम्भ आह-कारणेनेति॥ ५९॥
119661
119662 शिखिध्वज उवाच।
119663
119664 हस्तपादादियुक्तस्य शरीरस्य मुनीश्वर।
119665 नित्यमालक्ष्यमाणस्य पिता कस्मान्न कारणम्॥ ६०॥
119666
119667 ऐतिह्यानुमानाप्तोक्त्यनुगतसंस्थानसाम्यलिङ्गादिना पितास्य कारणं निर्ज्ञातः स
119668 कथमपलप्यत इति राजा शङ्कते-हस्तेति॥ ६०॥
119669
119670 कुम्भ उवाच।
119671
119672 कारनाभावतो राजन्पिता नाम न विद्यते।
119673 असतो यत्तु संजातमसदेव तदुच्यते॥ ६१॥
119674
119675 तस्याप्यसत्त्वे तुल्यो न्याय इति गूढाभिसंधिस्तदेवोत्तरं पुनर्वर्णयति##-
119676
119677 पदार्थानां च कार्याणां कारणं बीजमुच्यते।
119678 संभवत्यङ्ग जगति न बीजेन विनाङ्कुरः॥ ६२॥
119679
119680 तस्मान्न कारणं यस्य कार्यस्येहोपपद्यते।
119681 बीजाभावे हि तन्नास्ति तत्संवित्तिस्तु विभ्रमः॥ ६३॥
119682
119683 अवश्यं खलु यन्नास्ति निर्बीजं तन्मतिभ्रमः।
119684 द्वीन्दुत्वमरुभूम्यम्बुवन्ध्यापुत्रदशासमम्॥ ६४॥
119685
119686 शिखिध्वज उवाच।
119687
119688 पितामहानां पुत्राणां पितॄणां च जगत्त्रये।
119689 आद्यः पितामहः कस्मात्पूर्वोत्पत्तौ न कारणम्॥ ६५॥
119690
119691 गूढाभिसंधिमजानानो राजा शङ्कते-पितामहानामिति। आद्यः पितामहो
119692 हिरण्यगर्भः। स सूक्ष्मभूतलिङ्गसमष्ट्यात्मा
119693 पुत्रपितृपितामहादिसर्वव्यष्टिसमष्टिस्थूलानामुत्पत्तौ कारणं किं न
119694 स्यादित्यर्थः। पूर्वेषां प्रजास्रष्टृणां मनुमरीचिदक्षादीनां पूर्वस्य
119695 स्वकार्येभ्यः पूर्वस्य ब्रह्माण्डस्य वा उत्पत्तौ॥ ६५॥
119696
119697 कुम्भ उवाच।
119698
119699 आद्यः पितामहो यः स्यात्सोऽपि नास्त्येव भूपते।
119700 कारणाभावतो नित्यं यदा भावो न कस्यचित्॥ ६६॥
119701
119702 तस्यापि कारणं दुर्वचमित्यसत्त्वे तुल्यो न्याय इति गूढाभिसंधिरेवोत्तरमाह##-
119703 नास्त्येवेत्यर्थः॥ ६६॥
119704

कारणस्य स्वबीजस्य नित्याभावात्पितामहः।
अन्यः स दृश्यमानोपि भ्रमादन्यो न विद्यते॥ ६७॥

ननु यो देवानां प्रभवश्चोद्भवश्च विश्वाधिको रुद्रो महर्षिः। हिरण्यगर्भं
पश्यत जायमानं स नो देवः शुभया स्मृत्या संयुनक्ति इत्यादिमन्त्रवर्णेषु
तदुत्पादको जायमानं तं कृपादृष्ट्या पश्यन्नीश्वरस्तत्कारणं प्रसिद्ध एव
स कथमपलप्यत इत्याशङ्कां परिहरन् गृहाभिसंधिमुद्घाटयति##-
भेदकल्पनया भ्रमान्माययान्यो दृश्यमानोऽपि स पितामहस्तस्मादन्यो न विद्यते।
तत्कुतस्तत्र सत्यस्य चिदंशस्यापरिणामितया अकारणत्वस्य वक्ष्यमाणत्वात्
परिशेषान्मायांश एव जडस्तत्कारणं वाच्यस्तस्य चाविद्यारूपस्य बीजस्य
कारणस्य नित्योदितविद्याबाधितत्वेनेश्वरे नित्यमेवाभावादित्यर्थः॥ ६७॥

मृगतृष्णाम्बुवद्भ्रान्तिरूप एवावभासते।
पितामहार्थकारित्वमपि तस्य भ्रमात्मकम्॥ ६८॥

एतेन पितामहस्य भुवनादिसर्गार्थक्रियाकारिताप्रतिभासोऽपि व्याख्यात इत्याह##-

पितामहोदरे तस्य मिथ्याप्रत्ययतः स्थितिः।
घना तव निवृत्तैव मार्जयिष्याम्यथेतरत्॥ ६९॥

इत्थं मदुक्तयुक्त्या तव पितामहादेः स्वशरीरान्तस्यैतस्य
कार्यपरम्पराप्रबन्धस्य मिथ्येति यौक्तिकप्रत्ययतो घना
सत्यत्वेनायन्तदृढीकृता स्थितिर्निवृत्तैव। अथ
इतरत्प्रतिभासमात्रावशिष्टांशमपि तत्त्वसाक्षात्कारपर्यन्तेनोपदेशेन
मार्जयिष्यामीत्यर्थः॥ ६९॥

तस्माच्चिदात्मकतयात्मनि चित्ततोऽयं नित्यं स्वयं कचति भूमिप देवदेवः।
तेनैव पद्मज इति स्वयमात्मनात्मा प्रोक्तः स्वरूप इति शान्तमिदं समस्तम्॥
७०॥

उक्तमेवार्थं संगृह्योपसंहरति-तस्मादिति। हे भूमिप
तस्माच्चिद्व्यतिरिक्तस्योक्तयुक्त्या असत्त्वाच्चिदेवायं देवदेवः प्रागुक्त ईश्वरो
हिरण्यगर्भादिस्तम्बपर्यन्तसर्गपरम्परात्मना नित्यं यत्कचति तदात्मा
चिदात्मकतया आत्मन्येव कचति नान्यदणुमात्रमपि संपादयति संपद्यते वा। तेन
स्वयमात्मना आत्मैव स्वरूपः पद्मज इत्यादिनामरूपकल्पनेन प्रोक्तः सर्वाणि
रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन्यदास्ते इत्यादिश्रुतिभिः इति एवं
पर्यालोचने इदं समस्तं द्वैतं शान्तं ब्रह्मैवेत्यर्थः॥ ७०॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाणप्रकरणे पू०
शिखिध्वजावबोधनं नाम चतुर्नवतितमः सर्गः॥ ९४॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
शिखिध्वजावबोधनं नाम चतुर्नवतितमः सर्गः॥ ९४॥

पञ्चनवतितमः सर्गः ९५

शिखिध्वज उवाच।

आब्रह्मस्तम्बपर्यन्तं यद्द्ययं भासते भ्रमः।
अर्थक्रियासमर्थश्च तत्कथं दुःखकारणम्॥ १॥

119757 घनतातानवेनात्राविद्योपशमनक्रमः।
119758 शिखिध्वजस्य बोधेन विश्रान्तिश्चोपवर्ण्यते॥
119759
119760 मृगतृष्णाम्बुवद्भ्रान्तिरूप एवावभासते इति यदुक्तं तत्र मृगतृष्णादेः
119761 स्नानपानाद्यर्थक्रियासामर्थ्यादयदद्दशनान्मज्जनमरणादिदुःखकारणत्वादर्स्
119762 हनाच्च विषमो दृष्टान्त इति राजा शङ्कते-आब्रह्मेति। तत्तर्हि अर्थक्रियासमर्थो
119763 दुःखकारणं चायं कथमित्यन्वयः॥१॥
119764
119765 कुम्भ उवाच।
119766
119767 एवं जगद्भ्रमस्यास्य भावनं तावदाततम्।
119768 शिलीभूतस्य शीतेन सलिलस्येव रुक्षता॥२॥
119769
119770 सत्यसंकल्पभावनाद्दढीकृतस्य मिथ्यार्थस्यार्थक्रियासामर्थ्यं
119771 दुःखकारणत्वं च दैवासुरमायानिर्मितशास्त्रास्त्रहस्त्यश्वसेनादेः प्रसिद्धमेव
119772 किं वाच्यं जगदीऽस्वरमायानिर्मितस्य प्रपञ्चस्येत्याशयेनोत्तरमाह-एवमिति।
119773 अस्य सर्गात्मकस्य जगद्भ्रमस्य प्राणिकर्मोपभोगार्थत्वात् एवं
119774 त्वदुक्तप्रकारमर्थक्रियासामर्थ्यं दुःखादिकारणत्वं चास्ति।
119775 सत्यसंकल्पस्येश्वरस्य भावनमेव तत्तदर्थक्रियाद्यात्मना आततम्। यथा शीतेन
119776 शिलीभूतस्य सलिलस्य चिरकालेन स्फटिकादिभावेन परिणामाद्रूक्षता
119777 पीठपात्राद्यर्थक्रियासामर्थ्यमाततं तद्वदित्यर्थः॥२॥
119778
119779 अज्ञानं शिथिलीभूतमेवं नष्टं विदुर्बुधाः।
119780 न नाशेन विनोदेति पूर्वसंस्थानविच्युतिः॥३॥
119781
119782 अत एव मूलाज्ञानस्य ज्ञानाभ्यासपरिपाकक्रमेण शिथिलीभावे जगतः
119783 सूक्ष्मतापत्तिक्रमादेव सहाज्ञानेन नाश इत्याह-अज्ञानमिति। अज्ञाननाशं
119784 विना जगत्संस्थानबाधो नास्तीत्याह-नेति॥३॥
119785
119786 तनुत्वं सर्वबोधस्य यत्तदेव हि कारणम्।
119787 सर्गोपशमसंपत्तौ प्रतिपन्ने परे पदे॥४॥
119788
119789 अज्ञानशिथिलीभावे च निरोधाभ्यासेन बाह्यधीवृत्तितानवं कारणमित्याह##-
119790
119791 तानवं दृश्यते यस्य तस्यानुक्रमतः स्वयम्।
119792 पूर्वसंस्थानविगमात्प्रशमोऽप्युपपद्यते॥५॥
119793
119794 अत एव लोकेऽपि अपक्षयापरपर्यायतानवपूर्वक एव स्थूलभावानां विनाशः
119795 प्रसिद्ध इत्याह-तानवमिति। यस्य देहादेः। प्रशमो नाशः॥५॥
119796
119797 अनेनैव क्रमेणैवं त्वमादिपुरुषो नृपः।
119798 भ्रमाकारोदयं विद्धि मृगतृष्णाम्बुवत्स्थितम्॥६॥
119799
119800 एवं दर्शितप्रकारेण अज्ञानशैथिल्यक्रमेण जगद्बाधादेव तव
119801 नित्यसिद्धपूर्णतालक्षणपुरुषस्वभावस्थितिसिद्धिरित्याह-अनेनेति।
119802 मृगतृष्णाम्बुवद्भ्रान्तिरूप एवावतिष्ठते इति प्रागुक्तजगत्स्थितिरप्येवंरीत्यैव
119803 बोद्धव्येत्याह-भ्रमाकारोदयमिति॥६॥
119804
119805 एषा पितामहाभावेऽप्यसती भूतसंततिः।
119806 न कदाचन तत्सिद्धं यदसिद्धेन साध्यते॥७॥
119807
119808 शङ्कोत्तरमुपसंहृत्य प्रस्तुतमेव निगमयन्नाह-एषेति॥७॥

119809
119810 अयं भूतोपलम्भो हि मृगतृष्णाम्बिवोदितः।
119811 विचाराद्विलयं याति शुक्तौ रजतधीरिव॥ ८॥
119812
119813 तस्य फलं दर्शयति-अयमिति॥ ८॥
119814
119815 कारणाभावतः कार्यमभूत्वा भवतीति यत्।
119816 मिथ्याज्ञानादृते तस्य न रूपमुपपद्यते॥ ९॥
119817
119818 अत एव जगतो भ्रान्तिरेव स्वरूपं नान्यदित्याह-कारणेति॥ ९॥
119819
119820 मिथ्यादृष्टिप्रेक्षितं तुन कदाचन विद्यते।
119821 मृगतृष्णाम्भसा केन घटकाः परिपूरिताः॥ १०॥
119822
119823 अत एव मिथ्येति दृष्टं सहार्थक्रियया निःस्वरूपतामेवापद्यत इत्याह##-
119824
119825 शिखिध्वज उवाच।
119826
119827 स्रष्टुराद्यस्य परमं ब्रह्म कस्मान्न कारणम्।
119828 अनन्तमजमव्यक्तमम्बरं शान्तमच्युतम्॥ ११॥
119829
119830 तर्हि पितामहस्य निर्विशेषं ब्रह्मैव कुतो न कारणम्। न च परिणामित्वेन
119831 तस्यानित्यत्वापत्तिः। क्रमिकसर्वपरिणामानुवृत्तिबलादेव जातिवत्तस्य
119832 नित्यत्वोपपत्तेरिति राजा शङ्कते-स्रष्टुरिति॥ ११॥
119833
119834 कुम्भ उवाच।
119835
119836 हेतुत्वाभावतो ब्रह्म कार्यत्वाभावतस्तथा।
119837 अद्वैतेनातिगन्तात्मा न च कार्यं न कारणम्॥ १२॥
119838
119839 कुम्भः श्रुतियुक्त्यनुभवविरोधान्नैवमित्याह-हेतुत्वेति।
119840 तदेतद्ब्रह्मापूर्वमनपरम् इति श्रुत्या
119841 पूर्वत्वलक्षणहेतुत्वस्यापरत्वलक्षणकार्यत्वस्य च निषेधात् नेह नानास्ति किंचन इति
119842 श्रुत्या द्वैतमात्रनिषेधात् असङ्गो ह्ययं पुरुषः
119843 इत्यादिश्रुतेश्चानुवृत्त्याद्यघटनात् कूटस्थस्य परिणामायोगाच्च
119844 सर्वप्रपञ्चातिगन्ता आत्मा शुद्धं ब्रह्म न कार्यं नापि कारणमित्यर्थः॥ १२॥
119845
119846 अकर्तृकर्मकरणमकारणमबीजकम्।
119847 अप्रतर्क्यमविज्ञेयं ब्रह्म कर्तृ कथं भवेत्॥ १३॥
119848
119849 कारकान्तराप्रसिद्धेस्तत्प्रयुक्तस्वातन्त्र्यलक्षणं कर्तृत्वं त्वस्य
119850 दूरनिरस्तमित्याह-अकर्त्रिति। प्रयोज्यकर्तुरप्रसिद्धौ प्रयोजककर्तृताप्यस्य
119851 दुर्लभेति द्योतनाय अकर्त्रिति। अकारणं निमित्तशून्यमबीजकमुपादानशून्यम्॥ १३॥
119852
119853 अकारणत्वात्कार्यत्वरहितं तज्जगद्भवेत्।
119854 अद्वैतैक्यमनाद्यन्तं तदाद्यमुपलम्भनम्॥ १४॥
119855
119856 निर्धर्मकत्वादेव तद्ब्रह्म अकारणत्वात्कार्यत्वलक्षणधर्माभ्यामपि रहितं
119857 भवेदिति हेतोः कार्यकारणात्मकं जगत्संपन्नमिति यदि संभावयसि तर्हि तज्जगत्
119858 द्वैतैक्यलक्षणेन वस्तुकृतपरिच्छेदेन
119859 आद्यन्तलक्षणैर्देशकालकृतपरिच्छेदैश्च रहितं सदाद्यमुपलम्भनं
119860 चिदेकरसं ब्रह्मैव संपन्नमित्यपि संभावय। तदा क्व जगद्भावः

119861 कार्यकारण्यता वेति भावः ॥ १४ ॥
119862
119863 अप्रतर्क्यमविज्ञेयं यच्छिवं शान्तमव्ययम् ।
119864 तत्कथं कस्य केनैव कर्तृ भोक्तृ कदा भवेत् ॥ १५ ॥
119865
119866 इत्थमेव तस्य जीवभावभ्रान्तिप्रसञ्जिते कर्तृत्वभोक्तृत्वे अपि निरसनीये इत्याह##-
119867 ॥ १५ ॥
119868
119869 अतो नेदं कृतं किंचिज्जगदादि न विद्यते ।
119870 न कर्तासि न भोक्तासि सर्वं शान्तमजं शिवम् ॥ १६ ॥
119871
119872 फलितमाह-अत इत्यादिना ॥ १६ ॥
119873
119874 कारणाभावतः कार्यं न कस्यचिदिदं जगत् ।
119875 अकारणत्वात्कार्यत्वं भ्रमाद्विद्धि त्विदं जगत् ॥ १७ ॥
119876
119877 अकार्यत्वाच्च नास्त्येतत्सर्ग इत्थं न विद्यते ।
119878 यदा न कस्यचित्कार्यं कारणस्य जगत्तदा ॥ १८ ॥
119879
119880 उपक्रान्तं प्रस्तुतोपयोगितया स्मारयति-यदेति ॥ १८ ॥
119881
119882 पदार्थाभावसंसिद्धिस्तत्सिद्धौ कस्य वेदनम् ।
119883 एवं तु वेदनाभावे नास्त्यहंत्वस्य कारणम् ॥ १९ ॥
119884
119885 प्रस्तुतं निगमयति-एवं त्विति ॥ १९ ॥
119886
119887 अतः शुद्धो विमुक्तोऽसि कैवोक्तिर्बन्धमोक्षयोः ।
119888
119889 शिखिध्वज उवाच ।
119890
119891 बुद्धोऽस्मि भगवन्युक्तियुक्तमुक्तं त्वयोत्तमम् ॥ २० ॥
119892
119893 एवमहन्तानिरासोपायमुपदिश्य परिशिष्टमात्मतत्त्वमनुभावयति-अत इति ।
119894 उपदिष्टार्थं स्वानुभवेनानुमोदमानो राजा युक्ततमं
119895 त्वयोपदिष्टमित्यनुवदति-बुद्धोऽस्मीत्यादिना ॥ २० ॥
119896
119897 कारणाभावतः कर्तृनेदं ब्रह्मेति वेद्म्यहम् ।
119898 कर्त्रभावाज्जगन्नास्ति तेन नास्ति पदार्थदृक् ॥ २१ ॥
119899
119900 पदार्थदृक् नामरूपदृष्टिः ॥ २१ ॥
119901
119902 नातश्चित्तादि तद्बीजं नातोऽहंतादि किंचन ।
119903 एवंस्थिते विशुद्धोऽस्मि विबुद्धोस्मि शिवोस्मि वा ॥ २२ ॥
119904
119905 नमो मह्यं परं चेत्यंन् न किंचिदिति बोधितः ।
119906 पदार्थवेदनादित्थमसदेवावभासते ।
119907 अहमाद्यन्तमेतेन शान्तमासे खकोशवत् ॥ २३ ॥
119908
119909 चित्स्वरूपात्परमन्यच्चेत्यं न किंचिदिति त्वयाहं बोधितः । इत्थं त्वदुपदिष्टयुक्त्या
119910 सर्वपदार्थानां विमर्शेन वेदनादध्यारोपे अहमादिविवेकेनापवादे अहमन्तं
119911 दृश्यजातमसन्नास्त्येवेत्यवभासते इति परेणान्वयः । एतेन सर्वद्वैतबाधेन
119912 खकोशवत् शान्तं निर्विक्षेपमासे ॥ २३ ॥

119913
119914 जगत्पदार्थप्रविभागदृष्टिः सदेशदिक्कालकलाक्रियौघा।
119915 अहो नु कालेन चिरेण शान्ता ब्रह्मैव शान्तं स्थितमव्ययात्म॥ २४॥
119916
119917 तामेव स्थितिमभिनयन्नुपसंहरति-जगदिति द्वाभ्याम्।
119918 देशदिक्कालकलाक्रियौघैः सहिता जगत्पदार्थप्रविभागदृष्टिर्मम चिरेण कालेन
119919 शान्ता। अहो इत्याश्चर्ये। तथा च शान्तमव्ययात्म निर्विकारं ब्रह्मैव स्थितं
119920 परिशिष्टमित्यर्थः॥ २४॥
119921
119922 शाम्यामि निर्वामि परिस्थितोऽस्मि न यामि नोदेमि न चास्तमेमि।
119923 तिष्ठामि तिष्ठ स्वयथास्थितात्मा [स्वयथास्थितात्मेत्यादिः कर्मधारयः।
119924 ] शिवं शुभं पावनमौनमस्मि॥ २५॥
119925
119926 परितः पूर्णभावेन स्थितोऽस्मि। अहमेवं तिष्ठामि त्वमपि स्वः प्रत्यगेकरसो
119927 यथास्थितात्मा तिष्ठेति अभयं त्वा गच्छताद्याज्ञवल्क्य यन्नोभगवन्नभयं
119928 वेदयसे इति जनकोक्तिवत्कुम्भं प्रति राजोक्तिः। एवं स्थितौ त्वदात्मैवाहं शुभं
119929 परमपुरुषार्थरूपं पावनं शुद्धं मौनं वागगम्यं शिवं
119930 निरतिशयसुखमेव सदास्मीत्यर्थः॥ २५॥
119931
119932 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वाणप्रकरणे पू० चू०
119933 शिखिध्वजविश्रान्तिर्नाम पञ्चनवतितमः सर्गः॥ ९५॥
119934
119935 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
119936 शिखिध्वजविश्रान्तिर्नाम पञ्चनवतितमः सर्गः॥ ९५॥
119937
119938
119939 षण्णवतितमः सर्गः ९६
119940
119941 श्रीवसिष्ठ उवाच।
119942
119943 इति ब्रह्मणि विश्रान्तिमवाप्य स शिखिध्वजः।
119944 मुहूर्तमासीत्संशान्तमना निर्वातदीपवत्॥ १॥
119945
119946 प्रतिबुद्धस्य राज्ञोऽत्र दृश्यसत्तावमार्जनम्।
119947 यथा भवति निःशेषं तथा कुम्भेन वर्ण्यते॥
119948
119949 अखण्डब्रह्माकारवृत्त्युदयेन सम्यक् शान्तं बाह्यवृत्तिप्रशमनोपलक्षितं
119950 मनो यस्य तथाविधः सन्निर्वातदीपवन्निश्चल आसीदित्यर्थः॥ १॥
119951
119952 निर्विकल्पसमाधानपरेणाशु विविक्षितम्।
119953 स्वलीलयेति कुम्भेन झटित्येव प्रबोधितः॥ २॥
119954
119955 अथ यदा तेन राज्ञा अखण्डाकारवृत्तिलक्षणं विकल्पमप्यवधूय
119956 क्षीराब्धिपतितोदकबिन्दुवन्मनसो ब्रह्मीभावमेवापाद्य ब्रह्मण्यैकरस्येन
119957 विविक्षितं प्रवेष्टुमभिमुखीभूतं तदा तस्य इति एवंरूपामवस्थामाशु उपलक्ष्य
119958 कुम्भेन वक्ष्यमाणदृश्यमार्जनोपायादिविवक्षया स झटित्येव प्रबोधित
119959 इत्यर्थः॥ २॥
119960
119961 कुम्भ उवाच।
119962
119963 राजन्नज्ञाननिद्रातः प्रबुद्धोऽसि शिवः स्थितः।
119964 कार्यं नास्तमयेनैव न चानस्तमयेन ते॥ ३॥

ननु सर्वदृश्यानामखण्डाकारवृत्तेरप्यस्तमयेन निरतिशयानन्दसमुद्रे
विविक्षुरहं किमिति त्वया व्युत्थापनेन विघ्नितः पुनस्तन्मम दुर्लभमिति राज्ञो
विवक्षामभिलक्ष्य कुम्भ उवाच-राजन्निति। सति अज्ञाने तद्दुर्लभम्। नष्टे
त्वज्ञाने सर्वदृश्यास्तमयोऽस्तु मा वा। सद्विभातं तत्सदैवानावृतं
सुलभमेवेति भावः॥ ३॥

सकृदेव विभातात्मा नष्टानिष्टपदात्मकः।
कलाकलननिर्मुक्तो जीवन्मुक्तोऽङ्ग सांप्रतम्॥ ४॥

श्रीवसिष्ठ उवाच।

कुम्भेन बोधितस्त्वेवं स बभूवावबोधवान्।
विनिर्गतो रराजोच्चैर्महामोहसमुद्गकात्॥ ५॥

विश्रान्तधीः क्षणेनैव पश्यन्दृश्यस्य वस्तुनः।
असत्तामेव मुक्तात्मा लीलया समुवाच ह॥ ६॥

व्युत्थानकालेऽपि दृश्यस्यासत्तामेव पश्यन् लीलया अभिनवस्य स्वबोधस्य
चिरपरिपक्वकुम्भबोधसंवादपरीक्षालीलया॥ ६॥

शिखिध्वज उवाच।

ज्ञातप्रायमपीदं तु यत्पृच्छामि तदुच्यताम्।
भूयो निपुणबोधाय मम मानद मोदद॥ ७॥

शिवे शान्ते निराभासे पदेऽनुल्लसितात्मनि।
द्रष्टृदर्शनदृश्याख्यो विश्वात्मा प्रत्ययः कुतः॥ ८॥

न उल्लसितस्तत्त्वतः प्रकटीभूत आत्मा स्वरूपं यस्य तथाविधे। अविद्यावृते इति यावत्।
प्रतीयत इति प्रत्ययोऽर्थः प्रतीतिः प्रत्ययो बोधश्च कुतः।
कस्मान्निमित्तादालम्बनाच्चेत्यर्थः। किं सत उतासतः। आद्ये विकारबाधयोरयोगः।
द्वितीये सत्त्वेन प्रतिभासानुपपत्तिरिति भावः॥ ८॥

कुम्भ उवाच।

साधु पृष्टं महाराज राजसे वाथ भास्वरः।
एतदेव हि ते शिष्टं ज्ञातुं यत्तदिदं शृणु॥ ९॥

एवं पृष्टः कुम्भस्तदुभयमध्यासेनोपपादयिष्यन् प्रश्नमुपपन्नत्वेन
प्रष्टारं च वक्ष्यमाणार्थग्रहणसामर्थ्येन प्रशंसति-साध्विति।
प्रागुपदिष्टमात्मतत्त्वमवाप्य निरस्ताज्ञानावरणत्वाद्भास्वरः सन् राजसे
शोभसे। राजसे वाथ भास्करः इति पाठे तु इवार्थे वाशब्दः। अथ
तत्प्रबोधानन्तरं राहुनिर्मुक्तभास्कर इव राजसे इत्यर्थः॥ ९॥

यदिदं दृश्यते किंचिज्जगत्स्थावरजंगमम्।
सर्वं सर्वप्रकाराढ्यं कल्पान्ते तद्विनश्यति॥ १०॥

तत्राध्याससामग्रीं दर्शयितुमारोप्य
संस्कारसहकृताज्ञानशबलमधिष्ठानं दर्शयिष्यन् पूर्वसर्गप्रलयं
दर्शयति-यदिदमिति॥ १०॥

120017 ततः स्तिमितगम्भीरं न तेजो न तमस्ततम् ।
120018 महाकल्पविलासान्ते सत्सारमवशिष्यते ॥ ११ ॥
120019
120020 तत्परिशिष्टमधिष्ठानं दर्शयति-तत इत्यादिना ॥ ११ ॥
120021
120022 चिन्मात्रममलं शान्तमाभातं परमं नभः ।
120023 समस्तकलनोन्मुक्तं युक्तं परमया धिया ॥ १२ ॥
120024
120025 यत्परमया स्वतत्त्वसाक्षात्कारधिया युक्तं सदेकोदितमत्यच्छं भवतीति
120026 परेणान्वयः ॥ १२ ॥
120027
120028 यदेकोदितमत्यच्छं शान्तमाततमुज्ज्वलम् ।
120029 परमात्मात्मकं तेजस्तिमितं ज्ञप्तिमात्रकम् ॥ १३ ॥
120030
120031 अप्रतर्क्यमविज्ञेयं समं शिवमनिन्दितम् ।
120032 ब्रह्मनिर्वाणमापूर्णमापूर्णोदितसंविदा ॥ १४ ॥
120033
120034 आसमन्तात्पूर्णोदितया संविदा स्वबोधेन आपूर्णम् ॥ १४ ॥
120035
120036 अणीयसामणीयश्च स्थविष्ठं च स्थवीयसाम् ।
120037 गरीयसां गरिष्ठं च श्रेष्ठं च श्रेयसामपि ॥ १५ ॥
120038
120039 ईदृशं तत्परं सूक्ष्मं तस्याग्रे यदिदं नभः ।
120040 अणोः पार्श्वे महामेरुरिव स्थूलात्म लक्ष्यते ॥ १६ ॥
120041
120042 अणीयसामणीयः इत्येतद्दृष्टान्तेन स्फुटयति-ईदृशमिति । पृथिव्यपेक्षया
120043 उत्तरोत्तरं सूक्ष्मतरत्वेन प्रसिद्धेभ्योऽपि परमसूक्ष्मत्वेन प्रसिद्धमपीदं
120044 नभः ॥ १६ ॥
120045
120046 ईदृशं तत्परं स्थूलं यस्याग्रे यदिदं जगत् ।
120047 परमाणुवदाभाति क्वचिदेव न भाति च ॥ १७ ॥
120048
120049 स्थविष्ठं च स्थवीयसाम् इत्येतदपि तथा स्फुटयति-ईदृशमिति ॥ १७ ॥
120050
120051 विश्वात्मकचनं नाम पदेऽसंभववेधसः ।
120052 तदहंवेदनं विद्धि विराडात्मा जगत्स्थितम् ॥ १८ ॥
120053
120054 ईदृशे मायाशबले पदे अधिष्ठाने
120055 प्राक्तनजगत्संस्कारोद्बोधादुद्भूततत्तत्प्राणिकर्मानुसारि यदध्यासेन
120056 विश्वात्मकचनं तदेव । अः वासुदेवस्तस्मात्संभवो यस्य तथाविधस्य वेधसो
120057 हिरण्यगर्भस्य अहंवेदनमहंभावलक्षणं ज्ञानाध्यासं विद्धि । तत्र
120058 विषयत्वेन जगत्स्थितं तदेव विराडात्मा विषयाध्यास इत्यर्थः ॥ १८ ॥
120059
120060 वातस्य वातस्पन्दस्य यथा भेदो न विद्यते ।
120061 शून्यत्वखत्वोपमयोश्चिन्मात्राहंत्वयोस्तथा ॥ १९ ॥
120062
120063 अध्यासपक्षे चाधिष्ठानसत्तयैव कार्यकारणोभयसत्त्वनिर्वाहात्तयोः सत्त्वेन
120064 प्रतीतेर्ज्ञानिन बाधस्य सत्कौटस्थ्यस्य च
120065 नानुपपत्तिरित्यभिप्रेत्याध्यस्तस्याधिष्ठानादपृथक्त्वं सदृष्टान्तमाह##-
120066 खत्वं च निरपेक्षत्वादधिष्ठानदृष्टान्तौ । स्पन्दः शून्यत्वं च
120067 देशप्रतियोगिसापेक्षत्वादध्यस्तदृष्टान्तौ ॥ १९ ॥
120068

120069 जलेऽस्ति देशकालान्ते यथोर्म्यादि सकारणम् ।
120070 परेऽसद्देशकालान्ते [परेऽस्त्यदेशकालान्ते इति मुद्रितपुस्तके पाठः ।]
120071 तथा जगदकारणम् ॥ २० ॥
120072
120073 असत्कार्यवादिमतानुप्रवेशो मा भूदित्यधिष्ठानसत्तयैव कार्यस्य ब्रह्मणि
120074 त्रैकालिकसत्त्वमपि दृष्टान्तेन दर्शयन् विशेषमाह-जले इति ।
120075 देशकालाभ्यामन्तौ परिच्छेदौ यस्मिन् । जलस्यान्तरालिककारणत्वाज्जलकारणेनैव
120076 सकारणम् । ब्रह्मणो मूलकारणत्वादकारणम् ॥ २० ॥
120077
120078 हेम्न्यस्ति देशकालान्ते कटकादि सकारणम् ।
120079 ब्रह्मण्यदेशकालान्ते तथा जगदकारणम् ॥ २१ ॥
120080
120081 ईदृशं तद्वरिष्ठं च जगद्राज्यंन् तदक्षतम् ।
120082 न द्वैतममलं शान्तं जगत्तृणलवायते ॥ २२ ॥
120083
120084 श्रेष्ठं च श्रेयसामपि इत्येतदप्यध्यासेनैव स्फुटयति-ईदृशमिति । जगदेव
120085 राज्यं यस्य तज्जगद्राज्यंन् महाराजभूतं तद्ब्रह्मेति अरिष्ठं श्रेष्ठमित्यर्थः ।
120086 यतो जगदध्यस्तत्वात्तृणलववत्तुच्छमतो न द्वैतमद्वैतं तदित्यर्थः ॥ २२ ॥
120087
120088 ईदृशं तत्परं श्रेयस्तस्मिन्सति यदीश्वरे ।
120089 जगत्पदार्थसार्थश्रीः सा सत्तामेति वेदनात् ॥ २३ ॥
120090
120091 तस्यैव सर्वाधिष्ठानत्वात्तत्सत्तयैव जगतः सत्तालाभ इत्याह-ईदृशमिति ॥ २३ ॥
120092
120093 तत्सारमेकमेवेह विद्यते भूपते ततम् ।
120094 एकमेकान्तचित्कान्तं नैकमप्यद्वितावशात् ॥ २४ ॥
120095
120096 एकान्तचिच्चिन्मात्रस्वरूपम् । कान्तं निरुपाधिकप्रेमपदम् । अद्विता द्वितीयासहिष्णुता
120097 तद्वशाद्यावार्याभावादेकत्वसंख्याया एव द्वितीयत्वापत्तेश्च
120098 एकमेकत्वसंकुयावदपि न ॥ २४ ॥
120099
120100 तस्माद्द्वितीया कलना काचिन्नाम न विद्यते ।
120101 आत्मतत्त्वमलं भातं तदेवापूर्णमक्षयम् ॥ २५ ॥
120102
120103 आसमन्तात्पूर्णम् ॥ २५ ॥
120104
120105 संस्थितं सर्वदा सर्वं सर्वाकारमिवोदितम् ।
120106 अदृश्यत्वादलभ्यत्वान्न तत्कार्यं न कारणम् ॥ २६ ॥
120107
120108 चक्षुरादिभिरदृश्यत्वात्करादिभिरलभ्यत्वाच्च न कार्यं
120109 ज्ञानकर्मप्रयुक्तातिशयानास्पदं नापि कारणं ज्ञानकर्मनिर्वर्तकमित्यर्थः ॥
120110 २६ ॥
120111
120112 प्रत्यक्षादेरगम्यत्वात्किमप्येव तदुत्तमम् ।
120113 सर्वं सर्वात्मकं सूक्ष्ममच्छानुभवमात्रकम् ॥ २७ ॥
120114
120115 किमपि प्रत्यक्षादिलौकिकमानसिद्धार्थविलक्षणमेव स्वानुभवैकगम्यं
120116 तदुत्तमं निरतिशयानन्दस्वरूपं स्वयमेव सर्व सर्वस्यात्मा सर्वे चास्यात्मान इति
120117 सर्वात्मकम् ॥ २७ ॥
120118
120119 आख्यानाख्यास्वरूपस्य निराभासप्रभादृशः ।
120120 सतो वाप्यसतो वाथ कथं कारणता भवेत् ॥ २८ ॥

120121
120122 व्यवहारदृष्टौ आख्यानाख्यास्वरूपस्य शब्दतदर्थसर्ववस्तुस्वरूपस्य
120123 व्यक्ताव्यक्तस्वरूपस्य वा स्वस्य स्वं प्रत्येव कथं कारणता भवेत्।
120124 परमार्थदृष्टौ तु निराभासप्रभादृशः
120125 निराभासप्रभाभिन्नदृङ्मात्रस्वभावस्याद्वयस्य कथं कारणता भवेत्। किं
120126 च व्यवहारे अद्वयमसत् द्वैतं सत्। परमार्थे त्वद्वयं सत् द्वैतमसत्। न हि
120127 सदसतोरपि केनचित्परस्परं कार्यकारणता वक्तुं शक्येत्यर्थः॥ २८॥
120128
120129 यद्वै न कस्यचिद्बीजमनाख्यत्वान्न कारणम्।
120130 न किंचिज्जायते तस्मात्प्रमाणादि ततात्मनः॥ २९॥
120131
120132 प्रमाणादिमानमेयमित्यात्मकं जगन्न जायते व्यवहारे आत्मन एव तदात्मत्वात्। न
120133 ह्यात्मा आत्मनो जायत इत्यर्थः॥ २९॥
120134
120135 अकर्तृकर्मकरणं सत्यंन् चिद्घनमक्षतम्।
120136 आत्मरूपमनाभासं स्वयंवेदनमक्षतम्॥ ३०॥
120137
120138 तस्मान्न जायते किंचित्परस्माद्ब्रह्मणो मुने।
120139 कथं किं लभ्यते केन यथोर्म्यादि सकारणम्॥ ३१॥
120140
120141 तथा चाध्यासपक्षे न कस्यचिज्जन्मादिविक्रियेति कौटस्थ्यमेव
120142 सिद्धमित्युपसंहरति-तस्मादिति। यत्सकारणमूर्म्यादि मयोक्तं तदपि विमर्शे
120143 जलातिरिक्तं कथं लभ्यते किं वा लभ्यते। न किंचिन्न कथंचिदित्यर्थः॥ ३१॥
120144
120145 परेऽसद्देशकालान्ते तथा जगदकारणम्।
120146
120147 शिखिध्वज उवाच।
120148
120149 जलादौ यत्तरङ्गादि तत्सकारणमस्ति हि॥ ३२॥
120150
120151 एवं सत्यपि कारणे यदा कार्यकारणता नास्ति तदा
120152 अद्वयत्वादस्तदेशकालपरिच्छेदत्वादकारणे ब्रह्मणि सा नास्तीति किं
120153 वाच्यमित्याह-परे इति। जलेऽस्ति देशकालान्ते यथोर्म्यादि सकारणम्।
120154 परेऽसद्देशकालान्ते तथा जगदकारणम् इति यत्प्रागुक्तं तदेव त्वयोपरीहृतम्। तत्र
120155 वैषम्योक्त्यंशे कोऽभिप्राय इति राजा पृच्छति-जलादाविति॥ ३२॥
120156
120157 परे जगदहंतादि नाकारणमवैम्यहम्।
120158
120159 कुम्भ उवाच।
120160
120161 इदानीं तत्त्वतो ज्ञातमेतत्सत्यं महीपते॥ ३३॥
120162
120163 समुद्रस्य पञ्चीकृतजलकार्यत्वात्तत्कारणैर्भूतैर्वाय्वादिबाह्यनिमित्तैश्च
120164 तरङ्गादेः पयःपरिणामस्य सकारणत्वम्। ब्रह्मणः कारणाप्रसिद्धेरद्वयतया
120165 सहकारिकारणाभावाच्च तद्विवर्तस्याकारणकत्वमिति वैषम्यं मदभिप्रेतम्। तच्च
120166 तत्त्वज्ञानात्प्रागद्वयवस्तुसंभावनाया एवानुदयादज्ञैर्बोद्धुमशक्यम्। त्वया
120167 त्वद्वैतं वस्तु सर्वद्वैतबाधेन तत्त्वतः परिचितमिति तत्सुबोधमित्याशयेन कुम्भ
120168 उत्तरमाह-इदानीमित्यादिना॥ ३३॥
120169
120170 इदं जगदहंतादि नेह किंचिन्न विद्यते।
120171 जगच्छब्दार्थरहितं जगदस्ति शिवात्मकम्॥ ३४॥
120172

120173 यदि सर्वद्वैतबाधादकारणं तर्हि तत्र जगदस्तीत्युक्तेः कोऽभिप्रायस्तमाह##-
120174 जगद्बाधेऽप्यस्त्येवेत्यभिप्राय इत्यर्थः ॥ ३४ ॥
120175
120176 व्योम्न्येव निर्मितं शान्तं व्योम्ना सूक्ष्मतरेण च ।
120177 यथा नभसि शून्यत्वं तथेदं जगदीश्वरे ॥ ३५ ॥
120178
120179 यथा व्योम्न्येव व्योम्नोऽपि सूक्ष्मतरेण मायाव्योम्ना निर्मितं गन्धर्वनगरं
120180 मिथ्यात्वान्नित्यशान्तं व्योमसत्तयैवास्ति । यथाऽशून्येऽपि नभसि तद्विरुद्धं
120181 शून्यत्वं तत्सत्तयैवास्ति । तथा ईश्वरे मायाशबले ब्रह्मणि जगदित्यर्थः ॥ ३५ ॥
120182
120183 सदृशं स्वस्वरूपेण न वा रूपेण केनचित् ।
120184 एवंरूपं जगदिदं सम्यग्ज्ञातं शिवं भवेत् ॥ ३६ ॥
120185
120186 स्वस्वरूपेण चैतन्यैकरसेन सदृशं चिद्रूपमेव सम्यग्ज्ञातम् । अथवा
120187 केनचिद्रूपेण जडरूपेण वा न सदृशं शून्यमेवेति ज्ञातं सत् शिवं ब्रह्मैव
120188 भवेत् ॥ ३६ ॥
120189
120190 सम्यग्ज्ञानप्रभावेण विषमप्यमृतायते ।
120191 असम्यग्ज्ञातमशिवं जगद्दुःखप्रदं परम् ॥ ३७ ॥
120192
120193 नन्वशिवं कथं शिवं भवेत्तत्राह-सम्यगिति ॥ ३७ ॥
120194
120195 विषबुद्ध्यामृतमपि भुक्तं विषरसायते ।
120196 ईदृशश्च यथा वेत्ति यद्यदेष चिदीश्वरः ॥ ३८ ॥
120197
120198 ईदृशः विद्यासहायोऽविद्यासहायो वा ॥ ३८ ॥
120199
120200 तत्तथैवाशु भवति तादृग्रूपतया शिवः ।
120201 यथा ज्वाला भ्रमाज्जाता विचित्राकारविभ्रमैः ॥ ३९ ॥
120202
120203 यथा ज्वाला तिमिरादिनेत्रदोषविभ्रमैः केशोण्ड्रकादिरूपेण विचित्रा
120204 जाताप्यनन्यरूपेणैव तिष्ठति ॥ ३९ ॥
120205
120206 तिष्ठत्यनन्यरूपैव ब्रह्मसत्ता तथैव हि ।
120207 यत्परं चित्स्वरूपेण स्थितमात्मनि मन्थरम् ॥ ४० ॥
120208
120209 यच्चित्स्वरूपेण स्थितं परं ब्रह्म तदेवात्मनि मन्थरं मन्दप्रबोधं
120210 सत्तेनैवाप्रबोधेन निमित्तेन ॥ ४० ॥
120211
120212 तत्तेन देहदेह्यादिर्जगदादीव लक्ष्यते ।
120213 केवलं परमेवेत्थं परमं भासते शिवम् ॥ ४१ ॥
120214
120215 अतो जगदहंतादि प्रश्न एवेति नोचितः ।
120216 यद्वस्तु विद्यमानं सत्प्रश्नस्तत्र विराजते ॥ ४२ ॥
120217
120218 बोधदार्ढ्ये तु शिवे शान्ते इत्यादित्वत्कृतप्रश्नस्यानवकाश एवेत्याह-अत इति । इति
120219 द्रष्टृदर्शनदृश्याख्यो विश्वात्मा प्रत्ययः कुतः इति प्रश्न एव नोचितः ॥ ४२ ॥
120220
120221 प्रेक्षितं यत्तु नास्त्येव प्रेक्षाप्रश्नेन तत्र किम् ।
120222 संनिवेशं विना सत्ता यथा हेम्नो न विद्यते ॥ ४३ ॥
120223
120224 यदि जगन्नास्त्येव तर्हि कथं तत् प्रेक्षास्पष्टमनुभूयत इति प्रश्नोऽपि न कार्य

120225 इत्याह-प्रेक्षितमिति। तादृशप्रेक्षाया निर्विषयत्वे कथमिति
120226 प्रष्टव्यप्रकारस्यैवाभावादित्यर्थः॥ ४३॥
120227
120228 तथा जगदहंभावं विना नेशस्य संस्थितिः।
120229 अकारणत्वान्नास्तीदं ब्रह्मैवेत्थं विजृम्भते॥ ४४॥
120230
120231 संस्थितिः प्रश्नार्हेति शेषः॥ ४४॥
120232
120233 अजृम्भमाणमेवेदं जगत्त्वेनेव संस्थितम्।
120234 यन्मया एव तेनैव मिथः संप्रेरिताशयम्॥ ४५॥
120235
120236 ननु यदि पृथिव्यादयो न सन्त्येव तर्हि कथं यः पृथिव्यां तिष्ठन्पृथिव्या
120237 अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त
120238 आत्मान्तर्याम्यमृतः इत्यादिश्रुतेरन्तर्यामिणेश्वरेण प्रेर्यमाणा एव सर्वे
120239 भावाः स्वस्वकार्ये चमत्कुर्वन्तीति वैदिकसिद्धान्तस्तत्राह-यन्मया एवेति।
120240 मायाशबलेश्वरमयाः सर्वे भावास्तेन मायाशबलेश्वरेणैव माययैव मिथः
120241 सामग्र्यात्मना मेलनाय संप्रेरिताः सन्तः पञ्चभूतात्मके पिण्डे मायिकमेव
120242 तत्तत्कार्यचमत्कारं कुर्वन्ति। यथा मिथुनानि स्त्रीपुंसयुग्मानि यौवने काममयानि
120243 कामेन प्रेरितानि परस्परं संभोगेन पुत्राद्युत्पादनेन चमत्कुर्वन्ति। यथा वा
120244 बीजानि भूस्थानि वर्षोदकेन प्रेरितान्यङ्कुरोदयाच्चमत्कुर्वन्ति तद्वदिति परेणान्वयः
120245 ॥ ४५॥
120246
120247 चमत्कुर्वन्त्यमी भावाः पञ्चके मिथुनौघवत्।
120248 चिन्मात्र एव चिन्मात्रं चिन्मात्रेणावधीयते॥ ४६॥
120249
120250 तथा आवृतचिन्मात्रमेव चिन्मात्रेण मायिकेन नानात्मनैव नानेव भूत्वा
120251 अवधीयते तत्तत्कार्यरूपेण परिच्छिद्यते॥ ४६॥
120252
120253 नानात्मनैव नानेव स्वात्मज्ञानात्मनात्मवत्।
120254 पूर्णात्पूर्णान्युद्धरन्ति पूर्णात्पूर्णानि चक्रिरे॥ ४७॥
120255
120256 यथा तदेव चिन्मात्रं स्वात्मज्ञानात्मना स्वेनैव व्याप्तं पारमार्थिकात्मना
120257 चमत्कुरुते तद्वत् ब्रह्मण एव ब्रह्मभूतसर्गात्मना मायिकचमत्कारे तस्यैव
120258 तत्त्वज्ञानेन पारमार्थिकस्वरूपावाप्तिचमत्कारे च। पूर्णमदः पूर्णमिदं
120259 पूर्णात्पूर्णमुदच्यते। पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते इति श्रुतिमर्थत
120260 उदाहरति-पूर्णादिति। प्रलये वासनामात्रशेषेण सर्वोपाधिप्रलये मायाशबले
120261 ब्रह्मण्यप्ययं प्राप्ता जीवाः कल्पादौ भोजकादृष्टपरिपाके पुनः
120262 स्वस्वव्यष्टिसमष्ट्युपाधीन्सर्गेण यदुद्धरन्ति तत्पूर्णादपरिच्छिन्नाद्ब्रह्मणः
120263 कारणात्पूर्णान्यपरिच्छिन्नब्रह्मरूपाण्येव कार्याणि माययोद्धरन्ति। स्थितिकाले च
120264 यदवान्तरकार्यजातमैहिकामुष्मिकभोगमोक्षसाधनानि चक्रिरे तदपि पूर्णदिव
120265 पूर्णान्येव च मायया चक्रिरे॥ ४७॥
120266
120267 भवन्ति पूर्णात्पूर्णानि पूर्णमेवावशिष्यते।
120268 चिन्मात्रमेव कचति यच्चिन्मात्रमयात्मनि॥ ४८॥
120269
120270 ततो यत्तत्त्वज्ञानान्मुक्ता भवन्ति तदपि पूर्णदिव मायापगमात्पूर्णानि भवन्ति।
120271 सह भेदभ्रमेण मायापगमे पूर्णमेवावशिष्यत इति श्रुतेस्तात्पर्यार्थ इति भावः
120272 । यच्चिन्मात्रमयात्मनि सर्गवेदनं कचितं तच्चिन्मात्रे चिन्मात्रमेवाकचित्वैव
120273 कचितं नामेत्यत्रान्वयः॥ ४८॥
120274
120275 अकचित्वैव तन्नाम कचितं सर्गवेदनम्।
120276 अहं चिता चिदेवादौ भवतीव स्वयं ततः॥ ४९॥

अहंप्रत्यगात्मरूपा चिदेव सर्गादौ स्वं रूपमत्यजन्त्येवाभवन्त्येव स्वतश्चिता
स्वयमेवानन्तकं मनोरूपं भवतीव ॥ ४९ ॥

अभवन्त्येव रूपं स्वमत्यजन्ती निरामयम् ।
तेजोमयमनाद्यन्तं मनोरूपमनन्तकम् ॥ ५० ॥

सम्राट्संसारमाभासि भवतीव स्वयं वपुः ।
पश्यत्यथ सदेवेदं स्वरूपत्वात्सदेव वा ।
भावनाद्भूततामेति दृश्यं भवति च क्षणात् ॥ ५१ ॥

ततः स्थौल्यकल्पनेनाभासि सत् स्वयंभुवः सम्राट् संसारं विराड्भावेन
संसरणरूपं भवतीव । अथ व्यष्टिजीवभावेनेदं जगद्भ्रान्त्या सदेव पश्यति
परमार्थतोऽधिष्ठानसदेव वा जगति पश्यति तदंशे न भ्रान्तिरित्यर्थः । भूततां
चतुर्विधभूतग्रामताम् ॥ ५१ ॥

शान्तं जगत्प्रसररूपतया स्वभावशब्दार्थमुक्तमिदमव्यपदेश्यमेकम्
।
वस्तु स्थितं निजचमत्करणावलोकरूपं जगत्स्वरहितानुभवात्मतत्त्वम् ॥ ५२ ॥

उक्तमुपसंहरति-शान्तमिति । एवमुक्तरीत्या शान्तं स्वभावतः
शब्दार्थाभ्यां नामरूपाभ्यां मुक्तमत एवाव्यपदेश्यं स्वप्रकाशो
योऽनुभवस्तदात्मतत्त्वमेकं वस्तु निजचमत्करणं मायातदवलोकरूपं सत् जगत्
प्रसररूपतया जगदिव भूत्वास्थितमित्यर्थः ॥ ५२ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० निर्वा० पू० चू०
शिखिध्वजावबोधनं नाम षण्णवतितमः सर्गः ॥ ९६ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
शिखिध्वजावबोधनंन् नाम षण्णवतितमः सर्गः ॥ ९६ ॥

## सप्तनवतितमः सर्गः ९७

कुम्भ उवाच ।

हेम्न्यस्ति देशकालान्ते इत्थं जन्यजनिक्रमः ।
न किंचिज्जायते शान्तान्न किंचित्प्रविलीयते ॥ १ ॥

पूर्वत्राकारणं दृश्यं न जातमिति मार्जितम् ।
विमार्ज्यतेऽत्र यत्नेन दृश्यवेदनता चितः ॥

इत्थंन् विंशतितमश्लोकोक्तः समुद्रतरङ्गदृष्टान्तस्तदवान्तरवैषम्यं त्वे
दृश्यमार्जनोपयोगितयोपपादितम् । इदानीमेकविंशतितमश्लोकोक्तं
हेमकटकदृष्टान्तं तदवान्तरवैषम्यं च तथैवोपपादनीयमिति वक्तुं
कुम्भोऽनुवदति-हेम्नीति ॥ १ ॥

स्वसत्तायां स्थितं ब्रह्म न बीजं न च कारणम् ।
शुद्धानुभवमात्रं तत्तस्मादन्यन्न विद्यते ॥ २ ॥

किंचिज्जगदहंतादि तदेवानन्तमस्ति हि ।

120329 शिखिध्वज उवाच |
120330
120331 शिवे जगदहंतादि मुने नास्तीति वेद्म्यहम् || ३ ||
120332
120333 अस्तु दृश्यासत्त्वं तदसत्त्वे शुद्धचितस्तद्वेदनस्वरूपताप्रतीतिः कथमिति राजा
120334 पृच्छति-शिवे इत्यादिना || ३ ||
120335
120336 सर्गविदनमाभाति कथमेतद्वदाशु मे |
120337
120338 कुम्भ उवाच |
120339
120340 विस्तारं तदनाद्यन्तं तत्संविदिव तिष्ठति || ४ ||
120341
120342 नभोविस्तृतसौरालोकस्य
120343 तदध्यस्तगन्धर्वनगरादिप्रकाशस्वरूपताप्रतीतिवत्तदित्याशयेन कुम्भ
120344 उत्तरमाह-विस्तारमिति | विस्तार्यत इति विस्तारं तदधिष्ठानसन्मात्रमेव तस्य
120345 स्वाध्यस्तस्य संवेदनं संवित् प्रथेव तिष्ठति | अत एव तदध्यस्तं भुवनं
120346 तन्मात्रमधिष्ठानसन्मात्रमेवेति तदेव जगद्वपुर्व्यपदिश्यत इत्यर्थः || ४ ||
120347
120348 तत्तद्भुवनमत्यच्छं तत्तन्मात्रं जगद्वपुः |
120349 न विज्ञानमयोऽर्थोऽस्ति न बाह्यो नापि शून्यता || ५ ||
120350
120351 अत्र विज्ञानवादी भुवनादिरूपोऽर्थ आन्तरो विज्ञानपरिणाम एव संवृत्त्या
120352 बाह्यार्थवदवगम्यत इति मन्यते | गौतमकणादकपिलपतञ्जलिप्रभृतयो
120353 बाह्यार्थः पृथिव्यादिपञ्चभूतमयः परमार्थभूतोऽस्तीति | माध्यमिकस्तु
120354 शून्यमेव बाह्याभ्यन्तरग्राह्यग्राहकभावेन संवृत्त्या प्रथते न वस्तुभूतं
120355 किंचिदस्तीति | तन्मतान्यपाकुर्वन्नाह-न विज्ञानमय इति || ५ ||
120356
120357 वेदनामात्रसारत्वाद्यथा चित्सार उच्यते |
120358 द्रवत्वं सलिलस्येव चिदचित्त्वमकारणम् || ६ ||
120359
120360 तत्कुतस्तत्राह-वेदनेति | सर्वेषां वादिनां कल्पनाः सत्यां
120361 वेदनायामुपपद्यन्ते नासत्यामिति न तस्याः शून्यता क्षणिकता जन्यता विनाशिता
120362 परिणतिर्वा केनचित्क्वचिद्वक्तुं उच्यते उपपाद्यते शृणु दृष्टान्तम् | यथा
120363 द्रवत्वं सलिलस्य रसस्तद्वत्सर्ववस्तूनां चैतन्यं सारः | यदि चैतन्यं नाम वस्तु
120364 न स्यात्तर्हि साधकाभावात्सर्वं जगदस्तिनास्तीति व्यपदेशानर्हं किं स्यादिति
120365 विभाव्यतामिति भावः | एवं रसभूतायाश्चितः अचित्त्वमकारणं न
120366 कारणैर्निरूपयितुं शक्यम् || ६ ||
120367
120368 स्वात्मनीशमनन्तं तद्यथास्थितमवस्थितम् |
120369 प्रतियोगिव्यवच्छेदाभावतः सत्त्वभावयोः || ७ ||
120370
120371 त्वया वा तस्या जगत्प्रत्ययता कथमुपपादनीयेति चेत्तत्राह-स्वात्मनीति |
120372 तच्चिद्रूपं स्वात्मनि जगदाकारेण प्रथने परमार्थचिन्मात्ररूपेण वा प्रथने
120373 ईशं स्वमायया समर्थमतस्तद्यथा साविद्यं निरविद्यं वा यथा स्थितं तथैव
120374 प्रतीत्याप्यवस्थितमित्यर्थः | यदि तत्स्वच्छास्वच्छोभयभावस्थितिसमर्थं तर्हि
120375 तस्य स्वच्छभावैकव्यवस्थता कुतस्तत्राह-प्रतियोगीति | सत्त्वमात्रस्य स्वभावो हि
120376 स्वच्छभावः | अस्वच्छभावस्तु तद्विरुद्धभावः | स यदि स्वविरोधिनः सत्त्वस्य
120377 व्यपच्छेदं कुर्यान्न कुर्याद्वा | द्वेधापि स्वयं न सिद्ध्यतीति
120378 सत्त्वतद्विरुद्धभावयोः प्रतियोगिव्यवच्छेदाभावादस्वच्छताया असत्त्वात्परमे
120379 सद्वस्तुनि स्वच्छभावैकव्यवस्थता सिद्धेत्यर्थः || ७ ||
120380

120381 असत्त्वात्तेन परमे स्वच्छभावव्यवस्थता।
120382 यदि कारणतापत्तियोग्यं शान्तं पदं भवेत्॥ ८॥
120383
120384 ननु अस्वच्छभावस्यात्यन्तापलापः किमर्थं क्रियते।
120385 स्वच्छचिद्रूपमेवास्वच्छजगद्भावकारणतापत्तियोग्यमिति कुतो न कल्प्यते तत्राह##-
120386 भावः॥ ८॥
120387
120388 अनिङ्गितमनाभासमप्रतर्क्यं कथं भवेत्।
120389 अतो न कारणं नैव बीजं ब्रह्म कदाचन॥ ९॥
120390
120391 कार्यस्य कस्यचिन्नाम तेन सर्गो न विद्यते।
120392 न चान्यथोपपत्तिर्हि सर्गस्यास्योपपद्यते॥ १०॥
120393
120394 चिदभ्यासपक्षं विना सर्गस्योपायान्तरेणोपपत्तिरेव नास्तीत्याह - न चेति॥ १०॥
120395
120396 चिन्मात्रकादृते तस्माज्जडसर्गो न विद्यते।
120397 यदिदं दृश्यते किंचित्तच्चिद्घनमिवोत्थितम्॥ ११॥
120398
120399 उत्थितमिव॥ ११॥
120400
120401 अहंभावजगच्छब्दशब्दार्थरसरञ्जनम्।
120402 कार्यं न कारणाभावात्पदार्थे तूपपद्यते॥ १२॥
120403
120404 तर्ह्यस्त्वकारणकमेवेदं जगदिति यदृच्छावादिपक्षं निरस्यति - कार्यमिति॥ १२
120405 ।।
120406
120407 द्वित्वैक्याद्यात्मकं व्योमपुष्पवत्स्वानुभूतितः।
120408 वस्तु नाशैकनिष्ठत्वान्न वा ज्ञमुपपद्यते॥ १३॥
120409
120410 यदि सन्मात्रैकरसं तर्हि कथं जगच्चिज्जडरूपेण सद्रूपेण च
120411 द्वित्वैक्याद्यात्मकं प्रतीयते तत्राह - व्योमपुष्पवदिति। खपुष्पवज्जडांशो
120412 विकल्पमात्रमित्यर्थः। अस्तु तर्हि चिद्रूपमेव जगत्। तस्य चिद्रूपमेव ब्रह्म कारणम्।
120413 न च चिद्रूपैक्ये इदं कार्यमिदं कारणमिति विभाजकाभावः। जन्मनाशयोरेव
120414 विभाजकत्वोपपत्तेस्तत्राह - वस्त्विति। न वा घटपटादिजागतं वस्तु ज्ञं
120415 चिद्रूपमुपपद्यते। कुतः। नाशैकनिष्ठत्वान्नाशनियतत्वात्। चितो हि नाशो न चिता
120416 सिद्ध्यति। नाशकाले चितः सत्त्वे नाशोक्तेर्निर्विषयत्वात्। नापि जडेन। तस्य
120417 चिद्भावप्यसमर्थत्वादित्यर्थः॥ १३॥
120418
120419 उपलम्भकरो नाशो जन्मनस्तस्य वा कुतः।
120420 अथ चैनं सदा सन्तं नित्यं नष्टं च वेत्सि वा॥ १४॥
120421
120422 यदि तु चितो नाशो चिद्रूप एव स्वपरप्रथायामन्यनिरपेक्ष इति
120423 कश्चिद्ब्रूयात्तत्राप्याह-उपलम्भकर इति। चिद्रूपः संविन्नाशः स्वजन्मनस्तस्य
120424 स्वप्रतियोगिनो वा उपलम्भकरः प्रकाशकः। कुतः। न हि
120425 स्वोत्पत्तिस्तत्पूर्वकालिकप्रतियोगिचिद्वा नाशेनोपलब्धुं शक्यते॥ न च
120426 तदुभयानुपलम्भे तस्य नाशः स्वयमुत्पन्न इत्यनुभवितुं शक्यम्। न च साक्षिणा
120427 तदुभयानुभवश्चितश्चिद्विषयत्वायोगादतस्तद्वेद्योत्पत्तिनाशयोर्जगतश्च
120428 जाड्यमेवेति भावः। एवं जगतो जाड्ये सिद्धे कारणानिरूपणादकारकोत्पत्तौ सदैव
120429 जन्म स्यान्नित्यं च नाशः स्यादुभयोरपि निवारकाभावात्। हे स्वभाववादिन् यदि
120430 निष्प्रमाणकमनुभवविरुद्धमपीत्थमेव नित्योत्पत्तिनाशस्वभावमिदं जगदिति
120431 वेत्सि अभ्युपगच्छति॥ १४॥
120432

120433 पदार्थौघं तदेवेत्थमेकरूपेऽपि किं व्यथा।
120434 उपलम्भस्तु यश्चायमेषा चित्तचमत्कृतिः॥ १५॥
120435
120436 तर्हि श्रुतिविद्वदनुभवसिद्धे अखन्डचिदेकरूपे तस्मिन्नभ्युपगम्यमाने तव किं
120437 व्यथा किमर्थं पीडेत्यर्थः। ननु यदि सर्वं चिदेकरसं तर्हि कथं
120438 चिदचिद्द्विविधोपलम्भस्तत्राह - उपलम्भस्त्विति॥ १५॥
120439
120440 चित्तत्त्वमात्रसत्तास्ति द्वित्वमैक्यं च नास्त्यलम्।
120441 अतः पदार्थसत्ताया भावे सति भूपते॥ १६॥
120442
120443 तर्हि चिदन्यच्चित्तमेव द्वितीयं स्यात्तत्राह - अत इत्यादिना॥ १६॥
120444
120445 असंभवाद्भावनस्य नाहंताभावनास्ति ते।
120446 अहंभावासंभवतश्चित्तमन्यत्किमुच्यते॥ १७॥
120447
120448 इति चित्तमहंरूपं नास्त्यतो न च भिन्नता।
120449 निर्वासनः शान्तमना मौनी परनभोमयः॥ १८॥
120450
120451 भिन्नता जीवब्रह्मभेदश्चिदचिद्भेदश्चितो दृश्यवेदनतारूपभेदश्च नास्ति॥ १८॥
120452
120453 सदेहो वा विदेहो वा भावस्थोऽप्यचलोपमः।
120454 संबन्धाच्छुद्धचिद्दृष्टेः पदार्थाभावसिद्धितः॥ १९॥
120455
120456 शुद्धचिद्दृष्टेः संबन्धालाभात् कदापि
120457 जडपदार्थानामसिद्धेस्तद्भावनाप्रयुक्तमहमिति जीवरूपमपि नास्त्येवेति
120458 स्वयमात्मैव परिशिष्यत इत्यर्थः॥ १९॥
120459
120460 भावनाभावतश्चित्ते नास्त्येवाहमिति स्वयम्।
120461 एवं ब्रह्मेति वेदार्थभावनादनुभूतितः।
120462 चेतितार्थैकसत्यत्वाच्चिन्ता नाम क्व विद्यते॥ २०॥
120463
120464 तादृशात्मैव सत्यं ज्ञानमनन्तं ब्रह्म। नित्यं विज्ञानमानन्दं ब्रह्म।
120465 ब्रह्मैवेदं विश्वमिदं वरिष्ठम् इत्यादिसर्ववेदार्थस्तद्भावनादेव
120466 तदनुभवादित्यर्थः। तर्हि तच्चिन्तनतदनुभवात्मिका अखण्डाकारवृत्तिः सर्वं
120467 बाधित्वा स्वयं परिशिष्येतेत्याशंक्याह-चेतितेति। ब्रह्मचिन्तनया
120468 चेतितब्रह्मार्थैकसत्यत्वाच्चिन्तादिवृत्तिरपि स्वेद्धबोधेन बाध्यत इति न
120469 ब्रह्मातिरिक्तपरिशेषप्रसक्तिरित्यर्थः॥ २०॥
120470
120471 तेनासि निर्मलमकारणमादिमुक्तं तद्ब्रह्म शाश्वतमशेषमनेकमेकम्।
120472 शून्यंन् निरामयमसत्सदनादिमध्यं सर्वं जगच्चिदपि ब्रह्म यथास्थितं
120473 तत्॥ २१॥
120474
120475 उक्तमर्थं फलेनोपसंहरति - तेनेति। तेन सर्वद्वैतबाधेन त्वं ब्रह्मैवासि।
120476 तद्ब्रह्म अशेषमनेकमेकमेव संपन्नं सर्वं जगच्चासच्छून्यमेव।
120477 तत्प्रतिभासरूपा चिदपि यथास्थितमविकृतं ब्रह्मैवेति निरामयं
120478 तदेवावशिष्टमित्यर्थः॥ २१॥
120479
120480 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वाणप्रकरणे पू० चू०
120481 शिखिध्वजप्रबोधनं नाम सप्तनवतितमः सर्गः॥ ९७॥
120482
120483 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
120484 शिखिध्वजप्रबोधनं नाम सप्तनवतितमः सर्गः॥ ९७॥

120485
120486 अष्टनवतितमः सर्गः ९८
120487
120488 शिखिध्वज उवाच।
120489
120490 चित्तं नास्तीति मे बोधो यथा युक्त्या स्फुटं भवेत्।
120491 तामन्यामथवा ब्रूहि बुद्धं न निपुणं मया॥ १॥
120492
120493 चित्तं नास्तीति बोधस्य दृढीकाराय विस्तरात्।
120494 चेत्यासत्त्वादचित्तं तत्सद्ब्रह्मैवेति वर्ण्यते॥
120495
120496 ननु आलोके सति रूपादेरिव सत्येव चित्ते चितस्तदन्यस्य वा प्रथा दृश्यते नासति। तद्यदि
120497 चित्तं ब्रह्माकारवृत्तिकं बाध्येत तर्हि दीपनाश इव पुनरान्ध्यं प्राप्तम्। सचित्ता
120498 एव सचेतना अचित्तास्त्वचेतना लोके प्रसिद्धास्तद्यदि जीवन्मुक्ता नष्टचित्तास्तर्हि
120499 मृदादिवदचेतनाः संपद्येरन्। न च तथा दृश्यन्ते। किं च सति चित्ते
120500 निरतिशयानन्दलक्षणः परमपुरुषार्थः शास्त्रफलमनुभवितुं शक्यं नासति।
120501 न चाननुभूयमानः कश्चित्पुरुषार्थो नाम भवति। किं च ब्रह्माकारं चित्तमेव
120502 चित्तं बाधते अन्यद्वा। नाद्यः। स्वात्मनि क्रियाविरोधात्। न हि दाह्यं दहन्नग्निः
120503 स्वात्मानं दग्धुं शक्नोति। न द्वितीयः। तद्बाध्यस्य जगतस्तद्बाधकत्वायोगात्।
120504 चित्तवृत्त्यतिरिक्तस्य लोके बाधकत्वाप्रसिद्धेः सुन्दोपसुन्दन्यायानवतारात्।
120505 ब्रह्मणस्त्वनादेः सर्वसाधकत्वमेव न बाधकत्वमिति चित्तबाधो निरर्थको
120506 दुष्करः सर्वानुभवपराहतश्चेत्याद्याशङ्कानिरासेन बोधदार्ढ्यकामो राजा
120507 पृच्छति - चित्तमिति। तां प्रागुक्तामेव युक्तिं विशदीकृत्य ब्रूहि। अथवा
120508 तदन्यां तदुपयुक्तां मदीयसर्वाशङ्कानिवारणसमर्थां च युक्तिं
120509 ब्रूहीत्यर्थः। निपुणं दृढम्॥ १॥
120510
120511 कुम्भ उवाच।
120512
120513 चित्तं नास्त्येव हे राजन्कदाचित्किंचन क्वचित्।
120514 यच्चेदं चित्तवद्भाति तद्ब्रह्माभिधमव्ययम्॥ २॥
120515
120516 तत्र सर्वदोषपरिहारेण चित्तबाधोपपादिकां युक्तिं वक्तुं कुम्भश्चित्तासत्त्वं
120517 तदध्ष्ठिानब्रह्ममात्रसत्त्वं च प्रतिजानीते - चित्तमिति। कदाचित्काले क्वचिद्देशे
120518 किंचिद्वस्त्वात्मना च चित्तं नास्ति॥ २॥
120519
120520 अतोऽज्ञानात्मकं यत्तज्जगदेव न विद्यते।
120521 तत्राहंत्वंतदित्यादिकल्पिताः कलनाः कुतः॥ ३॥
120522
120523 तां युक्तिमाह - अत इति। यतः सर्वं चित्तादि जगदज्ञानात्मकं
120524 ज्ञानेनाज्ञानबाधेन हेतुना न विद्यते अतो हेतोरित्यर्थः। अयं भावः -
120525 भवेदयं स्वात्मनि क्रियाविरोधो यद्यज्ञानबाधाच्चित्तादिबाधोऽन्यः स्यात्।
120526 अज्ञानबाध एव तु
120527 सर्वतत्कार्यतत्संबन्धावरणविक्षेपादिसर्वनिवृत्तिरूपस्तस्मिन्सति चित्तं नास्त्येवेति
120528 प्रतिज्ञातार्थोऽर्थसिद्ध एव। अत एव न पुनरान्ध्यादिदोषप्रसक्तिरज्ञानस्यैव
120529 सर्वान्ध्यप्रयोजकस्यापगमात्। स्वप्रकाशपूर्णानन्दपरिशेषेण
120530 निरतिशयपुरुषार्थसिद्धेश्च। न च चित्ताधीना चेतनता किंत्वभिव्यक्तचिदधीना। सा
120531 च जीवन्मुक्तेषु चित्तनाशेऽप्यस्त्येवेति नाचेतनत्वप्रसङ्गः। न च चित्तनाशे तत्कृता
120532 चिदभिव्यक्तिरपैति। अनभिव्यक्तेरज्ञानावरणकृतत्वेन तदपगमे चितोऽभिव्यक्तेः
120533 स्वाभाविकृत्वेनानपायात्। न हि वायुना घनापसारणेन कृता सूर्याभिव्यक्तिः
120534 शरदि वायूपरमे अपैतीति सर्वदोषपरिहार इति॥ ३॥
120535
120536 नास्त्येव जगदेवेदं यच्चेदं किंचनोदितम्।

120537 ब्रह्मैवास्तीह सकलं केन तद्बुध्यते कथम् ॥ ४ ॥
120538
120539 प्रथमप्रतिज्ञां समर्थितां निगमय्य द्वितीयामुपादत्ते - नास्त्येवेति ।
120540 तत्समर्थनाय यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् इति श्रुतिं
120541 प्रमाणयति - केनेति ॥ ४ ॥
120542
120543 महाप्रलयसर्गादावेवेदं नोदितं जगत् ।
120544 निर्देशस्त्विदमित्यत्र त्वद्बोधाय मया कृतः ॥ ५ ॥
120545
120546 न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः इति श्रुतिरपि तत्र मानमित्याशयेनाह ##-
120547 नोदितमेव तर्हि चित्तं नास्त्येवेति प्रतिज्ञावाक्ये त्वया कथं यच्चेदं चित्तवद्भातीति
120548 निर्देशः कृतस्तत्राह - निर्देशस्त्विति ॥ ५ ॥
120549
120550 उपादानात्मकादीनां कारणानामभावतः ।
120551 अकारणं च भावानामशेषाणां त्वसंभवात् ॥ ६ ॥
120552
120553 पूर्वोक्तयुक्तिरप्येतत्साधनसमर्थेत्याशयेनाह - उपादानेति ॥ ६ ॥
120554
120555 एवमज्ञानबुद्ध्यात्म जगत्तस्मान्न विद्यते ।
120556 तस्माद्यदिदमाभाति भासनं ब्रह्म नेतरत् ॥ ७ ॥
120557
120558 द्वितीयप्रतिज्ञां निगमयति - तस्मादिति ॥ ७ ॥
120559
120560 अनाख्येऽनाकृतौ देवे करोतीदमिति त्वसत् ।
120561 भाषितं नोपपत्त्यात्म न सत्यं नानुभूयते ॥ ८ ॥
120562
120563 ननु यदि सर्गादि नास्त्येव तर्हि तदात्मान स्वयमकुरुत एको वशी सर्वभूतान्तरात्मा
120564 एकं बीजं बहुधा यः करोति कर्ता भोक्ता महेश्वरः इत्यादिश्रुतिस्मृतिवादानां
120565 का गतिरिति चेत् नेह
120566 नानेतिश्रुत्यपेक्षितनिषेध्यसमर्पणेनाद्वैतव्युत्पादनार्थवादतैव गतिर्न
120567 तत्त्वार्थतेत्याशयेनाह - अनाख्ये इति । अनाख्ये नामरहिते अनाकृतौ रूपरहिते
120568 युक्तिशून्यत्वान्नोपपत्त्यात्म निष्कलं
120569 निष्क्रियमित्यादितात्त्विकश्रुतिविद्वदनुभवबाधितत्वान्न सत्यं लौकिकैरपि
120570 नानुभूयते ॥ ८ ॥
120571
120572 अनाख्योऽप्रतिघः स्वात्मा निराकारो य ईश्वरः ।
120573 स करोति जगदिति हासायैव वचोऽधियाम् ॥ ९ ॥
120574
120575 शीतवातादिप्रतिघातवारणाय गृहादिनिर्माणं प्रसिद्धम् । ईश्वरस्त्वप्रतिघः
120576 करोतीति अधियां तात्पर्यशून्यानामर्थवादानां सर्वज्ञस्य वृथा
120577 चेष्टोक्तिर्हासायैवेत्यर्थः ॥ ९ ॥
120578
120579 अनेनैव प्रयोगेण राजंश्चित्तं न विद्यते ।
120580 जगदेव न सत्साधो कुतश्चित्तादि तद्गतम् ॥ १० ॥
120581
120582 एवं जगत्सर्गासिद्धौ प्रतिज्ञातार्थसिद्धिरित्याह - अनेनैवेति । यदा जगदेव न
120583 सत्तदा तदन्तर्गतं चित्तादि कुतः सदित्यर्थः ॥ १० ॥
120584
120585 चेतो हि वासनामात्रं वास्ये तु सति वासना ।
120586 वास्यं जगत्तदेवासदतश्चित्तास्तिता कुतः ॥ ११ ॥
120587
120588 जगदसत्त्वे विषयासत्त्वादपि चित्तासत्त्वसिद्धिरित्याह - चेतो हीति । वास्ये

120589 वासनाकर्मणि विषये ॥ ११ ॥
120590
120591 यदिदं कचति ब्रह्म स्वयमात्मात्मनात्मनि ।
120592 कृतं तस्यैव तेनैव चित्तमित्यादिनामकम् ॥ १२ ॥
120593
120594 तर्हि चित्तादिव्यवहारस्य को विषय इति चेन्मायोपहितं ब्रह्मैवेत्याह - यदिदमिति ।
120595 नाम्नां संघो नामकम् ॥ १२ ॥
120596
120597 जगद्दृश्यमिदं वास्यंन् तदेवोत्पन्नमेव नो ।
120598 कारणाभावतः पूर्वमेवातश्चित्तता कुतः ॥ १३ ॥
120599
120600 चेतो हि वासनामात्रम् इति श्लोकं व्याचष्टे - जगदिति । दृश्यं वास्यमिति
120601 दर्शनानुसारिणी वासनेति द्योतनार्थम् । कारनाभावत इति विषयबाधे
120602 निर्विषयवासनास्थित्ययोगादिति भावः ॥ १३ ॥
120603
120604 अतश्चिद्व्योममात्रात्म परमाकाशनामकम् ।
120605 स्फारं वेदनमेवेदं कचत्यस्ति कुतो जगत् ॥ १४ ॥
120606
120607 यदिदं कचतीति श्लोकमपि परमार्थदृशा तत्फलवर्णनपरतया व्याचष्टे -
120608 अत इति ॥ १४ ॥
120609
120610 यत्किंचित्परमाकाश ईषत्कचकचायते ।
120611 चिदादर्शे न जातत्वान्न चित्तं नो जगत्क्रिया ॥ १५ ॥
120612
120613 मायातत्त्वदृशापीति व्याचष्टे - यत्किंचिदिति । परमाकाशरूपे चिदादर्शे
120614 यत्किंचिदनिर्वचनीयमायारूपम् । ईषदत्यल्पम् ॥ १५ ॥
120615
120616 अहं त्वं जगदित्येषा प्रतिपत्तिर्न वास्तवी ।
120617 मिथ्या स्वप्न इवाभाति नूनं मेऽशेषकारिणी ॥ १६ ॥
120618
120619 अशेषानर्थकारिणी अहं जगदित्येषा प्रतिपत्तिर्मे तत्साक्षिणो मम
120620 स्वप्नवन्मिथ्यैवाभाति । नूनं निश्चयेनेत्यर्थः ॥ १६ ॥
120621
120622 वास्यस्य जगतोऽभावाद्यतो नास्त्येव वासना ।
120623 अतस्तदात्मकं चित्तं कीदृशं क्व कुतः कथम् ॥ १७ ॥
120624
120625 अप्रबुद्धैरवगतं चित्तं दृश्यमिदं जगत् ।
120626 असच्चित्तं निराकारं पूर्वमुत्पन्नमेव नो ॥ १८ ॥
120627
120628 नोत्पन्नं कारणाभावात्सर्गादावेव सर्वदा ।
120629 लोकशास्त्रानुभवतो न च दृश्यस्य वस्तुनः ॥ १९ ॥
120630
120631 यदि नोत्पन्नं तर्हि जगदनादिनित्यमेव किं न स्यात्तत्राह - लोकेति । दृश्यस्य
120632 वस्तुनः अनादित्वं जन्मादिविक्रियारहितत्वं वा कौटस्थ्यं वा लोकतो वा शास्त्रतो वा
120633 स्वानुभवतोऽपि वा नोपपद्यत इति परेणान्वयः ॥ १९ ॥
120634
120635 अनादित्वमजत्वं वा स्थैर्यं वाप्युपपद्यते ।
120636 साकारस्यास्य जगतः स्थूलस्य प्रतिघाकृतेः ॥ २० ॥
120637
120638 साकारस्य स्थूलस्य प्रतिघातयोग्याकृतेश्चास्य जगतो लोकशास्त्रानुभूतिभिः सिद्धा
120639 महाप्रलयादयो व्युत्क्रमेणाप्रलयान्ता विकारा न निराकर्तुं युज्यन्ते
120640 निराकरणोपपादकसमस्तकारणाभावादित्यन्वयः ॥ २० ॥

120641
120642 समस्तकारणाभावाल्लोकशास्त्रानुभूतिभिः।
120643 युज्यन्ते च निराकर्तुं न महाप्रलयादयः॥ २१॥
120644
120645 शास्त्रानुभववेदार्थसिद्धान्तैस्ते त्रयोऽपि वा।
120646 प्रलयाश्च न सन्तीति वक्त्युन्मत्तक एव च॥ २२॥
120647
120648 लोकः शास्त्राणि वेदाश्च प्रमाणं यस्य नो मतेः।
120649 असद्भ्यो ह्यतिमूढः स सज्जनस्तं न संश्रयेत्॥ २३॥
120650
120651 लोकवेदमर्यादोल्लङ्घने शिष्टैर्बहिष्कार्यतैव स्यादित्याह - लोक इति। असद्भ्यः
120652 केवललोकमात्राश्रयेभ्यश्चार्वाकेभ्योऽप्यतिमूढः॥ २३॥
120653
120654 न च सप्रतिघस्यास्य दृश्यस्याप्रतिघं क्वचित्।
120655 कारणं भवितुं शक्तं साकारस्य निराकृति॥ २४॥
120656
120657 तर्हि श्रुत्युक्तब्रह्मकारणतापक्ष एवाभ्युपगम्यतां तत्राह - न चेति॥ २४॥
120658
120659 इत्थमालक्ष्यमाणं तत्तदेवं सततं मुने।
120660 न च नार्थक्रियाकारि भवेन्नेत्थमिदं जगत्॥ २५॥
120661
120662 निराकारब्रह्मकारणत्ववादिन्यास्तु श्रुतेः तदनन्यत्वमारम्भणशब्दादिभ्यः
120663 इत्यादिबादरायणन्यायेन जगतो ब्रह्मतात्त्विकस्वभावतायामेव तात्पर्यमिति
120664 प्रागुक्तमेव। इत्थं ब्रह्ममात्रतया आलक्ष्यमाणं जगद्व्यवहारे
120665 मूर्तत्वानपगमादर्थक्रियासमर्थं भवत्येवेति न लोकविरोधः। परमार्थतो
120666 ब्रह्मीभूतमेवेति न मूर्खदृष्टिप्रसिद्धरूपमतो न वेदविरोधोऽपीत्याशयेनाह
120667 - इत्थमिति। इत्थमप्रसिद्धरूपम्॥ २५॥
120668
120669 तस्मादिदं निरंशस्य चिद्व्योम्नोऽप्रतिघाकृतेः।
120670 निराकृतेरनन्तस्य पूर्वात्पूर्वनिरंशतः॥ २६॥
120671
120672 इदानीं सर्वसर्गश्रुतीनां नेतिनेतीत्यादितन्निराकरणश्रुतीनां च तात्पर्यं
120673 पिण्डीकृत्योपसंहरति - तस्मादित्यादित्रिभिः। पूर्वात्पूर्वं
120674 [पूर्वादित्यस्यैकदेशान्वये न्रित्यसापेक्षत्वात्समासः। अथवा पञ्चम्यलुक्
120675 छान्दसः।] च तन्निरंशं च तस्येति पूर्वात्पूर्वनिरंशतः।
120676 षष्ठ्यन्तात्सार्वविभक्तिकस्तसिः॥ २६॥
120677
120678 ब्रह्मणः सर्वरूपस्य शान्तस्यात्तस्य यत्समम्।
120679 स्वत एवात्मकचनं सर्गप्रलयरूपधृक्॥ २७॥
120680
120681 सर्वरूपस्य पूर्णस्वभावस्य ब्रह्मणः स्वतो विनैव शास्त्रं यदात्मकचनं
120682 तत्स्वकं वपुः स्वरूपमेव सर्गप्रलयरूपधृक् जगदिव क्षणं
120683 यावदज्ञानकालं ज्ञातमिति सर्वसृष्टिश्रुतीनामर्थः। तदेव स्वरूपं
120684 क्षणान्तरे तत्त्वमस्यादिशास्त्रमनुसृत्य बुद्धं सद्ब्रह्मैव निर्गतद्वैतात्मनि
120685 स्वभावे आस्ते इति नेतिनेतीत्यादिद्वैतनिषेधश्रुतेस्तात्पर्यार्थ इति योज्यम्॥ २७॥
120686
120687 स्वकं वपुश्च तेनैव ज्ञातं जगदिव क्षणात्।
120688 क्षणान्तरानुबुद्धं सद्ब्रह्मैवास्ते निरात्मनि॥ २८॥
120689
120690 ब्रह्मैवेदमतः सर्वं क्वचिन्न जगदादिधीः।
120691 क्वाचित्तादि क्वचित्तादि क्व द्वैतैक्यादिकल्पना॥ २९॥
120692

120693 अतः शास्त्रीयबोधात् ॥ २९ ॥
120694
120695 सर्वं निरालम्बमजं प्रशान्तमनादिरित्यात्म [अनादिरित्यत्रार्षं
120696 पुंस्त्वम् ।] यथास्थितं सत् ।
120697 इदं तु नानेव न चाप्यनाना यथास्थितं तिष्ठ सुकाष्ठमौनम् ॥ ३० ॥
120698
120699 एवं ज्ञातं सर्वं जगत्प्रशान्तं सन्निरालम्बं निराधारमजं यथास्थितं
120700 सद्ब्रह्मैव । इदमज्ञदृष्टरूपं तु अत्यन्तासत्त्वान्नाना अनानापि च न । अतो
120701 यथास्थितं व्यवहरंस्तत्त्वतः सुकाष्ठमौनो वागादिव्यापारशून्यस्तिष्ठेत्यर्थः
120702 ॥ ३० ॥
120703
120704 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वाणप्रकरणे पू० चू०
120705 शिखिध्वजावबोधनं नामाष्टनवतितमः सर्गः ॥ ९८ ॥
120706
120707 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
120708 शिखिध्वजावबोधनं नामाष्टनवतितमः सर्गः ॥ ९८ ॥
120709
120710 एकोनशततमः सर्गः ९९
120711
120712 शिखिध्वज उवाच ।
120713
120714 नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्महामुने ।
120715 स्थितोऽस्मि गतसंदेहो विश्रान्तमतिरात्मवान् ॥ १ ॥
120716
120717 प्रबुद्धोऽपि नरेन्द्रोऽत्र भूयः कुम्भेन बोध्यते ।
120718 स्थूणानिखननन्यायाद्बोधोऽस्य सुदृढोऽस्त्विति ॥
120719
120720 एवं बोधितो राजा उपदेशजन्यज्ञानेन सर्वसंदेहादिबीजं स्वाज्ञानं
120721 नष्टमित्यभिलप्य दर्शयति - नष्ट इत्यादिना । विस्मृतात्मनः साक्षात्कार एव
120722 स्मृतिरित्युच्यते ॥ १ ॥
120723
120724 ज्ञातज्ञेयो महामौनी तीर्णमायामहार्णवः ।
120725 शान्तोऽहमनहंरूपो ज्ञः स्थितोऽस्मि निरामयः ॥ २ ॥
120726
120727 अहो नु सुचिरं कालं प्रभ्रान्तोऽहं भवाम्बुधौ ।
120728 स्थानमक्षयमक्षुब्धमधुना प्राप्तवानहम् ॥ ३ ॥
120729
120730 एवं स्थिते मुने नास्ति साहंतादिजगत्त्रयम् ।
120731 मूर्खबुद्धमिदं भाति यत्तद्ब्रह्मेति वेद्म्यहम् ॥ ४ ॥
120732
120733 मूर्खबुद्धमिदं साहंतादिजगत्त्रयं नास्ति ॥ ४ ॥
120734
120735 कुम्भ उवाच ।
120736
120737 जगदेव न यत्रास्ते तत्राहंत्वंविभासनम् ।
120738 इत्थमम्बरसंसारः क्व कुतः कीदृशः कथम् ॥ ५ ॥
120739
120740 कुम्भस्तदुक्तमेवानुमोदमान उवाच - जगदेवेत्यादि । अम्बरसंसारो
120741 गन्धर्वनगरव्यवहारः ।
120742 किंवृत्तान्यधिकरणनिमित्तदृष्टान्तप्रकारप्रतिक्षेपार्थानि ॥ ५ ॥
120743
120744 यथास्थितव्यवहृतिर्मौनी शान्तमना मुनिः ।

120745 सौम्यार्णवोदरावर्तपरिस्पन्दवदास्व भो ॥ ६ ॥
120746
120747 सौम्यार्णवोदरे प्रशान्तो य आवर्तपरिस्पन्दस्तद्वदास्व तिष्ठ ॥ ६ ॥
120748
120749 ब्रह्मरूपमिदं शान्तमित्थमस्ति यथास्थितम् ।
120750 अहं जगदिदं चेति शब्दार्थात्म नभोमयम् ॥ ७ ॥
120751
120752 शब्दार्थात्म शब्दार्थस्वरूपं तु नभोमयं शून्यमेव ॥ ७ ॥
120753
120754 इदमाद्यन्तरहितं सर्वं [सर्वसंसार इति पाठः ।] संसारनामकम् ।
120755 चिच्चमत्कृतिनामात्म नभः कचकचायते ॥ ८ ॥
120756
120757 चिच्चमत्कृतिनामकं यदात्मरूपं नभस्तदेव कचकचायते स्वचाकचक्येन दीप्यते
120758 ॥ ८ ॥
120759
120760 संनिवेशदृशः शान्तौ तदस्ति कनकं यथा ।
120761 जगदाद्यर्थसंशान्तौ ब्रह्मेदं विद्यते तथा ॥ ९ ॥
120762
120763 यथा नभसि अवाङ्मुखीकृतेन्द्रनीलकटाहाकारसंनिवेशदृष्टेर्विवेकदृशा
120764 शान्तौ तद्व्याप्तसौरालोककचनमस्त्येव तथैवेत्यर्थः ॥ ९ ॥
120765
120766 यथा स्वयंभूः संकल्पः स्वयं नाम तथैव हि ।
120767 एतौ स्ववेदनायत्तौ बन्धमोक्षौ व्यवस्थितौ ॥ १० ॥
120768
120769 यथा समष्ट्यहंकारात्म स्वयंभूः संकल्पमात्रं तथा स्वयं
120770 व्यष्ट्यहंकारोऽपि । एतौ समष्टिव्यष्टिबन्धस्तन्मोक्षश्चेत्येतौ
120771 तदभिमानतत्परित्यागवेदनायत्तौ ॥ १० ॥
120772
120773 अहमित्येव संकल्पो बन्धायातिविनाशिने ।
120774 नाहमित्येव संकल्पो मोक्षाय विमलात्मने ॥ ११ ॥
120775
120776 तदेव स्पष्टमाह-अहमित्येवेति ॥ ११ ॥
120777
120778 यद्बन्धमोक्षसंकल्पशब्दार्थानां सदा सताम् ।
120779 स्वरूपवेदनं तत्सत्केवलत्वं च कथ्यते ॥ १२ ॥
120780
120781 कोऽसौ मोक्षस्तमाह - यदिति । सदा पर्यायेण सतां बन्धमोक्षसंकल्पानां
120782 साक्षिभूतं स्वरूपवेदनं तदेव सद्ब्रह्म केवलत्वं कैवल्यं च कथ्यत इत्यर्थः
120783 ॥ १२ ॥
120784
120785 अनहंवेदनं सिद्धिरहंवेदनमापदः ।
120786 सोऽहमेवानहमिति शुद्धबोधो भवात्मवान् ॥ १३ ॥
120787
120788 सिद्धिर्मोक्षः । आपदो बन्धः । स त्वमहमेवानहमिति
120789 शुद्धकैवल्यात्मबोधवान्भव ॥ १३ ॥
120790
120791 असंकल्पनमात्रेण सम्यग्ज्ञानोदयात्मना ।
120792 संकल्पः क्षीयते सिद्ध्यै स्वयमेवासदात्मकः ॥ १४ ॥
120793
120794 शुद्धबोधश्च संकल्पक्षयात्सिध्यतीत्याह - असंकल्पनेति ॥ १४ ॥
120795
120796 अप्रतर्क्ये स्वरूपे हि नास्ति कारणता शिवे ।

120797 कारणाभावतः कार्यपदार्थोऽपि न विद्यते ॥ १५ ॥
120798
120799 शुद्धस्य
120800 कारणत्वासंभवाद्दृश्यपदार्थाभावस्तदभावनिश्चयात्संकल्पक्षयः
120801 संकल्पनाशादहंभावक्षयस्तत्क्षयाज्जीवभावादिसंसारक्षयस्ततश्च
120802 ब्रह्ममात्रावशेष इति क्रममाह - अप्रतर्क्य इति त्रिभिः ॥ १५ ॥
120803
120804 पदार्थाभावसंसिद्धौ वेदनं नोपपद्यते ।
120805 कारणाभावतो नित्यमहंभावस्य नोदयः ॥ १६ ॥
120806
120807 अहंभावानुदयतः संसारः कस्य कीदृशः ।
120808 संसाराभावतः सर्वं परमेवावशिष्यते ॥ १७ ॥
120809
120810 यदिदं भासते तत्सत्परमेवात्मनि स्थितम् ।
120811 परं परे परापूर्णं सममेव विजृम्भते ॥ १८ ॥
120812
120813 प्रागपि यदिदं जगदाकारेण भासते तत्परमार्थतो ब्रह्मैव तथा स्थितं
120814 तत्त्वबोधेन च नापूर्वं किंतु परे स्वभावे स्थितं परमेव परेणापूर्वं समं
120815 स्वरूपमेव विजृम्भते प्रकटीभवति ॥ १८ ॥
120816
120817 तेन निस्तिमितं सर्वं शिलाकीर्णमिवाचलम् ।
120818 विद्धि रश्मिमयाकारमिव ब्रह्म जगत्स्थितम् ॥ १९ ॥
120819
120820 तेन सदैकरूपत्वेन हेतुना । वज्रशिलया कीर्णं निबिडितं वज्रशिलोदरमिवाचलं
120821 दृढम् । तत्र च यज्जगत्स्थितं तद्वज्रमणिरश्मिमयप्रतिबिम्बाकारसहस्रमिव ॥ १९
120822 ॥
120823
120824 पुरः संकल्पके नष्टे संकल्पनगरस्य यत् ।
120825 रूपं तद्विद्धि जगतः खादच्छं सदसन्मयम् ॥ २० ॥
120826
120827 मुक्तौ तर्हि कथं स्थितं तदाह - पुर इति । सदेव सददर्शनादसन्मयम् ॥ २० ॥
120828
120829 छायापुरुषवत्स्पन्दि शान्तं निर्मननं जगत् ।
120830 जगच्छब्दार्थरहितं यः पश्यति स पश्यति ॥ २१ ॥
120831
120832 कथं तर्ह्यचले जगत्स्पन्दप्रत्ययस्तत्राह - छायेति । यथा वज्रशिलोदरे
120833 प्रतिबिम्बपुरुषोऽस्पन्दमान एव स्पन्दते तद्वत्स्पन्दि ॥ २१ ॥
120834
120835 रूपालोकमनस्कारा नीरसागमभावना ।
120836 सम्यग्ज्ञानावबोधस्य निर्वाणं वै विदुर्बुधाः ॥ २२ ॥
120837
120838 सम्यग्ज्ञानप्रबोधस्योदने बाह्या रूपालोका आन्तरा मनस्काराश्च नीरसा निःसारा
120839 इत्यागमप्रमाणजा स्थिरभावना भवति तामेव निर्वाणहेतुत्वान्निर्वाणं विदुः ॥ २२
120840 ॥
120841
120842 यथास्ति वातो निःस्पन्दो यथास्ति खगतोपि वा ।
120843 यथा हेमासंनिवेशमस्ति ब्रह्म जगत्तथा ॥ २३ ॥
120844
120845 जगच्छब्दार्थरहितं यः पश्यति स पश्यतीति यदुक्तं तद्दृष्टान्तैर्विवृणोति ##-
120846 कटकादिसंनिवेशनिर्मुक्तं हेमास्ति तथा जगदप्यसंनिवेशं ब्रह्मास्तीति
120847 संभावनीयमित्यर्थः ॥ २३ ॥
120848

120849 नीरसा असदाभासा जगत्प्रत्ययकारिणः।
120850 रूपालोकमनस्काराः सन्तीमे ब्रह्मरूपिणः॥ २४॥
120851
120852 रूपालोकमनस्कारा इत्येतदपि विवृणोति - नीरसा इति। ब्रह्मरूपिणो
120853 बोधाद्ब्रह्मभूतस्य जगतो जगत्प्रत्ययकारिणो रूपालोकमनस्कारा नीरसाः। कोऽर्थः।
120854 असदाभासा भवन्तीत्यर्थः॥ २४॥
120855
120856 ऊर्मिशब्दार्थरहितं यादृगम्बु बहून्यपि।
120857 सर्गशब्दार्थरहितं तादृग्ब्रह्म निसर्गवत्॥ २५॥
120858
120859 यथा बहून्यपि तरङ्गादीनि समुद्रे ऊर्मिशब्दार्थरहितमम्बुमात्रं भवन्ति तथा
120860 बहून्यपि वस्तूनि ज्ञानोदये निसर्गवद्ब्रह्मैकमेव भवन्तीत्यर्थः॥ २५॥
120861
120862 सर्ग एव परं ब्रह्म परं ब्रह्मैव सर्गदृक्।
120863 सर्गशब्दार्थरहितो वाक्यार्थस्त्वेष शाश्वतः॥ २६॥
120864
120865 सर्गशब्दार्थभेदभाधे सर्गपरब्रह्मणोरैक्यमेवेति व्यतिहारेण द्रढयति -
120866 सर्ग एवेति। हि यस्मात् एष एव सर्वं खल्विदं ब्रह्म इत्यादिश्रौतवाक्यार्थ॥ २६॥
120867
120868 ब्रह्मशब्दार्थसंपत्तौ सर्गशब्दार्थधीः कृता।
120869 सर्गशब्दार्थसंसिद्धौ ब्रह्मशब्दार्थधीः कृता॥ २७॥
120870
120871 बृंहणाद्ब्रह्मेति ब्रह्मशब्दस्यार्थसंपत्तावेव सर्गशब्दार्थधीर्लोके कृता।
120872 एवं सर्गो नामरूपयोर्विसर्गस्त्याग इति सर्गशब्दार्थसंपत्तौ
120873 त्रिविधपरिच्छेदनिवृत्तेर्बृहधात्वर्थानुसारिब्रह्मशब्दार्थता
120874 कृतेत्यनयोरेकार्थतैवेत्यर्थः॥ २७॥
120875
120876 समस्तशब्दशब्दार्थभावनाभावनोदयम्।
120877 शुद्धं तिष्ठति चिद्व्योम ब्रह्मशब्देन कथ्यते॥ २८॥
120878
120879 ब्रह्मशब्दस्य तर्ह्यशब्दे वस्तुनि कथं प्रवृत्तिस्तत्राह - समस्तेति। अल्पस्यापि
120880 परिच्छेदस्याभ्युपगमे बृहधात्वर्थसंकोचापत्तेरशब्दशब्देनेव
120881 तादृशमेव ब्रह्मशब्देन कथ्यत इत्यर्थः॥ २८॥
120882
120883 सम्यग्दर्शनसंसिद्धावुभयोरप्यवेदने।
120884 यच्छिष्टमजरं शान्तं ततो वाग्विनिवर्तते॥ २९॥
120885
120886 अथवा जगच्छब्दस्येव ब्रह्मशब्दस्यापि वाच्यार्थवेदनोत्तरं लक्षणया
120887 अखण्डार्थसम्यग्दर्शनसंसिद्धौ यच्छिष्टं वस्तु ततो
120888 ब्रह्मशब्दादिवागपिनिवर्तत इत्यर्थः॥ २९॥
120889
120890 संशान्तसर्वात्मकवेदनौघमस्तीदमेकात्मकस्वस्वरूपम्।
120891 यथास्थितं सर्वजगत्स्वरूपं पाषाणरूपं च परं ज्ञरूपम्॥ ३०॥
120892
120893 हे राजन् इदं सर्वं जगत्स्वरूपं यथास्थितं यदस्ति
120894 तदप्यतिदृढत्वाद्घनपाषाणरूपं परं ब्रह्मस्वरूपमस्त्येव। यदापीदं
120895 जगदज्ञानेन संशान्तसर्वात्मकवेदनौघं संपन्नं तदापि
120896 एकात्मकस्वस्वरूपं सदस्त्येवेति ब्रह्मजगतोरेकैव सत्तेति न कस्याप्यसत्त्वमित्यर्थः
120897 ॥ ३०॥
120898
120899 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाणप्रकरणे पू०
120900 चू० शिखिध्वजावबोधनं नामैकोनशततमः सर्गः॥ ९९॥

120901
120902 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
120903 शिखिध्वजावबोधनं नामैकोनशततमः सर्गः ॥ ९९ ॥
120904
120905 शततमः सर्गः १००
120906
120907 शिखिध्वज उवाच ।
120908
120909 एवं चेत्तन्महाबुद्धे यादृशं कारणं परम् ।
120910 कार्यं तादृशमेवेदं जगदित्येव वेद्म्यहम् ॥ १ ॥
120911
120912 वार्यते ब्रह्मवत्सत्त्वं जगतो ब्रह्मसत्तया ।
120913 जन्मादिविक्रियाऽस्पृष्टं ब्रह्मैव सदितीर्यते ॥
120914
120915 यदि ब्रह्मजगतोरेकैव सत्ता तर्हि तया सत्तया ब्रह्मेव जगदपि परमार्थसत्यं किं
120916 न स्यात् । मिथ्यावस्तुनो हि कारणं दुर्निरूपम् । सत्यस्य तु सत्यं ब्रह्मैव कारणं
120917 संभवति तुल्यत्वादिति राजा शङ्कते - एवं चेदिति ॥ १ ॥
120918
120919 कुम्भ उवाच ।
120920
120921 यत्र कारणता तस्य कार्यं तदुपपद्यते ।
120922 यन्न कारणमेवादौ तस्मात्कार्यं कुतो भवेत् ॥ २ ॥
120923
120924 सत्यं मायाशबलं शुद्धस्य सत्तयेव जगत्समसत्ताकं जगतः कारणं भवेत् ।
120925 यत्तु निर्गुणं परसत्तानुपजीवि अद्वयत्वात्पूर्वकालाभावेन पूर्ववृत्तित्वशून्यं
120926 निर्विकारं च तस्मात् कार्यं कुतो भवेद्येन तत्समसत्ताकं स्यादित्यर्थः ॥ २ ॥
120927
120928 नेहास्ति कारणं किंचिन्न च कार्यं कदाचन ।
120929 विद्यमानमिदं सर्वं सर्वं शान्तमजं जगत् ॥ ३ ॥
120930
120931 अस्तु तर्हि तत्र स्थितं मायाशबलमेव जगतः कारणमिति चेत्तत्राप्याह - नेहेति । इह
120932 निर्विशेषे मायाशबलं कारणं तत्कार्यं जगच्च नास्ति । मायादृष्ट्यैव
120933 मायातच्छबलतत्कार्याणां सद्भावोपगमात् । परमार्थदृष्ट्या तु सर्वमिदं
120934 जगच्छान्तमजमेवेत्यर्थः । तथा चोक्तं वार्तिके अविद्यास्तीत्यविद्यायामेवासित्वा
120935 प्रकल्प्यते । ब्रह्मदृष्ट्या त्वविद्येयं न कथंचन युज्यते इति ॥ ३ ॥
120936
120937 जायते कारणात्कार्यं यत्तत्कारणवद्भवेत् ।
120938 यन्न जायत एवेह तस्मिन्सदृशता कुतः ॥ ४ ॥
120939
120940 अजातेन च सादृश्यप्रसक्तिरित्याह - जायत इति ॥ ४ ॥
120941
120942 बीजमेव न यस्यास्ति तत्कथं वद जायते ।
120943 अप्रतर्क्यमनाख्यं च यत्तस्य क्वेव बीजता ॥ ५ ॥
120944
120945 कुतो न जायते तत्राह - बीजमेवेति । तत्र बीजाभावेऽपि तदेव बीजं किं न स्यात्तत्राह
120946 - अप्रतर्क्यमिति ॥ ५ ॥
120947
120948 देशकालवशात्सर्वे हेतुमन्तः प्रमाणगाः ।
120949 अकर्तृब्रह्मविषयः प्रमा कारणयोः कथम् ॥ ६ ॥
120950
120951 कुतस्तत्र बीजादिहेत्वभाव इति चेत्प्रमाणसिद्धतदुचितदेशकालाभावादित्याह -
120952 देशेति । तर्हि ब्रह्मगोचरप्रमैव तत्र हेतूपादानकारणगोचरास्तु न विरोधादित्याह

120953 - अकर्त्रीति | यस्य प्रमाणस्याकर्तृ कर्त्रादिकारकमात्रविरोधि ब्रह्म विषयस्तेन
120954 हेतूपादानकारणयोः प्रमा जायत इति कथं वक्तुं शक्यमित्यर्थः || ६ ||
120955
120956 अकर्तृकर्मकरणे नास्ति कारणता शिवे |
120957 तस्मात्तत्कारणं नास्ति जगच्छब्दार्थवेदनम् || ७ ||
120958
120959 ब्रह्मैव त्वं स्वरूपं सद्यत्स्थितं धारयस्व तत् |
120960 असम्यग्दर्शिविषयं तदेव जगदाचितम् || ८ ||
120961
120962 अत एव स्वरूपं शुद्धाकाशकल्पं यन्निर्विशेषं वस्तु तदेवाहमिति तत्त्वदृशा
120963 हृदि धारयस्व नान्यादृशम् | अज्ञदृशा च तदेव जगद्रूपेणाचितमित्यर्थः || ८
120964 | |
120965
120966 चिन्मात्रमजरं शान्तं यदेकं तत्प्रमीयते |
120967 तेनैवायं जगद्ब्रह्म सच्छान्तं बुद्ध्यते वपुः || ९ ||
120968
120969 चिन्मात्रप्रमयैव जगद्ब्रह्मभावेन संपद्यते | अतत्त्वाकारमनोभ्रान्त्या च ब्रह्म
120970 जगदाकारेणेत्याह - चिन्मात्रमिति द्वाभ्याम् || ९ ||
120971
120972 अन्यथैव च यो भावश्चेतसः पृथिवीपते |
120973 स एव नाशः कथितः स्वानुभूतश्च पण्डितैः || १० ||
120974
120975 नाशो ब्रह्मस्वरूपहानिः || १० ||
120976
120977 चित्तं नाशस्वभावं तद्विद्धि नाशात्मकं नृप |
120978 क्षणनाशो यतः कल्पचित्तशब्देन कथ्यते || ११ ||
120979
120980 तदेव स्फुटमाह - चित्तमिति | सः क्षणमात्रमपि स्वरूपविस्मरणरूपो नाशः
120981 कल्पकालविस्मृतचित्तशब्देनोच्यत इत्यर्थः || ११ ||
120982
120983 असंकल्पनमात्रेण सम्यग्ज्ञानोदयात्मना |
120984 संकल्पः क्षीयते सिद्ध्यै स्वयमेवासदात्मकः || १२ ||
120985
120986 तच्च चित्तमसंकल्पनपर्यवसितत्वज्ञानेन [पर्यवसिततत्त्वज्ञानेन इति पाठः |
120987 ] नश्यतीत्याह - असंकल्पनेति || १२ ||
120988
120989 नाम्नैवाङ्गीकृताभावं यदि विश्वं हि कथ्यते |
120990 विद्यमानं कथं तत्स्यान्ननु तामरसेक्षण || १३ ||
120991
120992 अस्तु संकल्पनाशस्तथापि विश्वं कथं निवर्तत इति चेन्मिथ्यात्वादेवेति विशति
120993 परमात्मन्येकीभवति न वस्त्वन्तरतयावतिष्ठत इति विश्वमिति
120994 तन्नामनिर्वचनमभिप्रेत्याह - नाम्नैवेति | यः स्वाधिष्ठाने बाधे न विशति
120995 तद्विद्यमानं कथं स्यादित्यर्थः || १३ ||
120996
120997 हस्तावुत्क्षिप्य यो ब्रूते शूद्रोऽस्मीति भृशं गिरा |
120998 कथं सा विप्रो भवति विप्रत्वं त्वस्य कीदृशम् || १४ ||
120999
121000 तत्र लोकवृत्तं प्रमाणयति - हस्ताविति द्वाभ्याम् || १४ ||
121001
121002 विवृत्तधातुरत्युच्चैर्मृतोऽस्मीति विरौति यः |
121003 मृतिमेवागतं [मृतमिति पाठेपि स एवार्थः |] विद्धि जीवनं तस्य
121004 संभ्रमः || १५ ||

121005
121006 संनिपातेन विवृत्ताः कुपिता धातवो यस्य तथाविधः सन् संनिहितमृत्युरिति यावत् ॥
121007 १५ ॥
121008
121009 भ्रमाकृति यदस्तीह दृश्यतेऽलातचक्रवत् ।
121010 मृगतृष्णाद्विचन्द्रादिबालवेतालकादिवत् ॥ १६ ॥
121011
121012 चित्ताद्यस्तीत्यनुभवस्य तर्हि का गतिरिति चेद्भ्रान्तित्वमेवेति दृष्टान्तैराह -
121013 भ्रमाकृतीति ॥ १६ ॥
121014
121015 तत्कथं किल नाम स्यात्सत्यं श्रमभरात्मकम् ।
121016 अज्ञानभ्रान्तिरेवान्तश्चित्तमित्येव कथ्यते ॥ १७ ॥
121017
121018 भ्रान्तिपुञ्जरूपमेव तर्हि तत्सदस्तु नेत्याह - तदिति ।
121019 तस्याज्ञानव्यतिरिक्तस्वरूपाभावादित्यर्थः ॥ १७ ॥
121020
121021 अज्ञानमुच्यते चित्तमसत्सदिव संस्थितम् ।
121022 असंवेदनमज्ञातं ज्ञानं संवेदनं भवेत् ॥ १८ ॥
121023
121024 अज्ञानसत्त्वसंवित्तेर्ज्ञानात्संवेदनात्क्षयः ।
121025 जलज्ञानं मुधा भ्रान्तिः साधो मरुमरीचिषु ॥ १९ ॥
121026
121027 अज्ञानात्मनैव तर्हि चित्तादि सत्यमस्तु तत्राह - अज्ञानेति ।
121028 ज्ञानबाध्यत्वान्नाज्ञानात्मनापि सत्यता सिद्ध्यतीत्यर्थः । उक्तं
121029 दृष्टान्ताभ्यामुपपादयति - जलज्ञानमित्यादिना ॥ १९ ॥
121030
121031 नैतज्जलमिति ज्ञानात्संवित्तेः प्रविलीयते ।
121032 इदं चित्तमिति प्रौढं यदज्ञानमलं हृदि ॥ २० ॥
121033
121034 नास्ति चित्तमिति ज्ञानात्तत्समूलं विनश्यति ।
121035 यथा रज्ज्वां भुजङ्गत्वमज्ञानभ्रमसंभवम् ॥ २१ ॥
121036
121037 न सर्पोऽयमिति ज्ञानाद्धृदि रूढात्प्रणश्यति ।
121038 तथात्मनि मनोभूतमज्ञानभ्रमसंभवम् ॥ २२ ॥
121039
121040 चित्तं नास्तिति विज्ञानाद्धृदि रूढाद्विनश्यति ।
121041 चित्तं मनोऽहमित्यन्तर्यावदज्ञानसंभवम् ॥ २३ ॥
121042
121043 यावत् सकलम् ॥ २३ ॥
121044
121045 न चित्तमस्ति नो चैवमहंकारादिसंयुतम् ।
121046 किंचिदेव जगत्यस्मिन्संविदेकान्तनिर्मला ॥ २४ ॥
121047
121048 अहंकारादिसंयुतं किंचिद्देहादि । अप्यर्थे एवकारः । तर्हि किमस्ति तदाह -
121049 संविदिति ॥ २४ ॥
121050
121051 तया संकल्पचित्तादि कृतमासीद्विमूढया ।
121052 अद्यासंकल्पतः सर्वं परित्यक्तं प्रबुद्धया ॥ २५ ॥
121053
121054 संकल्पेन यदा याति त्वसंकल्पेन गच्छति ।
121055 पवनेन महाबाहो ज्वालाजालमिवानले ॥ २६ ॥
121056

121057 आत्मतत्त्वैकघनया ततया ब्रह्मसत्तया।
121058 जगत्सर्वमिति व्याप्तं समुद्र इव वारिणा॥ २७॥
121059
121060 व्याप्तं ग्रस्तम्॥ २७॥
121061
121062 नाहमस्मि न चान्योस्ति न त्वं नैते न चित्तकम्।
121063 नेन्द्रियाणि न चाकाशमात्मा त्वेकोऽस्ति निर्मलः॥ २८॥
121064
121065 कथं ग्रस्तं तदाह - नाहमिति॥ २८॥
121066
121067 घटाद्याकाररूपेण स एवायं विलोक्यते।
121068 इदं चित्तमयं चाहमिति कैव कुकल्पना॥ २९॥
121069
121070 तर्हि जीवन्मुक्तैर्घटाद्याकारेण किमवलोक्यते तत्राह - घटादीति॥ २९॥
121071
121072 न जायते न म्रियते किंचिदस्मिञ्जगत्त्रये।
121073 केवलोऽयं चिदुल्लासः सदसद्भावनात्मना॥ ३०॥
121074
121075 सर्वमात्मा परंब्रह्म सकृत्प्रकटमाततम्।
121076 द्वित्वैकत्वे न विद्येते न भ्रान्तिर्न च संभ्रमः॥ ३१॥
121077
121078 संभ्रमो मरणादिभयम्॥ ३१॥
121079
121080 सर्वेन्द्रियगणाकारे सन्नेवासि सखे ततः।
121081 न दह्यसे महाबुद्धे न च क्वचन लिप्यसे॥ ३२॥
121082
121083 सर्वस्मिन्निन्द्रियगणे तद्ग्राह्यवह्न्याद्याकारे च सन्नेव सन्मात्रस्वरूपस्त्वमसि। अतो
121084 दाहहेतुभिराध्यात्मिकादिभावैर्न दह्यसे॥ ३२॥
121085
121086 न ते विनश्यति सखे न च किंचिद्विवर्धते।
121087 निर्मलाकाशरूपस्य कैवल्यानन्तरूपिणः॥ ३३॥
121088
121089 इच्छानिच्छात्मिके शक्ती येतरापि त्वमेव च।
121090 न ह्यंशुव्यतिरेकेण शशाङ्क उपलभ्यते॥ ३४॥
121091
121092 इतरा क्रियाशक्तिरपि त्वमेव। अतस्तवेष्टमनिष्टं कर्तव्यं च नास्तीत्यर्थद्योतनाय
121093 चकारः। अंशवः कलास्तद्व्यतिरेकेण॥ ३४॥
121094
121095 अजमजरमनाद्यजस्वभावं सकृदमलं विलसत्सदैकरूपम्।
121096 विगलितकलनं कलाख्यलीलं सदुदितमाद्यमजं तदात्मतत्त्वम्॥ ३५॥
121097
121098 त्रिभिरजपदैर्जन्मवृद्धिविपरिणामा निरस्यन्ते। सदैकरूपमित्यनेनान्ये विकाराः।
121099 सकृद्विलसत्सकृत्प्रभातम्। कलाप्रमाणेन स्वस्वरूपपरिचयस्तदाख्या लीला यस्य
121100 तथाविधं सत् सन्मात्रतया उदितम्। आद्यं सर्वव्यवहारेभ्यः प्राक्सिद्धं यद्वस्तु
121101 तदेवात्मतत्वमित्यर्थः॥ ३५॥
121102
121103 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मी० दे० मोक्षो० निर्वाणप्रकरणे पू० चू०
121104 शिखिध्वजपरमावबोधनं नाम शततमः सर्गः॥ १००॥
121105
121106 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
121107 शिखिध्वजपरमावबोधनं नाम शततमः सर्गः॥ १००॥
121108

121109
121110 एकाधिकशततमः सर्गः १०१
121111
121112 श्रीवसिष्ठ उवाच।
121113
121114 इति कुम्भवचो राजा भावयंस्तदकृत्रिमम्।
121115 स्वयमात्मपदे तस्मिन्क्षणं परिणतोऽभवत्॥ १॥
121116
121117 ज्ञानदार्ढ्येन राज्ञोऽत्र वर्ण्यते कृतकृत्यता।
121118 जीवन्मुक्तावचित्तत्वं स्थितिस्तत्त्वस्य चेर्यते॥
121119
121120 परिणतः पूर्वभावं विहाय तद्भावं प्राप्तः॥ १॥
121121
121122 बभूवामीलितमनोलोचनः शान्तवाङ्मुनिः।
121123 शिलातलादिवोत्कीर्णो निस्पन्दावयवाकृतिः॥ २॥
121124
121125 शिलातलादुत्कीर्णः प्रतिमादिरिव॥ २॥
121126
121127 ततो मुहूर्तमात्रेण प्रबुद्धं स्फुरितेक्षणम्।
121128 तमुवाच महाबाहो चूडाला कुम्भरूपिणी॥ ३॥
121129
121130 कुम्भ उवाच।
121131
121132 कच्चिदस्मिन्पदे स्फारे शुद्धे विततनिर्मले।
121133 सुतल्पे निर्विकल्पानां सुखं विश्रान्तवानसि॥ ४॥
121134
121135 निर्विकल्पानां योगिनां शोभनतल्पभूते निरतिशयानन्दपदे॥ ४॥
121136
121137 कच्चिदन्तः प्रबुद्धोसि कच्चिद्भ्रान्तिस्त्वयोज्झिता।
121138 कच्चिज्ज्ञेयं परिज्ञातं दृष्टं द्रष्टव्यमेव वा॥ ५॥
121139
121140 शिखिध्वज उवाच।
121141
121142 भगवंस्त्वत्प्रसादेन महाविभवभूमिका।
121143 महती पदवी दृष्टा सर्वस्योर्ध्वं स्थिता मया॥ ६॥
121144
121145 महाविभवो निरतिशयानन्दस्तल्लक्षणा भूमिका। सर्वस्य हैरण्यगर्भानन्दान्तस्य
121146 विषयानन्दजातस्योर्ध्वमुत्कर्षकाष्ठायां स्थिता॥ ६॥
121147
121148 सतां विदितवेद्यानामहो बत महात्मनाम्।
121149 अपूर्वैकामृतमयः सङ्गः सारफलप्रदः॥ ७॥
121150
121151 बतेति हर्षे। अपूर्वमनादौ संसारे कदाप्यननुभूतं यदेकामृतं
121152 निरतिशयानन्दस्तत्प्रचुरः अत एव सारफलप्रदः॥ ७॥
121153
121154 जन्मनापि मया लब्धं यन्नाम न महामृतम्।
121155 तदद्य त्वत्समासङ्गात्तेनैवासादितं स्वयम्॥ ८॥
121156
121157 सामान्योक्तं विशिष्य विवृणोति - जन्मनेति। तेन महामृतस्वरूपभूतेनैव
121158 मया अनाद्यज्ञानान्न लब्धं तदद्य त्वत्समासङ्गात्स्वयमेवानायासेनासादितम्॥
121159 ८॥
121160

121161 अनन्तमाद्यममृतं चैतत्कमललोचन।
121162 कथं नासादितमभूत्पूर्वमात्मपदं मया॥ ९॥
121163
121164 कुम्भ उवाच।
121165
121166 मनस्युपशमं याते त्यक्तभोगैषणे स्थिते।
121167 कषायपाके निर्वृत्ते सर्वेन्द्रियगणस्य च॥ १०॥
121168
121169 पूर्वं चित्तकषायपाकाभावान्नासादितमिदानीं तु तपसा
121170 तत्परिपाकादासादितमित्याशयेन कुम्भ उत्तरमाह - मनसीत्यादिना।
121171 सर्वेन्द्रियगणस्य चान्मनसश्च भोगलक्षणकषायाणां पाके निर्वृत्ते सति तथा च
121172 स्मृतिः कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः। कषाये कर्मभिः पक्के ततो
121173 ज्ञानं प्रजायते इति॥ १०॥
121174
121175 यान्ति चेतसि विश्रान्तिं विमला देशिकोक्तयः।
121176 यथा सितांशुके शुद्धे बिन्दवः कुङ्कुमाम्भसः॥ ११॥
121177
121178 कषायाणामनन्तानां संभृतानां शरीरकैः।
121179 स्ववासनास्वरूपाणामद्य पाकस्तवोदितः॥ १२॥
121180
121181 देहान्मलानि सर्वाणि कालेन कमलेक्षण।
121182 साधो वृक्षात्फलानीव पाकेन विगलन्त्यधः॥ १३॥
121183
121184 देहाल्लिङ्गदेहात्। मलानि रागादिकषायाः पापानि च॥ १३॥
121185
121186 वासनात्मसु यातेषु मलेषु विमलं सखे।
121187 यद्वक्ति गुरुरन्तस्तद्विशतीषुर्यथा बिसे॥ १४॥
121188
121189 बिसे मृणालरूपे धानुष्कपरिकल्पिते लक्ष्ये॥ १४॥
121190
121191 कषायपाके संपन्ने त्वं मयाद्य विबोधितः।
121192 तेनाद्यैव तवाज्ञानक्षयो जातो महामते॥ १५॥
121193
121194 अद्य पक्वकषायस्त्वमद्यैव ज्ञानसंकथाम्।
121195 अद्येह सोपदेशस्त्वमद्यैवासि प्रबुद्धवान्॥ १६॥
121196
121197 ज्ञानार्थां संकथामुपदेशं तात्पर्येणावधारितवानसीति शेषः।
121198 उपदिष्टार्थानां हृदि धारणात्सोपदेशः।
121199 प्रबुद्धवांस्तत्फलसाक्षात्कारज्ञानवान् जातोऽसीत्यर्थः॥ १६॥
121200
121201 शुभाशुभानां सर्वेषां कर्मणामद्य संक्षयः।
121202 सत्सङ्गव्यपदेशेन तव निष्पत्तिमागतः॥ १७॥
121203
121204 यावदस्य दिनस्यैष पूर्वभागो महीपते।
121205 तावच्चेतोहंममेति तवाज्ञानं बभूव ह॥ १८॥
121206
121207 तवाज्ञानमद्य मध्याह्नकाले क्षीणमिति मया ज्ञातमित्याह - यावदिति॥ १८॥
121208
121209 इदानीं मद्वचोबोधाच्चेतसि क्षयमागते।
121210 हृदयात्संपरित्यक्ते संप्रबुद्धोऽसि भूपते॥ १९॥
121211
121212 इदानीमद्यतनदिनस्योत्तरभागे हृदयात्संपरित्यक्ते चेतसि क्षयमागते सति॥ १९॥

121213
121214 हृदि यावन्मनःसत्ता तावदज्ञानसंस्थितिः ।
121215 चित्ते चित्ततया त्यक्ते ज्ञानस्याभ्युदयो भवेत् ॥ २० ॥
121216
121217 अचित्ततया निःस्वरूपताबुद्ध्या ॥ २० ॥
121218
121219 द्वित्वैकत्वदृशौ चित्तं तदेवाज्ञानमुच्यते ।
121220 एतयोर्यो लयो दृष्टेस्तज्ज्ञानं सा परा गतिः ॥ २१ ॥
121221
121222 दृष्टेः परमात्माभिव्यक्तेः ॥ २१ ॥
121223
121224 प्रबुद्धोऽसि विमुक्तोऽसि त्यक्तं चित्तं त्वया नृप ।
121225 सदसत्तामयत्वं हि त्वया त्यक्तमसत्पदम् ॥ २२ ॥
121226
121227 आत्मन्यन्योन्याध्यासात्सदसत्तामयत्वमेव हि चित्तं नाम तदेव असतो जगतः पदं
121228 कल्पनास्थानम् ॥ २२ ॥
121229
121230 वीतशोको निरायासो निःसङ्गोऽनन्य आत्मवान् ।
121231 महोदयो मुनिर्मौनी स्वरूपे तिष्ठ निर्मले ॥ २३ ॥
121232
121233 शिखिध्वज उवाच ।
121234
121235 एवं हि भगवन् जन्तोर्मूर्खस्यैवास्ति चित्तभूः ।
121236 प्रबुद्धस्य न तज्ज्ञस्य चित्तं नाम किल प्रभो ॥ २४ ॥
121237
121238 चित्ते त्यक्ते जीवन्मुक्तानां केनान्तःकरणेन व्यवहारसिद्धिरिति प्रष्टुं राजा
121239 पीठिकां रचयति - एवं हीति । यदीत्यर्थे किलशब्दः ॥ २४ ॥
121240
121241 जीवन्मुक्तास्तदेते हि विहरन्ति कथं वद ।
121242 अविद्यमानमनसो युष्मदाद्यास्तथा नराः ॥ २५ ॥
121243
121244 प्रष्टव्याशं दर्शयति - जीवन्मुक्ता इति । तत् तर्हि ॥ २५ ॥
121245
121246 इति मे कथयाशेषमन्यैः स्ववचनांशुभिः ।
121247 हार्दं तमो मे निपुणमेवंप्रायैः प्रमार्जय ॥ २६ ॥
121248
121249 अन्यैर्दुर्वचमिति शेषः । अन्यैः प्रसिद्धसूर्याद्यंशुविलक्षणैः स्ववचनांशुभिः
121250 प्रसिद्धतमोविलक्षणं हार्द तमः प्रमार्जयेति वा ॥ २६ ॥
121251
121252 कुम्भ उवाच ।
121253
121254 यथा वदसि तत्त्वज्ञ तत्तथैव हि नान्यथा ।
121255 चित्तं हि जीवन्मुक्तानां नास्त्यङ्कुर इवाश्मनाम् ॥ २७ ॥
121256
121257 पुनर्जननयोग्या या वासना घनवासना ।
121258 सा प्रोक्ता चित्तशब्देन न सा तज्ज्ञस्य विद्यते ॥ २८ ॥
121259
121260 यया वासनया तज्ज्ञा विहरन्तीह कर्मसु ।
121261 तां त्वं सत्त्वाभिधां विद्धि पुनर्जननवर्जिताम् ॥ २९ ॥
121262
121263 यथा भर्जिता वितुन्नाश्च लाजा न व्रीह्यादिशब्दवाच्या
121264 नाप्यङ्कुरादिजननक्षमास्तद्वत्तत्त्वज्ञानभर्जितं निरावरणं सत्त्वं न

121265 मनःशब्दवाच्यं नापि पुनर्जन्मसमर्थमित्यर्थः ॥ २९ ॥
121266
121267 जीवन्मुक्ता महात्मानः सत्त्वस्थाः संयतेन्द्रियाः ।
121268 विहरन्ति गतासङ्गं न चित्तस्थाः कदाचन ॥ ३० ॥
121269
121270 जीवन्मुक्तव्यवहाराभासे तदेव कारणाभास इत्याह - जीवन्मुक्ता इति ॥ ३० ॥
121271
121272 मूढं चित्तं चित्तमाहुः प्रबुद्धं सत्त्वमुच्यते ।
121273 अप्रबुद्धा हि चित्तस्थाः सत्त्वस्थास्तु महाधियः ॥ ३१ ॥
121274
121275 भूयः प्रजायते चित्तं सत्त्वं भूयो न जायते ।
121276 अप्रबुद्धस्य बन्धोस्ति न प्रबुद्धस्य भूपते ॥ ३२ ॥
121277
121278 सत्ववानसि संजातो महात्यागी स्थितो भवान् ।
121279 अशेषेण त्वया चित्तं त्यक्तमद्येति वेद्म्यहम् ॥ ३३ ॥
121280
121281 तवापि सत्त्वबलादेव यावज्जीवं व्यवहारः सेत्स्यतीत्याशयेनाह - सत्त्ववानसीति ॥
121282 ३३ ॥
121283
121284 समस्तवासनोन्मुक्तो राजन्नद्यैव राजसे ।
121285 आकाशसाम्यमायातं मन्ये तव मुने मनः ॥ ३४ ॥
121286
121287 शमं प्राप्तोऽसि परमं सिद्धः समसमस्थितिः ।
121288 अयं हि स महात्यागः सर्वं यत्तत्समुज्झितम् ॥ ३५ ॥
121289
121290 त्वया प्राक्चिकीर्षितो यो महात्यागः स सर्वरूपं चित्तं यत्समुज्झितमयमेवेत्यर्थः ॥
121291 ३५ ॥
121292
121293 स्वर्गापवर्गवित्तादि तपोदानफलाद्यपि ।
121294 प्रबुद्धमेधया साधो धिया परमबोधया ॥ ३६ ॥
121295
121296 चित्तत्यागे तपोदानादिसर्वकर्माण्यन्तर्भूतानि तत्फले च
121297 वित्तस्वर्गापवर्गादितत्फलान्यन्तर्भूतानीत्याशयेनाह - स्वर्गेति । प्रबुद्धा
121298 मेधा उपदिष्टार्थधारणा यस्यास्तथाविधया अत एव परमबोधवत्या धिया
121299 कृतश्चित्तत्याग एव स्वर्गापवर्गवित्तादिरित्यर्थः ॥ ३६ ॥
121300
121301 तपो नाम कियन्मात्रदुःखक्षयकरं भवेत् ।
121302 क्षयातिशयनिर्मुक्तं यत्सुखं समतामयम् ॥ ३७ ॥
121303
121304 तप-आदिफले तु न ज्ञानफलमन्तर्भवतीत्याशयेनाह - तपो नामेति । यद्यतो
121305 मनस्त्यागरूपसमतायाः सकाशादागतं यत् ज्ञानफलं मोक्षसुखं
121306 क्षयातिशयनिर्मुक्तमित्यर्थः । तत आगतः इत्यर्थे मयट् च इति मयट् ॥ ३७ ॥
121307
121308 तत्सत्तद्वस्तु तत्किंचिन्न तु स्वर्गादि भङ्गुरम् ।
121309 भावाभावैरुपारूढं स्थिताधिगतवेदनम् ॥ ३८ ॥
121310
121311 न ह्यसत्ये अनित्ये च सत्यस्य शाश्वतस्य चान्तर्भावसंभावनापीत्याशयेनाह -
121312 तदिति । तत् ज्ञानफलं सत् सत्यम् । वसतीति वस्तु शाश्वतं च । तत्स्वर्गादि किंचित्तु न तु
121313 सत्यं भङ्गुरं च । भावाभावैराविर्भावतिरोभावैरुपारूढमाक्रान्तं
121314 पूर्वोत्तरकालयोरदृष्टं स्थितं वर्तमानमेवाधिगतवेदनं प्राप्तदर्शनं
121315 स्वप्नवदित्यर्थः ॥ ३८ ॥
121316

121317 स्वर्गो नाम किमानन्दः सोपि संदेहसंस्थितः |
121318 अप्राप्तस्वात्मसंसिद्धेः क्रियाकाण्डः शुभो भवेत् || ३९ ||
121319
121320 तुच्छं बह्वायासलभ्यं च स्वर्गादितुच्छसुखमज्ञानामेव बहुमतं न
121321 तत्त्वविदामित्याशयेनाह - स्वर्ग इति | स्वर्गो नामेति किमानन्दस्तुच्छसुखम् | किं
121322 क्षेपे इति समासः
121323 अवर्जनीयधर्मकीर्तनाद्यल्पापराधसहस्रनाश्यत्वात्संदेहसंस्थितः || ३९ ||
121324
121325 येन नासादितं हेम रीतिं किं स परित्यजेत् |
121326 चूडालादिसमासङ्गाद्भवेज्ज्ञत्वं सुखेन ते || ४० ||
121327
121328 ज्ञानदौर्लभ्यादज्ञानां युक्त एव तुच्छस्वर्गादिपरिग्रह इत्याशयेनाह -
121329 येनेति | रीतिं पित्तलम् | तव तु ज्ञानं प्राङ्न दुर्लभमभूत्तथापि त्वं वृथैव
121330 तपःक्लेशे निमग्न इत्याह - चूडालेति || ४० ||
121331
121332 तत्किमर्थमनर्थेऽस्मिन्निमग्नस्त्वं तपोमये |
121333 आश्रमादिविकल्पांशसाध्यस्याद्य कुकर्मणः || ४१ ||
121334
121335 आश्रमो वानप्रस्थाश्रमः | आदिपदात्तद्योग्यं
121336 वयस्तदुचितकर्माधिकारनिर्वाहकविशेषणान्तराणि च |
121337 तदभिमानतत्साधनचिन्तादिविकल्पविक्षेपांशसहस्रसाध्यस्य बन्धकत्वात्फलतोऽपि
121338 कुत्सितस्य कर्मणः संबन्धिनि कृच्छ्रचान्द्रायणादितपःक्लेशप्रचुरे अनर्थे
121339 त्वमद्यपर्यन्तं किमर्थं निमग्नः || ४१ ||
121340
121341 आद्यन्तावस्य सुमते मध्य एव सुखं स्म भो |
121342 यतस्ते समयो जातो यस्मिन्परिणमन्ति च || ४२ ||
121343
121344 स्वर्गादिमहासुखहेतोस्तपसः कथमनर्थत्वं तत्राह - आद्यन्ताविति | भो सुमते
121345 यतोऽस्य तपस आदिभाग आचरणावस्था अन्तभागः फलक्षयावस्था च
121346 दुःखरूपावेव | मध्ये स्वर्गादिभोगावस्थायामेव सुखं स्म किल | तर्हि किं मया
121347 कृतं तपो व्यर्थमेव नेत्याह - यत इति | यतस्तपसैव ते
121348 चित्तकषायपाकात्सांप्रतं तत्त्वबोधसमयो जातः | अतो हेतोः सर्वे तपोरूपा
121349 विकल्पांशा यस्मिन्नविकल्पे तत्वज्ञाने परिणमन्ति तत्फलेनैव फलवन्तोऽपि च
121350 भवन्ति || ४२ ||
121351
121352 तपोरूपा विकल्पांशास्तत्र बद्धपदो भव |
121353 चिद्व्योम्नो नभसोत्यच्छात्सर्वे भावाः समुत्थिताः || ४३ ||
121354
121355 तत्र ज्ञाने बद्धपदः स्थिरो भव | विविदिषन्ति यज्ञेन दानेन तपसा इत्यादि
121356 श्रुतेस्तत्फलेनैव ते तपसः साफल्यमिति भावः | ज्ञानफलचिद्व्योमलाभेन
121357 सर्वमेव लब्धम् | सर्वस्य जगतस्तत एवोद्भवस्थितिलयश्रुतेरित्याशयेनाह -
121358 चिद्व्योम्न इति || ४३ ||
121359
121360 तथैव परिदृश्यन्ते तत्रैव विलयं गताः |
121361 इदं कार्यमिदं नेति संकल्पा ब्रह्मबिन्दवः || ४४ ||
121362
121363 यद्यपि कार्यमिष्टमकार्यमनिष्टं च सर्वमपि ब्रह्मसमुद्रबिन्दव एव तथापि
121364 तुच्छत्वात्तत्सर्वं बन्ध्यं निष्फलमेवातस्तत्त्यक्त्वा पूर्णं समुद्रस्थानीयं
121365 निर्विशेषमेव समाश्रयेत्याह - इदमिति || ४४ ||
121366
121367 वन्ध्यं शिखिध्वज त्यक्त्वा पूर्णमेव समाश्रय |
121368 इष्टं मे प्रार्थयस्वेति यथैव प्रार्थ्यते सखे || ४५ ||

121369
121370 परमप्रेमास्पदत्वान्निरतिशयानन्दरूपस्य स्वस्य इष्टान्तरप्रार्थनापेक्षया
121371 तादृशस्वलाभप्रार्थनमेव वरमित्याशयेनाह - इष्टमिति।
121372 यथाऽलब्धदयितया स्त्रिया लब्धव्यदयितं प्रति मे इष्टं प्रार्थयस्वेत्यन्यत्प्रार्थ्यते
121373 तथैव स्वयं दयित एव कथं न प्रार्थ्यते। तस्मिन्स्वाधीनतया लब्धे
121374 तदधीनलब्धव्यान्तराणां स्वत एव लाभादिति भावः॥ ४५॥
121375
121376 स्त्रिया तथैव स कथं दयितः प्रार्थ्यते स्वयम्।
121377 संकल्परचितानेतान्भावानापतभासुरान्॥ ४६॥
121378
121379 अङ्गीकृत्यात्मातिरिक्तेष्टानां पुरुषार्थत्वं लब्धत्वादेवाप्रार्थनीयत्वमुक्तम्।
121380 वस्तुतस्तु तेषां तत्त्वज्ञदृशा तुच्छत्वादग्राह्यत्वमेवेत्याह - संकल्पेति।
121381 आपद इव अभासुरानरमणीयान्॥ ४६॥
121382
121383 गृह्णन्ति न महात्मानः प्राज्ञा जलरवीनिव।
121384 स्वर्गमोक्षादिफलदं यत्किंचित्सर्वमेव तत्॥ ४७॥
121385
121386 जलरवीन् रविप्रतिबिम्बानिव। ज्ञानलाभानन्तरं
121387 स्वर्गादिसाधनानीवापवर्गसाधनान्यपि हेयान्येवेत्याशयेनाह - स्वर्गेति॥ ४७॥
121388
121389 त्यक्त्वा समसमाभासो योऽस्यसावेव वै भव।
121390 सत्त्वं सत्त्वेन नाशेन नाश्यं हि विगतस्पृहः॥ ४८॥
121391
121392 सर्वपदार्थेषु सदंशः सत्त्वेनैव ग्राह्यः असदंशस्तु नित्यनष्टत्वेनैव
121393 ग्राह्यश्चित्तचाञ्चल्यं विनेत्याह - सत्त्वमिति॥ ४८॥
121394
121395 पदार्थौघमिमं गृह्णंस्तिष्ठास्पन्दितचित्तभूः।
121396 अपरिस्पन्दचित्तस्य संसृतिर्नेह धावति॥ ४९॥
121397
121398 अस्पन्दितचित्तभूरित्युक्तेः प्रयोजनमाह - अपरिस्पन्देति। न धावति न प्राप्नोति।
121399 यथा स्वाभाविकप्रवृत्तिलक्षणपुरुषापराधप्रभवा विपत्तिर्मतौ
121400 विवेकज्ञानोदये सति न प्राप्नोति तद्वदित्यर्थः॥ ४९॥
121401
121402 पौरुषप्रभवा साधो विपत्तिर्हि मतौ यथा।
121403 यानि यानीह दुःखानि प्रस्फुरन्ति जगत्त्रये॥ ५०॥
121404
121405 चेतश्चापलजान्येव तानि तानि महीपते।
121406 स्थिरं शान्तं गतस्पन्दं यस्य चित्तमचापलम्।
121407 सदैव स महानन्दी साम्राज्यस्य स भाजनम्॥ ५१॥
121408
121409 सम्यग्भग्नावरणतया राजत इति सम्राट् साक्षात्कृत आत्मा तद्भावस्य
121410 भाजनमित्यर्थः॥ ५१॥
121411
121412 अथ चेतसि तत्त्वज्ञ स्पन्दास्पन्दौ त्वमेकताम्।
121413 नीत्वा तिष्ठ यथाकाममैक्यमागत्य शाश्वतम्॥ ५२॥
121414
121415 स्पन्दास्पन्दौ तत्साक्षिमात्रतादर्शनेनैकतां नीत्वा साक्षिणमपि
121416 ब्रह्मात्मैक्यमागत्य प्रापय्य भूमानन्दभावेन यथाकामं पूर्णकामतया
121417 तिष्ठेत्यर्थः॥ ५२॥
121418
121419 शिखिध्वज उवाच।
121420

121421 कथमैक्यं विभो यातः स्पन्दास्पन्दाविमावुभौ।
121422 सर्वसंशयविच्छेदकारिन्नेतद्वदाशु मे॥ ५३॥
121423
121424 विरुद्धयोः स्पन्दास्पन्दयोरेकतानयनं कथमिति राजा पृच्छति - कथमिति॥ ५३
121425 ॥
121426
121427 कुम्भ उवाच।
121428
121429 एकं वस्तु जगत्सर्वं चिन्मात्रं वारिवाम्बुधि।
121430 तदेव स्पन्दते धीभिः शुद्धवारिव वीचिभिः॥ ५४॥
121431
121432 तयोः स्वरूपेणैक्यविरोधेऽप्यधिष्ठानसाक्षिचिन्मात्ररूपेण न तद्विरोध इति
121433 स्वाशयप्रकटनेन कुम्भ उत्तरमाह - एकमिति। वाः इव स्पन्दते स्पन्दात्मना
121434 विवर्तते॥ ५४॥
121435
121436 ब्रह्म चिन्मात्रममलं सत्त्वमित्यादिनामकम्।
121437 यद्गीतं तदिदं मूढाः पश्यन्त्यङ्ग जगत्तया॥ ५५॥
121438
121439 सत्यं ज्ञानमनन्तं ब्रह्म इत्यादिश्रुतिभिर्यद्गीतम्। अङ्गेत्यामन्त्रणे॥ ५५॥
121440
121441 चित्स्पन्द एव सर्वस्वं सर्गे तस्माद्धि संसृतिः।
121442 परिस्पन्दो हि विन्ध्यादिशब्दस्पन्दसमं परम्॥ ५६॥
121443
121444 स्पन्दास्पन्दयोरैक्यमुपपादयति - चित्स्पन्द इति। सर्गे यत्सर्वस्वं तच्चित्स्पन्द एव।
121445 तत्र विन्ध्यादिरूपपरिस्पन्दः परं द्वितीयं शब्दस्पन्दसमम्। इवार्थे समशब्दो
121446 मिथ्यात्वद्योतनार्थः। नामपरिस्पन्द इत्यर्थः॥ ५६॥
121447
121448 चितः स एव चेत्स्पन्दस्तथाऽस्पन्दश्च भावितः।
121449 एकरूपतया नाम तत्रेदममलं शिवम्॥ ५७॥
121450
121451 अस्त्वेवं तथापि कथं स्पन्दास्पन्दैक्यं तत्राह - चित इति। स तत्तत्साक्ष्यात्मैव
121452 चितः स्पन्दोऽस्पन्दश्चैकरूपतया भावितश्चेत्तत्र इदमात्मरूपमेव शिवं
121453 परिशिष्यत इत्यर्थः॥ ५७॥
121454
121455 सर्गश्चित्स्पन्दमात्रात्मा सम्यग्दृष्टौ विलीयते।
121456 उदेत्यसम्यग्दृष्टीनां रज्ज्वां सर्पभ्रमो यथा॥ ५८॥
121457
121458 सर्गस्तदा क्व गच्छति तत्राह - सर्ग इति। यतः सः असम्यग्दृष्टीनां भ्रान्त्या
121459 उदेति॥ ५८॥
121460
121461 सस्पन्दा चित्तदभिधा निःस्पन्दा त्वियमातता।
121462 तुर्यातीतपदारूढा वाचा वक्तुं न पार्यते॥ ५९॥
121463
121464 तदभिधा सर्गाभिधा। निस्पन्दा तु तुर्यातीतपदारूढा॥ ५९॥
121465
121466 शास्त्रसज्जनसंपर्कसंतताभ्यासयोगतः।
121467 कालेनामलतां याते चेतसीन्दाविवोदिता॥ ६०॥
121468
121469 कदा तथोदिता भवति तदाह - शास्त्रेति। यथा चक्षुषि तिमिरदोषक्षयेणामलतां
121470 याते नित्यसिद्धैव चन्द्रैकता उदिता तद्वत्॥ ६०॥
121471
121472 एतत्केवलमाभातं स्वानुभूतिभिराततम्।

121473 कथ्यते स्वानुभूतेषु स्वयं स्वं रूपमात्मना ॥ ६१ ॥
121474
121475 यदि वाचा वक्तुं न पार्यते तर्हि कथं त्वया मादृशेषु कथ्यते तत्राह - एतदिति
121476 | स्वमनुभूतं यैस्तथाविधेषु स्वानुभूतिभिरेव स्वयं कथ्यते
121477 लोकदृष्ट्येत्यर्थः ॥ ६१ ॥
121478
121479 प्राप्तोऽसि सारं स्वमनादिमध्यमत्रैव तिष्ठ स्वपदे निविष्टः ।
121480 नो रूपनिर्भेदमहाचिदात्मा जातोऽसि साधो खलु वीतशोकः ॥ ६२ ॥
121481
121482 त्वमपि स्वानुभूतिं प्राप्तोऽस्येव तत्र मद्वचसा स्थैर्यमात्रं कुर्वित्याह -
121483 प्राप्तोऽसीति । भेदकदेहादिरूपाणामभावादेव सर्वदेहेषु निर्भेदः । अत एव
121484 महांश्चिदात्मा जातस्तत्त्वबोधात्प्रादुर्भूतोसि तत एव वीतशोकः तत्र को मोहः कः
121485 शोक एकत्वमनुपश्यतः इति श्रुतेरिति भावः ॥ ६२ ॥
121486
121487 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० न्निर्वाणप्रकरणे पू० चू०
121488 शिखिध्वजबोधनं नामैकाधिकशततमः सर्गः ॥ १०१ ॥
121489
121490 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
121491 शिखिध्वजबोधनं नामैकाधिकशततमः सर्गः ॥ १०१ ॥
121492
121493 द्व्यधिकशततमः सर्गः १०२
121494
121495 कुम्भ उवाच ।
121496
121497 इति ते कथितं सर्वं शिखिध्वज महीपते ।
121498 यथेदमुत्थितं सर्वं यथा च प्रविलीयते ॥ १ ॥
121499
121500 आमन्त्र्यान्तर्हिते कुम्भे विस्मितस्य महीपतेः ।
121501 चिरं विमृश्य विश्रान्तिः समाधाविह वर्ण्यते ॥
121502
121503 यथेदं सर्वमुत्थितमित्यध्यारोपेण यथा च प्रविलीयत इत्यपवादेन च सर्वं
121504 पूर्णं ब्रह्मतत्त्वं ते मया कथितम् ॥ १ ॥
121505
121506 एतच्छ्रुत्वा च बुद्ध्वा च मत्वा च मुनिनायक ।
121507 यथेच्छसि तथा तिष्ठ दृष्टे स्पष्टे परे पदे ॥ २ ॥
121508
121509 गुरुशास्त्राभ्यां श्रुत्वा स्वीयविचारेण मत्वा च सम्यग् बुद्ध्वा साक्षाद्दृष्टे
121510 आवरणभङ्गात्स्पष्टे परे पदे कदाचित्समाधिप्राधान्येन कदाचिद्व्यवहारेण च
121511 यथेच्छसि तथा तिष्ठ ॥ २ ॥
121512
121513 स्वर्गं गच्छाम्यहं पर्वकालेऽस्मिन्नारदो मुनिः ।
121514 ब्रह्मलोकात्समायातो भवत्यमरसंसदि ॥ ३ ॥
121515
121516 स्वर्गमिन्द्रसभाम् ॥ ३ ॥
121517
121518 न मां पश्यति चेत्तत्र तत्कोपमुपगच्छति ।
121519 नोद्वेजनीया भव्येन गुरवो हि कदाचन ॥ ४ ॥
121520
121521 त्यक्तसंकल्पलेखेन न किंचिदभिवाञ्छता ।
121522 त्वया सदैव वस्तव्यं दृष्टिरेषैव पावनी ॥ ५ ॥
121523
121524 एषा मदुपदिष्टैव ॥ ५ ॥

121525
121526 श्रीवसिष्ठ उवाच।
121527
121528 इति यावत्प्रतिवचः पुष्पहस्तः शिखिध्वजः।
121529 प्रणामाय ददात्येष तावदन्तर्धिमाययौ॥ ६॥
121530
121531 सप्रणामप्रतिवचनात्पूर्वमन्तर्धानम्।
121532 साध्वीभिर्भर्तृकृतनमस्कारस्याग्राह्यत्वात्॥ ६॥
121533
121534 प्रतिभानगतं वस्तु यथैवान्ते न दृश्यते।
121535 न दृष्टवांस्तथा कुम्भमग्रे राजा शिखिध्वजः॥ ७॥
121536
121537 स्वप्नादिप्रतिभानगतं धनादिवस्तु। अन्ते जागरे॥ ७॥
121538
121539 गते कुम्भे महीपालः परं विस्मयमाययौ।
121540 तमेव चिन्तयंश्चित्रं चित्रार्पित इवाभवत्॥ ८॥
121541
121542 चित्रमाश्चर्यम्॥ ८॥
121543
121544 इदं संचिन्तयामास चित्रं विलसितं विधेः।
121545 यत्कुम्भव्यपदेशेन बोधितोऽस्मि चिरोदयम्॥ ९॥
121546
121547 चिरोदयं सदाप्रभातं शाश्वताभ्युदयं वा ब्रह्म॥ ९॥
121548
121549 क्व नारदसुतः कुम्भः क्वाहं नाम शिखिध्वजः।
121550 केवलं कालयुक्त्यैव सोऽहं संपरिबोधितः॥ १०॥
121551
121552 कालयुक्त्या भाग्योदयसमययोगेन॥ १०॥
121553
121554 अहो नु सम्यक्कथितं देवपुत्रेण युक्तिमत्।
121555 अहो नु संप्रबुद्धोऽस्मि मोहनिद्राकुलश्चिरात्॥ ११॥
121556
121557 क्वाहमासं विनिर्मग्नः क्रियाजालकुकर्दमे।
121558 इदं कार्यमिदं नेति मिथ्या विभ्रमचक्रके॥ १२॥
121559
121560 अहो नु शीतला शुद्धा शान्तेयंन् पदवी निजा।
121561 रसायनोद्भवाकारा सत्त्वं शीतयतीह मे॥ १३॥
121562
121563 इयं साक्षात्कृतात्मरूपा साम्राज्यपदवी। सत्त्वं निर्वासनं मनः॥ १३॥
121564
121565 शाम्यामि परिनिर्वामि सुखमासे च केवलम्।
121566 तृणाग्रमपि नेच्छामि संस्थितोऽस्मि यथास्थितम्॥ १४॥
121567
121568 तेनैव स्वस्य पूर्णकामतामाह - शाम्यामीति॥ १४॥
121569
121570 एवं संचिन्तयन्राजा नूनं निर्वासनाशयः।
121571 शैलादिव समुत्कीर्णो मौनमेवावतस्थिवान्॥ १५॥
121572
121573 शैलात्समुत्कीर्णः प्रतिमादिरिव मौनं वागादिचेष्टारहितं यथा स्यात्तथा
121574 समाहितोऽवतस्थिवान्। छान्दसत्वाल्लिटः क्वसुः॥ १५॥
121575
121576 तस्मिन्नेव ततो मौने निःसंकल्पे निराश्रये।

121577 प्रतिष्ठां निश्चलां प्राप्य स तस्थौ गिरिशृङ्गवत् ॥ १६ ॥
121578
121579 मौने मुनिकर्मणि समाधौ ॥ १६ ॥
121580
121581 स तत्र संशान्तभयोऽचिरेण चिरेण विश्रान्तमतिः समात्मा ।
121582 चिरेण संप्राप्तनिजामलात्मा योगेन सुष्वाप ततोऽदितात्मा ॥ १७ ॥
121583
121584 स राजा तत्र समाधौ संप्राप्तनिजामलात्मसन् समात्मा समरसः सन् चिरेण
121585 विश्रान्तमतिर्भूत्वा अचिरेण सद्य एव संशान्तभयः सन् चिरकालानुवृत्तेन योगेन
121586 अदितात्मा अखण्डितस्वभावः सुष्वाप । सुषुप्त इव विशश्रामेत्यर्थः ॥ १७ ॥
121587
121588 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वाणप्रकरणे पू० चू०
121589 शिखिध्वजसमाधानं नाम द्व्यधिकशततमः सर्गः ॥ १०२ ॥
121590
121591 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
121592 शिखिध्वजसमाधानं नान द्व्यधिकशततमः सर्गः ॥ १०२ ॥
121593
121594 त्र्यधिकशततमः सर्गः १०३
121595
121596 श्रीवसिष्ठ उवाच ।
121597
121598 निर्विकल्पसमाधानात्काष्ठकुड्योपमस्थितिः ।
121599 एवं शिखिध्वजो राजा चूडालामधुना शृणु ॥ १ ॥
121600
121601 चूडालायाः परं गत्वा त्र्यहेण पुनरागमः ।
121602 यत्नाद्व्युत्थापनं राज्ञस्तत्त्वालापश्च वर्ण्यते ॥
121603
121604 एवमुक्तरीत्या शिखिध्वजो राजा निर्विकल्पसमाधानात् काष्ठकुड्योपमस्थितिरभूदिति
121605 शेषः । चूडालां तद्वृत्तान्तमिति यावत् ॥ १ ॥
121606
121607 शिखिध्वजं तं भर्तारं कुम्भवेषेण तेन सा ।
121608 प्रबोध्यान्तर्धिमागत्य ततार तरसा नभः ॥ २ ॥
121609
121610 ततार पुप्लुवे ॥ २ ॥
121611
121612 देवपुत्राकृतिं व्योम्नि जहौ मायाविनिर्मिताम् ।
121613 विदग्धमुग्धमाकारं स्त्रैणं जग्राह सुन्दरम् ॥ ३ ॥
121614
121615 देवपुत्राकृतिं कुम्भवेषम् । स्त्रैणं स्त्रीशरीररूपमाकारं जग्राह ॥ ३ ॥
121616
121617 नभसा स्वपुरं प्राप विवेशान्तःपुरं क्षणात् ।
121618 दृश्या बभूव लोकस्य नृपकर्म चकार च ॥ ४ ॥
121619
121620 नृपकर्म राजकार्यं प्रजानुरञ्जनमित्यर्थः ॥ ४ ॥
121621
121622 वासरत्रितयेनाथ पुनरम्बरमेत्य सा ।
121623 बभूव कुम्भो योगेन शिखिध्वजवनं ययौ ॥ ५ ॥
121624
121625 कुम्भो नारदपुत्रः ॥ ५ ॥
121626
121627 तथा तत्रैव तं भूपमपश्यद्वनभूमिगा ।
121628 निर्विकल्पसमाधिस्थं समुत्कीर्णमिव द्रुमम् ॥ ६ ॥

121629
121630 समुत्कीर्णं प्रतिमाकारनिर्मितं द्रुमं काष्ठमिव निश्चलम् ॥ ६ ॥
121631
121632 अहो नु खलु भो दिष्ट्या विश्रान्तोऽयमिहात्मनि ।
121633 स्थितः स्वस्थः समः शान्त इत्युवाच पुनः पुनः ॥ ७ ॥
121634
121635 अयं राजा ॥ ७ ॥
121636
121637 तदेनं तावदेतस्माद्बोधयामि परात्पदात् ।
121638 इदानीमेव किं देहत्यागमेष करोति वै ॥ ८ ॥
121639
121640 इदानीं प्रारब्धकर्मशेषकाले देहत्यागं किं किमर्थं करोति न करोत्वित्याशयः ॥
121641 ८ ॥
121642
121643 किंचित्कालं स्फुरत्वेष राज्येन विपिनेन वा ।
121644 सममेव गमिष्यावस्त्यक्तदेहाविमौ समौ ॥ ९ ॥
121645
121646 विपिनभोग्यकर्मक्षयपर्यन्तं विपिनेन वा । समं तुल्यकालमेव समौ
121647 तुल्यस्वभावौ गमिष्यावः । कैवल्यमिति शेषः ॥ ९ ॥
121648
121649 तस्योपदेशो विषमः परिणामं न गच्छति ।
121650 अनेनाभ्यासयोगेन तावदाबोधयाम्यहम् ॥ १० ॥
121651
121652 उपदेशः प्राङ्मया कृतः परिणामं सप्तमभूमिकावस्थितिपर्यन्तं परिपाकं
121653 न गच्छति इदानीमेव देहत्यागे तथा च जीवन्मुक्तिसुखानुभवार्थमप्ययं
121654 प्रबोध्य इति भावः ॥ १० ॥
121655
121656 इति संचिन्त्य चूडाला सिंहनादं चकार सा ।
121657 भूयोभूयः प्रभोरग्रे वनेचरभयप्रदम् ॥ ११ ॥
121658
121659 प्रभोः भर्तुः ॥ ११ ॥
121660
121661 न चचाल शिलेवाद्रौ यदा नादेन तेन सः ।
121662 भूयोभूयः कृतेनापि तदा सा तं व्यचालयत् ॥ १२ ॥
121663
121664 पाणिसंपेषेणाचालयत् ॥ १२ ॥
121665
121666 चालितः पातितोऽप्येष यदा न बुबुधे नृपः ।
121667 तदा संचिन्तयामास चूडाला कुम्भरूपिणी ॥ १३ ॥
121668
121669 अहो परिणतः साधुः स्वपदे भगवानयम् ।
121670 तदेनं हि कया युक्त्या सांप्रतं बोधयाम्यहम् ॥ १४ ॥
121671
121672 सप्तमभूमिकानुप्रवेशपर्यन्तं परिणतः । अहो इत्याश्चर्ये । तथा च तस्योपदेशो
121673 विषमः परिणामं न गच्छतीति मदीयसंभावना वृथैवेति भावः ॥ १४ ॥
121674
121675 अथवैनं महात्मानं किमर्थं बोधयाम्यहम् ।
121676 विदेहं बोधमासाद्य तिष्ठत्वेष यथासुखम् ॥ १५ ॥
121677
121678 अत एवाह - अथवेति । विदेहं तिष्ठतु ॥ १५ ॥
121679
121680 अहमप्यङ्गनादेहमिमं त्यक्त्वा परं पदम् ।

121681 अपुनर्जननायैव गच्छामीह हि किं समम् || १६ ||
121682
121683 समं सहैव गच्छामि | इह जीवने किमधिकं सुखमिति शेषः || १६ ||
121684
121685 इति संचिन्त्य देहं स्वं त्यक्तुमभ्युद्यता सती |
121686 पुनः संचिन्तयामास चूडाला सा महामतिः || १७ ||
121687
121688 महामतिरित्यनेनावश्यभोक्तव्यं तदीयप्रारब्धकर्मशेषमपि सा स्वमत्या
121689 दृष्ट्वा पुनः संचिन्तयामासेति सूचनाय || १७ ||
121690
121691 आलोकयामि चैतावदेनं देहं महीपतेः |
121692 यद्यस्य सत्त्वशेषोऽस्ति बोधबीजं हृदन्तरे || १८ ||
121693
121694 सत्त्वं निर्वासनं मनस्तस्य संस्कारलेशात्मना शेषो यदि हृदम्बरे
121695 प्रारब्धावशेषितमायालेशोपहिते हार्दे ब्रह्मण्यस्ति || १८ ||
121696
121697 तत्कालेनैष भगवान्संप्रबोधमुपैष्यति |
121698 मूलकोशरसालीनं पुष्पजालमिव द्रुमे || १९ ||
121699
121700 कालेन तदुद्भवसमयेन | यथा वसन्तारम्भे द्रुमे मूलकोशे मूलप्रदेशे यो
121701 भौमो रसस्तस्मिन्सूक्ष्मभावेनालीनं भाविपुष्पजालमिव सत्त्वशेषो यद्यस्तीति
121702 पूर्वेणान्वयः || १९ ||
121703
121704 तदेवं विरहञ्जीवन्मुक्त एव भवत्यलम् |
121705 मुक्तो भवत्यथ यदि मन्ये गच्छामि तत्समम् || २० ||
121706
121707 तर्हि मत्प्रबोधितोऽयं जीवन्मुक्तः सन् एवमहमिव विहरन् भवत्येव | अथ यदि
121708 सत्त्वशेषस्यापि बाधान्मुक्तो भवति तत्तर्ह्यहमपि सममनेन साकमेव मुक्तिं
121709 गच्छामि || २० ||
121710
121711 इति संचिन्त्य चूडाला स्पर्शनेन नयेन च |
121712 पतिमालोक्य साशङ्कमुवाच वरवर्णिनी || २१ ||
121713
121714 स्पर्शेन देहोष्मलिङ्गेन वक्ष्यमाणलिङ्गेन पतिं जीवतीति साशङ्कमालोक्य
121715 संबोधहेतूदयेन सत्त्वशेषं व्यबुध्यत | अस्य हृदि सत्त्वशेषोऽस्त्येवेत्युवाच चेति
121716 परेण सहान्वयः || २१ ||
121717
121718 अस्त्येव सत्त्वशेषोऽस्य हृदि संबोधकारणम् |
121719 संबोधहेतूदयेन सत्त्वशेषं व्यबुध्यत || २२ ||
121720
121721 श्रीराम उवाच |
121722
121723 भृशं संशान्तचित्तस्य काष्ठलोष्टसमस्थितेः |
121724 सत्त्वशेषः कथं ब्रह्मञ्ज्ञायते ध्यानशालिनः || २३ ||
121725
121726 स्पर्शनेन नयेन चेति यदुक्तं तत्र नयशब्दार्थं जिज्ञासू रामः पृच्छति -
121727 भृशमिति || २३ ||
121728
121729 श्रीवसिष्ठ उवाच |
121730
121731 प्रबोधकारणं यस्य दुर्लक्ष्याणुवपुर्हृदि |
121732 विद्यते सत्त्वशेषोऽन्तर्बीजे पुष्पफलं यथा || २४ ||

121733
121734 देहे वृद्धिविपरिणामापक्षयादिविकारानुदयः सत्त्वशेषे लिङ्गमित्युत्तरं वक्तुं
121735 लिङ्ग्यमनुवदति - प्रबोधेति द्वाभ्याम् ॥ २४ ॥
121736
121737 चित्तस्पन्दवियुक्तस्य तस्यास्पन्दितसच्चितः ।
121738 द्वित्वैकत्वविहीनस्य समस्याचलसंस्थितेः ॥ २५ ॥
121739
121740 द्वित्वैकत्वविहीनस्य निर्विकल्पस्य ॥ २५ ॥
121741
121742 कायः समसमाभोगो न ग्लायति न हृष्यति ।
121743 नास्तमेति न चोदेति सममेवावतिष्ठते ॥ २६ ॥
121744
121745 ग्लायति ग्लानिं गच्छति ॥ २६ ॥
121746
121747 द्वित्वैकत्वादियुक्तस्य यस्य प्रस्पन्दते मनः ।
121748 तस्य देहोऽन्यतामेति नास्पन्दस्य कदाचन ॥ २७ ॥
121749
121750 अन्यस्य तु तद्वैपरीत्यमित्याह - द्वित्वैकत्वादीति ॥ २७ ॥
121751
121752 चित्तस्पन्दो हि सर्वेषां कारणं जगतः स्थितेः ।
121753 राम भावविकाराणां कुसुमानां यथा मधुः ॥ २८ ॥
121754
121755 तत्कुतस्तत्राह - चित्तस्पन्द इति । जगतः स्थितेर्व्यवहारस्य हेतुभूतानां सर्वेषां
121756 भावविकाराणां कारणम् ॥ २८ ॥
121757
121758 अस्मिन्प्रयास्यतो देहे चेतसो हि मुहुर्मुहुः ।
121759 हर्षः कोपो न संमोहो वशमेति रघूद्वह ॥ २९ ॥
121760
121761 अत एव पुनर्जन्मबीजसत्त्वेऽस्माद्देहाद्देहान्तरं प्रयास्यतश्चेतसो मुहुर्मुहुर्यत्नेन
121762 निगृह्यमाणोऽपि हर्षः कोपः संमोहश्च न वशमेति न निग्रहीतुं शक्यते । तदेव
121763 पुनर्जन्मावश्यंभावे लिङ्गमित्यर्थः ॥ २९ ॥
121764
121765 चित्ते प्रशममायाते कायो यः सत्त्ववर्जितः ।
121766 बाधते नाम्बरस्येव तस्य भावविकारभूः ॥ ३० ॥
121767
121768 चित्ते हर्षादिविकारशान्तौ तु कायेऽपि विकारा निवर्तन्त इत्याह - चित्त इति । सत्त्वेन
121769 निर्वासनचित्तेन वर्जितः अप्रतिसंधानेन त्यक्तः । तथा च चित्तेनाहंतया परिग्रह एव
121770 देहे वृद्ध्यादिविकारहेतुरिति भावः ॥ ३० ॥
121771
121772 वीच्यादि न यथोदेति समाया जलसंततेः ।
121773 तथा न दृश्यते दोषः समायाः सत्त्वसंततेः ॥ ३१ ॥
121774
121775 देहजरापलितादिर्दोषो रागादिदोषश्च न दृश्यते ॥ ३१ ॥
121776
121777 सत्त्वस्यानुपलम्भोऽस्ति न तस्योपशमाद्दते ।
121778 यावद्भाति समं तत्त्वं कालाच्छाम्यति केवलम् ॥ ३२ ॥
121779
121780 कियत्कालं जीवन्मुक्तैः सत्त्वमुपलभ्यत इति चेत्प्रारब्धशेषक्षयेण
121781 तत्प्रशमपर्यन्तमित्याह - सत्त्वस्येति । समं प्रातिभासिकवैषम्येणापि शून्यम् ।
121782 कालात्प्रारब्धशेषक्षयकालात् ॥ ३२ ॥
121783
121784 देहे यस्मिंस्तु नो चित्तं नापि सत्त्वं च विद्यते ।

121785 स तापे हिमवद्राम पञ्चत्वेन विलीयते ॥ ३३ ॥
121786
121787 सत्त्वस्यापि क्षये तु मृतो देहो विलीयत इत्याह - देहे इति। नो
121788 चित्तमित्यज्ञमरणाभिप्रायम्। नापि सत्त्वमिति ज्ञमरणाभिप्रायम्। पञ्चत्वेन
121789 मरणेन ॥ ३३ ॥
121790
121791 शिखिध्वजस्य देहोऽसौ निश्चितस्तेजसोर्जितः।
121792 सत्त्वांशेन च संयुक्तस्तेन न ग्लानिभाजनम् ॥ ३४ ॥
121793
121794 शिखिध्वजदेहे तु जीवनलिङ्गानि तया दृष्टानीत्याह - शिखिध्वजस्येति। तेजसा
121795 ऊष्मणा ॥ ३४ ॥
121796
121797 तं तथाभूतमालोक्य भर्तुर्देहं वराङ्गना।
121798 अनुज्झितवती देहं चिन्तयामास सत्वरम् ॥ ३५ ॥
121799
121800 प्रश्नं समाधाय प्रस्तुतमनुसंधत्ते - तं तथेत्यादिना। स्वदेहमनुज्झितवती
121801 सती ॥ ३५ ॥
121802
121803 चित्तत्त्वं सर्वगं शुद्धं प्रविश्याबोधयाम्यहम्।
121804 भविष्यद्बोधनं कान्तमथ तत्र हि संस्थिता ॥ ३६ ॥
121805
121806 चित्तत्त्वं प्रागुक्तं तद्धार्दं ब्रह्म तदीयकायप्रवेशेन प्रविश्य तत्र तत्स्वभावे
121807 संस्थिता सती चिरकालेन भविष्यद्बोधनं कान्तमधुनैव संबोधयामीति ॥ ३६ ॥
121808
121809 न बोधयामि यद्येनं चिरात्तद्बुध्यते स्वयम्।
121810 किमेकैवावतिष्ठेऽहमित्येवं बोधयाम्यहम् ॥ ३७ ॥
121811
121812 ननु चिरेण स स्वयमेव बुद्ध्यतां किं बोधनत्वरया तत्राह - नेति। राज्यपालने
121813 नियुक्ताहं न भर्तेव समाधौ स्थातुं शक्ता व्युत्थिता च
121814 कथंचित्तमेकाकिन्यवस्थातुं शक्नोमीति भावः ॥ ३७ ॥
121815
121816 इति संचिन्त्य चूडाला देहं करणपञ्जरम्।
121817 संत्यज्य प्राप चित्तत्त्वे स्थितिमाद्यन्तवर्जिते ॥ ३८ ॥
121818
121819 स्वं देहं संत्यज्य तद्देहं प्रविश्य तदीये हार्दब्रह्मलक्षणे चित्तत्त्वे स्थितिं
121820 प्रापेत्यर्थः ॥ ३८ ॥
121821
121822 तत्र सा चेतनास्पन्दं कृत्वा सत्त्ववतः प्रभोः।
121823 स्वं विवेश पुनर्देहं स्वं नीडमिव पक्षिणी ॥ ३९ ॥
121824
121825 तत्र निर्विकल्पसमाधिना
121826 क्षीरोदकवदेकरसीभूतायाश्चेतनायास्तदीयचिदाभाससंवलितबुद्धेः
121827 पृथग्भवनानुकूलं स्पन्दम् ॥ ३९ ॥
121828
121829 कुम्भाकृतिरथोत्थाय निविष्टा कुसुमस्थले।
121830 साम गातुं प्रवृत्ता सा भ्रमरीवृन्दनिःस्वना ॥ ४० ॥
121831
121832 तं सामस्वनमाकर्ण्य चित्सत्त्वगुणशालिनी।
121833 बुबुधे भूपतेर्देहे वसन्त [वसन्तमिव इति पाठः।] इव पद्मिनी ॥ ४१ ॥
121834
121835 चित् चिदाभासखचिता राजबुद्धिः शिखिध्वजाहंभावसंस्कारोद्बोधेन
121836 आनखाग्राद्देहेऽहंभावव्याप्त्या बुबुधे ॥ ४१ ॥

121837

121838 दृशं विकासयामास तां तदार्क इवाब्जिनीम् |
121839 गृहीतसत्त्वसंपत्तिः शिखिध्वजमहीपतिः || ४२ ||
121840

121841 तां समाधिनिमीलिताम् || ४२ ||
121842

121843 अपश्यत्कुम्भमग्रस्थं सामगायनतत्परम् |
121844 परेण वपुषा युक्तं सामवेदमिवापरम् || ४३ ||
121845

121846 गायनमित्यशित्यात्वाभावश्छान्दसः | परेण दिव्येन वपुषा युक्तमपरं
121847 सामवेदमिवेत्युत्प्रेक्षा || ४३ ||
121848

121849 अहो बत वयं धन्याः पुनः प्राप्तो मुनिः स्वतः |
121850 इत्येवोदाहरन्राजा कुम्भाय कुसुमं ददौ || ४४ ||
121851

121852 कुसुमं पुष्पाञ्जलिम् | अनेन तपःप्रभावात्प्राक्संचितपुष्पाणामम्लानता गम्यते ||
121853 ४४ ||
121854

121855 दिष्ट्योदिताः स्मो भगवंस्तव चेतसि पावने |
121856 के नाम वा महासत्त्वाः प्रादेष्वङ्ग नो स्थिताः || ४५ ||
121857

121858 दिष्ट्या स्वभाग्योदयेन उदिताः पुनर्दर्शनाभ्युदयफलस्मृतिगोचरतां गताः |
121859 अथवा किं मद्भाग्यचिन्तया महान्तः स्वत एव परानुग्रहोद्यता इत्याशयेनाह -
121860 के नामेति || ४५ ||
121861

121862 अस्मत्पवित्रीकरणमेवागमनकारणम् |
121863 न चेत्किं चागमे ब्रूहि द्वितीयं कारणं भवेत् || ४६ ||
121864

121865 मदुक्तं कारणं न चेदिहागमने द्वितीयं किं कारणं भवेत् संभावितं
121866 तद्ब्रूहीत्यर्थः || ४६ ||
121867

121868 कुम्भ उवाच |
121869

121870 यतः प्रभृति यातोऽस्मि त्वत्सकाशादनिन्दितः |
121871 ततः प्रभृति चेतो मे त्वयैवेह समं स्थितम् || ४७ ||
121872

121873 त्वयैव समं साकम् | स्थानं त्वामेव स्मरदिति यावत् || ४७ ||
121874

121875 रम्ये स्वर्गे न तिष्ठामि समीपे तव सांप्रतम् |
121876 अभीष्टमुद्यदेवाङ्ग रम्याणां तत्पुरः स्थितम् || ४८ ||
121877

121878 अत एव रम्येऽपि स्वर्गे सांप्रतं न तिष्ठामि किंतु तव समीपे तिष्ठामि | हे अङ्ग यतो
121879 बहूनामपि रम्याणां मध्ये चित्तस्य यदेवाभीष्टं भवति उद्यत् उद्योगप्राप्यमेव
121880 सत् पुरः स्थितं भवति नोद्योगं विनेति त्वद्दर्शनोद्योगवशादेव
121881 ममागमनमित्यर्थः || ४८ ||
121882

121883 त्वादृशो बन्धुराप्तश्च सुहृन्मित्रं तथा सखा |
121884 विश्वास्यो वापि शिष्यश्च मन्ये जगति नास्ति मे || ४९ ||
121885

121886 मयि को वा ते प्रीतिहेतुरतिशयस्तत्राह - त्वादृश इति || ४९ ||
121887

121888 शिखिध्वज उवाच |

121889
121890 अहो नु फलितं पुण्यपादपैर्नः कुलाचले।
121891 यस्माद्भवानसङ्गोऽपि वाञ्छत्यस्मत्समागमम्॥ ५०॥
121892
121893 कुलाचले अस्मिन्मन्दरे॥ ५०॥
121894
121895 इदं वनमिमे वृक्षा भृत्योऽयमहमादृतः।
121896 रोचते ते न चेत्स्वर्गस्तदिह स्थीयतां प्रभो॥ ५१॥
121897
121898 मत्प्रीत्या ते स्वर्गो न रोचते चेत्तर्हि इह मत्संनिधौ॥ ५१॥
121899
121900 भवद्वितीर्णया योगयुक्त्या विश्रान्तवानहम्।
121901 यथा साधो तथा मन्ये स्वर्गे विश्रमणं कुतः॥ ५२॥
121902
121903 ममापि त्वद्वितीर्णसमाधिसुखतृप्तस्य स्वर्गे वाञ्छा नास्तीत्याह -
121904 भवद्वितीर्णयेति। वितीर्णया दत्तया॥ ५२॥
121905
121906 तामेव संस्थितिं स्वच्छामवलम्ब्य प्रकाशिनीम्।
121907 विहरेह यथाकामं स्वर्गे भूमितले तथा॥ ५३॥
121908
121909 तां मह्यमुपदिष्टामेव भूमानन्दसंस्थितिमवलम्ब्य। प्रकाशिनीं
121910 स्वप्रकाशाम्॥ ५३॥
121911
121912 कुम्भ उवाच।
121913
121914 परे पदे महानन्दे कच्चिद्विश्रान्तवानसि।
121915 इदं भेदमयं दुःखं कच्चित्संत्यक्तवानसि॥ ५४॥
121916
121917 कच्चिदापातरम्येभ्यः संकल्पेभ्यो रतिर्भृशम्।
121918 निर्मूलतां गता राजन्भोगनीरसमेव ते॥ ५५॥
121919
121920 हेयादेयदशातीतं शान्तं शमसमस्थिति।
121921 यथाप्राप्तेष्वनुद्वेगं कच्चित्तव मनःस्थितम्॥ ५६॥
121922
121923 शमेन समस्थिति॥ ५६॥
121924
121925 शिखिध्वज उवाच।
121926
121927 त्वत्प्रसादेन भगवन्दृष्टा दृश्यातिगा गतिः।
121928 प्राप्तः संसारसीमान्तो लब्धो लब्धव्यनिश्चयः॥ ५७॥
121929
121930
121931 चिरादतिचिरेणैव विश्रान्तोऽस्मि निरामयः।
121932 लब्धं लब्धव्यमखिलं तृप्तः संश्चिरसंस्थितः॥ ५८॥
121933
121934 चिराद्बहुकालोत्तरम्। अतिचिरेण दिनत्रयपर्यन्तम्॥ ५८॥
121935
121936 नोपदेष्टव्यमस्माकं किंचिदप्युपयुज्यते।
121937 सर्वत्रैवातितृप्तोऽस्मि संस्थितोऽस्मि गतज्वरः॥ ५९॥
121938
121939 ज्ञातमज्ञातमप्राप्तं त्यक्तं त्यक्तव्यमाश्रितम्।
121940 तत्त्वं परत्वं सत्त्वं मे स्वस्यैवास्ति न किंचन॥ ६०॥

121941
121942 अप्राप्तं प्राप्तमिति शेषः। तथा मे सत्त्वं निर्वासनं मनस्त्वस्यात्मन एव
121943 परत्वमाश्रितम्॥ ६०॥
121944
121945 निःसंसृतिर्विगतमोहभयो विरागो न्रित्योदितः समसमाशयसर्वसौम्यः।
121946 सर्वात्मकः सकलसंकलनावियुक्त आकाशकोशविशदः सममास्थितोऽस्मि॥ ६१॥
121947
121948 यदि त्वदन्यत्किंचन नैवास्ति तर्हि त्वं कीदृशोऽवशिष्टस्तत्राह - निःसंसृतिरिति
121949 । स्पष्टम्॥ ६१॥
121950
121951 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वाणप्रकरणे पू० चू०
121952 कुम्भपुनरागमनं नाम त्र्यधिकशततमः सर्गः॥ १०३॥
121953
121954 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
121955 कुम्भपुनरागमनं नाम त्र्यधिकशततमः सर्गः॥ १०३॥
121956
121957 चतुरधिकशततमः सर्गः १०४
121958
121959 श्रीवसिष्ठ उवाच।
121960
121961 इत्यध्यात्मविचित्राभिः कथाभिस्तौ परस्परम्।
121962 आसाते [आसातां इति पाठः।] वेद्यवेत्तारौ मुहूर्तत्रितयं वने॥ १॥
121963
121964 कुम्भस्य रमतो राज्ञा संभोगेच्छात्र वर्ण्यते।
121965 स्वर्गापदेशात्पूर्यानं विषण्णपुनरागमः॥
121966
121967 इत्युक्तप्रकाराभिरात्मनीत्यध्यात्मविचित्राभिः कथाभिः परस्परं संवदन्ताविति
121968 शेषः॥ १॥
121969
121970 तत उत्थाय कस्मिंश्चित्सानौ सरससारसे।
121971 सरोवरे वने चैव विहृतौ नन्दने वने॥ २॥
121972
121973 सरसानि स्निग्धानि सारसानि पद्मानि पक्षिमिथुनानि च यस्मिन्। नन्दने आनन्ददायिनि।
121974 फलमूलादिना अवने रक्षके च। प्रसिद्धे ऐन्द्रे नन्दने वने इवेति वा शेषः॥ २॥
121975
121976 तेनाचारेण ताभिश्च कथाभिस्तौ वने ततः।
121977 नीतवन्तौ दिनान्यष्टौ तासु काननवीथिषु॥ ३॥
121978
121979 तेन जीवन्मुक्तप्रसिद्धेनाचारेण। वने महारण्ये। काननवीथिषु
121980 अवान्तरवनपङ्क्तिभेदेषु। तेन दिनाष्टकमपि नैकत्र वास इत्यनिकेतता सूच्यते॥ ३॥
121981
121982 अथ कुम्भ उवाचान्यद्वनं यावो गिराविति।
121983 तदोमिति नृपो मत्वा तावुभौ प्रविचेरतुः॥ ४॥
121984
121985 ओमित्यभिमतौ। नृपस्येव कुम्भस्याप्यर्थसिद्धा
121986 कर्तृतास्त्येवेत्युभयकर्तृकचरितसमानकर्तृकतामाश्रित्य मत्वेति
121987 क्त्वाप्रत्ययनिर्देशः॥ ४॥
121988
121989 वनान्यनेकरूपाणि जङ्गलानि तटानि च।
121990 सरांसि गुल्मजालानि शृङ्गाणि गहनानि च॥ ५॥
121991
121992 नदीर्देशांस्तथा ग्रामान्नगराणि वनानि च।

121993 मञ्जुघोषान्गिरीन्कुञ्जांस्तीर्थान्यायतनानि च ॥ ६ ॥
121994
121995 सममेव समस्नेहौ समवेतौ स्थितावुभौ ।
121996 समसत्त्वौ समोत्साहौ शंसन्तौ तस्थतुः सदा ॥ ७ ॥
121997
121998 समवेतौ समुदितौ सन्तौ चित्तवृत्त्यापि सममेव स्थितौ शंसन्तौ परस्परानुभवं
121999 कथयन्तौ ॥ ७ ॥
122000
122001 आनर्चतुः पितृन्देवान्बुभुजाते च राघव ।
122002 समं तप्ते च सिक्ते च समबुद्धी बभूवतुः ॥ ८ ॥
122003
122004 सिक्ते जलार्द्रे शीतलप्रदेशे चेति यावत् ॥ ८ ॥
122005
122006 तमालवनखण्डेषु मन्दारगहनेषु च ।
122007 दंपती स्निग्धहृदयौ सुहृदौ तौ विरेजतुः ॥ ९ ॥
122008
122009 इदं गेहमिदं नेति विकल्पकलना मनः ।
122010 न जहार तयो राम वात्येव विबुधाचलम् ॥ १० ॥
122011
122012 अनिकेतस्थितिलक्षणमाह - इदमिति । विकल्पकलना तयोर्मनो न जहार ॥ १० ॥
122013
122014 विचेरतुस्तौ सुहृदौ क्वचिद्धूलिविधूसरौ ।
122015 क्वचिच्चन्दनदिग्धाङ्गौ क्वचिद्भस्मानुरञ्जितौ ॥ ११ ॥
122016
122017 प्रियाप्रियविकल्पोऽपि तयोर्नाभूदित्याह - विचेरतुरित्यादिना ॥ ११ ॥
122018
122019 क्वचिद्दिव्याम्बरधरौ चित्राम्बरधरौ क्वचित् ।
122020 क्वचित्पल्लवसंछन्नौ क्वचित्कुसुममण्डितौ ॥ १२ ॥
122021
122022 दिनैः कतिपयैरेव समचित्ततया तया ।
122023 सत्त्वोदात्ततया चैव राजा कुम्भवदाबभौ ॥ १३ ॥
122024
122025 सत्त्वेन निर्वासनचित्तेनोदात्ततया उत्कृष्टतया ॥ १३ ॥
122026
122027 अथ तं सुरगर्भाभं चूडाला सा शिखिध्वजम् ।
122028 दृष्ट्वा शोभामुपगतं चिन्तयामास मानिनी ॥ १४ ॥
122029
122030 अथ केवलमित्रभावेन परस्परोपभोजकप्रारब्धभोगोत्तरकालं
122031 दंपतिभावोपभोजकप्रारब्धोद्भवकाले ॥ १४ ॥
122032
122033 अयं पतिरदीनात्मा रम्याश्च वनभूमयः ।
122034 इयं स्थितिरनायासा या न कामेन वञ्चिता ॥ १५ ॥
122035
122036 कामेन अज्ञधर्मेण रागेण न वञ्चिता ॥ १५ ॥
122037
122038 जीवन्मुक्तधियां भोगं यथाप्राप्तमतिष्ठताम् ।
122039 एकाग्रहात्मिका तुच्छा मूढतैवोदिता भवेत् ॥ १६ ॥
122040
122041 यथाप्राप्तं भोगं प्रति अतिष्ठतां अनिवृत्तगतीनाम् । एकस्यां
122042 भोगनिवृत्तावेवाग्रहो निर्बन्धस्तदात्मिका या वृत्तिः सा मूढतैव ॥ १६ ॥
122043
122044 निजः पतिरुदारात्मा निराधिश्च नवं वयः ।

122045 गृहाणि पुष्पजालानि सा हता या न कामिनी ॥ १७ ॥
122046
122047 अधर्मरोगश्रमादिहेतुभ्यो भोगेभ्यो लोकसंग्रहाय निवर्तितव्यमेव अत्र तु न या
122048 स्वभर्तरि न कामवती सा अजीवन्मुक्ता चेद्भर्तृरूपभोगविघातपापेन हता । जीवन्मुक्ता
122049 चेल्लोकसंग्रहभङ्गप्रयुक्तनिन्दादिना हतेत्यर्थः ॥ १७ ॥
122050
122051 वनपुष्पलतागेहे स्वायत्ते भर्तरि प्रिया ।
122052 रमते या न निर्दुःखा सा हतैव दुरङ्गना ॥ १८ ॥
122053
122054 उक्तमेव स्पष्टमाह - वनेति ॥ १८ ॥
122055
122056 रम्यं विवाहितं कान्तं पतिमासाद्य निर्जने ।
122057 स्त्री सती या न रमते तां धिगस्तु दुरङ्गनाम् ॥ १९ ॥
122058
122059 समुज्झता यथाप्राप्तमपि वेद्यविदा सदा ।
122060 अनिन्द्यं समुदारार्थं किं तज्ज्ञेन कृतं भवेत् ॥ २० ॥
122061
122062 अनिन्द्यं स्वं उदारार्थं भोगं समुज्झता किं किमधिकं फलं कृतं भवेत् ।
122063 न किंचिदित्यर्थः ॥ २० ॥
122064
122065 तत्किंचिद्रचयाम्याशु प्रपञ्चं प्रेक्षया वने ।
122066 येनायं भूपतिर्भर्ता रमते मयि मानदः ॥ २१ ॥
122067
122068 प्रेक्षया स्वप्रज्ञया मयि रमते रतिसुखं लभते ॥ २१ ॥
122069
122070 इति संचिन्त्य चूडाला कुम्भवेषधरा पतिम् ।
122071 प्राह काननगुल्मस्था कोकिलं कोकिला यथा ॥ २२ ॥
122072
122073 कुम्भ उवाच ।
122074
122075 चैत्रमासस्य शुक्लोऽयं प्रतिपद्दिवसो महान् ।
122076 अद्यास्थानं महारम्भं स्वर्गे भवति वै हरेः ॥ २३ ॥
122077
122078 आस्थानं देवर्षिसभामेलनम् । हरेः इन्द्रस्य ॥ २३ ॥
122079
122080 संनिधानं मया तत्र कर्तव्यं पितुरग्रतः ।
122081 यथास्थिता हि नियतिर्न संत्याज्या कदाचन ॥ २४ ॥
122082
122083 पितुर्नारदस्य ॥ २४ ॥
122084
122085 प्रतिपालयितव्यं मे त्वयेह च वनावनौ ।
122086 क्रीडता नवपुष्पायां समुद्वेगमगच्छता ॥ २५ ॥
122087
122088 प्रतिपालयितव्यं मे आगमनमासायं प्रतीक्षितव्यम् ॥ २५ ॥
122089
122090 आगच्छामि दिनान्तेऽद्य निर्विकल्पं नभस्तलात् ।
122091 सर्गाददिततरामेव त्वत्सङ्गो मम तुष्टये ॥ २६ ॥
122092
122093 निर्विकल्पं आगमनपाक्षिकत्वरहितम् । नियतमिति यावत् ॥ २६ ॥
122094
122095 इत्युक्त्वा मञ्जरीं कुम्भो ददौ मित्राय कौसुमीम् ।
122096 प्रीतये स्वामिव प्रीतिं कान्तां नन्दनवृक्षजाम् ॥ २७ ॥

122097
122098 कान्तां मनोहराम्। नन्दनवृक्षः कल्पतरुस्तज्जां मञ्जरीम्॥ २७॥
122099
122100 आगन्तव्यं त्वया शीघ्रमेवं वदति भूपतौ।
122101 पुप्लुवेऽथ वनाद्व्योम शरन्मुखपयोदवत्॥ २८॥
122102
122103 शरन्मुखपयोदो निर्जलमेघस्तद्वत्॥ २८॥
122104
122105 पुष्पाञ्जलिं जहौ व्योम व्रजन्कुसुमदामजम्।
122106 विसारि वनवातेन हिमं हैम इवाम्बुदः॥ २९॥
122107
122108 वनवातेन विसारि प्रसरणशीलं पुष्पाञ्जलिम्। पदसंस्कारपक्षे नपुंसकलिङ्गं
122109 सर्वनामेति प्रागेव प्रवृत्तमन्तरङ्गं नपुंसकलिङ्गं पुंविशेषसंबन्धेऽपि
122110 न निवर्तते। तथा चोदाहृतं महाभाष्ये शक्यं चानेन श्वमांसादिभिरपि
122111 क्षुत्प्रतिहन्तुं तत्र नियमः क्रियते पञ्च पञ्चनखा भक्ष्याः इतीति। हिमकाले भवो
122112 हैमः॥ २९॥
122113
122114 शिखिध्वजो व्रजन्तं तं ददर्शाऽऽदर्शनं तदा।
122115 उन्निद्रोऽब्दं यथा बर्हीं धीमत्प्रीतिर्हि दुस्त्यजा॥ ३०॥
122116
122117 आदर्शनं दृष्टिप्रसरयोग्यप्रदेशावधि। अब्दं मेघम्॥ ३०॥
122118
122119 शिखिध्वजदृशामन्ते व्योम्नि कुम्भवपुर्जहौ।
122120 शान्तावर्तेव वारिश्रीर्मुग्धा स्वं रूपमाययौ॥ ३१॥
122121
122122 स्वं चूडालारूपम्। आययौ प्राप॥ ३१॥
122123
122124 प्राप मञ्जरिताकारकल्पवृक्षोपमं पुरम्।
122125 स्फुरत्पताकमात्मीयं स्वर्गरम्यं दिवः पथा॥ ३२॥
122126
122127 स्फुरत्पताकमत एव मञ्जरितः संजातमञ्जरीक आकारः संस्थानं यस्य
122128 तथाविधकल्पवृक्षोपमम्॥ ३२॥
122129
122130 अन्तःपुरमदृश्यैव विवेश ललनाकुलम्।
122131 मधुमासमहालक्ष्मीर्लसल्लतमिव द्रुमम्॥ ३३॥
122132
122133 राजकार्याणि सर्वाणि तत्र संपाद्य सत्वरम्।
122134 शिखिध्वजस्य पुरतः पपात फलपुष्पवत्॥ ३४॥
122135
122136 यथा वृक्षात्फलं पुष्पं वा पतति तद्वत्॥ ३४॥
122137
122138 तत्र कालद्युति [म्लानद्युतीत्यपि क्वचित्पाठः।] मुखं
122139 चकाराखिन्नमानसा।
122140 इन्दुं सनीहारमिव श्यामा खिन्नमिवाम्बुजम्॥ ३५॥
122141
122142 तत्र भर्तृसंनिधौ मुखं श्यामद्युति चकार। श्यामा यौवनमध्यस्था
122143 चूडाला॥ ३५॥
122144
122145 तं दृष्ट्वा तादृशाकारं समुत्तस्थौ शिखिध्वजः।
122146 बभूव खिन्नचेताश्च समुवाचेदमादृतः॥ ३६॥
122147
122148 आदृतः सादरः॥ ३६॥

122149
122150 देवपुत्र नमस्तेऽस्तु विमना इव लक्ष्यसे।
122151 कुम्भस्त्वं त्यज संरम्भमिदमासनमास्यताम्॥ ३७॥
122152
122153 विमनाः खिन्नमना इव लक्ष्यसे। मुखम्लानिलिङ्गेनेत्यर्थः। संरम्भं लक्षणया
122154 मनस्तापम्॥ ३७॥
122155
122156 सन्तो विदितवेद्या ये ते हि हर्षविषादजाम्।
122157 नाश्रयन्ति स्थितिं स्वस्थाः पद्मा इव जलार्द्रताम्॥ ३८॥
122158
122159 श्रीवसिष्ठ उवाच।
122160
122161 तेन क्ष्मापतिनेत्युक्ते कुम्भ आहासने विशन्।
122162 गिरा विषण्णया शीर्णवंशस्वनसमानया॥ ३९॥
122163
122164 वाष्परुद्धकण्ठजत्वाच्छीर्णवंशस्वनसमानया॥ ३९॥
122165
122166 यावद्देहमवस्थासु समचित्ततयैव ये।
122167 कर्मेन्द्रियैर्न तिष्ठन्ति न ते तत्त्वविदः शठाः॥ ४०॥
122168
122169 विदितवेद्याः पुरुषा हर्षविषादजां स्थितिं नाश्रयन्तीति यदुक्तं तत्र कंचिद्विशेषं
122170 विवक्ष्यन्कुम्भ उवाच - यावद्देहमिति।
122171 ज्ञानप्रयुक्तसमचित्ततानान्तरीयकर्मेन्द्रियचेष्टानिवृत्तिरेव ज्ञानिनो लक्षणमिति
122172 तच्छून्या इव तत्त्वविदो न समचित्तत्वेऽपि
122173 प्रारब्धकर्मप्रयुक्तकर्मेन्द्रियचेष्टोद्भवमात्रापराधेनेत्याशयः॥ ४०॥
122174
122175 ये ह्यतत्त्वविदो मूढा राजन्बालतयैव ते।
122176 अवस्थाभ्यः पलायन्ते गृहीताभ्यः स्वभावतः॥ ४१॥
122177
122178 अतत्त्वज्ञेषु तु न तथेत्याह - ये हीति। बालतया समचित्तत्वाभावेनैव
122179 हठाद्गृहीताभ्यस्तत्तत्कर्मेन्द्रियनिग्रहावस्थाभ्यः पलायन्ते च्यवन्ते
122180 अज्ञानस्वभावादेवेति वैषम्यमित्यर्थः॥ ४१॥
122181
122182 यावत्तिलं यथा तैलं यावद्देहं तथा दशा।
122183 यो न देहदशामेति स च्छिनत्त्यसिनाम्बरम्॥ ४२॥
122184
122185 प्रारब्धप्रयुक्ता तु कर्मेन्द्रियहर्षग्लानिदशा यावद्देहभाविनी
122186 ज्ञान्यज्ञानिनोस्तुल्यैवेत्याशयेन सदृष्टान्तमाह - यावदिति। दशा
122187 कर्मेन्द्रियहर्षग्लान्यादिदशा भवत्येवेति शेषः। तदेव व्यतिरेकमुखेन द्रढयति
122188 - य इति। तथा च ज्ञानिनोऽपि देहदशानतिलङ्घनमेवेति ममापि तदनुवर्तनं न
122189 दोषायेति भावः॥ ४२॥
122190
122191 एष देहदशादुःखपरित्यागो ह्यनुत्तमः।
122192 यत्साम्यं चेतसो योगान्न तु कर्मेन्द्रियस्थितेः॥ ४३॥
122193
122194 तथा च चित्तसाम्येन देहदशादुःखानां समाधिवशाददर्शनमेव तत्परित्यागो न
122195 हठात्कर्मेन्द्रियनिग्रहेण सहनमिति निष्कर्ष इत्याह - एष इति॥ ४३॥
122196
122197 यावद्देहं यथाचारं दशास्वङ्ग विजानता।
122198 कर्मेन्द्रियैर्हि स्थातव्यंन् न तु बुद्धीन्द्रियैः क्वचित्॥ ४४॥
122199
122200 विजानता तत्त्वविदा यावद्देहं कर्मेन्द्रियैः सर्वासु दशासु यथासदाचारमेव

122201 स्थातव्यं न तु सदाचारं उल्लङ्घ्य इत्येतावानेव नियमः। बुद्धीन्द्रियैर्मन##-
122202
122203 परमेष्ठिप्रभृतयः सर्व एवोदिताशयाः।
122204 देहावस्थासु तिष्ठन्ति नियतेरेष निश्चयः॥ ४५॥
122205
122206 कर्मेन्द्रियैरनिषिद्धदेहावस्थानुवर्तनं ब्रह्मादिसर्वजीवन्मुक्तेषु
122207 प्रसिद्धमेवेत्याह - परमेष्ठीति। नियतेः प्रारब्धकर्मनियतेः। अन्यथा
122208 तद्भोइगासिद्धेरिति भावः॥ ४५॥
122209
122210 अज्ञतत्त्वज्ञभूतानि दृश्यजातमिदं हि यत्।
122211 तत्सर्वमेव नियतिं धावत्यम्बु यथाम्बुधिम्॥ ४६॥
122212
122213 प्रारब्धकर्मन्नियतिलङ्घनं तत्त्वज्ञैरज्ञैर्वा कैश्चिदपि कर्तुं न
122214 शक्यमित्याह - अज्ञेति॥ ४६॥
122215
122216 तज्ज्ञा बुद्ध्यादिसाम्येन पाण्यादिचलनेन च।
122217 नियतिं यापयन्तीमां यावद्देहमखण्डिताम्॥ ४७॥
122218
122219 तर्हि किं तज्ज्ञाज्ञयोः साम्यमेव नेत्याह - तज्ज्ञा इति।
122220 यावद्देहमुपात्तैकदेहपातपर्यन्तम्॥ ४७॥
122221
122222 अज्ञास्तु सर्वक्षोभेण सुखदुःखदशाहताः।
122223 नियतिं यापयन्त्यङ्ग देहलक्षैर्विखण्डिताम्॥ ४८॥
122224
122225 अज्ञास्तु न तथेत्याह - अज्ञास्त्विति॥ ४८॥
122226
122227 इत्थं सुखेषु ननु दुःखदशासु चेत्थं स्थातव्यमित्यधिगतं यदिहाङ्ग
122228 जीवैः।
122229 अज्ञज्ञभूतनिवहस्फुरितस्तदेवं दुर्लङ्घ्य एष नियतो नियतेर्विलासः॥ ४९॥
122230
122231 प्रारब्धनियतिस्वरूपमभिनीय दर्शयंस्तस्याः
122232 सर्वैर्दुर्लङ्घ्यतामुक्तामनूद्योपसंहरति - इत्थमिति। ननु अङ्ग इति
122233 राजसंबोधने। अनेन प्राणिना अस्मिन् जन्मनि इत्थं सुखेषु स्थातव्यं दुःखदशासु
122234 चेत्थं स्थातव्यमिति जीवैः स्वस्वकर्मानुसारेण यद्यादृशं
122235 ललाटाक्षरमधिगतं प्राप्तं तत्तद्विषये अज्ञेषु ज्ञेषु वा भूतनिवहेषु तथैव
122236 स्फुरितो नियत एष नियतेः प्रारब्धकर्मणो विलास एवं प्रागुक्तरीत्या दुरुल्लङ्घ्य
122237 इत्यर्थः॥ ४९॥
122238
122239 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० निर्वा० पू० चू०
122240 जीवन्मुक्तव्यवहारप्रतिपादनं नाम चतुरधिकशततमः सर्गः॥ १०४॥
122241
122242 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
122243 जीवन्मुक्तव्यवहारप्रतिपादनं नाम चतुरधिकशततमः सर्गः॥ १०४॥
122244
122245
122246 पञ्चाधिकशततमः सर्गः १०५
122247
122248 शिखिध्वज उवाच।
122249
122250 एवं स्थिते महाभाग कथमुद्वेगमीदृशम्।
122251 लब्धवानसि देवोऽपि वद वेद्यविदां वर॥ १॥
122252

122253 कुम्भेन निशि दुर्वासःशापात्स्त्रीत्वाप्तिरुच्यते।
122254 परस्परं समाधानैः प्रीतयोश्च तथा स्थितिः॥
122255
122256 कुम्भ उवाच।
122257
122258 शृणु कार्यमिदं चित्तं मदीयं वसुधाधिप।
122259 कथयामि तवाशेषं सर्गं यद्वृत्तमद्य मे॥२॥
122260
122261 एवं नियत्यनुसारेण स्थिते जीवकदम्बे त्वं देवोऽपि सन्नीदृशं
122262 विषादनिमित्तमुद्वेगं कथं लब्धवांस्तद्वदेत्यर्थः॥१॥२॥
122263
122264 सुहृद्यावेदितं दुःखं परमायाति तानवम्।
122265 घनं जडं कृष्णमपि मुक्तवृष्टिरिवाम्बुदः॥३॥
122266
122267 घनं जडं कृष्णमिति विशेषणनपुंसकत्वं प्राग्वत्। ईदृशोऽप्यम्बुदो
122268 मुक्तवृष्टिः सन् यथा तानवमायाति तद्वत्॥३॥
122269
122270 सुहृदा पृच्छता साधु चेतो याति प्रसन्नताम्।
122271 स्वच्छतोपगतेनाशु कतकेन जलं यथा॥४॥
122272
122273 पृच्छता सुहृदा निमित्तेन। स्वच्छतार्थमुपगतेनेति सुहृदोऽपि विशेषणम्॥४॥
122274
122275 अहं तावदितो यातो भवते पुष्पमञ्जरीम्।
122276 दत्त्वा गगनमुल्लङ्घ्य संप्राप्तश्च त्रिविष्टपम्॥५॥
122277
122278 ततः पित्रा महेन्द्रस्य सभास्थाने यथाक्रमम्।
122279 स्थित्वोत्थाय तथोत्थानकाले पित्रा विवर्जितः॥६॥
122280
122281 पित्रा सहेति शेषः॥६॥
122282
122283 इहागन्तुमहं त्यक्त्वा स्वर्गं संप्राप्तवान्नभः।
122284 दिवाकरहयैः सार्धं वहाम्यनिलवर्त्मनि॥७॥
122285
122286 वहामि प्रवहाख्यस्यानिलस्य स्वानुकूले वर्त्मनि तत्प्रवाहेणैव वहामि
122287 यावदभिमतदेशमित्यर्थः॥७॥
122288
122289 अथैकत्र गतो भानुरेकेनान्येन व्र्त्मना।
122290 आगच्छाम्यहमाकाशं सागरापतिताकृतिः॥८॥
122291
122292 अथ मदभिमतदेशप्राप्त्यनन्तरं तेन मरुता अग्रे उह्यमानो भानुरेकेन वर्त्मना
122293 एकत्र गतः। अहं त्वन्येन वर्त्मना आगच्छामि। सागरापतिताकृतिः समुद्रे
122294 प्लवमान इवेत्यर्थः॥८॥
122295
122296 अथाग्रे वारिपूर्णानां मेघानां मध्यवर्त्मना।
122297 अपश्यं मुनिमायान्तमहं दुर्वाससं जवात्॥९॥
122298
122299 पयोधरपटच्छन्नं विद्युद्वलयभूषितम्।
122300 अभिसारिकया तुल्यं धाराधौताङ्गचन्दनम्॥१०॥
122301
122302 शीकरधाराभिर्धौतं क्षालितमङ्गचन्दनमङ्गरागो यस्य तम्॥१०॥
122303
122304 स्थितां सुतरुसुच्छायामापगां वसुधातले।

122305 वेगेनाभिसरन्तं तां तपोलक्ष्मीमिव प्रियाम् ॥ ११ ॥
122306
122307 वसुधातले स्थितामत एव शोभना तीररुहतरुसुच्छाया यस्यास्तथाविधाम् । स्वस्य
122308 प्रियां तपोलक्ष्मीमिव स्थितामापगां गङ्गां प्रति संध्यावन्दनकालात्ययो मा
122309 भूदिति वेगेनाभिसरन्भ्रम् । आप यामिति पाठे तु यां तपोलक्ष्मीलक्षणां प्रियां
122310 भार्यां वसुधातले आप प्राप तामभिमुखीकृत्य सरन्तमिवेत्युत्प्रेक्षा ॥ ११ ॥
122311
122312 तस्य कृत्वा नमस्कारमुक्तं खे वहता मया ।
122313 मुने नीलाभ्रवस्त्रस्त्वमभिसारिकया समः ॥ १२ ॥
122314
122315 अभिसारिकया तमिस्राभिसारिकया त्वं समो दृश्यसे इति मया उक्तम् ॥ १२ ॥
122316
122317 इत्याकर्ण्य मुमोचासौ मयि मानद शापकम् ।
122318 स्तनकेशवती कान्ता हावभावविलासिनी ॥ १३ ॥
122319
122320 गच्छानेन दुरुक्तेन रात्रौ योषा भविष्यसि ।
122321 इति श्रुत्वाऽशुभं वाक्यमुत्थितं जर्जरद्विजात् ॥ १४ ॥
122322
122323 अशुभमिति च्छेदः । जर्जराद्वृद्धाद्द्विजाद्दुर्वाससः ॥ १४ ॥
122324
122325 विमृशामि मनाग्यावत्तावदन्तर्हितो मुनिः ।
122326 इत्युद्वेगमनाः साधो संप्राप्तोऽहं नभस्तलात् ॥ १५ ॥
122327
122328 इत्युक्तनिमित्त उद्वेगो यस्य तथाविधं मनो यस्य ॥ १५ ॥
122329
122330 एतत्ते कथितं सर्वं संपन्नोऽस्मि निशाङ्गना ।
122331 अतिवाह्यं दिनान्तेषु स्त्रीत्वमेतन्मया कथम् ॥ १६ ॥
122332
122333 कथमतिवाह्यं यापयितुं शक्यम् ॥ १६ ॥
122334
122335 योषित्स्तनवती रात्रौ वक्तव्यं किं मया पितुः ।
122336 संसृतौ भवितव्यानामहो नु विषमा गतिः ॥ १७ ॥
122337
122338 पितुः अग्रे इति शेषः ॥ १७ ॥
122339
122340 अहमप्यद्य यद्दैवाद्यूनामामिषतां गतः ।
122341 कष्टं मदपहारेण कलहो जायतेऽधुना ॥ १८ ॥
122342
122343 यूनामामिषतां गृध्रामिषन्यायेन कलहविषयताम् । तमेव न्यायं प्रसक्तं
122344 स्पष्टयति - कष्टमिति । अधुनेति श्वःपरश्वस्तनसंनिहितकालोक्तिः । मदपहारेण
122345 मम अपहरणाय । अध्ययनेन वसतीतिवत् फलस्यापि हेतुत्वविवक्षया तृतीया ॥ १८ ॥
122346
122347 दिवि देवकुज्माराणां कामाकुलधियामिह ।
122348 गुरुदेवद्विजातीनां लज्जापरवशात्मना ॥ १९ ॥
122349
122350 कथमग्रे मया सम्यग्वस्तव्यं यामिनीस्त्रिया ।
122351
122352 श्रीवसिष्ठ उवाच ।
122353
122354 इत्युक्त्वा क्षणमेकं सा तूष्णीं स्थित्वा मुनिस्थितौ ॥ २० ॥
122355
122356 मुनिस्थितौ चित्तसमाधाने ॥ २० ॥

122357
122358 धैर्यमाश्रित्य कुम्भोऽत्र पुनराह रघूद्वह।
122359 किमज्ञ इव शोचामि किं मम क्षतमात्मनः॥ २१॥
122360
122361 यथागतमयं देहो मत्तोऽन्योऽनुभविष्यति।
122362
122363 शिखिध्वज उवाच।
122364
122365 परिदेवनया कोऽर्थो देवपुत्र तथैतया॥ २२॥
122366
122367 यथाप्रारब्धमागतं स्त्रीत्वं मत्तोन्योऽयं देह एवानुभविष्यति
122368 तेनासङ्गचिन्मात्रात्मनो मम का क्षतिरित्यर्थः। राजापि तदुक्तमनुमोदमान आह
122369 - परिदेवनयेत्यादिना॥ २२॥
122370
122371 यदायाति तदायातु देहस्यात्मा न लिप्यते।
122372 कानिचिद्यानि दुःखानि सुखानि विहितानि च॥ २३॥
122373
122374 तानि सर्वाणि देहस्य देहिनो न तु कानिचित्।
122375 यदि त्वमपि कार्याणामखेदार्होऽपि खिद्यसे॥ २४॥
122376
122377 देहिनो देहोपलक्षितचिदात्मनः कार्याणामवश्यसंपाद्यानां प्रारब्धफलानां
122378 विषये अखेदार्हस्त्वमपि यदि खिद्यसे तत्तर्हि अन्येषामविवेकप्रयुक्तखेदचिकित्सायां
122379 त्वमिव आगमभूषणः शास्त्रतत्त्वानुभावनकुशलः उपायश्चिकित्सकः क इव
122380 शरणं स्यान्न कश्चिदित्युत्तरेणान्वयः॥ २४॥
122381
122382 तदन्येषामुपायः स्यात्क इवागमभूषणः।
122383 खेदे खेदोचितं वाच्यमिति किंचित्त्वमुक्तवान्॥ २५॥
122384
122385 नायं तव खेदः किंतु खेदोचितोक्तिमात्रं लोकाचारानुवर्णनायेत्याह - खेदे इति
122386 ॥ २५॥
122387
122388 इदानीं समतामेत्य तिष्ठाखिन्नो यथास्थितम्।
122389
122390 श्रीवसिष्ठ उवाच।
122391
122392 तावेवमादिभिर्वाक्यैरन्योन्याश्वासनं स्वयम्॥ २६॥
122393
122394 कृत्वा स्थितौ वनस्निग्धौ सुहृदौ खेदिनौ मिथः।
122395 अथार्कोऽप्यस्य कुम्भस्य स्त्रीत्वमुत्पादयन्निव॥ २७॥
122396
122397 अथ मिथ आश्वासनानन्तरम्॥ २७॥
122398
122399 जगामास्तं जगद्दीपो दीपः स्नेहक्षयादिव।
122400 व्यवहारभरैः सार्धं पद्माः संकोचमाययुः॥ २८॥
122401
122402 मार्गाश्च पथिकैः सार्धं पान्थस्त्रीहृदयानि च।
122403 दाशवद्विहगान्सर्वान्कुर्वदेकत्र संचितान्॥ २९॥
122404
122405 मार्गास्तमोभिः संकोचमस्फुटतामाययुः। पान्थस्त्रीहृदयानि पथिकाश्च
122406 वियोगशोकतमोभिरित्यर्थः। दाशाः समुद्रद्वीपस्थकैवर्ताः। ते हि पक्षिणोऽपि
122407 जालैर्बध्नन्ति मत्स्यानपि रत्नान्यपि संचिन्वन्ति तद्वद्विद्यमानमूर्ध्वाधो
122408 भुवनद्वयं पक्षिसंग्रहेण तारकारत्नजालाढ्यतया च परस्परं साम्यतां

122409 सममेव साम्यम् स्वार्थे ष्यञ् । समतां ययावित्यर्थः ॥ २९ ॥
122410
122411 तारकारत्नजालाढ्यं भुवनं साम्यतां ययौ ।
122412 खं हसदिव ताराढ्यं विकासिकुमुदाकरम् ॥ ३० ॥
122413
122414 उन्नादं चक्राह्वानां भ्रमद्भ्रमराणां च पेटकं वृन्दं कर्तृ
122415 विकासिकुमुदाकरं हसदिव स्थितं ताराढ्यं खं कर्म ययौ ॥ ३० ॥
122416
122417 ययावुन्नादचक्राह्वभ्रमद्भ्रमरपेटकम् ।
122418 सुहृदौ तावथोत्थाय संध्यामुद्यन्निशाकराम् ॥ ३१ ॥
122419
122420 वन्दयित्वा तथा कृत्वा जप्यं गुल्मान्तरे स्थितौ ।
122421 ततः कुम्भः शनैस्तत्र स्त्रैणमभ्याहरन्वपुः ॥ ३२ ॥
122422
122423 वन्दयित्वा वन्दित्वा । स्वार्थे णिच् । स्त्रिया इदं स्त्रैणं वपुः अभ्याहरन् आविष्कुर्वन् ॥ ३२
122424 । ।
122425
122426 शिखिध्वजं पुरःसंस्थं प्रोवाच गलदक्षरम् ।
122427 पतामीव स्फुरामीव द्रवामीवाङ्गयष्टिभिः ॥ ३३ ॥
122428
122429 गलदक्षरं सगद्गदमिति यावत् ॥ ३३ ॥
122430
122431 लज्जयैव च ते राजन्मन्ये स्त्रीत्वं व्रजाम्यहम् ।
122432 पश्येमे परिवर्धन्ते राजन्मम शिरोरुहाः ॥ ३४ ॥
122433
122434 ते पुर इति शेषः ॥ ३४ ॥
122435
122436 प्रस्फुरत्तारकामाला दिनान्ततिमिरा इव ।
122437 पश्येमौ मम जायेते प्रोन्मुखावुरसि स्तनौ ॥ ३५ ॥
122438
122439 प्रस्फुरत्तारकामाला इत्युपमानविशेषणादुपमेयाः शिरोरुहा अपि
122440 मुक्तादिमालासहिता इति गम्यते ॥ ३५ ॥
122441
122442 कोरकाविव पद्मिन्या वसन्ते गगनोन्मुखौ ।
122443 आगुल्फमेव लम्बानि संपद्यन्तेऽम्बराणि मे ॥ ३६ ॥
122444
122445 अम्बराणि वस्त्राणि ॥ ३६ ॥
122446
122447 देहादेव सखे पश्य स्त्रिया इव शनैः शनैः ।
122448 भूषणान्युत रत्नानि माल्यानि विविधानि च ॥ ३७ ॥
122449
122450 माल्यानि विविधानि देहादेव जायन्ते इत्युत्तरत्रान्वयः ॥ ३७ ॥
122451
122452 पश्येमान्यङ्ग जायन्ते स्वाङ्गेभ्यो वृक्षपुष्पवत् ।
122453 पश्यायं स्वयमेवाद्य चन्द्रांशुक्ररशोभनः ॥ ३८ ॥
122454
122455 स्वाङ्गेभ्यः शाखादिभ्यः ॥ ३८ ॥
122456
122457 मूर्ध्नि पट्टांशुको जातो नीहारोऽद्राविवाङ्ग मे ।
122458 सर्वाणि कान्तालिङ्गानि जातानि मम मानद ॥ ३९ ॥
122459
122460 पट्टांशुकः पट्टवस्त्रम् । एवमाच्छादितप्रदेशेष्वपि लिङ्गविनिमयः संपन्न इति

122461 ज्ञेयमित्याशयेनाह - सर्वाणीति ॥ ३९ ॥
122462
122463 हा धिक्कष्टं विषादो मे किं करोम्यङ्गनास्म्यहम् ।
122464 हा धिक्कष्टमहो साधो स्थित एवाहमङ्गना ॥ ४० ॥
122465
122466 स्थितः सिद्धः ॥ ४० ॥
122467
122468 संविदानुभवाम्यन्तर्नितम्बजघने त्विमे ।
122469 विपिने कुम्भ इत्युक्त्वा तूष्णीं खिन्नो बभूव ह ॥ ४१ ॥
122470
122471 इत्युक्त्वा कुम्भो विपिने तूष्णीं बभूव ह किल ॥ ४१ ॥
122472
122473 राजापि च तमालोक्य तथैवासीद्विषण्णधीः ।
122474 मुहूर्तमात्रेणोवाच शिखिध्वज इदं वचः ॥ ४२ ॥
122475
122476 कष्टं सोऽयं महासत्त्वः संपन्ना वरवर्णिनी ।
122477 साधो विदितवेद्यस्त्वं जानासि नियतेर्गतिम् ॥ ४३ ॥
122478
122479 अवश्यभाविन्यर्थेऽस्मिन्मा खिन्नहृदयो भव ।
122480 आपतन्ति दशास्तास्ताः [तातेति पाठः ।] सुधियां देहमात्रके ॥ ४४ ॥
122481
122482 सुधियां तत्त्वविदां देहमात्रके आपतन्ति चेतसि न ॥ ४४ ॥
122483
122484 न चेतस्यधियां त्वेताश्चित्तं यान्ति न देहकम् ।
122485
122486 कुम्भ उवाच ।
122487
122488 एवमस्त्वनुतिष्ठामि यामिनीस्त्रीत्वमात्मनः ॥ ४५ ॥
122489
122490 अधियामज्ञानां तु एता दशाश्चित्तमपि वासनात्मना यान्ति न देहमात्रकमित्यर्थः
122491 । अनुतिष्ठामि अनुवर्ते ॥ ४५ ॥
122492
122493 न खेदमनुगच्छामि नियतिः केन लङ्घ्यते ।
122494 इति निर्णीय तौ खेदं तं नीत्वा तनुतामिव ॥ ४६ ॥
122495
122496 एकतल्पे निशां तूष्णीं नीतवन्तौ चिरेण ताम् ।
122497 अथ प्रभाते तत्स्त्रैणं वपुरुत्सृज्य यौवनम् ॥ ४७ ॥
122498
122499 राजा कुम्भविपत्तिचिन्तया राज्ञी तु नृपसंगमोत्कण्ठया निद्राभावाच्चिरेण
122500 निशां नीतवन्तौ । युवत्या इदं यौवनं वपुरुत्सृज्य । भस्याढे तद्धिते इति
122501 पुंवद्भावे अन्नित्यणि प्रकृतिभावान्न टिलोपः ॥ ४७ ॥
122502
122503 बभूव कुम्भः कुम्भाभः कुचप्रोज्झितमूर्तिमान् ।
122504 इति सा राजमहिषी चूडाला वरवर्णिनी ॥ ४८ ॥
122505
122506 पूर्वेद्युस्तनकुम्भाभः ॥ ४८ ॥
122507
122508 कुम्भत्वमास्थिता भर्तुः पश्चात्स्त्रीत्वमुपागता ।
122509 विजहार वनान्तेषु कुमारीधर्मिणी निशि ।
122510 कुम्भरूपधरा चाह्नि भर्त्रा मित्रेण संयुता ॥ ४९ ॥
122511
122512 कुमारीधर्मिणी अनूढाचारा ॥ ४९ ॥

122513
122514 कैलासमन्दरमहेन्द्रसुमेरुसह्यसानुष्वविस्खलितयोगगमागमा स ।
122515 साकं प्रियेण सुहृदा भवता यथेच्छं स्रग्दामहारवलिता विजहार नारी ॥ ५०
122516 । ।
122517
122518 क्व क्व कथं कथं विजहार तदाह - कैलासेति । कैलासादीनां सानुषु प्रस्थेषु
122519 अविस्खलितो योगबलेन गमागमः कान्तयोगेन गमागमश्च यस्यास्तथाविधा सा
122520 चूडाला यथेच्छं स्वाभिमतानुसारेण भवता वर्तनशीलेन प्रियेण सार्धं
122521 स्रग्दामहारवलिता सती यथेच्छं विजहारेति पुनरप्याकाङ्क्षयान्वयः ॥ ५० ॥
122522
122523 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वाणप्रकरणे पू० चू०
122524 कुम्भस्य स्त्रीत्वलाभो नाम पञ्चाधिकशततमः सर्गः ॥ १०५ ॥
122525
122526 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
122527 स्त्रीत्वलाभो नाम पञ्चाधिकशततमः सर्गः ॥ १०५ ॥
122528
122529 षडुत्तरशततमः सर्गः १०६
122530
122531 श्रीवसिष्ठ उवाच ।
122532
122533 ततः कतिपयेष्वेव दिवसेषु गतेषु सा ।
122534 इदं प्रोवाच भर्तारं कुम्भरूपधरा सती ॥ १ ॥
122535
122536 वर्ण्यतेऽत्र महेन्द्रादौ विवाहोऽग्निपुरस्कृतः ।
122537 तयोर्गुहायां सौवर्ण्यां पुष्पतल्पे च संगमः ॥
122538
122539 सा चूडाला ॥ १ ॥
122540
122541 राजन्राजीवपत्राक्ष ममेदं वचनं शृणु ।
122542 निशायां प्रत्यहं तावत्स्थित एवाहमङ्गना ॥ २ ॥
122543
122544 तदिच्छाम्यङ्गनाधर्मं निपुणीकर्तुमीदृशम् ।
122545 भर्त्रे कस्मैचिदात्मानं विवाहेन ददाम्यहम् ॥ ३ ॥
122546
122547 निपुणीकर्तुं सफलीकर्तुम् । ददामि अचिरादेव दास्यामि ॥ ३ ॥
122548
122549 तद्भवानेव मे भर्ता रोचते भुवनत्रये ।
122550 गृहाण मां विवाहेन भार्यात्वे निशि सर्वदा ॥ ४ ॥
122551
122552 अयत्नोपनतं साधो प्रियेण सुहृदा सह ।
122553 स्त्रीसुखं भोक्तुमिच्छामि मा मे विघ्नकरो भव ॥ ५ ॥
122554
122555 प्रत्याख्यानेन विघ्नकरो मा भव ॥ ५ ॥
122556
122557 क्रमप्रवृत्तमासृष्टेः सुखं साध्यं मनोरमम् ।
122558 प्रकृतं कुर्वतः कार्यं दोषः क इव जायते ॥ ६ ॥
122559
122560 आसृष्टेः सृष्टिकालमारभ्य देवर्ष्यादिषु अद्ययावत्क्रमप्रवृत्तं
122561 सुखमनायासमेव साध्यं प्रकृतं प्रस्तुतं विवाहकार्यं इच्छानिच्छे तत्फले
122562 च त्यक्त्वा कुर्वतस्ते क इव दोषो जायत इत्यन्वयः । वयं आवाम् । अस्मदो द्वयोश्च इति
122563 बहुवचनम् ॥ ६ ॥
122564

122565 इच्छानिच्छे फले त्यक्त्वा समन्तात्सर्ववस्तुषु।
122566 वयं न सेच्छा नानिच्छाः कुर्मस्तेनेदमीसितम्॥ ७॥
122567
122568 शिखिध्वज उवाच।
122569
122570 कृतेनानेन कार्येण न शुभं नाशुभं सखे।
122571 पश्यामि तन्महाबुद्धे यथेच्छसि तथा कुरु॥ ८॥
122572
122573 तत्तस्माद्धेतोः॥ ८॥
122574
122575 समतां संप्रयातेन चेतसेदं जगत्त्रयम्।
122576 स्वरूपमेव पश्यामि यथेच्छसि तदाचर॥ ९॥
122577
122578 स्वरूपं स्वात्मभूतमेवानुपश्यामि॥ ९॥
122579
122580 कुम्भ उवाच।
122581
122582 यद्येवं तन्महीपाल लग्नमद्यैव शोभनम्।
122583 राकेयं श्रावणस्यास्य ह्यः सर्वं गणितं मया॥ १०॥
122584
122585 ह्यः पूर्वेद्युरिव मया विवाहलग्नादि सर्वं गणितम्॥ १०॥
122586
122587 रात्रावद्योदिते चन्द्रे परिपूर्णकलामले।
122588 जन्यत्रो नौ महाबाहो द्वयोरेव भविष्यति॥ ११॥
122589
122590 जन्यत्रो विवाहः। द्वयोरेव गान्धर्वविधिनेति भावः॥ ११॥
122591
122592 महेन्द्राद्रिशिरःशृङ्गसानावद्य मनोरमे।
122593 रत्नदीपप्रकाशाढ्ये मणिकन्दरमन्दिरे॥ १२॥
122594
122595 मणिमयकन्दरलक्षणे मन्दिरे॥ १२॥
122596
122597 पुष्पभारानतोत्तुङ्गवृक्षराजिविराजिते।
122598 वनपुष्पलतालास्यनारीनृत्यमनोहरे॥ १३॥
122599
122600 विवाहोत्सवोचितनरनारीगणस्थानीयतया वृक्षलतादिसंपत्तिं दर्शयति -
122601 पुष्पभारेति॥ १३॥
122602
122603 निशि व्योमगतास्तारा भर्त्रा पूर्णेन्दुना सह।
122604 आवयोः परिपश्यन्तु कर्णान्तायतलोचन॥ १४॥
122605
122606 परिपश्यन्तु विवाहोत्सवमिति शेषः॥ १४॥
122607
122608 उत्तिष्ठात्मविवाहार्थं कुर्वः काननकोटरात्।
122609 राजंश्चन्दनपुष्पादिसंभारं रत्नसंयुतम्॥ १५॥
122610
122611 इत्युक्त्वा कुम्भ उत्थाय सह तेन महीभृता।
122612 कुसुमावचयं चक्रे तथा रत्नादिसंचयम्॥ १६॥
122613
122614 ततो मुहूर्तमात्रेण रत्नसानौ समे शुभे।
122615 समालम्भनपुष्पाणां ताभ्यां वै राशयः कृताः॥ १७॥
122616

122617 रत्नसंभृते सानौ समे शुभे अजिरे इति शेषः। समालम्भनं
122618 देवताग्निमदनादिपूजनं तदर्थानां पुष्पाणाम्॥ १७॥
122619
122620 हाराम्बरमणीन्द्रादिराशयस्त्वपरेऽजिरे।
122621 सौभाग्यस्येव कामेन कोशाः कालेन संभृताः॥ १८॥
122622
122623 अप्रे अजिरे इति वचनात्पूर्वमप्यजिरे इति गम्यते। कालेन भोजकसुकृतपरिपाककालेन॥ १८
122624 ।।
122625
122626 तथा जन्यत्रसंभारं कृत्वा काञ्चनकन्दरे।
122627 ययतुस्तौ महामित्रे स्नातुं मन्दाकिनीं नदीम्॥ १९॥
122628
122629 तत्रैनं स्नापयामास महाराजं महादरात्।
122630 गजकुम्भोपमस्कन्धं कुम्भो मङ्गलपूर्वकम्॥ २०॥
122631
122632 मङ्गलं दधिदूर्वाक्षतसिद्धार्थादि तत्पूर्वकम्॥ २०॥
122633
122634 भविष्यद्दयितारूपं भविष्यद्दयितोऽङ्गनाम्।
122635 चूडालां स्नापयामास कुम्भरूपधरां प्रियाम्॥ २१॥
122636
122637 पूजयामासतुः स्नातौ तत्र देवपितॄन्मुनीन्।
122638 यथा क्रियाफलेऽनिच्छौ क्रियात्यागे तथैव तौ॥ २२॥
122639
122640 क्रियाफलानिच्छोस्तयोः कथं पूजाप्रवृत्तिस्तत्राह - यथेति। यथैव
122641 क्रियात्यागेऽप्यनिच्छौ॥ २२॥
122642
122643 नित्यज्ञानरसातृप्तौ व्यवस्थायां जगत्स्थितेः।
122644 चक्राते भोजनं भव्यं तावन्योन्यसमीहितम्॥ २३॥
122645
122646 अन्योन्यसमीहितं सिद्धिबलकल्पितान्नादेर्भोजनम्॥ २३॥
122647
122648 कल्पवृक्षदुकूलानि परिधाय सितानि तौ।
122649 फलानि भुक्त्वा जन्यत्रस्थानमाययतुः क्रमात्॥ २४॥
122650
122651 फलानि कल्पवृक्षफलानि। जन्यत्रस्थानं वेदिमूलम्। क्रमात् शास्त्रोक्तक्रमात्॥ २४॥
122652
122653 एतावताथ कालेन तयोर्जन्यत्रसोत्कयोः।
122654 प्रियं कर्तुमिवास्ताद्रिं द्रागित्येवाविशद्रविः॥ २५॥
122655
122656 अथ संध्याक्रमे वृत्ते कृते जप्याघमर्षणे।
122657 विवाहदर्शनायैव ताराजाले खमागते॥ २६॥
122658
122659 संध्याक्रमे संध्यावन्दनविधौ॥ २६॥
122660
122661 मिथुनैकसखीयामा कुमुदोत्करहासिनी।
122662 प्रालेयजालप्रकरं विकिरन्ती समाययौ॥ २७॥
122663
122664 मिथुनानां प्रीतिकरत्वान्नैकसखीयामा त्रियाम॥ २७॥
122665
122666 रत्नदीपान्बहून्सानौ कुम्भः सम्यगयोजयत्।
122667 ज्योतींषीन्द्वर्कयुक्तानि पद्मोद्भव इवाम्बरे॥ २८॥
122668

122669 पद्मोद्भवो ब्रह्मा ॥ २८ ॥
122670
122671 भूषयामास राजानं स्त्रीत्वं गच्छन्निशागमे ।
122672 चन्दनागुरुकर्पूरपूरैर्मृगजकुङ्कुमैः ॥ २९ ॥
122673
122674 मृगजैः कस्तूरीपौष्कलकादिभिः । कुङ्कुमैः काश्मीरैः ॥ २९ ॥
122675
122676 हारकेयूरकटकैस्तथा कल्पलतांशुकैः ।
122677 स्रगुद्दामावतंसैश्च माल्यैश्च विविधोचितैः ॥ ३० ॥
122678
122679 कल्पलतोद्भूतैरंशुकैर्वस्त्रैः । स्रग्भिरुद्दामैरुत्कृष्टशोभैरवतंसैः
122680 रत्नगुच्छाद्युत्तंसैः । माल्यैः कण्ठादिमाल्यैर्विविधभूषणोचितैः ॥ ३० ॥
122681
122682 तथा कल्पलतागुच्छैर्मन्दारैः पारिजातकैः ।
122683 संतानैर्बहुरत्नैश्च मौलिना चेन्दुरूपिणा ॥ ३१ ॥
122684
122685 मौलिपदेन चूडामणिर्लक्ष्यते । इन्दुरूपिणा चन्द्रसदृशेन ॥ ३१ ॥
122686
122687 एतावताथ कालेन वधूत्वं कुम्भ आययौ ।
122688 घनस्तनभराक्रान्तो बभूवाशु विलासवान् ॥ ३२ ॥
122689
122690 वधूचितविलासवान् ॥ ३२ ॥
122691
122692 इदं संचिन्तयामास संपन्नोऽयमहं वधूः ।
122693 कामायात्मा मया देयः कार्यं कालोचितं किल ॥ ३३ ॥
122694
122695 कामाय कामरूपाय वराय ॥ ३३ ॥
122696
122697 इयमस्मि वधूः कान्ता भर्ता त्वं मे पुरःस्थितः ।
122698 गृहाण काम मामेहि कालोऽयं तव हृच्छयः ॥ ३४ ॥
122699
122700 अत एव कामत्वेनैव भर्तारं कल्पयित्वा मनस्याह - इयमिति ॥ ३४ ॥
122701
122702 इति संचिन्त्य भर्तारमग्रस्थगहनस्थितम् ।
122703 उदयन्तमिवादित्यं रतिः काममिवाभ्यगात् ॥ ३५ ॥
122704
122705 अग्रस्थे गहने वनवेदिदेशे स्थितम् ॥ ३५ ॥
122706
122707 अहं मदनिका नाम भार्यास्मि तव मानद ।
122708 पादयोस्ते प्रणामोऽयं सस्नेहं क्रियते मया ॥ ३६ ॥
122709
122710 सस्नेहं सानुरागम् ॥ ३६ ॥
122711
122712 इत्युक्त्वा सानवद्याङ्गी लज्जावनमितानना ।
122713 लोलालकेन शिरसा प्रणनाम लसत्पतिम् ॥ ३७ ॥
122714
122715 लसन्तं शोभमानं पतिम् ॥ ३७ ॥
122716
122717 उवाचेदं च हे नाथ त्वं मां भूषय भूषणैः ।
122718 क्रमेणाग्निं च संज्वाल्य मत्पाणिग्रहणं कुरु ॥ ३८ ॥
122719
122720 संज्वाल्य हुत्वाभ्यर्च्य च ॥ ३८ ॥

122721
122722 राजसेऽतितरां राजन्मां करोषि स्मरातुराम् |
122723 रतेर्विवाहे मदनमभिभूयाधितिष्ठसि || ३९ ||
122724
122725 रतेर्विवाहे प्रसिद्धं मदनं स्वशोभयाभिभूयेत्यर्थः || ३९ ||
122726
122727 इन्दोरिवांशुजालानि राजन्माल्यानि तानि ते |
122728 मेरुगङ्गाप्रवाहाभां धत्ते हारस्तवोरसि || ४० ||
122729
122730 तां शोभामेव वर्णयति - इन्दोरित्यादिना | तवोरसि स्थितो हारो मेरौ प्रसिद्धस्य
122731 गङ्गाप्रवाहस्य आभां शोभां धत्ते || ४० ||
122732
122733 मन्दारकुसुमप्रोतैः कुन्तलैर्नृप राजसे |
122734 कनकाब्जमिवोल्लोलैर्भृङ्गैः खचितकेसरैः || ४१ ||
122735
122736 खचितकेसरैर्घटितकिञ्जल्कैः || ४१ ||
122737
122738 रत्नांशुजालैः कुसुमैः श्रिया स्थैर्येण तेजसा |
122739 रत्नस्थानं विभो मेरुमभिभूयावतिष्ठसे || ४२ ||
122740
122741 रत्नांशुजालैरित्यादीनि राजमेरुसाधारण्येन योज्यानि || ४२ ||
122742
122743 एवमादि वदन्तौ तौ भविष्यन्नवदम्पती |
122744 प्रच्छन्नपूर्वदाम्पत्यौ मिथस्तुष्टौ बभूवतुः || ४३ ||
122745
122746 वदन्तौ तौ इत्युक्त्या राज्ञापि तस्याः शोभा वर्णितेति गम्यते || ४३ ||
122747
122748 महाराज्ञीं मदनिकां महाराजः शिखिध्वजः |
122749 काञ्चनोपलपर्यङ्के निविष्टो भूषयत्स्वयम् || ४४ ||
122750
122751 काञ्चनोपललक्षणे पर्यङ्के निविष्ट उपविष्टः || ४४ ||
122752
122753 अवतंसैस्तथा माल्यैर्मणिरत्नविभूषणैः |
122754 वस्त्रैर्विलेपनैः पुष्पै रुचिरस्थानकार्पितैः || ४५ ||
122755
122756 तत्तद्भूषणोचितस्थानके अर्पितैः || ४५ ||
122757
122758 सा बभौ भूषिता तन्वी मदनी मददायिनी |
122759 गिरिजेव विवाहोत्का कामकान्तेव कामिनी || ४६ ||
122760
122761 कामकान्ता रतिरिव च || ४६ ||
122762
122763 महाराजो महाराज्ञीं भूषयित्वेदमाह ताम् |
122764 राजसे मृगशावाक्षि लक्ष्मीरिव नवोदिता || ४७ ||
122765
122766 नवोदितेत्यनेन पूर्वलक्ष्म्या जरतीत्वेन शोभापकर्षो व्यज्यते || ४७ ||
122767
122768 शक्रेण सह यच्छच्या यल्लक्ष्म्या हरिणा सह |
122769 यद्गौर्याः शंभुना सार्धं तत्ते भवतु मङ्गलम् || ४८ ||
122770
122771 तत्ते मङ्गलम् | मया सहेति शेषः || ४८ ||
122772

122773 पद्मकोशाङ्कुरहृदा लोलनीलोत्पलेक्षणा |
122774 आमोदशुभझांकारा स्वास्थिता पद्मिनीव सा || ४९ ||
122775
122776 स्तनसदृशः पद्मकोशः अनुरागसदृशा अङ्कुराश्च हृदि यस्याः | आपं चैव
122777 हलन्तानाम् इति भागुरिमतेन टाप् | लोलानि नीलोत्पलानीक्षणानीव यस्याः | आमोदैः
122778 शुभा भ्रमरझांकारा यस्यास्तथाविधा पद्मिनीव सा त्वं स्थितेत्यर्थः || ४९ ||
122779
122780 सुरक्तपल्लवकरा स्तनस्तवकधारिणी |
122781 त्वमनेकफला मन्ये कामकल्पतरोर्लता || ५० ||
122782
122783 इदानीं तां कल्पलतात्वेन रूपयति - सुरक्तेति || ५० ||
122784
122785 हिमशीतावदाताङ्गी ज्योत्स्नाप्रसरहासिनी |
122786 पूर्णेन्दुश्रीरिवोद्युक्ता हृष्टैवाह्लादयस्यलम् || ५१ ||
122787
122788 हिमशीतेत्यादीनि पूर्णेन्दुश्रियो मदनिकायाश्च साधारणानि योज्यानि || ५१ ||
122789
122790 तदुत्तिष्ठ वरारोहे वेदीं वैवाहिकीं स्वयम् |
122791
122792 श्रीवसिष्ठ उवाच |
122793
122794 तत्र पुष्पलताजालैः काण्ढं प्रति शिलाङ्कितैः || ५२ ||
122795
122796 स्वयमलंकुर्विति शेषः | तत्र वेद्याम् | काण्डं प्रति प्रतिकाण्डं
122797 फलगुच्छसमाकारनवरत्नऽसिलाभिरङ्कितैश्चिह्नितैः || ५२ ||
122798
122799 मुक्ताकुसुमजालानां प्रकरैः स्तवकोपमैः |
122800 चतुर्दिक्कं चतुर्भिश्च नालिकेरमहाफलैः || ५३ ||
122801
122802 पूर्णकुम्भैस्तथा गङ्गावारिपूर्णैः प्रकल्पितैः |
122803 ज्वालयामासतुस्तस्या मध्ये चन्दनदारुभिः || ५४ ||
122804
122805 प्रकल्पितैस्तत्र वेद्यामलंचक्रतुरिति शेषः | तस्या वेद्या मध्ये वैवाहिकं ज्वलनं
122806 प्रतिष्ठाप्य चन्दनदारुभिर्ज्वालयामासतुः || ५४ ||
122807
122808 ज्वलनं ज्वालितज्वालं दक्षिणस्थं प्रदक्षिणम् |
122809 पूर्वाभिमुखमेवाग्नेरग्रे पल्लवविष्टरे || ५५ ||
122810
122811 तं ज्वालितज्वालं दक्षिणावर्तशिखत्वाद्दक्षिणस्थं ज्वलनं नियोज्य प्रदक्षिणं
122812 कृत्वा तस्याग्नेरग्रे पल्लवविष्टरे विविशतुरिति परेणान्वयः || ५५ ||
122813
122814 नियोज्य दंपती कान्तौ तयोर्विविशतुः [तयोर्दपत्योर्मध्ये स शिखिध्वज
122815 इत्यन्वयः |] स्वयम् |
122816 स हुत्वा तिललाजानि [लाजानीति नपुंसकत्वमार्षम् |] पावकाय
122817 शिखिध्वजः || ५६ ||
122818
122819 उत्थायोत्थाय कान्तां स पाणिभ्यां स्वयमाददे |
122820 अन्योन्यंन् शोभमानौ तौ भवाविच वने शिवौ || ५७ ||
122821
122822 भवश्च भवानी च भवौ | पुमान् स्त्रिया इति पुंशेषः | शिवौ मङ्गलस्वरूपौ || ५७ ||
122823
122824 चक्रतुर्दंपती तस्य पावकस्य प्रदक्षिणम् |

122825 स्वदायं ज्ञानसर्वस्वं हृदयं प्रेम चापलम् ॥ ५८ ॥
122826
122827 परस्परमात्मदाने किं दायं परस्परं ददतुस्तमाह - स्वदायमिति ॥ ५८ ॥
122828
122829 ददतुस्तौ मिथोऽन्योन्यस्मितकान्तमुखश्रियौ ।
122830 प्रदक्षिणत्रयं कृत्वा लाजांस्त्यक्त्वाथ वह्नये ॥ ५९ ॥
122831
122832 भार्यावरौ समं तुष्टौ करौ तत्यजतुः क्रमात् ।
122833 स्मयमानमुखौ कान्तौ चन्द्राविव नवोदितौ ॥ ६० ॥
122834
122835 संभोगकालसांनिध्यस्मृतेः स्मयमानमुखौ ॥ ६० ॥
122836
122837 पूर्वोपरचिते पुष्पतल्पे विविशतुर्नवे ।
122838 एतस्मिन्नन्तरे चन्द्रश्चतुर्भागं नभस्तलात् ॥ ६१ ॥
122839
122840 विवाहव्यापारेणाद्यः प्रहरोऽतिक्रान्त इति सूचयन्नाह - एतस्मिन्निति । चतुर्भागं
122841 चतुर्थभागम् ॥ ६१ ॥
122842
122843 शनैराक्रमयामास शोभां द्रष्टुमिवानयोः ।
122844 तस्मिंश्च ललनाछिद्रं द्रष्टुंन् दृष्टिरिवाभितः ॥ ६२ ॥
122845
122846 तस्मिंस्तल्पे करान् संचारयामास । यथा कामुकस्य दृष्टिर्ललनाछिद्रं
122847 द्रष्टुमभितः करान् स्वकिरणान् प्रसारयति तद्वत् ॥ ६२ ॥
122848
122849 लोलः संचरयामास करानिन्दुर्लतागृहे ।
122850 तैस्तैर्नवकथालापैरिन्दावभ्युदिते त्वथ ॥ ६३ ॥
122851
122852 तावासांचक्रतुः कान्तौ दंपती सुमुहूर्तकम् ।
122853 अथोत्थाय ज्वलद्रत्नदीपां काञ्चनकन्दराम् ॥ ६४ ॥
122854
122855 संगमसुमुहूर्तकं प्रतीक्षमाणाविति शेषः । काञ्चनमयीं कन्दरां गुहां
122856 विविशतुः ॥ ६४ ॥
122857
122858 स्वयं पूर्वोपरचितां गुप्तां विविशतुः प्रियौ ।
122859 ददर्शतुर्नवं तत्र तल्पं कुसुमकल्पितम् ॥ ६५ ॥
122860
122861 चन्द्रस्याप्यदृश्यत्वाद्गुप्ता । तत्र तल्पं ददर्शतुः । तदेव वर्णयति -
122862 कल्पितमित्यादिसार्धत्रयेण । ददर्शतुरिति किल्पतुसि गुणश्छान्दसः ॥ ६५ ॥
122863
122864 परितो व्याप्तमुत्कीर्णैर्हेमपङ्कजराशिभिः ।
122865 मन्दारादिभिरन्यैश्च पुष्पैर्ग्लानिविवर्जितैः ॥ ६६ ॥
122866
122867 ग्लानिवर्जितैरम्लानैः ॥ ६६ ॥
122868
122869 उच्चकैः सुप्रमाणेन निर्मितैः कुसुमैः समैः ।
122870 दीर्घेन्दुबिम्बप्रतिमैस्तुषारस्थलशीतलैः ॥ ६७ ॥
122871
122872 शोभनेन शय्याप्रमाणेनोच्चकैरुन्नतैः । कदनिका सत्यसंकल्पेन समैः
122873 कुसुमैर्निर्मितैर्दीर्घशय्याकारेण दीर्घीभूतेन्दुबिम्बप्रतिमैः पुष्पैः परितो
122874 व्याप्तमिति पूर्वत्रान्वयः ॥ ६७ ॥
122875
122876 क्षीरोदजलधाराभंन् ज्योत्स्नासंपिण्डसुन्दरम् ।

122877 प्रतिबिम्बभनङ्गस्य [अनन्तस्येति पाठः] नतं भित्ताविव स्थितम् ॥ ६८
122878 ।।
122879
122880 पुनस्तल्पमेव विशिनष्टि - क्षीरोदेत्यादिना। नतं संक्रान्तम् ॥ ६८ ॥
122881
122882 सुगन्धमुन्नतं कान्तं चिरादन्यतयोत्थितम्।
122883 मिथुनं पुष्पराशौ तन्न्यषीदत्परितोऽमले।
122884 तस्मिन्समसमाभोगे क्षीरोदे मन्दरो यथा ॥ ६९ ॥
122885
122886 चिरात् राज्यत्यागकालादारभ्य अन्यतया अदम्पतित्वेन भ्रान्त्या उदितं तन्मिथुनं
122887 स्त्रीपुंसद्वन्द्वं पुष्पराशौ तस्मिंस्तल्पे न्यषीदत्। उपभोगेन
122888 तल्पोपमर्दकत्वान्मन्दरदृष्टान्तः ॥ ६९ ॥
122889
122890 तैस्तैर्मिथः प्रणयपेशलवाग्विलासैस्तत्कालकार्यसुभगैः प्रणयोपचारैः।
122891 सत्कान्तयोर्नवनवेन तयोः सुखेन दीर्घा मुहूर्त इव सा रजनी जगाम ॥ ७० ॥
122892
122893 तयोः सत्कान्तयोस्तैस्तैर्लोकोत्तरैः
122894 प्रणयपेशलवाग्विलासैस्तत्कालोचितपरिरम्भणादिकार्यसुभगैर्गन्धमाल्य##-
122895 मुहूर्तमिव जगाम ॥ ७० ॥
122896
122897 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाणप्रकरणे पू०
122898 चू० लीलाविवाहो नाम षडुत्तरशततमः सर्गः ॥ १०६ ॥
122899
122900 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे लीलाविवाहो
122901 नाम षडुत्तरशततमः सर्गः ॥ १०६ ॥
122902
122903 सप्ताधिकशततमः सर्गः १०७
122904
122905 श्रीवसिष्ठ उवाच।
122906
122907 अथ सूर्याख्यरङ्गेण रञ्जिते भुवनोदरे।
122908 शिखिध्वजाङ्गना प्रातर्मदनी कुम्भतां ययौ ॥ १ ॥
122909
122910 नानागिरिविहारादि तथा मायेन्द्रदर्शनम्।
122911 असंसक्तिपरीक्षार्थं स्वर्गाह्वानादि वर्ण्यते ॥
122912
122913 रङ्गेण रञ्जकद्रव्येण ॥ १ ॥
122914
122915 एवं महेन्द्रदर्यां तावुभौ कुम्भशिखिध्वजौ।
122916 स्वयं विवाहिताविष्टौ संपन्नौ देवदंपती ॥ २ ॥
122917
122918 देवसदृशभोगाढ्यत्वाद्देवदंपती ॥ २ ॥
122919
122920 विलेसतुर्विचित्रासु प्रत्यहं वनराजिषु।
122921 प्रपक्वफलभारासु पुष्पपल्लविनीषु च ॥ ३ ॥
122922
122923 दिवा प्रीततरौ मित्रे यामिन्यामिष्टदंपती।
122924 प्रभादीपाविव श्लिष्टौ न वियुक्तौ बभूवतुः ॥ ४ ॥
122925
122926 यामिन्यांन् रात्रौ। श्लिष्टौ युक्तौ ॥ ४ ॥
122927
122928 रेमाते वनकुञ्जेषु गुहासु च महीभृताम्।

122929 तमालजालखण्डेषु मन्दारगहनेषु च ॥ ५ ॥
122930
122931 सह्यदर्दुरकैलासमहेन्द्रमलयेषु च ।
122932 गन्धमादनविन्ध्याद्रिलोकालोकतटेषु च ॥ ६ ॥
122933
122934 सह्यादयः सप्त पर्वताः ॥ ६ ॥
122935
122936 दिनैस्त्रिभिस्त्रिभिर्गत्वा निद्रां गतवति प्रिये ।
122937 चूडाला राजकार्याणि कृत्वा स्वभ्याययौ पुनः ॥ ७ ॥
122938
122939 प्रिये निद्रां गतवति स्वनगरं गत्वेति शेषः ॥ ७ ॥
122940
122941 तौ दिवा सुहृदौ मित्रे दंपती कुम्भभूमिपौ ।
122942 नानाकुसुमसंवीतौ तस्थतुर्मुदितौ मिथः ॥ ८ ॥
122943
122944 मासमेकं महेन्द्राद्रौ रम्ये सरलसंकुले ।
122945 रत्नकुड्ये गुहागेहे पूजितौ सुरकिंनरैः ॥ ९ ॥
122946
122947 क्व क्व कियत्कियत्कालं तस्थतुस्तत्राह - मासमित्यादिना । पूजितौ प्रशस्तौ ॥ ९ ॥
122948
122949 हस्तलभ्योदितामोघमन्दारवनमालिते ।
122950 एवं शुक्तिमतः पृष्ठे पक्षं कल्पलतागृहे ॥ १० ॥
122951
122952 हस्तलभ्यान्युदितानि उद्भूतानि क्षुत्तृषारोगजराद्यपहारित्वादमोघानि
122953 फलकुसुमकिसलयादीनि येषां तथाविधैर्मन्दारैर्वनमालिते संजातवनमाले ।
122954 शुक्तिमतः पर्वतविशेषस्य पृष्ठे ॥ १० ॥
122955
122956 मासद्वयं पक्षवतो गिरेर्दक्षिणदिक्तटे ।
122957 पारिजातवने देवपुष्पस्तबकमण्डपे ॥ ११ ॥
122958
122959 पक्षवतो गिरेर्मैनाकस्य । देवभोग्ये पुष्पस्तबकमण्डपे ॥ ११ ॥
122960
122961 जम्बूखण्डतले मेरोः पादे जम्बूनदीतटे ।
122962 जाम्बूनदमये मासं जम्बूफलरसासवैः ॥ १२ ॥
122963
122964 मेरोर्दक्षिणपादे जम्बूद्वीपकेतुर्जम्बूवृक्षः प्रसिद्धस्तत्संततिजे
122965 सम्बूवनखण्डतले तस्थतुरिति सर्वत्रानुषङ्गः । जम्बूफलानां गजप्रमाणानां
122966 रसलक्षणैरासवैः पेयैः स्वेददौर्गन्ध्यजरामयादिनिर्मुक्तस्थिरयौवनाविति
122967 पुराणप्रसिद्ध्यनुसारेणाध्याहार्यम् ॥ १२ ॥
122968
122969 दशोत्तरकुरूणां च मण्डले दिवसानि तौ ।
122970 कोसलेषूत्तरस्थेषु सप्तविंशतिवासरान् ॥ १३ ॥
122971
122972 उत्तरकुरूणां मण्डले दश दिवसानि तौ तस्थतुः ॥ १३ ॥
122973
122974 एवमन्येषु देशेषु विचित्रेषु महीभृताम् ।
122975 स्थितवन्तौ महाभागौ सुहृदौ निशि दम्पती ॥ १४ ॥
122976
122977 ततो यातेषु मासेषु शनैः कतिपयेषु सा ।
122978 चूडाला चिन्तयामास देवपुत्रकरूपिणी ॥ १५ ॥
122979
122980 सुरूपभोगभारेण परीक्षेऽहं शिखिध्वजम् ।

122981 मा कदाचन चेतोऽस्य भोगेषु रतिमेष्यति ॥ १६ ॥
122982
122983 परीक्षे परीक्षिष्ये। वर्तमानसामीप्याल्लट्। रतिमासक्तिम्। परीक्षया
122984 दृढीकृतानासक्तिरयं कदाचिदपि भोगेषु रतिं मा एष्यति नैष्यत्येवेत्यर्थः ॥ १६ ॥
122985
122986 इति संचिन्त्य चूडाला मायया विपिनावनौ।
122987 आगतं दर्शयामास ससुराप्सरसं हरिम् ॥ १७ ॥
122988
122989 सुरैरप्सरोभिश्च सह वर्तमानं हरिमिन्द्रम् ॥ १७ ॥
122990
122991 इन्द्रमभ्यागतं दृष्ट्वा परिवारसमन्वितम्।
122992 यथावत्पूजयामास वनसंस्थः शिखिध्वजः ॥ १८ ॥
122993
122994 यथावत् यथाशास्त्रमर्घ्यपाद्याद्युपचारैः ॥ १८ ॥
122995
122996 शिखिध्वज उवाच।
122997
122998 आत्मना किं कृता दूरादभ्यागमकदर्थना।
122999 देवराज यथा तन्मे प्रसादाद्वक्तुमर्हसि ॥ १९ ॥
123000
123001 अभ्यागमलक्षणा कदर्थना श्रमः किं किमर्थं कृता यथा यत्प्रकारेण
123002 प्रयोजनेन तत् प्रयोजनं वक्तुमर्हसीत्यर्थः ॥ १९ ॥
123003
123004 इन्द्र उवाच।
123005
123006 इमे वयमिहायातास्त्वद्गुणातिशयेन खात्।
123007 हृदि लग्नेन सूत्रेण खगा वनगता इव ॥ २० ॥
123008
123009 खात् स्वर्गात् ॥ २० ॥
123010
123011 उत्तिष्ठ स्वर्गमागच्छ तत्र सर्वे त्वदुन्मुखाः।
123012 त्वद्गुणश्रवणाश्चर्याः स्थिता देवाङ्गनागणाः ॥ २१ ॥
123013
123014 त्वद्गुणश्रवणप्रयुक्तमाश्चर्यं विस्मयो येषां यासां च देवाश्च
123015 तदङ्गनागणाश्च देवाङ्गनागणाः ॥ २१ ॥
123016
123017 पादुकागुटिकाखड्गरसादीदमथापि च।
123018 गृहीत्वा सिद्धमार्गेण स्वीकुरु स्वर्गमण्डलम् ॥ २२ ॥
123019
123020 गगनगमनशक्तिशून्यस्य मे कथं स्वर्गे आगमनं तत्राह - पादुकेति। अथ
123021 सिद्धयन्तरविमानदिव्याश्वाद्यपि च ॥ २२ ॥
123022
123023 आगत्य विविधा भोगास्त्वया विबुधसद्मनि।
123024 जीवन्मुक्तेन भोक्तव्यास्तेन त्वामहमागतः ॥ २३ ॥
123025
123026 तेन त्वदाह्वानप्रयोजनेन ॥ २३ ॥
123027
123028 विमानयन्ति संप्राप्तां न तिरस्करणैः श्रियम्।
123029 नाभिवाञ्छन्ति न प्राप्तां त्वादृशाः साधु साधवः ॥ २४ ॥
123030
123031 प्रत्याख्यानं हृदिस्थमालक्ष्याह - विमानयन्तीति ॥ २४ ॥
123032

123033 अविघ्नमागतेनाद्य सुखं विहरता त्वया।
123034 स्वर्गः पवित्रतां यातु हरिणेव जगत्त्रयम्॥ २५॥
123035
123036 बलिद्वारपालनाय षड्गर्भाहरणाय च पातालेऽपि हरेर्विहारप्रसिद्धेर्जगत्त्रयमिति॥
123037 २५॥
123038
123039 शिखिध्वज उवाच।
123040
123041 सर्वं स्वर्गसमाचारं वेद्मि देवाधिनायक।
123042 किंतु सर्वत्र मे स्वर्गो नियतो न तु कुत्रचित्॥ २६॥
123043
123044 स्वर्गसम आचारः सुखविहरणं यस्मिंस्तथाविधम्। स्वर्गेण समं
123045 सुखमाचरतीत्यणन्तं वा। सर्वं देशम्। तथा वेदने हेतुस्त्वयि को विशेष इति
123046 चेत्तमाह - किंत्विति। मदभिमतः स्वर्गो भूमात्मैव। स च सर्वत्रैवेति भावः।
123047 नियतः परिच्छिन्नः॥ २६॥
123048
123049 सर्वत्रैव हि तुष्यामि सर्वत्रैव रमे प्रभो।
123050 अवाञ्छनत्वान्मनसः सर्वत्रानन्दवानहम्॥ २७॥
123051
123052 पूर्णकामत्वादपि मे सर्वत्र सुखमित्याह - सर्वत्रेति॥ २७॥
123053
123054 नियतं किंचिदेकत्र [कंचित् इति पाठः।] स्थितं स्वर्गकमीदृशम्।
123055 शक्र गन्तुं न जानामि त्वदाज्ञां न करोम्यहम्॥ २८॥
123056
123057 तुच्छं स्वर्गं स्वर्गकं गन्तुं न जानामि न संभावयामि। तथा
123058 चासंभाव्यविषये आज्ञापनं तवैवानुचितं न तु मम तदकरणमपराध इति
123059 भावः॥ २८॥
123060
123061 शक्र उवाच।
123062
123063 साधो विदितवेद्यानां परिपूर्णधियां समम्।
123064 सज्जनाचरितं युक्तं मन्ये भोगोपसेवनम्॥ २९॥
123065
123066 पूर्णधियां भोगोपसेवनं भोगानुपसेवनं च समम्। तत्रापि भोगोपसेवनं
123067 सज्जनैः प्रारब्धक्षयायाचरितमतस्तद्युक्तं मन्ये इत्यर्थः॥ २९॥
123068
123069 देवेशे प्रोक्तवत्येवं तूष्णीमेव स्थिते नृपे।
123070 किमितो नापयाम्येष [नापयास्येष इति मुद्रितपाठश्चिन्त्यः।] त्वमिति
123071 प्रोक्तवान् हरिः॥ ३०॥
123072
123073 देवेशे एवं पुनः प्रोक्तवत्यपि स्वर्गं गन्तुमनिच्छया नृपे तूष्णीं स्थिते सति एष
123074 एवंविधो निरपेक्षस्त्वं यदि तर्ह्यहमितः किं नापयामि।
123075 असंपन्नागमनप्रयोजनस्य ममापयानमेव युक्तमिति हरिरिन्द्रः खेदं सूचयन्
123076 प्रोक्तवान्॥ ३०॥
123077
123078 नाहमद्यैव कालेन वदतीति शिखिध्वजे।
123079 कल्याणं तेऽस्तु कुम्भेति वदन्नन्तर्धिमाययौ॥ ३१॥
123080
123081 अहमद्यैव न स्वर्गमागच्छामि किंतु पुना राज्ये प्रतिष्ठितः कालेन प्रागिव
123082 त्वदरिनिबर्हणादिप्रयोजनार्थमागमिष्यामीत्याशयेनार्धोक्त्या शिखिध्वजे वदति सति
123083 हे कुम्भ ते राजाभिप्रेतं पुना राज्यप्राप्तिलक्षणं कल्याणमस्त्विति कुम्भं प्रति
123084 वदन्नन्तर्धिमन्तर्धानमाययौ हरिः॥ ३१॥

तद्देववृन्दमखिलं त्रिदशेशयुक्तं तत्र
क्षणादलमदृश्यमभूद्द्वितीयम् ।
कल्लोलराशिरिव वारिनिधौ प्रशान्ते वाते स्फुरन्मकरफेनफणीन्द्रवृन्दम् ॥
३२ ॥

इन्द्रे अन्तर्धिमागते तेन त्रिदशेशेन युक्तं तद्द्वितीयं देववृन्दमपि
क्षणाददृश्यमभूत् । यथा वारिनिधौ वाते प्रशान्ते सति स्फुरन्ति व्याकुलानि
मकरफेनफणीन्द्रवृन्दानि यस्मिंस्तथाविधः कल्लोलराशिरप्यदृश्यो भवति
तद्वदित्यर्थः ॥ ३२ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वाणप्रकरणे पू० चू०
श्रक्रगमनं नाम सप्तोत्तरशततमः सर्गः ॥ १०७ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
शक्रगमनं नाम सप्तोत्तरशततमः सर्गः ॥ १०७ ॥

अष्टोत्तरशततमः सर्गः १०८

श्रीवसिष्ठ उवाच ।

तां मायां शममानीय चूडाला समचिन्तयत् ।
दिष्ट्या भोगेच्छया नायं ह्रियते वसुधाधिपः ॥ १ ॥

इह क्रोधपरीक्षार्थं षिङ्गसङ्गश्च मायया ।
राज्ञ्या प्रदर्श्यते राज्ञे निजरूपं च पाकतः ॥

तामिन्द्रागमनरूपां मायां शममानीय उपसंहृत्य । ह्रियते वशीक्रियते ॥ १ ॥

शान्तः [ज्ञातः इति पाठः ।] समसमाभोग एवं शक्रसमागमे ।
असंरम्भमहेलं च कृतवान्व्यावहारिकम् ॥ २ ॥

सदा विक्रियाशून्यत्वात् समेन आकाशादिना सम आभोगो मुखाद्यवयवस्थितिर्यस्य ।
असंरम्भमसाध्वसमहेलं च व्यावहारिकमर्घ्यपाद्यादिना पूजनमुचितोक्त्यादि
च कृतवान् ॥ २ ॥

भूय एव प्रपञ्चेन विमृशाम्येव सादरम् ।
रागद्वेषप्रधानेन केनचिद्बुद्धिहारिणा ॥ ३ ॥

अप्यर्थे एवकारः । केनचिद्रागद्वेषप्रधानप्रपञ्चेन बुद्धिहारिणा
बुद्धिक्षोभकेण ॥ ३ ॥

इति संचिन्त्य सा रात्राविन्दावभ्युदिते वने ।
गृहीतमङ्गनारूपं कान्ता मदनिका सती ॥ ४ ॥

गृहीतमङ्गनारूपमिति पदयोः कण्ठे संकल्पितं कान्तमिति चतुर्थे संबन्धः ॥
४ ॥

वाते वहति फुल्लाढ्ये मधुरामोदमांसले ।
संध्याजप्यपरे नद्यास्तीरसंस्थे शिखिध्वजे ॥ ५ ॥

फुल्लाढ्ये पुष्पिततरुलतासंपन्ने वाते मलयानिले वहति सति नीरन्ध्रैः

123137 पुष्पगुच्छकैरुपलक्षितं वनदेवीनां शुद्धान्तं संतानकलतागेहं प्रविवेशेति
123138 परेणान्वयः ॥ ५ ॥
123139
123140 संतानकलतागेहं नीरन्ध्रैः पुष्पगुच्छकैः ।
123141 शुद्धान्तं वनदेवीनां प्रविवेश मदान्विता ॥ ६ ॥
123142
123143 तत्र संकल्पिते पुष्पशयने माल्यमालिता ।
123144 कण्ठे संकल्पितं कान्तं खिङ्गमादाय संस्थिता ॥ ७ ॥
123145
123146 तत्र माल्यैर्मालिता अलंकृता सती मायया संकल्पितमनुरूपं
123147 युवानमङ्गनारूपमङ्गनानामिवानुद्गतश्मश्र्वादिव्यञ्जनं
123148 षोडशवर्षाकृतिरूपं यस्य तथाविधमत एव श्मश्रुलाच्छिखिध्वजात्कान्तं
123149 मनोहरतमं खिङ्गं विटं कण्ठे गृहीतमादाय संस्थितेत्यन्वयः ॥ ७ ॥
123150
123151 आगत्यान्विष्य कुञ्जात्स प्रददर्श शिखिध्वजः ।
123152 लतागेहे मदनिकां कण्ठे खिङ्गं मनोहरम् ॥ ८ ॥
123153
123154 जप्यान्ते शिखिध्वजः संध्याजप्यस्थानात् कुञ्जादागत्य मदनिकामन्विष्य
123155 कल्पलतागेहे मदनिकां तत्कण्ठे मनोरमं खिङ्गं च ददर्श ॥ ८ ॥
123156
123157 कुन्तलावलितस्कन्धं समालब्धं च चन्दनैः ।
123158 शयनावृतिनिक्षेपपर्याकुलितशेखरम् ॥ ९ ॥
123159
123160 खिङ्गं विशिनष्टि - कुन्तलेत्यादिना । मदनिकाकुन्तलैः
123161 स्वकुन्तलैश्चान्नलितस्कन्धम् । समालब्धं लिप्तम् । शयने आवृत्या परिवर्तनेन
123162 [निष्पेषेणेति पाठः ।] निक्षेपेण च पर्याकुलितः शेखरचूडाबन्धो यस्य
123163 तम् ॥ ९ ॥
123164
123165 हेमाभे द्विगुणाकारबालाबाहूपधानके ।
123166 संसक्तश्रवणापाङ्गकपोलतलकुन्तलम् ॥ १० ॥
123167
123168 आकुञ्चनाद्द्विगुणाकारे बालाबाहुलक्षणे उपधानके उपबर्हे संसक्तं
123169 श्रवणादिचतुष्टयं यस्य ॥ १० ॥
123170
123171 मिथुनं तद्ददर्शार्थ मिथः प्रहसिताननम् ।
123172 अन्योन्यवदनासक्तं छन्नं कल्पलतांशुकैः ॥ ११ ॥
123173
123174 मिथुनं स्त्रीपुंसद्वन्द्वम् ॥ ११ ॥
123175
123176 आलोलमाल्यशयनं मदनातुरमाकुलम् ।
123177 अङ्गलग्नच्छलेनात्मरागमन्योन्यमर्पयत् ॥ १२ ॥
123178
123179 अङ्गानां लग्नं संश्लेषस्तच्छलेन । अर्पयत् आसंजयत् ॥ १२ ॥
123180
123181 अभ्युन्मुखं समानन्दमुद्दाममदमन्थरम् ।
123182 परस्पराहतं पुष्पैर्वक्षोभ्यां पीडितस्तनम् ॥ १३ ॥
123183
123184 परस्पराभ्युन्मुखम् ॥ १३ ॥
123185
123186 तदालोक्याविकारेण चेतसालं तुतोष सः ।
123187 अहो सुखं स्थितौ खिङ्गावित्याह स शिखिध्वजः ॥ १४ ॥
123188

123189 अविकारेण क्रोधविकाररहितेन ॥ १४ ॥
123190
123191 तिष्ठताङ्ग यथाकामं सुखं खिङ्गौ यथास्थितम् ।
123192 विघ्नं माकरवं भीतावित्युक्त्वा निर्जगाम सः ॥ १५ ॥
123193
123194 स्वदर्शनाद्भीतौ तौ प्रति हे अङ्ग यथाकामं तिष्ठत तिष्ठतम् । अहं विघ्नं
123195 माकरवं इत्युक्त्वा निर्जगाम ॥ १५ ॥
123196
123197 ततो मुहूर्तमात्रेण प्रपञ्चं तमुपेक्ष्य सा ।
123198 निर्ययौ दर्शयन्ती स्वं रतिफुल्लाकुलं वपुः ॥ १६ ॥
123199
123200 तं मायाप्रपञ्चमुपेक्ष्य उपसंहृत्येति यावत् । रत्या विटसंभोगेन फुल्लं
123201 विकसितमाकुलं च ॥ १६ ॥
123202
123203 उपविष्टं ददर्शैनं नृपं हेमशिलातले ।
123204 समाधिसंस्थमेकान्ते मनाग्विकसितेक्षणम् ॥ १७ ॥
123205
123206 तं प्रदेशमुपागम्य लज्जावनमितानना ।
123207 तूष्णीमासीत्क्षणं खिन्ना म्लाना मदनिकाङ्गना ॥ १८ ॥
123208
123209 क्षणाच्छिखिध्वजो ध्यानाद्विरतस्तामुवाच ।
123210 अत्यन्तमधुरं वाक्यमिदमक्षुब्धया धिया ॥ १९ ॥
123211
123212 तन्वि किं शीघ्रमेव त्वं विघ्नितानन्दमागता ।
123213 आनन्दायैव भूतानि यतन्ते यानि कानिचित् ॥ २० ॥
123214
123215 यानि कानिचित् सर्वाणीत्यर्थः ॥ २० ॥
123216
123217 भूयस्तोषय तं गच्छ कान्तं प्रणयवृत्तिभिः ।
123218 परस्परेप्सितस्नेहो दुर्लभो हि जगत्त्रये ॥ २१ ॥
123219
123220 परस्परमीप्सितः अकृत्रिम इति यावत् ॥ २१ ॥
123221
123222 अहमेतेन चार्थेन नोद्वेगं यामि मानिनि ।
123223 यद्यदिष्टतमं लोके तत्तदेवं विजानता ॥ २२ ॥
123224
123225 विजानता पुंसा यद्यदिष्टतमं तत्तदेवं त्वादृशमेव परोपभोग्यमिति ज्ञेयमिति
123226 शेषः ॥ २२ ॥
123227
123228 अहं कुम्भश्च तन्वङ्गि वीतरागाविहेतरा ।
123229 दुर्वासःशापजा बाला त्वं यदिच्छसि तत्कुरु ॥ २३ ॥
123230
123231 न च त्वदपराधेन मम कुम्भे अविस्रम्भ इत्याशयेनाह - अहमिति । त्वं
123232 कुम्भादितरैवेति शेषः । अतो यदिच्छसि तन्निःशङ्कं कुरु ॥ २३ ॥
123233
123234 मदनिकोवाच ।
123235
123236 एवमेष महाभाग स्त्रीस्वभावो हि चञ्चलः ।
123237 कामो ह्यष्टगुणः स्त्रीणां न कोपं कर्तुमर्हसि ॥ २४ ॥
123238
123239 अवलाहमनेनास्मि रात्रौ गहनकानने ।
123240 त्वयि संध्याजपपरे किं करोमि वराकिका ॥ २५ ॥

123241
123242 अनेन अस्मि प्रार्थितेति शेषः ॥ २५ ॥
123243
123244 अबला वा कुमारी वा जारं न रतिरोधनम् ।
123245 करोति परिखिङ्गेन नाङ्गे स्वे विनिवेशितम् ॥ २६ ॥
123246
123247 अबला पत्या ऊढा तत्पारतन्त्र्यात्स्वातन्त्र्यबलहीना । कुमारी अनूढा वा तरुणी एकान्ते
123248 जारं प्राप्य रतेः रोधनं प्रतिबन्धं न करोत्येव । अयं स्त्रीस्वभाव इत्यर्थः ।
123249 परिखिङ्गेन परिहृतजारेण तु दैवात्संपन्नरतिविघ्नेन स्वे अङ्गे देहे
123250 मनःप्राणादीनां विनिवेशितम् । भावे क्तः । स्थैर्यं न करोति । तरलतरमनःप्राणा
123251 भूत्वा संतप्यत इत्यर्थः ॥ २६ ॥
123252
123253 स्त्रियः सुन्दरतां याताः पुरःपुंसामसङ्गमे ।
123254 मन्युर्निषेध आक्रान्दः सतीत्वं किं करिष्यति ॥ २७ ॥
123255
123256 स्त्रीणां हि पुंवशीकारसमर्थसौन्दर्यालाभ एवैकः पुंसामसमागमे
123257 हेतुर्नान्यः । यदि स्त्रियः पुंवशीकारसमर्थां सुन्दरतां सुन्दरतां याताः
123258 प्राप्ता एकान्ते च पुंसां पुरो भवन्ति तदा तासामसंगमे न कश्चिद्धेतुः ।
123259 नन्वग्निसाक्षिकतया विवाहितस्य भर्तुर्मन्युः शास्त्रीयः परपुरुषसंगमनिषेधो
123260 जनापवादलक्षण आक्रन्दः स्वपातिव्रत्यभङ्गश्च विवेकदृशा पर्यालोच्यमाना
123261 जारासंगमे हेतवः किं न स्युस्तत्राह - मन्युरिति । प्रबलतररतिरागबाधितास्ते न
123262 जारसङ्गं निरोद्धुं समर्था इति भावः ॥ २७ ॥
123263
123264 अबला स्त्री तथा बाला मूढाहमपराधिनी ।
123265 क्षन्तुमर्हसि नाथ त्वं क्षमावन्तो हि साधवः ॥ २८ ॥
123266
123267 अत एव क्षमापयामीत्याशयेनाह - अबलेति ॥ २८ ॥
123268
123269 शिखिध्वज उवाच ।
123270
123271 मन्युर्मम न बालेऽन्तर्विद्यते ख इव द्रुमः ।
123272 केवलं साधुनिन्द्यत्वान्नेच्छामि त्वामहं वधूम् ॥ २९ ॥
123273
123274 स्वे आकाशे द्रुम इव । वधूं भार्यां नेच्छामि ॥ २९ ॥
123275
123276 सुहृत्त्वेन वनान्तेषु पूर्ववत्सुखमङ्गने ।
123277 वीतरागतया नित्यं सममेव रमावहे ॥ ३० ॥
123278
123279 श्रीवसिष्ठ उवाच ।
123280
123281 एवं समतया तत्र स्थिते तस्मिञ्छिखिध्वजे ।
123282 चूडाला चिन्तयामास तत्सत्त्वेनोदिताशया ॥ ३१ ॥
123283
123284 तस्य सत्त्वेन रागद्वेषवासनाशून्यतया परीक्षितचित्तेन । उदिताशया हृष्टा ॥ ३१ ॥
123285
123286 अहो बत परं साम्यं भगवानयमागतः ।
123287 वीतरागतयाऽक्रोधो जीवन्मुक्तोऽवतिष्ठते ॥ ३२ ॥
123288
123289 अक्रोध इति च्छेदः ॥ ३२ ॥
123290
123291 नैनं हरन्ति ते भोगा न महत्योऽपि सिद्धयः ।
123292 न सुखानि न दुःखानि नापदो न च संपदः ॥ ३३ ॥

123293

123294 ते इन्द्रप्रार्थिता भोगाः सिद्धयश्च ॥ ३३ ॥

123295

123296 चिन्तिताः सकला एकं प्रयान्त्येनमनिन्दिताः ।

123297 मन्ये महर्द्धयः कान्ता नारायणमिवापरम् ॥ ३४ ॥

123298

123299 चिन्तिता मदभिप्रेताः सकला जीवन्मुक्तलक्षणभूताः शान्ति

123300 क्षमाधैर्यतृप्त्यादिरूपा अनिन्दिता महर्द्धय एकमेनं प्रयान्ति प्राप्नुवन्ति ।

123301 आश्रयन्तीति यावत् ॥ ३४ ॥

123302

123303 आत्मवृत्तान्तमखिलं तमेनं स्मारयाम्यहम् ।

123304 कुम्भरूपमिदं त्यक्त्वा चूडालैव भवाम्यहम् ॥ ३५ ॥

123305

123306 तमेवंगुणविशिष्टत्वात्स्ववृत्तान्तस्मारणयोग्यभूतमेनं प्रति स्मारयामि ॥ ३५ ॥

123307

123308 इति संचिन्त्य चूडाला चूडालावपुरक्षता ।

123309 दर्शयामास तत्राशु त्यक्त्वा मदनिकावपुः ॥ ३६ ॥

123310

123311 तस्मान्मदनिकादेहाच्चूडाला निर्गतेव सा ।

123312 बभावस्य पुरो युक्ता निर्गतेव समुद्गकात् ॥ ३७ ॥

123313

123314 युक्ता योगधारणावती समुद्गकात्संपुटकान्निर्गतेव ॥ ३७ ॥

123315

123316 तां ददर्शानवद्याङ्गीं पुनः प्रणयपेशलाम् ।

123317 कान्तां मदनिकामेव चूडालां दयितां स्थिताम् ॥ ३८ ॥

123318

123319 प्रणये भर्तृचित्तानुरञ्जने पेशलां चतुराम् । दयितां पूर्वदयिताम् ॥ ३८ ॥

123320

123321 समुदितामिव माधवपद्मिनीमुपगतामिव भूमितलाच्छ्रियम् ।

123322 प्रकटितामिव रत्नसमुद्गकात्परिददर्श निजां दयितां नृपः ॥ ३९ ॥

123323

123324 माधवे वसन्ते समुदितां पद्मिनीं कमलिनीमिव । अथवा समुदितां

123325 समृद्धामाविर्भूतां वा माधवस्य विष्णोः पद्मिनीं पद्महस्तां श्रियमिव ।

123326 रामावतारावसाने रामस्य विष्णुभावे प्राक्सीतात्वेन भूमितलप्रविष्टां ततो

123327 भूमितलात्पुनरुपगतां श्रियमिव रत्नसंपुटकात्प्रकटितां रत्नश्रियमिव च

123328 नृपो निजां दयितां चूडालां परिददर्श । पुरो ददर्शेत्यर्थः ॥ ३९ ॥

123329

123330 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाणप्रकरणे पू०

123331 चू० चूडालास्वरूपदर्शनं नामाष्टोत्तरशततमः सर्गः १०८ ॥

123332

123333 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे

123334 चूडालास्वरूपदर्शनं नामाष्टोत्तरशततमः सर्गः ॥ १०८ ॥

123335

123336 नवाधिकशततमः सर्गः १०९ ॥

123337

123338 श्रीवसिष्ठ उवाच ।

123339

123340 अथ तां दयितां दृष्ट्वा विस्मयोत्फुल्ललोचनः ।

123341 शिखिध्वज उवाचेदमाश्चर्याकुलया गिरा ॥ १ ॥

123342

123343 दृष्ट्वा दृष्ट्वा नृपो ध्यानादबुद्ध्वा सर्वं सुविस्मितः ।

123344 तुष्टः प्रशस्य चूडालामालिङ्ग्यात्रानयन्निशाम् ॥

123345
123346 इदं वक्ष्यमाणम् ॥ १ ॥
123347
123348 का त्वमुत्पलपत्राक्षि कुतः प्राप्तासि सुन्दरि ।
123349 किमिहासि कियत्कालं किमर्थमिह तिष्ठसि ॥ २ ॥
123350
123351 कुम्भादिरूपेण त्वमेव किमिहासि । कियत्कालं किमर्थं वा इह मत्संनिधौ तिष्ठसि ।
123352 यद्यपि कुम्भः स्थितिकालप्रमाणं जानात्येव तथाप्यस्या वेषान्तरेण
123353 कुम्भागमनात्प्रागपि स्थितिसंभावनात्कियत्कालमिति प्रश्नः ॥ २ ॥
123354
123355 अङ्गेन व्यवहारेण स्मितेनानुनयेन च ।
123356 मम जायाविलासेन तत्कलेवोपलक्ष्यसे ॥ ३ ॥
123357
123358 अङ्गेन अवयवसंस्थानेन तच्चेष्टालक्षणव्यवहारेण अनुनयेन
123359 प्रेमवाक्प्रबन्धशैल्या मम जायायाश्चूडालायाः प्रसिद्धेन विलासेन तस्याः कला
123360 मूर्तिरिव उपलक्ष्यसे दृश्यसे ॥ ३ ॥
123361
123362 चूडालोवाच ।
123363
123364 एवमेव प्रभो विद्धि चूडालास्मि न संशयः ।
123365 अकृत्रिमेण देहेन लब्धोऽस्यद्य मया स्वयम् ॥ ४ ॥
123366
123367 अकृत्रिमेण सहजेन ॥ ४ ॥
123368
123369 कुम्भादिदेहनिर्माणैस्त्वां बोधयितुमेव मे ।
123370 प्रपञ्चः शतशाखत्वमिह यातो वनान्तरे ॥ ५ ॥
123371
123372 यदा राज्यंन् परित्यज्य मोहेन तपसे वनम् ।
123373 त्वमागास्तत्प्रभृत्येव त्वद्बोधायाहमुद्यता ॥ ६ ॥
123374
123375 तत्प्रभृति तदाप्रभृत्येव ॥ ६ ॥
123376
123377 अनेन कुम्भदेहेन मयैव त्वं विबोधितः ।
123378 कुम्भादिदेहनिर्माणं त्वां बोधयितुमेव मे ॥ ७ ॥
123379
123380 मायया न तु कुम्भादि किंचित्सत्यं महीपते ।
123381 अथो विदितवेद्यस्त्वं ध्यानेनैतदखण्डितम् ॥ ८ ॥
123382
123383 सत्यमकाल्पनिकम् । ध्यायेन प्रागुक्तयोगधारणया ॥ ८ ॥
123384
123385 सर्वं पश्यसि तत्त्वज्ञ ध्यानेनाश्ववलोकय ।
123386 अथ चूडालयेत्युक्तो बद्ध्वा परिकरं नृपः ॥ ९ ॥
123387
123388 पश्यसि द्रक्ष्यसि । परिकरं तादृशधारणानुकूलासनादि ॥ ९ ॥
123389
123390 आत्मोदन्तं विशेषेण ध्यानेनामलमैक्षत ।
123391 अभिराज्यपरित्यागाच्चूडालादर्शनावधि [आस्स्व राज्य इति पाठः ।] ॥ १० ॥
123392
123393 अभि उपरि ॥ १० ॥
123394
123395 सर्वं मुहूर्तध्यानेन चात्मोदन्तं ददर्श सः ।
123396 आराज्यसंपरित्यागाद्वर्तमानक्षणक्रमम् ॥ ११ ॥

आवर्तमानक्षणक्रममिति अत्राप्याङ्नूकृष्यते ॥ ११ ॥

सर्वमालोक्य भूपालो विरराम समाधितः ।
समाधिविरतो हर्षविकासिनयनाम्बुजः ॥ १२ ॥

विसार्य तरसा बाहू पुलकोज्ज्वलतां गतौ ।
गलदङ्गं घनस्नेहं मुञ्चद्बाष्पं स्फुरत्स्पृहम् ॥ १३ ॥

पुलकोज्ज्वलतां गतौ बाहू विसार्य प्रसार्य आलिलिङ्गेति परेणान्वयः ॥ गलदङ्गं
छिन्नावयवम् । चत्वारि क्रियाविशेषणानि ॥ १३ ॥

आलिलिङ्ग चिरं कान्तां नकुलो नकुलीमिव ।
तयोरालिङ्गने तस्मिंस्तत्र भावो बभूव यः ॥ १४ ॥

भावशब्देनात्राभिव्यक्तः परस्परानुरागलक्षणः स्थायिभावः । यो यादृशो
वाचामगोचरः परमानन्दरूपः शृङ्गाररसो बभूव स वासुकिजिह्वाभिरपि
वक्तुं न शक्यत इत्यन्वयः ॥ १४ ॥

न स वासुकिजिह्वाभिर्वक्तुं हर्षेण शक्यते ।
दिविस्थाविव पङ्केन कृताविअ मिलत्तनू ॥ १५ ॥

दिविस्थौ चन्द्रसूर्यावमायामिव मिलत्तनू पङ्केनार्द्रमृदा कृताविव ॥ १५ ॥

शैलाविव समुत्कीर्णौ श्लिष्टावास्तां चिरं प्रियौ ।
मुहूर्तेन गलद्धर्मजलौ पुलकपीवरौ ॥ १६ ॥

शैलौ एकशिलासमुत्कीर्णपरस्परालिङ्गितमूर्ती इव श्लिष्टौ मिलितौ चिरमास्ताम् ॥ १६ ॥

बाहू विश्लथतामीषन्निन्यतुस्तौ शनैः प्रियौ ।
अमृतापूर्णहृदयौ संशून्यहृदयोपमौ ॥ १७ ॥

आनन्दातिशयेन मनसो जडीभावेन
तत्सद्भावव्यञ्जकलिङ्गादर्शनात्संशून्यहृदयोपमौ ॥ १७ ॥

उन्मुक्तभुजमास्तां तावलक्षस्थितलोचनम् ।
घनानन्दक्षणं स्थित्वा तूष्णीं प्रणयपेशलम् ॥ १८ ॥

लक्ष्ये लोचनस्थैर्यहेतोर्मनसो जडीभावादेवालक्षस्थितलोचनं यथा स्यात्तथा
आस्ताम् । प्रणयपेशलं यथा स्यात्तथा कान्तां प्रति उवाचेति परेणान्वयः ॥ १८ ॥

कान्तां चिबुकसंलग्नकरः प्रोवाच भूपतिः ।
अत्यन्तमधुरस्निग्धः कान्तः स्वकुलयोषिताम् ॥ १९ ॥

पुण्यश्च रतिनिष्पन्दः स्वादुर्नामामृतादपि ।
कियत्प्रमाणस्तन्वङ्ग्या त्वया बालेन्दुमुग्धया ॥ २० ॥

रतिनिष्पन्दोऽनुरागरसोऽत्यन्तमाधुर्यादिविशेषणचतुष्टयविशिष्टः कियत्प्रमाणो
विस्तीर्ण इति यावत् ॥ २० ॥

अनुभूतश्चिरं क्लेशो भर्तुरर्थेन दारुणः ।
एवं दुरुत्तरात्तस्मात्संसारकुहरादहम् ॥ २१ ॥

123449
123450 भर्तुरर्थेन पुरुषार्थसिद्धिप्रयोजनेन हेतुना ॥ २१ ॥
123451
123452 उत्तारितो यया बुद्ध्या सा हि केनोपमीयते ।
123453 अरुन्धती शची गौरी गायत्री श्रीः सरस्वती ॥ २२ ॥
123454
123455 यया भर्तृस्नेहबुद्ध्या । सा बुद्धिः ॥ २२ ॥
123456
123457 समस्ताः पेलवायन्ते तव तन्व्या गुणश्रिया ।
123458 धीः श्रीः कान्तिः क्षमा मैत्री करुणाद्यास्तु सुन्दरि ॥ २३ ॥
123459
123460 धीः श्रीरित्याद्या दक्षकन्या आकारेण सौन्दर्येण कान्तासु स्त्री श्रेष्ठाः
123461 प्रसिद्धास्तास्वपि त्वं प्रथमा श्रेष्ठा सतीवाभिलक्ष्यसे इति परेणान्वयः ॥ २३ ॥
123462
123463 कान्तास्वाकारकान्तासु प्रथमेवाभिलक्ष्यसे ।
123464 परेणाध्यवसायेन त्वयाहमवबोधितः ॥ २४ ॥
123465
123466 केन प्रत्युपकारेण परितुष्यति ते मनः ।
123467 मोहादनादिगहनादनन्तगहनादपि ॥ २५ ॥
123468
123469 कृतार्थायास्ते मनः केन प्रत्युपकारेण परितुष्यति । येन तुष्यति तादृशः
123470 प्रत्युपकारो दुर्लभ इति भावः ॥ २५ ॥
123471
123472 पतितं व्यवसायिन्यस्तारयन्ति कुलस्त्रियः ।
123473 शास्त्रार्थगुरुमन्त्रादि तथा नोत्तारणक्षमम् ॥ २६ ॥
123474
123475 शास्त्रार्थेत्यादिरतिशयोक्तिः प्रशंसार्था ॥ २६ ॥
123476
123477 यथैताः स्नेहशालिन्यो भर्तॄणां कुलयोषितः ।
123478 सखा भ्राता सुहृद्भृत्यो गुरुर्मित्रं धनं सुखम् ॥ २७ ॥
123479
123480 शास्त्रमायतनं दासः सर्वं भर्तुः कुलाङ्गनाः ।
123481 सर्वदा सर्वयत्नेन पूजनीयाः कुलाङ्गनाः ॥ २८ ॥
123482
123483 लोलद्वयसुखं सम्यक्सर्वं यासु प्रतिष्ठितम् ।
123484 निरिच्छायाः प्रयातायाः पारं संसारवारिधेः ॥ २९ ॥
123485
123486 निरिच्छायाः कृतकृत्यायास्ते प्रत्युपकारेऽहमसमर्थ इत्याह - निरिच्छाया इति ॥
123487 २९ ॥
123488
123489 कथमस्योपकारस्य करिष्ये ते प्रतिक्रियाः ।
123490 मन्ये कुलाङ्गनां लोके लोके सर्वास्त्वयाधुना ॥ ३० ॥
123491
123492 कुलाङ्गनां मन्ये त्वामिति शेषः । लोके प्रसिद्धाः सर्वाः कुलाङ्गनास्त्वयाऽधुना
123493 जिता इति शेषः ॥ ३० ॥
123494
123495 नारीसौजन्यचर्चासु व्यपदेश्या भविष्यसि ।
123496 त्वां निर्मितवतो धातुर्गुणजालातिशायिनीम् ॥ ३१ ॥
123497
123498 नारीणां सौजन्यादिगुणोत्कर्षचर्चासु प्रथमव्यपदेश्या भविष्यसि ॥ ३१ ॥
123499
123500 मन्ये प्रकुपिता नूनमरुन्धत्यादिकाः स्त्रियः ।

123501 सती त्वं रूपसौजन्यगुणरत्नसमुद्रिके ॥ ३२ ॥
123502
123503 स्वापेक्षया गुणजालैरतिशायिनीं त्वां निर्मितवतो धातुर्विषये प्रकुपिता इत्यन्वयः।
123504 त्वमेव सती पतिव्रता ॥ ३२ ॥
123505
123506 एहि मे त्वद्गुणोत्कस्य पुनरालिङ्गनं कुरु।
123507
123508 श्रीवसिष्ठ उवाच।
123509
123510 इत्युक्त्वा मृगशावाक्षीं चूडालां तां शिखिध्वजः ॥ ३३ ॥
123511
123512 आलिलिङ्ग पुनर्गाढं नकुलो नकुलीमिव।
123513
123514 चूडालोवाच।
123515
123516 देव शुष्कक्रियाजालपरे त्वय्याकुलात्मनि ॥ ३४ ॥
123517
123518 भूयोभूयो भृशमहं त्वदर्थं दुःखिताभवम्।
123519 तेन त्वदवबोधात्मा स्वार्थ एवोपपादितः ॥ ३५ ॥
123520
123521 मया तदत्र किं देव करोषि मम गौरवम्।
123522
123523 शिखिध्वज उवाच।
123524
123525 त्वया यथा वरारोहे स्वार्थः संपाद्यते शुभः ॥ ३६ ॥
123526
123527 तमिदानीं तथा सर्वाः साधयन्तु कुलाङ्गनाः।
123528
123529 चूडालोवाच।
123530
123531 बुध्यसे कान्त विश्रान्तो जगज्जालतटे विभो ॥ ३७ ॥
123532
123533 साधयन्त्वित्याशीः काकुर्वा। साधयितुं न शक्नुवन्तीत्यर्थः। जगल्लक्षणस्य जालस्य
123534 तटे परावधौ विश्रान्तः संस्तत्त्वतो बुध्यसे कच्चिदिति व्यवहितेनान्वयः ॥ ३७ ॥
123535
123536 अद्य तं प्राक्तनं किंचिन्मोहं समनुपश्यसि।
123537 इदं करोमि नेदं तु प्राप्नोमीदमिति स्थितिम् ॥ ३८ ॥
123538
123539 तं प्राक्तनं पयोव्रतोपवासादिमोहं किंचित्तुच्छं समनुपश्यसि कच्चित् ॥ ३८ ॥
123540
123541 अन्तर्हससि तां कच्चिद्दशापेलवतां धियः।
123542 तास्तुच्छतृष्णाकलनास्ताः संकल्पकुकल्पनाः ॥ ३९ ॥
123543
123544 धियः अपक्वदूशया पेलवतां कोमलताम् ॥ ३९ ॥
123545
123546 त्वयि नाद्यावलोक्यन्ते देव व्योम्नीव पर्वताः।
123547 किं त्वमद्याङ्ग संपन्नः किंनिष्ठोऽसि किमीहसे ॥ ४० ॥
123548
123549 कथं पश्यसि पाश्चात्यं देहचेष्टाक्रमं विभो।
123550
123551 शिखिध्वज उवाच।
123552

123553 सुमनःपूर्णनीलाब्जमालासारविलोचने ॥ ४१ ।
123554

123555 कथं कीदृशं किं सत्यमुत तुच्छमित्यर्थः । सुमनोभिः पूर्णां नीलाब्जमालां
123556 सरतः सादृश्यादनुसरतस्तथाविधे विलोचने यस्यास्तथाविधे हे चूडाले ॥ ४१ ॥
123557

123558 त्वमेव यस्य यस्यान्तस्तत्तस्याहमुपास्थितः ।
123559 निरीहोऽस्मि निरंशोऽस्मि नभःस्वच्छोऽस्मि निस्पृहः ॥ ४२ ॥
123560

123561 मम प्रत्यगात्मभूता त्वमेव सा त्वं मोहस्य विवेकस्य तत्त्वदर्शनस्य वा यस्य
123562 यस्यान्तःप्रकाशकतया स्थिता तत्तस्य तस्यान्तः अहमपि उप
123563 परमसमीपभूतप्रत्यगात्मतया आस्थितः । तथा चेदानीं त्वं यथा पश्यसि
123564 तथैवाहं पश्यामीति स्वानुभवेनैव ममापि स्थितिर्ज्ञातव्येत्यर्थः । तामेव
123565 प्रपञ्च्य दर्शयति - निरीह इत्यादिना ॥ ४२ ॥
123566

123567 शान्तोऽहमर्थरूपोऽस्मि चिरायाहमहं स्थितः ।
123568 तां दशामुपयातोऽस्मि यतश्चित्तैकवर्त्मनि ॥ ४३ ॥
123569

123570 अर्थरूपः परमार्थसत्स्वरूपः अनहमि देहादौ अहंभ्रमं त्यक्त्वा चिराय
123571 बहुकालोत्तरं वस्तुतो योऽहं स एवाहं भूत्वा स्थित इत्यर्थः । अहं
123572 प्रत्यक्प्रवणचित्तैकवर्त्मन्यधिष्ठितस्तां निरतिशयानन्ददशामुपयातोऽस्मि यां
123573 प्रयत्नसहस्रैरपि प्रतिषेद्धुं प्रवृत्ता हरिहरादयो महाप्रभावा अपि न
123574 प्रतिषेधन्ति न निरसितुं शक्नुवन्ति । तस्य ह न देवाश्च नाभूत्या ईशते आत्मा
123575 ह्येषां स भवति इति श्रुतेः । अहेयस्यात्मनो हापनाघटनाच्चेति भावः ॥ ४३ ॥
123576

123577 प्रतिषेधन्ति सहसा न यां हरिहरादयः ।
123578 न किंचिन्मात्रचिन्मात्रनिष्ठोऽस्मि स्वस्थ आस्थितः ॥ ४४ ॥
123579

123580 भ्रमेणाहं विमुक्तोऽस्मि संसारेणालिलोचने ।
123581 न तुष्टोस्मि न खिन्नोऽस्मि नायमस्मि न चेतरत् ॥ ४५ ॥
123582

123583 अयं दृश्यः कार्यवर्गः । इतरत् कारणम् ॥ ४५ ॥
123584

123585 न स्थूलोऽस्मि न सूक्ष्मोऽस्मि सत्यमस्मि च सुन्दरि ।
123586 तेजोबिम्बात्प्रयातेन भित्तावपतितेन च ॥ ४६ ॥
123587

123588 सत्यमबाधितवस्तु । तेजोबिम्बात्सूर्यादिमण्डलाद्बहिः प्रयातेन भित्तावपतितेन च
123589 नभोमात्रविसारिणा प्रकाशेनालोकेन ॥ ४६ ॥
123590

123591 क्षयातिशयमुक्तेन प्रकाशेनास्मि वै समः ।
123592 शान्तोस्मि साम्यं नेतास्मि स्वस्थोस्मि विगताशयः ॥ ४७ ॥
123593

123594 जगतः सर्वं वैषम्यं निरस्य साम्यं नेतास्मि । विगताशयो निर्मनस्कः ॥ ४७ ॥
123595

123596 परिनिर्वाण एवास्मि सदृशोऽस्मि पतिव्रते ।
123597 यत्तदस्मि तदेवास्मि वक्तुं शक्नोमि नेतरत् ॥ ४८ ॥
123598

123599 हे पतिव्रते । सतीव्रते इति पाठे सतीनां व्रतमिव व्रतं यस्या इति व्युत्पत्त्या पतिव्रते
123600 इत्येवार्थः । अथवा सत्यास्तव स्वरूपनिष्ठालक्षणे व्रते सदृशस्तुल्यशीलो
123601 भर्तास्मीत्यर्थः ॥ ४८ ॥
123602

123603 तरङ्गतरलापाङ्गे गुरुस्त्वं मे नमोऽस्तु ते ।
123604 प्रसादेन विशालाक्ष्यास्तीर्णोऽस्मि भवसागरात् ॥ ४९ ॥

123605
123606 पुनर्मलं न गृह्णामि शतध्मातसुवर्णवत् ।
123607 शान्तः स्वस्थो मृदुर्यत्तो वीतरागो निरंशधीः ॥ ५० ॥
123608
123609 शतवारं ध्मातमग्नौ शोधितं यत्सुवर्णं तद्वत् । यत्तः
123610 स्वरूपनिष्ठायामत्यन्तोद्युक्तः । निरंशा निर्वासना धीर्यस्य ॥ ५० ॥
123611
123612 सर्वातीतः सर्वगश्च खमिवायमहं स्थितः ।
123613
123614 चूडालोवाच ।
123615
123616 एवं स्थिते महासत्त्व प्राणेश हृदयप्रिय ॥ ५१ ॥
123617
123618 किमिदानीं प्रभो ब्रूहि रोचते ते महामते ।
123619
123620 शिखिध्वज उवाच ।
123621
123622 प्रतिषेधं न जानामि न जानाम्यभिवाञ्छितम् ॥ ५२ ॥
123623
123624 इदं न रोचत इति प्रतिषिध्यत इति प्रतिषेधः कर्मणि घञ् । तं न जानामि ॥ ५२ ॥
123625
123626 यदाचरसि तन्वि त्वं कदाचिद्वेद्मि तत्तथा ।
123627 यद्यन्मतं ते सकलं तथास्त्वविकलं प्रिये ॥ ५३ ॥
123628
123629 कदाचित् व्युत्थानकाले । मतमभिमतम् ॥ ५३ ॥
123630
123631 न किंचिदनुसंधातुं जानाम्यम्बरसुन्दरः ।
123632 यदेव किंचिज्जानासि तदेव कुरु सुन्दरि ॥ ५४ ॥
123633
123634 अम्बरमाकाशमिव निर्लेपौदासीन्यपूर्णतासुन्दरः । जानासि कर्तव्यतयेति शेषः ॥ ५४ ॥
123635
123636 तदेव धारयिष्यामि प्रतिबिम्बं यथा मणिः ।
123637 चेतसा गलितेष्टेन यथाप्राप्तमनिन्दितम् ॥ ५५ ॥
123638
123639 धारयिष्यामि हृदि संमन्तास्मीति यावत् । गलितमिष्टं इच्छा तद्विषयजातं
123640 यस्मात्तथाविधेन । इष्टग्रहणमनिष्टस्याप्युपलक्षणम् ॥ ५५ ॥
123641
123642 न स्तौमि न च निन्दामि यदिच्छसि तदाचर ।
123643
123644 चूडालोवाच ।
123645
123646 यद्येवं तन्महाबाहो समाकर्णय मन्मतम् ॥ ५६ ॥
123647
123648 आकर्ण्य जीवन्मुक्तात्मंस्तदेवाहर्तुमर्हसि ।
123649 सर्वत्रैक्यावबोधेन मौर्ख्यक्षयभुवान्विताः ॥ ५७ ॥
123650
123651 आहर्तुमाचरितुम् ॥ ५७ ॥
123652
123653 निरिच्छास्तावदाकाशविशदाः संस्थिता वयम् ।
123654 यादृगेषणमस्माकं तादृशं तदनेषणम् ॥ ५८ ॥
123655
123656 एषणं राज्यभोगाद्यपेक्षणम् ॥ ५८ ॥

123657
123658 यत्प्राणानैषणे कोऽत्र चिन्मात्रोऽभ्यसते हि कः।
123659 तस्मादाद्यन्तमध्येषु ये वयं पुरुषोत्तम॥ ५९॥
123660
123661 तत्रोपपत्तिमाह - यदिति। यद्यस्मात्कारणात्प्राणानां चक्षुरादीनां
123662 मुख्यप्राणस्य च स्वस्वोचितविषयानेषणे सत्यत्र परमात्मनि कोऽतिशयः। न
123663 चाज्ञानामिव तत्त्वविदोऽन्तःकरणदेहेन्द्रियादितादात्म्याध्यासोऽस्ति येनेन्द्रियाणां
123664 विषयभोगाभ्यासेन मालिन्ये आत्मनोऽपि मालिन्यप्रसक्तिः। निष्क्रियासङ्गचिन्मात्रभूतो
123665 हि तत्त्ववित् को भोगानभ्यसते। न कश्चिदित्यर्थः।
123666 अस्यतेर्विकरणपदव्यत्ययश्छान्दसः। तस्मात्प्रारब्धभोगमात्रेण
123667 तदभ्यासव्यसनमालिन्याप्रसक्तेस्तद्भोगादौ तद्भोगान्ते मध्ये तदन्तराले च वयं
123668 ये यत्स्वभावास्ते तत्स्वभावा एव प्रारब्धशेषमेकं भोगेन परित्यज्य क्षपयित्वा
123669 स्थिता न तु किंचिदन्यथाभूता अन्ये वा भविष्याम इत्यर्थः॥ ५९॥
123670
123671 शेषमेकं परित्यज्य त एवेमे स्थिता वयम्।
123672 राज्येन सांप्रतेनेमं कालं नीत्वा क्रमेण वै॥ ६०॥
123673
123674 इममायुःशेषरूपं कालम्॥ ६०॥
123675
123676 विदेहतां प्रयास्यामः प्रभो कालेन केनचित्।
123677
123678 शिखिध्वज उवाच।
123679
123680 वयमाद्यन्तमध्येषु कीदृशास्तरले वद॥ ६१॥
123681
123682 तस्मादाद्यन्तमध्येष्वित्यस्यार्थान्तरमपि संभावयंस्तं जिज्ञासमानो राजा
123683 पृच्छति - वयमिति॥ ६१॥
123684
123685 शेषमेकं परित्यज्य तिष्ठामः कथमेव वा।
123686
123687 चूडालोवाच।
123688
123689 वयमाद्यन्तमध्येषु राजानो राजसत्तम॥ ६२॥
123690
123691 तदभिप्रायानुसारेणैव चूडालापि तदर्थं वर्णयति - वयमिति॥ ६२॥
123692
123693 मोहमेकं परित्यज्य भवामः पुनरेव ते।
123694 स्व एव नगरे राजा भव त्वं स्वासने स्थितः॥ ६३॥
123695
123696 तत्र शेषशब्दस्यार्थान्तरमाह - मोहमिति॥ ६३॥
123697
123698 ललामो ननु कान्तानां महिषी ते भवाम्यहम्।
123699 सनृपा मत्तवास्तव्या नृत्यन्नवनवाङ्गना॥ ६४॥
123700
123701 कान्तानामन्तःपुरस्त्रीणां ललामो भूषणभूतो भवामि भविष्यामि। मता हृष्टा
123702 वास्तव्याः पुरवासिनो यस्याम्। एतदादीनि पुरीविशेषणानि
123703 मधुमासलतालक्ष्मीसाम्योपपादकानि॥ ६४॥
123704
123705 सपताका ध्वनत्तूर्या पुष्पप्रकरिणी पुरी।
123706 लसद्वल्लया समञ्जर्या रणत्पुष्पालिमालया।
123707 मधुमासलतालक्ष्म्या चिराद्भवतु सा समा॥ ६५॥
123708

123709 श्रीवसिष्ठ उवाच।
123710
123711 इति चूडालया प्रोक्तो विहस्य स शिखिध्वजः।
123712 प्रोवाच मधुरं वाक्यमक्षुब्धं विगतज्वरः॥ ६६॥
123713
123714 एवं चेत्तद्विशालाक्षि स्वायत्ता नस्त्रिविष्टपे।
123715 सिद्धभोगश्रियस्तासु निवसामि न किं प्रिये॥ ६७॥
123716
123717 यदि ते मया सह भोगेच्छास्ति तर्हि इन्द्रेण प्रार्थिता दिव्यभोगा एव भुज्यन्तां किं
123718 मानुषैरिति राजाह - एवं चेदिति॥ ६७॥
123719
123720 चूडालोवाच।
123721
123722 न राजन्मम भोगेषु वाञ्छा नापि विभूतिषु।
123723 स्वभावस्य वशादेव यथाप्राप्तेन मे स्थितिः॥ ६८॥
123724
123725 न सुखाय मम स्वर्गो न राज्यं नापि च क्रिया।
123726 यथास्थितमविक्षुब्धंन् तिष्ठामि स्वस्थचेष्टिता॥ ६९॥
123727
123728 इदं सुखमिदं नेति मिथुने क्षयमागते।
123729 सममेव पदे शान्ते तिष्ठामीह यथासुखम्॥ ७०॥
123730
123731 मिथुने द्वन्द्वे॥ ७०॥
123732
123733 शिखिध्वज उवाच।
123734
123735 युक्तमुक्तं विशालाक्षि त्वयैतत्समया धिया।
123736 को वार्थः किल राज्यस्य ग्रहे त्यागेऽपि वा भवेत्॥ ७१॥
123737
123738 सुखदुःखदशाचिन्तां त्यक्त्वा विगतमत्सरम्।
123739 यथासंस्थानमेवेमौ तिष्ठावः स्वस्थतां गतौ॥ ७२॥
123740
123741 यथासंस्थानं यथास्थितम्॥ ७२॥
123742
123743 इति तत्र कथालापकथनेन तयोर्द्वयोः।
123744 कान्तयोश्चिरदम्पत्योर्वासरस्तनुतां ययौ॥ ७३॥
123745
123746 चिरदंपत्योः प्राचीनजायापत्योः॥ ७३॥
123747
123748 अथोत्थाय दिनाचारं यथाप्राप्तमनिन्दितौ।
123749 सोत्कण्ठावप्यनुत्कण्ठौ चक्रतुः कार्यकोविदौ॥ ७४॥
123750
123751 दिनाचारं सायंसंध्याम्। सायंसंध्यां सभास्करा मित्युक्तेर्दिनाचारता।
123752 परस्परेप्सितसंभोगाय सोत्कण्ठावपि निर्वासनत्वादनुत्कण्ठौ॥ ७४॥
123753
123754 स्वर्गसिद्धिमनादृत्य तस्थतुः पूर्णचेतसौ।
123755 एकस्मिन्नेव शयने तैस्तैः प्रणयचेष्टितैः।
123756 सा व्यतीयाय रजनी तयोर्जीवद्विमुक्तयोः॥ ७५॥
123757
123758 तद्भोगमोक्षसुखमुत्तमयोः स्वयं समाशंसतोः
123759 प्रणयवाक्यविलासगर्भम्।
123760 उत्कण्ठतां प्रणयिनोर्धियमानयन्ती दीर्घा मुहूर्तवदसौ रजनी जगाम॥ ७६

123761 ||
123762
123763 तत्परस्परानुभवसिद्धभोगमोक्षसुखं स्वयं प्रणयवाक्यविलासगर्भं यथा
123764 स्यात्तथा आशंसतोः कथयतोस्तयोर्धियमुत्कण्ठतां सोत्कण्ठतामानयन्ती
123765 प्रापयन्ती रजनी दीर्घापि मुहूर्तवज्जगामेत्यर्थः || ७६ ||
123766
123767 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० निर्वाणप्रकरणे पू० चू०
123768 चूडालाप्रकटीकरणं नाम नवोत्तरशततमः सर्गः || १०९ ||
123769
123770 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
123771 चूडालाप्रकटीकरणं नाम नवोत्तरशततमः सर्गः || १०९ ||
123772
123773
123774 दशाधिकशततमः सर्गः ११०
123775
123776 श्रीवसिष्ठ उवाच |
123777
123778 ततः समुदिते सूर्ये वितमस्यम्बरे स्थिते |
123779 समुद्गकादिव जगन्मणौ तस्मिन्विनिर्गते || १ ||
123780
123781 सहसंकल्पसैन्येन गजेन स्वपुरं गतौ |
123782 तौ कृत्वा सुचिरं राज्यं विमुक्ताविति वर्ण्यते ||
123783
123784 समुद्गकात्समुद्गते जगत्प्रकाशकमणाविव समुदिते सूर्ये वितमस्यम्बरे स्थिते सति ||
123785 १ ||
123786
123787 विकसत्यरुणोपान्ते चक्षुषीवाम्बुजाकरे |
123788 आचारेष्विव लोकेषु प्रसृतेष्वर्करश्मिषु || २ ||
123789
123790 जनानामरुणोपान्ते चक्षुषीवाम्बुजाकरे विकसति सति || २ ||
123791
123792 दंपती तौ समुत्थाय कृतसंध्याक्रमौ स्थितौ |
123793 पत्रासने मृदुस्निग्धे कान्तौ काञ्चनकन्दरे || ३ ||
123794
123795 अथोत्थायात्र चूडाला रत्नकुम्भं पुरःस्थितम् |
123796 कान्ता संकल्पयामास पूर्णं सप्ताब्धिवारिभिः || ४ ||
123797
123798 सप्ताब्धिवारिभिः पूर्णं पुरःस्थितं रत्नकुम्भं राज्याभिषेकाय संकल्पयामास
123799 || ४ ||
123800
123801 तेन मङ्गलकुम्भेन तं पूर्वाभिमुखं स्थितम् |
123802 भार्या भर्तारमेकान्ते स्वराज्येऽभिषिषेच सा || ५ ||
123803
123804 तं राजानम् || ५ ||
123805
123806 संकल्पोपगते हैमे स्वभिषिक्तं स्वविष्टरे |
123807 स्थितं प्रोवाच तन्वी सा चूडाला देवरूपिणी || ६ ||
123808
123809 संकल्पमात्रेणोपगते स्वयोग्यविष्टरे सिंहासने || ६ ||
123810
123811 केवलं मौनमुत्सृज्य तेजः शान्तमिदं प्रभो |
123812 अष्टानां लोकपालानां तेजस्त्वं भर्तुमर्हसि || ७ ||

123813
123814 मौनं मुनियोग्यमिदं शान्तं तेज उत्सृज्य शासनयोग्यमिन्द्रादीनां तेजो
123815 भर्तुमर्हसि ॥ ७ ॥
123816
123817 चूडालयेति संप्रोक्तो वने राजा शिखिध्वजः ।
123818 वदन्नेवं करोमीति महाराजत्वमाययौ ॥ ८ ॥
123819
123820
123821 अथ प्रतीहारपदे तिष्ठन्तीमाह मानिनीम् ।
123822 अद्य देवीपदे राज्ञीं त्वां करोम्यभिषेकिनीम् ॥ ९ ॥
123823
123824 पट्टाभिषेकाभावात्प्रतीहारपदं द्वारपालस्थानं तत्र विनयात्तिष्ठन्तीम् ।
123825 देवीपदे कृताभिषेकास्थाने ॥ ९ ॥
123826
123827 इत्युक्त्वा सरसि स्नाप्य महादेवीपदे तथा ।
123828 अभिषिक्तां नृपः कृत्वा स तामाह निजां प्रियाम् ॥ १० ॥
123829
123830 प्रिये कमलपत्राक्षि क्षणात्संकल्पसंभवम् ।
123831 महाविभवमुद्दामं सन्यमाहर्तुमर्हसि ॥ ११ ॥
123832
123833 योगसिद्ध्या तव सत्यसंकल्पात्संभवम् ।
123834 भूषणालंकारशस्त्रास्त्रादिभिर्महाविभवं बह्वक्षौहिणीपरिमाणैरुद्दामम् ॥ ११
123835 । ।
123836
123837 इति कान्तवचः श्रुत्वा चूडाला वरवर्णिनी ।
123838 सैन्यं संकल्पयामास प्रावृड्घनमिवोद्भटम् ॥ १२ ॥
123839
123840 सैन्यं ददृशतुस्तत्तौ वाजिवारणसंकुलम् ।
123841 पताकापूरिताकाशं नीरन्ध्रीकृतकाननम् ॥ १३ ॥
123842
123843 नीरन्ध्रीकृतं निरवकाशीकृतं काननं येन ॥ १३ ॥
123844
123845 तूर्यारवध्वनच्छैलगुहागहनकोटरम् ।
123846 मौलिरत्नमहोद्द्योतविचूर्णिततमःपटम् ॥ १४ ॥
123847
123848 तूर्यारवैः प्रतिध्वनन्तः शैलगुहागहनकोटरा यस्य ॥ १४ ॥
123849
123850 तत्र गन्धद्विपवरे कृतपार्थिवमण्डले ।
123851 रक्षिते हृष्टसामन्तैरारूढो नृपदंपती ॥ १५ ॥
123852
123853 यन्मदगन्धमन्ये द्विपा न सहन्ते स गन्धद्विपः ॥ १५ ॥
123854
123855 ततः शिखिध्वजो राजा महिष्या सममिष्टया ।
123856 पदातिरथसंबाधं कर्षन्नतिबलो बलम् ॥ १६ ॥
123857
123858 वलं सैन्यम् ॥ १६ ॥
123859
123860 चचालाचलचालिन्या सेनया स ततो वनात् ।
123861 भिन्दन्निव रसाशैलं वात्ययेवाशु भौमया ॥ १७ ॥
123862
123863 भौमया भूत्थया ॥ १७ ॥
123864

123865 तस्मान्महेन्द्रशैलेन्द्राच्चलितः स महीपतिः।
123866 पथि पश्यन्गिरीन्देशान्नदीर्ग्रामान्सजङ्गलान्॥ १८॥
123867
123868 दर्शयन्स्वप्रियायास्तमात्मवृत्तान्तसंचयम्।
123869 प्रागल्पेनैव कालेन स्वां पुरीं स्वर्गशोभनाम्॥ १९॥
123870
123871 तं प्राक्तनमात्मनः स्वस्य प्राङ्गरान्निर्गतस्य मार्गे जानपदैः सह वृत्तं
123872 वृत्तान्तसंचयम्॥ १९॥
123873
123874 तत्र ते तस्य सामन्तास्तदागमनमादृताः।
123875 विविदुर्जयशब्देन निर्जग्मुश्चोदिताशयाः॥ २०॥
123876
123877 सामन्तास्तत्तद्देशाधिपत्ये निरूपिता मन्त्रिणः। उदिताशयाः सोत्कण्ठाः॥ २०॥
123878
123879 एकतां संप्रयातेन तारतूर्यनिनादिना।
123880 बलद्वयेन तेनासौ विवेश नगरं नृपः॥ २१॥
123881
123882 लाजपुष्पाञ्जलिव्रातैरावृष्टः पौरयोषिताम्।
123883 वणिङ्मार्गमसौ पश्यन्परंपरमनुत्तमम्॥ २२॥
123884
123885 लाजाञ्जलीनां पुष्पाञ्जलीनां च व्रातैः। परंपरमुत्तरोत्तरम्॥ २२॥
123886
123887 पताकाध्वजसंबाधं मुक्ताजालमनोरमम्।
123888 नृत्यगेयपरस्त्रीकं स्वभूमावचलं स्थितम्॥ २३॥
123889
123890 स्वभूमौ स्वस्थाने अचलं कैलासमिवोच्छ्रितं स्थितम्॥ २३॥
123891
123892 प्रविश्याथ गृहं तैस्तैः संयुतं नृपमङ्गलैः।
123893 सम्यक्संमानयामास प्रणतं प्रकृतिव्रजम्॥ २४॥
123894
123895 तैस्तैर्लोकशास्त्रप्रसिद्धैर्दधिदूर्वाक्षतशङ्खवीणाछत्रचामरादिभिर्नृप##-
123896
123897 पुरोत्सवं भृशं कृत्वा दिनसप्तकमुत्तमम्।
123898 अकरोद्राजकार्याणि स्वानि स्वान्तःपुरे नृपः॥ २५॥
123899
123900 अन्तःपुरे स्वानि स्वाभिमतसमाधिभोगादीनि॥ २५॥
123901
123902 दशवर्षसहस्राणि राज्यं कृत्वा महीतले।
123903 सहचूडालया राम विरतो देहधारणात्॥ २६॥
123904
123905 देहधारणाद्विरतो विदेहकैवल्यसुखे प्रतिष्ठितोऽभूदित्यर्थः॥ २६॥
123906
123907 देहमुत्सृज्य निर्वाणमस्नेह इव दीपकः।
123908 अपुनर्जन्मने राम जगामेति महामतिः॥ २७॥
123909
123910 तदेव स्पष्टमाह - देहमिति। इति अनया प्रागुक्तरीत्या॥ २७॥
123911
123912 दशवर्षसहस्राणि समदृष्टितया तया।
123913 राज्यं तयाऽऽरमय्यापि निर्वाणं पदमाप्तवान्॥ २८॥
123914
123915 राज्यं कृत्वा तया चूडालया सह आरमय्य आसमन्तात् क्रीडयित्वापि॥ २८॥
123916

123917 विगतभयविषादो मानमात्सर्यमुक्तः प्रकृतसहजकर्मा
123918 भुक्तनीरागबुद्धिः ।
123919 इति समसमदृष्टिर्मृत्युमार्योऽथ जित्वा दशशिशिरसहस्राण्येकराज्यं
123920 चकार ॥ २९ ॥
123921
123922 भुक्तेषु भोगेषु नीरागा बुद्धिर्यस्य । समेभ्योऽपि समा दृष्टिर्यस्य । स आर्यः
123923 शिखिध्वज इति वर्णितप्रकारेण बोधेन कामलक्षणं मृत्युं जित्वा
123924 दशशिशिरर्तूपलक्षितवर्षसहस्राणि जम्बूद्वीपे एकराजस्य भाव ऐकराज्यं चकार ॥
123925 २९ ॥
123926
123927 भुक्त्वा भोगाननेकान्भुवि सकलमहीपालचूडामणित्वे स्थित्वा वै दीर्घकालं
123928 परममृतपदं प्राप्तवान्सत्त्वशेषः ।
123929 एवं रामागतं त्वं प्रकृतमनुसरन्कार्यजातं विशोकस्तिष्ठोत्तिष्ठ
123930 स्वयंन् वा प्रसभमनुभवन्भोगमोक्षादिलक्ष्मीः ॥ ३० ॥
123931
123932 पूर्वार्धेन शिखिध्वजस्थितिमनूद्य तां रामाय कर्तव्यतयोत्तरार्धेनोपदिशति ##-
123933 अनेकान्भोगान्भुक्त्वा अमृतमजरं परं पदं सत्त्वं सन्मात्रं तच्छेषः सन्
123934 प्राप्तवान् । हे राम त्वमपि आगतं प्रारब्धप्राप्तं प्रकृतं कार्यजातमनुसरन्
123935 विशोकः समाधौ तिष्ठ । अथवा स्वयं प्रसभं
123936 भोगमोक्षज्ञानलक्ष्मीरनुसरन्नुत्तिष्ठ व्युत्थितस्तिष्ठ । तव समाधिव्युत्थानयोर्न
123937 फलभेदोऽस्तीत्यर्थः ॥ ३० ॥
123938
123939 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वाणप्रकरणे पू० चू०
123940 शिखिध्वजनिर्वाणं नाम दशोत्तरशततमः सर्गः ॥ ११० ॥
123941
123942 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
123943 शिखिध्वजनिर्वाणं नाम दशोत्तरशततमः सर्गः ॥ ११० ॥
123944
123945 चूडालोपाख्यानं [अस्य शिखिध्वजाख्यानत्वेनापि व्यवहारः ।] समाप्तम् ।
123946
123947 एकादशाधिकशततमः सर्गः १११
123948
123949 श्रीवसिष्ठ उवाच ।
123950
123951 एतत्ते सर्वमाख्यातं शिखिध्वजकथानकम् ।
123952 अनेन गच्छन्मार्गेण न कदाचन खिद्यसे ॥ १ ॥
123953
123954 राज्ञ्या राजेव पित्रात्र सर्वस्वं त्याजितः कचः ।
123955 अन्तेऽहंकारसंत्यागात्पूर्णोऽभूदिति वर्ण्यते ॥
123956
123957 अनेन मार्गेण गच्छन्न खिद्यसे निवृत्तसर्वखेदो भविष्यसि ॥ १ ॥
123958
123959 एतां दृष्टिमवष्टभ्य रागद्वेषविनाशिनीम् ।
123960 नित्यं नीरागया बुद्ध्या तिष्ठावष्टब्धतत्पदः ॥ २ ॥
123961
123962 बुद्ध्या अवष्टब्धं परमार्थतया दृष्टमवलम्बितं तत्पूर्णानन्दपदं येन ।
123963 भोगमोक्षमयस्तत्प्रचुरः ॥ २ ॥
123964
123965 यथा शिखिध्वजो राज्यं कृतवानेवमीदृशम् ।
123966 राम व्यवहरन्राज्ये भोगमोक्षमयो भव ॥ ३ ॥
123967
123968 शिखिध्वजक्रमेणैव यथा बोधमवाप्तवान् ।

123969 कचो बृहस्पतेः पुत्रस्तथा बुध्यस्व राघव ॥ ४ ॥
123970
123971 शिखिध्वजस्य प्रसिद्धेन सर्वत्यागक्रमेणैव कचोऽपि यथा बोधमवाप्तवांस्तथा
123972 त्वमपि बुध्यस्व ॥ ४ ॥
123973
123974 श्रीराम उवाच ।
123975
123976 बृहस्पतेर्भगवतः पुत्रोऽसौ भगवान्कचः ।
123977 यथा प्रबुद्धो भगवन्समासेन तथा वद ॥ ५ ॥
123978
123979 समासेन साकल्येन ॥ ५ ॥
123980
123981 श्रीवसिष्ठ उवाच ।
123982
123983 शृणु राजन्कथां श्रीमाञ्छिखिध्वजवदेव सः ।
123984 प्रबोधं परमं यातो देवदेशिकजः कचः ॥ ६ ॥
123985
123986 बालभावात्समुत्तीर्णः संसारोत्तरणोन्मुखः ।
123987 कचः पदपदार्थज्ञो बृहस्पतिमभाषत ॥ ७ ॥
123988
123989 बालभावात्समुत्तीर्णो निर्गतः । यौवनं प्राप्तमात्र इति यावत् । पदपदार्थज्ञः
123990 सर्वविद्यास्थानेषु निष्णातस्तत्त्वमसिवाक्यगोचरपदपदार्थज्ञश्च ॥ ७ ॥
123991
123992 कच उवाच ।
123993
123994 भगवन्सर्वधर्मज्ञ कथं संसृतिपञ्जरात् ।
123995 अस्मान्निर्गम्यते ब्रूहि जन्तुना जीवतन्तुना ॥ ८ ॥
123996
123997 जीव एव तन्तुरिव स्वबन्धसहस्रकरो यस्य तथाविधेन जन्तुना मादृशेन ॥ ८ ॥
123998
123999 बृहस्पतिरुवाच ।
124000
124001 अनर्थमकरागारादस्मात्संसारसागरात् ।
124002 उड्डीयते निरुद्वेगं सर्वत्यागेन पुत्रक ॥ ९ ॥
124003
124004 उड्डीयते शीघ्रं निर्गम्यत इति यावत् । अतिवैराग्यदार्ढ्यात्त्यक्तविषये
124005 पश्चात्तापोद्वेगरहितं यथा स्यात्तथा कृतेन सर्वत्यागेन ॥ ९ ॥
124006
124007 श्रीवसिष्ठ उवाच ।
124008
124009 इत्याकर्ण्य कचो वाक्यं पितुः परमपावनम् ।
124010 सर्वमेव परित्यज्य जगामैकान्तकाननम् ॥ १० ॥
124011
124012 बृहस्पतेस्तद्गमनं नोद्वेगाय बभूव ह ।
124013 संयोगे च वियोगे च महान्तो हि महाशयाः ॥ ११ ॥
124014
124015 महाशयाः मेरुवत्स्थिराशयाः ॥ ११ ॥
124016
124017 अथ वर्षेषु जातेषु त्रिषु पञ्चसु सोऽनघ ।
124018 पुनः प्राप महारण्ये कस्मिंश्चित्पितरं कचः ॥ १२ ॥
124019
124020 त्रिषु पञ्चसु च वर्षेषु । अष्टस्वित्यर्थः । तच्चित्तपरिपाकतारतम्यं विज्ञाय शेषं

124021 त्याजयितुमागतं पितरं प्रापेत्यर्थः ॥ १२ ॥
124022
124023 परिपूज्याभिवाद्यैनं समालिङ्गितपुत्रकम् ।
124024 अपृच्छद्वाक्पतिं भूयः स कचः कान्तया गिरा ॥ १३ ॥
124025
124026 कच उवाच ।
124027
124028 अद्येदमष्टमं वर्षं सर्वत्यागः कृतो मया ।
124029 तथापि तात विश्रान्तिं नाधिगच्छाम्यनिन्दिताम् ॥ १४ ॥
124030
124031 श्रीवसिष्ठ उवाच ।
124032
124033 एवमार्तवचस्तस्मिन्कचे वदति कानने ।
124034 सर्वमेव त्यजेत्युक्त्वा वाक्पतिर्दिवमुद्ययौ ॥ १५ ॥
124035
124036 दिवमाकाशम् ॥ १५ ॥
124037
124038 गते तस्मिन्कचो देहाद्वल्कलाद्यप्यथात्यजत् ।
124039 गतेन्द्वभ्रार्कतारेण शरद्व्योम्ना समोऽभवत् ॥ १६ ॥
124040
124041 गतेन्द्विति । सन्निहितसूर्योदयकालिकशरद्व्योम्नेति यावत् ॥ १६ ॥
124042
124043 पुनर्वर्षत्रयेणैव कस्मिंश्चित्काननान्तरे ।
124044 तत्याजाम्बुदवर्षादि शरदीव नभस्तलम् ॥ १७ ॥
124045
124046 पुनरित्याद्यर्धमुत्तरश्लोके दूयमानमना इत्यतः प्राग्योज्यम् । कथं च
124047 शरद्व्योम्ना समोऽभवत्तत्राह - तत्याजेति । क्वचिद्गिरिगुहाश्रयेणाम्बुदवर्षादि
124048 तत्याज परिजहार ॥ १७ ॥
124049
124050 उपासैको दिगन्तेषु शान्तशून्यवपुः श्वसन् ।
124051 दूयमानमनाः प्राप तमेव पितरं गुरुम् ॥ १८ ॥
124052
124053 शरदादौ तु क्वचिद्दिगन्तेषूवास । एवं दूयमानमना एष पुनर्वर्षत्रयेण
124054 कस्मिंश्चित्काननान्तरे तमेव पितरं गुरुमागतं प्राप ॥ १८ ॥
124055
124056 कृतपूजाक्रमो भक्त्या समालिङ्गितपुत्रकम् ।
124057 अपृच्छत्स कचो भूयः खेदगद्गदया गिरा ॥ १९ ॥
124058
124059 कच उवाच ।
124060
124061 तात सर्वं परित्यक्तं कन्थां वेणुलताद्यपि ।
124062 तथापि नास्ति विश्रान्तिः स्वपदे किं करोम्यहम् ॥ २० ॥
124063
124064 वेणुलता दण्डः । आदिपदात्कमण्डलुबृस्यजिनाद्यपि ॥ २० ॥
124065
124066 बृहस्पतिरुवाच ।
124067
124068 चित्तं सर्वमिति प्राहुस्तत्त्यक्त्वा पुत्र राजसे ।
124069 चित्तत्यागं विदुः सर्वत्यागं सर्वविदो जनाः ॥ २१ ॥
124070
124071 श्रीवसिष्ठ उवाच ।
124072

124073 इत्युक्त्वा वाक्पतिः पुत्रं पुप्लुवे तरसा नभः।
124074 अन्वियेष कचश्चित्तं परित्यक्तुमखिन्नधीः॥ २२॥
124075
124076 अन्वियेष अन्विष्टवान्॥ २२॥
124077
124078 चिन्तयन्नप्यसौ चित्तं न यदा वेद कानने।
124079 तदा संचिन्तयामास धियैव पितरं ययौ॥ २३॥
124080
124081 यदा न वेद न दृष्टवान्। चित्तस्य स्वान्वेषणविशरारुतायाः प्राक् चित्ताख्याने
124082 प्रपञ्चनादिति भावः। पितरं धिया ययौ। चिन्तितवानिति यावत्॥ २३॥
124083
124084 पदार्थवृन्दं देहादि न चित्तमिति कथ्यते।
124085 तदेतत्किं क्व वा व्यर्थं निरागस्कं त्यजाम्यहम्॥ २४॥
124086
124087 ननु त्रिपुरदाहादसुराणामिव देहेन्द्रियविषयत्यागादेव चित्तत्यागः सेत्स्यति तत्राह ##-
124088 स्यादित्यनिर्णयादनागस्कं चित्तनिलयनापराधशून्यदेहादि व्यर्थं किं त्यजामि।
124089 त्यागोऽस्य नोचित इत्यर्थः॥ २४॥
124090
124091 पितुः सकाशं गच्छामि ज्ञातुं चित्तं महारिपुम्।
124092 ज्ञात्वा तत्संत्यजाम्याशु ततस्तिष्ठामि विज्वरः॥ २५॥
124093
124094 श्रीवसिष्ठ उवाच।
124095
124096 इति संचिन्त्य स कच उज्जगाम त्रिविष्टपम्।
124097 वाक्पतिं प्राप्य सस्नेहं ववन्दे प्रणनाम च॥ २६॥
124098
124099 अपृच्छच्चैनमेकान्ते किं चित्तं भगवन्वद।
124100 स्वरूपं ब्रूहि चित्तस्य येन तत्संत्यजाम्यहम्॥ २७॥
124101
124102 बृहस्पतिरुवाच।
124103
124104 चित्तं निजमहंकारं विदुश्चित्तविदो जनाः।
124105 अन्तर्योऽयमहंभावो जन्तोस्तच्चित्तमुच्यते॥ २८॥
124106
124107 चित्तविदः साक्षिणा [साक्षिणश्चित्तं पृथक्कृत्येत्यपेक्षितम् (अपेक्षितुः
124108 अपेक्षैवानपेक्षितात्र यतो यथावस्थमेव सूक्तं सुसङ्गतं चेति वयम्।)]
124109 चित्तं पृथक्कृत्य जानन्तो जीवन्मुक्तजनाः॥ २८॥
124110
124111 कच उवाच।
124112
124113 त्रयस्त्रिंशन्महाकोटिप्रमाणस्य महामते।
124114 गुरो गीर्वाणवृन्दस्य कथमेतद्वदेति मे॥ २९॥
124115
124116 हे त्रयस्त्रिंशन्महाकोटिप्रमाणस्य गीर्वाणवृन्दस्य गुरो हे महामते बृहस्पते
124117 अहंभाव एव चित्तमित्येतत्कथं तन्मे वद। अहंकारस्य लोके आत्मतयैव
124118 प्रसिद्धेस्तत्त्यागे आत्मत्यागापत्त्या नैरात्म्यापत्तेरिति भावः॥ २९॥
124119
124120 मन्येऽस्य दुष्करस्त्यागो न सिद्धिमुपगच्छति।
124121 कथमेष किल त्यक्तुं शक्यते योगिनां वर॥ ३०॥
124122
124123 नाप्यात्मनस्त्यागो वा संभवति अहेयस्वभावत्वादित्याशयेनाह - मन्ये इति॥ ३०॥
124124

124125 बृहस्पतिरुवाच।
124126
124127 अपि पुष्पावदलनादपि लोचनमीलनात्।
124128 सुकरोऽहंकृतेस्त्यागो न क्लेशोऽत्र मनागपि॥ ३१॥
124129
124130 सत्यं तत्साक्ष्यपरिचये तत्त्यागो दुष्करः परिचिते तु साक्षिणि पुष्पावदलनादपि सुकर
124131 इत्याशयेन बृहस्पतिरुत्तरमाह - अपीति॥ ३१॥
124132
124133 यथैतदेवं तनय तथा शृणु वदामि ते।
124134 अज्ञानमात्रसंसिद्धं वस्तु ज्ञानेन नश्यति॥ ३२॥
124135
124136 अज्ञानं शुद्धसाक्ष्यपरिचयलक्षणो मोहस्तन्मात्रसंसिद्धमहंकारादिवस्तु।
124137 तच्च ज्ञानेन तत्परिचयमात्रेण॥ ३२॥
124138
124139 वस्तुतो नास्त्यहंकारः पुत्र मिथ्याभ्रमो यथा।
124140 असन्सन्निव संपन्नो बालवेतालवत्स्थितः॥ ३३॥
124141
124142 बालकल्पितवेतालवद्वस्तु असन्नेव सन्निव संपन्नोऽज्ञदृष्ट्या स्थितः॥ ३३॥
124143
124144 यथा रज्ज्वां भुजंगत्वं मरावम्बुमतिर्यथा।
124145 मिथ्यावभासः स्फुरति तथा मिथ्याप्यहंकृतिः॥ ३४॥
124146
124147 तथाहंकृतिरपि मिथ्या स्फुरतीत्यन्वयः॥ ३४॥
124148
124149 असदेव यथा द्वित्वं मोहादिन्दौ विलोक्यते।
124150 तथा स्फुरत्यहंकारो न सत्यो वाप्यसन्न च॥ ३५॥
124151
124152 न च सदसन्निति शेषः॥ ३५॥
124153
124154 एकमाद्यन्तरहितं चिन्मात्रममलान्तरम्।
124155 खादप्यतितरामच्छं विद्यते सर्ववेदनम्॥ ३६॥
124156
124157 सर्वप्रपञ्चमिथ्यात्वे किं विद्यते तदाह - एकमिति। सर्वमिथ्यात्वेऽपि तद्वेदनं
124158 विद्यते। तदविद्यमानतायाः साधकाभावादेवासिद्धेरिति भावः॥ ३६॥
124159
124160 सर्वत्र सर्वदा सर्वप्रकाशं सर्वजन्तुषु।
124161 तदेवैकं कचत्यम्बु विलोलास्वब्धिवीचिषु॥ ३७॥
124162
124163 तदसत्त्वे जगत्प्रथानुपपत्तेरपि तदस्तीत्याह - सर्वत्रेति। अम्ब्विवेति शेषः॥ ३७॥
124164
124165 अत्र कोऽयमहंभावः कुतो वा कथमुत्थितः।
124166 क्वाप्सु जातो रजोराशिः क्वानलादुत्थितं जलम्॥ ३८॥
124167
124168 तत्र दृग्दृश्ययोर्मध्ये अयमहंकारः कः कुतो निमित्तात्कथं
124169 दृग्दृश्यमेलनात्प्रकारान्तरेण वा उत्थितः उभयविलक्षणस्वभावस्यास्योद्भव
124170 एव दुर्वच इत्याह - क्वेति। रजोराशिः शुष्कपांसुनिचयः॥ ३८॥
124171
124172 अयंन् सोऽहमिति व्यर्थं प्रत्ययं त्यज पुत्रक।
124173 तुच्छं परिमिताकारं दिक्कालविवशीकृतम्॥ ३९॥
124174
124175 अयं देहादिः स पित्रादितो जातोऽहम्। दिक्कालाभ्यां विवशीकृतं
124176 वृद्ध्यपक्षयादिना परिणमितम्॥ ३९॥

124177
124178 दिक्कालाद्यनवच्छिन्नं स्वच्छं नित्योदितं ततम् ।
124179 सर्वार्थमयमेकार्थचिन्मात्रममलं भवान् ॥ ४० ॥
124180
124181 तर्ह्यहं कस्तत्राह - दिगिति । सर्वार्थमयं सर्वपदार्थविकारात्मना
124182 भासमानं वस्तुतस्त्वपारार्थ्यादद्वयत्वाच्चैकार्थम् ॥ ४० ॥
124183
124184 फलकुसुमदलानां सर्वदिक्संस्थितानां रस इव जगतां त्वं संस्थितः
124185 सर्वदैव ।
124186 विमलतरचिदात्मा नित्यमेवास्यनन्तः क इव कच तवाहंनिश्चयो भावमूर्तेः ॥
124187 ४१ ॥
124188
124189 सर्वार्थमयमित्यस्य सर्वपदार्थसारभूतमित्यर्थान्तरं सदृष्टान्तं
124190 दर्शयन्प्रकृतं निगमयति - फलेति । सर्वदिक्षु संस्थितानां फलानां
124191 कुसुमानां दलानां पर्णानां च कारणीभूतः सारभूतश्च तरोरन्तर्गतो रस इव
124192 त्वं सर्वजगतां कारणीभूतः सारभूतश्चान्तः सर्वदैव संस्थितो
124193 विमलतरोऽनन्तश्चिदात्मैव नित्यमसि । हे कच
124194 भावमूर्तेरखण्डाद्वयसन्मात्रस्वरूपस्य तवायंन् परिच्छिन्नोऽहंनिश्चयः क
124195 इव । न कश्चिदित्यर्थः । अथवा सर्वदिक्संस्थितानां
124196 फलकुसुमादीनामैकरस्यमापन्नो रसो मध्विव सर्वजगतां
124197 सारभूतनिरतिशयानन्दरूपः संस्थित इत्यर्थः । अतः सर्वदैव त्वमनन्तो
124198 विगतमायामलश्चिदात्मैवासीत्यादि प्राग्वत् ॥ ४१ ॥
124199
124200 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० निर्वाणप्रकरणे पू० कचोपाख्याने
124201 कचप्रबोधो नामैकादशोत्तरशततमः सर्गः ॥ १११ ॥
124202
124203 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
124204 कचप्रबोधो नामैकादशोत्तरशततमः सर्गः ॥ १११ ॥
124205
124206
124207 द्वादशाधिकशततमः सर्गः ११२
124208
124209 श्रीवसिष्ठ उवाच ।
124210
124211 इति प्राप्य परं योगमुपदेशमनुत्तमम् ।
124212 जीवन्मुक्तो बभूवासौ ततो देवगुरोः सुतः ॥ १ ॥
124213
124214 कचाख्यानप्रबुद्धस्य रामस्य प्रश्नतोऽत्र हि ।
124215 मिथ्यापुरुषकाख्यानं खरक्षणमुदीर्यते ॥
124216
124217 युज्यते अखण्डैक्येनावधार्यते प्रत्यगात्मा परमात्मना येन स योगस्तं
124218 तथाविधमुपदेशम् ॥ १ ॥
124219
124220 निर्ममो निरहंकारश्छिन्नग्रन्थिः प्रशान्तधीः ।
124221 कचो यथा स्थितो राम तथा तिष्ठाविकारवान् ॥ २ ॥
124222
124223 तथा त्वमपि तिष्ठ ॥ २ ॥
124224
124225 अहंकारमसद्विद्धि मैनमाश्रय मा त्यज ।
124226 असतः शशशृङ्गस्य किल त्यागग्रहौ कुतः ॥ ३ ॥
124227
124228 मैनमिति । मिथ्यात्वबुद्ध्या उपेक्षणमेव तत्त्यागो न स्वत्वनिवर्तकयत्नसापेक्ष इति

124229 भावः ॥ ३ ॥
124230
124231 असंभवत्यहंकारे क्व ते मरणजन्मनी ।
124232 नभःक्षेत्रे तथा व्युप्तं केन संगृह्यते फलम् ॥ ४ ॥
124233
124234 यत्नेन तदनिवारणे कथं मरणजन्मभयनिर्मोक्षस्तत्राह - असंभवतीति ।
124235 शत्रन्तेन नञ्समासे सप्तमी । ननु कामकर्मवासनारूपबीजबलान्मरणजन्मनी कुतो
124236 न स्यातां तत्राह - नभ इति । अहङ्कारक्षेत्रे सत्येव तानि बीजानि प्ररोहन्ति न तु
124237 तद्बाधे सतीति भावः ॥ ४ ॥
124238
124239 निरंशं शान्तसंकल्पं सर्वभावात्मकं ततम् ।
124240 परमादप्यणोः सूक्ष्मं चिन्मात्रं त्वमनोमयम् ॥ ५ ॥
124241
124242 अहङ्कारे बाधितेऽवशिष्टः कीदृशोऽहं तत्राह - निरंशमिति ॥ ५ ॥
124243
124244 यथाम्भसस्तरङ्गादि यथा हेम्नोऽङ्गदादि च ।
124245 तदेवातदिवाभासं तथाहंभावभावितः ॥ ६ ॥
124246
124247 ईदृशोऽहं कथमहंभावभावितोऽभूवं तत्राह - यथेति । तथा
124248 अहंभावभावितोऽप्यन्य इवाभात इत्यर्थः ॥ ६ ॥
124249
124250 अबोधेन जगत्सर्वं मायामयमिव स्थितम् ।
124251 बोधेन सकलं ब्रह्मरूपं संपद्यतेऽनघ ॥ ७ ॥
124252
124253 तत्र को हेतुस्तमाह - अबोधेनेति । तन्निरासेऽपि हेतुमाह - बोधेनेति ॥ ७ ॥
124254
124255 द्वित्वैकत्वमती त्यक्त्वा शेषस्थः सुखितो भव ।
124256 मा दुःखितो भव व्यर्थं त्वं मिथ्यापुरुषो यथा ॥ ८ ॥
124257
124258 द्वित्वमतिः कार्यदर्शनम् । एकत्वमतिः कारणदर्शनम् । ते द्वे त्यक्त्वा
124259 उभयानुस्यूतसन्मात्रं परिशेष्य तत्प्रतिष्ठितः सुखितो भवेत्यर्थः । अतद्दर्शने तु
124260 वक्ष्यमाणपुरुषस्येव दुःखप्राप्तिस्तव दुर्वारित्याह - मेति ॥ ८ ॥
124261
124262 मायेयमतिदुष्पारा सांसारी गाढतां गता ।
124263 शरदा मिहिकेवाशु बोधेनायाति तानवम् ॥ ९ ॥
124264
124265 तानवमपक्षयम् ॥ ९ ॥
124266
124267 श्रीराम उवाच ।
124268
124269 परमामागतोऽस्म्यन्तस्तृप्तिं ज्ञानामृतेन ते ।
124270 अवग्रहभयाक्रान्तः स्वसारेणेव चातकः ॥ १० ॥
124271
124272 अवग्रहो वर्षप्रतिबन्धस्तद्भयेनाक्रान्तश्चातको दैवादागतवृष्ट्यासारेणेव ॥ १०
124273 । ।
124274
124275 अमृतेनेव सिक्तोऽहमन्तर्गच्छामि शीतताम् ।
124276 उपर्यपि समस्तानां तिष्ठाम्यतुलसंपदाम् ॥ ११ ॥
124277
124278 अपीति पूर्ववाक्यार्थसमुच्चये । हैरण्यगर्भसंपदन्तानामतुलसंपदामुपरि
124279 निरतिशयानन्दलक्षणे तिष्ठामि ॥ ११ ॥
124280

124281 न तृप्तिमनुगच्छाअमि वचांसि वदतस्तव।
124282 ऐन्दवीनां मरीचीनां चकोरस्तृषितो यथा॥ १२॥
124283
124284 तव उक्तीनामास्वादनेनेति शेषः॥ १२॥
124285
124286 तृप्तोऽपि भूयः पृच्छामि त्वां प्रश्नमिममीश्वर।
124287 को नाम तृप्तोऽप्यग्रस्तं न पिबत्यमृतासवम्॥ १३॥
124288
124289 ज्ञातव्यतत्त्वस्य सम्यगनुभवात्तृप्तोऽपि। अमृतरूपमासवं पेयम्॥ १३॥
124290
124291 किमुच्यते मुनिश्रेष्ठ मिथ्यापुरुषनामकम्।
124292 वस्त्ववस्तु कृतं जगद्वस्तुजातं वदाशु मे॥ १४॥
124293
124294 एवं प्रशंसयोन्मुखीकृतं गुरुं प्रति मा दुःखितो भव व्यर्थं त्वं
124295 मिथ्यापुरुषो यथेति प्राक्सूचितं मिथ्यापुरुषाख्यानं कौतुकाद्रामः पृच्छति ##-
124296 कृतं तं वदेत्यर्थः॥ १४॥
124297
124298 श्रीवसिष्ठ उवाच।
124299
124300 मिथ्यापुरुषबोधाय शृणु राघव शोभनाम्।
124301 इमामाख्यायिकां हासजननीं मदुदीरिताम्॥ १५॥
124302
124303 तत्त्वदृशां हासजननीम्॥ १५॥
124304
124305 अस्ति कश्चिन्महाबाहो मायायन्त्रमयः पुमान्।
124306 बालपेलवधीमूढो गूढो मौर्ख्येण केवलम्॥ १६॥
124307
124308 बाल इव पेलवया धिया मूढो विक्षिप्तः। मौर्ख्येणाज्ञानेन च गूढः संवृतः
124309 ॥ १६॥
124310
124311 स एकान्ते क्वचिज्जातः शून्ये तत्रैव तिष्ठति।
124312 केशोण्ड्रकमिव व्योम्नि मृगतृष्णेव वा मरौ॥ १७॥
124313
124314 एकान्ते जनदृष्ट्यगोचरे स्थाने तस्य स्वरूपेणापि मिथ्यात्वमाह -
124315 केशोण्ड्रकमिवेति॥ १७॥
124316
124317 तस्मादन्यन्न तत्रास्ति यदस्ति च स एव तत्।
124318 यच्चान्यत्तत्तदाभासं न च पश्यति दुर्मतिः॥ १८॥
124319
124320 तत्र तदाश्रयस्थाने तस्मान्मिथ्यापुरुषादन्यत्किमपि नास्ति। यत्किंचिदस्तीति प्रतीयते
124321 तत्स एव न तद्व्यतिरिक्तम्। यच्चान्यत्सपश्यति तत्तस्यैव भ्रान्त्याभासमिति स
124322 एवेत्युक्तिरित्यर्थः। अहमेवेदमदृश्यं सर्वमिति स न पश्यति। यतो दुर्मतिरित्यर्थः
124323 ॥ १८॥
124324
124325 संकल्पस्तस्य संजातस्तत्र वृद्धिमुपेयुषः।
124326 खस्याहं खमहं खं मे खं रक्षामीति निश्चलः॥ १९॥
124327
124328 खस्याहमुपजीवकः। खं मे उपजीव्यम्। अतः खमेवाहं ईदृशं च
124329 खमावृत्य रक्षामि॥ १९॥
124330
124331 खं स्थापयित्वा रक्षामि वस्त्विष्टं स्वयमादरात्।
124332 इति संचिन्तयन्व्योमरक्षार्थं सोऽकरोद्गृहम्॥ २०॥

124333
124334 स्वस्य इष्टं वस्तु खं तत्स्वयंन् कस्मिंश्चिदुपाधौ स्थापयित्वा
124335 स्वयमादराद्रक्षामि ॥ २० ॥
124336
124337 तस्य कोशे बबन्धास्थां रक्षितं खं मयेत्यसौ ।
124338 गृहाकाशेन संतुष्टस्ततः स रघुनन्दन ॥ २१ ॥
124339
124340 तस्य गृहस्य कोशे अन्तर्भागे । आस्थां मदीयमिदमेतावत् खमित्यभिमानम् ।
124341 संतुष्टः अभूदिति शेषः ॥ २१ ॥
124342
124343 अथ कालेन तत्तस्य गृहं नाशमुपाययौ ।
124344 ऋत्वन्तरेणाब्द इव वातेनेव तरङ्गकः ॥ २२ ॥
124345
124346 ऋत्वन्तरेण शरदा ॥ २२ ॥
124347
124348 हा गृहाकाश नष्टं त्वं हा क्व यातमसि क्षणात् ।
124349 हा हा भग्नमसि स्वच्छमित्येवैतच्छुशोच सः ॥ २३ ॥
124350
124351 एतत् आकाशम् ॥ २३ ॥
124352
124353 इति शोकशतं कृत्वा पुनस्तत्रैव दुर्मतिः ।
124354 कूपं चक्रे खरक्षार्थं कूपाकाशपरोऽभवत् ॥ २४ ॥
124355
124356 कूपाकाशे परो ममतया आसक्तः ॥ २४ ॥
124357
124358 ततो नाशं स कालेन नीतः कूपोऽपि तस्य वै ।
124359 कूपाकाशे गते शोकनिमग्नोऽसौ ततोऽभवत् ॥ २५ ॥
124360
124361 नाशं पांसुमृत्तिकादिपूरणेन तिरोभावम् ॥ २५ ॥
124362
124363 कूपाकाशप्रलापान्ते कुम्भं शीघ्रमथाकरोत् ।
124364 कुम्भाकाशपरो भूत्वा स्वयं निर्वृतिमाययौ ॥ २६ ॥
124365
124366 निर्वृतिं तदभिमानसुखम् ॥ २६ ॥
124367
124368 कुम्भोऽपि तस्य कालेन नाशं नीतो रघूद्वह ।
124369 यामेव दिशमादत्ते दुर्भगः सा हि नश्यति ॥ २७ ॥
124370
124371 यामेवेति सामान्योक्त्या तदुपपत्तिः ॥ २७ ॥
124372
124373 कुम्भाकाशप्रलापान्ते खरक्षार्थं चकार सः ।
124374 कुण्डं तथैव तेनासौ कुण्डाकाशपरोऽभवत् ॥ २८ ॥
124375
124376 कुण्डमप्यस्य कालेन केनचिन्नाशमाययौ ।
124377 तेजसेव तमस्तेन कुण्डाकाशं शुशोच सः ॥ २९ ॥
124378
124379 केनचिद्वनगजमहिषास्कन्दनादिनिमित्तेन ॥ २९ ॥
124380
124381 कुण्डाकाशस्य शोकान्ते खरक्षार्थं चकार सः ।
124382 चतुःशालं महाशालं तदाकाशमयोऽभवत् ॥ ३० ॥
124383
124384 चतुःशालं चतुर्दिक्षु शाला यस्य तथाविधम् । मध्ये महाशालं सभाकारं

गृहम् । तदाकाशासक्त्या तदाकाशमयः । स्त्रीमयो जाल्म इतिवत् ॥ ३० ॥

तदप्यस्य जहाराशु कालः कवलितप्रजः ।
जीर्णपर्णं यथा वातस्ततः शोकपरोऽभवत् ॥ ३१ ॥

स चतुःशालशोकान्ते खरक्षार्थं चकार ह ।
कुसूलमम्बुदाकारं तदाकाशपरः स्थितः ॥ ३२ ॥

कुसूलं धान्यावपनम् ॥ ३२ ॥

तदप्यस्य जहाराशु कालो वात इवाम्बुदम् ।
कुसूलनाशशोकेन तेनासौ पर्यतप्यत ॥ ३३ ॥

एवं गृहचतुःशालकुम्भकुण्डसुकूलकैः ।
तस्यापर्यवसानात्मा कालोऽयमतिवर्तते ॥ ३४ ॥

तस्य मिथ्यापुरुषस्य ॥ ३४ ॥

एवं स्थितः स विवशो गगनं गुहायां गृह्णान्गृहेण गहनेन
किलात्मबुद्ध्या ।
दुःखान्तराद्घनतराद्घनदुःखजातमायाति याति च गतागतिसङ्गमूढः ॥
३५ ॥

उपसंहरति - एवमिति । हे राम स मिथ्यापुरुष एवंरीत्या गृहेण गहनेन
दुष्प्रवेशेन कूपकुम्भाद्युपाधिना च गगनं गुहायां तत्तद्गर्भे गृह्णन्
स्थितस्तद्गतागतिसंगमूढस्तत्तदभिमानात्तत्तन्निर्माणरक्षणविनाशेषु
घनतराद्दुःखान्तरादपि घनं दुःखजातमायाति ततो याति निर्गच्छति चेत्यर्थः ॥
३५ ॥

इत्यार्षे श्रीवासिष्ठमहा० वा० दे० मो० निर्वाणप्रकरणे पू० चू०
मिथ्यापुरुषोपाख्याने आकाशरक्षणं नाम द्वादशोत्तरशततमः सर्गः ॥ ११२ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
आकाशरक्षणं नाम द्वादशोत्तरशततमः सर्गः ॥ ११२ ॥

त्रयोदशोत्तरशततमः सर्गः ११३

श्रीराम उवाच ।

मिथ्यानरप्रसङ्गेन किं मायापुरुषः प्रभो ।
कथितोऽयं त्वया व्योमरक्षणं च किमुच्यते ॥ १ ॥

मिथ्यापुरुषशब्दादेरर्थोऽत्र स्फुटमीर्यते ।
यथैवाख्यायिकायाश्च तात्पर्यं साम्यवर्णनात् ॥

उत्तानार्थस्योन्मत्तचेष्टाप्रायस्य प्रेक्षावत्स्वसंभवं मन्यमानो
मिथ्यापुरुषाख्यायिकाया अन्यापदेशवाक्यवदन्यार्थे तात्पर्यमिति निश्चित्य रामस्तं
पृच्छति - मिथ्येति । मिथ्यानरप्रसङ्गेन त्वया यो मायापुरुषः कथितः अयं
किमभिप्रेत्य तत्कृतं व्योमरक्षणं च किमभिप्रेत्योच्यत इत्यर्थः ॥ १ ॥

श्रीवसिष्ठ उवाच ।

124437 शृणु राम यथाभूतमेतत्प्रकटयामि ते।
124438 मिथ्यापुरुषवृत्तान्तकथा या कथिताधुना॥ २॥
124439
124440 यथाभूतं यथास्थितम्॥ २॥
124441
124442 मायायन्त्रमयः प्रोक्तो यः पुमान्रघुनन्दन।
124443 एनं त्वं तमहंकारं विद्धि शून्याम्बरोत्थितम्॥ ३॥
124444
124445 शून्याम्बरं मायाकाशस्तदुत्थितम्॥ ३॥
124446
124447 यस्मिन्नाकाशकोशेऽस्मिन्साधो जगदिदं स्थितम्।
124448 तदनन्तमसच्छून्यं सर्गादौ भवति स्वयम्॥ ४॥
124449
124450 सर्गादौ सृष्टेः प्राक्॥ ४॥
124451
124452 अन्तःस्थितसुदुर्लक्ष्यब्रह्म व्योम्नोऽथ शब्दवत्।
124453 तस्मादुदेत्यहंकारः पूर्वं स्पन्द इवानिलात्॥ ५॥
124454
124455 किं निरधिष्ठानान्मायाकाशादुत्थितं तत्र स्थितं च नेत्याह - अन्तरिति। न
124456 तन्निरधिष्ठानं किं त्वन्तरधिष्ठानतया स्थितं सुदुर्लक्ष्यं ब्रह्म यस्य
124457 तथाविधम्। नन्वतीन्द्रियात्कथमहंकारादि जगदुत्थितं तत्र दृष्टान्तमाह -
124458 व्योम्नः शब्दवदिति। अहंकारो लिङ्गात्मा स च मायात्मैवेत्यभिप्रेत्य तत्र
124459 दृष्टान्तान्तरमाह - स्पन्द इवेति॥ ५॥
124460
124461 वृद्धिं यातः स गगने कल्पयत्यात्मतां गतः।
124462 अनात्मात्माभिधानेन तेनासौ यतते ततः॥ ६॥
124463
124464 अनात्मैव भ्रान्त्या आत्मतां गतः सन् स्वकारणे गगने वृद्धिं यातः
124465 कल्पनासहस्रैरिदं मे इष्टमिदमनिष्टमित्यादि कल्पयति। तेन
124466 कल्पितेनैवाहमित्यात्माभिधानेन असौ इष्टानिष्टप्राप्तिपरिहाराय यतते॥ ६॥
124467
124468 अनात्मात्मैकरक्षार्थं देहान्नानाविधानसौ।
124469 भूयोभूयो विनाशेऽपि सृजत्याकुलतां गतः॥ ७॥
124470
124471 तस्यानात्मभूतस्यात्मनो रक्षार्थं प्रवृत्तः पूर्वपूर्वदेहनाशे उत्तरोत्तरं
124472 नानाविधान्देहान्कामकर्मवासनानुसारेण सृजति॥ ७॥
124473
124474 स एव मायापुरुषो मिथ्यापुरुष एव सः।
124475 असदेवोदितो व्यर्थोऽप्यहंकारो हि मायया॥ ८॥
124476
124477 सः अहङ्कार एव॥ ८॥
124478
124479 कूपकुण्डचतुःशालकुम्भादीन्देहकानसौ।
124480 कृत्वा रक्षित आत्मेति याति तद्व्योम्नि भावनम्॥ ९॥
124481
124482 कूपकुम्भादिशब्दैरप्युच्चावचदेहा एव लक्षणयोक्ता इत्याह - कूपेति। तद्व्योनि
124483 तदवच्छिन्ने मायामयात्मनि आत्मभावनां याति॥ ९॥
124484
124485 अहंकारस्य तस्यास्य नामानीमानि राघव।
124486 शृणु यैर्जगदाकारविभ्रमैर्मोहयत्यसौ॥ १०॥
124487
124488 क्रियोपाधिभेदनिमित्तयौगिकनामानि। यैर्यैः

124489 क्रियोपाधिभिर्जगदाकारविभ्रमैरयमहङ्कार आत्मानं मोहयतीत्यर्थः ॥ १० ॥
124490
124491 जीवो बुद्धिर्मनश्चित्तं माया प्रकृतिरित्यपि ।
124492 संकल्पः कलना कालः कला चेत्यपि विश्रुतैः ॥ ११ ॥
124493
124494 प्राणधारणाज्जीवो
124495 बाह्यार्थाध्यवसायाद्बुद्धिस्तन्मननान्मनस्तच्चिन्तनाच्चित्तमसत्कल्पनान्माया
124496 परिणामिस्वभावत्वात्प्रकृतिः संकल्पनात् संकल्पः संकल्पितार्थस्याकलनात्कलना
124497 तस्य विपरिणामादिनिमित्तत्वात्कालस्तत्रैकदेशभेदकल्पनात्कला चेत्यपि विश्रुतैः
124498 प्रसिद्धैः ॥ ११ ॥
124499
124500 एवमाद्यैस्तथान्यैश्च नामभिर्बहुतां गतैः ।
124501 सहस्ररूपोऽहंकारः कल्पितार्थैर्विजृम्भते ॥ १२ ॥
124502
124503 आदिपदादुत्पत्तिप्रकरणोक्तमनोनामानि सर्वाण्यपि गृह्यन्ते । अन्यैः कामः संकल्पो
124504 विचिकित्सा श्रद्धाऽश्रद्धाधृतिरधृतिर्ह्रीर्धीर्भीः
124505 इत्यादिश्रुतिस्मृत्यादिप्रसिद्धवृत्तिभेदनामभिश्च वृत्तिबाहुल्येन बहुतां गतैः
124506 ॥ १२ ॥
124507
124508 भूताकाशे तते शून्ये जगन्निर्भित्ति निश्चितम् ।
124509 सुखदुःखान्यनुभवन्मिथ्यैव पुरुषः स्थितः ॥ १३ ॥
124510
124511 तस्मादन्यन्न तत्रास्ति यदस्ति च स एव तदिति यदुक्तं तदनुभवमारोपयति -
124512 भूतेति । पूर्णे ब्रह्मणि स्वेन प्रथमं शून्यरूपे भूताकाशे तते विस्तृते सति तत्र
124513 वाय्वादिकल्पनाक्रमेण कल्पितं जगद्गन्धर्वनगरमिव
124514 निर्भित्तिकुड्याद्यावरणशून्यमेव युक्त्या विमर्शे निश्चितम् । न ह्यच्छिद्रे ब्रह्मणि
124515 च्छिद्र आकाशः प्रथममुपपद्यते । स च शून्यात्मा अतिविस्तृतोऽचलश्चलनात्मा
124516 वायुः कथं संपद्यते । स च वायुर्नीरूपोऽनुष्णस्तद्विरुद्धस्वभावं तेजः कथं
124517 संपद्यते । तच्चोष्णं दाहस्वभावं कथं तद्विरुद्धशैत्याप्यायनस्वभावं
124518 वारि संपद्यते । तच्च द्रवशोषाकाठिन्यस्वभावं कथं तद्विरुद्धस्वभावं
124519 पृथिवीभावमापद्यते । अतो निर्भित्त्येव जगदिति निश्चितम् । तत्र च स पुरुषो मिथ्यैव
124520 सुखदुःखान्यनुभवन् स्थित इत्यर्थः ॥ १३ ॥
124521
124522 यथैव मिथ्यापुरुषो रक्षन्व्योमात्मशङ्कया ।
124523 घटाकाशादिषु क्लिष्ट एवं मा क्लेशवान्भव ॥ १४ ॥
124524
124525 न च पश्यति दुर्मतिरिति वर्णिताज्ञमिथ्यापुरुषो यथा मिथ्याक्लेशमनुभूय
124526 स्थितस्तथा त्वं माभूरित्याह - यथैवेति ॥ १४ ॥
124527
124528 आकाशादपि विस्तीर्णः शुद्धः सूक्ष्मः शिवः शुभः ।
124529 य आत्मा स कथं केन गृह्यते रक्ष्यतेऽथवा ॥ १५ ॥
124530
124531 हृदयाकाशमात्रस्य शरीरक्षयसंक्षये ।
124532 व्यर्थं भूतानि शोचन्ति नष्ट आत्मेति शङ्कया ॥ १६ ॥
124533
124534 शरीरलक्षणस्य क्षयस्यनिवासस्य संक्षये ॥ १६ ॥
124535
124536 घटादिषु प्रणष्टेषु यथाकाशाद्यखण्डितम् ।
124537 तथा देहेषु नष्टेषु देही नित्यमलेपकः ॥ १७ ॥
124538
124539 शुद्धश्चिन्मात्र आत्मायमाकाशादप्यणोरणुः ।
124540 स्वानुभूत्यंशमात्रं हि खवद्राम न नश्यति ॥ १८ ॥

स्वानुभूत्यंशः अहंकारनिष्कृष्टस्वप्रकाशचित् तावन्मात्रं हि ॥ १८ ॥

न जायते न म्रियते क्वचित्किंचित्कदाचन ।
जगद्विवर्तरूपेण केवलं ब्रह्म जृम्भते ॥ १९ ॥

सत्यमेकं पदं शान्तमादिमध्यान्तवर्जितम् ।
भावाभावविनिर्मुक्तमिति मत्वा सुखी भव ॥ २० ॥

सर्वापदां निलयमध्रुवमस्वतन्त्रमासन्नपातमविवेकमनार्यमज्ञम् ।
बोधादहंकृतिपदं सकलं विमुच्य शेषे सुबद्धपदमुत्तमतां प्रयासि ॥
२१ ॥

वर्णितमिथ्यापुरुषरूपमहंकारं त्याजयन् परिशिष्टचिन्मात्रे
स्थैर्योपदेशेनोपसंहरति - सर्वापदामिति । अस्वातन्त्र्यापादकत्वादस्वतन्त्रम् ।
आसन्नो नरकादिपातो यस्मात्तथाविधं सर्वविवेकविरोधि । अनार्यं
निन्द्यमहंकृतिपदम् । सकलमभिमन्तव्यदेहेन्द्रियविषयलक्षणकलासहितं
बोधान्मूलोच्छेदेन विमुच्य शेषे निष्कृष्टचिन्मात्रे सुबद्धपदं दृढं
स्थितश्चेत् सर्वोत्तमतां प्रयासीत्यर्थः ॥ २१ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० निर्वाणप्रकरणे पू०
मिथ्यापुरुषोपाख्यानं नाम त्रयोदशोत्तरशततमः सर्गः ॥ ११३ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
मिथ्यापुरुषोपाख्यानं नाम त्रयोदशोत्तरशततमः सर्गः ॥ ११३ ॥

चतुर्दशाधिकशततमः सर्गः ११४

श्रीवसिष्ठ उवाच ।

परस्माद्ब्रह्मणः पूर्वं मनः प्रथममुत्थितम् ।
मननात्मकमाभोगि तत्स्थमेव स्थितिं गतम् ॥ १ ॥

विविच्य सदसद्रूपे दृष्टान्तैरिह भूरिशः ।
असद्रूपनिरासेन सद्रूपे स्थैर्यमीर्यते ॥

जगतः सर्वस्य मनोविकल्पमात्रत्वादविकल्पवस्तुप्रदर्शनेन सुकरो निरास इति
व्युत्पादयितुं प्रथमं परे ब्रह्मणि मनःकल्पनामाह - परस्मादिति । पूर्वं
सर्गादिकाले प्रथमं सर्वकल्पनाभ्यः पूर्वं तच्च मनस्तत्र परे ब्रह्मणि
अपृथक्सत्तया स्थितमेव सत्कल्पनान्तरनिमित्ततया अद्ययावत्स्थितिं गतमित्यर्थः ॥ १
॥

पुष्पकोश इवामोदो महोर्मिरिव सागरे ।
रश्मिजालमिवादित्ये मनो ब्रह्मणि राघव ॥ २ ॥

अपृथक्सत्तया स्थितौ दृष्टान्तानाह - पुष्पकोशे इति ॥ २ ॥

तस्यादृश्यात्मतत्त्वस्य विस्मृत्यैव गतं स्थितिम् ।
नान्यस्मादागतं राम जगद्रज्जुभुजङ्गवत् ॥ ३ ॥

तत्स्थमेवेत्यंशं दृष्टान्तैर्विशदीकृत्य स्थितिं गतमित्यंशं विवृणोति -
तस्येति । विस्मृत्या अप्रतिसंधानात्मकेनाज्ञानेनैव सर्वजगत्कल्पनामूलतया

124593 स्थितिं गतम् ॥ ३ ॥
124594
124595 आदित्यव्यतिरेकेण यो भावयति राघव।
124596 रश्मिजालमिदं ह्येतत्तस्यान्यदिव भास्वतः ॥ ४ ॥
124597
124598 तथा च जगत्सन्मात्रादन्यतया भावने अन्यत् सन्मात्रतया विभावने तु सद्रूपं
124599 ब्रह्मैवेति दृष्टान्तैरुपपादयति - आदित्येत्यादिना। इदं रश्मिजालं य
124600 आदित्यव्यतिरेकेण भावयति तस्य ह्येतद्भास्वत आदित्यादन्यदिव स्यादित्यन्वयः ॥ ४ ॥
124601
124602 कनकव्यतिरेकेण केयूरं येन भावितम्।
124603 केयूरमेव तत्तस्य न तस्य कनकं हि तत् ॥ ५ ॥
124604
124605 न तस्येति। वस्त्वैक्यबुद्धेः केयूरेणैवावरोधादिति भावः ॥ ५ ॥
124606
124607 आदित्याव्यतिरेकेण रश्मयो येन भाविताः।
124608 आदित्य एव ते तस्य निर्विकल्पः स उच्यते ॥ ६ ॥
124609
124610 आदित्याव्यतिरेकेण निर्विकल्पो रश्मिभेदविकल्पशून्यः ॥ ६ ॥
124611
124612 सलिलव्यतिरेकेण तरङ्गो येन भावितः।
124613 तरङ्गबुद्धिरेवैका स्थिता तस्य न वारिधीः ॥ ७ ॥
124614
124615 कल्पिताकल्पितरूपाभ्यामर्थ इव कल्पनाकल्पनबुद्धिभ्यां पुरुषोऽपि सविकल्पो
124616 निर्विकल्पश्च भवतीत्याह - सलिलेत्यादिना ॥ ७ ॥
124617
124618 सलिलाव्यतिरेकेण तरङ्गो येन भाव्यते।
124619 अम्बुसामान्यताबुद्धिर्निर्विकल्पः स उच्यते ॥ ८ ॥
124620
124621 कनकाव्यतिरेकण केयूरं येन भाव्यते।
124622 कनकैकमहाबुद्धिर्निर्विकल्पः स उच्यते ॥ ९ ॥
124623
124624 पावकव्यतिरेकेण ज्वालली येन भाविता।
124625 तस्याग्निबुद्धिर्गलति ज्वालाधीरेव तिष्ठति ॥ १० ॥
124626
124627 गलति नोद्भवति ॥ १० ॥
124628
124629 ज्वालाजालाभ्रलेखेव रञ्जिता सा तथा स्थितिः।
124630 तामेवास्थां समादत्ते तद्गतान्याकुला मतिः ॥ ११ ॥
124631
124632 कल्पिताकारानुविद्धा बुद्धिस्तत्रैवास्थां बद्ध्वा तन्मूलानि कल्पनान्तराणि च
124633 करोतीत्याह - ज्वालेति। अभ्रलेखेव ज्वालाजालं ज्वालाजालाभ्रलेखा सेव रञ्जिता।
124634 तदाकारतापन्नेति यावत्। स्थितिर्बुद्धिवृत्तिः। तद्गतानि ज्वालाजालगतानि
124635 चलनोर्ध्वगमनऋजिवक्रतादीनि च आदत्ते कल्पयति ॥ ११ ॥
124636
124637 पावकाव्यतिरेकेण ज्वालाली येन भाव्यते।
124638 तस्याग्निबुद्धिरेकास्ति निर्विकल्पः स उच्यते ॥ १२ ॥
124639
124640 यो निर्विकल्पः सुमहान्सोऽसंक्षीणमहामतिः।
124641 प्राप्तव्यं तेन संप्राप्तं नासौ वस्तुषु मज्जति ॥ १३ ॥
124642
124643 निर्विकल्पः उक्तग्राह्यग्राहकद्विविधविकल्परहितः। वस्तुषु वैकल्पिकपदार्थेषु।
124644 मज्जति सत्यबुद्ध्या आसज्जते ॥ १३ ॥

नानातामखिलां त्यक्त्वा शुद्धचिन्मात्रकोटरे।
संवेद्येन विनिर्मुक्ते संवित्तत्त्वे स्थितो भव॥ १४॥

दृष्टान्ते उपपादितविकल्पत्यागप्रकारं दार्ष्टान्तिके उपदिशति - नानातामिति।
कोटरशब्द आन्तरप्रत्यग्वस्तुपरः॥ १४॥

स्वयमेवात्मनैवात्मा शक्तिं संकल्पनामिकाम्।
यदा करोति स्फुरता स्पन्दशक्तिमिवानिलः॥ १५॥

स्फुरता स्वप्रकाशेनात्मनैव संकल्पनामिकां शक्तिं यदा करोति तदा मनो
भवतीति परेणान्वयः॥ १५॥

तदा पृथगिवाभासं संकल्पकलनामयम्।
मनो भवति विश्वात्मा भावयन्स्वाकृतिं स्वयम्॥ १६॥

विश्वाकारां स्वाकृतिं भावयन् विश्वात्मा समष्टिमनो भवति॥ १६॥

तत्संकल्पात्मकं चेतो यथेदमखिलं जगत्।
संकल्पयति संकल्पैस्तथैव भवति क्षणात्॥ १७॥

तद्विश्वाकारसंकल्पात्मकं समष्टिचेतो हिरण्यगर्भात्मकम्॥ १७॥

कीटत्वमब्जजत्वं च मेरुत्वं मरुतां तथा।
मनो जीवमहंकारबुद्धिचित्तादिनामकम्॥ १८॥

यथा यथा भावयति तदवयुत्य प्रपञ्चयति - कीटत्वमिति॥ १८॥

संकल्पतो द्वितैकत्वमेत्य चेतो जगत्स्थितिम्।
तनोति तस्यां तदनु नानातां गच्छति स्वयम्॥ १९॥

संकल्पमयमेवेदं जगदाभोगि दृश्यते।
न सत्यं न च मिथ्यैव स्वप्नजालमिवोत्थितम्॥ २०॥

मिथ्याशब्दोऽलीकपरः। स्वप्नजालमिवानिर्वचनीयमित्यर्थः॥ २०॥

जन्तोर्यथा मनोराज्यं विविधारम्भभासुरम्।
ब्राह्मं तथेदं विततं मनोराज्यंन् विराजते॥ २१॥

ब्रह्मणो हिरण्यगर्भस्येदं ब्राह्मम्॥ २१॥

यथाभूतार्थभावित्वात्तदेतत्प्रविलीयते।
परमार्थेन दृष्टं चेत्तदिदं नैव किंचन॥ २२॥

मिथ्यात्वादेव तत्त्वज्ञानेन यथास्थितब्रह्मात्मनैव भावित्वान्मायिकरूपेण
प्रविलीयत इत्याह - यथाभूतेति। तथा च श्रुतिः मनसैवेदमाप्तव्यं नेह
नानास्ति किंचन इति॥ २२॥

दृश्यं त्वपरमार्थेन प्रयाति शतशाखताम्।
जलमूर्तितरङ्गादिकलनार्हं परिस्फुरन्॥ २३॥

तत्त्वदर्शनाभावे तर्हि किं भवति तदाह - दृश्यमिति। तदा

124697 अज्ञातपरमार्थबलेनैव शतशाखतां प्रयाति। यथा अम्बुधिर्जलमेव सन्
124698 ऊर्मितरङ्गादिकलनार्हं रूपं परिगृह्य स्फुरन् अम्बुधिवपुर्धत्ते तथा
124699 कर्मसहस्राणि कुर्वन् जनोऽपि अणुचितश्चिदाभासयुक्तस्य मनसः स्पन्दनाद्दते
124700 कूटस्थचितोऽपूर्वं किंदिचपि विकारादि न कुरुते। अतस्त्वमपि किंचित्तुच्छतरं भेदं
124701 त्यजन् सन् गमनादिसर्वव्यवहारं कुर्वन्नप्यपूर्वमभिनवं जगद्रूपं
124702 किंचिद्द्वैतरूपं सत्यं न विद्यते किंतु पूर्वसिद्धं ब्रह्मैव परमार्थसत्यं
124703 विद्यत इति भावयेति चतुर्थार्धपर्यन्तमन्वयः॥ २३॥
124704
124705 यथाम्बुधिर्वपुर्धत्ते स्वभावेन तथा चितः।
124706 कुर्वन्कर्मसहस्राणि ह्यणुचित्स्पन्दनाद्दते॥ २४॥
124707
124708 नापूर्वं कुरुते किंचित्किंचिद्भेदमतस्त्यजन्।
124709 गच्छन्शृण्वन्स्पृशन्जिघ्रन्वदन्व्यवहरन्स्वपन्॥ २५॥
124710
124711 नापूर्वं विद्यते किंचित्सत्यमित्येव भावयन्।
124712 यद्यत्करोषि तद्विद्धि चिन्मात्रममलं ततम्॥ २६॥
124713
124714 ब्रह्म प्रबृंहिताकारं तस्मादन्यन्न विद्यते।
124715 पदार्थजाते सर्वस्मिन्संवित्सारमये स्थिते॥ २७॥
124716
124717 प्रबृंहिताकारं विवर्तविजृम्भिताकारं तद्बाधविजृम्भिताकारं वा। ब्रह्म
124718 स्वभावमुक्तं प्रतीचि पर्यवसाययति - पदार्थेत्यादिना॥ २७॥
124719
124720 संविदेवेदमखिलं जगन्नान्यास्ति कल्पना।
124721 संवित्स्फुरणमात्रेऽस्मिञ्जगज्जालकनामनि॥ २८॥
124722
124723 इदमन्यदिदं चान्यदिति मिथ्याग्रहः कुतः।
124724 संभवादखिलाकारेष्वेकस्या एव संविदः।
124725 संवेद्यमपि नास्त्येव बन्धमोक्षावतः कथम्॥ २९॥
124726
124727 संवेद्य अपिशब्दात्तन्निदानमपि॥ २९॥
124728
124729 मोक्षोऽयमेष खलु बन्ध इति प्रसह्य चिन्तां निरस्य सकलां विफलाभिमानाम्।
124730 मौनी वशी विगतमानमदो महात्मा कुर्वन्स्वकार्यमनहंकृतिरेव तिष्ठ॥
124731 ३०॥
124732
124733 हे राम अयं मोक्ष एष बन्ध इत्यादिकां विफलाभिमानां सकलां चिन्तां प्रसह्य
124734 सर्वयत्नेन निरस्य वागादिसर्वेन्द्रियजयान्मौनी वशी विगतमानमदश्च सन् स्वोचितं
124735 राज्यादिकार्यं कुर्वन्ननहंकृतिर्महात्मैव भूत्वा तिष्ठेत्यर्थः॥ ३०॥
124736
124737 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मोक्षोपायेषु निर्वाणप्रकरणे पू०
124738 परमार्थोपदेशो नाम चतुर्दशाधिकशततमः सर्गः॥ ११४॥
124739
124740 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
124741 परमार्थोपदेशो नाम चतुर्दशोत्तरशततमः सर्गः॥ ११४॥
124742
124743 पञ्चदशाधिकशततमः सर्गः ११५
124744
124745 श्रीवसिष्ठ उवाच।
124746
124747 महाकर्ता महाभोक्ता महात्यागी भवानघ।
124748 सर्वाः शङ्काः परित्यज्य धैर्यमालम्ब्य शाश्वतम्॥ १॥

महाकर्त्रादिशब्दानां व्याख्याभिरिह शंभुना।
लक्ष्माणि जीवन्मुक्तानां वर्ण्यन्ते भृङ्गिणेऽर्थिने॥

सर्वाः पुण्यापादिशङ्काः परित्यज्य धैर्यं निर्भयंन् कूटस्थात्मभाव्यम्॥१॥

श्रीराम उवाच।

किमुच्यते महाकर्ता महात्यागी किमुच्यते।
किमुच्यते महाभोक्ता सम्यक्कथय मे प्रभो॥२॥

किंलक्षणं प्राप्तो महाकर्ता उच्यते इति त्रिष्वपि॥२॥

श्रीवसिष्ठ उवाच।

एतद्व्रतत्रयं राम पुरा चन्द्रार्धमौलिना।
भृङ्गीशाय तु संप्रोक्तं येनासौ विज्वरः स्थितः॥३॥

अभ्यासकालमपेक्ष्य व्रतत्रयमित्युच्यते फलकाले त्वमानित्वादिकमिवेदं
लक्षणत्रयं संपद्यते। असौ भृङ्गीशः॥३॥

सुमेरावुत्तरे शृङ्गे पूर्वं शशिकलाधरः।
अतिष्ठदग्निसंकाशे समग्रपरिवारवान्॥४॥

तमपृच्छन्महातेजास्तनुविज्ञानवान्स्थितः।
भृङ्गीशः प्रणतो राम बद्धाञ्जलिरुमापतिम्॥५॥

तनुविज्ञानवान् मन्दात्मज्ञानः। यद्यपि गाणपत्यप्राप्तिकाल एव सार्वज्ञ्यं तेन
प्राप्तमस्ति तथाप्यात्मज्ञानस्यानितरज्ञानसाधारण्याय भोगासक्त्या
मान्द्यमारोप्योक्तिः॥५॥

भृङ्गीश उवाच।

भगवन्देवदेवेश सर्वज्ञ परमेश्वर।
यदहं परिपृच्छामि कृपया तद्वदाशु मे॥६॥

संसाररचनां नाथ तरङ्गतरलामिमाम्।
अवलोक्य विमुह्यामि तत्त्वविश्रान्तिवर्जितः॥७॥

तरङ्गतरलां नश्वरीम्। ज्ञातेऽपि तत्त्वे भोगासक्त्या विश्रान्तिवर्जितः॥७॥

कमन्तर्निश्चयं कान्तमुररीकृत्य सुस्थितम्।
अस्मिञ्जगज्जीर्णगृहे तिष्ठामि विगतज्वरम्॥८॥

कान्तं विश्रान्तिसुखरम्यम्। तिष्ठामि तिष्ठेयम्॥८॥

ईश्वर उवाच।

सर्वाः शङ्काः परित्यज्य धैर्यमालम्ब्य शाश्वतम्।
महाभोक्ता महाकर्ता महात्यागी भवानघ॥९॥

भृङ्गीश उवाच।

किमुच्यते महाकर्ता महाभोक्ता किमुच्यते।
किमुच्यते महात्यागी सम्यक्कथय मे प्रभो॥ १०॥


ईश्वर उवाच।

धर्माधर्मौ महाभाग शङ्काविरहिताक्षयः।
यः करोति यथाप्राप्तौ महाकर्ता स उच्यते॥ ११॥

तत्र सर्वाः शङ्काः परित्यज्य इत्यंशं विवृणोति - धर्माधर्माविति।
अकर्त्रभोक्त्रात्मनिश्चयात् कर्तृत्वादिशङ्काविरहिताकृतिः। हत्वापि स इमाँल्लोकान्
इतिवज्ज्ञानप्रभावोक्तिरियं न तु यथेष्टाचरणाभ्यनुज्ञेति बोध्यम्॥ ११॥

रागद्वेषौ सुखं दुःखं धर्माधर्मौ फलाफले।
यः करोत्यनपेक्षेण महाकर्ता स उच्यते॥ १२॥

रागद्वेषादिपदैस्तद्व्यञ्जकचेष्टा उच्यन्ते। फलाफले इष्टानिष्टे योऽनपेक्षेण
निष्कामेन मनसा लोकसंग्रहमात्रप्रयोजनेन करोति॥ १२॥

मौनवान्निरहंभावो निर्मलो मुक्तमत्सरः।
यः करोति गतोद्वेगं महाकर्ता स उच्यते॥ १३॥

मौनं मुनिकर्म मननयोगादि। गत उद्वेगः फलासिद्ध्यन्यथात्वप्रयुक्त उद्वेगो
यस्मिन्कर्मणि॥ १३॥

शुभाशुभेषु कार्येषु धर्माधर्मैः कुशङ्कया।
मतिर्न लिप्यते यस्य महाकर्ता स उच्यते॥ १४॥

दैवात्संपन्नेष्वश्वमेधकलञ्जभक्षणादिकार्येषु धार्मिकोऽहं पापोऽहमिति वा
कुशङ्कया कल्पितैर्धर्माधर्मैः॥ १४॥

सर्वत्र विगतस्नेहो यः साक्षिवदवस्थितः।
निरिच्छं वर्तते कार्ये महाकर्ता स उच्यते॥ १५॥

उद्वेगानन्दरहितः समया स्वच्छया धिया।
न शोचते यो नोदेति महाकर्ता स उच्यते॥ १६॥

शोकनिमित्तेषु न शोचते उदयनिमित्तेषु च नोदेति॥ १६॥

यथार्थकाले मतिमानसंसक्तमना मुनिः।
कार्यानुरूपवृत्तस्थो महाकर्ता स उच्यते॥ १७॥

प्रारब्धोपनीतयथोचितप्रयोजनकाले
कार्यानुरूपवृत्तस्थस्तत्प्रयोजनानुकूलचेष्टावान्॥ १७॥

उदासीनः कर्तृतां च कर्माकर्माचरंश्च यः।
समं यात्यन्तरत्यन्तं महाकर्ता स उच्यते॥ १८॥

कर्माकर्म विहितनिषिद्धकर्मणी स्वयं दैवाच्चरंस्तत्कर्तृतामन्यप्रेरणेन
हेतुकर्तृतामापद्यमानश्चान्तर्मनस्यकर्त्रात्मदृढनिश्चयेनोभयत्र यः
समं भावं याति॥ १८॥

स्वभावेनैव यः शान्तः समतां न जहाति वै।
शुभाशुभं ह्याचरन्यो महाकर्ता स उच्यते॥ १९॥

यो मित्रेषु शुभममित्रेष्वशुभमाचरन्नपि समतां न जहाति। हि यस्माद्धेतोर्यः
स्वभावेनैव शान्तः। न ह्यस्य चन्द्राह्लादकतासदृशः स्वभावोऽन्यथा
भवतीत्यर्थः॥ १९॥

जन्मस्थितिविनाशेषु सोदयास्तमयेषु च।
सममेव मनो यस्य महाकर्ता स उच्यते॥ २०॥

जन्मादिषु पञ्चसु भावविकारेषु उदयो वृद्धिरस्तमयोऽपक्षयस्तत्सहितेषु शरीरेषु
निर्विकारसन्मात्रात्मदर्शनात्सममेव मनो यस्य॥ २०॥

न किंचन द्वेष्टि तथा न किंचिदभिकाङ्क्षति।
भुङ्क्ते च प्रकृतं सर्वं महाभोक्ता स उच्यते॥ २१॥

महाभोक्तुर्लक्षणान्याह - न किंचिदित्यादिना। प्रकृतं प्रस्तुतं
प्रारब्धोपनीतम्॥ २१॥

नादत्तेऽप्याददानश्च नाचरत्याचरन्नपि।
भुञ्जानोऽपि न यो भुङ्क्ते महाभोक्ता स उच्यते॥ २२॥

इन्द्रियैर्विषयानाददानोऽप्यद्वयासङ्गपूर्णात्मप्रतिष्ठत्वान्नादत्ते। हस्तपादादिना
आदानगमनाद्याचरन्नपि निष्क्रियात्मबुद्ध्या नाचरति।
एवमशनायाद्यतीतन्नित्यतृप्तात्मदर्शनान्नभुङ्क्ते॥ २२॥

साक्षिवत्सकलं लोकव्यवहारमखिन्नधीः।
पश्यत्यपगतेच्छं यो महाभोक्ता स उच्यते॥ २३॥

उदासीनः साक्षाद्द्रष्टा साक्षी तद्वत्॥ २३॥

सुखैर्दुःखैः क्रियायोगैर्भावाभावैर्भ्रमप्रदैः।
यस्य नोत्क्रामति मतिर्महाभोक्ता स उच्यते॥ २४॥

जयापजयादिक्रियायोगैः। भावाभावैर्लाभव्ययैः। भ्रमा विक्षेपास्तत्प्रदैः।
नोत्क्रामति न विक्षिपति॥ २४॥

जरा मरणमापच्च राज्यं दारिद्यमेव च।
रम्यमित्येव यो वेत्ति महाभोक्ता स उच्यते॥ २५॥

रम्यं ब्रह्मदृष्ट्या रम्यम्। यथा स्वर्णमयो व्याघ्रो रम्यस्वर्णदृष्ट्या
रम्यस्तथेति भावः॥ २५॥

महान्ति सुखदुःखानि यः पयांसीव सागरः।
समं समुपगृह्णाति महाभोक्ता स उच्यते॥ २६॥

समं तुल्यवृत्त्या भोगाय समुपगृह्णाति॥ २६॥

अहिंसा समता तुष्टिश्चन्द्रबिम्बादिवांशवः।
नोप यस्माच्चोपयाता महाभोक्ता स उच्यते॥ २७॥

124905 यस्मादुपयाता नोपयाताः | चकारः प्रागुक्तगुणकदम्बसमुच्चयार्थः || २७ ||
124906
124907 कट्वम्ललवणं तिक्तममृष्टं मृष्टमुत्तमम् |
124908 अधमं योऽत्ति साम्येन महाभोक्ता स उच्यते || २८ ||
124909
124910 अधमं अस्वादु निकृष्टमप्यन्नम् || २८ ||
124911
124912 सरसं नीरसं चैव सुरतं विरतं तथा |
124913 यः पश्यति समं सौम्यो महाभोक्ता स उच्यते || २९ ||
124914
124915 विरतं रतिविघातम् || २९ ||
124916
124917 क्षारे खण्डप्रकारे च शुभे वाप्यशुभे तथा |
124918 समता सुस्थिरा यस्य महाभोक्ता स उच्यते || ३० ||
124919
124920 खण्डप्रकारे शर्करापरिष्कृतभक्ष्यभेदे || ३० ||
124921
124922 इदं भोज्यमभोज्यंन् चेत्येवं त्यक्त्वा विकल्पितम् |
124923 गताभिलाषं यो भुङ्क्ते महाभोक्ता स उच्यते || ३१ ||
124924
124925 अभोज्यंन् भोक्तुमशक्यम् अस्वादुतिक्तादि | विकल्पितं विकल्पनम् || ३१ ||
124926
124927 आपदं संपदं मोहमानन्दमपरं परम् |
124928 यो भुङ्क्ते समया बुद्ध्या महाभोक्ता स उच्यते || ३२ ||
124929
124930 अपरममृष्टं कोद्रवान्नकदाच्छादनादि | परं उत्कृष्टं
124931 दिव्यान्नाच्छादनादि || ३२ ||
124932
124933 धर्माधर्मौ सुखं दुःखं तथा मरणजन्मनी |
124934 धिया येनेति संत्यक्तं महात्यागी स उच्यते || ३३ ||
124935
124936 इति प्रागुक्तलक्षणया | धिया निरतिशयानन्दपूर्णाद्वयात्मधियामिथ्येति संत्यक्तमिति
124937 वा || ३३ ||
124938
124939 सर्वेच्छाः सकलाः शङ्काः सर्वेहाः सर्वनिश्चयाः |
124940 धिया येन परित्यक्ता महात्यागी स उच्यते || ३४ ||
124941
124942 सर्वा ईहा वाङ्मनःकाय | चेष्टाः | धिया विषयबाधादेव परितस्त्यक्ताः || ३४ ||
124943
124944 देहस्य मनसो दुःखैरिन्द्रियाणां मनःस्थितेः |
124945 नूनं येनोज्झिता सत्ता महात्यागी स उच्यते || ३५ ||
124946
124947 देहादीनां सत्ता तत्तद्दुःखैः सह येन मिथ्यात्वबुद्ध्या उज्झिता त्यक्ता || ३५ ||
124948
124949 न मे देहो न जन्मापि युक्तायुक्ते न कर्मणी |
124950 इति निश्चयवानन्तर्महात्यागी स उच्यते || ३६ ||
124951
124952 युक्तायुक्ते विहितनिषिद्धे इष्टानिष्टाचरणरूपे वा || ३६ ||
124953
124954 येन धर्ममधर्मं च मनोमननमीहितम् |
124955 सर्वमन्तः परित्यक्तं महात्यागी स उच्यते || ३७ ||
124956

124957 धर्ममधर्मं च शारीरम् | मनोमननं मानसम् | ईहितं वागादि चेष्टितम् || ३७ ||
124958
124959 यावती दृश्यकलना सकलेयं विलोक्यते |
124960 सा येन सुष्ठु संत्यक्ता महात्यागी स उच्यते || ३८ ||
124961
124962 सुष्ठु सम्यग्दर्शनेन बाधात्संत्यक्ता || ३८ ||
124963
124964 इत्युक्तं देवदेवेन भृङ्गीशाय पुनानघ |
124965 एतां दृष्टिमवष्टभ्य तिष्ठ राम गतज्वरः || ३९ ||
124966
124967 उपसंहरति - इतीति || ३९ ||
124968
124969 नित्योदितं विमलरूपमनन्तमाद्यं ब्रह्मास्ति नेतरकलाकलनं हि किंचित् |
124970 इत्येव भावय निरञ्जनतामुपेतो निर्वाणमेहि सकलामलशान्तवृत्तिः || ४० ||
124971
124972 यया भावनया महाकर्ता च महाभोक्ता महात्यागी वाऽनायासेन भवति तां
124973 भावनां रामायोपदिशति - न्नित्योदितमिति | हे राम त्वं
124974 देहादिपञ्चकोशानामवस्थात्रयस्य च निरासेन निरञ्जनतामुपेतः सन् परिशिष्टं
124975 नित्योदितं विमलात्मरूपं ब्रह्मैवास्ति किंचित्तदितरकल्पनाकलनं नास्तीत्येव
124976 भावय | एवं सदा भावयंस्तद्भावाभिव्यक्त्या कलनामलेभ्यः शान्ता वृत्तयो
124977 यस्य तथाविधः सन्निर्वाणमेहि प्राप्नुहीत्यर्थः || ४० ||
124978
124979 अनामयं ब्रह्म समस्तकल्प कार्यैकबीजं परमात्मरूपम् |
124980 बृहच्च तद्बृंहितसर्वभावं खमस्ति भातीह यदङ्ग कि।चित् || ४१ ||
124981
124982 हे अङ्ग इह संसारे यत्किंचिद्भाति तत्समस्तेषु कल्पेषु द्विपरार्धावधिकालावयवेषु
124983 प्रसिद्धानां सर्वकार्याणामेकबीजं मूलकारणभूतमनामयं स्वयंन्
124984 जन्मादिविकारामयशून्यं परमात्मरूपं ब्रह्मैव | तच्च
124985 बृहत्सर्गभेदैर्बृंहितसर्वभावविकल्पमपि खमाकाशमेवास्ति |
124986 सर्वविकल्पशून्यमेवेत्यर्थः || ४१ ||
124987
124988 अन्यत्क्वचित्किंचिदिदं कदाचिन्न संभवत्येव सदप्यसच्च |
124989 इत्येव साधो दृढनिश्चयोऽन्तः स्थित्वा गताशङ्कविलासमास्स्व || ४२ ||
124990
124991 यतः क्वचित्किंचिदपि सत् स्थूलमसत् सूक्ष्मं अपिशब्दात्कारणं च
124992 सदेकरसाद्ब्रह्मणोऽन्यन्न संभवत्येव | सतः पृथक्त्वे असत्त्वापत्तेः अपृथक्त्वे
124993 सदैकरस्यापत्तेः प्रकारान्तरस्य च संभावनायोगादिति भावः | हे साधो अतस्त्वं
124994 सद्ब्रह्मैवाहमित्येवान्तर्दृढनिश्चयः सन् प्रथमं समाध्यभ्यासबलेन
124995 स्थित्वा सप्तमभूमिकां क्रमेणाधिरुह्य गताशङ्कविलासं तथैवास्स्वेत्यर्थः ||
124996 ४२ ||
124997
124998 अन्तर्मुखः सन्सततं समस्तं कुर्वन्बहिष्ठं खलु कार्यजातम् |
124999 न खेदमायासि कदाचिदेव निराकृताहंकृतितामुपैषि || ४३ ||
125000
125001 हे साधो त्वं यदि अन्तर्मुखः सन्निराकृताहंकृतितामुपैषि सदा बहिष्ठं
125002 समस्तं कार्यजातं कुर्वन्नपि कदाचिदपि खेदं नायास्येवेत्यन्वयः || ४३ ||
125003
125004 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वाणप्रकरणे पू०
125005 व्रतत्रयनिरूपणं नाम पञ्चदशाधिकशततमः सर्गः || ११५ ||
125006
125007 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
125008 व्रतत्रयनिरूपणं नाम पञ्चदशोत्तरशततमः सर्गः || ११५ ||

षोडशाधिकशततमः सर्गः ११६

श्रीराम उवाच।

भगवन्सर्वधर्मज्ञ चित्तेऽहंकारनामनि।
गलिते वा गलद्रूपे लिङ्गं सत्त्वस्य किं भवेत्॥ १॥

चित्तस्य गलतो नित्यं चतुर्थादिषु भूमिषु।
गलितस्य च लक्ष्माणि वर्ण्यन्तेऽत्र पुमाश्रयात्॥

सत्त्वस्य क्षीणवासनस्य मनसो लिङ्गं लक्षणम्॥ १॥

श्रीवसिष्ठ उवाच।

बलादपि हि संजाता न लिम्पन्त्याशयं सितम्।
लोभमोहादयो दोषाः पयांसीव सरोरुहम्॥ २॥

एवं पृष्टो वसिष्ठः प्रथमं लोभमोहादिदोषक्षय एव मुख्यं
तल्लक्षणमित्याह - बलादिति। संजाताः संजनिताः। परीक्षाद्यर्थं परेण
बलादपि संपादिता इत्यर्थः। सितं शुद्धं शुभ्रं च॥ २॥

मुदिताद्याः श्रियो वक्त्रं न मुञ्चन्ति कदाचन।
गलत्यहंकारमये चित्ते गलति दुष्कृते॥ ३॥

सदा मुखप्रसन्नतादिरपि तल्लक्षणमित्याह - मुदिताद्या इति। दुष्कृते
विषादहेतौ पापे ज्ञानाग्निना गलति सति॥ ३॥

वासनाग्रन्थयश्छिन्ना इव त्रुट्यन्त्यलं शनैः।
कोपस्तानवमायाति मोहो मान्द्यं हि गच्छति॥ ४॥

उक्तं प्रपञ्चयन् लक्षणान्तराण्यप्याह - वासनेत्यादिना॥ ४॥

कामः क्लमं गच्छति च लोभः क्वापि पलायते।
नोल्लसन्तीन्द्रियाण्युच्चैः खेदः स्फुरति नोच्चकैः॥ ५॥

न दुःकान्यपबृंहन्ति न वल्गन्ति सुखानि च।
सर्वत्र समतोदेति हृदि शैत्यप्रदायिनी॥ ६॥

शैत्यं तापनिवृत्तिस्तत्प्रदायिनी॥ ६॥

सुखदुःखादयस्त्वेते दृश्यन्ते यदि वा मुखे।
दृश्यन्त एव तुच्छत्वान्नानुलिम्पन्ति ते मनः॥ ७॥

ननु ज्ञानिनामपि कदाचिन्मुखे सुखदुःखादिलिङ्गानि प्रसादमालिन्यादीनि
दृश्यन्ते यथा प्राक्कुम्भस्य दुर्वासःशापश्रवणे शिखिध्वजस्य यथा वा
विश्वामित्रेण हरिश्चन्द्रच्छलने पुत्रघातेन च वसिष्ठस्य। तत्कथं मुदिताद्याः
श्रियो वक्त्रं न मुञ्चन्तीति लक्षणं घटते तत्राह - सुखदुःखादय इति।
भोजकप्रारब्धप्राबल्येन दुःखतल्लिङ्गमालिन्याभासयोः
कदाचिदुदयेऽप्युत्तरक्षणे मिथ्यात्वबुद्धिबाधितत्वान्न तयोस्तच्चित्तलेपकत्वमिति न
स्वाभाविकसुखादिप्रसादविघात इत्यर्थः॥ ७॥

125061 चित्ते गलति गीर्वाणगणस्य स्पृहणीयताम् ।
125062 साधुर्गच्छत्युदेत्यस्य समता शीतचन्द्रिका ॥ ८ ॥
125063
125064 उपशान्तं च कान्तं च सेव्यमप्रतिरोधि च ।
125065 निभृतं चोर्जितं स्वच्छं वहतीत्थं महद्वपुः ॥ ९ ॥
125066
125067 अप्रतिरोधि परेष्टाविघाति । निभृतं विनीतम् ॥ ९ ॥
125068
125069 भावाभावविरुद्धोऽपि विचित्रोऽपि महानपि ।
125070 नानन्दाय न खेदाय सतां संसृतिविभ्रमः ॥ १० ॥
125071
125072 भावैर्विभवैरभावैर्दारिद्यैर्विरुद्धो विषमोऽपि । सतां गलिताहंकाराणाम् ॥ १० ॥
125073
125074 बुद्ध्यालोकेन साध्येऽस्मिन्वस्तुन्यस्तमितापदि ।
125075 प्रवर्तते न यो मोहात्तं धिगस्तु नराधमम् ॥ ११ ॥
125076
125077 इदानीमात्मलाभस्यातिसुलभतां दर्शयंस्तदर्थमप्रवृत्तान्निन्दन्नुपसंहरति
125078 - बुद्ध्यालोकेनेति । बुद्धिलक्षणेनालोकेन प्रकाशेन । अथवा प्रत्यक्प्रवणया
125079 बुद्ध्या आलोकनमालोकस्तावन्मात्रेण साध्ये लभ्ये अस्तमिता आपदो यस्मिन् लब्धे सति
125080 तथाविधे परमात्मवस्तुनि यो न प्रवर्तते तं धिगस्त्वित्यर्थः ॥ ११ ॥
125081
125082 विश्रान्तिमाप्तुमुचितां चिरमङ्ग दुःखरत्नाकरं जननसागरमुत्तितीर्षोः ।
125083 कोऽहं कथं जगदिदं च परं च किं स्यात्किं भोगकैरिति मतिः
125084 परमोऽभ्युपायः ॥ १२ ॥
125085
125086 तत्प्रवृत्तौ तर्हि कः प्रथममुपाय इति चेद्विवेकवैराग्ये एवेत्याह - विश्रान्तिमिति ।
125087 हे अङ्ग दुःखरत्नानामाकरभूतं जननमरणोपलक्षितं
125088 संसारसागरमुत्तितीर्षोरुत्तरितुमिच्छोः पुरुषस्य तत्पारे निरतिशयानन्दात्मनि
125089 चिरमुचितां विश्रान्तिं प्राप्तुमहं क इदं जगच्च किं परमात्मतत्त्वं च किं
125090 कीदृशं स्यात् भोगकैस्तुच्छैश्च किं स्यादिति निरन्तराभ्यस्ता विचारवैराग्यात्मिका
125091 मतिरेव प्रथमोऽभिमत उपायोऽभ्युपायः । तस्मात्तमेवाश्रयेदित्यर्थः ॥ १२ ॥
125092
125093 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वाणप्रकरणे पू०
125094 गलितचित्तलक्षणकथनं नाम षोडशाधिकशततमः सर्गः ॥ ११६ ॥
125095
125096 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
125097 गलितचित्तलक्षणकथनं नाम षोडशोत्तरशततमः सर्गः ॥ ११६ ॥
125098
125099 सप्तदशाधिकशततमः सर्गः ११७
125100
125101 श्रीवसिष्ठ उवाच ।
125102
125103 भवतामादिपुरुष इक्ष्वाकुर्नाम भूपतिः ।
125104 इक्ष्वाकुवंऽसप्रभव यथा मुक्तस्तथा शृणु ॥ १ ॥
125105
125106 कोऽहं कथं जगदिति विचारेऽत्र निदर्शनम् ।
125107 इक्ष्वाकोर्मनुना प्रोक्तो विवेकः संप्रकीर्त्यते ॥
125108
125109 आदिपुरुषो मूलपुरुषो यथा । यादृशविचारेण मुक्तः प्रागुक्तपदे विश्रान्तस्तथा
125110 तं विचारं शृण्वित्यर्थः ॥ १ ॥
125111
125112 इक्ष्वाकुर्नाम भूपालः स्वराज्यं परिपालयन् ।

125113 कदाचिदेकान्तगतो मनसा समचिन्तयत् ॥ २ ॥
125114

125115 जरामरणसंक्षोभसुखदुःखभ्रमस्थितेः ।
125116 अस्य दृश्यप्रपञ्चस्य को हेतुः स्यादिति स्वयम् ॥ ३ ॥
125117

125118 इति स्वयंन् समचिन्तयदिति पूर्वेणान्वयः ॥ ३ ॥
125119

125120 जगतो न विवेदासौ कारणं चिन्तयन्नपि ।
125121 अथैकदा पृच्छदसौ ब्रह्मलोकागतं मनुम् ॥ ४ ॥
125122

125123 न विवेद विवेकेन वेद । ब्रह्मलोकादगतं मनुं स्वपितरम् ॥ ४ ॥
125124

125125 पूजितं स्वसभासंस्थं भगवन्तं प्रजापतिम् ।
125126

125127 इक्ष्वाकुरुवाच ।
125128

125129 मां योजयति धार्ष्ट्येन भगवन्करुणानिधे ॥ ५ ॥
125130

125131 तत्र प्रथमं मनुं प्रार्थनयाभिमुखीकरोति - मामिति ॥ ५ ॥
125132

125133 भवत्प्रसाद एवायं भवन्तं प्रष्टुमञ्जसा ।
125134 कुतः सर्गोऽयमायातः स्वरूपं चास्य कीदृशम् ॥ ६ ॥
125135

125136 प्रष्टव्यांशं दर्शयति - कुत इत्यादिना ॥ ६ ॥
125137

125138 कियदेतज्जगत्कस्य कदा केनेति कथ्यते ।
125139 अहं कथं च विषमादस्मात्संसृतिविभ्रमात् ॥ ७ ॥
125140

125141 संख्यया परिमाणतश्च कियत् । कस्य भोक्तुः स्वामिनश्च । कदा केन रचितमिति
125142 श्रुत्यादिभिः कथ्यते । अनेन
125143 श्रुत्यादिप्रमाणमूलमुपदेशपरंपरासंप्रदायागतमेव त्वया वाच्यं न तु
125144 तर्केण किंचित्कल्पयित्वेति सूचितम् ॥ ७ ॥
125145

125146 विमुच्येय घनास्तीर्णाज्जालादिव विहंगमः ।
125147

125148 मनुरुवाच ।
125149

125150 अहो नु चिरकालेन विवेके सुविकासिनि ॥ ८ ॥
125151

125152 विमुच्येयेति कर्मकर्तरि यक्तङौ ॥ ८ ॥
125153

125154 वितथानर्थविच्छेत्ता सारः प्रश्नस्त्वया कृतः ।
125155 यदिदं दृश्यते किंचित्तन्नास्ति नृप किंचन ॥ ९ ॥
125156

125157 तत्र तत्त्वोपदेशयोगित्वात्स्वरूपं चास्य कीदृशमिति प्रश्नस्य प्रथममुत्तरमाह
125158 - यदिदमिति । तथा च मिथ्या जगतः असत्स्वरूपमसदेवेति भावः ॥ ९ ॥
125159

125160 यथा गन्धर्वनगरं यथा वारि मरुस्थले ।
125161 यत्तु नो दृश्यते किंचित्तन्न किंचिदिव स्थितम् ॥ १० ॥
125162

125163 ननु सांख्या उपादाने परमसूक्ष्मतया स्थितमेव कार्यं निमित्तैराविर्भाव्यते
125164 इत्याहुः । वेदान्तिनस्तु सद्ब्रह्मैव जगदात्मना सर्गे संपद्यत इति । तत्कथं

125165 तन्नास्तीत्युच्यते तत्राहं प्रत्याह - यत्त्विति | साक्षिणा इन्द्रियैर्वा यन्नो दृश्यते
125166 तत्किंचिदपि स्वोपादाने न स्थितं प्रमाणाभावादित्यर्थः || १० ||
125167
125168 मनःषष्ठेन्द्रियातीतं यत्स्यादपि न किंचन |
125169 अविनाशं तदस्तीह तत्सदात्मेति कथ्यते || ११ ||
125170
125171 स्यादपि न | संभावनाप्यस्य यतो नास्तीत्यर्थः | द्वितीयं प्रत्याह - अविनाशमिति ||
125172 ११ ||
125173
125174 इयं तु सर्वदृश्याढ्या राजन्सर्गपरंपरा |
125175 तस्मिन्नेव महादर्शे प्रतिबिम्बमुपागता || १२ ||
125176
125177 प्रतिबिम्बमिति | तथा चादर्शसत्तायाः प्रतिबिम्बेष्विव
125178 संसर्गाध्यासाद्ब्रह्मसत्तानुविद्धं जगदस्तु नाम तथापि स्वतः सत्त्वं तस्य
125179 नास्त्येवेति तन्नास्तीत्युक्तिर्युक्तैवेति भावः || १२ ||
125180
125181 भाः स्वभावसमुत्पन्ना ब्रह्मस्फुरणशक्तयः |
125182 काश्चिद्ब्रह्माण्डतां यान्ति काश्चिद्गच्छन्ति भूतताम् || १३ ||
125183
125184 कस्तर्हि बहु स्यां प्रजायेय इति संकल्प्य ब्रह्मण एव
125185 जगज्जीवभावश्रुतेराशयस्तत्राह - भाः स्वभावेति |
125186 स्फुरणशक्तयश्चिदाभासः | ब्रह्माण्डतां स्थूलसमष्ट्यभिमानेन तद्रूपताम् |
125187 भूततां पृथिव्याद्यभिमानेन तद्रूपताम् || १३ ||
125188
125189 अन्यास्त्वन्यत्वमायान्ति भवत्येवं जगत्स्थितिः |
125190 न बन्धोऽस्ति न मोक्षोऽस्ति ब्रह्मैवास्ति निरामयम् |
125191 नैक्यमस्ति न च द्वित्वं संवित्सारं विजृम्भते || १४ ||
125192
125193 अन्यत्वं चतुर्विधभूतग्रामताम् | तथा मिथ्योपाधिषु भ्रान्त्या चिदाभासानां
125194 बन्धादिकल्पना न वस्तुतस्तत्प्रसक्तिरित्याह - न बन्धोऽस्तीति || १४ ||
125195
125196 एकं यथा स्फुरति वारि तरङ्गभङ्गैरेवं परिस्फुरति चिन्न च किंचिदेव |
125197 त्वं बन्धमोक्षकलने प्रविमुच्य दूरे स्वस्थो ब्भवाऽभवभयोऽभयसार एव
125198 || १५ ||
125199
125200 उक्तं द्वितीयप्रश्नोत्तरमुपसंहरति - एकमिति | यथा एकं वारि तरङ्गभेदैः
125201 परिस्फुरति एवं चिदपि जगद्भेदैः परिस्फुरति मायामात्रत्वात्तच्च न किंचिदेव
125202 अतस्त्वं बन्धमोक्षभ्रमौ दूरे प्रविमुच्य न विद्यते भवभयं यस्य तथाविधः
125203 सन्नभयब्रह्मसार एव भवेत्यर्थः || १५ ||
125204
125205 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वाणप्रकरणे पू०
125206 इक्ष्वाकुमनुसंवादे सप्तदशाधिकशततमः सर्गः || ११७ ||
125207
125208 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
125209 इक्ष्वाकुमनुसंवादो नाम सप्तदशोत्तरशततमः सर्गः || ११७ ||
125210
125211 अष्टादशाधिकशततमः सर्गः ११८
125212
125213 मनुरुवाच |
125214
125215 संकल्पोन्मुखतां याताः सत्यश्चिन्मात्रसंविदः |
125216 आपस्तरङ्गत्वमिव यान्ति भूमिप जीवताम् || १ ||

कुतः सर्गः कदा कस्य केनेत्येषामिहोत्तरम् |
तथात्मदर्शनोपाया मनुनात्र प्रकीर्तिताः ||

तत्रादौ शुद्धसंविदो जीवभावे निमित्तमाह - संकल्पेति | चिन्मात्रस्य
शुद्धचैतन्यस्याविद्यायां तत्तत्संस्कारविचित्रायां प्रतिबिम्बरूपाः संविदः
संस्काराणामन्तःकरणतया परिणामे तदवच्छिन्नतया जीवतां यान्ति || १ ||

ते जीवाः संसरन्तीह संसारे पूर्वमुत्थिते |
सुखदुःखदशामोहो मनस्येवास्ति नात्मनि || २ ||

पूर्वमुत्थिते उपाधितया आविर्भूते संसारे समष्टिव्यष्टिमनसः कार्ये | एवं सति
यत्फलितं तदाह - सुखदुःखेति || २ ||

अदृश्यो दृश्यते राहुर्गृहीतेन यथेन्दुना |
तथानुभवमात्रात्मा दृश्येनात्मावलोक्यते || ३ ||

नन्वदृश्य आत्मा कथं दृश्ये मनसि संसारदुःखि तद्विमुक्तो वा अविवेके विवेके
वा दृश्यते तत्राह - अदृश्य इति | दृश्येनान्तःकरणेन
चरमसाक्षात्काररूपततपरिणामेन च निमित्तेन || ३ ||

न शास्त्रैर्नापि गुरुणा दृश्यते परमेश्वरः |
दृश्यते स्वात्मनैवात्मा स्वया सत्त्वस्थया धिया || ४ ||

सत्त्वस्थया निरहंममतावस्थया || ४ ||

पथिकाः पथि दृश्यन्ते रागद्वेषविमुक्तया |
यथा धिया तथवते द्रष्टव्याः स्वेन्द्रियादयः || ५ ||

निरहंममता देहेन्द्रियादिषु कथं द्रष्टव्येति दृष्टान्तेन स्पष्टयति -
पथिका इति || ५ ||

एतेषु नादरः कार्यः सता नैवावधीरणम् |
पदार्थमात्रताविष्टास्तिष्ठन्त्वेते यथासुखम् || ६ ||

अवधीरणमुपवासादिना पीडनम् || ६ ||

पदार्थमात्रं देहादि धिया संत्यज्य दूरतः |
आशीतलान्तःकरणो नित्यमात्ममयो भव || ७ ||

पदार्थमात्रं उदासीनपदार्थसाधारणं संत्यज्य आत्ममयः
शुद्धात्मदृष्ट्या तद्भावप्रचुरः || ७ ||

देहोऽहमिति या बुद्धिः सा संसारनिबन्धनी |
न कदाचिदियं बुद्धिरादेया हि मुमुक्षुभिः || ८ ||

नकिंचिन्मात्रचिन्मात्ररूपोऽस्मि गगनादणुः |
इति या शाश्वती बुद्धिः सा न संसारबन्धनी || ९ ||

न विद्यते किंचिन्मात्रमपि यत्र तथाविधंन् यच्चिन्मात्रं तद्रूपो गगनादप्यणुः
सूक्ष्मः | संसारबन्धनी न मुक्तिहेतुरिति यावत् || ९ ||

125269 यथा विमलतोयानां बहिरन्तश्च भावनम् |
125270 तेजस्तिष्ठति सर्वत्र तथात्मा सर्ववस्तुषु || १० ||
125271
125272 जडजगतोऽन्तर्बहिश्चासङ्गचित्प्रवेशेन स्फुरणेऽनुरूपं दृष्टान्तमाह -
125273 यथेति || १० ||
125274
125275 संनिवेशांशवैचित्र्यं यथा हेम्नोऽङ्गदादिता |
125276 आत्मनस्तदतद्रूपा तथैव जगदादिता || ११ ||
125277
125278 यथा अङ्गदाद्याकारता हेम्न एव सन्निवेशावयवविन्यासवैचित्र्यं तद्वदात्मनोऽपि
125279 जगत्तन्मूलमायारूपे इत्यर्थः || ११ ||
125280
125281 विनाशवाडवाक्रान्तं भीमं काममहार्णवम् |
125282 जगज्जालतरङ्गिण्यो यान्ति भूततरङ्गिकाः || १२ ||
125283
125284 आत्मनः कालार्णवागस्त्यतां रूपयितुं कालस्य
125285 जगन्नद्युपसंहारस्थानसमुद्रतामाह - विनाशेति | विनाश एव वाडवो
125286 वडवाग्निस्तेनाक्रान्तं विशिष्टम् | भूतानि प्राणिनिकायास्तरङ्गा यासाम् || १२ ||
125287
125288 तथाप्यद्याप्यपूर्णस्य यः पाता कालवारिधेः |
125289 तमात्मानं महागस्त्यं राजन्भावय सर्वदा || १३ ||
125290
125291 यथा सर्वजगज्जालभक्षणेऽप्यद्याप्यपूर्णस्यातृप्तस्य कालवारिधेर्यः पाता
125292 पानकर्ता || १३ ||
125293
125294 अनात्मन्यात्मतामस्मिन्देहादौ दृश्यजालके |
125295 त्यक्त्वा सत्त्वमुपारूढो गूढस्तिष्ठ यथासुखम् || १४ ||
125296
125297 सत्त्वं निर्वासनीभावम् || १४ ||
125298
125299 कुचकोटरसंसुप्तं विस्मृत्य जननी सुतम् |
125300 यथा रोदिति पुत्रार्थं तथात्मार्थमयं जनः || १५ ||
125301
125302 नित्यलब्धेऽप्यात्मन्यलब्धताभ्रान्त्या शोक इत्याह - कुचकोटरेति || १५ ||
125303
125304 अजरामरमात्मानमबुद्ध्वा परिरोदिति |
125305 हा हतोऽहमनाथोऽहं नष्टोऽस्मीति वपुर्व्यये || १६ ||
125306
125307 वपुर्व्यये देहनाशे || १६ ||
125308
125309 यथा वारि परिस्पन्दान्नानाकारं विलोक्यते |
125310 तथा संकल्पवशतश्चिद्ब्रह्म परिबृंहति || १७ ||
125311
125312 परितो बृंहति कार्यपरम्परया वर्धते || १७ ||
125313
125314 संस्थाप्य संकल्पकलङ्कमुक्तं चित्तं त्वमात्मन्युपशान्तकल्पः |
125315 स्पन्देऽप्यसंस्पन्दमिवेह तिष्ठ स्वस्थः सुखी राज्यमिदं प्रशाधि || १८ ||
125316
125317 हे पुत्र त्वं संकल्पकलङ्कैर्मुक्तं चित्तमात्मनि संस्थाप्य
125318 समूलसर्वसंसारोपशमे प्रारब्धभोगोपयोगितत्प्रतिभासावशेषादुपशान्तकल्पः
125319 सन् व्यवहाराय देहेन्द्रियादिस्पन्देऽपि तस्याभासमात्रत्वादसंस्पन्दं ब्रह्मेवेह
125320 व्यवहारभूमौ स्वस्थः सुखी तिष्ठ | इदं राज्यं च शाधि पालय | शासः

125321 शादेशस्याभीयत्वेनासिद्धत्वाद्धेर्धिः ॥ १८ ॥
125322
125323 इत्यार्षे श्रीवा०रामायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाणप्रकरणे पू०
125324 इक्ष्वाकुमनुसंवादेऽष्टादशाधिकशततमः सर्गः ॥ ११८ ॥
125325
125326 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे
125327 पूर्वार्धेऽष्टादशोत्तरशततमः सर्गः ॥ ११८ ॥
125328
125329 एकोनविंशाधिकशततमः सर्गः ११९
125330
125331 मनुरुवाच ।
125332
125333 सर्गात्मभिर्विभुः स्पन्दैः क्रीडते बालवत्स्वयम् ।
125334 संहारात्मकशक्त्याथ संहृत्यात्मनि तिष्ठति ॥ १ ॥
125335
125336 वर्ण्यते पुरुषस्यात्र स्वातन्त्र्यं मोक्षबन्धयोः ।
125337 विद्याविद्यात्मशक्तिभ्यां सत्यासत्यात्मनिश्चयात् ॥
125338
125339 स्पन्देऽप्यसंस्पन्दमिवेह तिष्ठ इत्युक्तं तत्र ब्रह्मा किमर्थं मायया स्पन्दते
125340 कथं चासंस्पन्दंन् तिष्ठतीतीक्ष्वाकोर्जिज्ञासां लिङ्गैरुपलक्ष्य मनुराह -
125341 सर्गात्मभिरिति । विभुरयं परमात्मा प्रसवधर्मिण्या अविद्याशक्त्या अविदुषः
125342 प्रतिसर्गात्मकैः स्पन्दैः क्रीडते । विदुषः प्रति तु तत्संहारात्मिकया विद्याशक्त्या
125343 समूलं सर्गं संहृत्य बाधितत्वात्कूटस्थाद्वये आत्मनि सदैव तिष्ठतीत्यर्थः ॥
125344 १ ॥
125345
125346 स्वयमस्य तथा शक्तिरुदेत्याबध्यते यया ।
125347 स्वयमस्य तथा शक्तिरुदेत्युन्मुच्यते यया ॥ २ ॥
125348
125349 तत्र रागात्प्रवृत्तस्य सर्गशक्त्युदय इव वैराग्यान्निवृत्तस्य संहारशक्त्युदयोऽपि
125350 स्वरसत एव भवतीत्याह - स्वयमिति ॥ २ ॥
125351
125352 चन्द्रार्कवह्नितप्तायोरत्नादीनां यथार्चिषः ।
125353 यथा पत्रादि वृक्षाणां निर्झराणां यथा कणाः ॥ ३ ॥
125354
125355 तत्र ज्ञातात्मनि जीवजगत्साधारणसत्तासामान्यात्मना विभाव्यमाने
125356 तद्विशेषात्मकबाह्याध्यात्मिकपदार्थजालकल्पने दृष्टान्तानाह - चन्द्रेति ।
125357 अर्चिषः प्रभाज्वालाप्रभेदा यथा कल्पितास्तथा जगद्वैचित्र्यं
125358 तद्ग्राहकबुद्ध्यादिवैचित्र्यं कल्पितमित्यन्वयः । सप्तायोग्रहणं
125359 मायाशबलदृष्टान्तार्थम् ॥ ३ ॥
125360
125361 तथेदं ब्रह्मणि स्फारे जगद्बुद्ध्यादि कल्पितम् ।
125362 दुःखप्रदमतज्ज्ञानां तदेवातदिव स्थितम् ॥ ४ ॥
125363
125364 अहो नु चित्रा मायेयं तात विश्वविमोहिनी ।
125365 सर्वाङ्गप्रोतमप्यात्मा यदात्मानं न पश्यति ॥ ५ ॥
125366
125367 सर्वगतस्वप्रकाशस्यात्मनोऽदर्शनमसतोऽप्रकाशस्यापि जगतः स्फुटं दर्शनंन्
125368 चाश्चर्यमघटितघटनासमर्थमायाबलादेवेत्याह - अहो इति ।
125369 सर्वेष्वङ्गेष्ववयवप्रायेषु बाह्याध्यात्मिकभावेषु प्रोतमन्तर्बहिश्च
125370 व्याप्तमप्यात्मानं यद्यस्मान्न पश्यति ॥ ५ ॥
125371
125372 चिदादर्शमयं सर्वं जगदित्येव भावयन् ।

यस्तिष्ठत्युपशान्तेच्छं स ब्रह्मकवचः सुखी ॥ ६ ॥

कया तर्हि भावनया आत्मानं दृष्ट्वा सुखी स्यात्तामाह -
चिदादर्शमयमित्यादिना। आदर्शे नगरादिरिव ब्रह्मणि जगत्प्रातिभासिकं न
वास्तवमिति भावयन्नित्यर्थः। मोहशरैरभेद्यं ब्रह्मैव कवचं यस्य सः ॥ ६ ॥

अहमर्थविमुक्तेन भावेनाभावरूपिणा।
सर्वं शून्यं निरालम्बं चिद्रूपमिति भावयेत् ॥ ७ ॥

इदं रम्यमिदं नेति बीजं ते दुःखसंततेः।
तस्मिन्साम्याग्निना दग्धे दुःखस्यावसरः कुतः ॥ ८ ॥

इति वैषम्यकल्पनमिति शेषः ॥ ८ ॥

राजन्नभावनास्त्रेण रम्यारम्यविभागिता।
पौरुषातिशयेनाशु स्वेनैवान्तर्विलूयताम् ॥ ९ ॥

अभावना समाध्यभ्यासेन सर्वदृश्यविस्मृतिस्तल्लक्षणेनास्त्रेण रम्यारम्ययोः
पदार्थयोर्विभाविता प्रियाप्रियतावैषम्यकल्पना। सा हि रागद्वेषहेतुः
समदृष्टिदार्ढ्यलक्षणपुरुषप्रयत्नातिशयेन विलूयतां छिद्यताम् ॥ ९ ॥

अभावनेन भावनं विलूय कर्मकाननम्।
परं समेत्य तानवं विशोक एव तिष्ठ भोः ॥ १० ॥

समाधिलक्षणेनाभावनेन बाह्यार्थभावनं तत्प्रयोजकं धर्माधर्मलक्षणं
कर्मकाननं च विलूय परमाकाशादप्यधिकं तानवं सौक्ष्म्यं समेत्य
तद्बलेन शोकहेत्वलेपे विशोक एव तिष्ठेत्यर्थः ॥ १० ॥

भरितभुवनाभोगो भूत्वा विभागबहिष्कृतो गलितकलनाभासोल्लासो
[उल्लासः इति पदं क्वचिन्न पठ्यते ।] विवेकविलासवान्।
अधिगतपरानन्दस्पन्दश्चिराय निरामयः शमसमसितस्वच्छाभोगो
भवाभयचिद्वपुः ॥ ११ ॥

हे पुत्र त्वं प्रथमं विवेकविलासवान् सन् समाधिना गलितबाह्यकलनाभासः
पूर्णात्मना भरितभुवनाभोगश्च भूत्वा अधिगतः
परानन्दस्याऽपरिच्छिन्नब्रह्मसुखस्य स्पन्दः सर्वत आविर्भावो यस्य
तथाविधस्तद्विभागबहिष्कृतस्तदखण्डैकतापन्नोऽत एव निरस्तसंसारामयः
पञ्चमषष्ठभूमिकासु चिराय स्थित्वान्ते
सप्तमभूमिकायामात्यन्तिकविक्षेपवैषम्यशमेन समश्चन्द्रिकापूर्णत्वात्सितः
शुभ्र आत्यन्तिकवासनाज्ञानकालुष्यक्षयात्स्वच्छ आभोग आकारो यस्य
तथाविधोऽभयचिद्वपुर्भवेत्यर्थः। अथवा चतुर्भिः पादैश्चतुर्थाद्याश्चतस्रो
भूमिकाः क्रमेण दर्शिता बोध्याः ॥ ११ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाणप्रकरणे पू०
इक्ष्वाकुमनुसंवादे एकोनविंशाधिकशततमः सर्गः ॥ ११९ ॥

इति पूर्वार्धे एकोनविंशाधिकशततमः सर्गः ॥ ११९ ॥

विंशाधिकशततमः सर्गः १२०

मनुरुवाच।

125425
125426 शास्त्रसज्जनसंपर्कैः प्रज्ञामादौ विवर्धयेत् ।
125427 प्रथमा भूमिकैषोक्ता योगस्यैव च योगिनः ॥ १ ॥
125428
125429 मुमुक्षुभूमिकास्तिस्रो मुच्यमानस्य तूत्तरा ।
125430 मुक्तस्य परतस्तिस्रो भूमिकाः सप्त दर्शिताः ॥
125431
125432 परं समेत्य तानवमिति यद्योगभूमिकाभ्यासफलमुक्तं
125433 तदुपायभूतान्भूमिकाभेदान्वर्णयति - शास्त्रेत्यादिना । तथा च
125434 साधनचतुष्टयसंपादनसहितं गुरुसतीर्थ्यादिसहायकं श्रवणं प्रथमा
125435 भूमिकेत्यादिनिष्कर्षा उत्पत्तिप्रकरणे दर्शिता एवात्र बोध्याः ॥ १ ॥
125436
125437 विचारणा द्वितीया स्यात्तृतीयाऽसङ्गभावना ।
125438 विलापनी चतुर्थी स्याद्वासनाविलयात्मिका ॥ २ ॥
125439
125440 विचारणा मननम् । असङ्गस्याद्वितीयान्मनोभावना निदिध्यासनम् । विलापनी
125441 तत्त्वसाक्षात्कारेणाज्ञानादिप्रपञ्चस्य बाधस्तत्साधिनी । वासनापदेन
125442 तदाश्रयाऽविद्या गृह्यते ॥ २ ॥
125443
125444 शुद्धसंविन्मयानन्दरूपा भवति पञ्चमी ।
125445 अर्धसुप्तप्रबुद्धाभो जीवन्मुक्तोऽत्र तिष्ठति ॥ ३ ॥
125446
125447 शुद्धः संविन्मयः समाधिपरिपाकादन्तः प्रथाप्रचुरो य आनन्दस्तद्रूपा । तां
125448 दशां दृष्टान्तेनानुभवमारोहयति - अर्धेति । यथा निद्राशेषेणार्धंन्
125449 सुप्तोऽर्धंन् च प्रबुद्धः पुरुषो बाह्यशब्दादीनाकर्णयन्नप्यन्तः स्वापसुखासक्तो
125450 न प्रतिवचनादिव्यवहारमिच्छति तद्वद्व्युत्थानकालेऽप्यस्यां भूमिकायां योगी
125451 तिष्ठतीत्यर्थः ॥ ३ ॥
125452
125453 स्वसंवेदनरूपा च षष्ठी भवति भूमिका ।
125454 आनन्दैकघनाकारा सुषुप्तसदृशस्थितिः ॥ ४ ॥
125455
125456 स्वसंवेदनं स्वरसत एवाक्षीयमाणा ब्रह्माकारानुभववृत्तिस्तद्रूपा । तदेवाह
125457 - आनन्देति ॥ ४ ॥
125458
125459 तुर्यावस्थोपशान्ताथ मुक्तिरेवेह केवलम् ।
125460 समता स्वच्छता सौम्या सप्तमी भूमिका भवेत् ॥ ५ ॥
125461
125462 अथ यदा सा वृत्तिरपि क्षीयते तदाविष्कृतं ब्रह्मैव पूर्णस्वप्रकाशमवशिष्यते
125463 तथा जीवतः स्थितिः सप्तमी भूमिका सैव मया शमसमसितस्वच्छाभोगः इति
125464 प्रागुक्तेत्यर्थः । आद्यभूमिकात्रयस्य वक्ष्यमाणरीत्यैकीकारात् षष्ठी तुर्या ॥ ५ ॥
125465
125466 तुर्यातीता तु यावस्था परा निर्वाणरूपिणी ।
125467 सप्तमी सा परिप्रौढा विषयः स्यान्न जीवताम् ॥ ६ ॥
125468
125469 सप्तम्या अष्टम्याश्च योगिजीवनाजीवनमात्रं विशेषो नान्य इत्यभेद एवेत्याशयेनाह
125470 - तुर्यातीतेति । सप्तमी भूमिकैव तुर्यातीताख्या परितः प्रौढा सती विदेहमुक्तिः
125471 संपद्यते सा चा जीवतां योगिनां विषयो न स्यादित्यर्थः ॥ ६ ॥
125472
125473 पूर्वावस्थात्रयं त्वत्र जाग्रदित्येव संस्थितम् ।
125474 चतुर्थी स्वप्न इत्युक्ता स्वप्नाभं यत्र वै जगत् ॥ ७ ॥
125475
125476 आनन्दैकघनीभावात्सुषुप्ताख्या तु पञ्चमी ।

125477 असंवेदनरूपाथ षष्ठी तुर्यपदाभिधा ॥ ८ ॥
125478
125479 तुर्यातीतपदावस्था सप्तमी भूमिकोत्तमा ।
125480 मनोवचोभिरग्राह्या स्वप्रकाशपदात्मिका ॥ ९ ॥
125481
125482 तामेव प्रशंसति - मनोवचोभिरित्यादिना ॥ ९ ॥
125483
125484 अन्तः प्रत्याहृतिवशाच्चेत्यं चेन्न विभावितम् ।
125485 मुक्त एवास्य संदेहो महासमतया तया ॥ १० ॥
125486
125487 तस्यामेव सर्वदृश्यानां प्रत्यगात्मनि सम्यग्विलयादात्यन्तिकी जीवन्मुक्ततेत्याह
125488 - अन्तरिति । तया सप्तमभूमिकाप्रसिद्धया ॥ १० ॥
125489
125490 यद्भोगसुखदुःखांशैरपरामृष्टपूर्णधीः ।
125491 सशरीरोऽशरीरो वा भवत्येवंमतिः पुमान् ॥ ११ ॥
125492
125493 न म्रिये न च जीवामि नाहं सन्नाप्यसन्नयम् ।
125494 आत्मारामो नरस्तिष्ठेत्तन्मुक्तत्वमुदाहृतम् ॥ १२ ॥
125495
125496 तस्यां तु जीवन्मुक्तस्य कीदृशोऽनुभवस्तमाह - न म्रिये इति ॥ १२ ॥
125497
125498 व्यवहार्युपशान्तो वा गृहस्थो वाथवैककः ।
125499 अहं न किंचिच्चिदिति मत्वा जीवो न शोचति ॥ १३ ॥
125500
125501 एककः एकचरो यतिः ॥ १३ ॥
125502
125503 अलेपकोऽहमजरो नीरागः शान्तवासनः ।
125504 निर्मलोऽस्मि चिदाकाश इति मत्वा न शोचति ॥ १४ ॥
125505
125506 अहमन्तादिरहितः शुद्धो बुद्धोऽजरामरः ।
125507 शान्तः समासमाभास इति मत्वा न शोचति ॥ १५ ॥
125508
125509 तृणाग्रेष्वम्बरे भानौ नरनागामरेषु च ।
125510 यत्तदस्ति तदेवेति मत्वा भूयो न शोचति ॥ १६ ॥
125511
125512 अतिक्षुद्रेषु तृणाग्रेषु । अतिमहत्यम्बरे । अतिप्रकाशे भानौ यत्तत्प्रसिद्धतरं
125513 सन्मात्रं तदेव प्रत्यक्चिन्मात्रमहमस्मीत्यखण्डमहावाक्यार्थं मत्वेत्यर्थः ॥
125514 १६ ॥
125515
125516 तिर्यमूर्ध्वमधस्तान्मे व्यापको महिमा चितः ।
125517 तस्यानन्तविलासस्य ज्ञात्वेति क इव क्षयी ॥ १७ ॥
125518
125519 चितो मे महिमा व्यापक इति तस्य परमात्मनो महिमानं ज्ञात्वा कः क्षयी
125520 मरणादिदुःखभागित्यर्थः । तथा च श्रुतिः एष नित्यो महिमा ब्राह्मणस्य न
125521 वर्धते कर्मणा नो कनीयान् । तस्यैव स्यात्पदवित्तं विदित्वा न लिप्यते कर्मणा
125522 पापकेन इति ॥ १७ ॥
125523
125524 बद्धवासनमर्थो यः सेव्यते सुखयत्यसौ ।
125525 यत्सुखाय तदेवाशु वस्तु दुःखाय नाशतः ॥ १८ ॥
125526
125527 जीवन्मुक्तानामपि जीवनस्य विषयभोगाधीनत्वाद्विषयनाशेऽज्ञवदेव
125528 दुःखप्राप्तिमाशङ्क्य विशेषं वक्तुमज्ञस्य विषयनाशे

125529 दुःखोत्पत्तिप्रकारमाह - बद्धवासनमिति सार्धेन ॥ १८ ॥
125530
125531 अविनाभावनिष्ठत्वं प्रसिद्धं सुखदुःखयोः ।
125532 तनुवासनमर्थो यः सेव्यते वा विवासनम् ॥ १९ ॥
125533
125534 अविनाभावनिष्ठत्वं सहावस्थितिनियमः । जीवन्मुक्तानां तद्वैलक्षण्यमाह -
125535 तनुवासनमिति । चतुर्थादिभूमिकासु तनुवासनं सप्तमभूमौ तु विवासनम् ॥ १९ ॥
125536
125537 नासौ सुखायते नासौ नाशकाले न दुःखदः ।
125538 क्षीणवासनया बुद्ध्या यत्कर्मक्रियतेऽनघ ॥ २० ॥
125539
125540 एवं कर्मापि तेषामलेपकमित्याह - क्षीणेति ॥ २० ॥
125541
125542 तद्दग्धबीजवद्भूयो नाङ्कुरं प्रविमुञ्चति ।
125543 देहेन्द्रियादिना कर्म करणौघेन कल्प्यते ॥ २१ ॥
125544
125545 देहेन्द्रियादिषु भिन्नेष्वेकात्मतादात्म्याध्यासेन तत्कृतकर्मस्वहमेवैकः
125546 कर्तेत्यभिमाने हि कर्मभिर्लेपः स्यात् । न च मुक्तानां सोऽस्तीत्याशयेनाह -
125547 देहेन्द्रियादिनेति ॥ २१ ॥
125548
125549 एकः कर्ता च भोक्ता च क इवाङ्गोपपद्यते ।
125550 भावनां सर्वभावेभ्यः समुत्सृज्य समुत्थितः ॥ २२ ॥
125551
125552 भावनामहन्ताद्यध्यासम् । सर्वेभ्यो देहेन्द्रियादिभावेभ्यः सम्यगुत्सृज्य
125553 सम्यगुत्थितो निर्गतः ॥ २२ ॥
125554
125555 शशाङ्कशीतलः पूर्णो भाति भासेव भास्करः ।
125556 क्रियमाणा कृता कर्मतूलश्रीर्देहशाल्मलेः ॥ २३ ॥
125557
125558 कृता संचितरूपा ॥ २३ ॥
125559
125560 ज्ञानानिलसमुद्भूता प्रोड्डीय क्वापि गच्छति ।
125561 सर्वैव हि कला जन्तोरनभ्यासेन नश्यति ॥ २४ ॥
125562
125563 कर्मेव ज्ञानकलापि कालेन नश्येदित्याशङ्क्याह - सर्वैवेति ॥ २४ ॥
125564
125565 एषा ज्ञानकला त्वन्तः सकृज्जाता दिने दिने ।
125566 वृद्धिमेति बलादेव सुक्षेत्रव्युप्तशालिवत् ॥ २५ ॥
125567
125568 एकः स्फुरत्यखिलवस्तुषु विश्वरूप आत्मा सरःसु जलधिष्विव तोयमच्छम् ।
125569 संशान्तसंकलनभूरिकलापमेकं सत्तांशमात्रमखिलं जगदङ्ग
125570 विद्धि ॥ २६ ॥
125571
125572 यथा सरःसु जलधिषु समुद्रेषु चाच्छ तोयमेकमेव स्फुरति तथाखिलेषु
125573 मायिकवस्तुषु तत्तदभेदाध्यासाद्विश्वरूपः स्वतस्तु सन्मात्रस्वभाव आत्मा एक एव
125574 स्फुरति । अतः हे अङ्ग अखिलं जगत् तत्त्वबोधेन
125575 संशान्तभ्रान्तिसंकलनप्रयुक्तभूरिवैचित्र्यकलापं
125576 परिशिष्टसत्तांशमात्रमेवाहमिति विद्धीत्यर्थः ॥ २६ ॥
125577
125578 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मोक्षो० निर्वाणप्रकरणे पू०
125579 सप्तभूमिकाविभागो नाम विंशत्यधिकशततमः सर्गः ॥ २० ॥
125580

125581 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
125582 सप्तभूमिकाविभागो नाम विंशत्युत्तरशततमः सर्गः ॥ १२० ॥
125583
125584 एकविंशत्यधिकशततमः सर्गः १२१
125585
125586 मनुरुवाच ।
125587
125588 यावद्विषयभोगाशा जीवाख्या तावदात्मनः ।
125589 अविवेकेन संपन्ना साप्याशा हि न वस्तुतः ॥ १ ॥
125590
125591 ययाऽपकृष्यते जीवो यया चोत्कृष्य मुच्यते ।
125592 अत्र ते भावने सम्यग्विभज्य मनुनेरिते ॥
125593
125594 यद्यात्मा निरतिशयानन्दं ब्रह्मैव तर्ह्यस्य कियत्कालमज्ञानाज्जीवाख्या तत्राह
125595 - यावदिति । सा किं सत्या नेत्याह - अविवेकेनेति ॥ १ ॥
125596
125597 विवेकवशतो याता क्षयमाशा यदा तदा ।
125598 आत्मा जीवत्वमुत्सृज्य ब्रह्मतामेत्यनामयः ॥ २ ॥
125599
125600 अज्ञानक्षयात्क्षयं बाधम् ॥ २ ॥
125601
125602 ऊर्ध्वादधस्तथाधस्तात्पुनरूर्ध्वं व्रजंश्चिरम् ।
125603 मा संसारारघट्टस्य चिन्तारज्ज्वां घटीभव ॥ ३ ॥
125604
125605 भोगाशैव स्वर्गनरकादौ कर्षतीति तां त्यजेत्याह - ऊर्ध्वादिति ।
125606 भोगचिन्तारूपायां घटकण्ठरज्ज्वां मा घटीभव घटवद्बद्धो मा
125607 भूरित्यर्थः ॥ ३ ॥
125608
125609 इदं ममाहमस्येति व्यवहारघनभ्रमम् ।
125610 ये मोहात्परिसेवन्ते अधस्ताद्यान्त्यधः शठाः ॥ ४ ॥
125611
125612 तस्या विषयैः सह बन्धनमन्योन्यकण्ठासञ्जनलक्षणं दर्शयति - इदमिति ॥
125613 ४ ॥
125614
125615 अस्याहमेष मे सोऽयमहमेवं तु यैः किल ।
125616 मोहो बुद्ध्या परित्यक्त ऊर्ध्वादूर्ध्वं प्रयान्ति ते ॥ ५ ॥
125617
125618 तदेवानूद्य तन्मूलं तादात्म्याध्यासमपि त्याजयंस्तत्फलं सर्वोत्कर्षमाह -
125619 अस्येति ॥ ५ ॥
125620
125621 स्वप्रकाशं स्वमात्मानमवलम्ब्याविलम्बितम् ।
125622 आस्स्व संपूरिताकाशं जगन्ति नृप पश्य हे ॥ ६ ॥
125623
125624 जगन्ति संपूरितं सर्वतोऽप्यव्यवधानेन भरितं चिदाकाशमेव पश्य ॥ ६ ॥
125625
125626 यदैवैवं चितो रूपं ततं बुद्धमखण्डितम् ।
125627 तदैव तीर्णः संसारः परमेश्वरतां गतः ॥ ७ ॥
125628
125629 ततं पूर्णम् ॥ ७ ॥
125630
125631 ब्रह्मेन्द्रविष्णुवरुणा यद्यत्कर्तुं समुद्यताः ।
125632 तदहं चिद्वपुः सर्वं करोमीत्येव भावयेत् ॥ ८ ॥

ननु जगत्कर्तृत्वाद्यस्य नास्ति स कथं परमेश्वरतां गतस्तत्राह -
ब्रह्मेन्द्रेति ‖ ८ ‖

येषु येषु यदा यद्यद्दर्शनेषु निगद्यते ।
सर्वमेवाङ्ग तत्सत्यं चिद्विलासो ह्यनङ्कुशः ‖ ९ ‖

नन्वसत्याः सर्वाः क्रियाः तत्त्ववित् तासु कथमात्मनः कर्तृतां भावयेदिति
चेन्नायं दोषः आत्मसत्तयैव सर्वकल्पनानां सत्यत्वसंभवादित्याशयेनाह -
येष्विति । दर्शनेषु शास्त्रेषु ‖ ९ ‖

चिन्मात्रत्वं प्रयातस्य तीर्णमृत्योरचेतसः ।
यो भवेत्परमानन्दः केनासावुपमीयते ‖ १० ‖

ननु संसारतरणेन को लाभस्तत्राह - चिन्मात्रत्वमिति ।
निरुपमस्वप्रकाशानन्दप्राप्तिरेव लाभ इत्यर्थः ‖ १० ‖

नाप्यशून्यंन् न शून्यंच नाचिद्रूपं न चिन्मयम् ।
नात्मरूपं नान्यरूपं भुवनं भावयन्भव ‖ ११ ‖

यदि ब्रह्मसत्तया जगदशून्यं तर्हि द्वैतापत्तिः । यदि नेतिनेतीति निषेधाच्छून्यं
तर्हि सर्वकर्तृतालक्षणेश्वरताव्याघातः । तथा यदि जगदचिद्रूपमेव तर्हि चितोऽपि
भानासंभवस्त्रिवृत्करणेन तैजसरूपानुविद्धमेव हि भासकेन तेजसा बास्यते न
नीरूपम् । यदि तु चिदनुवेधाय तस्य चिद्विकारताभ्युपेयते तर्हि चितः सविकारतापत्तिः ।
एवमनात्मरूपत्वेति जगतोऽसङ्गेनात्मना संबन्धाभावात्ततः सत्तास्फूर्त्यलाभः
। आत्मरूपत्वे तु न ज्ञानेन बाध इत्यादिदोषानिर्वचनीयतालम्बनेन परिहरति -
नापीति ‖ ११ ‖

एतत्स्वरूपमासाद्य प्रकृतिः परिशाम्यति ।
न देशो मोक्षनामास्ति न कालो नेतरा स्थितिः ‖ १२ ‖

कथं तर्हि तच्छाम्यति तत्राह - एतदिति । एतस्यात्मनः स्वं पारमार्थिकं
रूपमासाद्य साक्षात्कृत्य ‖ १२ ‖

अहंकृतेर्विमोहस्य क्षयेणेयंन् विलीयते ।
प्रकृतिर्भावनानाम्नी मोक्षः स्यादेष एव सः ‖ १३ ‖

प्रकृतिः स्वाभाविकात्मरूपम् । भावना अनादिविस्मृतस्वरूपप्रतिसंधानं
चरमसाक्षात्कारवृत्तिस्तदनुप्रवेशात्तन्नाम्नी साक्षात्काराभिधा यदा भवति तदा
एष प्रसिद्धः प्रत्यगात्मैव स शास्त्रप्रसिद्धो मोक्षः स्यादित्यर्थः ‖ १३ ‖

प्रशान्तशास्त्रार्थविचारचापलो निवृत्तनानारसकाव्यकौतुकः ।
निरस्तनिःशेषविकल्पविप्लवः समः सुखं तिष्ठति शाश्वतात्मकः ‖ १४ ‖

तादृशसाक्षात्कारेण जीवन्मुक्तः कथं तिष्ठति तदाह - प्रशान्तेति ।
शास्त्रार्थजिज्ञासा काव्यनाटकाद्यर्थजिज्ञासा लौकिकप्रियाप्रियादिविकल्पविक्षेपाश्च
निवर्तन्ते इति समः ‖ १४ ‖

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० निर्वाणप्रकरणे पू०
इक्ष्वाकुमनुसंवादो नामैकविंशत्यधिकशततमः सर्गः ‖ १२१ ‖

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे

इक्ष्वाकुमनुसंवादो नामैकविंशत्युत्तरशततमः सर्गः ॥ १२१ ॥

द्वाविंशत्यधिकशततमः सर्गः १२२

मनुरुवाच ।

येन केनचिदाच्छन्नो येन केनचिदाशितः ।
यत्रक्वचनशायी च स सम्राडिव राजते ॥ १ ॥

निरूढस्यात्मबोधस्य तुर्यातीतपदस्थितेः ।
मुक्तस्येह यतेश्चर्या लक्षणैर्मनुनेर्यते ॥

निरस्तनिःशेषविकल्पविप्लवः समः सुखं तिष्ठति इति या योगिनः स्थितिरुक्ता तामेव
प्रपञ्चयति - येन केनचिदित्यादिना । आच्छन्नो वस्त्रैराच्छादितः । आशितो भोजितः ।
स योगी सम्राट् मानुषानन्दपरावधिं प्राप्तो राजेवेति पापरद्दशेयमुपमा ।
तत्त्वद्दशा तु न तदानन्दस्योपमास्ति । यतो वाचो निवर्तन्ते इत्यादिश्रुत्या
हैरण्यगर्भानन्दान्तविषयानन्दसीकरमहार्णवतया निरवधित्वप्रतिपादनात् ॥ १ ॥

वर्णधर्माश्रमाचारशास्त्रयन्त्रणयोज्झितः ।
निर्गच्छति जगज्जालात्पञ्जरादिव केसरी ॥ २ ॥

तस्यार्थसिद्धं विद्वत्संन्यासमाह - वर्णेति । शास्त्रेण यन्त्रणा
किंकरवन्नियमनं तया वर्जितः । जगति
जालवद्बन्धहेतोरैहिकामुष्मिकक्रियातत्फलकर्तृत्वभोक्तुत्वादिवासनासङ्गादित्यर्
थः ॥ २ ॥

वाचामतीतविषयो विषयाशादशोज्झितः ।
कामप्युपगतः शोभां शरदीव नभस्तलम् ॥ ३ ॥

वाचामतीतस्य निरतिशयानन्दस्यानुभवस्यैव विषयः । अत एव विषयाशादशोज्झितः ॥
३ ॥

गम्भीरश्च प्रसन्नश्च गिराविव महाह्लदः ।
परानन्दरसाक्षुब्धो रमते स्वात्मनात्मनि ॥ ४ ॥

परस्यानन्दस्य रसनं रसो निरन्तरमास्वादनं तस्मादक्षुब्धोऽप्रच्युतः ॥ ४ ॥

सर्वकर्मफलत्यागी नित्यतृप्तो निराश्रयः ।
न पुण्येन न पापेन लिप्यते नेतरेण च ॥ ५ ॥

इतरेण हर्षविषादादिना च ॥ ५ ॥

स्फटिकः प्रतिबिम्बेन यथा याति न रञ्जनम् ।
तज्ज्ञः कर्मफलेनान्तस्तथा नायाति रञ्जनम् ॥ ६ ॥

कर्मफलेन प्रारब्धोपनीतसुखदुःखादिना । रञ्जनं रूपान्तरापत्तिम् ॥ ६ ॥

विहरञ्जनतावृन्दे देहकर्तनपूजनैः ।
खेदाह्लादौ न जानाति प्रतिबिम्बगतैरिव ॥ ७ ॥

तदेव स्पष्टमाह - विहरन्निति । देहस्य कर्तनैश्छेदनैः पूजनैश्च
देहप्रतिबिम्बमिव मिथ्येति पश्यतीति प्रतिबिम्बगतैरिवेत्युच्यते ॥ ७ ॥

125737
125738 निःस्तोत्रो निर्विकारश्च पूज्यपूजाविवर्जितः |
125739 संयुक्तश्च वियुक्तश्च सर्वाचारनयक्रमैः || ८ ||
125740
125741 पूज्यः पूजितोऽपि निःस्तोत्रः अप्रशंसमानः | पूजाविवर्जितोऽपि निर्विकार इति कर्मधारये
125742 क्रमेण विशेषणान्वयः | संयुक्तश्चेत्यादिरस्यैव प्रपञ्चः || ८ ||
125743
125744 तस्मान्नोद्विजते लोको लोकान्नोद्विजते च सः |
125745 रागद्वेषभयानन्दैस्त्यज्यतेऽपि च युज्यते || ९ ||
125746
125747 उद्विजते बिभेति | रागद्वेषादिपदैस्तन्निमित्तविषया लक्ष्यन्ते |
125748 कदाचित्प्रारब्धबलाद्युज्यते त्यज्यते च || ९ ||
125749
125750 प्रमेये कस्यचिदपि न रोहति महाशयः |
125751 प्रमेयीक्रियते चापि बालेनाप्यदुराशयः || १० ||
125752
125753 कस्यचित्कुशलभतेरपि प्रमेये प्रमितिविषये स्वयंन् तत्त्वतो नारोहति नान्तर्भवति |
125754 तत्त्वतस्तं कुशलमतयोऽपि न परिच्छेत्तुंन् शक्नुवन्तीत्यर्थः | व्यवहारतस्तु
125755 बालेनापि प्रमेयीक्रियते अल्पेनाप्यनुवर्तनेन वशीक्रियते | यतोऽयमदुराशयः
125756 शुद्धचित्तत्वादृजुरित्यर्थः || १० ||
125757
125758 तनुं त्यजतु वा तीर्थे श्वपचस्य गृहेऽपि वा |
125759 मा कदाचन वा राजन्वर्तमानेऽपि वा क्षणे || ११ ||
125760
125761 तस्य ज्ञानसमकालमेव मुक्त्या देहादिबाधेन च
125762 पुनर्मुक्तिनिमित्ततीर्थदिर्देहत्यागस्य वा चिन्तैव नास्तीत्याह - तनुमिति | कदाचन
125763 कदाचिदपि तनुं मा वा त्यजतु वर्तमानक्षणे इदानीमपि वा तनुं त्यजतु | तथाप्यसौ
125764 ज्ञानसंप्राप्तिसमये प्रागेव मुक्तो विदेहश्चेति परेण संबन्धः || ११ ||
125765
125766 ज्ञानसंप्राप्तिसमये मुक्तोऽसौ विगताशयः |
125767 अहंभ्रान्तिर्हि बन्धाय मोक्षो ज्ञानेन तत्क्षयः || १२ ||
125768
125769 तदुपपादनाय बन्धमोक्षस्वरूपमाह - अहंभ्रान्तिरिति || १२ ||
125770
125771 स पूजनीयः स स्तुत्यो नमस्कार्यः स यत्नतः |
125772 स निरीक्ष्योऽभिवाद्यश्च विभूतिविभवैषिणा || १३ ||
125773
125774 स पूजनीय इति | तथा च श्रुतिः यं यं लोकं मनसा संविभाति विशुद्धसत्त्वः
125775 कामयते यांश्च कामान् | तं तं लोकं लभते तांश्च कामांस्तस्मादात्मज्ञं
125776 ह्यर्चयेद्भूतिकामः इति || १३ ||
125777
125778 न यज्ञतीर्थैर्न तपःप्रदानैरासाद्यते तत्परमं पवित्रम् |
125779 आसाद्यते क्षीणभवामयानां भक्त्या सतामात्मविदां यदङ्ग || १४ ||
125780
125781 तत्पूजनमेव परमपुरुषार्थप्रापकज्ञानहेतुरपीत्याह - नेति | हे अङ्ग क्षीणो
125782 भवामयो येषां तथाविधानां जीवन्मुक्तानां भक्त्या भजनेन यत्परमं पदं
125783 ज्ञानद्वारा आसाद्यते तद्यज्ञादिभिर्नासाद्यत इत्यन्वयः || १४ ||
125784
125785 श्रीवसिष्ठ उवाच |
125786
125787 एवमुक्त्वा स भगवान्मनुर्ब्रह्मगृहं ययौ |
125788 इक्ष्वाकुरपि तां दृष्टिमवष्टभ्य स्थिरोऽभवत् || १५ ||

ब्रह्मगृहं मेरुशिखरस्थम् ॥ १५ ॥

इत्यार्षे श्रीवासिष्ठमहारा० वा० दे० मो० निर्वाणप्रकरणे पू० इक्ष्वाकुमनुसंवादे
इक्ष्वाकुप्रबोधनं नाम द्वाविंशत्यधिकशततमः सर्गः ॥ १२२ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
इक्ष्वाकुप्रबोधनं नाम द्वाविंशत्यधिकशततमः सर्गः ॥ १२२ ॥

त्रयोविंशत्यधिकशततमः सर्गः १२३ ॥

श्रीराम उवाच ।

एवं स्थिते हि भगवञ्जीवन्मुक्तस्य सन्मतेः ।
अपूर्वोऽतिशयः कोऽसौ भवत्यात्मविदां वर ॥ १ ॥

ज्ञस्याज्ञेभ्योऽन्यसिद्धेभ्यः खेचरत्वाणिमादिषु ।
अनिच्छैव हि पूर्णत्वाद्विशेषोऽत्राभिधीयते ॥

वर्णितलक्षणस्य जीवन्मुक्तस्य मणिमन्त्रादिसिद्धानामिव खेचरादिसिद्धिरूपोऽपि
कश्चिदपूर्वोऽतिशयोऽस्ति न वेति संदिहानो रामः पृच्छति - एवमिति । एवं
त्वद्वर्णितरूपे लक्षणजाते स्थिते सति ॥ १ ॥

श्रीवसिष्ठ उवाच ।

ज्ञस्य कस्मिंश्चिदेवांशे भवत्यतिशयेन धीः ।
नित्यतृप्तः प्रशान्तात्मा स आत्मन्येव तिष्ठति ॥ २ ॥

तस्यान्यसिद्धागोचरनिरतिशयानन्दात्मगोचरोऽनुभव एव विशेष इत्याशयेनोत्तरमाह
- ज्ञस्येति । ज्ञस्य कस्मिंश्चिदितरसिद्धागम्ये परमात्मतत्त्वांशे धीरे
वातिशयेन भवतीति योजना । अथवा अप्यर्थे एवकारः । ज्ञस्य सांसारिकसिद्ध्यंशे
कस्मिंश्चिदप्यतिशयेऽतिशयधीर्न भवतीति योजना । तत्कुतस्तत्राह - नित्यतृप्त इति
॥ २ ॥

मन्त्रसिद्धैस्तपःसिद्धैस्तन्त्रसिद्धैश्च भूरिशः ।
कृतमाकाशयानादि का तत्र स्यादपूर्वता ॥ ३ ॥

मन्त्रसिद्धादिरूपेणाप्यहमेव स्थित इति सर्वात्मबुद्ध्या तैः प्राप्तानां
खेचरादिसिद्धीनां तेन प्राप्तत्वात्तासु तस्य नापूर्वतापीत्याह - मन्त्रसिद्धैरिति ।
अथवा अपूर्वशब्दो न विद्यते पूर्वं कारणं यस्येति व्युत्पत्त्या
तत्त्ववित्प्राप्तनित्यनिरतिशयानन्द एव मुख्यः । आकाशयानादिसिद्धिजातं तु
मन्त्रसिद्ध्यादिभिः कृतं स्वयत्नेनोत्पादितमिति तत्र सपूर्वतैव नापूर्वतेत्यर्थः ॥
३ ॥

अणिमाद्यपि संप्राप्तं तादृशैरेव भूरिशः ।
यत्नेन साधितत्वात्तैर्नेतरेणात्मदर्शिना ॥ ४ ॥

यद्यपूर्वशब्दस्यानन्यप्राप्तत्वमप्यर्थस्तथापि
बहुभिर्मन्त्रसिद्धादिभिरणिमादिसिद्धिजातं प्राप्तमेवेति न तेष्वपूर्वतेत्याह -
अणिमाद्यपीति । सर्वात्मभूतस्य ज्ञस्य सर्वसांसारिकसिद्धीनां तत्तद्यत्नेन तैरेव
साधितत्वादपि न स्वेन पुनः साधने प्रयोजनमस्तीत्याशयेनाह - यत्नेनेति ॥ ४ ॥

125841 एष एव विशेषोऽस्य न समो मूढबुद्धिभिः।
125842 सर्वत्रास्थापरित्यागान्नीरागममलं मनः।
125843 भवेत्तस्य महाबुद्धेर्नासौ वस्तुषु मज्जति॥ ५॥
125844
125845 तर्हि तत्त्वविदस्तेभ्यः कोऽतिशयस्तत्राह - एष एवेति। तत्त्वज्ञानमेवातिशय
125846 इत्यर्थः। अतिशयान्तरमाह - सर्वत्रेति। वस्तुषु भोग्येषु॥ ५॥
125847
125848 एतावदेव खलु लिङ्गमलिङ्गमूर्तेः संशान्तसंसृतिचिरभ्रमनिर्वृतस्य।
125849 तज्ज्ञस्य यन्मदनकोपविषादमोहलोभापदामनुदिनं निपुणं तनुत्वम्॥ ६॥
125850
125851 नीरागत्वफलान्येव तत्त्वज्ञलक्षणतया वर्णयन्नुपसंहरति - एतावदिति।
125852 तत्त्वबोधे संशान्तेन चिरंतनभ्रमेण निर्वृतस्य विश्रान्तस्य अलिङ्गा
125853 सर्वधर्मशून्या ब्रह्मचिदेव मूर्तिः सैन्धवघनवदेकरसं स्वरूपं यस्य
125854 तथाविधस्य एतावदेव खलु लिङ्गं लक्षणम् यन्मदनादीनामापदामनुदिनं
125855 निपुणमत्यन्तं तनुत्वमपक्षय इत्यर्थः॥ ६॥
125856
125857 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० निर्वाण० पू० अज्ञादेर्ज्ञस्य
125858 विशेषकथनं नाम त्रयोविंशत्युत्तरशततमः सर्गः॥ १२३॥
125859
125860 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
125861 अज्ञादेर्ज्ञस्य विशेषकथनं नाम त्रयोविंशत्युत्तरशततमः सर्गः॥ १२३॥
125862
125863 चतुर्विंशत्यधिकशततमः सर्गः १२४
125864
125865 श्रीवसिष्ठ उवाच।
125866
125867 यथा सत्त्वमुपेक्ष्य स्वं शनैर्विप्रो दुरीहया।
125868 अङ्गीकरोति शूद्रत्वं तथा जीवत्वमीश्वरः॥ १॥
125869
125870 निष्कारणत्वं जीवानां ग्राह्यरागेण बद्धता।
125871 रूपाण्यवस्थास्तुर्यं च मृगव्याधीयमीर्यते॥
125872
125873 इतरसिद्ध्यपेक्षया आत्मज्ञानस्योत्कर्षो नित्यनिरतिशयानन्दानुभवत्वादेव
125874 प्रत्यगात्मनश्च नित्यनिरतिशयानन्दरूपता ब्रह्मस्वरूपत्वादेवेत्यर्थस्योपपत्तये
125875 ब्रह्मण एव स्वस्वभावोपेक्षावशाज्जीवभावप्राप्तिमाह - यथेत्यादिना। यथा
125876 कश्चिद्विप्रः शूद्रां कामयमानस्तत्संभोगसहवासादिदुरीहया स्वं स्वोचितं
125877 सत्त्वं सात्त्विकं ब्राह्मणधर्मं शनैरुपेक्ष्य चिरकालेन शूद्रत्वमङ्गीकरोति
125878 तथा ईश्वरो बुद्ध्यादिसंगत्या तत्प्रयुक्तभोगाशया स्वं
125879 नित्यशुद्धपूर्णानन्दस्वभावमुपेक्ष्य जीवत्वमङ्गीकरोतीत्यर्थः॥ १॥
125880
125881 भूतानि द्विविधान्येव प्रतिसर्गं स्फुरन्ति वै।
125882 आद्यविस्पन्दजातानि तानि निष्कारणानि वै॥ २॥
125883
125884 उपाधिप्राधान्येन भोग्यान्युपहितप्राधान्येनभोक्तृणीति द्विविधानि
125885 मायागतानादिद्विविधसंस्कारपरंपरानुसारिणो
125886 हिरण्यगर्भात्मकादाद्यविस्पन्दाज्जातानि मायागन्धर्वनगरवदाविर्भूतानि। अतो
125887 मिथ्यात्वान्निष्कारणानि वास्तवसामग्रीनिरपेक्षाणि। न हि स्वाप्नघटादिः स्वोत्पत्तौ
125888 दण्डचक्रादिसामग्रीसापेक्ष इत्यर्थः॥ २॥
125889
125890 ईश्वरात्समुपागत्य पुनर्जन्मान्तराणि च।
125891 भूतान्यनुभवत्यङ्ग स्वकृतैरेव कर्मभिः॥ ३॥
125892

125893 ननु साधुकारी साधुर्भवति पापकारी पापो भवति पुण्यो वै पुण्येन कर्मणा भवति
125894 पापः पापेन तस्माल्लोकात्पुनरेत्यान्यस्मै लोकाय कर्मणे इत्यादिश्रुतिषु
125895 जन्मकर्मणोर्बीजाङ्कुरवदनादिः परस्परकार्यकारणभावोऽवगम्यते
125896 तत्कथमीश्वरस्य कर्मशून्यस्य जीवभावेनाद्यसर्गे जन्मोच्यते तत्राह -
125897 ईश्वरादिति। स्वकृतैरुपहितकृतैः। नेश्वरस्य जीवभावे कर्मापेक्षा किंतु
125898 जीवभावापत्त्यनन्तरं देहादिजन्मनि पूर्वपूर्वदेहादिकृतकर्मापेक्षा। यथा
125899 सवितुर्जले प्रतिबिम्बनेन चलनादिक्रियापेक्षा प्रतिबिम्बस्य तरङ्गभेदेषु संक्रमे
125900 तत्तद्गतविक्रियानुभवे चोपाधिक्रियापेक्षा तद्वदिति भावः॥ ३॥
125901
125902 कार्यकारणभावोऽयमीदृशो जन्मकर्मणोः।
125903 अकारणमुपायान्ति सर्वे जीवाः परात्पदात्॥ ४॥
125904
125905 तदेव स्पष्टमाह - कार्यकारणभाव इति। तथा चोक्तं वार्तिके
125906 वियद्वस्तुस्वभावानुरोधादेव न कारकात्। वियत्संपूर्णतोत्पत्तौ कुम्भस्यैवं
125907 दृशाधियाम् इति॥ ४॥
125908
125909 पश्चात्तेषां स्वकर्माणि कारणं सुखदुःखयोः।
125910 आत्मज्ञानात्समुत्पन्नः संकल्पः कर्मकारणम्॥ ५॥
125911
125912 पश्चात्तेषां कर्माणीति कुतो ज्ञायते तत्राह - आत्मज्ञानादिति।
125913 यादृशमात्मानं यो जानति स तदनुरूपं संकल्पयति संकल्पानुरूपं च करोति।
125914 न हि मनुष्यादिदेहात्मताबुद्धिं विना पुण्यपापे संकल्पयति करोति वा। तथा चोक्तं
125915 भगवद्भिर्भाष्यकृद्भिः न ह्यनध्यस्तात्मभावेन देहेन कश्चिद्व्याप्रियते इति।
125916 देहाध्यासोऽपि संकल्पद्वारैव पुण्यपापप्रवृत्तिहेतुरित्याह - संकल्प इति॥ ५॥
125917
125918 संकल्पित्वं हि बन्धस्य कारणं तत्परित्यज।
125919 मोक्षस्तु निःसंकल्पित्वं तदभ्यासपरो भव॥ ६॥
125920
125921 संकल्पोऽस्यास्तीति संकल्पी तथाविधत्वं
125922 पुण्यापुण्यप्रवृत्तिभोगवासनादिसंतानेन बन्धस्य कारणम्॥ ६॥
125923
125924 सावधानो भव त्वं च ग्राह्यग्राहकसंभ्रमे।
125925 अजस्रमेव संकल्पदशाः परिहरञ्छनैः॥ ७॥
125926
125927 संकल्पत्यागे उपायमाह - सावधान इति। ग्राह्यग्राहकभेदभ्रमे हि सति
125928 ग्राहकस्य ग्राह्ये
125929 अनुकूलताप्रतिकूलताद्यनुसंधानाद्धानोपादानानुकूलप्रवृत्तिसंकल्पो भवति।
125930 ग्राह्यग्राहकविभ्रमत्यागेन तत्साक्षिण्यैकाग्र्यलक्षणसावधानत्वाभ्यासे तु
125931 संकल्पमूलमेवाच्छिद्यत इति भावः॥ ७॥
125932
125933 मा भव ग्राह्यभावात्मा ग्राह्यकात्मा च मा भव।
125934 भावनामखिलां त्यक्त्वा यच्छिष्टं तन्मयो भव॥ ८॥
125935
125936 अमुमेवार्थं कण्ठोक्त्याह - मा भवेति। यत् शिष्टं साक्षिस्वरूपं
125937 तन्मयस्तदेकरसः॥ ८॥
125938
125939 अजस्रं यं यमेवार्थं पतत्यक्षगणोऽनघ।
125940 बध्यते तत्र रागेण तत्रारागेण मुच्यते॥ ९॥
125941
125942 असावधानत्वे तु ग्राह्येऽनुकूले रागोऽवर्जनीय इति
125943 दर्शयन्वैराग्याभ्यासस्याप्यावश्यकतां दर्शयति - अजस्रमिति॥ ९॥
125944

125945 किंचिद्यद्रोचते तुभ्यं तद्बद्धोऽसि भवस्थितौ |
125946 न किंचिद्रोचते चित्ते तन्मुक्तोऽसि भवस्थितौ || १० ||
125947
125948 रागवैराग्ययोः स्वरूपं विविच्य दर्शयंस्तयोर्बन्धमोक्षलिङ्गतां दर्शयति ##-
125949
125950 तस्मात्पदार्थनिचयात्सह स्थावरजङ्गमात् |
125951 तृणादेर्देवकायान्तान्मा किंचित्तव रोचताम् || ११ ||
125952
125953 अपकर्षावधौ तृणशरीरादेरुत्कर्षावधौ देवो
125954 हिरण्यगर्भस्तत्कायान्तात्तद्भोग्यविषयरूपाच्च पदार्थनिचयान्निर्धारितं किंचिदपि
125955 तव न रोचताम् || ११ ||
125956
125957 यत्करोषि यदश्नासि यज्जुहोषि ददासि [जहासि यदित्यपि पाठः |] यत् |
125958 न कर्तासि न भोक्तासि तत्र मुक्तमतिः शमी || १२ ||
125959
125960 नन्वेवं परवैराग्येण भोक्तृताबन्धजयेऽपि जीवता स्नानभोजनादिक्रियाणां
125961 दुस्त्यजत्वात्तत्कृतो बन्धः स्यादेवेत्याशङ्क्याह - यदिति | तत्र तासु क्रियासु
125962 मुक्तमतिः कूटस्थात्मनिविष्टमतिः | तथा चोक्तं भगवता नैव किंचित्करोमीति युक्तो
125963 मन्येत तत्त्ववित् इति || १२ ||
125964
125965 सन्तोऽतीतं न शोचन्ति भविष्यच्चिन्तयन्ति नो |
125966 वर्तमानं च गृह्णन्ति कर्म प्राप्तमखण्डितम् || १३ ||
125967
125968 इष्टवियोगानिष्टसंभावनादिप्रयुक्तशोकेन बन्धप्रसक्तिमाशङ्क्याह - सन्त
125969 इति || १३ ||
125970
125971 मनसि ग्रथिता भावास्तृष्णामोहमदादयः |
125972 मनसैव मनो राम च्छेदनीयं विजानता || १४ ||
125973
125974 सर्वबन्धजये मनोजय एवोपायः स च मनसैव नान्येनेत्याह - मनसीति || १४ ||
125975
125976 विवेकेनातितीक्ष्णेन बलादय इवायसा |
125977 मनसैव मनश्छिन्धि सर्वभ्रमस्य शान्तये || १५ ||
125978
125979 यदुपायेन मनसा मनोजयस्तमाह - विवेकेनेति || १५ ||
125980
125981 क्षालयन्ति मलेनैव मलं क्षालनकोविदाः |
125982 वारयन्त्यस्त्रमस्त्रेण विषं प्रति विषेण च || १६ ||
125983
125984 मनसा मनोजये आत्माश्रयदोषं परिहरति - क्षालयन्तीति | मलेन क्षारादिना || १६ ||
125985
125986 जीवस्य त्रीणि रूपाणि स्थूलसूक्ष्मपराणि च |
125987 तत्रास्य यत्परं रूपं तद्भज द्वे परित्यज || १७ ||
125988
125989 मनःसंवलितो जीवस्तत्र कियानंशः पृथक्कृत्य मनसा च्छेदनीय इति दर्शयितुं
125990 जीवरूपाणि विभजते - जीवस्येति | परित्यज मनसा छिन्धि || १७ ||
125991
125992 पाणिपादमयो योऽयं देहो भोगाय वल्गति |
125993 भोगार्थमेतज्जीवस्य रूपं स्थूलमिहास्थितम् || १८ ||
125994
125995 तानि दर्शयति - पाणीत्यादिना || १८ ||
125996

125997 स्वसंकल्पमयाकारं यावत्संसारभावि यत् |
125998 चित्तं तद्विद्धि जीवस्य रूपं रामातिवाहिकम् || १९ ||
125999
126000 आद्यन्तरहितं सत्यं चिन्मात्रं निर्विकल्पकम् |
126001 यत्तद्विद्धि परं रूपं तृतीयं विश्वरूपकम् || २० ||
126002
126003 विश्वस्य रूपकं निरूपकम् | सत्तास्फूर्तिप्रदमित्यर्थः || २० ||
126004
126005 एतत्तुर्यपदं शुद्धमत्र बद्धपदो भव |
126006 संपरित्यज्य पूर्वे द्वे मा तत्रात्ममतिर्भव || २१ ||
126007
126008 श्रीराम उवाच |
126009
126010 जाग्रत्स्वप्नसुषुप्तेषु स्थितं त्रिष्वप्यलक्षितम् |
126011 तुर्यं ब्रूहि विशेषेण विविच्य मुनिनायक || २२ ||
126012
126013 स्थूलसूक्ष्मरूपे जीवस्य जाग्रत्स्वप्नयोः प्रसिद्धे | तावन्मात्रपरित्यागेऽपि न सम्यक्
126014 तस्य परिशुद्धिरित्यवस्थात्रयतीतं जिज्ञासमानो रामः पृच्छति - जाग्रदिति |
126015 स्थितं संकीर्णमत एव स्पष्टमलक्षितम् | विशेषेण तत्संकरव्यावर्तनेन || २२ ||
126016
126017 श्रीवसिष्ठ उवाच |
126018
126019 अहंभावानहंभावौ त्यक्त्वा सदसती तथा |
126020 यदसक्तं समं स्वच्छं स्थितं तत्तुर्यमुच्यते || २३ ||
126021
126022 अहंभावो जाग्रत्स्वप्नयोर्विक्षेपः | अनहंभावः सुषुप्तौ तन्मूलमावरणं
126023 तावुभौ व्यष्टिरूपौ जीवोपाधी समष्टिरूपौ तु असद्वा इदमग्र आसीत्ततो वै सदजायत
126024 इत्यादिश्रुतिप्रसिद्धे सदसती ते च त्यक्त्वा || २३ ||
126025
126026 या स्वच्छा समता शान्ता जीवन्मुक्तव्यवस्थितिः |
126027 साक्ष्यवस्था व्यवहृतौ सा तुर्यकलनोच्यते || २४ ||
126028
126029 जीवन्मुक्तेषु व्यवस्थितिर्निकृष्टस्थितिर्यस्याः | व्यवहृतौ व्यवहारकाले
126030 साक्ष्यवस्थेति प्रसिद्धा || २४ ||
126031
126032 नैतज्जाग्रन्न च स्वप्नं संकल्पानामसंभवात् |
126033 सुषुप्तभावो नाप्येतदभावाज्जडता स्थितेः || २५ ||
126034
126035 तस्या जाग्रदादिसंकरं वारयति - नैतदिति | जडता आवरणं तत्स्थितेरज्ञानस्य ||
126036 २५ ||
126037
126038 शान्तं सम्यक्प्रबुद्धानां यथास्थितमिदं जगत् |
126039 विलीनं तुर्यमेवाहुरबुद्धानां स्थिरं स्थितम् || २६ ||
126040
126041 नन्वद्वितीयं तुरीयं जाग्रदादि द्वैतकाले जीवन्मुक्तानामपि कथं स्यात्तत्राह -
126042 शान्तमिति | विलीनं ज्ञानबाधितम् || २६ ||
126043
126044 अहंकारकलात्यागे समतायाः समुद्भवे |
126045 विशरारौ कृते चित्ते तुर्यावस्थोपतिष्ठते || २७ ||
126046
126047 जलविलीनसैन्धववद्विशरारौ कृते सति || २७ ||
126048

126049 अथेमं शृणु दृष्टान्तं कथ्यमानं मयाधुना।
126050 प्रबुद्धोऽपि यथा बोधमुपैषि विबुधोपम॥ २८॥
126051
126052 जाग्रतो व्यवहरतः कथं चित्तं विशरारु स्यादित्यसंभावनां
126053 मृगव्याधीयोदाहरणेन वारयति - अथेममित्यादिना॥ २८॥
126054
126055 कस्मिंश्चित्काननाभोगे महामौनं व्यवस्थितम्।
126056 दृष्ट्वाद्भुतमिदं किंचिन्मुनिं पप्रच्छ लुब्धकः॥ २९॥
126057
126058 महामौनं ज्ञानबाधितवागादिचेष्टम्। इदं वक्ष्यमाणं पप्रच्छ॥ २९॥
126059
126060 पश्चादुपगतो बाणभिन्नं मृगमभिद्रुतम्।
126061 मुने मदीयबाणेन विद्धो मृग इहागतः॥ ३०॥
126062
126063 बाणभिन्नमभिद्रुतं पलायितुं मृगं पश्चाद्भागे उपगतो लुब्धक इति
126064 पूर्वान्वयि। किं पप्रच्छ तदाह - मुने इत्यादिना॥ ३०॥
126065
126066 क्व प्रयातो मृग इति प्रत्युवाच स तं मुनिः।
126067 समशीला वयं साधो मुनयो वनवासिनः॥ ३१॥
126068
126069 पुनर्मृग इत्युक्तिः संभ्रमात्॥ ३१॥
126070
126071 नास्माकमस्त्यहंकारो व्यवहारेषु यः क्षमः।
126072 सर्वाणीन्द्रियकर्माणि करोति हि सखे मनः॥ ३२॥
126073
126074 व्यवहारेष्वनभ्यस्तेष्विति शेषः॥ ३२॥
126075
126076 अहंकारमयं तन्मे नूनं प्रगलितं चिरम्।
126077 जाग्रत्स्वप्नसुषुप्ताख्या दशा वेद्मि न काश्चन॥ ३३॥
126078
126079 अहंकारमयमभिमानप्रचुरम्। चिरं सदैव॥ ३३॥
126080
126081 तुर्य एव हि तिष्ठेऽहं तत्र दृश्यं न विद्यते।
126082 इति तस्य वचः श्रुत्वा मुनिनाथस्य राघव॥ ३४॥
126083
126084 लुब्धकोऽर्थमविज्ञाय जगामाभिमतां दिशम्।
126085 अतो वच्मि महाबाहो नास्ति तुर्येतरा दशा॥ ३५॥
126086
126087 अतस्तादृशमुन्यनुभवश्रुत्यादिबाध्यत्वात्तुर्येतरा जाग्रदादिदशा स्थूलादिदशा
126088 च नास्ति॥ ३५॥
126089
126090 निर्विकल्पा हि चित्तुर्यं तदेवास्तीह नेतरत्।
126091 जाग्रत्स्वप्नसुषुप्ताख्यं त्रयं रूपं हि चेतसः॥ ३६॥
126092
126093 गुणत्रयात्मकमायामयचित्तकार्यत्वात्तिसृणामवस्थानां मायाबाधे चित्तस्य
126094 मृतत्वादपि तदुपादेयावस्थानामसत्त्वमित्याह - जाग्रदित्यादिना॥ ३६॥
126095
126096 घोरं शान्तं च मूढं च आत्मचित्तमिहास्थितम्।
126097 घोरं जाग्रन्मयं चित्तं शान्तं स्वप्नमयं स्थितम्॥ ३७॥
126098
126099 तिस्रोऽवस्था रज-आदिगुणप्राधान्येन त्रिधा विभज्य दर्शयति - घोरमिति।
126100 स्वर्गनरकपुनर्जन्मादिहेतुपुण्यपापोत्पादनाद्घनीभावाधिक्याच्च जाग्रन्मयं

126101 जाग्रदवस्थं चित्तं घोरमित्याद्यूह्यम् ॥ ३७ ॥
126102
126103 मूढं सुषुप्तभावस्थं त्रिभिर्हीनं मृतं भवेत् ।
126104 यच्च चित्तं मृतं तत्र सत्त्वमेकं स्थितम् समम् ।
126105 तदेव योगिनः सर्वे यत्नात्संपादयन्ति हि ॥ ३८ ॥
126106
126107 गुणत्रयात्मकमायोच्छेदात्त्रिभिर्हीनम् । मृते चित्ते योगिनां प्रारब्धशेषभोगाय
126108 भस्मनि शौक्ल्यमिव सत्त्वांश एवानुवर्तते न रजस्तमोंशलेश इत्याह - यच्चेति ।
126109 रजसा अक्षोभ्यमाणत्वात्समम् । तादृशे चित्ते नैर्मल्यातिशयेन स्वात्मसुखस्य
126110 सदैवाविर्भावात्सर्वव्यापारोपरमेण समाध्यभ्यासं यत्नात्संपादयन्तीत्यर्थः
126111 ॥ ३८ ॥
126112
126113 समस्तसंकल्पविलासमुक्तं तुर्ये पदे तिष्ठ निरामयात्मा ।
126114 यत्र स्थिताः साधु सदैव मुक्ताः प्रशान्तभेदा मुनयो महान्तः ॥ ३९ ॥
126115
126116 अतस्त्वमपि तादृशं चित्तं संपाद्य तुर्ये पदे विश्रान्तस्तिष्ठेत्याह - समस्तेति ।
126117 स्पष्टम् ॥ ३९ ॥
126118
126119 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वाणप्रकरणे पू०
126120 मृगव्याधीयं नाम चतुर्विंशत्यधिकशततमः सर्गः ॥ १२४ ॥
126121
126122 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
126123 मृगव्याधीयं नाम चतुर्विंशत्युत्तरशततमः सर्गः ॥ १२४ ॥
126124
126125 पञ्चविंशत्यधिकशततमः सर्गः १२५
126126
126127 श्रीवसिष्ठ उवाच ।
126128
126129 सिद्धान्तोऽध्यात्मशास्त्राणां सर्वापह्नव एव हि ।
126130 नाविद्यास्तीह नो माया शान्तं ब्रह्मेदमक्रमम् ॥ १ ॥
126131
126132 सर्वापह्नवसिद्धान्ते वादिनां यत्र विभ्रमाः ।
126133 तुर्ये तथाविधे स्थैर्यं सोपायमुपदिश्यते ॥
126134
126135 अविद्यया सहजैवास्यावस्थात्रयप्रपञ्चस्य मायया ऐश्वरस्य वियदादिप्रपञ्चस्य
126136 वेति सर्वस्य द्वैतजातस्यापह्नव आत्मानमधिकृत्य प्रवृत्तानां
126137 श्रुतिस्मृतीतिहासपुराणादिशास्त्राणां परमसिद्धान्तो न वस्तुप्रकाशनम् ।
126138 स्वप्रकाशस्यात्मवस्तुनः स्वतःसिद्धतया तत्सिद्धौ प्रमाणाप्रसरादित्याह -
126139 सिद्धान्त इति । शान्तं सर्वोपप्लवरहितमिदं नित्यापरोक्षं ब्रह्म शास्त्रैर्न
126140 क्रम्यत इत्यक्रममवगाढुमशक्यमित्यर्थः । तथा च श्रुतिः यतो वाचो निवर्तन्ते
126141 अप्राप्य मनसा सह इति । तथा च द्रविडाचार्यैरप्युक्तम् यद्यप्रमेयं ब्रह्म
126142 किमर्थं शास्त्रमिति चेत्सिद्धं तु निवर्तकत्वात् इति ॥ १ ॥
126143
126144 शान्त एव चिदाभासे स्वच्छे समसमात्मनि ।
126145 समग्रशक्तिखचिते ब्रह्मेति कलिताभिधे ॥ २ ॥
126146
126147 श्रुत्यादिसिद्धान्तापरिज्ञानादेव स्वबुद्धिवैभवेन जगन्मूलान्वेषिणां वादिनां
126148 ब्रह्मशब्दवाच्ये सर्वशक्त्यात्मकमायाशबले ब्रह्मणि
126149 बुद्धिदोषवैचित्र्यान्नानाविधाः कल्पनाः प्रवृत्ता इत्याह - शान्त इति द्वाभ्याम्
126150 ॥ २ ॥
126151
126152 निर्णीय केचिच्छून्यत्वं केचिद्विज्ञानमात्रताम् ।

126153 केचिदीश्वररूपत्वं विवदन्ते परस्परम् ॥ ३ ॥
126154
126155 निर्णीय स्वस्वबुद्ध्यनुसारेण सिद्धान्तभेदान्कल्पयित्वा ॥ ३ ॥
126156
126157 सर्वमेव परित्यज्य महामौनी भवानघ ।
126158 निर्वाणवान्निर्मननः क्षीणचित्तः प्रशान्तधीः ॥ ४ ॥
126159
126160 सर्वं मायान्तं दृश्यजातं परित्यज्य ।
126161 समनस्कसर्वेन्द्रियव्यापारोपरमान्महामौनी । पूर्णानन्दचिदात्मनि निर्वाणवान्सन्
126162 आत्मन्येवास्स्वेति परेणान्वयः ॥ ४ ॥
126163
126164 आत्मन्येवास्स्व शान्तात्मा मूकान्धबधिरोपमः ।
126165 नित्यमन्तर्मुखो भूत्वा स्वात्मनान्तः प्रपूर्णधीः ॥ ५ ॥
126166
126167 जाग्रत्येव सुषुप्तस्थः कुरु कर्माणि राघव ।
126168 अन्तः सर्वपरित्यागी बहिः कुरु यथागतम् ॥ ६ ॥
126169
126170 पञ्चमादिभूमिकाजयाज्जाग्रदवस्थोपि सुषुप्त इव स्थितः ॥ ६ ॥
126171
126172 चित्तसत्ता परं दुःखं चित्तासत्ता परं सुखम् ।
126173 अतश्चित्तं चिदेकात्मा नय क्षयमवेदनात् ॥ ७ ॥
126174
126175 अवेदनात्प्रियद्वेष्यत्वाननुसंधानात् ॥ ७ ॥
126176
126177 दृष्टा रम्यमरम्यं वा स्थेयं पाषाणवत्समम् ।
126178 एतावतात्मयत्नेन जिता भवति संसृतिः ॥ ८ ॥
126179
126180 अवेदनादित्येतदेव स्पष्टयति - दृष्ट्वेति ॥ ८ ॥
126181
126182 संवेदनीयं न सुखं नासुखं न च मध्यमम् ।
126183 एतावतात्मयत्नेन दुःखान्तोऽनन्त आप्यते ॥ ९ ॥
126184
126185 संवेदनीयं चिन्तनीयम् । असुखं दुःखम् । मध्यमं तदुभयसाधनम् ॥ ९ ॥
126186
126187 आपीनमण्डलशशाङ्कवदन्तरेव श्रीमद्रसायनमयः सुखमेति तज्ज्ञः ।
126188 विज्ञातसर्वभुवनत्रयवस्तुसारः कुर्वन्न नाम कुरुते परमभ्युपेतः ॥ १० ॥
126189
126190 विज्ञातः सर्वेषां भुवनत्रयवस्तूनां सारो येन । अत एव श्रीमत् स्वतः सर्वतः
126191 प्रकाशेन शोभमानं यद्रसायनं निरतिशयसुखममृतं च तन्मयः । अत एव
126192 च आसमन्तात्पीनं पुष्टं मण्डलं यस्य तादृशो यः शशाङ्कः
126193 पूर्णचन्द्रस्तत्कल्पः परं परमात्मानमभ्युपेतस्तज्ज्ञो जीवन्मुक्तिसुखमेति ।
126194 कुर्वन्नपि प्रारब्धोपनीतं व्यवहारं न कुरुते । प्रतिबिम्बचेष्टायामिव न स्वस्य
126195 कर्तृत्वं पश्यतीत्यर्थः ॥ १० ॥
126196
126197 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वाणप्रकरणे पू० तुर्ये
126198 स्थैर्योपायकथनं नाम पञ्चविंशत्युत्तरशततमः सर्गः ॥ १२५ ॥
126199
126200 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे तुर्ये
126201 स्थैर्योपायकथनं नाम पञ्चविंशत्युत्तरशततमः सर्गः ॥ १२५ ॥
126202
126203 षड्विंशत्यधिकशततमः सर्गः १२६
126204

126205 श्रीराम उवाच।
126206
126207 सप्तानां योगभूमीनामभ्यासः क्रियते कथम्।
126208 कीदृशानि च चिह्नानि भूमिकां प्रति योगिनः॥१॥
126209
126210 उच्येते योगभूमीनामभ्यासक्रमलक्षणे।
126211 अन्तराले मृतौ भोगास्ततो जन्मान्तरे जयः॥
126212
126213 जाग्रत्येव सुषुप्तस्थः कुरु कर्माणि राघव इति चतुर्थभूमिकारूढं रामं प्रति
126214 पञ्चमादिभूमिकास्थितिः संपाद्येत्युक्तम्। तत्संपादनकामो रामः
126215 स्वजितजेतव्यभूमिकाविभागज्ञानाय तल्लक्षणानि तदभ्यासक्रमं च पृच्छति ##-
126216 वीप्सायां प्रतेः कर्मप्रवचनीयसंज्ञायां द्विर्वचनस्याव्ययीभावस्य वा
126217 आवश्यकत्वात्तदकरनं छान्दसम्॥१॥
126218
126219 श्रीवसिष्ठ उवाच।
126220
126221 प्रवृत्तश्च निवृत्तश्च भवति द्विविधः पुमान्।
126222 स्वर्गापवर्गोन्मुखयोः शृणु लक्षणमेतयोः॥२॥
126223
126224 पृष्टं भूमिकाभ्यासक्रमं कथयिष्यन्वसिष्ठस्तदधिकारिणं
126225 प्रवृत्तिशास्त्राधिकारिव्यावृत्तं दर्शयितुं तौ विभज्य तयोर्लक्षणभेदोक्तिं
126226 प्रतिजानीते - प्रवृत्तश्चेति। पुमान् वेदमार्गस्थः पुरुषः॥२॥
126227
126228 कियत्तन्नाम निर्वाणं वरं संसृतिरेव मे।
126229 इतिकर्तव्यकर्ता यः स प्रवृत्त इति स्मृतः॥३॥
126230
126231 तत्रादौ रागादिदोषैर्विपरीतबुद्धेः प्रवृत्तस्य लक्षणमाह - कियदिति। तत्
126232 सर्वविषयशून्यत्वेन प्रसिद्धं निर्वाणं कियन्नाम। न भोगरागिणां
126233 बहुमतमित्यर्थः। उच्चावचभोगसंपन्ना संसृतिरेव मे वरन्। यथाहुः अपि
126234 वृन्दावने शून्ये शृगालत्वं स वाञ्छति। न तु निर्विषयं मोक्षं कदाचिदपि
126235 गौतम्॥ इति। एवं प्रकारेण निश्चित्य कर्तव्यस्य नित्यनैमित्तिककाम्यकर्मजातस्य यः
126236 कर्ता॥३॥
126237
126238 चलार्णवयुगच्छिद्रकूर्मग्रीवाप्रवेशवत्।
126239 अनेकजन्मनामते विवेकी जायते पुमान्॥४॥
126240
126241 निवृत्तं लक्षयिष्यन् निवृत्तिहेतुं विवेकं वर्णयितुं तद्दौर्लभ्यमाह - चलेति।
126242 यथा यादोगणकोटिभिः
126243 प्रचण्डपवनैर्वडवानलक्कथनादिभिश्चात्यन्तचञ्चलपूर्वापरार्णवद्वयोदरे
126244 विहरतां कूर्माणां ग्रीवाणामल्पतरेऽपि तरंगचलनादिप्रयुक्तभये
126245 झटित्येवान्तःप्रवेशाः पुनर्निर्गमाश्चासंख्येयास्तद्वदसंख्येयानां
126246 मृत्युमुखप्रवेशपुनर्निर्गमनलक्षणानां जन्मनामन्ते कश्चिदेव पुमान्
126247 विवेकी जायत इत्यर्थः। अथवा क्षारार्णवस्थमहाकूर्मग्रीवा यथा अनेकशः
126248 कण्ठच्छिद्रे प्रविश्य निर्गतापि क्षारार्णवरसमेवास्वादयन्ती तमेव
126249 बहुमन्यमाना आप्रलयं न क्षीरार्णवरसं जानाति। अन्ते कल्पान्ते तु चलयोः
126250 क्षारक्षीरार्णवयोर्मिलनावसरे तदुभयोदरलक्षणच्छिद्रे ग्रीवाप्रवेशे
126251 क्षीररसमास्वाद्य क्षाररसात्क्षीररसस्य विवेकिनी भूत्वा तदासक्ता जायते तद्वज्जीवोऽपि
126252 प्राग्विषयरसानेव बहुमन्यमानोऽनेकजन्मनामन्ते
126253 भाग्योदयादध्यात्मशास्त्ररसमास्वाद्य विवेकी तदासक्तो जायत इत्यर्थः। अथवा
126254 अमृतोत्पादनाय देवासुरैः समुद्रमथने क्रियमाणे यथा मन्थाचलाधारस्य
126255 कूर्मभूतस्य भगवतः समस्तभुवनाधारोदरत्वादन्तर्बहिश्च
126256 मथ्यमानचलार्णवयुगस्य च्छिद्रे क्व प्रथमममृतमुत्पद्यते इत्यास्वादनेन

परीक्षार्थं प्रवृत्ता ग्रीवा अनेकेषामन्तःप्रवेशबहिर्निर्गमनजन्मनामन्ते
अन्तर्बहिर्वा यत्रैव प्रथमममृतमुत्पन्नं तत्रैव पायेन
बहिर्मनननिदिध्यासनाभ्यामन्तश्च ब्रह्मात्मतत्त्वविवेकाय प्रवृत्तः
पुमाननेकजन्माभ्यासवशादन्ते अन्तरेव बहिः श्रवणावसरे वा साक्षाद्विवेकेन
निरतिशयानन्दमास्वादयतीत्यर्थः । अथवा चलयोर्णवयोर्युगस्य युग्मस्य च्छिद्रे
मध्यवर्तितीरविवरे कूर्मस्य ग्रीवया साधनभूतया प्रवेशे सति यथा परतो
निर्गमने पश्चान्निवर्तने तथैव च्छिद्रावस्थाने वा न क्वापि विश्रान्तिस्तथा
प्राक्तनं भवसागरं परित्यज्य भवान्तरं प्रति विविक्षोर्जीवस्य न क्वापि विश्रान्तिःइ
। तथाहि । प्राक्तने जन्मनि जरामरणादिदुःखपरम्पराभाविनि
बाल्यादिदुःखसन्ततिर्मध्यवर्तिनि यातनादेहे गर्भवासे वा महद्दुःखमिति । इत्थं
दुःखमयानामनेकेषां जन्मनामन्ते पुमान्कुतश्चित्पुण्यपरिपाकाद्विवेकी जायते ॥
४ ॥

असारा बत संसारव्यवस्थालं ममैतया ।
किं कर्मभिः पर्युषितैर्दिनं तैरेव नीयते ॥ ५ ॥

कीदृशो विवेकोऽस्य जायते तमाह - असारेत्यादिना । विविधा विरुद्धा
चावस्थितिर्व्यवस्था असारा विश्रान्तिसुखहीना । पर्युषितैरनुचितपरिणामैः
[अशुचिपरिणामैः इति पाठः ।] ॥ ५ ॥

क्रियातिशयनिर्मुक्तं किं स्याद्विश्रमणं परम् ।
इति निश्चयवान्योऽन्तः स निवृत्त इति स्मृतः ॥ ६ ॥

क्रियाप्रयुक्तैरतिशयैरुत्पत्त्याप्तिविकृतिसंस्कारैर्निर्मुक्तं कूटस्थमित्यर्थः । इति
विचार्य तदवश्यं संपादनीयमिति निश्चयवान् ॥ ६ ॥

कथं विरागवान्भूत्वा संसाराब्धिं तराम्यहम् ।
एवंविचारणपरो यदा भवति सन्मतिः ॥ ७ ॥

तस्य प्रथमभूमिकाप्राप्तिक्रममाह - कथमित्यादिना ॥ ७ ॥

विरागमुपयात्यन्तर्भावनास्वनुवासरम् ।
क्रियासूदाररूपासु क्रमते मोदतेऽन्वहम् ॥ ८ ॥

भावनासु भोगतत्साधनचिन्तासु । विरागं वैरस्यम् । उदाररूपासु
चित्तशुद्ध्यनुकूलासु शौचसत्सङ्गेश्वरोपासनजपादिरूपासु क्रियासु क्रमते सज्जते ।
तेन चान्वहं चित्तशुद्ध्युपचयेन तृष्णाक्षयान्मोदते ॥ ८ ॥

ग्राम्यासु जडचेष्टासु सततं विचिकित्सति ।
नोदाहरति मर्माणि पुण्यकर्माणि सेवते ॥ ९ ॥

विचिकित्सति जुगुप्सते । मर्माणि परेषां रहस्यदोषान्नोदाहरति न भाषते ॥ ९ ॥

मनोनुद्वेगकारीणि मृदुकर्माणि सेवते ।
पापाद्बिमेति सततं न च भोगमपेक्षते ॥ १० ॥

परेषां स्वस्य च मनसः अनुद्वेगकराणि मृदून्यल्पायासमहाफलानि
यमनियमादिकर्माणि सेवते । भोगे च पापावश्यंभावात्तं नापेक्षते ॥ १० ॥

स्नेहप्रणयगर्भाणि पेशलान्युचितानि च ।
देशकालोपपन्नानि वचनान्यभिभाषते ॥ ११ ॥

पेशलान्यनुद्वेगकराणि | उचितानि सत्यप्रियहितादिरूपाणि || ११ ||

तदासौ प्रथमामेकां प्राप्तो भवति भूमिकाम् |
मनसा कर्मणा वाचा सज्जनानुपसेवते || १२ ||

एवंगुणविशिष्टपुरुषस्य सच्छास्त्रश्रवणाधिकारलक्षणायां
प्रथमभूमिकायामवतार इत्याह - तदेति | सज्जनान्
शान्तिदान्तिज्ञानविज्ञानसंपन्नान् || १२ ||

यतः कुतश्चिदानीय ज्ञानशास्त्राण्यवेक्षते |
एवंविचारवान्यः स्यात्संसारोत्तारणं प्रति || १३ ||

यतः कुतश्चित्तत्सेवानुकूलं धनादिसाधनमानीय
तान्सेवमानस्तन्मुखाज्ज्ञानशास्त्राणि
पुराणमोक्षधर्माध्यात्मसंहितादीन्यवेक्षते शृणोतीत्यर्थः || १३ ||

स भूमिकावानित्युक्तः शेषः स्वार्थ इति स्मृतः |
विचारनाम्नीमितरामागतो योगभूमिकाम् || १४ ||

भूमिकावान्प्रथमभूमिकाप्रविष्ट इत्युक्तः | शेषः
उक्तसाधनचतुष्टयादिसंपत्तिहीनस्त्वध्यात्मग्रन्थासक्तोऽपि रागादिना
अनधिकारिजनप्रतारणेनार्जनादिना उदरभरणशीलत्वात्स्वार्थो वञ्चक इत्यर्थः |
सेयं शुभेच्छाख्या प्रथमा भूमिका | तस्य क्रमेण
द्वितीयभूमिकाप्रवेशक्रममाह - विचारेति | भूमिकामागतः
अधिकारप्राप्त्याऽवतीर्णः || १४ ||

श्रुतिस्मृतिसदाचारधारणाध्यानकर्मणाम् |
मुख्यया व्याख्यया ख्याताञ्श्रयते श्रेष्ठपण्डितान् || १५ ||

स तत्र किं करोति तदाह - श्रुतीति | श्रुतीनां स्मृतीनां सदाचाराणां
धारनाध्यानकर्मणां साध्येन समाधिना साधनैश्च
यमनियमासनप्राणायामप्रत्याहारैः प्रतिपाद्ये यस्य योगशास्त्रस्य तस्य च
मुख्यया अनुष्ठानानुष्ठापनफलोपहितया व्याख्यया व्याख्यानेन ख्यातान् |
आत्मतत्त्वानुभवोपदेशकुशलत्वाच्छ्रेष्ठान्पण्डितान् गुरून् श्रयते
श्रवणमननादिविचाराय शरणं गच्छतीत्यर्थः | तथा च श्रुतिः तद्विज्ञानार्थं
स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् इति || १५ ||

पदार्थप्रविभागज्ञः कार्याकार्यविनिर्णयम् |
जानात्यधिगतश्रव्यो गृहं गृहपतिर्यथा || १६ ||

स्वयं व्याकरणाद्यङ्गाभिज्ञत्वात्पदानां तदर्थानां च
वाच्यलक्ष्यादिरूपाणां लक्षणादिप्रविभागज्ञः शिष्यो गुरुमुखादधिगतश्रव्यः
सन् कार्यं साध्यं कर्मकाण्डार्थस्तद्विलक्षणमकार्यं सिद्धं
ब्रह्मकाण्डार्थस्तयोर्विनिर्णयं गृहपतिः स्वगृहकोष्ठविभागमिव स्पष्टं
जानाति || १६ ||

मदाभिमानमात्सर्यमोहलोभातिशायिताम् |
बहिरप्याश्रितामीषत्त्यजत्यहिरिव त्वचम् || १७ ||

बहिर्लोकमर्यादानुसारेणेषदाश्रितामपि | अनेन प्रथमभूमिकायामेव
तेषामन्तर्निवृत्तता दर्शिता || १७ ||

126361 इत्थंभूतमतिः शास्त्रगुरुसज्जनसेवनात्।
126362 सरहस्यमशेषेण यथावदधिगच्छति॥ १८॥
126363
126364 शास्त्ररहस्यं परमतात्पर्यं प्रमाणासंभावनानिरासेनाधिगच्छति।
126365 गुरुसज्जनाभिमतमात्मरहस्यं प्रमेयासंभावनानिरासेनाधिगच्छति॥ १८॥
126366
126367 असंसङ्गाभिधामन्यां तृतीयां योगभूमिकाम्।
126368 ततः पतत्यसौ कान्तः पुष्पशय्यामिवामलाम्॥ १९॥
126369
126370 एवं द्वितीयभूमिकां जितवतस्तृतीयभूमिकाप्रवेशमाह - असंसङ्गेति।
126371 ततस्तृतीयां भूमिकां पतति प्रविशति॥ १९॥
126372
126373 यथावच्छास्त्रवाक्यार्थे मतिमाधाय निश्चलम्।
126374 तापसाश्रमविश्रामैरध्यात्मकथनक्रमैः॥ २०॥
126375
126376 यथावदिति श्लोकद्वयं यथायोगं पूर्वभूमिकाद्वयानुवादः॥ २०॥
126377
126378 संसारनिन्दकैस्तद्वद्वैराग्यकरणक्रमैः।
126379 शिलाशय्यासमासीनो जरयत्यायुराततम्॥ २१॥
126380
126381 वनवासविहारेण चित्तोपशमशोभिना।
126382 असङ्गसुखसौम्येन कालं नयति नीतिमान्॥ २२॥
126383
126384 ग्रामवासे विक्षेपबाहुल्येन समाध्यभ्यासानिर्वाहाद्वनवासविहारेण॥ २२॥
126385
126386 अभ्यासात्साधुशास्त्राणां करणात्पुण्यकर्मणाम्।
126387 जन्तोर्यथावदेवेयं वस्तुदृष्टिः प्रसीदति॥ २३॥
126388
126389 तत्र चित्तप्रसादे व्युत्थानकाले पूर्वभूमिकाद्वयधर्मानुवृत्तिरप्यावश्यकीति
126390 दर्शयति - अभ्यासादिति॥ २३॥
126391
126392 तृतीयां भूमिकां प्राप्य बुधोऽनुभवति स्वयम्।
126393 द्विःप्रकारमसंसङ्गं तस्य भेदमिमं शृणु॥ २४॥
126394
126395 असङ्गसुखसौम्येनेत्युक्तिं विभज्य व्याचष्टे - तृतीयामिति॥ २४॥
126396
126397 द्विविधोऽयमसंसङ्गः सामान्यः श्रेष्ठ एव च।
126398 नाहंन् कर्ता न भोक्ता च न बाध्यो न च बाधकः॥ २५॥
126399
126400 सामान्यः पूर्वभूमिकासाधारणः। स्वदेहक्रियाफलयोर्न कर्ता न भोक्ता
126401 चेत्युदासीनः। परक्रियाफलानां च न बाध्यो बाधकश्चेत्यसङ्गः॥ २५॥
126402
126403 इत्यसज्जनमर्थेषु सामान्यासङ्गनामकम्।
126404 प्राक्कर्मनिर्मितं सर्वमीश्वराधीनमेव च॥ २६॥
126405
126406 इति निश्चयेन। अर्थेषु दृश्येष्वसज्जनमनभिष्वङ्गः। सामान्यासंसङ्गमेव
126407 दृढीकर्तुं प्रपञ्चयति - प्राक्कर्मेति सार्धत्रिभिः। सुखं वा प्राप्यमाणं
126408 यदि वा दुःखं प्राप्यमाणं सर्वं प्राक्कर्मनिर्मितं कर्मस्वातन्त्र्यपक्षे।
126409 ईश्वरस्वातन्त्र्यपक्षे त्वीश्वराधीनमेव। वाशब्द उत्तरपक्षस्य
126410 प्रामाणिकत्वद्योतनार्थः॥ २६॥
126411
126412 सुखं वा यदि वा दुःखं कैवात्र मम कर्तृता।

126413 भोगाभोगा महारोगाः संपदः परमापदः ॥ २७ ॥
126414
126415 पक्षद्वयेऽपि ममास्वातन्त्र्यात्स्वतन्त्रः कर्तेत्यानुशासनिकी कर्तृता कैव न
126416 काचिदपीत्यर्थः । असंसङ्गोपयुक्तानन्यानप्यनास्थाहेतून्भावेषु दर्शयति -
126417 भोगा इति ॥ २७ ॥
126418
126419 वियोगायैव संयोगा आधयो व्याधयो धियः ।
126420 कालः कवलनोद्युक्तः सर्वभावाननारतम् ॥ २८ ॥
126421
126422 अनास्थयेति भावानां यदभावनमान्तरम् ।
126423 वाक्यार्थलग्नमनसः सामान्योऽसावसंगमः ॥ २९ ॥
126424
126425 इयमनास्थापि श्रवणादिसाहाय्येन वाक्यार्थज्ञानासक्तस्यैवासंसङ्गसुखाय
126426 नान्यस्येत्याह - वाक्यार्थेति ॥ २९ ॥
126427
126428 अनेकक्रमयोगेन संयोगेन महात्मनाम् ।
126429 वियोगेनासतामन्तः प्रयोगेणात्मसंविदाम् ॥ ३० ॥
126430
126431 अयं चासंसङ्गः पूर्वभूमिकयोरेव सत्सङ्गाद्युपायैः सम्यगभ्यसनीय इत्याह
126432 - अनेनेति । श्रवणमननात्मिकानामात्मसंविदां प्रयोगेण आवर्तनेन । तथा च
126433 भगवतो बादरायणस्य सूत्रं आवृत्तिरसकृदुपदेशात् इति ॥ ३० ॥
126434
126435 पौरुषेण प्रयत्नेन संतताभ्यासयोगः ।
126436 करामलकवद्वस्तुन्यागते स्फुटतां दृढम् ॥ ३१ ॥
126437
126438 आत्मवस्तुनि प्रमाणप्रमेयासंभावनाद्वयनिरासेन स्फुटतां इत्थमेवात्मवस्त्विति
126439 विश्वासगोचरतामागते सति ॥ ३१ ॥
126440
126441 संसाराम्बुनिधेः पारे सारे परमकारणे ।
126442 नाहंन् कर्तेश्वरः कर्ता कर्म वा प्राकृतं मम ॥ ३२ ॥
126443
126444 सप्तम्यन्तत्रयंन् पूर्वान्वयि वस्तुनीत्यस्य विशेषणम् । श्रेष्ठासंसङ्गं
126445 दर्शयति - नाहमित्यादिना । नाहं कर्ता किंत्वीश्वर एव कर्ता । मम
126446 प्राक्कृतमिदानीं क्रियमाणं वा कर्म
126447 नास्तीत्यादिनिरासतत्प्रतियोग्यादिविकल्पशब्दार्थवेदनामपि दूरतरे कृत्वा
126448 यन्मौनमासनमिति परेणान्वयः ॥ ३२ ॥
126449
126450 कृत्वा दूरतरे नूनमिति शब्दार्थभावनम् ।
126451 यन्मौनमासनं शान्तं तच्छ्रेष्ठासङ्ग उच्यते ॥ ३३ ॥
126452
126453 मौनं वाङ्मनश्चक्षुरादिचेष्टाशून्यंन्
126454 निदिध्यासनपरिपाकफलनिर्विकल्पसमाधिना यत् आसनमवस्थानम् ॥ ३३ ॥
126455
126456 यन्नान्तर्न बहिर्नाधो नोर्ध्वं नाशासु नाम्बरे ।
126457 न पदार्थे नापदार्थे न जडे न च चेतने ॥ ३४ ॥
126458
126459 यद्ब्रह्मैकरस्यविलीनचित्तवृत्त्यात्मकमासितम् ।
126460 अन्तर्बाह्यादिसर्ववस्त्वालम्बनशून्यमित्यर्थः । चेतने चिदाभासे । सर्वा
126461 विषयसप्तम्यः ॥ ३४ ॥
126462
126463 आसितं भासनं शान्तमभासं नभसा समम् ।
126464 अनाद्यन्तमजं कान्तं तच्छ्रेष्ठासङ्ग उच्यते ॥ ३५ ॥

126465
126466 यत आसितं भासनं स्वप्रकाशचिद्रूपम् | अभासं प्रकाशकान्तरशून्यम् || ३५ ||
126467
126468 संतोषामोदमधुरः सत्कार्यामलपल्लवः |
126469 चित्तनालाग्रसंलीनो विघ्नकण्टकसंकटः || ३६ ||
126470
126471 स चायं समाधिः सदाचारोपबृंहितविवेकस्य फलमिति वक्तुं विवेकं पद्मत्वेन
126472 रूपयति - संतोषेति | सत्कार्याणि निष्कामकर्माणि
126473 उपासनगुरुशुश्रूषाश्रवणादीन्येव पल्लवा यस्य | चित्तलक्षणनालाग्रे संलीनै
126474 रागादिवासनाप्रभवैर्बहुतरविघ्नकण्टकैः संकटो निबिडितः || ३६ ||
126475
126476 विवेकपद्मो रूढोऽन्तर्विचारार्कविलासितः |
126477 फलं फलत्यसंसङ्गां तृतीयां भूमिकामिमाम् || ३७ ||
126478
126479 सोऽयमसंसङ्ग एव तृतीया भूमिकेत्याह - फलमिति || ३७ ||
126480
126481 समवायाद्विशुद्धानां संचयात्पुण्यकर्मणाम् |
126482 काकतालीययोगेन प्रथमोदेति भूमिका || ३८ ||
126483
126484 प्रथमभूमिकैवानेकजन्मसंचितसुकृतपरिपाकैरैहिकपुण्यसंचयैश्च
126485 दैवादङ्कुरिता चेत्सैव सत्संगमादिना महता यत्नेन रक्षणीया सा चेद्रक्षिता
126486 अनायासेनैव द्वितीयादिभूमिकाः सेत्स्यन्तीति तत्रैव यत्नाधिक्यमुपदिशति -
126487 समवायादिति | विशुद्धानां तत्त्वविदां
126488 समवायाद्दानमानभजनाद्युपायैर्मेलनात् || ३८ ||
126489
126490 भूमिः प्रोदितमात्रा तैरमृताङ्कुरिकेव सा |
126491 विवेकेनाम्बुसेकेन रक्ष्या पाल्या प्रयत्नतः || ३९ ||
126492
126493 समवेतैस्तैः किं कार्यं तदाह - भूमिरिति | यतस्तैर्विशुद्धैः सा
126494 शुभेच्छालक्षणा भूमिरीषच्छुभप्रवृत्त्युन्मुखतया प्रोदिता मेघैरङ्कुरिता
126495 भूमिरिव प्रतिदिनं विवेकोपदेशलक्षणेनाम्बुसेकेन यथा अमृता अम्लाना भवति
126496 तथा रक्ष्या वर्धनीया दुष्प्रवृत्त्यादिविघ्ननिवारणयत्नेन पालनीया चेत्यर्थः || ३९
126497 | |
126498
126499 येनांशेनोल्लसत्येषा विचारेणोदयं नयेत् |
126500 तमेवानुदिनं यत्नात्कृषीवल इवाङ्कुरम् || ४० ||
126501
126502 एषा शुभेच्छा साधनचतुष्टयमध्ये वैराग्यलक्षणेन वा येनैवांशेन
126503 प्रथममङ्कुरितोल्लसति तमेवांशं विचारेणोदयमभिवृद्धिं नयेत् || ४० ||
126504
126505 एषा हि परिमृष्टान्तरन्यासां प्रसवैकभूः |
126506 द्वितीयां भूमिकां यत्नात्तृतीयां प्राप्नुयात्ततः || ४१ ||
126507
126508 एकोंशोऽभिवर्धितोऽन्या उत्तरभूमिकाश्च स्वयमेव साधयिष्यतीत्याह - एषेति || ४१ ||
126509
126510 श्रेष्ठा संसङ्गता ह्येषा तृतीया भूमिकात्र हि |
126511 भवति प्रोज्झिताशेषसंकल्पकलनः पुमान् || ४२ ||
126512
126513 सोपायं वर्णितां तृतीयभूमिकां सफलामुपसंहरति - श्रेष्ठेति || ४२ ||
126514
126515 श्रीराम उवाच |
126516

126517 मूढस्यासत्कुलोत्थस्य प्रवृत्तस्याधमस्य च ।
126518 अप्राप्तयोगिसङ्गस्य कथमुत्तरणं भवेत् ॥ ४३ ॥
126519
126520 प्रसङ्गादन्तराले मूढेषु दयया रामः पृच्छति - मूढस्येति ।
126521 आभिजात्याद्यधिकारिविशेषणहीनस्याध्यात्मकथाविमुखस्य कामभोगार्थमेव
126522 प्रवृत्तस्याधमस्य चोपायान्तरेण मोक्षोऽस्ति वा न वेति प्रथमप्रश्नार्थः ॥ ४३ ॥
126523
126524 एकामथ द्वितीयां वा तृतीयां चेतरां च वा ।
126525 आरूढस्य मृतस्याथ कीदृशी भगवन्गतिः ॥ ४४ ॥
126526
126527 आद्यभूमिकात्रये अपरोक्षज्ञानोदयाभावादेकद्वित्र्यादिरूढदशायां मृतस्य
126528 कीदृशी गतिरिति द्वितीयस्य ॥ ४४ ॥
126529
126530 श्रीवसिष्ठ उवाच ।
126531
126532 मूढस्यारूढदोषस्य [मूढस्येत्यारभ्य संग्रह
126533 इत्यन्तसार्धश्लोकद्वयस्थानेऽयं पाठ उपलभ्यते मूढस्यारूढदोषस्य
126534 तावत्संसृतिरातता । यावज्जन्मान्तरशतैर्नोदिता प्रथमात्र भूः ॥ १ ॥ अथवा
126535 साधुसंगत्या काकतालीययोगतः । संसारस्य परामर्शाद्वैराग्यं नाभ्युदेति
126536 हि ॥ २ ॥ वैराग्येऽभ्युदिते जन्तोरवश्यं भूमिकोदयः इति ।]
126537 तावत्संसृतिरातता ।
126538 यावज्जन्मान्तरशतैः काकतालीययोगतः ॥ ४५ ॥
126539
126540 आद्यप्रश्नस्योत्तरमाह - मूढस्येत्यादिसार्धद्वयेन । काकतालीययोगतः
126541 स्वविचारत एव वा साधुसंगत्या वा वैराग्यं यावन्नाभ्युदेतीति परेणान्वयः ॥ ४५ ॥
126542
126543 अथवा साधुसंगत्या वैराग्यं नाभ्युदेति हि ।
126544 वैराग्येऽभ्युदिते जन्तोरवश्यं भूमिकोदयः ॥ ४६ ॥
126545
126546 ततो नश्यति संसार इति शास्त्रार्थसंग्रहः ।
126547 योगभूमिकयोत्क्रान्तजीवितस्य शरीरिणः ॥ ४७ ॥
126548
126549 द्वितीयस्योत्तरमाह - योगभूमिकयेत्यादिना ॥ ४७ ॥
126550
126551 भूमिकांशानुसारेण क्षीयते पूर्वदुष्कृतम् ।
126552 ततः सुरविमानेषु लोकपालपुरेषु च ॥ ४८ ॥
126553
126554 मेरूपवनकुञ्जेषु रमते रमणीसखः ।
126555 ततः सुकृतसंभारे दुष्कृते च पुरा कृते ॥ ४९ ॥
126556
126557 दुष्कृतक्षयानुसारेण रमते इत्यर्थाद्गम्यते । दुष्कृते चेति प्राक्तनानुवादः । न हि
126558 तस्य नरकादिभोगोऽस्ति न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति इति भगवद्वचनात्
126559 । आनुषङ्गिकं दुःखभोगाभिप्रायं वा । स्वर्गिणामपि
126560 शारीरमानसादिदुःखसहस्रसत्त्वात् ॥ ४९ ॥
126561
126562 भोगजाले परिक्षीणे जायन्ते योगिनो भुवि ।
126563 शुचीनां श्रीमतां गेहे गुप्ते गुणवतां सताम् ॥ ५० ॥
126564
126565 भोगजाले भुज्यमाने सुकृतसंभारे दुष्कृते च परिक्षीणे सतीत्यन्वयः । योगिन इति
126566 जात्याख्यायां बहुवचनम् ॥ ५० ॥
126567
126568 जनित्वा योगमेवैते सेवन्ते योगवासिताः ।

126569 तत्र प्राग्भावनाभ्यस्तयोगभूमिक्रमं बुधाः ।
126570 स्मृत्वा परिपतन्त्युच्चैरुत्तरं भूमिकाक्रमम् ॥ ५१ ॥
126571
126572 योगमेवेति । पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः इति भगवद्वचनात् । तदेवाह
126573 - योगवासिता इति । परिपतन्त्यारोहन्ति ॥ ५१ ॥
126574
126575 भूमिकात्रितयं त्वेतद्राम जाग्रदिति स्मृतम् ।
126576 यथावद्भेदबुद्ध्येदं तज्जाग्रदिति दृश्यते ॥ ५२ ॥
126577
126578 प्रश्नयोरुत्तरमुक्त्वा प्रकृतमनुसरति - भूमिकात्रितयमित्यादिना ।
126579 आद्यभूमिकात्रये जाग्रच्छब्दप्रवृत्तिनिमित्तमाह - यथावदिति ।
126580 भेददर्शनगुणेन प्रसिद्धजाग्रत्साम्यादित्यर्थः ॥ ५२ ॥
126581
126582 उदेति योगयुक्तानामत्र केवलमार्यता ।
126583 यां दृष्ट्वा मूढबुद्धीनामभ्युदेति मुमुक्षुता ॥ ५३ ॥
126584
126585 निमित्तान्तरमप्याह - उदेतीति । आर्यता पूज्यता प्रयोजकसद्गुणोकर्षः । यां
126586 दृष्ट्वेति । यद्यदाचरति श्रेष्ठः इति न्यायादित्यर्थः ॥ ५३ ॥
126587
126588 कर्तव्यमाचरन्काममकर्तव्यमनाचरन् ।
126589 तिष्ठति प्राकृताचारो यः स आर्य इति स्मृतः ॥ ५४ ॥
126590
126591 तामेवार्यतामनार्यजनव्यावृत्तां प्रथमं लक्षयति - कर्तव्यमिति । कामं
126592 पर्याप्तं सर्वं नित्यनैमित्तिकं कर्मेत्यर्थः ॥ ५४ ॥
126593
126594 यथाचारं यथाशास्त्रं यथाचित्तं यथास्थितम् ।
126595 व्यवहारमुपादत्ते यः स आर्य इति स्मृतः ॥ ५५ ॥
126596
126597 यथाचारं वृद्धाचारानुसारि । तत्रापि यथाशास्त्रम् । तत्रापि यथाचित्तं स्वचित्तं
126598 यत्कृत्वा प्रसीदति न पश्चात्तप्यते तादृशमेव । व्यवहारं लौकिकमपि ॥ ५५ ॥
126599
126600 प्रथमायामङ्कुरितं द्वितीयायां विकासितम् ।
126601 फलीभूतं तृतीयायामार्यत्वं योगिनो भवेत् ॥ ५६ ॥
126602
126603 तदेवार्यत्वं प्रथमभूमिकायां शुभेच्छायामङ्कुरितम् । द्वितीयभूमिकायां
126604 श्रवणादिप्रवृत्त्या विकासितम् । तृतीयभूमिकायां चित्तैकाग्र्यफलेन
126605 फलितमित्यर्थः ॥ ५६ ॥
126606
126607 आर्यतायां मृतो योगी शुभसंकल्पसंभृतान् ।
126608 भोगान्भुक्त्वा चिरं कालं योगवाञ्जायते पुनः ॥ ५७ ॥
126609
126610 तातान्तराले मृतानां निष्कामकर्मानुष्ठानक्षीणपापानां कर्मणा पितृलोको
126611 विद्यया देवलोकः इत्यादिश्रुतिप्रसिद्धो देवलोकादिभोगोऽपि
126612 शुभसंकल्पाहितसद्वासनासंभृतत्वान्न काम्यकर्मानुष्ठायिनामिव
126613 रागादिदुर्वासनासंभरणेनाधःपातहेतुरित्याशयेनाह - आर्यतायामिति ॥ ५७ ॥
126614
126615 भूमिकात्रितयाभ्यासादज्ञाने क्षयमागते ।
126616 सम्यग्ज्ञानोदये चित्ते पूर्णचन्द्रोदयोपमे ॥ ५८ ॥
126617
126618 अज्ञाने ज्ञानविरोधिद्वैतवासनाजाले असंभावनाविपरीतभावनादोषे च
126619 क्षयमागते सति निष्प्रत्यूहान्महावाक्यादपरिक्षाखण्डाकारज्ञानोदये सति
126620 मूलाज्ञानक्षयाद्योगिनश्चतुर्थी भूमिकामिता गताः सन्तः सर्वं

126621 जगत्सममानन्दैकरसं पश्यन्तीति परेणान्वयः ॥ ५८ ॥
126622
126623 निर्विभागमनद्यन्तं योगिनो युक्तचेतसः ।
126624 समं सर्वं प्रपश्यन्ति चतुर्थी भूमिकामिताः ॥ ५९ ॥
126625
126626 अद्वैते स्थैर्यमायाते द्वैते प्रशममागते ।
126627 पश्यन्ति स्वप्नवल्लोकांश्चतुर्थीं भूमिकामिताः ॥ ६० ॥
126628
126629 भूमिकात्रितयं जाग्रच्चतुर्थी स्वप्न उच्यते ।
126630 विच्छिन्नशरदभ्रांशविलयं प्रविलीयते ॥ ६१ ॥
126631
126632 व्यावहारिकसत्तया जगद्भानसाम्याज्जाग्रत् । प्रातिभासिकसत्तया
126633 तद्भानसाम्यात्स्वप्न उच्यते । पञ्चम्यां भूमिकायां सुषुप्तिपदप्रवृत्तिनिमित्तं
126634 तत्साम्यं दर्शयति - विच्छिन्नेति । सुषुप्तिकाले सकले विलीने तमोभिभूतः
126635 सुखरूपमेति इति श्रुतौ सुषुप्तौ सर्वविलयप्रसिद्धेरत्रापि
126636 प्रातिभासिकत्रिपुटीपरिशेषस्यापि विलयेन तत्साम्यादिति भावः । विच्छिन्नस्य
126637 शरदभ्रखण्डस्य केवलाकाशमात्रपरिशेषलक्षणं विलयमिव
126638 शुद्धचिन्मात्रपरिशेषलक्षणं स्वभावं प्रविलीयते प्रविलयेन प्राप्नोतीत्यर्थः ।
126639 लिङर्थफलव्यापारांशयोर्मध्ये फलांशस्य विलयशब्देन
126640 निष्कृष्यानुवादात्तस्य च व्यापारांशं प्रति कर्मत्वान्मृदुपचतीति
126641 क्रियाविशेषणेष्विवात्रापि द्वितीया । अवशिष्टव्यापारांशमात्रं प्रविलीयते इति
126642 तिङन्तप्रकृत्योच्यते उदपेषं पिनष्टीत्यत्रेव ॥ ६१ ॥
126643
126644 सत्तावशेष एवास्ते पञ्चमीं भूमिकां गतः ।
126645 पञ्चमीं भूमिकामेत्य सुषुप्तपदनामिकाम् ॥ ६२ ॥
126646
126647 सत्ता चित्सत्ता तदवशेषः । सुषुप्तमिति पदं गौणं नाम यस्यास्ताम् ॥ ६२ ॥
126648
126649 शान्ताशेषविशेषांशस्तिष्ठत्यद्वैतमात्रके ।
126650 गलितद्वैतनिर्भासमुदितोऽन्तः प्रबुद्धवान् ॥ ६३ ॥
126651
126652 उदित आविर्भूतस्वरूपः ॥ ६३ ॥
126653
126654 सुषुप्तघन एवास्ते पञ्चमीं भूमिकामितः ।
126655 अन्तर्मुखतया तिष्ठन्बहिर्वृत्तिपरोऽपि सन् ॥ ६४ ॥
126656
126657 सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवेति श्रुत्युक्तप्रज्ञानघनतासाम्याद्वा
126658 तस्यां सुषुप्तपदनामतेत्याशयेनाह - सुषुप्तेति । आनन्दमयो ह्यानन्दभुगिति
126659 श्रुतिप्रसिद्धान्तर्मुखस्यानन्दास्वादनसाम्यादपि तन्नामतेत्याशयेनाह -
126660 अन्तर्मुखतयेति ॥ ६४ ॥
126661
126662 परिशान्ततया नित्यं निद्रालुरिव लक्ष्यते ।
126663 कुर्वन्नभ्यासमेतस्यां भूमिकायां विवासनः ॥ ६५ ॥
126664
126665 विवासनः अत्यन्तोच्छिन्नस्वतोव्युत्थानवासनः सन्नित्यर्थः ॥ ६५ ॥
126666
126667 षष्ठीं तुर्याभिधामन्यां क्रमात्क्रमति भूमिकाम् ।
126668 यत्र नासन्न सद्रूपो नाहं नाप्यनहंकृतिः ॥ ६६ ॥
126669
126670 उक्तसुषुप्तमपेक्ष्य तुर्याभिधानाम् । तल्लक्षणान्याह - यत्रेत्यादिना ॥ ६६ ॥
126671
126672 केवलं क्षीणमननमास्ते द्वैतैक्यनिर्गतः ।

126673 निर्ग्रन्थिः शान्तसंदेहो जीवन्मुक्तो विभावनः || ६७ ||
126674
126675 द्वैतवदैक्यस्यापि संख्यान्तरव्यावर्तकसंख्यात्वात्तदुभयवर्जितः |
126676 तत्रात्यन्तिकहृदयग्रन्थिसर्वसंदेहभेदमाह - निर्ग्रन्थिरिति | भिद्यते
126677 हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयः इति श्रुतेरिति भावः || ६७ ||
126678
126679 अनिर्वाणोऽपि निर्वाणश्चित्रदीप इव स्थितः |
126680 अन्तःशून्यो बहिःशून्यः शून्यः कुम्भ इवाम्बरे || ६८ ||
126681
126682 अनिर्वाणः प्रारब्धधृतशरीरोऽपि निर्वाणो मुक्तः | यथा चित्रदीपः अनुपक्षीणोऽपि न
126683 ज्वलतीति निर्वाणः जडजगत्स्वभावेनान्तर्बहिश्च शून्यः || ६८ ||
126684
126685 अन्तःपूर्णो बहिःपूर्णः पूर्णकुम्भ इवार्णवे |
126686 किंचिदेवैष संपन्नस्त्वथ वैष न किंचन || ६९ ||
126687
126688 अनावृतानन्दस्वभावेन त्वन्तर्बहिश्च पूर्णः | तस्याद्वितीयरूपस्य
126689 संसारदशायां कदाप्यप्रसिद्धत्वेन किंचिदपूर्वेण परमाश्चर्यरूपेण
126690 संपन्नः | वास्तवदृष्ट्या नित्यसिद्धत्वान्न किंचन संपन्नः || ६९ ||
126691
126692 षष्ठ्यां भूम्यामसौ स्थित्वा सप्तमीं भूमिमाप्नुयात् |
126693 विदेहमुक्तता तूक्ता सप्तमी योगभूमिका [न तु जीवताम् इति पाठः |] || ७०
126694 | |
126695
126696 सप्तमी भूमिका परिप्रौढा चेत्सैव मुक्ततेति सप्तमी सा परिप्रौढा विषयः स्यान्न
126697 जीवताम् इति प्रागुक्तेत्यर्थः || ७० ||
126698
126699 अगम्या वचसां शान्ता सा सीमा भवभूमिषु |
126700 कैश्चित्सा शिवमित्युक्ता कैश्चिद्ब्रह्मेत्युदाहृता || ७१ ||
126701
126702 वचसामगम्या | योगिमानसानुभवैकगम्येत्यर्थः | न च जीवतः सप्तमी भूमिकैव
126703 नास्तीति योगिमानसानुभवगम्यतापि तस्या नास्तीति भ्रमितव्यम् | सा सीमा भवभूमिषु
126704 इति तस्या भवभूमिमध्यपातसीमात्वोक्तिविरोधापत्तेः | आसामभ्यासयोगेन
126705 इत्युत्तरत्राभ्यसनीयत्वोक्तिविरोधाच्च | शिवमिति शैवैरुक्ता | शिवमद्वैतं चतुर्थं
126706 मन्यन्ते इति श्रुत्यनुरोधादिति भावः | ब्रह्मेति वेदान्तिभिः || ७१ ||
126707
126708 कैश्चित्प्रकृतिपुंभावविवेक इति भाविता |
126709 अन्यैरप्यन्यथा नानाभेदैरात्मविकल्पितैः || ७२ ||
126710
126711 प्रकृतिपुंसोर्भावः अविविक्तावस्थितिस्तस्य विवेक इति सांख्ययोगिभिः |
126712 अन्यैर्जैमिनिसात्त्वतमाहेश्वरबुद्धार्हदादिभिः स्वर्गो वासुदेवः
126713 महेश्वरोऽनुपप्लवं विज्ञानमनुपप्लवसुखमित्यादिस्वस्वबुद्ध्यनुसारि##-
126714
126715 नित्यमव्यपदेश्यापि कथंचिदुपदिश्यते |
126716 सप्तैता भूमिकाः प्रोक्ता मया तव रघूद्वह || ७३ ||
126717
126718 यदि वचसामगम्यं तर्हि कथमुपदिश्यते तत्राह - नित्यमिति |
126719 कथंचिद्भागत्यागलक्षणाभ्युपायैरित्यर्थः || ७३ ||
126720
126721 आसामभ्यासयोगेन न दुःखमनुभूयते |
126722 अस्त्यत्यन्तमदोन्मत्ता मृदुमन्थरचारिणी || ७४ ||
126723
126724 परवैराग्यदार्ढ्ये सत्येव भूमिकासु प्रवेशो भवति नान्यथेति

126725 मत्तकरिण्याख्यायिकाच्छलेन वर्णयितुमारभते - अस्तीत्यादिना ॥ ७४ ॥
126726
126727 करिणी विग्रहव्यग्रा महादशनशंसिनी ।
126728 सा चेन्निहन्यते नूनमनन्तानर्थकारिणी ॥ ७५ ॥
126729
126730 विग्रहव्यग्रा सदा समरोद्युक्ता महद्भ्यां दशनाभ्यां शंसनं शंसः
126731 प्रख्यातिस्तद्वती । अस्तु सा किं ततस्तत्राह - सा चेदिति ॥ ७५ ॥
126732
126733 तदेतासु समग्रासु भूमिकासु नरो जयी ।
126734 करिणी मदमत्ता सा यावन्न विजितौजसा ॥ ७६ ॥
126735
126736 तयैताः भूमिकाः निरुद्धाः अतस्तद्वधं विना नैकापि भूमिका जेतुं शक्येत्यर्थः
126737 ॥ ७६ ॥
126738
126739 को नाम सुभटस्तावत्संपत्समरभूमिषु ।
126740
126741 श्रीराम उवाच ।
126742
126743 कासौ प्रमत्ता करिणी काश्च ता रणभूमयः ॥ ७७ ॥
126744
126745 सा यावन्न विजिता तावत्तदाक्रान्तासु क्षुद्रसांसारिकसंपद्रूपास्वपि समरभूमिषु
126746 प्रवेष्टुमपि को नाम सुभटः समर्थो योद्धेत्यर्थः । प्रश्नः स्पष्टः ॥ ७७ ॥
126747
126748 कथं निहन्यते चैषा क्व चैषा रमते चिरम् ।
126749
126750 श्रीवसिष्ठ उवाच ।
126751
126752 रामेच्छा नाम करिणी इदं मेऽस्त्वितिरूपिणी ॥ ७८ ॥
126753
126754 शरीरकानने मत्ता विविधोल्लासकारिणी ।
126755 मत्तेन्द्रियोग्रकलभा रसनाकलभाषिणी ॥ ७९ ॥
126756
126757 क्व चैषा रमते इत्यस्योत्तरमाह - शरीरकानने इति ।
126758 विविधदैन्यधावनशोकमोहाद्युल्लासकरणशीला । मत्तानीन्द्रियाण्येवोग्राः कोपनाः
126759 कलभाः शावका यस्याः । रसनाकलभाषिणी मधुरबृंहितसाधनं यस्याः ॥ ७९ ॥
126760
126761 मनोगहनसंलीना कर्मदन्तद्वयान्विता ।
126762 मदोऽस्या वासनाव्यूहः सर्वतः प्रसरद्वपुः ॥ ८० ॥
126763
126764 प्रख्यातौ दन्तौ दर्शयति - कर्मेति । कर्म शुभाशुभरूपम् ।
126765 मदमत्तेत्यत्रोक्तं मदं दर्शयति - मद इति । एवमग्रेऽपि योज्यम् ॥ ८० ॥
126766
126767 संसारदृष्टयो राम तस्याः समरभूमयः ।
126768 भूयो यत्रानुभवति नरो जयपराजयौ ॥ ८१ ॥
126769
126770 इच्छानागी निहन्त्येषा कृपणाञ्जीवसंचयान् ।
126771 वासनेहा मनश्चित्तं संकल्पो भावनं स्पृहा ॥ ८२ ॥
126772
126773 नागी करिणी । जीवसंचयान् प्राणिनिकायान् ॥ ८२ ॥
126774
126775 इत्यादिनिवहो नाम्नामस्यास्त्वाशयकोशगः ।
126776 धैर्यनाम्ना वरास्त्रेण प्रसृतामवहेलया ॥ ८३ ॥

126777
126778 आशयकोशगश्चित्तकोशगतः। वृत्तिवैचित्र्यप्रयुक्त इति यावत्। कथं निहन्यते चैषेति
126779 प्रश्नस्योत्तरमाह - धैर्येति॥ ८३॥
126780
126781 नागीं सर्वात्मिकामेतामिच्छां सर्वात्मना जयेत्।
126782 यावद्वस्त्विदमित्येवमियमन्तर्विजृम्भते॥ ८४॥
126783
126784 सर्वात्मिकां ब्रह्मलोकान्तसर्वभोग्यगोचराम्। सर्वात्मना सर्वथा सर्वमहमेवेति
126785 भावितेनात्मना वा। न हि नित्यलब्धात्मरूपतया भाविते तृष्णा भवति
126786 किंत्विदमित्यलब्धतया दृष्टे इत्याह - यावदिति॥ ८४॥
126787
126788 तावदुग्रा कुसंसारमहाविषविषूचिका।
126789 एतावानेव संसार इदमस्त्विति यन्मनः॥ ८५॥
126790
126791 संसारमहाविषविषूचिकारूपा तृष्णा तावदेव विजृम्भत इत्यनुकृष्यते॥ ८५॥
126792
126793 अस्य तूपशमो मोक्ष इत्येवं ज्ञानसंग्रहः।
126794 प्रसादकारिणी स्वच्छा निरिच्छे विमलाकृतौ॥ ८६॥
126795
126796 तृष्णैव संसारस्तत्क्षय एव मोक्षभूमिकोदयहेतुत्वान्मोक्षः।कथं वैराग्यस्य
126797 भूमिकोदयहेतुता तद्दर्शयति - प्रसादेति॥ ८६॥
126798
126799 तैलबिन्दुरिवादर्शे विश्राम्यत्युपदेशवाक्।
126800 असंवेदनमात्रेण नोदेतीच्छाभवाङ्कुरः॥ ८७॥
126801
126802 रागादिपुरुषापराधमलिने चित्ते श्रुत्याचार्याद्युपदेशवाक् पद्मपत्रे जलबिन्दुरिव न
126803 संश्लिष्यते। वैराग्यादिसाधसंपन्ने तु आदर्शे तैलबिन्दुरिव संश्लिष्टा सती
126804 अविद्यामलमार्जनेन प्रसादो ब्रह्माकारप्रथनानुकूला स्वच्छता तत्कारिणी
126805 पर्यवस्यतीत्यर्थः। रागादेरनुदये उदितस्य छेदने चोपायमाह - असंवेदनेति।
126806 इच्छारूपो भवाङ्कुरः संवेदनं विषयस्मरणं तत्परित्यागमात्रेण नोदेति॥ ८७॥
126807
126808 मनागभ्युदितैवेच्छा छेत्तव्यानर्थकारिणी।
126809 असंवेदनशस्त्रेण विषस्येवाङ्कुरावली॥ ८८॥
126810
126811 मनागभ्युदिताप्यसंवेदनशस्त्रेणैव छेत्तव्या॥ ८८॥
126812
126813 इच्छाविच्छुरितो जीवो विजहाति न दीनताम्।
126814 स्वसंवेदनयत्नस्तु तूष्णीमेवान्तरासनम्॥ ८९॥
126815
126816 विच्छुरितो व्याप्तः। दीनतां भोगकार्पण्यम्। असंवेदनस्वरूपं व्युत्पादयति -
126817 स्वसंवेदनेति। सुष्ठु असंवेदनं स्वसंवेदनं तदनुकूलो निरोधयत्नः
126818 प्रत्याहारयत्नश्च चित्तस्यान्तस्तूष्णीं निर्व्यापारतया आसनम्॥ ८९॥
126819
126820 अवधानविनिर्मुक्तं सुप्तं शवशतं यथा।
126821 तां प्रत्याहारवडिशेनेच्छामत्सीं नियच्छत॥ ९०॥
126822
126823 तच्चाभ्यासकाले सावधानतारूपं परिपाककाले त्ववधानविनिर्मुक्तं
126824 सुषुप्तिमरणावस्थयोरिव स्वत एव संपद्यत इत्याशयेनाह - अवधानेति।
126825 तामनर्थकारिणीमिच्छामत्सीं प्रत्याहारलक्षणेन बडिशेनाकृष्य नियच्छत
126826 बध्नीतेति सर्वान् श्रोतृन्प्रत्युक्तिः॥ ९०॥
126827
126828 इदं मेऽस्त्विति संवेगमाहुः कल्पनमुत्तमाः।

126829 अर्थस्याभावनं यत्तत्कल्पनात्याग उच्यते ॥ ९१ ॥
126830
126831 ननु प्राक्कल्पनात्यागादेव मुक्तिरिति बहुशस्त्वयोक्तमिदानीमिच्छात्यागादिति
126832 कथमुच्यते तत्राह - इदं मेऽस्त्विति । संवेगं चित्तधावनं
126833 विषयानुसंधानलक्षणकल्पनाफलावस्थेयमिति कल्पनमाहुरित्यर्थः । भावनं
126834 स्मरणम् ॥ ९१ ॥
126835
126836 स्मरणं विद्धि संकल्पं शिवमस्मरणं विदुः ।
126837 तत्र प्रागनुभूतं च नानुभूतं च भाव्यते ॥ ९२ ॥
126838
126839 संकल्प एव सर्वानर्थमूलमिति प्राक्तनोक्तीनामप्ययमेवाभिप्राय इत्याशयेनाह ##-
126840
126841 अनुभूतां नानुभूतां स्मृतिं विस्मृत्य काष्ठवत् ।
126842 सर्वमेवाशु विस्मृत्य गूढस्तिष्ठ महामतिः ॥ ९३ ॥
126843
126844 संकल्पे अननुभूतमपि भाव्यत इति विशेषादपर्यायत्वेऽपि
126845 भूमिकारुरुक्षुभिर्हेयत्वेन कश्चिद्विशेष इत्यभेदोऽत्र विवक्षित इत्याशयेनाह -
126846 अनुभूतामिति ॥ ९३ ॥
126847
126848 ऊर्ध्वबाहुर्विरौम्येष न च कश्चिच्छृणोति तत् ।
126849 असंकल्पः परं श्रेयः स किमन्तर्न भाव्यते ॥ ९४ ॥
126850
126851 इदानीं परमकारुणिको वसिष्ठः सर्वजनानां विषयसंकल्पत्यागं विना मोक्षो न
126852 सिध्यतीति तत्याग एवावश्यं कार्य इति समग्रवासिष्ठोपदेशरहस्यमाक्रोशेनापि
126853 दृढीकरिष्यन्नाह - ऊर्ध्वबाहुरिति । विरौमि उच्चैःस्वरेण पुनःपुनराक्रोशामि ।
126854 एवं क्रियमाणमप्याक्रोशं बधिर इव सुप्तप्रमत्त इव च कश्चिदपि जनो न शृणोति
126855 । शृण्वत्स्वपि च श्रवणफलादर्शनादुक्तिः । अन्तर्हृदि किमर्थं न भाव्यते न
126856 विमृश्य कृतकृत्यतापर्यवसितः क्रियते । न हि मन्दमध्यमाधिकारिणां
126857 सम्यङ्गननमन्तरेणार्थसिद्धिरित्यर्थः ॥ ९४ ॥
126858
126859 प्द्फ़् १५०, प्। १०५६
126860
126861 किल तूष्णीं स्थितेनैव तत्पदं प्राप्यते परम् ।
126862 परमं यत्र साम्राज्यमपि राम तृणायते ॥ ९५ ॥
126863
126864 तूष्णीं सर्वव्यापारोपरमेण स्थितेनैव पुंसा तत्तादृशं परमं पदं
126865 प्राप्यते । किलेति श्रौतप्रसिद्धौ । तथा च श्रुतिः यदा पञ्चावतिष्ठन्ते ज्ञानानि
126866 मनसा सह । बुद्धिश्च न विचेष्टति तामाहुः परमां गतिम् इति । परमं
126867 हैरण्यगर्भान्तमपि साम्राज्यसुखं यत्र भूमानन्दे तृणवत्तुच्छतामापद्यत
126868 इत्यर्थः ॥ ९५ ॥
126869
126870 गम्यदेशैकनिष्ठस्य यथा पान्थस्य पादयोः ।
126871 स्पन्दो विगतसंकल्पस्तथा स्पन्दः स्वकर्मसु ॥ ९६ ॥
126872
126873 ननु सर्वथा संकल्पत्यागे देहस्पन्दाद्यसिद्धेर्व्यवहारलोपे कथं जीवनं तत्राह
126874 - गम्येति । यथा गन्तव्ये स्वगृहादिदेश एवैकनिष्ठा अविच्छिन्नचित्तवृत्तिधारा
126875 यस्य तथाविधस्य पान्थस्य पादयोर्विगतसंकल्प एव प्रतिक्षणं स्पन्दो जायते तथा
126876 योगिनोऽपि विनैव संकल्पं पूर्वाभ्यासजीवनादृष्टवशादेवानिषिद्धस्वकर्मसु
126877 स्पन्दो भविष्यतीत्यर्थः ॥ ९६ ॥
126878
126879 बहुनात्र किमुक्तेन संक्षेपादिदमुच्यते ।
126880 संकल्पनं परो बन्धस्तदभावो विमुक्तता ॥ ९७ ॥

सर्वमेवमजं शान्तमनन्तं ध्रुवमव्ययम् ।
पश्यन्भूतार्थचिद्रूपं शान्तमास्व यथासुखम् ॥ ९८ ॥

कया दृष्ट्या असंकल्पनं भवेत्तामाह - सर्वमिति । भूतार्थचिद्रूपं
नित्यसिद्धपरमार्थचिद्रूपम् ॥ ९८ ॥

अवेदनं विदुर्योगं शान्तमासितमक्षयम् ।
योगस्थः कुरु कर्माणि निर्वासनोऽथ मा कुरु ॥ ९९ ॥

अवेदनं तादृशदृष्टिपरिणत्या अहंममेत्यध्यस्त सर्वभेदविस्मरणमेव
जीवब्रह्मैक्यलक्षणं योगं विदुर्ब्रह्मविदः । तं विद्याद्दुःखसंयोगवियोगं
योगसंज्ञितम् इति भगवता तथा व्याख्यातत्त्वादिति भावः । योगस्थः कुरु कर्माणि इति
तद्वाक्यं तु लोकसंग्रहेच्छं प्रत्यैच्छिकविहितानुष्ठापनार्थं न
नियमार्थमित्याशयेनाह - योगस्थ इति । अथ समाधिपरश्चेन्मा कुरु ॥ ९९ ॥

अवेदनं विदुर्योगं चित्तक्षयमकृत्रिमम् ।
अत्यन्तं तन्मयो भूत्वा तथा तिष्ठ यथासि भो ॥ १०० ॥

यथासि भो इति । यथास्थितस्वरूपावाप्तौ यथास्थितस्थितेरेवोचितत्वादिति भावः ॥ १०० ॥

शिवं सर्वगतं शान्तं बोधात्मकमजं शुभम् ।
तदेकभावनं राम सर्वत्याग इति स्मृतः ।
भावयञ्छश्वदन्तः स्वं कार्यं कर्म समाचर ॥ १०१ ॥

सा स्थितिरेव सर्वप्रपञ्चनिवृत्तिरूपत्वाच्चूडालोपदर्शितः सर्वत्यागोऽपीत्याह -
शिवमिति ॥ १०१ ॥

अहंममेति संविदन्न दुःखतो विमुच्यते ।
असंविदन्विमुच्यते यदीप्सितं समाचर ॥ १०२ ॥

विस्तरोक्तमनर्थतत्त्वं पुरुषार्थवत्त्वं च निष्कृष्य
करतलामलकवद्द्रऽसयन्नुपसंहरति - अहंममेति ॥ १०२ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० निर्वा० पू०
परमार्थस्वरूपवर्णनं नाम षड्विंशत्युत्तरशततमः सर्गः ॥ १२६ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
परमार्थस्वरूपवर्णनं नाम षड्विंशत्युत्तरशततमः सर्गः ॥ १२६ ॥

सप्तविंशत्यधिकशततमः सर्गः १२७

भरद्वाज उवाच ।

इति वरमुनिनोक्तं ज्ञानसारं पुराणं सकलमनुनिशम्य श्रीरघूणां
कुलाग्र्यः ।
विमलमतिरपृच्छत्किंचिदन्यत्स्वयं वा समसुखपरिपूर्णः
पूर्णबोधस्थितोऽसौ ॥ १ ॥

इह रामस्य विश्रान्तिर्भरद्वाजोत्सुकोक्तयः ।
लक्षणं जाग्रदादीनां तुरीयं चोपवर्ण्यते ॥

126933 एतावत्पर्यन्तं श्रीवसिष्ठरामसंवादं श्रावयित्वा
126934 रामविश्रान्तिस्मरणसंनिधापिते निरतिशयानन्दपूर्णात्मनि विश्रान्तं
126935 तूष्णींभूतं गुरुं श्रीवाल्मीकिं दृष्ट्वाद्यापि स्वयं तत्र विश्रान्त्यलाभादग्रेऽपि
126936 श्रवणोत्सुको भरद्वाजः पृच्छति - इतीत्यादि | हे रुतो विमलमतिः श्रीरघूणां
126937 कुलाग्र्योऽसौ श्रीरामः वरमुनिना श्रीवसिष्ठेन इति वर्णितैर्बहुभिः
126938 प्रकारैरुक्तमुपदिष्टं पुराणं चिरंतनं ब्रह्मादिमहर्षिसंप्रदायागतं
126939 ज्ञानसारं निशम्य श्रुत्वा अग्रेऽपि जिज्ञासुः किंचिदपृच्छत् | अथवा
126940 एतावतैवोपदेशेन शान्तसर्वसंदेहमोहः स्वयं समेन
126941 विषयवैचित्र्यप्रयुक्ततारतम्यरहितेन साक्षात्कृतेनात्मसुखेन परिपूर्णः सन्
126942 पूर्णबोधात्मैव भूत्वा स्थितस्तद्वदेति शेषः || १ ||
126943
126944 स खलु परमयोगी विश्ववन्द्यः सुरेशो जननमरणहीनः
126945 शुद्धबोधस्वभावः |
126946 सकलगुणनिधानं संनिधानं
126947 रमायास्त्रिजगदुदयरक्षानुग्रहाणामधीशः || २ ||
126948
126949 ननु समाने ग्रन्थश्रवणे त्वया स्वसंदेहमोहनिवृत्त्यनिवृत्तिभ्यामेव
126950 रामस्यापि ते कुतो नावधार्येते इति तु नाशङ्क्यम् | यतो मम रामस्य च
126951 महदन्तरमस्तीत्याह - स खल्विति | स
126952 नित्यसिद्धज्ञानयोगैश्वर्यानावृतचित्स्वभावः सर्वस्य वशी सर्वस्येशानः
126953 इत्यादिश्रुतिप्रसिद्ध ईश्वरो जगत्पालनायावतीर्णो जगद्गुरुरपि सर्वलोकानुग्रहाय
126954 ज्ञानशास्त्रप्रवृत्त्यर्थं स्वेच्छया स्वस्याज्ञानमिव परिकल्प्य श्रोतुं
126955 प्रवृत्तः | अहं त्वनाद्यज्ञ एव मुमुक्षुरल्पतरसाधनसंपन्न इति महदन्तरमिति
126956 भावः || २ ||
126957
126958 श्रीवाल्मीकिरुवाच |
126959
126960 इति श्रुत्वा वसिष्ठस्य वाक्यं वेदान्तसंग्रहम् |
126961 विदिताखिलविज्ञानो रामः कमललोचनः || ३ ||
126962
126963 एवं पृष्टो वाल्मीकिः प्रश्नद्वितीयकोटिमेव कथाशेषेण समर्थयन्नुत्तरमाह
126964 - इति श्रुत्वेत्यादिना || ३ ||
126965
126966 शक्तिपातवशोन्मेषप्रकटामलचिद्घनः |
126967 मुहूर्तमासीदुद्बुद्धश्चैतन्यानन्दसागरः || ४ ||
126968
126969 शक्तिपातः अखण्डाकार्वाक्यजन्यचित्तवृत्तौ
126970 नित्यनिरतिशयानन्दात्मतत्त्वाविर्भावस्तद्वशादविद्यासंपुटोद्घाटनलक्षणोन्मेषे
126971 ण प्रकटामल्चिद्घनः कुण्डलिन्याः सुषुम्नामार्गे षट्चक्राणि भित्त्वा
126972 ब्रह्मरन्ध्रप्रवेशेन शिवशक्तिसंयोगलक्षणो योगशास्त्रप्रसिद्धो वा | यस्तु
126973 मन्त्रशास्त्रप्रसिद्धो गुरोः शिष्यानुग्रहातिशयेन स्वदेहं त्यक्त्वा शिष्यदेहे
126974 प्रविश्य तदीयनाडीपरिशोधनद्वारा तत्कुण्डलिन्याःसप्तचक्रेषु संचारणेन
126975 सर्वभुवनसमाचारापरोक्षप्रदर्शनरूपः शक्तिपातः स नेह विवक्षितः |
126976 श्रीरामस्य स्वयमीश्वरस्य सार्वज्ञ्यादेः स्वतःसिद्धतया तदनपेक्षणात्तेन
126977 लोकोपकारासिद्धेश्चेति | उद्बुद्धः स्वस्वरूपे जागरितो विकसितश्च || ४ ||
126978
126979 प्रश्नोत्तरविभागादिपरिपाटीविवर्जितः |
126980 आनन्दामृतपूर्णासू रोमकण्टकिताङ्गकः || ५ ||
126981
126982 विभाग उक्तानुक्तांशविवेचनम् | आदिपदाद्वाह्यार्थपर्यालोचनमात्रं गृह्यते |
126983 तदर्थाभिः परिपाटीभिर्मनोबुद्धीन्द्रियादिव्यापारैर्विवर्जितः | आनन्दामृतेन
126984 पूर्णा असवः प्राणा यस्य || ५ ||

126985
126986 महासामान्यरूपत्वाच्चिद्व्यापकतया स्थितः।
126987 नित्यमष्टगुणैश्वर्यतृणप्रायमनोरथः॥ ६॥
126988
126989 महासामान्यंन् सर्वाधिष्ठानसन्मात्रम्। प्रत्यक्चितस्तद्रूपत्वसंपत्तेः।
126990 सर्वतश्चिद्व्यापकतया पूर्णः स्थितः। स एवास्य निरतिशयानन्दाविर्भाव
126991 इत्याशयेनाह - नित्यमिति। अष्टगुणानामष्टसंख्यानामणिमाद्यैश्वर्याणां
126992 तृणप्राया मनोरथा लिप्सा यस्य॥ ६॥
126993
126994 न किंचिदूचे संपन्नः शिवे परिणतः पदे।
126995
126996 भरद्वाज उवाच।
126997
126998 अहो खलु ममाश्चर्यंन् रामः प्राप्तो महत्पदम्॥ ७॥
126999
127000 शिवे पदे निरतिशयानन्दवस्तुनि परिणत एकरसभूतः संपन्नः।
127001 इत्थमुत्तमाधिकारिणो रामस्य श्रवणादेर्ब्रह्मप्राप्तिमुपवर्ण्य
127002 मन्दमध्यमाधिकारिणां चित्तशुद्ध्यर्थमुपासनाविशेषमवस्थात्रय##-
127003 भरद्वाजौत्सुक्यादीनरिष्टनेमये भगवान् वाल्मीकिर्वर्णयति - भरद्वाज
127004 उवाचेत्यादिना॥ ७॥
127005
127006 कथमेतादृशी प्राप्तिरस्माकं मुनिनायक।
127007 मूर्खाः स्तब्धाश्च किंचिज्ज्ञा मादृशाः क्व च पापिनः।
127008 क्व च ब्रह्मादिभिः प्रार्थ्या दुर्लभा रामसंस्थितिः॥ ८॥
127009
127010 अहो मुनीश्वरगुरो कथं विश्राम्यते मया।
127011 दुष्पारस्य भवाम्भोधेस्तीर्यते तद्वदाशु मे॥ ९॥
127012
127013 दुष्पारस्य भवाम्भोधेर्मोहवारि इति शेषः॥ ९॥
127014
127015 श्रीवाल्मीकिरुवाच।
127016
127017 श्रीरामवृत्तान्तमशेषमादितो वसिष्ठवाक्यानुगतं निरूपितम्।
127018 धिया विचार्यानु परामृश प्रभो मयापि तादृक्कथनीयमत्र ते॥ १०॥
127019
127020 एवं पृष्टे वाल्मीकिः श्रुतग्रन्थचिन्तनावर्तनमेव प्रथमं
127021 आवृत्तिरसकृदुपदेशात् इति न्यायसिद्धमुपदिशति - श्रीरामेति। तादृक्
127022 त्वदनुभवानुकूलमवस्थात्रयविवेचनादिकथनीयं कथ्यते शृण्वित्यर्थः॥ १०॥
127023
127024 अविद्यायाः प्रपञ्चोऽयं नास्ति सत्यमिहाण्वपि।
127025 विवेचयन्ति विबुधा विवदन्त्यविवेकिनः॥ ११॥
127026
127027 मिथ्याभूताविद्याकार्यत्वादेव प्रपञ्चस्यासत्त्वं चिदद्वैतसाम्राज्यं च
127028 बुद्धिमता बोद्धुंन् शक्यमित्याह - अविद्याया इत्यादिना। ननु
127029 प्रपञ्चस्याविद्याकार्यत्वं चेत् किमर्थं वादिनां विवादस्तत्राह - विवदन्तीति॥ ११
127030 ।।
127031
127032 नास्ति भिन्नं चितः किंचित्किं प्रपञ्चेन रुध्यसे।
127033 अभ्यासेन रहस्यानां वयस्य विशदो भव॥ १२॥
127034
127035 मिथ्याद्वैतेन च वास्तवाद्वैतहानिरित्याह - नास्तीति। हे वयस्य सखे इति प्रीत्या
127036 संबोधनम्। रहस्यानां प्रणवमहावाक्याद्यर्थानां वक्ष्यमाणोपासनानां च

127037 | विशदो विशुद्धचित्तो भव || १२ ||
127038
127039 प्रपञ्चविषया वृत्तिर्जाग्रन्निद्रेति कीर्तिता |
127040 संप्रबुद्धस्तु यस्यान्तश्चित्प्रदीपो निरञ्जनः || १३ ||
127041
127042 तत्रादौ प्रणवप्रथममात्रार्थं जाग्रत्प्रपञ्चं स्फुटं तत्साक्षिविवेकाय
127043 मिथ्यात्वेनोपपादयति - प्रपञ्चेत्यादिना | तस्य त्रय अवस्थान्नयः स्वप्नाः इति
127044 श्रुतौ जाग्रदपि निद्रैवेति कीर्तिता || १३ ||
127045
127046 शून्यमूलः प्रपञ्चोऽयं शून्यताशिखरः सखे |
127047 सारशून्यतया मध्येऽप्यनास्था सन्मनीषिणाम् || १४ ||
127048
127049 शून्यमूलो मिथ्याभूताज्ञाननिदानः | शून्यतारूपमज्ञानमेव
127050 शिखरमग्रमन्तो यस्य तथाविधः मध्येऽपि त्रिवृत्करणपृथक्क्रियाद्युपायेन
127051 पर्यालोचने सारः सत्ता तच्छून्यतया प्रातिभासिकमात्रः प्रथते | अतस्तत्रानास्थैव
127052 युक्तेति शेषः || १४ ||
127053
127054 अनादिवासनादोषादसन्नेवायमीक्ष्यते |
127055 गन्धर्वनगराकारः संसारो बहुविभ्रमः || १५ ||
127056
127057 असतोऽपि सवासनाविद्यया दर्शनं गन्धर्वनगरादेः प्रसिद्धमित्याह - अनादीति ||
127058 १५ ||
127059
127060 त्वमनभ्यस्य कल्याणीं चैतन्यामृतकन्दलीम् |
127061 संमुह्यसि किमध्यास्य वासनाविषवीरुधः || १६ ||
127062
127063 वासनाविषवीरुधो विषवल्लीरध्यास्य आश्रित्य किं संमुह्यसि || १६ ||
127064
127065 जाग्रदेतन्न पतितं ज्ञानालम्बग्रहादधः |
127066 न सन्त्युपरि सर्वेषां ये निरालम्बसंविदः || १७ ||
127067
127068 तत्त्वदर्शनेन निरालम्बज्ञानरूपस्यालम्बस्य चित्तस्थैर्यहेतोरवष्टम्भस्य
127069 परिग्रहादधः पूर्वमज्ञावस्थायामेव एतज्जाग्रन्निपतितम् उपरि तुर्यदशायां तु
127070 तिस्रोऽप्यवस्था न सन्ति | ये योगिनो निरालम्बसंविदस्तेषां
127071 सर्वेषामनुभवसिद्धमित्यर्थः || १७ ||
127072
127073 तावद्रूढा सुधाकाररसा संविन्महानदी |
127074 न यावदात्मरूपेण निपुणैरवगाह्यते || १८ ||
127075
127076 यावदज्ञानं तावत्कालमेव चिन्नद्या जगद्दुस्तरङ्गविक्षेपप्ररोह इत्याह -
127077 तावदिति | रूढा दुस्तराङ्गप्रादुर्भाववती || १८ ||
127078
127079 प्राङ्नास्ति चरमे नास्ति वस्तु सर्वमिदं सखे |
127080 विद्धि मध्येऽपि तन्नाति स्वप्नवृत्तमिदं जगत् || १९ ||
127081
127082 आद्यन्तकालासत्त्वेन मध्येऽप्यसत्त्वमेव
127083 स्वभाववैपरीत्याघटनात्स्वप्नवदनुमेयमित्याह - प्रागिति | स्वप्नस्य
127084 वृत्तमिव वृत्तं यस्य तत् || १९ ||
127085
127086 अविद्यायोनयो भेदाः सर्वेऽमी बुद्बुदा इव |
127087 क्षणमुद्भूय गच्छन्ति ज्ञानैकजलधौ लयम् || २० ||
127088

127089 सुशीतलोदकनदीं विदित्वाथ विगाह्य ताम् |
127090 बहिर्भ्रान्तिनिदाघास्ते निर्यान्तु कलितासुखम् || २१ ||
127091
127092 कलितमसुखं दुःखं यस्मिन्कर्मणि तत्तथा निर्यान्तु | अचेतनेष्वपि निदाधेषु
127093 चेतनत्वमारोप्योक्तिः || २१ ||
127094
127095 एकश्चाज्ञानजलधिर्जगदाप्लाव्य तिष्ठति |
127096 ज्येष्ठोऽयमहमित्यूर्मिरविद्यावातसंभवः || २२ ||
127097
127098 इदानीं भगवान्शिष्यस्य मज्जनं न्निवारयिष्यन्नज्ञानं क्षारसमुद्रत्वेन
127099 वर्णयति - एकश्चेत्यादिना | स्वविकारभूतं जगदाप्लाव्य अभिव्याप्य | तस्य
127100 महोर्मिप्रथमजं दर्शयति - ज्येष्ठ इति | अविद्याप्रवाहोऽनादिभ्रान्तिवासना स एव
127101 वातस्तत्संभवः || २२ ||
127102
127103 चित्तस्खलनभेदाली रागाद्याश्च प्रकल्पिताः |
127104 ममतोत्कलितावर्तः स्वतः स्वैरं प्रवर्तते || २३ ||
127105
127106 अल्पतरङ्गान्दर्शयति - चित्तेति | चित्तस्य तत्तद्विषयेषु ये स्खलनभेदास्तेषामालिः
127107 पङ्क्तिस्तद्धेतवो रागाद्याश्च प्रकल्पिताः क्षुद्रतरङ्गा इति शेषः | तस्यावर्तं
127108 दर्शयति - ममतेति || २३ ||
127109
127110 रागद्वेषावतिग्राहौ गृहीतसमनन्तरः |
127111 ततश्चानर्थपातालप्रवेशः केन वार्यते || २४ ||
127112
127113 ग्राहौ प्रवर्तेते इति विपरिणामेनानुषज्यते | ताभ्यां गृहीतस्य तव समनन्तरः
127114 सन्निहितः अनर्थपाताले मृत्युमुखे प्रवेशः केन वार्यते |
127115 गृहीतपदस्यासमर्थस्य समासश्छान्दसः || २४ ||
127116
127117 प्रशान्तामृतकल्लोले केवलामृतवारिधौ |
127118 मज्ज मज्जसि किं द्वैतग्रहक्षाराब्धिवीचिषु || २५ ||
127119
127120 यदि तु समुद्रमज्जनं तवावश्यकं तर्ह्यानन्दसमुद्रे मज्जेत्याह - प्रशान्तेति
127121 || २५ ||
127122
127123 कस्तिष्ठति गतः को वा कस्य केन किमागतम् |
127124 किं नु मज्जसि मायायां पत मा त्वमतन्द्रितः || २६ ||
127125
127126 संसारस्तिष्ठति स च रामस्य तत्त्वबोधाद्गतो मम तु न गत इति शोकहेतुं मोहं
127127 वारयति - कस्तिष्ठतीति | अतन्द्रितो विवेकी त्वं मा पत || २६ ||
127128
127129 तत्त्वमेकं यदात्मेति जगदेतत्प्रचक्षते |
127130 ततोऽन्यः कस्तवातीतो यस्तात विषयः शुचाम् || २७ ||
127131
127132 यदा प्रचक्षते व्यक्तं प्रतिपादयन्ति इदं सर्वं यदयमात्मा इत्यादि वेदान्ता
127133 इत्यर्थः || २७ ||
127134
127135 बालान्प्रति विवर्तोऽयं ब्रह्मणः सकलं जगत् |
127136 अविवर्तितमानन्दमास्थिताः कृतिनः सदा ||२८ ||
127137
127138 येषामज्ञानमस्ति तान्बालान्प्रति ब्रह्मणो जगदाकारविवर्तः || २८ ||
127139
127140 अविविक्तो जनः शोचत्यकस्माच्च प्रहृष्यति |

127141 तत्त्ववित्तु हसन्नास्ते तस्य मोहो विडम्बनम् ॥ २९ ॥
127142
127143 अविविक्तः अविवेकी । ननु तत्त्वविदामपि कदाचिद्व्यामोहः कथं दृश्यते तत्राह -
127144 तस्येति । विडम्बनमज्ञचेष्टानुकरणमात्रम् ॥ २९ ॥
127145
127146 तच्च सूक्ष्ममिदं तत्त्वं तिरोहितमविद्यया ।
127147 यथा स्थलेषु लोकानां जलेष्वात्मसु संशयः ॥ ३० ॥
127148
127149 अन्येषां तु न तथा । तेषामविद्याच्छादितात्मनां जलेषु
127150 स्थलबुद्धिवदनात्मस्वात्मताभ्रान्तेरित्याह - तच्चेति । यथा अज्ञलोकानां जलेषु
127151 स्थलमिति संशयो मरुस्थलेषु च जलमिति संशयस्तथा कल्पितभेदेष्वात्मस्वपि
127152 संशयो भ्रम इत्यर्थः ॥ ३० ॥
127153
127154 पृथिव्यादिमहाभूतपरमाणुमयं जगत् ।
127155 स्थितं यदा तदापीह को गतो योऽनुशोच्यते ॥ ३१ ॥
127156
127157 यदा परमाण्वादिमयजगद्वादिरीत्यापि विवेकेऽपि शोकप्रसक्तिर्नास्ति तदा
127158 मायामयजगद्वादे दूरापास्तैव सेत्याशयेनाह - पृथिव्यादीति । को गतो नष्टः ।
127159 तन्मतेऽपि देहादेरनात्मत्वेन तन्नाशे आत्मनाशाभावादित्यर्थः ॥ ३१ ॥
127160
127161 असतः संभवो नास्ति नास्त्यभावः सतः सखे ।
127162 आविर्भावतिरोभावाः संस्थानानाममी परम् ॥ ३२ ॥
127163
127164 प्रियनाशाद्धि शोकप्रसक्तिः । स प्रियो यदि संस्तदा न नश्यत्येव यद्यसंस्तर्हि न
127165 स्थित एवेत्युभयथापि तन्नाशासिद्धेर्न शोकहेतुरस्तीत्याशयेनाह - असत इति ।
127166 संस्थानानां मायिकसंनिवेशविशेषाणाम् ॥ ३२ ॥
127167
127168 किंत्वनेकपुरोत्साहाद्विषतामुपगच्छति ।
127169 भज संभरिताभोगं परमेशं जगद्गुरुम् ॥ ३३ ॥
127170
127171 ननु यदि मायिकमेव देहादिसंस्थानं तर्हि
127172 तदैन्द्रजालिकोपदर्शितमायावदुदासीनं तटस्थं भासतां
127173 शोकमोहदुःखाद्यनर्थसहस्रदाने त्वस्य को हेतुस्तत्राह - किंत्विति । सत्यम् ।
127174 आधुनिको न कश्चिद्धेतुरस्ति किंत्वनेकः पुरा संचितः पुण्यपापप्रवृत्तिलक्षण
127175 उत्साहः पुरुषप्रयत्नः पुण्यपापाख्यस्तद्धेतुरस्ति । तस्मादेवायं मायिको
127176 देहादिस्तद्भोगाय विषतां विषवन्मरणमूर्च्छाद्यनर्थसहस्रहेतुतामुपगच्छति
127177 अध्यात्मज्ञानशास्त्रार्थश्च शतशोऽप्युपदिष्टः पापवशादेव हृदि नारोहति
127178 अतस्तत्पापक्षयाय सगुणेश्वरोपासनं कुर्वित्याह - भजेति । भक्तानुग्रहाय
127179 संभरितः सम्यग्धृत आभोगो वक्ष्यमाणार्धनारीश्वरादिवेषो येन तम् ॥ ३३ ॥
127180
127181 दुरितानि समस्तानि पच्यन्तेऽद्यापि न ध्रुवम् ।
127182 कृतमेवास्य देवस्य पाशा विश्रवतां गताः ॥ ३४ ॥
127183
127184 अद्यापि न पच्यन्ते न क्षीणानि तवेति शेषः । ध्रुवमिति वितर्के । प्राणिकृतं
127185 पुण्यपापात्मकं कर्मैवास्य पशुपतेर्देवस्य प्राणिपशुबन्धनपाशाः
127186 विश्रवतां विविधश्रुत्यादिप्रमाणप्रसिद्धताम् ॥ ३४ ॥
127187
127188 साकारं भज तावत्त्वं यावत्सत्त्वं प्रसीदति ।
127189 निराकारे परे तत्त्वे ततः स्थितिरकृत्रिमा ॥ ३५ ॥
127190
127191 सत्त्वं चित्तं प्रसीदति विशुद्ध्यति । ततस्तस्माद्भजनादकृत्रिमा
127192 विघ्नैरबाध्यत्वात्सहजा भविष्यतीति शेषः । तथा च श्रुतिः उमासहायं

127193 परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम् | ध्यात्वा मुनिर्गच्छति
127194 भूतयोनिं समस्तसाक्षिं तमसः परस्तात् इति || ३५ ||
127195
127196 इमामुद्दामतमसो जित्वा सत्त्वबलाद्ध्रुवम् |
127197 यमस्यानुसराध्वानं विश्वस्तेनान्तरात्मना || ३६ ||
127198
127199 ईश्वरोपासनशुद्धसत्त्वबलाद्व्यामोहसहस्रैरुद्दामस्य तमस इमां प्रसिद्धां
127200 व्यामोहशक्तिं जित्वा गुरुशास्त्रोपदेशविश्वासवता मनसा यमस्य
127201 सेन्द्रियमनोनियमनात्मकस्य योगस्याध्वानमनुसर || ३६ ||
127202
127203 समाधाय क्षणं पश्य प्रत्यगात्मानमात्मना |
127204 इयं विभातु सा व्यक्तं प्राग्बुद्धिरजनी तव || ३७ ||
127205
127206 ततः क्षणं मुहूर्तद्वादशतमभागमपि समाधाय समाधिमाश्रित्य
127207 तेनात्मदर्शनेन तव प्राक्तमोवृता बुद्धिरूपा रजनी रात्रिर्विभातु प्रभातभावं
127208 गच्छतु || ३७ ||
127209
127210 कृतं पुरुषकारेण केवलेन च कर्मणा |
127211 महेशानुग्रहादेव प्राप्तव्यं प्राप्यते नरैः || ३८ ||
127212
127213 ननु सत्कर्मानुष्ठानैरेव चित्तशुद्धिसिद्धेः किमर्थमीश्वरोपासनं तत्राह -
127214 महेशेति || ३८ ||
127215
127216 नाभिजात्यं न चारित्र्यंन् न नयो न च विक्रमः |
127217 बलवन्ति पुराणानि सखे कर्माणि केवलम् || ३९ ||
127218
127219 नन्वाभिजात्यसदाचारतपःकर्माद्यद्यतनपुरुषप्रयत्नानां प्राक्तनकर्मापेक्षया
127220 प्राबल्यं प्राक्साधितं तत्कथमिदानीमीश्वरानुग्रहापेक्षोच्यते तत्राह -
127221 नाभिजात्यमिति |
127222 पुरातनकर्मणामनन्तत्वादिदानींतनपुरुषप्रयत्नानामल्पतरत्वान्नेश्वरानु##-
127223 प्रागैहिकप्रयत्नप्राबल्यं साधितं न तद्विहायेति भावः || ३९ ||
127224
127225 अप्रतर्क्यात्प्रतीकारात्किमेवमवसीदसि |
127226 न लुम्पति ललाटस्थामीश्वरोऽप्यक्षरावलिम् || ४० ||
127227
127228 तर्हीश्वरोपास्तिरेव कार्या किं यमनियमज्ञानादिभिस्तत्राह - अप्रतर्क्यादिति |
127229 एवमीश्वरप्रपन्नोऽपि
127230 त्वमप्रतर्क्यात्पौरुषतर्कागम्याच्छ्रुत्येकसमधिगम्याद्धर्मादि##-
127231 किमर्थमुद्विजसि | यत उपासनाप्रसादित ईश्वरोऽपि ललाटस्थामक्षरावलिं न
127232 साक्षात्स्वकरेण मार्जयति किंतु ज्ञानकृतमूलोच्छेदोपायेनैवेत्यर्थः || ४० ||
127233
127234 क्व चिद्वक्ता क्व वैदग्ध्यं क्व चेयं मोहवल्लरी |
127235 अचिन्तनीया नियतिर्यदियं द्वन्द्वमाहिता [द्वन्द्वमागता इति पाठश्चेत्
127236 व्याख्यानुगुणः स्यात् |] || ४१ ||
127237
127238 गुरुशास्त्रयोः शिष्यबोधनशक्तिः शिष्यस्य च चित्तशुद्ध्या ऊहापोहकुशलतया
127239 बोद्धृताशक्तिः रागादीनां च समूलोच्छेदयोग्यताप्राप्तिलक्षणपरिपाक इति
127240 सर्वसामग्रीमिलनमपीश्वरेच्छालक्षणनियतिवशादेवेत्याह - क्वेति |
127241 वाङ्मनसागम्यत्याय अखण्डब्रह्मात्मचित्तो वक्ता गुरुः क्व शिष्यस्य च
127242 तद्बोधयोग्यतालक्षणं वैदग्ध्यं कौशलं क्व इयमेवं शमदमादिक्रमेण
127243 स्वविनाशाय परिणता मोहवल्लरीक्व | यद्यस्याः सकाशादियं सर्वा सामग्री
127244 द्वन्द्वं परस्परमिलनमागता सा नियतिरीश्वरेच्छा अचिन्तनीया

127245 प्रभावेयत्तापरिच्छेदेन चिन्तयितुमशक्येत्यर्थः ॥ ४१ ॥
127246
127247 हे भरद्वाज मोहं त्वं विवेकेन जहि स्फुटम् ।
127248 असामान्यमिदानीं त्वं ज्ञानं प्राप्यस्यसंशयम् ॥ ४२ ॥
127249
127250 अत एवेदृशसामग्रीप्राप्तौ मोहजयोत्साह एव युक्तो न त्वन्तराले शोक इत्याह - हे
127251 भरद्वाजेति । असामान्यमसाधारणम् ॥ ४२ ॥
127252
127253 दूरमुत्सहते राजा महासत्त्वो महापदि ।
127254 अल्पसत्त्वो जनः शोचत्यल्पेऽपि हि परिक्षते ॥ ४३ ॥
127255
127256 किं च महत्यपि कार्ये शोकः सामग्रीहीनस्य युक्तो न तु महाराजस्येव
127257 सर्वसामग्रीसंपन्नस्य तवेत्याशयेनाह - दूरमिति । महासत्त्वो राजा
127258 युद्धादिमहापदि निमग्नोऽपि धनभृत्यादिसामग्रीसंपन्नत्वादन्येषां
127259 मनोरथदूरमपि
127260 पृथ्वीपरिपालनदुष्टनिग्रहशिष्टपरिपालनादिकार्यमाज्ञामात्रेण कर्तुमुत्सहते ।
127261 परिक्षते धनादिक्षतिरूपायामापदि तदुत्तरणे हेतुधैर्यादिसामग्रीविरहादित्यर्थः ॥
127262 ४३ ॥
127263
127264 बोधः पुण्यपराधीनः प्रथते बहुजन्मभिः ।
127265 अनुमीयेत धीरेषु जीवन्मुक्तेषु कार्यतः ॥ ४४ ॥
127266
127267 जीवन्मुक्तान्निदर्शनीकृत्य पुण्यसामग्र्यां सत्यां मम बोधो
127268 भविष्यत्येवेत्यनुमाय सोत्साहः पुण्यसामग्र्यर्जने प्रथमं प्रवर्तेतेत्याशयेनाह
127269 - बोध इति ॥ ४४ ॥
127270
127271 द्विषद्भूतेन येनैव कर्मणा बन्ध ईदृशः ।
127272 सुहृद्भूतेन तेनैव मोक्षमाप्स्यसि पुत्रक ॥ ४५ ॥
127273
127274 ननु पावत्पुण्यस्यापि बन्धकत्वाद्द्विषद्भूतं पुण्यं कथमर्जनीयं तत्राह -
127275 द्विषद्भूतेनेति । सति रागे पुण्यं बन्धकं भवेत्तदभावे तु सुहृद्भूतं
127276 मोक्षोपयुक्तमेवेति भावः ॥ ४५ ॥
127277
127278 सतां सत्कर्मसंवेगः पुराणं प्रणुदन्नयम् ।
127279 सर्वौघ इव भूतानां दवानलमसेचयत् ॥ ४६ ॥
127280
127281 पुण्यातिशयेन प्राक्तनपापनाशे शमदमाद्यमृताप्यायितानां
127282 त्रिविधतापशान्तिर्भवतीत्याह - सतामिति । असेचयदिति भूतकालो न विवक्षितः ॥ ४६ ॥
127283
127284 सखे संन्यस्य कर्माणि ब्रह्मणः प्रणयी भव ।
127285 नेष्यसे यदि संसारचक्रावर्तभ्रमः शमम् ॥ ४७ ॥
127286
127287 पुण्यार्जनोत्तरं वैराग्यदार्ढ्ये यत्कार्यं तदुपदिशति - सखे इति । ब्रह्मणः
127288 प्रणयी श्रवणाद्युपायैर्ब्रह्मण्यासक्तः ॥ ४७ ॥
127289
127290 तावदेतद्विकल्पोत्थमिदं यावद्बहिर्ग्रहः ।
127291 प्रतिकूलोऽब्धिरुल्लोले केवलं निश्चले जले ॥ ४८ ॥
127292
127293 यावद्बहिर्ग्रहोऽब्रह्मप्रणयिता । उल्लोले जले पयसि अब्धिः प्रतिकूलः कूलोपसर्पी
127294 विक्षिप्तः । निश्चले तु पयसि केवलं पय एव यथेत्यर्थः ॥ ४८ ॥
127295
127296 अयंन् किमन्धकरणस्त्वया शोकोऽवलम्ब्यते ।

127297 निर्वाहयतु सैव त्वां प्रज्ञायष्टिरभङ्गुरा ॥ ४९ ॥
127298
127299 अन्धकरणो विवेकदृष्टिपिधायकः । एवं शोकान्धं त्वां
127300 यावद्विवेकदृष्ट्युद्घाटनं तावत्प्रज्ञायष्टिरेकैव निर्वाहयतु ॥ ४९ ॥
127301
127302 न जातु ते विगण्यन्ते गणनासु गरीयसाम् ।
127303 ये तरङ्गैस्तृणानीव ह्रियन्ते हर्षशोकयोः ॥ ५० ॥
127304
127305 हर्षशोकयोस्तरङ्गैः शुभोत्साहभङ्गैः ॥ ५० ॥
127306
127307 समारूढं दशादोलामहोरात्रमिदं जगत् ।
127308 क्रीड्यते षड्विधैः प्रेङ्खैः सखे किमिति खिद्यते ॥ ५१ ॥
127309
127310 हर्षविषादादिदशालक्षणां दोलाम् । इदं जगत् जीवजातम् ।
127311 षडूर्मिभेदात्षड्तुभेदात्कामाद्यरिषट्कभेदाद्वा षड्विधैः
127312 प्रेङ्खैर्दोलायन्त्रैः क्रीड्यते कालेन । क्रीडतेरकर्मकाद्धेतुमण्णिचि गतिबुद्धि -
127313 इत्यादिना कर्तुः कर्मत्वे कर्मणि लः । न हि क्रीडाकौतुककल्पितेषु
127314 पदार्थसंयोगवियोगेषु खेदो युक्त इत्यर्थः ॥ ५१ ॥
127315
127316 सूते संहरति क्षिप्रं पुनः सृजति हन्ति च ।
127317 जगन्ति बहुपर्यायैः काल एव कुतूहली ॥ ५२ ॥
127318
127319 कुतूहली क्रीडाकौतुकी ॥ ५२ ॥
127320
127321 न विशेषग्रहः कश्चिन्न च कश्चिन्न कश्चन ।
127322 जन्तुष्वभ्यवहार्येषु प्राक्रम्य कालभोगिनः ॥ ५३ ॥
127323
127324 स्वशरीरादेः सर्वप्राणिशरीरादिवत्कालाशनत्वाद्यदीयमन्नं तेन तदवश्यं
127325 भोक्तव्यमेवेति निश्चित्य तत्राहंताद्यभिमानत्यागेन शोकप्रसक्तिरित्याशयेनाह ##-
127326 न प्रसिद्ध इत्यर्थः । काललक्षणस्य भोगिनः सर्पस्य प्राक्रम्य
127327 बलादाक्रम्याऽभ्यवहारो भक्षणं तत्कर्मभूतेषु जन्तुषुमध्ये ॥ ५३ ॥
127328
127329 का कथा मर्त्यपिण्डानां निमेषान्तरवासिनाम् ।
127330 अपि देवनिकाया ये तेऽपि दुष्कालगोचराः ॥ ५४ ॥
127331
127332 दुष्टस्य कालस्य गोचराः । अन्नभूता इति यावत् ॥ ५४ ॥
127333
127334 स्वयं नृत्यसि किं प्रीतो विपत्तौ विकलेन्द्रियः ।
127335 क्षणं निश्चलमासीनः पश्य संसारनाटकम् ॥ ५५ ॥
127336
127337 अपि च साक्षिणस्तव संसारनर्तनकौतुकदर्शनमेव युक्तं न तु
127338 शोकमोहादिविकारैः स्वयं नर्तनमित्याह - स्वयमिति । विपत्तौ धनचित्तादिनाशे
127339 विकलानि विवेकदर्शनासमर्थानि रोदनादिविकृतानि च इन्द्रियाणि चक्षुरादीनि यस्य
127340 तथाविधः सन् ॥ ५५ ॥
127341
127342 अस्यानेकतरङ्गस्य जगतः क्षणभङ्गिनः ।
127343 न विषीदति मनस्वी भरद्वाज मनागपि ॥ ५६ ॥
127344
127345 क्षणभङ्गिनो दर्शनादिति शेषः । मनस्वी विवेकी ॥ ५६ ॥
127346
127347 त्यज शोकममङ्गल्यं मङ्गलानि विचिन्तय ।
127348 चिदानन्दघनं स्वच्छमात्मानं च विभावय ॥ ५७ ॥

127349
127350 अमङ्गल्यममङ्गलार्हम् ॥ ५७ ॥
127351
127352 देवद्विजगुरुश्रद्धाभरबन्धुरचेतसाम् ।
127353 सदागमप्रमाणानां महेशानुग्रहो भवेत् ॥ ५८ ॥
127354
127355 कानि मङ्गलानि तान्याह - देवेति । देवद्विजादिश्रद्धाप्रभृतय
127356 ईश्वरानुग्रहसाधनत्वान्मङ्गलानि । ईश्वरानुग्रहस्तु
127357 साक्षाज्ज्ञानसाधनत्वात्परममङ्गलमिति भावः । तथा चोक्तम् -
127358 ईश्वरानुग्रहादेव पुंसामद्वैतवासना । महाभयपरित्राणाद्द्विवित्राणामेव जायते ॥
127359 इति ॥ ५८ ॥
127360
127361 भरद्वाज उवाच ।
127362
127363 ज्ञातं तव प्रसादेन सर्वमेतदशेषतः ।
127364 न वैराग्यात्परो बन्धुर्न संसारात्परो रिपुः ॥ ५९ ॥
127365
127366 इदानीं भरद्वाजः सर्वसाधनरहस्यं मया पिण्डीकृत्य ज्ञातम्
127367 दृश्यप्रपञ्चप्रविलापनोपायरहस्यमीश्वरानुग्रहसाधनरहस्यं च
127368 वसिष्ठस्य विस्तरोक्तिषु विशकलितं तत्र तत्रोक्तं पिण्डीकृत्य न ज्ञातमिति
127369 कण्ठोक्त्यार्थाच्च दर्शयंस्तज्जिज्ञासुः पृच्छति - ज्ञातमित्यादिना ॥ ५९ ॥
127370
127371 इदानीं श्रोतुमिच्छामि वसिष्ठेनोपपादितम् ।
127372 ज्ञानसारमशेषेण ग्रन्थेनोक्तं पदात्मना ॥ ६० ॥
127373
127374 श्रीवाल्मीकिरुवाच ।
127375
127376 भरद्वाज शृणुष्वेदं महाज्ञानं विमुक्तिदम् ।
127377 यस्य श्रवणमात्रेण भवाब्धौ न निमज्जसि ॥ ६१ ॥
127378
127379 अनेकवाक्यात्मना अशेषेण ग्रन्थेनोक्तं रहस्यमेकपदात्मना पिण्डीकृतं
127380 निष्कृष्टं श्रोतुमिच्छामीत्यर्थः । यदात्मना इति पाठे यत्तात्पर्यकेणेति
127381 ग्रन्थविशेषणम् ॥ ६० ॥ ६१ ॥
127382
127383 संहृतिस्थितिसंभूतिभेदैर्योऽनेकधा स्थितः ।
127384 एकोऽपि सन्नमस्तस्मै सच्चिदानन्दमूर्तये ॥ ६२ ॥
127385
127386 प्रविलापनोपायमपवादं वक्तुमध्यारोपेणैकमेवानेकधा स्थितं देवं
127387 मङ्गलार्थं नमस्यति - संहृतीति ॥ ६२ ॥
127388
127389 कृते प्रपञ्चविलये यथा तत्त्वं प्रकाशते ।
127390 तवोपायं प्रवक्ष्यामि संक्षेपाच्छ्रुतिशासनात् ॥ ६३ ॥
127391
127392 प्रश्नाभिप्रायानुरूपमुत्तरं वक्तुं प्रतिजानीते - कृते इति । श्रुतिशासनात्
127393 माण्डूक्योपनिषदादिश्रुत्युक्तक्रमात् ॥ ६३ ॥
127394
127395 पूर्वापरविचारार्हा कथं नष्टा तव स्मृतिः ।
127396 तयैव ज्ञायते सर्वं करामलकवत्स्वयम् ॥ ६४ ॥
127397
127398 (स्वयं [क्वाचित्कमिदं पद्यम् ।] विचार्यं स्वयमेव चेतसा
127399 तत्प्राप्यते येन न शोचते पुनः ।
127400 सत्सङ्गसच्छास्त्रविवेकतः पुनर्वैराग्ययुक्तेन विभाव्यमेतत् ॥) ॥ ६५ ॥

विशकलितोक्तं सूक्ष्ममतिभिः स्वयमेव पूर्वापरविचारेण निष्कृष्य ज्ञातुं
शक्यं तत्ते सौबुद्ध्यं प्राक् प्रख्यातमिदानीं कथं नष्टमिति
वक्ष्यमाणग्रहणावधानार्थमधिक्षिपति - पूर्वापरेति ॥ ६४ ॥ ६५ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मी० दे० मो० निर्वाणप्रक० पू०
भरद्वाजानुशासनं नाम सप्तविंशत्यधिकशततमः सर्गः ॥ १२७ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
भरद्वाजानुशासनं नाम सप्तविंशत्यधिकशततमः सर्गः ॥ १२७ ॥

अष्टाविंशत्यधिकशततमः सर्गः १२८

श्रीवाल्मीकिरुवाच ।

शान्तो दान्तश्चोपरतो निषिद्धात्काम्यकर्मणः ।
विषयेन्द्रियसंश्लेषसुखाच्च श्रद्धयान्वितः ॥ १ ॥

प्रविलापनयुक्त्यात्र भरद्वाजकृतार्थता ।
वर्ण्यन्ते ज्ञानिकर्तव्यरामव्युत्थापनक्रमाः ॥

तत्र साङ्गं साक्षात्कारान्तं प्रपञ्चप्रविलापनप्रकारं शान्तो दान्त
उपरतस्तितिक्षुः श्रद्धावित्तः समाहितो भूत्वात्मन्येवात्मानं पश्यति इति
श्रुतितात्पर्यवर्णनमुखेनैव वक्तुमारब्भते - शान्त इत्यादिना । तत्रोपरतपदं
विषयविभागेन व्याचष्टे - निषिद्धादिति ॥ १ ॥

मृद्वासने समासीनो जितचित्तेन्द्रियक्रियः ।
ओमित्युच्चारयेत्तावन्मनो यावत्प्रसीदति ॥ २ ॥

तत्र समाहितपदार्थतया आसनाद्यष्टाङ्गयोगं वर्णयन्
तितिक्षुपदमर्थाद्व्याचष्टे - मृद्वासने इत्यादिना । उच्चारयेद्दीर्घं जपेत् ।
भुशुण्डोपाख्यानोक्तरीत्या प्लुततमं वा ॥ २ ॥

प्राणायामं ततः कुर्यादन्तःकरणशुद्धये ।
इन्द्रियाण्याहरेत्पश्चाद्विषयेभ्यः शनैःशनैः ॥ ३ ॥

देहेन्द्रियमनोबुद्धिक्षेत्रज्ञानां च संभवः ।
यस्माद्भवति तज्ज्ञात्वा तेषु पश्चाद्विलापयेत् ॥ ४ ॥

यस्माद्यस्माद्यस्य यस्य संभवो जन्म भवति तत्तज्ज्ञात्वा श्रुत्यादिना स्मृत्वा
तेषु तेषु भूतेषु देवेषु च विलापयेत् । वाचारम्भणश्रुत्युक्तरीत्या तत्तद्व्यतिरेकेण
नास्तीति स्मरेदित्यर्थः ॥ ४ ॥

विराजि प्रथमं स्थित्वा तत्रात्मनि ततः परम् ।
अव्याकृते स्थितः पश्चात्स्थितः परमकारणे ॥ ५ ॥

एवमाध्यात्मिकदेहेन्द्रियादिभावं त्यक्त्वा तत्कारणभूतदेवतासमष्ट्यात्मा
अकारार्थो विराडेवाहमस्मीति भावनया प्रथमं विराजि स्थित्वा ततः परं तत्कारणे
उकारार्थे सूक्ष्मभूतलिङ्गसमष्ट्यात्मनि हिरण्यगर्भे विराजं प्रविलाप्य स्थित्वा
ततस्तत्कारणे त्रिगुणे मायोपहिते मकारार्थे अव्याकृते स्थितः संस्ततः
पश्चात्सर्वजगन्मूलकारणत्वोपलक्षिते साव्याकृतसर्वाधिष्ठाने अर्धमात्रालक्षिते
शुद्धे ब्रह्मणि अव्याकृतमपि विलाप्य स्थितो भवेदित्यर्थः ॥ ५ ॥

मांसादिपार्थिवं भागं पृथिव्यां प्रविलापयेत् ।
आप्यं रक्तादिकं चाप्सु तैजसं तेजसि क्षिपेत् ॥ ६ ॥

देहेन्द्रियादिषु यस्य यस्मात्संभवस्तत्र तत्प्रविलापनं यदुक्तं तद्विशिष्य
पुनर्विवृणोति - मांसादीत्यादिना । क्षिपेत् तन्मात्रताचिन्तनेन प्रविलापयेत् ॥ ६ ॥

वायव्यं च महावायौ नाभसं नभसि क्षिपेत् ।
पृथिव्यादिषु विन्यस्य चेन्द्रियाण्यात्मथोनिषु ॥ ७ ॥

नाभसं शारीराकाशम् । एवं घ्राणादीन्द्रियाण्यप्यात्मयोनिषु स्वारम्भकेषु
देवतोपाधिभूतसूक्ष्मपृथिव्यादिषु निक्षिप्य विलाप्य ॥ ७ ॥

श्रोत्रादिलक्षणोपेतां कर्तुर्भोगप्रसिद्धये ।
दिक्षु न्यस्यात्मनः श्रोत्रं त्वचं विद्युति निक्षिपेत् ॥ ८ ॥

दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन् इत्यादिश्रुतेः कर्तुर्जीवस्य
शब्दादिभोगप्रसिद्धये कर्णादिगोलकानुप्रवेशेन
श्रोत्रादिलक्षणेनेन्द्रियभावेनोपेतां दिगादिदेवतां यथाक्रमं देवतास्वेव
निक्षिपेदिति शेषः । तमेव क्रमं दर्शयति - दिक्ष्वित्यादिना ॥ ८ ॥

चक्षुरादित्यबिम्बे च जिह्वामप्सु विनिक्षिपेत् ।
प्राणं वायौ वाचमग्नौ पाणिमिन्द्रे विनिक्षिपेत् ॥ ९ ॥

अप्सु वरुणदेवतायाम् ॥ ९ ॥

विष्णौ तथात्मनः पादौ पायुं मित्रे तथैव च ।
उपस्थं कश्यपे न्यस्य मनश्चन्द्रे निवेशयेत् ॥ १० ॥

बुद्धिं ब्रह्मणि संयच्छेदेताः करणदेवताः ।
इन्द्रियव्यपदेशेन व्यादिश्यन्ते च देवताः ॥ ११ ॥

ब्रह्मणि चतुर्मुखे । बुद्धिग्रहणमुपलक्षणम् । एवं मनोहंकारचित्तान्यपि
चन्द्ररुद्राच्युतेषु प्रविलापयेदित्युपसंहरति - एता इति । अग्निर्वाग्भूत्वा मुखं
प्राविशत् इत्यादिश्रुतिवाक्यप्रमाणमनुस्मृत्य देवता एवेन्द्रियव्यपदेशेन स्थिता न
त्विन्द्रियाणि नाम वस्त्वन्तराणि सन्तीति तत्त्वोपदेशेन प्रविलापनाय मया व्यादिश्यन्ते
न स्वतः स्वकपोलकल्पनया एतेऽर्थाः प्रकटीकृता इत्युत्तरेणान्वयः ॥ ११ ॥

श्रुतिवाक्यमनुस्मृत्य न स्वतः प्रकटीकृताः ।
एवं न्यस्यात्मनो देहं विराडस्मीति चिन्तयेत् ॥ १२ ॥

एवं देहेन्द्रियादिप्रविलापनसंग्रहश्लोकं विवृत्य विराजि प्रथमं
स्थित्वेत्येतद्विशदयति - एवमिति ॥ १२ ॥

ब्रह्माण्डान्तः स्थितो योऽसावर्धनारीश्वरः प्रभुः ।
आधारः सर्वभूतानां कारणं तदुदाहृतम् ॥ १३ ॥

अव्याकृते स्थितः पश्चादित्येतद्विवरणप्रसङ्गेन मायाशबलस्य
सर्वजगदभिन्ननिमित्तोपादानस्य ब्रह्मणो ब्रह्मविद्यार्थिभिः प्रागुपास्यत्वेनोक्तां
ब्रह्माण्डात्मनो विराजो हृत्पद्मे सदा स्थितां ब्रह्मविद्याघटितार्धशरीरां
मूर्तिं दर्शयन्स एव सर्वप्राणिनां मातापितृरूपेण कारणमित्याह -
ब्रह्माण्डान्तरिति ॥ १३ ॥

127505
127506 स यज्ञसृष्टिरूपोऽसौ जगद्वृत्तौ व्यवस्थितः।
127507 द्विगुणाण्डाद्बहिः पृथ्वी पृथिव्या द्विगुणं जलम्॥ १४॥
127508
127509 सोऽसौ पितृत्वादेव स्वसृष्टस्य देवमनुष्यादिजगतो वृत्तावन्नपानादिजीवनोपाये
127510 व्यवस्थितः सन् हविर्वृष्ट्यादिना सर्वपोषकश्रौतस्मार्तयज्ञसृष्टिरूपो
127511 ब्रह्माण्डान्तः स्थितः। प्रासङ्गिकमुक्त्वा प्रस्तुतं प्रविलापनं वक्तुं
127512 ब्रह्माण्डावरणान्याह - द्विगुणेति। यद्यपि एभिरावरणैरण्डं व्याप्तं
127513 दशगुणोत्तरैः इति पुराणेषु दशगुणोत्तरत्वं श्रूयते तथापि द्विगुणमेव परितो
127514 वेष्टने पञ्चक्रोशप्रदक्षिणे पञ्चविंशतिक्रोऽसवदेकगुणस्य पञ्चगुणत्वे
127515 द्विगुणस्य दशगुणत्वमित्यभिप्रायेण तद्बोध्यम्। अथवा
127516 तदपञ्चीकृतभूतावरणाभिप्रायमिदं तु पञ्चीकृताभिप्रायमित्यविरोधः॥ १४॥
127517
127518 सलिलाद्द्विगुणं तेजस्तेजसो द्विगुणोऽनिलः।
127519 वायोर्द्विगुणमाकाशमूर्ध्वमेकैकशः क्रमात्॥ १५॥
127520
127521 एकैकश एकैकस्मादूर्ध्वमुत्तरोत्तरम्॥ १५॥
127522
127523 व्यस्तेन च समस्तेन व्यापिना ग्रथितं जगत्।
127524 क्षितिं चाप्सु समावेश्य सलिलं चानले क्षिपेत्॥ १६॥
127525
127526 व्यस्तेन अपञ्चीकृतेन। समस्तेन पञ्चीकृतेन। अत एवान्तरमान्तरं बाह्ये
127527 प्रविलापयेदित्याह - क्षितिमिति॥ १६॥
127528
127529 अग्निं वायौ समावेश्य वायुं च नभसि क्षिपेत्।
127530 नभश्च महदाकाशे समस्तोत्पत्तिकारणे॥ १७॥
127531
127532 समावेश्य प्रविलाप्य। समस्तस्थूलप्रपञ्चोत्पत्तिकारणे महदाकाशे
127533 हिरण्यगर्भाकाशे॥ १७॥
127534
127535 स्थित्वा तस्मिन्क्षनं यगोई लिङ्गमात्रशरीरधृक्।
127536 वासना भूतसूक्ष्माश्च कर्माविद्ये तथैव च॥ १८॥
127537
127538 किं तल्लिङ्गशरीरं तदाह - वासना इति॥ १८॥
127539
127540 दशेन्द्रियमनोबुद्धिरेतलिङ्गं विदुर्बुधाः।
127541 ततोऽर्धोण्डाद्बहिर्यातस्तत्रात्मास्मीति चिन्तयेत्॥ १९॥
127542
127543 लिङ्गं लिङ्गशरीरम्। एवं स्थूलोपाधिप्रविलापनेनार्ध इव संपन्नो
127544 ब्रह्माण्डात्मताभिमानत्यागात्ततो बहिर्भूतः संस्तत्र
127545 सूक्ष्मभूतात्मकलिङ्गसमष्टिदेहे अहमात्माधिष्ठाता हिरण्यगर्भ एवास्मीति
127546 चिन्तयेदित्यर्थः॥ १९॥
127547
127548 चतुर्मुखोऽग्रके चायं भूतसूक्ष्मव्यवस्थितः।
127549 लिङ्गमव्याकृते सूक्ष्मे न्यस्याव्यक्ते च बुद्धिमान्॥ २०॥
127550
127551 ननु चतुर्मुखः पद्मसंभवो देहो लोके हिरण्यगर्भ इति प्रसिद्धः। अयं तु
127552 भूतसूक्ष्मसमष्ट्यात्मा न चतुर्मुख इति कथं हिरण्यगर्भस्तत्राह -
127553 चतुर्मुख इति। भूतसूक्ष्मे अभिमानितया व्यवस्थितोऽयमेव अग्रके
127554 ब्रह्माण्डप्रविलापनात्पूर्वं ब्रह्माण्डैश्वर्यभोगार्थं पद्मोद्भवं देहं
127555 कल्पयित्वा चतुर्मुख आसीदित्यर्थः। ईदृशहिरण्यगर्भात्मभावनानन्तरं
127556 यत्कर्तव्यं तदाह - लिङ्गमिति। अपञ्चीकृतभूतेभ्योऽपि सूक्ष्मे

127557 उपाध्याकारेणाव्याकृते मायांशे उपहितचिदाकारेणाव्यक्ते च | जडांशस्य जडे
127558 चिदाभासांशस्य चिति प्रविलापनमिति सूचनाय द्विधाकृत्वोक्तिः || २० ||
127559
127560 नामरूपविनिर्मुक्तं यस्मिन्संतिष्ठते जगत् |
127561 तमाहुः प्रकृतिं केचिन्मायामेके परे त्वणून् || २१ ||
127562
127563 अथवा व्याकरणफलमभिव्यक्तिरिति क्रियाफलरूपप्रवृत्तिनिमित्तभेदकल्पनया
127564 एकत्रैव व्यपदेशभेद इत्याशयेनाह - नामेति | प्रकृतिं सांख्याः | मायां
127565 वेदान्तिनः || २१ ||
127566
127567 अविद्यामपरे प्राद्गुस्तर्कविभ्रान्तचेतसः |
127568 तत्र सर्वे लयं गत्वा तिष्ठन्त्यव्यक्तरूपिणः || २२ ||
127569
127570 अपरे बौद्धाः संवृतिरूपामविद्याम् | तत्र तस्मिन्नव्याकृते प्रलयकाले सर्वे
127571 पदार्था लयं षष्ठभावविकारं गत्वा अनभिव्यक्तरूपिणः संतस्तत्सत्तयैव
127572 तिष्ठन्ति || २२ ||
127573
127574 निःसंबन्धा निरास्वादाः संभवन्ति ततः पुनः |
127575 तत्स्वरूपा हि तिष्ठन्ति यावत्सृष्टिः प्रवर्तते || २३ ||
127576
127577 कथं तिष्ठन्ति तदाह - निःसम्बन्धा इति |
127578 परस्परसंसर्गशून्याश्चिद्भोग्यतालक्षणास्वादशून्याश्चेत्यर्थः | कुतः |
127579 प्रलयानन्तरं सर्गकाले ततः अव्याकृतादेव प्रकृतिभूताच्च || २३ ||
127580
127581 आनुलोम्यात्स्मृता सृष्टिः प्रातिलोम्येन संहृतिः |
127582 अतः स्थानत्रयं त्यक्त्वा तुरीयं पदमव्ययम् || २४ ||
127583
127584 आनुलोम्यादाकाशादिक्रमात् | प्रातिलोम्येन सृष्टिविपरीतक्रमेण पश्चात्स्थितः
127585 परमकारणे इत्येतद्विवृणोति - अत इति | स्थानत्रयं
127586 विराड्हिरण्यगर्भाव्याकृताख्यं स्थूलसूक्ष्मकारणरूपं
127587 समष्टिजाग्रदाद्यवस्थात्रयं नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतःप्रज्ञं
127588 न प्रज्ञं नाप्रज्ञं न प्रज्ञानघनम् इतिश्रुत्युपदर्शितदिशा त्यकत्वा
127589 तदधिष्ठानं परिशिष्टचिन्मात्रैकरसं
127590 अदृश्यमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्म##-
127591 श्रुत्युपदर्शितं तस्य प्राप्तये साक्षाल्लाभावधि ध्यायेत् || २४ ||
127592
127593 ध्यायेत्तत्प्राप्तये लिङ्गं प्रविलाप्य परं विशेत् |
127594 भूतेन्द्रियमनोबुद्धिवासनाकर्मवायवः || २५ ||
127595
127596 ध्यानेद्धया चरमसाक्षात्कारवृत्त्या ध्यानकर्तृकरणरूपं लिङ्गमपि
127597 मूलाज्ञानबाधेन प्रविलाप्य घटभङ्गे घटाकाशो महाकाशमिव परं
127598 निरतिशयानन्दं ब्रह्म विशेत्सैवास्य लिङ्गनिगडमुक्त्या कृतार्थतेत्यर्थः | ननु
127599 नान्तःप्रज्ञम् इत्यादिश्रुतौ लिङ्गबाधो न दृश्यते तत्कथं तन्निवृत्तिरिति चेत्
127600 स्थानत्रयबाधे लिङ्गबाधोऽर्थसिद्धः | स्थूलसूक्ष्मभूतेन्द्रियादिष्वेव लिङ्गस्य
127601 प्रतिष्ठितत्वादिति दर्शयति - भूतेन्द्रियेति || २५ ||
127602
127603 अज्ञानं च प्रतिष्ठाः स्युर्लिङ्गमव्याकृते सति |
127604
127605 भरद्वाज उवाच |
127606
127607 इदानीं लिङ्गनिगडान्मुक्तोऽहं सर्वथा यतः || २६ ||
127608

नन्वज्ञानं कथं प्रतिष्ठा तत्राह - लिङ्गमिति | शुद्धे
ब्रह्मण्यज्ञानवरणे नाव्याकृते हि सति सूक्ष्मभूतद्वारा लिङ्गमुत्पद्यते
नाज्ञानं विनेति तदेव लिङ्गस्य मूलप्रतिष्ठेति तन्निवृत्तौ
लिङ्गनिगडभङ्गसिद्धिरिति भावः | एवं वाल्मीकिना प्रणवार्थप्रपञ्चनोपायेन
प्रतिबोधितः प्रबुद्धो भरद्वाजः स्वानुभवं गुर्वनुभवसंवादेन परीक्षणाय
प्रकटयन्नुवाच - इदानीमित्यादिना || २६ ||

चिदंशत्वात्प्रविष्टोऽहं चैतन्यानन्दसागरे |
अभेदात्परमात्मास्मि सर्वोपाधिविवर्जितः || २७ ||

कूटस्थः केवलो व्यापी चिदचिच्छक्तिमानहम् |
घटाभावे घटाकाशकलशाकाशयोर्यथा || २८ ||

चिदहं न तु चिच्छक्तिमान् | कीदृशादभेदात्परमात्मासि तत्राह - घटाभावे
इति | घटभङ्गे सतीत्यर्थः | यथा एकस्यैव घटस्य घटकलशनामभेदकल्पना
तदुपहिते आकाशे च घटाकाशः कलशाकाश इति व्यपदेशभेदकल्पना
तद्वदेकस्यैवाज्ञानस्य जगन्नामभेदकल्पना तदुपहिते च मयि जीव ईश्वरो देवो
नरः कुञ्जर इत्यादिव्यपदेशभेदकल्पना चासीत् | तत्रैकेन घटभङ्गेन यथा
उभयनिवृत्त्या शुद्धाकाशलक्षणैक्यं तद्वदेकस्याज्ञानस्य निवृत्त्या
सर्वनामादिभेदनिवृत्त्या चिदैक्यसाम्राज्यमित्यर्थः || २८ ||

तमाहुः श्रुतयो बह्व्य एवमेवैक्यमादरात् |
यथाग्निरग्नौ संक्षिप्तः समानत्वमनुव्रजेत् || २९ ||

एवमैक्यमभिप्रेत्य तं ब्रह्मभूतं मां यत्र नन्यत्पश्यति नान्यच्छृणोति
नान्यद्विजानाति स भूमायत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् |
एकात्मप्रत्ययसारं शिवं शान्तमद्वैतं चतुर्थं मन्यन्ते नेह नानास्ति किञ्चन
इत्यादयो बह्व्यः श्रुतय आहुरित्यर्थः | एवं यथा जले जलं क्षिप्तं क्षीरे क्षीरं
घृते घृतम् | अविशेषो भवेत्तद्वज्जीवात्मा परमात्मनि
इत्यादिश्रुतिभिरीदृशमेवैक्यं दर्शितमित्याशयेनोदाहरति - यथेति |
समानत्वमैक्यम् || २९ ||

तदाख्यस्तन्मयो भूत्वा गृह्यते न विशेषतः |
यथा तृणादिकं क्षिप्तं रुमायां लवणं भवेत् || ३० ||

एवमचेतनप्रपञ्चस्यापि चिति विलापनेन तद्भावापत्तौ दृष्टान्तमाह - यथेति ||
३० ||

अचेतनं जगन्न्यस्तं चैतन्ये चेतनी भवेत् |
यथा वै लवणग्रन्थिः समुद्रे सैन्धवो यथा || ३१ ||

न्यस्तं प्रविलापितम् || ३१ ||

नामरूपाद्विनिर्मुक्तः प्रविश्यैति समुद्रताम् |
यथा जले जलं न्यस्तं क्षीरे क्षीरं घृते घृतम् || ३२ ||

अविनष्टा भवन्त्येते गृह्यन्ते न विशेषतः |
तथाहं सर्वभावेन प्रविष्टश्चेतने सति || ३३ ||

उपाधिनाशे उपहितजीवनाशशङ्कापि मे गतेत्याशयेनाह - अविनष्टा इति | चेतने
चिदेकरसे सति ब्रह्मणि || ३३ ||

127661 नित्यानन्दे समस्तज्ञे परे परमकारणे।
127662 नित्यं सर्वगतं शान्तं निरवद्यं निरञ्जनम्॥ ३४॥
127663
127664 निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् इत्यादिश्रुत्यापि स्वानुभवं
127665 संवादयति - नित्यमित्यादिना॥ ३४॥
127666
127667 निष्कलं निष्क्रियं शुद्धं तद्ब्रह्मास्मि परं परम्।
127668 हेयोपादेयनिर्मुक्तं सत्यरूपं निरिन्द्रियम्॥ ३५॥
127669
127670 केवलं सत्यसंकल्पं शुद्धं ब्रह्मास्म्यहं परम्।
127671 पुण्यपापविनिर्मुक्तं कारणं जगतः परम्॥ ३६॥
127672
127673 सत्यसंकल्पं संकल्पमात्रेणासतोऽपि जगतः सत्तासंपादनसमर्थसद्रूपम्॥ ३६॥
127674
127675 अद्वितीयं परं ज्योतिर्ब्रह्मास्म्यानन्दमव्ययम्।
127676 एवमादिगुणैर्युक्तं सत्त्वादिगुणवर्जितम्॥ ३७॥
127677
127678 सत्त्वादिभिर्मायागुणैर्वर्जितम्॥ ३७॥
127679
127680 प्रविष्टं सकलं ब्रह्म सदा ध्यायेत्स्वकर्मकृत्।
127681 एवमभ्यसतः पुंसो मनोऽस्तं याति तत्र वै॥ ३८॥
127682
127683 अभ्यासकालेऽपि त्वया अस्यैव ध्यानं मह्यमुपदिष्टमित्याशयेनाह -
127684 प्रविष्टमित्यादिना। स्वकर्मकृच्छ्रवणगुरुशुश्रूषादिपरः
127685 स्ववर्णाश्रमधर्मनिष्ठश्च॥ ३८॥
127686
127687 मनस्यस्तं गते तस्य स्वयमात्मा प्रकाशते।
127688 प्रकाशे सर्वदुःखानां हानिः स्यात्सुखमात्मनि॥ ३९॥
127689
127690 स्वयमेवात्मनात्मानमानन्दं प्रतिपद्यते।
127691 न मत्तोऽस्त्यपरः कश्चिच्चिदानन्दमयः प्रभुः॥ ४०॥
127692
127693 कथंन् प्रतिपद्यते तत्राह - न मत्त इति॥ ४०॥
127694
127695 अहमेकः परं ब्रह्म इत्यात्मान्तः प्रकाशते।
127696
127697 श्रीवाल्मीकिरुवाच।
127698
127699 सखे संन्यस्य कर्माणि ब्रह्मणः प्रणयी भव॥ ४१॥
127700
127701 प्रतिपत्तिशब्दार्थमाह - इत्यात्मेति। एवं भरद्वाजोक्तमनुभवं निशम्य
127702 संतुष्टो वाल्मीकिस्तदुक्तानुभवस्थैर्याय त्यजतैव हि तज्ज्ञेयं त्यक्तुः प्रत्यक्परं
127703 पदम् इत्यादिश्रुतिसिद्धं संन्यासमवश्यकर्तव्यतयोपदिशति - सखे इति॥ ४१॥
127704
127705 नेष्यसे यदि संसारचक्रावर्तभ्रमः शमम्।
127706
127707 भरद्वाज उवाच।
127708
127709 त्वयोक्तं सर्वमेवेदं ज्ञानं बुद्धं मया गुरो॥ ४२॥
127710
127711 संसारचक्रावर्तेषु भ्रमतीति भ्रमः त्वं यदि शमं विश्रान्तिसुखं गार्हस्थ्ये
127712 नेष्यसे न प्राप्नोषि तर्हि कर्माणि संन्यस्य ब्रह्मणः प्रणयी ब्रह्मण्येव

127713 निर्विक्षेपमासक्तो भव। ब्रह्मसंस्थोऽमृतत्वमेति इति श्रुतेरनन्यव्यापारतया
127714 ब्रह्मण्यासक्तय संन्यासिन एव सबीजभ्रान्तिशान्तिसंभवादित्यर्थः। सर्वं
127715 समग्रं साङ्गमिति यावत्॥ ४२॥
127716
127717 बुद्धिश्च निर्मला जाता संसारो न विलम्बते।
127718 इदानीं ज्ञातुमिच्छामि ज्ञानिनः कर्म कीदृशम्॥ ४३॥
127719
127720 न विलम्बनेन चिरं स्थास्यति। तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये इति
127721 श्रुतेरिति भावः। ज्ञानिनो जीवन्मुक्तस्य कर्म कर्तव्यं न वेति प्रथमः प्रश्नः।
127722 यदा कर्तव्यंन् तदा प्रवृत्तिरूपं नित्यनैमित्तिककाम्यकर्म सर्वमेव यथापूर्वं
127723 कर्तव्यं अथवा कामनाभ्यो निवृत्तं स्वस्वाश्रमोचितकर्ममात्रं कर्तव्यमिति
127724 द्वितीयः प्रश्नः पाठक्रमादार्थक्रमस्य वलीयस्त्वाद्बोध्यः। ननु सखे संन्यस्य
127725 कर्माणि ब्रह्मणः प्रणयी भव इति सर्वकर्मसंन्यासं श्रुतवतो भरद्वाजस्य
127726 द्वावपि प्रश्नावनुपपन्नौ। सत्यम्। तथापि यावज्जीवमग्निहोत्रं जुहोति कुर्वन्नेवेह
127727 कर्माणि जिजीविषेच्छतं समाः इत्यादिश्रुतिभिर्यावज्जीवं कर्तव्यतया निबद्धानां
127728 दीक्षितो न ददाति न जुहोति इत्यादिवाक्यैर्दीक्षाकाले त्यक्तानामपि दीक्षापगमे पुनः
127729 परिग्रहवत्। त्यजतैव हि तज्ज्ञेयं एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति
127730 इत्यादिश्रुतिभिर्ब्रह्मजिज्ञासानिमित्तेन त्यक्तानां ज्ञानसिद्ध्या निमित्तापगमे पुनः
127731 परिग्रहो न्यायसिद्धः। न च विद्वत्संन्यासविधानात्पुनरपरिग्रहः। तस्य
127732 जन्मान्तरानुष्ठितविविदिषासंन्यासवशाद्गृहस्थाद्याश्रमेष्वेव
127733 तत्त्वज्ञानोदयेन कृतार्थान्पुरुषविशेषान्प्रति अप्राप्तसंन्यासान्तरविधानपरस्य
127734 प्राप्तविविदिषासंन्यासपरिपालनविधानाशक्तेरित्याशयेन प्रश्नावुपपन्नौ बोध्यौ
127735 ॥ ४३॥
127736
127737 प्रवृत्तं वा निवृत्तं वा कर्तव्यं च न वा प्रभो।
127738
127739 श्रीवाल्मीकिरुवाच।
127740
127741 तस्माद्यन्न कृते दोषस्तत्कर्तव्यं मुमुक्षुभिः॥ ४४॥
127742
127743 एवं पृष्टे वाल्मीकिस्त्वया प्रथमं काम्यनिषिद्धकर्मणां
127744 ज्ञानविरोधिविक्षेपादिदोषहेतुभूतकर्मणां च त्यागेन ज्ञानित्वं शास्त्राभ्यासेन
127745 संपादनीयम्। तदुत्तरं तस्य कर्म कीदृशम् इति त्वत्प्रश्नोत्तरं त्वं स्वयमेव
127746 ज्ञास्यसि। तत्तद्भूमिकापरिपाकक्रमेण तत्तत्कर्मोपरमस्य तदा तदैव
127747 त्वयानुभवितुं शक्यत्वाज्ज्ञानिनां च प्रारब्धवैचित्र्येणैकरूपस्थित्यदर्शनेन
127748 तत्कर्मणां प्रवृत्तमेव निवृत्तमेव वेति नियन्तुमशक्यत्वादित्याशयेनोत्तरमाह
127749 - तस्मादिति। तस्मात्सर्वकर्मसंन्याससहितब्रह्मप्रणयित्वमेव
127750 संसारभ्रमनिवर्तकज्ञानोपाय इति मदुपदिष्टार्थस्य
127751 बुद्धत्वात्त्वादृशैर्मुमुक्षुभिर्यद्यस्मिन्कर्मणि कृते सति
127752 श्रवणादिविघ्नदोषश्चित्तविक्षेपमालिन्यपातकादिदोषश्च न भवति तदेव कर्तव्यम्।
127753 काम्यं निषिद्धं चकारादृष्टविक्षेपसाधनं च कर्म न कर्तव्यमित्यर्थः।
127754 विविदिषासंन्यासपरिपालनं तु विधिना त्यक्तस्य पुनर्विधिं विना परिग्रहासंभवात्
127755 आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते पुनः। प्रायश्चित्तं न पश्यामि येन
127756 शुद्ध्येत्स आत्महा। इत्यादिपरावृत्तौ दोषश्रवणात्पुनः परिग्रहे
127757 प्रयोजनाभावाच्छिष्टविगर्हितत्वाच्च सेत्स्यतीति भावः॥ ४४॥
127758
127759 काम्यं कर्म निषिद्धं च न कर्तव्यं विशेषतः।
127760 यदा ब्रह्मगुणैर्जीवो युक्तस्त्यक्त्वा मनोगुणान्॥ ४५॥
127761
127762 ज्ञानित्वं त्वस्य सर्वमनोगुणत्यागेन
127763 पूर्णानन्दाद्वयविशुद्धासङ्गचिदेकरसत्वादिब्रह्मगुणप्राप्तावेव
127764 स्यान्नान्यथेत्याह - यदेत्यादिना॥ ४५॥

127765
127766 संशान्तकरणग्रामस्तदा स्यात्सर्वगः प्रभुः।
127767 देहेन्द्रियमनोबुद्धेः परस्तस्माच्च यः परः॥ ४६॥
127768
127769 देहादिकोशचतुष्टयात्पर आनन्दमयकोशात्मा तस्मात्परस्तदधिष्ठानं ब्रह्म॥
127770 ४६॥
127771
127772 सोऽहमस्मि यदा ध्यायेत्तदा जीवो विमुच्यते।
127773 कर्तृभोक्त्रादिनिर्मुक्तः सर्वोपाधिविवर्जितः॥ ४७॥
127774
127775 आदिपदात् कर्ता कार्यं करणं भोक्ता भोग्यं भोगः ज्ञाता ज्ञानं ज्ञेयमिति
127776 तिस्रोऽपि त्रिपुट्यः परिगृह्यन्ते। तत्प्रयोजकैः सर्वैर्देहाद्युपाधिभिस्तत्फलाभ्यां
127777 सुखदुःखाभ्यांन् च विनिर्मुक्तो यदा भविष्यसि तदानीम्॥ ४७॥
127778
127779 सुखदुःखविनिर्मुक्तस्तदानीं विप्रमुच्यते।
127780 सर्वभूतेषु चात्मानंन् सर्वभूतानि चात्मनि॥ ४८॥
127781
127782 यदा पश्यत्यभेदेन तदा जीवो विमुच्यते।
127783 जाग्रत्स्वप्नसुषुप्ताख्यंन् हित्वा स्थानत्रयंन् यदा॥ ४९॥
127784
127785 विशेत्तुरीयमानन्दं तदा जीवो विमुच्यते।
127786 जीवस्य च तुरीयाख्या स्थितिर्या परमात्मनि॥ ५०॥
127787
127788 अवस्थाबीजनिद्रादिनिर्मुक्ता चित्सुखात्मिका।
127789 योगस्य सेयं वा निष्ठा सुखं संवेदनं महत्॥ ५१॥
127790
127791 जाग्रत्स्वप्नावस्थयोर्बीजं सवासनाकर्माज्ञानम्। निद्रा तदवस्थाविशेषः। सेयं
127792 तुर्याख्या जीवस्य स्थितिर्योगस्य
127793 निदिध्यासनपरिपाकजन्यनिर्विकल्पसमाधेर्वाशब्दान्मुख्याधिकारिणो
127794 विचारमात्रजन्यसाक्षात्कारज्ञानस्य वा निष्ठा परिसमाप्तिः॥ ५१॥
127795
127796 मनस्यस्तं गते पुंसां तदन्यन्नोपलभ्यते।
127797 प्रशान्तामृतकल्लोले केवलामृतवारिधौ॥ ५२॥
127798
127799 तस्मिन्विश्रान्तस्य तव द्वैतदर्शनप्रसक्तिरेव नास्ति दूरे
127800 कर्मक्षाराब्धिवीचिमज्जनप्रसक्तिरित्याशयेनाह - प्रशान्तेति॥ ५२॥
127801
127802 मज्ज मज्जसि किं द्वैतग्रहक्षाराब्धिवीचिषु।
127803 भज संभरिताभोगं परमेशं जगद्गुरुम्॥ ५३॥
127804
127805 प्रागुक्तमीश्वरमुपास्य तत्प्रसादेन ते वसिष्ठोक्तज्ञानमार्गेण योगमार्गेण वा
127806 तत्त्वज्ञाने सत्येकविज्ञानेन सर्वविज्ञानात्सर्वसंशयमूलाज्ञाननाशाच्च
127807 सर्वसंशयोच्छेदेन विश्रान्तिर्भविष्यतीत्युपसंहरति - भजेत्यादिना॥ ५३॥
127808
127809 इति ते वर्णितं सर्वं वसिष्ठस्योपदेशनम्।
127810 अनेन ज्ञानमार्गेण योगमार्गेण पुत्रक॥ ५४॥
127811
127812 भरद्वाज महाप्राज्ञ सर्वं ज्ञास्यसि निश्चितम्।
127813 परामर्शेन शास्त्रस्य गुरुवाक्यार्थबोधनात्॥ ५५॥
127814
127815 तत्र शास्त्राचार्योपदेशस्वानुभवानामेकार्थनिष्ठतानिश्चयायार्थ##-
127816 कार्य इत्याह - परामर्शेनेति॥ ५५॥

127817
127818 अभ्यासात्सर्वसिद्धिः स्यादिति वेदानुशासनम् ।
127819 तस्मात्त्वं सर्वमुत्सृज्य कुर्वभ्यासे स्थिरं मनः ॥ ५६ ॥
127820
127821 भरद्वाज उवाच ।
127822
127823 रामः प्राप्तः परं योगं स्वात्मनात्मनि हे मुने ।
127824 कथं वसिष्ठदेवेन व्यवहारपरः कृतः ॥ ५७ ॥
127825
127826 योगमुपाधित्यागेनैक्यम् । स्वात्मना शोधितप्रतीचा । आत्मनि ब्रह्मणि ॥ ५७ ॥
127827
127828 इति ज्ञात्वाहमप्येवमभ्यासार्थं यते यथा ।
127829 तथैव व्यवहारोऽपि व्युत्थाने मे भविष्यति ॥ ५८ ॥
127830
127831 श्रीवाल्मीकिरुवाच ।
127832
127833 यदा परिणतः साधुः स्वस्वरूपे महामनाः ।
127834 विश्वामित्रस्तदोवाच वसिष्ठमृषिसत्तमम् ॥ ५९ ॥
127835
127836 महामना अपरिच्छिन्नब्रह्माकारचित्तो रामः ॥ ५९ ॥
127837
127838 विश्वामित्र उवाच ।
127839
127840 हे वसिष्ठ महाभाग ब्रह्मपुत्र महानसि ।
127841 गुरुत्वं शक्तिपातेन तत्क्षणादेव दर्शितम् ॥ ६० ॥
127842
127843 अनुग्रहदृष्टिमात्रप्रयुक्तेन प्रागुक्तशक्तिपातेन त्वया शिष्यस्य
127844 ब्रह्मीकरणात्स्वस्य गुरुत्वं शिष्योद्धारसामर्थ्यलक्षणं तत्क्षणात्सद्य एव
127845 दर्शितमस्मभ्यमित्यर्थः ॥ ६० ॥
127846
127847 दर्शनात्स्पर्शनाच्छब्दात्कृपया शिष्यदेहके ।
127848 जनयेद्यः समावेशं शांभवं स हि देशिकः ॥ ६१ ॥
127849
127850 ननु मया स्वशरीरं त्यक्त्वा रामदेहं प्रविश्य कुण्डलिनीसंचारादिकं न
127851 कृतमेव तत्कथं त्वया शक्तिपातो ज्ञातस्तत्राह - दर्शनादिति ।
127852 सत्यसंकल्पानां त्वादृशां कृपादृष्ट्यापि सच्छिष्यस्य कुण्डलिन्याः
127853 षट्चक्रभेदेन ब्रह्मरन्ध्रस्थितपरशिवसमावेशलक्षणो जीवस्योपाधिपरित्यागेन
127854 शुद्धब्रह्मसमावेशलक्षणश्च शक्तिपातः सिद्ध्यतीति भावः । देशिको गुरुः ॥ ६१ ॥
127855
127856 रामोऽप्ययंन् विशुद्धात्मा विरक्तः स्वात्मनैव हि ।
127857 विश्रान्तिमात्राकाङ्क्षी च संवादात्प्राप्तवान्पदम् ॥ ६२ ॥
127858
127859 तत्र रामस्य सच्छिष्यतां दर्शयति - राम इति ॥ ६२ ॥
127860
127861 शिष्यप्रज्ञैव बोधस्य कारणं गुरुवाक्यतः ।
127862 मलत्रयमपक्कं चेत्कथं बुद्ध्यति पक्कत् ॥ ६३ ॥
127863
127864 मलत्रयं शैवशास्त्रप्रसिद्धमाणवादिकामकर्मवासनालक्षणं वा । कथं
127865 बुद्ध्यति शिष्य इति शेषः ॥ ६३ ॥
127866
127867 ज्ञानं प्रत्यक्षमेवेदं गुरुशिष्यप्रयोजनम् ।
127868 उभावपि यतो योग्यौ सर्वेषामीदृशामपि ॥ ६४ ॥

127869
127870 सच्छिष्येषु शास्त्रस्य दृष्टफलतैवेत्याह - ज्ञानमिति। यत उभौ गुरुशिष्यौ
127871 योग्यौ चेत्सर्वेषां पुरुषार्थानामीदृशां कैवल्यलक्षणानामपि भाजनं
127872 स्तामित्यर्थः॥ ६४॥
127873
127874 इदानीं कृपया रामव्युत्थानं कर्तुमर्हसि।
127875 पदे परिणतस्त्वं हि कार्याविष्टा वयं यतः॥ ६५॥
127876
127877 इत्थं वसिष्ठं प्रशस्य प्रस्तुतं कर्तव्यमाह - इदानीमिति। अस्मदादिषु
127878 कृपया। त्वं पदे परिणतः। कृतकृत्य इति यावत्॥ ६५॥
127879
127880 स्मरन्कार्यं मम विभो यदुद्दिश्याहमागतः।
127881 प्रार्थितश्चातिकष्टेन राजा दशरथः स्वयम्॥ ६६॥
127882
127883 मम कार्यं निर्विघ्नयज्ञसिद्धिं त्वं स्मरन्सन् रामव्युत्थानं कर्तुमर्हसीति
127884 पूर्वत्र वृथा मा कृथा इत्युत्तरत्र वा संबन्धः॥ ६६॥
127885
127886 तद्वृथा मा कृथाः सर्वं शुद्धेन मनसा मुने।
127887 देवकार्यं चरामान्यदवतारप्रयोजनम्॥ ६७॥
127888
127889 किंचान्यद्देवकार्यमपि रामव्युत्थापनेन चराम संपादयामो वयम्॥ ६७॥
127890
127891 सिद्धाश्रमं मया नीतो रामो राक्षसमर्दनम्।
127892 करिष्यति ततोऽहल्यामुक्तिं च जनकात्मजाम्॥ ६८॥
127893
127894 कार्यान्तराण्यपि दर्शयन्देवकार्यं विशदयति - सिद्धाश्रमेत्यादिना। अहल्याया
127895 मुक्तिं शापमोक्षं च करिष्यतीत्यनुषङ्गः॥ ६८॥
127896
127897 परिणेष्यति कोदण्डभङ्गेन कृतनिश्चयः।
127898 रामस्य जामदग्न्यस्य कर्ता नष्टां गतिं ध्रुवम्॥ ६९॥
127899
127900 निश्चयो वाग्निश्चयः। गतिं परलोकमार्गम्॥ ६९॥
127901
127902 पितृपैतामहं राज्यं विगतोऽभयनिस्पृहः।
127903 वनवासच्छलेनेह दण्डकारण्यवासिनः॥ ७०॥
127904
127905 राज्यं विमुच्य गतो विगतः। जीवन्मुक्तत्वादेवाभयो निस्पृहश्च।
127906 दण्डकारण्यवासिनो मुनीन् राक्षसवधेन भयादुद्धरिष्यतीति परेणान्वयः॥ ७०॥
127907
127908 उद्धरिष्यति तीर्थानि प्राणिनो विविधानि हि।
127909 सीताहरणदौर्गत्यच्छलेन भुवि शोच्यताम्॥ ७१॥
127910
127911 विविधानि तीर्थानि प्राणिनश्च उद्धरिष्यति पावयिष्यतीत्यर्थः। सीताहरणप्रयुक्तं
127912 यद्दौर्गत्यं शोकमोहादिविडम्बनं तच्छलेन रावणादीनां वधादपि सर्वेषां
127913 स्त्रीसङ्गिनां भुवि शोच्यतामस्वास्थ्यं च दर्शयिष्यतीति परेणान्वयः॥ ७१॥
127914
127915 दर्शयिष्यति सर्वेषां रावणादिवधादपि।
127916 स्त्रीसङ्गिनामथास्वास्थ्यं वानरादेः परावृतिम्॥ ७२॥
127917
127918 अथ इन्द्रवरदानेन युद्धेः मृतस्य वानरक्षदिः परावृत्तिं परावर्तनं
127919 पुनः संजीवनं दर्शयिष्यति॥ ७२॥
127920

127921 सीताविशुद्धिमन्विच्छ&ल्लोकानुमतिमात्मनः |
127922 जीवन्मुक्तो निस्पृहोपि क्रियाकाण्डपरायणः || ७३ ||
127923
127924 अग्निप्रवेशेन सीताविऽसुद्धिमन्विच्छन्सन्नात्मनः स्वस्य लोकानुमतिं
127925 शिष्टजनमाननीयचरित्रतां दर्शयिष्यति | ततो राज्येऽभिषिक्तः स्वयं जीवन्मुक्तो
127926 निस्पृहोऽपि सन् कर्माधिकृतजनानां कर्मानुष्ठानेनैव गतिं द्रष्टुं
127927 दर्शयितुं क्रियाकाण्डपरायणो भविष्यतीति परेणान्वयः || ७३ ||
127928
127929 भविष्यति गतिं द्रष्टुं ज्ञानकर्मसमुच्चयौ |
127930 यैर्दृष्टो यैः स्मृतो वापि यैः श्रुतो बोधितस्तु यैः || ७४ ||
127931
127932 ज्ञानकर्मसमुच्चयाधिकारिणां ब्रह्मलोकादिगतिं दर्शयितुं
127933 ज्ञानकर्मसमुच्चयौ च करिष्यतीति शेषः | ज्ञानमत्रोपासनम् | न केवलं
127934 कर्ममार्गप्रवर्तनेन वर्तमानजनमात्रोपकारी किंतूत्तरकालमपि
127935 स्मरणकीर्तनस्वचरित्रप्रबोधनादिना स्वानुगतानां भक्तानां जीवन्मुक्तिसुखप्रद
127936 इत्याह - यैरिति || ७४ ||
127937
127938 सर्वावस्थागतानां तु जीवन्मुक्तिं प्रदास्यति |
127939 इति कार्यमशेषेण त्रैलोक्यस्य ममापि हि || ७५ ||
127940
127941 सर्वावस्थासु गतानां भक्त्या अनुगतानाम् || ७५ ||
127942
127943 अनेन रामचन्द्रेण पुरुषेण महात्मना |
127944 नमोऽस्मै जितमेवैते कोऽप्येवं चिरमेधताम् || ७६ ||
127945
127946 अनेन महात्मना रामचन्द्रेण इति वर्णितप्रकारेण त्रैलोक्यस्य ममापि हितं कार्यमिति
127947 पूर्वत्रान्वयः | इदानीं श्रीविश्वामित्रः सामाजिकानां रामभक्तिं वर्धयन्नाह
127948 - नम इति | हे जनाः एते यूयमस्मै रामाय नमस्कुरुत | तन्नमस्कारमात्रेण
127949 भवद्भिः सर्वं जेतव्यं जितमेव न साधनान्तरमपेक्षणीयमित्यर्थः | युष्माकं
127950 मध्ये कोऽपि पुरुषधौरेय एवं श्रीराम इव जीवन्मुक्तश्चिरं
127951 निर्विकल्पसमाधिविश्रान्तिं प्राप्तः | सुखमेधतां वर्धताम् || ७६ ||
127952
127953 श्रीवाल्मीकिरुवाच |
127954
127955 इति श्रुत्वा च ते सर्वे विश्वामित्रेण भाषितम् |
127956 सिद्धाश्च वरयोगीन्द्रा वसिष्ठप्रमुखाः पुनः || ७७ ||
127957
127958 रामाङ्घ्रिपद्मरजसामादरस्मरणास्थिताः |
127959 दूरश्रुतोत्तरकथाः कथया मैथिलीपतेः || ७८ ||
127960
127961 दूराद्दुर्लभा श्रुता उत्तरचरित्ररूपा रामकथा यैस्तथाविधाः सन्तो
127962 रामाङ्घ्रिपद्मरजसामादरे | नमस्कारे इति यावत् | सदा रामस्मरणे च आस्थिता
127963 आस्थावन्तो बभूवुरिति शेषः | वसिष्ठो मैथिलीपतेः कथया श्रुतया न संतुतोष न
127964 तृप्तो बभूव || ७८ ||
127965
127966 न संतुतोष भगवान्वसिष्ठोऽन्ये महर्षयः |
127967 गुणान्गुणनिधेस्तस्य ब्रुवन्नाकर्णयञ्छ्रुतम् || ७९ ||
127968
127969 एवमन्ये महर्षयश्च न संतुतुषुः | भूयः श्रोतुमुत्कण्ठिताः सर्वे
127970 बभूवुरित्यर्थः | अत एव ते तस्य गुणान्परोक्तानाकर्णयन् स्वयं श्रुतं चान्यान्प्रति
127971 ब्रुवन्नब्रुवन् | लङ्यडभावश्छान्दसः || ७९ ||
127972

127973 विश्वामित्रमुनिं प्राह वसिष्ठो भगवानृषिः |
127974
127975 श्रीवसिष्ठ उवाच |
127976
127977 ब्रूहि विश्वामित्र मुने रामो राजीवलोचनः |
127978 कोऽयमभूद्बुधः किं वा मनुष्यो वाथ राघवः || ८० ||
127979
127980 ब्रूहि श्रोतृजनं प्रति व्यक्तं वद | अयं रामो जन्मनः प्राक्कोऽभूत् किं वा बुधो
127981 देवः अथवा मनुष्य इत्यज्ञजनाभिप्रायानुसारी प्रश्नः || ८० ||
127982
127983 विश्वामित्र उवाच |
127984
127985 अत्रैव कुरु विश्वासमयं स पुरुषः परः |
127986 विश्वार्थमथिताम्भोधिर्गम्भीरागमगोचरः || ८१ ||
127987
127988 विश्वामित्रोऽप्यज्ञजनानुसारेणोत्तरमाह - अत्रैवेति | हे जन त्वमत्रास्मिन् राम एव
127989 साक्षाद्भगवान्वासुदेव इति विश्वासं कुरु | स पुराणः परः पुरुषः | स कः |
127990 विश्वार्थं मथितोऽम्भोधिः क्षीरार्णवो येन सः | गम्भीराणां
127991 गूढाशयानामागमानामुपनिषदां तत्त्वगोचरो नान्यप्रमाणस्येत्यर्थः || ८१ ||
127992
127993 परिपूर्णपरानन्दः समः श्रीवत्सलाञ्छनः |
127994 सर्वेषां प्राणिनां रामः प्रदाता सुप्रसादितः || ८२ ||
127995
127996 प्रदाता सर्वपुरुषार्थानामिति शेषः | सुष्ठुभक्त्या प्रसादितः || ८२ ||
127997
127998 अयं निहन्ति कुपितः सृजत्ययमसत्सकान् |
127999 विश्वादिर्विश्वजनको धाता भर्ता महासखः || ८३ ||
128000
128001 असत्समाः [असतः सतः कायन्ते इति पाठः |] कायन्ते कीर्त्यन्त इत्यसत्सका
128002 [छान्दसः पृषोदरादिर्वायं प्रयोगः |] मिथ्यार्थास्तान् || ८३ ||
128003
128004 अयं व्युत्क्रान्तनिःसारमृदुसंसारधूर्तकैः |
128005 आनन्दसिन्धुर्विततो वीतरागैर्विगाह्यते || ८४ ||
128006
128007 व्युत्क्रान्ता विचारबाधिताः निःसाराः मृदवश्च संसाराः कार्यकारणबन्धा
128008 यैस्तथाविधैर्धूर्तकैर्जगद्वञ्चकैर्वीतरागैर्यतिभिरानन्दसिन्धुर्विगाह्यते
128009 प्रविश्यते || ८४ ||
128010
128011 क्वचिन्मुक्त इवात्मस्थः क्वचित्तुर्यपदाभिधः |
128012 क्वचित्प्रणीतप्रकृतिः क्वचित्तत्स्थः पुमानयम् || ८५ ||
128013
128014 अयमेव ज्ञानमुक्तो नित्यमुक्तो मायानियन्ता मायान्तर्बद्धश्चेति चतुर्धा स्थित
128015 इत्याह - क्वचिदिति || ८५ ||
128016
128017 अयं त्रयीमयो देवस्त्रैगुण्यगहनातिगः |
128018 जयत्यङ्गैरयं षड्भिर्वेदात्मा पुरुषोऽद्भुतः || ८६ ||
128019
128020 त्रयीमयो वेदशरीरः | अङ्गैः शिक्षाकल्पादिभिः | वेदानामात्मा
128021 पारमार्थिकस्वरूपभूतः || ८६ ||
128022
128023 अयं चतुर्बाहुरयं विश्वस्रष्टा चतुर्मुखः |
128024 अयमेव महादेवः संहर्ता च त्रिलोचनः || ८७ ||

128025
128026 चतुर्बाहुः पालको विष्णुः ॥ ८७ ॥
128027
128028 अजोऽयं जायते योगाज्जागरूकः सदा महान् ।
128029 बिभर्ति भगवानेतद्विरूपो विश्वरूपवान् ॥ ८८ ॥
128030
128031 योगान्मायाशक्तिसंबन्धात् । मोहनिद्रानावृतत्वात्सदा जागरूकः ॥ ८८ ॥
128032
128033 विजयो विक्रमेणेव प्रकाश इव तेजसा ।
128034 प्रज्ञोत्कर्षः श्रुतेनेव सुपर्णेनायमुह्यते ॥ ८९ ॥
128035
128036 यथा विक्रमेण पराक्रमेणावश्यभावी विजय उह्यते प्राप्यते तेजसा यथा प्रकाशो
128037 भास्वररूपं उह्यते ध्रियते यथा श्रुतेन शास्त्रेण प्रज्ञोत्कर्ष उह्यते प्राप्यते
128038 तद्वदयं सुपर्णेन गरुडेनेत्यर्थः ॥ ८९ ॥
128039
128040 अयं दशरथो धन्यः सुतो यस्य परः पुमान् ।
128041 धन्यः स दशकण्ठोऽपि चिन्त्यश्चित्तेन योऽमुना ॥ ९० ॥
128042
128043 अमुना रामेण यश्चित्तेन ममायं प्रतियोद्धेति चिन्त्यश्चिन्तनार्हः संपन्नः ॥ ९० ॥
128044
128045 हा स्वर्गममुना शून्यं हा पातालादिहागतः ।
128046 तस्यागमादयं लोको मध्यमः श्रेष्ठतां गतः ॥ ९१ ॥
128047
128048 विष्णुदेहेनामुना शून्यं स्वर्गं हा स्वर्गस्य शोच्यतेत्यर्थः ।
128049 अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि इति षष्ठ्यर्थे द्वितीया । एवं शेषमूर्तिरयं
128050 पातालाल्लक्ष्मणात्मना इहागतः । तथा च पातालस्यापि शोच्यतेत्यर्थः ॥ ९१ ॥
128051
128052 राम इत्यवतीर्णोऽयमर्णवान्तःशयः पुमान् ।
128053 चिदानन्दघनो रामः परमात्मायमव्ययः ॥ ९२ ॥
128054
128055 निगृहीतेन्द्रियग्रामा रामं जानन्ति योगिनः ।
128056 वयं त्ववरमेवास्य रूपं रूपयितुं क्षमाः ॥ ९३ ॥
128057
128058 रूपयितुंन् निरूपयितुं द्रष्टुं च ॥ ९३ ॥
128059
128060 रघोरघोच्छेदकरो भगवानिति शुश्रुम ।
128061 वसिष्ठ कृपया त्वं हि व्यवहारपरं कुरु ॥ ९४ ॥
128062
128063 वंशोऽवतारेण रघुरप्यनेन पावित इत्याह - रघोरिति । शुश्रुम इति
128064 क्रादिनियमान्नेट् । लिटि मसो मादेशाभावश्छान्दसः ॥ ९४ ॥
128065
128066 श्रीवाल्मीकिरुवाच ।
128067
128068 इत्युक्त्वावस्थितस्तूष्णीं विश्वामित्रो महामुनिः ।
128069 वसिष्ठस्तु महातेजा रामचन्द्रमभाषत ॥९५ ॥
128070
128071 श्रीवसिष्ठ उवाच ।
128072
128073 राम राम महाबाहो महापुरुष चिन्मय ।
128074 नायं विश्रान्तिकालो हि लोकानन्दकरो भव ॥ ९६ ॥
128075
128076 यावल्लोकपरामर्शो निरूढो नास्ति योगिनः ।

तावद्दृढसमाधित्वं न भवत्येव निर्मलम् ॥ ९७ ॥

अधिकारनिष्पादनलक्षणो लोकानां परामर्शो यावन्न निरूढो न निष्पन्नः न
भवति युक्तमिति शेषः ॥ ९७ ॥

तस्माद्राज्यादिविषयान्पर्यालोक्य विनश्वरान् ।
देवकार्यादिभारांश्च भज पुत्र सुखी भव ॥ ९८ ॥

पर्यालोक्य कंचित्कालमनुभूय देवकार्यादीनधिकारभारांश्च पर्यालोक्य
पश्चात्समाधिं भजेत्यर्थः ॥ ९८ ॥

श्रीवाल्मीकिरुवाच ।

इत्युक्तोऽपि यदा रामः किंचिन्नोचे लयं गतः ।
तदा सुषुम्नया सोऽपि विवेश हृदयं शनैः ॥ ९९ ॥

यदा राम इति गुरुणा उक्तोपि लयं ब्रह्मैक्यंन् गतो
बाह्यार्थश्रवणाभावाद्वागादिकरणचेष्टोपरमाच्च न किंचिदूचे तदा स
वसिष्ठस्तच्छरीरं संकल्पेन प्रविश्य तदीयसुषुम्नानाड्या
शनैर्हृदयपुण्डरीकं विवेश । प्रविश्य तदीयं विलीनं जीवोपाधिं लिङ्गं
घनीकृत्य बीजान्तः प्रविष्टो वायुस्तदन्तर्गतमङ्कुरमिव बहिराचकर्षेति यावत् ॥ ९९
। ।

शक्तिप्राणमनःप्रसक्तिकरणो जीवः प्रकाशात्मको
नाडीरन्ध्रसुपुष्टसर्वकरणः प्रोन्मील्य नेत्रे शनैः ।
दृष्ट्वोत्कृष्टवसिष्ठमुख्यविदुषो निर्मुक्तसर्वैषणः
कृत्याकृत्यविचारणादिरहितः सर्वान्प्रतीक्ष्य स्थितः ॥ १०० ॥

तस्य बहिराकर्षणे तदाविर्भावक्रमेण तत्र चिदाभासाभिव्यक्त्या तत्कृतं
क्षेत्रप्रकाशबाह्यार्थदर्शनादिक्रममाह - शक्तीति । प्रथमं
प्राणादिबीजभूतायामाधारशक्तौ ततः प्राणाविर्भावे तेषु ततो मनस आविर्भावे
तस्मिंश्च प्रसक्तिश्चिदाभासभावेनानुप्रवेशस्तं करोतीति
शक्तिप्राणमनःप्रसक्तिकरणः । अत एव तत्प्रकाशात्मकस्तदुपाधिको जीवः
प्राणद्वारा सर्वनाडीरन्ध्रेष्वनुप्रविश्य सुपुष्टान्याविष्कृतानि सर्वाणि
ज्ञानकर्मेन्द्रियलक्षणानि करणानि येन तथाविधः सन् शनैर्नेत्रे प्रोन्मील्य
बहिरुत्कृष्टान् पूज्यान् वसिष्ठमुख्यान् विदुषो दृष्ट्वा स्वयं
कृतकृत्यत्वान्निर्मुक्तसर्वैषणः अत एव कृत्यस्यावश्यकर्तव्यस्य अकृत्यस्य
त्याज्यस्य च व्यवहारस्य विचारणया गुणदोषचिन्तया
आदिपदात्तत्प्रयुक्तहानोपादानादिवृत्त्या च रहितः सन्नीदृशं मामेते किं
वक्ष्यन्तीति सर्वान्प्रतीक्ष्य स्थित इत्यर्थः ॥ १०० ॥

श्रुत्वा वसिष्ठवचनं गुरुवाक्यमिति स्वयम् ।
श्रुत्वा प्रोवाच भगवान्रामचन्द्रः समाहितः ॥ १०१ ॥

तदनन्तरं इति प्रागुक्तं राम राम महाबाहो इत्यादिवसिष्ठवचनं पुनस्तेनैव
श्रावितं श्रुत्वा इदं गुरुवाक्यमनुल्लङ्घ्यमिति
पितृभ्रातृबन्ध्वादिप्रार्थनामपि श्रुत्वा भगवान्सर्वज्ञः ।
स्वावतारप्रयोजनज्ञ इति यावत् । तदभ्युपगमेन समाहितः सन् प्रोवाचेत्यर्थः ॥ १०१ ॥

श्रीराम उवाच ।

न विधेर्न निषेधस्य त्वत्प्रसादादयं प्रभुः ।

128129 तथापि तव वाक्यं तु करणीयं हि सर्वदा ॥ १०२ ॥
128130
128131 वेदागमपुराणेषु स्मृतिष्वपि महामुने ।
128132 गुरुवाक्यं विधिः प्रोक्तो निषेधस्तद्विपर्ययः ॥ १०३ ॥
128133
128134 विधिरवश्यानुष्ठेयोऽर्थः । तद्विपर्ययस्तदतिक्रमणं तु निषेधः । अवश्यहेय
128135 इत्यर्थः ॥। १०३ ॥
128136
128137 इत्युक्त्वा चरणौ तस्य वसिष्ठस्य महात्मनः ।
128138 शिरसा धार्य सर्वात्मा सर्वान्प्राह घृणानिधिः ॥ १०४ ॥
128139
128140 इदानीं श्रीरामः परमपुरुषार्थदानरूपस्य गुरुकृतोपकारस्य
128141 निष्कृतिमन्यामपश्यन् स्वशिरसि तच्चरणधारणव्याजेन स्वं गुरवे समर्प्य
128142 सर्वजनेभ्यः सर्वोत्कृष्टं ज्ञानमाहात्म्यं गुरुमाहात्म्यं च स्वयंन्
128143 प्रत्यक्षमनुभूतंन् विश्वासदार्ढ्यायोपदिष्टवानित्याह - इत्युक्त्वेति ॥ १०४ ॥
128144
128145 श्रीराम उवाच ।
128146
128147 सर्वे शृणुत भद्रं वो निश्चयेन सुनिश्चितम् ।
128148 आत्मज्ञानात्परं नास्ति गुरोरपि च तद्विदः ॥ १०५ ॥
128149
128150 तद्विद आत्मविद इति गुरुविशेषणम् । तदात्मतत्त्वं गुरूपदेशाद्वेत्तीति तद्विदः
128151 शिष्यस्य गुरोः परं नास्तीति वा ॥ १०५ ॥
128152
128153 सिद्धादय ऊचुः ।
128154
128155 रामैवमेव सर्वेषां मनसि स्थितिमागतम् ।
128156 त्वत्प्रसादाच्च सकलं संवादेन दृढीकृतम् ॥ १०६ ॥
128157
128158 स्थितिं निश्चयम् । संवादेन एतद्ग्रन्थलक्षणेन त्वदुक्तिसंवादेन च ॥ १०६ ॥
128159
128160 सुखी भव महाराज रामचन्द्र नमोऽस्तु ते ।
128161 वसिष्ठेनाप्यनुज्ञाता गच्छामोऽद्य यथागतम् ॥ १०७ ॥
128162
128163 श्रीवाल्मीकिरुवाच ।
128164
128165 एवमुक्त्वा गताः सर्वे रामसंस्तवने रताः ।
128166 रामचन्द्रस्य शिरसि पौष्पी वृष्टिः पपात ह ॥ १०८ ॥
128167
128168 एतत्ते सर्वमाख्यातं रामचन्द्रकथानकम् ।
128169 अनेन क्रमयोगेन भरद्वाज सुखी भव ॥ १०९ ॥
128170
128171 रामचन्द्रस्य जीवन्मुक्तिविश्रान्तिपर्यन्तसंवादकथालक्षणमानकं
128172 संजीवनममृतमिति यावत् ॥ १०९ ॥
128173
128174 इति रघुपतिसिद्धिः प्रोदिता या मया ते वरमुनिवचनालीरत्नमालाविचित्रा ।
128175 निखिलकविकुलानां योगिनां सेव्यरूपा परमगुरुकटाक्षान्मुक्तिमार्गं ददाति
128176 ॥ ११० ॥
128177
128178 उपसंहरति - इतीति । वरमुनेर्वसिष्ठस्य वचनपङ्क्तिलक्षणया रत्नमालया
128179 विचित्रा भूषिता इति उक्तरूपा रघुपतेर्जीवन्मुक्तिसिद्धिर्या मया तुभ्यं प्रोदिता प्रोक्ता
128180 निखिलानां कविकुलानां योगिनां च सेव्यरूपा सा परमगुरुकटाक्षाच्छ्रवणादिना

सेविता सती मुक्तिमार्गं प्रागुक्तभूमिकाक्रमं ददात्यारोपयतीत्यर्थः ॥ ११० ॥

य इमं शृणुयान्नित्यं विधिं रामवसिष्ठयोः ।
सर्वावस्थोऽपि श्रवणान्मुच्यते ब्रह्म गच्छति ॥ १११ ॥

विधिं संवादप्रकारम् ।
मोहमालिन्यरागद्वेषमहापातकोपपातकादिसर्वदोषावस्थायुक्तोऽपि पुरुषः
श्रवणादेव सर्वैर्दोषैर्मुच्यते शान्त्यादिगुणप्राप्तिक्रमेण ब्रह्म गच्छति प्राप्नोति
किं पुनरधिकारीत्यर्थः ॥ १११ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये देवदूतोक्ते द्वात्रिंशत्साहस्र्यां
संहितायां बालकाण्डे मोक्षोपायेषु निर्वाणप्रकरणे पूर्वार्धे ब्रह्मदर्शने
रामव्युत्थानं नामाष्टाविंशत्युत्तरशततमः सर्गः ॥ १२८ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे पूर्वार्धे
रामव्युत्थानं नामाष्टाविंशत्युत्तरशततमः सर्गः ॥ १२८ ॥

इति
श्रीमत्परमहंसपरिव्राजकाचार्यवर्यश्रीमत्सर्वज्ञसरस्वतीपूज्यपादशिष्यश्रीरा
मचन्द्रसरस्वतीपूज्यपादशिष्यश्रीगङ्गाधरेन्द्रसरस्वत्याख्यभिक्षोः शिष्येण
श्रीमदानन्दबोधेन्द्रसरस्वत्याख्यभिक्षुणा विरचिते
श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणस्य पूर्वार्धं
संपूर्णम् ॥

समाप्तमिदं निर्वाणप्रकरणस्य पूर्वार्धम् ॥

श्रीः ।

योगवासिष्ठः ।

श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशाख्यव्याख्यासंवलितः ।

निर्वाणप्रकरणस्य उत्तरार्धम् ६ ।

प्रथमः सर्गः १

श्रीराम उवाच ।

नैष्कर्म्यात्कल्पनात्यागात्तनुः पतति देहिनः ।
कथमेतदतो ब्रह्मन्संभवत्याशु जीवतः ॥ १ ॥

शिवमभयमनन्तसौख्यसिन्धुं हृदि निहितं हितमस्तमोहजालम् ।
जगदुदयनयक्षयप्रवीणं निरुपमबोधधनात्मदेवमीडे ॥

निर्ममा निरहंकारा निःसंकल्पविकल्पनाः ।
यथा जीवन्ति चेष्टन्ते मुक्ता युक्तिस्तथोच्यते ॥

पूर्वार्धे श्रीरामसमाधिप्रदर्शनव्याजेनोत्तमाधिकारिणः
श्रवणावृत्तिपरिपाकादेव साक्षात्कारज्ञानोदयेन परमपदे
सकृद्विश्रान्तिर्भवतीति दर्शितम् । तस्य दैवात्पुनर्व्युत्थानेऽपि यथा अविरतं तत्रैव
विश्रान्तिरनायासेन सिध्यति तथोत्तरोत्तरभूमिकारोपणायोत्तरार्धमिदमारभ्यते ।

128233 अत्रादौ रामः अहंममेति संविदन्न दुःखतो विमुच्यते। असंविदन्विमुच्यते
128234 यदीप्सितं तदाचर॥ इत्यन्ते यदुक्तं तत्र सर्वकल्पनात्यागे
128235 कल्पनाधीनदेहधारणादिव्यवहारासिद्धिं शङ्कते - नैष्कर्म्यादिति।
128236 देहप्राणादिष्वहंतादिकल्पनात्यागाद्धेतोर्नैष्कर्म्यात्सर्वक्रियोपरमाद्देह##-
128237 व्यवहारादि कथं संभवतीत्यर्थः॥ १॥
128238
128239 श्रीवसिष्ठ उवाच।
128240
128241 जीवतः कल्पनात्यागो युज्यते न त्वजीवतः।
128242 रूपमस्य यथातत्त्वं शृणु श्रवणभूषणम्॥ २॥
128243
128244 न कल्पनाधीनं जीवनं येन तत्यागात्तनुपातः स्यात् किंतु भोजकप्रारब्धाधीनम्
128245 कल्पनात्याग एव प्रत्युत जीवनाधीनजन्मेति नोपजीवनं बाधत इत्यविरुद्धं
128246 किंत्वजीवनमेव विरुध्यत इत्याशयेन भगवान्वसिष्ठः समाधत्ते - जीवत इति।
128247 अस्य कल्पनात्यागस्य स्वरूपं यथा जीवनविरुद्धं न भवति तथा मया यथातत्त्वं
128248 वर्ण्यमानं शृण्वित्यर्थः॥ २॥
128249
128250 अहंभावनमेवाहुः कल्पनं कल्पनाविदः।
128251 नभोर्थभावनं तस्य संकल्पत्याग उच्यते॥ ३॥
128252
128253 अहंभावनंन् देहादिपरिच्छेदाध्यासम्। नभः
128254 अपरिच्छिन्नब्रह्माकाशस्तद्रूपस्यार्थस्य स्वपारमार्थिकस्वभावस्य भावनं
128255 प्रतिसंधानं परिच्छेदाध्यासोच्छेदित्वात्संकल्पत्यागस्तैरुच्यते॥ ३॥
128256
128257 पदार्थरसमेवाहुः कल्पनं कल्पनाविदः।
128258 नभोर्थभावनं तस्य संकल्पत्याग उच्यते॥ ४॥
128259
128260 इदं वस्त्विति संवेगमाहुः कल्पनमुत्तमाः।
128261 नभोर्थभावनं तस्य संकल्पत्याग उच्यते॥ ५॥
128262
128263 इदं देहादि सर्वं दृश्यं वस्तु परमार्थसत्यमिति संवेगमभिमानम्। तस्य
128264 नभःकार्यभूतचतुष्टयविकारत्वात्तत्त्वतो नभोर्थ एवैकः स्फुरतीत्यर्थस्य
128265 भावनं पर्यालोचनम्। इदं द्वयमपि भ्रान्तानुभवविरुद्धत्वेऽपि न
128266 जीवनविरुद्धम्। जीवत एव भ्रान्तिनिवृत्तिदर्शनादिति भावः॥ ५॥
128267
128268 स्मरणं विद्धि संकल्पं शिवमस्मरणं विदुः।
128269 तच्च प्रागनुभूतं च नानुभूतं च भाव्यते॥ ६॥
128270
128271 एवं स्मरणात्मकाध्यासविरोधिनस्तन्निरोधस्यापि न जीवनविरोधितेत्याशयेनाह ##-
128272 परोक्षवृत्तिमात्रोपलक्षणम्॥ ६॥
128273
128274 अनुभूतां नानुभूतां स्मृतिं विस्मृत्य काष्ठवत्।
128275 सर्वमेवाशु विस्मृत्य गूढस्तिष्ठ महामते॥ ७॥
128276
128277 स्मृतिं स्मरणं सर्वमनुमित्यादिवृत्त्यन्तरं च विस्मृत्य
128278 अपरिच्छिन्नब्रह्माकारनिलीनः काष्ठवद्दृढो निश्चलश्च तिष्ठ चिरं जीव। तथा च
128279 ब्रह्मात्मभावेन चित्तवृत्तिनिरोधो योगिनामायुर्वृद्ध्या प्रत्युत जीवनहेतुरेवेति
128280 भावः॥ ७॥
128281
128282 सर्वास्मरणमात्रात्मा तिष्ठायातेषु कर्मसु।
128283 अर्धसुप्तशिशुस्पन्द इवाभ्यस्तोपपत्तिषु॥ ८॥
128284

128285 व्यवहारकाले तु स्मृतिमात्रनिरोधः कार्य इत्याह - सर्वेति ।
128286 दृढाभ्यस्तव्यवहारे न पूर्वापरस्मृतिप्रयत्नाद्यपेक्षास्तीत्याशयेनाह -
128287 अर्धेत्यादिना । अभ्यस्तोपपत्तिषु पूर्वाभ्यासमात्रेणोपपद्यमानेष्वित्यर्थः ॥ ८ ॥
128288
128289 निःसंकल्पप्रवाहेण चक्रं प्रस्पन्दते यथा ।
128290 स्पन्दस्वकर्मस्वनघप्रक्संस्कारवशात्तथा ॥ ९ ॥
128291
128292 विनाप्रयोजनोद्देशं पूर्वसंस्कारमात्रेण कृतकार्यं कुलालचक्रं यथा
128293 यावद्वेगक्षयं प्रस्पन्दते भ्रमति तथेत्यर्थः ॥ ९ ॥
128294
128295 अविद्यमानचित्तस्त्वं सत्त्वसंस्कारमागतः ।
128296 प्रवाहपतितेष्वेव स्पन्दस्व स्वेषु कर्मसु ॥ १० ॥
128297
128298 सत्त्वं निर्वासनं मनस्तदीयं संस्कारवेगमागतोऽनुगतः सन्
128299 रागादिदोषक्षयान्नोच्छृङ्खलप्रवृत्तिप्रसक्तिरित्याशयेनाह - प्रवाहेति ॥ १० ॥
128300
128301 ऊर्ध्वबाहुर्विरौम्येष न च कश्चिच्छृणोति मे ।
128302 असंकल्पः परं श्रेयः स किमन्तर्न भाव्यते ॥ ११ ॥
128303
128304 एवं प्रश्नं समाधाय बहुकृत्वोऽपि पथ्यं न् वदितव्यमिति न्यायेन प्रागुक्तमेव
128305 संकल्पत्यागादि श्रेयःसाधनमित्युद्घोषयन्पुनःपुनराह -
128306 ऊर्ध्वबाहुरित्यादिना ॥ ११ ॥
128307
128308 अहो मोहस्य माहात्म्यं यदयं सर्वदुःखहा ।
128309 चिन्तामणिर्विचाराख्यो हृत्स्थोऽपि त्यज्यते जनैः ॥ १२ ॥
128310
128311 अवेदनमसंकल्पस्तन्मयेनैव भूयताम् ।
128312 एतावत्परमं श्रेयः स्वयमेवानुभूयताम् ॥ १३ ॥
128313
128314 अवेदनं दृश्यदर्शननिर्मुक्तमात्मतत्त्वं तदेव मुख्योऽसंकल्पः ॥ १३ ॥
128315
128316 किल तूष्णीं स्थितेनैव तत्पदं प्राप्यते परम् ।
128317 परमं यत्र साम्राज्यमपि राम तृणायते ॥ १४ ॥
128318
128319 तूष्णीं संकल्पचेष्टां विना ॥ १४ ॥
128320
128321 गम्यदेशैकनिष्ठस्य यथा पान्थस्य पादयोः ।
128322 स्पन्दो विगतसंकल्पस्तथा स्पन्दस्व कर्मसु ॥ १५ ॥
128323
128324 प्राक्तनसंकल्पप्रयुक्तक्रियावेगवशादेव यावत्तत्क्षयं व्यवहारसिद्धौ
128325 प्रागुक्तं दृष्टान्तान्तरं पुनराह - गम्येति ॥ १५ ॥
128326
128327 सर्वकर्मफलाभोगमलं विस्मृत्य सुप्तवत् ।
128328 प्रवाहपतिते कार्ये स्पन्दस्व गतवेदनम् ॥ १६ ॥
128329
128330 अवेदनमसंकल्पः इति यदुक्तं तद्व्यवहारकालेऽप्युपपादयति - सर्वेति ॥ १६ ॥
128331
128332 स्पन्दस्वाकृतसंकल्पं सुखदुःखान्यभावयन् ।
128333 प्रवाहपतिते कार्ये चेष्टितोन्मुक्तशष्पवत् ॥ १७ ॥
128334
128335 यथा स्वतश्चेष्टितोन्मुक्तं शष्पं बालतृणं वाय्वादिप्रवाहपतिते
128336 तृणान्तरसंयोगवियोगादिकार्ये स्पन्दते तद्वत् ॥ १७ ॥

128337
128338 रसभावनमन्तस्ते मालं भवतु कर्मसु ।
128339 दारुयन्त्रमयस्येव परार्थमिव कुर्वतः ॥ १८ ॥
128340
128341 यथा परेषां कौतुकार्थं नृत्यादि कुर्वत इव स्थितस्य दारुपुत्रिकायन्त्रस्य
128342 नटवच्छृङ्गारादिरसभावनं नास्ति तद्वत्तवापि कुर्वतो विषयसुखे मूर्खस्येव
128343 रसभावनं कौतुकबुद्धिर्मा भूदित्यर्थः ॥ १८ ॥
128344
128345 नीरसा एव ते सन्तु समस्तेन्द्रियसंविदः ।
128346 आकारमात्रसंलक्ष्या हेमन्ततौं लता इव ॥ १९ ॥
128347
128348 बोधार्कपीतरसया स्पन्दन् षड्वर्गसत्तया ।
128349 यन्त्रस्पन्दोपमस्तिष्ठ वल्ल्येव शिशिरे द्रुमः ॥ २० ॥
128350
128351 षड्वर्गः पञ्चकोशसंवलितचिदाभासः । समनस्कः प्राणवर्गो
128352 ज्ञानेन्द्रियवर्गः कर्मेन्द्रियवर्गो ज्ञानकर्मेन्द्रियसहितान्तःकरणचतुष्टयम् ।
128353 षाट्कौशिकं शरीरं चेति षट्षड्वर्गास्तेषां सत्तया । वल्ल्या वेष्टितः शिशिरे द्रुम
128354 इव नीरसः ॥ २० ॥
128355
128356 चिदान्तररसान्येव प्रवृत्तान्यपि धारय ।
128357 स्वयत्नेनेन्द्रियाण्याशु हेमन्तर्तुस्तरूनिव ॥ २१ ॥
128358
128359 ननु नीरसस्य षड्वर्गस्य कथं जीवनं तत्राह - चिदिति ।
128360 अनावरणभूमानन्दरूपा चिदेवान्तरो जीवनपुष्ट्यादिहेतुरसो येषां तानि प्रवृत्तानि
128361 स्वभावाद्बाह्यरसास्वादे प्रवृत्तान्यपि खयत्नेन निवार्य चिदान्तररसान्येव
128362 कृत्वा धारयेत्यर्थः । इन्द्रियग्रहणं षड्वर्गोपलक्षणम् । यथा हेमन्तर्तुस्तरून्
128363 बाह्यजलाभावेऽप्यान्तरेणैव रसेन जीवयति तद्वदित्यर्थः ॥ २१ ॥
128364
128365 सरसेन्द्रियवृत्तेस्ते कुर्वतोऽकुर्वतस्तथा ।
128366 संसारानर्थसार्थोऽयं न कदाचन शाम्यति ॥ २२ ॥
128367
128368 इन्द्रियवृत्तीनामनिवारणे सरसत्वे च किं स्यात्तत्राह - सरसेति ॥ २२ ॥
128369
128370 निःसंकल्पमरुज्ज्वालायन्त्राम्बुस्पन्दवद्यदि ।
128371 स्पन्दसे तदनन्ताय श्रेयसे परिकल्पसे ॥ २३ ॥
128372
128373 निःसंकल्पमेव मरुतो ज्वालाया यन्त्रस्याम्बुनश्च यथा स्पन्दस्तथा यदि स्पन्दसे ।
128374 परिकल्पसे समर्थः स्याः ॥ २३ ॥
128375
128376 एतदेव परं धैर्यं जन्मज्वरनिवारणम् ।
128377 यदवासनमभ्यस्ता निजकर्मसु कर्तृता ॥ २४ ॥
128378
128379 अवासनमसंकल्पं यथाप्राप्तानुवृत्तिमान् ।
128380 शनैश्चक्रभ्रमाभोग इव स्पन्दस्व कर्मसु ॥ २५ ॥
128381
128382 चक्रे भ्रमतीति भ्रम आभोगः संनिवेश इव शनैरुत्तरोत्तरमुपशमशीलः
128383 स्पन्दस्व ॥ २५ ॥
128384
128385 मा कर्मफलबुद्धिर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ।
128386 उभयं वा त्यजैतत्त्वमुभयं वा समाश्रय ॥ २६ ॥
128387
128388 कर्मफले आसक्तिबुद्धिर्यस्य तथाविधो मा भूः । अकर्मणि कर्मत्यागेऽपि

128389 तत्फलासक्तिलक्षणः सङ्गोमास्तु। फलासङ्गाभावे कर्मकरणे तत्त्यागे च न
128390 विशेष इत्याशयेनाह - उभयमिति ॥ २६ ॥
128391
128392 बहुनात्र किमुक्तेन संक्षेपादिदमुच्यते।
128393 संकल्पनं मनोबन्धस्तदभावो विमुक्तता ॥ २७ ॥
128394
128395 नेह कार्यं न वाऽकार्यमस्ति किंचिन्न कुत्रचित्।
128396 सर्वं शिवमजं शान्तमनन्तं प्राग्वदास्यताम् ॥ २८ ॥
128397
128398 अकार्यं त्याज्यम्। प्राग्वद्यथास्थितमेव आस्यतां स्थियताम् ॥ २८ ॥
128399
128400 पश्यन्कर्मण्यकर्मत्वमकर्मणि च कर्मताम्।
128401 यथाभूतार्थचिद्रूपः शान्तमास्व यथासुखम् ॥ २९ ॥
128402
128403 अकर्मत्वं निष्क्रियब्रह्मात्मताम्। अकर्मणि तादृशब्रह्मभावस्थितौ
128404 कर्मतामवश्यकर्तव्यताम् ॥ २९ ॥
128405
128406 अवेदनं विदुर्योगं चित्तक्षयमकृत्रिमम्।
128407 अत्यन्तं तन्मयो भूत्वा तथा तिष्ठ यथासि भोः ॥ ३० ॥
128408
128409 अवेदनं प्राग्व्याख्यातम् ॥ ३० ॥
128410
128411 समे शान्ते शिवे सूक्ष्मे द्वैतैक्यपरिवर्जिते।
128412 ततेऽनन्ते परे शुद्धे किं केन किल खिद्यते ॥ ३१ ॥
128413
128414 निस्पन्दं तूष्णीमवस्थानमामवातजडीकृतसर्वाङ्गस्येव खेदायैवेति शङ्कां
128415 वारयति - समे इति ॥ ३१ ॥
128416
128417 नोदेतु त्वयि संकल्पो मरुभूमाविवाङ्कुरः।
128418 इच्छा नोदेतु भवति लतिकेवोपलोदरे ॥ ३२ ॥
128419
128420 अवेदनस्य शान्तस्य जीवतो वाप्यजीवतः।
128421 नेह किंचित्कृतेनार्थो नाकृतेनापि कश्चन ॥ ३३ ॥
128422
128423 कृतेन अकृतेन वा लौकिकवैदिककर्मणा जीवत ऐहिकोऽजीवत आमुष्मिकोऽप्यर्थः
128424 पुरुषार्थो नास्ति ॥ ३३ ॥
128425
128426 यत्कर्माकर्म शान्तेऽन्तः शाश्वताभेदरूपिणि।
128427 न कर्मणि च कर्माणि न कर्तर्यपि कर्तृता ॥ ३४ ॥
128428
128429 कुतो नास्ति तत्राह - यदिति। यद्यस्मात्कारणात्कर्माकर्मोभयबाधावधौ
128430 तदुभयात्मभूते च शाश्वताभेदरूपिणि त्वयि प्रातिभासिककर्मात्मना
128431 [अयमर्थो मूलस्थकर्मणीत्यस्य।] विवर्तमानेऽपि वस्तुतः कर्मता
128432 [अयमर्थो मूलस्थकर्मणीत्यस्य भावप्रधाननिर्देशात्।] नास्ति
128433 तादृशकर्त्रात्मना विवर्तमानेऽपि कर्तृता नास्ति। यस्य कर्मकर्तृतादौ
128434 सत्यताबुद्धिस्तस्यैव कर्मफलमिति श्रद्धादिवदधिकारिविशेषणविधायकशास्त्रेण
128435 बोधनादिति भावः ॥ ३४ ॥
128436
128437 अहंममेति संविदन्न दुःखतो विमुच्यसे।
128438 असंविदन्विमुच्यसे यदीप्सितं तदाचर ॥ ३५ ॥
128439
128440 अत एव देहादावहंममेति संवेदनवत एव विधिनिषेधशास्त्राधिकारात्कर्मकृतो

बन्धो नेतरस्येति प्रागुक्तमित्याह - अहंममेति ॥ ३५ ॥

अहं ममेति नास्त्यलं यदस्ति तच्छिवं परम् ।
परात्परं त्विदं शिवादशब्दमर्थरूपकम् ॥ ३६ ॥

पाद्भूमानन्दाख्याच्छिवात्परमन्यदिदं दृश्यमर्थरूपमिवार्थरूपकं
प्रातिभासिकं जगदशब्दमनिर्वचनीयमवस्त्वेवेत्यर्थः ॥ ३६ ॥

यद्दृश्यते जगदिदं खलु किंचिदेतद्धेम्नोऽङ्गदत्वमिव भाति न
विद्यमानम् ।
अस्य क्षयं विदुरवेदनमेव पश्चात्सत्यं तदेव परमार्थमथावशिष्टम् ॥
३७ ॥

एतदेव स्पष्टमाह - यदिति । किंचित् इत्थमीदृशं चेति निर्वचनशब्दशून्यम् ।
एतद्बाधाधिष्ठानं तु अथ तदबोधबाधानन्तरं पश्चादवशिष्टमवेदनं
वेदनाविषयमेवानुभवनिष्ठाः सत्यैकरूपं परमपुरुषार्थरूपं विदुरित्यर्थः
॥ ३७ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वाणप्रकरणे उत्तरार्धे
इच्छादिचिकित्सायोगोपदेशो नाम प्रथमः सर्गः ॥ १ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
इच्छदिचिकित्सायोगोपदेशो नाम प्रथमः सर्गः ॥ १ ॥

प्द्फ़ १५७, प्।१०७१

द्वितीयः सर्गः २

श्रीवसिष्ठ उवाच ।

अद्वैतैक्यं विमननं शान्तमात्मन्यवस्थितम् ।
यथा पङ्कमयं सैन्यं तथा शिवमयं जगत् ॥ १ ॥

निरूप्यतेऽत्र प्रथमं सर्वं शिवमयं जगत् ।
कर्मबीजं तथान्विष्य समूलं विनिवार्यते ॥

सर्वं शिवमयं शान्तमनन्तं प्राग्वदास्यताम् इति यदुक्तं तदत्र
प्रथममुपपादयितुं प्रतिजानीते - अद्वैतैक्यमिति । आत्मनि पारमार्थिकस्वभावे
तत्त्वदृष्ट्या अवस्थितम् ॥ १ ॥

मनोहंकारबुद्ध्यादिचित्तमेव च तन्मयम् ।
कालाकारक्रियाशब्दशक्तिसंदर्भसंयुतम् ॥ २ ॥

यद्यद्धि चिद्भास्यं तत्तच्चिद्विवर्तत्वाच्चिन्मयमित्यन्तःकरणचतुष्टये क्रमेण
दर्शयति - मन इति । प्रथमं हि चितश्चेत्योन्मुखत्वलक्षणं मननं
चिद्व्याप्तमेव ततस्तदभिमानाध्यवसायस्मरणकामसंकल्पादिवृत्तयस्तथैव
चिद्व्याप्ताः सर्वानुभवसिद्धाः । तथा चिच्चेत्यसंबन्धलक्षणः
कालश्चेत्याकारस्तत्क्रियाणामसंस्थानसहितं सर्वमन्तःकरणसंसरणं
साक्षात्साक्षिवेद्यत्वाच्छिवमयमिति बोद्धुं शक्यमित्यर्थः ॥ २ ॥

शिवपङ्कमया एव रूपालोकमनःक्रमाः ।
तन्मयत्वादनन्तत्वादतः किं केन चेत्यते ॥ ३ ॥

128493
128494 एवं बहिरिन्द्रियतद्द्वारकबाह्यदर्शनतद्विषयेष्वपि
128495 चिद्याप्तिप्रयुक्तैवापरोक्षप्रथेति तत्रापि शिवमयत्वमेव विवेकिभिर्द्रष्टुं
128496 शक्यमित्याशयेनाह - शिवेति | रूपालोकग्रहणं
128497 शब्दाद्यालोचनानामप्युपलक्षणम् | मनःक्रमा
128498 बाह्यसविकल्पकहानोपादानादिबुद्धयस्तद्विषयाश्च | एवं शिवमयत्वदर्शने शिव
128499 एव सर्वत्रिपुटीरूपेण प्रथते न ततो वस्त्वन्तरमस्तीत्याह - तन्मयत्वादिति || ३ ||
128500
128501 मातृमेयप्रमाणादिदेशकालौ दिगादि च |
128502 भावाभावविवर्तादिशिवपङ्क्मयात्मकम् || ४ ||
128503
128504 तदेव विशदयति - मात्रिति || ४ ||
128505
128506 अहंममेत्यतः सारान्नेतरत्परमेश्वरात् |
128507 असंसक्तमतिस्तिष्ठ हा शिलोदरमौनवत् || ५ ||
128508
128509 सर्वविवर्तानहंममेति द्वैरूप्येणैव संगृह्य तत्र चिद्याप्तत्वपर्यालोचने
128510 तत्सारतन्मात्रत्वपरिशेषात्तत्र स्थितिः सुलभेत्याशयेनाह - अहमिति | शिलोदरे
128511 यत्प्रसिद्धं वागादिचेष्टाशून्यत्वलक्षणं मौनं तद्वत् | नामरूपकर्मात्मके
128512 प्रपञ्चे नामरूपयोरपरोक्षचिद्याप्त्यैव स्फुरणाच्छिवमयत्वं निर्णीय तत्र
128513 बाधेन तत्स्वरूपेऽवस्थानं सुकरम् || ५ ||
128514
128515 श्रीराम उवाच |
128516
128517 अहंममेत्यसद्रूपं ज्ञस्याभावयतः प्रभो |
128518 अशुभं कर्मणां त्यागादनुष्ठानाच्च किं शुभम् || ६ ||
128519
128520 कर्मणां तु पुण्यपापलक्षणानामनन्तकोटिजन्मसंचितानामपरोक्षतया
128521 भानादर्शनान्न शिवमयत्वदर्शनेन बाधसिद्धिरिति तन्निवारणे
128522 परिशेषादामरणं निश्चेष्टावस्थानलक्षणस्तत्त्याग एवोपायः | न हि ज्ञानिनः
128523 कर्मकरणेन किंचित् फलमपेक्षितं न वा नित्यनैमित्तिकत्यागे प्रत्यवायप्रसक्तिरस्ति
128524 येन तूष्णीमव-
128525
128526 प्।१०७२ अन्द् १०७३ नोत् च्लेअर्
128527
128528 प्द्फ़् १५९, प्। १०७४
128529
128530 सूक्ष्मसंविदसंवित्त्या स्वयत्नेन निकृन्त्यते |
128531 येन संविदसंवित्त्या स्वयत्नेन विचार्यते || ४५ ||
128532
128533 तस्मान्मदुक्त एव कर्मत्यागोपाय इत्याशयेनोपसंहरति - सूक्ष्मेति | येन
128534 चिदाभासरूपा संवित् असंवित्त्या मूलाज्ञानेन सह स्वयत्नेन तत्त्वं बुद्ध्वा
128535 विचार्यते रलयोरभेदाद्विचाल्यते स्वरूपात्प्रच्याव्यते | तेन तन्मूला
128536 तत्तद्दृश्यदर्शनरूपा वृत्त्यवच्छिन्नचिदाभासात्मिकापि
128537 मूलबाधकस्वयत्नेनैव असंवित्त्या अप्रतिसंधानेन निकृन्त्यते | न तन्निकृन्तने
128538 पृथक्प्रयत्नापेक्षास्तीति भावः | क्वचित्पुस्तके येनेत्याद्युत्तरार्धं न पठ्यत एव
128539 तदा तेन संसृतिवृक्षस्य तत्त्वज्ञानेन सर्वबाधलक्षणो मूलकाषो वितन्यते येन
128540 निकृन्त्यत इति परेण [परेण इत्यत्र पूर्वेण इत्यपेक्षितम् |] योज्यम् || ४५ ||
128541
128542 तेन संसृतिवृक्षस्य मूलकाषो वितन्यते || ४६ ||
128543
128544 अचेतनाकाशमनन्यदेकं तदेवमस्ति त्विदमर्थहीनम् |

तद्व्योमरूपं यत एतदेवं निरामयं चेतनसारमाहुः ॥ ४७ ॥

न विद्यते चेतनं चिदाभासो यत्र
तथाविधमाकाशमेकमनन्यत्सजातीयभेदैरिदमर्थैर्दृश्यैर्हीनं
तद्ब्रह्मैवैवमुक्तदृशा अस्ति तदेव सर्वेषामस्मदादिचेतनानां सारं
पारमार्थिकं रूपमाहुर्ब्रह्मविद इत्यर्थः ॥ ४७ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षो० निर्वाणप्रकरणे उत्तरार्धे
कर्मबीजदाहयोगोपदेशो नाम द्वितीयः सर्गः ॥ २ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
कर्मबीजदाहयोगोपदेशो नाम द्वितीयः सर्गः ॥ २ ॥

प्द्फ़् १५९, प्। १०७४

तृतीयः सर्गः ३

श्रीराम उवाच ।

अवेदनं वेदनस्य मुनीन्द्र क्रियते कथम् ।
नासतो विद्यते भावो नाभावो विद्यते सतः ॥ १ ॥

अत्यन्तं मार्जिते वेद्ये यथातत्त्वमवेदनम् ।
निष्क्रियं चापि विदुषां तथोपाय इहोच्यते ॥

अवेदनं विदुर्मोक्षं चित्तक्षयमकृत्रिमम् इति यदुक्तं तत्र रामः शङ्कते -
अवेदनमिति । यद्यपि वेद्योन्मुखत्वं संत्यज्य रूपं यद्वेदनस्य वै । न वेदनं
तन्नो कर्म तच्छान्तं ब्रह्म कथ्यते ॥ इति प्रागुक्तत्वान्नास्याः शङ्काया उत्थानं
संभवति । तथाप्यन्ते संविदसंवित्त्या निकृन्त्यते इत्युक्त्या तन्नाश एवोक्तः स च
तच्छान्तं ब्रह्म कथ्यत इति प्रागुक्त्या सह विरुद्धः सतोऽसत्त्वायोगादिति
संभवत्येव प्रश्नः । एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य
संज्ञास्तीत्युक्ते अत्रैव माभगवानमूमुहत् न प्रेत्य संज्ञास्ति इति
मैत्रेयीप्रश्नवदिति ॥ १ ॥

श्रीवसिष्ठ उवाच ।

नासतो विद्यते भावो नाभावो विद्यते सतः ।
यदा तदैव सुकरं वेदनावेदनं स्वयम् ॥ २ ॥

अत एव न वा अरे मोहं ब्रवीम्यविनाशी वारेऽयमात्मा अनुच्छित्तिधर्मा
मात्रासंस्पर्शस्त्वस्य भवति इति याज्ञवल्क्यवद्वसिष्ठोऽपि समाधत्ते - नासत इति
॥ २ ॥

एतौ वेदनशब्दार्थौ रज्जुसर्पभ्रमोपमौ ।
असत्यावुदितौ विद्धि मृगतृष्णाम्भसा समौ ॥ ३ ॥

कथं सुकरं तदाह - एताविति । एतौ संसारदशाप्रसिद्धौ । यत्र हि द्वैतमिव
भवति तदितर इतरं पश्यति यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् यत्र
नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा इत्यादिश्रुतिषु
एतयोर्निषिद्धत्वादिति भावः ॥ ३ ॥

अबोधस्त्वनयोः श्रेयान्बोधो दुःखाय [दुःखायते तयोः इति पाठः ।]

128597 चैतयोः।
128598 तस्मात्सदेव बुद्ध्यस्व माऽसद्बुद्ध्यस्व राघव ॥ ४ ॥
128599
128600 अत एव वेदनघटितत्रिपुटीसाक्षिणस्त्रिपुटीनिवृत्तिरेव मोक्ष इत्याशयेनाह -
128601 अबोधस्त्विति। सदविनाशिकूटस्थात्मरूपमेव बुध्यस्व। असत्
128602 त्रिपुट्यन्तर्गतवृत्त्याद्युपहितचिदाभासं मा आत्मेति बुध्यस्व ॥ ४ ॥
128603
128604 जन्तोर्वेदनशब्दार्थबोधो दुःखकरः परः।
128605 निष्कृत्य ज्ञप्तिशब्दार्थबोधं तिष्ठ यथास्थितम् ॥ ५ ॥
128606
128607 परिच्छिन्ने तस्मिन्नात्मताबुद्धिरेव सर्वेषामनर्थहेतुरित्याह - जन्तोरिति।
128608 निष्कृत्य समूलं छित्त्वा ॥ ५ ॥
128609
128610 सर्वावबोधावसरे ज्ञप्तिशब्दार्थयोरिह।
128611 निर्वाणोदय इत्येव परमोमिति शाम्यताम् ॥ ६ ॥
128612
128613 व्यवहारकाले तय कथमुच्छेदः कार्यस्तत्राह - सर्वेति।
128614 सर्वत्रिपुटीबोधलक्षणव्यवहारावसरेऽपि व्यावहारिकज्ञप्तिशब्दार्थयोः परमन्यत्
128615 तत्र यथायोगं सर्वार्थपरं कूटस्थचिन्मात्रं सर्वशब्दपरेण ओमित्यनेन
128616 लक्षयित्वा स एवात्मा निर्वाणोदय इत्येव शाम्यतां निर्विक्षेपं व्यवह्रियतामित्यर्थः
128617 ॥ ६ ॥
128618
128619 शुभाशुभात्मकर्म स्वं नाशनीयं विवेकिना।
128620 तन्नास्तीत्यवबोधेन तत्त्वज्ञानेन सिध्यति ॥ ७ ॥
128621
128622 ईदृशबोधव्यवहारादेवोत्तरपूर्वयोः शुभाशुभयोरश्लेषविनाशौ सिद्ध्यत
128623 इत्याह - शुभेति ॥ ७ ॥
128624
128625 कर्ममूलनिकाषेण संसारः परिशाम्यति।
128626 सुविचारितमन्विष्टं यावत्कर्म न विद्यते ॥ ८ ॥
128627
128628 कूटस्थात्मदर्शनमेव सर्वकर्ममूलवेदनोच्छेदेन सर्वकर्मबाध इत्याह -
128629 कर्मेति। यावत्समूलं सफलं सशाखोपशाखपत्रपुष्पं च सर्वं कर्म न
128630 विद्यते ॥ ८ ॥
128631
128632 चिद्रूपो बिल्वमज्जान्तश्चित्तसंज्ञां यदात्मनि।
128633 करोति तद्यथा बिल्वान्न स्वल्पमपि भिद्यते ॥ ९ ॥
128634
128635 यथा बिल्वमज्जा स्वान्तर्यद्बीजादि करोति तद्बिल्वाद्यथा न भिद्यते तथा
128636 चिद्रूपोऽप्यात्मनि यच्चित्तसंज्ञां क्रियाकारकादित्रिपुटीं करोति तत्स्वल्पं मनागपि न
128637 भिद्यत इत्यन्वयः ॥ ९ ॥
128638
128639 न यथा संनिवेशान्तः संनिवेशस्ततः पृथक्।
128640 तथा नभोर्थादि पृथङ् न परस्मान्मनागपि ॥ १० ॥
128641
128642 भूलोकसंनिवेशान्तर्गतो जम्बूद्वीपादिसंनिवेशो यथा भुवो न पृथक्। नभो
128643 व्योम तदन्तर्गतभूतभुवनार्थादि च परस्मात्सन्मात्रान्न पृथक् ॥ १० ॥
128644
128645 यदेवाम्भस्तदेवान्तर्द्रवत्वमपृथग्यथा।
128646 चित्त्वमेव तथा चित्तं तद्रूपत्वात्तदर्थयोः ॥ ११ ॥
128647
128648 तदर्थयोश्चित्त्वचित्तशब्दार्थयोस्तदर्थत्वाच्चिन्मात्रार्थकचितिधात्वर्थत्वात् ॥ ११ ॥

128649
128650 यथा द्रवत्वं पयसि यथाऽऽलोकश्च तेजसि।
128651 तथा ब्रह्मण्यतद्भावं चित्त्वं चित्तं च विद्यते॥ १२॥
128652
128653 अतद्भावं ग्राहकत्वस्मर्तृत्वधर्मद्वयशून्यम्॥ १२॥
128654
128655 चेतनं कर्म तत्स्वान्तर्निर्मूलं भ्रमयक्षवत्।
128656 उदेत्यहेतुकं तच्चेन्नोदितं तन्न विद्यते॥ १३॥
128657
128658 कुतस्तच्छून्यं तदाह - चेतनमिति। चेतयतीति चिदिति व्युत्पत्त्या हि
128659 चेतनमर्थप्रकाशनं चितः कर्म क्रियेत्यवगम्यते। तच्च कूटस्थायाश्चितो
128660 निर्मूलं भ्रमयक्षवन्मिथ्यैव यदहेतुकं मिथ्यारूपमुदेति तन्नोदितमेव। अतो न
128661 क्रियारूपमन्यत्तत्र विद्यत इति विकल्पमात्रं तथा व्युत्पादनमित्यर्थः॥ १३॥
128662
128663 चेतनं कर्म तच्चेतद्भाति स्पन्द इवानिलः।
128664 अहेतुकं यदात्मैतद्बहिरन्तऽस्च सार्थधीः॥ १४॥
128665
128666 एवं चेतनक्रियाया अपृथक्त्वे तद्विषयाणामपि तत्सिद्धमित्याह - चेतनमिति।
128667 यदा चेतनं कर्म अहेतुकमिति अनिलतत्स्पन्दवदपृथक् तदा बहिर्जाग्रति
128668 अन्तःस्वप्नसुषुप्त्योश्च सैवार्थधीरित्यर्था अप्यात्मैव न पृथगित्यर्थः॥ १४॥
128669
128670 विस्तारः कर्मणां देहः सोऽहंतात्मा ससंसृतिः।
128671 अचेतनानहन्त्वेन शाम्यस्यस्पन्दवातवत्॥ १५॥
128672
128673 सर्वकर्मविस्तारो देह एव। अथ कर्मणामात्मेत्येतत् इति श्रुतेः। स एव मूलतः
128674 अहंतात्मा शाखातः संसृतिः अचेतनं
128675 चिदाभासात्मकक्रियाबाधस्तल्लक्षणेनानहंत्वेन मूलोच्छेदेन सशाखः स
128676 शाम्यतीत्यर्थः॥ १५॥
128677
128678 अचेतनादनन्तात्मा भूत्वा ज्ञोऽप्युपलोपमः।
128679 संसारमूलकषणं कुरु क्रोडमुखाग्रवत्॥ १६॥
128680
128681 चिदाभासोच्छेदेन जीवस्यात्मनाशो वृत्त इति न मन्तव्यं किंतु स
128682 ब्रह्मभावेनानन्तात्मा भूत्वा स्वानर्थसंसारमूलोच्छेदं परमपुरुषार्थं
128683 संपादितवानित्याह - अचेतनादिति। क्रोडो वराहस्तन्मुखाग्रं यथा
128684 मुस्तादिमूलकषणं करोति तद्वत्॥ १६॥
128685
128686 कर्मबीजकलाकोशत्याग एवं कृतो भवेत्।
128687 नान्यथा राघवान्तस्ते शान्तमस्तु सदा स्थितम्॥ १७॥
128688
128689 नान्यथा हे राघव अतः कारणात् ते अन्तः सदा स्थितं वेदनात्मकं कर्ममूलं
128690 शान्तमस्तु॥ १७॥
128691
128692 कर्मबीजकलात्यागे त्वेतस्मादितरात्मनि।
128693 अविद्यमाने जीवस्य तज्ज्ञैर्विदितवस्तुभिः॥ १८॥
128694
128695 एतस्मिन्कर्मबीजकलात्यागे कृते जीवस्य इतरात्मनि ब्रह्मात्मत्वातिरिक्ते चिदाभासात्मनि
128696 तद्दृश्यप्रपञ्चात्मनि च अविद्यमाने जाते तज्ज्ञैः शान्तैः किंचिन्न गृह्यते न
128697 त्यज्यते चेति परेणान्वयः। यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् इति श्रुतेरिति
128698 भावः॥ १८॥
128699
128700 शान्तैर्न गृह्यते किंचिन्न च संत्यज्यतेऽपि च।

128701 त्यागादानेन जानन्ति ततस्तैः शान्तमानसम् ॥ १९ ॥
128702
128703 आकाशशून्यहृदयैर्ज्ञैर्यथास्थितमास्यते ।
128704 क्रियते च यथाप्राप्तं नाप्येतैः क्रियतेपि च ॥ २० ॥
128705
128706 प्रवाहपतितं सर्वं स्पन्दते शान्तमानसम् ।
128707 तेषां कर्मेन्द्रियाण्येवमर्धसंसुप्तबालवत् ॥ २१ ॥
128708
128709 यथा नदीप्रवाहपतितं तृणकाष्ठादि सर्वं स्पन्दते एवं तेषां कर्मेन्द्रियाणि
128710 शान्तमानसं विनापि मनोविकारं स्पन्दते इति विपरिणम्यते ॥ २१ ॥
128711
128712 रसे निर्वासने लब्धे रसा अप्यतिनीरसाः ।
128713 नान्तस्तिष्ठन्ति न बहिरज्ञाननिपुणा इव ॥ २२ ॥
128714
128715 निर्वासने निर्विषये रसे न्रिरतिशयानन्दे । रसा भोगप्रवणाः करणवृत्तयो नीरसा
128716 रागशून्याः सन्तोऽज्ञाननिपुणाः स्वस्वविषयप्रकाशे असमर्था ओव भूत्वा ॥ २२ ॥
128717
128718 कर्मणो वेदनं त्यागः स च सिद्धः प्रबोधतः ।
128719 अवस्तु नेतरेणार्थः किं कृतेनाकृतेन वा ॥ २३ ॥
128720
128721 प्रागुक्तवेदनमेव कर्मणस्त्यागः । इतरेण जीवनादृष्टाक्षिप्तदेहादिस्पन्दरूपेण
128722 कर्मणा ॥ २३ ॥
128723
128724 अवेदनमसंवेद्यं यदवासनमासितम् ।
128725 शान्तं सममनुल्लेखं स कर्मत्याग उच्यते ॥ २४ ॥
128726
128727 अनुल्लेखं कृताकृतप्रतिसंधानशून्यम् ॥ २४ ॥
128728
128729 अपुनःस्मरणं सम्यक् चिरविस्मृतकर्म [कर्मवदिति पाठः ।] तत् ।
128730 स्थितं स्तम्भोदरसमं स कर्मत्याग उच्यते ॥ २५ ॥
128731
128732 अत्यागं त्यागमिति ये कुर्वते व्यर्थबोधिनः ।
128733 सा भुङ्क्ते तान्पशूनज्ञान्कर्मत्यागपिशाचिका ॥ २६ ॥
128734
128735 अत्यागंन् मूलत्यागरहितं कर्मेन्द्रियसंयममात्ररूपम् । तथा चोक्तं भगवता
128736 कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् । इन्द्रियार्थान्विमूढात्मा
128737 मिथ्याचारः स उच्यते ॥ इति ॥ २६ ॥
128738
128739 समूलकर्मसंत्यागेनैव ये शान्तिमास्थिताः ।
128740 नैव तेषां कृतेनार्थो नाकृतेनेह कश्चन ॥ २७ ॥
128741
128742 समूलमलमुद्धृत्य कर्मबीजकलामिति ।
128743 नित्यमेकसमाधानास्तज्ज्ञास्तिष्ठन्त्यतः सुखम् ॥ २८ ॥
128744
128745 इति प्रागुक्तरीत्या समूलमुत्सृज्य ॥ २८ ॥
128746
128747 प्रवाहपतिते कार्ये ईषत्स्पन्दा अतन्मयाः ।
128748 घूर्णमाना इव क्षीबा यन्त्रसंचारिता इव ॥ २९ ॥
128749
128750 अतन्मयास्तदभिमानलक्षणविकारशून्याः । क्षीबा मदिरोन्मत्ता इव । यन्त्रेण
128751 संचारिताः काष्ठादिप्रतिमा इव च ॥ २९ ॥
128752

मोक्षलक्ष्म्या विलासिन्या व्यसनोपहता इव ।
अर्धसुप्तप्रबुद्धाभाः कामप्यवनिमागताः ॥ ३० ॥

व्यसनेन आसक्त्यतिशयेन उपहताः स्वदेहाद्यप्रतिसंधानं प्राप्ता इवेत्युत्प्रेक्षा ।
कामप्यवनिं पञ्चम्यादिभूमिकाम् ॥ ३० ॥

यत्समूलं परित्यक्तं तत्त्यक्तमिति कथ्यते ।
अमूलकाषस्त्यागो यः स शाखालवनोपमः ॥ ३१ ॥

प्द्फ़् १६०, प्। १०७६

अकृष्टमूलशाखाग्रलवनः  कर्मपादपः ।
पुनः शाखासहस्रेण दुःखाय परिवर्धते ॥ ३२ ॥

न कृष्टमुन्मूलितं मूलं यत्र तथाविधं शाखाग्रलवनं यस्य ॥ ३२ ॥

अवेदनात्मना तेन कर्मत्यागोऽङ्ग सिध्यति ।
क्रमेण नेतरेणात एतदेवाहरन्भव ॥ ३३ ॥

तेन प्रागुक्तेन क्रमेणाहरन्नभ्यस्यन्भव तिष्ठ ॥ ३३ ॥

ये त्वेवं कर्मसंत्यागमकृत्वान्यत्प्रकुर्वते ।
अत्यागं त्यागरूपात्म गगनं मारयन्ति ते ॥ ३४ ॥

बोधात्मकतया कर्मत्यागः संपद्यते स्वयम् ।
दग्धबीजा निरिच्छोच्चैरक्रियैव भवेत्क्रिया ॥ ३५ ॥

निरिच्छा जीवन्मुक्तक्रिया उचैर्गहारम्भापि दग्धबीजेत्यक्रियैव । न हि महानपि
दग्धतन्तुः पटाभासः पटो भवतीति भावः ॥ ३५ ॥

बुद्धीन्द्रियेहितं कर्म सफलं रसभावनात् ।
वेष्टितव्यंन् कुदाम्नेव स्पन्दोऽन्यो निष्फलोऽङ्गजः ॥ ३६ ॥

बुद्धिसहितैरिन्द्रियैर्भोगासक्तिरसभावनादीहितं निष्पादितम् । यथा कुदाम्न
वेष्टितव्यं कूपकाष्ठं रसभावनाज्जलोद्धरणसेचनादिरूपात्सस्यसंपत्त्या
सफलं न तु वृथा चेष्टामात्रात्तद्वदन्योऽङ्गजः कायचेष्टामात्ररूपः स्पन्दो
निष्फलः ॥ ३६ ॥

कर्मत्यागे स्थिते बोधाज्जीवन्मुक्तो विवासनः ।
गृहे तिष्ठत्वरण्ये वा शाम्यत्वभ्येतु वोदयम् ॥ ३७ ॥

शाम्यतु धनादिसंपदपचयेन दरिद्रोऽस्तु । उदयं तदुपचयमभ्येतु वा । स सम
एवेति शेषः ॥ ३७ ॥

गेहमेवोपशान्तस्य विजनंन् दूरकाननम् ।
अशान्तस्याप्यरण्यानि विजना सजना पुरी ॥ ३८ ॥

परिशान्तमतेर्ज्ञस्य स्वप्नेऽप्यप्राप्तमानवा ।
निर्मला वितता हृद्या हृद्येव वनभूमिका ॥ ३९ ॥

गेहमेवेत्येतच्छ्लोकस्य पूर्वार्धं वर्णयति - परिशान्तेति द्वाभ्याम् ॥ ३९ ॥

ज्ञस्य निर्वाणदृश्यस्य निस्पन्दार्था नभोमयी।
शान्ताशेषविशेषार्था जगदेव महाटवी॥ ४०॥

निर्वाणं ज्ञानाग्निना सहोपरतं दृश्यं यस्य॥ ४०॥

अनन्तसंकल्पवतो हृदयस्थजगत्स्थितेः।
हृद्येवावर्तते भूमिरज्ञस्याखिलसागरा॥ ४१॥

तदुत्तरार्धं वर्णयति - अनन्तेति त्रिभिः॥ ४१॥

जनस्याज्ञस्य दीनस्य विविधद्वन्द्वसंकटा।
सारम्भा विविधाकारा हृद्येव ग्राममण्डली॥ ४२॥

विविधकार्यविकारदशामयी सपुरपत्तनमण्डलपर्वता।
मुकुरकोश इव प्रतिबिम्बिता हृदि भवत्यमला मलिने मही॥ ४३॥

विविधैः कार्यैरवश्यकर्तव्यैरर्जनव्ययप्रवासकलहादिभिः सदैव
लोभमोहशोकभयासक्त्यादिविकारदशामयी [भयारत्यादीति पाठः।]।
पुरं शाखानगरम्। पत्तनं महानगरम्। मण्डलान्यवान्तरदेशाः। मलिने
हृदि ईदृशी स्फुटा सर्वा मही मुकुरकोशे इव प्रतिबिम्बिता भवत्येवेत्यज्ञस्य
नारण्येऽपि विश्रान्तिसुखमित्यर्थः॥ ४३॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मी० दे० मोक्षोपायेषु निर्वाणप्रकरणे
उत्तरार्धे दृश्योपशमयोगोपदेशो नाम तृतीयः सर्गः॥ ३॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
दृश्योपशमयोगोपदेशो नाम तृतीयः सर्गः॥ ३॥

प्द्फ़् १६०, प्। १०७६

चतुर्थः सर्गः ४

श्रीवसिष्ठ उवाच।

साहंतादिजगच्छान्तौ बोधे संवित्कलात्मनि।
संशान्तदीपसंकाशस्त्यागः सिद्ध्यति नान्यथा॥ १॥

ईहाहंतैव संसारमूलमित्युपवर्ण्यते।
तत्त्यागश्चानहंभावभावनादात्मबोधतः॥

दृगात्मनः सर्वदृश्यत्यागो हि मोक्षः स च स्नेहक्षये
दीपनिर्वाणवत्तत्त्वबोधेन सर्वदृश्यमूलाज्ञानबाधे सिद्ध्यति नान्यथेत्याह ##-

न त्यागः कर्मसंत्यागो बोधस्त्याग इति स्मृतः।
अजगत्प्रतिभैकात्मा योऽनहंतादिरव्ययः॥ २॥

न विद्यते जगत्प्रतिभा यस्मिंस्तथाविध एकात्मैव परिशिष्टो मुख्यः
सर्वत्यागलक्षणो मोक्ष इत्यर्थः॥ २॥

अयं सोहमिदं तन्म इति निःस्नेहदीपवत्।
शान्ते परमनिर्वाणे प्रबोधात्मेति शिष्यते॥ ३॥

128857 स पामरप्रसिद्धोऽयं देहादिर्दृश्यरूपा एवाहं तद्देहादिसंबद्धं भोग्यं
128858 जगन्मे इति एतस्मिंस्तादात्म्यसंसर्गाध्यासलक्षणे द्विविधे बन्धे
128859 निःस्नेहदीपवत्समूलं शान्ते सति प्रकृष्टो बोधश्चैतन्यमेवात्मा इति परिशिष्यते
128860 सएव निर्वाणमोक्ष इत्यर्थः ॥ ३ ॥
128861
128862 अयं सोहमिदं तन्मे शान्तमित्येव यस्य नो ।
128863 न ज्ञानं तस्य नो शान्तिर्न त्यागो न च निर्वृतिः ॥ ४ ॥
128864
128865 उक्तमर्थं व्यतिरेकमुखेनापि द्रढयति - अयमिति ॥ ४ ॥
128866
128867 ममेदमयमेवाहमित्येतावति यः क्षयः ।
128868 बोधात्मा शिवमाशान्तं तस्मादन्यन्न विद्यते ॥ ५ ॥
128869
128870 एतावति एतावतो यः क्षयः । षष्ठ्यर्थे सप्तमी । स बोधात्मैव ।
128871 अध्यस्तबाधस्याधिष्ठानमात्रत्वादिति भावः ॥ ५ ॥
128872
128873 अहमंशे विदा क्षीणे सर्वमेव क्षयं गतम् ।
128874 न किंचिच्च क्वचित्क्षीणं निर्वाणैकघनं स्थितम् ॥ ६ ॥
128875
128876 विदा तत्त्वबोधेन । सर्वं ममतास्पन्दं जगत् । सर्वनाशे सर्वस्वनाशभीरुं
128877 समाधत्ते - न किंचिदिति । पारमार्थिकरूपेण सर्वं स्थितमेव ॥ ६ ॥
128878
128879 अहंविदनहंवित्त्वादेव शाम्यत्यविघ्नतः ।
128880 एतावन्मात्रसाध्येयंन् किमिवेयं कदर्थना ॥ ७ ॥
128881
128882 अहंबुद्धिनाशेसुलभ उपायमाह - अहंविदिति ।
128883 अनहंवित्त्वादनहंभावभावनात् । अविघ्नत इति । नेदं रजतमितिबुद्ध्या
128884 रजताध्यासबाधने विघ्नादर्शनादिति भावः । इयं मुक्तिः । इयमियती कदर्थना
128885 बहुसाधनसंपादनश्रान्तिः किमिव किमर्थमित्यर्थः ॥ ७ ॥
128886
128887 अहंनाहमिति भ्रान्तिर्न च चित्त्वादृतेऽस्ति सा ।
128888 चित्त्वं चाकाशविशदमतः क्वैषा [कैषा इत्यपि पाठः ।] भ्रमस्थितिः
128889 ॥ ८ ॥
128890
128891 नन्वनहंबुद्धिरपि द्वैतत्वादहंबुद्धिवदध्यास एव । सा केन शाम्यतीति
128892 चेत्पङ्केन सह कतकरेणुरिव अहंबुद्ध्या सह स्वत एव चिदात्मनि सा शाम्यतीति
128893 सोपपत्तिकमाह - अहमिति । चित्त्वात्परमार्थचित्स्वभावात् । ऋते विना ॥ ८ ॥
128894
128895 न भ्रमो भ्रमणं नैव न भ्रान्तिर्भ्रामकोऽस्ति वा ।
128896 अनालोकनमेवेदमालोकान्नेदमस्ति ते ॥ ९ ॥
128897
128898 भ्रमतत्साधनतत्फलतदाश्रयाणामज्ञानमात्रविलासत्वादज्ञाननिवृत्तौ न
128899 पृथगवस्थानमस्तीत्याह - नेति । अनालोकनमज्ञानम् ॥ ९ ॥
128900
128901 विद्धि चिन्मात्रमेवेदमसद्रूपोपमं ततम् ।
128902 तेनालं मौनमास्स्वैवं सर्वं निर्वाणमात्रकम् ॥ १० ॥
128903
128904 येनैवाशु निमेषेण त्वहमित्येव चेतति ।
128905 तेनैव नाहमित्येव चेतित्वाशु न शोच्यते ॥ ११ ॥
128906
128907 यदा यदा अहंभावोदयप्रसक्तिस्तदा तदा तुल्यकालमेव तद्विरुद्धा
128908 अनहंभावबुद्धिरुत्पाद्येत्याह - येनैवेति ॥ ११ ॥

128909
128910 अहंभावं नभोर्थेन निर्वाच्यारूढबाणवत् ।
128911 अजस्रमाशु वाऽक्षीणं तिष्ठावष्टब्धतत्पदः ॥ १२ ॥
128912
128913 एवमजस्रं सावधानमुपस्थापितेनानहंभावेन अहंभावमाशु नभोर्थेन
128914 खपुष्पादिना तुल्यं निर्वाच्य निर्वचनार्हतां नीत्वा रणे शरासनारूढोऽर्जुनबाण
128915 इव अपराङ्मुखः अवष्टब्धं दृढमालम्बितं तद्ब्रह्मपदं येन तथाविधः
128916 सन्नक्षीणं शाश्वतं तिष्ठ ॥ १२ ॥
128917
128918 सनभोर्थमहन्तां त्वं चेतन्नेवमनारतम् ।
128919 सर्वभावैरनारूढो भव तीर्णभवार्णवः ॥ १३ ॥
128920
128921 नभोर्थैः समानां सनभोर्थाम् । समानस्य च्छन्दस्यमूर्धप्रभृत्युदर्केषु इति
128922 सः ॥ १३ ॥
128923
128924 स्वभावमात्रविजये स्वयं यस्य न वीरता ।
128925 तस्योत्तमपदप्राप्तौ पशोर्ब्रूहि कथैव का ॥ १४ ॥
128926
128927 स्वभावः स्वाभाविकाज्ञानप्रयुक्तोऽहंभावस्तन्मात्रविजये ॥ १४ ॥
128928
128929 षड्वर्गो निर्जितः पूर्वं येनोत्तमविदा स्वतः ।
128930 भाजनं स महार्थानां नेतरो नरगर्दभः ॥ १५ ॥
128931
128932 कामाद्यरिषड्वर्गः ॥ १५ ॥
128933
128934 यस्य स्वान्तर्मनोवृत्तिर्जीयमाना जिताथवा ।
128935 विषयः स विवेकानां स पुमानिति कथ्यते ॥ १६ ॥
128936
128937 मध्यमाधिकारिणो जीयमाना । उत्तमाधिकारिणो जिता । पुमान् पुरुषार्थसाधनेन
128938 सफलीकृतपुंजन्मा ॥ १६ ॥
128939
128940 अर्थो दृषदिवाम्भोधौ यो य आपतति त्वयि ।
128941 तस्मादेव पलायस्व नाहमित्येव भावयन् ॥ १७ ॥
128942
128943 अम्भोधौ प्रक्षिप्ता दृषदिवेति नाहमित्यसङ्गात्मभावनया तदसंस्पर्श एवात्र
128944 पलायनम् ॥ १७ ॥
128945
128946 नाहमस्मीति [अस्तीति पाठः ।] बुद्ध्वापि सोपपत्तिकमप्यलम् ।
128947 जानानो ज्ञप्तिमात्रं च किमज्ञ इव मुह्यसि ॥ १८ ॥
128948
128949 सोपपत्तिकं ज्ञप्तिरूपं कं सुखं जानानः अनुभवन्नपि किं मुह्यसि । न
128950 मुह्यस्येवेत्यर्थः ॥ १८ ॥
128951
128952 न ज्ञेयमर्थतोऽस्तीह हेम्नीव कटकादिता ।
128953 भ्रान्तिमात्राद्दृते सा च शाम्यत्यस्मरणेन ते ॥ १९ ॥
128954
128955 अर्थत उपपत्तितस्ते ज्ञेयं नास्ति वाचारम्भणन्यायाद्युपपत्तीनां त्वया
128956 ज्ञातत्वादित्यर्थः ॥ १९ ॥
128957
128958 यो यो भाव उदेत्यन्तस्त्वयि स्पन्द इवानिले ।
128959 नाहमस्मीति चिद्वृत्त्या तमनाधारतां नय ॥ २० ॥
128960

128961 अथवा किमुपपत्तिसहस्रैर्नाहमिति दर्शनमेकमेवाभ्यस्तं सर्वभ्रान्तिं
128962 परिहरिष्यतीत्याह - यो य इति ॥ २० ॥
128963
128964 लोभो लज्जा मदो मोहो येनादाविति नो जिताः ।
128965 निरर्थकमनर्थेऽस्मिन्स किमर्थं प्रवर्तते ॥ २१ ॥
128966
128967 इति एवंरूपेणानहंभावेन येन न जिताः । निरर्थकं निष्फलं अनर्थे
128968 नास्तिक्ययथेष्टाचरणाद्यापादके अस्मिन्नध्यात्मशास्त्रे अनधिकारी स किमर्थं
128969 प्रवर्तते ॥ २१ ॥
128970
128971 अहन्त्वं पवने स्पन्द इव यत्त्वयि संस्थितम् ।
128972 परमात्मनि तन्नान्यदेतत्स्पन्द इवानिले ॥ २२ ॥
128973
128974 त्वयि परमात्मनि सति तदेतत् नान्यत् ॥ २२ ॥
128975
128976 असर्गसंविदा सर्गः परेऽस्तोऽतिविराजते ।
128977 संनिवेशविशेषेण दुरर्थोऽपि हि शोभते ॥ २३ ॥
128978
128979 असर्गः कूटस्थाद्वयचिन्मात्रस्वभावस्तत्संविदा परे परमात्मनि अस्तो
128980 विलीनस्तद्भावं प्राप्तः सन् विराजते । यथा स्रजि कल्पितः सर्पादिर्दुरर्थोऽपि बोधात्स्रजि
128981 विलीनः स्रक्संनिवेशविशेषेण कण्ठधृतः शोभते तद्वत् ॥ २३ ॥
128982
128983 परमात्मा तु नोदेति नास्तं याति कदाचन ।
128984 न चास्मादन्यदस्तीति को भावोऽभाव एव वा ॥ २४ ॥
128985
128986 बोधेन जगतो जीवस्य च परमात्मरूपसंनिवेशविशेषोत्पत्तिरभ्युपगता चेत्तदुत्तरे
128987 भावविकारा अपि स्युरिति तैर्जीवजगद्भावध्वंसादिभिश्च द्वैतापत्तिस्तत्राह -
128988 परमात्मा त्विति । कल्पितस्य बाधेनाधिष्ठानात्मतापत्तिर्नोत्पत्तिर्न वा ध्वंसः किंतु
128989 नित्यसिद्धतत्स्वभाव एव । क्रियैव हि विकारादिहेतुर्न ज्ञानमिति न द्वैतापत्तिरिति भावः
128990 ॥ २४ ॥
128991
128992 परं परे पूर्णं पूर्णे शान्तं शान्ते शिवं शिवे ।
128993 इत्येवमात्रं विततं नाहं न च जगन्न धीः ॥ २५ ॥
128994
128995 अहमादित्रिपुटीबाधे तत्परिच्छेदप्रयुक्तजीवभावापगमात्पूर्णं शान्तं शिवं च
128996 त्वंपदलक्ष्यं परमेव । तच्च पूर्णे शान्ते शिवे च तत्पदलक्ष्ये परे स्वभावे
128997 स्थितमित्येतावन्मात्रं यथास्थितं तत्त्वबोधेन विततं नापूर्वं
128998 किंचिदुत्पदितमित्यर्थः ॥ २५ ॥
128999
129000 अनिर्वाणे विनिर्वाणं शान्तं शान्ते शिवे शिवम् ।
129001 निर्वाणमप्यनिर्वाणं सनभोर्थं न वापि तत् ॥ २६ ॥
129002
129003 ननु प्रदीपनिर्वाणवत्साभासाविद्यानिर्वाणंन् ज्ञानफलं निष्पन्नमित्यवश्यं
129004 वाच्यम् । अन्यथा ज्ञानस्य नैष्फल्यप्रसङ्गात्तत्राह - अनिर्वाणे इति । सत्यं
129005 निर्वाणं ज्ञानफलं तथापि तदत्यन्ताप्रसिद्धमनिशे सूर्ये
129006 निशानिवृत्तिवदनिर्वाणे एव ब्रह्मणि निर्वाणं नित्यशान्ते शान्तमिति
129007 नानर्थनिवृत्तिरूपं ज्ञानफलमपूर्वम् । एवं शिवे नित्यसिद्धनिरतिशयानन्दे
129008 शिवमानन्दावाप्तिलक्षणं फलमपि नापूर्वमिति न ज्ञानफलेन द्वैतापत्तिः । यदि
129009 प्रतीचि बन्धो ब्रह्मणि वियदादिपदार्थश्च सत्यः स्यात्तदा तन्निर्वाणं
129010 प्रदीपनिर्वाणवदपूर्वं स्यात् । इदं तु रज्जुसर्पनिर्वाणवत्प्रतीचो
129011 बन्धनिर्वाणमनिर्वाणमेव । तद्ब्रह्मापि वा सनभोर्थं वियदादिसत्यार्थसहितं
129012 वस्तुतो न भवत्येवेति तन्निवृत्तिरपि न द्वैतापादिकेत्यर्थः ॥ २६ ॥

129013
129014 प्द्फ़् १६१, १०७८
129015
129016 शस्त्राघाताः प्रसह्यन्ते सह्यन्ते व्याधिवेदनाः ।
129017 नाहमित्येवमात्रस्य सहने का कदर्थना ॥ २७ ॥
129018
129019 अनहंभावनाया असह्यतं वारयति - शस्त्रेति ॥ २७ ॥
129020
129021 जगत्पदार्थसार्थानामहमित्यक्षयोऽङ्कुरः ।
129022 तस्मिन्निर्मूलतां याते जगन्निर्मूलतां गतम् ॥ २८ ॥
129023
129024 वाष्पेणेवाहमर्थेन निःसारेणापि सारवत् ।
129025 व्यामलः परमादर्शस्तच्छान्तौ संप्रसीदति ॥ २९ ॥
129026
129027 परमात्मलक्षण आदर्शोऽहमर्थेनाहंकारेण मुखबाष्पेण प्रसिद्धादर्श इव
129028 व्यामलो व्याप्तमलो मलिनो भातीत्यर्थः ॥ २९ ॥
129029
129030 अहमर्थः परे वायौ स्पन्दस्तत्प्रशमे तु तत् ।
129031 अनिर्देश्यमनाभासमनन्तमजमव्ययम् ॥ ३० ॥
129032
129033 अनन्तमद्वयमाकाशमात्रं च ॥ ३० ॥
129034
129035 अहमर्थः पुरो द्रव्यप्रतिबिम्बप्रदश्चिति ।
129036 तच्छान्तौ सा निराभासमनन्तमजमव्ययम् ॥ ३१ ॥
129037
129038 बाह्यानर्थदर्शनेऽप्यहंकार एव हेतुरित्याह - अहमर्थ इति । सा चित् ॥ ३१ ॥
129039
129040 अहमर्थाम्बुदे क्षीणे परमार्थशरन्नभः ।
129041 परयानन्तया लक्ष्म्या स्वच्छयाच्छं विराजते ॥ ३२ ॥
129042
129043 अहमर्थमलोन्मुक्तमव्यक्तं ताम्रमङ्ग चेत् ।
129044 तत्परं परमाभासं संपन्नं हेम कान्तिमत् ॥ ३३ ॥
129045
129046 हे अङ्ग अव्यक्तमनाविर्भूतस्वभावं
129047 चिरमहमर्थताम्रमलसंपर्काज्जीवताम्रतामापन्नं ब्रह्म हेम
129048 श्रवणाद्युपायनिष्टप्तमहमर्थमलोन्मुक्तं चेत्तदेव परं
129049 परमाभासमतिभास्वरमत एव कान्तिमत् ब्रह्म हेम संपन्नम् । परं
129050 ज्योतिरुपसंपद्य स्वेन रूपेणामिनिष्पद्यते इति श्रुतेरित्यर्थः ॥ ३३ ॥
129051
129052 यथा निरभिधार्थश्रीर्भजत्यव्यपदेश्यताम् ।
129053 तथानहन्ताहन्तेयं ब्रह्मत्वमधिगच्छति ॥ ३४ ॥
129054
129055 अहन्तानिवृत्तौ मम केन शब्देन व्यपदेश इति चेद्यथा समुद्रे विलीनायाः
129056 सैन्धवकरकाद्यर्थश्रियः करकाद्यभिधानिवृत्त्या अव्यपदेश्यता
129057 तद्वत्तावपीत्याह - यथेति ॥ ३४ ॥
129058
129059 अस्त्यहन्त्वे स्थितं ब्रह्म सनामेव पदार्थवत् ।
129060 शान्तवत्सदिवाभासं तद्वत्स व्यपदेशवान् ॥ ३५ ॥
129061
129062 तस्य ब्रह्मादिनाम्ना व्यपदेशोऽपि इतरपदार्थवत्
129063 अहन्त्वलक्षणाल्पत्वात्ययरूपबृहत्त्वलक्षणं प्रवृत्तिनिमित्तं परिकल्प्य
129064 प्रवृत्तो न वस्तुवृत्तेनेत्याह - अस्तीति । यथा शान्ततरङ्गादिजलं स्वभावेन

129065 स्थितं प्राक्तनसमुद्रतरङ्गादिरूपेणान्तः सदिवावभासमानं
129066 तरङ्गसमुद्रादिव्यपदेशभाक् जलस्वभावेनाव्यपदेश्यमेव तद्वदित्यर्थः ॥ ३५ ॥
129067

129068 अहमर्थो जगद्बीजं यदि दग्धमभावनात् ।
129069 तदहन्त्वं जगद्बन्ध इत्यादेः कलनैव का ॥ ३६ ॥
129070

129071 अभावनाद्भावनामूलाज्ञाननाशात् । तत् तर्हि ॥ ३६ ॥
129072

129073 सद्ब्रह्म शिवमात्मेति परे नामकलङ्किता ।
129074 उदेत्यहन्ता कुम्भत्वादिव मृद्धातुविस्मृतिः ॥ ३७ ॥
129075

129076 अहमर्थस्य जगद्बीजतामुपपादयितुं तदुद्भवप्रकारमाह - सदिति । सत्
129077 कालत्रयाबाध्यम् । ब्रह्म अपरिच्छिन्नम् । शिवं निरतिशयानन्दम् । आत्मा
129078 अपरोक्षचिदेकरसमित्येवंस्वभावे परे नमनं नामश्चतुर्णामपि स्वभावानां
129079 संकोचस्तेन कलङ्किता संजातमालिन्या अत एव मृदः
129080 कुम्भाकारपरिच्छेदान्मृत्स्वभावविस्मृतिरिव
129081 स्वभावचतुष्टयप्रतिसंधानशून्या समष्ट्यहन्ता उदेति ॥ ३७ ॥
129082

129083 अहमर्थादियं बीजात्सत्ता बिम्बलतोत्थिता ।
129084 यस्यां जगन्त्यनन्तानि फलान्यायान्ति यान्ति च ॥ ३८ ॥
129085

129086 तस्मादहमर्थाद्बीजादियं दृश्यसत्तालक्षणा बिम्बलता उत्थिता ।
129087 व्यष्टिभावेनानन्तान्यसंख्यानि ॥ ३८ ॥
129088

129089 साद्र्यब्ध्युर्वीनदी सेयं रूपालोकैषणादिका ।
129090 अहमर्थस्य मरिचबीजस्यान्तश्चमत्कृतिः ॥ ३९ ॥
129091

129092 तदेव प्रपञ्चयति - साद्रीत्यादिना । अद्रिभिरब्धिभिरुर्वीभिर्नदीभिश्च सहिता
129093 साद्र्यब्ध्युर्वीनदी । बहिरिन्द्रियैरर्थालोचनं रूपालोको
129094 मनस्तद्गोचरकामसंकल्पादिवृत्तय एषणास्तदादिका ॥ ३९ ॥
129095

129096 द्यौः क्षमा वायुराकाशं पर्वता सरितो दिशः ।
129097 इत्यामोदोऽहमर्थोग्रकुसुमस्य विकासिनः ॥ ४० ॥
129098

129099 अहमर्थः प्रविसृतः प्रकटीकुरुते जगत् ।
129100 सद्रूपालोकमननं प्रवृत्त इव वासरः ॥ ४१ ॥
129101

129102 मेरोः परभागे सद्रूप एव वासरः प्रविसृतः सन् सत एव रूपस्यालोकं मननं च
129103 यथ निमित्तभावेन करोति तद्वत् ॥ ४१ ॥
129104

129105 प्रवृत्तेन दिनेनार्थः प्रकटीक्रियते यथा ।
129106 असज्जगदहन्त्वेन क्षणान्निर्मीयते तथा ॥ ४२ ॥
129107

129108 अर्थो रूपादिः । निर्मीयत इति मिथ्यार्थस्य भावनमेव निर्माणमित्याशयः ॥ ४२ ॥
129109

129110 अहमित्यर्थदुस्तैललवो ब्रह्मणि वारिणि ।
129111 प्रसृतो यत्तदाश्वेतत्त्रिजगच्चक्रकं स्थितम् ॥ ४३ ॥
129112

129113 तैलस्य लवो बिन्दुः । चक्रकं चक्राकाराभासः ॥ ४३ ॥
129114

129115 उन्मेषमात्रेणाहन्ता जगन्त्यनुभवत्यहो ।
129116 न निमेषेण दृगिव सत्यानीत्यप्यसन्त्यलम् ॥ ४४ ॥

129117
129118 दृक् दुष्टचक्षुरिव असन्ति असत्यान्यपि जगन्ति सत्यानीत्यनुभवति। निमेषेण तिरोभावेन
129119 तु नानुभवति॥ ४४॥
129120
129121 अहमर्थे प्रविसृते संसारो ह्यनुभूयते।
129122 नान्तर्भूय परिक्षीणे लोचनस्येव तारके॥ ४५॥
129123
129124 तदेव दृढीकर्तुं पुनराह - अहमर्थे इति। सुषुप्तिमरणमूर्च्छासु तिरोभूय
129125 स्थिते मोक्षे मूलतः परिक्षीणे च सति नानुभूयते। समाधौ अन्तर्भूय साक्षात्कारेण
129126 परिक्षीणे इति वा। तारके कनीनिकायाम्॥ ४५॥
129127
129128 अहमंशे निरंशत्वं नीते शाश्वतसंविदा।
129129 शाम्यतीयमशेषेण संसारमृगतृष्णिका॥ ४६॥
129130
129131 निरंशत्वं निःशेषताम्॥ ४६॥
129132
129133 स्वसंविद्भावनामात्रसाध्येऽस्मिन्वरवस्तुनि।
129134 सिद्धमात्रात्मनि स्वैरं मा खेदं गच्छ मा भ्रमीम्॥ ४७॥
129135
129136 साधनफलयोरतिसुलभतां दर्शयति - स्वसंविदिति। स्वसंवित्
129137 स्वप्रकाशचिदात्मा तस्य भावना तदाकारवृत्तिमात्रसिद्धिस्तावन्मात्रसाध्ये न तु
129138 जडेष्विव तत्फलव्याप्तिप्रयत्नापेक्षास्तीति साधने अतिसुलभता। सिद्धमात्रात्मनीति
129139 फलेऽप्युत्पादनप्रयत्नानपेक्षत्वादतिसुलभता सूचिता। भ्रमीमहंभावादिभ्रान्तिम्
129140 । कृदिकारादक्तिनः इति ङीष्॥ ४७॥
129141
129142 स्वयत्नमात्रसंसाध्यादसहायादिसाधनात्।
129143 अनहंवेदनान्नान्यच्छ्रेयः पश्यामि तेऽनघ॥ ४८॥
129144
129145 पुरुषान्तरादिबाह्यसाधनानपेक्षत्वादप्यतिसुलभतामाह - स्वेति॥ ४८॥
129146
129147 विस्मृत्याहं त्वमास्स्व प्रविसृतविभवः पूरिताशेषविश्वो
129148 विष्वक्शैलान्तरिक्षक्षितिजलधिमरुन्मार्गरूपोऽमलात्मा।
129149 स्वस्थः शान्तो विशोकः करणमलकलावर्जितो निष्प्रपञ्चो
129150 निःसंचारश्चरात्मा सकलमसकलं चेति सिद्धान्तसारः॥ ४९॥
129151
129152 इदानीं सर्वोपदेशसिद्धान्तसारं संक्षिप्य दर्शयन्नुपसंहरति - विस्मृत्येति
129153 । हे राम त्वं प्रथमं व्यष्ट्यहंभावं विस्मृत्य विष्वक् सर्वतः प्रसिद्धः
129154 शैलान्तरिक्षक्षितिजलधयश्च मरुद्वायुश्च तन्मार्ग आकाशश्चेत्येवंरूपः
129155 पूरिताशेषविश्वः प्रविसृतविभवः सन् समष्टिभावेनास्स्व। तदनन्तरं
129156 निःसंचारः स्थावरऽस्चरात्मा चेति सकलं निष्प्रपञ्चं ब्रह्मैवेति बाधित्वा
129157 निष्प्रपञ्चः करणैर्मलैः कलाभिश्च वर्जितः सन् स्वस्थः शान्तो विशोकोऽमलात्मा
129158 आस्स्वेत्यध्यारोपापवादाभ्यां निष्प्रपञ्चात्मपरिशेष एव
129159 सर्ववेदान्तसिद्धान्तसार इत्यर्थः॥ ४९॥
129160
129161 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वाणप्रकरणे उत्तरार्धे
129162 अहंतानिरासो नाम चतुर्थः सर्गः॥ ४॥
129163
129164 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
129165 अहंतानिरासो नाम चतुर्थः सर्गः॥ ४॥
129166 पञ्चमः सर्गः ५
129167
129168 श्रीवसिष्ठ उवाच।

129169
129170 स्वभावं स्वं विजित्यादाविन्द्रियाणां सचेतसाम् ।
129171 प्रवर्तते विवेके यः सर्वं तस्याशु सिध्यति ॥ १ ॥
129172
129173 शास्त्रं जितेन्द्रियेष्वेव सफलं नेतरेष्विति ।
129174 वसिष्ठेन भुशुण्डोक्ता विद्याधरकथोच्यते ॥
129175
129176 सचेतसां समनस्कानामिन्द्रियाणां स्वं विषयानुधावनलक्षणं स्वभावमादौ
129177 विजित्य पश्चाद्यो नित्यानित्यवस्तुविवेकादिसाधने प्रवर्तते तस्यैव सर्वं
129178 शास्त्राचार्योपदेशफलं प्रसिद्ध्यति नान्यस्येत्यर्थः ॥ १ ॥
129179
129180 स्वभावमात्रं येनान्तर्न जितं दग्धबुद्धिना ।
129181 तस्योत्तमपदप्राप्तिः सिकतातैलदुर्लभा ॥ २ ॥
129182
129183 सिकतानिष्पीडनश्रम इव चिराभ्यस्तोऽपि श्रवणदिर्निष्फल इत्यर्थः ॥ २ ॥
129184
129185 शुद्धेऽल्पोऽप्युपदेशो हि निर्मले तैलबिन्दुवत् ।
129186 लगत्युत्तानचित्तेषु नादर्श इव मौक्तिकम् ॥ ३ ॥
129187
129188 निर्मले वस्त्रादौ तैलबिन्दुवल्लगति अन्तर्निविशते । उत्तानमगम्भीरं
129189 साधनचतुष्टयरिक्तं चित्तं येषां तेषु ॥ ३ ॥
129190
129191 अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
129192 मम पूर्वं भुशुण्डेन कथितं मेरुमूर्धनि ॥ ४ ॥
129193
129194 पुरा भुशुण्डः कस्मिंश्चित्पृष्ट आसीत्कथान्तरे ।
129195 मया कदाचिदेकान्ते मेरोः शिखरकोटरे ॥ ५ ॥
129196
129197 कथान्तरे अध्यात्मकथाप्रस्तावे ॥ ५ ॥
129198
129199 मुग्धबुद्धिमनात्मज्ञं कं त्वं सुचिरजीवितम् ।
129200 स्मरसीति मया पृष्टेनोक्तं तेनेदमङ्ग मे ॥ ६ ॥
129201
129202 मुग्धबुद्धिरज्ञोऽवश्यमजितेन्द्रियो वृथाश्रमश्च भविष्यतीति तादृशस्यैव
129203 प्रश्नः ॥ ६ ॥
129204
129205 भुशुण्ड उवाच ।
129206
129207 आसीद्विद्याधरः पूर्वमनात्मज्ञः सुखेदितः ।
129208 लोकालोकान्तरशृङ्गे शुष्क आर्यो विचारवान् ॥ ७ ॥
129209
129210 सुष्ठु हेदितः अजितैरिन्द्रियैः खेदं प्रापितः । अत एव शुष्को विश्रान्तिरसहीनः । तपसा
129211 नियमेन यमेन च शुष्क इति परेणान्वयो वा । आर्यः
129212 आयुर्वृद्धिहेतुसदाचारसंपन्नः ॥ ७ ॥
129213
129214 तपसा बहुरूपेण यमेन नियमेन च ।
129215 अक्षीणायुरतिष्ठत्स पुरा कल्पचतुष्टयम् ॥ ८ ॥
129216
129217 ततश्चतुर्थे कल्पान्ते विवेकस्तस्य चोदभूत् ।
129218 विदूरस्येव वैदूर्यमौचित्याज्जलदोदयात् ॥ ९ ॥
129219
129220 औचित्याच्चिराभ्यस्ततपोनियमादेर्विवेकोदयावश्यंभावात् । यथा विदूरभूविशेषस्य

129221 जलदोदयाद्वैदूर्यं रत्नमुद्भवति तद्वत् ॥ ९ ॥
129222
129223 पुनर्मृतिः पुनर्जन्म जरा मेति विभावयन् ।
129224 लज्जेऽहं तत्किमेकं स्यात्स्थिरमित्यवमृश्य सः ॥ १० ॥
129225
129226 विवेकस्वरूपमेव दर्शयति - पुनरिति । जरा मा मा भूत् इति विभावयन् लज्जे ।
129227 निर्विण्ण इति यावत् ॥ १० ॥
129228
129229 मामाजगाम संप्रष्टुमष्टादशमयीं पुरीम् ।
129230 स्वामुपोह्य विरक्तात्मा संसाररसतां गतः ॥ ११ ॥
129231
129232 पञ्च प्राणा दशेन्द्रियाणि मनोबुद्धी द्वे स्थूलदेहश्चेत्यष्टादशमयीं स्वां
129233 पुरीम् । उपोह्य चिरं वोढ्वा श्रान्तः विरक्त आत्मा मनो यस्य ॥ ११ ॥
129234
129235 स मत्समीपमागस्य कृतोदारनमस्कृतिः ।
129236 मत्पूजितोऽवसरत उवाचेदमनिन्दितम् ॥ १२ ॥
129237
129238 अवसरतः प्रश्नावसरं प्रश्नावसरं प्राप्येत्यर्थः ॥ १२ ॥
129239
129240 विद्याधर उवाच ।
129241
129242 मृदूनि परितापीनि दृषद्वृढबलानि च ।
129243 छेदे भेदे च दक्षाणि स्वशस्त्राणीन्द्रियाणि च ॥ १३ ॥
129244
129245 तत्र स्वखेदहेतूनिन्द्रियादिदोषान्विस्तरेणोत्तरत्र वर्णयिष्यन्नुपक्रमते -
129246 मृदूनीति द्वाभ्याम् । स्वस्वविषयेषु शीघ्रानुप्रवेशित्वान्मृदूनि
129247 प्रवेशोत्तरकालं परितापीनि ततश्चालयितुमशक्यत्वाद्दृषद्भ्योऽपि दृढबलानि
129248 स्वशरीरानुप्रविष्टशरादिशस्त्राणीन्द्रियाणि च तुल्यानीत्यर्थः ॥ १३ ॥
129249
129250 पर्याकुलानि मलिनानि विपत्प्रदानि दुःखोर्मिमन्ति गुणकाननपावकत्वात् ।
129251 हार्दान्धिकारगहनानि तमोमयानि जित्वेन्द्रियाणि सुखमेति च किं ममार्थैः ॥
129252 १४ ॥
129253
129254 इमानीन्द्रियाणि हार्दानि हृदि रूढान्यन्धकारगहनानि सान्धकारारण्यानि ।
129255 कामादिमर्कटैः पर्याकुलानि । प्राणमनोदेहहृदयेष्वशनायादिषडूर्मिमन्ति ।
129256 दैवात्क्वचिदङ्कुरितस्य शमदमादिगुणकाननस्य
129257 पावकत्वाद्दाहकत्वादूर्मिमत्त्वेपि न शीतलानि । ईदृशानीन्द्रियाणि
129258 चकारात्तदुपाश्रयं मनश्च जित्वा सुखमेति न भोगैः । अतो मम
129259 वैद्याधरभोगलक्षणैरर्थैः किं प्रयोजनम् । तद्विरक्तो जिज्ञासुः
129260 शरणागतोऽस्मीत्यर्थः ॥ १४ ॥
129261
129262 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वाणप्रकरणे उ०
129263 विद्याधरोपाख्याने विद्याधरपश्नो नाम पञ्चमः सर्गः ॥ ५ ॥
129264
129265 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
129266 विद्याधरप्रश्नो नाम पञ्चमः सर्गः ॥ ५ ॥
129267
129268 प्द्फ़् १६२, प्। १०८०
129269
129270 षष्ठः सर्गः ६
129271
129272 विद्याधर उवाच ।

129273
129274 यदुदारमनायासं क्षयातिशयवर्जितम् ।
129275 पदं पावनमाद्यन्तरहितं तद्वदाशु मे ॥ १ ॥
129276
129277 दिव्यभोगप्रसक्तेन चिरं स्वेन परीक्षिताः ।
129278 इह विद्याधरेणोक्ता विषयेन्द्रियदुर्नयाः ॥
129279
129280 अतः साधनचतुष्टयसंपन्नाय ब्रह्मजिज्ञासवे मह्यंन् ब्रह्मोपदिशेत्याह -
129281 यदिति । सर्वकार्पण्यनिवर्तकनिर्दुःखनिरतिशयानन्दरूपत्वादुदारम् । आशु शीघ्रं
129282 वद । प्रदीप्तशिरस इव जलराशिं विविक्षोस्त्रिविधतापसंतप्तस्य मम
129283 विलम्बसहनाशक्तेरिति भावः ॥ १ ॥
129284
129285 एतावन्तमहं कालं सुप्त आसं जडात्मकः ।
129286 इदानीं संप्रबुद्धोऽस्मि प्रसादादात्मनो मुने ॥ २ ॥
129287
129288 तर्हि प्रागेव कुतो नागमस्तत्राह - एतावन्तमिति । आत्मनो
129289 मनसस्तीव्रतरवैराग्यलक्षणात्प्रसादात् ॥ २ ॥
129290
129291 मनो महामयोत्तप्तं क्षुब्धमज्ञानवृत्तिषु ।
129292 मामुद्धर दुरन्तेहं मोहादहमिति स्थितात् ॥ ३ ॥
129293
129294 मनो महामयेन कामेनोत्तप्तम् । अज्ञानवृत्तिषु दुर्वासनासु क्षुब्धम् । दुरन्ता
129295 तुरुच्छेदा ईहाः कर्माणि यस्य तम् । तत्र कारणमाह - मोहादिति ।
129296 अहमित्यनात्मन्यात्माभिमानाकारेण
129297 स्थितान्मोहात्स्वतत्त्वापरिज्ञानान्निमित्तादित्यर्थः । मोहादुद्धरेति
129298 बुद्धिकृतापादाने वा पञ्चमी ॥ ३ ॥
129299
129300 श्रीमत्यपि एतन्त्याशु शातनाः कातरादयः ।
129301 गुणवत्युग्रपत्रेऽपि तुहिनानीव पङ्कजे ॥ ४ ॥
129302
129303 ननु विद्याधराः सर्वविद्याश्रयत्वाद्विद्याबलादेव सर्वदुःखनिराससमर्था
129304 मणिमन्त्ररसायनादिसिद्धिभिरणिमाद्यैश्वर्यैश्च युक्ताः श्रूयन्ते तत्किमेवं
129305 श्रीमति त्वयि कामादिदुःखशातनाः कातरताकार्पण्यादिदोषाश्च निपतिताः । येन
129306 देवयोनिश्रेष्ठत्वान्मान्यतमोऽपि त्वं निकृष्टकाकयोनिमपि मां शरणागतोऽसि
129307 पृच्छसि च तत्राह - श्रीमत्यपीति ।
129308 सर्वविद्यासिद्ध्यादिश्रीमत्यप्यात्मविद्याशून्ये
129309 कामक्रोधेर्ष्यासूयादिदुःखशातनाः कातर्यादिदोषाश्च पतन्त्येव । अजितेन्द्रियत्वादिति
129310 भावः । पङ्कजपक्षे श्रीमति लक्ष्म्याधारे गुणवति विसतन्तुमति
129311 स्वाश्रयसस्नेहजलविमुखत्वात्तत्कणैरलेप्यत्वाच्चोग्राणि स्नेहनिष्ठुराणि पत्राणि
129312 यस्य तादृशेऽपि ॥ ४ ॥
129313
129314 जायन्ते च म्रियन्ते च केवलं जीर्णजन्तवः ।
129315 न धर्माय न मोक्षाय मशका इव पङ्कजे ॥ ५ ॥
129316
129317 ज्ञानाभावे देवयोनीनां मशकादियोनिसाम्यमेव धर्माधिकाराभावादिति
129318 सूचयन्स्ववैराग्यहेतुं सर्वत्र दोषदर्शनं प्रपञ्चयति - जायन्ते इत्यादिना ॥ ५
129319 । ।
129320
129321 भावैस्तैरेव तैरेव तुच्छालम्भविडम्बनैः ।
129322 चिरेण परिखिन्नाः स्मो विप्रलम्भाः पुनः पुनः ॥ ६ ॥
129323
129324 भावैः शब्दादिविषयैस्तैस्तैः सहस्रशः पूर्वभुक्तैरेव तुच्छतमसुखलवार्थं

129325 य आलम्भो विषयेन्द्रियस्पर्शस्तल्लक्षणैर्विडम्बनैर्वञ्चनोपायैर्विप्रलम्भाः ।
129326 कर्मणि वञ् । विप्रलब्धा वञ्चिताः सन्तः । तुच्छान्नैः इति पाठे तुच्छानां
129327 क्षुद्रजन्तूनामप्यन्नैरुपभोग्यभूतैरित्यर्थः ॥ ६ ॥
129328
129329 नान्तोऽस्त्यस्य न च स्थैर्यावस्थाऽविश्रान्तमानसम् ।
129330 भ्रमतो भोगभङ्गेषु मरुभूमिष्विवाध्वनः ॥ ७ ॥
129331
129332 अविश्रान्तमानसं यथा स्यात्तथा भोगभङ्गेषु भङ्गुरेषु भोगेषु भ्रमतो
129333 ममास्य संसाराध्वनोऽन्तो नास्ति स्थैर्येणावस्थानं स्थैर्यावस्था च नास्ति ॥ ७ ॥
129334
129335 आपातमधुरारम्भा भङ्गुरा भवहेतवः ।
129336 अचिरेण विकारिण्यो भीषणा भोगभूमयः ॥ ८ ॥
129337
129338 मानावमानपरया दुरहंकारकान्तया ।
129339 न रमे वामया तात हतविद्याधरश्रिया ॥ ९ ॥
129340
129341 ननु बहुतरपुण्यार्जितया विद्याधरसंपदैव तव कुतो न विश्रान्तिस्तत्राह -
129342 मानेति । मानः स्वोत्कर्षापादनाभिमानः अपमानः परापकर्षापादनम् तदेव
129343 परं श्रेष्ठं यस्याम् । दुष्टः अहंकारो येषां तेषां कान्तया रम्यया । अत एव
129344 वामया विवेकिनां प्रतिकूलया स्त्रिया च । तत्पक्षेऽपि विशेषणे योज्ये ॥ ९ ॥
129345
129346 दृष्टाश्चैत्ररथोद्यानभुवः कुसुमकोमलाः ।
129347 कल्पवृक्षलतादत्तसमस्तविभवश्रियः ॥ १० ॥
129348
129349 सर्वत्र भुक्तभोगतया वैरस्यं प्रकटयति - दृष्टा इत्यादिना ॥ १० ॥
129350
129351 विहृतं मेरुकुञ्जेषु विद्याधरपुरेषु च ।
129352 विमानवरमालासु वातस्कन्धस्थलीषु च ॥ ११ ॥
129353
129354 विश्रान्तं सुरसेनासु कान्ताभुजलतासु च ।
129355 हारिहारविलासासु लोकपालपुरीषु च ॥ १२ ॥
129356
129357 हारादिभूषितानां हारा विलासा विहारचमत्कारा यासु ॥ १२ ॥
129358
129359 न किंचिदुचितं साधु सर्वमाधिविषोष्मणा ।
129360 दग्धं भस्मायते तात विज्ञातमधुना मया ॥ १३ ॥
129361
129362 आधयो मानसदुःखानि तद्विषोष्मणा दग्धम् । अधुना विवेकोदयकाले विज्ञातं न
129363 प्राक् ॥ १३ ॥
129364
129365 रूपालोकनलोलेन वनिताननगृध्नुना ।
129366 सावभासेन दोषाय दुःखं नीतोस्मि चक्षुषा ॥ १४ ॥
129367
129368 कीदृशेन विवेकेन किं किं कथं कथं ज्ञातं तत्प्रथमं चक्षुरादिषु
129369 दर्शयति - रूपेत्यादिना । गृध्नुना अभिकाङ्क्षमाणेन । गृधेः त्रसिगृधि
129370 इत्यादिना क्नुः । सावभासेन बाह्यान्तरप्रकाशसहकृतेन । दोषाय
129371 स्वविषयासङ्गेन मनोदूषणाय ॥ १४ ॥
129372
129373 इदं गुणावहं नेदमिति मुक्त्वा विकल्पनम् ।
129374 रूपमात्रानुसारित्वादवस्तुन्यपि धावति ॥ १५ ॥
129375
129376 वनितापिण्डे इदं वस्त्राभरणानुलेपनादिकमेव गुणावहं शोभाकल्पकम् इदं

129377 रक्तमांसास्थिकेशादि न इति विकल्पनं विवेचनं मुक्त्वा विना धावति चक्षुरिति शेषः
129378 ॥ १५ ॥
129379
129380 तावदायाति विरतिं न वशं यावदापदाम् ।
129381 नानाबन्धपरं चेतः परानर्थेहितोन्मुखम् ॥ १६ ॥
129382
129383 तद्विषयासङ्गदूषितं रागान्धं चेतः प्रदीपरूपरागान्धपतङ्गवत् परस्मै
129384 उत्कृष्टाय मरणाद्यनर्थाय यानि ईहितानि दुर्व्यसनानि तदुन्मुखं सत्
129385 नानाविधानां बन्धानां वधबन्धनरकाद्यापदां वशं यावदायाति
129386 तावद्विरतिमुपरमं नायातीत्यर्थः ॥ १६ ॥
129387
129388 घ्राणमेतदनर्थाय धावच्चैवाभितः स्फुटम् ।
129389 न निवारयितुं तात शक्नोमीह हयं यथा ॥ १७ ॥
129390
129391 चक्षुष्युक्तं दोषं घ्राणादिष्वपि दर्शयति - घ्राणमिति ॥ १७ ॥
129392
129393 गन्धोदकप्रणालेन मुखश्वासानुपातिना ।
129394 वैरिणेवातिदोषेण घ्राणेनास्मि नियोजितः ॥ १८ ॥
129395
129396 यथा कश्चिदतिदोषेण वैरिणा बलाद्वशीकृतो दुर्गन्धोदकवहे नगरप्रणाले सदा
129397 संचरेति नियोजितो भवति तद्वदहमपि श्लेष्मादिदुर्गन्धोदकप्रणाले नासाबिले नियोजित
129398 इत्यर्थः ॥ १८ ॥
129399
129400 चिरं रसनया चाहमनया नयहीनया ।
129401 गजगोमायुगुप्तेषु दुःखाद्रिष्वलमाहतः ॥ १९ ॥
129402
129403 नयो भक्ष्याभक्ष्यविभागपरं शास्त्रं तद्धीनया ।
129404 कृमिकीटपश्वादियोनिलक्षणेषु दुःखाद्रिषु । सुरापाः कृमयो
129405 भवन्त्यभक्ष्यभक्षिणश्च इत्यादिस्मृतेरिति भावः । यत्र बलवतां गजो
129406 बुद्धिमतां गोमायुश्च श्रेष्ठ इति तयोरेव गोप्तृताप्रसक्तिर्नान्यस्येति तथोक्तिः ॥ १९
129407 । ।
129408
129409 निरोद्धुं न च शक्नोमि स्पर्शलम्पटतां त्वचः ।
129410 ग्रीष्मकालसमिद्धस्य तापमंशुमतो यथा ॥ २० ॥
129411
129412 शुभशब्दरसार्थिन्यो मुनेः श्रवणशक्तयः ।
129413 मां योजयन्ति विषमे तृणेच्छा हरिणं यथा ॥ २१ ॥
129414
129415 शब्दरसः शब्दास्वादनम् । हरिणपक्षे विषमे तृणावृतकूपे ॥ २१ ॥
129416
129417 प्रणताः प्रियकारिण्यः प्रह्वभृत्यसमीरिताः ।
129418 वाद्यगेयरवोन्मिश्राः शुभशब्दश्रियः श्रुताः ॥ २२ ॥
129419
129420 तर्हि किं तव रूपादयः शब्दान्ता विषया दुर्लभा येन तदर्थमनर्थः प्राप्तो
129421 नेत्याह - प्रणता इत्यादिना । प्रह्वभृत्यजनेरितत्वादेव प्रणतप्रायाः ॥ २२ ॥
129422
129423 श्रियः स्त्रियो दिशश्चैव तटाश्चाम्भोधिभूभृताम् ।
129424 दृष्टा विभवहारिण्यः प्रक्वणन्मणिभूषणाः ॥ २३ ॥
129425
129426 विशेषणे श्र्यादिचतुष्टये साधारणे योज्ये ॥ २३ ॥
129427
129428 चिरमास्वादिताः स्वादु चमत्कारमनोरमाः ।

129429 प्रह्वकान्ताजनानीताः षड्रसा गुणशालिनः ॥ २४ ॥
129430
129431 षड्रससौगन्ध्यानां यथायोग्यं मेलनपाकचातुरीगुणशालिनः ॥ २४ ॥
129432
129433 कौशेयकामिनीहारकुसुमास्तरणानिलाः ।
129434 निर्विघ्नमभितः स्पृष्टा भृशमाभोगभूमिषु ॥ २५ ॥
129435
129436 कौशेयादयः षट् त्वग्विषयाः ॥ २५ ॥
129437
129438 वधूमुखौषधीपुष्पसमालम्भनभूमयः ।
129439 अनुभूता मुने गन्धा मन्दानिलसमीरिताः ॥ २६ ॥
129440
129441 वधूमुखानि ओषध्यश्चन्दनोशीरागर्वादयः पुष्पाणि समालम्भनं
129442 कर्पूरकस्तूरीपौष्कलकादीनां मेलनं तद्भूमयस्तत्प्रभवाः ॥ २६ ॥
129443
129444 श्रुतं स्पृष्टं तथा दृष्टं भुक्तं घ्रातं पुनः पुनः ।
129445 संशुष्कविरसं भूयः किं भजामि वदाशु मे ॥ २७ ॥
129446
129447 भूयोभूयः सेव्यमानं संशुष्कं काष्ठमिव विरसं संपन्नं तत्र
129448 वान्ताशनप्राये जाते किं भजामि ॥ २७ ॥
129449
129450 भुक्त्वा वर्षसहस्राणि दुर्भोगपटलीमिमाम् ।
129451 आब्रह्मस्तम्बपर्यन्तं न तृप्तिरुपजायते ॥ २८ ॥
129452
129453 वैरस्येनैव तज्जिहासा न तु तृप्त्येत्याह - भुक्त्वेति ॥ २८ ॥
129454
129455 साम्राज्यं सुचिरं कृत्वा तथा भुक्त्वा वधूगणम् ।
129456 भंक्त्वा परबलान्युच्चैः किमपूर्वमवाप्यते ॥ २९ ॥
129457
129458 किमवाप्यते । न किंचिदित्यर्थः ॥ २९ ॥
129459
129460 येषां विनाशनं नासीद्यैर्भुक्तं भुवनत्रयम् ।
129461 तेऽपि तेऽप्यचिरेणैव समं भस्मपदं गताः ॥ ३० ॥
129462
129463 येषां हिरण्यकशिपुप्रभृतीनां विनाशनं विनाशसाधनं नासीत्
129464 प्राग्जगत्प्रसिद्धम् । न शुष्केण न चार्द्रेण इत्यादिवरप्रार्थने
129465 सर्वप्रसिद्धवधसाधनप्रतिषेधादिति भावः ॥ ३० ॥
129466
129467 प्राप्तेन येन नो भूयः प्राप्तव्यमवशिष्यते ।
129468 तत्प्राप्तौ यत्नमातिष्ठेत्कष्टयापि हि चेष्टया ॥ ३१ ॥
129469
129470 इत्थं सति किं कार्यं तदाह - प्राप्तेनेति । कष्टया
129471 इन्द्रियप्राणमनःसंयमादिश्रमसाध्ययापि चेष्टया ॥ ३१ ॥
129472
129473 येन कान्ताश्चिरं भुक्ता भोगास्तस्येह जन्तुभिः ।
129474 दृष्टो न कस्यचिन्मूर्ध्नि तरुर्व्योमप्लवश्च वा ॥ ३२ ॥
129475
129476 चिरभुक्तमहाभोगानामपि पुंसां भोगकाले अपगते अभुक्तभोगेभ्यः
129477 पुरुषान्तरेभ्यो न कश्चिद्विशेषो दृश्यत इत्याह - येनेति । येन येन चिरं कान्ता
129478 रम्यतरा भोगाश्चिरं भुक्तास्तादृशस्य पुंसो मध्ये कस्यचिदपि मूर्ध्नि
129479 संजातः कल्पतरुः कैश्चिदपि जन्तुभिर्न दृष्टो येन स तच्छायायां सदैव
129480 पूर्णकामो विश्राम्येत् । नापि तस्य गुदे व्योमप्लवो विमानादिः संजातो दृष्टो येन स

129481 सदैव सर्वत्र विहरेदित्यर्थः ॥ ३२ ॥
129482
129483 चिरमासु दुरन्तासु विषयारण्यराजिषु ।
129484 इन्द्रियैर्विप्रलब्धोऽस्मि धूर्तबालैरिवार्भकः ॥ ३३ ॥
129485
129486 अर्भकः । साधुरिति शेषः ॥ ३३ ॥
129487
129488 अद्य त्वेते परिज्ञाता मया स्वविषयारयः ।
129489 कष्टा इन्द्रियनामानो वञ्चयित्वा तु मां पुनः ॥ ३४ ॥
129490
129491 शब्दादिविषयात्मकानां भूतानामेव मनसो बहिराकर्षणेन स्वस्वभोगाय
129492 श्रोत्रादीन्द्रियभावेनावस्थानादिन्द्रियनामानः स्वविषयारयो मया अद्य परिज्ञाता
129493 इत्यन्वयः ॥ ३४ ॥
129494
129495 संसारजङ्गले शून्ये दग्धं नरमृगं शठाः ।
129496 आश्वास्याश्वास्य निघ्नन्ति विषयेन्द्रियलुब्धकाः ॥ ३५ ॥
129497
129498 विषमाशीविषैरेभिर्विषयेन्द्रियपन्नगैः ।
129499 येन दग्धा न दृष्टास्ते द्वित्रा एव जगत्यपि ॥ ३६ ॥
129500
129501 आशीविषैर्दृष्टिविषैः । येन दृष्टा न दग्धाश्च ते तथाविधाः पुरुषाः
129502 सर्वजगत्यपि द्वित्रा एव संभाव्यन्त इति शेषः ॥ ३६ ॥
129503
129504 भोगभीमेभवलितां तृष्णातरलवागुराम् ।
129505 लोभोग्रकरवालाढ्यां कोपकुन्तकुलाङ्किताम् ॥ ३७ ॥
129506
129507 अवश्यजेतव्यताप्रदर्शनायेन्द्रियाण्येव शत्रुसेनात्वेन रूपयति - भोगेत्यादि
129508 त्रिभिः । भोगा एव भिमा इभा गजास्तैर्वलिताम् ॥ ३७ ॥
129509
129510 द्वन्द्वजालरथव्याप्तामहंकारानुपालिताम् ।
129511 चेष्टातुरंगमाकीर्णां कामकोलाहलाकुलाम् ॥ ३८ ॥
129512
129513 द्वन्द्वानि शीतोष्णादीनि । अहंकारेण सेनापतिना अनुपालिताम् ॥ ३८ ॥
129514
129515 शरीरसीमान्तगतां दुरिन्द्रियपताकिनीम् ।
129516 ये जेतुमुत्थितास्तात त एवेह हि सद्भटाः ॥ ३९ ॥
129517
129518 शरीरलक्षणस्य नगरस्य सीमान्तेषु गतामाक्रम्य स्थिताम् ॥ ३९ ॥
129519
129520 सुसाध्यः करटोद्भेदो मत्तैरावणदन्तिनः ।
129521 नोत्पथप्रतिपन्नानां स्वेन्द्रियाणां विनिग्रहः ॥ ४० ॥
129522
129523 मत्तस्यैरावणदन्तिन ऐरावतस्य । करटस्य कुम्भस्योद्भेदो विदारणम् ॥ ४० ॥
129524
129525 पौरुषस्य महत्त्वस्य सत्त्वस्य महतः श्रियः ।
129526 इन्द्रियाक्रमणं साधो सीमान्तो महतामपि ॥ ४१ ॥
129527
129528 सत्त्वस्य धैर्यस्य । श्रियो विश्रान्तिसंपदः । इन्द्रियाणामाक्रमणं जयः ।
129529 सीमान्तोऽवधिः । पराकाष्ठेति यावत् । महतां तत्त्वविदामपि ॥ ४१ ॥
129530
129531 तावदुत्तमतामेति पुमानपि दिवौकसाम् ।
129532 कृपणैरिन्द्रियैर्यावत्तृणवन्नापकृष्यते ॥ ४२ ॥

129533
129534 उत्तमतां मान्यताम् ॥ ४२ ॥
129535
129536 जितेन्द्रिया महासत्त्वा ये त एव नरा भुवि ।
129537 शेषानहमिमान्मन्ये मांसयन्त्रगणांश्चलान् ॥ ४३ ॥
129538
129539 मनःसेनापतेः सेनामिमामिन्द्रियपञ्चकम् ।
129540 जेतुं चेदस्ति मे यत्नो जयामि तदलं मुने ॥ ४४ ॥
129541
129542 यत्न उपायश्चेदस्ति तत् तर्हि जयामि ॥ ४४ ॥
129543
129544 इन्द्रियोत्तमरोगाणां भोगाशावर्जनादृते ।
129545 नौषधानि न तीर्थानि न च मन्त्राश्च शान्तये ॥ ४५ ॥
129546
129547 एक एवोपायो मया ज्ञातोऽस्तीत्याह - इन्द्रियेति ॥ ४५ ॥
129548
129549 नीतोऽस्मि परमं खेदमभिधावद्भिरिन्द्रियैः ।
129550 एक एव महारण्ये तस्करैः पथिको यथा ॥ ४६ ॥
129551
129552 पङ्कवन्त्यप्रसन्नानि महादौर्भाग्यवन्ति च ।
129553 गन्धिशैवलतुच्छानि पल्वलानीन्द्रियाणि च ॥ ४७ ॥
129554
129555
129556 इतः प्रभृति तुल्यैर्विशेषणैः पल्वलादिसाम्येनेन्द्रियाणि वर्णयति -
129557 पङ्कवन्तीत्यादिना । गन्धिभिः शैवलतुल्यैर्मालिन्यैः तुच्छानि कुत्सितानि ॥ ४७ ॥
129558
129559 दुरतिक्रमणीयानि नीहारगहनानि च ।
129560 जनितातङ्कजालानि जङ्गलानीन्द्रियाणि च ॥ ४८ ॥
129561
129562 नीहारैर्जाड्यैर्हिमैश्च गहनानि । आतङ्को भयम् ॥ ४८ ॥
129563
129564 पङ्कजानि सरन्ध्राणि सुदुर्लक्ष्यगुणानि च ।
129565 ग्रन्थिमन्ति जडाङ्गानि मृणालानीन्द्रियाणि च ॥ ४९ ॥
129566
129567 पङ्कान्मलाज्जातानि गुणा वासनास्तन्तवश्च सूक्ष्मतमत्वात्सुदुर्लक्ष्याः ।
129568 जडाङ्गानि जडदेहावयवप्रायाणि । लडयोरभेदाज्जलाङ्गानि च ॥ ४९ ॥
129569
129570 रूक्षाणि रत्नलुब्धानि कल्लोलवलितानि च ।
129571 दुर्ग्रहग्राहघोराणि क्षाराम्बूनीन्द्रियाणि च ॥ ५० ॥
129572
129573 निष्ठुरत्वादसुखस्पर्शत्वाच्च रूक्षाणि । कल्लोलैः षडूर्मिभिरूर्मिभिश्च ।
129574 क्षाराम्बूनि समुद्रजलानि ॥ ५० ॥
129575
129576 बान्धवोद्वेगदायीनि देहान्तरकराणि च ।
129577 करुणाक्रन्दकारीणि मरणानीन्द्रियाणि च ॥ ५१ ॥
129578
129579 अविवेकिष्वमित्राणि मित्राणि च विवेकिषु ।
129580 गहनानन्तशून्यानि काननानीन्द्रियाणि च ॥ ५२ ॥
129581
129582 गहनानि दुरवगाहानि । अनन्तानि निरवधीनि । जनविश्रान्तिशून्यानि च ॥ ५२ ॥
129583
129584 घनास्फोटान्यसाराणि मलिनानि जडानि च ।

129585 विद्‌युत्प्रकाशान्येतानि भीमाभ्राणीन्द्रियाणि च ॥ ५३ ॥
129586
129587 घना आस्फोटा भुजास्फालनगर्जनशब्दा येभ्यः । विद्‌युदिव क्षणसुखप्रकाशानि ।
129588 पक्षान्तरे स्पष्टम् ॥ ५३ ॥
129589
129590 क्षुद्रप्राणिगृहीतानि वर्जितानि कृतात्मभिः ।
129591 रजस्तमोभिभूतानि स्वेन्द्रियाण्यवटानि च ॥ ५४ ॥
129592
129593 क्षुद्रैस्तुच्छसुखासक्तैः कीटादिभिश्च परिगृहीतानि । अवटानि गर्तोत्करस्थलानि ॥ ५४
129594 । ।
129595
129596 पातनैकान्तदक्षाणि दोषाशीविषवन्ति च ।
129597 रूक्षकण्टकलक्षाणि श्वभ्राग्राणीन्द्रियाणि च ॥ ५५ ॥
129598
129599 श्वभ्राग्राणि जीर्णश्वभ्रमुखानि ॥ ५५ ॥
129600
129601 आत्मंभरीण्यनार्याणि साहसैकरतानि च ।
129602 अन्धकारविहारीणि रक्षांसि स्वेन्द्रियाणि च ॥ ५६ ॥
129603
129604 अन्तःशून्यान्यसाराणि वक्राणि ग्रन्थिमन्ति च ।
129605 दहनैकार्थयोग्यानि दुर्दारूणीन्द्रियाणि च ॥ ५७ ॥
129606
129607 दुर्दारूणि जीर्णवंशादिकाष्ठानि ॥ ५७ ॥
129608
129609 घनमोहप्रबन्धीनि दुष्कूपगहनानि च ।
129610 महावकरतुच्छानि कुपुराणीन्द्रियाणि च ॥ ५८ ॥
129611
129612 घनैर्मोहैश्चौर्यकलहद्‌यूतादिदुर्व्यसनप्रबन्धनशीलानि । कुपुराणि
129613 असज्जननगराणि ॥ ५८ ॥
129614
129615 अनन्तेषु पदार्थेषु कारणानि घटादिषु ।
129616 संभ्रमाणि सपङ्कानि चक्रकाणीन्द्रियाणि च ॥ ५९ ॥
129617
129618 चक्रकाणि कुलालचक्राणि ॥ ५९ ॥
129619
129620 आपन्निमग्नमिममेवमकिंचनं त्वं मामुद्धरोद्धरणशील दयोदयेन ।
129621 ये नाम केचन जगत्सु जयन्ति सन्तस्तत्संगमं परमशोकहरं वदन्ति ॥ ६० ॥
129622
129623 हे आपन्नोद्धरणशील एवं वर्णितप्रकारेन्द्रियप्रयुक्तापत्सागरनिमग्नमकिंचनं
129624 त्यक्तसर्वस्वमिमं शरणागतं मां दयोदयेन कृपोत्थेन तत्त्वोपदेशेनोद्धर
129625 यतः कारणाज्जगति ये ये प्रसिद्धास्त्वादृशाः केचन सन्तस्तत्त्वज्ञा दयालवो जयन्ति
129626 सर्वोत्कर्षेण वर्तन्ते तेषां संगमं शरणागतिं परमशोकहरं वदन्ति
129627 सर्वशास्त्राणि सर्वजनाश्चेत्यर्थः ॥ ६० ॥
129628
129629 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वाणप्रकरणे उ०
129630 विद्याधरोपाख्याने वैराग्यवर्णनं नाम षष्ठः सर्गः ॥ ६ ॥
129631
129632 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
129633 वैराग्यवर्णनं नाम षष्ठः सर्गः ॥ ६ ॥
129634
129635 सप्तमः सर्गः
129636

129637 भुशुण्ड उवाच।
129638
129639 ततस्तस्य मया ब्रह्मंस्तच्छ्रुत्वा पावनं वचः।
129640 इदमुक्तं यथापृष्टं सुस्पष्टपदया गिरा॥ १॥
129641
129642 ब्रह्मैव न जगद्दुःखमज्ञानं जगदाततम्।
129643 अहंबीजात्प्ररूढो हि जगद्वृक्षोऽत्र व्रण्यते॥
129644
129645 तस्य विद्याधरस्य। इदं वक्ष्यमाणमुत्तरम्॥ १॥
129646
129647 साधु विद्याधराधीश दिष्ट्या बुद्धोऽसि भूतये।
129648 भवान्धकूपकुहराच्चिरेणोत्थानमिच्छसि॥ २॥
129649
129650 दिष्ट्या भाग्योदयात्॥ २॥
129651
129652 पावनीयं तव मती राजते घनरूपिणी।
129653 विवेकेनानलेनेव कनकद्रवसंततिः॥ ३॥
129654
129655 विवेकेन घनरूपिणी निबिडं व्याप्ता। यथा अनलेन व्याप्ता कनकद्रवसन्ततिः
129656 कान्त्यतिशयेन विराजते तद्वदित्यर्थः॥ ३॥
129657
129658 उपदेशगिरामर्थमादत्ते हारिहेलया।
129659 मुकुरे निर्मले द्रव्यमयत्नेनैव बिम्बति॥ ४॥
129660
129661 अत एव ते मतिर्मदुपदेशगिरामर्थमादत्ते अवश्यमादास्यति। हेलया अप्रयत्नेन॥ ४॥
129662
129663 यदिदं वच्मि तत्सर्वमोमित्यादातुमर्हसि।
129664 अस्माभिश्चिरमन्विष्टं नात्र कार्या विचारणा॥ ५॥
129665
129666 ओमिति अङ्गीकारबुद्ध्या॥ ५॥
129667
129668 यत्किंचित्स्वदतेऽन्तस्ते बुध्यस्वाबोधमुत्सृजन्।
129669 नासि त्वं चिरमप्यन्तः प्रेक्षितोऽपि न लभ्यसे॥ ६॥
129670
129671 तत्रादौ सर्वदृश्यविवेके साक्षिस्वरूपमेव शुद्धं ब्रह्मेति सर्ववेदान्तरहस्यं
129672 संक्षिप्योपदिशति - यत्किंचिदिति। यत्किंचिदहंकारादि ते अन्तर्हृदि स्वदते
129673 दृश्यतया प्रथते तत्सर्वं त्वं नासि। दृश्यवर्गेष्वेव कश्चिदात्मास्ति स
129674 मयान्विष्य लब्धव्य इति चिरमप्यन्तः प्रेक्षितोऽन्विष्टस्त्वमात्मान लभ्यसे। अतो
129675 दृश्यमात्रलक्षणमबोधमुत्सृजन् संस्तत्साक्षिणमात्मानं बुध्यस्वेत्यर्थः॥
129676 ६॥
129677
129678 नाहंत्वमस्ति न जगदिति निश्चयिनस्तव।
129679 सर्वमस्ति शिवं तच्च न दुःखाय सुखाय ते॥ ७॥
129680
129681 न हि द्रष्टृदृश्यलक्षणसर्वदृश्यत्यागे शून्यतापत्तिः किंतु
129682 सुखदुःखवैषम्यप्रयोजककल्पितदोषांशनिवृत्त्या
129683 वास्तवपरमकल्याणब्रह्मभावेन पूर्णतया सर्वमस्त्येवेत्याशयेनाह -
129684 नाहमिति॥ ७॥
129685
129686 किमज्ञत्वाज्जगज्जातं जगतोऽथ किमज्ञता।
129687 विचार्यापीति नो विद्म एकत्वादलमेतयोः॥ ८॥
129688

129689 दृश्यमात्रस्य अबोधरूपत्वमुक्तमुपपादयति - किमिति | किं सुषुप्तौ
129690 प्रसिद्धादज्ञानादहंकारादिभावेन घनीभूताज्जाग्रत्स्वप्नलक्षणं
129691 जगज्जातमथवा जतुकाठिन्यादिव विलीनाज्जाग्रदादिलक्षणाज्जगतः सौषुप्ती अज्ञता
129692 जाता इति विचार्यापि विनिगमकाभावात्कार्यकारणभावव्यवस्थां नो विद्मः | अतः
129693 काठिन्यद्रवावस्थयोर्घृतस्येवैकत्वात्सर्वस्याज्ञानमात्रत्वमित्यर्थः || ८ ||
129694
129695 मृगतृष्णाम्बुवद्विश्वमवस्तुत्वात्सदप्यसत् |
129696 यच्चेदं भाति तद्ब्रह्म न किंचित्किंचिदेव वा || ९ ||
129697
129698 तस्य विवर्तादर्शनमेव त्यागः बाधितस्य जगतस्तुच्छताविभावने न किंचिद्ब्रह्म
129699 अधिष्ठानरूपतापत्तिविभावने तु सर्वमेव ब्रह्मेत्याह - मृगतृष्णेति || ९ ||
129700
129701 मृगतृष्णाम्बुवद्विश्वं नास्ति त्वमथवास्ति च |
129702 प्रतिभासोऽपि नास्त्यत्र तदभावादतः शिवम् || १० ||
129703
129704 उक्तमाशयं विशदयंस्तत्प्रतिभासमपि निराचष्टे - मृगतृष्णेति |
129705 तदभावात्प्रतिभास्याभावात् | न हि घटाभावे प्रकाशसत्त्वेऽपि
129706 घटप्रकाशशब्दार्थोऽस्तीति भावः || १० ||
129707
129708 विश्वबीजमहंत्वं त्वं विद्धि तस्माद्धि जायते |
129709 साद्यब्ध्युर्वीनदीशादिजगज्जरठपादपः || ११ ||
129710
129711 अनन्तरूपस्य जगतः प्रातिस्विकरूपेण निरसितुमशक्यत्वाद्बीजदाहेनैव निरास इति
129712 वक्तुमहंकारं बीजत्वेन जगत्तत्प्रभवतरुत्वेन वर्णयति - विश्वेत्यादिना || ११ ||
129713
129714 अहंत्वबीजादणुतो जायतेऽसौ जगद्द्रुमः |
129715 तस्येन्द्रियरसाढ्यानि मूलानि भुवनानि हि || १२ ||
129716
129717 इन्द्रियरसो विषयासङ्गस्तदाढ्यानि अधोभुवनानि तस्य द्रुमस्य मूलानि || १२ ||
129718
129719 तारकाजालकलिका ऋक्षौघः कोरकोत्करः |
129720 वासनागुच्छविसराः पूर्णचन्द्रः फलालयः || १३ ||
129721
129722 अश्विन्यादिसप्तविंशतितारकाजालं तस्य प्रधानकलिका | तदन्यऋक्षौघः
129723 सूक्ष्मकोरकोत्करः | प्राणिनां धर्मादिवासनाः पुष्पगुच्छसमूहाः | फलालयः
129724 फलगुच्छाः || १३ ||
129725
129726 स्वर्गादयो बृहद्वर्गा महाविटपकोटराः |
129727 मेरुमन्दरसह्यादिगिरयः पत्रराजयः || १४ ||
129728
129729 स्वर्गादयः स्वर्महर्जनतपःसत्यलोकाख्या बृहतां लोकानां वर्गा महान्तो
129730 विटपकोटराः शाखावलयगर्भदेशाः || १४ ||
129731
129732 सप्ताब्धयोऽग्रसुतयः पातालं मूलकोटरम् |
129733 युगानि घुणवृन्दानि पर्वाणि गुणपङ्क्तयः || १५ ||
129734
129735 अग्रसुतयः आलवालपरिखाः | युगानि कृतादीन्युत्तरोत्तरं
129736 धर्मपिष्टक्षरणाद्घुणवृन्दानि | तत्तद्युगवत्सरायनर्तुमासादिगुणपङ्तयो
129737 वृक्षय शाखामूलाद्युद्भवपर्वाणि [उद्भेदपर्वाणि इति पाठः |] || १५ ||
129738
129739 अज्ञानमुत्पत्तिमही नरा विहगकोटयः |
129740 उपलम्भो बृहत्स्तम्भो दवो निर्वाणनिर्वृतिः || १६ ||

129741
129742 नरा जीवाः। उपलम्भो भ्रान्तिज्ञानमेव बृह स्तम्भः
129743 सर्वविटपाधारमध्यभागः। तस्य तत्त्वबोधान्निर्वाणं निर्वृतिरेव दवो
129744 वनहुताशनः॥ १६॥
129745
129746 रूपालोकमनस्कारा विविधामोदवृत्तयः।
129747 वनंन् विपुलमाकाशं शुक्तिजालं मुखत्वचः॥ १७॥
129748
129749 इन्द्रियैरर्थोपलम्भा रूपालोकाः मनसा तद्गोचरसंकल्पविकल्पा मनस्काराश्च तस्य
129750 द्रुमस्य विविधा आमोदवृत्तयः सुगन्धप्रसराः। आकाशमव्याकृताकाशं तस्य
129751 विपुलं वनम्। मुखत्वचो नेत्रपुटानि उत्तराधरोष्ठाश्च
129752 नेत्रहास्यमुक्तोद्भेदशुक्तिजालमिव पुष्पोद्भेदनम्। प्रसवबन्धनमिति यावत्॥ १७॥
129753
129754 विचित्रशाखा ऋतव उपशाखा दिशो दश।
129755 संविद्रसमहापूरो वातस्पन्दो निवर्तनः॥ १८॥
129756
129757 तस्यात्मसंविदेव जीवनहेतू रसप्रवाहः। सूर्यचन्द्राग्न्यादीनां संवर्गेण
129758 निवर्तनः सूत्रात्मैव तस्य वातस्पन्दः॥ १८॥
129759
129760 चन्द्रार्करुचयो लोला मज्जनोन्मज्जनोन्मुखाः।
129761 रम्याः कुसुममञ्जर्यस्तिमिरं भ्रमरभ्रमः॥ १९॥
129762
129763 मज्जनोन्मज्जने प्रत्यहमुदयास्तमयौ तदुन्मुखाश्चन्द्रार्करुचयस्तस्य रम्याः
129764 कुसुममञ्जर्यः। सूर्येण सह भ्रमत्तिमिरमन्धकार एव भ्रमराणां
129765 भ्रमणं भ्रमरभ्रमः। भ्रमन्तो भ्रमरा इति यावत्॥ १९॥
129766
129767 पातालमाशागणमन्तरिक्षमापूर्य तिष्ठत्यसदेव सद्वत्।
129768 तस्यानहन्ताग्निहतेऽहमर्थबीजे पुनर्नास्ति सतोऽपि रोहः॥ २०॥
129769
129770 ईदृशोऽयं संसारवृक्षः पातालं मूलतो मध्यत आशागणं
129771 दिक्समूहमग्रतोऽन्तरिक्षं चापूर्य वस्तुतोऽसदेव भ्रान्तिरूपं सद्वतिष्ठति। तस्य
129772 अहमर्थरूपे बीजे अनहंतालक्षणेनाग्निना हते भर्जिते सति जीवन्मुक्तिभोगाय
129773 यावत्तद्देहपातं प्रतिभासमात्रेण सतोऽप्यस्य संसारवृक्षस्य पुनर्जन्मादिना
129774 रोहः प्ररोहो नास्तीत्यर्थः॥ २०॥
129775
129776 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मोक्षो निर्वाणप्रकरणे उत्त०
129777 विद्याधरोपाख्याने जगद्वृक्षबीजवर्णनं नाम सप्तमः सर्गः॥ ७॥
129778
129779 इति श्रीवासिष्ठमहारामायणे तात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
129780 जगद्वृक्षबीजवर्णनं नाम सप्तमह् सर्गः॥ ७॥
129781
129782 अष्टमः सर्गः ८
129783
129784 भुशुण्ड उवाच।
129785
129786 विद्याधर धराधारो गिरिकन्दरमन्दिरः।
129787 दिगन्तराम्बराचारचारसंचारचञ्चरः॥ १॥
129788
129789 इह संसारवृक्षस्य ज्ञानादुच्छेद ईयते।
129790 संकल्पमण्डपप्रायः संसार उपवर्ण्यते॥
129791
129792 ईदृशोऽयं जगद्वृक्षो जायतेऽहंत्ववीजतः।

129793 बीजे ज्ञानाग्निनिर्दग्धे नैव किंचन जायते ॥ २ ॥
129794
129795 वर्णितं संसारवृक्षमनुवदति - विद्याधरेति । हे विद्याधर
129796 अधस्तनसप्तलोकसहिता धरा आधारो मूलदेशो यस्य । लोकालोकान्तगिरीणां कन्दराणि
129797 अन्तरालभागा मन्दिरं सालवाला वेदिर्यस्य । दशदिगन्तरे अम्बरे च आचारेण
129798 तिर्यग्विटपविस्तारेण चारेण ऊर्ध्वविटपप्रसारेण तत्र तत्र प्राणिसंचारेण च
129799 चञ्चरोऽतिचञ्चलः ॥ १ ॥ २ ॥
129800
129801 प्रेक्ष्यमाणं च तन्नास्ति किलाहंत्वं कदाचन ।
129802 एतावदेव तज्ज्ञानमनेनैव प्रदह्यते ॥ ३ ॥
129803
129804 प्रेक्ष्यमाणं तत्त्वतः किमिदं स्यादिति रत्नपरीक्षावद्विमृश्य
129805 ब्रह्ममात्रतयावधार्यमाणम् । तत् अहंत्वम् ॥ ३ ॥
129806
129807 अहंत्वभावाच्चाहंत्वमस्ति संसारबीजकम् ।
129808 नाहंत्वभावान्नाहंत्वमस्तीति ज्ञानमुत्तमम् ॥ ४ ॥
129809
129810 सर्गादावेव सर्गस्य किलास्याभावयोगतः ।
129811 कुतोऽहंत्वं कुतस्त्वंत्वं कुतो द्वित्वैक्यविभ्रमः ॥ ५ ॥
129812
129813 उत्पत्तिरेव यस्यासतः सतो वा न संभवति तस्य स्थितिर्दूरनिरस्तेत्याह -
129814 सर्गादावेवेति ॥ ५ ॥
129815
129816 समकर्ण्य गुरोर्वाक्यं यतन्ते ये स्वयत्नतः ।
129817 संकल्पत्यागमामूलं पदप्राप्तौ जयन्ति ते ॥ ६ ॥
129818
129819 संसारः कालत्रयेऽपि नास्त्येवेत्युक्तार्थस्य दृढीकरणाय संकल्पद्यूतमण्डपं
129820 वर्णयिष्यन् भूमिकां रचयति - समाकर्ण्येत्यादिना । वक्ष्यमाणं प्राग्बहुशो
129821 वर्णितं च आमूलं समूलं संकल्पत्यागं कर्तुंन् गुरोस्तदुपायक्रमवेदकं
129822 वाक्यं समाकर्ण्य तदुक्तक्रमेण स्वप्रयत्नतो ये यतन्ते तत्त्वबोधप्राप्तौ
129823 सत्यामसंकल्पं तत्पदं कैवल्याख्यं जयन्ति ॥ ६ ॥
129824
129825 रन्धनाज्जयमाप्नोति स्वशास्त्रे सूपकृत्कृते ।
129826 विवेकी स्वविवेकित्वं यतनादेव नान्यथा ॥ ७ ॥
129827
129828 यथा सूपकृत् सूपकारः स्वशास्त्रे सूपकारविद्याविशेषे कृते सम्यगभ्यस्ते
129829 तदुक्तप्रकारेणैव नानाभक्ष्यभोज्यनानारसायनानां रन्धनात्पाकेन निष्पादनात्
129830 क्षुत्तृडामयजरादिजयं राजसन्मानाद्युत्कर्षं चाप्नोति तद्वद्विवेकी अधिकारी
129831 गुरुशास्त्रोक्तमार्गेण यतनादेव स्वविवेकित्वं कैवल्यपर्यन्तं जयति
129832 नान्यथेत्यर्थः ॥ ७ ॥
129833
129834 चिच्चमत्कारमात्रं त्वं जगद्विद्धीह नेतरत् ।
129835 नाशासु न बहिर्नान्तरेतत्किंचन विद्यते ॥ ८ ॥
129836
129837 यतोऽयं संसारः स्वप्नेन्द्रजालादिवदज्ञातचिच्चमत्कारमात्रमतो न चितो
129838 बहिरस्तीत्याह - चिदिति ॥ ८ ॥
129839
129840 संकल्पोन्मेषमात्रेण जगच्चित्रं विलोक्यते ।
129841 तदनुन्मेषविलयि चित्रकृच्चित्तचित्रवद् ॥ ९ ॥
129842
129843 चिच्चमत्कारमात्रतामुपपादयति - संकल्पेति । चित्रकृतश्चित्रकारस्य चित्ते
129844 कल्पितं यच्चित्रं तद्वत् ॥ ९ ॥

129845
129846 मण्डपोऽस्ति महास्तम्भो मुक्तामणिविनिर्मितः |
129847 बहुयोजनलक्षाणि कान्तकाञ्चनचित्रितः || १० ||
129848
129849 जगतः संकल्पमात्रतां द्रढयितुं संकल्पद्यूतमण्डपाकारतां कल्पयति -
129850 मण्डप इत्यादिना || १० ||
129851
129852 मणिस्तम्भसहस्रेण वृतोऽग्रे प्रोतमेरुणा |
129853 इन्द्रायुधसहस्राढ्यकल्पसंध्याभ्रसुन्दरः || ११ ||
129854
129855 अग्रे अधोमुखं प्रोतो मेरुरिवोर्ध्वगुग्गुलुर्यस्य तथाविधेन मणिस्तम्भसहस्रेण
129856 वृतः | अत एव क्वचिदिन्द्रायुधसहस्राढ्य इव क्वचित्कल्पसंध्याभ्राणीव सुन्दरः
129857 || ११ ||
129858
129859 स्त्रीवालपुरुषादीनां वास्तव्यानामितस्ततः |
129860 क्रीडार्थं स्थापिता यत्र नानारचनयान्तरे || १२ ||
129861
129862 यत्र यस्मिन्मण्डपे वास्तव्यानां निवसतां स्त्रीबालपुरुषादीनां क्रीडार्थं
129863 लोकान्तराणि पातालस्वर्गादीनि तदाकाराः समुद्गकाः संपुटकास्तत्र तत्र स्थापिताः |
129864 कीदृशास्ते | अन्तरे नानानदीपर्वतवनहस्त्यश्वदेवतिर्यङ्नरादिनानारचनया
129865 युक्ताः || १२ ||
129866
129867 भूतबीजपरापूर्णास्तमोरिपुसघुंघुमाः |
129868 तमःप्रकाशचित्राख्या लोकान्तरसमुद्गकाः || १३ ||
129869
129870 भूतानि प्राणिनस्तल्लक्षणैर्बीजैः परैस्तदुपभोग्यैश्च आपूर्णाः | तमसां
129871 रिपुभिर्घातकैर्मणिप्रदीपसूर्यचन्द्रादिभिर्व्यवहारप्रवृत्त्या सघुंघुमाः
129872 सशब्दाः | क्वचित्तमोभिः क्वचित्प्रकाशैश्च चित्रा आख्या अभिख्या येषाम् || १३ ||
129873
129874 आमोदसुभगा लोलजलदावलिपल्लवाः |
129875 लीलापद्माकरे स्त्रीणां विलूनाकल्पपादपाः [विलूनाः कल्पपादपाः इति
129876 पाठश्चिन्त्यः |] || १४ ||
129877
129878 लीलापद्मायाः क्रीडालक्ष्म्या आकरे यस्मिन्मण्डपे स्त्रीणां मण्डनाय विलूना
129879 लवनेन गृहीता आकल्पाः कर्णपूराद्यलंकारा येभ्यस्तथाविधाः पादपाः
129880 कृताः || १४ ||
129881
129882 वालनिःश्वासचलिताः कन्दुकानि कुलाचलाः |
129883 संध्याम्बुदाः कर्णपूराश्चामराः शरदम्बुदाः || १५ ||
129884
129885 बालानां निःश्वासेनापि चलिताः अतिलघीयांस इति यावत् | ईदृशाः कुलाचला यत्र
129886 अर्थाद्बालानामेव क्रीडाकान्दुकानि कृताः | संध्याम्बुदा दिग्वधूनां
129887 कर्णपूराः कृताः | शरदम्बुदाश्च तासां हस्ते चामराः कृताः || १५ ||
129888
129889 कल्पान्तकालजलदास्तालवृन्तपदं गताः |
129890 भूतलं द्यूतफलकं वितानं तारकाम्बरम् || १६ ||
129891
129892 यत्र मण्डपे भूतलं संपूर्णं द्यूतफलकं कृतम् | तारकासहितमम्बरं
129893 वितानं कृतम् || १६ ||
129894
129895 भूतशारपरावर्ते द्यूतेऽक्षाः शशिभानवः |
129896 व्योमाजिरे जगद्भासपणे गृहनिवासिनाम् || १७ ||

129897
129898 यत्र मण्डपे व्योमलक्षणे अजिरे चत्वरे जगतां भास आविर्भावतिरोभावादिप्रत्यय
129899 एव पणो यस्मिन् द्यूते क्रीडतां गृहनिवासिनां मण्डपस्वामिनां ब्रह्मादीनां
129900 तत्र भूतसाराणांन् चतुर्विधभूतग्रामाणां शारिफलानांन्
129901 पुनःपुनर्जन्ममरणादिना भ्रमणं परावर्तस्तल्लक्षणे द्यूते
129902 शशिभान्वादिनवग्रहा अक्षाः कृताः ॥ १७ ॥
129903
129904 इति संकल्प एवान्तश्चिरभावनया यथा ।
129905 अग्रस्थदृश्योपमया सत्यतामिव गच्छति ॥ १८ ॥
129906
129907 इति ईदृशो मण्डपोऽस्तीति संकल्पयितुः संकल्प एव अग्रस्थदृश्योपमया यथा
129908 सत्यतामिव गच्छति तथैवायं धातुः संकल्पैः सुसमुत्थितो जगद्रूपो मण्डपोऽपीति
129909 परेणान्वयः ॥ १८ ॥
129910
129911 तथैवायं जगद्रूपः संकल्पैः सुसमुत्थितः ।
129912 चिच्चमत्कारमात्रात्मा चित्रकृच्चित्तचित्रवत् ॥ १९ ॥
129913
129914 असत्यमेव स्फुरति सर्वमस्ति च नास्ति च ।
129915 असदुत्थित एवायं कुतोपीव समुत्थितः ॥ २० ॥
129916
129917 प्रतिभासतोऽस्ति परमार्थतो नास्ति च । कुतोऽपि समुत्थितो मायाहस्त्यादिरिव ॥ २० ॥
129918
129919 हेम्नीव कटकादित्वं संसारोदरकोटरः ।
129920 चिच्चमत्कार एवायमविकल्पनसंक्षयः ॥ २१ ॥
129921
129922 संसार उदरकोटरे यस्य तथाविधश्चिच्चमत्कार एव ॥ २१ ॥
129923
129924 अत्यन्तमेव स्वायत्तो यथेच्छसि तथा कुरु ।
129925 यश्चान्नपानदानादावनादरमुपेयिवान् ।
129926 तस्येदं पश्चिमं जन्म न स कर्म समुज्झति ॥ २२ ॥
129927
129928 तथा चैच्छिकैर्विकल्पनैरविकल्पनैश्चाविर्भावयितुं तिरोभावयितुं च
129929 तत्त्वविदामत्यन्तमेव स्वायत्त इति यथेच्छसि तथा कुर्वित्यर्थः ।
129930 अन्नपानादिरैहिकभोगसामग्रीदानयज्ञादिरामुष्मिकभोगसामग्री
129931 उभयत्राप्यनादरं फलानभिसंधिम् ॥ २२ ॥
129932
129933 प्राप्तो विवेकपदवीमसि पावनात्मन्पुण्यां पवित्रितजगत्त्रितयां द्वितीयाम् ।
129934 नाघः पतिष्यसि पुनर्मनसाऽमुनेति जानामि मौनममलं पदमुत्सृज त्वम् ॥
129935 २३ ॥
129936
129937 विवेकप्राप्त्यैव ते मुक्तिरवश्यभाविन्यनुमीयत इति पुनर्जन्मादिसंभावनाभीतं
129938 तमाश्वासयति - प्राप्त इति । हे पावनात्मन् शुद्धबुद्धे त्वं
129939 पातहेत्वविवेकपदव्यपेक्षया द्वितीयां पवित्रितजगत्त्रितयां विवेकपदवीं प्राप्तोऽसि ।
129940 अतोऽमुना मनसा न अधः पतिष्यसीति जानामि अनुमिनोमि । अतस्त्वं मौनं
129941 वाङ्मनसचेष्टाशून्यममलं चिन्मात्रपदमवलम्ब्य मन##-
129942
129943 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाण० उत्तरार्धे
129944 विद्याधरो० मायामण्डपवर्णनंन् नामाष्टमः सर्गः ॥ ८ ॥
129945
129946 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
129947 मायामण्डपवर्णनं नामाष्टमः सर्गः ॥ ८ ॥
129948

129949 प्द्फ़् १६५, प्। १०८६
129950
129951 नवमः सर्गः ९
129952
129953 भुशुण्ड उवाच।
129954
129955 अबुद्ध्यमानश्चेत्यादिचिद्रूपमपि चानघ।
129956 शान्तचिद्घन एवास्व निर्मलाप्स्वन्तरंशुवत्॥ १॥
129957
129958 चिदधीनोदयध्वंससत्तास्फूर्तिविवर्तनम्।
129959 इह चित्कचनं विश्वं चिन्मात्रमिति वर्ण्यते॥
129960
129961 हेम्नीव कटकादित्वं संसारोदरकोटरः। चिच्चमत्कार एवायमविकल्पनसंक्षयः॥
129962 इति यदुक्तं तदुभयमनुभावयिष्यन्नविकल्पनप्रकारं प्रथममुपदिशति -
129963 अबुध्यमान इति। चेत्यं तद्गतक्रियागुणदोषादि तद्व्यावृत्तं तदवभासकं
129964 चिद्रूपमपि विभाजकविकल्पकमनसो बाधादबुध्यमानो निर्मलासु अप्सु प्रविष्टा
129965 अंशवः सूर्यकिरणा इव प्रशान्ततापः प्रकाशमात्रावशेष आस्व। सेयमपि
129966 कल्पस्थितिर्जगद्विकल्पक्षयहेतुरित्यर्थः॥ १॥
129967
129968 अचेतनं चेतनान्तश्चेतनादेव विद्यते।
129969 स्वेऽसादृश्येऽपि सदृशं पयोराशौ यथानलाः॥ २॥
129970
129971 संसारोदरकोटरश्चिच्चमत्कार एवायमित्येतदपि सोपपत्तिकमनुभावयति -
129972 अचेतनमित्यादिना। अचेतनंन् दृश्यं स्वे स्वीये जाड्यदुःखपरिणामित्वादिलक्षणे
129973 चिदसादृश्ये सत्यपि चेतनायाश्चितोन्तरे विद्यते नान्यत्र। तत्कुतः। चेतनादेव। न
129974 ह्यन्यत्र विद्यमानं तदसंबद्धया चेतनया चेतितुं शक्यम्। न चाचेत्यमानं
129975 किंचित्सिद्ध्यति। नापि चेतना सक्रिया येन गत्वा चेतयेत्। सा यदि सर्वगता तर्हि सिद्धैव
129976 प्रतिज्ञेत्यर्थः॥ २॥
129977
129978 सचेतनाचेतनयोर्हेतुश्चित्त्वात्तथैव चित्।
129979 विनाशोत्पादयोर्वह्निज्वालायाः पवनो यथा॥ ३॥
129980
129981 एवं देशतः सर्वदृश्यस्य चिदन्तःस्थितिं प्रसाध्य कालतोऽपि तां
129982 सूचयंश्चित्कार्यतां साधयति - सचेतनेति। सचेतना [इदं
129983 मूलस्थचेतनेत्यादेः फलितार्थकथनम्।] अहंवृत्तिविषयाः। अचेतना
129984 इदंकारविषयाः। तथा पूर्ववदेव कारणं विवर्तोपादानम्। चिद्विवर्ततैव
129985 चिच्चमत्कार इति भावः॥ ३॥
129986
129987 नाहमस्तीति चिद्रूपं चिति विश्रान्तिरस्तु ते।
129988 ततो यथा यादृशेन भूयते तादृशो भव॥ ४॥
129989
129990 तत्राहमिति सचेतनांशनिरासेनैवोभयनिराससिद्ध्या चिन्मात्रावस्थितिसिद्धिरित्याह ##-
129991 विकल्पहेतुक्षयादेवेदं विकल्पनिर्मुक्तपूर्णचिति विश्रान्तिरस्त्वित्यर्थः। एवं
129992 विश्रान्तेन त्वया। ततः प्रारब्धशेषक्षयोत्तरम्॥ ४॥
129993
129994 चिद्रूपः सर्वभावानामन्तर्बहिरसि स्थितः।
129995 प्रसन्नाम्बुभरस्यान्तर्बहिश्चैव यथा पयः॥ ५॥
129996
129997 अम्बुव्यापिनः क्षीरस्याम्बुक्षयेऽपि परिशेषवद्ब्रह्मरूपमेवानुपमं ते परिशिष्यत
129998 इत्याह - चिद्रूप इति द्वाभ्याम्॥ ५॥
129999
130000 नाहमस्तीति चिद्रूपं चितौ चेल्लग्नमङ्ग ते।

130001 न चान्यच्चेतितं ब्रह्म रूपं केनोपमीयते ॥ ६ ॥
130002
130003 प्रत्यक्चिद्रूपं ब्रह्म चितौ लग्नमखण्डैक्यं प्राप्तं चेत् ॥ ६ ॥
130004
130005 ससुरासुरपातालभूविष्टपमिवोषितम् ।
130006 नानाभावाजवीभावक्रियाकालमिवाकुलम् ॥ ७ ॥
130007
130008 यथा सुरासुरैः सह वर्तमानं पातालभूत्रिविष्टपमिव स्थितम् ।
130009 प्रीतिहर्षक्रोधयुद्धजयपराजयादिनानाभावैः
130010 पलायनानुधावनाद्याजवीभावैस्तत्तदनुरूपक्रियाकालमिव आकुलमपि रङ्गमयं
130011 चित्रलिखितं जगत् कुड्ये कुड्यात्मना मौनंन् मुनिशरीरमिव निर्व्यापारमेव स्थितं
130012 तथा मायाशबलचिच्चित्रकचितं जगदपि शुद्धचिदाकाशलक्षणे कुड्ये
130013 निर्विकाराद्वयतदात्मनैव संस्थितं न जगद्भावेनेत्यर्थः ॥ ७ ॥
130014
130015 यथा रङ्गमयं कुड्ये जगन्मौनमिव स्थितम् ।
130016 तथा चिच्चित्रकचितं खे कुड्ये चात्मसंस्थितम् ॥ ८ ॥
130017
130018 तेनैव भूयते भूरि यच्चित्तं कचितं स्वतः ।
130019 अचेतनं चेतनं वा यथेच्छसि तथा कुरु ॥ ९ ॥
130020
130021 अचेतनमनृतजगद्रूपम् । चेतनंन् परमार्थसद्ब्रह्मरूपं वा यदेव चिति स्वतः
130022 स्वरसतः कचितं तेनैव भूयते । एवं स्वायत्तयोरुभयोर्व्युत्थानेन समाधिना वा
130023 यदेवेच्छसि तत्कुर्वित्यर्थः ॥ ९ ॥
130024
130025 चिच्चमत्कृतयो व्योम्नि स्फुरन्त्येता जगत्तया ।
130026 अर्कांशुवदरोधिन्यः स्वच्छा विदितवेदिनाम् ॥ १० ॥
130027
130028 एतावांस्त्वज्ञेभ्यस्तत्त्वविदां विशेषः । यथा मरुभूमौ महानद्यात्मना
130029 दृश्यमाना अर्कांशवो
130030 मज्जनमरणादिभयजननात्तरणोपायादर्शनाच्चाज्ञानामर्वाक्कूले निरोधकाः न
130031 मरुभूमितत्त्वज्ञानाम् तद्वदेकविज्ञानेन तत्त्वतः सर्वविज्ञानाद्विदितवेदिनां
130032 तत्त्वविदां जगद्रूपाश्चिच्चमत्कृतयोऽप्यनिरोधिन्य इत्यर्थः । उपपादितं चेदं
130033 लीलोपाख्याने विस्तरेण ॥ १० ॥
130034
130035 तिमिराक्रान्तदृष्टीनां यथा केशोण्ड्रकादि खे ।
130036 स्फुरत्येवं जगद्रूपमनात्मन्येव तिष्ठताम् ॥ ११ ॥
130037
130038 अज्ञानां तु निरोधिन्य एवेत्याशयेनाह - तिमिरेति । अनात्मनि संसारे एव
130039 तिष्ठतामज्ञानाम् ॥ ११ ॥
130040
130041 एवं जगत्त्वमहमित्यवबोधरूपमाभासमात्रमुदितं न च नोदितं च ।
130042 अर्कांशुजालरचनानगराभमत्र कुड्यादि सत्यमिदमस्ति न खे लतेव ॥ १२ ॥
130043
130044 अर्कांशुवदिति दृष्टान्तं प्रकारान्तरेणापि वर्णयन्नुपसंहरति - एवमिति ।
130045 आभासमात्रं वर्णितचिच्चमत्कारमात्रमतोऽज्ञदृशोदितं तत्त्वदृशा नोदितम् ।
130046 चकारौ विकारान्तराणामपि समुच्चयप्रतिषेधार्थौ । अर्कांशुजालैरेव रचना
130047 निर्माणं यस्य तथाविधं यद्गन्धर्वनगरं तदाभमत्र व्यवहारभूमौ
130048 कुड्यादि जगत् । तच्च जगद्रूपेण खे लतेव सत्यंन् नास्ति । अतो न
130049 चिन्निरोधकमित्यपरिच्छेदश्चितः सिद्ध इत्यर्थः ॥ १२ ॥
130050
130051 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाणप्रकरणे उ०
130052 वि० चित्कचनयोगोपदेशो नाम नवमः सर्गः ॥ ९ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
चित्कचनयोगोपदेशो नाम नवमः सर्गः ॥ ९ ॥

दशमः सर्गः १०

भुशुण्ड उवाच ।

विद्धि त्वं चेतनादेव चेतनेतरचेतनम् ।
जलेऽग्निरिव चिज्जाड्ये नातो भिन्ने मनागपि ॥ १ ॥

यथाभूतं स्थितं ब्रह्म निर्विकारमकारणम् ।
नासीदेव जगत्क्वापि कदापीत्युपवर्ण्यते ॥

ब्रह्मणि जगदपलापसिद्धये तज्जाड्यमपलपितुं जडत्वेनाभिमतस्य
चिद्भावमनुभावयति - विद्धीत्यादिना । हे विद्याधर त्वं
चेतनेतरत्वेनाभिमतस्य जगतश्चेतनादेव चेतनं स्फुरणं विद्धि ।
स्फुरद्रूपत्वमेव हि चेतनत्वम् । तद्यदि जगद्रूपं स्फुरति तर्हि चेतनमेव न
चेतनेतरदिति । जले प्रतिबिम्बितोऽग्निरिव जलान्न चेतनाद्वस्त्वन्तरमस्ति । अतो
जलशैत्यादतिरिक्तं प्रतिबिम्बवह्नेरौष्ण्यमिव न चैतन्याज्जाड्यंन्
नामान्यदस्तीत्यर्थः ॥ १ ॥

तद्वेदनावेदनयोरभेदात्स्वस्थमास्यताम् ।
निर्यन्त्रमेव चित्रस्थज्ञप्तिवद्व्योममध्यवत् ॥ २ ॥

जाड्यमात्रापलापेनैव जगदपलापसिद्ध्या निर्विक्षेपं स्थीयतामित्याह - तदिति ।
यन्त्रणं यन्त्रं परिच्छेदस्तद्रहितं यथा स्यात्तथा ।
चित्रकृच्चित्तचित्रस्थतज्ज्ञप्तिवत् । गन्धर्वनगराधिष्ठानव्योममध्यवच्च ॥ २ ॥

ब्रह्मण्यशेषशक्तित्वादचित्त्वं विद्यते तथा ।
अक्षुब्धे विमले तोये भाविफेनलवो यथा ॥ ३ ॥

ये तु प्रलयेऽपि ब्रह्मणि अचिद्रूपं जगत् सूक्ष्मरूपेणाऽस्त्येवेति श्रुतिस्मृतिवादास्ते
मायाशबलस्य सर्वशक्तित्वादसत्स्वपि ब्रह्मसत्तारोपदृष्ट्या भाविफेनलवे
सांप्रतिकजलसत्तया सत्ताव्यवहारवदित्याशयेनाह - ब्रह्मणीति ॥ ३ ॥

न कारणं विनोदेति जलात्फेनलवो यथा ।
न कारणं विनोदेति सर्गादि ब्रह्मणस्तथा ॥ ४ ॥

वास्तवदृष्ट्या तु मायाया एवासत्त्वादद्वितीये निर्विकारे
क्षोभतद्धेत्वोरेवासंभवाज्जडसर्गादिरुदय एव न संभवतीत्याह -
नेत्यादिना ॥ ४ ॥

न च कारणमस्त्यत्र सर्गवृत्तावकारणे ।
नातः संजायते किंचिज्जगदादिर्न नश्यति ॥ ५ ॥

अत्यन्तं कारणाभावान्न किंचिज्जायते जगत् ।
मरावम्ब्विव नास्त्येव दृष्टमप्यग्रतो [दृश्यं इति पाठः ।] जगत् ॥
६ ॥

ब्रह्मानन्तमजं शान्तमतोऽस्तीदं न सर्गधीः ।
कारणाभावतस्तेन ब्रह्मैवेदमखण्डितम् ॥ ७ ॥

130105
130106 अतः शिलोदराभोऽसि व्योमकोशोपमोपि च।
130107 ब्रह्मैकघनरूपत्वादजोऽनवयवोऽसि च॥ ८॥
130108
130109 ज्ञोऽसि किंचिन्न किंचिद्वा निःशङ्कमलमास्यताम्।
130110 अचेतनाचिदाभासे शाम्यतामात्मनात्मनि॥ ९॥
130111
130112 अनवधारितविशेषसर्वानुगतसत्तासामान्यरूपत्वात्किंचित्। विशेषबाधे तदनुगतस्य
130113 सामान्यरूपताया अपि निवृत्तैरैकरूप्यावधारणाच्च न किंचित्। चेतना
130114 बुद्धिस्तच्चिदाभासश्च न विद्येते यत्र॥ ९॥
130115
130116 नित्यानन्दतयाऽजस्य कारणं नास्ति कार्यकृत्।
130117 सर्गाद्यसंभवे तस्माद्यदस्ति तदजं शिवम्॥ १०॥
130118
130119 प्रयोजनापेक्षाभावादपि सर्गो नास्तीत्याह - नित्यानन्दतयेति। कारणं
130120 क्रियानिमित्तं फलम्॥ १०॥
130121
130122 अजो येषां तु चिद्रूपो नास्ति मौर्ख्यविलासिनाम्।
130123 सर्गनाशे समुत्पन्ने किं तेषां प्रविचार्यते॥ ११॥
130124
130125 एवं तत्त्वदृशा नित्यमुक्ततासिद्धिमुपपाद्य तदनभ्युपगमे
130126 नित्यबद्धताप्रसक्तिर्मूर्खाणां स्यादित्याह - अज इति।
130127 तेषामनिर्मोक्षदोषानिवृत्तेः किं प्रविचार्यते। निष्फला मोक्षोपायचिन्तेत्यर्थः॥ ११॥
130128
130129 यत्र यत्र परं ब्रह्म तत्र सन्ति जगन्ति हि।
130130 जगच्छब्दार्थरूपेण मुक्तान्येवंविधानि च॥ १२॥
130131
130132 अर्धप्रबुद्धदृष्ट्या यादृशी स्थितिस्तामाह - यत्र यत्रेति॥ १२॥
130133
130134 तृणे काष्ठे जले कुड्ये सर्वत्रैव परं स्थितम्।
130135 सर्वत्रैव च सर्गौघः परिप्रोतः स्थितो [स्थिर इति पाठः।] मिथः॥ १३॥
130136
130137 ब्रह्मणः कः स्वभावोऽसाविति वक्तुं न युज्यते।
130138 अनन्ते परमे तत्त्वे स्वत्वास्वत्वात्यसंभवात्॥ १४॥
130139
130140 तर्हि मिथ्यासर्गस्वभावमेवास्तु ब्रह्म नेत्याह - ब्रह्मण इति। स्वः स्वीयो भावो
130141 व्यावर्तकधर्मो हि स्वभावस्तस्य च धर्मता अस्वभावव्यावर्तकतया वाच्या अद्वये
130142 तु ब्रह्मणि स्वत्वास्वत्वयोरत्यन्तासंभवान्न स्वभावोऽन्यो निरूपयितुं शक्य
130143 इत्यर्थः॥ १४॥
130144
130145 अभावसव्यपेक्षस्य भावस्यासंभवादपि।
130146 पदं बध्नन्ति नानन्ते स्वभावाद्या दुरुक्तयः॥ १५॥
130147
130148 व्यावर्तके स्वशब्दासंघटनमुक्त्वा भावशब्दासंघटनमपि दर्शयति -
130149 अभावेति॥। १५॥
130150
130151 अस्वत्वाभावयोर्नित्येऽनन्तेऽत्यन्तमसंभवात्।
130152 स्वत्वभावेषु सिद्धेषु स्वभावोक्तिर्न तिष्ठति॥ १६॥
130153
130154 व्यावर्त्याप्रसिद्धेरपि पदद्वयस्यापि तत्राघटनमित्याह - अस्वत्वेति। कालान्तरे
130155 देशान्तरे वा तत्प्रसिद्धिशङ्कावारणाय विशिनष्टि - नित्येऽनन्ते इति।
130156 स्वतःसिद्धेष्वव्यावर्तकेषु स्वत्वेषु भावेषु च लोके स्वभावोक्तिः

130157 स्वभावशब्दप्रयोगो न तिष्ठति। अप्रसिद्ध इत्यर्थः ॥ १६ ॥
130158
130159 नाहन्त्वं लभ्यते साधो बुद्ध्यालोके निरीक्षितम्।
130160 असदेव कुतोऽप्येतद्बालयक्ष इवोदितम् ॥ १७ ॥
130161
130162 यथा ब्रह्मणि सर्गादिर्न सिद्ध्यतीत्यद्वयता एवं
130163 प्रतीच्यप्यहन्त्वादिरपीत्युभयशोधे अखण्डता सिद्धेत्याशयेनाह - नाहन्त्वमिति
130164 ॥ १७ ॥
130165
130166 मुक्तं त्वहन्त्वशब्दार्थैर्लभ्यते यच्च तत्परम्।
130167 युक्तं त्वहन्त्वशब्दार्थैः प्रेक्ष्यमाणं विलीयते ॥ १८ ॥
130168
130169 प्रेक्ष्यमाणं रत्नतत्त्ववच्छास्त्राचार्यानुभवैः परीक्ष्य तत्त्वदृशा
130170 दृश्यमानम् ॥ १८ ॥
130171
130172 भेदो जगद्ब्रह्मदृशोरभेदः पर्यायशब्दार्थविलासतुल्यः।
130173 संकल्पमात्रं कथितो न सत्यो यथानयोर्वै कटकत्वहेम्नोः ॥ १९ ॥
130174
130175 अनया दृशा जाड्यं चित्स्वभावतामिव जीवजगद्भेदोऽप्यभेदात्मतामेवापन्न इति
130176 प्रदर्शनाय प्राक्तना हेमकटकाभेददृष्टान्ताः पर्यवसन्ना
130177 इत्याशयेनोपसंहरति - भेद इति। संकल्पो राहोः शिर इति
130178 व्यपदेशवद्विकल्पमात्रं विद्वद्भिः कथितः। कटकत्वं कटकाकारः ॥ १९ ॥
130179
130180 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० निर्वाणप्रकरणे उ० वि०
130181 स्वर्गापवर्गप्रतिपत्तियोगोपदेशो नाम दशमः सर्गः ॥ १० ॥
130182
130183 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
130184 स्वर्गापवर्गप्रतिपत्तियोगोपदेशो नाम दशमः सर्गः ॥ १० ॥
130185
130186 एकादशः सर्गः ११
130187
130188 भुशुण्ड उवाच।
130189
130190 शस्त्राणि दयिताङ्गानि लग्नान्यङ्गे निरम्बरे।
130191 यो बुद्ध्यमानः सुसमः स परस्मिन्पदे स्थितः ॥ १ ॥
130192
130193 इहेन्द्रियजयात्पूर्णे निर्विकारमनःस्थितिः।
130194 देहादिदृश्या दृष्टिश्च दृढीकार्येति वर्ण्यते ॥
130195
130196 निरम्बरे वस्त्राद्यनावृते अङ्गे स्वदेहे लग्नानि शस्त्राणि दयितायास्तरुण्याः
130197 स्तनाद्यङ्गानि च बुद्ध्यमानः साक्षादनुभवन्नपि
130198 कामदुःखभयादिविकारानुदयाद्यः सुसमः स्यात् स परस्मिन्पदे स्थितः।
130199 तादृशस्थितिसिद्धिपर्यन्तमिन्द्रियजयात्मनिष्ठे दृढीकार्ये इत्यर्थः ॥ १ ॥
130200
130201 तावत्पुरुषयत्नेन धैर्येणाभ्यासमाहरेत्।
130202 यावत्सुषुप्ततोदेति पदार्थोदयनं प्रति ॥ २ ॥
130203
130204 अमुमेवार्थं स्पष्टमाह - तावदिति। शस्त्रकान्तादिबाह्यपदार्थेभ्यो
130205 विकारोदयनं मिथ्यात्वबुद्ध्या प्रतिक्षिप्य स्वात्मसुखमात्रविश्रान्तिलक्षणा
130206 सुषुप्तता यावदुदेति तावत् ॥ २ ॥
130207
130208 यथा भूतार्थतत्त्वज्ञमाधयोऽग्रगता अपि।

130209 न मनागपि लिम्पन्ति पयांसीव सरोरुहम् ॥ ३ ॥
130210
130211 तत्त्वज्ञानप्रतिष्ठाया आध्यसंस्पर्श एव लक्षणमित्याह - यथेति । न हि
130212 शुक्तिबाधे तद्रजतलाभापहारयोराधिर्दृश्यत इति भावः ॥ ३ ॥
130213
130214 शस्त्राङ्गनानभांस्यङ्गलग्नान्यलमसंविदम् ।
130215 अलग्नानीव शान्तात्मा यः पश्यति स पश्यति ॥ ४ ॥
130216
130217 नभोग्रहणं दृष्टान्तार्थम् । स पश्यति स साक्षात्कारज्ञानवानिति लक्षणेन
130218 बोध्यमित्यर्थः ॥ ४ ॥
130219
130220 विषं यथा स्वान्तरेव दुर्घुणीभवति स्वयम् ।
130221 न च दुर्घुणता नाम विषादन्यास्ति काचन ॥ ५ ॥
130222
130223 न भ्रान्तिकल्पितेन जीवभावेनास्य वास्तवनिर्विकारस्वभावोऽपगत इति तद्बाधमात्रेण
130224 तल्लाभो युक्त एवेत्येतदुपपादनाय दृष्टान्तमाह - न चेति । यथा विषं
130225 विषस्वभावादप्रच्युतमेव घुणकीटादिविकारं गतमिति घुणता विषादन्या न तथा
130226 आत्मा ब्रह्मापि स्वतत्त्वपरिज्ञानमात्रैकबाध्यां जीवतां
130227 जीवाकारविवर्तमधितिष्ठतीति जीवता नान्येति योज्यम् ॥ ५ ॥
130228
130229 स्वरूपमजहत्त्वेवं जीवतामधितिष्ठति ।
130230 तथात्मा तत्परिज्ञानमात्रैकप्रविलापिनीम् ॥ ६ ॥
130231
130232 जीवो भवति दुर्घूणोऽमृत्यात्मैव [दीर्घत्वमार्षम् ।] यथा तथा ।
130233 अत्यजन्ती निजं रूपं चिज्जडं रूपमृच्छति ॥ ७ ॥
130234
130235 अमरणस्वभावमेव जडं विषं स्वस्वभावमत्यजदेव यथा
130236 मरणस्वभावकीटजीवो भवति तथा ब्रह्मचिदपि मरणस्वभावं जडं
130237 रूपमृच्छतीति वैपरीत्यांशेऽपि दृष्टान्त इत्यर्थः ॥ ७ ॥
130238
130239 ब्रह्मण्यनन्योऽप्यन्याभो दुर्घुणः क्वचिदुत्थितः ।
130240 तत्स्थः स एवास इवाप्यतत्स्थ इव सर्गकः ॥ ८ ॥
130241
130242 जीवः वज्जगदपि घुणवदेवोत्थितमित्याह - ब्रह्मणीति ॥ ८ ॥
130243
130244 विषं विषत्वमजहद्यथा स्वान्तः कृमिः क्रमात् ।
130245 न जायते न म्रियते म्रियतेऽपि च जायते ॥ ९ ॥
130246
130247 कृमौ विषस्वभावदृष्ट्या यथा जन्ममरणे न स्तो देहिस्वभावदृष्ट्या तु
130248 स्तस्तथा जीवेऽपि ब्रह्मस्वभावदृष्ट्या न स्तो जीवस्वभावदृष्ट्या तु स्त इत्याह -
130249 विषमिति द्वाभ्याम् ॥ ९ ॥
130250
130251 स्वेनैव संविदर्थेन पदार्थामग्नरूपिणा ।
130252 तीर्यते गोष्पदमिव न तु दैवाद्भवार्णवः ॥ १० ॥
130253
130254 देहेन्द्रियविषयपदार्थेष्वहंममतासक्त्या अमग्नरूपिणा अतिरोहितस्वरूपेण
130255 श्रवणादिप्रयत्ननिष्पादितस्वसाक्षात्कारसंवित्प्रयोजनभूतेन स्वेनैव तीर्यते न तु
130256 दैवं मां तारयिष्यतीति प्रयत्नोपेक्षयेत्यर्थः ॥ १० ॥
130257
130258 सर्वभावान्तरावस्था सर्वभावातिशायिनी ।
130259 अन्तःशीतलता यस्मिंस्तस्मिन्किमिव हेलनम् ॥ ११ ॥
130260

130261 सर्वदृश्यभावबाधपरिशिष्टे एकात्मस्वभावे परमदरिद्रे न
130262 विश्रान्तिसंभावनेति प्रसक्तामवहेलनां वारयति - सर्वेति। सर्वेषां
130263 प्रियतमभावानामान्तरी सारसुखरूपा अवस्था सर्वतापनिवृत्त्या अन्तःशीतललता
130264 यस्मिन् पूर्णात्मस्वभावे ॥ ११ ॥
130265
130266 जगत्पदार्थसत्तान्तः सामान्येनाशु भाविते।
130267 मनोहंकारबुद्ध्यादि कः कलङ्कोऽमलात्मनि ॥ १२ ॥
130268
130269 जीवस्य मनोहंकारादिकलङ्कानिवृत्तावुपायमाह - जगदिति। सामान्येन
130270 सन्मात्रब्रह्मरूपेण ॥ १२ ॥
130271
130272 यथा घटपटाद्यर्थान्पश्यस्येवं शरीरकम्।
130273 तथाहन्त्वमनोबुद्धिवेदनाद्यपि पश्य हे ॥ १३ ॥
130274
130275 यथा घटपटाद्यर्थास्तटस्थतया पश्यसि तथा प्रथमं तटस्थतया शरीरं
130276 पश्य नाहन्त्वाद्यभिमानेनेत्यर्थः ॥ १३ ॥
130277
130278 जगत्पदार्थसार्थौघमनोबुद्ध्यादि संस्थितम्।
130279 ज्ञ एवासंविदंस्तिष्ठ परिनिष्ठितनिष्ठया ॥ १४ ॥
130280
130281 तदनन्तरं ज्ञः सर्वसाक्षिरूप एव बहिर्जगत्पदार्थसार्थौघमन्तर्मनोबुद्ध्यादि
130282 च असंविदन् ज्ञप्तिमात्ररूपः परिनिष्ठितनिष्ठया स्वाभाविकस्थित्या तिष्ठ ॥ १४ ॥
130283
130284 न केनचित्कस्यचिदेव कश्चिद्दोषो न चैवेह गुणः कदाचित्।
130285 सुखेन दुःखेन भवाभवेन न चास्ति भोक्ता न च कर्तृता च ॥ १५ ॥
130286
130287 तस्यां स्थितौ सर्वगुणदोषादिविक्षेपहेतूपरमसिद्धिरित्याह - न केनचिदिति।
130288 तस्यां स्थितौ भवाभवेन संपदा विपदा तत्प्रयुक्तसुखेन दुःखेन च
130289 केनचिद्धेतुना कस्यचित्कदाचिदपि दोषो गुणश्च नास्ति। यतः कर्तृता नास्त्यतो भोक्ता
130290 च नास्ति। यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् इत्यादिश्रुतेरित्यर्थः ॥ १५ ॥
130291
130292 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मोक्षो० निर्वाणप्रकरणे उत्तरार्धे
130293 विद्याधरो० यथाभूतार्थवेदनं नामैकादशः सर्गः ॥ ११ ॥
130294
130295 इति श्रीवासिष्ठमहारामायणे तात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
130296 यथाभूतार्थवेदनं नामैकादशः सर्गः ॥ ११ ॥
130297
130298 द्वादशः सर्गः १२
130299
130300 भुशुण्ड उवाच।
130301
130302 ख एव व्योम संपन्नमिति संकल्पनं यथा।
130303 भ्रान्तिमात्रमसद्रूपं तथाहंभावभावनम् ॥ १ ॥
130304
130305 भ्रान्तिमात्रमहंभावश्चिद्विवर्तो जगद्भ्रमः।
130306 तस्य मूलमविद्येति तत्क्षयक्रम ईर्यते ॥
130307
130308 वक्ष्यमाणक्रमेण सहोच्छेदसिद्धये अविद्याया
130309 एवाहंभावलक्षणसूक्ष्मप्रपञ्चभावस्तस्यैव स्थूलप्रपञ्चरूपतेति
130310 सर्वकल्पनानां चिद्विवर्तमात्रतयैकतां दर्शयति - ख एवेत्यादिना। यथा खे
130311 व्योम्न्येवापरं व्योम संपन्नमुत्पन्नमिति मनसा संकल्पनमेकस्यैव व्योम्नो
130312 भेदभ्रान्तिमात्रं तथा अज्ञाते आत्मनि सूक्ष्मप्रपञ्चात्मनोऽहंभावस्य

130313 भावनं कल्पनमित्यर्थः ॥ १ ॥
130314
130315 खे खं जातमिति भ्रान्तेरहं कल्पयिता यथा ।
130316 तथा निर्व्यपदेश्यात्म सदस्त्यसदिवाततम् ॥ २ ॥
130317
130318 ननु दृष्टान्ते कल्पयिता पुरुषस्तृतीयोऽस्ति तत्र कस्तृतीयस्तमाह - खे खमिति ।
130319 निर्व्यपदेशि अविद्यापिहितत्वादसदिवाततमत एव शब्दादिना अव्यवहार्यमात्मरूपं
130320 सद्वस्त्वस्ति तृतीयं कल्पकमित्यर्थः ॥ २ ॥
130321
130322 खे खात्मैवास्ति चिद्रूपं तत्स्वकं बुध्यते वपुः ।
130323 भासते यदिदन्त्वेन नाहमस्मि न चानहम् ॥ ३ ॥
130324
130325 दृष्टान्ते यथा खे अद्वयः खात्मैवास्ति द्वितीयं तु खं कल्पकपुरुषस्य
130326 संकल्पावच्छिन्नचिद्रूपं स्वकं संकल्पात्मकं वपुरेव यथा कल्पयित्वा बुध्यते
130327 तथा यद्यस्मादविद्योपहितचिदात्मा स्वकं
130328 वपुरविद्यामेवाहमिदमित्यभिमन्त्रभिमन्तव्यरूपेण कल्पयित्वा भासते ततो नाहं
130329 नामाज्ञानादन्यदस्ति नाप्यनहंप्रपञ्चरूपमित्यर्थः ॥ ३ ॥
130330
130331 ततश्चिद्रूपमस्तीदृग्यत्र स्थूलं खमप्यलम् ।
130332 अणाविव महामेरुस्तत्संवित्तिर्हि खादिता ॥ ४ ॥
130333
130334 अत एव तत्परमसूक्ष्मं सर्वस्थूलकल्पनाधिष्ठानं ब्रह्मास्तीति परिचेयमित्याह ##-
130335
130336 घनस्ततोऽचिदाभासः खादप्यतितरामणुः ।
130337 जानाति यत्स्वभावं तदेतत्सर्गतया स्थितम् ॥ ५ ॥
130338
130339 परमसौक्ष्म्यं तस्योक्तमुपपादयति - घन इति ।
130340 खादाकाशादप्यतितरामणुरचिदाभासोऽज्ञानलक्षणोऽनादिविवर्तस्तत आत्मचितेः
130341 सकाशात् घनः स्थूल एव तत्तादृशं परमसूक्ष्मं
130342 चैतन्यमनाद्यहमिदमाकारवासनयोत्तरोत्तरस्थूलस्वभावकल्पनया जानाति । एतदेव
130343 सर्गतया आभासान्निरूढमित्यर्थः ॥ ५ ॥
130344
130345 अहन्ताखादितायात्मविदः प्रसरणं जगत् ।
130346 अम्भोद्रवप्रसरणं यथावर्तादिवेष्टनम् ॥ ६ ॥
130347
130348 आत्मविद आत्मचैतन्यस्याऽध्यात्ममहन्ताद्यधिलोकं तु खादिता पञ्चभूतता तदादि
130349 प्रसरणं विवर्तविस्तारो जगत्सर्गः ॥ ६ ॥
130350
130351 अचित्प्रसरणंन् शान्तमस्पन्दीव जलद्रवः ।
130352 निःस्पन्दपवनाकारमाकाशहृदयोपमम् ॥ ७ ॥
130353
130354 चित्प्रसरणस्याभावः अचित्प्रसरणं शान्तं जगदुपरमः प्रलय इति यावत् ॥ ७ ॥
130355
130356 न देशकालादिजगत्प्रसरेषु च युज्यते ।
130357 घनाच्छून्यान्निराभासाच्चिन्मात्रविसरादृते ॥ ८ ॥
130358
130359 एवं सिद्धस्य देशकालादिजगतोऽवान्तरकार्यसहस्रलक्षणेषु प्रसरेष्वपि
130360 चिन्मात्रप्रसरादृते अन्यत्पारमार्थिकं रूपं न युज्यते नोपपद्यते ॥ ८ ॥
130361
130362 चिन्मात्रे प्रसृते काले [काष्ठे इति पाठः ।] व्योम्नि नावि जले स्थले ।
130363 निद्रायां जाग्रति स्वप्ने भवेज्जगदिवोदितम् ॥ ९ ॥
130364

130365 तत्रोपपत्तिं दर्शयति - चिन्मात्रे इति। निद्रायां प्रसिद्धस्वप्ने जाग्रति प्रसिद्धे
130366 मनोराज्यादिस्वप्ने च॥ ९॥
130367
130368 प्रसरणाप्रसरणे न च संभवतो विदः।
130369 खादप्यत्यन्तस्वच्छत्वादक्षोभादेः सदैव हि॥ १०॥
130370
130371 चितो जगदाकारपरिणामलक्षणो वास्तवः प्रसर एव किं न स्यात्तत्राह -
130372 प्रसरणेति। क्षोभः संचलनं तदादिसर्वविकारशून्यत्वादित्यर्थः॥ १०॥
130373
130374 ज्ञश्चेतति न भोगादि न चैवात्मन्यसावहम्।
130375 द्रवत्वमम्भसीवान्तरद्वितीयः परे स्थितः॥ ११॥
130376
130377 ननु सुखदुःखभोगाद्यनुभवरूपा देहाद्यहंभावरूपाश्च विकाराश्चिदात्मनि
130378 दृश्यन्ते तत्राह - ज्ञ इति। परे कूटस्थस्वभावे। तथा च चिदाभासस्यैव
130379 भोगादिविभ्रमा न कूटस्थात्मन इति भावः॥ ११॥
130380
130381 धीर्ह्रीः श्रीर्भीः स्मृतिः कीर्तिः कान्तिरित्यादिकं गणं।
130382 न पश्यति विसंकल्पस्तमसीव पदान्यहेः॥ १२॥
130383
130384 उक्तेऽर्थे संकल्पादिमनोवृत्त्यन्वयव्यतिरेकदर्शनं प्रमाणमित्याह - धीरिति।
130385 श्रीश्चिन्तात्मकमनोवृत्तिः। श्रीः संपदभिमानलक्षणा हर्षात्मकमनोवृत्तिः।
130386 कीर्तिः स्वगुणख्यातिश्रवणजन्या तादृशवृत्तिः। कान्तिरिच्छा। सर्वत्र
130387 मनोवृत्तिबोधकैः पदैस्तद्धेतवो बाह्यविषया लक्ष्यन्ते॥ १२॥
130388
130389 ब्रह्मेन्दुबिम्बस्फुरितचिज्ज्योत्स्नांशामृतद्रवः।
130390 दिक्कालासंभवात्सर्गो नेश्वरादतिरिच्यते॥ १३॥
130391
130392 ब्रह्मलक्षणादिन्दुबिम्बात्स्फुरिता या जीवचिदाभासलक्षणज्योत्स्ना
130393 तदंशचाक्षुषादिज्ञानरूपं यदमृतं तदधीनसिद्धिकत्वात्तद्द्रवप्रायः सर्ग
130394 ईश्वराद्ब्रह्मणो नातिरिच्यते। कुतः। तदाधारयोर्दिक्कालयोर्निरवयवे निष्क्रिये च
130395 ब्रह्मण्यसंभवात्। सत्यां हि दिशि मूर्तद्रव्यस्य क्रियया सर्गकालः कल्प्येत। न च
130396 सा प्रागस्ति। एवं सति काले दिगाद्युत्पत्तिः कल्प्येत। न च प्रलये सोऽस्ति। क्रियातिरिक्तस्य
130397 तत्साधकस्याभावात्। पूर्णे कूटस्थे क्रियाऽयोगात्। न च तयोरसतोः
130398 कस्यचिदन्यस्यावकाशोऽस्तीति न ब्रह्म व्यतिरिक्तसिद्धिरित्यर्थः॥ १३॥
130399
130400 आधिमान्यः स्फुरत्येवं परे स्फुरति भासुरम्।
130401 जगदाद्यात्मकं चित्तं चक्रौघत्वमिवाम्भसि॥ १४॥
130402
130403 परे परमेश्वरे एवं वर्णितदिशा स्वाभिन्नजगदाकारे भासुरं यथा स्यात्तथा
130404 सर्वसाधारणसच्चिदानन्दात्मना स्फुरति सति क्वचिदेव देहादौ विशेषाभिमानेन
130405 तदनुकूलप्रतिकूलेषु हेयोपादेयतादिकल्पनेन आधिमान्योऽहंकारात्मा अन्य इव स्फुरति
130406 तत्सर्वजगज्जीवबन्धमोक्षादिकल्पनात्मकमम्भसि चक्रावर्तौघ इव कल्पितं
130407 भ्रान्तं चित्तमेव नाणुमात्रमप्यन्यदस्तीत्यर्थः॥ १४॥
130408
130409 मज्जनोन्मज्जनारावैर्विवर्तावर्तवेष्टनैः।
130410 अच्छिन्नानुपदं क्षीणा भाति सर्गसरिच्चिरम्॥ १५॥
130411
130412 दृष्टान्तदार्ष्टान्तिके रूपकेणैकीकृत्योपपादयति - मज्जनेति। अनुपदं
130413 सद्यस्तत्त्वसाक्षात्कारात् क्षीणा सर्गलक्षणा मरीचिसरित्॥ १५॥
130414
130415 यथावर्तैः पयो भाति धूमो भाति यथा घनः।
130416 तथा जडात्मकतया तृतीयः सर्ग एतयोः॥ १६॥

130417
130418 दूराद्धूमराशिर्यथा घनो निबिडो मेघो वा भाति। एतयोर्ब्रह्ममनसोस्तृतीयः
130419 सर्गो विषयत्वाज्जडात्मकतया सत्यतया स्फुरणादजडात्मकतया च भातीति शेषः॥
130420 १६॥
130421
130422 दारुणि क्रकचच्छेदे यथावर्तादिकं तथा।
130423 अदिगादौ परे सर्गस्तदतद्रूपवानयम्॥ १७॥
130424
130425 तदतद्रूपवान् जडाजडरूपवान्॥ १७॥
130426
130427 संसारकदलीस्तम्भाद्विना संकल्पपल्लवम्।
130428 मृदुनोऽपि दृषत्क्रूरान्न किंचिल्लभतेऽन्तरम्॥ १८॥
130429
130430 स्वतो मिथ्यात्वान्मृदुनोऽप्यधिष्ठानसत्तया दृषदिव
130431 क्रूराद्दृढात्स्फटिकशिलाप्रतिबिम्बितकदलीस्तम्भादन्तरमसाम्यं न
130432 किंचिद्विवेकदृशा लभते। संकल्पकल्पितपल्लववैलक्षण्यकृतमेव
130433 वैसादृश्यंन् नान्यदित्यर्थः॥ १८॥
130434
130435 सहस्रखुरमूर्धाक्षिकरवक्त्रेहितोहितम्।
130436 नानाद्रितनुदिग्देशसरित्प्रादेशमात्रकम्॥ १९॥
130437
130438 इदानीं जगत्पटलिखितचित्रराज्यसादृश्येन वर्णयति - सहस्रेत्यादिचतुर्भिः।
130439 सहस्रसंख्यानि करादिवक्रान्तानि तदीहितानि तदिङ्गितानि च ऊहितानि वितर्कितानि यत्र।
130440 नानाविधा अद्रयस्तनवश्चतुर्विधशरीराणि दिशो देशाः सरितश्च प्रादेशमात्रमिव
130441 परिच्छिन्ना यत्र॥ १९॥
130442
130443 अन्तःशून्यमसारात्म बहुरागोपरञ्जितम्।
130444 स्फुरद्विरागविहितमार्जनामात्रतर्जनम्॥ २०॥
130445
130446 अन्तःशून्यमवस्तु आन्तरावयवशून्यं च। बहुभिः रागैः कामै
130447 रञ्जकद्रव्यैश्चोपरञ्जितम्। विरागो वैराग्यं विरुद्धवर्णंन् मार्जनद्रव्यं च
130448 तद्विहितमार्जनामात्रमेव तर्जनं निरासो यस्य॥ २०॥
130449
130450 ससुरासुरगन्धर्वविद्याधरमहोरगम्।
130451 जडात्मपवनस्पन्दि परचेतनचेतितम्॥ २१॥
130452
130453 जडात्मना पवनेन सूत्रात्मना प्रसिद्धवायुना च स्पन्दनशीलम्। परेण
130454 ब्रह्मचेतनेन द्रष्टृचेतनेन च चेतितम्॥ २१॥
130455
130456 पटे चित्रमहाराज्यमिव भासुरसुन्दरम्।
130457 परामर्शासहं चारु विकल्पस्फूर्जितं जगत्॥ २२॥
130458
130459 परामर्शो विचारः परेण आमर्श उपमर्दश्च तदसहम्॥ २२॥
130460
130461 स्पन्दात्मनि विकल्पांशे पतिताऽसत्यरूपिणि।
130462 संवित्प्रसरति भ्रान्तौ तैलबिन्दुरिवाम्भसि॥ २३॥
130463
130464 विकल्पांशे विकल्पवृत्तौ मनसि प्रतिबिम्बभावेन पतिता
130465 अर्थशून्यत्वाद्बाध्यत्वाच्चासत्यरूपिणि॥ २३॥
130466
130467 हृल्लेखाजालविसरैः सर्वावर्तविवर्तनैः।
130468 विसरत्स्नेहसंमिश्रजडानुदयचर्वणैः॥ २४॥

कथं प्रसरति तदाह - हृल्लेखेति | हृदयं मनो लिखन्ति क्षोभयन्तीति
कृल्लेखाः कामवासनास्तल्लक्षणस्य जालस्यानायस्य विसरैः समूहैर्निबद्धा |
पुत्रकलत्रादिषु विसरता स्नेहेन संमिश्रं यथा स्यात्तथा जडा मिथ्यात्वादनुदया
अनुत्पन्ना एव ये शब्दस्पर्शादयोऽर्थास्तेषां चर्वणैरास्वादनैः प्रसरति स एव
चित्रमहाराज्यत्वेन वर्णितः संसार इत्यर्थः || २४ ||

अहमित्यादिचिद्रूपे विकल्पेनोन्मुखी सती |
न पराद्यतिरिक्तैषा जलत्वादिव तोयता || २५ ||

एवंरीत्या एषा आदिचित् अहमिति विकल्पेनोन्मुखी बहिर्मुखी जीवभावमिवापन्ना सत्यपि न
परात्परमात्मनो व्यतिरिक्ता | भेदकोपाधीनां विकल्पमात्रत्वे
जीवपरशब्दयोर्जलतोयशब्दवदेकार्थपर्यवसानादिति भावः || २५ ||

चिदादित्यः स्व आत्मैव सर्ग इत्यभिधीयते |
भूत्वाहमिति तेनान्यो न न सर्गोऽस्ति न सर्जकः || २६ ||

उपाध्यनुप्रवेशेन नामरूपव्याकर्तुरहमर्थजीवस्य ब्रह्ममात्रत्वे
तद्भोग्यसर्गशब्दार्थोऽपि ब्रह्ममात्रं संपन्न इत्याह - चिदादित्य इति || २६ ||

स्पन्दात्मिकायांन् सत्तायां यथा स्पन्दो जलद्रवः |
तथा चिदात्मा व्योमत्वे न व्योमत्वादि वेत्ति हि || २७ ||

जगतो राहुशिरोवच्चिद्विकल्पमात्रतामविद्यामात्रतापर्यवसानाय
दृष्टान्तेनोपपादयति - स्पन्दात्मिकायामिति | जलं स्पन्दते इत्यत्र विचार्यताम् |
किं जलमेव स्पन्दात्मना आस्ते उतान्यत् | न द्वितीयः | अन्यस्यानुपलम्भात् | अन्य एव
स्पन्दत इति हि तदा स्यात् स्पन्दस्य जलापेक्षानियमाभावप्रसङ्गाच्च | न च
समवायात्तन्नियमस्तस्य संबन्धानवस्थया असिद्धेः | आद्ये तु कल्पे जलस्य
स्पन्दकर्तृत्वानुपपत्तिः | न हि स्पन्दात्मा स्पन्दं करोति स्पन्दस्यापि कर्तृत्वापत्तेः
| तस्माज्जलद्रवो यथा स्पन्दात्मिकायां स्वसत्तायामस्पन्द एवेति
स्पन्दप्रत्ययोविकल्पमात्रं तथा चिदात्मा व्योमादिप्रपञ्चनिर्माणेपि न व्योमत्वे
स्थितो न व्योमकर्तेति न स्वस्यान्यस्य वा व्योमभावादिकं वेदितुं शक्नोतीति
जलद्रवभेदविकल्पवद्विकल्पमात्रमेव तदित्यर्थः || २७ ||

देशकालादिनिर्माणपूर्वकं वेदनं विदः |
सर्गात्मकत्वात्तेनाम्बुद्रवसाम्यं न दूरगम् || २८ ||

ननु जलद्रवभेदविकल्पे देशकालभेदो नियामकोऽस्ति | पूर्वकाले पूर्वदेशे स्थितं
जलमुत्तरकाले परदेशे उपलभ्यते | उत्तरदेशप्राप्तिस्तत्क्रियापूर्विकैव शरादौ
कॢप्तेति जलेपि द्रवणक्रियाभेदः कल्प्यते | ब्रह्मणि त्वद्वये न देशकालभेदोऽस्तीति न
वियदादिभेदविकल्पे निमित्तमस्तीत्यम्बुद्रवसाम्यं दूरापास्तमिति शङ्कां
समाधत्ते - देशेति | किमयं वियदादिसर्गविकल्पासंभवः
सर्गात्मकत्वदशायामाक्षिप्यते उत ब्रह्मदशायाम् | द्वितीये इष्टापत्तिः | न हि वयं
ब्रह्मभावे कंचिद्विकल्पमङ्गीकुर्मः | सर्गात्मकत्वदशायां तु अयं सर्गकालः
प्राक् प्रलयकाल इति कालविभागं संसारासंसारदेशभेदं च कल्पनया निर्माय
तत्र विदश्चिदात्मनो वियदादिविकल्पवेदनं वर्णयाम इति नाम्बुद्रवसाम्यं
दूरगमित्यर्थः | तथा चोक्तं वार्तिके अविद्यास्तीत्यविद्यायामेवासित्वा प्रकल्प्यते |
ब्रह्मदृष्ट्या त्वविद्येयं न कथंचन युज्यते || इति || २८ ||

मनोहंभावबुद्ध्यादि यत्किंचिन्नाम वेदनम् |
अविद्यां विद्धि यत्नेन पौरुषेणाशु नश्यति || २९ ||

130521 देशकालभेदनिर्माणस्यापि देशकालान्तरसापेक्षत्वादनवस्था। एवं विकल्पानां
130522 मनोहंभावबुद्ध्यादिसाध्यत्वाद्वियदादिसर्गभेदविकल्पकाले
130523 तेषामसिद्धत्वात्कथं विकल्पनेत्याद्याशङ्का अपि अनुपपत्त्यादिदोषसहस्रभाजना
130524 विद्यामात्रत्वाभ्युपगमादेव परिहर्तव्या इत्याशयेनाह - मन इति॥ २९॥
130525
130526 अर्धं मिथःसंकथया भागः शास्त्रविचारणैः।
130527 आत्मप्रत्ययतः शिष्टमविद्याया निवर्तते॥ ३०॥
130528
130529 केन केन पौरुषेण कियती सा नश्यति तदाह - अर्धमिति।
130530 विनयप्रणतिदानसन्मानादिवशीकृतैस्तत्त्वविद्भिः सह
130531 संकथनात्प्रथमभूमिकाप्रतिष्ठापर्यन्तमभ्यस्तयोत्कटवैराग्यादि##-
130532 नश्यतीत्यर्थः। शास्त्रविचारणैः श्रवणादिभिः प्रमाणप्रमेयासंभावनादिरूपो
130533 देहादिष्वहंतारूपश्चाविद्याया विक्षेपशक्तिरूपो भागश्चतुर्थांशो नश्यति।
130534 आत्मप्रत्ययतो
130535 ब्रह्मात्मभावसाक्षात्काराच्चतुर्थभूमिकामारभ्योत्तरोत्तरमुपचीयमानात् शिष्ट
130536 आवरणशक्तिरूपश्चतुर्थभागश्चारुणोदयोत्तरं तम इव क्रमानिवर्तत इत्यर्थः॥
130537 ३०॥
130538
130539 चतुर्भागात्मनि कृते इत्यविद्याक्षये क्रमात्।
130540 समकालाच्च यच्छिष्टं तदनामार्थसन्मयम्॥ ३१॥
130541
130542 इति प्राग्दर्शितप्रकाराद्भूमिकाभ्याससमकालात्क्रमादविद्याक्षये कृते सति
130543 यच्छिष्टं तन्नामरूपरहितं सन्मात्रमेव परमपुरुषार्थ इत्यर्थः॥ ३१॥
130544
130545 श्रीराम उवाच।
130546
130547 अर्धं मिथःसंकथया भागः शास्त्रविचारणैः।
130548 आत्मप्रत्ययतो भागः कथं तस्या निवर्तते॥ ३२॥
130549
130550 संक्षेपोक्तं विस्तरेण जिज्ञासू रामः पृच्छति - अर्धमित्यादिना॥ ३२॥
130551
130552 समकाले क्रमाच्चेति मुनिनाथ किमुच्यते।
130553 तदनामार्थसच्चेति सच्चासच्चेति किं वद॥ ३३॥
130554
130555 अनामार्थसन्मयमित्यत्र मयटा असदंशस्यापि क्रोडीकारात्सच्चासच्चेत्युक्तम्।
130556 तत्रासदंशः किं तद्वदेत्यर्थः॥ ३३॥
130557
130558 श्रीवसिष्ठ उवाच।
130559
130560 सुजनेन विरक्तेन संसारोत्तरणार्थिना।
130561 सह चाप्यात्मविदुषां संसृतिं प्रविचारयेत्॥ ३४॥
130562
130563 प्रश्नक्रमाद्वसिष्ठ उत्तरमाह - सुजनेनेति। आत्मविदुषा सह
130564 चशब्दादपिशब्दाच्चान्येनापि मुमुक्षुणा सह स्वबुद्ध्या च संसृतिं केयं
130565 किंपर्यवसाना किंमूला किंसारा कथमुत्तरणीयेति च प्रविचारयेत्॥ ३४॥
130566
130567 यतः कुतश्चिदन्विष्य सविरागममत्सरम्।
130568 जनं सज्जनमात्मज्ञं यत्नेनाराधयेद्बुधः॥ ३५॥
130569
130570 संपन्ने संगमे साधोरविद्यार्धं क्षयं गतम्।
130571 विद्धि वेद्यविदां श्रेष्ठ ज्येष्ठश्रेष्ठदशोदयात्॥ ३६॥
130572

130573 इतरभूमिकाभ्यो ज्येष्ठा साधनचतुष्टयसंपत्त्या च श्रेष्ठा या
130574 प्रथमभूमिकाप्रतिष्ठा दशा तदुदयादित्यर्थः ॥ ३६ ॥
130575
130576 अर्धं सज्जनसंपर्कादविद्याया विनश्यति ।
130577 चतुर्भागस्तु शास्त्रार्थैश्चतुर्भागं स्वयत्नतः ॥ ३७ ॥
130578
130579 चतुर्भागं चतुर्थभागम् । स्वयत्नतो नाशयेदिति शेषः ॥ ३७ ॥
130580
130581 एकोऽभिलाष उत्पन्नो भोगेभ्यश्च निवार्यते ।
130582 तत्क्षये यात्यविद्यायाश्चतुर्थांशः स्वयत्नतः ॥ ३८ ॥
130583
130584 तत्राद्यमुपपादयति - एक इति । एक उत्कटमुमुक्षालक्षणोऽभिलाष
130585 उत्पन्नश्चेदयंन् पुरुषो वैराग्यादिसंपदा भोगेभ्यस्तत्साधनेभ्यश्च निवार्यते ।
130586 अवश्यं निर्ममः संन्यस्यतीत्यर्थः ॥ ३८ ॥
130587
130588 साधुसङ्गमशास्त्रार्थस्वयत्नैः क्षीयते मलम् ।
130589 एकैकेनाथ सर्वैश्च तुल्यकालं क्रमादपि ॥ ३९ ॥
130590
130591 युगपत्प्राप्तौ तुल्यकालम् । क्रमात्प्राप्तौ क्रमादपि ॥ ३९ ॥
130592
130593 यदविद्याक्षयैकात्म न किंचित्किंचिदेव च ।
130594 शिष्यते तत्परं प्राहुरनामार्थमसच्च सत् ॥ ४० ॥
130595
130596 पञ्चमप्रश्नस्याप्युत्तरमाह - यदिति । अर्थक्रियाव्यवहारानर्हत्वादसत्
130597 अबाध्यपरमपुरुषार्थत्वात्सच्चेत्यर्थः ॥ ४० ॥
130598
130599 ब्रह्मेदं घनमजराद्यनन्तमेकं संकल्पस्फुरणमविद्यमानमेव ।
130600 बुद्ध्वैवं व्यपगतमानमेयमोहो निर्वाणं परिविहरन्विशोकमास्स्व ॥ ४१ ॥
130601
130602 हे राम इदं परिशिष्टवस्तु आनन्दैकघनं जरादिविकारशून्यंन् ब्रह्मैव ।
130603 जीवजगद्रूपं तु संकल्पो विकल्पस्तत्स्फुरणमात्रमित्यविद्यमानमेव ।
130604 त्वमेवमात्मानात्मतत्त्वं बुद्ध्वा व्यपगतमानादित्रिपुटीमोहः सन् निर्वाणं
130605 ब्रह्मैव भूत्वा निरतिशयबृहत्त्वादेव परितो व्याप्त्या विहरन् सन् विशोकमास्स्व
130606 तिष्ठेत्यर्थः ॥ ४१ ॥
130607
130608 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मी० दे० मो० निर्वाणप्रकरणे उ० वि०
130609 संकल्पसर्गयोरैक्यप्रतिपत्तिर्नामद्वादशः सर्गः ॥ १२ ॥
130610
130611 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
130612 सङ्कल्पसर्गयोरैक्यप्रतिपत्तिर्नाम द्वादशः सर्गः ॥ १२ ॥
130613
130614 त्रयोदशः सर्गः १३
130615
130616 भुशुण्ड उवाच ।
130617
130618 जगत्प्रसररूपस्य न देश उपयुज्यते ।
130619 न कालो धारणे स्तम्भ आलोकस्याम्बरे यथा ॥ १ ॥
130620
130621 मायाकार्ये न देशादेरपेक्षेत्यत्र वर्ण्यते ।
130622 इन्द्रस्याणूदरे राज्यकल्पनाख्यानविस्तरः ॥
130623
130624 देशकालादिनिर्माणपूर्वकं वेदनं विदुः । सर्गात्मकत्वात् इति यदुक्तं

130625 तस्योपपादनायेन्द्रत्रसरेण्वाख्यानं वक्तुं भूमिकां रचयति - जगदित्यादिना।
130626 देशकालादिनिर्माणपूर्वकं वेदनमित्यङ्गीकृत्यवादः। वस्तुतस्तु
130627 दृष्टसृष्ट्या युगपदेव सह देशकालाभ्यां जगत्प्रसररूपस्य मायिकसर्गस्य
130628 धारणेन प्राक्सिद्धो देश उपयुज्यते। यथा अम्बरे युगपत्प्रसृतस्यालोकस्य धारणे
130629 स्तम्भो नोपयुज्यते तद्वदित्यर्थः॥ १॥
130630
130631 मनोमनननिर्माणमात्रमेतज्जगत्त्रयम्।
130632 शान्तं तनु लघु स्वच्छं वातान्तः सौरभादपि॥ २॥
130633
130634 वातान्तः प्रसृतमतिसूक्ष्मत्वाद्वातेनापि धारयितुं कम्पयितुं चाशक्यं
130635 यत्सौरभं ज्योतिः सौरभं सौगन्ध्यंन् च तस्मादपि शान्तं तिरोभूतं तनु
130636 सूक्ष्मं लघु अगुरु स्वच्छं चेत्यर्थः॥ २॥
130637
130638 चिच्चमत्कृतिमात्रस्य साधो जगदणोः किल।
130639 वातान्तः सौरभं मेरुरन्यानुभवयोगतः॥ ३॥
130640
130641 हे साधो चिच्चमत्कृतिमात्रत्वेन दृष्टस्य जगदणोरपेक्षया
130642 वातान्तर्गतसौरभमपि मेरुरिव स्थूलं किल। अन्यानुभवयोगतः अन्यैरपि
130643 चक्षुर्घ्राणादिसंयोगेनानुभूयमानत्वादित्यर्थः॥ ३॥
130644
130645 यंन् प्रयुदेति सर्गोयं स एवैनं हि चेतति।
130646 पदार्थः संनिवेशं स्वमिव स्वप्नं पुमानिव॥ ४॥
130647
130648 दृष्टसृष्टिरूपस्य प्रपञ्चस्य तु न
130649 स्वकल्पकदृगन्यगोचरतेत्यसाधारणत्वात्परमसौक्ष्म्यमित्याह - यं प्रतीति।
130650 यथा मानोरथिकपदार्थः स्वसंनिवेशं स्वसाक्षिणा स्वयमेव चेतति। यथा पुमान्
130651 स्वस्वप्नं स्वयमेव चेतति तद्वदित्यर्थः॥ ४॥
130652
130653 अत्रैवोदाहरन्तीममितिहासं पुरातनम्।
130654 यद्वृत्तं देवराजस्य त्रसरेणूदरे पुरा॥ ५॥
130655
130656 अत्र अस्मिन्पूर्वसिद्धदेशकालानपेक्षारूपे अनन्यानुभवगोचरतया
130657 परमसौक्ष्म्यरूपे चार्थे उपपादकम्॥ ५॥
130658
130659 क्वचित्कदाचित्कस्मिंश्चित्किंचित्कल्पद्रुमेऽभवत्।
130660 कस्यांचिद्युगशाखायां फलं जगदुदुम्बरम्॥ ६॥
130661
130662 कश्चिच्चासौ कल्पद्रुमश्च किंचित्कल्पद्रुमस्तस्मिन्। सर्वकल्पनाफलाधारे
130663 मायाशबले ब्रह्मणीति यावत्। युगशाखायां शाखाद्वयसंधौ।
130664 जगद्ब्रह्माण्डस्तद्रूपमुदुम्बरं फलम्॥ ६॥
130665
130666 ससुरासुरभूतौघमशकाहितघुंघुमम्।
130667 शैलमांसलपातालद्युभूम्युग्रकपाटकम्॥ ७॥
130668
130669 तद्वर्णयति - ससुरासुरेत्यादिना। शैलैः कीलस्थानीयैर्मांसलानि दृढानि
130670 पातालादिलोकत्रयलक्षणानि उग्राणि दुराधर्षाणि कपाटानि यत्र।
130671 यद्यप्युदुम्बररूपकेन्तःकपाटवर्णनमनुपयुक्तं तथापि
130672 कल्पवृक्षफलोदुम्बरफलकल्पकमनोवृत्त्यनुसारित्वेन
130673 प्रसिद्धवैलक्षण्यकल्पनया कथंचिद्योज्यम्॥ ७॥
130674
130675 चिच्चमत्कृतिचारूच्चैर्वासनारसपीवरम्।
130676 विविधानुभवामोदं चित्तास्वादमनोहरम्॥ ८॥

130677
130678 चितश्चमत्कृत्या रचनाशक्तिवैचित्र्येण चारु। उच्चैर्बृहत्॥ ८॥
130679
130680 बृहद्ब्रह्मतरुप्रौढसत्ताव्रततिकोटिगम्।
130681 अहंकारमहावृन्तं समालोकसमुज्ज्वलम्॥ ९॥
130682
130683 बृहन् प्राग्वर्णितो यो ब्रह्मतरुरुदुम्बरस्तस्मिन्प्रौढा आविर्भूता याः
130684 सूक्ष्मजगत्सत्ताव्रततिकोटयस्तदन्तर्गतम्। सम आलोकः साक्षिचित् तेन समुज्ज्वलम्॥ ९॥
130685
130686 मोक्षद्वारविकास्यास्यं सरिदब्धिशिरावृतम्।
130687 मात्रापञ्चककोशस्थं तरत्तारकसीकरम्॥ १०॥
130688
130689 मोक्षद्वारं ज्ञानमेव विकासि आस्यं मुखं यस्य। मात्रास्तन्मात्राणि। तरन्ति
130690 ऊर्ध्वं प्लवमानानि तारकाण्येव सीकरा रसकणा नीहारकणा वा यत्र॥ १०॥
130691
130692 कल्पावसानजरठं काककोकिलगाम्यथ।
130693 पतितं शान्तिमायातं क्वाप्यन्तावासनं गतम्॥ ११॥
130694
130695 महाकल्पावसाने जरठं पक्वं पातोन्मुखम्। अथ तदनन्तरं काकगामि
130696 कोकिलगामि वा। यथा प्रसिद्धोदुम्बरमन्ते काकैः कोकिलैर्वा भक्ष्यते
130697 तद्वदसच्छास्त्रकटुरवानुसारिण्या अविद्याकाक्या शास्त्रमधुररवानुसारिण्या
130698 विद्याकोकिलया वा ग्रस्यमानं क्वापि अन्तं वासनामात्रशेषलक्षणंन्
130699 नाशमवासनं ब्रह्मभावं वा आगतं भविष्यतीत्यर्थः॥ ११॥
130700
130701 तत्राभूदमराधीशः शक्रस्त्रिभुवनेश्वरः।
130702 क्षौद्रकुम्भनिषण्णानां क्षुद्राणामिव नायकः॥ १२॥
130703
130704 तत्र तस्मिन्नुदुम्बरे। क्षुद्राणां मधुमशकानाम्॥ १२॥
130705
130706 गुरूपदेशस्वाभ्यासात्स क्षीणावरणोऽभवत्।
130707 महात्मा भावितान्तात्मा पूर्वापरविदां वरः॥ १३॥
130708
130709 भावितः अन्तःसर्वकल्पनावधिरात्मा येन॥ १३॥
130710
130711 नारायणादिषु ततः कदाचिद्वीर्यशालिषु।
130712 क्वचिदेव निलीनेषु सत्स्वेकः ससुराधिपः॥ १४॥
130713
130714 शस्त्रज्वालानलोद्गारैरयुध्यत महासुरैः।
130715 विजितस्तैर्महावीर्यैरतो व्यद्रवदाद्रुतम्॥ १५॥
130716
130717 शस्त्रज्वालानलानुद्गिभ्रतीति शस्त्रज्वालानलोद्गाराः। कर्मण्यण्। कृद्ग्रहणे
130718 गतिकारकपूर्वस्यापि ग्रहणादुपपदसमासः। आसमन्ताद्द्रुतं शीघ्रम्॥ १५॥
130719
130720 दिशो दश सुवेगेन दुद्रावाभिद्रुतोऽरिभिः।
130721 न विश्रामास्पदं प्राप परलोक इवाधमः॥ १६॥
130722
130723 सुवेगेन अतिजवेन। अधमः पापकृत्॥ १६॥
130724
130725 तद्भ्रान्तदृष्टिष्वरिषु मनाक् छिद्रमवाप्य सः।
130726 प्रशमं कायसंकल्पं नीत्वा स्वं स्वान्तरे बहिः॥ १७॥
130727
130728 अरिषु मनागू भ्रान्तदृष्टिषु सत्सु। तत् तदा। छिद्रं निलयनावसरम्। कायाकारं

130729 स्थूलाकारसंकल्पं स्वान्तरे भूतसूक्ष्मे प्रशमं नीत्वा विलाप्याणुतरो भूत्वा
130730 बहिः कमपि त्रसरेणुं विवेशेति परेणान्वयः ॥ १७ ॥
130731
130732 कमप्यर्कांशुकोशस्थं त्रसरेणुं विवेश सः ।
130733 संविद्रूपतया पद्मकोशं मधुकरो यथा ॥ १८ ॥
130734
130735 तदन्तःप्रवेशसंकल्पसंविद्रूपतया ॥ १८ ॥
130736
130737 स तत्राशु विशश्राम चिरादाश्वासमाययौ ।
130738 अथ विस्मृतसंग्रामो निवृत्तिं समुपागमत् ॥ १९ ॥
130739
130740 निवृत्तिं बहिर्गमनाभावम् । अनिवृत्तिमिति वा छेदः ॥ १९ ॥
130741
130742 कल्पितं सद्म तत्राथ स क्षणादनुभूतवान् ।
130743 तस्मिन्सद्मनि पद्मान्ते रेमे स्व इव विष्टरे ॥ २० ॥
130744
130745 पद्मान्ते पद्मासनमध्ये । स्वे स्वलोकप्रसिद्धे विष्टरे सिंहासन इव ॥ २० ॥
130746
130747 गृहस्थः स ददर्शाथ कल्पितं नगरं हरिः ।
130748 मणिमुक्ताप्रवालादिकृतप्राकारमन्दिरम् ॥ २१ ॥
130749
130750 नगरान्तर्गतोऽपश्यत्ततो जनपदं हरिः ।
130751 नानाद्रिग्रामगोकाटपत्तनारण्यराजितम् ॥ २२ ॥
130752
130753 गोवाटा व्रजाः ॥ २२ ॥
130754
130755 तादृग्प्रतिश्चेतितवान्सश्रक्रो भुवनं ततः ।
130756 साद्यब्ध्युर्वीनदीशान्तं सक्रियाकालकल्पनम् ॥ २३ ॥
130757
130758 तादृग्प्रतिस्तादृशसंकल्पोपहितः । भुवनं भूलोकम् । नद्यः ईशा राजानः
130759 अन्तास्तत्तद्देशसीमास्तैः सह वर्तमानम् ॥ २३ ॥
130760
130761 तादृग्प्रतिश्चेतितवान्स शक्रस्त्रिजगत्ततः ।
130762 सपातालमहीव्योमविष्टपार्कादिपर्वतम् ॥ २४ ॥
130763
130764 अथ तत्र सुरेशत्वे अतिष्ठदित्यपकृष्यान्वयः ॥ २४ ॥
130765
130766 तत्रातिष्ठत्सुरेशत्वे स भोगभरभूषितः ।
130767 पुत्रो बभूव तस्याथ कुन्दो नामाथ वीर्यवान् ॥ २५ ॥
130768
130769 ततो जीवितपर्यन्ते त्यक्त्वा देहमनिन्दितः ।
130770 निर्वाणमाययौ शक्रो निःस्नेह इव दीपकः ॥ २६ ॥
130771
130772 कुन्दस्त्रैलोक्यराजोऽभूज्जनयित्वा सुतं निजम् ।
130773 कालेन जीवितस्यान्ते जगाम परमं पदम् ॥ २७ ॥
130774
130775 तत्पुत्रोऽपि तथैवाथ कृत्वा राज्ये सुतं निजम् ।
130776 जगाम जीवितस्यान्ते पावनं परमं पदम् ॥ २८ ॥
130777
130778 एवं पौत्रसहस्राणि समतीतानि सुन्दर ।
130779 तत्राद्यापि सुरेशस्य येषां राज्ये स्थितोंऽशकः ॥ २९ ॥
130780

130781 तस्य सुरेशस्य पौत्रसहस्राणि येषां राज्ये अद्याप्यंशको नाम राजा स्थितः ॥ २९ ॥
130782
130783 इत्यद्ययावदमरेश्वरवंश एव संकल्पिते जगति शक्रपदं विधत्ते ।
130784 तस्मिन्क्षतेऽपि गलितेऽपि हतेऽपि नष्टे क्वाप्यम्बरे दिनकरातपपावनाणौ ॥ ३० ॥
130785
130786 इति वर्णितदिशा अद्ययावत् अद्यतनकालपर्यन्तं तत्संकल्पिते त्रसरेण्वन्तरे जगति
130787 तद्वंश एव अमरेशपदं शक्रराज्यं विधत्ते पालयति ।क्वाप्यम्बरप्रदेशे तस्मिन्
130788 दिनकरातपपावने अणौ त्रसरेणौ क्षते अपचिते गलिते नष्टेऽपि हि तद्राज्यं न
130789 गलितमित्यर्थः ॥ ३० ॥
130790
130791 इत्यार्षे श्रीवा० वा० दे० मो० नि० उ० विद्याधरोपाख्यानान्तर्गतेन्द्रोपाख्याने
130792 त्रसरेण्वन्तरसर्गसंघवर्णनं नाम त्रयोदशः सर्गः ॥ १३ ॥
130793
130794 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
130795 त्रसरेण्वन्तरसर्गसंघवर्णनं नाम त्रयोदशः सर्गः ॥ १३ ॥
130796
130797 चतुर्दशः सर्गः १४
130798
130799 भुशुण्ड उवाच ।
130800
130801 तस्य शक्रस्य कुलजः कश्चिदासीत्सुराधिपः ।
130802 तत्रोत्तमगुणः श्रीमान्पाश्चात्या यस्य सा तनुः ॥ १ ॥
130803
130804 तत्कुलोत्पन्नशक्रस्य बिसतन्तौ जगत्प्रथा ।
130805 तत्रोच्यते ब्रह्मदृष्टौ सर्वदृष्ट्या खशक्रता ॥
130806
130807 तस्य प्रागुक्तस्य शक्रस्य कुलजो वंशोद्भवः ॥ १ ॥
130808
130809 अथेन्द्रकुलपुत्रस्य तस्य तत्र बभूव ह ।
130810 प्रतिभाज्ञानसंप्राप्तिर्बृहस्पतिगिरोदिता ॥ २ ॥
130811
130812 तस्य तत्र बृहस्पतेः खगुरोरुपदेशगिरा उदिता प्रतिभानं प्रतिभा
130813 आत्मतत्त्वसाक्षात्कारस्तद्रूपज्ञानसंप्राप्तिर्बभूवेति शेषः ॥ २ ॥
130814
130815 ततो विदितवेद्योऽसौ यथाप्राप्तानुवृत्तिमान् ।
130816 चकार जगतां राज्यमाज्यपानामधीश्वरः ॥ ३ ॥
130817
130818 आज्यपानां देवानाम् ॥ ३ ॥
130819
130820 युयुधे दानवैः सार्धमजयत्सर्वशात्रवान् ।
130821 शतं चकार यज्ञानामज्ञानोत्तीर्णमानसः ॥ ४ ॥
130822
130823 यज्ञानामश्वमेधानाम् । तस्य हि फलं तस्य वक्ष्यमाणबिसतन्तावेतद्ब्रह्माण्डे
130824 च शक्रताप्राप्तिरिति भावः ॥ ४ ॥
130825
130826 उवास कार्यवशतो बिसबालान्तरे चिरम् ।
130827 अन्यान्यपि च वृत्तान्तशतान्यनुबभूव ह ॥ ५ ॥
130828
130829 बिसस्य पद्मनालस्य बालतन्तुस्तदन्तरे । तत्र बिसतन्तौ कल्पिते ब्रह्माण्डे
130830 राज्ययुद्धजयपराजयादीन्यन्यान्यपि वृत्तान्तशतान्यनुबभूव ह किल ॥ ५ ॥
130831
130832 कदाचिदासीत्तस्येच्छा प्रबोधबलशालिनः ।

ब्रह्मतत्त्वमवेक्षेऽहं यथावद्ध्यानवानिति ॥ ६ ॥

ब्रह्मतत्त्वं मायाशबलब्रह्मस्वभावम् ॥ ६ ॥

सोऽपश्यत्प्रणिधानेन तत एकान्तसंस्थितः ।
सबाह्याभ्यन्तरेऽशेषकारणत्यागशान्तधीः ॥ ७ ॥

प्रणिधानेन समाधिना । अशेषाणां विक्षेपकारणानां त्यागेन शान्तधीः ॥ ७ ॥

सर्वशक्तिपरं ब्रह्म सर्ववस्तुमयं ततम् ।
सर्वथा सर्वदा सर्वं सर्वैः सर्वत्र सर्वगम् ॥ ८ ॥

सर्वतःपाणिपादान्तं सर्वतोक्षिशिरोमुखम् ।
सर्वतःश्रुतिमल्लोके सर्वमावृत्य संस्थितम् ॥ ९ ॥

श्रुतिमत् श्रोत्रेन्द्रियवत् ॥ ९ ॥

सर्वेन्द्रियगुणैर्मुक्तं सर्वेन्द्रियगुणान्वितम् ।
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥ १० ॥

सर्वेन्द्रियाणां गुणैः रूपादिग्रहणशक्तिभिरन्वितम् । परमार्थतः असक्तम्
व्यवहारतस्तु सर्वभृत् । एवमग्रेऽपि ॥ १० ॥

बहिरन्तश्च भूतानामचरं चरमेव च ।
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥ ११ ॥

सर्वत्र चन्द्रार्कमयंन् सर्वत्रैव धरामयम् ।
सर्वत्र पर्वतमयंन् सर्वत्राब्धिमयं तथा ॥ १२ ॥

प्राचुर्ये मयट् ॥ १२ ॥

सर्वत्र सारगुरुकं सर्वत्रैव नभोमयम् ।
सर्वत्र संसृतिमयं सर्वत्रैव जगन्मयम् ॥ १३ ॥

भ्रमप्राधान्येन संसृतिः भावविकारप्राधान्येन जगदिति भेदव्यपदेशः ॥ १३ ॥

सर्वत्रैव च मोक्षात्म सर्वत्रैवाद्यचिन्मयम् ।
सर्वत्र सर्वार्थमयं सर्वतः सर्ववर्जितम् ॥ १४ ॥

घटे पटे वटे कुड्ये शकटे वानरे तथा [नरे इति पाठः ।] ।
धाम्नि व्योम्नि तरावद्रावनिले सलिलेऽनले ॥ १५ ॥

धाम्नि तेजसि गृहे च । सः त्रिजगन्ति ददर्शेति परेणान्वयः ॥ १५ ॥

नानाचारविचाराणि विविधावृत्तिमन्ति च ।
परमाण्वंशमात्रेऽपि त्रिजगन्ति ददर्श सः ॥ १६ ॥

नानाविधाः प्राणिनामाचाराः शारीरा विचारा मानसाश्च क्रियाभेदा येषु ।
आवृत्तयः स्वर्गनरकादेः पुनरागमनानि । परमाणोरंशा
ऊर्ध्वाधोमध्यादिभागास्तन्मात्रेऽपि ॥ १६ ॥

मरिचस्यान्तरे तैक्ष्ण्यंन् शून्यत्वमिव चाम्बरे ।

त्रिजगत्सत्यसति च विद्यते चिन्मयात्मनि ॥ १७ ॥

सति आविर्भावकालात्मनि । असति तिरोभावकालात्मनि च ॥ १७ ॥

इत्येवं भावयन्मुक्तभावया शुद्धसंविदा ।
शक्रः क्रमेण तेनैव तथैव ध्यानवानभूत् ॥ १८ ॥

भावयन्पश्यन् । मुक्तो भावो जीवो जीवभावो यया । तेन प्राग्वासनाकल्पितेनैव
शक्रदेहेन शक्रो न तु समाध्यनुभूयमानसर्वात्मभावेनेत्यर्थः ॥ १८ ॥

ध्यानेन सर्वमेकत्र पश्यंश्चिरमुदारधीः ।
ददर्शेममसौ सर्गमस्मदीयं महामतिः ॥ १९ ॥

एकत्र मायाशबलब्रह्मणि । इममस्मदीयं त्वया मया चानुभूयमानं सर्गं
ब्रह्माण्डम् ॥ १९ ॥

ततोऽस्मिन्विचरन्सर्गे शक्रान्ते शक्रतां गतः ।
चकार राजतां [जगतां इति मुद्रितपाठष्टीकाकर्त्रसंमतः ।] राज्यं
वृत्तान्तशतशोभितम् ॥ २० ॥

ततस्तदनन्तरमस्मिन्सर्गे पातालभूम्यादिलोकदर्शनक्रमेण शक्रलोकान्ते मनसा
विचरन्संस्तत्र शक्रदर्शनेन
शक्राहंभावसंस्कारोद्बोधात्प्राक्तनाश्वमेधशताद्दृष्टफलावश्यं##-
करादानपरिपालनादि चकार ॥ २० ॥

विद्याधरकुलाधीश इत्यद्यैव स देवराट् ।
तस्येन्द्रस्य कुलोत्पन्न इति विद्धि यथास्थितम् ॥ २१ ॥

हे विद्याधरकुलाधीश इति अनया रीत्या तस्य त्रसरेण्वन्तर्गतस्येन्द्रस्य कुले उत्पन्नः
सोऽद्यास्मिन्ब्रह्माण्डेऽपि देवराट् भूत्वा तिष्ठतीति विद्धि ॥ २१ ॥

ततो हृदयबीजस्थप्राङ्मुख्याभ्यासयोगतः ।
बिसबालनिवासादिवृत्तान्तमनुभूतवान् ॥ २२ ॥

तत एतदिन्द्रभावानन्तरं हृदये बीजमिव संस्काररूपेण स्थितस्य प्राक्तनस्य
मुख्यस्य ज्ञानयोगाभ्यासस्य योगतो यथास्थितं प्राक्तनं
बिसतन्तुनिवासादिस्ववृत्तान्तमनुभूतवान् । सस्मारेत्यर्थः ॥ २२ ॥

यथैष शक्रः कथितस्त्रसरेणूदरास्पदः ।
बिसबालास्पदश्चैतत्कुलजः कान्तिमानथ ॥ २३ ॥

सर्वशक्तौ ब्रह्मणि सर्वत्र सर्वसद्भावादीदृशशक्रसहस्राण्यपि सर्वत्र सन्तीति
संभावयेत्याह - यथेति द्वाभ्याम् । अप्यर्थेऽथशब्दः ॥ २३ ॥

तथा शतसहस्राणि तत्रेतश्चान्यतश्च खे ।
तादृशव्यवहाराणि समतीतानि सन्ति च ॥ २४ ॥

वहतीयमविच्छिन्ना चिरायैवं तरङ्गिणी ।
तावद्दृश्यसरित्प्रौढा रूढारूढे च तत्पदे ॥ २५ ॥

चतुर्थ्यादिषष्ठ्यन्तभूमिकास्वर्धं रूढे अर्धमरूढे च तस्मिन् ब्रह्मपदे सति
इयं माया इति प्रत्ययोऽनुभवस्तदुन्मुखी भवतीति परेणान्वयः ॥ २५ ॥

130937
130938 इति मायेयमादीर्घा प्रसृता प्रत्ययोन्मुखी।
130939 सत्यावलोकमात्रातिविलयैकविलासिनी॥ २६॥
130940
130941 यतः कुतश्चिन्मायेयं यत्र क्वचन वानघ।
130942 यथाकथंचित्संपन्नमात्रैव परिदृश्यते॥ २७॥
130943
130944 मायात्वादेव न वैचित्र्ये हेतुविशेषाश्चिन्त्या इत्याह - यतः कुतश्चिदिति।
130945 त्रिभिर्यद्वृत्तैः किंवृत्तैश्च हेतुकालदेशक्रियाप्रकारनियमानावश्यकता
130946 सूच्यते॥ २७॥
130947
130948 अहंभावचमत्कारमात्राद्वृष्टिरिवाम्बुदात्।
130949 जायते मिहिकेवाशु प्रेक्षामात्रविनाशिनी॥ २८॥
130950
130951 अथवा एक एवाहंकाराध्यास एतद्वैचित्र्ये नियतो हेतुरित्याह - अहंभावेति।
130952 मिहिकानीहारधूम इवेति नाशे दृष्टान्तः॥ २८॥
130953
130954 येनायताभिमतदर्शनद्रष्टृदृश्यमुक्तस्वभावमवभासनमात्म##-
130955 सर्वार्थशून्यमत एव च शून्यरूपमेकं खमात्रमिव मात्रविकल्पमेव॥ २९
130956 ॥
130957
130958 येन हेतुना मातृसर्वसाक्षिब्रह्मरूपमविकल्पं सर्वविकल्परहितमेव
130959 परमार्थतः। अत एव अहंकारवशादायतानि विस्तीर्णानि यानि अभिमतानि
130960 मानसविकल्पाः दर्शनानि त्रिपुटीलक्षणैन्द्रियकविकल्पाश्च तैर्मुक्तस्वभावम्।
130961 जाग्रदवस्थाशून्यमिति यावत्। अत एव वासनामयस्वाप्नसर्वार्थशून्यमत एव च
130962 प्रतियोग्यप्रसिद्ध्या सर्वशून्यतालक्षणेन सौषुप्ताज्ञानेन च शून्यंन्
130963 खमात्रमिव पूर्णमवभासनंन् चिद्रूपमात्मतत्त्वं परिशिष्टमित्यर्थः॥ २९॥
130964
130965 इत्यार्षे श्रीवा० वा० दे० मो० नि० उ० विद्याधरोपाख्यानान्तर्गतेन्द्राण्वाख्याने
130966 सर्गसंकल्पयोरैक्यप्रतिपादनं नाम चतुर्दशः सर्गः १४
130967
130968 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उ०
130969 सर्गसङ्कल्पयोरैक्यप्रतिपादनं नाम चतुर्दशः सर्गः॥ १४॥
130970
130971 पञ्चदशः सर्गः १५
130972
130973 भुशुण्ड उवाच।
130974
130975 यत्राहंत्वं जगत्तत्र पूर्वमागत्य तिष्ठति।
130976 पराण्वन्तरपीन्द्रस्य त्रसरेणूदरे यथा॥ १॥
130977
130978 अहंभावो जगद्भ्रान्तेर्बीजं रूपं च वर्ण्यते।
130979 तन्मार्जनाज्जगन्मृष्ट्या शुद्धशेषात्कृतार्थता॥
130980
130981 अहंभावचमत्कारमात्राद्दृष्टिरिवाम्बुदात्। जायते दृश्यसरित् इति यदुक्तं
130982 तदुपपादकतया इन्द्राण्वाख्यायिकां योजयति - यत्रेति। अभिनवेऽपि स्वप्नप्रपञ्चे
130983 पूर्वसिद्धमेव जगत्पश्यामीति सर्वानुभवात्पूर्वमागत्य तिष्ठतीत्युक्तिः॥ १॥
130984
130985 भ्रमस्य जागतस्यास्य जातस्याकाशवर्णवत्।
130986 अहंभावोऽभिमन्तात्मा मूलमाद्यमुदाहृतम्॥ २॥
130987
130988 वासनारससंसिक्तादहंबीजकणादयम्।

130989 ब्रह्माद्रौ व्योमविपिने जायते त्रिजगद्द्रुमः ॥ ३ ॥
130990
130991 व्योम अव्याकृताकाशस्तल्लक्षणे विपिनेऽरण्ये ॥ ३ ॥
130992
130993 तारकापुष्पनिकरो विलीनाचलपल्लवः ।
130994 सरित्सारशिरापूरो वासनासारतत्फलः ॥ ४ ॥
130995
130996 विलीना मेघमिहिका वनप्रच्छन्ना अचलाः पर्वताः पल्लवा यस्य । सरित्सारा
130997 गङ्गाद्याः । वासना एव सारा बीजांशा येषु तथाविधास्ते भोगाः फलानि यस्य ॥ ४ ॥
130998
130999 अहंत्वसलिलस्येदं जगत्स्पन्द उदाहृतः ।
131000 चिच्चमत्करणस्वादुर्वासनाविसरद्रवः ॥ ५ ॥
131001
131002 इदानीमहंकारं महाजलतया जगच्च तत्कार्यतरङ्गादितया वर्णयति -
131003 अहंत्वेत्यादिपञ्चभिः । इदं जगत् अहंत्वसलिलस्य स्पन्दो विलासः । चितश्चमत्करणं
131004 वैषयिकसुखं स्वादु माधुर्य यत्र ॥ ५ ॥
131005
131006 तारकासीकरासारो नभोनन्तनिखातवान् ।
131007 भावाभावमहावर्तो नानागिरितरङ्गकः ॥ ६ ॥
131008
131009 नभसा आकाशेन अनन्तनिखातवान् अपरिच्छेद्यकुक्षिकुहरवान् । भावाः संपदः
131010 अभावा विपदश्च महान्त आवर्ता यत्र ॥ ६ ॥
131011
131012 त्रिलोकीविलिलिखल्लेखो विलोलालोकफेनिलः ।
131013 ब्रह्माण्डबुद्बुदोद्भेदः कवाटापीडपीवरः ॥ ७ ॥
131014
131015 त्रिलोकीपदेन तद्गतजना लक्ष्यन्ते । त एव विलिखन्त्यश्चित्रलेख्यवदाविर्भवन्त्यो लेखा
131016 रेखा यत्र । विलोलैः सूर्यचन्द्राद्यालोकैः फेनिलः फेनवान् । ब्रह्माण्डा एव
131017 बुद्बुदोद्भेदा यत्र । कपाटमिव आपीडयति निरुणद्धि मोक्षप्रवेशमिति कपाटापीडो
131018 मोहसेतुस्तेन पीवरोऽभिवृद्धः ॥ ७ ॥
131019
131020 भूपीठदृढडिण्डीरपिण्डश्चिद्घनमद्गुमान् ।
131021 चित्राजवं जवीभावमज्जनोन्मज्जनात्मकः ॥ ८ ॥
131022
131023 भूपीठमेव घनो डिण्डीरपिण्डो यत्र । चिद्घनैश्चिदाभासैर्जीवैर्मद्गुमान्
131024 जलकाकवान् । तेषां चित्रैराज्वं
131025 जवीभावैरूर्ध्वाधस्तिर्यग्भ्रमणैर्मज्जनोन्मज्जनात्मकः ॥ ८ ॥
131026
131027 जरामरणमोहादिवीचीचयचमत्कृतिः ।
131028 उत्पन्नध्वंसिदेहादिबिन्दुवृन्दैकबन्धुरः ॥ ९ ॥
131029
131030 अहंत्वपवनस्पन्दो जगदित्यवगम्यताम् ।
131031 अहंत्वपद्मसौगन्ध्यं जगदित्यवबुध्यताम् ॥ १० ॥
131032
131033 प्रकारान्तराभ्यां जगद्वर्णयति - अहंत्वेति ॥ १० ॥
131034
131035 नाहंत्वजगती भिन्ने पवनस्पन्दवत्सदा ।
131036 पयो द्रवत्वमिव च वह्निरौष्ण्यमिवापि च ॥ ११ ॥
131037
131038 इत्थं वर्णने फलितमाह - नेति ॥ ११ ॥
131039
131040 जगदस्त्यहमर्थेऽन्तरहमस्ति जगद्धृदि ।

131041 अन्योन्यभाविनी त्वेते आधाराधेयवत्स्थिते ॥ १२ ॥
131042
131043 परस्परबीजतामाह - जगदिति अन्योन्यस्माद्भाविनी आविर्भावशीले
131044 अन्योन्याधीनस्थितिके च ॥ १२ ॥
131045
131046 जगद्बीजमहंत्वं यो मार्ष्टि बोधादवेदनात् ।
131047 अलं चित्रं जलेनेव तेन धौतं जगन्मलम् ॥ १३ ॥
131048
131049 अत एवाहंकारमार्जनाज्जगन्मार्जनसिद्धिरित्याह - जगदिति ॥ १३ ॥
131050
131051 अहंत्वं नाम तत्किंचिद्विद्याधर न विद्यते ।
131052 अकारणमवस्तुत्वाच्छशशृङ्गमिवोदितम् ॥ १४ ॥
131053
131054 अहंत्वस्य तत्त्वदृष्ट्या असत्त्वदर्शनमेव मार्जनमित्याह - अहंत्वमिति ॥ १४ ॥
131055
131056 ब्रह्मण्यतिततेऽनन्ते संकल्पोल्लेखवर्जिते ।
131057 अहंत्वकारणाभावान्न कदाचन सन्मयम् ॥ १५ ॥
131058
131059 तत्कुतस्तत्राह - ब्रह्मणीति ॥ १५ ॥
131060
131061 अवस्तुन्येति सर्गादौ न संभवति कारणम् ।
131062 अतोऽहंत्वादि नास्त्येव वन्ध्यासुत इव क्वचित् ॥ १६ ॥
131063
131064 संभवदपि कारणं लोके अवस्तुनि नैति न व्याप्रियते । प्रकृते तु सर्गादौ कारणं न
131065 संभवति तत्संभवोऽपि नास्तीत्यर्थः ॥ १६ ॥
131066
131067 तदभावाज्जगन्नास्ति चित्त्वं जगदभावतः ।
131068 शिष्टं निर्वाणमेवातः शान्तमास्स्व यथासुखम् ॥ १७ ॥
131069
131070 निर्वाणं कैवल्यलक्षणं चित्त्वं चिन्मात्रं शिष्टम् ॥ १७ ॥
131071
131072 अभावादुपपत्तिस्थादेवं जगदहंत्वयोः ।
131073 रूपालोकमनस्काराः शान्तास्तव न चेतरत् ॥ १८ ॥
131074
131075 एवमुपपत्तिप्रतिष्ठिताज्जगदहंत्वयोरभावात् । बाह्या रूपालोकादयः संसारा
131076 आन्तरा मनस्कारलक्षणाः संसाराश्च शान्ताः । न च इतरत्तदुभयव्यतिरिक्तं
131077 हेयंन् दुःखमस्ति अतः शान्तमास्स्वेत्यर्थः ॥ १८ ॥
131078
131079 यन्नास्ति तत्तु नास्त्येव शेषं शान्तमसि ध्रुवम् ।
131080 संप्रबुद्धोऽसि मा भूयो निर्मूलां भ्रान्तिमाहर ॥ १९ ॥
131081
131082 शान्तं निर्दुःखविक्षेपम् ॥ १९ ॥
131083
131084 व्यपगतकलनाकलङ्कशुद्धः शिवमसि शान्तमसीश्वरोऽसि नित्यः ।
131085 खमपि भवति पर्वतोपमानं जगदपि वा परमाणुरूपमेव ॥ २० ॥
131086
131087 व्यपगतो बाह्याभ्यन्तरदृश्यकलनालक्षणः कलङ्को यस्य अत एव शुद्धः ।
131088 अध्यारोपे खं शून्यमपि पर्वतोपमानं भवति अपवादे तु जगद्ब्रह्माण्डमपि वा
131089 परमाणुरूपमाकाशतुल्यमेव भवतीत्यर्थः ॥ २० ॥
131090
131091 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वाणप्रकरणे उत्तरार्धे वि०
131092 विद्याधरनिर्वाणं नाम पञ्चदशः सर्गः ॥ १५ ॥

131093
131094 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
131095 विद्याधरनिर्वाणं नाम पञ्चदशः सर्गः ॥ १५ ॥
131096
131097 षोडशः सर्गः १६
131098
131099 भुशुण्ड उवाच ।
131100
131101 कथयत्येवमप्येवं स विद्याधरनायकः ।
131102 आसीत्संशान्तसंवित्तिः समाधिपरिणामवान् ॥ १ ॥
131103
131104 श्रुत्वा विद्याधरस्यात्र समाधिरुपवर्ण्यते ।
131105 कथाशेषोपसंहारोऽनहंभावप्रशंसया ॥
131106
131107 संशान्ता दृश्यसंवित्तिर्यस्य समाधिलक्षणो यश्चित्तस्य क्षीरोदकवच्चिदैकरस्येन
131108 परिणामस्तद्वान् ॥ १ ॥
131109
131110 प्रबोध्यमानोऽपि मया भूयोभूयस्ततस्ततः ।
131111 न पपात पुरोदृश्ये परं निर्वाणमागतः ॥ २ ॥
131112
131113 पुरोगते दृश्ये शब्दादिविषये न पपात ॥ २ ॥
131114
131115 स प्राप परमं स्थानं तावन्मात्रप्रबोधवान् ।
131116 केनचिन्नाधिकेनाङ्ग यत्नेनातिशयैषिणा ॥ ३ ॥
131117
131118 मुख्याधिकारित्वात्तावन्मात्रेण मदुपदेशेन प्रबोधवान् ।
131119 श्रवणावृत्तिमनननिदिध्यासनाद्यतिशयैषिणा न । अङ्गेति वसिष्ठसंबोधनम् ॥ ३
131120 ॥
131121
131122 अत उक्तं मया राम यदि शुद्धे हि [विचेतसि इत्यपि पाठः ।] चेतसि ।
131123 उपदेशः प्रसरति तैलबिन्दुरिवाम्भसि ॥ ४ ॥
131124
131125 इदानीं वसिष्ठः प्राक् स्वोक्तेऽर्थे विद्याधरचित्तमुदाहरणमिति वर्णनत्वरया
131126 भुशुण्डोक्तिमुत्क्रम्य रामं प्रत्याह - अत इत्यादि ॥ ४ ॥
131127
131128 नाहमित्यस्ति ते नान्तर्मैनं भावय शान्तये ।
131129 एतावदुपदेशोक्तिः परमा नेतरास्ति हि ॥ ५ ॥
131130
131131 कोऽसावुपदेशस्तमाह - नाहमिति । ते अन्तः प्रत्यगात्मनि चिदेकरसे अहमित्यंशो
131132 नास्ति । अतोऽसन्तमेनं मा भावय इत्येतावत् एतावत्येवोपदेशोक्तिः परमा
131133 सारसंग्रहभूता ॥ ५ ॥
131134
131135 एषैवाभव्यमनसि पतिता प्रविलीयते ।
131136 उत्ताने मसृणादर्शे मुक्ताफलमिवामलम् ॥ ६ ॥
131137
131138 भव्ये तु शान्तमनसि लगत्यभ्येत्यविच्युतिम् ।
131139 प्रविश्यान्तर्विचाराख्यामर्चिरर्कमणौ यथा ॥ ७ ॥
131140
131141 अविच्युतिं अभ्येति । अन्तः प्रविश्य विचाराख्यां
131142 सर्वमोहारण्यदाहक्षमामग्निशिखां च जनयतीति शेषः । यथा अर्कमणौ
131143 सूर्यकान्ते प्रविष्टं सूर्यार्चिरग्निशिखां जनयति तद्वत् ॥ ७ ॥
131144

131145 अहंभावनमेवोच्चैर्बीजं दुःखाख्यशाल्मलेः।
131146 ममेदं तद्वदादीति शाखाप्रसरकारणम्॥ ८॥
131147
131148 तद्वदहंभावनवदेव ममेदं भावनंन् संसारवृक्षस्य
131149 [संसारवृक्षस्येत्यादि मूलस्थदुःखाख्येत्यादेरर्थः।] मूलादिशरीरं
131150 [मूलादिशरीरमिति तूत्तरार्धस्यादीत्यस्यार्थः।] यतो रागादिशाखाप्रसरस्य
131151 कारणमित्यर्थः॥ ८॥
131152
131153 अहमादौ ममेत्यन्तस्तत इच्छा प्रवर्तते।
131154 इदमर्थशतानर्थकारिणी भवभारिणी॥ ९॥
131155
131156 तदेवाह - अहमिति। आदौ बीजावस्थास्थाने। अन्तः तत्कार्यवृक्षस्थाने। इच्छा
131157 शाखास्थाने प्रवर्तते॥ ९॥
131158
131159 एवंविधा मुनिश्रेष्ठ मूढा अपि चिरायुषः।
131160 भवन्त्यनियमो ह्यङ्ग दीर्घायुष्यस्य कारणम्॥ १०॥
131161
131162 एवं प्रागुक्तं प्रकृतसंमत्या समर्थ्य वसिष्ठः
131163 पुनर्भुशुण्डोक्तिकथामेवानुसरन्विद्याधरकथामुपसंहरति - एवंविधा इति।
131164 दीर्घायुष्यस्य कारणं तत्त्वज्ञानमेवेतीति शेषः॥ १०॥
131165
131166 अन्तःशुद्धमनस्का ये सुचिरायाभयप्रदम्।
131167 मनागप्युपदिष्टास्ते प्राप्नुवन्ति परं पदम्॥ ११॥
131168
131169 अन्तःशुद्धेस्तु चिराभ्यास एव ज्ञानकारणमिति नियमोऽस्त्येवेत्याशयेनाह -
131170 अन्तरिति। सुचिरायाभ्यासेनान्तःशुद्धमनस्का ये ते। परं पदं ज्ञानम्॥ ११॥
131171
131172 श्रीवसिष्ठ उवाच।
131173
131174 मेरुमूर्धनि मामेवमुक्त्वा स विहगाधिपः।
131175 तूष्णीं बभूव मुक्तात्मा ऋष्यमूक इवाम्बुदः॥ १२॥
131176
131177 विहगाधिपो भुशुण्डः। ऋष्यमूके गिरौ मतंगाश्रमे मतंगशापभयान्मूका
131178 मेघा न गर्जन्तीति प्रसिद्धिः॥ १२॥
131179
131180 अहमापृच्छ्य तं सिद्धं विद्याधरमथो पुनः।
131181 प्राप्त आत्मास्पदं राम मुनिमण्डलमण्डितम्॥ १३॥
131182
131183 प्रथमं तं सिद्धं भुशुण्डमापृच्छ्य अथो विद्याधरं गत्वा
131184 तदुक्तिसंवादाय पुनस्तमप्यापृच्छ्य निश्चितार्थोऽहम्। आस्पदं स्वाश्रमम्॥ १३॥
131185
131186 एतत्तवाद्य कथितं बलिभुक्कथोक्तं विद्याधरोपशमनं लघुबोधनोत्थम्।
131187 अस्मिन्भुशुण्डविहगेन्द्रसमागमे मे चैकादशेह हि गतानि महायुगानि॥ १४॥
131188
131189 ह रामे मया लघु शीघ्रमेव बोधनेनोत्थमुत्पन्नं विद्याधरस्योपशमनं
131190 बलिभुजः काकस्य भुशुण्डस्य कथया उक्तं तवाद्य कथितम्। अस्मिन् वर्णिते
131191 भुशुण्डविहगेन्द्रसमागमे मे जाते तदनन्तरमिह अस्मिन् कल्पे एकादशमहायुगानि
131192 दिव्ययुगानि गतानीत्यर्थः॥ १४॥
131193
131194 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० निर्वाणप्रकरणे उ०
131195 विद्याधरोपाख्याने विद्याधरनिर्वाणं नाम षोडशः सर्गः॥ १६॥
131196

131197 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
131198 विद्याधरनिर्वाणं नाम षोडशः सर्गः ॥ १६ ॥
131199
131200 सप्तदशः सर्गः १७
131201
131202 श्रीवसिष्ठ उवाच ।
131203
131204 अनहंवेदनादेवं शुभाशुभफलप्रदा ।
131205 संसारफलिनी नूनमिच्छान्तरुपशाम्यति ॥ १ ॥
131206
131207 अत्राहंबिजनिर्दाहादनहंभाववह्निना ।
131208 देहादिसंसृतेः सम्यग्बाधेऽलीकत्वमीर्यते ॥
131209
131210 सर्वसंसृतेः काममूलत्वादनहंभावेन प्रथमं तन्निवृत्तिमाह -
131211 अनहमिति ॥ १ ॥
131212
131213 अनहंवेदनाभ्यासात्समलोष्टाश्मकाञ्चनः ।
131214 भूत्वा शान्तभवापीडो न नरः परिताम्यति ॥ २ ॥
131215
131216 कामोपरमे लोभादिदोषक्षयाद्वैराग्यादिसंपदा सर्वमानसदुःखक्षय इत्याह ##-
131217
131218 अहंतापुटकोड्डीनपरबोधबलेरितः ।
131219 अहमित्यर्थपाषाणो न जाने क्वाशु गच्छति ॥ ३ ॥
131220
131221 साधनवतोऽवश्यश्रवणादिना ज्ञानोदये ब्रह्मव्यतिरिक्ताहमर्थस्य
131222 बाधेनालीकत्वमेव पर्यवस्यतीत्याशयेनाह - अहंतेति । श्रवणादिना
131223 ज्ञाननिर्मथनाभ्यासेन अहंतालक्षणात्प्रमातृयन्त्रपुटकादेव
131224 वह्निज्वालावदुड्डीन आविर्भूतो यः परब्रह्मसाक्षात्कारलक्षणो बोधस्तद्बलेन
131225 ईरितः क्षिप्तः । निरस्त इति यावत् । अहमादिदृश्यार्थपाषाणोऽग्नियन्त्रक्षिप्तपाषाण
131226 इवाशु क्व गच्छति न जाने । तुच्छत्वमेवापद्यत इति भावः ॥ ३ ॥
131227
131228 अहंतापुटकोड्डीनो ब्रह्मवीरबलेरितः ।
131229 अहमित्यर्थपाषाणो न जाने क्वाशु गच्छति ॥ ४ ॥
131230
131231 चरमसाक्षात्कारवृत्त्या रूढंन्
131232 ब्रह्मैवाज्ञानाहंकारादिनिराससमर्थमित्याशयेनाह - अहंतेति ।
131233 अज्ञानाहंकारयोरिव स्थूलदेहस्यापि व्यष्टिसमष्टिरूपस्य तादृशं ब्रह्मैव
131234 न्निवर्तकमित्याशयेनाह - अहंतेति ॥ ४ ॥
131235
131236 अहंतापुटकोड्डीनो ब्रह्मवीरबलेरितः ।
131237 शरीरयन्त्रपाषाणो न जाने क्वाशु गच्छति ॥ ५ ॥
131238
131239 ब्रह्मैव वीरो विक्रान्तस्तद्बलेरितः ।
131240 पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च इति
131241 समानाधिकरणसमासे वीरशब्दपरनिपातश्छान्दसः ॥ ५ ॥
131242
131243 अहमर्थहिमं त्वन्तरनहंता चिदर्चिषा ।
131244 उड्डीयेव विलीनं सन्न जाने क्वाशु गच्छति ॥ ६ ॥
131245
131246 अनहंताभावनावृत्तिप्रतिफलितचितैवाहंतानाश इति पक्षो वाऽस्त्वित्याशयेनाह ##-
131247
131248 अहंरसो विलीनोन्तरनहंताचिदर्चिषा ।

131249 शरीरपर्णादुद्वर्णान्न जाने क्वाशु गच्छति ॥ ७ ॥
131250
131251 उद्वर्णात् ब्रह्मविद्याधिकारिब्राह्मणाद्युत्कृष्टवर्णात्परिपाकपाण्डुराच्च ॥ ७ ॥
131252
131253 शरीरपर्णान्निष्पीतस्त्वहंभावरसासवः ।
131254 अनहंतार्कमार्गेण परतामधिगच्छति ॥ ८ ॥
131255
131256 अथवा न बाधिताहंतादेः शून्यता किंतु ब्रह्मतैवेत्याशयेनाह - शरीरेति ।
131257 अनहंतालक्षणेनार्करश्मिमार्गेण परतां ब्रह्मतां
131258 स्वकारणसूक्ष्मजलात्मतां च ॥ ८ ॥
131259
131260 शयने कर्दमे शैले गृहे व्योम्नि स्थले जले ।
131261 स्थूला सूक्ष्मा निराकारा रूपान्तरगतापि च ॥ ९ ॥
131262
131263 तत्त्वज्ञानं विना तु न क्वाअपि कदापि कस्यांचिदवस्थायां देहस्याहंकारस्य वा
131264 आत्यन्तिकोच्छेदस्तयोः परस्परबीजतया परस्परान्तःसत्त्वेन जगद्भावेन
131265 सर्वत्रोद्भवावर्जनादित्याह - शयने इत्यादिना । शयने शय्यायां
131266 स्थूलादिद्वादशावस्थाप्राप्ता शयनादिस्थानसप्तके यत्र तत्र स्थितापि शरीरलक्षणा
131267 वटधाना अन्तःस्थित उद्भूतोऽहंत्वनवाङ्कुरो यस्यास्तथाविधा सती क्षणादिदं
131268 संसाराख्यमाशु सर्वदिग्व्यापनशीलं शाखाजालं तनोतीति तृतीयेनान्वयः ॥ ९ ॥
131269
131270 यत्र तत्र स्थिता सुप्ता प्रबुद्धा भस्मतां गता ।
131271 धृता नीता निमग्ना च दूरस्था निकटा सती ॥ १० ॥
131272
131273 शरीरवटधानान्तःस्थिताहंत्वनवाङ्कुरा ।
131274 शाखाजालं तनोत्याशु संसाराख्यमिदं क्षणात् ॥ ११ ॥
131275
131276 अहंत्ववटधानान्तःस्थितदेहबृहद्द्रुमः ।
131277 संसारशाखानिवहं यत्र तत्र तनोत्यलम् ॥ १२ ॥
131278
131279 एवमहंत्वलक्षणवटधानान्तःस्थितो देहमहाद्रुमोऽपि बोध्य इत्याह -
131280 अहंत्वेति ॥ १२ ॥
131281
131282 शाखाशतेद्धदलपुष्पफलद्रुमोऽस्ति बीजोदरे ननु दृशा परिदृश्यतेऽसौ ।
131283 देहोऽस्त्यहंत्वकणिकान्तरशेषदृश्यसंवित्परीत इति बुद्धिदृशैव
131284 दृष्टम् ॥ १३ ॥
131285
131286 उक्तमर्थं वटादिबीजदृष्टान्तेनैवानुभावयति - शाखेति । यथा बीजोदरे
131287 शाखाशते इद्धानि विराजमानानि दलानि पुष्पाणि फलानि च यस्य तथाविधो द्रुमोऽस्ति
131288 यतोऽसौ सत्त्वादेव बीजपुटं भित्त्वाङ्कुरादिक्रमेण निर्गच्छन्प्रत्यक्षं सर्वजनैः
131289 परिदृश्यते । नन्विति प्रसिद्धौ । तथा अहंत्वलक्षणा या कणिका सूक्ष्मबीजं
131290 तदन्तरशेषदृश्यसंवीतो देहोऽस्तीति सूक्ष्मबुद्धिलक्षणया दृशैव
131291 विद्वद्भिर्दृष्टमित्यर्थः ॥ १३ ॥
131292
131293 देहादहंत्वमनवाप्तवतो विचारैश्चिद्व्योममात्रवपुषो वपुषोऽथ वोच्चैः ।
131294 नाहंत्वबीजजठरादसतोऽभ्युदेति संसारवृक्ष इह बोधमहाग्निदग्धात् ॥ १४
131295 ।।
131296
131297 एवमविचारफलं सर्वत्रानिर्मोक्षमुक्त्वा विचारफलं मोक्षमाह - देहादिति ।
131298 विचारैः श्रवणादिभिस्तत्त्वबोधाच्चिद्व्योममात्रं वपुःस्वरूपं यस्य तथाविधस्य
131299 जीवन्मुक्तस्य विद्यमानादपि देहादहंत्वं तत्तादात्म्याभिमानमनवाप्तवतः
131300 अथवा अदेहवतो विदेहमुक्तस्योच्चैर्निरतिशयानन्दे प्रतिष्ठितस्य पुंसो

131301 बोधमहाग्निदग्धाहंत्वबीजजठरात् संसारवृक्षो नाभ्युदेति || १४ ||
131302
131303 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मी० दे० मोक्षो० निर्वाणप्रकरणे उ०
131304 अहंत्वासत्तायोगोपदेशो नाम सप्तदशः सर्गः || १७ ||
131305
131306 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
131307 अहंत्वासत्तायोगोपदेशो नाम सप्तदशः सर्गः || १७ ||
131308
131309 अष्टादशः सर्गः १८
131310
131311 श्रीवसिष्ठ उवाच |
131312
131313 मरणं सर्वनाशात्म न कदाचन विद्यते |
131314 स्वसंकल्पान्तरस्थैर्यन् मृतिरित्यभिधीयते || १ ||
131315
131316 उह्यमानान्यनन्तानि पवनैः सर्वतोम्बरे |
131317 मृतजीवमनःस्थानि वर्ण्यन्तेऽत्र जगन्ति हि ||
131318
131319 देहोऽस्त्यहंत्वकणिकान्तरशेषदृश्यसंवित्परीत इति बुद्धिदृशैव दृष्टम् इति
131320 यदुक्तं तत्र कथमस्ति कीदृशी सा बुद्धिदृगिति तदुभयं
131321 मृतजीववासनामयानन्तजगद्व्युत्पादनेन समर्थयितुं भूमिकां रचयति -
131322 मरणमिति | मनोबुद्ध्यहंकारादिसर्वनाशात्मकं मरणमिति पामरा मन्यन्ते |
131323 तथा तु कदाचिदपि न विद्यते | कृतहानादिदोषप्रसङ्गात् | किंतु
131324 मनुष्यादिशरीरात्मभावभोजकप्रारब्धक्षये तदनुरूपसंकल्पतिरोभावे
131325 देवादिशरीराहंभावादिभोजककर्मोद्भवे तदनुरूपस्वसंकल्पान्तरस्य
131326 तद्भोजकादृष्टक्षयपर्यन्तं स्थैर्यं पूर्वभावविस्मृतिमपेक्ष्य
131327 मृतिरित्यभिधीयत इत्यर्थः || १ ||
131328
131329 पश्येमे पुर उह्यन्त इव मन्दरमेरवः |
131330 अरूढा अपि दिग्वातैः सरिद्बिम्बितशैलवत् || २ ||
131331
131332 अस्त्वेवं किं ततस्तत्राह - पश्येति | एवं च तत्तज्जीवसंकल्पकल्पितजगत्स्था
131333 मन्दरमेरुप्रभृतयो दिक्षुवातैः सर्वत्र उह्यन्ते प्रवाह्यन्त इव मया दृश्यन्ते
131334 त्वमपि पश्येत्यर्थः || २ ||
131335
131336 उपर्युपर्यन्तरतः कदलीदलपीठवत् |
131337 श्लिष्टाश्लिष्टस्वरूपाः खे मिथः संसृतयः स्थिताः || ३ ||
131338
131339 उपर्युपरि बहिर्बहिः यावतां जीवानां भोजकादृष्टसाम्यंन् तावतां श्लिष्टा
131340 एकीभावेन मिलिताः | अन्येषामश्लिष्टस्वरूपाः || ३ ||
131341
131342 श्रीराम उवाच |
131343
131344 पश्य मे पुर उह्यन्त इति वाक्यार्थमक्षतम् |
131345 न किंचिदवगच्छामि यथावन्मुनिनायक || ४ ||
131346
131347 उक्तमर्थमसंभावयन् रामः पृच्छति - पश्येति | यथावत्कथयेति शेषः || ४
131348 | |
131349
131350 श्रीवसिष्ठ उवाच |
131351
131352 प्राणस्याभ्यन्तरे चित्तं चित्तस्याभ्यन्तरे जगत् |

131353 विद्यते विविधाकारं बीजस्यान्तरिव द्रुमः ॥ ५ ॥
131354
131355 मृतानां पुरुषाणां प्राणास्तावन्नभस्युत्क्रामन्तीति लोकवेदप्रसिद्धम् । तद्यदि
131356 प्राणाः सन्ति तर्हि प्राणस्याभ्यन्तरे चित्तं चित्तस्याभ्यन्तरे जगदपि विद्यते इति
131357 संभावयेत्यर्थः ॥ ५ ॥
131358
131359 मृते पुंसि नभोवातैर्मिलन्ति प्राणवायवः ।
131360 सरिज्जलैरिवाम्भोधिजलान्यात्मद्रुतानि हि ॥ ६ ॥
131361
131362 सन्तु नाम तथापि दिग्वातैः कथं प्रवाह्यन्ते तत्राह - मृते इति । पुंसि मृते
131363 सति तत उत्क्रान्ताः प्राणवायवो बाह्यनभसि पूर्णैर्वातैः सह मिलन्ति ।
131364 यतस्तान्यप्यात्मनि द्रुतानि द्रवस्वभावानि । अतः समस्वभावानां मेलने एकतैव
131365 भवतीत्यर्थः ॥ ६ ॥
131366
131367 इतश्चेतश्च यान्तीव तेषामन्तर्जगन्त्यलम् ।
131368 व्योमवातविनुन्नानां संकल्पैकात्मकान्यपि ॥ ७ ॥
131369
131370 अतो व्योमवातैर्विशेषेण नुन्नानामाकृष्टानां तेषां प्राणानामन्तर्गतानि
131371 जगन्त्यपि इतश्चेतश्च यान्तीवेत्युह्यन्त इवेत्युक्तिरित्यर्थः ॥ ७ ॥
131372
131373 सप्राणवातैः पवनैः स्फुरत्संकल्पगर्भितैः ।
131374 सर्वा एव दिशः पूर्णाः पश्यामीमाः समन्ततः ॥ ८ ॥
131375
131376 अत्रैते पश्य पश्यामि संकल्पजगताङ्गणे ।
131377 बुद्धिदृष्ट्या समुह्यन्ते पुरो मन्दरमेरवः ॥ ९ ॥
131378
131379 अहं पश्यामि त्वमपि बुद्धिदृष्ट्या पश्य ॥ ९ ॥
131380
131381 खवातेऽन्तर्मृतप्राणाः प्राणानामन्तरे मनः ।
131382 मनसोऽन्तर्जगद्विद्धि तिले तैलमिव स्थितम् ॥ १० ॥
131383
131384 खे विद्यमाने वातेऽन्तर्मृतानां प्राणाः ॥ १० ॥
131385
131386 खवातैः खसमाः प्राणा यथोह्यन्ते मनोमयाः ।
131387 उह्यन्ते वै तथैतानि तदङ्गानि जगन्त्यपि ॥ ११ ॥
131388
131389 ननु गुरूणि जगन्ति कथं वातैरुह्यन्ते तत्राह - खवातैरिति । तथा प्राणवदेव
131390 तदङ्गानि जगन्त्यपि खसमानि लघूनीत्युह्यन्त इत्यर्थः ॥ ११ ॥
131391
131392 सभूतान्यम्बरोर्व्यादिवृन्दानि त्रिजगन्त्यपि ।
131393 उह्यन्ते चाप्यरूढानि पुरः सर्वत्र गन्धवत् ॥ १२ ॥
131394
131395 सभूतानि चतुर्विधप्राणिसहितानि । अरूढानि अदृढानि । अप्रतिष्ठितानीति यावत् ॥ १२ ॥
131396
131397 तानि बुद्ध्यैव दृश्यन्ते न दृष्ट्या रघुनन्दन ।
131398 पुरः संकल्परूपाणि स्वस्वप्नपुरपूरवत् ॥ १३ ॥
131399
131400 दृष्ट्या चक्षुरादिना स्वीयस्वप्नदृष्टपुरवत्तादृशपूरवद्वा
131401 तादृशपुरान्तर्गतनदीपूरवद्वा ॥ १३ ॥
131402
131403 सर्वत्र सर्वदा सन्ति सुसूक्ष्माण्येव खादपि ।
131404 कल्पनामात्रसारत्वान्न चोह्यन्ते मनागपि ॥ १४ ॥

131405

131406 उह्यन्त इवेति [पश्येमे पुर उह्यन्त इव
131407 इत्येतत्सर्गगतद्वितीयश्लोकोक्तमित्यनुसंधेयम् ।] यदुक्तं तत्र
131408 इवकारार्थसमर्थनायाह - कल्पनामात्रसारत्वादिति ॥ १४ ॥
131409
131410 तान्येव दृढभावत्वात्स्वेषु लोकेषु तेष्वलम् ।
131411 सत्यान्येव चिदंशस्य सर्वगत्वाद्भवानिव ॥ १५ ॥
131412
131413 यद्यपि तानि कल्पनामात्रत्वान्न सन्त्येवेति नोह्यन्ते तथापि तान्येव तेषु
131414 तत्तज्जीवभोग्येषु स्वेषु स्वर्गनरकभूम्यादिलोकेषु तेषां
131415 दृढभावत्वात्सुखदुःखभोगार्थक्रियासमर्थतया सत्यान्येव
131416 तत्सत्यतासंपादकस्याधिष्ठानचिदंशस्य सर्वगत्वात् । यथा भवानस्मद्दृष्ट्या
131417 श्रवणधारणाद्यर्थक्रियासमर्थः पुरोवर्ती सत्यस्तद्वदेवेत्यर्थः ॥ १५ ॥
131418
131419 प्रतिबिम्बं पुराणीव पुरःप्राणसरिद्रये ।
131420 अरूढान्यपि चोह्यन्ते रूढान्यपि च नैव च ॥ १६ ॥
131421
131422 अरूढानि वासनामात्रत्वादनाविर्भूतानि रूढान्याविर्भूतानि चेत्थमुह्यन्ते नैव
131423 चोह्यन्ते ॥ १६ ॥
131424
131425 सौरभाणि समुह्यन्ते वाताङ्गस्थानि राघव ।
131426 जगन्ति प्राणसंस्थानि व्योमात्मकमयानि तु ॥ १७ ॥
131427
131428 सौक्ष्म्ये वहने च सौरभसाम्यं प्रागुक्तमित्याह - सौरभाणीति ॥ १७ ॥
131429
131430 कुम्भे देशान्तरं नीते यथान्तर्व्योम्नि नान्यता ।
131431 स्पन्दनादिमये चित्ते तथैव त्रिजगद्भ्रमे ॥ १८ ॥
131432
131433 अत एव त्रिजगद्भ्रमात्मना चित्तस्य स्पन्दभेदयोरपि नात्मनस्तावित्याह - कुम्भे
131434 इति । तथैवात्मनि नान्यतेति शेषः ॥ १८ ॥
131435
131436 इत्थं न सज्जगद्भ्रान्तिरसत्यैवोदितेव ते ।
131437 न विनश्यति नोदेति केवलं ब्रह्मरूपिणी ॥ १९ ॥
131438
131439 यथा मृतानां जगत्संकल्पमात्रत्वादसदित्थंते तवापि जगदसत् । भ्रान्तिरेव
131440 केवलमुदितेव । सा भ्रान्तिरपि परमार्थतो न विनश्यति नोदेतीति तत्त्वदृष्ट्या
131441 ब्रह्मरूपिण्येवेत्यर्थः ॥ १९ ॥
131442
131443 यदि वाप्युदिते वातैस्तत्तदस्या न लक्ष्यते ।
131444 तदन्तःसंस्थितैः स्पन्दो नावि कोशगतैरिव ॥२० ॥
131445
131446 ननु यदि व्यवहारदृशा जगत्तद्भ्रान्ती वाय्वन्तःप्रवहमाने उदिते तर्हि वयं
131447 पृथिवीं निश्चलतया कथं पश्यामस्तत्राह - यदि वेति । नोदिते एव । यदि वा उदिते
131448 इति पक्षस्तथापि वातैः कृतं तत्तद्भ्रमणपरिवर्तनादिकमस्याः
131449 पृथिव्यास्तदन्तःसंस्थितैरस्माभिर्न लक्ष्यते । यथा नावि जायमानः
131450 स्पन्दस्तदन्तःकोशगतैर्नरैर्न लक्ष्यते तद्वदित्यर्थः ॥ २० ॥
131451
131452 यथा स्पन्दोऽङ्गलग्नायां नाब्यन्तःसंस्थितैरपि ।
131453 न लक्ष्यते यथा पृथ्व्यां [यद्यपि तथा ब्रह्मंस्तत्संस्थैः इति पाठो
131454 दृश्यते तथापि ब्रह्मन्निति संबोधनस्य रामं प्रत्ययोग्यत्वान्न
131455 सध्रीचीनः ।] तत्संस्थैस्तन्मयैरपि ॥ २१ ॥
131456

तदेव स्पष्टमाह - यथेति। यथा नावि अन्तः संस्थितैरपिशब्दात्तन्मयैरपि
कीलाद्यैर्नौस्पन्दो न लक्ष्यते तद्वत्पृथिवीसंस्थैः
पार्थिवदेहादिमयैरप्यस्माभिरित्यर्थः॥ २१॥

यथा योजनविस्तीर्णं लघौ सद्मानुभूयते।
यत्तस्य पादपस्तम्भे परमाणौ यथा जगत्॥ २२॥

इत्थं पश्येमे पुर उद्यन्त इव मन्दरमेरवः इति स्वोक्तिं रामायोपपाद्य
उपर्युपर्यन्तरन्तःकदलीदलपीठवदित्युक्तावप्यल्पे बृहतः समावेशं प्रथमं
बृहतोऽल्पत्वकल्पनया दर्शयति - यथेति। यथा योजनविस्तीर्णमपि सद्म लघौ
पादपस्तम्भे चित्रनिर्व्यूहरचनादिना रचयुतिं यत्तस्य यतमानस्य शिल्पिनो बुद्ध्या
अल्पत्वकल्पनया तत्रानुभूयते तथा अन्तरन्तःसूक्ष्मतमेऽपि परमाणौ
जगद्बुद्धिकल्पनयाऽनुभूयत इत्यर्थः॥ २२॥

वस्त्वल्पमप्यतिबृहल्लघुसत्त्वो हि मन्यते।
मूषिकाः स्वाञ्जलिद्रव्यंन् नवपङ्कमिवार्भकाः॥ २३॥

परमाण्वादेर्बृहत्तमत्वकल्पया न वा तत्र बृहतो जगतः समावेशोऽनुभवितव्य
इत्याशयेनाह - वस्त्विति। तद्यथा रत्नकोशागारे प्रविष्टा अस्वा
धनसंबन्धशून्या मूषिका न रत्नानि बहु मन्यन्ते किंत्वञ्जलिमात्रमितमपि
धान्यद्रव्यमेव तत्र दैवाल्लब्धं बहु मन्यन्ते यथा वा अर्भका बहुमूल्यान्यपि
स्वाभरणानि नित्यमनुभूयमानानि न बहु मन्यन्ते किंतु नवमपूर्वं
मृगपक्ष्याकारं वर्णकादिपरिष्कृतं पङ्कं मृत्पिण्डमेव क्रीडनाय बहु
मन्यन्ते येन तद्दानेन वञ्चिताः स्वाभरणान्यपि विनिमयेन प्रयच्छन्तीत्यर्थः॥ २३
॥

असत्येव स्वरूपेऽस्मिञ्जगदाख्ये विदो भ्रमे।
लोकान्तराधर्ममयी [अत्राधर्मपदमुपलक्षणं धर्मस्येत्यपीति
धर्माधर्मफलानीति व्याख्यातम्।] सा बृहंगस्य भावना॥ २४॥

किं च वास्तवोऽल्पे बृहतः समावेशो न संभवतु नाम भ्रान्त्या तु
संभवत्येवेत्याशयेनाह - असत्येवेति। विदः अज्ञानावृतचितो जगदाख्ये भ्रमे
असत्येवार्थे केवलं जीवतोऽयं लोको मृतस्य लोकान्तराणि तत्र च
धर्माधर्मफलानीत्यादिमयी बृहंगस्य बृंहणं गच्छतश्चित्तस्य सा
संकल्परूपा भावनैव। न च भावनां वस्त्वन्यथाभावो निरुणद्धीत्यर्थः।
बृंहधातोः घञर्थे कविधानमिति भावे कः। ततः अन्येष्वपि दृश्यते इति
गमेर्डः। बाहुलकान्नुम्॥ २४॥

इदं हेयमुपादेयमिदमित्यन्तरज्ञता।
यस्य तस्य भवायास्ति सर्वज्ञस्यापि मूढता॥ २५॥

ननु मूढानामस्त्वन्तरन्तर्जगद्भ्रमभावना सर्वज्ञानां भवदादीनां
कथमन्तरन्तर्जगदन्तरमस्तीति भ्रान्तिस्तत्राह - इदमिति। सर्वज्ञस्यापि भवाय
व्यवहारसंभवाय यावत्प्रारब्धक्षयं लेशतोऽनुवर्तमाना
मूढताऽस्त्येवेत्यर्थः॥ २५॥

सचेतनो ह्यवयवी चेतत्यवयवान्यथा।
स्वान्तरेव ततं जीवस्त्रिजगद्बुध्यते तथा॥ २६॥

अत एव सर्वज्ञस्यापि समष्टिजीवस्य हिरण्यगर्भस्यावयववत्स्वान्तरेव
त्रिजगद्दर्शनमित्याह - सचेतन इति। अवयवी देहात्मा लौकिकपुरुषः। जीवः
समष्टिजीवः॥ २६॥

131509
131510 संविदात्मपराकाशमनन्तमजमव्ययम् |
131511 व्योम्नोऽवयवरूपाणि तस्येमानि जगन्ति भोः || २७ ||
131512
131513 मायोपहित ईश्वरस्त्वेवं पश्यतीत्याह - संविदात्मेति | भो इति संबोधनेन
131514 रामस्य तत्स्मार्यते || २७ ||
131515
131516 सचेतनोऽयःपिण्डोऽन्तः क्षुरसूच्यादिकं यथा |
131517 बुद्ध्यते बुद्ध्यते तद्वज्जीवोऽज्ञस्त्रिजगद्भ्रमम् || २८ ||
131518
131519 ईश्वरः प्रलयकाले कथं स्वान्तर्गतं जगत्पश्यति तत्राह - सचेतन इति चतुर्भिः |
131520 अयःपिण्डो यदि सचेतनः स्यात्तर्हि यथा स्वान्तः सूक्ष्मरूपेण स्थितं क्षुरसूच्यादि
131521 भाविस्वविकारं पश्येत्तद्वदित्यर्थः | जीवः स्वलीनसर्वसंस्कारोपहितः सन् || २८ ||
131522
131523 अचिच्चिद्वापि मृत्पिण्डः शरावोदञ्चनादिकम् |
131524 यथाङ्ग मनुते जीवस्तथाङ्ग मनुते जगत् || २९ ||
131525
131526 अधिष्ठानसद्रूपप्राधान्येन चित् आरोपितमृदादिरूपप्राधान्यविवक्ष्या अचिद्वा |
131527 तात्पर्यं पूर्ववदेव || २९ ||
131528
131529 चिदचिद्वाङ्कुरो देहे वृक्षत्वं मन्यते यथा |
131530 वृक्षशब्दार्थरहितं ब्रह्मेदं त्रिजगत्तथा || ३० ||
131531
131532 उपहितप्राधान्येन चित् आरोपितमृदादिरूपप्राधान्येनाचिद्वाङ्कुरः | एतांवास्तु
131533 विशेषः - जीवसंस्कारोपहितरूपेण वृक्षशब्दार्थसहितं बुध्यते
131534 तदनुपहितेश्वररूपेण तु तद्रहितमनादिसिद्धया विद्यया वा बाधितरूपमिति यावत् |
131535 शेषं प्राग्वत् || ३० ||
131536
131537 चिद्वाचिद्वा यथादर्शो बिम्बितं वाप्यबिम्बितम् |
131538 नगरं वेत्ति नो वापि तथा ब्रह्म जगत्त्रयम् || ३१ ||
131539
131540 परिणामदृशा जीवेश्वरयोः सर्गासर्गकाले जगद्दर्शने दृष्टान्तमुक्त्वा
131541 विवर्तदृशाप्याह - चिद्वेति | जीवेश्वरोपाध्युपहितदृशा वेत्ति
131542 अनुपहितशुद्धदृशा तु नो वेत्ति | यत्र नान्यत्पश्यति इत्यादिश्रुतेरिति भावः || ३१ ||
131543
131544 देशकालक्रियाद्रव्यमात्रमेव जगत्त्रयम् |
131545 अहंत्वजगतोस्तेन भेदो नास्त्येतदात्मनोः || ३२ ||
131546
131547 एवं रामप्रश्नान्समाधाय प्रासङ्गिकं च सर्वं समाप्य नाहंत्वजगती भिन्ने
131548 पवनस्पन्दने यथा | इति प्राक्प्रस्तुतार्थंन् प्रकारान्तरेण समर्थयितुमनुसंधत्ते
131549 - देशेति | अहंत्वमपि
131550 देशकालक्रियाद्रव्यतादात्म्यसंसर्गाभिमानात्मकत्वात्तद्रूपमेवेत्ये##-
131551
131552 कल्पितेनोपमानेन यदेतदुपदिश्यते |
131553 तत्रोपमैकदेशेन उपमेयसधर्मता || ३३ ||
131554
131555 एतदनुभावयितुमेव श्रुत्या मया च मृल्लोहपिण्डादिदृष्टान्ता अचेतना अपि
131556 चेतनत्वमारोप्यैकदेशसाम्येनोपन्यस्ता इत्याह - कल्पितेनेति || ३३ ||
131557
131558 यदिदं दृश्यते किंचिज्जगत्स्थावरजङ्गमम् |
131559 अमुञ्चतः पराणुत्वं जीवस्यैतत्स्मृतं वपुः || ३४ ||
131560

131561 वास्तवब्रह्मभावलक्षणं परमणुत्वं सौक्ष्म्यममुञ्चत एव विवर्तरूपं
131562 स्थूलं जगद्रूपमित्यर्थः ॥ ३४ ॥
131563
131564 सर्वसंवेदनत्यागे शुद्धसंस्पन्ददे पदे ।
131565 न मनागपि भेदोऽस्ति निःसङ्गोपलकोशवत् ॥ ३५ ॥
131566
131567 अत एवाधिष्ठानदृष्ट्या सर्वविवर्तसंवेदनबाधे निष्प्रत्यूहं सर्वतः
131568 शुद्धात्मप्रसरप्रदे पूर्णपदे न मनागपि जीवजगद्भेदोऽस्तीत्याह - सर्वेति ॥ ३५ ॥
131569
131570 यो यो नाम विकल्पांशो यत्र यत्र यथा यथा ।
131571 यदा यदा येन येन दीयते स तथैव चित् ॥ ३६ ॥
131572
131573 अबाधे तु सदा सर्वत्र सर्वविकल्पात्मनैव चिद्विवर्तत इत्याह - यो य इति । दीयते
131574 मूढेनेति शेषः । चित् तथैव तद्विकल्पानुसारेणैव सविवर्ता भवतीत्यर्थः ॥ ३६ ॥
131575
131576 अचित्त्वान्नास्ति मनसि संकल्पः ख इवाङ्कुरः ।
131577 चित्त्वात्तु चेतसो विद्धि चितिरेवेह कल्पनम् ॥ ३७ ॥
131578
131579 मनसोऽपि चिदनुप्रवेशादेव विचित्रसंकल्पसामर्थ्यं न स्वत इति चित एव
131580 सर्वविवर्तस्वातन्त्र्यमित्याह - अचित्त्वादिति ॥ ३७ ॥
131581
131582 या योदेति विकल्पश्रीरप्रबुद्धाशयं प्रति ।
131583 सर्वगत्वादनन्तत्वाच्चिद्व्योम्नः सा न सन्मयी ॥ ३८ ॥
131584
131585 यथोदेति विकल्पश्रीः प्रबुद्धे नोदितैव सा ।
131586 सर्वगत्वादनन्तत्वाच्चिद्व्योम्नः सा न सन्मयी ॥ ३९ ॥
131587
131588 एवमप्रबुद्धे उदितापि प्रबुद्धे तत्त्वे नोदितैव
131589 अनन्तत्वात्कालवस्तुकृतपरिच्छेदशून्यत्वाच्च ॥ ३९ ॥
131590
131591 सर्वसंकल्पकलना सत्येत्याबालमक्षतम् ।
131592 स्वप्नादावनुभूतोन्तरर्थः केनापि लभ्यते ॥ ४० ॥
131593
131594 यद्यसन्मयी तर्हि कथमाबालगोपालं सत्येव भाति तत्राह - सर्वेति । न
131595 जाग्रत्संकल्पकलनैव सत्येति भाति किंतु स्वप्नादिसाधारण्येन सर्वापि । न च
131596 स्वप्नभ्रान्त्यादावुपलब्धो गजरजतादिरर्थः केनापि लभ्यते इति काक्वा योज्यम् ॥ ४० ॥
131597
131598 संकल्पो वासना जीवस्त्रयोऽर्था लिखिताश्चिता ।
131599 सोनुभूतोऽप्यसत्यः स्यादसत्त्वस्यैव नो सतः ॥ ४१ ॥
131600
131601 ननु सत्यः संसारः कथमसत्यः स्यात्तत्राह - संकल्प इति । जाग्रत्स्वप्नौ
131602 संकल्पः सुषुप्तिस्तु वासनामात्रं तदुभयप्रतिबिम्बितचिद्रूपस्तदुभयभोक्ता
131603 जीवश्चेति त्रयः पदार्थाः सत्यकूटस्थचिता स्वात्मनि चित्रवल्लिखिताः सोऽयं
131604 चित्रसंसारकल्पः संसारोऽधिष्ठानसत्तया सत्य इत्यनुभूतोऽप्यसत्यस्य
131605 जीवस्यैवेत्यसत्यः स्यान्न त्वधिष्ठानसतः । तेन तदसंस्पर्शादित्यर्थः । यथा
131606 चित्रप्रतिबिम्बस्वप्नाश्वाश्चित्रप्रतिबिम्बस्वप्नपुरुषाणामसत्यानामेव वाहनं न
131607 सत्यपुरुषस्य तद्वदिति भावः ॥ ४१ ॥
131608
131609 असत्यताभिधं सत्यंन् मुक्त एव भवेच्छिवः ।
131610 सातिवाहिकदेहैकपरिक्षयविकासवान् ॥ ४२ ॥
131611
131612 ब्रह्म वा इदमग्र आसीत् इत्यादिश्रुतेरस्तु वा सत्यस्यैव स्वाबोधात्संसारस्तथापि

131613 तन्नित्यमुक्तमेव। यथा हि तत्सत्यं ब्रह्म प्राक्तत्त्वबोधात्स्वसत्यतां जगति
131614 संक्रामयत्तत्सत्यताभिधं स्वयं भवति। तथा तत्त्वबोधोत्तरं बाधिताज्जगतः
131615 स्वसत्तां स्वात्मन्युपसंहरत्तदसत्यताभिधमपि भवति। न हि
131616 प्रपञ्चस्याधिष्ठानमात्रपरिशेषादन्या असत्यता काचित्सुवचा। यत
131617 आतिवाहिकदेहसहितस्यैकस्य स्वाज्ञानस्य परिक्षयेऽपि पूर्णतालक्षणविकासवान्मुक्तः
131618 प्रत्यगात्मैव शिवो भवेदित्यर्थः॥ ४२॥
131619
131620 जगन्ति वातैरुह्यन्ते व्योम्नि शाल्मलितूलवत्।
131621 नोह्यन्ते चोपलानीव न च सन्त्येव कल्पनात्॥ ४३॥
131622
131623 अत एवाज्ञानदृष्ट्यैव जगन्त्युह्यन्ते न तत्त्वदृशेत्युक्तमित्युपसंहरति -
131624 जगन्तीति॥ ४३॥
131625
131626 इत्यस्मिन्नखिलपदार्थसार्थकोशे व्योमन्यप्यतिवितते जगन्ति सन्ति।
131627 अन्योन्यं परिमिलितानि कानिचिच्च नान्योन्यं परिमिलितानि कानिनिच्च॥ ४४॥
131628
131629 इति वर्णितरीत्या अस्मिन्नखिलपदार्थसमूहानां कोशभूते अज्ञाते
131630 प्रतीचिपरमार्थतोऽतिवितते व्योमनि शून्याकाशकल्पेऽप्यविद्यया अनन्तानि जगन्ति सन्ति।
131631 तानि च कतिपयानां जीवानां भोजकादृष्टसाम्ये जागरे ब्रह्माण्डैक्ये च अन्योन्यं
131632 परिमिलितानि। तद्वैषम्ये तु ब्रह्माण्डभेदे स्वप्ने च नान्योन्यं परिमिलितानीत्यर्थः॥
131633 ४४॥
131634
131635 सर्वत्वात्परमचितेरनन्तरूपाण्यारम्भप्रचुरदिगन्तसंभृतानि।
131636 लोलाम्बूदरपुरबिम्बभङ्गुराणि स्वान्तःस्थाविरलमहापुरोपमानि॥ ४५॥
131637
131638 तान्येव विशिनष्टि - सर्वत्वादित्यादित्रिभिः। परमचितेर्ब्रह्मणः
131639 सर्वत्वात्सर्वशक्तित्वादियत्तासंकोचकाभावाद्गुणतो वस्तुतः
131640 क्रियाजात्यादितश्चानन्तरूपाणि बहुविधकार्यारम्भप्रचुरैर्दिगन्तसंस्थितजनैः
131641 संभृतानि। लोले अम्बूदरे प्रतिबिम्बितं पुरबिम्बमिव भङ्गुराणि। अत एव
131642 स्वान्तःस्थान्यविरलानि सर्वसंभारसंभृतानि यानि देवगन्धर्वादिमहापुराणि
131643 तान्येव उपमा येषां तानि॥ ४५॥
131644
131645 सस्थैर्याण्यपि सततं क्षणक्षया।इन् व्यक्ताक्षाण्यपि सततं निमीलितानि।
131646 सालोकान्यपि परितस्तमोवृतानि चिद्रूपार्णवलहरीविवर्तनानि॥ ४६॥
131647
131648 अनुवृत्तवस्त्वात्मना सस्थैर्याण्यपि व्यावृत्तभावविकारैः क्षणक्षयाणि। एवं
131649 जागरे व्यक्ताक्षाण्यपि तत्त्वतो व्यक्त्यभावान्निमीलितानि। आत्मज्योतिषा सालोकान्यपि
131650 तस्याज्ञानतमोवृतत्वात्तमोवृतानि॥ ४६॥
131651
131652 पृथक्स्थितानि व्यतिमिश्रितानि जलानि चैवाम्बुनुधौ नदीनाम्।
131653 तारार्कचन्द्रग्रहमण्डलानां समोदितानां नभसीव भासः॥ ४७॥
131654
131655 पृथक्स्थितानां व्यतिमिश्रितत्वे व्यतिमिश्रितानां पृथक्स्थितत्वे च
131656 क्रमादृष्टान्तद्वयमाह - पृथगिति। नदीपात्रे पृथक्स्थितान्यप्यम्बुनिधौ
131657 व्यतिमिश्रितानि। नभसि समकालमुदितानां तारादीनां भासस्तु इयमस्य भा इति
131658 विवेक्तुमशक्यत्वाद्व्यतिमिश्रिता अपि एकचलने अपरचलनाभावात् पृथक्स्थितास्तानीव
131659 ता इव च॥ ४७॥
131660
131661 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मी० दे० मो० निर्वाणप्रकरणे उ० वि०
131662 जगज्जालकोशसाधर्म्ययोगोपदेशो नामाष्टादशः सर्गः॥ १८॥
131663
131664 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे

जगज्जालकोशसाधर्म्ययोगोपदेशो नामाष्टादशः सर्गः ॥ १८ ॥

## एकोनविंशः सर्गः १९

श्रीराम उवाच ।

मुने जीवस्य यद्रूपमाकृतिग्रहणं तथा ।
यथा च परमात्मत्वं स्थानं यच्चास्य तद्वद ॥ १ ॥

जीवस्वरूपतत्तत्त्वं समष्टिव्यष्टिदेहयोः ।
कल्पनं स्थानकरणभेदाद्भोगश्च वर्ण्यते ॥

यत् रूपं शास्त्रीयव्यवहारोपयुक्तं पारमार्थिकरूपं च । आकृतिः स्थूलशरीरं
तस्य ग्रहणं कल्पनम् । स्थानं बाह्यव्यवहारद्वारम् ॥ १ ॥

श्रीवसिष्ठ उवाच ।

स्वसंकल्पेन चेत्योक्तं चिदित्यपरनामकम् ।
अनन्तं चेतनाकाशं जीवशब्देन कथ्यते ॥ २ ॥

तत्र समष्टिजीवं मोक्षशास्त्रप्रसिद्धं शोधने ब्रह्माभेदयोग्यं प्रथमं
दर्शयति - स्वेति । अनन्तं यच्चेतनाकाशं ब्रह्म तदेव हन्ताहमिमास्तिस्रो देवता
अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि इति श्रुतिदर्शितस्वसंकल्पेन
स्वचेत्यसूक्ष्मभूतोपाधिप्रवेशात्तद्विष्टम्भकप्राणधारणात् जीव प्राणधारणे
इति धात्वर्थानुगमाच्चेत्येन प्राणेनोक्तं जीव इत् व्यपदिष्टम् । चक्षुरादिद्वारा
चेतयतीति चित् चेतनः इत्यपरं नाम यस्य तथाविधं राज्जीवशब्देन कथ्यत इत्यर्थः ॥
२ ॥

न पराणुर्न च स्थूलं न शून्यं न च किंचन ।
चिन्मात्रंन् स्वानुभूत्यात्म सर्वगं जीव उच्यते ॥ ३ ॥

तस्य पारमार्थिकं रूपमाह - नेति । शून्यमाकाशं तदन्तर्गतं वा किंचन
न ॥ ३ ॥

अणीयसामणीयांसं स्थविष्ठं च स्थवीयसाम् ।
न किंचिन्मात्रकं चैव सर्वं जीवं विदुर्बुधाः ॥ ४ ॥

यस्य यस्य पदार्थस्य यो भावस्तेन तत्र तम् ।
स्थितं विद्धि तदाभासं तदात्मैकान्तवेदनात् ॥ ५ ॥

तस्य सर्वगत्वमनुभावयति - यस्य यस्येति । यो भावो
जातिगुणसंस्थानाद्यसाधारणरूपंन् तेन तेन भावेन संस्थितगत एव तत्तदिव
आभासमानम् । तत्कुतः । तदेकान्तवेदनात्पुनः पुनस्तद्दर्शने तत्तदाकारेणैव
भाननियमाद्घटचक्षुःसंयोगे हि चक्षुर्द्वारा निर्गतमन्तःकरणं
स्ववृत्तिव्याप्तघटावच्छिन्नं जीवचित्स्फुरणंन् घटोऽयं स्फुरति घटोऽयं
स्फुरतीति घटस्वभावतादात्म्येनैव यतो नियमेनानुभावयतीत्यर्थः ॥ ५ ॥

स चेतति यथा यत्र यद्यदाशु तदेव हि ।
तथा तत्र तदा राम भवत्यनुभवात्मकम् ॥ ६ ॥

अत एव समष्टिजीवो यत्र यथा चेतति तत्र तथा भवति सत्यसंकल्पत्वात् । व्यष्टिजीवस्तु स

131717 यत्र यथा भवति तत्र तथा चेतति ॥ ६ ॥
131718
131719 पवनस्य यथा स्पन्दश्चेत्यं जीवस्य वै तथा ।
131720 स्वसंविन्मात्रनिर्णेयं नोपदेशाम यक्षवत् ॥ ७ ॥
131721
131722 तथा च समष्टिजीवस्य पवनस्य स्पन्द इव सर्ववस्तुवैचित्र्यचेतनात्मकः सर्गः
131723 पवनस्पन्दवत्स्वानुभवसिद्धः स्वभावो न तु बालस्य
131724 यक्षभ्रान्तिवदुपदेशाभ्यासकृत इत्याह - पवनस्येति । न चोपदेशाम
131725 उपदेशेन न साधयाम । दिशतेर्विकरणव्यत्ययश्छान्दसः ॥ ७ ॥
131726
131727 यथैवास्पन्दनाद्वातः सन्नैवैत्य सदात्मताम् ।
131728 तथैवाचेतनाज्जीवो जीवन्नेति परां गतिम् ॥ ८ ॥
131729
131730 अत एवास्य मुक्तिसुषुप्तिप्रलयेषु बाह्याभ्यन्तरार्था चेतने जीवतापि शाम्यतीत्याह -
131731 यथैवेति । परां गतिं ब्रह्मभावम् ॥ ८ ॥
131732
131733 जीवश्चिद्घनरूपत्वादहमित्येव चेतनात् ।
131734 देशकालक्रियाद्रव्यशक्तीर्निर्माय तिष्ठति ॥ ९ ॥
131735
131736 तस्याकृतिग्रहणप्रकारं वर्णयितुं
131737 सर्वकल्पनामूलस्तम्भमाविर्भूतसर्वशक्तिकं समष्ट्यहंकाराध्यासं
131738 प्रथमं दर्शयति - जीव इति । निर्माय आविर्भाव्य । सैवास्य
131739 सार्वज्ञ्यसर्वशक्तिसंपत्तिलक्षणा रुद्रता ॥ ९ ॥
131740
131741 देशकालक्रियाद्रव्यचर्चिताचर्चितां स्वयम् ।
131742 असत्यांन् सत्यवत्स्फारां तावन्मात्रशरीरिकाम् ॥ १० ॥
131743
131744 ततः सूक्ष्मभूतसंस्काराविर्भावलक्षणसमष्टिचित्तकल्पनामाह - देशेति
131745 सार्धाभ्याम् । संस्कारात्मना ईषदाविर्भावाच्चर्चितां स्थूलतया
131746 सम्यगनाविर्भावादचर्चितां च ॥ १० ॥
131747
131748 चेतसा ह्यसदाकारां प्रालेयपरमाणुताम् ।
131749 पश्यत्यात्मन्यथात्मत्वे स्वप्ने स्वमरणोपमाम् ॥ ११ ॥
131750
131751 चेतसा समष्टिचित्तभावेन सूक्ष्मतमात्संवलनात्प्रालेयपरमाणुप्रायाम् ॥ ११ ॥
131752
131753 स्वप्नस्वावयवान्यत्वसदृशीं तां विभावयन् ।
131754 विस्मृत्य चेतनां सत्तां तत्तामेवाशु गच्छति ॥ १२ ॥
131755
131756 स्वप्ने व्याघ्राद्यात्मतादर्शने प्रतीतं यत्स्वावयवानां
131757 हस्तपादादीनामन्यादृशत्वं तत्सदृशीं तां समष्टिचित्तरूपां विष्णुताम् ।
131758 तस्यैव पूर्णब्रह्मभावविस्मरणे
131759 मनःसमष्ट्यात्मकचन्द्रभावोपलक्षितस्थूलभावकल्पनया
131760 ब्रह्माण्डरूपाविराडाकृतिराविर्भवतीत्याह - विस्मृत्येत्यादिना । चेतनां
131761 चिदेकरसां ब्रह्मसत्तां विस्मृत्य परिच्छिन्नजडसत्तामेवाहमिति
131762 पश्यंस्तद्भावमेवाशु गच्छति ॥ १२ ॥
131763
131764 एवंरूपो बुध्यमानः प्रोच्छूनत्वमथात्मनि ।
131765 पश्यत्याशु स्वमात्मानं चन्द्रबिम्बमिव द्रुतम् ॥ १३ ॥
131766
131767 पञ्चीकरणेन स्थौल्यापादनात्स्थूलसमष्टिविराडात्मना प्रोच्छूनत्वम् । तत्र
131768 मनःसमष्ट्यात्मकं कालोपचयात्मना द्रुतं द्रवस्वभावं चन्द्रबिम्बमिव

131769 पश्यति सैवास्य बुद्धिसमष्टिभावलक्षणा विरञ्चितेत्यर्थः || १३ ||
131770
131771 आत्मन्यथेन्दुबिम्बात्मन्यसौ संवित्तिपञ्चकम् |
131772 काकतालीयवद्भिन्नमुदितं चेतति स्वयम् || १४ ||
131773
131774 तस्य विराड्देहे भोगोपपत्तये मनःसमष्टेरेव
131775 सकाशादादित्यादिरूपेन्द्रियपञ्चकं तत्स्थानभेदकल्पनां चाह - आत्मनीति |
131776 संवित्तिविषयभेदेनैवेन्द्रियभेदविभावनात्संवित्तिपञ्चकमित्युक्तिः || १४ ||
131777
131778 पञ्चानां संविदां पञ्च भिन्नान्यङ्गान्यसावथ |
131779 बुध्यते तानि तद्रूपरन्ध्राण्यनुभवत्यपि || १५ ||
131780
131781 तद्रूपाणि स्थानभेदरूपाणि रूपादिभोगद्वाराणि || १५ ||
131782
131783 स पञ्चावयवः पश्चाद्राजते पुरुषो विराट् |
131784 अनन्ताकारसंवित्तिरव्यक्तात्मा निरामयः || १६ ||
131785
131786 आदित्यदिग्वारिवायुपृथिव्याख्यपञ्चेन्द्रियस्थानावयवैः
131787 पञ्चविषयानुपभुञ्जानो राजते तद्विषयेषु
131788 मनोविकल्पैरनन्ताकारकल्पनादनन्ताकारसंवित्तिः | स चायं
131789 कार्यभावस्यानृतत्वात्स्वकारणव्यक्तात्मैव | अत एव निरामयः || १६ ||
131790
131791 मनोमयोऽसावुदितः परस्मात्प्रथमोत्थितः |
131792 आकाशविशदः शान्तो नित्यानन्दविभामयः || १७ ||
131793
131794 तस्य मनोमयभावेऽपि
131795 स्वतःसिद्धज्ञानैश्वर्यसर्वशक्तिसंपन्नत्वाज्जीवत्वमीश्वरत्वं
131796 चास्तीत्याशयेनाह - मनोमयोऽसाविति द्वाभ्याम् || १७ ||
131797
131798 स चाप्यपञ्चभूतात्मा पञ्चभूतात्मकोपमः |
131799 विराडात्मैकपुरुषः परमः परमेश्वरः || १८ ||
131800
131801 सर्वपुरुषसमष्टिरूपैकपुरुषः || १८ ||
131802
131803 स्वयमेवाशु भवति स्वयमेव विलीयते |
131804 स्वयमेव प्रसरति स्वयं संकोचमेति च || १९ ||
131805
131806 तस्येश्वरभावेन स्वाविर्भावतिरोभावेऽपि स्वातन्त्र्यमस्तीत्याह - स्वयमेवेति || १९ ||
131807
131808 स्वसंकल्पकृतेनासौ कल्पौघेन क्षणेन च |
131809 यदृच्छयोदेति पुनः पुनर्भूत्वोपशाम्यति || २० ||
131810
131811 मनोमात्रैकरूपात्मा प्रकृतेर्देह एष सः |
131812 एष पुर्यष्टकं प्रोक्तः सर्वस्यैवातिवाहिकः || २१ ||
131813
131814 प्रकृतेः सर्वोपादानेश्वरस्य स एष देहः | एष एव व्यष्टिभावेन सर्वस्य
131815 जीवजातस्य | पुर्यष्टकं प्राग्व्याख्यातम् || २१ ||
131816
131817 सूक्ष्मः स्थूलोऽम्बरात्मैष व्यक्तोऽव्यक्तोन्तवर्जितः |
131818 सर्वस्य बहिरन्तश्च न किंचित्किंचिदेव च || २२ ||
131819
131820 स च सूक्ष्मेषु पिपीलिकादिदेहेषु सूक्ष्मः | समः प्लुषिणा समो नागेन इत्यादिश्रुतेः |

131821 परमार्थतस्तु न किंचित् व्यवहारतस्तु किंचित्परिच्छिन्न एव च ॥ २२ ॥
131822
131823 अङ्गानि राम तस्याष्टौ मनःषष्ठानि पञ्च च ।
131824 साहंभावानीन्द्रियाणि भावाभावमयानि च ॥ २३ ॥
131825
131826 पञ्च ज्ञानेन्द्रियाणि चकारात्कर्मेन्द्रियसहितः प्राणो मनोऽहंकार
131827 इत्यष्टावङ्गानि । भावाभावमयानि मूर्तामूर्तरसरूपाणि ॥ २३ ॥
131828
131829 तेन गीता इमे वेदाः सहशब्दार्थकल्पनाः ।
131830 नियतिः स्थापिता तेन तथाद्यापि यथास्थिता ॥ २४ ॥
131831
131832 तेन चतुर्मुखीभूयेमे चत्वारो वेदा गीताः । नियतिः शास्त्रीयसदाचारादिमर्यादा ॥ २४ ॥
131833
131834 अनन्तमूर्ध्वं मूर्धास्य तथाधः पादयोस्तलम् ।
131835 अपराकाशमुदरमिदं ब्रह्माण्डमण्डपम् ॥ २५ ॥
131836
131837 ऊर्ध्वं द्यौरस्य मूर्धा शिरः । अधः पृथिवी पादयोस्तलम् ।
131838 अपरमान्तरालिकमुदरम् । तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव
131839 सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मा संदेहो बहुलो बस्तिरेव रयिः
131840 पृथिव्येव पादौ इत्यादिश्रुतेरिति भावः । ब्रह्माण्डमण्डपं शरीरमिति शेषः ॥ २५
131841 । ।
131842
131843 लोकान्तराण्यनन्तानि पार्श्वकाः क्षतजं पयः ।
131844 मांसपेश्यः क्षितिधराः सरितः संतताः शिराः ॥ २६ ॥
131845
131846 पार्श्वकाः पार्श्वाद्यवयवाः । पयो वारि क्षतजं रक्तम् ।
131847 मूत्रस्याप्युपलक्षणमेतत् । क्षितिधराः पर्वताः । मांसपेश्यः सरितः शिरा
131848 नाड्यः ॥ २६ ॥
131849
131850 रक्ताधारा जलधयो द्वीपान्येवान्त्रवेष्टनम् ।
131851 बाहवः ककुभः स्फारास्तारका रोमसंततिः ॥ २७ ॥
131852
131853 रक्ताधारा रक्तसंचयपेश्यः । वेष्टनं षट्कोशवेष्टनम् । ककुभो दिशः
131854 बाहवः । यद्यपि छान्दोग्यादौ लोमानि बर्हिरित्युक्तं तथापि श्रुत्यन्तरानुरोधेन
131855 तारका इत्युक्तिः ॥ २७ ॥
131856
131857 पञ्चाशदनिलस्कन्धा एकोनाः प्राणवायवः ।
131858 मार्तण्डमण्डलं चण्डं पित्तं जठरपावकः ॥ २८ ॥
131859
131860 एकोनाः पञ्चाशत् आवहप्रवहाद्यनिलस्कन्धाः प्राणवायवः । चण्डं क्रूरं
131861 चक्षुरिति शेषः । जठरपावक और्वानलः पित्तम् ॥ २८ ॥
131862
131863 दशाङ्कमण्डलं जीवः श्लेष्मा शुक्रं सितं बलम् ।
131864 मनः संकल्पकोशात्म सारात्मा परमामृतम् ॥ २९ ॥
131865
131866 जीवादिषट्कं तु शशाङ्कमण्डलमेव । सितं वपाभावः । संकल्पकोशात्मेति
131867 मनोविशेषणम् । परामृतं ब्रह्मैव सारात्मा ॥ २९ ॥
131868
131869 मूलं शरीरवृक्षस्य बीजं कर्मद्रुमस्य च ।
131870 प्रसवात्सर्वभावानामिन्दुरानन्दकारणम् ॥ ३० ॥
131871
131872 बीजादिभावोऽपि मनस एवेत्याह - मूलमित्यादिना ।

131873 अन्नादिभावेनाप्यायनादानन्दकारणम् ॥ ३० ॥
131874
131875 यदिन्दुमण्डलं नाम स सम्राट् जीव उच्यते ।
131876 शरीरकर्ममनसां बीजं मूलं च कारणम् ॥ ३१ ॥
131877
131878 स एव विराट्शरीरे जीवः अन्नात्मकेन तेन समष्टिप्राणधारणादित्याशयेनाह -
131879 यदिति । व्यष्टिशरीराणामन्नमयानां स बीजं प्राणहेतुकानां सर्वकर्मणां
131880 मूलं व्यष्टिमनसां च कारणम् । चन्द्रमा मनो भूत्वा हृदयं प्राविशत्
131881 इत्यादिश्रुतेरित्यर्थः ॥ ३१ ॥
131882
131883 अस्मादिन्दुविराड्जीवात्प्रसरन्ति जगत्त्रये ।
131884 जीवा मनांसि कर्माणि सुखान्यत्रामृतानि च ॥ ३२ ॥
131885
131886 तदेव स्पष्टमाह - अस्मादिति । सुखानि भोगा अमृतानि मोक्षाश्च ॥ ३२ ॥
131887
131888 विराज एते संकल्पा ब्रह्मविष्णुहरादयः ।
131889 तस्य चित्तचमत्काराः सुरासुरनभश्चराः ॥ ३३ ॥
131890
131891 विराजो विराड्जीवस्य । चतुर्मुखादिशरीराणामपि चान्द्रामृतपरिणामरूपत्वात् सोमः
131892 पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः । जनिताग्नेर्जनिता सूर्यस्य
131893 जनितेन्द्रस्य जनितोत विष्णोः इति श्रुतेरिति भावः । नभश्चराः पक्षिणः ।
131894 सर्वप्राण्युपलक्षणमेतत् ॥ ३३ ॥
131895
131896 चित्स्वभावो बुध्यमानः प्रालेयपरमाणुताम् ।
131897 यदादौ भावयत्याशु तदा तत्रैव तिष्ठति ॥ ३४ ॥
131898
131899 चित्तचमत्कारतां चित्तोपहितचिद्विवर्ततया प्रकटयति - चित्स्वभाव इति ।
131900 प्रालेयपरमाणुतां सुसूक्ष्मामृतकलात्मतां साक्षितया चन्द्रे बुध्यमानो यदा
131901 देवतादिशरीराकारं सर्गादौ भावयति संकल्पयति विराडात्मा प्रजापतिस्तदा तत्र
131902 तादृशचतुर्मुखादिशरीरभावे एव स्वयंन् सिद्धवत्तिष्ठति
131903 सत्यसंकल्पत्वादित्यर्थः ॥ ३४ ॥
131904
131905 तेनैतदेव जीवस्य स्थानंन् विद्धि रघूद्वह ।
131906 पञ्चावयवमेतत्तच्छरीरमनुभूयते ॥ ३५ ॥
131907
131908 एतच्चन्द्रमण्डलमेव सर्वजीवसमष्टिविराड्जीवस्यापञ्चीकृतपञ्चभूतान्यवयवा
131909 यस्य तथाविधं तस्य विराजः शरीरम् । एतज्जाग्रदिति सर्वैरनुभूयते ॥ ३५ ॥
131910
131911 विराड्जीवाच्चन्द्रमसो जीवभूतानि देहिनाम् ।
131912 प्रसरन्त्यन्नजातानि प्रालेयविसरात्मना ॥ ३६ ॥
131913
131914 इन्दुविराड्जीवाद्व्यष्टिजीवप्रसरं प्रागुक्तमुपपादयति - विराडिति । जीवभूतानि
131915 जीवनसाधनानि । प्रालेयविसरश्चन्द्रकलानामोषधीषु प्रसरस्तदात्मना ॥ ३६ ॥
131916
131917 तान्येव देहिदेहेषु जीवा जीवन्ति जीविषु ।
131918 मनो भूत्वा विचेष्टन्ते कर्म जन्मसु कारणम् ॥ ३७ ॥
131919
131920 जीवाः जीवोपाधयः ॥ ३७ ॥
131921
131922 एवं विराट्सहस्राणि महाकल्पशतानि च ।
131923 गतान्यथ भविष्यन्ति नानाचाराणि सन्ति च ॥ ३८ ॥
131924

131925 सहस्रशतशब्दावसंख्यपरौ। संप्रति सन्ति च॥ ३८॥
131926
131927 सर्वतोऽनुभवरूपयानया सत्तयोत्तमपदादभिन्नया।
131928 अन्तवर्जितमहाङ्गसङ्गया तिष्ठतीति पुरुषः परो विराट्॥ ३९॥
131929
131930 उत्तमपदाद्ब्रह्मणः। अभिन्नया अत एवान्तवर्जितो निरवधिर्महांश्चाङ्गसङ्गो
131931 व्यष्टिसमष्टिदेहसंबन्धो यस्यास्तथाविधया अधिष्ठानसत्तयैव तद्विवर्तो
131932 विराट्पुरुष इति वर्णितरीत्या सर्वतः सर्वदेशकालेषु इह मायावृते ब्रह्मणि
131933 तिष्ठतीत्युपसंहारः॥ ३९॥
131934
131935 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वाणप्रकरणे उत्तरार्धे
131936 विराडात्मवर्णनं नामैकोनविंशः सर्गः॥ १९॥
131937
131938 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
131939 विराडात्मवर्णनंन् नामैकोनविंशः सर्गः॥ १९॥
131940
131941 विंशः सर्गः २०
131942
131943 श्रीवसिष्ठ उवाच।
131944
131945 संकल्पपुरुषस्त्वेष यद्यत्कपयति स्वयम्।
131946 तत्तथा तादृशं पञ्चभूतात्मा भवतीव खम्॥ १॥
131947
131948 वासनाकर्मकामानुरूपसंकल्पसर्जनैः।
131949 समष्टिसाम्यंन् व्यष्टीनां जीवानामिह वर्ण्यते॥
131950
131951 विराट्पुरुषसत्यसंकल्पानुसारिविवर्तं ब्रह्म धत्ते इत्याह - संकल्पेति।
131952 पञ्चभूतात्मा विराट्पुरुषो यद्यद्यथा यथा भवत्विति संकल्पयति तत्तत्तथा तथा
131953 खं ब्रह्माकाशमपि भवति॥ १॥
131954
131955 सर्वं राम जगज्जातं तत्संकल्पं विदुर्बुधाः।
131956 तादृग्रूपं पञ्चकात्मविषयोन्मुखमाततम्॥ २॥
131957
131958 यतो ब्रह्मपूर्वोपासनाहितवासनया तादृग्रूपं पञ्चभूतात्मविराड्रूपं
131959 सर्गादौ भूत्वा उपासनाफलपञ्चमहाभूतात्मकविषयसमष्टिभोगोन्मुखतां
131960 गतमित्यर्थः॥ २॥
131961
131962 जगत्पदार्थसार्थस्य विराट् सर्वस्य कारणम्।
131963 कारणेन समान्येव कार्याणि च भवन्त्यतः॥ ३॥
131964
131965 कारणेन मृदादिना कार्याणि घटादीनि समस्वभावान्येव यतो भवन्त्यतो
131966 हेतोरित्युत्तरत्रान्वयः॥ ३॥
131967
131968 यथैष स विराडेव विराट् प्रत्येकमात्मनि।
131969 स्वसंविदि प्रसरति बोधवान्न त्वबोधवान्॥ ४॥
131970
131971 प्रत्येकं व्यष्टिजीवोऽप्यात्मनि स्वस्मिन्विराट् सर्वसर्गसमर्थ इत्यर्थः। यतो
131972 मनोवृत्त्यनुसारेण स्वसंविदि बाह्यान्तरविषयाकारेण प्रसरति सति विराडिवायमपि
131973 तत्तदर्थबोधवानेव न त्वबोधवानिति साम्यमित्यर्थः॥ ४॥
131974
131975 आसरीसृपमारुद्रमेवमभ्युदितो भ्रमः।
131976 अणावप्यद्रिविस्तारो बीजकोश इव द्रुमः॥ ५॥

131977
131978 अपकर्षावधौ आसरीसृपमुत्कर्षावधावारुद्रमेवं जगदाकारो भ्रमोऽभ्युदितः
131979 स एव सर्गः। अणावपीति भ्रमत्वे उपपत्तिः॥ ५॥
131980
131981 आसरीसृपमारुद्रं विराट् प्रत्येकमात्मनि।
131982 पराणावप्यनन्तात्मबोधतो न त्वबोधतः॥ ६॥
131983
131984 अस्त्वेवं किं ततस्तत्राह - आसरीसृपमिति। विराट् स्रष्टा। तथा च साम्यं
131985 सिद्धमित्यर्थः॥ ६॥
131986
131987 यादृगेव विराडात्मन्येष विस्तार आगतः।
131988 तादृगेवेह सर्वस्मिन्नणुमात्रेऽपि भूतके॥ ७॥
131989
131990 अणुमात्रे मशकप्लुष्यादिदेहपरिच्छिन्नेऽपि भूतके जीवे॥ ७॥
131991
131992 परमार्थेन न स्थूलं न सूक्ष्मं किंचन क्वचित्।
131993 यद्यथा विततं यत्र तत्तथाश्वनुभूयते॥ ८॥
131994
131995 विततं भ्रान्त्या विस्तारितम्॥ ८॥
131996
131997 मनश्चन्द्रमसो जातं मनसश्चन्द्र उत्थितः।
131998 जीवाज्जीवोऽथवैकैषा सत्ता द्रवजलाङ्गवत्॥ ९॥
131999
132000 ननु विराजो व्यष्टिमनस्तदुपहितजीवोभयकारणत्वेन वैषम्यमिति कथं साम्यं
132001 तत्राह - मन इति। अथवा समष्टिव्यष्ट्योरेकैवैषा सत्तेति भेद एव नास्ति कुतः
132002 कारणता तत्रेत्यविशेष इत्यर्थः॥ ९॥
132003
132004 शुक्रसारं विदुर्जीवं प्रालेयकणसंनिभम्।
132005 आनन्दोऽचलसंदोहस्तत एव प्रवर्तते॥ १०॥
132006
132007 एवमुपाधिमनःकारणतां निरस्योपहितजीवं प्रति कारणतां
132008 निरसितुमुपाधिस्वरूपमाह - शुक्रसारमिति। प्रथमं शुक्रं रेत एव सार
132009 उपाधिर्यस्य तम्। ततः शुक्रोपहितजीवादेव मातापित्रोर्मैथुनकाले अचलस्य
132010 पूर्णानन्दब्रह्मणो भोगाकारवृत्तौ प्रतिबिम्बनेन संदोहः प्रपूर्तिलक्षण
132011 आनन्दः प्रवर्तते। एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति इति श्रुतेरित्यर्थः
132012 ॥ १०॥
132013
132014 तं चेतसि तदाभासं पूर्णमात्मस्थमात्मना।
132015 तत्र तन्मयतां धत्ते तेन तन्मयरूपिणी॥ ११॥
132016
132017 तं तस्य ब्रह्मणः आभासलक्षणमानन्दं रेतोवच्छिन्नजीवचिदात्मस्थमात्मना
132018 रेतोभूतस्वभावेनैव चेतत्यनुभवति। चेतयन्तीव रेतोरूपमेवानन्दः प्रियतमोऽहमिति
132019 बीजमारभ्य तत्र तादात्म्याध्यासलक्षणां तन्मयतां धत्ते। आनन्दाद्ध्येव
132020 खल्विमानि भूतानि जायन्ते इति श्रुतेः॥ ११॥
132021
132022 जीवसंविदथैषान्तर्यदुपायाति पञ्चताम्।
132023 न तत्र कारणं् किंचिद्विद्यते न च कार्यता॥ १२॥
132024
132025 अथानन्तरमेषा जीवसंवित्तदन्तर्गतपञ्चतां देहरूपां तादात्म्येनैवोपायाति।
132026 सैवास्यास्तदुपहितता तत्र च न विराजोऽन्यस्य वा कारणतेत्याह - न तत्रेति॥ १२॥
132027
132028 प्रतियोगिव्यवच्छित्तेरभावात्स्वस्वभावयोः।

132029 स्वभावोक्तिर्न चैवात्र भवत्यर्थानुसारिणी ॥ १३ ॥
132030

132031 यद्युपहितरूपे न किंचित्कारणं तर्हि तदनागन्तुकं जीवानां स्वभावः स्यात् । न च
132032 कस्यचित्स्वभावोऽपैतीत्यनिर्मोक्षप्रसङ्ग इत्याशङ्क्याह - प्रतियोगीति ।
132033 अत्रोपहितरूपे स्वभावोक्तिरर्थानुसारिणी अर्थवती न भवति । स्वशब्दार्थविशिष्टो हि
132034 भावशब्दार्थः स्वभावः तत्र स्वशब्दो यदि शुद्धपरस्तर्हि तस्याद्वयत्वान्न
132035 प्रतियोगी तद्व्यवच्छेदो वान्योऽस्तीत्यव्यावर्तकात्तस्मादन्यो भावशब्दार्थोऽपि न
132036 निरूपयितुं शक्यत इति तद्विशिष्टार्थसिद्धेर्दूरनिरस्तत्वादित्यर्थः ॥ १३ ॥
132037

132038 जीवो जीवत्वमेव स्वजीवत्वादेव च स्वतः ।
132039 अन्तस्त्वेन बहिष्ट्वेन दृश्यते न च वायुवत् ॥ १४ ॥
132040

132041 यदि वा उपहितपरः स्वशब्दस्तदाप्यसौ न स्वबहिर्भूतं भावशब्दार्थं लभते
132042 यः स्वार्थेन विशिष्यादित्याह - जीव इति । उपहितरूपो जीवोऽपि स्वतः स्वस्य
132043 जीवत्वादुपहितरूपत्वादेव जीवत्वमुपहितरूपमेव स्वयं न तद्व्यतिरिक्तं
132044 रूपान्तरमन्तस्त्वेन बहिष्ट्वेन वा भावशब्दार्थभूतंन् विशेष्यतायोग्यं तत्र
132045 दृश्यते । स च वायुर्वातीत्यत्र क्रियात्मैव वायुर्यथा विकल्पबुद्ध्या भेदं
132046 परिकल्प्य वातीति व्यपदिश्यते तद्वज्जीवो जीवत्वमिति धर्मधर्मिभावेनेत्यर्थः ॥ १४ ॥
132047

132048 नीहारेणेव संवीतश्चेत्यवस्तुपरायणः ।
132049 जात्यन्ध इव पन्थानं मारुतात्मा न पश्यति ॥ १५ ॥
132050

132051 यदि न जन्यंन् न नित्यं स्वभावभूतं वा तर्हि किं तज्जीवरूपं यत्संसरतीति
132052 चेदनिर्वचनीयाज्ञानावृतब्रह्मैव तत्स्वात्मन एवान्यथादर्शनं तस्य संसार
132053 इत्याह - नीहारेणेत्यादिना । मारुतात्मा प्राणेन्द्रियादिजडतादात्म्यापन्नः अत एव
132054 स्वरूपं न पश्यति । न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव ।
132055 नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति इत्यादिश्रुतेरिति भावः ॥ १५ ॥
132056

132057 जगज्जृम्भिकया जीवः स्वमैक्यं द्वित्वमास्थितः ।
132058 स्पन्दशक्त्येव पवन आवृतात्मा न पश्यति ॥ १६ ॥
132059

132060 जगदाकारया जृम्भिकया बृंहिकया अविद्याशक्त्या संवीतः अत एव स्वमैक्यमेव
132061 द्रष्टृदृश्यमिति द्वित्वं कल्पयित्वा तत्रास्थितोऽभिनिविष्टः ॥ १६ ॥
132062

132063 अज्ञानस्य महाग्रन्थेर्मिथ्यावेद्यात्मनोऽसतः ।
132064 अहमित्यर्थरूपस्य भेदो मोक्ष इति स्मृतः ॥ १७ ॥
132065

132066 अत एव विद्यया अविद्यानाशसंभवान्नानिर्मोक्षदोष इत्याह - अज्ञानस्येति ।
132067 अहमित्यर्थरूपस्य महाग्रन्थेर्भेदो विदारणम् ॥ १७ ॥
132068

132069 व्यपगतघनचेतनः समन्तादहमिति नूनमबुध्यमान आस्व ।
132070 अनभिधघनचेतनैकरूपः क्षितसदसत्सदसत्सदोदितश्च ॥ १८ ॥
132071

132072 अत एव हे राम त्वं व्यपगतो घनोऽज्ञानमेघो
132073 यस्मात्तथाविधश्चेतनश्चित्प्रकाशमातः
132074 सन्नहमित्यहंकारोपाधिपरिच्छेदमबुध्यमानः शोधिततत्वंपदार्थः सन् क्षितं
132075 बाधितं सत् मूर्तं असदमूर्तं सदसत्तन्मूलाज्ञानं च यत्र तथाविधो
132076 रूपबाधादेवानभिधो नामशून्यः सैन्धवघनवदानन्दैकरसघनो
132077 यश्चेतनः शोधिततत्पदार्थस्तदेकरूपः सन् समन्तात्पूर्ण आस्व ॥ १८ ॥
132078

132079 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मी॰ दे॰ मोक्षोपायेषु निर्वाणप्रकरणे
132080 उत्तरार्धे जीवनिर्वाणयोगोपदेशो नाम विंशः सर्गः ॥ २० ॥

132081
132082 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
132083 जीवनिर्वाणयोगोपदेशो नाम विंशः सर्गः ॥ २० ॥
132084
132085 एकविंशः सर्गः २१
132086
132087 श्रीवसिष्ठ उवाच ।
132088
132089 ज्ञानिनैव सदा भाव्यं राम न ज्ञानबन्धुना ।
132090 अज्ञातारं वरं मन्ये न पुनर्ज्ञानबन्धुताम् ॥ १ ॥
132091
132092 अशुभा च शुभा चात्र द्विविधा ज्ञानबन्धुता ।
132093 हेया ग्राह्या च यत्नेन लक्षणैरुपवर्ण्यते ॥
132094
132095 तत्रादौहेयां वर्णयितुं पीठिकां रचयति - ज्ञानिनैवेति । ज्ञानी
132096 उत्तरसर्गवक्ष्यमाणलक्षणस्तथाविधेनैव सदा भाव्यं भवितव्यं
132097 ज्ञानव्याजेन सत्कर्मश्रद्धाबाधनाद्भोगलाम्पठ्येन स्वं परं
132098 चानर्थैर्बध्नातीति ज्ञानबन्धुस्तथाविधेन न भाव्यमित्यर्थः ॥ १ ॥
132099
132100 श्रीराम उवाच ।
132101
132102 किमुच्यते ज्ञानबन्धुर्ज्ञानी चैव किमुच्यते ।
132103 किं फलं ज्ञानबन्धुत्वे ज्ञानित्वेऽपि च किं फलम् ॥ २ ॥
132104
132105 किं लक्षणं प्राप्य ज्ञानबन्धुरुच्यते किं लक्षणं प्राप्य ज्ञानी उच्यते पुरुषस्ते
132106 लक्षणे तत्फले च वदेति प्रश्नार्थः ॥ २ ॥
132107
132108 श्रीवसिष्ठ उवाच ।
132109
132110 व्याचष्टे यः पठति च शास्त्रं भोगाय शिल्पिवत् ।
132111 यतते न त्वनुष्ठाने ज्ञानबन्धुः स उच्यते ॥ ३ ॥
132112
132113 अनुष्ठाने साधनचतुष्टयसंपादने मननादौ च ज्ञानोपाये यो न यतते ॥ ३ ॥
132114
132115 कर्मस्पन्देषु नो बोधः फलितो यस्य दृश्यते ।
132116 बोधशिल्पोपजीवित्वाज्ज्ञानबन्धुः स उच्यते ॥ ४ ॥
132117
132118 यस्य शास्त्राभ्यासलब्धः शाब्दो बोधः कर्मस्पन्देषु भोगव्यवहारेषु
132119 दृश्यमानेषु वैराग्योपरमादिफलैः फलितो न दृश्यते । तत्त्वकथाभिः
132120 परवञ्चनचातुरीबोधशिल्पं तदुपजीवित्वात् ॥ ४ ॥
132121
132122 वसनाशनमात्रेण तुष्टाः शास्त्रफलानि ये ।
132123 जानन्ति ज्ञानबन्धूंस्तान्विद्याच्छास्त्रार्थशिल्पिनः ॥ ५ ॥
132124
132125 अर्थाद्वसनाशनलाभादय एव शास्त्रफलानीति ये जानन्ति
132126 तान्शास्त्रार्थकथानाटनान्नटादिशिल्पिन इव विद्यात् ॥ ५ ॥
132127
132128 प्रवृत्तिलक्षणे धर्मे वर्तते यः श्रुतोचिते ।
132129 अदूरवर्तिज्ञानत्वाज्ज्ञानबन्धुः स उच्यते ॥ ६ ॥
132130
132131 द्वितीयां शुभां ज्ञानबन्धुतां लक्षणेन दर्शयति - प्रवृत्तिलक्षणे इति ।
132132 प्रवृत्तिलक्षणे निष्कामाग्निहोतादिलक्षणे धर्म्र श्रुतस्य शास्त्रार्थज्ञानस्योचिते

132133 अनुरूपे श्रुतस्य करिष्यमाणवेदान्तश्रवणस्योचिते चित्तशुद्धिद्वारा अनुकूले श्रुते
132134 श्रुतिबोधिते उचिते स्वाधिकारकुलाचाराद्युचिते च | विविदिषन्ति यज्ञेन दानेन तपसा
132135 इत्यादिश्रुतेः | सत्कर्मानुष्ठाने चित्तशुद्धिक्रमेणावश्यं ज्ञानेन बध्यते इति
132136 व्युत्पत्त्या अदूरवर्तिज्ञानत्वावगमादित्यर्थः || ६ ||
132137
132138 आत्मज्ञानं विदुर्ज्ञानं ज्ञानान्यन्यानि यानि तु |
132139 तानि ज्ञानावभासानि सारस्याऽनवबोधनात् || ७ ||
132140
132141 अनात्मशास्त्राभ्यासपरा अपि तत्तदर्थज्ञानैः संबध्यमाना दृश्यन्ते
132142 तत्सदृशोऽयं मा भूदित्यात्मज्ञाने विशेषं दर्शयति - आत्मज्ञानमिति | तानि
132143 ज्ञानमिवावभासन्ते न तु ज्ञानानि | कुतः | रसेन सारभूतेनाबाध्येन
132144 निरतिशयानन्दात्मना सह वर्तेते इति सरसौ तदध्यस्तौ जगज्जीवौ तयोर्भावः
132145 सारस्यं् तदधिष्ठानब्रह्मरस एव
132146 तदनवबोधनादध्यस्तबाध्यार्थमात्रबोधनाद्भ्रान्तिमात्रतया
132147 अज्ञानतरङ्गमात्रत्वादित्यर्थः || ७ ||
132148
132149 आत्मज्ञानमनासाद्य ज्ञानान्तरलवेन ये |
132150 संतुष्टाः कष्टचेष्टं ते ते स्मृता ज्ञानबन्धवः || ८ ||
132151
132152 अत एव तल्लाभमात्रतुष्टानामशुभज्ञानबन्धुतैवेत्याह - आत्मज्ञानमिति |
132153 अभ्यासश्रमेण दुरभिमानादिदोषाधानेन पारलौकिकानर्थफलेन च
132154 कष्टाश्चेष्टा यस्मिन्कर्मणि तद्यथा भवति तथा ते संतुष्टा इति हेतोस्तेऽपि
132155 अशुभज्ञानबन्धवः स्मृता इत्यर्थः || ८ ||
132156
132157 ज्ञानादितज्ज्ञेयविकाशशान्त्या विना न संतुष्टधियेह भाव्यम् |
132158 त्वं ज्ञानबन्धुत्वमुपेत्य राम रमस्व मा भोगभवामयेषु || ९ ||
132159
132160 अत एव न सप्तमभूमिकास्थैर्यपर्यन्तं मुमुक्षुणा तौष्टिकेन भवितव्यमित्याह
132161 - ज्ञानादीति | ज्ञानं बाह्याभ्यन्तरगोचरवृत्तयः आदिपदत्तत्कारणानि
132162 तदाश्रयः प्रमाता च तेषां ज्ञेयाः शब्दादयस्तेषां विकाशाः
132163 प्रथाश्चेत्येषामात्यन्तिकशान्त्या
132164 पूर्णानन्दैकरसस्वप्रकाशब्रह्मात्मैक्यप्रतिष्ठां विना
132165 मुमुक्षुणाऽवान्तरभूमिलाभमात्रेण कृतार्थोऽस्मीति संतुष्टधिया
132166 उत्तरोत्तरभूमिप्रापकप्रयत्नशिथिलेन कदाचिदपि न भाव्यम् | हे राम त्वं
132167 सर्वविद्यास्थानकुशलोऽप्यनात्मशास्त्रपाटवासक्त्या ज्ञानोपेक्षणेनानधिकारिषु
132168 ज्ञानोपदेशकौशलख्यापनेन वा ज्ञानबन्धुत्वमुपेत्य
132169 तत्ख्यातिलाभादिप्रयुक्तभोगलक्षणेषु भवामयेषु मा रमस्वेत्यर्थः || ९ ||
132170
132171 अत्राहारार्थं कर्म कुर्यादनिन्द्यं कुर्यादाहारं प्राणसंधारणार्थम् |
132172 प्राणाः संधार्यास्तत्त्वजिज्ञासनार्थं तत्त्वं जिज्ञास्यंयेन भूयो न
132173 दुःखम् || १० ||
132174
132175 कथं तर्हि मुमुक्षुणा स्थातव्यं तदाह - अत्रेति | आहारो हितमितमेध्याशनं
132176 तदर्थं तदुपायप्राप्तये श्रुतिस्मृतिशिष्टैरनिन्द्यंन्
132177 स्ववर्णाश्रमोचितोपायेनाहारार्जनादिकर्म कुर्यात् | शिष्टं स्पष्टम् || १० ||
132178
132179 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वाणप्रकरणे उत्तरार्धे
132180 ज्ञानविचारो नामैकविंशः सर्गः || २१ ||
132181
132182 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
132183 ज्ञानविचारो नामैकविंशतितमः सर्गः || २१ ||
132184

द्वाविंशः सर्गः २२

श्रीवसिष्ठ उवाच।

ज्ञानेन ज्ञेयनिष्ठत्वाद्योऽचित्तं चित्तमेव च।
न बुध्यते कर्मफलं स ज्ञानीत्यभिधीयते॥ १॥

ज्ञानिनो लक्षणान्यादौ कीर्त्यन्तेऽत्रोपपत्तिभिः।
तथा जीवजगद्ब्रह्मतत्त्वादीनि प्रसङ्गतः॥

ज्ञानबन्धुतां तत्फलं चोपवर्ण्य ज्ञानी चैव किमुच्यते ज्ञानित्वेऽपि च किं
फलमिति प्रश्नयोरुत्तरं वक्तुं प्रथमं ज्ञानिलक्षणान्याह - ज्ञानेनेति। यः
पुमान् भूमिकारोहणक्रमपरिपक्वेन ज्ञानेन ज्ञेयब्रह्ममात्रे
दृढप्रतिष्ठत्वात्प्रारब्धकर्मफलं भुञ्जानोऽप्यचित्तं चित्तभिन्नं
शब्दादिविषयजातं तत्तदाकारपरिणतं कामसंकल्पादिवृत्तिभेदैः परिणतं च
चित्तमेवेति तच्च बाधितानुवृत्तिमात्रत्वान्न वस्तुसद्बुध्यते स ज्ञानीति
तल्लक्षणज्ञैरभिधीयत इत्यर्थः॥ १॥

ज्ञात्वा सम्यगनुज्ञानं दृश्यते येन कर्मसु।
निर्वासनात्मकं ज्ञस्य स ज्ञानीत्यभिधीयते॥ २॥

तथा ज्ञस्य शब्दादिविषयभोक्तुः प्रमातुरन्तःकरणस्य कर्मसु भोग्यभूतेषु
विषयेषु येन पुरुषेण ज्ञाने ज्ञाने इत्यनुज्ञानम्। वीप्सायामव्ययीभावः। सर्वेषु
साक्षुषादिवृत्तिभेदेषु साक्षितया स्थितं चिन्मात्रं सम्यक् तत्त्वतो ज्ञात्वा बाधितं
दृश्यं निर्वासनात्मकं वासनामात्रेणाप्यपरिशिष्टं दृश्यते स
ज्ञानीत्यर्थः। अथवा येन तत्त्वेन ज्ञातेन चित्तं निर्वासनं भवति तत्तत्त्वं सम्यक्
ज्ञात्वा स्थितस्य यस्य ज्ञस्य सर्वेषां प्राणिनां कर्मसु यथेच्छव्यवहारेषु
स्वैरं व्यवहरन्त्वित्यनुज्ञानमेव दृश्यते।
स्वधनापहारवधबन्धादिप्रवृत्तिमपि दस्यूनां योऽनुमोदते स ज्ञानीत्यर्थः।
इदं तु जडभरतादौ प्रसिद्धम्॥ २॥

अन्तःशीतलतेहासु प्राज्ञैर्यस्यावलोक्यते।
अकृत्रिमैकशान्तस्य स ज्ञानीत्यभिधीयते॥ ३॥

अकृत्रिमेणैकेन स्वात्मलाभेन शान्तस्य यस्य ईहासु व्यवहारेषु॥ ३॥

अपुनर्जन्मने यः स्याद्बोधः स ज्ञानशब्दभाक्।
वसनाशनदा शेषा व्यवस्था शिल्पजीविका॥ ४॥

पुनर्जन्ममूलाज्ञानोच्छेदित्वात्तत्त्वज्ञानमेव ज्ञानंन् नेतरदित्याह -
अपुनर्जन्मने इति। शेषा तदन्या शाब्दज्ञानचातुरी तु वसनाशने ददातीति
वसनाशनदा इतरशिल्पतुल्या जीविकैव न ज्ञानशब्दवाच्येत्यर्थः॥ ४॥

प्रवाहपतिते कार्ये कामसंकल्पवर्जितः।
तिष्ठत्याकाशहृदयो यः स पण्डित उच्यते॥ ५॥

शरदाकाशमिव निरावरणप्रकाशं हृदयंन् यस्य॥ ५॥

अकारणं प्रवर्तन्त इव भावा अकारणात्।
अविद्यमाना अप्येतेऽविद्यमाना इव स्थिताः॥ ६॥

उक्तलक्षणोपपत्तये तत्त्वज्ञानस्य सर्वद्वैतवासनोच्छेदकत्वं समर्थयितुं

132237 जगतः असदविद्यामात्रत्वपरिशेषादकारणत्वासत्त्वे दर्शयति -
132238 अकारणमित्यादिना। यतोऽविद्यमानाः अतः अकारणं विनैव कारणं प्रवर्तन्ते
132239 उत्पद्यन्त इव न तु वस्तुत उत्पद्यन्ते। एवं चाविद्यमाना एव स्थिता इव॥ ६॥
132240
132241 आविर्भावतिरोभावैर्भावाभावभवाभवैः।
132242 पश्चात्कारणतां यान्ति मिथः कारणकर्मभिः॥ ७॥
132243
132244 उत्तरभावविकारेष्वप्यकारणत्वादेवासत्त्वं बोध्यमित्याशयेनाह - आविर्भावेति
132245 । ननु बीजादङ्कुरोत्पत्तेः प्रत्यक्षं दर्शनात्कथमकारणं प्रवर्तन्त इत्युच्यते
132246 तत्राह - पश्चादिति। नेदं सर्गादौ संभवति प्रलये
132247 बीजाङ्कुरयोरुभयोरप्यभावादिति भावः। कारणकर्मभिः कारणव्यापारैः॥ ७॥
132248
132249 असतः शशशृङ्गादेर्मृगतृष्णाम्भसो यथा।
132250 आलोकनादलभ्यस्य कीदृक् स्यात्किल कारणम्॥ ८॥
132251
132252 सांप्रतं दृश्यमानमपि बीजं सतोऽङ्कुरस्य कारणमसतो वा। नाद्यः। सतः
132253 कारणापेक्षाभावात्। नद्वितीय इत्याह - असत इति द्वाभ्याम्॥ ८॥
132254
132255 असतः शशशृङ्गादेः कारणं मार्गयन्ति ये।
132256 वन्ध्यापुत्रस्य पौत्रस्य स्कन्धमासादयन्ति ते॥ ९॥
132257
132258 आसादयन्त्यारोहन्ति। असत्तत्कारणतन्मार्गणानां पुत्रपौत्रतत्स्कन्धारोहणानि
132259 क्रमाद्दृष्टान्ताः॥ ९॥
132260
132261 असत्यप्रतिभासानामेतदेवाशु कारणम्।
132262 यदनालोकनं नाम समालोकक्षणक्षयम्॥ १०॥
132263
132264 यद्यकारणद्वैतभावाभ्युपगमे अनिर्मोक्षप्रसङ्गवारणाय
132265 मोक्षशास्त्रप्रामाण्याय च कारणमवश्यं कल्प्यं तर्हि ज्ञानमात्रनिवर्त्यं
132266 मिथ्याभूतमज्ञानमेव तत्कारणं कल्पनीयं नान्यत्सद्रूपं तस्य ज्ञानेन
132267 निवर्तयितुमशक्या अनिर्मोक्षतादवस्थ्यप्रसङ्गादित्याशयेनाह - असत्येति।
132268 अनालोकनमज्ञानम्॥ १०॥
132269
132270 परमात्मायते जीवो बुध्यमानस्त्वचेतनम्।
132271 चेतनं बुध्यमानस्तु जीव एवावतिष्ठते॥ ११॥
132272
132273 बन्धस्याज्ञानकार्यत्वं समालोकक्षणक्षयत्वं चानुभावयति - परमिति।
132274 अयं जीवः परं स्वातिरिक्तमचेतनं जडमहंकारदेहादि बुध्यमानस्तत्क्षणमेव
132275 तत्तादात्म्याध्याससंस्कारोद्बोधादात्मायते आत्मेवाचरति स एव त्वस्य बन्धः।
132276 चेतनं निष्कृष्टचिन्मात्रमात्मानं बुध्यमानस्तु जीव एव येन जानाति जीवन्ति इति
132277 श्रुतिदर्शितदिशा सर्वजगदुज्जीवनहेतुनिष्कृष्टनिरतिशयानन्दाद्वय एवावतिष्ठते
132278 सोऽस्य मोक्ष इत्यर्थः। अथवा जीवः चेत्यते अनेनेति चेतनं बुद्धिः। चेत्यते अस्मिन्निति
132279 चेतनं स्थूलदेहः। चितिक्रिया चेतनं चिदाभासः। तत्त्रितयरहितं
132280 कूटस्थाद्वयचिन्मात्रमात्मानं बुध्यमानः सन् परमात्मा ब्रह्मेवाचरति
132281 परमात्मायते। अद्वितीयपूर्णानन्दैकस्वभावोऽवतिष्ठते। चेतनं
132282 बुद्ध्यादिकमात्मेति बुध्यमानस्तु जीव एव भूत्वावतिष्ठते न पूर्णभावं लभते
132283 इत्यर्थः। अथवा अयं जीवश्चेतनं विषयेषु चाक्षुषादिवृत्तिफलैर्व्यापनंन्
132284 तद्रहितमचेतनं यथा स्यात्तथा वृत्तिव्याप्त्यैव न तु फलव्याप्त्येत्यर्थः।
132285 एवमात्मानं स्वप्रकाशचिद्रूपतया बुध्यमानः परमात्मैव न ह्यनात्मा
132286 अणुमात्रमपि फलव्याप्तिं विना बुध्यते। चेतनं वृत्तिव्यापनंन् यथा स्यात्तथा
132287 अणुमात्रमपि बुध्यमानो जीव एवावतिष्ठते न ब्रह्मस्वभावं स्वं
132288 प्राप्नोतीत्यर्थः। तथा च श्रुतिः - यस्यामतं तस्य मतं मतं यस्य न वेद सः

132289 | अविज्ञातं विजानतां विज्ञातमविजानताम् इति || ११ ||
132290
132291 परमात्मैव जीवोऽयंन् बुध्यमानस्त्वचेतनम् |
132292 आम्र एव रसापत्तेः प्रयाति सहकारताम् || १२ ||
132293
132294 पूर्वार्धंन् विवृणोति - परमात्मैवेति | अयं जीवो यथोक्तरीत्या
132295 अचेतनमजागरणमेव स्वात्मनि बुध्यमानो जागरूकः
132296 परमात्मरसावेशात्परमात्मैव भवति | यथा आम्र एव हेमन्ते सुप्तप्रायो वसन्ते
132297 रसावेशात्पल्लवितः पुष्पितश्च प्रबुद्धप्रायः सहकारशब्दवाच्यतां प्रयाति
132298 तद्वदित्यर्थः | उत्तरार्धमपि विवृणोति - चेतनमिति | जातिजन्मसु नानायोनिजन्मसु
132299 || १२ ||
132300
132301 चेतनं चेतनं बुध्यमानस्तु जीव एवावतिष्ठते |
132302 जीवो जीवितजीर्णेषु जातिजन्मसु जर्जरः || १३ ||
132303
132304 ये परां दृष्टिमायाता विधि तेषामपामिव |
132305 अरूपालोकमननं स्पन्दमस्पन्दनं सदा || १४ ||
132306
132307 अत एव तत्त्वविदां चेष्टास्तदभिमानाभावादस्पन्दरूपा एवेत्याह - ये इति |
132308 रूपालोकमननाभिमानशून्यम् | अपां निम्नानुसरणमिव
132309 प्रारब्धमात्रानुसरणमित्यर्थः || १४ ||
132310
132311 ये परां दृष्टिमायाता दृश्यश्रीपारदर्शिनः |
132312 न विद्यमानमप्यस्ति तेषां वेदनमाततम् || १५ ||
132313
132314 यथा दग्धपटदर्शनं पटदर्शनमेव न भवति किंतु भस्मदर्शनं तथा
132315 बाधितदृश्यश्रीदर्शनं तदतीतब्रह्मदर्शनमेवेति न द्वैतवेदनंन्
132316 तेषामस्तीत्याशयेनाह - ये इति || १५ ||
132317
132318 ये परां दृष्टिमायाता विद्धि तेषामपामिव |
132319 स्पन्दमस्पन्दनं सर्वमवेदनवशादिह || १६ ||
132320
132321 अतोऽपि तेषां स्पन्दस्यास्पन्दत्वं रूपदर्शनाभावेऽप्यापो दृष्टान्ता इत्याशयेनाह
132322 - ये इति || १६ ||
132323
132324 अरूपालोकमननवेष्टिता मुक्तदामवत् |
132325 बुधाः कर्मसु चेष्टन्ते वृक्षपत्रेष्विवानिलः || १७ ||
132326
132327 अत एव च तेषां कर्मलेपबन्धनाभाव इत्याह - अरूपेति | यतो
132328 रूपालोकमननवेष्टिता न भवन्त्यतो मुक्तदामा उत्सृष्टो
132329 वृषभस्तद्वद्बन्धनशून्या इत्यर्थः || १७ ||
132330
132331 ये परां दृष्टिमायाताः संसृतेः पारदर्शिनः |
132332 न ते कर्म प्रशंसन्ति कूपं नद्यांन् वसन्निव || १८ ||
132333
132334 पारलौकिककर्मापेक्षा तु दूरनिरस्तेत्याशयेनाह - ये इति || १८ ||
132335
132336 ये बद्धवासना मूढाः कर्म शंसन्ति तेऽनघ |
132337 श्रुतिस्मृत्युचितं तेन विनाबोधं प्रयान्ति ते || १९ ||
132338
132339 अज्ञानां तु कर्मैव शरणमित्याह - ये इति | विनाबोधं तत्त्वज्ञानाभावात् तेन
132340 कर्मणैव ते प्रयान्ति तत्फलभोगमिति शेषः || १९ ||

132341
132342 इन्द्रियाणि पतन्त्यर्थं भ्रष्टं गृध्र इवामिषम् |
132343 तानि संयम्य मनसा युक्त आसीत तत्परः || २० ||
132344
132345 कुतस्तेषां कर्मैव शरणं तत्राह - इन्द्रियाणीति | भ्रष्टमधःपतितम् |
132346 अधःपातहेतुमिति यावत् | सत्कर्मानालम्बने तेषामधःपात एवेन्द्रियैः कार्य इति
132347 भावः | तथा च श्रुतिः कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः | एवं
132348 त्वयिनान्यथेतोस्ति न कर्म लिप्यते नरे इति | अत एव विदुषोपीन्द्रियनिग्रहे सत्येव
132349 स्वरूपप्रतिष्ठा सिद्ध्यति नान्यथेत्याह - तानीति || २० ||
132350
132351 नासन्निवेशं हेमास्ति नासर्गं ब्रह्म विद्यते |
132352 किंतु सर्गादिशब्दार्थमुक्तं युक्तमतेः शिवम् || २१ ||
132353
132354 अदग्धे दग्धे च पटे संनिवेशसाम्यवज्जगत्संनिवेशसाम्यभानमविदुषामिव
132355 विदुषामप्यस्तु नाम तथापि तद्विदुषां ब्रह्मैवेत्याशयेनाह - नासन्निवेशमिति
132356 || २१ ||
132357
132358 एकान्धकारे संपन्ने व्यवहारो युगक्षये |
132359 निर्विभागो निराभासो यथा ब्रह्मघने तथा || २२ ||
132360
132361 सर्गशब्दार्थमुक्तत्वे प्रलयो दृष्टान्त इत्याह - एकेति | तथा असन्नपि सन्निति
132362 शेषः || २२ ||
132363
132364 अभ्रोदरे भ्रमाङ्गानां स्पन्दास्पन्दमयी यथा |
132365 स्वसंविदात्मिका सत्ता भूतानामीश्वरी तथा || २३ ||
132366
132367 प्रलये स्पन्दसत्तामसंभावयन्तं प्रति दृष्टान्तमाह - अभ्रोदरे इति | यथा
132368 चलदभ्रोदरे तदवयवानामभ्रादविभागादस्पन्दमयी दिग्विभागात्तु स्पन्दमयीति
132369 स्वानुभवसंविदात्मिकैव विरुद्धधर्मयौगपद्येन सत्ता संभाव्यते
132370 तद्वत्प्रलयेऽपीश्वरी स्पन्दसत्ता भूतानां संभावनीयेत्यर्थः || २३ ||
132371
132372 जलस्यान्तर्जलांशानां द्वैताद्वैतमयो यथा |
132373 स्वसंविदात्मा सुस्पन्दस्तथा ब्रह्मणि भूतदृक् || २४ ||
132374
132375 तत्र चिदाभासस्पन्दसद्भावेऽपि दृष्टान्तमाह - जलस्येति | जलस्य
132376 स्तिमिततडागादिजलस्य द्वैताद्वैतमयस्तैमित्याद्भेदाभेदाभ्यां दुर्वचः
132377 स्वसंविदात्मा ब्रह्मसंविदात्मा भूतदृक् तत्तज्जीवाभासः || २४ ||
132378
132379 यथाम्बरेऽम्बरांशानां द्वैताद्वैतकृतात्मनि |
132380 अनन्या सृष्टिराभाति तथानवयवे शिवे || २५ ||
132381
132382 निरवयवे सावयवजगत्सद्भावेऽपि दृष्टान्तमाह - यथेति | अम्बरांशानां
132383 दिग्भेदरूपाणामाकाशावयवानाम् || २५ ||
132384
132385 जगतोऽन्तरहंरूपमहंरूपान्तरे जगत् |
132386 स्थितमन्योन्यवलितं कदलीदलपीठवत् || २६ ||
132387
132388 अनयैव रीत्या प्रागुक्तमहंकारजगतोरन्योन्यान्तर्गतत्वमपि संभावनीयमित्याह
132389 - जगत इति || २६ ||
132390
132391 रूपालोकमनस्कारै रन्ध्रैर्बहिरिव [अन्धैर्बहिरिव स्थितम् इति पाठः |]
132392 स्थितम् |

132393 सृष्टिं पश्यति जीवोऽन्तः सरसीमिव पर्वतः || २७ ||
132394
132395 अहंकारात्मनो जीवस्य स्वान्तर्गतजगतो बहिर्दर्शनेऽपि दृष्टान्तमाह - रूपेति |
132396 यथा पर्वतो हिमवदादिः स्वरन्ध्रैर्निर्गतं स्वान्तर्गतजलमेव
132397 मानसादिमहासरस्तया पश्यति तद्वत् || २७ ||
132398
132399 जीवो जगत्तयात्मानं पश्यत्ययमकारणम् |
132400 हेमेव कटकादित्वं तदपश्यन्न पश्यति || २८ ||
132401
132402 यथा हेमपिण्डे भूतभाविकटकाद्याकाराः पर्यालोचने दृश्यन्ते
132403 कनकमात्रदृष्टौ तु न दृश्यन्ते तद्वज्जीवे जगदपीत्याह - जीव इति | अकारणं
132404 निर्निमित्तं भ्रान्त्यैवेत्यर्थः || २८ ||
132405
132406 जीवन्तोऽपि न जीवन्ति म्रियन्ते न मृता अपि |
132407 सन्तोपि च न सन्तीव पारावारविदः शुभाः || २९ ||
132408
132409 अत एव तद्दर्शिनां जीवन्मुक्तानां जन्ममरणसंसारस्थितयोऽन्यदृशा सत्योऽपि न
132410 सन्त्येवेत्याह - जीवन्त इति || २९ ||
132411
132412 प्रबुद्धः सर्वकर्माणि कुर्वन्नपि न पश्यति |
132413 गृहकर्माणि गेहस्थो गोष्ठभाण्डमना इव || ३० ||
132414
132415 ब्रह्मासक्तमनसो देहयात्राकर्मणि न कर्तृताबुद्धिः यथा
132416 गोष्ठभाण्डेष्वासक्तमनसो गृहकर्मणीत्याह - प्रबुद्ध इति || ३० ||
132417
132418 विराड् हृदि यथा चन्द्रः प्रतिदेहं यथा स्थितः |
132419 जीवो हिमकणाकारः स्थूले स्थूलो लघौ लघुः || ३१ ||
132420
132421 प्रासङ्गिकं समाप्य प्रस्तुतमनुसंधत्ते - विराडिति | यथा ब्रह्माण्डहृदि
132422 विराड् जीवश्चन्द्रः स्थित एवं प्रतिव्यष्टिदेहं रेतोहिमकणाकारो जीवो हृदि स्थित
132423 इत्यर्थः || ३१ ||
132424
132425 अहमात्मा त्रिकोणत्वमुपगच्छति कल्पनम् |
132426 असदेव सदाभासं मन्यते चेतनाद्वपुः || ३२ ||
132427
132428 तस्य देहग्रहणप्रकारमाह - अहमात्मेति | स पितृहृदि रेतोरूपेण
132429 स्थितोऽहंकारात्मा जीवः पित्रा मातुस्त्रिकोणयोनौ निषिक्तस्त्रिकोणपरिच्छिन्नत्वरूपं
132430 कल्पनमुपगच्छति | तत्रत्यरक्तमिश्रितः
132431 कललबुद्बुदपिण्डाद्याकारक्रमेणाविर्भूतमसदेव वपुः शरीरं सदाकारमहमिति
132432 चेतनान्मन्यते || ३२ ||
132433
132434 कर्मकोशे त्रिकोणे च शुक्रसारेऽवतिष्ठते |
132435 देहे जीवोहमित्यात्मा स्वामोदः कुसुमे यथा || ३३ ||
132436
132437 एवं त्रिकोणोपलक्षिते मातृगर्भे शुक्रमेव सारः अस्थिस्नाय्वादिकठिनांशो यत्र
132438 तथाविधे स्वकर्मनिर्मितकोशे देहे कोशकारकृमिरिव बद्धोऽवतिष्ठते | स्वामोदः
132439 सुगन्धः || ३३ ||
132440
132441 अहमित्येव शुक्रस्था संविदापादमस्तकम् |
132442 विसरत्यखिले ज्योत्स्ना यथा ब्रह्माण्डमण्डपे || ३४ ||
132443
132444 तत्रापि चन्द्रकलानां चन्द्रबिम्ब इव हृदयस्थशुक्रकणेऽहंभावस्फूर्तीनां

132445 विशेषव्याप्तिस्तद्द्वारा सर्वदेहसामान्याहंभावप्रथेति स्वानुभवादेव
132446 प्रसिद्धमित्याह - अहमिति ‖ ३४ ‖
132447
132448 अक्षरन्ध्रप्रणालेन विसृतं वेदनोदकम् |
132449 व्याप्नोति त्रिजगद्धूमो वियन्मेघतया यथा ‖ ३५ ‖
132450
132451 तस्य बाह्यार्थदर्शने द्वाराण्याह - अक्षेति | विसृतं बहिर्निःसृतं
132452 साभासान्तःकरणलक्षणं वेदनोदकम् | त्रिजगत् त्रैलोक्यस्थान्
132453 संनिकृष्टबाह्यर्थान् | यथा धूमो मेघतया वियद्व्याप्नोति तद्वत् ‖ ३५ ‖
132454
132455 देहे यद्यप्यशेषेऽस्मिन्बहिरन्तश्च वेदनम् |
132456 विद्यते तत्तथाप्यत्र शुक्रेऽस्ति घनवासना ‖ ३६ ‖
132457
132458 सर्वदेहापेक्षया हृदयस्थे शुक्रे विशेषाभिमानोऽनुभवसिद्ध इत्याह - देहे इति
132459 | घनवासना विशेषाभिमानः ‖ ३६ ‖
132460
132461 जीवः संकल्पमात्रात्मा यत्संकल्पोऽवतिष्ठते |
132462 हृदि भूत्वा स एवाशु बहिः प्रसरति स्फुटम् ‖ ३७ ‖
132463
132464 अत एव हि हार्दसंकल्पपूर्वकमेव बाह्यार्थव्यवहाराः प्रवर्तन्त इत्याह - जीव
132465 इति ‖ ३७ ‖
132466
132467 यथास्थितां च निश्चित्तां वर्जयित्वा स्थिरोपमाम् |
132468 न कयाचिदपि स्थित्या शाम्यत्यहमिति भ्रमः ‖ ३८ ‖
132469
132470 अत एव च तदहंभावश्चित्तस्य ब्रह्माकारस्थितिं विना नोपायसहस्रैरपि
132471 शाम्यतीत्याह - यथास्थितामिति | समाधिपरिपाके स्थिरब्रह्मैकरस्यात्स्थिरोपमाम्
132472 ‖ ३८ ‖
132473
132474 चिन्तानुचिन्त्यमानापि भावनीयाम्बरोपमा |
132475 अहंभावोपशमने शमनेन क्रमेण ते ‖ ३९ ‖
132476
132477 अत एव हे राम ते तव मनननिदिध्यासनादिना अनुचिन्त्यमानापि ब्रह्मचिन्ता
132478 आत्यन्तिकाहंभावोपशमने चरमभूमिकायामम्बरोपमा भावनीया संपाद्या |
132479 नैतावतैव त्वयोपरन्तव्यमित्यर्थः ‖ ३९ ‖
132480
132481 तज्ज्ञा व्यवहरन्तीह भाव्यभावनवर्जितम् |
132482 अरूपालोकमननं मौनं दारुनरा इव ‖ ४० ‖
132483
132484 तर्हि किं भवदादीनामपि तथा सा भावनीया नेत्याह - तज्ज्ञा इति |
132485 अरूपालोकमननं बाह्यमानसदृश्यदर्शनाभिमानरहितं यथा स्यात्तथा |
132486 मौनं कर्मेन्द्रियव्यापारशून्यं च ‖ ४० ‖
132487
132488 अकिंचिद्भावनो यः स्यात्स मुक्त इति कथ्यते |
132489 जीवन्नाकाशविशदो बन्धशून्य इव स्फुटम् ‖ ४१ ‖
132490
132491 बन्धशून्यः शृङ्खलादिनिर्मुक्त इव ‖ ४१ ‖
132492
132493 अहमित्येव शुक्रस्था संविदापादमस्तकम् |
132494 विसरत्यखिले देहे ब्रह्माण्डेऽर्कप्रभा यथा ‖| ४२ ‖
132495
132496 सर्वशरीरेऽहंभावव्याप्तिरपि शुक्रांशव्याप्तिवशादेवेत्याह - अहमिति ‖ ४२ ‖

दृङ्नेत्रं स्वदनं जिह्वा श्रुतिः श्रोत्रं भवत्यसौ।
इत्याद्या वासनाः पञ्च बद्ध्वा तासु निमज्जति॥ ४३॥

चक्षुरादीन्द्रियभावेन तत्तत्स्थानसंबन्धोऽपि शुक्रात्मभूतस्यैव जीवस्येत्याह ##-
स्त्र्यादिदर्शनस्पर्शनश्रवणादौ सर्वेन्द्रियैरपि कामोद्दीपनान्निमज्जतीत्यर्थः॥ ४३
॥

चिद्भावोऽक्षतयोदेति मनो भूत्वैकदेशतः।
सर्वगोऽपि रसो भूमौ यथाङ्कुरतया मधौ॥ ४४॥

अज्ञानावृतचितो विपरीतभावनैव प्रथमं मनो भूत्वा
रेतोऽहंभावेनैकदेशतोऽक्षतया तत्तदिन्द्रियभावेनोदेतीत्यर्थः॥ ४४॥

यो भावयति भावेषु नेह रूढेष्वभावताम्।
तस्यायत्नवतो दुःखमनन्तं नोपशाम्यति॥ ४५॥

अत एव तत्प्रतिकूलयथार्थभावनां विना न तद्दुःखोपरम इत्याह - य इति। यः
पुरुष इह संसारे रूढेषु मनोहंकारदेहादिजगद्रूपेषु वाचारम्भणंन् विकारो
नामधेयम् नेह नानास्ति किंचन अथात आदेशो नेति नेति
इत्यादिश्रुतिदर्शितामभावतां न भावयति। तस्य मोक्षानुकूलयत्नरहितस्य
पुंगर्दभस्यानन्तं जन्मादिदुःखं नोपशाम्यत्येवेत्यर्थः॥ ४५॥

येन केनचिदाच्छन्नो येन केनचिदाशितः।
यत्र क्वचनशायीह स सम्राडिव राजते॥ ४६॥

तथा भावयतस्तु बाह्यसर्वस्वत्यागेऽपि प्रारब्धाकृष्टजनैः
संपाद्यमानवसनाशनादिभिरान्तरस्वानन्दामृततृप्त्या च
वैराजपदान्तसाम्राज्यसुखमस्त्येवेत्याह - येन केनचिदिति॥ ४६॥

वासनाभिरुपेतोऽपि समग्राभिरवासनः।
अन्तःशून्योऽप्यशून्यात्मा खमिव श्वसनान्वितः॥ ४७॥

वासनाभिर्ब्रह्माकारवासनाभिर्दग्धपटतन्त्वाकारसदृशजगद्वासनाभिर्वा॥
४७॥

आसने शयने याने स्थितो यत्नैर्न बोध्यते।
निद्रालुरिव निर्वाणमनोमनननिर्वृतः॥ ४८॥

न बोध्यते षष्ठादिभूमिकाप्रविष्टत्वादिति भावः॥ ४८॥

संविन्मात्रं हि पुरुषः सर्वगोऽपि स तिष्ठति।
स्फुटसारे शरीरस्य यथा गन्धोऽब्जकेसरे॥ ४९॥

स्फुटसारे रेतसि॥ ४९॥

संविन्मात्रं विदुर्जन्तुंन् तस्य प्रसरणं जगत्।
आत्मनिष्ठत्वमजगत्परमेत्युपदेशभूः॥ ५०॥

एवं व्यष्टिसमष्टिजीवभावादिवर्णनं परमप्रस्तुते योजयन्नुपदेशसर्वस्वं
संक्षिप्याह - संविन्मात्रमिति। इति परमा रहस्यभूता उपदेशभूः
उपदेशस्थितिः॥ ५०॥

132549
132550 नीरसो भव भावेषु सर्वेषु विभवादिषु ।
132551 पाषाणं हृदयं कृत्वा यथा भवसि भूतये ॥ ५१ ॥
132552
132553 तत्र वैराग्यदार्ढ्यमेव साधनरहस्यमित्याह - नीरस इति ॥ ५१ ॥
132554
132555 साधो हृदयसौषिर्यमसौषिर्यमिवास्तु ते ।
132556 अचित्त्ववपुषोऽचित्त्वादुपलस्येव राघव ॥ ५२ ॥
132557
132558 पाषाणं हृदयं कृत्वा इत्युक्तेस्तात्पर्यं विशदयति - साधो इति । यथा
132559 अचित्त्ववपुष उपलस्य हृदयसौषिर्यमचित्त्वादेव चिन्निवेशानवकाशमसौषिर्यं
132560 प्रसिद्धं तथा चिन्मात्रवपुषस्तव दहराकाशरूपं हृदयसौषिर्यं
132561 चित्त्वादेवाचिन्निवेशनिरवकाशं चिन्निबिडितमसौषिर्यमिवास्त्विति तदाशय इत्यर्थः ।
132562 अथवा इयन्तं कालमचिदात्माभिमानादचित्त्ववपुषस्तव
132563 अचित्त्वादज्ञानात्स्फटिकोपलस्यान्तःकल्पितमाकाशमिव भोगसामग्री
132564 धनादिलाभकोटिभिरप्यपूर्यमाणं कामलक्षणं हृदयसौषिर्यं
132565 मनश्छिद्रं सांप्रतं नित्यनिरतिशयानन्दपूर्णात्मलाभात्पूर्णकामत्वेन
132566 बाधितं वास्तवं स्फटिकोपलासौषिर्यमिवानन्दैकघनमस्त्विति तदाशय इत्यर्थः ॥
132567 ५२ ॥
132568
132569 तज्ज्ञाज्ञयोरशेषेषु भावाभावेषु कर्मसु ।
132570 ऋते निर्वासनत्वात्तु न विशेषोऽस्ति कश्चन ॥ ५३ ॥
132571
132572 अत एव स्फटिकोपलप्रतिबिम्बितजनव्यवहारकर्मस्विव तज्ज्ञाज्ञयोः प्रतीतिसाम्येऽपि
132573 सत्यत्ववासनाभावकृत एव विशेष इत्याह - तज्ज्ञेति ॥ ५३ ॥
132574
132575 सत्तैवैषा विदो यत्सा भवत्युन्मिषिता जगत् ।
132576 परं तत्त्वं निमिषता दृगिवानामकं ततम् ॥ ५४ ॥
132577
132578 एवं च स्फटिकोपले द्रष्टृपुरुषदृष्टिरिव विदश्चैतन्यस्य सत्तैव
132579 वासनाभिरुन्मिषिता जगद्भवति निर्वासनत्वेन निमिषिता ततमपरिच्छिन्नतत्त्वं
132580 मोक्षाख्यं भवतीति फलितमित्यर्थः ॥ ५४ ॥
132581
132582 दृश्यंन् विनश्यत्यखिलं विनष्टं जायते पुनः ।
132583 यन्न नष्टं न चोत्पन्नं तत्सद्भवति तद्भवान् ॥ ५५ ॥
132584
132585 अत एव चित्सत्तैव नित्यत्वमित्याह - दृश्यमिति ॥ ५५ ॥
132586
132587 भावज्ञप्तिर्हि निर्मूला भावितापि न विद्यते ।
132588 सलिलं मृगतृष्णेव न ददाति भवाङ्कुरम् ॥ ५६ ॥
132589
132590 ईदृशबोधेन मूलाज्ञाननाशे सत्यन्वेषणेऽपि जगद्भ्रान्तिर्न लभ्येत्याह -
132591 भावेति । भावज्ञप्तिर्जगद्भ्रान्तिः । निर्मूला बाधितमूला । भाविता अन्विष्टापि ॥ ५६ ॥
132592
132593 यथाभूतार्थसंदर्शिच्छिन्नाऽहमिति भावना ।
132594 दृष्टापि न करोत्यन्तर्दग्धं बीजमिवाङ्कुरम् ॥ ५७ ॥
132595
132596 कर्म कुर्वन्नकुर्वन्वा वीतरागो निरामयः ।
132597 निर्मना नित्यनिर्वाणः पुमानात्मनि तिष्ठति ॥ ५८ ॥
132598
132599 अत एव विहितकर्मकरणाकरणयोर्विदुषामविशेष इत्याह - कर्मेति ॥ ५८ ॥
132600

132601 चित्तोपशान्तौ संशान्ताः शान्ताये भोगबन्धवः।
132602 न स्वभावपरिक्षीणाश्चित्तमेषां किलाकरः॥ ५९॥
132603
132604 समनसोऽपि योगिनः शान्त्यादिवशादात्मनि कुतो न तिष्ठन्ति तत्राह - चित्तेति। ये
132605 हठाच्छान्ता योगिनसेऽपि चित्तोपशान्तौ सत्यामेव सम्यक् शान्ता भवन्ति नान्यथा।
132606 यतस्तेषां भोगेन बध्नन्तीति भोगबन्धवो भोगवासना न स्वभावपरिक्षीणा
132607 मूलतश्छिन्नाः। हि यस्मादेषामाकरः खनीभूतं चित्तमस्त्येवेत्यर्थः॥ ५९॥
132608
132609 अघनः केवलालोको बुधो जीवः परायते।
132610 स एवान्योऽप्यनन्योऽन्तरपराह्ण इवातपः॥ ६०॥
132611
132612 चित्तदेहादिरूपेण घनीभाव एव जीवस्य भेदकस्तापकश्च तदभावे त्वयं
132613 ब्रह्माभिन्नो निस्ताप एवेत्याह - अघन इति। अघनो मूर्तिशून्यो जीवः
132614 केवलचिदालोकमात्रः शोधिततत्वंपदार्थः परायते। पराभेदयोग्यो भवतीत्यर्थः।
132615 आतपपक्षे अघनो मेघावरणनिर्मुक्तः अखरश्च॥ ६०॥
132616
132617 एकदेशस्थितात्पुंसो दूरायातस्य चेतसः।
132618 यद्रूपं सकलं मध्ये तद्रूपं परमात्मनः॥ ६१॥
132619
132620 तदेवाघनं केवलचिदालोकस्वरूपमात्मनोऽनुभावयति - एकदेशेति। पुंसो देहात्
132621 दूरं दूरस्थादित्यचन्द्रादिविषयं चक्षुरादिद्वारा यातस्य चेतसश्चित्तवृत्तेर्मध्ये
132622 विच्छेदाभावाद्देहमारभ्य चन्द्रमण्डलपर्यन्तमविच्छिन्ना
132623 अपरोक्षचिदभिव्यक्तास्त्येव। तस्या देहप्रदेशे चन्द्रप्रदेशे च सविषयत्वेऽप्यन्तराले
132624 निर्विषयं यद्रूपं प्रसिद्धं तद्रूपमेव सकलं पूर्णं परमात्मनः
132625 परिचेयमित्यर्थः। तथा च श्रुतिः तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः।
132626 दिवीव चक्षुराततम् इति॥ ६१॥
132627
132628 चारुचिद्व्योमकर्पूरंन् यच्चमत्कुरुते स्वयम्।
132629 अनन्तमन्तरव्यक्तं जगदित्येव वेत्ति तत्॥ ६२॥
132630
132631 निर्विषयचित एवायं मायाचमत्कारो जगदित्याह - चार्विति। अव्यक्तमनभिव्यक्तम्॥
132632 ६२॥
132633
132634 गतभवभ्रमभासुरमक्षयं शममुपेतमुपेक्षितदीपवत्।
132635 स्थितमपीह जनं जगदीश्वरादनुगतं ननु भाति मुदा च खे॥ ६३॥
132636
132637 एवमिदं जगत्तत्त्वज्ञजनं प्रति गतभवभ्रमभासुरमुपेक्षितदीपवत् शमं
132638 निर्वाणमुपेतमक्षयं ब्रह्मैव भाति। अज्ञजनं प्रति तु
132639 नियन्तुरीश्वरात्सकाशात्स्वनियतिव्यवस्थाभिर्मुदा भोगप्रीत्या चानुगतं खे
132640 आकाशोदरे परमार्थतः स्थितमपि भातीति दृष्टिभेदमात्रमित्यर्थः॥ ६३॥
132641
132642 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाणप्रकरणे
132643 उत्तरार्धे सुखयोगोपदेशो नाम द्वाविंशः सर्गः॥ २२॥
132644
132645 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
132646 सुखयोगोपदेशो नाम द्वाविंशः सर्गः॥ २२॥
132647
132648 त्रयोविंशः सर्गः २३
132649
132650 श्रीवसिष्ठ उवाच।
132651
132652 विरागवासनापास्तसमस्तभववासनः।

132653 उत्थाय गच्छ प्रकृतेरस्या मङ्किरिवाङ्कितः ॥ १ ॥
132654
132655 मङ्किनो मरुकान्तारे वसिष्ठेनात्र संगमः।
132656 निर्वेदात्तत्त्वजिज्ञासोरुपदेशश्च वर्ण्यते ॥
132657
132658 नीरसो भव भावेषु सर्वेषु विभवादिषु इति यद्वैराग्यदार्ढ्यस्यावश्यकत्वमुक्तं
132659 तत्प्रतिष्ठापनाय मङ्क्युपाख्यानमारभते - विरागेत्यादिना। अस्याः
132660 परिदृश्यमानायाः प्रकृतेः स्वाभाविकाज्ञानादिरूपायाः
132661 संसृतेस्तत्त्वबोधेनोत्थाय निर्वाणात्मपदं गच्छेत्यर्थः।
132662 अङ्कितस्तल्लक्षणैश्चिह्नितः ॥ १ ॥
132663
132664 मङ्किर्नामाभवत्पूर्वं ब्राह्मणः संशितव्रतः।
132665 स कथं शृणु निर्वाणमाप्तवान्मद्विबोधितः ॥ २ ॥
132666
132667 मया विबोधित उपदिष्टः ॥ २ ॥
132668
132669 अहं कदाचिदाकाशकोशादवनिमागतः।
132670 भवत्पितामहार्थेन केनाप्युपनिमन्त्रितः ॥ ३ ॥
132671
132672 केनापि यज्ञादिरूपेण भवत्पितामहस्याऽजस्यार्थेन प्रयोजनेन प्रागुपनिमन्त्रितः सन्
132673 ॥ ३ ॥
132674
132675 विहरन्भूतलं गच्छंस्त्वत्पितामहपत्तनम्।
132676 प्राप्तोऽस्मि कामप्यादीर्घामरण्यानीं महातपाम् ॥ ४ ॥
132677
132678 त्वत्पितामहस्य पत्तनं नगरमयोध्यां प्रति गच्छन्गमिष्यन्सप्तर्षिलोकाद्भूतलं
132679 प्राप्य। विहरन् संचरन्। अरण्यानीं महारण्यम्। हिमारण्ययोर्महत्त्वे। इन्द्रवरुण
132680 इत्यादिना आनुक् ॥ ४ ॥
132681
132682 पांसुप्रतर्दनहतां प्रकचत्तप्तसैकताम्।
132683 अदृष्टापारपर्यन्तां क्वचिद्राम किलाङ्किताम् ॥ ५ ॥
132684
132685 पांसूनां प्रतर्दनेनाविच्छिन्नप्रसरेण हतां ध्वस्ताम्। धूसरामिति यावत्।
132686 अङ्कितां कुग्रामैरिति शेषः ॥ ५ ॥
132687
132688 अक्षुब्धस्वानिलालोकजलभूशान्तिशालिनीम्।
132689 ततां शून्यां महारम्भां ब्रह्मसत्तामिवामलाम् ॥ ६ ॥
132690
132691 अविद्यमानपांस्वादिनाऽक्षुब्धस्य खस्याकाशस्यानिलस्य झंझापवनस्य
132692 आलोकस्याऽऽतपस्य मृगतृष्णाजलस्य तप्तभुवश्च शान्त्या शालिनीं शोभमानाम्।
132693 दुर्गमत्वाद्गन्तॄणां महान्त आरम्भाः प्रयत्ना यत्र। अमलां निष्पङ्काम्।
132694 ब्रह्मसत्तापक्षे स्पष्टम् ॥ ६ ॥
132695
132696 अविद्यामिव संमोहमृगतृष्णां गतां भ्रमात्।
132697 जडतामाततां शून्यांन् दिङ्मोहमिहिकाकुलाम् ॥ ७ ॥
132698
132699 जडतां गतामित्यनुषज्यते ॥ ७ ॥
132700
132701 अथ तस्यामरण्यान्यांन् यावत्प्रविहराम्यहम्।
132702 तावत्पश्यामि पुरतो वदन्तं पथिकं श्रमात् ॥ ८ ॥
132703
132704 वदन्तं व्यक्तं भाषमाणम् ॥ ८ ॥

132705
132706 पान्थ उवाच।
132707
132708 अहो नु परिखेदाय प्रौढप्रायातपो रविः।
132709 परितापाय पापोऽयं दुर्जनेनेव संगमः॥ ९॥
132710
132711 यथा पापो दुर्जनेन संगमः परितापाय तथा प्रौढप्रायातपोऽयंन् रविः
132712 परिखेदायेत्यर्थः॥ ९॥
132713
132714 सुगलन्तीव मर्माणि स्फुरतीवाग्निरातपे।
132715 संकुचत्पल्लवापीडास्ताप्यन्ते वनराजयः॥ १०॥
132716
132717 तत्तावदेवमग्रस्थं ग्रामकं प्रविशाम्यहम्।
132718 श्रममत्रापनीयाशु वहाम्यध्वानमाशुगः॥ ११॥
132719
132720 तत् तस्माद्धेतोः॥ ११॥
132721
132722 इति संचिन्त्य सोऽग्रस्थं किरातग्रामकं यदा।
132723 प्रवेष्टुमिच्छति ताअ मया प्रोक्तमिदं वचः॥ १२॥
132724
132725 मया तद्भाग्योदयकालं ज्ञात्वा तदीयसर्वश्रममूलोच्छेदायेदं
132726 तत्त्वबुभुत्सोत्पादकं साभिप्रायं वक्ष्यमाणवाक्यमुक्तमित्यर्थः॥ १२॥
132727
132728 अपरिज्ञातनीरागमार्ग मित्र शुभाकृते।
132729 मरुमार्गमहारण्यपान्थ स्वागतमस्तु ते॥ १३॥
132730
132731 परिज्ञातो नीरागाणामकिंचनानां संचारयोग्य आतिथेयजनसंभृतो मार्गो
132732 येनेत्युत्तानार्थः। अत एव मरुमार्गमहारण्यपान्थ। अभिप्रेतार्थान्तरं तु स्पष्टम्
132733 । हे मित्र तेऽत्रागमनं मद्दर्शनेन सर्वदुःखमूलक्षयात्स्वागतमस्तु॥ १३॥
132734
132735 चिरं मनुष्यदेशेऽस्मिन्निर्जनग्राममध्वनि।
132736 अधराध्वग विश्रान्तिं विश्रान्तोपि न लप्स्यसे॥ १४॥
132737
132738 तस्य अधराध्वगेति संबोधनात्स्वस्य तदा नभोध्वगमनं सूच्यते।
132739 निर्जनग्राममातिथेयजनशून्यग्रामं यथा स्यात्तथा स्थिते इति शेषः।
132740 प्राक्तनग्रामेष्वन्नपानप्रतिश्रयादिलाभाद्विश्रान्तोऽप्यग्रे विश्रातिं न लप्स्यसे
132741 इत्युत्तानार्थः। आशयार्थे तु हे अधरकर्माध्वग अस्मिन्
132742 कर्मोपासनलभ्यदक्षिणोत्तरायणमार्गलक्षणेऽध्वनि स्वर्गादिभूमिषु
132743 किंचिकिंचिद्विश्रान्तोऽपि निर्जनग्रामं जननंन् जनो निर्गतजन्मसमूहं यथा
132744 स्यात्तथा मोक्षवच्चिरं विश्रान्तिं न लप्स्यसे इति योज्यम्॥ १४॥
132745
132746 ग्रामे विश्रमणं नैव वर्तते पामरास्पदे।
132747 तृड्वै लवणपानेन भूय एवाभिवर्धते॥ १५॥
132748
132749 नैव वर्तते पामराणां दुर्वाक्यादिना प्रयुत क्षोभकारित्वादित्युत्तानो भावः।
132750 आशयार्थस्तु ग्रामे कर्तृकरणसंघातालये देवमनुष्यादिदेहे पामराणां
132751 कामद्वेषदीनामालये। यदि मन्यसे विषयोपभोगैर्विश्रान्तिरिति तत्राह - तृडिति।
132752 तथा चोक्तं ययातिना - न जातु कामः कामानामुपभोगेन शाम्यति। हविषा
132753 कृष्णवर्त्मेव भूय एवाभिवर्धते॥ इति॥ १५॥
132754
132755 एते ग्रामैकशरणाः पल्लवाः स्पन्दभीरवः।
132756 अयथापथसंचारा हरिणा इव जन्तवः॥ १६॥

132757
132758 पल्लवाः पुलिन्दजातिभेदाः।
132759 आरण्यकत्वाज्जनपदस्पन्दाद्भीरवस्तमसहमानाइत्युत्तानार्थः। आशयार्थे त्वेते
132760 कामादयः पल्लववत्स्नेहरागादियुक्ता विवेकस्पन्दभीरवः अयथापथसंचाराः
132761 अशास्त्रीयमार्गप्रवणाः॥ १६॥
132762
132763 न स्फुरन्ति विचारेषु प्रज्वलन्त्यनुभूतिषु।
132764 न त्रस्यन्ति दुराचारादश्मयन्त्रमया इव॥ १७॥
132765
132766 न स्फुरन्तीत्यादयुभयतः स्पष्टं योज्यम्। अश्मयन्त्रमयाः प्रतिमादय इव॥ १७॥
132767
132768 कामार्थरागसद्वेषपरिनिष्ठितपौरुषा।
132769 कर्मण्यापातमधुरे रमन्ते दग्धबुद्धयः॥ १८॥
132770
132771 आभिजात्याततोदारा शीतला रसशालिनी।
132772 नेह विश्वसिति प्रज्ञा मेघमाला मराविव॥ १९॥
132773
132774 आभिजात्यं विशुद्धोभयकुलता तेनातता प्रज्ञा इह जनेषु न विश्वसिति॥ १९॥
132775
132776 वरमन्धगुहाहित्वं शिलान्तःकीटता वरम्।
132777 वरं मरौ पङ्गुमृगो न ग्राम्यजनसंगमः॥ २०॥
132778
132779 अन्धयतीत्यन्धा अन्धकारावृता गुहा तस्यामहित्वमजगरता॥ २०॥
132780
132781 निमेषास्वादमधुराः क्षणान्तरविरागिणः।
132782 मारणैकान्तनिरता ग्राम्या विषकणा इव॥ २१॥
132783
132784 विषकणा मधुमिश्रविषकणाः॥ २१॥
132785
132786 वान्ति भस्मकणाकीर्णा जीर्णाः संशीर्णसद्मसु।
132787 तृणपर्णवनव्यग्रा ग्राम्याधार्मिकवायवः॥ २२॥
132788
132789 भस्मकणाकीर्णा धूलिधूसरा ग्रामे भवा ग्राम्या ये अधार्मिका जनास्तल्लक्षणा
132790 वायवश्चण्डपवना वान्ति संचरन्ति॥ २२॥
132791
132792 एवमुक्तेन तेनाहमिदमुक्तस्ततोऽनघ।
132793 मद्वाक्येन समाश्वास्य स्नातेनेवामृताम्भसा॥ २३॥
132794
132795 एवं मया उक्तेन संभाषितेन तेन मङ्किना मदाशयबोधादयं
132796 मामुद्धरिष्यतीति सम्यगाश्वासं प्राप्याऽहमिदं वक्ष्यमाण्मुक्तः॥ २३॥
132797
132798 पान्थ उवाच।
132799
132800 भगवन्कोऽसि पूर्णात्मा महात्म कथमात्मवान्।
132801 पश्यस्यनाकुलो लोकं ग्रामयात्रामिवाध्वगः॥ २४॥
132802
132803 पूर्णात्मा त्वमिति शेषः॥ २४॥
132804
132805 किं त्वया पीतममृतं किं त्वं सम्राड्विराडथ।
132806 सर्वार्थरिक्तोऽपि चिरं संपूर्ण इव राजसे॥ २५॥
132807
132808 पूर्णात्मतामेव हेतुवितर्कैः प्रकटयति - किं त्वयेत्। सम्राट् सर्वलोकेश्वरः

132809 संपूर्णश्चन्द्र इव राजसे || २५ ||
132810
132811 शून्योऽसि परिपूर्णोऽसि घूर्णोऽसीव स्थिरोऽसि च |
132812 न सर्वमपि सर्वं च न किंचित्किंचिदेव च || २६ ||
132813
132814 सांसारिकदोषदुःखैः शून्योऽसि | निरतिशयानन्देन जीवन्मुक्तगुणैश्च परिपूर्णोऽसि |
132815 देहाद्यप्रतिसंधानान्मदघूर्णोऽसीव | परमार्थे स्थितोऽसीव | न सर्वमिति
132816 समष्ट्यपवादाध्यारोपदृष्टिभ्याम् | न किंचिदिति
132817 व्यष्ट्यपवादाध्यारोपदृष्टिभ्याम् || २६ ||
132818
132819 उपशान्तंन् च कान्तं च दीप्तमप्रतिघाति च |
132820 निवृत्तं चोर्जितं तादृग्रूपं किमिति ते मुने || २७ ||
132821
132822 ईदृशोऽहं कथं त्वया ज्ञात इति चेत्त्वद्रूपदर्शनादिति सूचयन्नाह -
132823 उपशान्तमिति | तथा च श्रुतिः रूपमेवास्यैतन्महिमानं व्याचष्टे इति || २७ ||
132824
132825 भूसंस्थोऽपि समस्तानां लोकानामुपरीव खे |
132826 संस्थितोऽसि निरास्थोऽसि घनास्थोऽसीव लक्ष्यसे || २८ ||
132827
132828 मादृशानामुद्धारे घनास्थोऽसीव लक्ष्यसे || २८ ||
132829
132830 प्रसृतं न पदार्थेषु न पदार्थात्मनाऽस्ति वै |
132831 तवेन्दोरिव शुद्धस्य मनोऽमृतमयं स्थितम् || २९ ||
132832
132833 इन्दोरिव शुद्धस्य तवामृतमयं मनः इन्दुकरवत् पदार्थेषु न प्रस्।एतं
132834 नाप्यौषधिवनस्पतिसोमाज्यपयोन्नादिपदार्थात्मना उपभोगार्हमस्ति येन क्षीयेत |
132835 अतः सदैव पूर्णं स्थितमिति तव चन्द्रादतिशय इत्यर्थः || २९ ||
132836
132837 कलावानकलङ्कोऽन्तःशीतलो भास्वरः समः |
132838 रसायनभरापूर्णः पूर्णेन्दुरिव राजसे || ३० ||
132839
132840 अन्यदपि तत्साम्यं विशेषं चाह - कलावानिति || ३० ||
132841
132842 त्वदिच्छायां तु सदसद्भावं पश्यामि ते चिति |
132843 संसारमण्डलमिदं स्थितं फलमिवाङ्कुरे || ३१ ||
132844
132845 एवं हिरण्यगर्भसाम्यं ततो विशेषश्च तेऽस्तीत्याह - त्वदिच्छायामिति |
132846 सार्वज्ञ्यसर्वशक्त्यादिसंपन्नस्य ते चिति आत्मनि अङ्कुरे काण्डादिफलान्तं
132847 वृक्षरूपमिवेदं संसारमण्डलं सर्गयोग्यतया स्थितं पश्यामि
132848 संभावयामि | तत्सर्गार्थिन् त्वदिच्छायां तु सदसद्भावं पश्यामि संवेद्मि |
132849 यदीच्छसि तर्हि त्वमपि जगत्स्रष्टुंन् शक्नोष्येव परंतु नेच्छसीत्ययं ततो विशेष इति
132850 भावः || ३१ ||
132851
132852 अहं तावदयंन् विप्र शाण्डिल्यकुलसंभवः |
132853 मङ्किर्नाम महाभाग तीर्थयात्राप्रसङ्गतः || ३२ ||
132854
132855 एवं प्रशंसयाभिमुखीकृताय वसिष्ठाय
132856 स्ववैराग्यादिसाधनसंपत्त्योपदेशार्हतां दर्शयितुं स्वगोत्रनामादि कीर्तयति ##-
132857
132858 गत्वा सुदूरमध्वानं दृष्ट्वा तीर्थानि संप्रति |
132859 चिरकालेन सदनमात्मीयं गन्तुमुद्यतः || ३३ ||
132860

132861 न च मे गन्तुमुद्योगो विरक्तमनसो गृहम् ।
132862 दृष्ट्वा तडित्सकाशानि भूतानि भुवनोदरे ॥ ३४ ॥
132863
132864 तडित्सकाशानि क्षणभङ्कुराणि ॥ ३४ ॥
132865
132866 भगवन्सत्यमात्मानं कथयेहानुकम्पया ।
132867 गम्भीराणि प्रसन्नानि साधुचेतःसरांसि हि ॥ ३५ ॥
132868
132869 आत्मानं नामगोत्रादिना कथयेत्युत्तानार्थः । सत्यमिति
132870 विशेषणस्वारस्यात्परमात्मानमुपदिशेत्याशयार्थः ॥ ३५ ॥
132871
132872 दर्शनादेव मित्रत्वं कुर्वतां महतां पुरः ।
132873 कमलानीव भूतानि विकसन्त्याश्वसन्ति च ॥ ३६ ॥
132874
132875 ममेदं च मनो मोहात्संसारभ्रमसंभवम् ।
132876 मन्ये हातुं न समर्थं स त्वं बोधानुकम्पितैः ॥ ३७ ॥
132877
132878 तमेवाशयं स्फुटमाह - ममेति । अप्यर्थे चकारः ।
132879 ममेदमीषद्विवेकशाल्यपि मनो
132880 मोहादज्ञानसंशयप्राबल्यात्संसारभ्रमसंभवं दुःखं हातुं
132881 निःशेषमुच्छेत्तुं विना गुरूपदेशं स्वविमर्शकौशलमात्रेण न समर्थमिति
132882 मन्ये पुनःपुनर्मननेन निश्चितवानस्मि । अतः स
132883 प्राग्वर्णितमदुद्धरणसामर्थ्यस्त्वं
132884 रहस्यबोधानुकूलैरुपदेशानुकम्पितैर्मोहसंशयोच्छेदेन दुःखक्षयसमर्थं
132885 कुर्विति शेषः ॥ ३७ ॥
132886
132887 श्रीवसिष्ठ उवाच ।
132888
132889 वसिष्ठोऽस्मि महाबुद्धे मुनिरस्मि नभोगृहः ।
132890 केनाप्यर्थेन राजर्षेरिमं मार्गमुपस्थितः ॥ ३८ ॥
132891
132892 राजर्षेः अजस्य । केनापि याजनादिरूपेणार्थेन ॥ ३८ ॥
132893
132894 मागा विषादं पन्थानमागतोऽसि मनीषिणाम् ।
132895 प्रायः प्राप्तोसि संसारसागरस्य परं तटम् ॥ ३९ ॥
132896
132897 परं तटं परवीरम् ॥ ३९ ॥
132898
132899 वैराग्यविभवोदारा मतिरुक्तिरपीदृशी ।
132900 आकृतिः शान्तरूपा च न भवत्यमहात्मनः ॥ ४० ॥
132901
132902 मनीषिणां पन्थानमहं प्राप्त इत्यत्र किं लिङ्गं तदाह - वैराग्येति ।
132903 अमहात्मनो ज्ञानाधिकारभाग्यहीनस्य ॥ ४० ॥
132904
132905 मणिर्मधुरकाषेण यथैति विमलात्मताम् ।
132906 तथा कषायपाकेन चित्तमेति विवेकिताम् ॥ ४१ ॥
132907
132908 विवेकोदयोऽपि चित्तकषायपाके तव लिङ्गमित्याह - मणिरिति । मधुरेण मृदुना
132909 काषेण शाणघर्षणेन ॥ ४१ ॥
132910
132911 किं ज्ञातुमिच्छसि कथं संसारं हातुमिच्छसि ।
132912 उपदिष्टमहं मन्ये संपादयति कर्मभिः ॥ ४२ ॥

132913
132914 शिष्यो गुरुणोपदिष्टमर्थं पुनःपुनः स्वपरिशीलनाज्ज्ञातांशं पुनः
132915 प्रश्नावधारणादिकर्मभिर्यतः फलपर्यवसितं संपादयति अतस्त्वं
132916 स्वाज्ञातजिज्ञासितांशं वदेत्यर्थः ॥ ४२ ॥
132917
132918 विमलवासन उत्तममानसः परिविविक्तमतिर्जनतेजसा ।
132919 पदमशोकमलं खलु युज्यते जनितितीर्षुमतेरिदमुच्यते ॥ ४३ ॥
132920
132921 खलु यस्माद्धेतोर्यः शिष्यो विमला रागादिमलशून्या वासना यस्य । अत
132922 एवोत्तमवैराग्यादिसाधनत्रयसंपन्नमानसो भवति परिविविक्ता
132923 नित्यानित्यसारासारादिविवेकशालिनी मतिर्यस्य तथाविधश्च । स एव
132924 गुरुजनस्योपदेशतेजसा अशोकमात्मतत्त्वपदं प्राप्तुं युज्यते योग्यो भवति नेतरः ।
132925 अतः कारणाज्जनिभ्यो जन्मादिसर्वदुःखेभ्यस्तितीर्षुरुत्तरणेच्छुर्मतिर्यस्य
132926 तथाविधस्य संभाषणपरीक्षणेन ज्ञाताधिकारस्यैव तवमयेदमुच्यते
132927 नान्यादृशस्य । अतः स्वपूर्वोत्तरवृत्तान्तं वदेत्यर्थः ॥ ४३ ॥
132928
132929 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वाणप्रकरणे उ०
132930 मङ्क्युपाख्याने मङ्किनिर्वाणं नाम त्रयोविंशः सर्गः ॥ २३ ॥
132931
132932 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
132933 मङ्किनिर्वाणं नाम त्रयोविंशः सर्गः ॥ २३ ॥
132934
132935 चतुर्विंशः सर्गः २४
132936
132937 श्रीवसिष्ठ उवाच ।
132938
132939 ममेत्युक्तवतो मङ्किर्विनिपत्य स पादयोः ।
132940 उवाचानन्दपूर्णाक्षमिदं मार्गे वहन्वचः ॥ १ ॥
132941
132942 देहेन्द्रियमनोबुद्धिदोषाद्यैः सह विस्तरात् ।
132943 सांसारिकं स्वदुःखौघं मङ्किर्नेहोपवर्ण्यते ॥
132944
132945 स मङ्किः इति एवमुक्तवतो मम पादयोर्विनिपत्य आनन्दवाष्पपरिपूर्णाक्षं यथा
132946 स्यात्तथा मार्गे मां वहन् सन्नानन्दपूर्णमक्षमिन्द्रियकलापं वहन्निति वा इदं
132947 वक्ष्यमाणमुवाच ॥ १ ॥
132948
132949 मङ्किरुवाच ।
132950
132951 भगवन्भूरिशो भ्रान्ता दिशो दश दृशो यथा ।
132952 मया न तु पुनः साधुर्लब्धः संशयनाशकृत् ॥ २ ॥
132953
132954 हे भगवन् स्वसंशयविच्छेदायोपदेशकुशल साध्वन्वेषणपरेण मया दृशो
132955 दृष्टयो यथ दिक्षु भूरिशो भ्रमन्ति तथा दिशो भ्रान्ताः ॥ २ ॥
132956
132957 समस्तदेहसाराणां सारस्याद्य फलं मया ।
132958 खिन्नोस्मि भगवन्पश्यन्दशाः संसारदोषदाः ॥ ३ ॥
132959
132960 अद्य मया त्वल्लाभात्समस्तेषु देवासुरतिर्यगादिदेहेषु साराणां ब्राह्मणदेहानां
132961 मध्ये ज्ञानाधिकारसंपत्त्या सारस्य स्वदेहस्य फलं लब्धमिति शेषः ॥ ३ ॥
132962
132963 पुनर्जातं पुनर्नष्टं सुखदुःखभ्रमः सदा ।
132964 अवश्यंभाविपर्यन्तदुःखत्वात्सकलान्यपि ॥ ४ ॥

132965
132966 खेदमेव हेतुभिः सह प्रपञ्चयति - पुनरित्यादिना। जातं जन्म। नष्टं
132967 मरणम्। ननु सदा दुःखभ्रम इति कुतः सुखानामपि
132968 संसारेऽनुभूयमानत्वात्तत्राह - अवश्यमिति। सकलान्यपि
132969 सुखान्यवश्यंभाविपर्यन्तदुःखत्वादतिदुःखान्यत्यन्तदुःसहानि दुःखान्येवेति
132970 परेणान्वयः॥ ४॥
132971
132972 सुखान्येवातिदुःखानि वरं दुःखान्यतो मुने।
132973 दृढदुःखवदन्तत्वाद्दुःखयन्ति सुखानि माम्॥ ५॥
132974
132975 अत एभ्यः सुखेभ्यो दुःखान्येव वरम्। अविच्छिन्ना दुःखपरम्परा हि
132976 जलचरैस्तच्छीततेवाभ्यासात्सह्यापि स्यात् सुखविच्छिन्नाभ्यासात्तु सा दुःसहेति भावः
132977 । प्रबलतरदुःखानुबन्धित्वाद्वा कोद्रवान्नजीवने दुःखापेक्षया
132978 विषसंपृक्तमोदकास्वादसुखेष्विव क्षुद्रदुःखपरंपरापेक्षया भोगसुखेषु
132979 देष्यताधिक्यमुचितमित्याह - दृढेति॥ ५॥
132980
132981 तथा राम यथा दुःखमेव मे सुखतां गतम्।
132982 वयोदशनलोमान्तैः सह जर्जरतां गतम्॥ ६॥
132983
132984 हे राम हे सौम्येति वसिष्ठसंबोधनम्। सुखानि मां तथा दुःखयन्ति यथा मे
132985 दुःखमेव सुखतां गतं भवतीत्यन्वयः। इदानीं तत्त्वज्ञानानुपयुक्तानां
132986 वयःप्रभृतीनां वृथा जीर्णतामनर्थपरम्पराबीजतां च दर्शयति - वय
132987 इत्यादिना। जर्जरतां शिथिलताम्॥ ६॥
132988
132989 उच्चैःपदे पातपरा बुद्धिर्नाध्यवसायिनी।
132990 सुप्रवालं कुसंकल्पाद्गहनं न प्रकाशते॥ ७॥
132991
132992 उच्चैःपदे उत्तरोत्तरभोगोत्कर्षस्थाने पातोऽभिलाषस्तत्परा बुद्धिर्न
132993 परमपुरुषार्थसाधनाध्यवसायिनी। मनस्तूत्तरोत्तरं वर्धमानै रागपल्लवैः
132994 सुप्रवालं पल्लवितमतीतभोग्यकोटिगोचरशोकमोहादिकुसंकल्पाच्च गहनं
132995 दुर्विवेकमत एव स्वस्वदोषादिसाक्षिविवेकेन न प्रकाशते॥ ७॥
132996
132997 मनः पिप्पलपल्यूलैरिव कुग्रामकोटरम्।
132998 वासनाङ्गवहैर्गृध्रैर्नित्यं पापीयसी स्थितिः॥ ८॥
132999
133000 तत्र दृष्टान्तमाह - पिप्पलेति। पिप्पलानामश्वत्थादीनां पल्यूलैः
133001 प्लवमानैः शुष्कपर्णादिसंचयैर्गहनं कुग्रामान्तरालमिव स्थितिर्जीविकापि
133002 नानाभोगवसनापूतिगन्धानङ्गे वहन्तीति वासनाङ्गवहैरत एव
133003 गृध्रैर्गृध्रपायैरिन्द्रियैः कुग्रामस्थितिरिव नित्यं पापीयसी॥ ८॥
133004
133005 कण्टकद्रुमवल्लीव करालकुटिला मतिः।
133006 आयुरायासशालिन्या यामिन्येव तमोन्धया॥ ९॥
133007
133008 मतिश्च करञ्जादिकण्टकवल्लीव कराला कुटिला च। आयुश्च आयासशालिन्या तमोन्धया
133009 संततविषयचिन्तया अनागतालोकमप्राप्तदीपादिप्रकाशमक्षि चक्षुस्तमोन्धया
133010 यामिन्येवाप्राप्तब्रह्मदर्शनालोकं वृथा क्षीणमिति परेणान्वयः॥ ९॥
133011
133012 अक्षीवानागतालोकं क्षीणं संततचिन्तया।
133013 न किंचिद्रसमादत्ते नष्टैवापि न नश्यति॥ १०॥
133014
133015 तृष्णा शुष्कलतेव न किंचिद्विवेकरसमादत्ते। पुनःपुनर्मोघीभावान्नष्टापि न
133016 नश्यति॥ १०॥

न पुष्पिता न फलिता तृष्णा शुष्कलतेव नः।
कर्म कर्मणि निर्मग्नं वासनाख्यमकर्मणे॥ ११॥

ननु कर्मभिरेव तवोद्धारः किं न स्यात्तत्राह - कर्मेति।
यत्किंचिन्नित्यनैमित्तिकं कर्म कृतं तत् प्राक्तनदुष्कर्मराशौ
कतिपयभागक्षपणेन निमग्नम् उपक्षीणमिति यावत्। भोगवासनाख्यं तु
बीजमुत्तरोत्तरानर्थहेतवे अकर्मणे काम्यनिषिद्धकर्मणि प्रवर्तयतीति शेषः॥ ११॥

जीवितं च जने जीर्णं नैवोत्तीर्णो भवार्णवः।
दिनानुदिनमुच्छूना भोगाशा भयदायिनी॥ १२॥

जने पुत्रकलत्रबान्धवभृत्यादावासक्त्या जीर्णम्॥ १२॥

पूर्णापूर्णात्मनि क्षीणाः श्वभ्रकण्टकवृक्षवत्।
चिन्ताज्वरविकारिण्यो लक्ष्म्याः खलु महापदः॥ १३॥

लक्ष्म्या अर्जनार्था महापदस्तु कदाचिदपूर्णात्मनि च गृहे चिन्ताज्वरैर्विकारिण्यः
क्षीणाः क्षपिताः॥ १३॥

संपन्नमक्षतं सापि विप्रलम्भेन जृम्भते।
अन्तः स्फुरितरत्नेहंन् भास्वरं वान्धकोटरम्॥ १४॥

लक्ष्मीर्बहुतरधनादिभिः संपन्नं शस्त्रादिभिरक्षतमपि पुरुषं भूयोभूयः
प्रलोभ्य दूरमाकृष्य शत्रुदस्युवश्यतापादनेन
सर्वसंपन्नाशशस्त्रघातादिदुःखपर्यवसायिनी विप्रलम्भेन जृम्भते। यथा
सर्वशिरोमणिना भास्वरमन्धकोटरं सान्धकारश्वभ्रमन्तरदृष्टसर्पं
स्फुरितरत्नेहं पुरुषं स्वान्तः प्रवेश्य सर्पदंशादिविप्रलम्भेन जृम्भते
तद्वत्। इवार्थे वाशब्दः। रम्भेहं इति पाठे अन्तःप्ररूढसफलकदलीकं
तादृशश्वभ्रंन् दृष्टान्तः॥ १४॥

कल्लोलकलिलं शून्यं चेतः शुष्काब्धिदुर्भगम्।
मामिन्द्रियार्थैकपरं न स्पृशन्ति विवेकिनः॥ १५॥

चेतश्चित्तमप्याशासहस्रकल्लोलैः कलिलमस्वच्छं सर्वतः
प्रधावनेऽप्यर्थशून्यमत एव शुष्काब्धिरिव दुष्पूरत्वाद्दुर्भगमत एव
चित्तपरवशमिन्द्रियार्थैकपरं मां विवेकिनो न स्पृशन्ति उपेक्षन्ते॥ १५॥

सकण्टकममेध्यस्थंन् श्लेष्मातकमिव द्रुमम्।
असदेव महारम्भं चलदर्जुनवातवत्॥ १६॥

तत्र दृष्टान्तमाह - सकण्टकमिति। मनोऽपि विमर्शे असदेव महान्तः
कर्मारम्भा यस्मात्तथाविधम्। अर्जुनवातो वातरोगविशेषः सदैव भ्रमणकारी
यथा देहे चलति तद्वत्॥ १६॥

मनो मरणमप्राप्तं शून्यंन् दुःखाय वल्गति।
शास्त्रसज्जनसंपर्कचन्द्रतारकधारिणी॥ १७॥

बहुशो मृतेरपि मयि मरणमप्राप्तमभिलषितार्थशून्यं दुःखायैव वल्गति
धावति। ननु शास्त्रसज्जनसंपर्काद्युपायैर्मनो निगृह्यतामिति
चेद्यावज्ज्ञानफलविवेकार्कोदयेनाज्ञानयामिनी न क्षीणा
तावच्छास्त्रसज्जनसंपर्कादयश्चन्द्रतारकवन्नात्यन्तिकमनोभ्रमविनाशाय

133069 क्षमन्त इत्याशयेनाह - शास्त्रेति द्वाभ्याम् ॥ १७ ॥
133070
133071 अहंभावोल्लसद्यक्षा क्षीणा नाज्ञानयामिनी ।
133072 अज्ञानध्वान्तमत्तेभसिंहः कर्मतृणानलः ॥ १८ ॥
133073
133074 अहंभाव एव उल्लसन् बालकल्पितयक्षो यस्याम् ॥ १८ ॥
133075
133076 उदितो न विकारार्को वासनारजनीक्षयः ।
133077 अवस्तु वस्तुवद्बुद्धं मत्तश्चित्तमतंगजः ॥ १९ ॥
133078
133079 इन्द्रियाणि निकृन्तन्ति न जाने किं भविष्यति ।
133080 शास्त्रदृष्टिरपि प्राज्ञैर्नाश्रिता तरणाय या ॥ २० ॥
133081
133082 साप्यदृष्टिरिवान्ध्याय वासनावेशकारिणी ।
133083 तदेवमतिसंमोहे यत्कार्यमिह दारुणे ।
133084 उदर्कश्रेयसे तात तन्मे कथय पृच्छते ॥ २१ ॥
133085
133086 सेवादिना वशीकृतैः प्राज्ञैरुपायैर्या नाश्रिता सापि मे अदृष्टिर्दृष्टिविघात
133087 इवान्ध्याय संपन्नेत्यन्वयः । एवं वर्णितरीत्या सर्वतोऽप्यनर्थप्रसक्त्या अतिसंमोहे
133088 मग्नस्य मम तदुत्तरणाय उदर्के श्रेयसे मोक्षाय च यत्कार्यं तत्कथयेति
133089 संबन्धः ॥ २१ ॥
133090
133091 शाम्यन्ति मोहमिहिकाः शरदीव साधौ प्राप्ते भवन्ति विमलाश्च
133092 तथाखिलाशाः ।
133093 सत्येति वाग्भवतु साधुजनोपगीता मद्बोधनेन भवता भवशान्तिदेन ॥ २२ ॥
133094
133095 हे भगवन् शरदि शरत्काले इव निर्मलस्वच्छज्ञानविवेकादिज्योतिर्गणमण्डिते साधौ
133096 गुरौ प्राप्ते सति आकाशस्येव शिष्यस्य मोहलक्षणा मिहिकाः शाम्यन्ति । अखिला आशा
133097 दिश इव मनोरथाश्च विमला निरस्तरागादिरजोमला भवन्ति इति लोके प्रसिद्धा
133098 साधुजनैरुपगीता वाक् भवता कृतेन मदीयभवशान्तिदेन मद्बोधनेन सत्या
133099 अबाधितार्था भवत्विति प्रार्थना ॥ २२ ॥
133100
133101 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वाणप्रकरणे उत्तरार्धे
133102 मङ्क्यु० मङ्किवैराग्यंन् नाम चतुर्विंशः सर्गः ॥ २४ ॥
133103
133104 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
133105 मङ्किवैराग्यं नाम चतुर्विंशः सर्गः ॥ २४ ॥
133106
133107
133108 पञ्चविंशः सर्गः २५
133109
133110 श्रीवसिष्ठ उवाच ।
133111
133112 संवेदनं भावनं च वासना कलनेति च ।
133113 अनर्थायेह शब्दार्थे विगतार्थो विजृम्भते ॥ १ ॥
133114
133115 संवेदनाद्यविद्योत्थं बन्धबीजचतुष्टयम् ।
133116 परमात्मनि विद्या च तन्निहन्त्यत्र वर्ण्यते ॥
133117
133118 एवं मङ्किना स्वसंसारानर्थमुपवर्ण्य तन्निरासोपाये पृष्टे
133119 तद्बीजान्यपरिज्ञाय तन्निरसनोपाया न संपादयितुं शक्या इति
133120 तद्बीजचतुष्टयमुपपादयितुमुपदिशति - संवेदनमिति ।

133121 प्रथममिन्द्रियैर्विषयोपभोगलक्षणं संवेदनमपगते विषये
133122 तद्गुणानुसंधानेन पुनःपुनर्भावनं तेन तदाकारलाञ्छनरूपा चित्ते
133123 दृढवासना तया च मरणादिकालेऽपि भाविदेहाद्यारम्भानुकूला कलना
133124 तत्स्मृतिरिति चतुर्विध इह संसारे अनर्थाय सर्वानर्थबीजभूतो
133125 मिथ्याभूतार्थगोचरत्वात्स्वयं मिथ्याभूतत्वाच्च विगतार्थः शब्दार्थः
133126 पदार्थोऽविद्यया विजृम्भत इत्यर्थः ॥ १ ॥
133127
133128 वेदनं भावनं विद्धि सर्वदोषसमाश्रयम् ।
133129 तस्मिन्नेवापदः सन्ति लता मधुरसे यथा ॥ २ ॥
133130
133131 तत्राद्ययोरत्यन्तमनर्थता अन्त्ययोस्तु तत्पृष्ठभावेनेत्याशयेनाह -
133132 वेदनमिति । तत्रापि भावनं महाननर्थ इत्याशयेनाह - तस्मिन्निति । यथा
133133 पुष्पपल्लवादिसमृद्धा लता मधुमासप्रवर्तिते तद्रसे सन्ति
133134 तत्परिणामत्वाल्लतासर्वस्वस्य तद्वदित्यर्थः ॥ २ ॥
133135
133136 संसारमार्गे गहने वासनावेशवाहिनः ।
133137 उपयाति विचित्रौघैर्वृत्तवृत्तान्तसंततिः ॥ ३ ॥
133138
133139 विवेकिनो वासनया सह संसारसंभ्रमः ।
133140 क्षीयते माधवस्यान्ते शनैरिव धरारसः ॥ ४ ॥
133141
133142 अत एव विवेकिनो विषयदोषभावनया ब्रह्मभावनया च तत्क्षये वासनया सह सर्वोपि
133143 संसारः क्षीयत इत्याह - विवेकिन इति ॥ ४ ॥
133144
133145 अस्याः संसरसल्लक्या वासनोत्सेधकारिणी ।
133146 कदल्या वनजालिन्या रसलेखेव माधवी ॥ ५ ॥
133147
133148 उत्तरसंसारस्य तु वासनैव प्रवर्तिकेत्याह - अस्या इति । सल्लकी
133149 सकण्टकगुल्मविशेषः ॥ ५ ॥
133150
133151 संसारान्ध्यतयोदेति वासनात्मा रसश्चितौ ।
133152 यथा वनतया तस्थौ मधुमासरसः क्षितौ ॥ ६ ॥
133153
133154 चितौ अज्ञानाश्रयजीवचैतन्ये ॥ ६ ॥
133155
133156 चिन्मात्रादमलाच्छून्याद्दते किंचिन्न विद्यते ।
133157 नान्यत्किंचिदपर्यन्ते खे शून्यत्वेतरद्यथा ॥ ७ ॥
133158
133159 परमार्थापलापहेतुंन् तदावरणमज्ञानं दर्शयितुं परमार्थं प्रथममाह
133160 - चिन्मात्रादिति । शून्याद‌द्वयाच्चिन्मात्राद्दते चित्सत्तास्फूर्तिभ्यामेव
133161 जगत्सत्तास्फूर्त्योः सर्वानुभवसिद्धत्वादित्यर्थः । स्वतः सत्तास्फूर्त्या तु
133162 नान्यत्किंचित्प्रसिद्धम् । यथा खे शून्यत्वेतरदप्रसिद्धं तद्वदित्यर्थः ॥ ७ ॥
133163
133164
133165 वेदनात्मा न सोऽस्त्यन्य इति या प्रतिभा स्थिरा ।
133166 एषाऽविद्या भ्रमस्त्वेष स च संसार आततः ॥ ८ ॥
133167
133168 एवं सर्वतः सर्वदा स्फुरन्नपि स चिन्मात्ररूपो वेदनात्मा देहेन्द्रियादिभ्योऽन्यो नास्ति
133169 न भाति चेत्यसत्त्वाभानापादिका या स्थिरा अनादिः प्रतिभा
133170 भ्रान्तिरेषैवावरणशक्तिप्राधान्येनाविद्या विक्षेपशक्तिप्राधान्येन
133171 भ्रमस्तदुभयफलरूपेण संसार इत्यर्थः ॥ ८ ॥
133172

133173 अनालोकनसंसिद्ध आलोकेनैव नश्यति।
133174 असदात्मा सदाभासो बालवेतालवत्क्षणात्॥ ९॥
133175
133176 अविद्यामूलप्रसाधनफलं दर्शयति - अनालोकनेति॥ ९॥
133177
133178 सर्वदृश्यदृशो बाधे बोधसारतयैकताम्।
133179 यान्त्यशेषमहीपीठसरित्पूरा इवार्णवे॥ १०॥
133180
133181 भेदकदृश्योपाधिबाधे सर्वदृष्टीनामैक्यं दर्शयति - सर्वेति॥ १०॥
133182
133183 मृन्मयं तु यथा भाण्डंन् मृच्छून्यंन् नोपलभ्यते।
133184 चिन्मयादितया चेत्यंन् चिच्छून्यं नोपलभ्यते॥ ११॥
133185
133186 चिन्मात्रादमलाच्छून्याद्दते किंचिन्न विद्यते इति यदुक्तं तद्दृष्टान्तैरुपपादयति
133187 - मृन्मयमित्यादिना। चिन्मयतया आदिपदात्सन्मयतया च॥ ११॥
133188
133189 बोधावबुद्धं यद्वस्तु बोध एव तदुच्यते।
133190 नाबोधं बुध्यते बोधो वैरूप्यात्तेन नान्यता॥ १२॥
133191
133192 चिन्मयतया स्फुरतो विमर्शे चिदैकरस्यमेव पर्यवस्यतीत्याशयेनाह - बोधेति।
133193 वैरूप्याद्विरुद्धरूपत्वात्। बोधाभेदं विना स्फुरणासिद्धेरबोधस्य च
133194 बोधाभेदायोगादित्यर्थः॥ १२॥
133195
133196 द्रष्टृदर्ऽसनदृश्येषु प्रत्येकं बोधमात्रता।
133197 सारस्तेन तदन्यत्वं नास्ति किंचित्खपुष्पवत्॥ १३॥
133198
133199 यदि द्रष्ट्रादित्रिपुट्या बोधेनाध्यासिकमभेदं ब्रूयास्तर्हि तस्या
133200 अनृतत्वादधिष्ठानबोधसारैकरस्यमेव सिद्धमित्याशयेनाह - द्रष्ट्रिति॥ १३॥
133201
133202 सजातीयः सजातीयेनैकतामनुगच्छति।
133203 अन्योन्यानुभवस्तेन भवत्वेकत्वनिश्चयः॥ १४॥
133204
133205 परस्परमिलनेनाभेदापत्तिस्तु जलस्य जलेनेव सजातीयानामेव भवतीति
133206 जगतस्तदनुभवमात्रत्वे अनुभवानामेकत्वे चिदेकत्वसिद्धान्त एव पर्यवसन्न
133207 इत्याह - सजातीय इति॥ १४॥
133208
133209 यदि काष्ठोपलादीनां न भवेद्बोधरूपता।
133210 तत्सदानुपलम्भः स्यादेतेषामसतामिव॥ १५॥
133211
133212 काष्ठादीनां दृश्यानां स्फुरणाभेदानभ्युपगमे
133213 शशशृङ्गवदत्यन्ताभानमेव स्यादित्याह - यदीति॥ १५॥
133214
133215 यदा त्वेषा नु दृश्यश्रीर्बोधमात्रैकरूपिणी।
133216 तदान्येवाप्यनन्यैव सती बोधेन बोध्यते॥ १६॥
133217
133218 सिद्धान्ते तु नायं दोष इत्याह - यदेति॥ १६॥
133219
133220 सर्वं जगद्गतं दृश्यंन् बोधमात्रमिदं ततम्।
133221 स्पन्दमात्रं यथा वायुर्जलमात्रं यथार्णवः॥ १७॥
133222
133223 तथा जगद्बोधमात्रं बोधानतिरिक्तस्फूर्तिकत्वाद्यद्यदनतिरिक्तस्फूर्तिकं
133224 तत्तन्मात्रं यथा वायोः स्पन्द इत्यनुमानं दर्शयति - सर्वमिति॥ १७॥

133225
133226 मिश्रीभूता अपि ह्येते जतुकाष्ठादयो यथा।
133227 मिथोऽननुभवे मिश्रा ऐक्यं ह्यनुभवे मिथः॥ १८॥
133228
133229 ननु दृष्टान्ते क्रियाक्रियावतोरवयवावयविनोश्च समवायेन मिश्रीभावमात्रं न
133230 त्वत्यन्तैक्यमित्याशङ्क्य जतुकाष्ठयोर्बहिर्मिश्रणेऽपि विवेकानुभवे
133231 मिश्रणादर्शनादिह त्वनुभवेऽपि तद्दर्शनेन
133232 वैषम्यात्समवायासिद्धेरित्याशयेनाह - मिश्रीभूता इति॥ १८॥
133233
133234 अन्योन्यानुभवो ह्यैक्यमैक्यं त्वन्योन्यवेदनम्।
133235 यथाम्भसोः क्षीरयोर्वा न काष्ठजतुनोरिव॥ १९॥
133236
133237 अम्भसोः क्षीरयोर्वा अन्योन्यात्मतानुभवो ह्यैक्यम्। दृग्दृश्यपदार्थयोरपि तु
133238 तादृशमन्योन्यवेदनात्मकमैक्यमस्त्येव न तु
133239 जतुकाष्ठवत्संयोगमात्रमित्यर्थः॥ १९॥
133240
133241 अहमित्येव बन्धाय नाहमित्येव मुक्तये।
133242 एतावन्मात्रके बन्धे स्वायत्ते किमशक्तता॥ २०॥
133243
133244 एवं सर्वदृश्यानां चिन्मात्रत्वेन तत्पदार्थचितोऽपरिच्छिन्नतया नित्यमुक्तत्वे
133245 सिद्धे त्वंपदार्थस्याहमिति परिच्छिन्नबुद्धिरेव बन्धाय तत्त्यागमात्रं मुक्तये इति
133246 फलितमित्याह - अहमित्येवेति॥ २०॥
133247
133248 चन्द्रद्वयप्रत्ययवन्मृगतृष्णाम्बुबुद्धिवत्।
133249 किमनुत्थित एवायमसदेवाहमुत्थितः॥ २१॥
133250
133251 तदेवोपपादयति - चन्द्रेति। असदहं किमुत्थितः। अनुत्थित एवेति योज्यम्॥ २१॥
133252
133253 ममेदमिति बन्धाय नाहमित्येव मुक्तये।
133254 एतावन्मात्रके वस्तुन्यात्मायत्ते किमज्ञता॥ २२॥
133255
133256 अहन्तात्यागे ममताबन्धः स्वत एवापैतीत्याशयेनाह - ममेति। आत्मायत्ते
133257 स्वाधीने॥ २२॥
133258
133259 यः कुण्डबदरन्यायो या घटाकाशयोः स्थितिः।
133260 स संबन्धोऽपि नैवान्यमैक्यं ह्यन्योन्यवेदनम्॥ २३॥
133261
133262 असता अहंकारेण सत्यस्यात्मनः परिच्छेदो वा न संभाव्य एवेत्याह - य इति।
133263 येन संबन्धेन तिरोधानमच्छेदो वा सिद्ध्येत्स
133264 संबन्धोऽप्यन्यमत्यन्तभिन्नमहंकारं कल्पयतो नास्ति। तस्माद्वास्तवैक्यमेव
133265 चन्द्रद्वित्ववद्भेदेनाविद्यया विकल्पितभेदरूपस्यात्मनः
133266 स्वप्रकाशबलात्स्फुरणमन्योन्यवेदनमिव भवतीत्यर्थः॥ २३॥
133267
133268 अन्योन्यावेदनं त्वैक्यं भागशो गतमप्यलम्।
133269 अजडं वा जडं वापि नैकं रूपं विमुञ्चति॥ २४॥
133270
133271 ये तु जैमिनीया वास्तवमेव जडबोधयोरैक्यं तदेवात्मरूपमिति मन्यन्ते तेषां
133272 तदैक्यं जाड्यां शगतं जडमेव बोधांशगतमपजडमेवेत्येकमपि न
133273 मुञ्चतीति जडांशे न स्फुरेदेव चिदंशे स्फुरदपि
133274 निर्विषयमेवेत्यन्योन्यावेदनमेव तदैक्यंन् स्यादित्यर्थः॥ २४॥
133275
133276 नाजडं जडतामेति स्वभावा ह्यनपायिनः।

133277 यच्चाजडं जडं दृष्टं द्वैति तत्रास्ति नैकता ॥ २५ ॥
133278
133279 कुतो न मुञ्चति तत्राह - नेति। हि यस्मात्कारणादनपायिन एव धर्माः स्वभावा
133280 इत्युच्यन्ते। यच्च त्वया अजडमेवात्मरूपं जडमित्यंशान्तरतया दृष्टं तत् द्वैति
133281 भिन्नमेव। तत्र अजडैकता नास्त्येवेति न जडबोधैक्यात्मसिद्धिरित्यर्थः ॥ २५ ॥
133282
133283 वासनावेशवलिताः कुविकारशतात्मभिः।
133284 व्रजन्त्यधोधो धावन्तं शिलाः शैलच्युता इव ॥ २६ ॥
133285
133286 एवं चेत्कथमात्मत्वं वादिनो नानाविधं परस्परविरुद्धं वदन्ति तत्राह -
133287 वासनावेशेति। कुविकारशतात्मभिः स्वस्ववासनाभिरावेऽसैरभिमानैश्च वलिता
133288 वेष्टिताः पराग्दृष्ट्यैव तत्त्वं परीक्षमाणा अधोधो व्रजन्तीत्यर्थः ॥ २६ ॥
133289
133290 व्यूढानां वासनावातैर्नृतृणानामितस्ततः।
133291 तान्यापतन्ति दुःखानि तत्र वक्तुं न पार्यते ॥ २७ ॥
133292
133293 अत एव श्रौतदृष्टिपरिभ्रष्टानां स्वस्ववासनावातैर्व्यूढानामितस्ततो नीतानां
133294 नृतृणानां तानि नानायोनिजन्ममरणनरकादिलोकशास्त्रप्रसिद्धानि
133295 दुःखान्यापतन्ति ॥ २७ ॥
133296
133297 भ्रान्त्वा भृशं करतलाहतकन्दुकाभं लोकाः पतन्ति निरयेषु रसेन
133298 रक्ताः।
133299 क्लेशेन तत्र परिजर्जरतां प्रयाताः कालान्तरेण पुनरन्यनिभा भवन्ति ॥ २८ ॥
133300
133301 तदेव वर्णयन्नुपसंहरति - भ्रान्त्वेति। वासनाभिमानानुसारिरागादिरसेन रक्ता
133302 लोका जना नारीकरतलाहतकन्दुकमिव भृशं भ्रान्त्वा निरयेषु पतन्ति। तत्र चिरं
133303 यातनात्क्लेशेन परितो जर्जरतां प्रयाताः कालन्तरेऽपि
133304 स्थावरकृमिकीटादिजन्मभिरन्यनिभा अन्यसदृशा एव भवन्ति पुनर्मानुष्यंन्
133305 दुर्लभमित्यर्थः ॥ २८ ॥
133306
133307 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मी० दे० मोक्षो० निर्वाणप्रकरणे उ० म०
133308 मङ्किबोधनं नाम पञ्चविंशः सर्गः ॥ २५ ॥
133309
133310 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
133311 मङ्किबोधनं नाम पञ्चविंशतितमः सर्गः ॥ २५ ॥
133312
133313 षड्विंशः सर्गः २६
133314
133315 श्रीवसिष्ठ उवाच।
133316
133317 संसारमार्गगहने पतितस्यापतन्ति हि।
133318 वृत्तवृत्तान्तलक्षाणि कीटा इव घनागमे ॥ १ ॥
133319
133320 इह प्रपञ्चतेऽनर्थो भावनाद्रसरञ्जनात्।
133321 इच्छान्त्यानर्थसंशान्तिर्विवेकात्तत्त्वदर्शनात् ॥
133322
133323 एवं स्थावरादियोनिलक्षणे संसारमार्गे पतितस्य जीवस्यानादिसंसारे बहुशो
133324 वृत्तानि च्छेदनभेदनदहनक्षुत्तृड्जराभयमरणादिरूपाणि वृत्तान्तलक्षाणि
133325 पुनरप्यापतन्ति हि ॥ १ ॥
133326
133327 सर्व एव त्विमे भावाः परस्परमसङ्गिनः।
133328 अटव्यामुपलानीव भावनैतेषु शृङ्खला ॥ २ ॥

तत्र चभावनैव मूलमित्याशयेनाह - सर्व इति।
शृङ्खलावत्परस्परग्रन्थनहेतुः॥ २॥

चित्तमान्ध्याय वृत्तान्तद्रुमैर्गहनवत्स्थितम्।
रसरञ्जनया लोके वसन्त इव काननम्॥ ३॥

तस्याश्च मूलं विवेकान्धं रागद्वेषादिरसरञ्जितं
पूर्ववृत्तान्तवासनानिबिडितं चित्तमित्याशयेनाह - चित्तमिति। रसो
रागादिर्भौमश्च॥ ३॥

अहो बत विचित्राणि वासनावशतोऽवशैः।
भूतकैरनुभूयन्ते सुखदुःखानि जन्मसु॥ ४॥

अहो बतातिविषमा वासना यद्वशाज्जनैः।
अविद्यमानैरेवायं भ्रमोऽन्तरनुभूयते॥ ५॥

अविद्यमानैर्मिथ्याभूतैरेव त्रिपुटीरूपैरर्थैः॥ ५॥

आह्लादिनो मृतवतः शुद्धस्यालोककारिणः।
शीतलस्याखिलार्थेषु ज्ञस्येन्दोश्च किमन्तरम्॥ ६॥

अत एव तीर्णभ्रमास्तत्त्वविदः सुखिन इति तान्प्रशंसति - आह्लादिन इति।
विशेषणान्यत्राग्रिमश्लोकयोश्चोभयत्र तुल्यानि योज्यानि॥ ६॥

पूर्वापरमनालोच्य यत्किंचिदभिवाञ्छतः।
निर्मर्यादस्य मूढस्य बालस्य च किमन्तरम्॥ ७॥

अविवेकिनस्तु निन्दति - पूर्वापरमिति॥ ७॥

लब्धमाप्राणपर्यन्तं शुभाशुभमनुज्झतोः।
आमिषं को विशेषोऽस्ति वद माकरमूढयोः॥ ८॥

आमिषं विषयं बडिशामिषं च प्राणानां पर्यन्तो मरणं तदवधि
अनुज्झतोरत्यजतोः। मकर एव माकरः मत्स्यजात्युपलक्षणमेतत्॥ ८॥

सर्व एव त्विमे भावा देहदारधनादयः।
क्षिप्रमाशुष्कसिकताशरावविशरारवः॥ ९॥

आशुष्कसिकतानिर्मितशराव इव विशरारवो नश्वराः॥ ९॥

आब्रह्मस्तम्बपर्यन्तमपि योनिशतेषु ते।
आकल्पं भ्रमतश्चित्तशान्तिर्नास्ति शमादृते॥ १०॥

इदानीं श्रोतृचित्तमेव संबोध्याह - आब्रह्मेति॥ १०॥

पर्यालोचनमात्रेण बन्धगन्धो न बाधते।
गच्छतो मार्गवैषम्यमिवालोकनकारिणः॥ ११॥

पर्यालोचनं विवेकस्तन्मात्रेण। आलोकनं स्वपादन्यासप्रदेशावलोकनं तत्कारिणः
॥ ११॥

133381 तव नावहितं चित्तं कामः कवलयिष्यति।
133382 सावधानस्य बुद्धस्य पिशाचः किं करिष्यति॥ १२॥
133383
133384 अवहितं सविवेकावधानम्। बुद्धस्य जागरूकस्य॥ १२॥
133385
133386 यथेक्षणप्रसरणं रूपालोकनमात्रकम्।
133387 संवित्प्रसृतिमात्रात्म तथा साहंजगत्स्थितम्॥ १३॥
133388
133389 साहंकारं जगत् निर्विवेकावधानसंवित्प्रसरमात्रमित्याह - यथेति। यथा
133390 रूपालोकनमात्रकमेवेक्षणस्य चक्षुषः प्रसरणं न तद्भिन्नं किंचित्प्रसिद्धं
133391 तद्वत्॥ १३॥
133392
133393 यथाक्षिसंवृतिः सर्वरूपालोकशमोऽरिहन्।
133394 संवित्संवरणं नाम सर्वदृश्यशमस्तथा॥ १४॥
133395
133396 हे कामाद्यरिषड्वर्गहन् बहिर्मुखसंविदः प्रत्यक्प्रवणवृत्त्या संवरणं
133397 स्वात्मन्युपरमः॥ १४॥
133398
133399 असदेव जगत्साहंन् शुद्धा संवित्तनोति खे।
133400 ईषत्प्रसरणेनाशु स्पन्दनंन् पवनो यथा॥ १५॥
133401
133402 साहमहंकारसहितं जगत् शुद्धा संविदेव अविवेकप्रयुक्तेनेषत्प्रसरणेन खे
133403 आवृतस्वस्वरूपाकाशे तनोति॥ १५॥
133404
133405 सदिवासत्यमेवेदमकुर्वत्यन्यमेधते।
133406 मृदा हेम्नेव कुम्भत्वमपृथग्लभ्यमात्मगम्॥ १६॥
133407
133408 ब्रह्मसंवित्परमार्थतोऽन्यमकुर्व्येवासत्यमेव सदिवेदं जगद्रूपमेधते
133409 जृम्भते। कथमसत्यमिति ज्ञायते तत्राह - मृदेति। यथा मृदा हेम्ना वा
133410 आत्मगं स्वात्मनि कल्पितं कुम्भत्वमपृथग्लभ्यं पृथक्कृत्य
133411 लब्धुमशक्यं तथेदं जगदपि चितः पृथक्कृत्य लब्धुमशक्यम्। यदि सत्यं
133412 स्यात् पृथक् लभ्येतेति भावः॥ १६॥
133413
133414 शून्यमात्रं यथा व्योम स्पन्दमात्रं यथानिलः।
133415 जलमात्रं यथोर्म्यादि संविन्मात्रं तथा जगत्॥ १७॥
133416
133417 यद्यदपृथग्लभ्यंन् तत्तत्पृथक्सत्ताशून्यमिति हेमादौ व्याप्तिं दर्शयति -
133418 शून्यमात्रमिति॥ १७॥
133419
133420 अव्यवच्छिन्ननिर्भागसंविन्मात्रं जगत्त्रयम्।
133421 विद्धि शान्तं तथा व्योम यथा वारिणि पर्वतम्॥ १८॥
133422
133423 अव्यवच्छिन्नेति सजातीयभेदनिरासः। निर्भागेति स्वगतभेदनिरासः। वारिणि
133424 प्रतिबिम्बितं पर्वतं पर्वतसदृशं बृहत्तरङ्गं वा॥ १८॥
133425
133426 निर्वाणस्योपशान्तस्य ज्ञस्य सोदेति शीतता।
133427 अन्तर्यत्रेन्दवोऽप्येते दीप्तज्वलनबिन्दवः॥ १९॥
133428
133429 इत्थं जगत्तत्त्वं जानतो न सांसारिकतापप्रसक्तिरित्याशयेनाह - निर्वाणस्येति। सा
133430 सर्वोत्कृष्टा शीतता सर्वतापोपशान्त्युपलक्षिताऽऽह्लादता। यत्र यद्दृष्ट्येति यावत्॥
133431 १९॥
133432

133433 किं केन कथमेकान्तशान्तातातशिवात्मनि ।
133434 निरालोकोऽपरालोकः शून्ये जगति जन्यते ॥ २० ॥
133435
133436 तत्र प्रकाशान्तरप्रसक्तिरपि नास्तीत्याह - किमिति । जगति शिवे शून्ये सति अपरालोकः
133437 किंस्वरूपः केन साधनेन कया च क्रियया जन्यत इत्यर्थः ॥ २० ॥
133438
133439 या सत्ता ब्रह्मशब्दाख्या रूपं सर्वस्य तन्निजम् ।
133440 न यत्र काचिद्बाधास्ति सर्वं तन्मयमव्ययम् ॥ २१ ॥
133441
133442 तदेव सर्ववस्तूनामबाध्यं स्वरूपमित्याह - येति ॥ २१ ॥
133443
133444 यदिदं तु पदार्थत्वं यत्र बाधानुभूयते ।
133445 यद्यच्च बाधनं प्रेक्ष्य तन्न विद्मः खपुष्पवत् ॥ २२ ॥
133446
133447 बाध्यं स्वरूपं तर्हि किं तत्राह - यदिति । पदार्थत्वं नामरूपभावः । तच्च
133448 तस्य बाधनं चाद्यच्च तस्योत्पत्त्यादिविकारषट्कं तत्सर्वं प्रेक्ष्य
133449 सम्यग्विमृश्यापि न विद्मः । यतस्तत्खपुष्पवत्तुच्छमेवेत्यर्थः ॥ २२ ॥
133450
133451 ज्ञ एवापगतस्वान्तं शान्तमास्व महाश्मवत् ।
133452 असौ न मननं मानमनन्तमजमव्ययम् ॥ २३ ॥
133453
133454 तच्च रूपं मनोविकल्पितं मनोपगमेऽपैतीति शान्तमास्वेत्याह - ज्ञ एवेति ।
133455 स्वान्तापगमेन ज्ञोऽप्यपगमिष्यत्येवेति कथं ज्ञ एवास्वेत्युच्यते तत्राह - असाविति
133456 । मनोपगमे हि नामरूपात्मकं मननं विकल्पनं तन्मानं चक्षुरादि
133457 चाऽपगच्छेत् असौ ज्ञस्तु तथा न किंत्वनन्तमजमव्ययं ब्रह्मैवेति
133458 नापगच्छतीत्यर्थः ॥ २३ ॥
133459
133460 आकाशकल्पे स्वे भावे तिष्ठतोऽङ्गानिवेदनम् ।
133461 भवत्यभ्यासदार्ढ्येन विना स्वप्नविकारवत् ॥ २४ ॥
133462
133463 हे अङ्ग आकाशकल्पे स्वे आत्मभावे मनोबाधेन तिष्ठतो ज्ञस्य
133464 नामरूपयोरनिवेदनमप्रतीतिरेव भवति
133465 यतस्तत्स्वरूपावस्थित्यभ्यासदार्ढ्याभावादेव स्वप्नविकारवन्मनस्युदेतीत्यर्थः ॥
133466 २४ ॥
133467
133468 निरुपादानसंभारमभित्तावेव चेतति ।
133469 ब्राह्मं कर्तृ जगच्चित्रं न कश्चिद्वा न किंचन ॥ २५ ॥
133470
133471 मनोविकल्पमात्रं जगदिति कथं ज्ञायते तत्राह - निरुपादानेति । यतो ब्राह्मं
133472 हैरण्यगर्भं मन एव जगतः कर्तृ निर्मातृ तच्च निरुपादानसंभारं
133473 निरस्तरञ्जकद्रव्यतूलिकाकूर्चादिसामग्रीकमेव जगच्चित्रमभित्तौ निराश्रय एव
133474 संकल्पमात्रेण चेतति पश्यति । न कश्चिद्वा मनोतिरिक्तः कर्ता न किंच न कार्यं च
133475 मानसे स्वप्नादौ दृष्टमित्यर्थः ॥ २५ ॥
133476
133477 तनोति यत्तदात्मैव तस्य तत्र तथा स्थितम् ।
133478 दृश्याभावादसद्दृश्यं तेन कः क्व करोति किम् ॥ २६ ॥
133479
133480 तच्च मनो यत्तनोति विस्तारयति तत्र सर्वत्र मनोराज्यादाविव आत्मा स्वयमेव तथा
133481 तत्तद्वस्त्वाभासात्मना स्थितम् । इत्थं स्वातिरिक्तदृश्याभावात्केन कः किं क्व करोति
133482 न कश्चित्केनचित्क्वचित्किंचिदित्यर्थः ॥ २६ ॥
133483
133484 अहं सुखीति सुखिता अहं दुःखीति दुःखिता ।

133485 सर्व एव स्वरूपस्था व्योमात्मानोऽपि पार्थिवाः ॥ २७ ॥
133486
133487 इत्थं च सुखदुःखे तत्साधनीभूताः पार्थिवादिविषयाश्च कल्पनोपरमे
133488 शून्यरूपा आत्मरूपा वा संपन्ना इत्याह - अहमिति ॥ २७ ॥
133489
133490 सर्वेषामेव भावानां चिदाकाशात्मनामपि ।
133491 मिथ्यैव स्वप्नशैलानामिव [स्वप्नशीलानां इति पाठश्चिन्त्यः ।]
133492 पार्थिवता स्थिता ॥ २८ ॥
133493
133494 पार्थिवानामप्यपार्थिवता स्वप्नशैलवत्संभावनीयेत्याह - सर्वेषामिति ॥ २८ ॥
133495
133496 अहंत्वोल्लेखतः सत्ता भ्रमभावविकारिणी ।
133497 तदभावात्स्वभावैकनिष्ठता शमशालिनी ॥ २९ ॥
133498
133499 एवं च सति यत्फलितं तदाह - अहंत्वोल्लेखत इत्यादिना ॥ २९ ॥
133500
133501 हेम्नः कटकशब्दार्थो व्यतिरिक्तो यथास्ति ते ।
133502 व्यतिरिक्ता तथा सत्या नाहंतास्ति शमात्मनः ॥ ३० ॥
133503
133504 निर्वाणो निर्मना मौनी कर्ताऽकर्ता च शीतलः ।
133505 ज्ञ एव शान्त एवास्ते शून्य एवाभिपूरितः ॥ ३१ ॥
133506
133507 निर्वासनास्पन्दपरो यन्त्रपुत्रकगात्रवत् ।
133508 स यथास्थितमेवास्ते ज्ञः संव्यवहरन्नपि ॥ ३२ ॥
133509
133510 निर्वासनत्वादेव अस्पन्दपरः स्पन्दाभिमानशून्यः ।
133511 यन्त्रनिर्मितशिलादिप्रतिमाशरीरवत् ॥ ३२ ॥
133512
133513 यथा मञ्चकसंस्थस्य स्पन्दन्ते नैव वा शिशोः ।
133514 अङ्गानि स्वानुसंधानं विनैवंविदितात्मनः ॥ ३३ ॥
133515
133516 देहस्पन्ददशायामेव तदस्पन्दसंभावनाय दृष्टान्तमाह - यथेति ।
133517 स्पन्दमानदोलामञ्चके सुप्तस्य शिशोरङ्गानि नैव स्पन्दन्ते
133518 तद्वत्संभावनीयमित्यर्थः ॥ ३३ ॥
133519
133520 निःसंबोधैकबोधस्य निराशेहैषणाशिषः ।
133521 शान्तानन्तात्मरूपत्वादनुसंधानता कुतः ॥ ३४ ॥
133522
133523 ननु तस्य स्वरूपज्ञानमेव देहाद्यनुसंधानं किं न स्यात्तत्राह -
133524 निःसंबोधेति । निःसंबोधो बहिर्मुखचित्तवृत्तिस्तच्छून्याखण्डबोधरूपस्य ।
133525 चिरप्राप्ये विषये आशा । प्राप्तविषये स्नेह एषणा । मनोरथैराशासनमाशीरिति भेदः
133526 ॥ ३४ ॥
133527
133528 अद्रष्टुरपदृश्यस्यादृग्रूपस्यापरूपिणः ।
133529 कुतः किलानुसंधानमनपेक्षस्य पश्यतः ॥ ३५ ॥
133530
133531 द्रष्ट्रादित्रिपुटीबाधादपि तस्य नानुसंधानतेत्याह - अद्रष्टुरिति । स्वयं च
133532 अपरूपिणो निराकारस्य ॥ ३५ ॥
133533
133534 अपेक्षैव घनो बन्ध उपेक्षैव विमुक्तता ।
133535 सर्वशब्दान्विता तस्यां विश्रान्तेन किमीक्ष्यते ॥ ३६ ॥
133536

133537 सर्वशब्दान्विता उपेक्षा सर्वोपेक्षैव विमुक्ततेत्यर्थः। तस्यां पूर्णकामतायां
133538 विश्रान्तेन किमीक्ष्यते अपेक्ष्यते। ईप्स्यते इति पाठः साधुः॥ ३६॥
133539
133540 पार्थिवत्वे शरीरेऽस्मिन्स्वस्वप्राङ्ग इवासति।
133541 भ्रममात्रात्मनि कुतः क्व कस्य किमपेक्षणम्॥ ३७॥
133542
133543 शरीरार्थं हि सर्वोऽप्यपेक्षते। तस्य स्वाप्नशरीरादिवद्बाधे सति न
133544 कस्यचिदपेक्षाप्रसक्तिरित्यर्थः॥ ३७॥
133545
133546 उपशान्तसमस्तेहं विगताखिलकौतुकम्।
133547 निरस्तवेदनं ज्ञेन विदा केवलमास्यते॥ ३८॥
133548
133549 उपसंहरति - उपशान्तेति॥ ३८॥
133550
133551 मङ्किनेति श्रुतवता ततो मोहो महानपि।
133552 अशेषेण परित्यक्तस्तत्रैव त्वगिवाहिना॥ ३९॥
133553
133554 मुख्याधिकारित्वान्मङ्किनः सकृच्छ्रवणमात्रेण मोहनिवृत्तिमाह -
133555 मङ्किनेति॥ ३९॥
133556
133557 प्रवाहापतितं कार्यं कुर्वतापास्तवासनम्।
133558 तेन वर्षशतस्यान्ते स्थितमद्रौ समाधिना॥ ४०॥
133559
133560 तत्राद्ययावत्पाषाणसमधर्मा स तिष्ठति।
133561 संशान्तकरणो योगी बोध्यमानः प्रबुध्यते॥ ४१॥
133562
133563 एतेन राघव विवेकपदेन शान्तिमासादयोदयवता मनसा विहर्तुम्।
133564 मा दीनतां व्रजतु रागमयी मतिस्ते क्षीणा क्षणादसलिलेव शरद्घनाली॥ ४२॥
133565
133566 हे रघव त्वमेतेन मङ्किपरिगृहीतोपायेन ज्ञानेऽभ्युदयवता मनसा विवेकपदेन
133567 स्वात्मानन्दे विहर्तुंन् शान्तिमासादय। ते मतिः रागमयी सती असलिला शरद्घनालीव
133568 क्षणात् क्षीणविवेका भूत्वा दीनतां मा व्रजत्वित्यर्थः॥ ४२॥
133569
133570 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मी० दे० मोक्षो० निर्वाणप्रकरणे उ०
133571 मङ्क्युपा० निर्वाणसमाप्तिर्नाम [सम्यगाप्तिः समाप्तैः।] षड्विंशः
133572 सर्गः॥ २६॥
133573
133574 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
133575 निर्वाणसमाप्तिर्नाम षड्विंशः सर्गः॥ २६॥
133576
133577 सप्तविंशः सर्गः २७
133578
133579 श्रीवसिष्ठ उवाच।
133580
133581 निर्वाणो भव शान्तात्मा यथाप्राप्तानुवृत्तिमान्।
133582 सन्नेवासत्समः सौम्य स्फटिकादिव निर्मितः॥ १॥
133583
133584 चित्तस्पन्दे चितः स्पन्दभ्रमाद्विश्वविभूतयः।
133585 चित्तशान्त्यैव तच्छान्त्या स्वरूपस्थितिरीर्यते॥
133586
133587 स्फटिकान्निर्मितः प्रतिमापुरुषो यथा सन्नापि
133588 दृष्टिप्रसरानिरोधित्वादसत्समस्तद्वत्स्वात्माद्वैतदृष्टिप्रसरानिरोधित्वाद##-

133589
133590 एकस्मिन्नेव सर्वस्मिन्संस्थिते विततात्मनि ।
133591 नैकस्मिन्न च सर्वस्मिन्नानाताकलना कुतः ॥ २ ॥
133592
133593 प्रबोधात्प्रागेकस्मिन्नेव सर्वात्मतया स्थिते प्रबोधे तु नैकस्मिन्न च सर्वस्मिन् ।
133594 व्यष्टिसमष्टिभावबाधादिति भावः ॥ २ ॥
133595
133596 आद्यन्तरहितं सर्वं व्योम चित्तत्त्वनिर्भरम् ।
133597 शरीरोत्पत्तिनाशेषु का चित्तत्त्वस्य खण्डना ॥ ३ ॥
133598
133599 ननु प्रतिशरीरमुत्पत्तिनाशाभ्यां सप्तवितस्तिपरिमाणेन च
133600 परिच्छेदानुभवान्नानैवास्तु नेत्याह - आद्यन्तेति ॥ ३ ॥
133601
133602 स्फुरन्ति हि जडक्रीडाश्चिच्चमत्कारचापलात् ।
133603 अचापलात्प्रतीयन्ते तरङ्गा इव वारिणि ॥ ४ ॥
133604
133605 जडसर्गादिरूपाः क्रीडाः । चिच्चमत्कारो मनस्तच्चापलात् ॥ ४ ॥
133606
133607 यथा शुभ्राम्बुदे वस्त्रशङ्का न फलभागिनी ।
133608 देहोऽयमहमित्येषा तथा शङ्का न वास्तवी ॥ ५ ॥
133609
133610 वस्त्रशङ्का वस्त्रत्वोत्प्रेक्षा न परमार्थावधारणफलभागिनी तद्वत् । शङ्का
133611 भ्रान्तिः ॥ ५ ॥
133612
133613 माऽवस्तुनि निमग्नस्त्वं भव भूरिभवप्रदे ।
133614 वस्त्वनन्तसुखायाद्यं भव्यंन् भावय भूतये ॥ ६ ॥
133615
133616 अवस्तुनि मिथ्याभूते देहादावहंभावनिमग्नो मा भव । भूतये मुक्तये ॥ ६ ॥
133617
133618 चिद्व्योमानन्तमेवास्मिन्नेयत्तास्ति समात्मनः ।
133619 इत्येव परमं वस्तु वस्तु तत्परमस्तु ते ॥ ७ ॥
133620
133621 किं तद्वस्तु यद्भावनं कार्यं तदाह - चिद्व्योमेति । तादृशवस्तु तत्परं ते
133622 मनोऽस्त्वित्यर्थः ॥ ७ ॥
133623
133624 एवं निश्चयवान्नाम त्वमेवासि निरञ्जनः ।
133625 ध्याता ध्येयं तथा ध्यानं सत्यं चापि न किंचन ॥ ८ ॥
133626
133627 तस्य किं फलं तदाह - एवमिति । न चायं निश्चयोऽनिश्चयो
133628 ध्यानध्यात्रादित्रिपुटीबाधकत्वादित्याशङ्क्य तस्याबाध्यत्वमेव
133629 युक्तमित्याशयेनाह - ध्यातेति । कुतस्तस्याबाध्यत्वं तत्राह - सत्यं चेति ।
133630 यतो ध्यात्रादित्रये किंचिदपि सत्यंन्न् नेत्यर्थः ॥ ८ ॥
133631
133632 द्रष्टा दृश्यं दर्शनं च चित एव विभूतयः ।
133633 अतत्तत्संविदो नान्यदध्यानं ध्येयमस्ति च ॥ ९ ॥
133634
133635 तर्हि दर्शनादित्रिपुट्या अपि तत्सामान्यात्कथं तद्बाधकत्वमित्याशङ्क्य
133636 विशेषमाह - द्रष्टेति । दर्शनं हि प्रमाणजन्यं वस्तुतन्त्रमेव न
133637 पुरुषतन्त्रमिति वृत्त्यभिव्यक्तपरमार्थचित्प्राधान्यादज्ञाननिवर्तकत्वाच्च
133638 परमार्थचित एव विभूतयो द्रष्ट्रादयः । ध्यानं तु न प्रमाणजं नापि
133639 वस्तुतन्त्रं पुरुषेच्छानुसारि चेति क्रियाविशेषमात्रत्वादविद्याविभूतय एव
133640 ध्यात्रादय इति बाध्या इत्यर्थः । विशेषान्तरमप्याह - अतदिति । अतत् असंवित्

133641 जडवस्तु सर्वं तत्संविदोऽन्यत् पृथग्भूतंन् न दृष्टमतो दृश्यं
133642 दर्शनानुसार्येव। ध्येयंन् तुअध्यानं विनापि ध्यानं अस्ति स्फुरति चेति न वस्तुनो
133643 ध्यानानुसारितेति विशेष इत्यर्थः॥ ९॥
133644
133645 उद्यति प्रतिपच्चन्द्रे वहति प्रलयानिले।
133646 आत्मतत्त्वं समं सौम्यं न क्षुभ्यति न शाम्यति॥ १०॥
133647
133648 संविदस्तु निर्विकारत्वं सर्वतो विशेष इत्याह - उद्यतीति। तथा समुद्रः
133649 प्रतिपच्चन्द्रे उद्यति सति क्षुभ्यति प्रलयानिले वहति शुष्यति च न तथा
133650 आत्मतत्त्वमित्यर्थः॥ १०॥
133651
133652 यथा नौयायिनः स्थाणुतरुशैलादिवेपनम्।
133653 यथा शुक्तौ रजतधीस्तथा देहादि चेतसः॥ ११॥
133654
133655 तर्हि तस्या द्रष्ट्रादित्रिपुटी कथं विभूतिरिति चेद्विवर्ततयैवेत्याशयेनाह - यथेति।
133656 चिति चेतसो दृष्ट्या भ्रम इत्यर्थः॥ ११॥
133657
133658 यथा देहादि चित्तस्य तथा देहस्य चित्तकम्।
133659 तथैव जीवः परमे पदे द्वैतमतः कुतः॥ १२॥
133660
133661 एवं देहदृष्ट्या चित्तमपि कल्पितम्। तदुभयदृष्ट्या जीवः कल्पितस्तद्दृष्ट्या
133662 तदुभयंन् कल्पितमिति शुद्धचिति विवर्ताः सर्वे इत्याह - यथेति॥ १२॥
133663
133664 सर्वमेकमिदं शान्तं ब्रह्म बृंहितवेदनात्।
133665 न किंचिज्जगदाद्यस्ति भ्रान्तिरन्या न विद्यते॥ १३॥
133666
133667 ब्रह्मदृष्ट्या तु तदेवैकमित्याह - सर्वमिति॥ १३॥
133668
133669 न विद्यते यथा व्योम्नि वनं स्नेहश्च सैकते।
133670 विद्युच्छशाङ्कबिम्बे च तथा देहादि चेतसि॥ १४॥
133671
133672 चेतसि तत्त्वदृष्टौ॥ १४॥
133673
133674 अविद्यमान एवास्मिन्मा बिभीहि जगद्भ्रमे।
133675 एतदेव परं सत्यं विद्धि सत्यविदां वर॥ १५॥
133676
133677 बिभीहि भयं प्राप्नुहि॥ १५॥
133678
133679 जगदस्ति न सत्तेति यासीद्भ्रान्तिस्तवाद्य सा।
133680 शान्ता मदुपदेशेन किमन्यद्बन्धकारणम्॥ १६॥
133681
133682 जगदेवास्ति अद्वितीयब्रह्मसत्ता नास्तीति या भ्रान्तिस्तवासीत्सा॥ १६॥
133683
133684 स्थाल्युदञ्चनकुम्भादि यथा मृन्मात्रकं तथा।
133685 चित्तमात्रं जगदिदं क्षीणं तच्च विचारणात्॥ १७॥
133686
133687 आपत्सु संपत्सु भवाभवेषु शान्तैषणाहर्षविषादसंवित्।
133688 सौम्यादहंभावविदा विमुक्तो यथास्थितं तिष्ठ विलीय मास्व॥ १८॥
133689
133690 हे राम त्वं सौम्यान्मदुपदेशादहंभावरूपया विदा विमुक्तः सन् संपत्सु
133691 शान्तैषणाहर्षसंवित् आपत्सु च शान्तविषादसंवित् सन् भवाभवेषु
133692 विभवानामुत्कर्षापकर्षेषु यथास्थितं समं तिष्ठ। मदुपदेशविस्मरणेन विलीय

133693 स्वरूपस्थितिदार्ढ्यं विहाय मा आस्व ॥ १८ ॥
133694
133695 यथास्थितं वस्त्वधिगम्य राम स्थितोऽसि चेद्वास्वकुलाम्बरेन्दो ।
133696 तद्धर्षशोकैषणदूषणादि विमुच्य वा तिष्ठ यथेच्छमास्व ॥ १९ ॥
133697
133698 तत्किं तत्त्वज्ञानोत्तरं प्रमादात्प्रारब्धप्राबल्याद्वा
133699 हर्षशोकानुवृत्त्यपराधेन पुनर्बन्धो भविष्यति नेत्याह - यथास्थितमिति । हे
133700 स्वकुलाम्बरेन्दो राम त्वं यथास्थितं ब्रह्मात्मैक्यवस्तु अपरोक्षतया
133701 सम्यगधिगम्य स्थितोऽसि चेत्तर्हि हर्षशोकेषणालक्षणानि दूषणानि
133702 चित्तसंतापकानि विमुच्य वा तिष्ठ यथेच्छं वा तान्यनुवर्तमान आस्वेति
133703 प्राक्तनवाशब्दस्यात्रान्वयः । तव दृष्टसुखार्थं मया विलीय मास्वेत्युक्तं न तु
133704 तावता मुक्तौ संदेह इति भावः ॥ १९ ॥
133705
133706 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाणप्रकरणे उ०
133707 मुख्ययोगोपदेशो नाम सप्तविंशः सर्गः ॥ २७ ॥
133708
133709 इति श्रीवासिष्ठमहारामायणे तात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
133710 मुख्ययोगोपदेशो नाम सप्तविंशः सर्गः ॥ २७ ॥
133711
133712 अष्टाविंशः सर्गः २८
133713
133714 श्रीराम उवाच ।
133715
133716 बीजाङ्कुराणां पुरुषकर्मणां जन्मकारिणाम् ।
133717 दैवशब्दार्थयुक्तानां तत्त्वं वद विभो पुनः ॥ १ ॥
133718
133719 बीजाङ्कुराणां पुरुषकर्मणां जन्मकारिणाम् ।
133720 दैवशब्दार्थयुक्तानां तत्त्वं भूयोऽत्र वर्ण्यते ॥
133721
133722 बीजानामुपादानानामङ्कुराणामुपादेयानां पुरुषाणां कर्तॄणांन् कर्मणां
133723 तदीयविहितनिषिद्धोदासीनक्रियाणामिति दृष्टसामग्रीणां दैवशब्दार्थेनादृष्टेन
133724 निमित्तेन युक्तानां सर्वेषां जन्मपरंपरालक्षणसंसारानर्थकारिणां तत्त्वं
133725 प्राग्विशकलितोक्तमपि पुनः पिण्डीकृत्य कथयेत्यर्थः ॥ १ ॥
133726
133727 श्रीवसिष्ठ उवाच ।
133728
133729 दैवकर्मादिपर्यायंन् घटादि घटतावधि ।
133730 संवित्स्पन्दनमेवेदं लोके पुरुषतां गतम् ॥ २ ॥
133731
133732 तत्रादौ दैवस्य तत्त्वं कर्म कर्मणस्तत्त्वं पुरुषस्तत्तत्त्वं मनोरूपश्चित्स्पन्दः
133733 तस्य तु चिदात्मैव तत्त्वं यश्चिदात्मैव प्रथमं बहु स्यां प्रजायेय इति
133734 प्राथमिकसंकल्पलक्षणेन चित्स्पन्देन समष्टिव्यष्टिमनो भवति ततो
133735 देहाकाराध्यासेन पुरुषस्ततः कर्माणि कुर्वन्पुण्यपापादृष्टरूपदैवतां
133736 चापद्य तद्भोगाय घटादिद्रव्यात्मना तद्गतगुणक्रियाद्यात्मना च
133737 घटत्वादिसामान्यं तेन जगद्रूपेण विवर्तत इति दैवकर्मादिकारणशब्दरूपं
133738 घटादि घटतावधि कार्यशब्दरूपं च
133739 तत्त्वतश्चित्स्पन्दपर्यायमित्याशयेनोत्तरमाह - दैवेति ॥ २ ॥
133740
133741 संवित्स्पन्दादृते पुंस्त्वं कर्म वा कीदृशं भवेत् ।
133742 घटावटपटाद्यात्म ह्येतेनैव जगत् कृतम् ॥ ३ ॥
133743
133744 अत एव हि पुरुषकर्मादि घटावटादि च संविदधीनसत्तास्फूर्तिकं सर्वैरनुभूयते

133745 संविद्विवर्तत्वानभ्युपगमे तु सत्तास्फूर्तिशून्यं तत् कीदृशं भवेत् | अलीकमेव
133746 स्यादित्यर्थः || ३ ||
133747
133748 प्रवर्तते जगल्लक्ष्मीः संवित्स्पन्दात्सवासनात् |
133749 निवर्तते हि संसारः संवित्स्पन्दादवासनात् || ४ ||
133750
133751 सर्वस्य संवित्स्पन्दमात्रत्वे वैचित्र्येणोद्भवे तन्निवृत्तौ च निमित्तमाह -
133752 प्रवर्तते इति || ४ ||
133753
133754 अवासनं हि संवित्तेः स्पन्दमस्पन्दनं विदुः |
133755 सस्पन्दोऽप्यस्फुरत्स्पन्दो येनावर्तादिनोह्यते || ५ ||
133756
133757 येन हेतुना आवर्तादिना स्वान्तःप्रवेश्यमानस्तरङ्गः
133758 सस्पन्दोऽप्यन्तःसमुद्रमात्रतामापद्यमानः अस्फुरत्स्पन्द एवोह्यते वितर्क्यते
133759 इत्यर्थः || ५ ||
133760
133761 मनागपि न भेदोऽस्ति संवित्स्पन्दमयात्मनोः |
133762 कल्पनांशादृते राम सृष्टौ पुरुषकर्मणोः || ६ ||
133763
133764 अत एव चितः स्पन्द एव पुरुषाद्याकारता तन्निवृत्तिरेव निराकारतेति स्पन्दपुरुषयोः
133765 परस्परं विमर्शेन भेद इत्याह - मनागिति || ६ ||
133766
133767 जलवीच्योर्यथा द्वित्वं संकल्पोत्थं न वास्तवम् |
133768 तथेह चित्परिस्पन्दरूपयोर्जन्तुकर्मणोः || ७ ||
133769
133770 अधिष्ठानाद्भेदस्तु सुतरां नास्तीत्याह - जलेति | जन्तुः पुरुषः || ७ ||
133771
133772 कर्मैव पुरुषो राम पुरुषस्यैव कर्मता |
133773 एते ह्यभिन्ने विद्धि त्वं यथा तुहिनशीतते || ८ ||
133774
133775 अभिन्ने इति | तथा च श्रुतिः अथ कर्मणामात्मेत्येतदेषामुक्थमतो हि
133776 कर्माण्युत्तिष्ठन्ति इति || ८ ||
133777
133778 हिमं यत्तद्यथा शैत्यं यच्छैत्यंन् तद्यथा हिमम् |
133779 यत्कर्मासौ तथा जन्तुर्यो जन्तुः कर्म तत्तथा || ९ ||
133780
133781 तथा च क्रियमाणे पुण्यपापे भाविदेहस्य तद्भोग्यस्य च पूर्वावस्थे इत्यर्थः || ९ ||
133782
133783 संवित्स्पन्दरसस्यैव दैवकर्मनरादयः |
133784 पर्यायशब्दा [शब्दास्तु इति पाठः ||] न पुनः पृथक्कर्मादयः
133785 स्थिताः || १० ||
133786
133787 एवं च यदुक्तं दैवकर्मादिपर्यायम् इति तत्सिद्धमित्याह - संविदिति || १० ||
133788
133789 स्पन्दात्संविज्जगद्बीजमस्पन्दाद्यात्यबीजताम् |
133790 अङ्कुरश्च तदेवान्तः स्थितत्वादङ्कुरश्रियः || ११ ||
133791
133792 बीजाङ्कुराणामिति प्रश्नस्योत्तरमाह - स्पन्दादिति |
133793 तद्बीजमेवान्तःसूक्ष्मावयवरूपं निर्गतमप्यङ्कुर इत्यर्थः || ११ ||
133794
133795 चित्त्वं च क्वचिदस्पन्दं क्वचित्स्पन्दं स्वभावतः |
133796 अनन्तमेकार्णववद्दिक्कालक्रमसंस्थितम् || १२ ||

133797
133798 चित्त्वं चित्स्वभाव ईदृशो यद्दिक्कालक्रमसंस्थितं स्पन्दं क्वचिद्व्रजते
133799 क्वचिन्नेत्यर्थः ॥ १२ ॥
133800
133801 संवित्स्पन्दो वासनावानिह बीजमकारणम् ।
133802 भूत्वा कारणतामेति देहादेरङ्कुरावलेः ॥ १३ ॥
133803
133804 वासनावान् भूत्वा अकारणमपि कारणतामेति ॥ १३ ॥
133805
133806 तृणवल्लीलतागुल्मबीजान्तरगतेरपि ।
133807 बीजंन् संवित्स्पन्द एव तस्य बीजं न विद्यते ॥ १४ ॥
133808
133809 अवान्तरबीजवेषेऽवस्थितः स एव सर्वत्र बीजमवान्तरवेषास्तु तस्य
133810 कार्यवेषविशेषव्यवस्थार्थमित्याशयेनाह - तृणेति । बीजान्तराणां
133811 गतेर्व्यवस्थितकार्यप्रवृत्तेः । नन्वेवं तदन्तरमप्यनुगतं बीजान्तरं
133812 स्यादित्यनवस्थामाशङ्क्याह - तस्येति ॥ १४ ॥
133813
133814 न बीजाङ्कुरयोर्भेदो विद्यतेऽग्न्यौष्ण्ययोरिव ।
133815 बीजमेवाङ्कुरं विद्धि विद्धि कर्मैव मानवम् ॥ १५ ॥
133816
133817 यदि बीजान्तर्गता शक्तिरेवाङ्कुर इति मन्यसे तदापि न शक्तितद्वतोर्भेद इत्याशयेनाह
133818 - नेति ॥ १५ ॥
133819
133820 चित्स्फुरन्ती भूमिकोशे करोति स्थावराङ्कुरम् ।
133821 स्थूलान्सूक्ष्मान्मृदुक्रूरान्पयोबुद्बुदकानिव ॥ १६ ॥
133822
133823 स्थावराणां वटादीनामङ्कुरम् । क्रूरान्कठिनान् । तथा च स्मरन्ति
133824 भूजलादिस्वरूपेण बीजमाविश्य सर्वकृत् । स्वयं कालस्वरूपेण
133825 विदध्यादङ्कुरोदयम् ॥ इति ॥ १६ ॥
133826
133827 चिता विना धराकोशादत्यन्तपरिपेलवात् ।
133828 अङ्कुरान्वज्रसारांश्च [अङ्कुरात् इति पाठः साधुः ।] क उल्लासयितुं
133829 क्षमः ॥ १७ ॥
133830
133831 वज्रसारानिति । दृढान्प्रवालादीन्मृदुतरादङ्कुरात् क उल्लासयितुं निःसारयितुम् ॥
133832 १७ ॥
133833
133834 प्राणिवीर्यरसान्तस्था संविज्जंगममाततम् ।
133835 तनोति लतिकान्तस्थो रसः पुष्पफलं यथा ॥ १८ ॥
133836
133837 शुक्रशोणिताभ्यां देहनिष्पादनेऽप्ययमेव न्याय इत्याह - प्राणीति ॥ १८ ॥
133838
133839 यदि सर्वगता संविद्भवेन्नातिबलीयसी ।
133840 तत्क उल्लासने शक्तः स्याद्देवासुरभूभृताम् ॥ १९ ॥
133841
133842 जङ्गमानां स्थावराणामेतदाद्यं च बीजकम् ।
133843 संविद्विस्फुरणामात्रमस्य बीजं न विद्यते ॥ २० ॥
133844
133845 संविदो विस्फुरणा स्पन्दः ॥ २० ॥
133846
133847 बीजाङ्कुरविकल्पानां क्रियापुरुषकर्मणाम् ।
133848 ऊर्मिवीचितरङ्गाणां नास्ति भेदो न वस्तुनि ॥ २१ ॥

कर्म दैवम् | परस्परमपि भेदो नास्ति वस्तुन्यधिष्ठानेपि भेदो नास्ति || २१ ||

द्वित्वं नृकर्मणोर्यस्य बीजाङ्कुरतया तयोः |
विपश्चित्पशवे तस्मै महतेऽस्तु सदा नमः || २२ ||

इत्थं श्रौतमभेदं यो न पश्यति तं निन्दति - द्वित्वमिति | द्वित्वं भेदम् |
तयोर्बीजाङ्कुरयोरपि | महते पशवे तद्रूपपशुत्वेन स्थिताय महते ब्रह्मणे नम
इत्यर्थो वा || २२ ||

संवित्तेर्जन्मबीजस्य योऽन्तस्थो वासनारसः |
स करोत्यङ्कुरोल्लासं तमसङ्गाग्निना दह || २३ ||

वासनासंगप्रयुक्ता अस्य बीजता वासनादाहेऽपैतीत्याह - संवित्तेरिति || २३ ||

कुर्वतोऽकुर्वतश्चैव मनसा यदमज्जनम् |
शुभाशुभेषु कार्येषु तदसङ्गं विदुर्बुधाः || २४ ||

अथवा वासनोत्साद एवासङ्ग इति स्मृतः |
यया कयाचिद्युक्त्यान्तः संपादय तमेव हि || २५ ||

यदि तु वासनैव सङ्गस्तदुच्छेद एवासङ्गतेति मन्यसे तर्हि तत्त्वज्ञानाभ्यासेनैव
वासनां दहेत्याह - अथवेति | तं वासनोत्सादमेव || २५ ||

ययैव वेत्सि ततया युक्त्या पुरुषयत्नतः |
वासनाङ्कुरनिर्मूलमेतदेव परं शिवम् || २६ ||

प्रागुक्तराजयोगलक्षणया हठयोगलक्षणया वा ययैव पुरुषयत्नतस्ततया
चिराभ्यस्तया युक्त्या वासनाक्षयं सुकरं वेत्सि तयैव संपादयेत्यनुषज्यते | एतत्
प्रत्यगात्मरूपमेव || २६ ||

पौरुषेण प्रयत्नेन यथा जानासि वा तथा |
निवारयाहंभावांशमेषोऽसौ वासनाक्षयः || २७ ||

सर्ववासनानां चिद्ग्रन्थिरहंभाव एव मूलमतस्तमेव निवारयेत्याह -
पौरुषेणेति || २७ ||

नास्त्येव पौरुषादन्या संसारोत्तरणे गतिः |
निरहंभावरूपेऽस्मिन्वासनाक्षयनामनि || २८ ||

वासनाक्षयनामनि संसारोत्तरणे || २८ ||

आद्यैव संविदस्तीह सोऽङ्कुरो बीजमस्ति तत् |
तत्कर्म तच्च पुरुषस्तद्दैवं तच्छुभाशुभम् || २९ ||

अनाद्यनन्तप्रत्यगात्मसंवित्सत्तयैवाङ्कुरबीजादीनां सत्ता न स्वत इत्याह -
आद्येति || २९ ||

न बीजमादावस्त्यन्यन्नाङ्कुरो न च वा नरः |
न कर्म न च दैवादि केवलं चिदुदेति हि || ३० ||

नरः पुरुषः || ३० ||

133901
133902 नो बीजमस्ति न किलाङ्कुरकोऽपि वास्ति नाप्यस्ति कर्म पुरुषश्च न वास्ति साधो।
133903 एकं तु चित्त्वमुदितं ह्यनयाभिधानलक्ष्म्या नटः सुरनरासुरशोभयेव॥ ३१
133904 ।।
133905
133906 बीजादेः स्वतः सत्ताशून्यत्वे एकश्चिदात्मैवानृतैर्बीजादिवेषैर्जगद्भूत्वा नृत्यतीति
133907 फलितमित्याह - नो बीजमिति। चित्त्वं चित्स्वरूपम्। अभिधानग्रहणंन्
133908 वाचारम्भणश्रुतिस्मारणार्थम्॥ ३१॥
133909
133910 इत्येव निश्चयमनामय भावयित्वा त्यक्त्वा भृशं
133911 पुरुषकर्मविचारशङ्काम्।
133912 निर्वासनः सकलसंकलनाविमुक्तः संविद्वपुर्ननु यथाभिमतेच्छमास्व॥
133913 ३२॥
133914
133915 ननु हे अनामय राम त्वं इति एवंरूपमेव निश्चयसंदिग्धं भावयित्वा
133916 पुरुषकर्माद्यनृतविचारशङ्कां त्यक्त्वा निर्वासनः सन् यथाभिमतेच्छं
133917 समाहितो व्यवहरन्वा आस्वेत्यर्थः॥ ३२॥
133918
133919 प्रशान्तसर्वेच्छमशङ्कमच्छचिन्मात्रसंस्थोऽखिलकार्यकारी।
133920 आत्मैकरामः परिपूर्णकामो भवाभयो राम शमाभिरामः॥ ३३॥
133921
133922 एतदेव स्पष्टयन्नुपसंहरति - प्रशान्तेति॥ ३३॥
133923
133924 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वाण० उत्तरार्धे
133925 शङ्कातत्त्वसिद्धान्तप्रतिपादनं नामाष्टाविंशः सर्गः॥ २८॥
133926
133927 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
133928 शङ्कातत्त्वसिद्धान्तप्रतिपादनं नामाष्टाविंशः सर्गः॥ २८॥
133929
133930 एकोनत्रिंशः सर्गः २९
133931
133932 श्रीवसिष्ठ उवाच।
133933
133934 नित्यमन्तर्मुखस्तिष्ठ वीतरागो विवासनः।
133935 चिन्मात्रममलं शान्तं कर्म सर्वत्र भावयन्॥ १॥
133936
133937 व्यवहारे यथा प्राप्तलोकचर्यानुवर्तनम्।
133938 स्वरूपे तु सदा स्थैर्यं रामायात्रोपदिश्यते॥
133939
133940 यथाप्राप्तं कर्म सर्वत्र शत्रुमित्रोदासीनपुरुषेषु यथायोग्यं
133941 भावयन्निष्पादयन्॥ १॥
133942
133943 आकाशविशदः प्राज्ञश्चिन्मात्रैकघनस्थितिः।
133944 समः सौम्यः समानन्दः स ब्रह्माऽऽबृंहिताशयः॥ २॥
133945
133946 स ब्रह्मा ब्रह्मसमरस आबृंहितो विस्तारित आशयो यस्य तथाविधो भव॥ २॥
133947
133948 शोकेष्वापत्सु घोरेषु संकटेष्ववटेषु च।
133949 यथाप्राप्तेषु सर्वेषु खर्वेषून्नतिमत्सु च॥ ३॥
133950
133951 यथाप्राप्तेषु खर्वेष्वल्पेषु उन्नतिमत्सु महत्सुं च शोकादिषु अन्तरदुःखितः सन्
133952 यथादेशं तत्तद्देशधर्ममनुसृत्य यथाक्रमं वाष्पक्रन्दनादिपर्यन्तं

133953 दुःखं दुःखविडम्बनं शीतोष्णादिद्वन्द्वयुक्तानि
133954 वस्त्रस्रक्चन्दनादिभोगसुखानि च कुर्विति द्वयोरन्वयः ॥ ३ ॥
133955
133956 यथाक्रमं यथादेशं कुरु दुःखमदुःखितः ।
133957 बाष्पक्रन्दादिपर्यन्तं द्वन्द्वयुक्तसुखानि च ॥ ४ ॥
133958
133959 समागमेषु कान्तानामुत्सवेषूदयेषु च ।
133960 आनन्दं भज सौम्यात्मा वासनाक्रान्तमूढवत् ॥ ५ ॥
133961
133962 संक्षेपोक्तार्थमेव प्रपञ्चयति - समागमेष्वित्यादिना ।
133963 भोगवासनाभिराक्रान्ता ये मूढाः कर्मठजनास्तद्वत् ॥ ५ ॥
133964
133965 भूतानि मृत्युकार्येषु संग्रामादिषु निर्दह ।
133966 दावानलस्तृणानीव वासनाक्रान्तमूढवत् ॥ ६ ॥
133967
133968 भूतान्यधार्मिकाणि दण्ड्यानि ॥ ६ ॥
133969
133970 क्रमागतेष्वखिन्नोऽर्थं बकवच्चिन्तयार्जय ।
133971 अर्थोपार्जनकार्येषु वासनाक्रान्तमूढवत् ॥ ७ ॥
133972
133973 धर्माविरुद्धक्रमागतेष्वर्थोपार्जनकार्येषु । अर्थं धनम् ॥ ७ ॥
133974
133975 बलाद्विदलयाशेषानरीनरिनिषूदन ।
133976 वातो रिक्तानिवाम्भोदान् वासनाक्रान्तमूढवत् ॥ ८ ॥
133977
133978 अरीन् शत्रून् ॥ ८ ॥
133979
133980 जनेषु करुणार्हेषु धैर्यं कुरु महात्मसु ।
133981 आत्मारामधना मौनी वासनाक्रान्तमूढवत् ॥ ९ ॥
133982
133983 धैर्यमौदार्यधीरताम् । मौनी अकत्थनः सन् ॥ ९ ॥
133984
133985 मुदितो भव हर्षेषु दुःखेषु भव दुःखितः ।
133986 करुणां कुरु दीनेषु भव वीरेषु वीर्यवान् ॥ १० ॥
133987
133988 हर्षेषु हर्षस्थानेषु ॥ १० ॥
133989
133990 अन्तर्मुखः सदानन्दः स्वात्मारामतयान्वितः ।
133991 यः करोति शमोदारस्तत्र कर्तासि नानघ ॥ ११ ॥
133992
133993 तत्र मूढवत्कर्तृताप्रयुक्तदोषप्रसक्तिं वारयति - अन्तर्मुख इति । त्वमिति
133994 शेषः ॥ ११ ॥
133995
133996 आत्मभावनया साधो नित्यमन्तर्मुखस्थितेः ।
133997 वज्रधारापि ते राम पतिता याति कुण्ठताम् ॥ १२ ॥
133998
133999 इन्द्रप्रयुक्तवज्रस्य धारापि । कुण्ठतां मोघताम् । तस्य ह न देवाश्च नाभूत्या
134000 ईशते इति श्रुतेरिति भावः ॥ १२ ॥
134001
134002 संकल्पकलनोन्मुक्ते स्वसंविन्मात्रकोटरे ।
134003 यस्तिष्ठत्यात्मनि स्वैरमात्मारामो महेश्वरः ॥ १३ ॥
134004

134005 स्वसंविन्मात्रकोटरे हार्दाकाशे ॥ १३ ॥
134006
134007 न तं भिन्दन्ति शस्त्राणि न दहन्ति हुताशनाः ।
134008 न क्लेदयन्ति वारीणि शोषयन्ति न मारुताः ॥ १४ ॥
134009
134010 सुस्तम्भमजमालिङ्ग्य स्वात्मानमजरामरम् ।
134011 तिष्ठावष्टभ्य धीरात्मा सुस्तम्भमिव मन्दिरम् ॥ १५ ॥
134012
134013 चित्तं स्वस्मिन् सुष्ठु स्तभ्नातीति सुस्तम्भं नित्यनिरतिशयानन्दं स्वात्मानम् ।
134014 सुस्तम्भं दृढस्तम्भं मन्दिरमिव धीरात्माऽचलस्तिष्ठ ॥ १५ ॥
134015
134016 जगद्वृक्षपदार्थौघपुष्पामोदश्रियं पराम् ।
134017 संविदं संविदः स्वस्थामास्वान्तर्मुखमच्युतम् ॥ १६ ॥
134018
134019 जगल्लक्षणवृक्षस्य पदार्थौघलक्षणपुष्पाणामामोदश्रियमिव सारभूतां
134020 परां ब्रह्मसंविदमाश्रित्य सर्वा बाह्यसंविदः अच्युतमन्तर्मुखं यथा
134021 स्यात्तथा कृत्वा आस्व ॥ १६ ॥
134022
134023 अन्तर्मुखतया नित्यं कार्यमाहरतां बहिः ।
134024 जीवतामपि नोदेति वासना दृषदामिव ॥ १७ ॥
134025
134026 कार्यं व्यवहारम् । दृषदां पाषाणानामिवेति वासनानुदये दृष्टान्तः ॥ १७ ॥
134027
134028 पुनः प्रसरणोन्मुक्तमन्तःसुप्तं मनः कुरु ।
134029 कुर्वन्सर्वाणि कर्माणि कूर्माङ्गवदवृत्तिमान् ॥ १८ ॥
134030
134031 कूर्माङ्गवदवृत्तिमानन्तर्बहिश्च वृत्तिशून्यः ॥ १८ ॥
134032
134033 अन्तर्वृत्तिविहीनेन बहिर्वृत्तिमतेव च ।
134034 सुप्तप्रबुद्धप्रायेण कार्यमाचर चेतसा ॥ १९ ॥
134035
134036 तदेवाह - अन्तरिति । सुप्तप्रबुद्धोऽर्धजागरूकः ॥ १९ ॥
134037
134038 बालमूकादिविज्ञानवदन्तस्त्यक्तवासनम् ।
134039 भवतः कुर्वतः कार्यं खवच्चित्तं न लिप्यते ॥ २० ॥
134040
134041 वृत्तित्यागविलीनेन किंचित्प्रसरता बहिः ।
134042 अन्तरत्यन्तसुप्तेन चेतसा तिष्ठ विज्वरः ॥ २१ ॥
134043
134044 वृत्तित्यागः सदैव निर्विकल्पसमाधिज्ञानाभ्यासस्तेन विलीनेन बाधितेन ।
134045 किंचिद्दग्धपटाकारवत्प्रतिभासमात्रेण प्रसरता । अत्यन्तसुप्तेन मृतेन ॥ २१ ॥
134046
134047 असंकल्पकलङ्कायां ज्ञानाच्चित्तक्षयोदये ।
134048 शुद्धायां संविदि स्थित्वा कुरु मा कुरु वानघ ॥ २२ ॥
134049
134050 सुषुप्तसमया वृत्त्या जाग्रद्व्यवहरन्व्रजन् ।
134051 गृहाण मा किंचिदपि मा वा किंचित्परित्यज ॥ २३ ॥
134052
134053 जाग्रत् सन् व्यवहरन् व्रजन्नपि त्वं सुषुप्तसमया वृत्त्या मा किंचिदिष्टं गृहाण
134054 अनिष्टं वा त्यज ॥ २३ ॥
134055
134056 जाग्रत्यपि सुषुप्तश्चेज्जागर्षि च सुषुप्तके ।

134057 जाग्रत्सुषुप्तयोरैक्यात्तदस्त्यसि निरामयः || २४ ||
134058
134059 जाग्रदवस्थायामपि स्थूलसूक्ष्मोपाध्यप्ययात्सुषुप्तस्त्वं चेद्भवसि तदा
134060 सुषुप्तकेऽप्यज्ञानावरणाभावाज्जागर्षि |
134061 जाग्रत्सुषुप्त्योर्भेदकाऽज्ञानतत्कार्ययोर्बाधेनैक्ये सति तत्परिशिष्टं यदस्ति
134062 सन्मात्रं तदसि || २४ ||
134063
134064 एवमाद्यन्तरहितमभ्यासेन शनैः शनैः |
134065 पदमासादयाद्वन्द्वमतीतं सर्ववस्तुतः || २५ ||
134066
134067 न च द्वैतं न चैवैक्यं जगदित्येव निश्चयी |
134068 परमामेहि विश्रान्तिमाकाशविशदाशयः || २६ ||
134069
134070 श्रीराम उवाच |
134071
134072 यद्येवं मुनिशार्दूल तदहंप्रत्ययात्मकः |
134073 भवानेवेह किं तावद्वसिष्ठाख्यः स्थितो वद || २७ ||
134074
134075 सर्वद्वैतापलापे तव वसिष्ठाहंभावादेरप्यपरिशेषात्कथं
134076 वक्तृत्वादिव्यवहार इत्याशयेन रामः पृच्छति - यद्येवमिति || २७ ||
134077
134078 श्रीवाल्मीकिरुवाच |
134079
134080 राघवे गदति त्वेवं वसिष्ठो वदतां वरः |
134081 तूष्णीमेव मुहूर्तार्धमतिष्ठत्स्पष्टचेष्टितः || २८ ||
134082
134083 नास्त्येव वसिष्ठाहंभावादिर्मम श्रोतृणामज्ञानदृष्ट्यैव
134084 सोवलम्बितस्तेषां तत्त्वज्ञत्वे संपन्ने तु मौनमेवोत्तरमित्याशयेन
134085 तूष्णींभावमाह - राघवे इति || २८ ||
134086
134087 तस्मिंस्तूष्णीं स्थिते किं स्यादिति सभ्ये महाजने |
134088 पतिते संशयाम्भोधौ रामः पुनरुवाच ह || २९ ||
134089
134090 मुख्याधिकारिणां केषांचिज्ज्ञाने जातेऽपि
134091 सर्वेषामज्ञानानुच्छेदात्संशयाम्भोधौ पतिते सति || २९ ||
134092
134093 किमर्थं भगवंस्तूष्णीं भवानहमिव स्थितः |
134094 न सोऽस्ति जगतां न्यायः सतां यो नोत्तरक्षमः || ३० ||
134095
134096 गुरोर्युक्तिक्षयादेव निरुत्तरतां मन्यमानो राम आह - किमर्थमिति |जगतां
134097 मध्ये स तादृशो न्यायः शिष्यैरुद्भाव्यस्तर्को नास्ति यः सतां विदुषां गुरूणाम्
134098 || ३० ||
134099
134100 श्रीवसिष्ठ उवाच |
134101
134102 न मे वक्तुमशक्तत्वाद्युक्तिक्षय उपस्थितः |
134103 किंतु प्रश्नस्य कोट्यास्य तूष्णीमेवानघोत्तरम् || ३१ ||
134104
134105 अस्य प्रश्नस्य कोट्या परमावधित्वेन हेतुना तूष्णीमवस्थानमेवोत्तरम् || ३१ ||
134106
134107 द्विविधो भवति प्रष्टा तत्त्वज्ञोऽज्ञोऽथवापि च |
134108 अज्ञस्याज्ञतया देयो ज्ञस्य तु ज्ञतयोत्तरः || ३२ ||

कोटित्वमेव दर्शयितुं भूमिकां रचयति - द्विविध इत्यादिना ॥ ३२ ॥

एतावन्तमभूत्कालं भवानज्ञाततत्पदः ।
भाजनं सविकल्पानामुत्तराणां महामते ॥ ३३ ॥

तत्त्वज्ञस्त्वधुना जातो विश्रान्तः परमे पदे ।
योग्यो न सविकल्पानामुत्तराणामसि स्फुटम् ॥ ३४ ॥

यावान्कश्चित्किलोल्लेखो वाङ्मयो वदतां वर ।
सूक्ष्मार्थः परमार्थो वा बहुरल्पतरोऽपि वा ॥ ३५ ॥

वाङ्मय उल्लेखोऽभिलापः ॥ ३५ ॥

प्रतियोगिव्यवच्छेदसंख्यातीतादिविभ्रमैः [अतीतादिभिर्भ्रमैः इति
मुद्रितपाठष्टीकाकर्त्रसंमतः ।] ।
स च सर्वोऽन्वितः साधो भा इव त्रसरेणुभिः ॥ ३६ ॥

प्रतियोगी निरूपको व्यवच्छेदोव्यावृत्तिः । संख्या गणना । अतीतस्तत्सर्वमतिक्रान्तः
परमार्थः । आदिपदात्तत्साधनं तदितरबाधकं तद्बोधस्तदुपाया
बोध्यबोधकप्रमाणादयो गृह्यन्ते । तेषां विभ्रमैः कल्पनाकलङ्कैरन्वितः ।
भाः जालान्तरातपः ॥ ३६ ॥

उत्तरं सकलङ्कं च तज्ज्ञो नार्हति सुन्दर ।
नाकलङ्का च वागस्ति त्वं च तज्ज्ञतरः स्थितः ॥ ३७ ॥

यथाभूतं च वक्तव्यं ज्ञस्यान्तेवासिनो मया ।
यथाभूतं विदुः काष्ठमौनमन्तविवर्जितम् ॥ ३८ ॥

अन्तेवासिनः शिष्यस्य । अन्तविवर्जितं सर्वपरिच्छेदकलङ्कशून्यम् ॥ ३८ ॥

अविचारात्ससंकल्पं मौनमाहुः परं पदम् ।
तदेव तव तज्ज्ञस्य दत्तः सुन्दर उत्तरः ॥ ३९ ॥

अविचारात्तत्त्वज्ञानोदयात्प्रागज्ञानादुपदेशवाक्प्रवृत्तियोग्यताकल्पनया
ससंकल्पं वाग्व्यवहारसंकल्पविषयमाहुः । विचारेण तु मौनं
वागगोचरमेवाहुः यतो वाचो निवर्तन्ते अप्राप्य मनसा सह इत्यादिश्रुतयो
विद्वांसश्च । तन्मौनमेव ॥ ३९ ॥

यन्मयो हि भवत्यङ्ग पुरुषो वक्ति तादृशम् ।
ज्ञेयमात्रमयश्चाहं वागतीते पदे स्थितः ॥ ४० ॥

पुरुषो वक्ता । ज्ञेयं तत्त्वसाक्षात्कारगम्यं निर्विकल्पवस्तु तन्मात्रमयः । स्वार्थे
मयट् ॥ ४० ॥

वागतीतपदस्थो हि कथं गृह्णाति वाङ्मलम् ।
अवाच्यं वच्मि नो तेन वाग्धि संकल्पनाङ्किता ॥ ४१ ॥

हि यस्मात्सर्वा वाक् प्रतियोगिव्यवच्छेदादिसंकल्पनाङ्किता ॥ ४१ ॥

श्रीराम उवाच ।

134161 वाचि ये ये प्रवर्तन्तेताननादृत्य दोषकान् ।
134162 प्रतियोगिव्यवच्छेदिपूर्वकान्वद को भवान् ॥ ४२ ॥
134163
134164 अनादृत्य तात्पर्याविषयीकृत्य भागत्यागलक्षणोपायेन वद । व्यवच्छेदी
134165 व्यावृत्तः । प्रतियोगी तन्निरूपकः ॥ ४२ ॥
134166
134167 श्रीवसिष्ठ उवाच ।
134168
134169 एवं स्थिते राघव हे यथाभूतमिदं शृणु ।
134170 कस्त्वं कोऽहं जगद्वा किमिति तत्त्वविदां वर ॥ ४३ ॥
134171
134172 यथाभूतं यथास्थितम् ॥ ४३ ॥
134173
134174 अहं तावदयं तात चिदाकाशो निरामयः ।
134175 चेत्यसंवेद्यरहितः सर्वसंकल्पनातिगः ॥ ४४ ॥
134176
134177 स्वच्छं चिदाकाशमहं भवानाकाशमेव च ।
134178 जगच्चाकाशमखिलं सर्वमाकाशमात्रकम् ॥ ४५ ॥
134179
134180 शुद्धज्ञानैकरूपात्मा शुद्धज्ञानमयात्मनि ।
134181 अन्यसंविद्दृशोन्मुक्तः स्वान्यद्वक्तुं न वेद्म्यहम् ॥ ४६ ॥
134182
134183 स्वान्यत् प्रत्यगात्मव्यतिरिक्तमणुमात्रमपि वक्तुं न वेद्मि न विवक्षामि । तथा च
134184 यत्परः शब्दः स एव शब्दार्थ इति न्यायमाश्रित्याखण्डं निर्विकल्पं वाक्यार्थं
134185 प्रतिपद्यस्वेति भावः ॥ ४६ ॥
134186
134187 स्वपक्षोद्भावनपरा अहंतात्मैकवर्धनम् ।
134188 मोक्षार्थमप्युद्यमिनो नयन्ति शतशाखताम् ॥ ४७ ॥
134189
134190 कथं तर्ह्यज्ञबोधनाय प्रतिवादिविजयाय च विदुषां
134191 निरहंकाराणामुद्योगसिद्धिस्तत्राह - स्वपक्षेति । शिष्याणां मोक्षार्थं तेषां
134192 संदेहवारणाय प्रतिवादिविजयार्थमपि उद्यमिनो विद्वांसः
134193 श्रुतियुक्त्यादिप्रमाणैः स्वपक्षोद्भावनपराः सन्तो
134194 बाधितस्याप्याहार्यारोपेणाहंतात्मन एकस्यैव वर्धनं कुर्वाणाः
134195 शतशाखतां नयन्ति न त्वज्ञवद्यामुह्यन्तीत्यर्थः ॥ ४७ ॥
134196
134197 जीवतोऽप्युपशान्तस्य व्यवहारवतोऽपि च ।
134198 शववद्यदवस्थानं तदाहुः परमं पदम् ॥ ४८ ॥
134199
134200 नैतावतैषां पाण्डित्यप्रकटनव्यवहार एव परमं पदमिति वेदितव्यं
134201 किंत्वन्यदेवेत्याह - जीवत इति ॥ ४८ ॥
134202
134203 अबहिःसाधनं शान्तमनन्तःसाधनं समम् ।
134204 न सुखं नासुखं नाहं नान्यदित्यादि तं शिवम् ॥ ४९ ॥
134205
134206 परमपदमेव विशिनष्टि - अबहिःसाधनमिति । अन्तर्बहिःसाधनशून्यत्वादेव
134207 नाहंकर्तृभोक्तृत्वशून्यमत एव भोग्ये सुखदुःखरहितं
134208 स्वप्रकाशनिरतिशयानन्दभूमात्मकत्वाच्छिवम् ॥ ४९ ॥
134209
134210 मुक्तताया अहंतेयमभावो भावनं क्व च ।
134211 तयैवान्विष्यते सेति जात्यन्धश्चित्रमीक्षते ॥ ५० ॥
134212

134213 ननु किमर्थं तत्स्वप्रकाशमुच्यते। विषयसुखवद्भोग्यमेव तत्किं न स्यात्तत्राह
134214 - मुक्तताया इति। इयमहंतैव मुक्तताया मुक्तेरभावः प्रागभावस्थानीया।
134215 तादृशेनाहंभावेन मुक्तेर्भावनमनुभवः क्व। न ह्यभावेन प्रतियोगी
134216 अनुभवितुं शक्यः। तर्ह्यस्तु मुक्ततयैव मुक्तिभावनं तत्राप्याह - तयैवेति।
134217 पक्षद्वयेऽपि जात्यन्धचित्रदर्शनन्यायः स्यादित्यर्थः॥ ५०॥
134218
134219 स्पन्दनेऽस्पन्दने चैव यत्पाषाणवदासितम्।
134220 अजडस्यैव तद्विद्धि निर्वाणमजरं पदम्॥ ५१॥
134221
134222 तर्ह्यहंकारप्राणादिस्पन्दने अस्पन्दने च
134223 वृक्षमृगादिस्पन्दनास्पन्दनयोर्गिरिशिलावदचलतया स्थितत्वात्तद्वज्जडमेव किं
134224 न स्यात्तत्राह - स्पन्दने इति। आसितमवस्थानम्। भावे क्तः।
134225 यतस्तन्निर्वाणमजरमपक्षयादिविक्रियाशून्यम्। तथा च गिरिशिलायामप्यपक्षयेण
134226 चलनमस्त्येवेति नात्यन्तिकमचलत्वमिति चलेष्वेव जाड्यं न कूटस्थे इति भावः॥ ५१॥
134227
134228 तच्च नान्यो विजानाति स्वयमेवानुभूयते।
134229 लोकैषणाविरक्तेन ज्ञेन ज्ञत्वमिवात्मनि॥ ५२॥
134230
134231 अतः स्वप्रकाशत्वमेव परिशेषात्सिद्धमित्याह - तच्चेति। लौकिकात्मनि प्रसिद्धं
134232 ज्ञत्वं घटादिस्फूर्तिफलमिव न हि तज्ज्ञानान्तरवेद्यमनवस्थापातादिति भावः॥
134233 ५२॥
134234
134235 तत्राहंता न च त्वत्त नानहंता न चान्यता।
134236 केवलं केवलीभावो निर्वाणममलं शिवम्॥ ५३॥
134237
134238 तत् तत्र॥ ५३॥
134239
134240 चेत्योन्मुखत्वमेवाहुश्चेतनस्यास्य चेतनम्।
134241 एष एव च संसारो बन्धः क्लेशाय भूयसे॥ ५४॥
134242
134243 तस्य परप्रकाशतैव संसार इत्याह - चेत्योन्मुखत्वमिति। चेतनं
134244 चेत्यव्याप्तिलक्षणां क्रियाम्॥ ५४॥
134245
134246 चेतनस्याचेतनत्वमचेत्योन्मुखतात्मकम्।
134247 मोक्षं विद्धि परं शान्तं पदमव्ययमेव च॥ ५५॥
134248
134249 ईदृशचेतनाभावेनाचेतनत्वं तु मोक्षे इष्टमेवेत्याह - चेतनस्येति॥ ५५॥
134250
134251 दिक्कालाद्यनवच्छिन्ने शान्ते शान्तात्मनि स्थिते।
134252 चेत्यं न संभवत्येव कः किं चेतयते कथम्॥ ५६॥
134253
134254 ननु मोक्षेऽपि चेत्यमस्तु तत्राह - दिगिति॥ ५६॥
134255
134256 संकल्पः स्वप्नदृश्येऽन्तः संविन्मात्रात्मतां विना।
134257 यथान्यवद्भवेद्भूपास्तथैवास्मिन्बहिर्गते॥ ५७॥
134258
134259 एवमन्तर्मुखतामात्रेण स्वतःसिद्धां मुक्तिमुपपाद्य बहिर्मुखतामात्रेण
134260 जगद्विकल्पप्रसरं दर्शयति - संकल्प इति। हे भूपाः इति श्रोतृसंबोधनम्।
134261 यथा स्वप्नदृश्ये जगति संविदन्तर्गतस्तत्तद्वासनानुसारिसंकल्पः संविन्मयोऽपि
134262 संविदात्मतां विहायान्यवद्भवेत्तथैवास्मिन्नात्मनि बहिर्गते बहिर्मुखे सति
134263 स्वात्मैवान्यवज्जडप्रपञ्चात्मा भवेदित्यर्थः॥ ५७॥
134264

134265 मनोबुद्ध्यादयश्चैते संविन्मात्रानुरूपिणः।
134266 मनोबुद्ध्यादिशब्दार्थभावितास्तु जडात्मकाः॥ ५८॥
134267
134268 एवं मनोबुद्ध्यादयोऽपि बहिर्मुखतायामेव जडात्मका अन्तर्मुखतायां तु
134269 संविन्मात्रानुसारिणश्चिदेकरसाः॥ ५८॥
134270
134271 संविन्मात्रे समे स्वच्छे सबाह्याभ्यन्तरे तते।
134272 अभिन्ने भेदबुद्धिर्वा किमनर्थाय जृम्भते॥ ५९॥
134273
134274 एवमन्तर्बहिश्च सर्वस्य चिदेकरसत्वे चितो बहिर्मुखतालक्षणा भेदबुद्धिरेकैव
134275 व्यर्थोऽनर्थहेतुरित्याह - संविन्मात्र इति॥ ५९॥
134276
134277 संविन्मात्रस्य शुद्धस्य शून्यस्य च किमन्तरम्।
134278 यच्चान्तरं तद्विबुधा विदन्त्येति न वाग्गतिम्॥ ६०॥
134279
134280 सर्वदृश्यापगमेऽवशिष्टं संविन्मात्रं शून्यकल्पमपुरुषार्थ इति तु न
134281 मन्तव्यम्। तस्य निरतिशयानन्दरूपताया विद्वद्भिरनुभूयमानत्वादित्याह -
134282 संविन्मात्रस्येति। वाग्गतिं वाग्गोचरतां नैति। यतो वाचो निवर्तन्ते इत्यादिश्रुतेरिति
134283 भावः॥ ६०॥
134284
134285 सदसद्रूप आभासो यथा किमपि लक्ष्यते।
134286 तमसीक्षितयत्नेन ब्रह्मणीदं तथा जगत्॥ ६१॥
134287
134288 विवेकियौक्तिकदृष्ट्या तर्हि कथं जगत्तदाह - सदसद्रूप इति। ईषितस्य
134289 चक्षुःप्रणिधानस्य यत्नेन तमसि यथा सदसद्रूप आभासो लक्ष्यते तद्वत्॥ ६१॥
134290
134291 अयमाकाशमेवाहं यदि शाम्याम्यवासनम्।
134292 वासनां तु न बध्नासि स्थित एवासि चिन्नभः॥ ६२॥
134293
134294 त्वमपि वासनां यदि न बध्नासीति संबन्धः॥ ६२॥
134295
134296 इति निश्चयवानन्तस्तज्ज्ञोऽज्ञ इव संज्ञया।
134297 चिद्वपुर्विद्यमानोऽपि शाम्यत्यसदिव स्वयम्॥ ६३॥
134298
134299 अन्योऽपि पुरुषः अयमाकाश एवाहमिति निश्चयवांस्तज्ज्ञ एव। स संज्ञया
134300 व्यवहारेणाज्ञ इव विद्यमानोऽपि चिद्वपुरेव सन् सत्यपि देहादावसदिव शाम्यति। तद्यो
134301 यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम् इति
134302 श्रुतेरित्यर्थः॥ ६३॥
134303
134304 जीवानां ज्ञप्तिगुप्तेन ज्वलन्नज्ञानवायुना।
134305 अविद्याग्निः प्रबुद्धानां पुनस्तेनैव शाम्यति॥ ६४॥
134306
134307 ननु जीवानामविद्या किं चिदात्मना शाम्यति उत जडेन। नाद्यः। चिदात्मनः प्रत्युत
134308 तत्साधकत्वेनाविरोधित्वात्। न द्वितीयः। जडमात्रस्याविद्याकार्यत्वेन
134309 तदविरोधित्वादित्यशङ्क्याह - जीवानामिति। अहमज्ञ इति
134310 साक्षिज्ञप्तेरज्ञानसाधकत्वाज्जीवानां
134311 संसारलक्षणोऽविद्याग्निस्तदीयज्ञप्तिरक्षितेनाज्ञानवायुना ज्वलन्नपि पुनरहं
134312 ब्रह्मास्मीति प्रबुद्धानां तेषां चरमसाक्षात्कारवृत्त्यात्मना
134313 परिणतेनान्तर्गतसाक्षिगुप्तेनाज्ञानवायुनैव शाम्यति न तृतीयमपेक्षत इत्यर्थः
134314 ॥ ६४॥
134315
134316 अजडानां यदज्ञानं स्थाणूनामिव शाम्यताम्।

134317 तमाद्दुर्मोक्षमक्षुब्धमासितं पदमक्षयम् ॥ ६५ ॥
134318

134319 ननु मुक्तैर्जगज्ज्ञायते न वा। आद्ये संसाराविशेषः। द्वितीये आत्माज्ञानमेकं
134320 परिहरता त्वया जगदज्ञानान्यनन्तानि स्वीकृतानि स्युः। स्थाणुतुल्यानां च कथं
134321 तेषां मुक्तता तत्राह - अजडानामिति।
134322 अनावृतस्वप्रकाऽसनिरतिशयानन्दात्मरूपत्वादजडानां तेषामज्ञानं
134323 सांसारिकज्ञानशून्यमत एवाक्षुब्धं दुःखक्षोभरहितं यदासितमवस्थानं
134324 तं मोक्षनामानमाहुः। न चानन्ताज्ञानप्रसक्तिरेकविज्ञानेनैव
134325 सर्वविज्ञानात्सर्वाज्ञाननाशात् भ्रान्तिज्ञानाभावस्यात्मरूपतया
134326 तत्त्वज्ञानवैलक्षण्याभावाच्चेति भावः ॥ ६५ ॥
134327

134328 ज्ञत्वेन ज्ञत्वमासाद्य मुनिर्भवति मानवः।
134329 अज्ञत्वादज्ञतामेत्य प्रयाति पशुवृक्षताम् ॥ ६६ ॥
134330

134331 किं च सति मूलाज्ञाने तद्बलेनैव बाह्यार्थज्ञानाभावानां मौर्ख्यापादकता
134332 तन्नाशे तु मुनित्वसंपादकतेत्याशयेनाह - ज्ञत्वेनेति ॥ ६६ ॥
134333

134334 अहं ब्रह्म जगच्चेदमित्यविद्यामयो भ्रमः।
134335 असत्यः प्रेक्ष्या ध्वान्तं दीपेनेव न लभ्यते ॥ ६७ ॥
134336

134337 किं च ब्रह्मज्ञानं जगद्भ्रमश्च सर्वोऽप्यज्ञानमेव न
134338 चाज्ञाननिवृत्तिरज्ञानं येन मुक्तिर्न स्यादित्याशयेनाह - अहमिति ॥ ६७ ॥
134339

134340 समग्रकरणग्रामोऽप्यसंकल्पो विवेदनः।
134341 न किंचिदप्यनुभवत्यन्तर्बाह्ये च शान्तधीः ॥ ६८ ॥
134342

134343 तर्हि जीवन्मुक्तानां चक्षुरादिकरणैर्बाह्यज्ञानदर्शनान्मुक्तता न स्यात्तत्राह ##-
134344

134345 सुषुप्तत्व इव स्वप्नः समाधौ प्रविलीयते।
134346 दृश्यं सर्वं ज्ञबोधेऽन्तः पुनः स्वात्मैव लक्ष्यते ॥ ६९ ॥
134347

134348 समाधौ ज्ञस्य बोधे सकृज्जाते पुनर्यत्सर्वं दृश्यं दृश्यते तत्स्वात्मैव
134349 लक्ष्यते न अनात्मा नाम तेषामणुमात्रमप्यस्तीत्यर्थः ॥ ६९ ॥
134350

134351 नीलत्वं च यथा व्योम्नि तथा पृथ्व्यादिता शिवे।
134352 भ्रान्तिमात्रादृते नान्यद्यथा व्योम तथा शिवः ॥ ७० ॥
134353

134354 कुतो विलीयत इति चेद्भ्रान्तिमात्रत्वादित्याह - नीलत्वमिति ॥ ७० ॥
134355

134356 वासनाभिरुपेतोऽपि समस्ताभिरवासनः।
134357 भवत्यसावसत्सर्वमिदमित्येव यस्य धीः ॥ ७१ ॥
134358

134359 अत एव बाधितार्थवासना वासनैव न भवतीत्यवासन एव ज्ञ इत्याह -
134360 वासनाभिरिति ॥ ७१ ॥
134361

134362 संकल्पेष्वद्भुतं भव्य स्वप्नमायेन्द्रजालकम्।
134363 यद्वत्संसृतयस्तद्वद्दृष्टेऽप्यास्था किमत्र वै ॥ ७२ ॥
134364

134365 ननु विचित्रभुवनैर्देवनरतिर्यगादिभिर्विहितनिषिद्धानेक##-
134366 जगत्कथमसदनृतं संकल्पमात्रमित्याद्युक्तिभिस्त्वया अपलप्यते। न हि
134367 संकल्पमनोरथादिष्वेवंविधार्थाः सन्तीत्याशङ्क्य तत्राप्यद्भुतार्थसत्तां
134368 दर्शयति - संकल्पेष्विति। हे भव्य यथा सांकल्पिकार्थेषु

134369 स्वप्नमायेन्द्रजालकं यद्वदद्भुतं तद्वत्संसृतयोऽपि। प्रत्यक्षदृष्टेऽपि
134370 स्वप्नाद्यर्थे किमास्था युक्ता तद्वत्संसृतिष्वपीत्यर्थः॥ ७२॥
134371
134372 न दुःखमस्ति न सुखं न पुण्यं न च पातकम्।
134373 न किंचित्कस्यचिन्नष्टं कर्तुर्भोक्तुरसंभवात्॥ ७३॥
134374
134375 सतोर्हि कर्तृभोक्त्रोरस्तु सर्वसुखदुःखभोगाय पुण्यपापनियतिस्तयोरेवासंभवे
134376 का तद्व्यवस्थानियतिरित्याह - नेति॥ ७३॥
134377
134378 सर्वं शून्यं निरालम्बं ममताप्रत्ययोऽप्ययम्।
134379 द्विचन्द्रस्वप्नपुरवद्यस्यासौ सोऽपि नास्ति नः॥ ७४॥
134380
134381 अयं ममताप्रत्ययो यस्याहंकारस्य सोऽपि नास्ति॥ ७४॥
134382
134383 केवलो व्यवहारस्थः काष्ठमौनगतोऽथ वा।
134384 काष्ठपाषाणवत्तिष्ठन्ब्रह्मतामधिगच्छति॥ ७५॥
134385
134386 केवलः सर्वद्वैतशून्यस्तत्त्वविद्व्यवहारस्थो वाऽस्तु अथवा काष्ठपाषाणवदचलः
134387 समाधौ तिष्ठन्काष्ठमौनगतोऽस्तु सर्वथापि ब्रह्मतामधिमच्छत्येव॥ ७५॥
134388
134389 शान्तत्वे चित्तत्वे नानानानात्मनीह शिवे।
134390 अवयविनोऽवयवित्वे त्विह युक्तिर्विद्यते नान्या॥ ७६॥
134391
134392 इत्थं मायिकविवर्तवादसिद्धान्तमाश्रित्याध्यारोपितस्य जगतोऽपवादेन तत्त्वविदः
134393 परमपुरुषार्थे प्रतिष्ठा दर्शिता। ये त्वन्ये तार्किका अन्यथान्यथा
134394 सिद्धान्तान्कल्पयन्ति तेषां जगदुत्पत्त्यादिव्यवहारे परमपुरुषार्थलक्षणे
134395 परमार्थे च युक्तिर्नास्तीत्याह - शान्तत्वे इत्यादिना। इहास्मिन्शिवे प्रत्यगात्मनि
134396 प्राणबुद्धिमनोदेहादितादात्म्येन नानात्मनि भिन्नस्वभावे
134397 सांसारिकानर्थशतसंकुले प्रत्यक्षं भासमाने तन्निराकरणेन शान्तत्वे
134398 निर्दुःखनिरतिशयानन्दाद्वयरूपपरिशेषणे
134399 वादिनामन्यादर्शिताऽध्यारोपापवादन्यायातिरिक्ता युक्तिर्न विद्यते।
134400 नित्यशान्तस्वभावे शिवेऽभ्युपगम्यमाने तु तस्य निर्विकारकूटस्थस्य
134401 चलनपरिच्छिन्नस्वभावचित्तरूपत्वे देहेन्द्रियादिनानानानाभावेन संसरणे च
134402 युक्तिरुपपत्तिर्न विद्यते। यदि तु तत्सिद्धये तस्य परिच्छिन्नता परिणामिता सावयवता
134403 चाभ्युपगम्येत तर्ह्यवयविनस्तस्य चेतनैर्जडैर्वा सावयवता चाभ्युपगम्येत
134404 तर्ह्यवयविनस्तस्य चेतनैर्जडैर्वा अवयवैरवयवित्वे युक्तिर्न विद्यते। अवयवानां
134405 चेतनत्वे ऐकमत्यासंभवेनावश्यंभाविनि विश्लेषे अवयविनाशप्रसङ्गात्
134406 अचेतनत्वे त्ववयविनोऽप्यचेतनत्वापत्तेरुभयत्राप्यनित्यस्यारब्धस्य
134407 प्राक्तनपुण्यपापासंभवेन भोगासिद्धेरित्यादियुक्तिसहस्रेभ्यः। एवं
134408 जगत्कारणेऽपि शिवे शान्तत्वे निर्विकारकूटस्थत्वेऽभ्युपगते
134409 जगत्सृष्ट्यनुकूलसंकल्पात्मकचित्तत्वे तत्प्रवर्तके नानानानात्मनि प्रपञ्चरूपे
134410 तदन्तर्गतपृथिव्याद्यवयविनोऽवयवित्वे वान्या युक्तिर्न विद्यत इति विवर्तदृष्टिरेव
134411 शरणमित्यर्थः॥ ७६॥
134412
134413 अर्थागतस्वभावस्य च नैव च संभवादमले।
134414 एतस्मिन्सर्वगते ब्रह्मणि नास्ति स्वभावोक्तिः॥ ७७॥
134415
134416 नन्वात्मनः शान्तत्वेऽपि प्रलयान्ते लीनानां सर्वपदार्थानां ब्रह्मणि प्रलयकाले
134417 सत्त्वात्तत्प्रयुक्तस्वस्वभाववैचित्र्यबलादेव
134418 चित्तत्वनानात्वाऽनानात्वसावयवत्वादिवैचित्र्ययुक्ताः सर्गादावाविर्भविष्यन्ति तत्राह
134419 - अर्थागतेति। अर्थवैचित्र्यहेतुः स्वभावः शिवे परमात्मवस्तुन्यर्थेभ्य आगत
134420 उत स्वतःसिद्धः। तत्रार्थेभ्य आगतस्वभाव इति व्याहतम्। स्वो हि भावः स्वभावः।

134421 आगन्तुकोऽन्याधीनश्च कथं स्वभावः स्यात्। तथा असङ्गत्वादद्वयत्वाच्चामले
134422 परप्रयुक्तस्वभाववैचित्र्यमलसंबन्धश्च नैव संभवति। न चार्थास्ते प्रलये
134423 स्वातन्त्र्येण सन्ति येन स्वस्वभावबलादेव विचित्रा आविर्भवेयुरिति द्योतनार्थः
134424 प्रथमश्चकारः। अतः परिशेषादनागन्तुको ब्रह्मण एव स्वस्वभावो वाच्यः।
134425 एतस्मिन्सर्वगते ब्रह्मणि वैचित्र्यहेतुस्वभावस्योक्तिसंभव एव नास्ति। सर्ववस्तूनां
134426 सर्ववैचित्र्यप्रसङ्गात्। न हि सर्वगते ब्रह्मणि अत्रैवायमेव स्वभाव इति प्रलये
134427 व्यवस्थापकमस्ति। सर्वत्र सर्ववैचित्र्याभ्युपगमे च वैचित्र्यमेव लुप्येत। न हि
134428 सर्वसाधारणो धर्मो वैचित्र्यं भवति नापि किंचिद्भेदकं सिध्यतीति
134429 सर्वजगदैकरस्यप्रसङ्गादिति भावः॥ ७७॥
134430
134431 न च नास्तिकोपलम्भात्संवित्तेरस्तिता च नैवाजे।
134432 ग्राह्यग्राहकदृष्टेरसंभवादस्ति किंचिदपि॥ ७८॥
134433
134434 नन्वेवं सार्वजनीनस्यापि जगद्वैचित्र्यस्य युक्त्यसहत्वादपलापे
134435 तत्संवित्तेरप्यपलापः किं न स्यात्। न हि संवेद्यमन्तरेण संवित्प्रसिद्धेति
134436 शून्यवादः प्रसक्त इति चेत्तत्राह - न चेति। संवेद्यापलापे संवित्तेरप्यस्तिता
134437 नास्तीति न च वक्तुं शक्यम्। संविदपलापिनो नास्तिकात्मन
134438 एवोपलम्भादपलपितुमशक्यत्वात्। स हि स्वातिरिक्ते एव संवित्संवेद्ये अपलपेन्न तु
134439 स्वात्मानम्। यदा सर्वापि संवित्तदात्मैव तदा तत्र संवेद्यमपलपन् संविदं
134440 परिशेषयत्येव। किं च निराधारनिषेधायोगाद्ग्राह्यग्राहकयोरग्राह्यग्राहकात्मनि
134441 स्वयंप्रकाशे आधारे प्रतिषेधो वाच्यः। स एव तस्यात्मेति तेनाऽजे स्वात्मन्येव
134442 ग्राह्यग्राहकदृष्ट्योरसंभवप्रतिपादनपर्यवसानात्##-
134443 ७८॥
134444
134445 शमममलमहार्यमार्यजुष्टं शिवमजमक्षयमासितं समं यत्।
134446 तदवितथपदं तदास्व शान्तं पिब लल भुङ्क्ष्व भवानयं हि नास्ति॥ ७९॥
134447
134448 हे राम त्वमार्यैर्ब्रह्मविद्भिर्जुष्टं सेवितमहार्यं परैर्हर्तुमशक्यं
134449 यच्छिवमवितथं परमार्थसत्यं पदमासितं नित्यसिद्धं तदेव भूत्वा
134450 परमार्थत आस्व। व्यवहारे चेतरलोकवत्पिब भुङ्क्ष्व लल क्रीडस्व तथापि
134451 भवान्मुक्त एव। हि यस्मादयं दृश्यबन्धस्तव नास्तीत्यर्थः॥ ७९॥
134452
134453 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाणप्रकरणे
134454 उत्तरार्धे भावनाप्रतिपादनं नामैकोनत्रिंशः सर्गः॥ २९॥
134455
134456 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
134457 भावनाप्रतिपादनं नामैकोनत्रिंशः सर्गः॥ २९॥
134458
134459 प्द्फ़् १८६, प्। ११२६
134460
134461 त्रिंशः सर्गः ३०
134462
134463 श्रीवसिष्ठ उवाच।
134464
134465 अहंतैव पराऽविद्या निर्वाणपदरोधिनी।
134466 तयैवान्विष्यते मूढैस्तदित्युन्मत्तचेष्टितम्॥ १॥
134467
134468 ययाहंताद्यविद्योत्थनानात्वभ्रान्तिशान्तितः।
134469 स्याद्ब्रह्मणि स्थिरो धीरः सा दृष्टिरिह साध्यते॥
134470
134471 यावदहंता न परित्यक्ता तावद्ब्रह्मविचारोऽपि नावतरति दूरे तल्लाभ इत्याशयेनाह
134472 - अहंतैवेति। परा सर्वासां कार्याविद्यानां मूलस्तम्भभूता निर्वाणपदस्य

134473 रोधिनी आवरणी। तत् निर्वाणपदम्॥ १॥
134474
134475 अहंतैवालमज्ञानादज्ञत्वस्य निदर्शनम्।
134476 न हि तज्ज्ञस्य शान्तस्य ममाहमिति विद्यते॥ २॥
134477
134478 अज्ञानादुत्पन्ना अहंतैवाज्ञत्वस्य निदर्शनं लिङ्गं यथा धूमोऽग्नेः। तस्य
134479 व्यतिरेकव्याप्तिं दर्शयति - न हीति॥ २॥
134480
134481 अहंतामलमुत्सृज्य निर्वाणः खमिवामलः।
134482 सदेहमपदेहं वा ज्ञस्तिष्ठति गतज्वरः॥ ३॥
134483
134484 अलं निःशेषं अहंतालक्षणं मलमिति वा॥ ३॥
134485
134486 न तथा शरदाकाशं न तथा स्तिमितोऽर्णवः।
134487 पूर्णेन्दुमध्यं न तथा यथा ज्ञः परिराजते॥ ४॥
134488
134489 अहंतापगमादेव ज्ञस्य नैर्मल्यंन् निर्विक्षेपं पूर्णतां च वर्णयति - न
134490 तथेति॥ ४॥
134491
134492 चित्रसंगरयुद्धस्य सैन्यस्याक्षुब्धता यथा।
134493 तथैव समता ज्ञस्य व्यवहारवतोपि च॥ ५॥
134494
134495 यथा चित्रलिखिते संगरे युद्धस्य। युधेः गत्यर्थाकर्मक - इति कर्तरि क्तः।
134496 परस्परं संप्रहरतोऽपि सैन्यस्य क्षुब्धताप्रतिभासेऽपि न क्षुब्धता॥ ५॥
134497
134498 निर्वाणैकतया ज्ञस्य वासनैव न वासना।
134499 लेखादामोपमा त्वब्धेरूर्म्यादि न जलेतरत्॥ ६॥
134500
134501 एवं व्यवहारकार्यलिङ्गेनानुमीयमाना वासनापि बाधेनान्तर्निर्वाणैकतया
134502 दग्धपटतन्तुरेखादामोपमत्वान्न वासना॥ ६॥
134503
134504 तरत्तरङ्गो जलधिर्जलमेव यथाखिलम्।
134505 दृश्योच्छूनमपि ब्रह्म तथा ब्रह्मैव नेतरत्॥ ७॥
134506
134507 ऊर्म्यादीति दृष्टान्तं विशदयति - तरत्तरङ्ग इति॥ ७॥
134508
134509 अन्तरस्तंगतोऽक्षुब्धो बहिरस्तंगतः शमी।
134510 विद्यते चोदितो यस्य स मुक्त इति कथ्यते॥ ८॥
134511
134512 तस्यान्तर्बाह्यसर्ववासनाबाधे किंलक्षणमिति
134513 चेदक्षोभशमादिकमेवेत्याशयेनाह - अन्तरिति। उदितः सदैव प्रसन्नः॥ ८॥
134514
134515 अहद्वसर्गरूपेण संवित्संविन्मये परे।
134516 स्फुरत्यम्भोम्भसीवत्तो नानातेयंन् किमात्मिका॥ ९॥
134517
134518 संविन्मये परे अज्ञातात्मनि। स्फुरति विवर्तते॥ ९॥
134519
134520 धूमस्य स्फुरतो व्योम्नि यथा गजरथादयः।
134521 व्यूहा धूमान्न ते भिन्नास्तथा सर्गाः परे पदे॥ १०॥
134522
134523 अभ्रखण्डरूपेण व्योम्नि स्फुरतो नीहारधूमस्य गजरथादिरूपा व्यूढा
134524 आकाररचनाभेदाः॥ १०॥

134525
134526 संविद्भ्रान्तिविचारेण भ्रान्त्यलाभविलासिनः ।
134527 विजयध्वं विषादं माऽऽगता ज्ञास्तज्ज्ञता हि वः ॥ ११ ॥
134528
134529 इदानीं भगवान्वसिष्ठः सर्वान्श्रोतॄन्संबोध्याह - संविदिति । हे
134530 श्रवणार्थमागताज्ञा अभिज्ञजनाः यूयं विषादं मा कुरुत किंतु मदुक्तरीत्या
134531 सर्वोपि विषादहेतुः प्रपञ्चः संविदो भ्रान्तिर्विवर्तमात्रमिति विदारेण
134532 भ्रान्तितद्विषयतत्त्वपरीक्षणे भ्रान्तीनां निःस्वरूपतापत्त्या अलाभेन विलासिनो
134533 विलसनशीलाः सन्तो विजयध्वं सर्वोत्कर्षेण वर्तध्वम् । हि यतो मदुपदेशेन वः
134534 तज्ज्ञतैवास्ति न त्वज्ञतेत्यर्थः ॥ ११ ॥
134535
134536 अङ्कुरोऽनुभवत्यन्तर्वृक्षपत्रफलं यथा ।
134537 तथा जगदहंत्वे ज्ञः स्वात्मा स्वात्मखमप्यलम् ॥ १२ ॥
134538
134539 कीदृशी सा संविद्भ्रान्तिरज्ञेनानुभूयते तदाह - अङ्कुर इति । अज्ञः स्वात्मा
134540 वस्तुतः स्वात्मानं खमाकाशकल्पमपि जगदहंत्वे अनुभवति ।
134541 प्रगृह्यसंधिरार्षः । यथा अङ्कुरः स्वात्मनि वासनात्मकं
134542 वृक्षपत्रफलादिभावं तद्वदित्यर्थः ॥ १२ ॥
134543
134544 रूपालोकमनःसत्ता ज्वालार्चिष्विव दण्डता ।
134545 सत्योपि च न सन्त्येता भ्रान्तेश्चित्ताबला इव ॥ १३ ॥
134546
134547 कीदृशस्तत्र विचारस्तमाह - रूपेति । बहिः रूपालोकसत्ता
134548 अन्तर्मनःसत्ताश्चाधिष्ठानात्मना सत्योऽपि स्वरूपेण न सन्ति । यथा
134549 भ्राम्यमाणोल्मुकज्वालार्चिःषु दण्डचक्रतादय इत्यर्थः । चित्ताबलाः
134550 विधुरचित्तकल्पितकामिन्य इव ॥ १३ ॥
134551
134552 यथा सुखं यथारम्भं यथा नाशं यथोदयम् ।
134553 यथा देशं यथा कालमजराः शान्तमास्यताम् ॥ १४ ॥
134554
134555 अतो हे श्रोतारः सर्व जगत् यथा उदेति स्थितं च यथा स्वकार्यमारभते यथा च
134556 सुखदुःखेऽनुभावयति यथा च नश्यति यथा च तदीयौ देशकालौ तथा तथा
134557 उत्पत्तिस्थित्युपशमप्रकरणोक्तयुक्तिभिर्विमृश्य मिथ्येति निश्चित्य शान्तमास्यताम् ॥
134558 १४ ॥
134559
134560 इष्टानिष्टोपलम्भेषु शान्तो व्यवहरन्नपि ।
134561 शववन्नान्यतामन्तर्निर्वाणोऽनुभवत्यलम् ॥ १५ ॥
134562
134563 शववन्निर्वाणः शान्तचित्तः । अतो नानुभवति ॥ १५ ॥
134564
134565 अमनोवासनाहंता धत्ते यच्च जगच्चिरम् ।
134566 जीवतोऽजीवतश्चैव चिज्जीवः स परं पदम् ॥ १६ ॥
134567
134568 जीवन्मुक्तानां मनोवासनारहितैवाहंता चिरं यावद्देहपातं यज्जगद्धत्ते यश्च
134569 तद्द्रोक्ता जीवस्तावत्कालं जीवति तदुभयं चिज्जीव एव न जडांशोऽणुमात्रमपि
134570 तत्रास्तीति परमं पदमेव तदित्यर्थः ॥ १६ ॥
134571
134572 सत्तैव जडवाहेन दुःखभाराय केवलम् ।
134573 नृणां पाशावबद्धानां पोतकानामिवार्णवे ॥ १७ ॥
134574
134575 एवं च निष्कर्षे जीवजगतोर्जडप्रवाहात्मना सत्तैवानर्थ इति फलितमित्याशयेनाह ##-
134576 दुःखसदृशपण्यभारवहनायेति योज्यम् ॥ १७ ॥

134577
134578 मोक्षसत्ता श्रयति तं नाज्ञानानुभवादिव।
134579 मृतेन यत्किल प्राप्यं जीवन्प्राप्नोति तत्कथम्॥ १८॥
134580
134581 अत एव तमज्ञमज्ञानजाड्यानुभवापराधादिव चिदैकरस्यपूर्णतालक्षणा
134582 मोक्षसत्ता न श्रयति। यथा भृगुपातादिना मृतेन प्राप्यं स्वर्गादि जीवन्तं न
134583 श्रयति तद्वदित्यर्थः॥ १८॥
134584
134585 यद्यत्संकल्प्यते तत्तत्संकल्पादेव नाशभाक्।
134586 न संभवति यत्रैतत्तत्सत्यं पदमक्षयम्॥ १९॥
134587
134588 ननु मास्तु मोक्षः सांकल्पिकस्वर्गादिफलेष्वेव कश्चिन्नित्यः पुरुषार्थोऽस्तु तत्राह
134589 - यद्यदिति। तन्नाशे चावश्यं भयमस्तीति भावः। किं तर्ह्यभयमक्षयं च
134590 तदाह - न संभवतीति। एतत्संकल्पनम्॥ १९॥
134591
134592 नान्यो न चाहमस्मीति भावनान्निर्भयो भव।
134593 सत्यं युक्तं भवत्येतद्विषमप्यमृतं यथा॥ २०॥
134594
134595 एतत् अनहंभावनं अज्ञदृष्ट्या भयावहत्वाद्ग्रहीतुमयुक्तमपि
134596 परमार्थदृशा सत्यमिति युक्तमेव ग्रहीतुम्। यथा मूढेन विषबुद्ध्या
134597 उपेक्षितममृतमभिज्ञेन ग्रहीतुं युक्तमित्यर्थः॥ २०॥
134598
134599 जडं देहादि चित्तान्तं विचार्य सकलं वपुः।
134600 लभ्यते नाहमस्मीति तस्मान्नास्मीति सत्यता॥ २१॥
134601
134602 तत्सत्यतामुपपादयति - जडमिति॥ २१॥
134603
134604 शान्ताशेषविशेषाणामहंतान्ताविचारणात् [अहंताया अन्तो यस्यां्
134605 तथाविधा मुक्ततेत्यर्थः ।]।
134606 केवलं मुक्ततोदेति न तु किंचिद्विनश्यति॥ २२॥
134607
134608 अत एवाशेषशान्तेरहंत्वशान्तिरवधिः सैव मुक्तता। तस्यां च
134609 घृतकाठिन्यविलये घृतस्येव नाणुमात्रमप्यात्मनः किंचिन्नष्टमिति न
134610 सर्वनाशोऽयमिति भेतव्यमित्याशयेनाह - शान्तेति॥ २२॥
134611
134612 भोगत्यागविचारात्मपौरुषान्नान्यदत्र हि।
134613 उपयुज्यत इत्यज्ञाः स्वात्मैवाशु प्रणम्यताम्॥ २३॥
134614
134615 अत्रास्यां मुक्तौ भोगत्यागो विचार आत्मन इन्द्रियमनोनिग्रहपौरुषं चेति
134616 त्रयान्नान्यदुपयुज्यते इति निश्चित्य हे अज्ञा मुमुक्षवः सर्वमनात्मवर्गं परित्यज्य
134617 स्वात्मैव प्रणम्यतां तत्त्वबोधेन शरणीक्रियतामित्यर्थः॥ २३॥
134618
134619 निर्वासनं मननमेवमुदाहरन्ति मोक्षं विना भवति तन्न च जातु बोधात्।
134620 सन्नो जगद्भ्रम इतीह परः प्रबोधो न प्रत्ययोऽत्र यदतः सुचिराय बन्धः॥
134621 २४॥
134622
134623 एवमहंतावधिकसर्वद्वैतोपशमेन निर्वासनं सर्ववासनाक्षयोपलक्षितं
134624 यन्मननं मनसो ब्रह्मभावेनावस्थानं तदेव मोक्षं श्रुतयो
134625 विद्वांसश्चोदाहरन्ति। तच्च बोधात्तत्त्वज्ञानाद्विना जातु कदाचिदपि न भवति। स च
134626 परः प्रबोधो जगद्भ्रमः सन् परमार्थो नो न भवत्येव इह मोक्षशास्त्रे प्रसिद्धः
134627 । यद्यस्मात्कारणादर ईदृशे बोधे नेह नानास्ति किंचन इत्यादिश्रुत्या जायमानोऽपि
134628 रागादिपुरुषदोषप्राबल्याज्जगत्सत्यताभ्रमदार्ढ्याच्च प्रत्ययो विश्वासो नास्ति। अतो

134629 हेतोः सुचिराय जीवस्य संसारबन्धोऽनुवर्तत् इत्यर्थः ॥ २४ ॥
134630
134631 जगदहमसदित्युपेत्य सम्यग्जनधनदारशरीरनिर्व्यपेक्षः ।
134632 भवति हि स च चेतनस्वरूपः परिमितखं खलु नान्यथास्ति मुक्तिः ॥ २५ ॥
134633
134634 तस्माच्छास्त्रादिविश्वासदार्ढ्याज्जगदित्यहमिति चोभयमप्यसत् नास्त्येवेति सम्यक्
134635 श्रवणमननाभ्यासेनोपेत्य बन्ध्वादिजने धने दारेषु स्वशरीरे च निर्व्यपेक्षः सन्
134636 परमार्थतत्त्वं बुद्ध्वा परिमितखं उपाधिपरिच्छिन्नचिदाकाशरूपः स जीवः चात्
134637 जगच्च चेतनं चिन्मात्रं तत्स्वरूपो भवति सैवास्य मुक्तिरयमेव तदुपाय
134638 इतोऽन्यथास्य मुक्तिर्नास्तीत्यर्थः ॥ २५ ॥
134639
134640 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० निर्वाणप्रकरणे उत्तरार्धे
134641 परमार्थोपन्यासयोगो नाम त्रिंशः सर्गः ॥ ३० ॥
134642
134643 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
134644 परमार्थोपन्यासयोगो नाम त्रिंशः सर्गः ॥ ३० ॥
134645
134646 एकत्रिंशः सर्गः ३१
134647
134648 श्रीवसिष्ठ उवाच ।
134649
134650 सर्वात्मनि चिदाभासे तदेवाश्वनुभूयते ।
134651 संवेद्यते यदेवान्तरसत्यंन् वस्त्ववस्तु वा ॥ १ ॥
134652
134653 चिता ग्रस्तमचिद्रूपमसदेव सदेव वा ।
134654 न किंचिन्नष्टमित्यत्र निर्वाणस्थितिरीर्यते ॥
134655
134656 नित्यनिरतिशयानन्दपूर्णाद्वयचिदाकाशलक्षणा निर्वाणस्थितिमनुभावयितुं
134657 प्रागुक्तं दृश्यानुभवस्य संवेदनाभ्यासाधीनत्वं स्मारयति - सर्वात्मनीति
134658 ॥ १ ॥
134659
134660 तदेवाभ्यासतः पूर्वं बाह्यार्थानुभवात्मना ।
134661 स्फुरतीव बहिष्ट्वेन स्वस्वप्नोऽत्र निदर्शनम् ॥ २ ॥
134662
134663 चिद्रूपं सर्वमेतच्च चिदच्छा गगनादपि ।
134664 चिच्चिनोति चिदेवातो नैतत्किंचन कुत्रचित् ॥ ३ ॥
134665
134666 अस्त्वेवं किं ततस्तत्राह - चिद्रूपमिति । सर्वमेतच्चित एव रूपं कल्पितवेषभेदः
134667 वास्तवं तर्हि चितः किं स्वरूपं तत्राह - चिदच्छेति । यतो घृतं स्वात्मनि
134668 काठिन्यमिव चिदेव जगद्वेषं चिनोति अतश्चिदेव ॥ ३ ॥
134669
134670 न नाशो नास्ति नानर्थो न जन्ममरणे न खम् ।
134671 न शून्यता न नानास्ति सर्वं ब्रह्मैव नैव च ॥ ४ ॥
134672
134673 अस्त्वेवं ततोऽपि किं तत्राह - नेति । ततो ब्रह्माद्वैतमिष्टं सिद्धमित्यर्थः ॥ ४ ॥
134674
134675 नाशे जगदहंत्वादेर्न किंचिदपि नश्यति ।
134676 असतः किल नाशोऽपि स्वप्नादेः किं न नश्यति ॥ ५ ॥
134677
134678 ननु जगदहंतादेर्जडांशस्य तत्त्वबोधेन नाश इष्टः स कथमपलप्यते तत्राह
134679 - नाशे इति । नाशोऽपि कः इति शेषः ॥ ५ ॥
134680

मिथ्यावभासे संकल्पनगरे कैव नष्टता ।
तथा जगदहंत्वादौ नाशो नासति विद्यते ॥ ६ ॥

कुतो जगदुपालम्भ इति चेत्तदवस्तुनि ।
न निर्णयः संभवति खपुष्पाणां किमुच्यते ॥ ७ ॥

यद्यसदेव जगत्तर्ह्यनर्थरूपत्ववर्णनेन तस्योपालम्भो निन्दा हेयत्वेन निर्णयश्च
शास्त्रेषु कुतः क्रियत इति चेत् सत्यम् । अवस्तुनि नोपालम्भस्तत्फलं विचारो निर्णयो वा न
संभवत्येव खपुष्पस्य किमुपालम्भो निर्णयो वा केनचिदुच्यते तद्वदित्यर्थः ॥ ७ ॥

निर्णय एष एवात्र यदशेषमभावयन् ।
यथाशितं यदाचारं पाषाण इव तिष्ठति ॥ ८ ॥

तर्हि किं तच्छास्त्रवैयर्थ्यमेव नेत्याह - निर्णय इति ।
स्वाभाविकस्वरूपस्थितिसिद्ध्यथमेव नेत्याह - निर्णय इति ।
स्वाभाविकस्वरूपस्थितिसिद्ध्यर्थमसदपि सदिव कल्पयित्वा निन्दादिना
वैराग्यविवेकादिस्तत्त्वसाक्षात्कारान्त उपायः कल्पित इति एष एव निर्णयः सिद्धान्त
इत्यर्थः ॥ यथास्थितं यथाशास्त्रं यथाचारं यथासंप्रदायंन् च
भूमिकाक्रममभ्यस्येत्यर्थः ॥ ८ ॥

जगत्संकल्पमात्रात्म तत्र तेऽर्थयुतं क्षणात् ।
शाम्यत्यशेषेणेत्येव निर्णयः सर्गविभ्रमे ॥ ९ ॥

अस्त्वेवमात्मतत्त्वे निर्णयः स्वर्गादिजगत्स्वरूपे को निर्णयः सफलस्तमाह -
जगदिति । तत्र प्रागुक्तस्थितौ । अर्थः सांसारिकपुरुषार्थाभासस्तद्युतम् ॥ ९ ॥

सर्गेऽनर्गल एवायं ब्रह्मात्मकतयाक्षयः ।
अन्यथा तु न सर्गोऽयमस्ति नास्ति च सन्ति वा ॥ १० ॥

नौ सर्गः सुषुप्तिप्रलययोः स्वत एव क्षीयते किं तस्य ब्रह्ममात्रतापरिज्ञानेन
तत्राह - सर्वे इति । अनर्गलो मूलोच्छेदात्पुनरुद्भवशून्यः । अन्यथा प्रलयादौ
क्षये तु बीजात्मनाऽस्ति कार्यात्मना नास्ति सन्ति वा प्रलयेऽप्यैन्दवाख्यानोक्तरीत्या
कार्याणि । सांकल्पिकस्य परैः क्षेतुमशक्यत्वादित्यर्थः ॥ १० ॥

येषां च विद्यते सर्गः स्वप्नपुंसामिवासताम् ।
स सर्गः पुरुषास्ते च मृगतृष्णाम्बुवीचिवत् ॥ ११ ॥

तर्हि सति सर्गे कथं प्रलयस्तत्राह - येषामिति । प्रलयसंकल्पयितुर्दृष्ट्या
तेषामसत्त्वात्स्वसांकल्पिकसर्वनाशादेव तस्य प्रलयव्यवहारादित्यर्थः ॥ ११ ॥

असतामेव सद्भावमिव येषामुपेयुषाम् ।
न वयं निर्णयंन् विद्मो वन्ध्यापुत्रगिरामिव ॥ १२ ॥

अत एव जीवजगद्रूपाणामनिर्णेयत्वादनिर्वचनीयत्वमुक्तमित्याह - असतामेवेति ॥
१२ ॥

परिपूर्णार्णवप्रख्या काप्यपूर्वैव पूर्णता ।
तज्ज्ञानां द्रष्टृदृश्यांशदृष्टौ न हि पतन्ति ते ॥ १३ ॥

अत एव च तत्त्वविदां सदैवाद्वितीयचिदानन्दपूर्णतेत्याह - परिपूर्णेति । हि
यस्मात्ते द्रष्टृदृश्यांशदृष्टौ न पतन्ति नाभिनिविशन्ते ॥ १३ ॥

134733 अचला इव निर्वाता दीपा इव समत्विषः।
134734 साचारा वा निराचारास्तिष्ठन्ति स्वस्थमेव ते ॥ १४ ॥
134735
134736 अचला इवाप्रकम्प्या इति शेषः। साचाराः। इवार्थे वाशब्दः ॥ १४ ॥
134737
134738 आपूर्णैकार्णवप्रख्या काप्यन्तः पूर्णतोदिता।
134739 अन्तःशीतलता ज्ञप्तिर्ज्ञस्यापूर्वैव लक्ष्यते ॥ १५ ॥
134740
134741 वासनैवेह पुरुषः प्रेक्षिता सा न विद्यते।
134742 तां च न प्रेक्षते कश्चित्ततः संसार आगतः ॥ १६ ॥
134743
134744 अज्ञपुरुषास्तर्हि किंस्वरूपास्तदाह - वासनैवेति ॥ १६ ॥
134745
134746 अनालोकनसिद्धं यत्तदालोकान्न विद्यते।
134747 कृष्णाद्यनुपलम्भोऽत्र दृष्टान्तः स्पष्टचेष्टितः ॥ १७ ॥
134748
134749 अनालोकनं प्रकाशास्फूर्तिः। कृष्णं तमः आदिपदात्तत्कार्यचोरयक्षादिस्तस्य
134750 आलोकस्फूर्तावनुपलम्भो दृष्टान्तः। तृष्णा इति पाठे तृष्णा मृगतृष्णा।
134751 स्पष्टचेष्टितः। अतिस्पष्ट इति यावत् ॥ १७ ॥
134752
134753 भूतानि देहमांसादि तच्चासद्विभ्रमो जडः।
134754 बुद्ध्यहंकारचेतांसि तन्मयान्येव नेतरत् ॥ १८ ॥
134755
134756 किंदृशादालोकात्तमाह - भूतानीति। देहमांसादिस्थूलदेहोपादानं
134757 पञ्चीकृतानि भूतान्येव। तथा बुद्ध्यहंकारचेतांसि
134758 सूक्ष्मशरीरोपादानोपलक्षणम्। तान्यपि अन्नमयं हि सोम्य मनः
134759 इत्यादिश्रुतेस्तन्मयान्यपञ्चीकृतभूतविकारभूतान्येव ॥ १८ ॥
134760
134761 भूतादिमयतां त्यक्त्वा बुद्ध्यहंकारचेतसाम्।
134762 अत्यन्तं स्थितिरभ्येति यदि तन्मुक्ततोदिता ॥ १९ ॥
134763
134764 अस्त्वेवं किं ततस्तत्राह - भूतादीति। तत्र
134765 बुद्ध्यादिघटितलिङ्गोपाधावहंभावेन प्रविष्टश्चिदात्मा तद्द्वारा
134766 स्थूलदेहमप्यविद्यया अहमित्यभिमन्यते। तस्य विवेकेन बुद्ध्यहंकारचेतसां
134767 भूतादिमयतां वाचारम्भणश्रुतिदर्शितोपायेन त्यक्त्वा अत्यन्तं
134768 स्वप्रकाशचिन्मात्रस्वभावेन या स्थितिर्यद्यभ्येति तत्तर्हि सैव मुक्तया उदिता
134769 आविर्भूता। स एवालोको मयोक्त इत्यर्थः ॥ १९ ॥
134770
134771 चिच्छिलष्टा चेत्यनिष्ठत्वात्तादृश्येवात्र कास्तिता।
134772 तस्मात्क्वेव कुतः कुत्र वासना किंस्वरूपिणी ॥ २० ॥
134773
134774 एवमात्मालोके प्रसृते वासनापि बाधितैवेति तयापि न बन्धप्रसक्तिरित्याह - चिदिति।
134775 लिङ्गोपाधावात्मचित् श्लिष्टा तादात्म्याध्यासेन मिलिता
134776 चेत्तस्याश्चेत्योन्मुखत्वात्तादृश्येव वासना अस्तिता प्रसिद्धा। सा चात्र
134777 अस्यामुक्ततायां का ॥ २० ॥
134778
134779 यस्य यैष भ्रमः सोऽसन्प्रेक्षयासन्न लक्ष्यते।
134780 मृगतृष्णाम्बुवत्तेन संसारः कस्य कः कुतः ॥ २१ ॥
134781
134782 बध्यस्य जीवस्यैव तत्त्वदर्शने अनुपलम्भाच्च केन कस्य बन्धप्रसक्तिरित्याह -
134783 यस्येति। असन् अलीकः। असच्च प्रेक्षया तत्त्वदृष्ट्या न लक्ष्यते ॥ २१ ॥
134784

134785 तदेवं तर्हि तस्य स्यादिति चित्तोदयो हि यः।
134786 पुनः स एव संसारविभ्रमः संप्रवर्तते॥ २२॥
134787
134788 आत्मालोकमान्द्ये तु पुनश्चित्तोदयेन संसारः स्यादेवेति
134789 तद्दार्ढ्यमपुनःस्मरणावधि कार्यमित्याह - तदेवमिति द्वाभ्याम्।
134790 तत्तस्मादेवमात्मालोके प्रवृत्तस्यापि विषयस्मरणे यश्चित्तोदयः स एव पुनः
134791 संसारः संप्रवर्तते संप्रवर्तेत॥ २२॥
134792
134793 तस्मात्सर्वमनाश्रित्य व्योमवत्समुपास्यताम्।
134794 अपुनःस्मरणं श्रेय इह विस्मरणं परम्॥ २३॥
134795
134796 परं विस्मरणं भूमिकाभ्यासेन साधयेदिति शेषः॥ २३॥
134797
134798 नेह द्रष्टा न भोक्तास्ति नाऽस्तिता न च नास्तिता।
134799 यथास्थितमिदं शान्तमेकं स्पन्दि सदाब्धिवत्॥ २४॥
134800
134801 तदभ्यासपरः कथं पश्येत्तदाह - नेहेत्यादिना।
134802 स्पन्दिप्रारब्धोपनीतव्याधितव्यवहारनिमित्तम्। सदा अब्धिवत्पूर्णम्॥ २४॥
134803
134804 सर्वं दृश्यं जगद्ब्रह्म सदित्यवगते स्फुटम्।
134805 जलशोषादिवोदेति बिम्बबिम्बिक्षये शिवम्॥ २५॥
134806
134807 बिम्बनं बिम्बश्चिदाभासः सोऽस्यास्तीति बिम्बी उपाधिस्तदुभयक्षये॥ २५॥
134808
134809 शान्तताव्यवहारो वा रागद्वेषविवर्जितः।
134810 विश्रान्तस्य परे तत्त्वे दृश्यते समदर्शिनः॥ २६॥
134811
134812 शान्तता समाधिपरता व्यवहारो वेति द्वयमपि दृश्यते॥ २६॥
134813
134814 अथवा शान्ततैवास्य निर्वाणस्यावशिष्यते।
134815 निर्वासनः किल मुनिः कथं व्यवहरत्वसौ॥ २७॥
134816
134817 यावत्त्वस्य न निर्वाणं परिपोषमुपागतम्।
134818 तावद्व्यवहरत्यस्तरागद्वेषभयोदयः॥ २८॥
134819
134820 सप्तमभूमिकाविश्रान्तिपर्यन्तं परितोषं नोपागतम्॥ २८॥
134821
134822 वीतरागभयक्रोधो निर्वाणः शान्तमानसः।
134823 शिलेवाप्यशिलीभूतो मुनिस्तिष्ठति नित्यशः॥ २९॥
134824
134825 कोशेऽस्ति पद्मबीजस्य यथा सर्वाब्जिनी तथा।
134826 अनन्या स्वप्नविभ्रान्तिरात्मन्यस्ति न बाह्यता॥ ३०॥
134827
134828 एवं च ब्रह्मणि स्वाभाविकभावानुसारेण जगद्रूपमस्ति
134829 शास्त्रीयतत्त्वभावनानुसारेण तात्त्विकं रूपमप्यस्तीति यथेच्छमनर्थः पुरुषार्थो
134830 वा सुलभ इत्याशयेनाह - कोशे इत्यादिना। बाह्यता आत्मान्यनिष्ठता जगतो
134831 नेत्यर्थः॥ ३०॥
134832
134833 बाह्यताभावनाद्बाह्यमात्मैवात्मत्वभावनात्।
134834 भवतीदं परे तत्त्वे भावनंन् तत्तदेव हि॥ ३१॥
134835
134836 बहिरस्तीति प्रतीतिस्त्वात्मन्येव बाह्यताभावनान्नान्याधारत्वादित्याह -

134837 बाह्यताभावनादिति। तथा च तत्तद्भावनात्मकमेव बाह्यत्वमान्तरत्वं चेति
134838 फलितमित्याशयेनाह - भावनमिति॥ ३१॥
134839
134840 यान्तः स्वप्नादिविभ्रान्तिः सैवेयं बाह्यतोदिता।
134841 मनागप्यन्यता नात्र द्विभाण्डपयसोरिव॥ ३२॥
134842
134843 अत एव स्वप्नजाग्रतोर्न प्रतीतितो भेद इत्याह - येति। भिन्नभाण्डस्थक्षीरयोरिव
134844 अन्यताभेदो विशेषो नास्ति॥ ३२॥
134845
134846 स्थैर्यास्थैर्ये तथैवात्र भ्रान्तिमात्रमेय् तते।
134847 आधाराधेयते ते द्वे यथा जलतरङ्गते॥ ३३॥
134848
134849 ननु जाग्रत्स्वप्नार्थानां स्थैर्यास्थैर्ये विशेषः प्रत्यक्ष उपलभ्यते तस्य का
134850 गतिस्तत्राह - स्थैर्येति। एवं स्वप्नस्य जाग्रद्देहाधारताप्रत्ययोऽपि न भेदक
134851 इत्याह - आधारेति॥ ३३॥
134852
134853 स्वप्नादावात्मनोऽन्यत्वज्ञानादन्यत्ववेदनम्।
134854 अनन्यतावबोधे तु तदनन्यन्न चोदयि॥ ३४॥
134855
134856 स्वप्नार्थानां यावदात्ममात्रता नानुसंधीयते तावदेव भानम्।
134857 आत्ममात्रतानुसंधाने तु झटित्येव जागरणाद्बाधादात्मानन्यत्वं प्रसिद्धं
134858 तद्वज्जाग्रदर्थेष्वपि बोध्यमित्याशयेनाह - स्वप्नादाविति। उदयि
134859 पृथगाविर्भाववन्न च॥ ३४॥
134860
134861 कलनारहितं शान्तं यद्रूपं परमात्मनः।
134862 भवत्यसौ तत्तद्भावादतद्भावान्न तद्भवेत्॥ ३५॥
134863
134864 अत एव वास्तवोऽपि ब्रह्मभावस्तद्भावनाधीन इति यदुक्तं तत्सिद्धमित्याह -
134865 कलनेति॥ ३५॥
134866
134867 स्वप्नादिज्ञानसंशान्तौ यद्रूपं शुद्धमैश्वरम्।
134868 न तदस्ति न तन्नास्ति न वाग्गोचरमेव तत्॥ ३६॥
134869
134870 अस्तितानिरूपककालदेशाधाराद्यभावान्न तदस्ति। स्वरूपस्याबाधान्न नास्ति। अत एव
134871 वाचामगोचरमित्यर्थः॥ ३६॥
134872
134873 आत्यन्तिकभ्रान्तिलये युक्त एवावगच्छति।
134874 स्वरूपं नोपदेशस्य विषयो विदुषो हि तत्॥ ३७॥
134875
134876 कथं तर्हि तद्वाचा गुरुणोपदिश्यते तत्राह - आत्यन्तिकेति। युक्तः समाधिस्थः
134877 स्वानुभवेनैवावगच्छति कान्तासंभोगसुखवन्न परं प्रत्युपदेशस्य
134878 विषयस्तथापि तदुपायप्रदर्शनेन तत्र श्रोतृबुद्ध्यवतारणमेवोपदेशफलमिति
134879 भावः॥ ३७॥
134880
134881 शान्तं निरस्तभयमानविषादलोभमोहात्मदेहमननेन्द्रियचित्तजाड्यम्।
134882 त्यक्त्वाहमक्षयमपास्तसमस्तभेदं निर्वाणमेकमजमासितुमेव युक्तम्॥ ३८
134883 ।।
134884
134885 अतो हे राम अहमहंकारं त्यक्त्वा निरस्तानि जाड्यान्तान्येकादश
134886 यस्मिंस्तथाविधमत एव शान्तमजमक्षयमपास्तसमस्तभेदमेकं निर्वाणं
134887 ब्रह्म भूत्वा सदैव समाधावासितुं युक्तमुचितं न व्यवहारविषयेष्वित्यर्थः॥ ३८
134888 ।।

134889
134890 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वाणप्रकरणे उ०
134891 निर्वाणयुक्त्युपदेशवर्णनं नामैकत्रिंशः सर्गः ३१ ॥
134892
134893 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
134894 निर्वाणयुक्त्युपदेशवर्णनं नामैकत्रिंशः सर्गः ॥ ३१ ॥
134895
134896 द्वात्रिंशः सर्गः ३२
134897
134898 श्रीवसिष्ठ उवाच ।
134899
134900 यदा चितिः प्रसरति तदाहंताजगद्भ्रमः ।
134901 असदेवाभ्युदेतीव स्पन्दादपि च वायुता ॥ १ ॥
134902
134903 साधुसंगमसच्छास्त्रविचाराभ्यासशालिनः ।
134904 मोक्षोऽत्रावश्यभावित्वात्स्वायत्त उपपाद्यते ॥
134905
134906 विद्याविद्याभ्यां बन्धमोक्षयोः स्वायत्तत्वं वर्णयिष्यन् प्रथममविद्यया
134907 चित्प्रसरणाधीनं स्वायत्तं बन्धं दर्शयति - यदेति । स्पन्दादपि चेति
134908 दृष्टान्तार्थम् । इव चेति पाठः स्पष्टः ॥ १ ॥
134909
134910 उदितोऽपि न खेदाय ब्रह्मरूपत्ववेदनात् ।
134911 परमाय त्वनर्थाय जगच्छब्दार्थभावनात् ॥ २ ॥
134912
134913 रूपानुभवमादत्ते चक्षुःप्रसरणाद्यथा ।
134914 चितिः प्रसरणात्तद्वज्जगद्विभ्रममास्थिता ॥ ३ ॥
134915
134916 यासौ प्रसरति व्यर्थन् चेत्याभावान्न सा सती ।
134917 असत्कथं प्रसरति वन्ध्यापुत्रः क्व नृत्यति ॥ ४ ॥
134918
134919 उदितोऽपि न खेदाय इति यदुक्तं तदुपपादयति - यासाविति । कूटस्थचितो
134920 बाह्यार्थोपसर्पणलक्षणं प्रसरद्रूपं विषयाभावात्स्वतश्च नास्त्येवेति विद्यया
134921 बाधान्न खेदायेति भावः ॥ ४ ॥
134922
134923 अयंन् त्वनुभवादेव मुधैवानुभवन्स्थितः ।
134924 असदेवाननुभवन्स्वयमर्भकयक्षवत् ॥ ५ ॥
134925
134926 अयं चित्प्रसरोऽनुभवादेव सिद्ध्येत् । स चानुभवो विद्यया
134927 बाध्यमानोऽसदर्थमननुभवन्नेवर्भकयक्षानुभववन्मुधैव स्थित इत्यर्थः ॥
134928 ५ ॥
134929
134930 अहंभावोऽपि दुःखार्थमहमित्येव वेदनात् ।
134931 अवेदनान्नाहमतः स्वायत्ते बन्धमुक्तते ॥ ६ ॥
134932
134933 उक्तो न्याय आन्तरे अहंभावात्मकप्रसरेऽपि तुल्य इति दर्शयन् बन्धमोक्षयोः
134934 स्वायत्तता सिद्धेत्याह - अहंभाव इति ॥ ६ ॥
134935
134936 तद्ध्यानं स समाधिर्वा यदवेदनमासितम् ।
134937 अजडानां जडमिव समं शान्तमनामयम् ॥ ७ ॥
134938
134939 मोक्षस्य स्वायत्ततामुपपादयति - तदित्यादिना । विद्यया
134940 मूलजाड्यापहाराच्चिदात्मैकरस्यापत्त्या अजडानां मनोबुद्ध्यादिसर्ववस्तूनां

134941 जडं पाषाणादीव निश्चलं यदवेदनं
134942 वेद्यवेदनभावनिर्मुक्तमासितमवस्थानं तदेव ध्यानं समाधिर्वा |
134943 तदुपलक्षिता मुक्तिरिति यावत् || ७ ||
134944
134945 द्वैताद्वैतसमुद्भेदैर्वाक्यसंदर्भविभ्रमैः |
134946 मा विषीदत दुःखाय विबुधा अबुधा इव || ८ ||
134947
134948 अयमेव विश्रान्तिहेतुः सिद्धान्तः | अन्यथाकल्पने तु वादिनां
134949 कलहमात्रपर्यवसानेन वृथा कण्ठशोषः स्यादित्याशयेन तान्संबोध्याह ##-
134950 द्वैतादिनानाविकल्पसमुद्भेदैर्बहुविधकलहात्मकवाक्यसंदर्भविभ्रमैर्मा
134951 विषीदत वृथा कण्ठशोषणलक्षणं विषादं माप्नुत | इममेव
134952 परमपुरुषार्थहेतुं सिद्धान्तमवलम्बध्वमित्यर्थः || ८ ||
134953
134954 असदाश्रयते दुःखं स्वप्नवद्घनवासनः |
134955 रूपालोकमनस्कारान्संकल्परचितानिव || ९ ||
134956
134957 घनवासनस्य बहिर्मुखस्यासदपि रूपादिदर्शनमिव दुःखमपि दृढतरं
134958 दुर्वारम् | तनुवासनस्यान्तर्मुखस्य तु तद्वदेव प्रारब्धप्रसंजितमपि
134959 दुःखमापाततो भुज्यमानं स्वानन्दानुभवतिरोहितत्वादमुक्तप्रायमेव
134960 भवतीत्याह - असदिति द्वाभ्याम् | आश्रायते भुङ्क्ते || ९ ||
134961
134962 दुःखं सदेव नाश्नाति सुप्तवत्तनुवासनः |
134963 रूपालोकमनस्कारान्संकल्परहितानिव || १० ||
134964
134965 अप्यर्थे एवकारः | सत् प्रारब्धप्रसंजितमपि दुःखं नाश्नाति न भुङ्क्ते | सुप्तो
134966 निद्रासुखपरवशचित्तो यथा मशकमत्कुणादिदंशनदुःखं नानुभवति तद्वत् ||
134967 १० ||
134968
134969 अत्यन्ततनुतामेस्य वासनैवैति मुक्तताम् |
134970 देशकालक्रियायोगात्पदार्थे भावनामिव || ११ ||
134971
134972 अतो वासनानामेवोपचयात्संसारानुभव इवापचयो देशकालक्रमेण
134973 मुक्ततानुभवोऽपि सिध्यतीत्याह - अत्यन्तेति || ११ ||
134974
134975 अत्यन्ततनुतां याता वासनैवैति मुक्तताम् |
134976 पराणुपरिणामेन खतां खेऽभ्रादिका यथा || १२ ||
134977
134978 अपक्षयक्रमप्राप्तेन परेणाणुना सूक्ष्मतमेन चरमपरिणामेन |
134979 आदिपदान्नोहारधूमादिपरिग्रहः || १२ ||
134980
134981 अहंभावनया बोधे वासना घनतानवा |
134982 विपश्चित्संगमाभ्यासात्पाण्डित्यमिव मूढता || १३ ||
134983
134984 वासनातानवे तर्हि क उपायस्तमाह - अहंभावनयेति | ब्रह्माहंभावनया
134985 बोधे अभिवृद्ध्यमाने वासना दिने दिने घनं निरूढं तानवं सौक्ष्म्यं
134986 यस्यास्तथाविधा सती मुक्तिः संपद्यते | यथा विपश्चितां पण्डितानां
134987 संगमाद्विद्याभ्यासाद्वर्धमानान्मूढता घनतानवं प्राप्य पाण्डित्यं
134988 संपद्यते तद्वदित्यर्थः || १३ ||
134989
134990 नाहमस्तीह मद्युक्त्या निश्चयोऽन्तः शमात्मकः |
134991 जीवतोऽजीवतश्चास्ति रूढबोध इति स्मृतः || १४ ||
134992

134993 कियत्कालं बोधो वर्धनीय इति चेद्रूढबोधतापर्यन्तमित्याशयेन
134994 रूढबोधलक्षणमाहनाहमिति। मद्युक्त्या अहंब्रह्मेति भावनालक्षणेन
134995 प्रत्यगात्मयोगेनाभ्यस्यमानेनेह जीवतो योगिनोऽजीवतः परलोकं गतस्य वा
134996 अहंशब्दार्थो जीवो नास्तीति शमात्मको निश्चयोऽन्तर्यस्यास्ति स रूढबोध इत्यर्थः॥ १४
134997 ।।
134998
134999 वायौ द्वन्द्वमिवात्रेदं जगदादि च भासते।
135000 कोऽहं कथमिदं चेति विचारेणैव शाम्यति॥ १५॥
135001
135002 द्वन्द्वं द्रव्य क्रियेति च कल्प्यमानम्। स्पन्द इति पाठे स्पष्टम्। आदिपदाज्जीवः॥ १५॥
135003
135004 नाहमित्येव निर्वाणं किमेतावति मूढता।
135005 सत्संगमविचाराभ्यामेतदाश्ववगम्यते॥ १६॥
135006
135007 क्षीयते तत्त्ववित्सङ्गादहमित्येव बन्धनम्।
135008 आलोकेनेव तिमिरं दिवसेनेव यामिनी॥ १७॥
135009
135010 कोऽहं कथमिदं दृश्यं को जीवः किं च जीवनम्।
135011 इति तत्त्वज्ञसंयोगाद्यावज्जीवं विचारयेत्॥ १८॥
135012
135013 जीवनं प्राणादिधारणं किम्। यावज्जीवग्रहणमामोक्षोपलक्षणम्॥ १८॥
135014
135015 जीवितं भुवनं भाति ततोऽहमिति नश्यति।
135016 तत्त्वमेकेन तज्ज्ञार्कसेवनात्स निषेव्यताम्॥ १९॥
135017
135018 स च विचारो गुरुसेवनाच्छीघ्रं फलपर्यन्तः सिध्यतीत्याशयेनाह - जीवितमिति।
135019 यतस्तज्ज्ञस्तत्त्ववित् तल्लक्षणस्यार्कस्य सेवनात्संपर्काद्भुवनं जगदेव
135020 बोधेनोज्जीवितं भाति। अहमिति सर्वपदार्थतत्त्वावरणं तमो नश्यति वस्तुतत्त्वं च
135021 एकेन क्षणेन प्रथते अतः स तज्ज्ञार्को निषेव्यतामित्यर्थः॥ १९॥
135022
135023 यो यो बोधातिशयवांस्तं तं पृथगुपास्व भो।
135024 संगमे कथयोदेति तेषां वादपिशाचिका॥ २०॥
135025
135026 यदा तु बहुषु विद्वत्सु तार्किकेषु च सत्स्वयं तत्त्वज्ञोऽयं नेति निर्धारणे
135027 असमर्थोऽहं तदा किं कुर्या तत्राप्याह - यो य इत्यादिना। ननु पृथगुपास्वेति
135028 किमर्थमुच्यते समुदितोपास्तौ को दोषस्तमाह - संगमे इति। कथया
135029 परस्परविरुद्धयुक्तिकथनेन। मुण्डे मुण्डे मतिर्भिन्ना तुण्डे तुण्डे सरस्वती इति
135030 न्यायादिति भावः॥ २०॥
135031
135032 वादयक्षेऽप्यभ्युदिते बालस्येव विपश्चितः।
135033 युक्तियुक्तमलं मुख्यमुदेत्यहमिति भ्रमः॥ २१॥
135034
135035 उदेतु नाम वादपिशाचिका को दोषस्तत्राह - वादयक्षे इति। वादलक्षणे यक्षे
135036 पिशाचेऽभ्युदिते सति विवेकिनोऽपि श्रोतुरश्रौतमपि [अपयुक्तिभिः इति पाठः।]
135037 युक्तिभिस्तर्कैर्युक्तं तार्किकैः प्रतिपाद्यमानमहं प्रत्यक्तत्त्वं मुख्यं
135038 तदेवालं पर्याप्तं ममेति भ्रम उदेति। तथा चान्धगोलाङ्गूलन्यायेन
135039 तदालम्बनेऽनर्थ एव स्यादिति भावः॥ २१॥
135040
135041 अतः प्रत्येकमेकान्ते प्राज्ञः सेवेत पण्डितम्।
135042 एकीकृत्य तदुक्तांस्तानर्थान्बुद्ध्या विचारयेत्॥ २२॥
135043
135044 सेवेत सेवाद्युपचारेण वशीकृत्य पृच्छेत्॥ २२॥

135045
135046 विचारयेत्तदुक्त्यर्थन् बुद्ध्या बुद्धिविवृद्धये [विशुद्धये इति पाठः
135047 साधुः |] |
135048 सर्वसंकल्पमुक्तं यत्तत्सत्तन्मयतां व्रजेत् || २३ ||
135049
135050 श्रुतियुक्तिस्वानुभवविद्वदन्तरसंवादैर्विचारयेद्रत्नतत्त्वमिव परीक्षेत
135051 सर्वसंदेहोच्छेदेन बुद्धेः शुद्धये | एवं मननेन बुद्धिशुद्धौ निदिध्यासनं
135052 कार्यमित्याह - सर्वसंकल्पमुक्तमिति | तत् सत्परमार्थस्तन्मयतां
135053 निर्विकल्पसमाधितस्तदैकरस्यम् || २३ ||
135054
135055 विपश्चित्संगमैर्बुद्धिं नीत्वा परमतीक्ष्णताम् |
135056 अज्ञानलतिका सैका कणशः क्रियतामलम् || २४ ||
135057
135058 तेन तत्त्वज्ञानोदयेनाज्ञानोच्छेदं दर्शयति - विपश्चिदिति || २४ ||
135059
135060 एषोऽर्थः संभवत्येव तेनेदं कथयाम्यहम् |
135061 स्वानुभूतं वयंन् बाला नासमञ्जसवादिनः || २५ ||
135062
135063 तदसंभवशङ्का न कार्येत्याह - एषोऽर्थ इति || २५ ||
135064
135065 व्योम्नोऽम्बुवाहादिविजृम्भयेव तरङ्गभङ्ग्येव महाजलस्य |
135066 न युज्यते नापि च नश्यतीह नाशोदयौ निर्मननस्य किंचित् || २६ ||
135067
135068 सर्वसंकल्पमुक्तं यत्तदेव सत् तन्मयताप्राप्तौ सर्वजगद्व्यवहारैरपि विदुषो न
135069 कश्चिदिष्टनाशोऽनिष्टोदयो वेत्याह - व्योम्न इति | यथा व्योम्नः
135070 अम्बुवाहनीहारातपादिविजृम्भया यथा वा महाजलस्य समुद्रस्य
135071 तरङ्गादिभङ्ग्या किंचिदनिष्टं न युज्यते नापि किंचिदिष्टं नश्यति
135072 तद्वन्निर्मननस्य निःसंकल्पस्य योगिनोऽपि नेष्टानिष्टनाशोदयावित्यर्थः || २६ ||
135073
135074 इदं हि सर्वं मृगतृष्णिकाम्बुवन्निरामये ब्रह्मणि शान्त आतते |
135075 विचारिते नाहमितीह विद्यते कुतः क्व कस्मान्मननादिविभ्रमः || २७ ||
135076
135077 आकाशसमुद्रयोः सद्वितीयत्वात्तद्योगवियोगशङ्कापि स्यात् विदुषस्तु
135078 कूटस्थाद्वयब्रह्मरूपत्वान्नाध्यस्तविवर्तैस्तच्छङ्कापीत्याशयेनाह - इदं
135079 हीति | निरामये आतते पूर्णे ब्रह्मणि विचारिते प्रबुद्धे सति इदं सर्वं
135080 मृगतृष्णिकाम्बुवदहमिति च पृथगात्मरूपं न विद्यते | एवं स्थिते इह
135081 तत्त्वविदि मननादिविभ्रमः कुतः क्व कस्मात्स्यादित्यर्थः || २७ ||
135082
135083 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वाणप्रकरणे उत्तरार्धे
135084 सत्यावबोधनोपदेशो नाम द्वात्रिंशः सर्गः || ३२ ||
135085
135086 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
135087 सत्यावबोधनोपदेशो नाम द्वातिंशः सर्गः || ३२ ||
135088
135089 त्रयस्त्रिंशः सर्गः ३३
135090
135091 श्रीवसिष्ठ उवाच |
135092
135093 स्वपौरुषेण स्वधिया सत्संगमविकासया |
135094 यदि ना नीयते ज्ञत्वं तदुपायोऽस्ति नेतरः || १ ||
135095
135096 इहोपवर्ण्यते भ्रान्तिकल्पना प्रतिकल्पना |

135097 परलोकचिकित्सा च संवित्प्रसरवारणात् ॥ १ ॥
135098

135099 तत्रादौ प्रतिकल्पनां वक्तुं प्रस्तावं रचयति - स्वपौरुषेणेति । ना
135100 अधिकारयोग्यशरीरं प्राप्तः पुरुषो यदि ज्ञत्वं तत्त्वज्ञानंन् नीयते प्राप्यते ।
135101 नयतेर्द्विकर्मकात् प्रधाने नीह्यकृष्वहाम् इति प्रधाने कर्मणि लः । तत्तर्हि नेतरो
135102 नान्यथेत्यर्थः ॥ १ ॥
135103

135104 स्वं कलितं कल्पितं च प्रतिकल्पनया स्वया ।
135105 तदेवान्यत्वमादत्ते विषत्वममृतं यथा ॥ २ ॥
135106

135107 कीदृशं तत्पौरुषं येन ज्ञत्वं नीयते तदाह - स्वं कल्पितमिति । स्वं
135108 स्वाभाविकमशास्त्रीयम् । कल्पितं कल्पितमिति वीप्सा । सर्वं कल्पितं चात्तन्मूलं
135109 वासनाविद्यादि च स्वया स्वीयया शास्त्रीयया प्रतिकल्पनया तदेवान्यत्वं
135110 बन्धहेतुतामपहाय मोक्षोपयोगित्वमादत्ते । यथा स्वभावतो मरणहेतुरपि विषं
135111 रसायनशास्त्रोक्तोपायप्रतिकल्पनया विषत्वं विहायामृतममरणसाधनं
135112 रसायनं भवति तद्वत् ॥ २ ॥
135113

135114 कल्पना चाकल्पनान्ता मुक्तता यदकल्पनम् ।
135115 एतच्च भोगसंत्यागपूर्वं सिध्यति नान्यथा ॥ ३ ॥
135116

135117 किमत्कालं प्रतिकल्पना कार्येति चेत्सर्वकल्पनानिवृत्तिपर्यन्तमित्याह - कल्पनेति ।
135118 अकल्पनं सर्वकल्पनानिवृत्तिरन्तोऽवधिर्यस्याः सा यद्यस्माद्धेतोरकल्पनमेव
135119 परिशिष्टस्यात्मनो मुक्तता । तत्रावश्यकीं वैराग्यलक्षणां संन्यासलक्षणां च
135120 प्राथमिकीं प्रतिकल्पनां दर्शयति - एतच्चेति । पूर्वमादौ भोगसंत्यागात्
135121 त्यजतैव हि तज्ज्ञेयंन् त्यक्तुः प्रत्यक्परं पदम् इति श्रुतेरिति भावः ॥ ३ ॥
135122

135123 वचसा मनसा चान्तः शब्दार्थाविभावयन् ।
135124 य आस्ते वर्धते तस्य कल्पनोपशमः शनैः ॥ ४ ॥
135125

135126 ततः श्रवणमननाभ्यामात्मतत्त्वं निश्चित्य वाङ्मनसनिरोधलक्षणा
135127 प्रतिकल्पना कार्येत्याह - वचसेति ॥ ४ ॥
135128

135129 वर्जयित्वाहमित्येव नाविद्यास्तीतरात्मिका ।
135130 शान्ते त्वभावनादस्मिन्नान्यो मोक्षोऽस्ति कश्चन ॥ ५ ॥
135131

135132 ततोऽनहंभावलक्षणा सा कार्येत्याह - वर्जयित्वेति ।
135133 अभावनात्सर्वभावनानिवर्तकतत्त्वसाक्षात्कारात् । अस्मिन्नहंकारे शान्ते बाधिते सति ॥
135134 ५ ॥
135135

135136 अहंभावमथादेहं किंचिच्छ्रयसि नश्यति ।
135137 जगदादिरुचिस्तस्मिंस्त्यक्ते शाम्यसि सिध्यसि ॥ ६ ॥
135138

135139 अथ तत्त्वसाक्षात्कारोत्तरमपि प्राक्तनजगज्जीवभावे रुचिर्यस्य तथाविधः सन् आदेहं
135140 स्थूलदेहपर्यन्तं किंचिदल्पमप्यहंभावं यदि श्रयसि
135141 तदैवापरिच्छिन्नपूर्णानन्दस्वरूपविस्मरणान्नश्यसीव । संसारदुःखे
135142 पतसीत्यर्थः । तस्मिन्नहंभावे त्यक्ते तु शाम्यसि सर्वदुःखनिवृत्तिं लभसे ।
135143 निरतिशयानन्दस्वभावेन सिध्यसि च ॥ ६ ॥
135144

135145 अचेतनादिदं सर्वं सदेवासदिव स्थितम् ।
135146 शान्तं यस्योपलस्येव नमस्तस्मै महात्मने ॥ ७ ॥
135147

135148 अचेतनाद्बहिर्मुखवृत्त्या अदर्शनात् ॥ ७ ॥

135149
135150 अचेतनादिदं सर्वमुपलस्येव शाम्यति |
135151 शून्याख्यातः परालीनचित्तस्य चित्त्वभावनात् || ८ ||
135152
135153 परस्मिन्ब्रह्मणि आलीनचित्तस्यात एवोपलस्येव
135154 बहिरचेतनादन्तश्चित्त्वभावनात्साधकाभावाद्बाधकसत्त्वाच्चेदं सर्वं
135155 दृश्यं शाम्यति || ८ ||
135156
135157 इदमस्त्वथवा मास्तु चेतितं दुःखवृद्धये |
135158 अचेतितं सुखायान्तरचेतनमचेतनात् || ९ ||
135159
135160 सुखदुःखयोर्दृश्यसत्त्वासत्त्वे नोपयुज्येते किंतु तद्दर्शनादर्शने एवेति
135161 तच्चेतनाय प्रवृत्तं चित्तमेव निरोद्धव्यमित्याशयेनाह - इदमिति |
135162 दृश्यस्यचेतनमदर्शनं तु अचेतनाच्चित्तक्रियानिरोधेन
135163 ब्रह्माकारतापादनान्तप्रतिकल्पनावशादेवेत्यर्थः || ९ ||
135164
135165 द्वौ व्याधी देहिनो घोरावयं लोकस्तथा परः |
135166 याभ्यां घोराणि दुःखानि भुङ्क्ते सर्वैर्हि पीडितः || १० ||
135167
135168 परलोकचिकित्सां वर्णयितुमुपक्रमते - द्वाविति | सर्वैराध्यात्मिकादिभावैः || १० ||
135169
135170 इहलोके यतन्ते ज्ञा व्याधौ भोगैर्दुरौषधैः |
135171 आजीवितं यथाशक्ति चिकित्सा नापरामये || ११ ||
135172
135173 इहलोके प्रसिद्धे क्षुत्तृषादिव्याधावन्नपानादिभोगलक्षणैर्दुरौषधैर्यथाशक्ति
135174 यतन्ते | अपरामये पारलौकिकनरकजन्मपरम्परादिव्याधौ भोगैश्चिकित्सा न जायत
135175 इत्यर्थः || ११ ||
135176
135177 परलोकमहाव्याधौ प्रयतन्ते चिकित्सनम् |
135178 शमसत्सङ्गबोधाख्यैरमृतैः पुरुषोत्तमाः || १२ ||
135179
135180 चिकित्सनं कर्तुमिति शेषः || १२ ||
135181
135182 परलोकचिकित्सायां सावधाना भवन्ति ये |
135183 मोक्षमार्गमहेच्छायां शमशक्त्या जयन्ति ते || १३ ||
135184
135185 अपथ्यभोगत्यागे सत्सङ्गाद्यौषधसेवने च सावधानाः | शमाख्यस्यौषधस्य
135186 शक्त्या || १३ ||
135187
135188 इहैव नरकव्याधेश्चिकित्सां न करोति यः |
135189 गत्वा निरौषधं स्थानं सरुजः किं करिष्यति || १४ ||
135190
135191 ननु परलोकव्याधेस्तत्रैव चिकित्सा करिष्यते किमत्र तच्चिन्तया तत्राह - इहैवेति |
135192 निरौषधं साधुसंगमसच्छास्त्राद्यौषधशून्यं नरकस्थावरादिस्थानम् || १४
135193 | |
135194
135195 इहलोकचिकित्साभिर्जीवितं यातु मा क्षयम् |
135196 आत्मज्ञानौषधैरज्ञाः परलोकश्चिकित्स्यताम् || १५ ||
135197
135198 हे अज्ञाः || १५ ||
135199
135200 आयुर्वायुचलत्पत्रलवाम्बुकणभङ्गुरम् |

135201 परलोकमहाव्याधिर्यत्नेनाशु चिकित्स्यताम् ॥ १६ ॥
135202
135203 परलोकमहाव्याधौ यत्नेनाशु चिकित्सिते ।
135204 इहलोकमयो व्याधिः स्वयमाशूपशाम्यति ॥ १७ ॥
135205
135206 इह लोकव्याधिचिकित्सार्थ पृथग्यत्नो न कार्य इत्याह - परलोकेति ॥ १७ ॥
135207
135208 संविन्मात्रं विदुर्जन्तुं तस्य प्रसरणं जगत् ।
135209 परमाणूदरेऽप्यस्ति तच्छैलशतविस्तरम् ॥ १८ ॥
135210
135211 परलोकव्याधेस्तपस्तीर्थयज्ञदानप्रायश्चित्तादिचिकित्सा यद्यपि सन्ति तथापि ता
135212 नात्यन्तिकतदुच्छेदहेतवः किंत्वात्मज्ञानमेव । तच्च
135213 श्रवणादिपूर्वकसमाध्यभ्यासलक्षणसंवित्प्रसरनिरोधादेवेत्याशयेन
135214 तदुपायान्वक्तुं भूमिकां रचयति - संविन्मात्रमिति । तज्जगत्परमाणूदरेऽपि
135215 संविदः पूर्णत्वादस्त्येव ॥ १८ ॥
135216
135217 यत्संविदः प्रसरणं रूपालोकमनांसि तत् ।
135218 व्योमन्येवानुभूयन्ते नातः सत्यो जगद्भ्रमः ॥ १९ ॥
135219
135220 प्रसरणं बहिर्मुखतया विवर्तनं तदेव रूपालोका बाह्यार्थो मनांसि
135221 कामसंकल्पाद्याभ्यन्तरा इत्यर्थः । व्योमनि चिदाकाशे ॥ १९ ॥
135222
135223 प्रलयेष्वपि दृष्टेषु जगद्दृश्याख्यविभ्रमः ।
135224 न नश्यति न जायेत भ्रान्तिमात्रैकरूपिणः ॥ २० ॥
135225
135226 मिथ्यात्वादेव प्रलयसहस्रैरपि नास्य निवृत्तिः सृष्टिसहस्रैरपि न सत्ता
135227 किंत्वात्मज्ञानादेवेत्याशयेनाह - प्रलयेष्वपीति । न जायेत सृष्टिषु
135228 दृष्टेष्वपीति शेषः । तत्र हेतुमाह - भ्रान्तीति । भ्रान्तिमात्रैकरूपित्वादित्यर्थः
135229 ॥ २० ॥
135230
135231 भोगपङ्कार्णवे मग्न आत्मा नोत्तार्यते यदि ।
135232 स्वपौरुषचमत्कृत्या तदुपायोऽस्ति नेतरः ॥ २१ ॥
135233
135234 आत्मज्ञाने तर्हि के उपाया इति चेत्प्रथमं वैराग्यमेवेत्याह - भोगेति ॥ २१ ॥
135235
135236 अजितात्मा जनो मूढो रूढो भोगैककर्दमे ।
135237 आपदां पात्रतामेति पयसामिव सागरः ॥ २२ ॥
135238
135239 जीवितस्य यथा बाल्यं दृष्टं प्राथमकल्पिकम् ।
135240 निर्वाणस्य तथा भोगसंत्यागो रागशान्तिदः ॥ २३ ॥
135241
135242 जीवितस्य आयुषः ॥ २३ ॥
135243
135244 तज्ज्ञस्य जीवितनदी सकल्लोलाप्यसंभ्रमा ।
135245 समं वहति सौम्यैव चित्रसंस्थेन नीरसा ॥ २४ ॥
135246
135247 रागशान्तिद इति विशेषणस्य तात्पर्यं तज्ज्ञाज्ञजीवितनदीवैलक्षण्यवर्णनेन
135248 दर्शयति - तज्ज्ञस्येत्यादिना ॥ २४ ॥
135249
135250 अज्ञजीवितनद्यास्तु [नद्यस्तु इति पाठः ।] रसनात्यन्तभीषणाः ।
135251 आवर्ता वृत्तिविक्षोभकल्लोलाः सहवाहिनः ॥ २५ ॥
135252

135253 रसनाः आक्रन्दध्वनयस्ताभिरत्यन्तभीषणाः ॥ २५ ॥
135254
135255 सर्गवर्गाः प्रवल्गन्ति संवित्प्रसरलेशकाः ।
135256 द्विचन्द्रबालवेतालमृगाम्बुस्वप्नमोहवत् ॥ २६ ॥
135257
135258 अज्ञानामविचारादेव सर्गादिप्रतिभासविक्षेपरूपाः संवित्प्रसरलेशा इत्याह -
135259 सर्गेति । प्रवल्गन्ति प्रसरन्ति ॥ २६ ॥
135260
135261 संविद्वारितरङ्गौघा भान्ति सर्गाः सहस्रशः ।
135262 विचारितास्त्वसत्यास्ते सत्यास्त्वनुभवभ्रमात् ॥ २७ ॥
135263
135264 अनुभवभ्रमाद्भ्रान्तानुभवात् ॥ २७ ॥
135265
135266 जगन्त्याकाशकोशेऽपि संवित्प्रसरणभ्रमात् ।
135267 सन्तीवाप्यनुभूयन्ते न तु सत्यानि तानि तु ॥ २८ ॥
135268
135269 प्रसिद्धे आकाशकोशेऽपि गन्धर्वनगरादि जगन्ति सन्तीवानुभूयन्ते ॥ २८ ॥
135270
135271 संविद्विकासपयसो बुद्बुदः सर्गविभ्रमः ।
135272 अहमित्यादिसद्भावविकाराकाररूपवान् ॥ २९ ॥
135273
135274 अहमित्यादिभिः सद्भिर्भावविकाराकारै रूपवान् ॥ २९ ॥
135275
135276 संविन्निर्वाणमजगत्संविदुन्मीलनं जगत् ।
135277 नान्तर्न बाह्यं नासत्यं न सत्यं सर्वमेव तत् ॥ ३० ॥
135278
135279 संविदो निर्वाणमप्रसरः । अजगत् सर्वजगन्निवृत्तिः । उन्मीलनं प्रसरः ॥ ३० ॥
135280
135281 चिद्रूपमजमव्यक्तमेकमव्ययमीश्वरः ।
135282 स्वत्वभावत्वरहितं ब्रह्म शान्तात्मखादपि ॥ ३१ ॥
135283
135284 स्वप्रसरनिरोधयोः स्वयमेवेष्टे इति ईश्वरो ब्रह्मेत्यर्थः ॥ ३१ ॥
135285
135286 ब्रह्मणो निःस्वभावस्य सर्गसंवेदने स्वतः ।
135287 स्पन्दने पवनस्येव कारणं नोपयुज्यते ॥ ३२ ॥
135288
135289 स च स्पन्दो मिथ्याभूताविद्याविवर्त एव न तु सत्यब्रह्मस्वभावज इत्याह -
135290 ब्रह्मण इति ॥ ३२ ॥
135291
135292 स्वप्नानुभववद्भ्रान्तिर्ब्रह्माब्धौ ब्रह्मवीचयः ।
135293 सर्गता वस्तुतस्त्वत्र न स्वप्नो न च सर्गता ॥ ३३ ॥
135294
135295 आविद्यकत्वे च विवर्तरूपा एव सर्गताः ब्रह्मणो वीचयो भ्रान्तिरेव । वस्तुतस्तु न स्वप्नो
135296 नापि सर्गतेत्यर्थः ॥ ३३ ॥
135297
135298 एकमेव निराभासमचित्त्वमजडं समम् ।
135299 न सन्नासन्न सदसदिदमव्ययमद्वयम् ॥ ३४ ॥
135300
135301 परमार्थतस्तर्हि ब्रह्म कीदृशं तदाह - एकमेवेति । अचित्त्वं
135302 चित्त्वाख्यधर्मान्तरशून्यम् ॥ ३४ ॥
135303
135304 यथास्थितस्यैव सतो यस्यासंवेदनात्मकम् ।

135305 संवित्प्रशमनं जातं तमाहुर्मुनिसत्तमम् ॥ ३५ ॥
135306

135307 तादृशब्रह्मभावेन स्थितिरेव योगिनः संवित्प्रशमनं मुनित्वं चेत्याह -
135308 यथास्थितस्येति ॥ ३५ ॥
135309

135310 सतोऽपि मृन्मयस्येव यस्यासंवेदनात्मकम् ।
135311 साहं जगद्विगलितं तमाहुर्मुनिसत्तमम् ॥ ३६ ॥
135312

135313 साहं जीवभावसहितम् ॥ ३६ ॥
135314

135315 यथा शाम्यत्यसंकल्पात्संकल्पनगरं तथा ।
135316 वेदनोत्थंन् जगदहं चिति शाम्यत्यवेदनात् ॥ ३७ ॥
135317

135318 संकल्पसृष्टेरसंकल्पनमिव दृष्टसृष्टेरस्या अदृष्टिरेव निवृत्तिरित्याह ##-
135319

135320 स्वभाववर्जं शब्दार्थाः सर्व एव सहेतुकाः ।
135321 स्वभावस्य तु यो हेतुर्मुक्तिस्तदनुभावनम् ॥ ३८ ॥
135322

135323 सर्वजडवस्तुष्वनुगतः स्वभावो जाड्यं सैव मूलाविद्या तामेकां वर्जयित्वा सर्वे
135324 एव शब्दार्था नामरूपाणि सहेतुकास्तद्धेतुकाः । तस्य स्वभावस्यापि यो हेतुः
135325 साक्षितया साधकस्तदनुभावनं स्वात्मनस्तन्मात्रतापादनं मुक्तिरित्यर्थः ॥ ३८ ॥
135326

135327 न कस्यचित्पदार्थस्य स्वभावोऽस्तीह कश्चन ।
135328 महाचिदम्बुद्रवताः सर्वा एवानुभूतयः ॥ ३९ ॥
135329

135330 अविद्यापगमे न कस्यचिदपि जाड्यं परिशिष्यत इति चिदेकरसं योगिनो जगदित्याह -
135331 चिदित्यादिना ॥ ३९ ॥
135332

135333 महाचिदनिलस्पन्दा एता एवानुभूतयः ।
135334 एतास्ता ब्रह्मगगनशून्यता इति बुध्यताम् ॥ ४० ॥
135335

135336 वातस्पन्दाविभाभिन्नौ ब्रह्मसर्गौ विभिन्नता ।
135337 तयोस्त्वसत्या स्वभ्रान्तौ स्वप्ने स्वमरणोपमा ॥ ४१ ॥
135338

135339 भ्रान्तिस्तु तावत्तत्त्वार्थविचारो यावदस्फुटः ।
135340 विचारे तु स्फुटे भ्रान्तिर्ब्रह्मतामेव गच्छति ॥ ४२ ॥
135341

135342 कियत्कालं स भ्रान्तिस्तत्राह - भ्रान्तिस्त्विति ॥ ४२ ॥
135343

135344 भ्रान्तिस्त्वसत्या वस्त्वेव प्रेक्षयातो न लभ्यते ।
135345 शशशृङ्गवदत्यच्छमतो ब्रह्मैव शिष्यते ॥ ४३ ॥
135346

135347 ननु भ्रान्तिः कथं ब्रह्मतां गच्छति तत्राह - भ्रान्तिस्त्विति । भ्रान्तौ यः
135348 सत्तास्फूर्त्यंशः स ब्रह्मतां गच्छति अन्यस्तु नास्त्येवेति न तदभिप्रायेणोक्तमिति
135349 भावः ॥ ४३ ॥
135350

135351 अनादिमध्यान्तमनन्तमच्छं समं शिवं शाश्वतमेकमेव ।
135352 सर्वां जरामोहविकारभारभ्रान्तिं विमुच्याम्बरभावमेहि ॥ ४४ ॥
135353

135354 सर्वभ्रान्तिबाधपरिशिष्टं ब्रह्म दर्शयन् रामं तद्भावस्थितौ स्थापयति -
135355 अनादीति । हे राम त्वं देहप्रसङ्गप्रसक्तां [देहप्रसक्तां इत्यपि पाठः ।]
135356 सर्वां जरामोहादिविकारभारभ्रान्तिं विमुच्य ब्रह्माकाशभावमेहि ।

135357 प्राप्नुहीत्यर्थः ॥ ४४ ॥
135358
135359 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वा० उ० सत्यार्थोपन्यासयोगो
135360 नाम त्रयस्त्रिंशः सर्गः ॥ ३३ ॥
135361
135362 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
135363 सत्यार्थोपन्यासयोगो नाम त्रयस्त्रिंशः सर्गः ॥ ३३ ॥
135364
135365
135366 चतुस्त्रिंशः सर्गः ३४
135367
135368 श्रीवसिष्ठ उवाच ।
135369
135370 प्राप्तेषु सुखदुःखेषु यो नश्यति स नश्यति ।
135371 यो न नश्यत्यनाशोऽसावलं शास्त्रोपदेशनैः ॥ १ ॥
135372
135373 दृष्टसृष्टिर्जगत्तस्यादर्शनादेव संक्षयः ।
135374 इति यत्प्रस्तुतं तस्य वर्ण्यन्तेऽत्रोपपत्तयः ॥
135375
135376 वेदनोत्थं जगदहं चिति शाम्यत्यवेदनात् इति यदुक्तं
135377 तत्रोपपत्तीर्विवक्षुर्भगवान्वसिष्ठः प्रथमं नश्वरीभ्यः
135378 सुखदुःखानुभवत्रिपुटीभ्यः पृथक्कृत्यानश्वरमात्मानं
135379 दर्शयंस्तद्दर्शनादेव सर्वशास्त्रोपदेशानां चरितार्थतेत्याह - प्राप्तेष्विति ॥
135380 १ ॥
135381
135382 यस्य चेच्छोदयस्तस्य सन्त्यवश्यं सुखादयः ।
135383 ते चेत्सम्यक्चिकित्स्यन्ते पूर्वमिच्छैव मुच्यताम् ॥ २ ॥
135384
135385 यस्त्विच्छादिमान् स नित्यदुःखी नात्मा
135386 किंत्विच्छात्यागाद्युपायचिकित्सनीयसंसृतिरोगकोटावेवेत्याशयेनाह - यस्य चेति
135387 ॥ २ ॥
135388
135389 अहं जगदिदं भ्रान्तिर्नास्त्येव परमे पदे ।
135390 इदं शान्तमनालम्बं सर्वं निर्वाणमव्ययम् ॥ ३ ॥
135391
135392 यस्त्वविनाश्यात्मा तत्रेच्छाद्यभिमानी तदभिमन्तव्यं जगच्च न
135393 संभाव्यमेवेत्याह - अहमिति ॥ ३ ॥
135394
135395 अहं ब्रह्म जगच्चेति शब्दसंभ्रमविभ्रमः ।
135396 सर्वस्मिञ्छान्त आकाशे केन नामोपकल्पितः ॥ ४ ॥
135397
135398 एवं चाहमादिशब्दास्तत्र निर्विषया इत्याह - अहमिति ॥ ४ ॥
135399
135400 नेहास्त्यहं न च जगन्न च ब्रह्मादिशब्दकाः ।
135401 शान्तस्यैकस्य सर्वत्वात्कर्ता भोक्तेह कः कुतः ॥ ५ ॥
135402
135403 तदभावे दूरापास्तैव कर्तृभोक्त्रादिकथेत्याह - नेहेति ॥ ५ ॥
135404
135405 उपदेश्यातिशायित्वात्सर्वापह्नव एव च ।
135406 कृतोऽयं स च सत्यात्मा त एवाहं विशिष्यते ॥ ६ ॥
135407
135408 ननु सर्वापह्नवे उपदेशादिरप्यपह्नूयेत । तथा च तद्बोधोपायो न लभ्येत इति चेदस्तु

135409 नामैवम् | उपदेश्यस्य ब्रह्मणः
135410 सर्वापह्नवेऽप्यनपह्नवादपह्नूयमानानृतसर्वार्थेभ्यः
135411 पारमार्थिकसत्यप्रत्यगात्मस्वरूपातिशयवत्त्वाच्चापह्नवोपायेन
135412 तद्बोधानन्तरमुपदेशाद्युपायस्यानपेक्षणा चेत्याशयेनाह - उपदेश्येति |
135413 विशिष्यते परिशिष्यते अतिशय्यते च || ६ ||
135414
135415 अग्रस्थसिद्धसंचारो ज्ञायते नापि दारुणः |
135416 यथैकपार्श्वसंसुप्तनरः स्वप्नाभ्रगर्जितम् || ७ ||
135417
135418 अस्त्वेवं तथापि कथमदर्शनमात्रेण दृश्योपशमस्तत्राह - अग्रस्थेति | यथा
135419 पुरोभागेऽपि स्थितानामन्तर्धानशक्त्या अन्तर्हितानां सिद्धानां पिशाचादीनां च
135420 संचारो व्यवहारो दारुणो भयंकरोऽपि न ज्ञायते | यथा वा एकशय्याप्रदेशे
135421 सुप्तस्य नरान्तरस्य स्वप्ने प्रसिद्धानामभ्राणां गर्जितं दारुणमपि न ज्ञायते
135422 तच्चास्मद्दृष्ट्या नास्त्येव तद्वदित्यर्थः || ७ ||
135423
135424 ज्ञप्तौ नास्ति यतस्तेन सिद्धाचारो न लक्ष्यते |
135425 स्वभाव इति सर्वेण ज्ञप्तिस्थो ह्यनुभूयते || ८ ||
135426
135427 तदेवाह - ज्ञप्ताविति | सर्वेणापि द्रष्ट्रा स्वज्ञप्तिस्थोऽनुभूयते इति स्वभावो हि
135428 प्रसिद्ध इत्यर्थः || ८ ||
135429
135430 ज्ञप्तिरप्यात्मभूतैव सर्वं भाति हि तन्मयम् |
135431 तस्मात्साहं जगत्सर्वमभिन्नं परमात्मनः || ९ ||
135432
135433 अस्त्वेवं किं ततस्तत्राह - ज्ञप्तिरपीति || ९ ||
135434
135435 ज्ञप्तिर्जगत्तया भाति संकल्पस्वप्नयोरिव |
135436 अनानावयवोदेति जलमूर्मितया यथा || १० ||
135437
135438 अनानावयवापि ज्ञप्तिर्नानावयवजगत्तया भाति || १० ||
135439
135440 एकात्मैवोदये ज्ञप्तेर्नानातामिव चागतः |
135441 अज्ञानात्स त्ववस्तुत्वात्प्रेक्षितो नोपलभ्यते || ११ ||
135442
135443 नानातामिवागत एक आत्मैव ज्ञप्तेरज्ञानाद्विवर्तरूप उदयः | स
135444 तूदयोऽवस्तुत्वात्तत्त्वदृशा प्रेक्षितो नोपलभ्यते || ११ ||
135445
135446 यथा स्वावयवानेव सर्वानवयवी भवेत् |
135447 नित्यानवयवं शान्तं ब्रह्मैवेदं तथा जगत् || १२ ||
135448
135449 यथाऽयमनवयवोऽपि जीवः स्वान् हस्तपादाद्यवयवान्
135450 कल्पयन्स्वप्नमनोरथादावयवी भवेत्तथा ब्रह्मापीत्यर्थः || १२ ||
135451
135452 भाण्डलक्षाणि धत्तेऽन्तश्चिद्रूपकनकेष्टिका |
135453 यदेव सा चेतयते जगदादीव वेत्ति तत् || १३ ||
135454
135455 चिद्रूपा कनकेष्टिका कुलाली चेतयते स्मरति || १३ ||
135456
135457 ब्रह्मैव कचतीवेदं सत्तयाच्छजगत्तया |
135458 चिद्रूपत्वाद्द्रवात्मत्वात्तरङ्गादितयाब्धिवत् || १४ ||
135459
135460 यद्यच्चेतयतेऽन्तस्तु जगदादीव पश्यति |

135461 अरूपमपि रूपं स्वं यन्न चेतयते न तत् ॥ १५ ॥
135462
135463 यन्न चेतयते नाध्यस्यति न तत्पश्यति ॥ १५ ॥
135464
135465 चेतनाचेतनत्वोक्ती तस्येशत्वात्स्वदेहगे ।
135466 उपदेशार्थमेवोक्ते न सद्विषयमर्थतः ॥ १६ ॥
135467
135468 ईशत्वान्मायाशबलत्वेन सर्वशक्तिसंपन्नत्वात्स्वदेहभूतमायागते । इदं तु
135469 वचनमर्थतः सद्विषयं परमार्थगोचरं नेत्यर्थः ॥ १६ ॥
135470
135471 न जगत्सन्न चैवासद्भासते चेतनाच्चिति ।
135472 अचेतनान्न कचति क इवार्थग्रहोऽत्र नः ॥ १७ ॥
135473
135474 अचेतनं चेतनं च स्पन्दास्पन्दवदात्मनः ।
135475 स्वायत्ते न कदर्थस्थे स्वस्थपाषाणवत्स्थिते ॥ १८ ॥
135476
135477 अस्त्वेवं किं ततस्तत्राह - अचेतनमिति । स्वायत्ते स्वाधीने न कदर्थस्थे
135478 यत्नश्रमसाध्ये । यथा स्वस्थस्य निश्चलस्य स्फटिकपाषाणस्य
135479 स्वान्तर्गतप्रतिबिम्बसहस्रस्पन्दास्पन्दे न यत्नसाध्ये तद्वत्स्थिते ॥ १८ ॥
135480
135481 यस्येक्षितस्य नो सत्ता नाधारो न च कारणम् ।
135482 सोऽहमित्येव यो यक्षो न जाने कुत उत्थितः ॥ १९ ॥
135483
135484 सर्वकल्पनामूलस्यैकस्याहंकारस्यैव परीक्षणेन मिथ्यात्वावधारणे
135485 सर्वजगन्मिथ्यात्वं सिद्धमित्याशयेनाह - यस्येति ॥ १९ ॥
135486
135487 यस्याहमिति यक्षस्य सत्तैवास्ति न सत्यतः ।
135488 अहो नु चित्रं तेनेमे भवन्तो विवशीकृताः ॥ २० ॥
135489
135490 सत्यतो वस्तुतः । सत्ता विद्यमानता ॥ २० ॥
135491
135492 काकतालीयवद्भ्रान्तमहं ब्रह्मणि भासते ।
135493 स्वमेव रूपं दृग्भ्रान्तौ केशोण्ड्रकमिवाम्बरे ॥ २१ ॥
135494
135495 काकतालीयवदाकस्मिकम् ॥ २१ ॥
135496
135497 ब्रह्मैवाहं जगच्चात्र कुतो नाशसमुद्भवौ ।
135498 अतो हर्षविषादानां किंत्वेव कथमास्पदम् ॥ २२ ॥
135499
135500 एवं च यत्फलितं तदाह - ब्रह्मैवेति । किमास्पदं विषय आश्रयश्च ॥ २२ ॥
135501
135502 सर्वेश्वरत्वादीशस्य विभातीदं प्रचेतितम् ।
135503 अचेतितं च नो भाति तेनाचेतितमस्तु ते ॥ २३ ॥
135504
135505 वर्णितां दृष्टसृष्टिकल्पनाममूद्य तत्फलमाह - सर्वेश्वरत्वादिति । ते तव
135506 अचेतितं जगददर्शनमस्तु । तदेव सर्वदृश्यमार्जनरूपा मुक्तिः फलमित्यर्थः ॥
135507 २३ ॥
135508
135509 काकतालीयवच्चित्त्वाज्जगतो भाति ब्रह्म खम् ।
135510 स्वप्नसंकल्पपुरवत्तत्तस्माद्भिद्यते कथम् ॥ २४ ॥
135511
135512 वर्णितरीत्या जगतोऽपि चित्त्वाद्ब्रह्म खमेव

135513 स्वप्नसंकल्पपुरवत्काकतालीयवदकस्मादन्यथा भाति। वस्तुतस्तु
135514 तज्जगत्तस्मात्कथं भिद्यते तद्भेदे सत्तास्फूर्त्यलाभेनालीकत्वप्रसङ्गादित्यर्थः॥
135515 २४॥
135516
135517 यथोर्म्यादि जले वृक्षे यथा वा शालभञ्जिका।
135518 यथा घटादयो भूमौ तथा ब्रह्मणि सर्गता॥ २५॥
135519
135520 स्तिमिते जले यथा ऊर्म्यादि। अनुत्कीर्णे वृक्षकाष्ठे शालभञ्जिका। भूमौ
135521 चानुद्भूता घटादयस्तथेत्यर्थः॥ २५॥
135522
135523 अनाकृतावसंस्थाने स्वच्छे यदनुभूयते।
135524 तत्तदेवात उदितं किंनामाहं जगन्ति किम्॥ २६॥
135525
135526 संस्थाने निरवयवे। दृष्टान्ते यथाभ्रे इति वक्ष्यति॥ २६॥
135527
135528 मरुतः स्पन्दवैचित्र्यं सत्तयैव यथा तथा।
135529 ब्रह्मणो निःस्वभावस्य जगदाद्यहमादि च॥ २७॥
135530
135531 सत्ताभेदादर्शनादपि तन्मात्रत्वमित्याह - मरुत इति। निःस्वभावस्य निरविद्यस्य
135532 ॥ २७॥
135533
135534 यथाभ्रे लक्ष्यते वृक्षगजवाजिमृगादिता।
135535 असन्निवेशाकृतिनि सर्गाहन्ते तथापरे॥ २८॥
135536
135537 गजवाजिमृगादिता तत्तदाकारः तादृशसंनिवेशाकृतिशून्ये अभ्रे आकाशे नीहारे
135538 वा॥ २८॥
135539
135540 सर्गोऽवयववद्भाति सर्व एव परे शिवे।
135541 एवं तदुपमां विद्धि कार्यकारणवद्यथा॥ २९॥
135542
135543 अवयववत् वृक्षशाखावत्। कार्यं वटादिः कारणं तद्बीजादिस्तद्वद्यथा लोके
135544 सूक्ष्मार्थोपमानानि प्रसिद्धानि एवं तयोः सर्गब्रह्मणोरप्युपमां विद्धि॥ २९॥
135545
135546 अन्तःशान्तमनायासमनुपाधि गतभ्रमम्।
135547 जगत्यसंभवादेव व्योमवत्सममास्यताम्॥ ३०॥
135548
135549 वर्णितरीत्या जगत्याः जगतः स्वव्यतिरिक्तस्यासंभवादेव व्योमवत्समं
135550 निर्विक्षेपमास्यताम्॥ ३०॥
135551
135552 न भवन्तो न च वयं न जगन्ति न खादयः।
135553 सन्ति शान्तमशेषेण ब्रह्मेदं निर्भरं स्थितम्॥ ३१॥
135554
135555 निर्भरमतिवेलम्। पूर्णमिति यावत्॥ ३१॥
135556
135557 अशेषेष्वविशेषेषु शान्ताशेषविशेषता।
135558 सत्या सैवाहमित्याशुत्यक्त्वा मोक्षाय भाव्यताम्॥ ३२॥
135559
135560 चिदतिरिक्तरूपानिरूपणादशेषेषु पदार्थेष्वविशेषेषु सत्सु विशेषभ्रमं त्यक्त्वा
135561 शान्ताशेषविशेषता परमार्थसत्या सा चिदेवाहमिति भाव्यताम्॥ ३२॥
135562
135563 वेदनं बन्धनं विद्धि विद्धि मोक्षमवेदनम्।
135564 यथास्थितं यथाचारं भव शान्तमवेदनम्॥ ३३॥

यथाचारं विद्वदाचारं भूमिकाभ्यासमनतिक्रम्य ॥ ३३ ॥

द्रष्टा न दृश्यतां याति चितिर्नायाति चेत्यताम् ।
चेत्याभावादजगति कः किं चेतयते कथम् ॥ ३४ ॥

तत्त्वबोधदार्ढ्ये जडार्थचेतनप्रसक्तिरेव नास्तीत्याह - द्रष्टेति ॥ ३४ ॥

द्रष्टृदृश्यदशाभावाज्जाग्रत्येव सुषुप्तिवत् ।
शरदाकाशकोशाभमसत्तोपममास्यताम् ॥ ३५ ॥

असत्तोपमं शून्यकल्पं न तु शून्यमेव ॥ ३५ ॥

तथैकब्रह्मचिद्रूपे पवनस्पन्दने यथा ।
अत्राचिद्बोधता सर्गो मोक्षो ब्रह्मैकबोधता ॥ ३६ ॥

ब्रह्मण्यज्ञानात्पवनस्पन्दवद्भेददर्शनम् । तथा च चिदचिद्भेददर्शनमेव
सर्गः ऐक्यदर्शनमेव तन्मोक्ष इति निष्कर्ष इत्यर्थः ॥ ३६ ॥

चित्स्पन्दो ब्रह्ममरुतो यत्र सर्ग इति स्मृतः ।
नात्र चित्स्पन्दनंन् यत्स्यान्निर्वाणं तदुदाहृतम् ॥ ३७ ॥

बीजमन्तर्यथा वेत्ति स्वरूपं पल्लवादिकम् ।
तथा महाचिदन्तस्थं स्वरूपं वेत्ति सर्गताम् ॥ ३८ ॥

भेददर्शनस्यैव सर्गतां दृष्टान्तैरुपपादयति - बीजमित्यादिना ॥ ३८ ॥

पत्रादिवेदनाद्बीजं यथा पत्रादि तिष्ठति ।
परा चित्सर्गसंवित्तिस्तथा भवति सर्गता ॥ ३९ ॥

वेदनसमकालमेव तद्भावस्थितावप्येतादृश एव दृष्टान्त इत्याह - पत्रादीति
॥ ३९ ॥

यथा भावविकाराभाश्चित्पराः सर्गतास्तथा ।
सर्वे बीजानि दृष्टान्तास्तद्रूपा एव तन्मयाः ॥ ४० ॥

वृक्षस्य षड्भावविकारा अप्यत्र दृष्टान्ता इत्याह - यथेति ।
भावविकाराणामाभाः क्रमिकप्रतिभासाः बीजादिरूपेण स्थितायाश्चित एव
विकारत्वात्तन्मयाः ॥ ४० ॥

निर्विकारपरब्रह्ममयं सर्वमिदं जगत् ।
निर्विकारमनाद्यन्तमेवं विद्धि निरामयम् ॥ ४१ ॥

निजसंकल्पमात्रात्मा निजसंकल्पनात्क्षयी ।
द्वैताद्वैतविकारोऽयं संकल्पनगरं यथा ॥ ४२ ॥

शून्यत्वाकाशयोर्भेदो यादृशोऽवगतस्त्वया ।
भेदं निरात्मकं विद्धि तादृशं ब्रह्मसर्गयोः ॥ ४३ ॥

महाचिद्रूपिणी शान्ता या सत्ता ब्रह्मणः पुरा ।
स्वतः सेयमहंत्वं च मानवोऽस्मीत्यबोधतः ॥ ४४ ॥

135617 पुरा पूर्वसिद्धा सैव अबोधतो मानबोऽस्मीत्याकारेणाहंता चाज्जगत्ता च
135618 भवतीत्यर्थः ॥ ४४ ॥
135619
135620 ब्रह्मण्यस्मिञ्जगद्रूपे न किंचिदपि जायते ।
135621 जातमप्यथ नष्टं च न नश्यत्यम्बुवीचिवत् ॥ ४५ ॥
135622
135623 जातमपि न जायते । नष्टमपि न नश्यति ॥ ४५ ॥
135624
135625 पदार्थब्रह्मरूपेण ब्रह्मैवात्मनि तिष्ठति ।
135626 अवयवीवावयवे खे खं वारीव वारिणि ॥ ४६ ॥
135627
135628 पदार्थरूपेण ब्रह्मरूपेण च स्थितं ब्रह्म आत्मन्यविकृतस्वभावे तिष्ठति । यथा
135629 वृक्षः स्वावयवे ॥ ४६ ॥
135630
135631 निमेषादर्धभागेन देशाद्देशान्तरस्थितौ ।
135632 यद्रूपं संविदो मध्ये स स्वभाव उपास्यताम् ॥ ४७ ॥
135633
135634 वास्तवी स्थितिस्तु चितो निर्विषयैवेत्याह - निमेषादिति । प्राग्व्याख्यातमेतत् ॥ ४७ ॥
135635
135636 संक्षुब्धमक्षुब्धमिति द्विरूपं संवित्स्वरूपं प्रवदन्ति सन्तः ।
135637 श्रेयः परं येन समीहसे त्वं तदेकनिष्ठो भव माऽमतिर्भूः ॥ ४८ ॥
135638
135639 हे राम सन्तो विवेकिनः शास्त्रज्ञाः । संवित्स्वरूपमेकं संक्षुब्धं
135640 सविवर्तमज्ञानुभवसिद्धमपरमक्षुब्धंन् निर्विवर्तं
135641 कूटस्थपूर्णानन्दैकरसमिति द्विरूपं प्रवदन्ति । तयोर्मध्ये येन त्वं परं
135642 श्रेयः परमपुरुषार्थं समीहसे तदेकनिष्ठो भव । अपरीक्ष्य यत्किंचिद्ग्राही
135643 अमतिरविवेकी मा भूरित्यर्थः ॥ ४८ ॥
135644
135645 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वाणप्रकरणे उत्तरार्धे
135646 परमार्थयोगोपदेशो नाम चतुस्त्रिंशः सर्गः ॥ ३४ ॥
135647
135648 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
135649 परमार्थयोगोपदेशो नाम चतुस्त्रिंशः सर्गः ॥ ३४ ॥
135650
135651
135652 पञ्चत्रिंशः सर्गः ३५
135653
135654 श्रीवसिष्ठ उवाच ।
135655
135656 देशाद्देशान्तरं दूरं प्राप्तायाः संविदः क्षणात् ।
135657 यद्रूपममलं मध्ये परं तद्रूपमात्मनः ॥ १ ॥
135658
135659 सप्रपञ्चाप्रपञ्चात्मवस्त्वखण्डैक्यदृष्टये ।
135660 सत्यानृतोभयाभासं ब्रह्मरूपं प्रपञ्च्यते ॥
135661
135662 संक्षुब्धमक्षुब्धमिति द्विरूपं ब्रह्म विरोधाभासोक्तिभिः
135663 प्रपञ्चयिष्यन्नक्षुब्धरूपं प्रथमं प्रागुक्तोपायपरिचितं
135664 तन्निष्ठताविधानाय स्मारयति - देशादिति । क्रमिकविषयद्वयान्तरालकाले
135665 यन्निर्विषयं रूपं तत्परमक्षुब्धमित्यर्थः ॥ १ ॥
135666
135667 गच्छञ्छृण्वन्स्पृशञ्जिघ्रन्नुन्मिषन्निमिषन्हसन् ।
135668 नूनंन् निरामयत्वाय नित्यमेतन्मयो भव ॥ २ ॥

135669
135670 एतन्मयो निर्विषयचिन्मात्रनिष्ठो नूनमवश्यं भव ॥ २ ॥
135671
135672 तत एव निराभासात्सत्यान्निर्वासनैषणात् ।
135673 यथास्थितं यथाचारमचलाऽमरशैलवत् ॥ ३ ॥
135674
135675 यथास्थितं जीवन्मुक्तस्थितिमनतिक्रम्य यथाचारं स्वकुलाचारमप्यनतिक्रम्य
135676 व्यवहरन्नपि ततस्तादृशनिष्ठायाः सकाशादचला नचलैव । नञर्थोऽयमकारो न
135677 नञ् । अचला तन्निष्ठतैव विद्येत्यर्थः ॥ ३ ॥
135678
135679 एतद्रूपमविद्यायाः प्रेक्षिता यन्न लभ्यते ।
135680 प्रेक्षिता लभ्यते चेत्सा तद्विद्यैव पराभवत् ॥ ४ ॥
135681
135682 वक्ष्यमाणोपयोगितया तद्विरुद्धामविद्यां लक्षयति - एतदिति । प्रेक्षिता
135683 प्रमाणैर्विमृष्टा ॥ ४ ॥
135684
135685 अविद्यासंभवाच्चेत्यचित्त्वे संभवतः क्व किम् ।
135686 चेत्यते कथमेवान्तः शान्तिरेव बलोदिता ॥ ५ ॥
135687
135688 चेत्यचित्त्वे चिच्चेत्यभेदौ । भेदासंभवे च स्वान्तरेव कथं चेत्यते चेतनाय
135689 व्याप्रियते । अतो विमर्शे शान्तिर्निर्वेद्यवेदनचिन्मात्रस्थितिरेव बलादुदितेत्यर्थः ॥ ५ ॥
135690
135691 सत्यं ब्रह्म जगच्चैकं स्थितमेकमनेकवत् ।
135692 सर्वं वाऽसर्ववद्भाति शुद्धंन् चाशुद्धवत्ततम् ॥ ६ ॥
135693
135694 विद्याविद्यामिश्रितया आन्तरालिकभूमिकारूढविवेकिदृष्ट्या तु ब्रह्म
135695 नियतैकरूपमप्यनियतविरुद्धनानास्वभावमिव तिष्ठतीति विरोधाभासैः
135696 प्रमाणयुक्त्यनुभवादिभिश्चासर्गसमाप्तेस्तत्प्रपञ्चयति - सत्यमित्यादिना ।
135697 ब्रह्म जगच्च सत्यं परमार्थत एकमेव तदेकमेव अनेकवत्तद्विरुद्धरूपेण
135698 स्थितमिति योज्यम् । एवमग्रेऽपि । सर्वं पूर्णम् ॥ ६ ॥
135699
135700 अशून्यं शून्यमिव च शून्यंन् वाऽशून्यवत्स्फुटम् ।
135701 स्फारमस्फारमिव तदस्फारं स्फारसन्निभम् ॥ ७ ॥
135702
135703 शून्यमिव प्रलये । अशून्यवत्सर्गे । कालतो देशतस्तु स्फारम् ॥ ७ ॥
135704
135705 अविकारं विकारीव समं शान्तमशान्तवत् ।
135706 सदेवासदिवादृश्यं तदेवातदिवोदितम् ॥ ८ ॥
135707
135708 अदृश्यं द्रष्टुमशक्यमित्यसदिव ॥ ८ ॥
135709
135710 अविभागं विभागीव निर्जाड्यं जडवद्गतम् ।
135711 अचेत्यंन् चेत्यभावीव निरंशं सांशशोभनम् ॥ ९ ॥
135712
135713 सांशमिव शोभनं शोभमानम् ॥ ९ ॥
135714
135715 अनहं सोऽहमिव तदनाशमिव नाशवत् ।
135716 अकलङ्कं कलङ्कीव निर्वेद्यं वेद्यवाहिवत् ॥ १० ॥
135717
135718 नाशवदिव । वेद्यं वहति प्रथनेन निर्वहति तच्छीलमिव ॥ १० ॥
135719
135720 आलोकि ध्वान्तघनवन्नववच्च पुरातनम् ।

135721 परमाणोरपि तनु गर्भीकृतजगद्गणम् ॥ ११ ॥
135722
135723 आलोकि स्वप्रकाशम् । राहोः शिर इतिवद्भेदकल्पनादिभिः ॥ ११ ॥
135724
135725 सर्वात्मकमपि त्यक्तदृष्टं कष्टेन भूयसा ।
135726 अजालमपि जालाढ्यं चाशेषवदनेकधा ॥ १२ ॥
135727
135728 भूयसा यज्ञदानतपश्चित्तशुद्धिवैराग्यश्रवणमननादिना कष्टेन
135729 पुरुषप्रयत्नेन त्यक्तं दृष्टं दृश्यजातं येन । अनेकधा स्थितमप्यशेषवत्
135730 द्वितीयपरिशेषशून्यम् ॥ १२ ॥
135731
135732 निर्मायमपि मायांशुमण्डलामलभास्करम् ।
135733 ब्रह्म विद्धि विदांनाथमपामिव महोदधिम् ॥ १३ ॥
135734
135735 मायालक्षनस्यांशुमण्डलस्य रश्मिजालस्यामलभास्कररूपम् । वित्
135736 वेदनमात्रस्वरूपमपि । अप्यर्थे हिशब्दः । विदां सर्ववेदनानां नाथं
135737 स्वामिभूतमिव सर्वज्ञम् ॥ १३ ॥
135738
135739 जगद्रत्नमहाकोशं तुलायां तूलकाल्लघु ।
135740 मायामरीचिशशिनमपि नेक्षणगोचरम् ॥ १४ ॥
135741
135742 ब्रह्माण्डात्मना जगद्रत्नमहाकोशम् । गुरुतममपि विवेकतुलायां तोलने
135743 गुरुत्वमात्रस्यानृतत्वात्तूललवादपि लघु ॥ १४ ॥
135744
135745 अनन्तमपि निष्पारं न च क्वचिदपि स्थितम् ।
135746 आकाशे वनविन्यासनगनिर्माणतत्परम् ॥ १५ ॥
135747
135748 अनन्तं कालतः निष्पारं देशतः । तथापि क्वचिद्देशे काले वा नावस्थितम् । आकाशे
135749 शून्यदेशेऽपि ॥ १५ ॥
135750
135751 अणीयसामणीयांसं स्थविष्ठं च स्थवीयसाम् ।
135752 गरीयसां गरिष्ठं च श्रेष्ठं च श्रेयसामपि ॥ १६ ॥
135753
135754 अकर्तृकर्मकरणमकारणमकारकम् ।
135755 अन्तःशून्यतयैवैतच्चिराय परिपूरितम् ॥ १७ ॥
135756
135757 परिपूरितं कर्त्रादिकारकैः ॥ १७ ॥
135758
135759 जगत्समुद्गकमपि नित्यं शून्यमरण्यवत् ।
135760 अनन्तशैलकठिनमप्याकाशलवान्मृदु ॥ १८ ॥
135761
135762 प्रत्येकं प्रत्यहं प्रायः पुराणं पेलवं नवम् ।
135763 आलोकमन्धकाराभंन् तमस्त्वालोकमाततम् ॥ १९ ॥
135764
135765 प्रत्येकं प्रतिवस्तु । प्रत्यहं प्रतिकालम् । जगत्तिरोभावकत्वात्तमः । अप्यर्थे तु
135766 शब्दः ॥ १९ ॥
135767
135768 प्रत्यक्षमपि दुर्लक्ष्यंन् परोक्षमपि चाग्रगम् ।
135769 चिद्रूपमेव च जडं जडमेव चिदात्मकम् ॥ २० ॥
135770
135771 अहमेवानहंभावमनहं वाऽहमेव च ।
135772 अन्यदेव तदेवाहमहमेवान्यदेव तत् ॥ २१ ॥

135773
135774 अनहंन् युष्मदर्थः। अन्यत् इदमर्थं इत्यपौनरुक्त्यम्॥ २१॥
135775
135776 अस्य पूर्णार्णवस्यान्तरिमे त्रिभुवनोर्मयः।
135777 स्फुरन्त इव तिष्ठन्ति स्वभावद्रवतात्मकाः॥ २२॥
135778
135779 उक्तेष्वर्थेषु मायामात्रत्वमभिप्रेत्योपपत्तीराह - अस्येत्यादिना॥ २२॥
135780
135781 बिभर्ति सर्वमङ्गस्थं तुषारमिव शुक्लताम्।
135782 भाति सर्वस्त्वनेनैव तुषारेणेव शुक्लता॥ २३॥
135783
135784 अदेशकालावयवोऽप्येष देवो दिवानिशम्।
135785 असज्जगत्तनोतीव यथा वारितरङ्गकम्॥ २४॥
135786
135787 एतस्मिन्विकसन्तीमा विपुलाकाशकानने।
135788 जगज्जरठमञ्जर्यः प्रसरत्पत्रपञ्चकाः॥ २५॥
135789
135790 प्रसरन्ति दलस्थानीयानि पञ्चभूतलक्षणपञ्चकानि यासाम्॥ २५॥
135791
135792 एष स्वप्रतिबिम्बस्य स्वयमालोकनेच्छया।
135793 अत्यन्तनिर्मलाकारः स्वयं मुकुरतां गतः॥ २६॥
135794
135795 स्वप्रतिबिम्बस्य वर्णितस्य जीवजगद्रूपस्याकारान्तरस्य। मुकुरतां दर्पणताम्।
135796 अपरिच्छिन्नब्रह्मसंविदि वृक्षो गगनोदुम्बरस्तदीयफलकल्पस्य ब्रह्माण्डस्य
135797 स्वेच्छाकल्पिते त्रैलोक्यावयवे उज्ज्वला दीप्यमानाश्चन्द्रसूर्यादयस्तेभ्य
135798 उद्यच्चक्षुरादिकरणजालं च जीवभूतस्यात्मनः सर्गोपलम्भे रूपादिदर्शने
135799 उपकरणतया चमत्कुर्वन्तीत्यर्थः॥ २६॥
135800
135801 व्योमवृक्षफलस्यास्य स्वेच्छावयव उज्ज्वलाः।
135802 सर्गोपलम्भ उद्यच्च चमत्कुर्वन्ति संविदि॥ २७॥
135803
135804 अन्तस्थेन बहिष्ठेन नानानानातयात्मनि।
135805 एष सोऽन्तर्बहिर्भाति भावाभावविभावया॥ २८॥
135806
135807 स एष परमात्मा अन्तस्थेन वासनामयप्रपञ्चेन बहिष्ठेन भुवनात्मना
135808 जाग्रत्स्वप्नयोर्नानातया सुषुप्तावनानातया च भावाभावविभावनया
135809 स्वयमेवान्तर्बहिश्च भाति नान्यदतोऽणुमात्रमप्यस्तीत्यर्थः॥ २८॥
135810
135811 एतद्रूपा पदार्थश्रीरेतस्मिन्नेतदिच्छया।
135812 चमत्करोत्येतदर्थं जिह्वेव स्वास्यकोटरे॥ २९॥
135813
135814 एतदेव प्रपञ्चयति - एतद्रूपेत्यादिना॥ २९॥
135815
135816 अस्याम्भसो द्रवत्वं यत्तदिदं जगदुच्यते।
135817 संवित्स्वादूपलम्भाङ्गं भुवनावर्तवृत्तिमत्॥ ३०॥
135818
135819 संविदैव स्वादु यथा स्यात्तथा उपलभ्यन्त इत्युपलम्भान्यङ्गानि
135820 रूपरसाद्येकदेशा यस्य॥ ३०॥
135821
135822 शाम्यत्यत्र पदार्थश्रीः सर्वासामेव भास्वति।
135823 एतस्मादेव चोदेति स्वालोक इव तेजसः॥ ३१॥
135824

135825 सर्वासामेव सूर्यचन्द्राग्निकरणादिभासां रूपादिपदार्थश्रीरत्रास्मिन्नेव भास्वति
135826 सुषुप्तप्रलययोः शाम्यति जाग्रत्स्वप्रयोश्चैतस्मादेवोदेति |यथा सूर्यादितेजसः
135827 स्वालोकः प्रभामण्डलम् || ३१ ||
135828
135829 इदमेव जगत्सर्वं शुक्लत्वं तुहिने यथा |
135830 अतए एताः प्रवर्तन्ते विद इन्दोरिवांशवः || ३२ ||
135831
135832 इदं ब्रह्म | अतोऽस्या विदश्चिद्रूपब्रह्मणः सकाशात् | एताः पदार्थश्रियः | ३२ ||
135833
135834 एतस्माद्रङ्गतोऽनङ्गाज्जगच्चित्रमिदं स्थितम् |
135835 विद्ध्यभावविकारादिशान्तमेतन्मयं ततम् || ३३ ||
135836
135837 अनङ्गान्निरवयवाद्रङ्गतो रञ्जकद्रव्यात् |
135838 जन्मादिभावविकारैरादिपदात्स्वगतवैचित्र्यैश्च शून्यम् | एतन्मयं चिन्मयमेव
135839 विद्धि || ३३ ||
135840
135841 अस्माद्वनतरोरेताः स्वरूढा गगनाङ्गणे |
135842 दृश्यशाखाः प्रवर्तन्ते जगज्जालगुलुच्छकाः || ३४ ||
135843
135844 व्ययोदयवती नूनमत्र दृश्यतरङ्गिणी |
135845 नानातानन्तकुसुमा वहत्यविचलाचले || ३५ ||
135846
135847 अत्र एतस्मिन्नविचले अचले पर्वते व्ययोदयौ ह्रासवृद्धी तद्वती दृश्यलक्षणा
135848 तरङ्गिणी यदी वहति || ३५ ||
135849
135850 अस्मिन्व्योमात्मके रङ्गे भुवनाभिनयभ्रमैः |
135851 नृत्यत्यविरतारम्भं वारैर्नियतिनर्तकी || ३६ ||
135852
135853 वारैः कल्पभेदरूपैर्वासरैर्नियतोत्सववासरैश्च || ३६ ||
135854
135855 जगत्कोटिमहाकल्पकल्पोन्मेषनिमेषणः |
135856 विताने नाट्यते भूयो जन्यते कालबालकः || ३७ ||
135857
135858 तया नियतिनर्तक्या ब्रह्मरङ्गमायाविताने काललक्षणः स्वबालकः पुत्रो
135859 भूयोभूयो नाट्यते उपसंहृत्य च भूयो जन्यते | स कीदृशः | जगतां
135860 ब्रह्माण्डानां कोटयो महाप्रलया अवान्तरप्रलयाश्च नेत्रोन्मेषनिमेषणे यस्य
135861 तथाविधः || ३७ ||
135862
135863 उद्यत्स्वपि जगत्स्वेष शान्तमेवावतिष्ठते |
135864 अनिच्छ एव मुकुरः प्रतिबिम्बशतेष्विव || ३८ ||
135865
135866 अनिच्छ इच्छादिविक्रियाशून्यः || ३८ ||
135867
135868 भूतानां वर्तमानानां सर्गाणां संभविष्यताम् |
135869 एषोऽकारणकं बीजं सर्गाणामिव कारणम् || ३९ ||
135870
135871 भौतिकसर्गाणां कारणं भूतपञ्चकमिव || ३९ ||
135872
135873 अस्योन्मेषो जगल्लक्ष्मीर्निमेषः प्रलयागमः |
135874 अनुन्मेषनिमेषोऽसावात्मन्येवावतिष्ठते || ४० ||
135875
135876 उन्मेषो निमेषश्च समा यस्य | निर्मायस्त्वसौ अनुन्मेषनिमेषः | अत एव

135877 स्वात्मन्येवावतिष्ठते ॥ ४० ॥
135878
135879 उद्यन्त्यमूनि सुबहूनि महामहान्ति सर्गागमप्रलयजन्मदशा जगन्ति ।
135880 सर्वाणि तान्ययमपारस्वरूप एव प्रस्पन्दनानि मरुदेव यथास्व शान्तम् ॥ ४१ ॥
135881
135882 परिमाणतो महान्ति च तानि कालसंख्यावैभवादितो महान्ति च महामहान्ति जगन्ति
135883 ब्रह्माण्डास्तेषां तदन्तर्गतपदार्थानां च सर्गः अगमनमगमः स्थितिः
135884 प्रलयश्च तत्र प्राणिनां जन्म देहपरिग्रहः बाल्यादिदशा जाग्रदादिदशा
135885 उत्कर्षापकर्षदशाश्चेत्यमूनि चिदाकाशे उद्यन्ति तानि
135886 सर्वाण्यपारोऽपरिच्छिन्नस्वरूपश्चिदाकाश एव यथा मरुत्प्रस्पन्दनानि मरुदेव न
135887 वस्त्वन्तरमिति बुद्ध्वाशान्तमास्वेत्यर्थः ॥ ४१ ॥
135888
135889 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाणप्रकरणे उ०
135890 परब्रह्मस्वरूपवर्णनं नाम पञ्चत्रिंशः सर्गः ॥ ३५ ॥
135891
135892 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
135893 परब्रह्मस्वरूपवर्णनं नाम पञ्चत्रिंशः सर्गः ॥ ३५ ॥
135894
135895 षट्त्रिंशः सर्गः ३६
135896
135897 श्रीवसिष्ठ उवाच ।
135898
135899 चमत्कुर्वन्त्यथानर्था आवर्ता इव वारिणि ।
135900 एकस्वभावाः सकला यथा वारितरङ्गकाः ॥ १ ॥
135901
135902 तुच्छस्यानिच्छतो भोगो न बन्धायेति वर्ण्यते ।
135903 इच्छैव परमो बन्धस्तत्त्यागान्मुक्तिरित्यपि ॥
135904
135905 इह सर्वे पदार्था विरुद्धानेकरूपा अविरुद्धैकरूपाश्च भासन्ते तत्र प्रथमं
135906 रूपं रागद्वेषाद्युद्भवेन दुःखहेतुत्वादनर्थरूपं द्वितीयं तु तदुपशमेन
135907 मोक्षोपयोगीति दर्शयति - चमत्कुर्वन्तीति । सकलाः पदार्था वारिण्यावर्ता इव
135908 भिन्नरूपाः प्रथमं चमत्कुर्वन्ति इच्छोत्पादनेन चित्तं भ्रमयन्ति ।
135909 अथानन्तरमनर्था रागद्वेषनरकादिरूपाः पर्यवस्यन्ति । यथा तरङ्गकाः वारि
135910 जलमात्रं तथा एकस्वभावास्तु न चमत्कुर्वन्ति नाप्यनर्था इति भावः ॥ १ ॥
135911
135912 सर्वस्यैवास्य विश्वस्य निर्ज्ञेयज्ञेयरूपिणी ।
135913 परमाकाशतारूपं परोपशमसंश्रया ॥ २ ॥
135914
135915 किं तदविरुद्धं रूपं येन रूपेणैकस्वभावास्तद्दर्शयति - सर्वस्यैवेति ।
135916 सर्वस्याप्यस्य विश्वस्य सत्तामात्ररूपा परमाकाशतैव तादृशं रूपं सा च
135917 सर्वेभ्यो ज्ञेयेभ्यो विशेषरूपेभ्यो निष्कृष्य ज्ञेयं यत्सन्मात्रं तद्रूपिणी अत एव
135918 परेण समाधिलक्षणेनोपशमेन संश्रयो यस्यास्तथाविधा ॥ २ ॥
135919
135920 बालचिन्ता पुरोव्योम्नि न किंचिदपि मे यथा ।
135921 तथेदं तत्त्वतो विश्वं सत्यं तु शिशुचेतसि ॥ ३ ॥
135922
135923 प्रसिद्धे व्योम्नि बालबुद्धिवेद्यं यक्षपिशाचादिभीषणरूपं प्रौढबुद्धिवेद्यं
135924 तन्निष्कृष्टं शुद्धरूपं च दृष्टान्ततया प्रसिद्धमित्याह - बालेति । बालस्य
135925 चिन्ता चिन्तनकल्पितरक्षःपिशाचादिरूपं प्रौढस्य दृष्ट्या यथा न किंचिदस्ति तथा
135926 विदुषो मे दृष्ट्या विश्वं नास्ति ॥ ३ ॥
135927
135928 अरूपालोकमननं शिलापुत्रकसैन्यवत् ।

135929 रूपालोकमनस्कारा भान्ति केवात्र विश्वता ॥ ४ ॥
135930
135931 शिलापुत्रकसैन्यवदरूपालोकमननमेव विश्वं विद्वद्दृशा तत्र विश्वता केव।
135932 अज्ञदृशा तु रूपालोकमनस्कारा भान्ति ॥ ४ ॥
135933
135934 रूपालोकमनस्कारसारश्चिन्मात्रतां विना।
135935 न लभ्यतेऽसावपरं व्योमेवात्र क्व विश्वता ॥ ५ ॥
135936
135937 रूपालोकमनस्कारयोरपि तत्त्वतो विमर्शे चिन्मात्रातिरिक्तं रूपं दुर्लभं दूरे
135938 ताभ्यां विश्वतासिद्धिरित्याह - रूपेति ॥ ५ ॥
135939
135940 विदो वित्त्वं जगद्भ्रान्तिरवित्त्वं तु न विभ्रमः।
135941 वित्त्वावित्त्वे त्वदायत्ते चित्ताचित्ते यथा तव ॥ ६ ॥
135942
135943 तथा च विदो वेदितृपुरुषस्य वित्त्वमेव जगद्भ्रान्तिः अवेदितृत्वमेव न विभ्रमः
135944 सर्वविभ्रमशन्तिरिति फलितम्। तच्च स्मृत्यस्मृतिवत्स्वायत्तमित्यर्थः ॥ ६ ॥
135945
135946 परमाकाशरूपत्वाच्चिद्व्योम्नो वितताकृतेः।
135947 न स्वभावविपर्यासः कश्चित्संभवति क्वचित् ॥ ७ ॥
135948
135949 अपरं व्योमेव इति यदुक्तं तद्विशदयति - परमाकाशेति। न हि चिज्जडीभवति न वा
135950 व्योम मूर्तिर्भवतीति भावः ॥ ७ ॥
135951
135952 तन्मयस्यास्य विश्वस्य न स्वभावविकारिता।
135953 विद्यते प्रेक्ष्यमाणापि किमु साम्य भविष्यति ॥ ८ ॥
135954
135955 ब्रह्मदर्शनबाध्यत्वादपि जगन्न ब्रह्मविकार इत्याह - तन्मयस्येति। या यत्र
135956 प्रेक्ष्यमाणापि न विद्यते बाध्यते अस्य सा किमु भविष्यति उत्पत्स्यते स्थास्यते वा।
135957 नैतत्संभावितमित्यर्थः ॥ ८ ॥
135958
135959 सर्वं चिद्व्योम चैवेदं न सत्त्वमहमित्यपि।
135960 विकाराद्यस्ति न ज्ञप्तावज्ञप्तिं न लभेत्क्वचित् ॥ ९ ॥
135961
135962 अभिमन्तव्यविकारनिरासन्यायेनाभिमन्तृविकारोऽपि निरसनीय इत्याह - सर्वमिति।
135963 विकार आदिपदाद्बाधश्च ज्ञप्तौ चिदात्मनि नास्त्यतः क्वचिदप्यज्ञप्तिं चिद्व्यतिरिक्तम्
135964 ॥ ९ ॥
135965
135966 सर्वं शान्तं शिवं शुद्धं त्वमहंतादिविभ्रमम्।
135967 न किंचिदपि पश्यामि व्योमजं काननं यथा ॥ १० ॥
135968
135969 संविदाकाशशून्यत्वं यत्तद्विद्धि वचो मम।
135970 इदं त्वत्संविदाकाशे स्वयमात्मनि तिष्ठति ॥ ११ ॥
135971
135972 इत्थं च मदीयमुपदेशवचो यत्तदपि संविदाकाशरूपं शून्यत्वं विद्धि।
135973 यस्मादिदं वचस्त्वत्संविदाकाशरूपे आत्मन्येव स्वयं तिष्ठति न जडस्वरूपे।
135974 शब्दतत्त्वस्यापि चिद्रूपस्फोटात्मनैव निष्कर्षे पर्यवसानादिति भावः ॥ ११ ॥
135975
135976 पदमाहुः परं सद्यदनिच्छोदयमासितम्।
135977 पाषाणपुरुषस्येव चित्रस्थस्येव चासनम् ॥ १२ ॥
135978
135979 एवं मेयमातृमानानां चिन्मात्रत्वे सिद्धे इच्छाविषयादेरभावादनिच्छोदयं
135980 यदासितमवस्थानं तदेव परमं पदमाहुः ॥ १२ ॥

135981
135982 स विश्रान्तमना मौनी यस्य प्रकृतकर्मसु ।
135983 स्पन्दो दारुनरस्येव विगतेच्छमनाकुलम् ॥ १३ ॥
135984
135985 इच्छाभावेऽपि जीवनहेतुव्यवहारसिद्धिमाह - स इति ॥ १३ ॥
135986
135987 अन्तःशून्यं बहिःशून्यं विरसं गतवासनम् ।
135988 जगद्वेणोरिव ज्ञस्य जीवतो भाति जीवनम् ॥ १४ ॥
135989
135990 एवं व्यवहारेण जीवतो ज्ञस्य कथं जगद्भाति तदाह - अन्तरिति ।
135991 वेणोर्वंशनालस्येवान्तर्बहिश्च शून्यम् ॥ १४ ॥
135992
135993 यस्य न स्वदते दृश्यमदृश्यं स्वदते हृदि ।
135994 सबाह्याभ्यन्तरं शान्तः स वितीर्णो भवार्णवात् ॥ १५ ॥
135995
135996 न स्वदते न रोचते ॥ १५ ॥
135997
135998 उच्यन्तां शब्दजालानि वंशवद्गतवासनम् ।
135999 रसेनानङ्गलग्नेन प्रकृतानन्यचोदनैः ॥ १६ ॥
136000
136001 अस्वदनमेव प्रतीन्द्रियविषयं प्रपञ्चयंस्तदुत्तीर्णतां दर्शयति -
136002 उच्यन्तामित्यादिना । प्रकृतः प्रस्तुतः
136003 प्रारब्धशेषक्षयस्तदुपयुक्तान्यशब्दोच्चारणरहितैर्व्यवहारैरनङ्गलग्नेन
136004 व्यवहाराङ्गदेहादावहंममतासंबन्धरहितेन रसेन माधुर्येण
136005 वंशवन्मुरलीवद्गतवासनं यथा स्यात्तथा शब्दजालान्युच्यन्तामुच्चार्यन्तां
136006 वागिन्द्रियेणेत्यर्थः ॥ १६ ॥
136007
136008 स्पृश्यन्तां स्पर्शनीयानि यथाप्राप्तान्यवासनम् ।
136009 कूटागारवदक्षुब्धमनिच्छममनोदयम् [मनोदयमित्यार्षम् ।] ॥ १७
136010 ॥
136011
136012 एवं त्वगिन्द्रियेण त्वया नटभटवेश्यादिकूटनिवासगृहेणेवानिच्छममनोदयं
136013 च स्पर्शनीयानि स्रक्चन्दनादीनि स्पृश्यन्ताम् ॥ १७ ॥
136014
136015 स्वाद्यन्तां रसजालानि विगतेच्छाभयैषणम् ।
136016 अपरागाभिलषणं यथाप्राप्तानि दर्विवत् ॥ १८ ॥
136017
136018 दृश्यन्तां रूपजालानि पुनः प्राप्तान्यवासनम् ।
136019 अरसं निर्मनोमानमगर्वं चित्रनेत्रवत् ॥ १९ ॥
136020
136021 अरसमनिच्छम् । निर्मनोमानं मनो मीयते निर्मीयते येन वासनाजालेन तद्रहितम् ।
136022 अगर्वं निरभिमानम् । चित्रलिखितपुरुषादिनेत्रवत् ॥ १९ ॥
136023
136024 जिघ्रयन्तांन् गन्धपुष्पाणि विगतेच्छमवासनम् ।
136025 स्पन्दबन्धोपलघ्नानि त्यागाय वनवातवत् ॥ २० ॥
136026
136027 जिघ्रयन्तां घ्रायन्ताम् । अशिति जिघ्रादेशश्छान्दसः । जिघ्रन्तां इति पाठे
136028 विकरणव्यत्ययः । अपानोपनीतं [अपानोपनीतमिति ऊर्ध्वं प्राण उन्नयत्यपानः
136029 प्रत्यगस्यतीति कठवल्लीश्रुत्यनुरोधेनेति ज्ञेयम् ।] गन्धं स्पन्देन
136030 बध्नात्यसङ्गपाप्मनेति स्पन्दबन्धो घ्राणं तदुपलघ्नानि । त्यागाय न तु रागाय ॥
136031 २० ॥
136032

136033 इति चेद्विरसत्वेन बोधयित्वा चिकित्सिताः।
136034 न भोगरोगास्तद्वच्च शान्त्यै नास्ति कथैव च॥ २१॥
136035
136036 इति उक्तरीत्या अनुक्तेष्वपि कर्मेन्द्रियविषयेषु तद्वत्प्राग्वत् चाज्ज्ञानेन्द्रियवत्त
136037 विरसत्वेन निःसारत्वेन मनो बोधयित्वा भोगरोगाश्चेन्न चिकित्सितास्तदा दुःखशान्त्यै
136038 कथैव नास्ति चादनर्थपरम्परोद्भवश्चास्तीत्यर्थः॥ २१॥
136039
136040 यः स्वादयन्भोगविषं रतिमेति दिने दिने।
136041 सोऽग्नौ स्वमूर्तिं ज्वलिते कक्षमक्षयमुज्झति॥ २२॥
136042
136043 तदेवाह - य इति। कक्षं तृणपूलम्। अक्षयमखण्डितम्। अजस्रमिति यावत्। उज्झति
136044 क्षिपति॥ २२॥
136045
136046 निरिच्छत्वं समाधानमाहुरागमभूषणाः।
136047 यथा शाम्येन्मनोऽनिच्छं नोपदेशशतैस्तथा॥ २३॥
136048
136049 अतो भोगेच्छात्याग एव म् मनःशान्तौ मुख्यो हेतुरिति स्तौति - निरिच्छत्वमिति॥ २३॥
136050
136051 इच्छोदयो यथा दुःखमिच्छाशान्तिर्यथा सुखम्।
136052 तथा न नरके नापि ब्रह्मलोकेऽनुभूयते॥ २४॥
136053
136054 नापि ब्रह्मलोके इति। तथा चोक्तं ययातिना - यच्च कामसुखं लोके यच्च दिव्यं
136055 महत्सुखम्। तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्। इति॥ २४॥
136056
136057 इच्छामात्रं विदुश्चित्तं तच्छान्तिर्मोक्ष उच्यते।
136058 एतावन्त्येव शास्त्राणि तपांसि नियमा यमाः॥ २५॥
136059
136060 एतावन्त्येतावन्मात्रपर्यवसितानि॥ २५॥
136061
136062 यावती यावती जन्तोरिच्छोदेति यथा यथा।
136063 तावती तावती दुःखबीजमुष्टिः प्ररोहति॥ २६॥
136064
136065 यथा यथेच्छा तनुतां याति जन्तोर्विवेकतः।
136066 तथा तथोपशाम्यन्ति दुःखचिन्ताविषूचिकाः॥ २७॥
136067
136068 यथा यथेच्छा घनतां याति लोकस्य रागतः।
136069 तथा तथा विवर्धन्ते दुःखचिन्ताविषोर्मयः॥ २८॥
136070
136071 लोकस्य जनस्य॥ २८॥
136072
136073 इच्छा चिकित्स्यते व्याधिर्न स्वयत्नौषधेन चेत्।
136074 तदत्र बलवन्मन्ये विद्यते नौषधान्तरम्॥ २९॥
136075
136076 तच्चिकित्सायां च धैर्यलक्षणः पुरुषप्रयत्न एवौषधं नान्यदित्याह - इच्छेति
136077 ॥ २९॥
136078
136079 इच्छोपशमनं कर्तुं यदि कृत्स्नं न शक्यते।
136080 स्वल्पमप्यनुगन्तव्यंन् मार्गस्थो नावसीदति॥ ३०॥
136081
136082 स्वल्पमपीति। अल्पाल्पेच्छानिरोधाभ्यासक्रमेण सर्वत उपशमोद्युक्तेन
136083 भाव्यमित्यर्थः। मार्गस्थः सन्मार्गप्रविष्टः॥ ३०॥
136084

136085 यस्त्विच्छातानवे यत्नं न करोति नराधमः |
136086 सोऽन्धकूपे स्वमात्मानं दिनानुदिनमुज्झति || ३१ ||
136087
136088 दिनानुदिनं प्रतिदिनम् || ३१ ||
136089
136090 दुःखप्रसवशालिन्या बीजमिच्छैव संसृतेः |
136091 सम्यग्ज्ञानाग्निदग्धा सा न भूयः परिरोहति || ३२ ||
136092
136093 आत्यन्तिकेच्छाबाधस्तु ज्ञानेन तन्मूलनाशादेवेत्याह - दुःखेति || ३२ ||
136094
136095 इच्छामात्रं हि संसारो निर्वाणं तदवेदनम् |
136096 इच्छानुत्पादने यत्नः  क्रियतां किं वृथाभ्रमैः [वृथाश्रमैः
136097 इत्युभयत्र पाठः |] || ३३ ||
136098
136099 तस्या अवेदनमसत्त्वापादनम् | विद सत्तायाम् भावे ल्युट् | वृथाभ्रमैर्यत्नान्तरैः
136100 || ३३ ||
136101
136102 शास्त्रोपदेशगुरवः प्रेक्ष्यन्ते किमनर्थकम् |
136103 किमिच्छाननुसंधानसमाधिर्नाधिगम्यते || ३४ ||
136104
136105 इच्छाप्रशमनयत्नाभावे शास्त्रादिवैयर्थ्यमपीत्याह - शास्त्रेति |
136106 समाधिश्चित्तसमाधानोपायः किं नाधिगम्यते किमर्थं नाश्रीयते || ३४ ||
136107
136108 यस्येच्छाननुसंधानमात्रे दुःसाध्यता मतेः |
136109 गुरूपदेशशास्त्रादि तस्य नूनं निरर्थकम् || ३५ ||
136110
136111 मतेः स्वविवेकात् || ३५ ||
136112
136113 इच्छाविषविकारिण्यामन्त एव नृणामलम् |
136114 दुःखप्रसरकारिण्या हरिण्या जन्म जङ्गले || ३६ ||
136115
136116 इच्छाविषविकारिण्यं संसृतौ नृणामन्तो मृत्युरेव | यथा हरिण्या
136117 व्याघ्रादिसंकुले जङ्गले मृत्युरेव तद्वत् || ३६ ||
136118
136119 न वालीक्रियते त्वीषदात्मज्ञानाय चेदसौ |
136120 इच्छोपशान्तिः क्रियतां तयालं तदवाप्यते || ३७ ||
136121
136122 असौ ना इच्छया चेन्न बालीक्रियते बालवच्चपलो न क्रियते तदा अत्मज्ञानाय तु ईषदेव
136123 प्रयत्नः अत इच्छोपशान्तिरेव क्रियतां तयैव तज्ज्ञानमवाप्यते || ३७ ||
136124
136125 निरिच्छतैव निर्वाणं सेच्छतैव हि बन्धनम् |
136126 यथाशक्ति जयेदिच्छां किमेतावति दुष्करम् || ३८ ||
136127
136128 जरामरणजन्मादि करञ्जखदिरावलेः |
136129 बीजमिच्छा सदैवान्तर्दह्यतां शमवह्निना || ३९ ||
136130
136131 सदैवाभ्यस्तेन शमवह्निना दह्यताम् || ३९ ||
136132
136133 यतो यतो निरिच्छत्वं मुक्ततैव ततस्ततः |
136134 यावद्गति यथाप्राणं हन्यादिच्छां समुत्थिताम् || ४० ||
136135
136136 यावद्विवेकवैराग्याद्युपायप्राप्ति | यथाप्राणं यथाधैर्यादिबलम् || ४० ||

यतो यतश्च सेच्छत्वं बन्धपाशास्ततस्ततः।
पुण्यपापमया दुःखराशयो विततार्तयः॥ ४१॥

दस्युभिर्लुण्ठकैर्मुषितस्यापहृतसर्वस्वस्येव॥ ४१॥

इच्छानिरासरहिते गते साधोः क्षणेऽपि च।
दस्युभिर्मुषितस्येव युक्तमाक्रन्दितुं चिरम्॥ ४२॥

यथा यथास्य पुंसोऽन्तरिच्छा समुपशाम्यति।
तथा तथास्य कल्याणं मोक्षाय परिवर्धते॥ ४३॥

कल्याणं साधनचतुष्टयम्॥ ४३॥

आत्मनो निर्विवेकस्य यदिच्छापरिपूरणम्।
संसारविषवृक्षस्य तदेव परिषेचनम्॥ ४४॥

विषयोपभोगेनेच्छायाः परिपूरणं यत्तदेव॥ ४४॥

हृद्वृक्षजाः स्वसुखदुःखकुबीजकोशौ
वैरादिवाश्रयकृतादशुभाच्छुभाच्च।
आसाद्य दुष्कृतकृशानुशिखाः शितान्ता इच्छाश्छमच्छमिति
पुंस्पशुमादहन्ति॥ ४५॥

हृत् हृदयं तल्लक्षणाद्वृक्षादाश्रयादिन्धनाच्च जाताः शितान्ताः निशिताग्रा
इच्छा इच्छारूपा दुष्कृतकृशानुशिखास्तत्रस्थं चिदाभासरूपं पुंस्पशुं
जीवलक्षणं पशुं स्वाश्रये हृदि
कृतादऽसुभात्पापलक्षणाच्छुभात्पुण्यलक्षणाच्च
स्वाश्रयदूषणापराधादुत्पन्नाद्वैरादिव मोहधूमैरन्धीकृत्य
स्नेहपाशैर्दृढं बद्ध्वा च आसाद्य पातयित्वा तदीयौ सुखदुःखकुबीजानां
कोशौ कुसूलस्थानीयौ तद्वृषणौ आसमन्ताद्दहन्ति वार्ताकवद्भर्जयन्ति
[वार्ताकं वृन्ताकम्।]। छमच्छमितीति तद्वसादाहोत्थशब्दानुकरणम्।
इच्छाः कर्त्र्यः। दुष्कृतकृशानुशिखाः आसाद्य प्रज्वाल्य तदीयकुबीजकोशौ
दहन्तीति वा। कुबीजकोशौ आसाद्य पुंस्पशुं दहन्तीति वा यथेच्छमन्वयः। पुमः
खय्यमपरे इति रुत्वे संपुंकानाम् इति सत्वम्। पुंपशुं इति पाठस्तु च्छान्दसः॥
४५॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाणप्रकरणे
उत्तरार्धे संसारबीजकथनं नाम षट्त्रिंशः सर्गः॥ ३६॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
संसारबीजकथनं नाम षट्त्रिंशः सर्गः॥ ३६॥

सप्तत्रिंशः सर्गः ३७

श्रीवसिष्ठ उवाच।

इच्छाविषविकारस्य वियोगं योगनामकम्।
शान्तये शृणु भूयोऽपि पूर्वमुक्तमपि स्फुटम्॥ १॥

यथेच्छैव न जायेत जातापि ब्रह्म केवलम्।
तथोपपत्तिभिर्भूयो ज्ञानयोगोऽत्र वर्ण्यते॥

136189
136190 वियोगफलकत्वाद्वियोगम् । इच्छामूलकसर्वानर्थशान्तये ॥ १ ॥
136191
136192 आत्मनो व्यतिरिक्तं चेद्विद्यते तदिहेच्छया ।
136193 इष्यतामसति त्वेतत्स्वात्मान्यत्वं क्रिमिष्यते ॥ २ ॥
136194
136195 इच्छया इष्यताम् । यथेच्छमिच्छा प्रवर्ततामित्यर्थः । इच्छतां [इच्छतामिति
136196 पाठे विकरणव्यत्यय आर्षः ।] इति पाठेऽप्ययमृवार्थः । तथा च यावदात्मा न
136197 ज्ञायते तावदेव द्वितीयवस्तुसत्यताभ्रान्त्या इच्छोदय इत्यात्मज्ञानयोग एव
136198 विषयापहारद्वारा तन्निवृत्त्युपाय इति भावः ॥ २ ॥
136199
136200 निर्भागावयवा सूक्ष्मा व्योम्नः शून्यतरैव चित् ।
136201 सैवाहंजगदाकारा सती किं तत्तयेष्यते ॥ ३ ॥
136202
136203 यदि तु ज्ञानेन जगत्सत्यं ब्रह्मैव संपन्नमिति न मिथ्येति मन्यसे
136204 तदाप्यत्यन्ताभेदे एषित्रादित्रिपुटीघटितेच्छाया असिद्धिरित्याह - निर्भागेति । निर्गतो
136205 भागस्त्रिपुटीविभाजकोपाधिभेदो विभजनीयावयवभेदश्च यस्याः । अहमाकारा
136206 जगदाकारा च सैव सती ॥ ३ ॥
136207
136208 सा व्योमरूपा व्योमैव व्योमात्मवेद्यवेदिका ।
136209 व्योमात्मजगदाभासमत्रेच्छाविषयोऽस्ति कः ॥ ४ ॥
136210
136211 ग्राह्यग्राहकसंबन्धः कुतश्चिदिति तन्न नः ।
136212 विद्यतेऽसौ प्रशान्तानां येषामस्ति न वेद्मि तान् ॥ ५ ॥
136213
136214 बुद्ध्या अगृहीते विषये इच्छानुदयाद्ग्राह्यग्राहकसंबन्धाभावे
136215 ग्रहणस्यासिद्धेरपि विदुषां नेच्छाप्रसक्तिरित्याह - ग्राह्येति । प्रशान्तानां नः
136216 असः अज्ञदृष्टिप्रसिद्धो ग्राह्यग्राहकसंबन्धः कुतश्चिदपि निमित्तात्प्रमाणाद्वा
136217 न विद्यते इत्येतस्माद्धेतोरपि किमिष्यते इत्यन्वयः । येषामज्ञानामस्ति तान्न वेद्मि ।
136218 तेऽपि तत्त्वदृशा अत्यन्ताप्रसिद्धा इत्यर्थः ॥ ५ ॥
136219
136220 ग्राह्यग्राहकसंबन्धः स्वनिष्ठोऽपि न लभ्यते ।
136221 असतस्तु कथं लाभः केन लब्धोऽसितः शशी ॥ ६ ॥
136222
136223 त्वर्थे अपिशब्दः । असितः श्यामः ॥ ६ ॥
136224
136225 एषैव ग्राहकादीनां सत्ता यन्नात्मनिष्ठता ।
136226 स्वभावावेक्षया सत्या न जाने क्व प्रयान्ति ते ॥ ७ ॥
136227
136228 ग्राहकादीनां सर्वत्रिपुटीनामेषैव सत्ता । कैषा यन्नात्मनिष्ठता तात्त्विके
136229 आत्मन्यविश्रान्तिः । अज्ञानमिति यावत् । ते च ग्राहकादयः
136230 स्वभावोऽशास्त्रीयदृष्टिस्तदपेक्षया सत्याः शास्त्रीयतत्त्वदृष्ट्युदये क्व प्रयान्तीति
136231 न जाने ॥ ७ ॥
136232
136233 एष एव स्वभावो यद्द्रष्टृदृश्यक्षयोऽखिलः ।
136234 ज्ञात्वाऽसत्या विनिर्वाणमहंतात्मनि गच्छति ॥ ८ ॥
136235
136236 तत्त्वज्ञानस्याप्येष एव स्वभावो यदसत्या अहंता शास्त्रतः स्वतत्त्वं ज्ञात्वा
136237 तस्मिन्नात्मनि गच्छत्यपैति । स एवाखिलो द्रष्टृदृश्यक्षयो विशिष्टं निर्वाणं
136238 चेत्यर्थः ॥ ८ ॥
136239
136240 निर्वाणे नास्ति दृश्यादि दृश्यादौ नास्ति निर्वृतिः ।

136241 मिथोऽनयोरनुभवो न च्छायातपयोरिव ॥ ९ ॥
136242
136243 दृश्यनिर्वाणयोः परस्परासहभावोऽपि स्वभावत एवेत्याह - निर्वाण इति।
136244 मिथोऽनुभवः सहानुभवः ॥ ९ ॥
136245
136246 उभे एते मिथोऽसत्ये असत्ये च न निर्वृतिः।
136247 यतो निर्वाणमजरमदुःखमनुभूयते ॥ १० ॥
136248
136249 कुतो न सहानुभवोऽपीति तत्राह - उभे इति। यदि मिथः सह स्यातां तदा उभे
136250 परस्परबाधितत्वादसत्ये स्याताम्। स्ताम् असत्ये को दोषस्तत्राह - असत्ये चेति। तथा च
136251 विद्वदनुभवविरोध इत्याह - यत इति ॥ १० ॥
136252
136253 भ्रमभूतं च दृश्यादि नित्यं नात्र सुखप्रदम्।
136254 असच्च तद्भाव्यतां मा निर्वाणे स्थीयतामजे ॥ ११ ॥
136255
136256 ननु तर्हि सर्वजनप्रसिद्धं दृश्यादिमहाकौतुकं निर्वाणे दुर्लभं
136257 स्यादित्यनाश्वासं परिहरन्नाह - भ्रमभूतमिति। असत् चादनर्थरूपं च
136258 तद्दृश्यादि मा भाव्यतां न चिन्त्यताम् ॥ ११ ॥
136259
136260 शुक्तिकारूप्यसदृशं प्रेक्षितं यन्न लभ्यते।
136261 अर्थकार्यपि तन्नास्ति किमत्रापह्नवेन च ॥ १२ ॥
136262
136263 तत् अर्थकारि पुरुषार्थसंपादकं नास्त्येव। अत्र ईदृशे दृश्ये अपह्नवेन किं
136264 कौतुकं गतमित्यर्थः ॥ १२ ॥
136265
136266 तत्सद्भावान्महदुःखमसद्भावान्महत्सुखम्।
136267 अभावः सोपपत्तिस्तु दृढतां याति भावनात् ॥ १३ ॥
136268
136269 अभावः शाब्दज्ञानकृतो बाधः सोपपत्तिर्मननसहितो बावनान्निदिध्यासनात् ॥ १३ ॥
136270
136271 तत्किमात्मनि बन्धाय विदग्धं न मुधाधमाः।
136272 स्पष्ट एवोपचयादेर्वस्तुन्यस्तमिताऽपदे ॥ १४ ॥
136273
136274 इदानीं परमकारुणिको भगवान्वसिष्ठो दृश्यकौतुकासक्तानधमाधिकारिणः
136275 श्रोतृन्बलान्निर्भर्त्स्य दृश्यासक्तिं त्याजयन्नाह - तत्किमिति। हे अधमाः
136276 यूयमुपचयादेर्विकारजातस्य अपदे परमार्थवस्तुनि
136277 स्वप्रकाशत्वाच्छास्त्राचार्योपदेशाच्च करतलामलकवत्स्पष्टे एव स्फुरति
136278 सत्यस्तमदर्शनं किं इत प्राप्नुत। भवद्भिस्तद्दृश्यजातं किमात्मनि बन्धनाय
136279 न विदग्धम्। किं बन्ध एवाभिलक्षितोऽस्ति येन दृश्यासक्तिं न मुञ्चतेत्यर्थः ॥ १४ ॥
136280
136281 कार्यकारणभावादि ब्रह्मैव सकलं यदा।
136282 तदा तु ब्रह्मता ह्यस्मिन्संविन्मात्रात्मके तते ॥ १५ ॥
136283
136284 यदा कार्यकारणभावादि सर्वं ब्रह्मैव भवति तदैव तु
136285 देहादिपरिच्छेदापगमात्तते विस्तारं प्राप्ते चिन्मात्रात्मके प्रतीचि ब्रह्मता सिद्ध्यति
136286 नाणुमात्रमपि दृश्यपरिशेषे ॥ १५ ॥
136287
136288 मार्गयन्ति प्रबोधाय तैर्मृगैरलमस्तु नः।
136289 व्योमरूपे किलैकस्मिन्सर्वात्मनि तते सति ॥ १६ ॥
136290
136291 अत एव व्योमरूपे सर्वात्मनि पूर्णेऽपि कार्यकारणतादिदृश्यमङ्गीकृत्य ये
136292 ब्रह्मप्रबोधाय साधनानि मार्गयन्ति मृगयन्ते तैर्वादिमृगैस्तार्किकैः

136293 शिष्यमृगैर्वा अलमस्तु | प्रयोजनं नास्तीत्यर्थः || १६ ||
136294
136295 कार्यकारणताढ्यानामुक्तीनामेव कः क्रमः |
136296 यो हेतुः स्पन्दने वायोर्द्रवत्वे सलिलस्य च || १७ ||
136297
136298 यदि चावश्यं हेतुर्वाच्यस्तर्हि सर्वस्वभावरूपा स्वाविद्यैवेत्याशयेनाह - य इति
136299 || १७ ||
136300
136301 शून्यत्वे नभसः सौम्य सर्गादित्वे चिदात्मनः |
136302 कार्यकारणभावादि ब्रह्मैव सकलं यदा || १८ ||
136303
136304 अत एव विदुषां तद्बाधात्सर्गादिहेतुनिरूपणे निर्लज्जतादोष इत्याह - कार्येति || १८ ||
136305
136306 तदा ब्रह्मणि सर्गाणां कारणार्था विलज्जता |
136307 न दुःखमस्ति न सुखं शान्तं शिवमयं जगत् || १९ ||
136308
136309 कारणप्रतिपादनार्था उक्तिर्विलज्जता निर्लज्जता || १९ ||
136310
136311 नास्ति चिन्मात्रतान्यत्वमत इच्छोदयः कुतः |
136312 मृद्देहयोधसेनायां न मृन्मात्रेतरद्यथा || २० ||
136313
136314 न सज्जगदहंतादौ दृश्ये ब्रह्मेतरत्तथा |
136315
136316 श्रीराम उवाच |
136317
136318 एवं चेत्तदुदेत्विच्छा मा वोदेतु मुनीश्वर || २१ ||
136319
136320 यदि सर्वं ब्रह्मैव तर्हि इच्छापि सुतरां ब्रह्मेति तदुत्पत्तौ का क्षतिरिति
136321 विद्वद्दृष्ट्या रामः शङ्कते - एवं चेदिति || २१ ||
136322
136323 सा तु ब्रह्मैव कोऽर्थः स्यादस्या विधिनिषेधने |
136324
136325 श्रीवसिष्ठ उवाच |
136326
136327 ज्ञातायां संप्रबुद्धायामिच्छा ब्रह्मैव नेतरत् || २२ ||
136328
136329 इच्छानुत्पादने यत्नः क्रियतां किं वृथाभ्रमैः इत्यादि
136330 प्रागुक्तयत्नविधिनिषेधने निवारणे सत्यं विदुष इच्छोदयेऽपि न काचित्क्षतिः |
136331 विद्याबाधितायास्तस्या उदय एव दुर्लभ इत्युत्तरमाह - ज्ञातायामित्यादिना || २२ ||
136332
136333 यथा संबुद्धवान्राम तत्सत्यं किं त्विदं शृणु |
136334 यदा यदा ज्ञतोदेति शाम्यतीच्छा तदा तदा || २३ ||
136335
136336 वस्तुस्वभावादुदयत्यादित्ये यामिनी यथा |
136337 शाम्यत्येव न तूदेति ज्ञप्ताविच्छादि तत्तथा || २४ ||
136338
136339 इटकिटकटी गतौ इत्यत्र ई इति प्रश्लिष्टस्य धातोः शत्रन्तस्य सप्तम्येकवचने अयतीति
136340 रूपं न त्वयतेः | तस्यात्मनेपदित्वात् || २४ ||
136341
136342 यथा यथोदयो ज्ञप्तेर्द्वैतशान्तिस्तथा तथा |
136343 वासनाविलयश्चैव कथमिच्छोदयो भवेत् || २५ ||
136344

136345 तस्या विद्योपशान्तेयं निर्मला मुक्ततोदिता।
136346 अशेषदृश्यवैरस्याद्यस्येच्छोदेति न क्वचित्॥ २६॥
136347
136348 मूलोच्छेदादपि विदुषो नेच्छोदयसंभव इत्याशयेनाह - तस्येति॥ २६॥
136349
136350 विरक्ततास्य नो दृश्ये नोदेत्यत्रास्य रक्तता।
136351 केवलं द्रष्टृदृश्यश्रीः स्वदते न स्वभावतः॥ २७॥
136352
136353 न स्वदते न रोचते॥ २७॥
136354
136355 काकतालीययोगेन परप्रेरणयानया।
136356 यदि किंचित्कदाचिच्च सम्यगिच्छति वा न वा॥ २८॥
136357
136358 सम्यक् शास्त्रानिषिद्धं देहधारणमात्रसाधनमन्नदानादि॥ २८॥
136359
136360 तदस्य सेच्छा नेच्छा वा ब्रह्मैवात्र न संशयः।
136361 इच्छा न जायते ज्ञस्यावश्यमेवानु वा नवा॥ २९॥
136362
136363 तत्तदा अस्य विदुषः सा इच्छा नेच्छाऽनिच्छा वा उभयं ब्रह्मैव। अथवा ज्ञस्य
136364 विदुषो नवा अभिनवभोगचमत्कारविषया इच्छा अवश्यं न जायते एव।
136365 प्रागभ्यस्तमनुसृत्य तु वा अनियतेत्यर्थः॥ २९॥
136366
136367 ज्ञता चेदुदिता जन्तोस्तदिच्छास्योपशाम्यति।
136368 नैतयोः स्थितिरेकत्र प्रकाशतमसोरिव॥ ३०॥
136369
136370 ज्ञता तत्त्वज्ञानम्। तत् तदा॥ ३०॥
136371
136372 प्रतिषेधविधीनां तु तज्ज्ञो न विषयः क्वचित्।
136373 शान्तसर्वैषणेच्छस्य कोऽस्य किं वक्ति किंकृते॥ ३१॥
136374
136375 अत एव रागतः प्रसक्तनिषिद्धक्रियाप्रतिषेधशास्त्रे नीरागोऽयं नाधिकारीत्याह -
136376 प्रतिषेधेति। किंकृते कस्मै प्रयोजनाय। न ह्यनन्धस्य कूपे न पतनीयमित्यन्धेन
136377 वक्तव्यमस्तीति भावः॥ ३१॥
136378
136379 एतदेव ज्ञताचिह्नं यदिच्छास्वतितानवम्।
136380 ह्लादनं सर्वलोकानामथानुभव एव वा॥ ३२॥
136381
136382 बाह्येच्छानिवृत्तिः स्वानन्दानुभवतृप्तिश्च तत्त्वबोधोदयचिह्नमित्याह -
136383 एतदेवेति। सर्वलोकानामभयदानेन ह्लादनम्॥ ३२॥
136384
136385 दृश्यंन् विरसतां यातं यदा न स्वदते क्वचित्।
136386 तदा नेच्छा प्रसरति तदैव च विमुक्तता॥ ३३॥
136387
136388 बोधादनैक्यमद्वैतं यः शान्तमवतिष्ठते।
136389 इच्छानिच्छादयः सर्वे भावास्तस्य शिवात्मकाः॥ ३४॥
136390
136391 बोधादस्तमितद्वैतमद्वैतैक्यविवर्जितम्।
136392 यः स्वच्छो विगतव्यग्रः शान्त आत्मन्यवस्थितः॥ ३५॥
136393
136394 अद्वैतं द्वैतध्वंसरूपं वस्त्वन्तरम् ऐक्यं मेलनमेकत्वसंख्या च
136395 तैर्विवर्जितं यथा स्यात्तथा य आस्ते तस्येति परेणान्वयः॥ ३५॥
136396

नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन।
न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः॥ ३६॥

अर्थव्यपाश्रयः प्रयोजनलाभः॥ ३६॥

नानिच्छया नेच्छयाथ न सता नासता सदा।
नैवात्मना न चान्येन नैतैर्मरणजीवितैः॥ ३७॥

नानिच्छयेति। अर्थव्यपाश्रय इति सर्वत्रानुषज्यते॥ ३७॥

इच्छा च तस्य नोदेति निर्वाणस्य प्रबोधिनः।
यदि चोदेति तस्येच्छा ब्रह्म शाश्वतमेव सा॥ ३८॥

न दुःखमस्ति न सुखं शान्तं श्वमजं जगत्।
इति योऽन्तः शिलेवास्ते तं प्रबुद्धं विदुर्बुधाः॥ ३९॥

दुःखं सुखं भावनया कुर्वन्विषमिवामृतम्।
इति निश्चित्य धीरात्मा [घोरात्मा इति पाठः।] प्रबुद्ध इति कथ्यते॥ ४०॥

इति प्राग्वर्णितमात्मतत्त्वं निश्चित्य दुःखं सुखं च निरतिशयानन्दात्मभावनया
विषममृतमिव कुर्वन्॥ ४०॥

तत्स्थितं व्योमनि व्योम शान्ते शान्तं शिवे शिवम्।
शून्ये शून्यं सति च सद्यद्ब्रह्मणि जगत्स्थितम्॥ ४१॥

तद्बोधानुसारिणी स्थितिरेव सर्ववस्तूनामविपर्यस्तस्थितिर्नाज्ञप्रसिद्धेत्याह -
तदिति। तत् तदा॥ ४१॥

असंवेदनसंवित्खे ततेऽविश्वमिति स्थिते।
सौम्ये समसमे शान्ते शिवेऽहंताभ्रमः क्षयी॥ ४२॥

इति उक्तरीत्या अबिश्वं निर्जगत्कं यथा स्यात्तथा स्थिते सति॥ ४२॥

यदिदं दृश्यते किंचिज्जगत्स्थावरजङ्गमम्।
तत्सर्वं शान्तमाकाशं परचिन्तापुरोपमम्॥ ४३॥

चिन्तापुरं मनोराज्यनगरं तदुपमम्॥ ४३॥

परचिन्तापुरोमध्ये गतविघ्नं गमागमौ।
यथान्तस्तव शून्यत्वात्तथैवास्मिञ्जगद्भ्रमे॥ ४४॥

परः पुरुषान्तरं तदीयमनोराज्यकल्पितायाः पुरो नगर्या मध्ये तव यथा
अन्तर्गमागमावविघ्नं कुड्यादिप्रतिबन्धशून्यं सिध्यतस्तथा विदुषोऽप्यस्मिन्
जगद्भ्रमे सिध्यत इत्यर्थः॥ ४४॥

अब्धिद्यूर्वीनदीशैलशोभाशून्यतरात्मनि।
जृम्भते द्रष्टृकरणं मृगतृष्णाम्बुवीचिवत्॥ ४५॥

तत्कुतस्तत्राह - अब्धीति। यतः अब्ध्यादिशून्यतरात्मनि
द्रष्टुरन्तःकरणमेवाब्ध्यादिशोभात्मना जृम्भते। तथा तृषितश्रान्तपुरुषस्य
चक्षूरूपं करणमम्बुशून्ये पुरोदेशे मृगतृष्णाम्बुवीच्यात्मना जृम्भते
तद्वदित्यर्थः॥ ४५॥

136449
136450 स्वप्ननिर्माणपुरवद्बालवेतालतालवत् ।
136451 यदिदं दृश्यते तत्र किं किलासत्यतेतरत् ॥ ४६ ॥
136452
136453 असत्यताया इतरत् सत्यत्वं किं किल ॥ ४६ ॥
136454
136455 असत्यमेवाहमिति भासते सत्यमेव च ।
136456 भ्रान्तिभाजं विनैवेयं भ्रान्तिः स्फुरति सा सती ॥ ४७ ॥
136457
136458 भ्रान्तिभाजो मिथ्यात्वादपि भ्रान्तेर्मिथ्यात्वमित्याह - असत्यमेवेति । यतः सत्यं
136459 ब्रह्मैवाहमिदमिति चासत्यमेव भासते अत इयं भ्रान्तिर्भ्रान्तिभाजंन् विनैव
136460 स्फुरतीत्यसतीत्यर्थः ॥ ४७ ॥
136461
136462 न सन्नासन्न सदसत्किमपीदमतीन्द्रियम् ।
136463 अवाच्यं जगदित्येव भात्यवक्षुभितं खवत् ॥ ४८ ॥
136464
136465 अत्यन्तासत्त्वे शून्यवादिमतप्रवेशः । अत्यन्तं सत्त्वे
136466 अद्वैतश्रुतिविद्वदनुभवविरोधः । उभयरूपत्वं तु
136467 विरोधादसंभवीत्यनिर्वचनीयतायति पुंस्त्ववदस्य परिशेषादित्याह - न सदिति ।
136468 अतीन्द्रियं इन्द्रियानवधार्यतत्त्वम् । खवत् इन्द्रियवत् ।
136469 गन्धर्वनगराद्याकारावक्षुब्धाकाशवद्वा ॥ ४८ ॥
136470
136471 इहेच्छानिच्छते ज्ञस्य शाम्यतां यदलं समे ।
136472 तथापि श्रेयसे मन्ये नन्वनिच्छोदयं स्फुटम् ॥ ४९ ॥
136473
136474 ज्ञस्य तत्त्वविदस्तत्त्वबोधबलादेवालं शाम्यतां विषयाणां यत् यद्यपि
136475 इच्छानिच्छते समे तुल्यफले तथाप्यनिच्छोदयमेव स्फुटं
136476 निर्विक्षेपसुखाभिव्यक्तिहेतुं श्रेयसे मन्ये । नन्विति रामसंबोधने ॥ ४९ ॥
136477
136478 अहं जगदिति ज्ञप्तिः खे खस्येवेयमास्थिता ।
136479 चिदात्मनो यथा वायोः स्पन्दो नात्रास्ति कारणं ॥ ५० ॥
136480
136481 यथा अविकृते एव खे आकाशाद्वायुरित्यादिऽश्रुत्युक्तक्रमेणाहं जगदिति ज्ञप्तिरास्थिता
136482 तद्वदज्ञानावृतचिदात्मनोऽपि । नात्र कारणान्तरं मृग्यमित्यर्थः ॥ ५० ॥
136483
136484 चितश्चेत्योन्मुखत्वं यत्तच्चित्तं सैव संसृतिः ।
136485 सेच्छा तन्मुक्तता मुक्तिर्युक्तिं ज्ञात्वेति शाम्यताम् ॥ ५१ ॥
136486
136487 तथा च चिदात्मनो बहिःप्रवणतैवेच्छा चित्तं संसारश्च अन्तःस्वरूपे स्थितिरेव
136488 मुक्तिरिति फलितमित्याह - चित इति ॥ ५१ ॥
136489
136490 इच्छा भवत्वनिच्छा वा सर्गो वा प्रलयोऽथवा ।
136491 क्षतिर्न कस्यचित्काचिन्न च किंचिदिहास्ति हि ॥ ५२ ॥
136492
136493 तथा चेश्वरस्य सर्गप्रलययोरिव विदुष इच्छानिच्छयोर्न कश्चिल्लाभः क्षतिर्वेत्याह
136494 - इच्छेति । अस्ति फलमिति शेषः ॥ ५२ ॥
136495
136496 इच्छानिच्छे सदसती भावाभावौ सुखासुखे ।
136497 इत्यत्र कलना व्योम्नि संभवन्ति न काश्चन ॥ ५३ ॥
136498
136499 इच्छानां तानवं यस्य दिनानुदिनमागतम् ।
136500 विवेकशमतृप्तस्य तमाहुर्मोक्षभागिनम् ॥ ५४ ॥

तत्रोपपत्तिमाह - इच्छानिच्छे इति। कलनाः कल्पनाः। अत्र तत्त्वविद्रूपे व्योम्नि
चिदाकाशे ॥ ५३ ॥ ५४ ॥

इच्छाक्षुरिकया विद्धे हृदि शूलं प्रवर्तते।
जयन्ति यत्र नैतानि मणिमन्त्रौषधानि च ॥ ५५ ॥

इच्छालक्षणया क्षुरिकाया क्षुरप्रबाणशल्येन। शूलं शोकमोहादिवेदना। यत्र
यस्मिन् शूले एतानि लोकप्रसिद्धानि मणिमन्त्रौषधानि न जयन्ति। कुण्ठीभवन्तीति यावत्
॥ ५५ ॥

यान्कार्यकरणव्यूहान्कृतवान्पूर्वमेव तान्।
संप्रेक्षया न पश्यामि मिथ्याभ्रमभरादृते ॥ ५६ ॥

विधाता प्राणिदुःखविचिकित्सार्थं यान् औषधमन्त्रयन्त्रादिकाकरणग्रामान्
कृतवास्तान् पूर्वमेव बहुशः परीक्षणार्थं संप्रेक्षया यतमानोऽहं
मिथ्याभ्रमभरेण आदृते पुंसि तच्चिकित्सासमर्थान्न पश्यामि ॥ ५६ ॥

भ्रमभूतेन कुर्मश्चेद्व्यवहारमवस्तुना।
तत्कस्मात्परचित्ताद्रिः कम्बलत्वं [कवलनं इति पाठः।] न नीयते ॥ ५७
। ।

ननु भ्रान्तिसिद्धेनैव केनचिदुपायेन तच्चिकित्सादिव्यवहारोऽस्तु तत्राह -
भ्रमभूतेनेति। भ्रमो भ्रान्तिज्ञानं तेन भूतेन सिद्धेन।
अस्मद्भ्रान्तिसिद्धोपायेन परभ्रान्तिसिद्धदुःखनिवारणे
अस्मन्मनोरथकल्पितबहुयोजनविस्तृतमुखेन परकीयस्वप्नशैलादेः
कवलनप्रसङ्ग इत्यर्थः ॥ ५७ ॥

असता व्यवहारश्चेत्प्रेक्षामात्रविनाशिना।
क्रियते शशशृङ्गेण तत्कथं छाद्यते न खम् ॥ ५८ ॥

भ्रान्तिसिद्धस्यासत्त्वादपि न पारमार्थिके परदुःखनिवारणे सामर्थ्यमित्याह -
असतेति। क्रियते इति पूर्वान्वयि। तस्मात्तदीयं तत्त्वज्ञानाभिव्यक्तं परमार्थसत्यं
ब्रह्मैव तदीयसर्वभ्रमदुःखनिवारणोपायो नान्य इति भावः ॥ ५८ ॥

अहंभावाच्चिदाकाशो जाड्यातिशयतः क्षणात्।
पाषाणतां जलमिव मनस्त्वाद्याति देहताम् ॥ ५९ ॥

नन्वमूर्तमनोभ्रान्तिमात्रं जगच्चेत्कथं मूर्तदेहादिभावं याति तत्राह -
अहंभावादिति। देहाद्याकाराहंभावात्। जलं जाड्यातिशयतः पाषाणतां
करकाभावमिव ॥ ५९ ॥

चित्त्वादनुभवत्येतामसत्यामेव देहिताम्।
अविनष्टैव चिच्छक्तिः स्वप्ने स्वमरणं यथा ॥ ६० ॥

कल्पिते चितः स्वमरणतुल्ये जडदेहभावेऽपि वास्तवचिद्रूपमक्षतमेवेति तेन
तामनुभवतीत्याह - चित्त्वादिति ॥ ६० ॥

व्योम्न्यसत्यमवस्तुत्वात्सत्यं चानुभवाद्यथा।
नीलत्वं तद्वदीशेऽस्मिन्सर्गो नासन्न सन्मयः ॥ ६१ ॥

प्रातिभासिकजडभावः प्रतिभासाधीनसत्ताकत्वादनिर्वचनीय इत्याह - व्योम्नीति ॥

६१ ॥

यथा शून्यत्वनभसोर्यथा स्पन्दनभस्वतोः ।
भेदो नास्ति तथा सर्गब्रह्मणोरेकरूपयोः ॥ ६२ ॥

अत एव जगद्ब्रह्मसत्तयोरैक्याद्भेदो नास्तीत्याह - यथेति ॥ ६२ ॥

नेह संजायते किंचिज्जगदादि न नश्यति ।
स्वप्नो निद्रागतस्येव केवलं प्रतिभासते ॥ ६३ ॥

प्रातिभासिकार्थस्य स्वाप्नार्थवत्प्रतिभासातिरिक्तमुत्पत्त्यादिकमप्रसिद्धमित्याह ##-

अविद्यमाने पृथ्व्यादौ प्रतिभामात्ररूपिणि ।
सर्गे क इव संरम्भस्त्यागादानैश्चिदम्बरे ॥ ६४ ॥

अत एव तत्त्यागादानयोरभिनिवेशो न युक्त इत्याह - अविद्यमाने इति ॥ ६४ ॥

न देहः प्रतिभातोऽस्ति पृथ्व्यादिकारणान्वितः ।
केवलं ब्रह्मचिन्मात्रमेवात्मन्येव संस्थितम् ॥ ६५ ॥

देहार्थं हि पृथ्व्याद्यर्थस्य त्यागादाने स्याताम् । यदा तदुभयं
प्रतिभासमात्रत्वादसत्तदा ते अप्यसती इत्याशयेनाह - नेति । प्रतिभातः
प्रतिभासमात्रत्वात् ॥ ६५ ॥

बुद्ध्यादेः कारणत्वं च द्वैतैक्यासंभवान्न सत् ।
अनेनेदं क्रियत इत्यस्यार्थं याति संभवात् ॥ ६६ ॥

एवं बुद्ध्यादेरपि स्वप्रतिभासकचैतन्यापेक्षया
द्वैतैक्ययोर्भेदाभेदयोरसंभवादनेनेदं क्रियत इत्यस्य व्यवहारस्य
कारणत्वमप्यसत्सदर्थं परमार्थवस्त्वेव याति । तस्यैव संभवादित्यर्थः ॥ ६६ ॥

अहेतुरक्रमं भाति चिति कल्पक्रियागणः ।
क्षणेनैव यथा स्वप्ने मृतिजन्मादि सत्वराः ॥ ६७ ॥

एवं ब्रह्माण कल्पमहाकल्पादयस्तत्रत्यक्रियागणाश्च निर्हेतुका निष्क्रमा एव
सहेतुसंक्रमवत्प्रतिभासन्त इत्याह - अहेतुरिति । मृतिजन्मादयः सत्वरा
दीर्घकालरहिताः ॥ ६७ ॥

खमेव पृथ्वी खं शैलाः खमेव दृढभित्तयः ।
खमेव लोकाः स्पन्दः खं सर्गसंवेदनं चितेः ॥ ६८ ॥

तथा च सर्वं चिदाकाश एवेति फलितमित्याह - खमेवेति । यतश्चितेः स्वात्मन्येव
सर्गसंवेदनं नान्यत्रेत्यर्थः ॥ ६८ ॥

व्योमभित्तौ जगच्चित्रं चिद्रङ्गमयमाततम् ।
नोदेति नास्तमायाति न शाम्यति न ताम्यति ॥ ६९ ॥

चिद्वारिणि जगत्तुङ्गतरङ्गद्रवरूपिणि ।
किं नु वा कथमुत्पन्नं किं शान्तं च कदा कथम् ॥ ७० ॥

न ताम्यति न ग्लायति ॥ ६९ ॥ ७० ॥

136605 शान्ते महाचिदाकाशे जगच्छून्यत्वशालिनि ।
136606 चेत्यासंभवतः सन्ति नोदयास्तमयौ कुतः ॥ ७१ ॥
136607
136608 स्तां तर्हि चित एव जगदात्मना उदयास्तमयौ नेत्याह - शान्ते इति । चेत्यासंभवतो
136609 यदा जगन्त्येव न सन्ति तदात्मना चित उदयास्तमयौ कुतः । कस्मात्सिध्यत इत्यर्थः ॥
136610 ७१ ॥
136611
136612 पर्वता गगनायन्ते गगनं पर्वतायते ।
136613 संवेदनप्रयोगेण ब्रह्मणः सर्गता स्थितौ ॥ ७२ ॥
136614
136615 यदि तु मायाविलासदृशा दृश्यते तदा सर्वस्य सर्वरूपता यथेच्छमुपपद्यत
136616 इत्याह - पर्वता इति । संवेदनस्य वासनावैचित्र्यानुसारिकल्पनालक्षणेन प्रयोगेण
136617 संकल्पेन ॥ ७२ ॥
136618
136619 संविच्चूर्णप्रयोगेण निमेषार्धेन योगिनः ।
136620 कुर्वन्ति जगदाकाशमाकाशं त्रिजगन्ति च ॥ ७३ ॥
136621
136622 अत एव योगसिद्धानामैच्छिकी विरुद्धकल्पना क्षणात्सिध्यतीत्याह - संविदिति ।
136623 संविल्लक्षणं यत्सिद्धौषधचूर्णं तत्प्रयोगेण ॥ ७३ ॥
136624
136625 सिद्धसंकल्पनगराण्यसंख्यानि यथाम्बरे ।
136626 तथा सर्गसहस्राणि सन्ति तानि तु चिन्नभः ॥ ७४ ॥
136627
136628 यथा प्रसिद्धे अम्बरे आकाशे अनन्तानि सिद्धसंकल्पकल्पितानि नगराणि
136629 परस्परमसंलग्नान्यन्तर्हितानि सन्ति तथा ब्रह्मणि सर्गसहस्राणि सन्ति ॥ ७४ ॥
136630
136631 महार्णवे यथावर्ता अन्योन्यमपि मिश्रिताः ।
136632 पृथगेवावतिष्ठन्ते पयसोऽन्ये च नैव ते ॥ ७५ ॥
136633
136634 तत्र दृष्टान्तमाह - महार्णवे इति ॥ ७५ ॥
136635
136636 महाचिति महासर्गा अन्योन्यमपि मिश्रिताः ।
136637 पृथगेवावतिष्ठन्ते व्यतिरिक्ता न ते ततः ॥ ७६ ॥
136638
136639 सर्गात्सर्गान्तरालोके या प्रबुद्धस्य योगिनः ।
136640 सिद्धलोकान्तरे प्राप्तिः सैवेति विबुधोक्तयः ॥ ७७ ॥
136641
136642 अन्योन्यमन्तर्हितानामपि सिद्धलोकान्तराणामिच्छयालोकने योगिनो या
136643 स्वोपाधेर्मूलचिति प्रविलापनेन परचित्तानुप्रवेशद्वारा तल्लोकानुप्रवेशलक्षणा
136644 प्राप्तिः सैव स्वसर्गात्सर्गान्तरालोकनेऽपीति विबुधानां विदुषामुक्तयः । तथैव
136645 लीलोपाख्यानादौ वर्णनादिति भावः ॥ ७७ ॥
136646
136647 अविनाशिनि भूतानि स्थितानि परमे शिवे ।
136648 व्योम्नीव शून्यतोल्लासाः सर्गवर्गा निरर्गलम् ॥ ७८ ॥
136649
136650 एवं च सर्वप्राणिनां तद्भोग्यसर्गाणां च शाश्वते ब्रह्मण्येव विवर्तरूपा
136651 स्थितिः फलितेत्याह - अविनाशिनीति ॥ ७८ ॥
136652
136653 परमार्थनिजामोदाः सहजाः सर्गविभ्रमाः ।
136654 नोद्यन्ति नोपशाम्यन्ति लेखा इव शिलोदरे ॥ ७९ ॥
136655
136656 तथा च परमार्थचिदाकाशस्य निजामोदकल्पाः सर्गविभ्रमास्तत्स्वरूपा एवेति

नोत्पत्यादिरेषामस्तीत्याह - परमार्थेति। स्फटिकशिलोदरे दृश्यमाना लेखा
रेखा इव॥ ७९॥

अन्योन्यंन् कुसुमामोदा मिलिता [मिश्रिता अप्यमिश्रिता इति पाठः।]
अप्यमीलिताः।
व्योमरूपास्तथा सर्गा अन्योन्यंन् सिद्धभूमयः॥ ८०॥

सिद्धभूमय इवेति शेषः॥ ८०॥

संकल्पाकाशरूपत्वात्सर्वानुभववस्थितेः।
तनुसंकल्पमोहानां सत्याश्च मननोक्तयः॥ ८१॥

अत एव प्रपञ्चस्य स्थूलसंकल्पमोहानां पामराणां दृष्ट्या
स्थूलानुभववस्त्थितिः सूक्ष्मसूक्ष्मतरसूक्ष्मतमसंकल्पमोहानां
योगिभेदानां दृष्ट्या सूक्ष्मादिभावेन स्थितिरिति
सर्वानुभवाननुसारित्वात्स्वस्वानुभवानुसारिण्यः सर्वेषामुक्तयः सत्या इत्याह ##-
मननपूर्विका जगत्सौक्ष्म्योक्तयश्च सत्याः न पामरानुभवविरोधेनासत्या
मन्तव्या इत्यर्थः॥ ८१॥

न ज्ञानवादिता सत्या न बाह्यानर्थवादिता।
यथावेदनमेतानि वेदनानि फलन्ति वः॥ ८२॥

अत एव वादिभेदानां नानाविधकल्पना अपि तत्तद्वासनासंकल्पानुसारेणैव सत्याः
न सर्वसंकल्पानुसारेण परमार्थतो वेति तान्संतोष्याह - नेति। ज्ञानवादिता
आन्तरविज्ञातमात्रपरमार्थवादिता। बाह्या दृश्या ये अनर्था दुःखहेतवो
द्रव्यगुणकर्मादिसप्तपदार्थास्तन्मात्रवादितापि सत्या। यथावेदनं
यथासंकल्पं तत्तदर्थक्रियासमर्थतया फलन्ति॥ ८२॥

चिति चित्त्वं यदस्त्यन्तर्जगदित्येव भाविते।
भेदो द्रवत्वपयसोरिव नात्रोपपद्यते॥ ८३॥

कस्तर्हि प्रामाणिकः पक्षस्तमाह - चितीति। चित्त्वं त्रिपुटीप्रकाशनशक्तिः।
सबाह्याभ्यन्तरो ह्यजः इत्यादि श्रुतेरिति भावः॥ ८३॥

कालो जगन्ति भुवनान्यहमक्षवर्गस्त्वं तानि तत्र च तथेति च सर्वमेकम्।
चिद्व्योम शान्तमजमव्ययमीश्वरात्म रागादयः खलु न केचन संभवन्ति॥
८४॥

उक्तमनूद्य प्रकृते योजयन्नुपसंहरति - काल इति। सर्वाधारः
कालस्तदन्तर्गतानि जगन्ति ब्रह्माण्डास्तदन्तर्गतानि चतुर्दशभुवनानि तदन्तर्गता
अहंत्वमित्यादयो भोक्तारस्तेषां भोगोपकरणभूतोऽक्षवर्गस्तानि
शब्दस्पर्शादिभोग्यानि तत्र च तथा विचित्रो भोगश्चेत्येतत्सर्वमीश्वरात्म
मायिकसार्वज्ञ्यसर्वशक्त्यादिसंपन्नं परमार्थतः शान्तमेकं चिद्व्योमैव।
एवं खलु निश्चिते केचन रागादयो न संभवन्त्येवेत्ययमेवेच्छादिसर्वदोषजये
मुख्योपाय इत्यर्थः॥ ८४॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मी० दे० मो० निर्वाणप्रक० उत्तरार्धे
दृश्योपदेशयोगो नाम सप्तत्रिंशः सर्गः॥ ३७॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
दृश्योपदेशयोगो नाम सप्तत्रिंशः सर्गः  ३७

136709 अष्टत्रिंशः सर्गः ३८
136710
136711 श्रीवसिष्ठ उवाच।
136712
136713 चित्पश्यति जगन्मिथ्या स्ववेदनविबोधिता।
136714 व्योम्नि मायाञ्जनासिक्ता दृगिवाचलतान्तरम्॥ १॥
136715
136716 इह चिच्चेत्यसंसर्गभेदभ्रमनिरासतः।
136717 चिदेव जगदित्येतत्सत्तर्कैरुपपाद्यते॥
136718
136719 चेत्यस्य सर्वजगतश्चिन्मात्रतां तर्कैरुपपादयिष्यन् भूमिकां रचयति - चिदिति।
136720 मिथ्या स्ववेदनं स्वस्या अब्रह्मताभ्रमस्तेन विबोधिता विक्षिप्ता। यथा माया
136721 दर्शनहेतुनाञ्जनविशेषेणासिक्ता दृक् चक्षुर्व्योम्नि अचलतां पर्वतभावं
136722 तदान्तरं नितम्बप्रस्थशिखरदरीवनकुञ्जादि च पश्यति तद्वदित्यर्थः॥ १॥
136723
136724 ब्रह्मसर्गश्चित्तसर्गो द्वावेतौ सदृशौ मतौ।
136725 परमार्थस्वरूपत्वादक्षुब्धत्वात्सदैव च॥ २॥
136726
136727 भ्रान्तिकल्पितस्त्वयं सर्गश्चित्रसर्गवन्मनःकल्पनयैव क्षुब्धवद्भाति न वस्तुत
136728 इत्याह - ब्रह्मेति॥ २॥
136729
136730 ज्ञानरूपतयाबाह्यं बाह्यं चानुभवात्तथा।
136731 सत्यरूपमतः सत्यां विद्धि बाह्यार्थरूपताम्॥ ३॥
136732
136733 अस्त्वेवं किं ततस्तत्राह - ज्ञानेति। यथा भित्तिस्थश्चित्रसर्गो वास्तवभित्तिरूपेण
136734 भित्तेरबाह्यो भ्रान्तानुभवात्मना तु तद्बाह्यस्तद्वज्ज्ञाने कल्पितः सर्गोऽपि
136735 वास्तवज्ञानरूपतया अबाह्यो भ्रान्तानुभवात्मना तु बाह्य इति सिद्धे ज्ञानं
136736 सत्यरूपमित्यतो हेतोर्बाह्यार्थरूपतामपि तदात्मना सत्यां विद्धीत्यर्थः॥ ३॥
136737
136738 बाह्यार्थवादविज्ञानवादयोरैक्यमेव नः।
136739 वेदनात्मैकरूपत्वात्सर्वदा सदसंस्थितेः॥ ४॥
136740
136741 एवं चास्मन्मतं न बाह्यार्थवादेन नापि विज्ञानवादेन विरुध्यते।
136742 अत्रोभयोरैकरस्यात्। सर्वदा चिदतिरिक्तस्यान्तरविज्ञातस्य बाह्यप्रपञ्चस्य चासतः
136743 असंस्थितेः। अनभ्युपगमादित्यर्थः॥ ४॥
136744
136745 अक्षुब्धखानिलालोकजलभूशान्तिशालिनी।
136746 तता शून्या महारम्भा ब्रह्मसत्तैव सर्वतः॥ ५॥
136747
136748 सर्वस्य चिदैक्ये चितः सदैवाक्षुब्धत्वान्निर्विशेषत्वाच्च क्षुब्धानां
136749 खादिपञ्चभूतानां शान्तिरर्थसिद्धेति पूर्णब्रह्मसत्तामात्रपरिशेषः सिद्ध
136750 इत्याह - अक्षुब्धेति॥ ५॥
136751
136752 तस्मै सर्वं ततः सर्वं तत्सर्वं सर्वतश्च तत्।
136753 तच्च सर्वमयं नित्यं तस्मै सर्वात्मने नमः॥ ६॥
136754
136755 तदेवं सर्वकारकक्रियाफलात्मकं जगद्ब्रह्मीभूतं नमस्यति - तस्मै इति॥ ६॥
136756
136757 चिन्मयत्वाद्यदा चेत्यमेति द्रष्टचितैकताम्।
136758 तदा दृश्याङ्गयैवैतच्चेत्यते नान्यथा चिता॥ ७॥
136759
136760 व्यवहारकालेऽपि चेत्यस्य चिदैक्यापत्तिबलादेव सत्तास्फूर्ती नान्यथेत्याह -

136761 चिन्मयत्वादिति। घटादि चेत्यं ब्रह्म चिन्मयत्वादेव द्रष्टृचिता
136762 चाक्षुषवृत्त्यवच्छिन्नप्रमातृचैतन्येन यदा वृत्तिव्याप्तिद्वारा एकतामेति तदा
136763 दृश्यमङ्गं शरीरं यस्यास्तथाविधयैव तया चिता एतद्घटादि चेत्यते
136764 नान्यथेत्यर्थः॥ ७॥
136765
136766 यदा चिन्मात्रमेवेयं द्रष्टृदर्शनदृश्यदृक्।
136767 तदानुभवनं तत्र सर्वस्य फलितं स्थितम्॥ ८॥
136768
136769 एवं द्रष्टा तद्दर्शनसाधनंन् दृक् तत्फलं चेत्येतत्सर्वं
136770 चिदैक्याधीनसिद्धिकत्वाद्यदा चिन्मात्रमेव तदा सर्वस्य जगतोऽनुभवनमात्रमेव
136771 स्वरूपं परमार्थतः स्थितं फलितमित्यर्थः॥ ८॥
136772
136773 द्रष्टृदृश्ये न यद्येकमभविष्यच्चिदात्मके।
136774 तद्दृश्यास्वादमज्ञः स्यान्ना दृष्ट्वेक्षुमिवोपलः॥ ९॥
136775
136776 द्रष्टृदृश्ययोरैक्यसाधनानुग्राहकं तर्कमाह - द्रष्टृदृश्ये इति।
136777 द्रष्टृदृश्ये चिदात्मके साक्षिणि यद्येकं नाभविष्यत् तत्तर्हि क्षुभक्षणे
136778 प्रवृत्तो ना पुरुष इक्षुं दृष्ट्वा चोषयन्नपि उपल इव दृश्यस्यास्वादं
136779 तन्माधुर्यमज्ञोऽननुभवन् स्यात् न हि जडो रसमनुभवितुं शक्नोति न वा जडो
136780 रसस्तं प्रति स्फुरिष्यति येनानुभवेदित्यर्थः॥ ९॥
136781
136782 चिन्मयत्वाच्चितौ चेत्यं जलमप्स्विव मज्जति।
136783 तेनानुभूतिर्भवति नान्यथा काष्ठयोरिव॥ १०॥
136784
136785 तयोश्चिन्मयत्वाभ्युपगमे त्वनुभवितृचितौ चेत्यमनुभवनीयम्। अप्सु पतितो
136786 जलबिन्दुरिव तदनुप्रवेशेन मज्जति तेन हेतुना क्षुमाधुर्यमास्वादयामीति त्रिपुट्याः
136787 स्फुरणानुप्रवेशोनानुभूतिर्भवति। सिद्ध्यतीत्यर्थः॥ १०॥
136788
136789 सजातीयैकताभावाद्यद्वत्काष्ठं न चेतते।
136790 दारु तद्वदपि द्रष्टा दृश्यं नाज्ञास्यदाजडम्॥ ११॥
136791
136792 व्यतिरेके काष्ठयोरिवेत्युक्तदृष्टान्तसाम्यं दार्ष्टान्तिके उपपादयति - सजातीयेति
136793 । काष्ठं कर्तृ दारुद्वितीयं काष्ठं कर्म यथा काष्ठत्वेन सजातीयत्वेऽपि
136794 चिदैक्याभावाद्यद्वन्न चेतते तथा द्रष्टापि आजडं सर्वथा चिदैक्यशून्यं
136795 दृश्यं नाज्ञास्यत्॥ ११॥
136796
136797 यादृक्सत्तानि काष्ठानि तादृग्रूपं त्वचेतनम्।
136798 जानन्ति नेतरत्तस्माद्दृश्यं चिद्दृश्यचेतनम्॥ १२॥
136799
136800 न च द्रष्टृदृश्ययोर्जडत्वे काष्ठद्वयाद्विशेषं केचिज्जानन्तीत्याह -
136801 यादृगिति। यादृशी सत्ता स्थितिर्येषां तानि। इतरद्वैलक्षण्यं तु न जानन्ति
136802 केचिदपीत्यर्थः। तस्मादुक्ततर्कबलाद्दृश्यं सर्व चिद्रूपेणैव द्रष्टा दृश्यं
136803 चेतनं चिदभिन्नं चेति सिद्धमित्यर्थः। कर्मधारयः॥ १२॥
136804
136805 महाचिदात्मनैवास्ति जलानिलधराश्मतम्।
136806 नैतेषु स्पन्दबुद्ध्यादि प्राणजीवाद्यभावतः॥ १३॥
136807
136808 एवं द्रष्टृदृश्ययोश्चिद्रूपत्वे दृश्ये जगति
136809 धरानिलजलादिभेदापगमाद्द्रष्टरि च स्पन्दबुद्धिप्राणादिभेदापगमात्सर्वस्य
136810 जगतो ब्रह्मैक्यमेव सिद्धमित्याह - महाचिदात्मनेति। अश्मतान्ते
136811 समाहारद्वन्द्वे नपुंसकह्रस्वः॥ १३॥
136812

प्राणबुद्ध्यादयः सत्तां भावनावशतो गताः।
भावना चिच्चमत्कारः स यथेच्छमुदेति च॥ १४॥

भावनाकल्पितत्वादपि प्राणादिभेदानां मिथ्यात्वमित्याह - प्राणेति॥ १४॥

जगत्तया शान्ततया ब्रह्मसत्तावतिष्ठते।
पुंस्तया गत एवात्मा रेतोवटकबीजयोः॥ १५॥

ब्रह्मसत्ताविवर्तमात्रत्वादपि जगद्भेदानां मिथ्यात्वमित्याह - जगत्तयेति।
शान्ततया सुषुप्तिप्रलयात्मना। एवेत्यत्र आ इवेति च्छेदः। पुंस्तया प्रसवशक्ततया
आगत आक्रान्तः। वट एव वटकः॥ १५॥

सर्वाग्राणुमये बीजे योऽस्मादग्रगतोऽणुकः।
स स तत्तद्भवत्यग्रं बीजं [बीजं स्वात्मनि संस्थित इति पाठः।] च
स्वात्मनि स्थितः॥ १६॥

तत्र वटबीजे पुंस्त्वाक्रान्तं सूक्ष्ममविकृतं ब्रह्मसत्ताकं भागं तत्र
वटादिविवर्त च दर्शयति - सर्वाग्रेति। अग्रशब्दः सारपरः। यो
योऽग्रगतोऽणुकोऽतिसूक्ष्मः स सः परमात्मा। स एवाङ्कुरकाण्डशाखादौ
तत्तदुत्तरोत्तरकार्ये पुरोभूयाग्रं बीजं च भवतीत्यर्थः॥ १६॥

ब्रह्म सर्वपराण्वात्मा यो यस्मादर्थतोऽणुकः।
स स तत्तद्भवेद्वस्तु वस्तुब्रह्मैव तिष्ठति॥ १७॥

तत्र यो यो यस्मात्सूक्ष्मः कारणतया प्रसिद्धः स स ब्रह्मकोटौ यश्च स्थूलः
कार्यात्मना प्रसिद्धः स मायाकोटौ मिथ्येत्युपलक्षयेदित्याशयेनाह - ब्रह्मेति।
एवमुपलक्षिते सर्वत्र वस्तुब्रह्म तिष्ठति नान्यदित्यर्थः॥ १७॥

द्रव्यमेव यथा द्रव्यं तिर्यगूर्ध्वमधस्तथा।
सर्वमेव तथा ब्रह्म येन तेन यथा तथा॥ १८॥

यथा घटाद्यैकैकद्रव्यमामूलाग्रं तदेव द्रव्यंन् नाणुमात्रमपि तदन्यदस्ति
तथा सर्व जगदामूलाग्रं येन येन पुरुषेण यथा यथा परीक्ष्य दृष्टं
सन्मात्ररूपं ब्रह्मैव नाणुमात्रमपि तदन्यदस्तीत्यर्थः॥ १८॥

हेमत्वमेव नान्यत्वं हेमरूपशते यथा।
शान्तत्वमेव शान्तस्य सर्गाहद्दगणे तथा॥ १९॥

अविकारित्वेऽपि दृष्टान्तमाह - हेमत्वमिति। सर्गो जगद्भावः अहंत्वं
जीवभावस्तद्गणे॥ १९॥

पार्श्वस्थस्वप्नमेघौघा यथा तव न काश्चन।
सर्गप्रलयसंरम्भास्तथा खात्मान एव मे॥ २०॥

तस्य विवर्तैरलोपमाह [अलेप इति पाठः।] - पार्श्वस्थेति॥ २०॥

पङ्क्ता कल्पिता व्योम्नो या पुत्रकपताकिनी।
सा यथा शान्ततामात्रं खमेवेदं तथा जगत्॥ २१॥

व्योम्नो या पङ्क्ता मलिनता कल्पिता या च गन्धर्वपुत्रकाणां पताकिनी सेना सा
यथा खमेव॥ २१॥

136865 संकल्पभ्रम एवान्तः पुष्पीभूय जगत्स्थितम् |
136866 जलावनितलक्लिन्नबीजं कल्प इव द्रुमः || २२ ||
136867
136868 हृदयान्तः पुष्पीभूय बहिर्जगत्फलं स्थितम् | यथा जलेनावनितले
136869 क्लिन्नमार्द्रीभूतं वटादिबीजं कल्पते छायाश्रयादिना प्राण्युपकारसमर्थो
136870 भवतीति कल्पो महान्वटादिद्रुमः संपद्यते तद्वत् || २२ ||
136871
136872 अनहंतात्मनो ज्ञस्य सत एकत्वमासतः |
136873 जरत्तृणलवायन्ते ननु नामाऽणिमादयः || २३ ||
136874
136875 ननु यदि परमसूक्ष्मं ब्रह्म तद्भावस्थितिरेव मोक्षस्तर्ह्यणिमादिसिद्धिभिरसौ
136876 तुल्य इत्याशङ्कां वारयति - अनहंतात्मन इति |
136877 अहंतादिप्रतिबन्धनिरासेनाविर्भूतनिरतिशयानन्दस्य ज्ञस्य दृष्ट्येत्यर्थः || २३ ||
136878
136879 त्रैलोक्ये तन्न पश्यामि सदेवासुरमानुषम् |
136880 एकरोमांशविश्वस्य यल्लोभाय महात्मनः || २४ ||
136881
136882 एको रोमांश इव विश्वं यस्य तथाविधस्य महात्मनः || २४ ||
136883
136884 यथा तथा स्थितस्यापि यत्र तत्र गतस्य च |
136885 द्वैतसंकल्पसंदोहा न सन्त्यधिगतात्मनः || २५ ||
136886
136887 विश्वमेव नभो यस्य शून्यं सर्वं महात्मनः |
136888 कुतः कस्य कथं तस्य भवत्विच्छा निरात्मनः || २६ ||
136889
136890 निरात्मनो निःस्वरूपाद्भोगादिनिमित्तात् || २६ ||
136891
136892 शान्ताशेषविशेषस्य निरेषणविशेषतः |
136893 सत्तामसत्तां सदृशौ क आकलयितुंन् क्षमः || २७ ||
136894
136895 सत्तां विभवं असत्तां दारिद्र्यं च सदृशौ समे पश्यतः क आकलयितुं क्षमो
136896 महिमानमिति शेषः || २७ ||
136897
136898 मारैर्न किंचिन्म्रियते जीवैः किंचिन्न जीवति |
136899 शुद्धसंविन्मयस्यास्य समालोकस्य खस्य च || २८ ||
136900
136901 बन्धुपुत्रादिमरणजीवनादिनापि नास्य हर्षविषादप्रसक्तिरित्याशयेनाह -
136902 मारैरिति | मारैर्मरणहेतुभिर्जीवैर्जीवहेतुभिः || २८ ||
136903
136904 मिथ्या लोकस्य कचतो भ्रान्त्या मरणजन्मनी |
136905 असत्यपि भ्रान्तिभाजि मृगतृष्णानदीतटे || २९ ||
136906
136907 लोकस्याज्ञजनस्य भ्रान्त्या मृगतृष्णानदीतटप्राये भ्रान्तिभाज्यात्मनि मिथ्यैव
136908 मरणजन्मनी कचतः || २९ ||
136909
136910 सम्यक्परीक्षितं यावन्न भ्रान्तिर्न परीक्षकाः |
136911 न नाम जन्ममरणे केवलं शान्तमव्ययम् || ३० ||
136912
136913 यावदस्माभिः सम्यक्परीक्षितं तावन्न भ्रान्तिर्न वा परीक्षका न वा जन्ममरणे
136914 सन्तीत्यर्थः || ३० ||
136915
136916 दृश्याद्यो विरतिं यात आत्मारामः शमं गतः |

स सन्नेवासदाभासः परितीर्णभवार्णवः ॥ ३१ ॥

न परीक्षका इति कथमुच्यते तत्त्वविदः परीक्षकस्याबाधात्तत्राह - दृश्यादिति।
ब्रह्मभावेन सन्नपि देहेन्द्रियादिसहितपरीक्षकात्मना असदाभास इत्यर्थः ॥ ३१ ॥

दीपनिर्वाणनिर्वाणमस्तंगतमनोगतिम्।
आत्मन्येव शमं यातं सन्तमेवामलं विदुः ॥ ३२ ॥

ब्रह्मात्मना सन्तमेव दीपनिर्वाणमिव निर्वाणं विदुः ॥ ३२ ॥

आबुद्ध्यादि जगद्दृश्यं यस्मै न स्वदते स्वतः।
आकाशस्येव शान्तस्य तमाहुर्मुक्तमुत्तमाः ॥ ३३ ॥

अत एव तस्य न संसारः स्वदते इत्याह - आबुद्ध्यादीति ॥ ३३ ॥

अहमस्त्यविचारेण विचारेणाहमस्ति नो।
अभावादहमर्थस्य क्व जगत्क्व च संसृतिः ॥ ३४ ॥

तत्त्वज्ञश्चेद्दीपवन्निर्वाणस्तर्हि त्वं वसिष्ठः कथमसि तत्राह - अहमिति ॥ ३४ ॥

संवित्संवेदनादेव बुद्ध्याद्याकारवत्स्थितम्।
रूपालोकमनोरूपं जगद्वेत्ति चिदम्बरम् ॥ ३५ ॥

अभावः कुतस्तत्राह - संविदिति। वास्तवं चिदम्बरमेव
स्वसंविदोऽन्यथासंवेदनादेव बुद्ध्याद्याकारवत्स्थितं सत् ॥ ३५ ॥

सर्वार्थरिक्तमनसः सतः सर्वात्मनस्तव।
सर्वथा सर्वदा सर्वं सर्वमाचरणं शिवम् ॥ ३६ ॥

ममेव यथार्थसंवेदनेन भ्रान्तिनाशे सर्वार्थरिक्तमनसस्तवापि निर्वाणरूपैव
स्थितिः सेत्स्यतीत्याह - सर्वार्थेति ॥ ३६ ॥

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्।
यत्तपस्यसि हंस्येषि तत्सर्वं शिवमव्ययम् ॥ ३७ ॥

सर्वमाचरणंन् प्रपञ्चयति - यदिति ॥ ३७ ॥

यदहं यत्त्वमाशा यद्यत्क्रियाकालखादयः।
यल्लोकालोकगिरयस्तच्चिद्व्योम शिवं ततम् ॥ ३८ ॥

आचरणग्रहणं जगन्मात्रोपलक्षणमित्याशयेनाह - यदिति। आशा इच्छा
दिशश्च ॥ ३८ ॥

यद्रूपालोकमननंन् यत्कालत्रितयं जगत्।
यज्जरामरणार्त्यादि तन्महाचिन्नभः शिवम् ॥ ३९ ॥

निश्चिकित्सो निराभासो निरिच्छो निर्मना [निर्मम इति पाठः ।] मुनिः।
भूत्वा निरात्मा निर्वाणस्तिष्ठ संतिष्ठसे यथा ॥ ४० ॥

निश्चिकित्सो दुःखप्रशमोपायान्वेषणशून्यो निर्विचिकित्सो वा। निर्विकल्प इति पाठः
स्पष्टः। यथा निर्वाणः संतिष्ठसे तथा तिष्ठ ॥ ४० ॥

136969 गतेच्छमननं शान्तमनन्तस्थमभावनम् ।
136970 व्यवहारोऽस्तुते मा वा स्पन्दास्पन्दैर्यथानिलः ॥ ४१ ॥
136971
136972 यथा आनिलः अनिलसंबन्धी स्पन्दास्पन्दैर्व्यवहारस्तथा ते तवाप्यस्तु ॥ ४१ ॥
136973
136974 निर्वासना निष्कलना शान्ता पुरुषतास्तु ते ।
136975 शास्त्रेण यन्त्रवाहेन वाह्या दारुमयी यथा ॥ ४२ ॥
136976
136977 पुरुषता पुरुषोचितचेष्टा ते शास्त्रलक्षणेन यन्त्रवाहेन वाह्या निर्वाह्यास्तु ॥ ४२ ॥
136978
136979 भूतालोकस्तु माश्नेहो मा वाऽस्नेहश्च बाह्यगः ।
136980 अनिर्देशधरालोकश्चित्रदीपवदास्यताम् ॥ ४३ ॥
136981
136982 हे राम तव बाह्यगो मातृपितृबन्धुजनादिभूतानामालोकनमालोक आस्नेहः
136983 स्नेहबहुलो मा भूत् अस्नेहो वा मा भूत् किंतु अनिर्देशधरः अस्तिनास्तीति
136984 परीक्षकैर्निर्दिष्टुमशक्य आलोकः प्रकाशो यस्य तथाविधोऽस्तु । एवं च त्वया
136985 चित्रदीपवदास्यतां स्थीयताम् । तस्यापि हि
136986 चित्रलिखिततैलपूर्णत्वात्परमार्थतस्तैलाभावाच्च भूतानां
136987 प्राणिनामालोकनमालोक आस्नेहः स्नेहबहुलः अस्नेहस्तच्छून्यश्च न भवति । आलोकः
136988 प्रकाशश्च चित्रलिखितः अस्तिनास्तीति निर्देशार्हो न भवतीति साम्यादित्यर्थः ॥ ४३ ॥
136989
136990 निर्वासनस्य विरसस्य निरेषणस्य शास्त्राहते क इव तत्त्वविनोदहेतुः ।
136991 शास्त्रार्थसज्जनमतोऽप्यमलस्य तस्य संवेदनेष्वनभिसंधिमतः स्वरूपम्
136992 ॥ ४४ ॥
136993
136994 निर्वासना निष्कलना इति श्लोकार्थमेव पुनरनुवादेन दृढीकुर्वन्नुपसंहरति -
136995 निर्वासनस्येति । वर्तमानभोगेषु विरसस्य । भाविषु निरेषणस्य । शास्त्रात्सच्छास्त्रात् ।
136996 तत्त्वे खसुखे विनोदो विश्रान्तिस्तद्धेतुः । आदेहधारणमवश्यभावित्वादवर्जनीये
136997 व्यवहारे सच्छास्त्रानुसरणे एव चित्तदोषनिर्हरणेन विवेकाद्युद्बोधनेन च
136998 तत्त्वज्ञानप्रतिष्ठासिद्धेरिति भावः । अतः अनभिसंधिमतः अत एवामलस्यापि तस्य
136999 तत्त्वविदः संवेदनपूर्वकव्यवहारेषु शास्त्रार्थे स्वस्ववर्णाश्रमोचिताचारे
137000 शमदमादौ च सज्जनंन् सम्यगनुवर्तनमेव स्वरूपमसाधारणंन् लक्षणंन्
137001 न यथेष्टाचरणमित्यर्थः । तथा चाहुर्वृद्धाः विदितब्रह्मतत्त्वस्य
137002 यथेष्टाचरणंन् यदि । शुनां तत्त्वदृशां चैव को भेदोऽशुचिभक्षणे ॥ इति ॥ ४४ ॥
137003
137004 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाणप्रकरणे
137005 उत्तरार्धे निर्वाणवर्णनंन् नामाष्टत्रिंशः सर्गः ॥ ३८ ॥
137006
137007 इति श्रीवासिष्ठमहारामायणे तात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
137008 निर्वाणवर्णनंन् नामाष्टत्रिंशः सर्गः ॥ ३८ ॥
137009 एकोनचत्वारिंशः सर्गः ३९
137010
137011 श्रीवसिष्ठ उवाच ।
137012
137013 संजाताकृत्रिमक्षीणसंसृतिप्रत्ययः पुमान् ।
137014 असंकल्पो न संकल्पं वेत्ति तेनासदेव सः ॥ १ ॥
137015
137016 प्रबुद्धात्मनि विश्रान्तो यद्रूपः परिशिष्यते ।
137017 जगच्च तस्य यद्रूपं तत्सम्यगिह वर्ण्यते ॥
137018
137019 विदुषः शास्त्रानुसारनियमे तन्नियामकसंकल्पस्यामि प्रसक्तिमाशङ्क्याह -
137020 संजातेति । संजातो यथाभूतार्थगोचरत्वादकृत्रिमः क्षीणा

137021 संसृतिर्यस्मात्तथाविधः प्रत्ययः साक्षात्कारो यस्य तथाविधः पुमान्
137022 शास्त्रीयव्यवहारनियमेऽप्यसंकल्प एवावतिष्ठते। यतोऽयं
137023 तत्तद्व्यवहाराभासहेतुसंकल्पाभासं स्वात्मैवेति पश्यन् संकल्पं न वेत्ति। न च
137024 वेदनमन्तरेण कस्य चित्सत्ता प्रसिद्धेति स संकल्पाभासोऽसदलीकमेवेत्यर्थः ॥ १ ॥
137025
137026 श्वासान्म्लानिरिवादर्शे कुतोऽप्यहमिति स्थिता।
137027 विदि साऽकारणंन् दृष्टा नश्यन्त्याशु न लभ्यते ॥ २ ॥
137028
137029 न संकल्पं वेत्ति इत्युक्तेर्विवरणाय सर्वसंकल्पबीजस्याहंताध्यासस्य बाधादपि
137030 तस्य न संकल्पप्रसक्तिरित्याशयेनाह - श्वासादिति।
137031 प्राग्बोधात्कुतोऽप्यनिर्वचनीयान्निमित्तान्निःश्वासोत्था आदर्शे म्लानिरिव अहमित्यहंता
137032 स्थिता। सा तत्त्वविदि अकारणमाशु नश्यन्ती दृष्टा यत्नेनान्विष्टापि न लभ्यते ॥ २ ॥
137033
137034 यस्य क्षीणावरणता शान्तसर्वेहतोदिता।
137035 परमामृतपूर्णात्मा सत्तयैव स राजते ॥ ३ ॥
137036
137037 कामनया हि संकल्पप्रसक्तिः सा च पूर्णकामस्य नास्तीत्याशयेनाह - यस्येति।
137038 सत्तया निरतिशयानन्दस्वरूपसत्तयैव ॥ ३ ॥
137039
137040 सर्वसंदेहदुर्ध्वान्तमिहिकामातरिश्वना।
137041 भाति भास्वद्धिया देशस्तेन पूर्णेन्दुनेव खम् ॥ ४ ॥
137042
137043 एकलाभादेव सर्वलाभाल्लब्धव्यविषय इव एकविज्ञानेनैव
137044 सर्वविज्ञानाज्ज्ञातव्यविषयेऽपि भ्रमसंशयाद्यभावात्तदर्थमपि तस्य न
137045 संकल्पप्रसक्तिरित्याशयेनाह - सर्वेति। भास्वती निरावरणात्मकप्रकाशा
137046 धीर्यस्य तेन। अत एव सर्वेषां देहलक्षणानां दुर्ध्वान्तनिमित्तमिहिकानां
137047 मातरिश्वना। तद्देशस्थसर्वजनभ्रमसंशयनिरासमर्थस्य
137048 तत्प्रसक्त्यभावादिति भावः ॥ ४ ॥
137049
137050 विसंसृतिर्विसंदेहो लब्धज्योतिर्निरावृतिः।
137051 शरदाकाशविशदो ज्ञेयो विज्ञायते बुधः ॥ ५ ॥
137052
137053 यतो बुधस्तत्त्ववित् शिवमद्वैतं चतुर्थंन् मन्यन्ते स आत्मा स विज्ञेयः
137054 इत्यादिश्रुतिषु ज्ञेय आत्मैवेति विज्ञायत इत्यर्थः ॥ ५ ॥
137055
137056 निःसंकल्पो निराधारः शान्तः स्पर्शात्पवित्रताम्।
137057 अन्तःशीतल आधत्ते ब्रह्मलोकादिवानिलः ॥ ६ ॥
137058
137059 स्पर्शात् प्रणतिशुश्रूषादिना संगमात्। जनानां पवित्रतां निष्पापताम्।
137060 ब्रह्मलोकादागतः अनिल इव ॥ ६ ॥
137061
137062 असद्रूपोपलम्भानामियंन् वस्तुस्वभावता।
137063 यत्स्वर्गविदनंन् स्वप्नबन्ध्यापुत्रोपलम्भवत् ॥ ७ ॥
137064
137065 न संकल्पं वेत्ति इत्येतद्विशदीकृत्य तेनासदेव स इति तच्छेषं
137066 विशदीकर्तुमसद्रूपोपलम्भस्य स्वरूपं प्रपञ्चयति - असद्रूपेति चतुर्भिः ॥ ७ ॥
137067
137068 अविद्यमानमेवेदं जगद्यदनुभूयते।
137069 असद्रूपोपलम्भस्य सैषा वस्तुस्वभावता ॥ ८ ॥
137070
137071 असत्येष्वेव संसारेष्वास्तामर्थः कुतो भवेत्।
137072 सर्गापवर्गयोः शब्दावेव वन्ध्यासुतोपमौ ॥ ९ ॥

137073
137074 स्वप्नबन्ध्यापुत्रोपलम्भवदित्युक्तदृष्टान्तसाम्यं दर्शयति - असत्येष्विति |
137075 कुतो भवेत् किं सत्यादुतासत्यात् | न तावत्सत्यात् | तस्य कूटस्थत्वात् | न द्वितीयः |
137076 असत्यादसत्यस्योत्पत्तेरप्यसत्त्वापत्तेः | एवं क्व आस्तां
137077 सत्यस्यासङ्गाद्वयत्वादसत्यस्याधारत्वायोगादिति भावः | अतः असत्येष्वेव
137078 संसारेषु सर्गस्य बन्धस्य तदपवर्गस्य च शब्दावेव यत्र बन्ध्यासुतोपमौ तत्र
137079 दूरे तदर्थसिद्धिरित्यर्थः ‖ ९ ‖
137080
137081 जगद्ब्रह्मतया सत्यमनिर्मितमभावितम् |
137082 अनिष्ठितं चान्यथा तु नाहं नावगतं च तत् ‖ १० ‖
137083
137084 यदा तु जगत्सत्यमिति पक्षस्तदापि स ब्रह्माभेदेनैव निर्वाह्य
137085 इत्युत्पत्तिस्थितितन्निरूपकादिविभागो निरालम्बन एवेत्याह - जगदिति | अभावितं
137086 भावनया अविषयीकृतम् | आधारविशेषे अनिष्ठितं च | अन्यथा
137087 ब्रह्मतानभ्युपगमे तु ‖ १० ‖
137088
137089 आत्मस्वभावविश्रान्तेरियं वस्तुस्वभावता |
137090 यदहंतादिसर्गादिदुःखाद्यनुपलम्भता ‖ ११ ‖
137091
137092 असद्रूपोपलम्भस्वभावमुपवर्ण्य
137093 सद्रूपोपलम्भस्वरूपविश्रान्तेर्वस्तुस्वभावं प्रपञ्चयति - आत्मेत्यादिना |
137094 अनुपलम्भता | निर्विषयचिन्मात्रतेति यावत् ‖ ११ ‖
137095
137096 क्षणाद्योजनलक्षान्तं प्राप्ते देशान्तरे चितः |
137097 चेतनेऽयस्य तद्रूपं मार्गमध्ये निरञ्जनम् ‖ १२ ‖
137098
137099 चितो निर्विषयताया अप्रसिद्धिमाशङ्कमानं प्रति देशाद्देशान्तरप्राप्तौ इति श्लोके
137100 दर्शितां तत्प्रसिद्धिं स्मारयति - क्षणादिति | शाखादिदेशाच्चन्द्रादिदेशान्तरे
137101 योजनलक्षान्तं चक्षुर्द्वारा प्राप्ते चेतने चाक्षुषवृत्त्यवच्छिन्नचैतन्ये
137102 मार्गमध्ये अयते व्याप्नोतीत्ययस्य चैतन्यस्य यदचेत्यं खकोशाभासचिन्मयं
137103 रूपं सर्वस्य जन्तुजातस्य प्रसिद्धं तत्स्वभावं विदुरिति व्यवहितेन संबन्धः ‖ १२
137104 | |
137105
137106 अस्पन्दवातसदृशं खकोशाभासचिन्मयम् |
137107 अचेत्यं शान्तमुदितं लताविकसनोपमम् ‖ १३ ‖
137108
137109 सर्वस्य जन्तुजातस्य तत्स्वभावं विदुर्बुधाः |
137110 सर्गोपलम्भो गलति तत्रस्थस्य विवेकिनः ‖ १४ ‖
137111
137112 सुषुप्ते स्वप्नधीर्नास्ति स्वप्ने नास्ति सुषुप्तधीः |
137113 सर्गनिर्वाणयोर्भ्रान्ती सुषुप्तस्वप्नयोरिव ‖ १५ ‖
137114
137115 सुषुप्तिस्वप्नयोः परस्परविषयशून्यतेव वा तुरीये निर्विषयता चितः
137116 संभावनीयेत्याह - सुषुप्ते इति ‖ १५ ‖
137117
137118 भ्रान्तिवस्तुस्वभावोऽसौ न स्वप्नो न सुषुप्तता |
137119 न सर्गो न च निर्वाणं सत्यं शान्तमशेषतः ‖ १६ ‖
137120
137121 स्वप्नसुषुप्त्यादिविभागोऽपि भ्रान्तौ वस्तुस्वभावभूतः परमार्थो नास्तीत्याह -
137122 भ्रान्तीति ‖ १६ ‖
137123
137124 भ्रान्तिस्त्वसन्मात्रमयी प्रेक्षिता चेन्न लभ्यते |

137125 शुक्तिरूप्यमिवासत्यं किल संप्राप्यते कथम् ॥ १७ ॥
137126
137127 कुतो नास्ति तत्राह - भ्रान्तिरिति ॥ १७ ॥
137128
137129 यन्न लब्धं च तन्नास्ति तेन भ्रान्तेरसंभवः ।
137130 स्वभावादुपलम्भोन्यो नास्ति कस्य न कस्यचित् ॥ १८ ॥
137131
137132 भ्रान्तिविषयोऽर्थो भ्रान्त्या न लब्धोऽप्युपलम्भान्तरेण लभ्यतां तत्राह -
137133 स्वभावादिति । भ्रान्तेरन्य उपलम्भः प्रमात्मको वाच्यः स च
137134 कस्यचिद्भ्रान्तिगोचरार्थस्य साक्षिस्वब्भावादन्यो नास्तीत्यर्थः ॥ १८ ॥
137135
137136 स्वभाव एव सर्वस्मै स्वदत्ते किल सर्वदा ।
137137 अनानैव हि नानेव किं वादैः संविभाव्यताम् ॥ १९ ॥
137138
137139 एवं च सम्यग्विभावने साक्षिस्वभाव एक एव स्वात्मनि त्रिपुटीकल्पनया प्रथते
137140 नान्यदस्मादणुमात्रमपीत्याह - स्वभाव इति । स्वदते परमप्रेमास्पदतया
137141 प्रथते ॥ १९ ॥
137142
137143 अस्वभावे महद्दुःखं स्वभावे केवलं शमः ।
137144 इति बुद्ध्या विचार्यान्तर्यदिष्टं तद्विधीयताम् ॥ २० ॥
137145
137146 तस्य स्वभावातिरिक्तकल्पनमेव संसारदुःखमकल्पितस्वरूपावस्थितिरेव
137147 कैवल्यसुखमित्याह - अस्वभावे इति । विधीयतां उपादीयताम् ॥ २० ॥
137148
137149 सूक्ष्मे बीजेऽस्त्यगः स्थूलो दृष्टमित्युपपद्यते ।
137150 शिवे मूर्ते जगन्मूर्तमस्तीत्युत्तमसंकथा ॥ २१ ॥
137151
137152 तदुपादाने क उपाय इति चेत्तदध्यस्तस्य विश्वस्य
137153 तन्मात्रतादर्शनमेवेत्याशयेनोत्पत्तिप्राक्कालादारभ्य तदपृथक्सत्तां दर्शयति
137154 - सूक्ष्मे इति । अगो वृक्षः । उत्तमानां तत्त्वविदां वेदानां च संकथा
137155 सदुक्तिरित्यर्थः ॥ २१ ॥
137156
137157 रूपालोकमनस्कारबुद्ध्यहन्तादयः परे ।
137158 स्वरूपभूताः सलिले द्रवत्वमिव खात्मकाः ॥ २२ ॥
137159
137160 एवं प्रत्यगात्मन्याध्यात्मिकभावनामप्यपृथक्सत्तैव स्वधर्मताप्रतीतेः
137161 सर्वानुभवसिद्धेत्याह - रूपेति ॥ २२ ॥
137162
137163 मूर्तो यथा स्वसदृशैः करोत्यवयवैः क्रियाः ।
137164 आत्मभूतैस्तथा भूतैश्चिदाकाशमकर्तृ सत् ॥ २३ ॥
137165
137166 एवं तत्पदार्थव्यवहारः सर्गादिस्त्वंपदार्थव्यवहारश्च चिदात्मा
137167 पृथक्सत्ताकत्वात्तदवयवप्रायैः सर्वपदार्थैः प्रवृत्त इत्याह - मूर्त इति ।
137168 स्वसदृशैः स्वात्मप्रायैः स्वापृथक्सत्ताकैरिति यावत् ॥ २३ ॥
137169
137170 आत्मस्थादहमित्यादिरस्मदादेरसंसृतेः ।
137171 शब्दोऽर्थभावमुक्तो यः पटहादिषु जायते ॥ २४ ॥
137172
137173 अर्थव्यवहार इव शब्दप्रयोगादिव्यवहारोऽप्यपृथक्सत्तया चिदधिष्ठितादेव
137174 देहवागादेर्जायते इत्याह - आत्मस्थादिति । असंसृतेर्जडत्वेन स्वतो
137175 व्यवहारासमर्थादस्मदादेर्वसिष्ठरामादिदेहाद्योऽहमित्यादिरर्थ##-
137176 आत्मस्थाच्चिदात्माधिष्ठितादेव जायते ।

137177 नटीपदक्रमतालाभिज्ञवादकपुरुषाधिष्ठितेषु पटहादिषु यथा
137178 तदभिप्रायानुसारिविचित्रशब्दो जायते तथेति शेषः ॥ २४ ॥
137179
137180 यद्भातं प्रेक्षया नास्ति तन्नास्त्येव निरन्तरम् ।
137181 जगद्रूपमरूपात्म ब्रह्म ब्रह्मणि संस्थितम् ॥ २५ ॥
137182
137183 एवं सर्वजगद्व्यवहारस्य चिदभेदनिर्वाह्यत्वे आत्यन्तिक एवाभेदोऽस्तु
137184 किमर्धजरतीन्यायेनाविचारमात्रसिद्धजाड्यांशभेदोपगमेनेत्याशयेनाह -
137185 यदिति । आपाततो भातम् । प्रेक्षया विचारजन्यतत्त्वज्ञानेन । अतो जाड्यभेदांशरूपं
137186 जगद्रूपमरूपात्म निःस्वरूपमेव । एवं च ब्रह्म ब्रह्मणि स्वस्वभावे संस्थितम् ।
137187 सैवास्य स्वरूपावस्थितिरिति भावः ॥ २५ ॥
137188
137189 येषामस्ति जगत्स्वप्नस्ते स्वप्नपुरुषा मिथः ।
137190 न सन्ति ह्यात्मनि मिथो नास्मास्वम्बरपुष्पवत् ॥ २६ ॥
137191
137192 नन्वसंसारि ब्रह्म ब्रह्म स्वभावे तिष्ठतु नाम तेन संसारिणां को लाभ
137193 इत्याशङ्क्य तेषां पुरुषार्थचिन्ता वन्ध्यायाः
137194 स्वपुत्रराज्यादिलाभचिन्तावद्वृथैवेत्याशयेनाह - येषामिति । मिथः अन्योन्यं
137195 भ्रान्तिदृष्ट्यापि जागरे स्वप्नान्तरे च तत्तदात्मनि च सन्ति मिथः
137196 परमैकान्ततमब्रह्मभूतेष्वस्मासु खपुष्पवन्न नितरां सन्तीत्यर्थः । एवार्थे
137197 हिशब्दः ॥ २६ ॥
137198
137199 मयि ब्रह्मैकरूपं ते शान्तमाकाशकोशवत् ।
137200 वायोः स्पन्दैरिवाभिन्नैर्व्यवहारैश्च तन्मयि ॥ २७ ॥
137201
137202 अस्मासु जडांशे एव ते तद्व्यवहाराश्च खपुष्पवत् सच्चिदंशे तु मयि
137203 ब्रह्मैकरूपत्वात्सन्त्येवेत्याह - मयीति । ते पुरुषाः
137204 वायुस्पन्दवत्स्वाभिन्नैस्तैस्तैः स्वव्यवहारैः सह मयि सन्त्येव । यतस्तदुभयं
137205 शान्तं सद्ब्रह्मात्मैकरूपं तच्च ब्रह्म मयि प्रत्यगात्मस्वभावेऽस्तीत्यर्थः ॥ २७
137206 ।।
137207
137208 अहं तु सन्मयस्तेषां स्वप्नः स्वप्नवतामिव ।
137209 ते तु नूनमसन्तो मे सुषुप्तस्वप्नका इव ॥ २८ ॥
137210
137211 अपरं विशेषमाह - अहं त्विति । अप्रबुद्धदृष्ट्या जगत इव वसिष्ठदेहस्यापि
137212 सत्यत्वादिति भावः । ते त्विति । प्रबुद्धदृष्ट्या जगता सह तद्देहादीनां बाधादिति
137213 भावः ॥ २८ ॥
137214
137215 तैस्तु यो व्यवहारो मे तद्ब्रह्म ब्रह्मणि स्थितम् ।
137216 ते यत्पश्यन्ति पश्यन्तु तत्तैरलमलं मम ॥ २९ ॥
137217
137218 अनुग्रहोपदेशादिव्यवहारस्तैस्तद्दृष्टिसिद्धसत्यभावैर्मद्व्यवहारैर्मम ।
137219 अलमलमिति वीप्सा आत्यन्तिकनिष्प्रयोजनताद्योतनाय ॥ २९ ॥
137220
137221 अहमात्मनि नैवास्मि ब्रह्मसत्तेयमातता ।
137222 त्वदर्थंन् समुदेतीव तथारूपैव वागियम् ॥ ३० ॥
137223
137224 अहं आत्मनि वसिष्ठदेहभावे नैवास्मि । इयं वसिष्ठाद्याकारा त्वदर्थं
137225 ब्रह्मसत्तैव समुदेतीव । इयं वागपि तथारूपा त्वदर्थं ब्रह्मसत्ताविवर्तरूपैव
137226 मम दृष्ट्या तु नास्त्येवेत्यर्थः ॥ ३० ॥
137227
137228 अविरुद्धविरुद्धस्य शुद्धसंविन्मयात्मनः ।

137229 न भोगेच्छा न मोक्षेच्छा हृदि स्फुरति तद्विदः ॥ ३१ ॥
137230
137231 सर्ववस्तूनामानन्दैकरसात्मतादर्शनादविरुद्धं विरुद्धं दुःखादिकमपि
137232 यस्य तथाविधस्य तत्त्वविदः ॥ ३१ ॥
137233
137234 स्वभावमात्रायत्तेऽस्मिन्बन्धमोक्षक्रमे नृणाम् ।
137235 कदर्थनेत्यहो मोहाद्गोष्पदेऽप्युदधिभ्रमः ॥ ३२ ॥
137236
137237 मोहादविरुद्धनिरतिशयानन्दात्मापरिज्ञानादिति प्रसिद्धा इयं संसारकदर्थना
137238 मोक्षोपायक्रमाभ्यासकदर्थना च ॥ ३२ ॥
137239
137240 स्वभावसाधने मोक्षेऽभावोपशमरूपिणि ।
137241 न धनान्युपकुर्वन्ति न मित्राणि न च क्रियाः ॥ ३३ ॥
137242
137243 अभावस्यासत एव दुःखस्योपशमरूपिणि ॥ ३३ ॥
137244
137245 तैलबिन्दुर्भवत्युच्चैश्चक्रमप्पतितो यथा ।
137246 तथाशु चेत्यसंकल्पे स्थिता भवति चिज्जगत् ॥ ३४ ॥
137247
137248 अप्सु पतितः अप्पतितस्तैलबिन्दुर्यथा नानावर्णं चक्रं भवति ॥ ३४ ॥
137249
137250 जाग्रति स्वप्नवृत्तान्तस्थितिर्यादृग्रसा स्मृतौ ।
137251 तादृग्रसाहंत्वजगज्जालसंस्था विवेकिनः ॥ ३५ ॥
137252
137253 ज्ञानबाधितं तु जगत् स्वप्नवत्स्मृतिमात्रयोग्यतामापद्यत इत्याह - जाग्रतीति ।
137254 स्मृतौ प्रतिभासमाना यादृग्रसा यादृग्विधा ॥ ३५ ॥
137255
137256 तेनैवाभ्यासयोगेन याति तत्तनुतां तथा ।
137257 यथा नाहं न संसारः शान्तमेवावशिष्यते ॥ ३६ ॥
137258
137259 तेन प्रागुक्तेनैव भूमिकाभ्यासयोगेन । तत् जगज्जालम् । तनुतामपक्षयम् ॥ ३६ ॥
137260
137261 यदा यदा स्वभावार्कः स्थितिमेति तदा तदा ।
137262 भोगान्धकारो गलति न सन्नप्यनुभूयते ॥ ३७ ॥
137263
137264 प्रत्यक्प्रवणदृष्ट्या परीक्षणे इदानीमपि तदपक्षयो बाधश्चानुभवितुं शक्य
137265 इत्याशयेनाह - यदा यदेति । गलति अपक्षीयते आत्यन्तिकबाधेन । न सन् कालत्रयेऽपि
137266 नास्तीत्यप्यनुभूयते ॥ ३७ ॥
137267
137268 मोहमहत्तारहितः स्फुरति मृतौ भवति भासते च तथा ।
137269 बुद्ध्यादिकरणनिकरो यस्माद्दीपादिवालोकः ॥ ३८ ॥
137270
137271 एवं भोगान्धकारस्य मृतौ विनाशे सति बुद्ध्यादिकरणनिकरो
137272 मोहेनात्मावरणेनाज्ञानेन महत्तया स्थूलदेहाद्यध्यासेन च रहितो भवति । तथा
137273 ब्रह्माकारवृत्तीद्धेन बोधेन स्फुरति । यस्मात्फुरणाद्दीपात्प्रसृत आलोक इव
137274 सर्वतो व्याप्य ब्रह्मीभूतो भासते चेत्यर्थः ॥ ३८ ॥
137275
137276 इत्यार्षे श्रीवा० वाल्मीकीये दे० मो० नि० उत्तरार्धे वसिष्ठगीतासु
137277 खभावविश्रान्तियोगोपदेशो नामैकोनचत्वारिंशः सर्गः ॥ ३९ ॥
137278
137279 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
137280 खभावविश्रान्तियोगोपदेशो नामैकोनचत्वारिंशः सर्गः ॥ ३९ ॥

चत्वारिंशह् सर्गः ४०

श्रीवसिष्ठ उवाच।

रूपालोकमनस्कारबुद्ध्यादीन्द्रियवेदनम्।
स्वरूपं विदुरम्लानमस्वभावस्य वस्तुनः॥ १॥

न संसृतौ ब्रह्म भाति न ब्रह्मणि च संसृतिः।
जीवन्मुक्तौ द्वयं भाति पर्यायेणेति वर्ण्यते॥

तत्रादौ निःस्वभावस्य बाह्याभ्यन्तरवस्तुनस्तत्साक्षिचैतन्यमेव वास्तवं
स्वरूपमिति विद्वदनुभव इत्याह - रूपेति। अम्लानं निर्विकारकलङ्कम्॥ १॥

अस्वभावतनुत्वेन स्वभावस्थितिरातता।
यदोदेति तदा सर्गो भ्रमाभः प्रतिभासते॥ २॥

तत्र तद्बोधान्वयव्यतिरेकानुविधानलक्षणां युक्तिमाह - अस्वभावेति द्वाभ्याम्
। यदा आतता अपरिच्छिन्ना वास्तवस्वभावस्थितिः अस्वभावस्तत्तिरोधात्री अविद्या
तत्तनुत्वेन तत्कृतपरिच्छेदेन तच्छरीरतया च उदेति तदेत्यन्वयोक्तिः॥ २॥

यदा स्वभावविश्रान्तिः स्थितिमेति शमात्मिका।
जगद्दृश्यं तदा स्वप्नः सुषुप्त इव शाम्यति॥ ३॥

व्यतिरेकमाह - यदेति। स्वबोधेनेति शेषः।
बीजशेषवैषम्येऽप्यद्वैतात्ममात्रस्थित्यंशे सुषुप्तदृष्टान्तः॥ ३॥

भोगा भवमहारोगा बन्धवो दृढबन्धनम्।
अनर्थायार्थसंपत्तिरात्मनात्मनि शाम्यताम्॥ ४॥

अत एव स्वरूपविश्रान्तिविरोधिनो भोगादयोऽनर्था एवेत्याह - भोगा इति॥ ४॥

अस्वभावात्मता सर्गः स्वभावैकात्मता शिवः।
भूयतां परमव्योम्ना शाम्यतां मेह ताम्यताम्॥ ५॥

एवं च स्वायत्तानां स्वभावस्थितौ नानर्थे पातो युक्त इत्याह - भूयतामिति। इह
संसारे। मा ताम्यतां ग्लायताम्॥ ५॥

नात्मानमवगच्छामि न दृश्यं च जगद्भ्रमम्।
ब्रह्म शान्तं प्रविष्टोऽस्मि ब्रह्मैवास्मि निरामयः॥ ६॥

स्वायत्ततामेव स्वानुभवाभिनयेन दर्शयति - नेति। आत्मानं
द्रष्ट्रादित्रिपुट्यामाद्यं वसिष्ठजीवम्॥ ६॥

त्वमेव पश्यसि त्वन्त्वं सत्त्वं शब्दार्थजृम्भितम्
[शब्दार्थबृंहितं इति पाठः साधुर्व्याख्यानुगुण्यात्।]।
पश्यामि शान्तमेवाहं केवलं परमं नभः॥ ७॥

हे राम वसिष्ठस्त्वमिति त्वंशब्दार्थबृंहितं त्वं त्वमपि स तादृशस्त्वमेव
पश्यसि अहं तु शान्तमेव पश्यामि॥ ७॥

137333 ब्रह्मण्येव पराकाशे रूपालोकमनोमयाः |
137334 विभ्रमास्तव संजातकल्पाः स्पन्दा इवानिले || ८ ||
137335
137336 तवापि एते शब्दार्थादिरूपालोकमनोमया विभ्रमा न परमार्थतो जाताः किंतु
137337 संजातकल्पाः || ८ ||
137338
137339 ब्रह्मात्मा वेत्ति नो सर्गं सर्गात्मा ब्रह्म वेत्ति नो |
137340 सुषुप्तो वेत्ति नो स्वप्नं स्वप्नस्थो न सुषुप्तकम् || ९ ||
137341
137342 मम द्वैतादर्शनं न द्वैतप्रद्वेषात् किंतु
137343 द्वैताद्वैतयोर्युगपद्दर्शनासंभवादित्याह - ब्रह्मात्मेति || ९ ||
137344
137345 प्रबुद्धो ब्रह्मजगतोर्जाग्रत्स्वप्नदृशोरिव |
137346 रूपं जानाति भारूपं जीवन्मुक्तः प्रशान्तधीः || १० ||
137347
137348 अत्यन्तादर्शने कथं तदुपदेशप्रसिद्धिस्तत्राह - प्रबुद्ध इति | जीवन्मुक्तस्तु
137349 पर्यायेणोभयं पश्यतीत्युपदेष्टा भवतीत्याशयः || १० ||
137350
137351 यथाभूतमिदं सर्वं परिजानाति बोधवान् |
137352 संशाम्यति च शुद्धात्मा शरदीव पयोधरः || ११ ||
137353
137354 सोऽप्युत्तरोत्तरभूमिकासु क्रमेण द्वैतादर्शनात्प्रशाम्यतीत्याह -
137355 यथाभूतमिति || ११ ||
137356
137357 स्मृतिस्थः कल्पनस्थो वा यथाख्यातश्च संगरः |
137358 सदसद्भ्रान्ततामात्रस्तथाहंत्वजगद्भ्रमः || १२ ||
137359
137360 तद्दृष्ट्या द्वैतस्योत्तरोत्तरं पेलवतां दृष्टान्ताभ्यामाह - स्मृतिस्थ इति |
137361 संगरो युद्धम् || १२ ||
137362
137363 आत्मन्यपि नास्ति हि या द्रष्टा यस्या न विद्यते कश्चित् |
137364 न च शून्यं नाशून्यंन् भ्रान्तिरियं भासते सेति || १३ ||
137365
137366 या परिदृश्यमाना जगन्माया परमार्थसत्ये आत्मनि अपिशब्दादत्यन्तासति शून्ये च
137367 नास्ति | यस्याः कश्चिद्द्रष्टा जीवोऽपि न विद्यते | इति शून्याशून्यविलक्षणेयं
137368 भ्रान्तिरनिर्वचनीयैव भासते इत्यर्थः || १३ ||
137369
137370 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० निर्वाणप्रकरणे उ० वसिष्ठगीतासु
137371 आत्मविश्रान्तिकथनं नाम चत्वारिंशः सर्गः || ४० ||
137372
137373 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
137374 आत्मविश्रान्तिकथनं नाम चत्वारिंशः सर्गः || ४० ||
137375
137376
137377 एकचत्वारिंशः सर्गः ४१
137378
137379 श्रीवसिष्ठ उवाच |
137380
137381 अस्वभावस्वभावोऽयं सर्वोऽहंतादिवेदनः |
137382 स्वभावैकस्वभावेन निर्वाणीक्रियतां स्वयम् || १ ||
137383
137384 त्रिजगत्पुत्रिकानृत्यमस्वभावस्वभावतः |

137385 स्वभावैकस्वभावेन निर्वाणं चात्र वर्ण्यते ॥
137386
137387 अस्वभावोऽविद्या तत्स्वभावोऽयमात्मा सर्वजगद्रूपः
137388 सन्नहंतादिवक्ष्यमाणत्रिजगत्पुत्रिकानृत्यंन् वेत्तीत्यहंकारादिवेदनः संपन्नः
137389 । एवमनिर्वाणोऽयमात्मा स्वयं
137390 शास्त्रीयोपायप्रभवविद्याविर्भूतेनाद्वितीयस्वप्रकाशपूर्णानन्दलक्षण##-
137391
137392 यत्रादित्यो भवेत्तत्र यथालोकस्तथा भवेत् ।
137393 परं विषयवैरस्यंन् तत्र यत्र प्रबुद्धधीः ॥ २ ॥
137394
137395 सा च विद्या विद्वत्समागमविवेकजन्याद्वैराग्यादेव सिध्यतीत्याशयेनाह - यत्रेति
137396 ॥ २ ॥
137397
137398 अकर्तृकर्मकरणमदृश्यद्रष्टृदर्शनम् ।
137399 जगदग्राह्यसंभारमभित्तौ चित्रमुत्थितम् ॥ ३ ॥
137400
137401 तत्र वैराग्यार्थमविद्यास्वभावाच्छुद्धे जगच्चित्राध्यासं वर्णयति - अकर्त्रिति ॥
137402 ३ ॥
137403
137404 न चोत्थितं किंच न वा शान्ते शान्तं यथास्थितम् ।
137405 अनामयं परं ब्रह्म सत्यमव्ययमेव तत् ॥ ४ ॥
137406
137407 विद्यास्वभावेन तदपोह्य निर्वाणस्वरूपं दर्शयति - न चेति ॥ ४ ॥
137408
137409 चिच्चमत्कारमात्रात्मकल्पनारङ्गरञ्जनाः ।
137410 संख्यातुं केन शक्यन्ते खे जगच्चित्रपुत्रिकाः ॥ ५ ॥
137411
137412 तत्राद्यमस्वभावस्वभावं त्रिजगन्नृत्यदनन्तपुत्रिकात्वेन वर्णयति -
137413 चिच्चमत्कारेत्यादिना । चिच्चमत्कारमात्रात्मानो ये जीवास्तेषां कल्पनामात्रात्मके
137414 रङ्गे नृत्यमण्डपे शृङ्गारादिनानारसरञ्जना यासाम् । जगच्चित्रपुत्रिकाः खे
137415 नृत्यन्तीति परेणान्वयः ॥ ५ ॥
137416
137417 रसभावविकाराढ्यं नृत्यन्त्यभिनयैर्नवैः ।
137418 परमाणुप्रति प्रायः खे स्फुरन्त्यम्बरात्मिकाः ॥ ६ ॥
137419
137420 रसैः शृङ्गारादिभिर्भावैः स्थायिभावैर्विकारैः कम्पस्वेदादिसंचारिभावैः
137421 आढ्यं यथा स्यात्तथा । अभिनयैस्तत्तद्वस्त्वाकारव्यञ्जकचेष्टाभिः । परमाणुप्रति
137422 परमाणुमात्रास्वपि विद्यमाने खे चिदाकाशे । प्राय इति संभावितत्वद्योतनार्थः ॥ ६
137423 ।।
137424
137425 सर्वर्तुशेखरधरा दिग्बाहुलतिकाकुलाः ।
137426 पातालपादलतिका ब्रह्मलोकशिरोधराः ॥ ७ ॥
137427
137428 ब्रह्मलोकः शिरोधरा कन्धरा यासां ब्रह्मलोकरूपाणां शिरसां धरा
137429 धारयित्र्य इति वा ॥ ७ ॥
137430
137431 चन्द्रार्कलोलनयनास्तारोत्करतनूरुहाः ।
137432 सप्तलोकाङ्गलतिकाः परितोच्छाम्बराम्बराः ॥ ८ ॥
137433
137434 तारोत्करास्तनूरुहाणि लोमानि यासाम् । परितो दिक्षु अच्छंन्
137435 स्वच्छमम्बरमाकाशमेवाम्बरं वस्त्रं यासाम् ॥ ८ ॥
137436

137437 द्वीपाम्बुराशिवलया लोकालोकाद्रिमेखलाः।
137438 भूतभारचलज्जीवप्रवहत्प्राणमारुताः॥ ९॥
137439
137440 भूतानां भौतिकशरीरादीनां भारेण धारणेन पोषणेन च निमित्तेन चलन्तो जीवा
137441 एव प्रवहन्तः प्राणमारुता यासाम्॥ ९॥
137442
137443 वनोपवनविन्यासहारकेयूरभूषिताः।
137444 पुराणवेदवचनाः क्रियाफलविनोदनाः॥ १०॥
137445
137446 पुराणानि वेदाश्च वचनं यासाम्। तत्तत्क्रियाफलसुखदुःखानि विनोदनानि विलासा
137447 यासाम्। एवंविधा जगत्पुत्रिका नृत्यन्तीति पूर्वत्रान्वयः॥ १०॥
137448
137449 त्रिजगत्पुत्रिकानृत्यंन् यदिदं दृश्यते पुरः।
137450 ब्रह्मवारिद्रवत्वं तत्तद्ब्रह्मानिलवेपनम्॥ ११॥
137451
137452 अस्वभावस्थितैवास्य कारणं कारणात्मकम्।
137453 असुषुप्तं स्थिता स्वापे स्वप्नस्येव सतीव सा॥ १२॥
137454
137455 अस्य च नृत्यस्य अस्वभावस्थितैव चित् कारणम्। यतस्तादृशमेव कारणात्मकं
137456 श्रुतिषु प्रसिद्धम्। यथा स्वापे निद्रायामसुषुप्तं स्थिता सा स्वप्नस्य कारणं
137457 तद्वदित्यर्थः॥ १२॥
137458
137459 असुषुप्तसुषुप्तस्थः स्वभावं भावयन्भव।
137460 जाग्रत्यपि गतव्यग्रो मा स्वप्नमिदमाश्रय॥ १३॥
137461
137462 एवमस्वभावस्वभावमुपवर्ण्येदानीं स्वभावैक्यस्वभावेन निर्वाणीकरणे
137463 उपायमाह - असुषुप्तेति। हे राम त्वं पारमार्थिकस्वभावं भावयन्
137464 जाग्रत्यप्यज्ञाननाशादसुषुप्तंन् सर्वद्वैतोपसंहारात्सुषुप्तं च तुर्यं पदं
137465 तत्स्थो भव॥ १३॥
137466
137467 यज्जाग्रति सुषुप्तत्वं बोधादरसवासनम्।
137468 तं स्वभावं विदुस्तज्ज्ञा मुक्तिस्तत्परिणामिता॥ १४॥
137469
137470 रसो रागो वासना च तच्छून्यम्। तत्परिणामिता तत्स्वरूपेण परिनिष्ठितत्वम्॥ १४॥
137471
137472 अकर्तृकर्मकरणमदृश्यद्रष्टृदर्शनम्।
137473 अरूपालोकमननंन् स्थितं ब्रह्म जगत्तया॥ १५॥
137474
137475 तस्यांन् परिनिष्ठायां व्यवहारकालेऽपि चिदेकरसं जगद्भातीत्याह -
137476 अकर्त्रित्यादिना॥ १५॥
137477
137478 कान्ते कान्तं प्रकचति पूर्णे पूर्णं व्यवस्थितम्।
137479 द्वित्वैक्यरहिते भाति द्वित्वैक्यपरिवर्जितम्॥ १६॥
137480
137481 द्वित्वैक्यरहिते शोधिते प्रतीचि द्वैतैक्यपरिवर्जितं शोधितं ब्रह्म अखण्डैकरस्येन
137482 भाति॥ १६॥
137483
137484 सत्यं सत्ये स्थितं शान्तंन् सर्गात्मन्यात्मनि स्वयम्।
137485 आकाशकोशसदृशं शिलाजठरसंनिभम्॥ १७॥
137486
137487 सर्गात्मनि स्थितं सत्यं सत्ये आत्मनि शान्तं स्वयमेव स्थितम्॥ १७॥
137488

सुरत्नजठराकारं घनमप्यम्बरोपमम् |
प्रतिबिम्बमिव क्षुब्धमप्यक्षुब्धमसच्च सत् || १८ ||

शिलाजठरवदप्रकाशस्वभावताभ्रान्तिं वारयति - सुरत्नेति | अत एव
जगत्प्रतिबिम्बं प्राप्य क्षुब्धमिव स्थितमप्यक्षुब्धम् || १८ ||

भविष्यन्नवनिर्माणं चेतसीव स्थितं पुरम् |
ब्रह्म बृंहितभारूपमभेदीकृतमानसम् || १९ ||

अभेदीकृतमेकरसीकृतं मानसं यत्र || १९ ||

यथा संकल्पनगरं संकल्पान्नैव भिद्यते |
तथायंन् जगदाभासः परमार्थान्न भिद्यते || २० ||

हेमपीठमिवानेकभविष्यत्संनिवेशवत् |
लक्ष्यमाणमपि स्फारं शान्तमव्ययमास्थितम् || २१ ||

हेमपीठं पीठवच्चतुरस्रो हेमपिण्डः | स्फारं नानाविस्तारं लक्ष्यमाणमपि ||
२१ ||

अजस्रनाशोत्पादाढ्यमेकरूपमनामयम् |
अनाशोत्पादमजरमनेकमिव कान्तिमत् || २२ ||

कान्तिमत् भास्वरम् || २२ ||

ब्रह्मैव शान्तिघनभावगतं विभाति सर्गोदयेन विगतास्तमयोदयेन |
व्योमेव शून्यविभवेन गलत्स्वभावलाभ्भंन् प्रति प्रसभमेव ननु
प्रबुद्धे || २३ ||

ननु हे राम प्रबुद्धे सति शान्तिघनभावगतं ब्रह्मैव
प्रसभमद्वैतस्वभावबलादेव विगतास्तमयोदयेन सर्गलक्षणेन उदयेन
स्वाराज्यविभवेन भाति | यथा व्योम गलत्स्वभावलाभं बाधितस्वरूपलाभंन्
केशोण्ड्रकगन्धर्वनगरतलमलिनतादिकं प्रति प्रसभं बलादेव स्फूर्तिनिरासो
भयप्रदेन स्वीयशून्यविभवेन विभाति तद्वदित्यर्थः || २३ ||

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मी० दे० मो० निर्वाणप्रकरणे उ०
स्वरूपविऽस्रान्त्यर्थमुपदेशकरणं नामैकचत्वारिंशः सर्गः || ४१ ||

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
स्वरूपविश्रान्त्यर्थमुपदेशकरणं नामैकचत्वारिंशः सर्गः || ४१ ||

द्विचत्वारिंशः सर्गः ४२

श्रीवसिष्ठ उवाच |

चित्तवत्कचनंन् शान्ते यत्तत्तस्मान्न भिद्यते |
अव्याकृतामलतया क्वाऽतः सर्गादिसंभवः || १ ||

भूयः प्रपञ्चयते चात्र विश्वविश्वेश्वरैकता |
विवेकैः पूजनीयश्च स्वात्मैव परमेश्वरः ||

137541 प्रागुक्तां जगतो ब्रह्ममात्रतामनुभावयितुं जगद्भेदकचनहेतोश्चित्तस्य
137542 चिद्भेदंन् निरस्यति - चित्तवदिति | शान्ते कूटस्थात्मनि प्रथमं यत् चित्तवत्कचनं
137543 तत्तस्मात्कचनरूपाच्चिदात्मनो न भिद्यते | कुतः | अव्याकृतत्वादमलत्वाच्च | तथा हि
137544 नामरूपभेदाद्धि लोके भेदः प्रसिद्धः | स च
137545 नामरूपव्याकरणात्पूर्वभूतजीवभावान्नुप्रवेशोपाधौ चित्ते न संभवति |
137546 तस्याव्याकृतत्वात् | सूक्ष्मतेजोवन्नात्मकलिङ्गसृष्ट्यनन्तरं हि सेयं देवतैक्षत
137547 हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि इति
137548 तद्व्याकरणं श्रूयते | तथा अमलत्वाच्च चितो न भिद्यते | चिदप्यमला चित्तमपि | न च
137549 तादृशयोः प्रभाकाशयोरिव भेदः केनचिल्लक्षयितुं शक्यते | चित्तस्य
137550 चिद्भेदनिरासादेव तदधीनो जगद्भेदः सुतरां निरस्त इत्याह - क्वात इति || १ ||
137551
137552 चित्तदीपे गते यान्ति भ्रान्तिवद्भ्रान्ति [भ्रान्तिवद्भ्रान्तिखे इति
137553 मुद्रितपाठोऽस्वरसः टीकाकर्त्रसंमतश्च |] खे स्थिते |
137554 रूपालोकमनस्कारसंविदोऽम्बुद्रवोर्मयः || २ ||
137555
137556 इदमेव स्फुटमाह - चित्तदीपे इति | स्थिते कूटस्थे खे प्रत्यगात्माकाशे
137557 रूपालोकमनस्कारसंविल्लक्षणा अम्बुद्रवोर्मयो मृगतृष्णाभ्रान्तिवद्भ्रान्ति | ते
137558 च चित्तलक्षणे दीपयतीति दीपः सूर्यस्तस्मिन्नस्तं गते यान्ति अपगच्छन्तीत्यर्थः || २ ||
137559
137560 निरस्तकरणापेक्षं मरुतः स्पन्दनं यथा |
137561 यथा विसरणं भासस्तथा जगदिदं परे || ३ ||
137562
137563 सत्तायां चिदतिरिक्तकारणनिरपेक्षत्वादपि जगच्चिदेवेति दृष्टान्तैरुपपादयति -
137564 निरस्तेत्यादिना | निरस्ता करणापेक्षा येन | भासः प्रभाया विसरणं प्रसारः || ३ ||
137565
137566 द्रवत्वमिव कीलाले शून्यत्वमिव चाम्बरे |
137567 स्पन्दत्वं मरुतीवेदं किमप्यात्ममयं परे || ४ ||
137568
137569 कीलाले जले | आत्ममयमात्मविवर्तः | किमप्यनिर्वचनीयम् || ४ ||
137570
137571 महाचिति महाकाशे यदिदं भासते जगत् |
137572 तच्चित्त्वमेव कचति निर्मलत्वं मणाविव || ५ ||
137573
137574 प्रतीचि चित्तादीनामवस्थाद्वये कचनमिव ब्रह्मणि मायाधीनं वियदादिकचनमपि
137575 तदभिन्नमेवेत्याशयेन तैरेव दृष्टान्तैरुपपादयति - महाचितीत्यादिना || ५ ||
137576
137577 यथा द्रवत्वं पयसि यथा शून्यत्वमम्बरे |
137578 यथा प्रस्पन्दनं वायौ महाचिति तथा जगत् || ६ ||
137579
137580 वेत्ति वायुर्यथा स्पन्दं तथा वेत्ति जगच्चितिः |
137581 न द्वैतैक्यादिभेदानां मनागप्यत्र संभवः || ७ ||
137582
137583 स्फूर्तावपि चिदतिरिक्तनिरपेक्षत्वाच्चिदभेद इत्याशयेनाह - वेत्तीति | द्वैतं चैक्यं
137584 च संख्येयभेदाश्च तेषाम् || ७ ||
137585
137586 अविवेकविवेकाभ्यां भासुरं भङ्गुरं जगत् |
137587 बोधे सदैव सद्रूपमभासुरमभङ्गुरम् || ८ ||
137588
137589 अविवेकेन भासुरं विवेकेन भङ्गुरम् | परमार्थबोधे तु
137590 ब्रह्ममात्रत्वादुभयशून्यम् || ८ ||
137591
137592 ज्ञप्तिमात्राद्दते शुद्धादादिमध्यान्तवर्जितात् |

137593 नान्यदस्तीह निर्णीतं महाचिन्मात्ररूपिणः ॥ ९ ॥
137594
137595 बोधेन यन्निर्णीतं तदाह - ज्ञप्तीति ॥ ९ ॥
137596
137597 तत्कस्यचिच्छिवं शान्तं कस्यचिद्ब्रह्म शाश्वतम् ।
137598 कस्यचिच्छून्यतामात्रं कस्यचिज्ज्ञप्तिमात्रकम् ॥ १० ॥
137599
137600 तत्रैव वेदानुसारिणामवेदानुसारिणां च विचारयतां वादिनां
137601 यथार्थायथार्थरूपैः कल्पनाभेदाः प्रवृत्ता इत्याह - तदिति ॥ १० ॥
137602
137603 तदनन्तात्म चिद्रूपं चेत्यतामिव भावयत् ।
137604 स्वसंस्थमेव ज्ञेयत्वमज्ञत्वमिव गच्छति ॥ ११ ॥
137605
137606 तत्रैवानाद्यविद्यादिदृश्याकारताध्यास इत्याह - तदिति ॥ ११ ॥
137607
137608 चित्तया नास्ति सत्ता च चित्तता नास्ति तां विना ।
137609 विना विना यथा वायोर्यथा स्पन्देषु कारणम् ॥ १२ ॥
137610
137611 तत्र चित्त्वबलादेवाध्यस्तस्फूर्तेश्चित्तया विना ज्ञेयस्य सत्ता नास्ति तां सत्तां विना च
137612 तस्य चित्तता चित्तस्य नास्ति । यथा विना शून्यात्मना कूटस्थेनाकाशेन विना वायोः
137613 कारणं नास्ति । वायुं च विना स्पन्देषु कारणं नास्ति तद्वदित्यर्थः ॥ १२ ॥
137614
137615 तथा महाचितोच्छायाः सर्गसंवित्तिवृत्तिषु ।
137616 नित्यं सत्त्वमसत्त्वं वा हेतोरन्यानपेक्षणात् ॥ १३ ॥
137617
137618 तथा नित्यब्रह्मसत्ताधीनसत्ताकासु सर्गभ्रान्तिष्वधिष्ठानमपेक्ष्य नित्यं सत्त्वं
137619 स्वरूपतस्तु नित्यमसत्त्वं चेति द्वेधापि शास्त्रे सदेव सोम्येदं नेह नाना इति च
137620 व्यपदेश इत्यर्थः । अन्यस्य हेतोरनपेक्षणात् । असमर्थसमासश्छान्दसः ॥ १३ ॥
137621
137622 इत्यत्रार्थोऽभविष्यत्स द्वित्वैकत्वास्तितावशात् ।
137623 कोऽत्र कल्पयिता द्वित्वमेकत्वं वा महाम्बरे ॥ १४ ॥
137624
137625 चिज्जडद्वित्वस्य तत्कारणैकत्वस्य च अस्तिता स्वतः सत्ता तद्वशाद्धि अत्र सर्गसंवित्तिषु
137626 इति प्रसिद्धोऽर्थोऽभविष्यत् । कूटस्थाद्वये चिदम्बरे द्वित्वमेकत्वं वा कः कल्पयिता
137627 सत्तास्फूर्तिभ्यांन् समर्थयिता । जडेषु न कश्चित्तादृशोऽस्तीत्यर्थः ॥ १४ ॥
137628
137629 विष्वग्विश्वमपारैकपरमाकाशकोशता ।
137630 यथा स्पन्दानिलद्वित्वं शाब्दमेव न वास्तवम् ॥ १५ ॥
137631
137632 एवं च आकाशद्वित्वाप्रसिद्धिवत्स्पन्दानिलभेदाप्रसिद्धिवच्च
137633 विश्वविश्वेश्वरद्वित्वस्याप्रसिद्धिरेव फलितेत्याह - विष्वगित्यादिना ॥ १५ ॥
137634
137635 विश्वविश्वेश्वरद्वित्वं तथैवासन्मयात्मकम् ।
137636 सदेवासंभवद्द्वित्वं महाचिन्मात्रकं च यत् ॥ १६ ॥
137637
137638 विश्वाभासं तदेवेदं न विश्वं सन्न विश्वता ।
137639 देशकालादिमत्त्वेन कदाचिद्धेम्नि सत्यता ॥ १७ ॥
137640
137641 अथवा ब्रह्मदृष्ट्या अनृतस्यापि विश्वस्य
137642 स्वन्यूनदेशकालस्वकार्यापेक्षयाऽधिकदेशकालव्याप्त्या सत्यतामाशङ्क्य
137643 परिहरति - देशकालेति ॥ १७ ॥
137644

137645 कटकत्वस्य भिन्नस्य विश्वस्य च तथा परे।
137646 द्वित्वैक्यासंभवे चात्र कार्यकारणता कुतः॥ १८॥
137647
137648 कार्यकारणभेदे सिद्धे तथा स्यात्स एवासिद्ध इत्याह - द्वित्वैक्येति॥ १८॥
137649
137650 स्याच्चेत्तत्कल्पनामात्रमेवैतन्नान्यवस्तुता।
137651 शून्यता नभसीवात्र द्रवत्वमिव चाम्भसि॥ १९॥
137652
137653 काल्पनिकः कार्यकारणभेदोऽङ्गीक्रियत इति चेन्न काल्पनिकेन तेन सत्यतानिर्वाह इत्याह
137654 - स्याच्चेदिति॥ १९॥
137655
137656 खे खलेखाप्यभिन्नेव किलास्ति जगदादिता।
137657 यद्रूपं ब्रह्म तद्रूपं जगत्क्वात्र द्वितैकते॥ २०॥
137658
137659 अत्यन्ताभेदेऽपि खलेखेति खे भेदकल्पना दृष्टेति जगदपि तद्वत्स्यादित्याह - खे
137660 इति॥ २०॥
137661
137662 यद्रूपं व्योम तद्रूपमेवं शून्यंन् किलाखिलम्।
137663 एकात्मनि तते स्वच्छे चिन्मात्रे सर्वरूपिणि॥ २१॥
137664
137665 खस्य लेखेति खाद्भिन्नमिव कल्पितं लेखापदवाच्यं व्योम यद्रूपं तद्रूपं
137666 ब्रह्मणो जगदित्यर्थः। एवं स्थिते ब्रह्मण्यपि जगत्कारणता गतेत्याह -
137667 एकात्मनीत्यादिना॥ २१॥
137668
137669 शिलापुत्रकसेनायां पाषाणत्व इवास्थिते।
137670 कार्यकारणवैचित्र्यं कथं संभवति क्व वा॥ २२॥
137671
137672 कथमव्योमता व्योम्नि द्वितीयासंभवाद्भवेत्।
137673 प्रतिभात्मैव भारूपो भाति सर्गो महाचिति॥ २३॥
137674
137675 पुत्रिकेवोपलोत्कीर्णा तन्मयत्वात्तदात्मिका।
137676 साधो यथास्थितस्यैवं बुद्ध्वा [बुद्धा अस्य स्थितस्येति शेषः।] विश्वं
137677 प्रलीयते॥ २४॥
137678
137679 यथास्थितस्य वास्तवस्यैव तत्त्वं बुद्ध्वा॥ २४॥
137680
137681 काष्ठमौनदशाभासं संसारमवशिष्यते।
137682 यथा निमीलिताक्षस्य रूपालोकमनोभ्रमः॥ २५॥
137683
137684 काष्ठमौनं बाह्यमानससर्वचेष्टाशून्यत्वं तादृशया दशया आभासं
137685 स्फुरत् ब्रह्म संसारमवधूय शिष्यते। भावनालक्षणमनःस्पन्दमात्रजन्यः
137686 सर्वः संसारभ्रमो भावनात्यागादस्पन्दावस्थितिमात्रेण विधूयते इत्याह -
137687 यथेत्यादिना॥ २५॥
137688
137689 स्वप्ने जाग्रत्यनग्रस्थोऽप्यसन्नेवास्तिभावनात्।
137690 तथैवोन्मीलिताक्षस्य रूपालोकमनोभ्रमः॥ २६॥
137691
137692 स्वप्ने जाग्रत्यनग्रस्थोऽप्यसन्नेवास्तिभावनात्।
137693 भावनोपशमं कृत्वा शिलीभूय यथास्थितम्॥ २७॥
137694
137695 अशिलीभूतमेवान्तः स्वभावं सममास्यताम्।
137696 आविवेकोपहारेण यथाप्राप्तार्थपूजनैः॥ २८॥

137697
137698 चिदेकरसत्वेन शिलावैलक्षण्यादन्तः अशिलीभूतं स्वभावमवलम्ब्य आस्यताम् |
137699 तादृशस्थित्यनुकूलविवेकवैराग्यादिसाधनाभ्यास एव परमेश्वरस्यात्मनः
137700 सर्वोत्कृष्टा पूजेत्याह - आविवेकेति | आसमन्तात्सर्वतो यो
137701 विवेकस्तल्लक्षणेनोपहारेणोपचारेण || २८ ||
137702
137703 बोधाय पूज्यतां बुद्ध्या स्वभावः परमेश्वरः |
137704 विवेकपूजितः स्वात्मा सद्यः स्फारवरप्रदः || २९ ||
137705
137706 स्फारं निरतिशयानन्दलक्षणं वरं प्रददातीति स्फारवरप्रदः || २९ ||
137707
137708 रुद्रोपेन्द्रादिपूजात्र जरत्तृणलवायते |
137709 विचारशमसत्सङ्गबलिपुष्पैकपूजितः [पुष्पौघपूजित इति पाठः |] ||
137710 ३० ||
137711
137712 सद्योमोक्षफलः साधो स्वात्मैव परमेश्वरः |
137713 सत्यालोकनमात्रैकपूजितोऽनुत्तमार्थदः || ३१ ||
137714
137715 यत्रास्त्यात्मेश्वरस्तत्र मूढः कोऽन्यं समाश्रयेत् |
137716 सत्सङ्गशमसंतोषविवेकापूजितात्मनः || ३२ ||
137717
137718 अन्यमनात्मभूतं तटस्थमीश्वरम् | अथ योऽन्यां
137719 देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेव स देवानाम् इति श्रुतेरिति
137720 भावः | ननु तटस्थेश्वरः पूजनेन प्रसन्न एनं शस्त्राहिविषवह्निप्रभृतिभ्य
137721 उपघातकेभ्यः सर्वतो रक्षिष्यति कूटस्थात्मा किं करिष्यति तत्राह - सत्सङ्गेति |
137722 आसमन्तात्पूजित आत्मा येन तस्य || ३२ ||
137723
137724 शिरीषकुसुमायन्ते शस्त्राहिविषवह्नयः |
137725 देवार्चनतपस्तीर्थदानान्यतिकृतान्यपि || ३३ ||
137726
137727 किंचाऽविवेकिभिः कृतेषु देवतार्चनादिष्वपराधावश्यंभावेन
137728 नैष्फल्यानर्थयोरवश्यंभावात्तत्रापि देशकालद्रव्यपात्रकर्त्रादिविशुद्धिविवेकः
137729 श्रद्धाभक्तिशान्तिदान्त्यादयो यद्यावश्यकास्तर्ह्यक्लेशे महाफले आत्मदर्शने
137730 एव ते कुतो नोपयोज्यन्ते इत्याह - देवार्चनेत्यादिना || ३३ ||
137731
137732 भस्मायन्ते निरर्थत्वादविवेकामहात्मनाम् |
137733 एतान्यपि विवेकेन क्रियन्ते सफलानि चेत् || ३४ ||
137734
137735 देशकालपात्राद्यविवेकेन | अमहात्मनां दुरात्मनाम् || ३४ ||
137736
137737 विवेक एव तत्कस्मात्स्फुटमन्तर्न साध्यते |
137738 यथाभूतार्थविज्ञानाद्वासनोपरमे परे || ३५ ||
137739
137740 कोऽसौ विवेको यः साध्य इत्युच्यते तमाह - यथाभूतेति || ३५ ||
137741
137742 यत्नो विवेकशब्दाख्यो भवत्यात्मप्रसादतः |
137743 तथा तथा विवेकोऽन्तर्वृद्धिं नेयः शमामृतैः || ३६ ||
137744
137745 यत्न इति | तथा च वैराग्यादिसर्वसाधनसंग्रह इति भावः | आत्मप्रसादतो
137746 निष्कामानुष्ठितयज्ञदानादिसाध्यचित्तप्रसादात् || ३६ ||
137747
137748 यथा यथा पुनः शोषमुपयाति न विभ्रमैः |

137749 देहसत्तामनादृत्य यथा भूतार्थदर्शनात् ॥ ३७ ॥
137750
137751 विभ्रमैर्विषयभ्रान्तिभिः ॥ ३७ ॥
137752
137753 लज्जां भयं विषादेर्ष्ये सुखं दुःखं जयेत्समम् ।
137754 जगदादि शरीरादि नास्त्येवादौ कुतोऽद्य तत् ॥ ३८ ॥
137755
137756 देहसत्तानादरे उपायं विचारं दर्शयति - जगदादीति । शरीरस्य
137757 आदिकारणभूतं जगत् आदिपदात्तत्कारणं च आदौ नास्त्येव । यच्चादौ नास्ति तदद्य
137758 कुतो भवेत् । नासतो विद्यते भावः इति न्यायात् ॥ ३८ ॥
137759
137760 कार्यं चेत्कारणस्यैतत्तथापि ब्रह्ममात्रकम् ।
137761 प्रतिभामात्रमेवाच्छं न तु ज्ञप्तेर्घटादि सत् ॥ ३९ ॥
137762
137763 ननु सदेव सोम्येदमग्र आसीत् इति ब्रह्मात्मना आदौ सदेव कारणस्य ब्रह्मणः
137764 कार्यमस्तु तत्राह - कार्यं चेदिति । तथापि ब्रह्ममात्रकमेव न ततो भिद्यते ।
137765 सद्भेदे असत्त्वापत्तेः । अद्वयकार्यस्य कारणे अद्वयत्वाविघातकत्वेन
137766 भेदप्रतिभासस्य विकल्पमात्रत्वादित्याह - प्रतिभामात्रमेवेति । ज्ञप्तेः
137767 पृथगिति शेषः ॥ ३९ ॥
137768
137769 ज्ञानात्मिकैव प्रतिभा ज्ञप्तिरेवाखिलं जगत् ।
137770 ज्ञप्तिरप्यात्मतत्त्वश्रीः परिज्ञातोपशाम्यति ॥ ४० ॥
137771
137772 विकल्पप्रतिभापि चिदाभासज्ञानात्मिकैवेति सैवाखिलं जगदित्यर्थः । सा
137773 चिदाभासलक्षणा ज्ञप्तिरप्यज्ञातात्मतत्त्वस्यैव दर्पणदृष्टा मुखश्रीरिव
137774 प्रत्यगात्ममात्रत्वेन दृष्टमात्रा भेदकोपाध्यपगमेनोपशाम्यति ॥ ४० ॥
137775
137776 ज्ञेयाभावे त्वनिर्वाच्या शिष्यते शाश्वतं शिवम् ।
137777 अशरीराद्यविश्वात्म सर्वं शान्तमिदं ततम् ॥ ४१ ॥
137778
137779 यत उपाधिभूतज्ञेयाभावे बिम्बात्पृथगिवानिर्वाच्येति पूर्वान्वयि । अनया रीत्या
137780 प्रत्यग्भावे अशरीरादिब्रह्मभावे अविश्वात्मेत्यखण्डं सर्वं पूर्णं शाश्वतं
137781 शिवं शिष्यत इत्यर्थः ॥ ४१ ॥
137782
137783 ज्ञानज्ञेयज्ञप्तिमुक्तं दृषन्मौनमिव स्थितम् ।
137784 शान्तान्तःकरणाः स्वस्थाः शिलापुत्रककोशवत् ॥ ४२ ॥
137785
137786 तद्भावस्थितिरेव भवद्भिः सर्वैः संपाद्येत्याह - शान्तेति ॥ ४२ ॥
137787
137788 चलन्तश्चालयन्तश्च ज्ञरूपा एव तिष्ठत ।
137789 अज्ञेयज्ञत्वसद्रूपाः सदसत्साररूपिणः ॥ ४३ ॥
137790
137791 तस्यास्थितौ यथा प्राप्तव्यवहारेऽपि न क्षतिरित्याह - चलन्त इत्यादिना ॥ ४३ ॥
137792
137793 आकाशकोशविशदा भवता भवभूमयः ।
137794 यथास्थितं च तिष्ठन्ति गच्छन्तश्च यथागतम् ॥ ४४ ॥
137795
137796 यथाप्राप्तैककर्माणः संपद्यन्ते बुधाः परम् ।
137797 अथवा सर्वसंत्यागशान्तान्तःकरणोज्ज्वलाः ॥ ४५ ॥
137798
137799 समाधौ वा कामं स्थीयतामित्याह - अथवेति ॥ ४५ ॥
137800

137801 एकान्तेष्वेव तिष्ठन्तु चित्रकर्मार्पिता इव |
137802 संकल्पशान्तौ संकल्पपुरवत्सर्वदाखिलम् || ४६ ||
137803
137804 सर्वदा समाधिकाले व्यवहारकाले च प्रबुद्धस्याऽविच्छिन्नप्रबोधस्य पुंसः
137805 संकल्पपुरवत्स्वप्नवच्च सदैव तुच्छत्वादस्तं गतम् || ४६ ||
137806
137807 स्वप्नवच्च प्रबुद्धस्य सदैवास्तं गतं जगत् |
137808 सनेत्ररूपानुभवं जातितोऽन्ध इव भ्रमैः || ४७ ||
137809
137810 प्रबोधश्च सनेत्रस्य रूपानुभववत्परिनिष्ठितः पूर्णानन्दानुभवपर्यन्तो
137811 निर्वाणे उपयुज्यते न जात्यन्धरूपकल्पनातुल्यः परोक्षकल्प इत्याशयेनाह - स
137812 नेत्रेत्यादिना || ४७ ||
137813
137814 निर्वाणं वर्णयन्नज्ञस्ताप्यतेऽन्तर्न शाम्यति |
137815 कल्पनांशोपदेशेन लोकोऽविद्यामयात्मना || ४८ ||
137816
137817 अज्ञः कतिपयवाक्यश्रवणेनैव तत्त्वज्ञोऽहं संपन्न इति भ्रमे निर्वाणं वर्णयन्
137818 सनेत्रस्य रूपानुभवंन् वर्णयन् जात्यन्ध इवान्तर्मानापमानादिभिस्ताप्यते न तु
137819 तत्त्वज्ञवच्छाम्यति | शान्तिसुखमनुभवतीत्यर्थः |
137820 अन्धगोलाङ्गूलन्यायेनासदुपदेशप्रतारितानामपि कृतार्थताभ्रान्तिर्लोके
137821 प्रसिद्धेत्याह - कल्पनांशेति || ४८ ||
137822
137823 येन केनचिदज्ञत्वात्कृतार्थोऽस्मीति मन्यते |
137824 अकृतार्थः कृतार्थत्वं जानन्मौर्ख्यविमोहितः || ४९ ||
137825
137826 विज्ञास्यत्यकृतार्थत्वं क्षणान्तरकदर्थनैः |
137827 उपायं कल्पनात्मानमनुपायं विदुर्बुधाः || ५० ||
137828
137829 तस्मात्कल्पनात्मकं ज्ञानंन् न निर्वाणोपाय इत्यभिज्ञानुभवेनोपसंहरति -
137830 उपायमिति || ५० ||
137831
137832 दुःखदत्वान्निमेषेण भावाभावैषणभ्रमैः |
137833 जगद्भ्रमं परिज्ञाय यदवासनमासितम् |
137834 विरसाशेषविषयं तद्धि निर्वाणमुच्यते || ५१ ||
137835
137836 निमेषेण भावाभावैषणभ्रमैर्दुःखदत्वात्कल्पनात्मानमुपायमनुपायं
137837 विदुरिति पूर्वत्रान्वयः | तस्मात्प्रागुक्तं सम्यग्ज्ञानमेव वासनानाशपर्यन्तं
137838 दृढीकार्यं तदेव निर्वाणं पर्यवस्यतीत्याशयेनाह - जगदिति | विरसा अशेषा
137839 हैरण्यगर्भपदान्ता विषया यत्र || ५१ ||
137840
137841 आख्यायिकार्थप्रतिभानमेत्य संवेत्स्यचिद्वारि भराद्द्रवात्मा |
137842 अवेद्यचिद्रूपमशेषमच्छं पश्यन्विनिर्वासि जगत्स्वरूपम् || ५२ ||
137843
137844 अत एव हे राम त्वं मदुपदिष्टमर्थमाख्यायिका उपलब्धार्था लौकिकी पौराणिकी वा
137845 कथा तदर्थ इव परोक्षः कल्पनामात्ररूपः प्रतिभासो यस्य तथाविधमेत्य
137846 बहिर्मुखतया अधिगम्य न कृतार्थो भविष्यसि किंतु
137847 भराद्वासनामात्रपूरातिशयात् द्रवात्म परितः प्रवहत्स्वरूपं
137848 जगत्स्वरूपमचिद्वारि संवेत्सि पश्यस्येव | प्रत्यग्दृष्ट्या
137849 पूर्णमच्छमवेद्यचिद्रूपं पश्यन्साक्षादनुभवन् विनिर्वासि निर्वाणविश्रान्तो
137850 भविष्यसीत्यर्थः || ५२ ||
137851
137852 जात्यन्धरूपानुभवानुरूपं यदागमैर्बुद्धमबोधरूपम् |

137853 अधस्पदीकृत्य तदान्तरेऽस्मिन्बोधे निपत्यानुभवो भवाभूः ॥ ५३ ॥
137854
137855 तदेतद्द्रढयन्नाह - जात्यन्धेति। आगमैरुपदेशवाक्यैर्बहिर्मुखतया
137856 जात्यन्धरूपानुभवसदृशं यद्बुद्धं तदबोधरूपमेव। अपरोक्षे वस्तुनि
137857 परोक्षज्ञानस्य भ्रान्तिमात्रत्वात्। अतस्तादृशबोधमधस्पदीकृत्य
137858 पादेनाक्रम्येव तिरस्कृत्य। अधःशिरसी पदे इति सत्वं च्विः। आन्तरे प्रत्यगात्मरूपे
137859 अस्मिन्नित्यापरोक्षे बोधे साक्षादनुभवेन निपत्य अभूर्जन्मादिशून्यः सोऽनुभव एव
137860 त्वं भव। तदेव ते निर्वाणमित्यर्थः ॥ ५३ ॥
137861
137862 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाणप्रकरणे उ०
137863 निर्वाणोपदेशो नाम द्विचत्वारिंशः सर्गः ॥ ४२ ॥
137864
137865 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
137866 निर्वाणोपदेशो नाम द्विचत्वारिंशः सर्गः ॥ ४२ ॥
137867
137868 त्रिचत्वारिंशः सर्गः ४३
137869
137870 श्रीवसिष्ठ उवाच।
137871
137872 अहंतादिजगच्चेदं परिज्ञानादसत्यताम्।
137873 याति सानुभवो मोहात्सत्यमेवान्यथाधियाम् ॥ १ ॥
137874
137875 मनोयक्षपुरप्राये जगत्यज्ञानकल्पिते।
137876 बोधमात्रेण निर्मृष्टे ब्रह्मैकस्थितिरीर्यते ॥
137877
137878 आन्तरमहंतादिबाह्यमिदं जगच्च भोक्तृभोग्यरूपं सर्व
137879 तदनुभवरूपभोगतत्त्वपरिज्ञानादसत्यतां याति। चिदवसानो हि भोगः स हि
137880 भोक्तुर्भोग्यसंबन्धानुभवः तेनानुभवेन हि
137881 मोहादात्मविनिमयेनान्यथाधियां भोक्तर्येवात्मबुद्धिमतां मूढानामात्मा
137882 सानुभवो न स्वत इति सत्यं ब्रह्मैव स इत्यर्थः ॥ १ ॥
137883
137884 अज्ञानज्वरमुक्तस्य बोधशीतलितात्मनः।
137885 एतदेव भवेच्चिह्नं यद्भोगाम्बु न रोचते ॥ २ ॥
137886
137887 अत एव तत्त्वविदां भोग्यवर्गेष्वरुचिरित्याह - अज्ञानेति ॥ २ ॥
137888
137889 अलमन्यैः परिज्ञानैर्वाच्यवाचकविभ्रमैः।
137890 अनहंवेदनामात्रं निर्वाणं तद्विभाव्यताम् ॥ ३ ॥
137891
137892 एवं भोग्येषु विरक्तानां भोक्तर्यहंकारांशत्यागमात्रेण
137893 चिन्मात्रपरिशेषात्मकं निर्वाणं सिद्धमित्याह - अलमिति। वाच्यं रूपं
137894 वाचकं नाम तद्विषयभ्रान्तिरूपैः ॥ ३ ॥
137895
137896 परिज्ञाता यथा स्वप्ने पदार्था रसयन्ति नो।
137897 न च सन्ति तथैवास्मिन्नहं जगदिदंभ्रमे ॥ ४ ॥
137898
137899 भोगाम्बु न रोचते इत्येतद्विशदयति - परिज्ञातेति। स्वप्ने दृष्टाः पदार्था यथा
137900 जागरूकं पुरुषं न रसयन्ति न रञ्जयन्ति न सन्ति च तथैवाहंन् जगदिदमिति भ्रमे
137901 दृष्टाः पदार्था अपि तत्त्वज्ञमित्यर्थः ॥ ४ ॥
137902
137903 यथा स्वभावनाद्यक्षस्तरौ सस्वजनं पुरम्।
137904 पश्यत्यसत्यमेवैवं जीवः पश्यति संसृतिम् ॥ ५ ॥

137905
137906 अरण्ये यक्षो गन्धर्वमायाकल्पितं नगरं वाऽत्र दृष्टान्त इत्याह - यथेति ।
137907 यक्षतनौ इति पाठे यक्षविद्यानिपुणमनुष्यः स्वभावनाकल्पितयक्षतनौ स्थित्वा
137908 स्वजनसहितं पुरं यथा कल्पयित्वा पश्यतीति व्याख्येयम् ॥ ५ ॥
137909
137910 विभ्रमात्मा यथा यक्षो यक्षलोकश्च ते मिथः ।
137911 सद्रूपौ सुस्थितौ मिथ्या तथाहंत्वजगद्भ्रमौ ॥ ६ ॥
137912
137913 तत्र यक्षो विभ्रमात्मा भ्रान्तिकल्पितभोक्तृस्वरूपः यक्षलोकस्तन्नगरं च
137914 भ्रान्तिकल्पितभोग्यरूपमित्युभयं नास्त्येव तथापि तौ मिथ
137915 उपभोगलक्षणार्थक्रियाकारितया यथा सद्रूपाविव स्थितौ तथेत्यर्थः ॥ ६ ॥
137916
137917 अनावरणतोऽरण्ये यक्षा विभ्रमरूपिणः ।
137918 यथा स्फुरन्ति भूतानि तथेमानि चतुर्दश ॥ ७ ॥
137919
137920 दृष्टान्ते दार्ष्टान्तिके चासतोऽपि सत्यतया प्रतिभासे अनावृतसाक्षिण्यध्यास एव
137921 निमित्तमित्याशयेनाह - अनावरणत इति । भुवनोपाधिसंख्यया चतुर्दश ॥ ७ ॥
137922
137923 भ्रममात्रमहं मिथ्यैवेति बुद्ध्वा विभावयन् ।
137924 यक्षोऽयक्षत्वमायाति चित्तं चित्तत्त्वतामिदम् ॥ ८ ॥
137925
137926 यक्षस्य स्वकल्पितदेहनगराद्युपसंहार इव जगद्भ्रमबाधेऽपि
137927 तन्मिथ्यात्वदर्शनमेव हेतुरित्याह - भ्रममात्रमिति । चित्तत्त्वतां
137928 चिद्रूपतात्त्विकभावम् ॥ ८ ॥
137929
137930 निरस्तकलनाशङ्कं त्यागग्रहणवर्जितम् ।
137931 अविसारिसमस्तेच्छं शान्तमास्व यथास्थितम् ॥ ९ ॥
137932
137933 चत्वारि क्रियाविशेषणानि ॥ ९ ॥
137934
137935 असत्तासंभवंन् दृश्यं द्रष्ट्रात्मकमिदं ततम् ।
137936 अथवा नैव द्रष्ट्रात्म सदवाच्यं किमास्यते ॥ १० ॥
137937
137938 तत्त्वतो विमर्शे दृश्यस्य द्रष्टृमात्रता तुच्छता वा पर्यवस्यतीत्याह - असत्तेति
137939 । न विद्यते सत्तायाः संभव उत्पत्तिर्यस्मिंस्तथाविधं नैव वा द्रष्ट्रात्म । कुतः
137940 सत् परमार्थचिद्रूपं द्रष्टृ तत्त्वमवाच्यं तुच्छं दृश्यरूपं किमास्यते
137941 स्थाप्यते । न हि सतोऽसद्रूपता केनचित्संपादयितुं शक्येत्यर्थः ।
137942 आसेरण्यन्तकर्तुर्ण्यन्ते गतिबुद्धि - इति कर्मत्वे कर्मणि लः ॥ १० ॥
137943
137944 वसन्तरसपूरस्य यथा विटपगुल्मता ।
137945 स्वरूपमात्रभरितसंविदः सर्गता तथा ॥ ११ ॥
137946
137947 द्रष्टुर्दृश्यात्मत्वाभावेऽपि व्यवहारे दृश्यसत्तास्फूर्तिनिर्वाहकता
137948 संभवत्येवेति दृष्टान्तेन दर्शयति - वसन्तेति ॥ ११ ॥
137949
137950 यदिदं जगदाभासं शुद्धं चिन्मात्रवेदनम् ।
137951 कात्रैकता द्विता का वा निर्वाणमलमास्यताम् ॥ १२ ॥
137952
137953 परमार्थे तु द्रष्ट्रैक्यादिसंभावनापि नास्तीत्याह - यदिदमिति ॥ १२ ॥
137954
137955 भूयतां चिन्मयव्योम्ना पीयतां परमो रसः ।
137956 स्थीयतां विगताशङ्कं निर्वाणानन्दनन्दने ॥ १३ ॥

137957
137958 इदानीं भगवान्वसिष्ठः सर्वान्प्रति दयया हितमुद्घोषयन्नुपदिशति -
137959 भूयतामित्यादिना | परमो रसो निरतिशयानन्दः रसो वै सः इति श्रुतेः |
137960 निर्वाणानन्दलक्षणे नन्दने स्वर्वने || १३ ||
137961
137962 किमेतास्वतिशून्यासु संसारारण्यभूमिषु |
137963 मानवा वातहरिणा भ्रमथो भ्रान्तबुद्धयः || १४ ||
137964
137965 वातहरिणा वातप्रम्य इवेति शेषः | भ्रमथ उ इति च्छेदः || १४ ||
137966
137967 जगत्त्रयमरीच्यम्बु विप्रलब्धान्धबुद्धयः |
137968 मा धावत गतव्यग्रमाशयोपहताशयाः || १५ ||
137969
137970 आशया तृष्णया उपहताशयाः सन्तो गतव्यग्रं प्राप्तवैयग्र्यं यथा स्यात्तथा
137971 मा धावत || १५ ||
137972
137973 रूपालोकमनस्कारमृगतृष्णाम्बुपायिनः |
137974 व्यर्थमायासमायूंषि मा मा क्षपयतैणकाः || १६ ||
137975
137976 रूपालोका बाह्यभोगा मनस्कारा आभिमानिकभोगास्त एव मृगतृष्णाम्बूनि |
137977 आयासं प्राप्येति शेषः || १६ ||
137978
137979 जगद्गन्धर्वनगरगुरुगर्वेण नश्यथ |
137980 सुखरूपाणि दुःखानि नाशनायैव पश्यथ || १७ ||
137981
137982 जगद्रूपे गन्धर्वनगर इव विवेकहारी यो गर्वस्तेन नश्यथ | मा इत्यनुषज्यते || १७ ||
137983
137984 जगत्केशोण्ड्रकभ्रान्त्यै मा महाम्बरमध्यगम् |
137985 अवलोकयताभ्रान्ते स्वरूपे परिणम्यताम् || १८ ||
137986
137987 महाम्बरं ब्रह्माकाशस्तन्मध्यगमज्ञाननैल्यं मा अवलोकयत किंत्वभ्रान्ते
137988 यथार्थतो दृष्टे स्वरूपे परिणम्यताम् || १८ ||
137989
137990 मानवा वातलोलोच्चपत्रप्राप्ताम्बुभङ्गुर |
137991 मानवासु न चास्वन्धगर्भशय्यासु सुप्यताम् || १९ ||
137992
137993 हे मानवाः वातैर्लोलानि उच्चेषूर्ध्वशाखास्थितेषु पिप्पलपत्रेषु प्राप्तानि
137994 स्कन्नान्यवश्यायाम्बूनीव भङ्गुरा मानवा मनुष्यदेहा यासु आसु
137995 संसारलक्षणास्वन्धगर्भशय्यासु मा सुप्यताम् || १९ ||
137996
137997 अविराममनाद्यन्ते स्वभावे शान्तमास्यताम् |
137998 द्रष्टृदृश्यदशादोषादस्वभावाद्विनश्यताम् || २० ||
137999
138000 अविराममखण्डितम् | स्वभावे पारमार्थिकब्रह्मभावे |
138001 द्रष्ट्रादिदशादोषलक्षणादस्वभावात्स्वरूपविनिमयान्मा विनश्यताम् || २० ||
138002
138003 अज्ञावबुद्धः संसारः स हि नास्ति मनागपि |
138004 अवशिष्टं च यत्सत्यं तस्य नाम न विद्यते || २१ ||
138005
138006 त्रोटयित्वा तु तृष्णायःशृङ्खलावलितं बलात् |
138007 संसारपञ्जरं तिष्ठ सर्वस्योर्ध्वं मृगेन्द्रवत् || २२ ||
138008

138009 तृष्णालक्षणया अयःशृङ्खलया वलितं वेष्टितं संसारपञ्जरं
138010 ज्ञानबलात्त्रोटयित्वा मृगेन्द्रः सिंहस्तद्वत्सर्वस्योर्ध्वमुत्कर्षकाष्ठायां
138011 तिष्ठ ॥ २२ ॥
138012
138013 आत्मात्मीयग्रहभ्रान्तिशान्तिमात्रा विमुक्तता ।
138014 यथा तथा स्थितस्यापि सा स्वसत्तैव योगिनः ॥ २३ ॥
138015
138016 आत्मात्मीयग्रहः अहंममेत्यभिमानस्तल्लक्षणभ्रान्तिशान्तिमात्रा
138017 तावन्मात्रस्वरूपा विमुक्तता नान्या काचिदस्ति । सा च योगिनः स्वात्मसत्तैवेत्यर्थः ॥ २३
138018 । ।
138019
138020 निर्वाणताऽवासनता पराऽपतापताज्ञता ।
138021 संसाराध्वनि खिन्नस्य शान्ता विश्रामभूमयः ॥ २४ ॥
138022
138023 तामेव संसाराध्वखिन्नविश्रान्तिभूमिभेदत्वेन कल्पयित्वाह - निर्वाणतेति ।
138024 अवासनतेति च्छेदः । परा उत्कृष्टा अपतापता अपगतत्रिविधतापता । एताः
138025 पञ्चम्याद्यास्तिस्रो भूमिकाः ॥ २४ ॥
138026
138027 तज्ज्ञज्ञातो न मूर्खाणां मूर्खज्ञातो न तद्विदाम् ।
138028 विद्यते जगदर्थोऽसाववाच्यार्थमयो मिथः ॥ २५ ॥
138029
138030 मिथः अज्ञस्य दुःखौघमयं ज्ञस्यानन्दमयं जगदिति प्रागुक्तमेवेति ॥ २५ ॥
138031
138032 विश्वता भ्रान्तिसंशान्तौ संस्थितैव न लभ्यते ।
138033 महार्णवाम्बुवलिता पुत्रिकेव पयोमयी ॥ २६ ॥
138034
138035 गङ्गागोदानर्मदेत्यादिरूपा पयोमयी पुत्रिका आकारभेदकल्पना यथा
138036 महार्णवाम्बुवलिता सती तद्रूपेण संस्थितैवार्णववासिभिर्न लभ्यते
138037 तद्वद्भ्रान्तिसंशान्तौ ज्ञानिभिर्विश्वतापीत्यर्थः ॥ २६ ॥
138038
138039 भ्रान्तिशान्तौ प्रबुद्धस्य विनिर्वाणस्य विश्वता ।
138040 यथास्थितैव गलिता विद्यते च यथास्थितम् ॥ २७ ॥
138041
138042 तदेव स्पष्टमाह - भ्रान्तीति ॥ २७ ॥
138043
138044 निर्दग्धतृणभस्माली क्वापि याति यथानिलैः ।
138045 सतां स्वभावविश्रामैः क्वापि याति तथा जगत् ॥ २८ ॥
138046
138047 जगद्ब्रह्मपदार्थस्य संनिवेशः स तूत्तमः ।
138048 ब्रह्मशब्दार्थरूपात्मा न जगच्छब्दकार्यभाक् ॥ २९ ॥
138049
138050 ब्रह्मपदस्य बृंहणरूपो योऽर्थस्तस्य संनिवेश आकारविशेषः स तु
138051 ब्रह्मशब्दस्य मुख्यार्थरूपो निर्विकल्पस्वप्रकाशनिरतिशयानन्दप्रत्यगात्मा
138052 चेदुत्तमः । गच्छति षड्विधविकारैः परिवर्तत इति जगदिति
138053 जगच्छब्दप्रवृत्तिनिमित्तविकारकार्यभाक्चेन्नोत्तम इत्यर्थः ॥ २९ ॥
138054
138055 अविज्ञातस्य बालस्य पदार्था यादृशा इमे ।
138056 विदुषस्तादृशा एव तिष्ठतः क्षीणवासनम् ॥ ३० ॥
138057
138058 जगति निर्विकल्पानुभवः शिशोरपि प्रसिद्ध इति तत्साम्यमाह - अविज्ञातस्येति । न
138059 विद्यते विज्ञातं विशेषज्ञानं यस्य बालस्य शिशोः ॥ ३० ॥
138060

138061 या निशा सर्वभूतानां तस्यां जागर्ति संयमी |
138062 यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः || ३१ ||
138063
138064 तज्ज्ञज्ञातो न मूर्खाणां मूर्खज्ञातो न तद्विदाम् इत्युक्तिमुपपादितां
138065 भगवद्वचनेन संवादयति - या निशेति || ३१ ||
138066
138067 स्थितमेवाऽविरामी यज्जाग्रदस्य सुषुप्तवत् |
138068 चित्रावलोकित इव जाग्रत्योऽस्य रसैषणाः || ३२ ||
138069
138070 तदिदं व्याचष्टे - स्थितमेवेत्यादिना यद्यस्माद्धेतोः
138071 सर्वजनानामज्ञानान्धकारावृतत्वात्सुषुप्तवत्स्थितमेवात्मतत्त्वमस्य तत्त्वविदः
138072 अविरामी विरामशून्यो जाग्रत् जागरस्तस्मात् या निशा सर्वभूतानां तस्यां जागर्ति
138073 इत्युच्यत इत्यर्थः | यस्माच्चास्य जाग्रत्यो मूढजनजाग्रत्त्वेन प्रसिद्धा रसैषणा
138074 इन्द्रियैः शब्दादिविषयास्वादाश्चित्रावलोकितनृत्ययुद्धादिरिव पुरोगता अपि न सन्ति
138075 तस्मात् यस्यां जाग्रति भूतानि स निशा पश्यतो मुनेः इत्युच्यत इत्यर्थः || ३२ ||
138076
138077 जात्यन्धरूपानुभवसमं भुवनवेदनम् |
138078 भ्रान्तप्रायमसद्रूपं ज्ञस्य भाति न भाति च || ३३ ||
138079
138080 उत्तरार्धं पुनर्व्याचष्टे - जात्यन्धेति | भाति चेन्निशास्वप्नवन्न भाति
138081 चेन्निशासुषुप्तवदिति भावः || ३३ ||
138082
138083 विमूढदुःखं त्रिजगद्विमूढविषयं न सत् |
138084 स्वप्ने स्वप्नतया ज्ञाते रूपालोकमनःक्रियाः || ३४ ||
138085
138086 विमूढानां दुःखत्वेन प्रसिद्धं त्रिजगद्विमूढविषयमेव न प्रबुद्धविषयं
138087 यतो न सदित्यर्थः | ननु ज्ञस्य यदि विषयोपभोगो नास्ति तर्हि केन स तृप्तो जीवति
138088 तत्राह - स्वप्ने इत्यादिना || ३४ ||
138089
138090 न स्वन्दन्ते यथा तद्वज्जाग्रत्स्वप्ने स्फुरन्तु मा |
138091 निर्विभागः समाश्वस्तोऽविरोधं परमगतः || ३५ ||
138092
138093 जाग्रत्स्वप्ने जाग्रत्स्वप्नभोगा मा स्फुरन्तु नाम तथापि ज्ञो निर्वाण
138094 आशीतलान्तःकरणोऽवतिष्ठते इति परेणान्वयः || ३५ ||
138095
138096 आशीतलान्तःकरणो निर्वाणो ज्ञोऽवतिष्ठते |
138097 तज्ज्ञस्याकृष्टमुक्तस्य समं ध्यानं विना स्थितिः || ३६ ||
138098
138099 आकृष्टानि भोगवासनाभिश्चित्तस्य बहिराकर्षणानि तैर्मुक्तस्य वर्जितस्य तज्ज्ञस्य
138100 ध्यानंन् चित्तनिरोधयत्नं विनैव समं स्थितिर्भवति || ३६ ||
138101
138102 निम्नं विनैव तोयस्य न संभवति काचन |
138103 अर्थ एव मनस्कारो मन एवार्थरञ्जनम् || ३७ ||
138104
138105 तद्दृष्टान्तेनोपपादयति - निम्नमिति | यथा तडागादितोयस्य
138106 कुल्यादिनिम्नमार्गं विना काचन प्रवाहादिक्रिया न संभवति तद्वदित्यर्थः | ननु
138107 तत्त्वज्ञानेन बाह्यार्थबाधे बहिरिन्द्रियाणि न प्रवर्तन्तां मनस्कारनिरोधस्तु
138108 कथं सिद्ध्येत्तत्राह - अर्थ एवेत्यादि || ३७ ||
138109
138110 एष एवैष आभासः सबाह्याभ्यन्तरात्मकः |
138111 आसमुद्रं नदीवाहशतसंघमयात्मकम् || ३८ ||
138112

138113 एष मनस्कार एवैषोऽर्थाभासः। यथा तरङ्गिणामासमुद्रं
138114 नदीप्रवाहाद्यनन्तभेदात्मकं प्रसिद्धं सर्वमम्बु एकत्र श्लेषे एकपिण्डात्मकं
138115 जलसामान्यमेव स्फुरति तथा सबाह्याभ्यन्तरं सर्वार्थाकारं मन एव स्फुरतीति
138116 परेणान्वयः॥ ३८॥
138117
138118 यथैकश्लेषपिण्डात्म वहत्यम्बु तरङ्गिणाम्।
138119 सबाह्याभ्यन्तराकारमर्थानर्थमयात्मकम्॥ ३९॥
138120
138121 मन एव स्फुरत्यर्थनिर्भासं व्याततं तथा।
138122 नास्त्यर्थमनसोर्द्वित्वं यथा जलतरङ्गयोः॥ ४०॥
138123
138124 एकाभावे द्वयोः शान्तिः पवनस्पन्दयोरिव।
138125 नूनमेकोपशान्त्यैव निःसारे परमार्थतः॥ ४१॥
138126
138127 अस्त्वेवं किं ततस्तत्राह - एकेति। तत्त्वज्ञानेनार्थबाधे मनोऽपि बाधितमेवेति न
138128 मनस्कारप्रसक्तिरित्यर्थः॥ ४१॥
138129
138130 एकत्वादर्थमनसी सममेवाशु शाम्यतः।
138131 अर्थः संकल्परूपात्मा नेहितव्यो विजानता॥ ४२॥
138132
138133 मनश्च सम्यग्ज्ञानेन शान्तिरेवं भवेत्तयोः।
138134 अनष्टे नश्यतश्चैते ज्ञस्यार्थमनसी स्वतः॥ ४३॥
138135
138136 अयं च तयोर्बाधः स्वाप्नव्याघ्रनाशवदनष्टनाश इत्याह - अनष्टे इति॥ ४३॥
138137
138138 मृन्मये द्विषति ज्ञानाद्विषद्भावभये यथा।
138139 यथासंस्थं स्थिते एव ज्ञस्यार्थमनसी सदा॥ ४४॥
138140
138141 यथा मृन्मये प्रतिमायां भ्रान्तिकल्पिते द्विषति स्ववैरिणि ज्ञानाद्बाध्यमाने
138142 तस्मिन्द्विषद्भावस्तत्प्रयुक्तभयं च नश्यतस्तद्वदित्यर्थः। यथासंस्थं
138143 पारमार्थिकब्रह्मस्वभावेन स्थितम्॥ ४४॥
138144
138145 किमप्यपूर्वमेवान्यत्संपन्ने भावरूपिणि।
138146 संहितार्थजगत्कालोऽप्यज्ञोऽज्ञविषयोऽप्यसत्॥ ४५॥
138147
138148 अन्यत्सांसारिकदशाप्रसिद्धरूपादन्यत्पूर्णानन्दरूपं संपन्ने भावरूपिणि
138149 परमार्थसद्रूपिणि संहिते हेतुफलभावेन घटिते अर्थः
138150 सुखदुःखभोगस्तत्साधनं जगत् त्रैलोक्यं च येन तथाविधः संसारकालः
138151 अपिशब्दात्कालकृताः पदार्थानां जन्मादिविकारास्तद्वोक्ता अज्ञस्तद्विषयः
138152 शब्दादिविषयोऽपीति सर्वं तत्त्वज्ञदृष्ट्या असत्॥ ४५॥
138153
138154 पार्श्वसुप्तनरस्वप्न इव क्लीबाग्रयक्षवत्।
138155 ज्ञस्य साज्ञं जगन्नास्ति वीरस्येव पिशाचधीः॥ ४६॥
138156
138157 तत्र दृष्टान्तावाह - पार्श्वेति। क्लीबपदेन अधीरो बालादिर्लक्ष्यते तदग्रे
138158 भासमानयक्षवच्च॥ ४६॥
138159
138160 ज्ञमज्ञो भावयत्यज्ञं चिरं वन्ध्यापि वर्धते।
138161 विनैव ज्ञातशब्दार्थमर्थभावमिवागतम्॥ ४७॥
138162
138163 वन्ध्यापि पुत्रपौत्रादिविस्तारेण वर्धते तद्दृष्ट्येति शेषः। तत्त्वज्ञास्तर्हि
138164 जगत्स्वभावं कीदृशं विदुस्तमाह - विनैवेति। ज्ञातशब्दस्यार्थो

138165 ज्ञानविषयत्वम् तं विनैव स्वप्रकाशत्वादेवार्थाभासमिव स्थितं
138166 भासमानमनाद्यन्तंन् बोधं ब्रह्मैवेति विदुरित्यर्थः ॥ ४७ ॥
138167
138168 स्थितं बोधमनाद्यन्तं स्वभावं सर्गगं [सर्वगं इति पाठः ।]
138169 विदुः ।
138170 मनः शब्दार्थरहितं विभागान्तविवर्जितम् ॥ ४८ ॥
138171
138172 बाह्यार्थेषूक्तवेदनप्रकार आन्तरेषु मानसेष्वपि बोध्य इत्याह - मनः शब्देति
138173 ॥ ४८ ॥
138174
138175 बोधवारिमनोबुद्धितरङ्गमिव निर्मलम् ।
138176 क्व संभवत एवान्तः के वार्थमनसी किल ॥ ४९ ॥
138177
138178 निर्मलं विदुरित्यनुषज्जते । एवं
138179 प्रपञ्चितयोरज्ञतत्त्वज्ञजगद्बोधप्रकारयोर्मध्ये द्वितीय एवोपादेयो
138180 यथार्थत्वान्नाद्य इत्याह - क्वेति ॥ ४९ ॥
138181
138182 निरर्थिकैव विभ्रान्तिः स्वभावमयमास्यताम् ।
138183 शुद्धबोधस्वभावस्थैराकाशमिव शारदैः ॥ ५० ॥
138184
138185 स्वभावस्थितौ निरूढायामवस्थात्रयस्य
138186 तुरीयबोधमात्रतासंपत्तेर्मन्तव्याभावान्मनसो मनस्त्वमप्यपैतीत्याह -
138187 शुद्धेति । शारदैः पद्मैर्ज्योतिर्भिर्जनैर्वा ॥ ५० ॥
138188
138189 जाग्रत्स्वप्नसुषुप्तान्तैर्मनस्त्वं नानुभूयते ।
138190 विधूयानन्तनानात्वमसद्भावमनामये ॥ ५१ ॥
138191
138192 जाग्रत्स्वप्नसुषुप्तलक्षणैरन्तैरवस्थापरिच्छेदैः अनन्तानि नानात्वानि
138193 यस्मिंस्तथाविधमशेषं ज्ञेयंन् विधूयाध्यस्तसर्पं विधूय रज्जुरिवानामये
138194 स्वभावे तिष्ठ ॥ ५१ ॥
138195
138196 ज्ञेयं रज्जुरिवाशेषं स्वभावे तिष्ठ चिद्घने ।
138197 ज्ञप्तिरेवान्तरं बाह्यं चार्थत्वमधितिष्ठति ॥ ५२ ॥
138198
138199 अधितिष्ठति धत्ते ॥ ५२ ॥
138200
138201 बीजं शाखाफलानीव क्वातोऽर्थमनसी वद ।
138202 ज्ञेयासंभवतो ज्ञप्तिरप्यनाख्यं पदं गता ॥ ५३ ॥
138203
138204 ज्ञप्तिर्बुद्धिवृत्तिः ॥ ५३ ॥
138205
138206 शान्ताशेषविशेषात्मा तेन शेषोऽस्ति सत्स्वभाः ।
138207 अर्थ एव मनस्कारः स चाभावात्मको भ्रमः ॥ ५४ ॥
138208
138209 स्वभाः स्वप्रकाशः । अर्थमनसोः परस्पराधीननिरूपणत्वादभेदे द्वयोरपि
138210 भ्रान्तिमात्रता पर्यवस्यतीत्याह - अर्थ एवेति ।
138211 बाह्यस्यान्तरभावात्मकत्वादान्तरस्य बहिरभावात्मकत्वाच्चेति भावः ॥ ५४ ॥
138212
138213 मन एवार्थसंस्कारः स चाभावात्मको भ्रमः ।
138214 सर्वात्मत्वादजस्यैतदप्यकारणकं मनः ॥ ५५ ॥
138215
138216 अर्थ इव संस्क्रियत इत्यर्थसंस्कारः । घञन्तत्वात्पुमान् घञवन्तः

138217 इत्यजहल्लिङ्गः | तर्ह्यर्थो मनश्च तत्त्वतः किं तत्राह - सर्वात्मत्वादिति | अजस्य
138218 ब्रह्मणः सर्ववस्तूनामात्मत्वान्मन इति रूपेणापि तदेव भासते |
138219 तन्निष्कृष्टरूपेऽपि तुच्छमेवेति भावः || ५५ ||
138220
138221 भ्रमानुभवतोऽर्थश्च मिथ्यैवास्तीव भासते |
138222 अकारणकमेवार्थनिर्भासं भासते मनः || ५६ ||
138223
138224 ब्रह्म मनोरूपेणेव मनोऽप्यर्थरूपेण निष्कारणमेव भासत इत्याह -
138225 भ्रमानुभवत इति || ५६ ||
138226
138227 विद्युद्विलसिताकारमस्थिरं तरलायते |
138228 त्वं मनस्कारमात्रात्मा संसृतौ विभ्रमायसे || ५७ ||
138229
138230 स्वभावैकपरिज्ञानान्नासि नापि भ्रमायसे |
138231 मनसैव हि संसार आत्मबोधेन शाम्यति || ५८ ||
138232
138233 शुक्तिरूप्यभ्रमाकारो जनो मिथ्यैव ताम्यति |
138234 अभावभावस्तु परं बोधरूपमसंसृतिः || ५९ ||
138235
138236 अभावभावो बोधः || ५९ ||
138237
138238 निर्वाणादितरा सत्ता दुःखायाहमिति भ्रमः |
138239 मृगतृष्णाम्बुरूपोऽहमसच्छून्यस्वरूपकः || ६० ||
138240
138241 केनोपायेन तर्हि इतरा अहमिति सत्ता शाम्यति तमाह - मृगतृष्णेति |
138242 अहमहंकारो मृगतृष्णाम्बुसदृशः शून्यस्वरूपक इत्येव शाम्यति || ६० ||
138243
138244 इत्येवात्मपरिज्ञानादहमित्येव शाम्यति |
138245 ज्ञात्वा ज्ञानमयो भूत्वा सबाह्याभ्यन्तरार्थताम् || ६१ ||
138246
138247
138248 कुत एवं तत्राह - ज्ञात्वेति | यस्तद्ब्रह्मसर्गादौ सर्वज्ञतया स्वात्मभूतमेव
138249 स्रष्टव्यपदार्थं ज्ञात्वा तादृशज्ञानमयो हिरण्यगर्भः स्वयं भूत्वा
138250 तत्संकल्पानुसारेण स्वयमेव सबाह्याभ्यन्तरार्थतां स्वरूपमत्यजदेव
138251 गतमित्यर्थः || ६१ ||
138252
138253 गतं स्वमत्यजद्रूपं तरङ्गत्वं यथा पयः |
138254 मूलशाखाग्रपर्यन्ता सत्ता विटपिनो यथा || ६२ ||
138255
138256 अस्त्वेव किं ततस्तत्राह - मूलेति | इदमतः सिद्धम् - यथा विटपिनो
138257 मूलाच्छाखाग्रपर्यन्ता एकैव सत्ता तथा ज्ञातृज्ञानज्ञेयरूपे
138258 जगत्यप्यलमत्यन्तं निर्विकारं स्थिता ज्ञेयान्ताएकैव सत्ता भासते न सत्तान्तरमस्तीति
138259 || ६२ ||
138260
138261 निर्विकारमलं ज्ञप्तेर्ज्ञेयान्तैकैव भासते |
138262 यथा योजनलक्षाभमेकमेवामलं नभः || ६३ ||
138263
138264 सत्तैक्ये दृष्टान्तान्तरमपि सत्तैक्यमुपपादयति - यथेत्यादिना || ६३ ||
138265
138266 एकमेव तथा ज्ञानं ज्ञेयान्तं भात्यखण्डितम् |
138267 शून्यत्वादेकममलं यथा सर्वगमेव खम् || ६४ ||
138268

138269 तस्य नैर्मल्येऽप्ययमेव दृष्टान्त इत्याशयेनाह - शून्यत्वादिति ॥ ६४ ॥
138270
138271 तथैकममलं ज्ञात्वा ज्ञानज्ञेयदशास्वपि।
138272 घृतेनात्मा घनीभूय पाषाणीक्रियते यथा ॥ ६५ ॥
138273
138274 चिता चेत्यतयात्मैव स्वचित्तीक्रियते तथा।
138275 देशकालं विनैवात्मा बोधाबोधेन चित्तताम् ॥ ६६ ॥
138276
138277 बोधरूपस्य स्वतत्त्वस्याबोधेन ॥ ६६ ॥
138278
138279 अबुद्धो नीयते न्यायैरेकमेवैष सुस्थितः।
138280 अत्र यद्यप्यबोधादेः संभवो नास्ति कश्चन।
138281 तथापि कल्प्यतेऽत्रैव बोधनाय परस्परम् ॥ ६७ ॥
138282
138283 तदात्मानं स्वयमकुरुत इति श्रुतिदर्शितैर्लाघवतर्कानुगृहीतन्यायैः शङ्कते
138284 - अत्रेति। अत्र शुद्धे चिदात्मनि। परिहरति - तथापीति। अत्रैव
138285 अस्यामबोधदशायामेव न तत्त्वत इत्यर्थः। तथा चोक्तं वार्तिके -
138286 अविद्यास्तीत्यविद्यायामेवासित्वा प्रकल्प्यते। ब्रह्मदृष्ट्या त्वविद्येयं न कथंचन
138287 युज्यते इति ॥ ६७ ॥
138288
138289 महानुभावा विगताभिमाना विमूढभावोपशमे गलन्ति।
138290 निर्भ्रान्तयोऽनन्ततयैव शान्ता नित्यं समाधानमया भवन्ति ॥ ६८ ॥
138291
138292 असंभवद्रूपत्वादेव तत्त्वज्ञानोदयेनाज्ञानेन सह सर्वे गलन्तीत्युपसंहरति ##-
138293 विमूढभावस्य मूलाज्ञानस्य ज्ञानेनोपशमे घृतकाठिन्यवत्स्वात्मन्येव
138294 गलन्ति। तद्गलनाच्चानन्ततया निरतिशयानन्दपूर्णभावेन शान्ताः सन्तो निर्भ्रान्तयो
138295 निर्विक्षेपा नित्यमनवरतमेव समाधानंन् समाधिविश्रान्तिस्तत्परा भवन्तीत्यर्थः
138296 ॥ ६८ ॥
138297
138298 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षो० निर्वाण० उ०
138299 ब्रह्मैकतानतोपदेशो नाम त्रिचत्वारिंशः सर्गः ॥ ४३ ॥
138300
138301 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
138302 ब्रह्मैकतानतोपदेशो नाम त्रिचत्वारिंशः सर्गः ॥ ४३ ॥
138303
138304 चतुश्चत्वारिंशः सर्गः ४४
138305
138306 श्रीराम उवाच।
138307
138308 क्रमात्समाधानतरोराजीवफलशालिनीम्।
138309 सलताकुसुमां ब्रूहि सत्तां विश्रान्तिदां मुने ॥ १ ॥
138310
138311 वर्ण्यते वर्धनीयोऽत्र समाधानसुरद्रुमः।
138312 तले तस्य च विश्रान्त्यै श्रान्तो देहिमनोमृगः ॥
138313
138314 क्रमात् बीजक्षेत्रसेकाङ्कुरीभावपत्रकाण्डशाखापुष्पफलच्छायाविस्तारादि##-
138315 लताः शाखाः कल्पलताश्च तत्सहिताम्। मनोमृगविऽस्रान्तिदाम्। सत्तां स्थितिम् ॥ १ ॥
138316
138317 श्रीवसिष्ठ उवाच।
138318
138319 आजीवमुद्यदुत्सेधंन् विवेकिजनकानने।
138320 पत्रपुष्पफलोपेतं समाधानतरुं शृणु ॥ २ ॥

138321
138322 आजीव्यते सर्वात्मना उपजीव्यत इत्याजीवस्तथाविधम् ॥ २ ॥
138323
138324 यथाकथंचिदुदितं दुःखेन स्वयमेव च ।
138325 संसारवननिर्वेदं बीजमस्य विदुर्बुधाः ॥ ३ ॥
138326
138327 शत्रुस्वजनापमानादिजन्यदुःखेन भाग्यवशात्स्वयमेव वा
138328 साधुसुहृज्जनोपदेशादिना निमित्तान्तरेण वा यथाकथंचिदुदितं
138329 निर्वेदमुत्कटजिहासात्मकं परवैराग्यमस्य समाधानतरोर्बीजं विदुरित्यर्थः ॥ ३ ॥
138330
138331 शुभजालहलाकृष्टं रसासिक्तमहर्निशम् ।
138332 प्रवहच्छ्वसनाकुल्यं क्षेत्रमस्य विदुर्बुधाः [मनो विदुः इति पाठो
138333 युक्तः ।] ॥ ४ ॥
138334
138335 समाधिबीजं संसारनिर्वेदः पतति स्वयम् ।
138336 चित्तभूमौ विविक्तायांन् विवेकिजनकानने ॥ ५ ॥
138337
138338 तच्च संसारनिर्वेदरूपं समाधिबीजं विवेकिजनलक्षणे कानने नन्दने विविक्तायां
138339 विवेकपरिष्कृतायां चित्तभूमौ स्वयमेव पतति न वा पापेक्षास्तीत्यर्थः ॥ ५ ॥
138340
138341 स्वचित्तभूमौ पतितं ध्यानबीजं महाधिया ।
138342 सेकैरमीभिर्यत्नेन संसेक्तव्यमखेदिना ॥ ६ ॥
138343
138344 उक्तवैराग्यलक्षणं ध्यानबीजं महाधिया तत्परिवर्धनोद्युक्तदृढधिया
138345 पुरुषेणाऽमीभिर्वक्ष्यमाणलक्षणैः सेकैः संसेक्तव्यं न
138346 प्रसूतिवैराग्यवत्पुनर्भोगासक्त्या नाशनीयमित्यर्थः । अखेदिना कामक्रोधादिवेगः
138347 खेदस्तत्सहिष्णुना ॥ ६ ॥
138348
138349 शुद्धैः स्निग्धैः पवित्रैश्च मधुरैरात्मनोहितैः ।
138350 सत्संगमनवक्षीरैरैन्दवैरमृतैरिव ॥ ७ ॥
138351
138352 तत्र प्रथमं सत्संगमलक्षणैर्नवैः क्षीरैः
138353 पश्चात्तन्मुखावगतशास्त्रामृतैः सेक्तव्यमित्याह - शुद्धैरिति द्वाभ्याम् ॥ ७
138354 । ।
138355
138356 अन्तःशून्यप्रदैः पूर्णैः स्वच्छैरमृतशीतलैः ।
138357 विसृतैरमृताकुल्याशास्त्रार्थवरवारिभिः ॥ ८ ॥
138358
138359 नेतिनेतीति सर्वद्वैतनिषेधादन्तःसर्वसंसारशून्यात्मप्रदैः अत एव पूर्णैः
138360 सर्वतापोपशमनादमृतवत्स्वादुशीतलैः । गुरुहृदयस्थस्य ब्रह्मसरसो
138361 व्याख्याद्वार प्रसृतैः ।
138362 अमृतप्रवाहस्यासमन्तात्कुल्यावद्द्वारभूतश्रवणमननादिशास्त्रार्थ##-
138363
138364 स्वचित्तभूमौ पतितं परिज्ञाय महाधिया ।
138365 बीजं संसारनिर्वेदो रक्ष्यं ध्यानस्य यत्नतः ॥ ९ ॥
138366
138367 ध्यानस्य बीजं संसारनिर्वेदरूपं रक्ष्यम् ॥ ९ ॥
138368
138369 तपःप्रकारदानेन पदार्थघटनेशितैः ।
138370 तीर्थायतनविश्रान्तिवृतिविस्तारकल्पनैः ॥ १० ॥
138371
138372 के ते यत्नास्तानाह - तप इति । तपोऽत्र भगवदुक्तं देवद्विजगुरुप्राज्ञपूजनं

शौचमार्जवम् इत्यादिकं कायिकं वाचिकं मानसं च त्रिविधं सात्त्विकं
तल्लक्षणेन प्रकीर्यन्त इति प्रकाराः क्षेत्रदोहदास्तद्दानेन। पदार्था
अमानित्वादयस्तेषां घटनेन ईशितैः समर्थितैः। तीर्थायतनादिपुण्यस्थाने
विश्रान्तिर्वासस्तल्लक्षणस्य वृतिविस्तारस्य प्राकारप्राचीनाद्यावरणविस्तारस्य
कल्पनैः॥ १०॥

कर्तव्योऽङ्कुरितस्यास्य रक्षिता शिक्षिताशयः।
संतोषनामा प्रियया नित्यं मुदितयान्वितः॥ ११॥

एवं सेचनाद्युपायैरङ्कुरितस्य संजाताङ्कुरस्यास्य बीजस्य रक्षणोपायेषु
शिक्षिताशयो निपुणतरो मुदिताख्यया प्रियया पत्न्यान्वितः संतोषनामा रक्षिता
परिपालकपुरुषः कर्तव्यः॥ ११॥

पश्चात्स्थिताशाविहगान्परप्रणयपक्षिणः।
अस्मादापततः कामगर्वगृध्रान्निवारयेत्॥ १२॥

अस्माद्रक्षकाद्धेतोः पश्चात्पूर्ववासनासु स्थितान्
आशालक्षणान्विहगान्परेष्वात्मातिरिक्तेषु पुत्रमित्रधनादिषु
प्रणयोऽनुरागस्तद्रूपान्पक्षिणः कामवर्गादिगृध्रांश्च
ध्यानाङ्कुरविघातार्थमापततो निवारयेत्॥ १२॥

मृदुभिः सत्क्रियाकुन्तैर्विवेकार्कातपैरपि।
अचिन्त्यालोकदैरस्मान्मार्जितव्यं रजस्तमः॥ १३॥

अहिंसाप्रधानत्वान्मृदुभिर्यमनियमासनप्राणायामेश्वरोपासनादिसत्क्रिया##-
एवमचिन्त्यब्रह्मालोकदैर्विवेकातपैस्तमोऽज्ञानतिमिस्मपि मार्जितव्यम्॥ १३॥

संपदः प्रमदाश्चैव तरङ्गा भोगभङ्गुराः।
पतन्त्यशनयस्तस्मिन्दुष्कृताभ्रसमीरिताः॥ १४॥

तस्मिन्नङ्कुरे॥ १४॥

धैर्यौदार्यदयामन्त्रैर्जपस्नानतपोदमैः।
विनिवारयितव्यास्ताः प्रणवार्थत्रिशूलिना॥ १५॥

प्रणवमात्राभिर्विराडादिभिः स्थूलसूक्ष्मप्रपञ्चविलापनेन। तद्बोधेनेति यावत्॥
१५॥

इति संरक्षितादस्माद्ध्यानबीजात्प्रवर्तते।
आभिजात्योन्नतः श्रीमान्विवेकाख्यो नवाङ्कुरः॥ १६॥

आभिजात्येन पुष्टिसौन्दर्यातिशयेनोन्नतः॥ १६॥

तेन सा चित्तभूर्भाति सप्रकाशा विकासिनी।
भवत्यालोकरम्या च खं यथाभिनवेन्दुना॥ १७॥

तस्मादङ्कुरतः पत्रे उभौ विकसतः स्वयम्।
एकं शास्त्राभिगमनं द्वितीयं साधुसंगमः॥ १८॥

स्तम्भमेष निबध्नाति स्थैर्यं नाम समुन्नतिम्।
संतोषत्वग्विवलितं वैराग्यरसरञ्जितम्॥ १९॥

स्तम्भं काण्डम् स्थैर्यं दृढमूलताम् । समुन्नतिमुच्छ्रायम् ॥ १९ ॥

वैराग्यरसपुष्टात्मा शास्त्रार्थप्रावृषान्वितः ।
स्वल्पेनैव स्वकालेन परामेति समुन्नतिम् ॥ २० ॥

शास्त्रार्थसाधुसंपर्कवैराग्यरसपीवः ।
रागद्वेषकपिक्षोभैर्न मनागपि कम्पते ॥ २१ ॥

अथ तस्मात्प्रजायन्ते विज्ञानालंकृताकृतेः ।
लता रसविलासिन्यैमा विततदेशगाः ॥ २२ ॥

विज्ञानं श्रवणावर्तनजं ज्ञानम् । इमा वक्ष्यमाणाः । विततदेशगाः
प्रतानविस्तीर्णा अपरिच्छिन्नात्मप्रदेशगताश्च ॥ २२ ॥

स्फुटता सत्यता सत्ता धीरता निर्विकल्पता ।
समता शान्तता मैत्री करुणा कीर्तिरार्यता ॥ २३ ॥

स्फुटता स्वात्मतत्त्वस्य स्फुटीभावस्तदेकसत्यता । सत्ता तदात्मना स्थितिः । धीरता
तत्राप्यकम्प्यता । समता सर्ववैषम्यनिवृत्तिः ॥ २३ ॥

लताभिर्गुणपत्राभिः स ध्यानतरुरूर्जितः ।
यशःपुष्पाभिरेताभिः पारिजातायते यतेः ॥ २४ ॥

गुणाः शान्त्यादयः पत्राणि यासाम् । यतेः संन्यासिनः ॥ २४ ॥

इत्यसौ ज्ञानविटपी लतापल्लवपुष्पवान् ।
भविष्यज्ज्ञानफलदो दिनानुदिनमुत्तमः ॥ २५ ॥

भविष्यज्ज्ञानं मूलाज्ञानोच्छेदक्षमो ब्रह्मसाक्षात्कारः
सप्तमभूमिकाविश्रान्तिपर्यन्तः ॥ २५ ॥

यशःकुसुमगुच्छाढ्यो गुणपल्लवलासवान् ।
वैराग्यरसविस्तारी प्रज्ञामञ्जरिताकृतिः ॥ २६ ॥

सर्वाः शीतलयत्याशाः प्रावृषीव पयोधरः ।
सर्गातपं शमयति सूर्यतापमिवोडुपः ॥ २७ ॥

सर्गातपं सांसारिकतापम् ॥ २७ ॥

प्रतनोति शमच्छायां छायामिव घनागमः ।
निरोधमास्फारयति शमोऽनिल इवाम्बुदम् ॥ २८ ॥

निरोधं चित्तस्थैर्यम् ॥ २८ ॥

निबध्नात्यात्मना पीठं कुलाचल इव स्थितम् ।
फलस्य रचयत्यूर्ध्वं घटिकां मङ्गलादिताम् ॥ २९ ॥

पीठं मूलबन्धम् । फलस्य कैवल्याख्यस्य घटिकां घटयित्रीम् । मङ्गलादितां
शान्त्यादिकल्याणगुणश्रियं रचयति ॥ २९ ॥

विवेककल्पवृक्षे तु वर्धमाने दिने दिने ।
छायावितानवलिते पुंसो हृदयकानने ॥ ३० ॥

138477 प्रवर्तते शीतलता तलतापापहारिणी।
138478 अभ्युल्लसन्मतिलता तुषारोदरसुन्दरी॥ ३१॥
138479
138480 तलस्य मूलभूमेर्हृदयस्य प्रसिद्धानाध्यात्मिकादितापानपहरति तच्छीला॥ ३१॥
138481
138482 यस्यामवान्तरश्रान्तो विश्राम्यति मनोमृगः।
138483 आजन्मजीर्णपथिकः पथि कोलाहलाकुलः॥ ३२॥
138484
138485 अवान्तरेषु संसारप्रान्तरेषु श्रान्तो मनोमृगो यस्यां छायायां विश्राम्यति।
138486 तमेव मनोमृगं सर्गोपान्त्यश्लोकस्थमनोहरिणक इत्यन्तं
138487 बहुतरश्रमादिहेतूपपादकैर्विशेषणैर्वर्णयति - आजन्मेत्यादिना। पथि
138488 दैवात्प्राप्ते सन्मार्गेऽपि नानावादिकोलाहलैराकुलो व्यग्रः सन्भ्रंशित इत्यर्थः॥ ३२॥
138489
138490 सत्तामात्रात्मशारीरचर्मार्थं प्रेक्षितोऽरिभिः।
138491 नानातासारसाकारगोपयज्जर्जरोन्मुखः॥ ३३॥
138492
138493 अरिभिः कामाद्यरिषड्वर्गलुब्धकैः। सत्तामात्रात्मा यः शारीरः
138494 पुरुषस्तल्लक्षणस्य चर्मणोऽपहारार्थे प्रेक्षितः। अनुसृत इति यावत्।
138495 नानातालक्षणेष्वसारेषु साकारेषु शरीरादिकण्टककुञ्जेषु मुहुर्मुहुर्निलीय स्वं
138496 गोपयंश्चासौ तद्दोषकण्टकैर्जर्जरमूर्ध्वं मुखं यस्य स चेति
138497 बहुव्रीह्युत्तरपदः कर्मधारयः॥ ३३॥
138498
138499 संसारारण्यविसरद्वासनापवनेरितः।
138500 अहंतातापसरिता सर्वदा विप्रदारदी॥ ३४॥
138501
138502 अहंतालक्षणया तापसरिता मृगतृष्णानद्या सर्वदा विप्रधावनेन दारदो
138503 विषभेदः सोऽस्यास्तीति दारदी विषाक्रान्त इवान्तर्दाहतृष्णादिव्याकुल इत्यर्थः॥ ३४॥
138504
138505 दीर्घादरी दूरचितसारसंचारजर्जरः।
138506 पुत्रपौत्रपरामर्शप्रतापात्पतितोऽवटे॥ ३५॥
138507
138508 दीर्घेष्वेव भोगविस्तारेष्वादरोऽस्यास्तीत्यादरी नाल्पसंतुष्ट इत्यर्थः। अत एव
138509 दूरेऽप्युपचितेषु सारेषु हरिततृणप्रायेषु विषयेषु संचारेण धावनेन जर्जरः
138510 शिथिलितगात्रः। पुत्रपौत्रादीनां परामर्शः परिपालनं
138511 तत्प्रयुक्तादाध्यात्मिकादित्रिविधदावाग्निप्रतापादवटे अनर्थगर्ते पतितः॥ ३५॥
138512
138513 लक्ष्मीलताविलुठनात्संकटैः कुण्ठिताङ्गकः।
138514 तृष्णाश्रीसरितं गृह्णन्कल्लोलैर्दूरमाहतः॥ ३६॥
138515
138516 लक्ष्मीः संपत्तल्लक्षणासु लतासु पादवेष्टनेन
138517 विलुठनाच्छत्रुचोरराजादिप्रयुक्तैर्बन्धनताडनदण्डनादिसंकटैः
138518 कुण्ठिताङ्गकः। कल्लोलैः अशनायापिपासाशोकमोहजरामृत्युलक्षणैरूर्मिभिः॥
138519 ३६॥
138520
138521 व्याधिदुर्व्याधवैधुर्यपलायनपरायणः।
138522 अशङ्कितविधिर्व्याधपातादिव कृताकृतिः॥ ३७॥
138523
138524 न शङ्कितः संभावितो विधिर्दैवं येन। कृताकृतिः संकुचिताकारः॥ ३७॥
138525
138526 ज्ञेयास्पदसमायातदुःखसायकशङ्कितः।
138527 वैरिविद्रवणव्यग्रो दृषदाहरणाङ्कितः॥ ३८॥
138528

138529 ज्ञेयानां नेत्रादिज्ञानेन्द्रियास्वाद्यानां
138530 गीतघण्टारावयवाङ्कुरादीनामास्पदेभ्यो निमित्तभूतेभ्यो लुब्धकक्षेत्रकादिभ्यः
138531 समायातादुदुःखसायकाच्छङ्कितः। दृषद्भिराहरणैः प्रहारैरिव
138532 पूर्वपूर्वदुःखानुभवसंस्कारैरङ्कितः॥ ३८॥
138533
138534 उन्नतानतसंपातनिपातेनातिघूर्णितः।
138535 विकारोपलनिर्घातैः पारम्पर्येण चूर्णितः॥ ३९॥
138536
138537 उन्नतानतेषूर्ध्वाधस्तनेषु स्वर्गनरकादिषु क्रमात्संपातनिपातेन।
138538 दृषदाहरणाङ्कित इत्यत्र दृषत्पदार्थं दर्शयति - विकारेति। विकाराः
138539 कामक्रोधभयादयः। पारम्पर्येण नैरन्तर्येण॥ ३९॥
138540
138541 तृष्णाचारुलताजालप्रवेशवशविक्षतः।
138542 स्वप्रज्ञारचिताचारः परमायास्वशिक्षितः॥ ४०॥
138543
138544 इन्द्रियग्राममागत्य प्रपलायनतत्परः।
138545 सुदुर्ग्रहगजेन्द्रोग्रविस्फूर्जनविमर्दितः॥ ४१॥
138546
138547 सुदुर्ग्रहो गजेन्द्रः कामः॥ ४१॥
138548
138549 विषयाजगरोदारविषफूत्कारमूर्च्छितः।
138550 कामुकः कामिनीभूमौ रसात्प्रायो विपोथितः॥ ४२॥
138551
138552 विपोथितो विमर्दितः॥ ४२॥
138553
138554 कोपदावानलप्लुष्टपृष्ठविस्फोटदाहवान्।
138555 सदा गतागतानेकदीर्घदुःखप्रदाहवान्॥ ४३॥
138556
138557 कोपदावानलेन प्लुष्टो दग्धः। अत एव पृष्ठे विस्फोटादिव बहिर्दाहवान्। सदा
138558 गतागतैर्विषयेषु पुनः
138559 पुनर्भ्रमणैरनन्तचिन्ताशोकादिदीर्घदुःखैरन्तःप्रदाहवान्॥ ४३॥
138560
138561 स्वात्मलग्नाभिलाषांशदंशदोषैरुपद्रुतः।
138562 भोगलोभलसन्मोदशृगालचिरविद्रुतः॥ ४४॥
138563
138564 स्वकर्मकर्तृतोद्भ्रान्तदारिद्र्यद्वीप्यनुद्रुतः।
138565 व्यामोहमिहिकान्धत्वकूटावटलुठत्तनुः॥ ४५॥
138566
138567 दारिद्र्यलक्षणेन द्वीपिना व्याघ्रेणानुद्रुतः। पुत्रकलत्रासक्तिलक्षणया
138568 व्यामोहमिहिकया अन्धत्वे सति कूटेषु कपटेषु गिरिशृङ्गेष्ववटेषु नीचकृत्येषु
138569 गर्तेषु च लुठत्तनुः॥ ४५॥
138570
138571 मानसिंहसमुल्लासहृदयोत्कम्पनातुरः।
138572 मरणेन रणे येन वृकपुष्पमिवेक्षितः॥ ४६॥
138573
138574 हृदयस्योत्कम्पनं भयं तेनातुरः। येन प्रसिद्धेन मरणेन मृत्युव्याघ्रेण
138575 रणे संप्रहारे वर्कन्ते आददते वृश्चन्ति वा वृकाः स्वनखास्तेषां पुष्पमिव
138576 सुखदार्य ईक्षितः॥ ४६॥
138577
138578 गर्वेण गिरणायाशु दूरतोजनसेवितः।
138579 कामैः समन्ततो दन्तवितानितयवाङ्कुरः॥ ४७॥
138580

138581 गर्वेणार्थादजगरेण निगिरणाय दूरतो जना यस्मात्तद्दूरतोजनं महारण्यं तत्र
138582 सेवितः। चिरं प्रतीक्षित इति यावत्। कामैर्निमित्तैः समन्ततो दैन्ययाब्वादिना
138583 दन्तविकासाद्वितानिता विस्तारिता इव दन्तप्रभा यवाङ्कुरा येन॥ ४७॥
138584
138585 तारुण्यनारीसुहृदा क्षणमालिङ्ग्य वर्जितः।
138586 दुःसंचारेषु [दुःसंचारेषूपवनैः इति मुद्रितपाठः
138587 टीकाकर्त्रसंमतः स्वारस्यविकलश्च।] पवनैः कुपितैरिव वर्जितः॥ ४८॥
138588
138589 तारुण्यलक्षणेन नार्यर्थं सुहृदा न स्वतः।
138590 पवनैर्झंझापवनसदृशैरिन्द्रियैर्दुःसंचारेषु नरकस्थावरादियोनिकान्तारेषु
138591 वर्जितो बहुशः क्षिप्तः॥ ४८॥
138592
138593 कदाचिन्निर्वृतिं याति सशमं च तरौ क्वचित्।
138594 मनोहरिणको राजन्राजीवमिव भास्वति॥ ४९॥
138595
138596 हे राजन्निति दशरथस्य भाविवृत्त्या रामस्य वा संबोधनम्। ईदृशोऽयं
138597 मनोहरिणकः कदाचिद्बहुजन्मसंचितसुकृतपरिपाकभाग्योदयकाले
138598 क्वचिदधिकारिजन्मनि शमादिसाधनसहितं यथा स्यात्तथा वर्णितलक्षणे
138599 ध्यानतरौ निर्वृतिं विश्रान्तिसुखं याति। यथा आसमन्ताज्जीवतीत्याजीवं प्राणिजातं
138600 रात्रौ शीतान्धकारार्तं भास्वति सूर्येऽभ्युदिते निर्वृतिं याति तद्वदित्यर्थः॥ ४९॥
138601
138602 तालीतमालबकुलादिकवृक्षगुल्मविश्रान्तिषु प्रचुरपुष्पविलासहासैः।
138603 नामापि यस्य न विदन्ति सुखस्य मूढाः प्राप्नोति तच्छमतरोः स्वमनोमृगो
138604 वः॥ ५०॥
138605
138606 हे श्रोतारः तालीतमालादिवृक्षमूलविश्रान्तिसदृशेषु
138607 भूम्यादिसत्यलोकान्तलोकवासेषु
138608 प्रचुरपुष्पविलासहाससदृशैरनित्यभोगाभासैर्यस्य निरतिशयस्य भूमाख्यस्य
138609 सुखस्य नामापि मूढा आत्मज्ञानशून्या जना न विदन्ति
138610 तत्तादृशमपुनरावृत्तिमोक्षविश्रान्तिसुखं वः स्वमनोमृगः प्रागुक्तरीत्या
138611 क्षेत्रबीजसेकादिना वर्धिताच्छमतरोर्ध्यानकल्पवृक्षात्प्राप्नोतीत्यर्थः॥ ५०॥
138612
138613 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मी० दे० मोक्षो० निर्वाणप्रकरणे उ०
138614 मनोमृगविपद्वर्णनं नाम चतुश्चत्वारिंशः सर्गः॥ ४४॥
138615
138616 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे न्निर्वाणप्रकरणे उत्तरार्धे
138617 मनोमृगविपद्वर्णनं नाम चतुश्चत्वारिंशः सर्गः॥ ४४॥
138618
138619 पञ्चचत्वारिंशः सर्गः ४५
138620
138621 श्रीवसिष्ठ उवाच।
138622
138623 इति विश्रान्तवानेष मनोहरिणकोऽरिहन्।
138624 तत्रैव रतिमायाति न याति विटपान्तरम्॥ १॥
138625
138626 वर्ण्यते मनसो ध्यानपादपारोहणक्रमः।
138627 आरोहतः सुखोत्कर्षोऽप्युत्तरोत्तरभूमिषु॥
138628
138629 हे अरिहन्। तत्र ध्यानकल्पतरावेव॥ १॥
138630
138631 एतावताथ कालेन स विवेकद्रुमः फलम्।
138632 अन्तस्थंन् परमार्थात्म शनैः प्रकटयत्यलम्॥ २॥

138633
138634 एतावता प्राग्वर्णितेन गुच्छारम्भान्तेन मनोमृगविश्रान्त्यन्तेन च कालेन स
138635 वर्णितो विवेकसहितध्यानद्रुमोऽन्तस्थं पञ्चकोशान्तस्थं गुच्छान्तस्थं च
138636 परमार्थात्म पारमार्थिकस्वस्वरूपं कैवल्यफलं
138637 शनैर्वक्ष्यमाणभूमिकारोहणक्रमेण परिपच्यमानं प्रकटयति
138638 साक्षादनुभावयति ॥ २ ॥
138639
138640 ध्यानद्रुमफलं पुण्यौ तदसौ स्वमनोमृगः ।
138641 अधःस्थितः प्रान्तगतं तस्य पश्यति सत्तरोः ॥ ३ ॥
138642
138643 तत्रादावसंभावनादोषस्येषत्क्षयान्मन्दान्धकारे घटादेरिव
138644 संभावनाप्रायंन् साक्षात्कारं चतुर्थभूमिकाद्वारं दर्शयति - ध्यानेति ।
138645 प्रान्तगतं शाखाग्रसंलग्नम् ॥ ३ ॥
138646
138647 आरोहति नरो वृक्षं तदास्वादयितुं फलम् ।
138648 अन्यवर्गपरित्यागो वितताध्यवसायवान् ॥ ४ ॥
138649
138650 प्राक्तनमृगरूपकस्य वृक्षारोहणे अनुपयोगाच्चापलपशुभावादिनिवृत्तेश्च
138651 नर इत्युक्तिः ॥ ४ ॥
138652
138653 विवेकवृक्षपान्नाम वृत्तीस्त्यजति भूगताः ।
138654 उन्नतं पदमासाद्य भूयो नाधः समीहते ॥ ५ ॥
138655
138656 कथमारोहति तदाह - विवेकेति । विवेकवृक्षे दृढप्रतिष्ठितः पादो यस्य
138657 तथाविधो नाम प्रथमं भूत्वा प्राक्तनीः संसारभूगता
138658 देहादिष्वहंममतादिवृत्तीस्त्यजति । पादस्य लोपोऽहस्त्यादिभ्यः इति लोपः समासान्तः ।
138659 नाधः समीहते आरोढव्यावलम्बनीयवृक्षभागेष्वेव
138660 सावधानदृष्टिचित्तनिवेशनादिति भावः ॥ ५ ॥
138661
138662 तेनोत्तमफलार्थेन संस्कारान्प्राक्तनानसौ ।
138663 विवेकपादपारूढस्त्यजत्यहिरिव त्वचम् ॥ ६ ॥
138664
138665 संस्कारांस्त्यजति । न किंचित्पूर्वतनं स्मरतीति यावत् ॥ ६ ॥
138666
138667 हसत्युच्चैः पदारूढमात्मानमवलोकयन् ।
138668 एतावन्तमहं कालं कृपणः कोऽभवं त्विति ॥ ७ ॥
138669
138670 कदाचिद्दैवात्स्मरन्नपि हसति । कृपणो विषयसुखकणप्रार्थनया दीनः ॥ ७ ॥
138671
138672 करुणादिषु तेष्वस्य भ्रमञ्छाखान्तरेषु सः ।
138673 लोभव्यालमधः कुर्वन्सम्राडिव विराजते ॥ ८ ॥
138674
138675 करुणा सर्वभूतदया आदिपदात् अभयंन् सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः
138676 इत्याद्या दैव्यः संपदो गृह्यन्ते । तल्लक्षणेषु अस्य वृक्षस्य शाखान्तरेषु
138677 भ्रमन् व्युत्थानकाले विहरन्सम्राडिव पूर्णकामः ॥ ८ ॥
138678
138679 हृदयेन्दोर्गलश्रेणी दुःखाब्जतिमिरावलिः ।
138680 कृष्णायःशृङ्खलातृष्णा दिनानुदिनमुज्झति ॥ ९ ॥
138681
138682 हृदयेन्दोः सद्बुद्धिचन्द्रस्य गलत्यस्मिन्निति गलः कलाक्षयहेतुर्दर्शस्तस्य श्रेणी
138683 पङ्क्तिभूता दुःखलक्षणस्य अब्जस्य चन्द्रस्य बहुत्वभ्रान्तिहेतुस्तिमिरं
138684 नेत्ररोगविशेषस्तदावलिः कृष्णायः अयोजाति भेदस्तन्निर्मिता शृङ्खलेव

138685 प्राणिनां बन्धनहेतुः ईदृशी तृष्णा शुभेच्छारम्भदिनमारभ्य
138686 दिनानुदिनं क्षीयमाणा चतुर्थभूमिकायां निःशेषमुज्झति | रसोऽप्यस्य परं
138687 दृष्ट्वा निवर्तते इति भगवद्वचनादिति भावः || ९ ||
138688
138689 उपेक्षते न संप्राप्तं नाप्राप्तमभिवाञ्छति |
138690 सोमसौम्यो भवत्यन्तः शीतलः सर्ववृत्तिषु || १० ||
138691
138692 शास्त्रार्थपल्लवेष्वेव निषण्णात्मावतिष्ठते |
138693 उन्नतावनतायाताअधः पश्यञ्जगद्गतीः || ११ ||
138694
138695 शास्त्रमध्यात्मशास्त्रं तदर्थाः शमदमसंतोषादयस्तल्लक्षणेषु पल्लवेषु
138696 किसलयेषु | इतरशास्त्रानुसारिप्रवृत्तौ प्राणिनां ब्रह्मलोकपर्यन्तमुन्नताः
138697 स्वाभाविकप्रवृत्तौ निरयान्तमवनताश्च जगद्गतीरधः अज्ञदशायामेवेति
138698 पश्यन् || ११ ||
138699
138700 भीमद्रुमलतोत्कीर्णपुष्पप्रकरदन्तुराः |
138701 प्राक्तनीः स्वाः स्थलीः पश्यन्हसत्यन्तर्वराकताम् || १२ ||
138702
138703 भीमा भयानका विषद्रुमलतास्तत्रोत्कीर्णैर्विषपुष्पप्रकरैर्दन्तुराः
138704 प्रकटितोन्नतदन्ता इव स्थिताः स्थलीः प्राग्वर्णिताः सप्त अज्ञानभूमिकाः
138705 पश्यन्स्मरन् || १२ ||
138706
138707 तेषु तत्स्कन्धदेशेषु तथोड्डीनविडीनया |
138708 हारिण्या विहरज्ञात्या राजेव परिराजते || १३ ||
138709
138710 तस्य ध्यानतरोः
138711 स्कन्धदेशेषूत्तरोत्तरभूमिकाभेदेष्वभ्यासदशायामारुह्यावतरणादुड्डीनविडी
138712 नप्रायया अत एव विहरज्ञात्या चित्तवृत्त्या || १३ ||
138713
138714 पुत्रदारसमग्राणि मित्राणि च धनानि च |
138715 जन्मान्तरकृतानीव स्वप्नजानीव पश्यति || १४ ||
138716
138717 रागद्वेषभयोन्मादमानमोहमहत्तया |
138718 नटस्येवास्य दृश्यन्ते शीतलामलचेतसः || १५ ||
138719
138720 व्यवहारे नटस्येव परानुरञ्जनमात्रप्रधानया कृत्रिमया रागादिमहत्तया अस्य
138721 दृश्यन्ते | व्यवहारा इति शेषः || १५ ||
138722
138723 उन्मत्तचेष्टिताकारा हसत्यपि पुरोगताः |
138724 तरङ्गभङ्गुराधाराः संसारसरितो गतीः || १६ ||
138725
138726 पुरोगता अपि संसारमृगतृष्णासरितो गतीर्मिथ्यात्वबुद्ध्या हसति || १६ ||
138727
138728 न स चेतयते काश्चिल्लोकदारधनैषणाः |
138729 अपूर्वपदविश्रान्तो जीवन्नेव यथा शवः || १७ ||
138730
138731 केवलं केवले शुद्धे बोधात्मनि महोन्नते |
138732 दत्तदृष्टिः फले तस्मिन्परं समधिरोहति || १८ ||
138733
138734 परं पञ्चमभूमिकास्थानम् || १८ ||
138735
138736 स्मृत्वा स्मृत्वापदः पूर्वं संतोषामृतपोषितः |

138737 अर्थानामप्यनर्थानां नाशेषु परितुष्यति ॥ १९ ॥
138738
138739 व्यवहारेषु कार्येषु भोगसंपादकेष्वपि ।
138740 परमुद्वेगमायाति सनिद्र इव बोधितः ॥ २० ॥
138741
138742 यथा सनिद्रः पुरुषो बोधितः सन्निद्रासुखविच्छेदादुद्वेगमायाति
138743 तद्वदयमवश्यकार्येषु व्यवहारेषु परैर्बोध्यमानः
138744 समाधिसुखविच्छेदादुद्वेगमायातीत्यर्थः ॥ २० ॥
138745
138746 दीर्घाध्वग इवोदारामनारतमबाधिताम् ।
138747 चिरं मौर्ख्यश्रमाक्रान्तो विश्रान्तिमभिवाञ्छति ॥ २१ ॥
138748
138749 प्राक् चिरं मौर्ख्यप्रयुक्तेन जन्ममरणपरम्पराभ्रमश्रमेणाक्रान्त इति
138750 सांप्रतं समाधिविश्रान्तिमेवाभिवाञ्छतीत्यर्थः ॥ २१ ॥
138751
138752 निःश्वासबोधितोऽप्यग्निरनिन्धन इवात्मनि ।
138753 श्वासमात्रसमोऽप्यन्तरतिष्ठन्नेव शाम्यति ॥ २२ ॥
138754
138755 श्वासमात्रेणेतरजनसमोऽप्यन्तरहंभावाभिमानेनाऽतिष्ठन्नेवेति पूर्णात्मनि
138756 शाम्यति ॥ २२ ॥
138757
138758 आपतन्तीं बलादेव पदार्थेष्वरतिं शनैः ।
138759 न शक्नोति निराकर्तुं दृष्टिमत्र च्युतामिव ॥ २३ ॥
138760
138761 बाह्यपदार्थेष्वरतिं पूर्वाभ्यासबलादापतन्तीं अत्र बाह्यार्थेषु च्युतां स्खलितां
138762 यथाप्राप्तोपभोगदृष्टिमिव निराकर्तुं न शक्नोति अप्रतिकूलत्वादिति भावः ॥ २३ ॥
138763
138764 तां महापदवीं गच्छन्परमार्थफलप्रदाम् ।
138765 भूमिकामप्युपायाति वचसामप्यगोचराम् ॥ २४ ॥
138766
138767 भूमिकां षष्ठभूमिकाम् ॥ २४ ॥
138768
138769 कुतोऽप्यचेष्टितेष्वेव संप्राप्तेषु विधेर्वशात् ।
138770 भोगेष्वरतिमायाति पान्थो मरुमहीष्विव ॥ २५ ॥
138771
138772 अचेष्टितेषु प्रयत्नरहितेष्वेव कुतोऽपि परप्रयत्नादिनिमित्तात्प्राप्तेषु ॥ २५ ॥
138773
138774 घूर्णः क्षीण इवानन्दी सुप्तः संसारवृत्तिषु ।
138775 अन्तःपूर्णमना मौनी कामपि स्थितिमृच्छति ॥ २६ ॥
138776
138777 स तादृग्रूपतामेत्य परमार्थफलस्य तत् ।
138778 क्रमान्निकटमाप्नोति खगोऽगपदवीमिव ॥ २७ ॥
138779
138780 खगः सिद्धः ।अगपदवीं मेरुशिखरमिव पक्षी वृक्षाग्रमिवेति वा ॥ २७ ॥
138781
138782 ततस्तदखिलां बुद्धिं विहाय वियता समः ।
138783 गृह्णात्यथास्वादयति भुङ्क्तेऽथ परितृप्यति ॥ २८ ॥
138784
138785 तस्य सप्तमभूमिकाप्रतिष्ठामाह - तत इति । अखिलां बुद्धिं विहायेत्यनेन
138786 तत्रास्यात्यन्तिकवासनाक्षयमनोनाशौ दर्शितौ । गृह्णाति
138787 भूमानन्दब्रह्मभावफलमिति शेषः । आवरणभङ्गाद्गृह्णाति
138788 निर्विक्षेपस्फुरणादास्वादयति तदेकप्रवणवृत्त्या भुङ्क्ते तद्भावेन पूर्णस्थित्या

138789 परितृप्यतीति चतुर्थ्यादिभूमिकाफलानामत्र लाभो दर्शितः ॥ २८ ॥
138790
138791 संकल्पार्थपरित्यागाद्दिनानुदिनमातता ।
138792 शुद्धस्वभावविश्रान्तिः परमार्थाप्तिरुच्यते ॥ २९ ॥
138793
138794 सर्वभूमिकारोहणोपायरहस्यमाह - संकल्पेति ॥ २९ ॥
138795
138796 भेदबुद्धिर्विलीनार्थाऽभेद एवावशिष्यते ।
138797 शुद्धमेकमनाद्यन्तं तद्ब्रह्मेति विदुर्बुधाः ॥ ३० ॥
138798
138799 तत्राप्युपायमाह - भेदेति । भेदबुद्धिस्त्रिपुटीभेदसाक्षिचित् विलीना
138800 अर्थास्त्रिपुटीभेदा यस्यास्तथाविधा सती अभेद एवावशिष्यते । स च शुद्धं
138801 ब्रह्मैवेत्यर्थः ॥ ३० ॥
138802
138803 लोकैषणाविरक्तेन त्यक्तदारैषणेन च ।
138804 धनैषणाविमुक्तेन तस्मिन्विश्रम्यते पदे ॥ ३१ ॥
138805
138806 तस्याप्युपायमाह - लोकैषणेति द्वाभ्याम् ।
138807 दारैषणात्यागेनैवार्थात्पुत्रैषणात्यागो लभ्यत इत्याशयः ॥ ३१ ॥
138808
138809 परेण परिणामेन मिथश्चित्परमार्थयोः ।
138810 तापेन हिमलेखेव भेदबुद्धिर्विलीयते ॥ ३२ ॥
138811
138812 दृश्यतत्त्वशोधने सन्मात्रं परमार्थः । द्रष्टृतत्त्वशोधने चिन्मात्रम् ।
138813 तयोरखण्डैक्यलक्षणेन परेण निरतिशयानन्दात्मना परिणामश्चित्तस्य
138814 चरमसाक्षात्कारवृत्तिस्तेनेत्यर्थः ॥ ३२ ॥
138815
138816 तज्ज्ञस्याकृष्टमुक्तस्य स्वभावेषूपमां विना ।
138817 स्थितिः स्रग्दामकस्येव न संभवति काचन ॥ ३३ ॥
138818
138819 ननु आकृष्टमुक्तधनुष इव चित्तस्याखण्डाकारवृत्त्युपरमे पुनः
138820 पूर्वावस्थास्थितिर्दुर्वरित्याशङ्क्याह - तज्ज्ञस्येति । तज्ज्ञस्य
138821 लब्धसाक्षात्कारस्य धनुरादिकठोरोपमां विना कोमलतरस्य स्रग्दामकस्येव
138822 स्थितिः । भूमौ पतितं हि स्रग्दाम ऋजुवक्रादिभावेन यथैवाकृष्य स्थाप्यते
138823 तथैवावतिष्ठते न धनुर्वत्पूर्वावस्थास्थितिस्तस्य संभवतीत्यर्थः ॥ ३३ ॥
138824
138825 यथाऽप्रकटिताङ्गान्तःसंस्थिता शालभञ्जिका ।
138826 न सती नासती स्तम्भे तथा विश्वस्थितिः परे ॥ ३४ ॥
138827
138828 किं सा स्वायत्ता ध्यानरूपा नेत्याह - यथेति द्वाभ्याम् । अप्रकटिताङ्गा
138829 अनाविष्कृतावयवा ॥ ३४ ॥
138830
138831 ध्यानं न शक्यते कर्तुं न चैतदुपयुज्यते ।
138832 अबोधेन विबुद्धस्तु स्वयमत्रैव तिष्ठति ॥ ३५ ॥
138833
138834 अस्त्वेवं किं ततस्तत्राह - ध्यानमिति । इत्थं प्राग्बोधात्सप्रपञ्चे ब्रह्मणि
138835 निष्प्रपञ्चस्वभावस्याबोधेन ध्यानं तावत्कर्तुं न शक्यते । साक्षाद्विबुद्धस्तु
138836 स्वयं तत्स्वभावे एव तिष्ठन्कथं तद्ध्यातुं शक्नुयात् । न हि स्वपन् जागरूको वा
138837 अस्वप्नोऽहमस्मीत्यात्मानं ध्यातुं शक्नोतीति भावः ॥ ३५ ॥
138838
138839 आत्यन्तिकी विरसता यस्य दृश्येषु दृश्यते ।
138840 स बुद्धो ना प्रबुद्धस्य दृश्यत्यागे [दृश्यत्यागे हि शक्रता इति पाठः

|] हि शक्तता || ३६ ||

जागरूकेण स्वाप्नार्थेष्विव तत्त्वविदा प्रपञ्चे तुच्छबुद्ध्या
आत्यन्तिकवैरस्यमात्रं तु कर्तुं शक्यमित्याशयेनाह - आत्यन्तिकीति || ३६ ||

दृश्यस्य बोधताबोधो यो बोधादपरिक्षयः |
स समाधानशब्देन प्रोच्यते सुसमाहितेः || ३७ ||

यदि न ध्यानंन् तर्हि तदविषये ब्रह्मणि कथं समाधिः
धारणाध्यानसमाधीनामेकविषयत्वनियमात् | तथा हि भगवतः पतञ्जलेः
सूत्राणि देशबन्धश्चित्तस्य धारणा तत्र प्रत्ययैकतानता ध्यानम्
तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः त्रयमेकत्र संयमः इति
तत्राह - दृश्यस्येति | यो दृश्यस्य त्रिपुटीलक्षणस्य
जगतस्तत्साक्षिस्वरूपबोधमात्रताबोधः स एव सुष्ठु सम्यग्यथार्थस्वभावे
आहितेः स्थापनाद्धेतोः सम्यगाधानं समाधिरिति विग्रहे समाधानशब्देनोच्यते |
तादृशबोधस्वभावाद्धि प्रपञ्चोऽपरिक्षयः शाश्वतो भवतीति सम्यक्स्वभावे
तस्याधानं संपन्नमित्यक्षरार्थानुगमादित्यर्थः || ३७ ||

द्रष्टृदृश्यैकतारूपः प्रत्ययो मनसो यदा |
स तदेकसमाधाने तदा विश्राम्यति स्वयम् || ३८ ||

अर्थमात्रनिर्भासं स्वरूपशून्यमिवेति पतञ्जलिवचनस्यापि
दृग्दृश्यैक्यापादनेन मनसो विलये तात्पर्यं सुवचमित्याशयेनाह -
द्रष्टृति | द्रष्टा साक्षिदृश्या त्रिपुटी तदेकतां रूपयतीति रूपः || ३८ ||

स्वभावो दृश्यवैरस्यमेव तत्त्वविदो निजः |
दृश्यस्पन्दनमेवाहुरतत्त्वज्ञत्वमुत्तमाः || ३९ ||

दृश्यस्य वैरस्यंन् जाड्यदुःखादिरसताविरुद्धचिदानन्दरसभावः || ३९ ||

अतज्ज्ञायैव विषयाः स्वदन्ते न तु तद्विदः |
न हि पीतामृतायान्तः स्वदते कटु काञ्जिकम् || ४० ||

विषया अचित्स्वभावा अचित्स्वभावदेहाद्यात्मने अतत्त्वज्ञायैव खदन्ते | रुच्यर्थानां
प्रीयमाणः इति संप्रदानता | तद्विद इति तस्यैव शेषत्वविवक्षया षष्ठी | काञ्जिकं
मद्यविशेषः || ४० ||

वितृष्णस्यात्मनिष्ठत्वादेषणात्रयमुज्झतः |
ज्ञस्याप्यनिच्छतो ध्यानमर्थायातं प्रवर्तते || ४१ ||

यदि तु पुनः पुनः स्वस्वरूपानुसंधानमेव ध्यानं मन्यसे तर्हि तज्जागरूकस्य
जाग्रदात्मनीव विदुषः सहजसिद्धमित्याह - वितृष्णस्येति || ४१ ||

बोधः स्फुरति तृष्णावाः सैव यस्य न विद्यते |
तस्य स्वरूपमुत्सृज्य क्वासौ तिष्ठति कः कथम् || ४२ ||

वितृष्णस्येत्युक्तेस्तात्पर्यमुद्घाटयति - बोध इति | बोधः
स्वरूपानुसंधानलक्षणं ध्यानं तृष्णादिविक्षेपहेतोः स्फुरति संचलतीति
प्रसिद्धम् | यस्य तत्त्वविदः | तथा च परिशेषात्स्वरूपानुसंधानस्यैव सिद्धिरित्याह
- तस्येति | किंवृत्तानि दृश्यद्रष्टृदर्शनत्रिपुटीपरामर्शीनि || ४२ ||

ज्ञस्यानाराधको ध्येयबोधो नयतु यो भवेत् |

138893 अनन्ता सा वितृष्णस्य न्निर्विभागोदितः स्वयम् ॥ ४३ ॥
138894
138895 अथवा वितृष्णस्य ज्ञस्य सा तृष्णा अनन्ता अपरिच्छेद्या। यतोऽयं स्वयंन्
138896 निर्विभागोऽपरिच्छिन्नात्मरूप एवोदितः। अतो ध्येयस्य चिन्तनीयस्य बाह्यार्थस्य बोधो
138897 यो यादृशो भवेत्स तादृशे समाधौ व्यवहारे वा नयतु तथाप्यसौ
138898 तस्याऽनाराधको न तत्तृष्णापूर्तिसमर्थ इत्यर्थः ॥ ४३ ॥
138899
138900 अनन्तमपतृष्णस्य स्वयमेव प्रवर्तते।
138901 ध्यानंन् गलितपक्षस्य संस्थानमिव भूभृतः ॥ ४४ ॥
138902
138903 अतो बाह्यार्थेऽपगततृष्णस्य तस्य तादृशतृष्णाया नित्यनिरतिशयानन्दात्मैव
138904 परिशेषाद्बोधक इति तदनुभवलक्षणमनन्तध्यानं स्वयमेव प्रवर्तते न
138905 यत्नमपेक्षत इत्यर्थः ॥ ४४ ॥
138906
138907 शुद्धबोधात्मनि ज्ञत्वादसमाहिततोदिता।
138908 न जातु सुसमिद्धेऽग्नौ घृतबिन्दोरवस्थितिः ॥ ४५ ॥
138909
138910 अत एव शुद्धबोधोदयपर्यन्तमेव समाधियत्नः। शुद्धबोधात्मनि
138911 साक्षादनुभूते ज्ञत्वविरोधादेवाऽसमाहितत्वं
138912 समाधियत्ननिवृत्तिस्तत्त्वविद्भिरुदितेत्यर्थः। विरोधं दृष्टान्तेन प्रकटयति -
138913 न जात्विति ॥ ४५ ॥
138914
138915 परं विषयवैतृष्ण्यंन् समाधानमुदाहृतम्।
138916 आहृतं येन तन्नूनं तस्मै नृब्रह्मणे नमः ॥ ४६ ॥
138917
138918 विक्षेपहेतूनांन् रागादिदोषाणामात्यन्तिकोच्छेदलक्षणं तु समाधानं
138919 विदुषामेवास्त्यतस्ते नमस्या इत्याह - परमिति। आहृतं संपादितम् ॥ ४६ ॥
138920
138921 नूनं विषयवैतृष्ण्ये परिप्रौढिमुपागते।
138922 न शक्नुवन्ति निर्हर्तुं ध्यानं सेन्द्राः सुरासुराः ॥ ४७ ॥
138923
138924 तृष्णापाशबद्धान्स्वपशून्प्रत्येव देवानां तृष्णोद्दीपनेन
138925 विघ्नसमर्थत्वादिति भावः ॥ ४७ ॥
138926
138927 परं विषयवैतृष्ण्यं वज्रध्यानं प्रसाध्यताम्।
138928 भेदे विगलिते ज्ञानादन्यध्यानतृणेन किम् ॥ ४८ ॥
138929
138930 विषयवैतृष्ण्यंन् च ज्ञानेन सर्वविषयबाधपर्यवसितकार्यं तदेव
138931 वज्रवदृढं ध्यानमपीति प्रशंसति - परमिति ॥ ४८ ॥
138932
138933 मूर्खस्थो विश्वशब्दार्थो नामूर्खविषयस्तथा।
138934 तज्ज्ञाज्ञयोस्तयोश्चैव विश्वविश्वेशयोस्तथा ॥ ४९ ॥
138935
138936 अत एव विदुषां विश्वशब्दो बाधितार्थक इत्याह - मूर्खेति।
138937 तज्ज्ञाज्ञयोरित्याद्युत्तरश्लोकान्वयि। तयोस्तद्विशेषज्ञानाज्ञानयोः ॥ ४९ ॥
138938
138939 यत्रैकीभूय कचनं तत्र विश्राम्यतां बुधाः।
138940 बोधभूमिषु सिद्धानामर्थानां वा विवेकिनाम् ॥ ५० ॥
138941
138942 यत्र यस्मिन्भूमानन्दे द्वैतबाधाभिप्रायेणैकीभूय कचनमित्युच्यतेन
138943 त्वेकत्वसंख्याभिप्रायेण। यतो विवेकिनामारुरुक्षूणां मननादिबोधभूमिषु
138944 सिद्धानामारूढानां साक्षात्कारादिबोधभूमिषु वा आत्मातिरिक्ते सत्तासत्ते द्वैतैक्ये

च केनचिदपि न निर्णीति इत्यन्वयः ॥ ५० ॥

सत्तासत्ते द्वयैक्ये च निर्णीति नेह केनचित् ।
उपाय एकः शास्त्रार्थो द्वितीयो ज्ञसमागमः ॥ ५१ ॥

तत्र विश्रान्तावुपायानाह - उपाय इति ।
शास्त्रस्याध्यात्मशास्त्रस्यार्थनमादरनैरन्तर्येणाभ्यासः शास्त्रार्थः ॥ ५१ ॥

ध्यानं तृतीयं निर्वाणे श्रेष्ठस्तत्रोत्तरोत्तरः ।
जीवादर्शान्मिथो रूपं गृह्णात्येषा महद्वपुः ॥ ५२ ॥

फलसंनिकर्षाधिक्याच्छ्रेष्ठः । एवं विचारजन्यज्ञानवैराग्ययोरपि
निर्वाणोपायतां परस्पराधीनप्रतिष्ठां च
दर्शयितुमविवेकप्रयुक्तजीवोपाधिपरिच्छेदाधीनरागद्वेषाभ्यां
प्रियाप्रियविषयसंघट्टात्साम्यवैषम्यकल्पनां दर्शयति - जीवेति ।
महद्वपुरपरिच्छिन्ना एषा नित्यापरोक्षा ब्रह्मचित् जीवाख्यस्य
स्वप्रतिबिम्बस्यादर्शभूतादन्तःकरणोपाधेर्वशान्मिथः परस्परं विभिन्नं
रूपं गृह्णाति ॥ ५२ ॥

जगत्युदेति संघट्टादाविशेषं समे समे ।
ज्ञातपूर्वापराशेषजगदष्टापदस्थितेः ॥ ५३ ॥

तत्र जगति प्रियाप्रियसंघट्टात् आविशेषं
ब्रह्मादिस्तम्बपर्यन्तान्विशेषानभिव्याप्य स्वकर्मवैचित्र्यात्समविषमे शरीरभेदे
उदेतीत्यर्थः । तदेवमनादिकालात्संसरतां जीवानां मध्ये
कस्यचिद्भाग्योदयाज्ज्ञानाधिकारयोग्ये जन्मनि
शास्त्रसज्जनसङ्गाद्युपायलाभाज्ज्ञातपूर्वापराशेषजन्ममरणभ्रमण##-
बोधवैतृष्ण्यरूपयोर्दीपयोरेकसिद्धौ द्वयोरपि सिद्धिरित्यन्वयः ॥ ५३ ॥

एकसिद्धौ द्वयोः सिद्धिर्बोधवैतृष्ण्यदीपयोः ।
मतिवात्याधुतो व्योम्नि दग्धो ज्ञानाग्निनाखिलः ॥ ५४ ॥

ज्ञानाग्निना दग्धो भस्मीभूतोऽखिलो
जगत्तूलश्चिद्व्योम्न्युत्तरभूमिकाभ्यासलक्षणया मतिवात्यया धुत उड्डायितः सन्
क्व गच्छति न जाने ॥ ५४ ॥

जगत्तूलः परे शान्ते न जाने क्वाशु गच्छति ।
चित्राग्निनेव बोधेन तेन जाड्यं न शाम्यति ॥ ५५ ॥

भ्रान्तिनिवारणसमर्थ एव बोधो मूलाज्ञानजाड्योच्छेदहेतुर्न
त्वापातज्ञानमात्रमित्याह - चित्राग्निनेति । जाड्यमज्ञानं शीतं च ॥ ५५ ॥

निर्मूलापि जगद्भ्रान्तिर्येनाशु न विलीयते ।
यथाऽज्ञस्य जगज्ज्ञप्तिरपज्ञानात्प्रदीप्यते ॥ ५६ ॥

अज्ञस्याभिनिवेशलक्षणादपज्ञानाद्यथा संसारभ्रान्तिरभिवृद्ध्या प्रकाशते
तथा तत्त्वज्ञस्य परिज्ञानाभिवृद्ध्या उत्तरोत्तरभूमिष्वज्ञानमधिकं दह्यत
इत्याह - यथेति ॥ ५६ ॥

तथा ज्ञस्य परिज्ञानात्तदज्ञप्तिः प्रदीप्यते ।
तज्ज्ञस्याज्ञजगज्ज्ञप्तिशब्दार्थरहिता स्थिता ॥ ५७ ॥

138997 दह्यमानेऽज्ञाने जगत्कीदृशं तेषां भासते तदाह - तज्ज्ञस्येति ॥ ५७ ॥
138998
138999 यथास्थितैव त्रिजगज्ज्ञप्तिश्चित्र इवोदिता।
139000 शून्यत्वेनैव रचिता सुप्तत्वेनेव निर्मिता ॥ ५८ ॥
139001
139002 भासते भामयी वाञ्छा जगज्ज्ञप्तिर्ज्ञचेतसि।
139003 नूनं बोधेऽविमूढस्य नाहंता न जगत्स्थितिः ॥ ५९ ॥
139004
139005 अविमूढस्येति च्छेदः ॥ ५९ ॥
139006
139007 भासते परमाभासरूपिणः काप्यवस्थितिः।
139008 बोधाबोधात्मकं चित्तं भाति शुष्कार्द्रकाष्ठवत् ॥ ६० ॥
139009
139010 अर्धप्रबुद्धस्य तर्हि कीदृशं भाति तदाह - बाधेति ॥ ६० ॥
139011
139012 बोधादेकं जगद्भावैर्जाड्यान्नात्मत्वमागतम्।
139013 मिथो बोधाद्द्विविवदतिमैत्रीं भजति बोधतः ॥ ६१ ॥
139014
139015 द्विवत् उभयस्वभाववत्। बोधतो बोधाधिक्येन सर्वजनेष्वतिमैत्रीं भजति।
139016 आत्मौपम्येन सुखदुःखे दयया पश्यतीत्यर्थः। अबोधादबोधांशेन विवदति
139017 विवादादिना व्यवहरतीति वा ॥ ६१ ॥
139018
139019 य एवास्याधिको भागस्तन्मयत्वेन तिष्ठति।
139020 बुधः सतत्त्वं नावैति जगतोऽभावभावयोः ॥ ६२ ॥
139021
139022 यस्तु बुधः परिपक्वज्ञानः स तु जगतः अभावभावयोः सत्त्वासत्त्वयोः सतत्त्वं
139023 याथार्थ्यंन् नावैत्येव ॥ ६२ ॥
139024
139025 जाग्रत्स्वप्नसुषुप्तानां स्वभावमिव तुर्यगः।
139026 वासनैव मनः सेयंन् स्वविचारेण नश्यति ॥ ६३ ॥
139027
139028 यथा तुर्यगः सप्तमभूमिकारूढो जाग्रदादीनां स्वभावं न पश्यति तद्वदिति
139029 भेदकल्पनादुपमा। ननु मनोहरिणकस्य ध्यानतरौ विश्रान्तिः प्रस्तुतेति तस्यैव
139030 रूपान्तरेण तदारोहणे परमपुरुषार्थफलावाप्तिर्वाच्या तत्र मनोनाशलक्षणो
139031 मोक्षः कथं तस्य पुरुषार्थः स्यात्तत्राह - वासनैवेति ॥ ६३ ॥
139032
139033 अवस्तुत्वादतो मोक्षो नात्मनाशे प्रवर्तते ॥ ६४ ॥
139034
139035 अवस्तुत्वादिति। तथा चात्मन एव मायिकमनोहरिणवेषेणानर्थविश्रान्त्यादिवर्णनं
139036 प्रस्तुतमिति भावः ॥ ६४ ॥
139037
139038 ध्यानद्रुमात्स्वयमुपोढमनल्पपाकात्कालेन बोधमुपयातवतः क्रमेण।
139039 भुक्त्वा रसायनफलं परबोधमाद्यमिच्छन्मनोहरिणको निगडाद्विमुक्तः ॥
139040 ६५ ॥
139041
139042 तथा चायं मनोनाशो मनोहरिणवेषेण वर्णितस्यात्मनो निगडमोक्षप्रायः फलित
139043 इत्युपसंहरति - ध्यानेति। इच्छन्मुमुक्षुः प्रस्तुतो मनोहरिणको
139044 वर्णितरूपादङ्कुरकाण्डशाखापल्लवपुष्पफलान्तपरिणामलक्षणानल्प##-
139045 ध्यानद्रुमादाद्यं परबोधोऽखण्डाकारवृत्त्यभिव्यक्तः
139046 परमानन्दस्तल्लक्षणं रसायनफलं भुक्त्वा संसारनिगडाद्विमुक्तो
139047 भवतीत्यर्थः ॥ ६५ ॥
139048

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वाणप्रकरणे उत्तरार्धे
मनोहरणिकोपाख्यानं नाम पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
मनोहरणिकोपाख्यानं नाम पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

षट्चत्वारिंशः सर्गः ४६

श्रीवसिष्ठ उवाच ।

परमार्थफले ज्ञाते मुक्तौ परिणतिं गते ।
बोधोऽप्यसद्भवत्याशु परमार्थो मनोमृगः ॥ १ ॥

ध्यानद्रुमफलास्वादे यादृशी मनसः स्थितिः ।
दृढं विषयवैरस्यं यादृक्तदिह वर्ण्यते ॥

ज्ञाते साक्षादनुभूते । बोधश्चरमसाक्षात्कारवृत्तिरपि
स्वोपादानाज्ञानबाधादसद्भवति मनोमृगश्च परमपुरुषार्थरूप आत्मैव
भवतीत्यर्थः ॥ १ ॥

क्वापि सा मृगता याति प्रक्षीणस्नेहदीपवत् ।
परमार्थदशैवास्ते तत्रानन्तावभासिनी ॥ २ ॥

सा प्राक्तनी मृगता विषयतृष्णान्वेषणस्वभावता याति अपैति ॥ २ ॥

ध्यानद्रुमफलप्राप्तौ बोधतामागतं मनः ।
वज्रसारां स्थितिं धत्ते छिन्नपक्ष इवाचलः ॥ ३ ॥

स्थितिरचाञ्चल्यम् ॥ ३ ॥

मनस्ता क्वापि संयाति तिष्ठत्यच्छैव बोधता ।
निर्बाधा निर्विभागा च सर्वाऽखर्वात्मिका [सर्वात्मिका इत्यप्युभयत्र
पाठः ।] सती ॥ ४ ॥

मनस्ता बाह्यार्थमननस्वभावता । सर्वा पूर्णा । अत एवाखर्वात्मिका
[सर्वात्मिका इत्यप्युभयत्र पाठः ।] बोधता चिन्मात्रता तिष्ठति ॥ ४ ॥

सुविविक्ततया चित्तसत्ता बोधतयोदिता ।
अनाद्यन्ता भवत्यच्छप्रकाशफलदायिनी ॥ ५ ॥

चित्ते या सत्ता प्राग्जडदेहाद्यविवेकाज्जडेवाभूत्सैव सांप्रतं देहादेः सुविविक्ततया
स्थिता बोधतया उदितेव । यतः परमार्थप्रकाशफलदायिनीत्यर्थः ॥ ५ ॥

स्वयमेव ततस्तत्र निरस्तसकलैषणम् ।
अनाद्यन्तमनायासं ध्यानमेवावशिष्यते ॥ ६ ॥

यतो निरस्तसकलैषणमतस्तदनन्यगतिकत्वात्स्वात्मध्यानमेव परिशेषादवगम्यत
इत्यर्थः ॥ ६ ॥

यावन्नाधिगतं ब्रह्म न विश्रान्तं परे पदे ।
तावत्तन्मननत्वेन न ध्यानमवगम्यते ॥ ७ ॥

139101 कदा तर्हि तन्मनो न ध्यानं तदाह - यावदिति | तत् मनः | मननत्वेन
139102 विषयान्तरानुसंधानत्वेन || ७ ||
139103
139104 परमार्थैकतामेत्य न जाने क्व मनो गतम् |
139105 क्व वासना क्व कर्माणि क्व हर्षामर्षसंविदः || ८ ||
139106
139107 केवलं दृश्यते योगी गतो ध्यानैकनिष्ठताम् |
139108 स्थितो वज्रसमाधाने विपक्ष इव पर्वतः || ९ ||
139109
139110 ध्यानवत्तस्य समाधिरप्यर्थसिद्ध इत्याह - केवलमिति द्वाभ्याम् || ९ ||
139111
139112 विरसाखिलभोगस्य प्रशान्तेन्द्रियसंविदः |
139113 नीरसाशेषदृश्यस्य स्वात्मारामस्य योगिनः || १० ||
139114
139115 क्रमेण विगलद्वृत्तेर्बलाद्विश्रान्तिमीयुषः |
139116 अर्थायातं समाधानं केन नाम विचार्यते || ११ ||
139117
139118 तावद्विषयवैरस्यं भावयन्त्युचिताशयाः |
139119 न पश्यन्त्येव तान्यावद्भोगांश्चित्रनरो यथा || १२ ||
139120
139121 तस्य परवैराग्यमप्यर्थसिद्धमित्याह - तावदिति | चित्रनरश्चित्रलिखितान्पुरुषान् ||
139122 १२ ||
139123
139124 अपश्यञ्जागतानर्थान्निर्वासनतयात्मवान् |
139125 बलाद्वज्रसमाधाने त्वन्येनेव निवेश्यते || १३ ||
139126
139127 वज्रवदभेद्ये समाधाने समाधावन्येन नियन्त्रेव बलान्निवेश्यते || १३ ||
139128
139129 प्रावृषीव नदीपूरो यः समाधिरुपस्थितः |
139130 बलादेव तमायातं भूयश्चलति नो मनः || १४ ||
139131
139132 यः समाधिराविर्भूतानन्दैकरसः प्रथमवृत्तावुपस्थितस्तं
139133 गुडपिपीलिकान्यायेन वस्तुस्वभावबलादेवैकाग्र्यमायातमास्वादयन्मनस्ततो न
139134 चलति || १४ ||
139135
139136 सर्वार्थशीतलत्वेन बलाद्ध्याने यदाऽऽगतम् |
139137 ज्ञानाद्विषयवैरस्यं स समाधिर्हि नेतरः || १५ ||
139138
139139 ज्ञानाद्बलादागतं यद्विषयान्तरे वैरस्यं स एव समाधिः | न हि रागादिना
139140 दन्दह्यमाने चेतसि समाधानं कदाचिदपि कस्यचित्प्रसिद्धमिति || १५ ||
139141
139142 दृढं विषयवैरस्यमेव ध्यानमुदाहृतम् |
139143 तदेव परिपाकेन वज्रसारं भवत्यलम् || १६ ||
139144
139145 एवं ध्यानोपपत्तिरपि विषयवैरस्ये सत्येव नान्यथेत्याह - दृढमिति || १६ ||
139146
139147 तदेतद्भोगवैतृष्ण्यं ध्यानमङ्कुरितं हि तत् |
139148 तदेव पीठबन्धेन बद्धं भवति बन्धुरम् || १७ ||
139149
139150 तथा च भोगवैतृष्ण्यंन् बीजमेवाङ्कुरितावस्थं ध्यानं प्ररूढावस्थं
139151 समाधिरित्यभेदेऽपि व्यपदेशभेदः फलित इत्याह - तदेतदिति || १७ ||
139152

139153 सम्यग्ज्ञानं समुच्छूनं सदैवोज्झितवासनम् |
139154 ध्यानं भवति निर्वाणमानन्दपदमागतम् || १८ ||
139155
139156 साक्षात्कारवृत्त्याविर्भूतं ब्रह्मैव अविद्योच्छेदितया ज्ञानं वासनोच्छेदितया
139157 ध्यानंन् सर्वदुःखोच्छेद्यानन्दरूपतया निर्वाणमिति व्यपदिश्यत इत्याह -
139158 सम्यगिति || १८ ||
139159
139160 अस्ति चेद्भोगवैतृष्ण्यं किमन्यद्ध्यानदुर्धिया |
139161 आस्ति चेद्भोगवैतृष्ण्यं किमन्यद्ध्यानदुर्धिया || १९ ||
139162
139163 सर्वमिदं भोगवैतृष्ण्ये सत्येव सिद्ध्यति नान्यथेति तदेव दृढीकर्तुं
139164 प्रशंसति - अस्ति चेत्यादिना || १९ ||
139165
139166 दृश्यस्वदनमुक्तस्य सम्यग्ज्ञानवतो मुनेः |
139167 निर्विकल्पं समाधानमविरामं प्रवर्तते || २० ||
139168
139169 यस्मै न स्वदते दृश्यंन् स संबुद्ध इति स्मृतः |
139170 न स्वदन्ते यदा भोगाः सम्यग्बोधस्तथोदितः || २१ ||
139171
139172 यस्य स्वभावविश्रान्तिः कथं तस्यास्ति भोगिता |
139173 अस्वभावो हि भित्वं तत्क्षये तत्कथं कुतः || २२ ||
139174
139175 पूर्णाद्वयस्वभावविरुद्धं भोगित्वमज्ञानकृतस्वभावविपर्ययकालमात्रे
139176 संभवति नाज्ञाननाशोत्तरमित्याह - यस्येति || २२ ||
139177
139178 श्रुतपाठजपान्तेषु समाधिनिरतो भवेत् |
139179 समाधिविरतः श्रान्तः श्रुतपाठजपाञ्छ्रयेत् || २३ ||
139180
139181 अभ्यासकाले व्युत्थितेन किं कार्यंन् कदा वा समाधिः सेव्यस्तत्क्रममाह -
139182 श्रुतेति | श्रुतं गुरुसतीर्थ्यादिभिः सह वेदान्तश्रवणम् | पाठ
139183 उपनिषदाद्यावर्तनम् | जपः प्रणवादेः | तथा चोक्तं स्कान्दे - जपश्रान्तः
139184 पुनर्ध्यायेद्ध्यानश्रान्तः पुनर्जपेत् | जपध्यानाभियुक्तस्य प्रसीदति परः शिवः इति
139185 || २३ ||
139186
139187 निर्वाणमासीत निरस्तखेदं समस्तशङ्कास्तमयाभिरामम् |
139188 सुषुप्तसौम्यं समशान्तचित्तं शरद्घनाभोगविशुद्धमन्तः || २४ ||
139189
139190 तत्रापि सदैव समाधिप्रधानेन भाव्यमित्याशयेनोपसंहरति - निर्वाणमिति |
139191 स्पष्टम् || २४ ||
139192
139193 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वाणप्रकरणे उत्तरार्धे
139194 साम्यावबोधनो नाम षट्चत्वारिंशः सर्गः || ४६ ||
139195
139196 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
139197 साम्यावबोधनो नाम षट्चत्वारिंशः सर्गः || ४६ ||
139198
139199 सप्तचत्वारिंशः सर्गः ४७
139200
139201 श्रीवसिष्ठ उवाच |
139202
139203 संसारभारसुश्रान्तः संकटेषु लुठत्तनुः |
139204 योऽभिवाञ्छति विश्रान्तिं तस्य क्रममिमं शृणु || १ ||

139205
139206 भूयोऽपि विस्तरान्मुक्तिसाधनक्रमवर्णने।
139207 प्रस्तुते दृढवैराग्यप्राप्त्यन्तमिह वर्ण्यते॥
139208
139209 बहुकृत्वोऽपि पथ्यं वदितव्यमिति न्यायमाश्रित्य परमकारुणिको वसिष्ठः पूर्वं
139210 ध्यानवृक्षोत्पादनपरिपालनफलोन्मुखीकरणमनोहरिणकाश्रयण##-
139211 शुभेच्छादिमोक्षसाधनभूमिकाक्रमं पुनः कुत्र कुत्र कियद्गुणसंपल्लाभ
139212 इत्येतत्प्रतिपादनप्रकारेण स्पष्टं मन्दाधिकारिप्रबोधनाय
139213 वर्णयिष्यंस्तच्छ्रवणाय शिष्यमभिमुखीकरोति - संसारेति।
139214 मरणमूर्च्छादिसंकटेषु लुठन्ति तन्वो यस्य। क्रमं तत्र तत्र
139215 गुणप्रकर्षलाभक्रमम्॥ १॥
139216
139217 पूर्वं विवेककणिका यदा स्वहृदि जायते।
139218 संसारनिर्वेदमयी कारणाद्वाप्यकारणात्॥ २॥
139219
139220 तत्र विवेकाङ्कुरोदये येषां गुणानां लाभस्तान्दर्शयति - पूर्वमित्यादिना।
139221 कारणादैहिकयज्ञतपोदानादिपापक्षयकारणात्। अकारणात्तदभावात्।
139222 जन्मान्तरानुष्ठितसत्कर्मभिरेव क्षीणपापानां बाल्यात्प्रभृत्येव
139223 विनैवैहिककारणं विवेकोदयदर्शनादिति भावः। यदैव निर्वेदमयी विवेककणिका
139224 जायते तदैव साधुत्वेन सुष्ठु विशालिनो विस्तीर्णा वक्ष्यमाणगुणास्तं श्रयन्तीति
139225 परेणान्वयः॥ २॥
139226
139227 तदा श्रयन्ति सच्छायान्साधुत्वसुविशालिनः।
139228 अध्वश्रमहरांस्तापतप्ता मार्गतरूनिव॥ ३॥
139229
139230 तत्र दृष्टान्तः - तापतप्ताः पुरुषाः सच्छायान्मार्गतरूनिवेति॥ ३॥
139231
139232 दूरे परिहरत्यज्ञान्यज्ञयूपानिवाध्वगः।
139233 स्नानदानतपोयज्ञान्करोति विबुधानुगः॥ ४॥
139234
139235 तत्राज्ञजनसङ्गत्यागो यज्ञदानादिपरता देवताराधनादिगुणाः
139236 प्रथममुद्यन्तीत्याह - दूरे इति। एवमग्रेऽपि गुणा योज्याः॥ ४॥
139237
139238 पेशलं चानुरूपं च व्यवहारमकृत्रिमम्।
139239 लोक्यमाह्लादनं धत्ते चन्द्रबिम्बमिवामृतम्॥ ५॥
139240
139241 लोकेभ्यः परिणामे हितं लोक्यं सद्यश्चाह्लादनम्। चन्द्रबिम्बं कर्तृ। अमृतं
139242 कर्म॥ ५॥
139243
139244 परप्रज्ञानुगो भव्यः परार्थपरिपूरकः।
139245 पवित्रकर्मरसिकः कोऽपि सौम्यः प्रवर्तते॥ ६॥
139246
139247 स्वपक्षरागलोभाभिमानाद्यभावात्परहितकारित्वाच्च परप्रज्ञानुगः। अत एव
139248 सर्वजनप्रियो भवतीति भव्यः। पवित्रेषु शास्त्रानिषिद्धेषु कर्मसु रसिकः कोऽपि
139249 सर्वजनोत्कृष्टः सौम्यः सन् प्रवर्तते व्यवहरति॥ ६॥
139250
139251 नवनीतस्थलीवाऽच्छा स्निग्धा मृद्वी मनोहरा।
139252 जनं सुखयति स्वाद्वी तदीया नवसंगतिः॥ ७॥
139253
139254 नवनीतस्य स्थली मुख्याश्रयो दधिमण्ड इवाच्छा स्निग्धेत्यादिसाधारणम्।
139255 नवसंगतिः प्रथमसमागमः। मथनविवेचनपरिपाकक्रमेण
139256 चिरसंगतेरुत्तरोत्तरसारत्वात्स्वादुतरार्थलाभहेतुत्वसूचनाय नवेति विशेषणम्॥ ७॥

शीतलानि पवित्राणि चरितानि विवेकिनः।
इन्दोरिवांशुजालानि जनं शीतलयन्त्यलम् ॥ ८ ॥

न तथोद्यानखण्डेषु पुष्पप्रकरहारिषु।
विश्राम्यते वीतभयं यथा साधुसमागमे ॥ ९ ॥

मन्दाकिनीपयांसीव संगतानि विवेकिनाम्।
प्रक्षालयन्ति पापानि प्रयच्छन्ति विशुद्धताम् ॥ १० ॥

विवेकिषु विरक्तेषु संसारोत्तरणार्थिषु।
जनः शीतलतामेति हिमहारगृहेष्विव ॥ ११ ॥

हिमैर्हारैश्च रचितेषु गृहेष्विव ॥ ११ ॥

ननु नामरतोदारा या विवेकिनि विद्यते।
सुरगन्धर्वकन्यासु मानवीषु न विद्यते ॥ १२ ॥

न विद्यते सेति शेषः ॥ १२ ॥

प्रज्ञा प्रसादमायाति क्रमादुचितकर्मणः।
अन्तःकरोति शास्त्रार्थमर्थं मुकुरभूरिव ॥ १३ ॥

क्रमादनुष्ठितादुचितान्निष्कामकर्मणो हेतोः प्रज्ञा वृद्धिः प्रसादं
विशुद्धिमायाति। तच्छुद्ध्या च विविदिषोदये गुरुमुखश्रुतं शास्त्रार्थमन्तःकरोति
। हृदि स्थापयतीत्यर्थः। मुकुरभूर्दर्पणतलं स्वप्रतिबिम्बितार्थमिव ॥ १३ ॥

सत्प्रज्ञोन्नतिमायाति शास्त्रार्थरसशालिनी।
विवेकिनि विलासेन कदलीव महावने ॥ १४ ॥

विवेकिनि विवेकवति हृत्स्थाने। विलासेन मूलप्ररोहादिविस्तारेण ॥ १४ ॥

अन्तरेवानुभवति सर्वार्थान्प्रतिबिम्बितान्।
आदर्शवदशेषेण प्रज्ञा नैर्मल्यशालिनी ॥ १५ ॥

सा विवेकिप्रज्ञा सर्वार्थानन्तर्मनोविलासमात्रतया अनुभवति ॥ १५ ॥

साधुसंगमशुद्धात्मा शास्त्रार्थपरिमार्जितः।
प्राज्ञो भात्युद्धृतं वह्नेरग्निशौचमिवांशुकम् ॥ १६ ॥

अग्नावेव शौचं मालिन्यदाहाद्विशुद्धिर्यस्य तथाविधमंशुकं वस्त्ररत्नमिव।
तद्धि दिव्यं सिद्धाम्बरं मलदाहोत्तरं वह्नेरुद्धृतं विद्युत्पुञ्जमिव
भास्वरतरं भातीति शास्त्रप्रसिद्धम् ॥ १६ ॥

कचत्काञ्चनकान्तेन विमलालोककारिणा।
भुवनं भास्करेणेव भाति साधुः स्वतेजसा ॥ १७ ॥

साधुर्विवेकी। स्वतेजसा आन्तरेणात्मप्रकाशेन ॥ १७ ॥

तथानुगच्छति प्राज्ञः शास्त्रसाधुसमागमौ।
यथात्यन्तानुषङ्गेण तावेवानुभवत्यसौ ॥ १८ ॥

139309 शास्त्रमभ्यासेन साधोर्गुरोः समागमं च सेवादिना तथा अनुगच्छति
139310 निरन्तरमनुसरति यथा अत्यन्तं् तदुपदिष्टार्थाभिनिवेशलक्षणेन तदनुषङ्गेण
139311 स्वप्नेऽपि तच्चिन्तनतच्छुश्रूषापरस्तावेवानुभवति न तदनुषङ्गेण स्वप्नेऽपि
139312 तच्चिन्तनतच्छुश्रूषापरस्तावेवानुभवति न तदतिरिक्तं स्वशरीरादिकमपीत्यर्थः ॥
139313 १८ ॥
139314
139315 क्रमात्सज्जनतामेत्य शास्त्रार्थभरभावितः ।
139316 भाति भोगानधःकुर्वन्पञ्जरादिव निर्गतः ॥ १९ ॥
139317
139318 रागद्वेषलोभप्रमादादिदोषक्षयमैत्र्यादिगुणसंचयक्रमात्सज्जनतां
139319 निर्दोषगुणवज्जनताम् ॥ १९ ॥
139320
139321 भोगाभिगमदौर्भाग्यं दिनानुदिनमुज्झता ।
139322 तेन तत्कुलमाभाति ताराचक्रमिवेन्दुना ॥ २० ॥
139323
139324 भोगान्प्रति व्यसनितया विषयाभिमुख्येन गमनं भोगाभिगमस्तल्लक्षणं
139325 दौर्भाग्यम् । कुलं वंशस्तद्घटितसमाजश्च आभाति ॥ २० ॥
139326
139327 अभोगकृपणा कापि न चैवास्य प्रवर्तते ।
139328 मुखे कान्तिरपूर्वैव चन्द्रे राहुमृते यथा ॥ २१ ॥
139329
139330 अभोगकृपणा भोगकार्पण्यनिर्मुक्ता अभिनवैव कापि कान्तिरस्य मुखे प्रवर्तते ।
139331 राहुं ऋते विना । राहुनिर्मुक्ते यथेति यावत् ॥ २१ ॥
139332
139333 तृणीकृतत्रिजगतां महतामभिधेयताम् ।
139334 स याति कल्पविटपी नभसीव दिवौकसाम् ॥ २२ ॥
139335
139336 अभिधेयतां प्रशंसनीयताम् । नभसि स्वर्गे ॥ २२ ॥
139337
139338 भोगानां द्वेषणेनान्तर्लज्जमानो मनस्यपि ।
139339 भोगानामप्यसंपत्त्या परमं परितुष्यति ॥ २३ ॥
139340
139341 प्राप्तभोगानां परित्यागे तुष्यन्नपि त्यक्तसर्वद्वेषेण मया भोगेषु द्वेषः कथं
139342 कृत इति मनसि लज्जमानोऽपि कदाचिद्भवतीति न तथा परितुष्यति । भोगानामसंपत्त्या
139343 अलाभेन तु लज्जाप्रसक्त्यभावात्परमं परितुष्यतीत्यर्थः । त्वर्थेऽपिशब्दः ॥ २३ ॥
139344
139345 स्वा एवोपहसत्यन्तस्तरुणीस्तरलक्रियाः ।
139346 खेदस्मेरमुखो जातीर्जातिस्मर इवाधमः ॥ २४ ॥
139347
139348 प्राक्तनीस्तरुणीः रागादिप्रौढाः स्वाः स्वीया एव भोगौत्सुक्यतरलाः क्रियाः
139349 सांप्रतं स्मरन् खेदेन स्मेरमुखः सन्नन्तरुपहसति यथा
139350 अधमश्चाण्डालादिर्दैवाज्जातिस्मरः सन् स्वा एव जातीरन्तरुपहसति तद्वदित्यर्थः ॥ २४
139351 । ।
139352
139353 अथ तं द्रष्टुमायान्ति सौहार्देनैव साधवः ।
139354 भूमाविवोदितं चन्द्रं विस्मयोत्फुल्ललोचनाः ॥ २५ ॥
139355
139356 तादृशं तं द्रष्टुम् । साधवः सिद्धाः ॥ २५ ॥
139357
139358 नित्यानादृतभोगोऽसौ ततोऽप्युचितया धिया ।
139359 प्राप्तमप्युचितारम्भं भोगं न बहुमन्यते ॥ २६ ॥
139360

139361 ततस्तेभ्यः सिद्धेभ्यः प्रसन्नेभ्यः प्राप्तमुचितारम्भमनिषिद्धमपि
139362 सिद्ध्यादिभोगं स न बहुमन्यते ॥ २६ ॥
139363
139364 पूर्वं संसृतिवैरस्यमन्तरेवोदितात्मनः ।
139365 जायते जीर्णजाड्यस्य पाकादिव शरत्तरोः ॥ २७ ॥
139366
139367 कुतो न बहुमन्यत इति चेद्गुरुशास्त्रसंपर्कात्पूर्वमेव वैराग्यादिसाधनानां
139368 दृढाभ्यस्तत्वादित्याशयेनोक्तमेव गुणोदयक्रमं पुनरनुक्रामति -
139369 पूर्वमित्यादिना ॥ २७ ॥
139370
139371 ततः सज्जनसंपर्कमुदर्कश्रेयसे स्वयम् ।
139372 करोति स्वस्थतागृध्नुर्भिषगाश्रयणं यथा ॥ २८ ॥
139373
139374 तेनोदारमतिर्भूत्वा शास्त्रार्थेषु निमज्जति ।
139375 महान्महाप्रसन्नेषु सरःस्विव महागजः ॥ २९ ॥
139376
139377 सज्जनो हि समुत्तार्य विपद्भ्यो निकटस्थितम् ।
139378 नियोजयति संपत्सु स्वालोकेष्विव भास्करः ॥ ३० ॥
139379
139380 परस्वादानविरतिः पूर्वमेव प्रवर्तते ।
139381 विवेकिनो निजार्थेषु संतोषश्चोपजायते ॥ ३१ ॥
139382
139383 परस्वादानविरतः संतोषामृतनिर्भरः ।
139384 विवेकी क्रमशः स्वार्थानप्युपेक्षितुमिच्छति ॥ ३२ ॥
139385
139386 स्वार्थानप्युपेक्षमाणः परार्थं कुतः स्पृहयेदिति भावः ॥ ३२ ॥
139387
139388 ददाति कणपिण्याकशाकाद्यपि हि याचते ।
139389 तेनैवाभ्यासयोगेन स्वमांसानि ददात्यसौ ॥ ३३ ॥
139390
139391 तेनैव त्यागाभ्यासयोगेन स्वमांसान्यपि याचमानेभ्यो ददाति ॥ ३३ ॥
139392
139393 नूनं विलयचित्तानां विवेकमनुधावताम् ।
139394 मौर्ख्यंन् लघुत्वमायाति धावतामिव गोष्पदम् ॥ ३४ ॥
139395
139396 विवेकानुसरणक्रमेण विलीयमानचित्तानां दिने दिने ज्ञानप्रचयेनाज्ञानंन् क्षीयत
139397 इत्याह - नूनमिति । मौर्ख्यमज्ञानम् । लघुत्वमपक्षयेणाल्पताम् । यथा
139398 धावतामश्वादीनां गोष्पदमनायासोल्लङ्घ्यत्वलक्षणं क्षुद्रत्वमायाति तद्वत् ॥
139399 ३४ ॥
139400
139401 परार्थादानविरतिं [परस्वादान इति टीकानुगुणः पाठः ।]
139402 पूर्वमभ्यस्य यत्नतः ।
139403 आहर्तव्या विवेकेन ततः स्वार्थेष्वरक्तता ॥ ३५ ॥
139404
139405 परेषां स्वं धनादि तस्य आदानाद्विरतिं निवृत्तिम् ॥ ३५ ॥
139406
139407 ततो भोगनिरासेन सह स्वार्थनिराकृतिः ।
139408 परमायै सुविश्रान्त्यै क्रियते कृतिभिः क्रमात् ॥ ३६ ॥
139409
139410 न तादृशं जगत्यस्मिन्दुःखंन् नरककोटिषु ।
139411 यादृशं यावदायुष्कमर्थोपार्जनशासनम् ॥ ३७ ॥
139412

139413 अर्थोपार्जनप्रयुक्तं शासनं दण्डनम् | ऐहिकपारलौकिकदुःखजातमिति यावत् || ३७ ||
139414
139415 आसने शयने याने गमने रमणे जने |
139416 आधिचिन्तापरा [अर्थचिन्ता इति पाठः |] एव ननु मूढा विदन्तु ताम् || ३८ ||
139417
139418 तत्र मूढानां पारलौकिकदुःखास्मरणेऽपि ऐहिकं सर्वप्रसिद्धं स्मारयति -
139419 आसने इति | विदन्तु स्मरन्तु || ३८ ||
139420
139421 नन्वर्था विततानर्थाः संपदः संततापदः |
139422 भोगा भवमहारोगा विपरीतेन भाविताः || ३९ ||
139423
139424 अर्जनरक्षणव्ययादौ राजचोरादिभ्यश्चार्थिनामनर्थसहस्रस्य
139425 प्रसिद्धत्वाद्विततानर्थाः रागविपरीतेन विवेकेन भाविताः पर्यालोचिताश्चेदित्यर्थः |
139426 अथवा भावप्रधानो निर्देशः | अनर्थरूपा अप्येते मोहाज्जनैस्तद्वैपरीत्येन भाविता
139427 इत्यर्थः || ३९ ||
139428
139429 तावन्नायाति वैरस्यं चिन्ताविषयजृम्भणैः |
139430 यावदर्थमहानर्थो न कदर्थार्थमर्थ्यते || ४० ||
139431
139432 यावत्कदर्थार्थमर्थलक्षणोऽनर्थः पुरुषेण नार्थ्यते नाभिलष्यते तावत्स पुरुषो
139433 वैरस्यं तापत्रयप्रयुक्तशोषं नायाति || ४० ||
139434
139435 अनुत्तमसुखं यस्मै चिराय परिरोचते |
139436 जगत्तृणशिखादृष्ट्या सोऽर्थं पश्यतु शाम्यतु || ४१ ||
139437
139438 यस्मै पुरुषाय मोक्षाख्यमनुत्तमं सुखं रोचते स पुमानर्थं धनं
139439 जगल्लक्षणस्य तृणस्य शिखेव तुच्छतरमिति दृष्ट्या पश्यतु | धनस्पृहात्याग
139440 एव मुख्यो मोक्षोपायस्तस्येत्यर्थः || ४१ ||
139441
139442 भूरिभावविकाराणां जरामरणकर्मणाम् |
139443 दैन्यदौरात्म्यदाहानामर्थः सार्थ इति स्मृतः || ४२ ||
139444
139445 तुच्छतामेव द्रढयितुं पुनःपुनर्धनं निन्दति - भूरीति |
139446 चिन्ताशोकमोहादिभावविकाराणां जरामरणयोर्दुष्कर्मणां दैन्यादीनां च अर्थ
139447 एव सार्थः समूह इत्यर्थः | अजन्तुविषयेऽपि जन्तुवदुपचारात्सार्थशब्दः || ४२ ||
139448
139449 अस्मिञ्जगति जन्तूनां जरामरणशालिनाम् |
139450 अजरामरणं कर्तुं संतोषोऽस्ति रसायनम् || ४३ ||
139451
139452 संतोष एव वैराग्यप्रतिष्ठापनेन सर्वदुःखहारीति तं प्रशंसति - अस्मिन्निति ||
139453 ४३ ||
139454
139455 वसन्तो नन्दनोद्यानमिन्दुरप्सरसः स्मृताः |
139456 इत्येकतः समुदितं संतोषामृतमेकतः || ४४ ||
139457
139458 सर्वसुखहेतुरपि स एवेत्याह - वसन्त इत्यादिना | एकतः स्मृता इत्यन्वयः || ४४ ||
139459
139460 सरसः प्रावृषेवान्तः संतोषेणैव पूर्णता |
139461 गम्भीरां शीतलां हृद्यां प्रसन्नां रसशालिनीम् || ४५ ||
139462
139463 पूर्णता पुरुषस्य भवतीति शेषः | शिष्टमुत्तरान्वयि || ४५ ||
139464

139465 साधुरोजस्वितामेत्य संतोषेणैव राजते।
139466 सुपुष्पितवनाकारो वसन्तेनेव पादपः॥ ४६॥
139467
139468 साधुः संतोषेणैव ओजस्वितामेत्य सुपुष्पितवनाकारो राजते॥ ४६॥
139469
139470 पादपीठपरामर्शपिष्टकीटवदीहते।
139471 दीनप्रकृतिरर्थार्थी दुःखाद्दुःखान्तरं व्रजेत्॥ ४७॥
139472
139473 असंतुष्टस्त्वर्थार्थी सन् पादपीठेन पादुकया परामृष्टो दैवादास्कन्दितो
139474 निष्पिष्टश्च यः कीटस्तद्वद्दीनप्रकृतिः सन् ईहते चेष्टते॥ ४७॥
139475
139476 कल्लोलविकलाः क्षुब्धसमुद्रपतिता इव।
139477 नाप्नुवन्ति स्थितिं स्वस्थां विकृताकृतयोऽर्थिनः॥ ४८॥
139478
139479 अर्थिनो धनलिप्सवः॥ ४८॥
139480
139481 संपदः प्रमदाश्चैव तरङ्गोत्तुङ्गभङ्गुराः।
139482 कस्तास्वहिफणच्छत्रच्छायासु रमते बुधः॥ ४९॥
139483
139484 तासु तल्लक्षणास्वहिफणच्छत्रच्छायासु बुधः को रमते। न कश्चिदित्यर्थः॥ ४९॥
139485
139486 अर्थोपार्जनरक्षाणां जानन्नपि कदर्थनाम्।
139487 यः करोति स्पृहां मूढो नृपशुं तं न संस्पृशेत्॥ ५०॥
139488
139489 मनसो बाह्यमारम्भमान्तरं च लुनाति यः।
139490 समं वैतृष्ण्यदात्रेण तस्य क्षेत्रं प्रकाशते॥ ५१॥
139491
139492 बाह्यमारम्भमिन्द्रियानुधावनलक्षणमान्तरं संकल्पादिलक्षणं वा क्षेत्रं
139493 ज्ञानबीजोद्भवस्थानंन् मुक्तिनिधानस्थानं वा हृदयम्॥ ५१॥
139494
139495 जगत्त्वमज्ञसंबुद्धं ज्ञो विदन्नसदेव यत्।
139496 सतीव तत्र स्फुरति तदनभ्यासजृम्भितम्॥ ५२॥
139497
139498 अनुक्रान्ता दृढवैराग्यान्ता गुणा अभ्यस्ता एव ज्ञानं प्रतिष्ठापयन्ति न हेलया
139499 सेविता इत्याशयेनोपसंजिहीर्षुराह - जगत्त्वमिति। अज्ञैः संबुद्धं जगत्त्वं
139500 जगदाकारवैचित्र्यं तत्साक्षिण्यसदेवेति विदन्नपि ज्ञः अपक्वज्ञानतया तत्र
139501 जगद्वैचित्र्ये सतीव सत्यार्थ इवाज्ञवद्यत्स्फुरति व्यवहरति
139502 तत्प्रस्तुतवैराग्यान्तगुणानभ्यासविजृम्भितमित्यर्थः॥ ५२॥
139503
139504 संसारनिर्वेददशामुपेत्य सत्संगमं शास्त्रमुपेत्य तेन।
139505 शास्त्रार्थभावेन निरस्य भोगान्वैतृष्ण्यदार्ढ्यात्परमार्थमेति॥ ५३॥
139506
139507 प्रथमं संसारे निर्वेददशामुपेत्य तेन सत्संगमं शास्त्राभ्यासं चोपेत्य
139508 तदर्थदृढभावनया सर्वान्भोगान्निरस्य
139509 दर्शितलक्षणाद्वैतृष्ण्यदार्ढ्यात्परमार्थं स्वतत्त्वं
139510 भूमिकापरिपाकक्रमेणैतीत्यर्थः॥ ५३॥
139511
139512 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षो० न्निर्वाण० उ०
139513 मुमुक्षुप्रथमोपक्रमो नाम सप्तचत्वारिंशः सर्गः॥ ४७॥
139514
139515 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
139516 मुमुक्षुप्रथमोपक्रमो नाम सप्तचत्वारिंशः सर्गः॥ ४७॥

अष्टचत्वारिंशः सर्गः ४८

श्रीवसिष्ठ उवाच।

रूढे संसारनिर्वेदे स्थिते साधुसमागमे।
शास्त्रार्थे भाविते बुद्ध्या भोगवैतृष्ण्य आगते॥ १॥

निरूढे परवैराग्ये पुंसो यैर्लक्षणैः स्थितिः।
यैश्च ज्ञानप्रतिष्ठायां वर्ण्यन्ते तानि विस्तरात्॥

तत्रादावष्टमिर्वैराग्यप्रतिष्ठायां सत्यां यानि लक्षणानि भवन्ति तान्याह -
रूढे इत्यादिना॥ १॥

जाते विषयवैरस्ये सज्जनत्वे तथोदिते।
प्रकाशे सोन्मुखीभूते हृदये कलितोदये॥ २॥

श्लोकद्वयं प्रागुक्तानुवादः॥ २॥

धनानि नाभिवाञ्छ्यन्ते तमांसीव विवेकिना।
त्यज्यन्ते विद्यमानानि संशुष्कामेध्यपर्णवत्॥ ३॥

संशुष्काण्यमेध्यान्यपवित्राण्युच्छिष्टादिपर्णानि यथा गृहान्निरस्यन्ते तद्वत्॥
३॥

भाराय पान्थदृष्ट्येव दृश्यन्ते दारबन्धवः।
यथाशक्ति यथाकालमुपचर्यन्त एव च॥ ४॥

यथा पान्थानां दृष्ट्या उपयुक्ता अपि भाण्डोपस्करा वोढुमशक्त्या हातुं
भाराय दृश्यन्ते तद्वद्विरक्तेनापि दाराश्च बन्धवश्च दृश्यन्त इत्यर्थः।
क्रियार्थोपपदस्य च कर्मणि इति चतुर्थी। लकारेण
दृशिक्रियानिरूपितकर्मशक्तेरभिधानेऽपि गम्यमानजहातिक्रियानिरूपितायास्तस्या
अनभिधानात्। तर्हि किं सहसैव त्यज्यन्ते नेत्याह - यथाशक्तीति॥ ४॥

इन्द्रियेष्वपि संलग्ना इन्द्रियार्थाः पुनःपुनः।
न भोगा अनुभूयन्ते नूनं शान्तमनस्तया॥ ५॥

एकान्तेषु दिगन्तेषु सरःसु विपिनेषु च।
उद्याने पुण्यदेशेषु निजेष्वेव गृहेषु वा॥ ६॥

तदेव प्रपञ्चयति - एकान्तेष्वित्यादिना॥ ६॥

सुहृत्केलिविलासेषु शुभोद्यानाशनादिषु।
शास्त्रतर्कविचारेषु न तथा स्थीयते चिरम् [स्थिरं इति पाठः।]॥ ७॥

आस्थीयते आस्थावता भूयते आसक्त्यभावाच्चिरं न स्थीयत इति वा॥ ७॥

उपशान्तेन दान्तेन स्वात्मारामेण मौनिना।
ज्ञातैवान्विष्यते ज्ञेन विज्ञानैकान्तवादिना॥ ८॥

दैवादास्थितेनापि तत्र तत्र ज्ञाता तत्त्वविदेव ज्ञानदार्ढ्यायान्विष्यते। अथवा
ज्ञाता देहेन्द्रियबुद्ध्यादीनां साक्षाद्द्रष्टा प्रत्यगात्मैव चेतसान्विष्यते न

139569 तद्व्यतिरिक्तं किंचिदित्यर्थः ॥ ८ ॥
139570
139571 एवमभ्यासवशतः परे विश्रम्यते पदे ।
139572 निम्नेवाम्भसि शान्तेन स्वयमेव विवेकिना ॥ ९ ॥
139573
139574 एवं निरन्तरान्वेषणेऽवश्यं स्वात्मदर्शनेन विश्रान्तिः सिद्ध्यतीत्याह - एवमिति
139575 ॥ ९ ॥
139576
139577 सबाह्याभ्यन्तरं शान्ता ज्ञतैवार्थतयोदिता ।
139578 न संभवति भिन्नोऽर्थ इत्येव परमं पदम् ॥ १० ॥
139579
139580 कीदृशं तत्पदं यत्रास्य विश्रान्तिः कीदृशनिश्चयात्मिका च सा तदाह -
139581 सबाह्याभ्यन्तरमिति । अज्ञता स्वाज्ञानमेवाऽर्थतया दृश्यवर्गाकारेणोदिता सा च
139582 भिन्नोऽर्थो न संभवतीति शान्ता सा शान्तिरेव परमं पदमित्यर्थः । अथवा
139583 सबाह्याभ्यन्तरं भिन्नोऽर्थो न संभवतीत्येव निश्चयरूपा ज्ञता
139584 चरमसाक्षात्कारवृत्तिरेव दग्धेन्धनाग्निवच्चिदात्मनि शान्ता चेत्तदेव परमं
139585 पदमित्यर्थः ॥ १० ॥
139586
139587 नार्थोपलब्धिर्नो शून्यमस्ति बोधात्मतां विना ।
139588 इत्यन्तरनुभूतिस्थमाहुस्तत्परमं पदम् ॥ ११ ॥
139589
139590 इति अनुभूतौ स्वानुभवे सर्वबाधावधित्वेन स्थितं यत्तदेव परमं पदमित्यर्थः
139591 ॥ ११ ॥
139592
139593 एकबोधातिसंबन्धपरिणामान्न बोधता ।
139594 न शून्यता नार्थतेति विद्धि तत्परमं पदम् ॥ १२ ॥
139595
139596 तस्य परमपदस्य न बोधता न शून्यता नाप्यर्थतेति विद्धि । कुतः । सर्वस्य
139597 वस्तुजातस्यैकेनाद्वयेन बोधेनैवातिशयितः संबन्धोऽतिसंबन्ध आत्यन्तिकैकरस्यं
139598 तथा परिणामात् । न हि बोध्याभावे तद्व्यावृत्ता बोधताप्यपदेष्टुं शक्या नापि
139599 तदर्थता तस्यैव व्यपदेष्टुं शक्या नाप्यर्थशून्यतामात्रेण बोधस्य
139600 शून्यताप्रसक्तिरिति भावः ॥ १२ ॥
139601
139602 स्वसंविन्मात्रविश्रामवताममनसां सताम् ।
139603 न स्वदन्ते हि विषयाः पयांसि दृषदामिव ॥ १३ ॥
139604
139605 तद्विश्रान्तावात्यन्तिकं विषयवैरस्यं सिद्ध्यतीत्याह - स्वेति । यथा अमनसां
139606 दृषदां क्षीराणि न स्वदन्ते तद्वत् ॥ १३ ॥
139607
139608 निरोधपदमापन्नो निर्मना मौनमन्थरः ।
139609 स्वभावे स्थित एवास्ते चित्रे कृत इवात्मवान् ॥ १४ ॥
139610
139611 बहिर्मुखचित्तानां स्वात्मप्रवणतां स्वात्मविश्रान्तानां च बहिर्मुखतां
139612 निरुणद्धीति निरोधस्तथाविधं पदम् । चित्रे कृतो लिखित इव निश्चलः ॥ १४ ॥
139613
139614 सर्वार्थमर्थरहितं महदेव पराणुवत् ।
139615 अशून्यमेव शून्यात्म हृदयं वेद्यवेदिनः ॥ १५ ॥
139616
139617 कीदृशं तदा तस्य मनो भवति तदाह - सर्वार्थमिति ।
139618 वेद्यमवश्यवेदनीयमात्मतत्त्वं वेदितुं शीलं यस्य तथाविधस्य तस्य हृदयं
139619 मनः अर्थरहितमेव सत्सर्वार्थं भवति । सर्वस्य तत्त्वतस्तन्मात्रत्वात् । तथा
139620 अपरिच्छिन्नब्रह्माकारत्वान्महदेव सत्तद्व्यतिरेकेण

139621 दुर्लक्ष्यत्वात्परमाणुवद्भवति ॥ १५ ॥
139622
139623 अहंत्वं जगदीहादि दिक्कालकलनादि च ।
139624 ज्ञस्य ज्ञानादि शून्यादि स्थितमेव न विद्यते ॥ १६ ॥
139625
139626 अशून्यमेव शून्यात्म इति शेषं व्याचष्टे - अहंत्वमिति । यतो ज्ञानादि
139627 अतस्तत्तया स्थितमेव यतश्च शून्यादि अतो न विद्यते - नासतो विद्यते भावो
139628 नाभावो विद्यते सतः इति न्यायादिति भावः ॥ १६ ॥
139629
139630 ज्ञेनामलपदस्थेन दीपेनेव निरस्यते ।
139631 तमो हार्दं तथा बाह्यं रागद्वेषभयादि च ॥ १७ ॥
139632
139633 भयादि यत्तच्च निरस्यते ॥ १७ ॥
139634
139635 रजोरहितसर्वांशं सत्त्वात्पारमुपागतम् ।
139636 असंभवत्तमोरूपं प्रणमेत्तं नृभास्करम् ॥ १८ ॥
139637
139638 पक्षद्वयेऽपि विशेषणानि स्पष्टानि । अज्ञाननिशातिरोहितत्वेऽपि सत्त्वात्पारं
139639 तमोब्धिपारम् ॥ १८ ॥
139640
139641 भेदप्रविलये जाते चित्ते चादृश्यतां गते ।
139642 या स्थितिः प्राप्तबोधस्य न वाग्गोचरमेति सा ॥ १९ ॥
139643
139644 ददात्येतन्महाबुद्धे निर्वाणं परमेश्वरः ।
139645 अहर्निशं परमया चिरं भक्त्या प्रसादितः ॥ २० ॥
139646
139647 एतद्वर्णितं परमपदलक्षणं निर्वाणं परमेश्वरो ददाति ।
139648 तपःप्रभावाद्देवप्रसादाच्च इत्यादिश्रुतेरिति भावः ॥ २० ॥
139649
139650 श्रीराम उवाच ।
139651
139652 ईश्वरः को मुनिश्रेष्ठ कथं भक्त्या प्रसाद्यते ।
139653 एतन्मे तत्त्वतो ब्रूहि सर्वतत्त्वविदां वर ॥ २१ ॥
139654
139655 रामप्रश्नः स्पष्टः ॥ २१ ॥
139656
139657 श्रीवसिष्ठ उवाच ।
139658
139659 ईश्वरो न महाबुद्धे दूरे न च सुदुर्लभः ।
139660 महाबोधमयैकात्मा स्वात्मैव परमेश्वरः ॥ २२ ॥
139661
139662 तस्मै सर्वं ततः सर्वं स सर्वं सर्वतश्च सः ।
139663 सोऽन्तः सर्वमयो नित्यं तस्मै सर्वात्मने नमः ॥ २३ ॥
139664
139665 ईश्वरता हि ईश्यविषये सर्वथा स्वातन्त्र्यम् । तच्च सर्वं प्रति सर्वप्रकारेण स्वात्मन
139666 एव संभवतीत्युपपत्तिमाह - तस्मै इति । अचेतनं हि सर्वं रथगृहप्रासादादि
139667 चेतनार्थम् । न च तदतिरिक्तोऽन्यश्चेतनधातुरस्ति । नान्योऽतोऽस्ति द्रष्टा इत्यादिश्रुतेः ।
139668 अनेन सर्वोपभोक्तृतास्वातन्त्र्यमुक्तम् । कर्तृतादिस्वातन्त्र्यमपि तस्यैवेत्याह -
139669 तत इति । तृतीयापञ्चमीषष्ठीसप्तमीविभक्त्यन्तात्सार्वविभक्तिकस्तसिः
139670 कर्तृकरणनिमित्तस्वाम्यादिभावेनापि स्वातन्त्र्यद्योतनार्थो बोध्यः । स
139671 सर्वमित्युपादानाधिष्ठानतादिस्वातन्त्र्यप्रदर्शनाय । एवं सर्वत इत्यपि
139672 सर्वशक्तिनिरूपकतास्वातन्त्र्यद्योतनाय बोध्यम् ।

139673 सौक्ष्म्यसर्वगतत्वपरिणामादिस्वातन्त्र्यमपि तस्यैव संभवतीत्याह - सोऽन्तः
139674 सर्वमय इति। इत्थंन् सर्वथा सर्वदा सर्वात्मनस्तस्यैव सर्वथापि सर्वोत्कर्षात्स
139675 एवेश्वर इति नमस्कार्य इत्याह - तस्मै इति॥ २३॥
139676
139677 तस्मादिमाः प्रसूयन्ते सर्गप्रलयविक्रियाः।
139678 अकारणं कारणतो गतयः पवनादिव॥ २४॥
139679
139680 अत एव श्रुतिप्रसिद्धं जन्मादिहेतुतालक्षणं तस्येत्याशयेनाह - तस्मादिति॥ २४॥
139681
139682 अनिशं पूजयन्त्येताः सर्वाः स्थावरजङ्गमाः।
139683 यथाभिमतदानेन सर्वे [सर्वे ते इति न साधु सर्वास्ता इति सुवचम्।] ते
139684 भूतजातयः॥ २५॥
139685
139686 सर्वाराध्यतापि तस्यैव प्रसिद्धेत्याह - अनिशमिति॥ २५॥
139687
139688 सुबहून्येष जन्मानि यथाभिमतयेच्छया।
139689 यदा संपूजितस्तेन प्रसादमधिगच्छति॥ २६॥
139690
139691 प्रसन्नः स महादेवः स्वयमात्मा महेश्वरः।
139692 बोधाय प्रेरयत्याशु दूतं पूतं शुभेहितैः॥ २७॥
139693
139694 स एव महादेवः शुभेहितैः सुकृतैः प्रसन्नः सन् बोधाय तत्त्वज्ञानाधानाय
139695 पूतंन् विशुद्धतमं वक्ष्यमाणं दूतंन् प्रेरयति प्रेषयति॥ २७॥
139696
139697 श्रीराम उवाच।
139698
139699 आत्मना परमेशेन को दूतः प्रेर्यते मुने।
139700 स दूतो बोधनं वापि करोति वद मे कथम्॥ २८॥
139701
139702 कथं करोति तन्मे वद॥ २८॥
139703
139704 श्रीवसिष्ठ उवाच।
139705
139706 आत्मसंप्रेरितो दूतो विवेको नाम नामतः।
139707 हृद्गुहायां सदानन्दस्तिष्ठतीन्दुरिवाम्बरे॥ २९॥
139708
139709 तेनात्मना देवेन संप्रेरितो विवेको नाम दूतः प्रागुक्ताधिकारिणो
139710 हृद्गुहायामागत्य तिष्ठति यावज्ज्ञानप्रतिष्ठं स्थिरीभवति॥ २९॥
139711
139712 स एष वासनात्मानं जन्तुंन् बोधयति क्रमात्।
139713 संसारसागरादस्मात्तारयत्यविवेकिनम्॥ ३०॥
139714
139715 स विवेकदूतः यद्बोधयति तदेव तस्य तारणमित्याशयः॥ ३०॥
139716
139717 बोधात्मैषोऽन्तरात्मैव परमः परमेश्वरः।
139718 अस्यैव वाचको नाम प्रणवो वेदसंमतः॥ ३१॥
139719
139720 एष सर्वजगत्प्रथाहेतुत्वेन प्रसिद्धो बोधात्मैवान्तरात्मा न वासनात्मा। स एव
139721 परमः परमेश्वरः। प्रणवोऽस्यैव वाचकः सन्नाम भवति॥ ३१॥
139722
139723 जपहोमतपोदानपाठयज्ञक्रियाक्रमैः।
139724 एष प्रसाद्यते नित्यं नरनागसुरासुरैः॥ ३२॥

139725
139726 द्यौर्मूर्धा पृथिवी पादौ तारका रोमराजयः ।
139727 भूतान्यस्थीनि हृदयं व्योमास्य परमेश्वरः ॥ ३३ ॥
139728
139729 तस्य स्थूलप्रपञ्चोपहितं वैश्वानररूपमात्मभेदभ्रमनिरासायोपास्यंत्र्
139730 दर्शयति - द्यौरिति । तथा च श्रुतिः - अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः
139731 श्रोत्रे वाग्विवृताश्च वेदाः । वायुः प्राणो हृदयंन् विश्वमस्य पद्भ्यां
139732 पृथिवी ह्येष सर्वभूतान्तरात्मा इति ॥ ३३ ॥
139733
139734 सर्वत्रैष चिदात्मत्वाद्याति जागर्ति पश्यति ।
139735 तेनैष सर्वतोलक्ष्यकरकर्णाक्षिपादभृत् ॥ ३४ ॥
139736
139737 विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् इत्यादिश्रुतीनामप्यत्रैव
139738 सामञ्जस्यमित्याशयेनाह - सर्वत्रेति । सर्वतो लक्ष्यंन् करकर्णाक्षिपादं
139739 बिभर्ति तथाविधः ॥ ३४ ॥
139740
139741 विवेकदूतमुद्बोध्य हत्वा चित्तपिशाचकम् ।
139742 आत्मनः पदवीं स्फारां जीवः कामपि नीयते ॥ ३५ ॥
139743
139744 नीयते अनेनेति शेषः ॥ ३५ ॥
139745
139746 त्यक्त्वा सर्वविकल्पौघान्विकारानर्थसंकरान् [ग्राहगहने इति पाठः ।
139747 ]     ।
139748 पौरुषेणात्मनैवात्मा स्वयमेव प्रसाद्यताम् ॥ ३६ ॥
139749
139750 भ्रमन्मनःपिशाचेऽस्मिन्कल्लोलजलदाकुले ।
139751 संसाररात्रितिमिरे स्वात्मैवापूर्णचन्द्रमाः ॥ ३७ ॥
139752
139753 कल्लोलाः षडूर्मयस्तल्लक्षणैर्जलदैराकुले संसारलक्षणरात्रेस्तिमिरे स्वात्मैव
139754 आसमन्तात्पूर्णश्चन्द्रमाः । साह्लादप्रकाश इत्यर्थः ॥ ३७ ॥
139755
139756 अगाधमरणावर्तकल्लोलाकुलकोटरे ।
139757 तृष्णातरङ्गतरले स्वमनश्चण्डमारुते ॥ ३८ ॥
139758
139759 विवेकस्यैवोत्तारणत्वं वक्तुं संसारं समुद्रतया रूपयति - अगाधेति
139760 द्वाभ्याम् ॥ ३८ ॥
139761
139762 महाजडलवाधारे संसारविषमार्णवे ।
139763 इन्द्रियग्रामगहने [ग्राहगहने इति पाठः ।] विवेकः पोतको महान् ॥ ३९ ॥
139764
139765 महतां स्थावरजङ्गमभूताद्यात्मनां जडलवानां जलकणानामाधारे ॥ ३९ ॥
139766
139767 पूर्वं यथाभिमतपूजनसुप्रसन्नो दत्वा विवेकमिह पावनदूतमात्मा ।
139768 जीवं पदं नयति निर्मलमेकमाद्यं
139769 सत्सङ्गशास्त्रपरमार्थपरावबोधैः ॥ ४० ॥
139770
139771 उक्तं प्रश्नोत्तरं संक्षिप्योपसंहरति - पूर्वमिति । स्पष्टम् ॥ ४० ॥
139772
139773 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षो० निर्वाणप्रकरणे उ०
139774 विवेकमाहात्म्यं नामाष्टचत्वारिंशः सर्गः ॥ ४८ ॥
139775
139776 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे

139777 विवेकमाहात्म्यं् नामाष्टचत्वारिंशः सर्गः ॥ ४८ ॥
139778
139779 एकोनपञ्चाशः सर्गः ४९
139780
139781 श्रीवसिष्ठ उवाच ।
139782
139783 परिपुष्टविवेकानां वासनामलमुज्झताम् ।
139784 महत्ता महतामन्तः काप्यपूर्वैव जायते ॥ १ ॥
139785
139786 सुप्ररूढविवेकानां महत्ता यादृशी भवेत् ।
139787 यादृक्च विश्वं भवति स्फुटं तदिह वर्ण्यते ॥
139788
139789 कापि लोकोत्तरा महत्ता जायते ॥ १ ॥
139790
139791 औदार्योदारमर्यादां मतिं गाम्भीर्यसुन्दरीम् ।
139792 महतां नावगाहन्ते भुवनानि चतुर्दश ॥ २ ॥
139793
139794 तामेव प्रपञ्चयति - औदार्येत्यादिना । औदार्यस्य सर्वलोके तारतम्येन
139795 प्रसिद्धस्य उदारां श्रेष्ठांन् मर्यादामवधिभूतां गाम्भीर्येण च सुन्दरी
139796 महतां मतिं चतुर्दशापि भुवनानि तद्गतसंपदो जनाश्च नावगाहन्ते । न
139797 प्रलोभयितुमियत्तया कलयितुं वा शक्नुवन्तीत्यर्थः ॥ २ ॥
139798
139799 चित्तभ्रान्तिर्जगदिति प्ररूढे प्रत्यये सताम् ।
139800 बाह्यश्चान्तश्चरन्नक्रग्रहो मोहश्च शाम्यति ॥ ३ ॥
139801
139802 बहिः शब्दादिलक्षणेष्वतिग्रहेषु भवो बाह्यः अन्तः
139803 संकल्पविकल्पादिरूपैश्चरन्नत एव हृदान्तर्बहिः संचारक्षमनक्रप्रायो ग्रहः
139804 समनस्केन्द्रियादिकलापस्तन्मूलभूतो मोहः अज्ञानं
139805 चकाराद्वासनाकामकर्मादिश्च शाम्यतीत्यर्थः ॥ ३ ॥
139806
139807 द्वीन्दुवत्तापजलवत्केशोण्ड्रकवदम्बरे ।
139808 विस्फुरन्त्यां जगद्भ्रान्तौ वासनाप्रत्ययः कुतः ॥ ४ ॥
139809
139810 भ्रान्तीनां सत्यताभिमानो यावत्कालं तावदेव तद्वासनोपचयः तासां भ्रान्तित्वेन
139811 स्फुरणे तद्वासनानामपि मूलोच्छेदादुच्छेदो लोके प्रसिद्ध इति
139812 दृष्टान्तानुदाहृत्य दर्शयति - द्वीन्दुवदिति । जगद्भ्रान्तौ भ्रान्तिरेवेयमिति
139813 तत्त्वबोधाद्विस्फुरन्त्यां सत्याम् ॥ ४ ॥
139814
139815 वासनाप्रत्यये शून्ये शून्यं व्योमैव शिष्यते ।
139816 साप्यवस्था मनोऽसत्त्वे कुतस्त्याज्या विवेकिना ॥ ५ ॥
139817
139818 सा वासनाशून्या अवस्थापि मनसः असत्त्वे सति सिद्ध्यति । सा निर्वासना
139819 निर्मनस्कावस्था सप्तमभूमिकायां विवेकिना प्राप्ता कुतस्त्याज्या । तत्त्यागे
139820 हेतुर्नास्त्येवेत्यर्थः ॥ ५ ॥
139821
139822 त्रयमेतत्तु यावस्थात्रयेणानेन वर्जिता ।
139823 पश्यन्तीवाप्यपश्यन्ती सावस्था परमोच्यते ॥ ६ ॥
139824
139825 एतत्तु जाग्रदाद्यवस्थात्रयमेव सर्वेषां प्रसिद्धम् । या तु अनेन त्रयेण वर्जिता
139826 सावस्था दर्शनादिव्यवहारमूलबाधादपश्यन्त्यपि
139827 जीवनमात्रहेतुप्रारब्धशेषेण पश्यन्तीवान्यदृशा भाति तद्दृष्ट्या तु परमैव
139828 सोच्यते न दृश्यानुषक्तेत्यर्थः ॥ ६ ॥

139829
139830 विचित्ररत्नरश्म्योघ इव नानात्मकं जगत् ।
139831 आभासमात्रं न त्वात्मा न घनं न च पार्थिवम् ॥ ७ ॥
139832
139833 तादृशां व्युत्थानकालेऽपि जगन्न आत्मा न घनं नापि पृथिव्यादिघटितं किंतु
139834 विचित्रो रत्नरश्म्योघो निबिडितप्रभापुञ्ज इव घनताद्याभासमात्रमित्यर्थः ॥ ७ ॥
139835
139836 रूपालोकनमात्रं हि शून्यमेव जगत्स्थितम् ।
139837 खे विचित्रमणिव्यूहकरजालमिवोत्थितम् ॥ ८ ॥
139838
139839 नेह सत्यानि भूतानि न जगत्ता न शून्यता ।
139840 इदं ब्रह्माख्यरत्नेशप्रभाजालं विजृम्भितम् ॥ ९ ॥
139841
139842 सृष्टयोऽसृष्टयो ब्राह्म्यो नानाता च न नाशताः ।
139843 अमूर्ता एव भासन्ते कल्पनार्कगणा घनाः ॥ १० ॥
139844
139845 यतो नानाता नास्त्यतः सृष्टयो न सन्ति । यतश्च नाशताः न सन्ति अतः असृष्टयः
139846 प्रलयाश्च न सन्ति किं त्वमूर्ता एव कल्पनार्कगणा घनीभूय भासन्त इत्यर्थः ।
139847 अर्कपदेन तत्किरणा लक्ष्यन्ते ॥ १० ॥
139848
139849 एवं तावद्घनीभूतः पिण्डग्राहो न विद्यते ।
139850 संकल्पिते च व्योम्नीव शून्यतैवावगम्यते ॥ ११ ॥
139851
139852 संकल्पकल्पितमूर्ताकाराणां मनोराज्यादौ शून्यतैव प्रसिद्धा न पिण्डग्रह
139853 इत्याह - एवं तावदिति ॥ ११ ॥
139854
139855 तस्यामवस्तुभूतायां कथं भावनिबन्धनम् ।
139856 भविष्यदाकाशतरौ विश्रान्तः को विहंगमः ॥ १२ ॥
139857
139858 शून्यताप्रसाधनस्य फलमाह - तस्यामिति । तस्यां शून्यतायां
139859 अहंममतारागद्वेषादिभावनिबन्धनं कथम् । न संभवत्येवेत्यर्थः ॥ १२ ॥
139860
139861 पिण्डत्वं नास्ति भूतानां शून्यता च न विद्यते ।
139862 चित्तमप्यत एवास्तं शेषं सत्तन्न चास्थिति ॥ १३ ॥
139863
139864 एवं जगतः पिण्डत्वाद्यपलापे सन्मात्रं सारतया परिशिष्टमित्याह -
139865 पिण्डत्वमिति । तत्तु दुरपह्नवमित्याह - तन्न चास्थितीति ॥ १३ ॥
139866
139867 अनानासममेवास्ते नानारूपो विबोधवान् ।
139868 अन्तरालीननानार्थो यथा कनकपिण्डकः ॥ १४ ॥
139869
139870 अत एव तत्त्वविज्जाग्रत्यपि सुषुप्तस्थो भासमानननानात्वानां
139871 सन्मात्रात्मन्यन्तर्लयादिति सदृष्टान्तमाह - अनानासममेवेति ॥ १४ ॥
139872
139873 यथास्थितस्य साहंत्वं विश्वं चित्तं विलीयते ।
139874 ज्ञस्यावाच्यमचित्त्वं सत्स्वरूपमवशिष्यते ॥ १५ ॥
139875
139876 ननु ज्ञस्य तत्सन्मात्रमवशिष्टचिद्रूपमेव किं न स्यात् । सति हि चित्ते चिदभिव्यक्तिः
139877 प्रसिद्धा तद्विलये तदसंभवादित्याशङ्क्याह - यथास्थितस्येति । यदि
139878 अयथास्वभावे जाड्ये स्थितस्यास्य साहंत्वं विश्वं चित्तं च विलीयेत तदा
139879 जडसन्मात्रपरिशेषो भवेत् । न त्वेवं किंतु ज्ञस्य यथाभूतचिदेकस्वभावे
139880 स्थितस्य साहंत्वं विश्वं चित्तं च तत्त्वदर्शनाद्विलीयते तदा तु

परिशिष्टचिदेकरसस्याऽचित्त्वं वक्तुमशक्यमिति चिदेकरसस्तत्परिशेषसिद्धिरित्यर्थः ॥
१५ ॥

क्लिश्यते केवलं बुद्धिरुत्तराधरदर्शनैः ।
स्तोकयाभ्यस्तया युक्त्या सत्योऽर्थो ह्यवगम्यते ॥ १६ ॥

यदि तत्स्वरूपमेव तर्हि सर्वेषां कुतो न सुलभमिति चेदुच्चावचविषयेष्वेव
बुद्धेश्चञ्चलतया स्थैर्याभावादित्याह - क्लिश्यत इति ॥ १६ ॥

विराडोजोविरहितं कार्यकारणतादिभिः ।
भूतभव्यभविष्यस्य जगदङ्गस्य संभवम् ॥ १७ ॥

कासौ स्तोका युक्तिस्तां दर्शयंस्तदभ्यासफलं ज्ञानलक्षणमित्याह - विराडिति
। येन अधिकारिणा भूतभव्यभविष्यत्सर्ववस्तुलक्षणस्य जगदङ्गस्य संभवं
जन्म कार्यकारणतादिभिर्मिश्य वाचारम्भणश्रुतिदर्शितन्यायेन विराजा
स्थूलप्रपञ्चेन ओजसा तद्विष्टम्भकसूत्रात्मकप्रधानेन सूक्ष्मप्रपञ्चेन
विरहितं परिशिष्टसन्मात्ररूपाखण्डबोधात्मना बुद्धं स एव ज्ञस्तत्त्वविदिति
सार्धस्यार्थः ॥ १७ ॥

येन बोधात्मना बुद्धं स ज्ञ इत्यभिधीयते ।
अद्वैतस्योपशान्तस्य तस्य विश्वं न विद्यते ॥ १८ ॥

पूर्वोक्ताः सर्व एवैते उपदेशा विशेषणाः ।
ज्ञस्यानुभवमायान्ति स्वतः साधुकथा इव ॥ १९ ॥

सर्वोपदेशानां तत्तदसंभावनांशव्यावर्तकानां तादृशानुभवे
पर्यवसानमित्याह - पूर्वोक्ता इति ॥ १९ ॥

पिण्डत्वं नास्ति भूतानां शून्यत्वं चाप्यसंभवात् ।
अत एव मनो नास्ति शेषं सत्तत्तव स्थितिः ॥ २० ॥

युक्त्यन्तरमाह - पिण्डत्वमिति ।चतुर्विधभूतग्रामाणां
पृथिव्यादिमहाभूतानां चावयवशो गुणशश्च विविच्य दृश्यमानानां
परमाणुभावेऽप्यविश्रान्तेः पिण्डत्वं तावन्नास्ति । नापि च शून्यत्वं
प्रत्यक्षत्वाद्यसंभवात् । उभयासंभवे च सर्वविकल्पापगमात्तदधीनस्थितिकं
मनोऽपि नास्तीत्यविकल्पं सन्मात्ररूपं स्फुरणमेव शिष्यत इति शेषं तदेव तव
पारमार्थिकं रूपं स्थितिः प्रतिष्ठेत्यर्थः ॥ २० ॥

चेत्योन्मुखत्वमेवान्तश्चेतनस्यास्य चेतनम् ।
उदितं तदनर्थाय श्रेयसेऽनुदितं भवेत् ॥ २१ ॥

युक्त्यन्तरमाह - चेत्योन्मुखत्वमिति । अन्तश्चेतनस्यास्य
प्रत्यगात्मनश्चेत्योन्मुखत्वमेव चेतनं संसारात्मना बोधः ॥ २१ ॥

उदितं बाह्यतामेति तत्र गच्छति पिण्डताम् ।
स्वयं संवेदनादेव जाड्यादम्ब्विव शैलताम् ॥ २२ ॥

कथमनर्थाय तदाह - उदितमिति । शैलतां करकोपलभावम् ॥ २२ ॥

स्वप्नाद्यर्थवदादत्ते बोधोऽबोधेन पिण्डताम् ।
तद्ग्राहकतया चित्तं भूत्वा बध्नाति देहकम् ॥ २३ ॥

139933 बोधश्चिदात्मा। अबोधेन स्वाज्ञानेन॥ २३॥
139934
139935 एतावतीष्ववस्थासु बोधस्योदेति नान्यता।
139936 शब्दकल्पनया भेदः केवलं परिकल्पितः॥ २४॥
139937
139938 ईदृशविवर्तसहस्रैरपि चितो चितो नाणुमात्रमपि विकार इति तेषां
139939 वाचारम्भणमात्रत्वमित्याह एतावतीष्विति॥ २४॥
139940
139941 बहिरन्तश्च बोधस्य भात्यात्मैवार्थदृष्टिभिः।
139942 अन्तस्त्वेन बहिष्ट्वेन नैवास्य मनसो यथा॥ २५॥
139943
139944 यथा स्वप्नस्य मनसा दर्शने मनस एवान्तस्त्वेन बहिष्ट्वेन च मन एव विकृतं
139945 भाति न तथा बोधात्मा अर्थदृष्टिभिर्भासमानोऽपि विकृत इत्यर्थः॥ २५॥
139946
139947 बोधस्याकाशकल्पत्वात्कालाकाशादि तद्वपुः।
139948 पदार्थश्चैव स्वात्मानः स्वप्नवन्नार्थरूपि खम्॥ २६॥
139949
139950 कुतो न विकृतस्तत्राह - बोधस्येति। कालाकाशादिवदविकृतमित्यर्थः। अर्थरूपि
139951 अर्थाकारपरिणामि॥ २६॥
139952
139953 बाह्यार्थता नान्तरत्वं तद्वद्बोधवशाद्व्रजेत्।
139954 नासादृश्यं हि बोधत्वं गन्तुंन् शक्तं जडं क्वचित्॥ २७॥
139955
139956 चिज्जडबाह्यार्थाकारेण न विक्रियतां जडमेव तत्त्वबोधवशादान्तरचिदाकारत्वेन
139957 विक्रियतां तत्राह - बाह्येति। हि
139958 यस्माज्जडमसादृश्यमत्यन्तविसदृशमित्यर्थः॥ २७॥
139959
139960 बोधो दृश्यदशां नैति प्राप्तो वापि च तां स्थितिम्।
139961 स यथास्थितमेवास्ते मनागप्येति नान्यताम्॥ २८॥
139962
139963 तां दृश्यस्थितिं विवर्तवशात्प्राप्तोऽपि स बोधो यथास्थितमविकृत एवास्ते॥ २८॥
139964
139965 अत्यर्थं शुद्धबोधैकपरिणामे कृतोदये।
139966 बोधाबोधार्थशब्दानां श्रुतिरप्यस्तमेष्यति॥ २९॥
139967
139968 सप्तमभूमिकाविश्रान्तिपर्यन्ते परिणामे परिणतौ॥ २९॥
139969
139970 आतिवाहिकदेहानां चित्तानामेव जायते।
139971 आधिभौतिकताबोधो दृढभावनया स्वया॥ ३०॥
139972
139973 दृश्यस्य मनोभावनयैव दृढीभाव इव तयैव शिथिलीभाव इत्याह -
139974 आतिवाहिकेत्यादिना॥ ३०॥
139975
139976 आकाऽसविशदैश्चित्तैर्भावितैषातिवाहिकैः।
139977 आधिभौतिकता मिथ्या नटैरिव पिशाचता॥ ३१॥
139978
139979 नटैः पिशाचवेषनाटनाय कल्पिता पिशाचतेव॥ ३१॥
139980
139981 भ्रान्तिरभ्रमणाभ्यासात्प्रज्ञातैषोपशाम्यति।
139982 नोन्मत्तोऽस्मीति संबोधाच्छाम्यत्युन्मत्तता किल॥ ३२॥
139983
139984 भ्रान्तेः स्वयं परिज्ञानाद्वासना विनिवर्तते।

139985 स्वप्ने स्वप्नतया बुद्धे कस्य स्यात्किल भावना || ३३ ||
139986
139987 भावना अर्थसत्यतावासना || ३३ ||
139988
139989 वासनातानवेनैव संसार उपशाम्यति |
139990 वासनैव महायक्षिण्येतच्छेदपरा बुधाः || ३४ ||
139991
139992 एतस्याश्छेदे उच्छेदे परा उद्युक्ताः || ३४ ||
139993
139994 अज्ञानोन्मत्तता पुंसां यथाभ्यासेन भाविता |
139995 तथैव बोधात्स्वभ्यासात्सा कालेनोपशाम्यति || ३५ ||
139996
139997 सा ज्ञानप्रयुक्ता उन्मत्तता || ३५ ||
139998
139999 आतिवाहिकदेहोऽयमाधिभौतिकतां यथा |
140000 नीयते भावनां तज्ज्ञैर्बोधसत्ताप्रसादतः || ३६ ||
140001
140002 बोधस्य सत्ता अभ्यासदृढीकृता स्थितिस्तत्प्रसादतः आतिवाहिकदेहो भावनां
140003 ब्रह्माहंभाववासनामात्रतां तथा नीयत इत्यर्थः || ३६ ||
140004
140005 आतिवाहिकदेहोऽपि नीत्वा जीवपदं तथा |
140006 दृढेन बोधाभ्यासेन नेतव्यो ब्रह्मतामपि || ३७ ||
140007
140008 भावनां नीत्वा जीवपदं जीवतां नीत्वा ततो ब्रह्मतां नेतव्यः || ३७ ||
140009
140010 स्ववस्तुवच्चेदुत्पत्तिर्बुध्यते बोधरूपिणी |
140011 तदातिवाहिकी बुद्धिः कथमित्यपि बुध्यते || ३८ ||
140012
140013 कथं जीवपदं नेतव्यः कथं च ब्रह्मतां तदाह - स्ववस्तुवदिति | उत्पन्नान् हि
140014 बाह्यानाध्यात्मिकांश्च भावान्प्रति रागाद्युद्भावनेनात्मानमतिवहतीत्यतिवाहो
140015 वासनासङ्गस्तदुद्भवो हि लिङ्गदेह आतिवाहिक इत्युच्यते | तत्र सर्वभावानां
140016 प्रथमो विकार उत्पत्तिः सा चेद्विमृश्य स्ववस्तुवत्कूटस्था बोधमात्ररूपिणी
140017 बुध्यते तदा आतिवाहिकीबुद्धिरपि कथं किंतत्त्वा इति तुल्यन्यायेन बुध्यते | न
140018 तावत्कस्यचिद्भावस्य कूटस्थबोधस्वभावव्यतिरेकेणोत्पत्तिर्निरूपयितुं शक्या |
140019 तथा हि | सा हि प्राक्स्वयमुत्पद्य भावान्विशिष्यादनुत्पद्य वा | द्वितीये शृङ्गमपि
140020 शशं विशिष्यात् | आद्ये स्वयमुत्पत्त्यादिभिर्विशेष्यमाणा भाव एव स्यान्न
140021 भावविकारः | एवं तदुत्पत्तिरपीत्यनवस्थादोषाभ्युपगमे निर्विकारभावानवस्थैव
140022 स्यादिति नोत्पत्त्यादिविकाराः कस्यचित्केनचिन्निरूपयितुंन् शक्या इति कूटस्थबोधरूपा एव
140023 ते इति बुद्धे कः कस्मै कमतिवहेत्किं तदतिवहनं का वा तद्बुद्धिरन्या स्यादिति सापि
140024 तत्त्वतो बुध्यत इत्यर्थः || ३८ ||
140025
140026 नो चेत्तत्प्रतिवाक्यार्थात्तद्ग्रन्थिर्विनिवर्तते |
140027 भूतोत्सादनसूत्रस्य प्रतिपत्तृपदं यथा || ३९ ||
140028
140029 अनयैव रीत्या तत्त्वंपदार्थशोधने सर्वमहावाक्यान्यखण्डार्थबोधनेन
140030 सर्वसंदेहग्रन्थिभेदने समर्थानि | अन्यथा तु
140031 भूतोत्सारणमन्त्रगतहुंफडादिपदवदनर्थकान्येव
140032 श्रवणमात्रबलात्संसारं निवर्तयन्तीति कल्प्यं स्यादित्याह - नो चेदिति | सूत्रस्य
140033 मन्त्रस्य प्रतिपत्तृघटकं हुंफडादिपदं यथा तथा भवेदिति शेषः || ३९ ||
140034
140035 जगद्बोधैकतां बुद्ध्वा बोद्धव्या तावदव्रणम् |
140036 अत्यन्तपरिणामेन यावत्सापि न बुध्यते || ४० ||

140037
140038 तत्पदार्थशोधाय वाचारम्भणन्यायेन प्रथमं
140039 जगत्कारणेश्वरस्वरूपबोधैकतां बुद्ध्वा तदनन्तरं त्वंपदार्थशोधाय
140040 प्रत्यक्चिदपि स पर्यगाच्छुक्रमकायमव्रणम् इति श्रुतिदर्शितदिशा असङ्गाद्वया
140041 बोद्धव्या। कियत्कालं पदार्थद्वयशोधनपरेण भाव्यं तत्राह - अत्यन्तेति।
140042 यावत्पदार्थयोरखण्डैकरसवाक्यार्थरूपेणात्यन्तपरिणामेन सा
140043 अखण्डाकारवृत्तिरपि न बुध्यते तावत्कालमित्यर्थः॥ ४०॥
140044
140045 सबाह्याभ्यन्तरे चित्ते शान्ते भाति स्वभावता।
140046 शीतलां व्योमनिर्भासां तामेवाश्रित्यशाम्यताम्॥ ४१॥
140047
140048 ज्ञानवान्ज्ञानयज्ञस्थो ध्यानयूपं विरोपयन्।
140049 जगद्विजित्य जयति सर्वत्यागैकदक्षिणः॥ ४२॥
140050
140051 स एव मुख्यो विश्वचिदाख्यो ज्ञानयज्ञ इत्याह - ज्ञानवानिति। विरोपयन्
140052 दृढं निखायोच्छ्रयन्सन्। सर्वत्याग एवैका मुख्या सर्वस्वदक्षिणा यस्य
140053 तथाविधो भूत्वा जगद्विश्वं विजित्य जयति सर्वोत्कर्षेणास्ते॥ ४२॥
140054
140055 पतत्यङ्गारवर्षे च वाति वा प्रलयानिले।
140056 भूतले व्रजति व्योम्नि सममास्ते ज्ञ आत्मनि॥ ४३॥
140057
140058 सर्वोत्कर्षमेव सर्वविपदप्रकम्प्यत्वेन प्रथमं वर्णयति - पततीति॥ ४३॥
140059
140060 वैतृष्ण्यशान्तमनसो निरोधमलमीयुषः।
140061 स्थितिर्वज्रसमाधानं विना नान्योपपद्यते॥ ४४॥
140062
140063 वज्रसारवैतृष्ण्यशान्तिसुखोत्कर्षस्थैर्येणापि तं वर्णयति -
140064 वैतृष्ण्यमित्यादिना॥ ४४॥
140065
140066 यथा बाह्यार्थवैतृष्ण्ये नोपशाम्यत्यलं मनः।
140067 न तथा शास्त्रसंदर्भैर्नोपदेशतपोदमैः॥ ४५॥
140068
140069 शान्तिसाधनानां मध्ये वैतृष्ण्यस्योत्कर्षमाह - यथेति॥ ४५॥
140070
140071 मनस्तृणस्य सर्वार्थवैतृष्ण्याग्निर्विबोधितः।
140072 सर्वत्यागानिलैः संपदत्यापदिति भावनात्॥ ४६॥
140073
140074 संपत्सर्वाप्यत्यापदिति भावनान्मनोलक्षणस्य तृणोच्चयस्य मध्ये
140075 सर्वत्यागलक्षणैरनिलैर्विबोधितः सर्वार्थवैतृष्ण्यलक्षणोऽग्निर्ज्ञात्वा
140076 चरमसाक्षात्कारज्वालात्मना प्रबुध्य बहिरन्तश्च प्रसिद्धो यो मोहान्धकारो यश्च
140077 तत्प्रयुक्तश्चोरयक्षादिकल्पनातुल्यो ब्रह्माण्डभूतभौतिकमूर्तलक्षणपिण्डग्राहो
140078 यच्च तत्प्रयुक्तं चक्षुरादिना शब्दार्थवेदनं तत्सर्वं
140079 ज्ञप्तिश्चिदात्मैवेत्यखण्डाद्वयस्वभावेनैव कचति। यथा वज्रादिमणिः
140080 स्वप्रतिबिम्बितवस्तुजातं स्वैकरस्येन प्रथयन्स्वत एव कचति तद्वदिति द्वयोरन्वयः॥
140081 ४६॥
140082
140083 बहिरन्तश्च मोहश्च पिण्डग्राहोऽर्थवेदनम्।
140084 ज्ञप्तिरेवेति कचति ज्ञात्वा मणिरिवात्मनि॥ ४७॥
140085
140086 नरनागासुरागारगिरिगह्वरदृष्टिभिः।
140087 चितिरेवेति विसृता धूमोऽम्बुदतयेव खे॥ ४८॥
140088

140089 विसृता विविधंन् वैचित्र्यं प्राप्ता ॥ ४८ ॥
140090
140091 वेपन्ते चिद्द्रवत्वेन ब्रह्माण्डजडभाण्डगाः ।
140092 स्वविवर्ततरङ्गिण्यो जीवशक्त्याऽऽपतद्रसाः ॥ ४९ ॥
140093
140094 ब्रह्माण्डभाण्डान्तर्गतसर्ववस्तूनांन् चिद्व्याप्त्यधीनस्पन्दत्वादपि
140095 चिद्विवर्तमात्रत्वमित्याशयेनाह - वेपन्ते इति । जीवशक्त्या प्राणेन आपतद्रसा
140096 सरसाः ॥ ४९ ॥
140097
140098 जीवकाजीर्णशफरी व्योमवारिविहारिणी ।
140099 मोहजालेन वलिता न स्मरत्यात्मनि स्थितिम् ॥ ५० ॥
140100
140101 तत्र चतुर्विधशरीरलक्षणचिद्विवर्ततरङ्गिणीषु जीवशफरीणां मोहजालेन
140102 बन्धात्स्वतत्त्वास्मरणमित्याह - जीवकेति ॥ ५० ॥
140103
140104 घनीभूता घनत्वेन चिद्घना गगनाङ्गणे ।
140105 नानापदार्थरूपेण स्फुरति स्वात्मनात्मनि ॥ ५१ ॥
140106
140107 चिदेव आत्मनि स्वरूपलक्षणे गगनाङ्गणे घना मेघा इव संपद्यस्थिता घनत्वेन
140108 भूरादिमूर्ताकारेण नानापदार्थरूपेण स्फुरति ॥ ५१ ॥
140109
140110 सर्व एव समा जीवा वासनामन्तरेण च ।
140111 शुष्कपर्णवदुड्डीना जडाः श्वसनवेणवः ॥ ५२ ॥
140112
140113 तत्र जीवानां तुल्यस्वभावत्वेऽपि वासनावैचित्र्यादेव संसारदुःखवैचित्र्यं
140114 नान्यकृतमित्याह - सर्व एवेति । वासनामन्तरेण विना इतरांशे समाः
140115 वासनावैषम्यादेव शुष्कपर्णवदुड्डीनाः सन्तो विचित्रस्वर्गनरकादिभूविभागेषु
140116 पतन्ति न स्वतः । यतो जडोपाधिसाम्याज्जडाः श्वसनस्य प्राणस्य वेणव इव
140117 ध्वनिवैचित्र्येऽपि वासनाङ्गुलिचेष्टावैचित्र्यमन्तरेण क्षमन्त इत्यर्थः ॥ ५२ ॥
140118
140119 आहृत्य पौरुषबलान्यवजित्य तन्द्रीमुत्थाय तर्जितसमर्जितवासनौघम् ।
140120 संसारपाशघनपञ्जरमञ्जसैव भङ्क्त्वाभ्युदेयमभितोऽज्ञसमेन
140121 भाव्यम् ॥ ५३ ॥
140122
140123 अत एव वासनावज्रपञ्जरभेदनार्थमेव निस्तन्द्रपौरुषप्रयत्नो वर्धनीयस्तत एव
140124 परमपुरुषार्थसिद्धिरित्युपसंहरति - आहृत्येति । आदौ पौरुषबलानि
140125 साधनचतुष्टयश्रवणमननादीन्याहृत्य ततो ध्यानविघ्नभूतां
140126 तन्द्रीमासनप्राणायामाद्यभ्यासेनावजित्य संप्रज्ञातसमाधिना
140127 बहिर्दृष्टेरुत्थाय निर्विकल्पासंप्रज्ञातसमाध्यनुप्रवेशादेव समर्जितं
140128 प्राक्समर्जितवासनौधलक्षणं संसारपाशघनपञ्जरमञ्जसा शीघ्रमेव
140129 तत्त्वसाक्षात्कारेण भङ्क्त्वा अभितः पूर्णानन्दैकरसब्रह्मात्मना उदेयंन् त्वया
140130 न त्वज्ञसमेन संसारान्तर्वर्तिना भाव्यमित्यर्थः ॥ ५३ ॥
140131
140132 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाणप्रकरणे उत्त०
140133 सर्वोपशान्तिर्नामैकोनपञ्चाशः सर्गः ॥ ४९ ॥
140134
140135 इति श्रीवासिष्ठमहारामायणे तात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
140136 सर्वोपशान्तिर्नामैकोनपञ्चाशः सर्गः ॥ ४९ ॥
140137
140138 पञ्चाशः सर्गः ५०
140139
140140 श्रीवसिष्ठ उवाच ।

140141

140142 इमे ये जीवसंघाता दृश्यन्ते दश दिग्गताः ।
140143 नरनागसुरागेन्द्रगन्धर्वाद्यभिधानकाः [(देव) (भूत)
140144 इति चेद्वरं ।] ॥ १ ॥
140145

140146 वासनादार्ढ्यशैथिल्यभेदवैचित्र्यकल्पितम् ।
140147 इह बोधाय जीवानां साप्तविध्यं प्रपञ्च्यते ॥
140148

140149 सर्व एव समा जीवा वासनामन्तरेण चेत्यन्ते यज्जीवानां वासनावैचित्र्यमात्रेण
140150 वैचित्र्यमुक्तं तत्साप्तविध्येन लक्षणैर्निरूपयितुं प्रतिजानीते - इमे इति ।
140151 नरनागादिदेहवैचित्र्यैर्ये दृश्यन्ते ते इति संबन्धः ॥ १ ॥
140152

140153 ते स्वप्नजागराः केचित्केचित्संकल्पजागराः ।
140154 केचित्केवलजाग्रत्स्थाश्चिराज्जाग्रत्स्थिताः परे ॥ २ ॥
140155

140156 घनजाग्रत्स्थिताश्चान्ये जाग्रत्स्वप्नास्तथेतरे ।
140157 क्षीणजागरकाः केचिज्जीवाः सप्तविधाः स्मृताः ॥ ३ ॥
140158

140159 श्रीराम उवाच ।
140160

140161 एतेषां भगवन्भेदो बोधाय मम कथ्यताम् ।
140162 जीवानां सप्तरूपाणां जलानामर्णवेष्विव ॥ ४ ॥
140163

140164 अर्णवेषु क्षीरादिरसभेदवासितानां जलानामिव ॥ ४ ॥
140165

140166 श्रीवसिष्ठ उवाच ।
140167

140168 कस्मिंश्चित्प्राक्तने कल्पे कस्मिंश्चिज्जगति क्वचित् ।
140169 केचित्सुप्ताः स्थिता देहैर्जीवा जीवितधर्मिणः ॥ ५ ॥
140170

140171 तत्राद्यान् जीवटोपाख्यानदर्शितन्यायमवलम्ब्य लक्षयति - कस्मिंश्चिदित्यादिना ।
140172 देहैर्जीवितधर्मिणो जीवन्तः सन्तो ये स्वप्नमभिपश्यन्तीति परेणान्वयः ॥ ५ ॥
140173

140174 ये स्वप्नमभिपश्यन्ति तेषां स्वप्नमिदं जगत् ।
140175 विद्धि ते हि खलूच्यन्ते जीविकाः स्वप्नजागराः ॥ ६ ॥
140176

140177 क्वचिदेव प्रसुप्तानां यः स्वप्नः स्वयमुत्थितः ।
140178 विषयः सोऽयमस्माकं तेषां स्वप्ननरा वयम् ॥ ७ ॥
140179

140180 तेषां स्वयमुत्थितो यः स्वप्नप्रपञ्चः सोऽयं
140181 समानकर्मवासनोद्भववशादस्माकं यदा विषयोभवति तदा वयं तेषां
140182 स्वप्ननरा इत्यर्थः । उपपादितो ह्ययमर्थः प्राग्लीलोपाख्याने ॥ ७ ॥
140183

140184 तेषां चिरतया स्वप्नः स जाग्रत्त्वमुपागतः ।
140185 स्वप्नजागरकास्ते तु जीवास्ते तद्गताः स्थिताः ॥ ८ ॥
140186

140187 तेषु स्वप्नजागरकशब्दमुपपादयति - तेषामिति । उपागतो यतोऽत इति शेषः ॥ ८ ॥
140188

140189 सर्वज्ञत्वात्सर्वगस्य सर्वं सर्वत्र विद्यते ।
140190 येन स्वप्नवतां तेषां वयं स्वप्ननराः स्थिताः ॥ ९ ॥
140191

140192 तेषां स्वप्ननरा वयम् इति यदुक्तं तदप्युपपादयति - सर्वज्ञत्वादिति ।

140193 नन्वस्मदीयदेहादिप्रपञ्चो यदि वासनात्मना तच्चित्ते स्यात्तदा स एव तेषां स्वप्ने
140194 उद्भूत इति तदन्तर्गतानामस्माकं तदीयस्वप्ननरत्वं स्यात् | न त्वेतत्संभवतीति
140195 चेन्मैवम् | येन हेतुना सर्वं सर्वत्र विद्यते सर्वसत्ताप्रदस्य
140196 मायाशबलब्रह्मणः सर्वगस्य सर्वत्र सर्वज्ञत्वात् | अतो वयं तेषां
140197 स्वप्ननरास्तदन्तःकरणे वासनात्मना स्थिता एव तत्स्वप्ने
140198 कर्मसाम्याद्युगपदभिव्यक्ता इत्यर्थः || ९ ||
140199
140200 श्रीराम उवाच |
140201
140202 येषु कल्पेषु ते जाताः क्षीयन्ते कल्पकल्पनाः |
140203 यदि तास्तत्कथं तेषां प्रबुद्धानामवस्थितिः || १० ||
140204
140205 अस्तु दैशिकी सर्वत्र सर्वस्थितिः कालिकी तु न संभवति | अतीतकल्पेषु
140206 वर्तमानवस्तुस्थित्ययोगादन्यथा सर्वकल्पानां यौगपद्यापत्त्या
140207 भेदाभावप्रसङ्गादित्याशयेन रामः पृच्छति - येष्विति | प्राग्येषु कल्पेषु ते
140208 अस्मत्प्रपञ्चस्वप्नद्रष्टारो जीव जाता जन्म प्राप्तास्तेषां कल्पानां कल्पनाः सह
140209 तद्देहैः सांप्रतं यदि क्षीयन्ते नष्टास्तर्हेतस्मात्स्वप्नात्प्रबुद्धानां तेषां
140210 पुनरतीते कल्पे नावस्थितिः सिद्ध्यति | न ह्यद्यतनस्वप्नात्प्रबुद्धेन पूर्वेद्युस्तनोऽपि
140211 जागरोऽनुभवितुंन् शक्यः दूरे पूर्वकल्पस्थः स इति भावः || १० ||
140212
140213 श्रीवसिष्ठ उवाच |
140214
140215 इह स्वप्नभ्रमान्ते ते मुच्यन्ते वा विनिद्रताम् |
140216 प्राप्य संकल्पतो देहांस्तथैवान्यान्श्रयन्त्यलम् || ११ ||
140217
140218 ते जीवा यद्यस्मत्प्रपञ्चात्मके स्वप्ने तत्त्वज्ञानं दैवाल्लभन्ते तर्हि मुच्यन्त एवेति
140219 नैतद्दोषप्रसक्तिः यदि तु तन्न लभन्ते तर्हि न तत्कल्पशेषस्तेषामतीत इत्यग्रे
140220 उद्भविष्यत्येव | अन्यकल्पनाकल्पितानामेवात्ययात् | तच्चेतसि
140221 प्रातिस्विकतत्कल्पशेषकल्पनाया अग्रेऽप्यैन्दवोपाख्यानन्यायेनोपपत्तेरित्याशयेन
140222 वसिष्ठः समाधत्ते - इहेति | अन्यान्श्रयन्ति इत्युक्त्या दृष्टसृष्टिवादमालम्ब्य
140223 प्रत्यहं जागरे देहान्तरकल्पनायामपि संस्कारवशादेव प्रत्यभिज्ञेत्यपि
140224 दर्शितम् || ११ ||
140225
140226 तथैवान्यंप्रपश्यन्ति जगत्कल्पं च कल्पितम् |
140227 कल्पनाभासनभसो न हि संकटता भवेत् || १२ ||
140228
140229 संकटता निरवकाशता || १२ ||
140230
140231 संकल्पनात्मकजगज्जीर्णोदुम्बरकीटकाः |
140232 स्वप्नजागरकाः प्रोक्ताः शृणु संकल्पजागरान् || १३ ||
140233
140234 आद्यजीवानां निरूपणमुपसंहृत्य द्वितीयान्वक्तुमुपक्रमते - शृण्विति || १३ ||
140235
140236 कस्मिंश्चित्प्राक्तने कल्पे कस्मिंश्चिज्जगति क्वचित् |
140237 अनिद्रालव एवान्तः संकल्पैकपराः स्थिताः || १४ ||
140238
140239 अनिद्रालवस्त्यक्तनिद्रा एवैन्दववत्संकल्पपराः || १४ ||
140240
140241 ध्यानाद्विलुठिता वाथ मनोराज्यवशानुगाः |
140242 संकल्पदार्ढ्यमापन्ना गलिताग्रानुभूतयः || १५ ||
140243
140244 अथवा जीवटोपाख्यानोक्तभिक्षुवद्ध्यानाद्विलुठिताश्चलिताः | गलिता अग्रानुभूतिः

140245 पूर्वावस्थानुसंधानं येषाम् ॥ १५ ॥
140246
140247 संकल्प एव जाग्रत्त्वं येषां चिरतयांशतः ।
140248 तत्रास्तमितचेष्टानां ते हि संकल्पजागराः ॥ १६ ॥
140249
140250 येषां जीवानां संकल्प एव चिरानुवृत्त्या घनीभूते जाग्रत्त्वं जागराभिमानः
140251 तत्र सांकल्पिकार्थेष्वेवास्तमिता न पूर्वापरप्रतिसंधानक्षमा मनश्चेष्टा
140252 येषाम् ॥ १६ ॥
140253
140254 संकल्पोपशमे भूयस्तमन्यं वा श्रयन्ति ते ।
140255 देहे तेषां वयमिमे संकल्पपुरुषाः स्थिताः ॥ १७ ॥
140256
140257 तं प्राक्तनं व्यवहारमन्यं तद्विलक्षणं वा । तेषां दृष्ट्या तु वयं
140258 संकल्पपुरुषा एव तुल्यसंकल्पोद्भवादित्यर्थः ॥ १७ ॥
140259
140260 संकल्पजागराः प्रोक्ता एते संकल्पशायिनः ।
140261 जीवा जीवितगा लोकाः शृणु केवलजागरान् ॥ १८ ॥
140262
140263 एते जीवाः । तेषां संकल्पजीवितं गच्छन्ति प्रविशन्ति तथाविधा अस्मदादिलोकाश्च
140264 तद्दृष्ट्या संकल्पजागरा एव । तृतीयान् श्रावयति - शृण्विति ॥ १८ ॥
140265
140266 प्राथम्येनावतीर्णास्ते ब्रह्मणो बृंहितात्मनः ।
140267 प्रोक्ताः केवलजागर्याः प्रागुत्पत्त्यविकासिनः ॥ १९ ॥
140268
140269 सृष्टिसंकल्पेन बृंहितात्मनो ब्रह्मणो वक्ष्यमाणरुपादस्मिन्कल्पे
140270 प्राथम्येनावतीर्णा लब्धशरीरास्तस्मिञ्जन्मनि
140271 स्वप्नपूर्वकत्वाभावात्केवलजागर्याः । यथा प्रागुक्ता दामव्यालकटाः । यतस्ते
140272 प्रागुत्पत्तिविकाशलक्षणस्वप्नशून्याः कल्पान्तरीयजाग्रत्संस्कारस्य
140273 जाग्रज्जननेनैवोपक्षीणस्यैतत्कल्पीयस्वप्नहेतुत्वाकल्पनादिति भावः ॥ १९ ॥
140274
140275 भूयो जन्मान्तरगतास्त एव चिरजागराः ।
140276 कथ्यन्ते प्रौढिमायाताः कार्यकारणचारिणः ॥ २० ॥
140277
140278 चतुर्थानाह - भूय इति । जन्मान्तरेषूत्तरोत्तरजन्मपरंपरासु गताः
140279 कार्ययोर्जाग्रत्स्वप्नयोः कारणे सुषुप्तौ च संचरणशीलाः ॥ २० ॥
140280
140281 त एव दुष्कृतावेशाज्जडस्थावरतां गताः ।
140282 घनजाग्रत्तया प्रोक्ता जाग्रत्सु घनतां गताः ॥ २१ ॥
140283
140284 पञ्चमा&ल्लक्षयति - त एवेति । जाग्रत्सु जाग्रद्दशासु घनतामज्ञाननिबिडताम् ।
140285 जाग्रत्स्विति विशेषणात्स्वप्ने स्थावराणामपि कदाचिन्मनुष्यभावादिदर्शनमस्त्येवेति
140286 गम्यते । इति पञ्चधा भिन्ना बद्धजीवाः ॥ २१ ॥
140287
140288 ये तु शास्त्रार्थसत्सङ्गबोधिता बोधमागताः ।
140289 पश्यन्ति स्वप्नवज्जाग्रज्जाग्रत्स्वप्ना भवन्ति ते ॥ २२ ॥
140290
140291 अवशिष्टं भेदद्वयं जीवन्मुक्तेषु दर्शयिष्यन् षष्ठानाह -ये त्विति ।
140292 चतुर्थपञ्चमषष्ठभूमिकास्था इति यावत् ॥ २२ ॥
140293
140294 ये तु संप्राप्तसंबोधा विश्रान्ताः परमे पदे ।
140295 क्षीणजाग्रत्प्रभृतयस्ते तुर्यां भूमिकां गताः ॥ २३ ॥
140296

सप्तमभूमिकारूढा एव सप्तमा इत्याशयेनाह - ये त्विति ॥ २३ ॥

इति सप्तविधो भेदो जीवानां कथितस्तव ।
समुद्राणामिव मया बुद्ध्वा श्रेयःपरो भव ॥ २४ ॥

श्रेयः परः उत्तरोत्तरश्रेष्ठभूमिकातत्परः ॥ २४ ॥

भ्रान्तिं परित्यज जगद्गणनात्मिकां त्वं बोधैकरूपघनतामलमागतोऽसि ।
शून्यत्ववर्जितमशून्यतया च मुक्तं तेन द्वयैक्यकविमुक्तवपुस्त्वमाद्यम्
॥ २५ ॥

हे राम त्वं जगतो गणना द्वितीयादिवस्तुबुद्ध्या दर्शनं तदात्मिकां भ्रान्तिं
परित्यज । यतः अलं बोधैकरूपघनतामागतोऽसि । तेन द्वितीयाद्यभावेन
तद्व्यावृत्तैक्यस्याप्यसंभवेन द्वयैक्यकाभ्यां विमुक्तवपुः अत एव
शून्यत्ववर्जितमप्यशून्यताख्यधर्मेणापि मुक्तम् । आद्यंन् सर्वकल्पनाभ्यः
प्राथमिकमधिष्ठानसन्मात्रमेव त्वं शिष्ट इत्यर्थः ॥ २५ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षो निर्वाणप्रकरणे उत्तरार्धे
जीवसप्तकप्रकारवर्णनं नाम पञ्चाशः सर्गः ॥ ५० ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
जीवसप्तकप्रकारवर्णनं नाम पञ्चाशः सर्गः ॥ ५० ॥

एकपञ्चाशः सर्गः ५१

श्रीराम उवाच ।

कथं केवलजाग्रत्त्वमकारणमनर्थकम् ।
पराद्विकसति ब्रह्मन्गगनादिव पादपः ॥ १ ॥

ब्रह्मदृष्टावनुत्पन्नमात्मदृष्टौ मृषोद्भवम् ।
बोधादमूर्तं च जगद्यथा तदिह वर्ण्यते ॥

प्राथम्येनावतीर्णास्ते ब्रह्मणो बृंहितात्मनः । प्रोक्ताः केवलजागर्याः इति
यदुक्तं तदनुपपन्नम् । कूटस्थाद्वयस्य ब्रह्मणः प्राथम्येन जीवतयावतारे
बीजप्रयोजनयोरसंभवात्कामकर्मवासनादिबीजानां जीवभावोत्तरकालत्वादिति
रामः शङ्कते - कथमिति ॥ १ ॥

श्रीवसिष्ठ उवाच ।

अकारणं महाबुद्धे न कार्यमुपलभ्यते ।
तज्जाग्रतः केवलस्य न कश्चिदिह संभवः ॥ २ ॥

अत्यल्पमिदमुच्यते - कूटस्थाद्वयात्केवलजागराख्यजीवावतारो न संभवतीति
तन्मूलकजीवान्तराणां जगतश्चावतारस्यानुपपत्तेस्तुल्यत्वात् किंतु
कूटस्थाद्वयवस्तुनो
जगज्जीवोभयापलापमन्तरेणोपदेष्टुमशक्यत्वात्तदुपदेशार्थं ब्रह्मण एव
जीवजगच्छब्दार्थाकारकलना श्रुतिस्मृतीतिहासपुराणेषु कल्पितेत्युत्तरं वसिष्ठ
आह - अकारणमित्यादिना ॥ २ ॥

तस्यातो संभवादन्ये जीवभेदाः सजीवकाः ।
सर्वे न संभवन्त्येव कारणाभावविक्षताः ॥ ३ ॥

कारणाभावादेव विक्षताः। निरस्ता इति यावत् ॥ ३ ॥

नेह प्रजायते किंचिन्नेह किंचन नश्यति।
उपदेश्योपदेशार्थं शब्दार्थकलनोदयः ॥ ४ ॥

श्रीराम उवाच।

कः करोति शरीराणि मनोबुद्ध्यादिचेतनैः।
को मोहयति भूतानि स्नेहरागादिबन्धनैः ॥ ५ ॥

अस्त्वेवं तथापि भोगायतनस्य देहादेः कर्मादिद्वारा साक्षाद्वा कश्चिन्निर्माता
अवश्यं वाच्यः। कार्यमात्रस्य सकर्तृकत्वनियमात्। तत्र च जीवं प्रवेश्य
विषयैर्व्यामोहयिताऽन्यो विनाव्यामोहकं चेतनस्य व्यामोहादर्शनात्। तथा च
व्यामोह्यव्यामोहकौ द्वौ चेतनावन्यौ जीवेश्वराख्यौ
सर्गादिश्रुतियुक्तिप्रामाण्यात्स्वीकार्यविवेति पुना रामः शङ्कते - कः करोतीति ॥ ५
॥

श्रीवसिष्ठ उवाच।

न कश्चिदेव कुरुते शरीराणि कदाचन।
न मोहयति भूतानि कश्चिदेव कदाचन ॥ ६ ॥

भवेतामावश्यकौ यदि शरीरादिकर्तृता व्यामोह्यव्यामोहकभावश्च सत्य इति
श्रुतियुक्तिसिद्धं स्यात्। वाचारम्भणश्रुत्या तत्त्वमस्यादिश्रुतिभिश्च तस्यानृतत्वे
निरूढे प्रतिभासमात्रस्य कूटस्थाद्वयेनापि विवर्तमात्रेण निर्वोढुं शक्यत्वान्न
तयोरावश्यकतेत्याशयेन वसिष्ठ उत्तरमाह - न कश्चिदेवेत्यादिना ॥ ६ ॥

अनाद्यन्तावभासात्मा बोध आत्मनि संस्थितः।
नानापदार्थरूपेण कमूर्म्यादितया यथा ॥ ७ ॥

कं जलं यथा ऊर्म्यादितया तरङ्गतया स्वात्मनि स्थितं तथा बोधात्मात्मनि
स्थितः ॥ ७ ॥

बाह्यं न विद्यते किंचिद्बोधः स्फुरति बाह्यवत्।
उदेति बोधहृदयाद्बीजादिव वरद्रुमः ॥ ८ ॥

ननु बाह्यार्थस्य कथमान्तरचिदात्मविवर्तता व्याश्रयत्वात्तत्राह - बाह्यमिति।
आन्तराद्बोधहृदयादेवान्तरेव बाह्यवदुदेति ॥ ८ ॥

बोधस्यान्तरिदं विश्वं स्थितमेव रघूद्वह।
स्तम्भस्यान्तर्यथा शालभञ्जिका प्रकटीकृता ॥ ९ ॥

बीजादद्रुमो बहिरेवोदेतीति विषमो दृष्टान्त इत्याशङ्क्य समं तमाह -
बोधस्येति। अथवा यद्यन्तरुदितं स्यात्तर्ह्यन्तरेव स्थितं स्यात् बहिर्हि विश्वं तिष्ठति
तत्राह - बोधस्येति ॥ ९ ॥

सबाह्याभ्यन्तरात्मैकमनन्तं देशकालतः।
बोधामोदप्रसरणं जगदेव प्रबुध्यताम् ॥ १० ॥

वस्तुतस्तु चिद्वस्तु नान्तरं न बाह्यं किं त्वनन्तं

140401 तदन्तरेवामोदवदान्तरबाह्योभयविधजगत्कल्पनेत्याह - सबाह्येति ॥ १० ॥
140402
140403 अयमेव परो लोको भाव्यतां वासनाक्षयः ।
140404 शाम्यतां परलोकस्थं काः किलायान्ति वासनाः ॥ ११ ॥
140405
140406 नन्वत्रैव चेज्जगत्कल्पना तर्हि ब्रह्मलोकादिः परलोकोऽर्चिरादिमार्गगम्यो दूरे कथं
140407 प्रसिद्ध इति चेत्तादृशानादिवासनाप्रवाहवशादेव । वासनाक्षये तु स सर्वोऽपि
140408 स्वात्ममात्रतयात्यन्तसंनिहित एवेत्याशयेनाह - अयमेवेति । शाम्यतां विदुषा
140409 परलोकात्मना इहैव स्थितमात्मानं न दूरत्वादिवासनाः समायान्तीत्यर्थः ॥ ११ ॥
140410
140411 देशकालक्रियालोकरूपचित्तात्मसत्पदम् ।
140412 देशकालादिशब्दार्थरहितं न च शून्यकम् ॥ १२ ॥
140413
140414 ननु प्रत्यगात्मैव चेत्परलोकदेशकालादिसर्वात्मा तर्हि देशकालादिबाधे शून्यरूप
140415 एव किं न स्यात्तत्राह - देशेति ॥ १२ ॥
140416
140417 पदे पदविदामेव तस्मिन्बोधगतिर्भवेत् ।
140418 द्रष्टॄणां शान्तदृश्यानामेवान्येषां न राघव ॥ १३ ॥
140419
140420 यदि न शून्यं तर्हि पृथग्जनानामपि प्रपञ्चापलापमात्रेण तस्मिन्पदे कुतो न
140421 बोधगतिस्तत्राह - पदे इति ॥ १३ ॥
140422
140423 ये वै तरलगम्भीरमहंतागर्तमाश्रिताः ।
140424 पश्यन्ति ते तमालोकं न कदाचन केचन ॥ १४ ॥
140425
140426 चतुर्दशविधानन्तभूतजातसुघुंघुमा ।
140427 जगद्दृष्टिरियं ज्ञस्य शरीरावयवोपमा ॥ १५ ॥
140428
140429 तद्दर्शिनस्तर्हि कीदृशी जगद्दृष्टिस्तमाह - चतुर्दशेति ॥ १५ ॥
140430
140431 कारणाभावतः सृष्टिर्नोदिता न च शाम्यति ।
140432 यादृशं कारणं वा स्यात्तादृग्भवति कार्यकम् ॥ १६ ॥
140433
140434 तेषां समाहितदृशा सृष्टिः कीदृशी व्यवहारदृशा च कीदृशी
140435 तामुक्तोपपादनाय पूर्वोत्तरार्धाभ्यामाह - कारणेति ॥ १६ ॥
140436
140437 यदि स्यात्कारणे कार्यं स्थितं कारणतास्य का ।
140438 कार्यमेवोपलम्भात्तदसद्द्वयमवेदनात् ॥ १७ ॥
140439
140440 तत्र पूर्वार्धोक्तं तर्केणोपपादयति - यदीति । कुतो न स्थिता तत्राह -
140441 कार्यमेवेति । कुण्डलब्यतिरिक्तवस्त्वन्तरादर्शनान्न कारणमन्यदस्तीत्यर्थः ॥ १७ ॥
140442
140443 सौम्यस्यान्तर्यथाम्भोधेरूर्म्यावर्तादयः स्थिताः ।
140444 ब्रह्मण्यसंभवक्षोभे जगच्चित्तादयस्तथा ॥ १८ ॥
140445
140446 उत्तरार्धोक्तमपि दृष्टान्तेनोपपादयति - सौम्यस्येति ॥ १८ ॥
140447
140448 सर्वात्मैवामलं ब्रह्म पिण्ड एक इव स्थितम् ।
140449 नानाभाण्डात्म हेमैव यथान्तःस्थितरूपकम् ॥ १९ ॥
140450
140451 अन्तर्गतनानाभाण्डात्मा एको मृत्पिण्ड इव ब्रह्म स्थितम् । यथा
140452 अन्तर्गतकटककुण्डलादिरूपकं हेम तथावस्थितम् । पिण्डावस्थाया अपि कार्यत्वेन

140453 कुण्डलादिसाम्यादिति भावः ॥ १९ ॥
140454
140455 स्वप्नकाले स्वप्न एव जाग्रद्व्यग्रापरिग्रहात् ।
140456 जाग्रत्काले जाग्रदेव स्वप्नः सत्यावबोधतः ॥ २० ॥
140457
140458 यथ पिण्डकाले घटः पिण्ड एव घटकाले च पिण्डो घट एवेति व्यवस्थितमेकस्यैव
140459 दर्शनम् एवं प्रपञ्चस्यापि स्वप्नकाले जाग्रत्स्वप्न एव जाग्रत्कालेऽपि स्वप्नो
140460 जाग्रदेवेति व्यवस्थितमेकमेव जगत्तत्त्वज्ञैर्बुध्यत इत्याह - स्वप्नेति । व्यग्रस्य
140461 वासनाविस्ताराभिनिविष्टस्य मनसः अपरिग्रहादनवरोधाद् ॥ २० ॥
140462
140463 चित्तमात्रतया बुद्धं मृगतृष्णाम्बुवत्स्थितम् ।
140464 जाग्रत्स्वप्नत्वमायाति विचारविकलीकृतम् ॥ २१ ॥
140465
140466 जाग्रत्कालेऽपि जाग्रच्चित्तमात्रतया पर्यालोचितं स्वप्नतुल्यतामेवति सैव विदुषः
140467 सृष्टेः शरीरावयवोपमतेत्थमुपपादितेत्युपसंहरन्सम्यग्ज्ञाने तस्यापि
140468 समूलं बाधमाह - चित्तमात्रतयेति ॥ २१ ॥
140469
140470 सम्यग्ज्ञानेन भूतानि ज्ञस्य देहतया सह ।
140471 पीठबन्धं विमुञ्चन्ति गतकाल इवाम्बुदाः ॥ २२ ॥
140472
140473 गते वर्षाकाले अम्बुदाः पीठबन्धस्वकारणनीहारभावमपि यथा विमुञ्चन्ति
140474 तद्वदित्यर्थः ॥ २२ ॥
140475
140476 यथा गलितुमारब्धो घनो गगनतामियात् ।
140477 तथा सत्यावबोधेन शाम्येत्सात्मग्रहं जगत् ॥ २३ ॥
140478
140479 आत्मग्रहोऽहंकारस्तत्सहितम् । चरमसाक्षात्कारवृत्तिसहितं वा ॥ २३ ॥
140480
140481 शरदभ्रवदालूना मृगतृष्णाम्बुवत्तथा ।
140482 पुनः संस्पृश्यमानैव बोधाद्गलति दृश्यता ॥ २४ ॥
140483
140484 संस्पृश्यमाना स्पर्शादिना अनुभूयमानैव ॥ २४ ॥
140485
140486 यथा दीप्तानले लीनं सुवर्णं घृतमिन्धनम् ।
140487 एकतां याति विज्ञाने तथा भुवनचित्तदृक् ॥ २५ ॥
140488
140489 बोधेन तनुतामेति पिण्डबन्धो जगल्लये ।
140490 पिशाचबुद्धिः सदने बोधितस्य यथा शिशोः ॥ २६ ॥
140491
140492 पिण्डबन्धो मूर्ताद्याकारग्रहः । तनुतां क्रमाद्विलयम् ॥ २६ ॥
140493
140494 बोधस्यानन्तरूपस्य स्वयमेवात्मनात्मनि ।
140495 जगच्चित्तादिता भाता पिण्डबन्धः किलात्रकः ॥ २७ ॥
140496
140497 अयं च विलयो न जतुकाठिन्यविलयवन्निमित्तापायादपैति किंतु
140498 शुक्तिरूप्यवदसत्प्रतियोगिकत्वादपुनरागामीत्याशयेनाह - बोधस्येति ।
140499 अन्तास्त्रिविधपरिच्छेदा रूपाण्याकारभेदाश्च न विद्यन्ते यस्य तथाविधस्य बोधस्य
140500 साक्षिचितः स्वयमेव निर्निमित्तमेव जगच्च तद्विकल्पकं चित्तं च तदाद्यज्ञानं चेति
140501 त्रिरूपता भाता । अत्रास्मिन्बोधे ॥ २७ ॥
140502
140503 बोधाबोधनमेवेदं जगच्चित्तमिवोदितम् ।
140504 तदेवास्तं गतं बोधात्पिण्डबन्धस्य कास्तिता ॥ २८ ॥

140505
140506 तथा चानृतजगच्चित्तभावेनानृतमज्ञानमेव विजृम्भत इति फलितमित्याह -
140507 बोधाबोधनमेवेति ॥ २८ ॥
140508
140509 जहाति पिण्डकाठिन्यं जाग्रत्स्वप्नावबोधतः ।
140510 परां पेलवतामेति हेम द्रुतमिवाग्निना ॥ २९ ॥
140511
140512 एतेन जाग्रदेव स्वप्नकाले स्थौल्यं विहाय सूक्ष्मप्रपञ्चतां याति ।
140513 स्वप्नभ्रान्तिरेव चिराभ्यासाद्घनतया जाग्रत्तामिव गच्छतीत्यादि यत्प्रागुक्तं
140514 तत्सिद्धमित्याह - जहातीत्यादिना ॥ २९ ॥
140515
140516 यथास्थितं बोध एव घनतामिव गच्छति ।
140517 विनैव देशकालाभ्यां तौ विनिर्माय हेमवत् ॥ ३० ॥
140518
140519 तौ जाग्रत्स्वप्नौ ॥ ३० ॥
140520
140521 जाग्रत्येवं विचारेण स्वप्नाभे पेलवे स्थिते ।
140522 क्षीयमाणे शरत्काल इवैति तनुतां रसः ॥ ३१ ॥
140523
140524 रसो भोगरागो जलं च ॥ ३१ ॥
140525
140526 परां पेलवतां याता दृश्यलक्ष्म्यः स्थिता अपि ।
140527 स्वप्ना इव परिज्ञाता न स्वदन्ते विवेकिनः ॥ ३२ ॥
140528
140529 पेलवतां तुच्छताम् ॥ ३२ ॥
140530
140531 क्व किल स्वात्मविश्रान्तिः क्वैतद्विषयवेदनम् ।
140532 सुषुप्तजाग्रतोरैक्यं भ्रान्ताभ्रान्तात्मनोर्भवेत् ॥ ३३ ॥
140533
140534 आत्मसुखतृप्तत्वादपि तस्य विषयेष्वनादर इत्याशयेनाह - क्वेति । यदि
140535 त्वज्ञस्यापि विषया स्वदेरंस्तर्हि सुषुप्तजाग्रतोरैक्यमपि संभाव्येत तथा
140536 भ्रान्ताभ्रान्तात्मनोर्मूढतत्त्वज्ञयोश्चैक्यं संभाव्येतेत्यर्थः ॥ ३३ ॥
140537
140538 चित्तमात्रे भ्रान्तिमात्रे स्वप्नमात्रात्मनि स्थिते ।
140539 जगतीह पदार्थेभ्यः सत्यबुद्धिर्निवर्तते ॥ ३४ ॥
140540
140541 जगति चित्तमात्रे संपन्ने स्वप्नमात्रात्मनि स्थिते सति इह स्रक्चन्दनादिपदार्थेभ्यः
140542 सत्यताबुद्धिर्निवर्तते ॥ ३४ ॥
140543
140544 कस्य स्वदन्तेऽसत्यानि कथमेव महामते ।
140545 मृगतृष्णाजलानीव दृश्यान्यपि पुरःस्थितैः ॥ ३५ ॥
140546
140547 असत्यान्यपि भोग्यानि तस्य स्वदन्तां तत्राह - कस्येति । वार्थे एवकारः । कथं वा
140548 स्वदन्त इत्यर्थः ॥ ३५ ॥
140549
140550 सत्यबुद्धौ विलीनायां जगत्पश्यति शान्तधीः ।
140551 जालद्दीपांशुजालाभमपिण्डात्माम्बरात्मकम् ॥ ३६ ॥
140552
140553 जाले वातायने प्रविष्टस्य दीपांशुजालस्याभेव
140554 प्रकाशरूपमप्यपिण्डात्मकमेवाम्बरात्मकं पश्यति ॥ ३६ ॥
140555
140556 जाग्रतो वस्तुतः शून्यात्परिज्ञातान्निवर्तते ।

140557 चित्तभ्रमात्मनो [चित्तमात्रात्मन इति पाठः सुवचः |]
140558 भ्रान्तिरूपास्वादनभावना || ३७ ||
140559
140560 अत एव चित्तमात्रात्मनः स्वाप्नस्रक्चन्दनादेः स्वदनभावना जाग्रतः पुरुषस्य
140561 शून्यत्वेन परिज्ञातात्तस्मान्निवर्तत इति प्रसिद्धमित्यर्थः || ३७ ||
140562
140563 यदवस्त्विति विज्ञातं तत्रोपादेयता कुतः |
140564 केन स्वप्नं परिज्ञाय स्वप्नहेमाभिगम्यते || ३८ ||
140565
140566 स्वप्नहेम उपादातुं केनाभिगम्यते || ३८ ||
140567
140568 स्वप्नादिव परिज्ञाताद्रसो दृश्यान्निवर्तते |
140569 द्रष्टृदृश्यदशादोषग्रन्थिच्छेदः प्रवर्तते || ३९ ||
140570
140571 नीरसः शान्तमननो निर्वाणाहंकृतिः कृती |
140572 वीतरागो निरायासः शान्तस्तिष्ठति बुद्धधीः || ४० ||
140573
140574 रसनिवृत्तावसौ कथमास्ते तदाह - नीरस इति | नीरसो निःस्नेहो बन्ध्वादिषु |
140575 वीतरागो विषयेषु || ४० ||
140576
140577 रसे नीरसतां याते वासना प्रविलीयते |
140578 शिखायां प्रविलीनायां प्रदीपस्यांशवो यथा || ४१ ||
140579
140580 बोधाद्दीपांशुजालाभमघनं व्योम दृश्यते |
140581 भ्रान्तिरूपं जगत्कृत्स्नं गन्धर्वनगरं यथा || ४२ ||
140582
140583 प्राग्भ्रान्तिरूपं कृत्स्नं जगत्तत्त्वबोधाद्दीपांशुजालवत्प्रकाशैकरसमघनं
140584 सद्व्योमतुल्यंन् दृश्यते || ४२ ||
140585
140586 नैवात्मानं न चाकाशं न शून्यं न च वेदनम् |
140587 अत्यन्तपरिणामेन पश्यन्पश्यति तत्पदम् || ४३ ||
140588
140589 सप्तमभूमिकास्थितिलक्षणेनात्यन्तपरिणामेन तर्हि कथं भवति तदाह - नैवेति
140590 | पश्यंस्तत्त्वज्ञः || ४३ ||
140591
140592 यत्र नात्मा न शून्यं च न जगत्कलना न च |
140593 न चित्तदृश्योदयधीः सर्वं चास्ति यथास्थितम् || ४४ ||
140594
140595 भूम्यादिताऽज्ञसंबुद्धा ज्ञानादस्तमुपागता |
140596 ज्ञस्य शून्यैव संपन्ना संस्थितापि न विद्यते || ४५ ||
140597
140598 अज्ञैः पिण्डग्रहेण संबुद्धा भूम्यादिता ति ज्ञानादस्तं बाधमुपागता || ४५ ||
140599
140600 भवत्येकसमाधानसौम्यात्मा व्योमनिर्मलः |
140601 तिष्ठत्यपगतासङ्गः स्थित एवाप्यसत्समः || ४६ ||
140602
140603 अस्तंगतमना मौनी निरोधपदवीं गतः |
140604 तीर्णः संसारजलधेः कर्मणामन्तमागतः || ४७ ||
140605
140606 तनुभुवनगगनगिरिगणकरणपरं परममज्ञानम् |
140607 विगलति गलिते तस्मिन् सकलमिदं विद्यमानमपि || ४८ ||
140608

140609 यस्मात्कारणात्तनूनां चतुर्विधशरीराणां तदाधाराणां भुवनानां
140610 तदाधारस्य गगनस्य विहारस्थानानां गिरिगणानां तत्साधनानां करणानां च
140611 परमुपादानकारणं परममज्ञानं मूलाज्ञानमेव नान्यत् | अतः
140612 कारणात्तस्मिन्मूलाज्ञाने ज्ञानेन गलिते सति इदं तनुभुवनादिसकलं
140613 जगदज्ञदृशा विद्यमानमपि विगलति | असद्भवतीत्यर्थः || ४८ ||
140614
140615 संशान्तान्तःकरणो गलितविकल्पः स्वरूपसारमयः |
140616 परमशमामृततृप्तस्तिष्ठति विद्वान्निरावरणः || ४९ ||
140617
140618 एवंरीत्या गलितविकल्पो योगी स्वरूपसारमयः सन्परमशमामृतेन स्वानन्देन
140619 तृप्तो निरावरणभूमानन्दस्वभावस्तिष्ठतीत्यर्थः || ४९ ||
140620
140621 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाणप्रकरणे उ०
140622 विश्रान्तियोगोपदेशो नामैकपञ्चाशः सर्गः || ५१ ||
140623
140624 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
140625 विश्रान्तियोगोपदेशो नामैकपञ्चाशः सर्गः || ५१ ||
140626
140627 द्विपञ्चाशः सर्गः ५२
140628
140629 श्रीराम उवाच |
140630
140631 बोधो जगदिवाभाति मुने येन क्रमेण ह |
140632 तं क्रमेण क्रमं ब्रूहि भूयो भेदनिवृत्तये || १ ||
140633
140634 इह तार्किकतर्कोत्थकल्पनान्तरखण्डनैः |
140635 अनिर्वाच्यजगद्भावः कूटस्थस्य समर्थ्यते ||
140636
140637 बोधः कूटस्थचिदात्मा येन क्रमेण प्रकारेण भाति तं क्रमं
140638 वाद्यन्तरकल्पनाभेदखण्डनैः समर्थनक्रमेण भूयो ब्रूहि || १ ||
140639
140640 श्रीवसिष्ठ उवाच |
140641
140642 वृक्षस्येव विमूढस्य यद्दृष्टौ तत्स्वचेतसि |
140643 यन्न दृष्टौ न तच्चित्ते भवत्यल्पतरस्मृते || २ ||
140644
140645 चिदात्मनो जगद्भावोऽयमनिर्वचनीय एवेत्यस्यार्थस्य समर्थनाय प्रथमं
140646 दृष्टसृष्टिपक्षमवलम्ब्य दृष्ट्यन्वयव्यतिरेकानुविधायिस्थितिकत्वं तस्य
140647 दर्शयति - वृक्षस्येवेति | विमूढस्याज्ञस्यात्मनो वृक्षस्य
140648 मूलदारुपत्रपल्लवादिनानाकारघटितस्येव नानाकारं यज्जगद्रूपं तत् दृष्टौ
140649 सत्यामेव अस्तीति स्वचेतसि प्रसिद्धं नान्यथा | अत एव ह्यल्पतरमपि दृष्टमेव
140650 स्मर्यते न बह्वप्यदृष्टं तत्सत्ताऽप्रसिद्धेरित्यर्थः || २ ||
140651
140652 भव्यः पश्यति शास्त्रार्थमेव पूर्वापरान्वितम् |
140653 न दृष्टिविषयं वस्तु यत्पश्यति करोति तत् || ३ ||
140654
140655 विद्वदविदुषोः शास्त्राशास्त्रानुसारिक्रियावैलक्षण्यदर्शनादपि
140656 तत्तद्दृष्ट्यनुसारव्यवस्थितैव जगत्सत्ता गम्यत इत्याशयेनाह - भव्य इति |
140657 दृष्टेर्नेत्रस्य विषयंन् संनिकृष्टमपि निषिद्धं वस्तु भोग्यतया न पश्यति || ३ ||
140658
140659 भावानुष्ठाननिष्ठः सन् शास्त्रार्थैकमना मुनिः |
140660 भूत्वोपदेशं त्वमिमं शृणु श्रवणभूषणम् || ४ ||

अत एव हि मयापि त्वं शास्त्रीयदृष्टिव्यवस्थापनमुखेनैव श्रवणादौ नियम्यसे
इत्याशयेनाह - भावेति। भावश्चित्तशुद्ध्यनुकूलं कर्म॥ ४॥

इयं दृश्यभरभ्रान्तिर्नन्वविद्येति चोच्यते।
वस्तुतो विद्यते नैषा तापनद्यां यथा पयः॥ ५॥

अविद्यात्वप्रसिद्धेरपि तत्तथेत्याह - इयमिति॥ ५॥

उपदेश्योपदेशार्थमेनां मदुपरोधतः।
सत्यामिव क्षणं तावदाश्रित्य श्रूयतामिदम्॥ ६॥

तर्हि कथं शास्त्रोपदेशतत्फलासिद्धिस्तत्राह - उपदेश्येति॥ ६॥

कुत एषा कथं चेति विकल्पाननुदाहरन्।
नेदमेषां न चास्तीति स्वयंन् ज्ञास्यसि बोधतः॥ ७॥

उपदेशफलसिद्धिकाले त्वियं भ्रान्तिर्निःशेषं निवर्तते ततोऽपि तथेत्याशयेनाह ##-

यदिदं दृश्यते किंचिज्जगत्स्थावरजंगमम्।
सर्वं सर्वप्रकाराढ्यं कल्पान्ते तद्विनश्यति॥ ८॥

इत्थं विवर्तपक्षमनुभवपर्यवसितं प्रदर्श्य पक्षान्तरेषु दोषान्विवक्षुः
सत्यस्यैव प्रपञ्चस्य वृक्षशाखान्यायेन ब्रह्माभेदमभ्युपगच्छतां पक्षे
ब्रह्मण आनन्त्यहानिः स्यादिति दोषं वक्तुं जगतो नश्वरत्वं प्रतिजानीते -
यदिदमिति॥ ८॥

अस्य भागविभागात्मा नाशोऽवश्यमवारितः।
बिन्दुना बिन्दुना बोधे उद्धृतस्यास्ति हि क्षयः॥ ९॥

प्रतिज्ञातं साधयति - अस्येति। अस्य जगतो भागानां भूराद्यवयवानां विभागो
विश्लेषस्तदात्मा नाशो बोधे विमर्शे दुर्वारः सावयवत्वात्। हि
यस्माद्घटादिगतजलस्य बिन्दुना बिन्दुना पृथक्कृत्योद्धृतस्य क्षयो लोके
प्रसिद्धोऽस्ति तद्वदित्यर्थः॥ ९॥

एवं स्थिते द्रव्यनाशे ब्रह्मणस्तन्मयत्वतः।
नानन्तत्वं न चास्तित्वं न च वै संभवत्यलम्॥ १०॥

अस्तु नाशः को दोषस्तत्राह - एवमिति। शाखाद्यवयवनाशे
वृक्षनाशवद्भूरादिद्रव्यनाशे ब्रह्मणोऽपि नाशप्रसङ्गे श्रुत्युक्तमनन्तत्वं
न सिद्ध्यति। अवयवेभ्यः पृथक्कृतस्यावयविनो विमर्शे असत्त्वादस्तित्वं च न
सिद्ध्यति न च चिदेकरसं निरवयवं च ब्रह्म मूर्तादिजगदवयवकं
संभवतीत्यर्थः॥ १०॥

मदशक्तिरिव ज्ञानमिति नास्मासु सिध्यति।
देहो विज्ञानतोऽस्माकं स्वप्नवन्न तु तत्त्वतः॥ ११॥

ननु मा भूच्चिदात्मा जडजगदवयवकः जडानामेव भूम्यादिभूतानां
कायाकारपरिणतानां मदिरावयवानुगता मदशक्तिरिव चैतन्यं धर्मोऽस्त्विति
चार्वाकपक्षमुट्टङ्क्य दूषयति - मदशक्तिरेवेति। अस्मासु आस्तिकेषु। न सिध्यति
अस्मान्प्रति चार्वाकिण साधयितुं न शक्यमिति यावत्। यतोऽस्माकं प्रामाणिकानां
मते देहो विज्ञानाधीनसिद्धिकत्वात्स्वाप्नदेहवत्तात्त्विको न भवति। न हि

140713 विज्ञानातिरेकेण देहसत्तासाधकमस्ति न चासिद्धे देहे
140714 मदशक्तिवद्विज्ञानमुत्पत्तुमर्हतीति भावः ‖ ११ ‖
140715
140716 नश्यत्येव च दृश्यश्रीः सैव नान्यैव नैव च ।
140717 इत्थं भवेत्समुचितं कृतं शास्त्रं च नान्यथा ‖ १२ ‖
140718
140719 किं च जगतो ब्रह्माभेदे उच्यमाने दृश्यनाशाद्ब्रह्मणोऽन्तवत्त्वशङ्का स्यात् ।
140720 आध्यासिके त्वभेदे प्रतियोगिन इव तन्नाशस्यापि वस्तुतो ब्रह्मसंस्पर्शाभावान्न
140721 तत्प्रसक्तिः शास्त्रसाफल्यं चेत्याशयेनाह - नश्यत्येवेति । यतः पुनः
140722 पुनर्नष्ट्वा उद्भवन्ती दृश्यश्रीः सैव न अन्यैव च नैवेत्यनिर्वचनीया
140723 अविद्यामात्रम् । इत्थं सत्येव विद्यया तद्बाधे शास्त्रं कृतं सफलं भवेत् ।
140724 अन्यथा सत्यबन्धनिवृत्तौ शास्त्रस्यानुपायत्वाद्व्यर्थमेव स्यादित्यर्थः ‖ १२ ‖
140725
140726 सैवैतीत्यसमुल्लेखं कथं नष्टस्य संभवः ।
140727 तद्रूपान्येति युक्तं स्यादनुभूतानुगा वयम् ‖ १३ ‖
140728
140729 प्रलये नष्टाया भुवनसंस्थितेः पुनः सृष्टाबुद्भवन्त्याः
140730 सैवान्यैवेत्यनिर्धार्यत्वादप्यनिर्वचनीयतैवेत्याह - सैवैतीत्यादिना । या नष्टा
140731 सैव पुनरुन्मज्जनेनैतीत्यसमुल्लेखं संभावयितुमशक्यम् । अनुभूतानुगाः
140732 अनुभवानुसारिणो वयं नानुभवविरुद्धमण्वपि सहामहे इत्यर्थः ‖ १३ ‖
140733
140734 सैव व्योमतयैवासीदित्यसत्सैव सा कथम् ।
140735 तथैव व्योमसंस्था चेन्नाशं तर्हि न सा गता ‖ १४ ‖
140736
140737 अनुभवानारोहमेव स्फुटयति - सैवेति । सा मूर्ततैव प्रलये व्योमतया
140738 अमूर्तभावेनासीदित्यसत् । यतः सा मूर्ततैवामूर्तता कथम् । व्योमसंस्थापि सा तथा
140739 पूर्वावस्थापन्नैव चेत्प्रलये नाशं न गतैवेति प्रलयवादोच्छेदः स्यादित्यर्थः ‖
140740 १४ ‖
140741
140742 कार्यकारणयोरेकरूपतैवं यदा तदा ।
140743 कार्यकारणताभावादैक्यमेवास्मदागमः ‖ १५ ‖
140744
140745 एवं सर्गेपि प्रलयावस्थाया अपि तुल्यन्यायेन प्रसक्तौ
140746 प्रलयावस्थादव्याकृतात्कार्यस्य सर्गस्यक्यापत्तौ कूटस्थवादापत्तिरित्याह -
140747 कार्येति । अस्मदागमोऽस्मत्सिद्धान्तः स्यादित्यर्थः ‖ १५ ‖
140748
140749 शून्यत्वमुपलम्भत्वं यद्गतं नष्टमेव तत् ।
140750 अन्यस्तर्हि भवेन्नाशः कीदृशः किल कथ्यताम् ‖ १६ ‖
140751
140752 यद्वस्तु उपलम्भत्वं गतमपि शून्यत्वं गतं तन्नष्टमेव । सदा
140753 उपलब्धिकालेऽप्यसत्त्वाभ्युपगमात् । असत्त्वापत्तिरेव हि नाशः । यद्यन्यादृशो नाशो
140754 लोके भवेत्तर्हि स कीदृशः कथ्यताम् । न चोपलब्धत्वबलान्नष्टमप्यनष्टं
140755 भवति । नष्टानामपि स्वप्ने उपलम्भदर्शनादनष्टत्वासिद्धेः ‖ १६ ‖
140756
140757 नष्टं भूयस्तदुत्पन्नमिति यत्प्रत्ययेति कः ।
140758 नश्यत्यवश्यं तेनेदं पुनरन्यत्प्रवर्तते ‖ १७ ‖
140759
140760 भूयः समुत्पत्तिदर्शनान्मध्ये नष्टस्यापि सत्त्वं कल्प्यत इति
140761 चेद्भेदेनाप्युत्पत्त्युपपत्तेः । प्रत्यभिज्ञादेरदर्शनाच्च नैवमित्याह -
140762 नष्टमिति । प्रत्ययेति प्रत्यभिजानाति । अयतेर्लटि पदवर्णव्यत्ययश्छान्दसः ‖ १७ ‖
140763
140764 मध्ये मध्ये यदुत्सेधफलाद्यवयवैकिका ।

140765 आदेहं बीजसत्तास्ति कार्यकारणता कुतः ॥ १८ ॥
140766

140767 ननु यथैकस्मिन्नेव तरौ मध्ये मध्ये
140768 कोटरस्कन्धशाखादिवैचित्र्यभेदेऽप्यामूलाग्रं वृक्षदेहस्यैकता
140769 शाखादितत्कार्याण्येव भिद्यन्ते एवमुत्पत्त्यादिविकारभेदेषु प्रलये पुनरुद्भवे च
140770 भुवनाद्येकतैव किं न स्यादिति चेत्तत्राह - मध्ये इति । उत्सेध औन्नत्यं फलानि
140771 आदिपदाच्छाखोपशाखादारुस्कन्धपत्रपुष्पादयश्च ये अवयवास्तेष्वेकिका अनुगता
140772 वृक्षदेहमभिव्याप्य स्थिता बीजसत्तैवाखण्डा तत्रास्तीति सत्तैक्यदृष्टौ
140773 शाखादेः पृथक्सत्ताऽसिद्धेः कार्यकारणतोच्छेदः स्यादित्यर्थः ॥ १८ ॥
140774

140775 देशकालक्रियात्मैकं यथादृष्टमिह स्थितम् ।
140776 बीजमेवैककर्मातो न घटः पटकार्यकृत् ॥ १९ ॥
140777

140778 दृष्टान्ते उक्तं कार्यकारणतोच्छेदं दार्ष्टान्तिके दर्शयति - देशेति । यदि
140779 प्रलयसर्गादिदेशकालक्रियात्मकमेकं सन्मात्रमेव बीजमभ्युपगम्येत तर्हि तत्
140780 एकं स्वयमेवैकं कर्म क्रिया तत्फलं च यस्य तथाविधं सत् न किंचित्कुर्यात् ।
140781 असमर्थत्वात् । न हि घटः पटकार्यासमर्थस्तत्करोतीत्यर्थः । अथवा तदनुगतं
140782 बीजदेशात्मकं कालात्मकं क्रियात्मकं वा एकस्वभावं वाच्यम् । न ह्येकं
140783 नानास्वभावं संभवति । स्वभावभेदे एकत्वानुपपत्तेः । तथा च यदि
140784 देशैकस्वभावं तर्हि कालकार्यन् न कुर्यात् । न हि घटस्वभावं वस्तु
140785 पटकार्यकृद्दृष्टमित्यर्थः ॥ १९ ॥
140786

140787 सर्वदर्शनसिद्धान्ते नास्ति भेदो न वस्तुनि ।
140788 परमार्थमये तेन विवादेन किमत्र नः ॥ २० ॥
140789

140790 नानास्वभावमेकं वस्त्विति वदन्सर्वदर्शनसिद्धान्तातिलङ्घनाद्वैतण्डिकः
140791 स्यादित्याशयेनाह - सर्वेति । वस्त्वैक्ये कार्यभेदः सर्वदर्शनसिद्धान्ते नास्ति ।
140792 परमार्थमये वस्तुनि वस्तुस्वभावेऽपि भेदो नानात्वं नास्ति । अतः
140793 सर्वदर्शनविरुद्धवादिना सह विवादेन किमित्यर्थः ॥ २० ॥
140794

140795 इदं शान्तमनाद्यन्तंन् तद्रूपत्वाद्विचारतः ।
140796 व्योमाभं बोधतामात्रमनुभूतिप्रमाणतः ॥ २१ ॥
140797

140798 परिशेषादेकस्वभावत्वे तु चित्स्वभावस्यैवोपजीव्यस्यैकस्य परिशेषः सिद्ध इत्याह
140799 - इदमिति । सर्वकल्पनानामनुभूतिप्रमाणसारत्वात्तत्स्वभावापलापायोगेन
140800 परिशेषाज्जडस्वभावस्यैव हानादिति भावः ॥ २१ ॥
140801

140802 यथैतन्नानुभूतं सद्यथैतदनुभूयते ।
140803 यथैतत्सिद्धिमाप्नोति तदिदं कथ्यते क्रमात् ॥ २२ ॥
140804

140805 तदुपपादनं प्रतिजानीते - यथैतदिति ॥ २२ ॥
140806

140807 महाकल्पान्त उन्नष्टे सर्वस्मिन्दृश्यमण्डले ।
140808 आमहादेवपर्यन्तंन् समनोबुद्धिकर्मणि ॥ २३ ॥
140809

140810 अत एव हि सर्वभेदप्रलयेऽप्यविपरिलुप्तोऽनुभवात्मैवावशिष्यत इत्याह -
140811 महाकल्पान्त इत्यादिपञ्चभिः ॥ २३ ॥
140812

140813 व्योमन्यपि शमं याते कालेऽप्यकलितस्थितौ ।
140814 वायावपि त्वपगते तेजस्यत्यन्तमस्थिते ॥ २४ ॥
140815

140816 तेजस्यपि गते ध्वंसं वार्यादौ सुचिरं क्षते ।

140817 अलमन्तमनुप्राप्ते सर्वशब्दार्थसंचये ॥ २५ ॥
140818
140819 शिष्यते शान्तबोधात्म सदच्छं बाध्यवर्जितम् ।
140820 अनादिनिधनं सौम्यं किमप्यमलमव्ययम् ॥ २६ ॥
140821
140822 अवाच्यमनभिव्यक्तमतीन्द्रियमनामकम् ।
140823 सर्वभूतात्मकं शून्यं सदसच्च परं पदम् ॥ २७ ॥
140824
140825 तन्न वायुर्न चाकाशं न बुद्ध्यादि न शून्यकम् ।
140826 न किंचिदपि सर्वात्म किमप्यन्यत्परं नभः ॥ २८ ॥
140827
140828 परिशिष्टं वाय्वादिस्वरूपमेव किं न स्यात् तत्राह - तदिति ॥ २८ ॥
140829
140830 तद्विदा तत्पदस्थेन तन्मुक्तेनानुभूयते ।
140831 अन्यैः केवलमाम्नातैरागमैरेव वर्ण्यते ॥ २९ ॥
140832
140833 इदानीमपि तद्विद्वदनुभवसिद्धमित्याह - तद्विदेति ॥ २९ ॥
140834
140835 न कालो न मनो नात्मा न सन्नासन्न देशदिक् ।
140836 न मध्यमेतयोर्नान्तं न बोधो नाप्यबोधितम् ॥ ३० ॥
140837
140838 तत्र कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यम्
140839 इत्याद्यागममर्थतो दर्शयति - न काल इति ॥ ३० ॥
140840
140841 किमप्येव तदत्यच्छं बुध्यते बोधपारगैः ।
140842 शान्तसंसारविसरैः परां भूमिमुपागतैः ॥ ३१ ॥
140843
140844 तद्यदात्मविदो विदुःइत्यागमं च तथोदाहरति - किमपीति । चतुर्थ्यदिः पराम् ॥ ३१
140845 ।।
140846
140847 प्रतिषिद्धा मयैते तु येऽर्थाः सर्वत्र ते स्थिताः ।
140848 अस्मद्बुद्ध्या परिच्छेद्याः सौम्याम्भोधेरिवोर्मयः ॥ ३२ ॥
140849
140850 मयापि तेऽर्थाः श्रुत्यनुसार्यनुभवमाश्रित्य मुहुः प्रतिषिद्धा इत्याह -
140851 प्रतिषिद्धा इति । सर्वत्र श्रुतिषु प्रतिषेध्यतया स्थिता येऽर्थास्त एव मया प्रतिषिद्धाः ॥
140852 ३२ ॥
140853
140854 यथास्थितं स्थिताः सर्वे भावास्तत्र यथा तथा ।
140855 अनुत्कीर्णा महास्तम्भे विविधाः शालभञ्जिकाः ॥ ३३ ॥
140856
140857 तर्हि सदेव सोम्येदमग्र आसीत् इत्यादिसत्कार्यवादश्रुतीनां कोऽभिप्रायस्तमाह -
140858 यथास्थितमिति । ब्रह्मस्वभावस्थितिरेवाविकल्पिता जगतोऽपि सत्तेत्याशयस्तासामिति भावः
140859 ॥ ३३ ॥
140860
140861 एवं तत्र स्थिताः सर्वे भावा एवं च न स्थिताः ।
140862 असर्वात्मैव सर्वात्म तदेव न तदेव च ॥ ३४ ॥
140863
140864 अत एव नेह नानेत्यादिश्रुतीनां सदेव सोम्येत्यादिश्रुतीनां
140865 चाविरोधेनैकमेवोभयथापि व्यपदिश्यत इत्याशयेनाह - एवमिति ॥ ३४ ॥
140866
140867 पदं यथैतत्सर्वात्म सर्वार्थपरिवर्जितम् ।
140868 यथा तत्र च पश्यन्ति तत्रैकपरिणामिनः ॥ ३५ ॥

140869
140870 अनुत्कीर्णशिलायां पुत्रिकाभेदानामिव योगिनां तत्रेच्छया अस्ति नास्तीत्युभयथापि
140871 दर्शनं सिद्धमित्याह - पदमिति ॥ ३५ ॥
140872
140873 सर्वं सर्वात्मकं चैव सर्वार्थरहितं पदम् ।
140874 सर्वार्थपरिपूर्णं च तदाद्यं परिदृश्यते ॥ ३६ ॥
140875
140876 तवैतावन्महाबुद्धे सर्वार्थोपशमात्मकम् ।
140877 न सम्यग्दानमुत्पन्नं संशयोऽत्र निदर्शनम् ॥ ३७ ॥
140878
140879 एतावत्प्राग्वर्णितसमाधिकालपर्यन्तम् । संशयोऽत्र सम्यग्ज्ञानानुत्पत्तौ
140880 निदर्शनं लिङ्गम् । छिद्यन्ते सर्वसंशयाः इति श्रुतेर्निश्चिते तत्त्वे
140881 संशयाननुभवाच्चेति भावः ॥ ३७ ॥
140882
140883 यः प्रबुद्धो निराभासं परमाभासमागतः ।
140884 स्वच्छान्तःकरणः शान्तस्तं स्वभावं स पश्यति ॥ ३८ ॥
140885
140886 निराभासं सर्वदृश्याभासनिर्मुक्तम् । परं आभासं चरमसाक्षात्कारम् ॥ ३८ ॥
140887
140888 अयंन् त्वमहमित्यादित्रिकालगजगद्भ्रमः ।
140889 तत्रास्ति हेमपिण्डान्तरिव रूपकजालकम् ॥ ३९ ॥
140890
140891 हेमपिण्डान्तः रूपकाणां रूप्यमुद्राणां जालकं समूह इव कल्पनया अस्ति ॥ ३९ ॥
140892
140893 हेमपिण्डाद्यथा भाण्डजालं नानोपलभ्यते ।
140894 तथा न लभ्यते भिन्नं परमार्थघनाज्जगत् ॥ ४० ॥
140895
140896 तर्हि किं रूपकवद्भेदेनापि जगत्सत् नेत्याह - हेमपिण्डादिति । नाना पृथक्सदिति
140897 यावत् ॥ ४० ॥
140898
140899 सर्वदैव हि भिन्नात्मा स्वाङ्गभूतोपलम्भदृक् ।
140900 स जगद्द्वैतमेवेदं हेमेवाङ्गदरूपकम् ॥ ४१ ॥
140901
140902 यद्यप्यनृतं सतो न भिद्यते तथापि सत्तु अनृताद्भिद्यत एवेत्याह - सर्वदैवेति
140903 । अङ्गदरूपकमिवानृतमित्यर्थः ॥ ४१ ॥
140904
140905 रिक्तं देशादिशब्दार्थैर्देशकालक्रियात्मकम् ।
140906 यथास्थितमिदं तत्र सर्वमस्ति न वास्ति च ॥ ४२ ॥
140907
140908 देशादिशब्दानामर्थैः प्रवृत्तिनिमित्तैर्जातिगुणक्रियादिभिः रिक्तं रहितम् ॥ ४२ ॥
140909
140910 यथोर्म्यादि समे तोये चित्रं चित्रकृदीहते ।
140911 भाण्डवृन्दं मृदः पिण्डे तथेदं ब्रह्मणि स्थितम् ॥ ४३ ॥
140912
140913 तथैतदत्र नो भिन्नं नाभिन्नं नास्ति चास्ति च ।
140914 नित्यं तन्मयमेवाच्छं शान्ते शान्तमिदं तथा ॥ ४४ ॥
140915
140916 तथैव भेदादिना दुर्निरूपस्वभावमनृतं ब्रह्मणि स्थितमित्याह - तथेति ।
140917 तत्त्वज्ञानेन शान्ते ब्रह्मणि शान्तात्मनैव स्थितम् ॥ ४४ ॥
140918
140919 अनिखातैव भातीयं त्रिजगच्छालभञ्जिका ।
140920 स्वरसस्येव दृश्यत्वमिता ब्रह्मणि दारुणि ॥ ४५ ॥

अनिखाता अनुत्कीर्णा। स्वरसस्य स्वसाक्षिणः शिल्पिनो दृश्यत्वं इतेव। ब्रह्मणि
दारुणीति व्यस्तरूपकम्॥ ४५॥

निखाता दृश्यतां यान्ति स्तम्भस्थाः शालभञ्जिकाः।
अस्मिन्नक्षोभ्य एवान्तस्तरङ्गाः सृष्टिदृष्टयः॥ ४६॥

तत्र यो विशेषस्तमाह - अस्मिन्निति। अक्षोभ्ये अविकार्ये विवर्तरूपास्तरङ्गाः॥ ४६॥

सरस्यतिरसे भान्ति चिद्घनामृतवृष्टयः।
अविभागे विभागस्था अक्षोभे क्षुभिता इव।
अविभाता विभान्तीव चिद्घने सृष्टिदृष्टयः॥ ४७॥

तमेवाह - सरसीति सार्धेन। अतिरसे निरतिशयानन्दजलपूर्णे चित्सरसि
चिन्मेघामृतवृष्टिप्रायाः सृष्टिदृष्टयो विभाजकधर्मशून्येऽपि विभागस्था
अक्षोभेऽपि क्षुभिता अविभाता एव विभान्तीवेत्यपि विशेष इत्यर्थः॥ ४७॥

परमाणौ परमाणावत्र संसारमण्डलम्।
विभाति भासुरारम्भं न विभाति च किंचन॥ ४८॥

तत्र अविभाता विभान्ति इत्येतद्विषदयति - परमाणाविति॥ ४८॥

आकाशकालपवनादिपदार्थजातमस्याङ्गमङ्गरहितस्य तदप्यनङ्गम्।
सर्वात्मकं सकलभावविकारशून्यमप्येतदाहुरजरं परमार्थतत्त्वम्॥ ४९
॥

वर्णितं कूटस्थस्य जगद्भावं संगृह्योपसंहरति - आकाशेति।
अङ्गरहितस्य निरवयवस्यास्य यदाकाशकालपवनादिपदार्थजातरूपमङ्गं
वर्णितं तदपि मिथ्यात्वादधिष्ठानमात्रपरिशेषाच्चानङ्गं निरवयवमेव।
एवं सकलभावविकारशून्यमप्येतदजरमात्मतत्त्वं सर्वाध्यारोपेण
सर्वात्मकं श्रुतय आहुरित्यर्थः॥ ४९॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाणप्रकरणे उ०
ब्रह्मस्वरूपवर्णनं नाम द्विपञ्चाशः सर्गः॥ ५२॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
ब्रह्मस्वरूपवर्णनं नाम द्विपञ्चाशः सर्गः॥ ५२॥

त्रिपञ्चाशः सर्गः ५३

श्रीराम उवाच।

यथा चेत्ये चेतनता यथा काले च कालता।
यथा च व्योमता व्योम्नि यथा च जडता जडे॥ १॥

अध्यारोपितचेत्यानां प्रातिस्विकभिदाजुषाम्।
भावस्त्वप्रत्ययाद्यर्थो ब्रह्मैवेत्युपवर्ण्यते॥

ब्रह्मणोऽध्यारोपितानिर्वचनीयजगद्रूपप्राप्तिक्रमे वर्णिते तत्र
कतिपयव्यक्तिष्वनुगतमितराभ्यो व्यावृत्तं त्वतलादिभावप्रत्ययाभिधेयं
यज्जात्यादिरूपं तत्स्वरूपं तत्त्वतो जिज्ञासू रामः पृच्छति - यथेत्यादिना।
चेत्ये स्मृतिविषये। चेतनता स्मृतिविषयभावः। वैषयिकाधारे ल्युटि तल्। चेत्यतेति

140973 यावत् ॥ १ ॥
140974
140975 यथा वायौ च वायुत्वमभूतादावभूतता ।
140976 यथा स्पन्दात्मनि स्पन्दो यथा मूर्ते च मूर्तता ॥ २ ॥
140977
140978 अभूतं वर्तमानं आदिपदाद्भविष्यच्च तत्र अभूतता ॥ २ ॥
140979
140980 यथा भिन्ने च भिन्नत्वं यथाऽनन्ते ह्यनन्तता ।
140981 यथा दृश्ये च दृश्यत्वं यथा सर्गेषु सर्गता ॥ ३ ॥
140982
140983 भिन्ने वस्तुकृतपरिच्छेदादिमति । अनन्ते तच्छून्ये ॥ ३ ॥
140984
140985 एतत्क्रमेण हे ब्रह्मन् वद मे वदता वर ।
140986 आदितः प्रतिपाद्यैव बोध्यन्ते ह्यल्पबोधिनः ॥ ४ ॥
140987
140988 एतदेवंरूपं सर्ववस्तूनामसाधारणं भावं बोधकोपायक्रमेण मे वद ।
140989 क्रमेणेत्युक्तेराशयमुद्घाटयति - आदित इति ॥ ४ ॥
140990
140991 श्रीवसिष्ठ उवाच ।
140992
140993 तदनन्तं महाकाशं महाचिद्घनमुच्यते ।
140994 अवेद्यचिद्रूपमयं शान्तमेकं समस्थिति ॥ ५ ॥
140995
140996 त्वत्पृष्टश्चेत्यादिवस्तूनां भावश्चिदात्मैव तस्यैव
140997 स्वाध्यस्तेष्वन्योन्यतादात्म्याध्यासेतद्भावताविभावनादित्युत्तरमभिप्रेत्य तस्य
140998 नित्यसद्रूपतां दर्शयितुमारभते - तदनन्तमित्यादिना । यत्त्वया पृष्टं
140999 तदिदमित्यर्थः ॥ ५ ॥
141000
141001 ब्रह्मविष्णवीश्वराद्यन्ते महाप्रलयनामनि ।
141002 शब्दार्थे रूढिमापन्ने यच्छुद्धमवशिष्यते ॥ ६ ॥
141003
141004 सर्वनाशे परिशिष्यमाणत्वात्स एव सर्ववस्तूनां भावः । भूधातोर्भवि घञि
141005 नित्यसत्तार्थे भावशब्दव्युत्पत्तेरित्याशयेनाह - ब्रह्मेति । शब्दार्थे नामरूपे ।
141006 अरूढिं तिरोभावमापन्ने । असन्मात्रप्रलयेन परिशिष्टे सच्छब्दार्थे रूढिं
141007 प्रसिद्धिमापन्ने इति वा ॥ ६ ॥
141008
141009 सर्गस्य कारणं तत्र न किंचिदुपपद्यते ।
141010 मलमाकारबीजादि मायामोहभ्रमादिकम् ॥ ७ ॥
141011
141012 ननु तदपि स्वकारणे लीयतां तेनासदस्तु तत्राह - सर्गस्येति । तत्र सदात्मनि
141013 सर्गस्य जन्मनः कारणं किंचिदपि नोपपद्यते । मलमायादीनां
141014 तदधीनसिद्धिकत्वादिति भावः ॥ ७ ॥
141015
141016 केवलं शान्तमत्यच्छमाद्यन्तपरिवर्जितम् ।
141017 तद्विद्यते यत्र किल खमपि स्थूलमश्मवत् ॥ ८ ॥
141018
141019 यत आद्यन्तपरिवर्जितमतस्तत्सदैव विद्यत इति सत्तार्थकभावशब्दार्थ इति भावः ॥ ८ ॥
141020
141021 न च नास्तीति तद्वक्तुं युज्यते चिद्वपुर्यदा ।
141022 न चैवास्तीति तद्वक्तुं युक्तं शान्तमलं तदा ॥ ९ ॥
141023
141024 तद्यदा शान्तमलं तदा अस्तीति वाच्यवृत्त्या वक्तुं न युज्यते तदा हि भविता स्यान्न

141025 भाव इति भावः ॥ ९ ॥
141026
141027 निमेषे योजनशते प्राप्तायामात्मसंविदि ।
141028 मध्ये तस्यास्तु यद्रूपं रूपं तस्य पदस्य तत् ॥ १० ॥
141029
141030 तादृशनिर्विषयचित्स्वभावस्यात्यन्ताप्रसिद्धिमनुभवप्रदर्शनेन वारयति -
141031 निमेषे इति । शाखाचन्द्रदर्शनकाले निमेषमात्रेण शाखोर्ध्वदेशे योजनशतं
141032 चाक्षुषवृत्तिद्वारा प्राप्तायां प्रमातृसंविदि शाखाचन्द्रयोर्मध्ये तस्या
141033 निर्विषयं रूपं प्रसिद्धमिति प्रागसकृद्दर्शितमेवेत्यर्थः ॥ १० ॥
141034
141035 सबाह्याभ्यन्तरे शान्ते वासनाविषयभ्रमे ।
141036 सर्वचिन्ताविहीनस्य प्रबुद्धस्यार्धरात्रतः ॥ ११ ॥
141037
141038 अर्धरात्रिपर्यन्तं गाढनिद्रया मनसो निद्राकालुष्येऽपनीते सति ततः
141039 समाध्यारूढानां योगिनां तद्रूपमनुभवसिद्धमित्याह - सबाह्येति
141040 द्वाभ्याम् ॥ ११ ॥
141041
141042 शान्तं निःसुखदुःखस्य पुरुषस्यैव तिष्ठतः ।
141043 यदस्पन्दि मनोरूपं रूपं तस्य पदस्य तत् ॥ १२ ॥
141044
141045 तृणगुल्माङ्कुरादीनां सत्तासामान्यमाततम् ।
141046 यदुद्भवोद्भवं रूपं रूपं तस्य पदस्य तत् ॥ १३ ॥
141047
141048 तृणानां गुल्मानामङ्कुरकाण्डतरुविटपादीनां च सर्वपदार्थानामुद्भवे
141049 उद्भवं तदनुषक्ततयाविर्भूतं यत्सत्तासामान्यमाततमनुगतं रूपं तदेव
141050 त्वत्प्रययाद्यर्थ इत्यर्थः । तथा चोक्तं वाक्यपदीये सा सत्ता सा महानात्मा
141051 तामाहुस्त्वतलादयः इति ॥ १३ ॥
141052
141053 तस्मिन्पदे जगद्रूपं यदिदं दृश्यते स्फुटम् ।
141054 सकारणमिवाकारकरालमिव भेदवत् ॥ १४ ॥
141055
141056 तस्मिन्नेव सत्तासामान्यरूपे तादात्म्येनानुषक्तं व्यावृत्तमिव
141057 यद्घटपटादिजगद्रूपमागन्तुकत्वात्सकारणमिव कम्बुग्रीवाद्याकारैः करालमिव
141058 च भासते तत्सर्वमनृतम् अत एव कारणाभावान्न जातं न विद्यते चेति
141059 परेणान्वयः ॥ १४ ॥
141060
141061 तत्सर्वं कारणाभावान्न जातं न च विद्यते ।
141062 नाकारयुक्तं न जगन्न च द्वैतैक्यसंयुतम् ॥ १५ ॥
141063
141064 तत्तु सद्रूपं नाकारयुक्तम् अत एव न जगत् द्वैतैक्यादिनापि न संबद्धम् ॥ १५ ॥
141065
141066 यदकारणकं तस्य सत्ता नेहोपपद्यते ।
141067 स्वयं नित्यानुभूतेऽर्थे कोऽत्रापह्नवशक्तिमान् ॥ १६ ॥
141068
141069 तत्कुतस्तत्राह - यदिति । अत्रार्थे सर्वेषां स्वानुभव एव मानमित्याह -
141070 स्वयमिति ॥ १६ ॥
141071
141072 न च शून्यमनाद्यन्तं जगतः कारणं भवेत् ।
141073 ब्रह्मामूर्तं समूर्तस्य दृश्यस्याब्रह्मरूपिणः ॥ १७ ॥
141074
141075 अस्तु तर्ह्यसतो जगतः शून्यमेव कारणं तत्राह - न चेति । शून्यस्य कारणत्वे
141076 तस्य देशादिपरिच्छेदाभावात्सर्वं सर्वत्र सदा स्यादित्याशयेन विशिनष्टि -

141077 अनाद्यन्तमिति। अत एव न ब्रह्मापि कारणम्। अमूर्तस्य
141078 मूर्ताकारपरिणामायोगाच्चेत्याह - ब्रह्मेति। तथा च श्रुतिः
141079 तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूः इति॥ १७
141080 ॥
141081
141082 तस्मात्तत्र जगद्रूपं यदा भातं तदेव तत्।
141083 स्वयमेव तदा भाति चिदाकाशमिति स्थितम्॥ १८॥
141084
141085 तस्मादीदृशे ब्रह्मणि यज्जगद्रूपं भातं तद्ब्रह्मैव तथा भातमिति। ब्रह्मैव
141086 सर्ववस्तूनां भावस्त्वतलाद्यर्थ इत्युपसंहरति - तस्मादिति॥ १८॥
141087
141088 जगच्चिद्ब्रह्मभावाच्च तथा भावो भ्रमादिव।
141089 सर्वमेकमजं शान्तमद्वैतैक्यमनामयम्॥ १९॥
141090
141091 एवं जगतश्चिद्ब्रह्मभावादापातप्रतीतस्तथा भावो घटपटाद्याकारो भ्रमादिवेति
141092 सिद्धे सर्वत्र सर्वमेकमेव॥ १९॥
141093
141094 पूर्णात्पूर्णं विसरति पूर्णे पूर्णं विराजते।
141095 पूर्णमेवोदितं पूर्णे पूर्णमेव व्यवस्थितम्॥ २०॥
141096
141097 भ्रान्त्या तस्य जगज्जीवभावे भ्रान्त्यपगमे वास्तवब्रह्मभावे च पूर्णमदः
141098 पूर्णमिदम् इत्यादिश्रुतिः प्राग्दर्शितैवेत्यनुवदति - पूर्णादिति॥ २०॥
141099
141100 शान्तं समं समुदयास्तमयैर्विहीनमाकारमुक्तमजमम्बरमच्छमेकम्
141101 ।
141102 सर्वं सदा सदसदेकतयोदितात्म निर्वाणमाद्यमिदमुत्तमबोधरूपम्॥ २१॥
141103
141104 वर्णितरीत्या सर्वमाकारैर्मुक्तं सत् सदसदेकतया सदा उदितात्मेति
141105 यदिदमुत्तमबोधरूपं ब्रह्म परिशिष्टं तदेव निर्वाणमिति
141106 भावप्रत्ययार्थतत्त्वमित्यर्थः॥ २१॥
141107
141108 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु नि० उत्तरार्धे
141109 निर्वाणवर्णनं नाम त्रिपञ्चाशः सर्गः॥ ५३॥
141110
141111 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
141112 निर्वाणवर्णनं नाम त्रिपञ्चाशः सर्गः॥ ५३॥
141113
141114 चतुःपञ्चाशः सर्गः ५४
141115
141116 श्रीवसिष्ठ उवाच।
141117
141118 जगन्नाम नभः स्वच्छंन् सद्ब्रह्म नभसि स्थितम्।
141119 नभो नभसि भातीदं जगच्छब्दार्थ इत्यजम्॥ १॥
141120
141121 सर्वं वस्तु स्वभावस्थं स्वभावेन क्रियाभिदे।
141122 अविकारमतोऽद्वैतं सन्मात्रमिति वर्ण्यते॥
141123
141124 घटपटादीनां न घटत्वपटत्वाद्यनुल्लिख्य स्वरूपं भेदो वा निरूपयितुं
141125 शक्यम् घटघटत्वयोरपि परस्परं न निरवच्छिन्नप्रतियोगिताकौ भेदौ
141126 निरूपयितुं शक्याविति पृथक्करणे निर्विकल्पतया
141127 समाभासयोर्भावभवित्रोर्विभागस्य विकल्पमात्रत्वात्सर्ववस्तूनां भावमात्रत्वे
141128 घटे घटत्वमित्यादिशब्दार्थनिष्कर्षे ब्रह्म ब्रह्मणि स्थितमित्येव पर्यवस्यतीति

141129 प्रसाधितस्य भावप्रत्ययार्थनिष्कर्षस्य फलमिहोपपादयितुमारभते -
141130 जगन्नामेत्यादिना। घटत्वपटत्वादिभावेभ्यो निष्कृष्यमाणं जगन्नभ इव
141131 स्वच्छंन् निर्भेदकलङ्कमेव प्रसिद्धम्। तत्र च घटत्वपटत्वादिभावः
141132 प्रागुक्तरीत्या ब्रह्मैव स्थितम्। तथा चैवंदर्शने घटः पट इत्यादिभावे नभ एव
141133 नभसि भाति स एव जगच्छब्दस्य घटपटादिशब्दस्य चार्थस्तच्चाजं
141134 जन्मादिविकारशून्यमेवेति न कार्यकारणभावः कस्यचित्किंचित्प्रतीत्यर्थः॥ १॥
141135
141136 त्वमहं जगदित्यादि शब्दार्थो ब्रह्म ब्रह्मणि।
141137 शान्तं समसमाभासं स्थितमस्थितमेव सत्॥ २॥
141138
141139 अमुमेवार्थं पुनः स्पष्टमाह - त्वमहमिति। भावभवित्रोः पृथक्कृत्य
141140 दर्शने अत्यन्तैक्यदर्शनेऽपि वा सौक्ष्म्यादिना समसमाभासमेव
141141 पृथगस्थितमेव तथा सत्॥ २॥
141142
141143 समुद्रगिरिमेघोर्वीविस्फोटमयमप्यजम्।
141144 काष्ठमौनवदेवेदं जगद्ब्रह्मावतिष्ठते॥ ३॥
141145
141146 एवं समुद्रगिरिभेघोर्व्यादिविभागप्रचुरं
141147 विचित्रकारकक्रियाफलभेदैर्भासमानमपि तत्तद्भावभवितृतत्त्वं निष्कर्षे
141148 निष्क्रियं ब्रह्मैवावतिष्ठत इत्यर्थः॥ ३॥
141149
141150 द्रष्टा द्रष्टैव दृश्यस्य स्वभावात्स्वात्मनि स्थितः।
141151 कर्ता कर्तैव कर्तव्याभावतः कारणादृते॥ ४॥
141152
141153 तदेव द्रष्ट्रादिविभागप्रचुरं विचित्रकारकेषु तत्तद्भावनिष्कर्षेण प्रपञ्चयति ##-
141154 स्थितः सन् तद्द्रष्टैव भवति एवं कर्तापीत्यर्थः॥ ४॥
141155
141156 न ज्ञत्वं न च कर्तृत्वं न जडत्वं न भोक्तृता।
141157 न शून्यता न चार्थत्वमिह नापि नभोर्थता॥ ५॥
141158
141159 अनया दृष्ट्या सर्वजगद्वैचित्र्यमपमार्ष्टुं शक्यमिति दर्शयति - नेति॥ ५॥
141160
141161 शिलाजठरवत्सत्यं घनमेकमजं ततम्।
141162 सर्वं शान्तमनाद्यन्तमेक विधिनिषेधयोः॥ ६॥
141163
141164 भावाभावविभागस्याप्यपमार्जनाद्विधिनिषेधयोरेकम्॥ ६॥
141165
141166 मरणं जीवितं सत्यमसत्यं च शुभाशुभम्।
141167 सर्वमेकमजं व्योम वीचिजालजलं यथा॥ ७॥
141168
141169 विभाग एव दृश्यत्वं द्रष्टृत्वं चैव गच्छति।
141170 एतच्च कल्पनं स्वप्नपुरादिष्वनुभूयते॥ ८॥
141171
141172 ब्रह्मणो जीवभावेन विभागे सत्येकमेव चिदंशप्राधान्येन द्रष्टृतां
141173 तदंशप्राधान्येन चिद्रूपं तिरोधाय दृश्यतां चैव गच्छति। यथा स्वप्ने
141174 व्यावहारिकजीवात्प्रातिभासिकजीवस्य विभागे स्वापतिरोहितो व्यावहारिकजीवः
141175 स्वाप्नजीवदृश्यपुरादिभावं गच्छति तद्वदित्यर्थः॥ ८॥
141176
141177 एवमच्छं पराकाशे स्वप्नपत्तनवज्जगत्।
141178 भाति प्रथममेवेदं ब्रह्मैवेत्थमतः स्थितम्॥ ९॥
141179
141180 प्रथमं निष्प्रपञ्चं यद्ब्रह्म तदेवातो जीवात्मना विभागादित्थं जगद्भावेन

141181 स्थितम् ॥ ९ ॥
141182
141183 तदिदं तादृशं विद्धि सर्वं सर्वात्मकं च यत् ।
141184 देशाद्देशान्तरप्राप्तौ विदो मध्यमनङ्कितम् ॥ १० ॥
141185
141186 तत्तस्मादिदं सर्वात्मकं जगद्रूपं प्रथमं यादृशं निष्प्रपञ्चं
141187 तादृशमेव सदेति विद्धि । तादृशं निष्प्रपञ्चमनावृतं चितो
141188 रूपमप्रसिद्धमिति तु न वाच्यम् ।
141189 शाखाचन्द्रोभयदर्शनवृत्त्यभिव्यक्तचितस्तदुभयमध्यमप्रदेशो तथा
141190 प्रसिद्धेः प्रागसकृदुक्तत्वादित्याह - देशादिति । अनङ्कितं
141191 विषयविशेषेणाचिह्नितम् ॥ १० ॥
141192
141193 चिद्व्योम्नः शान्तशान्तस्य मध्यमे चैवमास्थितम् ।
141194 जगत्तथैव सलिलमेवोर्म्यादितया यथा ॥ ११ ॥
141195
141196 इदानीमपि प्रत्यग्दृष्ट्या पर्यालोचने तद्रूपं सुदर्शमित्याशयेन दृष्टान्तः
141197 सलिलमेवेति ॥ ११ ॥
141198
141199 यदुदेत्युदितं यच्च यच्च नोदेति नोदितम् ।
141200 देशाद्देशान्तरप्राप्तौ विदो मध्यान्न भेदितम् ॥ १२ ॥
141201
141202 सर्व जगत्तादृशनिर्विषयचैतन्याभिन्नमेवेत्याह - यदिति । उदेत्युदितं च
141203 कार्यरूपं नोदेति नोदितं च कारणरूपम् । न भेदितं न भिन्नम् । स्वार्थण्यन्तात्
141204 क्तः ॥ १२ ॥
141205
141206 अतः किलास्य सर्गस्य कारणं शशशृङ्गवत् ।
141207 प्रयत्नेनापि चान्विष्टं न किंचिदुपलभ्यते ॥ १३ ॥
141208
141209 अस्त्वभिन्नं किं ततस्तत्राह - अत इति ॥ १३ ॥
141210
141211 यदकारणकं भाति तदभातं भ्रमात्मकम् ।
141212 भ्रमस्यासत्यरूपस्य सत्यता कथमुच्यते ॥ १४ ॥
141213
141214 ततोऽपि किं तत्राह - यदिति ॥ १४ ॥
141215
141216 कारणेन विना कार्यं किल किं नाम विद्यते ।
141217 यदपुत्रस्य सत्पुत्रदर्शनं स भ्रमो न सत् ॥ १५ ॥
141218
141219 यदपुत्रस्य वन्ध्यापतेः स्वप्ने सत्पुत्रदर्शनं स भ्रम एवेत्यर्थः ॥ १५ ॥
141220
141221 यस्त्वकारणको भाति स स्वभावो विजृम्भते ।
141222 सर्वरूपेण संकल्पगन्धर्वनगरादिवत् ॥ १६ ॥
141223
141224 स्वभावो द्रष्टृचिदेव स्वरूपं जहत्तथा विजृम्भते ॥ १६ ॥
141225
141226 देशाद्देशान्तरप्राप्तौ क्षणान्मध्यं विदो वपुः ।
141227 स्वरूपमजहत्त्वेव राजतेऽर्थविवर्तवत् ॥ १७ ॥
141228
141229 क्व तर्हि स्वरूपमजहद्राजते तत्राह - देशादिति । शाखाचन्द्रदेशयोरेव
141230 परमार्थविवर्तवदित्युभयरूपकचनं तत्र प्रसिद्धमित्यर्थः ॥ १७ ॥
141231
141232 बोध एव कचत्यर्थरूपेण स च स्वादणुः ।

दृष्टान्तोऽत्रानुभूतोऽन्तः स्वप्नसंकल्पपर्वतः ॥ १८ ॥

असत्यप्यर्थे बोधोऽर्थरूपेण कचते इत्यर्थेऽपि दृष्टान्तावाह - बोध एवेति ॥ १८ ॥

श्रीराम उवाच ।

विद्यते वटबीजान्तर्यथा भाविमहाद्रुमः ।
परमाणौ तथा सर्गो ब्रह्मन्कस्मान्न विद्यते ॥ १९ ॥

बोध एवार्थरूपेण कचतीति किमर्थं कल्प्यते वटबीजान्तः सूक्ष्मो वृक्ष इव
बोधान्तर्जडात्मकः प्रपञ्चो लक्ष्य एव प्राक् स्थित इत्येव कुतो वा न कल्प्यत इति रामः
शङ्कते - विद्यत इति ॥ १९ ॥

श्रीवसिष्ठ उवाच ।

यत्रास्ति बीजं तत्र स्याच्छाखा विततरूपिणी ।
जन्यते कारणैः सा च वितता सहकारिभिः ॥ २० ॥

साकारे हि बीजेऽन्तर्निराकारो वटः प्रागभूत् स च भूजलादि
सहकारिकारणसमवधानेऽङ्कुरादिक्रमेणाविरभूत् । न च सर्वजगत्प्रलये
किंचित्साकारं संभवति सहकारिणो वा लक्ष्यन्त इति विषमो दृष्टान्त इत्युत्तरं
वसिष्ठ आह - यत्रेत्यादिना ॥ २० ॥

समस्तभूतप्रलये बीजमाकारि किं भवेत् ।
सहकार्यथ किं तस्य जायते यद्वशाज्जगत् ॥ २१ ॥

आकारोऽस्यास्तीत्याकारि किं बीजं भवेत् । एवं सहकार्यपि तस्य बीजस्य किं भवेत् ॥ २१॥

यत्तु ब्रह्म परं शान्तं का तत्राकारकल्पना ।
परमाणुत्वयोगोऽपि नात्र केवात्र बीजता ॥ २२ ॥

ननु ब्रह्मैव तत्र जगच्छक्तिगर्भं बीजमस्तु तत्राह - यत्त्विति ।
अत्रास्मिन्ब्रह्मणि परमाणुत्वयोगोऽपि नास्ति आकारकल्पना दूरापास्तेत्यर्थः ॥ २२ ॥

कारणस्येति बीजस्य सत्यासत्यैककारिणः ।
असंभवाज्जगत्सत्ता कथं केन कुतः क्व का ॥ २३ ॥

अत एव कारणासंभवः प्रागुक्त इत्याह - कारणस्येति । इति अनया रीत्या ॥ २३ ॥

जगदास्ते परस्याणोरन्तरित्यपि नोचितम् ।
सार्षपे कणके मेरुरास्त इत्यज्ञकल्पना ॥ २४ ॥

यदि तु अणुः पन्था विततः पुराणः अणोरणीयान्
इत्यादिश्रुतिबलादणुत्वमभ्युपगम्येत तथापि तत्र जगत्स्थितिर्दुरुपपादेत्याह -
जगदिति ॥ २४ ॥

सति बीजे प्रवर्तन्ते कार्यकारणदृष्टयः ।
निराकारस्य किं बीजं क्व जन्यजनकक्रमः ॥ २५ ॥

यदि तु जगदपि निराकारमेवेत्यभ्युपगम्येत तर्हि सुतरां
बीजाद्यसंभवात्तादृशब्रह्मतैव पर्यवसितेत्याह - सतीति द्वाभ्याम् ॥ २५ ॥

अतो यत्परमं तत्त्वं तदेवेदं जगत्स्थितम् ।
नेह प्रथयते किंचिन्न च किंचिद्विनश्यति ॥ २६ ॥

प्रथयते आविर्भूय स्वरूपं प्रख्यापयति ॥ २६ ॥

चिदाकाशश्चिदाकाशे हृदि चित्त्वाज्जगद्भ्रमम् ।
अशुद्धवदिवाशुद्धे शुद्धं शुद्धे प्रपश्यति ॥ २७ ॥

किं तर्हि तत्तदाह - चिदाकाश इति ॥ २७ ॥

स्वमेवाभासते तस्य रूपं स्पन्द इवानिले ।
सर्गशब्दार्थकलना नेह काश्चन सन्ति नः ॥ २८ ॥

यथा शून्यत्वमाकाशे द्रवत्वं च यथा जले ।
अन्यतात्ममयी शुद्धा सर्गतेय तथात्मनि ॥ २९ ॥

आत्ममयी स्वविवर्तरूपा स्वान्यता ॥ २९ ॥

भारूपमिदमाशान्तं जगद्ब्रह्मैव नस्ततम् ।
अनादिनिधनं सत्यं नोदेति न च शाम्यति ॥ ३० ॥

अविवर्तं तर्हि कीदृक् तदाह - भारूपमिति ॥ ३० ॥

देशाद्देशान्तरप्राप्तौ क्षणान्मध्ये विदो वपुः ।
यत्तज्जगदितीवेदं व्योमात्मनि व्यवस्थितम् ॥ ३१ ॥

तदप्रसिद्धिस्तु बहुशो वारितेति स्मारयति - देशादिति ॥ ३१ ॥

यथा स्पन्दोऽनिले तोये द्रवत्वं व्योम्नि शून्यता ।
तथा जगदिदं भातमनन्याश्लेषमात्मनि ॥ ३२ ॥

अन्येन वस्त्वन्तरेणाश्लेषः संबन्धस्तच्छून्यम् । असङ्गाद्वयमिति यावत् ॥ ३२ ॥

संविन्नभो ननु जगन्नभ इत्यनर्कमात्मन्यवस्थितमनस्तमयोदयं क्व ।
तत्त्वङ्गभूतमखिलं तदनन्यदेव दृश्यं निरस्तकलनोऽम्बरमात्रमास्व
॥ ३३ ॥

वर्णितं सर्वं जगतश्चित्स्वभावमात्रत्वं संगृह्योपदिशन्नुपसंहरति -
संविदिति । हे राम जगत् आत्मनि परमार्थस्वभावेऽवस्थितं सत् । नन्विति निश्चयेन
संविन्नभ एव शून्यतापन्नं सत्प्रसिद्धं नभ एव किं न स्यात्तत्राह - नभ
इति । अनर्कं सूर्यरहितं तदस्तमयोदयरहितं च आत्मनि स्वरूपमात्रेऽवस्थितं च
नभ इति क्व प्रसिद्धम् । न हि नभः सच्चित्स्वभावमर्कादिशून्यंन् वा प्रसिद्धमपि
तु जडं शून्यम् । किं च सर्वदृश्यानां यत्तत्त्वं सच्चित्स्वभावरूपं
तदनुविद्धत्वेन भानात्तदङ्गभूतमेवाखिलं प्रसिद्धं न शून्यनभोङ्गम्
येन तन्मात्रं स्यात् । अतस्तेन सच्चिदात्मनैवानन्यत् । तस्मात्त्वमपि
निरस्तसकलदृश्यश्चिदम्बरमात्रं सन् आस्व तिष्ठेत्यर्थः ॥ ३३ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वाणप्रकरणे उत्तरार्धे
अद्वैतैक्यप्रतिपादनं नाम चतुःपञ्चाशः सर्गः ॥ ५४ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
अद्वैतैक्यप्रतिपादनं नाम चतु पञ्चाशः सर्गः ॥ ५४ ॥

पञ्चपञ्चाशः सर्गः ५५

श्रीवसिष्ठ उवाच।

भावाभावग्रहोत्सर्गस्थूलसूक्ष्मचराचराः।
आदावेव हि नोत्पन्नाः सर्गादौ कारणं विना॥ १॥

अन्यभावनयान्यां स्वां पश्यन्ती चिज्जगत्स्थिता।
स्वभावनादनन्येति परमार्थमयं जगत्॥

एवं जगत आत्यन्तिके ब्रह्माभेदे अनुत्पत्तिरेव फलितेत्याह - भावेति॥ १॥

न त्वमूर्तो हि चिद्धातुः कारणं भवितुं क्वचित्।
स्वात्मा शक्तः स मूर्तानां बीजमुर्वीरुहामिव॥ २॥

उत्पत्तिवादे त्ववश्यं बीजं वाच्यं तत्तु दुर्वचमित्यसकृदुक्तं स्मारयति - न
त्विति॥ २॥

स्वभावमेव सततं भावयन्भावनात्मकम्।
आत्मन्येव हि चिद्धातुः सर्वोऽनुभववान्स्थितः॥ ३॥

अत एव तत्त्ववित्सर्वं जगच्चित्स्वभावमेव भावयंस्तद्भावेनैव स्थित इत्याह -
स्वभावमेवेति। सर्गानुभववान् इति पाठे तु अज्ञश्चिद्धातुरात्मन्येव
सर्गस्वभावं भावयंस्तथानुभववान्स्थित इति व्याख्येयम्॥ ३॥

आस्वादयति यं भावं चिद्धातुर्गगनात्मकः।
लब्धः सर्गः प्रलापेन क्षीबः क्षुब्धतया यथा॥ ४॥

अत एवाज्ञात्मना स्वभावभावनानुरूपः सर्गो लब्ध इत्याह - आस्वादयतीति।
यथा मदिरादिक्षुब्धतया आत्मनैव क्षीवः खात्मा लब्धस्तद्वत्॥ ४॥

यदा सर्वमनुत्पन्नं नास्त्येवापि च दृश्यते।
तदा ब्रह्मैव विद्धीदं समं शान्तमसत्समम्॥ ५॥

अत एवानुत्पन्नवस्त्वन्तरस्वभावदर्शने तद्भावस्थितिरिति विद्धीत्याह - यदेति॥ ५॥

चिन्नभश्चिन्नभस्येव पयसीव पयोद्रवः।
चित्त्वात्कचति यत्तेन तदेवेदं जगत्कृतम्॥ ६॥

कथं तर्हि तेनेदं जगत्कृतमिति श्रुत्यादिप्रवाद उपपन्नस्तत्राह - चिन्नभ इति।
यद्यस्मात्तेन चिदात्मना निमित्तेनेदमध्यस्तं जगत्कचति तेन हेतुना जगद्ब्रह्मैव
जगदाकारेण तेनैव कृतमिति प्रवाद इति शेषः॥ ६॥

स्वप्ने तदेवजगदित्युदेति विमला यथा।
काचकस्येव कचति तथेत्थं सादि सर्गखे॥ ७॥

स चायं स्वप्नद्रष्टुः अथ रथान् रथयोगान् पथः सृजते इति श्रुतौ
तत्स्रष्टृताप्रवादवदित्याह - स्वप्ने इति। यथा वा काचकदूषितनेत्रस्य नभसि
केशोण्ड्रकादिकचति तथा इत्थं विचित्रं सादिरूपं सर्गात्मभाविते चिदाकाशे
कचतीत्यर्थः॥ ७॥

141389 चित्काचकस्य कचनं यथा स्वप्ने जगद्भवेत् |
141390 तथैव जाग्रदविधं तत्खमात्रमिदं स्थितम् || ८ ||
141391
141392 तत्तस्मात्खमात्रं चिदाकाशमात्रम् || ८ ||
141393
141394 आदिसर्गे हि चित्स्वप्नो जाग्रदित्यभिशब्द्यते |
141395 अद्य रात्रौ चितेः स्वप्नः स्वप्न इत्यपि शब्द्यते || ९ ||
141396
141397 कस्तर्हि तथा सति जाग्रत्स्वप्नयोर्भेदस्तमाह - आदीति | आदौ प्रवृत्ते
141398 हिरण्यगर्भात्मकसर्गे | अद्य रात्रौ प्रवृत्ते
141399 स्वस्वव्यष्ट्यन्तःकरणमात्रपरिणामरूपे सर्गे यश्चितेः स्वप्नः || ९ ||
141400
141401 पूर्वप्रवृत्ता सरितां रूढाद्यापि यथास्थिता |
141402 तरङ्गलेखा दृष्टीनां पदार्थरचना तथा || १० ||
141403
141404 आदिसर्गसंकल्प एवामहाप्रलयं सर्वपदार्थस्वभावव्यवस्थापिका
141405 नियतिस्तदनुसारेणैवाद्यापि यथास्थितं पदार्थरचना रूढा यथापूर्वप्रवृत्ता
141406 सरितां तरङ्गरेखा दृष्टीनां प्रत्यक्षा रूढेत्यन्वयः || १० ||
141407
141408 यथा वारितरङ्गश्रीः सरितां रचना मिता |
141409 तथा चिद्व्योम्नि चिद्बीजसत्तान्तःसृष्टितामिता || ११ ||
141410
141411 तथा च वारिसत्तातिरिक्तसत्ता यथा तरङ्गश्रियो नास्ति एवं जगतश्चित्सत्तातिरिक्ता सा
141412 नास्तीत्याशयेन ब्रह्मोपादानकताप्रवाद इत्याशयेनाह - यथेति || ११ ||
141413
141414 मृतस्यात्यन्तनाशश्चेत्तन्निद्रासुखमेव तत् |
141415 भूयश्चोदेति संसारस्तत्सुखं नवमेव तत् || १२ ||
141416
141417 एवं जगतः पृथक्सत्ताभावे जन्ममरणभीतिप्रसक्तिरेव नास्ति प्रत्युतोभयथापि
141418 सुखमेवेत्याह - मृतस्येति | यदि मृतस्यात्यन्तासत्त्वं तथापि
141419 ब्रह्मसुखसत्ताया एव तत्तन्नाशोभयसत्तात्मनः परिशेषान्निद्रायां सुषुप्तौ
141420 निरतिशयानन्दत्वेन प्रसिद्धं सुखमेव प्राप्त भूयश्च पुनर्मृतौ
141421 देहाद्यात्मना संसारो यद्युदेति तत्तस्य नवं संसाररूपमपि तदेव सुखं न हि
141422 सुखान्यसत्तास्तीति न क्वचिद्भयप्रसक्तिरित्यर्थः || १२ ||
141423
141424 कुकर्मभ्यस्तु चेद्भीतिः सा समेह परत्र च |
141425 तस्मादेते समसुखे सर्वेषां मृतिजन्मनी || १३ ||
141426
141427 ननु मृतस्य कुकर्मभ्यो नरकादिदुःखसंभावनाद्भयं किं न
141428 स्यादित्याशङ्कामुत्थाप्याह - कुकर्मभ्य इति | सा भीतिरिह जीवतः परत्र मृतस्य
141429 च समा नरकादेर्जीवनस्य च ब्रह्मसुखसत्तातिरिक्तसत्ताभावाद्दुःखस्यापि
141430 सुखसत्तयैव स्थितेर्विशेषाभावादित्यर्थः || १३ ||
141431
141432 मरणं जीवितं वास्तु सहजे वासने तयोः |
141433 इति विश्रान्तचित्तो यः सोऽन्तःशीतल उच्यते || १४ ||
141434
141435 तयोर्मरणजीवितयोर्वासने सौक्ष्म्येण स्थितिरूपे सत्ते सहजे स्वाभाविकब्रह्मसुखरूपे
141436 || १४ ||
141437
141438 सर्वसंवित्तिविगमे संविद्रोहति यादृशी |
141439 भूयते तन्मयेनैव तेनासौ मुक्त उच्यते || १५ ||
141440

141441 तेन दृश्यबन्धस्य पृथक्सत्तापगमेनासौ मुक्त उच्यते ॥ १५ ॥
141442
141443 अत्यन्ताभावसंवित्त्या सर्वदृश्यस्य वेदनम् ।
141444 उदेत्यपास्तसंवेद्यं सति वाऽसति सर्गके ॥ १६ ॥
141445
141446 एवं दृश्यस्यात्यन्ताभावसंवित्त्या परसत्तया सर्गके सत्यसति वा सर्वदृश्यस्य
141447 वेदनमपास्तसंवेद्यं निर्विषयमेवोदेतीति मुक्तत्वोपपत्तिरित्यर्थः ॥ १६ ॥
141448
141449 यन्न चेत्यं न चिद्रूपं यच्चितेरप्यचेतितम् ।
141450 तद्भावैक्यं गतास्तज्ज्ञाः शान्ता व्यवहृतौ स्थिताः ॥ १७ ॥
141451
141452 चेत्याभावादेव तत्सापेक्षचितिक्रियारूपं न ॥ १७ ॥
141453
141454 चित्काचकाचकच्यं यज्जगन्नाम्ना तदुच्यते ।
141455 अत्यच्छे परमाकाशे बन्धमोक्षदृशः कुतः ॥ १८ ॥
141456
141457 अभीक्ष्णं कचतीति कचकचस्तद्भावः काचकच्यम् ॥ १८ ॥
141458
141459 चिन्नभःस्पन्दमात्रात्म संकल्पात्मतया जगत् ।
141460 सद्भूतमयमेवेदं न पृथ्व्यादिमयं क्वचित् ॥ १९ ॥
141461
141462 नेह देशो न कालोऽस्ति न द्रव्यंन् न क्रिया न खम् ।
141463 सदिवाखिलमुच्छूनं वाप्यनुच्छूनमप्यसत् ॥ २० ॥
141464
141465 प्रतिभासमात्रेणोच्छूनं वाप्यनुच्छूनमेवेत्यसत् ॥ २० ॥
141466
141467 भाति केवलमेवेत्थं परमार्थघनं घनम् ।
141468 यन्न शून्यं न वाऽशून्यमत्यच्छं गगनादपि ॥ २१ ॥
141469
141470 साकारमप्यनाकारमसदेवातिभास्वरम् ।
141471 अतिशुद्धैकचिन्मात्रस्फारं स्वप्नपुरं यथा ॥ २२ ॥
141472
141473 निर्वाणमेवमिदमाततमित्थमन्तश्चिद्व्योम्न आविलमनाविलरूपमेव ।
141474 नानेव न क्वचिदपि प्रसृतं न नाना शून्यत्वमम्बर इवाम्बुनिधौ
141475 द्रवत्वम् ॥ २३ ॥
141476
141477 हे राम चिद्व्योम्न आविलं जगद्रूपमित्थमुक्तरीत्या अनाविलं रूपमाततं
141478 निर्वाणमेव । अनेन क्वचिदपि न प्रसृतं न किंतु सर्वत्र प्रसृतमेव । अम्बरे
141479 शून्यत्वमिव अम्बुधौ द्रवत्वमिव च इदं जगन्न नाना किंतु तदेवेत्यर्थः ॥ २३ ॥
141480
141481 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० निर्वाणप्रकरणे उ० जगतः
141482 परमार्थमयत्ववर्णनं नाम पञ्चपञ्चाशः सर्गः ॥ ५५ ॥
141483
141484 इति श्रीवासिष्ठमहारामायणता पर्यप्रकाशे न्निर्वाणप्रकरणे उत्तरार्धे जगतः
141485 परमार्थमयत्ववर्णनं नाम पञ्चपञ्चाशः सर्गः ॥ ५५ ॥
141486
141487 षट्पञ्चाशः सर्गः ५६
141488
141489 श्रीवसिष्ठ उवाच ।
141490
141491 सर्वत्र सर्वथा सर्वं सर्वदा व्योम्नि चिन्मये ।
141492 साधु संभवति स्वच्छं शून्यत्वं ख इवाखिले ॥ १ ॥

141493
141494 चिदेव सर्वं सर्वत्र सर्वं चिदिति निश्चितेः।
141495 दृढीकाराय पाषाणाख्यायिकात्रोपवर्ण्यते॥
141496
141497 चिन्मये व्योम्नि ब्रह्माकाशे तत्सत्तया सर्वत्र सर्वदा साधु असंकुचद्वृत्तितया
141498 संभवति तच्च सर्वं सर्वदा सर्वत्र स्वच्छमेव स्वमालिन्यलेशेनापि ब्रह्म न
141499 दूषयति। यथा खे शून्यत्वमखिले तस्मिन्नैल्यात्मना भासमानमपि न खं
141500 दूषयतीत्यच्छं तद्वदित्यर्थः॥ १॥
141501
141502 यत्र चित्तत्र सर्गश्रीरव्योम्नि व्योम्नि वास्ति चित्।
141503 चिन्मयत्वात्पदार्थानां सर्वेषां नास्त्यचित्क्वचित्॥ २॥
141504
141505 उक्तार्थे उपपत्तिमाह - यत्रेति। अव्योम्नि पृथिव्यादौ॥ २॥
141506
141507 पदार्थजातं शैलादि यथा स्वप्ने पुरादि च।
141508 चिदेवैकं परं व्योम तथा जाग्रत्पदार्थभूः॥ ३॥
141509
141510 सर्वस्य चिन्मात्रता स्वप्ने प्रसिद्धेति तद्दृष्टान्तेन जाग्रत्यपि तां साधयति -
141511 पदार्थजातमिति॥ ३॥
141512
141513 पाषाणाख्यानमत्रेदं शृणु राम रसायनम्।
141514 पूर्वं मयैव यद्दृष्टं चित्रं प्रकृतमेव च॥ ४॥
141515
141516 रसानां माधुर्यवैचित्र्याणां शृङ्गारादीनां चायनं स्थानं
141517 भ्रान्तिरोगभेषजं च विविधकथोपजृम्भितत्वाच्चित्रं विस्तरेण वर्णयितुं
141518 प्रकृतं प्रस्तुतं च॥ ४॥
141519
141520 अहं विदितवेद्यत्वात्कदाचित्पूर्णमानसः।
141521 त्यक्तुमिच्छुरिमं लोकव्यवहारं घनभ्रमम्॥ ५॥
141522
141523 ध्यानैकतानतामेत्य शनैर्विश्रान्तये चिरम्।
141524 त्यक्ताजवं जवीभाव एकान्तार्थी शमं व्रजन्॥ ६॥
141525
141526 इदं चिन्तितवानस्मि कस्मिंश्चिदमरालये।
141527 संस्थितो विविधाः पश्यन्भङ्गुरा जागतीर्गतीः॥ ७॥
141528
141529 अमरालये संस्थितोऽहमिदं वक्ष्यमाणं चिन्तितवानस्मि॥ ७॥
141530
141531 विरसा खल्वियं लोकस्थितिरापातसुन्दरी।
141532 न जातु सुखदा मन्ये कस्यचित्केनचित्क्वचित्॥ ८॥
141533
141534 केनचिदप्युपायेन प्रकारेण च। क्वचिद्देशे काले च॥ ८॥
141535
141536 उद्वेगं जनयत्यन्तस्तीव्रसंवेगखेदतः।
141537 इमा दृश्यदृशो द्रष्टुरिष्टानिष्टफलप्रदाः॥ ९॥
141538
141539 न सुखदेत्येतावदेव न किंतु दुरन्तदुःखदापीत्याह - उद्वेगमिति॥ ९॥
141540
141541 किमिदं दृश्यते किं वा प्रेक्षते कोऽहमेव वा।
141542 सर्वं शान्तमजं व्योम चिन्मात्रात्मनि रिङ्गकम्॥ १०॥
141543
141544 अल्पं रिङ्गणं रिङ्गकम् विवर्त इत्यर्थः॥ १०॥

141545
141546 तस्मात्समस्तसिद्धेन्द्रदेवदैत्यादिदुर्गमम् |
141547 सुप्रदेशमितो गत्वा संगोप्यात्मानमात्मना || ११ ||
141548
141549 तस्माद्विक्षेपोद्वेगस्यावश्यहेयत्वात्तद्धानायेत्यर्थः | आत्मानं स्वदेहमात्मना
141550 स्वेनैवान्तर्धानाद्युपायैः संगोप्य गूहयित्वा संरक्ष्य च || ११ ||
141551
141552 अदृश्यः सर्वभूतानां निर्विकल्पसमाधिगः |
141553 समे स्वच्छे पदे शान्ते आसे विगतवेदनम् || १२ ||
141554
141555 विगतबाह्यार्थवेदनं यथा स्यात्तथा || १२ ||
141556
141557 तस्मात्को नु प्रदेशः स्यादत्यन्तं शून्यतां गतः |
141558 यत्रैता नानुभूयन्ते पञ्च बाह्यार्थवेदनाः || १३ ||
141559
141560 शब्दकाननवार्यब्दभूतौघाभिसमाकुलाः |
141561 क्षोभयन्त्यथ संक्षुब्धास्तस्मान्मे गिरयोऽरयः || १४ ||
141562
141563 ननु गिरिशिखरप्रस्थद्रोण्यादयः सागरकुक्षितटादयः पातालकुहरादयश्च बहव
141564 एकान्तदेशाः प्रसिद्धास्ते कुतो नाध्यास्यन्ते समाध्यर्थन् तत्राह -
141565 शब्देत्यादिना | विक्षेपहेतुशब्दप्रचुरैः काननैर्वारिभिरब्दैर्मेघैः
141566 सिंहव्याघ्रादिभूतौघैश्चाभितः समाकुला गिरयः स्वयं संक्षुब्धाः
141567 सन्तोऽन्यानपि क्षोभयन्ति तस्मात्ते मे अरय इव प्रतिकूला इत्यर्थः || १४ ||
141568
141569 नानाविधा नगेन्द्राणामन्तरावलिता जनैः |
141570 देशा विषमया एव निःशेषा विषयाहिभिः || १५ ||
141571
141572 अन्तरा द्रोणीप्रदेशाः किरातादिजनैर्वलिता वेष्टिताः विषयाहिभिर्दूषितत्वाद्विषमता एव
141573 || १५ ||
141574
141575 जनैर्जलचरैर्व्याप्ताः सागरा नीरकुक्षयः |
141576 विविधारम्भसंक्षुब्धैर्नगराणीव नागरैः || १६ ||
141577
141578 विविधारम्भसंक्षुब्धैरित्युभयान्वयि || १६ ||
141579
141580 तटान्यद्र्यम्बुराशीनां लोकपालपुराणि च |
141581 भूताकुलानि शृङ्गाणि पातालकुहराणि च || १७ ||
141582
141583 अद्रीणां अम्बुराशीनां च तटानि शृङ्गाणि च || १७ ||
141584
141585 गायन्त्यनिलभांकारैर्नृत्यन्ति लतिकाः करैः |
141586 पुष्पैर्हसन्त्यगेन्द्राणां गुहा गहनकोटराः || १८ ||
141587
141588 गिरिगुहास्तर्हि सेव्यन्तां तत्राह - गायन्तीति | सिंहसर्पादिगर्भत्वाद्गहनकोटराः
141589 || १८ ||
141590
141591 मौनिमीनमुनिस्पर्शकम्पिनालचलाम्बुजाः |
141592 सरस्यो विरसा एव वार्यावर्तविराविताः || १९ ||
141593
141594 सन्तु तर्हि महासरांसि दक्षिणापथे सरस्य इति प्रसिद्धाः स्वतीरे समाधिहेतवस्तत्राह
141595 - मौनीति | दर्पभयव्याकुलानांन् मीनानां स्नानशीलानां मुनीनां च
141596 स्पर्शैः क्रीडास्नानाद्यभिघातैः कम्पनशीलैर्नालैश्चलान्यम्बुजानि यासु

141597 तथाविधाः सरस्यो वार्यावर्तैर्विराविताः सत्यः समाधिमङ्गहेतुत्वान्मम विरसा
141598 एव यतोऽहंन् तदा मौनान्न तन्निवारणसमर्थः ॥ १९ ॥
141599
141600 पवनस्पर्शसंक्षुब्धतृणपांसुपताकिनी ।
141601 रटत्यनिलभांकारैर्निर्झरोर्व्यप्यसंयता ॥ २० ॥
141602
141603 अस्तु तर्हि निर्झरोर्वी ते विश्रान्तिहेतुस्तत्राह - पवनेति । असंयता अनियता ।
141604 अनिवारितविक्षेपेति यावत् ॥ २० ॥
141605
141606 तस्मादाकाशमाशून्यं कस्मिंश्चिद्दूरकोणके ।
141607 अत्र तिष्ठाम्यवष्टभ्य योगयुक्तिमनिन्दिताम् ॥ २१ ॥
141608
141609 परिशेषादाकाश एव सर्वविक्षेपहेतुवर्जनाच्छरणमित्याशयेनाह - तस्मादिति ॥
141610 २१ ॥
141611
141612 कस्मिंश्चिदेककोणेऽत्र कृत्वा कल्पनया कुटीम् ।
141613 वज्रोदरदृढं तस्यामन्तस्तिष्ठाम्यवादनम् ॥ २२ ॥
141614
141615 वज्रोदरदृढमिति पूर्वोत्तरोभयक्रियाविशेषणम् ॥ २२ ॥
141616
141617 इति संचिन्त्य यातोऽहमाकाशमसि निर्मलम् ।
141618 यावत्तदपि पश्यामि सकलं विततान्तरम् ॥ २३ ॥
141619
141620 विततान्तरं विक्षेपहेतुसहस्रव्याप्तगर्भम् ॥ २३ ॥
141621
141622 क्वचिद्भ्रमत्सिद्धगणं क्वचिदुद्गर्जदम्बुदम् ।
141623 क्वचिद्विद्याधराधारं यक्षोत्क्षिप्तक्षयं क्वचित् ॥ २४ ॥
141624
141625 विक्षेपहेतुबाहुल्यमेव विशेषणैः सर्वतः प्रपञ्चयति - क्वचिदित्यादिना ॥ २४ ॥
141626
141627 क्वचिद्भ्रमत्पुरवरं प्रारब्धसमरं क्वचित् ।
141628 क्वचिद्द्रवज्जलधरं क्वचिदुद्वृत्तयोगिनि ॥ २५ ॥
141629
141630 उद्वृत्ता उन्मादरौद्रवृत्ता योगिन्यो यत्र ॥ २५ ॥
141631
141632 क्वचिद्दैत्यपुरोड्डीनसगन्धर्वपुरं क्वचित् ।
141633 क्वचिद्भ्रमद्ग्रहगणं तारकाकुलितं क्वचित् ॥ २६ ॥
141634
141635 आसनैर्दैत्यपुरैरुड्डीनानि सगन्धर्वाण्येव देवपुराणि यत्र ॥ २६ ॥
141636
141637 क्वचित्खे खगसंघृष्टं क्वचित्क्रुद्धमहानिलम् ।
141638 क्वचिदुत्पातवलितं क्वचिन्मण्डलमण्डितम् ॥ २७ ॥
141639
141640 मण्डलैर्मेघादिचक्रवालैर्मण्डितम् ॥ २७ ॥
141641
141642 क्वचिदपूर्वभूतौघं नागरावलितं क्वचित् ।
141643 क्वचिदर्करथाक्रान्तं क्वचिदन्यरथोद्धुरम् ॥ २८ ॥
141644
141645 अपूर्वाः अपूर्वदृष्टविचित्राकारा भूतौघाः पिशाचसङ्घा यस्मिन् ।
141646 नागरैर्नगरसमूहैरावलितम् । अन्येषां चन्द्रादिग्रहाणां रथैरुद्धुरम् ॥ २८ ॥
141647
141648 क्वचिदादित्यदाहान्तं शशिशैत्यान्वितं क्वचित् ।

क्वचित्क्षुद्रजनासह्यं क्वचिदग्न्यौष्ण्यदुर्गमम् ॥ २९ ॥

आदित्यसंनिधेदहैरन्तो मृत्युः प्राणिनां यत्र। क्षुद्रजनैर्भूतप्रेतादिभिरसह्य
बीभत्सम् ॥ २९ ॥

क्वचिदुत्तालवेतालं गरुडोड्डामरं क्वचित्।
क्वचित्सप्रलयाम्भोदं क्वचित्सप्रलयानिलम् ॥ ३० ॥

ततो भूतगणांस्त्यक्त्वा दूराद्दूरतरं गतः।
प्राप्तवानहमेकान्तं शून्यमत्यन्तविस्तृतम् ॥ ३१ ॥

अत्यन्तमन्दपवनं स्वप्नेऽप्यप्राप्यभूतकम्।
मङ्गलोत्पातरहितमगम्यं विद्धि संसृतेः ॥ ३२ ॥

मङ्गलैः शुभचिह्नैरुत्पातैरशुभचिह्नैश्च रहितम् ॥ ३२ ॥

कल्पिताथ मया तत्र कुटी प्रकटकोटरा।
नीरन्ध्रकुड्यनिबिडा पद्मकुड्मलसुन्दरी ॥ ३३ ॥

कल्पिता सत्यसंकल्पेन निर्मिता ॥ ३३ ॥

घुणक्षुण्णाङ्गपूर्णेन्दुबिम्बोदरमनोहरा।
कह्लारकुन्दमन्दारपुष्पश्रीकोशशोभिता ॥ ३४ ॥

घुणैः कीटभेदैः क्षुण्णं छिद्रीकृतं पूर्णे दुबिम्बोदरमिव
मनोहरेत्यभूतोपमा ॥ ३४ ॥

समस्तभूतागम्यत्वं तत्र संकल्प्य चेतसा।
अगम्ये सर्वभूतानामहमासं तदा ततः ॥ ३५ ॥

तत्र अहं चेतसा समस्तभूतागम्यत्वं संकल्प्य
वक्ष्यमाणलक्षणनिर्विकल्पसमाधिस्थः आसमिति व्यवहितेनान्वयः ॥ ३५ ॥

बद्धपद्मासनः शान्तमनाः परममौनवान्।
संवत्सरशतान्तेन निर्णीयोत्थानमात्मनः ॥ ३६ ॥

निर्विकल्पसमाधिस्थो निद्रामुद्रामिवागतः।
समः सौम्यनभःस्वस्थः समुत्कीर्ण इवाम्बरात् ॥ ३७ ॥

चिरं यदनुसंधत्ते चेतः पश्यति तत्क्षणात्।
चिरेण चाशापवनव्यक्तिवद्विततं यदा ॥ ३८ ॥

तदा वर्षशतेनात्र बोधबीजं वृतान्तरम्।
आसीन्मे हृदयक्षेत्रे कालमेकं विकासतः ॥ ३९ ॥

पुनः शतवर्षोत्तरं समाधेर्व्युत्थाने निमित्तमाह - चिरमिति। ततश्चिरेण
वर्षशतान्ते चित्तमाशावत्पवनवच्च यदा विततं तदा बोधबीजं व्युत्थाननिमित्तं
कर्म हृदयक्षेत्रे एकं कालं विकासतो वृतमान्तरं मध्यभागो यस्य
तथाविधमासीदिति परेणान्वयः। नासापवनव्यक्तिवत् इति पाठे
प्राणाभिव्यक्तिवदित्यर्थः ॥ ३८ ॥ ३९ ॥

संप्रबुद्धोऽभवन्मेऽथ जीवः संबुद्धवेदनः।

141701 शिशिरक्षीणगात्रस्य मधाविव रसस्तरोः ॥ ४० ॥
141702
141703 मधौ चैत्रमासे ॥ ४० ॥
141704
141705 तच्छतं तत्र वर्षाणां निमेषमिव मे गतम् ।
141706 बह्व्योऽपि कालगतयो भवन्त्येकधियो मनाक् ॥ ४१ ॥
141707
141708 एकधिय एकाग्रचित्तस्य मनाक् अत्यल्पा भवन्ति ॥ ४१ ॥
141709
141710 विकासमागतो बाह्यं गतो बुद्धीन्द्रियक्रमः ।
141711 वासन्तः पुष्परूपेण मदस्येव रसो मम ॥ ४२ ॥
141712
141713 तदनन्तरं ते किमभूत्तत्राह - विकासमिति । वृक्षाणां मदस्य
141714 पल्लवादिपुष्टिहेतोर्हर्षस्य निमित्तभूतोऽन्तर्गतो रसः पुष्परूपेणेव ॥ ४२ ॥
141715
141716 मां प्राणपूरितमुपागतसंविदंशमभ्यागतं त्वहमिति प्रसृतः
141717 पिशाचः ।
141718 इच्छाङ्गनाविवलितोऽथ कुतोऽपि सद्यः प्रोन्नामसन्नमनवायुरिवोग्रवृक्षम् ॥
141719 ४३ ॥
141720
141721 ततः किमासीत्तदाह - मामिति । अयं प्राणैः पञ्चवृत्तिवायुभिरिन्द्रियैश्च
141722 पूरितं तद्वशादेव उपागत आविर्भूतो जीवसंविदंशो यस्य तथाविधं देहं
141723 सद्यः अभ्यागतं तु मामभिलक्ष्य इच्छालक्षणया अङ्गनया पिशाच्या विवलितः
141724 परिष्वक्तः अहमिति प्रसिद्धोऽहंकारपिशाचः कुतोऽप्यतर्कितात्प्रदेशात्प्रसृतः
141725 प्राप्तः । यथा उग्रं शाल्मल्यादिवृक्षं प्रोन्नामानां तरूणां सन्नमनो
141726 वायुश्चण्डपवनः प्रसरति तद्वदित्यर्थः ॥ ४३ ॥
141727
141728 इत्यार्षे श्रीवा० वाल्मी० दे० मो० निर्वाण० उ० पाषाणो ० आकाशमन्दिरे
141729 वसिष्ठसमाधानवर्णनं नाम षट्पञ्चाशः सर्गः ॥ ५६ ॥
141730
141731 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
141732 वसिष्ठसमाधानवर्णनं नाम षट्पञ्चाशः सर्गः ॥ ५६ ॥
141733
141734 सप्तपञ्चाशः सर्गः ५७
141735
141736 श्रीराम उवाच ।
141737
141738 श्रीराम उवाच ।
141739
141740 त्वामप्युदितनिर्वाणमहंकारपिशाचकः ।
141741 बाधते किमिति ब्रूहि मुने संदेहशान्तये ॥ १ ॥
141742
141743 ज्ञाज्ञाहंकारयोरत्र विशेषप्रतिपत्तये ।
141744 ज्ञानबाधितदृश्यस्य चिन्मात्रत्वं समर्थ्यते ॥
141745
141746 मामहमिति प्रसृतः पिशाच इत्युक्त्या प्रोन्नामसन्नमनवायुरिति दृष्टान्तोक्त्या च
141747 वसिष्ठस्याप्यहंकारपिशाचकृतबाधावगमाज्ज्ञानफलानित्यत्वं
141748 संभावयन्रामः पृच्छति - त्वामपीति । उदितं निर्वाणं ज्ञानमूलं यस्य
141749 तहाविधं त्वामपि ॥ १ ॥
141750
141751 श्रीवसिष्ठ उवाच ।
141752

141753 अहंभाअं विना देहस्थितिस्तज्ज्ञाज्ञयोरिह |
141754 आधेयस्य निराधारा न संस्थेहोपपद्यते || २ ||
141755
141756 न प्रारब्धशेषभोगमात्रप्रयोजनदग्धपटप्रायदेहधारण##-
141757 दर्शयितुमज्ञाहंकारात्तत्त्वज्ञाहंकारे निर्दोषताविशेषप्रदर्शनेनोत्तरमाह
141758 वसिष्ठः - अहंभावं विनेत्यादिना | देहस्थितिर्नोपपद्यते यस्मादाधेयस्य
141759 निराधारा संस्था नेति नञावृत्त्या व्याख्येयम् || २ ||
141760
141761 अयं त्वत्र विशेषस्तं शृणु विश्रान्तचेतसः |
141762 श्रुतेन येनाहंभावपिशाचः शान्तिमेति ते || ३ ||
141763
141764 अहंभावपिशाचोऽयमज्ञानशिशुनामुना |
141765 अविद्यमान एवान्तः कल्पितस्तेन संस्थितः || ४ ||
141766
141767 अज्ञानलक्षणेन शिशुना बालेन कल्पितः | तेनाज्ञानवशेनैव संस्थितः || ४ ||
141768
141769 अज्ञानमपि नास्त्येव प्रेक्षितं यन्न लभ्यते |
141770 विचारिणा दीपवता स्वरूपं तमसो यथा || ५ ||
141771
141772 अस्त्वेवं किं ततस्तत्राह - अज्ञानमपीति | ज्ञानेनाज्ञाने बाधिते
141773 तदधीनस्थितिकोऽहंकारोऽपि बाधित एवेत्याशयः || ५ ||
141774
141775 यथा यथा विलोक्यते तथा तथा विलीयते |
141776 इहाज्ञतापिशाचिका तथा विचारिता सती || ६ ||
141777
141778 तथा च विदुषामनुभवोत्कर्षक्रमेणाज्ञानक्षयोत्कर्षः प्रसिद्ध इत्याह - यथा
141779 यथेति || ६ ||
141780
141781 किल सत्यामविद्यायामज्ञतोदेति शाश्वती |
141782 बुद्धिमोहात्मिका यक्षी निर्देहैव यथा निशि || ७ ||
141783
141784 अत एव विद्याप्रागभावकालनियता अज्ञता प्रसिद्धेत्याह - किलेति | अज्ञता
141785 कार्याविद्या वा || ७ ||
141786
141787 सति सर्गे त्वविद्यायाः संभवो नान्यतः क्वचित् |
141788 सति द्वितीये शशिनि द्वितीयो विद्यते शशः || ८ ||
141789
141790 एवं कारणाविद्यापि
141791 कार्याविद्योदयकालमात्रव्यवहारत्वात्तदुपाधिकजीवचिद्वेद्यत्वाच्च तदधीनेत्याह ##-
141792
141793 सर्गस्त्वयमजातत्वादज्ञज्ञातो न विद्यते |
141794 न जातः कारणाभावात्पूर्वमेव खवृक्षवत् || ९ ||
141795
141796 अस्तु तथा किं ततस्तत्राह - सर्गस्त्विति || ९ ||
141797
141798 परमाकाशकोशान्तरादिसर्गे निरामये |
141799 पृथ्व्यादेरुपलम्भस्य भवेत्किमिव कारणम् || १० ||
141800
141801 कारणाभावनुपपादयति - परमाकाशेति || १० ||
141802
141803 मनःषष्ठेन्द्रियातीतं मनःषष्ठेन्द्रियात्मनः |
141804 साकारस्य निराकारं कथं भवति कारणम् || ११ ||

141805
141806 मनःषष्ठेन्द्रियाग्राह्यत्वात्तदात्मनो मनःषष्ठेन्द्रियसिद्धिं विना
141807 उल्लेखायोगादनुल्लिखितस्य कर्तुमशक्तेरिति भावः। एवं साकारस्य घटादेः
141808 साकारेणैव कुलालमृत्पिण्डादिना करणमुचितं न निराकारेणेत्यर्थः॥ ११॥
141809
141810 बीजात्कारणतः कार्यमङ्कुरः किल जायते।
141811 न बीजमपि यत्रास्ति तत्र स्यादङ्कुरः कुतः॥ १२॥
141812
141813 कारणेन विना कार्यं न च नामोपपद्यते।
141814 कदा क इव खे केन दृष्टो लब्धः स्फुटो द्रुमः॥ १३॥
141815
141816 संकल्पेनाम्बरे यद्वद्दृश्यते विटपादिकम्।
141817 स संकल्पस्तथाभूतो न तत्रास्ति पदार्थता॥ १४॥
141818
141819 यदि नोत्पन्न एव सर्गस्तर्हि कस्तथा भासते तं सदृष्टान्तमाह -
141820 संकल्पेनेत्यादिना॥ १४॥
141821
141822 एवं येयं चिदाकाशे सर्गादावनुभूयते।
141823 शून्यरूप इवाकाशे सर्गस्थितिरनर्गला॥ १५॥
141824
141825 सर्गादिकाले येयमनर्गला सर्गस्थितिरनुभूयते सापि आकाशे शून्यरूपो वृक्षादिरिव
141826 बोध्या॥ १५॥
141827
141828 सम एव चिदाकाशः कवत्यात्मनि तत्तथा।
141829 स्वभाव एव सर्गाख्यश्चित्त्वाच्चैतन्यमीश्वरः॥ १६॥
141830
141831 तर्हि किं शून्यमेव सर्गात्मना प्रथते नेत्याह - सम इति। समः
141832 सर्गाकारवैषम्यरहित ईश्वर एव तथा प्रथत इत्यर्थः॥ १६॥
141833
141834 स्वप्नसर्गोऽत्र दृष्टान्तः प्रत्यहं योऽनुभूयते।
141835 स्वयं संवेदने स्वप्ने स्फुरत्यद्रिपुराकृतिः॥ १७॥
141836
141837 अविकृतस्यैव विकारजगदात्मना स्फुरणे स्वप्ने स्वात्मैव दृष्टान्त इत्याह -
141838 स्वप्नेति॥ १७॥
141839
141840 चित्स्वभावे यथा स्वप्ने आस्ते सर्ग इवेह यः।
141841 असर्गे सर्गवद्भाति तथा पूर्वं महाम्बरे॥ १८॥
141842
141843 अवेद्यवेदनं शुद्धमेकं भात्यजमव्ययम्।
141844 सर्गादौ यदनाद्यन्तं स्थितः सर्गः स एव नः॥ १९॥
141845
141846 तथा च सर्गात्प्राग्यादृशमात्मतत्त्वं तादृशमेव सर्गकालेऽपीत्याह -
141847 अवेद्यवेदनमिति॥ १९॥
141848
141849 नेह सर्गोऽस्ति नैवायं पृथ्व्यादिगणगोलकः।
141850 सर्वं शान्तमनालम्बं ब्रह्मैव ब्रह्मणि स्थितम्॥ २०॥
141851
141852 सर्वशक्त्यात्म तद्ब्रह्म यथा कचति यादृशम्।
141853 रूपमत्यजदेवाच्छं तथा भवति तादृशम्॥ २१॥
141854
141855 यथा स्वप्नपुरं जन्तोश्चिन्मात्रप्रविजृम्भितम्।
141856 तथैव सर्गः सर्गादौ शुद्धचिन्मात्रजृम्भितम्॥ २२॥

141857
141858 स्वच्छे चित्परमाकाशे चिदाकाशो य आस्थितः।
141859 स्वभाव एव सर्गोऽसाविति तेनैव भावितः॥ २३॥
141860
141861 तथा च स्वच्छे आकाशे प्रतीतवर्णवैचित्र्यमिव ब्रह्मण्येव ब्रह्मस्वात्मभूतेन
141862 वैचित्र्येण स्वेनैव स्वयं स्फुरतीति तत्स्वभाव एव सर्ग इति फलितमित्याह - स्वच्छे
141863 इति॥ २३॥
141864
141865 भाव्यभावकभावादिभूमीनां भावनं भृशम्।
141866 सर्वं चिन्नभ एवाच्छमात्मनात्मनि संस्थितम्॥ २४॥
141867
141868 ननु स्वभावपदे भाव इति भावघञन्तपदेन भवनमुच्यते तच्च
141869 भावकव्यापाररूपभावनाफलं भाव्यनिष्ठं भावना च भवितुर्भवनानुकूलो
141870 भावकव्यापारः करणादिकारकनिर्वर्त्य इति भाव्यभावकादित्रिपुटीभूमीनामेकरसे
141871 कथं संभवस्तत्राह - भाव्येति। न कल्पितं नानारसत्वं
141872 वास्तवैकरस्यविरोधादिति भावः॥ २४॥
141873
141874 एवं स्थिते कुतः सर्गः कुतो विद्या क्व चाज्ञता।
141875 ब्रह्म शान्तं घनं सर्वं क्वाहंकारादयः स्थिताः॥ २५॥
141876
141877 स्थिते निश्चयेन स्थिरीभूते॥ २५॥
141878
141879 अहंभावस्य संशान्तिरेषाऽसौ कथिता तव।
141880 अहंभावः परिज्ञातः पिशाच इव शाम्यति॥ २६॥
141881
141882 तथा चाज्ञाने वाहंभावो बाधते न तज्ज्ञानिति फलितमित्याह - अहंभाव इति।
141883 पिशाचो बालकल्पितपिशाच इव॥ २६॥
141884
141885 मया त्वेवमहंभावः परिज्ञातो यदाखिलः।
141886 तदा मे विद्यमानोऽपि निष्फलः शरदभ्रवत्॥ २७॥
141887
141888 एतेन त्वत्प्रश्नः समाहित इति दर्शयति - मया त्विति॥ २७॥
141889
141890 चित्राग्निदाहो विज्ञातो यथा दाह्येषु निष्फलः।
141891 तथाहंभावसर्गादि ज्ञातं निष्फलतामियात्॥ २८॥
141892
141893 दाहः अध्यस्ता दहनक्रिया॥ २८॥
141894
141895 इति मेऽहकृतेस्त्यागे रागे च समता यदा।
141896 तदा व्योम्न इवाव्योम्नः सर्गे सर्गे च मे स्थितिः॥ २९॥
141897
141898 समाधौ त्यागे व्यवहारकाले रागे च अव्योम्नो मेघाडम्बरातपवाय्वादिना
141899 निरवकाशीकृतस्य स्थितिः समेति शेषः॥ २९॥
141900
141901 अहंभावस्य नैवाहं नाहंभावो ममेति च।
141902 तेन विद्धि चिदाकाशमेवेदमिति निर्घनम्॥ ३०॥
141903
141904 संबन्धत्यागमात्रेणाप्यहंता न बाधते किं पुनर्बाधितेत्याशयेनाह -
141905 अहंभावस्येति। नितरां घनं निर्घनम्॥ ३०॥
141906
141907 यथा मम तथान्येषामपि बोधवतामिह।
141908 अग्नित्वमिव चित्राग्नेर्नास्त्ययंन् बोधविभ्रमः॥ ३१॥

अस्मिन्नर्थे सर्वविद्वदनुभवसंवाद इत्याह - यथेति। अयं अहंभावादिः॥ ३१॥

नाहमस्मि न चान्योऽस्ति सर्वं नास्तीति निश्चये।
प्रकृतव्यवहारस्त्वं शिलामौनमयो भव॥ ३२॥

त्वमप्यहमिवान्तः सर्वबाधेनाद्वितीयो भवेत्याह - नाहमिति। प्रकृतं
व्यवहरतीति प्रकृतव्यवहारः॥ ३२॥

आकाशकोशविशदाकृतिरेव तिष्ठ निर्देशवच्चिरमपह्नुतसर्वभावः।
अद्यादितश्च किल चिन्मयमेव सर्वं नो दृश्यमस्ति शिवमेवमशेषमित्थम्॥
३३॥

निर्देशो निरवकाशः शिलाघनस्तद्वत्। अद्य सर्गकाले। आदितः सर्गप्राक्काले।
सार्वविभक्तिकस्तसिः॥ ३३॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मी० दे० मोक्षोपायेषु निर्वाणप्रकरणे उ० पा०
विदितवेद्याहंकारविचारो नाम सप्तपञ्चाशः सर्गः ५७

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
विदितवेद्याहंकारविचारो नाम सप्तपञ्चाशः सर्गः॥ ५७॥

अष्टपञ्चाशः सर्गः ५८

श्रीराम उवाच।

अहो नु विततोदारा विमला विपुलाचला।
भवता भगवन्भूत्यै भूयो दृष्टिरुदाहृता॥ १॥

सर्वत्र सर्वसर्गश्रीः सदैवास्ति न चेति च।
दृष्टिभेदेन पाषाणाख्यायिकार्थोऽत्र वर्ण्यते॥

प्रासङ्गिके जीवन्मुक्ताहंकारस्याबाधकत्वे समर्थिते प्रक्रान्तस्य सर्वत्र सर्वथा
सर्वमित्याद्यर्थस्य पाषाणाख्यायिकया समर्थनं यत्प्रतिज्ञातं तदेव प्रष्टुं
भूमिकां रचयति - अहो इति॥ १॥

सर्वथा सर्वदा सर्वं सर्वं सर्वत्र सर्वदा।
सदित्येव स्थितं सत्यं समं समनुभूतितः॥ २॥

सर्वं सर्वत्र सर्वथा सत् सर्वं सर्वत्र सर्वदा च सत् इति यत्प्रस्तुतं तदनुभूतितो
विमृश्यमानं सममविषममेकरसमेव पर्यवस्यति। सर्वधर्मधर्मिणां
देशतः कालतो वस्तुतश्च सर्वभावे व्यावृत्तिव्यावर्तकताद्यसिद्धेरिति भावः॥ २॥

अयमस्ति मम ब्रह्मन्संशयस्तं निवारय।
किमिदं भगवन्नाम पाषाणाख्यानमुच्यते॥ ३॥

तत्र प्रष्टव्यांशं दर्शयति - अयमिति। इदं पाषाणाख्यानं किं केनांशेन
साम्यमभिप्रेत्योच्यते। व्यावर्तकधर्मवतोरेव साधारणधर्मेण
सादृश्यप्रसिद्धेरिति भावः॥ ३॥

श्रीवसिष्ठ उवाच।

141961 सर्वत्र सर्वदा सर्वमस्तीति प्रतिपादने ।
141962 पाषाणाख्यानदृष्टान्तो मयायं तव कथ्यते ॥ ४ ॥
141963
141964 अयं वक्ष्यमाणप्रकारः ॥ ४ ॥
141965
141966 नीरन्ध्रैकघनाङ्गस्य पाषाणस्यापि कोटरे ।
141967 सन्ति सर्गसहस्राणि कथयेति प्रदर्श्यते ॥ ५ ॥
141968
141969 न पाषाणसाम्यं सर्वधर्मसंकरं वा वक्तुं पाषाणाख्यायिकारभ्यते किंतु
141970 पाषाणोदराध्यासाधिष्ठाने ब्रह्मणि असंकीर्णतयैव
141971 सर्वजगदध्याससंभवसंभावनायेत्याह - नीरन्ध्रेति । कोटरे आन्तरे
141972 चिदाकाशे । कथया प्रस्तुताख्यायिकया । इति अयमर्थः प्रदर्श्यते ॥ ५ ॥
141973
141974 भूताकाशे महत्यस्मिन्खशून्यत्वमनुज्झति ।
141975 सन्ति सर्गसहस्राणि कथयेति प्रदर्श्यते ॥ ६ ॥
141976
141977 अथवा भावोदरचितीव शून्यात्मकाकाशरूपाभावाधिष्ठानचित्यप्यसंकीर्णतया
141978 सर्वजगदारोपः संभवतीत्याशयेनाह - भूताकाशेति ॥ ६ ॥
141979
141980 अन्तर्गुल्माङ्कुरादीनां प्राणिवाय्वम्बुतेजसाम् ।
141981 सन्ति सर्गसहस्राणि कथयेति प्रदर्श्यते ॥ ७ ॥
141982
141983 अयं न्यायः सर्वत्र योजनीय इत्याशयेनाह - अन्तरिति ॥ ७ ॥
141984
141985 श्रीराम उवाच ।
141986
141987 कुड्यादौ सन्ति सर्गौघा इति चेत्कथ्यते मुने ।
141988 तत्खे विभान्ति सर्गौघा इति किं न प्रदृश्यते ॥ ८ ॥
141989
141990 यदि कुड्यादिसर्वभावाभावावच्छिन्नचिति सर्वजगदध्यास आख्यायिकाभिप्रेतस्तर्हि
141991 शुद्धे चिदाकाशे सर्वजगदध्यास इत्येव पक्षः कुतो न परिगृह्यते
141992 येनाध्यस्तजगद्बाधे शुद्धमेव परिशिष्यत इत्यापरमनुकूलं स्यादिति रामः
141993 पृच्छति - कुड्यादाविति । तत् तर्हि खे शुद्धचिदाकाशे ॥ ८ ॥
141994
141995 श्रीवसिष्ठ उवाच ।
141996
141997 एतत्ते वर्णितं राम मुख्यमेव मयाखिलम् ।
141998 योऽयमालक्ष्यते सर्गः स ख एव खमास्थितम् ॥ ९ ॥
141999
142000 सत्यमेष एव पक्षो मुख्यतया मे विवक्षितः । शुद्धचिदाकाशः सहसा न परिचेतुं
142001 शक्य इति तदुपायतया उपहितचित्यपि प्रत्येकं सर्वजगदध्यासो दर्शित
142002 इत्याशयेनोत्तरमाह - एतदिति । संविदाकाशात्मकमेव ॥ ९ ॥
142003
142004 आदावेव हि नोत्पन्नमद्यापि न च विद्यते ।
142005 दृश्यं यच्चावभातीदं तद्ब्रह्म ब्रह्मणि स्थितम् ॥ १० ॥
142006
142007 एवं दृश्यमात्रस्यैव ब्रह्ममात्रत्वे अनुत्पत्तिरेव फलितेत्याह - आदावेवेति ।
142008 परमार्थदृष्टेरित्यर्थः ॥ १० ॥
142009
142010 नास्ति भूरणुमात्रापि सर्गैर्निर्विवरा न या ।
142011 न च क्वचन विद्यन्ते सर्गा ब्रह्मखमेव ते ॥ ११ ॥
142012

142013 आरोपदृष्टौ तु प्रतिभूतपरमाणु सर्वमारोप्य द्रष्टुं शक्यम् अपवाददृष्टौ
142014 तु तद्वैपरीत्यमित्याशयेनाह - नास्तीत्यादिना | निर्विवरा गाढभरिता या न
142015 तादृशी अणुमात्रापि भूर्नास्ति | सर्वापि सर्गभरितैवेत्यर्थः | एवमग्रेऽपि योज्यम् || ११
142016 | |
142017
142018 न तेजसोऽणुरप्यस्ति सर्गैर्निर्विवरो न यः |
142019 न च क्वचन सर्गास्ते [विद्यन्ते सर्गा ब्रह्म इति पाठः |] सन्ति
142020 ब्रह्मखमेव तत् || १२ ||
142021
142022 तत् तेजः || १२ ||
142023
142024 न वायोरणुरप्यस्ति सर्गैर्निर्विवरो न यः |
142025 न च क्वचन विद्यन्ते सर्गा ब्रह्मखमेव तत् || १३ ||
142026
142027 तत् सः || १३ ||
142028
142029 खं नाणुमात्रमप्यस्ति सर्गैर्निर्विवरं न यत् |
142030 न ख क्वचन सर्गास्ते सन्ति ब्रह्मखमेव तत् || १४ ||
142031
142032 भूतानां प्रक्रमे अपां त्यागायोगाद्भूतेजसोरन्तरालेन
142033 चापामणुरप्यस्तीत्यादिश्लोकोऽप्यूह्यः || १४ ||
142034
142035 न सा महाभूततास्ति सर्गैर्निर्विवरा न या |
142036 न च क्वचन विद्यन्ते सर्गा ब्रह्मखमेव तत् || १५ ||
142037
142038 महाभूतेति पञ्चानां समुदितरूपव्यपदेशः || १५ ||
142039
142040 शैलानां नाणुरप्यस्ति स सर्गैर्यो न निर्घनः |
142041 न च क्वचन विद्यन्ते सर्गा ब्रह्मखमेव तत् || १६ ||
142042
142043 ब्रह्मणो नाणुरप्यस्ति सर्गैर्निर्विवरो न यः |
142044 न च क्वचन सर्गास्ते सन्ति ब्रह्मखमेव तत् || १७ ||
142045
142046 ब्रह्मणो हिरण्यगर्भस्य सूक्ष्मभूतोपधेः || १७ ||
142047
142048 सर्गेषु नाणुरप्यस्ति न ब्रह्मात्मैव यः सदा |
142049 ब्रह्मसर्गास्तथेत्येष वाचि भेदो न वस्तुनि || १८ ||
142050
142051 सर्गेषु तत्कृतेषु भुवनभूतग्रामेषु | तथा सति यत्फलितं तदाह - ब्रह्मेति ||
142052 १८ ||
142053
142054 सर्गा एव परंब्रह्म परं ब्रह्मैव सर्गता |
142055 मनागप्यस्ति न द्वैतमत्राग्न्यर्कौष्ण्ययोरिव || १९ ||
142056
142057 अग्न्यर्कयोर्ये औष्ण्ये तयोरिव || १९ ||
142058
142059 इमे सर्गा इदं ब्रह्म तेऽत्यन्तावाच्यदृष्टयः |
142060 विदार्यदारुरवकद्वान्त्यर्थपरिवर्जिताः || २० ||
142061
142062 सर्जनात्सर्गो बृंहणाद्ब्रह्मेति सृजिबृंहिक्रिययोः परस्परं
142063 भेदाभावादाधाराधेयभावस्य दुर्वचत्वाच्च न क्रियापि स्वरूपाद्व्यतिरिच्यत इति
142064 सर्गब्रह्मादिशब्दाः प्रवृत्तिनिमित्तधर्मरूपस्वार्थपरिवर्जिताः सन्तः

142065 कुठारादिना विदार्ये काष्ठे ये दारुणो रवाः प्रसिद्धास्तद्वदर्थपरिवर्जिताः सन्तो
142066 लक्षणया अत्यन्तमवाच्ये दृष्टिः प्रतीतिर्येभ्यस्तथाविधा भान्तीत्यर्थः। अथवा
142067 दीर्यत इति दारु तदेव विदार्यमिति पर्यायप्रायौ यौ रवौ शब्दौ
142068 तद्वद्भिन्नार्थपरिवर्जिता भान्तीत्यर्थः॥ २०॥
142069
142070 द्वैतमैक्यं च यत्रास्ति न मनागपि तत्र ते।
142071 सर्गब्रह्मादिशब्दार्थाः कथं कस्येव भान्तु के॥ २१॥
142072
142073 मास्तु परमार्थे तेषामर्थभेदस्तत्र द्वैतैक्ययोरभावात्। व्यवहारे तु ब्रह्मैकं
142074 सर्गा नानेत्यर्थभेदसत्त्वाद्भिन्नार्थाः किं न स्युस्तत्राह - द्वैतमिति। यत्र
142075 व्यवहारे द्वैतमैक्यं चास्ति तत्रापि सर्गब्रह्मादिशब्दार्था मनागपि न भान्ति। ते हि
142076 द्वैतात्मकस्य द्रष्टुर्भायुरद्वैतात्मकस्य वा। आद्येऽज्ञस्य तस्य कथं भान्तु
142077 द्वितीये कस्येव भान्तु के किंस्वभावा भान्तु न ह्यद्वैते भानाद्भास्यवैलक्षण्यं
142078 सुवचमिति भावः। अथवा अत्यन्तावाच्यदृष्टितामेव प्रकटयति - द्वैतमिति। यत्र
142079 वस्तुनि द्वैतमैक्यं च मनागपि नास्ति तत्रेत्यन्वयः॥ २१॥
142080
142081 शान्तमेकमनाद्यन्तमिदमच्छमनामयम्।
142082 व्यवहारवतोऽप्यङ्ग ज्ञस्य मौनं शिलाघनम्॥ २२॥
142083
142084 अत एव तत्त्वविदो व्यवहारकालेऽपि तत्तथैवास्ते इत्याह - शान्तमिति॥ २२॥
142085
142086 निर्वाणमेवमखिलं नभ एव दृश्यं त्वं चाहमद्रिनिचयाश्च
142087 सुरासुराश्च।
142088 तादृग्जगत्समवलोकय यादृगङ्गस्वप्नेऽथ जन्तुमनसि व्यवहारजालम्॥ २३
142089 ॥
142090
142091 वर्णितं पाषाणाख्यायिकातात्पर्यमुपसंहरति - निर्वाणमिति। हे अङ्ग राम
142092 त्वं जगत्तादृक्समवलोकय। अथ जागरानन्तरं जन्तुमनसि स्वप्ने दृष्टं
142093 यादृग्व्यवहारजालमीषत्स्मर्यमाणमप्यात्ममात्रशेषमित्यर्थः॥ २३॥
142094
142095 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मी० दे० मोक्षो निर्वाणप्रकरणे उ० पाषाण०
142096 सर्गब्रह्मत्वप्रतिपादनं नामाष्टपञ्चाशः सर्गः॥ ५८॥
142097
142098 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
142099 सर्गब्रह्मत्वप्रतिपादनं नामाष्टपञ्चाशः सर्गः॥ ५८॥
142100
142101 एकोनषष्टितमः सर्गः ५९
142102
142103 श्रीराम उवाच।
142104
142105 अनन्तरं नभःकोशकुटीकोटरतो मुने।
142106 तव ध्यानात्प्रबुद्धस्य वृत्तं वर्षशतेन किम्॥ १॥
142107
142108 समाधिविरमे सूक्ष्मध्वनिश्रवणमीर्यते।
142109 तन्मूलान्वेषणध्यानेऽनन्तकोटिजगत्प्रथा॥
142110
142111 एवं सर्गद्वयेन प्रासङ्गिके प्रश्नविषये उपवर्णिते पुनराख्यायिकाशेषं
142112 श्रोतुकामो रामः पृच्छति - अनन्तरमिति। वर्षशतेन ध्यानात्प्रबुद्धस्य तव
142113 प्राग्वर्णितेच्छाङ्गनासहिताहङ्कारपिशाचप्रसरानन्तरं किं वृत्तमिति प्रश्नः
142114 ॥ १॥
142115
142116 श्रीवसिष्ठ उवाच।

142117
142118 ततो ध्यानात्प्रबुद्धोऽहं श्रुतवांस्तत्र निःस्वनम् |
142119 मृदु व्यक्तपदं हृद्यं न च वाच्यनुगो यतः || २ ||
142120
142121 निःस्वनं शब्दम् | मृदुव्यक्तानि नातिस्पष्टान्यक्षराणि पदानि च यत्र | तत् कुतः |
142122 यतोऽयं निःस्वनो वाच्यानुगः | पदार्थप्रतिपादनसमर्थो
142123 वाक्यार्थबोधनसमर्थश्च न || २ ||
142124
142125 स्त्रीस्वभावादिव मृदु मधुरं वा निनादि वा |
142126 स्वल्पाङ्गत्वादनिर्ह्रादि मया तद्वाक्यमूहितम् || ३ ||
142127
142128 स्त्रीकण्ठप्रभवप्रयुक्तस्वभावविशेषादिव मृदु मधुरं निनादि
142129 अनुरणनशीलं च | स्वल्पाङ्गत्वादतारत्वादनिर्ह्रादि | अदूरश्रवमिति यावत् || ३ ||
142130
142131 इन्दिन्दिररुताकारं तन्त्रीरणितरञ्जनम् |
142132 न रोदनं च पठनं विसकोशसमस्वनम् || ४ ||
142133
142134 इन्दिन्दिरो भ्रमरस्तदीयं रुतं ध्वनिस्तदाकारम् | तन्त्री वीणा तद्रणितस्य रञ्जनं
142135 रक्तिप्रदम् | न बालरोदनप्रायं नापि प्रौढपठनप्रायम् | बिसकोशे
142136 प्रसिद्धभ्रमरस्वनसमस्वनम् || ४ ||
142137
142138 तदाकर्ण्याशु तत्रेदमहं चिन्तितवानथ |
142139 शाब्दिकान्वीक्षणात्पश्यन्दिशो दश सविस्मयः || ५ ||
142140
142141 शाब्दिकस्य शब्दकर्तुरन्वीक्षणादन्वेषणाद्दश दिशः पश्यन् | शब्ददर्दुरं
142142 करोति इति ठक् || ५ ||
142143
142144 व्योम्नोऽयं सिद्धसंचरमार्गशून्यान्यनन्तरम् |
142145 भागो योजनलक्षाणि समतिक्रम्य संस्थितः || ६ ||
142146
142147 कुतः सविस्मयः किं वा चिन्तितवानसि तदाह - व्योम्न इत्याइद्रा | सिद्धानामपि
142148 संचारयोग्यैर्मार्गैः शून्यानि यानि योजनलक्षाणि तानि समतिक्रम्यानन्तरं
142149 तदूर्ध्वमयंन् व्योम्नो भागः संस्थित इत्यन्वयः || ६ ||
142150
142151 तदिहेदृग्विधस्य स्यात्कुतः शब्दस्य संभवः |
142152 शाब्दिकं न च पश्यामि यत्नेनापि विलोकयन् || ७ ||
142153
142154 तत्तादृशे इह एकान्तस्थाने ईदृग्विधस्य स्त्रीवाक्यसदृशस्य | शाब्दिकं
142155 शब्दकर्तारम् || ७ ||
142156
142157 अनन्तमिदमाशून्यं पुरो मे निर्मलं नभः |
142158 इह भूतं प्रयत्नेन प्रेक्ष्यमाणं न दृश्यते || ८ ||
142159
142160 भूतं प्राणिमात्रम् | प्रयत्नेनापि प्रेक्ष्यमाणमन्विष्यमाणम् || ८ ||
142161
142162 यदेति चिन्तयित्वाहं भूयोभूयो विलोकयन् |
142163 शब्देश्वरं न पश्यामि तदा चिन्तितवानिदम् || ९ ||
142164
142165 शब्देश्वरं शब्दोच्चारणसमर्थं यदा न पश्यामि तदा | इदं वक्ष्यमाणम् || ९
142166 ||
142167
142168 आकाश एव भूत्वाहमाकाशेनैकतां गतः |

142169 आकाशगुणशब्दार्थान्करोम्याकाशकोशके ॥ १० ॥
142170
142171 अहं प्रथममुपाधित्यागेन चिदाकाश एव भूत्वा
142172 तदध्यस्ताव्याकृताकाशैनैकतां गतः संस्तत्कार्यभूताकाशगुणंन् शब्दं
142173 तदर्थांश्च तस्मिन्नाकाशकोशके विद्यमानान्साक्षात्करोमि । अनुभविष्यामीति यावत् ॥
142174 १० ॥
142175
142176 देहाकाशमिह स्थाप्य ध्यानेनेह यथास्थितम् ।
142177 चिदाकाशवपुर्व्योम्ना याम्यैक्यं वारिवाम्बुना ॥ ११ ॥
142178
142179 तदेव सोपायमाह - देहाकाशमित्यादिना । व्योम्ना अव्याकृताकाशेन ।
142180 वार्जलबिन्दुरम्बुना जलसामान्येनेव ॥ ११ ॥
142181
142182 चिन्तयित्वेत्यहं त्यक्तुं देहं पद्मासनस्थितः ।
142183 आसं समाधिमाधातुं पुनरामीलितेक्षणः ॥ १२ ॥
142184
142185 त्यक्त्वा बाह्यार्थसंस्पर्शानैन्द्रियानान्तरानपि ।
142186 चित्ताकाशोऽहमभवं संवित्स्पन्दमयात्मकः ॥ १३ ॥
142187
142188 ऐन्द्रियानिन्द्रियसंबन्धिनो बाह्यार्थसंस्पर्शान्निरोधेन त्यक्त्वा ।
142189 आन्तरानन्तःकरणचतुष्टयविषयान् मन्तव्यादीनपि मननादिनिरोधेन त्यक्त्वा ॥ १३ ॥
142190
142191 क्रमात्तदपि संत्यज्य बुद्धितत्त्वपदं गतः ।
142192 संपन्नोऽहं चिदाकाशे जगज्जालैकदर्पणः ॥ १४ ॥
142193
142194 बुद्धितत्त्वपदं गतः संस्तदपि संत्यज्य चिदाकाशे वास्तवरूपे स्थितः सन्
142195 स्वाध्यस्तजगज्जालप्रतिबिम्बानामेकदर्पणः संपन्नः ॥ १४ ॥
142196
142197 ततस्तेन स्वभावेन भूतव्योमैकतामहम् ।
142198 संप्रयातोऽम्बुनैवाम्बु सौरभं सौरभेण वा ॥ १५ ॥
142199
142200 अम्बुना जलसामान्येन अम्बु समुद्रादिजलमिव ॥ १५ ॥
142201
142202 संपन्नोऽथ महाकाशं व्याप्यानन्तोऽथ सर्वगः ।
142203 अनाकारोऽप्यनाधारः सर्वार्थाधारतां गतः ॥ १६ ॥
142204
142205 तस्मिन्भूताकाशे तत्कार्यसर्वजगदवलोकनाय चिदाकाशाभेदकल्पनमाह -
142206 संपन्न इति । तथा चासङ्गाद्द्वयत्वादनाधारोऽप्यहं
142207 सर्वाधारतायोग्यभूताकाशाभेदात्सर्वार्थाधारतां गतः ॥ १६ ॥
142208
142209 अहं त्रैलोक्यवृन्दानि संसाराणां शतानि च ।
142210 तत्र ब्रह्माण्डलक्षाणि पश्याम्यगणितान्यपि ॥ १७ ॥
142211
142212 तत्र तदवस्थापन्ने चिदाकाशे ॥ १७ ॥
142213
142214 परस्परमदृष्टानि मिथः खान्यमलानि च ।
142215 नानाचारविचाराणि शून्यान्येव परस्परम् ॥ १८ ॥
142216
142217 मिथः अन्योन्यदृष्ट्या खानि अव्याकृताकाशमात्ररूपाणि । अत एव
142218 परस्परमदृष्टानि ॥ १८ ॥
142219
142220 स्वप्नरूपाणि सुप्तानां तुल्यकालं नृणामिव ।

142221 महारम्भानुमृष्टानि शून्यानि च परस्परम् ॥ १९ ॥
142222
142223 तत्र दृष्टान्तमाह - स्वप्नेति । तुल्यकालं सुप्तानां जनानां स्वप्नरूपाणीव ।
142224 एकदृशा महारम्भाण्यपरदृशा अनुमृष्टानि । अत एव शून्यान्यशून्यानि च ॥
142225 १९ ॥
142226
142227 जायमानानि नश्यन्ति वर्धमानानि भूरिशः ।
142228 वर्तमानान्यतीतानि भविष्यन्ति च सर्वशः ॥ २० ॥
142229
142230 अनेकचित्रजालानि महाभित्तीनि खानि च ।
142231 मनसेवोग्रराज्यानि कृतानि विविधैर्जनैः ॥ २१ ॥
142232
142233 महाभित्तीन्यनेकचित्रजालानि खानि निर्भित्तीनि च ॥ २१ ॥
142234
142235 निरावरणरूपाणि तथैकावरणानि च ।
142236 पञ्चावरणयुक्तानि षडेकावरणानि च ॥ २२ ॥
142237
142238 तत्र स्वप्नवद्दृष्टसृष्टिषु ब्रह्माण्डावरणतत्संख्यादिनियमोऽपि नास्ति । यस्य
142239 यावद्विषये वासनाविर्भूता तं प्रति तावत्सर्गस्यैव कल्पनादित्याशयेनाह -
142240 निरावरणेत्यादिना । पञ्चीकृतानां पञ्च अपञ्चीकृतानां पञ्चेति
142241 दशावरणचित्राणि । तैः सह [तैः सहेत्याद्यंशो विचारणीयः ।]
142242 तन्मात्राण्यहंकारो महत्तत्त्वं प्रकृतिश्चेति सांख्यकल्पनया षोडशावरणानि ।
142243 तेषामेव तत्त्वगणनया चतुर्विंशत्यावृतीनि । शैवकल्पनया
142244 षट्त्रिंशत्तत्त्वलक्षणैः खैराकाशकल्पैरावरणैरावृतानि च ॥ २२ ॥
142245
142246 दशावरणचित्राणि षोडशावरणानि च ।
142247 चतुर्विंशत्यावृतीनि षट्त्रिंशत्खावृतानि च ॥ २३ ॥
142248
142249 शून्यानि भूतपूर्णानि पञ्चभूतमयान्यपि ।
142250 एकपृथ्व्यादिभूतानि चतुःपृथ्व्यादिकानि च ॥ २४ ॥
142251
142252 एकैकानि पृथ्व्यादीन्येव भूतानि येषु ॥ २४ ॥
142253
142254 त्रिःपृथ्व्यादीनि चान्यानि द्विःपृथ्व्यादीन्यथापि च ।
142255 तथा सप्तमहाभूतान्येकजातिमयानि च ॥ २५ ॥
142256
142257 एवं पृथिव्यादिद्वित्रिचतुर्भूतयुक्तानि च । कालदिशोः सावयवत्वेन भूतत्त्वकल्पने
142258 सप्त महाभूतानि ॥ २५ ॥
142259
142260 त्वाद्दशानुभवाभोगविरुद्धातिदशानि तु ।
142261 तथा नित्यान्धकाराणि सूर्यादिरहितानि च ॥ २६ ॥
142262
142263 सिद्धविद्याधरगन्धर्वयक्षराक्षसादिकल्पनावैचित्र्याणि मनुष्यबुद्ध्या
142264 संभावयितुमप्यशक्यानीत्याशयेनाह - त्वाद्दशेति ।
142265 त्वाद्दशानामनुभवाभोगे विरुद्धा अत्यन्तमसंभाव्याः अतिशयितदशा अतिदशा
142266 भूतानां सौक्ष्म्यवैचित्र्यपरिणतिभेदा यासु तानि ॥ २६ ॥
142267
142268 तथा मीलितसर्गाणि एकनाथावृतानि च ।
142269 विलक्षणप्रजेशांशविचित्रारवन्ति च ॥ २७ ॥
142270
142271 मीलितसर्गाणि प्रलयसुषुप्तिप्रायाणि । सर्गादौ एकेनैव नाथेन हिरण्यगर्भादिना
142272 आवृतान्यधिष्ठितानि । प्रजेशाः प्रजापतयस्तदंशा देवादिगणास्तेषां

142273 विचित्राचारैस्तद्वन्ति ॥ २७ ॥
142274 तथा निर्वेदशास्त्राणि निःशास्त्राणि तथैव च ।
142275 कृमिक्रमसमारम्भदेवादिप्राणिमन्ति च ॥ २८ ॥
142276
142277 तदेव प्रपञ्चयति - तथेत्यादिना ।
142278 उदुम्बरकृमिसदृशसमारम्भैर्देवादिभिः प्राणिमन्ति ॥ २८ ॥
142279
142280 जात्या तु पारम्पर्येण संकेताचारवन्ति च ।
142281 तथा नित्यप्रकाशानि ज्वलिताग्निमयानि च ॥ २९ ॥
142282
142283 क्वचित्कलियुगारम्भाद्वेदशास्त्रोच्छेदे ब्राह्मणादिजात्या पारम्पर्यमात्रेण
142284 संकेतितभ्राह्मणाद्याचारवन्ति ॥ २९ ॥
142285
142286 तथा जलैकपूर्णानि पवनैकमयानि च ।
142287 स्तब्धानि परमाकाशे वहन्ति च तथानिशम् ॥ ३० ॥
142288
142289 कानिचित्परमाकाशे स्तब्धानि निश्चलानि कानिचिद्वहन्ति चलन्ति च ॥ ३० ॥
142290
142291 जायमानानि पुष्यन्ति परिपुष्टानि चाभितः ।
142292 तिर्यग्गच्छन्ति चान्यानि पूर्णसर्वमयान्यपि ॥ ३१ ॥
142293
142294 पुष्यन्ति वर्धमानानि । पूर्णसर्वभोग्यमयानि ॥ ३१ ॥
142295
142296 देवमात्रैकसर्गाणि नरमात्रमयानि च ।
142297 दैत्यवृन्दमयान्येव कृमिनिर्विवराणि च ॥ ३२ ॥
142298
142299 अन्तरन्तस्तदन्तश्च स्वकोशेऽप्यणुकं प्रति ।
142300 जातानि जायमानानि कदलीदलपीठवत् ॥ ३३ ॥
142301
142302 अणुकं परमाणुमपि प्रति अन्तरन्तस्तदन्तश्च कल्पिते स्वकोशेऽपि जातानीत्याद्यन्वयः ॥
142303 ३३ ॥
142304
142305 परस्परमदृष्टानि नानुभूतानि वै मिथः ।
142306 सैनिकस्वप्नजालानि जातानीव महान्त्यपि ॥ ३४ ॥
142307
142308 सैनिकानां स्वप्नजालानीव परस्परमदृष्टानि ॥ ३४ ॥
142309
142310 विविधान्यप्यनन्तानि स्वच्छाकाशात्मकान्यलम् ।
142311 अन्योन्यमन्यवृत्तीनि न मिथोऽन्यस्थितीनि च ॥ ३५ ॥
142312
142313 तथा विविधानीत्यादि योज्यम् । अन्यवृत्तीनि भिन्नार्थक्रियाणि । मिथोऽन्यस्तितीनि न
142314 समस्थितिकानि चेत्यर्थः ॥ ३५ ॥
142315
142316 मिथश्चान्यान्यशास्त्राणि मिथोऽनन्तानि यानि च ।
142317 अन्योन्यसन्निवेशानि मिथोऽन्योन्यानि यानि च ॥ ३६ ॥
142318
142319 यानि मिथः अनन्तानि अपरिच्छेद्यब्रह्मस्वभावानि । धर्मानन्त्याद्वा अनन्तानि ।
142320 भेदेऽप्यन्योन्यस्येव संनिवेशो येषां तानि । प्रत्यभिज्ञायामन्योन्यात्मकानि च ॥ ३६
142321 ।।
142322
142323 अन्योन्यं परलोकानि मिथः सिद्धपुराणि च ।
142324 अन्यादृशमहाभूतान्यन्यादृग्दिग्गिरीणि च ॥ ३७ ॥

142325
142326 एकत्र मृतैरपरत्र गमनादन्योन्यपरलोकानि परस्परं
142327 प्रत्यन्तर्धानशक्तियोगान्मिथः सिद्धनगरप्रायाणि च ॥ ३७ ॥
142328
142329 त्वादृशानुभवेहानामगम्याभ्यागतानि च ।
142330 असमञ्जसरूपाणि कथ्यमानानि मादृशैः ॥ ३८ ॥
142331
142332 अत एवान्यस्यान्यत्र वर्णने अपरिनिष्ठितमतीनामगम्यत्वादसमञ्जसरूपाणि
142333 भान्तीत्याह - त्वादृशेत् । अनुभवानामीहानां प्रयत्नानां
142334 चागम्यान्यविषयभूतान्यभ्यागतान्यभिमुखमागतानि । सन्निहितान्यपीति यावत् ।
142335 तर्हि तानि त्वादृशां कथनैर्ज्ञास्यन्ते तत्राह - असमञ्जसेति ॥ ३८ ॥
142336
142337 अणुवत्सेष्यमाणानि चिदादित्यांशुमण्डले ।
142338 परमार्थश्रियो व्योम्नि रश्मिजालानि कुण्डले ॥ ३९ ॥
142339
142340 चिदादित्यस्य अंशुमण्डलप्राये सर्वतः प्रसृते चैतन्ये ये अण्वो जलसूर्यमरीचिषु
142341 प्रसिद्धास्तद्वत्सेष्यमाणानि [सेष्वमाणानीति विचारणीयम् ।] प्रसिद्धिभाञ्जि ।
142342 शेष्यमाणानि इति पाठे परिशेषभाञ्जि । तथा परमार्थश्रियो
142343 मोक्षसाम्राज्यलक्ष्म्याः कुण्डले ताटङ्कप्राये व्योम्नि अव्याकृताकाशे भूताकाशे
142344 च विचित्ररत्नरश्मिजालप्रायाणि ॥ ३९ ॥
142345
142346 कानिचित्तानि तान्येव भूत्वा भूत्वा भवत्यलम् ।
142347 कानिचित्तादृशान्येव जातानि वनपर्णवत् ॥ ४० ॥
142348
142349 अन्योन्यत्वाच्च सदृशान्यन्यानि सदृशान्यपि ।
142350 कंचित्कालं सुसदृशान्यन्यान्येव च कानिचित् ॥ ४१ ॥
142351
142352 तेषु कानिचिदेकत्रैव चिति
142353 सर्वेषामध्यासादपृथक्सत्त्वेनान्योन्यात्मकत्वात्सदृशान्यन्यादृशान्यपि ।
142354 एवं सदृशान्यपि कंचित्कालं सुसदृशानि । कानिचिदन्यान्यत्यन्तविसदृशान्येव
142355 । मायाया अघटितघटनापटीयस्त्वादिति भावः ॥ ४१ ॥
142356
142357 फलानि तान्यनन्तानि परमार्थमहातरोः ।
142358 अनन्यान्येव चान्यानि तन्मयान्येव वै ततः ॥ ४२ ॥
142359
142360 वृक्षफलवद्वा तत्र भेदाभेदकल्पनेत्याह - फलानीति ॥ ४२ ॥
142361
142362 कानिचित्स्वल्पकल्पानि दीर्घकल्पानि कानिचित् ।
142363 अन्यान्यनियतं भूरि नियतं भूरि कानिचित् ॥ ४३ ॥
142364
142365 अनियतं देशकालवस्तुस्वभावनियमरहितमेव भूरि वहूनि । कानिचिन्नियतं
142366 तद्विपरीतमित्यर्थः ॥ ४३ ॥
142367
142368 अन्यान्यज्ञातकालानि यदृच्छावशतः स्वयम् ।
142369 जायमानानि पुष्टानि सुस्थिराणि स्थितानि च ॥ ४४ ॥
142370
142371 सूर्याद्यभावादज्ञतकालानि ॥ ४४ ॥
142372
142373 तानि शून्यत्वजालानि परमाकाशकोशके ।
142374 अपरिज्ञातकालानि रूढान्यज्ञातदोषके ॥ ४५ ॥
142375
142376 तानि किं सत्यानि नेत्याह - तानीति । कदाप्रभृति तर्हि रूढानि तत्राह -

142377 अपरिज्ञातेति | अनादीनीत्यर्थः | अज्ञातमज्ञानं तदेव दोषो यस्मिंस्तथाविधे प्रतीचि
142378 रूढानि || ४५ ||
142379
142380 अब्ध्यर्काकाशमेवादि शतैरावलितान्यलम् |
142381 चिच्चमत्कारखे स्वप्नजालान्याभान्ति चाविलम् || ४६ ||
142382
142383 चिच्चमत्काररूपे खे चिदाकाशे | आविलं रजस्तमःकलुषितं यथा स्यात्तथा || ४६ ||
142384
142385 अनुभूतेर्भ्रमात्मत्वात्कारणानामभावतः |
142386 पृथ्व्यादीनामहेतूनामत्यन्तं सन्त्यसन्ति च || ४७ ||
142387
142388 अहेतूनां पृथ्व्यादीनामनुभूतेर्भ्रमात्मत्वात्तानि
142389 जगन्त्यत्यन्तमधिष्ठानात्मना सन्ति स्वरूपेण त्वसन्ति च || ४७ ||
142390
142391 मृगतृष्णाम्बुभरवद्द्विचन्द्रव्योमवर्णवत् |
142392 संपन्नानि न सत्यानि सत्यान्यप्यनुभूतितः || ४८ ||
142393
142394 चित्संकल्पनभस्येव भासमानानि भूरिशः |
142395 वासनावातनुन्नानि विलुठन्त्यात्मचेष्टितैः || ४९ ||
142396
142397 अतश्च तथेत्याह - चित्संकल्पेति || ४९ ||
142398
142399 सुरासुरादिमशका बहुशोदुम्बरद्रुमे [बहुशोदुम्बर इत्यार्षः संधिः |
142400 ] |
142401 फलानि रसपूर्णानि घूर्णमानानि मारुतैः || ५० ||
142402
142403 ब्रह्मोदुम्बरद्रुमे सुरासुरोरगनरादयो मशकाः | ब्रह्माण्डानि तु
142404 भोगवैचित्र्यरसपूर्णानि फलानि || ५० ||
142405
142406 अभिजातस्वभावस्य सर्गारम्भकरस्य च |
142407 शुद्धचित्तत्त्वबालस्य संकल्पनगराणि खे || ५१ ||
142408
142409 अथवा जगन्ति शुद्धस्य केवलस्य चित्तत्त्वलक्षणबालस्य संकल्पनगराणि || ५१ ||
142410
142411 त्वमहंन् स इदं चेति धिया बलदृढान्यलम् |
142412 संपन्नान्यर्कदीप्त्येव पङ्कक्रीडनकानि च || ५२ ||
142413
142414 संकल्पनगरत्वे दार्ढ्ये को हेतुस्तमाह - त्वमिति | अहंताद्यभिमानधिया बलेन
142415 अलमत्यन्तं दृढानि संपन्नानि | पङ्कमयानि क्रीडनकानीव | चकारो हिमेन
142416 घृतकरकादीनीवेति दृष्टान्तान्तराभ्यूहनार्थः || ५२ ||
142417
142418 वृत्तानि रसशालिन्या नियत्या नित्यतृप्तया |
142419 वनान्युग्रफलानीव वसन्तरसलेखया || ५३ ||
142420
142421 नित्यमभीक्ष्णं तृप्तया तृप्तिमत्या रसो रागो द्रवत्वं च तच्छालिन्या
142422 कर्मफलावश्यंभावनियत्या वृत्तानि निष्पन्नशाखोपशाखानि || ५३ ||
142423
142424 महाकर्तृण्यकर्तृणि न कृतान्येव खानि वा |
142425 स्वयंन् संपन्नरूपाणि चिद्व्योम्न्येव कृतानि वा || ५४ ||
142426
142427 सृष्टिश्रुतिदृशा महद्ब्रह्मैव कर्तृयेषां तानि | अपूर्वमनपरं
142428 इत्यादिश्रुतिदृशा तु अकर्तृणि अकर्तृकाणि || ५४ ||

142429
142430 परमार्थमयान्येव तदन्यद्वोदितान्यपि ।
142431 अलब्धान्येव लब्धानि सदाऽसन्त्येव सन्ति च ॥ ५५ ॥
142432
142433 तदन्यद्वा तदन्यदिव । मणीवोष्ट्रस्येतिवदिवार्थे वा शब्दः । सदा असन्त्येवेति च्छेदः
142434 ॥ ५५ ॥
142435
142436 चतुर्दशदशैकादिविधभूतगणानि च ।
142437 पुनस्तान्येव तान्यन्तरन्यान्यन्यान्यथो बहिः ॥ ५६ ॥
142438
142439 भुवनसंख्यया चतुर्दश देवयोनिमात्रसंख्यया दशविधाः
142440 मनुष्याद्य्कैकजात्या एकविधा आदिपदाद्यथासंभवं द्व्यादिनियतविधा भूतगणा
142441 येषु ॥ ५६ ॥
142442
142443 नरकस्वर्गपातालबन्धुमित्रमयान्यपि ।
142444 महारम्भमयान्येव शून्यानि परमार्थतः ॥ ५७ ॥
142445
142446 क्षीराम्बुधेर्जलानीव स्नेहसाराणि सर्वतः ।
142447 तरङ्गभङ्गुराण्यन्तर्बहिश्चावृत्तिमन्ति च ॥ ५८ ॥
142448
142449 स्नेहो घृतं प्रीत्यतिशयश्च तत्साराणि आवृत्तिः परिवृत्तिस्तद्वन्ति च ॥ ५८ ॥
142450
142451 आभासमात्ररूपाणि तेजस्यात्मविवस्वतः ।
142452 जातानीव स्वतस्तानि स्पन्दनानि नभस्वतः ॥ ५९ ॥
142453
142454 स्वतो जातानि नभस्वतो वायोः स्पन्दनानीव ॥ ५९ ॥
142455
142456 वृक्षरूपाणि पत्राणां बुद्ध्यहंकारचेतसाम् ।
142457 असतामप्यसन्त्येव स्वप्ने न्यस्तनृणामिव ॥ ६० ॥
142458
142459 बुद्ध्यहंकारचित्तरूपाणां पत्राणामाश्रयभूतवृक्षरूपाणि । असतां
142460 स्वातिरिक्तद्रष्टॄणामापि साधारणायमानानि असन्त्येव यथा स्वप्ने
142461 नितरामस्तानामसतां स्वातिरिक्तनृणां दृश्यानीत्यर्थः ॥ ६० ॥
142462
142463 पुराणवेदसिद्धान्तकल्पनातल्पपालिषु ।
142464 घनिनिद्राणि सुप्तानि बिभ्रन्ति शवतामिव ॥ ६१ ॥
142465
142466 पुराणादिप्रसिद्धव्रतदानयज्ञादिफलावश्यंभावकल्पनालक्षणेषु तल्पवृत्तिषु
142467 स्वप्नेषु दृढविश्वासघननिद्राणि आत्मस्वरूपस्यात्यन्तमप्रबोधाच्छवतामिव
142468 बिभ्रन्ति । अभ्यस्ताच्छतुर्नुम्छान्दसः ॥ ६१ ॥
142469
142470 परमार्थमहारण्ये चिद्गन्धर्वकृतानि वै ।
142471 सूर्यदीपकदीप्तानि गृहाणि गहनात्मनि ॥ ६२ ॥
142472
142473 परमार्थो ब्रह्म तल्लक्षणे महारण्ये मायोपहितचिद्गन्धर्वेण कृतानि
142474 सूर्यलक्षणैर्दीपकैर्दीप्तानि गृहाणीत्युत्प्रेक्षा ॥ ६२ ॥
142475
142476 प्रजायमानानि नभस्यनन्ते विशीर्यमाणानि च निर्निमित्तम् ।
142477 तदा त्वहं वै तिमिराक्षदृष्टकेशोण्ड्रकानीव जगन्त्यपश्यम् ॥ ६३ ॥
142478
142479 हे राम अहं तदा तस्मिन्समाधिकाले अनन्ते चिन्नभसि निर्निमित्तं प्रजायमानानि
142480 निर्निमित्तं च विशीर्यमाणानि तिमिराक्षदृष्टकेशोण्ड्रकानीव भ्रान्तिमात्रसिद्धानि

142481 जगन्ति अपश्यम् दृष्टवानित्यर्थः ॥ ६३ ॥
142482
142483 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वाणप्रकरणे उत्तरार्धे पा०
142484 जगज्जालवर्णनं नामैकोनषष्टितमः सर्गः ॥ ५९ ॥
142485
142486 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
142487 जगज्जालवर्णनंन् नामैकोनषष्टितमः सर्गः ॥ ५९ ॥
142488
142489 षष्टितमः सर्गः ६०
142490
142491 श्रीवसिष्ठ उवाच ।
142492
142493 ततोऽहमभितो भ्रान्तस्तादृशं प्रविचारयन् ।
142494 बहुकालमसंरुद्धसंविदाकाशतां गतः ॥ १ ॥
142495
142496 समाधौ शब्दकारिण्याः स्त्रियो दर्शनमीर्यते ।
142497 तामनादृत्य भूयोऽपि विचित्रजगदीक्षणम् ॥
142498
142499 तादृशं प्रागुक्तप्रकारं शब्दकारणं प्रविचारयन्नन्विष्यन् ।
142500 असंरुद्धसंविदाकाशतामपरिच्छिन्नचिदाकाशताम् ॥ १ ॥
142501
142502 शब्दं पश्चात्तमश्रौषमहं वीणास्वनोपमम् ।
142503 क्रमात्स्फुटपदं जातं तत आर्यात्वमागतम् ॥ २ ॥
142504
142505 आर्यात्वं आर्याख्यच्छन्दोलक्षणलक्षितत्वम् । यथाहुः यस्याः प्रथमे पादे
142506 द्वादशमात्रास्तथा तृतीयेऽपि । अष्टादश द्वितीये चतुर्थके पञ्चदश साऽऽर्या ॥ इति ॥ २
142507 । ।
142508
142509 शब्ददेशपतद्दृष्टिर्दृष्टवान्वनितामहम् ।
142510 पार्श्वे कनकनिष्पन्दप्रभया भासिताम्बराम् ॥ ३ ॥
142511
142512 शब्दस्य प्रभवप्रदेशे पतन्ती दृष्टिर्योगदृष्टिर्यस्य तथाविधः सन् वनितां
142513 स्त्रियम् । पार्श्वे इति पूर्वोत्तरान्वयि ॥ ३ ॥
142514
142515 आलोलमाल्यवसनामलकाकुललोचनाम् ।
142516 लोलद्धम्मिल्लवलनामन्यां श्रियमिवागताम् ॥ ४ ॥
142517
142518 तामेव वर्णयति - आलोलेत्यादिना । लोलत् चञ्चलं धम्मिल्लवलनं केशबन्धनं
142519 यस्याः ॥ ४ ॥
142520
142521 कान्तकाञ्चनगौराङ्गीं मार्गस्थनवयौवनाम् ।
142522 वनदेवीमिवामोदिसर्वावयवसुन्दरीम् ॥ ५ ॥
142523
142524 मर्गस्थमिव गच्छत् नवयौवनं यस्याः ॥ ५ ॥
142525
142526 सा पूर्णचन्द्रवदना पुष्पप्रकारहासिनी ।
142527 यौवनोद्दामवदना पक्ष्मलक्षणशालिनी ॥ ६ ॥
142528
142529 आकाशकोशसदना शशाङ्ककरसुन्दरी ।
142530 मुक्ताकलापरचना कानता मदनुसारिणी ॥ ७ ॥
142531
142532 आकाशकोशः प्राग्वर्णितभूताकाशः सदनं यस्याः । मामनुसरति तच्छीला ॥ ७ ॥

स्वरेण मधुरेणैवमार्यामार्यविलासिनी ।
पपाठाकठिनं वामा मत्पार्श्वे मृदुहासिनी ॥ ८ ॥

सा वामा मत्पार्श्वे अकठिनं मृदु यथा स्यात्तथा मधुरेण स्वरेण एवं
वक्ष्यमाणरूपामार्यां पपाठ ॥ ८ ॥

असदुचितरिक्तचेतनसंसृतिसरिति प्रमुह्यमानानाम् ।
अवलम्बनतटविटपिनमभिमौमि भवन्तमेव मुने ॥ ९ ॥

तामेवार्यामुदाहरति - असदिति । हे मुने अहं असतां खलानामुचितै
रागद्वेषकामलोभमोहादिदोषैः रिक्ता विरहिता चेतना चेतो यस्य तथाविधम् । तथा
संसृतिलक्षणायां सरिति प्रमुह्यमाणानामवलम्बनभूतं तटविटपिनं
तीरवृक्षभूतं भवन्तमेव अभितो नौमि प्रशंसामि नान्यमित्यर्थः ॥ ९ ॥

इत्याकर्ण्याहमालोक्य तां चारुवदनस्वनाम् ।
ललनेयंन् किमनयेत्यनादृत्यैव तां गतः ॥ १० ॥

तच्छ्रुत्वा त्वं किमकार्षीस्तत्राह - इतीति ॥ १० ॥

ततो जगद्वृन्दमयीं मायां संप्रेक्ष्य विस्मितः ।
अनादृत्यैव तां व्योम्नि विहर्तुमहमुद्यतः ॥ ११ ॥

तदुत्तरार्धोक्तं स्फुटयति - तत इति ॥ ११ ॥

ततस्तां तत्कृतां चिन्तामलमुत्सृज्य खे स्थिताम् ।
जगन्मायांन् कलयितुं व्योमात्माहं प्रवृत्तवान् ॥ १२ ॥

अनादृत्येति पदं विहर्तुमिति पदं च व्याचष्टे - तत । खे शून्यस्वभावे स्थिताम्
। व्योमात्मा चिदाकाशरूपः ॥ १२ ॥

यावत्तानि तथोग्राणि जगन्ति सकलानि खम् ।
शून्यमेव यथा स्वप्ने संकल्पे कथने तथा ॥ १३ ॥

खे स्थितामित्येतदुपपादयति - यावदिति । यस्मादित्यर्थे यावच्छब्दः । संकल्पे
मनोराज्ये । कथने कथार्थप्रकाशने । चार्थे तथाशब्दः ॥ १३ ॥

न पश्यन्ति न शृण्वन्ति कदाचित्कानिचित्क्वचित् ।
तानि कल्पमहाकल्पमहाजन्मैकतान्यथ ॥ १४ ॥

शून्यरूपत्वादेव तानि जगन्ति कानिचित् क्वचिदपि परमार्थतः किंचिदपि न पश्यन्ति न
शृण्वन्ति । अत एव कल्पेषु महाकल्पेषु महाजन्मसु सर्गेषु च समता ऐकरूप्यमेव
येषां तानि । बहुव्रीहौ गोस्त्रियोरुपसर्जनस्य इति टापो ह्रस्वे नपुंसकस्य झलचः इति
नुमि पुनर्दीर्घः । परस्परोत्पत्तिसमारम्भानिव परस्परप्रलयसमारम्भानपि तानि
न पश्यन्तीत्येतदपि प्रलयसंरम्भवर्णनपुरःसरं दर्शयितुमारभते -
अथेत्यादिना ॥ १४ ॥

प्रमत्तपुष्करावर्तानुन्मत्तोत्पातमारुतान् ।
स्फुटिताद्रीन्दृढाकारघटितब्रह्ममण्डपान् ॥ १५ ॥

सर्वेषां द्वितीयाबहुवचनान्तानां पञ्चमश्लोकस्थे [पञ्चमेति इतः पञ्चमो
विंशः श्लोको ज्ञेयः ।] कल्पान्तान्नविचेतन्तीत्यत्रान्वयः ॥ १५ ॥

ज्वलत्कल्पाग्निविस्फोटचटदैडविडास्पदान् ।
प्रतपद्द्वादशाकारकन्दुमार्तण्डमण्डलान् ॥ १६ ॥

कल्पाग्निविस्फोटैश्चटन्ति ध्वनन्ति ऐडबिडास्पदानि कुबेरभवनानि येषु । प्रतपन्ति
द्वादशाकारकन्दुकवद्दिवि भ्रमन्ति मार्तण्डमण्डलानि येषु ॥ १६ ॥

लुठत्सुरपुरव्रातवितताक्रन्दघर्घरान् ।
रणसर्वाद्रिकटकश्रेणीनिगिरणोद्भटान् ॥ १७ ॥

रणतां सर्वाद्रिनितम्बश्रेणीनां निगिरणे उद्भटान् ॥ १७ ॥

कल्पाग्निज्वलनोल्लासपठत्पटपटारवान् ।
आत्मभ्रंशबृहत्क्षोभक्षुब्धाम्बरमहार्णवान् ॥ १८ ॥

कल्पाग्नीनां यानि ज्वलनानि तेषां ये उल्लासास्तैस्तत्प्रयुक्तवंशादिग्रन्थिविस्फोटनैः
पठन्तो व्यक्तमुच्चरन्तः पटपटारवा येषु ।
आत्मस्वभावभ्रंशप्रयुक्तबृहत्क्षोभादिवदेव यादोगणक्षोभैः क्षुब्धाः
अम्बरमहार्णवा येषु ॥ १८ ॥

देवासुरनरागारघर्घराक्रन्दकर्कशान् ।
सप्तार्णवमहापूरपूरितार्केन्दुमण्डलान् ॥ १९ ॥

द्युलोकपर्यन्तं सप्तार्णवाभिवृद्ध्या सप्तार्णवमहापूरैः
पूरितान्यर्केन्दुमण्डलानि येषु ॥ १९ ॥

न विचेतन्ति कल्पान्तान्सर्वाण्येवं परस्परम् ।
एकमन्दिरसंसुप्ताः स्वप्ने रणरयानिव ॥ २० ॥

ईदृशानपि तत्तदन्तःप्रवृत्तान्कल्पान्तान् सर्वाण्येव जगन्ति परस्परं न विचेतन्ति ॥
२० ॥

तत्र रुद्रसहस्राणि ब्रह्मकोटिशतानि च ।
दृष्टानि विष्णुलक्षाणि कल्पवृन्दान्यलं मया ॥ २१ ॥

एवं जगतां प्रासङ्गिकीं परस्परं शून्यरूपतामुपपाद्य प्रस्तुतमेवाह -
तत्रेत्यादिना । तत्र तेषु जगत्सु मया दृष्टानि ॥ २१ ॥

तत्र क्वचिदनादित्ये निरहोरात्रभूतले ।
आकल्पयुगवर्षान्ते जगत्यूहैः क्षयोदयः ॥ २२ ॥

तत्र तस्मिन्वर्णितबहुप्रकारे जगति क्वचिच्चिद्वस्तुनि ऊहैर्वितर्कैरेव क्षय उदयश्च
दृष्ट इत्यनुषज्यते ॥ २२ ॥

चिति सर्वं चितः सर्वं चित्सर्वं सर्वतश्च चित् ।
चित्सत्सर्वात्मिकेत्येतद्दृष्टं तत्र मयाखिलम् ॥ २३ ॥

अस्तु ऊहैरेव क्षयोदयः किं ततस्तत्राह - चितीति । ततः प्रागुक्तं
पाषाणाख्यायिकाहृदयं चिति सर्वमित्यादिरूपं मया अन्वयव्यतिरेकाभ्यांन्
परीक्ष्य दृष्टमित्यर्थः ॥ २३ ॥

त्वं किंचिदिति चेद्वक्षि तत्र किं चिदिवाङ्ग चित् ।

सा हि शून्यतमा व्योम्नो न च नाम न किंचन ॥ २४ ॥

कीदृशेन ऊहेन चिति कीदृश उदयः कीदृशो वा क्षयस्तानुदाहरति - त्वमिति । हे
राम त्वं घटः पटः कुड्यमिति वा यदेव किंचिदिति रूपं संकल्प्य नाम्ना वक्षि
तत्र तस्यां दशायां चित् त्वद्विवक्षितं तत्तत्किंचित्तद्वत् तत्तन्नामरूपात्मनेव
भवति स उदयः । सैव व्योम्नोऽपि शून्यतमाविवक्षिता सती न किंचन नाम भवति न
किंचन रूपमिति स तत्क्षय इत्यर्थः ॥ २४ ॥

तदाकाशमिदं भाति जगदित्यभिशब्दितम् ।
तेनैव शब्दनभसा सर्वं हि परमं नभः ॥ २५ ॥

किं च जगदिति नामरूपकल्पनया तच्छून्यात्मकमाकाशमेव भाति । आकाशस्यैव
वाय्वादिक्रमेण जगदाकारपरिणामश्रुतेः । तच्चाकाशं
शब्दतन्मात्ररूपत्वात्सर्ववस्तुनो नामसामान्यमपि भवति । तेनैव तत्त्वमसि अहं
ब्रह्मास्मि नेह नानास्ति किंचन इत्यादिशब्दात्मना परिणतेन नभसा सर्वं
जगत्परमं चिन्नभ एव भवति । स एवास्यात्यन्तिकः क्षय इत्यर्थः ॥ २५ ॥

दृश्यदृष्टिरियं भ्रान्तिराकाशतरुमञ्जरी ।
चिद्व्योमाङ्ग कमेवेति तत्राहमनुभूतवान् ॥ २६ ॥

एवं विमर्शे स्वस्य यादृशोऽनुभवोऽभूत्तमाह - दृश्येति । हे अङ्ग
परिशिष्टं यच्चिद्व्योम तत् कं सुखमेव
निरतिशयानन्दैकरसमेवेत्यनुभूतवानित्यर्थः ॥ २६ ॥

बुद्ध्याकाशैकरूपेण व्यापिना बोधरूपिणा ।
तत्रानन्तेन [अत्र अनन्तेन नसङ्कल्पः इति पदविश्लेषष्टीकाकारैः कृतः
स च सुधीभिर्विमर्शनीयः ।] संकल्पमनुभूतमिदं मया ॥ २७ ॥

बुद्धिश्चरमसाक्षात्कारवृत्तिस्तद्रूपो य आकाशस्तत्राविर्भावात्तदेकरूपेण
व्यापिना पूर्णनाऽनन्तेन त्रिविधपरिच्छेदरहितेन मया तत्र तस्मिन्समाधौ
नसंकल्पं [अत्र अनन्तेन नसङ्कल्पः इति पदविश्लेषष्टीकाकारैः कृतः स च
सुधीभिर्विमर्शनीयः ।] निःसंकल्पमिदं वक्ष्यमाणमनुभूतम् ॥ २७ ॥

ब्रह्मव्योम जगज्जालं ब्रह्मव्योम दिशो दश ।
ब्रह्मव्योम कलाकालदेशद्रव्यक्रियादिकम् ॥ २८ ॥

जगज्जालं ब्रह्माण्डसमूहास्तदन्तर्गता दशदिशस्तदन्तर्गतं
कलाकालदेशादिकं च सर्वं ब्रह्मव्योमैव तथा स्थितं दृष्टमित्यर्थः ॥ २८ ॥

तत्राहमिव संसारशते भाते मुनीश्वराः ।
दृष्टा वसिष्ठनामानो ब्रह्मपुत्राः सदुत्तमाः ॥ २९ ॥

तत्र वक्ष्यमाणभेदोदयेन भाते संसारशते अहमिव मत्समानरूपा मुनीश्वराः
॥ २९ ॥

ब्रह्मन्द्वासप्ततिस्त्रेताः सर्वा एव सराघवाः ।
तत्र दृष्टं कृतशतं द्वापराणां शतं तथा ॥ ३० ॥

द्वासप्ततिसंख्याकाः सराघवा रामावतारसहितास्त्रेतायुगभेदा दृष्टा
इत्यनुकृष्यते ॥ ३० ॥

भेदोदयेन वै दृष्टास्तास्ताः सर्गदशास्तथा ।

142689 बोधेन चेत्तदत्यच्छमेकं ब्रह्म नभस्ततम् ॥ ३१ ॥
142690

142691 भेदोदयेन भेदवासनोद्बोधेन। बोधेन तत्त्वदृशा तु एतत्सर्वं ब्रह्म नभ एव
142692 दृष्टमित्यर्थः ॥ ३१ ॥
142693

142694 नेदं ब्रह्मणि नामास्ति जगद्ब्रह्मण्यथ त्विदम्।
142695 ब्रह्मैवाजमनाद्यन्तं तत्सर्वं तत्पदादिकम् ॥ ३२ ॥
142696

142697 तथा च ब्रह्मणः सप्रपञ्चता निष्प्रपञ्चता च दृष्टिभेदेनाविरुद्धेत्याह -
142698 नेदमिति। अथ त्विदमस्तीति शेषः। पद्यते ज्ञानेन प्राप्यत इति पदं तदात्मकम् ॥ ३२ ॥
142699

142700 पाषाणमौनप्रतिमं नकिंचिदभिशब्दितम्।
142701 यत्तत्किंचिदिति द्योतरूपं ब्रह्म जगत्स्मृतम् ॥ ३३ ॥
142702

142703 न किंचिदभिशब्दितं सर्वनामरूपशून्यम्। द्योतरूपं ज्योतीरूपम्। तदेव
142704 जगद्रूपेण स्मृतमित्यर्थः ॥ ३३ ॥
142705

142706 विभात्यचेत्यंन् चिद्व्योम्नि स्वसत्तैव जगत्तया।
142707 निराकारे निराकारा स्वप्नानुभवसंनिभा ॥ ३४ ॥
142708

142709 अचेत्यंन् चेत्यंन् विनापि चितः स्वसत्तैव चेत्यजगत्तया विभाति ॥ ३४ ॥
142710

142711 अनन्यमात्मनो ब्रह्म सर्वं भामात्ररूपकम्।
142712 प्रकाशनमिवालोकः करोति न करोति च ॥ ३५ ॥
142713

142714 विभातीत्येतत्प्रत्यगभेदप्रदर्शनेनोपपादयन्स्वयंज्योतिष्ट्वं दर्शयति -
142715 अनन्यमिति। अनन्यं अनन्यत्। अद्डादेशाकरणं छान्दसम्। भामात्ररूपकं ब्रह्म
142716 सर्वं करोति न करोति च। यथा आलोकः प्रकाशनं करोति
142717 स्वातिरिक्तप्रकाशनाप्रसिद्धेर्न करोति च तद्वत् ॥ ३५ ॥
142718

142719 तेषु नामानुभूयन्ते जगल्लक्षेषु तत्र वै।
142720 उष्णानि चन्द्रबिम्बानि सूर्याः शीतलमूर्तयः ॥ ३६ ॥
142721

142722 ननु यदि चिदेव जगत्तर्हि चन्द्रः शीत एव सूर्य उष्ण एवेति व्यवस्थिता
142723 नियतिर्विपर्यस्येतेति चेदिष्टापत्तिः ब्रह्माण्डभेदे वैपरीत्यस्यापि दर्शनादित्याह -
142724 तेष्वित्यादिना ॥ ३६ ॥
142725

142726 प्रजास्तमसि पश्यन्ति पश्यन्त्येव न तेजसि।
142727 उलूकस्य समाचारास्तस्यैव सदृशस्वराः ॥ ३७ ॥
142728

142729 उलूकस्य दिवान्धस्य। उलूकेन सम आचारो दर्शनादिव्यवहारो यासाम्।
142730 समशब्दार्थस्य नित्यं प्रतियोगिसापेक्षत्वेन सामर्थ्याविघातात्समासः। तस्यैव
142731 तेनैव ॥ ३७ ॥
142732

142733 इतः शेभेन नश्यन्ति यान्ति पापैस्तथा दिवम्।
142734 विषाशनेन जीवन्ति म्रियन्तेऽमृतभोजनैः ॥ ३८ ॥
142735

142736 इत इति। मनःकल्पनाया निरङ्कुशत्वादियमुक्तिर्न तु वस्तुतः।
142737 वेदाप्रामाण्यापादकत्वादिति बोध्यम् ॥ ३८ ॥
142738

142739 यद्यथा बुध्यते बोधे यथोदेत्यथवा स्वतः।
142740 तथाशु स्फुटतामेति सद्वासद्वा तदेव तत् ॥ ३९ ॥

142741
142742 तत्कुतस्तत्राह - यदिति | चिराभ्यासदृढीकृते बोधे यद्वस्तु हिताहितसाधनत्वेन
142743 यथा बुध्यते तथैव भोजकादृष्टवशादुदेति | यथोदेति तथैव भोगकालेऽपि
142744 स्फुटतामेति | अन्यत्र सद्वा असद्वास्तु न विशेषः | यतस्तद्ब्रह्मैव
142745 तद्वासनाकर्मानुसारेण विवर्तत इत्यर्थः || ३९ ||
142746
142747 विटपाकारमूलौघदर्शनाद्वज्रशोभिभिः |
142748 घूर्णते पत्रपुष्पाभैः पादपैर्व्योम्नि काननम् || ४० ||
142749
142750 एतद्ब्रह्माण्डप्रसिद्धकाननविपरीतपत्रपुष्पसंस्थानार्थक्रियासंपन्नं
142751 ब्रह्माण्डान्तरे प्रसिद्धमित्याह - विप्तपेति | विटपाः शाखास्तदाकाराणां
142752 मूलौघानां दर्शनाद्वज्रमणिवद्दृढैः शोभावद्भिः पत्रपुष्पैराभान्तीति
142753 पत्रपुष्पाभैः पादपैरुपलक्षितं घूर्णते इत्यर्थः || ४० ||
142754
142755 सिकताः पीडिताः सत्यः स्रवन्ति स्नेहजं रसम् |
142756 शिलाफलककेभ्यश्च जायन्ते कमलान्यलम् || ४१ ||
142757
142758 एवमसंभावितसहस्रमप्यन्यत्र संभावनीय-मित्याह - सिकता इति |
142759 पीडितास्तिलयन्त्रनिष्पीडिताः | स्नेहजं रसं तैलं स्रवन्ति || ४१ ||
142760
142761 दारुण्यश्मनि भित्तौ च चञ्चलाः शालभञ्जिकाः |
142762 देवाङ्गनाभिः सहितं गायन्ति कथयन्ति च || ४२ ||
142763
142764 मेघान्परिदधत्युच्चैर्भूतान्युच्चैः पटानिव |
142765 प्रतिवर्षं विजातीयान्युत्पद्यन्ते फलान्यगे || ४३ ||
142766
142767 भूतानि प्राणिनः पटानिव मेघान्परिदधति परिधानं कुर्वन्ति | अगे वृक्षे || ४३ ||
142768
142769 संनिवेशैर्न नियतैरङ्गानां विविधाङ्गकैः |
142770 शिरोभिः सर्वभूतानि परिक्रामन्ति भूमिगैः || ४४ ||
142771
142772 शास्त्रवेदविहीनानि निर्धर्माण्येव कानिचित् |
142773 यत्किंचनैककारीणि तिर्यग्वन्ति जगन्त्यधः || ४५ ||
142774
142775 तिर्यग्वन्तिपश्वादिमात्रपूर्णानि | अधः भूम्याद्यधोलोकेषु || ४५ ||
142776
142777 कामसंवित्तिहीनानि निःस्त्रीजातानि कानिचित् |
142778 भूतैः संशुष्कहृदयैर्व्याप्तान्यश्ममयैरिव || ४६ ||
142779
142780 यतः कामसंवित्त्या हीनान्यत एव निस्त्रीजातानि || ४६ ||
142781
142782 पवनाशनभूतानि समरत्नाश्मकानि च |
142783 अजातार्थान्यलुब्धानि निगर्वाणीव कानि च || ४७ ||
142784
142785 पवनाशनाः सर्वा एव भूतानि प्राणिनो यत्र | समानि रत्नान्यश्मकानि च यत्र |
142786 अजातार्थान्यसंजातधनानि | धनादिव्यवहारशून्यानीति यावत् | अत एवालुब्धानि |
142787 निगर्वाणि निरहंकाराणीव | कानि च कानिचित् || ४७ ||
142788
142789 क्वचित्प्रत्येकमात्मानं पश्यत्याप्नोति नेतरत् |
142790 बहुभूतकमप्यस्ति जगदित्येकभूतकम् || ४८ ||
142791
142792 क्वचिद्व्यष्ट्यहंभावभेदं विना विराडहंभावेनैकात्म्येनैव

142793 सर्वदेहभेदव्यवहारमाह - क्वचिदिति | इतरदात्मान्तरं नाप्नोति | तत्रापि
142794 चतुर्विधभूतभेदैर्बहुभूतकं स्वेदजाद्येकैकभूतपूर्णं चास्तीत्यर्थः || ४८ ||
142795

142796 नखकेशादिके यद्वत्तद्वदन्यत्र संस्थितः |
142797 आत्मवत्सर्वभूतानामेकीभूतात्मभावना || ४९ ||
142798

142799 तत्र देहभेदेष्वेकीभूतात्मभावना कीदृशी तां दर्शयति - नखेति |
142800 यद्वन्नखकेशादिके छिद्यमाने जायमाने चात्मनः स्वच्छेदनजन्मादि
142801 पश्यतीत्यन्यत्र संस्थित इव भवति | तत्सौन्दर्यादिसुखभोगे त्वेकीभूतात्मभावना
142802 अस्य दृश्यते तद्वदित्यर्थः | अत एवाह श्रुतिः नह वै देवान्पापं गच्छति
142803 पुण्यमेवानु गच्छति इति || ४९ ||
142804

142805 अनन्तापारपर्यन्तं शून्यमेव बहु क्वचित् |
142806 यत्नतः संविदाप्नोति तस्यान्ते न जगत्पुनः || ५० ||
142807

142808 क्वचित्तु सर्गभेदवासनानुद्भवादव्याकृताकाशमात्रतया विभाव्यत इत्याह -
142809 अनन्तेति | तर्हि कथं सर्वत्र सर्वात्मकं तदित्युक्तं तत्राह - यत्नत इति |
142810 तिरोभावावस्थादृष्टिं तिरोभाव्यसंस्कारविषयाविर्भावनयत्नतस्तस्य
142811 शून्यस्यान्तेन तिरस्करणेन पुनर्जगदाप्नोति पश्यति || ५० ||
142812

142813 अत्यन्ताबुद्धबुद्धानि मोक्षशब्दार्थदृष्टिषु |
142814 दारुयन्त्रमयाशेषभूतौघानीव कानिचित् || ५१ ||
142815

142816 मोक्षशब्दार्थो निर्विशेषब्रह्मभावस्तद्दृष्टिषु अत्यन्ताबुद्धान्यलीकानि
142817 तद्वद्बुद्धानि | चित्पृथक्कारबुद्धौ तु दारुयन्त्रमयानि
142818 हस्त्यश्वादिरूपाण्यशेषाणि भूतौघानीव चेतनतया दृष्टानि || ५१ ||
142819

142820 ऋक्षचक्रविहीनानि निष्कालकलनानि च |
142821 मूकसंकेतसाराणि भूतजालानि कानिचित् || ५२ ||
142822

142823 ऋक्षचक्रैर्ज्योतिश्चक्रैर्विहीनान्यत एव निष्कालकलनानि कानिचित् |
142824 शब्दाभावाच्छ्रोत्राभावाद्वा मूकानां
142825 हस्तपादाद्यभिनयसंकेतसाध्यव्यवहारत्वात्तत्साराणि कानिचिदिति विभज्यान्वयः |
142826 एवमग्रेऽपि यथायोगं बोध्यम् || ५२ ||
142827

142828 कानिचिद्वर्जितान्येव नेत्रशब्दार्थसंविदा |
142829 व्यर्थदीप्तात्मतेजांसि भूतानीत्येकचिन्तया || ५३ ||
142830

142831 नेत्रशब्देन तदर्थेन नेत्रेण तज्जन्यसंविदा रूपादिदर्शनेन च वर्जितान्येव | अत एव
142832 व्यर्थदीप्तात्मकानि सूर्यादितजांसि येषु | इति इयं जगत्स्थितिः एकचिन्तया
142833 एकाग्रचित्तयोगिमनःकल्पनया मयोक्तेत्यर्थः || ५३ ||
142834

142835 प्राणसंविद्विहीनानि व्यर्थामोदानि कानिचित् |
142836 मूकानि शब्दवैयर्थ्याच्छ्रुतिहीनानि कानिचित् || ५४ ||
142837

142838 प्राणो घ्राणेन्द्रियं तज्जन्यगन्धं संविच्च ताभ्यां विहीनानीत्यादि पूर्ववत् || ५४ ||
142839

142840 वाक्यसंविद्विहीनत्वान्मूकान्यन्यानि कानिचित् |
142841 स्पर्शसंविद्विहीनत्वादश्माङ्गानीव कानिचित् || ५५ ||
142842

142843 अश्माङ्गानीव त्वगिन्द्रियरहितानि || ५५ ||
142844

142845 संविन्मात्रमयान्येव दृष्टान्यपि च कानिचित् ।
142846 व्यवहारीण्यप्यग्राह्याण्येव नित्यं पिशाचवत् ॥ ५६ ॥
142847
142848 संविन्मात्रमयानि । मनोराज्यकल्पानीति यावत् । कानिचित्तु व्यवहारीण्यपि
142849 पिशाचवदनुद्भूतगुणभूतारब्धत्वदिन्द्रियैरग्राह्याण्येव ।
142850 साक्षिमात्रवेद्यानीत्यर्थः ॥ ५६ ॥
142851
142852 भूमयान्येकनिष्ठानि निष्पिण्डान्येन कानिचित् ।
142853 कानिचिद्वारिपूर्णानि वह्निपूर्णानि कानिचित् ॥ ५७ ॥
142854
142855 निष्पिण्डानि घनीभावरहितानि ॥ ५७ ॥
142856
142857 कानिचिद्वातपूर्णानि सर्वाकाराणि कानिचित् ।
142858 जगन्ति व्योमरूपाणि बत तत्र कचन्ति खे ॥ ५८ ॥
142859
142860 सर्वाकाराणि सर्वकार्यक्षमसर्ववस्तुकानि । प्राकम्यसिद्धिशालिमनः
142861 कल्पनयेदमुक्तम् । तत्र खे चिदाकाशे । बतेत्याश्चर्ये ॥ ५८ ॥
142862
142863 धरापीठैकपूर्णेषु तिष्ठन्त्यन्येषु देहिनः ।
142864 भेका इव शिलाकोशे कीटा इव धरोदरे ॥ ५९ ॥
142865
142866 भूमयान्येवेति [अत्र भूमयान्येकेति ५७ तमश्लोकमूलवदपेक्षितम् ।]
142867 यदुक्तं तत्र भूतजीवनानुपपत्तिशङ्कां दृष्टान्तेन परिहरति - धरेति ॥ ५९ ॥
142868
142869 जलैकपरिपूर्णेषु तिष्ठन्त्युर्वीवनाद्रिषु ।
142870 भ्रमन्त्यन्येषु भूतानि नित्यमेवोग्रमीनवत् ॥ ६० ॥
142871
142872 एवं वार्यादिपूर्णेष्वपि जीवनोत्पत्तिर्बोध्येत्याह - जलेति । उग्रमीनो ग्राहस्तद्वत् ॥ ६०
142873 ॥
142874
142875 अन्येष्वग्न्येकपूर्णेषु जलादिरहितान्यपि ।
142876 भूतान्यग्निमयान्येव स्फुरन्त्यलमलातवत् ॥ ६१ ॥
142877
142878 अलातवत् भ्रमदुल्मुकवत् स्फुरन्ति संचलन्ति ॥ ६१ ॥
142879
142880 अन्येष्वनिलपूर्णेषु भूतान्यस्तेतराण्यपि ।
142881 वातमात्रमयाङ्गानि स्फुरन्त्यर्जुनवातवत् ॥ ६२ ॥
142882
142883 अर्जुनवातो रोगविशेषः । तद्वन्तो हि जना आकाशे भ्रमन्तीति देशविशेषे प्रसिद्धम् ॥ ६२
142884 ॥
142885
142886 अन्येषु व्योममात्रात्मदेहेषु व्योमरूपिणः ।
142887 प्राणिनः सन्ति सर्गेषु दर्शनव्यवहारिणः ॥ ६३ ॥
142888
142889 पातालपातिषु तथाम्बरमुत्पतत्सु तिष्ठत्सु विभ्रमपदेष्वथ दिङ्मुखेषु ।
142890 नानाजगत्सु किमिवास्ति मया न दृष्टं यन्नाम चिज्जलधिचञ्चलबुद्बुदेषु ॥ ६४
142891 ॥
142892
142893 तत्र चिदाकाशे अध ऊर्ध्वं परितश्च कल्पिते दिग्विभागे प्लवमानानि सर्वाणि विचित्राणि
142894 जगन्ति तदन्तर्गतवस्तूनि च मया दृष्टानीत्युपसंहरति - पातालेति ।
142895 चिज्जलधेश्चञ्चलबुद्बुदप्रायेषु नानाजगत्सु मया यन्न दृष्टं नाम तत्किमिव ।
142896 न किंचिदित्यर्थः । सर्वज्ञसाक्ष्यविषयस्याप्रसिद्धेरिति भावः ॥ ६४ ॥

142897
142898 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वाणप्रकरणे उत्तरार्धे
142899 पाषा० जगज्जालवर्णनं नाम षष्टितमः सर्गः ॥ ६० ॥
142900
142901 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
142902 जगज्जालवर्णनं नाम षष्टितमः सर्गः ॥ ६० ॥
142903
142904 एकषष्टितमः सर्गः ६१
142905
142906 श्रीवसिष्ठ उवाच ।
142907
142908 चिदाकाशाच्चिदाकाशे पयसीव पयोरयाः ।
142909 चित्त्वाज्जीवाः स्फुरन्त्येते एत [यत इति पाठः ।] एव मनांसि नः ॥ १ ॥
142910
142911 अज्ञातब्रह्महृदयं जगन्नाशेऽप्यनश्वरम् ।
142912 ज्ञाते तु ब्रह्मणि जगन्नासीदस्ति भविष्यति ॥
142913
142914 अनाद्यज्ञातं ब्रह्मैव
142915 स्वकूटस्थपूर्णानन्दचित्स्वभावविस्मरणाच्चलनपरिच्छेदादिस्वभावान्तरं
142916 परिकल्प्य मनःप्राणादिक्रमेण भोक्ता जीवो भोग्यं जगच्च भुत्वा सर्वत्र सर्वदा
142917 सर्वरूपेण संसरत्येवेत्यस्य यावदविद्यं संसारः शाश्वतस्वभावः । तदेव
142918 शास्त्राचार्योपदेशाज्ज्ञातं चेत्सर्वदा सर्वतः सर्वात्मना च
142919 पूर्णानन्दचिदेकरसमातं न कदापि क्वापि कश्चिदपि कस्यचिदपि संसारलेशः
142920 संभावयितुं शक्य इति नित्यमुक्तस्वभावमेव तदिति व्युत्पादयितुं वसिष्ठो
142921 भूमिकां रचयति - चिदाकाशादिति । चित्त्वादज्ञातचिदेकरसस्वभावात् । जीवाः
142922 प्राणोपाधिपरिच्छिन्नाः स्फुरन्ति अनादितादृशवासनोद्भवाद्भासन्ते । त
142923 एवोत्तरोत्तरं संकल्पविकल्पसहस्रैः संसरणबीजत्वात्स्वात्मनि
142924 करणभावमिवापद्यमानानि मनांसि इत्युच्यन्त इत्यर्थः ॥ १ ॥
142925
142926 विशदाकाशरूपाणि तान्येव च मनांसि नः ।
142927 जगन्ति तान्यनन्तानि संपन्नान्यभितः स्वयम् ॥ २ ॥
142928
142929 तान्येव मनांसि स्वान्तर्गतभोग्यजगद्वासनानां जगदाकारेण विकासादनन्तानि
142930 जगन्ति संपन्नानीत्याह - जगन्तीति ॥ २ ॥
142931
142932 श्रीराम उवाच ।
142933
142934 सर्वभूतगणे मोक्षं महाकल्पक्षये गते ।
142935 पुनः कस्य कथं सर्गसंवित्तिरुपजायते ॥ ३ ॥
142936
142937 नन्वेवं सति ब्रह्मैव स्वाविद्यया नानाजीवभावैर्नानासंसारात्मना एकमेव
142938 संसरति एकमेव स्वविद्यया सर्वजीवसंसारभावेभ्यो मुच्यत इत्युक्तं स्यात् तथा च
142939 प्राक्तनप्राकृतप्रलयान्ते सर्वजीवसमष्ट्यात्मनो हिरण्यगर्भस्य
142940 तत्त्वज्ञानेनाज्ञाननिवृत्तौ तन्मूलसर्वजीवजगद्भावानां
142941 बाधावर्जनात्सर्वमुक्तिरवश्यवाच्येति मुक्तस्य ब्रह्मणः
142942 पुनरेतज्जगज्जीवपरम्परया संसारो निर्बीजः कथं संपन्न इत्याशयेन रामः
142943 शङ्कते - भूयश्चान्ते विश्वमायानिवृत्तिः इति श्रुतेः
142944 सर्वमुक्तेरवश्यवाच्यत्वादिति भावः ॥ ३ ॥
142945
142946 श्रीवसिष्ठ उवाच ।
142947
142948 महाप्रलयपर्यन्ते क्षितिजलपवनहुताशाकाशाशेषविशेषविनाशे

142949 आब्रह्मस्थावरान्तेषु मुक्तौ परिणतेषु भूयो यथेदंन् जगदनुभूयते तथा
142950 शृणु। अव्यपदेश्यंन् यत्परमार्थघनंन् ब्रह्म चिन्मात्रमित्याचक्षते
142951 मुनयः तस्य हृदयमिदं जगत्तस्मादव्यतिरिक्तमेव स एव च
142952 देवस्तदात्मीयं हृदयं स्वभावं जगदित्यवगच्छति च विनोदेनैव न तु
142953 वास्तवेन रूपेण जगदिति किंचिदुपलभामहे विचारयन्तस्तस्मात्किमिव नश्यते
142954 किमिव जायते यथा परमकारणमविनाशि तथा तद्धृदयमविनाश्यं च।
142955 महाकल्पादयश्च तदवयवा एव अपरिज्ञानमात्रमत्र केवलं भेदायैव
142956 तदपि प्रेक्ष्यमाणं न लभ्यत एव॥ ४॥
142957
142958 प्रश्नमनूद्य तदुत्तरं गद्यपद्यैर्वक्तुं वसिष्ठः प्रतिजानीते -
142959 महाप्रलयेत्यादि - शृण्वित्यन्तेन। आकाशान्तानामशेषविशेषाणां विनाशे
142960 सति ब्रह्मादिस्थावरान्तेषु जीवजगत्सु मुक्तौ परिणतेषु अव्यपदेश्यं ब्रह्म
142961 चिन्मात्रमवशिष्यत इति यद्यप्याचक्षते तथापि तस्याविशिष्टस्य ब्रह्मचिन्मात्रस्य
142962 हृदयमिदं जगत्तस्माद्ब्रह्मणोऽव्यतिरिक्तमेवेति पूरयित्वा व्याख्येयम्। अयं
142963 भावः - यद्यपि मुक्तदृष्ट्या सर्वजीवन्मुक्तिरेव न कस्यचित्किंचित्परिशिष्यते
142964 तथाप्यन्येषां प्रत्येकं तत्त्वज्ञानोदयाभावात्तद्दृशा स्वस्वाविद्या न नष्टैवेति
142965 बन्धानुभव एव। यथा चन्द्रलोकस्थानां सांप्रतं चन्द्रमण्डलं गतानां च
142966 दृष्ट्या अत्यन्तासदपि चन्द्रप्रादेशिकत्वं भूमिष्ठानां दृशा तथैवास्ते
142967 तद्वदिति। एतदेवाह - स एव देव इत्यादिना। अवगच्छति बद्धदृशा।
142968 चकारान्नावगच्छति च मुक्तदृशा। यूयं जीवन्मुक्तास्तर्हि कीदृशं
142969 जगदुपलभध्वे तत्राह - विनोदेनैवेति। विनोदेन बाधितानुवृत्तिरूपकौतुकेनैव
142970 दग्धपटवदित्यर्थः। तस्मादेवं दृष्टित्रयेऽप्यव्यतिरिक्तत्वाज्जगत्किमिव नश्यति
142971 किमिव जायते। यद्यविनाश्येव तर्हि कथं महाकल्पावान्तरकल्पादयस्तत्राह -
142972 महाकल्पादय इति। न हि शाश्वतस्य तस्यैकदेशा अशाश्वताः शक्या वक्तुम्। न वा
142973 नष्टाः कल्पभेदाः पुनः पुनरागन्तुं शक्नुवन्ति। अतः सतामेव
142974 कल्पसर्गभेदानां जपमालावयववत्परिवृत्तिरेव पुनः पुनः कालचक्रात्मनेति
142975 भावः। कथं तर्ह्यतीतानागतकल्पादिषु भेदप्रत्ययस्तत्राह -
142976 अपरिज्ञानमात्रमिति॥ ४॥
142977
142978 तस्मान्न कस्यचित्किंचित्कदाचिन्नश्यति क्वचित्।
142979 न चैव जायते ब्रह्म शान्तं दृश्यमजं स्थितम्॥ ५॥
142980
142981 गद्यप्रसाधितमर्थं पद्येनोपसंहरति - तस्मादिति॥ ५॥
142982
142983 आकाशपरमाणुसहस्रांशमात्रेऽपि या शुद्धचिन्मात्रसत्ता विद्यते॥ ६॥
142984
142985 वपुर्जगदिदं तस्या ननु नाम महाचितेः।
142986 कथं नश्यत्यनष्टायां तस्यां सा च न नश्यति॥ ७॥
142987
142988 जगतोऽविनाशित्वे युक्त्यन्तरमाह - आकाशेति। महत्त्वोत्कर्षावधावाकाशे
142989 अणुत्वोत्कर्षावधौ परमाणुसहस्रांशमात्रे च जगति ब्रह्मचित्सत्तयैव सत्तेति यदा
142990 सिद्धान्तस्तदा तद्विनाभावे कथं विनाशोपपत्तिरिति समुदायार्थः। वपुरित्यादीनि
142991 पद्यानि॥ ६॥ ७॥
142992
142993 संविदो हृदयं स्वप्ने यथा भाति जगत्तया।
142994 व्योमात्मैव तथैवादिसर्गात्प्रभृति भासते॥ ८॥
142995
142996 संविद्धृदयत्वं च संविन्मात्रसारे स्वप्नेऽपि प्रसिद्धमित्याह - संविद इति॥ ८
142997 ॥
142998
142999 चिद्व्योमावयवः सर्गः सर्गस्यैतादृशाः क्षयाः।
143000 उदयाश्चेति खं सर्वं किं नाशि किमनाशि च॥ ९॥

143001
143002 एषा हि परमार्थसंविदच्छेद्या अदाह्याऽक्लेद्याऽशोष्यता सा
143003 ह्यतद्विदामदृश्या तस्या यद्धृदयं तत्तदेव भवति यथासौ न नश्यति
143004 तदन्तर्वर्ती जगदाद्यनुभवो न जायते न नश्यत्येवेति केवलं
143005 स्मरणविस्मरणवशेन स्वभावरूपेणानुभवाननुभवौ कल्पयतीव ॥ १० ॥
143006
143007 तर्ह्यस्तु संविदोऽपि नाशस्तत्र गद्येनोत्तरमाह - एषा हीति । यथा असौ संविन्न
143008 नश्यति तथा तदन्तर्वर्ती तद्धृदयभूतो जगतस्तद्धेत्वज्ञानस्य चानुभवः
143009 प्रतिभापि न जायते न नश्यति च । यदि न नश्यत्येव तर्हि कथं सुखदुःखादीनां
143010 कादाचित्कत्वानुभवस्तत्राह - केवलमिति ॥ १० ॥
143011
143012 यद्यद्यदात्मकं तत्त्वं तद्विनाशं विनाऽक्षयि ।
143013 तस्माद्ब्रह्मात्मकं दृश्यं विद्धि ब्रह्मवदक्षयम् ॥ ११ ॥
143014
143015 जगतः शाश्वतेनात्मना सात्मकत्वादपि न नश्वरतेति पद्येनाह - यद्यदिति ।
143016 यद्यदिति दर्शनात्तत्तदित्यध्याहार्यम् । तत्तद्विनाशं विना अक्षयि अविनाशि ॥ ११ ॥
143017
143018 महाप्रलयादयस्तदवयवा एव ॥ १२ ॥
143019
143020 यदि ब्रह्मात्मकं विश्वं तर्हि तन्नानात्वाद्ब्रह्मनानात्वं किं न स्यात्तत्राह -
143021 महाप्रलयादय इति । तस्य महाकालात्मनो ब्रह्मणः अवयवा एव ॥ १२ ॥
143022
143023 चिन्मात्रे परमे व्योम्नि कुत एव भवाभवौ ।
143024 कुतो भावविकारादिः कथं व्योम्नि निराकृते ॥ १३ ॥
143025
143026 नन्वचेतनसर्गप्रलयाद्यनन्तावयवघटितं कथं चिदेकरसं स्यादिति
143027 चेद्गिरिवृक्षनगराद्यनेकप्रतिबिम्बघटितस्फटिकशिलाया
143028 स्वच्छशिलैकरसत्ववदित्याशयेन पद्येनोत्तरमाह - चिन्मात्रे इत्यादिना ।
143029 निराकृते निराकारे । भावे क्तः बहुव्रीहिः ॥ १३ ॥
143030
143031 महाकल्पादयो भावा नामैतानि जगन्ति च ।
143032 ब्रह्मात्मकतयैवास्मिन्संविद्ब्रह्मणि संस्थितम् ॥ १४ ॥
143033
143034 यथा विचित्रप्रतिबिम्बभेदाः स्फटिकात्मनैव स्थितास्तद्वन्महाकल्पादयो
143035 विचित्रभावाः संविदेकरसे ब्रह्मणि संस्थिता इत्यर्थः ॥ १४ ॥
143036
143037 निराकृत्यच्छचिन्मात्रं दृश्यं संकल्प्य तद्वशम् ।
143038 याति येनैव घटितो यक्षस्तद्धृदये किल ॥ १५ ॥
143039
143040 यथा मनःसंकल्पजानां यक्षनगरसेनादीनां मनोमात्रत्वं तथा
143041 चित्संकल्पजस्य जगतोऽपि चिन्मात्रत्वमित्याशयेनाह - निराकृतीति ॥ १५ ॥
143042
143043 यथावयविनो वृक्षस्य शाखाविटपफलपल्लवपुष्पादयोऽवयवास्तथा
143044 परमार्थघनस्याकाशादप्यच्छरूपस्याव्यपदेश्यस्य
143045 प्रलयमहाप्रलयनाशोद्भेदभावाभावसुखदुःखजननमरणसाकार##-
143046 त इति ॥ १६ ॥
143047
143048 अस्त्वेवं तथापि कथं जगतामविनाशित्वमिति चेदविनाश्यवयवत्वादेवेत्याशयेन
143049 वृक्षशाखासाम्येन गद्येन वर्णयति - यथेत्यादिना । असौ ब्रह्मरूपोऽवयवी
143050 यथैवाविनाशः अव्यपदेश्यश्च तथैव ते अवयवाः सर्गप्रलयादय इति
143051 एतस्मात्कारणादित्यर्थः ॥ १६ ॥
143052

143053 अवयवावयविनोर्दृश्ययोर्वाप्यदृश्ययोः ।
143054 एकात्मनोरेव सदा भेदोऽस्ति न कदाचन ॥ १७ ॥
143055
143056 तत्कुतस्तत्र पद्येनाह - अवयवावयविनोरिति । ननु दृश्यादृश्ययोः
143057 कथमभेदस्तत्राह - दृश्ययोर्वेति । अभेदेऽपि स एव स्थौल्ये दृश्यो भवति
143058 सौक्ष्म्ये त्वदृश्य इति । न दृश्यत्वादृश्यत्वे भेदनियते इत्याशयः ॥ १७ ॥
143059
143060 यथा तरोः संविन्मूलं तथा परमार्थघनस्य क्वचित्किंचित्त्वं
143061 क्वचित्सर्गस्तम्बः क्वचिल्लोकान्तरविटपाः क्वचिद्व्यवस्थाः शाखाः
143062 क्वचित्पदार्थपल्लवाः क्वचित्प्रकाशकुसुमम् क्वचिदन्धकारकार्ष्ण्यं
143063 क्वचिन्नभःकोटरं क्वचित्प्रलयगुल्माः क्वचिन्महाप्रलयगुल्माः
143064 क्वचिद्धरिहरादिगुलुच्छकाः क्वचिज्जाड्यत्वक् एवमनाकारं व्योमरूपमेव
143065 संविदात्मनि ब्रह्मणि ब्रह्मसदृशभावादव्यतिरिक्तमेवैतत्स्थितम् ॥ १८ ॥
143066
143067 तत्रावयवावयविनोरभेदं वृक्षतदवयवसाम्यनिरूपणेनोपपादयति -
143068 यथेत्यादिना । यथा तरुसद्भावे तरुसंविदेव मूलं तथा परमार्थघनस्य
143069 जगतोऽपि सद्भावे संविदेव मूलमिति साम्यं प्रसिद्धम् । एवं संविन्मूलतयैव
143070 क्वचित्प्रदेशे किंचिद्वैचित्र्यं तरुवदेव दर्शयति - क्वचिदिति । सर्गलक्षणह् स्तम्बो
143071 मध्यकाष्ठम् । तत्संलग्ना भूरादिलोकान्तरलक्षणा विटपाः स्कन्धाः । तत्रापि
143072 जम्बूद्वीपादिव्यवस्थाः शाखाः । तेषु गिरिनदीजनपदादिपदार्थाः पल्लवाः । तेषु
143073 चन्द्रादित्यादिप्रकाशः कुसुमम् । अन्धकारलक्षणं हरितच्छदकार्ष्ण्यम् ।
143074 प्रलयलक्षणा गुल्मा ग्रन्थिभेदाः । हरिहरादिदेवोत्तमलक्षणा गुलुच्छका गुच्छाः
143075 । सजलमेघजाड्यलक्षणा त्वक् । एवं वर्णितरीत्या अनाकारं
143076 व्योमरूपमेवाकारभेदैः संविदात्मनि ब्रह्मणि
143077 ब्रह्मसदृशस्वच्छभावादेवाव्यतिरिक्तं स्थितमित्यर्थः ॥ १८ ॥
143078
143079 इतो भाव्य इतो भाव इतः सर्ग इतः क्षयः ।
143080 स्वभाव एवानुभव इति ब्रह्माचलं स्थितम् ॥ १९ ॥
143081
143082 उक्तमेवार्थं पद्यैराह - इतर इत्यादिना । भाव्यो भविष्यदर्थः । भवतीति भावो
143083 वर्तमानपदार्थः । अतीतस्याप्युपलक्षणमेतत् । स च
143084 सर्वोऽप्यनुभवाधीनसिद्धिकत्वादनुभव एव । स च स्वो भाव आत्मैवेति
143085 ब्रह्मैवाचलमेकमेवं वैचित्र्यकल्पनया स्थितमित्यर्थः ॥ १९ ॥
143086
143087 एवंमयेऽपि परमे ब्रह्माकाशे न रञ्जनाः ।
143088 काश्चिदेवाङ्ग सन्तीन्दुबिम्बे विमलता यथा ॥ २० ॥
143089
143090 तर्हि ब्रह्मणि सर्गप्रलयादिरञ्जना किं सत्याः नेत्याह - एवमिति । काश्चिदपि न
143091 सन्त्येवेत्यन्वयः । इन्दुबिम्बे विमलता निष्कलङ्कता यथा नास्तीति कथंचिदुपमा ।
143092 तथा निर्मले इत्युत्तरान्वयो वा ॥ २० ॥
143093
143094 निर्मले परमाकाशे क्व भावाभावरञ्जनाः ।
143095 क्वादिमध्यान्तकलनाः क्व लोकान्तरविभ्रमाः ॥ २१ ॥
143096
143097 अपरिज्ञानमेवैकं तत्र दोषवदुत्थितम् ।
143098 केवलं तत्परावृत्य प्रेक्षणात्परिशाम्यति ॥ २२ ॥
143099
143100 तर्हि तथा विभ्रमे को हेतुः कुतो वा तच्छान्तिस्तत्राह - अपरिज्ञानमेवेति ।
143101 परावृत्य पराग्दृष्टिमपहाय प्रत्यगात्मप्रवणया धिया प्रेक्षणात् ।
143102 कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन् इत्यादिश्रुतेरिति
143103 भावः ॥ २२ ॥
143104

143105 अज्ञानं ज्ञप्तिबोधेन परामृष्टं प्रणश्यति ।
143106 येनैवाभ्युदितस्तेन पवनेनेव दीपकः ॥ २३ ॥
143107
143108 अज्ञानसाधकस्यैव चरमसाक्षात्कारवृत्तीद्धस्य तद्बाधकत्वे युक्तिमाह -
143109 अज्ञानमिति ॥ २३ ॥
143110
143111 अज्ञानं संपरिज्ञातं नासीदेवेति बुध्यते ।
143112 अबन्धमोक्षं ब्रह्मैव सर्वमित्यवगम्यते ॥ २४ ॥
143113
143114 ज्ञानस्याज्ञानतत्कार्यबाधकत्वं प्रसिद्धमेवेत्याह - अज्ञानमिति ।
143115 बाधपरिशिष्टब्रह्मानुभवमभिलप्य दर्शयति - अबन्धमोक्षमिति ॥ २४ ॥
143116
143117 एवं बोधादयो राम मोक्ष उक्ताः स्वसंविदा ।
143118 विचारयत्नो लभते नात्र कश्चन संशयः ॥ २५ ॥
143119
143120 हे राम मया मोक्षे एवं वर्णितरूपा बोधादय उपाया उक्ताः ।
143121 एतांस्तूपायान्निरन्तरं विचारे यत्नो यस्य तथाविधोऽधिकारी लभते ॥ २५ ॥
143122
143123 इदं जगज्जालमनाद्यजातं ब्रह्मार्थमाभातमितीह दृष्ट्वा ।
143124 विचारदृष्ट्याऽष्टगुणेश्वरत्वं पश्यंस्तृणं स्वात्मनि जीव आस्ते ॥ २६ ॥
143125
143126 अनादि इदं जगज्जालं कदाप्यजातं नोत्पन्नमेव किंतु ब्रह्मैवार्थयते प्रार्थयते
143127 भोगमोक्षावित्यर्थम् । अज्ञातस्वस्वरूपमिति यावत् । इति
143128 वर्णितजगद्धृदयादिरूपेणाभातं वर्तते । जीवः अधिकारी इति विवेकदृष्ट्या इति
143129 विचारदृष्ट्या अणिमाद्यष्टगुणसंपन्नमीश्वरत्वमपि
143130 मायामात्रत्वादसारमेवेति परवैराग्योत्कर्षेण तृणप्रायंन् पश्यन्
143131 निरतिशयानन्दं ब्रह्मैवाहमिति निश्चित्य स्वात्मन्येव पूर्णकाम आस्ते इत्यर्थः ॥ २६ ॥
143132
143133 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० न्निर्वाणप्रकरणे उ० पाषाणो०
143134 जगदाकाशैकबोधो नामैकषष्टितमः सर्गः ॥ ६१ ॥
143135
143136 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
143137 जगदाकाशैकबोधो नामैकषष्टितमः सर्गः ॥ ६१ ॥
143138
143139 द्विषष्टितमः सर्गः ६२
143140
143141 श्रीराम उवाच ।
143142
143143 यदेतद्भवता दृष्टं चिद्व्योमवपुषा तदा ।
143144 तदेकदेशसंस्थेन किमुत भ्रमताम्बरे ॥ १ ॥
143145
143146 देहवज्जगतां वीक्षा वर्ण्यतेऽत्र मुने स्त्रिया ।
143147 संभाषाव्योमरूपस्य स्वप्नवद्व्योमरूपया ॥
143148
143149 त्वया तज्जगज्जालं किं परिच्छिन्नभावेन स्थित्वा पक्षिवदम्बरे भ्रमता
143150 दृष्टमुतापरिच्छिन्नचिद्व्योमभावेनेति संदिहानो रामः पृच्छति - यदेतदिति
143151 ॥ १ ॥
143152
143153 श्रीवसिष्ठ उवाच ।
143154
143155 संपन्नोऽहमनन्तात्मा व्यापी व्योम तदा किल ।
143156 स्याातां तस्यामवस्थायां कीदृशौ तौ गमागमौ ॥ २ ॥

143157
143158 तत्र द्वितीयकल्पमालम्ब्य वसिष्ठ उत्तरमाह - संपन्न इति।
143159 तस्यामानन्त्यावस्थायां गमागमौ। क्रियामात्रोपलक्षणमेतत्॥ २॥
143160
143161 नैकस्थानस्थितमयो नाहं गतिमयोऽभवम्।
143162 तदनेन स्व एवास्मिन्दृष्टमेतन्मयात्मनि॥ ३॥
143163
143164 मयटौ प्राचुर्ये। तत्तस्माद्धेतोः स्वै एवास्मिन्नित्यापरोक्षे आत्मनि एतज्जगन्मया
143165 दृष्टम्॥ ३॥
143166
143167 यथाङ्गानि शरीरत्वे पश्याम्यापादमस्तकम्।
143168 चिन्नेत्रेणाप्यनेत्रेण तथैतद्दृष्टवानहम्॥ ४॥
143169
143170 एकदेशस्थित्यादिकल्पनां विना स्वात्मतयानात्मदर्शनाप्रसिद्धिं
143171 दृष्टान्तोपन्यासैर्निराचष्टे - यथेत्यादिना। शरीरत्वे देहात्मतादर्शने।
143172 अङ्गानि हस्तपादादीनि। यथा देहैकदेशस्थितिर्देहान्तरभ्रमणादिकल्पनां विनापि
143173 अनेत्रेण अक्षिगोलकानपेक्षेणापि चिन्नेत्रेण यथा पश्यामि तद्वदित्यर्थः॥ ४॥
143174
143175 अनाकृतेर्निरवयवस्थितेस्तदा तथाऽभवद्विमलचिदम्बरात्मनः।
143176 जगन्ति तान्यवयवजालकानि मे यथा स्वतो न विगलिता न वस्तुता॥ ५॥
143177
143178 असङ्गोदासीननिरवयवब्रह्मभूतस्य तदा जगदवयवता कथमभूत्तत्राह -
143179 अनाकृतेरिति। तदा तस्यां
143180 समाध्यवस्थायामनाकृतेर्निरवयवस्थितेर्विमलचिदम्बरात्मनोऽपि मे तानि जगन्ति
143181 तथा अवयवजालकान्यभवन् यथा स्वतो वस्तुता न विगलिता नापि वस्तुता अभवत्
143182 मत्सत्तया सत्त्वाद्वस्तुता न विगलितेति मदवयवता स्वतः सत्ताशून्यत्वात्तु न वस्तुता
143183 यथा च वास्तवी सावयवता नाभवदित्यदोष इति भावः॥ ५॥
143184
143185 प्रमाणमत्र ते स्वप्नदृष्टोऽभुवनविभ्रमः।
143186 स्वप्नेऽनुभूयते दृश्यं न च किंचित्खमेव तत्॥ ६॥
143187
143188 उक्तेऽर्थे स्वप्नजगतस्तथाविधतां प्रमाणयति - प्रमाणमिति॥ ६॥
143189
143190 यथा पश्यति वृक्षः स्वं पत्रपुष्पफलादिकम्।
143191 स्वसंवेदननेत्रेण तथैतद्दृष्टवानहम्॥ ७॥
143192
143193 यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् इत्यादिश्रुतिस्तु
143194 निर्विकल्पसमाध्यादावेव जगददर्शनमाह न सविकल्पसमाधावित्याशयेन
143195 नेत्रादिकरणानि विनापि तद्दर्शने दृष्टान्तान्तरमाह - यथेति। वृक्षो
143196 वृक्षदेहात्मभूतो जीवः॥ ७॥
143197
143198 यथाम्बुधिरनन्तात्मा वेत्ति सर्वान् जलेचरान्।
143199 तरङ्गावर्तफेनांश्च तथैतद्बुद्धवानहम्॥ ८॥
143200
143201 अम्बुधिः समुद्राभिमानी जीवः॥ ८॥
143202
143203 अवयवान्स्वानवयवी यथा वेत्ति निजात्मनि।
143204 अनन्यानात्मनः सर्गांस्तथैतान्बुद्धवानहम्॥ ९॥
143205
143206 किं बहुना सर्वप्राणिष्वपि स्वावयवानां तथा वेदनं प्रसिद्धमित्याशयेनाह ##-
143207
143208 अद्यापि तानहं देहे व्योम्नि शैले जले स्थले।

143209 तथैव सर्गान्पश्यामि राम बोधैकतां गतः ॥ १० ॥
143210
143211 तदैव मे स्वात्मनि जगद्धृदयतादर्शनमिति न किंतु सदैव तत्प्रवणया दृष्ट्या
143212 तद्द्रष्टुं शक्यमित्याह - अद्यापीति। अद्य अपिशब्दाच्छ्वोऽपि ॥ १० ॥
143213
143214 पुरोऽस्माकमिदं विश्वं गृहस्यान्तर्बहिस्तथा।
143215 पूर्णमेतज्जगद्वृन्दैर्वेद्मि बोधैकतां गतः ॥ ११ ॥
143216
143217 यथाम्भो रसतां वेत्ति शैत्यं वेत्ति यथा हिमम्।
143218 स्पन्दं वेत्ति यथा वायुस्तथैतद्वेत्ति शुद्धधीः ॥ १२ ॥
143219
143220 अम्भ-आदिपदानि तत्तद्देवतापराणि ॥ १२ ॥
143221
143222 यो यो नाम विवेकात्मा शुद्धबोधैकतां गतः।
143223 सम एष मयैकात्मा वेद्मि स्वात्मानमीदृशम् ॥ १३ ॥
143224
143225 किं त्वमेक एव वेत्सि नेत्याह - यो य इति। स सर्वोपि मया सह एकात्मा अहं च
143226 स्वात्मानमीदृशं तदात्मभूतं वेद्मीति मत्प्रत्यया एव सर्वविदुषां प्रत्यया इति
143227 न ते पृथगन्वेष्या इत्याशयः ॥ १३ ॥
143228
143229 अस्या दृष्टेः परिणतेर्वेत्तृवेदनवेद्यधीः।
143230 न काचिदस्त्यभ्युदिता विज्ञानात्मैकता यतः ॥ १४ ॥
143231
143232 परिणतेः परिपाकवशाद्वेदित्रादित्रिपुटीबुद्धिर्न काचित्स्वात्मातिरिक्तास्ति यतो
143233 विज्ञानेनैकात्मतैव तेषामभ्युदितेत्यर्थः ॥ १४ ॥
143234
143235 दिव्या दृगद्रिसंस्थस्य तथा योजनकोटिगान्।
143236 भावान्वेत्ति बहिश्चान्तरेवं तद्बुद्धवानहम् ॥ १५ ॥
143237
143238 एकेन ज्ञानेन कथं व्यवहितविप्रकृष्टसर्वदर्शनमिति चेत्तद्दृष्टान्तेन
143239 संभावयति - दिव्येति। अद्रिसंस्थस्य पर्वतारूढस्य
143240 पुंसस्तिमिररोगाद्यप्रतिहतत्वादौषधादिपरिष्कृतत्वाद्वा
143241 आजानसिद्धत्वाद्योगपरिष्कृतत्वाद्वा दिव्या बहिराधिभौतिकानन्तराध्यात्मिकांश्च
143242 भावान् वेत्ति साक्षात्पश्यति। एवं तद्वदित्यर्थः ॥ १५ ॥
143243
143244 यथा भूमण्डलं भावान्निधिधातुरसादिकान्।
143245 वेत्त्येवं तन्मया बुद्धमनन्यद्दृश्यमात्मनः ॥ १६ ॥
143246
143247 भूमण्डलपदेन तदभिमानी जीवो गृह्यते ॥ १६ ॥
143248
143249 श्रीराम उवाच।
143250
143251 ब्रह्मन्ननुभवत्येवं त्वयि तामरसेक्षण।
143252 सा किं कृतवती ब्रूहि कान्ताऽर्यापाठपाठिनी ॥ १७ ॥
143253
143254 वसिष्ठ उवाच।
143255
143256 तामेवार्यां पठन्ती सा तथैवानुनयान्विता।
143257 मत्समीपे नभोदेहा व्योम्नि देवीव संस्थिता ॥ १८ ॥
143258
143259 अनुनयेन प्रशंसादिप्रीतिजनकव्यापारेणान्विता ॥ १८ ॥
143260

143261 यथाहमाकाशवपुस्तथैवासौ खरूपिणी ।
143262 तेन दृष्टा न सा पूर्वं देहेन ललना मया ॥ १९ ॥
143263
143264 यदि समीपे संस्थिता तर्हि विनैव समाधिं प्रागेव त्वया कुतो न दृष्टा तत्राह -
143265 यथेति ॥ १९ ॥
143266
143267 अहमाकाशमात्रात्मा सा खमात्रशरीरिणी ।
143268 जगज्जालं खमात्रं तदिति तत्र तदा स्थितम् ॥ २० ॥
143269
143270 तत्र तस्मिंश्चिदाकाशे । तदा समाधिकाले ॥ २० ॥
143271
143272 श्रीराम उवाच ।
143273
143274 शरीरस्थानकरणप्रयत्नप्राणसंभवैः ।
143275 यदुदेति वचो वर्णैस्तत्कुतस्तादृशाकृतेः ॥ २१ ॥
143276
143277 यद्याकाशरूपैव सा तर्हि जिह्वाताल्वोष्ठप्राणवाय्वाद्यभावात्कथमार्यां
143278 पठितवतीति रामः पृच्छति - शरीरेति । तादृशाकृतेराकाशशरीरायाः ॥ २१ ॥
143279
143280 रूपालोकमनस्कारः कुतो नामात्मनामिति ।
143281 ब्रूहि मे भगवंस्तत्त्वं यथावृत्तश्च निश्चयम् ॥ २२ ॥
143282
143283 एवमाकाशमात्रस्य तव तद्रूपदर्शनपर्यालोचनाद्यपि दुर्लभमित्याशयेनाह ##-
143284 स यथावृत्तोऽभूस्तन्निश्चयं च ब्रूहीत्यर्थः ॥ २२ ॥
143285
143286 श्रीवसिष्ठ उवाच ।
143287
143288 रूपालोकमनस्काराः शब्दपाठवचांसि च ।
143289 यथा स्वप्ने नभस्येव सन्ति तत्र तथाम्बरे ॥ २३ ॥
143290
143291 तत्र स्वप्नदृष्टान्तेनैव कल्पनया सर्वमुपपन्नमित्युत्तरमाह - रूपेत्यादिना
143292 ॥ २३ ॥
143293
143294 रूपालोकमनस्कारैः स्वप्ने चिन्नभ एव ते ।
143295 यथोदेति तथा तत्र तद्दृश्यं खात्मकं स्थितम् ॥ २४ ॥
143296
143297 न केवलं तु तद्दृश्यं यावत्तु विषयं वयम् ।
143298 जगच्चेदं खमेवाच्छं यथा तन्नस्तथाखिलम् ॥ २५ ॥
143299
143300 अत्यल्पमिदमुच्यते तदा तद्दृश्यं खात्मकमिति । तत्त्वतो विचारे इदानीमिदं जगदपि
143301 खात्मकमेव । अत्रापि शरीरादिभ्रान्त्यैव व्यवहारभ्रमश्चेत्याह - न केवलमिति
143302 । वयमस्माकं विषयं गोचरं च यावत् तत्सर्वं जगच्चेत्यन्वयः ॥ २५ ॥
143303
143304 परमार्थमहाधातुर्वेद्यनिर्मुक्तचिद्वपुः ।
143305 एवं नाम स्वयं भाति स्वभावस्येव निश्चयः ॥ २६ ॥
143306
143307 नामेति श्रुतिविद्वदनुभवादिप्रसिद्धमिदमिति द्योतनाय । स्वभावस्य
143308 जगद्वासनोपहितचित्स्वभावस्य ॥ २६ ॥
143309
143310 शरीरस्थानकरणसत्तायां का तव प्रमा ।
143311 यथैव तेषां देहादि तथास्माकमिदं स्थितम् ॥ २७ ॥
143312

143313 का प्रमा तत्सत्ताबुद्धेः अशरीरं शरीरेष्वनवस्थेष्ववस्थितम्
143314 इत्यादिश्रुतिबाधितत्वादिति भावः ॥ २७ ॥
143315
143316 यथैव तत्तथैवेदं तथैवेदं यथैव तत् ।
143317 असत्सत्तामिव गतं सच्चासदिव च स्थितम् ॥ २८ ॥
143318
143319 सत् निर्विशेषात्मतत्त्वं चावृतत्वादसदिवात्यन्ताप्रसिद्धमिव स्थितम् ।
143320 चकारश्चिदानन्दस्वभावव्यत्यासोऽप्येवमित्यनुक्तसमुच्चयार्थः ॥ २८ ॥
143321
143322 यथा स्वप्ने धराध्वादिपृष्ठव्यवहृतिर्नभः ।
143323 तदा ह्यहं च त्वं सा च तदिदं च तथा नभः ॥ २९ ॥
143324
143325 धरापृष्ठे कृष्यादिव्यवहृतिः अध्वपृष्ठे गमनादिव्यवहृतिः
143326 सौधादिपृष्ठे शयनादिव्यवहृतिश्च नभश्चिदाकाश एव ॥ २९ ॥
143327
143328 यथा स्वप्ने नृभिर्युद्धकोलाहलगमागमाः ।
143329 असन्तोऽप्यनुभूयन्ते संसारनिकरास्तथा ॥ ३० ॥
143330
143331 वक्षि चेत्स्वप्नदृश्यश्रीः कस्मात्तदसमञ्जसम् ।
143332 अवाच्यमेतद्धेतुर्हि नान्योऽस्त्यनुभवस्थितेः ॥ ३१ ॥
143333
143334 स्वप्नवैचित्र्येऽपि हेत्वन्तरसंभावनायास्तु नावकाशः । अनवस्थादिदोषभयेन तत्र
143335 सर्ववादिनां मूकीभावादविद्योपहितचिदात्मन एव स्वभावोऽयमिति मत्पक्षस्यैव
143336 परिशेषात्सिद्धेरित्याह - वक्षीति । तत्ते वचनमसमञ्जसम् ।
143337 स्वाप्नानुभवस्थितेरन्यो हेतुर्हि यस्मान्नास्ति ॥ ३१ ॥
143338
143339 कथमालक्ष्यते स्वप्न इति प्रष्टुः प्रकथ्यते ।
143340 यथैवं पश्यसीत्येव हेतुरत्रास्ति नेतरः ॥ ३२ ॥
143341
143342 प्रष्टुः सर्वैरेव यथैव पश्यसीति तदनुभव एवोत्तरं प्रकथ्यते नेतरोऽत्र
143343 हेतुस्तत्साधकोऽस्तीत्यर्थः ॥ ३२ ॥
143344
143345 स्वप्नजन्तुरिव व्योम्नि भाति प्रथमसर्गतः ।
143346 प्रभृत्येव विराडात्मा खे खमेव परस्परे ॥ ३३ ॥
143347
143348 तथाहि सुषुप्तिसदृशप्रलयानन्तरं प्रथमसर्गतः प्रभृत्येव स्वप्नजन्तुरिव
143349 कल्पनात्मा विराडात्मा चिदाकाशे चिदाकाशमेव प्रथत इत्याह - स्वप्नेति ।
143350 परस्परे विषयविषयितया अन्योन्यसापेक्षरूपे ॥ ३३ ॥
143351
143352 स्वप्नशब्देन बोधार्थं तव व्यवहराम्यहम् ।
143353 दृश्यं न्विदं न सन्नासन्न स्वप्नो ब्रह्म केवलम् ॥ ३४ ॥
143354
143355 तर्हि किं दृष्टान्तभूतस्वप्नस्वभावमेव जगत् नेत्याह - स्वप्नशब्देनेति ॥ ३४ ॥
143356
143357 अथ राघव सा कान्ता मया कान्तानुषङ्गिणी ।
143358 संविदं तन्मयीं कृत्वा पृष्टेदं दृश्यरूपिणी ॥ ३५ ॥
143359
143360 एवमवान्तरप्रश्नं समाधाय पूर्वपृष्टकथाशेषमाह - अथेत्यादिना ।
143361 कान्ते वक्ष्यमाणे अनुषङ्गिणी अनुरागवती । तन्मयीं तदभिप्रायजिज्ञासाप्रधानां
143362 संकल्पसंविदं कृत्वा ॥ ३५ ॥
143363
143364 व्यवहारो यथोदेति स्वप्ने स्वप्नजनैः सह ।

143365 तथा तदा तया सार्धं व्यवहारो ममोदितः ॥ ३६ ॥
143366
143367 अशरीरस्य ते तया सह कथं प्रश्नादिव्यवहारोऽभूत्तत्राह - व्यवहार इति ॥ ३६ ॥
143368
143369 यथैव स्वप्नसंकाशो व्यवहारः खमेव सः ।
143370 तथैव त्वमिमं विद्धि मामात्मानं जगच्च खम् ॥ ३७ ॥
143371
143372 त्वया सहेदानींतनव्यवहारोऽपि मम तादृश एवेत्याह - यथैवेति ॥ ३७ ॥
143373
143374 यथा स्वप्नजगद्रूपं खमेवैवमिदं जगत् ।
143375 जाग्रदादौ स हि स्वप्नः सर्गादौ जगदुद्भवः ॥ ३८ ॥
143376
143377 कथं तर्हि स्वप्न इति जगदिति च नामभेदस्तत्राह - जाग्रदादाविति ॥ ३८ ॥
143378
143379 स्वप्नोऽयं जगदाभोगो न किंचिद्वा खमेव च ।
143380 निर्मलं ज्ञप्तितामात्रमित्थं सन्मात्रसंस्थितम् ॥ ३९ ॥
143381
143382 अयं जगद्वेष आत्मनः स्वप्न एव अथवा न किंचित् ॥ ३९ ॥
143383
143384 स्वप्नस्य विद्यते द्रष्टा साकारो युष्मदादिकः ।
143385 द्रष्टा तु सर्गस्वप्नस्य चिद्व्योमैवामलं स्वतः ॥ ४० ॥
143386
143387 अथवा कश्चिद्विशेषोऽपि वक्तुं शक्य इत्याशयेनाह - स्वप्नस्येति ।
143388 युष्मदादिवासनाकारेण साकारः ॥ ४० ॥
143389
143390 यथा द्रष्टामलं व्योम दृश्यं तद्वद्गतं तथा ।
143391 स्वप्नरूपजगत्युच्चैर्जगत्त्वेनामलं नभः ॥ ४१ ॥
143392
143393 गतं द्रष्टृदृश्यान्तरालिकं दर्शनमपि तथा व्योमैव ॥ ४१ ॥
143394
143395 चिद्व्योम्नोऽनाकृतेः स्वप्नो हृदि स्फुरति यः स्वतः ।
143396 सर्गस्तस्य कुतस्तेन साकृतित्वं कथं भवेत् ॥ ४२ ॥
143397
143398 यः स्वप्नः स्फुरति तस्य सर्गो जन्म कुतः । तेन च वन्ध्यापुत्रकल्पेन जगता
143399 साकृतित्वं कथं भवेत् ॥ ४२ ॥
143400
143401 साकारस्यैव यत्स्वप्नजगत्तद्व्योम निर्मलम् ।
143402 निराकारस्य चिद्व्योम्नः सर्गः स्वप्नः कथं न खम् ॥ ४३ ॥
143403
143404 यत्र साकारस्य युष्मदादेः प्रसिद्धं स्वप्नजगदसत् तत्र निराकारस्य ब्रह्मणः
143405 स्वप्नभूतः सर्गस्तथेति किं वाच्यमित्यर्थः ॥ ४३ ॥
143406
143407 निरुपादानसंभारमभित्तावेव चिन्नभः ।
143408 पश्यत्यकृतमेवेमं जगत्स्वप्नं कृतं यथा ॥ ४४ ॥
143409
143410 मृद्व्या चिदाकाशमृदा ब्रह्मणा ब्राह्मणेन खे ।
143411 कृतोऽपि न कृतः सर्गमण्डपोऽक्षगवाक्षकः ॥ ४५ ॥
143412
143413 ब्रह्मणा हिरण्यगर्भाख्येन ब्राह्मणेन अक्षा इन्द्रियच्छिद्राण्येव गवाक्षा
143414 यस्मिंस्तथाविधो देहादिसर्गमण्डपः कृतोऽपि न कृत एव ॥ ४५ ॥
143415
143416 नो कर्तृता न च जगन्ति न भोक्तृतास्ति नास्तीति नास्ति न च किंचिदतो बुधः सन् ।

143417 पाषाणमौनमवलम्ब्य यथाप्रवाहमाचारमाचर शरीरमिहास्तु मा वा ॥ ४६
143418 । ।
143419
143420 अतः सर्वदृश्यमार्जनात्परिशिष्टो बुधस्तत्साक्ष्येव सन् परमार्थः । अतो हे राम
143421 त्वमन्तः पाषाणमौनमवलम्ब्य बहिर्यथाप्रवाहमाचारमाचर । तत्र ते शरीरं
143422 यावत्प्रारब्धशेषमस्तु तदुत्तरं मास्तु वा न कश्चिद्विशेष इत्यर्थः ॥ ४६ ॥
143423
143424 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाणप्रकरणे उत्त०
143425 पाषा० चिदैक्यं नाम द्विषष्टितमः सर्गः ॥ ६२ ॥
143426
143427 इति श्रीवासिष्ठमहारामायणे तात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे चिदैक्यं
143428 नाम द्विषष्टितमः सर्गः ॥ ६२ ॥
143429
143430 त्रिषष्टितमः सर्गः ६३
143431
143432 श्रीराम उवाच ।
143433
143434 तव स्त्रियाऽस्वरूपेण देहेनाभूत्तया कथम् ।
143435 कथमुच्चारितास्तत्र वर्णाः कचटतादयः ॥ १ ॥
143436
143437 अज्ञपक्षेऽन्तरन्तः सन्त्यनन्ताः सर्गसंपदः ।
143438 ब्रह्मैव ब्रह्मवित्पक्षे चिदेकघनमीर्यते ॥
143439
143440 स्वप्नव्यवहारदृष्टान्तेन प्राक्समर्थितमप्यशरीरस्य संवादादिव्यवहारं
143441 मन्दप्रज्ञानां स्फुटबोधाय पुना रामः पृच्छति - तवेति । हे मुने तव तया
143442 पूर्वोक्तया स्त्रिया सह अस्वरूपेण मुखजिह्वाद्यवयवशून्येन वासनामात्रात्मना
143443 देहेन कथं व्यवहारोऽभूत् । तत्र तस्यां दशायां कचटतपादयो वर्णास्त्वया
143444 विना जिह्वां कथमुच्चारिताः ॥ १ ॥
143445
143446 श्रीवसिष्ठ उवाच ।
143447
143448 वर्णेषु स्वशरीराणां वर्णाः कचटतादयः ।
143449 कदाचनापि नोद्यन्ति शवानामिव केन च ॥ २ ॥
143450
143451 वर्णोच्चारणादिव्यवहारे शरीरस्य न कारणता सत्यपि शवशरीरे तददर्शनाद्विनापि
143452 शरीरं स्वप्ने तद्दर्शनादन्वयव्यतिरेकव्यभिचारात् सहेतुकत्वे व्यवहारस्य
143453 सत्यतापत्तेश्च किंतु कल्पनामात्रम् । तच्च तदापि सुलभमित्याशयेन वसिष्ठ
143454 उत्तरमाह - वर्णेष्वित्यादिना । खमेव शरीरं येषां तत्त्वविदां तेषां मते
143455 वर्णेषु मध्ये ये कचटतपादयस्ते कदाचनापि नोद्यन्ति ।
143456 कल्पनामात्ररूपत्वादित्यर्थः ॥ २ ॥
143457
143458 वर्णोच्चारोऽभविष्यच्चेत्प्रकटार्थस्ततः क्वचित् ।
143459 स्वप्नेष्वन्वभविष्यत्तं विनिद्रः पार्श्वगो जनः ॥ ३ ॥
143460
143461 उक्तेऽर्थेऽनुकूलं विपक्षे प्रतिकूलं च तर्कमाह - वर्णोच्चार इति ।
143462 प्रकटश्चासावर्थश्च प्रकटार्थः परमार्थ इत्यर्थः । यदि स्वाप्नवर्णोच्चारः
143463 परमार्थः स्यात्तदा पार्श्वस्थश्रवणानुभवगोचरः स्यादिति तर्कः ॥ ३ ॥
143464
143465 तस्मान्न किंचित्स्वप्नेषु तत्सत्यं भ्रान्तिरेव सा ।
143466 चिन्मात्राकाशकचनं तत्तथा खे स्वभावजम् ॥ ४ ॥
143467
143468 स्वभावजं निद्रास्वभावबलकल्पितम् ॥ ४ ॥

143469
143470 तदेन्दुकाष्र्यखतनुशिलागेयादितां गताः।
143471 इवाभान्ति चिदाकाशास्तथा देहरवादयः॥ ५॥
143472
143473 यदैवं तदा किं तत्राह - तदेति। तदा
143474 तैमिरिकाध्यस्तमिन्दुकाष्र्यमाकाशमूर्तताशिलाकर्तृकं
143475 गीतमित्यादिप्रातिभासिकार्थतां गतास्तदवच्छिन्नचिदाकाशा इव
143476 स्वाप्नदेहशब्दादयोऽपि तत्तद्बुद्धसंस्कारोपहितचिदाकाशा एव तथा भान्तीति
143477 सिद्धमित्यर्थः॥ ५॥
143478
143479 तच्चिदाकाशकचनं यन्नाम स्वप्नवेदने।
143480 आकाशमेव नभसः कचनं विद्धि नेतरत्॥ ६॥
143481
143482 ते चिदाकाशा एव तथा भान्तु किं ततस्तत्राह - तदिति। यथा नभसो मूर्तात्मना
143483 कचनं नभसो नेतरत् तथा तच्चिदाकाशकचनादि यत्स्वप्नवेदने जगदाकारं
143484 प्रसिद्धं तच्चिदाकाशमेव विद्धि॥ ६॥
143485
143486 यथा स्वप्नस्तथैवेदं जाग्रदग्रे व्यवस्थितम्।
143487 आकाशमप्यनाकाशं यथैवेदं तथैव तत्॥ ७॥
143488
143489 एवं स्वप्नार्थानां चिदाकाशमात्रतां प्रसाध्य तत्साम्येनैव पुरः स्थितानां
143490 समाधिदृष्टानांन् चार्थानां चिदाकाशमात्रतेत्याह - यथेति। तत्
143491 समाधिदृष्टम्॥ ७॥
143492
143493 यथा कचति तच्चारु चेतनं चतुरं तथा।
143494 यथा स्थितं तदेवेदं सत्यं स्थिरमिव स्फुरत्॥ ८॥
143495
143496 तथा चायं सर्वोऽपि चित एव कचनचमत्कारो नाणुमात्रमप्यचिद्रूपं किंचिदस्तीत्याह
143497 - तथेति। इदं जगत्सत्यमिव स्थिरमिव च स्फुरद्भवति तथा चतुरं तच्चेतनं
143498 ब्रह्म स्थितमित्यन्वयः॥ ८॥
143499
143500 श्रीराम उवाच।
143501
143502 भगवन्स्वप्न एवेदं कथं जाग्रदवस्थितम्।
143503 असत्यमेव सत्यत्वमिव यातं कथं भवेत्॥ ९॥
143504
143505 प्रमाणगम्यस्य जाग्रत्प्रपञ्चस्य तदगम्यस्वप्नसाम्यमयुक्तमिति रामः
143506 शङ्कते - भगवन्निति। असत्यमेव सत्यत्वं चक्षुरादिप्रमाणवेद्यतां कथं
143507 यातं कथंन् संभवेत्॥ ९॥
143508
143509 श्रीवसिष्ठ उवाच।
143510
143511 शृणु स्वप्नमयान्येव कथं सन्ति जगन्त्यलम्।
143512 नान्यानि न च सत्यानि न स्थिराणि स्थितानि च॥ १०॥
143513
143514 अस्त्वापाततश्चक्षुरादिमानगम्यता तथापि तत्त्वतो विमर्शासहत्वेनास्थिरत्वेन च
143515 स्वप्नसाम्यमस्त्येवेत्याशयेनोत्तरमाह - शृण्वित्यादिना। स्वप्नवदेवात्मनो
143516 नान्यानि नाप्यात्मवत्सत्यानि स्थिराणि चेत्यनिर्वचनीयान्येवेत्यात्मसत्तयैव स्थितानि
143517 चेत्यर्थः॥ १०॥
143518
143519 अनुभूतानि बीजानि बीजराशाविवाम्बरे।
143520 अन्यान्यन्यानि तान्येव समानि न समानि च॥ ११॥

एवं परस्परं बीजभावाद्विरुद्धभेदाभेदसमासमरूपत्वाच्च
स्वप्नसाम्यमित्याह - अनुभूतानीति ॥ ११ ॥

प्रत्येकमन्तरन्यानि तथैवाभ्युदितानि च ।
परस्परमदृष्टानि बहूनि विविधानि च ॥ १२ ॥

कदलीत्वक्संनिवेशवत्परस्परमन्तरन्तरानन्त्येनावस्थानानुभवादपि
मिथ्यात्वात्स्वप्नसाम्यमेवेत्याह - प्रत्येकमिति ।
स्वप्नवत्परस्परमदृष्टत्वादपि तथेत्याह - परस्परमिति ॥ १२ ॥

अन्योन्यं तानि सर्वाणि न पश्यन्त्येव किंचन ।
जडानीवैकराशीनि बीजानीव गलन्त्यपि ॥ १३ ॥

तदेवोपपादयति - अन्योन्यमिति । कुसूलस्थबीजानीवान्तरेव गलन्त्यपि ॥ १३ ॥

व्योमात्मत्वान्न गगनं न विदन्ति परस्परम् ।
अपि चेतनरूपाणि सुप्तानीव निरन्तरम् ॥ १४ ॥

गलितान्यपि तानि चेतनरूपाण्येवेति न प्रतप्तखर्परनिपतितजलबिन्दुवद्व्योमात्मतां
प्राप्य शून्येव संपद्यन्ते नापि अस्मदादिवत्परस्परं विदन्ति पश्यन्ति किंतु
अज्ञानावृतचेतनरूपत्वान्निरन्तरं सुप्तानीव स्वप्नमेवानुभवन्तीत्यर्थः ॥ १४ ॥

सुप्ताः स्वप्नजगज्जालमहनि व्यवहारिणः ।
असुरा निहता देवैस्ते स्वप्नजगति स्थिताः ॥ १५ ॥

तत्र सुप्ता जीवाः स्वप्नजगज्जालं प्राप्य तत्रैव कल्पिते अहनि सर्वव्यवहारिणो भवन्तीति
प्रतिजानीते - सुप्ता इति । प्रतिज्ञातमर्थमसुरमनुष्यराक्षसादीनां
स्वप्नहतानां गत्यन्तराभावात्परिशेषानुमानेन साधयिष्यन्प्रथममसुरेषु
दर्शयति - असुरा इति सार्धेन ॥ १५ ॥

अज्ञानान्न गता मुक्तिं न जाड्याज्जडतामिताः ।
न देहवन्तः किं सन्तु विना स्वप्नजगत्स्थितेः ॥ १६ ॥

असुरा दैत्याः सौप्तिकेन देवैर्निहताः सन्तः स्वस्वप्नजगत्येव स्थिताः । यतो
ज्ञानाभावान्मुक्तिं न गताः । नापि जडतां पाषाणादिभावमिताः । नापि देहवन्तः
संपन्नाः । ईदृशास्ते स्वप्नजगत्स्थितेर्विना किं सन्त्वित्यर्थः ॥ १६ ॥

सुप्ताः स्वप्नजगज्जाले स्वाचारव्यवहारिणः ।
पुरुषा निहताः पुंभिस्ते तथैव व्यवस्थिताः ॥ १७ ॥

एवं पुरुषा मनुष्या अपि स्वस्वप्नरूपे जगज्जाले वासनाभिर्व्यवहारिणः । ते च
तत्रैवान्यैः पुंभिर्निहताः सन्तस्तथैव प्रागुक्तासुरजीववत्स्वप्नपरम्परायामेव
व्यवस्थिताः ॥ १७ ॥

निर्मोक्षा निःशरीरास्ते चेतनावासनान्विताः ।
दृष्टं स्वप्नजगज्जालं विना च क्व वसन्तु ते ॥ १८ ॥

यतस्तेऽपि ज्ञानाभावान्निर्मोक्षा निःशरीराश्चेति न जागरक्षमा वासनाभिश्च
व्यवहरणशीलाः । ईदृशास्तु ते स्वप्नजगज्जालं विना क्व वसन्तु । तेषां विना नान्या
गतिरस्तीत्यर्थः ॥ १८ ॥

143573 सुप्ताः स्वप्नजगज्जालव्यवस्थाचारचारिणः ।
143574 ये हता राक्षसा देवैस्ते यथैव व्यवस्थिताः ॥ १९ ॥
143575
143576 अयमसुरेषु मनुष्येषु च दर्शितो न्यायो राक्षसादिष्वपि योज्य इत्याशयेनाह -
143577 सुप्ता इति द्वाभ्याम् ॥ १९ ॥
143578
143579 एवं ये निहता राम किं ते कुर्वन्ति कथ्यताम् ।
143580 अज्ञत्वान्न गता मुक्तिं चेतनान्न दृषस्थिताः ॥ २० ॥
143581
143582 साद्रब्ध्युर्वीजनं दृश्यमिदं सर्वं यथास्थितम् ।
143583 चिरायानुभवन्त्येते यथेमे वयमादृताः ॥ २१ ॥
143584
143585 तेषां स्वस्वप्नश्चिरानुवृत्त्या अस्मदनुभवसाम्याज्जाग्रदवस्थैव भवतीत्याह ##-
143586
143587 तेषां कल्पजगत्संस्था यथास्माकं तथैव ताः ।
143588 अस्माकं जगतीसंस्था यथा तेषां तथैव च ॥ २२ ॥
143589
143590 एतेषां स्वप्नपुरुषास्त एवेमे वयं स्थिताः ।
143591 ये च ते नाम संसारास्तेभ्य एकमिमं विदुः ॥ २३ ॥
143592
143593 तथा चास्माभिरनुभूयमानं जगत्तदन्तर्गता वयं च यदि तैर्दृष्टास्तर्हि
143594 अस्मज्जाग्रतेषां स्वप्नो वयं च तेषां स्वप्नपुरुषाः संपद्यामहे इत्याह -
143595 एतेषामिति ॥ २३ ॥
143596
143597 ते स्वप्नपुरुषास्तेषां सत्या एवानुभूतितः ।
143598 आत्मनोऽपि परस्यापि सर्वगत्वाच्चिदात्मनः ॥ २४ ॥
143599
143600 आत्मनोऽपि परस्य पुरुषान्तरस्याप्यनुभूतितः अनुभवाद्यतस्तुल्या अतः सत्या एव
143601 तत्सत्तानिमित्तस्याधिष्ठानचिदात्मनः सर्वगतत्वेन तुल्यत्वादित्यर्थः ॥ २४ ॥
143602
143603 यथा ते स्वप्नपुरुषाः सत्यमात्मन्यथाऽपरे ।
143604 तथापि स्वप्नपुरुषाः सत्यमेव तथैव ते ॥ २५ ॥
143605
143606 अपिशब्दो भिन्नक्रमः । यथा ते स्वप्नपुरुषाः सत्यास्तथा अपरेऽपि मया
143607 प्रतिस्वप्नमनुभूयमानाः पुरुषाः सत्यमेव तथैव ते त्वयापि स्वप्नपुरुषा
143608 बोध्याः ॥ २५ ॥
143609
143610 स्वस्वप्नपुरपौरा ये त्वया दृष्टास्तथैव ते ।
143611 स्थितास्तत्र तहाद्यापि ब्रह्म सर्वात्मकं यतः ॥ २६ ॥
143612
143613 प्रबोधेऽपि हि भिद्यन्ते स्वप्नभावा यथा स्थिताः ।
143614 तथा स्थित्यानुभूयन्ते परब्रह्मतयाथवा ॥ २७ ॥
143615
143616 यथा ते ते स्वप्नभावाः प्रबोधे जागरणे यथा भिद्यन्ते विशीर्यन्त इत्यनुभूयते
143617 तथा स्वप्नकाले स्थित्या स्थिता इत्येवानुभूयन्ते । तथा च तद्बाध इव
143618 तत्सत्ताप्यनुभवबलं लब्ध्वा नापह्नोतुंन् शक्येत्यर्थः । अथवा ब्रह्मसत्ताया एव
143619 सर्वसत्तात्मकत्वात्कस्यापि सत्ता कदापि नापह्नोतुं शक्येत्याशयेनाह -
143620 परब्रह्मतयेति ॥ २७ ॥
143621
143622 सर्वं सर्वात्म सर्वत्र सर्वदास्ति तथा परे ।
143623 यथा न किंचिन्नाकाशं न क्वचिन्न च हन्यते ॥ २८ ॥
143624

तथा च प्राक् प्रतिज्ञातं फलितमित्याह - सर्वमिति | यथा सर्वं
जगदाकाशकार्यत्वादाकाशमेवेति तद्रूपेण न क्वचित्किंचिदपि हन्यते तथा
प्रथमं विनोदये उत्पत्तिशून्ये मध्ये निरन्तरे अग्रे च निरन्ते परमाकाशे ब्रह्मणि
तत्र निरन्ते असंख्ये चित्तसंघाते तेषु चासंख्ये जगतां गणे तत्रापि प्रत्याकाशं
तत्रापि प्रतिसंसारमण्डलं तत्रापि प्रतिभूरादिलोकं तत्रापि प्रतिद्वीपं तत्रापि
प्रतिगिरि तत्रापि प्रतिमण्डलविस्तारं तत्रापि प्रतिग्रामं प्रतिपुरं तत्रापि प्रतिगृहं
तत्रापि प्रतिजन्तु प्रतियुगादिकालं च यावन्तो ये जीवा मृता मोक्षविवर्जिताः
स्थितास्तावन्तः संसाराः पृथक्पृथगक्षया एव स्थिता इति पञ्चानामेकान्वयः ||
२८ ||

निरन्तरे पराकाशे निरन्ते च विनोदये |
निरन्ते चित्तसंघाते निरन्ते जगतां गणे || २९ ||

प्रत्याकाशकलाकोशं प्रतिसंसारमण्डलम् |
प्रतिलोकान्तराकारं प्रतिद्वीपं गिरिं प्रति || ३० ||

प्रतिमण्डलविस्तारं प्रतिग्रामं पुरं प्रति |
प्रतिजन्तु प्रतिगृहं प्रतिवर्षं युगं प्रति || ३१ ||

यावन्तो ये मृताः केचिज्जीवा मोक्षविवर्जिताः |
स्थितास्ते तत्र तावन्तः संसाराः पृथगक्षयाः || ३२ ||

तेषामन्तर्जनाः सन्ति जनं प्रति पुनर्मनः |
पुनर्मनः प्रति जगज्जगत्प्रति पुनर्जनः || ३३ ||

तावत्संख्ययापि जगत्संख्याया न विश्रान्तिरित्यनवस्थैव मायाया
भूषणमित्याशयेनाह - तेषामित्यादिना || ३३ ||

इत्थमाद्यन्तरहित एष दृश्यमयो भ्रमः |
ब्रह्मैव ब्रह्मवित्पक्षे नात्रेयत्तास्ति काचन || ३४ ||

कुड्ये नभस्युपलके सलिले स्थलेऽन्तश्चिन्मात्रमस्ति हि यतस्तदशेषविश्वम् |
तद्यत्र तत्र जगदस्ति कुतोऽत्र संख्या तज्ज्ञेषु तत्परमथाज्ञमनःसु
दृश्यम् || ३५ ||

हे राम कुड्ये नभसि उपले पाषाणे सलिले स्थले चान्तर्हि यतश्चिन्मात्रमस्ति
तदेवाशेषविश्वं न जगन्नाम वस्त्वन्तरम् | तत्तथा सति चितः सर्वगत्वाद्यत्र तत्र
सर्वत्र जगदस्त्येव | अत्र जगति संख्या कुतः | तच्च विश्वं तज्ज्ञेषु परं निर्विशेषं
निरतिशयानन्दैकरसं ब्रह्मैव | तु शब्दार्थेऽथशब्दः | अज्ञानां मनःसु तदेव
दृश्यप्रपञ्चमेवेत्यनर्थरूपमेवेत्यर्थः | तथा च श्रुतिः तत्त्वेव भयं
विदुषोऽमन्वानस्य इति || ३५ ||

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वाणप्रकरणे उ० पा०
जगत्तत्त्वैक्यप्रतिपादनं नाम त्रिषष्टितमः सर्गः || ६३ ||

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
जगत्तत्त्वैक्यप्रतिपादनं नाम त्रिषष्टितमः सर्गः || ६३ ||

चतुःषष्टितमः सर्गः ६४

श्रीवसिष्ठ उवाच |

143677 ततस्तत्कुवलोल्लासिमालतीमाल्यलोचना [ततः कुवलयोल्लासि इति पाठः सुवचः
143678 कुवलयपर्यायः कुवलशब्दोऽप्यस्तीति यथावस्थितोऽपि संगच्छत एव |] |
143679 ललना ललितालोक्य लीलयाऽऽलपिता मया || १ ||
143680
143681 पृष्टयेह वसिष्ठेन विद्याधर्या हि विस्तरात् |
143682 स्वगेहजन्मकर्माद्या निवेदान्ता निरूपिताः ||
143683
143684 प्रासङ्गिकं प्रश्नं समाधाय श्रीवसिष्ठः प्रस्तुतकथाशेषमाह - तत
143685 इत्यादिना | कुवलयान्युत्पलानीवोल्लासिनी कटाक्षमालाभिर्मालतीमाल्यानीव प्रसरती
143686 लोचने यस्याः सा ललना मया आलोक्य लीलया कौतुकेन आलपिता संभाषिता | पृष्टेति
143687 यावत् || १ ||
143688
143689 क त्वं कमलगर्भाभे किमर्थं मामुपागता |
143690 कस्यासि किं प्रार्थयसे क्व गतासि किमास्पदा || २ ||
143691
143692 कस्यासि दुहिता भार्या वेति शेषः | किमास्पदमावासस्थलं यस्याः || २ ||
143693
143694 विद्याधर्युवाच |
143695
143696 मुने शृणु यथावत्त्वमात्मोदन्तं वदाम्यहम् |
143697 प्रष्टुमर्हसि विस्रब्धमार्तां करुणयार्थिनीम् || ३ ||
143698
143699 आत्मनः स्वस्या उदन्तं वृत्तान्तम् | एकान्ते विस्रब्धं
143700 परदारसंभाषणमयुक्तमिति शङ्कां वारयति - प्रष्टुमिति | आर्तां
143701 आर्तिप्रशमनोपायार्थिनीं मां करुणया विस्रब्धं प्रष्टुमर्हसीत्यन्वयः | तथा च
143702 सतामार्ताश्वासनमुचितमेवेति भावः || ३ ||
143703
143704 परमाकाशकोशस्य कस्मिंश्चित्कोणकोटरे |
143705 युष्माकं संस्थितं किंचिदिदं तावज्जगद्गृहम् || ४ ||
143706
143707 तत्र प्रथमं स्वास्पदं वक्तुमुपक्रमते - परमाकाशेत्यादिना | कस्मिंश्चिदिति
143708 | पादोऽस्य सर्वा भूतानि इत्यादिश्रुतेरिति भावः || ४ ||
143709
143710 पातालभूतलस्वर्गा इहापवरकास्त्रयः |
143711 कल्पनैका कुमार्यत्र कृता धातृत्वमायया || ५ ||
143712
143713 इहास्मिन्युष्मज्जगद्गृहे अपवरका अन्तर्गृहप्रकोष्ठाः | अत्र एष्वपवरकेषु
143714 धातृत्वं हिरण्यगर्भता तदाकारया मायया सर्गवैचित्र्यकल्पनाख्या एकैव
143715 कुमारी गृहस्वामिनी क्रीडार्थं कृतेत्यर्थः || ५ ||
143716
143717 तत्र द्वीपैः समुद्रैश्च वलितं वलयैरिव |
143718 पाटलोत्थं जगल्लक्ष्म्याः प्रकोष्ठमिव भूतलम् || ६ ||
143719
143720 यतो द्वीपैः समुद्रैश्च वलयैरिव बलितमत एव तद्वर्णैः पाटलं सदुत्थमुन्नतं
143721 जगल्लक्ष्म्याः प्रकोष्ठं करमूलमिव स्थितमित्यर्थः || ६ ||
143722
143723 अन्ते द्वीपसमुद्राणां सर्वदिक्कमवस्थिता |
143724 योजनानां सहस्राणि दश हेममयी मही || ७ ||
143725
143726 सप्तानां द्वीपानां समुद्राणां चान्ते सर्वदिक्कं परित इति यावत् | योजनानां दश
143727 सहस्राणि परिणाहतो दैर्घ्येण || ७ ||
143728

स्वयंप्रकाशसंकल्पफलदाम्बरनिर्मला |
चिन्तामणिमयी स्वच्छा स्वच्छायाजितविष्टपा || ८ ||

तां महीं वर्णयति - स्वयमित्यादिना | स्वयमेव रात्रावपि प्रकाशते इति
स्वयंप्रकाशा | संकल्पानां सर्वकामानां फलदा | अम्बरमिव निर्मला |
चिन्तामणिप्रचुरा | स्वच्छा नीरजस्का | स्वकान्त्या जिता विष्टपाः स्वर्गादिलोका यया || ८ ||

साप्सरोमरसिद्धानां लीलाविहरणावनिः |
संकल्पमात्रसंपन्नसर्वसंभोगसुन्दरी || ९ ||

साप्सरसाममराणां सिद्धानां च लीलाविहरणोचिता अवनिः | सेति पृथक्पदं वा || ९
| |

अन्ते तस्या भुवः शैलो लोकालोकोऽस्ति विश्रुतः |
भूपीठस्य प्रकोष्ठस्य वलयावलनां दधत् || १० ||

अन्ते बहिः प्रान्ते भूपीठलक्षणस्य जगल्लक्ष्मीप्रकोष्ठस्य वलयवदावलनां
परितः स्थितिम् || १० ||

क्वचिन्नित्यं तमोव्याप्तो मूढबुद्धेरिवाशयः |
क्वचिन्नित्यं प्रकाशात्मा मनः सत्त्ववतामिव || ११ ||

तं शैलं वर्णयति - क्वचिदित्यादिना || ११ ||

क्वचिदाह्लादजनकः साधूनामिव संगमः |
क्वचिदुद्वेगजनको मूर्खैरिव समागमः || १२ ||

क्वचित्प्रकटसर्वार्थो मनो मतिमतामिव |
क्वचिदत्यन्तगहनो मूर्खश्रोत्रियचित्तवत् || १३ ||

क्वचिदप्राप्तसोमांशुः क्वचिदप्राप्तसूर्यभाः |
क्वचिल्लोकमयस्तेन क्वचिदाशून्यदिक्तटः || १४ ||

लोकमयो जनप्रचुरः | क्वचित्तु बहिर्भागे तेन लोकेनाशून्यानि दिक्तटानि यस्य || १४ ||

क्वचिद्देवपुरव्याप्तः क्वचिद्दैत्यपुरान्वितः |
क्वचित्पातालगहनः क्वचिच्छृङ्गोर्ध्वकन्धरः || १५ ||

पातालमिव गहनो दुष्प्रवेशः || १५ ||

क्वचिच्छ्वभ्रभ्रमद्गृध्रः क्वचित्सानुमनोहरः |
क्वचिच्छृङ्गशिखाक्रान्तवैरिञ्चनगरान्तरः || १६ ||

शृङ्गशिखाक्रान्तवैरिञ्चनगरान्तर इत्यौन्नत्यातिशयोक्तिः || १६ ||

क्वचिच्छून्यमहारण्यवहत्कल्पान्तमारुतः |
क्वचित्पुष्पवनोद्यानगायद्विद्याधरीगणः || १७ ||

क्वचित्पातालगम्भीरगुहाकुम्भाण्डभीषणः |
क्वचिन्नन्दनसोदर्यमुन्याश्रममनोरमः || १८ ||

पातालगम्भीरासु गुहासु कुम्भाण्डैः पिशाचभेदैर्भीषणः || १८ ||

143781
143782 क्वचिदक्षयमत्ताभ्रः क्वचिद्दुर्लभवारिदः।
143783 क्वचिद्गर्भगुहाश्वभ्रगहनोपान्तमण्डलः॥ १९॥
143784
143785 अक्षयाणि सदा स्थितानि मत्तानीव गर्जनपराण्यभ्राणि यस्मिन्॥ १९॥
143786
143787 क्वचित्क्षुब्धजनाक्षेपसमुत्सादितभूतभूः।
143788 क्वचिद्वास्तव्यजनतासौजन्यजितविष्टपः॥ २०॥
143789
143790 जनपदक्षोभेण क्षुब्धानां संचलितानां जनानामाक्षेपैः
143791 खड्गकुठारादिप्रहारैः समुत्सादिता भूतभुवो रक्षःपिशाचादिनिवासा यस्मिन्।
143792 वास्तव्यजनसमूहानां सौजन्येन जितत्रिविष्टपः॥ २०॥
143793
143794 क्वचिन्नित्यं वहद्वाताजातस्थावरजङ्गमः।
143795 क्वचित्सर्वक्षयोन्मुक्तस्थिरस्थावरजङ्गमः॥ २१॥
143796
143797 नित्यमभीक्ष्णं वहद्भिर्वातैरेव आजाता उद्भूता अजाता वा स्थावरजङ्गमा यत्र।
143798 विषशस्त्राग्निरोगादिनिमित्तभेदजैः सर्वैः क्षयैरुन्मुक्ता अत एव चिरं स्थिराः
143799 स्थावरजङ्गमा यत्र॥ २१॥
143800
143801 क्वचिन्महामरुमरुन्मुक्तभांकारभीषणः।
143802 क्वचित्कणत्कमलिनीमत्तसारसभूषणः॥ २२॥
143803
143804 क्वचित्सलिलकल्लोलजलदोल्लासघर्घरः।
143805 क्वचिन्मत्ताप्सरोदोलाविलासजनितस्मरः॥ २३॥
143806
143807 क्वचित्पिशाचकुम्भाण्डवेष्टिताचेष्टदिक्तटः।
143808 क्वचिद्विद्याधरीसिद्धनृत्यगीतसरित्तटः॥ २४॥
143809
143810 पिशाचैः कुम्भाण्डैश्च वेष्टितानि अत एव आचेष्टानीव दिक्तटानि यस्य॥ २४॥
143811
143812 क्वचिदुद्वर्षदम्भोदसरिद्बाहुलुठत्तटः।
143813 क्वचित्सततगानीतनीतनानाभ्रसत्पटः॥ २५॥
143814
143815 उद्वर्षतामम्भोदानां सरिल्लक्षणैर्बाहुभिर्लुठत्तटो विशीर्यमाणवप्रः॥ २५॥
143816
143817 क्वचित्कमलिनीकोशवक्त्रस्थाध्यानमण्डलः।
143818 क्वचित्स्वर्गाङ्गनासिद्धसुन्दरीदन्तमण्डनः॥ २६॥
143819
143820 कमलिन्याः कोशलक्षणवक्त्रस्थैर्भ्रमरनेत्रैरारब्धध्यानं
143821 अर्थात्सरोजिनीमण्डलं यत्र। स्वर्गाङ्गनानामप्सरसां सिद्धसुन्दरीणां च
143822 दन्तास्ताम्बूलैर्मण्डयतीति तथोक्तः। नागवल्लीवनभूषित इति यावत्॥ २६॥
143823
143824 क्वचित्तपद्दिनकरजनताचारसुन्दरः।
143825 क्वचिन्नैशतमोगेहनृत्यन्मत्तनिशाचरः॥ २७॥
143826
143827 क्वचिदुत्पतदुत्पाततय नश्यज्जनावनिः।
143828 क्वचित्सौराज्यसंपत्त्या प्रोद्भवत्पुरमण्डलः॥ २८॥
143829
143830 क्वचिदत्यन्तनिःशून्यः क्वचिज्जनपदावृतः।
143831 क्वचिच्छ्भ्रान्तगम्भीरः क्वचित्पातालभीषणः॥ २९॥
143832

निःशून्यः शून्य एव। जलपूर्णैः श्वभ्रान्तैर्गम्भीरः शुष्कैस्तु पातालभीषणः
॥ २९ ॥

क्वचिद्बृहत्कल्पतरुः क्वचिन्निर्जलजङ्गमः।
क्वचिन्महाकरिकुलः क्वचिन्मत्तहरिव्रजः ॥ ३० ॥

मत्ता हरिव्रजाः सिंहवानरादिसमूहा यस्मिन् ॥ ३० ॥

क्वचिन्निर्भूतमुद्यातः क्वचिदुन्मत्तराक्षसः।
क्वचित्करञ्जगहनः क्वचित्तालमहावनः ॥ ३१ ॥

निर्भूतं प्राणिनिकायशून्यं यथा स्यात्तथा उद्यातः। वृथोन्नत इति यावत् ॥ ३१ ॥

क्वचिद्व्योमोपमसराः क्वचिद्दीर्घमरुस्थलः।
क्वचिन्नित्यभ्रमत्पांशुः क्वचित्सर्वर्तुकाननः ॥ ३२ ॥

नैर्मल्यविस्तारादिभिर्व्योमोपमानि सरांसि यस्मिन्। सर्वे ऋतवो यत्र तथाविधानि
काननानि यस्मिन् ॥ ३२ ॥

शिखरेषु शिलास्तस्य सामान्याचलसंनिभाः।
सन्ति सुस्थितकल्पाभ्रा रत्नमय्योऽम्बरामलाः ॥ ३३ ॥

तस्य वर्णितरूपस्य लोकालोकशैलस्य शिखरेषु सामान्याचलाः
सह्यमलयादयस्तत्संनिभा रत्नमय्यः शिलाः सन्ति ॥ ३३ ॥

क्षीरोदकार्कगौरीणां वनस्कन्धौकसामिव।
विश्राम्यन्त्यनिशं यासु हरयो हरियोनयः ॥ ३४ ॥

क्षीरमिवोदकमिवार्क इव च गौरीणामवदातानां यासां शिलानां पृष्ठेषु वने
स्कन्धौकसां महातरूणां स्कन्धेष्विव अन्येषां हरीणां योनयः कारणभूताः
सपुत्रपौत्रा इति यावत्। हरयः सिंहवानरादयो विश्राम्यन्ति ॥ ३४ ॥

तासामुत्तरदिग्भागे पूर्वशृङ्गशिलोदरे।
निवसाम्यहमक्षीणवज्रसारसमत्वचि ॥ ३५ ॥

तासां शिलानां मध्ये तस्य गिरेरुत्तरदिग्भागे पूर्वदिक्स्थस्य शृङ्गस्य या शिला
तदुदरे अहं निवसामीति किमास्पदा इति प्रश्नस्योत्तरम् ॥ ३५ ॥

विधिना तत्र बद्धास्मि वसाम्युपलयन्त्रके।
अत्रासंख्या मुने याता मन्ये युगगणा मम ॥ ३६ ॥

न केवलमहं बद्धा यावद्भर्तापि तत्र मे।
बद्धः सायंतने पद्मकुड्मले षट्पदो यथा ॥ ३७ ॥

कस्यासीत्यादिप्रश्नानामुत्तरं वक्तुमारभते - न केवलमित्यादिना ॥ ३७ ॥

तेन सार्धं मया भर्त्रा शिलाकोटरसंकटे।
अनुभूताश्चिरं कालमत्र वर्षगणा गताः ॥ ३८ ॥

अद्याप्यात्मैकदोषेण न हि मोक्षं लभावहे।
चिरं तत्रैव तिष्ठावस्तथैवाबद्धभावनौ ॥ ३९ ॥

143885 एको दोषः कामस्तेन। आबद्धा भावना ममता याभ्यां तौ॥ ३९॥
143886
143887 पाषाणसंकटे तस्मिन्बद्धावावां न केवलम्।
143888 बद्धो यावदशेषेण परिवारोऽपि तत्र नौ॥ ४०॥
143889
143890 परिवारः पुत्रपौत्रभृत्यादिः परिजनः। नौ आवयोः॥ ४०॥
143891
143892 पुराणपुरुषो बद्धो द्विजस्तत्रास्ति मे पतिः।
143893 एकस्थानान्न चलति जीवन्युगशतान्यसौ॥ ४१॥
143894
143895 असौ मे पतिर्युगशतानि जीवन्नपि एकस्थानात्स्वासनान्न चलति नोत्तिष्ठति॥ ४१॥
143896
143897 आबाल्याद्ब्रह्मचारी च श्रोत्रियः पाठकोऽलसः।
143898 एकान्त एकए एवास्तेऽजिह्मवृत्तिरचापलः॥ ४२॥
143899
143900 श्रित्रियः स्वाध्यायशीलः। अत एवान्येषां पाठकोऽपि। अजिह्मवृत्तिः ऋजुः। अचापलः
143901 इन्द्रियचापलशून्यः॥ ४२॥
143902
143903 अहं व्यसनिनी भार्या तस्य वेदविदां वर।
143904 न निमेषं समर्थास्मि तं विना देहधारणे॥ ४३॥
143905
143906 स्वयं तु न तथेत्याह - अहमिति॥ ४३॥
143907
143908 शृणु तेन कथं ब्रह्मन्भार्याहं समुपार्जिता।
143909 कथं वृद्धिमयं यातः स्नेहोऽस्माकमकृत्रिमः॥ ४४॥
143910
143911 अस्माकं आवयोः। अस्मदो द्वयोश्च इति बहुवचनम्॥ ४४॥
143912
143913 तेन जातेन मद्भर्त्रा बालेनैव सता पुरा।
143914 किंचिज्ज्ञेन सतैकेन तिष्ठतात्मालयेऽमले॥ ४५॥
143915
143916 स्वजन्मप्रकारमाह - तेनेति॥ ४५॥
143917
143918 श्रोत्रियत्वानुरूपेण जाया मे जन्मशालिनी।
143919 कुतः संभवतील्येव निर्णीय चिरचिन्तया॥ ४६॥
143920
143921 स्वयमेवानवद्याङ्गी तेन तामरसेक्षण।
143922 उत्पादितास्मि नाथेन ज्योत्स्नेव शशिनाऽमला॥ ४७॥
143923
143924 मनसा मानसीभार्या मन्दरोत्तमसुन्दरी।
143925 ततो वृद्धिं प्रयातास्मि वसन्त इव मञ्जरी॥ ४८॥
143926
143927 सहजाम्बरसंछन्ना भूतानां चित्तहारिणी।
143928 पूर्णेन्दुबिम्बवदना द्यौरिवामलतारका॥ ४९॥
143929
143930 स्वां वर्णयति - सहजेत्यादिना॥ ४९॥
143931
143932 कोरकोच्चस्तनभरा समग्ररसशालिनी।
143933 लतावरवनेनेव करपल्लवशालिनी॥ ५०॥
143934
143935 रस्यन्त इति रसा गुणास्तैः शालिनी॥ ५०॥
143936

143937 सर्वस्य जन्तुजातस्य नित्यं हृदयहारिणी।
143938 हरिणीतारनयना मदनोन्माददायिनी॥ ५१॥
143939
143940 हरिण्या इव तारे दीर्घे नयने यस्याः॥ ५१॥
143941
143942 लीलाविलासैकरता हेलावलितलोचना।
143943 गेयवाद्यप्रिया नित्यं न च तृप्तानुरागिणी॥ ५२॥
143944
143945 व्यसनिनीति यदुक्तं तद्विवृणोति - लीलेत्यादिना। न च तृप्ता भोगेष्वित्यर्थः॥ ५२॥
143946
143947 सौभाग्यभोगपरमा लक्ष्म्यलक्ष्म्योः प्रिया सखी।
143948 अनन्या मोहजालानामखिन्ना संपदापदोः॥ ५३॥
143949
143950 समदर्शिभर्तृमनःकल्पनामयत्वाल्लक्ष्म्यलक्ष्म्योः प्रियासखीव समदर्शिनी।
143951 अत एव मोहजालानामभिन्नापि संपदापदोरखिन्ना॥ ५३॥
143952
143953 न केवलमहं गेहं धारयामि द्विजन्मनः।
143954 यावत्त्रैलोक्यसदनमिदमङ्ग बिभर्म्यहम्॥ ५४॥
143955
143956 भर्तृमनोमयत्वादेव तत्कल्पितत्रैलोक्यधारणमपि मदधीनमेवेत्याह - न
143957 केवलमिति॥ ५४॥
143958
143959 अहं कुलकरी भार्या कलत्रभरणक्षमा।
143960 त्रैलोक्यगृहसंभारधारणैकभरोद्वहा॥ ५५॥
143961
143962 कुलकरी पुत्रपौत्रपरम्पराप्रसवयोग्या। कलत्रं पोष्यवर्गस्तद्भरणक्षमा॥ ५५॥
143963
143964 अथाहं तरुणी जाता समुद्भिन्नोन्नतस्तनी।
143965 लतोल्ललद्गुलुच्छेव विलासरसशालिनी॥ ५६॥
143966
143967 उल्ललद्गुलुच्छा उल्लसत्फलपुष्पगुच्छा लतेव॥ ५६॥
143968
143969 पतिर्मां दीर्घसूत्रत्वाच्छ्रोत्रियत्वात्तपोरतः।
143970 कयाप्यपेक्षयाद्यापि न विवाहितवानिमाम्॥ ५७॥
143971
143972 इमामेवंगुणलक्षणामपि मां पतिः सः ब्राह्मणो
143973 दीर्घसूत्रत्वादशीघ्रकारितास्वभावात् कयापि वक्ष्यमाणया मोक्षापेक्षया न
143974 विवाहितवान्॥ ५७॥
143975
143976 तेन यौवनसंपन्नविलासरसशालिनी।
143977 तं विना व्यसनेनाहं दह्येऽग्नाविव पद्मिनी॥ ५८॥
143978
143979 अविवाहे त्वं कथं तस्य भार्या तत्राह -म् तेनेति। तेन सह यौवनेन संपन्नो यो
143980 भोगविलासविषयो रस इच्छा तच्छालिनी। अहं स्वमनोरथेनैव तं भर्तारं
143981 वृतवतीत्यर्थः॥ ५८॥
143982
143983 शीतानिलविलोलासु नलिनीषु निरन्तरम्।
143984 अङ्गदाहमवाप्नोति पूताङ्गारस्थलीष्विव॥ ५९॥
143985
143986 पूतानां भस्ममार्जनेन संधुक्षितानामङ्गाराणां स्थलीष्विव॥ ५९॥
143987
143988 उद्यानावनयः सर्वाः पूर्णाः कुसुमवर्षणैः।

143989 संपन्नास्तप्तसिकताः शून्या मे मरुभूमयः ॥ ६० ॥
143990
143991 तप्ताः सिकता यासु तथाविधा मरुभूमयः संपन्नाः ॥ ६० ॥
143992
143993 जलकल्लोलकह्लारकमलोत्करकोमलाः ।
143994 सरस्यः सारसारावसरसा मम नीरसाः ॥ ६१ ॥
143995
143996 कह्लाराणां पद्मभेदानां कमलानां चोत्करैः कोमलाः सुखस्पर्शाः ॥ ६१ ॥
143997
143998 अहं पुष्करमन्दारकुमुदोत्करमालिता ।
143999 भृशं दाहमवाप्नोमि कण्टकेष्विव दोलिता ॥ ६२ ॥
144000
144001 दाहशान्तये पुष्करादिकुसुमोत्करैः सखीभिर्दोलाशय्यादिरचनेन मालिता दोलिता
144002 विलुठितेव ॥ ६२ ॥
144003
144004 कुमुदोत्पलकह्लारकदलीतल्पपालयः ।
144005 मदङ्गसङ्गमाद्ग्रीष्ममर्मरा यान्ति भस्मताम् ॥ ६३ ॥
144006
144007 अङ्गसङ्गमान्निमित्ताद्ग्रीष्मेण तापोष्मणा शुष्काः प्रथमं मर्मरा भूत्वा
144008 ततो भस्मतां यान्ति ॥ ६३ ॥
144009
144010 यत्कान्तमुचितं स्वादु विचित्रं चित्तहारि च ।
144011 तदालोक्य भवाम्यन्तर्बाष्पपूर्णायतेक्षणा ॥ ६४ ॥
144012
144013 व्यसनानलसंतप्ताः पतन्तो बाष्पबिन्दवः ।
144014 छमच्छमिति मज्जन्ति कमलोत्पलपङ्क्तिषु ॥ ६५ ॥
144015
144016 छमच्छमीति प्रदीपनिपतत्सार्चिःस्नेहबिन्दुनिपातशब्दसादृश्यद्योतनार्थम##-
144017 अव्यक्तानुकरणस्यात इतौ इति उत्तरदलाच्छब्दस्य पररूपम् । नाम्रेडितस्यान्त्यस्य तु
144018 वा इति निषेधस्तु छान्दसत्वान्नेति बोध्यम् । मज्जन्ति अन्तःप्रविशन्ति स्वोष्मणा
144019 कमलोत्पलानि झटिति शोषयन्तः स्वयमपि शुष्यन्तीति यावत् ॥ ६५ ॥
144020
144021 कदलीकन्दलीस्कन्धदोलान्दोलनलीलया ।
144022 लालितोद्यानखण्डेषु मुखमाच्छाद्य रोदिमि ॥ ६६ ॥
144023
144024 उद्यानखण्डेषु सखीभिः कदलीकन्दलीस्कन्धकल्पितपल्लवदोलासु आन्दोलनलीलया लालिता
144025 सती ताभ्यः स्वदुःखं वक्तुमशक्ता लज्जया मुखमाच्छाद्य रोदिमि ॥ ६६ ॥
144026
144027 तुषारनिकराकीर्णं कदलीदलमण्डपम् ।
144028 पश्याम्यूष्माणमुज्झन्तं खदिराङ्गारभीषणम् ॥ ६७ ॥
144029
144030 नलिनीनालदोलासु सारसीं सारसाश्रिताम् ।
144031 दीनानना विलोक्यान्तर्निन्दामि निजयौवनम् ॥ ६८ ॥
144032
144033 सारसेन भर्त्रा आश्रितां संगताम् ॥ ६८ ॥
144034
144035 रम्ये रोदिमि मध्यस्थे पदार्थे यामि सौम्यताम् ।
144036 हृष्याम्यशोभने दीना न जाने किमहं स्थिता ॥ ६९ ॥
144037
144038 अशोभने मूर्च्छाजडीभावादौ हृष्यामि यतस्तदानीमहं किं स्थितेति न जाने ।
144039 तथा चाहन्ताविलये तद्गतदुःखस्याननुभवाद्विश्राम्यामीत्यर्थः ॥ ६९ ॥
144040

144041 दृष्टानि कुन्दमन्दारकुमुदानि हिमानि च ।
144042 मया कामाग्निदग्धानां भस्मानीव दिशं प्रति ॥ ७० ॥
144043
144044 दिशं प्रति प्रतिदिशम् । असमासे अद्विर्वचनं छान्दसम् ॥ ७० ॥
144045
144046 आनीलपल्लवमृणाललतोत्पलानां कह्लारकुन्दकदलीदलमालतीनाम् ।
144047 शय्या ममाङ्गचलनेन विशोषयन्त्या व्यर्थं गतानि नवयौवनवासराणि ॥ ७१
144048 । ।
144049
144050 आनीलानां तमालादिपल्लवानां मृणाललतानां उत्पलानां च तथा कह्लारादीनां
144051 च शय्याः अङ्गचलनेन देहसंयोगेन विशोषयन्त्या मम नवयौवनवासराणि
144052 व्यर्थं गतानि ॥ ७१ ॥
144053
144054 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मोक्षो० निर्वाणप्रकरणे उ० पा०
144055 विद्याधरीव्यसनवर्णनं नाम चतुःषष्टितमः सर्गः ॥ ६४ ॥
144056
144057 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
144058 विद्याधरीव्यसनवर्णनं नाम चतुःषष्टितमः सर्गः ॥ ६४ ॥
144059
144060 पञ्चषष्टितमः सर्गः ६५
144061
144062 विद्याधर्युवाच ।
144063
144064 अथ कालेन महता सोऽनुरागो विरागताम् ।
144065 प्रप्तो मम शरच्छान्तौ विरसः पल्लवो यथा ॥ १ ॥
144066
144067 इह कालेन संप्राप्ते स्वानुरागे विरागताम् ।
144068 संसिद्धा धारणाभ्यासैर्जितासुः सा न्यवेदयत् ॥
144069
144070 शरच्छान्तौ हेमन्तारम्भे पल्लवो यथा विरसः सन् विरागतां प्राप्नोति तद्वत् ॥ १ ॥
144071
144072 वृद्ध एकान्तरसिको नीरसः स्नेहवर्जितः ।
144073 भर्ताऽजिह्ममतिर्मौनी किं मन्ये जीवितेन मे ॥ २ ॥
144074
144075 कीदृशविचारक्रमेण विरागतां प्राप्तस्तमाह - वृद्ध इत्यादिना । अजिह्ममतिः
144076 ऋजुचित्तः । किं फलमिति शेषः ॥ २ ॥
144077
144078 वरं वैधव्यमाबाल्याद्वरं मरणमेव च ।
144079 वरं व्याधिरथापद्वा नाहृद्यप्रकृतिः पतिः ॥ ३ ॥
144080
144081 एतावज्जन्मसाफल्यं सौभाग्यमविखण्डितम् ।
144082 रसिकः पेशलाचारो यन्नार्यास्तरुणः पतिः ॥ ४ ॥
144083
144084 हता नीरसनाथा स्त्री हताऽसंस्कारिणी च धीः ।
144085 हता दुर्जनभुक्ता श्रीर्हता वेश्याहृता च ह्रीः ॥ ५ ॥
144086
144087 असंस्कारिणी शास्त्रीयसंस्कारहीना । तथा ह्रीः सत्कुलाचाराद्युचिता पुंसां लज्जा च
144088 वेश्याभिः पुंश्चलीभिर्हृता चेत् हता ॥ ५ ॥
144089
144090 सा स्त्री यानुगता भर्त्रा सा श्रीर्यानुगता सता ।
144091 सा धिर्या मधुरोदारा साधुता समदृष्टिता ॥ ६ ॥
144092

144093 शमदमादिसंपत्त्या मधुरा या सैव धीः सा बुद्धिः। एवं सैव साधुता या
144094 समदृष्टितेत्यनुषज्यते॥ ६॥
144095
144096 नाधयो व्याधयो नैव नापदो न दुरीतयः।
144097 कुर्वन्ति मनसो बाधां दंपत्योरनुरक्तयोः॥ ७॥
144098
144099 दुष्टा ईतयः अतिवृष्टिरनावृष्टिः शलभा मूषकाः खगाः। अत्यासन्नाश्च
144100 राजान। षडेता ईतयः स्मृताः॥ ७॥
144101
144102 उत्फुल्लाः कुसुमस्थल्योनन्दनोद्यानभूमयः।
144103 धन्वायन्ते कुनाथानां विनाथानां च योषिताम्॥ ८॥
144104
144105 धन्वायन्ते मरुभूमिवदाचरन्ति। संतापयन्तीति यावत्॥ ८॥
144106
144107 सर्व एव जगद्भावा यथेच्छं गुणलेशतः।
144108 संत्यज्यन्ते प्रमादात्तु वर्जयित्वा पतिं स्त्रिया॥ ९॥
144109
144110 अत एव सर्वं सुत्यजं पतिरेको दुस्त्यज इत्याह - सर्व एवेति। जगति प्रसिद्धा भावा
144111 गृहक्षेत्रबन्धुधनादयः। गुणलेशतः गुणाल्पतावशात्
144112 प्रमादादनवधानाद्वा। तुशब्दो भिन्नक्रमः। पतिमेकं तु वर्जयित्वेति॥ ९॥
144113
144114 स्थिरयौवनया दुःखान्येतानि मुनिनायक।
144115 भुक्तानि वर्षवृन्दानि पश्य दौर्भाग्यजृम्भितम्॥ १०॥
144116
144117 भुक्तानि मयेति शेषः। वर्षवृन्दानीति कालाध्वनोरत्यन्तसंयोगे द्वितीया।
144118 दौर्भाग्यजृम्भितं ममेति शेषः॥ १०॥
144119
144120 अथ क्रमेण तेनैव सरागो मे विरागताम्।
144121 आययौ हिमदग्धाया नलिन्या इव नीरसः॥ ११॥
144122
144123 अथवा ममायं भाग्योदय एवेत्याशयेनाह - अथेत्यादिना। क्रमेण नीरसः सन्
144124 विरागतामाययौ॥ ११॥
144125
144126 विरागवासनास्तेन सर्वभावानुरञ्जना।
144127 तवोपदेशेनेच्छामि मुने निर्वाणमात्मनः॥ १२॥
144128
144129 तेनोक्तेन क्रमेण विरागवासनाः प्राप्य सर्वभावेषु तदनुरञ्जना यस्यास्तथाविधा
144130 अहं संप्रति तवोपदेशेन आत्मनो निर्वाणमिच्छामि॥ १२॥
144131
144132 अप्राप्ताभिमतार्थानामविश्रान्तधियां परे।
144133 मरणैरुह्यमानानां जीवितान्मरणं वरम्॥ १३॥
144134
144135 ईदृशेऽपि समये त्वादृशोपदेष्टृलाभेऽपि विश्रान्तिमनिच्छन्त्या मम जीवनं
144136 व्यर्थमपि तु मरणमेव वरमित्याशयेनाह - अप्राप्तेति।
144137 मरणैर्मरणतुल्यदुःखप्रवाहैरुह्यमानानाम्॥ १३॥
144138
144139 स मद्भर्ताद्य निर्वाणमीहमानो दिवानिशम्।
144140 राजा राज्ञेव मनसा मनो जेतुंन् प्रबुध्यते॥ १४॥
144141
144142 सहधर्मचारिणीनां स्त्रीणां भर्तृसमानशीलौचित्याच्च भर्त्रा सह
144143 त्वयाहमुपदेश्येत्याह - स इति द्वाभ्याम्। यथा राजा राज्ञैव सहायेन राजानं
144144 जेतुं प्रबुध्यते नीतिशास्त्रोक्तोपायैर्जागरूको भवति तद्वत्स मम भर्तापि मनसैव

144145 मनो जेतुं प्रबुध्यते | विवेकोपायजागरूको वर्तत इत्यर्थः || १४ ||
144146
144147 ब्रह्मंस्तस्य च मद्भर्तुर्मम चाज्ञानशान्तये |
144148 न्यायोपपन्नया वाचा कुरु स्मरणमात्मनः || १५ ||
144149
144150 आत्मनः स्मरणं विस्मृतकण्ठचामीकरवत्प्रबोधनम् || १५ ||
144151
144152 यदा मामनपेक्ष्यैव स मद्भर्तात्मनि स्थितः |
144153 तदा विरागो वैरस्यमनयन्मे जगत्स्थितिम् || १६ ||
144154
144155 मां अनपेक्ष्य मदपेक्षां विहायैवेत्यर्थः | विरागो जगत्स्थितिं वैरस्यं
144156 नीरसतामनयत् | नयतेर्द्विकर्मता प्रसिद्धा || १६ ||
144157
144158 संसारवासनावेशवर्जितास्मि ततोऽवसम् |
144159 निबध्याभिमतां तीव्रां व्योमसंचारधारणाम् || १७ ||
144160
144161 इदानीं स्वस्याः
144162 धारणाभ्यासस्थिरचित्तत्वेनाप्युपदेशाधिकारसंपत्तिरस्तीत्याशयेनाह -
144163 संसारेति | व्योमसंचारसिद्धिदां प्राग्वर्णितां खेचरीमुद्राख्यां धारणाम् || १७ ||
144164
144165 अर्जयित्वा तहा व्योम्नि गतिं धारणया मया |
144166 अभ्यस्ता धारणा भूयः सिद्धसङ्गफलप्रदा || १८ ||
144167
144168 सिद्धसङ्गः सिद्धैः सह संवादादिव्यवहारस्तत्फलप्रदा | अत
144169 एवान्यैरगम्यमपीदं रहःस्थानमागत्य त्वया सह संवदामीति भावः || १८ ||
144170
144171 ततः स्वजगदाधारपूर्वापरनिरीक्षया |
144172 स्थिताहं धारणां बद्ध्वा सापि सिद्धिं समागता || १९ ||
144173
144174 स्वजगत्स्वावासब्रह्माण्डस्तदाकारस्य पूर्वापरभागघटिताकारस्य शास्त्रदृशा
144175 योगदृशा च करतलामलकवन्निरीक्षया तदाकारां भावनां बद्ध्वा स्थिता |
144176 साधारणापि मे तदवयवसर्वभूतजयक्रमेण सिद्धिमागता || १९ ||
144177
144178 अथ स्वजगतो दृष्ट्वा हृदयं तस्य बाह्यगा |
144179 अहं दृष्टवती स्थूलां लोकालोकगिरेः शिलाम् || २० ||
144180
144181 हृदयमन्तर्गतसर्ववस्तु दृष्ट्वा तस्य बाह्ये निर्गता अहं प्राग्वर्णितां
144182 स्वजगद्गर्भमितद्ब्रह्माण्डस्थस्य लोकालोकगिरेः शिलां दृष्टवती || २० ||
144183
144184 एतावतापि कालेन दंपत्योरावयोर्मुने |
144185 परं द्रष्टुमभूदिच्छा न काचन कदाचन || २१ ||
144186
144187 प्राक् तु कदाप्ययं ब्रह्माण्डो मया मत्पतिना वा न दृष्टस्तदिच्छाभावादित्याह
144188 - एतावतेति || २१ ||
144189
144190 मद्भर्ता केवलं शुद्धवेदार्थैकान्तचिन्तया |
144191 न च यातं न चायातं वेत्त्यहो विगतैषणः || २२ ||
144192
144193 शुद्धवेदार्थो धर्मः परमात्मा च तदेकान्तचिन्तया | यातं गतं कालं अयातं
144194 वर्तमानभविष्यत्कालं तदन्तर्गतपदार्थान्ब्रह्मतत्त्वं च न वेत्ति || २२ ||
144195
144196 तेनासौ मत्पतिर्विद्वानपि न प्राप्तवान्पदम् |

144197 अद्य सोऽहं च वाञ्छावः प्रयत्नेन परं पदम् ॥ २३ ॥
144198
144199 तेन तत्त्वावेदनेन । अद्य त्वदुपदेशश्रवणमननादिप्रयत्नेन परं पदं
144200 ज्ञातुमिति शेषः ॥ २३ ॥
144201
144202 तदेतामर्थितां ब्रह्मन्सफलां कर्तुमर्हसि ।
144203 महतामर्थिनो व्यर्था न कदाचन केचन ॥ २४ ॥
144204
144205 महतां भवादृशानां संनिधौ । अर्थिनः पुरुषार्थलिप्सवः । अप्यर्थे
144206 चनशब्दौ ॥ २४ ॥
144207
144208 भ्रमन्ती सिद्धसेनासु सदा नभसि मानद ।
144209 त्वदृते नेह पश्यामि घनाज्ञानदवानलम् ॥ २५ ॥
144210
144211 अन्य एव सिद्धा इममर्थं कुतो न प्रार्थितास्तत्राह - भ्रमन्ती इति ॥ २५ ॥
144212
144213 ब्रह्मन्विनैव करुणाकरकारणेन सन्तो यतोऽर्थिजनवाञ्छितपूरणानि ।
144214 कुर्वन्ति तेन शरणागततामुपेतां मामर्हसीह न तिरस्करणेन योक्तुम् ॥ २६ ॥
144215
144216 इत्थं स्ववृत्तान्तमखिलं जिज्ञासितं च निवेद्य शरणं प्रतिपद्य स्वस्या
144217 अनुपेक्षणीयतां प्रार्थयते - ब्रह्मन्निति । यतः कारणात्सन्तो विनैव कारणेन
144218 अर्थिजनवाञ्छितपूरणानि कुर्वन्ति तेन कारणेन शरणागततामुपेतां मां
144219 तिरस्करणेनोपेक्षणेन योक्तुं नार्हसि । अर्थिनामुपेक्षाया एव तिरस्कारत्वादिति भावः ॥
144220 २६ ॥
144221
144222 इत्यार्षे श्रीवासिष्ठमहारा० वा० दे० मोक्षो० निर्वाण० उ० पाषाणो०
144223 विद्याधरीजन्मव्यवहारवर्णनं नाम पञ्चषष्टितमः सर्गः ॥ ६५ ॥
144224
144225 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
144226 विद्याधरीजन्मव्यवहारवर्णनं नाम पञ्चषष्टितमः सर्गः ॥ ६५ ॥
144227
144228 षट्षष्टितमः सर्गः ६६
144229
144230 श्रीवसिष्ठ उवाच ।
144231
144232 अथेत्युक्तवती पृष्टा सा मया कल्पितासना ।
144233 संकल्पितासनस्थेन स्थितेन नभसि स्थिता ॥ १ ॥
144234
144235 कथं स्थितिरनाकाशे गृहं वाते शिलोदरे ।
144236 पृष्टयेति तया तत्र जगद्विस्तार ईर्यते ॥
144237
144238 प्राग्वर्णिते ब्रह्माण्डोर्ध्वनभसि स्थितेन तत्रापि संकल्पितासनस्थेन मया
144239 तस्मिन्नेव नभसि कल्पितासनस्थिता इति प्राग्वर्णितप्रकारेण स्ववृत्तान्तमुक्तवती सा
144240 अथानन्तरं पृष्टा ॥ १ ॥
144241
144242 कथं शिलोदरे बाले त्वद्विधानां भवेत्स्थितिः ।
144243 कथं संचलनं तत्र किमर्थं तत्र चास्पदम् ॥ २ ॥
144244
144245 किं पृष्टा तदाह - कथमिति । निरवकाशे शिलोदरे शरीरादिमतीनां
144246 त्वद्विधानां स्थितिः कथं भवेत् । संचलनं च कथं भवेत् । तत्र आस्पदं
144247 गृहं च ते किमर्थं किंप्रयोजनकम् । यत्र प्रवेश एवासंभावितस्तत्रेदं
144248 सर्वमत्यन्तासंभावितमित्यर्थः ॥ २ ॥

144249
144250 विद्याधर्युवाच।
144251
144252 मुने यथेदं भवतां जगत्स्फारं विराजते।
144253 तथास्माकं जगत्तत्र सर्गसंसारयुक् स्थितम्॥ ३॥
144254
144255 नैतावदेव त्वया असंभावितं तत्रास्तीति संभावनीयं किंत्वीदृशं
144256 जगदन्तरमपीति विद्याधरीप्रश्नस्योत्तरमाह - मुने इति॥ ३॥
144257
144258 स्फुरन्ति नागाः पाताले तिष्ठन्ति भुवि पर्वता।
144259 आपश्छलछलायन्ते वहन्ति व्योम्नि वायवः॥ ४॥
144260
144261 तदेव प्रपञ्चयति - स्फुरन्तीत्यादिना। छलछलायन्ते इत्यव्यक्तध्वन्यनुकरणम्
144262 ॥ ४॥
144263
144264 अर्णवा अर्णसा भान्ति यान्त्यन्तः शनकैः प्रजाः।
144265 भूतान्यजस्रं जायन्ते म्रियन्तेऽविरतं यथा॥ ५॥
144266
144267 अर्णसा उदकेन। यान्ति गमनादिना व्यवहरन्ति। यथा अत्रेति शेषः॥ ५॥
144268
144269 वान्ति वाता वहन्त्यापो भान्ति चाभान्ति खे सुराः।
144270 तिष्ठन्त्यगाः समुद्यन्ति ग्रहा यान्ति महीं नृपाः॥ ६॥
144271
144272 देवासुरमनुष्याणां व्यवहारपरम्पराः।
144273 लोलाः प्रवृत्ता आकल्पमासमुद्रमिवापगाः॥ ७॥
144274
144275 नक्षत्रादिरूपेण भान्ति। स्वस्वशरीराकारेण आभान्ति॥ ६॥ ७॥
144276
144277 दिनपद्मानि भूलोकसरस्याकल्पमानभः।
144278 लोलाभ्रालीनि फुल्लानि मीलितोन्मीलितान्यलम्॥ ८॥
144279
144280 आकल्पं कालतः। आनभो देशतः। अभिविधावाङौ। लोलान्यभ्राण्येवालयो भ्रमरा
144281 येषु तथाविधानि दिनपद्मानि भूलोकसरसि फुल्लानि अलं मीलितान्युन्मीलितानीति
144282 तदन्तःपातिपदार्थकेसराद्यभिप्रायम्॥ ८॥
144283
144284 चन्द्रचर्चाश्चतुर्दिक्कं चन्दनेनात्मतेजसा।
144285 रचयन्रात्रिरोहिण्योस्तमो हन्त्यपि हृद्गतम्॥ ९॥
144286
144287 चन्द्र आत्मतेजसा चन्द्रिकालक्षणेन चन्दनेन चतुर्दिक्कं चर्चाः लेपनानि रचयन्सन्
144288 रात्रेः रोहिण्याश्च हृद्गतं बहिर्गतमपि तमः हन्ति॥ ९॥
144289
144290 स्वदशास्वादनरता वातयन्त्रसुचारिता।
144291 रोदःसद्मनि सूर्याख्या दीप्यते दिवि दीपिका॥ १०॥
144292
144293 स्वीयदशदिग्लक्षणाया दशाया वर्तिकाया आस्वादने द्रवस्नेहोपभोगे रता
144294 वातलक्षणेन यन्त्रेण सुचालिता परितो भ्रमिता रोदसी द्यावाभूमी तल्लक्षणे सद्मनि
144295 गृहे॥ १०॥
144296
144297 ब्रह्मसंकल्पितो रुद्धो वातसंचारचारिभिः।
144298 खेऽनिशं चक्रमृक्षाणां गुणावर्तो विवर्तते॥ ११॥
144299
144300 इदानीं रोदस्यौ भ्रमता ज्योतिश्चक्रेण घरट्टयन्त्रतया रूपयति - ब्रह्मेति

144301 द्वाभ्याम् | खे ऋक्षाणां चक्रं ज्योतिश्चक्ररूपो गुणैरावर्तत इति गुणावर्तो
144302 घरट्टो विवर्तते भ्रमति | स च
144303 विवर्तमानश्चतुर्विधभूतलक्षणतण्डुलमासृष्टेः सृष्टिकालमारभ्य पिनष्टि |
144304 केनासौ शिल्पिना निर्मितस्तमाह - ब्रह्मसंकल्पित इति | कैरयं विष्टब्धस्तानाह |
144305 वातसंचारचारिभिर्वातरश्मिभिः रुद्धः अवष्टब्धः | कस्मिन्कीले रुद्धस्तमाह ##-
144306 ध्वनन् || ११ ||
144307
144308 भूततण्डुलमासृष्टेः पिनष्टि ध्रुवकीलकः |
144309 नियत्याचलितो रोदःकपाटाम्भोदघर्घरः || १२ ||
144310
144311 द्वीपाब्धिशैलैर्भूपीठं विमाननगरैर्नभः |
144312 दैत्यदानवनागौघैः पूर्णं पातालमण्डलम् || १३ ||
144313
144314 तत्राप्यत्रेव भूरादिलोका यथोचितं द्वीपपर्वतादिभिः पूर्णाः सन्तीत्याह - द्वीपेति
144315 | विमानसंनिवेशरचितैर्नगरैर्नभः पूर्णम् || १३ ||
144316
144317 कुण्डलं त्रिजगल्लक्ष्म्या नीलं भूतलमण्डलम् |
144318 स्थितं चञ्चलमाचारचञ्चलायाः स्फुरन्मणि || १४ ||
144319
144320 तत्रापि नीलं भूतलमण्डलमाचारचञ्चलायास्त्रिजगल्लक्ष्म्याः
144321 स्फुरन्मणिचञ्चलं कुण्डलमिव स्थितम् || १४ ||
144322
144323 बुद्ध्यादिरहितां स्पन्दसंविदं वायवीमिव |
144324 स्थावरं जंगमं चैव सूक्ष्ममादाय जायते || १५ ||
144325
144326 तत्रापि स्थावरं जङ्गमं चैव प्राणिजातं बुद्ध्यादिरहितां बाह्यां वायवीं
144327 क्रियामिव आन्तरीं सूक्ष्मां प्राणाख्यां स्पन्दसंविदमादाय जायते
144328 जन्मादिविकारा&ल्लभते || १५ ||
144329
144330 मुनिर्मौनैर्धरा वार्भिर्मारुतैः कपिचापलम् |
144331 आकाशैरवकाशित्वं तेजोभिर्भासनं श्रितम् || १६ ||
144332
144333 तत्रापि मुनिर्मौनैर्मुनिकर्मभिः श्रितः | धरा समुद्रादिवार्भिः श्रिता | मारुतैः
144334 कपिवच्चापलं श्रितम् | आकाशैस्तत्तदुपाधिभिन्नैरुपाध्यनुरूपमवकाशित्वं
144335 श्रितम् | सर्ववस्तूनां स्वभावा नियतास्तुल्या इत्यर्थः || १६ ||
144336
144337 वृक्षोर्व्यब्ध्यद्रिखचराः प्राणिनोन्तः स्फुरन्त्यलम् |
144338 मृतिजन्मोन्मुखाः कीटसुरासुरजलौकसः || १७ ||
144339
144340 वृक्षचरा मर्कटादयः उर्वीचरा मनुष्यादयः अब्धिचरा मत्स्यादयः अद्रिचरा
144341 मृगादयः खचराः पक्षिदेवादयस्तत्राप्यन्तरालं स्फुरन्ति || १७ ||
144342
144343 ससुरासुरगन्धर्वाः कालः कलयति प्रजाः |
144344 दोर्भिः कल्पयुगाब्दैश्च स्वपशूनिव पालकः || १८ ||
144345
144346 कालः सुरादिसहिताः प्रजाः पालकः पुरुषः स्वदोर्भिः स्वपशूनिव
144347 कल्पयुगवर्षादिलक्षणैर्दोर्भिः कलयति पालनादिना उपभुङ्क्ते || १८ ||
144348
144349 अनन्तविपुलागाधगम्भीरे कालसागरे |
144350 उत्पत्त्योत्पत्त्य लीयन्ते ते त्वावर्तविवर्तया || १९ ||
144351
144352 ते सुरादयो यादोगणाः कालसागरे आवर्तविवर्तया कालगत्या उत्पत्त्योत्पत्त्य लीयन्ते || १९ ||

144353
144354 चतुर्दशविधा वातवेल्लिता भूतपांसवः।
144355 नाशाकाशे विलीयन्ते शरदम्भोदलीलया ॥ २० ॥
144356
144357 नश्यत्यस्मिन्निति नाशः तथाविधे अव्याकृताकाशे ॥ २० ॥
144358
144359 भुवनं बोधयन्ती द्यौश्चन्द्रार्ककरचामरैः।
144360 स्थिताकाशांशुकाकल्पतारकोत्करशेखरा ॥ २१ ॥
144361
144362 आकाश एवांशुकं वस्त्रं यस्याः। आकल्पभूतास्तारकोत्कराः शेखरे
144363 यस्यास्तथाविधा द्यौश्चन्द्रार्ककरचामरैः संवीज्य सुप्तं भुवनं बोधयन्तीव
144364 स्थिता ॥ २१ ॥
144365
144366 स्थिताः पवनभूकम्पमेघतापसहिष्णवः।
144367 स्वं प्रदेशमनुज्झन्त्यः ककुभः स्तम्भिता इव ॥ २२ ॥
144368
144369 तत्रापि ककुभो दिशः स्तम्भिताः स्थावरप्राणिन इव
144370 पवनभूकम्पवृष्ट्यातपसहिष्णवो भूत्वा स्थिताः ॥ २२ ॥
144371
144372 उत्पातमेघनिर्ह्रादभूमिकम्पग्रहग्रहैः।
144373 अज्ञातैरपि विज्ञातैर्भूतानां जायते गतिः ॥ २३ ॥
144374
144375 ज्योतिःशास्त्रकुशलैर्विज्ञातैरन्यैरज्ञातैरपि
144376 उत्पातादिनिमित्तैर्भूतानामिष्टानिष्टलक्षणा गतिस्तत्रापि जायते ॥ २३ ॥
144377
144378 सप्तानां जलमब्धीनामौर्वाग्निः पिबति ज्वलन्।
144379 लोकान्तराणामाकल्पं कालो भूतगणं यथा ॥ २४ ॥
144380
144381 लोकान्तराणां चतुर्दशभुवनभेदानां भूतगणं प्राणिनिकायं यथा कालः
144382 पिबति तद्वत् ॥ २४ ॥
144383
144384 पातालमाविशति याति नभोबिलं च दिङ्मण्डलं भ्रमति भूतगणः समन्तात्।
144385 पर्येति पर्वतमहार्णवमण्डलनि द्वीपान्तराणि च मरुत्सरणक्रमेण ॥ २५ ॥
144386
144387 उक्तं सर्व संक्षिप्योपसंहरति - पातालमिति। तत्रापि पातालयोग्यो भूतगणः
144388 प्राणिनिकायः पातालमाविशति। नभोबिलवासयोग्यो नभिबिलं याति। इतरस्त्वन्तराले
144389 दिङ्मण्डलं भ्रमति। मरुतो वायोः सरणक्रमेण
144390 संचरणवत्पर्वतमहार्णवमण्डलानि द्वीपान्तराणि च पर्येति। तथा च
144391 सर्वोऽप्यत्रत्यव्यवहारस्तत्रापि वर्तत एवेति संभावयेत्यर्थः ॥ २५ ॥
144392
144393 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मोक्षो० निर्वाणप्रकरणे उत्तरार्धे
144394 पाषाण० शिलान्तरवर्णनं नाम षट्षष्टितमः सर्गः ॥ ६६ ॥
144395
144396 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
144397 शिलान्तरवर्णनं नाम षट्षष्टितमः सर्गः ॥ ६६ ॥
144398
144399 सप्तषष्टितमः सर्गः ६७
144400
144401 विद्याधर्युवाच।
144402
144403 यावत्तं सर्गमागच्छ प्रसादः क्रियतां मुने।
144404 आश्चर्येषूपपन्नेषु महान्तो ह्यतिकौतुकाः ॥ १ ॥

144405
144406 कौतुकात्तां शिलां गत्वाप्यदृष्ट्वा मुनिना जगत्।
144407 पृष्टयाभ्यासमाहात्म्यं विद्याधर्यात्र वर्ण्यते॥
144408
144409 हे मुने त्वं यदि मदुक्तार्थजातमसंभावितं मन्यसे तर्हि स्वयमेव साक्षात्तं
144410 सर्गं यावत्साकल्येन द्रष्टुमागच्छ॥ १॥
144411
144412 तथेत्युक्ते [श्रीवसिष्ठ उवाचेत्यपेक्षितनत्र।] मया सार्धं
144413 गन्तुमारब्धमम्बरे।
144414 वात्यया सौरभेणेव शून्ये शून्येन शून्यया॥ २॥
144415
144416 इति तया उक्ते सति मया तथास्त्वित्यभ्युपगम्य तया सहाम्बरे
144417 गन्तुमारब्धमित्यन्वयः। वात्यया सह सौरभेण चम्पकादिगन्धेनेव॥ २॥
144418
144419 अथाहं दूरमध्वानं शून्यमुल्लङ्घ्य नाभसम्।
144420 नभःस्थं भूतसंघातं तया सार्धमवाप्तवान्॥ ३॥
144421
144422 भूतसंघातं देवादिप्राणिनिकायम्॥ ३॥
144423
144424 तमुल्लङ्घ्य चिरेणात्र भूतसंचारमम्बरे।
144425 लोकालोकशिरोव्योम प्राप्तोऽस्मि धवलाम्बुदम्॥ ४॥
144426
144427 उत्तरांशेन्दुशुभ्राभ्रपीठान्निर्गत्य तां शिलाम्।
144428 आनीतोस्मि तयोत्तुङ्गां तप्तकाञ्चनकल्पिताम्॥ ५॥
144429
144430 उत्तराया दिशः अंशे पूर्वभागे स्थितादिन्दुवच्छुभ्रादभ्रपीठादधो निर्गत्य॥ ५॥
144431
144432 यावत्पश्याम्यहं शुभ्रां शिलां तां न च तज्जगत्।
144433 कलधौतमयीमुच्चैरग्निलोकतटीमिव॥ ६॥
144434
144435 अहं अग्निनावलोक्यते इत्यग्निलोकां मेरुतटीमिव स्थितां तां शिलां
144436 यावत्साकल्येनान्विष्य पश्यन्नपि तत्तयोक्तं जगत्तत्र न पश्यामीत्यर्थः॥ ६॥
144437
144438 तदा मयोक्ता सा कान्ता क्व भवत्सर्गभूरिति।
144439 क्व रुद्रार्काग्नितारादि क्व लोकान्तरसप्तकम्॥ ७॥
144440
144441 भवत्सर्गभूः क्व तत्र त्वया वर्णिता रुद्रार्कादयश्च क्वेति सा मयोक्तेति सर्वत्राग्रे
144442 संबन्धः॥ ७॥
144443
144444 क्वार्णवाकाशककुभः क्वोन्मज्जननिमज्जने।
144445 क्व महाम्भोदसंभारः क्व ताराम्बरडम्बरम्॥ ८॥
144446
144447 ककुभो दिशः। उन्मज्जननिमज्जने प्राणिनां जन्मनाशौ॥ ८॥
144448
144449 क्व शैलशिखरश्रेण्यः क्व महार्णवलेखिकाः।
144450 क्व द्वीपवलयाः सप्त क्व तप्तकनकावनिः॥ ९॥
144451
144452 क्व कार्यकालकलनाः क्व भूतभुवनभ्रमः।
144453 क्व विद्याधरगन्धर्वाः क्व नरामरदानवाः॥ १०॥
144454
144455 क्वर्षिभूपालमुनयः क्व नयापनयक्रमः।
144456 क्व पञ्चयामयामिन्यः क्व स्वर्गनरकभ्रमः॥ ११॥

ऋषयो भूपालास्तेषु मुनयश्च क्व। भूपातालमुनयः इति पाठे तु स्पष्टम्।
पञ्चयामा हेमन्तयामिन्यः॥ ११॥

क्व पुण्यपापकलना क्व कलाकालकेलयः।
क्व सुरासुरवैराणि क्व द्वेषस्नेहरीतयः॥ १२॥

वदत्येवं मयि वचः सोवाच वरवर्णिनी।
विस्मयाकुलमालोक्य शिलामलिविलोचना॥ १३॥

मयि एवं वदति सति सा मामुवाच॥ १३॥

विद्याधर्युवाच।

पश्याम्यखिल [अखिल इति संबोधनम्।] नात्मीयमहं सर्वमिहोपले।
मुकुरप्रतिबिम्बस्थपुरान्यपुरवज्जनम्॥ १४॥

अहमपि न पूर्ववत्पश्यामि किंतु प्रागुक्तं सर्वं देवमनुष्यासुरादिजनंन् मुकुरे
प्रतिबिम्बभावेनास्थितं यत्प्रसिद्धपुरादन्यत्पुरं तद्वत्पश्यामीत्यर्थः॥ १४॥

नित्यानुभव एवात्र दर्शने कारणं मम।
तदभावो मुने मन्ये ते कारणमदर्शने॥ १५॥

तदभावस्तत्तिरोधानम्। पादादौ ते इति छान्दसम्॥ १५॥

अन्यच्च चिरकालैकद्वैतसंकथयानया।
शुद्धातिवाहिकैकात्मदेहता विस्मृतावयोः॥ १६॥

सर्वसूक्ष्मार्थग्रहणक्षमविशुद्धमनोमात्रदेहताविस्मृतिवशादपि तव
तददर्शनंन् मत तदस्फुटदर्शनंन् चेत्याह - अन्यच्चेति॥ १६॥

ममातिसुचिराभ्यस्तमपि व्योम लतामिव।
गतं निजं जगदिदं यतः पश्यामि न स्फुटम्॥ १७॥

ममापीदं निजं जगद्गतं नष्टप्रायम्। यतश्चिराभ्यस्तां व्योमलतामिवेदं न
स्फुटं पश्यामीत्यन्वयः॥ १७॥

अभूद्यत्स्वजगत्पूर्वमतिप्रकटमेव मे।
तत्पश्यामीदमादर्श इव बिम्बितमस्फुटम्॥ १८॥

चिरव्यर्थोत्थया नाथ संकथाव्यथया मिथः।
स्वास्थ्यं विस्मृतमात्मीयमवदाततमं ततम्॥ १९॥

स्वास्थ्यंन् प्रागुक्तधारणाभ्याससिद्धशुद्धातिवाहिकैकात्मदेहत्वं न तु
स्वरूपावस्थितिः पूर्वग्रन्थविरोधात्॥ १९॥

योऽभ्यासः प्रकचत्यन्तः शुद्धचिन्नभसो रसात्।
भवेत्तन्मयमेवान्तराबालमिव लक्ष्यते॥ २०॥

अभ्यासपदेन तज्जन्यदृढसंस्कारो लक्ष्यते। प्रकचति उद्बुद्धः प्रकाशते।
इवकारो भिन्नक्रमः। अन्तः आन्तरं चित्तं तन्मयमेव भवेदिवेति॥ २०॥

144509 न सच्छास्त्रेण सा विद्धि न सन्न्यायेन सा कला ।
144510 अस्ति नास्त्यमितोद्योगाद्यदभ्यासान्न सिद्ध्यति ॥ २१ ॥
144511
144512 अत एवाभ्यासहीनस्य श्रवणमनने निष्फले इत्याह - नेति । सा कला अस्तीति
144513 पूर्वत्रान्वयः । अभ्यासस्य त्वसाध्यं न किंचिदस्तीत्याह - नास्तीति ॥ २१ ॥
144514
144515 स्वजगत्संतताभ्यासवशतो मां कथाभ्रमः ।
144516 नूनमाक्रान्तवानेष द्वयोर्हि बलवाञ्जयी ॥ २२ ॥
144517
144518 अयं त्वत्संवादकथाभ्रमः स्वीयजगत्संतताभ्यासवशतो मां
144519 पूर्वजगद्भ्रमवतीमाक्रान्तवान् वशीकृतवान् । तेन तत्संस्कारस्तिरोहित
144520 इवाभूदित्यर्थः । अतीतभ्रमापेक्षया वर्तमानस्य बलीयस्त्वादित्याशयेनाह -
144521 द्वयोर्हीति ॥ २२ ॥
144522
144523 इष्टवस्त्वर्थिनां तज्ज्ञसूपदिष्टेन कर्मणा ।
144524 पौनःपुन्येन करणान्नेतरच्छरणं मुने ॥ २३ ॥
144525
144526 अत एव लौकिकं वैदिकं वा शिल्पविद्यादिफलमिच्छताम् । तत्तद्गुरूपदिष्टक्रमेण
144527 पुनःपुनस्तदभ्यास एव शरणं नान्यदित्याह - इष्टेति । तज्ज्ञैर्गुरुभिः
144528 सूपदिष्टेन कर्मणा तत्करणप्रकारेण ॥ २३ ॥
144529
144530 अयमित्थमिहाज्ञानभ्रमः प्रौढोऽहमात्मकः ।
144531 शाम्यति ज्ञानचर्चाभिः पश्याभ्यासविजृम्भितम् ॥ २४ ॥
144532
144533 अनाद्यनन्तः संसारानर्थोऽपि ज्ञानाभ्यासान्नश्यति चेत्किमन्यदनिष्टमवशिष्यते ।
144534 यदभ्यासेन न चिकित्स्येतेत्याह - अयमिति । ज्ञानस्य चर्चाभिः श्रवणाद्यभ्यासैः
144535 ॥ २४ ॥
144536
144537 अहं शिष्याबला बाला पश्यामि त्वं न पश्यसि ।
144538 सर्वज्ञोऽपि शिलासर्गं पश्याभ्यासविजृम्भितम् ॥ २५ ॥
144539
144540 अभ्यासपाटवे बालानामपि प्रौढता दृष्टा तद्विस्मरणे तु महतामपि व्यामोहः
144541 संभावित इत्यर्थे आवामेव निदर्शनमित्याह - अहमिति । अहं शिष्यभूतापि
144542 शिलासर्गं पश्यामि त्वं सर्वज्ञो गुरुरपि न पश्यसि
144543 आश्चर्यमेतदभ्यासविजृम्भितमित्यर्थः ॥ २५ ॥
144544
144545 अज्ञोऽपि तज्ज्ञतामेति शनैः शैलोपि चूर्ण्यते ।
144546 बाणोप्येति महालक्ष्यं पश्याभ्यासविजृम्भितम् ॥ २६ ॥
144547
144548 बाणः अचेतनोऽपि महदलक्ष्यं सूक्ष्मतममपि लक्ष्यं
144549 शरसंधानाभ्यासपाटवादेति प्राप्नोति ॥ २६ ॥
144550
144551 इत्थं नाम परिप्रौढा मिथ्याज्ञानविषूचिका ।
144552 शाम्यत्येव विचारेण पश्याभ्यासविजृम्भितम् ॥ २७ ॥
144553
144554 अभ्यासेन कटुद्रव्यं भवत्यभिमतं मुने ।
144555 अन्यस्मै रोचते निम्बस्त्वन्यस्मै मधु रोचते ॥ २८ ॥
144556
144557 निम्बभक्षणाभ्यासवते द्रविडाय निम्बोऽपि रोचते ॥ २८ ॥
144558
144559 अबन्धुर्बन्धुतामेति नैकट्याभ्यासयोगतः ।
144560 यात्यनभ्यासतो दूरात्स्नेहो बन्धुषु तानवम् ॥ २९ ॥

144561
144562 बन्धुतां बन्धुवत्स्निग्धताम् ॥ २९ ॥
144563
144564 आतिवाहिकदेहोऽयं शुद्धचिद्व्योम केवलम् ।
144565 आधिभौतिकतामेति भावनाभ्यासयोगतः ॥ ३० ॥
144566
144567 देहे भौतिकताभ्रान्तिरपि स्वाभाविकात्तदभ्यासादेवेत्याह - आतिवाहिकेति ॥ ३० ॥
144568
144569 आधिभौतिकदेहोऽसौ धारणाभ्यासभावनात् ।
144570 विहंगवत्खमभ्येति पश्याभ्यासविजृम्भितम् ॥ ३१ ॥
144571
144572 खमभ्येति खेचरसिद्धिं लभते ॥ ३१ ॥
144573
144574 पुण्यानि यान्ति वैफल्यं वैफल्यं यान्ति मातरः ।
144575 भाग्यानि यान्ति वैफल्यं नाभ्यासस्तु कदाचन ॥ ३२ ॥
144576
144577 कीर्तनाद्यल्पापराधेनापि महान्त्यपि पुण्यानि वैफल्यं यान्ति । भाग्यानि धनानि ॥ ३२
144578 ।।
144579
144580 दुःसाध्याः सिद्धिमायान्ति रिपवो यान्ति मित्रताम् ।
144581 विषाण्यमृततां यान्ति संतताभ्यासयोगतः ॥ ३३ ॥
144582
144583 औषधार्थमभ्यासेन सेवितानि विषाणि अमृतवदारोग्यादिहेतुतां यान्ति ॥ ३३ ॥
144584
144585 येनाभ्यासः परित्यक्त इष्टे वस्तुनि सोऽधमः ।
144586 कदाचिन्न तदाप्नोति वन्ध्या स्वतनयं यथा ॥ ३४ ॥
144587
144588 अत एव शास्त्रीयशुभाभ्यासः कदापि न परित्याज्य इत्याह - येनेति ॥ ३४ ॥
144589
144590 यदप्यभिमतं वस्तु स्वभ्यासेन तदर्जनात् ।
144591 तद्युक्तिपूर्वकं त्याज्यमामृत्योर्जीवितं यथा ॥ ३५ ॥
144592
144593 तर्हि शास्त्रीयत्वादभिमतं दारपुत्रधनसत्कर्मानुष्ठानादिवस्तु तत्कदापि न
144594 त्याज्यं नेत्याह - यदपीति । स्वभ्यासेन प्रयत्नसहस्रेण
144595 तदर्जनादत्यन्ताभिमतं दारादि यद्वस्तु तदपि न सहसा त्याज्यंन् किंतु
144596 वैराग्याभ्यासेन वृत्त्यादिपरिकल्पनादियुक्तिपूर्वकं त्याज्यम् । यथा
144597 आमृत्योरत्यन्ताभिमतमपि जीवितं योगिभिर्युक्तिपूर्वकं त्यज्यते तद्वदित्यर्थः ॥ ३५ ॥
144598
144599 इष्टे वस्तुनि नाभ्यासं यः करोति नराधमः ।
144600 सोऽनिष्टेऽनिष्टमाप्नोति नरकान्नरकान्तरम् ॥ ३६ ॥
144601
144602 तत्त्वज्ञानाभ्यासस्तु सर्वथा न त्याज्यः । तत्त्यागे देहाहंभावाद्यभ्यासस्य
144603 नान्तरीयकस्य वारयितुमशक्यत्वादनिर्मोक्ष एवेत्याशयेनाह - इष्टे इति । अनिष्टे
144604 देहाद्यहंभावे अनिष्टमेवाभ्यासस्वभावादेवाप्नोति । ततश्च नरकान्नरकान्तरम्
144605 ॥ ३६ ॥
144606
144607 तरन्ति सरितं स्फीतां संसारासारसेविनः ।
144608 त एवात्मविचाराख्यमभ्यासं न त्यजन्ति ये ॥ ३७ ॥
144609
144610 संसारः असारो येन तादृशविवेकसेविनो ये पुरुषा आत्मविचाराख्यमभ्यासं न
144611 त्यजन्ति त एव स्फीतां मायासरितं तरन्तीत्यन्वयः ॥ ३७ ॥
144612

अभ्यासभासोऽभिमतं वस्तु प्रकटयन्त्यलम् ।
प्रापयन्ति च निर्विघ्नं घटं दीपप्रभा यथा ॥ ३८ ॥

यथा घटार्थिने दीपप्रभा घटं प्रकटयन्ति निर्विघ्नं प्रापयन्ति च तथा
आत्मवस्त्वर्थिने अभ्यासलक्षणाभासः प्रकाशा अभिमतमात्मवस्तु प्रकटयन्ति
निर्विघ्नं प्रापयन्ति च । तत्र श्रवणमननाभ्यासोऽसंभावनातिमिरनिरासेन
प्रकटयति । निदिध्यासनाभ्यासस्तु विपरीतभावनारूपविघ्ननिरासेन
प्रापयतीत्याशयः ॥ ३८ ॥

यथा कल्पद्रुमलताः सच्चिन्तामणयो यथा ।
फलन्ति शरदश्चैतास्तथैवाभ्यासभूमयः ॥ ३९ ॥

इष्टवस्तु चिराभ्यासभास्वान्भासयति प्रजाः ।
तथेन्द्रियाख्यां देहोर्व्यां रात्रिं पश्यन्ति नो यथा ॥ ४० ॥

देहलक्षणायामुर्व्यामिष्टं वस्तु परमप्रेमविषय आत्मैव
तद्विचाराभ्यासलक्षणो भास्वान् सूर्यस्तथा भासयति यथा प्रजाः
प्रकृष्टजन्मानोऽधिकारिजना इन्द्रियाख्यां
रागद्वेषजन्ममरणाद्यनर्थसहस्रदुःखस्वप्नमोहनिदाप्रदां रात्रिं न
पश्यन्तीत्यर्थः ॥ ४० ॥

सर्वस्य जन्तुजातस्य सर्ववस्त्ववभासने ।
सर्वदैवैक एवोच्चैर्जयत्यभ्यासभास्करः ॥ ४१ ॥

चतुर्दशविधायास्तु भूतजातेर्न कस्यचित् ।
सिध्यत्यभिमतं वस्तु विनाभ्यासमकृत्रिमम् ॥ ४२ ॥

अप्यर्थे तुशब्दः । चतुर्दशभुवनस्थाया अपि भूतजातेर्मध्ये कस्यचिदपि प्राणिनः
किंचिदप्यभिमतं वस्तु अभ्यासं विना न सिद्ध्यतीत्यर्थः ॥ ४२ ॥

पौनःपुन्येन करणमभ्यास इति कथ्यते ।
पुरुषार्थः स एवेह तेनास्ति न विना गतिः ॥ ४३ ॥

अभ्यासस्वरूपं दर्शयति - पौनःपुन्येनेति । स एव इह शास्त्रे पुरुषार्थः
प्राग्बहुशो वर्णितः पुरुषप्रयत्नः परमपुरुषार्थफलस्तेन विना गतिर्निस्तारो नास्ति
॥ ४३ ॥

दृढाभ्यासाभिधानेन यत्ननाम्ना स्वकर्मणा ।
निजवेदनजेनैव सिद्धिर्भवति नान्यथा ॥ ४४ ॥

निजवेदनं स्वविवेकस्तज्जेनैव ॥ ४४ ॥

अभ्यासभास्वति तपत्यवनौ वने च वीरस्य सिध्यति न यन्न तदस्ति किंचित् ।
अभ्यासतो भुवि भयान्यभयीभवन्ति सर्वासु पर्वतगुहास्वपि निर्जनासु ॥ ४५ ॥

वीरस्येन्द्रियजयादिशूरस्य पुंसः अभ्यासभास्वति तपति प्रकाशमाने सत्यवनौ
भूमौ वने जले चादन्तरिक्षे च यदभिलषितं वस्तु न सिध्यति तन्नास्ति किंचित् । भयानि
भयहेतुव्याघ्रसर्पादीनि ॥ ४५ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मी० दे० मो० निर्वाणप्र० उ० पाषा०
अभ्यासप्रशंसा नाम सप्तषष्टितमः सर्गः ॥ ६७ ॥

144665 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
144666 अभ्यासप्रशंसा नाम सप्तषष्टितमः सर्गः ॥ ६७ ॥
144667
144668 अष्टषष्टितमः सर्गः ६८
144669
144670 विद्याधर्युवाच ।
144671
144672 ततः प्राचीनमभ्यासं बोधधारणयामले ।
144673 कुर्वः प्रकटतां तेन जगदेष्यति शैलगम् ॥ १ ॥
144674
144675 इहाधिभौतिकभ्रान्तिनिरासेन समाधिना ।
144676 आतिवाहिकभावस्य स्थितिः सत्या समर्थ्यते ॥
144677
144678 यतो दृढाभ्यासाख्यसमाधियत्नमन्तरेण देहादावाधिभौतिकताभ्रान्तिर्न
144679 निवर्तते आतिवाहिकभावश्च नाविर्भवति तं विना च सर्गान्तरस्थितिः साक्षिप्रत्यक्षेण
144680 द्रष्टुमशक्या ततो हेतोरमले परमात्मनि सर्वबोधानुकूलया
144681 समाधिरूपधारणया प्राचीनमातिवाहिकभावाभ्यासमावां कुर्वस्तेनोपायेन
144682 शैलगं शिलान्तर्गतं मदुक्तं जगत्प्रकटतामेष्यति ॥ १ ॥
144683
144684 श्रीवसिष्ठ उवाच ।
144685
144686 युक्तियुक्ते तयेत्युक्ते विद्याधर्या धरोरसि ।
144687 बद्धपद्मासनोऽथाहं समाधाबुदितोऽभवम् ॥ २ ॥
144688
144689 तया विद्याधर्या युक्तियुक्ते इति एवंरूपे वचस्युक्ते सति । धरस्य शैलस्योरपि
144690 अधित्यकायाम् । उदित उद्युक्तोऽभवम् ॥ २ ॥
144691
144692 सर्वार्थभावनात्यागे चिन्मात्रैकान्तभावितः ।
144693 अत्यजं तमहं पूर्वकथार्थकलनामलम् ॥ ३ ॥
144694
144695 तत्र समाधौ सर्वबाह्यार्थकलनात्यागे सति पूर्वकथार्थ
144696 आधिभौतिकदेहादिभावना तत्संस्कारमलमप्यत्यजं त्यक्तवानित्यर्थः ॥ ३ ॥
144697
144698 अथ चिद्व्योमतां प्राप्तः परां दृष्टिमहं गतः ।
144699 शरत्समयसंप्राप्तौ व्योम निर्मलतामिव ॥ ४ ॥
144700
144701 इदमेव स्पष्टमाह - अथेत्यादिना ॥ ४ ॥
144702
144703 ततः सत्यावधानैकघनाभ्यासेन देहके ।
144704 ममाधिभौतिकभ्रान्तिर्नूनमस्तमुपागता ॥ ५ ॥
144705
144706 उदयास्तमयोन्मुक्ता सततोदयमय्यपि ।
144707 महाचिद्व्योमतास्वच्छा प्रोदितेव तदाभवत् ॥ ६ ॥
144708
144709 सततोदयमयी नित्यानावृतस्वप्रकाशा ॥ ६ ॥
144710
144711 अथ पश्याम्यहं यावत्स्वस्यैवामलतेजसा ।
144712 वस्तुतस्तु न चाकाशं नोपलः परमेव तत् ॥ ७ ॥
144713
144714 स्वस्य साक्षिण एव वृत्तीद्धेन अमलतेजसा । वृत्तेर्जडायाः स्वतो
144715 दृक्शक्त्यभावादिति भावः ॥ ७ ॥
144716

144717 परमार्थघनं स्वच्छं तत्तथा भाति तादृशम् |
144718 तथाभावनया ह्यात्मा मदीयो दृष्टवांस्तथा || ८ ||
144719
144720 तत्परमार्थघनं परं तत्त्वमेव मदीय आत्मा तथा उपलभावनया उपलं
144721 दृष्टवानित्यर्थः || ८ ||
144722
144723 यथा स्वप्ने सुमहती दृष्टा गेहगता शिला |
144724 व्योमैव केवलं तद्वत्सुशुद्धं चिन्नभःशिला || ९ ||
144725
144726 स्वयं स्वप्नान्वितोऽन्यस्य स्वप्नपुंस्त्वं गतो नरः |
144727 स्वप्नेऽज्ञानप्रबुद्धस्य यादृक्तादृक्स्वरूपतः || १० ||
144728
144729 यद्ययं व्यवहारः स्वप्न एव तर्हि कथं स्वपरजाग्रत्ताप्रतिभासस्तत्राह -
144730 स्वयमिति | स्वप्ने अज्ञानवशादेव प्रबुद्धोऽहमिति मन्यमानस्यान्यस्य
144731 स्वप्नदृश्यपुरुषत्वं गतः स्वप्नान्वितः स्वयं स्वरूपतो यादृक्
144732 प्रतिबुद्धोऽस्मीति प्रतिभाति तादृगित्यर्थः || १० ||
144733
144734 स्वप्नस्थानां शिरश्छिन्नं येषां ते संसृतौ स्थिताः |
144735 कालेन ज्ञानलाभेन विना कुर्वन्तु किं किल || ११ ||
144736
144737 अत एव सौप्तिके सुप्तहतानां जागरणोपायदेहाभावादगत्या स्वप्न एव तेषां
144738 जागरता परिशिष्यत इति प्रागुक्तं मयेति स्मारयति - स्वप्नस्थानामिति || ११ ||
144739
144740 बोधः कालेन भवति महामोहवतामपि |
144741 यस्मान्न किंचनाप्यस्ति ब्रह्मतत्त्वादृतेऽक्षयम् || १२ ||
144742
144743 तस्मान्मूलाज्ञाननिद्रोच्छेदेन स्वरूपप्रतिबोध एवास्य मुख्यः प्रतिबोधोऽन्यदा तु
144744 स्वप्न एव वृथा जागराभिमान इत्याह - बोध इति || १२ ||
144745
144746 अतस्तच्चिद्घनं स्वच्छं ब्रह्माकाशं शिलाकृति |
144747 दृष्टं मया तथा तत्र न तु पृथ्व्यादि सत्क्वचित् || १३ ||
144748
144749 अत एव मयापि स्वरूपजागरात्तत्प्रागदृष्टशिलाकृति स्वच्छं चिद्घनं दृष्टं
144750 न पृथ्व्यादिविकारं सदित्यर्थः || १३ ||
144751
144752 भूतानामादिसर्गे यच्छुद्धं यत्पारमार्थिकम् |
144753 वपुस्तदेव ह्येतेषां ध्यानलभ्यमवस्थितम् || १४ ||
144754
144755 सर्गस्यादिरादिसर्गो महाप्रलयस्तदेत्यर्थः | एतेषां तत्त्वविदां
144756 ध्यानलभ्यमैकाग्र्यप्राप्यम् || १४ ||
144757
144758 भूतानामादिसर्गे यच्छुद्धं यत्पुरातनम् |
144759 तदेवाद्य मनोराज्यं संकल्प इति कथ्यते || १५ ||
144760
144761 ब्राह्मं रूपमेव सर्वभूतानां वपुः पारमार्थिकरूपं इति एवं जगदाकारेण
144762 कथ्यते | मूढैरिति शेषः || १५ ||
144763
144764 सत्तातिवाहिको देहस्तत्परं परमार्थतः |
144765 प्रत्यक्षं परमं यत्तत्तदाद्यं कचनं चितः || १६ ||
144766
144767 अस्त्वेवं तथाप्यातिवाहिको देहः कः यद्भावे सर्वजगद्दर्शनं चित्स्वभावकचनं
144768 च प्रागुक्तं तमाह - सत्तेति | मायाशबलं ब्रह्म सदित्युच्यते | तत्र चितो

144769 जगत्संस्कारसंवलितांशसत्ता स एवातिवाहिको देहः | नित्यापरोक्षशुद्धचिदंशस्तु
144770 स्वरूपकचनमित्यर्थः || १६ ||
144771
144772 उद्यत्प्रथममध्यक्षं जीवस्य प्रथमं वपुः |
144773 मनः प्रत्यक्षमित्युक्तं तत्तेनाद्यैव दुर्धिया || १७ ||
144774
144775 तर्हि कथं मनो जीवस्यातिवाहिको देह इति प्रागुक्तं तत्राह - उद्यदिति | तत्सत्तारूपं
144776 सर्गोदयेन तदाकारमिवोद्यत् सर्गगोचरमध्यक्षं जीवस्य चिदाभासात्मनः
144777 प्रथमं हिरण्यगर्भाख्यं समष्टिरूपमातिवाहिकवपुर्भवति | तत्पुनः
144778 समष्टिभावस्यापि दुर्धिया विस्मरणे अद्यैव व्यष्टितां गतं तत्सर्वजनप्रत्यक्षं
144779 मन इति प्रागुक्तमित्यर्थः || १७ ||
144780
144781 योगिप्रत्यक्षमित्युक्तं मनःप्रत्यक्षमित्यपि |
144782 तत्स्वमेव चितो रूपं गतमेवान्यतां मुधा || १८ ||
144783
144784 तदित्थं स्वयमेव चितो रूपं समष्टिरूपेण योगिप्रत्यक्षं सर्वजनसाधारण्येन तु
144785 मनःप्रत्यक्षमित्यप्युक्तम् || १८ ||
144786
144787 इदमद्यतनं नाम प्रत्यक्षमसदुत्थितम् |
144788 असत्प्रत्यक्षमेवेति विद्धि प्रत्यक्षमङ्ग तत् || १९ ||
144789
144790 तत्र इदमद्यतनं मनःप्रत्यक्षमाधिभौतिकदेहादिकल्पनया
144791 अत्यन्तासद्रूपेणैवोत्थितमित्यसत्प्रत्यक्षमेव विद्धि | तद्योगिप्रत्यक्षमेव हे अङ्ग
144792 सद्याथात्म्यस्फूर्तेर्मुख्यं प्रत्यक्षम् || १९ ||
144793
144794 अहो नु चित्रा मायेयं प्राक्प्रत्यक्षे परोक्षता |
144795 निर्णीतास्मिंस्त्वनध्यक्षे प्रत्यक्षकलनागता || २० ||
144796
144797 कथं तर्हि सर्वजनानां तस्मिन्प्रत्यक्षे परोक्षतानुभवः इतरत्र च
144798 प्रत्यक्षतानुभवस्तत्राह - अहो इति || २० ||
144799
144800 आतिवाहिकदेहत्वं प्रत्यक्षं प्रथमोदितम् |
144801 सत्यं सर्वगतं विद्धि मायैव त्वाधिभौतिकम् || २१ ||
144802
144803 प्रथमोदितमिति सूक्ष्मपूर्वकत्वात्स्थौल्याध्यासस्येत्यर्थः | यदग्ने रोहितं रूपं
144804 तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णंन् तदन्नस्यापागादग्नेरग्नित्वं त्रीणि
144805 रूपाणीत्येव सत्यम् इति श्रुतेः | सत्यं समष्टिभावात्सर्वगतं मायैवानृतमेव ||
144806 २१ ||
144807
144808 अनुभूतापि नास्त्येव हेम्नः कटकता यथा |
144809 तथातिवाहिकस्याधिभौतिकत्वं न विद्यते || २२ ||
144810
144811 भ्रममभ्रमतां यातमभ्रमं भ्रमतां गतम् |
144812 वेत्ति जीवो विचारेण विनाहो नु विमूढता || २३ ||
144813
144814 आधिभौतिकदेहोऽयं विचारेण न लभ्यते |
144815 आतिवाहिकदेहस्तु किल लोकद्वयेऽक्षयः || २४ ||
144816
144817 स्थूलस्य सूक्ष्मात्पृथक्त्वे अपृथक्त्वे वा किंदृशं स्वरूपं
144818 स्यादित्यादिप्राक्प्रपञ्चितविचारेण | इहामुत्र च
144819 सर्वव्यवहारनिर्वाहकत्वादामोक्षमक्षयः || २४ ||
144820

144821 आधिभौतिकचिद्रूढा ह्यातिवाहिकदेहके ।
144822 मरौ मरीचिकास्वेव यथा मिथ्यैव वारिधीः ॥ २५ ॥
144823
144824 आधिभौतिकचिदाधिभौतिकताप्रथा रूढा प्रादुर्भूता ॥ २५ ॥
144825
144826 जाताधिभौतिकी संविदातिवाहिकचित्क्रमे ।
144827 देहदृष्टिवशात्प्रौढा स्थाणौ पुरुषधीरिव ॥ २६ ॥
144828
144829 शुक्तौ रजतता तापे जलतेन्दौ यथा द्विता ।
144830 आधिभौतिकता तद्वन्माययैवातिवाहिके ॥ २७ ॥
144831
144832 यदसत्तत्कृतं सत्यं यत्सत्यं तदसत्कृतम् ।
144833 अहो नु मोहमाहात्म्यं जीवस्यास्याविचारजम् ॥ २८ ॥
144834
144835 योगिप्रत्यक्षमेवास्ति किंचिदस्ति तु मानसम् ।
144836 यस्माल्लोकद्वयाचारस्ताभ्यामेव प्रसिध्यति ॥ २९ ॥
144837
144838 स्फूर्तिस्पन्दने द्वे व्यवहारसर्वस्वम् । ते च
144839 लोकद्वयसाधारणत्वादातिवाहिकदेहस्यैव निष्कर्षे पर्यवस्यत इत्याह - योगीति ।
144840 मानसं स्पन्दनमिति शेषः । तच्च प्रत्यक्षाधीनसिद्धिकत्वात्कि।चिदस्ति न
144841 प्रत्यक्षसमसत्ता तस्यास्तीत्यनृतमेव तदपीति भावः ॥ २९ ॥
144842
144843 आद्यंन् प्रत्यक्षमुत्सृज्य यः सत्येऽस्मिन्कृतस्थितिः ।
144844 प्रत्यक्षे मृगतृष्णाम्बु पीत्वा स सुखमास्थितः ॥ ३० ॥
144845
144846 तथा च सर्वसाधारणप्रत्यक्षमात्रे सर्वमन्यद्विहाय योगेन स्थिरता कार्या न
144847 पामरजनमात्रप्रसिद्धे ऐहिकमात्रे स्थूलादिप्रत्यक्षे इत्याशयेनाह - आद्यमिति ॥
144848 ३० ॥
144849
144850 यत्सुखं दुःखमेवाहुः क्षणनाशानुभूतिभिः ।
144851 अकृत्रिममनाद्यन्तंन् यत्सुखं तत्सुखं विदुः ॥ ३१ ॥
144852
144853 एवं सुखेऽपि सर्वलोकसाधारणे योगिनामेवानुभवसिद्धे परमपुरुषार्थता न
144854 पामरजनप्रसिद्धे इत्याशयेनाह - यदिति । क्षणमात्रेण
144855 नाशानुभूतिभिर्दुःखपर्यवसितं प्राक्च दुःखसहस्रनिष्पादितं यद्विषयसुखं
144856 तद्दुःखमेवाहुर्विवेकिन इत्यर्थः ॥ ३१ ॥
144857
144858 प्रत्यक्षेणैवमध्यक्षं प्रत्यक्षं प्रविचार्यताम् ।
144859 यदाद्यंन् तत्सदध्यक्षं तत्प्रत्यक्षेण दृश्यताम् ॥ ३२ ॥
144860
144861 उक्तमेव दृढीचिकीर्षुः पुनराह - प्रत्यक्षेणेत्यादिना ॥ ३२ ॥
144862
144863 लोकत्रयानुभवदं त्यक्त्वा प्रत्यक्षमैहिकम् ।
144864 मायात्मकं यो गृह्णाति नास्ति मूढतमस्ततः ॥ ३३ ॥
144865
144866 आतिवाहिकमेवैषां भूतानां विद्यते वपुः ।
144867 अत्राधिभौतिकव्याप्तिरसत्यैव पिशाचिका ॥ ३४ ॥
144868
144869 अजातसंकल्पमयं प्रत्यक्षं सत्कथं भवेत् ।
144870 स्वयमेव न यत्सत्यं तत्स्यात्कार्यकरं कथम् ॥ ३५ ॥
144871
144872 मिथ्यासंकल्पमयस्य जन्मैव यत्र दुर्लभं तस्य सत्ता अत्यन्तदुर्लभा

144873 असतश्चार्थक्रियासमर्थता ततोऽपि दूरनिरस्तेत्याह - अजातेति ॥ ३५ ॥
144874
144875 यत्र प्रत्यक्षमेवासदन्यत्किं तत्र सद्भवेत् ।
144876 क्व तत्सत्यं [क्व तत्सिद्धं भवेत् इति पाठः ।] भवेद्वस्तु यदसिद्धेन
144877 साध्यते ॥ ३६ ॥
144878
144879 ननु चक्षुरादिप्रमाणप्रसाधितः प्रपञ्चः कथमपलप्यते तत्राह - यत्रेति ।
144880 योगिप्रत्यक्षबाधितत्वाच्चक्षुरादेरपीति भावः ॥ ३६ ॥
144881
144882 प्रत्यक्ष एव भावत्वे नष्टे क्वेवानुमादयः ।
144883 उह्यन्ते वारणा यत्र तत्रोर्णायुषु का कथा ॥ ३७ ॥
144884
144885 यदा साक्षादर्थसाधकेषु चक्षुरादिष्वियं गतिस्तदा तन्मूला अनुमानादयोऽपि
144886 दूरनिरस्ता इत्याह - प्रत्यक्ष एवेति । ऊर्णायोर्मेषस्य । मत्वर्थीयो युत् ॥ ३७ ॥
144887
144888 अतः प्रमाणसंसिद्धं दृश्यं नास्त्येव कुत्रचित् ।
144889 अनन्यदिदमस्तीव तत्तद्ब्रह्मघनं घनम् ॥ ३८ ॥
144890
144891 एवं दृश्यमार्जने फलितमाह - अनन्यदिति । यदिदं सदनन्यदस्तीवेति भासते
144892 तद्घनं सैन्धवघनतुल्यं ब्रह्मघनमेवेति फलितमित्यर्थः ॥ ३८ ॥
144893
144894 स्वप्ने द्रष्टुः खमेवाद्रिर्गृहे नान्यस्य वै यथा ।
144895 तथा तद्भावनवतोरात्रयोः सा शिलैव चित् ॥ ३९ ॥
144896
144897 स्वप्ने अद्रिद्रष्टुः प्रसिद्धोऽद्रिस्तदानीमपि खं शून्य एव । यतस्तस्मिन्नेव काले
144898 जाग्रतः स्वपतो वा अन्यस्य सोऽद्रिर्नास्ति । यथाऽयं दृष्टान्तस्तथा
144899 शिलाभावनवतोरावयोर्दृश्यापि सा शिला चिदेवेत्यर्थः ॥ ३९ ॥
144900
144901 अयं शैल इदं व्योम जगदेतदिदं त्वहम् ।
144902 इति चिन्मय आत्मान्तः खं चमत्कुरुते स्वयम् ॥ ४० ॥
144903
144904 चमत्कुरुते । भासत इति यावत् ॥ ४० ॥
144905
144906 पश्यत्येतत्प्रबुद्धात्मा नाप्रबुद्धः कदाचन ।
144907 श्रोतुः कथार्थसंवित्तिर्नाश्रोतुर्भवति क्वचित् ॥ ४१ ॥
144908
144909 चिदेवेत्थं प्रथते नान्यदिति प्रबुद्धात्मैव पश्यति नाप्रबुद्धः । यथा
144910 भारतादिकथार्थसंवित्तिस्तच्छ्रोतुरेव नान्यस्य तद्वदित्यर्थः ॥ ४१ ॥
144911
144912 अप्रबुद्धमिति भ्रान्तिरेवेयंन् सत्यतां गता ।
144913 क्षीवस्य सुस्थिरा एव नृत्यन्ति तरुपर्वताः ॥ ४२ ॥
144914
144915 सर्वत्रा प्रतिहतमेकरूपबोधं प्रत्यक्षं शिवमनुबुध्य चित्स्वरूपम् ।
144916 प्रत्यक्षान्तरमिह पेलवं श्रयन्ते ये मूढास्तृणतनुभिः शठैरलं तैः
144917 ॥ ४३ ॥
144918
144919 ये तु योगिप्रत्यक्षं पूर्णानन्दैकरसं स्वरूपमनुबुध्यापि तद्बाधितं
144920 चक्षुरादिप्रत्यक्षान्तरं पेलवं तुच्छमपि प्रमाणत्वेन सहन्ते
144921 तृणतनुभिस्तृणप्रायैः शठैरात्मवञ्चकैस्तैः अलं न किंचित्प्रयोजनमस्ति ।
144922 स्वानुभवेऽपि विश्वासशून्याः परवाक्यं कथं विश्वसीरन्नित्यनुपदेश्या एव ते
144923 इत्यर्थः ॥ ४३ ॥
144924

144925 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० नि० उ० पा० प्रमाणाप्रतिसिद्ध्या
144926 दृश्यानुपपत्तिवर्णनं नामाष्टषष्टितमः सर्गः ॥ ६८ ॥
144927
144928 इति श्रीवसिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
144929 प्रमाणाप्रतिसिद्ध्या दृश्यानुपपत्तिवर्णनं नामाष्टषष्टितमः सर्गः ॥ ६८ ॥
144930
144931 एकोनसप्ततितमः सर्गः ६९
144932
144933 श्रीवसिष्ठ उवाच ।
144934
144935 जगदङ्गमनाभासमदृश्यं दृश्यवत्स्थितम् ।
144936 परया दृश्यते दृष्ट्या तद्ब्रह्मैव निरामयम् ॥ १ ॥
144937
144938 शिलासर्गप्रवेशोऽत्र तत्रत्यविधिदर्शनम् ।
144939 स्वासितस्य मुनेस्तेन संभाषा चात्र चर्ण्यते ॥
144940
144941 शिलोदरे जगत्सद्भावसंभावनाय तत्सत्तास्फूर्तिप्रदं तदधिष्ठानं ब्रह्म
144942 दर्शयति - जगदङ्गमिति । जगन्ति अङ्गानीव यस्य । अनाभासं
144943 सूर्यादिज्योतिषामविषयः । अदृश्यं चक्षुराद्यविषयः ॥ १ ॥
144944
144945 तत्र शैलसरित्स्रोतोलोकालोकान्तरभ्रमाः ।
144946 भान्ति ते परमादर्शे महाव्योमनि बिम्बिताः ॥ २ ॥
144947
144948 सा प्रविष्टा ततः सर्गं तमनर्गलचेष्टिता ।
144949 अहमप्यविशं तत्र संकल्पात्मा तया सह ॥ ३ ॥
144950
144951 सा विद्याधरी । तत्र शिलोदरे । तं प्रागुक्तं सर्गं प्रविष्टा ॥ ३ ॥
144952
144953 यावत्सा तत्र वैरिञ्चं लोकमासाद्य सोद्यमा ।
144954 उपविष्टा विरिञ्चस्य पुरः परमशोभना ॥ ४ ॥
144955
144956 सोद्यमा तदानयनोद्यमवती [तस्यां शिलायामानयनं तद्वती ।] सा
144957 तत्रत्यं वैरिञ्चं लोकमासाद्य विरिञ्चस्य पुरः उपविष्टा सती अयं मे
144958 पतिरित्यादिवाक्यं यावद्वक्ति तावदरिमञ्जगति महाप्रलय आसन्न इति पञ्चमेऽन्वयः
144959 ॥ ४ ॥
144960
144961 वक्त्ययं मुनिशार्दूल पतिर्मे पाति मामिमाम् ।
144962 विवाहार्थमनेनाहं जनिता मनसा पुरा ॥ ५ ॥
144963
144964 पुराणः पुरुषोऽप्येष मामप्यद्य जरागताम् ।
144965 न विवाहितवांस्तेन विरागमहमागता ॥ ६ ॥
144966
144967 विरागमेषोऽप्यायातो गन्तुमिच्छति तत्पदम् ।
144968 यत्र न द्रष्टृता नैव दृश्यता न तु शून्यता ॥ ७ ॥
144969
144970 महाप्रलय आसन्नो जगत्यस्मिंश्च संप्रति ।
144971 ध्यानान्न च चलत्येषु शैलमौनादिवाचलः ॥ ८ ॥
144972
144973 पुनः सैवाह - संप्रतीत्यादिना ॥ ८ ॥
144974
144975 तस्मान्मामेनमपि च बोधयित्वा मुनीश्वर ।
144976 आमहाकल्पसर्गादौ परमे पथि योजय ॥ ९ ॥

तत्त्वोपदेशेन बोधयित्वा आमहाकल्पं वैज्ञानिकप्रलयपर्यन्तं ये ये प्रसिद्धाः
सर्गास्तेषामादौ मूलभूते ब्रह्माख्ये पथि योजय ॥ ९ ॥

इत्युक्त्वा मामसौ तस्य बोधायेदमुवाच ह ।
नाथायं मुनिनाथोऽद्य सद्म संप्राप्तवानिदम् ॥ १० ॥

तस्य चतुर्मुखस्य बोधाय समाधिव्युत्थानाय उचितार्थावगमाय च ॥ १० ॥

एषोऽन्यस्मिञ्जगद्देहे ब्रह्मणस्तनयो मुनिः ।
पूजयैनं गृहायातं गृहस्थगृहपूजया ॥ ११ ॥

गृहस्थानां गृहेषूचितया पूज्या पूजय प्रीणय ॥ ११ ॥

बुध्यतामर्घ्यपाद्येन पूज्यतां मुनिपुङ्गवः ।
महन्महत्सपर्याभिर्महात्मभ्यो हि रोचते ॥ १२ ॥

त्वया अयं मुनिपुंगवः पूज्यत्वेन बुध्यताम् । अत एवार्घ्यपाद्येन पूज्यताम् । यतो
महात्मभ्यस्त्वादृशेभ्यो महत्सपर्याभिः प्राप्यं यन्महत्फलं तदेव रोचते
न क्षुद्रम् । रुच्यर्थानां प्रीयमाणः इति चतुर्थी ॥ १२ ॥

तयेत्युक्ते महाबुद्धिर्बुबुधे स समाधितः ।
स्वसंवित्तिद्रवात्मत्वादावर्त इव वारिधौ ॥ १३ ॥

शनैरुन्मीलयामास नयने नयकोविदः ।
मधुः शिशिरसंशान्तावनौ कुसुमे यथा ॥ १४ ॥

कुसुमे द्वे नयनयोरुपमे । मधुर्यथा उन्मीलयति तद्वत् ॥ १४ ॥

शनैः प्रकटयामासुस्तान्यङ्गान्यस्य संविदम् ।
मधुपल्लवजालानि जवानीव नवं रसम् ॥ १५ ॥

मधोः संबन्धीनि पल्लवजालानि नवं स्वरसमिवेत्यर्थः ॥ १५ ॥

सुरसिद्धाप्सरःसङ्घाः समाजग्मुः समंततः ।
यथा हंसालयो लोलाः प्रातर्विकसितं सरः ॥ १६ ॥

ददर्शासौ पुरःप्राप्तं मां च तां च विलासिनीम् ।
उवाचाथ वचो वेधाः प्रणवस्वरसुन्दरम् ॥ १७ ॥

प्रणवपूर्वकैः स्वरैः सुन्दरं यथा स्यात्तथा ॥ १७ ॥

अन्यजगद्ब्रह्मोवाच ।

करामलकवद्दृष्टसंसारासारसार हे ।
ज्ञानामृतमहाम्भोद मुने स्वागतमस्तु ते ॥ १८ ॥

करामलकवत् दृष्टः संसारलक्षणस्य असारस्य सारः आत्मा येन ॥ १८ ॥

पदवीमसि संप्राप्त इमामतिदवीयसीम् ।
दूराध्वसुपरिश्रान्त इदमासनमास्यताम् ॥ १९ ॥

145029 इत्युक्ते तेन भगवन्नभिवादय इत्यहम् |
145030 वदन्मणिमये पीठे निविष्टो दृष्टिदर्शिते || २० ||
145031
145032 दृष्ट्या कटाक्षेण दर्शिते मणिमये पीठे अहं निविष्ट उपविष्टः || २० ||
145033
145034 अथामरर्षिगन्धर्वमुनिविद्याधरोदिताः |
145035 प्रस्तुताः स्तुतयः पूजा नतयः स्थितिनीतयः || २१ ||
145036
145037 स्थितिनीतयो युक्तव्यवहारनीतयः || २१ ||
145038
145039 ततो मुहूर्तमात्रेण सर्वभूतगणोदिते |
145040 शान्ते प्रणतिसंरम्भे तस्योक्तं ब्रह्मणो मया || २२ ||
145041
145042 सर्वैर्भूतगणैर्गन्धर्वादिभिरुदिते वागादिभिः कृते प्रणतिसंरम्भे शान्ते सति ||
145043 २२ ||
145044
145045 किमिदं [अत्र मुनिरुवाच इत्यपेक्षितम् |] भूतभव्येश यदियं
145046 मामुपागता |
145047 वक्ति ज्ञानगिरास्मांस्त्वं बोधयेति प्रयत्नतः || २३ ||
145048
145049 इयं विद्याधरी मामुपागता सती अस्मांस्त्वं ज्ञानगिरा बोधयेति यद्वक्ति इदं
145050 किमुचितमनुचितं वेत्यर्थः || २३ ||
145051
145052 भवान्भूतेश्वरो देव सकलज्ञानपारगः |
145053 इयं तु काममूर्खा किं ब्रूते ब्रूहि जगत्पते || २४ ||
145054
145055 कुतस्तेऽयंन् संशयस्तत्राह - भवानिति | तथा च तव
145056 कृतकृत्यत्वान्मदुपदेशापेक्षैव नास्ति अस्यास्तु साधनसंपत्त्यभावादधिकारो
145057 नास्तीत्युपदेशप्रार्थनानुपपत्तेः संशय इति भावः || २४ ||
145058
145059 कथमेषा त्वया देव जायार्थं जनिता सती |
145060 नेह जायापदं नीता नीता विरसतां कथम् || २५ ||
145061
145062 संशयान्तरं दर्शयति - कथमिति | विरसतं निर्वेदम् || २५ ||
145063
145064 अन्यजगद्ब्रह्मोवाच |
145065
145066 मुने शृणु यथावृत्तमिदं ते कथयाम्यहम् |
145067 यथावृत्तमशेषेण कथनीयं यतः सताम् || २६ ||
145068
145069 सत्यं ममास्याश्च नोपदेशार्हतां तथापीयं स्ववासनयैव ममाप्यज्ञतां
145070 स्वस्या अधिकारं च मन्यमाना त्वां प्रार्थितवती तथा अस्या जन्ममात्रं मया
145071 संपादितं जायार्थमहं जनिता अहं चास्य भार्यास्मीत्यादिकल्पना सर्वाप्यस्याः
145072 स्ववासनयैव संपन्ना | अत एवास्या मद्वासनामात्रत्वान्मिथ्याभूतायाःसांप्रतं
145073 मम विदेहकैवल्यप्राप्त्यैव सह स्वकल्पितप्रपञ्चेन प्रलयस्त्वत्समक्षमेव
145074 भविष्यतीत्युत्तरं विस्तराद्वक्तुकामः प्रतिजानीते - मुने इति || २६ ||
145075
145076 अस्ति तावदजं शान्तमजरं किंचिदेव सत् |
145077 ततश्चित्कचनैकान्तरूपिणः कचितोऽस्म्यहम् || २७ ||
145078
145079 तत्रादौ वक्ष्यमाणोपोद्घातेन ज्ञानमप्रतिघं यस्य वैराग्यं च जगत्पतेः |
145080 ऐश्वर्यं चैव धर्मश्च सह सिद्धं चतुष्ट्यम् इति पुराणप्रसिधमौत्पत्तिकं

145081 तत्त्वज्ञानं स्वस्यास्तीति प्रकाशयितुं स्वकारणं ततः स्वोत्पत्तिस्वरूपं चाह -
145082 अस्तीति। कचितोऽस्मि प्रकटीभूतोऽस्मि ॥ २७ ॥
145083
145084 आकाशरूप एवाहंन् स्थित आत्मनि सर्वदा।
145085 भविष्यति स्थिते सर्गे स्वयंभूरिति नाम मे ॥ २८ ॥
145086
145087 तादृशतत्त्वज्ञानबाधिता स्वोत्पत्तिस्तत्प्रयुक्तस्वनाम च कथं प्रसिद्धंन् तत्राह
145088 - आकाशेति। व्यवहर्तृप्रजासर्गे उत्पद्य स्थिते सति तद्दृष्ट्या व्यावहारिकं
145089 स्वयंभूरिति नाम भविष्यति ॥ २८ ॥
145090
145091 वस्तुतस्तु न जातोऽस्मि न च पश्यामि किंचन।
145092 चिदाकाशश्चिदाकाशे तिष्ठाम्यहमनावृतः ॥ २९ ॥
145093
145094 वस्तुतस्तत्त्वदृशा तु ॥ २९ ॥
145095
145096 यदयं त्वं ममाहं ते यदिदं कथनं मिथः।
145097 तत्तरङ्गस्तरङ्गाग्रे रणतीवेति मे मतिः ॥ ३० ॥
145098
145099 तर्हि तत्त्वविदोरावयोः प्रश्नोत्तरादिव्यवहारः कीदृशस्तत्राह - यदिति। यथा एक
145100 एव समुद्रोऽखण्डस्तरङ्गभेदैः खण्डनपरस्पराघातैर्ध्वनिवैचित्र्यं
145101 दर्शयति तद्वदिति भावः ॥ ३० ॥
145102
145103 एवंरूपस्य मे कालवशतोऽविशदाकृतेः।
145104 सा कुमार्याश्चिदाभासमात्रस्यान्तः स्वभावतः ॥ ३१ ॥
145105
145106 एवं समुद्रात्तरङ्गवदीषत्कल्पितस्वपरदृष्टिवेद्यभेदरूपस्य कालवशत
145107 ईषत्स्वरूपविस्मरणादविशदाकृतेर्मेनान्तरीयकचिदाभासमात्रस्यान्तर्या
145108 ममाहमिति वासना उदिता सा कुमार्या अन्यस्य तव अन्येव विभाति मम तु अनन्या
145109 विभाति। सा उदिता अनुदिता चावयोर्दृशेति द्वयोरन्वयः ॥ ३१ ॥
145110
145111 ममानन्या तवान्यस्य चान्येवेह विभाति या।
145112 सोदितानुदितेवान्तर्ममाहमिति वासना ॥ ३२ ॥
145113
145114 अनाशसत्तानुदितस्त्वहमात्मात्मनि स्थितः।
145115 स्वभावादच्युताकारः स्वात्मारामः स्वयं प्रभुः ॥ ३३ ॥
145116
145117 त्वं तर्हि स्वदृशा कीदृक् तत्राह - अनाशेति। अहं तु अनाशसत्ता यतोऽनुदितः ॥
145118 ३३ ॥
145119
145120 तस्या अहमिति भ्रान्तेर्वासनाया जगत्स्थितेः।
145121 संपन्नेयमधिष्ठातृदेवता देहरूपिणी ॥ ३४ ॥
145122
145123 ईदृशात्त्वत्त इयं कथमुत्पन्ना का च वा तत्राह - तस्येति। आ अहमिति भ्रान्तेः।
145124 स्मरणे आकारः अङित् प्रगृह्यः।
145125 पूर्वपूर्वाहंकारसंस्कारप्रभवत्वात्स्मृतिकल्पाया अहमिति
145126 भ्रान्तेर्जगत्स्थितेर्वासनायाश्चाधिष्ठात्री देवता इयंन् मत्संकल्पाद्देहरूपिणी
145127 संपन्नेत्यर्थः ॥ ३४ ॥
145128
145129 वासनाया अधिष्ठातृदेवतैवमियं स्थिता।
145130 न तु मे गृहिणी नापि गृहिण्यर्थेन सत्कृता ॥ ३५ ॥
145131
145132 स्ववासनावेशवशेन भावं गृहिण्यहं ब्रह्मण इत्युपेत्य।

एषा स्वयं व्यर्थमितातिदुःखं यस्मात्किलैषैव हि वासनान्तः ॥ ३६ ॥

तर्हीयंन् त्वां कथं पतिरिति ब्रूते तत्राह - स्वेति । यस्मादेषैव अन्तः
सर्वजगद्वासना अतो गृहिण्यहमिति स्वमनीषयैवोपेत्य व्यर्थमतिदुःखमिता प्राप्ता
॥ ३६ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपा० निर्वाणप्रकरणे उ०
पाषाण० सर्गप्राप्तिर्नामैकोनसप्ततिमः सर्गः ॥ ६९ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
सर्गप्राप्तिर्नामैकोनसप्ततितमः सर्गः ॥ ६९ ॥

सप्ततितमः सर्गः ७०

अन्यजगद्ब्रह्मोवाच ।

अथाहं चिन्मयाकाशस्त्वन्याकाशमयीं स्थितिम् ।
परां ग्रहीतुमिच्छामि तेनेहोपस्थितः क्षयः ॥ १ ॥

वर्ण्यते वासनादेव्या इह निर्वेदकारणम् ।
प्रलयो जगतश्चाथ मिथ्याविभ्रममात्रता ॥

कथमेषा त्वया ब्रह्मन् जायार्थं जनिता सति । नेह जायापदं नीता इति
प्रश्नोत्तरमुक्तम् इदानीं नीता विरसतां कथम् इति प्रश्नस्योत्तरं वक्तुमारभते ##-
चिद्विवर्तरूपो यश्चित्ताकाशस्तद्रूपोऽहं परां
निरतिशयानन्दरूपामन्याकाशमयीं ब्रह्माकाशात्मिकां कैवल्यस्थितिम् । तेन
हेतुना इह मद्वासनाकल्पिते जगति क्षयो नित्यो नैमित्तिको दैनंदिन आत्यन्तिकश्चेति
पुराणप्रसिद्धश्चतुर्विधोऽपि प्रलय उपस्थितः ॥ १ ॥

महाप्रलयकालेऽस्मिंस्त्यक्तुमेषा मयाधुना ।
मुनीन्द्र नूनमारब्धा तेन वैरस्यमागता ॥ २ ॥

त्यक्तुं मूलोच्छेदात्स्वसत्तातः प्रच्यावयितुम् । तेन हेतुना वैरस्यं क्षयोन्मुखताम्
॥ २ ॥

आकाशत्वाद्यदाद्योऽयं पराकाशो भवाम्यहम् ।
तदा महाप्रलयता वासनायाश्च संक्षयः ॥ ३ ॥

तत्रोपपत्तिमाह - आकाशत्वादिति । ल्यब्लोपे पञ्चमी । अयमहं यदा चित्ताकाशतां
विहाय आद्यो ब्रह्माकाशो भवामि तदेत्यर्थः ॥ ३ ॥

तेनैषा विरसीभूता मन्मार्गं परिधावति ।
नानुगच्छति को नाम निर्मातारमुदारधीः ॥ ४ ॥

इहाद्यायं कलेरन्तश्चतुर्युगविपर्ययः ।
प्रजामन्विन्द्रदेवानामद्यैवान्तोऽयमागतः ॥ ५ ॥

कलेश्चरमकल्पचरममन्वन्तरचरमकलियुगस्यान्तः परिसमाप्तिकालः । प्रजाश्च
मनुश्चेन्द्रश्च देवाश्च तेषाम् ॥ ५ ॥

अद्यैव चायं कल्पान्तो महाकल्पान्त एव च ।
ममायं वासनान्तोऽद्य देहव्योमान्त एव च ॥ ६ ॥

145185
145186 चतुर्विधप्रलयानामद्य युगपत्प्राप्तिरित्याह - अद्यैवेति | वासनान्तः
145187 इत्यात्यन्तिकवैज्ञानिकप्रलयोक्तिः | देहव्योमान्त इति प्राकृतप्रलयोक्तिः || ६ ||
145188
145189 तेनेयं वासना ब्रह्मन्क्षयं गन्तुं समुद्यता |
145190 क्वेव पद्माकराशोषे गन्धलेखावतिष्ठताम् || ७ ||
145191
145192 तेन आत्मावलोकनेच्छादिकारणकलापेन || ७ ||
145193
145194 यथा जडाब्धिलेखाया जायते लहरी चला |
145195 वासनायास्तथैवेच्छा मुधोदेत्यपकारणम् || ८ ||
145196
145197 स्वनाशहेतौ स्वात्मावलोकनेऽस्याः कथमिच्छा जायते इति चेत्स्वभावादेवेति
145198 सोपपत्तिकमाह - यथेत्यादिना | अपकारणं कारणान्तरं विना
145199 स्वभावादेवेत्यर्थः || ८ ||
145200
145201 आभिमानिकदेहाया वासनायाः स्वभावतः |
145202 अस्या आत्मावलोकेच्छा स्वयमेवोपजायते || ९ ||
145203
145204 आत्मतत्त्वं नु पश्यन्त्या धारणाभ्यासयोगतः |
145205 दृष्टोऽनया भवत्सर्गो वर्गव्यग्रनिरर्गलः || १० ||
145206
145207 तर्ह्यस्या अस्मदीयब्रह्माण्डदर्शने को हेतुस्तमाह - आत्मेति | आत्मज्ञानार्थं
145208 प्रवृत्तस्य धारणाभ्यासस्य ब्रह्माण्डान्तरगमनादिसिद्धयो नान्तरीयकं
145209 फलमिति तत्परीक्षेच्छैव तद्धेतुरिति भावः | वर्गेषु धर्मार्थादिचतुर्वर्गेषु व्यग्रा
145210 निरर्गलाः प्रजा यस्मिन् || १० ||
145211
145212 अनयाम्बरसंचारपरयाद्रिशिरःशिला |
145213 दृष्टा स्वजगदाधारभूतास्माकं तु खात्मिका || ११ ||
145214
145215 प्रागुक्तशिलादर्शनमप्यस्यास्तद्बलादेवेत्याह - अनयेति || ११ ||
145216
145217 एतद्यस्मिञ्जगद्यत्र तद्दृषत्त्वं जगद्गिरौ |
145218 अस्मज्जगत्पदार्थेषु संत्यन्यानि जगन्त्यपि || १२ ||
145219
145220 वयं तानि न पश्यामो भेददृष्टौ स्थिता इमे |
145221 बोधैकतां गतास्त्वाशु पश्यामस्तानि वीक्षणात् || १३ ||
145222
145223 भेददृष्टौ व्युत्थानदशायां स्थिता वयं न पश्यामः | समाधिना
145224 बोधैकतां गतास्तु योगदृशा वीक्षणात्पश्याम एव || १३ ||
145225
145226 घटे पटे वटे कुड्ये खेऽनलेऽम्भसि तेजसि |
145227 जगन्ति सन्ति सर्वत्र शिलायामिव सर्वदा || १४ ||
145228
145229 जगन्नाम मुधा भ्रान्तिः किल स्वप्नपुरोपमा |
145230 मिथ्यैवेयं क्व नामासौ चिद्रूपास्त्यथ नास्ति च || १५ ||
145231
145232 इयं जगन्माया मिथ्यैव | असौ मिथ्याभ्रान्तिः क्व नामास्ति | यद्यस्ति च
145233 तर्ह्यधिष्ठानचिद्रूपा अन्यथैवास्ति न प्रतीयमानजडरूपेत्यर्थः || १५ ||
145234
145235 परिज्ञाता सती येषामेषा चिन्नभसैकताम् |
145236 गता ते न विमुह्यन्ति शिष्टास्तु भ्रमभाजनम् || १६ ||

145237
145238 अथान्यधारणाभ्यासात्स्वविरागवशोदितम् ।
145239 साधयन्त्याऽर्थमात्मीयं दृष्टस्त्वमनया मुने ॥ १७ ॥
145240
145241 किमिदं भूतभव्येश यदियं मामुपागता इति
145242 यत्स्वसमीपागमनसामर्थ्यकारणं पृष्टं तस्योत्तरमाह - अथेति । अथ
145243 प्रागुक्तनिर्वेदपाप्त्यनन्तरं स्वविरागवशादुदितमात्मीयं
145244 स्वाभिलषितमात्मज्ञानानुकूलं च गुरूपसदनश्रवणमननाद्यर्थन्
145245 त्वदुपदेशात्साधयन्त्या साधयितुमिच्छन्त्या अनया अन्यासां
145246 प्रागुक्तजगत्सर्गदर्शनहेतुधारणाव्यतिरिक्तानां
145247 खेचरसिद्धिब्रह्माण्डान्तरसंचारपरमनःकल्पितसूक्ष्मार्थानुप्रवेशसिद्ध##-
145248 चूडालोपाख्यानोपवर्णितधारणाविशेषाणामभ्यासात्त्वत्संकल्पकल्पितं
145249 त्वत्समाधिस्थानं परिज्ञाय तत्र गतया अनया अन्तर्हितोऽपि त्वं दृष्ट इत्यर्थः ॥ १७
145250 ॥
145251
145252 इति मायेव दुष्पारा चिच्छक्तिः परिजृम्भते ।
145253 इत्थमाद्यन्तरहिता ब्राह्मी शक्तिरनामया ॥ १८ ॥
145254
145255 इति वर्णितप्रकारेण जीवचिच्छक्तिरविद्या ऐन्द्रजालिकमायेव परिजृम्भते । ब्राह्मी च
145256 मायाशक्तिरित्थमेव परिजृम्भते । सा तु विद्या निरस्तावरणशक्तित्वादनामयेति
145257 विशेष इत्यर्थः । अथवा पूर्वार्धेन मायेव मायिकोपाधीननुसरन्ती
145258 जीवचिच्छक्तिर्विजृम्भत इत्यज्ञकथा उत्तरार्धे तु ब्राह्मीशक्तिराविर्भूता
145259 ब्रह्मचिदेव सर्वतो विजृम्भत इति तत्त्वज्ञकथेति योज्यम् ॥ १८ ॥
145260
145261 प्रवर्तन्ते निवर्तन्ते नेह कार्याणि कानिचित् ।
145262 द्रव्यकालक्रियाद्योता चितिस्तपति केवलम् ॥ १९ ॥
145263
145264 प्रवर्तन्ते उत्पद्यन्ते । निवर्तन्ते नश्यन्ति । किंतु केवलं चितिरेव द्रव्यमिव काल इव
145265 क्रियेव द्योतमाना तपति स्फुरति ॥ १९ ॥
145266
145267 देशकालक्रियाद्रव्यमनोबुद्ध्यादिकं त्विदम् ।
145268 चिच्छिलाङ्ककमेवैकं विद्ध्यनस्तमयोदयम् ॥ २० ॥
145269
145270 अङ्गानां प्रतिकृतिरङ्गकम् । इवे प्रतिकृतौ इति कन् ॥ २० ॥
145271
145272 चिदेवेयं शिलाकारमवतिष्ठति बिभ्रती ।
145273 अङ्गमस्या जगज्जालं मरुतः स्पन्दनं यथा ॥ २१ ॥
145274
145275 अवतिष्ठत्यवतिष्ठते । छान्दसः पदव्यत्ययः ॥ २१ ॥
145276
145277 विज्ञानघनमात्मानं जगदित्यवबुध्यते ।
145278 अनाद्यन्तापि साद्यन्ता चित्त्वादिति गतापि चित् ॥ २२ ॥
145279
145280 चित एवेदं विपरीतदर्शनं भ्रान्तचित्स्वभावादेवेत्याह - विज्ञानेति । साद्यन्ता
145281 देशकालकृतपरिच्छिन्ना इति एवंविधवस्तुकृतपरिच्छेदमपि गता ॥ २२ ॥
145282
145283 चिच्छिलेयमनाद्यन्ता साद्यन्तास्तीति बोधतः ।
145284 साकारापि निराकारा जगदङ्गेति संस्थिता ॥ २३ ॥
145285
145286 निराकारापि साकारा सती जगन्ति अङ्गानि यस्यास्तथाविधेति वैपरीत्येन संस्थिता ॥ २३ ॥
145287
145288 यद्वत्स्वप्ने चिदेव स्वं रूपं व्योमैव पत्तनम् ।

145289 वेत्ति तद्वदिदं वेत्ति पाषाणं जगदङ्गकम् ॥ २४ ॥
145290

145291 यद्वत् य्था स्वप्ने चिद्योमैव स्वरूपं पत्तनं वेत्ति तद्वज्जागरेऽपि जगच्चिद्योमैव
145292 जगदङ्गकं गिरिपाषाणमपि वेत्ति पश्यति ॥ २४ ॥
145293

145294 न सरन्तीह सरितो न चक्रं परिवर्तते ।
145295 नार्थाः परिणमन्त्यन्तः कचत्येतच्चिदम्बरम् ॥ २५ ॥
145296

145297 स्वप्नवदेव प्रबोधे बाधसाम्यं दर्शयति - न सरन्तीति ॥ २५ ॥
145298

145299 न महाकल्पकल्पान्तसंविदः संविदम्बरे ।
145300 संभवन्ति पृथग्रूपाः पयसीव पयोन्तरम् ॥ २६ ॥
145301

145302 पयसि समुद्रे तरङ्गादि पयोन्तरमिव पृथग्रूपाः ॥ २६ ॥
145303

145304 जगन्ति सन्त्येव न सन्ति शान्ते चिदम्बरे सर्वगतैकमूर्तौ ।
145305 नभोन्तराणीव महानभोन्तश्चित्सन्ति सत्तानि पराम्बराणि ॥ २७ ॥
145306

145307 एवं सति अध्यारोपदृष्ट्या दर्शने जगन्त्यनन्तानि सदैव सर्वत्रैव चित्सत्तया
145308 सन्त्येव नाणुमात्रमपि क्वापि किंचिदप्यपलपितुं शक्यम् । अपवाददृष्ट्या
145309 दर्शनेन क्वापि किंचिदपि चित्स्वरूपव्यतिरिक्तं समर्थयितुं शक्यमिति फलितमित्याह
145310 - जगन्तीति । यथा महानभोन्तर्घटाकाशादिनभोन्तराणि महानभःसत्तया सन्ति
145311 पृथङ् न सन्ति तथा तानि जगन्त्यपि पराम्बराणि शून्यान्यपि चित्सन्ति
145312 सद्भवन्तीत्यर्थः ॥ २७ ॥
145313

145314 वसिष्ठ तद्गच्छ मुने जगत्स्वं त्वं चासने संप्रति शान्तिमेहि ।
145315 बुद्ध्यादिरूपाणि परं व्रजन्तु वयं बृहद्ब्रह्मपदं प्रयामः ॥ २८ ॥
145316

145317 हे वसिष्ठमुने त्वं संप्रति तत्स्वं जगद्गच्छ तत्र चैकान्तकल्पिते प्राक्तने निजासने
145318 समाधिना शन्तिं निर्विक्षेपसुखमेहि । इमानि मत्कल्पितानि बुद्ध्यादिजगद्रूपाणि
145319 प्रलयेन परमव्यक्तं व्रजन्तु । वयं तु
145320 हैरण्यगर्भोपाधिसहितमूलाज्ञानबाधेन परं पदं कैवल्याख्यं प्रयाम
145321 इत्यर्थः ॥ २८ ॥
145322

145323 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० निर्वाणप्रकरणे उ० पा०
145324 शिलान्तर्जगत्पितामहवाक्यानि नाम सप्ततितमः सर्गः ॥ ७० ॥
145325

145326 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
145327 शिलान्तर्जगत्पितामहवाक्यानि नाम सप्ततितमः सर्गः ॥ ७० ॥
145328

145329 एकसप्ततितमः सर्गः
145330

145331 श्रीवसिष्ठ उवाच ।
145332

145333 इत्युक्त्वा भगवान्ब्रह्मा ब्रह्मलोकजनैः सह ।
145334 बद्धपद्मासनोऽनन्तसमाधानगतोऽभवत् ॥ १ ॥
145335

145336 कल्पनाहेतुवैधात्रसंकल्पोपशमक्रमात् ।
145337 तत्कल्पितानां भूतानां वर्ण्यते प्रलयक्रमः ॥
145338

145339 न विद्यते अन्तः अवसानं पुनर्व्युत्थानं यस्मात्तथाविधं यत्समाधानं
145340 समाधिस्तत्परः ॥ १ ॥

ओंकारार्धोऽर्धमात्रान्तः शान्तनिःशेषमानसः |
लिपिकर्मार्पिताकार आसीदाशान्तवेदनः [आशान्तवासनः इति पाठः सुवचः |
] || २ ||

ओंकारस्य उत्तरार्ध य अर्धमात्रा तदन्तर्नादबिन्दुशक्तिशान्ताख्यतद्भागेषु
क्रमाच्चित्तविलापनेनान्ते शान्तनिःशेषवासन इति संग्रहोक्तिः || २ ||

तमेवानुसरन्ती सा तथैव ध्यानगा सती |
वासनासीदशेषांशा शान्ता चाकाशरूपिणी || ३ ||

न शिष्यन्ते अंशाः स्मृतिबीजभेदा यस्यां तथाविधा भूत्वा शान्ता सती
आकाशरूपिणी शून्यस्वभावा आसीत् || ३ ||

परमेष्ठिन्यसंकल्पे तस्मिंस्तानवमेयुषि |
सर्वगानन्तचिद्व्योमरूपोऽपश्यमहं यदा || ४ ||

इदं तदीयमान्तरं रहस्यं त्वं कथमद्राक्षीस्तत्राह - परमेष्ठिनीति |
स्थूलसूक्ष्मकारणलक्षणार्थसहितप्रणवमात्राप्रविलयक्रमेण
स्ववासनाक्षयात्तानवमुत्तरोत्तरसूक्ष्मभावं आ ईयुषि एयुषि सति अहमपि समाधिना
सर्वगानन्तचिद्व्योमरूपः संस्तत्सर्वमपश्यम् | ननु ईयुषीति परोक्षे लिटः
क्वसुरपश्यमित्यपरोक्षोक्तिश्च विरुध्यते | नैष दोषः | वसिष्ठस्य
समाध्यारम्भात्प्राग्दशामालम्ब्य पारोक्ष्यम्
समाध्यारूढदशामालम्ब्यापारोक्ष्यमित्युभयोपपत्तेः | न चैवं
तुल्यकालताबोधकभावलक्षणसप्तमीविरोधः | सामीप्यातिशयेनापि भावस्य
भावान्तरलक्षकत्वदर्शनात्तुल्यकालत्वोपचारेणापि तदुपपत्तेरिति || ४ ||

यावत्संकल्पनं तस्य विरसीभवति क्षणात् |
तथैवाशु तथैवोर्व्याः साद्रिद्वीपपयोनिधेः || ५ ||

तस्य विधेः संकल्पनं शनैःशनैस्तत्क्षणादारभ्य यथा यथा
यावद्विरसीभवति तावत्तथैव तथैव
साद्रिद्वीपपयोनिधेरुर्व्यास्तृणगुल्मादिसमुद्भवनशक्तता तथा समस्तैव
जलादीनामपि शक्तिरस्तं गन्तुमारब्धेति परेणान्वयः || ५ ||

तृणगुल्मलताशालिसमुद्भवनशक्तता |
समस्तैवास्तमागन्तुमारब्धा च शनैः शनैः || ६ ||

किल तस्य विराडात्मरूपस्याङ्गैकदेशताम् |
सा बिभर्ति मही तेन तदसंवेदनोदयात् || ७ ||

मुमूर्षोर्विदुषः सर्वदेहव्यापिसंवेदनस्य तत्संहारे तदङ्गवैरस्यवद्वा तत्र
विराड्देहावयवपृथ्व्यादीनां वैरस्यं बोध्यमित्याशयेनाह - किलेति |
तदसंवेदनस्य तत्संवेदनोपसंहारस्य उदयात्सा विचेतना सती विरसा परिजर्जरा
बभूवेति परेणान्वयः || ७ ||

विचेतना सा विरसा बभूव परिजर्जरा |
मार्गशीर्षान्तवल्लीव जराविधुरतां गता || ८ ||

यथास्माकमसंवित्तेरङ्गाली विरसा भवेत् |
तथा विरिंचिसंवित्तेर्धरा वैधुर्यमागता || ९ ||

145393 आशयस्थं दृष्टान्तं प्रकाशयति - यथेति ॥ ९ ॥
145394
145395 संपन्ना संहतानेकमहोत्पातभरावृता।
145396 दुष्कृताङ्गारनिर्दग्धनरकोन्मुखमानवा ॥ १० ॥
145397
145398 कथं कथं विजर्जरा बभूवेत्येतत्प्रपञ्चयति -
145399 संपन्नेत्यादिसार्धपञ्चदशभिः। तत्र मनुष्याणां नाशादौ
145400 कलिकल्मषमपिनिमित्तमित्याशयेन तत्प्रपञ्चयन्नाह - दुष्कृतेत्यादि ॥ १० ॥
145401
145402 दुर्भिक्षाकाण्डदौस्थित्यदैन्यदारिद्र्यदुर्भगा।
145403 दुःशीलाशेषवनिता निर्मर्यादनरावृता ॥ ११ ॥
145404
145405 दौस्थित्यैः राजचोराद्युपप्लवैः ॥ ११ ॥
145406
145407 पांसुप्रमन्दनीहारधूलिधूसरसूर्यका।
145408 द्वन्द्विमूर्खमहादुःखिव्यसनिव्याधिताकुला ॥ १२ ॥
145409
145410 पांसुवत्प्रमन्दैर्नीहारैर्धूलिभिश्च धूसरो भास्करो यस्याम्।
145411 शीतोष्णादिद्वन्द्विभिस्तन्निरासोपाये मूर्खैरत एव
145412 महादुःखिभिर्दुर्व्यसनिभिर्व्याधितैश्च आकुला ॥ १२ ॥
145413
145414 अग्निदाहजलापूरयुद्धप्रोच्छिन्नमण्डला।
145415 अवृष्ट्यवग्रहोन्नष्टकष्टचेष्टितपामरा ॥ १३ ॥
145416
145417 अशङ्कितमहोत्पातपतत्पर्वतपत्तना।
145418 शिशुश्रोत्रियमुन्यार्यगुणिनाशरुदज्जना ॥ १४ ॥
145419
145420 अशङ्कितस्थलीमध्यसंजातागाधकूपका।
145421 वर्णसंकरनारीणामासक्तजनभूमिपा ॥ १५ ॥
145422
145423 जलदौर्लभ्यादशङ्कितं स्थलीमध्ये यत्र क्वचन जलाशयाखननात् सर्वतः
145424 संजाता अगाधकूपका यस्याम्। वर्णसंकराय नारीणां मध्ये
145425 गोत्रसापिण्ड्यागम्यादिविचारं विनैव विवाहाद्यासक्ता जना भूमिपाश्च यस्याम् ॥ १५
145426 ।।
145427
145428 अट्टशूलाखिलजना शिवशूलचतुष्पथा।
145429 केशैकशूलवनिता पात्रशूलजनेश्वरा ॥ १६ ॥
145430
145431 अद्यत इत्यट्टमोदनादि शूलं विक्रयापहारादिना उपजीव्यं येषां तथाविधा
145432 अखिलजना यस्याम्। शिवः शुल्कं तदेव शूलमुपजीव्यं येषु तथाविधानि
145433 चतुष्पथानि यस्याम्। केशो भगः स एवैकं शूलमुपजीव्यं यासां तथाविधा
145434 वनिता यस्याम्। पात्रं शिरः करस्तदेव शूलमुपजीव्यं येषां तथाविधा नरेश्वरा
145435 राजानो यस्यामिति संप्रदायव्याख्या। अथवा अट्ट अतिक्रमे इति धातोः अट्टः
145436 स्वस्ववर्णाश्रमोचितवृत्त्यतिक्रमः। शिवाः सृगालाः। केशाः प्रसिद्धा एव।
145437 पात्रं वेश्यानर्तक्यादयश्च शूलरोग इव व्यसनक्रन्दनहेतवो येषामिति
145438 यथायोगं योज्यम्। शेषं प्राग्वत् ॥ १६ ॥
145439
145440 दुःखशूलसमाचारा द्वन्द्वशूलाखिलप्रजा।
145441 अधर्मशूलवनिता पानशूलजनेश्वरा ॥ १७ ॥
145442
145443 एवं दुःखान्येव शूलानीव प्राणिक्रन्दनहेतवो येषां तथाविधा जनसमाचारा
145444 यस्याम्। एवमग्रेऽपि ॥ १७ ॥

अधर्मशूलवलिता कुशास्त्रशतशूलिनी।
दुर्जनाखिलवित्ताढ्या विपद्विहतसज्जना॥ १८॥

अधर्मशूलैरधर्माक्रोशपरैर्जनैः सर्वतो वलिता। कुशास्त्रशतैर्वेदबाह्यैः
शूलिनी रोगार्तेव साक्रन्दा। दुर्जनाश्चोरपिशुनादयोऽखिलजना वित्ताढ्या यत्र॥ १८॥

अनार्यवसुधापाला तदनादृतपण्डिता।
लोभमोहभयद्वेषरागरोगरजोरता॥ १९॥

अप्यन्यगामिपुरुषा रुषाभिहतसद्विजा।
अनारतपराक्रन्दपरापर्यन्तपामरा॥ २०॥

अन्यगामिनः स्वधर्मत्यागेन परधर्मप्रवृत्ताः पुरुषा यत्र। रुषा क्रोधेन
अभिहताः सन्तो द्विजाः स्वधर्मोपदेष्टारो यत्र। अनारतं परेषामाक्रन्दे रोदने
तत्परा अपर्यन्ताः पामरा यत्र॥ २०॥

दस्यूत्सन्नपुरग्रामदेवद्विजसमाश्रया।
आपातमधुरारम्भदुःखदोदरभङ्गुरा॥ २१॥

अन्यायार्जितवित्तैर्भरणकाले आपातमधुरारम्भं परिणामे परलोके च दुःख्दं
उदरं येषां तथाविधा भङ्गुरा अल्पायुषो यत्र॥ २१॥

आलस्योल्लासविलसत्कार्यवैधुर्यधर्मिणी।
सर्वापदुपतापान्ता क्रमेणोत्सन्नदिग्गणा॥ २२॥

आलस्योल्लासेन विलसत्संध्यावन्दनादिकार्यवैधुर्यं येषां तथाविधा धर्मिणो
धार्मिकजना यत्र। सर्वेषामापद उपतापा रोगाश्चान्ते यस्याम्॥ २२॥

भस्मशेषपुरग्रामा निर्जनाखिलमण्डला।
रोरूयमाणभस्माभ्रकुण्डलोड्।आमराम्बरा॥ २३॥

रोरूयमाणैर्ध्वनद्भिर्भस्माभ्रोभयकुण्डलैश्चक्रवातैरुड्डामरमिवाम्बरं
यस्याम्॥ २३॥

दुर्भगाडम्बरारम्भरोदनोरुरवोदरी।
मुष्टिप्रमाणजनता जनतापानुषङ्गिणी॥ २४॥

दुर्भगानां प्रजानामाडम्बरारम्भै रोदनैश्च उरुरवं ध्वनिबहुलमुदरं
यस्याः। नासिकोदरौष्ठ - इति ङीप्। मोषणं मुष्टिश्चौर्यं तत्प्रमाणा जनता
जनसमूहो यस्याम्॥ २४॥

नीरसाशेषदेशान्ता सर्वर्तुगुणवर्जिता।
इत्यस्य पार्थिवे धातौ ब्रह्मणो गतवेदने॥ २५॥

सर्वैः ऋतुगुणैर्वर्जिता। इति वर्णितप्रकारेण अस्य ब्रह्मणो
विधातुर्विराड्देहारम्भके पार्थिवे धातौ गतवेदने उपसंहृतचैतन्ये सति
पृथिवी पृथुवैधुर्या संपन्नेति परेणान्वयः॥ २५॥

पृथिवी पृथुवैधुर्या संपन्नासन्ननाशतः।
अथ तत्संविदुन्मुक्तो जलधातुः क्षयोन्मुखः॥ २६॥

145497 आसन्ननाशतः प्रलयात् । एवं जलभागादपि चैतन्योपसंहारारम्भे सप्ताब्धीनां
145498 क्षोभेण निर्मर्यादत्वमासीदित्याह - अथेत्यादिना ॥ २६ ॥
145499
145500 यदा विक्षुभितात्मासीत्तदा नियतिलङ्घनात् ।
145501 समुत्सार्यार्यमर्यादामर्णवा विवृतार्णसः ॥ २७ ॥
145502
145503 विवृतार्णसो विस्तृतजलाः ॥ २७ ॥
145504
145505 प्रवृत्ता विकृतिं गन्तुमुन्मत्ता इव राविणः ।
145506 वीचिविक्षोभविन्यासैर्वेलाविपिनलावकाः ॥ २८ ॥
145507
145508 वेलाविपिनानांन् लावकाश्छेदकाः ॥ २८ ॥
145509
145510 कल्लोलवलनावर्तविवर्तोद्वर्तिताश्रयाः ।
145511 महाभ्रभ्रमदुत्तुङ्गतरङ्गात्तनभोदिशः ॥ २९ ॥
145512
145513 महाभ्रैर्भ्रमद्भिरुत्तुङ्गतरङ्गैश्चात्ता नभो दिशश्च यैः ॥ २९ ॥
145514
145515 बृहद्गुलुगुलावर्तगर्जनोद्द्रवकन्दराः ।
145516 सीकरौघमहारम्भघनसंवलिताचलाः ॥ ३० ॥
145517
145518 बृहद्भिर्गुलुगुलायमानैरावर्तैर्गर्जनेन उद्द्रवाः कूजन्तः पर्वतकन्दरा येषाम्
145519 ॥ ३० ॥
145520
145521 चलच्चलचलद्वीरमकराघूर्णितान्तराः ।
145522 उल्लसन्मकराक्रान्तद्रुमकाननितोदराः ॥ ३१ ॥
145523
145524 स्वस्ववेगोत्कर्षख्यापनेनेतरजयार्थं चलद्भ्यस्तरङ्गेभ्योऽग्रे
145525 चलद्भिस्तेभ्योऽप्यग्रे चलद्भिर्वीरमकरैराघूर्णितान्तराः ॥ ३१ ॥
145526
145527 दरीविदारणभ्रष्टसिंहाहतजलेचराः ।
145528 ऊर्म्युदस्तमहारत्नभरतारकिताम्बराः ॥ ३२ ॥
145529
145530 उत्फालमकरच्छन्ननभश्वरबृहद्घनाः ।
145531 परस्परोर्मिसंघट्टभांकारकटुटांकृताः ॥ ३३ ॥
145532
145533 उत्फालैरुच्छलद्भिर्मकरैश्छन्ना नभश्चरा बृहन्तो घनाश्च येषाम् ॥ ३३ ॥
145534
145535 तरत्तरलमातङ्गफूत्कारा धौतभास्कराः ।
145536 अन्योन्यवेल्लनव्यग्रप्रविदीर्णाद्रिभित्तयः ॥ ३४ ॥
145537
145538 तटपर्वतलुण्टाकतरङ्गकरमण्डलाः ।
145539 गर्जद्गिरिदरीगेहविशदुन्मत्तवारयः ॥ ३५ ॥
145540
145541 भूपाः परपुराक्रान्ता लग्ना इव हतारयः ।
145542 तारारवरणद्गेहविद्रावितनभश्चराः ॥ ३६ ॥
145543
145544 हता अरयः स्वविरोधिदवाग्नयो यैः । तारारवं उच्चैःस्वरं यथा स्यात्तथा
145545 रणद्भिस्तरङ्गैर्गेहेभ्यो विद्राविता नभश्चरा देवादयो यैः ॥ ३६ ॥
145546
145547 प्रलुण्ठितवनव्यूहलूनकाननिताम्बराः ।
145548 सपक्षपर्वताकारतरङ्गापूरिताम्बराः ॥ ३७ ॥

प्रलुण्ठितैरुत्खायोन्नीतैर्वनव्यूहैर्लूनकाननमिव कृतमम्बरमाकाशं यैः ॥
३७ ॥

महारवमरुच्छिन्नकल्लोलाचलचालिताः ।
चञ्चत्तीरगिरिव्रातपतत्तटरटज्जलाः ॥ ३८ ॥

मरुद्भिश्छिन्नैर्विभक्तैः कल्लोलैरचला इव चालिताः ।
रत्नधात्वादिप्रभाभिश्चञ्चत्तीरेभ्यो गिरिव्रातेभ्यः पतद्भिर्वप्रै रटज्जलाः ॥ ३८ ॥

उल्लसद्विपुलावर्तप्रोक्षिप्तमकरोत्कराः ।
विमज्जन्निस्तलावर्तनिगीर्णगिरिकन्दराः ॥ ३९ ॥

निस्तलैरगाधैरावर्तैर्निगीर्णा गिरयस्तत्कन्दराश्च येषाम् ॥ ३९ ॥

दरीदलनसंप्राप्तदृषद्दशनदन्तुराः ।
शृङ्गलम्बिदरीप्रान्तमग्नवीचिजलेभकाः ॥ ४० ॥

दरीदलनवशात्संप्राप्तैः स्फटिकादिदृषद्दशनैर्दन्तुरा हसन्त इवेति यावत् ।
शृङ्गेषु लम्बिषु दीर्घेषु दरीप्रान्तेषु मग्नाः प्रविष्टा वीचयो जलेभका
यादोगजभेदा येषाम् ॥ ४० ॥

व्यालोलवलनाक्रान्तविटपिप्रोतकच्छपाः ।
यमेन्द्रवसुधावाहैरुत्कर्णैर्भयविह्वलैः ॥ ४१ ॥

यमस्य इन्द्रस्य वसुधायाश्च वाहैर्वाहनैर्महिषैरावतदिग्गजादिभिः
उत्कर्णैरूर्ध्वीकृतकर्णैः ॥ ४१ ॥

श्रूयमाणपतच्छैलतटीकटकटारवाः ।
मत्स्यपुच्छच्छटाच्छिन्नमग्नोन्मग्नद्रुताद्रयः ॥ ४२ ॥

लीलालूनवनव्यूहशीतलासारवारयः ।
प्रज्वलद्वडवावह्निज्वालावलिमिलज्जलाः ॥ ४३ ॥

लीलालूनेषु वनव्यूहेषु विश्रान्तानीव शीतलान्यासारवारीणि येषाम् ॥ ४३ ॥

सरसेन विभोर्नाशैर्विशङ्कितमहानलाः ।
मिलच्छिखरिमालाग्रजलमातङ्गयोधिनः ॥ ४४ ॥

स्वीयेन रसेन जलेन विभोराश्रयस्येन्धनस्य नाशैर्विशङ्किता भीता इव तिरोभूता
महानला येभ्यः । अर्थात्स्थलमातङ्गैः सह मिलन्तः शिखरिमालाग्रेषु
जलमातङ्गा योधिनो युद्धशीला येषाम् ॥ ४४ ॥

नृत्यन्तीव तरङ्गौघैर्जलावलनवेधिनः ।
जलाचलाचलान्योन्यसंघट्टस्फोटपण्डिताः ॥ ४५ ॥

जलैरचलानामचलैरन्योन्यसंघट्टे स्फोटने च पण्डिताः ॥ ४५ ॥

बृहद्गिरिवनव्रातप्राणिमण्डलमण्डिताः ।
उड्डामरवनेभेन्द्रभेरीवादनभासुरैः ॥ ४६ ॥

उड्डामराः उत्प्लवन्त्यो या मृतवनगजोत्फुल्लशरीरलक्षणा भेर्यस्तासां

145601 तरङ्गाग्रताडनैर्यद्वादनं तेन भासुरैः कल्लोलैर्बृहत्तरङ्गैरसुरैः
145602 पातालमिव अलमत्यन्तमाकुला इति परेणान्वयः ॥ ४६ ॥
145603
145604 असुरैरिव पातालं कल्लोलैरलमाकुलाः ।
145605 अथोदपतदुन्नासदिङ्नागवदनध्वनिः ॥ ४७ ॥
145606
145607 अथ सागरक्षोभानन्तरं तत्र प्लवमानत्वादुन्नासानामूर्ध्वीकृतपुष्कराणां
145608 दिङ्नागानां दिग्गजानां ध्वनिरुदपतत् उद्गतोऽभूत् ॥ ४७ ॥
145609
145610 पातालतलताल्वन्तर्विस्फोटामोटनोद्भटः ।
145611 चञ्चलाचलकीलोर्वी चचाल क्षणचालिता ॥ ४८ ॥
145612
145613 कीदृशः स ध्वनिः । पातालतललक्षणस्य तालुनः अन्तर्विस्फोटेन विदारणेन
145614 आमोटनेन पिण्डीकरणेन चोद्भटो घनतरः । गिग्गजैश्चानुह्यमाना उर्वी चञ्चलानि
145615 मेर्वाद्यचलकीलानि यस्यास्तथाविधा भूत्वा क्षणादेव स्वस्थानाच्चालिता सती
145616 व्यालोलैरम्भोधिभिर्लङ्घिता च सती लोला शैवालवल्लीव चचालेति परेण सहान्वयः ॥
145617 ४८ ॥
145618
145619 लोला शैवालवल्लीव व्यालोलाम्भोधिलङ्घिता ।
145620 अथ दुर्वारनिर्घोषनिर्वाताडम्बरान्विता ॥ ४९ ॥
145621
145622 ततः किमासीत्तदाह - अथेति । दुर्वाराणां प्रलयाम्बुदानां
145623 निर्घोषनिर्वातानामाडम्बरैरन्विता द्यौर्दिशां प्रतिध्वनिलक्षणैरारवैः पतन्ती
145624 पुस्फोटेव ॥ ४९ ॥
145625
145626 पुस्फोटेव पतन्ती द्यौर्दिशां पतिरवारवैः ।
145627 आवर्तवलनाकाराः केतवः पेतुरम्बरात् ॥ ५० ॥
145628
145629 केतव औत्पातिकधूमकेतवः पेतुः उत्पेतुः ॥ ५० ॥
145630
145631 हेमरत्नमया मुक्ताः सिन्दूरभुजगा इव ।
145632 ककुब्भ्यो नभसो भूमेरुदगुर्दग्धदिक्तटाः ॥ ५१ ॥
145633
145634 वर्णतो हेमरत्नमया इव मुक्ता इव सिन्दूरवर्णभुजगा इव
145635 चेत्यग्रिमोत्पातपंक्त्युपमानानि । ककुब्भ्यो दिग्भ्यो नभसो भूमेश्चोत्पातपङ्क्तय
145636 उदगुरिति व्यवहितेनान्वयः ॥ ५१ ॥
145637
145638 चलज्ज्वालाजटाटोपा विविधोत्पातपङ्क्तयः ।
145639 पृथ्व्यादीन्यसुरादीनि ब्रह्मोन्मुक्तानि सर्वतः ॥ ५२ ॥
145640
145641 ब्रह्मणा प्रागुक्तधात्रा उन्मुक्तानि विधारणसंकल्पोपसंहारादुपेक्षितानि ।
145642 असुरादीनि पृथ्व्यादीनि चेति द्विविधान्यपि महान्ति भूतशब्दवाच्यानि
145643 संक्षोभमाययुः ॥ ५२ ॥
145644
145645 द्विविधानि महाभूतान्यलं संक्षोभमाययुः ।
145646 चन्द्रार्कानिलशक्राग्नियमाः कोलाहलाकुलाः ॥ ५३ ॥
145647
145648 परिपातपरा आसन्ब्रह्मलोकगतेश्वराः ।
145649 कम्पैः कटकटारावपतत्पादपपङ्क्तयः ॥ ५४ ॥
145650
145651 ब्रह्मलोकं गत ईश्वरः स्वस्वाधिकारनिर्वाहकः प्रभावो येषां तथाविधाः
145652 सन्तः ॥ ५४ ॥

145653
145654 भूमेरन्वभवन्भूरिदोलान्दोलनमद्रयः।
145655 भूकम्पलोलकैलासमेरुमन्दरकन्दराः।
145656 पेतुः कल्पतरून्मुक्ता रक्तस्तबकवृष्टयः ॥ ५५ ॥
145657
145658 लोकान्तराद्रिपुरवारिधिकाअनान्तमुत्पातकल्पपवनेन मिथो हतानाम्।
145659 कोलाहलैर्जगदभूत्प्रविकीर्णशीर्णं पूर्णार्णवे त्रिपुरपूर इवाभिपाती ॥ ५६ ॥
145660
145661 लोकान्तराण्यद्रयः पुराणि वारिधयः काननानि चेत्येतदन्तं सर्वं
145662 जगदुत्पातसहितेन कल्पपवनेन मिथोऽन्योन्यं हतानां हन्यमानानां जनानां
145663 कोलाहलैः रुद्रबाणाग्निदाहेन अभिपाती अभितः पतनशीलस्त्रीणि पुराणि पूरयतीति
145664 त्रिपुरपूरो दैत्यसंघ इव पूर्णार्णवे प्रविकीर्णं शीर्णमभूदित्यर्थः ॥ ५६ ॥
145665
145666 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वाणप्रकरणे उ० पाषा०
145667 कल्पक्षोभवर्णनं नामैकसप्ततितमः सर्गः ॥ ७१ ॥
145668
145669 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
145670 कल्पक्षोभवर्णनं नामैकसप्ततितमः सर्गः ॥ ७१ ॥
145671
145672 द्विसप्ततितमः सर्गः ७२
145673
145674 श्रीवसिष्ठ उवाच।
145675
145676 अथाकृष्टवति प्राणान्स्वयंभुवि नभोभवः [नभोभुवः इति
145677 मुद्रितपुस्तके पाठः।]।
145678 विराडात्मनि तत्याज वातस्कन्धस्थितः स्थितिम् ॥ १ ॥
145679
145680 धातुः प्राणनिरोधेन वातस्कन्धस्थितिक्षयः।
145681 तत्प्रसङ्गात्पुनः पृष्टा वर्ण्यतेऽग्रे विराट्स्थितिः ॥
145682
145683 विराडात्मनि स्वयंभुवि प्राणानाकृष्टवति स्वहृत्प्रदेशे
145684 उपसंहर्तुमारब्धवति सति वातस्कन्धस्थितो नभोभवो वायुः स्थितिं
145685 ग्रहनक्षत्रविमानादिविधारणमर्यादां तत्याज ॥ १ ॥
145686
145687 ते हि तस्य किल प्राणास्तेन क्रान्तेषु तेष्वपि।
145688 ऋक्षचक्रे स्थितिं कोऽन्यो धत्ते भूतैकधारिणीम् ॥ २ ॥
145689
145690 ते वतस्कन्धास्तस्य स्वयंभुवः प्राणाः। क्रान्तेषु उपसंहृतेषु ॥ २ ॥
145691
145692 वातस्कन्धे समाक्रान्ते ब्रह्मणा प्राणमारुते।
145693 समं गन्तुं परित्यज्य संस्थितिं क्षोभमागते ॥ ३ ॥
145694
145695 स्थितिं प्रागुक्तां त्यक्त्वा समुपसंहारेण साम्यावस्थां गन्तुं क्षोभमागते सति ॥
145696 ३ ॥
145697
145698 निराधाराः सवाताग्निदाहोल्मुकवदापतन्।
145699 व्योम्नस्तारास्तरोः पुष्पनिकरा इव भूतले ॥ ४ ॥
145700
145701 सवाते अग्निदाहे उड्डीनैरुल्मुकैस्तुल्यं ताराः भूतले आसमन्तादपतन् ॥ ४ ॥
145702
145703 कालपाकचलन्मूला जगत्खण्डफलालयाः।
145704 प्रशान्तपवनाधारा विमानावलयोऽपतन् ॥ ५ ॥

145705
145706 जगत्खण्डे अर्जितस्य सुकृतफलस्य आलयाः भोगस्थानभूता विमानावलयः
145707 कालविपाकेन चलद्विच्छिन्नं भोगमूलं कर्म येषां तथाविधाः सन्तः अपतन् ॥ ५ ॥
145708
145709 प्रलयोन्मुखतां याते ब्राह्मे संकल्पनेन्धने ।
145710 सिद्धानां गतयः शेमुरिद्धानामर्चिषामिव ॥ ६ ॥
145711
145712 इद्धानां दीप्तानाम् ॥ ६ ॥
145713
145714 प्रभ्रमन्त्योऽम्बरे कपमारुतैस्तनुतूलवत् ।
145715 स्वशक्त्यपचये मूकाः सिद्धसंततयोऽपतन् ॥ ७ ॥
145716
145717 खेचरादिसिद्धीनां क्षयिष्णुतां तुच्छतां च सूचयन्नाह - प्रभ्रमन्त्य इति ।
145718 मूका वाग्व्यापारेऽप्यसमर्थाः ॥ ७ ॥
145719
145720 संकल्पद्रुमजालानि सेन्द्रादिनगराणि च ।
145721 पेतुर्भूकम्पलोलस्य शिरांस्यमरभूभृतः ॥ ८ ॥
145722
145723 इन्द्रादिनगरैः सहितानि सेन्द्रादिनगराणि अमरभूभृतो मेरोः शिरांसि शिखराणि च
145724 पेतुः ॥ ८ ॥
145725
145726 श्रीराम उवाच ।
145727
145728 चिति संकल्पमात्रात्मा विराड् ब्रह्मा जगद्वपुः ।
145729 किमङ्गं तस्य भूलोकः किं स्वर्गः किं रसातलम् ॥ ९ ॥
145730
145731 ननु ब्रह्मणः स्थूलदेहो ब्रह्माण्डरूपो विराट् तदन्तर्गतः सत्यलोकनिवासी
145732 चतुर्मुखदेहस्तु तन्मनःकल्पितः प्रातिभासिक एव । न च सोऽपि तस्य स्थूलदेह एवेति
145733 युक्तम् । चिराड्देहान्तःस्थित्ययोगात् । न हि कस्यचिदपि स्थूलदेहान्तः स्थूलदेहान्तरं
145734 दृष्टं श्रुतं वा संभावयितुं वा शक्यम् । एवं सति मानसे चतुर्मुखदेहे
145735 प्रातिभासिके स्वाप्नदेहप्राये प्राणोपसंहारसंकल्पेन कथं
145736 विराड्देहविष्टम्भकप्राणस्थानीयवातस्कन्धादिक्षयः । न हि स्वप्नदेहे
145737 प्राणाद्युपसंहारेण मरणदर्शने जाग्रत्प्रसिद्धस्थूलदेहक्षयो दृश्यत
145738 इत्याशयेन रामः शङ्कते - चिति संकल्पमात्रात्मेत्यादिना । ब्रह्मा
145739 चतुर्मुखश्चिति संकल्पमात्रं मनस्तदात्मा जगद्वपुर्ब्रह्माण्डशरीरकः
145740 प्रसिद्धः । तस्य संकल्पमात्रात्मनश्चतुर्मुखस्य भूर्लोकादयो लोका अङ्गं
145741 अवयवाः किम् । न ह्यमूर्तस्य मनसो मूर्तान्यङ्गानि संभवन्ति । यदापि संभवति
145742 तदा भूर्लोकः किमङ्गं पादा अन्यो वा स्वर्गश्च किमङ्गं रसातलं च
145743 किमङ्गं कोऽवयव इति विभागप्रश्नः ॥ ९ ॥
145744
145745 कथमेतानि चाङ्गानि ब्रह्मंस्तस्य स्थितानि च ।
145746 कथं वा सोऽन्तरे तस्य स्वस्यैव वपुषः स्थितः ॥ १० ॥
145747
145748 अस्तु वा चतुर्मुखदेहोऽपि मूर्तस्तथाप्यल्पपरिमाणस्यैतस्यैतान्यतिविस्तृतानि
145749 भूरादीन्यङ्गानि कथं स्थितानि । तस्यापि विस्तृतत्वकपनेन ब्रह्माण्डात्मता
145750 यद्युच्येत तर्हि स स्वस्यैव वपुष एतस्य ब्रह्माण्डस्यान्तः सत्यलोके कथं स्थितः ॥
145751 १० ॥
145752
145753 ब्रह्मा संकल्पमात्रात्मा निराकृतिरिदं स्थितम् ।
145754 जगदित्येव जातो मे निश्चयः कथयेतरत् ॥ ११ ॥
145755
145756 किं च ब्रह्मा संकल्पमात्रात्मा निराकृतिरमूर्त एव इदं तु जगत्साकारं स्थितमिति

मे निश्चयो जातः। अत इतरत्प्रकारान्तमस्ति चेत्कथय॥ ११॥

श्रीवसिष्ठ उवाच।

आदौ तावदिदं नासन्न सदास्ते निरामयम्।
चिन्मात्रपरमाकाशमाशाकोशैकपूरकम्॥ १२॥

तत्र प्रथमं पृष्टं स्थूलदेहस्य मनोमयदेहानन्यत्वं तदवयवानां
तदवयवत्वं चानुभावयितुं भूमिकां मूलोद्घाटनेन रचयति -
आदावित्यादिना। आशानां सर्वाभिलाषाणां दिशां च कोशानां
भूमानन्दात्मकत्वादेकमेव पूरकम्॥ १२॥

तत्स्वामाकशतां चैतच्चेत्यमित्यवबुध्यते [चैतत्परमित्यवबुध्यते इति
टीकानुगुणः पाठः।]।
स्वरूपमत्यजन्नित्यं चित्त्वाद्भवति चेतनम्॥ १३॥

तदेतत्परमाकाशं स्वरूपमत्यजद्विकारमनापद्यमानमेव स्वामाकाशतां
चन्द्रो द्वितीयचन्द्रमिव कल्पयत् परं स्वातिरिक्तं वस्त्विति अवबुध्यते॥ १३॥

विद्धि तच्चेतनं जीवं सघनत्वान्मनः स्थितम्।
एतावति स्थितिजाले न किंचित्साकृति स्थितम्॥ १४॥

तत्र बोध्यबोधबोद्धृभावलक्षणत्रिपुटीमननेन
सघनत्वाद्घनीभावान्मनोवेषेण स्थितं तथाभूतं चेतनं जीवं विद्धि।
स्वरूपमत्यजदिति यदुक्तं तदुपपादयति - एतावतीति। एतावति
त्रिपुटीजीवभावपर्यन्ते स्थितिजाले अध्यासेन संपन्नेऽपि तेषु न किंचिदपि साकृति
परस्परव्यावृत्ताकारसहितं रूपं परमार्थतः स्थितं किंतु शुद्धं व्योमैव
शून्यमेवेति परेण संबन्धः॥ १४॥

शुद्धं व्योमैव चिद्व्योम स्थितमात्मनि पूर्ववत्।
यदेतत्प्रतिभातं तु तदन्यन्न शिवात्ततः॥ १५॥

किं तर्हि स्थितं तदाह - चिद्व्योमेति॥ १५॥

अथ तन्मन आभोगि भाविताहंकृति स्फुरत्।
संकल्पात्मकमाकाशमास्ते स्तिमितमक्षयम्॥ १६॥

एवमभिमानाकारभावनादसतैव तद्भावेनापि स्फुरतीत्याह - अथेति॥ १६॥

तत्संकल्पचिदाभासनभोऽहमिति भावितम्।
असत्तमेवानुभवत्संनिवेशं खमेव खे॥ १७॥

अहंकरकल्पनोत्तरं स्थूलदेहकल्पनापि तस्यावस्तुभूतैवेत्याह - तदित्यादिना॥
१७॥

वेत्ति भावितमाकारं पश्यत्यनुभवत्यपि।
संकल्पकात्मकं शून्यमेव देह इति स्थितम्॥ १८॥

शून्यमेव यथाकारि संकल्पनगरं भवान्।
पश्यत्येवमजो देहं खे खमेवानुभूतवान्॥ १९॥

यदि देहं शून्यमेव तर्हि कथं साकारमनुभूयते तत्राह - शून्यमेवेति॥ १९॥

145809
145810 संविदो निर्मलत्वात्स यावदित्थं तहाविधम् ।
145811 अनुभूयानुभवनं स्वेच्छयैवोपशाम्यति ॥ २० ॥
145812
145813 प्रलयमोक्षादिकल्पनाप्येवमेवेत्याह - संविद इति ॥ २० ॥
145814
145815 यदा तत्त्वपरिज्ञानमस्मदादेस्तदाऽऽततम् ।
145816 इदं संसरणं विद्धि शून्यं सत्यमिव स्थितम् ॥ २१ ॥
145817
145818 कदोपशाम्यति तदाह - यदेति । तदा आततमिति च्छेदः ॥ २१ ॥
145819
145820 यथाभूतपरिज्ञानादत्र शाम्यति वासना ।
145821 अद्वैतान्निरहंकारात्ततो मोक्षोऽवशिष्यते ॥ २२ ॥
145822
145823 यथाभूतं परमार्थसत्यं ब्रह्म तत्परिज्ञानान्मिथ्यावासना अत्रास्मिन्नेव
145824 जन्मनि शाम्यति ॥ २२ ॥
145825
145826 एवमेष स यो ब्रह्मा स एवेदं जगत्स्थितम् ।
145827 विरजो ब्रह्मणो राम देहो यस्तदिदं जगत् ॥ २३ ॥
145828
145829 अस्त्वेवं तथाप्येतदुक्त्या यत्पृष्टं किं समाहितं तत्राह - एवमिति ॥ २३ ॥
145830
145831 संकल्पाकाशरूपस्य तस्य या भ्रान्तिरुत्थिता ।
145832 तदिदं जगदाभाति तद्ब्रह्माण्डमुदाहृतम् ॥ २४ ॥
145833
145834 तथा च ब्रह्माण्डस्यापि भ्रान्त्यैव स्थूलदेहत्वम् विचारतस्तु तदीयमनोमात्रत्वमिति
145835 तदङ्गोपसंहारेणोपसंहारः सिद्ध इति भावः ॥ २४ ॥
145836
145837 सर्वमाकाशमेवेदं संकल्पकलनात्मकम् ।
145838 वस्तुतस्त्वस्ति न जगत्त्वत्तामत्ते न च क्वचित् ॥ २५ ॥
145839
145840 जाग्रदुन्मुखतायां स्वाप्नदेहाङ्गोपसंहारेण
145841 स्वाप्नभूरादिलोकोपसंहारवद्वा तदुपसंहारः । द्वयोरपि
145842 संकल्पाकाशमात्रत्वादित्याशयेनाह - सर्वमिति ॥ २५ ॥
145843
145844 क्वचिन्मात्रेऽमले व्योम्नि कथं वा केन वा जगत् ।
145845 किं जायते किमत्रास्ति कारणं सहकारि यत् ॥ २६ ॥
145846
145847 अवास्तवत्वं कथं ज्ञेयमिति चेदसंभाव्यत्वादित्याशयेनाह - क्वेति ।
145848 किंवृत्तपञ्चकं देशकालादिसर्वप्रकारैरप्यसंभाव्यत्वस्य समर्थनार्थम् ॥
145849 २६ ॥
145850
145851 अतोऽलीकमिदं जातमलीकं परिदृश्यते ।
145852 अलीकं स्वदतेऽलोकमेवं पश्यति शून्यकम् ॥ २७ ॥
145853
145854 स्वदते प्रियाप्रियभावेन प्रथते । अलोकं निष्प्रपञ्चं ब्रह्मैव भ्रान्त्या शून्यकं
145855 जगच्छून्यंन् खमेव एवं जगद्भावेन पश्यति ॥ २७ ॥
145856
145857 जगदादिकया भासा चिन्मात्रं स्वदते स्वतः ।
145858 आत्मनात्माम्बरे द्वैते स्पन्दनेनेव मारुतः ॥ २८ ॥
145859
145860 तदेव स्पष्टमाह - जगदादिकयेति । आदिपदात्तद्धर्मा उत्पत्त्यादिभावविकारा

145861 गृह्यन्ते ॥ २८ ॥
145862
145863 इदं किंचिन्न किंचिद्वा द्वैताद्वैतविवर्जितम् ।
145864 चिदाकाशं जगद्विद्धि शून्यमच्छं निरामयम् ॥ २९ ॥
145865
145866 द्वैतविवर्जनात्किंचिति । अद्वैतस्यापि वर्जनान्न किंचिद्वा ॥ २९ ॥
145867
145868 शान्ताशेषविशेषोऽहं तेन राघव संस्थितः ।
145869 सन्नेवासन्निवातस्त्वमेवमेवास्व निर्ममः ॥ ३० ॥
145870
145871 तस्मादहमिव त्वमपि एवं परमार्थतः सन्नेव व्यवहारे असन् देहादिरिव आस्व किंतु
145872 निर्मम इत्यर्थः ॥ ३० ॥
145873
145874 निर्वासनः शान्तमना मौनी विगतचापलः ।
145875 सर्वं कुरु यथाप्राप्तं कुरु मा वात्र किं ग्रहः ॥ ३१ ॥
145876
145877 व्युत्थितः सर्वं व्यवहारं कुरु समाहितः सन् मा वा कुरु किं त्रहः
145878 किमर्थमेकत्राग्रह इत्यर्थः ॥ ३१ ॥
145879
145880 अनादिनित्यानुभवो य एकः स एव दृश्यं न तु दृश्यमन्यत् ।
145881 सत्यानुभूतेऽननुभूतयो याः सुविस्तृता दृश्यमहादृशस्ताः ॥ ३२ ॥
145882
145883 तस्मात्सर्व दृश्यं ब्रह्मैव तदज्ञानान्येव भ्रान्त्याकारपरिणतानि
145884 दृश्यानुभवा इति निष्कर्ष इत्युपसंहरति - अनादीति । सत्ये अनुभूते । भावे क्तः ।
145885 अनुभवैकरसे ब्रह्मणि या अननुभूतयः अज्ञानानि ता एव भ्रान्तिवैचित्र्यैः
145886 सुविस्तृता दृश्यमहादृश इत्यर्थः ॥ ३२ ॥
145887
145888 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षो निर्वाणप्रकरणे उ० पाषा०
145889 निर्वाणवर्णनं नाम द्विसप्ततितमः सर्गः ॥ ७२ ॥
145890
145891 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
145892 निर्वाणवर्णनं नाम द्विसप्ततितमः सर्गः ॥ ७२ ॥
145893
145894 त्रिसप्ततितमः सर्गः ७३
145895
145896 श्रीराम उवाच ।
145897
145898 बन्धमोक्षजगद्बुद्धिर्न शून्या नापि सन्मयी ।
145899 नास्तमेति न चोदेति किमप्याद्यमसौ किल ॥ १ ॥
145900
145901 इहारोपक्रमो भूयो बोधदार्ढ्याय वर्ण्यते ।
145902 कथमेतस्य चाङ्गानीत्यादिप्रश्नोत्तरं ततः ॥
145903
145904 किमङ्ग तस्य भूर्लोकः कथमेतानि चाङ्गानि कथं वासोन्तरे तस्य इति
145905 प्रस्तुतप्रश्नत्रयोत्तरोपोद्घातत्वेन वर्णितं शुद्धे ब्रह्मणि
145906 जगदध्यारोपप्रकारं पुनः क्रमशस्तात्पर्यतश्च सम्यग्जिज्ञासमानो रामस्तत्र
145907 तात्पर्यतः स्वज्ञातांशं दर्शयितुं सिंहावलोकनन्यायेन व्यवहितोक्तनिष्कर्षं
145908 स्मारयति - बन्धेत्यादिन । सन्मयी सत्यार्थविषया । सर्वसाक्षित्वादेव स्वयं
145909 नास्तमेति नोदेति च । अतः असौ सर्वसाक्षिणी बुद्धिरेव विषयमार्जने किमपि
145910 वाङ्मनसागम्यमाद्यं ब्रह्मेति त्वया तात्पर्यत्या उपदिष्टम् । किलेति
145911 गुरुबुद्धिविसंवादशङ्कापरिहाराय । इदं मया बुद्धमिति परेणान्वयः ॥ १ ॥
145912

145913 उपदिष्टमिदं ब्रह्मंस्त्वया बुधमलं मया।
145914 भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम्॥ २॥
145915
145916 तर्हि किमुपदेशोपरमोऽस्तु नेत्याह - भूय इति॥ २॥
145917
145918 सर्गादिसंभ्रमदृशः शून्यतादिदृशस्तथा।
145919 न काश्चन विभो सत्या असत्याश्च न काश्चन॥ ३॥
145920
145921 सत्या अबाधितार्थाः असत्या बाधितार्था अपि न। तत्तद्व्यवहर्तृदृशा ब्रह्मण एव
145922 तथास्थितेरर्थक्रियाऽविसंवादादसत्कार्यपक्षानभ्युपगमात्सर्वशक्तिमति ब्रह्मणि
145923 सर्वशून्यतापादनशक्तेरपि संभवान्मायया सर्वविरोधपरिहाराच्चेति भावः॥ ३
145924 ।।
145925
145926 एवंस्थिते तु यत्सत्यंन् तत्सर्वं बुद्धवानहम्।
145927 तथापि भूयोबोधाय सर्गानुभव उच्यताम्॥ ४॥
145928
145929 मायाशबलब्रह्ममाहात्म्यमिव
145930 तदधिष्ठाननिर्विशेषनित्यमुक्तब्रह्मतत्त्वमप्यहं बुद्धवानित्याह - एवमिति।
145931 सर्गानुभवः प्रपञ्चाध्यासक्रमो भूय उच्यताम्। भूयसां शृतृणां
145932 बोधाय बोधबाहुल्यायेति वा॥ ४॥
145933
145934 श्रीवसिष्ठ उवाच।
145935
145936 यदिदं दृश्यते किंचिज्जगत्स्थावरजङ्गमम्।
145937 सर्वं सर्वप्रकाराढ्यं देशकालक्रियादिमत्॥ ५॥
145938
145939 तस्य नाशे महानाशे महाप्रलयनामनि।
145940 ब्रह्मोपेन्द्रमरुद्रुद्रमहेन्द्रपरिणामिनि॥ ६॥
145941
145942 स्थूलस्य भूतभौतिकस्य सूक्ष्मभूतेषु नाशे भूतसूक्ष्मैः सह
145943 अव्याकृतानुप्रवेशे। महानाशे प्राकृते प्रलये इति यावत्। ब्रह्मोपेन्द्रादिदेहानां
145944 परिणामश्चरमो भावविकारस्तद्वति तच्छीले वा॥ ६॥
145945
145946 शिष्यते शान्तमत्यच्छं किमप्यजमनादि सत्।
145947 यतो वाचो निवर्तन्ते किमन्यदवगम्यते॥ ७॥
145948
145949 तदा यच्छिष्यते तद्वर्णयति - शिष्यत इत्यादिना॥ ७॥
145950
145951 सर्षपापेक्षया मेरुर्यथातिवितताकृतिः।
145952 तथाकाशमपि स्थूलं शून्यं सद्यदपेक्षया॥ ८॥
145953
145954 अन्यापेक्षया शून्यं परमसूक्ष्मं सदप्याकाशं यदपेक्षया स्थूलम्॥ ८॥
145955
145956 शैलेन्द्रापेक्षया सूक्ष्मा यथेमे त्रसरेणवः।
145957 तथा सूक्ष्मतरं स्थूलं ब्रह्माण्डं यदपेक्षया॥ ९॥
145958
145959 तथा अन्यापेक्षया स्थूलं विशालतममपि ब्रह्माण्डं यदपेक्षया
145960 सूक्ष्मतरमणुतरम्॥ ९॥
145961
145962 अमानकलिते सौम्ये काले परिणते चिरम्।
145963 शान्ते तस्मिन्परे व्योमन्याद्ये ह्यनुभवात्मनि॥ १०॥
145964

145965 मानहेतुसूर्यस्पन्दाद्युपाधिप्रलयादमानकलिते तादृशप्रलयकाले चिरं
145966 द्विपरार्धपरिमितब्रह्मायुःकालतुल्यप्रमाणपरिणते अतिवाहिते सति ॥ १० ॥
145967
145968 असंकल्पो महाशान्तो दिक्कालैरभिताकृतिः ।
145969 अन्तर्महांश्चिदाकाशो वेत्तीव परमाणुताम् ॥ ११ ॥
145970
145971 मायावरणान्तःसुषुप्तप्रायश्चिदाकाशः स्वप्नोन्मुख इव
145972 स्वान्तर्लीनजगत्संस्काररूपां परमाणुतां वेत्ति पर्यालोचयतीव ॥ ११ ॥
145973
145974 असत्यामेव तामन्तर्भावयन्स्वप्नवत्स्वतः ।
145975 ततः स ब्रह्मशब्दार्थं वेत्ति चिद्रूपतां तताम् ॥ १२ ॥
145976
145977 भावयन्पर्यालोचयन् । तत्पर्यालोचनेनेषदुचितभावप्राप्तेर्बृंहणाद्ब्रह्मेति
145978 प्रसिद्धं ब्रह्मशब्दार्थम् । तथा च श्रुतिः तपसा चीयते ब्रह्म इति ॥ १२ ॥
145979
145980 चिद्भावोऽनुभवत्यन्तश्चित्त्वाच्चिदणुतां निजाम् ।
145981 तामेव पश्यतीवाथ [पश्यतीवान्तरिति पाठः ।] ततो द्रष्टेव तिष्ठति ॥
145982 १३ ॥
145983
145984 तद्गोचरतालक्षणे तद्वेदने चित्स्वभावातिरिक्तो हेतुर्दुर्निरूप इत्याह - चिद्भाव इति ।
145985 तेनैव द्रष्टृतासंपत्तिं दर्शयति - तामेवेति ॥ १३ ॥
145986
145987 यथा स्वप्ने मृतं पश्यत्येक एवात्मनात्मनि ।
145988 मृत एव मृतेर्द्रष्टा तथा चिदणुरात्मनि ॥ १४ ॥
145989
145990 नन्वेकत्र दृश्यद्रष्टृभावो विरुद्धः कथं संपद्यते इति
145991 चेत्स्वप्नवद्विरोधापर्यालोचनादित्याह - यथेति ॥ १४ ॥
145992
145993 तस्मिंश्चिद्भाव एषोऽन्तरेक एव द्वितामिव ।
145994 पश्यन्स्वरूप एवास्ते द्रष्टृदृश्यमिव स्थितः ॥ १५ ॥
145995
145996 तथा कल्पनेऽपि न वास्तवैक्यक्षतिरित्याह - तत इति ॥ १५ ॥
145997
145998 चिद्भावशून्य एवातिनिराकारोऽप्यणुं तनुम् ।
145999 पश्यन्दृश्यमिवोदेति द्रष्टेव च तदा द्वितात्म् ॥ १६ ॥
146000
146001 शून्य एवेत्यस्य व्याख्या - अतिनिराकार इति । दृश्यमिव द्रष्टेव च द्वितां तदा
146002 उदेति उद्वहति ॥ १६ ॥
146003
146004 प्रकाशमणुमात्मानं पश्यंस्तदनुभावतः ।
146005 उच्छूनतां चेतयते बीजमङ्कुरतामिव ॥ १७ ॥
146006
146007 स च द्रष्टा मायाबलेन प्रकाशस्वभावमणुं परिच्छिन्नमात्मानं
146008 पश्यन्संस्तदनुभावत उच्छूनतामुपचयं चेतयते कल्पयति ॥ १७ ॥
146009
146010 देशकालक्रियाद्रव्यद्रष्टृदर्शनदृग्दृशः ।
146011 अर्थान्तरस्वभावेन तिष्ठन्त्यनुदिताभिधाः ॥ १८ ॥
146012
146013 तदैव तस्य तन्नान्तरीयकतया देशकालादिविभगकल्पना अपि भवन्ति परंतु ता
146014 वागाद्यभिव्यक्त्यभावादनुदिताभिधा इत्याह - देशेति ॥ १८ ॥
146015
146016 चिदणुर्यत्र भातोऽसौ देशो मितिमुपागतः ।

146017 यदा भातस्तदा कालो यद्भानं तत्क्रिया स्मृता ‖ १९ ‖
146018
146019 तद्विभागकल्पनाप्रकारं विशदयति - चिदणुरिति | परिच्छिन्नस्य
146020 देशकालानवगाह्यप्रतीत्यप्रसिद्धेरिति भावः ‖ १९ ‖
146021
146022 उपलब्धं विदुर्द्रव्यं द्रष्टृताप्युपलब्धता |
146023 आलोकनं दर्शनता दृगालोकनकारणम् ‖ २० ‖
146024
146025 तदैव त्रिपुटीविभाजकोपाधिभेदानां साक्षिणस्तदालोकननिमित्तभावस्य च कल्पना
146026 भवतीत्याह - उपलब्धमिति | द्रव्यगुणक्रियादिकल्पनाधारत्वाद्द्रष्टव्यम् ‖ २० ‖
146027
146028 एवमुच्छूनता भाति मितानन्ताथ वा क्रमात् |
146029 असत्यैव नभस्येव नभोरूपैव निष्क्रमा ‖ २१ ‖
146030
146031 एवमेव कर्ता कार्यं कारणं भोक्ता भोग्यं भोग इत्यादित्रिपुटीभेदानां
146032 तत्साक्षिणस्तन्निमित्ततायाश्च कल्पनं सर्वत्र बोध्यमित्याशयेनाह - एवमिति |
146033 देशकालवस्तुपरिच्छेदैर्मिता संख्येयत्तादिना अनन्ता वा ‖ २१ ‖
146034
146035 चिदणोर्भासनं भातं तत्प्रदेशेन देहगम् |
146036 येन पश्यति तच्चक्षुः संग्रहोऽक्षदृशामिति ‖ २२ ‖
146037
146038 तत्र रूपादित्रिपुटीसिद्धौ चक्षुरादिकरणविभागकल्पनादि नन्तरीयकी भवतीति
146039 संक्षेपेण दर्शयति - चिदणोरिति | चिदणोर्जीवस्य भातं भासनं सौराद्यालोकं
146040 येन गोलकप्रदेशेन च्छिद्रेण येन चातीन्द्रियेण करणेन पश्यति तदुभयं चक्षुः |
146041 सर्वासां श्रोत्राद्यक्षदृष्टीनामप्ययं न्यायः सम इति संग्रहः संक्षेपः ‖ २२
146042 | |
146043
146044 चिदणुप्रतिभासेऽन्तः प्रथमं नामवर्जितम् |
146045 तन्मात्रशब्दमेतेषामेतदाकाशरूपि तत् ‖ २३ ‖
146046
146047 श्रोत्रादीन्द्रियपञ्चकविषयेष्वेव नामरूपभेदकल्पनात्प्रागवस्था
146048 तन्मात्रशब्देनोच्यत इत्याह - चिदण्विति | एतेषां श्रोत्रादिपञ्चकविषयाणां
146049 प्रथमं प्राक्तनं यन्नामवर्जितं स्वरूपं तत्तन्मात्रमिति शब्दो यस्य
146050 तथाविधं यतस्तदेतदाकाशरूपि सूक्ष्मतममित्यर्थः ‖ २३ ‖
146051
146052 चिदणुप्रतिभकाशपिण्ड एव घनस्थितिः |
146053 अनुसंधानविवशश्चेततीन्द्रियपञ्चकम् ‖ २४ ‖
146054
146055 एवं क्रमेण चिदणोः प्रतिभलक्षण आकाश एव घनस्थितिः सन् पिण्डः स्थूलदेहो
146056 भवति तत्र रूपाद्यनुसंधानवशादिन्द्रियपञ्चकं चेततीत्युपसंहारः ‖ २४ ‖
146057
146058 एवं चिदणुसंधानं दृश्यपोषमुपैत्यलम् |
146059 तदेव ज्ञानमित्युक्तं बुद्धिरित्यभिधीयते ‖ २५ ‖
146060
146061 अन्तःकरणचतुष्टयकल्पनाप्रकारमाह - एवमिति | दृश्येषु शब्दादिषु
146062 पुनःपुनरनुभवात्पोषमुपचयमुपैति तत्रेन्द्रियगृहीतविषयाणां
146063 स्मृतिदशायां ज्ञानं चित्तमिति अध्यवसायदशायां बुद्धिरिति चाभिधीयते ‖ २५ ‖
146064
146065 ततो मनस्तदारूढमहंकारपदं गतम् |
146066 देशकालपरिच्छेद इत्यङ्गीकृत आत्मना ‖ २६ ‖
146067
146068 ततः संकल्पविकल्पदशायां मनोऽभिमानेनाहंममतया तदारूढं

146069 तदभिनिविष्टं सत् अहंकारपदं गतम्। देशकालविभागकल्पनां वर्णयितुं
146070 प्रस्तौति - देशेति। इति वक्ष्यमाणरीत्या॥ २६॥
146071
146072 चिदणोरस्य भावस्य प्रत्यग्रं यत्र वेदनम्।
146073 स तत्रोत्तरकालेन पूर्वाभिख्यां करिष्यति॥ २७॥
146074
146075 तत्र काले देशे च पूर्ववत्कल्पना उत्तरकालकल्पनामपेक्ष्यैव प्रवर्तत इत्याह -
146076 चिदणोरिति। अस्य प्रसिद्धस्य भावस्य शब्दादिविषयस्य प्रत्यग्रं नवम्। आद्यमिति
146077 यावत्। यत्र देशरूपे कालरूपे वा आधारे वेदनं यस्य चिदणोर्जीवस्य भवति स
146078 चिदणुस्तस्य देशकालस्य चोत्तरकालेन व्यावर्त्येन निमित्तेन पूर्वं इत्यभिख्यां नाम
146079 करिष्यति कल्पयिष्यतीति प्रतिजीवं प्रतिवस्तु चेदमनियतमेवेति भावः॥ २७॥
146080
146081 अन्यस्मिन्नेकदेशे सा ऊर्ध्वाभिख्यां करिष्यति।
146082 एवं दिगभिधनादि कल्पयिष्यति स क्रमात्॥ २८॥
146083
146084 तां कल्पनामपेक्ष्य ऊर्ध्वाभिख्यां ततोऽन्यस्मिन्काले एकामेव करिष्यति। दिशि
146085 तूर्ध्वदक्षिणपश्चिमाद्यभिधानानि बहूनीति विशेष इति भावः॥ २८॥
146086
146087 देशकालक्रियाद्रव्यशब्दानामर्थवेदनम्।
146088 भविष्यति स्वयमसावाकाशविशदोऽपि सन्॥ २९॥
146089
146090 एवं देशकालवस्तुभेदांस्तन्नामानि च कल्पयित्वा गृहीतसंकेतानां पुरुषाणां
146091 शब्दश्रवणे तत्तदर्थवेदनात्मनापि स्वयमेव संपत्स्यत इत्याह - देशेति॥ २९॥
146092
146093 इत्थं स्वानुभवेनैष व्योम्नैव व्योमरूपभृत्।
146094 आतिवाहिकनामान्तर्देहः संपद्यते चितेः॥ ३०॥
146095
146096 एवं स्वयमेव प्रथममातिवाहिकदेहस्ततो
146097 देशकालक्रियावस्तुविभागस्ततस्तत्तन्नामभेद इति क्रमेण नामान्तं
146098 सर्वजगच्छरीरं संपद्यत इत्यर्थः॥ ३०॥
146099
146100 एष एव चिरं कालं तत्र भावनया तया।
146101 गृह्णाति निश्चयं पूर्णमाधिभौतिकमात्मनः॥ ३१॥
146102
146103 एवं सर्वजगतो मनःकल्पनामात्रत्वेनातिवाहिकदेहावयवत्वे
146104 कथमाधिभौतिकताप्रत्ययस्तत्राह - एष एवेति॥ ३१॥
146105
146106 व्योम्ना व्योम्न्येव रचितो निर्मलेनेति विभ्रमः।
146107 असता सत्समास्तीर्णस्तापनद्या जलं यथा॥ ३२॥
146108
146109 संकल्पनामुपादत्ते स्वदेहे गगनाकृतिः।
146110 शिरःशब्दार्थदां कांचित्पादशब्दार्थदां क्वचित्॥ ३३॥
146111
146112 स गगनाकृतिश्चिदणुः स्वदेहेऽपि कल्पनीये वक्ष्यमाणप्रपञ्चां
146113 संकल्पनामुपादत्ते॥ ३३॥
146114
146115 उरःपार्श्वादिशब्दार्थमयीं क्वचिदनाविलाम्।
146116 भावाभावग्रहोत्सर्गशब्दाद्यर्थमयीमपि॥ ३४॥
146117
146118 एवं बाह्यार्थहानोपादानादिव्यवहारकल्पनापि बोध्येत्याह - भावेति॥ ३४॥
146119
146120 नियताकारकलनां देशकालादियन्त्रिताम्।

विषयोन्मुखतां यातामिन्द्रियव्रातवेधिताम् ॥ ३५ ॥

इत्थमाकारो गौः इत्थमश्व इत्यादिनियताकारकलनाम् ॥ ३५ ॥

सोणुः पश्यत्यथाकारमात्मनः स्वात्मकल्पितम् ।
हस्तपादादिकलितं चित्तादिकलनान्वितम् ॥ ३६ ॥

एवं संपद्यते ब्रह्मा तथा संपद्यते हरिः ।
एवं संपद्यते रुद्र एवं संपद्यते कृमिः ॥ ३७ ॥

ईश्वराणामपि देहादिकल्पना संकल्पवशादेव किं पुनरन्येषामित्याह - एवमिति
॥ ३७ ॥

न च किंचन संपन्नं यथास्थितमवस्थितम् ।
शून्यं शून्ये विलसितं ज्ञप्तिर्ज्ञप्तौ विजृम्भिता ॥ ३८ ॥

सर्वापीयं कल्पना अमृतैवेत्याह - न चेति ॥ ३८ ॥

प्रतिकन्दः शरीराणां बीजं त्रैलोक्यवीरुधाम् ।
सर्गार्गलप्रदो मुक्तेः संसारासारवारिदः ॥ ३९ ॥

व्यष्टिवत्समष्ट्यात्मा विराडप्येवमेव कल्पनयोत्थित इत्याह - प्रतिकन्द इति ।
व्यष्टिशरीराणां प्रतिनियतः कन्दः प्रतिकन्दः । तदाधारत्रैलोक्यवल्लीनामपि स एव
बीजम् । मुक्तेद्वरिषु प्रतिबन्धकविषयसर्गार्गलप्रदः ॥ ३९ ॥

कारणं सर्वकार्याणां नेता कालक्रियादिषु ।
सर्वाद्यः पुरुषः स्वैरमित्यनुत्थित उत्थितः ॥ ४० ॥

नास्य भूतमयो देहो नास्यास्थीनि शरीरके ।
अवष्टब्धुमसौ मुष्ट्या शक्यते न तु केनचित् ॥ ४१ ॥

भूतमयदेहाद्यभावादेव मुष्ट्या अवष्टब्धुं न शक्यते ॥ ४१ ॥

तेनाब्धिमेघसंग्रामसिंहगर्जोर्जितात्मना ।
अपि सुप्तनरेणेव नूनं मौनवता स्थितम् ॥ ४२ ॥

यथा स्वप्ने अब्धीनां मेघानां संग्रामाणां सिंहानां च
गर्जाभिर्महाध्वनिभिश्चोर्जितात्मनापि सुप्तनरेण वस्तुतो मौनवता निःशब्दमेव
स्थितं तथा तेनापि विराजा निष्प्रपञ्चे स्वरूपे स्थितमित्यर्थः ॥ ४२ ॥

जाग्रतः स्वप्नसंदृष्टयोद्घारभटिवेदनम् ।
यथा स्मृतिगतं नासन्न सत्तद्वदसौ स्थितः ॥ ४३ ॥

स्वप्नसंदृष्टानां योद्धॄणामारभटी कोलाहलस्तद्वेदनं जाग्रतः
स्मृतिपथं गतं सद्यथा नात्यन्तासन्नापि सत्तथा प्रपञ्चोऽयं स्थितः ॥ ४३ ॥

बहुयोजनलक्षौघप्रमाणोऽपि बृहद्वपुः ।
परमाण्वन्तरे भाति लोमान्तस्थजगत्नयः ॥ ४४ ॥

मायामात्रत्वादेवासंभावितसहस्रमप्यत्र संभवत्येवेत्याशयेनाह - बह्विति
॥ ४४ ॥

146173 कुलशैलगुणैघात्मा जगद्वृन्दात्मकोऽपि सन् ।
146174 कुलायं धानकामात्रमपि नो पूरयत्यजः ॥ ४५ ॥
146175
146176 धानका वटबीजादयस्तावन्मात्रमपि कुलायं नीडच्छिद्रं न पूरयति ॥ ४५ ॥
146177
146178 जगत्कोटिशताभोगविस्तीर्णोऽप्यणुमात्रकम् ।
146179 वस्तुतो व्याप्तवानेष न देशं स्वप्नशैलवत् ॥ ४६ ॥
146180
146181 स्वयंभूरेष कथितो विराडेष स उच्यते ।
146182 ब्रह्माण्डात्मा जगद्देहो वस्तुतस्तु नभोमयः ॥ ४७ ॥
146183
146184 सनातन इति प्रोक्तो रुद्र इत्यपि संज्ञितः ।
146185 इन्द्रोपेन्द्रमरुन्मेघशैलजालादिदेहकः ॥ ४८ ॥
146186
146187 तेजोणुमात्रं प्रथितं चेतित्वात्प्रथमं वपुः ।
146188 क्रमेण स्फारसंवित्तिर्महानहमिति स्थितः ॥ ४९ ॥
146189
146190 उक्तं सर्वं संक्षिप्याह - तेज इति । अणुमात्रं तेजः परमसूक्ष्मा चित् प्रथमं
146191 चेतित्वाच्चित्तवपुः संपन्नम् । स एव चित्तात्मा वर्णितक्रमेण स्फारसंवित्तिः सन्
146192 महान्ब्रह्माण्डात्मैवाहमिति स्थित इति संग्रह इत्यर्थः ॥ ४९ ॥
146193
146194 स्पन्दसंवेदनात्तेन स्पन्द इत्यनुभूयते ।
146195 यः स एवानिलाभिख्यो वातस्कन्धात्मना स्थितः ॥ ५० ॥
146196
146197 अत एव तदीयाः प्राणा वातस्कन्धास्तदुपसंहारेण
146198 वातस्कन्धभङ्गोऽस्माभिर्वर्णित इत्याशयेनाह - स्पन्देति ॥ ५० ॥
146199
146200 प्राणापानपरिस्पन्दो वेदनादनुभूयते ।
146201 तेन यः सोऽयमाकाशे वातस्कन्ध उदाहृतः ॥ ५१ ॥
146202
146203 स्पन्दसंवेदनात्तेन प्राणस्पन्द इत्यनुभूयते इति यदुक्तं तत्सर्वानुभवप्रसिद्ध्या
146204 समर्थयति - प्राणेति । सोऽयंन् तदीयप्राणस्पन्दस्तद्ब्रह्माण्डाकाशे
146205 वातस्कन्धोऽस्माभिरुदाहृतः प्रागित्यर्थः ॥ ५१ ॥
146206
146207 चित्ताद्ये कल्पितास्तेन बालेनेव पिशाचिकाः ।
146208 तेजःकणा असन्तोऽपि त एतेधिष्ण्यतां गताः ॥ ५२ ॥
146209
146210 धिष्ण्यतां सूर्यचन्द्रग्रहनक्षत्रादिस्थानताम् ॥ ५२ ॥
146211
146212 प्राणापानपरावर्तदोला तदुदरोदिता ।
146213 वातस्कन्धाभिधां धत्ते जगत्तद्धृदयं महत् ॥ ५३ ॥
146214
146215 हृदयं उदरान्तर्गतमांसास्थ्यादीति यावत् ॥ ५३ ॥
146216
146217 प्रतिच्छन्दशरीराणां प्रथमं बीजमेष सः ।
146218 जगद्गतानां सर्वेषामकल्पव्यवहारिणाम् ॥ ५४ ॥
146219
146220 प्रतिच्छन्दाः प्रतिजीवभेदमिच्छास्तत्कल्पितव्यष्टिशरीराणाम् ॥ ५४ ॥
146221
146222 प्रतिच्छन्द्याद्यदेतस्मादुत्थिता जगदात्मना ।
146223 देहास्तदा यथा बाह्यमन्तरेषां तथा स्थितम् ॥ ५५ ॥
146224

146225 परिच्छाकल्पिता देहाः कथमेतस्य व्यष्टितां गतास्तत्राह - प्रतिच्छन्द्यादिति।
146226 प्रतिच्छन्दं भवः प्रतिच्छन्द्यः। दिगादित्वाद्यत्।
146227 यद्यस्माद्धेतोस्तथाविधादस्मादुत्थिताः प्रतिपुरुषदेहं तत्तद्वासनामया
146228 ब्रह्माण्डा एवमेव बोध्या इत्याह - देहा इति॥ ५५॥
146229
146230 चितिस्तस्याद्यबीजस्य पूर्वमेव यथोदिता।
146231 तथैवाद्यपि जीवेऽन्तस्तथोदेति तदीहिता॥ ५६॥
146232
146233 तत्रैकबीजान्तरन्तर्यथा वृक्षबीजपरम्परा क्रमेणोद्भवदर्शनादस्तीति
146234 संभाव्यते तद्वदत्रापि संभाव्यतामित्यभिप्रेत्याह - चितिरिति। तदीहिता तेन
146235 हिरण्यगर्भेण वाञ्छिता॥ ५६॥
146236
146237 श्लेष्मपित्तानिलास्तस्य चन्द्रार्कपवनास्त्रयः।
146238 ग्रहा ऋक्षगणास्तस्य प्राणाष्ठीवनसीकराः॥ ५७॥
146239
146240 तस्य हिरण्यगर्भस्य श्लेष्मपित्तादयः। अत एवान्येऽपि ग्रहा ऋक्षगणा
146241 नक्षत्रसमूहाश्च प्राणेन यदा ष्ठीवनं निष्ठीवनं तत्सीकराः श्लेष्मविन्दव
146242 इत्यर्थः॥ ५७॥
146243
146244 तस्यास्थीन्यद्रिजालानि मेदसो जातिका घनाः।
146245 शिरः पादौ त्वचं देहान्पश्यामस्तस्य नो वयम्॥ ५८॥
146246
146247 मेदसो जातय इव जातिकाः। घना मेघाः। तस्य शिरः ऊर्ध्वकपालं पादौ
146248 अधःकपालं त्वचं ब्रह्माण्डावरणानि च वयं दूरस्थत्वान्न पश्यामः॥ ५८॥
146249
146250 वपुर्विराजो जगदङ्ग विद्धि संकल्परूपस्य हि कल्पनात्म।
146251 आकाशशैलावनिसागरादि सर्वं चिदाकाशमतः प्रशान्तम्॥ ५९॥
146252
146253 हे अङ्ग इदं जगद्विराजो वपुर्विद्धि। तच्च संकल्परूपस्य कल्पनात्मनः
146254 कल्पनामात्रं न बाह्यसाधनसाध्यं न च मनःकल्पनात्मकं किंचिद्वास्तवं
146255 संभवति। अतो हेतोराकाशशैलादि सर्वं प्रशान्तं चिदाकाशमेवेत्यर्थः॥ ५९॥
146256
146257 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वाणप्रकरणे उत्तरार्धे
146258 पाषाणो० विराडात्मवर्णनं नाम त्रिसप्ततितमः सर्गः॥ ७३॥
146259
146260 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
146261 विराडात्मवर्णनं नाम त्रिसप्ततितमः सर्गः॥ ७३॥
146262
146263 चतुःसप्ततितमः सर्गः ७४
146264
146265 श्रीवसिष्ठ उवाच।
146266
146267 तस्मिन्कल्पे तु संकल्पे तस्य यद्वपुरास्थितम्।
146268 शृणु तत्र व्यवस्थेयंन् विचित्राचारहारिणी॥ १॥
146269
146270 यान्यङ्गान्यस्य येलोका ये चास्यावयवाः पृथक्।
146271 यथा चान्तःस्थितोऽस्यैव तत्सर्वमिह वर्ण्यते॥
146272
146273 इदानीं किमङ्गं तस्य भूर्लोकः किं स्वर्गः किं रसातलम् इति विभागप्रश्नस्य
146274 कथं वा सोऽन्तरे तस्य इति प्रश्नस्य कथं वा तन्मनोमात्रं निराकृतिरिदं स्थितम्
146275 इति प्रश्नस्य च विस्तरेणोत्तरं वक्तुं श्रोतारमवधापयति - तस्मिन्निति।
146276 तस्मिञ्शिलोदरदृष्टे ब्रह्मकल्पात्मके तस्य विराजः संकल्पे यद्ब्रह्माण्डात्मकं

146277 वपुः स्थितं तस्य इयं वक्ष्यमाणा जन्मकर्मावयवादिविभागव्यवस्था तां
146278 शृण्वित्यर्थः ॥ १ ॥
146279
146280 परमं यच्चिदाकाशं तद्विराडात्मनो वपुः ।
146281 आद्यन्तमध्यरहितं लघु त्वस्य वपुर्जगत् ॥ २ ॥
146282
146283 तत्रास्य ब्रह्मैव वास्तवं स्वरूपं प्राथमिकमकल्पितं वपुर्विराट्शरीरं तु
146284 काल्पनिकं तद्दृष्ट्या अतिलघुतरमित्याह - परममिति ॥ २ ॥
146285
146286 संकल्परहितो ब्रह्मा स्वाण्डं संकल्पनात्मकम् ।
146287 वपुषः परितो भास्वत्पश्यत्याकाशमेव तत् ॥ ३ ॥
146288
146289 चिदाकाशमाद्यन्तमध्यरहितं तस्य स्वरूपमिति कथं ज्ञायते तत्राह -
146290 संकल्परहित इति । यतः स ब्रह्मा स्वसंकल्पवपुषो ब्रह्माण्डाद्बहिः संकल्परहितो
146291 निःसंकल्पसाक्षिचिदाकाशमात्रः सन् संकल्पनात्मकं स्वाण्डं पश्यति तच्च
146292 परमार्थदृशा आकाशमेवेत्यर्थः ॥ ३ ॥
146293
146294 ब्रह्मात्मैव स्वसंकल्पं स्वमण्डमकरोद्द्विधा ।
146295 तैजसं तैजसाकारः पुष्टः पुष्टं विहंगवत् ॥ ४ ॥
146296
146297 तत्रादौ तस्य शिरः पादौ नितम्बं च वक्तुं
146298 ब्रह्माण्डस्योर्ध्वाधःकपालद्वयविभागमाह - ब्रह्मेति । तैजसं हिरण्मयम् ।
146299 तैजसाकारो लिङ्गसमष्ट्यभिमानिचिदाकारः ॥ ४ ॥
146300
146301 अण्डस्यैकं नभो दूरं गतं संबुद्धवानसौ ।
146302 भुवोधःसंस्थितं भागं व्यतिरिक्तं च नात्मना ॥ ५ ॥
146303
146304 दूरमूर्ध्वं गतमिति संबुद्धवान् संकल्पितवान् एवमात्मना न
146305 व्यतिरिक्तमभिन्नं च संकल्पितवान् । मध्यमात्रखं आन्तराकाशमध्यमिति यावत् ॥
146306 ५ ॥
146307
146308 ब्रह्माण्डभाग ऊर्ध्वस्थो विराजः शिर उच्यते ।
146309 अधोभागोऽस्य पादाख्यो नितम्बो मध्यमात्रखम् ॥ ६ ॥
146310
146311 दूरं विमुक्तयोः संधिः खण्डयोरिति विस्तृता ।
146312 अनन्ता व्योमलेखा सा श्यामा शून्येति दृश्यते ॥ ७ ॥
146313
146314 खण्डयोः कपालयोः संधिरन्तरालं शून्या श्यामा व्योमलेखेति दृश्यते जनैः
146315 ॥ ७ ॥
146316
146317 द्यौस्तालु विपुलं तस्य तारारुधिरबिन्दवः ।
146318 संविद्वातलवा देहे सुरासुरनरादयः ॥ ८ ॥
146319
146320 तालु काकुदम् । संविद्वातयोर्बुद्धिप्राणयोर्लवा वृत्तिभेदाः ॥ ८ ॥
146321
146322 देहान्तः कृमयस्तस्य भूतप्रेतपिशाचकाः ।
146323 लोकान्तराणि रन्ध्राणि सुषिराण्यस्य देहके ॥ ९ ॥
146324
146325 भूतप्रेतपिशाचका रक्तमांसाद्यशुचिलोलुपत्वात्कृमयः । लोकान्तराणि
146326 सूर्यचन्द्रादिलोकाश्चक्षुरादिरन्ध्राणि । याम्यादिनारकलोकान्तराण्यधःसुषिराणि ॥ ९
146327 ।।
146328

146329 ब्रह्माण्डखण्डमस्याधो विस्तृतं पादयोस्तलम् |
146330 जानुमण्डलरन्ध्राणि पातालकुहराण्यधः ‖ १० ‖
146331
146332 जलैश्चलचलायन्ती सुषिरानेकरन्ध्रिका |
146333 भूरन्तर्मण्डली लोला समुद्रद्वीपवेष्टना ‖ ११ ‖
146334
146335 चलचलायन्ती चञ्चलायमाना | अन्तर्मण्डली मध्यस्थवस्तिजघननितम्बमण्डली |
146336 लोला कामरोगजरामरणादिव्याकुला | समुद्रा द्वीपाश्च
146337 वेष्टनान्यन्तरीयकाञ्चीकटिसूत्रप्रायाणि यस्याः ‖ ११ ‖
146338
146339 जलैर्गुडगुडायन्त्यो नद्यो नाड्यः सरिद्रसः |
146340 जम्बूद्वीपं हृदम्भोजमस्य हेमाद्रिकर्णिकम् ‖ १२ ‖
146341
146342 नाड्यः शिराः | सरित्पदेन तज्जलं लक्ष्यते | तच्छिरान्तर्गतो रसः ‖ १२ ‖
146343
146344 कुक्षयः ककुभः शून्या यकृत्प्लीहादयोऽचलाः |
146345 मृद्व्यः स्निग्धाः पटाकारा मेदसो जालिका घनाः ‖ १३ ‖
146346
146347 कुक्षयः कुक्षिभागाः | ककुभो दिशः | यकृत्प्लीहादयो मांसभेदाः | मेदसो
146348 धातुविशेषस्य जालिकाः पटल्यः | घना मेघाः ‖ १३ ‖
146349
146350 चन्द्रार्कौ लोचने तस्य ब्रह्मलोको मुखं स्मृतम् |
146351 तेजः सोमोऽस्य कथितः श्लेष्मा प्रालेयपर्वतः ‖ १४ ‖
146352
146353 तेजो रेतः ‖ १४ ‖
146354
146355 अग्निलोकस्तथैर्वाग्निः पित्तमस्यातिदुःसहम् |
146356 वातस्कन्धमहावाताः प्राणापाना हृदि स्थिताः ‖ १५ ‖
146357
146358 वातस्कन्धेषु प्रसिद्धा आवहनिवहप्रवहादयो महावाताः ‖ १५ ‖
146359
146360 कल्पद्रुमवनान्यस्य सर्पवृन्दानि च क्वचित् |
146361 लोमजालान्यनन्तानि वनान्युपवनानि च ‖ १६ ‖
146362
146363 कल्पद्रुमवनान्यन्यानि वनान्युपवनानि च क्वचित्पातालादौ प्रसिद्धानि
146364 सर्पवृन्दानि चास्य लोमजालानि ‖ १६ ‖
146365
146366 ऊर्ध्वं ब्रह्माण्डखण्डं तु समस्तमुरुमस्तकम् |
146367 ब्रह्माण्डप्रान्तरन्ध्रार्चिरस्य दीप्ता शिखोत्थिता ‖ १७ ‖
146368
146369 ब्रह्माण्डस्योर्ध्वप्रान्ते रन्ध्रे प्रसिद्धं दीप्तार्चिः अथ यदतः परो
146370 दिवोज्योतिर्दीप्यते विश्वतःपृष्ठेषु सर्वतःपृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु इति
146371 शुर्तिप्रसिद्धमर्चिर्ज्योतिरस्य दीप्ता शिखा चूडा ‖ १७ ‖
146372
146373 स्वयमेष मनस्तेन मनो नास्योपयुज्यते |
146374 आत्मैव भोक्तृतामेति किल कस्य कथं कुतः ‖ १८ ‖
146375
146376 एवंविधविराड्देहकल्पनाकर्तुस्तस्य किं मनः कानीन्द्रियाणि तत्राह - स्वयमिति |
146377 यतः सर्वमनःसमष्ट्यात्मा एष विधाता स्वयं मन एव | अतोऽस्य सर्वकल्पनासु
146378 अन्यन्मनो नोपयुज्यते अनवस्थाप्रसङ्गात् | यदि तु आत्मैव स्वभोगाय भोग्यवर्ग
146379 कल्पयतीति मन्येथास्तन्न | तस्य कूटस्थाद्वयस्वभावत्वादित्याह - आत्मैवेति |
146380 किंवृत्तानि प्राग्वत् ‖ १८ ‖

स्वयमेवेन्द्रियाण्येष तेनान्यत्रास्तिता कृता।
यतस्तत्कल्पनामात्रमेवेन्द्रियगणः किल॥ १९॥

एवमिन्द्रियाण्यप्यस्य नोपयुज्यन्ते। यतस्तेनान्यत्र अस्मदादिषु इन्द्रियाणामस्तिता
कृता कल्पिता। न चेन्द्रियकल्पनायामिन्द्रियाणां निमित्तत्वमनवस्थप्रसङ्गादिति
भावः॥ १९॥

अवयवावयविनोरिवेहेन्द्रियचित्तयोः।
न मनागपि भेदोऽस्ति चैक्यमेकशरीरयोः॥ २०॥

कथं तर्हि इन्द्रियमनसोर्भेदव्यवहारस्तत्राह - अवयवेति। अस्ति चैक्यं
मनःप्रवृत्त्यन्वयव्यतिरेकदर्शनादिन्द्रियप्रवृत्तेः स्वप्ने मनसैव
सर्वेन्द्रियकार्यनिर्वाहदर्शनाच्चेति भावः॥ २०॥

तस्य तान्येव कार्याणि जगतां यानि कानिचित्।
संकल्पा एव पुंवृत्त्या चलन्त्यारूपितद्विताः॥ २१॥

अत एव च सर्वजगत्क्रियास्तत्क्रिया एवेति न क्रियापि पृथक् प्रष्टव्येत्याह - तस्येति।
यतस्तदीयसंकल्प एव पुंवृत्त्या व्यष्टिसर्वपुरुषवेषेण आरूपितद्विता
आरोपितभेदाः सर्वव्यवहारात्मना चलन्ति॥ २१॥

जागते तस्य विज्ञेये नान्येऽस्य मृतिजन्मनी।
स एवेदं जगत्यस्मत्संकल्पात्मास्य नेतरत्॥ २२॥

तर्ह्यस्मदादिमरणजन्मनी तस्यैव मरणं जन्म च स्याताम्। तथा च
द्विपरार्धकालजीवनप्रसिद्धिविरोधस्तत्राह - जागते इति। समष्टिजगन्मृतिजन्मनी
एव तस्य मरणजन्मनी विज्ञेये। अन्ये अस्मदादिव्यष्टिमात्रप्रसिद्धे तु अस्य न। यत
इदं जगति समष्टिरूपं स एव अस्मत्संकल्पात्मापि स एव नेतरन्नेतर इत्यर्थः।
अथवा तस्य विधातुः सह सिद्धं चतुष्टयमिति पुराणदर्शितन्यायेन तत्त्वज्ञतया
जीवन्मुक्तस्य द्विपरार्धान्तादिकालप्रसिद्धे अस्मदादिव्यष्टिषु प्रसिद्धे च
मृतिजन्मनी जागते जगदन्तर्गतास्मद्दृष्टिकल्पिते एव नान्ये। स्वदृष्टिसिद्धे
इत्यर्थः। यतः स एवेदं जगति प्रसिद्धः। अस्मत्संकल्पात्मा व्यवहारोऽप्यस्यैव
रूपं नेतरदित्यर्थः। अथवा इन्द्रियमनांसीव तस्य मृतिजन्मनी अपि जागते
अस्मदादिप्रसिद्धे विज्ञेये नान्ये। पृथक्कल्पे तस्य संकल्पात्मापि जगति प्रसिद्धः
अस्मत्संकल्पात्मैव। यतः स एवेदं सर्वं नेतरत्किंचिदस्तीत्यर्थः॥ २२॥

तत्सत्तया जगत्सत्ता तन्मृत्यैव जगन्मृतम्।
यादृशी स्पन्दमरुतोः सत्तिका तादृशी तयोः॥ २३॥

कुतः स एवेदं तत्राह - तत्सत्तयेति। तस्य च जगतश्च तयोः॥ २३॥

जगद्विराजोः सत्तिका पवनस्पन्दयोरिव।
जगद्यत्स विराडेव यो विराट् तज्जगत्स्मृतम्॥ २४॥

जगद्ब्रह्मा विराट् चेति शब्दाः पर्यायवाचकाः।
संकल्पमात्रमेवैते शुद्धचिद्व्योमरूपिणः॥ २५॥

एते विराड्जगती शुद्धचिन्मात्ररूपिणः परमात्मनो बहु स्यां प्रजायेय
इत्यादिश्रुतिप्रसिद्धं संकल्पमात्रं तच्च निःस्वरूपमिति ब्रह्मैव परिशिष्टमिति
निष्कर्षः॥ २५॥

146433 श्रीराम उवाच।
146434
146435 संकल्पात्स विराडेव खमेवाकृतिमागतम्।
146436 अस्तु नाम स्वदेहान्तः कथं ब्रह्मैव तिष्ठति॥ २६॥
146437
146438 अस्तु नामेत्यन्तेन उक्तमभ्युपगम्य श्रीरामः शिष्टं प्रश्नं स्मारयति -
146439 स्वदेहान्तरिति। कथं वा सोऽन्तरे तस्य स्वस्यैव वपुषः स्थितः इति प्रश्नस्योत्तरं
146440 वदेत्यर्थः॥ २६॥
146441
146442 श्रीवसिष्ठ उवाच।
146443
146444 यथा ध्यानेन देहान्तस्तिष्ठसि त्वं यथा स्थितम्।
146445 तथास्ते निजदेहेऽन्तः संकल्पात्मा पितामहः॥ २७॥
146446
146447 ध्यानेनेति। मानसपूजायां हि हृदि कल्पिते रत्नमण्डपे देवमुपवेश्य स्वं
146448 तत्समीपस्थं छत्रचामरव्यजनदर्पणताम्बूलादिभिर्देवं परिचरन्तं
146449 यथानुभवसि तद्वदित्यर्थः॥ २७॥
146450
146451 नृणां तथा च मुख्यानां जीवो ब्रह्मपुरोदरे।
146452 उत्पत्तिपुत्रिकादेहः प्रतिबिम्बोपमोऽस्ति सः॥ २८॥
146453
146454 किं च स्थूलदेहात्मकस्य स्वस्यान्तर्हृदयपुण्डरीके लिङ्गदेहात्मकस्य
146455 स्वस्यावस्थानं सर्वेषां विवेकिनामनुभवसिद्धमित्याह - नृणामिति।
146456 मुख्यानां विवेकिनाम्। ब्रह्मपुरे शरीरे। उत्पत्तिपुत्रिका
146457 औत्पत्तिकतत्तद्देहप्रतिमाकारः। अत एव दर्पणान्तर्गतप्रतिबिम्बोपमः॥ २८॥
146458
146459 यत्र त्वमपि देहान्तः कर्तुं शक्तोऽस्यलं स्थितम्।
146460 संकल्पात्मा विभुस्तत्र ब्रह्मा किं न करिष्यति॥ २९॥
146461
146462 कैमुतिकन्यायेन धातुः स्वदेहान्तःस्थितिरित्याह - यत्रेति॥ २९॥
146463
146464 बीजान्तः स्थावरं ह्यास्ते पदार्थे यत्र जंगमः।
146465 किं नास्ते तत्र देहेऽन्तर्निजचित्कल्पनात्मिका॥ ३०॥
146466
146467 यत्र स्थावराणामपि स्वबीजदेहान्तरवस्थानसामर्थ्यं
146468 तत्राविर्भूतसर्वशक्तिकचित्कल्पनात्मिकायाश्चतुर्मुखमूर्तेः किं तद्वाच्यमित्याह
146469 - बीजेति॥ ३०॥
146470
146471 साकारो गगनात्मास्तु निराकारं खनस्तु वा।
146472 आस्ते बहिरथान्तश्च भिन्ने बाह्यान्तरे बहिः॥ ३१॥
146473
146474 तथा च ब्रह्मा ब्रह्माण्डाकरेण साकारः संश्चिद्गगनात्मा वाऽस्तु
146475 मनःसमष्टिरूपेण निराकारं खमस्तु वा पक्षद्वयेऽपि बहिरन्तश्चास्ते
146476 बाह्यान्तरभावकल्पने एव परं स्वरूपाद्बहिः स्थिते भिन्ने न त्वत्कल्पितमान्तरं
146477 सद्रूपं भिद्यत इत्यर्थः॥ ३१॥
146478
146479 आत्मारामः काष्ठमौनी न जडोऽपि दृषज्जडः।
146480 अहंत्वमित्यादिमयो विराडात्मनि तिष्ठति॥ ३२॥
146481
146482 स तर्हि बहिरन्तश्च कीदृशः कीदृशे स्वभावे परमार्थतस्तिष्ठति तदाह -
146483 आत्माराम इति। स बहिर्विराड् ब्रह्माण्डात्मा अन्तस्तु
146484 अहंत्वमित्यादिव्यष्टिसमष्टिभूतभौतिकमयः। आत्मनि तु आत्मारामः सन्

काष्ठमौनी निर्वाक्यो दृषदिव जडः स्थितः सोऽपि चिदेकरसत्वान्न जडस्तिष्ठति ॥ ३२ ॥

आवेष्टितोज्झितलतातृणदारुपिंवदुच्छब्दमम्बुरयवच्च विरोपिताङ्गः।
नानाविधेऽपि विहरन्नपि कार्यजाले तज्ज्ञः शिलाजठरशान्तमनस्क एव ॥ ३३ ॥

न केवलं विराज एवेदृशी स्थितिः किंतु तत्वज्ञानां सर्वेषामिति दर्शयितुं तामेव
दृष्टान्तैर्विशदयति - आवेष्टितेति। तज्ज्ञस्तत्त्ववित् परापराधसहिष्णुताविषये
यथा लता तृणं कक्षः दारु पुमान्प्रतिमा वा पूर्वं रज्ज्वादिना आवेष्टिता बद्धा
पश्चादुज्झिता मुक्ता अपि न कुप्यन्ति किंतु निःशब्दं तूष्णीमेवासते। यथा अम्बुरयो
जलप्रवाहो निरुद्धो विरोपिताङ्गः शातितावयवोऽपि प्राक्तनस्थितिं न जहाति तथा
नानाविधे कार्यजाले विहरन्नपि शिलाजठरमिव शान्तमनस्कः पूर्वस्थित्यैवास्ते न
मनागपि क्रोधहर्षविषादादिना विक्रियत इत्यर्थः ॥ ३३ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मोक्षोपायेषु निर्वाणप्रकरणे उ० पाषा०
विराडात्मवर्णनं नाम चतुःसप्ततितमः सर्गः ॥ ७४ ॥

इति श्रीवासिष्ठमहारामायणे तात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
विराडात्मवर्णनं नाम चतुःसप्ततितमः सर्गः ॥ ७४ ॥

## पञ्चसप्ततितमः सर्गः ७५

श्रीवसिष्ठ उवाच।

अथाग्रस्थब्रह्मलोको ब्रह्मणि ध्यानशालिनि।
निक्षिप्ताक्षः शनैर्दिक्षु दृष्टवानहमग्रतः ॥ १ ॥

विधातरि ध्यानपरे द्वादशादित्यसंभवः।
दहन्नत्र जगत्सर्वं वर्ण्यते प्रलयानलः ॥

प्रश्नप्रासङ्गिकं समाप्य प्रस्तुताख्यायिकामेवानुसंधत्ते - अथेत्यादिना।
अथ सेन्द्रादिनगरमेरुशिखरपत्तनदर्शनानन्तरं शनैर्दिक्षु निक्षिप्ताक्षोऽहं
द्वितीयमर्कं दृष्टवानिति परेणान्वयः ॥ १ ॥

द्वितीयमर्कं मध्याह्ने पश्चादभ्युदितं स्फुटम्।
दिग्दाहमिव दिग्वक्त्रे वनदाहमिवाचले ॥ २ ॥

मध्याह्न इत्यनेन मध्यदिश्यर्के सतीति गम्यते। दिक्षु दिशां मध्ये। अग्रतः
पुरोगते पश्चाद्दिग्वक्त्रे पश्चिमदिङ्मुखे मध्यस्थादर्काद्द्वितीयमर्कमहं
दृष्टवानिति संबन्धः ॥ २ ॥।

वह्निलोकमिव व्योम्नि वडवाग्निमिवार्णवे।
ततोऽपश्यमहं दीप्तं सूर्यंन् नैर्ऋतदिङ्मुखे ॥ ३ ॥

दिग्दाहमिवेत्यादीनि सर्वेषामर्काणामुपमानानि प्रत्येकं योज्यानि ॥ ३ ॥

सूर्यं याम्ये ककुब्भागे सूर्यमग्निककुब्मुखे।
सूर्यमैन्द्रककुब्भागे सूर्यमीशानदिङ्मुखे ॥ ४ ॥

कुबेरककुभि सूर्यं सूर्यंन् वायव्यदिक्तटे।
सूर्यं वरुणदिग्भागे तेन विस्मयवानहम् ॥ ५ ॥

146537 वरुणदिग्भागे इति प्रागुपक्रान्तानुवादः ॥ ५ ॥
146538
146539 यावद्विचारयाम्याशु विधिवैधुर्यमाकुलम् ।
146540 उदभूद्भूतलात्तावदर्क और्व इवार्णवात् ॥ ६ ॥
146541
146542 विधिवैधुर्यं दैवप्रातिकूल्यम् ॥ ६ ॥
146543
146544 एकादशेऽखिलार्काणां प्रतिबिम्बमिवोत्थितम् ।
146545 उदभूत्त्रयमर्काणामन्तरे दिग्गणाम्बरे ॥ ७ ॥
146546
146547 दिग्गणानामन्तरे आन्तरालिके मध्यमाम्बरे । असमर्थसमासश्छाब्दसः ।
146548 मध्यमस्यैकादशत्वोक्तेरूर्ध्वमप्यन्योऽर्क उदित इति गम्यते । तेषु मध्यमे
146549 एकादशेऽर्के दर्पणोदरे प्रतिबिम्बमिवान्यदर्काणां त्रयमुदभूत् । तद्धि
146550 मध्यतनादित्यान्तरुदितमर्कत्रयात्मकमेकं ब्रह्मविष्णुशिवात्मकस्यैकस्य
146551 रुद्रस्येदं रौद्रं वपुः । तदेव तत्सवितुर्वरेण्यं भर्गः इति गायत्र्या प्रकाश्यते ।
146552 अत एव हि तच्चतुर्विंशत्यक्षरप्रसूतचतुर्विंशतिसहस्रश्लोकात्मकस्य
146553 पूर्वरामायणस्य सारसंग्रहात्मके आदित्यहृदये ब्रह्मेशानाच्युतेशाय रौद्राय
146554 वपुषे नमः इति त्रिमूर्तिमूलपरशिवत्वेन नमस्कृतमिति तदेव
146555 सर्वोत्कृष्टमुपास्यमित्याहुः ॥ ७ ॥
146556
146557 तद्धि रौद्रं वपुस्तत्र तन्मध्ये लोचनत्रयम् ।
146558 तद्द्वादशपरीमाणं दीप्तं वृन्दं विवस्वताम् ॥ ८ ॥
146559
146560 तत्र तस्मिन्नर्के तन्मध्ये रौद्रवपुर्मध्ये लोचनत्रयं तद्रौद्रं वपुरेव
146561 द्वादशादित्याकारपरिमाणं विवस्वतां वृन्दं भूत्वा ददाहेति परेणान्वयः ॥ ८
146562 ॥
146563
146564 सर्वदिक्कं ददाहोच्चैः शुष्कं वनमिवानलः ।
146565 अथोदभूज्जगत्खण्डशोषणग्रीष्मवासरः ॥ ९ ॥
146566
146567 अनग्नग्निदाहो द्रागदृश्योल्मुकगुल्मकः ।
146568 अनग्निनाग्निदाहेन तेन तामरसेक्षण ॥ १० ॥
146569
146570 अदृश्योल्मुकगुल्मकत्वादेव प्रसिद्धाग्निरहितः सौराग्निदाह उदभूत् ॥ १० ॥
146571
146572 अङ्गानि दावदग्धानि खिन्नानीव ममाभवन् ।
146573 प्रदेशं तमथ त्यक्त्वा दूरमारूढवानहम् ॥ ११ ॥
146574
146575 दूरमूर्ध्वं नभ आरूढवान् ॥ ११ ॥
146576
146577 दृढहस्ततलाघातहतकन्दुकवन्नभः ।
146578 अपश्यं गगनस्थोऽहमुदितं चण्डतेजसम् ॥ १२ ॥
146579
146580 तपन्तं द्वादशादित्यगणं दिक्षु दशस्वपि ।
146581 बृहत्तत्र सतारावज्वालेव भगणं चलम् ॥ १३ ॥
146582
146583 तत्र तासु दिक्षु सतारं नभः अवति व्याप्नोतीति सतारावा ज्वालेवावर्ताकारेण चलं
146584 भगणं नक्षत्रचक्रमपश्यमित्यर्थः ॥ १३ ॥
146585
146586 महाकुहकुहाशब्दं क्वथत्सप्ताब्धिडम्बरम् ।
146587 सज्वालोल्मुकनीरन्ध्रलोकान्तरपुरान्तरम् ॥ १४ ॥
146588

146589 इत ऊर्ध्व सार्धद्वादशश्लोकेषु स्थितानि सर्वाणि द्वितीयान्तपदानि
146590 प्रस्तुतद्वादशादित्यगणविशेषणत्वेन योज्यानि। कुहकुहेति क्वथनशब्दानुकरणम्॥
146591 १४॥
146592
146593 ज्वालाघनपटाटोपसिन्दुरीकृतपर्वतम्।
146594 दीप्यमानमहागारस्थिरविद्युत्ककुत्पटम्॥ १५॥
146595
146596 ज्वालालक्षणैर्घनैः पटाटोपैः रक्तवस्त्राडम्बरैः सिन्दूरवर्णाः कृताः
146597 पर्वता येन। दीप्यमानेषु महतां लोकपालानामगारेषु स्थिरविद्युत इव ककुत्पटा
146598 येन॥ १५॥
146599
146600 स्फुरत्कटकटाटोपचटत्पत्तनमण्डलम्।
146601 विदधद्भूतलोद्भूतधूमदण्डैः शिलाघनैः॥ १६॥
146602
146603 धूमदण्डैर्दन्डाकारैर्धूमैः। काचस्तम्भसहस्राढ्यं भुवनस्थानलक्षणं
146604 मण्डपं विदधत् कुर्वाणमिवेति संबन्धः॥ १६॥
146605
146606 काचस्तम्भसहस्राढ्यं भुवनस्थानमण्डपम्।
146607 क्वथद्भूतमहाभूतताराक्रन्दातिघर्घरम्॥ १७॥
146608
146609 भूतानां प्राणिनां महाभूतानां पृथिव्यादीनां च तारैः आक्रन्दै
146610 रोदनैरतिघर्घरम्॥ १७॥
146611
146612 भूतलोकपुरापातस्फुटच्चटचटोद्भटम्।
146613 ताराविशरणोद्घातघृष्टरत्नधरातलम्॥ १८॥
146614
146615 भूतानां प्राणिनां लोकानां भुवनानां तदन्तर्गतपुराणां च आसमन्तात्पातैः
146616 स्फुटतां पदार्थानां चटचटाशब्दैरुद्भटम्। ताराणामश्विन्यादीनां
146617 विशरणैः पतनैर्ये उद्घाता अभिघातास्तैर्घृष्टरत्नं धरातलं येन॥ १८॥
146618
146619 सर्वस्थलालयचलद्दह्यमानजनव्रजम्।
146620 क्षीणाक्रन्दक्वथद्भूतगणदुर्वासदिक्तटम्॥ १९॥
146621
146622 सर्वेषु स्थलेषु आलयेषु स्वस्वगृहेषु चलन्तो धावन्तो दह्यमाना जनव्रजा येन।
146623 क्षीणैर्मृतैराक्रन्दपूर्वकं क्वथद्भिः पच्यमानैश्च भूतगणैः
146624 प्राणिनिकायैर्दुर्वासानि दुर्गन्धीनि वासायोग्यानि च दिक्तटानि येन॥ १९॥
146625
146626 उत्तप्ताम्बूदराखिन्नजलेचरमहार्णवम्।
146627 सर्वदिक्कानलप्लोषक्षीणाक्रन्दपुरान्तरम्॥ २०॥
146628
146629 सर्वदिग्व्यापिना अनलेन प्लोषो दाहस्तेन क्षीणाक्रन्दं शान्तरोदनं
146630 पुरान्तरमन्यन्नगरं येन॥ २०॥
146631
146632 विदलद्दग्धदिग्दन्तिदन्तोत्तम्भितभूधरम्।
146633 धराधरदीरन्ध्रधूममण्डलकुण्डलम्॥ २१॥
146634
146635 विदलतां विशीर्यमाणानां दग्धानां च दिग्दन्तिनां दन्तैरेव
146636 स्तम्भप्रायैरुत्तम्भिता अधोभागे धारिता दिगन्तभूधरा येन॥ २१॥
146637
146638 पतत्पर्वतनिष्पिष्टप्लुष्टपत्तनमण्डलम्।
146639 पचत्पचपचाशब्दशब्दिताद्रीन्द्रकुञ्जरम्॥ २२॥
146640

146641 तापतप्तोन्नमद्भूतज्वरितार्णवपर्वतम् ।
146642 हृदयस्फोटनिःसारपतद्विद्याधराङ्गनम् ॥ २३ ॥
146643
146644 तापतप्तैरुन्नमद्भिरुच्छलद्भिश्च भूतैर्ज्वरिताः संजातज्वरा इवार्णवाः
146645 पर्वताश्च येन ॥ २३ ॥
146646
146647 आक्रन्दरोदनश्रान्तमूर्धनिःसरणामरम् ।
146648 नागलोकज्वलज्ज्वालापातालोत्तप्तभूतलम् ॥ २४ ॥
146649
146650 केचिदाक्रान्दै रोदनैश्च श्रान्ताः केचिद्योगबलेन ब्रह्मरन्ध्रं विदार्य
146651 मूर्धनिःसरणा अत एवामराश्च योगिनो यत्र ॥ २४ ॥
146652
146653 शुष्कार्णवसदापक्वविवर्तोग्रजलेचरम् ।
146654 और्वेणाबिन्धनाभावात्प्रोड्डीयेव सहस्रधा ॥ २५ ॥
146655
146656 शुष्केष्वर्णवेषु सदा पक्वाश्चिरक्वथिता विवर्तैः परिवर्तनैरुग्रा भीषणाश्च
146657 नक्रादिजलेचरा येन ॥ २५ ॥
146658
146659 गतेन नृत्यतोत्थाय गृहीतगगनाङ्गनम् ।
146660 अथोदभूज्ज्वलज्ज्वालाकिंशुकांशुकशोभितः ॥ २६ ॥
146661
146662 गृहीत गगनाङ्गना अप्सरसो येन । एवं द्वादशादित्यगणमुपवर्ण्य
146663 तदुद्भवं प्रलयाग्निं नटत्वेन वर्णयति - अथेत्यादिना नट इत्यन्तेन ।
146664 ज्वलज्ज्वालारूपैः किंशुकपुष्पवर्णैरंशुकैर्वस्त्रैः शोभितः ॥ २६ ॥
146665
146666 ताण्डवायेव कल्पाग्निस्तरलोल्मुकमाल्यवान् ।
146667 तारं पटपटाटोपी रटद्भट इवोद्भटः ॥ २७ ॥
146668
146669 तरलैरुल्मुकैर्माल्यवान् । तारं विस्फुटद्भिर्वेण्वादिभिः पटपटाटोपी
146670 नानावाद्याडम्बरवान् ॥ २७ ॥
146671
146672 ज्वालोद्भुजो धूमकचो जगज्जीर्णकुटीनटः ।
146673 जज्वलुर्वनजालानि पुराणि नगराणि च ॥ २८ ॥
146674
146675 मण्डलद्वीपदुर्गाणि जङ्गलानि स्थलानि च ।
146676 सर्वखानि महाकाशमाशा दश दिवः शिरः ॥ २९ ॥
146677
146678 सर्वाणि खानि पातालादिभूच्छिद्राणि । भूमेरूर्ध्वं महाकाशम् । दिवो द्युलोकस्य
146679 शिर ऊर्ध्वभागः ॥ २९ ॥
146680
146681 श्वभ्ररूपारघट्टाट्टपट्टनोदारदिक्तटः ।
146682 शृङ्गाणि सिद्धवृन्दानि गिरयः सागरार्णवाः ॥ ३० ॥
146683
146684 तथा क्वचित् श्वभ्ररूपः क्वचिदारघट्टयन्त्रैरट्टैः सौधैश्च युक्तैः
146685 पट्टनैश्चोदारो रम्यो दिक्तटः । तथा पर्वतशृङ्गाणि तत्रत्यसिद्धवृन्दानि
146686 तद्युक्ता गिरयः सागरार्णवाः ॥ ३० ॥
146687
146688 सरः सरस्यः सरितो देवासुरनरोरगाः ।
146689 आशाः शनशनाशब्दैः पुरुषैश्च शिवार्चिषाम् ॥ ३१ ॥
146690
146691 आशा दिशश्च तदन्तर्गतपुरुषैः सह शिवार्चिषां रुद्रनेत्रज्वालानां
146692 शनशनाशब्दैर्जज्वलुरिति पूर्वत्रान्वयः ॥ ३१ ॥

आसन्क्ष्वेडाकुराक्षस्यो ज्वालाजालोज्ज्वलोर्ध्वजाः।
भमद्भमिति भांकारैर्भीषणैर्भूरिभस्मभिः॥ ३२॥

किंचैता आशाः ज्वालाजालैरुज्ज्वला ऊर्ध्वजाः केशा यासां तथाविधाः सत्यो
भमद्भमिति प्रसिद्धैर्भीषणैर्भांकारध्वनिभिर्भूरिभस्मभिश्च परस्परं
विक्षिपन्त्यः। क्ष्वेडा परस्परधूलिजलादिप्रक्षेपैः क्रीडातत्पराः कुराक्षस्य इव आसन्
॥ ३२॥

ज्वालाः श्वभ्राद्रिभूमीनां गुहाभ्यः परिनिर्ययुः।
ज्वालोदरस्था अरुणाः समस्ता भूतजातयः॥ ३३॥

स्थलपद्मोदरालीनामाजहुः श्रियमश्रियः।
सद्यो निःसृतरक्ताभैः सिन्दूराम्भोदसुन्दरैः॥ ३४॥

किंचाश्रियः संपद्रहितास्ता दिशः सद्यो निःसृतरक्ताभैर्ज्वालाजालैः
स्थलपद्मोदरालीनां श्रियमाजह्नुर्जगृहुः॥ ३४॥

धगद्धगिति गायद्भिर्ज्वालाजालैर्जगद्गतैः।
आसीद्रक्तांशुकैः कीर्णं संध्याभ्रैरिव वा नभः॥ ३५॥

वेत्युत्प्रेक्षयोर्विकल्पः॥ ३५॥

उत्फुल्लकिंशुकवनैरुड्डीनैरिव वाऽऽवृतम्।
और्वेण चावृता आसन्फुल्लाशोकवना इव॥ ३६॥

आवृतं नभ इत्यनुषज्जते। वाशब्दः प्राग्वत्। एवमौर्वेणाग्निना संवृता
अर्णवाश्च फुल्लान्यशोकवनानि येषु तथाविधा इव स्थलाब्जैर्वलिता इव राविराः
बालरविनिकरव्याप्ता इव वा आसन्निति परेण सहान्वयः। रवीन् रान्ति स्वीकुर्वन्तीति रविराः
त एव राविरा इति स्वार्थिकोऽण् कल्प्यः॥ ३६॥

इव स्थलाब्जवलिता राविरा इव चार्णवाः।
नानावर्णज्वलज्ज्वालाधूमविन्यासबन्धवान्॥ ३७॥

तथा वनेषु यौवनं युवभावो यस्य तथाविधः पावको दवाग्निश्चित्रलिखितं
सौधतलाश्रयं मिथ्यावह्निं प्रौढं यथार्थभूतमाधातुं संपादयितुमिव
नानावर्णानां ज्वलज्ज्वालानां धूमविन्यासानां च बन्धः प्रबन्धः श्रेणिरिति
यावत् तद्वान्सन् फणासहस्रप्रबन्धवाननन्तः सर्पराडिव विनिआस विस्तृतो
नितरामासीदित्युत्तरेण सहान्वयः॥ ३७॥

रूढं वह्निमिवाधातुं चित्रसौधलताश्रयम्।
अनन्त इव विन्यास वनयौवनपावकः॥ ३८॥

उदयास्तमयादिभ्यो विन्ध्यो विधुरतामगात्।
अङ्गारकल्पविटपैर्ज्वालावनविवल्गनैः॥ ३९॥

किं च सूर्योदयास्तमयादिवैधुर्याकाङ्क्षिणो विन्ध्यस्य मनोरथस्तदा फलित
इत्याशयेनाह - उदयास्तमयादिभ्य इत्यर्धेन। अङ्गारेत्याद्युत्तरान्वयि॥ ३९॥

शनैरीषदिव क्षुब्धैः सह्योऽसह्यत्वमाययौ।
मध्यमध्यकचत्काष्र्यभ्रमद्धूमालिमालितम्॥ ४०॥

146745 सह्यो दक्षिणदेशे प्रसिद्धो गिरिः। मध्ये मध्ये कचत्प्रकाशमानं कार्ष्ण्यं
146746 येषां तथाविधैर्धूमलक्षणैरलिभिर्मीलितम्।
146747 वलद्भिर्धूमसंवलितैर्ज्वालालक्षणैरब्जैर्मलिनं चेति नभसः सरःसाम्योपपत्तिः
146748 ॥ ४० ॥
146749
146750 वलज्ज्वालाब्जमलिनं दृष्टं सर इवाम्बरम्।
146751 खेऽद्रीणां शिखरे व्योम्नि शिखाशिखरशेखराः ॥ ४१ ॥
146752
146753 शिखाशिखरशेखराः ज्वालाग्रोत्तंसाः। केतुर्धूमावर्तो धूमकेत्वाख्य
146754 उत्पातविशेषश्च कुन्तलस्थानीयो यासां तथाविधा नाशा मृत्यवस्तल्लक्षणा
146755 नर्तक्यः अद्रीणां खे विवराकाशे शिखरे शृङ्गदेशे व्योम्नि
146756 अद्यादिशून्यशुद्धाकाशप्रदेशे च नीरसाः करुणादिरसशून्याः सत्यो ननृतुः ॥
146757 ४१ ॥
146758
146759 ननृतुर्नीरसा नशनर्तक्यः केतुकुन्तलाः।
146760 तलाहितानलज्वाला ब्रह्माण्डोर्ध्वकपाटभूः ॥ ४२ ॥
146761
146762 ब्रह्माण्डस्य ऊर्ध्वभाग एव कपाटं पिधानं यस्यास्तथाविधा भूः
146763 पृथिवीतले अधोभागे आहिता अनलज्वाला यस्यास्तथाविधा सती तर्जनैर्व्यथनैः
146764 प्रोत्पतन्ति भूतानि प्राणिनिकाया एव धानौघा भर्ज्यमानबीजस्थानीया यस्यां
146765 तथाविधा भ्राष्ट्रभूमिका अम्बरीषखर्परमभूदिति शेषः ॥ ४२ ॥
146766
146767 तर्जनप्रोत्पतद्भूतधानौघा भ्राष्ट्रभूमिका।
146768 क्वणच्छ्रेणी मृज्जलाग्निर्नानावर्णाननारुणा ॥ ४३ ॥
146769
146770 किंचेयं पृथिवी तदा प्रलयकाले सोरस्ताडनं रुदन्त्या जगल्लक्ष्म्या हृदि प्रसक्ते
146771 द्वीपभेदभिन्नाभिर्मृद्भिः सप्तसमुद्रादिलक्षणैर्जलैस्तद्व्याप्तैरग्निभिश्च
146772 काचतत्कान्तिकाञ्चनस्थानीयैर्नानावर्णैराननैर्मुखैर्मणिभिश्च अरुणा सौवर्णी
146773 क्वणत्कङ्कणश्रेणीवाभवत् ॥ ४३ ॥
146774
146775 हृत्प्रकोष्ठे जगल्लक्ष्म्याः सौवर्णीवाभवत्तदा।
146776 शैलाश्चटचटास्फोटैर्वृक्षाः कटकटारवैः ॥ ४४ ॥
146777
146778 विदलनं विशीर्णताम् ॥ ४४ ॥
146779
146780 देशा हलहलोल्लासैरलं विदलनं ययुः।
146781 अब्धयः क्वथिताकारः फेनिलोल्लासमांसलाः ॥ ४५ ॥
146782
146783 एवमब्धयोऽपि परस्परं मुखमाहृत्य रुरुदुरिवेत्युत्प्रेक्षते - अब्धय इति।
146784 अर्कमुखे सूर्यप्रतिबिम्बतिलके स्वमुखे ॥ ४५ ॥
146785
146786 वीचीकरतलाघातांश्चक्रुरर्कमुखे मुखे।
146787 अन्योन्यवेल्लितोल्लोलभूतलाकारपर्वतम् ॥ ४६ ॥
146788
146789 किं च तेऽब्धयः अन्योन्यं वेल्लितं संबद्धं तरङ्गास्फालनैरुल्लोलमत एव
146790 क्रमेण मृत्पाषाणादीनां समीकरणाद्भूतलाकारतां प्राप्तं पर्वतं जहुः
146791 आजह्रुः। आहारतां निन्युरग्रसन्निति यावत्। प्रकुपिता जडा मूर्खा मृत्तिकाशिलादि
146792 ग्रसन्तीति प्रसिद्धम् ॥ ४६ ॥
146793
146794 जहुर्वीचीकरैर्देहे जडाः [प्राप्तमिति शेषः। देहे प्राप्तं
146795 पर्वतमित्यन्वयः |] प्रकुपिता इव।
146796 आशाकाशाशिनामेषां गुहागुहगुहारवान् ॥ ४७ ॥

146797
146798 क्वचिच्च एषामब्धीनां गुहामुखनिर्गतान् गुहागुहेत्येवंरूपानारवान् प्रदेशान्तरे
146799 ज्वालातटस्य गिरितटस्य संघट्टनादुद्भूत आग्नेयः शब्दः पपाठ | गुरूक्तान्
146800 शब्दान् शिष्यध्वनिरिव अनुचकारेत्यर्थः || ४७ ||
146801
146802 पपाठ शब्द आग्नेयो ज्वालातटतटोद्भवः |
146803 लोकपालपुरापातत्प्ताङ्गाराद्रिभित्तयः || ४८ ||
146804
146805 किं च तदा प्रलयाम्बुदानां निवृत्तेरुन्मुक्तवृष्टयो दशापि दिशो
146806 लोकपालपुराणां दशानामप्यापातैर्दाहे प्रतप्ताङ्गारभरिताद्रिभित्तयः सत्य
146807 उन्मत्तवृत्तयो भूत्वा वैवश्यं व्याकुलतां ययुः || ४८ ||
146808
146809 दिशो दशापि वैवश्यं ययुरुन्मत्तवृत्तयः |
146810 काञ्चनद्रवसाद्रीन्द्रद्रुमागारगुहागृहः || ४९ ||
146811
146812 काञ्चनद्रवभूतः अद्रिभिः प्रत्यन्तपर्वतैरिन्द्रेण द्रुमैरागारैर्गुहागृहैश्च
146813 सहितश्चार्वाकृतिर्मेरुपर्वतः शनैः आतपे हिम इव विलीन आसीत् || ४९ ||
146814
146815 शनैश्चार्वाकृतिर्मेरुरासीद्धिम इवातपे |
146816 क्षणेनैवानलात्तस्माद्धिमवाञ्जतुवद्द्रुतः || ५० ||
146817
146818 जतुवल्लाक्षावद्द्रुतो विलीनः || ५० ||
146819
146820 सर्वान्तःशीतलः शुद्धो दुर्जनादिव सज्जनः |
146821 तस्यामपि दशायां तु मलयोऽमलसौरभः || ५१ ||
146822
146823 अमलसौरभः सुगन्धिरिति यावत् || ५१ ||
146824
146825 आसीत्यजत्युदारात्मा न नाशेऽप्युत्तमं गुणम् |
146826 नश्यन्नपि महान् ह्लादं न खेदं संप्रयच्छति || ५२ ||
146827
146828 महानुत्तमपुरुषः || ५२ ||
146829
146830 चन्दनं दग्धमप्यासीदानन्दायैव जीवताम् |
146831 न कदाचन संयाति वस्तूत्तममवस्तुताम् || ५३ ||
146832
146833 प्रलयानलनिर्दग्धमपि हेम न नष्टवत् |
146834 द्वे हेमनभसी तस्मिन्न नष्टे प्रलयानले || ५४ ||
146835
146836 दग्धं दह्यमानमपि | न नष्टवत् न ननाश || ५४ ||
146837
146838 तयोरेव वपुः श्लाघ्यं सर्वनाशेऽप्यनाशयोः |
146839 नभो विभुतयाऽनाशि हेमाकृष्टतयाक्षयम् || ५५ ||
146840
146841 अविनाशिवस्त्वेव सार इति श्लाघ्यमित्याशयेनाह - तयोरेवेति | आकृष्टतया
146842 दोषेभ्यो निष्कृष्य शोधिततया || ५५ ||
146843
146844 सत्त्वमेकं सुखं मन्ये न रजो न च वा तमः |
146845 चलदुच्चवनानीव विकीर्णाङ्गारवर्षणः || ५६ ||
146846
146847 अत एव रजस्तमोनिष्कृष्टं शुद्धं सत्त्वमेव ब्रह्मसुखाभिव्यक्त्या सुखसारं
146848 मन्ये | दग्ध अब्दा अम्बुदलक्षणा अद्रयो येन तथाविधो महाधूमज्वालः

146849 प्रलयवह्निलक्षणो वारिदः | चलन्ति उच्चानि वनानीव नभसि स्फुरन्
146850 विकीर्णाङ्गास्त्वर्षणोऽभूदित्यन्वयः || ५६ ||
146851
146852 दग्धाब्दाद्रिर्महाधूमज्वालोऽभूद्वह्निवारिदः |
146853 रसविस्मरणार्तानां शून्यानां स्फारदेहिनाम् || ५७ ||
146854
146855 रसानां जलानामात्यन्तिकशोषे संस्कारमात्रस्याप्यनवशेषाद्विस्मरणेनार्तानां
146856 शून्यानां स्फारदेहिनां अण्डजादिचतुर्विधभूतानाम् || ५७ ||
146857
146858 शुष्काणां व्योमविटपिपत्राणां पात्ररूपिणाम् |
146859 वारिदानां सवारीणां दग्धानां प्रलयार्चिषा || ५८ ||
146860
146861 तथा शुष्काणां दग्धानामत एव व्योमविटपिपत्रपात्रप्रायाणां शून्यतां
146862 गतानामिति यावत् | अथवा सवारीणामार्द्राणामेव प्रलयार्चिषा बलाद्दग्धानां
146863 वारिदानां हे अङ्ग ज्ञानाग्निदग्धानां ज्ञस्य तत्त्वविदो दोषाणामिव भस्मापि
146864 क्वचिन्न दृष्टमित्यन्वयः || ५८ ||
146865
146866 ज्ञस्येवाङ्ग न दोषाणां दृष्टं भस्मापि न क्वचित् |
146867 न लङ्घयति कैलासं यावदुल्लसितोऽनलः || ५९ ||
146868
146869 न लङ्घयति नाभिभवति | कैलासं रजतगिरिम् || ५९ ||
146870
146871 तावत्तं कल्पकुपितो रुद्रो नेत्राग्निनादहत् |
146872 दाहस्फुटद्द्रुमस्थूलशिलाचटचटारवाः || ६० ||
146873
146874 तं कैलासम् | कल्पार्थं कुपितः | तद्दाहमपि वर्णयति - दाहेत्यादिना || ६० ||
146875
146876 लकुटोपललोष्टौघैरयुध्यन्तेव भूभृतः |
146877 ज्वालाघनघटाटोपसावतंसचलान्तिमाः || ६१ ||
146878
146879 भूभृतस्तत्पादपर्वताः | किं च ते भूभृतो ज्वालाघनघटाटोपैः सावतंसानि
146880 चलानि अन्तिमानि अग्रशिखराणि येषां तथाविधाः सन्तो व्योम्नि विकसन्ति स्थूलानां
146881 पद्मानां वनानि येषां तथाविधा इव बभूवुः || ६१ ||
146882
146883 बभूवुर्व्योमविकसत्स्थूलपद्मवना इव |
146884 सर्गः कदाचिदेवासीदित्यगात्स्मरणीयताम् || ६२ ||
146885
146886 कल्पान्तः स्मारयन्मूर्खानगादस्मरणीयताम् |
146887 तापोपतापपरमाः परमारणतत्पराः |
146888 वह्नयोऽपह्नवं चक्रुर्जगतामसतामिव || ६३ ||
146889
146890 अस्मरणीयतां प्रत्यक्षतामिति यावत् | मूर्खान् स्मारयन् जगदसारतामिति शेषः |
146891 असतामलीकानां शशशृङ्गादीनामिवापह्नवमत्यन्तासत्त्वम् || ६३ ||
146892
146893 ववुरशनिनिपातपीडिताङ्गा कचदनलोल्मुकगुल्ममण्डलाभाः |
146894 प्रलयसमयवायवोऽनलान्ताद्दलदमरावलयो लये लिहन्तः || ६४ ||
146895
146896 लये तमिन्प्रलये प्रवृत्ते अशनिनिपातैः पीडितानि प्राण्यङ्गानि यैः
146897 कचद्भिरनलोल्मुकैर्गुल्मानि क्षुद्रवृक्षास्तन्मण्डलाभाः दलन्त्यो विशीर्यमाणा
146898 अमरावलयो यैस्तथाविधाः प्रलयसमयवायवः अनलान्ताद्वह्निमध्यान्निर्गत्य
146899 दिशो लिहन्त इव ववुः || ६४ ||
146900

146901 व्यालोलस्फुटदानलद्रुमवनप्रोद्भूतभस्मोष्मणा
146902 दत्ताभ्राभ्रमदुल्मुकाहतिवहत्साङ्गारगौरार्चिषः।
146903 भ्रश्यत्पावकशृङ्गमध्यविलसज्ज्वालावलीश्यामला
146904 निःशेषाग्निनिकाशसुस्तवजवा वेगेन वाता ववुः॥ ६५॥
146905
146906 पुनः कीदृशास्ते वाता ववुस्तदाह - व्यालोलेति। व्यालोला ज्वालापल्लवकोटिभिः
146907 स्फुटन्तो विकसन्तश्च ये आनला वह्निमया द्रुमास्तेषां वनेषूद्भूतेन
146908 भस्मसहितेनोष्मणा दत्ताभ्रा व्याप्ताकाशा उत्पादितमेघा वा। तथा
146909 भ्रमतामुल्मुकानामाहतिभिरभिघातैर्वहन्त्यो निःसरन्त्यः साङ्गारा गौराः पीता
146910 अर्चिषो येभ्यः। तथा भ्रश्यन्तीभिः कज्जलात्मना स्खलन्तीभिः
146911 पावकशृङ्गप्रायशिखामध्ये विलसन्तीभिः सकज्जलज्वालावलीभिः श्यामलाः।
146912 तथा निःशेषे जगत्यग्नीनां निकाशेन प्रदीपनेन सुस्तवः स्तुतियोग्यो जवो येषां
146913 तथाविधा वाता वेगेन ववुरित्यर्थः॥ ६५॥
146914
146915 इत्यार्षे श्रीवासिष्ठमहा० वा० दे० मो० निर्वाणप्रकरणे उ० पाषा०
146916 महाकल्पान्ताग्निवर्णनं नाम पञ्चसप्ततितमः सर्गः॥ ७५॥
146917
146918 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
146919 महाकल्पान्ताग्निवर्णनं नाम पञ्चसप्ततितमः सर्गः॥ ७५॥
146920
146921 षट्सप्ततितमः सर्गः ७६
146922
146923 श्रीवसिष्ठ उवाच।
146924
146925 अथ कल्पान्तमरुति वहत्यवधुताचले।
146926 बलेनाम्भोधिकल्लोलैर्नभस्यावर्तकारिणि॥ १॥
146927
146928 ऊर्ध्ववारुणदिग्भागे पुष्करावर्तकोदयः।
146929 वर्ण्यतेऽत्रोपसंहारोऽप्यग्नेराग्नेयदिङ्मुखे॥
146930
146931 अवधूताचले कम्पितशैले॥ १॥
146932
146933 समुद्रेषु विमुद्रेषु मर्यादोल्लङ्घने घने।
146934 अधनेषु धनिष्वम्बुदारिद्र्योपद्रवद्रुते॥ २॥
146935
146936 विमुद्रेषु विगतचिह्नेषु धनिष्वधनेषु सत्सु। अम्बुदारिद्र्योपद्रवेण
146937 जलाभावदुःखेन द्रुते पलायिते इति घनेन भूतलेन वा संबन्धः॥ २॥
146938
146939 भूतले भूतलेशांशवर्जिते वह्निभर्जिते।
146940 पातालमपि पाताले गते किमपि कालतः॥ ३॥
146941
146942 किमपि प्रसिद्धविलक्षणं पातालं विनाशमिति यावत्॥ ३॥
146943
146944 दिवि वा विद्यमानायां विशीर्णे सर्गवर्गके।
146945 लोके व्योमगतालोके शोकौकसि ककुब्गणे॥ ४॥
146946
146947 दिविद्युलोके व्योमगत आलोकः सौरोऽग्निस्तद्भावापन्ने॥ ४॥
146948
146949 कुतोऽप्याकाशकुहराद्दृप्तदैत्यगणा इव।
146950 पुष्करावर्तका मेघाश्चक्रुर्गुलुगुलारवम्॥ ५॥
146951
146952 गुलुगुलेति आरवानुकरणं प्रथमं दूरादतारश्रवणाभिप्रायम्॥ ५॥

146953
146954 ब्रह्मविस्फोटितस्वाण्डकुड्यविस्फोटनोद्धटम् ।
146955 अन्योन्यास्फालनोत्फालमत्तार्णवरवाविलम् ॥ ६ ॥
146956
146957 सामीप्यक्रमेण तस्यैव तारतां दर्शयति - ब्रह्मेति । ब्रह्मणा विस्फोटिते स्वाण्डे
146958 कुड्यस्य ब्रह्माण्डभित्तेर्विस्फोटन इव उद्धटं तारतमम् ।
146959 अन्योन्याअस्फालनैरुत्फाला उच्छलन्तो ये मत्ता अर्णवास्तदीयरववदाविलम् ।
146960 शब्दसमकालप्रसृतस्य दिग्जलमालिन्यस्योपमेयोपमानयोः
146961 शब्देऽप्यारोपादाविलत्वोक्तिः ॥ ६ ॥
146962
146963 लोकार्णवपुरोद्गीर्णघनकोलाहलोल्बणम् ।
146964 एतत्कुलाचलस्कन्धबद्धोग्ररवघर्घरम् ॥ ७ ॥
146965
146966 लोकेष्वर्णवेषु पुरेषु च प्रतिध्वन्यात्मना उद्गीर्णैर्घनैः कोलहलैरतितारैरुल्बणं
146967 दुःसहम् । एतैः प्राग्वर्णितैः
146968 कुलाचलस्कन्धसंबद्धैर्दाहोग्ररवैर्मिश्रणाद्घर्घरम् ॥ ७ ॥
146969
146970 ब्रह्माण्डशङ्खजठरपूरणावर्तमन्थरम् ।
146971 स्वर्लोकरोदःपातालतलतोऽतिसगुल्मकम् ॥ ८ ॥
146972
146973 ब्रह्माण्डशङ्खजठरपूरणे सति तद्भित्तिप्रतिरोधप्रयुक्तैः
146974 परावर्तनैर्मन्थरं निबिडतरमत एव स्वर्लोकात् रोदोभ्यां पातालतलतश्च
146975 अतिशयेन सगुल्मकं शाखाप्रकरसहितमिव ॥ ८ ॥
146976
146977 समस्तदूरदिग्भित्तिहेलाहेलनघर्षुलम् ।
146978 महाप्रलयसंपन्नापानकापानतर्षुलम् ॥ ९ ॥
146979
146980 समस्तदूराणामपाराणां दिग्भित्तीनां हेलया हेलनेन विलेखनेन घर्षुलं
146981 कषणशीलमिव । महाप्रलये सप्ताब्धीनां मिश्रणेन क्वथनात्संपन्नस्य
146982 पानकस्य आपाने आस्वादने तर्षुलं पिपासितमिव ॥ ९ ॥
146983
146984 प्रसृतप्रलयाख्येन्द्रमत्तैरावतबृंहितम् ।
146985 आकल्पक्षुब्धमेघाब्धिनिर्ह्रादमिव संभृतम् ॥ १० ॥
146986
146987 प्रसृतस्य विजयार्थं निर्गतस्य प्रलयाख्यस्य इन्द्रस्य मत्तैरावतगर्जितमिव स्थितम् ।
146988 आकल्पं प्रलयपर्यन्तं चिरनिरोधेन क्षुब्धानां मेघलक्षणानामब्धीनां
146989 संभृतं चिरसंचितं युगपन्निःसृतं निर्ह्रादमिव स्थितम् ॥ १० ॥
146990
146991 महाप्रलयसंक्षुब्धक्षीरोदमथनारवम् ।
146992 ब्रह्माण्डोग्रारघट्टेऽस्मिन्वार्यन्त्रमिव सारवम् ॥ ११ ॥
146993
146994 आरघट्टे घटीयन्त्रस्थाने प्रसिद्धं वार्यन्त्रं जलधारायन्त्रमिव ॥ ११ ॥
146995
146996 अथास्मिन्सति कल्पाग्नौ स्थितिमेति कथं घनः ।
146997 इति विस्मितवानस्मि दृशं दिग्नवकेऽत्यजम् ॥ १२ ॥
146998
146999 अथ वर्णितमेघध्वनिश्रवणानन्तरं विस्मितमाश्चर्यबुद्धिस्तद्वानहं
147000 संजातोऽस्मि तत अधोदिगतिरिक्ते दिङ्नवके दृशं दृष्टिं मेघान्वेषणाय
147001 अत्यजंन् विमुक्तवान् । व्यापारितवानस्मीति यावत् ॥ १२ ॥
147002
147003 यावन्न क्वचिदेवात्र पश्याम्याशासु केवलम् ।
147004 तरन्ति तरलास्फालमुल्मुकाशनिवृष्टयः ॥ १३ ॥

147005
147006 न पश्यामि। मेघानिति शेषः। किं तर्हि दृष्टवानसि तत्राह - केवलमिति। तरन्ति
147007 आकाशे प्लवन्ते॥ १३॥
147008
147009 तेन ज्वलनतापेन बहुयोजनकोटिषु।
147010 पदार्था भस्मतां यान्ति दूरे दिक्षु दशस्वपि॥ १४॥
147011
147012 अनन्तरं क्षणाद्व्योम्नि दूरेऽहमनुभूतवान्।
147013 ऊर्ध्वतः शीतलं वातमधस्तादनलोपमम्॥ १५॥
147014
147015 अनुभूतवान् त्वगिन्द्रियेण॥ १५॥
147016
147017 एतावति नभोमार्गे दूरे कल्पाम्बुदाः स्थिताः।
147018 यस्तेषामग्नितापानां विषयो न च सद्दृशाम्॥ १६॥
147019
147020 एतावति दूरे यो यावान् दूरप्रदेशस्तेषामधःप्रवृत्तानामग्नितापानां सतां तत्र
147021 जीवतां प्राणिनां दृशां च विषयो न॥ १६॥
147022
147023 अथ वारुणदिग्भागादाययौ कल्पमारुतः।
147024 यस्मिंस्तृणवदुह्यन्ते विन्ध्यमेरुहिमालयाः॥ १७॥
147025
147026 तेन ज्वालाचलाः प्रान्तोड्डीनाङ्गारविहंगमाः।
147027 लोलोल्मुकवनाक्रान्ता जग्मुरग्निदिशं द्रुतम्॥ १८॥
147028
147029 ज्वालालक्षणा अचलाः पर्वताः। पर्वतत्वोपपादके द्वे विशेषणे॥ १८॥
147030
147031 संध्याभ्रसदृशाकारास्तेरुरङ्गारवारिदाः।
147032 भ्रेमुर्भस्मभराभ्राणि पूताङ्गाररजांसि खे॥ १९॥
147033
147034 भस्मभरलक्षणान्यब्धारणादभ्राणि पूतानां वायुशोधितानामङ्गाराणां
147035 रजांसि॥ १९॥
147036
147037 स ज्वालविलसद्वातो दुष्टोऽनलदृशं व्रजन्।
147038 हेमाद्रीणां सपक्षाणामनीकं द्रवतामिव॥ २०॥
147039
147040 धराद्रिमण्डलाभोगे सौम्याङ्गारभरात्मनि।
147041 ज्वालावलिगणे जाते भाते तेजसि भास्वताम्॥ २१॥
147042
147043 सौम्या निर्ज्वाला येऽङ्गारास्तद्भरात्मके जाते सतीति शेषः। भास्वतां
147044 द्वादशादित्यानां तेजसि रजोपगमाद्भाते स्फुटे सति॥ २१॥
147045
147046 अर्णविष्वनलार्णस्सु क्वथनोत्फालवारिषु।
147047 वनेष्वस्मृतपर्णेषु दीप्ताग्नितरुधारिषु॥ २२॥
147048
147049 क्वचिदनला एवार्णांसि येषां तथाविधेषु क्वचित्क्वथनोत्फालवारिषु। सर्वेषां
147050 सप्तम्यन्तानां कल्पाम्बुदगण आययावित्यग्रेणान्वयः॥ २२॥
147051
147052 ब्रह्मलोकस्थनाथेषु ब्रह्मलोकपुरेषु च।
147053 साङ्गनाबालवृद्धेषु दग्धेषु निपतत्सु खम्॥ २३॥
147054
147055 कल्पान्तानलपद्मिन्या ब्रह्माग्रावसरोवरे।
147056 ज्वालापल्लवशालिन्याः सबीजायाः सटोल्मुकैः॥ २४॥

सटाः केसरसदृशाः स्फुलिङ्गास्तद्घटितैरुल्मुकैः सबीजायाः
ज्वालापल्लवशालिन्याः ब्रह्मलक्षणे अग्रावे निरुपले सरोवरे प्ररूढायाः
कल्पान्तानलरूपायाः पद्मिन्याः अनिलात्मसु विष्टम्भकवायुप्रधानेषु नागेषु
नगेषु च सर्पपर्वतरूपेषु मूलेषु आपातालमङ्गारकर्दमे निमग्नेषु सत्सु इति
द्वयोरन्वयः ॥ २४ ॥

अनिलात्मसु मूलेषु नागेषु च नगेषु च ।
आपातालं निमग्नेषु महत्यङ्गारकर्दमे ॥ २५ ॥

उष्ट्रसैन्यमिवालक्ष्य गतिमन्निकटं नभः ।
आययावञ्जनश्यामः कल्पाम्बुदगणः क्वणन् ॥ २६ ॥

चर्मभस्त्राभिरुष्ट्राणां पश्चिमदेशे जलवाहकत्वप्रसिद्धेस्तत्सैन्यमिव ॥ २६ ॥

स्थिरकल्पानलज्वालातुल्यविद्युन्मयाचलः ।
एककोणकविश्रान्तसप्तार्णवपयोभरः ॥ २७ ॥

तमेव वर्णयति - स्थिरेत्यादिना ॥ २७ ॥

भित्तिभासुरनीहारभारनिर्वारदिक्तटः ।
ब्रह्माण्डकुड्यनिबिडमण्डलास्फोटपण्डितः ॥ २८ ॥

भित्तिवत् भासुरैर्नीहारभारैर्निर्वाराणि निरवकाशानि दिक्तटानि यस्य ।
ब्रह्माण्डकुड्यपर्यन्तं निबिडस्य भूमण्डलस्यास्फोटे विदलने पण्डितः ।
ब्रह्माण्डकुड्यपर्यन्तं स्वयं निबिडः सन् नभोमण्डलास्फोटनप्राये ध्वनौ
पण्डित इति वा ॥ २८ ॥

कल्पान्तक्षुभिताम्भोधिर्वर्तुलावर्तवृत्तिमान् ।
तडिज्जलचरः सारनिर्ह्रादः खमिवागतः ॥ २९ ॥

कल्पान्तक्षुभिताम्भोधिरेव खमायातोऽधिरूढ इवेत्युत्प्रेक्षा ।
वर्तुलावर्तस्थानीयद्वादशाअदित्यपरिवेषवृत्तिमानित्यादिविशेषणान्युत्##-

मृतो दग्धो निशानाथस्ततो द्विगुणशीतलः ।
अन्यमाकारमाश्रित्य परं लोकमिवागतः ॥ ३० ॥

उत्प्रेक्षान्तरं दर्शयति - मृत इति । परमत्यूर्ध्वदेशरूपं
परलोकमाश्रित्यान्यमाकारमम्बुदगणलक्षणं शरीरान्तरमागत इव ॥ ३० ॥

हेमसंभाररूपेण हिमालयमिवाखिलम् ।
जाड्यस्तम्भितनिःशेषजलकाष्ठाचलं दधत् ॥ ३१ ॥

हेमसंभारसदृशविद्युद्गणरूपेण जाड्येन स्तम्भितानि निःशेषाणि समस्तानि
जलानि काष्ठमिवाचलानि येन तथाविधं हिमालयं दधत् धारयन्निव ॥ ३१ ॥

अथ ब्रह्माण्डविस्फोटकठिनं घटिताम्बरम् ।
प्राग्द्रुतोद्भटतौषारकाष्ठा वृष्टिः पपात ह ॥ ३२ ॥

अथ मेघागमनानन्तरं वृष्टिः पपात । कथम् । ब्रह्माण्डस्य
विस्फोटवत्कठिनवज्रनिर्घातेन घटितमम्बरं यस्मिन्कर्मणि तथाविधा प्राक्
प्रथमं द्रुता उद्भटनीहाराः [मूलस्थतौषारपदस्यैवायमर्थः । अथवा

147109 एतदनुरोधेन मूले उद्धटनीहारेति पाठो वा कल्प्यः ॥ काष्ठा दिशो यस्याम् ॥ ३२
147110 । ।
147111
147112 अग्निदाहवनाकाशविद्युदुन्मेषभीषणा ।
147113 चटद्धडगडास्फोटस्फुटद्ब्रह्माण्डमण्डला ॥ ३३ ॥
147114
147115 तां वृष्टिमेव वर्णयति - अग्निदाहेत्यादिना । अग्निदाहसदृशेन
147116 वनाकाशयोर्विद्युदुन्मेषेण भीषणा । चटद्भिर्गडगडास्फोटैः
147117 स्फुटद्ब्रह्माण्डमण्डला ॥ ३३ ॥
147118
147119 प्रथितोत्थितसीत्कारशतक्ष्वेडाक्षयारवा ।
147120 शीतसीकरनीहारभित्तिबन्धमयाम्बरा ॥ ३४ ॥
147121
147122 रोदोमण्डपवैदूर्यस्तम्भसंभारभासुरैः ।
147123 धारासारैर्धराधुर्यशैलशातकशालिनी ॥ ३५ ॥
147124
147125 रोदसी द्यावाभूमी तल्लक्षणमण्डपस्य वैदूर्यस्तम्भानां संभार इव भासुरैः
147126 स्थूलतरैर्धाराणामासारैः संपातैर्धराधूर्वहाणां शैलानां शातका ये
147127 टंकप्रहारास्तच्छालिनी ॥ ३५ ॥
147128
147129 धराचटचटास्फोटस्फुटदङ्गारपत्तना ।
147130 गर्जितोर्जितसंपातपतल्लोकान्तराकुला ॥ ३६ ॥
147131
147132 स्फुटन्ति अङ्गारपत्तनान्यङ्गारसमूहा यया ॥ ३६ ॥
147133
147134 सा बभूवाथ साङ्गारजगद्देहविलासिनी ।
147135 कृतप्रत्युद्गमा बाष्पश्रियाऽज्वलनया भुवः ॥ ३७ ॥
147136
147137 साङ्गारजगद्देहविलासिनी सा वृष्टिः । अथ अज्वलनया भुवो वाष्पश्रिया सखीव
147138 कृतप्रत्युद्गमा बभूव ॥ ३७ ॥
147139
147140 ज्वालालवोल्ललनडम्बरमम्बरं तद्व्यूढस्थलाब्जदलजालमिवालमासीत् ।
147141 ज्वालाभ्रमद्भ्रमरपङ्क्तिनिभास्तदासंस्तत्र
147142 स्फुरच्छिशिरसीकरपक्षपुञ्जाः ॥ ३८ ॥
147143
147144 तदा तत्तादृशमम्बरमाकाशं ज्वालालवानामुल्ललनं विलासस्तदाडम्बरं
147145 यस्मिंस्तथाविधं सद्व्यूढानि प्ररूढानि स्थलाब्जदलजालानि
147146 यस्मिंस्तथाविधमिव आसीत् । तत्र तस्मिन्नम्बरे स्फुरन्तः शिशिराः शीकरपक्षपुञ्जा
147147 जलधरास्तु ज्वालासु भ्रमन्ती या भ्रमरपङ्क्तिस्तन्निभा आसन् ॥ ३८ ॥
147148
147149 उद्यद्बृहच्चटचटारवपूरिताशो भीमोऽभवत्सलिलदानलसंनिपातः ।
147150 दुर्वारवैरिविषमो महतां बलानां संग्राम उग्र इव हेतिहतोग्रहेतिः ॥ ३९ ॥
147151
147152 किं च तदा सलिलदानां मेघानामनलानां च संनिपातः समागमः
147153 उद्यद्बृहच्चटचटारवैः पूरिता आशा दिशो येन तथाविधः सन् दुर्वारवैरिविषमः
147154 अत एवोग्रो महतां बलानां सेनानां हेतिभिर्हताः उग्रा हेतयो यत्र तथाविधः
147155 संग्राम इव भीमो भयानकः अभवत् ॥ ३९ ॥
147156
147157 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मी० दे० मो० निर्वाणप्रक० उत्तरार्धे पाषा०
147158 पुष्करावर्तडम्बरवर्णनंन् नाम षट्सप्ततितमः सर्गः ॥ ७६ ॥
147159
147160 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे

147161 पुष्करावर्तडम्बरवर्णनं नाम षट्सप्ततितमः सर्गः ॥ ७६ ॥
147162
147163 सप्तसप्ततितमः सर्गः ७७
147164
147165 श्रीवसिष्ठ उवाच ।
147166
147167 अथावनिपयस्तेजःपवनानां युगक्षये ।
147168 जाते परमसंक्षोभे बभूवास्मिञ्जगत्त्रयम् ॥ १ ॥
147169
147170 पुष्करावर्तकोत्सृष्टवृष्टिधाराविसंष्ठुलम् ।
147171 सप्ताब्धिक्षोभनिर्धूतं जगद्भूयोऽत्र वर्ण्यते ॥
147172
147173 अवनिश्च पयश्च तेजश्च पवनश्चेत्येतेषां चतुर्णां महाभूतानां
147174 परमसंक्षोभे जाते सति जगत्त्रयं यादृशं बभूव तद्वर्णयामि
147175 शृण्वित्यर्थः ॥ १ ॥
147176
147177 तापिच्छविपिनोड्डीतिनिभभस्माभ्रभासुरम् ।
147178 महार्णवमहावर्तवृत्ति धूमविवर्तनम् ॥ २ ॥
147179
147180 तापिच्छविपिनः तमालवनम् ॥ २ ॥
147181
147182 नीलज्वालालवोल्लासहेलाटिमिटिमारटि ।
147183 कृतभस्माभ्रसंभारपूर्णलोकान्तरान्तरम् ॥ ३ ॥
147184
147185 सार्द्रेषु दाह्येषु धूमनीलज्वालालवोल्लासलक्षणाभिर्हेलाभिष्टिमिटिमेत्यारटनशीलम्
147186 ॥ ३ ॥
147187
147188 उच्छलद्दीर्घरुत्कारैश्छमच्छममयात्मकैः ।
147189 तूर्यमुन्नभदासारविसारिजयघोषणम् ॥ ४ ॥
147190
147191 दीर्घा रुत् ध्वनिस्तत्कारैः सार्द्रेन्धनैः । आसाराणां विसरिजयघोषणंन्
147192 तूर्यमुन्नमदुद्यच्छदित्युत्प्रेक्षा ॥ ४ ॥
147193
147194 भ्रमद्भस्माभ्रधूम्राभ्रं बृहत्कल्पाभ्रसंभ्रमम् ।
147195 बाष्पाभ्रविभ्रमोद्भ्रान्तसीकरोग्राभ्रवृन्दवत् ॥ ५ ॥
147196
147197 पञ्चविधाभ्रवृन्दवदित्यर्थः ॥ ५ ॥
147198
147199 ब्रह्माण्डभित्तिभांकारभीषणैर्मातरिश्वनः ।
147200 प्रसरैरम्बरोड्डीनदग्धेन्द्रादिपुरोत्करम् ॥ ६ ॥
147201
147202 जलानलानिलोल्लासस्फुटत्कोटिगताश्मनाम् ।
147203 प्रविघट्टनटंकारैर्जडीभूताक्षकश्रुति ॥ ७ ॥
147204
147205 प्रविघट्टनैर्जडीभूतत्वगाद्यक्षकम् । टंकारैर्जडीभूतश्रुति
147206 बधिरीकृतश्रोत्रम् ॥ ७ ॥
147207
147208 नभःस्तम्भनिभाबन्धधारानीरन्ध्रवर्षणैः ।
147209 कर्षणैः कल्पवल्लीनां छमच्छमघनध्वनि ॥ ८ ॥
147210
147211 कल्पवल्लीनां कर्षणैर्विलेखनैर्विदारणैरिति यावत् ॥ ८ ॥
147212

147213 गङ्गा तरङ्गिका येषां तादृशैः सरितां गणैः ।
147214 अभ्रैरिव नभोभीमैः पूर्यमाणाखिलार्णवम् ॥ ९ ॥
147215
147216 तरङ्गिका एकैकतरङ्गप्राया ॥ ९ ॥
147217
147218 तापिच्छपत्रवृन्दस्थपुष्पगुच्छसमोपमैः ।
147219 तपद्भिरर्कैरालीढपीठकल्पाभ्रमण्डलम् ॥ १० ॥
147220
147221 तमालपत्राधस्थानां पुष्पगुच्छानां या उपमा सैवार्काणामिति तत्समोपमैः ।
147222 आलीढपीठं आस्वादिताधारप्रायं कल्पाभ्रमण्डलं यत्र ।
147223 अबिन्धनानामर्काणां तदास्वादकत्वादिति ॥ १० ॥
147224
147225 वहद्गिरिसरिद्व्यूहशिखरिद्वीपपत्तनम् ।
147226 कल्पानिलघनक्षोभकृतपर्वतकुट्टनम् ॥ ११ ॥
147227
147228 ग्रहतारागणैरुग्रैर्व्यग्रैर्विग्रहदुर्ग्रहैः ।
147229 पतद्भिर्द्विगुणालातलतामावर्तपातिभिः ॥ १२ ॥
147230
147231 विग्रहेण परस्परप्रहारेण दुर्ग्रहैर्दुर्निरोधैः अत एव आवर्तपातिभिरन्ते
147232 पतद्भिश्च द्विगुणां भूमिष्ठालातेभ्यो द्विगुणामलातलतां नभस्यापि कुर्वदिति
147233 शेषः ॥ १२ ॥
147234
147235 आवहोत्थजलाद्रीन्द्रसंघट्टास्फोटघट्टितम् ।
147236 महाप्रलयपर्यस्तपर्वतप्रान्तकुट्टिमम् ॥ १३ ॥
147237
147238 आसमन्ताद्वहतीत्यावहः प्रचण्डपवनस्तदुत्थानां जलाद्रीन्द्रप्रायाणां
147239 बृहत्तरङ्गाणां संघट्टैः स्फुटन्तीति स्फोटाः पर्वता यत्र ॥ १३ ॥
147240
147241 घनसीकृतबाष्पाभ्रैः कल्पाभ्रैरपि मेदुरैः ।
147242 अन्धीकृतार्कजालांशुतमोनिबिडमन्थरम् ॥ १४ ॥
147243
147244 घनानि सीकृतानि सीकरा येषु तथाविधैर्बाष्पाभ्रैः ॥ १४ ॥
147245
147246 विशीर्णवसुधापीठखण्डखण्डैर्गलत्तटैः ।
147247 उह्यमानैर्लुठच्छैलपतनैः संकटार्णवम् ॥ १५ ॥
147248
147249 ऊर्म्युद्यदुपलच्छिन्नघनैर्घस्मरमारुतैः ।
147250 समुद्रघोषैर्निर्घातगम्भीरैर्भग्नदिक्तटम् ॥ १६ ॥
147251
147252 ऊर्मिभ्य उद्यद्भिरूर्मिभिरूर्ध्वप्रक्षिप्तैरुपलैश्छिन्ना घना मेघा
147253 यैस्तथाविधैर्घस्मरमारुतैः प्रलयवायुभिर्भग्नदिक्तटम् ॥ १६ ॥
147254
147255 ब्रह्माण्डकुड्यक्रोडाग्रकुट्टकैः कटुटांकृतैः ।
147256 कल्पाभ्रविटपास्फोटैर्घट्टितैकार्णवारटि ॥ १७ ॥
147257
147258 ब्रह्माण्डकुड्यलक्षणस्य क्रोडाग्रस्य उरोदेशस्य कुट्टकैरास्फालकैः अत एव
147259 कटुटांकृतैः कल्पाभ्रकल्पविटपलक्षणकरबाह्वास्फोटैः
147260 परस्परघट्टितैकार्णवं आरटि सोरस्ताडं रुददिति यावत् ॥ १७ ॥
147261
147262 स्वर्गपातालभूर्लोकखण्डखण्डैर्विमिश्रितैः ।
147263 यथास्वभावं तिष्ठद्भिर्मरुबुद्ध्रैर्वृताम्बरम् ॥ १८ ॥
147264

147265 किंचोड्डीनैः स्वरादिलोकत्रयखण्डखण्डैर्गुरुतारतम्यक्रमेण
147266 यथास्वभावमन्तरिक्षे तिष्ठद्भिः अधोभागे
147267 वृष्टिजलासंस्पर्शात्संभावितजलभागस्य वायुना शोषणाच्च मरुवन्निर्जलं
147268 बुध्नं मूलमधोभागो येषां तैः ॥ १८ ॥
147269
147270 मृतार्धमृतदग्धार्धदग्धाङ्गैर्देवदानवैः ।
147271 अन्योन्यदर्शनाद्वातवेल्लितैर्भ्रामितायुधम् ॥ १९ ॥
147272
147273 समानविपत्कत्वेऽपि परस्परवैरिद्दष्ट्यैवान्योन्यं दर्शनात्परस्परवधाय
147274 भ्रामितायुधम् । तथा च विनाशांअ विपत्सहस्रैरपि न वैरदृष्टिरज्ञानां
147275 शाम्यतीति सैव विपद्भ्योऽपि महाविपदिति ध्वनितम् ॥ १९ ॥
147276
147277 कपान्तपवनोद्भ्रान्तैर्लोकान्तरजरत्तृणैः ।
147278 आरब्धार्जुनवाताख्यास्तम्भमुद्भूतभस्मभिः ॥ २० ॥
147279
147280 अर्जुनवात इति वातरोगविशेषस्य नाम । तेन हि रोगेण रोगिणो नभस्युड्डीय भ्राम्यन्ते
147281 न तु तस्य रोगस्यार्जुनवर्णतास्तीति तन्नाम निरालम्बनं मा भूदिति
147282 लोकान्तरजरत्तृणैः स्वोद्भूतभस्मभिर्वातं धवलीकृत्य आरब्धः
147283 अर्जुनवाताख्यायाः स्तम्भः प्रतिष्ठा सालम्बनता यस्मिन्नित्युत्प्रेक्षा ॥ २० ॥
147284
147285 उह्यमानशिलाजालप्रहारविलुठत्तटैः ।
147286 पतल्लोकान्तरैः स्फारदुष्कालकटुटांकृतम् ॥ २१ ॥
147287
147288 स्फारं दुष्कालप्रयुक्तं कटुटांकृतं यस्मिन् ॥ २१ ॥
147289
147290 वातोद्व्यूहगिरिव्रातगुहाभांकारभासुरम् ।
147291 पतद्भिर्विहितावर्तलोकपालपुरीपुरैः ॥ २२ ॥
147292
147293 वातस्योद्व्यूहेन संघट्टेन गिरिव्रातगुहानां भांकारैर्भासुरम् ॥ २२ ॥
147294
147295 कृतकर्कशनिर्ह्रादैरसुरैरिव मारुतैः ।
147296 उह्यमानवनव्यूहप्रोतवातायनैर्वृतम् ॥ २३ ॥
147297
147298 पुरमण्डलदैत्याग्निसुरनागविवस्वताम् ।
147299 निकुरम्बं दधद्व्योम्नि मशकानामिवोच्चयम् ॥ २४ ॥
147300
147301 नश्यन्नगवराभोगैर्भगैर्भग्नसुरालयैः ।
147302 आवर्तघर्घरारावैर्जलमूर्ध्वमधोनलम् ॥ २५ ॥
147303
147304 आवर्तः परावर्तनं उत्पाट्य द्रोणवद्वैपरीत्येन धारणं तेन
147305 घर्घरारावैरूर्ध्वं वृष्टिजलमधो निराबाधं दवानलं दधदिति शेषः ॥ २५ ॥
147306
147307 कुर्वज्जलाद्रिनिष्पेषैर्दिक्पालपुरकुट्टनम् ।
147308 निपतद्देवदैत्येन्द्रसिद्धगन्धर्वपत्तनम् ॥ २६ ॥
147309
147310 कुट्टनं पर्वतादीनां प्रशान्ताङ्गाररूपिणाम् ।
147311 वातैः कुर्वत्पदार्थानामसारं रजसामिव ॥ २७ ॥
147312
147313 पर्वतादीनां पदार्थानां रजसामिव कुट्टनं कुर्वत् ॥ २७ ॥
147314
147315 पुराण्यमरदैत्यानां भ्रमद्भित्तीनि शातयत् ।
147316 रत्नैः खणखणायन्ति पयांसीव पयस्वताम् ॥ २८ ॥

पयस्वतांमेघानां पयांसीव रत्नैः खणखणायन्ति अमरदैत्यानां पुराणि
शातयत् ॥ २८ ॥

पूर्णाम्बरं पतल्लोकलोकसप्तकमन्दिरैः ।
चक्रावृत्त्या भ्रमद्रूपैरमरैः सागरैरिव ॥ २९ ॥

पतन्तो लोका जना येभ्यस्तथाविधैर्लोकसप्तकमन्दिरैः पूर्णाम्बरम् ॥ २९ ॥

डीनोड्डीनैः परिवृतं विचलद्व्रात्वेल्लितैः ।
दग्धादग्धैः पदार्थैः खे शीर्णपर्णगणैरिव ॥ ३० ॥

हेमस्फटिकवैदूर्यसुसारमणिमन्दिरैः ।
दिवः पतद्भिराकीर्णमुद्यज्झणझणस्वनैः ॥ ३१ ॥

आकीर्णमित्यन्तानां सर्वेषां पदानां सर्गाद्यश्लोकस्थे बभूवास्मिञ्जगत्त्रयम्
इत्यत्रान्वयः ॥ ३१ ॥

उत्पेतुर्धूमभस्माब्धाः पेतुर्वारा पुरोत्कराः ।
उन्ममज्जुस्तरङ्गौघा ममज्जुर्भूतलाद्रयः ॥ ३२ ॥

वारावृष्टिजलेन ॥ ३२ ॥

आवर्तघर्घरारावा मिथो विदलनोद्यताः ।
जुघूर्णरर्णवाकीर्णपर्णवत्प्रौढपर्वताः ॥ ३३ ॥

क्रन्दच्छिष्टामरगणं चलत्सज्जीवभूतकम् ।
भ्रमत्केतुशतोत्पातं दुष्प्रेक्ष्यमभवज्जगत् ॥ ३४ ॥

चलन्तः सज्जीवा ईषज्जीवनयुक्ता भूतकाः प्राणिनो यत्र । अनुकम्पायां कन् ॥ ३४ ॥

मृतार्धमृतया भूतसंतत्यानिललोलया ।
अभून्नीरन्ध्रमाकाशं जीर्णपर्णसवर्णया ॥ ३५ ॥

जगदासीत्पतच्छृङ्गस्थूलधारौघनिर्भरम् ।
वहद्व्रहद्गिरिपुरवातपूर्णसरिच्छतम् ॥ ३६ ॥

पतन्तः गिरिशृङ्गाणीव स्थूलानां धारौघाणां निर्भरा यस्मिन् ॥ ३६ ॥

शाम्यच्छमशमाशब्दशतशाखहुताशनम् ।
चलाब्धिवलनान्दोललोलशैललसत्तटम् ॥ ३७ ॥

तृणराशिसरिन्न्यायमिश्रद्वीपार्णवोत्कटम् ।
अत्यन्तदूरचिद्व्योमक्षणज्वालासहावनम् ॥ ३८ ॥

तत्त्वज्ञानेद्धचिद्व्योमक्षणदाह्यस्यास्य जगतः प्रलये चिरेण नाशो
नाश्चर्यपदमित्याशयेनाह - अत्यन्तेति ।
तत्त्वज्ञानदौर्लभ्यद्योतनायात्यन्तदूरेत्युक्तिः । चिद्व्योम्नि क्षणज्वालां न सहते
तथाविधमवनं स्थितिर्यस्य ॥ ३८ ॥

वर्षशाम्यद्धुताशोत्थभस्मामोदपतत्सुरम् ।
भूतपूर्वजगद्भूतं परिविस्मृतसर्गकम् ॥ ३९ ॥

पूर्वं भूतं भूतपूर्वं जगद्भूतं चराचरं यत्र। सांप्रतं तु
परिविस्मृतसर्गकम्॥ ३९॥

निरर्गलोल्लसन्नादं सर्गलोपशमक्रमम्।
सर्गलोपोल्लसच्छेषं सर्गलोपविवर्जितम्॥ ४०॥

सर्गस्य लोपेन शमक्रमो यत्र। परमार्थतः सर्गलोपे उल्लसति शेषः परमात्मा यत्र
। सर्गलोपाभ्यां वस्तुतो विवर्जितम्॥ ४०॥

अनारतविपर्यासकारिमारुतनिर्वृतम्।
बीजराशिरिवाजस्रं पूर्यमाणं पुनःपुनः॥ ४१॥

सदैव वा सर्गतल्लोपविशिष्टमित्याशयेनाह - अनारतेति॥ ४१॥

उल्मुकान्योन्यनिष्पेषवह्निचूर्णसुवर्णजैः।
रजोभिर्विवृतैर्हेमकुट्टिमाकाशकोटरम्॥ ४२॥

हेमकुट्टिममिव आकाशकोटरं यत्र॥ ४२॥

भूमण्डलबृहत्खण्डैर्भ्रष्टैः सद्वीपसागरैः।
पूर्णसप्तमपातालं लुठत्पातालमण्डलैः॥ ४३॥

लुठन्त्यन्यपातालमण्डलानि येषु तथाविधैर्भूमण्डलबृहत्खण्डैः॥ ४३॥

आसप्तमसुतालान्तमामहीतलपर्वतम्।
आव्योमैकार्णवीभूतं पूर्णं प्रलयवायुभिः॥ ४४॥

अभिव्याप्तावाङः। सप्तमं सुतलमेव सुतालं पातालम्। छान्दसो दीर्घः॥ ४४॥

एकार्णवोऽथ ववृधे शनैः शीघ्रं सरिच्छतैः।
भुवने जलकल्लोलैः कोपो मूर्खाशये यथा॥ ४५॥

मुसलोपमया पूर्वं ततः स्तम्भनिभाङ्गया।
ततस्तालद्रुमाकारधारयासारसारया॥ ४६॥

आसारः संपातस्तत्सारया॥ ४६॥

ततो नदीप्रवाहोग्रजलपातैकपातया।
सप्तद्वीपमहीपीठसममेदुरमेघया॥ ४७॥

ततस्तालपरिमाणधरापातानन्तरं नदीप्रवाहस्य ताम्रपर्ण्यादौ प्रसिद्धो
मलयाद्यग्राद्य उग्रो जलपातस्तदेकपातया। एकशब्दः सदृशपरः।
सप्तद्वीपविशिष्टसमग्रमहीपीठसमा मेदुरा मेघा यस्या उत्स्रष्टारस्तया॥ ४७॥

वह्निर्विदाहकृद्वृष्ट्या शममभ्याययौ तथा।
शास्त्रसज्जनसंगत्या गाढमापत्पदं यथा॥ ४८॥

गाढं दुःखकोटिनिबिडमापत्पदं सर्वविपत्स्थानमज्ञानं यथा॥ ४८॥

ऊर्ध्वाधरस्थपरिवृत्तपदार्थजातमन्तःकणैः खण्खणायितशैलमज्जम्
।

147421 ब्रह्माण्डकोटरमभूद्विधुरं कुबाललीलाविलोलमिव बिल्वफलं विशुद्धम् ॥
147422 ४९ ॥
147423
147424 कुत्सिताभिर्बालस्य विस्फोटनलीलाभिर्विलोलं बिल्वफलमिव विधुरं
147425 विनष्टमभूदित्यर्थः ॥ ४९ ॥
147426
147427 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० नि० उ० पाषा०
147428 पुष्करावर्तवृष्टिविसंष्ठुलजगद्वर्णनं नाम सप्तसप्ततितमः सर्गः ॥ ७७ ॥
147429
147430 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
147431 पुष्करावर्तवृष्टिविसंष्ठुलजगद्वर्णनं नाम सप्तसप्ततितमः सर्गः ॥ ७७ ॥
147432
147433 अष्टसप्ततितमः सर्गः ७८
147434
147435 श्रीवसिष्ठ उवाच ।
147436
147437 वातवर्षहिमोत्पातपातभग्ने धरातले ।
147438 जडवेगोऽगमद्वृद्धिं कलाविव महीपतिः ॥ १ ॥
147439
147440 नदीप्रमाणैरासारैरभितः पूरयन्नभः ।
147441 एकार्णवः प्रवृद्धोऽत्र विस्तरेणोपवर्ण्यते ॥
147442
147443 जडवेगो जलवेगः ॥ १ ॥
147444
147445 गङ्गाप्रवाहपतितधारापातविवर्धितः ।
147446 सरित्सहस्रैः सहसा मेरुमन्दरभासुरैः ॥ २ ॥
147447
147448 व्योमगङ्गाप्रवाहेषु पतिता या मेघधारास्तत्पातेन विवर्धितः । विवर्जितैः इति पाठे
147449 विवर्जितैर्विसर्जितैः सरित्सहस्रैः समुच्छूनः । सहसोत्थितैर्मेरुवन्मन्दरवच्च
147450 भासुरैस्तरङ्गैः आदित्यपथसंप्राप्ता प्रवाह्यमाणगिरिकन्दरा यस्य तथाविध
147451 एकार्णव आसीदिति द्वयोरन्वयः ॥ २ ॥
147452
147453 आदित्यपथसंप्राप्तकन्द्रो जडमन्थरः ।
147454 एकार्णवः समुच्छून आसीन्मूर्ख इवेश्वरः ॥ ३ ॥
147455
147456 विपुलावर्तवृत्यात्तविवृत्ताद्रिजरत्तृणः ।
147457 स्फुरत्तुङ्गतरङ्गाग्रनिगीर्णादित्यमण्डलः ॥ ४ ॥
147458
147459 तमेवैकार्णवमासर्गसमाप्तेर्विशिनष्टि - विपुलेत्यादिना । विपुलानामावर्तानां
147460 वृत्या आत्तानि अत एव विवृत्तानि भ्राम्यमाणानि अद्रिजरतृणानि यस्मिन् ॥ ४ ॥
147461
147462 मेरुमन्दरकैलासविन्ध्यसह्यजलेचरः ।
147463 गलितावनिपङ्कान्तर्लीनव्यालमृणालकः ॥ ५ ॥
147464
147465 सह्यान्ताः जलेचरा इव यस्य । तमेवार्णवं पद्माकरत्वेन संभावयति -
147466 गलितेत्यादिना । गलिता या अवनिस्तत्पङ्कान्तर्विलीनाः शेषादिव्यालमृणालका यस्य ॥ ५ ॥
147467
147468 अर्धदग्धद्रुमवनव्यूहशैवलसंकटः ।
147469 त्रैलोक्यभस्मसंसृष्ट आसीत्कर्दमकुत्सितः ॥ ६ ॥
147470
147471 नभःस्तम्भबृहद्धानोत्तालभास्करपुष्करः [स्तम्ब इत्यपि पाठः ।
147472 ]    ।

147473 धाराजालमहाम्भोदविलीननलिनीदलः ॥ ७ ॥
147474
147475 नभोलक्षणेषु स्तम्भेषु नालेषु बृहतीषु कर्णिकासु धानाभिर्बीजभूतैः
147476 किरणैरुत्ताला भास्करा द्वादशादित्या एव पुष्कराणि पद्मानि यस्मिन् । धाराजाला
147477 महाम्भोदा एव जलोपरि संलग्नत्वाद्विलीनप्रायाणि नलिनीदलानि यस्मिन् ॥ ७ ॥
147478
147479 डिण्डीरपर्वतप्रान्तनददुन्मत्तवारिदः।
147480 भ्रमदिन्द्रानिलार्केन्दुपुरपत्तनपूरणैः ॥ ८ ॥
147481
147482 काष्ठवत्प्रोह्यमाणोग्रसुरासुरजनोत्करः ।
147483 शनैः क्रमोच्छ्रूनतया लिहन्नादित्यमण्डलम् ॥ ९ ॥
147484
147485 तरत्तारतरारावधाराधरसमुद्भवैः ।
147486 बुद्बुदैः परिसंदिग्धप्रोह्यमाणमहाचलः ॥ १० ॥
147487
147488 किमेते बुद्बुदा उत महाचला इति परितः संदिग्धाः प्रोह्यमाणा महाचला यस्मिन् ॥ १०
147489 ।।
147490
147491 भ्रमद्बुद्बुदविश्रान्तभ्रान्तकल्पान्तवारिदः ।
147492 उत्तालैस्तैरनाधारैः पश्यन्नपरवारिदम् ॥ ११ ॥
147493
147494 उत्तालैः रलयोरभेदादुद्गतास्ताराः कनीनिका येषां तथाविधैस्तैः
147495 समेघबुद्बुदैरनाधारैः स्वाधारमुखमात्ररहितैर्नेत्रैः अपरं सन्निहितं
147496 वारिदं पश्यन्नित्युत्प्रेक्षा ॥ ११ ॥
147497
147498 महाप्रवाहवार्योघघोषघुंघुमिताम्बरः ।
147499 एकप्रवाहमहितसव्योमकुलपर्वतः ॥ १२ ॥
147500
147501 घोषैर्घुंघुमितं मुखरीकृतमम्बरं येन । एकस्मिन्प्रवाहे महिता मग्नाः
147502 सव्योमकुलपर्वता यस्य ॥ १२ ॥
147503
147504 चण्डवातकृतापूर्वजलौघकुलपर्वतैः ।
147505 महाघुरघुरारावघर्घरोग्रमहारयः ॥ १३ ॥
147506
147507 ब्रह्माण्डखण्डसंघट्टपरावृत्तिभिरुद्धतः ।
147508 कुर्वन्योजनलक्षाणि विततान्युन्नतानि च ॥ १४ ॥
147509
147510 तिर्यग्विततानि ऊर्ध्वमुन्नतानि च योजनलक्षाणि स्वस्मिन् कुर्वन् ॥ १४ ॥
147511
147512 तृणैरिव तरङ्गेषु दोलान्दोलनमद्रिभिः ।
147513 कुर्वद्भिरुपलाघातभग्नभास्करमण्डलः ॥ १५ ॥
147514
147515 तृणवद्दोलान्दोलनं कुर्वद्भिरद्रिभिरुपलाघातैर्भग्नानि भास्करमण्डलानि येन
147516 ॥ १५ ॥
147517
147518 शून्यब्रह्माण्डविपुलजलघातकुलायके ।
147519 नीलानचलकाकोलाञ्जह्नन्सलिलजालकैः ॥ १६ ॥
147520
147521 किं च शून्यब्रह्माण्डलक्षणे विपुले जलसंघातस्य कुलायके नीडे स्थितान्नीलान्
147522 अचलाः पर्वतास्तल्लक्षणान् काकोलान्द्रोणकाकान् । बृहन्मद्गूनिति यावत् ।
147523 सलिललक्षणैर्जालकैरानायैर्जह्नन् बद्ध्वा हरन्निव । हरतेः शतुश्छान्दसो
147524 लिङ्वद्भावः ॥ १६ ॥

147525
147526 मृतामृतमहद्भूतमज्जनोन्मज्जनाकुलान् |
147527 तरंगमकरावर्तप्रतिबिम्बान्वितानिव || १७ ||
147528
147529 अचलकाकोलानेव द्वाभ्यां विशेषणाभ्यां विशिनष्टि - मृतेति | इवेति
147530 पूर्वश्लोकान्वयि || १७ ||
147531
147532 मृतशिष्टान्पुरभ्रष्टान्फेनाद्रितटिकोटिषु |
147533 दधज्जलबलश्रान्तांस्त्रिदशान्मशकानिव || १८ ||
147534
147535 फेनलक्षणानामद्रीणां तटिषु [अस्य ह्रस्वान्तत्वं विचारणीयम् |] कोटिषु
147536 शिखरेषु च | दधत् वहन् || १८ ||
147537
147538 विपुलाद्यतनाकाशविपुलानम्बुबुद्बुदान् |
147539 सहस्रसंख्यान्कलयंल्लोचनानीव वासवः || १९ ||
147540
147541 विपुलो योद्यतनः प्रसिद्धः आकाशः
147542 अधोमुखीकृतरजतकटाहवद्दृश्यमानस्तद्वद्विपुलानिति
147543 बुद्बुदान्तर्निविष्टप्राणिदृष्ट्योक्तिः | लोचनानीव वासव इति बहिष्टदृष्ट्या उपमा ||
147544 १९ ||
147545
147546 शरद्व्योमसमाभोगैर्वलद्भिर्बुद्बुदेक्षणैः |
147547 पश्यन्निव नदीधारान्मेघानाताम्रपूरकान् || २० ||
147548
147549 नद्य इव धारा येषां तान् || २० ||
147550
147551 पुष्करावर्तकाभ्राणां बहुभिर्वीचिमण्डलैः |
147552 कुर्वन्नालिङ्गनानीव सपक्षाद्रिवदुत्थितैः || २१ ||
147553
147554 त्रिजगद्ग्रासंतृप्तः प्रगायन्निव घर्घरैः |
147555 स्वैर्नृत्यन्निव चोग्राद्रिकटकैर्वीचिदोर्द्रुमैः || २२ ||
147556
147557 अद्रय एव कटकानि वलया येषाम् | अद्रिकटककटकैरिति वार्थः | श्वमुखः
147558 खरमुख इतिवद्वृत्तिविषयेऽद्रिपदस्य तत्कटकपरत्वात् || २२ ||
147559
147560 नदीधाराधरैरूर्ध्वे मध्ये दग्धैर्धराधरैः |
147561 अधो धराधरैर्नगैरधरः पङ्कगैर्वृतः || २३ ||
147562
147563 न विद्यते धरा यस्य || २३ ||
147564
147565 धारात्रिपथगापूरैर्निपतद्भिर्निरन्तरम् |
147566 मग्नोन्मग्नो ह्यमानाद्रिशृङ्गडिण्डीरबुद्बुदः || २४ ||
147567
147568 उह्यमानदलत्स्वर्गखण्डक्रन्दन्नभश्चरः |
147569 वहद्विद्याधरीवृन्दपद्मिनीसुन्दरान्तरः || २५ ||
147570
147571 दलति विशरणशीले स्वर्गखण्डे क्रन्दन्तो नभश्चरा देवतालक्षणा हंसादयो यस्य
147572 अत एव पद्मिनीसुन्दरान्तरः || २५ ||
147573
147574 एकार्णवपयःपूरैर्घर्घरारावरंहसि |
147575 त्रैलोक्यखण्डसंहारे प्रोह्यमाणे महाम्भसि || २६ ||
147576

147577 नासीत्कश्चित्परित्राता हन्ताऽवीचिवशोऽपि च।
147578 शक्नोति कः परित्रातुं कालेन कवलीकृतम्॥ २७॥
147579
147580 वीचीनां वशो न भवतीत्यवीचिवशोऽपि कश्चिन्नासीत्। हन्तेति खेदे॥ २७॥
147581
147582 नाकाशमासीन्न दिगन्त आसीदधोऽपि नासीन्न तदूर्ध्वमासीत्।
147583 भूतं न आसीन्न च सर्ग आसीदासीत्परं केवलमेव वारि॥ २८॥
147584
147585 स्पष्टम्॥ २८॥
147586
147587 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षोपायेषु निर्वाणप्रकरणे उ०
147588 पा० एकार्णववर्णनं नामाष्टसप्ततितमः सर्गः॥ ७८॥
147589
147590 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
147591 एकार्णववर्णनं नामाष्टसप्ततितमः सर्गः॥ ७८॥
147592
147593 एकोनाशीतितमः सर्गः ७९
147594
147595 श्रीवसिष्ठ उवाच।
147596
147597 एतस्मिन्नन्तरे चक्षुर्व्योमस्थोऽहमथात्यजम्।
147598 ब्रह्मलोके महालोके प्रभातेऽर्कप्रभामिव॥ १॥
147599
147600 सर्षिदेवगणस्यात्र धातुर्निर्वाणमीर्यते।
147601 स्वप्नस्येव प्रबोधेन बाधस्तच्च समर्थ्यते॥
147602
147603 अथ एतस्मिन्नन्तरे तपोलोकपर्यन्तमेकार्णववारिपूरणोत्तरकालं
147604 सत्यलोकसंनिहितव्योमस्थोऽहं महालोके प्रकाशबहुले ब्रह्मलोके चक्षुः अत्यजम्।
147605 दर्शनाय प्रेरितवानिति यावत्॥ १॥
147606
147607 यावद्दृष्टो मया तत्र शैलादिव विनिर्मितः।
147608 परमेष्ठी समाधिस्थः प्रधानपरिवारवान्॥ २॥
147609
147610 प्रधानः परिवारः प्राणाद्युपासनाभिः सालोक्यादिमुक्तिं प्राप्तो ब्रह्मणा सह
147611 विदेहकैवल्यं विविक्षुर्जीवन्मुक्तपरिवारस्तद्वान्। तथा चोक्तम् ब्रह्मणा सह ते सर्वे
147612 संप्राप्ते प्रतिसंचरे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् इति॥ २॥
147613
147614 समूहश्चैव देवानां मुनीनां भावितात्मनाम्।
147615 शुक्रो बृहस्पतिश्चैव शक्रो वैश्रवणो यमः॥ ३॥
147616
147617 देवानां शक्रादीनामाधिकारिकदेवानां तादृशशुक्रादिमुनीनां च समूहस्तत्र
147618 मया दृष्ट इत्यन्वयः। तानेव कांश्चिदवयुत्याह - शुक्र इत्यादिना॥ ३॥
147619
147620 सोमोऽथ वरुणोऽग्निश्च तथान्येऽपि सुरर्षयः।
147621 देवगन्धर्वसिद्धानां साध्यानां च विनायकाः॥ ४॥
147622
147623 विनायका नियन्तारः। स्वामिन इति यावत्॥ ४॥
147624
147625 लिपिकर्मार्पिताकाराः सर्वे ध्यानपरायणाः।
147626 बद्धपद्मासनास्तत्र निर्जीवा इव संस्थिताः॥ ५॥
147627
147628 सर्वे निर्जीवा इव् संस्थिता मया दृष्टा इति विपरिणामेनानुषङ्गः॥ ५॥

अथ ते द्वादशादित्यास्तमेवोद्देशमागताः ।
बद्धपद्मासनास्तस्थुस्तथैवाशु यथैव ते ॥ ६ ॥

तदनन्तरं यद्वृत्तं तदाह - अथेत्यादिना ॥ ६ ॥

ततो मुहूर्तमात्रेण दृष्टवानहमब्जजम् ।
पुरो विनिद्रतां यातः स्वप्नदृष्टमिवाग्रगम् ॥ ७ ॥

तस्य धातुर्द्वितीयपरार्धान्त्यमुहूर्तो मीयते येन चरमक्षणेन स मुहूर्तमात्रस्तेन
तदीयचरमसाक्षात्कारबोधेद्धब्रह्मचैतन्येन
तदविद्याकल्पिततद्देहसहिततदीयसर्वप्रपञ्चबाधाद्विनिद्रतां प्रबोधं प्राप्तः
पुरुषः स्वप्नदृष्टं स्वाग्रगं स्वाप्नपदार्थजातमिव
बाधितमात्ममात्रपरिशेषमपश्यं तदेवास्य विदेहकैवल्यमित्यर्थः ॥ ७ ॥

ब्रह्मलोकजनं सर्वं महतामिव वासनाम् ।
नापश्यं स्वप्ननगरं बुध्यमान इवाग्रगम् ॥ ८ ॥

प्रागुक्ततत्परिवारजनेष्वप्येवमेव कैवल्यं वृत्तमित्याह - ब्रह्मलोकजनमिति ।
महतां तत्त्वज्ञानां ज्ञानबाधितां पूर्ववासनामिवेत्यपरो दृष्टान्तः ।
शिष्टं प्राग्वत् ॥ ८ ॥

अरण्यशून्यमेवासीत्तद्ब्रह्ममननं [ब्रह्मसंकल्पसिद्धम् ।] तदा ।
कठिनाकाण्डविध्वस्तं पृथिव्यामिव पत्तनम् ॥ ९ ॥

तदा तदीयचरमसाक्षात्कारक्षणे तद्ब्रह्मनगरं ब्रह्माण्डं वा अरण्यमिव
शून्यंन् गृहजनादिरहितमेवासीत् । कठिनेनाकाण्डेनाकस्मिकेन नाशहेतुना
विध्वस्तम् ॥ ९ ॥

सर्व एव न च क्वापि ते तथा तादृशास्तदा ।
ऋषयो मुनयो देवा वेदा [सिद्धा इति पाठः ।] विद्याधरादयः ॥ १० ॥

ते मुनिदेवादयोऽपि सर्वे तथा तादृशाः शून्यमेवासन्निति विपरिणामेनान्वयः ।
यतस्ते न क्वापि गता इति शेषः ॥ १० ॥

ज्ञातं ततोऽवधानेन मया नभसि तिष्ठता ।
यावन्निर्वाणमापन्ना ब्रह्मवत्सर्व एव ते ॥ ११ ॥

नामरूपात्मना शून्यभावेऽपि स्वरूपेण तु न्निर्वाणात्मतया स्थिता
एवेत्यात्मानुभवेन दर्शयति - ज्ञातमिति । अवधानेन प्रणिधानेन ॥ ११ ॥

वासनायां विलीनायामदर्शनमुपागताः ।
स्वप्नलोकाः प्रबुद्धानामिव स्वं रूपमागताः ॥ १२ ॥

सैव तेषां वासनाकल्पितरूपापगमेन वास्तवस्वरूपावाप्तिरित्याशयेनाह -
वासनायामिति ॥ १२ ॥

आकाशात्मैव देहोऽयं भाति वासनया स्फुटः ।
तदभावात्तु नो भाति स्वप्नो बोधवतो यथा ॥ १३ ॥

तदेवोपपादयति - आकाशात्मैवेत्यादिना । बोधवतः प्रबोधशालिनः ॥ १३ ॥

147681 अन्तरिक्षगतो देहो यथा स्वप्ने विलोक्यते।
147682 बोधे तद्वासनाशान्तौ न किंचिदपि लक्ष्यते॥ १४॥
147683
147684 अन्तरिक्षगतः आकाशगमनवान्॥ १४॥
147685
147686 जाग्रत्यपि तथैवायं वासनायाः परिक्षये।
147687 नैवातिवाहिको नैव लक्ष्यतेऽत्राधिभौतिकः॥ १५॥
147688
147689 स्वप्नाज्जागरे स्वाप्नाधिभौतिकमात्रबाधः तत्त्वबोधे
147690 त्वाधिभौतिकादिदेहत्रयस्यापि बाध इति विशेष इत्याशयेनाह - जाग्रत्यपीति।
147691 वासनाक्षयहेतुतत्त्वप्रबोधस्य प्रमाणजस्य जाग्रत्येव संभवाज्जाग्रत्यपीत्युक्तिः॥
147692 १५॥
147693
147694 स्वप्नानुभव एषोऽत्र दृष्टान्तत्वेन लक्ष्यते।
147695 आबालमेतत्संसिद्धमनुभूतं श्रुतं स्मृतम्॥ १६॥
147696
147697 तथा च स्वप्नबाधानुभव
147698 एकांशमात्रसदृशोऽप्याबालप्रसिद्धत्वाद्दृष्टान्तत्वेनोदाह्रियत इत्याह -
147699 स्वप्नेति। तस्य तत्र आवसथास्त्रयः स्वप्नाः इति श्रुतं पुराणादिषु च स्मृतम्॥ १६॥
147700
147701 अपह्नुते च वा योऽपि स्वमेवानुभवं शठः।
147702 स त्याज्यः को ह्यलीकेन सुप्तमुद्बोधयेत्किल॥ १७॥
147703
147704 एवं स्वपरानुभवसिद्धमपि स्वप्नबाधं योऽपह्नुते
147705 स्वप्नादिसर्वदृश्यसत्यतावादी स न प्रबोधनीय एवेत्याह - अपह्नुते इति। अलीकेन
147706 मिषेण सुप्तं स्वापं विडम्बयन्तम्॥ १७॥
147707
147708 देहकारणकः स्वप्नो देहाभावान्न दृश्यते।
147709 इति चेत्तददेहानां परलोकोऽपि नास्ति च॥ १८॥
147710
147711 ननु तथापि न स्वप्नदृष्टान्तो युज्यते पित्रादिदेहकारणको ह्ययं देहः
147712 स्वप्नदेहस्तु न तथेति स्वप्नदेहस्यात्यन्तासत्त्वेन वैषम्यादिति चेत्तर्हि यज्ञादिना
147713 जायमानस्वर्गिदेहस्यापि
147714 देहकारणकत्वाभावेनात्यन्तासत्त्वप्रसङ्गान्नास्तिकत्वमेव प्रतिवादिनां
147715 प्रसज्येतेत्याह - देहेति॥ १८॥
147716
147717 इत्येतदभविष्यच्चेत्तच्छरीरकसंक्षये।
147718 नाभविष्यदयं सर्गः स चास्त्येव च सर्वदा॥ १९॥
147719
147720 किं च देहकारणकस्य देहस्यात्यन्तासत्त्वे आतिवाहिकदेहसमष्ठ्यात्मनो
147721 हिरण्यगर्भस्याप्यत्यन्तसत्त्वप्रसङ्गः तथा सति सर्गाद्यर्थक्रियाप्यलीकैव
147722 स्यादित्याह - इत्येतदिति। इति एवंरीत्या त्वदुक्तमेतदसत्त्वमभविष्यच्चेत् तत्तर्हि
147723 पूर्वसर्गप्रलयान्ते सर्वशरीरसंक्षये एतत्सर्गादिकाले
147724 शरीरहेतुकशरीराभावादयं सर्गोऽपि नाभविष्यत्। स चायं परिदृश्यमानोऽस्त्येव
147725 । एवं पूर्वपूर्वसर्गेऽप्येवमापादयितुं शक्यमित्याशयेनाह - सर्वदेति॥ १९॥
147726
147727 अवयवविभागात्मन्यवश्यंभाविनि क्षये।
147728 न कदाचिदनित्थं तज्जगदित्यप्यसंस्थितम्॥ २०॥
147729
147730 ननु तर्हि मास्ति कदापि प्रलयः अनादौ संसारे अविच्छिन्नप्रवाहाः सर्वे
147731 देहकारणका एव देहा अर्थक्रियासमर्था भविष्यन्ति। हिरण्यगर्भदेहस्य वा
147732 पूर्वपूर्वनारायणादिदेहादुत्पत्तिः कल्पयिष्यते। तथा च न कदाचिदनीदृशं

147733 जगदिति जैमिनीयमतं दूषयति - अवयवेति | क्षित्यादिभूतानां हि सावयवत्वादेव
147734 संयोगस्य विभागावसानत्वाद्विनाशो दुर्वारः | तथा च न कदाचिदनीदृशं
147735 जगदिति मतमसंस्थितमप्रतिष्ठितमेव | भूम्यादिनाशे
147736 चतुर्विधभूतग्रामशरीराणामाधाराभावेनावस्थानायोगान्नारायण##-
147737 देहाकारणकत्वेनात्यन्तासत्त्वप्रसङ्गाच्चेति भावः || २० ||
147738
147739 न कदाचिज्जगन्नाशो देहोद्भूतगुणादिकम् |
147740 मदशक्तिरिव ज्ञप्तिरुदेतीति च वक्षि चेत् || २१ ||
147741
147742 अत्र प्रसङ्गाच्चार्वाकमतमपि निरसितुमनुवदति - न कदाचिदिति |
147743 पृथिव्यादिभूतचतुष्टयमेव हि चतुर्विधदेहाकारेण घटपटाद्याकारेण च
147744 संमिलज्जगत् | तस्य च पृथिव्यादिभूतात्मना कदाचिदपि नाशो नास्ति | देहस्तु
147745 भूतानां मेलने उद्भूतज्ञानेच्छादिगुणा
147746 हस्तपादाद्यवयवसंस्थानतत्तदभिव्यङ्ग्या जातिरित्येवमादिकमेव तदीयो
147747 धर्मसंघातः | तत्र यद्यपि ज्ञप्तिर्नैकैकत्र भूते दृश्यते तथापि
147748 सुरारम्भकेषु पिष्टतोयक्षारकिण्वादिद्रव्येषु मिलितेषु कालपाकादिना मदशक्तिरिव
147749 देहाकारपरिणतेषु चतुर्षु भूतेषु ज्ञप्तिगुण उदेति तेन तद्गुणको देह एवात्मेति हे
147750 चार्वाक त्वं वक्षि चेत् शृणु | तस्योत्तरमिति शेषः || २१ ||
147751
147752 तत्पुराणेतिहासानां सर्वसंक्षयवादिनाम् |
147753 स्मृत्यादीनां सवेदानां वैयर्थ्यमुपजायते || २२ ||
147754
147755 तत्तर्हि सर्ववस्तूनां संक्षयो नित्यनैमित्तिकप्राकृतवैज्ञानिकाख्याश्चतुर्विधाः
147756 प्रलयास्तद्वादिनामष्टादशपुराणानां भारतादीतिहासानां
147757 पारलौकिकात्महिताहितधर्माधर्मबोधकमन्वादिस्मृतीनां सदाचाराणां च
147758 वैयर्थ्यं प्रसज्येतेत्यर्थः || २२ ||
147759
147760 अप्रमाणतयैतस्मिन्नर्थे तेषां महामते |
147761 अन्यत्रापि प्रमाणत्वं वन्ध्यादावपि किं भवेत् || २३ ||
147762
147763 नन्वस्तु वेदपुराणादीनामप्रामाण्यमभिमतमेव चार्वाकाणामिदं त्वया
147764 आपादितमिति चेत्तत्राह - अप्रमाणतयेति | निर्दोषाणामेतेषां
147765 वेदपुरणादीनामेतस्मिन्प्रलयधर्माधर्मात्मतत्त्वलक्षणे अर्थे अप्रामाण्ये सति
147766 भोगलाम्पट्यलोभद्वेषादिदोषसहस्रदुष्टे अन्यत्र त्वद्वाक्येऽपि इयं वन्ध्या शतं
147767 पुत्रानसूतेत्यादिवाक्यतुल्ये किं प्रामाण्यं भवेत् | संभावनायां लिङ्ग |
147768 तत्संभावनापि दुर्लभेत्यर्थः || २३ ||
147769
147770 न चैतदिष्यते लोके जगदुच्छेदकारणात् |
147771 अन्यच्चास्तामेतदङ्ग ममेदमपरं शृणु || २४ ||
147772
147773 न चैतत्त्वदुक्तं वेदपुराणादीनामप्रामाण्यं लोके प्रेक्षावद्भिरिष्यते अङ्गीक्रियते |
147774 कृतहानाकृताभ्यागमादिदोषेण निर्बीजप्रयोजनसर्गाद्यसंभवेन च
147775 जगदुच्छेदप्रसङ्गात् | किं च देहात्मवादे किमवयवाः सर्वेऽप्यात्मान
147776 उतावयव्येव | आद्ये बहूनां चेतनानां सदैकमत्यनियमाभावेन वैमत्ये
147777 देहोन्मथनप्रसङ्गः | द्वितीये वृक्णे हस्ताद्येकावयवे
147778 अवयविनाशाज्जीवनाभावप्रसङ्ग इत्याद्यन्यच्च दूषणसहस्रमस्त्येवेत्यास्तामेतत् |
147779 एतेन हे अङ्ग त्वया किण्वपिष्टजलादिसंघाते मदिरायां मदशक्तिरिव
147780 कायाकारपरिणतभूतसंघाते ज्ञप्तिगुण उत्पद्यत इति यदुक्तं तदपि दत्तोत्तरमेव |
147781 तत्र इदमपरं दूषणं वक्ष्यमाणं शृण्वित्यर्थः || २४ ||
147782
147783 मदशक्त्यात्मनि ज्ञाने दृष्टा देशान्तरेषु या |
147784 प्रमृतानां पिशाचादिदेहता सा न सिध्यति || २५ ||

ज्ञाने ज्ञानगुणे मदशक्यात्मनि मदशक्तिरिव आत्मा स्वभावो यस्य तथाविधे
अभ्युपगम्यमाने गुणिनो देहस्य नाशे गुणस्याप्यवश्यनाशाद्देशान्तरेषु
प्रभृतानां जीवानां देहस्योच्छेदात्पिशाचादिदेहान्तरेण स्वदेशागमनं
परशरीरावेशेन प्राक्तनस्वजनादिप्रत्यभिज्ञासंभाषणाद्यर्थक्रिया च या लोके
प्रसिद्धा सा न सिध्यति ॥ २५ ॥

अथ सापि मुधा भ्रान्तिर्यावद्देहं प्रदृश्यते ।
इति चेत्तन्मुधा नाम सत्यमित्येव वो भवेत् ॥ २६ ॥

अथ यदि ब्रूयाः सा पिशाचादिकल्पनापि मुधा भ्रान्तिरेव
पिशाचानामप्रत्यक्षत्वाच्चार्वाकमते प्रत्यक्षातिरिक्तप्रमाणाभावात् । न हि
प्रत्यक्षातिरिक्तं प्रमाणं संभवति । शतशो दृष्टसहचारेष्वपि
पार्थिवत्वलोहलेख्यत्वादिषु वज्रमण्यादौ व्यभिचारदर्शनात् । उत्पातादिकालान्तरे
गवादौ खरादिप्रसूतिदर्शनाद्देवताप्रतिमादिभ्यश्च विनापि वह्निं
धूमोद्गमदर्शनात्सर्वत्र लिङ्गेषु देशान्तरे कालान्तरे च व्यभिचारशङ्काया
वारयितुमशक्यत्वेनानुमानप्रामाण्यायोगात् । कृत्स्नैकदेशसादृश्यविकल्पने
उपमानप्रामाण्यासिद्धेर्मानान्तरामूलकशब्देषु लोके
अर्थसिद्धिनियमादर्शनादन्यशब्दानामनुवादित्वाच्च
शब्दप्रामाण्यायोगादर्थापत्त्यनुपलब्ध्योश्च
व्यतिरेकव्याप्त्युपजीविन्योरनुमानसमानयोगक्षेमत्वात्संभवैतिह्ययोः
संभावनामात्रत्वादनुमानादौ च संभावनास्वेव
प्रामाण्याभिमानात्प्रवृत्तिसिद्धेः । संदिग्धेऽपि फले अर्थातुराणां
प्रवृत्तिनियमदर्शनेनार्थनिश्चयस्य प्रवृत्त्यनङ्गत्वाच्च
सर्वव्यवहारोपपत्तेः । किं च पिशाचग्रस्तस्य पिशाचवाग्व्यवहारोऽपि यावद्देहमेव
दृश्यते न तु तन्मरणे । अतस्तद्देहस्यैव सान्निपातिकभ्रान्तिरिव पिशाचग्रस्तोऽहमिति
वृथा भ्रान्तिरिति चेत् तत्त्वदुक्तं सर्वं नाम शब्दजातं मुधा व्यर्थमेव ।
स्वोक्त्यैव व्याहतत्वात् । न हि प्रत्यक्षातिरिक्तस्य सर्वस्याप्रमाणत्वे चार्वाकानां
वाक्यं प्रमाणं भवेत् । तस्यापि प्रत्यक्षातिरिक्तत्वात् । न चानुमानादीनामप्रामाण्ये
त्वया स्वोक्तोऽर्थो युक्तिभिः समर्थयितुं शक्यः । युक्तीनामनुमानतया
तत्प्रामाण्यापत्तेः । न च ते दृष्टान्तोऽस्ति
सादृश्यस्योपमानगम्यत्वात्तदप्रामाण्ये तदसिद्धेः । नापि स्वपक्षे अनुकूलः
परपक्षे प्रतिकूलो वा तर्कस्त्वयोद्भावयितुं शक्यः ।
तर्कस्यान्वयव्यतिरेकव्याप्तिघटितत्वेन तदपलापिनस्ते तदप्रसिद्धेः ।
आपत्तिव्यतिरेकयोरनुपपत्त्यनुपलब्ध्यधीनत्वेन तदभ्युपगमे
अर्थापत्त्यनुपलब्धिप्रामाण्याभ्युपगमापत्तेः । प्रमाणषट्कमपि सत्यमित्येव
वश्चार्वाकाणामभ्युपगन्तव्यं भवेदित्यर्थः ॥ २६ ॥

एवं चेत्तत्परो लोकः सत्स्वर्गनरकादिकम् ।
इत्येषापि न संवित्किं सत्यतामुपगच्छति ॥ २७ ॥

अस्त्वेवं तेन कस्ते लाभस्तमाह - एवं चेदिति । एवं शब्दादीनां
प्रामाण्यमभ्युपगतं चेत्तत्तस्मान्निर्दोषशब्दरूपायाः श्रुतेः
प्रामाण्यावश्यंभावाद्धेतोः श्रुतिजन्यापरो लोकः स्वर्गनरकादिकं च सत्
इत्येषापि संवित् सत्यतां प्रामाण्यं किं नोपगच्छति । ज्ञानानां हि स्वत एव
प्रामाण्यं कारणदोषबाधकज्ञानाभ्यां क्वचिदपोद्यते । न चात्र कारणे दोषोऽस्ति
नापि स्वर्गनरकादयो न सन्तीति बाधकं प्रमाणजं ज्ञानमस्तीति भावः ॥ २७ ॥

न पिशाचप्रमा सत्या मदशक्तिमतोऽपि हि ।
प्रतिभास्य न सत्या स्यात्परलोकात्मिका कथम् ॥ २८ ॥

अथ सापि मुधा भ्रान्तिरिति यदुक्तं तद्दूषयति - नेति । पिशाचग्रस्तस्य

पिशाचविषयिणी प्रमा पिशाचस्य परदेहे स्थितस्य तदनुभवसिद्धा
दर्शनश्रवणादिप्रमा द्रष्टृणामस्मदादीनां परदेहेन पिशाचव्यवहारप्रमा
च ज्ञानानां स्वतःप्रामाण्यादेव लोके सत्या प्रसिद्धा। सापि यदि न सत्या तर्हि अस्य
क्षीबस्य मदिरादेर्मदशक्तिमतो द्रव्यस्य मदशक्तिप्रतिभापि न सत्या स्यात्। न
ह्यमत्तानुभवसिद्धार्थापलापिनस्ते प्रमत्तप्रतीतिसिद्धमदशक्तिः परेणापलपनीया
। तथा च तव दृष्टान्तासिद्ध्या ज्ञानस्य भूतगुणत्वासिद्धेः परलोकात्मिका
स्वर्गनरकादिस्थितिः कथं त्वया निरसितुं शक्येति शेषः॥ २८॥

पिशाचोऽस्तीति चेत्संवित्सत्यार्था तेन संविदः।
मृतस्यास्ति परो लोक इत्यस्यां किं न सत्यता॥ २९॥

तेन सर्वजनप्रसिद्धेन ज्ञानानां स्वतःप्रामाण्येन पिशाचोऽस्तीति संवित् सत्यार्था
चेदनुभवबलात्प्रसिद्धा मृतस्यापि परलोकोऽस्तीति श्रुतिजन्यायां प्रतीतौ तद्बलादेव
किं न सत्यता॥ २९॥

काकतालीयवद्देहात्पैशाची ज्ञप्तिरस्ति चेत्।
परलोकार्थसंवित्तिः कथं नास्ति सकारणा॥ ३०॥

किं च पिशाचग्रस्तस्य पैशाची ज्ञप्तिर्न श्रुतिसदृशदृढतरप्रमाणजा किंतु
काकतालीयवदाकस्मिकी। तथाविधापि सा स्वानुभवापलापायोगादस्ति प्रमा
चेत्सकारणा दृढतरश्रुत्यादिकारणसहिता परलोकार्थसंवित्तिः कथं नास्ति कुतो
न प्रमेत्यर्थः॥ ३०॥

यान्तर्वेत्ति यथा संवित्सा तथानुभवत्यलम्।
अस्तु सत्यमसत्यं वा सिद्धमित्यनुभूतितः॥ ३१॥

ननु नानुभवबलादेवार्थसत्त्वमवधारयितुं शक्यम् शुक्तिरजतानुभवेऽपि
तदर्थसत्त्वादर्शनादित्याशङ्क्याह - येति। या संवित् अन्तर्यदर्थसत्त्वं यथा
वेत्ति तदर्थसत्त्वं तथानुभवति तत्र शुक्तिरजतसंवित्
स्वप्रतिभासकालिकमर्थसत्त्वमवगाहते। नेदं रजतमित्यौत्तरकालिकी बाधसंवित्तु
त्रैकालिकं रजतासत्त्वम्। तत्राद्यसंविद्बलात्प्रातिभासिकं रजतादेः सत्त्वमस्तु।
द्वितीयसंविद्बलादसत्त्वं वा अनुभूतितः सिद्धम्। अर्थरूपं
नानुभवमन्तरेणापलपितुं शक्यमित्यर्थः॥ ३१॥

मृतस्यास्ति परो लोको विदित्येवंमयी भवेत्।
सति वाऽसति देहेऽस्मिंस्तेन किं सदसच्च किम्॥ ३२॥

तत्र यदि जीवतः सति देहे श्रुत्यादिप्रमाणवशाद्वा मृतस्य असति देहे स्वप्नवत्
प्रतिभामात्रबलाद्वा यदि परो लोकोऽस्तीत्येवमयी एवमनुभवरूपा सविदवश्यं
भवेदेव तर्हि तेन मरणेन किं जीवदनुभवसिद्धं
सन्मृतानुभवसिद्धमसदित्यपलप्येत किं वा वैपरीत्येन। नोभयमप्यपलपितुं
शक्यमिति सिद्धं श्रुत्यादिप्रामाण्यमित्यर्थः॥ ३२॥

तस्मात्स्वभावः प्रथमं प्रस्फुरन्वेत्ति संविदम्।
वासनाकारणं पश्चाद्बुद्ध्वा संपश्यति भ्रमम्॥ ३३॥

स यदि ब्रूयात्कायाकारपरिणतेभ्यो भूतेभ्यः संविदुद्भवान्न मृतस्य
कायनाशे पारलौकिकी संविदुद्भविष्यतीति तर्हि स संविदः
शाश्वतत्वात्स्वतःसिद्धत्वात्प्रत्युत तत्सिद्धिबलेनैव वासनामयस्यातिवाहिकदेहस्य
तत्कल्पितस्थूलदेहस्य बाह्यप्रपञ्चस्य च पश्चात्सिद्धेस्तदन्यस्य
दृश्यसिद्धिहेतोरप्रसिद्धेर्न देहादीनं संविजन्मेति प्रतिवक्तव्य इति
सूचयंस्तत्प्रतिवचनमुपसंहृत्य वासनायां विलीनायामदर्शनमुपागता

147889 इत्यादिना प्रागनुक्रान्तं वासनाक्षयादेव सर्वदृश्योच्छेदं समर्थयितुं
147890 प्रस्तौति - तस्मादित्यादिना। तस्माद्वेदादिप्रमाणस्य ज्ञानानां
147891 स्वतःप्रामाण्यस्य च सिद्धत्वाज्ज्ञानस्वभावः परमात्मा
147892 स्वप्रकाशत्वात्सर्वव्यवहारात्प्रथमं स्वरूपां संविदं स्वत एव नित्यसिद्धां
147893 वेत्ति न तद्वेदनफलमन्यतोऽपेक्षते स्वौष्ण्यप्रकाशात्मतामिव वह्निरित्यर्थः।
147894 वासनानां कारणमुद्भवोपादानं सर्वजगद्वासनामयम् आतिवाहिकदेहं तु ततः
147895 पश्चात्सृष्टिजाग्रदारम्भक्षणे स्वरूपचित्स्वभावबलादेव बुद्ध्वा ततो
147896 देहादिभ्रमं संपश्यतीति न सर्वतः पूर्वसिद्धसंवित्सिद्धिर्देहाधीनेति भावः॥
147897 ३३॥
147898
147899 तत्क्षयाच्छममायाति द्रष्टृदृश्यदृगामयः।
147900 तत्सत्तायामुदेतीयं संसृत्याख्या पिशाचिका॥ ३४॥
147901
147902 अत एव वासनाक्षयादेवातिवाहिकदेहक्षयद्वारा सर्वानर्थक्षयः सिद्ध इत्याह -
147903 तत्क्षयादिति॥ ३४॥
147904
147905 उपलम्भ उदेत्यादौ ब्रह्मणो वासना ततः।
147906 तच्छान्तिं विद्धि निर्वाणं तत्सत्तां संसृतिभ्रमम्॥ ३५॥
147907
147908 तत्र सर्गादौ ब्रह्मण आदौ वासनान्तर्गतप्रपञ्चपर्यालोचनात्मा उपलम्भ उदेति
147909 तदैक्षत बहु स्यां प्रजायेयेति इति श्रुतेः। ततस्तस्मात्प्राक्तनजगद्वासनानां
147910 जगदात्मना उद्भवो भवति। वासनाशान्तौ तु बीजाभावादेव
147911 जगदनुद्भवादर्थसिद्धं निर्वाणमित्याह - तदिति॥ ३५॥
147912
147913 उत्पन्नैव च सानादौ परब्रह्मण्यसंभवात्।
147914 उत्पन्ना समयाद्यासौ ब्रह्मैव परमेव सत्॥ ३६॥
147915
147916 ननु वासना कुत उत्पन्ना। न तावद्ब्रह्मणः। तस्य
147917 तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम् इत्यादिश्रुतिभिः
147918 कारणत्वप्रतिषेधादसङ्गकूटस्थाद्वयत्वश्रुतेश्च। नापि पूर्वकल्पीयजगतः।
147919 तस्य प्रलये स्वयंन् विनश्यतः अन्योत्पादनाशक्तेः। ननु न विनश्यति स्वयमेव
147920 चरमभावविकारेण सूक्ष्मीभूय तिष्ठति तथास्थितिरेवास्य प्रलयो वासनात्मेति चेन्न।
147921 तथास्थितिरस्य किं प्रलये स्वसत्तया उत ब्रह्मसत्तया। आद्ये सदैव सोम्येदमग्र
147922 आसीदेकमेवाद्वितीयम् इत्यादिश्रुतिविरोधात्। द्वितीये स्वतोऽसत्परसत्तया तिष्ठतीति
147923 प्रलापस्यालीकेऽप्यतिप्रसक्तत्वात्पक्षद्वयेऽपि
147924 सृष्टिप्रलययोरविशेषापत्तेरभासमानसत्ताऽप्रसिद्धेर्नष्टं तिष्ठतीति च
147925 व्याघातादिति चेत्सत्यम्। सा वासना आदौ प्रलये पूर्वसर्गे वा उत्पन्नैव। न
147926 असङ्गाद्वये परब्रह्मण्यसंभवस्य त्वयैवोक्तत्वात्।
147927 तथाप्यद्वितीयब्रह्मबोधनोपायतया
147928 शास्त्रकल्पितात्सर्गादिसमयान्निर्बीजजगदुत्पत्त्ययोगात्सा वासनापि प्राक्
147929 केनचिन्निमित्तेनोत्पन्नेति यावद्बोधोदयं स्वीक्रियताम्। बोधोदये तु सर्व जगद्ब्रह्मैव
147930 सा वासनापि परं ब्रह्मैवेति पर्यवस्यतीत्यर्थः॥ ३६॥
147931
147932 एतावद्यत्परिज्ञानं तन्निर्वाणं विदुर्बुधाः।
147933 यदत्रैवापरिज्ञानं तं बन्धं विद्धि राघव॥ ३७॥
147934
147935 न च श्रुतिभ्यः असङ्गाद्वयं ब्रह्मापरिज्ञाय तत्र
147936 वासनाद्यसंभवस्त्वयोद्भावयितुं शक्यः। तत्परिज्ञाने तु
147937 सर्वसंशयबीजाज्ञानोच्छेदान्निर्वाणमेव संपन्नमिति न
147938 वासनोत्पत्त्याद्यनुपपत्तिशङ्काप्रसक्तिरित्याशयेनाह - एतावदिति॥ ३७॥
147939
147940 विज्ञानघन एवायं कचनाकचनात्मकः।

147941 स्वयमेव कचत्यन्तर्न कचत्येव वा स्वयम् ॥ ३८ ॥
147942
147943 यौक्तिकदृष्ट्या निष्कर्षे तु अज्ञातं ब्रह्मैव जगत्तद्वासना तदविद्या चाज्ञातं
147944 ब्रह्मैव तन्निवृत्तिर्विद्या तत्फलं निर्वाणं चेति पर्यवस्यतीत्याशयेनाह -
147945 विज्ञानेति। श्रुत्यादिप्रमाणलाभात्प्राक् न कचत्येव ॥ ३८ ॥
147946
147947 संविदंशपरावृत्तिमात्रे पेलवरूपिणि।
147948 बन्धदृङ्मोक्षदृक् चेति क्लेशस्तत्साधनं कियत् ॥ ३९ ॥
147949
147950 बद्धास्मीति स्वभावतः स्वां मन्यमाना स्वयमेव स्वबन्धो नित्यमुक्तास्मीति
147951 प्रमाणतः स्वां प्रबुद्धा सा स्वयमेव मोक्ष इति निष्कर्षेऽवगते न
147952 कश्चिन्मोक्षसाधने क्लेश इत्याह - संविदंशेति ॥ ३९ ॥
147953
147954 संविदुद्बोधने बन्धस्तदनुद्बोधने शिवम्।
147955 असत्सद्वज्जगद्भाति संविदुद्बोधनोदरम् ॥ ४० ॥
147956
147957 तदिदं परीक्षकैर्व्युत्थानसमाधिभ्यां व्युत्थानसुषुप्तिभ्यां च स्पष्टं
147958 द्रष्टुं शक्यमित्याशयेनाह - संविदुद्बोधने इति। संविद उद्बोधने
147959 बहिर्मुखत्वापादने। शिवं निर्वाणम्। संविदुद्बोधनोदरमेव असज्जगत्सद्वद्भाति
147960 ॥ ४० ॥
147961
147962 अजडं वेदनं सुप्तं मोक्ष इत्यभिधीयते।
147963 प्रबुद्धं इत्याहुर्यदिच्छसि तदाहर ॥ ४१ ॥
147964
147965 निर्वाणवासनमनन्तमनाद्यमच्छबोधैकतानमपयन्त्रणमस्तशङ्कम्।
147966 अद्वैतमैक्यरहितं च निरस्तशून्यमाकाशकोशविशदाशयशान्तमास्व ॥ ४२ ॥
147967
147968 एवमैच्छिकयोर्बन्धमोक्षयोर्मोक्षस्वभावाहरणमेव
147969 निर्विक्षेपपरमानन्दरूपत्वाद्युक्तमित्याशयेनोपसंहरति - निर्वाणवासनमिति।
147970 हे राम त्वमच्छबोधैकतानं ब्रह्मैव सन्नपयन्त्रणं निर्मुक्तबन्धमास्व।
147971 विशेषणान्यन्यानि ब्रह्मणि वा क्रियायां वा योज्यानि ॥ ४२ ॥
147972
147973 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वा० उ० पा०
147974 वासनाभावप्रतिपादनं नामैकोनाशीतितमः सर्गः ॥ ७९ ॥
147975
147976 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
147977 वासनाभावप्रतिपादनं नामैकोनाशीतितमः सर्गः ॥ ७९ ॥
147978
147979 अशीतितमः सर्गः ८०
147980
147981 श्रीवसिष्ठ उवाच।
147982
147983 इति ते सर्व आयाता ब्रह्मलोकनिवासिनः।
147984 अदृश्यतामेव गता दीपाः क्षीणदशा इव ॥ १ ॥
147985
147986 वैज्ञानिकस्तत्त्वदृशा वर्णितः प्रलयक्रमः।
147987 प्राकृतो योगिगम्योऽन्यो वर्ण्यते प्रलयक्रमः ॥
147988
147989 धातुर्वासनाकल्पितस्य तल्लोकदेवभुवनादिसर्वप्रपञ्चस्य
147990 तत्प्रारब्धक्षयक्षणोत्पन्नेन साक्षात्कारेण यो बाधस्तल्लक्षणो वैज्ञानिकः
147991 प्रलयः नापश्यन् स्वप्ननगरं बुध्यमान इवाग्रगम् इत्यादिना
147992 स्वप्नबाधसदृशः सोपपत्तिकं मुक्तदृशा उपवर्णितः। बद्धदृशा तु

147993 धातुर्देहस्य तदारम्भकोपाधीनां तदिन्द्रियादीनां च स्वस्वकारणे लयद्वारा
147994 मायाशबले ब्रह्मणि लयलक्षणं प्रलयमुपवर्णयितुमुपक्रमते - इतीति ॥ १ ॥
147995
147996 अथ ते द्वादशादित्या ब्रह्मणि ब्रह्मतां गते ।
147997 जगद्वद्ब्रह्मलोकं तमदहन्भास्वरार्चिषः ॥ २ ॥
147998
147999 ब्रह्मणि विधातृदेहे । मायाशबलब्रह्मताम् । जगद्वद्भूम्यादिवत् ॥ २ ॥
148000
148001 वैरिञ्चनगरं दग्ध्वा ध्यानं कृत्वा विरञ्चिवत् ।
148002 तेऽपि निर्वाणमाजग्मुर्निःस्नेहदशदीपवत् ॥ ३ ॥
148003
148004 आदित्याद्यधिकारिजीवानामप्यधिकारप्रारब्धसमाप्तेश्वरमसाक्षात्कारेण
148005 समस्तस्वस्वप्रपञ्चबाधात्तद्वदेव विदेहकैवल्यमासीदित्याह - वैरिञ्चेति ॥ ३ ॥
148006
148007 तत एकार्णवापूरो विरिञ्चनगरान्तरम् ।
148008 रात्रौ भुवमिव ध्वान्तं पूरयामास सूर्मिमान् ॥ ४ ॥
148009
148010 तदुत्तरं किमासीत्तदाह - तत इति । प्राक्प्रक्रान्त एवैकार्णवापूरः । मूर्तिमान् इति
148011 पाठे पञ्चीकृतजलात्मा ॥ ४ ॥
148012
148013 आब्रह्मलोकमभवज्जगदापूर्णमर्णसा ।
148014 तुल्यं रसैकपूर्णेन पक्वद्राक्षाफलेन तत् ॥ ५ ॥
148015
148016 अर्णसा जलेन । तद्ब्रह्माण्डम् ॥ ५ ॥
148017
148018 तत्तदूर्मिगिरिव्रातखगैरावलिताः खिलाः ।
148019 विच्छिन्नाः कपजलदा जल एव निलिल्यिरे ॥ ६ ॥
148020
148021 तैस्तैरूर्मिभिः प्लवमानैर्गिरिव्रातैः खगैर्देवशरीरैश्चावलिता विघट्टिता अत एव
148022 खिला विशीर्णा विच्छिन्नाश्च कल्पजलदाः प्रागुक्ताः पुष्करावर्तकादयः ॥ ६ ॥
148023
148024 एतस्मिन्नन्तरे तत्र दृष्टवानहमम्बरात् ।
148025 यावदभ्युदितं भीमं भीतः किंचिन्नभोन्तरात् ॥ ७ ॥
148026
148027 अतस्मिन्नन्तरे अहमम्बरादभ्युदितं भीमं भयानकं किंचिद्रूपं दृष्टवान्
148028 न तु विशिष्य रुद्रोऽयमिति परिचितवान् । तावद्भीत इत्यर्थः ॥ ७ ॥
148029
148030 कल्पान्तजगदाकारं कृष्णमापूरिताम्बरम् ।
148031 आकल्पं संभृतं नैशं देहेनेवोत्थितं तमः ॥ ८ ॥
148032
148033 तदेव रूपं भीतिहेतुभिरद्भुतैर्विशेषणैर्वर्णयति - कल्पान्तेत्याद्यष्टभिः ।
148034 आकल्पं द्विपरार्धावसानकालपर्यन्तं प्रतिनिशं जातं तम एकत्र
148035 संभृतमुपचितं सद्देहेनोत्थितमिवेति संहारमूर्तेरघोररुद्रस्य
148036 कृष्णवर्णोत्कर्षादुत्प्रेक्षा ॥ ८ ॥
148037
148038 तरुणादित्यलक्षाणां तेज आभास्वरं दधत् ।
148039 आदित्यत्रयसंकाशैः स्थिरविद्युच्चयोल्बणैः ॥ ९ ॥
148040
148041 वर्णेन कृष्णत्वेऽपि तेजसा भास्वरत्वमपीत्याह - तरुणेति ।
148042 दधदित्येतदुत्तरश्लोकेऽप्याभास्वरं मुखं दधदिति संबध्यते ॥ ९ ॥
148043
148044 नेत्रैराभास्वरमुखं ज्वालापुञ्जसमुद्गिरम् ।

148045 पञ्चाननं दशभुजं त्रिनेत्रं शूलपाणिकम् ॥ १० ॥
148046
148047 ज्वालापुञ्जंन् समुद्गिरतीति जवालापुञ्जसमुद्गिरम् ॥ १० ॥
148048
148049 आयान्तमन्तमुक्तेऽपि व्योम्नीव वितताकृतिम् ।
148050 खमिवासि घनश्यामं देहमासाद्य संस्थितम् ॥ ११ ॥
148051
148052 स्थितमेकार्णवापूर्णाद्ब्रह्माण्डाद्बहिरम्बरे ।
148053 व्योमेव हस्तपादादिसंनिवेशेन लक्षितम् ॥ १२ ॥
148054
148055 घोणानिलपरावृत्तिविधूतैकमहार्णवम् ।
148056 गोविन्दमिव दोर्दण्डक्षोभितक्षीरसागरम् ॥ १३ ॥
148057
148058 घोणा नासा तदनिलस्य श्वासवायोः परावृत्तिभिर्भ्रमणैः ॥ १३ ॥
148059
148060 कल्पार्णवजलापूरं पुंस्त्वेनेव समुत्थितम् ।
148061 मूर्तियुक्तमहंकारमस्तकारणमागतम् ॥ १४ ॥
148062
148063 पुंस्त्वेन पुरुषाकारेण समुत्थितमिव । सर्वाहंकारसमष्टिरूपं मूर्तियुक्तं
148064 भूत्वा आगतमिव । सर्वकारणत्वात्स्वयमस्तकारणम् ॥ १४ ॥
148065
148066 कुलाचलबृहद्वृन्दमिवोड्डयनडम्बरैः ।
148067 पक्षौघैरुत्थितं व्योम समस्तमभिपूरयत् ॥ १५ ॥
148068
148069 ततस्त्रिशूलनयनैर्मया रुद्रोऽयमित्यसौ ।
148070 दूरादेव परिज्ञाय परमेशो नमस्कृतः ॥ १६ ॥
148071
148072 ततस्तादृशरूपदर्शनानन्तरं मया त्रिशूलेन त्रिभिर्नयनैश्च
148073 प्रसिद्धैर्लक्षणैरसौ रुद्रः परमेशो जगदीश्वर इति परिज्ञाय नमस्कृतः ॥ १६ ॥
148074
148075 श्रीराम उवाच ।
148076
148077 किं स तादृग्विधो रुद्रः किं कृष्णः किं महाकृतिः ।
148078 किं पञ्चवदनः कस्माद्दशबाहुः स तिष्ठति ॥ १७ ॥
148079
148080 ननु परमेश्वरः मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् इत्यादिश्रुतिषु
148081 मायाशबलं ब्रह्मैवामूर्तं महेश्वर इति प्रसिद्धं तत्किमर्थं
148082 कैश्चोपाधिभिः पञ्चवदनादिविशिष्टां मूर्तिं धत्ते सर्वात्मनो वा कथं
148083 परिच्छिन्नमूर्तिभाव इति विशिष्य जिज्ञासमानो रामः पृच्छति - किं स इति । स
148084 सर्वश्रुतिप्रसिद्धः परमेशस्तादृग्विधस्त्वद्वर्णितरीत्या भयानकस्वरूपः
148085 किंनिमित्तं केनोपाधिना स्थित इति प्रश्नस्य प्रपञ्चभूता दशप्रश्नास्त्रयः
148086 स्वतन्त्राः । स तिष्ठतीत्यत्रापि केत्यध्याहृत्याधारप्रश्नो बोध्यः । एवं किमुग्रः
148087 किमात्मेति किमः प्रत्येकं संबन्धाद्द्वौ प्रश्नौ ॥ १७ ॥
148088
148089 किं त्रिनेत्रः किमुग्रात्मा किमेकः किंप्रयोजनः ।
148090 केनेरितः किमकरोच्छायासीद्वद का मुने ॥ १८ ॥
148091
148092 स किं स्वतन्त्र उत परतन्त्रः । यदि स्वतन्त्रस्तर्हि पूर्णकामस्यास्य किमर्थं संहारे
148093 प्रवृत्तिः । यदि परतन्त्रस्तर्हि केनेरितः । तस्मिन्नीश्वरे रुद्ररूपे सति
148094 तदीयच्छायारूपा मायापि का आसीत्तद्वदेत्यर्थः ॥ १८ ॥
148095
148096 श्रीवसिष्ठ उवाच ।

काकुत्स्थ रुद्रनामासावहंकारतयोत्थितः।
विषमैकाभिमानात्मा मूर्तिरस्यामलं नभः॥ १९॥

हे काकुत्स्थ असौ परमेश्वरः
सर्वसर्गस्थितिसंहारादिगोचरसंकल्पाध्यवसायादिबीजभूत##-
सर्वजगदध्यासमूलस्तम्भभूतया सर्वप्राणिरोदने सर्वशरणागतरुग्द्रावणे च
निमित्तभूतया रुद्रनामा सन्नुत्थितः। तत्र रोदने विषमाभिमानात्मा रुग्द्रावणे तु
एकाभिमानात्मा संपद्यते। अस्य सा मया दृष्टा मूर्तिस्त्वमलं नभः
आकाशमेव॥ १९॥

व्योमाकृतिः स भगवान्व्योमवर्णो महाद्युतिः।
चिद्व्योममात्रसारत्वादाकाशात्मा स उच्यते॥ २०॥

अनेन किं स तादृग्विधः किं कृष्णः किं महाकृतिरिति प्रश्नत्रयं
समाहितमित्याह - व्योमेति॥ २०॥

सर्वभूतात्मभूतत्वात्सर्वगत्वान्महाकृतिः।
यानि तस्यानुषक्तानि पञ्च खानीन्द्रियाण्यलम्॥ २१॥

किं पञ्चवदन इति प्रश्नस्योत्तरमाह - यानीति। तस्याहंकारस्य
प्रतिशरीरमनुषक्तानि यानि पञ्चज्ञानेन्द्रियाणि तानि तस्य रुद्रस्य
मुखान्याहुस्तत्त्वविदः॥ २१॥

तानि तस्य मुखान्याहुस्तपद्रूपाणि सर्वतः।
कर्मेन्द्रियाणि विषयास्ते हि तस्य भुजा दश॥ २२॥

अत एव हि ज्ञनेन्द्रियाणि सर्वतस्तपद्रूपाणि प्रकाशस्वभावानि॥ २२॥

सर्वभूतनरैः सार्धं ब्रह्मणा परमेयुषा।
यदासौ संपरित्यक्तस्तदा स्वां मूर्तिमागतः॥ २३॥

कस्माद्दशबाहुः स इति प्रश्नं समाधत्ते - मर्मेन्द्रियाणीति।
वाक्पाणिपादपायूपस्थाख्यानि पञ्चकर्मेन्द्रियाणि दक्षिणतः
वचनादानविहरणोत्सर्गानन्दाख्याः पञ्च तद्विषयाश्च वामत इति क्रमात्तस्य
दशभुजा इत्यर्थः। तर्ह्यसौ प्रागपि तादृशमूर्त्या कुतो न दृष्ट इति
चेच्चराचरनामरूपकार्याकाराध्यारोपव्यामूढदृष्टिभिस्तदन्तर्गतकारण##-
सर्वैर्भूतैश्चतुर्विधशरीरैर्नरैस्तत्तज्जीवैश्च सार्धं परं कारणं
मायाशबलं ब्रह्म आ ईयुषा प्रलयेन प्राप्तवता ब्रह्मणा चतुर्मुखेन
स्वाध्यारोपितकार्येण पटेन तन्तुरिव यदासौ परित्यक्तस्तदा स्वां
प्रागुक्ताकाशमात्रपरिशेषरूपां वर्णितां मूर्तिमागतः। कारणरूपेण
स्फुटीभूत इति यावत्॥ २३॥

स चैकांशैकरूपात्मा नास्ति तस्य हि साकृतिः।
तथा दृश्यत एवासौ भ्रान्तिमात्रेण मूर्तिमान्॥ २४॥

यद्यसावाकाशमात्रात्मा तर्ह्यमूर्तस्य तस्य प्राग्वर्णिता देहाकृतिः कथं
दृष्टा तत्राह - स चेति। स च रुद्रः सर्वकार्यविशेषप्रविलयावशिष्टो यः
कारणैकांशस्तदेकरूपात्मा तस्य सा मया वर्णिता देहाकृतिर्नास्ति। तथा उपासकैः
स्ववासनया असौ दृश्यत इत्यर्थः॥ २४॥

चिदाकाशगते स्फारे भूताकाशे स तिष्ठति।

148149 देहे च सर्वभूतानां नित्यं वायुरिवेश्वरः ॥ २५ ॥
148150
148151 प्रश्नेषु स तिष्ठतीत्यत्र क्वेत्यध्याहृत्य आधारप्रश्नो यो वर्णितस्तस्योत्तरमाह ##-
148152 २५ ॥
148153
148154 सर्वभूतपरित्यक्तस्तस्मिन्काले खमूर्तिमान् ।
148155 क्षोभयन्स क्षणं क्षीणः परमां शान्तिमेष्यति ॥ २६ ॥
148156
148157 ये गुणाकृतयः कालाश्चित्ताहंकारबुद्धयः ।
148158 प्रणवस्य च ये वर्णा ये च वेदास्तथा त्रयः ॥ २७ ॥
148159
148160 किं त्रिनेत्र इति प्रश्नस्योत्तरमाह - ये इति ॥ २७ ॥
148161
148162 रुद्रस्य तस्य ते नेत्रसंनिवेशेन संस्थिताः ।
148163 त्रिशूलं तेन त्रैलोक्यं गृहीतं करकोटरे ॥ २८ ॥
148164
148165 ते गुणादिपञ्चत्रिका रुद्रस्य पञ्चसु वक्त्रेषु क्रमान्त्रिनेत्रपञ्चकसंनिवेशेन
148166 संस्थिता इत्यर्थः । किमुग्रात्मेत्यत्र किंशब्दस्य प्रत्येकमन्वयात् किमुग्रः
148167 किमात्मेति द्वौ प्रश्नौ वर्णितौ । तत्राद्यस्य केन त्रिशूलायुधेनोग्र इति गूढार्थस्य
148168 रामाभिप्रेतस्य सर्वज्ञतां ख्यापयन्मुनिरुत्तरमाह - त्रिशूलमिति । करकोटरे
148169 मुष्टिच्छिद्रे ॥ २८ ॥
148170
148171 यस्मात्तद्व्यतिरेकेण सर्वभूतगणेष्वपि ।
148172 अन्यन्न विद्यते किंचिद्देहात्मैव ततः स्थितः ॥ २९ ॥
148173
148174 किमात्मेति द्वितीयस्योत्तरमाह - यस्मादिति । सर्वभूतगणदेहात्मेत्यर्थः । अत एव
148175 हि सर्वभूतानामहंकारात्मकरुद्राभिध्यानादेव देहात्मत्वाभिमानः । तथा च
148176 भगवतो बादरायणस्य सूत्रम् पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ
148177 इति ॥ २९ ॥
148178
148179 सर्वसत्त्वोपलम्भात्मा स्वभावोऽस्य प्रयोजनम् ।
148180 ईरितः शिवरूपेण चिन्मात्राकाशरूपिणा ॥ ३० ॥
148181
148182 किंप्रयोजन इत्यस्योत्तरमाह - सर्वेति । स्वसृष्टानां सर्वेषां सत्त्वानां
148183 स्वस्वकर्मानुरूपविषयभोगात्मको य उपलम्भः क्रमाज्ज्ञानसाधनप्राप्तावन्ते
148184 यः स्वात्मतत्त्वोपलम्भश्च तदात्मा यः
148185 शास्त्रीयविहितनिषिद्धकर्मज्ञानफलदानस्वभावः स एवास्य सर्गादौ
148186 प्रयोजकत्वात्प्रयोजनम् । तथा चोक्तं गौडपादैः देवस्यैष
148187 स्वभावोऽयमाप्तकामस्य का स्पृहा इति । केनेरित इति प्रश्नं समाधत्ते - ईरित इति ।
148188 चिन्मात्राकाशरूपिणा शिवं वाङ्मनसागोचरनिरतिशयभूमानन्दात्मकं
148189 परमकल्याणं स्वरूपं यस्य तथाविधेन परमात्मनैव बहु स्यां प्रजायेयेति
148190 संकल्पात्मकमायावृत्त्या ईरितः सर्गाद्युन्मुखतया प्रेरितः सृजति ॥ ३० ॥
148191
148192 तेनैव च निगीर्णः सन्परमां शान्तिमेत्यसौ ।
148193 निर्मलाकाशरूपात्मा कृष्ण इत्येष ईश्वरः ॥ ३१ ॥
148194
148195 प्रलयार्थमीरितश्च सर्गक्रमविपरीतक्रमेण जगन्निगीर्याकाशभावेन स्थितः
148196 स्वयमपि तेनैव शिवरूपेण स्वात्मना निगीर्णः सन् आकाशभावमपि विहाय परमां
148197 भूमानन्दस्वरूपप्रतिष्ठालक्षणां शान्तिमेतीत्यर्थः । किं कृष्ण
148198 इत्यादिप्रश्नानां सर्वेषां सोपपत्तिकं समाधानमुक्तं स्मारयन्नुपसंहरति ##-
148199
148200 कृत्वा कल्पं जगत्सर्वं तत्पीत्वैकार्णवं तदा ।

148201 स प्रयाति परां शान्तिमभूयःसंनिवृत्तये ॥ ३२ ॥
148202
148203 अनन्तरं मया दृष्टस्तत्रासौ यावदुद्यमात् ।
148204 प्रवृत्तः प्राणवेगेन तमाक्रष्टुं महार्णवम् ॥ ३३ ॥
148205
148206 किमकरोदित्युपान्त्यप्रश्नस्य कथाशेषशुश्रूषाविषयत्वमभिप्रेतं
148207 ज्ञात्वोत्तरमाह - अनन्तरमित्यादिना । प्राणवेगेन श्वासानिलवेगेन । आक्रष्टुम् ।
148208 पातुमिति यावत् ॥ ३३ ॥
148209
148210 अथ तस्य मुखं स्फारं ज्वालामालाकुलान्तरम् [ज्वालामालासमाकुलम् इति
148211 टीकाकृदभिमतः पाठः ।] ।
148212 प्राणाकृष्टो महाम्भोधिर्वाडवाग्निमिवाविशत् ॥ ३४ ॥
148213
148214 जलस्य तेजस्युपसंहारद्योतनाय ज्वालामालासमाकुलमित्युक्तम् ॥ ३४ ॥
148215
148216 स एव वाडवो भूत्वा वह्निराकल्पमर्णवे ।
148217 अहंकारः पिबत्यम्बु रुद्रः सर्वं तु तत्तदा ॥ ३५ ॥
148218
148219 इतरकालेऽपि जलशोषे तेजस्येवोपसंहारः प्रसिद्ध इत्याशयेनाह - स एवेति ॥ ३५ ॥
148220
148221 पातालमिव पानीयं सर्पो बिलमिव क्षणात् ।
148222 पञ्चवायुरिवाकाशमविशत्तन्मुखं जवात् ॥ ३६ ॥
148223
148224 पञ्चवायुः पञ्चवृत्तिः प्राणः प्राणिनां मुखाकाशमिव । अपानस्यापि
148225 प्राणात्मकत्वात्पञ्चवृत्तिकत्वव्यपदेशः ॥ ३६ ॥
148226
148227 समुपेत्यापिबद्रुद्रः स मुहूर्तेन तत्पयः ।
148228 कृष्णाङ्गोऽर्क इव ध्वान्तं सत्संपर्क इवागुणम् ॥ ३७ ॥
148229
148230 अगुणं दोषजातम् ॥ ३७ ॥
148231
148232 आब्रह्मलोकपातालं शान्तं शून्यमथाभवत् ।
148233 रजोधूमानिलाम्भोधिभूतमुक्तं समं नभः ॥ ३८ ॥
148234
148235 समं सर्ववैषम्यनिर्मुक्तम् ॥ ३८ ॥
148236
148237 केवलं तत्र दृश्यन्ते चत्वारो व्योमनिर्मलाः ।
148238 इमे पदार्था निस्पन्दाः शृणु तान्रघुनन्दन ॥ ३९ ॥
148239
148240 इमे वक्ष्यमाणाः पदार्थाः ॥ ३९ ॥
148241
148242 एकस्तावदसौ मध्ये रुद्रः कृष्णाम्बराकृतिः ।
148243 निराधारः स्थितो व्योम्नि निस्पन्दामोदबिम्बवत् ॥ ४० ॥
148244
148245 आमोदः सौरभं तद्बिम्बं तत्स्वरूपं तद्वत् ॥ ४० ॥
148246
148247 द्वितीयोऽवस्थितो दूरे पृथ्व्याकाशतलोपमः ।
148248 भागो ब्रह्माण्डसदनस्याधः पातालसप्तकात् ॥ ४१ ॥
148249
148250 पातालभूतलदिवां सशैलेन्द्रदिवौकसाम् ।
148251 व्याप्तः पार्थिवभागेन पङ्कमात्रात्मनात्मभक् ॥ ४२ ॥
148252

148253 त्रयाणां लोकानां तद्गतपदार्थानां च भस्मीभावात्पुनर्जलक्लेदनेन
148254 पङ्कमात्रात्मना पार्थिवभागेन व्याप्तः सन्नात्मभाक् ऊर्ध्वभागापेक्षया
148255 किंचिदुपचितात्मा ॥ ४२ ॥
148256
148257 तृतीयोऽत्र पदार्थोऽभूदूर्ध्वं ब्रह्माण्डभागभूः ।
148258 दृष्टिक्षयात्सुदूरत्वाद्दुर्लक्ष्यगगनासितः ॥ ४३ ॥
148259
148260 दृष्टिक्षयान्नयनरश्मीनां तत्राप्रसरात् । तत्र हेतुः - सुदूरत्वादिति ॥ ४३ ॥
148261
148262 दूरविश्लिष्टयोर्मध्यं यत्तद्ब्रह्माण्डखण्डयोः ।
148263 तदाकाशमनाद्यन्तं ब्रह्म निर्मलमाततम् ॥ ४४ ॥
148264
148265 चतुर्थः पदार्थस्तदुभयान्तरालाकाशमेवेत्याह - दूरेति । ब्रह्मेव निर्मलम् ॥
148266 ४४ ॥
148267
148268 चतुर्थोऽसौ पदार्थस्तु तदा संलक्षितो मया ।
148269 चतुष्टयादत्र नान्यदेतस्मादेव किंचन ॥ ४५ ॥
148270
148271 असौ अन्तरालाकाशः । अत्र मत्पुरोगतपदार्थमध्ये एतस्माच्चतुष्टयादन्यत्किंचन
148272 नैवासीदित्यन्वयः ॥ ४५ ॥
148273
148274 श्रीराम उवाच ।
148275
148276 बहिः किं विद्यते ब्रह्मन्ब्रह्मसद्मकटाहतः ।
148277 कास्तत्रावरणा ब्रूहि कियत्यः संस्थिताः कथम् ॥ ४६ ॥
148278
148279 सावरणाभ्यां ब्रह्मसद्मकटाहौ ब्रह्माण्डखर्परे ताभ्यां बहिः किं विद्यते ।
148280 तत्र तयोः का आवरणाः । ताश्च कियत्यः । निराधाराश्च कथं संस्थिता इति चत्वारः
148281 प्रश्नाः ॥ ४६ ॥
148282
148283 श्रीवसिष्ठ उवाच ।
148284
148285 ब्रह्माण्डखण्डयोः पारे ततो दशगुणं जलम् ।
148286 संध्याकाशमनन्तं तद्वर्जयित्वा ततः स्थितम् ॥ ४७ ॥
148287
148288 तत्र मध्यमप्रश्नयोः प्रथममुत्तरमाह - ब्रह्माण्डखण्डयोरिति । तच्च
148289 जलमनन्तमतिविस्तृतं खण्डद्वयसंध्याकाशमन्तर्वर्जयित्वा बहिरेवाततं
148290 स्थितम् । यद्यपि खण्डद्वयसंध्याकाशो बृहदारण्यके तद्यावती क्षुरस्य धारा
148291 यावद्वा मक्षिकायाः पत्रं तावानन्तरेणाकाशः इति
148292 क्षुरधारामक्षिकापक्षपरिमितोऽत्यन्तसूक्ष्मः प्रतिपादितस्तथापि प्रागत्र चतुर्मुखो
148293 ब्रह्माण्डखण्डद्वयं बिभेद तच्च भिन्नं दूरतरं गतमिति
148294 वर्णितत्वात्तदनुसारेण संध्याकाशस्यानन्तत्वोक्तिरिति बोध्यम् ॥ ४७ ॥
148295
148296 ततस्तथैव ज्वालात्म तेजो दशगुणं स्थितम् ।
148297 ततस्तथैव पवनः पवनो निर्मलः स्थितः ॥ ४८ ॥
148298
148299 तथैव जलवदेव पवनस्तज्जलपवित्रीकरणः स्वयं च रजोमालिन्यरहितः पवनो
148300 वायुः स्थितः ॥ ४८ ॥
148301
148302 ततस्तथैव विमलं नभो दशगुणं स्मृतम् ।
148303 ततः परममत्यच्छं ब्रह्माकाशमनन्तकम् ॥ ४९ ॥
148304

148305 नभ आकाशम् | प्रथमप्रश्नस्योत्तरमाह - तत इति | अतिसूक्ष्मत्वादत्यच्छंन्
148306 मायाशबलब्रह्माकाशं स्थितम् || ४९ ||
148307
148308 अन्यत्रान्यत्र तस्याथ दृष्टयोऽन्यास्तथैव खे |
148309 कचन्त्यनन्ता दूरस्था मिथो दृष्टात्मसृष्टयः || ५० ||
148310
148311 ननु पुराणादौ आकाशात्परतो दशगुणमहंकारतत्त्वं ततः परं तद्दशगुणं
148312 महत्तत्त्वं तदग्रे अनन्ता प्रकृतिश्च वर्णिता तदत्र कथं परित्यक्तं तत्राह -
148313 अन्यत्रेति | तस्य मायाशबलब्रह्मणः खे आवृते स्वरूपाकाशे अन्यत्रान्यत्र
148314 योगिमाहेश्वरपाञ्चरात्रकापिलादितन्त्रेषु अन्या अन्या
148315 महदहंकारादितत्त्वभेदावरणकल्पनादृष्टयः अनन्ताः कचन्ति ताश्च मिथः
148316 परस्परं संवादेन दृष्टात्मकल्पनासृष्टयः पुराणेषु कीर्त्यन्ते न श्रुतिषु ताः
148317 प्रक्रियाः सन्तीत्यस्माभिरुपेक्षिता इत्यर्थः | ब्रह्माण्डभेददृष्टिपरतया वा श्लोको
148318 व्याख्येयः || ५० ||
148319
148320 श्रीराम उवाच |
148321
148322 ऊर्ध्वे ब्रह्माण्डखण्डस्य तथाधस्तान्मुनीश्वर |
148323 तज्जलादिमहाकारं क्व कथं केन धार्यते || ५१ ||
148324
148325 चतुर्थं प्रश्नं परिशिष्टं स्मारयन् रामः पृच्छति - ऊर्ध्वे इति |
148326 ब्रह्माण्डादप्युत्तरोत्तरं दशदशगुणविस्तारान्महाकारम् || ५१ ||
148327
148328 श्रीवसिष्ठ उवाच |
148329
148330 स पार्थिवपदार्थानां स्थितः पुष्करपत्रवत् |
148331 भागस्तमेवाधावन्ति ते सुता मातरं यथा || ५२ ||
148332
148333 तं पार्थिवं ब्रह्माण्डखर्परभागमेव आधावन्ति आधारादिभावेनाश्रयन्ति |
148334 यथा सुता वानरीशिशवो मातरमुदरे दृढं गृहीत्वा प्लवनेऽपि न पतन्ति
148335 तद्वदित्यर्थः || ५२ ||
148336
148337 अत् यदेव नेदीयो ब्रह्माण्डाख्यं महावपुः |
148338 तत्पदार्थाः प्रधावन्ति तृषिताः सलिलं यथा || ५३ ||
148339
148340 ऊर्ध्वखर्परोपरितनजलस्याप्यपतने अयमेव न्यायः सामीप्यानुगृहीतो बोध्य
148341 इत्याशयेनाह - अत इति | नेदीयः संनिहिततरम् | अन्तिकबाढयोर्नेदसाधौ इति ईयसुनि
148342 नेदादेशः || ५३ ||
148343
148344 अवलम्ब्य तदेवान्तः संस्थितास्तैजसादयः |
148345 न स्थितिं प्रविमुञ्चन्ति स्वां यथावयवा इव || ५४ ||
148346
148347 यथा शरीरसंयुक्ता हस्तपादाद्यवयवा दृढतरसंयोगस्थितिं न प्रतिमुञ्चन्ति
148348 तद्वत् || ५४ ||
148349
148350 श्रीराम उवाच |
148351
148352 ब्रह्मन्ब्रह्माण्डखण्डे ते तिष्ठतः कथमुच्यताम् |
148353 किमाकृतीं धृते केन कथं वा परिनश्यतः || ५५ ||
148354
148355 इतरावरणाधारयोर्ब्रह्माण्डखर्परयोरतिगुरुत्वादवश्यं पिपतिषतोः
148356 कस्तद्धाधार इति रामः पृच्छति - ब्रह्मन्निति | कथं केनाधारेण तिष्ठतः ||

५५ ॥

श्रीवसिष्ठ उवाच ।

अधृतं धृतमेवोच्चैरपतच्चैव वा पतत् ।
अनाकृत्येव साकारं जगत्स्वप्नपुरं यथा ॥ ५६ ॥

सत्यताद्दृष्टावियमाधारादिचिन्ता । मिथ्यादृष्टौ तु न
गुरुतराणामप्याधारादिनियमोऽस्तीति स्वप्नदृष्टान्तेन वसिष्ठ उत्तरमाह -
अधृतमिति । अनाकृति अमूर्तम् ॥ ५६ ॥

किमस्य नाम पतति किं वा केनास्य धार्यते ।
यथा संवित्ति कचनं तथैतदवतिष्ठते ॥ ५७ ॥

यथा केशोण्ड्रकं व्योम्नि यथा च व्योम्नि शून्यता ।
यथा वा पवने स्पन्दो जगच्चिद्गगने तथा ॥ ५८ ॥

चितौ संकल्पनगरं ब्रह्माण्डाख्यं जगद्गृहम् ।
खे खमेवाप्यनाकारं प्रत्याकारमिव स्थितम् ॥ ५९ ॥

प्रत्याकारं प्रतिनियताकारमिव ॥ ५९ ॥

पातसंवित्समुद्भूतं एतदास्ते दिवानिशम् ।
गच्छन्त्या संविदोद्भूतं गच्छदास्ते दिवानिशम् ॥ ६० ॥

सर्वपदार्थानां यथा संवेदनमेव स्वभावो नियतोऽनियतो वा सिद्ध्यतीत्याह -
पातेति । गच्छन्त्या गमनाध्यासवत्या ॥ ६० ॥

स्थितसंवित्समुद्भूतं तिष्ठदास्ते दिवानिशम् ।
उत्पतन्त्या चितोद्भूतमुत्पतच्चैव तिष्ठति ॥ ६१ ॥

तथा च किमाकृती धृते केन इति प्रश्नावपि स्वसंवित्कल्पितनियतानियताकृती
संविदैव धृते इत्यर्थाद्दत्तोत्तरौ ॥ ६१ ॥

एति नाशविदा नाशं महाकल्पादिवेदनैः ।
जायते जन्मसंवित्त्या व्योम्नि सर्वादिवेदनैः ॥ ६२ ॥

कथं वा परिनश्यत इत्यस्योत्तरमाह - एतीति ॥ ६२ ॥

आभाति मौक्तिकगणः शरदम्बरान्तर्दृष्टावसत्य उदितोऽप्यतिसत्यरूपः ।
भ्रान्त्या यथा नभसि च स्फुरतां तथैषां संख्यां विधातुमिह को जगतां
समर्थः ॥ ६३ ॥

यथा शरदम्बरान्तर्विलोकयतो दृष्टौ पतद्बदरकाकारौ मौक्तिकगण आभाति
तथा चिन्नभसि भ्रान्त्या स्फुरतामेषां जगतां
संख्यामाधारादितत्त्वपरिगणनं कर्तुं कः समर्थः । न कश्चिदित्यर्थः ॥ ६३ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मी० दे० मो० निर्वाणप्रकरणे उ० पाषा०
भ्रान्तिमात्रत्वप्रतिपादनंन् नामाशीतितमः सर्गः ॥ ८० ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
भ्रान्तिमात्रत्वप्रतिपादनं नामाशीतितमः सर्गः ॥ ८० ॥

एकाशीतितमः सर्गः ८१

श्रीवसिष्ठ उवाच।

अथ राघव रुद्रं तं तदा तस्मिन्महाम्बरे।
प्रवृत्तं नर्तितुं मत्तमपश्यं वितताकृतिम्॥ १॥

रुद्रः स नृत्यन्प्रलये भैरवोऽत्रोपवर्ण्यते।
तच्छायाकालरात्रिश्च नृत्यन्ती जगदङ्गिका॥

किमकरोत् इति प्रश्नोत्तरशेषं प्रलयाकाशे रुद्रनृत्यं छायासीद्वद का मुने इति
प्रश्नोत्तरं नृत्यत्कालरात्रिस्वरूपं च वर्णयितुमुपक्रमते - अथेति॥ १॥

व्योमेवाकृतिमापन्नमजहद्व्यापितां निजाम्।
महाकारं घनश्यामं दशाशापरिपूरकम्॥ २॥

नृत्यंन् तावद्वर्णयति - व्योमेवेत्यादिना॥ २॥

अर्केन्दुवह्निनयनं चलद्दशदिगम्बरम्।
घनदीर्घप्रभाजालमालानं श्यामलार्चिषाम्॥ ३॥

श्यामलार्।चिषां नीलप्रभाज्वालानामालानं बन्धनस्तम्भमिव॥ ३॥

वडवाग्निदृशं लोलभुजोर्मिभरभासुरम्।
एकार्णवार्णो द्राग्देहबन्धेनेव समुत्थितम्॥ ४॥

बडवाग्नय इव दृशो यस्य। देहबन्धेन शरीरग्रहणेन समुत्थितमिवेत्युत्प्रेक्षा॥
४॥

पश्याम्यनन्तरमहं यावत्तस्य शरीरतः।
छायेव परिनिर्याति नर्तनानुविधायिनी॥ ५॥

नर्तनानुविधायिनी रुद्रनर्तनमनुकुर्वाणा॥ ५॥

सूर्येष्वविद्यमानेषु महातमसि चाम्बरे।
स्थिता कथमियं छाया भवेदिति मतिर्मम॥ ६॥

इति मम मतिराशङ्का आसीदिति शेषः॥ ६॥

यावद्विचारयाम्याशु तावत्तस्य तदा पुरः।
सा स्थिता परिनृत्यन्ती विस्तीर्णा श्रीत्रिलोचना॥ ७॥

श्रीमन्ति त्रीणि लोचनानि यस्याः॥ ७॥

कृष्णा कृशा शिरालाङ्गी जर्जरा वितताकृतिः।
ज्वालाकुलानलालोलवनसंभारशेखरा [ज्वालाकुलानना इति पाठो युक्तः।
]॥ ८॥

तां वर्णयति - कृष्णेत्यादिना। जर्जरा शिथिलाङ्गी। लोलो वनसंभारो
वनसमृद्धिरिव पुष्पपल्लवादिभूषितः श्यामलः शेखरो यस्याः॥ ८॥

148461 भिन्नाञ्जनतमःश्यामा यामिनीवाकृतिं गता।
148462 तमःश्रीर्देहयुक्तेव साकारेवाम्बरद्युतिः॥ ९॥
148463
148464 तिस्र उत्प्रेक्षाः॥ ९॥
148465
148466 अतिदीर्घा करालास्या नभो मातुमिवोद्यता।
148467 दीर्घजानुभुजभ्रान्त्या मातुकामेव दिङ्मुखम्॥ १०॥
148468
148469 मातुं स्वदैर्ध्यसाम्येन परिमातुमुपमातुं च॥ १०॥
148470
148471 कृशा बहूपवासेव परिनिम्नमहातनुः।
148472 कज्जलश्यामला मेघमालेव पवनाकुला॥ ११॥
148473
148474 परितो निम्ना सगर्ता महती तनुर्यस्याः॥ ११॥
148475
148476 कृशाशक्ता यदा स्थातुं सुदीर्घा विधिना तदा।
148477 ग्रथितेव शिरारूपैर्दामभिर्दैर्घ्यशालिभिः॥ १२॥
148478
148479 सुदीर्घा कृशा च सा यदा स्थातुमशक्ता विधात्रा लक्षिता तदा
148480 शिरारूपैर्दामभिर्दार्ढ्याय ग्रथितेवेत्युत्प्रेक्षा॥ १२॥
148481
148482 तथा नाम सुदीर्घा सा यथा तस्याः शिरःखुरम्।
148483 मया दृष्टं प्रयत्नेन चिरोर्ध्वाधोगमागमैः॥ १३॥
148484
148485 सा तथा सुदीर्घा यथा मया प्रयत्नेन योगबलान्मनोवेगेन
148486 चिरमनेकसहस्रवर्षकालमूर्ध्वमधश्च गमागमैर्धावनैस्तस्याः शिरःखुराः
148487 पादनखाश्च तेषां समाहारः शिरःखुरम्। द्वन्द्वश्च प्राणितूर्य
148488 इत्येकवद्भावः। दृष्टं नान्येन द्रष्टुं शक्यमिति भावः॥ १३॥
148489
148490 अन्त्रान्त्रतन्त्रीग्रथितशिरःकरखुरोत्करा।
148491 आमूलात्सूत्रवलिता कण्टकानामिव स्थली॥ १४॥
148492
148493 अन्त्रैः शिराजालैरान्त्रतन्त्रीभिश्च ग्रथिताः शिरः प्रभृतिकरपादनखान्ता
148494 अङ्गोत्करा यस्याः। आमूलान्मूलमारभ्य शाखाग्रपर्यन्तं सूत्रैर्वलिता
148495 कण्टकानां स्थली निवासभूमिः खदिरादिलतवे स्थिता॥ १४॥
148496
148497 विश्वरूपमयार्कादिशिरःकमलजालकैः।
148498 कृतमालामलालोकवातवह्निमयाञ्चला॥ १५॥
148499
148500 विश्वरूपमयैर्नानावर्णैरर्कादिदेवदानवशिरःकमलजालकैः कण्ठे कृतमाला
148501 भूषिता। अमल आलोको यस्य तथाविधो वातप्रदीप्तो यो वह्निस्तन्मयान्यञ्चलानि
148502 पटच्चराणि यस्याः॥ १५॥
148503
148504 प्रलम्बकर्णालुलुतनागा नृशवकुण्डला।
148505 शुष्कतुम्बीलताष्ठीलादीर्घालोलासितस्तनी॥ १६॥
148506
148507 प्रलम्बयोः कर्णयोरालुलिता नागा यस्याः तथा नृशवे कुण्डले यस्याः। शुष्का
148508 लम्बफला तुम्बीलतेव आष्ठीलं ऊरुपर्वग्रन्थिपर्यन्तमादीर्घावालोलावसितौ स्तनौ
148509 यस्याः॥ १६॥
148510
148511 कुमारबर्हिपिच्छौघैर्ब्राह्ममूर्धजमण्डलैः-।
148512 लाञ्छितोच्चसुराधीशशिरःखट्वाङ्गमण्डला॥ १७॥

148513
148514 कुमारबर्हिणां पिच्छौघैर्ब्राह्मैर्मूर्धजानां केशानां मण्डलैश्च
148515 लाञ्छितान्युच्चानि सुराधीशानामिन्द्रादीनां शिरांसि यस्मिंस्तथाविधं
148516 खट्वाङ्गमण्डलं यस्याः ॥ १७ ॥
148517
148518 तन्देन्दुमालाविमला विमलोद्द्योतपाततः ।
148519 तमोर्णवोर्द्ध्वलेखेव वृत्तावर्तविवर्तिनी ॥ १८ ॥
148520
148521 दन्तलक्षणया इन्दुमालया विमला । अत एव तदीयविमलोद्द्योतपातवशादभिवृद्धा ।
148522 वृत्तैरावर्तैर्विवर्तिनी व्यालोला तमोलक्षणस्यार्णवस्य ऊर्ध्वलेखा उपरिभाग इव
148523 स्थिता ॥ १८ ॥
148524
148525 शुष्कतुम्बीलतेवोच्चैराकाशतरुसंस्थिता ।
148526 विलोलावयवाष्ठीला वातैः पटपटारवा ॥ १९ ॥
148527
148528 आकाशलक्षणमाकाशप्रसूतं च तरुं संस्थिता । एवमग्रेऽपि विशेषणे उभयत्र
148529 योज्ये ॥ १९ ॥
148530
148531 बृहत्तरङ्गोर्ध्वभुजा श्यामलोल्लासशालिनी ।
148532 एकार्णवोर्मिमालेव नृत्तावृत्तिविवर्तिनी ॥ २० ॥
148533
148534 क्षणमेकभुजाकारा क्षणं बहुभुजाकुला ।
148535 अनन्तोग्रभुजाक्षिप्तजगन्नर्तनमण्डपा ॥ २१ ॥
148536
148537 अनन्तैरुग्रभुजैराक्षिप्तो व्याकुलितो जगन्नृत्यमण्डपो यया ॥ २१ ॥
148538
148539 क्षिप्रमेकमुखाकारा क्षिप्रं बहुमुखाकृतिः ।
148540 अनन्तोग्रमुखी क्षिप्रं निर्मुखी चापि च क्षणम् ॥ २२ ॥
148541
148542 एकपादान्विता क्षिप्रं क्षिप्रं पादशतान्विता ।
148543 क्षणं चानन्तपादाढ्या निष्पादाकारिणी क्षणम् ॥ २३ ॥
148544
148545 कालरात्रिरियं सेति मयानुमितदेहिका ।
148546 काली भगवती सेयमितिनिर्णीतसज्जना ॥ २४ ॥
148547
148548 इति निर्णीताः सज्जनाः याम् । निपूर्वस्य नयतेरवगत्यर्थत्वात् गत्यर्थाकर्मक- इति
148549 कर्तरि क्तः ॥ २४ ॥
148550
148551 ज्वालापूर्णारघट्टोग्रखाताभनयनत्रया ।
148552 ज्वलद्धरेन्द्रनीलाद्रिसानूपमललाटभूः ॥ २५ ॥
148553
148554 पुनस्तां मुखादिपादान्तं वर्णयितुमारभते - ज्वालेत्यादिना ।
148555 आरघट्टयन्त्रस्य शिरःकाष्ठे प्रसिद्धं खातत्रयंन् ज्वालाभिः पूर्ण स्यात्तदा
148556 नेत्रत्रयोपमा बोध्या । ज्वलन्ती धर यस्मिंस्तथाविधो य इन्द्रनीलाद्रिप्रस्थस्तदुपमा
148557 ललाटभूर्यस्याः ॥ २५ ॥
148558
148559 लोकालोकेन्द्रनीलोग्रश्वभ्रभीमहनुद्वया ।
148560 वातस्कन्धगुणप्रोततारामुक्ताकलापिनी ॥ २६ ॥
148561
148562 लोकालोकाचलस्य
148563 प्रसिद्धमिन्द्रनीलश्वभ्रमिवाधोनिम्नत्वात्कुण्डलकान्तिप्रकाशाप्रकाशमत एव
148564 भीमं हनुद्वयंन् यस्याः ॥ २६ ॥

इन्द्रनीलाद्रितुल्योच्चतोरणोच्चैःप्रभाम्बरे ।
विश्रान्तकाचशैलाभभगभीषणवायसी ॥ २७ ॥

इन्द्रनीलाद्रौ तुल्ये तुलनार्हे उपमायोग्ये उच्चे तोरणे नगरबहिर्द्वारि
पद्मरागादिप्रभारञ्जिते अम्बरे द्वारान्तश्छिद्रे विश्रान्तः प्रतिष्ठितः अधोमुखः
कृत्रिमः काचशैल इव भगवायसो भगनामा काको यस्याः ॥ २७ ॥

नृत्यद्भुजलतापुष्पैर्नखशुभ्राभ्रमण्डलैः ।
पूर्णचन्द्रशतानीव भ्रमयन्ती नभस्तले ॥ २८ ॥

भ्रमद्भिर्व्याप्तदिक्चक्रा भुजैः कल्पाम्बुदैरिव ।
वर्षद्भिः प्राणिजप्रान्ततारालेखाबृहत्प्रभाः ॥ २९ ॥

कल्पाम्बुदपक्षे स्फुरत्प्रभाः प्राणिजा गजप्रभवा दन्ता इव प्रान्तेषु ताराः
बृहत्प्रभालेखाधाराश्रेणीर्वर्षद्भिः । भुजपक्षे प्राणिजा गजादिप्रभवा मुक्ता
इव प्रान्ते प्रलये निपतन्त्यस्ताराश्रेणीव च भास्यमाना नखपङ्क्तिबृहत्प्रभाः
वर्षद्भिः ॥ २९ ॥

नखपुष्पाङ्गुलीवल्लीजालैर्भ्रान्तभुजद्रुमैः ।
कृष्णैः काननिताशेषगगनाग्रोग्रमूर्तिभिः ॥ ३० ॥

कृष्णैरत एवोग्रमूर्तिभिः । नखा एव पुष्पाणि येषु तथाविधान्यङ्गुलीवल्लीजालानि
येषां तथाविधैर्भ्रान्तभुजद्रुमैः काननितं वनमिव कृतमशेषं
गानाग्रमाकाशप्रान्तो यया ॥ ३० ॥

तमालतालतः स्थूलां भुवं दग्धमहावनैः ।
विडम्बयन्ती वलितां जङ्घासङ्घेन लोलता ॥ ३१ ॥

लोलता सर्वतश्चलितेन जङ्घासङ्घेन दग्धैः खर्जूरादिमहावनैर्वलितां
दग्धशिष्टतमालतालवृक्षमात्रतः स्थूलां प्रोन्नतां भुवं विडम्बयन्ती
अनुकुर्वाणा ॥ ३१ ॥

अप्यनन्ते महाव्योम्नि पारं प्राप्तैः शिरोरुहैः ।
कुर्वाणेवाततं वासं चरत्तिमिरदन्तिनः ॥ ३२ ॥

शिरोरुहैः चरत्तिमिरलक्षणस्य दन्तिनो व्योम्नि वासं कुर्वाणा संपादयन्तीव ॥ ३२ ॥

उह्यन्ते मेरवो येन तेन निश्वासवायुना ।
घनघुंघुमदिक्चक्रगगनग्रामघोषिणा ॥ ३३ ॥

प्रतिध्वनिभिर्घनघुंघुमं दिक्चक्रं यस्य तथाविधे गगनग्रामे
उद्घोषणशीलेन निःश्वासवायुना नियतानुनयेन अत एव सानुवृत्तिना नटेन सह
सलितेवासीदित्युत्तरेणान्वयः ॥ ३३ ॥

घनमारुतफूत्कारक्ष्वेडगेयं प्रगायता ।
नियतानुनयेनेव चलिता सानुवृत्तिना ॥ ३४ ॥

ततो नृत्तवशावेशाद्वर्धमानशरीरिणी ।
मया दृष्टावधानेन गगनाभोगभूरिणा ॥ ३५ ॥

यावत्तयाऽऽवृता देहे हेलावलनसारया ।

माला मलयकैलाससह्यमन्दरमेरुभिः ॥ ३६ ॥

कथं दृष्टा तदाह - यावदिति। हेलया विलासेन वलनं नृत्यमेव
सारोऽभिप्रेतार्थो यस्यास्तथाविधया तया मलयकैलाससह्यादिगिरिभिर्यावत्साकल्येन
रचिता माला देहे आवृता भूषणत्वेन संनिवेशिता। धृता इति वा पाठः ॥ ३६ ॥

आसीत्तस्या युगान्ताभ्रमालिका पट्टपट्टिका।
आदर्शमण्डलान्यङ्गे त्रीणि लोकान्तराणि च ॥ ३७ ॥

किं च जगत्सर्वं तस्या भूषणादिनित्यसामग्री बभूवेत्याशयेनाह -
आसीदित्यादिना। युगान्ते प्रसिद्धा पुष्करावर्ताद्यभ्रमालिका वक्षसि
इन्द्रनीलपट्टपट्टिका आसीत्। त्रीणि लोकान्तराणि अङ्गे जघनोदरादौ
मणिमयादर्शमण्डलान्यासन्नित्यादिः सर्वत्र यथायोगं विपरिणामेनानुषङ्गः
कार्यः ॥ ३७ ॥

कर्णयोर्हिमवन्मेरू रूप्यकाञ्चनमुद्रिके।
ब्रह्माण्डघुंघुमैर्माला महती कटिमेखला ॥ ३८ ॥

स्रजः कुलाचलाः शृङ्गवनपत्तनगुच्छकाः।
जरत्पुरवनद्वीपग्रामपेलवपल्लवाः ॥ ३९ ॥

तस्या अङ्गेषु दृष्टानि पुराणि नगराणि च।
ऋतवश्च त्रयो लोका मासाहोरात्रमालिकाः ॥ ४० ॥

दृष्टानीति नपुंसकमनपुंसकेन - इति नपुंसकशेषः ॥ ४० ॥

मुक्तालतादिकं नद्यः कालिन्दीत्रिपथादिकाः।
धर्माधर्मावुभौ कर्णभूषणे चान्यकर्णयोः ॥ ४१ ॥

अन्यकर्णयोः हिमवन्मेरुकुण्डलप्रागुक्तकर्णातिरिक्तकर्णयोः ॥ ४१ ॥

स्तनास्तस्यास्तु चत्वारः स्रवद्धर्मपयोलवाः।
वेदाः सकलशास्त्रार्थचतुःसंस्थानचूचुकाः ॥ ४२ ॥

सकलशास्त्रार्थक्षीराणि ऋग्यजुःसामाथर्वाख्यचतुःसंस्थानानि चूचुकानि
कुचाग्राणि येषाम् ॥ ४२ ॥

त्रिशूलैः पट्टिशैः प्रासैः शरशक्त्यृष्टिमुद्गरैः।
निर्यदायुधजालानि स्रग्दामानि विभर्ति सा ॥ ४३ ॥

चतुर्दशविधा भूतजातयो याः सुरादिकाः।
तस्याः शरीरशालिन्यास्ता लोमावलयः स्थिताः ॥ ४४ ॥

ताःप्रसिद्धा लोमावलयो रोमावलयः ॥ ४४ ॥

तस्याश्च नगरग्रामगिरयो देहशायिनः।
नृत्यन्त्या सह नृत्यन्ति पुनर्जन्म मुदेव ते ॥ ४५ ॥

जङ्गमात्मैकमेवैतज्जगदस्थावरं तदा।
नृत्यतीति मया ज्ञातं परलोके सुखं स्थितम् ॥ ४६ ॥

सर्वस्यापि नृत्ये चलनादस्थावरात्मकम्। पूर्वं मृतत्वात्तद्देहलक्षणे परलोके

सुखं स्थितम् ॥ ४६ ॥

निगीर्णं जगदङ्गस्थं कृत्वा तृप्तिमुपागता ।
परिनृत्यति सा मत्ता जगज्जीर्णाहिचातकी ॥ ४७ ॥

जगल्लक्षणो जीर्णः अहिः सर्पो यया तथाविधा चातकी पक्षिणी । अत्र चातकीशब्देन
मयूरी लक्ष्यते मेघप्रियत्वसाम्यात् । अहिजरणनृत्ययोस्तस्यां प्रसिद्धेश्च ॥ ४७ ॥

आदर्शप्रतिबिम्बस्थमिवाभात्यखिलं जगत् ।
तस्या वपुषि विस्तीर्णे स्वरूपिणि सरूपधृक् ॥ ४८ ॥

सरूपधृक् प्राक्तनजगत्सदृशरूपधृक् ॥ ४८ ॥

सा न नृत्यति तत्सर्वं सशैलवनकाननम् ।
जगन्नृत्यति नानात्म मृत्वा पुनरुपागतम् ॥ ४९ ॥

कदाचिदनृत्यन्त्यामपि तस्यां तदन्तर्गतं जगन्नृत्यतीति मया दृष्टमित्याह ##-

तज्जगन्नर्तनं चारु तद्देहादर्शसंस्थितम् ।
चिरं मया तदा दृष्टमविनष्टं पुनः स्थितम् ॥ ५० ॥

विचलत्तारकाजालं भ्रमत्पर्वतमण्डलम् ।
मशकव्यूहवद्वातव्याधूतामरदानवम् ॥ ५१ ॥

तदेव जगन्नर्तनं वर्णयति - विचलदित्यादिना ॥ ५१ ॥

संग्रामोन्मुक्तचक्राभद्वीपार्णववृताम्बरम् ।
हेलाविवलनावर्तप्रौढशैलधरातृणम् ॥ ५२ ॥

संग्रामे उन्मुक्तचक्राणामिव आभा भ्रमणसादृश्यश्रीर्येषां द्वीपादीनां
तथाविधैस्तैर्वृताम्बरम् । हेलया विवलनैर्भ्रमणैरावर्तवातैरिव
प्रकर्षेणोढानि शैलधरातृणानि यस्मिन् । प्रादूहोढो - इति वृद्धिः ॥ ५२ ॥

नीलमेघांशुकावृत्तिवातघुंघुमिताम्बरम् ।
काष्ठास्थ्यादिस्फुटास्फोटपटत्पटपटारवम् ॥ ५३ ॥

नीलमेघलक्षणानामंशुकानां वस्त्राणामावृत्तिषु परिवर्तनेषु
वातैर्घुंघुमितमम्बरमाकाशं यस्मिन् । अधस्तु परस्परसंघट्टितानां
काष्ठास्थ्यादीनां स्फुटास्फोटैः संधिविघट्टनैः ।
पटत्पटेत्याद्यनुकरणार्हारवविशिष्टम् ॥ ५३ ॥

जगत्पदार्थैर्व्यामिश्रैरमिश्रैर्मुकुरैर्यथा ।
व्याप्तमाभोगिभांकारैरङ्गैरङ्गभ्रमैस्तथा ॥ ५४ ॥

अन्योन्यसंघट्टनाद्विश्लेषाच्च प्रतिक्षणं व्यामिश्रैरमिश्रैश्च
जगत्पदार्थैस्तद्वद्भिरङ्गैस्तद्भ्रमणैश्च
आभोगिभांकारैर्मूर्तिमद्भिर्भयैरिव व्याप्तम् ॥ ५४ ॥

मेरुर्नृत्यति लोलोच्चकुलाचलबृहद्भुजः ।
भ्रमदभ्रपटोपेतनमत्तनुतनूरुहः ॥ ५५ ॥

तदेव जगन्नृत्यंन् प्रत्येकं वर्णयति - मेरुरित्यादिना ।

148721 भ्रमद्भिरभ्रपटैरुपेताश्छन्ना नमन्त्यस्तनवस्तनूरुहाः कल्पवृक्षाश्च
148722 यस्य ॥ ५५ ॥
148723
148724 अत्यजन्तः समुद्राश्च मर्यादामुद्रणं द्रुमाः ।
148725 भूमेर्नभस्तलं यान्ति नभसो यान्ति भूतलम् ॥ ५६ ॥
148726
148727 मर्यादामुद्रणं वेलामर्यादानियमम् ॥ ५६ ॥
148728
148729 पुराणि घर्घरारावैर्दृश्यन्ते लुठितान्यधः ।
148730 सगृहाट्टालवास्तव्यं न च किंचिल्लुठत्यधः ॥ ५७ ॥
148731
148732 वास्तुषुवेश्मभूमिषु भवा वास्तव्यास्तदन्तैः सहितं यथा स्यात्तथा लुठितानि ॥ ५७
148733 ।।
148734
148735 तस्यां भ्रमन्त्यां चतुरं चन्द्रार्कदिनरात्रयः ।
148736 नखाग्रलेखालोकान्तर्भ्रान्तिकाञ्चनसूत्रवत् ॥ ५८ ॥
148737
148738 तस्यां कालरात्र्यां भ्रमन्त्यां सत्यां चन्द्रार्कादयस्तन्नखाग्ररेखासु ये
148739 आलोकाः प्रभाविशेषास्तदन्तर्भविण भ्रमन्तः काञ्चनसूत्रवद्दीर्घाकारा भान्ति
148740 । भ्रमदलातवह्निप्राया इत्यर्थः ॥ ५८ ॥
148741
148742 विभान्ति सृष्टयस्तस्या घर्माणि जलजालिकाः ।
148743 इव नीहारहारिण्या नीलवारिदवाससः ॥ ५९ ॥
148744
148745 नीहारैर्हारिण्या हारवत्या नीलवारिदवस्त्रायास्तस्याः सृष्टयो मेघैर्विसृष्टा
148746 जलजालिका घर्माणि स्वेदबिन्दव इव विभान्तीत्यर्थः ॥ ५९ ॥
148747
148748 खमेव तस्याः संपन्नं कबरीमण्डलं बृहत् ।
148749 पातालं चरणौ भूमिरुदरं बाहवो दिशः ॥ ६० ॥
148750
148751 इदानीं जगत्सर्वं तस्या अङ्गत्वेन संपन्नमिति वर्णयति - खमेवेत्यादिना ॥ ६० ॥
148752
148753 द्वीपाब्धयोऽन्त्रवलयः पार्श्वकाः सर्वपर्वताः ।
148754 प्राणापानावलीदोलाः पवनस्कन्धशालिकाः ॥ ६१ ॥
148755
148756 द्वीपा अब्धयश्च अन्त्रसहिता वलयः संपन्नाः । आवहोद्वहप्रवहादयः
148757 पवनस्कन्धलक्षणा नभःसौधशालिकास्तस्याः प्राणापानावलीदोलाः संपन्नाः ॥
148758 ६१ ॥
148759
148760 तदानुभूतं नृत्यन्त्यास्तस्या वपुषि विस्तृते ।
148761 हिमवन्मेरुसह्याद्यैर्दोलनभ्रममद्रिभिः ॥ ६२ ॥
148762
148763 अत एव तदङ्गत्वेन संपन्नैर्हिमवदाद्यद्रिभिस्तद्वपुषि दोलनप्रयुक्ता भ्रमा
148764 यस्मिंस्तथाविधं प्रेङ्खोलिकाक्रीडनसुखमनुभूतमित्युत्प्रेक्षा ॥ ६२ ॥
148765
148766 तरदद्रिगुलुच्छास्ता वलयन्त्या तया स्रजः ।
148767 पुनः कल्पान्त आरब्ध इव ताण्डवहेलया ॥ ६३ ॥
148768
148769 तरन्तः प्लवमाना अद्रिलक्षणा गुलुच्छा मञ्जर्यो यासु तथाविधाः प्राग्वर्णितस्रजो
148770 वलयन्त्या परिवर्तयन्त्या तया ताण्डवलीलया पुनः प्रलय आरब्ध इवेत्युत्प्रेक्षा ॥ ६३ ॥
148771
148772 सुरासुरोरगानीकरोमशाङ्गः शरीरकः ।

148773 निस्पन्दं स्थातुमशकन्नसौ भ्रमति चक्रवत् ॥ ६४ ॥
148774

148775 असौ तस्याः शरीरमेव शरीरको निस्पन्दं स्थातुमशकन् अशक्नुवन्सन्
148776 भ्रमतीत्युत्प्रेक्षा शकेश्छान्दसो विकरणव्यत्ययः ॥ ६४ ॥
148777

148778 नानाविभवविज्ञानयज्ञयज्ञोपवीतिनी ।
148779 सा सरन्ती नभस्यासीद्घनघूत्कारघोषिणी ॥ ६५ ॥
148780

148781 कर्मफलभूता विभवास्तदनुष्ठानहेतुविज्ञानानि तदनुष्ठानरूपा यज्ञाश्चेति
148782 त्रिसूत्रयज्ञोपवीतिनी नभसि सरन्ती नृत्यन्ती सा देवी घनघूत्कारा
148783 मेघध्वनयस्तैर्घोषिणी वेदघोषणवती ब्रह्मचारिणीवासीत् ॥ ६५ ॥
148784

148785 तत्र भूतलमाकाशमाकाशमपि भूतलम् ।
148786 प्रतिकृति भवत्यन्तर्न च किंचिद्विवर्तते ॥ ६६ ॥
148787

148788 अथवा तत्र तन्नृत्येन च किंचिदपि विवर्तते चलति किंतु भूतलमाकाशं चक्रमिषेण
148789 परस्परस्मिन् प्रतिबिम्बनेन प्रतिकृति परस्परसदृशं सत् पर्यायेण
148790 भूतलमाकाशं भवति आकाशं च भूतलं भवति । तत्र पश्यतां द्वे अपि सह
148791 स्वस्वगतैः पदार्थैरूर्ध्वाधो विवर्तेते इति भ्रान्तिमात्रमित्यर्थः ॥ ६६ ॥
148792

148793 बृहन्नासागुहागेहनिर्गता घनघुंघुमाः ।
148794 तत्रोग्रा वायवो वान्ति घोरघूत्कारकारिणः ॥ ६७ ॥
148795

148796 तच्छ्वासवायून्वर्णयति - बृहदिति ॥ ६७ ॥
148797

148798 नभःकरशतैस्तस्वाश्वतुरावृत्तिवर्तिभिः ।
148799 भाति चण्डानिलोद्भूतैराकीर्णमिव पल्लवैः ॥ ६८ ॥
148800

148801 तदङ्गजजगद्वस्तुजातभ्रमणसंभवात् ।
148802 दृष्टिर्धीरापि मे मोहे सन्ना सेनेव संगरे ॥ ६९ ॥
148803

148804 धीरा धैर्यवती स्थैर्यवती च मे दृष्टिः संगरे सेनेव तदङ्गजजगद्वस्तुभिः सह
148805 जातानि यानि भ्रमणानि तत्संभवाच्छ्रमात्सन्ना कुण्ठितशक्तिरासीदित्यर्थः ॥ ६९ ॥
148806

148807 प्रोह्यन्ते  यन्त्रवच्छैला निपतन्ति नभश्चराः ।
148808 लुठन्त्यमरगेहानि वलिते देहदर्पणे ॥ ७० ॥
148809

148810 तस्या देहदर्पणे वलिते परिवर्तिते सति ॥ ७० ॥
148811

148812 मेरवः पर्णवद्व्यूढा मलयाः पल्लवा इव ।
148813 हिमाद्रयो हिमकणा इवौर्व्योऽब्जलता इव ॥ ७१ ॥
148814

148815 उर्व्या भवा और्व्यः अब्जलता इव व्यूढा विशकलिताः ॥ ७१ ॥
148816

148817 सह्या मह्यामिव खगा विन्ध्या विद्याधरा इव ।
148818 वृक्षावर्ते भ्रमन्तोऽन्ता राजहंसा इवाम्बरे ॥ ७२ ॥
148819

148820 अम्बरे राजहंसा इव वृक्षावर्ते अन्तर्भ्रमन्तः । अन्ता इति ढ्रलोपेऽणो दीर्घः ॥ ७२ ॥
148821

148822 द्वीपान्यपि तृणानीव समुद्रा वलया इव ।
148823 सुरलोकालयः पद्मा आसंस्तद्देहवारिणि ॥ ७३ ॥
148824

148825 तद्देहलक्षणे वारिणि सरसि सुरलोकानामालयः पङ्क्तयः पद्मा इवेत्यनुषज्यते।
148826 उत्प्रेक्षापङ्क्तिनिवेशात्ताभित्तद्देहे सरोरूपकसमर्थात्॥ ७३॥
148827
148828 विशदाकाशसंकाशे स्वप्नाञ्जनपुरोपमे।
148829 अङ्गे तस्या बृहज्जङ्गे पिण्डादित्यसमत्विषि॥ ७४॥
148830
148831 पिण्डीभूतैरादित्यैः समत्विषि तस्या अङ्गे विन्ध्यादयः सर्वे जङ्गमतां गता इति
148832 परेणान्वयः॥ ७४॥
148833
148834 विन्ध्यो नृत्यति काञ्चनाचलवने सह्यश्च सह्यो गिरिः कैलासो मलयो
148835 महेन्द्रशिखरी क्रौञ्चाचलो मन्दरः।
148836 गोकर्णो गगनाङ्गणे वसुमती विद्याधराणां पुरं सर्वे जंगमतां गता
148837 वनभवस्तस्याः शरीरे सदा॥ ७५॥
148838
148839 काञ्चनाचलस्य शिरोरुहे वने विन्ध्यश्चिरन्तनं वैरं निर्यातयन्निव नृत्यति
148840 तदसह्यः सह्यो गिरिः कैलासादयश्च गगनाङ्गणे कोपादिव नृत्यन्ति।
148841 तत्पक्षपाताद्वसुमती विद्याधराणां पुरं च नृत्यतः। इत्थं सर्वे स्थावरा
148842 जङ्गमतां गता इत्यर्थः॥ ७५॥
148843
148844 अब्धिर्नृत्यति पर्वते गिरिरपि प्रोच्चैर्नभःकोटरे व्योमापीन्दुदिवाकरैः क्व
148845 चलितं भूमेरधस्ताद्गतम्।
148846 सद्वीपाचलपत्तनो वनगणः प्रोत्कीर्णपुष्पो दिवि व्यालोलं जगदम्बुधाविव
148847 तृणं दिक्चक्रके भ्राम्यति॥ ७६॥
148848
148849 किंचेदमपरमाश्चर्यम् - अब्धिः पर्वते नृत्यति। स च गिरिः
148850 प्रोच्चैर्नभःकोटरे नृत्यति। तद्व्योमापि इन्दुदिवाकरैः सह भूमेरधस्ताच्चलितं
148851 सत् क्व गतं न ज्ञायते। प्रोत्कीर्णानि पुष्पाणि यस्मिंस्तथाविधः सद्वीपाचलपर्वतो
148852 [पत्तनः इति पाठः समीचीनः।] वनगणो दिवि द्युलोके सूर्यादिस्थाने नृत्यति।
148853 इत्थं व्यालोलं जगदम्बुधौ तृणमिव दिक्चक्रके भ्राम्यतीत्यर्थः॥ ७६॥
148854
148855 व्योम्नि भ्रमन्ति गिरयोऽम्बुधयो दिगन्ते लोकान्तराणि पुरपत्तनमण्डलानि।
148856 नद्यः सरांसि मुकुरान्तरिव प्रवृद्धवातावकीर्णतृणविक्रमणक्रमेण॥
148857 ७७॥
148858
148859 तथा गिरयो व्योम्नि भ्रमन्ति। अम्बुधयश्च दिगन्ते भ्रमन्ति। पुरपत्तनमण्डलानि
148860 नद्यः सरांसि च स्वाश्रयलोकाल्लोकान्तराणि मुकुरान्तरिव प्रविश्य प्रवृद्धेन
148861 वातेनावकीर्णानां तृणानां यानि विक्रमणानि उड्डयनानि लोके प्रसिद्धानि
148862 तत्क्रमेण भ्रमन्तीत्यर्थः॥ ७७॥
148863
148864 मत्स्याश्चरन्ति च मरौ वरवारिणीव व्योम्नि स्थिराणि नगराणि भुवीव भान्ति।
148865 खे भूधरा गगनसंक्षयवारिवाहमुत्पातवातपरिवृत्तगिरिस्थितं तत्॥ ७८॥
148866
148867 किं च मत्स्या वरवारिणि समुद्र इव मरौ चरन्ति। नगराणि च भुवीव व्योम्नि स्थिराणि
148868 भान्ति। भूधराः खे भान्ति। गगनं च संक्षयवारिवाहाः प्रलयमेघाश्च
148869 तेषां समाहारो गगनसंक्षयवारिवाहमुत्पातवातपरिवृत्तगिरिषु स्थितं
148870 तत्परमाश्चर्यमित्यर्थः॥ ७८॥
148871
148872 ऋक्षोत्करो भ्रमति दीपसहस्रयन्त्रचक्रक्रमेण मणिवर्षणवेगचारुः।
148873 अन्तर्बहिश्च परितः प्रणयेन मुक्तं विद्याधरामरगणैरिव पुष्पवर्षम्॥
148874 ७९॥
148875
148876 किं च ऋक्षोत्करो नक्षत्रसमूहो मणीनां वर्षणवेग इव चारुर्मनोहरः सन्

148877 दीपसहस्राणां भ्रमन्ति यानि यन्त्रचक्राणि तत्क्रमेण भूमेरन्तर्बहिश्च भ्रमति।
148878 यथा विद्याधरामरगणैः प्रणयेन त्वत्सभायां मुक्तं पुष्पवर्षमन्तर्बहिश्च
148879 भ्रमति तद्वत्॥ ७९॥
148880
148881 संहारसर्गनिचया दिनरात्रिभागे बिन्दूपमा रजतयोर्दिवसोत्कराश्च।
148882 कृष्णाः सिताश्च परितोऽमलशुक्लकृष्णस्वादर्शमण्डलवदाकुलमुल्लसन्ति॥
148883 ८०॥
148884
148885 किं च तद्देहे संहाराः प्रलयाः सर्गनिचयाश्च दिनरात्र्योर्भागे पक्षे उल्लसन्ति।
148886 दिनरात्रिप्राया अल्पा इति यावत्। तथा दिवसोत्करा दिनरात्रिसमूहाश्च मलिनामलिनयो
148887 रजतयोर्बिन्दूपमा अत्यल्पा उल्लसन्ति। कृष्णाः सिताश्च पक्षाः परितः अमला ये
148888 शुक्लाः कृष्णाश्च वज्रेन्द्रनीलादिनिर्मिताः शोभना
148889 आदर्शास्तन्मण्डलवदुल्लसन्तीत्यर्थः॥ ८०॥
148890
148891 रत्नानि भास्करनिशाकरमण्डलानि तारोत्करास्तरलमण्डलकान्तिहाराः।
148892 स्वच्छाम्बराणि वलितानि महाम्बराणि कुर्वन्त्यनारतमनल्पमलातलेखाः॥ ८१
148893 ॥
148894
148895 तथा तद्देहे भास्करनिशाकरमण्डलानि रत्नानि संपन्नानि। तारोत्करा
148896 नक्षत्रसमूहास्तु तरला मण्डलाकारा कान्तिर्येषां तथाविधा हाराः संपन्नाः।
148897 स्वच्छान्यम्बराण्याकाशास्तु वलितानि वेष्टितानि महान्त्यम्बराणि वस्त्राणि
148898 संपन्नानि। तेषु भ्रमद्वैद्युताग्न्यादयः अलातलेखा अनारतमनल्पं प्रकाशं
148899 कुर्वन्तीत्यर्थः॥ ८१॥
148900
148901 कल्पान्तकालविलुठत्त्रिजगन्मणीनि व्यावर्तनैर्झगिरि जातझणज्झणानि।
148902 तेजांसि झंकृततयोर्ध्वमधश्च यान्ति नानाविधानि गुणवन्ति विभूषणानि॥
148903 ८२॥
148904
148905 तन्नृत्ये कल्पान्तकाले विलुठत् त्रिजगद्व्यावर्तनैर्झगिति झटिति जातझणज्झणानि
148906 मणीनि संपन्नानि। तथा झंकृततया झंकारेण ऊर्ध्वमधश्च यान्ति
148907 सूर्यादितेजांसि नानाविधानि गुणवन्ति नूपुरवलयादिविभूषणानि संपन्नानीत्यर्थः
148908 ॥ ८२॥
148909
148910 संग्राममत्तभटखड्गमरीचिवीचिश्यामायमानसकलातपवासराणाम्।
148911 व्यावृत्तिभिर्विलुठतामपि सुस्थिराणामाकर्ण्यते कलकलो जनमण्डलानाम्॥ ८३
148912 ॥
148913
148914 किंचापरमत्याश्चर्यम् - संग्रामेषु मत्तानां भटानां
148915 खड्गप्रभावीचिभिः श्यामायमानसकलातपा वासरा येषाम्। तथा देवीताण्डवे
148916 व्यावृत्तिभिर्भ्रमणैर्विलुठतामप्यधिष्ठानब्रह्मस्थैर्यात्सुस्थिराणां
148917 वीरजनमण्डलानां कलकलो महायुद्धकोलाहल आकर्ण्यते॥ ८३॥
148918
148919 ब्रह्मेन्द्रविष्णुहरवह्निरवीन्दुपूर्वा देवासुराः परिविवृत्तिभिरापतन्तः।
148920 अन्येऽन्य एव विविधा उपयान्ति यान्ति वातावधूतमशकाशनिविभ्रमेण॥ ८४॥
148921
148922 किंचिदमपरमाश्चर्यम्। अनन्तकोट्यतीतानागतसर्गप्रलयघटितशरीराया
148923 अस्यास्ताण्डवे ब्रह्मेन्द्रादयो देवासुरा अधिकारप्रवृत्तिभिरन्येऽन्य एव आपतन्त
148924 आपद्यमानाः सन्तो वातावधूतमशकानामशनीनां विद्युतामिव च प्रसिद्धेन
148925 विभ्रमेण अस्थिरताविलासेन आयान्ति यान्ति च॥ ८४॥
148926
148927 संहारसर्गसुखदुःखभवाभवेहानीहानिषेधविधिजन्ममृति##-
148928 सार्धं पृथक्च विलसन्ति सदैव सर्गे व्यामिश्रतामुपगता अपि तत्र भावाः॥

148929 ८५ ॥
148930
148931 किंचापरमाश्चर्यम् - तत्र तस्याः शरीरे प्रतीयमाने सर्गे संहारसर्गादयः
148932 परस्परविरुद्धा अपि सर्वभावाः परस्परासंस्पर्शेन सदा सार्धं पृथक् च
148933 विलसन्ति। व्यामिश्रतामुपगता अपि विलसन्तीत्यर्थः ॥ ८५ ॥
148934
148935 भावोद्भवस्थितिविपत्करणभ्रमाणां संहारसर्गभुवनावनिविभ्रमाणाम्
148936 ।
148937 मिथ्यैव खे प्रकचतां खशरीरकाणां संलक्ष्यतेऽत्र न मनागपि नाम
148938 संख्या ॥ ८६ ॥
148939
148940 किं चात्र तच्छरीरे खे चिदाकाशे मिथ्यैव प्रकचतामत एव खशरीरकाणां
148941 शून्यानां संहारसर्गभुवनावनिविभ्रमाणां भावादधिष्ठानादुद्भवः
148942 स्थितिर्विपदपक्षयः करणमर्थक्रियाभ्रमाः परिवर्तश्चेत्येतेषां संख्या इयत्ता
148943 मनागपि न संलक्ष्यते ॥ ८६ ॥
148944
148945 उत्पातशान्तिमरणोत्सवयुद्धसाम्यविद्वेषरागभयविश्वसनादि तत्र।
148946 एकत्र कोश इव रत्नचयो विभाति नानारसाप्रतिघसर्गपरम्परं तत् ॥ ८७ ॥
148947
148948 किं च तत्र तद्वपुषि उत्पाततच्छान्त्यादिविरुद्धद्वन्द्वजातमेकत्र कोशे रत्नचय इव
148949 विभाति। यतस्तद्वपुर्नानारसा अपि परस्परमप्रतिघाः सर्गपरम्परा
148950 यस्मिंस्तथाविधमित्यर्थः ॥ ८७ ॥
148951
148952 तस्याश्चिदम्बरमये वपुषि स्वभावभूतास्फुटानुभवभावजगद्व्यवस्थाः।
148953 सर्वक्षया मलिनदृक्कलिताम्बरस्थकेशोण्ड्रकस्फुरणवत्परितः स्फुरन्ति ॥
148954 ८८ ॥
148955
148956 किं च तस्याः परमार्थतश्चिदम्बरमये वपुषि स्वभावभूतः
148957 अशास्त्रीयप्रतीतिसिद्धो यो मायावरणलक्षणोऽस्फुटानुभवभावस्तत्प्रयुक्ता
148958 जगद्व्यवस्थाः सर्वक्षयाश्च परितस्तिमिररोगमलिनदृशा कलितानि
148959 अम्बरस्थकेशोण्ड्रकस्फुरणानीव स्फुरन्ति ॥ ८८ ॥
148960
148961 जगत्संक्षुब्धमक्षुब्धं दृश्यते स्थितिसंस्थिति।
148962 संचाल्यमानमुकुरप्रतिबिम्ब इवास्थितम् ॥ ८९ ॥
148963
148964 अचलायामधिष्ठानसन्मात्रस्थितौ संस्थितिर्यस्य तथाविधं जगदक्षुब्धमेव
148965 मायाक्षोभदृष्ट्या संक्षुब्धं दृश्यते यतस्तद्बिम्बात्मना अचल एव गिरिः
148966 संचाल्यमानमुकुरप्रतिबिम्बः संश्चल इव भवति तद्वदास्थितमित्यर्थः ॥ ८९ ॥
148967
148968 नृत्यस्फुरत्प्रतापान्तर्जगदर्थाः प्रतिक्षणम्।
148969 स्थितिं त्यजन्ति गृह्णन्ति बालसंकल्पसर्गवत् ॥ ९० ॥
148970
148971 नृत्येन स्फुरत्प्रतापाया मायाया अन्तर्निविषाः सर्वे जगदर्थाः प्रतिक्षणं
148972 परिणामेन पूर्वस्थितिं त्यजन्ति अन्यां च स्थितिं गृह्णन्ति। तत्र बालसंकल्पसर्ग एव
148973 प्रसिद्धो दृष्टान्त इत्यर्थः। तथा चाहुः सांख्याः प्रतिक्षणपरिणामिनो हि सर्वे
148974 भावाः इति ॥ ९० ॥
148975
148976 क्रियाशक्तिः शरीरेऽन्तः पूर्यमाणा अनारतम्।
148977 राशीभूय विशीर्यन्ते जगन्मुद्गकणोत्कराः ॥ ९१ ॥
148978
148979 सर्वपदार्थानामुत्पादनार्थमेव कारकक्रियाशक्तय उपयुज्यन्ते। उत्तरे तु
148980 भावविकाराः स्वत एव काले प्रवर्तन्ते। यथा मुद्गानां राशीकरणे

148981 कारकक्रियाशक्तिरुपयुज्यते विशीर्यप्रसरणे तु स्वः स्निग्धतास्वभाव एव हेतुर्न
148982 कारकान्तरक्रियाशक्तिस्तद्वदित्याह - क्रियाशक्तीति ॥ ९१ ॥
148983
148984 क्षणमालक्ष्यते किंचिन्न किंचिदपि सा क्षणम् ।
148985 क्षणमङ्गुष्ठमात्रैव क्षणमाकाशपूरिणी ॥ ९२ ॥
148986
148987 यस्मात्सा सकला देवी संविच्छक्तिर्जगन्मयी ।
148988 अनन्ता परमाकाशकोशशुद्धशरीरिणी ॥ ९३ ॥
148989
148990 परिणामिस्वभावजडजगन्मयीत्वादेव सा देवी प्रतिक्षणमन्यथान्यथा लक्ष्यत
148991 इत्याह - क्षणमिति ॥ ९२ ॥ ९३ ॥
148992
148993 कालत्रयस्थितजगल्लितयान्तरी हि चित्सा तथा कचति तेन यथास्थितेन ।
148994 रूपेण चित्रकृदुदारमनःस्थचित्रसंसारजालसदृशेन कचज्जवेन ॥ ९४ ॥
148995
148996 सा हि देवी कालत्रयस्थितस्य सर्वतत्तत्परिणामवैचित्र्यशालिनो जगल्लितयस्यान्तर्भवा
148997 आन्तरी चित् । अतः कारणाद्यथास्थितेन पर्यायवर्तिना
148998 तत्तत्कामकर्मवासनापरिपाकानुसारेण कचज्जवेन चित्रकृतः पुरुषस्य उदारे मनसि
148999 स्थितं यच्चित्रसंसारजालं तत्सदृशेन यथास्थितेन तेन तेन विचित्रेण रूपेण तथा
149000 कचतीत्यर्थः ॥ ९४ ॥
149001
149002 सर्वात्मकैकवपुरेकचिदात्मकत्वात्संशान्तखैकवपुरेकचिदात्मतत्त्वात् ।
149003 एवं निमेषणसमुन्मिषितैकरूपं सा बिभ्रती वपुरनन्तमनादि भाति ॥ ९५ ॥
149004
149005 तर्हि किं सा सप्रपञ्चैव नेत्याह - सर्वात्मकेति । सा देवी
149006 अविद्यावृतैकचिदात्मकत्वात्सर्वसंसारात्मकैकवपुश्चित्रभित्तिरिवास्ते । विद्यानिरस्ता
149007 विद्यैकचिदात्मकत्वात्तु संशान्तं यत् खमाकाशं तद्वपुर्निष्प्रपञ्चैवास्ते ।
149008 एवं बद्धदृशा मुक्तदृशा च गम्यं निमेषणेन समुन्मिषितेन
149009 चाविद्याविद्याभ्यां पर्यायव्यञ्जितेनोपलक्षितं
149010 परमार्थतश्चिदेकरूपमनाद्यनन्तं वपुर्बिभ्रती सा भातीत्यर्थः ॥ ९५ ॥
149011
149012 तस्यां विभाति तदनन्तशिलात्मकोशे लेखाब्जचक्ररचनादिवदेव दृश्यम् ।
149013 व्योमात्मकं गगनमात्रशरीरवत्यां चित्त्वाद्द्रवज्जलधिकोश इवोर्मिलेखा ॥ ९६
149014 ॥
149015
149016 विवर्तदृशा परिणामदृशा च जीवन्मुक्तानां यौक्तिकानां च तस्यां जगद्भाने
149017 दृष्टान्तद्वयमाह - तस्यामिति । शिलात्र स्फटिकशिला ।
149018 गगनमात्रशरीरवत्यामित्यन्तमाद्यदृष्टान्तस्य विवरणं शिष्टं द्वितीयस्य ॥ ९६
149019 ॥
149020
149021 महती भैरवी देवी नृत्यन्त्यापूरिताम्बरा ।
149022 तस्य कल्पान्तरुद्रस्य सा पुरो भैरवाकृतेः ॥ ९७ ॥
149023
149024 इत्थं तस्यास्तन्नृत्यस्य च तत्त्वमुपवर्ण्य पुनस्तन्नृत्यमुत्प्रेक्षादिभिर्वर्णयति ##-
149025
149026 शिरोमन्दाश्रितोग्राग्निदग्धस्थाणुवनावनिः ।
149027 कल्पान्तवातव्याधृता वनमालेव नृत्यति ॥ ९८ ॥
149028
149029 कल्पान्तरुद्रस्य शिरो ललाटस्थानममन्दमाश्रितेन उग्रेण तृतीयनेत्राग्निना
149030 दग्धानि अत एव स्थाणुपरिशेषाणि वनानि यस्यां तथाविधा
149031 अवनिर्भूमिर्यस्यास्तथाविधा कल्पान्तवातैर्व्याधूता वनमाला वनपङ्क्तिरिव सा
149032 नृत्यतीत्युत्प्रेक्षा उपमा वा ॥ ९८ ॥

149033
149034 कुद्दालोलूखलबृसीफलकुम्भकरण्डकैः ।
149035 मुसलोदञ्चनस्थालीस्तम्भैः स्रग्दामधारिणी ॥ ९९ ॥
149036
149037 न केवलं तस्याः प्राग्वर्णितान्येव स्रग्दामानि किंतु खनित्रमुसलोलूखलाद्यपीत्याह
149038 - कुद्दालेति ॥ ९९ ॥
149039
149040 एवंविधानां स्रग्दामजालानां कुसुमोत्करम् ।
149041 किरन्ती संसृजन्तीव नृत्तक्षुब्धं क्षयक्षतम् ॥ १०० ॥
149042
149043 नृत्ते क्षुब्धं व्याधूतं क्षयेण भङ्गेन क्षतं किरन्ती नवं नवं
149044 संसृजन्तीव ॥ १०० ॥
149045
149046 वन्द्यमानस्तया सोऽपि तथैवाकाशभैरवः ।
149047 तथैव वितताकारस्तदोच्चैः परिनृत्यति ॥ १०१ ॥
149048
149049 डिंबं डिंबं सुडिंबं पच पच सहसाझम्य झम्यंन् प्रझम्यं
149050 नृत्यन्ती शब्दवाद्यैः स्रजमुरसि शिरःशेखरं तार्क्ष्यपक्षैः । पूर्णं
149051 रक्तासवानां यममहिषमहाशृङ्गमादाय पाणौ पायाद्वो वन्द्यमानः
149052 प्रलयमुदितया भैरवः कालरात्र्या ॥ १०२ ॥
149053
149054 रक्तासवानां पूर्णं यममहिषस्य महाशृङ्गं पाणावादाय डिम्बं
149055 डिम्बमित्यादिमिस्तालव्यञ्जकैः शब्दवाद्यैर्नृत्यन्त्या उरसि शिरः शिरांस्येव
149056 स्रजं कृत्वा विभ्रत्या तार्क्ष्यपक्षैः शेखरं भूषितवत्या प्रलये जगद्भुक्त्वा
149057 मुदितया कालरात्र्या वन्द्यमानः स्तूयमानो भैरवो वः पायात्
149058 ज्ञानप्रतिबन्धकदोषनिरासेन रक्षत्वित्याशीः ॥ डिम्बं डिम्बमित्यादेश्चायमर्थः
149059 - हे भैरव त्वं सर्वप्राणिनां डिम्बमनर्थभोगोपाधिं
149060 स्थूलशरीरादिप्रपञ्चं आझम्य । झमु अदने । भक्षयित्वा ततो डिम्बं
149061 सूक्ष्मशरीरादिप्रपञ्चमपि झम्यं भक्ष्यं कृत्वा ततोपि सुडिम्बं
149062 मूलोपाधिभूतं कारणशरीरमपि चरमसाक्षात्कारे तत्त्वत आविर्भूय प्रझम्यंन्
149063 सम्यग्भक्ष्यंन् कृत्वा पञ्चमादियोगभूमिकारोपणेन सहसा शीघ्रमेव पच
149064 पच सप्तमभूमिकापर्यन्तं सम्यक्परिपाच्य विदेहकैवल्येन जरयेति स्तूयमान इति ।
149065 इति नृत्यन्त्या कालरात्र्या सह युष्माभिः स्तूयमानो भैरवो वः पायादिति वाऽन्वयः ॥
149066 १०२ ॥
149067
149068 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वाणप्रकरणे उ० पाषा०
149069 कालरात्रिवर्णनं नामैकाशीतितमः सर्गः ॥ ८१ ॥
149070
149071 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
149072 कालरात्रिवर्णनं नामैकाशीतितमः सर्गः ॥ ८१ ॥
149073
149074 द्व्यशीतितमः सर्गः ८२
149075
149076 श्रीराम उवाच ।
149077
149078 किमेतद्भगवन्सर्वनाशे नृत्यति केन सा ।
149079 किं शूर्पफलकुम्भाद्यस्तस्याः स्रग्दामधारणम् ॥ १ ॥
149080
149081 विद्रूपस्य शिवस्यात्र तत्त्वं निष्कृष्य वर्ण्यते ।
149082 सकलं यावदज्ञातं परिज्ञातं तु निष्कलम् ॥
149083
149084 सर्वस्य प्रपञ्चस्य विस्तरेण प्राक् प्रलयो वर्णितः । प्रलीनस्य च तस्य नृत्यन्त्याः

149085 कालरात्र्या भूषणादिभावेनाङ्गे सद्भावो नृत्तभ्रमणादि च वर्णितमिति नष्टस्य
149086 पुनरुन्मज्जनमुक्तमसंभावितं मन्यमानो रामः पृच्छति - किमेतदिति।
149087 सर्वनाशे सति सा देवी केनाङ्गेन नृत्यति। शूर्पफलकुंभाद्यैर्नष्टैस्तस्याः
149088 स्रग्दाममधारणं च त्वयोक्तं किं कथं संभावनीयमित्यर्थः॥ १॥
149089
149090 किं नष्टं त्रिजगद्भूयः किं काल्या देहसंस्थितम्।
149091 परिनृत्यति निर्वाणं कथं पुनरुपागतम्॥ २॥
149092
149093 तदेव स्पष्टमाह - किमिति। नष्टं स्थितं चेत्कथं निर्वाणमुपरतं
149094 जगत्पुनरुपागतं सत् कथं परिनृत्यतीति व्याहतं प्रतिभातीत्यर्थः॥ २॥
149095
149096 श्रीवसिष्ठ उवाच।
149097
149098 नासौ पुमान्न चासौ स्त्री न तन्नृत्तं न तावुभौ।
149099 तथाभृते तथाचारे आकृती न च ते तयोः॥ ३॥
149100
149101 यदि परमार्थदृष्ट्या मदुक्तं व्याहतं मन्यसे तर्ह्यस्तु नाम
149102 परमार्थतश्चिन्मात्रैकरसपूर्णानन्दसन्मात्रातिरिक्तस्त्रीपुंसादिजगद्रूपस्य
149103 रुद्रदेव्यादिविभागस्य चात्यन्तासंभावितत्वात्। भ्रान्तदृशा तु न किंचिद्व्याहतम्।
149104 ब्रह्मसत्तया सदा सतां सर्ववस्तूनां नाशानाशयोर्विशेषस्य
149105 दुर्निरूपत्वादित्यसकृदावेदितत्वान्नष्टानामपि
149106 स्वप्नोन्मादयोरुन्मज्जनप्रसिद्धेर्मृतानामपि चिराद्भस्मीभूतानां
149107 मुनिसिद्धेश्वरादिवरप्रभावात्पुनरागमनप्रसिद्धेर्यावदज्ञानं जगदाकारस्य
149108 चित्ते संस्कारात्मना सर्वेषां सद्भावेनात्यन्तभ्रान्तैः केवलजगद्रूपेण
149109 सर्वजगद्घटितैकमूर्त्यात्मना रुद्रदेव्याद्युपासकैस्तादृशरूपेण च
149110 योगसिद्धिबलाद्द्रष्टुं शक्यत्वादित्याशयेन वसिष्ठ उत्तरमाह -
149111 नासावित्यादिना॥ ३॥
149112
149113 अनादिचिन्मात्रनभो यत्तत्कारणकारणम्।
149114 अनन्तं शान्तमाभासमात्रमव्ययमाततम्॥ ४॥
149115
149116 शिवं तत्सच्छिवं साक्षाल्लक्ष्यते भैरवाकृति।
149117 तथास्थितो जगच्छान्तौ परमाकाश एव सः॥| ५॥
149118
149119 शिवं निरतिशयानन्दैकरसं तत्सद्ब्रह्मैव शिवं
149120 नीलकण्ठत्रिनेत्रत्वादिशिवरूपं सत्प्रलयकाले भैरवाकृति लक्ष्यते उपासकैरिति
149121 शेषः। यतस्तद्वासनानुसारेण स परमाकाश एव तथा तया आकृत्या स्थित इत्यर्थः
149122 ॥ ५॥
149123
149124 चेतनत्वात्तथाभूतस्वभावविभवादृते।
149125 स्थातुं न युज्यते तस्य यथा हेम्नो निराकृति॥ ६॥
149126
149127 किं च चेतने ब्रह्मणि जगदुपसंहारः श्रुतिषु प्रसिद्धः। न च निराकारश्चेतनो लोके
149128 केनचिद्दृश्यत इति श्रौतो हि संहर्तेश्वर उमासहायं परमेश्वरं प्रभुं
149129 त्रिलोचनं नीलकण्ठं प्रशान्तमित्यादिश्रुतिप्रसिद्धरूपेण संभावनीय
149130 इत्याशयेनाह - चेतनत्वादिति। तृतीयार्थे षष्ठ्यौ। यथा हेम्ना निराकृति यथा
149131 स्यात्तथा स्थातुं न युज्यते तथा तेनापीत्यर्थः॥ ६॥
149132
149133 कथमास्तां वद प्राज्ञ चिन्मात्रं चेतनं विना।
149134 कथमास्तां वद प्राज्ञ मरिचं तिक्ततां विना॥ ७॥
149135
149136 यथा हेम्नो हेमादिद्रव्यस्य

149137 पिण्डकुण्डलाद्यन्यतमाकारावश्यंभावनियमस्तथा चेतोऽप्यवश्यं
149138 चेत्याकारावलम्बननियमो लोके प्रसिद्ध इति निराकारपरिशेषपक्ष एव
149139 प्रत्युतासंभावित इति प्रौढिवादेनाह - कथमिति ॥ ७ ॥
149140
149141 कटकादि विना हेम कथमास्तां विलोच्यताम् ।
149142 कथं स्वभावेन विना पदार्थस्य भवेत्स्थितिः ॥ ८ ॥
149143
149144 अज्ञातचितः सविषयतास्वभावत्वादप्याकारो दुस्त्यज इत्याशयेनाह - कथं
149145 स्वभावेनेत्यादिना ॥ ८ ॥
149146
149147 विना तिष्ठति माधुर्यं कथयेक्षुरसः कथम् ।
149148 निर्माधुर्यश्च यस्त्विक्षुरसो न हि स तद्रसः ॥ ९ ॥
149149
149150 अचेतनं यच्चिन्मात्रं न तच्चिन्मात्रमुच्यते ।
149151 न च चिन्मात्रनभसो नष्टं क्वचन युज्यते ॥ १० ॥
149152
149153 अपि च नष्टानामपि स्मृतौ भानदर्शनाच्चिद्दृष्ट्या कस्यापि निरन्वयनाश
149154 एवाप्रसिद्ध इत्याह - न चेति ॥ १० ॥
149155
149156 स्वसत्तामात्रकादन्यत्किंचित्तस्य न युज्यते ।
149157 अन्यत्वमुररीकर्तुं व्योमानन्यमसौ किल ॥ ११ ॥
149158
149159 किं च ब्रह्मानन्यस्य जगतो ब्रह्मसत्तामात्रकातिरिक्तरूपाप्रसिद्धेर्न कस्यचिन्नाशः
149160 प्रसिद्ध्यतीत्याह - स्वेति । ननु निरुक्तं चानिरुक्तं च निलयनं चानिलयनं च
149161 विज्ञानं चाविज्ञानं च सत्यंन् चानृतं च सत्यमभवत् इति ब्रह्मसत्तातिरिक्तं
149162 रूपं श्रूयते अनुभवन्ति च पामरास्तत्राह - अन्यत्वमिति । असौ ब्रह्मात्मा बहु
149163 स्यां प्रजायेय इति जगदाकारेण अन्यत्वमुररीकर्तुं तस्माद्वा एतस्मादात्मन
149164 आकाशः संभूतः इति श्रुतेः प्रथमं व्योमानन्यमाकाशाभिन्नं स्वात्मानं
149165 करोति किल । यदि स्वानन्यंन् व्योम करोति तर्हि अन्यत्वं कथमुररीकृतं स्यात् ।
149166 सद्रूपानन्यत्वासंपादने वा कथं व्योम कृतं स्यात् । सदात्मतालाभ एव हि
149167 व्योमादेरुत्पत्तिरिति न निरुक्तं चानिरुक्तं च इत्यादिश्रुत्युक्तस्य मूर्तामूर्तरूपस्य
149168 सद्रूपान्यतासिद्धिरित्यर्थः ॥ ११ ॥
149169
149170 तस्मात्तस्य यदक्षुब्धं सत्तामात्रं स्वभासनम् ।
149171 अनादिमध्यपर्यन्तं सर्वशक्तिमयात्मकम् ॥ १२ ॥
149172
149173 किं तर्हि जगद्रूपमिति चेद्ब्रह्मसत्तैव । सा हि तत्त्वावबोधकमानं विना
149174 लौकिकदृशा जगत्तत्प्रलयाद्याकारेण सर्पात्मनेव रज्जुर्भासते ।
149175 तत्त्वावबोधकमानेन तु यथार्थरूपेणेति निष्कर्ष इत्युपसंहरति - तस्मादिति ॥ १२
149176 ॥
149177
149178 तदेतत्त्रिजगत्सर्गकल्पान्तौ व्योम भूर्दिशः ।
149179 नाश उत्पादनं नाम विनानाभासनं नभः ॥ १३ ॥
149180
149181 विनानाभासनं तत्त्वावेदकमानं विनैवाविद्यादूषितदृशा भासनं
149182 तैमिरिकदृशा चन्द्रव्योमादिभासनमिव नभः
149183 शुद्धसत्तातिरिक्तार्थशून्यमेवेत्यर्थः ॥ १३ ॥
149184
149185 जननं मरणं मायामोहं मान्द्यमवस्तुता ।
149186 वस्तुता च विवेकश्च बन्धो मोक्षः शुभाशुभे ॥ १४ ॥
149187
149188 परमार्थतस्तु जननादि एतत्सर्वं शुद्धचिदाकाशो निरामय इति पञ्चमे संबन्धः

149189 | माया विक्षेपः मोह आवरणं तयोः समाहारः ॥ १४ ॥
149190
149191 विद्याऽविद्या विदेहत्वं सदेहत्वं क्षणश्चिरम् ।
149192 चञ्चलत्वं स्थिरत्वं वा त्वं चाहं चेतरश्च तत् ॥ १५ ॥
149193
149194 सदसच्चाथ सदसन्मौर्ख्यं पाण्डित्यमेव च ।
149195 देशकालक्रियाद्रव्यकलनाकेलिकल्पनम् ॥ १६ ॥
149196
149197 रूपालोकमनस्कारकर्मबुद्धीन्द्रियात्मकम् ।
149198 तेजोवार्यनिलाकाशपृथ्व्यादिकमिदं ततम् ॥ १७ ॥
149199
149200 एतत्सर्वमसौ शुद्धचिदाकाशो निरामयः ।
149201 अजहद्व्योमतामेव सर्वात्मैवैवमास्थितः ॥ १८ ॥
149202
149203 एतत्सर्वं च विमलं खमेवात्र न संशयः ।
149204 अस्मादनन्यत्स्वप्नादिर्दृष्टान्तोऽत्राविखण्डितः ॥ १९ ॥
149205
149206 सदनन्यत्वमिव चिदनन्यत्वमप्यस्य स्वप्नदृष्टान्तेन
149207 संभावनीयमित्याशयेनाह - एतत्सर्वमिति ॥ १९ ॥
149208
149209 चिन्मयः परमाकाशो य एव कथितो मया ।
149210 एषोऽसौ शिव इत्युक्तो भवत्येष सनातनः ॥ २० ॥
149211
149212 स सच्चिदेकस्वभावः परमात्मा । शिव एको ध्येयः शिवंकरः सर्वमन्यत्परित्यज्य
149213 इत्यादिश्रुतिषु शिव इत्युक्त एष सनातनः शिवो भवत्येवेति मया रुद्रमूर्तिरुपन्यस्त
149214 इत्यर्थः ॥ २० ॥
149215
149216 स एष हरिरित्यास्ते भवत्येष पितामहः ।
149217 चन्द्रोऽर्क इन्द्रो वरुणो यमो वैश्रवणोऽनलः ॥ २१ ॥
149218
149219 स एव विष्ण्वाद्याकारेणोपासितवतां हरिरिति वेषेणास्ते । एवं पितामहोऽप्यन्येषां
149220 भवति । किं बहुना । चन्द्रार्कादिवासनावासितधियां तत्तद्रूपोऽपि भवतीत्याह -
149221 चन्द्र इति । तथा च श्रुतिः इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो
149222 गरुत्मान् । एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः इति ॥ २१ ॥
149223
149224 अनिलो जलदोम्भोधिर्ह्यो यद्वस्त्वसि नास्ति च ।
149225 इत्येते चिन्मयाकाशकोशलेशाः स्फुरन्त्यलम् ॥ २२ ॥
149226
149227 स एवानिलो वायुः । ह्यः अतीतं दिनम् । कालमात्रोपलक्षणमेतत् । तत्र यद्वस्त्वस्ति नास्ति
149228 चेति विकल्प्यते तत्सर्वमेष एवेत्यथः । तथा च श्रुतिः स ब्रह्मा स हरिः सेन्द्रः
149229 सोऽक्षरः परमः स्वराट् । स एव विष्णुः स प्राणः स कालोऽग्निः स चन्द्रमाः । स एव
149230 सर्वं यद्भूतं यच्च भव्यं सनातनम् । ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था
149231 विमुक्तये इति । इति वर्णिता एते हरिपितामहादयो भावाश्चिन्मयस्य ब्रह्माकाशकोशस्य
149232 गुणाद्युपाधिप्रयुक्ता लेशा अंशाः ॥ २२ ॥
149233
149234 एवंविधाभिः संज्ञाभिर्मुधाभावनयेदृशाः ।
149235 स्वभावमात्रबोधेन भवन्त्येते तु तादृशाः ॥ २३ ॥
149236
149237 मुधाभावनया अन्यथाग्रहणकारिण्या अविद्यया परमार्थस्वभावमात्रबोधेन तु
149238 एते तादृशाश्चिन्मात्रस्वभावा भवन्ति ॥ २३ ॥
149239
149240 अबोधो बोध इत्येवं चिद्व्योमैवात्मनि स्थितम् ।

149241 तस्माद्भेदो द्वैतमैक्यं नास्त्येवेति प्रशाम्यताम् ॥ २४ ॥
149242
149243 तथा च ब्रह्मैव कंचित्कालमज्ञदृशा अबोध इति जीवजगद्वेषेण स्थितम् । ततो
149244 विद्वद्दृष्ट्या बोधे इति वेषेण स्वरूपे स्थितमिति फलितम् । न
149245 तदन्यत्किंचित्कदाअचिदपीत्याह - अबोध इति ॥ २४ ॥
149246
149247 तावत्तरङ्गत्वमयं करोति जीवः स्वसंसारमहासमुद्रे ।
149248 जीवः जानाति परं स्वभावं निरामयं तन्मयतामुपेतः ॥ २५ ॥
149249
149250 तथा च जीवः अज्ञातस्वात्मस्वरूपे संसारमहासमुद्रे तावत्कालं
149251 जन्ममरणभ्रमणादिनानातरङ्गत्वं करोति यावत्परब्रह्मात्मकं
149252 स्वस्वभावं न जानाति । यदा तु जानाति तदा तन्मयतामुपेतः सन् निरामयं तदेवास्ते
149253 इत्यर्थः ॥ २५ ॥
149254
149255 ज्ञाने तु शान्तिं स तथोपयाति यथा न सोऽब्धिर्न तरङ्गकोऽसौ ।
149256 यथास्थितं सर्वमिदं च शान्तं भवत्यनन्तं परमेव तस्य ॥ २६ ॥
149257
149258 तदेवाह - ज्ञाते त्विति ॥ २६ ॥
149259
149260 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वाणप्रकरणे उ० पाषा०
149261 शिवस्वरूपवर्णनंन् नाम द्व्यशीतितमः सर्गः ॥ ८२ ॥
149262
149263 इति श्रीवासिष्ठमहारामायणे तात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
149264 शिवस्वरूपवर्णनं नाम द्व्यशीतितमः सर्गः ॥ ८२ ॥
149265
149266 त्र्यशीतितमः सर्गः ८३
149267
149268 श्रीवसिष्ठ उवाच ।
149269
149270 चिन्मात्रपरमाकाश एष यः कथितो मया ।
149271 एषोऽसौ शिव इत्युक्तस्तदा रुद्रः प्रनृत्यति ॥ १ ॥
149272
149273 चिन्मात्रमेव स शिवो न काली भैरवाकृतिः ।
149274 बोधाय कल्पनादृष्ट्या तथा भातीति वर्ण्यते ॥
149275
149276 यासौ तस्याकृतिर्नासावाकृतिः कृतिनां वर ।
149277 तच्चिन्मात्रघनं व्योम तथा कचति तादृशम् ॥ २ ॥
149278
149279 अत एव तव मया अविद्याभ्रन्तिनिरासेन तात्त्विकशिवस्वभावदृष्ट्युद्घाटनाय
149280 जगत्प्रलयरुद्रनृत्यादि स्वानुभूतं वर्णितं न तदेव परमार्थ इति
149281 भ्रमितव्यमित्याह - चिन्मात्रेत्यादिना ॥ १ ॥ २ ॥
149282
149283 मया दृष्टा तदाकाशमेव शान्तं तदाकृतिः ।
149284 मयेव तत्परिज्ञातं नान्यः पश्यति तत्तथा ॥ ३ ॥
149285
149286 तत्त्वदृशा तु मया तदाकृतिश्चिदाकाशमात्रमेव दृष्टा ।
149287 अन्यस्तत्त्वदृष्टिहीनः ॥ ३ ॥
149288
149289 यथा नाम स कल्पान्तः स रुद्रः सा च भैरवी ।
149290 मायामात्रं तथा सर्वं परिज्ञातमलं मया ॥ ४ ॥
149291
149292 तत्त्वदृष्ट्यैव मया कल्पान्तादिसर्वं मायामात्रमिति परिज्ञातम् ॥ ४ ॥

149293
149294 चिद्व्योमैव परं शून्यं संनिवेशेन तेन तत्।
149295 तथा संलक्ष्यते नाम भैरवाकारतां गतम्॥ ५॥
149296
149297 वाच्यवाचकसंबन्धं विना बोधो न जायते।
149298 यस्मात्तस्मात्त्वयि मया दृष्टमेव प्रवर्णितम्॥ ६॥
149299
149300 कल्पनादृष्टिदृष्टस्यापि तव पुरतो वर्णनं तु
149301 वाच्यवाचकशब्दार्थसंबन्धकल्पनं विना निर्विशेषस्य
149302 व्युत्पादनायोगात्तत्कल्पनेन त्वद्व्युत्पादनार्थमित्याह - वाच्येति॥ ६॥
149303
149304 यदेव वाच्युपारूढमेतद्राम सदैव ते।
149305 रूढाधिभौतिकदृशः क्षणान्मायात्मतां गतम्॥ ७॥
149306
149307 तन्निरसनं तु कल्पितप्रक्रियायां सत्यताबुद्धिर्मा भूदित्येतदर्थमित्याह -
149308 यदेवेति। हे राम सदैव चिराभ्यासाज्जगति रूढाधिभौतिकदृशस्ते यदेव
149309 वाच्युपारूढं तदेव क्षणान्मायात्मतां सत्यताभ्रान्तिं गतम्॥ ७॥
149310
149311 न भैरवी सा नैवासो भैरवो नैव संक्षयः।
149312 समस्तमेव तद्भ्रान्तिमात्रं चिद्व्योम भासते॥ ८॥
149313
149314 न भैरवीत्यादिना पुनर्निषेधेन तत्समस्तमेव भ्रान्तिमात्रं
149315 परमार्थतश्चिद्व्योमेवेति भासते॥ ८॥
149316
149317 स्वप्ननिर्माणपुरवत्संकल्परणवेगवत्।
149318 कथार्थसार्थरसवन्मनोराज्यविलासवत्॥ ९॥
149319
149320 यथा स्वप्नपुरं स्वच्छे व्योम्नि मौक्तिकधीर्यथा।
149321 यथा केशोण्ड्रकं व्योम्नि तथाऽचिद्भाति चिद्घने॥ १०॥
149322
149323 तथ अचित् चिद्घने भाति भ्रान्त्या॥ १०॥
149324
149325 चिन्मात्राकाशमेवाच्छं कचति स्वात्मनात्मनि।
149326 तथा नाम यदाभाति तदात्मैवं जगत्तया॥ ११॥
149327
149328 प्रबोधेन तर्हि कथं भाति तदाह - चिन्मात्रेति॥ ११॥
149329
149330 यथा चिद्व्योम्नि चकति स्व एवात्मा तथा पटे।
149331 तथा कचति तत्तत्र कल्पान्तानलनर्तने॥ १२॥
149332
149333 तर्हि किं स्वप्रकाशचिदात्मनः स्वपरकचने विशेषोऽस्ति नेत्याह - यथेति॥ १२॥
149334
149335 शिवयोरेवमाकारो निराकारोऽङ्ग वर्णितः।
149336 अधुना शृणु ते वक्ष्ये नृत्यस्यानृत्ततास्थितिम्॥ १३॥
149337
149338 तथा च कचनैकस्वभावं निर्विशेषं चिद्व्योमैव शिवयोस्तात्त्विको निराकार
149339 एवाकारः परिशिष्ट इत्युपसंहृत्य नृत्यस्य स्थितिस्तु
149340 मायामात्रत्वादनृत्ततास्थितिरेवेत्यंशं व्युत्पाद्यमानं शृण्वित्याह -
149341 शिवयोरिति॥ १३॥
149342
149343 चेतनं चेतनाधातोः किंचित्संस्पदनं विना।
149344 क्वचित्स्थातुं न शक्नोति वस्त्ववस्तुतया यथा॥ १४॥

149345
149346 यथा भ्रान्त्या दृश्यमानं शुक्त्यादि वस्तु रजताद्यवस्तुतया विना स्थातुं न
149347 शक्नोति तथा चेतनाधातोश्चेतनमपि किंचित्संस्पन्दनं विना स्थातुं न शक्नोति।
149348 भ्रान्तेः स्वभावविपर्यासकत्वनियमसाम्यादित्यर्थः॥ १४॥
149349
149350 स्वभावाच्चेतनं तस्माद्द्रवत्वेन तथा स्थितम्।
149351 हेमेव रूपकत्वेन संनिवेशविलासिना॥ १५॥
149352
149353 अत एव सद्रूपं ब्रह्म सर्वजगद्घटितदेहरुद्रदेव्याकारविपर्यासेन
149354 अधिष्ठानतास्वभावेन स्थितमित्याह - स्वभावादित्यादिना॥ १५॥
149355
149356 यन्नाम चेतनं यत्र तदवश्यं स्वभावतः।
149357 स्पन्दधर्मि भवत्येव वस्तुना हि स्वभावजा॥ १६॥
149358
149359 वस्तुता अधिष्ठानता॥ १६॥
149360
149361 यः स्पन्दश्चिद्घनस्यास्य शिवस्यास्य स एव नः।
149362 स्ववासनावेशवशान्नृत्यमेव [स्वयमेव इति पाठः] विराजते॥ १७॥
149363
149364 अतः स कल्पान्तशिवो रुद्रो रौद्राकृतिर्द्रुतम्।
149365 यन्नृत्यति हि तद्विद्धि चिद्घनस्पन्दनं न्रिजम्॥ १८॥
149366
149367 श्रीराम उवाच।
149368
149369 प्रामाणिकदृशा दृश्यमिदं नास्त्येव वस्तुतः।
149370 यदेवास्तीव तत्सर्वं कल्पान्ते प्रविनश्यति॥ १९॥
149371
149372 प्रामाणिकदृशा नास्त्येवेति न तस्मिन्कल्पे प्रश्नः। अप्रामाणिकदृष्टिकल्पे
149373 पृच्छामि। यदेव किंचिदस्तीव तत्सर्व कल्पान्ते प्रविनश्यति॥ १९॥
149374
149375 तत्कल्पान्तमहाशून्ये एतस्मिन्परमाम्बरे।
149376 कथं चिन्नाम वाऽचेत्यं चिता चेतति चिद्घनः॥ २०॥
149377
149378 तत्तथा सति चितः अचेत्यं चेत्यरहितं चिन्नाम वा कथम्। तथा आश्रयाभावे चेता
149379 चेतयिता वा कथम्। स्वातिरिक्तचितिक्रियाभावे चिद्घनश्चेतति वा कथम्। त्रिपुटी
149380 नोपपद्यत इत्यर्थः। यदि चाविद्या तदानीमसदपि दृश्यं दर्शयतीति तत एव
149381 त्रिपुटीसिद्धिरुच्येत तर्हि सर्गप्रलययोरविशेषः। न ह्यचेतिते सर्वजगद्घटिते
149382 रुद्रदेवीशरीरे तन्नृत्यं वा संभवति। न हि युगपद्द्वैतमैक्यं च भावयितुं
149383 शक्यमिति भावः॥ २०॥
149384
149385 श्रीवसिष्ठ उवाच।
149386
149387 एतदेव तदाप्यङ्ग द्वैतैक्याम्भोधिशान्तये।
149388 यदि चिन्मात्रनभसश्चेत्यमस्ति न किंचन॥ २१॥
149389
149390 हे अङ्ग यद्येवं शङ्कसे तदापि तव द्वैतैक्यसंदेहाम्भोधिशान्तये
149391 एतदेवोत्तरं श्रृणु। तदेवाह - यदीति। यदि सर्वप्रलये परिशिष्टस्य
149392 चिन्मात्रनभसः किंचन चेत्यमस्ति तदा ततो द्वितीयासत्त्वादेव क्वचिद्देशे कदाचन
149393 काले किंचिदपि वस्तु कश्चिदपि न चेतति। यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं
149394 पश्येत् इत्यादिश्रुतिरिति भावः॥ २१॥
149395
149396 न किंचिच्चेतति ततः क्वचित्किंचित्कदाचन।

सर्वं शान्तं दृषन्मौनं विज्ञानघनमम्बरम् ॥ २२ ॥

तथा चायं प्रामाणिकदृष्टिसिद्धो नित्यमुक्तात्मस्वभाव एव प्रलय इति
त्वयोपन्यस्त इति प्रथमकल्प एव संपन्न इत्याह - सर्वमिति । तथा
चाप्रामाणिकदृशा द्वितीयकल्पमाश्रित्य प्रश्नो नोचिते इति भावः ॥ २२ ॥

यच्चेदं चेत्यते नाम तत्स्वभावोऽस्य वल्गति ।
चित्स्वभावस्य शान्तस्य स्वसत्तायामवस्थितेः ॥ २३ ॥

यदि तु प्रथमकल्पवैलक्षण्याय प्रलये अविद्यादि किंचिच्चेत्यमभ्युपगच्छसि तर्हि
तेनैव तिपुटीजगद्घटितरुद्रदेवीशरीरे तन्नृत्यंन् च सेत्स्यतीति नासंभावितं
किंचिन्मयोक्तमित्याशयेनाह - यच्चेदमित्यादिना । स्वभावः
अविज्ञातात्मस्वरूपमस्य ब्रह्मणः प्रलयेऽपि रुद्रदेवी तन्नृत्यरूपेण वल्गति
प्रथते । न चैतावता वास्तवकूटस्थचित्स्वभावहानिरित्याह - चित्स्वभावस्येति ॥ २३ ॥

यथा स्वप्ने चिदेवान्तः पुरपत्तनवद्भवेत् ।
पुरादि न तु तत्किंचिद्विज्ञानाकाशमेव तत् ॥ २४ ॥

भ्रान्त्या अन्यथ त्वप्रतिभासेऽपि वास्तवस्वभावाप्रच्युतौ दृष्टान्तमाह -
यथेति ॥ २४ ॥

आत्मनात्मनि चिच्छून्यं ज्ञात्वा च ज्ञेयमप्यलम् ।
तथा च सर्गादारभ्य वेत्ति स्वं कचनं च तत् ॥ २५ ॥

तथा च सर्वं ज्ञेयं ज्ञात्वापि चित् आत्मना आत्मनि सदैव ज्ञेयं शून्यम् । तथा च
प्रलयकालेऽपि सर्गारम्भक्षणादारभ्य यावत्प्रलयक्षणं यद्यथा संपन्नं
तत्सर्वं स्वं कचनं वेत्तीति सदा सर्वज्ञं तद्ब्रह्म प्रसिद्धमित्यर्थः ॥ २५ ॥

स्वयमन्तः कचन्ती चित्स्वभावाकाशकोटरे ।
क्षणकल्पजगद्भ्रान्तिं धत्ते कल्पनया स्वया ॥ २६ ॥

अत एव तत्सर्गकालेऽपि प्रलयमतीतानागतसर्वप्रलयसहस्रैः सह पश्यत्येवेत्यपि
संभावनीयमित्याशयेनाह - स्वयमित्यादिना ॥ २६ ॥

स्वयमन्तः कचत्कान्तिश्चिदाकाशः स्वभावखे ।
अयं सोहमयं च त्वं करोतीत्यादिकल्पनम् ॥ २७ ॥

तस्मान्न द्वैतमस्तीह न चैक्यं न च शून्यता ।
न चेतनाचेतनंन् वै मौनमेव न तच्च वा ॥ २८ ॥

अत एव हि सर्वदृश्यस्य तदभावस्य च परस्परबाधितत्वात्परमार्थवस्तुनो
भावाभावोभयनिषेधावधितेत्याशयेनोपसंहरति - तस्मादित्यादिना ।
सर्गप्रलययोर्विशेषोऽपि स्वानुभवेनैव सिद्धो न युगपत्प्रत्ययेनापलपितुं शक्य इति
भावः ॥ २८ ॥

न चेतति क्वचित्किंचित्कश्चिच्चेत्यात्मभावतः ।
तेन चेतापि नास्तीव मौनमेवावशिष्यते ॥ २९ ॥

निर्विकल्पसमाधिर्हि सिद्धान्तः सर्ववाङ्मये ।
तच्च जीवदृषन्मौनं तूष्णीमेवात आस्यताम् ॥ ३० ॥

कुर्वन्निजं प्रकृतमेव यथाप्रवाहमाचारजालमचलः परमार्थमौनात् ।

149449 निर्मानमोहमदभेदमनङ्गजीवमाकाशकोशविशदाशयशान्तमास्व ॥ ३१
149450 ||
149451
149452 हे राम त्वमपि ईश्वर इव लोकदृशा निजं प्रकृतमेव
149453 राज्यपरिपालनाद्याचारजालं यथाप्रवाहं पितृपितामहप्राप्तक्रमेण कुर्वन्नेव
149454 स्वदृशा परमार्थमौनान्निर्मानं
149455 निर्मोहमपगतमदभेदमङ्गैस्तदभिमानिजीवेन च
149456 रहितमाकाशकोशवद्विशदाशयं च यथा स्यात्तथा शान्तं निर्विक्षेपमास्व ॥ ३१ ॥
149457
149458 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मी० दे० मोक्षो० निर्वाणप्रक० उत्तरार्धे पाषा०
149459 विश्वरूपदर्शनं नाम त्र्यशीतितमः सर्गः ॥ ८३ ॥
149460
149461 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
149462 विश्वरूपदर्शनं नाम त्र्यशीतितमः सर्गः ॥ ८३ ॥
149463
149464
149465 चतुरशीतितमः सर्गः ८४
149466
149467 श्रीराम उवाच ।
149468
149469 अनन्तरं मुने ब्रूहि काली किमिव नृत्यति ।
149470 किं शूर्पफलकुद्दालमुसलादिस्रजाऽऽवृता ॥ १ ॥
149471
149472 शिवशक्त्योर्निजं रूपं विविच्यात्रोपवर्ण्यते ।
149473 शूर्पादिमालारूपं च सत्यासत्याविमर्शतः ॥
149474
149475 या काली नृत्यतीति त्वया वर्णिता सा किमिव । किंस्वरूपेत्यर्थः । सा च
149476 किमात्मकशूर्पफलकुद्दालादिस्रजा आवृता तदुभयंन् ब्रूहीत्यर्थः । कालः किमिव
149477 नृत्यति इति पाठेऽपि कालात्मककालीस्वरूपस्यैव प्रश्नस्तस्या एव
149478 पूर्वोत्तरग्रन्थयोर्नृत्यस्य शूर्पमुसलादिस्रग्धारणस्य च वर्णनात् ॥ १ ॥
149479
149480 श्रीवसिष्ठ उवाच ।
149481
149482 स भैरवश्चिदाकाशः शिव इत्यभिधीयते ।
149483 अनन्यां तस्य तां विद्धि स्पन्दशक्तिं मनोमयीम् ॥ २ ॥
149484
149485 शिवस्य स्वरूपमनिरूप्य तच्छक्तिस्वरूपनिरूपणायोगादुभयरूपं सहैव
149486 निरूपयितुमुपक्रमते - स इति । चलनस्वभावरजोगुणप्राधान्येन स्पन्दशक्तिं
149487 सत्त्वगुणस्वच्छताप्राधान्येन सर्वतश्चित्प्रतिबिम्बव्याप्त्या
149488 जगत्संस्कारघटितत्वेन च सर्गादिसंकल्पविकल्पहेतुत्वेन मनःसाम्यान्मनोमयीम् ।
149489 शिवे तादात्म्येनाध्यासात्तदधीनसत्तास्फूर्तिकत्वाच्च तदनन्यां मायां तां
149490 विद्धीत्यर्थः ॥ २ ॥
149491
149492 यथैकं पवनस्पन्दमेकमौष्ण्यानलौ यथा ।
149493 चिन्मात्रं स्पन्दशक्तिश्च तथैवैकात्म सर्वदा ॥ ३ ॥
149494
149495 अनन्यत्वं दृष्टान्ताभ्यां समर्थयति - यथेति । मोक्षात्प्रागेव
149496 सर्वकालव्यवहारसमाप्तेः सर्वकालव्याप्तिरस्त्येवेत्याशयेन सर्वदेत्युक्तिः ॥ ३ ॥
149497
149498 स्पन्देन लक्ष्यते वायुर्वह्निरौष्ण्येन लक्ष्यते ।
149499 चिन्मात्रममलं शान्तं शिव इत्यभिधीयते ॥ ४ ॥
149500

149501 यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति इत्यादिश्रुतिषु
149502 जगत्सर्गप्राणस्पन्दादितत्क्रिययैव शिवस्य ब्रह्मणो लक्षणादपि तदनन्यत्वमित्याह
149503 - स्पन्देनेति द्वाभ्याम्॥ ४॥
149504
149505 तत्स्पन्दमायाशक्त्यैव लक्ष्यते नान्यथा किल।
149506 शिवं ब्रह्म विदुः शान्तमवाच्यं वाग्विदामपि॥ ५॥
149507
149508 ननु श्रुतौ सर्गादिब्रह्मलक्षणं तच्छिवस्य कथमुच्यते तत्राह - शिवमिति।
149509 यतः सर्वाः श्रुतयो ब्रह्मविदश्च शिवमेव ब्रह्म विदुरतो नाशिवं
149510 ब्रह्मान्यदस्तीत्यर्थः॥ ५॥
149511
149512 स्पन्दशक्तिस्तदिच्छेदं दृश्याभासं तनोति सा।
149513 साकारस्य नरस्येच्छा यथा वै कल्पनापुरम्॥ ६॥
149514
149515 सोऽकामयत बहु स्यां प्रजायेय इत्यादिषु सा स्पन्दशक्तिरेव शिवस्येच्छेत्युक्ता सैव
149516 सत्यकामस्य तस्य मनोराज्यमिव जगत्तनोतीत्याह - स्पन्दशक्तिरिति॥ ६॥
149517
149518 करोत्येव शिवस्येच्छा करोतीदमनाकृतेः।
149519 सैषा चितिरिति प्रोक्ता जीवनाज्जीवितैषिणाम् [अस्याग्रे - चेत्योन्मुखतयोदिता।
149520 सैषोक्ता वासनानाम्नी वासना दृश्यसंविदः॥ सैषा जीवकला प्रोक्ता इत्यपि
149521 क्वचिद्दृश्यते।]॥ ७॥
149522
149523 सैषा स्वान्तर्गतचिदाभासप्रदीप्तत्वाच्चितिशक्तिर्जीवचैतन्यमिति प्रोक्ता॥ ७॥
149524
149525 प्रकृतित्वेन सर्गस्य स्वयं प्रकृततां गता।
149526 दृश्याभासानुभूतानां करणात्सोच्यते क्रिया॥ ८॥
149527
149528 प्रकृतित्वेन जगदाकारपरिणामित्वेन। तथा च श्रुतिः मायां तु प्रकृतिं
149529 विद्यान्मायिनं तु महेश्वरं इति।
149530 दृश्याभासेष्वनुभूतानामुत्पत्त्याप्तिविकृतिसंस्कारलक्षणानां
149531 चतुर्विधफलानां करणात्॥ ८॥
149532
149533 वडवाग्निशिखाकाराच्छोष्याच्छुष्केति कथ्यते।
149534 चण्डित्वाच्चण्डिका प्रोक्ता सोत्पलोत्पलवर्णतः॥ ९॥
149535
149536 द्वीपिचर्मपरीधाना शुष्कमांसातिभैरवा इत्यादिपुराणेषु तस्याः
149537 शुष्कताप्रसिद्धेरपि निमित्तमाह - वडवेति। यतः
149538 समुद्रादिजलार्द्रब्रह्माण्डदेहा सा वडवाग्निशिखाकाराद्ग्रैष्मादित्यादिज्योतिषः
149539 सकाशाच्छोष्या अतः शुष्केति कथ्यत इति॥ ९॥
149540
149541 जया जयैकनिष्ठत्वात्सिद्धा सिद्धिसमाश्रयात्।
149542 जयन्ती च जया प्रोक्ता विजया विजयाश्रयात्॥ १०॥
149543
149544 यतो जया अतो जयन्ती च प्रोक्ता। तथा च नामद्वयस्याप्येकमेव प्रवृत्तिनिमित्तम्।
149545 विशिष्टो जयस्तु विजयापदस्य। एवमग्रेऽप्यूह्यम्॥ १०॥
149546
149547 प्रोक्ता पराजिता वीर्याद्दुर्गा दुर्ग्रहरूपतः।
149548 ओंकारसारशक्तित्वादुमेति परिकीर्तिता॥ ११॥
149549
149550 उमेति परिकीर्तिता ओंकारघटकानामकारोकारमकाराणां उ म अ इति व्यत्यासेन
149551 घटने टापि उमाशब्दनिष्पत्तेरिति भावः। समेति परिकीर्तितेति पाठे तु
149552 ओंकारलक्ष्यतुरीयस्वरूपस्थूलसूक्ष्मादिसर्वप्रपञ्चसारचिच्छक्तित्वात्##-

149553
149554 गायत्री गायनात्मत्वात्सावित्री प्रसवस्थितेः।
149555 सरणात्सर्वदृष्टीनां कथितैषा सरस्वती॥ १२॥
149556
149557 गायना जापकास्तेषां परमपुरुषार्थात्मत्वात्।
149558 स्वर्गापवर्गसाधनसर्वकर्मोपासनज्ञानदृष्टीनां सरणात्प्रसरात्॥ १२॥
149559
149560 गौरी गौराङ्गदेहत्वाद्भवदेहानुषङ्गिणी।
149561 सुप्तानामथ बुद्धानाममात्रोच्चारणाद्धृदि॥ १३॥
149562
149563 भवत्यस्माद्विश्वमिति भव ईश्वरस्तद्देहानुषङ्गिणी। उमानाम पुनः
149564 प्रकारान्तरेण व्याचष्टे - सुप्तानामिति। चार्थे अथशब्दः। सुप्तानां
149565 प्रबुद्धानां च त्रैलोक्यस्थसर्वप्राणिनां हृदि अनाहतनादात्मना
149566 अकारादिमात्रात्रयशून्यस्य प्रणवनादभागस्य शब्दब्रह्माख्यस्य नित्यं
149567 सर्वदैवोच्चारणादङ्गुष्ठपरिमितहृत्पुण्डरीकच्छिद्रे लिङ्गाकारेण स्थितस्य
149568 दहराकाशाख्यस्य शिवस्य मूर्ध्नि भूषणभूता बिन्दुरूपा इन्दुकला उमेत्युच्यते।
149569 तथा चोक्तं वायवीयसंहितायाम् - ओमित्येकाक्षरं ब्रह्म ब्रह्मणः
149570 प्रतिपादकम्। अ-उमेति त्रिमात्राभिः परस्तादर्धमात्रया। तत्राकारः स्थितो भागे
149571 ज्वालालिङ्गस्य दक्षिणे। उकारश्चोत्तरे तद्वन्मकारस्तस्य मध्यतः। अर्धमात्रात्मको
149572 नादः श्रूयते लिङ्गमूर्धनि इति। हंसोपनिषदि च पूर्वे दले पुण्यमतिः
149573 इत्यादिहृदयपुण्डरीकदलेषु जीवस्य मतिभेदमुक्त्वा लिङ्गे सुषुप्तिः पद्मत्यागे
149574 तुरीयं यदा हंसो नादे विलीनो भवति तत्तुरीयातीतमिति लिङ्गमूर्धस्ते नादे
149575 सर्वोपाधिविलयेन ब्रह्मप्रतिष्ठा तुरीयातीतावस्थेत्युक्तमिति भावः॥ १३॥
149576
149577 नित्यं त्रैलोक्यभूतानामुमेतीन्दुकलोच्यते।
149578 शिवयोर्व्योमरूपत्वादसितं लक्ष्यते वपुः॥ १४॥
149579
149580 काली किमिति नृत्यति इति प्रश्ने किमिति कालीति वर्णनिमित्तप्रश्नमभिप्रेत्योत्तरमाह -
149581 शिवयोरिति॥ १४॥
149582
149583 नभो हि मांसमेताभ्यां दृष्टिदृष्टं विलोक्यते।
149584 अस्ति नभो नभस्येव तौ नभोनभसि स्थितौ॥ १५॥
149585
149586 ननु चिद्रूपयोः शिवयोर्जडव्योमरूपता कथं तत्राह - नभ इति।
149587 चिद्रूपाभ्यामेवैताभ्यां मांसमयंन् स्वशरीरमिव श्यामं
149588 सर्गसंकल्पदृष्ट्या दृष्टमतः श्याममिव जडमिव च विलोक्यते।
149589 निराधारस्थितिरपि तयोर्नभोवदेवानुमेयेत्याह - अस्तीति॥ १५॥
149590
149591 नभोनिभावभूताङ्गावच्छौ व्योम्न इवाग्रजौ।
149592 हस्तपादास्यमूर्ध्नो यद्बहुत्वाल्पत्वभेदतः॥ १६॥
149593
149594 अमूर्तत्वस्वच्छत्वे अपि तयोर्व्योमवदेव बोध्ये इत्याह - नभोनिभाविति। अग्रजौ
149595 ज्येष्ठभ्रातराविवेत्युपमादाढर्याय संभावना। अमूर्तत्वे हस्तपादादिमत्त्वं
149596 हलशूर्पादिस्रग्धरत्वं च कथमिति चेत्तत्रोत्तरं श्रावयति - हस्तेत्यादिना।
149597 हस्तपादास्यमूर्ध्न इति समाहारद्वन्द्वैकवद्भावः।
149598 हस्तादेर्यद्बहुत्वाल्पत्वभेदतो नानात्वं वैचित्र्यं यच्च हलशूर्पादिस्रग्धरत्वं
149599 तच्छृण्विति परेणान्वयः॥ १६॥
149600
149601 नानात्वं हलशूर्पादिस्रग्धरत्वं च तच्छृणु।
149602 सा हि क्रिया भगवती परिस्पन्दैकरूपिणी॥ १७॥
149603
149604 हि यस्मात्सा भगवती अनाद्यन्ता चितिशक्तिरपि आत्मना स्वेच्छयैव स्वात्मनि

149605 सर्ववैदिकक्रियारूपा भूत्वा
149606 दद्यात्स्नायाज्जुहुयादित्यादिवेदविहितदानस्नानयागादिश्रेष्ठशरीरिणी संपन्ना
149607 तस्मात्तथा देव्या या नानाविधाभिनयसहिता नर्तनास्ता इमा ब्रह्मणः
149608 कर्मफलरूपाः सर्वप्राणिसर्गस्थितिजरामरणरीतयो बोध्या इति परेणान्वयः ॥ १७ ॥
149609
149610 दद्यात्स्नायाच्च जुहुयादित्याद्यग्रशरीरिणी ।
149611 चितिशक्तिरनाद्यन्ता तथा भातात्मनात्मनि ॥ १८ ॥
149612
149613 साकाशरूपिणी कान्ता दृश्यश्रीः स्पन्दधर्मिणी ।
149614 देव्यास्तस्या हि याः काल्या नानाभिनयनर्तनाः ॥ १९ ॥
149615
149616 ता इमा ब्रह्मणः सर्गजरामरणरीतयः ।
149617 क्रियासौ ग्रामनगरद्वीपमण्डलमालिकाः ॥ २० ॥
149618
149619 यतः असौ देवी क्रिया अतो निरवयवायाः क्रियाया अप्रसिद्धेः स्वरूपप्रसिद्ध्यर्थमेव
149620 कल्पितहस्तपादाद्यवयवात्मिका ग्रामनगरद्वीपमण्डलमालिकाः शरीरान्तर्धत्ते
149621 तैः स्पन्दान्करोति । स्वां क्रियारूपतां प्रकटयतीति यावत् ॥ २० ॥
149622
149623 स्पन्दान्करोति धत्तेऽन्तः कल्पितावयवात्मिका ।
149624 काली कमलिनी काली क्रिया ब्रह्माण्डकालिका ॥ २१ ॥
149625
149626 कालीनामनिर्वचनेऽपि तस्याः क्रियैकस्वभावत्वं ब्रह्माण्डशरीरतया
149627 सर्वलोकाद्यवयवधारिणीत्वं च प्रसिद्ध्यतीत्याशयेनाह - कालीति । कल गतौ
149628 संख्याने च इति धातोर्हि कालशब्दः कालीशब्दश्च निष्पद्यते । कलिः कामधेनुरिति च
149629 वैयाकरणा धारणादिसर्वक्रियावाची कलधातुरित्याहुः । तथा चेयं
149630 ब्रह्माण्डलक्षणानां बीजकोशानां कालिका कलयित्री निर्मात्री धारयित्री
149631 परिणामादिविकारप्रापयित्री च क्रिया स्वयं सती कमलिनी पद्मिनीलतेव काली श्यामला
149632 संपन्ना । अत एव हि स्वपुष्पाद्यवयवीभूतामिमां पृथ्व्यादिदृश्यलक्ष्मीं
149633 हृदि धत्ते इत्यर्थः । एवं जगदङ्गधारणेऽपि तस्या
149634 असङ्गोदासीनद्रूपशिवस्वभावत्वान्निरवयवत्वमेवेत्याह - न कदाचनेति ॥ २१ ॥
149635
149636 धत्ते स्वावयवीभूतां दृश्यलक्ष्मीमिमां हृदि ।
149637 न कदाचन चिद्देवी निर्देश्यावयवा क्वचित् ॥ २२ ॥
149638
149639 शिवत्वाव्यतिरेकेण शिवतैवं विदृश्यताम् ।
149640 यथाङ्ग शून्यता व्योम्नः स्पन्दनं मातरिश्वनः ॥ २३ ॥
149641
149642 अङ्गाभावेऽप्यङ्गव्यपदेशे दृष्टान्तानाह -यथेति ॥ २३ ॥
149643
149644 ज्योत्स्नायाश्वेत्यमेवं हि दृश्यमङ्गं चितेः क्रिया ।
149645 शिवं शान्तमनायासमव्ययं विद्धि निर्मलम् ॥ २४ ॥
149646
149647 ज्योत्स्नायाश्चन्द्रिकायाश्वेत्यं प्रबोधनीयं कुमुदाद्यङ्गम् । ज्योत्स्नाङ्गमिन्दोः
149648 इति पाठे तु स्पष्टम् । एवं तस्याः कालात्मकं जगदङ्गकं क्रियास्वरूपमुपवर्ण्य
149649 वास्तवं स्वरूपं वर्णयति - शिवमिति ॥ २४ ॥
149650
149651 न मनागपि तत्रास्ति स्तैमित्यं स्पन्दधर्मता ।
149652 सा क्रियैव तथारूपा सती बोधवशाद्यदा ॥ २५ ॥
149653
149654 तत्र क्रियास्वरूपं तस्या अबोधदशामात्रदृश्यमवास्तवं शिवरूपं तु
149655 बोधदृश्यं वास्तवमित्याह - सेति ॥ २५ ॥
149656

149657 व्यावृत्यैव तथैवास्ते शिव इत्युच्यते तदा।
149658 चितिशक्तेः क्रिया देव्याः प्रतिस्थानं यदात्मनि॥ २६॥
149659
149660 यदा बोधवशात्क्रियास्वभावाद्व्यावृत्य तथैव वास्तवस्वभावेनास्ते तदैव शिव
149661 इत्युच्यते। कूटस्थस्य चितिशक्त्यात्मिकाया देव्या आत्मनि स्वस्या
149662 अविद्यावशाद्यत्प्रतिस्थानं प्रतिकूलस्पन्दजडभावेनावस्थानं तदेव क्रियेत्युच्यते
149663 ॥ २६॥
149664
149665 यथाभूतस्थितेरेव तदेव शिव उच्यते।
149666 देव्याः क्रियायाश्चिच्छक्तेः स्वरूपिण्या महाकृतेः॥ २७॥
149667
149668 विद्यया यथाभूतचिन्मात्रस्वभावस्थितेरेव हेतोः शिव इत्युच्यते॥ २७॥
149669
149670 कल्पिताकारधारिण्या अनन्यावयवा इमे।
149671 सर्गाः सज्जनतावर्गा लोका आलोकभास्वराः॥ २८॥
149672
149673 तथा च कल्पितजगद्देहधारिण्या नृत्ये कल्पिता गीतय इव
149674 तादृशशूर्पमुसलादिस्रग्दामभूषणमेवोचितमिति वक्तुं भूमिकां रचयति -
149675 कल्पिताकारेति। सन्तो विद्यमाना जनतावर्गा येषु। इमे वक्ष्यमाणाः सर्वे॥ २८॥
149676
149677 सद्वीपसागराः पृथ्व्यः सवनावनयोऽद्रयः।
149678 साङ्गोपाङ्गास्त्रयो वेदाः सविद्यास्थानगीतयः॥ २९॥
149679
149680 सविधिप्रतिषेधार्थाः सशुभाशुभकल्पनाः।
149681 सदक्षिणाग्नयो यज्ञाः पुरोडाशाद्यशंसिनः॥ ३०॥
149682
149683 पुरोडाशरूपं यदाद्यमदनीयं तच्छंसिनस्तन्निरूप्याः। यज्ञानां
149684 द्रव्यदेवतानिरूप्यत्वादिति भावः॥ ३०॥
149685
149686 भूपालोलूखलबृसीशूर्पयूपादिसंयुताः।
149687 संग्रामाः सायुधग्रामाः सशूलशरशक्तयः॥ ३१॥
149688
149689 युद्धानामपि योद्धृस्वर्गसंपत्त्यादिहेतुविहितकर्मत्वेन यज्ञसाम्यात्तदङ्गैः
149690 सह निर्देशः। भूपालोलूखलबृस्यादिघटितस्रग्दामसंयुताः॥ ३१॥
149691
149692 सभुशुण्डीगदाप्रासहयेभभटभासुराः।
149693 ज्ञातयो भूतसंघानां चतुर्दश सुरादिकाः।
149694 चतुर्दशाब्धिद्वीपोर्व्यस्तथा लोकाश्चतुर्दश॥ ३२॥
149695
149696 लोकाश्चतुर्दशेत्यन्तानां सर्वेषामिमे कल्पिताकारधारिण्या देव्या अनन्यावयवा इति
149697 पूर्वत्र संबन्धः॥ ३२॥
149698
149699 श्रीराम उवाच।
149700
149701 चितेः कल्पाः शरीरिण्याः सर्गा येऽङ्गे स्थितास्तथा।
149702 ते किमात्मनि तिष्ठन्ति उतासत्या वदेति भो॥ ३३॥
149703
149704 एवं प्रश्नद्वये त्वया समाहितेऽपि मम
149705 प्राक्सर्गकृतद्वैतैक्ययौगपद्यासंभवशङ्कायाः सम्यक् समाधानं न
149706 वृत्तम्। नष्टस्यासतोऽर्थक्रियाकारित्वासंभवात्। स्वसत्ताबलेन
149707 कार्यसत्तासंपादनमेव हि कारणानां कार्यार्थक्रिया। उपादानेन कार्यस्य
149708 तत्तापहारश्च नाशः न चैकस्मिन्नेव काले कारणेन स्वकार्ये सत्ता संपाद्यते

अपह्नियते चेति श्लिष्यते। न वा सर्वकारणसदात्मप्रहृतसत्ताकैः पदार्थैः प्रलये
स्वस्वर्थक्रिया संभावयितुं शक्येत्याशयेन रामः पृच्छति - चितेरिति।
रुद्रकालीशरीरिण्याश्चितेरग्रे प्रलयकालेऽप्यतीतानागताः सर्वे सर्गाः कल्पाः
प्रलयाश्च स्थिता इति यत्त्वया वर्णितं तत्र पृच्छामि। ये स्थिताः सर्गास्ते
किमात्मन्यर्थक्रियासमर्थे सत्स्वभावे तिष्ठन्ति उत
असत्यास्तादृशसत्स्वभावशून्या मृगतृष्णाम्बुप्राया इति वदेत्यर्थः॥ ३३॥

श्रीवसिष्ठ उवाच।

रामासौ किल चिच्छक्तिस्तया यच्चोदितं तथा।
तत्प्रचेतितमेवातः सत्यं चेदमिवाखिलम्॥ ३४॥

जगतः प्रलयस्य च कदाचिदपि नात्यन्तिकं सत्त्वं नाप्यसत्त्वं किंतु
सत्यसंकल्पानुसारिचिता सत्यमिति चेतितं सत्यमसदिति चेतितमसत्यं न स्वतोऽस्य
किंचिद्व्यपदेशार्हं रूपमस्ति। तथा च प्रलयकालेऽप्यैन्दवसर्गाः स्थिता
अर्थक्रियासमर्थाश्च तत्संकल्पचितो दृष्ट्या। इतरसंकल्पदृष्ट्या तु ते न स्थिता न
प्रलीनाश्चेति प्राग्वर्णितमेवेत्याशयेन वसिष्ठ उत्तरमाह - रामेत्यादिना।
यद्वस्तुतया सत्यसंकल्पचिता तत्तद्भोक्तृवासनाकर्मबीजोद्भेदनेन सर्गाय वा
प्रलयाय वा चोदितं तथा तैर्भोक्तृभिः प्रचिएतितमनुभूतमेव।
अतस्तदनुभवितृदृशा इदमखिलं सत्यमिव। चादन्यदृशा
अत्यन्ताप्रसिद्धेरसत्यमिव॥ ३४॥

तत्प्रतिबिम्बितं बाह्यान्मुकुरप्रतिबिम्बवत्।
सत्यं तदन्तरेवास्ति चितेर्नासत्यमर्थतः॥ ३५॥

कुतः सत्यमिव तत्राह - तदिति। यतस्तत्
बाह्यान्मुखादेर्बिम्बान्निमित्तान्मुकुरप्रतिबिम्बवत्
पूर्वानुभववासनादिनिमित्तात्तत्साक्षिचिति प्रतिबिम्बितं तदन्तरेवास्ति अतोऽर्थतस्तं प्रति
सत्यमेव॥ ३५॥

चिद्रूपस्य तथाप्यन्तः सत्संकल्पपुरं भवेत्।
दृढध्यानाद्विशुद्धायाअश्चितेर्भवतु सा कथम्॥ ३६॥

कथं तर्ह्यसत्यं तत्राह - चिद्रूपस्येति। तथा तदनुभवबलात्सत्यत्वेऽपि
चिद्रूपस्यान्तरचिद्रूपस्य प्रवेशायोगात्तत्संकल्पनगरवन्मिथ्यैव भवेत्। अत एव
ध्यानदार्ढ्येन वासनाक्षये तत्प्रसक्तिरेव नास्तीत्याह - दृढेति॥ ३६॥

आदर्शेष्वथवा स्वप्ने सर्गः संकल्पनेऽस्तु वा।
स आत्मन्यर्थकारित्वात्सत्य इत्येव मे मतिः॥ ३७॥

प्रतीतिमात्रेणाज्ञदृशा सत्यत्वं तु प्रतिबिम्बस्वप्नाद्यर्थानामपि सुवचं
तेषामपि तदन्तः स्वानुरूपार्थक्रियाकारित्वदर्शनादित्याह - आदर्शेष्विति॥ ३७॥

मम नार्थाय स इति वक्षि चेत्तत्कथं भवेत्।
देशान्तरगताः सर्वे भवन्त्यर्थाय संप्रति॥ ३८॥

स आदर्शान्तर्गतो घटादिर्मम बाह्यजलाहरणाद्यर्थाय समर्थो नेति चेत् त्वं वक्षि
वदसि तर्हि शृणु। तदादर्शान्तर्गतं बहिरर्थाय कथं भवेत्। न ह्यन्यत्र
विद्यमानमन्यत्र जलाहरणाद्यसमर्थमित्येतावता असद्भवति। किं तव
देशान्तरगताः सर्वे घटाद्यर्थाः संप्रति ते गृहे जलाहरणाद्यर्थाय समर्था
भवन्तीति काकुः। देशान्तरे तेषामर्थक्रियाकारित्वमिव
दर्पणस्वप्नाद्यनतरर्थक्रिया तु प्रतिबिम्बादेरप्यस्त्येवेत्याह - यथेति।

149761 सद्भावं स्वप्नादिद्रष्टृभावम् ॥ ३८ ॥
149762
149763 यथा देशान्तरग्रामस्तद्गतस्यार्थकृद्भवेत् ।
149764 सर्वे तथैव तद्भावं गतस्यार्थविनिश्चयात् ॥ ३९ ॥
149765
149766 यद्यथाभूतसर्वार्थक्रियाकारि प्रदृश्यते ।
149767 तत्सत्यमात्मनोऽन्यस्य नैवातत्तामुपेयुषः ॥ ४० ॥
149768
149769 अत एव तत्तदर्थक्रियाद्रष्टृदृष्ट्यैव तत्सत्यं नान्यदृष्ट्येति व्यवस्थितं तस्य
149770 सत्यत्वमित्याह - यदिति । आत्मनस्तद्द्रष्ट्रात्मनः सत्यम् । अतत्तां
149771 अतद्द्रष्टृतामुपेयुषः अन्यस्य पुरुषस्य दृशा नैव सत्यम् ॥ ४० ॥
149772
149773 तस्माच्छिच्छक्तिकोशस्थाः सर्वाः सर्गपरम्पराः ।
149774 सत्य आत्मेति तद्भावं गतस्यान्यस्य नाखिलाः ॥ ४१ ॥
149775
149776 तद्वदेव प्रकृतेऽपि योज्यमित्युपसंहरति - तस्मादिति ॥ ४१ ॥
149777
149778 भूतभव्यभविष्यस्थाः संकल्पस्वप्नपूर्णाः ।
149779 सर्वे सत्याः परं तत्त्वं सर्वात्मा कथमन्यथा ॥ ४२ ॥
149780
149781 अन्यथा तेषामसत्यत्वे सर्वात्मा परं तत्त्वं कथं स्यात् । न
149782 ह्यत्यन्तासतस्तत्त्वमात्मा वा प्रसिद्ध इति भावः ॥ ४२ ॥
149783
149784 प्राप्यन्ते योगसिद्धेन तद्भावं तु गतेन ते ।
149785 अन्येन पर्वता ग्रामा गत्या देशान्तरे यथा ॥ ४३ ॥
149786
149787 अत एव परस्वप्नाद्यर्था अपि योगिभिः प्राप्यन्ते इच्छया उपभुज्यन्ते चेत्याह -
149788 प्राप्यन्त इति । अन्येन तत्स्वाप्नपुरुषातिरिक्तेनापि परकायप्रवेशेन तद्धृदयं
149789 प्रविश्य तन्मनोभावं गतेन यथा देशान्तरे विद्यमानाः पर्वतग्रामास्तत्र गत्या
149790 प्राप्यन्ते तद्वत् ॥ ४३ ॥
149791
149792 चालितस्य यथा गाढनिद्रस्य स्वप्नपत्तनम् ।
149793 न लुठत्येव लुठितमित्यप्यनुमतं स्फुटम् ॥ ४४ ॥
149794
149795 नृत्येन काल्याश्चलनेऽपि तद्देहगतभूम्याद्यचलने दृष्टान्तमाह -
149796 चालितस्येति । शनैः पर्यङ्कस्यान्यत्र नयनेन शयनस्थलादन्यत्र चालितस्यापि ॥ ४४ ॥
149797
149798 तथा चलन्त्या लुठितं तस्या देहगतं जगत् ।
149799 न लुठत्येव मुकुरप्रतिबिम्बमिव स्थितम् ॥ ४५ ॥
149800
149801 दार्ष्टान्तिके योजयति - तथेति ॥ ४५ ॥
149802
149803 स त्रैलोक्यमहारम्भः सत्योऽपि भ्रान्तिमात्रकम् ।
149804 भ्रान्तिमात्रस्य के नाम लुठनालुठने वद ॥ ४६ ॥
149805
149806 तदचलने युक्त्यन्तरमाह - स इति ॥ ४६ ॥
149807
149808 कदा स्वप्नपुरं सत्यं कदा स्वप्नपुरं मुधा ।
149809 कदा स्वप्नपुरं भग्नं कदा स्वप्नपुरं स्थितम् ॥ ४७ ॥
149810
149811 भ्रान्तित्वं केवलं सैव दृश्यश्रीर्यावदग्रगा ।
149812 त्वं विद्धीमामपि भ्रान्तिं जगल्लक्ष्मीमवास्तवीम् ॥ ४८ ॥

149813
149814 इमां इदानींतनीमपि ॥ ४८ ॥
149815
149816 संकल्पने मनोराज्ये स्वप्ने संकथने भ्रमे ।
149817 यथापुरानुभवं त्रैलोक्यानुभवं तथा ॥ ४९ ॥
149818
149819 तथा त्रैलोक्यानुभवं विद्धीत्यनुषज्यते ॥ ४९ ॥
149820
149821 अहमिति जगदिति नान्तर्भ्रान्तिरियं प्रकचतीव चितः ।
149822 परमाकाशकृशाख्या शाम्यति निपुणं परिज्ञाता ॥ ५० ॥
149823
149824 चितः अन्तः अहमिति जगदिति च वस्तुतो नास्ति । परंतु इयं आकाशः कृश इतीव
149825 आख्यायत इत्याख्या भ्रान्तिः कचति । न ह्याकाशे कार्श्यं कार्ष्ण्यं वास्ति । सा
149826 ह्यज्ञानाद्भ्रान्तिः । अत एव निपुणं परिज्ञाता शाम्यतीत्यर्थः ॥ ५० ॥
149827
149828 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मी० दे० मो० निर्वाणप्रकरणे उ० पाषा०
149829 शिवशक्तिवर्णनं नाम चतुरशीतितमः सर्गः ॥ ८४ ॥
149830
149831 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
149832 शिवशक्तिवर्णनं नाम चतुरशीतितमः सर्गः ॥ ८४ ॥
149833
149834 पञ्चाशीतितमः सर्गः ८५
149835
149836 श्रीवसिष्ठ उवाच ।
149837
149838 इति नृत्यति सा देवी दीर्घदोर्दण्डमण्डलैः ।
149839 परिस्पन्दात्मकैर्व्योम कुर्वाणा घनकाननम् ॥ १ ॥
149840
149841 देवास्तथा प्रनृत्यन्त्या दृष्ट्वा स्पृष्ट्वा च तं शिवम् ।
149842 प्रेम्णा तदङ्गे विलयादेकीभावोऽत्र वर्ण्यते ॥
149843
149844 परिस्पन्दात्मकैर्दीर्घदोर्दण्डमण्डलैर्व्योम घनं काननं कुर्वाणा सा देवी इति
149845 प्रागुक्तरीत्या नृत्यति ॥ १ ॥
149846
149847 क्रियासौ नृत्यति तथा चितिशक्तिरनामया ।
149848 अस्या विभूषणं शूर्पकुद्दालपटलादिकम् ॥ २ ॥
149849
149850 अज्ञातस्वतत्त्वा चितिशक्तिरेवासौ क्रिया । सा च तथा नृत्यति स्वभावादेवेत्यर्थः ॥ २ ॥
149851
149852 शरशक्तिगदाप्रासमुसलादि शिलादि च ।
149853 भावाभावपदार्थौघकलाकालक्रमादि च ॥ ३ ॥
149854
149855 चित्स्पन्दोऽन्तर्जगद्धत्ते कल्पनेव पुरं हृदि ।
149856 सैव वा जगदित्येव कल्पनैव यथा पुरम् ॥ ४ ॥
149857
149858 अलातस्पन्दश्चक्राद्याकारमिव स चित्स्पन्द एव जगदाकारं धत्ते इत्याह -
149859 चित्स्पन्द इति । यथा मनोराज्यकल्पनैव हृदि पुराकारं धत्ते तद्वत् । अथवा जगदेव
149860 सा न भेद इत्याह - सैवेति ॥ ४ ॥
149861
149862 पवनस्य यथा स्पन्दस्तथैवेच्छा शिवस्य सा ।
149863 यथा स्पन्दोऽनिलस्यान्तः प्रशान्तेच्छस्तथा शिवः ॥ ५ ॥
149864

149865 अथ शिवेच्छा सा शिवाभिन्नेत्याह - पवनस्येति | इच्छात्मिकायास्तस्याः कथं
149866 पूर्णकामशिवाभेदस्तत्राह - यथेति | यथा अनिलस्यान्तः स्पन्दो
149867 नानिलस्वरूपादन्य इत्यस्पन्द एव | एवं शिवेच्छापि शिवादनन्येत्यनिच्छैव
149868 तद्दृष्ट्येति भावः || ५ ||
149869
149870 अमूर्तो मूर्तमाकाशे शब्दाडम्बरमानिलः |
149871 यथा स्पन्दस्तनोत्येवं शिवेच्छा कुरुते जगत् || ६ ||
149872
149873 कथममूर्ताया इच्छाया मूर्तजगदाकारस्तत्राह - अमूर्त इति | आनिलः अनिलाश्रितः
149874 स्पन्दः || ६ ||
149875
149876 नृत्यन्त्याथ यदा तत्र तथा तस्मिन्पराम्बरे |
149877 काकतालीययोगेन संरम्भवशतः स्वयम् || ७ ||
149878
149879 संरम्भः प्रेमनिर्भरस्तद्वशतो यदा शिवः स्पृष्टस्तदा प्रकृतिं गन्तुं
149880 प्रवृत्तेति व्यवहितेनान्वयः || ७ ||
149881
149882 निकटस्थः शिवः स्पृष्टः स मनागभ्रमन्तिकम् |
149883 वाडवोऽग्निः स्वनाशाय वहन्त्येवाम्बुलेखया || ८ ||
149884
149885 अन्तिकं अभ्रमिव तिरोधायकं स्वावरणशक्त्यंशं मनाक् अपनीयेति शेषः | यथा
149886 वहन्त्या समुद्राम्बुलेखया वाडवोऽग्निः स्वनाशाय स्पृश्यते तद्वत् || ८ ||
149887
149888 स्पृष्टमात्रे शिवे तस्मिंस्ततः परमकारणे |
149889 प्रवृत्ता प्रकृतिं गन्तुं सा शनैस्तनुतां तथा || ९ ||
149890
149891 प्रकृतिं अव्यक्तभावम् || ९ ||
149892
149893 अनन्ताकारतां त्यक्त्वा संपन्ना गिरिमात्रिका |
149894 ततो नगरमात्रासौ ततश्च द्रुमसुन्दरी || १० ||
149895
149896 तत्रादौ भौतिकानन्ताकारत्यागेन भूतमात्रभावमाह - अनन्तेति | ततः
149897 पञ्चीकरणत्यागेन सूक्ष्मभूतात्मना नगरमात्रा | ततो
149898 विचित्रवासनामात्रपल्लवशाखाशालित्वात् द्रुम इव सुन्दरी || १० ||
149899
149900 ततो व्योमसमाकारा शिवस्यैवाकृतिं ततः |
149901 सा प्रविष्टा सरिच्छान्तसंरम्भेव महार्णवम् || ११ ||
149902
149903 अव्याकृतव्योमसमाकारा || ११ ||
149904
149905 एक एवाभवदथो शिवया परिवर्जितः |
149906 शिव एव शिवः शान्त आकाशे शमनोऽभितः || १२ ||
149907
149908 आकाशे प्राग्वर्णिते शमनः सर्वसंहर्ता सर्वोपप्लवशान्त्या शिव एक
149909 एवाभितोऽभवत् || १२ ||
149910
149911 श्रीराम उवाच |
149912
149913 भगवञ्छिवसंस्पृष्टा सा शिवा परमेश्वरी |
149914 किमर्थमागता शान्तिमिति मे ब्रूहि तत्त्वतः || १३ ||
149915
149916 किमर्थं किं निमित्तम् || १३ ||

श्रीवसिष्ठ उवाच।

सा राम प्रकृतिः प्रोक्ता शिवेच्छा पारमेश्वरी।
जगन्मायेति विख्याता स्पन्दशक्तिरकृत्रिमा॥ १४॥

स परः प्रकृतेः प्रोक्तः पुरुषः पवनाकृतिः।
शिवरूपधरः शान्तः शरदाकाशशान्तिमान्॥ १५॥

भ्रमति प्रकृतिस्तावत्संसारे भ्रमरूपिणी।
स्पन्दमात्रात्मिका सेच्छा चिछक्तिः पारमेश्वरी॥ १६॥

सा पारमेश्वरी इच्छा॥ १६॥

यावन्न पश्यति शिवं नित्यतृप्तमनामयम्।
अजरं परमाद्यन्तवर्जितं वर्जितद्वयम्॥ १७॥

तथा चेच्छाया इष्टप्राप्तिपर्यन्तमेव स्पन्दस्तत्प्राप्तौ तु शान्तिरेवोचितेति भावः॥ १७॥

संविन्मात्रैकधर्मित्वात्काकतालीययोगतः।
संविद्देवी शिवं स्पृष्ट्वा तन्मयीव भवत्यलम्॥ १८॥

प्रकृतिः पुरुषं स्पृष्ट्वा प्रकृतित्वं समुज्झति।
तदन्तरेकतां गत्वा नदीरूपमिवार्णवे॥ १९॥

प्रकृतित्वं कार्याकारपरिणामम्॥ १९॥

आपगा हि पयोमात्रं सङ्गे अर्णव एव सा।
यदा तदा तमेवाशु प्राप्य तत्रैव लीयते॥ २०॥

अत्रोपपत्तिमाह - आपगेत्यादि॥ २०॥

चितिः शिवेच्छा सा देवं तमेवासाद्य शाम्यति।
जन्मस्थानशिलां प्राप्य तीक्ष्णधारा यथायसी॥ २१॥

आयसी अयोविकारक्षुरादिसंबन्धिनी धारेव॥ २१॥

पुंसश्छायां निजच्छाया प्रविष्टस्य शरीरकम्।
यथाशु प्रविशत्येव प्रकृतिः पुरुषं तथा॥ २२॥

वनादिच्छायां प्रविष्टस्य पुंसो निजच्छाया यथा तच्छरीरकं प्रविशति तद्वत्॥
२२॥

चेतित्वा चिन्निजं भावं पुरुषाख्यं सनातनम्।
भूयो भ्रमति संसारे नेह तत्तां प्रयाति हि॥ २३॥

तर्हि वनाद्बहिर्निर्गमने पुनश्छायेव ब्रह्मप्राप्तस्यापि पुनः संसृतिः
स्यात्तत्राह - चेतित्वेति। पुनरागमने निमित्तस्याज्ञानस्य बाधादिति भावः॥ २३॥

साधुर्वसति चोरौघे तावद्यावदसौ नतम् [नतमिति मूलस्थस्यायमर्थः।
] ।
परिजानाति विज्ञाय न तत्र रमते पुनः॥ २४॥

149969
149970 पुनः संसारेच्छायां हि पुनरागमः संभाव्येत तत्त्वबोधे सैव दुर्लभेत्याह ##-
149971 ] परिजानाति | चोरोऽयं ममाहित इति विज्ञाय तु तत्र न रमते || २४ ||
149972
149973 द्वैते तावदसद्रूपे रमते भ्रमते चितिः |
149974 परं पश्यति नो यावत्तं दृष्ट्वा तन्मयी भवेत् || २५ ||
149975
149976 चितिनिर्वाणरूपं यत्प्रकृतिः परमं पदम् |
149977 प्राप्य तत्तामवाप्नोति सरिदब्धाविवाब्धिताम् || २६ ||
149978
149979 यद्यस्माच्चितिनिर्वाणं प्रशान्तं रूपमेव परमं निरतिशयानन्दं पदं
149980 तत्तस्मात्प्रकृतिरज्ञचिदपि ज्ञानेन तत्प्राप्य तत्तामवाप्नोति || २६ ||
149981
149982 तावद्विमोहवशतश्चितिराकुलेषु सर्गेषु संसरति जन्मदशासु तासु |
149983 यावन्न पश्यति परं तमथाशु दृष्ट्वा तत्रैव मज्जति घनं मधुनीव
149984 भृङ्गी || २७ ||
149985
149986 उक्तमेवार्थ विवृत्योपसंहरति - तावदिति द्वाभ्याम् | स्पष्टम् || २७ ||
149987
149988 संप्राप्य कस्त्यजति नाम तदात्मतत्त्वं प्राप्यानुभूय च जहाति रसायनं
149989 कः |
149990 शाम्यन्ति येन सकलानि निरन्तराणि दुःखानि जन्ममृतिमोहमयानि राम || २८ ||
149991
149992 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० निर्वाणप्रकरणे उ० पाषा०
149993 प्रकृतिपुरुषक्रमवर्णनं नाम पञ्चाशीतितमः सर्गः || ८५ ||
149994
149995 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
149996 प्रकृतिपुरुषक्रमवर्णनं नाम पञ्चाशीतितमः सर्गः || ८५ ||
149997
149998 षडशीतितमः सर्गः ८६
149999
150000 श्रीवसिष्ठ उवाच |
150001
150002 शृणु राम कथं तत्र महाकाशे तथा स्थितः |
150003 देहे भ्रान्तिं तु तां त्यक्त्वा स रुद्रोऽप्युपशाम्यति || १ ||
150004
150005 ब्रह्माण्डखर्परग्रासिरुद्रदेहस्य सौक्ष्म्यतः |
150006 चिदाकाशे तिरोभावः शिलायामत्र वर्ण्यते ||
150007
150008 तत्प्रदेशान्तरेष्वन्यशिलावृक्षतृणादिषु |
150009 सर्वत्र सर्गवैचित्र्यदर्शनं ब्रह्मणीर्यते ||
150010
150011 तत्रादौ रुद्रदेहोपसंहारक्रमं श्रावयति - शृण्विति | यथा इत्यर्थे
150012 कथंशब्दः | स प्राग्वर्णितप्रभावः || १ ||
150013
150014 स रुद्रस्तौ जगत्खण्डौ तदा चित्र इवार्पिताः |
150015 निस्पन्दा एव तत्रासन्प्रेक्षमाणे स्थिते मयि || २ ||
150016
150017 तौ जगत्खण्डौ ऊर्ध्वाधस्ता नब्रह्माण्डखपरे चेति त्रयोऽपि चित्रे अर्पिता लिखिता इव
150018 निस्पन्दएव तत्राकाशे तदा आसन् || २ ||
150019
150020 ततो मुहूर्तमात्रेण स रुद्रस्तौ नभोन्तरे |

150021 खण्डौ विलोकयामास दृशार्केणेव रोदसी ॥ ३ ॥
150022

150023 अर्केण सूर्यात्मिकया दृशा रोदसी द्यावाभूमी इव। कोणेन इति पाठे कटाक्षेण
150024 रोदसी द्यावाभूमीभूतौ तौ जगत्खण्डाविति व्याख्येयम् ॥ ३ ॥
150025

150026 ततो निमेषमात्रेण घोणाश्वासेन खण्डकौ।
150027 तौ समानीय चिक्षेप पातालान्तरिवानने ॥ ४ ॥
150028

150029 घोणा नासिका तदुपलक्षितमुखाकृष्टेन श्वासेन ॥ ४ ॥
150030

150031 अतिष्ठदेक एवासावेकं खे खमिवाखिले।
150032 भुक्तब्रह्माण्डखण्डोग्रमण्डमण्डकमण्डलः ॥ ५ ॥
150033

150034 भुक्ते ब्रह्माण्डखण्डलक्षणे उग्रे क्षीरमण्डं च मण्डकं मण्डलं चेत्येते
150035 द्वे येन। जलाद्यावरणलक्षणक्षीरमण्डसहिते वा
150036 ब्रह्माण्डखण्डमण्डकमण्डले द्वे व्याख्येये। क्षीरमण्डेन सह हि
150037 मण्डकमण्डलं तद्भुजां रोचते ॥ ५ ॥
150038

150039 ततो मुहूर्तमात्रेण लघुः सोऽभ्रमिवाभवत्।
150040 ततोऽभवद्यष्टिसमस्ततः प्रादेशमात्रकः ॥ ६ ॥
150041

150042 अभ्रमिव लघुरभवत्। यष्टिर्दण्डस्तत्समः ॥ ६ ॥
150043

150044 ततः काचकणाकारो मया दृष्टः स तादृशः।
150045 ततः सोऽणूभवन्दृष्टो मया खाद्दिव्यदृष्टिना ॥ ७ ॥
150046

150047 काचकणः सूक्ष्मं काचशकलम्। खादाकाशदप्यणूभवन् ॥ ७ ॥
150048

150049 परमाणुरथो भूत्वा ततस्त्वन्तर्द्धिमाययौ।
150050 इत्यसौ शममायातः शरदम्बुदखण्डवत् ॥ ८ ॥
150051

150052 तादृशोऽपि महारम्भः पुरः पश्यत एव मे।
150053 इति सावरणे तेन ते ब्रह्माण्डकवाटके ॥ ९ ॥
150054

150055 विनिगीर्णे क्षुधार्तेन हरिणेनेव पर्णके।
150056 अथाभून्निर्मलं व्योम शान्तं ब्रह्मैव केवलम् ॥ १० ॥
150057

150058 अल्पे पर्णे पर्णके। निर्मलं दृश्यकालुष्यरहितम् ॥ १० ॥
150059

150060 अनादिमध्यपर्यन्तं संविदाकाशमात्रकम्।
150061 इत्यहं दृष्टवांस्तत्र कल्पान्तमुरुविभ्रमम् ॥ ११ ॥
150062

150063 पाषाणोदरसंसारकथासमाप्तिं सूचयन्नुपसंहरति - इत्यहमिति। कल्पान्तं
150064 महाप्रलयम् ॥ ११ ॥
150065

150066 दर्पणप्रतिबिम्बाभं शिलाशकलकोटरे।
150067 अथ तामङ्गनां स्मृत्वा तां शिलां तच्च [शिलान्तर्गतं
150068 ब्रह्मवृत्तं लयपर्यन्तं तद्विलासं चेत्यर्थः।] विभ्रमम् ॥ १२ ॥
150069

150070 तामङ्गनां विद्याधरीम् ॥ १२ ॥
150071

150072 राजद्वारगतो ग्राम्य इवाहं विस्मयं गतः।

150073 तामालोकितवान्भूयः कलधौतशिलामहम् ‖ १३ ‖
150074
150075 ग्रामे भवो ग्राम्यः कदाप्यदृष्टनगरो जन इव | तां शिलां
150076 पूर्वदृष्टप्रदेशात् प्रदेशान्तरेष्वप्यालोकितवान् ‖ १३ ‖
150077
150078 यावत्सर्वत्र सन्त्यत्र सर्गाः काल्या इवाङ्गके |
150079 बुद्धिनेत्रेण दृश्यन्ते दिव्याक्षणा वा न ते यथा ‖ १४ ‖
150080
150081 यावदिति साकल्ये यत इत्यर्थे वा | प्राग्दृष्टे काल्या अङ्गके शरीरे इव सर्वत्र सर्गाः
150082 सन्ति | कल्पा इव इति पाठे कल्पाः सर्गा इवेति मिथ्यात्वसूचक इवशब्दो व्याख्येयः | ते
150083 सर्गाः ‖ १४ ‖
150084
150085 सर्वत्र सर्वदा सर्वं यदस्त्येव तदा तया |
150086 दूरवत्प्रेक्ष्यते मांसदृशा यद्येव सा शिला ‖ १५ ‖
150087
150088 यदि सा शिला मांसदृशैव दूरस्थवस्तुवदापाततः प्रेक्ष्यते तत्तर्हि एका
150089 शिलैवेत्यन्वयः ‖ १५ ‖
150090
150091 दृश्यते तच्छिलैवैका न तु सर्गादि किंचन |
150092 सावस्थिता शिलैवैकरूपा निबिडमण्डला ‖ १६ ‖
150093
150094 कलधौतमयी स्फारा संध्याजलदसुन्दरी |
150095 ततोऽहं विस्मयाविष्टः प्रविचारितवान्पुनः ‖ १७ ‖
150096
150097 संध्याजलदस्य काञ्चनवर्णप्रसिद्धेः स इव सुन्दरी ‖ १७ ‖
150098
150099 शिलायामपरं भागं तथैव परया दृशा |
150100 यावत्तमपि पश्यामि जगदारम्भमन्थरम् ‖ १८ ‖
150101
150102 जगदारम्भैर्मन्थरं संक्लिष्टम् | अम्बरम् इति पाठे तु जगतामारम्भा यत्र
150103 तथाविधमम्बरं यस्मिन् ‖ १८ ‖
150104
150105 तथैव सुषिराकार इव नानार्थसुन्दरम् |
150106 पुनरन्यं तथैवाहं प्रदेशं परिदृष्टवान् ‖ १९ ‖
150107
150108 तथा पूर्वदृष्टप्रदेशवदेन सुषिराकारे नानार्थसुन्दरम् | इवशब्दो
150109 मिथ्यात्वद्योतकः ‖ १९ ‖
150110
150111 सर्गसंरम्भवलितं यावत्तमपि तादृशम् |
150112 यं यं प्रदेशं पश्यामि शिलायास्तत्र तत्र वै ‖ २० ‖
150113
150114 जगत्पश्यामि विमलमादर्श इव बिम्बितम् |
150115 मयातिकौतुकेनाथ सर्वास्तस्य गिरेः शिलाः ‖ २१ ‖
150116
150117 अन्विष्टा भूतिभागाश्च तृणगुल्मादयस्तथा |
150118 यावत्सर्वत्र तत्तादृग्जगदस्ति यथास्थितम् ‖ २२ ‖
150119
150120 बुद्ध्यैव दृश्यते नाक्ष्णा परया विविधाकृति |
150121 क्वचित्प्रथमसर्गात्म जायमानप्रजापति ‖ २३ ‖
150122
150123 परया आधिभौतिकदेहभावभ्रान्तिशून्यया सर्वसाक्ष्यहंभावबुद्ध्यैव | तत्र
150124 तत्र दृष्टान्विशेषान्प्रपञ्चयति - क्वचिदित्यादिना | प्रायशो बहुव्रीहयः

150125 सर्वत्र | जायमानः प्रजापतिर्यस्मिन् | जायमानप्रजापतिना
150126 कल्प्यमानर्क्षेत्याद्युत्तरश्लोकार्धेन सह तत्पुरुषघटितबहुव्रीहिर्वा || २३ ||
150127
150128 कल्प्यमानर्क्षचन्द्रार्कदिनरात्र्यृतुवत्सरम् |
150129 क्वचित्क्वचिन्महीपीठसंपन्नजनमण्डलम् || २४ ||
150130
150131 महीपीठे संपन्नं जनमण्डलं यत्र || २४ ||
150132
150133 क्वचित्किंचिदस्वातोग्रचतुःसागरखातकम् |
150134 क्वचित्किंचिदसंजातसुरसंजातदानवम् || २५ ||
150135
150136 सगरपुत्रैरद्याप्यखातमुग्रं चतुःसागरखातकं यत्र | अजातसुरं च
150137 तत्संजातदानवं च || २५ ||
150138
150139 क्वचित्किंचित्कृतयुगाचारसज्जनभूतकम् |
150140 क्वचित्किंचित्कलियुगाचारदुर्जनभूतकम् || २६ ||
150141
150142 क्वचित्किंचित्पुरव्यूहदैत्यसंगरदुस्तरम् || २७ ||
150143
150144 क्वचित्किंचिन्महाशैलजालनिर्विवरावनि |
150145 क्वचित्किंचिदसंपन्नसर्गमेकाम्बुजोद्भवम् || २८ ||
150146
150147 एक अम्बुजोद्भवो द्रुहिण एव यस्मिन् || २८ ||
150148
150149 क्वचित्किंचिज्जरामृत्यून्मुक्तभूतलमानवम् |
150150 क्वचित्किंचिदसंजातचन्द्रशून्यशिरःशिवम् || २९ ||
150151
150152 असंजातचन्द्रत्वाद्भूषणशून्यशिराः शिवो यस्मिन् || २९ ||
150153
150154 अनिर्मथितदुग्धाब्धिमृत्युमत्सुरपूरितम् |
150155 असंजातामृताश्वेभवैद्यगोकमलाविषम् || ३० ||
150156
150157 वैद्यो धन्वन्तरिः | गावः कामधेनवः | कमला लक्ष्मीः | विषं कालकूटम् || ३० ||
150158
150159 शुक्रामरमहाविद्यानाशनोत्कसुरव्रजम् |
150160 क्वचित्किंचिच्च गर्भाङ्गकर्तनोत्कसुरेश्वरम् || ३१ ||
150161
150162 शुक्रेण तपसा साध्यमानाया अमरमहाविद्यायाः
150163 मृतसंजीवनाख्यायास्तपोविघ्नाचरणेन नाशने उत्क उत्कठितमनाः सुरव्रजो यत्र
150164 | किंचिच्च भाविस्वशत्रुविनाशमुद्दिश्य दितेरुदरं प्रविश्य तद्गर्भस्याङ्गानां
150165 कर्तने उत्कः सुरेश्वर इन्द्रो यत्र || ३१ ||
150166
150167 अपरिम्लानधर्मत्वात्स्वप्रकाशाखिलव्रजम् |
150168 क्वचित्किंचिच्च पूर्वान्यसंनिवेशक्रमस्थिति || ३२ ||
150169
150170 पूर्वस्मात्प्रसिद्धसंनिवेशक्रमादन्यसंनिवेशक्रमा पदार्थस्थितिर्यस्मिन् || ३२ ||
150171
150172 अपूर्ववेदशास्त्रार्थसमाचारविचारणम् |
150173 क्वचित्किंचिन्न कल्पान्तसंक्षोभमिव संस्थितम् || ३३ ||
150174
150175 क्वचित्किंचिच्च दैत्यौघविलुण्ठितसुरालयम् |
150176 क्वचित्किंचित्सुरोद्यानगायद्गन्धर्वकिन्नरम् || ३४ ||

150177
150178 क्वचित्किंचित्समारब्धगीर्वाणासुरसौहृदम् ।
150179 भूतभव्यभविष्यत्स्थजगदाडम्बरं मया ॥ ३५ ॥
150180
150181 अमृतमन्थनार्थं समारब्धं गीर्वाणानामसुराणांन् च परस्परसौहृदं
150182 यत्र ॥ ३५ ॥
150183
150184 तदानुभूतं वपुषि महाविश्वगणात्मनि ।
150185 एकत्र कल्पविक्षुब्धपुष्करावर्तमन्थरम् ॥ ३६ ॥
150186
150187 महाविश्वगणात्मनि मायाशबलचिद्वपुषि तदा मया एवं
150188 विचित्रजगदाडम्बरमनुभूतमित्यन्वयः । तमेव जगदाडम्बरं पुनः
150189 प्रपञ्चयति - एकत्रेत्यादिना ॥ ३६ ॥
150190
150191 एकत्र सौम्यसकलभूतसंततिसंस्थितम् ।
150192 एकत्र समनुक्षुब्धसुरासुरनरेश्वरम् ॥ ३७ ॥
150193
150194 एकत्रासंभवद्भानुनित्याभिन्नतमोघनम् ।
150195 एकत्रासंभवद्ध्वान्तं कान्तं ज्वालोदरोपमम् ॥ ३८ ॥
150196
150197 नित्यमभिन्नेन अविनाशितेन तमसा घनम् ॥ ३८ ॥
150198
150199 एकत्र नलिनीनालनिलीनमधुकैटभम् ।
150200 एकत्र पद्ममञ्जूषासुप्तबालनवाब्जजम् ॥ ३९ ॥
150201
150202 भगवन्नाभिनलिनीनाले निलीनौ मधुकैटभौ यत्र ॥ ३९ ॥
150203
150204 एकत्रैकार्णवोदग्रवृक्षविश्रान्तमाधवम् ।
150205 एकत्र कल्परजनीनिःशून्यतिमिराकुलम् ॥ ४० ॥
150206
150207 एकार्णवे प्रलये उदग्रे उन्नताग्रे अक्षयवटवृक्षे पत्रपुटे विश्रान्तो माधवो यत्र ।
150208 आलोकनिःशून्येन गाढेन तिमिरेणाकुलम् ॥ ४० ॥
150209
150210 शिलाजठरनिस्पन्दं व्योमैव वितताकृति ।
150211 सुषुप्तजठराकारमप्रज्ञातमलक्षणम् ॥ ४१ ॥
150212
150213 भूम्याद्यनुत्पत्तेर्व्योममात्रोत्पत्तेर्व्योमैव एकत्रेत्यनुषज्यते ॥ ४१ ॥
150214
150215 अप्रतर्क्यमविज्ञेयंन् सुषुप्तमिव सर्वतः ।
150216 एकत्र पक्षविक्षुब्धशैलकाकाकुलाम्बरम् ॥ ४२ ॥
150217
150218 पक्षच्छेदाभावात्पक्षैर्विक्षुब्धाः शैला एव काका इव काकास्तैराकुलाम्बरम् ॥ ४२ ॥
150219
150220 एकत्र वज्रनिष्पेषद्रवद्भूधरभासुरम् ।
150221 एकत्रोद्वृत्तमत्ताब्धिह्रियमाणधराचलम् ॥ ४३ ॥
150222
150223 एकत्र पुरवृत्रान्धबलिसंगरसंकुलम् ।
150224 एकत्र मत्तपातालगजकम्पिवसुन्धरम् ॥ ४४ ॥
150225
150226 पुराणां त्रिपुराणां वृत्रस्य अन्धकस्य बलेश्च संगरैः संकुलम् । मत्तैः
150227 पातालगजैर्दिग्गजैः कम्पिनी वसुन्धरा यत्र ॥ ४४ ॥
150228

150229 एकत्र शेषशिरसः कल्पान्तलुठितावनि।
150230 क्वचिदल्पेन रामेण हतरावणराक्षसम्॥ ४५॥
150231
150232 अल्पेन बालेनैव रामेण॥ ४५॥
150233
150234 रक्षसा रावणेनैव क्वचिद्विहतराघवम्।
150235 भूस्थपादेन देवाद्रिशिरस्थशिरसा परम्॥ ४६॥
150236
150237 विहतः सीताहरणेन वञ्चितो राघवो यत्र॥ ४६॥
150238
150239 पश्याम्यम्बरमाक्रान्तं क्वचिद्वै कालनेमिना।
150240 क्वचिच्चापसुरैर्नित्यं दानवैरेव पालितम्॥ ४७॥
150241
150242 अपसुरैरपसारितदेवैः॥ ४७॥
150243
150244 क्वचिच्च भ्रष्टदनुजैरमरैरेव पालितम्।
150245 जिष्णुयुक्तेन गुप्तेन विष्णुपाण्डवकौरवैः॥ ४८॥
150246
150247 जिष्णुरर्जुनस्तद्युक्तेन। विष्णुना [अत्र समासैकदेशविष्णुशब्दे
150248 तृतीयान्तविशेषणद्वयान्वये छान्दसः समासः।] कृष्णेन। गुप्तेन
150249 पालितस्वजनेन॥ ४८॥
150250
150251 क्वचिद्भारतयुद्धेन निहताक्षौहिणीगणम्।
150252
150253 श्रीराम उवाच।
150254
150255 किमहं भगवन्पूर्वमभवं कथयेति मे॥ ४९॥
150256
150257 क्वचिदल्पेन रामेण इत्यादि श्रुत्वा साश्चर्यो रामः पृच्छति - किमहमिति॥ ४९॥
150258
150259 अभवं चेदनेनैव संनिवेशेन तत्कथम्।
150260
150261 श्रीवसिष्ठ उवाच।
150262
150263 सर्व एव विवर्तन्ते राम भावाः पुनःपुनः॥ ५०॥
150264
150265 अनेन इदानीं दृश्यमानेनावयवाकृतिसंनिवेशेनाभवं किंवा
150266 अन्यादृशेनेत्यर्थः॥ ५०॥
150267
150268 पूर्यमाणा यथा माषाः क्रमेणान्येन तेन वा।
150269 सर्वक्रमसमाः केचित्तयैवान्येन वा मिथः॥ ५१॥
150270
150271 पूर्यमाणाः कुम्भकुसूलादौ पुनःपुनस्तेनान्येन च क्रमेण संनिवेशेन यथा
150272 विवर्तन्ते तद्वदित्यर्थः। तया प्राक्तनयाकृत्या अन्येन वा आकारेण॥ ५१॥
150273
150274 स्फुरन्त्यर्थसमा भावाः केचिदब्धितरङ्गवत्।
150275 पुनस्त्वं पुनरेवाहं पुनः पुनरिमे जनाः॥ ५२॥
150276
150277 न कदाचन नैवान्ये संभवन्त्यखिलं परे।
150278 त एवान्येऽथवाम्भोधौ तरङ्गा इव निर्णयः॥ ५३॥
150279
150280 तत्त्वदृशा त्वाह - न कदाचनेति। मायादृशा त एव जायन्ते अन्ये वा जायन्ते

इत्यनिर्णय एवेत्याह - त एवेति। निर्णयो यद्वन्न जायते इत्यन्वयः ॥ ५३ ॥

यद्वन्न जायते तद्वद्भूतानां भ्रमतां भवेत्।
आयान्ति यान्त्यनन्तानि भूतानीह भवद्भ्रमैः ॥ ५४ ॥

तान्येवान्यानि चान्यानि समानि विषमाणि च।
आवृत्तिमन्ति तान्येव तथैवान्यानि चाभितः ॥ ५५ ॥

विद्धि सीकरजालानि भूतानि जगदम्बुधेः।
वित्तबन्धुवयःकर्मविद्याविज्ञानचेष्टितैः ॥ ५६ ॥

इदं च प्राङ्मुमुक्षुव्यवहारप्रकरणे उक्तमेवेति स्मारयंस्तदेवाह - धित्तेति ॥
५६ ॥

तैरेव केचिज्जायन्ते भूयोभूयः शरीरिणः।
अर्धैस्तैः सदृशाः केचित्केचित्पादेन तैः समाः ॥ ५७ ॥

तज्जीवास्तैर्विसदृशा भवन्त्यन्यशरीरिणः।
सर्वैरेभिः समाः केचित्कालेनैव विलक्षणाः।
कालेन सदृशाः केचिदनेन च विलक्षणाः ॥ ५८ ॥

जीवैक्ये सदृशान्येव शरीराणि भवन्तीत्यप्यनियम इत्याह - तज्जीवा इति। एवं
जीवभेदे विसदृशान्येव तानीत्यप्यनियम इत्याशयेनाह - सर्वैरिति। अनेन
शरीरेण ॥ ५८ ॥

कालेनाकुलचेष्टयान्य इव ते गच्छन्त्यधोर्ध्वं
पुनर्देहालेखनखेदितान्यगणितान्यन्यानि चान्यान्यलम् भूताम्बूनि वहन्ति
संसृतिमये तान्यम्बुधौ चञ्चले चक्रावृत्तिमयानि संकलयितुं शक्नोति
कस्तान्यलम् ॥ ५९ ॥

यस्मात्कारणात्ते जीवा रागद्वेषभोगलाम्पट्यादिदोषाकुलया
विचित्रधर्माधर्मचेष्टया कालेन विचित्रनानादेहधारणादन्येऽन्ये इव भूत्वा
अधोलोकेषूर्ध्वं स्वर्गादिषु च पुनःपुनर्गच्छन्ति। अधोर्ध्वमिति यलोपासिद्धेः
संधिरार्षः। तस्मात्कारणाच्चञ्चले संसृतिमये अम्बुधौ चक्रावर्तप्रायाणि यानि
भूताम्बूनि वहन्ति तानि सदृशानि विसदृशानीति वा तान्येवान्यानीति वा अलं सम्यक्
संकलयितुं निर्धारयितुं कः पुरुषः शक्नोतीत्यर्थः ॥ ५९ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वाण उ० पाषा०
जगदन्यायत्ववर्णनं नाम षडशीतितमः सर्गः ॥ ८६ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
जगदन्यायत्ववर्णनं नाम षडशीतितमः सर्गः ॥ ८६ ॥

सप्ताशीतितमः सर्गः ८७

श्रीवसिष्ठ उवाच।

ततश्चिदाकाशवपुर्व्याप्यनन्तो निरामयः।
दत्तावधानो वपुषि तदा पश्याम्यहं क्वचित् ॥ १ ॥

वसिष्ठेन स्वदेहेऽत्र वर्ण्यते विश्वकल्पनम्।
स्वस्यैव हि स्वयंभूत्वं तन्वक्षाद्युद्भवक्रमात् ॥

150333
150334 कलधौतशिलावृक्षतृणगुल्मलतादिष्विव मया
150335 स्वशरीरावयवेष्वप्यवहितदृशा सर्गा दृष्टा इत्याह - तत इति। ततः
150336 शिलातृणगुल्मादिषु विचित्रसर्गदर्शनानन्तरम्॥ १॥
150337
150338 यावदन्तर्गतः सर्गः संस्थितोऽङ्कुरितोपमः।
150339 कुसूलस्येव बीजस्य सिक्तस्येवाङ्कुरो हृदि॥ २॥
150340
150341 कथमङ्कुरितोपमस्तदाह - कुसूलस्येति। कुसूलस्य हृदि वृष्टिसिक्तस्य बीजस्येव
150342 ॥ २॥
150343
150344 ऊर्ध्वमुच्छून एवान्तःसेकाद्बीजे यथाङ्कुरः।
150345 आकारवत्यनाकारे चित्त्वाचित्त्वे तथा जगत्॥ ३॥
150346
150347 आकारवति मूर्ते अनाकारे अमूर्ते चित्त्वाचित्त्वे चेतनाचेतने सर्ववस्तुनि
150348 अन्तःसेकादूर्ध्वमुच्छूने बीजेऽङ्कुर इव जगदस्तीति शेषः॥ ३॥
150349
150350 यथोन्मिषति दृश्यश्रीः सुषुप्ताद्बोधमेयुषः।
150351 जाग्रद्वा विगते स्वप्ने चिन्मात्रस्य स्वचेतनात्॥ ४॥
150352
150353 स त्वया समाधौ कथमनुभूतस्तत्राह - यथेति। यथा सुषुप्तात्सकाशाद्बोधं
150354 स्वप्नदर्शनमेयुषश्चिन्मात्रस्य पुंसः स्वचेतनात्स्वाप्नदृश्यश्रीरुन्मिषति।
150355 विगते वा स्वप्ने बोधमेयुषो जाग्रत्प्रपञ्च उन्मिषति तथैवेत्यग्रेऽन्वयः॥ ४॥
150356
150357 तथैवात्मनि सर्गादावनुभूतस्वरूपिणि।
150358 हृदि सर्गोदयो नान्यरूप आकाशरूपतः॥ ५॥
150359
150360 श्रीराम उवाच।
150361
150362 आकाशरूप आकाशे परमाकाश कथ्यताम्।
150363 भूयो निपुणबोधाय कथं सर्गः प्रवर्तते॥ ६॥
150364
150365 हृदि सर्गोदय इति त्वया हृत्पदेन हृदयाकाश उक्तः आकाशरूपत इति च चिदाकाश
150366 इति मया त्वदभिप्रायोऽवगत इति संबोधनेन सूचयन् रामः स्फुटपरिज्ञानाय
150367 विस्तरात्पुनः कथयेति प्रार्थयते - आकाशेति। हृदयाकाश परमाकाशरूप हे
150368 वसिष्ठ चिदाकाशरूपे त्वयि कथं सर्गः प्रवर्तते तत्पुनः कथ्यतामित्यर्थः॥ ६॥
150369
150370 श्रीवसिष्ठ उवाच।
150371
150372 शृणु राम यथापूर्वं स्वयंभूत्वं मया तदा।
150373 अनुभूतमसत्सद्वदिदं स्वप्नपुरोपमम्॥ ७॥
150374
150375 पृष्टमर्थं विस्तराद्वक्तुं प्रतिजानीते - शृण्विति। स्वयंभूत्वं शरीरे
150376 सर्वजगत्सर्गकल्पनात्परमेष्ठित्वम्॥ ७॥
150377
150378 तमालोक्य महाकल्पसंभ्रमं व्योमरूपिणा।
150379 भागेऽन्यत्र शरीरस्य संविदुन्मेषिता मया॥ ८॥
150380
150381 तं प्राग्विस्तराद्वर्णितं कलधौतशिलादौ महाकल्पसंभ्रममालोक्य
150382 चिद्व्योमरूपिणा मया शरीरस्यान्यत्र भागे स्थिता संवित् सर्गदर्शनसंकल्पेन
150383 कौतुकादुन्मेषितेत्यर्थः॥ ८॥
150384

150385 यदैव सामला संविक्किंचिदुन्मेषिता स्थिता।
150386 तदैवाहं क्वचित्तत्र पश्याम्याकाशतामिव॥ ९॥
150387
150388 तत्रादौ तस्माद्वा एतस्मादात्मन आकाशः संभूतः इति
150389 श्रुत्युक्तक्रमोपलक्षणमाकाशकल्पनमाह - यदैवेति। यथैव इति पाठे
150390 तथैवेति पाठ्यम्॥ ९॥
150391
150392 गतं स्वभावं चिद्व्योम यथा त्वं राम निद्रया।
150393 जाग्रद्वा स्वप्नलोकं वा विशन्वेत्सि समं घनम्॥ १०॥
150394
150395 इयं चाकाशता न चिद्घनस्यान्तःशून्यभावप्राप्तिलक्षणसौक्ष्म्याधिक्यं किंतु
150396 चित्सौक्ष्म्यापेक्षया जाड्याधिक्यात्स्थौल्यमेवेत्याशयेन दृष्टान्तेन संभावयति
150397 - गतमिति। हे राम यथा त्वं निद्रया प्राग्वर्णितस्वप्नजाग्रल्लोकं वा स्वप्नं
150398 स्वप्नलोकं वा विशन् स्वात्मन एव समं घनं तदाधारस्वभावं वेत्सि
150399 तद्वत्संभावयेत्यर्थः॥ १०॥
150400
150401 दिङ्मात्राकाशमेवादौ ततोऽस्मीत्येव वेदनम्।
150402 तद्घनं कथ्यते बुद्धिः सा घना मन उच्यते॥ ११॥
150403
150404 आकाशकल्पनयैव तद्गोचरचित्ताद्यन्तःकरणचतुष्टयसिद्धिमाह - दिङ्मात्रेति।
150405 दिशो मिमीते स्वचलनानुकूलतया स्वात्मनि पर्यालोचयतीति दिङ्मात्रं
150406 तथाविधमाकाशमेवादौ चेतनाच्चित्तं भवति। तत आकाशमहमस्मीत्येव वेदनं
150407 सोऽहंकारः। तदेव घनमाकाशमेवेत्यवधारणात्पूर्वभावविस्मरणाच्च
150408 बुद्धिः कथ्यते। सैव संकल्पविकल्पकामविचिकित्सादिकल्पनघना मन उच्यत इत्यर्थः
150409 ॥ ११॥
150410
150411 तद्वेती शब्दतन्मात्रं तन्मात्राणीतराण्यथ।
150412 पञ्चेन्द्रियाणि तत्स्थौल्यादितीन्द्रियगणोदयः॥ १२॥
150413
150414 तदेव विषयान्कल्पयित्वा तद्ग्राहकानीन्द्रियाण्यपि कपयतीत्याह - तदिति॥ १२॥
150415
150416 सुषुप्ताद्विशतः स्वप्नं जगद्दृश्यघनोदयम्।
150417 यथा तथैव सर्गादौ दुःखं भाति निमेषतः॥ १३॥
150418
150419 तद्वशादेव प्राङ्निर्दुःखस्यात्मनः स्वप्न इव व्यवहारदुःखावाप्तिरित्याह -
150420 सुषुप्तादिति॥ १३॥
150421
150422 तुल्यकालमनन्तेऽस्मिन्दृश्यजालावभासने।
150423 कथयन्ति क्रमं केचित्केचिन्न कथयन्ति च॥ १४॥
150424
150425 ननु स्वप्ने नाकाशादिक्रमेण सर्गः किंतु तुल्यकालमेव सहसा सर्वजगद्दर्शनमिति
150426 वैषम्यं तत्राह - तुल्यकालेति। स ऐक्षत लोकान्नु सृजा इति स इमा&ल्लोकानसृजत
150427 । स तपस्तप्त्वा इदं सर्वमसृजत इत्यादिश्रुतिषु तुल्यकालमपि सर्गश्रवणात्
150428 क्षणोदरेऽपि कालदैर्घ्यकल्पनेन क्रमोपपत्तेरिति भावः॥ १४॥
150429
150430 परमाणुकणे कान्ते संपन्नमनुभूतवान्।
150431 अहं चेतनमात्मानं वस्तुतोऽमलमेव खम्॥ १५॥
150432
150433 क्षणोदरे कालदैर्घ्यमिव परमाणूदरेऽपि देशदैर्घ्यकल्पनया तत्र
150434 ब्रह्माण्डात्मकं चेतनमात्मानमहमेव कल्पनया दृष्टवानित्याह -
150435 परमाण्विति॥ १५॥
150436

150437 यथा स्वभावतो व्योम्नि चलत्येवानिशं मरुत् ।
150438 तथा स्वभावात्सर्वत्र पश्यत्येव वपुस्त्विति ॥ १६ ॥
150439
150440 मरुतश्चलनमिव मनसः शरीरादिकल्पनं स्वभाव इत्याह - यथेति ॥ १६ ॥
150441
150442 यादृशं चेतितं रूपं शक्त्या परमया तया ।
150443 तच्छक्नोत्यन्यथाकर्तुं नैषा यत्नेन भूयसा ॥ १७ ॥
150444
150445 तया प्राथमिकमनःकल्पनाशक्त्या एषा शक्तिः स्वयमप्यन्यथाकर्तुं न
150446 शक्नोतीत्युत्तरकल्पनासु सैव स्थिरा नियतिरित्यर्थः ॥ १७ ॥
150447
150448 ततः पश्याम्यहं यावत्संपन्नोऽप्यणुरूपकः ।
150449 चित्त्वाच्चेतस्तदेवाशु तथाभूतोऽस्मि संस्थितः ॥ १८ ॥
150450
150451 अत एवाहमपरिच्छिन्नोऽपि तत्कृतपरिच्छेदकल्पनया अणुरूपकः परिच्छिन्नः
150452 संपन्न इत्याह - तत इति ॥ १८ ॥
150453
150454 ततोऽहं बुद्धवान्रूपं तनु तेजःकणाकृति ।
150455 तदेव भावयन्पश्चाद्गतोऽहं स्थूलतामिव ॥ १९ ॥
150456
150457 तनु सूक्ष्मं लिङ्गशरीरं चित्प्रतिबिम्बव्याप्त्या तेजःकणाकृति । स्थूलतां
150458 स्थूलदेहतामिव ॥ १९ ॥
150459
150460 प्रेक्षे तावदहं किंचिदिति बोधाल्लघोस्ततः ।
150461 मनागालोकनायैव संप्रवृत्तोऽनुभूतवान् ॥ २० ॥
150462
150463 तत्र चक्षुरादिद्वारकल्पनया रूपादिद्रष्टृता स्वस्य संपन्नेत्याह - प्रेक्षे
150464 इत्यादिना ॥ २० ॥
150465
150466 यन्नाम तत्र तत्किंचित्तस्येहाद्य रघूद्वह ।
150467 शृणु नामानि मुख्यानि कल्पितानि भवादृशैः ॥ २१ ॥
150468
150469 द्रष्टुं प्रवृत्तो रन्ध्रेण येन तच्चक्षुरुच्यते ।
150470 यच्च पश्यामि तद्दृश्यं दर्शनं तु फलं ततः ॥ २२ ॥
150471
150472 तद्दृश्यं रूपम् ॥ २२ ॥
150473
150474 यदा पश्यामि कालोऽसौ यथा पश्यामि स क्रमः ।
150475 प्रौढा नियतिरित्यस्य यत्र पश्यामि तन्नभः ॥ २३ ॥
150476
150477 तदनु निष्पादिनी नान्तरीयकी देशकालादिनियतिरपि संपन्नेत्याह - यदेति ॥ २३ ॥
150478
150479 स्थितोऽस्मि यत्र देशोऽसावित्यदयिषा प्रकल्पना ।
150480 तदा त्वहं चिदुन्मेषमात्रात्तन्मात्रकारणम् ॥ २४ ॥
150481
150482 अद्य कल्पनादार्ढ्यकाले । तदा तर्हि त्वं कीदृक्तत्राह - तदेति ।
150483 तदानींतनदृष्ट्या सर्वं चिदुन्मेष एवेति तन्मात्रकारणमहमित्यर्थः ॥ २४ ॥
150484
150485 पश्यामीति ततस्तत्र मनाग्बोधो ममोदभूत् ।
150486 ततो रन्ध्रद्वयेनाहमपश्यं यत्तदप्यखम् ॥ २५ ॥
150487
150488 देहे चक्षुरादिरन्ध्रकल्पनादिदर्शनादिकौतुकात्तदाभूदित्याह - पश्यामीति ॥ २५ ॥

याभ्यामपश्यंन् रन्ध्राभ्यां त इमे लोचने स्थिते।
ततः किंचिच्छृणोमीति संविदित्युदिता मम॥ २६॥

ततः किंचिन्मनाङ्मात्रं झंकारं श्रुतवानहम्।
प्रध्मातस्येव शङ्खस्य शब्दं व्योम्नः स्वभावजम्॥ २७॥

सहैव विषयकल्पनामाह - तत इति॥ २७॥

याभ्यामहमथाश्रौषं त इमे श्रवणव्रणे।
प्रदेशाभ्यां विचरता मरुता विततस्वनम्॥ २८॥

याभ्यां प्रदेशाभ्यां विततस्वनमश्रौतं ते इमे। प्रगृह्यत्वे संधिरार्षः। श्रवणव्रणे कर्णच्छिद्रे। विचरता मरुतेति श्रोत्रादिव्यापारस्यापि प्राणाधीनत्वद्योतनार्थम्॥ २८॥

स्पर्शसंवेदनं किंचिदहमत्रानुभूतवान्।
येन नाम प्रदेशेन तेन सा त्वक्च कथ्यते॥ २९॥

एवं त्वक्कल्पनेत्याह - स्पर्शेति॥ २९॥

येन स्पृष्टमिवाङ्गं तत्तदाहमनुभूतवान्।
सत्संवेदनमात्रात्मा सोऽयं वायुरिति स्मृतः॥ ३०॥

सहैव तद्विषयकल्पनामाह - येनेति। वायुग्रहणं त्वग्विषयमात्रोपलक्षणम्। सत्संवेदनं सत्यसंकल्पस्तन्मात्रात्मा॥ ३०॥

स्पर्शनेन्द्रियतन्मात्रमिति वेदिनि संस्थितम्।
आस्वादसंविद्याभून्मे तदास्वाद्यरसेन्द्रियम्॥ ३१॥

इति उक्तरीत्या वेदिनि मयि स्पर्शनेन्द्रियतन्मात्रं संस्थितं संपन्नमिति पूर्वानुवादः। रसनेन्द्रियकल्पनामाह - आस्वादेति। तत् आस्वाद्यरसभेदसहितं रसनेन्द्रियं संस्थितमित्यनुकृष्यते॥ ३१॥

प्राणान्मे घ्राणतन्मात्रमुदितं व्योमरूपिणः।
इत्थं न किंचित्संपन्नं सर्वं संपन्नमत्र मे॥ ३२॥

प्राणात् आघ्राणसंकल्पाकृष्टप्राणभेदादपानात्। घ्राणं च तद्विषयगन्धतन्मात्रा च तयोः समाहारो घ्राणतन्मात्रम्। सेयं देहेन्द्रियविषयसंपत्तिः कल्पनामात्रत्वान्मिथ्यैवेति दर्शयन्नुपसंहरति - इत्थमिति॥ ३२॥

एवमिन्द्रियतन्मात्रजालं चेत्तत्र संस्थितः।
यावत्तावद्विदः पञ्च बलादेव ममोदिताः॥ ३३॥

ततो बलादेव पञ्चभोगसंविद उदिता इत्याह - एवमिति। विदः शब्दादिप्रथालक्षणा भोगसंविदो मिथ्यात्वादेव अनाकारा भ्रान्तिमात्रेण तथा भातस्वरूपिण्यः॥ ३३॥

शब्दरूपरसस्पर्शगन्धमात्रशरीरिकाः।
अनाकारास्तथा भातस्वरूपिण्यो भ्रमात्मिकाः॥ ३४॥

150541 एवंरूपमहं जालं भावयन्यत्तदास्थितः।
150542 तदहंकार इत्यद्य कथ्यते त्वादृशैर्जनैः॥ ३५॥
150543
150544 भावयन् अभिमन्यमानः। तेनैवाहंकारकल्पनाभूदित्याह - तदिति॥ ३५॥
150545
150546 एष एव घनीभूतो बुद्धिरित्यभिधीयते।
150547 साथ बुद्धिर्घनीभूता मन इत्यभिधीयते॥ ३६॥
150548
150549 घनीभूतो दृढाध्यवसायेन बहलीभूतः। मनोऽपि पुनःपुनर्विषयान्स्मरच्चित्तं
150550 संपन्नमित्यपि बोध्यम्॥ ३६॥
150551
150552 अन्तःकरणरूपत्वमेवमत्राहमास्थितः।
150553 आतिवाहिकदेहात्मा चिन्मयव्योमरूपवान्॥ ३७॥
150554
150555 पवनाद्यप्यहं शून्यः केवलाकाशमात्रकः।
150556 सर्वेषामेव भावानां शून्याकृतिररोधकः॥ ३८॥
150557
150558 यतोऽहं शून्याकृतिरत एव सर्वेषामेव कल्प्यमानभावानामरोधकः
150559 अनिरोधकोऽनिवारकश्च॥ ३८॥
150560
150561 अथैवंभावनाच्चाहं यदा तत्र चिरं स्थितः।
150562 तदाहं देहवान्दृष्ट इति मे प्रत्ययोऽभवत्॥ ३९॥
150563
150564 तत्र तस्मिन्पूर्वकल्पिते ब्रह्मात्मकदेहे चिरं यदा स्थितस्तदा तदन्तः अहं स्वेनैव
150565 चतुर्मुखदेहवान्दृष्टः॥ ३९॥
150566
150567 तेनाहंप्रत्ययेनाथ शब्दं कर्तुं प्रवृत्तवान्।
150568 शून्य एव यथा सुप्तः स्वप्नोड्डीननरो रवम्॥ ४०॥
150569
150570 तेन तादृशदेहप्रत्ययेन स्वप्ने उड्डीनो नभसि संचरन्नरो यथा रवं करोति तथा
150571 शब्दं कर्तुं प्रवृत्तवान्॥ ४०॥
150572
150573 अथ पूर्वं कृतः शब्दो बालेनेव तदोमिते।
150574 ततः स एष ओंकार इति नीतः पुनः प्रथाम्॥ ४१॥
150575
150576 तत्र विशेषाभिलापे विनिगमकाभावात्सर्वसाधारणार्थकः शब्दसमष्ट्यात्मा
150577 ओंकार एव प्रथममुच्चारित इत्याह - अथेति॥ ४१॥
150578
150579 ततः स्वप्ननरेणेव यत्किंचिद्वदितं मया।
150580 तदेतद्विद्धि वाचं त्वं पश्चान्नीतां प्रथामिह॥ ४२॥
150581
150582 यत्किंचिद्व्याहृतिगायत्रीवेदादि प्रागभ्यस्तं गदितम्॥ ४२॥
150583
150584 ब्रह्मैव सोऽस्मि संपन्नः सृष्टेः कर्ता जगद्गुरुः।
150585 ततो मनोमयेनैव कल्पिताः सृष्टयो मया॥ ४३॥
150586
150587 ब्रह्मा चतुर्मुख एव। मनोमयेनैव चतुर्मुखदेहेन मया॥ ४३॥
150588
150589 एवमस्मि समुत्पन्नो न तु जातोऽस्मि किंचन।
150590 दृष्टवानस्मि ब्रह्माण्डं ब्रह्माण्डान्तं न किंचन॥ ४४॥
150591
150592 स्वीयस्थूलदेहभूतं ब्रह्माण्डं सावरणम्। ब्रह्माण्डान्तं

ब्रह्माण्डबहिर्भूतम् ॥ ४४ ॥

एवं जगति संपन्ने ममैतस्मिन्मनोमये ।
न किंचित्तत्र संपन्नं तच्छून्यं व्योम केवलम् ॥ ४५ ॥

इत्थं संशून्यमेवेदं सर्वं वेदनमात्रकम् ।
मनागपि न सन्त्येते भावाः पृथ्व्यादयः किल ॥ ४६ ॥

अयमेव न्यायः सर्वसर्गेषु बोध्य इत्याशयेनाह - इत्थमिति ॥ ४६ ॥

जगन्मृगतृडम्बूनि भान्ति संविदि संविदः ।
न बाह्यमस्ति नो बाह्ये खे तद्व्योम तथा स्थितम् ॥ ४७ ॥

तद्व्योम ब्रह्माकाशमेव तथा स्थितम् ॥ ४७ ॥

मरौ नास्त्येव सलिलं संवित्पश्यति तत्तथा ।
निर्मूलमन्तःसंतप्ता स्वसंभ्रमवती भ्रमम् ॥ ४८ ॥

निर्मूलं निष्कारणमेवान्तःसंतप्तेव क्षुब्धा ॥ ४८ ॥

नास्त्येव ब्रह्मणि जगत् संवित्पश्यति तत्तथा ।
निर्मूलमेव संवित्त्वादेवं भ्रान्तेश्च संभ्रमम् ॥ ४९ ॥

संवित्त्वादज्ञानावृतसंवित्स्वभावात् ॥ ४९ ॥

असदेवेदमाभाति हृद्येव जगदाततम् ।
संकल्पनमनोराज्यं यथा स्वप्नपुरादिवत् ॥ ५० ॥

संकल्पनप्रयुक्तं मनोराज्यं यथा तथेति पृथग्योज्यम् । नृमनोराज्यम् इति
पाठे संकल्पे स्थितस्य नुः पुरुषस्य मनोराज्यं यथेति ॥ ५० ॥

पार्श्वसुप्तजनस्वप्नस्तच्चित्तावेशनं विना ।
यथा न किंचित्तच्चित्तावेशनादनुभूयते ॥ ५१ ॥

परकायप्रवेशेन स्वप्नद्रष्टृचित्तावेशनाद्योगिभिरनुभूयते ॥ ५१ ॥

तथा जगत्तद्दृषदं संप्रविश्यानुभूयते ।
आदर्शबिम्बिताकारं दृष्टमप्यन्यथाप्यसत् ॥ ५२ ॥

तद्दृषदं तत्कल्पनाधिष्ठानचिच्छिलाम् । अन्यथा न तथा किंत्वसदपि ॥ ५२ ॥

आधिभौतिकभावेन नेत्रेण यदि लक्ष्यते ।
तत्तन्न दृश्यते किंचिद्गिरिरेव प्रदृश्यते ॥ ५३ ॥

अत एव प्रागाधिभौतिकदृशा दर्शने लोकालोकगिरिरेव दृश्यते न शिलान्तर्गतं
ब्रह्माण्डमित्युक्तमित्याह - आधिभौतिकेति ॥ ५३ ॥

आतिवाहिकदेहेन परं बोधदृशा यदि ।
प्रेक्ष्यते दृश्यते सर्गः परमात्मैव चामलः ॥ ५४ ॥

सर्गो दृश्यतेस च परमात्मैव लक्ष्यते योगिभिरित्यर्थः ॥ ५४ ॥

150645 सर्वत्र सर्गनिर्वाणं प्रज्ञालोकेन लक्ष्यते।
150646 ब्रह्मात्मैवान्यथा चेत्तन्न किंचिदभिलक्ष्यते॥ ५५॥
150647
150648 तत्त्वदृशा दर्शने त्वाह - सर्वत्रेति॥ ५५॥
150649
150650 यत्पश्यत्यवदाता धीः सोपपत्तिविचारणा।
150651 न तन्नेत्रैस्त्रिभिः शर्वो नेन्द्रो नेत्रशतैरपि॥ ५६॥
150652
150653 तत्त्वदृष्टिं योगिदृष्टिं च सर्वोत्कर्षेण प्रशंसति - यदिति॥ ५६॥
150654
150655 यथा खमावृतं सर्गैस्तथा भूरिति बुद्धवान्।
150656 तदाहमभवं ध्याता धराधारणयान्वितः॥ ५७॥
150657
150658 तत्र स्वस्य तत्त्वज्ञस्य यदा जीवन्मुक्तयोगिदृशा पश्यत आकाशमिव भूरपि
150659 सर्वतः सर्गैर्व्याप्तेति बुद्धिरुत्पन्ना तदा
150660 क्रमाद्भूम्याद्येकैकभूताहंभावधारणया यद्यत्कौतुकं स्वेन दृष्टं
150661 तत्सर्वं विस्तराद्वर्णयिष्यन्प्रथमं धराधारणादृष्टं तद्वक्तुमुपक्रमते
150662 - यथेति। यदा बुद्धवास्तदा धराधारणया अन्वितः अभवमित्यर्थः॥ ५७॥
150663
150664 तया धराधारणया धरारूपधरोऽभवम्।
150665 अत्यजन्नेव चिद्व्योमवपुः सम्राडिवाचिरात्॥ ५८॥
150666
150667 यथा सम्राट् चक्रवर्ती स्वदेहमात्राहंभावमत्यजन्नेव समस्तभूमण्डले
150668 ममताभावं धत्ते तथा अहमपि चिद्व्योमवपुर्ब्रह्माहंभावमत्यजन्नेव
150669 धराहंभावेन धरारूपधरोऽभवमित्यर्थः॥ ५८॥
150670
150671 धराधारणया चैव धराधातूदरं गतः।
150672 द्वीपाद्रितृणवृक्षादिदेहोऽहमनुभूतवान्॥ ५९॥
150673
150674 धराधातुर्भूम्यभिमानिजीवस्तदुदरं तद्बुद्धितादात्म्यं गतः सन्॥ ५९॥
150675
150676 संपन्नोऽस्म्यथ भूपीठं नानावनतनूरुहम्।
150677 नानारत्नावलीव्याप्तं नानानगरभूषणम्॥ ६०॥
150678
150679 यदनुभूतवांस्तदाह - संपन्न इत्यादिना। इत आरभ्य
150680 आसर्गसमाप्तेर्भपीठमेव देहाधारेण वर्ण्यते॥ ६०॥
150681
150682 ग्रामगह्वरपर्वाढ्यं पातालसुषिरोदरम्।
150683 कुलाचलभुजाश्लिष्टद्वीपाब्धिवलयान्वितम्॥ ६१॥
150684
150685 तृणौघतनुरोमाढ्यंन् गिरिखण्डकगुल्मकम्।
150686 दिग्वारणकटव्यूहधृतं शेषशिरःशतैः॥ ६२॥
150687
150688 गिरिखण्डका गिरिकदम्बा गुल्मरोगग्रन्थय इव यस्य। कटपदेन शिरांसि लक्ष्यन्ते
150689 तद्व्यूहैर्धृतम्। तथा शेषस्य शिरसां शतैर्दशशतैर्धृतम्॥ ६२॥
150690
150691 ह्रियमाणं महीपालैः शोभमानेभतन्तुभिः।
150692 प्राणिभिर्भुज्यमानाङ्गं वर्धमानं व्यवस्थया॥ ६३॥
150693
150694 शोभमाना इभास्तन्तवः सेनाजालतन्तुग्रन्थय इव येषां तथाविधैर्महीपालैः
150695 परस्परं युद्धैर्ह्रियमाणम्। उत्करनगरादिप्रदेशव्यवस्थया॥ ६३॥
150696

150697 हिमवद्विन्ध्यसुस्कन्धं सुमेरूदारकन्धरम् |
150698 गङ्गादिसरिदापूरमुक्ताहाररणत्तनुम् || ६४ ||
150699
150700 गुहागहनकच्छादि सागरादर्शमण्डलम् |
150701 मरूषरस्थलश्वेतसुवराम्बरसुन्दरम् || ६५ ||
150702
150703 गुहागहनाः कच्छादयो देशा यस्मिन् | सागरा आदर्शमण्डला इव यस्मिन् |
150704 मरुदेशलक्षणैरूषरस्थललक्षणैश्च श्वेतैः सुवराम्बरैः सुन्दरम् || ६५ ||
150705
150706 भूतपूर्वैः परापूर्णं परिपूतं महार्णवैः |
150707 अलंकृतं पुष्पवनैः समारब्धं [समार(ल)ब्धं इति
150708 मूलटीकयोः पाठवैषम्यं सर्वादर्शेषु दृश्यते |] रजोघनैः || ६६ ||
150709
150710 नित्यं कृषीवलैः कृष्टं वीजितं शिशिरानिलैः |
150711 तापितं तपनैस्तप्तैरुक्षितं प्रावृडम्बुभिः || ६७ ||
150712
150713 पूर्वं भूतैर्भूतपूर्वैर्महार्णवैः प्रलयकाले परापूर्णमत एव सांप्रतं
150714 स्नात्वोद्गतमिव परितः पूतं पवित्रम् | पुष्पवनैर्माल्यैरिवालंकृतम् |
150715 चन्दनस्थानीयै रजोघनैः समालब्धं [समार(ल)ब्धं इति
150716 मूलटीकयोः पाठवैषम्यं सर्वादर्शेषु दृश्यते |] लिप्तम् || ६६ || ६७ ||
150717
150718 विपुलाग्रस्थलोरस्कं पद्माकरकृतेक्षणम् |
150719 सितासितघनोष्णीषं दशाशोदरमन्दिरम् || ६८ ||
150720
150721 अग्रस्थलं समभूप्रदेशः || ६८ ||
150722
150723 लोकालोकमहाखातवलयोग्रास्यभीषणम् |
150724 अनन्तभूतसंघातपरिस्पन्दैकचेतनम् || ६९ ||
150725
150726 लोकालोकसमीपे प्राग्वर्णितो यो महाखातवलयस्तल्लक्षणेनोग्रेणास्येन भीषणम्
150727 भूतानां परिस्पन्द एव परिस्पन्द एकीभूतं चेतनमेव चेतन यस्य || ६९ ||
150728
150729 व्याप्तमन्तर्बहिश्चैव नानाभूतगणैः पृथक् |
150730 देवदानवगन्धर्वैर्बहिरन्तस्तु कीटकैः || ७० ||
150731
150732 नानाभूतगणलक्षणैः कीटकैर्व्याप्तम | तेषु देवदानवेत्यवयुत्यानुवादः || ७० ||
150733
150734 पातालेन्द्रियरन्ध्रेषु नागासुरकृमिव्रजैः |
150735 सप्तस्वर्णवकोशेषु नानाजातिजलेचरैः || ७१ ||
150736
150737 व्याप्तं नदीवनसमुद्रदिगन्तशैलद्वीपाख्यजन्तुविषयस्थलजङ्गलौघैः |
150738 नानावलीवलितमण्डलकोशखण्डं वल्लीसरःसरिदरातिगणाब्जखण्डैः || ७२ ||
150739
150740 उक्तमेव संक्षिप्योपसंहरन्विशिनष्टि - व्याप्तमिति |
150741 नद्यादिद्वीपान्तैर्जन्तुविषयैः प्राणिभोग्यैः स्थलजङ्गलौघैश्च व्याप्तम् |
150742 नानाविधाभिर्गिरिनदीपर्वताद्यावलिभिर्जनावलिभिश्च वलिता मण्डलकोशानां
150743 खण्डा यस्मिन् | तथा वल्लीभिः सरोभिः सरिद्भिररातिगणैरब्जखण्डैश्च
150744 व्याप्तमित्यनुषज्यते || ७२ ||
150745
150746 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० नि० उ० पा०
150747 पार्थिवधात्वन्तर्गतजगदानन्त्यप्रतिपादनंन् नाम सप्ताशीतितमः सर्गः || ८७ ||
150748

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
पार्थिवधात्वन्तर्गतजगदानन्त्यप्रतिपादनं नाम सप्ताशीतितमः सर्गः ॥ ८७ ॥

अष्टाशीतितमः सर्गः ८८

श्रीवसिष्ठ उवाच ।

भूपीठेन सता तत्र मया तदनु मानव ।
अनुभूतं नदनदीस्वसंवेदनसंस्थितेः ॥ १ ॥

स्वदेहभूते भूपीठे तत्र तत्र व्यवस्थिताः ।
विशेषा इह वर्ण्यन्ते कौतुकात्स्वेन वीक्षिताः ॥

हे मानव मनुवंशोद्भव वर्णितरीत्या भूपीठभूतेन मया तदनु
प्राग्वर्णितसाधारणसर्वभूधर्मघटितस्वदेहदर्शनानन्तरं प्रत्येकं
नदनदीसमुद्रादिविशेषाकारप्रातिस्विकसंवेदनेच्छावशाद्यथा यथानुभूतं
तच्छृण्विति शेषः ॥ १ ॥

क्वचिन्मरणसाक्रन्दनारीकरुणवेदनम् ।
क्वचिदुत्ताण्डवस्त्रैणमहोत्सवमहासुखम् ॥ २ ॥

क्वचित्प्रदेशे भर्तृपुत्रभ्रात्रादिमरणेन साक्रन्दानां नारीणां करुणवेदना
यत्र तथाविधम् । अत्रापि प्रायेण सर्वत्र भूपीठमेव विशेष्यम् । स्त्रैणानां
स्त्रीसमूहादीनां महोत्सवैर्महत्सुखं यत्र ॥ २ ॥

क्वचिद्दुर्वारदुर्भिक्षदुराक्रन्दं दुरीहितम् ।
क्वचित्सकलसस्यौघसंपन्नघनसौहृदम् ॥ ३ ॥

सुवृष्ट्या फलितैः सकलसस्यौघैः सुभिक्षत्वात्संपन्नानि घनसौहृदानि यत्र ॥
३ ॥

क्वचिदग्निमहादाहदग्धदेहोग्रवेदनम् ।
क्वचिज्जलप्लवालूनपुरपत्तनखण्डकम् ॥ ४ ॥

जलेन प्लवनमाप्लावनं तेनालूनाः । पुरपत्तनयोर्योधवणिक्प्रकर्षाभ्यां भेदः
॥ ४ ॥

क्वचिच्चपलसामन्तकृतलुण्ठनमण्डलम् ।
क्वचिदुद्दामदौरात्म्यरक्षःपैशाचमण्डलम् ॥ ५ ॥

क्वचिज्जलाशयोल्लासवेल्लनोत्पुलकाग्रकम् ।
कन्दरोदरनिष्क्रान्तवातवेल्लितवारिदम् ॥ ६ ॥

जलाशयानामुल्लासेन पूर्त्या केदारारामादीनां वेल्लनैः
सेकैरुत्पुलकसस्यगुल्माद्यग्रकम् । कन्दरोदरेति तत्रोपपत्तिः ॥ ६ ॥

संविद्बोधोन्नमत्स्वाङ्गकेशोत्थाङ्कुरलोमकम् ।
वारिवाहनविक्षोभनतोन्नतलसत्तलम् [जलं इति पाठः ।] ॥ ७ ॥

संविद्बोधेन प्रहर्षेण उन्नमन्तः पुलकिताः स्वाङ्गकेशा इव
उत्थान्यङ्कुरलोमानि यत्र । वारीणां वहनमेव वाहनं प्रवाहस्तद्विक्षोभेण ॥ ७ ॥

150801 सशृङ्गभैरवश्वभ्रपुराद्रिवनपत्तनम् ।
150802 संविन्मण्डलसंचाललेखाङ्कमृदुकम्पनम् ॥ ८ ॥
150803
150804 नतोन्नतत्वमेव भूतलानां दर्शयति - सशृङ्गेति । अन्तर्गतबृहच्छिलादिभिः
150805 सशृङ्गाणीव भैरवाणि भीषणानि श्वभ्राणि येषु तथाविधानि पुरादीनि यत्र । अत
150806 एव संविदन्तीति संविदो नागरादिजनास्तन्मण्डलस्य संचाले
150807 तत्पदलेखाङ्कनिपतनादिशङ्कया मृदु कम्पनं च यत्र ॥ ८ ॥
150808
150809 क्वचित्सामन्तसंक्षुब्धसैन्यसंहरणं रणे ।
150810 क्वचित्सौम्यसुखासीनसर्वसामन्तमण्डलम् ॥ ९ ॥
150811
150812 अरण्यं क्वचिदाशून्यमुल्लसद्वातझंकृति ।
150813 जंगलं क्वचिदालूनव्युप्तसंपन्नसस्यकम् ॥ १० ॥
150814
150815 पूर्वमालूनं पश्चाद्व्युप्तं ततः संपन्नं सस्यं यत्र ॥ १० ॥
150816
150817 हंसकारण्डवाकीर्णसरः फुल्लाम्बुजं क्वचित् ।
150818 क्वचिन्मरुस्थलस्थूलस्तम्भनार्जुनमारुतम् ॥ ११ ॥
150819
150820 मरुस्थलेषु वात्योड्डीनधूलिभिः स्थूलान्स्तम्भान्कुर्वन्तीति स्थूलस्तम्भना अर्जुनाः
150821 पांसुधवला मारुता यस्मिन् ॥ ११ ॥
150822
150823 क्वचिन्नदनदीवाहहेलानिकषघर्घरम् ।
150824 क्वचिदङ्कुरकार्याङ्गसिक्तबीजस्य जृम्भणम् ॥ १२ ॥
150825
150826 अङ्कुरकार्यार्थं कुल्याघटीयन्त्राद्यङ्गैः सिक्तस्य
150827 क्षेत्रगतव्रीह्यादिबीजस्याङ्कुरादिभावेन जृम्भणम् ॥ १२ ॥
150828
150829 क्वचिदन्तस्तु कीटास्यमृदुस्पन्दनवेदनम् ।
150830 मां त्वमेवाशु बुद्ध्वेह त्रायस्वेतीव बोधनम् ॥ १३ ॥
150831
150832 शिलादिसंकटनिविष्टं मां हे वसिष्ठ त्वमेव आशु बुद्ध्वा त्रायस्वेति कीटेन मां
150833 प्रति बोध्यते यत्र तादृशमिव स्थितम् ॥ १३ ॥
150834
150835 शाखापरिकराभोगं मृद्धागाङ्गनिपीडनैः ।
150836 मूलजालमवष्टभ्य क्वचिद्विटपधारिणम् ॥ १४ ॥
150837
150838 क्वचिद्वटादिवने शिखानां भूसंलग्नत्वान्मृद्धागाङ्गनिपीडनैरुपलक्षितः
150839 शाखापरिकराणामाकारो यत्र । क्वचिच्च मूलजालमवष्टभ्य विटपानां
150840 धारणशीलम् ॥ १४ ॥
150841
150842 अन्योन्यमलमाक्रम्य दिक्तटाङ्गनिपीडनैः ।
150843 क्वचिदद्र्यस्थिनिबिडैरर्णवोल्लासवेल्लितम् ॥ १५ ॥
150844
150845 क्वचिदद्रीणामस्थीनि शिला इव निबिडैर्वृक्षैरन्योन्यमलमत्यन्तमाक्रम्य
150846 संश्लिष्य दिक्तटाङ्गानां निरवकाशीकरणान्निपीडनैः अर्णवोल्लासेनेव वेल्लितं
150847 वेष्टितम् ॥ १५ ॥
150848
150849 शुष्कपल्लवसंकोचनिबिडाङ्गनिपीडनम् ।
150850 अमर्षणैः करैरार्कैः स्वरसाकर्षणं क्वचित् ॥ १६ ॥
150851
150852 क्वचित्तु गाढवृक्षैर्भुवि स्वप्रसरनिरोधापराधादमर्षणैः क्रुद्धैरार्कैः

150853 करैरातपैः स्वरसाकर्षणं प्राप्य शुष्कपल्लवसंकोचं निबिडाङ्गनिपीडनं
150854 वनं यत्र || १६ ||
150855
150856 शृङ्गमन्दिरमातङ्गप्रहाराशनिभूरुहाम् |
150857 निबिडाङ्गोत्कटस्थैर्यपरुषापतनं क्वचित् || १७ ||
150858
150859 क्वचित्तु गिरिशृङ्गमन्दिराणां मातङ्गानां दन्तप्रहाराशनेः भूरुहां
150860 वृक्षाणां निबिडाङ्गोत्कटस्थैर्यं प्रति परुषाण्यापतनानि यत्र |
150861 सापेक्षसमासश्छान्दसः | परुषं पतनं क्वचित् इति पाठे अशनिभिर्भूरुहां
150862 निबिडाङ्गोत्कटस्थैर्येण परुषं पतनमेव क्वचिन्मयानुभूतमिति योज्यम् || १७ ||
150863
150864 निमीलितेक्षणानन्दतनूनामसमाक्रमम् |
150865 क्वचित्सूक्ष्मतरोल्लेखमङ्कुरोल्लासनं नवम् || १८ ||
150866
150867 क्वचित्तु निमीलितानीक्षणानि येन तथाविधानन्दोपलक्षिततनूनां समाधिनिष्ठानां
150868 सूक्ष्मतरं तत्त्वमुल्लिखत्यनुभूयमानं सूचयति तथाविधमत एवासमाक्रमं
150869 नवमपूर्वं रोमाङ्कुरोल्लासनमनुभूतमित्यर्थः | अथवा क्वचित्क्षेत्रप्रदेशे
150870 निमीलितेक्षणानामानन्दोपलक्षिततनूनां विषयभोगिनामिव असममक्रमं च
150871 सूक्ष्मतरान्तरानन्दाविर्भावोल्लेखं बीजेभ्योऽङ्कुरोल्लासनं नवं
150872 चमत्कृतमनुभूतमित्यर्थः || १८ ||
150873
150874 मक्षिकायौकमशकनिवाससदृशं क्वचित् |
150875 कुड्यलेशकुभृङ्गारिहलहेलानिकर्षणम् || १९ ||
150876
150877 यूकानां समूहो यौकं तन्निवासमलिनाम्बरसदृशम् |
150878 कुड्यलेशानामल्पकुड्यखण्डानां प्रमादात्पद्मकोशशायिनां
150879 कुभृङ्गाणां चोपमर्दकत्वादरयो ये दन्तिनस्तैर्हलैरिव
150880 हेलाभिर्वप्रादेर्निकर्षणं दृष्टम् | कुड्मलेश इति पाठे कुड्मलश्रेष्ठे
150881 पद्मकुड्मले सुप्तानां कुभृङ्गाणां ये अरय इति व्याख्येयम् || १९ ||
150882
150883 शीतं शीतविशीर्णाङ्गजर्जरत्वग्विकीर्णवत् |
150884 पाषाणीभूतसलिलं क्वचित्परुषमारुतम् || २० ||
150885
150886 क्वचित्क्वचिद्धिमवत्प्रदेशे शीतं शीतविदीर्णाङ्गानां देहिनां
150887 जर्जरत्वग्व्याप्तवत्स्थितम् || २० ||
150888
150889 उद्दालीभूतमृद्वङ्गमज्जदन्तःकृमिव्रजम् |
150890 क्वचिदुद्भवदङ्गादिमूलं जलनिमज्जनम् || २१ ||
150891
150892 उद्दलनमुद्दालो विदलनं तथाभूतेषु मृदुष्वङ्गेषु मज्जन्तः अन्तः कृमिव्रजा
150893 यत्र | क्वचिज्जलनिमज्जनमनुभूतमिति पृथक्संबन्धः || २१ ||
150894
150895 शनैरन्तर्निलीनाम्बुकृताह्लादं बहिश्च रसोन्नामाङ्कुररोमौघं
150896 [बहिश्चरेत्यारभ्य रोमाघमित्यन्तं समस्तं पदम् | (अत्र बहिश्च
150897 रसो इति पदद्वये एवार्थस्वारस्यमिति वयम् |)] क्वचिद्वर्षविजृम्भितम् ||
150898 २२ ||
150899
150900 क्वचिद्बीजेषु वर्षविजृम्भितमत एव शनैरन्तर्निविष्टैरम्बुभिः कृताह्लादं ततो
150901 बहिश्च रसोन्नामाङ्कुररोमौघम् || २२ ||
150902
150903 तनुतरपवनविकम्पितकोमलनलिनीदलास्तरणैः |
150904 विहरणमिव मे विहितं सरोभिरङ्गेषु निर्वाणम् || २३ ||

150905
150906 किं च मे अङ्गेषु
150907 सरोभिस्तनुतरपवनविकम्पितकोमलनलिनीदलानामास्तरणैर्निर्वाणं
150908 निरतिशयानन्दरूपं विहरणं क्रीडनमिव विहितमित्यर्थः ॥ २३ ॥
150909
150910 इत्यार्षे श्रीवासिष्ठमहा० वाल्मी० दे० मो० न्निर्वाणप्रकरणे उ० पाषा०
150911 भूमण्डलगतविशेषवर्णनं नामाष्टाशीतितमः सर्गः ॥ ८८ ॥
150912
150913 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
150914 भूमण्डलगतविशेषवर्णन।ं नामाष्टाशीतितमः सर्गः ॥ ८८ ॥
150915
150916
150917 एकोननवतितमः सर्गः ८९
150918
150919 श्रीराम उवाच।
150920
150921 पार्थिवीं धारणां बद्ध्वा जगन्ति समवेक्षितुम्।
150922 संपन्नस्त्वमसौ भूमिलोकः किमुत मानसः ॥ १ ॥
150923
150924 अत्र तद्धारणाद्दृष्टं भूमण्डलमिदं तथा।
150925 जगत्सर्वं च चिद्व्योम्नि मनोमात्रमितीर्यते ॥
150926
150927 हे गुरो कौतुकात्स्वात्मनि जगन्ति समवेक्षितुं प्रवृत्तस्त्वं पार्थिवीं धारणां
150928 बद्ध्वा किमसावस्मदादिदृश्यो मृत्पाषाणादिमयो लोकः संपन्न उत मानसो
150929 मनोमात्रमयो मनोराज्यकल्पो मृदाद्यघटितः स्वप्नमयो लोकः संपन्न इति
150930 प्रश्नः ॥ १ ॥
150931
150932 श्रीवसिष्ठ उवाच।
150933
150934 इदं च मानसं चाहं संपन्नः पृथुभूतलम्।
150935 नेदं न मानसं नैव संपन्नो वस्तुतस्त्वहम् ॥ २ ॥
150936
150937 कल्पनादृशा तत्त्वदृशा वा विमर्शे कोटिद्वयभेदाप्रसिद्धेः
150938 संशयानुपपत्तिं सूचयन्वसिष्ठ उत्तरमाह - इदं चेति। यदि कल्पनादृशा
150939 पृच्छति तर्हि इदं मृत्पाषाणमयत्वेन त्वत्प्रसिद्धं च तदेव
150940 मनोमात्रविकारत्वान्मानसं चेति समुच्चयः संपन्नः। यदि तु तत्त्वदृशा
150941 पृच्छसि तर्हि नोभयमपि संपन्न इत्यर्थः ॥ २ ॥
150942
150943 अमानसं महीपीठं न संभवति किंचन।
150944 यदसद्वेत्सि यत्सद्वा मनोमात्रकमेव तत् ॥ ३ ॥
150945
150946 पूर्वार्धोक्तं प्रतिज्ञापूर्वकं समर्थयति - अमानसमित्यादिना। सत्येव मनसि
150947 तस्मिन्नेवास्तिनास्तीति विकल्पदर्शनादिति भावः ॥ ३ ॥
150948
150949 चिदाकाशमाहं शुद्धं तस्य मे तत्पदात्मनः।
150950 यच्चिन्मात्रात्मकचनं तत्संकल्पाभिदं स्मृतम् ॥ ४ ॥
150951
150952 तन्मनस्तन्महीपृष्ठं तज्जगत्स पितामहः।
150953 संकल्पपुरवद्व्योम्नि कचत्येतन्मनोनभः ॥ ५ ॥
150954
150955 एवं संकल्पमात्रं मे मनोमात्रं तदाततम्।
150956 धारणाभ्याससंपुष्टं भूमण्डलमिति स्थितम् ॥ ६ ॥

150957
150958 नेदं भूमण्डलं तद्वै तदन्यद्धि मनोमयम् ।
150959 आकाशमात्रकचनमचेत्यं कचनं चितेः ॥ ७ ॥
150960
150961 अज्ञप्रसिद्धमृद्दारुपाषाणादिमयत्वस्य अपागादग्नेरग्नित्वं त्रीणि रूपाणीत्येव
150962 सत्यम् इत्यादिश्रुतिनिषिद्धत्वात्तत्त्वज्ञस्य धारणायां दृष्टं
150963 नाज्ञदृष्टिप्रसिद्धेदंरूपमित्यसमुच्चयो वास्त्वित्याशयेनाह - नेदमिति ॥ ७ ॥
150964
150965 तदेवाकाशमात्रात्म तथाभूतं चिरं स्थितम् ।
150966 इदंप्रत्ययलब्धत्वान्मानसत्वं समुज्झति ॥ ८ ॥
150967
150968 यद्याकाशमात्रस्यामूर्तस्यैवेत्थं कचनं तर्हि कथं मूर्तेदंप्रत्ययमाधत्ते
150969 तत्राह - तदेवेति । तर्हि किं दधित्वे दुग्धत्वमिव मानसत्वं मुञ्चति नेत्याह ##-
150970 पृथ्व्यादेर्जाग्रद्वदिदंप्रत्ययेनोपलब्धत्वन्नादुग्धत्वसाम्यं किंतु
150971 तरङ्गकटकशाटकादिभावेऽपि जलकनककार्पासमयत्ववदिदं बोध्यमिति भावः
150972 ॥ ८ ॥
150973
150974 इदं स्थिरं सुकठिनं विततं भूमिमण्डलम् ।
150975 अस्तीति जायते बुद्धिर्व्योम्नीव चिरवेदनात् ॥ ९ ॥
150976
150977 व्योम्नि नैल्यादिबुद्धिरिव चिरवेदनाज्जायते ॥ ९ ॥
150978
150979 न्यायेनेदमिवानेन न स्थितं वसुधातलम् ।
150980 इदं चैवैकमेवाद्यसर्गस्याद्यमुपागतम् ॥ १० ॥
150981
150982 वाचारम्भणश्रुतिदर्शितन्यायेन तु दर्शने इदमिवाज्ञप्रसिद्धरूपेण
150983 वसुधातलं न स्थितं किंत्वाद्यसर्गस्य मनोरूपस्य आद्यं सूक्ष्मं यदेकमेव
150984 रूपं तदेवोपागतं स्थितम् । त्रीणि रूपाणीत्येव सत्यम् इति श्रुत्योपदर्शितमित्यर्थः ॥
150985 १० ॥
150986
150987 यथा स्वप्ने पुरत्वेन चिदेव व्योम्नि भासते ।
150988 तथा चिदेव सर्गादाविदं जगदिति स्थितम् ॥ ११ ॥
150989
150990 इदंप्रत्ययलब्धत्वात् इत्युक्तिं विशदयति - यथेति ॥ ११ ॥
150991
150992 विद्धि चिद्रूपबालस्य मनोराज्यं जगत्त्रयम् ।
150993 महीतलादिकं दृश्यमिदं सर्वं च सर्वदा ॥ १२ ॥
150994
150995 चिद्रूपबालस्य चतुर्मुखस्य ॥ १२ ॥
150996
150997 चिद्रूपस्यात्मनो नान्यः संकल्पस्तन्मयं जगत् ।
150998 वस्तुतस्तु न सत्यात्म न पिण्डात्म न भासुरम् ॥ १३ ॥
150999
151000 दृश्यमस्त्यपरिज्ञातं परिज्ञातं न विद्यते ।
151001 परिज्ञातं तदेवास्य शृणोषि यदिदं चिरम् ॥ १४ ॥
151002
151003 अज्ञदृष्टिनिष्कर्षे अज्ञातचिन्मात्रं जगत् । तत्त्वनिष्कर्षे तु
151004 चिन्मात्रमेवेत्याशयेनाह - दृश्यमिति । यदिदं चिरं मयोपदिश्यमानं
151005 शृणोषि कथं न प्रबुध्यसे इत्यर्थः ॥ १४ ॥
151006
151007 सर्वं चिन्मात्रमाशान्तं प्रकचत्यात्मनात्मनि ।
151008 भूमण्डलात्म दृश्यात्म द्वैतैक्याभ्यां विवर्जितम् ॥ १५ ॥

151009
151010 कीदृशं परिज्ञातं तत्राह - सर्वमिति ॥ १५ ॥
151011
151012 मणिर्यथा स्वभावेन शुक्लपीतादिकास्त्विषः ।
151013 अकुर्वन्नेव कुरुते चिदाकाशस्तथा जगत् ॥ १६ ॥
151014
151015 मणिर्वैदूर्यादिः । अकुर्वन् अव्याप्रियमाणः ॥ १६ ॥
151016
151017 यतो न किंचित्कुरुते न च रूपं समुज्झति ।
151018 तस्मान्न मानसं नेदं किंचिदस्ति महीतलम् ॥ १७ ॥
151019
151020 नेतिनेत्यादिश्रुतिपर्यालोचनेनोपसंहरति - यत इति ॥ १७ ॥
151021
151022 महीतलमिवाभाति चिद्व्योमैव निरन्तरम् ।
151023 आत्मन्येवातलं व्योम यथामलतलं स्थितम् ॥ १८ ॥
151024
151025 अतलं तलभावशून्यम् ॥ १८ ॥
151026
151027 स्वभावमात्रकचनं तत्तदेव यथास्थितम् ।
151028 भूमण्डलमिवात्यच्छं खमेव विशतान्तरम् ॥ १९ ॥
151029
151030 अन्तरं भेदं अन्तर्द्धिं वा विशता स्वभावेन भूमण्डलमिव दृश्यत इत्यर्थः ॥
151031 १९ ॥
151032
151033 इदं भूमण्डलं तच्च द्वयमेतन्महाचितेः ।
151034 स्वरूपमेव कचति तव स्वप्नपुरं यथा ॥ २० ॥
151035
151036 तत्र धारणाकल्पितभूमण्डलमिदं भूमण्डलं च तुल्यमेव चिद्विवर्तत्वे इत्याह
151037 - इदमिति ॥ २० ॥
151038
151039 इदमाकाशमात्रात्म तदप्याकाशमात्रकम् ।
151040 अज्ञानात्मपरिज्ञानाज्ज्ञानान्नेदं न तत्क्वचित् ॥ २१ ॥
151041
151042 अज्ञानोपहितात्मपरिज्ञानाद्भाति । ज्ञानात्तु न इदं नापि तत् धारणास्थम् ॥ २१ ॥
151043
151044 त्रैलोक्यभूतजालानां कालत्रितयभाविनाम् ।
151045 संभ्रमः स्वप्नसंकलो मनोराज्यदशास्थितौ ॥ २२ ॥
151046
151047 संभ्रमो भ्रान्तिरेव । स च मनोराज्यदशायाः स्थितौ मर्यादायां तत्साम्ये बोध्य
151048 इति यावत् ॥ २२ ॥
151049
151050 भूतान्यथ भविष्यन्ति वर्तमानानि यानि च ।
151051 भूमण्डलानि तान्यङ्ग सत्ता सामान्यतां गता ॥ २३ ॥
151052
151053 सामान्यतां सर्वाधिष्ठानत्वात्साधारणतां गता आत्मसत्तैव तानि सर्वाणि
151054 सत्तासामान्यमेव तेन हेतुना तानि तदन्तर्गतानि च सर्ववस्तून्यहमेवेति धारणायां
151055 मया मनसा अनुभूतानि साक्षिदृशा च अखिलं निःशेषं यथा स्यात्तथा
151056 दृष्टानीत्यर्थः ॥ २३ ॥
151057
151058 अहमेव समग्राणि तेषामन्तर्गतान्यपि ।
151059 तेन तान्यनुभूतानि तथा दृष्टानि चाखिलम् ॥ २४ ॥
151060

151061 चिन्मात्रमेतदजरं परमात्मतत्त्वं शुद्धात्मतामजहदङ्गगतं विभर्ति
151062 ।
151063 सर्वं यथास्थितमिदं जगदात्तभेदं बुद्धं सदङ्ग न बिभर्ति तु
151064 किंचनापि ॥ २५ ॥
151065
151066 हे राम परमात्मतत्त्वमेवाबोधदशायां स्वशुद्धात्मतामजहदत्यजदेव
151067 यथास्थितं सर्व जगदात्मगतं स्वात्मतामिव प्राप्तं सद्रूपं कृत्वा बिभर्ति
151068 बुद्धं तु सत् किंचनापि न बिभर्ति सैवास्य मुक्तिरित्यर्थः ॥ २५ ॥
151069
151070 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० निर्वाणप्रकरणे उ० पा०
151071 दृश्यमनोमात्रत्वप्रतिपादनं नामैकोननवतितमः सर्गः ॥ ८९ ॥
151072
151073 इति श्रीवासिष्ठमहारामायणे तात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
151074 दृश्यमनोमात्रत्वप्रतिपादनं नामैकोननवतितमः सर्गः ॥ ८९ ॥
151075
151076 नवतितमः सर्गः ९०
151077
151078 श्रीराम उवाच ।
151079
151080 अनन्तरं वद ब्रह्मञ्जगन्ति भवता तदा ।
151081 भूमण्डलानां हृदये क्वचिद्दृष्टानि नैव वा ॥ १ ॥
151082
151083 पृथिवीहृदयेऽनन्तजगद्वृष्टिरिहोच्यते ।
151084 जलधारणया सर्वजललीला च पूर्ववत् ॥
151085
151086 यथा प्रसिद्धे जगति कलधौतशिलादिप्रदेशभेदेष्वनेकानि ब्रह्माण्डानि सन्ति तथा
151087 धारणादृष्टेष्वपि भूमण्डलेषु प्रतिवस्तु तानि सन्ति न वेति संदिहानो रामः
151088 पृच्छति - अनन्तरमिति । मण्डलशब्दः प्रदेशभेदपरः ॥ १ ॥
151089
151090 श्रीवसिष्ठ उवाच ।
151091
151092 परात्मजाग्रत्स्वप्नोर्वीमण्डलौघात्मना मया ।
151093 ततोऽनुभूतं हृदये दृष्टं च परया दृशा ॥ २ ॥
151094
151095 उर्वीधारणया परमात्मनो जाग्रदुर्वीमण्डलात्मना स्वप्नोर्वीमण्डलात्मना च मया
151096 तत्तदुर्वीप्रदेशभेदलक्षणे तद्धृदये परया ईश्वरसाक्षिदृशा
151097 साक्षाद्दृष्टं मनसा च विमृश्यानुभूतम् । स्वप्नग्रहणं
151098 स्वाप्नोर्व्यादिप्रदेशभेदेष्वप्यनन्तजगत्संभवप्रदर्शनाय ॥ २ ॥
151099
151100 यावत्तथैव सर्वत्र जगज्जालमवस्थितम् ।
151101 सर्वं दृश्यमयं शान्तमपि द्वैतमयात्मकम् ॥ ३ ॥
151102
151103 किं दृष्टमनुभूतं च तदाह - यावदिति । तथा
151104 प्राग्दृष्टकलधौतशिलादिवदेव । यावदिति साकल्ये । शान्तमद्वैतं
151105 द्वैतमयात्मकमपि ॥ ३ ॥
151106
151107 जगन्ति सन्ति सर्वत्र सर्वत्र ब्रह्म संस्थितम् ।
151108 सर्वं शून्यं परं शान्तं सर्वमारम्भमन्थरम् ॥ ४ ॥
151109
151110 कुतो द्वैतमयं कुतो वा शान्तं तत्राह - जगन्तीति ॥ ४ ॥
151111
151112 सर्वत्रैवास्ति पृथ्व्यादि स्थूलं तच्च न किंचन ।

151113 चिद्व्योमैव यथा स्वप्नपुरं परमजातवत् ॥ ५ ॥
151114
151115 नेह नानास्ति नो नाना न नास्तित्वं न चास्तिता ।
151116 अहमित्येव नैवास्ति यत्र तत्र कुतोऽस्ति किम् ॥ ६ ॥
151117
151118 अनुभूतमपीदं सदहमित्यादिरूपकम् [दृश्यकं इति पाठः] ।
151119 नास्त्येव यदि वाप्यस्ति तद्ब्रह्माजमनामयम् ॥ ७ ॥
151120
151121 यत्स्वप्नपुरमेवेदं सर्गादावेव चिन्नभः ।
151122 अस्तितानास्तिते तत्र कीदृशे क्व कुतः स्थिते ॥ ८ ॥
151123
151124 यद्यस्मात्सर्गादौ सृष्टेः प्राक् चिन्नभ एव तत्तस्मात्तदुत्तरं चिन्नभसि
151125 दृष्टमपीदं स्वप्नपुरसममेव । इत्थं प्रतियोगिन्या अस्तिताया अव्यवस्थितौ
151126 तदभावो नास्तिताप्यव्यवस्थितैवेत्याह - अस्तितेति ॥ ८ ॥
151127
151128 यथाहं दृष्टवांस्तानि जगन्त्यवनिरूपधृक् ।
151129 तथा मया जलीभूय दृष्टं तादृशमेव तत् ॥ ९ ॥
151130
151131 पृष्टस्योत्तरं समाप्य जलधारणया यद्यत्कौतुकं दृष्टं तद्वक्तुमारभते
151132 - यथेत्यादिना ॥ ९ ॥
151133
151134 वारिधारणया वारि भूत्वा जडमिवाजडम् ।
151135 समुद्रमन्दिरेष्वन्तश्चिरं गुलगुलायितम् ॥ १० ॥
151136
151137 गुलगुलायितम् । अव्यक्तानुकरणादिवार्थगर्भादाचारे अवयङि भावे क्तः ॥ १० ॥
151138
151139 तृणवृक्षलतागुल्मवल्लीनां स्तम्भनाडिषु ।
151140 मृद्वलक्षितमारूढं तवाङ्गेष्विव यूकया ॥ ११ ॥
151141
151142 मृदुमन्दमलक्षितं च यथा स्यात्तथा आरूढम् ॥ ११ ॥
151143
151144 सर्वोत्थानोपमास्तम्भे तच्छेदे वलयोपमा ।
151145 मृद्व्या कर्णाहिगत्येव [मया कर्णाहिगत्येव मृद्व्या गत्या तृणादीनां
151146 स्तम्भे प्रकाण्डे सर्वोत्थानोपमा सर्वेषां
151147 तृणादीनामुत्थानमूर्ध्वस्थितिस्तदुपमा तत्सदृशी यथा ऊर्ध्वस्थितिः
151148 स्यात्तथेत्यर्थः । तेषां तृणादीनां छेदे भेदे पर्वभेदे तदुदरे
151149 छिद्रभेदे च वलयोपमा वलयाकारवती रचना प्रकृता संपादितेत्यर्थ इति
151150 योजना कार्या । पूर्वश्लोके यूकोपमया ह्यारोहणमात्रं प्रतिपादितं
151151 कर्णाहीत्याद्युपमया त्वाकारविशेषप्रतिपादनपूर्वकं तत्प्रतिपादितमिति
151152 ज्ञेयम् ।] रचना प्रकृतोदरे ॥ १२ ॥
151153
151154 यथा कर्णाहिः [मया कर्णाहिगत्येव मृद्व्या गत्या तृणादीनां स्तम्भे
151155 प्रकाण्डे सर्वोत्थानोपमा सर्वेषां तृणादीनामुत्थानमूर्ध्वस्थितिस्तदुपमा
151156 तत्सदृशी यथा ऊर्ध्वशितिः स्यात्तथेत्यर्थः । तेषां तृणादीनां छेदे भेदे
151157 पर्वभेदे तदुदरे छिद्रभेदे च वलयोपमा वलयाकारवती रचना प्रकृता
151158 संपादितेत्यर्थ इति योजना कार्या । पूर्वश्लोके यूकोपमया ह्यारोहणमात्रं
151159 प्रतिपादितं कर्णाहीत्याद्युपमया त्वाकारविशेषप्रतिपादनपूर्वकं
151160 तत्प्रतिपादितमिति ज्ञेयम् ।] सूक्ष्मतन्तुनिभः कीटकविशेषो मृद्व्या गत्या
151161 अलक्षितः कर्णे लीन इव प्रविशति तद्वत्तेषां तृणगुल्मादीनां छेदे भेदे पर्वभेदे
151162 तदुदरे छिद्रभेदे च गतिरचना प्रकृतेत्यर्थः ॥ १२ ॥
151163
151164 वल्लीतमालतालादिपल्लवेषु फलेषु च ।

151165 विश्रम्य पुष्ट्याऽऽकृत्या रेखाविरचनं कृतम् ॥ १३ ॥
151166
151167 वल्लीनां लतानां तमालतालादिवृक्षाणां च पल्लवेषु फलेषु च रसरूपेण
151168 विश्रम्य पर्णादिभावेन कालतः पुष्ट्या तत्तत्पर्णाद्याकृत्या
151169 अन्तःशिरारेखाविरचनं कृतम् ॥ १३ ॥
151170
151171 मुखेनाविश्य हृदयमृतुवैधुर्यधारिणा ।
151172 हृता विधुरिता भुक्ता लूना देहेषु धातवः ॥ १४ ॥
151173
151174 तथा प्राणिनां देहेषु पानकाले मुखेन हृदयमाविश्य
151175 वसन्तादिऋतुप्रयुक्तवैषम्यधारिणा मया वातपित्तकफाख्या धातवः
151176 क्वचिद्धृताः कदाचिद्विधुरिताः केचिद्भुक्ता जठराग्निना परिपाचिताः केचिल्लूनाः
151177 खण्डिता इत्यर्थः ॥ १४ ॥
151178
151179 सुप्तं पल्लवतल्पेषु प्रालेयकणरूपिणा ।
151180 तुल्यकालमशेषेषु दिक्षु सर्वास्वखेदिना ॥ १५ ॥
151181
151182 नानाह्रदनदीगेहग्राहिणाऽविरताध्वना ।
151183 विश्रान्तं सेतुसुहृदः प्रसादेन क्वचित्क्वचित् ॥ १६ ॥
151184
151185 ह्रदलक्षणा ये नदीनां गेहाः पथ्यावासास्तद्ग्राहिणा नित्यं
151186 प्रवाहादविरताध्वना ॥ १६ ॥
151187
151188 विदाऽविदनुसंधानाज्जडेन तदनाश्रयात् ।
151189 जडायशेषूल्लसितं जलेनावर्तवर्तिना ॥ १७ ॥
151190
151191 विदा चैतन्येनाविदंशस्य विषयतया अनुसंधानात्तत्र विषयांशमात्रतया तस्य
151192 चित्स्वभावस्यानाश्रयाज्जडेन अत एव लडयोरभेदाज्जलेन मया जडाशयेषु
151193 जडाशयप्रायेषु भ्रान्तिसहस्रैरावर्तवद्वर्तिना उल्लसितम् ॥ १७ ॥
151194
151195 मया दुष्कृतिनेवोर्ध्वशिलास्वस्थेन भूभृताम् ।
151196 स्वावर्तवर्तिना श्वभ्रपातेषु शतधा गतम् ॥ १८ ॥
151197
151198 प्रायश्चित्तार्थं भृगुपाते प्रवृत्तेन दुष्कृतिना पापकारिणेव मया
151199 भूभृतां पर्वतानामूर्ध्वशिलाभ्यः अस्वस्थेन चलितेन निझरिण श्वभ्रपातेषु
151200 विशीर्णेन शतधा गतम् ॥ १८ ॥
151201
151202 धूमरूपेण निर्गत्य दारुभ्यो गगनार्णवे ।
151203 कणरत्नेन नीलर्क्षमण्यन्तर्वर्तिना स्थितम् ॥ १९ ॥
151204
151205 गगनलक्षणे अर्णवे समुद्रे नीलवर्णा ये ऋक्षमणयो नक्षत्ररत्नानि तदन्तर्वर्तिना
151206 कणरत्नेन रत्नकणेन भूत्वा स्थितम् । वसिष्ठवचनप्रामाण्याद्भूस्थैरदृश्यानि
151207 नीलवर्णान्यपि नक्षत्राणि दिवि सन्तीति गम्यते ॥ १९ ॥
151208
151209 विश्रान्तमभ्रपीठेषु विद्युद्वनितया सह ।
151210 भिन्नेन्द्रनीलनीलेन शेषाङ्गेष्विव शौरिणा ॥ २० ॥
151211
151212 परमाणुमये सर्गे पिण्डरूपेष्वलक्षितम् ।
151213 स्थितमन्तःपदार्थेषु ब्रह्मणेवाखिलात्मना ॥ २१ ॥
151214
151215 प्लुषिपुत्तिकादिपरमसूक्ष्मदेहात्मकेऽपि सर्गे तत्तत्प्राणिपिण्डरूपेष्वन्तर्गेषु
151216 परमसूक्ष्मेषु तन्त्राड्यादिपदार्थेषु ब्रह्मणेव परमसूक्ष्मजलात्मना मया

151217 स्थितम् ॥ २१ ॥
151218
151219 प्राप्य जिह्वाणुभिः सङ्गमनुभूतिः कृतोत्तमा ।
151220 यामात्मनो न देहस्य मन्ये ज्ञानस्य केवलम् ॥ २२ ॥
151221
151222 किं च मधुरादिरसात्मना मया तदीयजिह्वालक्षणैरणुभिः सह सङ्गं प्राप्य
151223 तेषां तसास्वादलक्षणा उत्तमा अनुभूतिः कृता । यामनुभूतिं न देहस्य मन्ये
151224 किंतु केवलं ज्ञस्वरूपस्य आत्मन एव विषयानन्दाकाराविर्भूतं स्वरूपं मन्ये ।
151225 एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति इति श्रुतेरिति भावः ॥ २२ ॥
151226
151227 न मया न च देहेन नान्येनास्वादितात्म यत् ।
151228 तदन्तर्विवृतं चेत्यमज्ञानाय तदप्यसत् ॥ २३ ॥
151229
151230 तत्र पृथग्जना विषयमेवानन्दरूपमास्ववाद्यमानं मन्यन्ते तन्न तथा विद्यात्
151231 किंत्वसद्दुःखरूपमनास्वादनीयमेवेति तं पृथक्कृत्य दर्शयति - न मयेति
151232 । यच्चेत्यं विषयरूपं तन्न मया तदधिष्ठानचिता नाप्यास्वादकपुरुषदेहेन
151233 नाप्यन्येन
151234 तज्जीवेनास्वादितात्मसुखलेशस्याप्यभावेनास्वादनायोग्यत्वात्तथाविधं चेत्यं
151235 चिता यदन्तर्विवृतं प्रकाशितं तत्केवलं जीवानामज्ञानाय व्यामोहायैव
151236 यतस्तच्चेत्यंन् तदज्ञानमप्यसदेव । असतः असदर्थत्वस्यैवौचित्यादित्यर्थः ॥ २३ ॥
151237
151238 सर्वर्तुरसरूपेण नानामोदानि दिक्ष्वलम् ।
151239 भुक्तानि पुष्पजालानि प्रोच्छिष्टं ददतालये ॥ २४ ॥
151240
151241 आस्वाद्यत्वपक्षेऽपि विषयाधिष्ठानचिदास्वादितानेव विषयांस्तदुच्छिष्टप्रायानन्ये
151242 आस्वादयन्तीति वा कल्पनास्त्वित्याशयेनाह - सर्वर्त्विति । अलये भ्रमराय ॥ २४ ॥
151243
151244 चतुर्दशप्रकाराणां भूतानामङ्गसन्धिषु ।
151245 उषितं चेतनेनेव जडेनाप्यजडात्मना ॥ २५ ॥
151246
151247 कल्पनया जडेनापि वस्तुतोऽजडात्मना ॥ २५ ॥
151248
151249 सीकरोत्कररूपेण रथमारुह्य मारुतम् ।
151250 आमोदेनेव विहितं विमलव्योमवीथिषु ॥ २६ ॥
151251
151252 मारुतरूपं रथमारुह्य विधितं क्रीडनं जनाह्लादनं चेति शेषः ॥ २६ ॥
151253
151254 राम तस्यामवस्थायां परमाणुकणं प्रति ।
151255 अनुभूतमशेषेण यथास्थितमिदं जगत् ॥ २७ ॥
151256
151257 तत्रापि परमाणुपर्यन्तसर्ववस्तुषु प्रतिवस्त्वन्तः कलधौतशिलायामिव सर्गा
151258 अनुभूता इत्याह - रमेति ॥ २७ ॥
151259
151260 अजडेन जडेनेव समया जालया तया ।
151261 अन्तःसर्वपदार्थानां ज्ञाताज्ञातेन संस्थितम् ॥ २८ ॥
151262
151263 जालया जलविषयिण्या समया तुल्यरूपया तया धारणया ॥ २८ ॥
151264
151265 जगतां तत्र लक्षाणि नाशोत्पातशतानि च ।
151266 मया दृष्टानि रूढानि कदलीदलपीठवत् ॥ २९ ॥
151267
151268 प्रतिवस्त्वन्तर्दृष्टजगद्गतप्रतिवस्त्वन्तरेऽपि

151269 तथाविधजगदन्तराण्यनवस्थितान्यन्तरन्तर्दृष्टानीत्याह - जगतामिति।
151270 कदलीदलपीठवदन्तरन्तः प्ररूढान्यनन्तानीत्यर्थः ॥ २९ ॥
151271
151272 एवं जगच्चाजगद्वा साकारं वा निराकृति।
151273 चिन्मात्रगगनं सर्वमाकाशाधिकनिर्मलम् ॥ ३० ॥
151274
151275 एवं कल्पितानन्तजगद्व्याप्तत्वेपि नाधिष्ठानचिति किंचिन्मालिन्यमस्तीत्याह -
151276 एवमिति ॥ ३० ॥
151277
151278 न किंचन त्वं च न किंचनेदं शुद्धः परो बोध इदं विभाति।
151279 स चापि नो किंचन नापि शून्यमाकाशमेवासि विकासमास्व ॥ ३१ ॥
151280
151281 उक्तं न्यायं रामदृश्यजगत्यपि योजयन्सर्वाधिष्ठानशुद्धचिन्मात्रे रामं
151282 प्रतिष्ठापयति - न किंचनेति। न किंचन त्वमित्यवस्थात्रयेण सह
151283 देहेन्द्रियादिप्रतिषेधः। न च किंचनेदमिति वियदादिबाह्यप्रपञ्चप्रतिषेधः। स च
151284 शोधिततत्त्वंपदार्थलक्षणो बोधः नो किंचन दृश्यस्वभावो
151285 नाप्यदृश्यस्वभावो नाप्यदृश्यशून्यस्वभावः किंत्वखण्डाकाशरूपः स
151286 एव त्वमसि अतो विकासमखण्डवाक्यार्थबोधध्वस्तसर्वद्वैतसंकोचं यथा
151287 स्यत्तथा आस्वेत्यर्थः ॥ ३१ ॥
151288
151289 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० निर्वाणप्रकरणे उ० पाषा०
151290 जलजगद्वर्णनं नाम नवतितमः सर्गः ॥ ९० ॥
151291
151292 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
151293 जलजगद्वर्णनं नाम नवतितमः सर्गः ॥ ९० ॥
151294
151295
151296 एकनवतितमः सर्गः ९१
151297
151298 श्रीवसिष्ठ उवाच।
151299
151300 ततोऽहमभवं तेजस्तेजोधारणयेद्धया।
151301 चन्द्रार्कतारकाग्न्यादिविचित्रावयवान्वितम् ॥ १ ॥
151302
151303 तेजोधारणया तेजोभावमासाद्य वीक्षिताः।
151304 सूर्यचन्द्राग्निरत्नादिचमत्कारा इहोदिताः ॥
151305
151306 ततो जलधारणाकौतुकदर्शनानन्तरम् ॥ १ ॥
151307
151308 नित्यं सत्त्वप्रधानत्वात्प्रकाशाकृतिराजगत्।
151309 सर्वं दृश्यमृते सर्वचौरध्वान्तप्रतापयुक् ॥ २ ॥
151310
151311 आजगत् सर्व जगदभिव्याप्य प्रकाशाकृतिः। राजवत् इति पाठे सर्व दृश्यं
151312 चक्षुर्विषयं स्वापहृतं ऋते विहाय सर्वतश्चौरेष्विव पलायमानेषु ध्वान्तेषु
151313 राजवत्प्रतापयुगिति संबन्धः ॥ २ ॥
151314
151315 दीपादिभिः शनैः स्निग्धैर्दशाशतविहारिभिः।
151316 प्रत्यक्षीकृतसर्वार्थं प्रतिगेहं सुराजवत् ॥ ३ ॥
151317
151318 यथा सुराजा दशाशतैर्नानावेषैर्विहारिभिः स्निग्धैश्चारैः प्रतिगेहं
151319 प्रत्यक्षीकृतसर्ववृत्तान्तार्थस्तद्वद्वर्तिकाशतविहारिभिर्दीपादिभिः
151320 प्रत्यक्षीकृतसर्वार्थम्। तेज एव सर्वत्र विशेष्यमनुवर्तते ॥ ३ ॥

लोकालोके च हृषितैश्चन्द्रार्कांद्यंशुरोमभिः ।
परप्रकाशैकरतैर्दूरोत्क्षिप्ताम्बराम्बरम् [दूरोत्क्षिप्तासिताम्बरम् इति
पाठः ।] ॥ ४ ॥

परप्रकाशैकरतैरत एव लोकानां जनानां भुवनानां च आलोके अतिसंतुष्टैः
पुलकितैश्च चन्द्रार्काद्यंशुलक्षणै रोमभिर्दूरे उत् ऊर्ध्वं क्षिप्तमस्तमम्बरं
सर्वावरकतमोवस्त्रमिव दृश्यमानमम्बरमाकाशं येनेत्युत्प्रेक्षा ॥ ४ ॥

अन्धकारस्य दैन्यस्य समस्तगुणनाशिनः ।
दृश्यं सद्दृश्यमनिशं सर्वस्य गुणशालिनः ॥ ५ ॥

किमर्थमन्धकारं दूरे उत्क्षिपतीति चेत्तत्राह - अन्धकारस्येति । यतः सत्
विद्यमानं जगत्सर्व समस्तान् गुणान् रूपादीन्नाशयत्यदर्शनं नयति
तथाविधस्यान्धकारलक्षणस्य दैन्यस्य दृश्यं विषयः । सर्वस्य च
गुणशालिनः परदैन्यनिवर्तनसमर्थस्य सत् उत्तममपगतदैन्यं जगद्दृश्यं
दर्शनार्हमतस्तदपनयनं युक्तमेवेत्यर्थः ॥ ५ ॥

तमस्तमालपरशुः परशुद्धिकरं पदम् ।
सुवर्णमणिमाणिक्यमुक्तादिजनजीवितम् ॥ ६ ॥

पुनः कीदृशं तेजः । तमोलक्षणानां तमालवृक्षाणां परशुः खण्डकम् ।
परमुत्कृष्टं शुद्धिकरं पद्यते अनेनेति पदम् । निस्तेजस्कानां
सुवर्णादीनामनादरात्तल्लक्षणानां जनानां जीवितमादरहेतुः । सुवर्णादिरूपेण
जनानां जीवनसाधनमिति वा ॥ ६ ॥

शुक्लकृष्णारुणादीनां नित्यं ज्योत्स्नाङ्गशायिनाम् ।
पुत्राणामिव वर्णानां सर्वेषां देहदः पिता ॥ ७ ॥

ज्योत्स्ना आलोकस्तदङ्गशायिनाम् । रूपमात्रस्यालोकांशगुणत्वादिति भावः ॥ ७ ॥

घनस्नेहरसं पृथ्व्या रक्षितानलवेधनम् ।
गृहं प्रति घनानन्दैर्वृतदीपकपुत्रकम् ॥ ८ ॥

इदं च तेजः पृथ्व्या सह घनः स्नेहरसः प्रीत्यतिशयो यस्य तथाविधम् । कुतः ।
यतो रक्षितमनलाद्वेधनं दहनं येन । सर्वदाहकोऽप्यनलो मृदं न दहति
तदस्य स्नेहलक्षणमित्यर्थः । एवं पृथ्व्यापि स्वस्नेहलक्षणप्रकटनाय गृहं
प्रति प्रतिगृहं घननन्दैः प्रीत्यतिशयैर्भित्तिप्रासादादिभावेन वृतो
वाय्वभिघाताद्रक्षितो दीपकपुत्रको यस्य ॥ ८ ॥

दृष्टं पातालकेष्वीषत्तमोरूपेषु [अत्र टीकाकृतां ईषत्पावक इति
पाठोऽभिप्रेत इति दृश्यते ।] पावकम् ।
अर्धदृष्टं रजोरूपे भूतले भूतमालिते ॥ ९ ॥

तमोरजःसत्त्वबहलेषु पातालादिषु लोकेषु तेजसः प्रकाशतारतम्यमाह -
दृष्टमिति सार्धेन । ईषत्पावकं ईषत्प्रकाशकम् । अर्धदृष्टमर्धप्रकाशम् ॥ ९
। ।

सत्त्वात्मसु महासत्त्वं नित्यत्वं देवसद्मसु ।
जगज्जीर्णकुटीदीपः कूपोम्भस्तमसोर्महान् ॥ १० ॥

महासत्त्वं महाप्रकाशम् । नित्यत्वं नित्यता । अम्भस्तमसोर्महान् अगाधः कूप

इवान्तर्ग्रासि ॥ १० ॥

दिग्वधूविमलादर्शो निशानीहारमारुतः ।
सत्त्वं चन्द्रार्कवह्नीनां कुङ्कुमालेपनं दिवः ॥ ११ ॥

दिग्वधूनां विमल आदर्श इव विविच्य प्रकाशकम् । निशानीहारस्य मारुत इव
अपनेतृसत्त्वं जीवितसर्वस्वम् ॥ ११ ॥

केदारं दिनसस्यानां तमोच्छूनामनुग्रहः ।
नभःकाचबृहत्पात्रक्षालनाम्बु समुल्लसत् ॥ १२ ॥

तमसा उच्छूनामुच्छूनानां रूपाणामनुग्रहः । नभोलक्षणस्य
काचमयबृहत्पात्रस्य क्षालनार्थमम्बु ॥ १२ ॥

सत्ताप्रदतयार्थानां प्रकाशकतयापि च ।
चिन्मात्रपरमार्थस्य सहोदर इवानुजः ॥ १३ ॥

चिन्मात्रलक्षणस्य परमार्थस्य जाड्यमात्रेण जघन्यत्वादनुज इव ॥ ३ ॥

क्रियाकमलिनीभानुर्भूतलोदरजीवितम् ।
रूपालोकमनस्कारचमत्कारश्चितेर्यथा ॥ १४ ॥

रूपालोकस्य चाक्षुषस्य तत्प्रयुक्तमनस्कारस्य च वृत्त्या रूढचितेरिव
विषयावरणतमोनिवर्तनलक्षणश्चमत्कारः ॥ १४ ॥

नभस्तलगतासंख्यनक्षत्रमणिमालितः ।
दिनर्तुवत्सराबृंह्यवाडवाग्न्यादिफेनिलः ॥ १५ ॥

किंचेदं तेजो बृहद्ब्रह्माण्डखातस्थो महार्णव एवेत्युत्प्रेक्षणाय
रूपककल्पितैर्णवधर्मैर्विशिनष्टि - नभस्तलेति ।
दिनर्तुवत्सरादिकालभेदलक्षणैराबृंह्यैः सर्वतः
प्रवृद्धैर्वाडवाग्न्यादिभिर्विक्षोभात्फेनिलः ॥ १५ ॥

चन्द्रार्कादितरङ्गान्तरजडं पङ्किलो महान् ।
बृहद्ब्रह्माण्डखातस्थो नित्यमेकार्णवोऽक्षयः ॥ १६ ॥

चन्द्रार्कादिलक्षणतरङ्गान्तःप्रसृतैः रजोभिः अजडं विनैव जलं
कदाचित्पङ्किलः ॥ १६ ॥

हेमादिषु सुवर्णत्वं नरादिषु पुराक्रमः ।
काचकच्यं च रत्नादौ वर्षादिष्ववभासनम् ॥ १७ ॥

किंचेदं तेजः सन् अहं हेमादिषु सुवर्णत्वं संपन्नः । नरादिषु पराक्रमः
संपन्न इति योज्यम् । काचकच्यं कान्तिविशेषः । अवभासनं विद्युत्प्रकाशः ॥ १७ ॥

ज्योत्स्ना मुखेन्दुबिम्बेषु पक्ष्मलेक्षणलक्ष्मसु ।
स्रवत्स्नेहामृतापूरो हाससौहार्दभासनम् ॥ १८ ॥

मुखसदृशेष्विन्दुबिम्बेषु तु ज्योत्स्ना संपन्नः । पक्ष्मलेक्षणलक्ष्मसु
मुखलक्षणेन्दुबिम्बेषु तु ज्योत्स्नासदृशः स्रवत्स्नेहामृतापूरो
हाससौहार्दयुक्तं भासनं च संपन्न इत्यर्थः ॥ १८ ॥

151425 कपोलबाहुनेत्राक्षिभ्रूकरालकलासकः ।
151426 निजोऽजेयतया जातो विलासः कामिनीजने ॥ १९ ॥
151427
151428 कामिनीजने त्वहमजेयतया प्रसिद्धो निजः स्वाभाविकः कामविलासो जातः । स कीदृक् ।
151429 कपोलादीनां लासको लावण्यातिशयेन प्रकाशकः । लामकः इति पाठे
151430 चलनादिविकारहेतुः ॥ १९ ॥
151431
151432 तृणीकृतत्रिभुवनचपेटास्फोटितद्विषाम् ।
151433 शिरःसु वज्रीकरणं वीर्यं सिंहादिचेतसि ॥ २० ॥
151434
151435 किंचाहं तृणीकृतत्रिभुवनानां चपेटाभिरास्फोटिता द्विषो यैस्तथाविधानामपि
151436 पराक्रमिणां वृत्रादीनां शिरःसु वज्रीकरणं वज्रप्रहारः संपन्नः ।
151437 सिंहादिचेतसि वीर्यं च संपन्न इति प्रत्येकं विशेषणविशेष्यभावेन वा योज्यम् ॥ २० ॥
151438
151439 कटुकङ्कटकुट्टाकखड्गसंघट्टटांकृतैः ।
151440 पटुस्पुटाटोपरटि भटेष्वटनमुद्धटम् ॥ २१ ॥
151441
151442 किंचाहं भटेषु उद्धटं रणाङ्गणेष्वटनं लक्षणया तत्प्रयोजकं वीर्य
151443 संपन्नः । तत्कीदृशम् । कटुभिः कङ्कटानामायसकवचानां कुट्टाका ये
151444 खड्गास्तत्संघट्टजन्यैष्टांकृतैः पटु स्फुटाटोपं च यथा स्यात्तथा रटि
151445 रटनशीलम् ॥ २१ ॥
151446
151447 देवेषु दानवारित्वं सुरारित्वं सुरारिषु ।
151448 सर्वभूतेषु सोजस्त्वमुन्नामः स्थावरादिषु ॥ २२ ॥
151449
151450 उन्नामः औन्नत्यम् । वाय्वादिबलेनाप्यनाम्यत्वप्रयोजकं बलं वा ॥ २२ ॥
151451
151452 अथ ते मरुवद्भास्वांस्तत्राहमनुभूतवान् ।
151453 जगदाकाशकोशेषु तेषु तामरसेक्षण ॥ २३ ॥
151454
151455 अथ तेषु स्वधारणाकल्पितेषु जगदाकाशकोशेषु ते तव प्रसिद्धा मरुस्थली यथा
151456 स्वान्तर्नद्यादिकल्पनमनुभवति तद्वदहमपि भास्वान्सन् वक्ष्यमाणं सर्व
151457 स्वान्तरनुभूतवानित्यर्थः ॥ २३ ॥
151458
151459 दिगन्तदशनिस्तीर्णैः करजालैर्जगत्खगम् ।
151460 गृह्णदद्यङ्गमर्कत्वं ग्रामवद्दृष्टभूतलम् ॥ २४ ॥
151461
151462 तदेवाह - दिगन्तेत्यादिना । अहमर्कत्वमनुभूतवान् । कीदृशं तत् । दिगन्तेषु
151463 दशसु निस्तीर्णैः प्रसृतैः करजालैः । अद्रयः अङ्गान्यवयवा यस्य तथाविधं
151464 जगल्लक्षणं खगं पक्षिणं गृह्णत् । पुनः कीदृशम् । ग्रामवदल्पपरिमाणं
151465 दृष्टं भूतलं यत्र ॥ २४ ॥
151466
151467 कामोत्पले कोशचक्रं वाडवं तिमिरार्णवे ।
151468 ब्रह्माण्डसदने दीपं वृक्षं दिनफलावलेः ॥ २५ ॥
151469
151470 पुनस्तत्कीदृशमर्कत्वम् । चन्द्रकामवत्युत्पले कोशबन्धनहेतुभूतं चक्रम् ।
151471 शिष्टं स्पष्टम् ॥ २५ ॥
151472
151473 रसायनह्रदाकारमिन्दुत्वं वदनं दिवः ।
151474 निशानिशाचरीहासं विकासं रजनीविशाम् ॥ २६ ॥
151475
151476 तथा इन्दुत्वं चन्द्रभावमप्यनुभूतवान् । तदपि कीदृशम् ।रसायनस्यामृतस्य

151477 ह्रद इवाकारो यस्य। दिवो वदनमिव वदनम्। निशालक्षणाया निशाचर्या
151478 अभिसारिकाया हासमिव हासम्। तथा रजन्यां विशन्ति प्रवेशादिव्यवहारं ये
151479 कुर्वन्ति ते रजनीविशस्तेषां विकासं प्रकाशकम्॥ २६॥
151480
151481 जगल्लावण्यलक्ष्मीणां सर्वासामुपमास्पदम्।
151482 रजनीरोहिणीनारीकैरवाणां परं प्रियम्॥ २७॥
151483
151484 नेत्रवृन्दस्य वक्त्रस्य द्युलतापुष्पजालकम्।
151485 स्वर्गौघमशकव्यूहं तारकापटलं मृदु॥ २८॥
151486
151487 तथा सर्वप्राणिनां नेत्रवृन्दस्य वक्त्रस्य मुखस्य च
151488 आह्लादविकासहेतुत्वात्परमं प्रियमित्यनुकृष्यान्वयः। तथा अहं गृदु
151489 तारकापटलम्। भावप्रधानो निर्देशः। तारकासमूहत्वं चानुभूतवान्। तदपि
151490 कीदृशम्। द्यौराकाशस्तल्लक्षणाया लतायाः पुष्पजालकमिव स्थितम्।
151491 स्वर्गसुखलक्षणे ओधे तन्मकरन्दप्रवाहे आसक्तं मशकव्यूहमिव मृदु
151492 क्षुद्रम्॥ २८॥
151493
151494 वणिङ्मात्रे वणिग्घस्ततुलातोलनदोलितम्।
151495 रत्नत्वं जलकल्लोलहस्तान्दोलनमब्धिभिः॥ २९॥
151496
151497 तथा अहं रत्नत्वमप्यनुभूतवान्। तच्च वणिजो मिमीते इति वणिङ्मात्रो विपणिस्तस्मिन्
151498 वणिजां हस्तैस्तुलासु तोलनैश्च दोलितमान्दोलितम्। प्राक्च
151499 अब्धिभिर्जलकल्लोलहस्तैरान्दोलनं प्राप्तमिति शेषः। बाहुलकात्कर्मणि वा ल्युट्॥ २९॥
151500
151501 अब्धाऽब्धौ शफरावर्तमब्धा गोमञ्जरीगणः।
151502 अब्दादौ दावदहनं वैद्युतं द्योतनं तनौ॥ ३०॥
151503
151504 किंचाहमब्धौ समुद्रे अपो धयति पिबतीत्यब्धा वडवानलः सन् शफराणां
151505 क्षुद्रमत्स्यानां मद्धीतानामावर्तं परिभ्रमणकौतुकमनुभूतवान्। तथा
151506 सर्वत्र अपः धयति शोषयतीत्यब्धा गोमञ्जरीगणः
151507 सूर्यकिरणमञ्जरीसमूहात्मकः सस्तनौ स्वशरीरे द्योतनमनुभूतवान्। अब्दादौ
151508 मेघपर्वतादौ प्रविश्य दावदहनवैद्युतं च तत्तच्छरीरे द्योतनं
151509 स्वमनुभूतवानित्यर्थः॥ ३०॥
151510
151511 दारुदारणदुर्वारदीप्तं ज्वलनमाततम्।
151512 यज्ञाग्निदाहकल्याणं विस्फोटकठिनारवम्॥ ३१॥
151513
151514 किंचाहमग्निभावं प्राप्य दारूणां दारणं विदारणनिमित्तं दुर्वारं यथा
151515 स्यात्तथा दीप्तमत एव दारुविस्फोटैः कठिनारवमाततं सर्वतोविस्तृतं
151516 ज्वलनमनुभूतवान्। तथा यज्ञाग्निः सन्नानाहविर्दाहकल्याणं
151517 चानुभूतवानित्यर्थः॥ ३१॥
151518
151519 कचत्काञ्चनमाणिक्यमुक्तामणिमयं महः।
151520 तपस्तां नीतमाक्षिप्य पाण्डित्यमिव पामरैः॥ ३२॥
151521
151522 किं च तस्मिन्नग्निभावे क्वचल्लावण्यातिशयेन दीप्यमानं काञ्चनादिमयं महो
151523 ज्योतिः कोशागारदाहेन आक्षिप्य परिभूय भस्मादिभावं नीत्वा तत्स्वामिनां
151524 तपस्तां संतापविषयतां नीतम्। यथा बलवद्भिः पामरैर्बहुभिरेकस्य पण्डितस्य
151525 पाण्डित्यं वितण्डावादैरभिभूय संतापविषयतां नीयते तद्वत्। तथा
151526 चाभाणकमाहुः - पलाशं पण्डितः प्राह मूर्खा जल्पन्ति पाडलम्।
151527 मुष्टिप्रहारैः संक्लिष्टः पण्डितोऽप्याह पाडलम् इति॥ ३२॥
151528

निश्रान्तं स्तनशृङ्गेषु मुक्ताहारतया तया।
असुरोरगगन्धर्वनरनायकयोषिताम्॥ ३३॥

प्रसंगोपात्ते मुक्ताभावेऽपि यदनुभूतं तदाह - विश्रान्तमिति॥ ३३॥

पादाहतिं गतं मार्गे तिलकत्वं वधूमुखे।
खद्योतेन मया लब्धं पश्यावस्थासु चापलम्॥ ३४॥

खद्योतभावे यदनुभूतं तदाह - पादाहतिमिति। खद्योतभूतेन मया
तत्खद्योतत्वं मार्गे संचरतां जनानां पादाहतिं गतं लब्धम्। वधूमुखे तु
तिलकत्वं गतं लब्धम्। स्थानभेदप्रयुक्तासूत्कर्षापकर्षावस्थासु
चापलमनैयत्वं पश्य॥ ३४॥

क्वचिद्विद्युत्तया तेषु शफर्या चार्णवेष्विव।
खस्थेषु विकृतं चारु वार्यावर्तविराविषु॥ ३५॥

खस्थेषु मेघेषु मया क्वचिद्विद्युत्तयार्णवेषु शफर्येव चारु यथा स्यात्तथा
विकृतं चेष्टितम्। वार्यावर्तैर्विराविष्विति द्वयोरपि विशेषणम्॥ ३५॥

क्वचिद्दीपतयानीय कलिकाकोमलाङ्गया।
अन्तःपुरेषु कान्तानां सुरतालोकनं कृतम्॥ ३६॥

अन्तःपुरेषु आनीय स्थापितेनेति शेषः॥ ३६॥

क्वचित्कज्जलजालस्य ज्वालाकनकदाकृते।
खेदिना घनकूर्माभं सङ्गेनैव स्वकोटरे॥ ३७॥

ज्वालालक्षणं कनकं दाति खण्डयति तथाविधाकृते [] बहुब्रीहिः -
आकृतमाकृतिः |] स्वकोटरे वर्तिकाग्रे प्ररूढकज्जलजालस्य सङ्गेनैव खेदिना
मन्दप्राभेण दीपेन मया ज्वालाद्यवयवसंकोचाद्घनकूर्माभं रूपं
कृतमित्यर्थः। कल्पान्ताग्निभूतेन मया कल्पान्तेषु सर्वेषु जगत्सु
भ्रमणप्रयुक्ताद्बृहतः श्रमात्कज्जलेनासिते श्यामे क्वचित्खे आकाशे लीनम्। यथा
मेघवाहनस्य रुद्रस्य इभे वाहनभूते मेघे विद्युता लीनं तद्वत्॥ ३७॥

कल्पान्तेषु क्वचित्सर्वजगद्भ्रमघनश्रमात्।
खे कज्जलासिते लीनं रुद्रेभ इव विद्युता॥ ३८॥

क्वचिदाकल्पमापीय वाडवाग्नितया जलम्।
जगत्सु गगनेष्वन्ते ननृते जलराशिषु॥ ३९॥

गगनेषु शून्यतां प्राप्तेषु जलराशिषु मया अन्ते गगने ननृते।
गात्रविक्षेपार्थस्य नृतेर्धात्वर्थोपसंगृहीतकर्मकत्वेनाकर्मकत्वाद्भावे लिट्॥
३९॥

क्वचिदुल्मुकदन्तेन मया ज्वालाभुजात्मना।
विलोलधूमावर्तोग्रकुन्तलेनाकुलौजसा॥ ४०॥

क्वचिदुल्मुकदन्तेन ज्वालाभुजात्मना विलोलावर्तधूमाग्राण्येव कुन्तलाः केशा यस्य
तथाविधेनौजसाग्निना मया पुराणां प्ररूढकक्षपल्वलानां [पल्लव पल्लल
इत्यपि पाठौ |] च दाहेषु क्रियामाणेषु काष्ठादिपदार्थाः खादनोचिता
भक्षणयोग्याः कृता इति परेणान्वयः॥ ४०॥

151581 पुरपल्वलदाहेषु [पल्लव पल्ललैत्यपि पाठौ ।] कवलीकृतजन्तुना ।
151582 कृताः कृताष्ट काष्ठादिपदार्थाः खादनोचिताः ॥ ४१ ॥
151583
151584 हे कृताष्ट । कृताः स्थिरीकृता दयाद्यस्पृहान्ता गौतमोक्ता अष्टौ गुणा येनेति
151585 व्युत्पत्तेः ॥ ४१ ॥
151586
151587 हतेन शस्त्रपाषाणैरयःपिण्डादिवासिना ।
151588 हन्तृदाहार्थमुद्गीर्णाः कणकोपलताः क्वचित् ॥ ४२ ॥
151589
151590 क्वचित्कर्मारशालादौ शस्त्रैरयोमुद्गरैः पाषाणैश्च हतेन
151591 लोहाभिघातादभिहतेन कणका विस्फुलिङ्गा उपलताः [आर्षत्वाद्ग्रामजनेत्यत्र
151592 तलिति योगविभागाद्वा समूहे तल् ।] पाषाणखण्डाश्चोद्गीर्णाः ॥ ४२ ॥
151593
151594 क्वचिन्महाशिलाकोशे पाषाणमणिना मया ।
151595 समस्तभूताद्दृश्येन स्थितं युगशतान्यपि ॥ ४३ ॥
151596
151597 पाषाणमणिना वज्रवैदूर्यादिरूपेण स्थितम् ॥ ४३ ॥
151598
151599 श्रीराम उवाच ।
151600
151601 मुने तस्यामवस्थायामनुभूतं त्वया सुखम् ।
151602 उत दुःखमिति ब्रूहि बोधाय मम मानद ॥ ४४ ॥
151603
151604 तस्यां पाषाणमण्याद्यवस्थायाम् ॥ ४४ ॥
151605
151606 श्रीवसिष्ठ उवाच ।
151607
151608 यथा याति नरः सुप्तो जडतां चेतनोऽपि सन् ।
151609 चिद्व्योम गच्छेद्दृश्यत्वं तथा जाड्यं प्रचेतति ॥ ४५ ॥
151610
151611 चिदानन्दैकरसपूर्णब्रह्मभूतस्य मम कौतुकाज्जगद्भावारोपवीक्षणे न
151612 दुःखलेशस्यापि प्रसक्तिः किंतु सुखमेवेत्युत्तरं वक्तुं वसिष्ठो भूमिकां
151613 रचयति - यथेति ॥ ४५ ॥
151614
151615 आत्मानं चेतति ब्रह्म पृथ्व्यादीव यदा तदा ।
151616 सुप्तं जडमिवास्तेऽन्तः स्यादस्य न तदन्यथा ॥ ४६ ॥
151617
151618 अस्य ब्रह्मणस्तद्वास्तवं सच्चिदानन्दरूपमन्यथा न स्यादेवेति न दुःखप्रसक्तिरिति
151619 भावः ॥ ४६ ॥
151620
151621 वस्तुतस्तस्य खोर्व्यादि नासद्रूपं न सन्मयम् ।
151622 द्रष्टृदृश्यमिवाभाति ब्रह्म चैतत्समं स्थितम् ॥ ४७ ॥
151623
151624 कुतो न स्यात्तत्राह - वस्तुत इति । सममविकृतमेव शितम् ॥ ४७ ॥
151625
151626 एतत्सत्यपरिज्ञानंन् यस्योत्पन्नमखण्डितम् ।
151627 न तस्य पञ्चभूतानि न दृश्यद्रष्टृविभ्रमः ॥ ४८ ॥
151628
151629 अज्ञाने हि दुःखप्रसक्तिः स्यान्न च तदस्तीत्याह - एतदिति ॥ ४८ ॥
151630
151631 तदा मयैवं शुद्धेन तत्कृतं ब्रह्मरूपिणा ।
151632 ब्रह्मरूपादृते किंचिदेतत्कर्तुर्न युज्यते ॥ ४९ ॥

यदा सर्वमिदं दृश्यं जातं ब्रह्म निरामयम् ।
तदा ब्रह्मपदस्थेन मयात्मैवैवमीक्षितः ॥ ५० ॥

यदा पुनरहं पञ्चभूतानीत्येव भासयन् ।
भवामि जड एवाहं तदा चेतामि किं किल ॥ ५१ ॥

यदि मम पाषाणमण्यादिभावे चैतन्यमेव न स्यात्तर्हि तदनुभवोऽद्य स्मरणं च
न स्यादित्याशयेनाह - यदेति । किं चेतामि कथमनुभवामि ॥ ५१ ॥

सुप्तोऽस्मीति दृढं भावं बुद्धवांश्चेतनोऽपि सन् ।
नैद्रमेवैत्यलं जाड्यं लसच्चेतति किंचन ॥ ५२ ॥

सुषुप्तौ कथं तर्हि न किंचिदवेदिषमित्यवेदनप्रत्ययस्तत्राह - सुप्तोऽस्मीति । तत्र
नैद्रं निद्रोपस्थापितमज्ञानमेव नावेदिषमिति प्रतीतिप्रापितं जाड्यं अलं एति ।
लसत्स्वप्रकाशं किंचन वस्तु चेतत्येव । अन्यथा सुप्तिकालाननुभूतस्य
स्वापाज्ञानादेः स्मरणं कथं स्यादिति भावः ॥ ५२ ॥

यस्तु ज्ञानप्रबुद्धात्मा देहस्तस्याधिभौतिकः ।
शाम्यत्युदेति विमलो बोधात्मैवातिवाहितः ॥ ५३ ॥

ज्ञानोदयेन स्थूलव्यष्टिसमष्टिदेहस्याधिभौतिकभावापगमादपि न
जाड्यदुःखप्रसक्तिरित्याशयेनाह - यस्त्विति ॥ ५३ ॥

आतिवाहिकदेहेन तेन बोधात्मनाणुना ।
बृहता वा यथाकामं निर्वाणात्मावतिष्ठते ॥ ५४ ॥

निर्वाणात्मा जीवन्मुक्तः ॥ ५४ ॥

बोधदेहेन हृदयं शिलानामप्यभेदिनाम् [पुंस्त्वमार्षम् । अभेदि नेति
वा पाठस्तत्राभेदि नेति च्छेदः । ना पुरुषः । अभेदीति
हृदयविशेषणमित्यनुमीयते ।] ।
प्रविश्याशु विनिर्याति याति पातालमम्बरम् ॥ ५५ ॥

तस्मान्मया पुरा राम बोधदेहेन तत्तदा ।
तथा कृतमनन्तेन चिन्मयव्योमरूपिणा ॥ ५६ ॥

तथा च न मे दुःखप्रसक्तिरित्युपसंहरति - तस्मादिति ॥ ५६ ॥

वज्रपाषाणपातालनभोम्बरगमागमान् ।
कुर्वतस्तादृशस्याशु न विघ्न उपजायते ॥ ५७ ॥

बोधमात्रशरीरेण यावदास्ते जडेष्वसौ ।
पदार्थेषु तथाभूतस्तावत्तत्रावतिष्ठते ॥ ५८ ॥

स्वेच्छानिर्मितकौतुकत्वादपि न दुःखप्रसक्तिरित्याशयेनाह - स्वेच्छयैवेति ।
स्वेच्छयैवान्यत्र प्रयति चेद्यथा न दुःखं तथैव तत्तत्रैव स्थितिं याति चेदपि
यथा पुनरागतिस्तथैव तत्र स्थितिरपि इष्टैवनानिष्टेत्यर्थः ॥ ५८ ॥

स्वेच्छयैव चलित्वाथ ततोऽन्यत्र प्रयाति चेत् ।
तत्तत्रैव स्थितिं याति तत्तथैवागतिर्यथा ॥ ५९ ॥

151685 बोधमात्रं विदुर्देहमातिवाहिकमव्ययम् ।
151686 इदानीं त्वं तमेवेह बुधोऽनुभवसि स्वयम् ॥ ६० ॥
151687
151688 तवापि तत्त्वज्ञानितया आतिवाहिकदेहत्वं धारणाभेदैर्जगद्भावकौतुकदर्शनं
151689 च सुलभमेवेति मदुक्तं परीक्षस्वेत्याशयेनाह - बोधमात्रमिति ।
151690 तमेवातिवाहिकदेहं धारणया जगद्भावं चानुभवसि यदीच्छरीति शेषः ॥ ६० ॥
151691
151692 चिन्मात्रव्योमरूपोऽस्मीत्यर्कादाविति बोधतः ।
151693 आत्मैवास्तमुपानीतः सन्नेवासन्निवात्मना ॥ ६१ ॥
151694
151695 तत्त्वज्ञैरिच्छयैव अर्कादिसर्वं जगदस्तं नीत्वा आत्ममात्रतया स्थापयितुं
151696 शक्यमित्याह - चिन्मात्रेति । आत्मना आत्मरूपेण सन्नेव जगद्रूपबाधादसन्निव
151697 भवतीत्यर्थः ॥ ६१ ॥
151698
151699 स्थितं स्वप्नादिजगति तमसेवासतेव च ।
151700 आवृतेनेव वान्यासामलभ्येन सता दृशम् ॥ ६२ ॥
151701
151702 ननु अस्मदादिदृशा सता जगता कथमसतेव स्थितमिति चेत्स्वप्नादिजगति
151703 जाग्रज्जगतेवेत्याह - स्थितमिति । यथा दृशं जाग्रत्पुरुषदृष्टिं प्रति सता
151704 विद्यमानेनैव जगता सुप्तपुरुषप्रसिद्धस्वप्नादिजगति तमसा अज्ञानभावेनेव असता
151705 शून्यभावेनैव आवृतेनेव वा अन्यासां सुप्तदृशामलभ्येन स्थितं
151706 तद्वदित्यर्थः ॥ ६२ ॥
151707
151708 तरङ्गलेखयाङ्गारसरितः स्वाङ्गलग्नया ।
151709 मनोराज्यश्रियेवाशुक् प्रोत्पन्नस्तद्वदेहया ॥ ६३ ॥
151710
151711 किं च यथा कश्चिन्मनोराज्यश्रिया कल्पिताया अङ्गारसरितस्तरङ्गलेखया
151712 स्वाङ्गलग्नयापि अशुक् निर्दुःख एव कौतुकी प्रोत्पन्नस्तद्वदहमपि आ ईहया
151713 ईषदिच्छया पाषाणमण्यादिभावेन प्रोत्पन्न इति न शुक्प्रसक्तिरित्यर्थः ॥ ६३ ॥
151714
151715 कज्जलालिकया वह्निविपिनः पुष्पशोभया ।
151716 फुल्लस्थलाम्बुजाकारं किंशुकाशोकरूपया ॥ ६४ ॥
151717
151718 इत्थं रामप्रश्नस्योत्तरमभिधाय प्रस्तुतमेवानुवर्तमान आह - कज्जलेति ।
151719 वह्निभूतेनैव मया कज्जलमेवालिकं अलिसमूहो यस्यां तथाविधया अत एव
151720 पुष्पशोभया किंशुकाशोकरूपया इद्धया दीप्तया ज्वालाज्वलतया वह्निव्याप्तं
151721 विपिनः फुल्लस्थलाम्बुजाकारं कृतमिति शेषः ॥ ६४ ॥
151722
151723 वितताराम्भयाप्युच्चैर्ज्वालाज्वलतयेद्धया ।
151724 उपोत्थायाङ्ग गलितं खललक्ष्म्येव लोलया ॥ ६५ ॥
151725
151726 हे अङ्ग मया इद्धया दीप्तया खललक्ष्म्येव लोलया ज्वालाज्वलतया उपोत्थाय
151727 झटित्येवोत्कर्षं प्राप्य सहसैव गलितम् ॥ ६५ ॥
151728
151729 तेजस्तयापि परमाणुकणोदरेऽपि दृष्टेत्थमेवमिह राम मया जगच्छ्रीः ।
151730 अन्या च सा न च चिदम्बरतः परस्मात्स्वप्ने पुराचलगणोऽत्र न्निदर्शनं वः ॥
151731 ६६ ॥
151732
151733 हे राम मया तेजस्तयापि परमाणुकणानामुदरेऽपि प्रत्येकं इत्थमेवं
151734 जगच्छ्रीर्दृष्टा सा जगच्छ्रीर्भवदादिप्रसिद्धा च जगच्छ्रीः परस्माच्चिदम्बरतः
151735 अन्या न । अत्रास्मिन्नर्थे वः युष्माकं स्वप्ने प्रसिद्धः पुरगणः अचलगणश्च
151736 निदर्शनं दृष्टान्त इत्यर्थः ॥ ६६ ॥

151737
151738 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षो० निर्वाणप्रकरणे उ० पाषा०
151739 तैजसजगद्वर्णनं नामैकनवतितमः सर्गः ॥ ९१ ॥
151740
151741 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
151742 तैजराजगद्वर्णनं नामैकनवतितमः सर्गः ॥ ९१ ॥
151743
151744 द्विनवतितमः सर्गः ९२
151745
151746 श्रीवसिष्ठ उवाच ।
151747
151748 अथ वातमयीं कृत्वाजगत्प्रेक्षणकौतुकात्
151749 धारणां धीरया वृत्त्या विततामहमागतः ॥ १ ॥
151750
151751 वायुधारणया वायुभावे तत्कर्मविस्तरः ।
151752 ततः साकाशसार्वात्म्यस्थितिश्चात्रोपवर्ण्यते ॥
151753
151754 विततां वायुभावप्रतिष्ठापर्यन्तं विस्तीर्णां तामागतः प्राप्तः सन्ननिलः
151755 संपन्नोऽस्मीत्यन्वयः ॥ १ ॥
151756
151757 संपन्नोऽस्म्यनिलो वल्लीललनालोकलासकः ।
151758 कमलोत्पलकुन्दादिजालकामोदपालकः ॥ २ ॥
151759
151760 प्रसिद्धैरनिलधर्मैरात्मानं विशिनष्टि - वल्लीत्यादिना । आमोदान्पालयति
151761 स्वाधीनीकृत्य रक्षतीत्यामोदपालकः ॥ २ ॥
151762
151763 सीकरोत्करनीहारहेलाहरणतत्परः ।
151764 सुरतश्रान्तसर्वाङ्गसमाह्लादनतर्षुलः ॥ ३ ॥
151765
151766 तृणगुल्मलतावल्लीदलताण्डवपण्डितः ।
151767 लतौषधिफलोल्लासकुसुमामोदमण्डितः ॥ ४ ॥
151768
151769 फलोल्लासानां कुसुमानां चामोदैर्मण्डितः संपन्नोऽस्मीति सर्वत्रानुषङ्गः ॥ ४ ॥
151770
151771 मृदुर्मङ्गलकालेषु ललनालोकलालकः ।
151772 भीम उत्पातकालेषु पर्णवत्प्रौढपर्वतः ॥ ५ ॥
151773
151774 मङ्गलकालेषु भाविकल्याणसूचनाय मृदुशैत्यमान्द्यसौरभयुक्तः ।
151775 उत्पतकालेषु तु भीमस्तद्विपरीतत्वात्खरोष्णपरुषः । प्रलयकाले तु पर्णवत्प्रौढा
151776 उड्डायिताः पर्वता येन तथाविधः ॥ ५ ॥
151777
151778 नन्दने कुन्दमन्दारमकरन्दरजोरुणः ।
151779 नरकेऽङ्गारसंभारभूरिनीहारभासुरः ॥ ६ ॥
151780
151781 नन्दने स्वर्गे ॥ ६ ॥
151782
151783 सागरे सरलावर्तलेखानुमितसर्पणः ।
151784 दिवि वारिदसंचारमृष्टामृष्टेन्दुदर्पणः ॥ ७ ॥
151785
151786 सरलाभिरावृतलेखाभिस्तरङ्गलेखाभिरनुमितं सर्पणं प्रचलनं यस्य ।
151787 मेघापसारणे मृष्ट इव तदाच्छादनेनामृष्टो मलिनीकृत इवेन्दुदर्पणो येन ॥
151788 ७ ॥

151789
151790 नक्षत्रक्षत्रसैन्यस्य रथो रंहोविबृंहितः ।
151791 त्रैलोक्यसिद्धसंचारविमानधरणे हितः ॥ ८ ॥
151792
151793 नक्षत्रलक्षणस्य क्षत्रसैन्यस्य राजसेनाया रंहोभिर्विबृंहितो विवृद्धो रथः ।
151794 प्रवहाख्यो मरुद्भेदो नक्षत्रचक्रं भ्रमयतीति ज्योतिःशास्त्रप्रसिद्धेः । तथा
151795 त्रैलोक्येऽपि सिद्धानां संचारे देवानां विमानधारणे च हितोऽनुकूलः ॥ ८ ॥
151796
151797 सहोदर इव क्षिप्रगामित्वादस्य चेतसः ।
151798 अनङ्गोऽपि समस्ताङ्गः स्पन्दानन्दनचन्दनः ॥ ९ ॥
151799
151800 तुषारसीकरासारजरारोमविवर्जरः ।
151801 आमोदयौवनोन्मादो मौनमार्दवशैशवः ॥ १० ॥
151802
151803 तुषारादिलक्षणैर्जराधवलरोमभिर्विजर्जरो वृद्ध इव ।
151804 कुसुमाद्यामोदैर्यौवनोन्मादवानिव । मौनमार्दवे शैशवमिव यस्य ॥ १० ॥
151805
151806 नन्दनामोदमधुरो [नन्दनोदारमधुरः इति पाठो व्याख्यानुगुणः ।
151807 ] मधुरोदारसंसृतिः ।
151808 चारुचैत्ररथोन्मुक्तो हृतकान्तारतश्रमः ॥ ११ ॥
151809
151810 नन्दने इन्द्रोद्याने उदारो मधुरश्च । चैत्ररथात्कुबेरोद्यानादुन्मुक्तः प्रसृतः ॥
151811 ११ ॥
151812
151813 चिरं गङ्गातरङ्गाङ्गदोलान्दोलनसश्रमः ।
151814 श्रमस्वरूपाज्ञतया निवारिततत‌श्रमः ॥ १२ ॥
151815
151816 गङ्गातरङ्गाङ्गदोलासु आन्दोलनेन सश्रम इव परश्रमनिवारणौत्सुक्येन
151817 स्वश्रमानभिज्ञतया निवारितास्तता विस्तीर्णाः परश्रमा येन ॥ १२ ॥
151818
151819 पुष्पभारानताः स्पर्शैर्वसन्तवनितालताः ।
151820 चिरं चपलय&ल्लोलदलहस्तालिलोचनाः ॥ १३ ॥
151821
151822 वसन्तस्य वनिता इव स्थिता लता नर्मस्पर्शैरिव चिरं चपलयन् । लोलदलहस्ताश्च ता
151823 अलिलोचनाश्चेति कर्मधारयः ॥ १३ ॥
151824
151825 चिरं भुक्त्वेन्दुबिम्बाग्रं सुप्ता पूर्णाभ्रतल्पके ।
151826 विधूय कमलानीकमपनीतरतश्रमः ॥ १४ ॥
151827
151828 इन्दुबिम्बे अग्रं श्रेष्ठममृतं चिरं भुक्त्वा । रतश्रमः स्वीयः परकीयो वा ॥ १४
151829 । ।
151830
151831 समस्तरजसामेको व्योमगामी तुरंगमः ।
151832 आमोदमदमातङ्गसमुल्लासमहासुहृत् ॥ १५ ॥
151833
151834 धीरेणाप्य तडिच्छृङ्गं पयोदपशुपालकः ।
151835 तन्तुः सीकरमुक्तानामरिधर्मा रजोरुजाम् ॥ १६ ॥
151836
151837 तडिल्लक्षणं शृङ्गं गोपबालानां प्रसिद्धं वाद्यमाप्य धीरेण तन्नादेन
151838 पयोदलक्षणानां पशूनां गोमहिष्यादीनां पालकः । रजोरुजां
151839 धूलिविनाशकानां जलभागानामरिधर्मा । शोषक इति यावत् ॥ १६ ॥
151840

151841 आकाशकुसुमामोदः सर्वशब्दसहोदरः |
151842 नाडीप्रणालीसलिलम् भूताङ्गोपाङ्गवर्तकः || १७ ||
151843
151844 आकाशलक्षणस्य कुसुमस्यामोदो गन्धभूतः अत एव तद्गुणानां सर्वशब्दानां
151845 सहोदरः | भूतानां प्राणिनामङ्गेषु उपाङ्गेषु च वर्तकः
151846 संस्तदीयनाडीलक्षणप्रणालीनां सलिलमिव संपन्न इत्यर्थः || १७ ||
151847
151848 मर्मकर्मकरैकात्मा हृद्गुहागेहकेसरी |
151849 नित्यमेकान्तपथिकः सारविज्जातवेदसः || १८ ||
151850
151851 एवंभूतानां प्राणभूतत्वाद्धृदयादिमर्मस्थानत्वान्मर्मकर्मकराणां
151852 सर्वेषामेक आत्मा | एकान्तं नियतं पथिकः संचरणशीलः | जातवेदसः सारं
151853 बलं वेत्तीति सारवित् | यतो दुर्बलं दीपादिभावे नाशयति प्रबलं च मित्रभावेन
151854 वर्धयति || १८ ||
151855
151856 आमोदरत्नलुण्टाको विमाननगराविनः |
151857 दाहान्धकारशीतांशुः शैत्येन्दुक्षीरसागरः || १९ ||
151858
151859 आमोदलक्षणरत्नानांन् लुण्टाको बलात्कलिकाग्रन्थिमुन्मोच्य हर्ता |
151860 विमानगणलक्षणनगरस्य अवनिर्विधारकः | दाहस्तापस्तल्लक्षणान्धकारस्य
151861 शीतांशुः | शैत्येन्दोः क्षीरसागर इव जन्मभूमिः || १९ ||
151862
151863 प्राणापानकलारज्ज्वा प्राणिनां यन्त्रवाहकः |
151864 अरिर्मित्रं च द्वीपानां द्वीपसंचारणे रतः || २० ||
151865
151866 द्वीपानां तरङ्गैः खण्डकत्वादरिः पांसुभिरुपचेतृत्वान्मित्रं च || २० ||
151867
151868 पुरोगतोऽप्यदृश्यात्मा मनोराज्यपुरोपमः |
151869 तालवृन्ततिलेतैलमालानं स्पन्ददन्तिनः | २१ ||
151870
151871 एकक्षणलवेनैव चालिताखिलभूधरः |
151872 वर्णावलितरङ्गाणां गङ्गावाह इवैककृत् || २२ ||
151873
151874 प्रलयकाले एकक्षणलवेनैव चालिता उत्खाता अखिला भूधरा येन |
151875 वर्णावलिर्नानावर्णास्तल्लक्षणानां तरङ्गाणां गङ्गाप्रवाह इव
151876 धूलिमिश्रणेनैकत्वकृत् || २२ ||
151877
151878 धूमाम्बुवाहरजसां महावर्तकृदम्भसाम् |
151879 द्युनदीवाहवार्योघनभोनीलोत्पलालिकः || २३ ||
151880
151881 पुनः कीदृग्वायुः | धूमानामम्बुवाहानां रजसामम्भसां च महावर्तकृत् |
151882 द्युनदीप्रवाह एव मकरन्दवार्योघो यत्र तथाविधस्य नभोलक्षणनीलोत्पलस्य अलिको
151883 भ्रमरः || २३ ||
151884
151885 शरीरावेष्टितोन्मुक्तपुराणतृणचोपनः |
151886 स्पन्दपद्मवनादित्यः शब्दवर्षैकवारिदः || २४ ||
151887
151888 वात्याशरीरावेष्टनेनोन्मुक्तानां जीर्णतृणानां चोपनो मन्दगतिहेतुः | स्पन्दः
151889 क्रियासामान्यं तल्लक्षणस्य पद्मवनस्य आदित्यो विकासहेतुः | शब्दलक्षणस्य
151890 वर्षस्य वृष्टेरेको मुख्यो वारिदः || २४ ||
151891
151892 व्योमकाननमातङ्गः शरीरगृहगर्गटः |

151893 धूलीकदम्बविपिनमालालिङ्गननायकः ॥ २५ ॥
151894

151895 शरीरगृहे गर्गटो यन्त्रविशेष इव सदैव शब्दायमानः ।
151896 धूलीलक्षणनायिकाकदम्बस्य विपिनमालालक्षणनायिकानां चालिङ्गने नायकः ॥ २५
151897 । ।
151898

151899 स्त्यानीकरणसंशोषधृतिस्पन्दनसौरभैः ।
151900 सशैत्यैः कर्मभिः षड्भिरलब्धक्षण आक्षयम् ॥ २६ ॥
151901

151902 स्त्यानीकरणं हिमघृतादेः पिण्डीकरणं कर्दमादेः संशोषो
151903 मेघादेर्धृतिर्धारणं तृणादेः स्पन्दनंन् सौरभानि गन्धाहरणानि शैत्यं
151904 तापहरणंन् चेति षड्भिः कर्मभिः आक्षयं प्रलयपर्यन्तमलब्धः क्षणो
151905 विश्रामो येन ॥ २६ ॥
151906

151907 रसाकर्षणसव्यग्रो नित्यं भ्रातेव तेजसः ।
151908 हरणादानकर्तृणामङ्गानां विनियोगकृत् ॥ २७ ॥
151909

151910 हरणादानकर्तृणां हस्ताद्यङ्गानां विनियोगकृत् चालक इति यावत् ॥ २७ ॥
151911

151912 शरीरनगरे नाडीमार्गैर्गतिनिरर्गलः ।
151913 रसभाण्डे परावर्तादायुर्मणिमहावणिक् ॥ २८ ॥
151914

151915 गतिविषये निरर्गलो निरन्तरायः । अन्नरसमये देहभाण्डे प्राणापानादिभावेन
151916 परावृतादायुर्मणिरक्षणव्ययविषये महावणिक् ॥ २८ ॥
151917

151918 शरीरनगरीनाशनिर्माणैकपरायणः ।
151919 रसकिट्टकलाधातुपृथक्करणकोविदः ॥ २९ ॥
151920

151921 अन्नरसानां किट्टस्य मलस्य कलानां सूक्ष्मतरसारभागानां षण्णां
151922 त्वगसृङ्मांसभेदोस्थितमज्जाशुक्राख्यानां वातपित्तकफाख्यानां
151923 वाधातूनां च पृथक्करणे कोविदः कुशलः ॥ २९ ॥
151924

151925 प्रतिसूक्ष्माणुकं देहे ततो दृष्टं मया जगत् ।
151926 तत्रेत्थं रूपवानस्मि स्फुटमाभोगि सुस्थिरम् ॥ ३० ॥
151927

151928 तत्र वायुभावेऽपि प्रतिसूक्ष्माणुकं परमाणुपर्यन्तं प्रतिद्रव्यं देहे तत्तदुदरे
151929 मया कलधौतशिलावदेव जगद्दृष्टम् । तत्र तेष्वपि जगत्सु इत्थं
151930 पृथिव्यादिजगद्रूपवानहमेवास्मि ॥ ३० ॥
151931

151932 परमाणुप्रति त्वत्र प्रोह्यन्त इव सर्गकाः ।
151933 न च किंचित्किलोह्यन्ते खाकृते किमिवोह्यते ॥ ३१ ॥
151934

151935 परमार्थदृशा तु न च किंचित्किलोह्यन्ते । खाकृते शून्याकारे ॥ ३१ ॥
151936

151937 सचन्द्रार्कानिलाग्नीन्द्रपद्मवैश्रवणेश्वराः ।
151938 सब्रह्महरिगन्धर्वा विद्याधरमहोरगाः ॥ ३२ ॥
151939

151940 प्रतिपरमाणु किंकिंसहिताः सर्गकाः प्रोह्यन्त इव तदाह -
151941 सचन्द्रार्केत्यादित्रिभिः । सर्वत्र तेन सहेति तुल्ययोगे इति बहुव्रीहिः । सहस्य सः ॥ ३२ ॥
151942

151943 ससागरगिरिद्वीपदिगन्तरमहार्णवाः ।
151944 सलोकान्तरलोकेशक्रियाकालकलाक्रमाः ॥ ३३ ॥

151945
151946 सस्वर्गभूमिपातालततलोकान्तरान्तराः |
151947 सभावाभाववैधुर्यजरामरणसंभ्रमाः || ३४ ||
151948
151949 एवं नाम तदा राम भूतपञ्चकरूपिणा |
151950 मया प्रविहृतं तत्र तैलोक्यनलिनोदरे || ३५ ||
151951
151952 एवमाकाशधारणया आकाशभावे तद्विलासभेदानुभवा अप्यूह्या
151953 इत्याशयेनोपसंहरति - एवं नामेति || ३५ ||
151954
151955 रसः पीतोऽनुभूतश्च क्ष्माजलानिलतेजसाम् |
151956 मूलजालेन वृक्षाणां प्राणिनां वसता मया || ३६ ||
151957
151958 कथं कथं प्रविहृतं तत्प्रपञ्चयति - रसः पीत इत्यादिना | प्राणिनां
151959 भूजलानिलतेजःसमवायरूपाणां वृक्षाणां देहे वसता मया मूलजालेन भौमो
151960 रसः पीतः || ३६ ||
151961
151962 रसायनघनाङ्गेषु चन्दनद्रवशोभिषु |
151963 लुठितं चन्द्रबिम्बेषु तुषारशयनेष्विव || ३७ ||
151964
151965 रसायनममृतं तद्घनाङ्गेषु चन्दनद्रववच्छैत्यशौक्ल्यादिगुणशोभिषु || ३७
151966 | |
151967
151968 सर्वर्तुवनजालेषु नानामोदानि दिक्ष्वलम् |
151969 भुक्तानि पुष्पजालानि प्रोच्छिष्टं ददताऽलये || ३८ ||
151970
151971 नानामोदानि पुष्पजालानि भुक्तान्यनुभूतानि | स्वभोगप्रोच्छिष्टं मकरन्दं अलये
151972 ददता मया || ३८ ||
151973
151974 ततोन्नतासु मृद्वीषु स्वास्तीर्णास्वम्बराजिरे |
151975 सुप्तं शुभ्राभ्रमालासु नवनीतस्थलीष्विव || ३९ ||
151976
151977 अम्बराजिरे आकाशचत्वरे स्वास्तीर्णासु शुभ्राभ्रशय्यासु सुप्तम् || ३९ ||
151978
151979 सुमनःपत्रमृदुषु नीललक्ष्मीविलासिषु |
151980 सुरसिद्धाङ्गनाङ्गेषु दूरास्तस्मरवासनम् || ४० ||
151981
151982 सुमनसां शिरीषादिपुष्पाणां पत्रमिव मृदुषु सुरसिद्धाङ्गनाङ्गेषु | किं
151983 कामुकेन त्वया सुप्तं नेत्याह - दूरास्तेति || ४० ||
151984
151985 कृतः कुमुदकह्लारकमले नलिनीवने |
151986 कोमलः कलहंसीभिर्लीलाकलकलारवः || ४१ ||
151987
151988 सरत्सरिच्छिरासारा मूलभूमण्डलान्विताः |
151989 अङ्गैरूढाः स्फुरद्भूता लोमालय इवाद्रयः || ४२ ||
151990
151991 किं च ब्रह्माण्डभूतेन मया सरन्तीनां सरिच्छिरासाराणां
151992 मूलभूतभूमण्डलेनान्विताः स्फुरद्भूता भुवनावलयः अङ्गैरूढाः अद्रयो
151993 लोम्नामालयः पङ्क्तय इवाङ्गैरूढाः || ४२ ||
151994
151995 खाद्रयः प्रथिता दीर्घसरित्सूत्रैः समुद्रकैः |
151996 आदर्शैरिव विश्रान्तमङ्गेषु प्रतिबिम्बिभिः || ४३ ||

151997
151998 ये खादयो जगति प्रथितास्तैर्दीर्घसरित्सूत्रैः समुद्रकैश्च सह मम अङ्गेषु
151999 प्रतिबिम्बसहितैरादर्शैरिव विश्रान्तं स्थितमित्यर्थः || ४३ ||
152000
152001 भूतसर्गेण विश्रान्तं सिद्धविद्याधरादिना |
152002 मद्देहे चेतितेनेव मक्षिकायौकरूपिणा || ४४ ||
152003
152004 सिद्धविद्याधरादिना भूतस्रगेण प्राणिनिकायेन तु मद्देहे चेतितेन परिज्ञात्वेन
152005 मक्षिकायौकरूपिणेन विश्रान्तम् || ४४ ||
152006
152007 मत्प्रसादेन मुदितैर्लब्धमर्कादिभिर्वपुः- |
152008 कृष्णरक्तसितापीतहरितैर्हरितैरिव || ४५ ||
152009
152010 तर्हि किं तैर्मक्षिकायूकावद्धीतैः प्रतिक्षणं निवार्यमाणैरुद्विग्नैरत्यास्थितं
152011 नेत्याह - मत्प्रसादेनेति | वपुःकृष्णेत्यादिसमस्तपदं बोध्यम् | वपुषा
152012 कृष्णरक्तादिवर्णैर्हरितैः स्निग्धैर्वृक्षैरिव स्थिरैः
152013 पेपीयमानैर्मोदमानैश्चेत्यर्थः || ४५ ||
152014
152015 समुद्रमुद्रया सप्तद्वीपसप्तात्मरूपया |
152016 संस्थया स्थापिता भूमिः प्रकोष्ठे वलयोपमा || ४६ ||
152017
152018 सप्तद्वीपैः सप्तविधात्मरूपया संस्थया संनिवेशेन प्रसिद्धा भूमिर्मया
152019 प्रकोष्ठे वलयोपमा स्थापिता || ४६ ||
152020
152021 विद्याधरपुरन्ध्रीणां परामृष्टाङ्गयष्टिना |
152022 अदृष्टेनैव विहितः पुलकोल्लास आत्मना || ४७ ||
152023
152024 ताभिरदृष्टेनैवात्मना मया तासां स्वानन्देन पुलकोल्लासो विहितः || ४७ ||
152025
152026 सरिच्छिरामलस्फाररसानि सुषिराणि च |
152027 जगन्त्येवास्थिजालानि ममासन्संस्थितानि च || ४८ ||
152028
152029 सरिल्लक्षणशिराभिरमलस्फारान्तर्गतरसानि सुषिराणि च्छिद्रवन्ति च पर्वतादिजगन्ति
152030 मम देहे अस्थिजालानि चान्मांसादीनि च संस्थितानि || ४८ ||
152031
152032 असंख्यैर्व्योममातङ्गैश्चन्द्रार्कचलचामरैः |
152033 उदुम्बरान्तर्मशकैरिव मद्धृदये स्थितम् || ४९ ||
152034
152035 व्योममातङ्गैरैरावतादिभिः | मद्धृदये हृदयाकाशे || ४९ ||
152036
152037 सर्वपातालपादेन भूतलोदरधारिणा |
152038 खमूर्ध्नापि तदा राम न त्यक्ताथ पराणुता || ५० ||
152039
152040 एवमतिविस्तृतब्रह्माण्डरूपेणापि मया परमसूक्ष्मचिन्मात्रस्वभावता न
152041 हापितेत्याह - सर्वेति || ५० ||
152042
152043 दिक्षु सर्वासु सर्वत्र सर्वदासर्वकारिणा |
152044 सर्वात्मनाप्यसर्वेण शून्यरूपेण संस्थितम् || ५१ ||
152045
152046 शून्यरूपेण सर्वद्वैतशून्यचिन्मात्ररूपेण || ५१ ||
152047
152048 किंचित्त्वं सदकिंचित्त्वं साकृतित्वं निराकृति |

152049 अनुभूतं सजाढ्यं च चेतनत्वमलं मया ॥ ५२ ॥
152050

152051 तदा परिच्छेदापरिच्छेदादिसर्वविरुद्धधर्माणां स्वात्मनि समुच्चयोऽनुभूत
152052 इत्याह - किंचित्त्वमिति ॥ ५२ ॥
152053

152054 मैनाकमुग्धपीनस्य सागरस्यावनिं प्रति ।
152055 सन्ति सर्गसहस्राणि स्थाणुभूतान्यथो मया ॥ ५३ ॥
152056

152057 समुद्रादिकुक्षिदेशेष्वपि कलधौतशिलायामिवानन्तानि जगन्ति सन्ति तान्यपि
152058 मयानुभूतानीत्याह - मैनाकेति । मैनाकवदन्तर्निलीनैः
152059 पर्वतशिलादिभिर्मुग्धस्य पीनस्यातिविस्तृतय च सागरस्य अवनिं प्रति प्रतिदेशं
152060 स्थाणुभूतानि सर्गसहस्राणि सन्ति तानि च मया अथो अनुभूतानीति
152061 विपरिणामेनानुषज्यते ॥ ५३ ॥
152062

152063 जगन्त्यङ्गे मयोढानि गूढानि प्रकटान्यपि ।
152064 प्रतिबिम्बपुराणीव मुकुरेणाजडात्मना ॥ ५४ ॥
152065

152066 एवं जलानिलाग्नित्वं भूमित्वं खात्मना मया ।
152067 कृतं चितेव स्वप्नेषु बत मायाविजृम्भितम् ॥ ५५ ॥
152068

152069 स्वप्नेषु प्रसिद्धया चितेव कृतम् ॥ ५५ ॥
152070

152071 अपि तस्यामवस्थायां जगन्त्याकाशकोशके ।
152072 मया दृष्टान्यसंख्यानि परमाणुकणं प्रति ॥ ५६ ॥
152073

152074 परमाणु प्रति व्योम परमाणु प्रति स्थितम् ।
152075 सर्गवृन्दं यथा स्वप्ने स्वप्नान्तरयुतं पुरम् ॥ ५७ ॥
152076

152077 प्रतिपरमाणु एवं विस्तृतं व्योम स्थितं तत्र संचरत् प्रतिपरमाणु सर्गवृन्दं
152078 स्थितम् ॥ ५७ ॥
152079

152080 स्वमेवाहमभूवं भूमण्डलं द्वीपकुण्डलम् ।
152081 सर्वात्मनापि न व्याप्तं किंचनापि मया क्वचित् ॥ ५८ ॥
152082

152083 स्वं आध्यासिकमात्मरूपमेवाभूवम् । एवं सर्वजगदात्मभूतेनापि मया
152084 क्वचित्किंचनापि न व्याप्तं न स्पृष्टम् । असङ्गाद्वयत्वादित्यर्थः ॥ ५८ ॥
152085

152086 समुत्पादयताशेषं लतातरुतृणाङ्कुरम् ।
152087 भूतलेन रसाः कृष्टा मयार्थेनैव पुंभृताम् ॥ ५९ ॥
152088

152089 पुंभृतां पुरुषादिशरीरभृतामर्थेनैवाशेषं लतातरुतृणाङ्कुरं
152090 समुत्पादयता मया वृष्टिनिपतिता रसा भूतलेन कृष्टा निपीताः ॥ ५९ ॥
152091

152092 अवदाततमे युद्धबोधकालमुपेयुषि [शुद्धबोधकालमये मयि इति पाठः
152093 । ] ।
152094 जगल्लक्षाणि तिष्ठन्ति न तिष्ठन्ति च कानिचित् ॥ ६० ॥
152095

152096 युद्धसदृशं सर्वद्वैतसंहारकं बोधकालं उपेयुषि मयि जगल्लक्षाणि
152097 तिष्ठन्ति न तिष्ठन्ति च ॥ ६० ॥
152098

152099 चिति यास्तु चमत्कारं चमत्कुर्वन्ति यत्स्वतः ।
152100 स्वचमत्कृतयोऽन्तस्थास्तदेताः सृष्टिदृष्टयः ॥ ६१ ॥

152101
152102 केन रूपेण तिष्ठन्ति केन च न तिष्ठन्तीति चेच्चिच्चमत्कारमात्ररूपेण तिष्ठन्ति
152103 तदन्यरूपेण न तिष्ठन्तीत्याह - चितीति द्वाभ्याम् । चिति या अन्तस्थाः
152104 स्वचमत्कृतयः स्वसत्तास्फूर्तिलक्षणं चमत्कारं यत्स्वतश्चमत्कुर्वन्ति
152105 जगत्यारोप्य प्रकटयन्ति तत्तेन रूपेण एताः सर्गदृष्टयः सन्तीत्यर्थः ॥ ६१ ॥
152106
152107 अनुभूतं कृतं कष्टं यावत्क्वचन किंचन ।
152108 परमार्थचमत्कारादृते नेहोपलभ्यते ॥ ६२ ॥
152109
152110 प्रत्येकं विश्वरूपात्मा सर्वकर्ता निरामयः ।
152111 प्रबुद्धः शुद्धबोधात्मा सर्वं ब्रह्मात्मकं यतः ॥ ६३ ॥
152112
152113 अत एवाध्यारोपे प्रत्येकं स्वसत्तार्पणाद्विश्वरूपात्मापवादेन प्रबुद्धस्तु
152114 शुद्धबोधात्मैवेत्यर्थः ॥ ६३ ॥
152115
152116 सर्वः सर्वत्र सर्वात्मा सर्वगः सर्वसंश्रयः ।
152117 एतत्प्रबुद्धविषयमप्रबुद्धं न वेद्म्यहम् ॥ ६४ ॥
152118
152119 अत एव एकैकवस्त्वन्तरे ब्रह्मणि सर्वजगदध्यासात्सर्वः सर्वत्र सर्वात्मा च सर्वगः
152120 सर्वसंश्रय इत्येतत्प्रबुद्धविषयं जगद्रूपं पर्यवस्यति । अप्रबुद्धगम्यं तु
152121 रूपं न प्रबुद्धैर्द्रष्टुं शक्यमित्याह - अप्रबुद्धमिति ॥ ६४ ॥
152122
152123 आकाशकोशविशदात्मनि चित्स्वरूपे येयं सदा कचति सर्गपरम्परेति ।
152124 सान्तस्तदेव किल ताप इवान्तरूष्मा भेदोपलम्भ इति नास्ति सदस्त्यनन्तम् ॥ ६५ ॥
152125
152126 तथा चाद्वये चिदात्मनि विदुषां सर्वत्र सर्वात्मताकल्पना विकल्पमात्रं न
152127 चिद्व्यतिरिक्तं वस्तु किंचिदस्तीत्याह - आकाशेति । सा अन्तस्तदेव । यथा
152128 तापस्यान्तरूष्मेति प्रयोगे तापपदस्य तदन्तःपदस्योष्मपदस्य च न पृथगर्थोऽस्ति
152129 किंतु वाक्याद्विकल्पमात्रं तद्वद्भेदोपलम्भोऽपीति न जगदस्ति किंत्वनन्तं
152130 सदस्तीत्यर्थः ॥ ६५ ॥
152131
152132 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० निर्वाणप्रकरणे उ० पाषा०
152133 परमार्थसर्गयोरैक्यप्रतिपादनं नाम द्विनवतितमः सर्गः ॥ ९२ ॥
152134
152135 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशेनिर्वाणप्रकरणे उत्तरार्धे
152136 परमार्थसर्गयोरैक्यप्रतिपादनं नाम द्विनवतितमः सर्गः ॥ ९२ ॥
152137
152138 त्रिनवतितमः सर्गः ९३
152139
152140 श्रीवसिष्ठ उवाच ।
152141
152142 अथैवंरूपसंवित्तेः परावृत्य प्रयत्नतः ।
152143 तमम्बरकुटीकोशदेशमागतवानहम् ॥ १ ॥
152144
152145 वसिष्ठकुठ्यां ध्यानस्थसिद्धस्येह निरीक्षणम् ।
152146 पातः कुट्युपसंहारात्स्वोदन्तोक्तिश्च वर्ण्यते ॥
152147
152148 अथ धारणासिद्धजगद्देहदर्शनानन्तरमेवंरूपाया उक्तरूपायाः
152149 कौतुकदर्शनसंवित्तेः सकाशात्परावृत्याहं तत्प्राक्तनं
152150 स्वसमाधिस्थानमम्बरकुटीकोशदेशमागतवान् ॥ १ ॥
152151
152152 यावत्तत्र न पश्यामि स्वदेहं क्वचन स्थितम् ।

152153 पश्यामि केवलं सिद्धं कमप्यन्यं पुरः स्थितम् ॥ २ ॥
152154
152155 यावत्साकल्येनान्विष्टमपि क्वचन स्वदेहं न पश्यामि ॥ २ ॥
152156
152157 उपविष्टं समाधाननिष्ठमिष्टं पदं गतम् ।
152158 सौम्योदयमिवादित्यं दग्धेन्धनमिवानलम् ॥ ३ ॥
152159
152160 इष्टं परमप्रेमास्पदं निरतिशयानन्दब्रह्मपदं गतम् । तं वर्णयति -
152161 सौम्योदयमिवेत्यादिना ॥ ३ ॥
152162
152163 बद्धपद्मासनं शान्तं समाधाननिरिङ्गनम् ।
152164 गुल्फद्वितयमध्यस्थवृषणं विषयातिगम् ॥ ४ ॥
152165
152166 समाधानेनेष्टविषये चित्तस्थैर्येण निरिङ्गनं निश्चलम् ॥ ४ ॥
152167
152168 मृष्टसौम्यसमाभोगस्कन्धबन्धुरकन्धरम् ।
152169 सुस्थिरोदारविश्रान्तस्फारकस्थितिसुन्दरम् ॥ ५ ॥
152170
152171 समं कायशिरोग्रीवं धारयन् इति भगवदुक्तध्यानाङ्गदेहस्थितिलक्षणान्यस्याह
152172 - मृष्टेति । भस्मत्रिपुण्ड्ररेखामृष्टाभ्यां सौम्याभ्यां
152173 गाम्भीर्यरम्याभ्यां समाभोगाभ्यां स्कन्धाभ्यां बन्धुरा कन्धरा ग्रीवा
152174 यस्य । सुस्थिरस्य उदारे वस्तुनि विश्रान्तेन मनसा स्फारस्य प्रसन्नवदनस्य कस्य
152175 शिरसः स्थित्या सुन्दरम् ॥ ५ ॥
152176
152177 नाभीनिकटगोत्तानपाणिद्वितयदीप्तिभिः ।
152178 हृदयाम्भोजतेजोभिर्बहिष्ठैरिव भासितम् ॥ ६ ॥
152179
152180 पाणिद्वितयस्य दीप्तिभिः फुल्लपद्मद्वयसदृशशोभाभिः । हृदयाम्भोजेति
152181 तासामेवोत्प्रेक्षा ॥ ६ ॥
152182
152183 श्लिष्टपक्ष्मेक्षणं क्षीणसर्वेक्षं स्वच्छतां गतम् ।
152184 सरो निमीलिताम्भोजमिव सुप्तं दिनात्यये ॥ ७ ॥
152185
152186 क्षीणाः सर्वा ईक्षा बाह्येन्द्रियव्यापारा यस्य । दिनात्यये रात्रौ ॥ ७ ॥
152187
152188 अविक्षुभितमाशान्तमन्तःकरणकोटरम् ।
152189 दधानं धीरया वृत्त्या शान्तोत्पातमिवाम्बरम् ॥ ८ ॥
152190
152191 अपश्यता निजं देहं तं मुनिं पश्यता पुरः ।
152192 इदं मया तदा तत्र चिन्तितं चारुचेतसा ॥ ९ ॥
152193
152194 इदं वक्ष्यमाणं चिन्तितम् ॥ ९ ॥
152195
152196 अयं कश्चिन्महासिद्धः संप्राप्तोऽस्मिन्दिगन्तरे ।
152197 विचार्याहमिवैकान्तं विश्रामार्थी महाम्बरम् ॥ १० ॥
152198
152199 पूर्वमहमिवैकान्तविश्रामार्थी ॥ १० ॥
152200
152201 समाधियोग्यमेकान्तं लभेयेतीह चिन्तया ।
152202 कुटी दृष्टेयमेतेन सत्यसंकल्पशालिना ॥ ११ ॥
152203
152204 समाधियोग्यमेकान्तं स्थलं लभेय इति चिन्तया इह संप्राप्तः । एतेन इयं कुटी

152205 स्वध्यानयोग्या दृष्टा ॥ ११ ॥
152206
152207 मदागमनमेतेन ततोऽचिन्तयता चिरम् ।
152208 तं स्वदेहं शवीभूतमपास्येह कृता स्थितिः ॥ १२ ॥
152209
152210 तत एतेन चिरं मदुपेक्षणाच्छवीभूतं तत्र स्थितं स्वदेहं वसिष्ठदेहं
152211 दृष्ट्वा तत्र पुनर्मदागमनमचिन्तयता अजानता तं देहमपास्य अन्यतः क्षिप्त्वा
152212 इह कुट्यां स्थितिः कृता ॥ १२ ॥
152213
152214 तदिहास्तमहं यामि स्वं लोकमिति निश्चयम् ।
152215 यावद्गन्तुं प्रवृत्तोऽस्मि तावत्संकल्पनक्षयात् ॥ १३ ॥
152216
152217 तन्मम शरीरमिह अस्तं नष्टमतोऽहमातिवाहिकदेहेनैव स्वं सप्तर्षिलोकं यामि इति
152218 निश्चयं कृत्वा यावद्गन्तुमहं प्रवृत्तोऽस्मि तावदित्यर्थः ॥ १३ ॥
152219
152220 सा निवृत्ता कुटी तत्र संपन्नं व्योम केवलम् ।
152221 स सिद्धोऽपि निराधारः पतितोधः समाधिमान् ॥ १४ ॥
152222
152223 स्वप्नसंकल्पसंशान्तौ स्वप्नसंकल्पपत्तनम् ।
152224 यदा सा सुकुटी नष्टा मत्संकल्पोपशान्तितः ॥ १५ ।
152225
152226 पत्तनम् इवेति शेषः । पूर्वस्य परस्य चायं कुटीनाशस्य दृष्टान्तः ॥ १५ ॥
152227
152228 स पपात ततो ध्यानी जलोत्पीड इवाम्बुदात् ।
152229 खादिवानिलनुन्नोऽब्द इन्दुबिम्बमिव क्षये ॥ १६ ॥
152230
152231 जलोत्पीडो जलासारः । क्षये प्रलयकाले इन्दुब्बिम्बमिव ॥ १६ ॥
152232
152233 वैमानिक इवापुण्यश्छिन्नमूल इव द्रुमः ।
152234 खात्यक्त इव पाषाणः स पपात ततोऽवनौ ॥ १७ ॥
152235
152236 अपुण्यः क्षीणपुण्यः । अवनौ वक्ष्यमाणकाञ्चनावनौ ॥ १७ ॥
152237
152238 अहं यावदियं तावत्कुटिकास्त्विति कल्पने ।
152239 क्षीणे कुटीक्षये जाते स सिद्धः पतितः क्षणात् ॥ १८ ॥
152240
152241 अहं यावदिह स्थास्यामि तावदियं कुटिका अस्तु तिष्ठतु इति एवंरूपे
152242 मदीयसत्यसंकल्पने गमनसंकल्पने क्षीणे सति ॥ १८ ॥
152243
152244 पतता तेन सिद्धेन ततः सौजन्यकौतुकः ।
152245 मनसैवाहमगनं नभसो वसुधातलम् ॥ १९ ॥
152246
152247 तेन सिद्धेन सह अहं मनसा तेनातिवाहिकदेहेनैव वसुधातलमगमम् ॥ १९ ॥
152248
152249 सोऽपतत्पवनस्कन्धवलनावर्तवृत्तिभिः ।
152250 सप्तद्वीपसमुद्रान्ते गीर्वाणरमणावनौ ॥ २० ॥
152251
152252 प्रवहादिपवनस्कन्धानां बलनं परिवर्तनं
152253 तत्प्रयुक्ताभिरावर्तसदृशवृत्तिभिर्यथा आवर्ते भ्रमज्जलमधः प्रविशति
152254 तद्वदित्यर्थः । गीर्वाणानां रमणाधिकरणे काञ्चनावनौ ॥ २० ॥
152255
152256 प्राणापानोर्ध्वगामित्वात्खाद्यथास्थितमेव सः ।

152257 सृष्टपूर्वोर्ध्वमूर्धोर्व्यां बद्धपद्मासनोऽपतत् ॥ २१ ॥
152258
152259 उर्व्यां सृष्टः प्रथमं निवेशितः पूर्वः पदभागो येन
152260 तथाविधश्चासावूर्ध्वमूर्धा च तथाविधः सन् । तत्कुतः । प्राणेनापानस्योर्ध्वं
152261 आकर्षणेनोर्ध्वगामित्वात्कूपेऽवतरतः कुम्भस्य रज्ज्वेव तुम्बस्य वृन्तेनेव
152262 चोर्ध्वं प्राणापानाभ्यां विष्टब्धत्वेनाधःशिरस्कत्वाघटनादित्यर्थः ॥ २१ ॥
152263
152264 न प्रबुद्धो बभूवासौविचरं तमचेतनः ।
152265 पाषाणदेह इव ता तूलात्मेवैव वा लघुः ॥ २२ ॥
152266
152267 तं तथाविधं विचरं चलनं प्राप्याप्यसौ समाधेर्न प्रबुद्धो बभूव ।
152268 यतश्चित्तस्यान्यत्र दृढासक्तेरचेतनप्रायः । तर्हि अतिदूरात्पतनेन भग्नगात्रः
152269 कुतो नाभूत्तत्राह - पाषाणेति । वज्रपाषाणदेह इव योगबलाद्दृढस्तूलपिण्ड
152270 इव लघुरेव वा ॥ २२ ॥
152271
152272 मया तदवबोधार्थमथ यत्नवता तदा ।
152273 कृत्वा जलदतां व्योम्नि वृष्टं गर्जितमूर्जितम् ॥ २३ ॥
152274
152275 बोधार्थं समाधेर्व्युत्थापनार्थम् । जलदतां मेघतां कृत्वा वृष्टम् ।
152276 ऊर्जितं बलवत्तरं च गर्जितम् ॥ २३ ॥
152277
152278 करकाशनिपातेन तेन तस्मिन्दिगन्तरे ।
152279 मयूरं प्रावृषेवामुं बुद्ध्या बोधितवानसौ ॥ २४ ॥
152280
152281 असौ मेघभूतोऽहं प्रावृषा मयूरमिवामुं सिद्धं बुद्ध्या स्वबुद्धिकौशलेन
152282 बहिराकृष्टया तद्बुद्ध्या वा बोधितवान् समाधेर्व्युत्थापितवान् ॥ २४ ॥
152283
152284 बभूवाभासिताङ्गश्रीर्विकासितविलोचनः ।
152285 धारानिकरफुल्लात्मा प्रावृषीवाम्बुजाकरः ॥ २५ ॥
152286
152287 प्रबुद्धं संप्रशान्तायां दृष्टौ तमहमग्रतः ।
152288 अपृच्छं स्वच्छया वृत्या निवृत्तं परमार्थतः ॥ २६ ॥
152289
152290 परमार्थतः परमार्थस्थितिहेतोः समाधेः ॥ २६ ॥
152291
152292 क्व स्थितोऽसि करोषीदं किं च भो मुनिनायक ।
152293 कस्त्वं कस्मादलं दूरान्न भ्रंशमपि चेतसि ॥ २७ ॥
152294
152295 किमपृच्छस्तदाह - क्वेति । दूराद्भ्रंशमधःपातमपि कस्मान्न चेतसि न
152296 संजानासि ॥ २७ ॥
152297
152298 इत्युक्तो मामसौ प्रेक्ष्य संस्मृत्य प्राक्तनीं गतिम् ।
152299 उवाच वचनं चारु चातको जलदं यथा ॥ २८ ॥
152300
152301 सिद्ध उवाच ।
152302
152303 प्रतिपालय मे यावत्स्ववृत्तान्तं स्मराम्यहम् ।
152304 कथयिष्यामि ते पश्चात्पाश्चात्यं वृत्तमात्मनः ॥ २९ ॥
152305
152306 प्रतिपालय प्रतीक्षस्व ॥ २९ ॥
152307
152308 इत्युक्त्वा चिन्तयित्वाशु स यथा वृत्तमक्षतम् ।

152309 स्मृतवान्सायमह्नीव समाचरितमात्मनः ॥ ३० ॥
152310
152311 वृत्तं पूर्वस्ववृत्तान्तं जन्मान्तरवृत्तान्तैः सह । अक्षतं समग्रम् । अह्नि
152312 वृत्तमात्मनश्चरितं यथा जनः सायं स्मरति तद्वत् ॥ ३० ॥
152313
152314 मामथोवाच वचनं चारु चन्द्रांशुशीतलम् ।
152315 आह्लादनमनिन्द्यं च निरवद्यं सुखोदयम् ॥ ३१ ॥
152316
152317 वक्ष्यमाणवचनस्य विवेकवैराग्यप्रधानत्वाच्चार्वित्यादिविशेषणैः प्रशंसा ॥ ३१
152318 । ।
152319
152320 सिद्ध उवाच ।
152321
152322 अधुना त्वं मया ब्रह्मन्परिज्ञातोऽभिवादये ।
152323 अतिक्रमोऽयं क्षन्तव्यः स्वभावो हि सतां क्षमा ॥ ३२ ॥
152324
152325 अतिक्रमः प्रथमदर्शनेऽनभिवादनलक्षणोऽपराधः ॥ ३२ ॥
152326
152327 मुने चिरमहं भ्रान्तो देवोपवनभूमिषु ।
152328 भोगामोदविमोहेषु षट्पदः पद्मिनीष्विव ॥ ३३ ॥
152329
152330 तत्र क्व स्थितोऽसीति प्रश्नस्य
152331 प्रत्यक्षदृष्टसमाधिस्थानकुटीविषयत्वायोगात्तत्पूर्वतनाधारभेदान्
152332 जातिस्मारत्वं ख्यापयन् जन्मान्तरसाधारणानाह - मुने इति ॥ ३३ ॥
152333
152334 दृश्यनद्यामथो चित्तजलकल्लोलहेलया ।
152335 चक्रावर्तोह्यमानेन मयोद्विग्नेन चिन्तितम् ॥ ३४ ॥
152336
152337 चित्तजलकल्लोलहेलया स्वप्नवद्दृश्यनद्यामुह्यमानेन अत एव चिरकालेन विचारोदये
152338 संसारादुद्विग्नेन वक्ष्यमाणं चिन्तितम् ॥ ३४ ॥
152339
152340 संसारसागरे दृश्यकल्लोलैरहमाकुलः ।
152341 कालेनोद्वेगमायातश्चातकोऽवग्रहे यथा ॥ ३५ ॥
152342
152343 अवग्रहे वृष्टिप्रतिबन्धे ॥ ३५ ॥
152344
152345 संविन्मात्रैकसारेषु रम्यं भोगेषु नाम किम् ।
152346 अवतिष्ठे गतोद्वेगसंविद्व्योम्न्येव केवलम् ॥ ३६ ॥
152347
152348 किं चिन्तितं तदाह - संविन्मात्रेति । भोगेषु किं नाम रम्यम् । यदि तत्र
152349 संविदात्मना प्रथमानं सुखमेव रम्यं तदतिरिक्तानां तत्साधनानां
152350 दुःखस्वरूपत्वेन तन्मात्रसारत्वात्तर्हि दुःखांशं सर्व विहाय सारभूते
152351 सुखसंविद्व्योम्न्येव केवलमवतिष्ठे किमन्येनासारेणेत्यर्थः ॥ ३६ ॥
152352
152353 शब्दरूपरसस्पर्शगन्धमात्राद्दते परम् ।
152354 नेह किंचन नामास्ति किमेतावत्यहं रमे ॥ ३७ ॥
152355
152356 न ह्यपरिच्छिन्नं सुखं विहाय परिगणिते परिच्छिन्ने असुखे रमणमुचितमित्याह ##-
152357
152358 चिन्मात्राकाशमेवैतत्सर्वं चिन्मात्रमेव वा ।
152359 तत्किमत्रासदाकारे रमे नष्टमतिर्यथा ॥ ३८ ॥
152360

152361 एतत् शब्दादिसर्वं चिन्मात्रे स्वतः सति तद्यतिरेकेण विभाव्यमानमाकाशं
152362 शून्यमेव तदव्यतिरेकदर्शने चिन्मात्रमेव पर्यवस्यति।
152363 तदेवमुभयथाप्यसदाकारे अत्र शब्दादौ किं रमे। नष्टमतिरुन्मत्तो यथा
152364 तथेत्यर्थः॥ ३८॥
152365
152366 विषया विषवैषम्या वामाः कामविमोहदाः।
152367 रसाः सरसवैरस्या लुठन्नेषु न को हतः॥ ३९॥
152368
152369 विषयाः शब्दादयो विषवन्मरणोन्मादादिवैषम्यहेतवः। वामाः स्त्रियः। रसाः
152370 रागाः सरसस्यापि पुंसो वैरस्यहेतवः। एषु लुठन् को न हतः।
152371 कुरङ्गमातङ्गादीनामेकैकासक्त्यापि वधबन्धनादिदर्शनादित्यर्थः॥ ३९॥
152372
152373 जीर्णा जीवितजम्बालजरच्छफरिकामतिः।
152374 कायं द्रुतगताऽऽदातुं जरेच्छति बृहद्बकी॥ ४०॥
152375
152376 एवं कायेऽप्यासक्तिर्नोचितेत्याह - जीर्णेति। द्रुतगता जरा बृहद्बकी जीवितजम्बाले
152377 बृहतीयं शफरिका लब्धेति मतिर्यस्यास्तथाविधा सती कायमादातुंन्
152378 ग्रसितुमिच्छति॥ ४०॥
152379
152380 कायोऽयमचिरापायो बुद्‌बुदोऽम्बुनिधाविव।
152381 स्फुरन्नेव पुरोन्तर्द्धिं याति दीपशिखा यथा॥ ४१॥
152382
152383 विविधाकुलकल्लोला चक्रावर्तविधायिनी।
152384 मृतिजन्मबृहत्कूला सुखदुःखतरङ्गिणी॥ ४२॥
152385
152386 एवं जीवितेऽप्याशा नोचितेति तन्नदीत्वेन वर्णयति - विविधेत्यादिना। विविधा आकुला
152387 विक्षेपा एव कल्लोला यस्याः॥ ४२॥
152388
152389 यौवनोल्लासकलिला जराधवलफेनिला।
152390 काकतालीययोगेन संपन्नसुखबुद्‌बुदा॥ ४३॥
152391
152392 कलिला पङ्काविला॥ ४३॥
152393
152394 व्यवहारमहावाहलेखाजडरवाकुला।
152395 रागद्वेषघनोल्लासा भूतलालोलदेहिका॥ ४४॥
152396
152397 व्यवहारलक्षणया महाप्रवाहलेखया जडरवैर्मूर्खप्रलापैः
152398 लडयोरभेदात्तल्लक्षणैर्जलरवैराकुला। रागद्वेषलक्षणैर्घनैर्मेघैरुल्लसति
152399 वर्धते तथाविधा॥ ४४॥
152400
152401 लोभमोहमहावर्ता पातोत्पातविवर्तनी।
152402 हा तप्ता जीविताख्येयं नदी नदनशीतला॥ ४५॥
152403
152404 हा इति खेदे। नदनंन् नदनः शब्दमात्रं तेन शीतला वस्तुतस्तापत्रयतप्ता वहतीति
152405 संबन्धः॥ ४५॥
152406
152407 अपूर्वाण्युपगच्छन्ति तथा पूर्वाणि यान्त्यलम्।
152408 संसारसरिदम्बूनि संगतानि धनानि च॥ ४६॥
152409
152410 संसारसरिदम्बुभूतानि संगतानि इष्टपुत्रमित्रादिसंगमाः। धनानि च
152411 पूर्वाण्यपयान्ति अपूर्वाणि चोपगच्छन्ति॥ ४६॥
152412

152413 प्रवृत्ता ये निवर्तन्ते तैरलं हतभावैकैः ।
152414 अपूर्वा ये प्रवर्तन्ते तेष्वथास्थेह कीदृशी ॥ ४७ ॥
152415
152416 तत्र गच्छत्स्वागच्छत्सु च न शोकहर्षावुचितावित्याह - प्रवृत्ता इति ॥ ४७ ॥
152417
152418 सर्वस्याः सरितो वारि प्रयात्यायाति चाकरात् ।
152419 देहनद्याः पयस्त्वायुर्यात्येवायाति नो पुनः ॥ ४८ ॥
152420
152421 आयुषि धनादिवैलक्षण्यमाह - सर्वस्या इति । आकराद्गिरिमेघादेः ॥ ४८ ॥
152422
152423 शतशः परिवर्तन्ते प्रतिपिण्डं क्षणं प्रति ।
152424 कुलालचक्रकाभावा इव भावा भवाम्बुधौ ॥ ४९ ॥
152425
152426 प्रतिपिण्डं प्रतिदेहं प्रतिक्षणं च भोग्या भावाः कुलालचक्रकेष्वारूढा
152427 घटशरावादिभावा इव ॥ ४९ ॥
152428
152429 चरन्ति चतुराश्चौरा विषमा विषयारयः ।
152430 हरन्ति भावसर्वस्वं जागर्मि स्वपिमीह किम् ॥ ५० ॥
152431
152432 भावो विवेकस्तल्लक्षणं सर्वस्वम् ॥ ५० ॥
152433
152434 आयुषः खण्डखण्डाश्च निपतन्तः पुनः पुनः ।
152435 न कश्चिद्वेत्ति कालेन क्षतानि दिवसान्यहो ॥ ५१ ॥
152436
152437 इदमद्य तथेदं च तथेदमिदमस्य मे ।
152438 एवं कलनया लोको गतं प्राप्तं न वेत्त्यहो ॥ ५२ ॥
152439
152440 गतमायुः प्राप्तं मृत्युं च न वेत्ति ॥ ५२ ॥
152441
152442 भुक्तं पीतमनन्तासु भ्रान्तं च वनभूमिषु ।
152443 दृष्टानि सुखदुःखानि किमन्यदिह साध्यते ॥ ५३ ॥
152444
152445 अन्यत् अपूर्वम् ॥ ५३ ॥
152446
152447 सुखदुःखानुभवनाद्भूयोभूयो विवर्तनात् ।
152448 अनित्यत्वाच्च भावानां स्थिता निष्कौतुका वयम् ॥ ५४ ॥
152449
152450 निष्कौतुका भोगेषु निरुत्कण्ठाः ॥ ५४ ॥
152451
152452 भुक्तानि भोगवृन्दानि दृष्टा चानित्यता भृशम् ।
152453 नोपलभ्यत एवाति विश्रान्तिरिह कुत्रचित् ॥ ५५ ॥
152454
152455 भ्रान्तमुत्तुङ्गशृङ्गासु मेरूपवनभूमिषु ।
152456 लोकपालपुरीषूच्चैः संप्राप्तं किमकृत्रिमम् ॥ ५६ ॥
152457
152458 अकृत्रिमं शाश्वतं किं संप्राप्तम् । न किंचिदित्यर्थः ॥ ५६ ॥
152459
152460 सर्वत्र दारुभिर्वृक्षा मांसैर्भूतानि भूर्मृदा ।
152461 दुःखान्यनित्यता चेति कथमाश्वास्यते वद ॥ ५७ ॥
152462
152463 सर्वभोगेष्वसारतां विविच्य दर्शयति - सर्वत्रेति ॥ ५७ ॥
152464

152465 न धनानि न मित्राणि न सुखानि न बान्धवाः ।
152466 शक्नुवन्ति परित्रातुं कालेनाकलितं जनम् ॥ ५८ ॥
152467
152468 जनो जीमूतजठरजलवद्गिरिकुक्षिषु ।
152469 यात्यन्तःशून्य एवास्तं पांसूपचयपेलवः ॥ ५९ ॥
152470
152471 पांसूपचयः पांसुराशिरिव पेलवः अस्थिरः अदृढश्च जनो गिरिकुक्षिषु
152472 पतितजीमूतजठरजलवद्विषयान्तः आसक्तः सन् क्षने क्षणे हीयमानः
152473 अन्तःपुरुषार्थशून्य एव अस्तं मरणंन् याति । जरठजीमूत इति पाठे
152474 शरन्मेघजलवत् ॥ ५९ ॥
152475
152476 न मे मनोरमाः कामा न च रम्या विभूतयः ।
152477 इदं मत्ताङ्गनापाङ्गभङ्गलोलं च जीवितम् ॥ ६० ॥
152478
152479 क्वेव कस्य कथं नाम कुत आश्वासना मुने ।
152480 अद्य श्वो वाऽऽपदं पापो मृत्युर्मूर्ध्नि नियच्छति ॥ ६१ ॥
152481
152482 किंवृत्तानि कालकर्तृप्रकारनिमित्ताक्षेपकाणि । पापः क्रूरो मृत्युर्यस्मादद्य
152483 श्वो वा मूर्ध्नि आपदं यच्छति प्रापयतीत्यर्थः ॥ ६१ ॥
152484
152485 शरीरं पर्णवद्भ्रंशि जीवितं जीर्णसंस्थिति ।
152486 धीरधीरतया ग्रस्ता रसा नीरसतां गताः ॥ ६२ ॥
152487
152488 नीतं मनोरथैरेव नीरसैर्वाऽऽयुराततम् ।
152489 न मम स्वं चमत्कारकारि किंचिदपीहितम् ॥ ६३ ॥
152490
152491 नीरसैर्भोगैस्तन्मनोरंथैरेव वा आततमायुर्नीतम् । चमत्कारकारि किंचित् स्वं
152492 पुरुषार्थरूपं मम नेहितं न संपादितम् ॥ ६३ ॥
152493
152494 मोहोऽद्य मान्द्यमायातो देहो नेहोपयुज्यते ।
152495 अनास्थैवोत्तमावस्था स्थानास्थैवाधमा स्थितिः ॥ ६४ ॥
152496
152497 अनास्था विषयेषु । स्थानं जीवनं तदास्थैव अधमा स्थितिः ॥ ६४ ॥
152498
152499 आपदापतितैवेयमहो मोहविधायिनी ।
152500 नित्यमित्येव मन्तव्यं सक्तव्यं नेह संसृतौ ॥ ६५ ॥
152501
152502 विवेकिनां संपदादिप्राप्तौ इयं आपदेवापतितेति मन्तव्यम् ॥ ६५ ॥
152503
152504 विधिभिः प्रतिषेधैश्च शाश्वतैरप्यशाश्वतैः ।
152505 यथेष्टं नीयते लोको जलं निम्नोन्नतैरिव ॥ ६६ ॥
152506
152507 विवेकिनः कर्मशास्त्राण्यपि व्यामोहकान्येव भान्तीत्याह - विधिभिरिति ॥ ६६ ॥
152508
152509 विवेकामोदसर्वस्वं चेतः कुसुमकोशतः ।
152510 हृत्वा मूर्च्छां प्रयच्छन्ति विषया विषवायवः ॥ ६७ ॥
152511
152512 यतः कर्मिणामैहिकामुष्मिकविषयाविवेकं हृत्वा अनर्थमेव प्रापयन्तीत्याह ##-
152513
152514 असदेव तथा नाम दृष्टं सत्तामुपागतम् ।
152515 यथाऽसदेव सद्रूपं संपन्नमसदेव सत् ॥ ६८ ॥
152516

152517 वस्तुतस्तु विषयरूपमसदेव तथा सद्बुद्ध्या दृष्टं सत्तामुपागतं न वस्तुतः।
152518 यथा सद्रूपमावरणेनासदेव संपन्नं तथा असदेव विक्षेपेण सत्संपन्नम्।
152519 मायाशक्तेरघटितघटनपटीयस्त्वादित्यर्थः॥ ६८॥
152520
152521 दोलायन्त्योऽवनौ देहं सागरान्सागराङ्गनाः।
152522 यथा धावन्ति धावन्ति जनता विषयांस्तथा॥ ६९॥
152523
152524 तत्र पराग्दृष्टीनां विषयोन्मुखी प्रवृत्तिः स्वाभाविकीत्याह - दोलायन्त्य इति।
152525 कूलद्वयावनौ देहं प्रवाहं दोलावदान्दोलायन्त्यः सागराङ्गना नद्यो यथा
152526 सागरान् धावन्ति॥ ६९॥
152527
152528 धावन्ति विषया&ल्लक्ष्यमुन्मुक्ताश्चित्तसायकाः।
152529 स्पृशन्ति न गुणान्भूयः कृतघ्नाः सौहृदं यथा॥ ७०॥
152530
152531 गुणान् विवेकवैराग्यादीन्मौर्वीश्च॥ ७०॥
152532
152533 उत्पातवायुरेवायुर्मित्राण्येवातिशत्रवः।
152534 बन्धवो बन्धनान्येव धनान्येवाति नैधनम्॥ ७१॥
152535
152536 अतितरां स्नेहासक्त्या शातयन्तीति शत्रवः। नैधनं निधनसाधनम्॥ ७१॥
152537
152538 सुखान्येवातिदुःखानि संपदः परमापदः।
152539 भोगा भवमहारोगा रतिरेव परारतिः॥ ७२॥
152540
152541 आसक्तिजननेनातिदुःखानि। रतिरासक्तिरेव परा अरतिरुद्वेगः॥ ७२॥
152542
152543 आपदः संपदः सर्वाः सुखं दुःखाय केवलम्।
152544 जीवितं मरणायैव बत मायाविजृम्भितम्॥ ७३॥
152545
152546 प्रागुक्तमेव विवृण्वन्नाह - आपद इत्यादिना॥ ७३॥
152547
152548 बहून्कालपरावर्तानिष्टानिष्टान्सुखं मनाक्।
152549 पश्यन्प्रियवियोगांश्च याति जर्जरतां जनः॥ ७४॥
152550
152551 भोगा विषयसंभोगा भोगा एव फणावताम्।
152552 दशन्त्येव मनाक् स्पृष्टा दृष्टा नष्टाः प्रतिक्षणम्॥ ७५॥
152553
152554 फणावतां सर्पाणां भोगाः फणा एव। तदुपपादयति - दशन्त्येवेति॥ ७५॥
152555
152556 आयुर्याति निरायासपदप्राप्तिविवर्जितैः।
152557 उदर्कभङ्गुराकारैः करालैः कष्टचेष्टितैः॥ ७६॥
152558
152559 भोगाशाबद्धतृष्णानामपमानः पदे पदे।
152560 आलानमवलीनानां वन्यानामिव दन्तिनाम्॥ ७७॥
152561
152562 अवलीनानां खानपानोपवासादिना कर्शितानाम्॥ ७७॥
152563
152564 संपदः प्रमदाश्चैव तरङ्गोत्सङ्गभङ्गुराः।
152565 कस्तास्वहिफणाच्छत्रच्छायासु रमते बुधः॥ ७८॥
152566
152567 न केवलं भङ्गुराअपि तु सद्यो मृत्युदाश्चेत्याह - अहिफणेति॥ ७८॥
152568

152569 सत्यं मनोरमाः कामाः सत्यं रम्या विभूतयः |
152570 किंतु मत्ताङ्गनापाङ्गभङ्गलोलं हि जीवितम् || ७९ ||
152571
152572 सत्यशब्दावभ्युपगमवादद्योतकौ | सन्तु नाम मनोरमा इत्यर्थः || ७९ ||
152573
152574 आपातरमणीयेषु रमन्ते विषयेषु ये |
152575 अत्यन्तविरसान्तेषु पतन्ति निरयेषु ते || ८० ||
152576
152577 आपात इन्द्रियसंयोगक्षणः अविचारो वा | पतन्तीति |
152578 विषयव्यसनिनामधर्मावश्यंभावादिति भावः || ८० ||
152579
152580 द्वन्द्वदोषोपरुद्धानि दुःसाध्यान्यस्थिराणि च |
152581 धनान्यभव्यसेव्यानि मम जातु न तुष्टये || ८१ ||
152582
152583 तदुपायधनदोषमाह - द्वन्द्वेति | अर्जनकाले
152584 शीतोष्णक्षुत्पिपासादिद्वन्द्वदोषोपरुद्धानि दुःसाध्यानि च | कष्टेनार्जितान्यपि
152585 राजचोरदुर्व्यसनप्रमादादिभिर्विनाशादस्थिराणि च || ८१ ||
152586
152587 आपातमात्रमधुरा दुःखपर्यवसायिनी |
152588 मोहनायैव लोकस्य लक्ष्मीः क्षणविलासिनी || ८२ ||
152589
152590 आपातरमणीयानि विमर्दविसराण्यति |
152591 दुःखान्यापत्प्रदातृणि संगतानि खलैरिव || ८३ ||
152592
152593 संगतानि धनादिसंबन्धाः खलैः संगतानि मैत्र्य इवेत्यावृत्त्या योज्यम् || ८३ ||
152594
152595 शरदम्बुधरच्छायागत्वर्यो यौवनश्रियः |
152596 आपातरम्या विषयाः पर्यन्तपरितापिनः || ८४ ||
152597
152598 अयं श्लोकः किरातार्जुनीये अत्रत्य एव पठितो बोध्यः || ८४ ||
152599
152600 अन्तकः पर्यवस्थाता जीविते महतामपि |
152601 चलन्त्यायूंषि शाखाग्रलम्बाम्बूनीव देहिनाम् || ८५ ||
152602
152603 पर्यवस्थाता अवश्यं प्रत्यवस्थाता | चलन्ति स्खलन्ति || ८५ ||
152604
152605 जीर्यन्ते जीर्यतः केशा दन्ता जीर्यन्ति जीर्यतः |
152606 क्षीयते जीर्यते सर्वं तृष्णैवैका न जीर्यते || ८६ ||
152607
152608 भोगाभोगातिगहने सर्वस्मिन्कायकानने |
152609 परमुल्लासमायाति तृष्णैका विषमञ्जरी || ८७ ||
152610
152611 इदानीं भोगान्भुक्त्वा जन्मान्तरे विवेकवैराग्यादि प्राप्स्यामीति प्रत्याशा तु न
152612 कार्यैवेत्याह - भोगेति | सर्वस्मिन्भाविदेहपरम्परारूपेऽपि कायकानने || ८७ ||
152613
152614 बाल्यं यौवनवद्याति यौवनं याति बाल्यवत् |
152615 उपमानोपमेयत्वं भङ्गुरत्वं मिथोऽनयोः || ८८ ||
152616
152617 तत्रापि बाल्यादिषु न वैतृष्ण्यप्रत्याशेत्याशयेनाह - बाल्यमिति || ८८ ||
152618
152619 जीवितं गलति क्षिप्रं जलमञ्जलिना यथा |
152620 प्रवाह इव वाहिन्या गतं न विनिवर्तते || ८९ ||

कुतो याति तत्राह - जीवितमिति। जीवितं आयुः। वाहिन्या नद्याः॥ ८९॥

झटित्येवागतो देहः कुतोऽप्यर्जुनवातवत्।
याति पश्यत एवास्तं तरङ्गाम्बुददीपवत्॥ ९०॥

यो यो देह आगतः स कुतोपि निमित्ताज्झटित्येव पश्यत एव अस्तं नाशं याति।
तरङ्गवदम्बुदवद्दीपवच्च॥ ९०॥

रम्येष्वरम्यता दृष्टा स्थिरेष्वस्थिरतापि च।
सत्येष्वसत्यतार्थेषु तेनेह विरसा वयम्॥ ९१॥

सत्येषु सत्यतया ज्ञातेषु। विरसा विरागाः॥ ९१॥

सुखं यदात्मविश्रान्तौ गते मनसि सत्त्वताम्।
पाताले भूतले स्वर्गे तन्न भोगेषु केषुचित्॥ ९२॥

सत्त्वतां निर्वासनताम्॥ ९२॥

अपि संपूर्णहृद्यार्थाः पञ्चापीन्द्रियवृत्तयः।
तावज्जयन्ति मामेता भृङ्गं चित्रलता इव॥ ९३॥

सांप्रतं दृढवैराग्यं मां संपूर्णसर्वविषयसहिता अपि
सर्वेन्द्रियवृत्तयः संभूयापि न जेतुं शक्नुवन्तीत्याह - अपीति। तावज्जयन्तीति
काकुस्तेन न जयन्त्येवेत्यर्थः॥ ९३॥

अद्य दीर्घेण कालेन निरहंकृतिना मया।
स्वर्गापवर्गवैतृष्ण्यमिदमासादितं धिया॥ ९४॥

चिरमेकान्तविश्रान्त्यै तेनैतन्नभसः पदम्।
त्वमिवागतवानत्र दृष्टवानस्मि तां कुटीम्॥ ९५॥

एतत् त्वत्कुटीकल्पनास्पदम्॥ ९५॥

अद्यैतत्संपरिज्ञातं यदेषा भवतः कुटी।
आगन्ता त्वं पुनश्चेति मया तत्र विचारितम्॥ ९६॥

त्वत्कुटीयं त्वं च पुनस्तस्यामागतेति न तदा विचारितम्। एतत्सर्वमद्य
परिज्ञातमित्यर्थः॥ ९६॥

तदा त्वत्र मया ज्ञातं कश्चित्सिद्धोऽयमात्मना।
देहं त्यक्त्वेह निर्वाणं गत इत्यनुमानतः॥ ९७॥

किं तर्हि तदा ज्ञातं तदाह - तदेति॥ ९७॥

एतन्मे भगवन्वृत्तमेषोऽस्मीति यथास्थितम्।
मया ते कथितं सर्वं यथा जानासि तत्कुरु॥ ९८॥

क्व स्थितोऽसीत्यादि त्वया पृष्टं यन्मे वृत्तं तदेतन्मयोक्तमित्यर्थः। अतः परं
त्वं यथास्मिन्नपराधे दण्डमनुग्रहं वा जानासि तत्कुर्वित्यर्थः॥ ९८॥

सिद्धैर्न यावदवधानपरैर्विचार्य निर्णीतमुत्तमधियान्तरशेषवस्तु।

152673 तावल्लिकालकलनं न विदन्ति किंचिदित्यब्जजादिमनसोऽपि मुने स्वभावः ॥ ९९ ॥
152674
152675 हे मुने सिद्धैरपि युष्मदादिभिर्यावत्पर्यन्तमवधानपरैर्भूत्वा अन्तः अशेषवस्तु
152676 उत्तमया धिया विचार्य न निर्णीतं तावत्ते त्रिकालस्थवृत्तान्तस्य कलनं
152677 सम्यग्ज्ञानं किंचिदपि न विदन्ति। अयमब्जजादिमनसोऽपीदृश एव स्वभावः किं
152678 पुनर्मादृशस्येति त्वद्वृत्तान्तापरिज्ञानदेहनिरासाद्यपराधं क्षमस्वेत्यर्थः
152679 ॥ ९९ ॥
152680
152681 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० नि० उ० पा०
152682 आकाशमण्डपसिद्धसमागमगाथावर्णनं नाम त्रिनवतितमः सर्गः ॥ ९३ ॥
152683
152684 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
152685 आकाशमण्डपसिद्धसमागमगाथावर्णनं नाम त्रिनवतितमः सर्गः ॥ ९३ ॥
152686
152687
152688 चतुर्नवतितमः सर्गः ९४
152689
152690 श्रीवसिष्ठ उवाच।
152691
152692 अथ हेममयाकाशविस्तीर्णायां महाभुवि।
152693 सौहार्ददिव सिद्धस्य तस्येदमहमुक्तवान् ॥ १ ॥
152694
152695 सिद्धलोके द्वयोर्यानं पिशाचानां च संस्थितिः।
152696 वर्ण्यते देवतानां च मनोमात्रानुसारिणी ॥
152697
152698 हेममय्यामाकाशमिव विस्तीर्णायां सप्तद्वीपसमुद्रबहिःस्थितायां महाभुवि।
152699 सौहार्दात् सुहृद्भावात् ॥ १ ॥
152700
152701 त्वया न केवलं तावन्मयापि न विचारितम्।
152702 आव्याप्तिरहिता नाम न संभवति देहिनाम् ॥ २ ॥
152703
152704 अयमविचारापराधो न केवलं तवैव किंतु ममापि तुल्य इत्याह - त्वयेति। तत्र
152705 सिद्धैर्न यावदवधानपरैरिति यत्त्वयोक्तं तत्सत्यमेवेत्याह - आव्याप्तीति।
152706 देहिनां देहवतां योगिनामपि आव्याप्तिः प्रणिधानेन सर्वविषये
152707 मनोव्याप्तिस्तद्रहिता अतीतानागतार्थसंवित्तिर्न संभवत्येव ॥ २ ॥
152708
152709 कस्मान्मया तवोदन्तं विचार्यासौ स्थिरीकृता।
152710 न कुटी व्योम्नि तेन त्वमभविष्यः स्थिरस्थितिः ॥ ३ ॥
152711
152712 यदि संभवति तर्हि तव पतनं मा भूदिति सा संकल्पकुटी स्थिरीकृता स्यादित्याह ##-
152713 क्षन्तव्य इति भावः ॥ ३ ॥
152714
152715 उत्तिष्ठ सिद्धलोकेषु निवसावो यथास्थितम्।
152716 स्वास्पदस्थितयः सौम्याः स्वात्मसिद्धौ सुसाधनम् ॥ ४ ॥
152717
152718 स्वं स्वीयं मया सप्तर्षिलोके त्वया नन्दनवने च प्राक्तने निवसितव्यमिति भावः।
152719 तत्किमर्थं तत्राह - स्वास्पदेति। स्वात्मनः सिद्धौ निर्विक्षेपस्थितौ ॥ ४ ॥
152720
152721 इति निर्णीय तावुच्चैरुत्सृतौ तारकोपमौ।
152722 सममेकपुटोड्डीनौ व्योम यन्त्रोपलाविव ॥ ५ ॥
152723
152724 उच्चैर्व्योम। उत्सृतौ उड्डीनौ। एकयन्त्रपुटादुड्डीनौ यन्त्रोपलाविव ॥ ५ ॥

152725
152726 प्रणामपूर्वमन्योन्यमथ कृत्वा विसर्जनम् |
152727 गतः सोऽभिमतं देशमहं चाभिमतं गतः || ६ ||
152728
152729 उड्डीय व्योम्नि किं चक्रथुस्तत्राह - प्रणामपूर्वमिति | सः नन्दनं अहं
152730 सप्तर्षिलोकादीन् गतः || ६ ||
152731
152732 इति वृत्तान्तमखिलमुक्तवानस्मि राघव |
152733 तवाश्चर्यमयीं पश्य संसृतीनां विचित्रताम् || ७ ||
152734
152735 इति वर्णितपाषाणाख्यायिकालक्षणं वृत्तान्तं स्वानुभूतमखिलं
152736 सिद्धवृत्तान्तं च तवाहमुक्तवानस्मि | तं वृत्तान्तं प्रस्तुते योजयति -
152737 आश्चर्यमयीमिति || ७ ||
152738
152739 श्रीराम उवाच |
152740
152741 भगवंस्तव देहोऽसौ पृथिव्यामणुतां गतः |
152742 भ्रान्तः केन शरीरेण सिद्धलोकांस्ततो भवान् || ८ ||
152743
152744 कुटीसंस्थस्त्वदीयस्थूलदेहः सिद्धेनापास्त इति त्वयैव स्वयमूहितमित्युक्तम् |
152745 निरस्तश्च पार्थिवो देहः पृथिव्यां कालेन पांसुभावमापद्यत इति परिशेषादेव
152746 ज्ञातम् | एवं सति मनोमात्रदेहेन सिद्धलोकान्गतो भवान्कथं तत्रत्यजनैः सह
152747 व्यवहृतवान् | न हि मनोमात्रात्मा अन्यैः सह व्यवहर्तुं शक्नोत्यन्ये वा तेन सह
152748 व्यवहर्तुं शक्नुवन्तीत्याशयेन रामः पृच्छति - भगवन्निति | अणुतां
152749 पांसुताम् | संचरितवानसि || ८ ||
152750
152751 श्रीवसिष्ठ उवाच |
152752
152753 आ स्मृतं शृणु वृत्तान्तं ततो मम जगद्गृहे |
152754 भ्रमतः सिद्धसेनासु लोकपालपुरीषु च || ९ ||
152755
152756 आ इति स्मरणद्योतको निपातः | आङित् || ९ ||
152757
152758 अहमिन्द्रपुरं प्राप्तो न कश्चित्तत्र दृष्टवान् |
152759 मामिमं देहरहितमातिवाहिकदेहिनम् || १० ||
152760
152761 अहं किल तदा राम संपन्नो गगनाकृतिः |
152762 न चाधारो न चाधेयश्चिदाकाशमयात्मकः || ११ ||
152763
152764 गगनाकृतिराकाशवदस्थूलः | चिदाकाशप्रचुरं यन्मनस्तदात्मकः || ११ ||
152765
152766 न ग्रहीता न च ग्राह्यस्त्वादृशार्थावबोधिनाम् |
152767 न चैव देशकालानां क्वचिदावृत्तिकारकः || १२ ||
152768
152769 त्वादृशा ये स्थूलार्थावबोधिनस्तेषां न तु सूक्ष्मार्थदर्शिनां योगिनाम् |
152770 प्रेषणप्रतीक्षणादिनन्येषां देशकालपरिवर्तनकारकश्च न संपन्नः || १२ ||
152771
152772 मनोमननमात्रात्मा पृथ्व्यादिपरिवर्जितः |
152773 संकल्पपुरुषाकारः पदार्थानामरोधकः || १३ ||
152774
152775 पदार्थानां स्तम्भकुम्भादीनामसंस्पर्शादरोधकः || १३ ||
152776

152777 अरुद्धश्च पदार्थौघैः स्वयं स्वानुभवोन्मुखः।
152778 व्यवहर्ता तथाभूतैरेवं पुंभिर्मनोमयैः॥ १४॥
152779
152780 स्वप्नमनोराज्यवत्स्वमनोमयैर्भूतैर्व्यवहर्ता॥ १४॥
152781
152782 स्वप्नानुभूतयो राम दृष्टान्तोऽत्राविखण्डितः।
152783 अनुभूत्यपलापं तु यः कुर्यात्तेन तेऽस्त्वलम्॥ १५॥
152784
152785 स्वप्नानुभूतयः स्वप्नानुभवाः अत्र ईदृशार्थसंभावने अविखण्डितः समस्तो
152786 दृष्टान्तोऽनुसंधेय इत्यर्थः। यस्तु नैयायिको ज्ञानमात्रे
152787 अवच्छेदकतासंबन्धेन देहस्य कारणता त्वङ्मनोयोगस्यापि कारणता सुषुप्तौ
152788 तदभावे ज्ञानाभावोपपत्तेरित्यादि प्रलपति स मूर्खस्त्वया न संभाष्य एवेत्याह
152789 - अनुभूतीति। तेन सह ते अलमस्तु संभाषणादिना प्रयोजनं नास्ति। सुषुप्तावपि
152790 सुखमहमस्वाप्समित्यादिस्मृतिदर्शनेन सुखस्वापादिज्ञानसत्त्वात् स्वप्नेन
152791 शारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीति। शुक्रमादाय पुनरेति स्थानं
152792 हिरण्मयः पूरुष एकहंसः इत्यादिश्रुतिविरोधान्निमिशापात्त्यक्तशरीरेण मया
152793 दुःखानुभवात्तन्निवारणाय ब्रह्माज्ञया मित्रावरुणोद्भवशरीरपरिग्रहाच्चेति
152794 भावः॥ १५॥
152795
152796 यथा स्वप्नचरो गेहे व्यवहर्ता न दृश्यते।
152797 तथा तदा न दृष्टोस्मि पुरस्थोऽपि नभोगतैः॥ १६॥
152798
152799 गेहे सुप्तः स्वप्ने चरतीति स्वप्नचरः पुरुषह् स्वप्ने व्यवहर्ताप्यन्यैस्तद्गेहस्थैर्न
152800 दृश्यते तथा अहमपि नभोगतैर्देवैर्न दृष्ट इत्यर्थः॥ १६॥
152801
152802 अहमन्यान्प्रपश्यामि पार्थिवाकारभासुरान्।
152803 मामातिवाहिकात्मानं न कश्चिदपि पश्यति॥ १७॥
152804
152805 श्रीराम उवाच।
152806
152807 न दृश्यते विदेहत्वाद्भवान्व्योमवपुर्यदि।
152808 तत्कथं तेन सिद्धेन दृष्टोऽसि कनकावनौ॥ १८॥
152809
152810 मां न कश्चिदपि पश्यतीत्येतत्ते स्वोक्तिविरुद्धम्। प्राक् सिद्धेन दृष्टोऽहमिति
152811 त्वयैवोक्तत्वात्। अहमन्यान्प्रपश्यामीत्यप्यसंगतम्। मनसो बहिरस्वातन्त्र्यात्स्वप्ने
152812 स्वमनोमयानामेव दर्शनादित्याशयेन रामः पृच्छति - न दृश्यत इति॥ १८
152813 ।।
152814
152815 श्रीवसिष्ठ उवाच।
152816
152817 अस्मदादिर्जनो नाम यथा संकल्पकल्पितान्।
152818 नासंकल्पितमाप्नोति सत्यकामवपुर्यतः॥ १९॥
152819
152820 सत्यसंकल्पानुसारिदर्शनव्यवस्थया उभयं वसिष्ठः परिहरति - अस्मदादिरिति
152821 । अस्मदादिर्ज्ञानयोगसिद्धो जनः॥ १९॥
152822
152823 व्यवहारेषु मग्नेन लौकिकेष्वमलात्मना।
152824 क्षणाद्विस्मर्यते पुंसा आतिवाहिकमात्मनः॥ २०॥
152825
152826 ननु ज्ञानसिद्धानां सदैवातिवाहिकदेह एवास्ति न स्थूल इति त्वयैवासकृदुक्तं
152827 तत्कथं तेषां स्थूलदेहबुद्ध्या परदर्शनसंवादादिसत्यसंकल्पनं घटते
152828 तत्राह - व्यवहारेष्विति। सत्यम्। समाधिविवेककालयोस्तथैव

152829 व्युत्थानव्यवहारकाले आतिवाहिकभावविस्मरणमप्यस्तीति तत्संकल्पनसंभव
152830 इत्यर्थः ॥ २० ॥
152831
152832 मया पश्यतु मामेष इति संकल्पितं तदा ।
152833 तेन मां दृष्टवानेष स्वसंकल्पार्थभाजनम् ॥ २१ ॥
152834
152835 एष सिद्धः सोऽपि सत्यसंकल्पः सिद्धश्चेति वा मां द्रष्टुं शक्नोतीत्याशयेन तं
152836 विविनष्टि - स्वसंकल्पार्थभाजनमिति ॥ २१ ॥
152837
152838 जनो जरठभेदत्वान्न संकल्पार्थभाजनम् ।
152839 स एष जीर्णभेदत्वात्सत्यकामत्वभाजनम् ॥ २२ ॥
152840
152841 सिद्धस्येतरजनेभ्यो विशेषमाह - जन इति । जरठश्चिरवासनादृढीकृतो
152842 भेदः स्वस्याब्रह्मभावो येन तथाविधत्वात् जीर्णभेदत्वाद्बाधितभेदवासनत्वात्स
152843 एष सिद्धः सत्यकामत्वस्य भाजनं योग्यः ॥ २२ ॥
152844
152845 द्वयोस्तु सिद्धयोः सिद्धविरुद्धेप्सितयोर्मिथः ।
152846 अधिकैकावदातात्मा जयी पुरुषयत्नवान् ॥ २३ ॥
152847
152848 ननु तर्हि यत्र द्वौ सिद्धौ परस्परविरुद्धं संकल्पयतः । यथा एकः अहमेनं
152849 पश्यामीति संकल्पयति अपरस्तु मामयं न पश्यत्विति । तत्र कथं व्यवस्था तत्राह
152850 - द्वयोरिति । यस्यैवात्मज्ञानवैशद्याधिक्यं तत्संकल्पः प्रबलः ।
152851 यथैकराज्यसिद्ध्यर्थं यतमानयो राजपुत्रयोर्यस्यैव शौर्याद्याधिक्यं तस्य
152852 जयस्तद्वदित्यर्थः । तुल्यबलत्वे तूभयसंपत्तिर्वरशापाविरोधसर्गे वक्ष्यते ॥ २३ ॥
152853
152854 भ्रमतः सिद्धसेनासु लोकपालपुरीषु मे ।
152855 विस्मृता व्यवहारौघैः सातिवाहिकतात्मनः ॥ २४ ॥
152856
152857 अस्त्वेवं तथापि प्रकृते किं तत्राह - भ्रमत इति । व्यवहारौघैर्हेतुभिर्यदा
152858 विस्मृता तदा व्यवहर्तुं प्रवृत्त इति परेणान्वयः ॥ २४ ॥
152859
152860 यदा तदाहमपरैर्व्यवहर्तुं महाम्बरे ।
152861 प्रवृत्तो न च मां कश्चित्तत्र पश्यति चञ्चलम् ॥ २५ ॥
152862
152863 अत्यन्तमप्यारटतः शब्दो न श्रूयते मम ।
152864 केनचित्सुरलोकेषु स्वप्नपुंस इवानघ ॥ २६ ॥
152865
152866 आरटतः कूजतः ॥ २६ ॥
152867
152868 अवष्टब्धुं प्रवृत्तस्य नान्यावष्टब्धये मम ।
152869 संपद्यते किंचिदपि मनोमननदेहिनः ॥ २७ ॥
152870
152871 अवष्टब्धुं अन्यस्य पतनारोहणादिप्रसङ्गे कराद्यवलम्बनं दातुं प्रवृत्तस्य
152872 मम किंचिदपि हस्ताद्यन्यस्य अवष्टब्धये अवलम्बनाय न संपद्यते ॥ २७ ॥
152873
152874 एवं व्योमपिशाचोऽहं संपन्नो रघुनन्दन ।
152875 मयानुभूता काप्येषा देवागारपिशाचता ॥ २८ ॥
152876
152877 एवमनया रीत्या । देवागारेषु पिशाचता अनुभूता ॥ २८ ॥
152878
152879 श्रीराम उवाच ।
152880

152881 पिशाचाः सन्ति लोकेस्मिन्किमाकाराः किमास्पदाः ।
152882 किंजातीयाः किमाचाराः कीदृशाः कीदृशाशयाः ॥
152883
152884 प्रासङ्गिको रामप्रश्नः ॥ २९ ॥
152885
152886 श्रीवसिष्ठ उवाच ।
152887
152888 पिशाचाः सन्ति लोकेऽस्मिन्यादृशास्तादृशान्शृणु ।
152889 न सभ्योऽसौ न यो वक्ति प्रसङ्गापतितं वचः ॥ ३० ॥
152890
152891 सभ्यः सभार्हः । सत्यः इति पाठे यथार्थवक्ता । श्रोतुः प्रमया हि
152892 अर्थयाथार्थ्यग्रहः । न च श्रोतुः प्रासङ्गिकार्थजिज्ञासायामजिज्ञासितेऽर्थान्तरे
152893 वाक्यात्प्रमोत्पद्यत इत्यनवधेयवचनोऽसावुन्मत्तवदुपेक्ष्येतेति । तथा
152894 चाहुर्वाचस्पतिमिश्राः - प्रतिपित्सितमर्थं प्रतिपादयन्प्रतिपादयिता
152895 अवधेयवचनो भवति । अप्रतिपित्सितं तु प्रतिपादयन्नसौ न लौकिको न परीक्षक
152896 इत्युन्मत्तवदुपेक्ष्येत इति ॥ ३० ॥
152897
152898 पिशाचाः केचिदाकाशसदृशाः सूक्ष्मदेहकाः ।
152899 हस्तपादादिसंयुक्ताः पश्यन्ति त्वमिवाकृतिम् ॥ ३१ ॥
152900
152901 सूक्ष्मदेहका मनोमयदेहकाः । स्वप्नवन्मनःकल्पितहस्तपादादिसंयुक्ताः ॥ ३१ ॥
152902
152903 छायया भयदायिन्या त्वन्यत्र भ्रमरूपया ।
152904 ते चित्ताक्रमणं कृत्वा बोधयन्ति नराशयम् ॥ ३२ ॥
152905
152906 यदि ते मनोमात्रमयदेहास्तर्हि अन्येषामाक्रमणं कथं कुर्वन्ति । मनसो
152907 बहिराक्रमणाद्यसामर्थ्यादित्यत आह - छाययेति । ते पिशाचा अन्यत्र नरान्तरे
152908 तदीयचित्तभ्रमरूपया अत एव नानाभयदायिन्या स्वच्छायया
152909 प्रतिबिम्बेनानुप्रविश्य तदीयचित्ते तादात्म्यमिवापद्य तस्य नरस्याशयं
152910 दुःखभोगप्रदं कर्मकामवासनादिकं नानाभ्रान्तिचेष्टाद्यनुरूपतया
152911 उद्बोधयन्तीत्यर्थः ॥ ३२ ॥
152912
152913 घ्नन्त्यदन्ति पिबन्त्याशु लघुसत्त्वबलं जनम् ।
152914 बलं सत्त्वमथो जीवान्हिसन्त्याक्रम्य चित्तकम् ॥ ३३ ॥
152915
152916 तन्मरणानुकूले कर्माशये सति घ्नन्ति स्वयं च स्वीयऋणानुबन्धानुसारेण
152917 तदीयदेहधातूनदन्ति रुधिरादि पिबन्ति । बलं सत्त्वं च क्षपयन्तीति शेषः ॥ ३३ ॥
152918
152919 आकाशसदृशाः केचित्केचिन्नीहारसंनिभाः ।
152920 केचित्स्वप्ननराकाराः साकारा अपि स्वात्मकाः ॥ ३४ ॥
152921
152922 एतेन किमाचारा इति प्रश्नः समाहितः । किमाकाराः किंजातीया इति प्रश्नौ समाधत्ते
152923 - आकाशेति । विचित्रकर्मानुसारेण तेषां सौक्ष्म्यतारतम्येन
152924 देहारम्भादन्तर्धानादिशक्तितारतम्येन नानावासनानुसारिरूपभेदेन
152925 चावस्थानमिति भावः ॥ ३४ ॥
152926
152927 केचिदभ्रदलप्रख्याः केचित्पवनदेहकाः ।
152928 केचिद्भ्रमात्मका एव सर्वे बुद्धिमनोमयाः ॥ ३५ ॥
152929
152930 अभ्रदलं मेघखण्डः । भ्रमात्मकाः आक्रमणीयपुरुषभ्रान्त्यनुसारिदेहा इति
152931 यावत् ॥ ३५ ॥
152932

152933 ग्रहीतुं नैव युज्यन्ते ग्रहीतुं शक्नुवन्ति नो |
152934 आकाशशून्यवपुषः पश्यन्त्याकृतिमात्मनः || ३६ ||
152935
152936 पश्यन्ति स्वयमनुभवन्ति | परस्परं च पश्यन्ति || ३६ ||
152937
152938 शीतातपादिविहितं सुखं दुःखं विदन्ति च |
152939 पातुमत्तुमवष्टब्धुमीहितुं शक्नुवन्ति नो || ३७ ||
152940
152941 इच्छाद्वेषभयक्रोधलोभमोहसमन्विताः |
152942 मन्त्रौषधतपोदानधैर्यधर्मवशीकृताः || ३८ ||
152943
152944 बाह्यजलादि पातुम् | अन्नाद्यत्तुं भोक्तुम् | ईहितुं यथेष्टं दानादानादिना
152945 व्यवहर्तुम् || ३७ || ३८ ||
152946
152947 सत्त्वावष्टम्भयन्त्रेण मन्त्रेणाराधितेन वा |
152948 दृश्यन्तेऽपि च गृह्यन्ते कदाचित्केनचित्क्वचित् || ३९ ||
152949
152950 केनोपायेन तर्हि ते दृश्यन्ते मनुष्यैस्तमाह - सत्त्वेति | सत्त्वावष्टम्भो
152951 योगधारणाभेदः | यन्त्रं भूतदर्शनानुकूलबीजाक्षरघटितं
152952 रजतादिपत्रलिखितं कण्ठादौ धार्यमाणं तेन | गृह्यन्ते वशीकृत्य सेवादौ
152953 नियुज्यन्ते | केनचिद्भूतविद्यावता पुरुषेण | क्वचिद्देशे प्रसिद्धमेतदित्यर्थः || ३९ ||
152954
152955 देवयोनिर्हि सा तेन केचिद्देवोपमादयः |
152956 केचिन्नरसमश्रीकाः केचिन्नागसमन्वयाः || ४० ||
152957
152958 एकादशदेवयोनिभेदान्तर्गतत्वादणिमाद्यैश्वर्यतारतम्येन सुखभोगोऽपि तेष्वतीति
152959 सूचयंस्तज्जात्याकृतिभेदान्प्रपञ्चयति - देवयोनिर्हीति | नागैः सर्पैः
152960 समन्वयः सादृश्यं येषाम् || ४० ||
152961
152962 श्वशृगालोपमाः केचिद्ग्रामजङ्गलवासिनः |
152963 कुल्यावकररथ्यासु वसन्ति निरयेषु च || ४१ ||
152964
152965 निरयेषु त्रकप्रायेष्वशुचिदेशेषु || ४१ |
152966
152967 एतदास्पदमेतेषामित्याकाराः प्रकीर्तिताः |
152968 पिशाचा एवमाचारा जन्मैषां श्रूयतामिदम् || ४२ ||
152969
152970 एतेन किमाकाराः किमास्पदाः किमाचारा इति प्रश्नाः समाहिता इत्याह - एतदिति |
152971 किंजातीया इति प्रश्नो यदि जन्मपरस्तथाप्युत्तरं मूलत आरभ्य सर्गादिना जगत्तत्त्वं
152972 व्युत्पादयन्श्रावयति - जन्मेत्यादिना || ४२ ||
152973
152974 अचेत्यचिन्मयंन् ब्रह्म सर्वशक्तिस्वभावतः |
152975 यत्स्थितं बुद्धमेवान्तश्चेत्यं संकल्पयन्निव || ४३ ||
152976
152977 तत्र प्रथमं मायाशबलस्य ब्रह्मणो जीवभावप्राप्तिं मन##-
152978 तद्विलक्षणमचेत्यचिन्मयम् | चेत्यं संकल्पयन् मनह् पुरुष इव बुद्धं
152979 सत्तद्रूपेण यत्स्थितं तदेव जीवं प्रथमाङ्कुरं विद्धि || ४३ ||
152980
152981 तं जीवं विद्धि स प्रौढस्त्वहंकार इति स्मृतः |
152982 सोऽहंकारः स्मृतः पुष्टो मन इत्युदितात्मभिः || ४४ ||
152983
152984 प्रौढः अभिमानोर्जितः | अज्ञानतिमिरनाशाय तत्त्वसाक्षात्कारवृत्त्यारूढतया

152985 उदित आविर्भूत आत्मा येषां तैः ॥ ४४ ॥
152986
152987 स एव कथ्यते ब्रह्मा संकल्पाकाशरूपवान् ।
152988 असदेवासतो बीजं जगतो विगताकृतिः ॥ ४५ ॥
152989
152990 स मनोरूपो जीव एव समष्ट्यात्मना ब्रह्मा कथ्यते । असतो जगतः असन्मन एव बीजम् ॥
152991 ४५ ॥
152992
152993 एवं मनःस्थितो ब्रह्मा सदेहोऽप्यमलं नभः ।
152994 तत्स्वप्नपुरुषाकारः सन्नेवासद्वपुः सदा ॥ ४६ ॥
152995
152996 पृथ्व्यादिमूर्तिरहितस्त्वातिवाहिकदेहवान् ।
152997 पृथ्व्यादयः किल कुतः संकल्पपुरुषस्य खे ॥ ४७ ॥
152998
152999 भवन्मनो यथाकाशपुरं पश्यति कल्पितम् ।
153000 तथा मनोविरञ्चित्वं पश्यत्यात्मनि कल्पितम् ॥ ४८ ॥
153001
153002 यद्वेत्ति कल्पितं तत्सत्पश्यत्यनुभवत्यपि ।
153003 यो यावन्मात्रकस्तत्स कस्मात्किल न पश्यति ॥ ४९ ॥
153004
153005 अत एव स विरिञ्चो यद्यत्स्वसंकल्पनं वेत्ति तत्तदर्थाकारेण पश्यत्यनुभवत्यपि । यो
153006 यावन्मात्रको जीवः प्रसिद्धः स सर्वोऽपि तच्चिद्रूपं सदेव अतो
153007 ज्ञानशक्तिमत्तत्कस्माद्धेतोर्न पश्यति ॥ ४९ ॥
153008
153009 स यत्पश्यति तत्तादृक् शून्यात्मा शून्यमम्बरे ।
153010 ब्रह्म ब्रह्मणि वा ब्रह्मा तदिदं जगदुच्यते ॥ ५० ॥
153011
153012 शून्यात्मा निराकारमनोरूपः स ब्रह्मा अम्बरे चिदाकाशे शून्यमेव
153013 यद्ब्रह्माण्डाकारं पश्यति तदिदं जगदित्यर्थः ॥ ५० ॥
153014
153015 तथा संप्रति भासोऽस्य चिरकालैकभावनात् ।
153016 घनीभूतः स्थितः पुष्टः सुदीर्घस्वप्नसुन्दरः ॥ ५१ ॥
153017
153018 आतिवाहिकदेहस्य तस्य तच्चिरभावनात् ।
153019 सर्गानुभवनं भूरि ब्रह्मणो ब्रह्मरूप्यपि ॥ ५२ ॥
153020
153021 गतं प्रकटतोत्कर्षादाधिभौतिकदेहताम् ।
153022 तेनैव सर्ग इत्युक्तो भेदसंततिभासुरः ॥ ५३ ॥
153023
153024 स ब्रह्मा ब्रह्ममात्रात्मा ब्रह्ममात्रात्मनोस्तयोः ।
153025 अजातयोरेव सदा तदात्मजगतोर्द्वयोः ॥ ५४ ॥
153026
153027 तदात्मा जीवो जगच्च तयोर्द्वयोः ॥ ५४ ॥
153028
153029 अभिन्नयोरेव भृशं शून्यत्वाम्बरयोरिव ।
153030 ऐकात्म्येनैव वसतोः पवनस्पन्दयोरिव ॥ ५५ ॥
153031
153032 वेत्ति भूतमयत्वं तन्मिथ्यैव न तु वास्तवम् ।
153033 तथा यथा त्वं संकल्पपुरुषस्य सतोऽसतः ॥ ५६ ॥
153034
153035 पृथ्व्यादिभूतमयत्वं वेत्ति । यथा त्वं स्वसंकल्पपुरुषस्य असत एव सतो
153036 नगरादेर्भूतमयत्वं वेत्सि तद्वत् ॥ ५६ ॥

ततः शरीरधातूनां तेन पृथ्व्यादिकाः कृताः।
अभिधाः पञ्च चित्पुष्टा जगदित्येव ताः स्थिताः॥ ५७॥

ब्रह्माण्डात्मकस्वशरीरधातूनां कठिनद्रवादिभागानां तेन ब्रह्मणा
पृथ्व्यादिका अभिधाः संज्ञाः कृताः। ताः समुदितरूपेण जगदित्येव स्थिताः॥
५७॥

यथा त्वसत्य एवायं संकल्पः सत्य एव ते।
तथासावात्मसंकल्पं सत्यमेवानुभूतवान्॥ ५८॥

यथा असत्योऽपि ते संकल्पो मनोराज्यकौतुकाद्यर्थक्रियाकारित्वात् सत्य एवानुभूयते
त्वया तथा असौ ब्रह्मापि आत्मनः संकल्पं सत्यमित्येवानुभूतवान्। तस्य
समष्ट्यात्मत्वात्तु तत्संकल्पजस्य सर्वजनसाधारणार्थक्रियेति विशेष इति भावः॥ ५८
॥

स स्वयं चिन्मयाकाशः स संकल्पश्चिदम्बरम्।
अतः स्वप्नो जगत्सर्वं कृतौ नाशोद्भवौ स्थितौ॥ ५९॥

तमेव स्फुटयति - स इत्यादिना। स ब्रह्मा स्वयं चिन्मयाकाश एव परमार्थतः
तत्संकल्पोऽपि चिदम्बरमेव॥ ५९॥

यथैवैतन्मनः सत्यं तदंशाः सत्यमेव ते।
तथैव तत्कृताश्चन्द्ररुद्रार्केन्दुमरीचयः॥ ६०॥

कथं तर्हि तत्कृताश्चन्द्रतारादयः सर्वार्थक्रियाहेतवस्तत्राह - यथैवेति।
तदंशास्तद्वृत्तयस्ते सत्यं प्रवृत्त्याद्यर्थक्रियासमर्था एव॥ ६०॥

एवं स्थिते जगज्जालं तन्मनोराज्यमुच्यते।
तच्च शून्यंन् निरालम्बमाकाशकचनं चिति॥ ६१॥

यथा स्वप्नपुरं व्योम संकल्पाद्रिर्यथा नभः।
तथा ब्रह्म जगच्चैव खमेवाच्छमनाकृति॥ ६२॥

एवमाभासमात्रस्य कचतोऽनिशमव्ययम्।
सर्गादिमध्यान्तदृशो मुधैवात्रोदिताः स्थिताः॥ ६३॥

सर्गस्य आदिमध्यान्तदृशो जन्मस्थितिभङ्गप्रत्ययाः॥ ६३॥

किंचिदाकाशकोशस्य तव वा मम वानघ।
जगतो वापि जायेत किं वा नश्यति मे वद॥ ६४॥

अत एवात्मनश्चिदाकाशरूपतानुसंधाने तव वा मम वान्यस्य वा न
कस्यचित्सर्गादयः सन्तीत्याह - किमिति। जगतो जडत्वादेव सुतरां न
जन्मादिप्रत्ययप्रसक्तिरिति द्योतनाय ग्रहणं पुरुषान्तराभिप्रायेण॥ ६४॥

तत्किमर्थमनर्थाय निरर्थकमपार्थकाः।
कस्मादभ्युदिता ब्रूहि रागद्वेषभयादयः॥ ६५॥

वस्तुतोऽङ्ग न सर्गादिर्न सर्गो नाप्यसर्गता।
विद्यते सकृदाभातमिदमित्थं सदैव तत्॥ ६६॥

153089 वस्तुतः परमार्थदृशा | सर्गस्य आदिः कारणम् | सकृदाभातं
153090 अपुनरावरणतया प्रथां गतम् | इदं प्रत्यग्रूपं सदैव तद्ब्रह्म || ६६ ||
153091
153092 आशून्ये विपुलाभोगे स्वच्छचिज्जलपूरिते |
153093 कलनापङ्ककलिले भविष्यति चिदम्बरे || ६७ ||
153094
153095 तथाविधेऽपि चिदम्बरे क्षेत्रे अज्ञानकल्पनापङ्केन कलिले सति खात्मनस्तस्मादेव
153096 बीजादियं भूरिभूतशिलावलिर्भविष्यति प्राग्जाता चेति परेणान्वयः || ६७ ||
153097
153098 अन्तरिक्षाक्षयक्षेत्रे खात्मनो गगनात्मिका |
153099 तस्माद्बीजादित्यं जाता भूरिभूतशिलावलिः || ६८ ||
153100
153101 नास्ति किंचिदिह क्षेत्रं व्युप्तं नाम न किंचन |
153102 न बीजमस्ति नो जातं किंचित्सर्वं च संस्थितम् || ६९ ||
153103
153104 कलनापङ्कनिरासे त्वाह - नास्तीति || ६९ ||
153105
153106 याः शिलावलयस्तत्र पुष्टास्ता विबुधादयः |
153107 यास्तु वर्णोज्ज्वला एताः स्वास्थिता बुद्धबुद्धयः || ७० ||
153108
153109 एवं पिशाचजातिवर्णनप्रसङ्गेन सर्गतत्त्वं व्युत्पाद्य प्रस्तुतानुकूलतया
153110 वर्णितभूतशिलाया अवयवादिभेदतया जातिभेदान्दर्शयति - या इति | तत्र
153111 तस्मिन्कलनापङ्ककलिते आत्मक्षेत्रे याः शिलावलयः पुष्टाः संरूढास्ता
153112 विबुधादयो जातय इति सामान्योक्तिः | विशिष्य विभजते - या इत्यादिना | तत्र यास्तु
153113 वर्णेन कान्त्यतिशयेनोज्ज्वला रत्नरूपा बुद्धबुद्धयो देवर्ष्यादिजातयः || ७० ||
153114
153115 यास्त्वर्धपक्वास्ता एता नरनागादिजातयः |
153116 यास्त्वाश्याना रजोनष्टास्ताः कृमिस्थावरादयः || ७१ ||
153117
153118 अर्धपक्वा अर्धवर्णोज्ज्वलाः शिलाः | आश्याना म्लानाः शिलाः || ७१ ||
153119
153120 यास्तु गुर्व्यः फलैर्हीनाः शून्याकाराः क्षयक्षताः |
153121 अशरीराः शरीरिण्यस्ताः पिशाचादिकाः स्मृताः || ७२ ||
153122
153123 गुर्व्यो बृहत्यो भारभूताः कान्तिप्रकाशादिफलैर्हीना वृथापाषाणा इति यावत् |
153124 अशरीरा अदेहाकाराः शरीरिण्यो देहकाराश्च शिलाः || ७२ ||
153125
153126 न हि संकल्पितुः स्वेच्छा क्वचित्पर्यनुयुज्यते |
153127 तास्तथेच्छा विरिञ्चस्य तथा नाम तथोदिताः || ७३ ||
153128
153129 ननु हिरण्यगर्भस्योत्तमदेवादिरत्नान्येव तत्र क्षेत्रे उत्पद्यन्तामित्येव संकल्पः
153130 कुतो नाभूत्किमर्थं वृथापाषाणरूपपिशाचजात्युत्पादनसंकल्पोऽभूत्तत्राह -
153131 न हीति | संकल्पितुः संकल्पयितुर्धातुरिच्छा न हि पर्यनुयुज्यते आक्षिप्यते |
153132 तत्तत्सृज्यजीवप्राक्तनकर्माद्यनुसारित्वादिति भावः | विरिञ्चस्य ता इच्छास्तथा
153133 जातास्तथैव पिशाचजातय उदिताः || ७३ ||
153134
153135 सर्वा एव चिदाका"अस्रूपिण्यो भूतजातयः |
153136 आतिवाहिकदेहिन्यः पृथ्व्यादिरहितात्मिकाः || ७४ ||
153137
153138 शिलात्वोत्प्रेक्षणात्प्रसक्तं भौतिकत्वं भूतजातीनां वारयति - सर्वा एवेति || ७४ ||
153139
153140 ताश्चिराभ्यासवशतस्त्वाधिभौतिकसंविदम् |

प्राप्ता दीर्घानुभवनात्स्वप्नजाग्रद्दशामिव ॥ ७५ ॥

कथं तर्ह्यस्माकं देहे भौतिकत्वानुभवस्तत्राह - ता इति ॥ ७५ ॥

पिशाचाद्यास्तथा एते तथाभूताधिभौतिकाः ।
तिष्ठन्ति तुष्टमनसः स्वसंसारविहारिणः ॥ ७६ ॥

तथाभूतं चिराभ्यासप्राप्तमाधिभौतिकमाधिभौतिकत्वं येषाम् ।
स्वयोनिभोग्यभोगैस्तुष्टमनसः । तथा च तेषां पिशाचदेहः कुत्सितभोगश्च प्रिय
एव न विभत्सो भातीति भावः ॥ ७६ ॥

पश्यन्ति काश्चिदन्योन्यं ग्राम्या ग्राम्येयकानिव ।
स्वप्नैकलोकवास्तव्या इवैता भूतजातयः ॥ ७७ ॥

अन्योन्यं पश्यन्ति दर्शनादिना व्यवहरन्ति । ग्राम्येयकान् ग्रामीणानिव ।
ग्राम्यशब्दात्स्वार्थे ढकञ्छान्दसः ॥ ७७ ॥

काश्चिद्बहुनरप्राप्तस्वप्ननिर्माणलोकवत् ।
नान्योन्यमपि पश्यन्ति नानासंस्थानसंस्थिताः ॥ ७८ ॥

बहु प्रायेण ॥ ७८ ॥

स्थिता यथैता जगति पशाचाद्याः कुजातयः ।
प्रायस्तथैताः कुम्भाण्डयक्षप्रेतादयः स्थिताः ॥ ७९ ॥

पिशाचजातिवदेव कुम्भाण्डादिजातीनां प्रायशस्तामसी
आतिवाहिकदेहचेष्टादिस्थितिरित्याह - स्थिता इति ॥ ७९ ॥

यथा येत्रेह वै निम्ना जलं तत्रावतिष्ठते ।
तथा यत्र पिशाचाद्यास्तमस्तत्रावतिष्ठते ॥ ८० ॥

निम्नतातारतम्येन जलस्थितितारतम्यवत्पापतारतम्येन तेषु तमस्तारतम्यमित्याह
- यथेति ॥ ८० ॥

मध्याह्नेपि पिशाचश्चेदजिरे तिष्ठति स्वयम् ।
तत्तस्यान्धं तमस्तत्र संनिधानं करोत्यलम् ॥ ८१ ॥

तत्रेति दर्शनाद्यत्रेत्यध्याहार्यम् । अजिरे सातपचत्वरेऽपि तिष्ठति चेत् ॥ ८१ ॥

न निहन्ति च तद्भानुर्न चान्यस्तत्प्रपश्यति ।
स एव चानुभवति पश्य मायाविजृम्भितम् ॥ ८२ ॥

भानुः सूर्यस्तत्तमो न निहन्ति । स पिशाच एव ॥ ८२ ॥

अग्नेरादित्यचन्द्रादेस्तैजसं मण्डलं यथा ।
पिशाचादेरजन्यात्म तामसं मण्डलं तथा ॥ ८३ ॥

अस्मदादीनां प्रकाशसिद्धये अग्न्यादित्यादितेजोमण्डलमिव
पिशाचादेर्व्यवहारसिद्धये तामसं मण्डलमस्तीत्याह - अग्नेरिति ।
इन्धनाद्यजन्यात्म ॥ ८३ ॥

याति तेजस्यनोजस्त्वं तमस्योजःप्रधानताम् ।

उलूकवत्पिशाचाद्या आश्चर्यं तत्स्वभावतः ॥ ८४ ॥

अनोजस्त्वं नैर्बल्यम् । तदेतदाश्चर्यम् ॥ ८४ ॥

एषा पिशाचाजनितस्य जातिः प्रोक्ता मया ते समयानपेता ।
पिशाचतुल्यः सुरलोकपाललोकेषु जातोऽहमिति प्रसङ्गात् ॥ ८५ ॥

हे राम मया ते पिशाचयोनौ आजनितस्य जीवस्य एषा जातिर्यथाप्रश्नं प्रोक्ता । समयः
पृष्टमवश्यं वक्तव्यमिति व्याख्यातृसंप्रदायस्तदनपेता । तद्वशादिति यावत् ।
सुरलोकपाललोकेष्वहं पिशाचतुल्यो जातोऽस्मीति यदवोचं तत्प्रसङ्गात्त्वया पृष्टे
सतीत्यर्थः ॥ ८५ ॥

इत्यार्षे श्रीवा० वा० दे० मोक्षो० नि०उ० पा० पिशाचवर्णनप्रसङ्गेन
जगद्ब्रह्मणोरैक्यप्रतिपादनं नाम चतुर्नवतितमः सर्गः ॥ ९४ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
पिशाचवर्णनप्रसङ्गेन जगद्ब्रह्मणोरैक्यप्रतिपादनं नाम चतुर्नवतितमः
सर्गः ॥ ९४ ॥

पञ्चनवतितमः सर्गः ९५

श्रीवसिष्ठ उवाच ।

ततश्चिदाकाशवपुर्भूतपञ्चकवर्जितः ।
विहरन्नहमाकाशे पिशाच इव संस्थितः ॥ १ ॥

सत्यसंकल्पतास्मृत्या व्यवहारः पुनर्जनैः ।
स्वस्याकाशवसिष्ठादिनामाप्तिश्चेह वर्ण्यते ॥

विहरन् संचरन् ॥ १ ॥

न मां पश्यन्ति चन्द्रार्कशक्रा हरिहरादयः ।
न देवसिद्धगन्धर्वकिंनरा नाप्सरोगणाः ॥ २ ॥

नाक्रामन्ति मयाक्रान्ता न च शृण्वन्ति मद्वचः ।
इत्यहं मोहमापन्नो विक्रीत इव सज्जनः ॥ ३ ॥

मया पादन्यासारोहणाध्यासनादिना आक्रान्ता अपि मां न प्रत्याक्रामन्ति । मोहं
पूर्वापरकर्तव्याप्रतिसंधानम् ॥ ३ ॥

अथ चिन्तितवानस्मि सत्यकामा इमे वयम् ।
पश्यन्तु मां सुरगणास्तेन तस्मिन् सुरालये ॥ ४ ॥

चिन्तितवान् चिन्तया स्मृतवान् । सत्यकामा इमे वयमिति स्मृत्यभिनयः । पश्यन्तु
मां सुरगणा इति च संकल्पितवानिति शेषः ॥ ४ ॥

द्रष्टुं प्रवृत्ता मामग्रे वास्तव्याः सर्व एव ते ।
झटित्येव पुरं प्राप्तमिन्द्रजालद्रुमं यथा ॥ ५ ॥

अग्रे वसन्तीति वास्तव्याः । वसेस्तव्यत्कर्तरि णिच्च इत्युपसंख्यानात् ॥ ५ ॥

अथ गीर्वाणगेहेषु संपन्नो व्यवहार्यहम् ।

153245 यथास्थितसमाचारः स्थितो निःशङ्कचेष्टितः ॥ ६ ॥
153246
153247 व्यवहारी संभाषणादिव्यवहरणशीलः संपन्नः ॥ ६ ॥
153248
153249 यैरविज्ञातवृत्तान्तैर्दृष्टोऽहमजिरोत्थितः ।
153250 वसिष्ठः पार्थिव इति लोकेषु प्रथितोऽस्मि तैः ॥ ७ ॥
153251
153252 अजिरे चत्वरभूमौ प्रथममाविर्भूतो दृष्टस्तैस्तत्पृथिवीत एव मदुत्पत्तिं
153253 कल्पयद्भिः पृथिव्या जातः पार्थिवोऽयं वसिष्ठ इति लोकेषु प्रथितः प्रख्यातिं
153254 नीतोऽस्मि । एवमग्रेऽपि योज्यम् ॥ ७ ॥
153255
153256 व्योमन्यादित्यरश्मिभ्यो दृष्टोऽहं यैर्नभोगतैः ।
153257 वसिष्ठस्तैजस इति लोकेषु प्रथितोऽस्मि तैः ॥ ८ ॥
153258
153259 वातात्समुदितो दृष्टो यैरहं गगनास्पदैः ।
153260 सिद्धैर्वातवसिष्ठाख्यस्तैरहं समुदाहृतः ॥ ९ ॥
153261
153262 यैरहं सलिलाद्दृष्टः प्रोत्थितस्तैर्मुनीश्वरैः ।
153263 उक्तो वारिवसिष्ठोऽहमिति मे जन्मसंततिः ॥ १० ॥
153264
153265 इति एवंरीत्या परकल्पनयैव मे पृथिव्यादिभ्यो जन्मनां संततिः परम्परा ॥ १० ॥
153266
153267 ततःप्रभृति लोकेऽहं पार्थिवः प्रथितः क्वचित् ।
153268 अम्मयः क्वचिदन्येषां तैजसो मारुतः क्वचित् ॥ ११ ॥
153269
153270 मारुतो मरुन्मयदेहः ॥ ११ ॥
153271
153272 अथ कालेन मे तत्र तस्मिन्नेवातिवाहिके ।
153273 आधिभौतिकता देहे रूढा रूढान्तरेरिता ॥ १२ ॥
153274
153275 तस्मिन्नेवातिवाहिके देहे आधिभौतिकता रूढा प्रादुर्भूता रूढेन
153276 चिराभ्यासपरिणतेन आन्तरेण मनसा ईरिता गमिता । आरूढान्तरैरन्यैः सिद्धैरीरिता
153277 गदितेति वा ॥ १२ ॥
153278
153279 यदेतदातिवाहित्वमाधिभौतिकता च खम् ।
153280 द्वयमप्येकदेहात्म ततः कचति मे चितिः ॥ १३ ॥
153281
153282 तर्हि किमज्ञवद्भौतिकदेहात्मैवाभूर्नेत्याह - यदेतदिति । यत इदं द्वयमपि
153283 खमाकाशमेव तद्रूपेणैकदेहात्मेत्येतत्त्वतः परिज्ञातं ततो मे
153284 चितिरेवात्मभावेन कचति न देहात्मभावेन देहात्मभाव इत्यर्थः ॥ १३ ॥
153285
153286 एवमात्म क्वचिद्व्योम कचनात्माप्यहं नभः ।
153287 परमेव निराकारं युष्मास्वाकारवानपि ॥ १४ ॥
153288
153289 क्वचिद्व्योमादिभूतरूपेण कचनात्माप्यहम् । एवमात्म चिदेकस्वभावं परं नभ
153290 एव न भूताकाशादिस्वभावः । कथं तर्ह्याकारवान् दृश्यसे तत्राह -
153291 युष्मास्विति । युष्मदुपदेशादिव्यवहारसिद्ध्यर्थमित्यर्थः ॥ १४ ॥
153292
153293 जीवन्मुक्तो व्यवहरंस्तथास्ते ब्रह्मखात्मकः ।
153294 तथैवादेहमुक्तोऽपि तिष्ठति ब्रह्ममात्रकः ॥ १५ ॥
153295
153296 वस्तुतस्तु सदेहविदेहमुक्तयोरैकरूप्यमेवेत्याह - जीवन्मुक्त इति ॥ १५ ॥

153297
153298 मम न ब्रह्मतापेता तादृग्व्यवहृतेरपि |
153299 असंभवादन्यदृशो युष्मदादिष्वहं त्वहम् || १६ ||
153300
153301 युष्मदादिषु उपदेशार्थमहं वसिष्ठदेहः संपन्न इत्यर्थः || १६ ||
153302
153303 यथाऽज्ञस्य स्वप्ननरे निर्जन्मनि निराकृतौ |
153304 आधिभौतिकताबुद्धिस्तथा मे जगतोपि च || १७ ||
153305
153306 शून्ये देहे कथं तर्हि आधिभौतिकता रूढेत्युक्तिस्तत्राह - यथेति | जगतो
153307 जनान्तरस्य [जन्यन्तरस्य इत्यपि पाठः |] च || १७ ||
153308
153309 एवमेवावभासन्ते सर्व एव स्वयंभुवः |
153310 सर्गाश्च न तु जायन्ते प्रयाता इव चोदिताः || १८ ||
153311
153312 ब्रह्मादिशरीराणि तत्कृतसर्गाश्चैवमेव परदृष्ट्यैवाधिभौतिका इत्याह -
153313 एवमेवेति || १८ ||
153314
153315 एष सोहमिहाकाशवसिष्ठः पुष्टतामिव |
153316 गतोऽद्य स्वात्मनाभ्यासाद्भवतां वा भवत्स्थितिः || १९ ||
153317
153318 भवत्स्थितिर्भवद्बुद्ध्यनुसारिभौतिकदेहस्थितिः || १९ ||
153319
153320 आकाशात्मान एवैते सर्व एव स्वयंभुवः |
153321 यथा त्वेतन्मनोमात्रमिमे सर्गास्तथैव हि || २० ||
153322
153323 ममेव हिरण्यगर्भस्यापि स्वदृष्ट्या जगद्ब्रह्माकाशात्मकमेवेत्याह -
153324 आकाशेति | परीक्षकदृशा एतन्मनोमात्रम् || २० ||
153325
153326 अहमादिरयं सर्गस्त्वपरिज्ञानदोषतः |
153327 वेताल इव बालानां गतो वो वज्रसारताम् || २१ ||
153328
153329 वः अज्ञजनानाम् || २१ ||
153330
153331 परिज्ञातस्तु कालेन स्वल्पेनैवोपशाम्यति |
153332 वासनातानवात्स्नेहो बन्धौ दूरगते यथा || २२ ||
153333
153334 दूरगते बन्धौ स्नेहो यथा कालेनोपशाम्यति तद्वत् || २२ ||
153335
153336 घनत्वमहमासाद्य तथा सर्गस्य शाम्यति |
153337 परिज्ञाता यथा स्वप्ननिधेरादेयभावना || २३ ||
153338
153339 अहंकाररूपं घनत्वं स्थौल्यं तथा शाम्यति | आदेयभावना उपादेयतावासना ||
153340 २३ ||
153341
153342 शाम्यन्ति संपरिज्ञाताः सकला दृश्यदृष्टयः |
153343 यथा मरुनदीवेगवारिग्रहणबुद्धयः || २४ ||
153344
153345 महारामायणप्रायशास्त्रप्रेक्षणमात्रतः |
153346 एतदासाद्यते नित्यं किमेतावति दुष्करम् || २५ ||
153347
153348 प्रायपदं सदृशपरम् | एतत् उक्तरूपं जीवन्मुक्तत्वम् || २५ ||

संसारवासनाभावरूपे सक्ता नु यस्य धीः।
मन्दो मोक्षे निराकाङ्क्षी स श्वा कीटोऽथवा जनः॥ २६॥

संसारात्यासक्त्या अध्यात्मशास्त्रपराङ्मुखं निन्दति - संसारेति। यस्य जनस्य धीः संसारवासनावशात् अभावरूपे अवस्तुस्वभावे देहेन्द्रियभोग्यादिरूपे सक्ता मोक्षविषये निराकाङ्क्षी स जनोऽशुचिभोगासक्तिसाम्याच्छ्वा अथवा कीटो न तु मनुष्यः। ज्ञानाधिकारयोग्यमनुष्यदेहस्यायोग्य इत्यर्थः॥ २६॥

भोगाभोगः किलायं यः स जीवन्मुक्तबुद्धिना।
कीदृशो भुज्यमानः स्यात्कीदृक्स्यान्मौर्ख्यसेविना॥ २७॥

यथैकमेवान्नं हविःपुरोडाशादिशुचितमरूपं देवद्विजादिभिर्भुज्यते उच्छिष्टपुरीषाद्यशुचिरूपं तु श्वकीटादिभिस्तथा जीवन्मुक्तैः शब्दादिर्भोगः शुद्धचिन्मात्रानन्दस्वरूपो भुज्यते। मूर्खैस्तु अशुचितमविषयरूप इत्याशयेनाह - भोगेति। जीवन्मुक्तबुद्धिना भुज्यमानो भोगस्याभोगः कलापः कीदृशः स्यात्। मौर्ख्यमन्यथावस्तुवेदनं सेवते तच्छीलेन मूर्खेण च भुज्यमानः कीदृक् स्यात्तद्विमृश्यमित्यर्थः॥ २७॥

महारामायणप्रायशास्त्रप्रेक्षणमात्रतः।
अन्तःशीतलतोदेति परार्थेषु हिमोपमा॥ २८॥

किंचाज्ञानां भोग्यार्थेष्वग्निरिव तृष्णाक्रोधलोभादिलक्षणः संताप एवोदेति शास्त्रपरिशीलिनां सुज्ञानां सर्वार्थेषु परा अन्तःशीतलतोदेतीत्यपरो विशेष इत्याह - महारामायणेति॥ २८॥

मोक्षः शीतलचित्तत्वं बन्धः संतप्तचित्तता।
एतस्मिन्नपि नार्थित्वमहो लोकस्य मूढता॥ २९॥

एतस्मिन्नीदृशेऽपि मोक्षे लोकस्य नार्थित्वम्। अहो आश्चर्यम्॥ २९॥

अयं प्रकृत्या विषयैर्वशीकृतः परस्परं स्त्रीधनलोलुपो जनः।
यथार्थसंदर्शनतः सुखी भवेन्मुमुक्षुशास्त्रार्थविचारणादितः॥ ३०॥

अयं जनः प्रकृत्या स्वभावेनैव विषयैर्वशीकृतः अत एव परस्परं युद्धचौर्यहरणादिनापि स्त्रीधनादिसंपादनात्तल्लोलुपः। एवं भ्रान्तिसंतापैः सदा दंदह्यमानोऽयं मुमुक्षुशास्त्राणामर्थविचारणानिदिध्यासनाद्युपायतो यथार्थवस्तुसंदर्शनत एव सुखी गतसंतापः पूर्णानन्दो भवेन्नोपायान्तरेणेत्यर्थः॥ ३०॥

श्रीवाल्मीकिरुवाच।

इत्युक्तवत्यथ मुनौ दिवसो जगाम सायंतनाय विधयेऽस्तमिनो जगाम।
स्नातुं सभा कृतनमस्करणा जगाम श्यामाक्षये रविकरैश्च सहाजगाम॥
३१॥

३१॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० निर्वाणप्रकरणे उ० पाषा० वसिष्ठशरीरवर्णनं नाम पञ्चनवतितमः सर्गः॥ ९५॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे

153401 वसिष्ठशरीरवर्णनं नाम पञ्चनवतितमः सर्गः ॥ ९५ ॥
153402 षण्णवतितमः सर्गः ९६
153403
153404 श्रीवसिष्ठ उवाच।
153405
153406 पाषाणाख्यानमेतत्ते कथितं कार्यकोविद।
153407 अनयेमाः स्फुरद्दृष्ट्या सृष्टयो नभसि स्थिताः ॥ १ ॥
153408
153409 पाषाणाख्यानतात्पर्यं विद्विवर्तो जगद्भ्रमः।
153410 वर्ण्यतेऽत्र चिदेवात्मा ब्रह्मानन्दोऽजरामरः ॥
153411
153412 विस्तरेण वर्णितं पाषाणाख्यानं परमप्रकृते योजयति - पाषाणाख्यानमिति।
153413 अनया आख्यायिकया स्फुरन्त्या चिन्मात्रपूर्णतादृष्ट्या सर्वाः सृष्टयो नभसि
153414 चिदाकाशे शून्यभावे च स्थिता इति निश्चिन्वित्यर्थः ॥ १ ॥
153415
153416 न च स्थितं किंचनापि क्वचनापि कदाचन।
153417 स्थितं ब्रह्मघने ब्रह्म यथास्थितमखण्डितम् ॥ २ ॥
153418
153419 ब्रह्मघने सैन्धवघनवदेकरसे स्वभावे ॥ २ ॥
153420
153421 ब्रह्म चिन्मात्रकं विद्धि तद्यथा स्वप्नदृष्टिषु।
153422 पुरं भवन्निजाद्रूपान्न कदाचन भिद्यते ॥ ३ ॥
153423
153424 जगतश्चिन्मात्रविवर्तत्वं स्वप्ने सर्वानुभवसिद्धमित्याह - ब्रह्मेति।
153425 निजाच्चिद्रूपात्कदापि न भिद्यते न प्रच्यवते। तथा च स्वरूपादप्रच्युतस्य
153426 रूपान्तरप्रतिभासो विवर्त इति तल्लक्षणं जगति प्रसिद्धमित्यर्थः ॥ ३ ॥
153427
153428 स्वयंभूत्वसमापत्तौ तथा दृश्यव्यवस्थितौ।
153429 स्वरूपमजहत्त्वेव चिदाकाशमजं स्थितम् ॥ ४ ॥
153430
153431 स्वप्नवत्सर्गेऽपि विवर्तता बोध्येत्याह - स्वयंभूत्वसमापत्ताविति। स्वयंभूः
153432 समष्टिजीवस्तत्त्वेन सूक्ष्मोपाधिसमापत्तौ दृश्यस्थूलव्यवस्थितौ च। अजं
153433 निर्विकारम् ॥ ४ ॥
153434
153435 न स्वयंभूर्न च जगन्न स्वप्नपुरमस्त्यलम्।
153436 स्थितं संविन्महादृष्ट्या ब्रह्म चिन्मात्रमेतया ॥ ५ ॥
153437
153438 जगच्चेद्विवर्तस्तर्हि परमार्थदृष्ट्या किं स्थितं तदाह - नेति ॥ ५ ॥
153439
153440 यथा पुरं भवत्स्वप्ने चिद्रूपं स्वात्मनि स्थितम्।
153441 अखण्डमेवमासृष्टेरामहाप्रलयस्थितेः ॥ ६ ॥
153442
153443 दृष्टान्तेऽपि तत्सममित्याह - यथेति। अखण्डचिद्रूपं
153444 यथास्थितमेवमासृष्टेरामहाप्रलयाज्जगद्रूपं भवत्तदेव स्थितमित्यर्थः ॥ ६ ॥
153445
153446 हेमहेमाश्मनोः स्वप्नपुरचेतनयोर्यथा।
153447 भेदो न संभवत्येव न भेदश्चितिसर्गयोः ॥ ७ ॥
153448
153449 चिदनुविद्धतया सर्वसर्गानुभवादपि सैव तथा स्थितेति निश्चय इत्याह - हेमेति।
153450 हेमाश्ममेर्वादौ प्रसिद्धम् ॥ ७ ॥
153451
153452 चितिरेकास्ति नो सर्गो हेमास्ति न तदूर्मिका।

153453 स्वप्नाचले चिदेवास्ति न तु काचन शैलता ॥ ८ ॥
153454
153455 चिदेव शैलवद्भाति यथा स्वप्ने निरामया ।
153456 तथा ब्रह्म निराकारं सर्गवद्भाति नेतरत् ॥ ९ ॥
153457
153458 चिन्मात्रमिदमाकाशमनन्तमजमव्ययम् ।
153459 महाकल्पसहस्रेषु नोदेति न च शाम्यति ॥ १० ॥
153460
153461 आकाशं स्वच्छं सर्वगतमलेपकं च ॥ १० ॥
153462
153463 चिदाकाशो ह्हि पुरुषश्चिदाकाशो भवानयम् ।
153464 चिदाकाशोऽहमजरश्चिदाकाशो जगत्त्रयम् ॥ ११ ॥
153465
153466 पुरुषो जीवः । भवानित्यादिरुक्तस्य प्रपञ्चः ॥ ११ ॥
153467
153468 चिदाकाशं वर्जयित्वा शवमेव शरीरकम् ।
153469 अच्छेद्योऽसावदाह्योऽसौ चिदाकाशो न शाम्यति ॥ १२ ॥
153470
153471 शवं निर्जीवमेव स्यात् ॥ १२ ॥
153472
153473 अतो न किंचिन्म्रियते न च किंचन जायते ।
153474 चित्त्वात्ततश्चित्कचनं जगदित्यनुभूयते ॥ १३ ॥
153475
153476 चिन्मात्रपुरुषो जन्तुर्म्रियते यदि नाम वा ।
153477 ततो मरिष्यत्तत्पुत्रो निःसंदेहं पितुर्मृतौ ॥ १४ ॥
153478
153479 चितो मरणे तद्भेदे प्रमाणाभावात्सर्वमरणं स्यादित्याह - चिन्मात्रेति । आत्मा
153480 वै पुत्रनामासि इति पुत्रस्य पित्रात्माऽभेदश्रुतेरिति भावः ॥ १४ ॥
153481
153482 एकस्मिन्प्रमृते जन्तावमरिष्यंस्तु सर्वदा ।
153483 सर्व एव जनाः शून्यमभविष्यन्महीतलम् ॥ १५ ॥
153484
153485 एक एव हि भूतात्मा भूते भूते व्यवस्थितः इति श्रुतेरेकमरणे
153486 सर्वमरणप्रसङ्गश्चेत्याह - एकस्मिन्निति ।
153487 एकैकमरणानधिकरणक्षणाप्रसिद्धेः सर्वदेत्युक्तिः । महीतलग्रहणं
153488 जगन्मात्रोपलक्षणम् ॥ १५ ॥
153489
153490 न चाद्यापि मृतं राम चिन्मात्रं कस्यचित्क्वचित् ।
153491 न च शून्या स्थिता भूमिस्तस्माच्चित्पुरुषोऽक्षयः ॥ १६ ॥
153492
153493 तर्कस्य विपर्ययपर्यवसानं दर्शयति - न चेति ॥ १६ ॥
153494
153495 एकं चिन्मात्रमेवाहं न शरीरादयो मम ।
153496 इति सत्यनुसंधाने क्व जन्ममरणादयः ॥ १७ ॥
153497
153498 तथा च चिदात्मपरिज्ञानादेव जननमरणाद्यनर्थनिवृत्तिः सिद्धेत्याह -
153499 एकमिति ॥ १७ ॥
153500
153501 अहं चिन्मात्रममलमित्यात्मानुभवं स्वयम् ।
153502 अपहन्त्यात्महन्तारो निमज्जन्त्यापदर्णवे ॥ १८ ॥
153503
153504 चिन्मात्रमहमित्येवंरूपमात्मानुभवं ये अपहन्ति कुतर्कैः खण्डयन्ति त

153505 एवात्महन्तारः। वचनव्यत्ययश्छान्दसः। अपहत्य इति वा पाठः॥ १८॥
153506
153507 चिदहं गगनादच्छा नित्यानन्ता निरामया।
153508 किं जीवितं मे किं वापि मरणं वा सुखासुखे॥ १९॥
153509
153510 व्योमात्मचेतनमहं के शरीरादयो मम।
153511 इत्यात्महापह्नुतेऽन्तर्योऽनुभूतं धिगस्तु तम्॥ २०॥
153512
153513 इति विद्वद्भिरन्तरनुभूतमनुभवं यः कुतर्कैरपह्नुते स आत्महा तं धिगस्तु॥ २०
153514 ।।
153515
153516 चिदाकाशमहं स्वच्छमनुभूतिरिति स्फुटा।
153517 यस्यास्तमागता मूढं तं जीवन्तं शवं विदुः॥ २१॥
153518
153519 यस्य चिदात्माहमित्यनुभूतिरस्तं नाशमागता तं मूढं जीवन्तमपि शवं
153520 विदुस्तत्त्वविदः॥ २१॥
153521
153522 अहं वेदनमात्रात्मा कानि देहेन्द्रियाणि मे।
153523 लब्धात्मानमिति स्वच्छं प्रविलुम्पन्ति नापदः॥ २२॥
153524
153525 इति बोधेन लब्धात्मानं अविद्यादिमालिन्यापगमात् स्वच्छं पुरुषं मरणाद्यापदो
153526 न प्रविलुम्पन्ति॥ २२॥
153527
153528 चिन्मात्रं शुद्धमात्मानं योऽवलम्ब्य स्थिरः स्थितः।
153529 नाधयस्तं विलुम्पन्ति महोपलमिवेषवः॥ २३॥
153530
153531 चित्त्वं स्वभावं विस्मृत्य बद्धास्था ये शरीरके।
153532 तैः सुवर्णं परित्यज्य गृहीतं भस्म वस्तुतः॥ २४॥
153533
153534 वस्तुतः सुवर्णं परित्यज्य भस्मस्वर्णबुद्ध्या गृहीतम्॥ २४॥
153535
153536 बलं बुद्धिश्च तेजश्च देहोऽहमिति भावनात्।
153537 नश्यत्युदेत्येतदेव चिदेवाहमिति स्थितेः॥ २५॥
153538
153539 एतदेव बलबुद्ध्यादि॥ २५॥
153540
153541 चिदाकाशमहं शुद्धं के मे मरणजन्मनी।
153542 एवं स्थिते स्युः किंनिष्ठा लोभमोहमदादयः॥ २६॥
153543
153544 किंनिष्ठाः स्युः। न ह्यात्मनिष्ठास्ते तदा येन तैरात्मा दुष्येदित्यर्थः॥ २६॥
153545
153546 चिदाकाशादृते देहान्योऽन्यत्सारमवाप्नुयात्।
153547 तस्मै तद्युज्यते वक्तुं सन्ति लोभादयस्त्विति॥ २७॥
153548
153549 देहान् स्थूलसूक्ष्मकारणाख्यान्। सारमात्मानमवाप्नुयात्पश्येत्। तस्मै मूढाय॥
153550 २७॥
153551
153552 न च्छिद्ये न च दह्येऽहं चिन्मात्रं वज्रवच्चिति।
153553 न देही निश्चयो यस्य तं प्रत्यन्तकरस्तृणम्॥ २८॥
153554
153555 अन्तकरो मृत्युः॥ २८॥
153556

153557 अहो नु मुग्धता ज्ञानदृष्टीनां यद्विदन्त्यलम् ।
153558 शरीरशकलाभावे नश्याम इति मोहिताः ॥ २९ ॥
153559
153560 ज्ञानदृष्टीनां पण्डितानामपि मुग्धता व्यामोहो दृश्यते । यत्
153561 शरीरलक्षणशकलस्य जडवर्गैकदेशस्याभावे नाशे उपस्थिते नश्याम इति मोहिता
153562 भीता जायन्त इति शेषः ॥ २९ ॥
153563
153564 अहं चिन्नभ एवेति सत्ये भावे स्थिरे सति ।
153565 वज्रपातयुगान्ताग्निदाहाः पुष्पोत्करोपमाः ॥ ३० ॥
153566
153567 चिन्मात्रममरं नाहं यन्नश्यामीति रोदिति ।
153568 अनष्ट एव तद्देहो जातापूर्वा खरोलिका ॥ ३१ ॥
153569
153570 अमरं चिन्मात्रमहं न अतो नश्यामीति यद्रोदिति तदनष्टे एवात्मनि रोदिति । सेयं
153571 विवेकिदृशा नटस्येव रोदनविडम्बना अपूर्वा खरोलिका परिहासक्रीडैव जाता ॥ ३१ ॥
153572
153573 इदं चेतनमेवाहं नाहं देहादिदृष्टयः ।
153574 इति निश्चयवान्योऽन्तर्न स मुह्यति कर्हिचित् ॥ ३२ ॥
153575
153576 इदं नित्यापरोक्षं चेतनं चिन्मात्रमेवाहम् ॥ ३२ ॥
153577
153578 अहं चेतनमाकाशो नाशो मे नोपपद्यते ।
153579 चेतनेन जगत्पूर्णं केव संदेहितात्र वः ॥ ३३ ॥
153580
153581 संदेहिता जन्मरणादिसंशयः ॥ ३३ ॥
153582
153583 चेतनं वर्जयित्वान्यत्किंचिद्यूयं जना यदि ।
153584 यदुच्यतां महामूढाः स्वात्मा किमपलप्यते ॥ ३४ ॥
153585
153586 चेतनादन्यद्वयमिति हि चेतयद्भिरुच्येत अचेतयद्भिर्वा । नाद्यः ।
153587 चेतयद्भिश्चेतनास्वभावं स्वस्यानुभवद्भिस्तथा वक्तुमशक्यत्वात् । न द्वितीयः ।
153588 अचेतयद्भिर्जडैर्वयमचेतना इत्यनुभवितुमभिलपितुं किंचिदपलपितुं वा
153589 शक्यमित्याशयेनाह - चेतनमिति ॥ ३४ ॥
153590
153591 तच्चेतनं चेन्म्रियते तज्जनाः प्रत्यहं मृताः ।
153592 ब्रूत किं न मृता यूयं तन्मृतं किल चेतनम् ॥ ३५ ॥
153593
153594 किं च चैतन्यंन् स्वमरणं चेत्पश्यति तर्हि सदैव पश्येत् । तदा सर्वदा सर्वेषां
153595 जीवतां मरणानुभवः स्यादित्याह - तदिति ॥ ३५ ॥
153596
153597 तस्मान्न म्रियते किंचिन्न च जीवति किंचन ।
153598 जीवामीति मृतोऽस्मीति चिच्चेतति न नश्यति ॥ ३६ ॥
153599
153600 एवं मरणाप्रसिद्धौ तद्व्यावृत्तं जीवनमित्यपि कल्पना वृथेत्याशयेनाह -
153601 तस्मादिति । चेतति भ्रान्तिमनुभवति । स्वयंन् तु कदापि न नश्यति । तथा च श्रुतिः न हि
153602 द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात् इति ॥ ३६ ॥
153603
153604 चिच्चेतति यथा वा यत्तत्तथा साशु पश्यति ।
153605 आबालमेषोऽनुभवो न क्वचित्सा च नश्यति ॥ ३७ ॥
153606
153607 सर्वेषामविनाशिचिच्चेतनानुसारेणेवार्थानुभवः प्रसिद्धो न तद्वैपरीत्येनेत्याह ##-
153608

153609 परिपश्यति संसारं परिपश्यति मुक्तताम् ।
153610 सुखदुःखानि जानाति स्वरूपात्तन्न भिद्यते ॥ ३८ ॥
153611
153612 स्वरूपाच्चित्स्वभावात्तु चेत्यभेदे देशभेदे कालभेदे च न भिद्यते ॥ ३८ ॥
153613
153614 अपरिज्ञातदेहात्तु धत्ते मोहाभिधां स्वयम् ।
153615 परिज्ञातस्वरूपात्तु धत्ते मोक्षाभिधां स्वयम् ॥ ३९ ॥
153616
153617 तर्हि बन्धमोक्षयोः किंकृतः को वा विशेषस्तमाह - अपरिज्ञातेति ॥ ३९ ॥
153618
153619 नास्तमेति न चोदेति न कदाचन किंचन ।
153620 सर्वमेव च चिन्मात्रमाकाशविशदं यतः ॥ ४० ॥
153621
153622 न तदस्ति न यत्सत्यं न तदस्ति न यन्मृषा ।
153623 यद्यथा येन निर्णीतं तत्तथा तं प्रति स्थितम् ॥ ४१ ॥
153624
153625 तथा च जगद्रूपेषु सत्यत्वमिथ्यात्वे स्वस्वनिर्णयानुसारनियते न वास्तवे इत्याह -
153626 न तदस्तीति ॥ ४१ ॥
153627
153628 यद्यद्यथा जगति चेतति चेतनात्मा तत्तत्तथानुभवतीत्यनुभूतिसिद्धम् ।
153629 दृष्टं विषामृतदृशेव पदार्थजातं नातोस्ति संविदविधेयमिति
153630 प्रसिद्धम् ॥ ४२ ॥
153631
153632 उक्तमर्थं निगमयन्नुपसंहरति - यद्यदिति । पदार्थजातं विषामृतदृशेव
153633 कालभेदाद्भोक्तृभेदात्सहकारिभेदाच्चानियतविपरीतव्यवस्थितार्थक्रियाभेद##-
153634 संविदनुसारि किंचिदपि वस्तु नास्तीति यदुक्तं तत्प्रसिद्धमित्यर्थः ॥ ४२ ॥
153635
153636 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वाणप्रकरणे उ०
153637 अमरत्वप्रतिपादनं नाम षण्णवतितमः सर्गः ॥ ९६ ॥
153638
153639 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
153640 अमरत्वप्रतिपादनं नाम षण्णवतितमः सर्गः ॥ ९६ ॥
153641
153642 सप्तनवतितमः सर्गः ९७
153643
153644 श्रीवसिष्ठ उवाच ।
153645
153646 संविन्मयत्वाज्जगतः स्वप्नस्य परमात्मनः ।
153647 ब्रह्माकाशतया सर्वं ब्रह्मैवेत्यनुभूयते ॥ १ ॥
153648
153649 वर्ण्यते सर्वशक्तित्वात्सर्ववाद्युक्तिसत्यता ।
153650 भोगासक्तिश्च सर्वेषां तत्त्वज्ञविरलस्थितिः ॥
153651
153652 ब्रह्मणः सर्वशक्तित्वात्सर्ववाद्युक्तीनां सत्यतेति वक्ष्यमाणार्थोपयोगितयान
153653 तदस्ति न यत्सत्यम् इति सर्गोपान्त्यश्लोकोक्तं समर्थयितुं भूमिकां रचयति -
153654 संविन्मयत्वादिति । परमात्मनः स्वप्रभूतस्य जगतः
153655 परमार्थसत्यब्रह्माकाशतया सर्वं ब्रह्मैवेति सत्यमेव जगत्सर्वैरनुभूयत इति
153656 नासत्यं किंचिदस्तीत्युक्तमित्यर्थः ॥ १ ॥
153657
153658 भ्रमस्य चातिदृश्यत्वाददृश्यत्वान्महाचितेः ।
153659 मदशक्तिवदात्मेति सत्यतास्यापि युज्यते ॥ २ ॥
153660

153661 एवं ब्रह्मरूपेण सत्यत्वेऽपि कथं प्रतीयमानरूपेण सत्यता। न हि रज्जुरूपं
153662 सत्यमिति तदध्यस्तः सर्पः सत्यो भवति तत्राह - भ्रमस्येति। तत्र हि सर्पोऽपि
153663 दृश्यो रज्जुरपि दृश्या। उभयोर्दृश्यत्वे रज्जुदर्शने सर्पबाधादसत्यता इह तु
153664 जगद्भ्रान्तिर्दृश्या तदधिष्ठानं महाचितिरदृश्येति वैषम्याच्चिदात्मा
153665 मदशक्तिरिव स्वयमदृश्यो दृश्यभ्रमहेतुः कार्यरूपेणैव स्वसत्तां
153666 प्रकटयतीत्यस्य जगद्रूपस्य सत्यता युज्यत इत्यर्थः॥ २॥
153667
153668 असत्त्वाद्दृश्यविश्रान्तेरलभ्यत्वान्महाचितेः।
153669 उपलब्धुरभावाच्च शून्यनाम्नीव सत्यपि॥ ३॥
153670
153671 तर्हि न तदस्ति न यन्मृषेत्युक्तिः कथं घटतां ब्रह्मणो मृषात्वायोगात्तत्राह
153672 - असत्त्वादिति। बन्धकाले दृश्यविश्रान्तेः
153673 सर्वदृश्योपरमलक्षणमोक्षस्यासत्त्वादसंपत्तेस्तां विना
153674 महाचितेरद्वितीयचिदात्मनः अलभ्यत्वान्मुक्तिकालेऽपि उपलब्धुः
153675 प्रमातुरन्तःकरणोपहितजीवस्योपलम्भकप्रमाणादेश्च बाधेनाभावाच्चा
153676 त्यन्ताप्रसिद्धप्रायतया सति परमार्थवस्तुन्यपि शून्यत्वमिव सुवचमित्यर्थः॥ ३॥
153677
153678 चिन्मात्रं पुरुषोऽकर्ता समेत्यव्यक्ततो जगत्।
153679 एवंदृष्टेः सत्यमेतदेवमर्थानुभूतितः॥ ४॥
153680
153681 एवं सति सर्वेषां वादिनां वाक्यं स्वस्वानुभवसिद्धार्थप्रतिपादनात्सत्यमेवेति
153682 प्रपञ्चयिष्यन् प्रथमं सांख्योक्तेः सत्यतां दर्शयति - चिन्मात्रमिति। इदं
153683 जगत् सुखदुःखमोहात्मतया अन्वीयमानं
153684 तथाविधसामान्यपरम्परावधिभूतगुणत्रयसाम्यावस्थालक्षणादव्यक्ततः
153685 प्रधानाख्यान्मूलकारणान्महदहंकारादिक्रमेण समेति आविर्भवति। पुरुषस्तु
153686 चिन्मात्रमकर्ता च। तस्य भोगमोक्षसिद्धये सर्गः प्रवर्तत इत्येवं दृष्टिर्यस्य
153687 कपिलस्य तस्य तथैव तत्सत्यमित्यर्थः॥ ४॥
153688
153689 विवर्तो ब्रह्मणो दृश्यमित्येवंवादिनोऽपि सत्।
153690 मतमेवंस्वरूपाणामर्थानामनुभूतितः॥ ५॥
153691
153692 यस्तु वेदान्ती ब्रह्मणो विवर्तो जगदिति वादी तस्यापि मतं सत्। तथा पर्यालोचने
153693 एवंरूपाणामेवार्थानामनुभवादित्यर्थः॥ ५॥
153694
153695 परमाणुसमूहात्म जगदित्यपि सत्यतः।
153696 संवेद्यते यथा यद्यत्तत्तथैवानुभूतितः॥ ६॥
153697
153698 एवं कणादगौतमसौत्रान्तिकवैशेषिकार्हतानां परमाणुसमूहात्मकमेव
153699 जगदिति कपनापि तदनुभवानुसारित्वात्सत्यैवेत्याह - परमाण्विति॥ ६॥
153700
153701 यथा दृष्टं तथैवेदमिह लोके परत्र च।
153702 नासन्न सदिति प्रौढा सत्यमाध्यात्मिकी गतिः॥ ७॥
153703
153704 एवं दृष्टसृष्टिवादिनामनिर्वचनीयमेवेह लोके परत्र च जगन्न तु
153705 सदसदन्यतरकोटिप्रतिष्ठितमित्याध्यात्मिकी मनःकल्पनामात्ररूपा जगतो
153706 गतिरवगतिरपि सत्यम्। तैस्तथैवानुभवादित्यर्थः॥ ७॥
153707
153708 बाह्यमेवास्ति नास्त्यन्यदित्यन्ये सत्यवादिनः।
153709 स्वात्मन्यक्षगणातीतं प्राप्नुवन्ति न ते यतः॥ ८॥
153710
153711 एवं ये अन्ये चार्वाका बाह्यं पृथिव्यादिभूतचतुष्टयमेवास्ति
153712 अन्यदान्तरमात्मरूपं नास्तीति वदन्ति तेऽपि सत्यवादिन एव। यतस्ते

153713 अक्षगणेभ्यश्चक्षुरादिभ्योऽतीतं स्वात्मनि देहे विमृशन्तो न प्राप्नुवन्ति ॥ ८ ॥
153714
153715 अनारतविपर्यासदर्शनात्क्षणभङ्गधीः ।
153716 युक्तैव तद्विदामाद्यं सर्वशक्ति हि तत्पदम् ॥ ९ ॥
153717
153718 एवं क्षणिकवादिनां क्षणभङ्गधीरपि युक्तैव । प्रतिक्षणपरिणामिनां
153719 सर्वभावानामनारतं विपर्यासदर्शनादित्यर्थः ॥ ९ ॥
153720
153721 कलविङ्कघटन्यायो धर्म इत्यपि तद्विदाम् ।
153722 तथात्मसिद्धेर्म्लेच्छानां तद्देशेषु न दुष्यति ॥ १० ॥
153723
153724 यथा घटेऽवरुद्धः कलविङ्कस्तन्मुखापावरणे बहिरुड्डीय गच्छति एवं
153725 देहान्तःपरिच्छिन्नो धर्मो जीवः कर्मक्षये परलोके उड्डीय गच्छतीत्यार्हतकल्पनापि
153726 सत्या । तथा म्लेच्छानां यवनादीनामीश्वरोत्पादितो देहाकार एव जीवो
153727 देहनिखननदेशेषु तिष्ठति स ततः कालान्तरे ईश्वरेण परामृष्टस्तदिच्छया
153728 मुच्यते उच्छिद्यते । शाश्वतं स्वर्गे नरके वा निवेश्यत इति कल्पनापि
153729 तदनुभवानुसारादेव न दुष्यति ॥ १० ॥
153730
153731 समाः सन्तश्च विप्राग्निविषामृतमृतिष्वपि ।
153732 भान्त्येवं तद्विदां सर्वमिदं सर्वात्मकं यतः ॥ ११ ॥
153733
153734 एवं सर्वत्र समबुद्धीनां सन्मात्रवस्तुनि दत्तदृष्टीनां
153735 विषामृतमृतिजन्मादिषु विषमत्वेन कादाचित्कत्वेन च प्रसिद्धेष्वपि सर्वत्र समाः
153736 सदा सन्तश्च भान्ति । यत इदं ब्रह्मैव सर्वं सर्वात्मकं चातो न किंचिदत्र
153737 दुर्लभमिति सर्ववादिनामपि सर्वाभिलषितसिद्धिरित्यर्थः ॥ ११ ॥
153738
153739 स्वभावसिद्धमेवेदं युक्तमित्येव तद्विदाम् ।
153740 अन्विष्टा याति नो प्राप्तिं बुद्धिमत्सर्वकर्तृता ॥ १२ ॥
153741
153742 एवं स्वभावादेव स्वयमेव सर्वं जगदुत्पद्यते स्वभावादेव नश्यति न जगतः
153743 कर्ता कश्चिदस्तीति तद्विदां स्वभाववादिनां चार्वाकाणां मतमपि युक्तमेव । यतो
153744 घटपटादौ दृष्टापि बुद्धिमत्सर्वकर्तृता वृष्टिवाततृणाङ्कुरादौ
153745 सम्यगन्विष्टापि वाप्तिं नो याति । न ह्यकालवृष्टिसुक्षेत्रतृणादयः
153746 कृषीवलानां सस्यकर्तॄणामनिष्टा विनैव कर्तारं स्वभावादेव जायमानाः
153747 कर्तृकल्पनां सहन्ते । न हि सर्वानिष्टकर्ता कश्चिदस्ति तस्य
153748 चाकालवृष्टिपरक्षेत्रतृणादिना प्रयोजनमस्तीति कल्पना संभवतीति भावः ॥ १२ ॥
153749
153750 एकः सर्वत्र कर्तेति सत्यं तन्मयचेतसाम् ।
153751 सोऽयं निश्चयवान्सोऽत्र तदाप्नोतीत्यबाधितम् ॥ १३ ॥
153752
153753 क्षित्यङ्कुरादौ सर्वत्र कार्यमात्रे एकः कर्ता इति यत्कल्पनं तदपि सत्यम् । तथा
153754 निश्चयवतामीश्वरोपासकानां तत्प्राप्त्यनुग्रहवरदानाद्यर्थक्रियादर्शनादित्याह
153755 - एक इति । तन्मयं तदासक्तं चेतो येषाम् । सोऽयमुपासको यतस्तथा
153756 निश्चयवांस्ततः सोऽन्तस्तत्स्वोपास्यं सर्वकर्तारं प्राप्नोति । न ह्यसौ पूर्वादीव तं
153757 बाधितं मन्यते । अकालवृष्टिसुक्षेत्रतृणादीनामपि सर्वानिष्टत्वासिद्धेः
153758 सर्वकर्मफलप्रदस्येश्वरस्य दुष्कर्मफलानिष्टकर्तृत्वे दोषाभावाच्चेति ॥ १३ ॥
153759
153760 अयं लोकः परश्चास्ति स्नानाग्न्यादि च नेतरत् ।
153761 एतदेतादृशं सत्यं विद्धि भावितभावनम् ॥ १४ ॥
153762
153763 आस्तिकानामयं लोक इव परोऽपि लोकोऽस्ति । अतः परलोकार्थिनां तीर्थस्नानाग्निहोत्रादि इतरत्
153764 निष्फलं न । एतादृशं तेषामेतद्भावितभावनं सत्यमेव ॥ १४ ॥

153765
153766 अशेषं शून्यमेवेति बौद्धानामेतदेव सत् ।
153767 लभ्यते तद्विचारेण यत्र किंचन नैव हि ॥ १५ ॥
153768
153769 एतत्तद्भावनमपि सत्यमेव । यत्र शून्यवादे तत्प्रमाणशून्ये
153770 प्रमेयशून्यत्वकल्पनसंभवादिति भावः ॥ १५ ॥
153771
153772 चितिश्चिन्तामणिरिव कल्पद्रुम इवेप्सितम् ।
153773 आशु संपादयत्यन्तरात्मनात्मनि खात्मिका ॥ १६ ॥
153774
153775 सर्ववादिनां स्वस्वाभिलषितसिद्धावुपपत्तिमाह - चितिरिति ॥ १६ ॥
153776
153777 नेदं शून्यं न चाशून्यमित्यवस्तु न तद्विदाम् ।
153778 सर्वशक्तिर्हि सा शक्तिर्न तद्विद्यत एव तत् ॥ १७ ॥
153779
153780 एवं शून्याशून्यविलक्षणानिर्वचनीयतृतीयविधावादिनामपि
153781 तत्स्वाभिमतमवस्त्वसत्यं न । यतः सर्वशक्तेर्ब्रह्मणः सा अनिर्वचनीया
153782 मायाशक्तिः । हि यस्मात्तच्छून्यं न । यद्विद्यते ब्रह्म तदेव च न
153783 उभयविलक्षणेत्यर्थः ॥ १७ ॥
153784
153785 तस्मात्स्वनिश्चये यस्मिन्यः स्थितः स तथा ततः ।
153786 अवश्यं फलमाप्नोति न चेद्बाल्यान्निवर्तते ॥ १८ ॥
153787
153788 बाल्यादविश्वासलक्षणाच्चापलाद्धेतोः पूर्वनिश्चयान्न निवर्तते चेदित्यर्थः । अथवा
153789 बाल्यादज्ञानान्न निवर्तते चेत् । तथा च यावदात्मज्ञानं नास्ति तावदेव
153790 तत्तत्सिद्धान्ताः सत्याः । आत्मज्ञाने तु आत्मैव सत्यो नान्यदिति भावः ॥ १८ ॥
153791
153792 विचार्य पण्डितैः सार्धं श्रेष्ठवस्तुनि धीमता ।
153793 स रूढो निश्चयो ग्राह्यो नेतरत्र यथा तथा ॥ १९ ॥
153794
153795 अत एवाविचाराद्यस्य कस्यचित्सिद्धान्तोन ग्राह्य इत्याह - विचार्येति ॥ १९ ॥
153796
153797 संभवत्युत्तमप्रज्ञः शास्त्रतो व्यवहारतः ।
153798 यो यत्र नाम तत्रासौ पण्डितस्तं समाश्रयेत् ॥ २० ॥
153799
153800 पण्डितश्रेष्ठलक्षणमाह - संभवतीति द्वाभ्याम् । शास्त्रतः अध्ययनतः ।
153801 व्यवहारतः आचरणतः । यत्र देशे । नामेति तस्य दौर्लभ्यान्वेष्यत्वद्योतनाय ॥ २० ॥
153802
153803 सतां विवदमानानां सच्छास्त्रव्यवहारिणाम् ।
153804 यः समाह्लादकोऽनिन्द्यः स श्रेष्ठस्तं समाश्रयेत् ॥ २१ ॥
153805
153806 अनिन्द्यो निन्दायोग्यनिषिद्धाचरणहीनः ॥ २१ ॥
153807
153808 सर्व एवानिशं श्रेयो धावन्ति प्राणिनो बलात् ।
153809 परिनिम्नं पयांसीव तद्विचार्य समाश्रयेत् ॥ २२ ॥
153810
153811 तर्हि किं निश्चयान्तरनिष्ठा विफला एव नेत्याह - सर्व एवेति । श्रेयः
153812 स्वस्वनिश्चयानुरूपमभिलषितम् । धावन्ति प्राप्नुवन्ति । तत्तेषु
153813 परमपुरुषार्थसाधनं किं स्यादिति विचार्य सच्छास्त्रसद्गुरू एव समाश्रयेत् ॥ २२ ॥
153814
153815 कल्लोलैरुह्यमानानां नृणां संसारसागरे ।
153816 अज्ञाता दिवसा यान्ति तृणानामिव बिन्दवः ॥ २३ ॥

153817
153818 तौ च शीघ्रं समाश्रयेन्न विलम्बेन आयुषि विश्वासायोगादित्याशयेनाह -
153819 कल्लोलैरिति | कल्लोलैर्मनोरथपरम्परातरङ्गैः | अज्ञाता अलक्षिताः तृणानामग्रे
153820 लग्ना बिन्दव इव || २३ ||
153821
153822 श्रीराम उवाच |
153823
153824 जगत्पूर्वं लेतवापि विश्रान्ता वितते पदे |
153825 पूर्वापरविचारेण के पराभावदर्शिनः || २४ ||
153826
153827 भोगतृष्णाप्राबल्यात्तद्विरक्ता मुमुक्षव एव दुर्लभास्तेष्वपि
153828 परमात्मतत्त्वसाक्षात्कारवन्तस्त्वदुक्तलक्षणाः पण्डितश्रेष्ठा अतिदुर्लभा
153829 इत्यमुमेवार्थं विस्तरेण श्रोतुकामो रामः पृच्छति - जगदिति | वितते पदे
153830 ब्रह्माकाशे जगद्विटपसहस्रवितानजालप्रसारपूर्वकमतिविस्तारेण विश्रान्ता
153831 प्राणिनां भोगतृष्णेति शेषः | एवं सति पूर्वापरजगत्स्वरूपानर्थविचारेण
153832 सारासारविचारेण च भावः परमार्थस्तद्दर्शिनः परास्त्वदुक्तश्रेष्ठपण्डिताः के
153833 वा स्युः | ते अतिदुर्लभा इत्यर्थः || २४ ||
153834
153835 श्रीवसिष्ठ उवाच |
153836
153837 जातौ जातौ कतिपये व्यपदेश्या भवन्ति ते |
153838 येषां यान्ति प्रकाशेन दिवसा भास्वतामिव || २५ ||
153839
153840 सत्यमतिदुर्लभास्तथापि देवासुरमनुष्यगन्धर्वादिजातिभेदेषु ते सन्त्येवेति
153841 प्रयत्नेनान्वेष्या इति प्रसिष्ठ उत्तरमाह - जातौ जाताविति | तद्यो योदेवानां
153842 प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम् इत्यादिश्रुतिव्यपदेश्या
153843 भवन्ति संभवन्त्येव || २५ ||
153844
153845 अधश्चोर्ध्वं च धावन्तश्चक्रावर्तविवर्तनैः |
153846 सर्वे तृणवदुह्यन्ते मूढा मोहभवाम्बुधौ || २६ ||
153847
153848 अन्ये तु सर्वे मूढा मोहमहाम्बुधौ भोगतृष्णाकल्लोलैस्तृणवदुह्यन्ते || २६ ||
153849
153850 नष्टात्मस्थितयो भोगवह्निषु प्रज्वलन्त्यलम् |
153851 देवा दिवि दवेनाद्रौ दह्यमाना द्रुमा इव || २७ ||
153852
153853 तदेव देवादिजातिभेदेषु प्रपञ्चयति - नष्टात्मस्थितय इत्यादिना | दवेन
153854 वनहुताशनेन || २७ ||
153855
153856 पातिता मदसंपन्ना दानवा दानवारिभिः |
153857 गजा इव निरालाना घोरे नारायणावटे || २८ ||
153858
153859 दानवारिभिर्देवैर्नारायणलक्षणे अवटे महागर्ते पातिताः || २८ ||
153860
153861 न गन्धमपि गन्धर्वा दर्शयन्ति विवेकजम् |
153862 गीतपीतपरामर्शाः सरन्ति हरिणा इव || २९ ||
153863
153864 गन्धं लेशमपि | गीतलक्षणं यत्पीतं मदिरा तद्वशात्पैररिषड्वर्गैः |
153865 परामृश्यन्त इति परामर्शा हरिणा इव मृत्युव्याधसंनिधिं सरन्ति गच्छन्ति ||
153866 २९ ||
153867
153868 विद्याधराश्च विद्यानामाधारत्वेन मोहिताः |

153869 स्फुरितानामुदाराणामपि कुर्वन्ति नादरम् ॥ ३० ॥
153870
153871 ब्रह्मविद्याया अपि विद्यात्वात्तद्योग्यताबलेन स्फुरितानामप्युदाराणां
153872 विवेकानामादरं न कुर्वन्ति। भोगसाधनविद्यास्वेवरमन्त इत्यर्थः ॥ ३० ॥
153873
153874 यक्षा विक्षोभितभुवो दक्षतामक्षता इव।
153875 दर्शयन्त्यसहायेषु बालवृद्धातुरेषु च ॥ ३१ ॥
153876
153877 भयज्वरोन्मादादिदोषोत्पादनेन विक्षोभिता भूर्जनावासो यैः। स्वयमक्षता इव
153878 स्वदेह। स्थिरं मन्यमाना इति यावत्। असहायेष्वेकाकिषु मणिमन्त्रादिबलशून्येषु च
153879 बालादिषु स्वदक्षतां दर्शयन्ति ॥ ३१ ॥
153880
153881 दन्तिनामिव मत्तानां रंहसा हरिणारिणा।
153882 कृतः करिष्यसि त्वं च राक्षसानां परिक्षयम् ॥ ३२ ॥
153883
153884 राक्षसानां तु कामबलशौर्यादिना दन्तिवन्मत्तानामरिणा शत्रुभूतेन हरिणा
153885 सिंहभूतेन विष्णुना प्राग्बहुशः परिक्षयः कृतः अग्रे च त्वं करिष्यसीति
153886 तत्प्रमादफलं तेषां प्रत्यक्षमेवेत्याह - दन्तिनामिति ॥ ३२ ॥
153887
153888 भृशं पिशाचाः पश्यन्ति भूतभोजनचिन्तया।
153889 धूमान्धकारानिलया ज्वालयाहुतयो यथा ॥ ३३ ॥
153890
153891 पिशाचानां तु सदा क्षुधातुरत्वात्प्राणिवधभोजनचिन्तैव सदेति न कदाचिदपि
153892 विवेकप्रसक्तिरित्याह - पिशाचा इति।
153893 अज्ञानधूमान्धकारस्याग्निलवत्क्रोधहिंसादिज्वालात्वसंपादिकया
153894 भूतभोजनचिन्तया। यथा अग्नौ पतिता आहुतयः सदैव सधूमज्वालया
153895 दंदह्यमानं स्वं पश्यन्ति तथा पिशाचा अपीत्यर्थः ॥ ३३ ॥
153896
153897 नागजालमृणालानि मग्नानि धरणीतले।
153898 नगानामिव मूलानि जडानीव स्थितान्यलम् ॥ ३४ ॥
153899
153900 एवं नागजातावपि विवेको दुर्लभ इत्याह - नागजालेति। धरणीतले पाताले। नगानां
153901 वृक्षाणां मूलानीव जडान्यचेतनानीव विवेकहीनानि स्थितानि ॥ ३४ ॥
153902
153903 विवरं शरणं येषां कीटानामिव भूतले।
153904 तेषामसुरबालानां विवेकेषु कथैव का ॥ ३५ ॥
153905
153906 अल्पमात्रकणार्थेन संचरन्ति दिवानिशम्।
153907 पिपीलिकासधर्माणः प्रायेण पुरुषा अपि ॥ ३६ ॥
153908
153909 एवं बलवीर्यप्रभावादिसंपन्नानां देवाद्यसुरान्तानां विवेकदौर्लभ्ये
153910 अन्येषां तत्किं वाच्यमित्याशयेनाह - अल्पमात्रेत्यादि। पुरुषा मनुष्याः ॥ ३६ ॥
153911
153912 सर्वासां भूतजातीनां व्यग्राणां व्यर्थदीर्घया।
153913 क्षीबाणामिव गच्छन्ति दिवसानि दुरीहया ॥ ३७ ॥
153914
153915 न कंचित्संस्पृशत्यन्तर्विवेको विमलो जनम्।
153916 जलेऽगाधे निपतितं निमज्जन्तं रजो यथा ॥ ३८ ॥
153917
153918 यथा जले निमज्जन्तं रजः शुष्कपांसुर्न स्पृशति तद्वत् ॥ ३८ ॥
153919
153920 नीयन्ते नियमाधूता मानवा मानवायुभिः।

153921 काम्पिकैः स्फुटतापूताः किरारुनिकरा इव ॥ ३९ ॥
153922
153923 मानो देहाद्यभिमानस्तल्लक्षणैर्वायुभिः अक्रोधादिनियमेभ्य आधूताश्चालिताः
153924 क्रोधादिवश्यतां नीयन्ते । यथा काम्पिकैः शूर्पकम्पकर्तृभिः
153925 कृषीवलैर्धानास्फुटतासिद्ध्यर्थं खलेषु पूता उड्डायिताः किरारुनिकरा
153926 निःसारधान्याभाससमूहा वायुभिर्नीयन्ते तद्वदित्यर्थः ॥ ३९ ॥
153927
153928 पानभोजनजम्बाले गहने योगिनीगणाः ।
153929 दुर्गन्धपल्वलोद्गारे पतिताः पामरा इव ॥ ४० ॥
153930
153931 सुरारुधिरपानमांसादिभोजनलक्षणो जम्बालः पङ्को यस्मिंस्तथाविधे
153932 तामसधर्मफलभोगासक्तिलक्षणदुर्गन्धपल्वलोद्गारे पतिताः । अविवेकेनेत्यर्थः ॥
153933 ४० ॥
153934
153935 केवलं यमचन्द्रेन्द्ररुद्रार्कवरुणानिलाः ।
153936 जीवन्मुक्ता हरिब्रह्मगुरुशुक्रानलादयः ॥ ४१ ॥
153937
153938 एवं देवादिजातिषु विवेकज्ञानदौर्लभ्यं प्रपञ्च्य तेषु ये
153939 प्रबुद्धास्तान्परिगणितानिव कतिपयान्दर्शयति - केवलमित्यादिना ॥ ४१ ॥
153940
153941 प्रजापतीनां सप्तर्षिदक्षाद्याः कश्यपादयः ।
153942 नारदाद्याः कुमाराद्याः सनकाद्याः सुरात्मजाः ॥ ४२ ॥
153943
153944 दानवानां हिरण्याक्षबलिप्रह्लादशम्बराः ।
153945 मयवृत्रान्धनमुचिकेशिपुत्रमुरादयः ॥ ४३ ॥
153946
153947 विभीषणाद्या रक्षस्सु प्रहस्तेन्द्रजिदादयः ।
153948 शेषतक्षककर्कोटमहापद्मादयोऽहिषु ॥ ४४ ॥
153949
153950 अहिषु नागेषु ॥ ४४ ॥
153951
153952 ब्रह्मविष्ण्विन्द्रलोकेषु वास्तव्या मुक्तदेहिनः ।
153953 मुक्तस्वभावास्तुषिताः सिद्धाः साध्याश्च केचन ॥ ४५ ॥
153954
153955 वसन्तीति वास्तव्याः । मुक्तदेहिनो जीवन्मुक्ताः । तुषितादयो देवयोनिभेदाः । केचन न तु
153956 सर्वे ॥ ४५ ॥
153957
153958 मानुषेषु च राजानो मुनयो ब्राह्मणोत्तमाः ।
153959 जीवन्मुक्ताः संभवन्ति विरलास्तु रघूद्वह ॥ ४६ ॥
153960
153961 भूतानि सन्ति सकलानि बहूनि दिक्षु बोधान्वितानि विरलानि भवन्ति किंतु ।
153962 वृक्षा भवन्ति फलपल्लवजालयुक्ताः कल्पद्रुमास्तु विरलाः खलु संभवन्ति
153963 ॥ ४७ ॥
153964
153965 सर्वजातिष्वपि जीवन्मुक्ताः सन्ति किंतु ते विरला इत्येतद्दृष्टान्तेनोपपादयति -
153966 भूतानीति । स्पष्टम् ॥ ४७ ॥
153967
153968 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मोक्षो० निर्वाणप्रकरणे उ०
153969 विवेकिविरलत्ववर्णनं नाम सप्तनवतितमः सर्गः ॥ ९७ ॥
153970
153971 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
153972 विवेकिविरलत्ववर्णनं नम सप्तनवतितमह् सर्गः ॥ ९७ ॥

153973
153974 अष्टनवतितमः सर्गः ९८
153975
153976 श्रीवसिष्ठ उवाच।
153977
153978 विवेकिनो विरक्ता ये विश्रान्ता ये परे पदे।
153979 तेषां तनुत्वमायान्ति लोभमोहादयोऽरयः॥ १॥
153980
153981 लक्षणान्युपवर्ण्यन्ते सतां तत्त्वविदामिह।
153982 परीक्ष्योपेक्ष्य तद्दोषान् कर्तव्यश्च तदाश्रयः॥
153983
153984 तनुत्वमल्पताम्। तथा च लोभादिदोषाल्पतापि तल्लक्षणं चेन्निर्दोषत्वं किं वाच्यमिति
153985 भावः॥ १॥
153986
153987 न हृष्यन्ति न कुप्यन्ति नाविशन्त्याहरन्ति च।
153988 उद्विजन्तेऽपि नो लोकाल्लोकान्नोद्वेजयन्ति च॥ २॥
153989
153990 नाविशन्ति क्वापि विषये नाभिनिविशन्ते। एवं नाहरन्ति न संगृह्णन्ति भोग्यजातम्॥
153991 २॥
153992
153993 न नास्तिक्यान्न चास्तिक्यात्कष्टानुष्ठानवैदिकाः।
153994 मनोज्ञमधुराचाराः प्रियपेशलवादिनः॥ ३॥
153995
153996 एवं पारलौकिककर्मस्वपि नात्यन्तकायक्लेशावहेषु
153997 शुष्कवैदिकवद्धठात्क्लिश्यन्तीत्याह - नेति। अस्ति परलोक इति मतिर्यस्य स आस्तिकः
153998 नास्ति स इति मतिर्यस्य स नास्तिकः तदन्यतरभावाभिमानप्रयुक्ताद्धठादित्यर्थः॥ ३
153999 ।।
154000
154001 सङ्गादाह्लादयन्त्यन्तः शशाङ्ककिरणा इव।
154002 विवेचितारः कार्याणां निर्णेतारः क्षणादपि॥ ४॥
154003
154004 कार्याणां कर्तुमुचितानां लौकिकवैदिककर्मणां
154005 परस्परविरोधादनुष्ठानसंकटे अकार्येभ्यो विवेचयितारः संदेहनिर्णेतारः॥ ४॥
154006
154007 अनुद्वेगकराचारा वान्धवा नागरा इव।
154008 बहिः सर्वसमाचारा अन्तः सर्वार्थशीतलाः॥ ५॥
154009
154010 नागराश्चतुराः। सर्वैः समः साधारण आचारो येषाम्॥ ५॥
154011
154012 शास्त्रार्थरसिकास्तज्ज्ञा ज्ञातलोकपरावराः।
154013 हेयोपादेयवेत्तारो यथाप्राप्ताभिपातिनः॥ ६॥
154014
154015 विरुद्धकार्यविरता रसिकाः सज्जनस्थितौ।
154016 अनावरणसौगन्ध्यैः परास्पदसुखाशनैः॥ ७॥
154017
154018 सज्जनस्थितौ सदाचारे। अनावरणमुपदेशेन हृदयकोशोद्घाटनं
154019 तत्प्रयुक्तैर्ज्ञानोदयसौगन्ध्यैः परैः आस्पदैः आश्रयदानैः
154020 सुखैरशनैरन्नैश्च आगतमर्थिनं पूजयन्तीति परेणान्वयः॥ ७॥
154021
154022 पूजयन्त्यागतं फुल्ला भङ्गं पद्मा इवार्थिनम्।
154023 आवर्जयन्ति जनतां जनतापापहारिणः॥ ८॥
154024

154025 पद्मपक्षे अनावरणेत्यादि स्पष्टम् । आवर्जयन्ति गुणैर्वशीकुर्वन्ति ॥ ८ ॥
154026
154027 शीतलास्पदवत्स्निग्धाः प्रावृषीव पयोधराः ।
154028 भूभृद्भङ्गकरं धीरा देशभङ्गदमाकुलम् ॥ ९ ॥
154029
154030 शीतलमास्पदमुद्यानादि तद्वत्स्निग्धाः । भूभृतां राज्ञां भङ्गकरं
154031 देशभङ्गदं च आकुलं दुर्भिक्षमारीपरचक्रादिप्रयुक्तं जनक्षोभं
154032 तपःप्रभावसत्कर्मानुष्ठापनसामाद्युपायैः रोधयन्ति विष्टभ्य निवारयन्तीति
154033 परेणान्वयः ॥ ९ ॥
154034
154035 रोधयन्त्यागतं क्षोभं भूकम्पमिव पर्वताः ।
154036 उत्साहयन्ति विपदि सुखयन्ति च संपदि ॥ १० ॥
154037
154038 चन्द्रबिम्बोपमाकारा दारा इव गुणाकराः ।
154039 यशःपुष्पामलदिशो भाविसत्फलहेतवः ॥ ११ ॥
154040
154041 रूपमाधुर्यप्रेमादिगुणाकारा दाराः पतिव्रता इव । यश इत्यादिविशेषणैः साधून्
154042 वसन्तत्वेनोत्प्रेक्षते ॥ ११ ॥
154043
154044 पुंस्कोकिलसमालापा माधवा इव साधवः ।
154045 कल्लोलबहुलावर्तं व्यामोहमकरालयम् ॥ १२ ॥
154046
154047 माधवा वसन्ताः । कल्लोलेत्यादीनि परचित्तमहार्णवविशेषणानि ॥ १२ ॥
154048
154049 लुठन्तमिव हेमन्तं लोडयन्तं जनास्पदम् ।
154050 वीचिविक्षोभचपलं परचित्तमहार्णवम् ॥ १३ ॥
154051
154052 पद्माकरेषु अतिशिशिरतरपवनविक्षिप्ततरङ्गच्छलेन लुठन्तं हेमन्तमिव
154053 जनास्पदं जनपदं भृङ्गहंसादिजनास्पदं पद्मवनं च लोडयन्तम् ।
154054 वीचयः षडूर्मयस्तद्विक्षोभैश्चपलं तत्प्रसिद्धलोभद्वेषादिमोहितम् । चोऽप्यर्थे ।
154055 ईदृशमपि परेषां राजादीनां चित्तमहार्णवं सामदानादिना विवेकोपदेशैश्च
154056 रोधयितुं शक्ताः ॥ १३ ॥
154057
154058 तच्च रोधयितुं शक्तास्तटस्थाः साधुपर्वताः ।
154059 आपत्सु बुद्धिनाशेषु कल्लोलेष्वाकुलेषु च ॥ १४ ॥
154060
154061 तटस्था उदासीना वेलासन्निहिताश्च । साधुपर्वता इति रूपकं नोपमितसमासः ।
154062 सामान्यधर्माणां प्रयोगात् । अत एव सतां विवेकिनामापदादिषु प्राप्तेषु सन्त एव
154063 गतिः । कल्लोलेषु अशनायापिपासाशोकमोहजरामृत्युलक्षणषडूर्मिषु आकुलेषु
154064 देशविवरादिषु [देशविड्वराहादिषु इति पाठः ।] च ॥ १४ ॥
154065
154066 संकटेषु दुरन्तेषु सन्त एव गतिः सताम् ।
154067 एभिश्चिह्नैरथान्यैश्च ज्ञात्वा तानुचिताशयान् ॥ १५ ॥
154068
154069 एभिरिदानीमुक्तैः । अथशब्दचशब्दौ समुच्चये । अन्यैः प्रागुक्तैश्च ॥ १५ ॥
154070
154071 आश्रयेतैकविश्रान्त्यै श्रान्तः संसारवर्त्मना ।
154072 यस्मादत्यन्तविषमः संसारोरगसागरः ॥ १६ ॥
154073
154074 एकस्मिन्नद्वये ब्रह्मणि विश्रान्त्यै । उरगभीषणः सागर उरगसागरः ॥ १६ ॥
154075
154076 विना सत्सङ्गमन्येन पोतकेन न तीर्यते ।

154077 आस्तां किं मे विचारेण यद्भवेदस्तु तन्मम ॥ १७ ॥
154078
154079 इत्यन्तः कल्कमासाद्य न स्थेयं गर्तकीटवत् ।
154080 एकोऽपि विद्यते यस्य गुणस्तं सर्वमुत्सृजन् ॥ १८ ॥
154081
154082 कल्कं प्रमादम् । उक्तगुणानां मध्ये एकोऽपि गुणो यस्य विद्यते तमपि
154083 तावन्मात्रमुद्दिश्य सर्वं कार्यान्तरमुत्सृजन्सन् अनादृतान्यतद्दोषं यथा
154084 स्यात्तथा आश्रयेदिति परेणान्वयः ॥ १८ ॥
154085
154086 अनादृतान्यतद्दोषं तावन्मात्रं समाश्रयेत् ।
154087 गुणान्दोषांश्च विज्ञातुमाबाल्यात्स्वप्रयत्नतः ॥ १९ ॥
154088
154089 यथासंभवसत्सङ्गशास्त्रैः प्राग्धियमेधयेत् ।
154090 दोषलेशमनादृत्य नित्यं सेवेत सज्जनम् ॥ २० ॥
154091
154092 स्थूलदोषं त्वनिर्वाणं शनैः परिहरेत्क्रमात् ।
154093 याति रम्यमरम्यत्वं स्थिरमस्थिरतामपि ॥ २१ ॥
154094
154095 स्थूला दोषा यस्य तथाविधं त्वनिर्वाणं पूर्वपरिजनं शनैः परिहरेत्त्यजेत् ।
154096 तदपरिहारे के दोषास्तानाह - यातीति । रम्यं शोधितमपि चित्तमरम्यत्वं
154097 रागादिकलुषतां याति । स्थिरमपि विश्रान्तिसुखं विच्छेदादस्थिरतां याति ॥ २१ ॥
154098
154099 यथा दृष्टं तथा मन्ये याति साधुरसाधुताम् ।
154100 एष सोऽत्यन्त उत्पातो यः साधुर्याति दुष्टताम् ॥ २२ ॥
154101
154102 कुत एतन्मन्यसे इति चेल्लोके तथैव दर्शनादित्याह - यथेति । अस्त्वेवं ततोऽपि को
154103 दोषस्तत्राह - एष इति । उत्पातो जगदनिष्टसूचकः ॥ २२ ॥
154104
154105 देशकालवशात्पापैर्महोत्पातोऽपि दृश्यते ।
154106 सर्वकर्माणि संत्यज्य कुर्यात्सज्जनसंगमम् ।
154107 एतत्कर्म निराबाधं लोकद्वितयसाधनम् ॥ २३ ॥
154108
154109 पापैर्जनानां दुरदृष्टैः दृश्यते । यथा विश्वामित्रस्य
154110 लुब्धामात्यादिसङ्गाद्वसिष्ठकामधेनुहरणे प्रवृत्तिस्तया च
154111 परस्परवैरवृद्ध्या बहुतरमाडीबकयुद्धान्तं जगदनिष्टम् । एवं
154112 कश्यपविश्रवःप्रभृतीनां भार्यासंगत्या
154113 जगदनिष्टनिमित्तदैत्यराक्षसाद्युत्पादने प्रवृत्तिरपि
154114 देशकालवशाद्धूमकेत्वादिप्रसिद्धमहोत्पातवद्दृश्यत इत्यर्थः ।
154115 उक्तमनूद्योपसंहरति - सर्वेति ॥ २३ ॥
154116
154117 न सज्जनाद्दूरतरः क्वचिद्भवेद्भजेत साधून्विनयक्रियान्वितः ।
154118 स्पृशन्त्ययत्नेन हि तत्समीपगं विदारिणस्तद्गतपुष्परेणवः ॥ २४ ॥
154119
154120 स च सज्जनसमागमो गुणार्जनक्रमेण ज्ञानप्रतिष्ठासिद्धिपर्यन्तं न
154121 विच्छेदनीय इत्याह - नेति । क्वचिदपि काले सज्जनाद्गुरोर्दूरतरो न भवेत् ।
154122 विनयसेवादिक्रियान्वितः सन् सदैव भजेत । किं ततस्तत्राह - स्पृशन्तीति । तेषां
154123 साधूनां समीपगमेनं अयत्नेनैव विसारिणस्तेषां शान्तिदान्त्यादिगुणलक्षणाः
154124 पुष्परेणवः सौगन्ध्यविशेषा अधिवासनमिश्रीकृततिलानिव स्पृशन्ति । अवश्यं
154125 संक्रामन्तीत्यर्थः ॥ २४ ॥
154126
154127 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वाणप्रकरणे उ०
154128 सज्जनसमागमप्रशंसा नामाष्टनवतितमः सर्गः ॥ ९८ ॥

154129
154130 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाअशे निर्वाणप्रकरणे उत्तरार्धे
154131 सज्जनसमागमप्रशंसा नामाष्टनवतितमः सर्गः ॥ ९८ ॥
154132
154133 नवनवतितमः सर्गः ९९
154134
154135 श्रीराम उवाच ।
154136
154137 सन्ति दुःखक्षयेऽस्माकं शास्त्रसत्सङ्गयुक्तयः ।
154138 मन्त्रौषधितपोदानतीर्थपुण्याश्रमाश्रयाः ॥ १ ॥
154139
154140 कृमिकीटपतङ्गानां तिर्यक्स्थावरजन्मनाम् ।
154141 संसारे यादृशो भोगस्तत्सर्वमिह वर्ण्यते ॥
154142
154143 कृमिकीटपतङ्गादीनामतिमूढजन्तूनां तात्कालिकदुःखोपशमोपायाभावे
154144 जीवनमेव दुर्लभम् । उपायं च ते ज्ञातुंन् न शक्नुवन्ति । तथा सति कथं जीवन्तीति
154145 तेषां संसरणस्थितिं जातिप्रसङ्गाज्जिज्ञासमानो रामः पृच्छति -
154146 सन्तीत्यादिना । अस्माकं मनुष्यजातीनामैहिकामुष्मिकदुःखक्षये शास्त्रादय
154147 उपायाः सन्ति । ये कृम्यादयस्तेषां दुःखक्षयः कथं केनोपायेन तदभावे च ते
154148 कथं स्थिता जीवन्तीत्यन्वयः ॥ १ ॥
154149
154150 कृमिकीटपतङ्गाद्यास्तिर्यक्स्थावरजातयः ।
154151 कथं स्थिताः किमारम्भास्तेषां दुःखक्षयः कथम् ॥ २ ॥
154152
154153 श्रीवसिष्ठ उवाच ।
154154
154155 सर्वाण्येवेह भूतानि स्थावराणि चराणि च ।
154156 आत्मोचितायां सत्तायां विश्रान्तानि स्थितान्यलम् ॥ ३ ॥
154157
154158 आत्मोचितायां तत्तद्योग्यभोगोचितायां सुखसत्तायाम् । तथा च
154159 तत्तद्योनिभोग्यविषयसुखलव एव तेषां महान्पुरुषार्थ इव भाति । तावन्मात्रेण
154160 विश्रान्तास्तदाशयैव बहुतरदुःखान्यपि सहमाना जीवन्तीत्यर्थः ॥ ३ ॥
154161
154162 भूतानामणुमात्राणामप्यस्माकमिवैषणाः ।
154163 किंत्वल्पास्था वयं विघ्नास्तेषां त्वचलसंनिभाः ॥ ४ ॥
154164
154165 एषणाः स्वस्वयोन्युचितसुखभोगेच्छाः सन्तीति शेषः । किंतु वयं तेषु
154166 भोगेष्वल्पास्था अल्पविघ्नाश्च । अचलसंनिभाः महान्तो बहवश्च विघ्नाः ॥ ४ ॥
154167
154168 यथा विराट् प्रयतते वालखिल्यास्तथैव खे ।
154169 बालमुष्ट्यल्पकायेऽपि पश्याहंकृतिजृम्भितम् ॥ ५ ॥
154170
154171 भोगेषु बह्वास्था इति कुतो ज्ञायते इति चेत्प्रयत्नाधिक्यलिङ्गादित्याशयेनाह -
154172 यथेति । विराट् ब्रह्माण्डशरीरो जीवो यथा स्वाधिकारनिर्वाहचेष्टाभिः स्वभोगाय
154173 प्रयतते तथा वालानां केशानां खिलैरग्रभागैः संमितदेहाः
154174 कृमिकीटमशकमत्कुणादयोपि तथैव बालमुष्टिच्छिद्रापेक्षया अल्पकायेऽपि खे
154175 स्वावकाशे प्रयतन्ते ॥ ५ ॥
154176
154177 जायन्ते च म्रियन्ते च निराधारेऽम्बरे खगाः ।
154178 शून्यैकविषयास्तेषां स्वास्थ्यं न भवति क्षणम् ॥ ६ ॥
154179
154180 खगाः प्रागुक्ता आकाशपक्षिणः । स्वास्थ्यं स्थैर्यम् । प्रयत्नविच्छित्तिरिति यावत् ॥ ६ ॥

154181
154182 पिपीलिकायाश्चेष्टाभिर्ग्रासावासात्मबन्धुभिः।
154183 अस्मद्दिवसकल्पोऽपि न पर्याप्तः क्षणो यथा॥ ७॥
154184
154185 पिपीलिकादीनां कणाद्यर्जनप्रयत्नबाहुल्यदर्शनादपि तेषां
154186 भोगास्थाबाहुल्यमनुमीयत इत्याशयेनाह - पिपीलिकाया इति। ग्रासावासपदाभ्यां
154187 तत्संपादनप्रयत्ना लक्ष्यन्ते। आत्मबन्धुपदेन च कुटुम्बपोषणप्रयत्नः।
154188 अस्मद्दिवसकल्पोऽपि दीर्घः कालस्तासां कणार्जनादिप्रयत्ने क्षणवन्न पर्याप्तो
154189 नालमित्यर्थः॥ ७॥
154190
154191 त्रसरेणुप्रमाणात्मा कृम्यणुस्तिमिनामकः।
154192 गमने व्यग्रता तस्य गरुडस्येव लक्ष्यते॥ ८॥
154193
154194 तिमिनामकः कृम्यणुरणुतमः कृमिरस्ति॥ ८॥
154195
154196 अयं सोहमिदं तन्म इत्याकल्पितकल्पनम्।
154197 जगद्यथा नृणां स्फारं तथैवोच्चैर्गुणैः कृमेः॥ ९॥
154198
154199 देहे तद्भोग्येषु चाहंममतालक्षणाध्यासश्च नृणां कृमेश्च समान इत्याह
154200 - अयमिति। उच्चैर्गुणैर्गुणातिशयैः स्फारं बाहुतरास्थायोग्यं तथैव
154201 कृमेरपि॥ ९॥
154202
154203 देशकालक्रियाद्रव्यव्यग्रया जर्जरीकृतम्।
154204 क्षीयते व्रणकीटानामस्माकमिव जीवितम्॥ १०॥
154205
154206 विषयास्थया व्यर्थमायुषः क्षयोऽपि कीटादीनामस्माकं च समान इत्याह -
154207 देशेति॥ १०॥
154208
154209 पादपाः किंचिदुन्निद्रा घननिद्राः खलूपलाः।
154210 कृमिकीटादयः कार्ये नरवत्स्वप्नबोधिनः॥ ११॥
154211
154212 किंचिदुन्निद्रा ईषज्जागरूकाः। कार्ये स्वस्वोचितविषयभोगे स्वप्नश्च बोधो जागरश्च
154213 येषां स्त इति स्वप्नबोधिनः॥ ११॥
154214
154215 शरीरनाश एवैषां सुखं संप्रति दुःखकृत्।
154216 अस्माकमिव तेषां तज्जीवितं तु सुखायते॥ १२॥
154217
154218 एषां कृमिकीटस्थावराणां संप्रति शरीरकाले सुखं स्थितानामस्माकमिव
154219 शरीरनाश एव दुःखकृत्। तज्जीवनं शरीरे प्राणावस्थानम्॥ १२॥
154220
154221 जनो द्वीपान्तरं यादृग्विक्रीतः परिपश्यति।
154222 पदार्थजालं पश्यन्ति तादृक्पशुमृगादयः॥ १३॥
154223
154224 अस्मद्भोग्यगृहप्रासादधनरत्नादिकं ते कथं पश्यन्ति तदाह - जन इति।
154225 स्वाभोग्यं पदार्थजालमुदासीनतया संमुग्धदृशा पश्यन्तीत्यर्थः॥ १३॥
154226
154227 अस्माकमिव संसारस्तिरश्चां सुखदुःखदः।
154228 पदार्थप्रविभागेन केवलं ते विवर्जिताः॥ १४॥
154229
154230 पदार्थानामुत्कर्षापकर्षादिबुद्धिहेतुना गुणक्रियोपयोगादिप्रविभागेन॥ १४॥
154231
154232 हृदयात्सुखदुःखाभ्यां नासातो रशनागुणैः।

154233 पशवः परिकृष्यन्ते विक्रीताः पामरा अपि ॥ १५ ॥
154234

154235 विक्रीतजनसाम्यं पशूनामुपपादयति - हृदयादिति । पशवो हि बलीवर्दादयो
154236 नाथहरयो हृदयान्मनसः सकाशादन्तः सुखदुःखाभ्यां परिकृष्यन्ते ।
154237 नासातो नासिकाप्रदेशाच्च नाथेन रशनागुणैर्बहिः परिकृष्यन्ते । एवमुभयतः
154238 पराधीनतया कृष्यमाणा अपि किंचिदपिस्वदुःखं परिहर्तुं निवेदयितुं वा न
154239 शक्नुवन्ति तथा द्वीपान्तरे विक्रीताः पामरा अपीति तयोः साम्यमित्यर्थः ॥ १५ ॥
154240

154241 सुप्तानां यादृगस्माकं वेदनं स्पष्टसुत्वचाम् ।
154242 वृक्षगुल्माङ्कुरादीनां तादृगुद्दामवेदनम् ॥ १६ ॥
154243

154244 वृक्षादीनां सुखदुःखानुभवप्रकारमप्यस्मदनुभवानुकूल्येनोपपादयति ##-
154245 निद्रापरवशचेतसामस्माकं
154246 बहुतरशीतोष्णमशकमत्कुणादिभिर्बाध्यमानानामसुखनिद्रायां यादृक्
154247 उद्दामं दुःखवेदनं तादृगित्यर्थः । अङ्कुरग्रहणं सौकुमार्यात्तत्र
154248 कृमिकीटादिदंशने दुःखातिशयद्योतनार्थम् ॥ १६ ॥
154249

154250 यादृगस्माकमीत्यर्थक्रमसंसारपातिनाम् ।
154251 पदार्थवेदनंन् तादृक्तिरश्चां भ्रान्तमभ्रमम् ॥ १७ ॥
154252

154253 तिरश्चां पदार्थप्रविभागेन विवर्जितं वेदनं यदुक्तं
154254 तदप्युपपादनेनानुभवमारोहयति - यादृगिति । ईतिर्देशक्षोभपलायनेन
154255 धावनादिगतिस्तदर्थे कुशकण्टकतप्तवालुकाक्रमणभारोद्वहनादिक्रमसंसारे
154256 पतनशीलानामस्माकं यादृशं सर्वतो भयाशङ्कि पदार्थवेदनं तादृक्
154257 पक्षिसर्पादितिरश्चामपि सदेत्यर्थः ॥ १७ ॥
154258

154259 आह्लादमात्रे सौम्यत्वं सुखतश्चेन्द्रकीटयोः ।
154260 समं विकल्पविन्मुक्तं विकल्पस्त्वनतिक्रमः ॥ १८ ॥
154261

154262 विकल्पविद्धिर्विक्षेपानुभवैर्मुक्तं चेत् आह्लादमात्रे सामान्यभूते स्वरूपानन्दे
154263 सुखतः आहारनिद्रामैथुनादिसुखेषु च इन्द्रस्य कीटस्य च सौम्यत्वं
154264 मनःप्रसादलक्षणं समम् । विकल्पो विक्षेप एव तु द्वयोरप्यनतिक्रमो दुरतिक्रम
154265 इत्यर्थः ॥ १८ ॥
154266

154267 रागद्वेषभयाहारमैथुनोत्थं सुखासुखम् ।
154268 तिरश्चां जन्ममृत्यादिखेदः कश्चिन्न भिद्यते ॥ १९ ॥
154269

154270 तिरश्चां इन्द्रस्य चेति शेषः । न भिद्यते न विशिष्यते ॥ १९ ॥
154271

154272 ऋते पदार्थभूतार्थभविष्यद्वस्तुबोधतः ।
154273 शेषं बभ्रवहिगोमायुगजादीनां नृभिः समम् ॥ २० ॥
154274

154275 पदार्थाः शास्त्रगम्याः पुण्यपापब्रह्मतत्त्वादयः । भूतार्था अतीतपदार्थाः
154276 भविष्यद्वस्तूनि भाविकृषिफलादिपदार्थाः एतेषां बोधतः ऋते एतद्बोधान्विहाय
154277 शेषं ज्ञानं बभ्रुर्नकुलः अहिः सर्पः गोमायुः शृगालः गजादिश्च ये
154278 पशवस्तेषां सर्वेषां नृभिः समं तुल्यमित्यर्थः ॥ २० ॥
154279

154280 निद्रामयानां वृक्षाणां स्वसत्तामचलादयः ।
154281 स्थिता अनुभवन्तोऽन्ये चिदाकाशमखण्डितम् ॥ २१ ॥
154282

154283 पर्वतादयस्तर्हि कथमनुभवन्ति तत्राह - निद्रेति । निद्राप्रचुराणां
154284 सुषुप्तिस्थानां वृक्षाणां या गाढमूढतया स्वसत्ता तां अचलाः

154285 पाषाणादयोऽनुभवन्तः स्थिताः अन्ये
154286 हिमवन्मेर्वादयस्तत्त्वज्ञपर्वतास्त्वखण्डितं चिदाकाशमनुभवन्तः सदा
154287 समाधौ स्थिता इत्यर्थः ॥ २१ ॥
154288
154289 आपीननिद्रा वृक्षाद्याः स्वसत्तास्थास्तथाद्रयः ।
154290 जङ्गमानि चिदाकाशं नाम किंचित्कदाचन ॥ २२ ॥
154291
154292 इत्थं च न वृक्षादिजीवदृशा जगत्कल्पना । तेषामापीननिद्रत्वात् ।
154293 नाप्यद्र्यादिजीवजातिदृशा । तेषां स्वसत्तास्थत्वात् । जङ्गमजातिष्वपि न
154294 तत्त्वज्ञदृशा । तेषां चिदाकाशमात्रत्वात्किंतु कतिपयाज्ञजङ्गमजातिदृशा ।
154295 सा च दृष्टिर्न बहुतरदृष्टिविरुद्धां जगत्सत्तां साधयितुं क्षमत
154296 इत्याशयेनाह - आपीनेति । यानि जंगमानि जीवजातानि तान्यपि
154297 सुषुप्तिमरणमूर्च्छामोक्षाद्यवस्थासु चिदाकाशमेव नाम । तत्र केषांचित्कदाचन
154298 स्वप्ने अर्धविकासेन जागरे सर्वविकासेन भासमानं
154299 किंचिज्जगद्बहुतरदृष्ट्यनुरोधाच्चिदाकाशमेवेति युक्तमित्यर्थः ॥ २२ ॥
154300
154301 अखण्डचित्ता शैलादिसत्ता निद्रा च भूरुहाम् ।
154302 द्वैतोपलम्भमुक्तत्वात्खमेवैकमतो जगत् ॥ २३ ॥
154303
154304 तत्र या शैलादिसत्ता या च भूरुहां निद्रा सा द्वैतोपलम्भमुक्तत्वात् खमेव ।
154305 अतस्तद्दृशा जगदेकमज्ञानोपहितचिन्मात्रमेव ॥ २३ ॥
154306
154307 परिज्ञातं जगद्यावदपरिज्ञानसंयुतम् ।
154308 न त्वं नाहं न चैवास्तिनास्ती न च भविष्यति ॥ २४ ॥
154309
154310 अन्यदृशापि स्वतत्त्वं यावदपरिज्ञानसंयुतं तावदेव जगत् । परिज्ञातं तु न
154311 त्वं नाहं नाप्यस्तिनास्ती सत्तासत्ते नापि भविष्यतीति क्वचित्कोटौ व्यवतिष्ठत इत्यर्थः
154312 ॥ २४ ॥
154313
154314 यथास्थितं सदैवेदं मौनमेव शिलाघनम् ।
154315 अनाद्यन्तमविच्छिद्रमनिद्रं च सनिद्रकम् ॥ २५ ॥
154316
154317 एवमव्यवस्थित्या जगद्भावनिरासे ब्रह्मैव परिशिष्टमिति दर्शयति -
154318 यथास्थितमिति । अज्ञदृशा सनिद्रकं निद्रयेव स्वात्मन्येव जगद्वैचित्र्यं
154319 कल्पयदित्यर्थः ॥ २५ ॥
154320
154321 पूर्वं सर्गाद्यथैवासीत्तथैवैकं समस्थितम् ।
154322 भविष्यत्यधुनानन्तकालमेवं तथैव च ॥ २६ ॥
154323
154324 परमार्थतस्तु सदैवैकरूपमित्याह - पूर्वमिति । अधुना वर्तमानकाले तथैवास्ति
154325 । अनन्तकालमग्रे च तथैव भविष्यतीत्यन्वयः ॥ २६ ॥
154326
154327 नैवात्मता न परता न जगत्ता न शून्यता ।
154328 न मौनता न मौनित्वं किंचिन्नेहोपपद्यते ॥ २७ ॥
154329
154330 तस्य च आत्मत्वादयोऽपि विशेषा व्यावर्त्याभावान्न सन्ति किं पुनरन्ये इत्याह -
154331 नैवेति ॥ २७ ॥
154332
154333 त्वं यथास्थितमेवास्व यथास्थितमहं स्थितः ।
154334 सुखासुखे पराकाशे शान्ते नेहास्ति किंचन ॥ २८ ॥
154335
154336 परमाकाशतां मुक्त्वा किं स्वप्ननगरे वद ।

154337 विद्यते किल तच्छान्तं चिद्व्योमाच्छमनामयम् ॥ २९ ॥
154338
154339 अपरिज्ञप्तिरेवैका तत्र संभ्रमकारिणी ।
154340 परिज्ञातमिदं यावद्विद्यते सापि न क्वचित् ॥ ३० ॥
154341
154342 सा अपरिज्ञप्तिरपि परिज्ञातमिति हेतोर्न विद्यते ॥ ३० ॥
154343
154344 परिज्ञाते जगत्स्वप्ने यावत्सत्यं न किंचन ।
154345 ग्रहस्तदेनंन् प्रति किं स्नेहो वन्ध्यासुते तु कः ॥ ३१ ॥
154346
154347 एवं जगत्स्वप्नं प्रति किं किमर्थ ग्रहः अभिनिवेशः ॥ ३१ ॥
154348
154349 स्वप्नकाले परिज्ञाते जगत्स्वप्नमणावणौ ।
154350 किमुपादेयता कास्था प्रबोधेऽसौ न किंचन ॥ ३२ ॥
154351
154352 अणौ अणौ संभाव्यत इति शेषः ॥ ३२ ॥
154353
154354 यन्न किंचित्प्रबोधोऽस्ति नाप्रबोधोऽस्ति तत्क्वचित् ।
154355 यस्तूपलम्भस्तत्काले पूर्वावस्थैव सा तथा ॥ ३३ ॥
154356
154357 प्रबोधकाले असदप्यप्रबोधकाले सदस्तु तत्राह - यदिति । पूर्वावस्था अज्ञतैव ।
154358 सा तथा तदुपलम्भात्मना प्रथते इत्यर्थः ॥ ३३ ॥
154359
154360 विद्यते वर्तमानत्वं भविष्यद्भूतता तथा ।
154361 बोधाबोधश्च नो सत्यं वस्तु शान्तं किलाखिलम् ॥ ३४ ॥
154362
154363 तर्हि कालत्रयमज्ञानंन् तज्ज्ञानं चकिं सत्यं नेत्याह - विद्यत इति ॥ ३४ ॥
154364
154365 यथोर्मिणोर्मौ निहते न काचित्पयसां क्षतिः ।
154366 तथा देहेन निहते देहे नास्ति चितेः क्षतिः ॥ ३५ ॥
154367
154368 तथा च मिथ्याभूतदेहादौ मिथ्याभूतैः शत्रुभिर्हतेऽपि न
154369 तदुभयाधिष्ठानात्मनः क्षतिरित्याह - यथेति ॥ ३५ ॥
154370
154371 चितावाकाश एवाहं देह इत्युपजायते ।
154372 संविदेव ततो देहे नष्टे किं नाम नश्यति ॥ ३६ ॥
154373
154374 आकाशभूतायां चितावेव देह इति भ्रान्तिसंविदेव उपजायते । तथा च
154375 भ्रान्तिसंविद्रूपे देहे नष्टे किं नाम नश्यति ॥ ३६ ॥
154376
154377 प्रबुद्धस्यैव चिद्व्योम्नः स्वप्नो जगदिति स्थितम् ।
154378 पृथ्व्यादिरहितं यस्मात्तस्मात्स्वप्नात्मकं जगत् ॥ ३७ ॥
154379
154380 सर्गादौ पूर्वचित्स्वप्नाज्जाता पृथ्व्यादिवस्तुधीः ।
154381 स्वप्नार्थे सत्यताभ्रान्तिः कल्पनामात्ररूपिणी ॥ ३८ ॥
154382
154383 पूर्वपूर्वचित्स्वप्नसंस्कारात् ॥ ३८ ॥
154384
154385 पूर्वात्पूर्वतरस्यास्य स्वप्नस्यावयवस्थितौ ।
154386 सत्येवासत्यरूपायां पृथ्व्यादिकलना कृता ॥ ३९ ॥
154387
154388 एवं पूर्वात्पूर्वतरस्यानादिप्रवाहरूपस्य स्वप्नस्यावयवस्थितौ

154389 इदानींतन्यामसत्यरूपायामेव सत्येव कलना मूढैः कृता ॥ ३९ ॥
154390
154391 सा च भ्रान्तिस्तथा रूढा यथासत्यैव सत्यताम् ।
154392 परमामागता तत्तु सत्यमत्यन्तनिर्मलम् ॥ ४० ॥
154393
154394 तत् परमार्थसत्यंन् त्वत्यन्तनिर्मलं न जाड्यकलुषमित्यर्थः ॥ ४० ॥
154395
154396 वस्तुतस्तु यथाभूतं चिद्ब्रह्मैवाततं स्थितम् ।
154397 न च तत्संस्थितं किंचित्स्मर्ताऽस्मर्ता किमात्मकः ॥ ४१ ॥
154398
154399 असत्यरूपायांन् सत्येव कलना कृतेति इवकारेणोपमित्वा तेन भ्रान्तिकलनायां
154400 सत्यार्थकलनासादृश्यं दर्शितम् । तच्च सत्सु प्राक्सत्यार्थेषु तदनुभवे
154401 सांप्रतं च तत्स्मर्तरि युज्यते नान्यथेत्याशङ्क्याह - वस्तुत इति । तत् सत्यरूपं
154402 पृथ्व्यादि किंचित्प्रागपि न च संस्थितम् । एवं च तदनुभवस्यात्यन्ताप्रसिद्धौ
154403 स्मर्ता अस्मर्ता विस्मर्ता वा किमात्मकः ॥ ४१ ॥
154404
154405 एवं मात्रापरिज्ञानमेवात्र प्रतिबोधकम् ।
154406 अत्रैव तु परिज्ञानं कवाटप्रविघाटनम् ॥ ४२ ॥
154407
154408 तर्ह्यसत्ये अत्यन्ताप्रसिद्धसत्यतायाः सादृश्यस्य च किं प्रतिबोधकमिति चेत्
154409 स्वप्रकाशसत्यस्वरूपाऽपरिज्ञानमेवेत्याह - एवं मात्रेति ।
154410 यथार्थभूतचिद्ब्रह्ममात्रगोचरमपरिज्ञानमज्ञानमेव जगति
154411 सत्यताप्रतिबोधकम् । अत एव तत्त्वपरिज्ञानमेवाज्ञानावरणकवाटस्य जगत्सत्यता
154412 भ्रान्त्यादिविक्षेपकपाटस्य च प्रविघाटनमपावरणमित्यर्थः ॥ ४२ ॥
154413
154414 पारिशेष्यान्न पृथ्व्यादि किंचित्संभवति क्वचित् ।
154415 यो द्रष्टा यच्च वा दृश्यं विमलं शिवमेव तत् ॥ ४३ ॥
154416
154417 सकार्याज्ञानबाधे चिन्मात्रपारिशेष्यात्तत्परिशिष्टं चिन्मात्रं शिवमेव ॥ ४३ ॥
154418
154419 मुकुरेऽन्तर्यथा बिम्बाद्बिम्बं भाति जगत्तथा ।
154420 चिद्व्योमनि स्वतो भातमबिम्बादेव बिम्बितम् ॥ ४४ ॥
154421
154422 बाह्याद्बिम्बान्निमित्ताद्बिम्बं प्रतिबिम्बम् । अबिम्बात् विनैव बाह्यं बिम्बमिति
154423 मुकुरापेक्षया विशेषः ॥ ४४ ॥
154424
154425 मुकुरेऽन्तर्यथा बिम्बं न दृष्टमपि किंचन ।
154426 तथा चिद्व्योमगं विश्वं न दृष्टमपि किंचन ॥ ४५ ॥
154427
154428 कस्तर्हि मुकुरदृष्टान्ते विवक्षितोंऽशस्तमाह - मुकुरे इति ॥ ४५ ॥
154429
154430 लभ्यते यद्विचारेण यत्सकारणकं स्थितम् ।
154431 तत्सच्छेषं तु भामात्रमभूतं सत्कथं भवेत् ॥ ४६ ॥
154432
154433 विचारेण शास्त्रीयविचारेण । सकारणकं सप्रमाणकं तदेव सत् परमार्थसत्यम् ।
154434 शेषमितरत्तु भामात्रं प्रतिभामात्रं कालत्रयेऽप्यभूतम् ॥ ४६ ॥
154435
154436 भवेद्भ्रमात्मकमपि किंचिदर्थक्रियाकरम् ।
154437 स्वप्नाङ्गनापि कुरुते सत्यामर्थक्रियां नृणाम् ॥ ४७ ॥
154438
154439 असच्चेत्कथं व्यवहारार्थक्रियाक्षमं जगत्तत्राह - भवेदिति । सत्यां
154440 स्वाधिकसत्तायां चरमधातुविसर्जनलक्षणामर्थक्रियाम् ॥ ४७ ॥

यत्तद्भानं तु सा चिद्भा परमं तच्चिदम्बरम् |
इति क्वाहं क्व विश्वश्रीः क्व त्वं दृश्यदृशश्च काः || ४८ ||

अहमादिविश्वश्रीर्हि भासमाना सिद्धा नान्यथा | तत्र यत्तद्भानंन् सा चिद्भा
आत्मस्वरूपचित्प्रकाश एव नान्या | तद्भानव्यावर्तकं दृश्यरूपं तु भानात्
पृथक्कारे शून्यत्वाद्भानात्मकत्वे तद्व्यावर्तकत्वायोगाच्चिदम्बरमेव | इति
विमर्शेन किंचिज्जगद्रूपं प्रसिध्यतीत्यर्थः || ४८ ||

मृत्वा पुनर्भवनमस्ति किमङ्ग नष्टं मृत्वा न चेद्भवनमस्ति तथापि
शान्तिः |
विज्ञानदृष्टिवशतोऽस्त्यथ चेद्विमोक्षस्तन्नेह किंचिदपि
दुःखमुदारबुद्धेः || ४९ ||

हे अङ्ग उदारबुद्धेस्तव दर्शितप्रकारा या
विज्ञानदृष्टिस्तद्वशतश्चिन्मात्रभूतस्य देहापगमेन मृत्वा
पुनर्देहान्तरोत्पत्त्या भवनं चेदस्ति | मोक्षो नास्तीति यावत् | तथापि किं नष्टं का
क्षतिः | निर्दुःखनिरतिशयानन्दचिदात्मनो नाशोत्पत्तिभ्यामस्पर्शात् | अथ चेन्मृत्वा
पुनर्भवनं नास्ति | विमोक्षोऽस्ति चेदिति यावत् | तथापि सर्वप्रपञ्चशान्तिरेव |
तत्तस्मादिह दुःखं किंचिदपि पक्षद्वयेऽपि न प्रसज्जत इत्यर्थः || ४९ ||

मूर्खस्य यादृशमिदं तु तदज्ञ एव जानात्यसौ न हि वयं किल तत्र
तज्ज्ञाः |
मत्स्यो हि यो मृगनदीसलिले स एव जानाति तच्चपलवीचिविवर्तनानि || ५० ||

मूर्खस्य तर्हि कथं मरणजन्मनोर्दुःखप्रसक्तिरिति चेत्तां स एव जानातीत्याह -
मूर्खस्येति | यो मृगनदीसलिले मत्स्योऽहमिति मत्स्यभावमनुभवति स एव
तस्याश्चपलवीचिविवर्तनानि जानाति न तु मृगनदीभ्रान्तिशून्यः कश्चिदित्यर्थः || ५०
||

अन्तर्बहिस्त्वमहमित्यपि चैवमादि सर्वात्मकं तपति चिन्नभ एकमेव |
शाखाशिखाविटपपत्रफलैकदेहः संकल्पवृक्ष इव बोधखमात्रसारः
|| ५१ ||

तत्त्वविद्दृष्ट्या त्वन्तर्बहिश्च तच्चिन्नभः त्वं अहमपि चैवमादि जगच्चेति
सर्वात्मकं भूत्वा तपति स्फुरति | यथा बोधखमात्रसार आत्मैव शाखा तच्छिखा
तद्विटपास्तत्पत्रफलानि चेत्याद्येकदेहः संकल्पवृक्षः सन् मनोराज्ये स्फुरति
तद्वदित्यर्थः || ५१ ||

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मोक्षोपायेषु निर्वाणप्रकरणे उ०
परमार्थनिरूपणं नाम नवनवतितमः सर्गः || ९९ ||

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
परमार्थनिरूपणं नाम नवनवतितमः सर्गः || ९९ ||

शततमः सर्गः १००

श्रीराम उवाच |

युक्तिः स्यात्कीदृशी ब्रह्मन्संसारे दुःखशान्तये |
तेषां येषामयं पक्षः श्रूयतामुच्यतां ततः || १ ||

देहात्मवाद्यादिमते निविष्टानां मतेरपि।
यथा तत्त्वेऽवतारः स्यात्तथा युक्तिरिहोच्यते॥

प्राक्सर्गवादुयुक्तिसत्यतावर्णनक्रमे स्वभावसिद्धमेवेदं युक्तमित्येव तद्विदाम् इति
यच्चार्वाकोक्तीनां युक्तत्वं वर्णितं तत्तेषां देहात्मवादविषये
सर्वास्तिकपक्षप्रतिपक्षभूते कथं युक्तम् तेषां कथं वा पुरुषार्थसिद्धिः
स्यादित्येतज्जिज्ञासमानो रामः पृच्छति - युक्तिरिति। अयं वक्ष्यमाणो मत्प्रश्नो
मनो दत्त्वा श्रूयतां तत उत्तरमुच्यताम्॥ १॥

यावज्जीवं सुखं जीवेन्नास्ति मृत्युरगोचरः।
भस्मीभूतस्य शान्तस्य पुनरागमनं कुतः॥ २॥

अगोचरः अप्रत्यक्षः। न तावज्जीवतः स्वस्य मृत्युः प्रत्यक्षः। परेषां
मृत्युदर्शनाद्धि स्वस्यापि मृत्युस्तद्वदनुमीयते। न चानुमानं चार्वाकाणां
प्रमाणम्। प्रत्यक्षातिरिक्तप्रमाणानभ्युपगमादिति भावः। अस्तु वा देहनाश एव
मृत्युस्तथापि पुनर्जन्मानभ्युपगमात्स एव सर्वदुःखनिवृत्तिलक्षणो मोक्ष एवेति
स्पृहणीय एव तेषामित्याशयेनाह - भस्मीभूतस्येति। शान्तस्य
सर्वदुःखोपशमं प्राप्तस्य। अयं येषां पक्षस्तेषामिति पूर्वत्रान्वयः॥ २॥

श्रीवसिष्ठ उवाच।

यं यं निश्चयमादत्ते संविदन्तरखण्डितम्।
तत्तथैवानुभवति प्रत्यक्षमिति सर्वगम्॥ ३॥

संविदा स्वनिश्चयानुसारिविवर्तानुभवनियम एव
देहात्मभावेऽप्युपपत्तिस्तन्मोक्षेऽपीत्याशयेन वसिष्ठस्तं समर्थयितुमुपक्रमते
- यं यमिति। इति इदं सर्वगं सर्वजनीनं प्रत्यक्षं स्वानुभवसिद्धम्॥ ३॥

यथा खं सर्वगं शान्तं तथा चिद्व्योम सर्वगम्।
तदेवैक्यमथ द्वैतमन्यार्थस्यात्यसंभवात्॥ ४॥

तत्तद्वादिपामरजनकल्पितदेहादिद्वैतं वेदान्तविद्वदनुभवादिसिद्धमैक्यं च
तच्चिद्व्योमैव। तद्व्यतिरिक्तस्यात्यन्तमसंभवादित्यर्थः॥ ४॥

सर्गादौ तद्दतेऽन्योऽर्थो महाप्रलयरूपिणि।
अकाणरत्वान्नास्त्येव ब्रह्मैवेदमतस्ततम्॥ ५॥

अन्यस्यासंभवे सदेव सोम्येदमग्र आसीत् इत्यादिश्रुत्यनुगृहीतां युक्तिमाह -
सर्गादाविति। सर्गस्य आदौ पूर्वावस्थायामद्वितीयब्रह्मरूपे महाप्रलये। तर्हि
ब्रह्मणः कारणं ततोऽन्यत्पूर्वमस्तु तत्राह - अकारणत्वादिति॥ ५॥

समस्तवेदशास्त्रार्थं ये महाप्रलयादि च।
नेच्छन्ति ते महामूढा निःशास्त्रा नो मृता इव॥ ६॥

ननु ब्रह्मरूपो महाप्रलय एव नाभ्युपगम्यते बीजाङ्कुरादिपरंपरानादित्वेन
पृथिव्यादिभूतानां प्रवाहानादित्वान्न कदाचिदनीदृशं जगदिति कर्मजडानां
पूर्वमीमांसकादीनां पक्षं दूषयति - समस्तेति। सर्वे वेदा यत्पदमामनन्ति
तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति इत्यादिश्रुतेः समस्तवेदशास्त्रार्थं
आदिपदाज्जीवानां ब्रह्मप्राप्तिलक्षणं मोक्षं तत्साधनानि च ये नेच्छन्ति ते
मोक्षशास्त्रवैयर्थ्ये तुल्यन्यायेन कर्मशास्त्रस्याप्यप्रामाण्यावारणान्निःशास्त्रा
नोऽस्माकं तत्त्वविदां दृशा मृता इव। न तत्त्वोपदेशकथायोग्या इत्यर्थः॥ ६॥

154545 सर्वशास्त्राविरुद्धेन सर्वं ब्रह्मेदमित्यलम् ।
154546 स्थितं सानुभवं योक्तृ येषां तैर्न कथाक्रमः ॥ ७ ॥
154547
154548 येषां योक्तृदेहेन्द्रियादीनां सर्वव्यवहारेषु नियोक्तृ प्रत्यगात्मचैतन्यं मनो
154549 वा सर्वशास्त्राविरुद्धेन सर्वं खल्विदं ब्रह्मेति दर्शनेन सानुभवमलं
154550 पर्याप्तं पूर्णकामं स्थितम् । कृतकृत्यैस्तैः सहापि नोपदेशकथाक्रम इति
154551 जिज्ञासून्प्रत्येवोपदेशकथाप्रस्ताव इत्यर्थः ॥ ७ ॥
154552
154553 नित्या निरन्तरोदेति यादृशी संविदाशये ।
154554 भूयते तन्मयेनैव पुंसा देहोऽस्तु माथवा ॥ ८ ॥
154555
154556 प्रासङ्गिकं समाप्य प्रस्तुतमनुसंधत्ते - नित्येति । तथा च चार्वाकाभिमते
154557 देहात्मभावेऽपि तादृशदृढनिश्चयात्मकसंविदुदय एवान्वयव्यतिरेकाभ्यां
154558 हेतुर्न देहो व्यभिचारादिति भावः ॥ ८ ॥
154559
154560 बोधाच्चेत्संविदो जातः स दुःखी पुरुषो भवेत् ।
154561 विरुद्धं वेदनं यावत्तावज्जीवोऽङ्ग तन्मयः ॥ ९ ॥
154562
154563 अत एवानन्दैकरसस्याप्यात्मनो विरुद्धदुःखित्ववेदनदार्ढ्येन दुःखमयता
154564 सर्वानुभवसिद्धेत्याह - बोधादिति । अङ्गेति संबोधने ॥ ९ ॥
154565
154566 जगच्चिद्व्योमकचनमात्रमेवेति भाविते ।
154567 तत्कथं वेदनं व्योम्ना बोधः कस्य कुतो भवेत् ॥ १० ॥
154568
154569 एवं दुःखमयस्यापि जगतो निरतिशयानन्दचिद्व्योमकचनमात्रमेवेति
154570 भावनाद्वास्तवतद्भावदर्शने भ्रान्तिकल्पितदुःखरूपता
154571 तद्ग्रहणग्राहकादयश्च शाम्यन्तीति देहात्मवादिनामपि तथाभावने
154572 निस्तारसिद्धिरित्याशयेनाह - जगदिति । तत् प्राक्प्रसिद्धं दुःखादिवेदनं कथं
154573 व्योम्ना कूटस्थाद्वयचिदाकाशेन दुःखादेर्बोधः कस्य भवेत् कुतो वा
154574 निमित्तादित्यर्थः ॥ १० ॥
154575
154576 ना कानिचित्प्रधावन्ति एकनिश्चयसंविदाम् ।
154577 पुंसां सुखानि दुःखानि रजांसि नभसामिव ॥ ११ ॥
154578
154579 उक्तेऽर्थे तत्र को मोहः कः शोक एकत्वमनुपश्यतः इति श्रुतिमर्थत उदाहरति - न
154580 कानिचिदिति । प्रधावन्ति प्राप्नुवन्ति । लिम्पन्तीति यावत् ॥ ११ ॥
154581
154582 संवित्सत्यास्त्वसत्या वा निश्चयस्तावदीदृशः ।
154583 आबालमेतत्संसिद्धं केनापह्नूयते कथम् ॥ १२ ॥
154584
154585 स्वस्वदृढनिश्चयानुसार्यर्थानुभवे संविदः प्रामाण्यं चित्तवृत्तेः सत्यत्वं
154586 वा नोपयुज्यते देहात्मभावाद्यनुभवे आद्याभावाद्ब्रह्मसाक्षात्कारवृत्तौ
154587 द्वितीयाभावादित्याशयेनाह - संविदिति । संवेदनं संवित् सत्या प्रमा
154588 संवेद्यते यया सा संवित् सत्या अबाधिता वेत्युभयनियमाभावोक्तिः । ईदृश
154589 एतादृशसदसदर्थानुभवहेतुर्भवत्येवेत्यर्थः । कथमपह्नूयते । न
154590 ह्यनुभवविरुद्धमवलम्ब्यानुभवोऽपह्नोतुं शक्य इत्यर्थः ॥ १२ ॥
154591
154592 न देहः पुरुषो वापि जीवोऽन्य उपलभ्यते ।
154593 संवित्सर्वमिदं सा तु यथा वेत्ति तथा जगत् ॥ १३ ॥
154594
154595 अत एव सर्ववाद्यभिप्रेततत्तद्वेषकल्पनासमर्था संविदेवात्मेति सर्वे वादिनो
154596 बोधयित्वा कृतार्थीकर्तुं शक्या इत्याशयेनाह- न देह इति ।

154597 देहश्चार्वाकाभिमतः पुरुषः सांख्याभिमतो जीवो मीमांसकाद्यभिमतो वापि
154598 भोक्ता अन्यः संवित्पृथक्कृतो नोपलभ्यते । अतः सर्वमिदं वादिनां
154599 कल्पनापदं देहादिसंविदेव ॥ १३ ॥
154600
154601 सा सत्याप्यथवासत्या तया देहोऽनुभूयते ।
154602 स्वातन्त्र्येण यथा स्वप्ने पाताले खे जले दिवि ॥ १४ ॥
154603
154604 स्वातन्त्र्येण स्वकल्पनामात्रेण न पृथिव्यादिकारणसापेक्षतयेत्यर्थः ॥ १४ ॥
154605
154606 संवित्सत्यास्त्वसत्या वा तावन्मात्रः स्मृतः पुमान् ।
154607 स यथानिश्चयो नूनं तत्सत्यमिति निश्चयः ॥ १५ ॥
154608
154609 पुमान् आत्मा । तत् सत्यं तदर्थक्रियासमर्थम् ॥ १५ ॥
154610
154611 प्रामाण्यं सर्वशास्त्राणामेतेनैव प्रसिद्ध्यति ।
154612 सर्वसिद्धान्तसिद्धान्त एष एवेति मे मतिः ॥ १६ ॥
154613
154614 संविद एव सर्ववाद्यभिमतात्मादिभावेनावस्थाने तस्याः
154615 परमार्थसत्यत्वात्तत्कल्पितार्थानां तत्तदभिमतार्थक्रियासमर्थत्वाच्च
154616 सर्वशास्त्रप्रामाण्यं प्रागुक्तं प्रतिष्ठितमित्याह - प्रामाण्यमिति । तथा
154617 चायं संविदद्वैतात्मवादसिद्धान्तः सर्ववादिनामुपजीव्यत्वात्पुरुषार्थहेतुत्वाच्च
154618 सर्वसिद्धान्तशिरोमणिः सिद्धान्त इत्याह - सर्वेति ॥ १६ ॥
154619
154620 तस्मादबोधता यास्ते यथा संवित्तथैव सा ।
154621 भवत्यकलुषाकारा तथैव फलभागिनी ॥ १७ ॥
154622
154623 तर्हि किं संविदेव तत्तद्वाद्यभिमतदेहाद्याकारेण तत्तन्निश्चयानुरोधेन
154624 परिणमते नेत्याह - तस्मादिति । या संविदि अबोधता अविद्या आस्ते सैव यथा
154625 तत्तद्वादिनां संवित्तथैव परिणामेन प्रवृत्त्यादिकाले भवति । सैव
154626 तत्त्वबोधात्मना परिणामे अकलुषशुद्धचिदाकारा तथैव मोक्षफलभागिनीत्यर्थः
154627 ॥ १७ ॥
154628
154629 देशकालक्रियाद्रव्यवेदशास्त्रैषणाभ्रमैः ।
154630 अबोधता तु या संवित्कदाचित्सा न नश्यति ॥ १८ ॥
154631
154632 अत एव पुण्यदेशकालादौ स्नानदानादिक्रियाभिः रसायनमन्त्रौषधादिद्रव्यैः
154633 कर्मशास्त्रबोधितैः स्वर्गपशुपुत्राद्येषणाभ्रमैश्च सा अबोधता तत्प्रयुक्ताया
154634 विक्षेपसंवित्सा च कदाचिदपि न विनश्यति ॥ १८ ॥
154635
154636 आविर्भवति सा भूयः क्षीणाशङ्का क्षणेन चेत् ।
154637 तत्केन संविदो दुःखं कदा नामोपशाम्यति ॥ १९ ॥
154638
154639 बोधे बाधिताया अविद्यायाः पुनराविर्भावस्तु न शङ्क्यो
154640 बीजाभावादनिर्मोक्षप्रसङ्गाच्चेत्याह - आविर्भवतीति । आत्यन्तिकबाधेन क्षीणा
154641 पुनः प्रसक्त्याशङ्कापि । सा अविद्या भूयः क्षणादाविर्भवति चेत्तत्तर्हि संविदो
154642 जीवस्य दुःखं कदा केन वा नामोपशाम्यति - न कदाचिन्न केनचिदपीत्यर्थः ॥
154643 १९ ॥
154644
154645 संविदेव नृणां जीवः स यथा दृढभावनः ।
154646 तथा सुखी वा दुःखी वा भवेदित्येष निश्चयः ॥ २० ॥
154647
154648 संविच्चेदस्ति तज्ज्ञानां शरणं भवभेदने ।

154649 नास्ति चेत्तच्छिलामूकमान्ध्यमेवावशिष्यते ॥ २१ ॥
154650

154651 प्रत्यगात्मरूपसंविदेव तत्त्वतो ज्ञाता स्वकार्यं बन्धं हरतीति सैव
154652 मुमूक्षूणां शरणम् तदभावे तु जगदान्ध्यमेव स्याद्दूरे मोक्षं
154653 प्रत्याशेत्याह - संविदिति । अवशिष्यते परिशेषात्प्रसज्जते ॥ २१ ॥
154654

154655 यत्तयैव च संवित्त्या वेदनेनैव लभ्यते ।
154656 अयं स्वभावज्ञप्त्यान्तर्जाड्यं पुंसेव निद्रया ॥ २२ ॥
154657

154658 कुत आन्ध्यमेवावशिष्यते तत्राह - यदिति । यद्यस्माद्धेतोः स्वभावज्ञप्त्या
154659 स्वप्रकाशया तयैव प्रत्यगात्मसंवित्त्या पुंसा निद्रया स्वजाड्यमिव आन्ध्यकल्पेन
154660 अवेदनेनैवायं प्रपञ्चो लभ्यते तत्र संवित्त्यपलापे असाक्षिकस्यान्ध्यस्यैव
154661 परिशेषादित्यर्थः ॥ २२ ॥
154662

154663 श्रीराम उवाच ।
154664

154665 दिक्ष्वधस्ताच्च नान्तोऽस्या भावी नापि जगत्क्षयः ।
154666 अस्तीति भावितं येन संत्यक्ताऽभावबुद्धिना ॥ २३ ॥
154667

154668 न कदाचिदनीदृशं जगदित्यभ्युपगम्य ये महाप्रलयादि नेच्छन्ति ते निःशास्त्रा
154669 मृता इवेति ये त्वया निन्दितास्तन्मतानुसारिदृढनिश्चयवतां
154670 तत्त्वज्ञानावतारादौ युक्तिरस्ति न वेति संदिहानो रामः पृच्छति - दिक्ष्विति ।
154671 अस्याः संसृतेः प्राच्याद्यूर्ध्वान्तनवदिक्षु अधस्तादधोदिशि च अन्तएव नास्ति । एवं
154672 जगतः क्षयो नाशोऽपि नास्तीति येन संत्यक्तप्रागभावाद्यभावत्रयबुद्धिना पुंसा
154673 भावितम् ॥ २३ ॥
154674

154675 विज्ञानघनमेवेदमिति नूनमपश्यता ।
154676 पश्यता च यथादृष्टं सर्वक्षयमपश्यता ॥ २४ ॥
154677

154678 पुनः कीदृशेन तेन पुंसा इदं सर्वं विज्ञानघनमेवेति
154679 परमार्थतत्त्वमपश्यतेति पूर्वेणान्वयः । यथादृष्टं जगदेव सत्यमिति पश्यता
154680 ॥ २४ ॥
154681

154682 तस्य स्यात्कीदृशी ब्रह्मन्युक्तिराधिविनाशने ।
154683 इति मे संशयं छिन्धि भूयो बोधाभिवृद्धये ॥ २५ ॥
154684

154685 श्रीवसिष्ठ उवाच ।
154686

154687 अत्रैकं तावदुचितं पूर्वमेव तथोत्तरम् ।
154688 द्वितीयमुत्तरं न्याय्यं वक्ष्यमाणमिदं शृणु ॥ २६ ॥
154689

154690 पूर्वं प्रागुक्तं निःशास्त्रा नो मृता इव तैर्न कथाक्रम इत्येवोत्तरम् । अथवा
154691 पूर्वपूर्ववादिनं प्रति यदुक्तं यं यं निश्चयमादत्ते संविदन्तरखण्डितम्
154692 इत्याद्युत्तरं तदेवोचितम् । तथा च चैतन्याननुविद्धतादृशनिश्चयाप्रसिद्धेः सोऽपि
154693 मन्दचैतन्यं व्युत्पाद्य पूर्वनिश्चयस्य तद्विवर्तताव्युत्पादनेन
154694 चिदखण्डैकरस्यानुभवे अवतारयितुं शक्य इति भावः ॥ २६ ॥
154695

154696 ईदृग्भावस्त्वया प्रोक्तो यः पुमान्पुरुषोत्तम ।
154697 स तावच्चेतनामात्रं भवतीत्यनुभूयते ॥ २७ ॥
154698

154699 हे पुरुषोत्तम ईदृग्भावस्तदुक्तनिश्चयवान् यः पुमांस्त्वया प्रोक्तः स किं
154700 देहातिरिक्तचेतनात्मदर्शी उत नित्यातिवाहिकदेहात्मदर्शी उत स्थूलदेहात्मदर्शी उत

154701 शुद्धसंविदात्मदर्शी उताज्ञानावृतसंविदात्मदर्शी उत संविदपलापी ।
154702 तत्राद्यकल्पे तावदाह - स तावदिति । स यदि चेतनाः रूपादिसंविदो मीयन्ते यत्र
154703 तच्चेतनामात्रं चिदाभासरूपं भवतीत्यभ्युपगच्छति तर्ह्यनुभूयत एव
154704 क्रमात्तेनात्मतत्त्वमित्यर्थः ॥ २७ ॥
154705
154706 स चाकारविनाशेन युज्यते नात्र संशयः ।
154707 अथाविनाशो देहश्चेत्तद्दुःखस्यात्र कः क्रमः ॥ २८ ॥
154708
154709 तत्कुतस्तत्राह - स चेति । ह्यर्थेऽयं चः पठितः । यस्मात्स
154710 देहाद्याकारोपाधिनाशेन परमात्मना सह युज्यते एकीभवति । द्वितीये त्वाह -
154711 अथेति । विनाशिन्यन्नमये देहे आत्मताबुद्धौ सर्वतो विनाशाशङ्कया दुःखम् ।
154712 अविनाशिन्यात्मतानिश्चये तु न देहाकारत्वदर्शनमात्रापराधेन दुःखप्रसक्तिरिति
154713 क्रमात्सोऽपि बोध्यमानस्तत्त्वं प्रतिपत्स्यत इति भावतः । तत् तर्हि । क्रमः प्रसङ्गः ॥
154714 २८ ॥
154715
154716 भवेद्भागविभागात्मविनाशस्त्वविचारितः ।
154717 अवश्यं तस्य भवति किलेति ननु निश्चयः ॥ २९ ॥
154718
154719 तृतीये कल्पे तावदाह - भवेदिति । भागविभागोऽवयवभेदस्तद्घटितः
154720 स्थूलात्मा तस्यात्मत्वदर्शिना तद्विनाशः सन्नपि न विचारितः । अवश्यं च
154721 सावयवस्य विनाशो भवति । किलेति प्रतिबोधने । तस्यापि तदतिरिक्तात्मनिश्चयः
154722 सिद्ध्यतीत्यर्थः ॥ २९ ॥
154723
154724 मृतः स संविदात्मत्वाद्भूयो नो वेत्ति संसृतिम् ।
154725 ज्ञानधौता न या संविन्न सा तिष्ठत्यसंसृतिः ॥ ३० ॥
154726
154727 चतुर्थकल्पेऽप्याह - मृत इति । स शुद्धसंविदात्मदर्शी । जीवन्मुक्तः सर्वदा
154728 सर्वत्र लीलया जगत्पश्यन्नपि मृतो विदेहतामात्रेण कैवल्यं प्राप्तः सन्भूयः
154729 संसृतिं नो वेत्ति । न पश्यतीत्यर्थः । पञ्चमकल्पेऽप्याह - ज्ञानेति । या संवित्
154730 तत्त्वज्ञानेन न धौता सा संसृतिबीजभावाविनाशादसंसृतिर्न तिष्ठति । अवश्यं
154731 संसरत्येवेत्यर्थः । तथा च तस्या अपि क्वचिज्जन्मनि ज्ञानोदयान्निस्तार इति भावः ॥ ३०
154732 ।।
154733
154734 अथवा नास्ति संवित्तिरिति निश्चयवान्यदि ।
154735 ततस्तादृग्वेदनतो भवत्येव दृषज्जडः ॥ ३१ ॥
154736
154737 षष्ठकल्पेऽप्याह - अथवेति । दृषदिव जडो विशेषज्ञानशून्यो भवत्येव
154738 चिरमित्यर्थः ॥ ३१ ॥
154739
154740 यथावेदनमर्थेषु चित्त्वे देहक्षयात्क्षते ।
154741 मृतिरेव परं श्रेयो दृष्टं नानुभवादिति ॥ ३२ ॥
154742
154743 तेन तत्र किं कथं वा श्रेयो दृष्टं तत्राह - यथावेदनमिति । आमरणं
154744 दृढीकृततादृग्वेदनानुसारेणैव देहपातादनन्तरं चित्त्वे विशेषविज्ञाने
154745 क्षते नष्टे सति गाढसुषुप्तिकल्पा सा मृतिरेव नैयायिकमोक्षकल्पा
154746 निर्दुःखत्वात्परं श्रेय इति तेन दृष्टं न तु निरतिशयानन्दानुभवाच्छ्रेयस्तेन
154747 मूर्खेण दृष्टमित्यर्थः ॥ ३२ ॥
154748
154749 असंभवाच्छुद्धविदो निःशरीरा भवन्ति ये ।
154750 जडभावा जडीभूय दुर्भेदान्ध्या भवन्ति ते ॥ ३३ ॥
154751
154752 ये तु शून्यवादिनो नैरात्म्यदृढनिश्चयास्तेषां मृतानां का गतिस्तामाह -

असंभवादिति। निःशरीरा मृताः। तथा च श्रुतिः असुर्या नाम ते लोका अन्धेन तमसा
वृताः। तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः इति॥ ३३॥

ये चापि स्वप्नपुरवत्सर्वं पश्यन्ति चिन्मयाः।
तेषामिदमिवाशेषं जगज्जालं प्रवर्तते॥ ३४॥

येऽपि विज्ञानवादिनः क्षणिकविज्ञानमयं स्वप्नतुल्यं जगदिति पश्यन्ति तेषामपि
व्यवहारसिद्धिस्तुल्येत्याह - ये चापीति। चिन्मयाः क्षणिकविकारिचिदात्मभूताः॥ ३४
॥

स्थैर्यास्थैर्येण भूतानां किमपूर्वमतौ भवेत्।
भूतस्थैर्ये तथास्थैर्ये सुखं चैवासुखं समम्॥ ३५॥

ये जगतः स्थैर्यवादिनो ये च क्षणिकत्ववादिनस्तेषामुभयेषामपि
सुखदुःखभोगान्तव्यवहारसिद्धिः समेत्याह - स्थैर्येति। अपूर्वमतौ
जगद्व्यवहारवैचित्र्यबुद्धौ किमन्तरं भवेत्। असुखं दुःखम्॥ ३५॥

स्थिरमस्त्वस्थिरं वापि मह्यादिमहतामपि।
चिद्भामात्रमिदं भाति यावदज्ञानमाततम्॥ ३६॥

तत्त्वविदां तु भूम्यादिभूतानां क्षणिकत्वाक्षणिकत्वयोर्नाग्रहः।
अध्यस्तस्याधिष्ठानब्रह्ममात्रसतत्त्वकत्वेन शुक्तिरजतमूल्यविचारवत्तद्विचारस्य
व्यर्थत्वादित्याशयेनाह - स्थिरमिति। मह्यादीनां महतां भूतानामपि॥ ३६॥

संविदा संविदोऽसत्तामिहाव्याप्य विनष्टया।
निर्णीयाङ्गीकृतं यैर्वा जाड्यं तद्बालकैरलम्॥ ३७॥

संविदस्तु न क्षणिकत्वं तत्या स्वासत्तालक्षणस्य स्वनाशस्य जाड्यस्य च
व्याप्तुमशक्यतया संविद्व्याप्तिमन्तरेण तदुभयसिद्ध्ययोगाच्च
तदुक्तिसंभवाभावादित्याह - संविदेति। संविदः कालतोऽसत्ता क्षणिकत्वं
देशतः असत्ता तु जाड्यं द्विविधामपि तां अव्याप्य अस्पृष्ट्वा विनष्टया
क्षणिकत्वाभिमतसंविदा जाड्यम्। क्षणिकत्वस्याप्युपलक्षणमेतत्।
यैर्निर्णीयाङ्गीकृतं तैस्तथाविधैर्बालकैर्मूर्खैरलं संभाषणेनेत्यर्थः॥ ३७
॥

येषां विद्भ्यः शरीराणि ते वन्द्याः पुरुषोत्तमाः।
शरीरेभ्यो विदो येषां तैरलं पुरुषाधमैः॥ ३८॥

अत एव हि कूटस्थचितो विवर्तभावेन तद्व्याप्तदेहान्तजडप्रपञ्चोत्पत्तिवादिनो
धन्याः। वाचारम्भणन्यायेन विकारानृतत्वदर्शने चित्परिशेषलाभात्। अचितो
देहादेश्चिदुत्पत्तिवादिनश्चार्वाककणभक्षादयो मूर्खाः चिद्विनाशेन
जडपरिशेषस्यापुरुषार्थत्वात्साधकाभावाच्चेत्याशयेनाह - येषामिति। विद्भ्य
इति बहुत्वमविवक्षितम्॥ ३८॥

चिद्रूपो जीवबीजौघ आकाशकृमिजालवत्।
ऊर्ध्वं तिर्यगधो याति पूर्यमाण इव स्वयम्॥ ३९॥

जीवसमष्टिरूपहिरण्यगर्भे चिदाभासबहुत्वाद्वा बहुवचननिर्देशः। तथा च
समष्ट्यात्मा हिरण्यगर्भ एक एव नानाजीवात्मना ऊर्ध्वाधोलोकगमनादिना
संसरतीति कल्पनापि साध्वीत्याह - चिद्रूप इति। आकाशकृमयो
मशकादयस्तज्जालवत्। यथा मणिकमल्लिकादौ पूर्यमाणो जलौघस्तिर्यगूर्ध्वमधो
याति तद्वत्॥ ३९॥

चेत्यते येन कर्तान्यो बीजौघेन स तत्परः।
तथैवानुभवत्यन्तः स्वयमेव विवल्गति॥ ४०॥

सा नानाकर्तृजीवसमष्टितापि हिरण्यगर्भचितः स्वकल्पनाभिनिवेशवशादेवेत्याह
- चेत्यत इति। बीजौघेनेतीत्थंभावे तृतीया। येन हिरण्यगर्भचिदाभासेन
बीजौघभावेन समष्टितां स्वस्योपास्यतद्वासनानुसारात्कल्पादौ अन्यः बहुधा
भिन्नो व्यष्टिरूपः कर्ता स्वान्तश्चेत्यते स तत्परस्तदासक्तः संस्तथैव
नानाकर्तृरूपं स्वान्तः स्वयमेवानुभवति तथैव विवल्गति संसरति चेत्यर्थः॥ ४०
।।

यद्यथा चेत्यते येन तज्जीवेनाशु तेन तत्।
चिद्रूपेणाप्यते सिद्धमेतदाबालमक्षतम्॥ ४१॥

अनेन प्रकारेणापि प्राग्यदस्माभिः प्रतिज्ञातं तदेव सिद्धमित्याह - यदिति।
आबालं आवृद्धं च। अक्षतमव्याहतसिद्धम्॥ ४१॥

यथा धूमस्य नभसि यथाम्भोधौ महाम्भसः।
आवर्तवृत्तयश्चित्रास्तथा चिद्व्योम्नि संसृतेः॥ ४२॥

अत एव हि तज्जीवचितां वासनावैचित्र्यानुरूपतत्तत्संसृति
चेतनवैचित्र्यात्संसृतिवैचित्र्यमनन्तमित्याह - यथेति॥ ४२॥

पुरी भवति चिद्व्योम यथा स्वप्ने नरं प्रति।
तथादिसर्गात्प्रभृति तदेवेदं जगत्स्थितम्॥ ४३॥

तदेव चिद्व्योमैवेदं जगद्भूत्वा स्थितम्॥ ४३॥

सहकारिनिमित्तानि यथा स्वप्ने न सन्ति वै।
पृथिव्यादीनि भूतानि तथैवादौ जगत्स्थितेः॥ ४४॥

सहकारिकारणानि विनैव स्वर्गादौ प्रतिभामात्रेण सिद्धत्वादपि
स्वप्नसाम्यमेवेत्याह - सहकारीति। आदौ सर्गादौ॥ ४४॥

अङ्गानां स्वप्ननगरे वसुधा विविधाः कृताः।
यास्ता एव जगत्स्वप्ननगरे पुष्टतां गताः॥ ४५॥

अङ्गानां नगरावयवभूतगृहाणां वसुधा उत्तरोत्तरभूमिकाभेदाः। या
अर्धविकासेन पेलवाः कृतास्ता एव सम्यग्विकासेन घनीभावात्पुष्टतां गताः॥ ४५॥

चिन्मात्राकाशमेवेमाः प्रजा द्वैतैक्यवर्जिताः।
के वात्र रञ्जनान्या खे यद्वाभाति खमेव तत्॥ ४६॥

यत् उ आभातीति च्छेदः॥ ४६॥

चिच्चन्द्रिका चतुर्दिक्कं शीतलाह्लादकारिणी।
तनोति चेतनालोकं तस्येदं कचनं जगत्॥ ४७॥

त्रिविधतापोपशमनाच्छीतला चेतना अर्थप्रथा तल्लक्षणमालोकम्। तस्य
चेतनालोकस्यार्थरूपेण कचनम्॥ ४७॥

अद्यैवाद्यन्तयोर्व्योम्नि चिन्मये सर्गदर्शनम्।

154857 चिदुन्मेषनिमेषाभ्यां खात्मोदेत्यस्तमेति च ॥ ४८ ॥
154858
154859 आदौ सर्गात्प्रागन्ते प्रलये चव्योम्नि सर्गशून्यस्वभावे चिन्मये व्योम्नि अद्य
154860 वर्तमानक्षण एव सर्गदर्शनं प्रसिद्धं तच्च खात्मब्रह्मैव स्वचितः
154861 परिच्छिन्नरूपेणोन्मेषादपरिच्छिन्नरूपेण निमेषाच्च स्वयमेव
154862 स्वप्नवदुदेत्यस्तमेति चेति निष्कर्ष इत्यर्थः ॥ ४८ ॥
154863
154864 यद्यथा वेत्ति यत्तत्सत्तथैवानुभवत्यलम् ।
154865 यस्मात्समस्तं चिन्मात्रं किमिवात्र न विद्यते ॥ ४९ ॥
154866
154867 चिच्चेत्स्वसत्ताबलेन सत्कृत्य जगत्पश्यति तदा न किंचिदसदिति वक्तुं शक्यमित्याह
154868 - यदिति । तत्तच्छ्रुतिप्रसिद्धं सद्वस्तु यस्माद्धेतोः यद्यद्यथा यथा वेत्ति
154869 सर्गादौ तदद्यापि तथैवानुभवति । तस्मात्समस्तमपि चिन्मात्रं तत्र किं न विद्यते
154870 यदसत्स्यादित्यर्थः ॥ ४९ ॥
154871
154872 शरदाकाशविशदं संविदः सौम्यमानसाः ।
154873 असन्त एव तिष्ठन्ति सन्तोऽधिगततत्पदाः ॥ ५० ॥
154874
154875 चिद्व्यतिरिक्तरूपेणासन्तः चिदात्मना तु सन्तः ॥ ५० ॥
154876
154877 निर्मानमोहा जितसङ्गदोषाः प्रवाहसंप्राप्तनिजार्थभाजः ।
154878 तिष्ठन्ति कार्यव्यवहारदृष्टौ निरामया यन्त्रमया इवैते ॥ ५१ ॥
154879
154880 तेषां तादृशीं स्थितिं लक्षणेनानुभावयति - निर्मानमोहा इति । यन्त्रमयाः
154881 पुरुषप्रतिमा इव । तत्पक्षे जलादिप्रवाहवशात्संप्राप्तनिजचेष्टाद्यर्थभाजः
154882 पश्यतामन्येषां कार्यव्यवहारदृष्टौ तिष्ठन्तीति योज्यम् ॥ ५१ ॥
154883
154884 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वाणप्रकरणे उत्तरार्धे
154885 नास्तिक्यनिराकरणं नाम शततमः सर्गः ॥ १०० ॥
154886
154887 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
154888 नास्तिक्यनिराकरणं नाम शततमः सर्गः ॥ १०० ॥
154889 एकाधिकशततमः सर्गः १०१
154890
154891 श्रीवसिष्ठ उवाच ।
154892
154893 चिन्मात्रमेव पुरुषस्तदेवेत्थमवस्थितम् ।
154894 चिन्मात्रव्यतिरेकेण किमन्यदुपपद्यते ॥ १ ॥
154895
154896 संविदैकात्म्यममलं सदा सर्वत्र पश्यतः ।
154897 अप्राप्तेर्भयहेतूनामभयस्थितिरीर्यते ॥
154898
154899 सर्ववादिनामपि चिन्मात्रमेव तत्त्वमित्यवगमे यथा अभयप्रतिष्ठाप्राप्तिस्तथा
154900 वर्णयितुं पीठिकां रचयति - चिन्मात्रमेवेत्यादिना । इत्थमनेन
154901 नानावादिपरिकल्पितस्थायिक्षणिकादिरूपेण जन्ममरणभयशोकादिरूपेण च ॥ १ ॥
154902
154903 तच्चावदातमाकाशं तन्मये द्रष्टृ दृश्यते ।
154904 तावन्मात्रं जगदतो हेयोपादेयधीः कुतः ॥ २ ॥
154905
154906 तदेवोपपादयंस्तत्फलमाह - तच्चेति । तच्चिन्मात्रं चावदातं
154907 निर्मलमाकाशमेव । तन्मये तद्विवर्तभूते ॥ २ ॥
154908

154909 न विद्यते परो लोको बार्हस्पत्यस्य यस्य तु।
154910 विदोऽन्यत्तस्य किं सारं रागद्वेषावतः कुतः॥ ३॥
154911
154912 हेयोपादेयाभावेन रागद्वेषप्रसक्तिरिति विज्ञानैकस्कन्धवादिनो बौद्धस्यापि
154913 संमतं किंतु क्षणिकविज्ञानमसारमित्येव तन्मतमुपेक्षितव्यमित्याह - न
154914 विद्यत इति। बार्हस्पत्यस्य बृहस्पतिप्रणीतबुद्धशास्त्रानुसारिणो यस्य वादिनः
154915 क्षणिकविज्ञानात्परोऽन्यो लोक्यत इति लोको जगन्न विद्यते तस्य। अतो निर्विषयत्वादेव
154916 रागद्वेषौ कुतः न प्रसज्जेते एवकिंतु विदः अन्यत् किं सारं नित्यं पुरुषार्थरूपं
154917 यत्संभावनया विदः शाश्वतत्वं स नेच्छतीत्यर्थः। रजिपुत्राणामसुराणां च
154918 विमोहनाय बृहस्पतिनापि बुद्धशास्त्रं प्रणीतमिति मत्स्यपुराणादौ प्रसिद्धम्॥ ३
154919 ।।
154920
154921 इष्टानिष्टदृशो रागद्वेषदोषाः किमात्मकाः।
154922 संविद्योममये स्वप्ने जगदाख्येऽङ्ग कथ्यताम्॥ ४॥
154923
154924 कूटस्थसंविद एव विवर्तरूपः स्वप्नो जगदित्यस्मत्सिद्धान्ते तु सुतरां न
154925 रागद्वेषप्रसक्तिरित्याह - इष्टानिष्टेति॥ ४॥
154926
154927 इदं हेयमुपादेयं वेति संवित्खमात्मनि।
154928 निर्मले निर्मलं भाति केवात्र तदतद्दृशौ॥ ५॥
154929
154930 अस्तु वा हेयोपादेयविकल्पाध्यासस्तथापि संविदाकाशे न कश्चिद्विशेष इत्याशयेनाह
154931 - इदमिति। तदतद्दृशौ इष्टानिष्टादिदृष्टी॥ ५॥
154932
154933 संविन्नरोऽमरो नागः संवित्स्थावरजंगमम्।
154934 भावाभावादयोऽस्याब्धेस्तरङ्गावर्तवृत्तयः॥ ६॥
154935
154936 सर्वस्याविनाशिसंविन्मात्रत्वे जन्ममरणादयोऽपि न संभावयितुं शक्या इत्याह ##-
154937
154938 संविदाकाशमेवाहं भवानपि जना अपि।
154939 म्रियामहे नो कदाचित्संवित्किल कदा मृता॥ ७॥
154940
154941 संविदो नास्ति संवेद्यं स्वयं संवेद्यतामिता।
154942 चित्त्वादतो बिशालाक्ष द्वितैकत्वे क्व वा स्थिते॥ ८॥
154943
154944 सर्वस्य संवित्त्वे संवेद्यमन्यन्न परिशिष्यते। स्वस्याः स्वसंवेद्यताकल्पना तु
154945 स्वस्य स्वस्कन्धारोहणकल्पनाकल्पेत्याह - संविद इति। स्वयमेव चेत्संवेद्यतां
154946 इता प्राप्ता अतश्चित्त्वादन्यत्संवेद्यतालक्षणक्रियाकर्मभेदरूपं द्वित्वं
154947 तद्व्यावृत्तमेकत्वं वा क्व स्थिते॥ ८॥
154948
154949 संविन्मात्राहते तस्माद्भूतं किमिव कथ्यताम्।
154950 कथ्यतां म्रियते तच्चेत्तदद्येमे कुतो वयम्॥ ९॥
154951
154952 भूतं नित्यं सद्वस्तु। कुतो वयंन् जीवाम इति शेषः॥ ९॥
154953
154954 वादिनः सौगताद्या ये ये लोकायतिकादयः।
154955 संविदाकाशमुत्सृज्य यन्मन्यन्ते [यन्मयन्ते यन्मयत्वे इति पाठौ।]
154956 तदुच्यताम्॥ १०॥
154957
154958 एवं सति संविदाकाश एव सर्ववादिनां स्वस्वाभिमतार्थाकारेण प्रथत इति फलितम्।
154959 तां विना गत्यन्तराभावादित्याशयेनाह - वादिन इति॥ १०॥
154960

154961 संविदाकाशमेवैतत्केनचिद्ब्रह्म कथ्यते ।
154962 केनचित्प्रोच्यते ज्ञानं केनचिच्छून्यमुच्यते ॥ ११ ॥
154963
154964 उक्तमर्थं ब्रह्मवादिनं पुरस्कृत्य प्रपञ्चयति - संविदाकाशमिति
154965 द्वाभ्याम् । ज्ञानं विज्ञानम् ॥ ११ ॥
154966
154967 केनचिन्मदशक्त्याभं केनचित्पुरुषाभिधम् ।
154968 केनचिच्च चिदाकाशं शिव आत्मा च केनचित् ॥ १२ ॥
154969
154970 केनचिद्देहात्मवादिना । मदिरामदशक्त्याभं देहाकारपरिणतभूतधर्मभूतम् ।
154971 पुरुषाभिधं सांख्येन । चिदाकाशं योगिना । शिव ईश्वर आत्मा अणुर्जीवश्चेति
154972 शैवेन ॥ १२ ॥
154973
154974 चिन्मात्रमेवमप्युक्तं याति न क्वचिदन्यताम् ।
154975 यस्मात्स्वयंन् तदेवैवमात्मानं वेत्ति नेतरत् ॥ १३ ॥
154976
154977 एवं वादिभिर्बहुधा विकल्पनेऽपि चितो न काचित्क्षतिः । स्वस्याः सर्वविकल्पसाक्षिणीत्वेन
154978 निर्विकल्पत्वादित्याह - चिन्मात्रमिति ॥ १३ ॥
154979
154980 चूर्णतां यान्तु मेऽङ्गानि सन्तु मेरूपमानि च ।
154981 का क्षतिः का च वा वृद्धिश्चिद्रूपवपुषो मम ॥ १४ ॥
154982
154983 चिद्रूपमेव वपुः स्वरूपं यस्य तथाविधस्य मम ॥ १४ ॥
154984
154985 मृताः पितामहाद्याश्चिन्न मृता सा म्रियेत चेत् ।
154986 तज्जन्म नैव नाम स्यादस्माकं मृतसंविदाम् ॥ १५ ॥
154987
154988 अस्माकं पितामहाद्या देहा मृतास्तेषां चित्तु न मृता । सापि म्रियेत
154989 चेन्मृतसंविदां तेषां पुनर्जन्मैव न स्यादित्यर्थः । अस्माकमिति अस्मास्वपि
154990 तन्न्यायसाम्यप्रदर्शनपरतया वा योज्यम् ॥ १५ ॥
154991
154992 न जायते न म्रियते संविदाकाशमक्षयम् ।
154993 भवेत्कथं कथय किं किलाकाशस्य संक्षयः ॥ १६ ॥
154994
154995 आकाशस्य संक्षयः किं भवेत्कथं वा भवेत्कथय ॥ १६ ॥
154996
154997 जगद्रूपैककचनमविनाशि चिदम्बरम् ।
154998 उदयास्तमयोन्मुक्तं स्थितमात्मनि केवलम् ॥ १७ ॥
154999
155000 एवं संक्षयासंभवे जगद्रूपस्य कचनं प्रथारूपं तच्चिदेवाम्बरमविनाशि
155001 स्थितम् ॥ १७ ॥
155002
155003 जगद्धानंन् दधद्दाहंन् चिन्नभःस्फटिकाचलः ।
155004 अनादिमध्यपर्यन्तः स्वच्छ आत्मनि तिष्ठति ॥ १८ ॥
155005
155006 चिन्नभोलक्षणः स्फटिकाचलः स्वान्तः स्वयमेव जगद्धानं दधत् स्वतः
155007 स्वसाक्षात्कारवह्निना तद्दाहं विधाय स्वच्छ आत्मनि तिष्ठति । यथा स्वच्छः
155008 स्फटिकाचलः स्वान्तः प्रतिबिम्बवनं प्राग्दधत्कदाचित्प्रतिबिम्बवह्निभावमिव
155009 प्राप्तेन स्वेनैव तद्वनं दग्ध्वा स्वरूपमात्रे अवतिष्ठते तद्वदित्याशयः ॥ १८ ॥
155010
155011 यथा यथान्धकारेण प्रेक्ष्यमाणं प्रणश्यति ।
155012 किमप्यङ्गाभ्रचक्राभं तथेदं विश्वमात्मनि ॥ १९ ॥

155013
155014 यथा यथा ज्ञानप्राबल्यं तथा तथा साज्ञानस्य जगतो नाशे दृष्टान्तमाह ##-
155015 प्रेक्ष्यमाणं यथा यथा क्रमान्निःशेषं प्रणश्यति तथा अज्ञानान्धकारेण
155016 कृतमिदं विश्वमपीत्यर्थः ॥ १९ ॥
155017
155018 यथाम्बुधिः स्वयं याति तोयाद्यावर्तकादिकम् ।
155019 स्थितो दधत्तथैवेदं चिदाकाशोऽङ्गमात्मनि ॥ २० ॥
155020
155021 यथा स्वयमेव तोयप्रवाहस्तरङ्गादिष्वावर्तकफेनबुद्बुदादिकमङ्गं
155022 दधत्स्थितस्तथैव चिदाकाशोऽप्यात्मनि जगदङ्गं दधत्स्थित इत्यर्थः ॥ २० ॥
155023
155024 चिन्मात्रमेव पुरुषः खवत्स च न नश्यति ।
155025 कदाचनापि तद्व्यर्थं यन्नश्यामीति शोकिता ॥ २१ ॥
155026
155027 देहाद्देहान्तरप्राप्तौ नव एव महोत्सवः ।
155028 मरणात्मनि किं मूढा हर्षस्थाने विषीदथ ॥ २२ ॥
155029
155030 जीर्णदेहत्यागेन नवतरदेहप्राप्तिनिमित्ते मरणे उपस्थिते हर्ष एवोचितो न शोक इत्याह
155031 - देहादिति ॥ २२ ॥
155032
155033 मृतश्चेन्न भवेद्भूयः सोऽत्राप्युपचयो महान् ।
155034 भावाभावग्रहोत्सर्गज्वरः प्रशममागतः ॥ २३ ॥
155035
155036 यदि पुनर्जन्म नास्त्येवेति वो भ्रमस्तथापि विषादो नोचितः । मरणादेव
155037 सर्वानर्थप्राप्तिनिवारणादित्याह - मृत इति । उपचयः पुरुषार्थोत्कर्षः ॥ २३ ॥
155038
155039 मरणं जीवितं तस्मान्न दुःखं न सुखं यतः ।
155040 नास्त्येवैतच्चिदाकाशः किलेत्थमभिजृम्भते ॥ २४ ॥
155041
155042 इत्थं जन्ममरणयोः सतोरपि यत्र न दुःखप्रसक्तिस्तत्रात्यन्तमसतोस्तयोर्दूरे
155043 तत्प्रसक्तिरित्याशयेनोपसंहरति - मरणमिति ॥ २४ ॥
155044
155045 मृतस्य देहलाभश्चेन्नव एव तदुत्सवः ।
155046 मृतिर्नाशो हि देहस्य सा मृतिः परमं सुखम् ॥ २५ ॥
155047
155048 मृतस्य देहलाभोऽस्ति वा न वेति संदेहादेव मरणाद्भयमिति मन्वानं प्रति
155049 उक्तमेवार्थं भङ्ग्यन्तरेणाह - मृतस्येति । हि
155050 यस्मान्मृतिर्जरारोगादिग्रस्तस्य कारागृहकल्पस्य पूर्वदेहस्य नाशः ॥ २५ ॥
155051
155052 मृतिरत्यन्तनाशश्चेत्तद्भवामयसंक्षयः ।
155053 भूयः शरीरलाभश्चेन्नव एव तदुत्सवः ॥ २६ ॥
155054
155055 अत एव कोट्यन्तरेऽपि सा तथैवेत्याह - मृतिरिति ॥ २६ ॥
155056
155057 कुकर्मभ्योऽथ भीतिश्चेत्सा समेह परत्र च ।
155058 तानि मा कार्ष भोस्तस्माल्लोकद्वितयसिद्धये ॥ २७ ॥
155059
155060 मरणोत्तरं कुकर्मिणां नरकादिश्रवणाद्भयमिति चेज्जीवतामपि तेषां
155061 राजदण्डादिवशादत्युत्कटानामिहैव फलदर्शनाच्च भयंन् तुल्यमिति
155062 कुकर्माण्येव मा कुर्वित्याह - कुकर्मभ्य इति । मा कार्ष मा कार्षीः ।
155063 सिपश्छान्दसोऽकारादेशः ॥ २७ ॥
155064

मरिष्यामि मरिष्यामि मरिष्यामीति भाषसे।
भविष्यामि भविष्यामि भविष्यामीति नेक्षसे॥ २८॥

क्व नाम जन्ममरणे क्व भवाभवभूमयः।
संविदात्मकमेवेदं व्योम व्योम्नि विवर्तते॥ २९॥

परमार्थदृशा तु जन्ममरणादिप्रसक्तिरेव नास्तीत्याह - क्वेति॥ २९॥

संविदाकाशमात्रात्मा पिब भुंक्ष्वास्व निर्ममः।
आकाशकोशकान्तस्य कुत इच्छोदयस्तव॥ ३०॥

ज्ञानपूर्णानां निरिच्छत्र्यवहारान्न कदापिदुःखप्रसक्तिरित्याह -
संविदाकाशेति॥ ३०॥

स्वप्रवाहबलोद्युक्तदेशकालवशादितान्।
भावान्भुङ्क्तेऽभयो भव्यः पावनान्पावनादपि॥ ३१॥

स्वीयप्रवाहबलेन प्रसक्तादुद्युक्तात्प्रयत्नाद्देशकालवशाच्च इतान्प्राप्तान्
भावान्शब्दादिविषयांस्तेष्वपि पावनादपि पावनान्भुङ्क्ते न
मनोमालिन्यविक्षेपहेतूनित्यर्थः। पावनान्पादपो यथा इति पाठे स्पष्टम्॥ ३१॥

मध्यमध्यगतान्दोषान्देशकालवशोदितान्।
अनादृत्यान्तरेवास्ते सुप्तधीरवहेलयन्॥ ३२॥

मध्ये मध्ये देशक्षोभदुर्भिक्षादिकालेऽप्यस्य न दुःखप्रसक्तिस्तदा
क्वचिदेकान्तपर्वतगुहादौ समाधिसुखानुभवेन तत्कालावहेलनसंभवादित्याह
- मध्येति। अन्तर्निर्विकल्पसमाधौ सुप्तधीः॥ ३२॥

न दुःखमेति मरणात्सुखमेति न जीवितात्।
नाभिवाञ्छति न द्वेष्टि स तदास्ते विवासनः॥ ३३॥

मरणजीवितजन्मजरत्तृणान्यविमृशन्विगतेच्छमवासनः।
विदितवेद्य इहाज्ञ इवोदितो वसति वीतभयस्त्वचलो यथा॥ ३४॥

सर्गोक्तमर्थं संक्षिप्योपसंहरति - मरणेति। मरणादिलक्षणानि जरत्तृणानि
अविमृशन्विदितवेद्योऽप्यज्ञोऽतिमूढ इव वीतभयः सन्नचलो यथा तथा
वसतीत्यर्थः॥ ३४॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वाणप्रकरणे उत्तरार्धे
परमोपदेशो नामैकाधिकशततमः सर्गः॥ १०१॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
परमोपदेशो नामैकाधिकशततमः सर्गः॥ १०१॥

द्व्यधिकशततमः सर्गः १०२

श्रीराम उवाच।

परिज्ञाते परे वस्तुन्यनादिनिधनात्मनि।
संपद्यते वद ब्रह्मन्कीदृशः पुरुषोत्तमः॥ १॥

भूयोऽपि बुद्धतत्त्वस्य वर्ण्यते लक्षणावलिः।

तदभ्यासदृढत्वेन बोधदार्ढ्यं भवेदिति ॥

कीदृशः किंलक्षणविशिष्टः संपद्यते ॥ १ ॥

श्रीवसिष्ठ उवाच ।

शृणु संपद्यते कीदृग्ज्ञातज्ञेयो नरोत्तमः ।
यावज्जीवं कथं चैष किमाचारोऽवतिष्ठते ॥ २ ॥

कथंस्वभावः किमाचारश्चावतिष्ठते तच्छृणु ॥ २ ॥

उपला अपि मित्राणि बन्धवो वनपादपाः ।
वनमध्ये स्थितस्यापि स्वजना मृगपोतकाः ॥ ३ ॥

तत्र स्वभावभूतान्यान्तराणि लक्षणानि प्रथमं वक्तुमुपक्रमते - उपला
अपीत्यादिना । मित्रादिषूपलादिषु च संयोगवियोगादिषु तुल्यान्तःस्थितिरित्यर्थः ॥ ३ ॥

आकीर्णं शून्यमेवास्य विपदश्चातिसंपदः ।
स्थितस्यापि महाराज्ये व्यसनान्येव सूत्सवाः ॥ ४ ॥

आकीर्णं जनसंकुलं स्थानम् । विपदो धनबन्ध्वादिनाशाः । व्यसनानि
वधबन्धनपारवश्यादिदुःखानि । सूत्सवा महोत्सवसमाः ॥ ४ ॥

असमाधिः समाधानं दुःखमेव महत्सुखम् ।
व्यवहारोऽपि सन्मौनं कर्माण्येवात्यकर्मता ॥ ५ ॥

व्यवहारो वाचिकः । कर्माणि कायिकानि ॥ ५ ॥

जाग्रदेव सुषुप्तस्थो जीवन्नेव मृतोपमः ।
करोति सर्वमाचारं न करोति च किंचन ॥ ६ ॥

सुषुप्तसदृशे निर्विकल्पात्मनि तिष्ठतीति सुषुप्तस्थः ।
अशरीरात्मभावस्थितेर्मृतोपमः । अकर्त्रात्मप्रतिष्ठत्वान्न करोति ॥ ६ ॥

रसिकोऽत्यन्तविरसो निर्घृणो बन्धुवत्सलः ।
निर्दयोऽत्यन्तकरुणो वितृष्णस्तृष्णयान्वितः ॥ ७ ॥

विषयसुखेष्वप्यात्मसुखमात्रतादृशा रसिकः । विषयदृशा त्वत्यन्तविरसः ।
स्वीयताबुद्ध्यभावान्निर्वृणः । स्वात्मताबुद्ध्या तु निरुपाधिप्रेम्णा बन्धुषु
वत्सलः । दयाविषयद्वितीयादर्शनान्निर्दयः । स्वदेहौपम्येन परशरीरेऽपि
सुखदुःखदर्शनादत्यन्तकरुणः । एवं पूर्णत्वात्स्वयं वितृष्णः ।
अज्ञजनोद्धारस्वभावात्तद्धिततृष्णयान्वितः ॥ ७ ॥

सर्वाभिनन्दिताचारः सर्वाचारबहिष्कृतः ।
अवीतशोकभयायासः सशोक इव लक्ष्यते ॥ ८ ॥

किमाचारोऽवतिष्ठते इति पृष्टानि बाह्यलक्षणान्याह - सर्वेति ।
अज्ञजनदुःखदर्शनात्ताननुशोचन् सशोक इव लक्ष्यते ॥ ८ ॥

तस्मान्नोद्विजते लोको लोकान्नोद्विजतेतु सः ।
परमुद्वेगमापन्नः संसृतौ रसिकोऽपि सन् ॥ ९ ॥

155169 नोद्विजते न बिभेति। उद्वेगं भयम् ॥ ९ ॥
155170
155171 नाभिनन्दति संप्राप्तं नाप्राप्तमभिवाञ्छति।
155172 आस्तेऽनुभूयमानेऽर्थे न च हर्षविषादयोः ॥ १० ॥
155173
155174 अनुभूयमानेऽपि हर्षविषादहेतावर्थे तयोर्नास्ते ॥ १० ॥
155175
155176 दुःखिते दुःखितकथः सुखिते सुखसंकथः।
155177 आस्ते सर्वास्ववस्थासु हृदयेनापराजितः ॥ ११ ॥
155178
155179 दुखदुःखाभ्यामपराजितः आनभिभूतः। सहिष्णुरिति यावत् ॥ ११ ॥
155180
155181 कर्मणः सुकृतादन्यदस्मै किंचिन्न रोचते।
155182 स्वभाव एव महतां ननु यन्न विचेष्टितम् ॥ १२ ॥
155183
155184 नन्विति संबोधने। न विचेष्टितमशास्त्रीयचेष्टावर्जनं यत् तन्महतां स्वभाव एव।
155185 यत्नविचेष्टितम् इति पाठे शास्त्रीययत्नमात्रप्रयुक्तं विचेष्टितम् ॥ १२ ॥
155186
155187 नालम्बते रसिकतां न च नीरसतां क्वचित्।
155188 अनार्थेषु विचरत्यर्थी वीतरागः सरागवत् ॥ १३ ॥
155189
155190 रसिकतामासक्तिम्। नीरसतां निष्प्रणयताम्। अर्थेषु धनेषु अर्थी उपयाचको भूत्वा न
155191 विचरति ॥ १३ ॥
155192
155193 यथा शास्त्रव्यवहृतेः सुखदुःखैः क्रमागतैः।
155194 अनागतोऽपि चायाति न हर्षं न विषादिताम् ॥ १४ ॥
155195
155196 सुखदुःखैरनागतोऽसंस्पृष्टोऽप्यायाति स्पृशतीव। ततो हर्षं विषादितां वा
155197 नायात्येव ॥ १४ ॥
155198
155199 संप्रहृष्टाश्च लक्ष्यन्ते लक्ष्यन्ते दुःखितास्तथा।
155200 न स्वभावं त्यजन्त्यन्तः संसारारभटीनटाः ॥ १५ ॥
155201
155202 सुखदुःखाभ्यांन् स्पृश्यत इवेति यदुक्तं तल्लिङ्गोपदर्शनेन विवृणोति -
155203 संप्रहृष्टाश्चेति। न हर्ष न विषादिताम् इत्युक्तिमपि हेतूपदर्शनेन विवृणोति ##-
155204 संप्रहर्षादिलिङ्गविडम्बनं तेषां नटविडम्बनतुल्यंन् फलितमित्याशयेन
155205 विशिनष्टि - संसाराराभटीनटा इति ॥ १५ ॥
155206
155207 आत्मीयेष्वर्थजातेषु मिथ्यात्मसु सुतादिषु।
155208 बुद्बुदेष्विव तोयानां न स्नेहस्तत्त्वदर्शिनाम् ॥ १६ ॥
155209
155210 अस्नेह एव सुघनस्नेहार्द्रहृदयो यथा।
155211 वत्सलां दर्शयन्वृत्तिं ज्ञस्तिष्ठति यथाक्रमम् ॥ १७ ॥
155212
155213 वायूनिव प्रवाहस्थाः स्पृशन्ति विषयान्मुधा।
155214 देहसत्ताविषान्मूढा लीयन्ते विषयोदरे ॥ १८ ॥
155215
155216 अज्ञास्तु न सुज्ञवदनासक्त्या विषयान्भोक्तुं जानन्तीत्याह - वायूनिवेति। ते हि
155217 देहात्मनैव या स्वसत्ता तल्लक्षणाद्विषान्मूढाः संतापमूर्च्छिता इव
155218 कामादिसंतापशान्तये अत्यासक्त्या विषयोदरे लीयन्ते। तथा लीना अपि
155219 प्रतप्तवैतरणीनदीप्रवाहस्था नारकिपुरुषा उपरिभागेन वायूनिव विषयान् किंचिदेव
155220 मुधा स्पृशन्ति न तत्त्वतः कार्त्स्न्येन विषयमनुभूय विश्रमितुं

155221 शक्नुवन्तीत्यर्थः ॥ १८ ॥
155222
155223 बहिः सर्वसमाचारमन्तः सर्वार्थशीतलम् ।
155224 नित्यमन्तरनाविष्ट आविष्ट इव तिष्ठति ॥ १९ ॥
155225
155226 सर्वैः शिष्टैः सम आचारो यस्यां स्थितौ सर्वे अर्थाश्च शीतला यस्यामिति द्वे अपि
155227 स्थितिक्रियाविशेषणे । तिष्ठति तत्त्वविदिति शेषः ॥ १९ ॥
155228
155229 श्रीराम उवाच ।
155230
155231 स्वरूपमीदृशं तस्य को वेत्ति मुनिनायक ।
155232 वद सत्यमसत्यं वा भवत्यज्ञो ह्यपीदृशः ॥ २० ॥
155233
155234 उक्तैर्लक्षणैस्तत्त्वज्ञपरिचयो दुर्घटः मूर्खदाम्भिकवञ्चकतापसेष्वपि
155235 जठात्संपादितानामेषां लक्षणानां दर्शनादिति रामः शङ्कते -
155236 स्वरूपमिति । ईदृशमुक्तलक्षणपरिचेयं स्वरूपं सत्यमथवा असत्यं
155237 दम्भादिपरिकल्पितं वेति को वेदितुं शक्नोति । हि यतः अज्ञोऽपि दाम्भिक
155238 ईदृशस्त्वदुक्तलक्षणवान्भवति लोके इत्यन्वयः ॥ २० ॥
155239
155240 अश्ववद्ब्रह्मचर्येण चरन्तोऽचारुचेतसः ।
155241 मिथ्यातपस्विदार्ढ्याय भवन्त्येवंविधा मुने ॥ २१ ॥
155242
155243 अचारुचेतसो विद्वत्सादृश्यविडम्बनेने तादृशमानपूजादिसापेक्षचित्ताः ।
155244 तपस्विशब्देन तथा ख्यातिर्लक्ष्यते ।
155245 मिथ्यापरिकल्पितस्वतपस्विताप्रख्यातिदार्ढ्यायेत्यर्थः ॥ २१ ॥
155246
155247 श्रीवसिष्ठ उवाच ।
155248
155249 असत्यं वास्तु सत्यं वा स्वरूपं वरमीदृशम् ।
155250 विद्धि वेदविदां त्वेष स्वभावानुभवस्थितः ॥ २२ ॥
155251
155252 दम्भार्थमपि दृढीकृतान्येतानि लक्षणानि शुभोदर्काण्येवेति न
155253 तल्लक्षणवतामुपेक्षा कार्या । यतस्तादृशानामनुसरणे
155254 स्वभावसिद्धलक्षणसंपन्नस्तत्त्वविदपि दैवाल्लभ्यत इत्याशयेन श्रीवसिष्ठ
155255 उत्तरमाह - असत्यं वेति । ईदृशमुक्तलक्षणसंपन्नं स्वरूपं वरं
155256 दुर्लभत्वाच्छ्रेष्ठम् । वेदविदां वेदार्थतत्त्वविदां तु एष लक्षणकलापः
155257 स्वभावानुभवबलादेव स्थितः प्रतिष्ठितो न हठात्संपादित इत्यर्थः ॥ २२ ॥
155258
155259 अनाविष्टा विचेष्टन्ते वीतरागाः सरागवत् ।
155260 गतहासा हसन्त्यज्ञान्सहसा करुणाकुलाः ॥ २३ ॥
155261
155262 अनाविष्टाः क्रियाफलेष्वनभिनिविष्टाः ॥ २३ ॥
155263
155264 चित्तादर्शगतं दृश्यं सर्वं कपटकुट्टिमम् ।
155265 पश्यन्त्यसत्परिज्ञातं स्वप्ने हेमेव हस्तगम् ॥ २४ ॥
155266
155267 सर्वं दृश्यं चित्तादर्शगतं कपटकुट्टिमकल्पमसत्पश्यन्ति ॥ २४ ॥
155268
155269 अन्तःशीतलतामेषां तां न जानन्ति केचन ।
155270 दूराच्चन्दनदारूणामामोदमिव जन्तवः ॥ २५ ॥
155271
155272 ये तु विज्ञातविज्ञेयास्तादृशाः पावनाशयाः ।

155273 जानन्ति तांस्तथैवान्तरहेः पादानिवाहयः ॥ २६ ॥
155274
155275 यद्यपि तत्त्वविस्त्वरूपमज्ञा ज्ञातुं न शक्नुवन्ति तथापि तत्त्वविदो जानन्त्येवेत्याह
155276 - ये त्विति । पादान् पदानि ॥ २६ ॥
155277
155278 भावं निगूहयन्त्येते तमुत्तममनुत्तमाः ।
155279 ग्राम्यैर्धनैः किलानर्घ्यः कश्चिन्तामणिरापणे ॥ २७ ॥
155280
155281 दाम्भिकास्तु लक्षणानि प्रख्यापयन्ति । तत्त्वज्ञास्तु निगूहयन्तीत्यनेन विशेषेण वा ते
155282 परिचेया इत्याशयेनाह - भावमिति । किमर्थं निगूहयन्ति तत्राह - ग्राम्यैरिति ।
155283 ग्राम्यैर्ग्रामनगरादिषु भवैर्धनैरनर्घ्यः क्रेतुमशक्यश्चिन्तामणिः आपणे
155284 कः प्रसार्यते । न कश्चिदित्यर्थः ॥ २७ ॥
155285
155286 तस्मिन्निगूहने भावो यतस्तेषां न दर्शने ।
155287 निर्वासना गतद्वैता गतमानाः किलाङ्ग ते ॥ २८ ॥
155288
155289 आपणप्रसारणलिङ्गेन नायं चिन्तामणिरितिबद्धलात्स्वगुणप्रख्यापनलिङ्गेन
155290 दाम्भिकोऽयं न तत्त्वविदिति ज्ञेयमित्याशयेनाह - तस्मिन्निति । तेषां तत्त्वविदां
155291 तस्मिन्स्वगुणादौ विषये निगूहने एव भावस्तात्पर्यं न तु दर्शनपरेभ्यः
155292 प्रख्यापने । यतस्ते निर्वासनाः ख्यातिमानादिरागवासनाशून्याः । अङ्गेत्यामन्त्रणे
155293 ॥ २८ ॥
155294
155295 एकान्तामानदौर्गत्यजनावज्ञप्तयस्तु तान् ।
155296 सुखयन्ति यथा राम न तथैव महर्द्धयः ॥ २९ ॥
155297
155298 किमर्थं ते ख्यात्यादि नेच्छन्ति तत्राह - एकान्तेति । ख्यातिमानधनादिसमृद्धौ
155299 जनसमाजाभिमानाद्यनर्थसहस्रैर्विक्षेपे आत्मसुखानुभवविच्छेदापत्तेरिति भावः
155300 । अमानं पूजावर्जनम् । दौर्गत्यमकिंचनता । जनैरवज्ञप्तयोऽवज्ञाः ॥ २९ ॥
155301
155302 स्वसंवेदनसंवेद्यसारा विदितवेद्यता ।
155303 नैषा दर्शयितुं शक्या दृश्यते न च तद्विदा ॥ ३० ॥
155304
155305 या विदितवेद्यता सा स्वसंवेदनेन स्वानुभवेनैव संवेद्यः सारो निरतिशयानन्दो
155306 यस्यां सा । एषा अन्यं प्रति दर्शयितुं न शक्या । यतस्तद्विदापि सा न दृश्यते न
155307 दृग्विषयीक्रियते किंतु स्वप्रकाशतयैव स्वयंन् प्रथत इत्यर्थः ॥ ३० ॥
155308
155309 गुणं ममेमं जानातु जनः पूजां करोतु मे ।
155310 इत्यहंकारिणामीहा न तु तन्मुक्तचेतसाम् ॥ ३१ ॥
155311
155312 क्रियाफलानि चिद्व्योमगमनादीनि राघव ।
155313 अज्ञानामपि सिध्यन्ति मन्त्रौषधिवशादिह ॥ ३२ ॥
155314
155315 व्योमगमनादीनि मन्त्रजपादिक्रियाफलानि अज्ञानामपि सिध्यन्ति । चिदिति निपातो
155316 बाहुल्यद्योतनार्थः ॥ ३२ ॥
155317
155318 यो यादृक् क्लेशमाधातुं समर्थस्तादृगेव सः ।
155319 अवश्यं फलमाप्नोति प्रबुद्धोऽस्त्वज्ञ एव वा ॥ ३३ ॥
155320
155321 आमोदश्चन्दनस्येव स्पन्दनस्य फलं हृदि ।
155322 सर्वस्यैवास्ति तन्नूनं तद्वता समवाप्यते ॥ ३४ ॥
155323
155324 स्पन्दनस्य विहितनिषिद्धकर्मणां फलं स्वहृद्येव सर्वस्यापि जन्तोरपूर्वात्मना

155325 अस्ति। तच्च कालेनाविर्भूतं समवाप्यते॥ ३४॥
155326
155327 अहंतावासनाद्वैतं वस्तुता दृश्यवस्तुषु।
155328 यस्यास्त्यसौ साधयति खगमादिक्रियाफलम्॥ ३५॥
155329
155330 सिद्धिलक्षणदृश्यवस्तुषु अहं भोक्ता स्यामित्यहंतावासनालक्षणं द्वैतं
155331 परिच्छिन्नात्मकल्पनं यस्यास्ति स खेचरसिद्ध्यादिक्रियाफलं साधयतीत्यर्थः॥ ३५॥
155332
155333 इदं न किंचिद्भ्रान्तिर्वा खं चेति ज्ञस्तु वेत्ति यः।
155334 सोऽवासनः कर्मवात्याः कथं साधयति क्रियाः॥ ३६॥
155335
155336 इदं सिद्धिजातं न किंचित्तुच्छं भ्रान्तिर्मनोभ्रममात्रं
155337 खमधिष्ठानचिदाकाशमात्रं वेति यस्तु ज्ञो वेत्ति अवासनः स तत्त्वज्ञः
155338 कर्मवात्या भ्रमणप्रायखेचरादिसिद्धिफला मन्त्रौषधादिक्रियाः कथं साधयति
155339 ॥ ३६॥
155340
155341 नैव तस्य कृतेनार्थो नाऽकृतेनेह कश्चन।
155342 न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः॥ ३७॥
155343
155344 न तदस्ति पृथिव्यां वा दिवि देवेषु वा क्वचित्।
155345 यदुदारमनोवृत्तेर्लोभाय विदितात्मनः॥ ३८॥
155346
155347 जगदेव तृणं यस्य न किंचिद्रज एव वा।
155348 किं नाम तस्य भवतु अन्यदादेयतां गतम्॥ ३९॥
155349
155350 कार्त्स्न्यपर एवकारः। कृत्स्नं जगद्यस्य तृणंन् रजो न किंचिदेव वा तस्य
155351 धीरस्यान्यदनात्मभूतंन् किमादेयतां गतमुपादेयमस्तु। न किंचिदित्यर्थः॥ ३९॥
155352
155353 निर्वाहितजगद्यात्रः परिपूर्णमना मुनिः।
155354 यथास्थितमसावास्ते संप्रयाति यथागतम्॥ ४०॥
155355
155356 निर्वाहिता जगद्यात्रा लोकसंग्रहार्थप्रवृत्तिर्यस्य। यथा आगतं यथाप्राप्तं
155357 शिष्टाचारं संप्रयाति अनुसरति॥ ४०॥
155358
155359 नित्यान्तःशीतलो मौनी सत्त्वीभूतमनोवनिः।
155360 परिपूर्णार्णवाकारो गम्भीरप्रकटाशयः॥ ४१॥
155361
155362 रसायनपरापूर्णह्रदवत् ह्लादमात्मनि।
155363 धत्ते करोति वान्यस्य सकलेन्दुरिवामलः॥ ४२॥
155364
155365 स्वयं ह्लादं धत्ते अन्यस्य च करोति॥ ४२॥
155366
155367 मन्दारमञ्जरीकुञ्जपिञ्जरा देवभूमयः।
155368 न तथा ह्लादयन्त्येता यथा पण्डितबुद्धयः॥ ४३॥
155369
155370 ह्लादकारित्वं तस्य विशदयति - मन्दारेति। देवभूमयो नन्दनादयः।
155371 पण्डितबुद्धयो बोधनैरित्यर्थः॥ ४३॥
155372
155373 चन्द्रबिम्बैर्वसन्तैश्च महतामहताशयैः।
155374 सारं सौभाग्यसौगन्ध्यसौरभालोकभोगिषु॥ ४४॥
155375
155376 सारग्राही हि विवेकी सुरभिर्ग्रीष्मर्तुस्तत्संबन्ध्यालोकभोगिषु चन्द्रबिम्बैः

155377 सारमादत्ते सौगन्ध्यभोगिषु वसन्तैः सारमादत्ते सौभाग्यभोगिषु महतां
155378 तत्त्वविदां अहतैः रागाद्यनुपहतैः आशयैः सारमादत्त इति द्वन्द्वनिर्दिष्टानां
155379 व्युत्क्रमेण संबन्धः। तैरेव हि तत्सारो लभ्यो नान्यत्रान्यैरुपायैरित्यर्थः॥ ४४॥
155380
155381 भ्रान्तिमात्रमिदं विश्वमिन्द्रजालमसन्मयम्।
155382 त्यजतीति विनिश्चित्य दिनानुदिनमेषणाः॥ ४५॥
155383
155384 महतामाशयैः कं सारमादत्त इति चेत्प्रथमं
155385 जगन्मिथ्यात्वदर्शनात्क्रमात्सर्वैषणात्यागमित्याह - भ्रान्तिमात्रमिति॥ ४५॥
155386
155387 शीतातपादिदुःखानि निजदेहगतान्यपि।
155388 अन्यदेहगतानीव ज्ञः पश्यत्यवहेलया॥ ४६॥
155389
155390 ततः शीतोष्णादिद्वन्द्वसहिष्णुतालक्षणं सारमादत्ते इत्याह - शीतेति॥ ४६॥
155391
155392 करुणोदारया वृत्त्या व्रततिधीरया।
155393 नीरसो नीरसारां तु सारतां सरति स्थितिम्॥ ४७॥
155394
155395 तदनन्तरं सर्वभूतानुकम्पास्वरूपदृढावलम्बनं यथाप्राप्तेन
155396 जलमात्रेणापि संतोष इत्यादिगुणसारमादत्ते इत्याह - करुणेति। इत्थं नीरसो
155397 विरक्तः सः करुणया उदारा वृत्तिः सर्वस्वव्ययेनाप्यार्तपरिपालनव्रतं तया।
155398 व्रततिर्लता तद्वद्धीरया वृत्त्या परार्थैकप्रयोजनच्छायाफलपुष्पादिसंग्रहः
155399 स्वतरुदृढावलम्बो जलमात्रेणापि यथाप्राप्तेन संतोष इत्येवंरूपया वृत्त्या
155400 नीरमात्रमपि सारः संतोषहेतुर्यस्यां स्थितौ तादृशस्थितिरूपां सारतां सरति॥
155401 ४७॥
155402
155403 व्यवहारं यथाप्राप्तं लोकसामान्यमाचरन्।
155404 चराचराणां भूतानामुपर्येवावतिष्ठते॥ ४८॥
155405
155406 उपरि उत्कर्षे ऊर्ध्वमूलभूते ब्रह्मणि वा॥ ४८॥
155407
155408 प्रज्ञाप्रासादमारूढस्त्वशोच्यः शोचते जनान्।
155409 भूमिष्ठानिव शैलस्थः सर्वान्प्रज्ञोऽनुपश्यति॥ ४९॥
155410
155411 उपरिस्थितिमेव दर्शयति - प्रज्ञेति॥ ४९॥
155412
155413 चिरं कल्लोलवलितः सुमना जलधौ भ्रमे।
155414 परं पारमुपागत्य परां विश्रान्तिमेति सः॥ ५०॥
155415
155416 तदैवासौ चिरप्रवृत्तरागादिविक्षेपदुःखेभ्यो मुक्तः सम्यग्विश्राम्यतीत्याह -
155417 चिरमिति। कल्लोलैः षडूर्मिभिर्वलितो विक्षिप्तः॥ ५०॥
155418
155419 हसन्स शान्तया वृत्त्या प्राक्तनीर्जागतीर्गतीः।
155420 स्मयमान इवास्तेऽन्तर्जनताश्च घनभ्रमाः॥ ५१॥
155421
155422 एताः कान्तारनिर्मग्नमिताः संसारदृष्टयः।
155423 असत्यो हृतवत्यो मामित्यन्तर्याति विस्मयम्॥ ५२॥
155424
155425 कान्तारे मार्गभ्रंशेन निर्मग्नो योऽन्धस्तेन मिता उपमिताः। हृतवत्यो
155426 मोहितवत्यः॥ ५२॥
155427
155428 दृष्ट्याष्टगुणमैश्वर्यमनिष्टं मे तृणायते।

155429 इत्युपैत्युपशान्तत्वात्स्मयमानोऽपि न स्मयम् ॥ ५३ ॥
155430
155431 इति एवं ज्ञात्वा स्मयमान ईषद्धसन्नपि स्मयं गर्वं नोपैति ॥ ५३ ॥
155432
155433 कश्चिद्गिरिगुहागेहः कश्चित्पुण्याश्रमाश्रयः ।
155434 कश्चिद्गृहस्थाश्रमवान्कश्चिद्बहुरटन्स्थितः ॥ ५४ ॥
155435
155436 तस्य स्थानादिनियमोऽपि नास्तीत्याह - कश्चिदिति । अटन् रटन् इति वा छेदः ॥ ५४ ॥
155437
155438 कश्चिद्भिक्षाचराचारः कश्चिदेकान्ततापसः ।
155439 कश्चिन्मौनव्रतधरः कश्चिद्ध्यानपरायणः ॥ ५५ ॥
155440
155441 कश्चिद्विपश्चिद्विख्यातः कश्चिच्छ्रोता श्रुतेः स्मृतेः ।
155442 कश्चिद्राजा द्विजः कश्चित्कश्चिदज्ञ इव स्थितः ॥ ५६ ॥
155443
155444 गुटिकाञ्जनखट्गादिसिद्धः कश्चिन्नभोगतः ।
155445 कश्चिच्छिल्पकलाजीवी कश्चित्पामररूपभृत् ॥ ५७ ॥
155446
155447 कश्चित्यक्तसमाचारः कश्चिच्छ्रोत्रियनायकः ।
155448 कश्चिदुन्मत्तचरितः प्रव्रज्यां कश्चिदाश्रितः ॥ ५८ ॥
155449
155450 पुरुषो न शरीरादि न च चित्तादि किंचन ।
155451 पुरुषश्चेतनं नाम न स नश्यति कर्हिचित् ॥ ५९ ॥
155452
155453 रामप्रश्नवाक्ये कीदृशः पुरुषोत्तम इति पदं श्रुत्वा तदर्थजिज्ञासामपि
155454 संभावयन्पुरुषं वर्णयंस्तदुत्तमतां दर्शयति - पुरुष इति । न स
155455 नश्यतीत्यविनाशित्वात्स एवोत्तम इत्यर्थः ॥ ५९ ॥
155456
155457 अच्छेद्योऽसावदाह्योऽसावक्लेद्योऽशोष्य एव च ।
155458 नित्यः सर्वगतः स्थाणुरचलोऽसौ सनातनः ॥ ६० ॥
155459
155460 छेदभेदादिविनाशहेत्वसंस्पर्शादिभिरपि स एवोत्तम इत्याह - अच्छेद्य इति ॥ ६० ॥
155461
155462 इति सम्यक्प्रबुद्धो यः स यथा यत्र तिष्ठति ।
155463 तथा तिष्ठतु तत्रात्र स्थानास्थानियमेन किम् ॥ ६१ ॥
155464
155465 एतादृशपुरुषोत्तमतत्त्वपरिज्ञानादेव तत्त्ववित्पुरुषोत्तमो न तु
155466 वर्णाश्रममर्यादापालनमात्रेण । तदभावेऽपि तस्य
155467 पुरुषोत्तमत्वानपायादित्याशयेनाह - इतीति । स्थानं
155468 वर्णाश्रममर्यादास्थितिस्तदास्थानियमेन तस्य किं साध्यमिति
155469 विद्याप्रभावोक्तिररुन्मुखान्यतीन्सालावृकेभ्यः प्रायच्छमितिवत् ॥ ६१ ॥
155470
155471 पातालमाविशतु यातु नभो विलङ्घ्य दिङ्मण्डलं भ्रमतु पेषणमेव येन ।
155472 चिन्मात्रमेतदजरं न तु यातु नाशमाकाशकोश इव शान्तमजं शिवं तत् ॥
155473 ६२ ॥
155474
155475 तस्याविनाशिपुरुषत्वमेव द्रढयन्नुपसंहरति - पातालमिति ।
155476 तत्त्वविद्बलात्स्वनाशचिकीर्षया पातालमाविशतु नभो विलङ्घ्योर्ध्वं वा यातु
155477 दिङ्मण्डलं वा भ्रमतु येन भ्रमणेन
155478 मानसोत्तरलोकालोकादिगिरिशिलासहस्रघर्षणात्पेषणं संचूर्णनमेव संभाव्यते ।
155479 पेषणमेव यातु इति पाठे गिरिशिलासहस्रैः स्वस्य पेषणं कारयतु वेत्यर्थः ।
155480 तथाप्येतत्तत्त्ववित्स्वरूपमसङ्गाद्द्वयं चिन्मात्रमजरमेवेति नाशं न तु याति ।

155481 यतस्तदाकाशकोश इव शिवं निरुपल्लवनित्यनिरतिशयानन्दरूपमेवेत्यर्थः ॥ ६२ ॥
155482
155483 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० निर्वाणप्रकरणे उ०
155484 मरणाद्यभावोपदेशो नाम द्व्युत्तरशततमः सर्गः ॥ १०२ ॥
155485
155486 इति श्रीवासिष्ठमहारामायणे तात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
155487 मरणाद्यभावोपदेशो नाम द्व्युत्तरशततमः सर्गः ॥ १०२ ॥
155488
155489 त्र्यधिकशततमः सर्गः १०३
155490
155491 श्रीवसिष्ठ उवाच ।
155492
155493 भामात्रं भानमात्रं वा शान्तं भासत एव च ।
155494 चिन्मात्रं यदनाद्यन्तं तस्य नाशः कथं कदा ॥ १ ॥
155495
155496 चितो नित्यत्वमेकत्वं स्वातन्त्र्यमपि साध्यते ।
155497 सच्छास्त्रस्यास्य माहात्म्यं हितं चात्रोपदिश्यते ॥
155498
155499 तत्र चित्सामान्यस्याविनाशित्वं सर्वानुभवबलेन प्रथमं साधयति -
155500 भामात्रमिति । जाग्रत्स्वप्नयोरन्तःकरणसाक्षितया सुषुप्तावज्ञानस्वापादिसाक्षितया
155501 च प्रत्यगात्मभामात्रं विषयभानमात्रं वा सर्वेषां भासत एवेति प्रत्यक्षेण
155502 चकाराद्व्यवहारस्मृत्यादिलिङ्गेन च यदनाद्यन्तं चिन्मात्रं तत्सिद्धं तस्य
155503 कथं केन निमित्तेन नाशो भवेत् तदसाधितस्य निमित्तस्याप्रसिद्धेस्तत्साधितस्य च
155504 तदुपजीवकतया तन्नाशनिमित्तत्वायोगादेवं कदा वा नाशो भवेत् ।
155505 तादृशकालस्यापि तदधीनसिद्धिकस्य तदुपजीवकत्वादिति भावः ॥ १ ॥
155506
155507 तावन्मात्रं च पुरुषः कदाचित्स न नश्यति ।
155508 नदि नश्यति चिन्मात्रं भूयो जायेत किं कथम् ॥ २ ॥
155509
155510 भवतु चिन्मात्रमविनाशि पुरुषस्य किमायातं तत्राह - तावन्मात्रमिति । तन्नाशे
155511 अग्रे सृष्टिरेव न स्यादसाक्षिकसर्गाद्धेरित्याह - यदीति ॥ २ ॥
155512
155513 न चान्यदन्यच्चिन्मात्रं क्वचित्किंचन कस्यचित् ।
155514 सर्वानुभवसादृश्ये कीदृशी नाम सान्यता ॥ ३ ॥
155515
155516 ननु चिदन्तरमुत्पत्स्यते ततः सर्गः प्रवर्त्स्यीति तत्राह - न चेति ।
155517 औत्तरकालिक्याश्चितः पूर्वचितो भेदः किं मध्ये विच्छेदानुभवात्कल्प्येत उत
155518 वैलक्षण्यात् । न तावद्विच्छेदानुभवादनुभवस्यैव चित्त्वात्तत्सद्भावे
155519 विच्छेदासिद्धेः । नापि वैलक्षण्यम् । अचित्त्वापत्तेः । सर्वांशे अनुभवस्य
155520 पूर्वोत्तरकालयोः सादृश्ये सा अन्यता भिन्नता कीदृशी नाम । अलीकेत्यर्थः ॥ ३ ॥
155521
155522 सर्वस्यैव हिमं शीतमुष्णोऽग्निर्मधुरं पयः ।
155523 चिन्मात्रस्यावदातस्य कीदृगन्यत्वमत्र तु ॥ ४ ॥
155524
155525 कालभेदादिव पुरुषभेदादपि चितो न भेदः । हिमशैत्यादिविषयेष्विव चित्यपि
155526 वैलक्षण्याननुभवादेवेत्याह - सर्वस्यैवेति ॥ ४ ॥
155527
155528 शरीरनाशे नाशश्चेच्चिन्मात्रस्य तदुच्यताम् ।
155529 हर्षस्थाने विषादः किं मरणे संसृतिक्षये ॥ ५ ॥
155530
155531 ननु सुखदुःखानुभवलक्षणविशेषज्ञानातिरिक्तं न
155532 चित्सामान्यमभ्युपगच्छामः । विशेषविज्ञानेषु चावच्छेदकतासंबन्धेन

155533 शरीरं कारणं तन्नाशाच्च ज्ञाननाश इत्यभ्युपगच्छतां
155534 चार्वाकवैशेषिकादीनां शङ्कामुद्भाव्य निरस्यति - शरीरेति | हर्षस्थाने इति |
155535 दुःखप्रागभावासमानकालिकदुःखध्वंस एव हि वो मुक्तिः सा च
155536 देहनाशाच्चित्सामान्यनाशे उत्तरत्र देहदुःखादिसाधकाभावादेव सिध्यति | न हि
155537 चिदतिरिक्तं तत्साधकमस्ति | न च निःसाधकोऽग्रिमदेहः सिध्यति | न च तं विना
155538 तत्साधिका चित्सिध्यतीति मुक्तिहेतोर्मरणाद्धर्ष एव स्यान्न विषाद इत्यर्थः || ५ ||
155539
155540 न च नाम शरीरस्य नाशे नश्यति चिन्नभः |
155541 देहे नष्टेऽपि बन्धूनां म्लेच्छैर्दृष्टा पिशाचता || ६ ||
155542
155543 तर्ह्यस्तु तथेत्याशया सुखं व्याददानस्याशां छिनत्ति - न चेति | प्रायेण हि
155544 पिशाचा बन्धूनेव बाधन्ते | प्रत्यन्तदेशेष्वेव बहुधा पिशाचा दृश्यन्त इति
155545 द्योतनाय बन्धुम्लेच्छग्रहणम् || ६ ||
155546
155547 यावच्छरीरसत्ता चेच्चेतनस्य तदुच्यताम् |
155548 शवः कस्मान्न चलति सत्यखण्डे शरीरके || ७ ||
155549
155550 किं च शरीरनाशाच्चिन्नाश इत्यसंगतमेव सत्येव मृतशरीरे
155551 चिन्निवृत्तिदर्शनविरोधादित्याह - यावदिति | न चलति न चेतति || ७ ||
155552
155553 पिशाचानुभवो जीवधर्मश्चेत्तत्स सर्वदा |
155554 किं न पश्यति किं बन्धौ मृते पश्यति तत्तथा || ८ ||
155555
155556 यदि कश्चिच्चार्वाको ब्रूयाज्जीवन् म्लेच्छजीवधर्म एव पिशाचदर्शनं न
155557 मृतम्लेच्छचिदवशेषप्रयुक्तः पिशाचस्तत्रास्तीति तदाशङ्कामुट्टङ्क्य परिहरति
155558 - पिशाचानुभव इति | सर्वदा बन्धुमरणं विना स पिशाचं किं न पश्यति
155559 मृते सत्येव कस्मात्पश्यतीति वक्तव्यो नियमद्वये त्वया हेतुरित्यर्थः || ८ ||
155560
155561 जीवधर्मो विशिष्टश्चेत्तादृशस्तं [तादृशत्वं इति पाठः |] नरः
155562 कथम् |
155563 मिथ्या देशान्तरमृते पिशाचत्वं न पश्यति || ९ ||
155564
155565 स जीवो बन्धुमरणज्ञानविशिष्टश्चेत्तद्धर्मः पिशाचदर्शनमिति तादृशो
155566 नियमश्चेत्तत्थापि जीवत्येव मिथ्या देशान्तरमृतेऽन्येन कल्पिते सति तत्पिशाचत्वं
155567 नरः कथं न पश्यति || ९ ||
155568
155569 तस्मात्सर्वात्मकत्वे तच्चिन्मात्रं न नियन्त्रितम् |
155570 यद्यद्यत्र यथा वेत्ति तत्तत्तत्रावगच्छति || १० ||
155571
155572 तस्माच्चितो भेदविनाशयोरयोगात्सर्वात्मकत्वे सिद्धे सति वस्तुकृतपरिच्छेदेनापि
155573 तन्न नियन्त्रितम् | तथा च यद्यद्वस्तु यत्र देशे काले वा वेत्ति स्वात्मानमेव
155574 तत्तद्वस्त्वात्मनावगच्छतीति न तद्वेद्यं पृथगस्तीत्यर्थः || १० ||
155575
155576 अबाधितैवैकघना संविद्भवति यादृशी |
155577 तादृश्येवानुभूतिर्हि तत्स्वभावोऽत्र कारणम् || ११ ||
155578
155579 एवं च सर्गादौ सत्यकामत्वादबाधिता संवित्स्वसंकल्पात्मना यादृश्येव भवति
155580 तादृश्येवेदानीं सर्वजनानामनुभूतिः || ११ ||
155581
155582 अन्यन्न संभवत्यत्र सर्गादावेव कारणम् |
155583 यन्नाम तदिदानीं स्यात्कथ्यतां कीदृशं कथम् || १२ ||
155584

155585 सत्यसंकल्पब्रह्मसंविदोऽन्यत्प्रधानपरमाण्वादिकं सर्गादौ कारणं न
155586 संभवत्येव यत्कारणं ब्रह्मातिरिक्तं स्यात्तत्कीदृशं कथं च तत्कारणं
155587 इदानीं मत्पुरतो वादिभिः कथ्यतां श्रुतियुक्तिभ्यां सद्य एव निरसिष्यामीत्यर्थः ॥
155588 १२ ॥
155589
155590 सर्गादावेव नोत्पन्ना न चैवाद्यावभासते।
155591 विकल्पश्रीर्जगद्भासा केवलं भातिचिन्नभः ॥ १३ ॥
155592
155593 तव तर्हि कीदृशः सिद्धान्तस्तमाह - सर्गादावेवेति ॥ १३ ॥
155594
155595 आभासमात्रमेवेदं दृश्यमित्यवबुध्यते।
155596 दृश्यमित्यवबोधेन तद्दृते स्यात्क्व दृश्यता ॥ १४ ॥
155597
155598 यदि केवलं चिन्नभ एव भाति तर्हि दृश्यमिति सर्वैर्जनैः किमवबुध्यते तत्राह ##-
155599 गृह्यमाणस्यास्य शुक्तिरजतमरुनदीकेशोण्ड्रकादेस्तच्चिन्नभः ऋते क्व सत्यता
155600 दृष्टेत्यर्थः ॥ १४ ॥
155601
155602 स्वचमत्कारचातुर्यं चारु चिन्नभसा रसात्।
155603 बोधेन बुध्यते दृश्यमित्यबोधान्न बुध्यते ॥ १५ ॥
155604
155605 तथा च चिन्नभसा स्वचमत्कारचातुर्यमेव दृश्यमिति रसाज्जाग्रत्स्वप्नबोधेन
155606 बुध्यते सुषुप्तौ चाबोधान्न बुध्यत इति निष्कर्ष इत्यर्थः ॥ १५ ॥
155607
155608 बोधोऽबोधश्च तद्रूपमेवमेव निरामयम्।
155609 भेदोऽत्र वाचि न त्वर्थे तस्मान्नास्त्येव दृश्यता ॥ १६ ॥
155610
155611 तर्हि तौ बोधाबोधौ कौ तत्राह - बोध इति। तस्य चिन्नभस एव रूपं न जडस्य।
155612 अतस्तदात्मना एकमेव। न हि बोधमन्तरेणाबोधस्य रूपं प्रसिध्यति। सति च बोधे
155613 तत्र नभोर्थो दुर्लभ इति राहोः शिरः शिर एव राहुरितिवद्वाङ्मात्रकृतो भेदो न
155614 त्वर्थेऽस्तीत्यर्थः ॥ १६ ॥
155615
155616 या चासीद्दृश्यतैषां तां विद्धि त्वमविचारणाम्।
155617 सा चेदानीं विचारेण विनष्टातः क्व दृश्यते ॥ १७ ॥
155618
155619 अथवा स्वतत्त्वाविचारणैव चितो दृश्यता विचारनष्टेत्याह - या चेति ॥ १७ ॥
155620
155621 अस्मिन्नेव धियो यत्न आत्मज्ञानविचारणे।
155622 यत्नेन परमोऽभ्यासः स लोकद्वयसिद्धिदः ॥ १८ ॥
155623
155624 अत व विचारो एव महान्यत्नः कार्य इति बहुशो मयोक्तमित्याह - अस्मिन्नेवेति।
155625 यत्नेन विचारस्य किं स्यात्तदाह - यत्नेनेति। लोकद्वये इह वा अमुत्र वा
155626 ज्ञानसिद्धिदः। तथा च सूत्रे आवृत्तिरसकृदुपदेशात्। ऐहिकमप्रस्तुतप्रतिबन्धेन
155627 तद्दर्शनात् इति ॥ १८ ॥
155628
155629 अविद्योपशमस्त्वेष जातोऽपि भवतामिह।
155630 अभ्यासेन विना साधो न सिद्धिमुपगच्छति ॥ १९ ॥
155631
155632 ननु नित्यापरोक्षे वस्तुनि प्रवृत्तमुपदेशवाक्यं सकृत्प्रवृत्त्यैवाविद्यां
155633 शमयित्वा वस्तु प्रकटयिष्यति किमभ्यासेन तत्राह - अविद्योपशम इति। सिद्धिं
155634 जीवन्मुक्तिप्रतिष्ठाम् ॥ १९ ॥
155635
155636 त्रोद्वेगं संपरित्यज्य गृहीत्वानुदिनं क्षणम्।

155637 लोकद्वयहितं पथ्यमिदं शास्त्रं विचार्यताम् ॥ २० ॥
155638

155639 तर्हि कं ग्रन्थमुपादाय विचारोऽभ्यसनीयः केन वा शीघ्रं प्रबोधः सिध्येत्तत्राह
155640 - त्रेति। त्रा शमादिसाधनसंपन्नपुरुषेण आलस्यारत्याद्युद्वेगं
155641 तद्धेतुयथेष्टाशनदुःसङ्गानि च परित्यज्य क्षणं गुरुशुश्रूषादिनियमं
155642 गृहीत्वा इदं महारामायणाख्यं शासनाच्छास्त्रमनुदिनं विचार्यताम् ॥ २० ॥
155643

155644 विज्ञातमप्यविज्ञातमात्मज्ञानमिदं भवेत्।
155645 भवतां भूरिभागानां संभूयाभ्यसनं विना ॥ २१ ॥
155646

155647 तत्र च बहुभिः सतीर्थ्यैः संभूयाभ्यसनं परस्परानुभवसंवादेन सद्यो
155648 ज्ञानप्रतिष्ठाहेतुरित्याह - विज्ञातमिति। अविज्ञातं विस्मरणादविज्ञातप्रायम्।
155649 भूरिभागानां बहुविधासंभावनादिशालिनाम् ॥ २१ ॥
155650

155651 योऽयमर्थं प्रार्थयते तदर्थं यतते तथा।
155652 सोऽवश्यं तमवाप्नोति न चेच्छान्तो निवर्तते ॥ २२ ॥
155653

155654 ज्ञानं दुर्लभमित्युद्वेगाच्छ्रवणं न त्याज्यमित्याह - य इति ॥ २२ ॥
155655

155656 तस्मादस्मान्निवर्तध्वमसच्छास्त्रविचारणात्।
155657 शान्तिं प्राप्स्यथ सच्छास्त्राज्जयलक्ष्मीं यथा रणात् ॥ २३ ॥
155658

155659 अनात्मशास्त्राभ्यासान्निवृत्तैरेतच्छास्त्राभ्यासः कार्य इत्याह - तस्मादिति।
155660 जयलक्ष्मीं भूजयलक्ष्मीं स्वर्गजयलक्ष्मीं वा ॥ २३ ॥
155661

155662 विवेके चाविवेके च वहत्येषा मनोनदी।
155663 यत्रैव बाह्यते यत्नात्तत्रैव स्थितिमृच्छति ॥ २४ ॥
155664

155665 यत्नाद्विरोधिस्रोतोन्तरनिरोधप्रयत्नात् ॥ २४ ॥
155666

155667 अस्माच्छास्त्रादृते श्रेयो न भूतं न भविष्यति।
155668 ततः परमबोधार्थमिदमेव विचार्यताम् ॥ २५ ॥
155669

155670 श्रेयः प्रशस्यतरं विवेकसाधनम् ॥ २५ ॥
155671

155672 स्वयमेव विचार्येदं परो बोधोऽनुभूयते।
155673 संसाराध्वश्रमहरो न त्वेतद्वरशापवत् ॥ २६ ॥
155674

155675 तच्छास्त्रं विचार्य स्थितेन स्वयं प्रत्यक्षतया आत्मतत्त्वबोधोऽनुभूयते न तु वरवत्
155676 शापवद्वा कालान्तरविलम्बेनेत्यर्थः ॥ २६ ॥
155677

155678 यन्न पित्रा न वा मात्रा न चापि सुकृतैः कृतम्।
155679 श्रेयस्तद्वः परिज्ञातमिदमाशु करिष्यति ॥ २७ ॥
155680

155681 पितृमात्राद्यपेक्षयापि शास्त्रमेतद्धितकृत्तममित्याह - यदिति। विचारेण
155682 शास्त्रं परिज्ञातं सत्। परिज्ञातं प्रत्यक्षं श्रेय इति वा ॥ २७ ॥
155683

155684 भवबन्धमयी साधो विषमेयं विषूचिका।
155685 आत्मज्ञानादृते दीर्घा न कदाचन शाम्यति ॥ २८ ॥
155686

155687 महामोहमयी माया मिथ्यैवाहमिति स्थिता।
155688 शास्त्रार्थभावनेनाशु मुच्यतां परशोच्यता ॥ २९ ॥

155689
155690 अहमिति मिथ्यैव स्थिता महामोहमयी माया तत्प्रयुक्ता परा शोच्यता च मुच्यताम् ॥ २९
155691 ।।
155692
155693 यात माऽऽपातमधुरं व्योम व्योमैकरूपिणीम् ।
155694 शून्यं वायुं लिहन्तोऽन्तर्लेलिहाना इवाहयः ॥ ३० ॥
155695
155696 आपातमधुरं व्योम शून्यं विषयजातं लिहन्तः सन्तो व्योमैकरूपिणीमनन्तां
155697 संसृतिं मा यात लेलिहानाः क्षुधिता रसशून्यं वायुं लिहन्तः अहयः सर्पा इव ॥
155698 ३० ॥
155699
155700 यान्ति वो दिवसाः कष्टमविज्ञातगमागमाः ।
155701 व्यवहारे हि तैरेव प्रतिपालयतां मृतिम् ॥ ३१ ॥
155702
155703 तावदाश्वासनैषास्ति भवतां भयभागिनाम् ।
155704 दिनानि कतिचिद्यावन्नायाति मरणावधिः ॥ ३२ ॥
155705
155706 मरणरूप आयुषोऽवधिर्यावन्नायाति तावदेव भवतां
155707 सच्छास्त्रावलम्बनयोग्यतया आश्वासना अस्ति ॥ ३२ ॥
155708
155709 आगच्छन्त्यां मृतौ कष्टं परितापमवाप्स्यथ ।
155710 तं यत्राङ्गाङ्गविच्छेदः शीतचन्दनलेपनम् ॥ ३३ ॥
155711
155712 तदुत्तरं किं भविष्यति तत्राह - आगच्छन्त्यामिति । तं तादृशं
155713 परितापमवाप्स्यथ यत्र अङ्गानामङ्गानां विच्छेदोऽपि
155714 शीतचन्दनलेपनवदवश्यं भोक्तव्य इत्यर्थः ॥ ३३ ॥
155715
155716 क्रीणन्ति प्राणपण्येन धनं मानं घनभ्रमाः ।
155717 यथाशास्त्रैः कथं बुद्ध्या न क्रीणन्त्यजरं पदम् ॥ ३४ ॥
155718
155719 घनभ्रमा मूर्खा जना युद्धादौ प्राणपण्येनापि धनं जयाभिमानं च
155720 क्रीणन्ति । यथाशास्त्रैर्विवेकवैराग्यश्रवणाद्युपायैः प्राप्तया तत्त्वबुद्ध्या अजरं
155721 मोक्षपदं कथं न क्रीणन्त्याश्चर्यमेतदित्यर्थः ॥ ३४ ॥
155722
155723 पदं परमयत्नेन क्रियते यैश्चिदम्बरे ।
155724 कथं तैः सह्यतेऽज्ञानशत्रुपादः स्वमूर्धनि ॥ ३५ ॥
155725
155726 यैर्विवेकिभिः अयत्नेन स्वतत्त्वज्ञानमात्रेण चिदम्बरे ब्रह्माकाशे पदं स्थानं
155727 क्रियते परं सर्वोत्कृष्टैस्तादृशैरज्ञानशत्रुवधसमर्थैः
155728 सच्छास्त्राद्युपेक्षया स्वमूर्धनि अज्ञानशत्रुपादः कथं सह्यते ॥ ३५ ॥
155729
155730 निर्मानमोहमापन्ना गतिं गच्छत माधमाम् ।
155731 क्रियते स्वात्मबोधेन मूलकाषो महापदाम् ॥ ३६ ॥
155732
155733 हे जनाः यूयं निर्गतौ मानमोहौ यस्मात्तथाविधं दृढविवेकमापन्नाः
155734 सन्तस्तत्त्वं बुद्ध्वा मोक्षगतिं गच्छत अधमां संसारगतिं मा गच्छत ॥ ३६ ॥
155735
155736 प्रलपन्तमहोरात्रं युष्मदर्थेन मामिमम् ।
155737 यं प्रदृश्येदमाकर्ण्य स्वात्मनैवात्मतार्प्यताम् ॥ ३७ ॥
155738
155739 बहुकालं बहुप्रकारैरस्मद्बोधने प्रवृत्तोऽयं वसिष्ठः
155740 कण्ठशोषदुःखाद्विमुच्यतामिति मयि दयया वा मद्वचनं सम्यगाकर्ण्य स्वात्मा

155741 युष्माभिर्बुध्यतामिति वात्सल्यातिशयेनाह - प्रलपन्तमिति | यं
155742 जगत्प्रसिद्धमिमं युष्मद्बोधनायोद्युक्तं युष्मदर्थेन अहोरात्रं प्रलपन्तं
155743 कण्ठशोषश्रमादिना नित्यं क्लिश्यमानं मां प्रदृश्य सम्यग्दृष्ट्वा
155744 दयया इदं मद्वचनमादरेणाकर्ण्य प्रबुद्धेनात्मनैव
155745 देहेन्द्रियादिपरिच्छिन्नात्मभावं विहाय यथाभूतब्रह्मात्मता अर्प्यतां
155746 प्राप्यतामिति प्रार्थनायांन् लोट् || ३७ ||
155747
155748 अद्यैव न चिकित्सां यः करोति मरणापदः |
155749 संप्राप्तायां मृतौ मूढः करिष्यति किमातुरः || ३८ ||
155750
155751 किमद्यैवात्मज्ञानेन अग्रे कदाचित्करिष्याम इति मन्वानान्प्रत्याह - अद्यैवेति || ३८
155752 | |
155753
155754 अस्माद्ग्रन्थादृते ग्रन्थो नान्यः स्वात्मावबोधने |
155755 नूनमर्थकरो ग्राह्यस्तिलस्तैलार्थिनामिव || ३९ ||
155756
155757 नान्यः विद्यते इति शेषः | नूनं निश्चयेन अर्थकरः अभिलषितार्थकारीति बुद्ध्या
155758 ग्राह्यः || ३९ ||
155759
155760 आत्मज्ञानमिदं शास्त्रं प्रकाशयति दीपवत् |
155761 पितेव बोधयत्याशु कान्तेव रमयत्यलम् || ४० ||
155762
155763 इतराध्यात्मग्रन्थेभ्योऽस्य कोऽतिशयस्तमाह - आत्मज्ञानमिति | आत्मरूपं
155764 ज्ञानम् || ४० ||
155765
155766 विद्यमानमपि ज्ञानं ज्ञातं शास्त्रगणान्न यत् |
155767 दुर्बोधं मधुरं तत्तु ज्ञास्यन्तीतो न संशयः || ४१ ||
155768
155769 विद्यमानं नित्यप्राप्तमपि यत् आत्मरूपं ज्ञानं शास्त्रान्तरान्न ज्ञातं तत् इतः
155770 अस्माच्छास्त्राज्ज्ञास्यन्ति || ४१ ||
155771
155772 इदमुत्तममाख्यानं मुख्यानां शास्त्रदृष्टिषु |
155773 सुखेन बोधदं हृद्यमपूर्वं न तु किंचन || ४२ ||
155774
155775 शास्त्रदृष्टिषु मुख्यानामाख्यानानां मध्ये इदमाख्यानमुत्तमम् |
155776 अस्मिन्नाख्याने अपूर्वमनादितत्त्ववित्संप्रदायप्रसिद्धव्यतिरिक्तं स्वकपोलकल्पितं
155777 किंचन न तु नास्त्येव || ४२ ||
155778
155779 नानाख्यानकथाचित्रं विनोदेन विचारयेत् |
155780 इदं शास्त्रं परं याति पुमान्नास्त्यत्र संशयः || ४३ ||
155781
155782 विनोदेन कौतूहलेनापि विचारयन्पुमान्परमात्मबोधं याति प्राप्नोति || ४३ ||
155783
155784 यो ह्यद्यापि न संप्राप्तः पण्डितैरविखण्डितैः |
155785 स इतः प्राप्यते बोधः सुवर्णमिव सैकतात् || ४४ ||
155786
155787 पण्डितैः सर्वशास्त्रज्ञैरपि यो बोधोऽद्यापि न संप्राप्तः स इतः
155788 अस्माच्छास्त्रात्प्राप्यते | यथा सुवर्णाकरे क्षालनेन विवेचितात्सैकतात्सुवर्णं
155789 प्राप्यते तद्वत् || ४४ ||
155790
155791 शास्त्रकर्तरि मङ्क्तव्यं न कदाचन कुत्रचित् |
155792 शास्त्रार्थ एव तन्नित्यं युक्तियुक्तानुभूतिदे || ४५ ||

ननु अस्माच्छास्त्रादेव ज्ञानं चेदेतच्छास्त्रकर्ता करमाच्छास्त्राज्ज्ञातवान् | यत
एव स ज्ञातवांस्तत एव वयमपि ज्ञास्यामः | यद्यज्ञात्वैवैतच्छास्त्रं
प्रणीतवांस्तर्ह्यस्माच्छास्त्राज्ज्ञानोदये का प्रत्याशेति शङ्कमानान्प्रत्याह -
शास्त्रकर्तरीति | यद्येतच्छास्त्रं युक्तियुक्तमनुभवपर्यवसितं च न स्यात्तदा
एतत्कर्तृबोधमूलकप्रामाण्यमेतच्छास्त्रमिति तत्कर्तरि बोधहेतुचिन्तया
मङ्क्तव्यं स्यात् | अस्मिंस्तु शास्त्रे स्वतो युक्तिसहस्रयुक्ते अनुभूतिदे च सति
स्वानुभवेनैव सर्वशङ्कानिवृत्तेस्तत्रैव तन्मज्जनंन् नित्यं युक्तमिति न
शास्त्रकर्तरि बोधशङ्कया कदाचिन्मङ्क्तव्यमित्यर्थः || ४५ ||

अज्ञानान्मत्सरान्मोहादविचारिभिरेकता |
अवहेलितशास्त्रार्थैः कर्तव्या नात्महन्तृभिः || ४६ ||

अत एवैतच्छास्त्रावहेलनपरैः सह मैत्री न कार्येत्याह - अज्ञानादिति | एकता मैत्री
| अध्यात्मशास्त्रावहेलने आत्मज्ञानानवाप्तिरेवात्महत्येत्याशयः || ४६ ||

जानाम्येव यथैवेमा यदहं त्वं यथा धियः |
तथा बोधितकारुण्यात्स्वभावो हि ममेदृशः || ४७ ||

त्वं तर्ह्यस्माभिरन्यैश्चाज्ञैः सह कथं मैत्रीं भजसे यतो दयया उपदेशे
प्रवृत्तोऽसि तत्राह - जानामीति | हे राम इमाः श्रोतृश्रेणयो यथा
यादृशाधिकारिविशेषणसंपन्नाः | त्वं च यथा
यादृगधिकारिविशेषणसंपन्नः | यथा च वो धियः
श्रवणधारणाभ्यासपट्व्यः | अहं च यत् यादृशं भवदाद्युपदेशाय
पितुराज्ञापनं प्राप्तस्तत्सर्वं जानाम्येव |
अतस्तथाविधभवद्भाग्योदयोद्बोधितात्कारुण्याद्युष्मदुपदेशेऽहं प्रवृत्त इति
शेषः | हि यस्मान्मम स्वभाव ईदृशः सदा दीनेषूद्बुद्धकारुण्य एवन निष्ठुर
इति युष्मद्धितैषिणो दयालोर्मम वचनमाद्रियध्वमिति भावः || ४७ ||

युष्मत्संविल्लवः शुद्ध एवं वक्तुमिह स्थितः |
अहं नरो न गन्धर्वो नामरो न च राक्षसः || ४८ ||

अथवा भवतामात्मैवाहं भवत्पुण्यवशाच्छुद्धं युष्मत्तत्त्वं
युष्मभ्यमुपदेष्टुमागतः | मम च भवन्तः परमप्रेमास्पदमात्मैवेति
युष्मन्मित्रतामिव प्राप्त इत्याह - युष्मदिति द्वाभ्याम् | संविद्रूपो लवः
शोधितः सूक्ष्मार्थो न तु नरगन्धर्वादिशरीरमित्यर्थः || ४८ ||

संविन्मात्रा भवन्तो हि तद्भावोऽस्त्यतिनिर्मलः |
स्थितोऽस्मीति भवत्पुण्यैर्ननु नास्मि न चापरः || ४९ ||

अपरो भवदात्मव्यतिरिक्तो नास्मि | नन्विति संबोधने || ४९ ||

श्यामायमाना नायान्ति यावन्मरणवासराः |
सारः संह्रियतां तावद्वैरस्यं वस्तुदृष्टिषु || ५० ||

अतः परमाप्ततमोहमिति मदुक्तः प्रथमः सारः सर्ववस्तुदृष्टिषु
वैराग्यलक्षणः संह्रियतां संगृह्यताम् || ५० ||

इहैव नरकव्याधेश्चिकित्सां न करोति यः |
गत्वा निरौषधं स्थानं सरुजः किं करिष्यति || ५१ ||

सरुजः नरकरुजाभिः पीड्यमानः || ५१ ||

155845
155846 सर्वभावेषु वैरस्यं न यावत्समुपागतम् ।
155847 भावानां भावना तावत्तानवं नोपगच्छति ॥ ५२ ॥
155848
155849 वैराग्यमेव परमः सार इति कुत इति चेत्तद्विना वासनातानवासिद्धेरित्याह - सर्वेति
155850 ॥ ५२ ॥
155851
155852 आत्मानमलमुद्धर्तुं वासनातानवादृते ।
155853 नास्त्युपायो महाबुद्धे कश्चनापि कदाचन ॥ ५३ ॥
155854
155855 वासनातानवे वा किमर्थमादरस्तत्राह - आत्मानमिति ॥ ५३ ॥
155856
155857 भावास्तु यदि विद्यन्ते तद्धिते वस्तुभावना ।
155858 किं त्वेते नैव सन्तीह शशशृङ्गादयो यथा ॥ ५४ ॥
155859
155860 ननु भावेषु सत्सु कथं तद्वासनातानवं प्रसिद्ध्येत्तत्राह - भावास्त्विति । यदि
155861 सत्यतया विद्यन्ते तर्हि तेषु भावेषु हिते स्वानुकूले वस्तुनि वस्तु ममेदमावश्यकं
155862 संपाद्यमित्यादिभावना भवेत् ॥ ५४ ॥
155863
155864 सर्व एव जगद्भावा अविचारितचारवः ।
155865 अविद्यमानसद्भावा विचाराद्विशरारवः ॥ ५५ ॥
155866
155867 प्रामाणिकविचारेषु न विद्यन्ते कृतेषु ये ।
155868 कथं सन्ति जगद्भावास्ते के सन्ति सदैव वा ॥ ५६ ॥
155869
155870 नन्वेते भावा वेदान्तिनां विचारेषु न सन्ति चेदपि कापिलकाणादादिविचारेषु सन्त्येवेति
155871 कुतोऽसत्त्वावधारणं तत्राह - प्रामाणिकेति । प्रामाणिकविचारेषु कृतेषु ये न
155872 विद्यन्ते ते के सन्ति किंस्वरूपाः । एकैकवस्तुरूपा उत सर्ववस्तुरूपाः । सदैव वा ते
155873 सन्त्युत कदाचिदेव वा । सर्वथापि प्राक् शतशः खण्डितमेवेत्यर्थः ॥ ५६ ॥
155874
155875 सर्व एव जगद्भावाः कारणाभावतो भृशम् ।
155876 सर्गादावेव नोत्पन्ना यच्चेदं भाति तत्परम् ॥ ५७ ॥
155877
155878 पदे सर्वेन्द्रियातीते मनःषष्ठेन्द्रियात्मनाम् ।
155879 भावानां कारणं नास्ति मनःषष्ठेन्द्रियात्मकम् ॥ ५८ ॥
155880
155881 कारणभावः ब्रह्मणि इन्द्रियवेद्याः प्रलयकाले संभावयितुमपि शक्या इति भावः
155882 ॥ ५८ ॥
155883
155884 भावानां विविधाख्यानामनाख्यं कारणं कुतः ।
155885 कुतो वस्तुन्यवस्तुत्वंन् व्योमन्यव्योमता कुतः ॥ ५९ ॥
155886
155887 सनामरूपकस्य जगतः अनामरूपकमपि कारणं न संभवतीति युक्त्यन्तरमप्याह
155888 - भावानामिति । एवं वस्त्ववस्तुनः कारणं शून्यमशून्यस्येति तदपि दुर्वचम्
155889 तदात्मतापत्त्ययोगादित्याह - कुत इति ॥ ५९ ॥
155890
155891 साकारस्य हि साकारं वटधानादिवद्भवेत् ।
155892 बीजंन् तद्वस्तु साकारं जायतेऽन्यत्कुतोऽन्यथा ॥ ६० ॥
155893
155894 एवं निराकारं साकारस्य कारणमित्यप्ययुक्तमित्याह - साकारस्येति । बीजं भवेत्
155895 ॥ ६० ॥
155896

155897 न किंचिदपि यत्रास्ति बीजमाकृतिमन्मनाक् ।
155898 तत आकृतिमद्विश्वं भवतीति विडम्बनम् ॥ ६१ ॥
155899
155900 विडम्बनं विडम्बनवाक्यवदर्थशून्यमिति यावत् ॥ ६१ ॥
155901
155902 कार्यकारणभावादि तस्मिन्नहि परे पदे ।
155903 वाचालत्वेन यन्नाम कल्प्यते मौर्ख्यमेव तत् ॥ ६२ ॥
155904
155905 वाचालत्वेन बहुभाषित्वेन ॥ ६२ ॥
155906
155907 सहकारिनिमित्तानामभावे हि न कारणात् ।
155908 कार्यं भवेदन्यदेति बालैरप्यनुभूयते ॥ ६३ ॥
155909
155910 तन्मात्रवेदनंन् भूयः पृथ्व्यादीनां च कारणम् ।
155911 किमस्ति कथ्यतां छाया कथमास्ते वदातपे ॥ ६४ ॥
155912
155913 जगद्वेदनत्वादपि चितो न जगत्कारणत्वं घटवेदने
155914 घटकारणत्वाभावदर्शनादित्याह - तन्मात्रेति । तत्र कुलालवेदनस्य
155915 घटकारणत्वदर्शनाद्व्यभिचारमाशङ्क्य मात्रपदम् ।
155916 चित्यचिदवस्थानायोगादपि चितो न कारणतेत्याशयेनाह - छायेति ॥ ६४ ॥
155917
155918 परमाणुसमूहा ये जगदित्यप्यवास्तवम् ।
155919 शशशृङ्गंन् धनुःप्रख्यमज्ञानादभिधीयते ॥ ६५ ॥
155920
155921 अत एव परमाणुकारणवादिनो बौद्धादयोऽप्यपास्ताः ।
155922 अतीन्द्रियसमूहस्यैन्द्रियकत्वादर्शनादित्याशयेनाह - परमाण्विति ॥ ६५ ॥
155923
155924 परमाणुसमूहश्चेत्संभूय कुरुते जगत् ।
155925 यदृच्छयैव तमसि शीर्यते च यदृच्छया ॥ ६६ ॥
155926
155927 यदि परमाणवः संभूय जगत्कुर्युस्तर्हि तेषां सदा नभसि
155928 उड्डयनपतनदर्शनात्प्रतिगृह दिने दिने गिरेरिव शृङ्गं कूपादिवत्खातो वा
155929 स्यादित्याह - परमाण्विति द्वाभ्याम् ॥ ६६ ॥
155930
155931 तदङ्गमिङ्गते नित्यं देशे देशे गृहे ग्।एहे ।
155932 अपूर्वात्म रजः शृङ्गं खातं [ख्यातं इत् पाठश्चिन्त्यः ।] वा
155933 स्याद्दिने
155934 दिने ॥ ६७ ॥
155935
155936 तस्य जगतः अङ्गमवयवभूतं रजो देशे देशे गृहे गृहे च अपूर्वं नवं
155937 नवमिङ्गते चलत्येवेति शृङ्गं खातं वा स्यादित्यर्थः ॥ ६७ ॥
155938
155939 न च तद्दृश्यते किंचित्कस्य तत्कर्म तादृशम् ।
155940 भवेद्व्यर्थमभव्यस्य जडास्तु परमाणवः ॥ ६८ ॥
155941
155942 न च परमाण्वाख्यं निरवयवं किंचिद्द्रव्यं केनचिद्दृश्यते । जालान्तरमरीचिषु
155943 सावयवानामेव रजसां दर्शनात् । तदवयवपरम्परावधिर्निरवयवोऽनुमीयत इति
155944 चेन्न । तस्य संयोगानर्हत्वेनाद्रव्यत्वापत्तेः । न हि निरवयवोऽन्येन संयोगमर्हति ।
155945 संयोगस्यैकदेशावच्छिन्नवृत्तिकत्वनियमात् । न च तदभावे द्व्यणुकादिसिद्धिरिति
155946 व्याघातः । किंचातीन्द्रियाणां खपुष्पकल्पानां परमाणूनां संयोजनेन
155947 जगद्रचनं कस्य कर्म । किमसंसारिण उत संसारिणः । तत्र
155948 संसारिणस्तावत्परमाणुभिर्जगन्निर्माणे असामर्थ्यंन् स्पष्टमेवेत्यभव्यस्य

155949 भवानर्हस्येश्वरस्य जडस्य वा तद्वाच्यम्। तत्र आद्यस्य व्यर्थं निष्प्रयोजनं
155950 जगद्रचनं भवेत्। न हि नित्यमुक्तस्येश्वरस्य प्रयोजनापेक्षा प्रयोजनं वा
155951 सर्गस्योपपादयितुं शक्यते। न च जडाः परमाणवः स्वतः सर्गे प्रवर्तितुंन्
155952 शक्नुवन्तीत्यर्थः॥ ६८॥
155953
155954 नाबुद्धिपूर्वं तत्कर्म संभवत्यङ्ग कस्यचित्।
155955 बुद्धिपूर्वं तु यद्व्यर्थं कुर्यादुन्मत्तको हि कः॥ ६९॥
155956
155957 ननु चेतनस्य बुद्धिपूर्वके रचने प्रयोजनापेक्षा अबुद्धिपूर्वके तु न सा तत्राह -
155958 नेति। हे अङ्ग तत् मनसाप्यचिन्त्यरचनात्मकं भूतभुवनं
155959 चतुर्विधभूतग्रामसंभृतं सर्गकर्म अबुद्धिपूर्वं कस्यचिन्न संभवति।
155960 बुद्धिपूर्वकं तु व्यर्थ कर्म क उन्मत्तकः कुर्यात्॥ ६९॥
155961
155962 जडस्य बुद्धि पूर्वेहा मरुतो नास्ति तां विना।
155963 न संभवत्यणुचयो नान्यत्कर्तोपपद्यते॥ ७०॥
155964
155965 एतेन वायुरेवाणुचयं करिष्यति बुद्धिपूर्वव्यापारं विनैवाणुचयो भविष्यतीत्
155966 प्रत्याशापि निरस्तेत्याह - जडस्येति। जडस्य मरुतो बुद्धिपूर्वा ईहा चेष्टा नास्ति।
155967 तां विना तु अणुचयो न संभवति। जडसर्वज्ञाभ्यामन्यज्जीवजातं तु प्रलये
155968 देहाद्यभावादसमर्थमेवेति न सर्गादौ कश्चित्कर्तोपपद्यत इत्युपसंहारः॥ ७०॥
155969
155970 वयमात्मान एवेमे खात्मानः खात्मका जनाः।
155971 तथा स्थिता यथा स्वप्ने भवतां स्वप्नमानवाः॥ ७१॥
155972
155973 ननु यदि कर्त्रभावादनुत्पन्नमेव जगत्तर्हि वयं किमात्मकाः कथं वा जगति
155974 स्थितास्तत्राह - वयमिति। इमे वयं खात्मानो देहादिमूर्तताशून्याश्चिदात्मान
155975 एव। एवं जना अपि खात्मका एव। तथापि स्वप्ने यथा भवतां स्वप्नमानवाः
155976 स्थितास्तथा अस्मत्कल्पनयैव स्थिता इत्यर्थः॥ ७१॥
155977
155978 तस्मान्न जायते किंचिद्विश्वं नापि च विद्यते।
155979 इत्थं चिन्नभ एवाच्छं प्रकचत्यात्मनात्मनि॥ ७२॥
155980
155981 इत्थं सर्वोपपत्तेर्ब्रह्माद्वैतसिद्धान्तो निष्प्रत्यूह इत्याह - तस्मादिति॥ ७२॥
155982
155983 विश्वाकाशं चिदाकाशे विष्वग्विश्रान्तिमागतम्।
155984 स्पन्दो द्रवत्वं शून्यत्वमनिलेऽम्भसि खे यथा॥ ७३॥
155985
155986 अनिलादौ स्पन्दादि यथा अभिन्नमेव विष्वग्विश्रान्तिमागतं तथा चिदाकाशे
155987 विश्वाकाशमपीत्यर्थः॥ ७३॥
155988
155989 देशाद्देशान्तरप्राप्तौ निमेषेणातिदूरतः।
155990 संविदो यद्वपुर्मध्ये चिद्व्योम्नो विद्धि तद्वपुः॥ ७४॥
155991
155992 जगच्छून्यस्य चिद्व्योम्नो यद्रूपं तत्प्राग्बहुशो दृष्टान्तेनानुभावितं स्मारयति
155993 - देशादिति॥ ७४॥
155994
155995 स स्वभावो हि सर्वेषामर्थानां ते च तन्मयाः।
155996 तादृशास्तन्नभोरूपास्तेन विश्वमतो नभः॥ ७५॥
155997
155998 सर्वेषां पदार्थानां संविदाकाश एव परमार्थस्वभावः। अतो हेतोर्विश्वं तेन
155999 तद्भावेनैव नभो न शून्यभावेनेत्यर्थः॥ ७५॥
156000

156001 स्वभावस्य परा वृत्तिर्मनागेवाशु तस्य सा |
156002 स्वभावादविभिन्नैव सेदं जगदिति स्थिता || ७६ ||
156003
156004 तस्य चिदाकाशस्य स्वभावादविभिन्नैव या विवर्तभावेन स्वभावस्य परा वृत्तिः
156005 सैवेदं जगदिति आपातदर्शिनां स्थिता || ७६ ||
156006
156007 जगच्चिन्नभसोस्तस्मान्न कदाचन भिन्नता |
156008 एकमेव द्वयो रूपं पवनस्पन्दयोरिव || ७७ ||
156009
156010 देशाद्देशान्तरप्राप्तौ विदो मध्ये हि यद्वपुः |
156011 शान्ताशेषविशेषात्म तन्मुख्यंन् नेतरद्विदुः || ७८ ||
156012
156013 तन्मुख्यं अनुभवस्य संपन्नं निदर्शनं नेतरदित्यर्थः || ७८ ||
156014
156015 स स्वभावोऽङ्ग भूतानां तत्र तिष्ठन्ति पण्डिताः |
156016 तस्मान्न विचलन्त्येते नित्यध्यानाद्धरादयः || ७९ ||
156017
156018 आभासाकाशमेवेदं भामात्रमवभासनम् |
156019 विश्वमाकाररहितं स्वभावं विदुरव्ययम् || ८० ||
156020
156021 इदं विश्वं आभासाकाशमेव | तदवभासनंन् च भामात्रम् || ८० ||
156022
156023 न जायते न म्रियते न भूत्वा भावि कुत्रचित् |
156024 अनन्यदेव चिद्व्योम्नः शून्यत्वमिव खाज्जगत् || ८१ ||
156025
156026 न विश्वमस्ति नैवासीन्न च नाम भविष्यति |
156027 इदमाभासते शान्तं चिद्व्योम परमात्मनि || ८२ ||
156028
156029 चिन्मात्रमेव कचति स्वप्ने पुरतया यथा |
156030 तथैव जाग्रदाख्येऽस्मिन्स स्वप्ने कचति स्वयम् || ८३ ||
156031
156032 सर्गादावेव भावानामसत्तेत्यस्ति देहकः |
156033 कुतस्तस्माच्छरीरत्वं स्वप्न एव नभश्चितेः || ८४ ||
156034
156035 सर्गादौ पृथिव्यादिभावानामेवासत्तेति हेतोरयं पार्थिवादिदेहकः कुतः अस्ति |
156036 तस्मादिदं भासमानं शरीरत्वं नभोरूपस्य चितेः स्वप्न एव || ८४ ||
156037
156038 स्वयंभ्वाख्यं शरीरं स्वं पूर्वः स्वप्नो महाचितेः |
156039 इत उत्थानास्तदनु स्वप्नात्स्वप्नान्तरं वयम् || ८५ ||
156040
156041 पूर्वः प्राथमिकः | इतः स्वयंभूशरीरादुत्थानं येषां ते वयंन् तदनु
156042 स्वप्नात्स्वप्नान्तरमिवेत्यर्थः || ८५ ||
156043
156044 गण्डस्योपरि जातानां स्फोटानामत एव नः |
156045 परमेण प्रयत्नेन न मनो नाम यास्यति || ८६ ||
156046
156047 अत एव नो मनः परमेणापि प्रयत्नेन प्रवर्तमानं ब्रह्मणि झटिति न यास्यति |
156048 गलगण्डोत्थितस्य स्फोटस्य गलेनेव व्यवहितसंबन्धभ्रान्तिदार्ढ्यादित्याह -
156049 गण्डस्येति || ८६ ||
156050
156051 ब्रह्मैवासत्यपुरुषः सत्यवच्चानुभूयते |
156052 स्थितं ततःप्रभृत्येव न त्वलीकमिदं ततम् || ८७ ||

156053
156054 यथा गलमेव गण्डात्मना स्थित्वा तद्गतस्फोटात्मनापि स्थितमपृथग्भूतमपि
156055 पृथक्सत्यमिवानुभूयते तथा ब्रह्मैव हिरण्यगर्भव्यष्टिजीवलक्षणाऽसत्यपुरुषो
156056 भूत्वा तद्भावेनैव सत्यवच्चानुभूयत इत्यर्थः। यदाप्रभृति ब्रह्म जीवभूतं
156057 ततःप्रभृत्येव अलीकमिदं जगत्ततं स्थितम्॥ ८७॥
156058
156059 आब्रह्मस्तम्बपर्यन्तमलीकं जायते जगत्।
156060 यथा स्वप्ने तथालीकमेवमाशु विनश्यति॥ ८८॥
156061
156062 अलीकमनृतम्। एवं स्वप्नवदेव आशु विनश्यति तदप्यलीकमेव॥ ८८॥
156063
156064 चिद्व्योमैवैत्य विश्वत्वं यथा स्वप्ने विनश्यति।
156065 अनुदित्वैव विश्वत्वं जाग्रदाख्ये तथैव च॥ ८९॥
156066
156067 अनुदित्वा उदयंन् जन्म अप्राप्यैव॥ ८९॥
156068
156069 अनुभूतमलीकं चाप्यलीकं सत्यवत्स्थितम्।
156070 संविदेव यथा स्वप्ने नगरादितयोदिता॥ ९०॥
156071
156072 यद्यलीकमेव तर्हि कथमनुभूतं कथं वा सत्यवत्स्थितम्।
156073 शशशृङ्गादावुभयादर्शनात्तत्राह - अनुभूतमिति।
156074 अलीकमप्यनुभूतमलीकमपि सत्यवत्स्थितम्। यतस्तदस्मन्मते संविदेव न
156075 शून्यमित्यर्थः॥ ९०॥
156076
156077 साकारेव निराकारा स्थिता तद्वज्जगत्तया।
156078 संविदाकाशमाकाशादणु मेरोरणुर्यथा॥ ९१॥
156079
156080 आकाशादप्यणु। तत्र दृष्टान्तः - मेरोः अणुः परमाणुर्यथा अणुस्तद्वत्॥ ९१॥
156081
156082 किलयत्तस्य नाम स्यादाकाशादणुता कुतः।
156083 कारणाभावतोऽन्यस्य नाकार उपपद्यते॥ ९२॥
156084
156085 तर्हि किमाकाशादप्यणुता तस्य धर्मो नेत्याह - किलेति। आकाशादणुताख्यो
156086 धर्मः कुतः क्व वा प्रसिद्धो यत्किल तस्य ब्रह्मणो धर्मो नाम स्यात्। अणुतोक्तेस्तर्हि
156087 कोऽभिप्रायस्तमाह - कारणेति। अन्यस्य जगतः स्थूल आकारो नोपपद्यते
156088 तादृशकारणाभावादिति वक्तुं तस्य तथात्वोक्तिरित्यर्थः॥ ९२॥
156089
156090 सर्गादावेव योऽजातो जातोऽयं जगतः कुतः।
156091 यदेव वेदनाकाशे पुरं स्वप्ने तदेव नः॥ ९३॥
156092
156093 नन्विदानीमिष्टकादेः पुरादिजन्मदर्शनाज्जगत एव जगज्जायतां न ब्रह्मणस्तत्राह
156094 - सर्गादावेवेति। यः पुरादिः सर्गादावेव अजातः स जगतः कुतो जातः। किं च
156095 स्वप्ने विनैवेष्टकादिभ्यः पुरादयो दृश्यन्ते। जाग्रद्वेदनाकाशे यदेव पुरं
156096 तदेव नः सिद्धान्ते स्वप्नेऽपि पुरं तत्र च व्यभिचारः स्फुट इत्यर्थः॥ ९३॥
156097
156098 भेदः स्वप्नाद्रिचिद्व्योम्नोर्न शून्याम्बरयोरिव।
156099 यदेव चिन्नभो नाम तदेव स्वप्नपत्तनम्॥ ९४॥
156100
156101 एवं स्वप्नजाग्रदर्थयोर्भेदाभावे स्वाप्नार्थानां
156102 चिद्व्योमभेदाभावाज्जाग्रदर्थानामपि तदभेदः सिद्ध इत्याशयेनाह - भेद इति
156103 ॥ ९४॥
156104

156105 यदेव स्पन्दनं नाम स एव पवनो यथा ।
156106 स्पन्दास्पन्दैकरूपात्मा वायुर्व्योमोपमो यथा ॥ ९५ ॥
156107
156108 उक्ते अभेदे स्पन्दनपवनौ वाय्वाकाशौ च दृष्टान्तावित्याह - यदेवेति ।
156109 व्योमोपमो व्योमाभिन्नः ॥ ९५ ॥
156110
156111 तस्माच्चिन्नभ एवेदं जगदाकृति लक्ष्यते ।
156112 सर्वं शून्यं निरालम्बं भासनं चिद्विवस्वतः ॥ ९६ ॥
156113
156114 शान्तमेवेदमखिलं निरस्तास्तमयोदयम् ।
156115 सकृद्विभातममलं दृषन्मौनमनामयम् ॥ ९७ ॥
156116
156117 सकृद्विभातमखण्डस्फुरणरूपम् ॥ ९७ ॥
156118
156119 तस्माद्वद कथं भावाः कुतो भावाः क्व भावधीः ।
156120 क्व द्वैतं क्वैकता क्वाहं क्व भावाः क्व च भावनाः ॥ ९८ ॥
156121
156122 एवं च चितो निष्प्रपञ्चता सिद्धेत्याह - तस्मादिति ॥ ९८ ॥
156123
156124 नित्योदितो व्यवहरन्नपि निर्विकारो द्वित्वैक्यमुक्तमतिरुत्तमशीतलोऽन्तः ।
156125 निर्वाण आस्व विगतामयशुद्धबोधबोधैकतामुपगतोऽङ्ग न सन्ति भावाः ॥
156126 ९९ ॥
156127
156128 हे अङ्ग त्वं विगतामयशुद्धबोधरूपस्य तत्त्वस्य बोधेन तदेकतामुपगतः सन्
156129 नित्योदितो व्यवहरन्नपि तदभिनिवेशाभावान्निर्विकारो द्वित्वैक्याभ्यां
156130 परस्परविरुद्धाभ्यांन् मुक्ता मतिर्यस्य तथाविधः सन् अन्तः उत्तमशीतलो भूत्वा
156131 निर्वाणो निरतिशयानन्दनिर्वृत आस्व । यतस्ते विक्षेपहेतवो भावा न सन्तीत्यर्थः ॥ ९९
156132 । ।
156133
156134 इत्यार्षे श्रीवा० वाल्मी० दे० मो० निर्वा० उ० सकलभावाभावोपदेशेन
156135 परमार्थैकताप्रतिपादनं नाम त्र्यधिकशततमः सर्गः ॥ १०३ ॥
156136
156137 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
156138 परमार्थैकताप्रतिपादनं नाम त्र्यधिकशततमः सर्गः ॥ १०३ ॥
156139
156140 चतुरधिकशततमः सर्गः १०४
156141
156142 श्रीवसिष्ठ उवाच ।
156143
156144 आकाशः शब्दतन्मात्रं स्पर्शतन्मात्रकोऽनिलः ।
156145 तत्सङ्घोत्कर्षजं तेजस्तच्छान्तिश्चेत्यपां स्थितिः ॥ १ ॥
156146
156147 आकाशादेर्हि वाय्वादिभावोऽनुभवतो यथा ।
156148 चित एव जगद्भावोऽनुभवादेव साध्यते ॥
156149
156150 चिन्मात्रमेव जगदाकारेण स्वप्नवद्भातीति यदुक्तं तदेवानुभवालम्बने
156151 प्रमाणतः पदार्थतत्त्वं जिज्ञासमानैः
156152 सर्वैराकाशादिक्रमसृष्टिकल्पनापरम्पराभिः सुदूरमपि गत्वा अन्ततः
156153 शरणीकरणीयमिति वर्णयिष्यन्नाकाशादीनां तैर्थिकप्रसिद्धां स्वरूपस्थितिमाह
156154 - आकाश इत्यादिना । तयोर्यः सङ्घोत्कर्षः संघर्षातिशयस्तस्माज्जातं
156155 रूपतन्मात्रं तेजस्तस्य तेजसः शान्तिः औष्ण्यरौक्ष्यप्रशमनेन
156156 शैत्यद्रवत्वावलम्बनलक्षणं रसतन्मात्रमित्यपां स्वभावस्थितिरित्यर्थः ॥ १ ॥

156157
156158 भूरेषां सङ्घः स्वप्नाभे जगद्भाने क्रमस्त्विति |
156159 कथं नाम किलामूर्ताद्व्योम्नो मूर्तिः प्रवर्तते || २ ||
156160
156161 भूस्तु एषां संहन्तीति संघो मेलने घनीभावहेतुर्गन्धतन्मात्रमिति चित एव
156162 स्वप्नाभे जगद्भाने इयं क्रमस्थितिः | तत्रेदं पृच्छामः - अमूर्ताद्व्योम्नः
156163 पृथिव्यन्ता मूर्तिः कथं प्रवर्तत इति | यदि कश्चिद्ब्रूयाद्वायुरेव
156164 प्रथममाकाशात्क्रियास्पर्शप्रधान उत्पद्यते स च
156165 रूपाभावात्किंचिदाकाशवत्स्पर्शक्रियाशालित्वात्किंचिन्मूर्तवदपीति
156166 रूपतन्मात्रप्रधानं मूर्तं तेजो जनयिष्यतीति | तन्न | निरवयवकूटस्थेनाकाशेन
156167 वायोरेवासिद्धेः | न ह्यव्याप्रियमाणं निरवयवं च किंचिदारब्धुं विकर्तुं वा
156168 शक्नोति | किं च यदि कृत्स्नं विक्रियेत तर्ह्याकाशाभावान्निरवकाशा वाय्वादयः
156169 स्युः | यद्यर्धं ततोऽल्पं वा तर्ह्याकाशस्यापि सावयवत्वप्रसङ्गः | अस्तु
156170 सावयवमपीति चेत्तदेव स्पर्शवत्क्रियावच्च स्यादिति वाय्वादिजननवैयर्थ्यं
156171 निरवकाशता च तस्य तदवयवानां च स्यात् | एवं वायोरपि
156172 नीरूपाद्रूपतन्मात्रोत्पत्तिरारम्भेण परिणामेन वा दुर्निरूपैव | कारणगुणा हि
156173 कार्यगुणानारभन्ते | न च रूपं वायावस्ति | परिपाकेन हि परिणामः स्यान्न च विना
156174 तेजः परिपाकोऽस्ति | एव मुत्तरभूतयोरप्यूह्यमिति || २ ||
156175
156176 गत्वा सुदूरमप्येतज्ज्ञप्तेश्चेत्परिकल्प्यते |
156177 तदादावेव सत्यर्थे दोषोऽस्मिन्क इवामले || ३ ||
156178
156179 नन्वनुभवबलादेव कूटस्थादप्याकाशाच्चलनात्मकं वायुं नीरूपाच्च वायो
156180 रूपवत्तेजो नीरसाच्च तस्माद्रसात्मकं वारि अगन्धाच्च तस्माद्गन्धवतीं
156181 पृथ्वीमुत्पन्नां कल्पयिष्यामः | अनुभवात्मिका ज्ञप्तिरेव भगवती नः सर्व
156182 विरोधमुत्सार्य यथानुभवमर्थान्समर्थयिष्यतीति चेत्तत्राह - गत्वेति | यदि
156183 सुदूरमपि गत्वा ज्ञप्तिरेव शरणीक्रियते तर्हि सैव स्वप्नादाविव विवर्तमात्रेण सर्व
156184 जगद्वेषं निर्वहिष्यतीति आदौ ब्रह्मण्येव सर्वार्थस्वरूपे सति अमले सर्वदोषनिर्मुक्ते
156185 सिद्धान्ते को दोष इत्यर्थः || ३ ||
156186
156187 ज्ञप्तिरेवातिविमला स्वरूपात्मनि भाति यत् |
156188 तदेव जगदित्युक्तं सत्यमित्येव सत्यतः || ४ ||
156189
156190 कोऽसौ सिद्धान्तस्तमाह - ज्ञप्तिरेवेति | तदेव जगदिति सत्यतः
156191 परमार्थसत्याधिष्ठानबलात् सर्व खल्विदं ब्रह्मेत्यादि यथार्थवादिश्रुतिबलाच्च
156192 सत्यमित्येव सिद्धान्तरहस्यमुक्तमित्यर्थः || ४ ||
156193
156194 न क्वचित्सन्ति भूतानि पञ्च कुट्यादयो न वा |
156195 असन्त्यप्यनुभूतानि ननु स्वप्नदशास्विव || ५ ||
156196
156197 भूतभौतिकशून्यैव चिद्यतः स्वप्ने भूतभौतिकवत्सर्वानुभवसिद्धेत्याह -
156198 न क्वचिदिति || ५ ||
156199
156200 स्वभाव एव विमलो यथा स्वप्ने पुरादिवत् |
156201 कचत्येवं जाग्रतीदं जगद्वद्वस्तुतस्तु [वस्तु तत्सुखम् इति
156202 मुद्रितपाठश्चिन्त्यः ||] खम् || ६ ||
156203
156204 तद्वज्जाग्रत्यपि चित्स्वभाव एव जगद्वत्कचतीत्याह - स्वभाव इति || ६ ||
156205
156206 चेतनाकाश एवाहं तदेवेदं जगत्स्थितम् |
156207 इत्यहं जगदित्येकं खमेवैकं शिलाघनम् || ७ ||
156208

वस्तुतस्तु खम् इत्येतद्विशदयति - चेतनाकाश इति ॥ ७ ॥

यदादिसर्गजननं यत्कल्पान्तविवर्तनम् ।
यद्वा भुवनसंस्थानं तद्धि व्योम निराकृति ॥ ८ ॥

अस्त्वयं सर्ग एवमादिसर्गो ब्रह्माण्डान्तरादिसर्गः कल्पान्तविवर्तनं वा अन्यथापि
स्यादिति शङ्कां निरस्यति - यदिति ॥ ८ ॥

सति वाऽसति वा देहे निर्दुःखसुखत्वमक्षयं मोक्षः ।
बुद्धेऽमले स्वभावे निर्भरविश्रान्तिरस्तु सर्वेह ॥ ९ ॥

एवं सति जीवन्मुक्तिविदेहमुक्त्योर्न कश्चिद्विशेष इत्याह - सतीति । अमले स्वभावे
बुद्धे सति यन्निर्दुःखसुखत्वं भूमानन्दरूपत्वमक्षयं स एव मोक्षः स च
देहे सति वा असति वा समान एवेति तत्र सर्वा पूर्णा निर्भरविश्रान्तिस्तेऽस्तु तावतैव त्वं
कृतार्थ इत्यर्थः ॥ ९ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मी॰ दे॰ मो॰ निर्वाणप्रकरणे उ॰
जगदसत्ताप्रतिपादनं नाम चतुरधिकशततमः सर्गः ॥ १०४ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
जगदसत्ताप्रतिपादनं नाम चतुरुत्तरशततमः सर्गः ॥ १०४ ॥

पञ्चाधिकशततमः सर्गः १०५

श्रीवसिष्ठ उवाच ।

स्वभावं जगदाकारं चिद्भावोऽनुभवन्स्थितः ।
स्वतः स्वप्नमिवानन्यमात्मनः कल्पनाभिधम् ॥ १ ॥

चिदेवाभाति जाग्रद्वच्चिदेव स्वप्नवत्तथा ।
न जाग्रत्स्वप्नयोर्भेदः स्वभावेनेति वर्ण्यते ॥

उक्तं स्वप्नसाम्यं जगतः प्रपञ्चयितुं पीठिकां रचयति - स्वभावमिति ।
चिद्भावश्चित्स्वभाव आत्मा ॥ १ ॥

जाग्रत्सुषुप्तमेवेदं शिलाजठरमेववा ।
आकाशमेव वा शून्यं जगत्त्वेन च नोज्झितम् ॥ २ ॥

इदं जाग्रज्जगत्त्वेन नोज्झितमेव सत् सुषुप्तमज्ञानमेव मूलतः
शिलाजठरमेवाधिष्ठानतः शून्यं खमेव स्वत इत्यर्थः ॥ २ ॥

स्वप्न एवात्र दृष्टान्तः पुरमण्डलमण्डितः ।
स्वप्ने जगन्न किंचित्सदित्थमाभाति भासुरम् ॥ ३ ॥

स्वप्नोऽप्येतादृश एवेति स एवात्र दृष्टान्त इत्याह - स्वप्न इति ॥ ३ ॥

त्रैलोक्यमसदेवेदं यथा स्वप्नेऽवभासते ।
जाग्रत्यस्मिंस्तथैवेदं मनागप्यत्र नान्यथा ॥ ४ ॥

तत्र तृतीयकल्पे स्वप्नसाम्यं स्फुटमित्याह - त्रैलोक्यमिति ॥ ४ ॥

न जाग्रति न च स्वप्ने जगच्छब्दार्थसंभवः ।

156261 स्वं वस्तुतस्तु चिद्व्योम्नो भानं बुद्धं जगत्तया ॥ ५ ॥
156262
156263 द्वितीयकल्पेऽपि तत्साम्यं विवेकिनां सुगममित्याशयेनाह - नेति ॥ ५ ॥
156264
156265 चिद्व्योम्ना स्वचमत्कारो व्योमन्यद्व्यादिरूपभृत् ।
156266 जगदित्येव बुद्धोऽन्तर्जाग्रत्स्वप्ने स्वयंभुवा ॥ ६ ॥
156267
156268 प्रथमकल्पेऽपि तं दर्शयति - चिद्व्योम्नेति । स्वयमेव भवति अस्तीति स्वयंभुवा
156269 चिद्व्योम्ना तमोवृतात्मरूपे व्योमनि अद्व्यादिरूपभृत्स्वचमत्कारस्तम एव
156270 जाग्रत्स्वप्ने जगदित्यन्तर्बुद्धः ॥ ६ ॥
156271
156272 जगन्न किंचिदेवेदं चिद्रूपं च न किंचन ।
156273 एते किंचिदिवाभातो नभश्चिज्जगती मुधा ॥ ७ ॥
156274
156275 पुनस्तृतीयकल्पमेव समर्थयति - जगदिति । भास्यजगतः शून्यत्वे
156276 चितस्तद्भासकं रूपं च न किंचन । नभः अत्यन्तासती एते चिज्जगती ग्राह्यग्राहकरूपे
156277 ब्रह्मणि मुधा भातः ॥ ७ ॥
156278
156279 आभातमेव त्रैलोक्यं यथा स्वप्ने न किंचन ।
156280 शून्यमेव भवेदेवमेवं जाग्रति निर्वपुः ॥ ८ ॥
156281
156282 तत्र दृष्टान्तं योजयति - आभातमेवेति । एवं जाग्रत्यपि आभातं त्रैलोक्यमेवं
156283 निर्वपुः शून्यमेव ॥ ८ ॥
156284
156285 स्वप्ने किल महाबुद्धे नानानिर्माणशालिनि ।
156286 आरम्भा एव नारम्भा असत्सदिव चाततम् ॥ ९ ॥
156287
156288 अव्योमैवातिविततं व्योमान्तपरिवर्जितम् ।
156289 व्योमैवाचलसंघातो नानापुरगणोत्करः ॥ १० ॥
156290
156291 अव्योम ब्रह्मैव अतिविततं शून्यात्मकं व्योम प्रथमं संपन्नम् । व्योमैव च
156292 वाय्वादिक्रमेणाचलसंघातो नानापुरगणोत्करश्च
156293 संपन्नमित्युभयमप्याश्चर्यमित्यर्थः । अथवा अव्योम गिरिमहीपुरादि व्योम
156294 भवति एवं व्योमैवाचलसंघातादि भवतीति यथाश्रुतं प्रतिज्ञापरम् ॥ १० ॥
156295
156296 अप्यब्दाब्ध्यद्रिनिर्घोषो मौनमेव यथा तथा ।
156297 न शृणोत्येव पार्श्वस्थः संप्रबुध्यापि किंचन ॥ ११ ॥
156298
156299 तत्राद्यं दृष्टान्तेन साधयति - अपीति । अब्दाश्च अब्धयश्च अद्रयश्च तेषां
156300 निर्घोषश्च स्वप्ने एकं सुप्तं प्रति प्रसिद्धोऽप्यपरं प्रति मौनं शून्यमेव यथा
156301 तथा जाग्रदब्दादयोऽपीत्यर्थः । दृष्टान्ते मौनमेवेत्येतत्कुतस्तत्राह - न
156302 शृणोत्येवेति । यतः पार्श्वस्थः अपरः सुप्तनरः संप्रबुध्यापि किंचन
156303 अब्दाब्ध्यादि तद्घोषं वा न शृणोत्येव ॥ ११ ॥
156304
156305 प्रजायते वाऽजातोऽपि वन्ध्यायास्तनयो यथा ।
156306 जातोऽप्यजात एवास्ते यथात्ममृतिविस्मृतौ ॥ १२ ॥
156307
156308 द्वितीयमपि तथा साधयति - प्रजायत इति । अजातोऽपि वन्ध्यायास्तनयः स्वप्ने
156309 प्रजायते तथात्रापि बोध्यमित्यर्थः । एवं मृत्वा जातोऽपि पुरुष आत्मनः स्वस्य
156310 मृतेर्विस्मृतौ सत्यामजातोऽनुत्पन्न एवाहमित्यास्ते यथा तथेत्यर्थः ॥ १२ ॥
156311
156312 सदसद्भवति क्षिप्रं भुवोऽननुभवो यथा ।

156313 विपर्यस्यति सर्वं च रात्रिरेव यथा दिनम् ॥ १३ ॥
156314
156315 सुप्तस्य स्वप्ने स्वशयनभुवोऽननुभवो यथा तदसत्त्वमापादयति तथेत्यर्थः ॥ १३ ॥
156316
156317 असद्यत्संभवत्याशु दिनमेव यथा निशा।
156318 असंभवः संभवति यथा स्वमृतिदर्शनम् ॥ १४ ॥
156319
156320 एवमन्येऽपि विपर्यासाः प्रसाध्या इत्याह - असदित्यादिना ॥ १४ ॥
156321
156322 असम्भवः संभवति जगद्भानमिवाम्बरे।
156323 तम एव महालोको यः सनिद्रः सवासरः ॥ १५ ॥
156324
156325 आलोक एवति तमो यन्निद्रा स्वप्नवासरा।
156326 वसुधैव भवेद्व्योम श्वभ्रादिपतने यथा ॥ १६ ॥
156327
156328 यद्यस्माद्धेतोः स्वप्नहेतुर्वासरो यस्यां तथाविधा उलूकादीनां निद्रा दृश्यते।
156329 स्वप्ने श्वभ्रादिपतनेऽनुभूयमाने शयनवसुधैव श्वभ्रव्योम भवेत् ॥१६ ॥
156330
156331 असत्यरूपमेवेति भाति स्वप्ने जगद्यथा।
156332 तथैव जाग्रदाभाति मनागप्यत्र नान्यता ॥ १७ ॥
156333
156334 यथा द्वौ सदृशौ सूर्यौ यथा द्वौ सदृशौ नरौ।
156335 जाग्रत्स्वप्नौ तथैवैतौ मनागप्यत्र नान्यता ॥ १८ ॥
156336
156337 द्वौ सूर्यौ पूर्वेद्युस्तनाद्यतनौ। अत्र अनयोः ॥ १८ ॥
156338
156339 श्रीराम उवाच।
156340
156341 नैतदेवमपि क्षिप्रात्प्रत्ययो यत्र बाधकः।
156342 स्वप्ने तद्दर्शनेनान्तः कथं जाग्रत्समं भवेत् ॥ १९ ॥
156343
156344 वर्णितं जाग्रत्स्वप्नयोः साम्यमाक्षिप्य वैषम्यं दर्शयन् रामः शङ्कते -
156345 नैतदिति। मनागप्यत्र नान्यतेति यत्त्वयोक्तमेतन्न। कुतः। यत्र यस्मिन्स्वप्ने
156346 क्षिप्राज्जायमानो बाधको यो जाग्रत्प्रत्ययस्तद्दर्शनेनान्तः स्वयमेव
156347 तस्याभासतानुभवात्। अतः कथं जाग्रत्तत्समं भवेदित्यर्थः ॥ १९ ॥
156348
156349 श्रीवसिष्ठ उवाच।
156350
156351 विहृत्य स्वप्नजगति स्वप्नबन्धुजनैः समम्।
156352 मृतिमाप्नोति तत्रासौ द्रष्टा स्वप्नस्य राघव ॥ २० ॥
156353
156354 नैतावता वैषम्यसिद्धिः भिन्नदेशस्य जाग्रत्प्रत्ययस्य
156355 स्वाप्नप्रत्ययबाधकत्वासिद्धेः। स्वप्नदेशे हि सनिद्रः स्वप्नदेहस्थो द्रष्टा
156356 स्वाप्नबन्ध्वादीन्पश्यति। अपगतस्वप्नदेहो विनिद्रो जाग्रद्देहस्थश्च
156357 स्वप्नदृष्टबन्ध्वाद्यसत्त्वं पश्यति। न च देशान्तरे देहान्तरदृष्टानां
156358 देहान्तरे देशान्तरे चान्यदर्शने तददर्शनं तद्बाधः।
156359 पूर्वजन्मबन्ध्वादीनामिह जन्मन्यदर्शनस्यापि तद्बाधत्वापत्तेरिति
156360 साम्यानपायादित्याशयेन वसिष्ठः समाधत्ते - विहृत्येत्यादिसप्तभिः।
156361 मृतिं स्वप्नदेहापगमम् ॥ २० ॥
156362
156363 मृतः सन्स्वप्नजगति स्वप्नजन्तुवियोगवान्।
156364 इह प्रबुध्यते जन्तुर्निद्रामुक्तश्च कथ्यते ॥ २१ ॥

156365
156366 जन्तुर्जीवः ॥ २१ ॥
156367
156368 सुखदुःखदशामोहान्दिनरात्रिविपर्ययान् ।
156369 अनुभूय बहून्द्रष्टा म्रियते स्वप्नसंसृतौ ॥ २२ ॥
156370
156371 म्रियते स्वाप्नदेहं जहाति ॥ २२ ॥
156372
156373 गतनिद्रतया पश्चान्निद्रान्त इह जायते ।
156374 न सत्यमेतदित्येवं ततः प्रत्ययवान्भवेत् ॥ २३ ॥
156375
156376 इहास्मिन्शयनदेशे जायते अनेन देहेन संबध्यते ।
156377 ततस्तदनन्तरमेतत्स्वप्नदृष्टबन्ध्वादि न सत्यमित्येवं प्रत्ययवान्भवेत् । स च
156378 प्रत्ययो न स्वाप्नार्थबाधनसमर्थ इति द्योतनाय संभावनायां लिङ् ॥ २३ ॥
156379
156380 स्वप्नद्रष्टा यथा स्वप्नसंसारे मृतिमाप्तवान् ।
156381 अन्यं जाग्रन्मयं स्वप्नं द्रष्टुं भूयः प्रजायते ॥ २४ ॥
156382
156383 जाग्रद्द्रष्टा तथा जाग्रत्संसारे मृतिमाप्तवान् ।
156384 अन्यं जाग्रन्मयं स्वप्नं द्रष्टुं भूयः स जायते ॥ २५ ॥
156385
156386 न स्वप्नमसदित्येवं पूर्वस्मिञ्जाग्रदात्मनि ।
156387 पुनः प्रत्ययमादत्ते स्वप्नात्स्वप्नान्तरं गतः ॥ २६ ॥
156388
156389 जाग्रति मृत्वा जाग्रदन्तरे जातः सन् । पूर्वस्मिन् जाग्रदात्मनि प्रपञ्चेन
156390 स्वप्नमसदित्येवं पुनः प्रत्ययंन् यथा आदत्ते तथा स्वप्नात्स्वप्नान्तरं गत
156391 उत्तरस्वप्ने जाग्रत्प्रत्ययं पुनर्गृह्णाति । तत उत्तरस्वप्ने जाग्रत्प्रत्ययो यथा
156392 मुग्धताप्रयुक्तस्तद्वत्पूर्वजाग्रति स्वप्नत्वासत्त्वयोरग्रहणमपि
156393 मुग्धताप्रयुक्तमेवेति भावः ॥ २६ ॥
156394
156395 स जाग्रत्प्रत्ययं तत्र पुनर्गृह्णाति मुग्धधीः ।
156396 स्वप्नसंदर्शनं त्वन्यत्तत्राप्यनुभवत्यथ ॥ २७ ॥
156397
156398 स्वप्नं जाग्रत्तया जाग्रत्स्वप्नत्वं चेति नामनि ।
156399 न जायते न म्रियते जायते म्रियतेऽपि च ॥ २८ ॥
156400
156401 अथ तत्रापि स्वप्ने स्वप्नसंदर्शनानन्तरमनुभवत्स्वप्नमेव जाग्रत्तया
156402 अनुभवतीति पूर्वेणान्वयः । एवंरीत्या जाग्रत्स्वप्नत्वं चेत्येवं नामनि
156403 अवस्थाद्वयेऽयं जीवः स्वतो न जायते न म्रियते ।
156404 तत्तद्देहाभिमानोपादानत्यागाभ्यां तु जायते म्रियतेऽपि च ॥ २८ ॥
156405
156406 स्वप्नद्रष्टा स्वप्नमृतः प्रबुद्ध इह कथ्यते ।
156407 इह जाग्रन्मृतो जन्तुः प्रबुद्धोऽन्यत्र कथ्यते ॥ २९ ॥
156408
156409 तथा च स्वप्नद्रष्टा स्वप्ने मृतः सन् इह जागरे प्रबुद्धः कथ्यते इह जाग्रति
156410 मृतस्तु अन्यत्र स्वप्ने प्रबुद्धः कथ्यत इति तयोः साम्यमेवेत्यर्थः ॥ २९ ॥
156411
156412 स्वप्नात्स्वप्नस्थितौ जाग्रज्जाग्रत्स्वप्नप्रदर्शनम् ।
156413 मृत्वान्यत्रप्रबुद्धस्य जाग्रत्स्वप्नो भवत्यलम् ॥ ३० ॥
156414
156415 एवं च स्वप्नात्स्वप्नान्तरस्थितौ द्वितीयं स्वप्नरूपमेव पूर्वापेक्षया
156416 वर्तमानत्वात्प्रकृष्टं दर्शनं जाग्रद्भवति । एवं जाग्रति मृत्वा अन्यत्र स्वप्ने

156417 जाग्रदन्तरे वा प्रबुद्धस्य पुंसः पूर्वजाग्रत्स्वप्न एवालमवश्यं भवति ॥ ३० ॥
156418
156419 इतिहासमयावेव जाग्रत्स्वप्नावुभावपि ।
156420 परस्परं गतावेतावुपमानोपमेयताम् ॥ ३१ ॥
156421
156422 इतिहासः कीर्त्यमानपूर्ववृत्तकथार्थस्तन्मयौ तत्सदृशावेव न यथार्थाविति
156423 हेतोः परस्परमुपमानोपमेयतां गतावित्यर्थः । इतीहासमयौ इति दीर्घपाठे तु इति
156424 इह असमं विषमं यात इत्यसमयौ किंचिद्विलक्षणावपीत्यर्थः । इतीहासन्मयौ इति
156425 पाठः साधुः ॥ ३१ ॥
156426
156427 स्वप्नो जाग्रदिवाभाति जाग्रत्स्वप्नमिवोदितम् ।
156428 वस्तुतस्तु द्वयमसच्चित्खं कचति केवलम् ॥ ३२ ॥
156429
156430 किं च वर्तमानदशायां स्वप्नोऽपि जाग्रदिव प्रत्यक्षमाभाति । अतीतं तु जाग्रदपि
156431 प्रसिद्ध स्वप्नमिव उदितम् ॥ ३२ ॥
156432
156433 स्थावरं जंगमं चैव भूतजातमशेषतः ।
156434 चिन्मात्रव्यतिरेकेण किमन्यदुपपद्यते ॥ ३३ ॥
156435
156436 चित्खं कचति केवलम् इत्युक्तिमुपपादयति - स्थावरमित्यादिना ॥ ३३ ॥
156437
156438 मृन्मयं तु यथा भाण्डं मृच्छून्यं नोपलभ्यते ।
156439 चिच्चमत्कारमात्रात्म तथा काष्ठोपलाद्यपि ॥ ३४ ॥
156440
156441 वस्तुजातमिदं स्वप्ने जाग्रत्यपि तथैव नः ।
156442 दृष्टो य उपलः स्वप्ने चिच्चमत्करणादृते ॥ ३५ ॥
156443
156444 चिच्चमत्करणादृते अन्यत् किं स्यात् । हे प्राज्ञ अस्मिन्नर्थे विद्वद्भिः सह युक्त्या
156445 संवद संवादेनावधारय । विचारोत्पन्नतत्त्वदशने सा प्रसिद्धा चिदेव स्वाप्नोपल
156446 इति परेणान्वयः ॥ ३५ ॥
156447
156448 किमन्यत्संवद प्राज्ञ किलावश्यं चिदेव सा ।
156449 ननु यादृग्वपुः स्वप्ने जाग्रत्तादृगखण्डितम् ॥ ३६ ॥
156450
156451 जगज्जातमतः सर्वं चिन्मात्रं ब्रह्मखण्डितम् ।
156452 जगज्जातमतः सर्वं चिन्मात्रं ब्रह्मकुट्टिमम् ॥ ३७ ॥
156453
156454 चिन्मात्रं ब्रह्मैव जगदाकारेण खण्डितं विभक्तमध्यारोपे । अपवादे तु
156455 जगत्सर्वं ब्रह्मकुट्टिमं जातमित्यर्थः ॥ ३७ ॥
156456
156457 मृन्मयं तु यथा भाण्डं मृच्छून्यं नोपलभ्यते ।
156458 चिन्मयं तु तथा चेत्यं चिच्छून्यं नोपलभ्यते ॥ ३८ ॥
156459
156460 चिद्व्यतिरेकेण जगदनुपलम्भादपि चिन्मात्रत्वमेवेत्याह - मृन्मयमित्यादिना ॥
156461 ३८ ॥
156462
156463 शैलात्मकं यथा भाण्डं शैलशून्यं न लभ्यते ।
156464 चिन्मयं तु तथा चेत्यं चिच्छून्यं नोपलभ्यते ॥ ३९ ॥
156465
156466 शिलाया अवयवः शैलस्तदात्मकम् ॥ ३९ ॥
156467
156468 द्रवरूपं यथा वारि द्रवरिक्तं न लभ्यते ।

156469 चिन्मयं तु तथा चेत्यंन् चिच्छून्यं नोपलभ्यते ॥ ४० ॥
156470
156471 ऊष्मरूपो यथा वह्निर्निरूष्मा नोपलभ्यते ।
156472 चिन्मयं तु तथा चेत्यं चिच्छून्यं नोपलभ्यते ॥ ४१ ॥
156473
156474 यथा स्पन्दमयो वायुरस्पन्दो नोपलभ्यते ।
156475 चिन्मयं तु तथा चेत्यं चिच्छून्यं नोपलभ्यते ॥ ४२ ॥
156476
156477 स्पन्दमयः स्पन्दस्वभावः ॥ ४२ ॥
156478
156479 यद्यन्मयं तद्विना तु तत्कथं किल लभ्यते ।
156480 क्वाशून्यं लभ्यते व्योम क्वाघना लभ्यते मही ॥ ४३ ॥
156481
156482 अघना अमूर्ता ॥ ४३ ॥
156483
156484 चिद्व्योममयमेवेदं यथा घटपटादिकम् ।
156485 स्वप्ने तथेदं शैलादि चिद्व्योमाभासमात्रकम् ॥ ४४ ॥
156486
156487 तथा इदं जाग्रच्छैलाद्यपि ॥ ४४ ॥
156488
156489 स्वप्ने यथा गगनमेव पुराचलादि संविन्मयं सुभग जाग्रति तद्वदेव ।
156490 स्वप्नोऽथ जाग्रदिति शान्तमनन्तमेकं चिन्मात्रमत्र ननु नाम विनास्तु वादः
156491 ॥ ४५ ॥
156492
156493 उक्तमेव स्फुटयन्नुपसंहरति - स्वप्ने इति । स्वप्ने प्रसिद्धं पुराचलादि यथा
156494 संविन्मयं गगनमेव हे सुभग जाग्रति प्रसिद्धं पुराचलाद्यपि तद्वदेव
156495 संविन्मयं गगनमेव । एवं च स्वप्नोऽथ जाग्रदिति विकल्पनशान्तमेकं
156496 चिन्मात्रमेव परिशिष्टम् । अत्र ईदृशे तत्त्वे वादिनां विषयं विना वृथा विवाद
156497 इत्यर्थः ॥ ४५ ॥
156498
156499 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० निर्वाणप्रकरणे उ०
156500 जाग्रत्स्वप्नैक्यप्रतिपादनं नाम पञ्चोत्तरशततमः सर्गः ॥ १०५ ॥
156501
156502 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
156503 जाग्रत्स्वप्नैक्यप्रतिपादनं नाम पञ्चोत्तरशततमः सर्गः ॥ १०५ ॥
156504
156505 प्द्फ़् २७९, प्। १३१३
156506
156507 षडधिकशततमः सर्गः १०६
156508
156509 श्रीराम उवाच ।
156510
156511 कीदृशं स्याच्चिदाकाशं तद्ब्रह्मन्ब्रह्म यत्परम् ।
156512 भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥ १ ॥
156513
156514 लक्षणौघैश्चिदाकाशमिह भूयः प्रदर्श्यते ।
156515 तदेव जगदित्येतदपि भूयः प्रपञ्च्यते ॥
156516
156517 प्रपञ्चितेन जगतः स्वप्नसाम्येन यादृशचिदाकाशमात्रं तत्त्वमिति
156518 प्रतिपत्तव्यंन् तत्स्वरूपं प्राक् शतशो निरूपितमपि मन्दमतिभिः
156519 कश्चित्सम्यङ्नावधारितं स्यादिति संभावनया तदनुकम्पया पुनस्तस्यैव
156520 स्वरूपतटस्थलक्षणभेदैः सम्यग्व्युत्पादनं श्रोतुकामो रामः पृच्छति -

कीदृशमिति ॥ १ ॥

श्रीवसिष्ठ उवाच ।

समयोर्यमयोर्भ्रात्रोर्व्यवहाराय नामनी ।
यद्वत्क्रियेते द्वे तद्वज्जाग्रत्स्वप्नशिलामये ॥ २ ॥

पृष्टं वर्णयिष्यन्वसिष्ठः प्रस्तुतं जाग्रत्स्वप्नसाम्यमेव
तद्वर्णनपीठिकात्वेनानुवदति - समयोरिति । यमयोर्यमलजातयोर्नामनी यद्वद्द्वे
भिन्ने क्रियेते तद्वज्जाग्रत्स्वप्नलक्षणाखण्डचित्स्फटिकशिलामये तत्प्रतिबिम्बप्राये
सदृशे प्रपञ्चद्वये द्वे नामनी क्रियेते इत्यर्थः ॥ २ ॥

वस्तुतस्त्वनयोर्भेदो न द्वयोः पयसोरिव ।
द्वयमप्येकमेवैतच्चिन्मात्रं व्योम निर्मलम् ॥ ३ ॥

देशाद्देशान्तरं दूरं प्राप्तायाः संविदो वपुः ।
निमिषेणैव तन्मध्ये चिदाकाशं तदुच्यते ॥ ४ ॥

तस्य चिद्व्योम्नो लक्षणं प्रागुक्तमेव स्मारयन्प्रथममाह - देशादिति । मध्ये
यन्निर्विषयं संविदो वपुः प्रसिद्धं तदित्यर्थः ॥ ४ ॥

यादृशस्तिष्ठतः स्वच्छं रसमाकर्षतस्तरोः ।
भवेद्भावो नभःस्वच्छस्तादृशं चिन्नभः स्मृतम् ॥ ५ ॥

मूलेन भौमं रसं जलमाकर्षतस्तरोः पेपीयमानो मोदमानस्तिष्ठतीति
श्रुतिप्रसिद्धो यादृशो वृद्धिह्रासशून्य आह्लादभावः
प्रसिद्धस्तादृशमित्यर्थः ॥ ५ ॥

विनिवृत्ताखिलेच्छस्य पुंसः संशान्तचेतसः ।
यादृशः स्यात्समो भावस्तादृशं चिन्नभः स्मृतम् ॥ ६ ॥

समः सर्ववैषम्यशून्यो भावः सहजसुखस्वरूपानुभ्जवः ।
निर्विक्षेपदशायामहं सुखं तिष्ठामीति सर्वानुभवात् ॥ ६ ॥

अनागतायां निद्रायां मनोविषयसंक्षये ।
पुंसः स्वस्थस्य यो भावः स चिदाकाश उच्यते ॥ ७ ॥

अनागतायामिति । अथाहुः निद्रादौ जागरस्यान्ते यो भाव उपजायते । तं भावं
धारयन्योगी न दुःखैरभिभूयते ॥ इति ॥ ७ ॥

तृणगुल्मलतादीनां वृद्धिमागच्छतामृतौ ।
यः स्यादुन्ममतो भावः स चिदाकाश उच्यते ॥ ८ ॥

ऋतौ प्रावृषि शरदि वा । उन्मुक्ता ममता यस्मिंस्तथाविधो य आनन्दभावः ॥ ८ ॥

रूपालोकमनस्कारविमुक्तस्यामृतस्य यः ।
भावः पुंसः शरद्व्योमविशदस्तच्चिदम्बरम् ॥ ९ ॥

अमृतस्य जीवतः पुंसः ॥ ९ ॥

यदेतदासनं सृष्टं काष्ठपाषाणभूभृताम् ।
चेतनानां च सत्तात्म चिदाकाशः स उच्यते ॥ १० ॥

आसनं निष्क्रियमवस्थानं धात्रा स्वभावतया सृष्टं तदेव चेतनानां
जीवानां सत्तात्म स्थितिस्वरूपं चेत्स्यात्तदा स चिदाकाश उच्यते। तच्च मनोनाशे
सत्येव सिद्ध्यतीति भावः ॥ १० ॥

द्रष्टृदर्शनदृश्यानां त्रयाणामुदयो यतः।
यत्र वास्तमयश्चित्खं तद्विद्धि विगतामयम् ॥ ११ ॥

यतो यस्मात्सुषुप्तिसाक्षिणः स्वप्नजागरयोर्द्रष्ट्रादित्रिपुट्या उदयो यस्मिन्नेव
चास्तमयः ॥ ११ ॥

यत उद्यन्ति यस्मिंश्च चित्राः परिणमन्त्यलम्।
पदार्थानुभवाः सर्वे चिदाकाशः स उच्यते ॥ १२ ॥

विचित्राः सर्वे पदार्थानुभवा यत उद्यन्ति उदयंन् प्राप्नुवन्ति यस्मिंश्च
आलोचनविमर्शनाध्यवसायहानोपादानादिभावेनोत्तरोत्तरं परिणमन्ति ॥ १२ ॥

यस्मिन्सर्वं यतः सर्वं यः सर्वं सर्वतश्च यः।
यश्च सर्वमयो नित्यं च चिदाकाश उच्यते ॥ १३ ॥

द्वौ श्लोकौ प्राग्व्याख्यातौ ॥ १३ ॥

दिवि भूमौ बहिश्चान्तस्तथान्यस्य समाभिधः।
यो विभात्यवभासात्मा चिदाकाशः स उच्यते ॥ १४ ॥

यस्मिन्नित्ये तते तन्तौ दृढे स्रगिव तिष्ठति।
सदसदुत्थितं विश्वं विश्वाङ्गे तच्चिदम्बरम् ॥ १५ ॥

विश्वाङ्गे यस्मिन्नुत्थितं सन्मूर्तमसदमूर्तं च विश्वं तन्तौ स्रगिव तिष्ठति तत् ॥
१५ ॥

यस्मात्सर्वाः प्रसूयन्ते सर्गप्रलयविक्रियाः।
यस्मिंश्चैव प्रलीयन्ते यन्मयास्तच्चिदम्बरम् ॥ १६ ॥

यतो वा इमानि भूतानि जायन्ते इति श्रुत्युक्तं तटस्थलक्षणमाह - यस्मादिति ॥ १६ ॥

निद्रायां विनिवृत्तायां यतो विश्वं प्रवर्तते।
निवर्तते च यच्छान्तौ तच्चिदम्बरमुच्यते ॥ १७ ॥

सुषुप्तिप्रलयलक्षणायां निद्रायां विनिवृतायां सत्यां यतो यस्मात्प्रतीचो
विक्षेपशक्तिवशाज्जाग्रत्स्वप्नलक्षणं वियदादिलक्षणं च विश्वं प्रवर्तते
आविर्भवति। यस्य शान्तौ विक्षेपशक्तिशान्तौ च निवर्तते ॥ १७ ॥

यस्योन्मेषनिमेषाभ्यां जगत्सत्तालयोदयौ।
स्वानुभूत्यात्मकं स्वान्तः स्थितं तद्विद्धि चिन्नभः ॥ १८ ॥

उन्मेषश्चरमसाक्षात्कारवृत्तावाविर्भावस्तेन जगत्सत्ताया लयः। निमेषः
स्वरूपावरणं तेन च उदयः ॥ १८ ॥

नेदं नेदं तदित्येवं सर्वं निर्णीय सर्वथा।
यन्न किंचित्सदा सर्वं तच्चिद्व्योमेति कथ्यते ॥ १९ ॥

156625 एवं सर्वनिषेधावधि सर्वात्मत्वमपि तल्लक्षणमित्याह - नेदमिति। सदा
156626 सर्वमपि यन्न किंचित्॥ १९॥
156627
156628 देशाद्देशान्तरप्राप्तौ यन्मध्ये संविदो वपुः।
156629 दूरतोऽर्धनिमेषेण तच्चिन्मात्रवपुः स्मृतम्॥ २०॥
156630
156631 अर्धनिमेषेण अविलम्बेन देशान्तरप्राप्तौ। विलम्बे हि
156632 वृत्तिविच्छेदाद्विषयान्तरानुप्रवेशाद्वा न शुद्धचिदम्बरं परिचेतुं शक्यमिति।
156633 उपक्रमोक्तस्य पुनः कीर्तनमुपसंहारद्योतनार्थम्॥ २०॥
156634
156635 विश्वं तन्मयमेवेदं यथा भूतं यथा स्थितम्।
156636 रूपालोकमनस्कारैर्युक्तमप्येवमीदृशम्॥ २१॥
156637
156638 लक्षणान्युक्त्वा तदद्वैतसिद्धये विश्वस्य तन्मयतामाह - विश्वमित्यादिना॥ २१॥
156639
156640 ईषदुन्मेषणादेतदन्यतामिव गच्छति।
156641 अनन्यरूपमपि सच्चिद्व्योम विमलाकृति॥ २२॥
156642
156643 ताह कथं प्रलयावस्थातः सर्गावस्थाया भेदविभावनं तत्राह - ईषदिति॥ २२॥
156644
156645 पश्यन्नेवेन्द्रियैरर्थान्नूनं निर्वासनाशयः।
156646 प्रबुद्ध एवैकघनः सुषुप्तावस्थितो भव॥ २३॥
156647
156648 सेयमन्यताभ्रान्तिर्वासनावशादेवेति न निर्वासनस्येत्याह - पश्यन्नेवेति॥ २३॥
156649
156650 निर्वासनः शान्तमना वद व्रज पिबाहर।
156651 पाषाण इव संजीवो नित्यंन् सुघनमौनवान्॥ २४॥
156652
156653 इदं न संभवत्येव दृश्यं पश्यसि यत्पुरः।
156654 मृगतृष्णाजलमिव द्वैतमिन्दाविवोदितम्॥ २५॥
156655
156656 अन्यतामिवेति इवकारेणान्यताया मिथ्यात्वमुक्तं तत्कुत इति चेदसंभवादेवेत्याह ##-
156657
156658 इदमादावनुत्पन्नंन् कारणाभावतः किल।
156659 कारणेन विना कार्यं न हि नामोपपद्यते॥ २६॥
156660
156661 यद्वोपपद्यते किंचित्तदकारणकोद्भवम्।
156662 यथास्थितं परं रूपमुद्भूतमिव लक्ष्यते॥ २७॥
156663
156664 यद्वा किंचिद्बीजादङ्कुरादि अन्वयव्यतिरेकदर्शनादुपपद्यते
156665 तदप्यकारणकादद्वयाद्ब्रह्मण एवोद्भवो यस्य तथाविधम्। ननु
156666 निर्विकारात्तस्मात्कथमङ्कुराद्युद्भवस्तत्राह - यथास्थितमिति॥ २७॥
156667
156668 तद्यथास्थितमेवाङ्ग पूर्वरूपमवस्थितम्।
156669 भवत्यद्वयमेवाच्छं द्वयेनाप्युपलक्षितम्॥ २८॥
156670
156671 यथा अद्वयमपि चन्द्रबिम्बभ्रान्तौ द्वयेनाप्युपलक्षितं तद्वदिति भावः॥ २८॥
156672
156673 तत्रेदंप्रत्ययः प्रौढो भवत्यनुभवो हि यः।
156674 समायातमिदं भ्रान्तं तत्स्वप्नस्त्रीसमं विदुः॥ २९॥
156675
156676 तदेव चेत्कथमन्यथाग्रहत्वं तत्राह - तत्रेति॥ २९॥

156677
156678 तस्माद्दृश्यं न चोत्पन्नं नैवास्ति न भविष्यति।
156679 न च नश्यति यन्नास्ति तस्य किं नाम नश्यति॥ ३०॥
156680
156681 मायमात्रत्वे किं सिद्धं तदाह - तस्मादिति॥ ३०॥
156682
156683 तत्तदेव परं शान्तं चिद्व्योमैव तथा स्थितम्।
156684 स्वरूपादच्युतं स्वस्थं सौम्यं जगदिवोदितम्॥ ३१॥
156685
156686 तद्विश्वं परं शान्तं चिद्व्योमैव तथा विश्ववेषेण स्थितम्। किं परिणामेन
156687 नेत्याह - स्वरूपादिति॥ ३१॥
156688
156689 न हीदमग्रे यद्दृष्टं दृश्यं तत्सत्कदाचन।
156690 न चापि द्रष्टा दृष्टार्थाभावे क्व द्रष्टृता किल॥ ३२॥
156691
156692 कुतो न परिणामेनेति चेत्तत्समसत्ताकत्वाभावादित्याह - न हीति। अत एव
156693 तद्द्रष्टृतापि न परिणामः। दृश्यनिरूप्यया तत्समत्वादित्याह - न चेति॥ ३२॥
156694
156695 श्रीराम उवाच।
156696
156697 एवं चेत्तद्वद ब्रह्मन्द्रष्टृदृश्यावभासनम्।
156698 किमिदं कथमाभाति भूयोऽपि वदतांवर॥ ३३॥
156699
156700 यदि द्रष्टृदृश्ये अत्यन्तासती तर्हि तयोः कथमवभासनम् अत्यन्तासतो
156701 भानादर्शनादिति रामः शङ्कते - एवं चेदिति। तत्प्रागुक्तमपि भूयोऽपि वद। हे
156702 वदतांवर॥ ३३॥
156703
156704 श्रीवसिष्ठ उवाच।
156705
156706 असद्रूपस्य दृश्यस्य कारणाभावतः सदा।
156707 दृश्यतास्येत्यपि प्रौढिनिर्देशस्यात्यसंभवात्॥ ३४॥
156708
156709 तत्रासतो भानासंभवं प्रथमश्लोकेनाभ्युपेत्य अत एव सतः परमात्मन एव
156710 मायया तथा भानमित्युत्तरं द्वितीयेनाह - असद्रूपस्येति। कारणाभावतः
156711 असद्रूपस्योत्पत्तेरेवासंभवादस्य दृश्यतापीति प्रौढ्या निर्देशः
156712 प्रौढिवादस्तस्य अत्यसंभवात्सुतरामसंभवादित्यर्थः॥ ३४॥
156713
156714 यदिदं भासते किंचिद्द्रष्टृदृश्यभ्रमात्मकम्।
156715 जगदादि परं रूपं तद्विद्धि परमात्मनः॥ ३५॥
156716
156717 अत एवेदं द्रष्टृदृश्यं न असतो रूपं किं तु परमार्थसतो ब्रह्मण इत्याह ##-
156718
156719 स्वप्ने चिन्मात्र एवास्ते यथा गगनकाननम्।
156720 तथा जगत्तया भाति स्वयं चिन्मात्रमात्मनि॥ ३६॥
156721
156722 परमात्मन एवेदं रूपमिति कथं ज्ञातमिति चेत्स्वप्नदर्शनादित्याह - स्वप्ने
156723 इति॥ ३६॥
156724
156725 इहादिसर्गात्प्रभृति नास्त्युपादानकारणम्।
156726 किंचनापि क्वचिदपि भातीत्थं ब्रह्म केवलम्॥ ३७॥
156727
156728 स्वप्नसाम्यमस्य कुत इति

156729 चेत्सर्वकारणकलापशून्यसुषुप्तिसदृशात्प्रलयादुद्भूतत्वादित्याशयेनाह -
156730 इहेति ॥ ३७ ॥
156731
156732 यच्चिदाकाशकचनं स्वयमात्मनि जृम्भते ।
156733 तदिदं भाति तस्यैव जगदित्युदितं वपुः ॥ ३८ ॥
156734
156735 चिदाकाशकचनाधीनकचनत्वादपि स्वप्नसाम्यमित्याशयेनाह - यदिति ॥ ३८ ॥
156736
156737 यथा भावस्य भावत्वं यथा शून्यस्य शून्यता ।
156738 आकारिणो यथाकारस्तथा चिन्नभसो जगत् ॥ ३९ ॥
156739
156740 निर्धर्मकस्य चिन्नभसः कथं जगद्धर्मकतेति चेन्मायिकविकल्पवशादेवेति
156741 दृष्टान्तैरुपपादयन्नाह - यथेति । आकारिणो मूर्तस्य ॥ ३९ ॥
156742
156743 इदं विद्धि चिदाभासं परमार्थघनं घनम् ।
156744 इत्थं विद्धि चिदाभासं परमार्थघनं घनम् ।
156745 इत्थं स्थितं स्वयं भातं द्रष्टृदृश्यदृगात्मकम् ॥ ४० ॥
156746
156747 घनं सैन्धवघनवदेकरसं परमार्थघनमेव मायायां चिदाभासं इत्थंन्
156748 त्रिपुटीभूय स्थितं विद्धि ॥ ४० ॥
156749
156750 वस्तुतस्तु द्वयाभावान्नाभासि न च भासनम् ।
156751 किमपीदमनिर्देश्यं सद्वाऽसद्वेति वेत्ति कः ॥ ४१ ॥
156752
156753 मायात्यागे तु द्वयाभावात्सद्वा असद्वेति को वेत्ति बाधितस्य विमर्शायोग्यत्वादिति
156754 भावः ॥ ४१ ॥
156755
156756 श्रीराम उवाच ।
156757
156758 एवं चेत्तद्वद ब्रह्मन्कार्यकारणतादिकः ।
156759 कथं भेदः किमायातः कथं सत्यत्वमागतः ॥ ४२ ॥
156760
156761 एवं नाभासि न च भासनम् इति त्वदुक्तरीत्या द्रष्टृश्योभयशून्यं
156762 चेत्परमार्थतत्त्वं तर्हि कार्यकारणतादिको भेदः कथम् । न ह्यद्रष्टृकः
156763 कश्चित्सेद्धुमर्हति कस्मादुपादानान्निमित्ताद्वा आयातः । यद्यसत्य एवेति ब्रूषे तर्हि
156764 कथं सत्यत्वमागतः सर्वजनानां सत्यत्वेन कथं भातीत्यर्थः ॥ ४२ ॥
156765
156766 श्रीवसिष्ठ उवाच ।
156767
156768 चित्प्रकाशो यथाभानं यदा भावयति स्वयम् ।
156769 स्वात्मा तथा तदेवाशु पश्यसीत्यसि दृष्टवान् ॥ ४३ ॥
156770
156771 तत्र प्रथमप्रश्नस्योत्तरमाह - चित्प्रकाश इति । वस्तुतः स्वात्मापि चित्प्रकाश
156772 ईश्वरः स्वयं यदा यथाभानं यथाप्राणिकामकर्मवासनोद्बोधंन् यद्यथा
156773 सत्यसंकल्पतया भावयति तत्तदा त्वं तथैवाशु पश्यसि त्वदात्मना च स एव इति
156774 प्रागुक्तं द्रष्टृदृश्यभावमनुभूतवान् । तेनास्य सिद्धिरित्यर्थः ॥ ४३ ॥
156775
156776 चिद्व्योमैवायमाकारः स्वे व्योम्न्येव न मुह्यति ।
156777 स्वयमेव यथा स्वप्ने कोऽस्य पर्यनुयोगकृत् ॥ ४४ ॥
156778
156779 द्वितीयस्योत्तरमाह - चिद्व्योमैवेति । अयं कार्यकारणभावाद्याकारश्चिद्व्योमैव
156780 यथा घटो मृदेवेति चिद्व्योमैवोपादानं मोह एवास्य निमित्तम् । कथमिदं

156781 ज्ञायते। यतोऽयं स्वे व्योम्न्येव परिज्ञाते न मुह्यति अन्यथा तु मुह्यत्येव। यथा
156782 स्वप्ने स्वयमेव मुह्यति स्वात्मप्रबोधादेव मोहं जहाति तद्वत्। ननु स्वात्मबोधे
156783 समर्थ ईश्वरः स्वयमेव जीवो भूत्वा किमर्थं मुह्यति कुतो वा न प्रबुध्यते तत्राह
156784 - कोऽस्येति। स्वतन्त्रस्येश्वरस्य किमर्थं जीवो भूत्वा मुह्यसीति
156785 पर्यनुयोगमाक्षेपं करोतीति पर्यनुयोगकृत्को वा स्यान्न कश्चिदित्यर्थः॥ ४४॥
156786
156787 भावाद्भावान्तरप्राप्तौ मध्ये यत्संविदो वपुः।
156788 तच्चिद्व्योम तदेवेदं सर्वं च [अत्र सर्वं वस्त्विति नेतरत् इति पाठो युक्तः।
156789 ] स्थिति नेतरत्॥ ४५॥
156790
156791 तृतीयस्योत्तरमाह - भावादिति। दुग्धभावाद्दधिभावप्राप्तौ
156792 पिण्डभावाद्घटभावप्राप्तौ पूर्वभावनिवृत्तावुत्तरभावानुपजने च मध्ये
156793 क्षणमात्रं सन्मात्ररूपं प्रसिद्धं तत्परमार्थसत्याः संविदो वपुः स्वरूपं
156794 तदेव चिद्व्योम मया प्रागुक्तं तदेवेदं सर्व च स्थिति वस्तु विभाव्यत इति सर्वं
156795 सत्यत्वमागतमित्यर्थः॥ ४५॥
156796
156797 कार्यकारणभावादिदृशोऽविद्याविजृम्भिकाः।
156798 जगद्वत्कल्पयत्येष कोऽस्य पर्यनुयोगकृत्॥ ४६॥
156799
156800 ईश्वरस्य जीवभावकल्पनायामिव जीवस्य स्वाविद्यया
156801 कार्यकारणरूपावस्थात्रयकल्पनायामपि न पर्यनुयोगो युक्त इत्याह -
156802 कार्यकारणेति। न हि स्वात्मानं प्रति कश्चित्किमर्थमेवं करोमीति पर्यनुयोगं
156803 कर्तुं समर्थ इति भावः॥ ४६॥
156804
156805 द्रष्टा भोक्ताथ कर्ता वा कश्चित्स्यादितरो यदि।
156806 तत्कथं किमिदं दृश्यमिति युज्येत नान्यथा॥ ४७॥
156807
156808 आत्मान्यस्य कर्तृत्वे भोक्तृत्वे वा स्यादेव पर्यनुयोग इत्याह - द्रष्टेति। इति
156809 पर्यनुयोगो युज्येत॥ ४७॥
156810
156811 यत्र स्वप्ने निराभासं चिद्व्योमैव विराजते।
156812 शुद्धमेकमनेकात्म तत्र किं क्व विकल्प्यते॥ ४८॥
156813
156814 विकल्प्यते पर्यनुयुज्यते॥ ४८॥
156815
156816 आस्वयंभुव एवेयं न् चिन्मात्रे भाति सर्गभाः।
156817 परिज्ञाता सती सा तु ब्रह्मैव भवति क्षणात्॥ ४९॥
156818
156819 स्वयंभुवः आ स्वयंभुवमभिव्याप्यैव सर्गभाः सर्गभ्रान्तिर्भाति
156820 तत्त्वापरिज्ञानादित्यर्थः॥ ४९॥
156821
156822 एषैव त्वपरिज्ञाता भ्रान्तिर्मायेति कथ्यते।
156823 जगदित्युच्यते विद्या दृश्यमित्युपवर्ण्यते॥ ५०॥
156824
156825 एषा सर्गभ्रान्तिरेव तत्त्वतः अपरिज्ञाता मायेति शास्त्रेषु कथ्यते लोके जगदित्युच्यते
156826 अज्ञैरविद्येत्युच्यते दृग्विवेकिभिर्दृश्यमित्युपवर्ण्यते॥ ५०॥
156827
156828 चिदाकाशप्रकाशेन चित्ता दृश्यपिशाचकः।
156829 वेतालो बालकेनेव बुद्धोऽसन्नेव सन्निव॥ ५१॥
156830
156831 स्वीया चित्ता चित्स्वभावः पृथगसन्नेव सन्निव दृश्यपिशाचको बुद्धः॥ ५१॥
156832

जगत्तात्मन्यसत्यापि चिद्व्योम्नैवानुभूयते |
सत्येव साङ्गलेखेव स्वप्नेऽद्रिपुरता यथा || ५२ ||

असतो निरवयवस्यापि सन् सावयव इत्यनुभवः स्वप्नवदत्रोपपादनीय इत्याह -
जगत्तेति | साङ्गलेखा सावयवेव च || ५२ ||

अहमद्रिरहं रुद्रः समुद्रोऽहमहं विराट् |
चेत्यते खे चितैवेति स्वप्नेऽद्रिपुरतायथा || ५३ ||

तत्राहंताध्यासेनानुभवं प्रपञ्चयति - अहमिति | अद्रिर्मेरुहिमवदादिः || ५३ ||

आकारि कारणाभावाज्जातं कार्यं न किंचन |
महाप्रलयचिद्व्योम्नि चित्स्थितेत्थमिदन्तया || ५४ ||

चिदनुभव एव सर्ग इति किमर्थं वर्ण्यते
प्रधानपरमाण्वादिकारणान्तरादेवायंन् जात इति कुतो न वर्ण्यते तत्राह -
आकारीति || ५४ ||

अकारणकमेवेदं व्योम व्योम्नानुभूयते |
जगदित्येव शून्याङ्गं चिन्मात्रात्म चिदात्मनि || ५५ ||

शून्याङ्गं निरवयवम् || ५५ ||

सर्व एव जडा जीर्णा दर्पणा इव जन्तवः |
समीपगत एवान्तः कुर्वतस्तु विचारणम् || ५६ ||

सर्व एव जन्तवो दर्पणा इव स्वान्तःपरिकल्पितजगद्भेदा अपि
विचाराभावात्स्वरूपदर्शनासामर्थ्याज्जडाः सन्तो वृथा जीर्णाः | विचारणं
कुर्वतः पुरुषधौरेयस्य तु परमपुरुषार्थोऽन्तः प्रत्यगात्मरूपत्वात्समीपगत
एवेत्यर्थः || ५६ ||

तत्तत्स्वरूपमुत्सृज्य बुद्ध्वा चिन्मात्रखं जगत् |
अश्मना चेतनेनैव स्थेयंन् नास्थेतरोत्तमा || ५७ ||

विचारेण स्वरूपं बुद्ध्वा कथं स्थेयं तत्राह - तत्तदिति |
तत्तन्नामरूपस्वरूपमुत्सृज्य परिशिष्टं चिन्मात्रं खमेवेति जगद्बुद्ध्वा
चेतनेन चिदेकघनेनाश्मनेव अचलेन स्थेयं इतरा मायिकी देहाद्यास्था नोत्तमा || ५७ ||

यथास्ते चलयद्देहं वार्यावर्तजगद्द्रवः |
चेततीति तथा चित्त्वं स्थिता चित्तज्जगद्दृशा || ५८ ||

चित्कथं जगदात्मना स्थिता तत्राह - यथेति | यथा वारि स्वदेहं चलयत्सत्
आवर्तादि जगद्द्रवो भूत्वा आस्ते तथा चिदपि चेततीति व्यापाररूपं चित्त्वं स्वात्मनि
परिकल्प्य स्थिता सती तत्कर्म जगद्दृशा आस्ते || ५८ ||

यथा कल्पद्रुमोऽभीष्टं कुर्याच्चिन्तामणिर्यथा |
तथा यद्भावितं स्वान्तस्तत्पूरयति चित्क्षणात् || ५९ ||

अत्र अल्पशक्तीनां कल्पद्रुमादीनामपि संकल्पितार्थकल्पनसामर्थ्यं तत्र
सर्वशक्तेः परमात्मनस्तत्किं वाच्यमित्याशयेनाह - यथेति || ५९ ||

चितिश्चिन्तामणिरिव कल्पद्रुम इवेप्सितम् |

156885 आशु संपादयत्यन्तरात्मनात्मनि खात्मिका ॥ ६० ॥
156886
156887 देशाद्देशान्तरप्राप्तौ मध्यदेशे चितेर्वपुः ।
156888 यत्तन्मयमिदं दृश्यं कुतो द्वैतैक्यविभ्रमः ॥ ६१ ॥
156889
156890 खात्मिकेत्येतद्विषयाकर्षणेनोपपादयञ्जगतस्तन्मयत्वमाह - देशादिति ॥ ६१ ॥
156891
156892 चिच्छायैवं कचत्यच्छमनन्ता भास्वरोदरा [भास्वरोदया इति पाठः ।
156893 ] ।
156894 अङ्गरिक्तापि दृश्यान्तःशून्यता नीलतेव खे ॥ ६२ ॥
156895
156896 चितश्छाया कान्तिरेव जगद्वेषेण कचति । अङ्गैरवयवै रिक्ता शून्यापि ॥ ६२ ॥
156897
156898 विसदृशकार्यानुभवो न भवति सहकारिकारणाभावात् ।
156899 सर्गादावत आद्या चिदेव दृश्यं यथा स्वप्ने ॥ ६३ ॥
156900
156901 विस्तरेण व्यवस्थापितमर्थं संग्रहेणोपसंहरति - विसदृशेति । सर्गादौ चितो
156902 विसदृशं जडं यत्कार्यं तस्यानुभव उद्भवो न संभवति । वैसादृश्ये
156903 निमित्तभूतानां सहकारिकारणानामभावात् । सुसदृशे तु
156904 भेदकाभावात्कार्यत्वासिद्धिरित्याशयः । अतः आद्या चिदेवेदं दृश्यं न
156905 तद्व्यतिरिक्तमणुमात्रमप्यस्तीति स्वप्नदृष्टान्तेन सिद्धमित्यर्थः ॥ ६३ ॥
156906
156907 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वा० उत्तरार्धे
156908 कार्यकारणनिरासो नाम षडधिकशततमः सर्गः ॥ १०६ ॥
156909
156910 इति श्रीवासिष्ठमहारामायणे तात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
156911 कार्यकारणनिरासो नाम षडधिकशततमः सर्गः ॥ १०६ ॥
156912
156913 सप्ताधिकशततमः सर्गः १०७
156914
156915 श्रीवसिष्ठ उवाच ।
156916
156917 अचेत्यचिन्मयं विश्वं विष्वगाभाति चिन्नभः ।
156918 अत्र चिच्चेतनं चेदं चेत्यमप्येवमात्मकम् ॥ १ ॥
156919
156920 इहोपपाद्यते चेत्यपृथ्व्यादीनामवस्तुता ।
156921 चिन्मणेरेव कचनं स्वप्नवज्जगदित्यपि ॥
156922
156923 विश्वस्य चेत्यभावमपलप्य चिन्मात्रभावं परिशेषयितुं प्रतिजानीते - अचेत्येति ।
156924 यतश्चिन्नभ एव विष्वगाभाति । तथा च चिन्नभोमात्राधीनसिद्धिकत्वादित्यनुमानं
156925 दर्शितम् । अत्र चेतयतीति चित् चेतनं क्रिया चेत्यं चेति त्रिपुटी चिन्मयीति प्रतिज्ञार्थं
156926 इत्याह - अत्रेति । अत्रास्यां प्रतिज्ञायामेवमात्मकं शुद्धचिदात्मकं
156927 प्रतिज्ञार्थत्वेनाभिप्रेतमिति शेषः ॥ १ ॥
156928
156929 अतो जीवन्नपि मृत इव सर्वोऽवतिष्ठते ।
156930 असावहं च त्वं चेति जीवन्तोऽपि मृता इव ॥ २ ॥
156931
156932 प्रतिज्ञासिद्धेः फलद्वयम् । स्थितस्यैव जगतो जगद्भावनिवृत्तिर्जीवतामेवास्माकं
156933 जीवभावनिवृत्तिश्चेत्याह - अत इति ॥ २ ॥
156934
156935 काष्ठमौनमृता एव व्यवहारगता अपि ।
156936 खगमा एव वा सर्वे भावाः स्थावरजङ्गमाः ॥ ३ ॥

156937
156938 सर्वभावानां कौटस्थ्यामूर्ततासिद्धिर्वा तत्फलमित्याह - काष्ठेति ।
156939 काष्ठमौनमात्यन्तिकनिष्क्रियतालक्षणं कौटस्थ्यं ऋताः प्राप्ताः । खे गमनं
156940 गमः आत्यन्तिकामूर्तभावप्राप्तिर्येषाम् ॥ ३ ॥
156941
156942 आकाशकाचकच्यात्म यदिदं किंचिदाततम् ।
156943 न किंचिदेव तद्विद्धि किंचिद्व्योम्नि कुतो भवेत् ॥ ४ ॥
156944
156945 नभोनैल्यादिवद्भासमानस्याप्यसत्त्वावधारणं तत्फलं विद्धीत्याह -
156946 आकाशेति । काचकच्यं काचवत्कचवन्नैल्यम् ॥ ४ ॥
156947
156948 केशोण्ड्रकनदीवाहधूमालीमौक्तिकादिवत् ।
156949 यत्खं कचति तत्रास्ति नानुभूतेऽपि वस्तुता ॥ ५ ॥
156950
156951 तथैवास्मिञ्जगन्नाम्नि चिद्व्योम्नि कचते चिते ।
156952 अनुभूतेऽपि निःशून्ये कास्थास्थाभावकश्च कः ॥ ६ ॥
156953
156954 तथा च नभोमौक्तिकालिष्विव जगति भोगास्था न युक्तेत्यपि फलितमित्याह - तथैवेति
156955 । आस्थाया भावक उत्पादकश्च कः पदार्थोऽस्ति ॥ ६ ॥
156956
156957 चिद्वालकल्पनाजाले शून्यात्मनि निरर्थके ।
156958 अवस्तुभूते पृथ्व्यादौ भ्रान्तिमात्राम्बरोदये ॥ ७ ॥
156959
156960 किमास्था बालका ब्रूत ममेदमहमित्यलम् ।
156961 आ ज्ञातं रमते बालसंकल्पे बाल एव च ॥ ८ ॥
156962
156963 यद्यास्था अनुचितैव तर्हि को हेतुर्यज्जनास्तत्रास्थां कुर्वन्ति तत्राह - आ ज्ञातमिति ।
156964 हेतुस्मरणेऽयमाकारो निपातः । ज्ञातं स्मृतम् । तेषां बाल्यमेव तदास्थाहेतुरिति
156965 स्मृतमित्यर्थः ॥ ८ ॥
156966
156967 पृथ्व्याद्यसद्विचारैर्वा व्यर्थं यास्यति जीवितम् ।
156968 किंचिच्च न ज्ञास्यति भोराकाशक्षालनोद्यतः ॥ ९ ॥
156969
156970 अत एवेषत्संजातविवेकैः पृथ्व्यादीनामसतां लाभादिहेतुं
156971 व्यर्थजन्मनाशकरं विचारं त्यक्त्वा जन्मसार्थक्यापादकं
156972 वैराग्यादिसाधनजातमवलम्बनीयमित्याशयेनाह - पृथ्व्यादीति । यथा
156973 स्वर्णरत्नादिलोभेच्छया प्रवृत्तस्तदाकरस्थानक्षालनं विहाय
156974 आकाशक्षालनोद्यतश्चेन्महतापि श्रमेण न किंचिच्च फलं ज्ञास्यति द्रक्ष्यति
156975 तद्वदित्यर्थः ॥ ९ ॥
156976
156977 सहकार्यादिपूर्वाणां कारणानामभावतः ।
156978 यदादावेव नोत्पन्नं तन्नामाद्य भवेत्कुतः ॥ १० ॥
156979
156980 पृथ्व्यादीनामसत्त्वं तु अकारणत्वादजातत्वादिना प्राक्साधितमित्याह -
156981 सहकारीति ॥ १० ॥
156982
156983 अजातेनासतार्थेन खेन व्यवहरन्ति ये ।
156984 मूढा मृतमजातं वा तनयं पालयन्ति ते ॥ ११ ॥
156985
156986 अत एव व्यवहारेऽभिनिविष्टता विदुषां हास्यास्पदमित्याह - अजातेनेति ॥ ११ ॥
156987
156988 कुतः पृथ्व्यादयः केन के नाम कथमुत्थिताः ।

156989 चिद्व्योमेत्थमिदं शान्तं प्रकचत्यात्मनात्मनि ॥ १२ ॥
156990

156991 तत्त्वदृष्टौ पृथ्व्यादीनामत्यन्तासंभवमनुभवमवलम्ब्याह - कुत इति ॥
156992 १२ ॥
156993

156994 कार्यकारणकालादिकल्पनाकुलचेतसाम् ।
156995 एवं पृथ्व्यादयः सन्ति तैर्बालैरलमस्तु नः ॥ १३ ॥
156996

156997 मूढदृष्टिषु नास्माकं प्रमाणमित्याह - कार्येति ॥ १३ ॥
156998

156999 अपृथ्व्यादि जगन्नाम सपृथ्व्यादि च खात्मकम् ।
157000 कचतीत्थं नभोरूपं स्वप्नादिष्विव चिन्मणिः ॥ १४ ॥
157001

157002 एवं च प्रतिज्ञार्थः सिद्ध इत्याह - अपृथ्व्यादीति । नामेति प्रसिद्धम् ।
157003 स्वाप्नमपृथ्व्यादि जगज्जाग्रत्प्रसिद्धं सपृथ्व्यादि जगच्चेत्युभयमपि
157004 खात्मकं चिदाकाशात्मकम् । किं तर्हि जगदिति कचति तदाह - कचतीति ॥ १४ ॥
157005

157006 अङ्गं यदेतस्य चिदम्बरस्य निराकृति स्वानुभवानुमानम् ।
157007 तदेतदाभाति महीतलादिरूपेण वेद्येतिकृताभिधानम् ॥ १५ ॥
157008

157009 स्वानुभव एवानुसृतं मानं यत्र तथाविधं यदेतस्य चिदम्बरस्य निराकृति
157010 निराकारमङ्गं शरीरम् । स्वरूपमिति यावत् । तदेतदेव महीतलादिरूपेण
157011 वेद्यदृश्य इति प्रातिपदिकरूपं कृतमभिधानं येन तथाविधं सदा भाति
157012 प्रथते न वस्त्वन्तरमवस्तु वेत्यर्थः ॥ १५ ॥
157013

157014 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० नि० उत्तरार्धे
157015 अविद्याभावप्रतिपादनं नाम सप्ताधिकशततमः सर्गः ॥ १०७ ॥
157016

157017 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
157018 अविद्याभावप्रतिपादनं नाम सप्ताधिकशततमः सर्गः ॥ १०७ ॥
157019

157020 अष्टाधिकशततमः सर्गः १०८
157021

157022 श्रीराम उवाच ।
157023

157024 अविद्या दृश्यरूपेयं कचन्ती यस्य विद्यते ।
157025 चिन्नभःस्वप्ननगरी दृश्यमानापि शून्यकम् ॥ १ ॥
157026

157027 अनष्टायामविद्यायां जगदन्तो न कर्हिचित् ।
157028 अत्रार्थे विस्तराच्चित्रमविद्याख्यानमीर्यते ॥
157029

157030 वर्णितायाः संसृतिरूपाया अविद्यायास्तत्त्वज्ञानेन त्रैकालिका सत्त्वापत्तिलक्षणं
157031 वाधं विनापि देशतः कालतो वा अन्तः संभवति न वेति संदेहानो रामः पृच्छति
157032 - अविद्येति । इयं चिन्नभःस्वप्ननगरी विद्यमानापि शून्यभूता दृश्यरूपा
157033 अविद्या यस्य पुंसः अबाधात्कचन्ती विद्यते तस्याज्ञस्य सा कियत्कालं स्यात् किंरूपा
157034 स्यात्किमात्मिका च स्यात् देशतश्च कियती वा स्यादित्येवं पुनर्मे त्वया कथ्यतामिति
157035 द्वयोरन्वयः ॥ १ ॥
157036

157037 तस्याज्ञस्य कियत्कालं कृंरूपा स्यात्किमात्मिका ।
157038 कियती सा च वेत्येवं मुने मे कथ्यतां पुनः ॥ २ ॥
157039

157040 तस्मिन्विपश्चिच्चरिते चतुर्दिक्षुविपश्चितः ।

157041 इह द्विषत्समुत्थानोदन्तश्रुत्यन्तमुच्यते ॥
157042
157043 श्रीवसिष्ठ उवाच।
157044
157045 अविद्या विद्यते येषामज्ञानां भूतलादिका।
157046 तेषामस्यां ब्रह्मणीव नास्त्यन्तोऽत्र कथां शृणु ॥ ३ ॥
157047
157048 तत्र संशयद्वितीयकोटिं परिगृह्य वसिष्ठस्तत्प्रतिष्ठापनाय प्रथमं
157049 विपश्चित्कथां श्रावयितुं राममवधापयति - अविद्येति। ब्रह्मणि यथा देशतः
157050 कालतो वा अन्तो नास्ति तद्वदस्यामपि नास्ति। ब्रह्मणि यथा देशतः कालतो वा अन्तो नास्ति
157051 तद्वदस्यामपि नास्ति। अत्रास्मिन्नर्थे उपपादिकां वक्ष्यमाणकथां शृण्वित्यर्थः
157052 ॥ ३ ॥
157053
157054 सदृशं जगतोऽस्यास्ति क्वचिदम्बरकोणके।
157055 कस्मिंश्चिल्लिजगत्किंचिदनयैव व्यवस्थया ॥ ४ ॥
157056
157057 तामेव प्रस्तौति - सदृशमिति। लोकालोककलधौतशिलाप्राये कस्मिंश्चिद्वस्तुनि
157058 स्थिते चिदम्बरस्य कोणके तत्रापि क्वचित्प्रदेशे अस्य जगतस्त्रैलोक्यस्य सदृशं
157059 किंचिल्लिजगदनयैवैतज्जगत्प्रसिद्धया भुवनद्वीपदेशकालादिव्यवस्थया
157060 मर्यादया अस्ति ॥ ४ ॥
157061
157062 अस्ति कश्चिद्भुवो भागो भूषणं तत्र भूस्थितेः।
157063 पुरी ततमितिर्नाम्ना सुव्यक्तकलनाऽवनौ ॥ ५ ॥
157064
157065 तत्र जम्बूद्वीपलक्षणाया भूस्थितेर्भूषणभूतः कश्चिद्भुवो भागोऽस्ति। तत्रापि
157066 गिरिविप्रवालुकादिकृतवैषम्याभावान्नरगजतुरगरथादीनां सुव्यक्ता
157067 संचारादिव्यवहारकलना यस्यां संभवति तथाविधायामवनौ समभूमौ
157068 नाम्ना ततमितिरिति प्रसिद्धा पुरी अस्तीत्यर्थः ॥ ५ ॥
157069
157070 तत्रासीत्पार्थिवः कश्चिद्विपश्चिदिति विश्रुतः।
157071 यः सभायां सुसभ्यायां विपश्चित्त्वाद्विराजते ॥ ६ ॥
157072
157073 तत्र तस्यां पुर्या शोभनाः सभ्या यस्यां तथाविधायां सभायां
157074 विपश्चित्त्वात्सर्वशास्त्रेषु विद्वत्त्वाद्विराजते ॥ ६ ॥
157075
157076 राजहंस इवाब्जिन्यामृक्षचक्र इवोडुराट्।
157077 सुमेरुरिव शैलौघे यः सभायामराजत ॥ ७ ॥
157078
157079 वैभवसौन्दर्यादिनापि तस्य तत्र विराजमानतामाह - राजहंस इति।
157080 अब्जिन्यामब्जवत्यां सरस्याम्। ऋक्षचक्रे नक्षत्रगणे उडुराट् चन्द्र इव ॥ ७ ॥
157081
157082 निवर्तते यतोऽशक्त्या वचनं गुणवर्णनात्।
157083 कबीनामचलाकारा भवेद्भा भूधरो यथा ॥ ८ ॥
157084
157085 सर्वत्रोत्तरोत्तरगुणोत्कर्षवर्णने प्रवृत्तं कवीनां वचनं यतो
157086 यस्माद्विपश्चितोऽवधेः सकाशाद्गुणानन्त्येन निरुपमत्वेन च वर्णनाशक्त्या
157087 वर्णनान्निवर्तते तथापि कवयस्तं भजन्त एव। यतो यस्माद्विपश्चितः
157088 सकाशात्कवीनामचलाकारा स्थिरा संपत्ख्यातिगुणोत्कर्षप्रयुक्ता भा शोभा भवेत्।
157089 स हि भूधरो मेरुर्यथास्वाश्रितनरमृगतृणगुल्मादीन्स्वभासा स्वर्णीकरोति
157090 तादृश इत्यर्थः ॥ ८ ॥
157091
157092 प्रातःप्रातर्विकसितात्सर्वाशाभासनोद्यतात्।

157093 यतः प्रतापजनितश्रीरुदेत्यम्बुजादिव ॥ ९ ॥
157094
157095 श्रीः संपत् । अम्बुजपक्षे प्रतापादातपाज्जनिता श्रीः शोभा ॥ ९ ॥
157096
157097 स ब्रह्मण्यमतिर्मानी वह्निमेवाधिदैवतम् ।
157098 अपूजयत्समं भक्त्या देवं वेत्ति स्म नेतरम् ॥ १० ॥
157099
157100 ब्रह्मण्या ब्राह्मणहिता मतिर्यस्य अत एव देवेषु
157101 वह्नेर्ब्राह्मणत्वाद्वह्निमेवाधिदैवतं देवेषु अपूजयत् । तथा चाग्न्युपस्थाने
157102 मन्त्रः त्वं देवेषु ब्राह्मणोऽस्यहं मनुष्येषु ब्राह्मणो हि
157103 ब्राह्मणमुपधावत्युप त्वा धावामिति । तदग्निनैव देवेषु ब्रह्माभवत् इति
157104 वाजसनेयके ॥ १० ॥
157105
157106 समत्स्यमकरव्यूहा गजवाजिगणान्विताः ।
157107 आवर्तचक्रव्यूहाढ्याः कल्लोलबलमालिताः ॥ ११ ॥
157108
157109 अस्य मन्त्रिषु मध्ये अकम्पना धीरा बाहुबलेन चाधिका अकम्पनेन निर्भयेन बलेन
157110 सैन्येन चाधिकाश्चत्वारो मन्त्रिणश्चत्वारः सत्सागरा इव चतसृषु दिक्षु
157111 परचक्रनिरोधेन देशमर्यादापालने युक्ता नियुक्ता इति द्वयोरन्वयः । तत्र सागराः
157112 समत्स्यमकरव्यूहाः मन्त्रिणस्तु गजवाजिगणान्विताः । समुद्रा आवर्तव्यूहाढ्याः
157113 मन्त्रिणश्चक्रव्यूहाढ्याः । समुद्राः कल्लोलमालिताः । मन्त्रिणो बलमालिताः ॥ ११ ॥
157114
157115 मर्यादापालने युक्ता अकम्पनबलाधिकाः ।
157116 मन्त्रिष्वप्यस्य चत्वारो दिक्षु सत्सागरा इव ॥ १२ ॥
157117
157118 समुद्राः अकम्पनानां पर्वतानां बलेनाधिकाः ॥ १२ ॥
157119
157120 तैरशेषककुप्चक्रनाभिराभासितावनिः ।
157121 आसीत्सुदुर्जयो जेता स दुदर्शनचक्रवत् ॥ १३ ॥
157122
157123 तैर्मन्त्रिभिः स राजा अशेषणां ककुप् चक्राणां दिक्चक्राणां नाभिरिव
157124 आधारभूतः सन् सुदर्शनचक्रवत्सुदर्जयः शत्रुभिरपरिभवनीयः स्वयं जेता च
157125 आसीत् ॥ १३ ॥
157126
157127 तमेकदा ययौ पूर्वदिङ्मुखाच्चतुरश्चरः ।
157128 स उवाच रहो रंहोगतिघोराक्षरं वचः ॥ १४ ॥
157129
157130 चरश्चारः आययौ । रंहः कालरय इव दुर्निवारत्वाद्घोराण्यक्षराणि यस्मिन् ॥ १४ ॥
157131
157132 देव दुर्द्रुमविश्रान्तधरागोबन्धनाच्युत ।
157133 श्रूयतां मन्मुखात्पश्चाद्यथाप्राप्तं विधीयताम् ॥ १५ ॥
157134
157135 दोर्द्रुमयोर्विश्रान्तेन धरागोबन्धनेन अच्युत अविच्युत । सदैव
157136 भूस्त्वद्भुजावष्टब्धेति यावत् । अत्राच्युतपदश्लेषाद्विष्णुत्वारोपोऽपि गम्यते ॥ १५ ॥
157137
157138 पूर्वदिङ्मुखसामन्तो ज्वरेणास्तमुपागतः ।
157139 मन्ये जेतुं यमं यातस्त्वयारब्धो जितारिणा ॥ १६ ॥
157140
157141 पूर्वदिङ्मुखे त्वया मर्यादापालनाय नियुक्तो यः सामन्तः प्रागुक्तमन्त्री स
157142 ज्वरेणास्तं मरणमुपागतः । तत्रोत्प्रेक्षते - मन्ये इति । जितारिणा त्वया दिग्विजयाय
157143 आरब्धः उपक्रम्य नियुक्तः स दक्षिणदिक्पतिं यमं जेतुं यात इति मन्ये ॥ १६ ॥
157144

157145 तस्मिन्समन्ततो जेतुं दक्षिणापथनायकः |
157146 पूर्वापराभ्यामाक्रम्य बलाभ्यामरिणाऽऽहतः || १७ ||
157147
157148 तस्मिन्मृते सति दक्षिणापथनायकस्त्वत्सामन्तः समन्ततः पूर्वां दक्षिणां च
157149 दिशं जेतुंन् प्रवृत्तः सोऽप्यरिणा पूर्वापराभ्यां बलाभ्यामाक्रम्य हतः || १७ ||
157150
157151 तस्मिन्मृते समागम्य यावद्वारुणदिक्पतिः |
157152 बलेनायाति ककुभौ ते समादातुमादृतः || १८ ||
157153
157154 तस्मिन्मृते सति वारुणदिशः पतिस्ते सामन्तो यावद्बलेन समागम्य ते पूर्वदक्षिणे
157155 ककुभौ दिशौ समादातुमादृतः सन्नायाति तावदेव अरिभिः पूर्वदिशनृपैः
157156 सार्धं दक्षिणापथपार्थिवैः असौ अर्धमार्गे रणे हत इति द्वयोः संबन्धः || १८ ||
157157
157158 पूर्वदिशनृपैः सार्धं दक्षिणापथपार्थिवैः |
157159 तावदेवारिभिरसावर्धमार्गे रणे हतः || १९ ||
157160
157161 श्रीवसिष्ठ उवाच |
157162
157163 अथास्मिन्कथयत्येवं त्वरार्तमपरश्चरः |
157164 उपप्लवजडोत्पीड [उपप्लवो जडोत्पीड इति पाठश्चिन्त्यः |] इव हर्म्यं
157165 विवेश ह || २० ||
157166
157167 अपरश्चरस्त्वरया आर्त पीडितं यथा स्यात्तथा हर्म्यं विवेश ह किल | उपप्लवे प्रलये
157168 प्रसिद्धो जडोत्पीडो जलप्रवाह इव || २० ||
157169
157170 चर उवाच |
157171
157172 उत्तराशाबलाध्यक्षो देवारिभिरुपद्रुतः |
157173 इत आयाति सबलो भग्नसेत्वम्बुपूरवत् || २१ ||
157174
157175 हे देव || २१ ||
157176
157177 श्रीवसिष्ठ उवाच |
157178
157179 इति श्रुत्वा महीपालः कालक्षेपमवास्तवम् |
157180 मन्यमान उवाचेदं निर्गच्छन्वरमन्दिरात् || २२ ||
157181
157182 वस्तूनां वास्तूनां चाहितमवास्तवं मन्यमानः सन् वरमन्दिरान्निर्गच्छन्नेव
157183 उवाच | संनिहितान्पुरुषान्प्रतीत्यर्थः || २२ ||
157184
157185 राज्ञः सन्नह्य सामन्तानानीयन्तां च मन्त्रिणः |
157186 उद्घाट्यन्तां हेतिशाला दीयन्तां घोरहेतयः || २३ ||
157187
157188 किमुवाच | राज्ञस्तथा सामन्तान्मन्त्रिणश्च सन्नह्य युद्धसन्नाहयुक्तान्कृत्वा
157189 सर्वेऽप्यानीयन्ताम् | ल्यबन्तक्रियाकर्मणोऽनभिहितत्वात्पक्त्वौदनं भुज्यत
157190 इतिवद्द्वितीया | पक्त्वौदनो भुज्यत इति प्रयोगे त्वभिहिते प्रधानक्रियाकर्मणि प्रथमैव
157191 | क्त्वान्तक्रियायां त्वार्थिकोऽन्वयो न शाब्दः | हेतीनामायुधानां शालाः
157192 कोशगृहा उद्घाट्यन्ताम् || २३ ||
157193
157194 श्लेष्यन्तां कंकटा देहेष्वागच्छन्तु पदातयः |
157195 गण्यन्तामाशु सैन्यानि क्रियन्तां वरकल्पनाः || २४ ||
157196

157197 वरकल्पनाः भटश्रेष्ठसमर्थनाः ॥ २४ ॥
157198
157199 कल्प्यन्तां च बलाध्यक्षाः प्रेष्यन्तामभितश्चराः ।
157200
157201 श्रीवसिष्ठ उवाच ।
157202
157203 वदत्येवं त्वरायुक्तं संरम्भवति राजनि ॥ २५ ॥
157204
157205 प्रतीहार उवाचेदं प्रविश्याकुलमानतः ।
157206
157207 प्रतीहार उवाच ।
157208
157209 उत्तराशाबलाध्यक्षो देव द्वार्यवतिष्ठति ।
157210 काङ्क्षत्यब्जमिवार्कस्य देवदेवस्य दर्शनम् ॥ २६ ॥
157211
157212 देवदेवस्य राजाधिराजस्य तव ॥ २६ ॥
157213
157214 राजोवाच ।
157215
157216 गच्छाविलम्बितं तावदेनमेव प्रवेशय ।
157217 जानीमः किं दिगन्तेषु वृत्तं वृत्तान्तसंश्रवात् ॥ २७ ॥
157218
157219 वृत्तान्तस्य संश्रवात्सम्यक्श्रवणात् दिगन्तेषु किं वृत्तमिति जानीमो ज्ञास्यामः
157220 ॥ २७ ॥
157221
157222 श्रीवसिष्ठ उवाच ।
157223
157224 इत्युक्त उत्तराशेशं प्रतिहारप्रवेशितम् ।
157225 प्रणामपरमग्रेऽसौ राजाऽपश्यद्बलाधिपम् ॥ २८ ॥
157226
157227 इति राज्ञा उक्ते सति प्रतिहारप्रवेशितमुत्तराशेशमग्रे प्रणामपरं राजा अपश्यत् ॥
157228 २८ ॥
157229
157230 क्षतविक्षतसर्वाङ्गमङ्गमङ्गेषुसंततम् ।
157231 श्वासाकुलं वमद्रक्तं धैर्येणाबलनिर्जितम् ॥ २९ ॥
157232
157233 अङ्गमङ्गं प्रत्यङ्गं इषुभिः संततम् । अबलमत एव निर्जितम् । धैर्येणेति
157234 पदस्योत्तरत्र संबन्धः ॥ २९ ॥
157235
157236 स प्रणम्य त्वरायुक्तमुवाचेदमुपक्रमम् ।
157237 संस्तभ्याङ्गव्यथामाशु संततोच्छ्वासमुच्छ्वसन् ॥ ३० ॥
157238
157239 स धैर्येण अङ्गव्यथां संस्तभ्य प्रणम्य अयं वक्ष्यमाण उपक्रमो
157240 यस्मिंस्तदिदमुपक्रमं वाक्यमुवाच ॥ ३० ॥
157241
157242 बलाध्यक्ष उवाच ।
157243
157244 देव त्रयोऽपि दिक्पाला बलेन बहुना सह ।
157245 त्वदाज्ञयेव निर्जेतुं यमं यमपुरं गताः ॥ ३१ ॥
157246
157247 त्रयोऽपि प्रागुक्तास्ते दिक्पालाः सामन्ता यमपुरं गताः । मृता इति यावत् । त्वदाज्ञया
157248 यमं निर्जेतुमिवेत्युत्प्रेक्षा ॥ ३१ ॥

157249
157250 तद्देशपालनाद्यर्थमशक्तं मामिमं ततः।
157251 अनुद्रवन्तो बहवो भूपाः प्राप्ता बलादिह ॥ ३२ ॥
157252
157253 महत्परबलं प्राप्तमिदं देवस्य मण्डलम्।
157254 विधीयतां तथाप्राप्तं न देवस्यास्ति दुर्जयम् ॥ ३३ ॥
157255
157256 श्रीवसिष्ठ उवाच।
157257
157258 अथ तस्मिन्वदत्येवमार्तिमत्याजिविक्षते।
157259 सहसैवाभ्युवाचेदं प्रविश्य पुरुषोऽपरः ॥ ३४ ॥
157260
157261 प्राप्तं परबलं तथा तन्निर्जितास्मद्बलवद्दुर्दशाप्राप्तं विधीयताम् ॥ ३३ ॥
157262
157263 पुरुषा मण्डलस्यास्य विपुला दललीलया।
157264 स्थितान्यरिबलान्युच्चैश्चतुर्दिक्कं नरेश्वर ॥ ३५ ॥
157265
157266 हे नरेश्वर अस्य मण्डलस्य पुरुषादलानामश्वत्थादिपर्णानां प्रसिद्धया
157267 कम्पलीलया विपुला विस्तीर्णाः संपन्नाः। चतुर्दिक्कमरिबलान्युच्चैः स्थितानि ॥ ३५ ॥
157268
157269 कचच्चक्रगदाप्रासकुन्तकाननकान्तिभिः।
157270 वलिता नोऽरिभिर्भूमिर्लोकालोकतटैरिव ॥ ३६ ॥
157271
157272 नः भूमिररिभिर्वलिता वेष्टिता ॥ ३६ ॥
157273
157274 पताकायुधयोध्रङ्गाश्चलत्परिकराकुलाः।
157275 विसरन्ति रथास्तत्र प्रोड्डीनत्रिपुरौघवत् ॥ ३७ ॥
157276
157277 पताका आयुधानि योद्धारश्चाङ्गे येषाम् ॥ ३७ ॥
157278
157279 करानुन्नामयन्तः खे मांसवृक्षवनोपमाः।
157280 बृंहन्ति वारणव्यूहा वर्षावारिदवृन्दवत् ॥ ३८ ॥
157281
157282 करान् शुण्डाग्राणि। वर्षासु प्रसिद्धवारिदवृन्दवत् बृंहन्ति गर्जन्ति ॥ ३८ ॥
157283
157284 नतोन्नतानि कुर्वन्तः स्पन्देनोर्वीनतोन्नतैः।
157285 हेषन्ते हयसंघाता वातस्पन्दमहाब्धिवत् ॥ ३९ ॥
157286
157287 स्पन्देन गतिक्रमेण उर्वीनतोन्नतैः सदृशानि नतोन्नतानि कुर्वन्तः। वातेन स्पन्दन्त
157288 इति वातस्पन्दैर्महाब्धिभिस्तुल्यं हेषन्ते ॥ ३९ ॥
157289
157290 रसन्ति तुरगापुराः फेनिलावर्तपातिनः।
157291 सर्वतो बलयाकारा लवणार्णववारिवत् ॥ ४० ॥
157292
157293 रसन्ति ध्वनन्ति। फेनिलाश्च ते आवर्तवत्पातिनो भ्रमन्त इति यावत् ॥ ४० ॥
157294
157295 आकाशकान्तिसन्नाहैर्दिशं प्रति बलं बलम्।
157296 उदेत्यलघुकल्लोलैः प्रलयार्णवपूरवत् ॥ ४१ ॥
157297
157298 आकाशवत्स्वच्छकान्तिभिः कवचशस्त्रादिसंनाहैरुपलक्षितं बलं दिशं दिशं
157299 प्रति उदेति। वीप्साव्यत्यासश्छान्दसः ॥ ४१ ॥
157300

शरास्त्रशस्त्रसन्नाहमुकुटाभरणत्विषः ।
कचन्ति त्वत्प्रतापाग्नेर्ज्वाला इव तदङ्गगाः ॥ ४२ ॥

तेषां बलानामङ्गगाः शरास्त्रशस्त्रादित्विषस्त्वत्प्रतापाग्नेर्ज्वाला इव कचन्ति ॥ ४२ ॥

समत्स्यमकरव्यूहाः सचक्रावर्तवृत्तयः ।
उद्यन्ति सैन्यसंघट्टैः कल्लोला जलधेरिव ॥ ४३ ॥

मत्स्यमकराद्याकारैर्व्यूहैः सहिताः । उदधिपक्षे स्पष्टम् । कल्लोला
बृहत्तरङ्गाः सैन्यप्रसरभेदाश्च ॥ ४३ ॥

परस्परपरामर्शात्कुन्ताद्यायुधपङ्क्तयः ।
कोपादिवोग्रहुंकारैर्ज्वलन्ति विरटन्ति च ॥ ४४ ॥

उग्रैर्हुंकारैर्हुंकारप्रायैर्झणत्कारैः ॥ ४४ ॥

इति कर्तुमहं देव विज्ञप्तिं स्वामिनेरितः ।
तस्मान्मण्डलसीमान्तगुल्माद्युद्धाय गच्छता ॥ ४५ ॥

स्वामिना त्वत्सामन्तेन त्वत्समीपे ईरितः प्रेषितः ॥ ४५ ॥

तमहं देव गच्छामि शक्त्यृष्टिशरसंगतः ।
मयेहावेदितं सर्वं देवो जानात्यतः परम् ॥ ४६ ॥

तं प्रेषयितारमहं शक्त्यृष्टिशरैः संगतः संनद्धः सन् गच्छामि ।
तदीयवचनं सर्वमिह त्वत्पुरो मया आवेदितं विज्ञापितम् । अतः परं यत्कर्तव्यं
तद्देवो जानाति नाहमित्यर्थः ॥ ४६ ॥

श्रीवसिष्ठ उवाच ।

इत्युक्त्वाथ प्रणामं च स कृत्वा त्वरया ययौ ।
कृत्वा गुलुगुलारावं शान्तो वीचिरिवाम्बुधेः ॥ ४७ ॥

संभ्रान्तमन्त्रिनृपयोधनियोगिनागनारीरथाश्वपरिचारकनागरौघम् ।
राज्ञो गृहं स्वभयतोलितहेतिसार्थं चण्डानिलाकुलमहावनतुल्यमासीत् ॥ ४८ ॥

संभ्रान्ता मन्त्रिणो नृपा योधा नियोगिनो राजनियोगानुष्ठातारो नागा गजा नार्यो
रथा अश्वाः परिचारकाः परिचर्याकारिणो नागरौघा यस्मिन् । स्वभयेन तोलिता उद्यता
हेतयो यैस्तथाविधाः सार्था जन्तुसंघा यत्र । अलिहतेतिसार्थम् इति पाठे अलय इव हता
उपगता ईतिसार्था ईतिसमूहा यस्मिंस्तथाविधं राज्ञो गृहं चण्डानिलाकुलेन
महावनेन तुल्यं तुलनार्हमत्यन्तव्याकुलमासीदित्यर्थः ॥ ४८ ॥

इत्यार्षे श्रीवा० वा०दे० मो० नि० उ० अविद्योपाख्यानान्तर्गतविपश्चिदुपा० अविद्याक्षेपणे
पार्थिवसंरम्भवर्णनं नामाष्टोत्तरशततमः सर्गः ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
पार्थिवसंरम्भवर्णनं नामाष्टोत्तरशततमः सर्गः ॥ १०८ ॥

नवाधिकशततमः सर्गः १०९

श्रीवसिष्ठ उवाच ।

157353 एतस्मिन्नन्तरे सर्वे मन्त्रिणो नृपमाययुः।
157354 मुनयो वासवमिव दैत्याक्रान्तनभोभुवम्॥ १॥
157355
157356 इह मन्त्रिवचः श्रुत्वा हुतदेहस्य पावकात्।
157357 राज्ञश्चतुर्भिर्देहैर्द्राक्समुत्थानमुदीर्यते॥
157358
157359 दैत्यैराक्रान्ते नभश्च भूश्चेत्येते यस्य। नभसि भवतीति नभोभूः स्वर्गलोको
157360 यस्य तथाविधं वासवं मुनय इव॥ १॥
157361
157362 मन्त्रिण ऊचुः।
157363
157364 देव निर्णीतमस्माभिर्यावन्न विषयोऽरयः।
157365 त्रयाणामप्युपायानां दण्डस्तेषु विधीयताम्॥ २॥
157366
157367 यावदिति साकल्ये। विचार्य सकलं निर्णीतमित्यर्थः। किं निर्णीतम्।
157368 अरयस्त्रयाणामप्युपायानां सामदानभेदानां विषयो न॥ २॥
157369
157370 प्रणयोऽनुप्रवेशो वा न कदाचन यः कृतः।
157371 अधुना तेषु तं देव कुर्यात्तेषु कथैव का॥ ३॥
157372
157373 प्रणयो दानमानादिना स्नेहः। अनुप्रवेशः स्वपक्षीयाणामेव
157374 केषांचिच्छरणागतिच्छलेन काकोलूकन्यायेन तद्वधायान्तःप्रवेशः। तेषु
157375 शत्रुषु तेषु तादृशेषु यशोहरेषूपायेषु कर्तव्यताकथैव का॥ ३॥
157376
157377 पापा म्लेच्छा धनाढ्याश्च नानादेश्याः सुसंहताः।
157378 बहवो लब्धरन्ध्राश्च सामादेर्नास्पदं द्विषः॥ ४॥
157379
157380 किंचिद्विश्वासार्हेषु अनाढ्येषु सामदानोपायप्रवृत्तिरेते तु न तादृशा इत्याह ##-
157381
157382 तत्सुसाहसमेवेदं वर्जयित्वा प्रतिक्रिया।
157383 नान्यास्ति शीघ्रमेवातो रणोद्योगो विधीयताम्॥ ५॥
157384
157385 वीराणां दीयतामाज्ञा पूज्यन्तामिष्टदेवताः।
157386 आहूयन्तां च सामन्ता हन्यतां रणदुन्दुभिः॥ ६॥
157387
157388 सन्नह्यन्तामशेषेण निर्गच्छन्तु रणे भटाः।
157389 क्रियन्तां कालकम्पाभ्रमेदुरा राजिता दिशः॥ ७॥
157390
157391 भटाः सन्नह्यन्ताम्। ततो रणे निर्गच्छन्तु। दिशः अर्थाद्गजघटाभिः कालवर्णैः
157392 कल्पाभ्रैरिव राजिताः क्रियन्ताम्॥ ७॥
157393
157394 आस्फाल्यन्तां धनूंष्युच्चैः क्वणन्तु गुणपङ्क्तयः।
157395 भवन्तु जलदश्यामाः ककुभः खण्डमण्डलैः॥ ८॥
157396
157397 गुणपङ्क्तयो मौर्वीश्रेणयः। खण्डमण्डलैरर्धमण्डलसदृशैर्धनुर्भिः॥
157398 ८॥
157399
157400 स्फुरज्ज्याविद्युतः शूरवारिदा घनगर्जिताः।
157401 नाराचधारा मुञ्चन्तु कचत्कोदण्डकुण्डलाः॥ ९॥
157402
157403 घनं गर्जितं सिंहनादो येषां तथाविधाः शूरवारिदा नाराचलक्षणा जलधारा
157404 मुञ्चन्तु। कचन्ति कोदण्डकुण्डलानि येषाम्॥ ९॥

राजोवाच।

गम्यतां सङ्गरायाशु संविधानं विधीयताम्।
स्नात्वाहं पूजयित्वाग्निं निर्गच्छामि रणाजिरम्॥ १०॥

संविधानं नगरगुप्तिव्यूहरचनादि॥ १०॥

इत्युक्त्वा नृपतिः स्नातो महारम्भोऽपि स क्षणात्।
प्रावृषीव नवोद्यानं गङ्गाजलधरैर्घटैः॥ ११॥

प्रावृषि नवोद्यानमिव क्षणात्स्नातः। महारम्भोऽपीत्यनेनावश्यकान्यप्यन्यानि
कार्याणि त्यक्त्वेति गम्यते॥ ११॥

अथ प्रविष्टोऽग्निगृहं पूजयित्वा हुताशनम्।
आदरेण यथाशास्त्रं चिन्तयामास भूमिपः॥ १२॥

चिन्तयामास वक्ष्यमाणार्थमित्यर्थः॥ १२॥

नीतमायुरनायासविलासविभवश्रिया।
प्रजाभ्यो दत्तमभयमासमुद्रसमुद्रितम्॥ १३॥

समुद्रितं शासनमुद्रासहितम्॥ १३॥

आक्रान्तवसुधापीठाः पादपीठे कृता द्विषः।
लताः फलभरेणेव नमिताः ककुभो दश॥ १४॥

दशापि ककुभो दिशः करादिफलभरेण लता इव वमिताः कृताः॥ १४॥

प्रजाचित्तेन्दुबिम्बेषु लिखितं धवलं यशः।
भूमावारोपिता कीर्तिलता त्रिपथगामिनी॥ १५॥

प्रजाचित्तलक्षणेष्विन्दुबिम्बेषु लिखितं विन्यस्तम्। पूरितमिति यावत्। यशसः
कलासाम्यमनुक्तमपि गम्यते। कीर्तिलतालक्षणा त्रिपथगामिनी गङ्गा।
त्रिपथगामिनीति रूपणात्कीर्तिलताया ऊर्ध्वाधोलोकयोरपि वृद्ध्या
प्रतानव्याप्तिर्गम्यते॥ १५॥

कोशवद्भरिता रत्नैः सुहृन्मित्रार्यबन्धवः।
निपीतोऽर्णवतीरेषु नालिकेररसासवः॥ १६॥

आर्याः पूज्या ब्राह्मणाः। अर्णवतीरेष्वित्युक्त्या चतुःसमुद्रान्तं दिग्विजयो गम्यते॥
१६॥

द्विषामाकम्पिता भेकगलाङ्गत्वगिवासवः।
मच्छासनाङ्किता जाता द्वीपान्तरकुलाचलाः॥ १७॥

द्विषां असवः प्राणाः भेकानां रटनकाले गललक्षणे अङ्गे प्रसिद्धा त्वगिव
आकम्पिताः॥ १७॥

विहृतं सिद्धसेनासु दिगन्तनवभूमिषु।
भूम्यन्तभूभृतां मूर्ध्नि विश्रान्तं मेघलीलया॥ १८॥

157457 दिगन्ते प्रसिद्धसु नवासु अपूर्वासु काञ्चनादिभूमिषु | भूम्यन्तभूभृतां
157458 लोकालोकान्तानां प्रत्यन्तदेशराजानां च || १८ ||
157459
157460 धियेवोच्चैःपदे ज्ञानपूर्णयैकान्तशीलया |
157461 विलब्धान्यविनष्टानि राष्ट्रानीष्टार्थकारिणा || १९ ||
157462
157463 दृष्टान्तान्तरमाह - धियेवेति | यथा ज्ञानपूर्णया धिया
157464 एकान्तसमाधिशीलया उच्चैःपदे ब्रह्मणि विश्रान्तं तद्वत् प्रजानामिष्टार्थकारिणा
157465 मया राष्ट्राण्यविनष्टानि विवृद्धानि लब्धानि || १९ ||
157466
157467 रक्षांस्यप्यविनीतानि बद्धानि निगडैर्घनैः |
157468 धर्मार्थकामैरन्योन्यं चयापचयवर्जितैः || २० ||
157469
157470 अविनीतान्यविनययुक्तानि लङ्कादिनिलयानि रक्षांस्यपि घनिर्निगडैर्बद्धानि || २० ||
157471
157472 अखण्डितैर्मया नीतं पीतातियशसा वयः |
157473 इदानीं शष्पविश्रान्तप्रालेयभरभासुरम् || २१ ||
157474
157475 अन्योन्यमखण्डितैः चयेन उपचयेन अपचयेन च वर्जितैः | समसंचितैरिति यावत् |
157476 धर्मार्थकामैर्वयो नीतम् | पीतातियशसेव सांप्रतं जराधवलेन मया शष्पेषु
157477 तृणाङ्कुरेषु विश्रान्तप्रालेयातिशय इव भासुरं धवलं वार्धकमागतमिति
157478 परेणान्वयः | शक्यविश्रान्त इति पाठे घनीभवितुं शक्येषु पलालादिषु विश्रान्तेति
157479 व्याख्येयम् || २१ ||
157480
157481 आगतं वार्धकं सर्वभोगसंरम्भमार्जनम् |
157482 तस्योपर्यरयो रौद्रा बलवन्तो रणैषिणः || २२ ||
157483
157484 तस्य वार्धकस्योपरि | तस्मिन्सतीति यावत् || २२ ||
157485
157486 संभूय सर्वतः प्राप्ताः संदिग्धो वर्तते जयः |
157487 तदिहैवानलायास्मै देवाय जयदायिने || २३ ||
157488
157489 मस्तकाहुतिमेवेमां समुद्यम्य ददामि वै |
157490
157491 राजोवाच |
157492
157493 कृशानो देव मूर्धाऽयं तुभ्यमाहुततां गतः || २४ ||
157494
157495 मया पूर्वं पुरोडाश इव देवेश दीयते |
157496 यदि तुष्टोऽसि भगवंस्तदनेन कृतेन मे || २५ ||
157497
157498 पूर्वमिष्टिषु पुरोडाश इव इदानीमयं मूर्धा दीयते | यदि मे तुष्टोऽसि तत्तर्हि अनेन
157499 कृतेन कर्मणा || २५ ||
157500
157501 चत्वारो भवतः कुण्डात्स्वदेहाः प्रोद्भवन्तु मे |
157502 बलवन्तः श्रिया दीप्ता नारायणभुजा इव || २६ ||
157503
157504 चत्वारो भवतः कुण्डात्स्वदेहा मे प्रोद्भवन्तु || २६ ||
157505
157506 तैश्चतुर्दिक्कमेवारीन्वध्यामहमविघ्नतः |
157507 त्वया च दर्शनं देयं मह्यं मतिमते विभो || २७ ||
157508

वध्यां वध्यासम् | सलोपश्छान्दसः | मतिमते त्वद्दर्शनेच्छया त्वत्स्मृतिमते ||
२७ ||

श्रीवसिष्ठ उवाच |

इत्युक्त्वा स महीपालः खड्गमादाय चिच्छिदे |
शिरः कमलमालोलं लीलयेवाशु बालकः || २८ ||

लीलया बालकः कमलमिव स महीपालः शिरश्चिच्छिदे || २८ ||

छिन्नमेष शिरो यावज्जुहोत्यसितवर्त्मने |
तावच्छरीरेण सह पपाताग्नौ स पार्थिवः || २९ ||

असितवर्त्मने कृष्णवर्त्मने | शरीरेण कबन्धेन सह || २९ ||

भुक्त्वाथ वह्निस्तं देहं ददावस्मै चतुर्गुणम् |
महतामुपयुक्तं हि सद्य एवाभिवर्धते || ३० ||

भुक्त्वा हविष्ट्वेनोपयुज्य | महतामुपयुक्तम् महद्भिः स्वीकृतमित्यर्थः || ३० ||

चतुर्मूर्तिरथोत्तस्थौ पावकाद्वसुधाधिपः |
प्रज्वलंस्तेजसां पुञ्जैर्नारायण इवार्णवात् || ३१ ||

ते देहास्तस्य चत्वारो विरेजुर्भास्वरत्विषः |
सहजातोत्तमोत्तंसभूषणायुधवाससः || ३२ ||

सहैव जातानि उत्तमान्युत्तंसभूषणायुधवासांसि येषाम् || ३२ ||

सकंकटशिरस्त्राणाः समौलिकटकाङ्गदाः |
सहारकुण्डलाभोगाः सर्वाः सर्वे महाशयाः || ३३ ||

मौलिपदेन तद्भूषणानि शिरोरत्नादीनि लक्ष्यन्ते | सर्वान् अवन्ति रक्षन्तीति सर्वाः |
वेरपृक्तलोपाद्वलिलोपः पूर्वविप्रतिषेधेनेति वलिलोपे पूर्वसवर्णदीर्घः || ३३ ||

सर्व एव समाकाराः सदृशावयवान्विताः |
चञ्चलोच्चैःश्रवःप्रख्यं हयरत्नमवस्थिताः || ३४ ||

अवस्थिता अधिरूढाः || ३४ ||

ससुवर्णशरापूर्णतूणीराः सुमहाशयाः |
समानगुणकोदण्डाः समानवपुषः शुभाः || ३५ ||

ससुवर्णपदं शरैस्तूणीरैश्च संबध्यते || ३५ ||

समारोहन्ति ते यस्मिन्पुंसि नागे रथे हये |
सर्वेषामरिदोषाणां नैव गम्यो भवत्यसौ || ३६ ||

अपरमसाधारणं गुणमाह - समारोहन्तीति | ते देहा यस्मिन्पुंसि शिबिकावाहे
नागे गजे रथे हये वा समारोहन्ति | असौ नरो नागादिश्च
सर्वेषामरिप्रयुक्तमन्त्रयन्त्रकृत्याशस्त्रास्त्रादिदोषाणां नैव गम्यः प्राप्यो
भवतीति || ३६ ||

157561 पीत्वा धृत्वा चिरं कालं गर्भे पुरुषतापिताः ।
157562 वेद्यामिव हितास्तत्र सागरा वडवार्चिषा ॥ ३७ ॥
157563
157564 किं ते देहाश्चत्वारः सागराः वडवार्चिषा मात्रा प्रथमं पीत्वा ततो गर्भे चिरं
157565 कालं धृत्वा पुरुषतां पुरुषाकारं आपिताः प्रापिताः
157566 ततस्तत्राग्निकुण्डवेद्यामाहिताः प्रसूता इवेत्युत्प्रेक्षा ॥ ३७ ॥
157567
157568 रत्नाश्वदेहकुसुमोत्करपूर्णदेहाश्चत्वार इन्दुहसितैरवभासयन्तः ।
157569 सन्मूर्तयो हरय एव यथाब्धयो वा वेदा इवाहुतिहुतादनलात्प्रसस्रुः ॥ ३८ ॥
157570
157571 किं च रत्नभूषितेषु रत्नभूतेषु च अश्वदेहेषु कुसुमोत्करैः पूर्णदेहा
157572 इन्दुसदृशैर्हसितैर्दिशोऽवभासयन्तस्त चत्वारो विपश्चित आहुतिभिर्हुतादनलाच्चत्वारो
157573 हरयो विष्णव एव यथा सन्मूर्तयो मूर्तिमन्तः । अब्धयो वा यथा तथा मूर्तिमन्तो
157574 वेदा इव वा प्रसस्रुर्निर्जग्मुः ॥ ३८ ॥
157575
157576 इत्यार्षे श्रीवासिष्ठ० वाल्मी० मो० निर्वा० उ० अवि० वि० अग्निप्रवेशाद्देहलाभो नाम
157577 नवाधिकशततमः सर्गः ॥ १०९ ॥
157578
157579 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
157580 अग्निप्रवेशाद्देहलाभो नाम नवाधिकशततमः सर्गः ॥ १०९ ॥
157581
157582 दशाधिकशततमः सर्गः ११०
157583
157584 श्रीवसिष्ठ उवाच ।
157585
157586 पुरोपकण्ठसंप्राप्तैश्चतुर्दिक्कं सहारिभिः ।
157587 एतस्मिन्नन्तरे तत्र प्रवृत्तं दारुणंन् रणम् ॥ १ ॥
157588
157589 पुरोपकण्ठं संप्राप्तैश्चतुर्दिक्षु सहारिभिः ।
157590 प्रवृत्तं दारुणं युद्धं विस्तरेणात्र वर्ण्यते ॥
157591
157592 पुरस्योपकण्ठे समीपे संप्राप्तैररिभिः सह रणं युद्धं प्रवृत्तम् ॥ १ ॥
157593
157594 लुण्ठितग्रामनगरं प्रजाकुलमहाकुलम् ।
157595 अग्निदाहज्वलद्देहं धूमाभ्रपटलावृतम् ॥ २ ॥
157596
157597 प्रजानां कुलं महाव्याकुलं यत्र ॥ २ ॥
157598
157599 शरजालमहाधूमच्छन्नार्कविलसत्तमः ।
157600 क्षिप्रदृष्टरवि क्षिप्रमदृष्टरविमण्डलम् ॥ ३ ॥
157601
157602 शरजालैर्महाधूमैश्च च्छन्नेनार्केण विलसत्तमो यत्र ॥ ३ ॥
157603
157604 अग्निदाहमहातापप्रतपत्पर्णकाननम् ।
157605 लोलालातलताशूलमुसलोपलपूर्णखम् ॥ ४ ॥
157606
157607 प्रतपत्पर्णानि शुष्यत्पत्राणि काननानि यत्र । लोलैरलातलतादिभिः पूर्णं खं यत्र ॥
157608 ४ ॥
157609
157610 अनलप्रतिबिम्बौघौर्द्विगुणज्वलनायुधम् ।
157611 रणभग्नमहाशूरप्राप्तेन्द्रवनितासुधम् ॥ ५ ॥
157612

157613 द्विगुणज्वलनानि द्विगुणदीप्तानि आयुधानि यत्र। रणभग्नैर्महाशूरैः प्राप्ता
157614 इन्द्रवनिता अप्सरसः सुधा च यत्र॥ ५॥
157615
157616 उद्दामवारणारावै रणलम्पटहर्षदम्।
157617 भुशुण्डीमण्डलप्रासशूलतोमरवर्षदम्॥ ६॥
157618
157619 रणलम्पटानां रणोत्सुकानां शूराणां हर्षदम्॥ ६॥
157620
157621 भटकोलाहलोल्लासहृद्भङ्गमृतपामरम्।
157622 रजःपटलशुभ्राभ्रकृतद्युपथवारणम्॥ ७॥
157623
157624 भटानां कोलाहलोल्लासश्रवणमात्रेण हृद्भङ्गान्मृताः पामराः कातरा
157625 यत्र। द्युपथवारणं अन्तरिक्षमार्गनिरोधः॥ ७॥
157626
157627 मरणव्यग्रसामन्तमुक्तनादव्रजद्व्रजम्।
157628 इतश्चेतश्च निपतद्वैद्युतोपहतप्रजम्॥ ८॥
157629
157630 मरणे व्यग्राणां सामन्तानां मुक्तनादं यथा स्यात्तथा व्रजन्तो व्रजाः स्तोमा
157631 यत्र। वैद्युतेनोत्पाताग्निना उपहताः प्रजा यत्र॥ ८॥
157632
157633 अग्निदग्धपतद्गेहप्रोज्झिताग्निमयाम्बुदम्।
157634 मरणाह्लाददासंख्यशरधारामयाम्बुदम्॥ ९॥
157635
157636 अग्निदग्धैः पतद्भिर्गेहैः प्रोज्झिता निर्मुक्ता अग्निमया अग्निवर्षिणो धूमाम्बुदा
157637 यत्र॥ ९॥
157638
157639 जितसागरकल्लोलं तुरङ्गमतरङ्गकैः।
157640 दन्तिदन्तविनिष्पेषतारक्रेंकारकर्कशम्॥ १०॥
157641
157642 कोटकोटिकुटीकुड्यकण्टकोद्भटसद्भटम्।
157643 चटत्कुण्ठितकोटाट्टकूटाटननटच्छटम्॥ ११॥
157644
157645 कोटानां दुर्गाणां कोटिषु संक्रमेषु याः कुट्यस्तदीयकुड्येषु
157646 कण्टकवच्छरावापे उद्भटाः सद्भटा यत्र। कंकटोद्भट इति पाठे
157647 वारबाणैरुद्भासमानाः सद्भटा यत्र। चटत्सु वह्निना वेष्ट्यमानेष्वत एव
157648 कुण्ठितेषु कोटाट्टकूटेषु संक्रमाट्टालशिखरेषु अटनैर्नटन्तो वह्निच्छटा
157649 यत्र॥ ११॥
157650
157651 लुठत्पटनकुट्टाकसाटोपस्फुटपट्टिशम्।
157652 खे वटत्केतुपट्टाट्टपटत्पटपटारवम्॥ १२॥
157653
157654 लुठन्ति पटनकुट्टाकानि गमनविच्छेदकानि साटोपस्फुटानि पट्टिशानि यत्र। खे
157655 वटन्तो वेष्टन्तः केतुपट्टा येषु तथाविधेष्वट्टेषु पटत्पटपटारवा यत्र॥ १२॥
157656
157657 दन्तिदन्तगुणोद्गीर्णैर्हेतिपाषाणघर्षणैः।
157658 तारक्रेंकारहुंकारैराहूतसुरवारणम्॥ १३॥
157659
157660 दन्तिनां दन्तगुणानां शौक्ल्यादीनामुद्गीर्णैरुद्गीरणैर्हेतीनामायुधानां
157661 पाषाणेषु घर्षणैर्घट्टनैस्तारैः क्रेंकारैर्हुंकारैश्च
157662 युद्धोत्साहजननादाहूता इव सुरवारणा दिग्गजा यत्र॥ १३॥
157663
157664 वहच्छरनदीपूरपूर्णाम्बरमहार्णवम्।

157665 विचलच्चक्रकुन्तासिधारामकरकर्कशम् ॥ १४ ॥
157666
157667 वहद्भिः शरनदीपूरैः पूर्णः अम्बरलक्षणो महार्णवो यत्र ॥ १४ ॥
157668
157669 उन्नादयोधसंघट्टकंकटोत्कटटांकृतैः ।
157670 लसज्झणझणारावैर्घटितद्वीपमण्डलम् ॥ १५ ॥
157671
157672 उन्नादानां योधानां संघट्टेषु कंकटानां
157673 वारबाणानामुत्कटैष्टांकृतैर्लसद्भिर्झणझणारावैश्च घटितानि व्याप्तानि
157674 द्वीपमण्डलानि यत्र ॥ १५ ॥
157675
157676 पादपातपरापिष्टशरसंजातकर्दमम् ।
157677 वहद्रक्तनदीरंहःप्रोह्यमाणरथद्विपम् ॥ १६ ॥
157678
157679 सुपर्णहेलानिपतत्प्रोत्पतत्पट्टपट्टिशम् ।
157680 शरवारितरङ्गार्तभग्नायुधजलेचरम् ॥ १७ ॥
157681
157682 शरलक्षणैर्वारितरङ्गैरार्तानां भग्ना आयुधजलेचरा यत्र ॥ १७ ॥
157683
157684 हेतिसंघट्टनिष्क्रान्तज्वालाप्रज्वलिताम्बरम् ।
157685 वलीपलितनिर्मुक्तशूराक्रान्तत्रिविष्टपम् ॥ १८ ॥
157686
157687 देवभावप्राप्त्या वलीपलितनिर्मुक्तैः शूरैराक्रान्तं त्रिविष्टपं यत्र ॥ १८ ॥
157688
157689 पाण्डुपांसुपयोवाहकचच्चक्राचिरद्युति ।
157690 हेतिनिर्विवराकाशयुधानाधारभूतलम् ॥ १९ ॥
157691
157692 पाण्डुषु पांसुलक्षणेषु पयोवाहेषु कचच्चक्रलक्षणा अचिरद्युतयो विद्युतो यत्र ।
157693 हेतिभिर्निर्विवरं निरवकाशं युधानां संप्रहाराणामनाधारं भूतलं यत्र ॥
157694 १९ ॥
157695
157696 कटद्भटभटाटोपरटत्प्रतिभटोत्कटम् ।
157697 चटच्छकटसंघट्टपिष्टकाष्ठलुठद्रथम् ॥ २० ॥
157698
157699 कटन्तः शरान्वर्षन्तो ये भटेभ्योऽपि भटास्तेषामाटोपैः
157700 रटद्भिस्तत्प्रतिभटैरुत्कटम् । तथा चटतां भुवमाबृण्वानानां शकटानां
157701 संघट्टैः पिष्टेषु रथान्तरकाष्ठेषु लुठन्तो रथा यत्र ॥ २० ॥
157702
157703 कबन्धभटवेतालमिश्रकण्टकसंकटम् ।
157704 वेतालभुज्यमानाग्र्यशवमांसहृदम्बुजम् ॥ २१ ॥
157705
157706 कबन्धादिभिर्मिश्रा ये कण्टकाः शत्रवस्तैः संकटं दुरवगाहम् ॥ २१ ॥
157707
157708 शूरशातितशीरार्धशिरःकरखुरोरुकम् ।
157709 कबन्धदोर्द्रुमस्पन्दवनीकृतनभस्तलम् ॥ २२ ॥
157710
157711 शूरैःशातितं शीरार्धं शिरार्धम् । छान्दसो दीर्घः । शिरांसि करादिकं च यत्र ॥
157712 २२ ॥
157713
157714 तरल्लोलास्यवेतालहासघट्टितपेटकम् ।
157715 कंकटोत्कटसाटोपभटभ्रुकुटिभीषणम् ॥ २३ ॥
157716

157717 तरद्भिः प्लवद्भिर्लोलास्यैर्वेतालैः प्रहर्षाद्धासैर्घट्टितानि शवैः पूरितानि
157718 पेटकानि स्वकरण्डानि यत्र कंकटैरुत्कटानां साटोपानां भटानां
157719 भ्रुकुटिभिर्भीषणम् ‖ २३ ‖
157720
157721 एकान्तमारणैकान्तमरणैकान्तभूषणम् ।
157722 प्रहारदानग्रहणकार्पण्यापारदूषणम् ‖ २४ ‖
157723
157724 एकान्तेन नियमेन मारणं मरणं चेत्युभयमपि शूराणामेकान्तभूषणं यत्र
157725 । प्रहाराणां दाने ग्रहणे च कार्पण्यमसामर्थ्यमेवापारं दूषणं निन्दा यत्र
157726 ‖ २४ ‖
157727
157728 शूरवारणसामन्तमदवारिविशोषणम् ।
157729 मारणैकान्तरसिककृतान्तानन्दपोषणम् ‖ २५ ‖
157730
157731 अविकत्थनगुप्तानां शूराणां जयघोषणम् ।
157732 अशूराणां च गुप्तानां प्रभावुद्‌घोषणंन् परम् ‖ २६ ‖
157733
157734 अविकत्थनेन स्वमुखेन स्वशौर्यानभिलापेन गुप्तानां प्रच्छन्नानां शूराणां
157735 कियवैव रणे तच्छौर्यदर्शिजनमुखेन प्रभौ जयघोषणं तथा
157736 गुप्तानामशूराणां च प्रभौ अशौर्योद्‌घोषणं यत्र ‖ २६ ‖
157737
157738 शौर्यादीनां प्रसुप्तानां स्वगुणानां प्रबोधनम् ।
157739 धनमाधारभूतानां राष्ट्रेषु भुजशालिनाम् ‖ २७ ‖
157740
157741 भुजशालिनामत एव राष्ट्रेषु दुर्बलानामाधारभूतानां शूराणाम् । धनं
157742 धनवत्प्रियम् ‖ २७ ‖
157743
157744 दन्त्यारूढरथास्फोटप्रभग्नकटवारणम् ।
157745 समस्तमत्तगन्धेभदानवारिनिवारणम् ‖ २८ ‖
157746
157747 दन्त्यारूढानां रथानां च परस्परमास्फोटे युद्धे प्रभग्नकटा वारणा यत्र ।
157748 समस्तानां मत्तगन्धेभानां दानवारिणां मदजलानां निवारणं विशोषणम् ‖
157749 २८ ‖
157750
157751 सारसारवसामन्तमुक्तमत्तमतङ्गजम् ।
157752 जरज्जितकरानीककल्पितासीकवेदनम् ‖ २९ ‖
157753
157754 मत्तमतङ्गजेषु सरसि प्रविष्टेषु सारसैरिव आरवेणाक्रोशेन सामन्तैस्तरुणैरपि
157755 पलायमानैर्मुक्ता मत्तमतङ्गजा यत्र । ततो जरद्भिरपि खड्‌गविद्यायां
157756 जितकराणामनीकैः कल्पितं समर्थितं असिः प्रहरणं येषां ते आसीकास्तद्वेदनं
157757 तद्भावप्रकटनं यत्र [जरद्भिरपि
157758 खड्‌गविशारदैरावेशवशात्स्वविद्याकौशलं प्रकटितमित्यर्थः ।] ।
157759 शक्तियष्ट्योर्विहित ईकक् छान्दसत्वादसेः कृतः ‖ २९ ‖
157760
157761 दिनं दिनकरस्येव नृपस्य शरणं गतम् ।
157762 अनागतभटव्रातपिष्टार्धमृतमानवम् ‖ ३० ‖
157763
157764 क्वचित् अनागतेष्वेव भटव्रातेषु तदागमनभ्रान्त्या पलायने परस्परपादतलपिष्टा
157765 अर्धमृतप्राया मानवा यत्र । अत एव दिनं दिनकरस्येव नृपस्य पादौ शरणं
157766 गतम् ‖ ३० ‖
157767
157768 मानवायुबलोन्मत्तनतप्रारब्धकुट्टनम् ।

157769 धनानां प्राणपण्यानां नवमापणपत्तनम् ॥ ३१ ॥
157770
157771 मानोऽभिमानस्तल्लक्षणोन्मादवायुबलेनोन्मत्तैर्नतैष्वपि प्रारब्धं कुट्टनं यत्र
157772 । प्राणैः पण्यानां धनानां नवमापणस्थानभूतं पत्तनम् ॥ ३१ ॥
157773
157774 पटनद्धपताकौघजातसंचारिदोर्द्रुमम् [पटनद्धाः पताकौघा एव
157775 संचारिणो दोर्द्रुमा अभूवन् ।] ।
157776 रक्तोज्ज्वलत्वात्त्रैलोक्यलक्ष्म्या भूषणविद्रुमम् ॥ ३२ ॥
157777
157778 मन्दराहननोद्भूतक्षीरोदजलसुन्दरैः ।
157779 छत्रैश्छादितहेत्योघपुष्पाढ्यगगनाङ्गनम् ॥ ३३ ॥
157780
157781 गणगीर्वाणगन्धर्वगीतशूराशयं कृतम् ।
157782 तद्भ्रातरलतालाग्रहेतिहालाहलायुधम् ॥ ३४ ॥
157783
157784 गणैः प्रमथैर्गन्धर्वैर्गीर्वाणैश्च गीताः शूराणामाशया उत्साहादयो यत्र ।
157785 तेषां गणानां गन्धर्वादीनां भाभिस्तरलैस्तालाग्रैर्ध्वजाग्रैर्हेतिहालाभिश्च
157786 सोन्मादत्वाद्धलायुधभूता [हलायुधो बलरामः ।] भटा यत्र ॥ ३४ ॥
157787
157788 संघप्रहरणासंख्ययातुधानाझणज्झणम् ।
157789 भुक्त्वा चाद्रिगुहागेहपूरितापूर्वदुर्द्रुमम् ॥ ३५ ॥
157790
157791 संघं संभूय लीलया प्रहरणं येषां
157792 तथाविधैरसंख्यैर्यातुधानैरझणज्झणं निःशब्दं स्वयं भुक्त्वा
157793 चकाराच्छवादिभारान्नीत्वा अद्रिगुहालक्षणे स्वगेहे पूरिता भोजिता अन्येऽप्यशेषा
157794 दुर्द्रुमा विषवृक्षप्राया यातुधाना यत्र ॥ ३५ ॥
157795
157796 कचत्कुन्तवनव्यस्तशिरःकरवृताम्बरम् ।
157797 क्षेपणोन्मुक्तपाषाणपूरप्लुतककुब्लतम् ॥ ३६ ॥
157798
157799 कचद्भिः कुन्तवनैः कुन्तारण्यप्रायैः कुन्तधरैर्व्यस्तैश्छित्त्वा क्षिप्तैः शिरोभिः
157800 करैश्च वृताम्बरम् ॥ ३६ ॥
157801
157802 महाचटचटाशब्दस्फुटद्रवबृहद्द्रुमम् ।
157803 नारीहलहलारावरणन्नगरमन्दिरम् ॥ ३७ ॥
157804
157805 भुजास्फोटनजैर्महाचटचटाशब्दैः स्फुटतामिव रवो येषां तथाविधा
157806 बहुद्द्रुमा यत्र ॥ ३७ ॥
157807
157808 मन्दरावानलाकारनभोभातायुधव्रजम् ।
157809 परित्यज्य धनं गेहं दूरोर्वीविद्रुतप्रजम् ॥ ३८ ॥
157810
157811 सर्वतोहेतिवहनात्समक्षप्रेक्षकोज्झितम् ।
157812 वर्जितं भीरुभिः पक्षिराजवृन्दमिवाहिभिः ॥ ३९ ॥
157813
157814 हेतीनामायुधानां सर्वतोवहनात्प्रवहणात्सर्वतः प्रेक्षकैर्भयादुज्झितम् ॥ ३९ ॥
157815
157816 दन्तिदन्तविनिष्पिष्टशिष्टसद्भटसंकटम् ।
157817 कटे मृत्योरिव नरद्राक्षापीडनयन्त्रके ॥ ४० ॥
157818
157819 मृत्योर्नरलक्षणानां द्राक्षाणां निष्पीडनयन्त्रमिव विद्यमाने कटे गण्डस्थले
157820 दन्तिभिर्दन्तैर्विनिष्पिष्टशिष्टानां सद्भटानां संकटं यत्र ॥ ४० ॥

यन्त्रपाषाणसंघट्टपिष्टाम्बरगतायुधम् ।
योधनादनदद्दन्तिवृन्दबन्धुरकन्दरम् ॥ ४१ ॥

धराधरदरीरन्तःप्रतिश्रुत्प्रोतगर्जितम् ।
अर्जितं प्राणसर्वस्वमर्जयद्भिरुपार्जितम् ॥ ४२ ॥

धराधरदरीः प्राप्य प्रतिश्रुद्भिः प्रतिध्वनिभिः प्रोतानि गर्जितानि यत्र । तथा
महता यत्नेन जन्मप्रभृत्यर्जितं प्राणसर्वस्वं बलसर्वस्वं
अर्जयद्भिर्गमयद्भिः [ऋजेर्गत्यर्थस्येदं रूपम् ।] प्रकटयद्भिः
शूरैरुपार्जितं रणं प्रवृत्तमित्यत्रान्वयः ॥ ४२ ॥

भर्जितं हेतिदहनैरग्निदाहैश्च संततैः ।
तैरेवान्यैरथान्यैश्च द्वन्द्वयुद्धैरनिष्ठितम् ॥ ४३ ॥

पुनः कीदृशं तद्रणं प्रवृत्तं तदाह - भर्जितमित्यादि । निष्ठां
समाप्तिमप्राप्तमनिष्ठितम् ॥ ४३ ॥

वेष्टितं मृतशिष्टैश्च सारैः सुभटपेटकैः ।
कैलासैरिव संशुद्धैरीश्वराधारतां गतैः ॥ ४४ ॥

सारतामेव दृष्टान्तेन व्यनक्ति - कैलासैरिवेति । संशुद्धैः स्वाम्यवञ्चकैः
अत एव हृदि ईश्वराधारतां गतैः सुभटपेटकैः । कैलासपक्षे स्पष्टे द्वे ॥ ४४ ॥

तैरुदारैः समाक्रान्तं ये मृत्योरपि मृत्यवः ।
मरणं जीवितं येषां जीवितं मरणं रणे ॥ ४५ ॥

येषां भटानां रणे मरणं जीवितमिव प्रियं पलायनेन जीवितं जीवनं तु
मरणमिव द्वेष्यम् । उदारैस्तैः पुरुषैस्त्रैलोक्यमपि समाक्रान्तं जितमित्यर्थः । ये
मृत्योरपि मृत्यवः परमपदप्राप्ताः संपद्यन्ते । यथाहुः द्वावेतौ पुरुषौ
लोके सूर्यमण्डलभेदिनौ । परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः ॥ इति ॥ ४५ ॥

रणे नभसि निर्लूनवरवारणवारिजे ।
सारसाः सरसीवात्र रेजुरत्युद्भटा भटाः ॥ ४६ ॥

यन्त्राश्मक्षेपणानां प्रसरणसरितां घूकृतैः फूत्कृतैर्द्राक्
क्रान्तानां व्योम्नि मूर्ध्नां शरसलिलमुचां सैनिकानां च नादैः ।
टांकारैरायुधानां नभसि
विसरतामश्वचक्रेभशब्दैरासीन्निःसंधिबन्धोपलजठरजडं
जीर्णकर्णं गतं तत् ॥ ४७ ॥

तदेव युद्धं वर्णयन्नुपसंहरति - यन्त्रेति । यन्त्राश्मनां क्षेपणानां
यानि प्रसरणानि प्रवाहास्तल्लक्षणानां सरितां घूकृतैर्ध्वनिविशेषैस्तथा द्राक्
सद्य एव छिन्नोड्डीनानां व्योम्नि क्रान्तानां चलितानां मूर्ध्नां फूत्कृतैः
फूत्कारशब्दैस्तथा शरसलिलमुचां सैनिकानां च नादैस्तथा नभसि
विसरतामायुधानां नादैस्तथाऽश्वचक्राणामिभानां च हेषाबृंहितशब्दैश्च
गतं व्याप्तं तद्युद्धं जीर्णा बधिरीकृताः कर्णा यस्मिंस्तथाविधं
सन्निःसंधिबन्धमुपलजठरमिव जडमासीत् ॥ ४७ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० निर्वा० उ० अविद्यो० विप०
संग्रामवर्णनं नाम दशाधिकशततमः सर्गः ॥ ११० ॥

157873 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
157874 संग्रामवर्णनं नाम दशाधिकशततमः सर्गः ॥ ११० ॥
157875
157876 एकादशाधिकशततमः सर्गः १११
157877
157878 श्रीवसिष्ठ उवाच ।
157879
157880 इति कल्पान्तसदृशे यत्ते समरसंभ्रमे ।
157881 पतन्तीषूत्पतन्तीषु सेनासु समरेजिरे ॥ १ ॥
157882
157883 स्वसैन्ये हीयमानेऽत्र निर्गतेन महीभृता ।
157884 वायव्यास्त्रैश्चतुर्दिक्षु वर्ण्यते द्विषतां क्षयः ॥
157885
157886 यत्ते प्रवृत्ते । सर्वेषां भावलक्षणसप्तम्यन्तानां पञ्चमश्लोके
157887 उदभूदित्यत्रान्वयः ॥ १ ॥
157888
157889 तूर्यभेरीमहाशङ्खखड्गेषु खे नदत्सु च ।
157890 धनुर्ध्वनिषु वीराणां तारक्रेंकारकारिषु ॥ २ ॥
157891
157892 तूर्यादिषु त्रिषु प्रतिध्वनिभिः खे तत्र खड्गेषु च नदत्सु । वीराणां
157893 तारक्रेंकारानुकारिषु ॥ २ ॥
157894
157895 अन्योन्यकठिनास्फोटविकटे भटपेटके ।
157896 कवल्कटकटाटोपे कटुकुट्टितकङ्कटे ॥ ३ ॥
157897
157898 भटपेटके योधकदम्बे कटु यथा स्यात्तथा कुट्टितकङ्कटे कवल्कटकटाटोपे
157899 सति । कुशब्दे शतृप्रत्ययः ॥ ३ ॥
157900
157901 किंचित्प्रभज्यमानासु विशत्कश्मासु संगरे ।
157902 विपश्चित्पक्षसेनासु लूयमानलतास्विव ॥ ४ ॥
157903
157904 विशन्ती कश्मा मूर्च्छा यासु ॥ ४ ॥
157905
157906 उदभूत्पूरयन्नाशा नृपनिर्याणदुन्दुभिः ।
157907 चतुर्धाशनिसंपूर्णकल्पाभ्ररवमांसलः ॥ ५ ॥
157908
157909 स्फुटतां कुलशैलानां तुल्यकालमिवोत्कटः ।
157910 स्फुटच्चटचटास्फोटैर्जडिताखिलदिक्तटः ॥ ६ ॥
157911
157912 तुल्यकालं स्फुटताम् । जडितानि जडीकृतानि ॥ ६ ॥
157913
157914 लोकपालैरिवाकारैर्नारायणभुजैरिव ।
157915 स चतुर्भिश्चतुर्दिक्कं निर्जगाम महीपतिः ॥ ७ ॥
157916
157917 आकारैर्मूर्तिधरैर्नारायणभुजैरिव चतुर्भिर्देहैः ॥ ७ ॥
157918
157919 चतुरङ्गेण महता सैन्येन परिवारितः ।
157920 अट्टालवलयात्कृच्छ्रान्निर्गत्य नगराद्बहिः ॥ ८ ॥
157921
157922 ददर्शात्मबलं रिक्तं बलवद्रिपुमण्डलम् ।
157923 गर्जन्तं च लयाकृत्या भीमं युद्धोद्धतार्णवम् ॥ ९ ॥
157924

157925 आत्मबलं रिक्तं ददर्श। रिपुमण्डलं तु बलवत् ऊर्जितं ददर्श। तदेव
157926 रिपुमण्डलमर्णवत्वेन वर्णयति - गर्जन्तमित्यादिना ॥ ९ ॥
157927
157928 शरसीकरनीरन्ध्रं मकरव्यूहसंकुलम्।
157929 वारणव्यूहवलितं तरङ्गव्यूहविस्तृतम् ॥ १० ॥
157930
157931 प्रायेण रूपकाणि सर्वत्र ॥ १० ॥
157932
157933 चक्रावर्तवहद्व्यूहकल्लोलकलितान्तरम्।
157934 चलद्रथशतावर्तं पताकालहरीगणम् ॥ ११ ॥
157935
157936 चक्रावर्तवद्वहद्भिर्व्यूहैः सेनारचनाभेदैर्जनकल्लोलैश्च कलितान्तरम् ॥ ११ ॥
157937
157938 प्रस्फुरच्छत्रफेनाढ्यंन् हयहेषितफीत्कृतम्।
157939 समुल्लसद्धेतिजलं कचद्धाराकरं परम् ॥ १२ ॥
157940
157941 हयानां हेषितमेव यादसां फीत्कारशब्दो यत्र। कचन्तीनां धाराणामाकरम् ॥ १२
157942 ।।
157943
157944 तरत्तरलमातङ्गतुरङ्गौघतरङ्गकम्।
157945 हेत्यम्भसि कचत्पापमुद्यद्गुलुगुलोदरम् ॥ १३ ॥
157946
157947 हेतिलक्षणे अम्भसि कचन्तः प्रकाशमानाः पापाः कृष्णसर्पायमाणा म्लेच्छा
157948 यत्र। द्रविडादिभटवार्ताभिरुद्यद्गुलुगुलोदरम् ॥ १३ ॥
157949
157950 दरीदलनसंक्षुब्धमरुज्जनितघुंघुमम्।
157951 नतोन्नतकृताद्रीन्द्रमहास्पन्दशरीरकम् ॥ १४ ॥
157952
157953 नतैरुन्नतैश्च मातङ्गैः कृता अद्रीन्द्राणां मज्जनोन्मज्जनलक्षणमहास्पन्दा
157954 यस्मिंस्तथाविधविपुलशरीरकम् ॥ १४ ॥
157955
157956 मज्जन्मातङ्गतुरगहेलाहतमहीधरम्।
157957 अपारविचरत्पूरकल्लोलालमहाजलम् ॥ १५ ॥
157958
157959 अपारं विकचन् यः सेनापूरस्तदेव कल्लोलैरलं भूषितं महाजलं यस्य ॥ १५ ॥
157960
157961 अकालकल्पान्तदशासमुत्थानघनाकृतिम्।
157962 आक्रान्तरोदसीरन्ध्ररुधिरैकमहार्णवम् ॥ १६ ॥
157963
157964 अकाले कल्पान्तदशासमुत्थानमिव घना आकृतिर्यस्य। रोदसीरन्ध्रेत्यलुक् छान्दसः
157965 ॥ १६ ॥
157966
157967 कचदायुधखण्डौघडीनरत्नावृतोदरम्।
157968 चलद्व्यूहचलद्व्यस्तयन्त्राश्मक्षेपणाश्मकम् ॥ १७ ॥
157969
157970 कचद्भिरायुधखण्डौघलक्षणैर्डीनैरुच्छलद्भी रत्नैरावृतोदरम्। चलत्सु
157971 सेनाव्यूहेषु चलन्तो व्यस्ता यन्त्राश्मक्षेपणाश्मका यन्त्र। समुद्रेऽपि पोतेषु
157972 सामुद्रजनानां यन्त्राश्मक्षेपणाश्मनां प्रसिद्धेरिति भावः ॥ १७ ॥
157973
157974 रत्नसीकरनीहारसंध्याभ्रपटलानतम्।
157975 क्वचित्पांसुपयोवाहपीतहेतिपयोधरम् ॥ १८ ॥
157976

157977 तमालोक्य रणाम्भोधिमगस्त्योऽस्य भवाम्यहम् |
157978 इति संचिन्त्य मन्सा स पातुं तं प्रणार्णवम् || १९ ||
157979
157980 तं वर्णितप्रकारं रणेहेतुं रिपुबलाम्भो धिमालोक्यास्य पाने अहमगस्त्यो
157981 भवामीति संचिन्त्य स विपश्चित्तं बलार्णवं पातुं वायव्यमस्त्रं सस्मार || १९ ||
157982
157983 अस्त्रं सस्मार वायव्यं चतुर्दिक्कं च संदधे |
157984 धनुषि शिखराधारे त्रिपुरान्त इवोद्यतः || २० ||
157985
157986 यथा शिखराणामाधारे मेरुलक्षणे धनुषि त्रिपुराणां अन्ते वधे उद्यतः शिवः
157987 अस्त्रं संदधे तद्वत् || २० ||
157988
157989 आत्मीयदेशसैन्यानां श्रेयोर्थं शान्तयेऽनलम् |
157990 नमस्कृत्याथ जप्त्वाशु स तत्तत्याज दारुणम् || २१ ||
157991
157992 शत्रुशान्तये इति पाठे नमस्कृत्य अनलमिति शेषः | सः तदस्त्रं तत्याज || २१ ||
157993
157994 यथा तत्रैव तत्याज तस्य साहायकाय सः |
157995 पर्जन्यास्त्रं महास्त्रेशं द्विषदातपशान्तये || २२ ||
157996
157997 यथा वायव्यमस्त्रं तत्याज तथैव तस्य साहायकाय पर्जन्यास्त्रमपि तत्याजेत्यर्थः
157998 || २२ ||
157999
158000 तस्मादस्त्रजुषो घोराद्धनुषः परिनिर्गताः |
158001 अष्टमूर्तेश्चतुर्दिक्कमाशाकुहरपूरकाः || २३ ||
158002
158003 चतुर्दिक्कां अस्त्रद्वयजुषः अत एवाष्टमूर्तेस्तस्माद्धनुषो बाणादिसरितो निर्ययुरिति
158004 परेणान्वयः || २३ ||
158005
158006 निर्ययुर्बाणसरितस्त्रिशूलसरितस्तथा |
158007 शक्तीनामुग्रसरितो भुशुण्डीसरितस्तथा || २४ ||
158008
158009 मुद्गराणां च सरितः प्रासानां सरितो रयात् |
158010 चक्राणां चैव सरितः परश्वधनदीरयाः || २५ ||
158011
158012 तोमराणां च सरितो भिन्दिपालमहापगाः |
158013 पाषाणानां च सरितो वाताः कल्पान्तशंसिनः || २६ ||
158014
158015 वाताश्चण्डवायवः || २६ ||
158016
158017 अशनीनां च सरितो विद्युतां सरितस्तथा |
158018 जलधारासरित्पूराः खड्गवर्षसमन्विताः || २७ ||
158019
158020 सनाराचा महावर्षहर्षलोत्पातपीवराः |
158021 नागाश्च युगपर्यन्तस्फुटिताद्रीन्द्रजा इव || २८ ||
158022
158023 महावातैर्हर्षलाः प्रवृद्धा उत्पाता इव पीवराः पुष्टा नागाः सर्पाश्च निर्ययुः |
158024 युगपर्यन्ते स्फुटितेभ्योऽद्रीन्द्रेभ्यो जाता इव || २८ ||
158025
158026 तेनास्त्रवर्षवेगेन धुतः सोऽरिबलार्णवः |
158027 झटित्येव न कालेन पांसुराशिरिवाभितः || २९ ||
158028

158029 तेज अस्त्रवर्षवेगेन सः अरिबलार्णवः कालेन विलम्बेन न किंतुझटित्येव
158030 पांसुराशिरिवामितो धुत उड्डायितः ॥ २९ ॥
158031
158032 सलिलाशनिशस्त्राणामासारैश्चण्डमारुतैः ।
158033 सरांसीव विसेतूनि सैन्यानि परिदुद्रुवुः ॥ ३० ॥
158034
158035 चतुरङ्गश्चतुर्दिक्कं बलौघः स पराङ्मुखः ।
158036 ययौ प्रावृङ्गिरिणदीमहावाह इव द्रुतः ॥ ३१ ॥
158037
158038 द्रुतः पलायमानः संश्चतुर्दिक्कं ययौ ॥ ३१ ॥
158039
158040 वहत्स्विन्नबृहच्छिन्नपताकाकेतुपादपः ।
158041 मरीचिपुष्पशबलविलोलासिलतावनः ॥ ३२ ॥
158042
158043 तमेव पलायमानं बलौघं गिरिणदीसाम्योपपादनादिना वर्णयति -
158044 वहदित्यादिना । वायुप्रवाहेण वहन्तः स्विन्नाः स्वेदार्द्रा बृहन्तश्छिन्नाश्च
158045 पताका केतव एव पादपा यत्र । मरीचिपुष्पैः शबलानि विलोलान्यसिलतावनानि येन ॥ ३२ ॥
158046
158047 विलुठत्पुष्टपाषाणपृषद्रक्तद्रवावचः ।
158048 घोरैर्घुरघुरारावैरलं हृदयभङ्गदः ॥ ३३ ॥
158049
158050 पलायनाशक्त्या विलुठन्तः पुष्टजनलक्षणा ये पाषाणास्तेषां
158051 पृषद्भिर्बिन्दुभूतै रक्तद्रवैरवचो दुर्वचः । तत्र पातमूर्च्छितानां
158052 घोरैर्घुरघुरारावैर्हृदयभङ्गदो भीषण इति यावत् ॥ ३३ ॥
158053
158054 उह्यमानबृहद्दन्तिदन्तद्रुमविघट्टनैः ।
158055 स्फूर्जच्चटचटारावतर्जितोद्गर्जिताम्बुदः ॥ ३४ ॥
158056
158057 गिरिणद्याः प्रावृड्विशेषणमम्बुदकल्पनेनोपपादयति - उह्यमानेति ॥ ३४ ॥
158058
158059 हेतिवृत्तोग्रसंघट्टपुष्पजातझणज्झणः ।
158060 तरत्तरलसारावतुरङ्गमतरङ्गकः ॥ ३५ ॥
158061
158062 हेतिषु वृत्तो य उग्रः शिलादिसंघट्टः स एव नदीतीरतरुपुष्पेषु जातो
158063 भ्रमरझणज्झणध्वनिर्यत्र ॥ ३५ ॥
158064
158065 रथादिभटचक्रौघशिलार्क्रेकारपीवरः ।
158066 पदातिरथहस्त्यश्वशिलासंघट्टसंकटः ॥ ३६ ॥
158067
158068 रथादीनां भटचक्रौघानां च यच्छिलासंकटे कूजितं तल्लक्षणेन
158069 मेकपक्ष्यादिक्रेंकारेण पीवरः पुष्टः ॥ ३६ ॥
158070
158071 कटुचंकारचीत्कारक्रेंकारपरिपीवरः [टंकारेत्यपि पाठः ।] ।
158072 मृता मृता वयमिति घनकोलाहलाकुलः ॥ ३७ ॥
158073
158074 तदेवाह - कट्विति ॥ ३७ ॥
158075
158076 सेनावारिमहावर्तचलद्गुलुगुलारवः ।
158077 रक्तसीकरनीहारसंध्याम्बुदवितानकः ॥ ३८ ॥
158078
158079 हेतिवीचिवटाच्छिन्नवारिवामनवारिदः ।
158080 वर्षपङ्किलभूपीठतटखण्डनमण्डितः ॥ ३९ ॥

हेतिभिर्वीचिभिर्वटा इव आच्छिन्ना वारिणा वामना नम्रा वारिदा यत्र | पङ्किलस्य
भूपीठतटस्य मार्गनिष्पादनाय खण्डनेन मण्डितः || ३९ ||

कुन्तशूलगदाप्रासवहत्तालतलाद्भुतः |
साक्रन्दभीरुजनताप्रतपन्मृगपोतकः || ४० ||

पलायमानैः कुन्तादिधरैर्वहत्तालतलं तालवनमिवाद्भुतः || ४० ||

मृतहस्त्यश्वयोधौघजीर्णपर्णनिरन्तरः |
पिष्टदेहवसामांसपङ्कसंजातकर्दमः || ४१ ||

चूर्णीकृतखुरापिष्टमहास्थिघनसैकतः |
उह्यमानशिलापूरकाष्ठकोटिकटङ्कटः || ४२ ||

चूर्णीकृतान्यस्थीनि ईषत्स्थूलसैकतानि खुरैरापिष्टानि तु सूक्ष्मतमसैकतानीति
भेदः | उह्यमानैः शिलापूरैः काष्ठकोटिभिश्च परस्परघट्टनात्कटङ्कट इति
ध्वन्यभेदारोपोक्तिः || ४२ ||

उद्गर्जत्प्रलयाम्भोदैर्वहत्प्रलयवायुभिः |
प्रपतत्प्रलयासारैः प्रलयाशनिसंकटैः || ४३ ||

उद्गर्जत्प्रलयाम्भोदैरित्यादीनां तृतीयान्तानां पञ्चमश्लोके इत्थं विद्रवन्ति
भूभृतां बलानि मशकौघवद्विनेशुरित्यत्रान्वयः || ४३ ||

पङ्किलाखिलभूपीठैः सलिलोपप्लुतस्थलैः |
सितशैत्यवशाश्यानधाराकृतखपञ्जरैः || ४४ ||

सितं तीक्ष्णं यच्छैत्यं तद्वशादश्यानैरशुष्यद्भिर्जलधाराकृतैः खे
पञ्जरैः || ४४ ||

समग्रनगरग्रामगृहज्वलितवह्निभिः |
प्रजाश्वेभपदातीनामाक्रन्देनापि घर्घरैः || ४५ ||

रथाम्भोधरनिर्ह्रादैर्दिवि भूमौ घनारवैः |
चतुर्दिक्कं घनं तारक्रेंकारस्य चतुष्टयैः || ४६ ||

भुवि रथनिर्ह्रादैः दिवि अम्भोधरनिर्ह्रादैः | चतुर्दिक्कं तारस्य
विपश्चिद्धनुःक्रेंकारस्य चतुष्टयैः || ४६ ||

विद्युद्वलयविस्तारकारिसंघट्टघर्षणैः |
शरशक्तिगदाप्रासभिन्दिपालादिवर्षणैः || ४७ ||

विद्युद्वलयविस्तारकारिणां मेघानां संघट्टैर्घर्षणैश्च || ४७ ||

सर्वदिक्कमसंख्यानि बलानि वलशालिनाम् |
भूभृतां विद्रवन्त्याशु विनेशुर्मशकौघवत् || ४८ ||

उद्दामपावकवनोपमहेतिसार्थमेघानलाकुलजनाशनिवर्षपातैः |
आसन्बलानि चपलाब्धिजलाबलानि पर्याकुलानि वडवाग्निमिवाविशन्ति || ४९ ||

प्रत्यन्तभूभृतां बलानि उद्दामपावकवनोपमहेतिसार्थैर्मेघानामनलैराकुला

जना यैस्तथाविधैरशनिवर्षपातैश्च पर्याकुलानि सन्ति वडवाग्निमाविशन्ति चपले
अब्धिजले क्वथ्यमानान्यबलानि यादांसीव आसन् ॥ ४९ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मी० दे० मो० निर्वा० उ० वि०
चतुर्दिग्गतबलद्रवणं नामैकादशाधिकशततमः सर्गः ॥ १११ ॥

इति श्रीवासिष्ठमहारामायणे तात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
चतुर्दिग्गतबलद्रवणं नामैकादशाधिकशततमः सर्गः ॥ १११ ॥

द्वादशाधिकशततमः सर्गः ११२

श्रीवसिष्ठ उवाच ।

लोकहाराम्बरव्यालं चेदिचन्दनकाननम् ।
छिन्नं परशुधाराभिः पतितं दक्षिणार्णवे ॥ १ ॥

यत्र यत्र यथा नष्टा यद्यद्देश्याः पलायिताः ।
वर्ण्यन्तेऽत्र तथा सर्वे चतुर्दिक्षु द्विषद्भटाः ॥

तत्र प्रथमं चेदिदेशभटानां नाशप्रकारमाह - लोकेति । चेदिभटलक्षणं
चन्दनकाननं परशुभिश्छिन्नं सद्दक्षिणार्णवे पतितम् । तत्र
चन्दनवृक्षाणां व्यालवेष्टितत्वप्रसिद्धिसमर्थनाय विशिनष्टि - लोकेति ।
लोक्यन्त इति लोका दर्शनीया हारा अम्बराणि च व्याला यस्मिन् । अत्र सर्वत्र देशनाम्नैव
भटनिर्देशो बोध्यः ॥ १ ॥

पर्णवत्प्रोह्य [मूलस्थप्रोह्येति ल्यबन्तस्य प्रवहणं प्राप्येत्यर्थकरणे
फलितमिदम् ।] पूरेण पारसीकाः परस्परम् ।
प्रहरन्तो विमोहेन विनष्टा वञ्जुलावने ॥ २ ॥

पारसीका भटा अस्त्रपूरेण पर्णवत्प्रोह्यमाणा [मूलस्थप्रोह्येति ल्यबन्तस्य
प्रवहणं प्राप्येत्यर्थकरणे फलितमिदम् ।] विमोहेन परस्परं प्रहरन्तः
सन्तो वञ्जुलावने देशे विनष्टाः ॥ २ ॥

दर्दुराद्रौ दुरन्तेषु दरदीर्णह्रदन्तराः ।
दरीरन्ध्रेषु संलीना दरदा दानवा इव ॥ ३ ॥

तथा दरदा भटा दर्दुराद्रौ दुरन्तेषु दरीरन्ध्रेषु संलीनाः ॥ ३ ॥

चतुरायुधधाराग्रचूर्णनीहारधारिणः ।
विद्युद्वलयिनो वाता वेल्लितायुधवारिदाः ॥ ४ ॥

शरप्रासासिपरशुलक्षणानां चतुर्णामायुधानां
धाराग्रप्रयुक्तशिलाकवचादिचूर्णलक्षणनीहारधारिणो विद्युद्भिर्वलयिनो वेष्टिता
वेल्लितायुधा वारुणास्त्रप्रयुक्ता वारिदा वाताश्चलिताः ॥ ४ ॥

दन्तिनोऽन्योन्यमाभग्नदन्तदेहौघपीडिताः ।
मृत्यूदरोम्भकग्रासपिण्डपिण्डा इवाभवन् ॥ ५ ॥

तेषु चलितेषु किमासीत्तदाह - दन्तिन इति । अन्योन्यं प्रहारैराभग्नदन्ता देहेषु
रुधिरौघेण पीडिताश्च दन्तिनो मृत्योरुदरस्य उम्भकाः पूरका ग्रासपरिमिताः
पिण्डपिण्डा इव अभवन् । द्विरुक्तिरनेकत्वद्योतनाय ॥ ५ ॥

158185 तज्जा रैवतिका रात्रौ रौद्रतोमरताडिताः ।
158186 रूपिकाभिः पिशाचीभिर्भुक्ता भागीकृताङ्गकाः ॥ ६ ॥
158187
158188 तज्जा दरददेशजा एव केचिद्रैवतिका रैवतकपर्वते निलीनाः । रूपिकाभिः स्वरूपेण
158189 पुरुषवञ्चिकाभिः पिशाचीभिः ॥ ६ ॥
158190
158191 तालीतमालगहने दशार्णा जीर्णजङ्गले ।
158192 गले पादं निधायान्तः कृत्ताः सिंहैर्गतासवः ॥ ७ ॥
158193
158194 दशार्णास्तद्देशजा भटाः ॥ ७ ॥
158195
158196 पश्चिमार्णवतीरस्था नालिकेरधरावनौ ।
158197 यवना विगतप्राणा निगीर्णा मकरोत्करैः ॥ ८ ॥
158198
158199 नालिकेरधरायां वेलावनौ ॥ ८ ॥
158200
158201 नाराचनिकरं नीलं निमेषं नासहञ्छकाः ।
158202 रमठा नलिनीषण्डा इव ताण्डवितासवः ॥ ९ ॥
158203
158204 नीलं कार्ष्णायसं नाराचनिकरं शका नासहन् । एवं रमठा अपि वाताहता
158205 नलिनीषण्डा इव ताण्डवितासव आसन् ॥ ९ ॥
158206
158207 श्रवणाभोगशृङ्गाग्रो महेन्द्रोऽद्रिर्दिवि व्रजैः ।
158208 विद्रुतैर्वलितो नीलैर्जालैर्जलमुचामिव ॥ १० ॥
158209
158210 श्रवणनक्षत्रस्याभोगः संस्थानमिव त्रीणि शृङ्गाग्राणि यस्य तथाविधो
158211 महेन्द्रोऽद्रिर्विद्रुतैर्नीलैर्दिवि व्रजैर्भटैर्वलितः सन् जलमुचां जालैर्वलित इवासीत् ॥ १० ॥
158212
158213 चामीकरवराकारा भग्ना तङ्गणवाहिनी ।
158214 मृता हृताम्बरा चोरैर्भुक्तैकान्ते निशाचरैः ॥ ११ ॥
158215
158216 तङ्गणानां भटानां वाहिनी पूर्वं चोरैर्हृताम्बरा पश्चादेकान्ते
158217 निशाचरैर्भुक्ता सती मृता ॥ ११ ॥
158218
158219 द्यौरिवर्क्षभरैरासीत्तदासारं भुवस्तलम् ।
158220 विवर्तमानैरभितः कचद्भिर्ज्वलनायुधैः ॥ १२ ॥
158221
158222 तदा तङ्गणसेनाभक्षणकाले तत्रत्यं भुवस्तलमभितो विवर्तमानैः
158223 संचरद्भिर्ज्वलनायुधैरुल्मुकधरैरत एव कचद्भिर्निशाचरैः
158224 ऋक्षभरैर्नक्षत्रसमूहैर्द्यौरिव सारं शोभमानमासीत् ॥ १२ ॥
158225
158226 धाराधरधरारन्ध्रप्रतिश्रुद्धनघुंघुमा ।
158227 जगद्गेहगुहासीद्द्योर्घनं गातुमिवोद्यता ॥ १३ ॥
158228
158229 किं च तस्मिन्विपश्चिद्विजये जगदेव गेहगुहा यस्यास्तथाविधा द्यौर्धाराधराणां
158230 धरारन्ध्रेषु गर्जनप्रतिध्वनिमिर्घनघुंघुमा बहलमृदङ्गध्वनिः सती
158231 घनं तद्यशो गातुमुद्यतेवासीत् ॥ १३ ॥
158232
158233 द्विपान्तरजनाश्चक्रैर्जर्जरा जीवितं जहुः ।
158234 मीनजङ्गलजम्बाले जीर्णमत्स्या इवाजले ॥ १४ ॥
158235
158236 मीनविहारजंगलभूते जम्बाले शैवलपल्वले दैवादजले सति मत्स्या इव अशरणाः ॥

158237 १४ ॥
158238
158239 यावद्द्वीपा जिताः कुक्षौ सह्याद्रौ सममूर्तयः ।
158240 आश्वस्य दिवसान्सप्त ययुरायासमन्थरम् ॥ १५ ॥
158241
158242 यावद्द्वीपाः यावद्द्वीपाभिजना भटाः सह्याद्रौ निलीय सप्तरात्रमाश्वस्य
158243 चिकित्सादिना व्रणोपशमात्सममूर्तयः सन्त आसारैः क्लिद्यमाना आयासेन मन्थरं
158244 मन्दं स्वदेशं ययुः ॥ १५ ॥
158245
158246 गन्धमादनपुन्नागवनकुञ्जेषु पुञ्जिताः ।
158247 विद्याधरकुमारीभिर्गान्धाराः परिरक्षिताः ॥ १६ ॥
158248
158249 हूउणचीनकिरातानां मुक्तैस्तैश्चक्रवर्षणैः ।
158250 कमलानीव लूनानि शिरांस्यभिमुखानिलैः ॥ १७ ॥
158251
158252 हूणानां चीनानां किरातानां च शिरांसि अभिमुखानिलैरत एव
158253 वेगवद्भिर्विपश्चिन्मुक्तैश्चक्रवर्षणैः कमलानीव लूनानि ॥ १७ ॥
158254
158255 निलीपा नलिनीनाले कण्टका इव निश्चलाः ।
158256 द्रुमे द्रुमे द्रुममया भयात्त्वस्यावसंश्चिरम् ॥ १८ ॥
158257
158258 निलीपास्तन्नामकदेशजा भटा द्रुममया वृक्षप्रायाः सन्तोऽवसन् ॥ १८ ॥
158259
158260 चारुसारङ्गरङ्गासु शैलकाननभूमिषु ।
158261 चतुर्दिक्कं तदापातैः संपन्नं क्षोभणं घनम् ॥ १९ ॥
158262
158263 सारङ्गाणां मृगाणां पक्षिणां च विहारे रङ्गभूमिभूतासु
158264 शैलकाननभूमिषु तस्य विपश्चित आपातैर्घनमतिशयितं क्षोभणं संपन्नम् ॥
158265 १९ ॥
158266
158267 कण्टकस्थलनामानः कण्टकस्थलकर्कशाः ।
158268 कण्टकस्थलगा आसन्कण्टकस्थलमण्डले ॥ २० ॥
158269
158270 कण्टकस्थलं करञ्जवनमिव कर्कशाः कण्टकानां दस्यूनां स्थले मण्डले
158271 देशे कण्टकस्थलगाः करञ्जादिवननिलीना आसन् ॥ २० ॥
158272
158273 पारसीकाः परं पूरैः पारं प्राप्य पयोनिधेः ।
158274 निपेतुः पवनैः पूताः प्रलये तारका इव ॥ २१ ॥
158275
158276 ववुरम्भोधिकुट्टाका दृषदां कटकाङ्किताः ।
158277 सर्वदिग्वनलुण्टाका वाताः प्रलयशङ्किताः ॥ २२ ॥
158278
158279 दृषदां प्रहारैः पर्वतकटकेषु अङ्किताः कृतचिह्नाः । प्रलयशङ्किताः
158280 प्रलयशङ्काविषयीकृताः ॥ २२ ॥
158281
158282 आसारसाराः पङ्काम्बुप्लुताः सघनघुंघुमाः ।
158283 आसन्दशदिशोऽदृश्या बहुक्षुब्धायुधानिलैः ॥ २३ ॥
158284
158285 दशदिशो बहुक्षुब्धैरायुधैरनिलैश्च आसारसारा भूत्वा पङ्काम्बुप्लुता
158286 अदृश्या आसन् ॥ २३ ॥
158287
158288 निर्ह्रादकारिभिर्वर्तैर्वहच्छपछपारवम् ।

प्रसस्रुर्भुवि नीहारा महार्णवरया इव ॥ २४ ॥

वातैर्नीहारा वहच्छपछपारवं यथा स्यात्तथा प्रसस्रुः ।
छपछपेत्यव्यक्तनीहाराभिघातध्वन्यनुकरणम् । महार्णवरया अपि वातप्रयुक्ता
वहच्छपछपारवाश्च तदनुभविनां प्रसिद्धाः ॥ २४ ॥

विदूरस्था रथेभ्यश्च वीचिचीत्कारकारिणः ।
सरोम्भस्यनिलैः पेतुः पद्मेभ्य इव षट्पदाः ॥ २५ ॥

अनिलैः प्रोह्यमाणा विदूरदेशस्था रथिका वीचय इव चीत्कारकारिणः सन्तः सरोम्भसि
पेतुः ॥ २५ ॥

आयुधौघेऽपि चक्रौघात्पादातं बलमाविलम् ।
रजोराशिरिवासारे न समर्थं पलायते ॥ २६ ॥

तेषां पादातं बलं तु आयुधौघे सत्यपि विपश्चिच्चक्रौघादाविलमश्रुकलुषाक्षं
सत् आसारे धारासंपाते रजोराशिः पांसुजालमिव पलायने न समर्थमभूत् ॥ २६ ॥

हूणा आमस्तकं मग्ना उत्तरार्णवसैकते ।
क्लिन्नास्तत्रैव पङ्कान्तः पूरणाविलशूलवत् ॥ २७ ॥

भुवि पूरणेन आविलं मृन्मालिन्यमापद्यमानं लोहशूलं यथा क्लिद्यते
तद्वत्क्लिन्नाः ॥ २७ ॥

तीरैलावनलेखासु शकाः पूर्वपयोनिधेः ।
नीता बद्ध्वा दिनं मुक्ता न गता यमसादनम् ॥ २८ ॥

शका भटाः पूर्वपयोनिधेस्तीरैलावनलेखासु नीताः सन्तो दिनमात्रं विपश्चिता
बद्ध्वा पश्चाद्दययामुक्ता यमसादनं न गताः । न मृता इत्यर्थः ॥ २८ ॥

मन्दं मन्द्रा महेन्द्राद्रौ क्रन्दन्तः पतिता दिवः ।
आश्वासिता मुनिवरैर्निजाश्रममृगा इव ॥ २९ ॥

दिवो द्युवदुन्नताद्गिरिशिखरात् ॥ २९ ॥

प्रविष्टा याचनं सह्ये लब्धाः सुरबिलाद्द्वयम् ।
अनर्थेनाऽर्थ आयाति काकतालीयतः क्वचित् ॥ ३० ॥

सह्ये गिरौ प्रविष्टा भटास्तु मूकाम्बिकासन्निधौ कुटजाद्र्याख्ये तच्छिखरे
दैवात्प्रविष्टात्सुरबिलात् द्वयं ऐहिकामुष्मिकं याचनं अभिलषितसिद्धिफलं
लब्धाः प्राप्तवन्तः । तथा हि । भाग्योदयकाले क्वचित्काकतालीयन्यायतः अनर्थेनापि
अर्थः पुरुषार्थ आयाति । यतो मरणार्हं सुरबिलं प्रविष्टैः सिद्धयो लब्धा इत्यर्थः
॥ ३० ॥

पतिता दर्दुरारण्ये दशार्णा जीर्णपर्णवत् ।
भुक्त्वा विषफलान्यज्ञा मृतास्तत्रैव ते स्वयम् ॥ ३१ ॥

दशार्णा भटा दर्दुरगिरेररण्ये पतिताः प्रविष्टाः सन्तः ॥ ३१ ॥

विशल्यकरणीं भुक्त्वा काकतालीययोगतः ।
हिमाद्रौ हैहया याता गृहं विद्याधरा इव ॥ ३२ ॥

158341 हैहयदेशीया भटा हिमाद्रौ विशल्यकरणीमोषधिं भुक्त्वा विद्याधरा इव
158342 खेचराः सन्तो गृहंन् याताः ॥ ३२ ॥
158343
158344 पृष्ठनृम्लानकुसुमा धनुर्भिर्गृहमागताः ।
158345 वङ्गा नाद्यापि दृश्यन्ते पिशाचत्वमिवागताः ॥ ३३ ॥
158346
158347 एवं वङ्गा अपि हैमवतीरोषधीर्भुक्त्वा पृष्ठलग्ना नरा इव म्लानानि
158348 उत्तंसकुसुमानि येषां तथाविधाः सन्तः शरव्ययात्केवलं धनुर्भिरुपलक्षिता
158349 गृहमागताः सन्तो भयादद्यापि बहिर्निःसरणाभावान्न दृश्यन्ते ॥ ३३ ॥
158350
158351 अङ्गा वनफलैर्भुक्तैर्विद्याधरपदप्रदैः ।
158352 विद्याधरीभिः क्रीडन्ति दिवि विद्याधराः स्थिताः ॥ ३४ ॥
158353
158354 दिवि विद्याधरा भूत्वा स्थिताः ॥ ३४ ॥
158355
158356 तालीतमालखण्डेषु पतिताः पातिताङ्गकाः ।
158357 पारसीका गता मोहं भ्रमाद्वैमानिका इव ॥ ३५ ॥
158358
158359 पारसीकास्तालीतमालखण्डेषु पतिताः प्रविष्टमात्राः शत्रुभिः पातिताङ्गकाः सन्तो
158360 मोहंन् मूर्च्छां गताः । तत्र च भ्रमाद्वैमानिका इवाभवन् ॥ ३५ ॥
158361
158362 तरलासारमातङ्गं पतितं तङ्गणाङ्गणे ।
158363 अङ्गैरङ्ग कलिङ्गानां चतुरङ्गं बलं हतम् ॥ ३६ ॥
158364
158365 हे अङ्ग कलिङ्गानां तरलासारमातङ्गं चतुरङ्गं बलं अङ्गैर्हतं सत्
158366 पलायमानं तङ्गणाङ्गणे पतितम् ॥ ३६ ॥
158367
158368 क्रमत्यरिबले साल्वाः शरशैलोदकोदरे ।
158369 पतिताः प्रभुणा सार्धमद्याप्येवोपलाः स्थिताः ॥ ३७ ॥
158370
158371 साल्वा भटाः शराः शैलाः शिलासमूहा उदकानि चोदरे यस्य तथाविधे अरिबले
158372 क्रमति आक्रमति सति प्रभुणा सार्धं पतितास्ते चाद्यापि तद्देशग्रामदेवताभूता
158373 उपलाः प्रतिमा भूत्वा स्थिताः ॥ ३७ ॥
158374
158375 असंख्याः प्रपलायन्तः ककुभं ककुभंन् प्रति ।
158376 नराः सरत्तरङ्गेषु सागरेषु लयं गताः ॥ ३८ ॥
158377
158378 क्षेत्राटवीपुरजलस्थलशैलकूलकुल्याग्रहारसरिदब्धिभृगुद्रुमेषु ।
158379 ग्रामारपट्टिगिरिकूपगुहागृहेषु भ्रष्टानि कः कलयितुं कुबलानि शक्तः ॥
158380 ३९ ॥
158381
158382 न केवलं सागरेष्वेव किंतु क्षेत्रेष्वटवीषु पुरेषु जलेषु स्थलेषु शैलेषु कूलेषु
158383 कुल्यासु अग्रहारेषु सरित्सु अब्धिषु भृगुषु द्रुमेषु तथा ग्रामेषु आरपट्टिषु
158384 शुल्कस्थानेषु गिरिषु कूपेषु गुहासु गृहेषु च भ्रष्टानि मृतानि तेषां कुबलानि
158385 कलयितुं गणयितुं कः शक्तः । न कश्चिदपीत्यर्थः ॥ ३९ ॥
158386
158387 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० नि० उ० अवि० वि० बलपरिभ्रंशो
158388 नाम द्वादशाधिकशततमः सर्गः ॥ ११२ ॥
158389
158390 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
158391 बलपरिभ्रंशो नाम द्वादशाधिकशततमः सर्गः ॥ ११२ ॥
158392

158393 त्रयोदशाधिकशततमः सर्गः ११३
158394
158395 श्रीवसिष्ठ उवाच।
158396
158397 बलान्यनुतरन्तोऽथ तदित्थं द्रवतां द्विषाम्।
158398 दूराद्दूरतरं प्राप्ताश्चत्वारस्ते विपश्चितः॥ १॥
158399
158400 अस्त्राणामरिसंशान्त्या साधनानां च संक्षयः।
158401 अर्णवानां च विभवो वर्ण्यते विस्तरादिह॥
158402
158403 दवतां द्विषां बलान्यनुतरन्तोऽनुधावमानाः॥ १॥
158404
158405 सर्वशक्तिमयैकेन चेतनेनेश्वरेण ते।
158406 प्रहिता दिग्जयं चक्रुः सर्व एव समाशयाः॥ २॥
158407
158408 सर्वशक्तिमयेन सर्वऽसक्तिसंभृतेन सर्वदेहेष्वेकेन चेतनेनेश्वरेण प्रहिता
158409 दिग्विजयाय प्रवर्तिताः। समाशयास्तुल्याभिप्रायाः॥ २॥
158410
158411 दूरात्तावदविच्छिन्नमनुसस्रुर्बलानि ते।
158412 यावत्तीरं समुद्राणां प्रवाहाः सरितामिव॥ ३॥
158413
158414 अविच्छिन्नमरिबलैरनुस्यूतं यथा स्यात्तथा अनुसस्रुः॥ ३॥
158415
158416 दूराविश्रान्तयानेन तेषां तत्सर्वसाधनम्।
158417 आत्मीयं परकीयं च क्षीणं कुसरिदम्बुवत्॥ ४॥
158418
158419 दूरमविश्रान्तेन यानेन गमनेन तेषां विपश्चित्सैन्यानां तत्प्रसिद्धं सर्व
158420 जीवनयुद्धादिसाधनं धनास्त्रशस्त्रादि प्रत्यहं व्ययेन क्षीणम्। कुसरितां
158421 कुल्यानामम्बुवत्॥ ४॥
158422
158423 आत्मीयान्यन्यदीयानि तेषां वीक्ष्यबलान्यलम्।
158424 क्षीणादीव मुमुक्षूणां पुण्यपापानि धावताम्॥ ५॥
158425
158426 धावतां तेषां विपश्चितामात्मीयान्यन्यदीयानि च वीक्षणार्हाणि बलानि सैन्यानि
158427 मुमुक्षूणां पुण्यपापानीव अलं निःशेषं क्षीणानि॥ ५॥
158428
158429 स्वयमस्त्राणि शान्तानि कृतकृत्यान्यथाम्बरे।
158430 ज्वालाजालानि वह्नीनां दाह्यस्यासंभवादिव॥ ६॥
158431
158432 आलयेषु रथाश्वेभवृक्षौघादिषु हेतयः।
158433 आसन्निद्रालवो लीना दिनान्ते विहगा इव॥ ७॥
158434
158435 आलयेषु निषङ्गकोशादिस्वस्थानेषु रथादिषु च लीनाः सन्तो निद्रालव इव निश्चेष्टा
158436 आसन्॥ ७॥
158437
158438 तरङ्गा इव तोयेऽन्तर्नीहारा इव वारिदे।
158439 मेघा वायाविवामोदा व्योमनीव निलिल्यिरे॥ ८॥
158440
158441 धारापङ्कतलालीनशान्तहेतिजलेचरः।
158442 नाराचसीकरासारनीहारपरिवर्जितः॥ ९॥
158443
158444 वर्षधाराप्रयुक्ते पङ्कतले आलीना अत एव शान्ता हेतिलक्षणा जलेचरा

158445 मीनमकरादयो यस्य | तथा नाराचलक्षणैः सीकरासारनीहारैः परिवर्जित
158446 इत्याद्यब्धिरूपकोपपादकविशेषणानां चतुर्थश्लोकस्थे
158447 व्योमैकाब्धिरभूदित्यत्रान्वयः ॥ ९ ॥
158448
158449 चक्रावर्तशतोन्मुक्तो युक्तः सौम्यतयाच्छया |
158450 प्रशान्तमेघसंरम्भतरङ्गोत्तुङ्गवर्षणः ॥ १० ॥
158451
158452 प्रशान्तानि मेघसंरम्भप्रयुक्तानि तरङ्गेभ्योऽप्युत्तुङ्गानि वर्षणानि यस्मिन् ॥ १०
158453 | |
158454
158455 अन्तर्लीनर्क्षरत्नौघकोणसंस्थार्कवाडवः |
158456 शून्यतावारिरमलो व्योमैकाब्धिरभूत्पृथुः ॥ ११ ॥
158457
158458 अन्तर्लीना ऋक्षलक्षणा रत्नौघा यस्मिन् | कोणे एकदेशे संस्थः अर्कलक्षणो वाडवो
158459 वडवानलो यस्मिन् | शून्यतैव वारि यस्मिन् | ईदृशो व्योमलक्षण एकाब्धिः प्रलये
158460 प्रसिद्ध एकार्णवः पृथुर्विस्तृतः अभूत् ॥ ११ ॥
158461
158462 लम्बप्रकाशगम्भीरं प्रसन्नं कान्तिमत्ततम् |
158463 रजोविरहितं रेजे खं मनो महतामिव ॥ १२ ॥
158464
158465 खं महतां मन इव रेजे | लम्बेन विस्तीर्णेनात्मप्रकाशेन सूर्यालोकेन च गम्भीरम्
158466 | रजोगुणैर्धूलिभिश्च विरहितम् ॥ १२ ॥
158467
158468 अथार्णवांस्ते ददृशुराकाशस्यानुजानिव |
158469 विस्तीर्णान्विमलाकारान्पूरिताखिलदिक्तटान् ॥ १३ ॥
158470
158471 आसर्गसमाप्तेरर्णवान्वर्णयितुमुपक्रमते - अथेति ॥ १३ ॥
158472
158473 तरङ्गकणकल्लोलमहागुलुगुलाकुलान् |
158474 भूरिसीकरनीहारहारिहारिशरीरिणः ॥ १४ ॥
158475
158476 भूरिभिः सीकरनीहारहारिभिर्मेघैर्हारि मनोहरं शरीरं येषाम् |
158477 नित्ययोगाद्यर्थाधिक्यविवक्षया कर्मधारयादपि मत्वर्थीयः समर्थनीयः ॥ १४ ॥
158478
158479 स्थितानात्मानमास्तीर्य भूमौ व्याध्यातुरानिव |
158480 श्वसनार्तांश्चलद्देहान्विवर्तोर्मिमहाभुजान् ॥ १५ ॥
158481
158482 आत्मानं स्वदेहं भूमौ आस्तीर्य प्रसार्य | विवर्त्यन्त इति विवर्ता उत्क्षिप्यमाणा
158483 ऊर्मिमहाभुजा येषाम् ॥ १५ ॥
158484
158485 जडानपि स्पन्दमयान्कल्लोलाकोटकोटरान् |
158486 संसारानिव विस्तीर्णांश्चक्रावर्तदशाकुलान् ॥ १६ ॥
158487
158488 संसारपक्षे कल्लोलाः षडूर्मयस्तैराकोटाः कुटिलाः कोटरा जलाशया येषु ॥ १६ ॥
158489
158490 रत्नराशितटोद्द्योतपीवरीकृतभास्करान् |
158491 शङ्खराशिविशद्वातशब्दतर्जितघुंघुमान् [वर्धितेत्यपि क्वचित्पाठः
158492 स न व्याख्यानुगुणः |] ॥ १७ ॥
158493
158494 रत्नराशिधरैस्तटोद्द्योतैरुदयकाले पीवरीकृतः स्थूलीकृत इव भास्करो यैः |
158495 शङ्खराशिषु विशतो वातस्य शब्द एव तर्जितघुंघुमस्तर्जनध्वनिर्येषाम् ॥ १७ ॥
158496

158497 मांसलोर्मिघटाघोषघर्घराम्बरडम्बरान् |
158498 वर्तुलावर्तविस्तारप्रभ्रमद्विद्रुमद्रुमान् ‖ १८ ‖
158499
158500 मांसलानां पुष्टानामूर्मिघटानां घोषैर्मेघघर्घराम्बरडम्बरयुक्तान् ‖
158501 १८ ‖
158502
158503 मकरव्यूहनिर्ह्रादघर्घरोदरघुंघुमान् |
158504 मत्स्यपुच्छच्छटाच्छिन्नमज्जत्पोतकृतारवान् ‖ १९ ‖
158505
158506 पुच्छच्छटा पुच्छाग्रं तेन छिन्नैर्द्विधाकृतैरत एव मज्जद्भिः पोतैः
158507 कृतारवान् ‖ १९ ‖
158508
158509 उद्ग्रीवकूर्ममकरनिगीर्णौर्णनरोत्करान् |
158510 ऊर्मिबिम्बितसप्ताश्वसहस्रार्कनभोनिभान् ‖ २० ‖
158511
158512 उद्ग्रीवैः कूर्मैर्मकरैश्च निगीर्णा और्णा ऊर्णाम्बरा नरोत्करा येषु | सामुद्राणां
158513 नराणां प्रायेणौर्णाम्बरत्वद्योतनायौर्णेति विशेषणम् ‖ २० ‖
158514
158515 भांकारकारिपवनपतद्भूत्यततोद्घटान् |
158516 ऊर्म्युदस्तमणिव्रातबलाज्झणझणध्वनीन् ‖ २१ ‖
158517
158518 विस्तीर्णपटे भांकारकारिभिः पवनैः पतन्तो गच्छन्तो भूत्याः
158519 भूतिसंभृतास्ततः उत् ऊर्ध्वं घटन्ते चेष्टन्त इत्युद्घटाः पोता येषु | बलात्
158520 पतनाभिघातबलात् ‖ २१ ‖
158521
158522 नानाजालैर्बलभुजैर्हेलास्पृष्टार्कमण्डलान्
158523 नमदुन्नमदुद्रश्मिरत्नमाणिक्यमण्डलान् ‖ २२ ‖
158524
158525 उत्फालफेनिलावर्तविवर्तमकरोत्करान् |
158526 क्वचित्करिकरोन्नामैः क्षणं वंशवनीकृतान् ‖ २३ ‖
158527
158528 करिणां कराणां शुण्डानामुन्नामैरुन्नमनैर्वंशवनमिव कृतान् ‖ २३ ‖
158529
158530 तहरीवल्लरीवालान्पृष्ठतालिषु माध्वान् |
158531 क्वचिदन्तरविश्रान्तसपरिच्छदमाधवान् ‖ २४ ‖
158532
158533 लहरीषु वल्लर्य इव करिणां वालाः पुच्छानि येषु तान् | करिणां पृष्ठसमूहः
158534 पृष्ठता तल्लक्षणास्वालिषु पङ्क्तिषु माधवान्वसन्तानिव फेनपुञ्जैः पुष्पितान् |
158535 क्वचित् श्वेतद्वीपादौ ‖ २४ ‖
158536
158537 एकदेशस्थितासंख्यनानासुरसुरालयान् |
158538 तारानवतरङ्गौघपरिदन्तुरिताम्बरान् ‖ २५ ‖
158539
158540 नानाविधानामसुराणां सुराणां चालयभूतान् |
158541 द्वन्द्वगर्भषष्ठीतत्पुरुषान्तचतुष्पदबहुव्रीहिर्वा |
158542 प्रतिबिम्बफेनादितारावद्भिर्नवतरङ्गौघैः परिदन्तुरितं परिहसितमम्बरं यैः
158543 ‖ २५ ‖
158544
158545 गुहामशकवद्गर्तभीतशाखायिताचलान् |
158546 नयतोम्बुतरङ्गौघैर्वेलाद्रीनतिखर्वताम् ‖ २६ ‖
158547
158548 गुहास्थमशकवत्पातालगर्ते निविष्टा बहिर्निर्गमनभीता अत एव मूलस्थशाखायिता

158549 अचला येषाम्। खर्वतां नयत इति वेलाद्यपेक्षया।
158550 तरङ्गौघाणामौन्नत्यसंपादनादिति भावः॥ २६॥
158551
158552 खक्षेत्रारोपितानल्परत्नरश्मिपथाङ्कुरान्।
158553 शुद्धशुक्तिमुखोन्मुक्तमुक्तान्तरितसैकतान्॥ २७॥
158554
158555 रश्मिपथाः रश्मिप्रसराः। खक्षेत्रे आरोपितास्तल्लक्षणा अङ्कुरा यैस्तान्॥ २७॥
158556
158557 नानारत्नांशुकौशेयसूत्रचित्रांस्तरङ्गितान्।
158558 विशन्नदीन्दशादिग्भिः समाकीर्णान्पटानिव॥ २८॥
158559
158560 नानारत्नांशुलक्षणैः कौशेयसूत्रैश्चित्रान्। विशन्त्यो नद्य एव
158561 तुरीप्रवेश्यमानतन्तवो येषां तान्। दशाभूताभिर्दिग्भिः परितः समाकीर्णान् अत एव
158562 ऊयमानपटानिव स्थितान्॥ २८॥
158563
158564 इन्द्रनीलतटैर्व्युप्तमुक्ताशुक्तिशताङ्कितैः।
158565 क्वचिद्दर्शयतः कान्तशतेन्दुकनखश्रियम्॥ २९॥
158566
158567 कान्तशतेन्दुकामिव नखश्रियं क्वचिद्दर्शयतः॥ २९॥
158568
158569 रत्नांशुजालसंदिग्धास्तरङ्गादेशबिम्बिताः।
158570 परिवर्तयतः फुल्लास्तीरतालीवनावलीः॥ ३०॥
158571
158572 तरङ्गाणामादेशेषु प्रदेशेषु प्रतिबिम्बितास्तीरतालीवनावलीस्तरङ्गपरिवृत्या
158573 परिवर्तयतः॥ ३०॥
158574
158575 एलालवङ्गकङ्कोलफलमालां जिघृक्षुभिः।
158576 वेलावनलताभ्रष्टामात्तावृत्तीञ्जलेचरैः॥ ३१॥
158577
158578 वेलावनलताभ्यो भ्रष्टामेलादिफलमालां जिघृक्षुभिर्जलेचरैः आत्ता
158579 आवृत्तयस्तीरे संचारा येषु तान्॥ ३१॥
158580
158581 चूतनीपकदम्बाग्रविहगान्प्रतिबिम्बितान्।
158582 भुञ्जानैर्विप्रलम्भेन कृताच्छोटाञ्जलेचरैः॥ ३२॥
158583
158584 भक्ष्योपदर्शनादिच्छद्मना तरङ्गसंनिधावाकृष्य भुञ्जानैर्जलचरैः
158585 कृता आच्छोटा अङ्गुलीध्वनयस्तत्प्राया ध्वनयो येषु॥ ३२॥
158586
158587 खेचरप्रतिबिम्बेन विद्रवद्भिरितस्ततः।
158588 भग्नबन्धबृहत्सेतून्क्षणः प्रति जलेचरैः॥ ३३॥
158589
158590 अमूर्तान्प्रतिबिम्बेन हृदयस्थजगत्त्रयान्।
158591 चतुरो व्योमविपुलान्दिक्षु नारायणानिव॥ ३४॥
158592
158593 अमूर्तत्वादिसाधर्म्येण दिक्षु चतुरो नारायणानिव स्थितान्॥ ३४॥
158594
158595 अतिगाम्भीर्यनैर्मल्यविस्तारविभवैर्नभः।
158596 निगीर्य संदर्शयतो हृदयादिव बिम्बितम्॥ ३५॥
158597
158598 जलचारिविहङ्गानां साकाशं प्रतिबिम्बितम्।
158599 आशयैर्दधतः सारैः पद्मान्भृङ्गमिवात्मगम्॥ ३६॥
158600

आशयैर्हृदयैर्दधतः । आत्मगं कोशगर्भस्थम् ॥ ३६ ॥

तरङ्गतरलास्फालमारुतैराहताम्बरान् ।
कन्दरोद्गारगम्भीरैः कल्पान्तजलदालयान् ॥ ३७ ॥

गम्भीरैरिति भावप्रधानो निर्देशः । अन्तर्गतगिरिकन्दरासु
पवनप्रवेशनिर्गमलक्षणो य उद्गारस्तदनुमेयकन्दरागाम्भीर्यैः
कल्पान्तजलदानामालयभूतान् ॥ ३७ ॥

गुहागुलुगुलावर्तनिर्घोषाशनिभीषणान् ।
भृशं भावयतो ग्रस्तानगस्त्यौर्वानलानिव ॥ ३८ ॥

गुहासु गुलुगुलारूपैरावर्तनिर्घोषैः अशनय इव भीषणान् । स्वग्रासिनः
अगस्त्यानौर्वानलांश्च गुहोदरेषु भृशं ग्रस्तान्संभावयत इव ॥ ३८ ॥

भूरिसीकरपुष्पाणि तरङ्गौघतरूणि च ।
प्राप्तान्यम्बुवनानीव लहरीमञ्जरीणि खम् ॥ ३९ ॥

तथा खं प्राप्तान्यम्बुवनानि भावयत इव स्थितान् । कीदृशान्यम्बुवनानि ।
भूरिसीकरा एव पुष्पाणि येषु तानि । तरङ्गौघास्तरवो येषु । लहर्यो मञ्जर्यो येषु ॥
३९ ॥

सरत्तरङ्गजालानि प्रोड्डीनप्राणिमन्त्यधः ।
आकाशखण्डखण्डत्वात्पतितानीव विभ्रमात् ॥ ४० ॥

तथा प्रोड्डीनप्राणिमन्ति मत्स्यादियुक्तानि सरन्ति तरङ्गजालानि आकाशस्य खण्डे
शस्त्रैः खण्डने कृते खण्डत्वादेव अधः पतितानीव
विभ्रमाद्भावयतश्चतुरोऽर्णवांस्ते ददृशुरिति पूर्वत्रान्वयः ॥ ४० ॥

एलालवङ्गबकुलामलकीतमालहिंतालतालदलताण्डवखण्डिताग्रे ।
प्राप्ते पतल्लवणवारिधिदीर्घतीरं रेखा बभावलिनिभाम्बरशैलमूर्ध्नि ॥ ४१
। ।

वर्णितप्रकारैः पततां तरङ्गैः प्रत्युद्गच्छतां लवणवारिधीनां दीर्घतीरं
विपश्चित्सैन्ये प्राप्ते सति परितो दीर्घे तीराग्रे अम्बरसंपृक्तानां शैलानां मूर्ध्नि
एलालवङ्गादिवृक्षाणां दलताण्डवैः खण्डिता विभक्ता अलिनिभा श्यामला
वनरेखा बभौ अशोभतेत्यर्थः ॥ ४१ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वा० उ० अवि० विप०
समुद्रवर्णनं नाम त्रयोदशाधिकशततमः सर्गः ॥ ११३ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
समुद्रवर्णनं नाम त्रयोदशाधिकशततमः सर्गः ॥ ११३ ॥

चतुर्दशाधिकशततमः सर्गः ११४

श्रीवसिष्ठ उवाच ।

अथ तेषां तदा तत्र ततस्तांस्तानदर्शयन् ।
पार्श्वगा वनवृक्षाब्धिशैलमेघवनेचरान् ॥ १ ॥

इत आरभ्य वर्ण्यन्ते विपश्चिद्भ्यः प्रदर्शिताः ।

158653 पार्श्वगैर्वनवृक्षाब्धिशैलमेघवनेचराः ॥
158654
158655 अथेति वनादिवर्णनविस्तारारम्भद्योतनाय । तेषां विपश्चितां पार्श्वगा
158656 मन्त्र्यादयस्ततः समुद्रसंनिधिप्राप्त्यनन्तरं तांस्तान्विचित्रान् वनवृक्षादीन्
158657 अदर्शयन् । कौतुकार्थमित्यर्थः ॥ १ ॥
158658
158659 देव पश्यास्य शैलस्य येयमभ्रंकषाग्रभूः ।
158660 समरुन्मध्यदेशादेरश्मदेशमुपेयुषः ॥ २ ॥
158661
158662 हे देव मध्यदेशादेरुपत्यकाधित्यकाप्रस्थादिप्रदेशात्क्रमेणाग्रे अश्मदेशं
158663 शिलाप्रचुरभागतामुपेयुषः अस्य शैलस्य येयमभ्रंकषा अत्युन्नता अत एव समरुत्
158664 प्रचुरवायुयुक्ता विहरद्देवगन्धर्वादियुक्ता वा अग्रभूः शिखरभूमिस्तां
158665 पश्येत्यर्थः ॥ २ ॥
158666
158667 इमा बकुलपुन्नागनालिकेरकुलाकुलाः ।
158668 विपिनावलयो वान्तविविधामोदमारुताः ॥ ३ ॥
158669
158670 वान्तः उद्गीर्णो विविधामोदो मारुतो याभिः । या इमा विपिनावलयस्ता अपि पश्य ॥ ३ ॥
158671
158672 लुनात्युपत्यकां वार्धिः शैलशालिशिलावलीः ।
158673 वनालीर्लहरीदात्रैरापादफलपल्लवाः ॥ ४ ॥
158674
158675 वार्धिर्लहरीलक्षणैर्दात्रैरुपत्यकामद्रेरासन्नां भूमिं लुनाति । तथा शैले शान्ते
158676 शोभन्ते याः शिलावलयस्ताश्च लुनाति । तथा आपादं फलपल्लवव्याप्ता वनालीश्च
158677 लुनाति पश्येत्यर्थः ॥ ४ ॥
158678
158679 अधित्यकासु मेघालीर्नृत्यतां स्वाम्बुभूभृताम् ।
158680 धुनोति जलधिर्बालो गृहधूमावलीमिव ॥ ५ ॥
158681
158682 जलधिः पवनकम्पिततरुलताभुजाद्यभिनयैर्नृत्यतां
158683 स्वेदबिन्दुप्रायस्वाम्बुकणाञ्चितानां भूभृतामधित्यकासु विश्रान्ता मेघालीः
158684 पवनेन धुनोति । यथा बालः स्वगृहधूमावलीं व्यजनपवनेन धुनोति
158685 तद्वत्पश्य ॥ ५ ॥
158686
158687 राकाब्धिपूरसंप्रोतशङ्खशाखास्तटद्रुमाः ।
158688 चन्द्रबिम्बफलाः कल्पवृक्षा इव विभान्त्यमी ॥ ६ ॥
158689
158690 राकासु पूर्णेन्दूदयकाले प्रवृद्धस्याब्धेः पूरैः संप्रोतशङ्खा शाखा
158691 येषां तथाविधा अमी तटद्रुमाश्चन्द्रबिम्बानीवामृतरसपूर्णानि शुभ्राणि च
158692 फलानि येषां तथाविधाः कल्पवृक्षा इव विभान्ति । पश्येति सर्वत्रानुषङ्गः ॥ ६ ॥
158693
158694 रत्नपुष्पभरापूर्णरक्तपल्लवपाणयः ।
158695 भवन्तं पूजयन्तीव लतादारान्विता द्रुमाः ॥ ७ ॥
158696
158697 लतारूपैर्दारैरन्विता द्रुमा रत्नसदृशैः पुष्पभरैः आपूर्णा
158698 रक्तपल्लवलक्षणाः पाणयो येषां तथाविधाः सन्तः स्वगृहं प्राप्तमतिथिं
158699 भवन्तं पूजयन्तीव किरन्तीत्यर्थः ॥ ७ ॥
158700
158701 प्रोतोर्मिमकरग्रासैर्दृषद्दन्तैर्गुहामुखैः ।
158702 ऋक्षवानृक्षवद्भूभृद्धत्ते घुरघुरारवम् ॥ ८ ॥
158703
158704 प्रोतोर्मीन्मकरान्ग्रसन्ति तथाविधैः

शुक्लादिवर्णदृषद्दन्तैर्गुहालक्षणैर्मुखैः ऋक्षवान्नाम भूभृत्
ऋक्षवद्भल्लूकवद्घुरघुरारवं धत्ते ॥ ८ ॥

महेन्द्रो मन्द्रगर्जाभिरभिक्षिपति गर्जतः ।
पर्जन्यानूर्जितो जन्यः प्रतिजन्यान्यथा जडैः ॥ ९ ॥

अयं महेन्द्रो गिरिरूर्ध्व गर्जतः पर्जन्यानधो मन्द्रगर्जाभिरभिमुखं क्षिपति
भर्त्सयति । यथा ऊर्जितो जन्यो युद्धकुशलः प्रतिजन्यान्त्रिपूज्ञडैर्वाक्यैः क्षिपति
तद्वत् ॥ ९ ॥

चन्दनारूषितः श्रीमाञ्जेतुं जलधिवेल्लनाः ।
समुद्यत इवोच्चोऽसौ मल्लो मलयपर्वतः ॥ १० ॥

असौ मलयपर्वतलक्षणो मल्लो जलधेः प्रतिमल्लस्य लहरीभुजवेल्लनाः जेतुं
समुद्यत इव ॥ १० ॥

सर्वतः कचितोऽजस्रं रत्नवीचिभिरम्बुधिः ।
भूरत्नवलयभ्रान्त्या प्रेक्ष्यते सूर्यमार्गगैः ॥ ११ ॥

सर्वतो रत्नयुक्तवीचिभिः कचितोऽयमम्बुधिः सूर्यमार्गगैर्नभश्चरैरजस्रं
भूरत्नवलयभ्रान्त्या प्रेक्ष्यते । कचितौजस्कम् इति पाठे ऐकपद्ये क्रियाविशेषणं
योज्यम् ॥ ११ ॥

सरन्ति रत्नमूर्धानश्चलकानिलपायिनः [चलकानिलेति संधिरार्षः ।] ।
वानपूराः पर्वतकाः सर्पा इव नतोन्नतैः ॥ १२ ॥

वानं वनसमूहास्तैः पूर्यन्त इति वानपूराः पर्वतकाः सूक्ष्माः पर्वताः वायुना
वने कम्प्यमाने चलकाः सन्तः सर्पा इव सरन्ति । रत्नमूर्धानः अनिलपायिन इति
साधारणे विशेषणे । नतोन्नतैर्गतिभेदैः ॥ १२ ॥

भ्रमन्तो वीचिशृङ्गेषु मकरेभाः करोत्कटैः ।
हरन्ति सीकराम्भोदा मेघानुद्राविता इव ॥ १३ ॥

वीचिशृङ्गेषु भ्रमन्तः सामुद्रा मकरा आरण्या इभाश्च वीचिशृङ्गेषु
निर्गच्छत्सु प्रविशत्सु च परस्परग्रहणाय करैरुत्कटैर्व्यात्तैर्मुखैश्च भ्रमन्तो
मेघैरनुद्राविता अनुद्रुताः सीकरमुचोऽम्भोदा इव हरन्ति कौतुकदर्शिनां मन इति
शेषः ॥ १३ ॥

आवर्तवलिताकारः सीकरोत्करकीर्णदिक् ।
पूर्णत्वात्तु शिरोऽशक्तो म्रियतेऽत्युत्करः करी ॥ १४ ॥

तत्रैकः करी दैवादगाधे जले आवर्तेन कलितः परिवर्तित आकारो यस्य तथाविधः सन्
सीकरोत्करैः कीर्णा दिशो येन तथाविधो भूत्वा मज्जनजलपूर्णत्वात्तु शिर
उन्नेतुमशक्त ऊर्ध्वीकृतकरः सन् म्रियते पश्य ॥ १४ ॥

विविधप्राणिसंपूर्णाः सजलाद्रिनतोन्नताः ।
यथैवाम्भोधयः सर्वास्तथैव द्वीपभूमयः ॥ १५ ॥

सजलाश्च ते अद्रिभिर्नतोन्नता विषमाश्च अम्भोधयो यथा सन्ति तथा सर्वा
द्वीपभूमयोऽपि सन्तीति बोध्यमित्यर्थः ॥ १५ ॥

आवर्तानात्मनोऽनन्यानप्यन्यानिव भास्वरान् ।

158757 गृह्यमाणानसद्रूपान्दृश्यमानानपि स्फुटान् ॥ १६ ॥
158758
158759 अम्बुधिर्ब्रह्मजगन्तीव आवर्तान् धत्ते इति द्वयोरन्वयः ।
158760 आत्मनोऽनन्यानप्यन्यानिवेत्यादिविशेषणानि आवर्तजगतोः साधारण्येन योज्यानि ॥ १६ ॥
158761
158762 तरङ्गतरलानन्तर्जडानप्यम्बुधिश्चलान् ।
158763 धत्ते ब्रह्मजगन्तीव सान्तानप्यन्तवर्जितान् ॥ १७ ॥
158764
158765 यानन्तरिन्द्रवद्भानुमणीन्धत्तेऽम्बुधिर्बहून् ।
158766 मन्थापहृतसर्वस्वो देवेभ्यः परिरक्षितान् ॥ १८ ॥
158767
158768 मन्थने देवासुरैरपहृतसर्वस्वोऽम्बुधिस्तस्मिन्काले देवेभ्यः परिरक्षितान्गोपितान्
158769 यान् बहून्भानुमणीनन्तर्धत्ते । इन्द्रवत् यथा इन्द्रः असुरेभ्यो
158770 गोपयन्मणीनन्तर्धत्ते तद्वत् ॥ १८ ॥
158771
158772 दृश्यमानान्महातेजस्तथा पातालतोऽप्यलम् ।
158773 प्रतिबिम्बविभङ्ग्यान्तरसत्यानिव गोपितान् ॥ १९ ॥
158774
158775 तथा महातेजोरूपानत एव पातालतोऽपि अलं दृश्यमानान् यन्मणीन्
158776 प्रतिबिम्बविभङ्ग्या असत्यानिव कृत्वा अन्तर्गोपितान्धत्ते ॥ १९ ॥
158777
158778 तेषां मध्यादेकमेहं प्रत्यहं पश्चिमार्णवे ।
158779 निक्षेपाय क्षिपति यं तेन मन्ये दिनं भवेत् ॥ २० ॥
158780
158781 तेषां मणीनां मध्यात्प्रत्यहमेकं यं मणिं पश्चिमार्णवे निक्षेपायान्तरिक्षे
158782 क्षिपति तेन तद्दिनं भवेदिति मन्ये इत्युत्प्रेक्षा ॥ २० ॥
158783
158784 नानदिग्देशपयसामब्धौ साधुसमागमः ।
158785 यात्रायामिव लोकानां मिथः कलकलान्वितः ॥ २१ ॥
158786
158787 अब्धिकलकले हेतुमुत्प्रेक्षमाण आह - नानेति ॥ २१ ॥
158788
158789 जलेचरावरा नूनं सागरार्णवसंगमे ।
158790 अन्योन्यवेल्लनाद्युद्धं न कदाचन शाम्यति ॥ २२ ॥
158791
158792 युद्धोत्साहवतां मध्ये जलेचरा एव वराः । नूनमिति वितर्के । कुतः । यतः
158793 सागरार्णवयोः पूर्वापरसमुद्रयोः संगमे येषां सदैवान्योन्यवेल्लनान्न
158794 कदाचन युद्धं शाम्यति ॥ २२ ॥
158795
158796 ताम्यत्तिमितरङ्गाग्रनर्तनावर्तविभ्रमम् ।
158797 वलयन्वायुरायाति वान्तसीकरमौक्तिकैः ॥ २३ ॥
158798
158799 ताम्यतां ग्लायतां तिमीनां मत्स्यभेदानां तरङ्गाग्रेषु नर्तने य
158800 आवर्तविभ्रमस्तं वान्तैरुद्गीर्णैः सीकरलक्षणैः सीकरसहितैर्वा मौक्तिकैः
158801 पारितोषिकैर्वलयन्वेष्टयन्प्रभुरिव वायुरायाति पश्य ॥ २३ ॥
158802
158803 सरिन्मुक्तालतामध्यमध्यस्थाब्दमणीश्वराः ।
158804 दीर्घाः खणखणायन्ते चञ्चलाः सर्वतोऽम्बुधेः ॥ २४ ॥
158805
158806 सरिल्लक्षणानां मुक्तालतानां मध्ये मध्ये स्थिता अब्दलक्षणा मणीश्वरा
158807 मणिश्रेष्ठा अम्बुधेः कण्ठे सर्वतो दीर्घा लम्बमानाः
158808 परस्पराभिघातात्खणखणायन्त इत्युत्प्रेक्षा ॥ २४ ॥

158809
158810 महेन्द्राद्रेर्गुहागेहपरावृत्तार्णवाध्वनाम् ।
158811 भांकारिण्यो भुवः सिद्धसाध्यानां सुसुखावहः ॥ २५ ॥
158812
158813 पुनः कीदृशो वायुः । महेन्द्राद्रेर्भाकारिण्यः अरतिकारिणीः ।
158814 विभक्तिव्यत्ययश्छान्दसः । भुवः प्राप्य तत्रारुच्या गुहागेहेषु रत्यर्थं
158815 परावृत्तार्णवाध्वनां सिद्धानां साध्यानां च देवयोनिभेदानां
158816 रतिश्रमापनोदेन सुसुखावहः ॥ २५ ॥
158817
158818 मन्दरः कन्दरोद्गीर्णैः प्रसरैर्मातरिश्वनः ।
158819 कम्पाकुलवनाभोगः पुष्पमेघांस्तनोति खे ॥ २६ ॥
158820
158821 अपरो मन्दरं वर्णयन्दर्शयति - मन्दर इति । कन्दरेभ्य उद्गीर्णैर्मातरिश्वनो
158822 वायोः प्रसरैः खे पुष्पवर्षिणो मेघांस्तनोति विस्तारयति । प्रस्थारूढान् मेघान्
158823 पुष्पैः पूरयतीति यावत् ॥ २६ ॥
158824
158825 चूतनीपकदम्बाढ्यगन्धमादनकन्दरान् ।
158826 विशन्ति मेघहरिणास्तडित्तरललोचनाः ॥ २७ ॥
158827
158828 हिमवत्कन्दरोद्गीर्णा वल्लीवलयताण्डवम् ।
158829 तन्वाया वायवो यान्ति विभिन्नाब्दाब्धिवीचयः ॥ २८ ॥
158830
158831 विभिन्ना अब्दाः अब्धिवीचयश्चयैः । शैत्यमान्द्यसौरभ्योपपादकानि विशेषणानि ॥
158832 २८ ॥
158833
158834 तात चूतकदम्बाग्रपरामर्शसुगन्धयः ।
158835 वलयन्त्यब्धिकल्लोलान्गन्धमादनवायवः ॥ २९ ॥
158836
158837 जलदान्वलयन्वायुरलकालकतां गतान् ।
158838 इत आयाति पुष्पाभ्रं रचयन्वनवीथिषु ॥ ३० ॥
158839
158840 अलकायाः कुबेरपुर्या अलकतां कुन्तलतां गतान्प्राप्तान् ॥ ३० ॥
158841
158842 कुन्दमन्दारसंदोहमधुरामोदमन्थरान् ।
158843 तुषारसीकरोन्मिश्रानिवात्र कलयानिलान् ॥ ३१ ॥
158844
158845 अत्रास्मिनगन्धमादने अनिलान्कलय स्पृश ॥ ३१ ॥
158846
158847 नालिकेरलतालास्यलब्धतिक्तसुगन्धयः ।
158848 पतन्ति पवनाः पश्य पारसीकपुरीः पुरा ॥ ३२ ॥
158849
158850 नालिकेरतरूणां मल्लिकादिलतानां च लास्येन क्रमाल्लब्धस्तन्मद्यतिक्तगन्धः
158851 सुगन्धश्च यैः । पुरा पश्य ॥ ३२ ॥
158852
158853 धुन्वानाः पुष्पितेशानवनकर्पूरवारिदान् ।
158854 चालयन्तोऽनिला वान्ति कैलासकमलाकरान् ॥ ३३ ॥
158855
158856 पुष्पितं यदीशानस्य प्रमदवनं तत्रत्यकदलीकर्पूरसुरभीन्वारिदान्धुन्वानाः ॥
158857 ३३ ॥
158858
158859 करीन्द्रकुम्भनिष्क्रान्तमदमन्थरमूर्तयः ।
158860 इमे शुकशुकायन्ते विन्ध्यकन्दरवायवः ॥ ३४ ॥

158861
158862 शुकशुकायन्ते इति वीरणस्तम्बोद्भूताव्यक्तध्वन्यनुकरणम् । अथवा विन्ध्यशुकैः
158863 सह निर्गमनात्तद्वर्णैः शुकायन्ते हरितायन्ते ॥ ३४ ॥
158864
158865 शबरीणां शरीरेषु शीर्णपर्णोत्करे गिरौ ।
158866 नाराचैः पर्णशबरैर्वनाली नगरायते ॥ ३५ ॥
158867
158868 शबरीणां शरीरेषु परिधानकल्पनया शीर्णपर्णोत्करे मलयगिरौ पर्णपरिधानैः
158869 शबरैस्तन्नाराचैश्च पूर्णा अल्पावशेषमृगपक्षिगणा मलयवनाली
158870 नगरमिवाचरति नगरायते ॥ ३५ ॥
158871
158872 अब्ध्यद्रिसरिदम्भोदवनलेखाङ्किका दिशः ।
158873 त्वत्प्रतापबलैरेता हसन्तीवार्करश्मिभिः ॥ ३६ ॥
158874
158875 अत्रोपशैलवनवीथिषु पुष्पशय्या विद्याधरीविरचिताः परिवर्णयन्ति ।
158876 पार्श्वद्वयस्थपरिवृत्तपदात्समुद्राद्यावृत्तमुग्धवनितापुरुषायितानि ॥
158877 ३७ ॥
158878
158879 अत्रास्मिन्प्रदेशे उपशैलवनवीथिषु रत्यर्थं विद्याधरीभिर्विरचिताः पुष्पशय्याः
158880 परिवर्णयन्ति सूचयन्ति । कस्माल्लिङ्गात्किं सूचयन्ति तदाह - पार्श्वेति । समुद्रात्
158881 अलक्तकमुद्रासहितात्पार्श्वद्वयस्थात्परिवृत्तात्सम्यङ्निष्पन्नात्पदालिङ्गात् । पुंसि
158882 रतिश्रान्ते सति अधोदेशाद्यावृत्तायाः मुग्धवनितायाः उपरि सुरतलक्षणानि
158883 पुरुषायितानि पुरुषवदाचरणानि सूचयन्तीत्यर्थः ॥ ३७ ॥
158884
158885 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० निर्वा० उ० अवि० विप० दिग्दर्शनं
158886 नाम चतुर्दशाधिकशततमः सर्गः ॥ ११४ ॥
158887
158888 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
158889 दिग्दर्शनं नाम चतुर्दशाधिकशततमः सर्गः ॥ ११४ ॥
158890
158891 पञ्चदशाधिकशततमः सर्गः ११५
158892
158893 पार्श्वगा ऊचुः ।
158894
158895 अत्रोत्तमाशय लतावलयालयेषु लीलाविलोलललनाः कलयन्ति गीतम् ।
158896 उद्दामभावरसविस्मृतवासरेहा विश्रम्य किंनरगणाः कलकाकलीकम् ॥ १ ॥
158897
158898 वर्ण्यन्तेऽत्र चतुर्दिक्षु वनानि गिरयो नगाः ।
158899 नद्यः समुद्राः पवनपक्षिग्रामघनादयः ॥
158900
158901 हे उत्तमाशय अत्रास्मिन् गिरौ लीलासु विलोला आसक्ता ललना येषां तथाविधाः
158902 किन्नरगणा उद्दामैर्भावैः संचारिभावैः रसैः संभोगशृङ्गाररसैश्च
158903 विस्मृता वासरेहा दिनचेष्टालक्षणः कालो यैस्तथाविधाः सन्तो विश्रम्य कलाः
158904 काकल्यो यस्मिंस्तथाविधं गीतं कलयन्ति गायन्ति शृण्वन्ति च ॥ १ ॥
158905
158906 एते हिमाद्रिमलयाचलविन्ध्यसह्यक्रौञ्चा महेन्द्रमधुमन्दरदर्दुराद्याः ।
158907 दूरस्थिता दृशि सिताभ्रपटा वहन्ति संशुष्कपर्णलवलाञ्छितलोष्टलीलाम् ॥ २
158908 ॥
158909
158910 अत्युन्नता अपि गिरयो दूराद्दृश्यमाना अल्पवद्भान्तीत्याह - एते । एते
158911 हिमाद्रिमलयाद्याः सिताभ्रपटाः शैला दूरस्थिताः सन्तो दृशि प्रेक्षकदृष्टौ
158912 संशुष्कपर्णलवलाञ्छितानां लोष्टानां लीलां साम्यं वहन्ति पश्य ॥ २ ॥

158913
158914 अमी दूरालोकव्यवहितमहावर्त्मनिचयाः पुरःप्राकाराणां कुलशिखरिणो
158915 बिभ्रति वपुः।
158916 विशन्तीरम्भोधिं कलय लुलिता भान्ति सरितः पटस्यान्तः सक्ताः
158917 प्रतनुसितसूत्रा इव दशाः॥ ३॥
158918
158919 किंचामी कुलशिखरिणो दूरादालोकनमालोकस्तस्मिन् अपारे परेषां व्यवहिता
158920 अन्तरालदेशवर्त्मनिचया येषां तथाविधा सन्तः परस्परसंलग्नतया परितो
158921 दृश्यमानाः पुरःप्राकाराणां वपुर्बिभ्रति। तथा अम्भोधि विशन्तीः
158922 प्रवेशत्वरया च लुलिताः सरितः पटस्यान्तः सक्ताः प्रतनुसितसूत्रा दशा इव भान्ति॥
158923 ३॥
158924
158925 दशाशाः शैलानामुपरि परितः प्रावृतघना घनश्यामाकाराः
158926 खगकलकलालापलपिताः।
158927 लतामुक्तैः पुष्पैर्ललितवनलेखाभुजलता हसन्त्यस्ते राजन्भवनवनिता भान्ति
158928 पुरतः॥ ४॥
158929
158930 हे राजन् परितः शैलानामुपरि प्रावृता घना मेघा याभिस्ताः घना इव
158931 श्यामाकाराः। खगानां कलकलालापा एव लपितानि यासां ताः। तथा लताभिर्मुक्तैः
158932 पुष्पैरुपलक्षिताः। ललिताः शोभमाना वनलेखालक्षणा भुजलता यासां तथाविधा
158933 दश आशा दिशस्ते भवनवनिता राज्ञीर्हसन्त्य इव पुरतो भान्ति॥ ४॥
158934
158935 तालीतमालबकुलाकुलतुङ्गशृङ्गमेकीकृताकृति वनं तरलं विभाति।
158936 अभ्याहतं जलनिधेस्तरलैस्तरङ्गैस्तीरान्तलग्नघनशैवलजालकल्पम्॥ ५॥
158937
158938 ताल्यादिभिराकुलानि तुङ्गानि गिरिशृङ्गाणि यस्मिंस्तथाविधम्।
158939 दूराद्वप्रवद्भासमानेषु शैलेष्वेकीकृताकृति। पवनतरलं वनं
158940 जलनिधेस्तरलैस्तरङ्गैरभ्याहतं तीरान्तलग्नघनशैवलजालकल्पं विभाति।
158941 ईषदसमाप्तिद्योतकेन कल्पपा सादृश्यस्य गम्यमानत्वाद्गम्यमानोपमा॥ ५॥
158942
158943 इतः स्वपिति केशवः कुलमितस्तदीयद्विषामितोऽपि शरणार्थिनः शिखरिपत्रिणः
158944 शेरते।
158945 इतोऽपि वडवानलः सह समस्तसंवर्तकैरहो विततमूर्जितं भरसहं च
158946 सिन्धोर्वपुः॥ ६॥
158947
158948 शिखरिणः पर्वतास्तल्लक्षणाः पत्रिणः पक्षिणः शेरते स्वपन्ति। शीङो रुट्। सिन्धोः
158949 समुद्रस्य वपुर्विततं विस्तीर्णं ऊर्जितं बलवद्भरसहंन् बहुभारसहिष्णु अहो
158950 आश्चर्यमनुपममित्यर्थः॥ ६॥
158951
158952 एते जम्बुनदीतटा रविकरैराभान्ति
158953 हेमाखिलग्रामारण्यपुरस्थलीगिरितरुस्थाण्वग्रहारोच्चयाः।
158954 ज्वालालीवलितांबरांतरलिहो मुञ्चन्ति भासोभितस्सर्वा भूमिप
158955 भूरिहैवममरासेव्यास्ति नो मानुषैः॥ ७॥
158956
158957 कश्चिदुत्तरदिशि प्रस्थितं विपश्चितं प्रति मेरुमूले सौवर्णान्
158958 जम्बुनदीतटान्प्रदर्शयन्नाह - एते इति। हेमभूताः अखिला ग्रामादयो येषु
158959 तथाविधा एते जम्बूनदीतटा रविकरैर्व्याप्ताः सन्तः अभितः आभान्ति।
158960 ज्वालालीवलिताम्बरान्तरलिहः सन्तः अभितो भासो मुञ्चन्ति। हे भूमिप इह एवंभूता
158961 सर्वा भूः अमरैर्देवैरासेव्या उपभोक्तुं योग्यास्ति मानुषैर्नो आसेव्येत्यर्थः॥ ७॥
158962
158963 एते कदम्बवनकम्बलमम्बुदाभमाभान्ति भास्करपथानुगता वहन्तः।
158964 अस्याचलस्य वसुधेव तटं तवास्तु मा सूर्यरोधकनभस्थघनौघशङ्का॥

८ ॥

अस्याचलस्य अम्बुदाभं कदम्बवनकम्बलं वहन्तो भास्करपथानुगता एते
अधित्यकाप्रदेशा आभान्ति । अतः एषु प्रदेशेषु तव वसुधेव इदमपि तटमिति
बुद्धिरस्तु । सूर्यरोधका नभस्था घनौघा एते इति शङ्का मास्त्वित्यर्थः ॥ ८ ॥

एषोऽसौ मलयो लयोग्रलवलीवल्लीलसच्चन्दनस्फीतामोदमदाद्रसेन तरवो वक्त्रे
क्रियन्ते त्रिभिः ।
सज्वालोदहनाक्षसंस्थितकपोलोष्मोदयोत्ताण्डवे
अङ्गुष्ठाङ्गुलिभिर्यथोष्णककणास्तप्ता यथा योषिताम् ॥ ९ ॥

अपरो दक्षिणदिक्प्रस्थिताय विपश्चिते मलयाद्रिं वर्णयन्दर्शयति - एष इति । एष
समीपे दृश्यमानो मलयोऽसावेवंप्रभावः । यस्य अग्राभिः
श्रेष्ठाभिर्लवलीवल्लीभिर्लसतां चन्दनानां स्फीतादामोदमदादन्येऽपि तरवो रसेन
चन्दनीभूतास्त्रिभिरपि देवैर्मनुष्यैरसुरैश्च वक्त्रे मुखपद्मे अलय इव
तिलकीक्रियन्ते । किंचास्मादामोदमदात्सज्वाल ऊर्ध्वो ज्वलनः अक्षे तृतीयनेत्रे
संस्थितो यस्य तथाविधस्य रुद्रस्य कपोलयोरुष्मोदयो यस्मिंस्तथाविधे उत्कृष्टे
ताण्डवे प्रसक्तास्तप्ताः यथोपपन्ना उष्णककणाः स्वेदबिन्दवो यथा योषितां
रतिश्रमजाः स्वेदबिन्दवः शिशिरतरास्तथा क्रियन्ते एवंप्रभावोऽयमित्यर्थः ॥ ९ ॥

एषोऽब्धिधौतकलधौततटाधिरूढभोगीन्द्रभोगपरिवेष्टितचन्दनोऽगः ।
विद्याधरीवदनपङ्कजदीप्तिपुञ्जहेमीकृताखिलशिलो मलयाभिधानः ॥ १० ॥

अब्धितरङ्गैर्धौतेषु कलधौतं सुवर्णं तन्मयेषु तटेष्वधिरूढाः
प्रादुर्भूता भोगीन्द्राणां भोगैः कायैः परिवेष्टिताश्चन्दनवृक्षा
यस्मिंस्तथाविधः । तथा विद्याधरीणां वदनपङ्कजदीप्तिपुञ्जैर्हेमीकृता अन्या
अप्यखिलाः शिला यस्य तथाविध एष पुरोवृती अगो मलयाभिधानः । मा लक्ष्मीर्लीयते
अस्मिन्नित्यन्वर्थनामेत्यर्थः । ङ्यापोः इति ह्रस्वः ॥ १० ॥

कूजत्कुञ्जकठोरगह्वरनदीक्रत्कारवत्कीचकस्तम्भाडम्बर##-
एतस्मिन्प्रबलाकिनां प्रचलतामुद्वेजिताः कूजितैरुद्वेल्लन्ति
पुराणरोहणतरुस्तम्भेषु कुम्भीनसाः ॥ ११ ॥

कूजन्तः कुञ्जानां कठोराणां शिलाकटकादिप्रदेशानां गह्वराणां नदीनां
क्रत्कारास्तालध्वनिभेदास्तद्वन्तो ये कीचकस्तम्भास्तेषां गीताडम्बरेण
तच्छ्रवणासक्त्या मूकं निःशब्दं मौकुलिनां मुकुलनिवासिनां भ्रमराणां
कुलं यस्मिंस्तथाविधः क्रौञ्चाचलनामायं गिरिः । एतस्मिन् गिरौ प्रचलतां
प्रकृष्टाः कलाकिनो बलाकावन्तो नीलमेघाः प्रिया येषां मयूराणां तेषां
कूजितैरुद्वेजिताः कुम्भीनसाः सर्पजातिभेदाः पुराणं चिरंतनं रोहणं
प्रादुर्भावो येषां तथाविधानां सकोटरजीर्णतरूणां स्तम्भेषु मध्यकाष्ठेषु
उद्वेल्लन्ति अधिरुह्य भोगसंकोचेन निलीयन्त इत्यर्थः ॥ ११ ॥

कोमलकनकलतालयविलसितललनाविलोलवलयकृतम् ।
श्रवणरसायनपानं विततमिहाकर्णयास्य तटे ॥ १२ ॥

हे राजन् इहास्य क्रौञ्चस्य तटे कोमलकनकलतारचिते आलये निकुञ्जे कान्तेन सह
विलसितानां ललनानां रतिविलोलैर्वलयैः कृतं रागि श्रवणयो रसायनपानप्रायं
विततं सिंजितमाकर्णय ॥ १२ ॥

करिकरटगलितमदजलवलितश्वलवीचिचञ्चरीकचयैः ।
चर्वित एष कदर्थित इव कणनिकरो विरौति वारिनिधौ ॥ १३ ॥

159017 करिणां करटेभ्यो गण्डस्थलेभ्यो गलितैर्मदजलैर्वलितो मिश्रित इति हेतोश्चलवीचिषु
159018 चञ्चरीकचयैर्भ्रमरसमूहैश्चर्वित इव वारिनिधौ कणनिकरो विरौति रोदितीत्युत्प्रेक्षा
159019 || १३ ||
159020
159021 पश्यामलेन्दुरामृतनवनीतशरीरसुन्दरीवलितः |
159022 पितुरुत्सङ्गे कुरुते जललीलां क्षीरवारिनिधौ || १४ ||
159023
159024 अब्धेश्चल प्रतिबिम्बचन्द्रं दर्शयन्नुत्प्रेक्षते - पश्येति | हे राजन् अमलेन्दुः
159025 आमृतं अमृतमथनजं यन्नवनीतं
159026 तादृशशरीरस्तादृशशरीराभिर्नक्षत्रसुन्दरीभिर्वलितः सन् क्षीरवारिनिधौ
159027 प्रतिबिम्बितः पितुरुत्सङ्गे जललीलां जलक्रीडां कुरुते | पश्येदं कौतुकमित्यर्थः || १४
159028 | |
159029
159030 नृत्यन्ति मत्तकलकोकिलकाकलीकाः पश्यामले मलयसानुनि बालवल्ल्यः |
159031 लोलालिजालनयनारुणपत्रपाणिपुष्पा [लोकालीति विशेषणोभयपदः
159032 कर्मधारयोऽयम् |] मधूत्सवविलासविशेषवत्यः || १५ ||
159033
159034 अपरः कश्चिन्मलये लतानृत्यं दर्शयति - नृत्यन्तीति | लोलालिजालनयना
159035 [लोलालीति विशेषणोभयपदः कर्मधारयोऽयम् |] अरुणपत्रपाणिषु पुष्पाणि
159036 यासां ताः | मधूत्सवविलासैः परागैर्विशेषवत्यो विशेषकवत्यः || १५ ||
159037
159038 वंशानां हृदि पर्वतेषु जलधौ तोयार्थिनीनां तु ये शुक्तीनां हृदये
159039 विशन्ति समये वर्षांभसां बिन्दवः |
159040 ते मुक्ताफलतां व्रजन्ति करिणां कुम्भेषु वान्यद्भवेत् शुद्धौ
159041 मौक्तिकवत्स्युरुत्तमगुणा एतास्त्रिधा जातयः || १६ ||
159042
159043 कश्चित्त्रीनुत्तमान्मुक्ताकरांस्तेषूत्तमगुणमुक्ताफलोत्पत्तिं च वर्णयति -
159044 वंशानामिति | पर्वतेषु वंशानां वेणुभेदानां हृदि काण्डच्छिद्रे | तथा
159045 जलधौ तोयार्थिनीनां शुक्तीनां हृदये च स्वातिसमये ये वर्षाम्भसां बिन्दवो
159046 विशन्ति ते मुक्ताफलतां व्रजन्ति | अन्यत्तृतीयं तु मुक्ताफलं करिणां
159047 गन्धहस्तिनां कुम्भेषु भवेत् | एषामुक्तरूपाणां मुक्ताफलानां एतास्त्रिधा
159048 प्रसिद्धा जातयः स्थानशुद्धौ मौक्तिकस्थौल्यप्रकर्षवद्गुणतोऽप्युत्तमगुणा
159049 भवन्तीत्यर्थः || १६ ||
159050
159051 शैलेऽब्धौ पुरुषेऽवनौ जलधरे भेके शिलायां गजे नानाकारधरा भवन्ति
159052 मणयः कर्माणि तेषां विभो |
159053 ह्लादोच्चाटनमारणज्वरभयभ्रान्तिप्रकाशान्धताखेदोत्तापनभून##-
159054
159055 एवं रत्नानामप्याकरभेदेनोत्पत्तिं गुणक्रियावैचित्र्यं च रत्नशास्त्रे
159056 प्रसिद्धमित्याह - शैले इति | तेषां यथायोगं कर्माणि शृणु |
159057 ह्लादस्तापशान्तिः शत्रूणामुच्चाटनं मारणम् | ज्वरः भयं भ्रान्तिः अन्धता
159058 खेदः उत्तापनं चेति | रत्नस्वामिनो व्यवहितविप्रकृष्टार्थप्रकाशो
159059 भूगतिर्दूरगमनशक्तिर्भूमौ निमज्ज्य गमनशक्तिर्वा नभोगतिः प्रसिद्धा
159060 अतीतानागतदर्शनं व्याधिदुर्भिक्षादिनाशः परप्रयुक्तविषकृत्या
159061 यन्त्रादिप्रतिविधानं चेत्यर्थः | चार्थे तथाशब्दः || १७ ||
159062
159063 वातायनोदरगवाक्षकवाटकक्षाद्वारानानैरिह पुराण्युदिते पठन्ति |
159064 श्वभ्राभ्रकन्दरदरीवनवेणुरन्ध्रवर्गेण मन्दर इवामृतसिन्धुमिन्दुम्
159065 || १८ ||
159066
159067 अपरः कश्चिदिन्दूदये प्रहर्षप्रवृत्तं नगरे वातायनादिजनघोषं मन्दरे
159068 श्वभ्रादिघोषं

चोपमेयोपमानभावेनोत्प्रेक्षमाणश्चन्द्रस्तवपाठत्वेनोत्प्रेक्षते - वातायनेति
| इहास्मिन्देशे पुराणि कर्तॄणि इन्दौ उदिते सति वातायनोदरादिलक्षणैराननैर्मन्दरो
गिरिः श्वभ्राभ्रकन्दरदरीवनवेणूनां रन्ध्रव्रणेणेव
अमृतसमुद्रभूतमिन्दुं पठन्ति स्तुवन्तीत्युत्प्रेक्षा || १८ ||

एतच्छृङ्गं हरति पवनः
किंस्विदित्युन्मुखीभिर्दृष्टोत्साहश्चकितचकितं मुग्धसिद्धाङ्गनाभिः |
प्रालेयाद्रेः प्रतिततवनं प्रोत्पतत्यभ्रमूर्ध्वं वज्रस्तम्भो
गगनसुतलोत्तोलनायेव भूमेः || १९ ||

हिमाद्रितटेभ्योऽभ्रोत्पतनं पवनकृतशृङ्गहरणत्वेन
भूम्युत्थिताकाशपातालोत्तोलमस्तम्भत्वेन चोत्प्रेक्षमाणः कश्चिदाह - एतदिति |
गगनस्य सुतलस्य च गुरुत्वाधिक्यपरीक्षार्थमुत्तोलनायेव || १९ ||

गङ्गातरङ्गहिमसीकरशीतलानि विद्याधराध्युषितचारुशिलातलानि |
पुष्पाभ्रसंवलितपुष्पितकाननानि राजन्विलोकय महेन्द्रगिरेस्तटानि || २० ||

देशान्तरेषु विततानि वनान्तराणि पुष्पस्थलान्युपवनान्यथ पत्तनानि |
तीर्थेषु पूतभुवनानि जलानि दृष्ट्वा दौर्भाग्यभीतिरपयाति जवानुविद्धा || २१
| |

पुण्यतमदेशवनतीर्थादिदर्शनस्य दौर्भाग्यनिवृत्तिर्महाफलमस्तीत्याह -
देशान्तरेष्विति | जवेनानुविद्धा घटिता द्रुतमपयातीति यावत् || २१ ||

शृङ्गाणि पूरितदिगन्तरमण्डलानि श्वभ्राभ्रकन्दरनिकुञ्जकुलाकुलानि |
व्योमोपमान्यपि च वारिधिकुण्डलानि दृष्ट्वा गलन्ति कुकृतानि बृहत्तराणि ||
२२ ||

श्रीशैलादि शृङ्गाणि | साधुजनपूरितानि दिगन्तराणि | तीर्थकूपवाप्यादिश्वभ्राणि |
हिमवदादीनामभ्रयुक्तानि कन्दराणि चम्पकारण्यादीनि | निकुञ्जकुलैराकुलानि |
व्योमोपमानि निर्मलानि वारिधिकुण्डलानि सेतुबन्धादितीर्थानि दृष्ट्वा प्राणिनां
कुकृतानि पापानि बृहत्तराणि ब्रह्महत्यादीन्यपि गलन्ति नश्यन्ति || २२ ||

रम्याश्चन्दनवीथयो हि मलये विन्ध्ये मदान्धा गजाः कैलासे नृप पादजाति
कनकं चन्द्रं महेन्द्राचले |
दिव्याश्चौषधयस्तुषारशिखरे सर्वत्र रत्नानि वै सन्त्यन्धाखुवदेष
जीर्णसदने व्यर्थन् जनो जीर्यते || २३ ||

तत्तदुत्तमवस्तुशालिनां कुलशैलानामदर्शने नृणां नेत्राणां
वैयर्थ्यमेवेत्याशयेनाह - रम्या इति | हे नृप पादजाति श्रेष्ठं कनकम् |
चन्द्रं गिरिधातुविशेषः | तुषारशिखरे हिमवति | सर्वत्रान्येष्वेतेषु च रत्नानि सन्ति |
एवं सत्यप्येष भाग्यहीनो जनस्तान्यपश्यन्नन्धश्चासावास्तुर्मूषकश्च तद्वज्जीर्णे
सदने व्यर्थ जीर्यते | आश्चर्यमित्यर्थः || २३ ||

सोन्नतं जगदिवोरुतटाकं वारिणा विवलितं तिमिरेण |
प्रस्फुरन्ति च युगान्त इवैता विद्युतः शफरिका इव लोलाः || २४ ||

सजलदास्तिमिरावृता दिशः कश्चिद्वर्णयति - सोन्नतमिति | मेघतिमिरेणावृता
एता दिशो युगान्ते वारिणा विवलितं सोन्नतमन्तरिक्षलोकपर्यन्तं पूर्ण जगदेव
एकतटाकभूतमिव प्रस्फुरन्ति | तत्र लोला विद्युतस्तस्मिंस्तटाके शफरिकाः
क्षुद्रमत्स्या इव प्रस्फुरन्ति || २४ ||

159121 सावश्यायाश्याननीहारधारा धारोद्गारान्वारिदान्मादयन्तः ।
159122 शीतानीतोद्दामरोमाञ्चचर्चाः प्रोद्यच्छब्दं वान्त्यहो वर्षवाताः ॥ २५ ॥
159123
159124 स्वयं सावश्यायाः सहिमाः भूम्यादौ च श्यानाः शोषणेन तनूकृता
159125 नीहारधारा यैः धाराः उद्गिरन्तीति धारोद्गारास्तथाविधान्वारिदान्मादयन्तो
159126 मत्तान्कुर्वाणाः । शीतस्पर्शेन आनीता जनानामुद्दामरोमाञ्चचर्चा यैस्तथाविधा
159127 वर्षवाताः प्रोद्यच्छब्दं यथा स्यात्तथा वान्ति । अहो इत्याश्चर्ये ॥ २५ ॥
159128
159129 हा वाति नीलजलदप्रसरानुसारी वातः किरन्विटपिपल्लवपुष्पगुच्छान् ।
159130 धीरोत्करद्रुमवनान्तरचारचारुरासारसीकरकदम्बकसारसारः ॥ २६ ॥
159131
159132 नीलजलदप्रसरानुसारी अङ्कुरद्रुमवनान्तरचारेण चारुः सौगन्ध्यादिगुणवान्
159133 आसारसीकराणां कदम्बकैर्निकुरम्बैः सारादपि सारो धीरो वातो विटपिनां
159134 पल्लवपुष्पगुच्छान्किरन्सन् वाति । हा इति शीतार्तस्य विरहिणो वा खेदोक्तिः ॥ २६ ॥
159135
159136 मारुताः सुरतक्रान्तकान्तानिःश्वसितैरिमे ।
159137 वहन्ति वृद्धिं गन्धं च लवं स्वर्गादिव च्युताः ॥ २७ ॥
159138
159139 स्वर्गाच्च्युताः जीवाः पूर्वपुण्यवासनालवमिव ॥ २७ ॥
159140
159141 कुवलयकुवलयविकचनकुसुमलताविदलनोद्यता मृदवः ।
159142 घनपटपाटनपटवो विधुतोपवना वहन्त्यमी पवनाः ॥ २८ ॥
159143
159144 कुवलये भूमण्डले यानि कुवलयान्युत्पलानि तेषां विकचने विकासे । तथा
159145 कुसुमलतानां विदलने मुकुलपुटभेदने च उद्यता इति सुगन्धयः ।
159146 घनलक्षणानांन् पटानां पाटने पटव इति शीताः अमी पवना वहन्ति ॥ २८ ॥
159147
159148 संध्याभ्रलेशानुपयन्ति वाता नभस्तले कोमलकम्पनेन ।
159149 नृपाङ्गणे पुष्पविचित्रलेखानुवासिते भृत्यवरा इवैते ॥ २९ ॥
159150
159151 एते वाता नभस्तले संध्याभ्रलेशान् कोमलकम्पनेन मन्दचालनेनोपयन्ति । यथा
159152 पुष्पाणां विचित्रलेखाभिरनुवासिते नृपाङ्गणे भृत्यवराः
159153 पुष्पाण्यनुपमृद्नन्तः संचरन्ति तद्वदित्यर्थः ॥ २९ ॥
159154
159155 क्वचित्कुसुमगन्धयः कमलवर्गगन्धाः क्वचित्क्वचित्कुसुमवर्षिणो
159156 ललितकेसरासारिणः ।
159157 क्वचिच्च हिमपाण्डवो हरितपीतलश्यामला वहन्ति शिखरानिलाः
159158 सुरतमन्दघर्मच्छिदः ॥ ३० ॥
159159
159160 कुसुमानामिव गन्धो येषाम् । उपमानपूर्वपदत्वादित् । क्वचित्कमलवर्गाणां गन्ध
159161 इव गन्धो येषाम् । हिमैः पाण्डवः हरितपीतलश्यामलैर्गिरिधातुभिस्तद्वर्णाः
159162 शिखरसंबन्धिनोऽनिलाः सुरते मन्दानां श्रान्तानां धर्माम्बुच्छिदो वहन्ति ॥ ३०
159163 ॥
159164
159165 क्वचिद्धुंकारकांकारैरङ्गारनिकरान्करैः ।
159166 किंकरैर्विकिरत्यर्को मूर्खसंसर्गवानिव ॥ ३१ ॥
159167
159168 किंकरैः सेवकवदाज्ञाकारिभिः सूर्यकान्तमणिभिर्गुहादौ दह्यमानानां
159169 प्राणिनां हुंकारैः
159170 कांकारैराक्रन्दनशब्दैश्चोपलक्षितानङ्गारनिकरान्करैर्विकिरति प्रक्षिपति ॥ ३१ ॥
159171
159172 नररसायनतृप्तिविमुक्तया प्रमदया मदयापितलज्जया ।

159173 उपगते वपुषा न विषह्यते विषविमूर्च्छनयेव समायता || ३२ ||
159174
159175 नरः पुरुषस्तल्लक्षणं यत्सङ्गमास्वाद्यं रसायनं तद्विषये तृप्तिविमुक्तया
159176 अतृप्तया अत एव मदेन यापितलज्जया अपनीतत्रपया प्रमदया वपुषा उपगते
159177 आलिङ्गिते पुरुषे सुरतोपरमाय | आवश्यककार्यान्तरोपवर्णनलक्षणा समायता
159178 वञ्चनोक्तिर्विषविमूर्च्छनया प्रयुक्ता स्वमृतिरिव न विषह्यते इत्यर्थः || ३२ ||
159179
159180 वलिततामरसा मृदुशीकराः शशिकरोत्करवीचिविभेदिनः |
159181 सदहना इव तापमयाः पुरो विरहिणीषु वनावनिवायवः || ३३ ||
159182
159183 तामरसवलनादिप्रयुक्तसर्वगुणसंपन्ना अपि वनावनिवायवो विरहिणीषु सदहना इव
159184 दाहकारिण इत्यर्थः || ३३ ||
159185
159186 इह हि पूर्वपयोधितटावटे विकटपत्रपटाः कटकीतटाः |
159187 नवमदासवयौवनसंश्रयाः कलय यान्ति कथं शवरस्त्रियः || ३४ ||
159188
159189 हे राजन् इह पूर्वपयोधितटलक्षणे अवटे निम्नदेशे कटक्यः
159190 शबरजातिप्रसिद्धकांस्यादिकटकास्तदन्वितप्रकोष्ठतटाः | विकटानि
159191 निर्गुण्डीपत्राण्येव परिधानपटो यासाम् | नवोमदासवो यस्मात्तथाविधस्य
159192 यौवनस्य संश्रयाः शबरस्त्रियः कथं यान्ति तद्गमनविलासं कलय पश्य || ३४ ||
159193
159194 नवरसासवसारनिशागमक्षयभयातुरचित्ततयाङ्गना |
159195 त्यजति कान्तमियं न मनागपि द्रुतमितो वलितेव पुरोऽहिभिः || ३५ ||
159196
159197 इयमङ्गना नवः सुरतरसो यस्मात्तथाविध आसवसारः समदसंभोगो
159198 यस्मिंस्तथाविधस्य निशागमस्य क्षयाद्यद्भयं तदातुरचित्ततया द्रुतं
159199 सार्द्रभावं कान्तं मनागपि न त्यजति | इतः पुरो दृश्यमाना अहिभिर्वलिता
159200 चन्दनलतेव सेत्यर्थः || ३५ ||
159201
159202 प्रभाततूर्यमुखरैर्दिवसैरिव तर्जिता |
159203 हृद्येव स्फुटा नारी निलीना दयितोरसि || ३६ ||
159204
159205 प्रोत्फुल्लकिंशुकैषा दक्षिणजलधेस्तटेऽत्र वनराजी |
159206 ज्वलितेव जलतरङ्गैः पौनःपुन्येन सिच्यतेऽम्बुधिना || ३७ ||
159207
159208 ज्वलितेवेति पुनः पुनः सेके हेतूत्प्रेक्षा || ३७ ||
159209
159210 अस्या निर्यान्त्यनिलैर्धूमा इव कृष्णकेसराम्बुधराः |
159211 अङ्गाका इव कुसुमान्युपशान्ताङ्गारवच्च खगभृङ्गाः || ३८ ||
159212
159213 अस्याः प्रफुल्लकिंशुकवनराजेः सकाशाद्धूमा इव कृष्णाः केसरा ऊर्ध्वभागा
159214 येषां तथाविधा अम्बुधरा धूमा इव निर्यान्ति | एवं किंशुककुसुमान्यङ्गारा इव
159215 निर्यान्ति  खगाश्च भृङ्गाश्च उपशान्ताङ्गारवच्च निर्यान्ति | पश्येति पूर्वोक्तार्थे
159216 उपपत्तिः || ३८ ||
159217
159218 ईदृश्येव विलोकय वनराजी सत्यवह्निना ज्वलिता |
159219 गिरिशिरसि तूत्तरस्यां दिशि दूरे धूयते च खे पवनैः || ३९ ||
159220
159221 कल्पितज्वलनां वनराजिं दर्शयित्वा यथार्थज्वलनां तामुत्तरतो दर्शयति -
159222 ईदृश्येवेति | पवनैः खे धूयते कम्प्यते च || ३९ ||
159223
159224 क्रौञ्चाचलस्य भुवि मन्थरमेघचक्रगम्भीरताररवनर्तितबर्हिणीयम् |

159225 पश्योत्थितं तुमुलमाकुलवर्षवातव्याधूतपुष्पफलपल्लवकाननीयम् ॥ ४० ॥
159226
159227 हे राजन् क्रौञ्चाचलस्य भुवि मन्थरस्य मन्दगतेर्मेघचक्रस्य
159228 गम्भीरैस्तारवैर्नर्तितं बर्हिणीयं बर्हिसमूहो
159229 यस्मिंस्तथाविधमाकुलवर्षवातव्याधूतपुष्पफलपल्लवमुत्थितमुन्नतं
159230 काननीयं वनसमूहं पश्य ॥ ४० ॥
159231
159232 अस्ताचले विकटकाञ्चनकूटकोटिसंघट्टनस्फुटितजर्जरचारुसंधिः ।
159233 खर्वं रथः पतति स स्म रवेः सचक्रचीत्कारतारतरकूबररास एषः ॥ ४१ ॥
159234
159235 स एष रवेः रथः अस्ताचले विकटो विषमो यः काञ्चनमयः कूटः शृङ्गं
159236 तत्कोटौ संघट्टनेन स्फुटिता जर्जराश्चारुसंधयो यस्य तथाविधः सन्
159237 सचक्रचीत्कारस्तारतरः कूबरस्य रासो ध्वनिर्यस्य तथाविधः सन् खर्व निम्नदेशं
159238 पतति स्म अवतरति किलेत्यौन्नत्यातिशयोक्तिः ॥ ४१ ॥
159239
159240 भुवनभवनप्राकारेऽद्रौ निशाकरभेरुकं परिविकसितं मीतं भासा
159241 मलालिरुपाश्रितः ।
159242 तदिह जगतां वस्तु श्रेष्ठं न किंचन विद्यते विधिरुपहतः कुर्यान्नो
159243 यत्क्षणेन कलङ्कितम् ॥ ४२ ॥
159244
159245 भुवनलक्षणस्य भवनस्य गृहस्य प्राकारभूते अद्रौ मानसोत्तरपर्वते
159246 उदयगिरिशिखरे निशाकरश्चन्द्रस्तल्लक्षणं मेरुकं माङ्गलिकं तरुविशेषजं
159247 पुष्पं देशविशेषे प्रसिद्धं तच्च मङ्गलसूचकत्वादमङ्गलान्मालिन्याद्भीतं
159248 परितो भासा विकसितमभूत् । तथाविधमप्यदःपुष्पममङ्गलकारिणा विधिना प्रेरितो
159249 मलं कलङ्कस्तल्लक्षणः अलिरुपस्थित एव । तदेवं सति इह भुवने तत्तादृशं
159250 जगतां मध्ये श्रेष्ठंन् वस्तु किंचन न विद्यते यद्वस्तु उपहतो विधिः क्षणेन
159251 कलङ्कितं न कुर्यात् । भुवमस्पृशतो गिरिशिखरनभःस्थस्य चन्द्रस्यापि
159252 यत्रेदृशी दशा तत्र किं वाच्यमन्यस्येत्यर्थः ॥ ४२ ॥
159253
159254 त्रिभुवनहराट्टहासो भुवनमहाभवन एष मङ्कोलः ।
159255 क्षीरसलिलावपूरो गगनाब्धेश्चान्द्र आलोकः ॥ ४३ ॥
159256
159257 चन्द्रप्रकाशं सर्वतः प्रसृतं त्रेधा उत्प्रेक्षते - त्रिभुवनेति । एष
159258 गगनाब्धेश्चान्द्र आलोकः प्रदोषकाले नृत्यतस्त्रिभुवनहरस्य त्रैलोक्यसंहारिणो
159259 रुद्रस्याट्टहासः । अथवा भुवनलक्षणे महाभवने मङ्कोलः सुधालेपः । अथवा
159260 क्षीरलक्षणस्य सलिलस्यावदातः पुरोऽवपूरः ॥ ४३ ॥
159261
159262 स्पृष्टप्रदोषमयमन्दरमथ्यमानचन्द्रार्णवोल्लसितदुग्धतरङ्ग##-
159263 पश्य प्रभापटलकैः परिपूरिताङ्गीः पूरैरिवोग्रसरितः प्रसरद्भिराशाः ॥
159264 ४४ ॥
159265
159266 संध्याधातुरागैः स्पृष्टेन प्रदोषमयेन मन्दरेण मथ्यमानो
159267 यश्चन्द्रलक्षणः क्षीरार्णवस्तदुल्लसितैर्दुग्धतरङ्गभङ्गप्रायैः प्रसरद्भिः
159268 प्रभापटलकैः उग्रः शिवस्तद्विसृष्टाया गङ्गासरितः प्रसरद्भिः पूरैरिव
159269 परिपूरिताङ्गीः आशा दिशः पश्य ॥ ४४ ॥
159270
159271 एते पतन्त्यतुल तालकराललोलवेतालबालवलिता निशि गुह्यकौघाः ।
159272 हूणेश्वरस्य नगराणि निरस्तशान्ति स्वस्तिश्रवादिविकलानि बलेन भोक्तुम् ॥ ४५ ॥
159273
159274 हे अतुल निरुपम तालवत्करालैर्वेतालबालैर्वलिताः सहिता एते गुह्यकौघा निशि
159275 निरस्तशान्तिकर्मस्वस्तिवाचनमङ्गलाचरणानि अत एवोत्पातैर्विकलानि हूणेश्वरस्य
159276 त्वद्रिपोर्नगराणि तत्स्थान् जनान् भोक्तुं पतन्ति गच्छन्ति ॥ ४५ ॥

159277
159278 तावद्विभाति गगने परिपूर्णचन्द्रो यावद्वधूवदनमेति न सद्म बाह्यम् |
159279 अभ्युद्गतेऽङ्गणनभस्यबलाननेन्दाविन्दोः सिताभ्रशकलस्य च को विशेषः ||
159280 ४६ ||
159281
159282 सद्मनो बाह्यमनावरणमङ्गणदेशं वधूवदनं न एति | बाह्याङ्गणनभसि
159283 अबलाननेन्दौ निर्गमनेनाभ्युद्यते सति तत्सौन्दर्यनिरस्तशोभस्येन्दोः
159284 सिताभ्रशकलस्य च को विशेषः | न कश्चिदिति कामुकोक्तिः || ४६ ||
159285
159286 वृद्धानि चन्द्रांशुनवाम्बराणि गङ्गौघनिर्धूतशिलान्यमूनि |
159287 हिमाततान्युग्रलताजटानि तुषारशैलेश्वरमस्तकानि || ४७ ||
159288
159289 चन्द्रकरव्याप्तानि हिमवच्छिखराणि कश्चिद्वर्णयति - वृद्धानीति | वृद्धिरत्र
159290 दैर्घ्यम् | तुषारशैलेश्वरो हिमवांस्तस्य मस्तकानि शिखराणि || ४७ ||
159291
159292 स एष मन्दारवनावतंसो दोलाप्सरोगेयविसारिवातः |
159293 क्वचिन्मणिद्योतविचित्रचित्रः संदृश्यते व्योमनि मन्दराद्रिः | ४८ ||
159294
159295 दोलाः प्रेङ्खास्तदारूढानामप्सरसां गीतानि विसारयति तच्छीलो वातो यस्य |
159296 अत्युन्नतत्वाद्व्योमनि संदृश्यते || ४८ ||
159297
159298 प्रोन्निद्रनीरन्ध्रशिलीन्ध्रसान्द्रपुष्पार्घ्यपात्रध्रमहामहीध्राः |
159299 सान्द्राभ्रनिर्ह्रादगभीरकुक्षौ सर्क्षान्तरिक्षश्रियमुद्वहन्ति || ४९ ||
159300
159301 प्रोन्निद्राणि नीरन्ध्राणि पुष्पभरितानि यानि शिलीन्ध्राणि तान्येव
159302 सान्द्रपुष्पाण्यर्घ्यपात्राणि धारयन्ति तथाविधा ये महान्तो महीध्राः पर्वताः
159303 सान्द्रैरभ्रनिर्ह्रादैर्गभीरायां कुक्षौ द्रोणीप्रदेशे सर्क्षं ऋक्षैर्नक्षत्रैः सह
159304 वर्तमानं यदन्तरिक्षं तच्छ्रियमुद्वहन्ति धारयन्ति || ४९ ||
159305
159306 इतः स कैलासगिरिर्गरीयसा प्रभाप्रवाहेण मितेन यस्य खम् |
159307 शंभोरिवाभाति सुतस्य कुट्टिमं चन्द्रोऽपि च क्षीरसमुद्रगो यथा || ५० ||
159308
159309 इत उत्तरतः स प्रसिद्धः कैलासगिरिर्दृश्यताम् | कीदृशः | यस्य गरीयसा
159310 प्रभाप्रवाहेण मितेन व्याप्तेन खमाकाशमधोभागे शंभोः सुतस्य स्कन्दस्य
159311 मुक्ताचूर्णनिर्मितं क्रीडागृहकुट्टिममिव आभाति | ऊर्ध्वभागे तु चन्द्रोऽपि
159312 क्षीरसमुद्रगस्तन्मग्नो यथा तथा आभाति || ५० ||
159313
159314 स्थाणूनां छिन्नशाखानां मृन्मयानां च वासवः |
159315 संधत्ते पश्य दूराणां वातैर्मुक्तशिखा इव || ५१ ||
159316
159317 हे राजन् कौतुकी वासवः कुठारैश्छिन्नशाखानां स्थाणूनामग्निना
159318 छिन्नच्छद्यादिशाखानां मृन्मयानां कुड्यादीनां च परस्परदूराणामपि
159319 वृष्टिकेनोभयत्राप्यङ्कुरोपजननान्मुक्तशिखा इव निर्माय वातैः
159320 परस्परग्रथनायेव संधत्ते पश्य || ५१ ||
159321
159322 एते कदम्बकुलकुन्दसुगन्धिवाता लिम्पन्ति मांसलतया मकरन्दवृष्टेः |
159323 घ्राणं घनैः परिमलैरलिजालनीला व्यालोड्य मेघपटलैः
159324 खमिवाभ्रकायाः || ५२ ||
159325
159326 तथा एते कदम्बकुलैः कुन्दैश्च सुगन्धयो वाता मकरन्दवृष्टेर्हेतोस्तत्पानेन
159327 मांसलतया अलिजालनीला अभ्रकायाश्च भूत्वा सर्वाणि परिमलानि व्यालोड्य
159328 मेघपटललक्षणैः खमिव घनैः परिमलैर्जनानां घ्राणच्छिद्रमपि लिम्पन्ति

पश्येत्यर्थः ॥ ५२ ॥

उन्निद्रकुड्मलदलासु वनस्थलीषु सच्छायशाद्वलघनेषु च जङ्गलेषु ।
ग्रामेषु संततफलद्रुमसंकुलेषु लक्ष्मीः स्वयं निवसतीव निवासहेतोः ॥ ५३ ॥

वर्षर्तौ वनस्थल्यादिषु चतुर्षु स्थानेषु स्वनिवासहेतोः शोभातिशयस्य दर्शनादिव
निवसति ॥ ५३ ॥

वातायनागतलतावृतसौधकोशकोशातकीकुसुमकेसरमाहरद्भिः ।
आगुल्फकीर्णमुकुलाजिर एष वातैर्ग्रामो विभाति नगरं वनदेवतानाम् ॥ ५४ ॥

एष पुरोवर्ती ग्रामो वातायनद्वारा
आगताभिरन्तःप्रविष्टाभिरर्थात्कोशातकीलतामिरावृतेषु सौधकोशेषु
कोशातकीकुसुमानि तत्केसरांश्चाहरद्भिर्वातैः आगुल्फं कीर्णानि कुसुमानि यत्र
तथाविधान्यजिराण्यङ्गणानि यस्मिंस्तथाविधः सन् वनदेवतानां नगरं विभाति
॥ ५४ ॥

उन्निद्रामलचम्पकद्रुमलतादोलाविलोलाङ्गनाः कूजन्निर्झरवारयः
परिसरप्रोन्निद्रतालद्रुमाः ।
उत्फुल्लोज्ज्वलमञ्जरीसितलतागेहोल्लसद्बर्हिणः पर्यन्तोन्नतसाललम्बजलदा
रम्या गिरिग्रामकाः ॥ ५५ ॥

उन्निद्राणां पुष्पितानाममलचम्पकद्रुमाणां लतादोलासु विलोलाः क्रीडन्त्यः
अङ्गना येषु । तथा कूजन्ति निर्झरवारीणि येषु । परिसरेषु परितः प्रोन्निद्राः
पुष्पितास्तालद्रुमा येषु । उत्फुल्लाभिरुज्ज्वलमञ्जरीभिः सितेष्वलंकृतेषु लतागेहेषु
उल्लसन्तो नृत्यन्तो बर्हिणो मयूरा येषु । पर्यन्तेषून्नतेषु सालेषु प्राकारेषु
वृक्षेषु वा लम्बा जलदा मेघा येषु । सालवृक्षा एव लम्बा लोला जलदा येष्विति वा ।
ईदृशा गिरिग्रामका रम्याः ॥ ५५ ॥

वातालोलविचित्रपत्रलतिकासंपूर्णनीलस्थलाः
कूजल्लावककोककुक्कुटघटागायत्पुलिन्दाङ्गनाः ।
बालाव्याकुलतर्णका दधिमधुक्षीराज्यपानोज्ज्वलाः कस्येवामृतमण्डपा
विरचिता रम्या गिरिग्रामकाः ॥ ५६ ॥

तथा वातैरालोलाभिः पल्लवादिदशाविचित्रपत्रामिर्लतिकाभिः संपूर्णानि
शाद्वलनीलानि स्थलानि येषाम् । लावका मधुरस्वराः क्षुद्रपक्षिभेदाः । गायन्त्यः
पुलिन्दानां म्लेच्छजातिभेदानामङ्गना येषु । बालैः पालनादव्याकुलास्तर्णका
वत्सा येषु । तथा त एव बाला अव्याकुलास्तर्णकाश्च यथायोगं
दधिमधुक्षीराज्यानां पानेन उज्ज्वलाः पुष्पा येषु । ईदृशा गिरिग्रामकाः कस्य
धातिर्विश्रान्तये रम्या अमृतपूर्णा विरचिता मण्डपा इव भान्तीत्यर्थः ॥ ५६ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० नि० उ० अवि० वि०
विपश्चिदनुकृतपदार्थवर्णनं नाम पञ्चदशाधिकशततमः सर्गः ॥ ११५ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
विपश्चिदनुकृतपदार्थवर्णनं नाम पञ्चदशाधिकशततमः सर्गः ॥ ११५ ॥

## षोडशाधिकशततमः सर्गः ११६

अनुचरा ऊचुः ।

159381 देव पश्यात्र संग्रामलग्नसीमान्तभूभृताम् |
159382 कचन्ति हेतिसंघाता विसरन्ति बलानि च || १ ||
159383
159384 संग्रामव्योमविरहिशिखरिग्रामडम्बराः |
159385 गिरिगह्वरमेघाश्च मूर्खकाकाश्च वर्णिताः ||
159386
159387 तत्रादौ सप्ताभिः संग्रामं वर्णयितुं प्रस्तौति - देवेति | बलानि चतुर्विधानि
159388 सेनाङ्गानि || १ ||
159389
159390 हतान्हतानभिमुखान्वीरान्वीरैः सहस्रशः |
159391 आरोप्यारोप्य खं यान्ति पश्य पश्याङ्गनारथैः || २ ||
159392
159393 अङ्गना अप्सरसः | रथैर्विमानैः || २ ||
159394
159395 विजिगीषो पुनः प्राप्ते संकटे प्रकटे रणे |
159396 धर्म्यं विराजते युद्धं यौवने सुरतं यथा || ३ ||
159397
159398 विजिगीषोर्बलवतः शत्रूणां रणे प्रकटे संकटे प्राप्ते विनाधर्मेण तेषां वधो
159399 न शोभते किंतु धर्म्यं धर्मादनपेतं युद्धं विराजते इत्यर्थः || ३ ||
159400
159401 लोकैरनिन्दिता लक्ष्मीरारोग्यं श्रीसमन्वितम् |
159402 धर्म्यं युद्धं परार्थेन जीवितस्योत्तमं फलम् || ४ ||
159403
159404 तत्कुतस्तत्राह - लोकैरिति | यत एतानीदृशान्येव जीवनस्योत्तमफलानि न तु
159405 निन्दितसंपदादय इत्यर्थः || ४ ||
159406
159407 अविरोधेन धर्मस्य युद्धे संमुखमागतम् |
159408 योधानुरूपं यो हन्ति शूरः स्वर्ग्यः स नेतरः || ५ ||
159409
159410 योधानुरूपमिति | तद्यथा एकस्मिन्योधे एक एव सः सवाहने सवाहनः सधनुषि
159411 सधनुः सखड्गे सखड्गो निरायुधे निरायुध एव बाहुयुद्धं चरन्यो हन्तीत्यर्थः
159412 || ५ ||
159413
159414 हस्तस्थितासिवरनीलसरोजदामश्यामो हयोत्थघनरेणुनिशागमोऽत्र |
159415 आलोकय क्रमणमेष कथं करोति प्रोन्नामहेतिभरभूषणभाजि लक्ष्म्याः || ६
159416 | |
159417
159418 हे राजन् प्रोन्नामा उद्यता हेतिभरा एव भूषणानि तद्भाजि अस्मिन् शूरपुरुषे एष
159419 संग्रामलक्ष्म्या हस्तस्थितासिवरलक्षणेन नीलसरोजदाम्ना श्यामो
159420 हयोत्थघनरेणुकृतोऽन्धकारलक्षणो निशागमोऽत्रास्यां संग्रामभूमौकथं
159421 क्रमणं करोति | किं लक्ष्मीरेनमस्यां निशि स्वयंवरेवृणीते उत नेति कौतुकं
159422 पश्येत्यर्थः || ६ ||
159423
159424 एते कचन्ति शरशक्तिगदाभुशुण्डीशूलासिकुन्तपटुतोमरचक्रपूर्णाः |
159425 तापाः सताण्डवकचप्रचले चलेऽब्धौ देहेन वल्गति भुवीव फणीन्द्रसंघाः ||
159426 ७ ||
159427
159428 शरशक्त्याद्यायुधैः पूर्णा एते योधाः सताण्डवकचप्रायतृणदारुप्रचले अचले
159429 पर्वते प्रज्वलितास्तापा दवाग्नय इव कचन्ति | तेषु च शरशक्त्यादिसंघाः अब्धौ
159430 देहेन वल्गति सति तत्रत्याः फणीन्द्रसङ्घाः भुवि प्रसूता इव कचन्ति || ७ ||
159431
159432 पश्याम्बरं बलवदम्बुधराब्धिपूर्णं पश्याम्बरं

159433 तरलतारकतारहारम्।
159434 पश्याम्बरं सुघनसक्तमसैकसारं पश्याम्बरं
159435 विशदचन्द्रकरावसिक्तम्॥ ८॥
159436
159437 इतःप्रभृत्याकाशं चतुर्दिक्षु वर्णयति - पश्येत्यादिना। सुघनं सज्जत इति
159438 सुघनसक् तथाविधेन तमसा एकसारं तुल्यसारं नीलमिति यावत्॥ ८॥
159439
159440 यत्रानेकसुरासुरास्पदघटा तारापदेशं गता ऋक्षाणां च यदास्पदं
159441 विसरतां सर्वोन्नतानां च यत्।
159442 तस्मिञ्छून्यमिति प्रतीतिरधुनाप्यस्तं गता नाम्बरे कोऽन्यो मार्जयितुं
159443 जनोऽज्ञरचितं लोकापवादं क्षमः॥ ९॥
159444
159445 यत्र यस्मिन्नम्बरे अनेकेषां सुरासुरास्पदानां विमानादीनां घटा तारा
159446 इत्यपदेशं व्याजं गता। ऋक्षाणामश्विन्यादीनां यदास्पदं यद्विसरतां
159447 सर्वोन्नतानां चन्द्रसूर्यादीनां चास्पन्दं तस्मिन्नम्बरे सर्वतः पूर्णेऽपि
159448 अज्ञानां शून्यमिति प्रतीतिरधुनापि नास्तं गता। यत्रैवं महान्समर्थोऽप्याकाशः
159449 अज्ञरचितं शून्यतापवादं मार्जयितुं न क्षमस्तत्र कोऽन्यः क्षमः स्यादित्यर्थः
159450 ॥ ९॥
159451
159452 मेघाटोपैः
159453 प्रलयदहनैरद्रिपक्षाभिघातैस्तारापूरैरमरदितिजक्षुब्धसंग्राम##-
159454 व्योमाद्यापि प्रकृतिविकृतिं नाम नायात्यसंख्यैरन्तः
159455 साराशयगुणवतां लक्ष्यते नो महिम्नः॥ १०॥
159456
159457 साराशयगुणवतां महिम्नः अन्तो न दृश्यते॥ १०॥
159458
159459 आन्दोलयस्यविरलं गगनार्कमङ्केनारायणं च शशिनं च तथेतराणि।
159460 तेजांसि भासुरतडित्प्रभृतीनि साधो चित्रं तथापि न जहासि यदान्ध्यमन्तः॥
159461 ११॥
159462
159463 हे साधो गगनत्वमविरतमर्कं नारायणं चकारात्तत्परिजनान्सर्वान्देवान्
159464 शशिनं चकारादन्यान् ग्रहांस्तथा इतराणि भासुरतडित्प्रभृतीनि तेजांसि च अङ्के
159465 आन्दोलयसि तथाप्यन्तर्यदान्ध्यं तमः श्यामिकालक्षणं तन्न जहासि
159466 चित्रमाश्चर्यमित्यर्थः॥ ११॥
159467
159468 आकाश काशसि तु यत्र शशाङ्कबिम्बं त्वत्कीर्णकज्जलतमो मलिनोऽसितत्वम्।
159469 सङ्गान्न यन्नयसि तत्खलु चित्रमुच्चैः को नाम वान्तरमलं मलिनीकरोति॥ १२॥
159470
159471 हे आकाश त्वं मलिनोऽसि। यत्र शशाङ्कबिम्बं त्वया छिद्रात्मना कीर्णं
159472 कज्जलतमःप्रायं संपन्नं तत्र कलङ्कच्छलेन मलिनः प्रत्यक्षं काशसि तु
159473 दृश्यसे खल्वित्यर्थः। एवं सति स्वसङ्गात्संपूर्णं शशाङ्कबिम्बं यत्
159474 असितत्वं न नयसि तत् उच्चैर्महच्चित्रम्। वा अथवा मलिनसङ्गादन्तर्मलिन एव बहिरपि
159475 मालिन्यमापद्यते। अन्तरमलं तु को नाम मलिनीकरोति न कश्चिदित्यर्थः॥ १२॥
159476
159477 पूर्णस्यापि जगद्दोषैः सर्वदैवाविकारिणः।
159478 खस्य मन्ये बुधस्येव सुखं सर्वार्थशून्यता॥ १३॥
159479
159480 अथवा सन्तु मालिन्यादयः सर्वेऽपि दोषास्तथापि निर्विकारताबलेनैव
159481 तत्प्रयुक्तसर्वानर्थशून्यतासुखं सुलभमित्याशयेनाह - पूर्णस्यापीति।
159482 बुधस्य तत्त्वविद इव॥ १३॥
159483
159484 कल्पाभ्रद्रुमवीरुदुन्नतिदृशां कर्तासि धर्तासि च

159485 आकाशेन्दुघनार्ककिन्नरमरुत्स्कन्धामराणामपि।
159486 सर्वं रम्यमसंकुलाशय समस्वच्छस्वभावस्य ते
159487 यत्त्वेतद्दहनत्वमङ्ग तदहो मुख्याय खेदाय नः॥ १४॥
159488
159489 हे अङ्ग असंकुलाशय उदारबुद्धे हे आकाश त्वं कल्पाभ्राणां
159490 प्रलयाम्बुदानां द्रुमाणां वीरुधां लतानां चोन्नतिं
159491 पश्यन्त्यभिलषन्तीत्युन्नतिदृशस्तेषामवकाशदानेनोन्नतेः कर्तासि। इन्दुश्च
159492 घनाश्च अर्कश्च किन्नराश्च मरुत्स्कन्धाश्च अमराश्चेत्येषामपि धर्ता
159493 आधारश्चासीति समस्वच्छस्वभावस्य ते सर्वं कर्म रम्यमेव। यत्त्वग्नेः सूर्यस्य च
159494 प्रज्वलनावकाशदानेन दहनत्वं संतापकत्वं एतत्कर्म नः मुख्याय खेदाय
159495 न तु सुखायेति दावाग्न्यातपादिसंतप्तस्योक्तिः॥ १४॥
159496
159497 आकाश काशमसि निर्मलमच्छमुच्चैराधार उन्नततयोत्तममुत्तमानाम्।
159498 त्वामेत्य किंतु विअरलं करकाघनोऽयं लोकं विमर्दयति तेन परोऽसि नीचैः॥ १५
159499 ।।
159500
159501 हे आकाश त्वं निर्मलमच्छं [मेघाद्यावरणशून्यम्।] काशं
159502 भास्वरं उन्नततया उत्तमानां देवादीनामुत्तममाधारश्चासि किंतु विरलं
159503 सावकाशं त्वामेत्य आश्रित्य अयं करकावर्षी घनो लोकं जनं विमर्दयति तेन
159504 तद्दोषेण परः नीचैः अत्यन्तमपकृष्टोऽसीत्यर्थः॥ १५॥
159505
159506 आकाश कर्षकष एव निकर्षणं ते मन्ये चिरं समचितं न तु किंचिदन्यत्।
159507 शून्योऽसि यज्जलधरर्क्षविमानचन्द्रसूर्यानिलान्वहसि भासि न चार्थशून्यः॥
159508 १६॥
159509
159510 हे आकाश ते तव स्वर्णवत्कर्षकषे कर्षकषणस्थाने निकषोपल एव निघर्षणं
159511 चिरमुचितम्। न त्वन्यत्किंचित्त्वत्परीक्षास्थानमित्यर्थः। यद्यस्मात्त्वं शून्योऽसि
159512 तथापि जलधरान् ऋक्षाणि विमानानि चन्द्रं सूर्यमनिलांश्च वहसि भासि
159513 अर्थशून्यो निष्प्रयोजनश्च न चासीति तव सकलकनकगुणशालिनो गुणपरीक्षार्थमपि
159514 तद्गुणपरीक्षास्थानस्यैवौचित्यादिति भावः॥ १६॥
159515
159516 अह्नि प्रकाशमसि रक्तवपुर्दिनान्ते यामासु कृष्णमथ चाखिलवस्तुरिक्तम्।
159517 नित्यं न किंचिदपि सद्वहसीति मायां न व्योम वेत्ति विदुषोऽपि विचेष्टितं ते॥ १७॥
159518
159519 हे व्योम - न ङिसंबुद्ध्योः इति नलोपनिषेधश्छान्दसत्वादनित्यत्वाद्वा
159520 नाश्रितः। त्वं अह्नि प्रकाशं भास्वरवर्णमसि। दिनान्ते सम्ध्यारागेण
159521 रक्तवपुरसि। यामासु नामैकदेशे नामग्रहणात्त्रियामासु कृष्णमसि। अथ च
159522 नित्यं न किंचिदपि सद्वस्तु वहसीति हेतोरखिलवस्तुरिक्तमसि इति तव मायां
159523 विदुषस्तत्त्वविदो विचेष्टितमपि न कश्चिदपि वेत्तीत्यर्थः॥ १७॥
159524
159525 अकिंचनोऽपि कार्याणि साधयत्यातताशयः।
159526 अन्तःशून्यमपि व्योम सर्वस्योन्नतिकारणम्॥ १८॥
159527
159528 आतताशयः अतिविपुलबुद्धिस्तत्त्ववित्॥ १८॥
159529
159530 न तृणसलिलं नैव ग्रामो न नाम च पत्तनं न च
159531 दलभरस्निग्धच्छायस्तरुर्न च सत्प्रपा।
159532 तदपि गगनाध्वानं सूर्यः प्रयाति दिने दिने विषममपि यत्प्रारब्धं
159533 तत्यजन्ति न सात्त्विकाः॥ १९॥
159534
159535 गगनाध्वनि अध्वगविश्रान्तिसाधनं तृणं सलिलं च नास्ति। ग्रामस्तु नैवास्ति।
159536 पत्तनं नगरं च न नाम अत्यन्तासंभाव्यमित्यर्थः। दलभरैः

159537 स्निग्धच्छायस्तरुश्च नास्ति। सती रम्या प्रपा पानीयशाला च नास्ति। तत्तथापि सूर्यो
159538 गगनाध्वानं दिने दिनेप्रयाति। सात्त्विकाः सत्त्ववन्तो विषममन्येषामसाध्यमपि
159539 यत्प्रारब्धं तन्न त्यजन्ति स्वसामर्थ्येनावश्यं साधयन्त्येवेत्यर्थः॥ १९॥
159540
159541 यामा ध्वान्तपटेन शीतलरुचिः कर्पूरपूरैः करैरर्कालोकनवांशुकेन
159542 दिवसस्तारौघपुष्पोत्करैः।
159543 द्यौरम्भोदतुषारवारिकुसुमैः सर्वर्तवो भूषयन्त्येते
159544 कालकलात्मनोस्त्रिभुवने व्योमाङ्गणं नाथयोः॥ २०॥
159545
159546 दिवसः अर्कालोकलक्षणेन नवांशुकेन स्वं भूषयति। द्यौः
159547 रात्रितारौघपुष्पोत्करैः स्वं भूषयति। सर्वर्तवो वसन्तादयः
159548 अम्भोदतुषारलक्षणैर्वारिकुसुमैः स्वं भूषयन्ति। एते सर्वेऽपि मिलित्वा
159549 कालकलात्मनोस्त्रिभुवने नाथयोः स्वामिनोश्चन्द्रसूर्ययोः क्रीडास्थानं
159550 व्योमाङ्गणं भूषयन्तीत्यर्थः॥ २०॥
159551
159552 धूमाभ्ररेणुतिमिरार्कनिशेशसंध्या ताराविमानगरुडाद्रिसुरासुराणाम्।
159553 क्षोभैरपि प्रकृतिमुज्झति नान्तरिक्षं चित्रोत्थिता स्थितिरहो न महाशयस्य॥ २१
159554 ॥
159555
159556 महाशयस्य स्थितिश्चित्रा आश्चर्यरूपा उत्थिता उन्नता दृश्यते यतोऽन्तरिक्षं
159557 धूमादीनां त्रयोदशानां क्षोभैरपि प्रकृतिं पूर्वावस्थां नोज्झति॥ २१॥
159558
159559 दिग्भित्तिबद्धमिदमूर्ध्वतलान्तरिक्षमुर्वीतलं घनपुराचलभूरिभाण्डम्।
159560 विद्याधरामरमहोरगजालकारं लोकौघसंसरणसंघपिपीलिकाढ्यम्॥ २२॥
159561
159562 अपरः कश्चित्त्रिभुवनमेकजीर्णगृहत्वेन वर्णयति - दिग्भित्तीति। दिश एव
159563 भित्तयस्ताभिर्बद्धमूर्ध्वतलं उपरितनसौधभूतमन्तरिक्षं यस्य। उर्वी
159564 भूमिरेव अधस्तलं यस्य। घनं पुराण्यचलाश्च भूरिभाण्डं गृहोपस्करो
159565 यस्मिन्। विद्याधरादयो जालकारा ऊर्णनाभिकीटा यस्मिन्। तथा
159566 लोकौघाश्चतुर्विधभूतग्रामास्तल्लक्षणाभिः संघपिपीलिकाभिराढ्यम्॥ २२॥
159567
159568 कालः क्रिया च भुवनं भवनं चिराय नामाधितिष्ठत इवोपवनं विकासि।
159569 आशङ्क्यते प्रतिदिनं ननु नष्टमेव नाद्यापि नश्यति च केयमहो नु माया॥ २३
159570 ॥ (युगलकम्।)
159571
159572 ईदृशमिदं भुवनं भवनं कालः क्रिया चेति दम्पती चिराय नाम अधितिष्ठतः
159573 पालयतः। यथा मालाकारदम्पती विकासि उपवनमधितिष्ठतस्तद्वत्। यद्यपि
159574 कालक्रियाभ्यांन् नाधिष्ठीयते प्रतिदिनं ननु नष्टमेवाशङ्क्यते तथापि नाद्यापि
159575 नश्यति चकारान्नश्यति चतथापि प्रवाहेणानुवर्तत एव। एवं नश्यदपि न नश्यतीति
159576 विरुद्धधर्मकत्वादहो नु माया। इन्द्रजालसदृशमेतदित्यर्थः। तथा च श्रुतिः
159577 कस्मात्तानि न क्षीयन्ते अद्यमानानि सर्वदा इति। पुरुषो वा अक्षितिः स हीदमन्नं धिया
159578 धिया जनयते कर्मभिः इति॥ २३॥
159579
159580 खं मन्ये पादपादीनां रोधयत्यधिकोन्नतिम्।
159581 अकर्तुरिव महतो महिम्नोदेति कर्तृता॥ २४॥
159582
159583 मन्ये इत्युत्प्रेक्षायाम्। आदिपदाद्वृद्धिमतां सर्ववस्तूनाम्। ननु
159584 निरोधकव्यापारशून्यस्य खस्य निरोधे अकर्तृतैव तत्कथं तद्विरुद्धा
159585 कर्तृतोत्प्रेक्ष्यते तत्राह - अकर्तुरिवेति। रुन्धन्ति मार्गं दिरयोऽध्वगानाम् इति वदिति
159586 भावः॥ २४॥
159587
159588 जगतां यर्त लक्षाणि न भवन्त्युद्भवन्ति च।

159589 तच्छून्यमुच्यते व्योम धिक्पाण्डित्यमखण्डितम् ॥ २५ ॥
159590
159591 कश्चिद्व्योमशून्यतावादिनो युक्त्या खण्डयन्निन्दति - जगतामिति। न भवन्ति
159592 लीयन्ते उद्भवन्ति जायन्ते च ॥ २५ ॥
159593
159594 व्योमन्येव प्रलीयन्ते व्योमतः प्रोद्भवन्ति च।
159595 गच्छतोन्मत्ततामेतामीश्वरान्यभिदा कृता ॥ २६ ॥
159596
159597 अपरो व्योम्न्येवेश्वरलक्षणानि पश्यंस्तदन्यतावादिनं निन्दति - व्योमन्येवेति।
159598 ईश्वरादन्यद्व्योमेति भिदा उन्मत्ततां गच्छता प्राप्तेन वादिना कृता। यतः सर्वा।इ
159599 जगन्ति व्योमन्येव प्रलीयन्ते व्योमत एव प्रोद्भवन्ति चकाराद्व्योमन्येव तिष्ठन्तीति
159600 जन्माद्यस्य यतः इति शास्त्रसिद्धमीश्वरलक्षणं व्योम्न्येव दृश्यत इति
159601 तदेवेश्वर इत्यर्थः। ईश्वराद्यभिधाः कृताः इति पाठे एतां
159602 उक्तार्थबोधप्रयुक्तां उन्मत्ततां भ्रान्तिं गच्छता वादिना अन्यताभ्रमेण व्योम्न
159603 एवेश्वराद्यभिधाः कृताः ॥ २६ ॥
159604
159605 आयान्ति यान्ति निपतन्ति तथोत्पतन्ति सर्गश्रियः कणघटा इव पावकोत्थाः।
159606 यत्रामलं तदहमेकमनादिमध्यं मन्ये खमेव न तु
159607 कारणमीश्वराख्यम् ॥ २७ ॥
159608
159609 यदि व्योम्नः सकाशादेवाग्निविस्फुलिङ्गन्यायेन जगज्जन्मादि मन्यसे तर्हि न जडं
159610 व्योम तत् किंतु चिद्व्योमरूपोऽहमेव। मय्येव सकलं जातं मयि सर्व प्रतिष्ठितम्।
159611 मयि सर्व लयं याति तद्ब्रह्माद्वयमस्म्यहम् इति श्रुतेरहमेव स ईश्वर इति
159612 तटस्थेश्वरपक्ष एव निरसनार्ह इति तत्र कश्चित्तत्त्वविदाह - आयान्तीति।
159613 ईश्वराख्यंन् तटस्थं नैयायिकाद्यभिमतं न तु ॥ २७ ॥
159614
159615 आधारमायततरं त्रिजगन्मणीनामङ्गे बिभर्त्यमितमन्तरशेषवस्तु।
159616 व्योमैव चिद्वपुरहं परमेव मन्ये यत्रोदयास्तमयमेति जगद्भ्रमोऽयम् ॥ २८
159617 ।।
159618
159619 अमितं यदशेषवस्तु अङ्गे बिभर्ति त्रिजगन्मणीनामायततरमाधारं तद्व्योमैव
159620 चिद्वपुः परं ब्रह्मैवेत्यहं मन्ये ॥ २८ ॥
159621
159622 वनावनौ वनचरचाअरुकामिना मनोहरद्रुमगहनेषु गीयते।
159623 इतो गिरेः शिरसि विलोक्यतेऽमुना वियोगिना पथि वहता रसाकुलम् ॥ २९ ॥
159624
159625 कश्चिद्गिरौ कौतुकविशेषं दर्शयन्नाह - वनावनाविति। गिरेः शिरसि वनावनौ
159626 वनचारेण चारुणा कामिना मनोहरद्रुमगहनेषु गीतं गीयते। अधःपथि वहता
159627 गच्छता अमुना वियोगिना पुरुषेण तद्गीतं श्रुत्वा रसाकुलं यथा स्यात्तथा स गाता
159628 ऊर्ध्व विलोक्यते ॥ २९ ॥
159629
159630 गीतं शृङ्गतरूच्चपल्लवपुटे निःश्वस्य सोत्कण्ठया कंठाश्लिष्टगिरा
159631 वियोगहतया विद्याधराणां स्त्रिया।
159632 यन्नामात्र तदेष नाथ पथिकः सोच्छ्वासमाकर्णयन् दोलान्दोलनयेव
159633 चञ्चलधिया नो याति नोनूच्यते ॥ ३० ॥
159634
159635 अपरस्तथाविधमपरं कौतुकं दर्शयन्नाह - गीतमित्यादिना। हे नाथ
159636 गिरिशृङ्गवने उच्चो यस्तरुस्तदीयपल्लवपुटप्राये कुञ्जे वियोगहतया सोत्कण्ठया
159637 विद्याधराणां स्त्रिया निःश्वस्य कण्ठाश्लिष्टगिरा यन्नाम गीतं
159638 तदत्राधस्ताद्गच्छन्नेष पथिकः सोच्छ्वासमाकर्णयन्सन् दोलायामान्दोलनयेव
159639 चञ्चलया धिया अग्रे नो याति। अनुगैरपि याहीति नोऽनूच्यते चित्रमित्यर्थः ॥ ३० ॥
159640

159641 गायत्यद्रिशिरस्तरौ दलपुटे निःश्वस्य विद्याधरी काकल्याऽतिलकं वियोगविधुरा
159642 बाष्पाकुलैषा पुरः।
159643 नाथोत्सङ्गगृहे गृहीतचिबुकं स्मेरं भवच्चुम्बनं स्मृत्वास्वाद्य
159644 रसायनं हतसमा नीता मयैता इति॥ ३१॥
159645
159646 सा विद्याधरी बाष्पाकुला सती अतिलकं विमृष्टविशेषकं यथा स्यात्तथा गायति। किं
159647 गायतिं तदाह - हे नाथ त्वदुत्सङ्गलक्षणे गृहे गृहीतचिबुकं
159648 स्मेरमीषद्धास्यसहितं भवच्चुम्बनलक्षणं रसायनं स्मृत्वा
159649 पुनःपुनरास्वाद्य इह मया एता हतसमा निन्द्याः संवत्सरकाला नीता इति गायति॥ ३१॥
159650
159651 अस्याः प्राग्भवसत्पतिः स मुनिना शापेन वृक्षीकृतो वर्षद्वादशकं
159652 तदेव गणयन्त्येषैव सात्र स्थिता।
159653 गायत्युत्कलिता तदेव दयितं तं पादपं संश्रिता मार्गे मार्गविहारिणां
159654 वदनतो राजन्ममैतच्छ्रुतम्॥ ३२॥
159655
159656 किमर्थं तत्रैव सा स्थिता गायति तत्राह - अस्या इति। सः गीयमानः प्राग्भवतीति
159657 प्राग्भवः सन् युवा पतिर्विद्याधरो मुनिना केनचिदपराधेन निमित्तेन शापेन
159658 वर्षद्वादशकं वृक्षीकृतस्तदेव गणयन्ती सैषा अत्रैव स्थिता उत्कलिता उत्कण्ठिता
159659 तमेव स्वदयितं पादपं संश्रिता सती सा गायति। हे राजन् मार्गविहारिणां वदनतो
159660 मया एतन्मार्गे श्रुतम्॥ ३२॥
159661
159662 पश्यैष सोऽस्मदवलोकनशान्तशापो विद्याधरो विटपितामवमुच्य बालाम्।
159663 कण्ठेकरोति विटपाकृतिविप्रलम्भैस्तैरेव बाहुभिरलं स्फुटपुष्पहासः॥
159664 ३३॥
159665
159666 स च मुनिरस्मद्दर्शनमेव शापान्तमकरोदतः स एष वृक्षभूतो
159667 विद्याधरोऽस्मदवलोकनादेव शान्तशापः सन् विटपितामवमुच्य बालां तां
159668 विद्याधरीं विटपाकृतिव्याजैस्तैरेव बाहुभिः स्फुटपुष्पाण्येव हासत्वेन
159669 संपन्नानि यस्य तथाविधः सन् आलिङ्ग्य कण्ठेकरोति पश्य॥ ३३॥
159670
159671 शिखरिणां करिणां कुसुमोत्करो विटपिषु स्फुटरोमसु राजते।
159672 गगनविच्युततारकलीलया शिखरमेष तुषारसमानया॥ ३४॥
159673
159674 अपरः शिखरिणो वर्णयति - शिखरिणामिति। शिखरिलक्षणानां करिणां
159675 विटपिलक्षणेषु स्फुटरोमसु कुसुमोत्करः शिखरेषु मेषतुषारो
159676 वासन्तिकहिमकणस्तत्समानया गगनविच्युततारकलीलया राजते॥ ३४॥
159677
159678 मीनावलीसरभसप्लुतिघट्टिताम्बुवीचीविलोलविरुवत्कुररीकराला।
159679 कावेर्यहो कुसुमशुक्लपटाऽवभाति निःशङ्करङ्कुकुलसंकुलकूलकच्छा॥
159680 ३५॥
159681
159682 अपरः कावेरीं वर्णयति - मीनेति। मीनावलीनां
159683 सरभसप्लुतिभिर्घट्टितास्वम्बुवीचिषु विलोलाभिः क्रीडन्तीभिर्विरुवतीभिः कुररीभिः
159684 कराला कुसुमशुक्लपटा निःशङ्कैरङ्कुभिर्मृगभेदैः संकुलाः कूलानि
159685 कच्छा जलप्रायदेशाश्च यस्यास्तथाविधा कावेरी अवभाति। अहो इत्याश्चर्ये॥ ३५॥
159686
159687 भात्यत्र पश्य रविणा कटके सुवेलशैलस्य काञ्चनशिला सकलामलश्रीः।
159688 वेलावलोलवरुणालयवीचिभङ्गपर्यस्तवाडवकृशानुकणोपमाना॥ ३६॥
159689
159690 हे राजन् अत्र सुवेलशैलस्य कटके सकला काञ्चनशिला रविणा प्रद्योत्यमाना
159691 वेलास्ववलोलस्य वरुणालयस्य वीचिभङ्गैः पर्यस्तस्य वाडवकृशानोर्वडवाग्नेः
159692 कणा एवोपमानं यस्यास्तथाविधा भाति॥ ३६॥

159693
159694 आसन्नपीनजलदावलितालयानां गेहोपशल्यपरिफुल्लवनद्रुमाणाम्।
159695 लक्ष्मीः पलाशपटलावलिताम्बराणां घोषौकसां समवलोकय पर्वतेषु॥ ३७
159696 ।।
159697
159698 तथा पर्वतेषु आसन्नैः पीनैर्जलदैरावलितालयानां गेहोपशल्येषु गृहसीमान्तेषु
159699 परिफुल्लवनद्रुमाणां तथा पलाशपटलैरावलिताम्बराणां
159700 घोषौकसामाभीरपल्लीगृहाणां लक्ष्मीः समवलोकय॥ ३७॥
159701
159702 उन्निद्रपुष्पपटुपाण्डुरपुष्पखण्डा
159703 मन्दारभाण्डविशिखण्डिकरण्डकच्छाः।
159704 ग्रामाः प्रपातजलजालविलासवाद्या वल्गद्गुहागहनगीतजना जयन्ति॥ ३८॥
159705
159706 तथा उन्निद्रैः पुष्पैः पटुपाण्डुरा अतिशुभ्राः पुष्पखण्डाः पुष्पवाटिका येषु।
159707 तथा मन्दारवृक्षा एव भाण्डानीव बहुतरपुष्पभाजनानि येषु तथाविधा
159708 विविधशिखण्डिनां नृत्यस्थानत्वात्तत्करण्डप्रायाः कच्छा जलप्रायाः
159709 शिशिरप्रदेशा येषु। तथा प्रपातेषु ऊर्ध्वदेशात्पततो जलजालस्य विलासा एव
159710 शिखण्डिनां नृत्ये वाद्यानि येषु। तथा प्रतिध्वनिभिर्वल्गन्त्यो गुहा यत्र
159711 तथाविधेषु गहनेषु गीतानि येषां तथाविधा जना येषु एवंविधा गिरिग्रामा जयन्ति
159712 स्वर्गमिति शेषः॥ ३८॥
159713
159714 उन्निद्रकन्दलदलान्तरलीयमानकूजन्मदान्धमधुपोन्मदपामराणाम्।
159715 मन्ये न सा भवति तुष्टिरिहामराणां या गोकुलेषु गिरिगह्वरिणां नराणाम्॥ ३९॥
159716
159717 तदेव स्फुटयति - उन्निद्रेति। इह गिरिग्रामगोकुलेषु उन्निद्राणां सद्योविकसितानां
159718 कन्दलानां मुकुलानां दलान्तरेषु गर्भेषु लीयमानैः
159719 कूजद्भिर्मदान्धैर्मधुपैर्निरीक्षितैरुन्मदानामुद्दीपितकामानां पामराणामपि
159720 गिरिगह्वरिणां नराणां घोषमिथुनानां या तुष्टिर्भवसि सा तुष्टिर्नन्दने
159721 क्रीडतामप्यमराणां न भवतीति मन्ये॥ ३९॥
159722
159723 भृङ्गावदोलितलताकुलकाननान्तर्गायत्पुलिन्ददयिताननदत्तनेत्रम्।
159724 लीलाकुला गतघृणं गिरिगह्वरेषु किं घ्नन्ति शत्रुमिव मुग्धमृगं
159725 किराताः॥ ४०॥
159726
159727 भृङ्गैरवदोलिताभिर्दोलात्वेन कल्पिताभिर्लताभिराकुलकाननस्यान्तर्गिरिगह्वरेण
159728 गायन्तीनां पुलिन्ददयितानामाननेषु दत्तनेत्रं यथा स्यात्तथा लीलासु
159729 शृङ्गारचेष्टाभिराकुलाः किराता मुग्धमृगं शत्रुमिव गतघृणं
159730 निर्दयं क्व किं कथं घ्नन्ति। अहो येषामन्यत्र दत्तदृष्टीनामन्यमनसां
159731 चललक्ष्यवेधनपाटवमीदृशसमयेऽप्यतिनिर्दयत्वं चेत्यर्थः। अथवा
159732 भृङ्गावदोलितलतासदृशपुलिन्दललनानामाननेषु
159733 दत्तनेत्रत्वान्मुग्धमृगाणां
159734 पुलिन्दललनानेत्रसौन्दर्यापहारित्वलतापल्लवाशित्वप्रतिसंधानाच्छत्रुमिव
159735 मन्यमाना दयायोग्यसमयेऽपि निर्दयं घ्नन्ति किमित्युत्प्रेक्षा॥ ४०॥
159736
159737 नानाविकासिकुसुमोत्करसारलब्धवल्लीदलावलनशीतलिताध्वगाङ्गाः।
159738 साम्भःप्रथप्रसरणेन तरत्तरङ्गा ग्रामा गिरीन्द्रगहनेषु जयन्ति चन्द्रम्
159739 ॥ ४१॥
159740
159741 किं च नानाविधेभ्यः कुसुमोत्करेभ्यो लब्धः शैत्यसौगन्ध्यपरागादिसारो येन
159742 तथाविधस्य वायोर्वल्लीदलानां चावलनैः शीतलितानि अध्वगानामङ्गानि यैः।
159743 अम्भोभिः सह तद्गुणेन शैत्येन प्रथन्त इति साम्भःप्रथास्तथाविधानां
159744 वायूनां प्रसरेण तरत्तरङ्गा जलाशया येषु तथाविधा ग्रामाः

159745 सौरभ्यगुणाधिक्येन चन्द्रं जयन्ति | तथा च चन्द्रमण्डलस्थेभ्यो देवेभ्योऽपि
159746 ग्रामवासिनां सुखाधिक्यमिति भावः || ४१ ||
159747
159748 कूजन्निर्जरवारयः परिसरत्प्रोन्निद्रतालद्रुमा
159749 हेलोल्लासितपुष्पपल्लववलद्वल्लीवितानाम्बराः |
159750 पर्यन्तोन्नतसाललम्बिजलदा रम्या गिरिग्रामकाश्चन्द्राश्वत्थमितावनिं
159751 शशिपुरस्योद्यानभागा इव || ४२ ||
159752
159753 पादत्रयं व्याख्यातम् | ईदृशा गिरिग्रामकाः शशिपुरस्य
159754 स्वर्गस्थचन्द्रनगरस्ययान्युद्यानानि तद्भागा इव सोश्वत्थः सोमसवनः इति
159755 श्रुतेश्चान्द्रामृतस्राविणा अश्वत्थेन मितां ब्रह्मलोकावनिं च जयन्तीत्यनुषज्यते
159756 || ४२ ||
159757
159758 आसन्नपीतघनघर्घरमेघनादनृत्यच्छिखण्डिनवताण्डवविप्रकीर्णैः |
159759 ग्रामाः कलापिकुलकोमलबर्हखण्डैः प्रोड्डीनचन्द्रकमणिप्रकरा जयन्ति ||
159760 ४३ ||
159761
159762 किंचैते गिरिग्रामा आसन्नाः पीता विद्युतो येषां तथाविधानां घनघर्घराणां
159763 मेघानां नादैर्नृत्यतां शिखण्डिनां नवताण्डवेषु विप्रकीर्णैः
159764 कलापिकुलानां कोमलैर्बर्हखण्डैः प्रोड्डीनाश्चन्द्रकलक्षणा मणिप्रकरा येषु
159765 तथाविधाः सन्तो जयन्ति प्रागुक्तमित्यर्थः || ४३ ||
159766
159767 पार्श्वस्थचारुशशिमण्डलमण्डनेषु विश्रान्तवारिगुरुवारिदवारणेषु |
159768 ग्रामेषु या गिरितटेषु विलासलक्ष्मी राज्येषु सा विभववत्सु कुतो विरिंचे || ४४ ||
159769
159770 किंचैकपार्श्वस्थं यच्चारुशशिमण्डलं तदेव मण्डनं येषाम् | एकपार्श्वे च
159771 विश्रान्ता वारिगुरवो वारिदवारणा येषु तथाविधेषु गिरितटेषु स्थितेषु ग्रामेषु या
159772 विलासलक्ष्मीः सा विभववत्सु विरिञ्चेः राज्येष्वपि कुतः | दुर्लभेत्यर्थः || ४४ ||
159773
159774 स्वामोदनन्दनवनान्तरसुन्दरेषु संतानकस्तबकहासिनिकुञ्जकेषु |
159775 उन्निद्रमन्द्रमधुपाकुलपारिभद्रसान्द्रद्रुमेष्वभिरमे गिरिगह्वरेषु || ४५ ||
159776
159777 स्वामोदनन्दनवनान्तरमिव सुन्दरेषु | संतानकस्य कल्पवृक्षभेदस्य
159778 स्तबकान्हसन्ति तच्छीला निकुञ्जका येषु| उन्निद्रा। पुष्पिता मन्द्रध्वनिमधुपाकुलाः
159779 पारिभद्र निम्बतरुरूपाः सान्द्रा द्रुमाः येषु तथाविधेषु गिरिगह्वरेष्वहंन्
159780 अभिरमे || ४५ ||
159781
159782 हरिणीरावरम्येषु हारिहारीतहारिषु |
159783 गिरिग्रामेषु पुष्पेषुपुरेष्विव रतिर्नृणाम् || ४६ ||
159784
159785 पुष्पेषुर्मन्मथस्तत्पुरेष्विव || ४६ ||
159786
159787 स्फाटिकस्तम्भसंभाररम्यनिर्झरवारिणि |
159788 नृत्यन्त्येताः शिखण्डिन्यः पश्यास्मिन्ग्रामगह्वरे || ४७ ||
159789
159790 स्फाटिकस्तम्भानां संभारा इव रम्याणि धारापातीनि निर्झरवारीणि येषु || ४७ ||
159791
159792 शिखण्डिन्यो विलासिन्यः पुष्पभारनता लताः |
159793 अत्र नृत्यन्ति कुञ्जेषु रणनिर्झरपुष्करे || ४८ ||
159794
159795 रणन्ति ध्वनन्ति निर्झरपुष्कराणि निर्झरजलानि यस्मिंस्तथाविधे अत्र ग्रामगह्वरे ||
159796 ४८ ||

हारीतहारिहरितोपवनद्रुमासु वापीप्रमाणरणितामलकाकलीषु।
ग्रामस्थलीषु गिरिगह्वरगोपितासु मन्ये मुदैष रमते स्वरसेन कामः॥ ४९॥

हारीतैः पक्षिभेदैर्हारिणो मनोहरा हरिता उपवनद्रुमा यासु। तथा वापीप्रमाणेन
हंससारसादिरणितलक्षणा अमलाः काकल्यो यासु। गिरिगह्वरैर्गोपितासु व्यवहितासु
ग्रामस्थलीषु एष सर्वजगत्प्रसिद्धः कामो मुदा स्वरसेन रमते इति मन्ये॥ ४९॥

श्रीमद्वृत्तमहाशयातपहरप्रोच्चैर्गभीराकृते भूभृन्मूर्धसु
भूषणं भवसि भो भूमे रसैकास्पदम्।
एतत्तु क्षपयेन्मनांसि यदिदं मेघ त्वया वर्षता
हर्षादूषरपल्वलस्थलतरुष्वम्भोविभागक्रमः॥ ५०॥

आसर्गसमाप्तेरित आरभ्य प्रायेणान्यापदेशा बोध्याः। हे श्रीमतां वृत्तमिव
वृत्तं महौदार्यं यस्य तथाविध जगत्परिपालनेप्सुत्वान्महाशय आतपहरा
प्रोच्चैरुन्नता गभीरा च आकृतिः शरीरं यस्य तथाविध भो मेघ त्वं
भूभृतां पर्वतानां मूर्धसु भूषणं भवसि। तथा भूमेः
क्षेत्रारामादिसंपत्तिहेतोः रसस्य जलस्यैकास्पदमसि। एवं सद्गुणंसहस्रवतापि
हर्षाद्वर्षता त्वया यदपात्रभूतेषु ऊषरस्थलेषु पल्वलस्थलेषु
तत्रत्यकण्टकादितरुषु च सुक्षेत्रसाम्येन अम्भोविभागक्रम आस्थित एतत्ते
सदसत्पात्रविभागापरिज्ञानं तु सतां मनः क्षपयेत्पीडयेत्। यदि भवादृशा
महान्तोऽपि सुपात्रगुणोत्कर्षं न मानयन्ति तर्ह्यन्ये के मानयिष्यन्तीति भावः॥ ५०॥

नित्यं स्नासि सुतीर्थवारिविसरैरुच्चैःपदस्थोऽम्बुदः
शुद्धः सन्विपिनावनौ निवससि प्रारब्धमौनव्रतः।
रिक्तस्याप्यतिकान्तिरेव भवतः कायाश्रया लक्ष्यते प्रोत्थायाशनिमातनोषि
किमिदं तुच्छंन् तवाचेष्टितम्॥ ५१॥

दानप्रारम्भादिकाले रुक्षकटु कर्णकठोरजल्पनं तु दातॄणां महान्दुःसहो
दोष इत्याशयेनाह - नित्यमिति। हे मेघ त्वं सुतीर्थानां समुद्रगङ्गादीनां
वारिविसरैर्नित्यं स्नासि। तथा उच्चैःपदस्थः सर्वप्राणिनामम्बु ददासित्यम्बुदः।
किं च शुद्धः सन् विपिनावनौ प्रारभौ मौनं मुनिसंबन्धि व्रतं येन
तथाविधो निवससि। किं च शरदि रिक्तस्यापि भवतः अतिशयिता धवलकान्तिरेव
कायाश्रया दृश्यते। ईदृशोऽपि त्वं दानार्थमुत्थाय अशनिं
विद्युदग्निपुरःसरं कटुध्वनिमातनोषि। इदं तुच्छं क्षुद्रोचितं तव आचेष्टितं
किम्। सर्वथा अनुचितमेवेत्यर्थः॥ ५१॥

वस्त्वस्थानगतं सर्वं शुभमप्यशुभं भवेत्।
दुर्मेघं स्थानमासाद्य वारि त्वसिततां गतम्॥ ५२॥

तटस्थ आह - वस्त्विति। शुभमपि वस्तु अयोग्यस्थानगतं सदशुभं भवेत्। वारि
तु इति च्छेदः॥ ५२॥

अहो नु मेघेन जलं विमुक्तमहो नु तोयेन विपूरिता भूः।
अहो नु भूमौ परिपोषितश्च जलैर्धनाढ्यैः प्रणयीव दीनः॥ ५३॥

दीनो दरिद्रः प्रणयी सुहृदिव भूमौ म्लानसस्यादिः परितोषितश्च॥ ५३॥

नैर्घृण्यमस्थैर्यमथाशुचित्वं रथ्याचरत्वं परिकुत्सितत्वम्।
श्वभ्यो गृहीतं किमु नाम मूर्खैर्मूर्खेभ्य एवाथ शुना न जाने॥ ५४॥

दयौदार्यादिगुणवर्णनप्रसङ्गात्तद्विपरीतनैर्घृण्यादिशालिनो मूर्खान्

कश्चिच्छ्वगुणविनिमयसंदेहप्रदर्शनेन निन्दति - निर्घृण्यमिति ॥ ५४ ॥

गुणैः कतिपयैरेव बहुदोषोऽपि कस्यचित् ।
उपादेयो भवत्येव शौर्यसंतोषभक्तिभिः ॥ ५५ ॥

यदि मूर्खो निन्द्य एव तर्हि कथं महीपास्तं संगृह्णन्ति तत्राह - गुणैरिति ।
श्वेव मूर्खोऽपि शौर्यादिगुणैः कस्यचित्कुनृपादेरुपादेयो भवति ॥ ५५ ॥

उन्मत्तमत्तपतनोन्मुखधावमानमानाधिकान्विषयवीथिषु दत्तमूर्तिः
[अत्र मुक्तमूर्तिः इति पाठः ।] ।
यन्मन्यते तृणलवाग्र विलोकयेच्छासत्त्वं जडत्वमुत वास्य विचार्यतां तत् ॥
५६ ॥

विषयवीथिषु भोगपरम्परासु दत्तमूर्तिः प्रसंजितशरीरो विषयलम्पटो मूर्खो
धत्तूरादिभक्षणेनोन्मत्तान्मदिरादिना मत्तान्प्रमादक्रोधावेशादिना
कूपादिपतनोन्मुखान्पिशाचाद्यावेशेन धावमानांस्तत्त्वज्ञानप्रकर्षेण
देहादिपरिच्छेदविस्मरणादहं ब्रह्मेति सर्वोत्कृष्टप्रमाणप्रतिष्ठानाच्च
मानाधिकान्षष्ठादिभूमिकारूढांश्च स्वाभिज्ञतारोपेण यत्तृणं मन्यते । हे
तृणलवाग्र तत् त्वमेव विलोकय । अस्य विषयलम्पटस्य इच्छासत्त्वमुत वा जडत्वमिति
तद्रहस्यं विचार्यताम् । यदीच्छासत्त्वं तर्हि स एव श्वभिस्तुल्यः । यदि जडत्वं तर्हि
तृणलवाग्रादपि विषयलाम्पट्यादिदोषाधिक्यात्ततोऽपि स्वयं नीच इति तृणसाम्यमपि
तस्य दुर्लभतरमिति विचारे फलिष्यतीति उन्मत्तादिभ्यो नीचत्वं तस्य किं
वाच्यमित्यर्थः ॥ ५६ ॥

कोलाहलः समानेऽपि तिर्यक्त्वे क्षुब्धमानसैः ।
अन्यथा सह्यते सिंहैर्मीलितैरन्यथा श्वभिः ॥ ५७ ॥

घनगर्जितादिकोलाहलः सिंहैरक्षुब्धमानसैरनादरान्मीलिताक्षैः सह्यते श्वभिस्तु
क्षुब्धमानसैर्भयान्मीलिताक्षैः सह्यत इत्युभयत्रान्यथात्वमिति भावः ॥ ५७ ॥

नित्याशुचे प्रियजने भषणैकनिष्ठ रथ्यान्तरभ्रमणनीतसमस्तकाल ।
कौलेयकाशयसमानतयैव मन्ये मूर्खेण केनचिदहो बत शिक्षितोसि ॥ ५८ ॥

हे कौलेयक श्वन् आशयश्चित्तवृत्तिस्तेन समानतया स्वगुणशिक्षायोग्यं त्वां
मन्यमानेन केनचिन्मूर्खेण नित्याशुचित्वादीन्स्वगुणांस्त्वं शिक्षितोऽसि । मन्ये इति
पूर्वोक्ते संदेहे निर्णयः । तथा हि सति शिष्याद्गुरोर्गुणाधिक्यदर्शनमुपपद्यत इति
भावः ॥ ५८ ॥

नित्यं सर्वं जगदसदृशं कुर्वतोच्चैर्विधात्रा दौहित्रेऽस्मिञ्छुनि
समदृशे निर्मितं सर्वमेव ।
वासोऽमेध्यावकरकुहरे भोजनं गूथपूयं सर्वालोके कुरतिकुरतिः
सर्वनिन्द्यं शरीरम् ॥ ५९ ॥

असदृशं कर्म वैषम्याद्विषमं जगत्कुर्वता विधात्रा दौहित्रे दुहितुः
सरमाख्याया देवशुन्या अपत्यभूतेऽस्मिन्शुनि समानामनुरूपाणां
सर्वधर्माणां दृशे दर्शनाय सर्वमेव वक्ष्यमाणं समं निर्मितम् । किं
तत्सर्व तदाह - वास इति । अमेध्ये अवकरस्य स्वनिर्मिते कुहरे गर्तकुलाये । गूथं
पुरीषं पूयं च भोजनम् । सर्वैर्जनैरालोक्यत इति सर्वलोको रथ्यामार्गस्तस्मिन्कुत्सिता
चिरग्रन्थिला या रतिर्मैथुनं तद्विषये कुरतिर्दुरिच्छा तथा सर्वैर्निन्द्यं शरीरं
चेति सर्वमित्यर्थः ॥ ५९ ॥

त्वत्तः कोऽधम इत्युदीरितवते श्वोवाच हासान्वितं मत्तो

159901 मौर्ख्यममेध्यमान्ध्यमशुभं यः सेवते सोधिकः।
159902 शौर्यं भक्तिरकृत्रिमा धृतिरिति श्रीमान्गुणो योस्ति मे मूर्खादिष गुणः
159903 प्रयत्ननिचयैरन्विष्य नो लभ्यते॥ ६०॥
159904
159905 उदीरितवते पृष्टवते पुरुषाय श्वा हासान्वितं यथा स्यात्तथा उवाच।
159906 मौर्ख्यमज्ञानम्। अमेध्यमपवित्रं देहाद्यभिमानम्। आन्ध्यं
159907 विचारनेत्रराहित्यम्। तर्हि तव मूर्खापेक्षया कैर्गुणैराधिक्यं तानाह -
159908 शौर्यमिति। धृतिरल्पसंतोषः। एष गुणकदम्बश्चिरमन्विष्यापि दर्शने
159909 मूर्खान्नो लभ्यते अतः स मत्तोऽधम इत्यर्थः॥ ६०॥
159910
159911 भुङ्क्तेऽमेध्यममेध्य एव रमते नित्यं महावस्करे तूष्णीमत्ति सचेतनं
159912 कृतरतिर्निश्चेतनं कृन्तति।
159913 सर्वैरेत्य रते शुनीविवलिते लोष्टैर्जनैस्ताड्यते धात्रा खेलसमन्वितस्थितिरलं
159914 लोके कृतो नेश्वरः॥ ६१॥
159915
159916 अवस्करे पुरीषे। वर्चस्केऽवस्करः इति सुट्। सचेतनं सजीवमपि नकुलमूषकादि
159917 दैवाल्लब्ध्वा तूष्णीं निरपराधमेवात्ति। निश्चेतनं निर्बलं च छागवत्सादि तूष्णी
159918 निरपराधमेव कृन्तति दशति। शुनीविवलिते रते प्रसक्तः सर्वैर्जनैरेत्य
159919 लोष्टैस्ताड्यते। एवमलमत्यन्तं नेश्वरः असमर्थः श्वा धात्रा खेलनं खेलो
159920 दुर्विलासकौतुकं तेन समन्विता यावदायुःस्थितिर्यस्य तथाविधः कृत इत्यर्थः।
159921 श्वेव समन्वितस्थितिः इति पाठे नेश्वरः सेवकः॥ ६१॥
159922
159923 लिङ्गस्योर्ध्वं रटत्काक आत्मानं दर्शयत्ययम्।
159924 सर्वाधःपातकोत्तुङ्गगतं पश्यत मामिति॥ ६२॥
159925
159926 क्वचिन्नदीतीरे निर्माल्याक्षतभक्षणाय शिवलिङ्गस्योर्ध्व रटन्तं काकं दृष्ट्वा
159927 कश्चित्तद्रटनतात्पर्यमुत्प्रेक्षते - लिङ्गस्येति। आत्मानं स्वं दर्शयति
159928 निदर्शयति। किमिति निदर्शयति तदाह - सर्वेषामध पातकानामधोगतिहेतूनां
159929 मध्ये यदुत्तुङ्गं शिवस्वभक्षणाय शिवलिङ्गाश्रयणं तद्गतं मां
159930 प्रत्यक्षं काकभूतं पश्यतेति॥ ६२॥
159931
159932 काकक कटुकल्कारव कबलितगुणकर्दमे भ्रमन्सरसि।
159933 अन्तरयसि मधुपरवं यदतो मे शिरसि फलभूतः॥ ६३॥
159934
159935 अपरः सरसि रटन्तं भ्रमन्तं काकमपदिश्याह - काककेति। हे कुत्सितकाक
159936 काकक कटुभिः कल्कारवैर्दम्भध्वनिभिः कवलिता हंससारसादिगुणा येन
159937 तथाविध त्वं सरसि कर्दभे भ्रमन्सन् मधुपानां रवमन्तरयसि
159938 स्वकटुकरवैर्यदन्तर्धत्से अतो हेतोर्मे शिरसि वेदनाहेतुत्वात्फलभूतः शल्यभूतोऽसि
159939 ॥ ६३॥
159940
159941 कवलयति नरकनिकरं परिहरति मृणालिकां ध्वाङ्क्षः।
159942 यदतोऽस्तु मा स्मयस्ते स्वभ्यस्तं सर्वदा स्वदते॥ ६४॥
159943
159944 सखायं प्रति कश्चिदाह - कवलयतीति। ध्वाङ्क्षः काको नरकनिकरं
159945 नानाविधममेध्यं कवलयति मृणालिकां प्राप्तामपि परिहरतीति यत् अतस्ते स्मयो
159946 विस्मयो मास्तु। यतः कुत्सितमपि खाद्यं व्यसनितया स्वभ्यस्तं चेत्तदेव सर्वदा
159947 स्वदते। यथा लशुनोपस्कृतं व्यञ्जनं तद्भुजामित्यर्थः॥ ६४॥
159948
159949 विविधवनकुसुमकेसरध्वलवपुर्हंस इव दृष्टः।
159950 काकः कृमिकुलकवलं क्लिन्नमथो कवलयन् ज्ञातः॥ ६५॥
159951
159952 विविधानां वनकुसुमानां केसरैः केसरस्थैः परागैर्ध्वलवपुः काको भ्रान्त्या

159953 हंस इति दृष्टः। इत्यर्थे इवशब्दः। अथो अनन्तरं क्लिन्नं कृमिकुलकवलं
159954 कवलयन् काको ज्ञातं॥ ६५॥
159955
159956 तुल्यवर्णच्छदैः कृष्णः संगतैः किल कोकिलैः।
159957 केन विज्ञायते काकः स्वयं यदि न भाषते॥ ६६॥
159958
159959 अरण्यान्या मृदः स्थाणौ स्थितः काको निरीक्षते।
159960 चैत्याद्दशदिशश्चोरो निशि सुप्ते जने यथा॥ ६७॥
159961
159962 अरण्यान्या महारण्यस्य मृदः स्थाणौ मृन्मयजीर्णभित्तिस्तम्भे स्थितोऽयं काको
159963 यथा निशि सुप्ते जने चोरश्चैत्यवृक्षमारुह्य दशदिशो निरीक्षते तद्वन्निरीक्षत
159964 इत्यर्थः॥ ६७॥
159965
159966 सरभससारसविदलत्पुष्करमकरन्दसुन्दरे सरसि।
159967 कथमिह विहरति काकः स्फुरदवकरनिकरधूसरस्कन्धः॥ ६८॥
159968
159969 सरभसैः सारसैर्विदलतां पुष्कराणां पद्मानां मकरन्दैश्च सुन्दरे इह सरसि
159970 स्फुरता वायुनोद्धूयमानधूलिना अवकरेण धूसरः स्कन्धो यस्य तथाविधः
159971 काकः कथं विहरति। अनुचितमिदमित्यर्थः॥ ६८॥
159972
159973 हा कष्टमिष्टवपुषि स्फुटपुण्डरीककोशे कषाहननयोग्यमुखः पिशाचः।
159974 पश्यैष काक उपविश्य कुपल्वलेऽस्मिन् लीलाः करोति विदिधाः सह राजहंसैः॥ ६९
159975 ।।
159976
159977 स्फुटानां विकसितानां पुण्डरीकणां कोशे इष्टवपुषि अभिमतस्वरूपे सरसि स्थितै
159978 राजहंसैः सह एषः कषन्तीति कषाः शिलास्ताभिराहननयोग्यं मुखं यस्य
159979 तथाविधः काकः पिशाचः अस्मिन् कुपल्वले उपविश्य राजहंसविडम्बनाय विविधा
159980 लीलाः करोति हा कष्टं हे राजन् त्वं पश्य॥ ६९॥
159981
159982 हे काक कर्कशरव क्रकचैकचिह्न तादृक्स्वशङ्कनमपि क्व नु तेऽद्य यातम्
159983 ।
159984 कस्मादनर्थकमिदं पिकपाकमेकपुत्राशया तदपि ते ह्युपहाससिद्ध्यै॥ ७०॥
159985
159986 वञ्चनापहारादिना स्वलभ्यधनादिभागं न्याय्येनोपायेन साधुर्मा प्रापदिति
159987 शङ्कया तन्निरासाय राजसभासु कटु रटन्तं खलं प्रत्यन्यापदेशेन कश्चिदाह
159988 - हे काकेति। कर्कशरवलक्षणो यः श्रोतृकर्णविदारणः क्रकचः स एवैकं
159989 चिह्नं यस्य तथाविध हे काकस्वभागमकाको मा भुङ्क्तामिति शङ्कया सदा
159990 काकानेवाह्वयंस्त्वं रटसि तत्ते तादृक् स्वशङ्कनमद्य क्व नु यातम्। त्वमेकः
159991 पुत्रो मे जीवत्वित्याशया पिकस्य कोकिलस्य पाकमर्भकं कस्मादनर्थकं व्यर्थ
159992 पुष्णासि। हि यस्माद्धेतोः कटुभाषणैकशीलस्य तद्भ्रान्त्या क्रियमाणमपि
159993 सुस्वरपिकपोषणं न मनोरथसिद्ध्यै किंतु उपहाससिद्ध्यै भविष्यतीत्यर्थः॥ ७०॥
159994
159995 आलोक्य पङ्कजवने सविलासवन्तं काकं कलङ्कसदृशं
159996 भृशमारटन्तम्।
159997 हा कष्टशब्दशतनष्टविचेष्टितो यो नो रोदिति क्रकचकेन विदार्यतां सः॥ ७१॥
159998
159999 काकमालोक्य कश्चिदाहेति शेषः। किमाह तदाह - हा इति। हे काक यः पुरुषस्तव
160000 खलानां वा कष्टैः क्रूरैः शब्दशतैः श्रुतैः खेदान्नष्टविचेष्टितः सन् नो रोदिति
160001 स पुरुषस्त्वया कटुरवक्रकचकेन विदार्यताम्। अहं तु न तथेति किमर्थ
160002 रटसीत्यर्थः॥ ७१॥
160003
160004 विशरारुशरारुमये बकमद्गुघने च पल्वले चपलाः।

160005 स्युर्यदि कौशिककाकास्तत्यादेषा समन्विता गोष्ठी ॥ ७२ ॥
160006
160007 खलसभायामन्येऽपि खला एव योग्या नैकोऽपि साधुरित्यन्यापदेशेनाह -
160008 विशरार्विति। विशरारुभिः संचरद्भिः शरारुभिर्हिंस्रैः प्रचुरे
160009 बकैर्मद्गुभिर्जलकाकैश्च घने पल्वले यदि चपलाः कौशिका उलूकाः काकाश्च
160010 स्युस्तर्हि एषा पल्वलरूपा गोष्ठी सभातद्योग्यैः समन्विता स्यात्। कौशिककाका इत्यत्र
160011 सतोपि विरोधस्याविवक्षितत्वात् येषां च विरोधः शाश्वतिकः इति द्वन्द्वैकवद्भावो न
160012 कृतः। शकुनिद्वन्द्वैकवद्भावस्तु वैकल्पितः ॥ ७२ ॥
160013
160014 कोकिलः काकसंघातैः समसंवरणाकृतिः [समवर्णाननाकृतिः इति
160015 पाठः।]।
160016 गदितैर्व्यक्ततामेति सभायामिव पण्डितः ॥ ७३ ॥
160017
160018 वर्णतः समाः संवरणाः शरीराच्छादकाः पक्षा आकृतिः संस्थानं च यस्य।
160019 गदितैर्व्यक्तवाग्भिः ॥ ७३ ॥
160020
160021 मृदुकुसुमाङ्कुरदलनं सोढुमलं कोकिलस्य कुसुमलता।
160022 न तु कङ्कगृध्रमद्गुकबककुक्कुटवायसादीनाम् ॥ ७४ ॥
160023
160024 साधूनामपराधोऽपि सोढुं शक्यः खलानां तु संबन्ध एव दुःसह
160025 इत्याशयेनाह - मृद्विति। वायसादीनां संस्पर्शमपीति शेषः ॥ ७४ ॥
160026
160027 श्रोत्रोत्सवं तव कलं कलकण्ठ कोऽत्र नादं शृणोति
160028 रतिविग्रहसंधिदूतम्।
160029 काकैरुलूककलहैरिह गुल्मकेषु क्रेंकारघर्घररवैः श्रुतिरागतास्तम् ॥ ७५ ॥
160030
160031 खलसभायां सद्विद्योपन्यासोत्सुकं जनं प्रति कश्चिदाह - श्रोत्रेति। हे
160032 कलकण्ठ कोकिल अत्र दंपत्योः रतिविग्रहे मानादिनिमित्ते प्रणयकलहे संधौ
160033 संधाने दूतभूतं कलं मधुरमत एव श्रोत्रोत्सवभूतं तव नादं कः
160034 शृणोति। यतः इह पिचुमन्दगुल्मकेषु उलूकैः सह सदैव कलहो येषां तथाविधैः
160035 काकैः क्रेङ्कारघर्घररवैः सर्वेषां श्रुतिः श्रोत्रेन्द्रियमस्तमागतां
160036 बहिरतां गतेति यावत् ॥ ७५ ॥
160037
160038 वाचाकोमलया सुकोकिलशिशुः कल्याणकल्पां कथां सर्वावर्जनमार्जवेन
160039 कुरुते यावत्पुरो रागिणाम्।
160040 तावन्मत्तनयोऽयमित्यविरतं द्रांकारभीमारवैर्ध्वाङ्क्षेणोपवने निपत्य
160041 नभसः सर्वे कृता नीरसाः ॥ ७६ ॥
160042
160043 उपवने रागिणां श्रवणानुरागवतां पुरःसु कोकिलशिशुः कोमलया वाचा
160044 कल्याणं महोत्सवस्तत्कल्पां कथां कृत्वा यावदार्जवेन सर्वेषां
160045 श्रोतृणामावर्जनं मनोरञ्जनं कुरुते तावद्ध्वाङ्क्षेणोपनिपत्य अयं
160046 कोकिलशिशुर्मत्तनयो मम पुत्रो मया पुष्टो मयोज्जीवित इत्यादिभिर्द्रांकारो
160047 न्यक्कारस्तद्रूपैर्भीमैरारवैः सर्वे श्रोतारो नीरसा निरुत्साहाः कृताः ॥ ७६ ॥
160048
160049 किं किं कोकिल कूजसि द्रुतरवं हर्षात्समुल्लासितं ग्रीवाकोटरतः प्रवेशय
160050 पुनर्मा भूच्चिरं ते भ्रमः।
160051 उहामैः कुसुमैर्निरन्तरतरं नेदं मधोर्जृम्भितं हेमंतेन
160052 कृतास्तुषारनिकरैः शुष्का अमी पादपाः ॥ ७७ ॥
160053
160054 आयोग्येषु श्रोतृष्वसमये योग्यतादिभमेण स्वगुणप्रदर्शनोत्सुकं
160055 कंचित्प्रत्यपर आह किं किमिति। हे कोकिल त्वं श्रोतॄणां योग्यतादिकमविचार्यैव
160056 स्वगुणप्रख्यापनौत्सुक्यप्रयुक्ताद्धर्षात् द्रुतरवं किं किं कूजसि। अबाधे

160057 द्विर्वचनम्। ग्रीवाकोटरतो हर्षात्प्रवृत्तं समुल्लासितं कूजनसमुल्लासं
160058 पुनरन्तः प्रवेशय। ते चिरमयं गुणोपन्या सकाल एते च श्रवणयोग्या इति भ्रमो
160059 मा भूत्। इदं उद्दामैः कुसुमैर्निरन्तरतरं मधोर्वसन्तस्य जृम्भितं न किंतु
160060 हेमन्तेन अमी पादपास्तुषारनिकरैः शुष्काः कृताः। तथा च नैतेषु त्वद्गिरां
160061 साफल्यमित्यर्थः॥ ७७॥
160062
160063 कूजत्कोकिल कोमलं कलरवैर्नित्यं प्रशस्ताकृते केनेदं बत शिक्षितोसि
160064 वचनं दुःखप्रदं दुर्भगम्।
160065 चैत्रे चित्रनवाङ्कुरे विरहिणी वक्ति त्वया यात्मनः कस्यायं मधुरित्यतस्तव
160066 तवेत्युक्तं त्वरोच्चैस्तरोः॥ ७८॥
160067
160068 चित्रा नव अङ्कुरा यस्मिंस्तथाविधे चैत्रे मासि या विरहिणी सा वक्ति। किं वक्ति। नित्यं
160069 प्रशस्ता कृते हे कूजत्कोकिल अयं मधुश्चैत्रो मासः कस्येत्यतः
160070 अस्मान्मत्प्रश्नात्त्वया आत्मनः स्वस्य मधुस्तरोः सकाशात्त्वरोच्चैस्तव तवेति
160071 कलरवैः कोमलं यदुक्तमिदं दुःखप्रदं दुर्भगमनृतं वचनं केन
160072 शिक्षितोऽसि। बतेति खेदे। न हि विरहदुःखिताया मम मधुः किंतु प्रियया सह कलं
160073 गायतस्तवैव एवं च मम ममेति वक्तव्ये तव तवेत्यनृतोक्तिर्मत्पीडनायैव
160074 तवेत्यर्थः॥ ७८॥
160075
160076 मौनस्पन्दविहारवर्णवपुषां साम्येऽपि काकव्रजेऽकाकः कोकिल एष कान्तिरुचिरो
160077 दूरात्परिज्ञायते।
160078 मध्ये मूर्खजनस्य पण्डित इव स्वाकारभव्यक्रियः सर्वो हि प्रथिमानमेति
160079 सदृशस्वान्तश्चमत्कारतः॥ ७९॥
160080
160081 काकव्रजे काकसमूहे मौनस्पन्दस्य पक्षादिचलनस्य विहारस्य वर्णस्य वपुषो
160082 गात्रस्य च साम्येऽपि कान्तिरुचिर एष कोकिलो मूर्खजनस्य मध्ये पण्डित इव दूरादेव
160083 अकाकः परिज्ञायते परिचीयते। तथा हि। सर्वोऽपि स्वाकारसूचितभव्यक्रियः पुरुषः
160084 सदृशादयुक्तात्स्वान्तश्चमत्कारतो निगूढोऽपि प्रथिमानं प्रख्यातिं एति॥ ७९॥
160085
160086 भ्रातः कोकिल कूजितैरलमलं नायात्यनर्घ्यो गुणस्तूष्णीमास्व
160087 विशीर्णपर्णपटलच्छन्ने क्वचित्कोटरे।
160088 उद्दामद्रुमकन्दरे कटुरटत्काकावलीसंकुलः कालोयं शिशिरस्य संप्रति
160089 सखेनायं वसंतोत्सवः॥ ८०॥
160090
160091 हे सखे भ्रातः कोकिल अयं कटुरटत्काकावलीसंकुलः शिशिरस्य कालो वसन्तोत्सवो न
160092 । संप्रति कूजितैरनर्घ्यो गुणो नायाति अतः कूजितैरलमलम्। क्वचिदुद्दामद्रुमकन्दरे
160093 विशीर्णैः पर्णपटलैश्छन्ने कोटरे तूष्णीमास्व॥ ८०॥
160094
160095 चित्रं मातरमेष कोकिलशिशुः संत्यज्य काकीं गतः सैषेनं तुदतीति
160096 यावदहमप्याचिन्तयामि क्षणम्।
160097 तावत्सोऽपि तथाशु मातृसदृशं श्लिष्टो रसाद्वर्धितुं यामायाति दिशं
160098 स्वभावसुभगः सैवास्य माहात्म्यदा॥ ८१॥
160099
160100 तत्राश्चर्याणि दर्शयति - चित्रमिति। एष कोकिलशिशुः काकीं मातरं संत्यज्य
160101 यद्गतस्तदेकं चित्रम्। तदुत्तरं सैषा काकी माता एनं कोकिलशिशुं चञ्चुचरणेन
160102 तुदति इत्यपरं चित्रमित्यहं क्षणं यावदाचिन्तयामि तावत्स कोकिलशुशुरपि
160103 रसादुत्साहान्मातृसदृशं वर्धितुं श्लिष्ट उद्युक्तोऽभूदित्यपरं चित्रम्। तथा हि
160104 । स्वभावसुभगो भाग्यवान् जनो यां दिशमायाति सैव दिगस्य माहात्म्यदा
160105 संपद्यत इत्यर्थः॥ ८१॥
160106
160107 इत्यार्षे श्रीवा० वा० दे० मो० निर्वा० उ० अवि० विपश्चि० श्वकाककोकिलान्योक्तिवर्णनं
160108 नाम षोडशाधिकशततमः सर्गः॥ ११६॥

160109
160110 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
160111 श्वकाककोकिलान्योक्तिवर्णनं नाम षोडशाधिकशततमः सर्गः ॥ ११६ ॥
160112
160113 सप्तदशाधिकशततमः सर्गः ११७
160114
160115 सहचरा ऊचुः ।
160116
160117 पश्याद्रिसानाविव बिम्बितं खं पुरःसरो मारपुरःसरो यः ।
160118 कह्लारपद्मोत्पलजालनालललद्द्विचित्रारवपक्षिवीतम् ॥ १ ॥
160119
160120 वर्ण्यतेऽत्र सरः पद्मकुमुदोत्पलमण्डितम् ।
160121 पद्मभ्रमरहंसाद्यास्तत्प्रसङ्गेन वर्णिताः ॥
160122
160123 तत्रादौ त्रयोदशभिः सर एव प्राधान्येन वर्णयितुं प्रस्तौति - पश्येति । हे राजन्
160124 इह पुरः अद्रिसानौ कह्लारपद्मोत्पलजालानां नालेषु भृणालार्थं ललद्भिः
160125 क्रीडद्भिर्विचितारवैः पक्षिभिर्वीतं व्याप्तम् । अत एव सनक्षत्रपक्षिकं प्रतिबिम्बितं
160126 खमिव स्थितं सरः पश्य । यः अद्रिसानुः सरः शोभातिशयेन
160127 मारस्योद्दीपकत्वात्पुरःसरः प्रधानभृत्य इवास्तीत्यर्थः ॥ १ ॥
160128
160129 विकासितोद्दण्डसहस्रपत्रकोशस्थलस्थोद्धुरराजहंसम् ।
160130 पीठद्विरेफद्विजलोकजुष्टं भुवीव गेहं कमलासनस्य ॥ २ ॥
160131
160132 तदेव सरो विशिनष्टि - विकासितेत्यादिद्वादशभिः । विकासितेषूद्दण्डेषु
160133 सहस्रपत्राणां पद्मभेदानां कोशस्थलेषु स्थिता उद्धुरास्तच्छोभाधुरन्धरा
160134 राजहंसा यत्र तथेन्द्रनीलपीठस्थानीयैर्द्विरेफैर्द्विजैः
160135 सारसक्रौञ्चादिपक्षिभिर्ब्राह्मणैर्लौकैर्जनैश्च जुष्टं सेवितं भुवि कमलासनस्य
160136 गेहमिव स्थितम् ॥ २ ॥
160137
160138 आकीर्णसीकरकरालदिगन्तराले फुल्लोत्पलाब्जपटलोदररेणुगौरम् ।
160139 आमोदमत्तमधुपद्विजगीतिगीतं यातं वितानकमिवाम्बरगं वहन्तम् ॥ ३ ॥
160140
160141 आकीर्णैः सीकरैः करालानि सहिमानि दिगन्तरालानि येन । फुल्लानामुत्पलाब्जादीनां
160142 पटलस्य समूहस्योदरस्थै रेणुभिर्गौरम् । आमोदमत्तानां मधुपानां द्विजानां
160143 च गीतिभिर्गीतम् । ऊर्ध्वं यातं वितानकमिवाम्बरगं मेघनीहारादिप्रतिबिम्बच्छलेन
160144 वहन्तं वहत् । पुंस्त्वं छान्दसम् ॥ ३ ॥
160145
160146 क्वचित्तरत्तारतरङ्गभङ्गं क्वचिद्द्विषद्भूरिविराविभृङ्गम् ।
160147 क्वचिद्गभीरामलवारिसुप्तं क्वचित्सरोजोज्ज्वलपुष्पगुप्तम् ॥ ४ ॥
160148
160149 क्वचित् तरन्तस्तारास्तरङ्गभङ्गा यस्मिन् । क्वचिन्मदोत्कर्षात्परस्परं द्विषन्तः अत
160150 एव भूरिविराविणो भृङ्गा यत्र । गभीरेणामलवारिणा निश्चलत्वात्सुप्तमिव ।
160151 सरोजैरुज्ज्वलपुष्पैः कुमुदैश्च गुप्तं शोषितमिव च्छन्नम् ॥ ४ ॥
160152
160153 कणाणुमुक्ताजलतापटालं तीरेषु सिंहे सुलतासुटालम् ।
160154 तरङ्गनिर्धूतशिलोग्रकच्छं महीतलाकाशमनन्तकच्छम् ॥ ५ ॥
160155
160156 कणाणुभिः सीकरीभूतैर्मुक्ताप्रायैर्जलैस्तापं टालयति अपसारयतीति तापटालम् ।
160157 तीरेषु सिंहे प्रतिबिम्बसिंहान्तरशङ्कया जलपानाप्रगल्भतां
160158 क्वचिद्वृक्षाग्रादारभ्य जलपर्यन्तं प्रलम्बिताभिः सुलताभिः
160159 प्रतिबिम्बदर्शननिरोधेन सुष्ठु टालयतीति तत्तथा । तथा तरङ्गैर्निर्धूतशिलाः
160160 पङ्कोग्राः कच्छा जलप्रायप्रदेशा यस्य । तथा अनन्तैर्मेघैरनन्तकच्छं

160161 महीतले अवतीर्णमाकाशमिव स्थितम् ॥ ५ ॥
160162

160163 तडित्प्रकाशोदरमस्यमेघनुन्नाब्जजातोत्थरजःप्रभाभिः ।
160164 पृषद्भरध्वान्तमयैकदेशं संध्याम्बराभोगमिवाप्रकाशम् ॥ ६ ॥
160165

160166 अस्याः निरसनीया मेघा यस्य तथाविधेन वायुना नुन्नं कम्पितं यदब्जजातं
160167 पद्मसमूहस्तदुत्थरजःप्रभाभिस्तडित्प्रकाशमिव उदरं यस्य । अत एव एकतः
160168 पृषद्भरमयो जलबिन्दुप्रचुरः अन्यतश्च ध्वान्तमयोऽन्धकारप्रचुर एकदेशो
160169 यस्य तथाविधं संध्याकालिकमम्बराभोगमाकाशसंस्थानमिव
160170 आसमन्तात्प्रकाशत इत्याप्रकाशं ईषत्प्रकाशमिति वा ॥ ६ ॥
160171

160172 वातावकीर्णशरदम्बुदखण्डखण्डं व्योमेव
160173 केवलसमीरणमावृताङ्गम् ।
160174 हंसैर्लसद्बिसलताकवलालसांसैः कालेन संचयकृतैरिव चन्द्रबिम्बैः ॥ ७ ॥
160175

160176 विसलतामृणालानि तल्लक्षणानि यानि कवलानि शिशूनां पोषणाय नीडं प्रति
160177 नीयमानानि तद्धारेण अलसा अंसाः स्कन्धा येषां तथाविधैर्हंसैः कालेन एकत्र
160178 संचयरूपेण कृतैश्चन्द्रबिम्बैरिव स्थितैः आवृताङ्गं सत् वातावकीर्णाः
160179 शरदम्बुदानां खण्डखण्डा बहवः खण्डा यस्मिंस्तथाविधं व्योमेव
160180 केवलसमीरणमपि सलत् किं पुनः सर्वगुणोपपन्नसमीरणमित्यर्थः ॥ ७ ॥
160181

160182 आमोदमन्दमकरन्दकरालवातव्याधूतपङ्कपुटपाटनपाटवेन ।
160183 उद्यन्महापटपटा वयतीव लेखा क्षुभ्यत्खगाश्रितलतोज्झितपुष्पवर्षम् ॥ ८ ॥
160184

160185 अस्य सरसः आमोदभरादिव
160186 मन्दैर्मकरन्दसंपर्कात्करालैरार्द्रैर्वातैर्व्याधूतस्य पङ्कपुटस्य
160187 जलसंमिश्रितपङ्कभागस्य यत्पाटनं पङ्कस्याधोनयनेन जलाद्विभजनं
160188 तद्विषये पाटवेन त्वरयाउद्यन्महान्पटपटा इति शब्दो यस्यास्तथाविधा लेखा
160189 तरङ्गपङ्क्तिः स्वध्वनि क्षुभ्यत्खगैराश्रिताभिस्तीरलताभिरुज्झितं पुष्पवर्षं
160190 वृष्टानि पुष्पाणि सरःपटवृद्ध्यै वयतीव संतनोतीवेत्यर्थः ।
160191 क्षुभ्यदित्यादिबहुव्रीह्याश्रयणेन विच्छिन्नं स्वतन्त्रं सरोविशेषणं वा ॥ ८ ॥
160192

160193 वेल्लन्महाकमलपल्लवतालवृन्तसंवीजितं वलितचामरचारुफेनम् ।
160194 राजायमानमलिकोकिलगीतगीतं सद्वृत्तपङ्कजलताललिताङ्गनौघम् ॥ ९ ॥
160195

160196 तदेव सरो राजसाम्येन वर्णयति - वेल्लदिति ।
160197 वेल्लद्भिश्चलद्भिर्महाकमलपल्लवलक्षणैस्तालवृन्तैः संवीजितम् । वलितानि
160198 चामराणीव चारुफेना यस्य । अलीनां कोकिलानां च गीतिभिर्गीतम् । सद्वृत्तः
160199 चारुवर्तुलः सच्चरितश्च पङ्कजलताललक्षणो ललितः अङ्गनौघो यस्य । अत एव
160200 राजायमानम् ॥ ९ ॥
160201

160202 भृङ्गाग्रभाजनमनोहरहारिगीतं राजीवरेणुरणकीर्णपिशङ्गतोयम् ।
160203 डिण्डीरपिण्डपरिपाण्डुरपुण्डरीकखण्डोपमण्डिततटोपवनावतंसम् ॥ १० ॥
160204

160205 भृङ्गलक्षणानामग्रभाजनानां श्रेष्ठपात्राणां मनोहराणां हारि
160206 मनोहरं गीतं यस्मिन् । तथा राजीवरेणूनां पद्मपरागाणां रणेन विमर्देन
160207 कीर्णं व्याप्तम् । अत एव पिशङ्गं पीतवर्णं तोयं यस्मिन् । डिण्डीरपिण्डा इव
160208 परिपाण्डुरैः पुण्डरीकखण्डैरुप समीपे मण्डितमलंकृतम् ।
160209 तटवनस्यावतंसं शिरोभूषणं पुष्पजालं येन ॥ १० ॥
160210

160211 विविक्तहृदयाम्भोजं हृदयाह्लादनं परम् ।
160212 रसवत्स्वादु भातीदं सरः सत्संगमोपमम् ॥ ११ ॥

160213
160214 एवंविधमिदं सरः सत्संगमोपमं भाति। विशेषणान्युभयत्र योज्यानि॥ ११॥
160215
160216 बिम्बितेन मरुव्योम्ना भातीदं सौम्य निर्मलम्।
160217 शास्त्रार्थपरिणामेन महतामिव मानसम्॥ १२॥
160218
160219 मरुदेशवन्निर्जलेन व्योम्ना शरदाकाशेनेति यावत्। हे सौम्य शास्त्रार्थो ब्रह्म
160220 तदाकारेण चरमसाक्षात्कारवृत्तिरूपेण परिणामेन॥ १२॥
160221
160222 किंचिल्लक्ष्यमपश्यामं पृषत्परुषमारुतम्।
160223 हिमाभ्रमिव भातीदं सरः सरससारसम्॥ १३॥
160224
160225 हेमन्ते तर्हि इदं सारः कीदृशं तत्राह - किंचिदिति। सर्वतो
160226 नीहारावृतत्वात्किंचिल्लक्ष्यम्। नीहारैः स्ववर्णसाम्यापादनापगतश्यामम्॥ १३॥
160227
160228 यथेदं ब्रह्मणो दृश्यमविकारादि नेतरत्।
160229 यथाम्भसि तरङ्गादि राजन्पृथगिव स्थितम्॥ १४॥
160230
160231 न विद्यते विकारः परिणामः। आदिपदादारम्भसंघातविवर्ता गृह्यन्ते। न इतरत्
160232 कूटस्थं किंतु ब्रह्ममात्रं तथास्य सरसोऽम्भसि तरङ्गादि अम्भोमात्रमित्यर्थः
160233 ॥ १४॥
160234
160235 आत्मनैवोह्यमानानां चक्रावर्तविधायिनाम्।
160236 जडाशयानां विषमा हा कल्लोलपरम्परा॥ १५॥
160237
160238 आत्मना स्वेनैवाम्भसा उह्यमानानाम्। हा इत्याश्चर्ये। छाययेदं ब्रह्मण्यपि
160239 योज्यम्॥ १५॥
160240
160241 कूपवापीसरोब्धीनां दृश्यते यादृगन्तरम्।
160242 नारीपुरुषतोयानां विज्ञेयं तादृगन्तरम्॥ १६॥
160243
160244 कूपवाप्याद्युपाधिभेदेनाम्भसि तारतम्यमिव
160245 नारीपुरुषादिशरीरोत्कर्षात्तदात्मन्यपि तारतम्यविभावनमित्याह - कूपेति।
160246 अन्तरं उत्कर्षापकर्षतारतम्यम्॥ १६॥
160247
160248 जन्तोरिवास्य मनसो जलजातिबन्धजीर्णस्य जर्जरदशालहरीभ्रमेण।
160249 आवर्तवृत्तिवलितान्यतिसंततानि को नाम संकलयितुं कमलानि शक्तः॥ १७॥
160250
160251 जले जातिर्जन्म येषां पद्मोत्पलादीनाम्। लडयोरभेदाज्जडाज्जातयो नानायोनिभेदाश्च
160252 तेषां बन्धेन संबन्धेन जीर्णस्य जन्तोर्मनस इवास्य सरसः पद्मादीनां
160253 तत्तद्देहानां च जर्जरदशान्ता या लहर्यस्तरङ्गा भोगोत्साहश्च
160254 तद्भ्रमेणातिशयेन संततानि आवर्ततुल्यानि इच्छाद्वेषादिवृत्तीनां वलितानि
160255 परिवर्तनानीवासम्ख्यातानि कमलानि संकलयितुं को नाम शक्तः। न कश्चिदित्यर्थः
160256 ॥ १७॥
160257
160258 चित्रं विजृम्भितमहो जडसंगमस्य पद्मोपि यन्निजगुणानगुणानिवैषः।
160259 अन्तः प्रगोपयति कण्ठतले निवेश्य सर्वस्य दर्शयति दुर्भगकण्टकौघम्॥
160260 १८॥
160261
160262 पद्मानि वर्णयितुं प्रस्तौति - चित्रमित्यादिना। इतः परं प्रायेणान्यापदेशाः।
160263 जडसंगमस्य जलसंबन्धस्य मूर्खसमागमस्य च विजृम्बितं
160264 चित्रमाश्चर्यभूतं अहो। तत्कुतः। यद्यत एष सद्गुणनिधित्वेन प्रसिद्धतमः

160265 पद्मोऽपि निजान् सौरभ्यसौन्दर्यमकरन्दादीन् गुणानगुणान् दोषानिव मुकुलितः सन्
160266 कण्ठतले निवेश्य अन्तः प्रगोपयति। दुर्भगं कण्ठकौघं च बहिः सर्वस्य
160267 जनस्य दर्शयति॥ १८॥
160268
160269 सच्छिद्रैरदृढैः सूक्ष्मैर्गोपितैर्जाड्यसंयुतैः।
160270 अनल्पैरपि निःसारैः पद्मस्येव गुणैरलम्॥ १९॥
160271
160272 ये तु पद्मस्य गुणशब्दवाच्यास्तन्तवस्तत्सदृशाः सदोषा गुणास्तु सर्वत्रोपेक्ष्या
160273 एवेति प्रसङ्गादाह - सच्छिद्रैरिति। सच्छिद्रत्वादिदोषदुष्टत्वात् अलं उपादेयता
160274 नास्तीत्युपेक्ष्या इत्यर्थः॥ १९॥
160275
160276 महतां कुलपद्मानां गुणसौन्दर्यशालिनाम्।
160277 प्रभावं नास्ति संख्यातुं वासुकेरपि शक्तता॥ २०॥
160278
160279 कुलपद्मानां यशःशौरभेण कुलप्रख्यापकानाम्। वासुकेः शेषस्यापि॥ २०॥
160280
160281 हरिवक्षोगता लक्ष्मीरपि शोभार्थमेव यत्।
160282 बिभर्ति कमलं हस्ते कान्याशंसाधिका भवेत्॥ २१॥
160283
160284 तस्य पद्मस्य सर्वसौन्दर्याधिदेवताया लक्ष्म्या अपि शोभासंपादकत्वापेक्षया
160285 अन्याशंसा प्रशंसा सर्वसौन्दर्योत्कर्षोक्तिरधिका का भवेत्। तत्साम्यं कस्य वा
160286 भवेत् इति पाठे तु स्पष्टम्॥ २१॥
160287
160288 सितासिताभ्यां रूपाभ्यां कमलोत्पलखण्डयोः।
160289 वैसादृश्यं भवेत्किंतु समा जडजडैतयोः॥ २२॥
160290
160291 एतयोः कमलोत्पलखण्डयोर्जडेन जलेन जडा चेतना
160292 चन्द्रसूर्यद्वेषरूपमौर्ख्यलक्षणा च वृत्तिः समा किंतु सितासिताभ्यां
160293 रूपाभ्यामेव वैसादृश्यं वैलक्षण्यं भवेत् इति योज्यम्॥ २२॥
160294
160295 साम्यं न फुल्लविपिनेन सरःसु याति व्योम्ना न तारकयुतेन न चेन्दुवृन्दैः
160296 [इन्दुबिंबैः इति टीकाकृदभिमतः पाठः।]।
160297 नृत्यद्वधूविहसिताननशोभयैति फुल्लस्य पङ्कजवनस्य नवोदिता श्रीः॥ २३
160298 ।।
160299
160300 सरः सु फुल्लस्य पङ्कजवनस्य नवोदिता श्रीः शोभा फुल्लेन मन्दारादिविपिनेन
160301 साम्यं न याति। तारकयुतेन व्योम्नापि साम्यं न याति। एवमिन्दुबिम्बैरप्येकत्र
160302 मिलितैः साम्यं न याति। किंतु नृत्यन्तीनां वधूनां विहसितयुक्तया
160303 आननशोभया साम्यमेति लभते इत्येतद्विध्यर्थापूर्वोपमानिराक्रिया॥ २३॥
160304
160305 येषां पुष्पलतास्वादैरनन्यमनसां गतम्।
160306 भृङ्गाणामायुरायामि त एव सुभगोत्तमाः॥ २४॥
160307
160308 प्रसङ्गाद्भृङ्गान्वर्णयति - येषामिति। येषां भृङ्गानां
160309 पुष्पलतास्वादैरायामि दीर्घमायुर्गतं ते भृङ्गा एव सुभगोत्तमाः। हे सुभगेति
160310 पृथक्पदं वा॥ २४॥
160311
160312 चूतचारुचमत्कारं चञ्चरीकाश्चरन्ति ये।
160313 त एव सचमत्कारा इतरे जातिपूरणम्॥ २५॥
160314
160315 चूतस्य चारुचमत्कारं सुगन्धिं मकरन्दरसं नवाङ्कुरकषायरसं च चरन्ति
160316 आस्वादयन्ति ये भृङ्गाः कोकिलाश्च॥ २५॥

160317
160318 मत्ता मधुमदामोदैः पुष्करेषु रणन्ति ये।
160319 तुष्टानामितरस्वादैर्भ्रमराणां हसन्ति ते॥ २६॥
160320
160321 पद्मकरन्दास्वादिनो भृङ्गा वनान्तरासक्तान् भृङ्गान् हसन्तीवेत्याह -
160322 मत्ता इति। ये भृङ्गा भ्रमराणां हसन्ति। जन्मेति शेषः। कर्मणः
160323 शेषत्वविवक्षा वा॥ २६॥
160324
160325 येनोषितं विरुतमुल्लसितं प्रसुप्तं पद्मोदरेषु शशिकोटरकोमलेषु।
160326 भृङ्गः स एष शिशिरे विरसेषु भावं कष्टं करिष्यति कथं तरुपुष्पकेषु
160327 ॥ २७॥
160328
160329 येन भृङ्गेण पद्मोदरेषु उषितं विहृतं उल्लसितं प्रसुप्तं च स एष
160330 भृङ्गः शिशिरे विरसेषु तरुपुष्पकेषु भावं प्रीतिं कथं करिष्यति॥ २७॥
160331
160332 अफुल्लमल्लिकोद्दाममुकुलोपरि षट्पदः।
160333 दृश्यते कालरुद्रेण शूले प्रोत इवान्धकः॥ २८॥
160334
160335 मुकुलपदेनैवाफुल्लत्वे लब्धे अफुल्लपदं विकासोन्मुखव्यावृत्त्या
160336 शूलसाम्योपपादनार्थम्॥ २८॥
160337
160338 आस्वादयन्विविधपुष्पमधूनि भृङ्ग नित्यं भ्रमन्सकलशैललतागृहेषु
160339 ।
160340 नाद्यापि तुष्यसि किमङ्ग दुराशयोऽसि मन्ये न सारमुपगच्छसि वा वनेभ्यः॥
160341 २९॥
160342
160343 अङ्ग हे भृङ्ग त्वं विदिधपुष्पमधूनि आस्वादयन्सन् सकलशैललतागृहेषु
160344 नित्यं भ्रमन्नद्यापि किं न तु तुष्यसि। मधुलम्पटत्वाद्दुराशयोऽसि अद्यापि
160345 वनेभ्यः सारं नोपगच्छसि वा। कष्टमिति खेदे। मन्ये इति वितर्के। न हि सारलाभे
160346 अपरितोषो भ्रमणं वा संभावयितुमपि शक्यमिति भावः॥ २९॥
160347
160348 कमलकुलकवलकोविद गच्छ सरो मधुप मा रूढम्।
160349 बदरदरीषु विदीर्णं देहं कुरु कण्टकक्रकचैः॥ ३०॥
160350
160351 कमलकुले पद्मवने कवलनं कवलो मकरन्दास्वादनं तत्र कोविद हे मधुप त्वं
160352 सरः पद्माकरं गच्छ। रूढं मकरन्दपुष्टं स्वदेहं बदरदरीषु
160353 कण्टकक्रकचैर्विदीर्णं मा कुरु॥ ३०॥
160354
160355 अतसीकुसुमे कुवलयदलवलये विकसिते च तापिच्छे।
160356 परभागमेहि मधुना तासु विसदृशीव पण्डितः पुरुषः॥ ३१॥
160357
160358 हे मधुप यासु हेमन्तशिशिरादिकालकलासु कमलानि न लभसे तास्वपि
160359 त्वद्वर्णसदृशे अतसीकुसुमे तथा कुवलयदलवलये तथा विकसिते तापिच्छे तमाले च
160360 यथायोगं मधुना आयुषः परभागं एहि यापय। यथा पण्डितः पुरुषः
160361 स्वानुरूपप्रभुसमाजाद्यलाभे विसदृशि प्रभौ वसन्नपि विद्वत्प्राप्तये वसति न
160362 किरातकुले तद्वदित्यर्थः॥ ३१॥
160363
160364 पश्यैषा नाभिनलिनीकेसरैः पालिता श्रिया।
160365 हंसमालामलावल्ली सामगायनकूजिता॥ ३२॥
160366
160367 तत्र हंसमालां वर्णयन्दर्शयति - पश्येति। हे राजन् सरोनाभिनलिनीनां
160368 केसरैरुपभुक्तैस्तत्समानवर्णरूपया श्रिया शोभया पालिता हंसमालालक्षणा

160369 अमला वल्ली सामगायनमिव गम्भीरं कूजितं यस्यास्तथाविधास्ति तां पश्येत्यर्थः
160370 । गायनमित्यशित्यात्वाभावश्छान्दसः । अथवा भगवन्नाभिनलिनीकेसरैः श्रिया
160371 लक्ष्म्या पालिता यथार्थसामगानमेव कूजितं यस्यास्तथाविधेति
160372 दैवाद्दृष्टब्राह्महंसमालापरतया व्याख्येयम् ॥ ३२ ॥
160373
160374 दोलाकमलनीडस्थां दृष्ट्वा खे प्रतिबिम्बिताम् ।
160375 हंसो हंसीमनुसरन्मण्डले नेह चेतति ॥ ३३ ॥
160376
160377 इह सरोमण्डले खे हंसीमनुसरन् हंसः प्रतिबिम्बितां दोलासदृशे कमलनीडे
160378 स्थितां हंसी दृष्ट्वा तत्पतनमज्जनशङ्कया न चेतति । मूर्च्छितोऽभूदित्यर्थः ॥
160379 ३३ ॥
160380
160381 मा भूत्कस्यचिदेवैषा राजन्व्यसनिता भृशम् ।
160382 पश्यैतां बिम्बितां हंसो हंसीमनुसरन्मृतः ॥ ३४ ॥
160383
160384 तादृशी स्त्रीव्यसनितां निन्दति - मा भूदिति । अप्यर्थे एवकारः ॥ ३४ ॥
160385
160386 हेलया राजहंसेन यत्कृतं कलकूजितम् ।
160387 न तद्वर्षशतेनापि जानात्याशिक्षितुं बकः ॥ ३५ ॥
160388
160389 समानेष्वाकराकारजातिचेष्टाशनादिषु ।
160390 हंसस्य राजहंसस्य दूरमत्यन्तमन्तरम् ॥ ३६ ॥
160391
160392 आकरो जन्मस्थानम् । आकारः संस्थानम् । अशनमाहारः । आदिपदान्नामवर्णादयो
160393 गृह्यन्ते । इतरहंसस्य राजहंसस्य चात्यन्तमन्तरं तारतम्यं दूरं
160394 विप्रकृष्टम् । यतस्ते मानसे स्वर्णपद्मवने क्रीडन्ति समुद्रे च निमज्ज्य मुक्ताः
160395 खादन्ति सर्वपक्ष्यगम्ये ऊर्ध्वभागे नभसः संचरन्ति नान्ये इति भावः ।
160396 राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः ॥ ३६ ॥
160397
160398 शुक्लपक्षस्थितो व्योम्नि कुमुदाकरभासकः ।
160399 आह्लादयति चेतांसि हंसश्चन्द्र इवोत्थितः ॥ ३७ ॥
160400
160401 शुक्लेन पक्षेण चन्द्रः शुक्लाभ्यां पक्षाभ्यां हंसो व्योम्नि स्थितः ।
160402 कुमुदानामाकरस्य भासको विकासकश्चन्द्रः शोभाहेतुर्हंस इति तयोः साम्यम् ॥ ३७ ॥
160403
160404 उन्नालनलिनीनालकदलीस्तम्भसंकुले ।
160405 वने विहरतां लक्ष्मीं हंसानामेति कः खगः ॥ ३८ ॥
160406
160407 उन्नाला या नलिन्यस्तन्नाललक्षणैः कदलीस्तम्भैः संकुले कदलीवनप्राये पद्मवने
160408 विहरतां हंसानां लक्ष्मीं शोभामित्युत्तानोऽर्थः । तात्पर्यतस्तु योगेन
160409 ऊर्ध्वीकृतनाला या हृदयपद्मलक्षणा नलिनी तस्याः
160410 प्राणायामाभ्यासाद्विकासेन कदलीवद्यः स्तम्भनं स्तम्भस्तत्संकले
160411 प्रागुक्तहृत्पद्मत्रयलक्षणे वने निरस्तत्रिविधतापनिरतिशयानन्दास्वादनेन सदा
160412 विहरतां हंसानां यतीनां जीवन्मुक्तिसुखसाम्राज्यलक्षणां लक्ष्मीं संपदं
160413 खगो देवोऽपि क एति प्राप्नोतीत्यर्थः ॥ ३८ ॥
160414
160415 तरङ्गवलया लोलसीकरोत्करहारिणी ।
160416 कुमुदोत्पलकह्लारपुष्पसंभारसुन्दरी ॥ ३९ ॥
160417
160418 इदानीं तां सरसीं नारीसाम्येन रूपयन्नुत्प्रेक्षते - तरङ्गेत्यादिना । तरङ्गा
160419 एव वलया यस्याः । लोलैः सीकरोत्करैर्हारिणी हारवती ॥ ३९ ॥
160420

160421 भृङ्गलोलालकलता रणत्सारसनूपुरा।
160422 वर्तुलावर्तनाभीका चलद्वीचिविलोचना॥ ४०॥
160423
160424 भृङ्गा एव लोला अलकलता यस्याः॥ ४०॥
160425
160426 प्रतीक्षमाणा दयितं रसपूरकरं धरम्।
160427 नारीव सरसी चारुहंसकाभ्यां विराजते॥ ४१॥
160428
160429 रसो मनोरथो जलं च तस्य पूर्तिः पूरस्तत्करं धरं पर्वतं प्रतीक्षमाणा
160430 प्रतिमुखमीक्षमाणा। हंसकाभ्यां मञ्जीराभ्यां हंसपोताभ्यां च॥ ४१॥
160431
160432 हे हंस मद्गुबककाकशरारुसारे मा त्वं सरस्यविरतं कुरु वासमेकः।
160433 आपद्यपीह समशीलवयोवचोभिः श्रेयःफला भवति संगतिरात्मवर्गैः॥ ४२॥
160434
160435 प्रसङ्गात्कश्चिदन्यापदेशेन कंचित्प्रत्याह - हे हंसेति। हे हंस त्वं
160436 मद्गुर्जलकाको बकः प्रसिद्धकाकश्च एतद्रूपा ये शरारवो हिंस्रास्तत्सारे
160437 तत्प्रधाने सरसि एको वासं मा कुरु। यतः इह आपद्यपि
160438 समशीलवयोवचोभिरात्मवर्गैर्हंसैरेव सह संगतिः श्रेयः फला सुखोदर्का
160439 भवति नान्यैरित्यर्थः॥ ४२॥
160440
160441 पादाक्रान्तमहेभमस्तकतटः पद्माकरैकालयः
160442 कह्लारोत्पलकुन्दचम्पकलतासंभोगसौभाग्यवान्।
160443 भृङ्गोऽप्येष विधेर्वशेन शिशिरे लोष्टं तृणं स्वादयन् शीते
160444 शुष्कबकत्यहो नु विपदा दैन्ये मनो दीयते॥ ४३॥
160445
160446 अन्यः प्रसङ्गादाह - पादेति।पादैराक्रान्ता महेभानां मस्तकतटा येन तथा
160447 पद्माकर एवैक आलयो यस्य तथा कह्लारादिलतावधूनां संभोगशृङ्गारवान्
160448 एष ईदृशप्रभावोऽपि भृङ्गो विधेर्दैवस्य वशेन शिशिरर्तौ लोष्टं तृणं च
160449 स्वादयन्नास्वादयन्सन् शुष्को बक इवाचरति बकति। सर्वप्रातिपदिकेभ्य
160450 आचारेक्विब्वक्तव्यः इति क्विप्। अहो इति सखेदाश्चर्ये। विपदा महद्भिरपि मनो दैन्ये
160451 दीयते॥ ४३॥
160452
160453 पुत्रस्येह दलोदरे द्युति तरत्तारं चिरं संस्मृतं
160454 हंसस्यांसविनुन्ननालगहने संचारिणा भो मया।
160455 शुक्लासारमिवाब्जिनी विकिरति स्वं वारिविन्दूत्करं मध्याह्ने शिशिरं विकासि
160456 सहसा मूर्ध्नि स्फुटं दृश्यताम्॥ ४४॥
160457
160458 भो राजन् हंसस्यांसाभ्यां पक्षाभ्यां विनुन्ने नालगहने नालवने प्रविष्टेन
160459 मया द्युति द्योतमाने पद्मदलोदरे निविष्टस्य पुत्रस्य हंसपोतस्य तरन्निः सरत्
160460 तारमुच्चैः स्वरं स्वपितरं प्रति यद्वचनं
160461 तत्सदृशदर्शनोद्बोधकसमवधानात्संस्मृतम्। किं तद्वचनं तदाह -
160462 शुक्लेति। हे तात अब्जिनी शुक्लं मुक्तामयमासारमिव स्वं वारिबिन्दूत्करं विकिरति।
160463 मूर्ध्नि शिरोभागे मध्याह्नकालेऽपि सहसा विकासि शिशिरं हिमं स्फुटं
160464 प्रत्यक्षं दृश्यतामिति॥ ४४॥
160465
160466 व्योम्नीन्दोरिव सौम्यवारिणि चिरं निःशब्दकं सर्पतो
160467 हंसस्यांसहताब्जनालवलनानिष्कम्पटङ्कक्षतैः।
160468 गङ्गावारिवदत्र पुष्करपुटाद्वाह्मादिवास्योपरि भ्रष्टा ये जलबिन्दवो
160469 जलचरा हृष्टाः पिबन्त्याशु तान्॥ ४५॥
160470
160471 हे राजन् इह सरसि व्योम्न्याकाशे इन्दोरिव चन्द्रवत् सौम्ये प्रसन्ने वारिणि निःशब्दकं
160472 सर्पतो गच्छतो हंसस्य अंसाभ्यां पक्षाभ्यां हतानि यान्यब्जनालानि

160473 तत्संबलनलक्षणैर्निष्कम्पटङ्काघातैः पुष्करपुटाद्व्राह्मात्
160474 हिरण्यगर्भासनपुष्करपुटादिव ये जलबिन्दवः अस्योपरि भ्रष्टास्तान् जलचरा
160475 मत्स्यादयो हृष्टाः सन्तो गङ्गावारिवदाशु पिबन्ति ॥ ४५ ॥
160476
160477 इत्यार्षे श्रीवासिष्ठमहारामा० वा० दे० मो० नि० उ० अविद्यो० विप०
160478 पद्मभ्रमरहंसवर्णनं नाम सप्तदशाधिकशततमः सर्गः ॥ ११७ ॥
160479
160480 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
160481 पद्मभ्रमरहंसवर्णनं नाम सप्तदशाधिकशततमः सर्गः ॥ ११७ ॥
160482
160483
160484 अष्टादशाधिकशततमः सर्गः ११८
160485
160486 सहचरसहचर्यः क्रमेणोचुः ।
160487
160488 निर्गुणस्य बकस्यास्य गुण एकोऽस्ति दृश्यताम् ।
160489 यत्प्रावृषं स्मारयति प्रावृत् प्रावृडिति ब्रुवन् ॥ १ ॥
160490
160491 बकमद्गुमयूराणां पान्थानां च वियोगिनाम् ।
160492 मत्स्यानां चातकानां च चरित्रमिह वर्ण्यते ॥
160493
160494 प्रावृट् प्रावृडिति बकशब्दस्याव्यक्तस्य व्यक्तवर्णैरनुकृत्योक्तिः ॥ १ ॥
160495
160496 बक हंस इवाभासि सरःस्थो मद्गुसौहृदम् ।
160497 नृशंसत्वं च वाणीं च त्यक्त्वा हंसो भव स्फुटम् ॥ २ ॥
160498
160499 अत्राप्यन्यापदेशोक्तयः प्राग्वत् । हे बक त्वं वर्णतो हंस इवाभासि ।
160500 मद्गुसौहृदादिदोषत्रयं त्यक्त्वा हंसो भवेत्यर्थः ॥ २ ॥
160501
160502 गम्भीरं वारिगर्भं प्रसृतजलचरं ये प्रविश्य प्रविश्य
160503 पाङ्क्त्यान्प्रोतचञ्चवश्चतुरतर परं जग्धवन्तो विदग्धाः ।
160504 ते केनाप्यद्य दिष्ट्या मृततिमिगमिताः कालयुक्ते महिम्ना नाक्रामन्ति
160505 क्रमस्थाः सुहरमपि पुरः पङ्गवो मद्गवोऽमी ॥ ३ ॥
160506
160507 हे चतुरतर मत्स्यवधे विदग्धाः पण्डिता ये मद्गवः प्रसृता जलचरा
160508 यस्मिंस्तथाविधं वारिगर्भ प्रविश्य प्रविश्य । पुनः पुनः प्रविश्येत्यर्थः । प्राक्
160509 गिलनसमये मत्स्यैः प्रोताश्चञ्चवो येषां तथाविधाः सन्तो मत्स्यान् जग्धवन्तो
160510 भक्षितवन्तस्तेऽमी मद्गवो दिष्ट्या दैववशात्केनापि महिम्ना
160511 मृतैस्तिमिभिर्मत्स्यजातिभेदैर्गलरुजं गमिताः सन्तः क्षुधातिशयकालयुक्ते
160512 आक्रमणे तीरे क्रमेण पङ्क्तिबन्धेन स्थिताः सन्तोऽपि पुरस्तीरप्रदेशागतं सुहरमपि
160513 मत्स्यं पङ्गवः सन्तो नाक्रामन्ति । आश्चर्यमित्यर्थः ॥ ३ ॥
160514
160515 एवं विहन्यते लोकः स्वार्थेनेति प्रदर्शयन् ।
160516 मद्गुर्मद्गुरुतां यात इत्येवं स्तौति दुर्जनः ॥ ४ ॥
160517
160518 दुर्जनैर्लोकहिंसनेन स्वार्थसंपादनं मद्गुभ्यः शिक्षितमिति भङ्ग्यन्तरेणाह
160519 - एवमिति । एवं मद्गुवदेव स्वार्थेन वाञ्छितेन लोको विहन्यते हन्तुं युज्यते इति
160520 इममर्थ प्रदर्शयन् मद्गुर्मम गुरुर्मद्गुरुस्तद्भावं प्राप्त इति एवं
160521 दुर्जनोमद्गुं स्तौति प्रशंसति ॥ ४ ॥
160522
160523 उत्कन्धरो विततनिर्मलचारुपक्षो हंसोऽयमत्र नभसीति जनैः प्रतीतः ।
160524 गृह्णाति पल्वलजलाच्छफरीं यदासौ ज्ञातस्तदा खलु बकोऽयमितीह लोकैः ॥ ५

160525 ||
160526
160527 अत्र नभसि उत्कन्धर ऊर्ध्वीकृतकण्ठो विततौ निर्मलौ चारू पक्षौ यस्य
160528 तथाविधोऽयं परोवर्ती हंस एवेति प्राग्जनैः प्रतीतो निश्चितो बको यदा असौ इह भूमौ
160529 पल्वलजलाच्छफरीं गृह्णाति तदा बकोऽयमिति लोकैर्ज्ञातः || ५ ||
160530
160531 अतिबहुकालविलोलानवलोक्य बकांस्तपोदम्भान् |
160532 अत्रैवातिमिरस्थांस्तटवनिता विस्मिता धूर्तान् || ६ ||
160533
160534 पल्वलादौ मत्स्यार्थमतिबहुकालं विलोलान् अत्रैव सरसि तपोदम्भान् बकान्विलोक्य
160535 ज्ञातधूर्तचरित्रा काचित्तटवनिता तथैवान्यत्रातिबहुकालं विषयलाम्पट्येन
160536 विलोलानत्रैव तपोदम्भान् आतिमिरस्थान्तिमिरोदयपर्यन्तं
160537 प्रतीक्षमाणान्धूर्तान्विलोक्य विस्मिताभूदित्यर्थः || ६ ||
160538
160539 अत्र जले हिमहेलाः पश्यैता अपहरन्ति सितपद्मान् |
160540 इच्छसि ता अनुगन्तुं नाहं ते वल्लभा व्रजामीति || ७ ||
160541
160542 पान्थस्त्री पद्महारिणीः पश्यन्तं पान्थं प्रत्याह | हे कान्त अत्रास्मिञ्जले हिमं
160543 शीतं हेलयन्तिन गणयन्ति तथाविधा एता ग्रामीणवध्वः | हीति पृथक्पदम् महिला
160544 एव मेहला इति वा | सितपद्मानपहरन्ति त्वं ता अनुगन्तुमिच्छसि | तेन अहं ते वल्लभा
160545 प्रिया न इति हेतोरहं व्रजामीति || ७ ||
160546
160547 कुपितां तामनुनेतुं यत्नपरः पान्थ एष पथि कान्ताम् |
160548 अवलोकय नरनायक कुसुमलताकुहरकेलितीरवने || ८ ||
160549
160550 एवंवादिनीं कुपितां तां कान्तामनुनेतुमेष पथिकः पथि कुसुमलताकुहरे
160551 केलितीरवने यत्नपरः प्रार्थयते | हे नरनायक त्वमवलोकयेति द्वयोरन्वयः || ८ ||
160552
160553 इति हावभावविलसितविवलनकोपार्धदृष्टिहसितानि |
160554 कुर्वाणा वरवनिता कथयति ते दृश्यतां राजन् || ९ ||
160555
160556 इममेव पथिकं मिथुनचरित्रं प्रागल्भ्यात्कथयन्तीं वाराङ्गनां राज्ञे
160557 दर्शयति - इतीति || ९ ||
160558
160559 बकमद्गुशरारूणां नित्यमेकौकसामपि |
160560 संकरोऽस्ति मिथो बुद्धेर्न मूर्खविदुषामिव || १० ||
160561
160562 शरारूणां हिंस्राणां निषादादीनाम् | बुद्धेः संकरो मेलनं प्रीतिरिति यावत् || १० ||
160563
160564 चञ्च्वग्रे खञ्जरीटस्य कीटः किटिकिटायते |
160565 दौर्भाग्यस्य पुराणस्य पताकेवोच्छ्रितोन्नते || ११ ||
160566
160567 कीटोऽत्र पतङ्गः | किटिकटीति रौति किटिकिटायते | डाजन्तादिवार्थनिष्ठात्करोत्यर्थे
160568 क्यङ् | स्फिटि चञ्च्वग्रे किटायते केटतीति किटः कम्पमानःस इवाचरति | पुराणस्य
160569 प्राक्संचितस्य दौर्भाग्यस्य पापस्य उन्नते ऊर्ध्वभागे उच्छ्रिता पताकेव || ११ ||
160570
160571 तारं तीरतरौ स रौति तरलो यावद्बकः प्रोल्लसंस्तावत्पल्वलगोष्पदेऽम्बुकलिले
160572 यावद्गलाद्देहकम् |
160573 मज्जन्त्या प्रियवक्षसीव निपुणं त्रातं शफर्या भयाद्धृद्भङ्गेन
160574 महापदीह हि मृतेर्नान्यद्भवेत्सौख्यदम् || १२ ||
160575
160576 पल्वलतीरतरौ प्रोल्लसन् स बको यावद्रौति कूजति तावदम्बुकलिले ईषज्जलार्द्रे

160577 पल्वलगोष्पदे यावद्बलात् | यावदिति साकल्ये | सर्वप्राणेनेत्यर्थः | प्रियवक्षसि
160578 रागादिव भयान्मज्जन्त्या शफर्या मृत्वापि स्वदेहकं त्रातम् | इह संसारे
160579 महापदि प्राप्तायां हृद्भङ्गेन मृतेर्मरणादन्यत्सौख्यदं शरणं न
160580 भवेत् | तथा च मृत्वापि तया कृतं स्वदेहरक्षणमुचितमेवेत्यर्थः || १२ ||
160581
160582 बकाजगरमद्गूनां हृदि या प्राणिनां धृतिः |
160583 अचर्वितनिगीर्णानां मन्ये निद्रोपमैव सा || १३ ||
160584
160585 बकादीनां हृदि उदरे प्रविष्टानामचर्वितं निगीर्णानां मत्स्यादिप्राणिनां या
160586 धृतिश्चित्तस्थितिः सा निद्रोपमा सुषुप्तिसदृशी मूर्च्छैवेति मन्ये || १३ ||
160587
160588 आसन्नमद्गुबकगृध्रबिडालसर्पदृष्ट्या भयं भवति यत्सलिलाशयानाम्
160589 |
160590 तस्याग्रतस्तृणमिवाशनिपातभङ्गो जातिस्मरेण विदुषोक्तमदः पुरा मे || १४
160591 | |
160592
160593 सलिलाशयानां मत्स्यादीनां आसन्नमद्गुबकादिदर्शनेन यद्भयं भवति तस्य
160594 भयस्याग्रतः अशनिपातप्रयुक्तो भङ्गो भयं तृणमिवाल्पमेव | अदः रहस्यं
160595 मे पुरा जातिस्मरेण मत्स्यादियोनिदुःखानि स्मरता विदुषा स्वानुभूतमुक्तम्
160596 नासत्यमिति मन्तव्यमित्यर्थः || १४ ||
160597
160598 इह सरोवरतीरतरोस्तले कुसुमशालिनि मुग्धमृगान्पुरः |
160599 समवलोकय लोकमलौ बलात्समवकीर्णनवोत्पलकेतकान् || १५ ||
160600
160601 नेत्रश्रोत्रशोभाबलात् अलौ भ्रमरे सति सम्यगवकीर्णानि नवोत्पलानि केतकानि च
160602 यैस्तथाविधान्मुग्धमृगान् लोकं प्रियाजनंन् समवलोकय दर्शय || १५ ||
160603
160604 बर्ही प्रोन्नतचित्तत्वात्तोयमिन्द्रं प्रयाचते |
160605 स पूरयति तेनास्य महात्मा निखिलां महीम् || १६ ||
160606
160607 बर्ही मयूरः प्रोन्नतचित्तत्वादक्षुद्राशयत्वादिन्द्रं तोयं प्रयाचते |
160608 याचेर्द्विकर्मकत्वादिन्द्रोऽप्यकथितं कर्म | स इन्द्रस्तेन प्रोन्नतचित्तत्वगुणेन
160609 संतुष्टः सन् अस्य प्रीत्यै निखिलां महीं तोयेन पूरयति | यतो महात्मा अत्युदार
160610 इत्यर्थः || १६ ||
160611
160612 मेघाननुसरन्त्येते मयूरास्तनपा इव |
160613 मलिनो मलिनस्यैव पुत्र इत्यनुमीयते || १७ ||
160614
160615 स्तनं पिबन्तीति स्तनपा वत्सा इव || १७ ||
160616
160617 मृगानालोक्य पथिकश्चिन्तयन्दयितेक्षणे |
160618 पुरःस्थेषु पदार्थेषु यन्त्रपुत्रिकतां गतः || १८ ||
160619
160620 यन्त्रनिर्मितपुत्रिकातुल्यताम् | निश्चेष्टतामिति यावत् || १८ ||
160621
160622 शिखी वार्यपि नादत्ते भूमेर्भुङ्क्ते बलादहिम् |
160623 दौरात्म्यं तन्न जाने किं सर्पस्य शिखिनोऽथवा || १९ ||
160624
160625 किं सर्पस्य दौरात्म्यमथवा शिखिनो दौरात्म्यं तन्न जाने || १९ ||
160626
160627 सज्जनाशयनीकाशं त्यक्त्वा बर्ही महत्सरः |
160628 पिबत्यम्ब्वभ्रनिष्ठ्यूतं मन्ये तन्नतिभीतितः || २० ||

160629
160630 लसत्कलापजलदाः पश्य नृत्यन्ति बर्हिणः।
160631 धुन्वानाः पिच्छकान्तीन्दुं प्रावृषः पोतका इव॥ २१॥
160632
160633 तत्तस्मै सरसे या नतिः शिरोनमनं तद्धीतितः॥ २०॥ २१॥
160634
160635 वरवने वनवातविसारिणां चपलचन्द्रकचारुतरङ्गिणाम्।
160636 इह पयोनिधिरेव कलापिनां विसृतमुक्ततयेव विलासनः॥ २२॥
160637
160638 विसृता विश्राणिता मुक्ता येन तद्धावेनेव इह वने पयोनिधिरेव कलापिनां
160639 मयूराणां विलासनो नर्तयिता न मेघः पश्येत्यर्थः॥ २२॥
160640
160641 चर तृणानि पिबाम्बु वनावनौ कलय विश्रमणं कदलीवने।
160642 चकितचातक पावकदूषिता न हि सुखाय भवत्यतिमानिता॥ २३॥
160643
160644 हे चकितचातक ते वनावनौ गीष्मे पावकदूषिता संभावितपावका
160645 शुष्कतरुकोटरवासनिर्बन्धसूचिता अतिमानिता सुखाय न हि भवति।
160646 कदलीवनसंनिहितानि शीतलहरिततृणानि चर। कुल्यादिष्वम्बु पिब। कदलीवने
160647 विश्रमणं कलयेत्यन्यापदेशः॥ २३॥
160648
160649 नायं मयूर मकरालयवारिपूरपूर्णोदरो जलधरोऽम्बरमारुरुक्षुः।
160650 दावाग्निदग्धवनपादपकोटराग्रधूमावलीवलय उत्थित एष शैलात्॥ २४॥
160651
160652 हे मयूर अयमग्रे प्रदृश्यमानः अम्बरमारुरुक्षुः पदार्थो मकरालयस्य
160653 समुद्रस्य वारिभिः पूर्णोदरो जलधर इति ते भ्रान्तिर्मा भूत् किंत्वेष दावाग्निना
160654 दग्धानां वनपादपानां कोटराग्रेर्धूमावलीवलयः शैलादुत्थितस्तथा चास्थाने
160655 ते नृत्यारम्भसंभ्रम इत्यर्थः॥ २४॥
160656
160657 येनाब्देन शरद्विधावपि शिखी संतर्पितो वारिभिर्नो वर्षास्वपि पूरयेद्यदि
160658 सरस्तद्वाललोकोचितम्।
160659 आरब्धं समवेक्ष्य सज्जनजनो हासेन दुःस्थो भवेद्बर्हीत्यात्मतृषैव
160660 नेतुमखिलं कालं समभ्युद्यतः॥ २५॥
160661
160662 अनावृष्टौ भौमं वार्यपिबतो मयूरस्याशयं कश्चिद्वर्णयति - येनेति। येन
160663 अब्देन मेघेन शरत्कालेऽपि शिखी मयूरो वारिभिः संतर्पितः स वर्षासु वर्षर्तावपि
160664 सरो न पूरयेदिति यच्चरित्रं तद्वाललोकानां क्षुद्राणामेवोचितं न महतस्तस्य।
160665 औदार्ययोग्ये समयेऽप्यारब्धमिदमनौदार्यं समवेक्ष्य पामरैः कृतेन हासेन
160666 सज्जनजनो दुःस्थो दुःखितो भवेत्। इति एवं विचिन्त्य बर्ही मयूरः आत्मनस्तृषैव
160667 निखिलं कालं नेतु समभ्युद्यत उद्युक्त इत्यर्थः॥ २५॥
160668
160669 स्फटिकविमलं पीत्वा तोयं घनोदरनिर्गतं पिबति न पुनर्मार्गे
160670 क्षुभ्यंस्तृषापि शिखी जलम्।
160671 स्फुरति च घनं स्मृत्वा स्मृत्वा न चापि विपद्यते गुणवति जने
160672 बद्धाशानां श्रमोऽपि सुखावहः॥ २६॥
160673
160674 तर्हि समयूरः किमनुचितकारी नेत्याह - स्फटिकविमलमिति। शिखी तृषा
160675 क्षुभ्यन्नपि प्राक् स्फटिकविमलं घनोदरनिर्गतं तोयं पीत्वा पुनर्मार्गे
160676 सकर्दमं जलं न पिबति। तर्हि स कुतो न तृषा म्रियते तत्राह - स्फुरतीति। स
160677 घनं मेघं स्मृत्वा स्फुरत्युल्लसति नापि च विपद्यते म्रियते। यतो गुणवति जने
160678 बद्धा आशायैस्तेषां श्रमोऽपि सुखावह एव न दुःखद इत्यर्थः॥ २६॥
160679
160680 इहातिवाहयन्त्येते मार्गदौस्थ्यं घनागमे।

160681 कथाभिः पथिकाः प्रायो विमूढा जीवितं यथा ॥ २७ ॥
160682
160683 कान्तावियोगिनां पथिकानां वर्षासु क्वचित् कथालापादिना कष्टेन कालयापनं यथा
160684 आत्मज्ञानहीनानां मूर्खानां जन्मयापनं तथेत्याह - इहेति । एते पथिकाः ॥
160685 २७ ॥
160686
160687 पश्यात्र नाथ सरसः कमलोत्पलकुमुदबिसमृणालानाम् ।
160688 कह्लारपत्रपयसां भारानादाय बालिकाश्चलिताः ॥ २८ ॥
160689
160690 कह्लारपत्रनिबद्धपयसां च भारानादाय बालिकास्तरुण्यश्चलिताः । हे नाथ पश्य
160691 ॥ २८ ॥
160692
160693 किमिदं नयथेति ततः पृष्टाभिस्ताभिरुक्तमेतस्य ।
160694 व्यसनज्वरतप्तायाः पथिक वयं बालसख्य इति ॥ २९ ॥
160695
160696 इदं भारजातं किं किमर्थं नयथ इति पृष्टाभिस्ताभिर्बालिकाभिरेतस्य
160697 प्रष्टुर्मम उत्तरमुक्तम् । हे पथिक वयं वियोगव्यसनज्वरतप्तायाः बालसख्यः
160698 तथा च तदुपचाराय कमलोत्पलादिभारान्नयाम इत्यर्थः ॥ २९ ॥
160699
160700 अथ रागरक्तहृदयाः स्तनभरवितता विलासललिताङ्ग्यः ।
160701 पथिकानां स्मरणपथं भूयोऽप्यनयन्प्रियाः स्वगेहस्थाः ॥ ३० ॥
160702
160703 अथ तदुत्तरं स्वकान्तेषु रागरक्तहृदयास्ताः स्वाः पश्यतां पथिकानां
160704 स्वगेहस्थाः प्रियाः स्मरणपथमनयन् । सदृशदर्शनस्य
160705 संस्कारोद्बोधकत्वादिति भावः ॥ ३० ॥
160706
160707 सा नूनं मम कान्ता दृष्ट्वा सुस्निग्धघनतमःश्यामम् ।
160708 गगनं च शून्यगहनं प्रलपति भुवि पतति विस्खलति ॥ ३१ ॥
160709
160710 तत्र कश्चित्पथिकः स्वप्रियां स्मरन्नाह - सेति । सुस्निग्धा ये घना
160711 मेघास्तल्लक्षणैस्तमोभिः श्यामं गगनं सुस्निग्धं घन इव तम इव च
160712 श्यामं गहनं च दृष्ट्वा मम कान्ता प्रलपति भुवि पतति गच्छन्ती च विस्खलति ।
160713 नूनमिति संभावनायाम् ॥ ३१ ॥
160714
160715 भृङ्गावलीकुवलयावलिताब्जपात्रसंप्रेर्यमाणनलिनीमधुपानमत्तः ।
160716 हा वाति तीरतरुपल्लवलास्यलब्धसंमुग्धशब्दगणगीतगुणो नभस्वान् ॥ ३२ ॥
160717
160718 भृङ्गावल्या कुवलयैश्च आवलितेनाब्जलक्षणेन पानपात्रेण संप्रेर्यमाणं
160719 यन्नलिनीमधु तत्पानेन मत्तस्तथा तीररुहाणां तरुवल्लीनां पल्लवलास्येन लब्धो
160720 यः संमुग्धो मृदुमन्द्रः शब्दगणस्तेन गीतः ख्यापितः
160721 शैत्यमान्द्यसौरभ्यादिर्गुणो यस्य तथाविधो नभस्वान्वायुर्वाति । हा इति
160722 विरहोद्दीपनप्रयुक्तखेदे ॥ ३२ ॥
160723
160724 इत्यार्षे श्रीवासिष्ठमहा० वा० दे० मो० नि० उ० अवि० वि०
160725 हरिणमयूरबकमुग्धादिवर्णनं नामाष्टादशाधिकशततमः सर्गः ॥ ११८ ॥
160726
160727 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
160728 हरिणमयूरबकमुग्धादिवर्णनं नामाष्टादशाधिकशततमः सर्गः ॥ ११८ ॥
160729
160730 एकोविंशाधिकशततमः सर्गः ११९
160731
160732 सहचरा ऊचुः ।

160733
160734 कथयत्येष पथिकः पश्य मन्दरगुल्मके ।
160735 प्रियायाश्चिरलब्धाया वृत्तां विरहसंकथाम् ॥ १ ॥
160736
160737 पथिकः स्वां प्रियां प्राप्य तदग्रे तद्वियोगजाम् ।
160738 प्राक्तनीं स्वां दशामत्र श्मशानान्तामवर्णयत् ॥
160739
160740 हे राजन् मन्दरगिरेः कुञ्जगुल्मके एष पथिकश्चिरलब्धायाः प्रियायाः पुरतः
160741 प्राग्वृत्तां स्वां विरहसंकथां कथयति तं पश्य ॥ १ ॥
160742
160743 एकत्र शृणु किंवृत्तमाश्चर्यमिदमुत्तमम् ।
160744 दातुं त्वन्निकटे दूतमहं चिन्तान्वितोऽवदम् ॥ २ ॥
160745
160746 प्रियागे तेन वर्णितां विरहसंकथां वर्णयितुमुपक्रमते - एकत्रेत्यादिना । हे
160747 प्रिये त्वद्वियोगदशायां मम एकत्र एकस्मिन्दिने जातं किंवृत्तं
160748 वृत्तान्तमाश्चर्यमिदं वक्ष्यमाणं त्वं शृणु । त्वन्निकटे स्ववृत्तान्तं
160749 दातुंन् प्रेषयितुं दूतंन् विचारयंश्चिन्तान्वितोऽहमिदमवदम् ॥ २ ॥
160750
160751 अस्मिन्महाप्रलयकालसमे वियोगे यो मां तयेह मम याति गृहं स कः स्यात् ।
160752 नैवास्त्यसौ जगति यः परदुःखशान्त्यै प्रीत्या निरन्तरतरं सरलं यतेत ॥ ३
160753 ॥
160754
160755 किमवदत्तदाह - अस्मिन्निति । अस्मिन्महाप्रलयकालसमे वियोगे वियोगलक्षणायां
160756 महापदि इहस्थं मां वृत्तान्तप्रापणेन तया सभाजयितुं यो मम गृहं याति
160757 स तादृशो दयालुर्दूतः कः स्यात् । यः परदुःखशान्त्यै प्रीत्या सरलं यथा
160758 स्यात्तथा निरन्तरं यतेत । असौ तादृशः पुरुषो जगति नैवास्ति ॥ ३ ॥
160759
160760 आ एष शिखरे मेघः स्मराश्व इव संयुतः ।
160761 विद्युल्लताविलासिन्या वलितो रसिकः स्थितः ॥ ४ ॥
160762
160763 आ इदानीं स्मृतः पुरोवर्तिगिरिशिखरे एष परिदृश्यमानो मेघः प्रीत्या सततं
160764 परदुःखोपशमनादिगुणैः संयुतः स्मरस्याश्व इव शीघ्रं
160765 मद्गृहगमनसमर्थः । परोपकाररसिको विद्युल्लतालक्षणया विलासिन्या वलितः
160766 स्थितोऽस्तीत्यर्थः ॥ ४ ॥
160767
160768 भ्रातर्मेघ महेन्द्रचापमुचितं व्यालम्ब्य कण्ठेगुणं नीचैर्गर्ज
160769 मुहूर्तकं कुरु दयां सा बाष्पपूर्णेक्षणा ।
160770 बाला बालमृणालकोमलतनुस्तन्वी न सोढुं क्षमा तां गत्वा सुगते
160771 गलज्जललवैराश्वासयात्मानिलैः ॥ ५ ॥
160772
160773 अतोऽहमेनमेव प्रार्थयिष्यामीत्यभिप्रेत्याह - भ्रातरिति । हे भ्रातर्मेघ त्वं
160774 कण्ठे गुणो यस्य स कण्ठेगुणस्तथाविधं गुणवतस्तव उचितं महेन्द्रचापं
160775 व्यालम्ब्य गृहीत्वा सुगते हे शोभननभोमार्गगामिन् तां मत्प्रियां गत्वा
160776 गलज्जललवैरात्मानिलैः प्रथममाश्वासय । ततो मत्संदेशं प्रापयितुं
160777 नीचैर्मन्दं गर्ज मुहूर्तकं दयां कुरु । यतस्ते गाढगर्जितं
160778 मद्विरहदुःखाद्बाष्पपूर्णेक्षणा बालमृणालकोमलतनुस्तन्वी बाला सा सोढुं न
160779 क्षमा ॥ ५ ॥
160780
160781 चित्ततूलिकया व्योम्नि लिखित्वालिङ्गिता सती ।
160782 न जाने क्वाधुनैवेतः पयोद दयिता गताः ॥ ६ ॥
160783
160784 हे पयोद सा दयिता मया हृद्व्योम्नि चित्ततूलिकया लिखित्वा आलिङ्गिता सती अधुना इतः

160785 केव गता न जाने ॥ ६ ॥
160786
160787 इत्थं चिन्तापरवशमतेस्तन्वि सार्धं त्वयाऽसावन्तर्लीनप्रसरमनसः क्वापि
160788 याता स्मृतिर्मे ।
160789 संपन्नोऽहं परवशवपुः काष्ठकुड्योपमाङ्गो भङ्गं सोढुं क इव
160790 विरहक्लेशजं नाम शक्तः ॥ ७ ॥
160791
160792 हे तन्वि इत्थं मेघं प्रत्युक्त्वा त्वच्चिन्तापरवशमतेः अन्तरेव लीनप्रसरं मनो
160793 यस्य तथाविधस्य मे सा प्रसिद्धा स्मृतिः
160794 पूर्वापरप्रतिसंधानसमर्थाबुद्धिस्त्वया सार्धं क्वापि याता । ततः
160795 स्मृतिलोपादहं परवशवपुः सन् काष्ठकुड्योपमान्यङ्गानि यस्य तथाविधः
160796 संपन्नः । तथा हि विरहक्लेशजं भङ्गं परिभवं सोढुं क इव शक्तो नाम ।
160797 न कश्चिदित्यर्थः ॥ ७ ॥
160798
160799 पश्चाज्जातः कलकलरवः संतते पान्थसार्थे
160800 दीनालापैर्व्यसनविधुरैरालपन्ते च मेघम् ।
160801 कष्टं पान्थो मृत इति महारम्भसंपन्नहाहाशब्दः
160802 प्रोद्यत्पथिकवनिताविस्तृतोरःप्रहारः ॥ ८ ॥
160803
160804 ततः पश्चान्मां तथाविधं पश्यति संतते मिलिते पान्थसार्थे पान्थजनसमूहे
160805 महारम्भेण संपन्ना हाहाशब्दा यस्मिंस्तथाविधः
160806 प्रोद्यन्तीनामागच्छन्तीनां पथिकवनितानां विस्तृता उरःप्रहाराश्च
160807 यस्मिंस्तथाविधश्च पान्थो मृत इति कलकलरवः कोलाहलध्वनिर्जातः । तत्र
160808 केचिद्व्यसनेन विधुरैर्भ्रष्टस्वरैर्दीनालापैर्मेघं च आलपन्ते अधिक्षिपन्ति ॥ ८ ॥
160809
160810 लोकेनायं मृत इति ततो बाष्पसंपूरिताक्षं शावीं पूजां विरचितवता
160811 संचयीकृत्य दारु ।
160812 दग्धुं नीतोऽस्म्यतिभयमहं
160813 प्रज्वलच्चित्यन्तप्रोद्यत्स्फोटस्फुटपटपटारावरौद्रं श्मशानम् ॥ ९ ॥
160814
160815 ततः किमभूत्तत्राह - लोकेनेति । ततस्तेन पान्थलोकेन अयं मृत इति निश्चित्य
160816 बाष्पैः संपूरिताक्षं यथा स्यात्तथा शावीं शवोचितां
160817 गन्धमाल्यादिभिरलंकरणरूपां पूजां विरचितवता दारु काष्ठं संचयीकृत्य
160818 संगृह्य दग्धुमहमतिशयितं भयं यत्र तथाविधं
160819 प्रज्वलन्तीभिश्चितिभिरनन्तैः प्रोद्यद्भिः स्फोटस्फुटपटपटारावैः
160820 रौद्रमुद्वेगदं श्मशानं नीतोऽस्मि ॥ ९ ॥
160821
160822 तत्राहं तैः कमलवदने बाष्पपूर्णाक्षिपक्षैर्न्यस्तः कैश्चिच्चितिशयनके
160823 बद्धलोकालिलेखे ।
160824 धूमोद्गाराविरलजटिले मस्तके मत्तमृत्योश्चूडारत्नोत्तम इव
160825 कलामात्रदृश्येऽग्निहेम्नि ॥ १० ॥
160826
160827 हे कमलवदने तत्र अहं कैश्चिद्बाष्पपूर्णाक्षिपक्षैस्तैः पान्थैश्चितिशयनके
160828 न्यस्तः । तत्र बद्धा परितो लोकालिरिव लेखा पङ्क्तिर्यस्य तथाविधे
160829 धूमोद्गारैरविरलं जटिले मत्तस्य मृत्योर्मस्तके प्रसिद्धचूडारत्नोत्तमे इव
160830 द्योतमाने अग्निलक्षणे हेम्नि कलामात्रेण दृश्ये जाते सति ॥ १० ॥
160831
160832 अस्मिन्काले कुवलयलताकोमला धूमलेखा नासारन्ध्रं मृदुगलबिलं मे
160833 प्रवृत्ता नियातुम् ।
160834 उष्णा कृष्णा नकुलकलिता सत्वरं बालसर्पी भूमे रन्ध्रं तनुमिव
160835 दराद्दैर्घ्यसंकोचकुब्जा ॥ ११ ॥
160836

160837 तस्मिन् काले कुवलयलतेव कोमला मृद्वी तथा उष्णा कृष्णा दैर्घ्यसंकोचात्कुब्जा
160838 धूमलेखा मे मृदुगलबिलं नासारन्ध्रं नकुलेन कलिता भीषिता
160839 पूर्वोक्तविशेषणकदम्बवती बालसर्पी तनुं सूक्ष्मं भूमे रन्ध्रमिव नियातुं
160840 निश्चितं प्रवेष्टुं प्रवृत्ता ॥ ११ ॥
160841
160842 त्वत्संकल्पामृतकवचितो नापविद्धस्तयाहं कुन्तश्रेण्या दृढपतनया
160843 वज्रकायो यथाजः ।
160844 त्वामासन्नां मदनसरितं हृद्गृहे गाहमानो मर्मच्छेदेष्वपि विलसिता
160845 नाविदं वेदनास्ताः ॥ १२ ॥
160846
160847 हे प्रिये अहं त्वदाकारेणामृतेन कवचितः कवचेनावृतः संस्तया धूमलेखया
160848 नापविद्धो न पीडितः । यथा वज्रकायः अजो ब्रह्मा मृत्योर्दृढपतनया
160849 कुन्तश्रेण्या नापविद्धस्तद्वत् । किं च हृद्गृहे आसन्नां मदनसरितं त्वां
160850 गाहमानोऽहमग्निदाहेन मर्मच्छेदेषु क्रियमाणेष्वपि विलसिता उद्भूतास्ता वेदना
160851 नाविदं किं पुनर्धूममात्रस्येत्यर्थः ॥ १२ ॥
160852
160853 एतावन्तं समयमुचितं तन्वि सार्धं त्वयान्तर्लीलालोलं हृदि चिरतरं
160854 तन्मयात्रानुभूतम् ।
160855 यस्मिन्दृष्टेऽमृतहृद इवोन्मज्जनौर्घैर्यथासौ राज्याभोगो
160856 विशसनमिवाल्पाल्पमेवेति बुद्धिः ॥ १३ ॥
160857
160858 हे तन्वि एतावन्तं समयंन् मया हृदि अन्तस्त्वया सार्धं विरचितमत्रास्यां
160859 मूर्च्छायां तत्तादृशं सुखमनुभूतम् । कीदृशं तदाह - यस्मिन्निति ।
160860 अमृतहृदे उन्मज्जनौघैर्यथा तथा यस्मिन् सुखे दृष्टे सति असौ प्रसिद्धो
160861 राज्यस्याभोगस्त्रैलोक्यराज्याधिपत्यसुखमपि प्रागुक्तं मर्मविशसनं दुःखमिव
160862 अल्पादप्यल्पं तुच्छमेवेति बुद्धिर्भवतीत्यर्थः ॥ १३ ॥
160863
160864 सा लीला ते विलासा वचनमपि च तत्सस्मितं ते कटाक्षाः सानन्दानन्तरस्य
160865 प्रसरसमुचिता दूरमण्येकभूषा ।
160866 तानीहारावसारावहसनचलनावेगविक्षोभितानि किंवा तत्तन्न
160867 यत्संस्मृतममृतरसाह्लादमंतः करोति ॥ १४ ॥
160868
160869 हे प्रिये तव सा अनुभवैकगम्यनिरतिशयानन्दरूपा अनुपमा लीला ते तादृशा एव
160870 भ्रूविक्षेपादिविलासास्तत्तादृशमेव वचनमपि तत्तादृशमेव स्मितं ते च
160871 कटाक्षास्तथा दूरे मणिमयी एकभूषाप्रधानभूषणभूता एकावली यस्यां
160872 तथाविधा सा आनन्दस्यानन्तरस्य सुरतस्य प्रसरे समुचिता अर्थादालिङ्गनक्रिया तानि
160873 तादृशानि ईहा नखक्षतादिचेष्टा रतिकूजिताद्यारावास्तत्साराण्यवहसनानि
160874 चलनावेगेन चित्तविक्षोभितानि चेत्येतेषु यत्संस्मृतमन्तरमृताह्लादं न करोति
160875 तत्तत्किं वास्ति । न किंचित् सर्वमपि अमृतरसाह्लादं करोत्येवेत्यर्थः ॥ १४ ॥
160876
160877 त्वत्संगमे सुरतसौख्यरसायनेन बाले ततोऽहमतितृप्ततया श्रमार्तः ।
160878 तत्र स्थितो मृदुनि तल्पतले शशाङ्कबिम्बे शरच्छिशिरनिर्मलशोचिषीव ॥ १५ ॥
160879
160880 हे बाले ततस्तदनन्तरमहं त्वत्संगमे सुरतसौख्यमेव रसायनं
160881 यस्मिंस्तथाविधे अतितृप्ततया श्रमेणार्तो मन्थरः संस्तत्र मृदुनि तल्पतले
160882 शरदि शिशिराणि शोचींषि यस्मिंस्तथाविधे शशाङ्कबिम्ब इव स्थितः ॥ १५ ॥
160883
160884 अत्रान्तरे झटिति चन्दनपङ्कशीताद्दीर्घादिवेन्दुशकलादशनिः सशब्दः ।
160885 दृष्टो मया चितितलज्वलितो हुताशः क्षीराब्धिवाडवनिभोङ्गतः स्वतल्पात् ॥ १६ ॥
160886
160887 अत्रान्तरे अस्मिन्नवसरे
160888 चन्दनपङ्कशीताद्दीर्घादिन्दुशकलादशनिरिवात्यन्तमसंभाव्यः

160889 स्वतल्पादुत्थितः स्नाङ्गगतः सशब्दश्चितितले ज्वलितो हुताशः
160890 क्षीराब्धिसंबन्धिवाडवो वडवानलस्तन्निभो दृष्टः || १६ ||
160891
160892 सहचरा ऊचुः |
160893
160894 इत्युक्तवति कान्तेऽस्मिन् हा हतास्मीति वादिनी |
160895 मुग्धा मौग्ध्याद्वरावर्तशङ्कया मूर्च्छिता स्थिता || १७ ||
160896
160897 कान्ते इति इमां कथामुक्तवति सति तच्छ्रुत्वा मुग्धा सा स्त्री मौग्ध्यादेव वरः
160898 श्रेष्ठ आवर्तः संवर्तस्तच्छङ्कया मूर्च्छिता भूत्वा स्थिता || १७ ||
160899
160900 तामेनामेष नलिनीदलवीजेन वारिभिः |
160901 आश्वासयंस्तथावस्थां कण्ठेकृत्वात्र संस्थितः ||| १८ ||
160902
160903 तां तथाविधामेनां कान्तामेष कान्तो नलिनीदलैर्वीजनं वीजस्तेन शीतैर्वारिभिश्च
160904 आश्वासयंस्तन्मूर्च्छामपनयन्सन् तथावस्थां तां कण्ठेकृत्वा अत्र
160905 मन्दरकुञ्जे संस्थितः || १८ ||
160906
160907 पुनः पृष्टोऽनया वक्ति पश्य तामेव संकथाम् |
160908 एष पार्श्वगतामेनां गृहीत्वा चिबुके प्रियाम् || १९ ||
160909
160910 तां प्रागुक्तामेव संकथाम् | कथाशेषमिति यावत् | वक्ति पश्य || १९ ||
160911
160912 हा हा हुताश इति किंचिदिवोपजातखेदो वदामि खलु यावदहं त्वरावान् |
160913 तावच्चितिर्झटिति तैरवलुण्ठिता सा पान्थैः क्षणात्खरखराकुलिता लसद्भिः || २०
160914 | |
160915
160916 तमेवाह - हाहेति | हे प्रिये अहं किंचिदिवोपजातखेदः सन् हा हा हुताश इति
160917 यावद्वदामि तावज्झटिति तैर्लसद्भिः प्रहृष्टैः पान्थैः
160918 खरखरध्वनिभिराकुलिता सा चितिः सर्वोल्मुकापहारेणावलुण्ठिता || २० ||
160919
160920 पान्थास्ततस्तरलतालविलासवाद्यमालिङ्ग्य मामतनुशेखरपूरिताङ्गम् |
160921 उत्थापितस्थितिमलं परिवार्य सर्वे नेदुर्जगुर्जहसुराननृतुर्ववल्गुः || २१ ||
160922
160923 मृतस्य पुनरुज्जीवनहर्षात्पान्थास्तरलतालविलासवाद्यं यथा
160924 स्यात्तथोत्थापितचितास्थितिमतनुभिर्बहुभिर्मङ्गलार्थैः
160925 शेखरैस्तरुमञ्जरीगणोत्तंसैः पूरिताङ्गं मामालिऽन्य सर्वे परिवार्य
160926 हर्षान्नेदुर्जगुर्जहसुरासमन्तान्ननृतुर्ववल्गुरुच्चेलुश्चेत्यर्थः || २१ ||
160927
160928 विषमविनायकसुखदं वलितं भस्माहिशवशिरःप्रकरैः |
160929 शशिधवलास्थिकपालं वपुरिव रौद्रं श्मशानमथ दृष्टम् || २२ ||
160930
160931 अथ मया श्मशानं रौद्रं संहाररुद्रसंबन्धिवपुरिव भीषणं दृष्टम् |
160932 विशेषणान्युभयत्र तुल्यतया योज्यानि || २२ ||
160933
160934 पार्श्वच्छायां हरन्तो विचलितविदलत्क्लिन्नकङ्कालगन्धा स्तन्वन्तो
160935 भूरिभस्मप्रविततमिहिकामाधुनानाः शवानाम् |
160936 केशानाकाशकोशे शशिगलितशराकारिणः शांकराणामस्थीनां
160937 टांकृतेनारचितखरगिरस्तत्र वातावहन्ति || २३ ||
160938
160939 तत्र तस्मिन् श्मशाने वाता वायवो वहन्ति | कीदृशास्ते | पार्श्वे वनस्य
160940 हरितच्छायां भस्मक्षेपैर्हरन्तो विचलिताः प्रसृता विदलत् क्लिन्नकंकालानां

160941 गन्धा यैर्भूरिभस्मभिः प्रविततां मिहिकां नीहारपटलीं तन्वन्तः शवानां
160942 केशान् आधुनाना आकाशलक्षणे कोशे निषङ्गे शशिनः सकाशाद्गलिता ये
160943 शरास्तदाकारिणस्तथा शांकराणां शंकरभूषायोग्यानामस्थीनां
160944 टांकृतेनाभिघातशब्देन आरचिताः खरा रूक्षा गिरः शब्दा यैस्तथाविधा
160945 इत्यर्थः ॥ २३ ॥
160946
160947 ज्वलदनलचितिप्रवाहनिर्यत्पवनहतोष्मविशुष्कपर्णवृक्षा।
160948 ज्वलनपवनभास्करात्मजानां रमणगृहानुकृतिं बिभर्ति सा भूः ॥ २४ ॥
160949
160950 ज्वलन्तः अनला यासु तथाविधाभ्यश्चितिभ्यः प्रवाहेण निर्यता सधूमस्फुलिङ्गेन
160951 पवनेन हता अत एवोष्मणा विशुष्कपर्णा वृक्षा यस्यां तथाविधा सा
160952 श्मशानभूर्ज्वलनस्याग्नेः पवनस्य भास्करात्मजस्य शनैश्चरस्य च
160953 रमणयोग्यं यद्गृहं तदनुकृतिं तत्सदृशलक्षणानि बिभर्ति ॥ २४ ॥
160954
160955 दृष्टं श्मशानं तदनन्तभीमकरङ्ककंकालघनामगन्धि।
160956 माद्यच्छिवावायसकङ्कगृध्रपिशाचवेतालविरावरौद्रम् ॥ २५ ॥
160957
160958 तत्तादृशं श्मशानं दृष्टं यत् अनन्तैर्भीमैः करंकैरर्धदग्धैः
160959 कङ्कालैः शवैर्घनमत्यन्तमामगन्धि दुर्गन्धि ॥ २५ ॥
160960
160961 आनीतनानाशवबन्धुसार्थसंरोदनाह्वादिदिगन्तकुञ्जम्।
160962 खगावकृष्टार्द्रशिरान्त्रतन्त्रीनिबद्धदग्धद्रुमखण्डजालम् ॥ २६ ॥
160963
160964 पुनः कीदृशं तच्छमशानम्। आनीतानां नानाशवानां यो
160965 बन्धुसार्थस्तदीयसंरोदनैरासमन्तात् ह्वादिनो दिगन्ताः कुञ्जाश्च यस्मिन्।
160966 खगैरवकृष्टा या आर्द्रा शिरा आन्त्रतन्त्र्यश्च तामिर्निबद्धं दग्धप्रायं
160967 द्रुमखण्डं लताजालं च यस्मिन् ॥ २६ ॥
160968
160969 क्वचिच्चितिक्षोभकृतप्रकाशं क्वचिन्महाकेशकृताब्दवृन्दम्।
160970 क्वचिच्च रक्ताक्तधरावितानं नक्तं स्तनत्त्वभ्रमिवास्तशैलम् ॥ २७ ॥
160971
160972 चितेः क्षोभः संचलनं तेन ज्वालोद्दीपनात्कृतप्रकाशम्। महाकेशैः
160973 कृतमब्दवृन्दं मेघसमूह इव यत्र। क्वचित्तु अस्तस्त्यक्तः शैलो येन
160974 तथाविधंन् रक्तैः अक्तं धराया वितानमिव स्थितम्। नक्तं स्तनत् गर्जदभ्रमिव
160975 स्थितम् ॥ २७ ॥
160976
160977 इत्यार्षे श्रीवा० वा० दे० मो० नि० उ० अवि० विप० पथिकविरहवृत्तवर्णनं
160978 नामैकोनविंशाधिकशततमः सर्गः ॥ ११९ ॥
160979
160980 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
160981 पथिकवृत्तविरहवर्णनं नामैकोनविंशाधिकशततमः सर्गः ॥ ११९ ॥
160982
160983 विंशाधिकशततमः सर्गः १२०
160984
160985 सहचरा ऊचुः।
160986
160987 एवंप्रायाः कथाः कुर्वत्पश्यैनन्मिथुनं महत्।
160988 पानं प्रवृत्तवत्सारं पातुं पद्मनिभेक्षण ॥ १ ॥
160989
160990 वर्ण्यन्ते वायवो वृक्षा भ्रमरा वनपङ्क्तयः।
160991 देवस्त्रियोऽब्धिवीच्यश्च हेमचूडखगादयः ॥
160992

160993 हे पद्मनिभेक्षण एवं प्रागुक्तप्रायाः कथाः कुर्वदिनत् प्रागुक्तं मिथुनं
160994 स्त्रीपुंसयुग्मं संप्रति सारमुत्तमं सीधुपानं पातुं प्रवृत्तवत् पश्येति
160995 मिथुनकथोपसंहारः | अन्वादेशे नपुंसके एनद्वक्तव्यः इत्येनदादेशः || १ ||
160996
160997 कदलीकन्दलीस्वच्छगुच्छाच्छोटनपण्डिताः |
160998 विविधा वायवो वान्ति पुष्पकेसरमण्डिताः || २ ||
160999
161000 वायून्कश्चिद्वर्णयति - कदलीत्यादिना | गुच्छानामाच्छोटने विकासने पण्डिताः ||
161001 २ ||
161002
161003 वान्ति वाता वनोद्वान्तविविधामोदमांसलाः |
161004 पीतघर्मकणाः क्रान्तललनालकलालकाः || ३ ||
161005
161006 क्रान्तानां विक्षिप्तानां ललनालकानां लालका विलासकाः || ३ ||
161007
161008 कुलाचलगुहागेहवलनोद्यन्मृगाधिपाः |
161009 सरन्त्यसुरसंरम्भैर्लवणार्णवमारुताः || ४ ||
161010
161011 कुलाचलानां गुहागेहेषु वलने प्रविश्य भ्रमणे उद्यन्त उद्‌युक्ता मृगाधिपाः
161012 सिंहा इव | असुराणामिव संरम्भैर्मेरुशिखराक्रमणोद्योगैः सरन्ति || ४ ||
161013
161014 तमालतालतरललीलान्दोलनलालिताः |
161015 अनिलाजलकल्लोलोत्क्रान्तकोमलपल्लवाः || ५ ||
161016
161017 तमालेषु तालेषु च तरलशिशुवत् लीलान्दोलनैर्दोलिताः | जलकल्लोलेभ्य उत्प्लुत्य क्रान्ता
161018 वृक्षाग्रकोमलपल्लवा यैः || ५ ||
161019
161020 ललन्नवलतावान्तपुष्पधूलिविद्‌नूसराः |
161021 सरन्ति मरुतो मदमुद्यानेषु नृपा इव || ६ ||
161022
161023 ललन्त्यो या नवा लतास्ताभिर्वान्ता याः पुष्पधूलयस्ताभिर्विधसराः || ६ ||
161024
161025 मधुरं वंशविश्रान्तो गातुमेष वनानिलः |
161026 प्रवृत्तः पाण्डुनगरनारीभिरिव शिक्षितः || ७ ||
161027
161028 वंशेषु कीचकवनेषु विश्रान्तः | पाण्डुनगरे हस्तिनापुरे नार्यो गानविद्याकुशला इति
161029 प्रसिद्धिः || ७ ||
161030
161031 निकारः कर्णिकारेण पवनस्य यदा कृतः |
161032 तदा परिहरन्त्येनं भ्रमरा अपि दूरतः || ८ ||
161033
161034 भ्रमरैः कर्णिकारवृक्षस्य दूरतस्त्यागे हेतुमुत्प्रेक्षते - निकार इति | निकारो
161035 गन्धपरागाद्यनर्पणेन तिरस्कारः || ८ ||
161036
161037 न ददाति फलं किंचिदर्थिने न च पल्लवम् |
161038 तालः स्तम्भतयाऽऽरम्भंन् ह्यरूपैव विनाऽऽकृतिः || ९ ||
161039
161040 अयं तालः स्तम्भप्रायतया दुरारोहत्वादर्थिने फलं न ददाति पल्लवं च न ददाति
161041 | हि यस्मात्कारणादुन्नताप्याकृतिरस्य अर्थ्यभिलाषपूरणारम्भं विना अरूपैव न
161042 शोभत इत्यर्थः || ९ ||
161043
161044 राग एव हि शोभायै निर्गुणानां जडात्मनाम् |

161045 राजेव राजते राजन्रागेणैवैष किंशुकः ॥ १० ॥
161046
161047 औदार्यादिगुणशून्यानां जडात्मनां मूर्खाणां वस्त्रालंकाराद्याडम्बरेण
161048 रागः शरीररञ्जनमेव शोभायै नान्यदित्यर्थः । किंशुकः पुष्पितः पलाशः ॥ १०
161049 । ।
161050
161051 आगच्छ कर्णिकारोऽयं विकारस्यैव भाजनम् ।
161052 निरामोदः किमेतेन निर्गुणेनेव जन्तुना ॥ ११ ॥
161053
161054 विकारस्य वृथाऽयमनुसृत इति विषादलक्षणस्य चित्तविकारस्यैव ॥ ११ ॥
161055
161056 विलोलमञ्जरीजालतडित्सङ्गस्थितोऽसितः ।
161057 चातकस्याम्बुदभ्रान्तिं तमालः कुरुते मुधा ॥ १२ ॥
161058
161059 मञ्जरीजाललक्षणतडित्सङ्गेन स्थितः असितश्च तमालश्चातकस्याम्बुदभ्रान्तिं
161060 कुरुते । मुधा वृथा ॥ १२ ॥
161061
161062 पत्राला घनसंघाताः सच्छायावृतभूभृतः ।
161063 गुणानां महतां योग्या वंशा वंशा इवोन्नताः ॥ १३ ॥
161064
161065 पत्रैः पर्णैर्वाहनैश्च अलाः भूषिताः । घनो दुर्भेद्यः संघातो येषाम् ।
161066 सतीभिश्छायाभिर्वृता भूभृतो गिरयो यैः । सतां छायार्थं वृताः स्वीकृता
161067 भूभृतो राजानो यैः । गुणानां धनुर्भवे मौर्वीणां सन्मानादीनां च ॥ १३ ॥
161068
161069 हेमसान्वासनस्थोऽग्र्यो वातव्याधितटोऽम्बुदः ।
161070 तडित्पीताम्बरं धत्ते क्षुब्धं [क्षुब्धमित्यत्र आकाशपक्षे तडिद्भिरेव
161071 क्षुब्धम् । वस्त्रपक्षे संचलितं स्फुरत् ।] हरिरिवोद्भवः [उद्भव
161072 ऊर्ध्वभवः पक्षे उत्कृष्टैश्वर्यः ।] ॥ १४ ॥
161073
161074 हेममयसानुलक्षणे आसने तिष्ठत्यम्बुदः हेमसानुसदृशे हरिः । अत एवाग्रे
161075 भवोऽग्र्यः । वातलक्षणो व्याधिस्तटेषु यस्याम्बुदस्य वातव्याधिरुद्भवस्तटे
161076 सन्निधौ यस्य हरेः । तडिद्भिः पीतमम्बरमाकाशं धत्तेऽम्बुदः
161077 तडिद्वत्पीतमम्बरं वस्त्रं धत्ते हरिः ॥ १४ ॥
161078
161079 प्रवेशनिर्गमव्यग्रतरत्खगशिलीमुखः ।
161080 प्रफुल्लकिंशुको भाति वीरो रक्त इवासृजा ॥ १५ ॥
161081
161082 प्रवेशनिर्गमयोर्व्यग्राः सरन्तः खगा इव शिलीमुखा बाणाः अलयश्च यस्य । वीरो
161083 योधः असृजा रक्तप्रवाहेण रक्तो रञ्जित इव ॥ १५ ॥
161084
161085 मन्दारमञ्जरीपुञ्जपिञ्जराम्भोदमन्दिरे ।
161086 महेन्द्रमस्तके मत्ताः सुप्ता गन्धर्वकामिनः ॥ १६ ॥
161087
161088 महेन्द्रस्य गिरेर्मस्तके शिखरे । पानमत्ताः सन्तः सुप्ताः ॥ १६ ॥
161089
161090 कल्पद्रुमवनच्छाया विश्रान्ता विततान्विताः ।
161091 पश्य पार्थिव गायन्ति सिद्धविद्याधराध्वगाः ॥ १७ ॥
161092
161093 विशिष्टैस्ततैर्वीणादिवाद्यैरन्विताः ॥ १७ ॥
161094
161095 पश्य कल्पद्रुमस्यास्य पल्लवे पल्लवे वने ।
161096 विश्रान्ताः सुरसुन्दर्यो गायन्ति च हसन्ति च ॥ १८ ॥

161097
161098 मन्दिरं मन्दपालस्य मन्दरे मृदुमन्दिरे ।
161099 मुनेरिदमुदारस्य भार्या सा यस्य पक्षिणी ॥ १९ ॥
161100
161101 मन्दपालस्य मुनेर्महाभारतादौ प्रसिद्धस्य सा प्रसिद्धा पक्षिणी जरिताख्या
161102 गृध्री ॥ १९ ॥
161103
161104 अन्योन्यामतसिंहेभनकुलोरगकेलिकाम् ।
161105 पश्य मुन्याश्रमश्रेणिं सर्वर्तुकुसुमद्रुमाम् ॥ २० ॥
161106
161107 अन्योन्यममतानां सिंहेभादीनां जातिवैरपरित्यागेन प्रीतिकेलिका यस्यां
161108 तथाविधां मुन्याश्रमश्रेणिम् ॥ २० ॥
161109
161110 विद्रुमद्रुममिश्राणाम्भोधितटवीरुधाम् ।
161111 बिम्बितार्काः कचन्त्येते पल्लवेषूदबिन्दवः ॥ २१ ॥
161112
161113 विद्रुमद्रुमैर्मिश्राणां संवलितानामम्भोधितटस्थानां वीरुधां लतानां
161114 पल्लवेषु बिम्बितः अर्को येषु तथाविधा एते उदबिन्दवः उदकबिन्दवः कचन्ति ।
161115 मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च इत्युदकस्योदादेशः ॥ २१ ॥
161116
161117 वीचयो रत्नमाणिक्यपदेष्वावर्तवृत्तिभिः ।
161118 विलसन्ति विलासिन्यो वक्षःस्विव विलासिनाम् ॥ २२ ॥
161119
161120 रत्नमाणिक्यानां पदेष्वाकरस्थानेषु वीचय आवर्तवृत्तिभिर्मुहुर्मुहुः
161121 परिवर्तनैर्विलसन्ति क्रीडन्ति । विलासिन्यस्तरुण्यो विलासिनां स्वकान्तानां वक्षःस्विव ॥
161122 २२ ॥
161123
161124 नागलोकेन्द्रलोकस्त्रीगमनागमनोद्भवः ।
161125 दिव्यो भूषणझांकारः श्रूयते नभसः शृणु ॥ २३ ॥
161126
161127 श्रवणोपान्तविभ्रष्टमदमत्तालिनीस्वरैः ।
161128 ऐरावणस्नानभुवो गायन्तीव गुहा गिरेः ॥ २४ ॥
161129
161130 श्रवणोपान्ताद्गण्डस्थलाद्विभ्रष्टैर्मदैर्मत्तानामलिनीनां
161131 स्वरैरैरावणस्यैरावतस्य स्नानभूमेर्गिरिरिमा गुहा गायन्तीव पश्य ॥ २४ ॥
161132
161133 ह्रसतोऽनुदिनं कृष्णपक्षे कृष्णान्तलेखिकाः ।
161134 दृश्यन्ते कृशगात्रस्य वास्तुकावलयोऽम्बुधेः ॥ २५ ॥
161135
161136 कृष्णपक्षे चन्द्रमनु ह्रसतः अम्बुधेः कृष्णान्तरेखारूपा वास्तुके
161137 निवासभूमिभूते वेलातटे पङ्क्तयो दृश्यन्ते ॥ २५ ॥
161138
161139 आमोदगन्धश्वसना सच्छाया शीतलाङ्गिका ।
161140 एकान्तदर्शिताकारा नानाकुसुमपूरिता ॥ २६ ॥
161141
161142 वनान्येव कश्चित्स्त्रीरूपेण वर्णयति - आमोदेति द्वाभ्याम् । विशेषणानि सर्वाणि
161143 श्लेषादिनार्थद्वयपराण्येकीकृत्य योज्यानि । वनामोद एव गन्धयुक्तं श्वसनं
161144 श्वासो यस्याः ॥ २६ ॥
161145
161146 वनविन्यासवसना निर्झरामलहासिनी ।
161147 आस्तीर्णपुष्पास्तरणा धन्या वनविलासिनी ॥ २७ ॥
161148

वनलक्षणा विलासिनी स्त्री ॥ २७ ॥

रमन्ते नन्दनोद्याने न तथोदारबुद्धयः ।
यथोपशान्तशब्दासु शुद्धासु वनभूमिषु ॥ २८ ॥

उदारबुद्धयो देवादयः ॥ २८ ॥

सुविरक्तं मुनेश्चेतो रक्तं च विषयार्थिनः ।
रमयन्ति समं रम्या विजना वनभूमयः ॥ २९ ॥

मुनेर्विरक्तं चेतो विषयार्थिनः कामिनो रक्तं च चेतः समं तुल्यतया रमयन्ति ॥ २९
। ।

सलिलाधौतवप्राणामम्भोधितटभूभृताम् ।
नूपुरैरिव रत्नौघैः पादा भान्ति ध्वनन्ति च ॥ ३० ॥

पादाः प्रत्यन्तपर्वतास्तल्लक्षणाश्चरणाश्च ॥ ३० ॥

पुंनागनगविश्रान्ताः कान्तकाञ्चनकान्तयः ।
हेमचूडाः खगा भान्ति दिवि देवगणा इव ॥ ३१ ॥

भ्रमराम्भोदधूमाढ्याः फुल्लचम्पककाननाः ।
कम्पन्ते पश्य वातेन ज्वलिता इव पर्वताः ॥ ३२ ॥

भ्रमरैरम्भोदैश्च धूमाढ्याः । यतः कम्पन्ते अतो ज्वलिता इव ॥ ३२ ॥

कुर्वन्तं करवीराग्रलतान्दोलावदोलकम् ।
कोकिलं कोकिलालिङ्ग्य लोलालापयति प्रियम् ॥ ३३ ॥

करवीरस्य अग्रलता ऊर्ध्वशाखा तल्लक्षणदोलाया अवदोलकमान्दोलनं कुर्वन्तं
कोकिलं तत्प्रिया कोकिला आलिङ्ग्य मधुरगीतमालापयति ॥ ३३ ॥

लसत्कलकलारावमेता लावणसैन्धवीः ।
पूर्णास्तटभुवो भूपैः पश्योपायनपाणिभिः ॥ ३४ ॥

हे राजन् एता लवणसिन्धोरिमा लावणसैन्धवीः हृद्भगसिन्ध्वन्ते पूर्वपदस्य च
इत्युभयपदवृद्धिः । लसत्कलकलं यथा स्यात्तथा उपायनपाणिभिर्भूपैः
पूर्णास्तटभुवः पश्य ॥ ३४ ॥

आ पूर्वादाऽपरस्माल्लवणजलनिधेरोत्तराद्दक्षिणाद्वा देवोदग्राजिशिष्टा
इहनरपतयः पादपीठीक्रियन्तां ।
दीयन्तां मण्डलानां दिशि दिशि च यथाशास्त्रमस्त्राण्यवन्या रक्षायै
क्षान्तिपूर्वं चिरमतुलबलं शान्तया शासनानि ॥ ३५ ॥

हे देन आ पूर्वाल्लवणजलनिधेः आऽपरस्मात्पश्चिमाल्लवणजलनिधेश्च तथा आ
उत्तराद्दक्षिणाद्वा लवणजलनिधेः । मर्यादायामाङः । इहास्मिन् जम्बूद्वीपे उदग्रे
आजौ शिष्टा अवशिष्टा ये यावन्तो नरपतयस्ते सर्वे पादपीठीक्रियन्ताम् । शिरसि
पादार्पणेनानुगृह्यन्तामिति यावत् । किं च तत्तन्मण्डलानामवन्या दिशि दिशि चिरं
रक्षायै यथाशास्त्रं नीतिशास्त्रोक्तप्रकारेण क्षान्तिपूर्वं समाधानपुरःसरं
शान्तया धिया शासनानि दीयन्ताम् । तदन्वस्त्राणि दीयन्तां तदनु च बलं स्वसैन्यं
दीयताम् ॥ ३५ ॥

161201 इत्यार्षे श्रीवासि० वा० दे० मो० निर्वा० उ० अविद्यो० विप० दिगन्तरवृत्तिवाय्वादिवर्णनंन्
161202 नाम विंशत्यधिकशततमः सर्गः ॥ १२० ॥
161203
161204 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
161205 दिगन्तरवृत्तिवाय्वादिवर्णनं नाम विंशत्यधिकशततमः सर्गः ॥ १२० ॥
161206
161207 एकविंशत्यधिकशततमः सर्गः १२१
161208
161209 श्रीवसिष्ठ उवाच ।
161210
161211 अथ तेष्वर्णवतटेष्वेते भूमौ विपश्चितः ।
161212 उपविश्यैतदखिलं चक्रू राज्यप्रयोजनम् ॥ १ ॥
161213
161214 अत्र मण्डलमर्यादां संस्थाप्याग्निमुपेयुषाम् ।
161215 वरादग्नेर्दिगन्तानां दर्शनोद्योग ईर्यते ॥
161216
161217 अथ एते प्रागुक्ता विपश्चितेस्तेष्वर्णवतटेषु उपविश्य एतत्प्राङ्गन्त्रिभिर्निवेदितं
161218 मण्डलमर्यादास्थापनरूपं प्रयोजनं चक्रुः ॥ १ ॥
161219
161220 तदा तत्रैव ते वासभूमिं कृत्वा यथाक्रमम् ।
161221 तस्थुर्मण्डलमर्यादां स्थापयामासुरक्षताम् ॥ २ ॥
161222
161223 स्वयं तत्र तस्थुर्मण्डलमर्यादां च स्थापयामासुः ॥ २ ॥
161224
161225 अथ वर्णयितुं श्रीमांस्तत्प्रतापमिवागमत् ।
161226 संप्रविश्य समुद्रान्तरन्यलोकान्तरं रविः ॥ ३ ॥
161227
161228 तेषां विपश्चितां प्रतापम् । लोकान्तरं ज्योतिषमते पाताललोकम् । पौराणिकमते
161229 मेरूत्तरभागस्थं वर्षान्तरम् । समुद्रान्तः प्रविश्येति
161230 समुद्रतीरस्थजनदृष्ट्योक्तिः ॥ ३ ॥
161231
161232 आययौ यामिनीश्यामा मेघलेखेव तानवम् ।
161233 संपादिताहर्व्यापारास्तस्थुः स्वशयनेषु ते ॥ ४ ॥
161234
161235 तानवं विस्तारम् । ते विपश्चितः ॥ ४ ॥
161236
161237 आसमुद्रं नदीवाहा इव दूरादुपागताः ।
161238 इदं संपादयामासुर्विस्मयाकुलचेतसः ॥ ५ ॥
161239
161240 इदं वक्ष्यमाणं मनसि संपादयामासुश्चिन्तयामासुः ॥ ५ ॥
161241
161242 अहो नु दूरमध्वानं प्राप्ता वयमयत्नतः ।
161243 प्रभावोद्देवदेवस्य वह्नेर्दिव्यैः स्ववाहनैः ॥ ६ ॥
161244
161245 कियती स्यात्प्रविस्तीर्णा दृश्यश्रीरियमातता ।
161246 इतः समुद्रस्तदनु द्वीपभूरम्बुधिः प्रभुः ॥ ७ ॥
161247
161248 तदेवाह - कियती स्यादित्यादिना । इतः अस्माज्जम्बूद्वीपात् परतो लवणसमुद्रस्तदनु
161249 प्लक्षद्वीपभूस्तत इक्षुरसाम्बुधिः प्रभुर्महान् लवणसमुद्राद्द्विगुणायाम इति
161250 यावत् ॥ ७ ॥
161251
161252 इतो द्वीपं ततोऽम्भोधिः किमन्ते स्यात्ततोऽपि च ।

161253 कियती कीदृशी वा स्यान्मायेयं चेत्यरूपिणी ॥ ८ ॥
161254
161255 इतः इक्षुसमुद्रात्परतः कुशद्वीपं ततः परतः सुरोदोऽम्भोधिः । एवं क्रमेण
161256 सप्तद्वीपसमुद्राणामन्ते किं स्यात् । ततोऽपि च परतः किं स्यात् । इयं चेत्यरूपिणी माया
161257 कियती स्याद्वस्तुवैचित्र्येण कीदृशी वा स्यात् ॥ ८ ॥
161258
161259 तत्प्रार्थयामहे देवं हुताशं तद्वरादिमाः ।
161260 प्रेक्षामहे दिशः सर्वा आपर्यन्तमखेदिनः ॥ ९ ॥
161261
161262 तत्सर्व द्रष्टुं हुताशं देवं प्रार्थयामहे प्रार्थयेमहि ॥ ९ ॥
161263
161264 इति संचिन्त्य ते सर्वे यथास्थानमवस्थिताः ।
161265 सममेवाह्वयामासुर्भगवन्तं हुताशनम् ॥ १० ॥
161266
161267 यथास्थानं चतुःसागरकूलेष्ववस्थितास्ते समं युगपदेव ॥ १० ॥
161268
161269 बभूव भगवानेषामथ दृश्यो हुताशनः ।
161270 आकारवान्वरं पुत्राः प्रगृह्णीतेत्युवाच ह ॥ ११ ॥
161271
161272 विपश्चित ऊचुः ।
161273
161274 पञ्चभूतात्मकस्यास्य दृश्यस्यान्तं सुरेश्वर ।
161275 देहेन मन्त्रदेहेन तदन्ते मनसापि च ॥ १२ ॥
161276
161277 यावदनेन देहेन गन्तुं शक्यं तावदनेन देहेन । एतदगम्ये
161278 वैदिकमन्त्रप्रभावसंस्कृतेनानेनैव देहेन । तदगम्ये मनसा ॥ १२ ॥
161279
161280 यावत्संवेदनं यावत्संभवं यावदात्मकम् ।
161281 पश्येम इति नो देव दीयतामुत्तमो वरः ॥ १३ ॥
161282
161283 यावत्संवेदनमिति प्रत्यक्षयोग्यसर्वार्थोक्तिर्यावत्संभवमित्यनुमानगम्य##-
161284 द्वितीयेन यावत्सूक्ष्मोक्तिः तृतीयेन यावत्कारणप्रपञ्चोक्तिः । इति नः अस्मभ्यं वरो
161285 दीयताम् ॥ १३ ॥
161286
161287 आसिद्धगम्यमध्वानं पश्येम वपुषा वयम् ।
161288 तदन्ते मनसैवाथ दृश्यं पश्येम भो प्रभो ॥ १४ ॥
161289
161290 सिद्धा योगिनस्तेषां योगप्रभावगम्यमभिव्याप्येत्यासिद्धगम्यम् । वपुषा अनेनैव
161291 देहेन । अथ तदन्ते तदगम्यमिति यावत् ॥ १४ ॥
161292
161293 आसिद्धगम्यमध्वानं मृत्युरस्माकमस्तु मा ।
161294 अध्वन्यसंभवद्देहे मन एव प्रयातु नः ॥ १५ ॥
161295
161296 अध्वानं गच्छतामिति शेषः । असंभवद्देहे अध्वनि दक्षिणोत्तरायणादिमार्गरूपे
161297 मृत्वैव गन्तुं शक्ये अध्वनि ॥ १५ ॥
161298
161299 श्रीवसिष्ठ उवाच ।
161300
161301 अथैवमस्त्विति प्रोच्य पावकः सहसागमत् ।
161302 क्षणादौर्वतया यातुं समुद्र इव सत्वरः ॥ १६ ॥
161303
161304 अथ तद्वरप्रार्थनानन्तरम् । और्वतया वडवाग्निभावेन समुद्रे यातुं सत्वर इव ॥

161305 १६ ॥
161306
161307 अग्निर्जगामाथ समाजगाम निशा विलम्ब्याथ जगाम सापि ।
161308 समाजगामापि रविर्जगाम तेषां च धीरार्णवलङ्घनेहा ॥ १७ ॥
161309
161310 एवं वरं दत्त्वा अग्निर्जगाम । अथ निशा समाजगाम । सा निशापि यामचतुष्टयं
161311 विलम्ब्य जगाम । अथ रविः समाजगाम । तेषां विपश्चितां धीरार्णवलङ्घनेहा च
161312 समाजगाम ॥ १७ ॥
161313
161314 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मी० दे० मो० नि० उ० अवि० विप० विपश्चिन्निर्णयो
161315 नामैकविंशत्यधिकशततमः सर्गः ॥ १२१ ॥
161316
161317 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
161318 विपश्चिन्निर्णयो नामैकविंशत्यधिकशततमः सर्गः ॥ १२१ ॥
161319
161320 द्वाविंशत्यधिकशततमः सर्गः १२२
161321
161322 श्रीवसिष्ठ उवाच ।
161323
161324 ततः प्रभाते प्रसभं पृथिव्याः कृत्वा यथाशास्त्रमलं व्यवस्थाम् ।
161325 आविष्टदेहा इव ते रसेन निषेध्यमाना इव मन्त्रिमुख्यैः ॥ १ ॥
161326
161327 पदैरब्धितरङ्गेषु गच्छन्तोऽत्र विपश्चितः ।
161328 विदार्यावर्तमकरान्निर्याताः साधुवर्णिताः ॥
161329
161330 यथाशास्त्रं नीतिशास्त्रमनतिक्रम्य
161331 राज्यविभागपरिपालनोपायोपदेशमर्यादास्थापनादिव्यवस्थां कृत्वा । रसेन
161332 दिगन्तदर्शनोत्कण्ठातिशयेन ग्रहाद्याविष्टदेहा इव
161333 साक्षान्निषेद्धुमशक्नुवद्भिर्मन्त्रिमुख्यैरिङ्गितैर्निषेध्यमानत्वादिवकारः ॥ १ ॥
161334
161335 निवार्य सर्वं परिवारमात्रमाक्रन्दमानं वदनै रुदद्भिः ।
161336 निरस्य चास्नेहतयाभिमानमात्सर्यलोभाभिभवैषणादि ॥ २ ॥
161337
161338 परिवारमात्रं कृत्स्नं परिजनं निवार्य । अभिभवः शत्रुपराभवस्तदेषणा ।
161339 आदिपदाद्राज्यस्त्रीपुत्राद्येषणापरिग्रहः । अथवा अभिभवः
161340 शत्रुभिरुपहसद्भिस्तिरस्कारः एषणाश्च प्रागुक्ताः । आदिपदाद्राज्यधनादींश्च
161341 निरस्य हित्वा ॥ २ ॥
161342
161343 दिगन्तमालोक्य समुद्रपारे क्षणात्समायाम इति ब्रुवन्तः ।
161344 स्वमन्त्रशक्त्योत्तमतां गतैस्तैरब्धिः [अद्भिः इति मुद्रितपाठश्चिन्त्यः ।
161345 ] पदैरेव तदा प्रविष्टः ॥ ३ ॥
161346
161347 वयं समुद्रपारे दिगन्तमालोक्य क्षणाच्छीघ्रमेव समायाम इति
161348 परिजनसमाधानाय ब्रुवन्तः सन्तो जग्मुरित्यध्याहारः ।
161349 अग्निप्रसादहेतुमन्त्रशक्त्यैव भूमिजलादिभूतजयेनोत्तमतां सिद्धतां
161350 गतैस्तैस्तदा अब्धिः पदैरेव प्रविष्टो न तु पोताद्युपायेनेत्यर्थः ॥ ३ ॥
161351
161352 विपश्चितस्ते दिशि दिश्यनल्पैर्भृत्यैः समुद्रं प्रविशद्भिरेव ।
161353 भृत्यैश्च कैश्चित्त्वनुगम्यमाना ययुर्यथा वारिणि पद्भिरेव ॥ ४ ॥
161354
161355 स्नेहातिशयात्समुद्रं प्रविशद्भिः कैश्चिद्भृत्यैरनुगम्यमानाः पद्भिरेव
161356 ययुः ॥ ४ ॥

161357
161358 तरङ्गजालेषु पदानि कृत्वा पृष्ठे स्थलस्येव जलस्य चान्तः |
161359 चत्वार एकैकतयैव युक्ता भृशं वियुक्ता निजसेनया ते || ५ ||
161360
161361 कथं ययुस्तदाह - तरङ्गेति | स्थलस्य भूमेः पृष्ठ इव तरङ्गजालेषु
161362 पदानि कृत्वा विन्यस्य | युक्ता उद्युक्ताः || ५ ||
161363
161364 पदक्रमेणैव महार्णवान्तस्तावत्प्रविष्टा अवलोकितास्ते |
161365 तटस्थितैर्यावददृश्यभावं शरन्नभोमेघलवा इवापुः || ६ ||
161366
161367 तटस्थितैर्भृत्यजनैस्ते तावत्कालमवलोकिता यावच्छरन्नभोमेघलवा इव
161368 अदृश्यभावमापुः || ६ ||
161369
161370 तमध्वानमथोहुस्ते जलधौ पादचारिणः |
161371 वितताध्यवसायेन बद्धकक्षाहरा इव || ७ ||
161372
161373 विततेनाध्यवसायेन दृढनिश्चयेन | हस्तिपकस्थानीयेन प्रेर्यमाणास्ते विपश्चितो
161374 बद्धां कक्षां हरन्ति तथाविधा गजा इव तं जलाध्वानं ऊहुः अतिवाहयामासुः ||
161375 ७ ||
161376
161377 उन्नतावनतामद्रिसमारोहावरोहणैः |
161378 श्रियं वारितरङ्गाणां हरन्तो हरिमूर्तयः || ८ ||
161379
161380 अद्रिसमैः आरोहावरोहणैर्निम्नोन्नतीभावैः उन्नतावनतां वारितरङ्गाणां
161381 श्रियं शोभांन् स्वयमपि तत्स्वीकाराद्धरन्तः | अत एव हरेर्मूर्तिरिव मूर्तिर्येषाम् |
161382 हरिमूर्तिरपि हि मन्थाद्रेर्मन्थनकाले वारितरङ्गाणां
161383 समारोहावरोहणैरुन्नतावनतां श्रियं लक्ष्मीं जहारेति प्रसिद्धमिति भावः || ८ ||
161384
161385 आवर्तेषु तृणानीव भ्रान्ता विगतसंभ्रमम् |
161386 चिरं चञ्चलमत्ताभ्रचन्द्रमण्डलशोभिषु || ९ ||
161387
161388 मत्ताभ्रप्रविष्टेन चन्द्रमण्डलेनेव स्वप्रवेशाच्छोभमानेष्वावर्तेषु तृणानीव
161389 चिरं भ्रान्ताः || ९ ||
161390
161391 मन्त्रविद्याबलौजोभिर्दुर्जयाः शस्त्रपाणयः |
161392 क्वचित्प्रमत्तैर्मकरैर्निगीर्णोद्गीर्णदिहकाः || १० ||
161393
161394 पूर्व निगीर्णाः पश्चाज्जरणाशक्त्या उद्गीर्णा देहा येषाम् || १० ||
161395
161396 जलकल्लोलविश्रान्तवातोत्सारितमूर्तयः |
161397 नीतानीताः क्षणेनैव योजनानां शतं शतम् || ११ ||
161398
161399 जलकल्लोलमातङ्गतुङ्गिताङ्गतया तया |
161400 दधाना निजराज्येभपृष्ठरोहस्थितिश्रियम् || १२ ||
161401
161402 जलकल्लोललक्षणैर्मातंगैस्तुंगिताङ्गतया आरोहिताङ्गतया अपूर्वचमत्कारिण्या ||
161403 १२ ||
161404
161405 विस्तीर्णोर्मिघटापट्टपाटपट्टनपाटवैः |
161406 दर्शयन्तो जलाम्भोदनिष्क्रान्तिं मारुता इव || १३ ||
161407
161408 विस्तीर्णानामूर्मिघटालक्षणानां शिलापट्टानां यः पाटनं पाटो विदारणं

161409 यच्च पट्टनमधोमुखीकरणं तत्र पाटवैः कौशलैः
161410 जललक्षणादम्भोदान्निष्क्रान्तिं मारुता मरुद्दीपिता विद्युत इव दर्शयन्तः ॥ १३ ॥
161411
161412 तरत्तरलमातङ्गतरङ्गौघविघट्टिताः ।
161413 अत्यजन्तो निजं धैर्यं वेलावरतटा इव ॥ १४ ॥
161414
161415 तरलमातङ्गैरिव तरङ्गौघैर्विघट्टिता अपि वेलासु प्रसिद्धा वरतटाः शिलावप्रा
161416 इव निजं धैर्य अत्यजन्तः ॥ १४ ॥
161417
161418 महोर्मिमुक्तामाणिक्यमण्डलप्रतिबिम्बिताः ।
161419 एकाकिनोऽपि परितः पौरुषेयवृता इव ॥ १५ ॥
161420
161421 महोर्मिषु मुक्तामाणिक्यमण्डलेषु च प्रतिबिम्बिताः सन्तः पुरुषाणां समूहः
161422 पौरुषेयं तेन परिवृता इव भासमानाः ॥ १५ ॥
161423
161424 पाण्डुडिण्डीरपिण्डेषु कुर्वन्तो लाघवात्पदम् ।
161425 श्वेतपद्मपरिक्रान्तराजहंसश्रियं दधुः ॥ १६ ॥
161426
161427 श्वेतपद्मेषु परिक्रान्तस्यारूढस्य राजहंसस्य श्रियम् ॥ १६ ॥
161428
161429 घननिर्घातनिर्घोषभीषणार्णवघुंघुमात् ।
161430 न भीता भूभृतस्तत्र वेलावलनजृम्भितात् ॥ १७ ॥
161431
161432 निर्घातः स्फूर्जथुः । भूभृत इति श्लिष्टम् । यतो भूभृतस्ततो न भीताः ॥ १७ ॥
161433
161434 अभ्रंलिहजलाद्रीन्द्रपातोत्पातविघट्टिताः ।
161435 क्षणं पातालमाजग्मुः क्षणमर्कास्पदं ययुः ॥ १८ ॥
161436
161437 अभ्रंलिहेभ्यो जलमयेभ्योऽद्रीन्द्रेभ्यः पातैरुत्पातैश्च विघट्टिताः सन्तः ॥ १८ ॥
161438
161439 अशङ्कितोत्पतद्वारिपूरपातपटावृताः ।
161440 उत्पातपातनिपतद्वितानकवृता इव ॥ १९ ॥
161441
161442 उत्पातस्य पाते प्राप्तौ निपतन्तो ये मेघवितानकास्तैर्वृता इव ॥ १९ ॥
161443
161444 प्रक्रान्तास्तेम्बुराशौ सहचरमकराः शूरनक्रैः
161445 कुलीरैर्व्याप्तावर्ताविवृत्ताः सलिलतरुलतासीकरैरन्तरालैः ।
161446 कुर्वंतः कान्तियुक्तं वपुरिव
161447 कुसुमैर्भ्रांतमाणिक्यमुक्तैर्व्यक्ताव्यक्तांशुजालैः
161448 प्रतिपदमितरैरभ्ररूपैरदभ्रैः ॥ २० ॥
161449
161450 अदभ्रैर्बहलैरभ्ररूपैर्व्यक्ताव्यक्तांशुजालैर्भ्रान्तैर्माणिक्यमुक्ता##-
161451 कुसुमैरिव वपुः कान्तियुक्तं भूषितं कुर्वन्तः तथा शूरैर्नक्रैः कुलीरैः
161452 कर्कटकैश्च व्याप्तेष्वावर्तेषु आसमन्ताद्विवृत्ताः सहचरा मकरा येषां
161453 तथाविधास्ते विपश्चितः अम्बुराशौ समुद्रे प्रक्रान्ताः चलिता इत्यर्थः ॥ २० ॥
161454
161455 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मी० दे० मो० नि० उ० अवि० वि० बलपरिभ्रंशो
161456 नाम द्वाविंशाधिकशततमः सर्गः ॥ १२२ ॥
161457
161458 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
161459 बलपरिभ्रंशो नाम द्वाविंशाधिकशततमः सर्गः ॥ १२२ ॥
161460

त्रयोविंशाधिकशततमः सर्गः १२३

श्रीवसिष्ठ उवाच।

इत्येते दृश्यरूपाया अविद्याया विचारणे।
प्रवृत्ताः पादचारेण समुद्रद्वीपगामिनः॥ १॥

इह द्वीपसमुद्रेषु प्रयातानां विपश्चिताम्।
पाश्चात्यादिक्रमात्प्राप्ता वर्ण्यन्ते विविधा दशाः॥

इति अनया रीत्या एते विपश्चितः पादचारेण दृश्यरूपाया अविद्याया अन्तपर्यन्तं
विचारणे प्रवृत्ताः॥ १॥

अब्धेर्द्वीपं पुनर्द्वीपादब्धिं द्वीपं गिरिं वनम्।
लाघवाल्लङ्घयामासुश्छेदभेदविवर्जिताः॥ २॥

लाघवाच्छैघ्र्यात्॥ २॥

पीतो विपश्चित्पाश्चात्यो मीनेनामरमानिना।
विष्णुमीनकुलोत्थेन वितस्तावाहनौजसा॥ ३॥

तत्र पाश्चात्यः पश्चिमदिगन्तदर्शनाय प्रवृत्तो
विपश्चिदमरोऽहमित्यभिमानवता मीनेन पीतो निगीर्णः। वितस्ता नदी सा
ह्यत्यन्तशीघ्रगा प्रसिद्धा तद्वाहनस्य नौकादेरोज इव शीघ्रतरमोजो यस्य
तथाविधेन॥ ३॥

क्षीरोदं प्राप्य मत्स्येन तेनोद्गीर्णः सुदुर्जरः।
तेन क्षीरोदमुल्लङ्घ्य गतो दूरं दिगन्तरम्॥

सुदुर्जरो जरयितुमशक्यः॥ ४॥

दक्षिणो यक्षनगरे संप्रेक्ष्येक्षुरसार्णवे।
शिक्षादक्षिणयाक्षिप्य यक्षिण्या कामुकीकृतः॥ ५॥

द्वितीयस्योदन्तमाह - दक्षिण इत्यादिना। इक्षुरसार्णवे स्थिते यक्षनगरे।
वशीकरणविद्याशिक्षाविषये दक्षिणया कुशलया यक्षिण्या प्रेक्ष्य
विद्याबलेनाक्षिप्य स्वकामुकीकृतः॥ ५॥

पूर्वो मकरमाक्रम्य यदा गङ्गां निकृत्तवान्।
गङ्गया स तदानीय कान्यकुब्जे समुज्झितः॥ ६॥

तृतीयस्योदन्तमाह - पूर्व इति। पूर्वदिशि प्रवृत्तो विपश्चित्
गङ्गासहस्रमुखसंभेदान् क्रमेण पश्यन् यदा क्वचिन्मकरं ग्रसितुकाम
बलादाक्रम्य तस्योद्धाराय गङ्गामानीय निकृत्तवान् विदारितवान् तदा स विपश्चित्
गङ्गया परावृत्यानीय कान्यकुब्जे नगरे समुज्झितस्त्यक्तः॥ ६॥

उत्तरस्तूत्तरकुरूनाराध्य प्राप्तवाञ्श्रियम्।
तं तयैनं न बाधन्ते दिगन्ते मृतभीतयः॥ ७॥

चतुर्थस्योदन्तमाह - उत्तरस्त्विति। उत्तरकुरून् लक्षणया उत्तरकुरुषु देव्या सह
क्रीडन्तमीश्वरमाराध्य श्रियमणिमाद्यैश्वर्यं प्राप्तवान्। अत एव तमेनं

161513 विपश्चितं तयैव श्रिया दिगन्ते प्रसृतमपि मृतं मरणं तत्प्रयुक्ता भीतयो न
161514 बाधन्ते। अमरोऽभूदित्यर्थः॥ ७॥
161515
161516 तया मकरमातङ्गनिगीर्णोद्दीर्णमूर्तिमान्।
161517 अतिचक्राम सुबह्वन्द्वीपान्तरकुलाचलान्॥ ८॥
161518
161519 तया श्रियैव तत्प्रभावेणैवेत्यर्थः॥ ८॥
161520
161521 पश्चिमः पृष्ठमारोप्य हेमचूडेन पक्षिणा।
161522 कुशद्वीपे कुशाङ्गश्रीस्तरसा तारतोऽर्णवान्॥ ९॥
161523
161524 पुनः पश्चिमस्योदन्तमाह - पश्चिम इति। हेमचूडेन गरुडेनेति यावत्।
161525 कुशद्वीपे हि कुशस्तम्बे स्थितो गरुडः पूजादिना प्रसादितस्तद्द्वीपमर्णवांश्च
161526 तारयतीति प्रसिद्धिः। स्वर्णमयकुशस्येव अङ्गश्रीर्देहकान्तिर्यस्य॥ ९॥
161527
161528 क्रौञ्चद्वीपाचले पूर्वो निगीर्णो रक्षसा वने।
161529 तद्रक्षः पाटितं तेन हृदयेऽन्त्रविकर्तनैः॥ १०॥
161530
161531 पुनः पूर्वस्योदन्तमाह - क्रौञ्चेति। क्रौञ्चद्वीपे प्रसिद्धे वर्षसीमाचले
161532 रक्षसा निगीर्णः। अथ तद्रक्षस्तेन विपश्चिता अन्त्राणां विकर्तनैः पाटितं विदारितम्
161533 ॥ १०॥
161534
161535 दक्षिणो दक्षशापेन यक्षतामागतः क्षणात्।
161536 शाकद्वीपे शतेनासौ वर्षाणां मोक्षमागतः॥ ११॥
161537
161538 पुनर्दक्षिणस्योदन्तमाह - दक्षिण इति। मोक्षं शापमोक्षम्॥ ११॥
161539
161540 उत्तरस्तरसोत्तीर्णतारावरतरङ्गिणः।
161541 महार्णवसुवर्णोर्व्यां सिद्धशापाच्छिलां गतः॥ १२॥
161542
161543 तरसा जवेनैव उत्तीर्णास्तारा महान्तः अवराः क्षुद्राश्च तरङ्गिण्यश्च
161544 [अत्रैकशेषः।] तरङ्गिणः समुद्राश्च तरङ्गिणो येन। महार्णवस्य
161545 स्वादूदस्य परतः प्रसिद्धायां सुवर्णोर्व्यां शिलां शिलात्वं गतः॥ १२॥
161546
161547 ततो वर्षशतेनासौ प्रसादाज्जातवेदसः।
161548 तेनैवोन्मोचितस्तत्र सिद्धेन रतिमाप्तवान्॥ १३॥
161549
161550 येन सिद्धेन शापो दत्तस्तेनैव शापादुन्मोचितः सन् रतिं मनःप्रीतिमाप्तवान्॥ १३॥
161551
161552 वर्षाण्यष्टावभूद्राजा नालिकेरनिवासिनाम्।
161553 पूर्वः परमधर्मिष्ठः प्राप्तवान्प्राक्स्मृतिं ततः॥ १४॥
161554
161555 पुनः पूर्वस्योदन्तमाह - वर्षाणीति। कान्यकुब्जदेशादुत्तरां दिशं गतस्तत्र
161556 नालिकेरप्रधानदेशनिवासिनां राजाऽभवदित्यर्थः। प्राक्स्मृतिं
161557 पूर्वोदन्तस्मरणम्॥ १४॥
161558
161559 कल्पवृक्षवने मेरोरुत्तरेऽप्सरसा सह।
161560 उवास दशवर्षाणि नालिकेरफलाश्नः॥ १५॥
161561
161562 विहगाश्वासतत्त्वज्ञः शाल्मलिद्वीपशाल्मलौ।
161563 पश्चिमः पक्षिणीनीडे क्रीडया न्यवसत्समाः॥ १६॥
161564

161565 पुनः पश्चिमस्योदन्तमाह - विहगेति। विहगानामाश्वासे वशीकरणविषये
161566 तत्त्वज्ञो रहस्यज्ञः। अत एव प्रागगरुडेन पृष्ठमारोप्यार्णवांस्तारित इत्युक्तम्।
161567 पक्षिण्या नीडे तया सह क्रीडया दशसमाः न्यवसदित्यर्थः॥ १६॥
161568
161569 मन्दराद्रौ मृदुतले मन्दारतरुमन्दिरे।
161570 किन्नरी मन्दरीनाम्नी दिनमेकमसेवत॥ १७॥
161571
161572 तदनन्तरं मन्दराद्रौ गतं तं पश्चिमंविपश्चितं मन्दराद्रौ किन्नरी
161573 दिनमेकमसेवत॥ १७॥
161574
161575 क्षीरोदवेलावनकल्पवृक्षवनावलीनन्दनदेवताभिः।
161576 सार्धं समाः सप्ततिमप्सरोभिर्निनाय कामाकुलितोऽथ पूर्वः॥ १८॥
161577
161578 अथ पूर्वो नालिकेरवनात्क्षीरोदवेलां गतः संस्तत्रत्यकल्पवृक्षवनावलीषु
161579 नन्दनदेवताभिरप्सरोभिः सार्धं कामाकुलितः सन् सप्ततिसमाः निनाय॥ १८॥
161580
161581 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मी० दे० मो० नि० उ० अवि० वि० दिग्विहरणं नाम
161582 त्रयोविंशाधिकशततमः सर्गः॥ १२३॥
161583
161584 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
161585 दिग्विहरणं नाम त्रयोविंशाधिकशततमः सर्गः॥ १२३॥
161586
161587 चतुर्विंशत्यधिकशततमः सर्गः १२४
161588
161589 श्रीराम उवाच।
161590
161591 एकसंविन्मयाः सर्व एवैकवपुषोऽपि ते।
161592 विविधेच्छाः कथं ब्रह्मन्संपन्ना एकदेहिनः॥ १॥
161593
161594 एकस्यापि चतुर्देहैर्व्यवहारः समर्थ्यते।
161595 द्वीपेषु नानाशैलेषु विहारश्च विपश्चिताम्॥
161596
161597 चतुर्णामेकदेहत्वे एकजीवकत्वे च भिन्नेच्छत्वमनुपपन्नमिति रामः शङ्कते -
161598 एकेति। एकसंविदेकं साक्षिचैतन्यं तन्मया एकस्यैव
161599 वपुषश्चतुर्धाभावादेकवपुषश्च ते विपश्चितः। एकः देही जीवो येषाम्। तथा
161600 चजीवभेदं विना युगपदिच्छाभेदोऽनुपपन्न इत्यर्थः॥ १॥
161601
161602 श्रीवसिष्ठ उवाच।
161603
161604 एकसंविद्घनाकाशमप्यनानैव सर्वगम्।
161605 स्वयं नानेव संपन्नं सुप्ते चित्तमिवात्मनि॥ २॥
161606
161607 एकस्यापि जीवस्याविद्यया स्वप्ने नानादेहादिकल्पनदर्शनात्तेषु च
161608 शत्रुमित्रोदासीनभावकल्पने नानेच्छत्वदर्शनाच्च सर्गादौ ब्रह्मणि जीवे जाग्रत्यपि
161609 तादृशकर्मसत्त्वे सर्वसंभव इत्याशयेन वसिष्ठ उत्तरमाह - एकसंविदिति॥
161610 २॥
161611
161612 तस्याच्छत्वात्तथाभूतमात्मैवात्मनि बिम्बति।
161613 तादृशस्य तथाभूतौ मुकुरस्येव निर्मला॥ ३॥
161614
161615 तस्य संविद्घनाकाशस्याच्छत्वाद्दर्पणवदतिस्वच्छत्वात्तथाभूतं
161616 नानात्मतामिवापन्नं आत्मा स्वमेवात्मनि बिम्बति दर्पणोदराकाशे

161617 गिरिनद्यादिसहितं महाकाशमिवेत्यर्थः। तादृशस्य स्वच्छस्यापि तथाभूतौ
161618 नानाजगदाकारभवने मुकुरस्येव निर्मला स्वच्छतैव हेतुरिति शेषः॥ ३॥
161619
161620 एकलोहमया एव यथादर्शाः परस्परम्।
161621 तथैते प्रतिबिम्बन्ति पदार्थाः पारमर्थिकाः॥ ४॥
161622
161623 ननु जगदपि वस्तुतश्चिदेव। तथा सति चित एव चिति कथं प्रतिबिम्बनमिति चेच्छृणु
161624 दृष्टान्तमित्याह - एकेति। पारमार्थिकाः परमार्थतश्चिद्रूपा अपीत्यर्थः।
161625 मायोपाधेरचिन्त्यशक्तित्वाद्गन्धर्वनगरस्फटिककुड्यरूपे नभसि स
161626 चन्द्रार्काभ्रमहानभःप्रतिबिम्बनदर्शनाच्चेति भाव॥ ४॥
161627
161628 तेन यस्य यदा यद्यत्पुरो भवति वस्त्वसौ।
161629 यदर्थं [तदर्थं इति टीकानुगुणः पाठः।] युज्यते तेन
161630 चिद्घनैकस्वभावतः॥ ५॥
161631
161632 अत एवाध्यस्तभोग्यजगदाकारं ब्रह्म विषयेन्द्रियसंयोगे बुद्ध्यवच्छिन्नजीवचिति
161633 प्रियाप्रियविषयभोगाकारेण प्रतिबिम्बतीत्याह - तेनेति। यद्यद्भोग्यवस्तु पुरो
161634 भवति सन्निकर्षमापद्यते तेन वस्तुना असौ तदर्थं तद्भोगार्थं युज्यते उपपद्यते
161635 । यदि भोग्यं वस्तु बुद्धौ न प्रतिबिम्बेत भोग एव न युज्येतेत्यर्थः॥ ५॥
161636
161637 इत्यनानैव नानेदं नानानाना च वस्तुतः।
161638 न च नाना च चानाना नानानानात्मकं ततः॥ ६॥
161639
161640 तर्ह्येकस्य नानाऽनानात्मकत्वं विरुद्धं माययापि कथं स्यात्तत्र युक्तिर्वाच्येति
161641 चेत्तत्राह - न चेति। यदि नानात्वमात्रनिषेधः स्यात्तदा नियतैकरूपमेव स्यात्।
161642 अनानात्वधर्मस्यापि निषेधान्नानात्वेनापि तत्संभावयितुं शक्यमित्यविरोधे
161643 युक्तिरित्यर्थः॥ ६॥
161644
161645 तेन यस्य यदायातं पुरो वस्तु विपश्चितः।
161646 स तेन संविन्मयतामेत्य तद्वशमागतः॥ ७॥
161647
161648 अत एव विपश्चितो नानादिगतभोग्यानां युगपद्भोगप्रदकर्मपरिपाके एकस्यैव
161649 देहादेश्चातुर्विध्यं तत्तद्देशस्य विषयाणां तत्र तत्र बुद्धौ
161650 युगपत्प्रतिबिम्बनंन् च संपन्नमित्याशयेनाह - तेनेति॥ ७॥
161651
161652 एकदेशगता विष्वग्व्याप्य कर्माणि कुर्वते।
161653 योगिनस्त्रिषु कालेषु सर्वाण्यनुभवन्त्यपि॥ ८॥
161654
161655 यदा योगिनामगस्त्यादीनां मलयादिनियतैकदेशे नित्यं स्थितानामपि
161656 नानादेशेष्वतीतानागतादिकालेषु योगबलात्संनिधाने सर्वानुभवितृत्वं प्रसिद्धम्
161657 तदा भिन्नदेशं प्रयातानां विपश्चितां तत्किं वाच्यमित्याशयेनाह -
161658 एकदेशेति॥ ८॥
161659
161660 अब्दोऽपि व्याप्तिमानेकस्तुल्यकालं पृथक्क्रियाः।
161661 आह्लादस्तेन पादेन करोत्यनुभवत्यपि॥ ९॥
161662
161663 नानादेशेषु युगपदेकस्य भिन्नक्रियाकारित्वे तत्तद्देशव्याप्तिरेवोपयुज्यते न
161664 जीवभेद इत्याह - अब्द इति। यथा घर्मार्तान् आह्लादयतीत्याह्लादः अब्दो मेघोऽपि
161665 महत्त्वादेव नानानगरगिरिनदीक्षेत्रादिव्याप्तिमांस्तुल्यकालं
161666 सौधक्षालनकूटभेदनजलवर्धनसस्यपोषणादिपृथक्क्रियाः तुल्यकालं तेन तेन
161667 पादेनांशेन करोति तदभिमानी जीवश्च मयेमाः क्रियाः कृता इत्यनुभवत्यपि
161668 तद्वद्वात्रोपपत्तिर्बोध्येत्यर्थः॥ ९॥

तुल्यकालमसंख्यातमीश्वरप्रतियोगिनः |
कर्मजालं जगज्जातं कुर्वन्त्यनुभवन्ति च || १० ||

अणिमाद्यैश्वर्यलाभादीश्वरप्रतिमाः योगिनः || १० ||

एको विष्णुश्चतुर्भिः स्वैर्बाहुभिर्वा शरीरकैः |
पृथक्कुर्वन्क्रियाः पाति जगद्भुङ्क्ते वराङ्गनाः || ११ ||

चतुर्भिः शरीरकैः क्वचिद्योगनिद्रां क्वचित्तपः क्वचिदिन्द्रानुजतया तत्साहाय्यं
क्वचिद्वैकुण्ठे भोगजातमिति पृथक् क्रियाः कुर्वन् जगत्पाति वराङ्गना भुङ्क्ते
अनुभवति || ११ ||

बहुबाहुर्यदा द्वाभ्यां हस्ताभ्यां व्यर्थसंग्रहम् |
करोति बहुभिर्भूयः संग्रामं सततं करैः || १२ ||

यदा द्वाभ्यां बाहुभ्यां द्वयोरर्थयोः संग्रहप्रसक्तिस्तदा तं संभूय
सर्वैः करैः संग्रामप्रसक्तौ तं च करोति || १२ ||

तथैव तैर्विपश्चिद्भिः सर्वदिक्कं तथा स्थितैः |
तथा व्यवहृतं प्राप्तमेकसंविन्मयैरपि || १३ ||

दृष्टान्तान्प्रकृते योजयति - तथैवेति | प्राप्तं सुखदुःखादिकमिति शेषः || १३
| |

सुप्तं तैर्भूमिशय्यासु भुक्तं द्वीपान्तरेषु च |
विहृतं वनलेखासु प्रक्रान्तं मरुभूमिषु || १४ ||

प्रक्रान्तं चलितम् || १४ ||

उषितं गिरिमालासु भ्रान्तं सागरकुक्षिषु |
विश्रान्तं द्वीपलेखासु निलीनं घनमालिषु || १५ ||

घनमालिषु मेघमालावत्सु पर्वताग्रेषु निलीय स्थितम् || १५ ||

रूढमर्णवमालासु वात्यासु जलवीचिषु |
क्रीडितं भूभृदब्धीनां तटीषु नगरीषु च || १६ ||

रूढं प्रादुर्भूतम् || १६ ||

शाकद्वीपोदयगिरितटे सप्तवर्षाणि सुप्तं पूर्वेणान्तर्विदलगहने
यक्षसंमोहितेन |
पाषाणाम्बु प्रसभममुनैवात्र पीत्वा दृषत्तामागत्यान्तः स्थितमथ
समाः सप्त जात्येन भूमेः || १७ ||

तथा पूर्वेण विपश्चिता शाकद्वीपे प्रसिद्धस्योदयगिरेस्तटे विदलस्य दलरहितस्य
सुहीवृक्षस्य गहने अन्तर्यक्षेण संमोहनविद्यया संमोहितेन सप्तवर्षाणि
सुप्तम् | अमुनैव पूर्वविपश्चिता पाषाणकरं अम्बु अत्रास्मिन् गिरौ क्वचित्पीत्वा
प्रसभं बलाद्दृषत्तां पाषाणभावमागत्य भूमेरन्तस्तज्जात्येन भूत्वा सप्त
समाः स्थितम् || १७ ||

शाकद्वीपेऽस्तशैलस्य शिरस्यभ्रगुहागृहे |

161721 पिशाचाप्सरसा मासं पाश्चात्यः कामुकीकृतः ॥ १८ ॥
161722
161723 अभ्रसंनिहिते गुहागृहे ॥ १८ ॥
161724
161725 यत्र शान्तभये वर्षे जलधारे महागिरौ ।
161726 हरीतकीवने वर्षं पूर्वोऽन्तर्धानमाययौ ॥ १९ ॥
161727
161728 शान्तभयाख्ये वर्षे भूमिभेदेकस्यचिन्मुनेः शापाद्धरीतकीवृक्षतां
161729 प्राप्याऽन्तर्धानं जनैरदृश्यताम् । वर्ष सप्ततिवर्षम् ॥ १९ ॥
161730
161731 अत्र रैवतके शैले वर्षे शिशिरनामनि ।
161732 दशरात्रमभूत्सिंहः पूर्वो यक्षवशीकृतः ॥ २० ॥
161733
161734 अत्र काञ्चनशैलादिदरीदर्दुरतां गतः ।
161735 पिशाचमायाछलितो दशवर्षाण्युवास सः ॥ २१ ॥
161736
161737 दरीषु दर्दुरतां भेकताम् ॥ २१ ॥
161738
161739 कौमारं वर्षमासाद्य श्यामाद्रेरुत्तरस्तटम् ।
161740 शाकद्वीपेऽन्धकूपेऽन्धो न्यवसच्छरदां शतम् ॥ २२ ॥
161741
161742 उत्तरस्योदन्तं पुनराह - कौमारमिति । श्यामोद्रर्नीलगिरेः । अन्धो दर्दुरः
161743 सन्निर्त्यर्थः ॥ २२ ॥
161744
161745 मरीबकेऽकरोद्वर्षे वर्षाण्यत्र चतुर्दश ।
161746 विद्याधरत्वं पाश्चात्यः स विद्याधरविद्यया ॥ २३ ॥
161747
161748 पाश्चात्यस्योदन्तमाह - मरीबक इति । विद्याधरत्वप्रापिकया मन्त्रविद्यया ॥ २३ ॥
161749
161750 रतक्लमक्लान्तपुरारिलक्ष्मीचलाङ्गलेखाक्रमशीकराक्तम् ।
161751 एलालतालिङ्गनलब्धगन्धमालम्ब्य वेलावनगन्धवाहम् ॥ २४ ॥
161752
161753 किमालम्ब्य विद्याधरत्वमकरोत्तदाह - रतेति । रतं सुरतं तत्रत्येन क्लमेन
161754 क्लान्तस्य पुरारेर्लक्ष्म्या शोभातिशयेन चलानामङ्गलेखानां क्रमेणोद्भूतैः
161755 शीकरैः आक्तं संपृक्तम् । तथा एलालतानामालिङ्गनैर्लब्धगन्धं वेलावनस्य
161756 गन्धवाहं वायुमालम्ब्य आनन्दहेतुत्वेनाश्रित्येत्यर्थः ॥ २४ ॥
161757
161758 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० निर्वा० उ० अवि० वि० द्वीपान्तरवर्णनं
161759 नाम चतुर्विंशत्यधिकशततमः सर्गः ॥ १२४ ॥
161760
161761 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
161762 द्वीपान्तरवर्णनं नाम चतुर्विंशत्यधिकशततमः सर्गः ॥ १२४ ॥
161763
161764
161765 पञ्चविंशत्यधिकशततमः सर्गः १२५
161766
161767 श्रीवसिष्ठ उवाच ।
161768
161769 वर्षे शान्तभयाभिख्ये जलधारे गिरौ तरौ ।
161770 तादृक्कर्तरिपानीयं शाकद्वीपे पिबन् स्थितः ॥ १ ॥
161771
161772 परस्परोपकारित्वं विपद्यत्र विपश्चिताम् ।

161773 विष्वगर्थक्रिया जीवन्मुक्तानां चोपवर्ण्यते ॥
161774
161775 तत्र विपश्चितां भिन्नदिक्षु भ्रमतां परस्परानुसंधानं विपत्सु
161776 परस्परानुग्राहकत्वं चास्ति न वेति रामस्य संशयं लिङ्गैरुपलक्ष्य तं
161777 निराचिकीर्षुर्वसिष्ठः प्रथमं पूर्वस्य शान्तभयवर्षे हरीतकीतरुभावसंकटे
161778 पश्चिमकृतमनुग्रहमाह - वर्षे इति शान्तभयमित्यभिख्या प्रसिद्धिर्यस्य
161779 तस्मिन् वर्षे। अत्र शान्तभये वर्षे जलधारे महागिराविति प्राक्सर्गोक्ते गिरौ हरीतकीवने
161780 हरीतकीवृक्षभूतस्तादृक्तदवस्थः
161781 कर्तरीयन्त्रसदृशभूम्यन्तःशिलासंबन्धि पानीयं मूलैः पिबन् स्थितः पूर्वो
161782 विपश्चित् पाश्चात्येन विपश्चिता तद्वृत्तान्तं ज्ञात्वा तत्र एत्य आगत्य शापप्रदं
161783 मुनिं प्रसाद्य तद्दत्तया विद्यया क्रकचेन वृक्षत्वं छित्त्वेव
161784 वृक्षभावान्मोक्षित इति परेणान्वयः ॥ १ ॥
161785
161786 पूर्वोऽथ वर्षसप्तत्या पाश्चात्येनैत्य मोक्षितः।
161787 विद्यया क्रकचेनेव छित्त्वा वृक्षत्वमक्षतः ॥ २ ॥
161788
161789 पाश्चात्यः शिशिरे वर्षे पाषाणत्वमुपागतः।
161790 मोचितो दक्षिणेनाशु गोमांसादिप्रयोगतः ॥ ३ ॥
161791
161792 एवं पाश्चात्योऽपि शिशिराख्ये वर्षे पिशाचपतिशापात्पाषाणत्वमुपागतो दक्षिणेन
161793 एत्य गोमांसादिप्रयोगतः पिशाचपतिं प्रसाद्य मोचितः ॥ ३ ॥
161794
161795 शिवेऽस्ताचलपारस्थे वर्षे वर्षेण पश्चिमः।
161796 मोचितो दक्षिणेनैत्य गोपिशाच्या वृषीकृतः ॥ ४ ॥
161797
161798 गोरूपया पिशाच्या पिशाचविद्यया वृषीकृतो वृषपिशाचीकृतः पश्चिमो
161799 दक्षिणेन मोचितः ॥ ४ ॥
161800
161801 अत्रैव क्षेमके वर्षे आम्बिकेयगिरौ तरौ।
161802 दक्षिणो यक्षतां यातो मोक्षं यक्षेण लब्धवान् ॥ ५ ॥
161803
161804 यक्षतां पिशाचभेदताम्। देवतायक्षभावस्य मोक्षणे प्रयोजनाभावात्। यक्षेण
161805 पश्चिमप्रसादितेन यक्षपतिना निमित्तेन ॥ ५ ॥
161806
161807 अत्रैव वृषके [क्षेमके वर्षे इति पाठः।] वर्षे शैले केसरनामनि।
161808 केसरित्वं गतः पूर्वः पाश्चात्येनैव मोचितः ॥ ६ ॥
161809
161810 अत्रास्मिन्नेव शाकद्वीपे ॥ ६ ॥
161811
161812 श्रीराम उवाच।
161813
161814 एकदेशगता विष्वग्व्याप्य कर्माणि कुर्वते।
161815 योगिनस्त्रिषु कालेषु सर्वाणि भगवन्कथम् ॥ ७ ॥
161816
161817 विष्वक् सर्वतो व्याप्य विविधं आप्य। कर्माणि अनुग्रहादीनि कथं कुर्वते
161818 तत्रोपपत्तिर्वाच्येत्यर्थः ॥ ७ ॥
161819
161820 श्रीवसिष्ठ उवाच।
161821
161822 इह रामाप्रबुद्धानां यदस्त्यस्त्वलमेव नः।
161823 तेन यत्तु प्रबुद्धानां तदिदं शृणु कथ्यते ॥ ८ ॥
161824

161825 योगिनां दृशा सर्वप्रपञ्चस्य मनोमात्रत्वान्मानसक्रियासु च मनसः सर्वत्र
161826 युगपद्व्यवहारेऽपि निरङ्कुशस्वातन्त्र्याविघातात्सर्वक्रियोपपत्तिरित्याशयेन वसिष्ठ
161827 उत्तरमाह - इहेत्यादिना | हे राम इह जगति अप्रबुद्धानां दृशा
161828 यद्भूतभौतिकादिस्थूलं वस्त्वस्ति तेन नः प्रबुद्धानामुपपत्तिचिन्तया अलम् |
161829 प्रबुद्धानां दृशा यत्तु चिन्मात्रं मनोमात्रं वस्तु तत् सर्वत्रार्थक्रियासमर्थ
161830 यथोपपद्यते तथा कथ्यते शृण्वित्यर्थः || ८ ||
161831
161832 चिन्मात्रसत्तासामान्यादृतेऽन्यन्नात्म तद्विदाम् |
161833 दृश्यात्यन्ताभावबोधे सर्गासर्गदृशोः क्षये || ९ ||
161834
161835 तत्र चिन्मात्रमेव वस्त्विति कल्पे सर्वेश्वरस्येव सर्वत्र सर्वार्थक्रियोपपत्तिरित्याह -
161836 चिन्मात्रेति | तद्विदां तत्त्वविदां दृशा चिन्मात्रसत्तासामान्यादृते अन्यत्
161837 जगद्रूपं न विद्यते आत्मा स्वरूपं यस्य तन्नात्म | नशब्दोऽयं न तु नञ् |
161838 निःस्वरूपमिति यावत् || ९ ||
161839
161840 चिन्मात्रसत्तासामान्ये विश्रान्तस्य निरन्तरम् |
161841 सर्वेशस्येह सर्वत्वं सर्वात्मत्वं च सर्वदा || १० ||
161842
161843 वद केन कथं कुत्र कदा किमिव रोध्यते |
161844 सर्वगस्त्वथ सर्वात्मा यत्र भाति यदा यथा || ११ ||
161845
161846 किंवृत्तानि प्राग्वत् | रोध्यते सर्वत्र सर्वार्थक्रियाविषये निवार्यते |
161847 दृष्टसृष्टिपक्षमालम्ब्यापि तदनिरोधमाह - सर्वग इति | अथेति
161848 पक्षान्तरद्योतनाय || ११ ||
161849
161850 तथा भाति तदा तत्र सर्वात्मनि किमस्ति नो |
161851 अतीतं वर्तमानं च भविष्यत्स्थूलमप्यणु || १२ ||
161852
161853 किं नो अस्ति किं तद्यत्ततः सत्तां न लभत इत्यर्थः | अतीतमित्यादिस्तत्प्रपञ्चः || १२ ||
161854
161855 तथा दूरमदूरं च निमेषः कल्प एव च |
161856 स्वरूपमजहत्येव सामान्ये तानि सर्वदा || १३ ||
161857
161858 सामान्ये सत्तासामान्ये | तान्यतीतादीनि ||१३ ||
161859
161860 सर्वात्मनि स्थितान्येव पश्य मायाविजृम्भितम् |
161861 अजातमनिरुद्धं च यथास्थितमवस्थितम् || १४ ||
161862
161863 अनिरुद्धमनष्टम् || १४ ||
161864
161865 विज्ञानघनमेवेदमत एव जगल्लयम् |
161866 नभस्त्वमत्यजंश्चैव सर्वात्मैव नभः स्थितम् || १५ ||
161867
161868 अत एव सत्तासामान्याधीनस्थितिकत्वादेव | अविकृतस्य सदात्मन एव नभ##-
161869 अनुगृह्णन्नेव || १५ ||
161870
161871 जगदात्मा जगद्रूपं द्रष्टृदृश्यतयोदितम् |
161872 विश्वात्मदृग्वपुर्यत्स्यात्तत्किं केन कथं कदा || १६ ||
161873
161874 मायाशबलो हि जगदात्मा तदेव द्रष्टृदृश्यतया जगद्रूपमुदितम् | यत्तु
161875 विश्वात्मनः शबलस्य दृङ्मात्ररूपं वपुस्तत्केन कथं कदा किं स्यात् | शुद्धे
161876 परिणामविवर्ताद्यघटनादित्यर्थः || १६ ||

161877
161878 दुःसाध्यं ब्रूहि तत्त्वज्ञ साध्यासाध्यस्वरूपिणः ।
161879 तस्मादस्याः सदैकस्या विपश्चिद्राजसंविदः ॥ १७ ॥
161880
161881 साध्यासाध्यस्वरूपिणः शबलस्य दुःसाध्यं किम् न किंचिदिति सर्वदा सर्वत्र
161882 सर्वार्थक्रियोपपत्तिरित्यर्थः ॥ १७ ॥
161883
161884 प्रबोधमनुगच्छन्त्या अप्राप्तायाः परं पदम् ।
161885 एकस्या अप्यनेकस्याः सर्वं सर्वत्र युज्यते ॥ १८ ॥
161886
161887 रामप्रश्नसमाधानं प्रकृते योजयन्नुपसंहरति - तस्मादिति । ईश्वरचित
161888 एवोपाधिभेदे विपश्चिदादिजीवत्वादेकस्या अप्युपाधिनानात्वेनानेकभावापन्नाया
161889 अग्न्यादिप्रसादात्सर्व सर्वत्र कार्य युज्यत इत्यर्थः ॥ १८ ॥
161890
161891 बोधाबोधात्मरूपे हि किं नामास्ति परात्मनि ।
161892 अप्राप्तायाः परं बोधं पदार्थाकुलतोचिता ॥ १९ ॥
161893
161894 बोधाबोधात्मरूपे शबले किं नामास्ति । असाध्यमिति शेषः । तत्रैव युक्त्यन्तरमाह
161895 - अप्राप्ताया इति ॥ १९ ॥
161896
161897 किंचिद्बोधं प्रविष्टायाः सिद्धताप्युचितैव सा ।
161898 एवं ते सर्वदिक्सम्स्थाः सर्वमेव परस्परम् ॥ २० ॥
161899
161900 योगिनामैच्छिकार्थक्रियासामर्थ्यलक्षणसिद्धतायामप्युपपत्तिमाह - किंचिदिति ।
161901 बोधप्रकर्षक्रमेण अकामहतत्वप्रकर्षसंभवात्तत्प्रयुक्तानन्दोत्कर्ष##-
161902 विपद्रोगं चिकित्सन्ते प्रतिकुर्वन्ति ॥ २० ॥
161903
161904 पश्यन्त्यनुभवन्त्याशु चिकित्सन्ते च संकटम् ।
161905 बोधाकाशः स्वकाद्रूपादीषच्च्युत इवाशु चेत् ॥ २१ ॥
161906
161907 प्रबुद्धानां मनोमात्रमेव सर्ववस्त्विति कल्पे तु सर्वत्र सर्वार्थक्रिया
161908 मनोराज्यवदुपपन्नतरैवेत्याशयेनाह - बोधाकाश इति । ईषत्स्वरूपात्प्रच्युतिरेव
161909 मनोभाव इत्युत्पत्तिप्रकरणे बहुशो व्युत्पादितत्वादिति भावः ॥ २१ ॥
161910
161911 तदन्यतामिवादत्ते सुस्थितोऽपि यथास्थितम् ।
161912
161913 श्रीराम उवाच ।
161914
161915 विपश्चितः प्रबुद्धाश्चेत्कथं सिंहवृषादिताम् ॥ २२ ॥
161916
161917 यथास्थितं सुस्थितोऽपि तत्तस्मान्मनोभावलक्षणादीषच्च्यवनदोषादन्यतां
161918 जगद्रूपतां युगपदादत्ते । विपश्चित्प्रसङ्गे योगिनां प्रबुद्धानां
161919 युगपत्सर्वार्थक्रियोपपत्तौ वर्णितायां विपश्चितोऽपि प्रबुद्धा इति मन्यमानो रामः
161920 शङ्कते - विपश्चित इति । प्रबुद्धानां सर्वार्थक्रियास्वातन्त्र्येण पारतन्त्र्येण
161921 सिंहवृषादिदेहसंकटाप्रसक्तेः परस्परानुग्रहोक्तिरसंगतेति भावः ॥ २२ ॥
161922
161923 दिक्षु यान्तीति मे ब्रह्मन्बोधाय कथयाश्वलम् ।
161924
161925 श्रीवसिष्ठ उवाच ।
161926
161927 प्रबुद्धाः कथिता ये ते योगिनस्ते मयानथ ॥ २३ ॥
161928

त्वया योगिनः कथं व्याप्य कर्माणि कुर्वते इति पृष्टमिति मयात्र योगिनः प्रबुद्धा
वर्णिता न तु विपश्चितोऽपि प्रबुद्धा योगिन इतीति वसिष्ठ समाधत्ते - प्रबुद्धा इति ॥
२३ ॥

प्रसङ्गरूपान्तरतो न प्रबुद्धा विपश्चितः ।
विपश्चितो महाबाहो प्रबुद्धा निपुणं न ते ॥ २४ ॥

त्वत्प्रश्नसमाधानार्थं विपश्चित्प्रसङ्गरूपस्यान्तरतः अन्तरेण योगिनस्ते कथिता
न तु विपश्चितोऽपि प्रबुद्धा इत्याशयेनेत्यर्थः ॥ २४ ॥

बोधाबोधदृशोर्मध्ये ते हि दोलयिताः स्थिताः ।
मोक्षचिह्नानि दृश्यन्ते बन्धचिह्नानि चाभितः ॥ २५ ॥

तर्हि ते किमत्यन्तमूढा नेत्याह - बोधेति । द्वितीयभूमिकास्था इत्यर्थः ।
भाविमोक्षचिह्नानि विवेकादीनि । बन्धचिह्नानि रागादीनि ॥ २५ ॥

नित्यधर्मप्रबुद्धानां तथाभूततया तया ।
विपश्चितो धारणया योगिनो न परं गताः ॥ २६ ॥

तया उक्तया तथाभूतया दोलायिततया धारणया योगिनो न तु परं गता योगिन
इत्यर्थः ॥ २६ ॥

धारणायोगिनस्ते हि धारणाप्राप्तसिद्धयः ।
ये परं बोधमायाता येष्वविद्या न विद्यते ॥ २७ ॥

हृदयादिप्रदेशेष्वग्निदेवतायां चित्तनिरोधेन
तत्प्रसादप्राप्तसिद्धित्वाद्धारणायोगिनो न तु ज्ञानयोगिनो येष्वविद्या नष्टेत्यर्थः ॥
२७ ॥

किमविद्यामवेक्षन्ते ते तामरसलोचन ।
धारणायोगिनो ह्येते वरेण प्राप्तसिद्धयः ॥ २८ ॥

ते ज्ञानयोगिनश्चेदविद्यां किं किमर्थमवेक्षन्ते ।
तद्दर्शनेच्छैवैषामविद्यानुच्छेदे लिङ्गमित्यर्थः । धारणापरिपाकान्ते
देवताप्रसादजेन वरेण प्राप्तसिद्धयस्ते ॥ २८ ॥

अविद्या विद्यते तेषां तेन तेऽतद्विचारिणः ।
अन्यच्च शृणु हे राम जीवन्मुक्तशरीरिणाम् ॥ २९ ॥

ते विपश्चितः अतद्विचारिण आत्मविचारशून्याः । जीवन्मुक्तानां व्यवहारकाल एव
देहादिभानम् समाधौ तु विदेहकैवल्यसाम्यमेवेति विपश्चिद्भ्यो विशेषान्तरं
श्रावयति - अन्यच्चेत्यादिना ॥ २९ ॥

भवेद्व्यवहृतावेव पदार्थान्तरवेदनम् ।
मोक्षोऽपि चेतसो धर्मश्चेतस्येव स तिष्ठति ॥ ३० ॥

व्यवहृतौ व्युत्थानकाले एव । कुतस्तेषां समाधावेव तथात्वं तत्राह - मोक्ष
इति । यो हि बद्धस्तस्यबन्धनिवृत्तिर्मोक्षः । चित्तमेव बध्यते नात्मेति मोक्षोऽपि
तद्धर्म एव । अतः समाहिते चेतस्येव स मोक्षस्तिष्ठति न देहे देहभावापन्ने व्युत्थिते
इत्यर्थः ॥ ३० ॥

न देहे देहधर्मस्य न देहाद्विनिवर्तते ।

161981 न कदाचन निर्मुक्तं चेतो भूयो निबध्यते ॥ ३१ ॥
161982
161983 न देहे इति पूर्वान्वयि । यस्तु देहधर्मो देहभावाधीनो व्यवहारः स जीवन्मुक्तस्यापि
161984 देहान्न निवर्तते इति पदार्थान्तरवेदनोपपत्तिरित्यर्थः । तर्हि जीवन्मुक्तचेतोऽपि
161985 देहभावे बध्येतेति चेन्नेत्याह - न कदाचनेति ॥ ३१ ॥
161986
161987 यत्नेनापि पुनर्बद्धं केन वृन्तच्युतं फलम् ।
161988 देहस्तु देहधर्मेण जीवन्मुक्तिमतामपि ॥ ३२ ॥
161989
161990 वृन्ताच्च्युतं पतितं फलं पुनः केन समर्थेनापि वृन्ते पूर्ववद्बद्धम् । न
161991 केनापीत्यर्थः । अत एव मुक्तानाममुक्तानां च देहधर्मानुवृत्तिस्तुल्या न
161992 चित्तधर्मानुवृत्तिरित्याह - देहस्त्विति ॥ ३२ ॥
161993
161994 गृह्यते तद्गतं तेषां चेतस्त्वचलमेव तत् ।
161995 मोक्षो हि न परज्ञेयो धारणादिप्रयोगवत् ॥ ३३ ॥
161996
161997 अत एव ते परैर्जीवन्मुक्ता इमे इति न ज्ञातुं शक्यन्ते धारणादिसिद्धास्तु ज्ञातुं
161998 शक्यन्त इत्यपरो विशेष इत्याह - मोक्ष इति ॥ ३३ ॥
161999
162000 आत्मसंवेद्य एवासौ मध्वाद्यास्वादसौख्यवत् ।
162001 सुखदुःखैर्युतो योऽसौ स्वयं बन्धानुभूतिमान् ॥ ३४ ॥
162002
162003 मनोधर्मो मोक्षः कथमात्मसंवेद्य इत्युच्यते तत्राह - आत्मसंवेद्य इति ।
162004 बन्धवन्मोक्षस्यापि मनोगतस्य साक्षिस्वानुभूत्यैव सिद्धेरिति भावः । यदि
162005 बन्धमोक्षौ मनोधर्मौ तर्हि कथमात्मा बद्धो मुक्त इति च शास्त्रे व्यवह्रियते
162006 तत्राह - सुखदुःखैरिति । स्वानुभूतिप्रदः असौ आत्मा तु मनोधर्मैः
162007 सुखदुःखैर्युतः सन् यो जीवः स्वयं बन्धानुभूतिमान् भवति स तस्य मनसो
162008 मुक्तौ मुक्त इति शास्त्रे उक्त इत्यन्वयः ॥ ३४ ॥
162009
162010 तन्मुक्तौ मुक्त इत्युक्तः स्वानुभूतिप्रदस्त्वसौ ।
162011 अन्तःशीतलचित्तो हि मुक्त इत्यभिधीयते ॥ ३५ ॥
162012
162013 नन्वेवं सति देहादयोऽपि मनोधर्माभ्यां ताभ्यां बद्धा मुक्ताश्चेति
162014 व्यवह्रियेरंस्तत्राह - अन्तरिति । आन्तरयोराह्लादसंतापयोरान्तरे एव
162015 चिदात्मन्यध्यासोऽनुभवसिद्धोऽभ्युपगन्तुंन् व्यवहर्तुं च युक्तो न बाह्ये
162016 देहादाविति भावः ॥ ३५ ॥
162017
162018 बन्धः संतप्तचित्तेति देहादेस्तन्न दृश्यते ।
162019 शरीरे कणशः कृत्ते राज्ये वा विनियोजिते ॥ ३६ ॥
162020
162021 संतप्तचित्तेति संधिरार्षः । युक्ते मनसि शरीरधर्माणामिव मनोधर्मस्य
162022 मोक्षस्य शरीरे प्रतीतिप्रसक्तिरित्याशयेनाह - शरीरे इति । कृत्ते छिन्ने ॥ ३६ ॥
162023
162024 रुदतो हसतश्चैव जीवन्मुक्तमतेरिह ।
162025 न दुःखं न सुखं किंचिदन्तर्भवति तत्स्थितम् ॥ ३७ ॥
162026
162027 तत्स्थितं देहप्रयुक्तम् ॥ ३७ ॥
162028
162029 गृह्णतोऽप्यनुभूतिस्तु तत्रैवैषास्ति नापरे ।
162030 दृश्यन्ते पण्डिता भग्ना रूपान्तरमुपागताः ॥ ३८ ॥
162031
162032 ननु पादे मे कण्टकदुःखं देहे मे चन्दनसुखमिति देहेऽपि जनो

162033 मनोधर्मसुखदुःखादीन् गृह्णाति तत्कथमात्मन्येव तदध्यासस्तत्राह -
162034 गृह्णत इति। अवच्छेदकतासंबन्धेन देहे सुखदुःखादीन् गृह्णतोऽपि जनस्य अहं
162035 सुखी अहं दुःखीत्यात्मन्येव तदनुभवपर्यवसानात्तत्रैवैषा कल्पनास्ति न अपरे
162036 बाह्ये देहादौ। अत एव हि आत्मन्यध्यासमनभ्युपगच्छन्तो
162037 देहाद्यात्मताभिमानाद्रूपान्तरमुपागताश्चार्वाकनैयायिकसांख्यबौद्धकाणाद्
162038 आदयः पण्डिता मोक्षोपायालाभाद्भग्नाः पराभूता दृश्यन्ते वेदान्तिभिर्वा
162039 जल्पकथायां भग्नाः पराजिता दृश्यन्त इति योज्यम्॥ ३८॥
162040
162041 देहादिजीवन्मुक्तानां स्वभावान्न कदाचन।
162042 मृतोऽपि नैव म्रियते रुदन्नपि न रोदिति॥ ३९॥
162043
162044 अस्तु वा बन्धस्य सुखदुःखादेर्देहेऽपि कथंचिदनुभवः मोक्षस्य तु स नास्त्येव।
162045 जीवन्मुक्तैः समाधौ देहाभाने स्फुटं तदनुभवाद्देहभाने व्युत्थानकाले
162046 मन्दमध्यमज्ञानिभिस्तदनुभवाच्चेत्याशयेनाह - देहादीति।
162047 स्वभावान्नित्याशरीरात्मस्वभावात्। तथा च श्रुतिः अशरीरं
162048 शरीरेष्वनवस्थेष्ववस्थितम्। महान्तं विभुमात्मानं मत्त्वा धीरो न शोचति इति। अत
162049 एव स मरणादिदेहधर्मैर्न युज्यत इत्याह - मृतोऽपीति॥ ३९॥
162050
162051 विहसन्न हसत्येव जीवन्मुक्तो महोदयः।
162052 वीतरागाः सरागाभा अकोपाः कोपसंयुताः॥ ४०॥
162053
162054 मनोधर्मैरपि तेषामसंबन्धमाह - वीतरागा इति॥ ४०॥
162055
162056 अमोहा मोहवलिता दृश्यन्ते तत्त्वदर्शिनः।
162057 इदं सुखमिदं दुःखमित्यादिकलनास्तु ताः॥ ४१॥
162058
162059 अलं दूरगतास्तेषामङ्कुरा नभसो यथा।
162060 जगदात्मा च नास्त्येव यस्यैकं सर्वमस्ति च॥ ४२॥
162061
162062 जगदात्मा जगत्स्वरूपं चकारात्तन्मूलमज्ञानं च यस्य नास्त्येव। यस्य
162063 सर्वमेकमेकरसं सदस्ति च तस्य जीवन्मुक्तस्य सुखदुःखाद्यस्तीति वाग्व्योम्नो
162064 विटपाः शाखाः सन्तीति वागुपमेत्यन्वयः॥ ४२॥
162065
162066 सुखदुःखादि तस्येति वाग्व्योमविटपोपमा।
162067 अशोका एव शोचन्ते जीवन्मुक्ता जयान्विताः॥ ४३॥
162068
162069 तत्र को मोहः कः शोक एकत्वमनुपश्यतः इति श्रुतेः शोकमोहजयान्विताः॥ ४३॥
162070
162071 अच्छिन्ना एकतद्भावा दृश्यन्ते तत्त्वदर्शिनः।
162072 शिरः कमलजस्योच्चैः सामगायनतत्परम्॥ ४४॥
162073
162074 शिर-आद्यङ्गच्छेदेऽप्यच्छिन्ना एकतद्भावा अद्वितीयात्मभावाः। क्व
162075 तद्दृष्टं तदुदाहरति - शिर इति। गायनमित्यशित्यात्वाभावश्छान्दसः॥ ४४॥
162076
162077 हरो नखेन चिच्छेद सुकुमारमिवाम्बुजम्।
162078 शक्तोऽपि न पुनर्ब्रह्मा जनयामास तच्छिरः॥ ४५॥
162079
162080 व्योमैकतास्य चिद्व्योम्नो मुधा मूर्ध्नेतरेण किम्।
162081 नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन॥ ४६॥
162082
162083 अस्य कमलजस्य व्योमैकता आकाशसमता अतो मुधा मिथ्याभूतेनेतरेण पञ्चमेन
162084 मूर्ध्ना किं प्रयोजनमित्यर्थः। तर्हि तस्य चतुर्भिः शिरोभिर्वा किमर्थं

वेदोपदेशकरणं तत्राह - नैवेति || ४६ ||

यद्यथा नाम संपन्नं तत्तथास्त्वितरेण किम् |
हरो हरिणशावाक्षीमक्षीणशरतोऽश्रु च |
धत्ते वपुषि दुग्धाब्धिर्गुप्तामृतकलामिव || ४७ ||

संपन्नं प्राणिकर्मवशादिति शेषः | ईश्वरस्यापि प्राणिकर्मानुसारेणैव
व्यवहारो न स्वार्थे इत्याह - हर इति | अनुगृहीतादक्षीणशरतो
मन्मथाद्धरिणशावाक्षीमर्धाङ्गे धत्ते | निगृहीतात्तु
निरुपप्लवसमाधिप्रवृत्तेरानन्दाश्रु च वपुषि धत्ते |
गुप्तामृतकलामिवेत्युभयदृष्टान्तः || ४७ ||

शक्तोऽपि रागितामेष न त्यजत्युत्तमाशयः |
पञ्चेषुदाहसमये दृष्टा नीरागतागुणाः || ४८ ||

नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन |
न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः || ४९ ||

अर्थव्यपाश्रयः प्रयोजनलाभः || ४९ ||

रागितैषास्तु मा वास्य किमरागितयान्यया |
यद्यथा नाम संपन्नं तत्तथास्त्वितरेण किम् || ५० ||

अरागितया अन्यया रागितया वा किं को लाभः का वा क्षतिरित्यर्थः || ५० ||

करोति कारयत्युच्चैर्म्रियते मार्यतेऽपि च |
जायते वर्धतेऽजस्रं जीवन्मुक्तो जनार्दनः || ५१ ||

स्वयमसुरनिग्रहादि करोति इन्द्रादिद्वारा कारयति | म्रियते अवतारसमाप्तिषु
मरणमङ्गीकरोति | तदनुकूलैः शरभलुब्धकादिभिर्मार्यतेऽपि च || ५१ ||

न चाजवं जवीभावं त्यक्तुं शक्तोऽप्यसौन तम् |
तेन त्यक्तेन नैवार्थस्तस्य नैवाश्रितेन च || ५२ ||

तं प्राणिकर्मवशोपगतं आजवं जवीभावं व्यवहारव्यग्रतां न च त्यक्तुं
शक्नोति || ५२ ||

तद्यथास्थितमेवास्तु इह इत्यस्तवासनम् |
हरिर्निरिच्छ एवास्ते शुद्धचिन्मात्ररूपभृत् || ५३ ||

आत्मानमान्दोलयति कालकन्दुकतां गतम् |
अजस्रं नित्यमादित्यो जगद्गृहनभोङ्गणे ||५४ ||

सूर्यादीनामपि निरिच्छानामेव प्राणिकर्मानुसारादेव स्वस्वाधिकारपालनमित्याह
- आत्मानमिति | आन्दोलयति भ्रमयति || ५४ ||

न च रोधयितुं देहं न समर्थो दिनेश्वरः |
निरिच्छ एव निर्वाणस्तथाप्यास्ते यथास्थितम् || ५५ ||

निर्वाणो जीवन्मुक्तः || ५५ ||

चन्द्रोऽनुभवति व्यर्थमाकल्पं क्षयमक्षयम् |

162137 जीवन्मुक्ततया खिन्नो यथास्थितमवस्थितः ॥ ५६ ॥
162138
162139 आकल्पं कल्पान्तावधि । क्षयं राजयक्ष्माणम् ॥ ५६ ॥
162140
162141 मरुत्तहव्यगौरीशवीर्यग्रासादिखेदिताम् ।
162142 जीवन्मुक्तो वहत्यग्निर्यथा स्थित्या समस्थितिः ॥ ५७ ॥
162143
162144 मरुत्तस्य यज्ञे द्वादशवर्षपर्यन्तं
162145 गजशुण्डाप्रमाणाजस्रनिपतद्घृतधारादिहव्यग्रासप्रयुक्ताऽजीर्णेन
162146 स्कन्दोत्पत्तिप्रसङ्गे गौरीशस्य गौरीसंगमे देवैर्विघ्नाचरणे स्थानात्क्षुभितस्य
162147 वीर्यस्य ब्रह्मणो नियोगाद्ग्रासः पानं तत्प्रयुक्तेनान्तर्दाहेन आदिपदाद्देवानां
162148 दिवानिशं हव्यवहनदेवस्वापहरणाप्सुनिलयनादिना [हव्यवहनेन
162149 देवस्वापहारेणेत्यादि पाठः ।] खेदिताम् ॥ ५७ ॥
162150
162151 बह्वीभिर्विजिगीषाभिः कृपणाविव तिष्ठतः ।
162152 जीवन्मुक्तावपि गुरू लोके शुक्रबृहस्पती ॥ ५८ ॥
162153
162154 विजिगीषाभिः परस्परजयेच्छाभिः ॥ ५८ ॥
162155
162156 करोति जनको राज्यंन् जीवन्मुक्तमना मुनिः ।
162157 जगत्यामाजिषूग्रासु देहं जर्जरतां नयन् ॥ ५९ ॥
162158
162159 आजिषु युद्धेषु ॥ ५९ ॥
162160
162161 नलमान्धातृसगरदिलीपनहुषाद्यः ।
162162 जीवन्मुक्ताश्चिरं राज्यंन् चक्रुराकुलिता इव ॥ ६० ॥
162163
162164 व्यवहारे यथैवाज्ञस्तथैव खलु पण्डितः ।
162165 वासनावासने एव कारणं बन्धमोक्षयोः ॥ ६१ ॥
162166
162167 बलिप्रह्लादनमुचिवृत्रान्धकमुरादयः ।
162168 जीवन्मुक्ताः स्थितिं चक्रुर्वितरागाः सरागवत् ॥ ६२ ॥
162169
162170 तस्मादसत्त्वे सत्त्वे च रागद्वेषक्षयोदये ।
162171 न मनागपि भेदोऽस्ति ज्~अनखं प्रति स्वरूपिणि ॥ ६३ ॥
162172
162173 एतेन जीवन्मुक्तानां रागद्वेषाभासदर्शनेऽपि मुक्तिसंदेहो निरस्त इति
162174 दर्शयन्नुपसंहरति - तस्मादिति । ज्ञखं जीवन्मुक्तचिदाकाशं प्रति
162175 लक्षीकृत्य रागद्वेषयोः क्षये उदये वा चरिते न च सत्त्वे सुचरित्रत्वे असत्त्वे
162176 दुश्चरित्रत्वे वा स्वरूपिणि आविर्भूतस्वरूपवति मोक्षे मनागपि भेदः संशयो नास्ति
162177 ॥ ६३ ॥
162178
162179 ज्ञानेनाकाशशुद्धेन धर्मान्ये गगनोपमान् ।
162180 विन्दन्ति जीवन्मुक्तानां तेषां भेदमतिः कुतः ॥ ६४ ॥
162181
162182 नाहं ब्रह्मेति भेदमतौ सत्यां हि मुक्तौ संशयः स्यात् सैव तेषां नास्तीत्याह ##-
162183 चरमसाक्षात्कारवृत्यात्मकज्ञानेन ये धारयन्ति देहमनःप्राणादीनिति धर्मा
162184 जीवास्तान् गगनोपमान् असङ्गाद्वयपूर्णब्रह्मभावेनाकाशसदृशान्विन्दन्ति
162185 लभन्ते तेषां जीवन्मुक्तानां भेदभ्रमहेत्वज्ञानस्य नष्टत्वात्पुनर्भेदमतिः
162186 कुतः । कस्मान्निमित्तात्संभाव्येतेत्यर्थः ॥ ६४ ॥
162187
162188 भास्वरं शक्रकोदण्डं यथा नानेव शून्यकम् ।

162189 आभासमात्रमेवायं तथा दृश्यात्मको भ्रमः ॥ ६५ ॥
162190
162191 तत्त्वसाक्षात्कारेण जीवजगद्भेदः कुतो बाध्यत इति चेत्
162192 भ्रान्तिमात्रसिद्धत्वादित्याशयेन तस्यावस्तुतां दृष्टान्तेन साधयति -
162193 भास्वरमिति। शक्रकोदण्डमिन्द्रचापः। मेघपटलस्थाः सूर्यरश्मय
162194 एवेन्द्रचापात्मना दृश्यन्त इति प्रसिद्धम् ॥ ६५ ॥
162195
162196 शक्रचापे यथा भान्ति नानावर्णा नभोङ्गणे।
162197 तथा शून्यात्मका एव ब्रह्माण्डपरमाणवः ॥ ६६ ॥
162198
162199 ब्रह्माण्डलक्षणाः परमाणवः ॥ ६६ ॥
162200
162201 इदं जगदसद्भाति सदिव व्यक्तिमागतम्।
162202 अजातमनिरुद्धं च यथा शून्यत्वमम्बरे ॥ ६७ ॥
162203
162204 व्यक्तिं प्रकटताम्। अजातमनुत्पन्नम्। अनिरुद्धमनष्टम् ॥ ६७ ॥
162205
162206 साद्यन्तमप्यनाद्यन्तमशून्यमपि शून्यकम्।
162207 जगज्जातं तथाऽजातमरुद्धं रुद्धमेव च ॥ ६८ ॥
162208
162209 अप्यर्थे तथाशब्दः। जातमप्यजातमेव रुद्धं नष्टं अरुद्धमनष्टमेव।
162210 जगत्तयापि गृहीते नित्यकूटस्थासङ्गाद्वये वस्तुनि आद्यन्ताद्यप्रसक्तेरिति भावः ॥ ६८
162211 ॥
162212
162213 जातं निरुद्धमस्त्येवं ब्रह्म व्योमैव भासते।
162214 यथा दारुमयः स्तम्भस्तथा तच्छालभञ्जिका ॥ ६९ ॥
162215
162216 जगद्भाव इव तज्जन्मनिरोधभावोऽपि ब्रह्मणि कल्पनयोपपाद्यते इति चेदिष्टापत्तिः
162217 कल्पनामात्रेण कौटस्थ्याक्षतेरित्याशयेनाह - जातमिति। यथा स्तम्भो दारुमयो
162218 दार्वेव तथा तस्य स्तम्भस्यैकदेशस्था शालभञ्जिका प्रतिमापि दार्वेवेत्यर्थः ॥ ६९
162219 ॥
162220
162221 समस्तकलनोन्मुक्तं समं निर्निद्रमासनम्।
162222 यदेकान्तचिदाकाशं तद्विद्यात्तन्मयं जगत् ॥ ७० ॥
162223
162224 अकल्पनं तु जगद्ब्रह्मैवेति समाधिदृष्ट्या अनुभवमारोपयेदित्याह - समस्तेति
162225 । समाधिना समस्तकलनोन्मुक्तं निर्निद्रं च समं
162226 यदासनमात्ममात्रतयावस्थानं तन्मयं तन्मात्रमेव तज्जगद्विद्यात् ॥ ७० ॥
162227
162228 देशाद्देशान्तरप्राप्तौ यन्मध्ये संविदो वपुः।
162229 अनुन्मेषं चिदाकाशं तद्विद्यात्तन्मयं जगत् ॥ ७१ ॥
162230
162231 असमाधावपि शाखाचन्द्रदर्शने बुद्धिवृत्तेः शाखादेशाच्चन्द्रदेशप्राप्तौ
162232 मध्ये यन्निर्विषयं वृत्त्यभिव्यक्तं संविदः स्वरूपं तन्मयं
162233 जगद्विद्यादित्याह - देशादिति ॥ ७१ ॥
162234
162235 तत्र यद्द्वैतमैक्यं तन्मन्ये तदपि नैव च।
162236 तद्व्योम केवलं भाति मन्ये तदपि नैव वा ॥ ७२ ॥
162237
162238 तत्र तादृशे चिदात्मनि यद्द्वैतं विशेषरूपमैक्यं सामान्यरूपं चाभाति तदपि
162239 तत्तस्माच्चिदाकाशस्वभावादेव नैव नास्त्येवेति मन्ये मननेन निश्चिनोमि। तत्
162240 केवलं व्योम शून्यमिति च यद्भाति तदपि च नैव। पूर्णानन्दैकरसे

162241 शून्यत्वस्याप्ययोगादित्यर्थः ॥ ७२ ॥
162242
162243 जगदाकाशमेवेदमात्मैवात्मनि वा स्थितम् ।
162244 भविष्यत्पुरवद्दृष्टमपि स्फारमपि स्फुटम् ॥ ७३ ॥
162245
162246 शून्यता पूर्णता च सप्रतियोगिका लोके यादृशी प्रसिद्धा । यथा जलेन शून्यो घटो
162247 जलेन पूर्ण इति वा । सा आत्मनि न संभवति किंतु जगदिदं
162248 जगद्भावस्यात्यन्ताप्रसिद्ध्या आकाशमेवेदमिति शून्यत्वम् । एवमात्मैवात्मनि
162249 संस्थितमित्यन्यनिरपेक्षं पूर्णत्वम् । यथा भविष्यत्पुरमिदानीं
162250 प्रतियोगिनिरपेक्षशून्यतया दृष्टं स्फारं दिक्कालादि यथा
162251 प्रतियोगिनिरपेक्षपूर्णतया स्फुटं दृष्टं तद्वदित्यर्थः ॥ ७३ ॥
162252
162253 आकाशकोशविशदाशय दृश्यजातं मौनात्म तिष्ठति शिलाघनमेव
162254 शान्तम् ।
162255 यन्नाम तस्य जगदित्यभिधां विधाय स्वात्मैव मोहित इवायमहो नु माया ॥ ७४
162256 ॥
162257
162258 हे आकाशकोशमिव विशदाशय राम यद्दृश्यजातं शिलाघनप्रायमेव शान्तं
162259 ब्रह्मैव मौनं तिष्ठति नाम तस्य स्वात्मैव जगदित्यभिधां विधायायं मोहित
162260 इव तिष्ठति अहो नु माया अत्याश्चर्यभूतेत्यर्थः ॥ ७४ ॥
162261
162262 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० नि० उ० अवि० वि० जीवन्मुक्तकलनं नाम
162263 पञ्चविंशाधिकशततमः सर्गः ॥ १२५ ॥
162264
162265 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
162266 जीवन्मुक्तकलनं नाम पञ्चविंशाधिकशततमः सर्गः ॥ १२५ ॥
162267
162268 षड्विंशाधिकशततमः सर्गः १२६
162269
162270 श्रीराम उवाच ।
162271
162272 अनन्तरं मुनिश्रेष्ठ कुर्वन्तः किं विपश्चितः ।
162273 आसंस्तेषु दिगन्तेषु सद्वीपाब्धिवनाद्रिषु ॥ १ ॥
162274
162275 मृतानामिह सर्वेषां स्वान्तः संसृतिविभ्रमः ।
162276 उत्तरस्य तमःखातदर्शनान्तोऽनुवर्ण्यते ॥
162277
162278 तेषु पूर्वादिषु दिगन्तेषु गतास्ते विपश्चितः किं कुर्वन्त आसन् ॥ १ ॥
162279
162280 श्रीवसिष्ठ उवाच ।
162281
162282 शृणु किंवृत्तमेतेषां तात तत्र विपश्चिताम् ।
162283 तालीतमालमालाढ्यद्वीपाद्रिवनचारिणाम् ॥ २ ॥
162284
162285 एतेषां किंवृत्तं वृत्तान्तम् ॥ २ ॥
162286
162287 क्रौञ्चद्वीपगिरेरेको विपश्चित्पश्चिमे तटे ।
162288 कटेनाद्रितटे पिष्टः करिणा कमलं यथा ॥ ३ ॥
162289
162290 तेषां मध्ये एको विपश्चित् क्रौंचद्वीपे प्रसिद्धस्य वर्षसीमगिरेः पश्चिमे तटे
162291 भागे करिणा अद्रितटे वप्रशिलायां कटेन गण्डेन दन्ताभ्यां पिष्टः संचूर्णितो
162292 मृत इत्यर्थः । वरप्रार्थनकाले आसिद्धगम्यमध्वानं मृत्युरस्माकमस्तु मा

162293 इत्यवधिकरणात्तदुत्तरं सिद्धागम्योऽध्वेत्यनुक्तमपि गम्यते। एवमग्रेऽपि बोध्यम्॥
162294 ३॥
162295
162296 द्वितीयो नभसा नीतो रक्षसा विक्षताङ्गकः।
162297 निक्षिप्तो वाडवे वह्नौ तत्र भस्मत्वमागतः॥ ४॥
162298
162299 द्वितीयो विपश्चिद्रक्षसा युद्धे विक्षताङ्गको नभसा नभोमार्गेण नीतो वाडवे
162300 वह्नौ सामुद्रे निक्षिप्तस्तत्र भस्मत्वं चागतः॥ ४॥
162301
162302 तृतीयस्त्रैदशं देशं नीतो विद्याधरेण वै।
162303 गतोऽप्रणामकुपितशक्रशापेन भस्मताम्॥ ५॥
162304
162305 त्रैदशं देशमिन्द्रसभां गतः। तत्र च अप्रणामान्नमस्काराकरणात्कुपितस्य
162306 शक्रस्य शापेन भस्मतां गतः॥ ५॥
162307
162308 चतुर्थश्चतुरं गच्छन्कुशद्वीपगिरेस्तटे।
162309 दुर्वारेण नदीकच्छे मकरेणाष्टधाकृतः॥ ६॥
162310
162311 चतुर्थो विपश्चित्कुशद्वीपगिरेस्तटे नदीकच्छे मकरेण अष्टधा शकलीकृतो मृत
162312 इत्यर्थः॥ ६॥
162313
162314 इति ते पञ्चतां प्राप्ता दिङ्मुखेष्वाकुलाशयाः।
162315 क्षये चतुर्षु चत्वारो भूपाला लोकपालवत्॥ ७॥
162316
162317 इति अनया रीत्या ते चत्वारो भूपाला विपश्चितः पञ्चतां मरणं प्राप्ता यथा क्षये
162318 कल्पान्ते चत्वारो लोकपालाः पञ्चतां यान्ति तद्वत्॥ ७॥
162319
162320 अथ तेषां ददर्शासौ व्योम्न्येव व्योमरूपिणाम्।
162321 संवित्प्राक्तनसंस्काराद्व्योमात्मावनिमण्डलम्॥ ८॥
162322
162323 अथ मरणानन्तरं तेषां संविद्व्योमात्मा भूत्वा तस्मिन्व्योम्न्येव अवनिमण्डलं
162324 पूर्ववद्ददर्श॥ ८॥
162325
162326 सप्तद्वीपाब्धिवलयं पुरपत्तनभूषणम्।
162327 सुरशैलशिरःपीठं ब्रह्मलोकशिरोमणिम्॥ ९॥
162328
162329 अवनिमण्डलं कीदृशं ददर्श तदाह - सप्तद्वीपेत्यादि। सुरशैलो मेरुः स एव
162330 शिरःपीठमिवोन्नतो यस्य। ब्रह्मलोकोऽत्र मेरुस्थं ब्रह्मगृहम्॥ ९॥
162331
162332 चन्द्रार्कबिम्बनयनं तारामुक्ताकलापकम्।
162333 विलोलमेघवसनं नानावनतनूरुहम्॥ १०॥
162334
162335 देहान्विपश्चितां संविद्ददर्श चतुरोऽपि सा।
162336 प्राग्वत्कल्पपरावृत्तौ द्यौर्दिगन्तानिवाततान्॥ ११॥
162337
162338 कल्पः प्रलयस्तत्परावृत्तौ सर्गारम्भकाले। द्यौरिति तत्र प्रथमसृष्टाः
162339 प्रजापतयो गृह्यन्ते॥ ११॥
162340
162341 आतिवाहिकसंवित्तेस्तेऽव्योम्नि व्योमतात्मकाः।
162342 आधिभौतिकदेहत्वभावान्ददृशुरग्रतः॥ १२॥
162343
162344 अव्योम्न्येव चिदात्मनि व्योमताप्रतीतिस्तदात्मकास्ते विपश्चितः

162345 आतिवाहिकसंवित्तेर्मानसप्रतिभासमात्रस्य विषये प्रातिभासिकदेहे
162346 आधिभौतिकदेहत्वप्रयुक्तस्थौल्यजाड्यादिभावान् अग्रतो ददृशुः ॥ १२ ॥
162347
162348 अस्यात्मकत्वेऽविद्येयं कियती स्यादितीक्षितुम् ।
162349 चत्वारोऽपि प्रवृत्तास्ते संस्कारवशतः पुरः ॥ १३ ॥
162350
162351 अस्यैवं निश्चितस्य देहस्य अज्ञात आत्मा आत्मकस्तद्भावे सति इयं
162352 दृश्यपृथ्व्यादिरूपा अविद्या कियती किंपरिमाणा स्यादितीक्षितुं
162353 पूर्वसंस्कारवशात्प्रवृत्ताः ॥ १३ ॥
162354
162355 दृश्यदर्शनयोरुर्वीमण्डलानुभवाकृतेः ।
162356 निष्ठांन् द्रष्टुमविद्याया भ्रेमुर्द्वीपान्तराणि ते ॥ १४ ॥
162357
162358 दृश्यदर्शनयोर्मध्ये उर्वीमण्डलरूपाया अनुभवाकृतेरविद्याया
162359 निष्ठामियत्तया परिच्छित्तिं द्रष्टुम् ॥ १४ ॥
162360
162361 द्वीपसप्तकमुल्लङ्घ्य समहार्णवसप्तकम् ।
162362 विपश्चित्पश्चिमः प्राप घनभूमौ जनार्दनम् ॥ १५ ॥
162363
162364 तेषु पश्चिमो विपश्चित् घनभूमौ प्रागुक्तस्वर्णघनायां भूमौ क्रीडन्तं
162365 जनार्दनं भाग्योदयवशात्प्राप ददर्श ॥ १५ ॥
162366
162367 तस्मादनुपमं ज्ञानंन् समासाद्य दिगन्तरे ।
162368 तस्मिन्नेव समाधाने सोऽतिष्ठद्वर्षपञ्चकम् ॥ १६ ॥
162369
162370 तस्माज्जनार्दनादनुपमं ज्ञानं ब्रह्मविद्यां समासाद्य तस्मिन्नेव दिगन्तरे सः
162371 समाधाने समाधौ वर्षपञ्चकमतिष्ठत् ॥ १६ ॥
162372
162373 ततो देहं परित्यज्य चित्ते सत्तामुपागते ।
162374 स तत्प्राण एवाकाशं परं निर्वाणमाययौ ॥ १७ ॥
162375
162376 देहं देहभावं परित्यज्य वीतहव्योपाख्यानोक्तरीत्या चित्ते सत्तां सन्मात्ररूपताम् ।
162377 असत्तामिति वा च्छेदः । स विपश्चित् परं निर्वाणं कैवल्यमाययौ यथा तस्य प्राण
162378 आकाशभावमाययौ तद्वत् । उपलक्षणमेतत् षोडशकलानाम् । गताः कलाः
162379 पञ्चदश प्रतिष्ठाम् इति श्रुतेः ॥ १७ ॥
162380
162381 पूर्वः पर्वणि शीतंशुबिम्बपार्श्वे स्थितं वपुः ।
162382 चिन्तयंश्चिरमुन्नष्टदेहश्चन्द्रपुरे स्थितः ॥ १८ ॥
162383
162384 पूर्वः पूर्वदिक्प्रवृत्तो विपश्चित् पर्वणि राकायां शीतांशोः पूर्णचन्द्रस्य
162385 बिम्बपार्श्वे चन्द्रसंनिधाविति यावत् । स्थितं स्वं वपुश्चिरमैन्दववत्
162386 आतद्भावोदयं चिन्तयन्नुन्नष्टदेहो भूत्वा चन्द्रपुरे स्थितः । नन्विदमयुक्तम् ।
162387 चतुर्ष्वपि शरीरेष्वेको हि विपश्चिज्जीवो योगिकायव्यूहेष्विव विभक्तं स्थितः । तस्य
162388 पश्चिमशरीरे विष्णुप्रसादाज्ज्ञानेन निर्वाणप्राप्तौ कोऽन्यः पुनः
162389 पूर्वविपश्चिच्छरीरे चन्द्रोपासनया चन्द्रलोकं यायात् । न ह्येकस्यैव जीवस्य
162390 क्वचिन्मुक्तिः क्वचिद्बन्धश्च युगपत्समञ्जसौ । मुक्तिफलस्य
162391 पाक्षिकत्वपरिच्छिन्नत्वयोरापत्तेः । न चैकस्य देहचतुष्टयधारणेन
162392 जीवचतुष्टयभागो जीवान्तरोत्पत्तिर्वा युक्ता । आद्ये चतुर्धा विभागे पूर्वजीवस्य
162393 नाशापत्तेः । द्वितीयेऽप्यभिनवोत्पन्नानां कामकर्मवासनादिबीजाभावेन
162394 संसारानापत्तेः । न च भोगवैचित्र्यमिव बन्धमोक्षवैचित्र्यं कर्मभिर्मायया वा
162395 अविरोधेन निर्वोढुं शक्यम्
162396 मोक्षस्याकर्मतन्त्रत्वाद्विश्वमायानिवृत्तिश्रुतिविरोधाच्चेति चेत् । सत्यम् ।

162397 अयमत्राशयो भगवतो वसिष्ठस्य लक्ष्यते - न जीवो नाम ब्रह्माकाशादतिरिक्तः
162398 कश्चिदस्ति। ब्रह्मैव ह्यन्तःकरणोपाधिषु मायया विभक्तं
162399 तद्गतकामकर्मवासनानुसारेण संसरदिव विभाव्यमानं जीव इत्युच्यते।
162400 तत्रान्तःकरणानां दीपवद्बहूनां मेलने एकत्वमुपचयश्च भवति। एकस्य च
162401 योगदेवताप्रसादादिनिमित्तवशाद्युगपद्विरुद्धानेकदेश##-
162402 तुल्यदेशकालभोग्यसमानकामकर्मवासनोद्भवस्तदा तद्भोगाय मेलने
162403 एकजीवत्वमेव भवति यावद्विरुद्धदेशभोगहेतुकर्मोद्भवं लाघवादेकमेव
162404 भोगायतनं शरीरं संपद्यते। यथा युधिष्ठिरजीवो धर्मस्य इन्द्रस्य च
162405 मेलनेनैको जीवः यथा वा भीमस्य वाय्विन्द्रयोर्मेलनेनैको जीवः यथा वा अर्जुनजीवो
162406 द्वयोरिन्द्रयोर्नरस्य च मेलनेनैकः यथा वा नकुलसहदेवयोरिन्द्रस्याश्विनोश्च
162407 मेलनेनैको जीवः। द्रौपद्याश्च नारायणीलक्ष्मीगौर्यंशमेलनेनैको जीवः
162408 पञ्चेन्द्रोपाख्यानादिपर्यालोचने प्रसिद्धः। यथा वा
162409 अग्नेर्वायोश्चेन्द्रशापादगस्त्यावतारे मेलनेनैको जीव इत्याद्यूह्यम्। एकस्य
162410 जीवस्यानेकधोपाधिविभागे अनेकजीवतापि। इन्द्रहन्तारं पुत्रं कश्यपाद्गर्भे
162411 प्राप्य अशुचित्वेन सुप्ताया दितेरेकजीवैकशरीरकस्य गर्भस्येन्द्रेण प्रथमं
162412 सप्तधा छेदने सप्त जीवास्तत एकैकस्य सप्तधा छेदने
162413 जातानामेकोनपञ्चाशन्मरुतामेकोनपञ्चाशज्जीवाः संपन्नाः।
162414 वटेक्षुदूर्वादीनां च काण्डशाखारुहां प्रतिशाखं प्रतिकाण्डं च प्ररोहेण
162415 जीवनदर्शनादेकस्य नानाजीवात्मनौपाधिको विभागश्च प्रसिद्धतर एव। इत्थं च
162416 प्रकृतेऽपि चतुर्णा जीवानां यावत्समानकामकर्मोद्भवे एकदेहतया
162417 राज्यपरिपालनम् विरुद्धभिन्नदेशभोग्यकर्माद्युद्भवे च देहादिविभागेन
162418 दिगन्तरप्रसर्पणमिति कल्पने वा एकस्यैव विपश्चिज्जीवस्योपाधिविभागेन
162419 मरुद्वच्चतुर्जीवभावोभूदिति कल्पने वा एकमुक्तौ न सर्वमुक्तिप्रसङ्गः। न च
162420 बहूनां मेलनेनैकजीवारम्भे तस्याभिनवस्य कर्माभावात्संसारानुपपत्तिः।
162421 आरम्भवादेनाभिनवजीवोत्पत्त्यनभ्युपगमात्।
162422 गङ्गायमुनयोर्मेलनेनैक्यापत्तावप्यभिनवगङ्गोत्पत्तिबुद्ध्यभावेन सैवेयं
162423 गङ्गेति प्रत्यभिज्ञया
162424 द्वयोरप्येकगङ्गात्मनावस्थानवदनादिजीवयोरेवैक्येनावस्थाने बाधकाभावात्।
162425 उपाधिद्वयस्य मेलनेनैक्ये उपहितेऽपि मेलनैक्यस्य सर्वप्रत्ययसिद्धत्वात्। एकत्वेनापि
162426 प्राक्तनकर्मभोगसंभवात्। एवमेकस्य चतुर्जीवभावे प्रत्यभिज्ञया चतुर्णामपि
162427 प्राक्तनजीवादभेदेन तद्गतकामकर्मवासनाराशीनां चतुर्धा विभागेन
162428 व्यवस्थितेः संसरणोपपत्तिस्तत्रैकस्य मुक्तावप्यपरस्य
162429 ज्ञानाभावात्संसरणोपपत्तिश्च। न चैवं मुक्तिफलस्य
162430 पाक्षिकत्वपरिच्छिन्नत्वयोः प्रसङ्गः। व्यष्टिजीवानां मुक्तावपि
162431 समष्टिहिरण्यगर्भजीवस्याधिकारान्ते मुक्तिवदुपपत्तेः। न हि समष्ट्यात्मनो
162432 हिरण्यगर्भस्य तत्त्वज्ञानं व्यष्टीनां मुक्त्यभावे
162433 पाक्षिकपरिच्छिन्नमोक्षफलम्। यत्र वर्तमानेऽपि व्यष्टिसमष्ट्यभेदेन
162434 मुक्तिसंकरस्तत्र सांप्रतिके जीवभेदे सति प्राक्तनतदभेदमात्रेण
162435 मुक्तिसंकरापादनस्यानवसर एव। भूयश्चान्ते विश्वमायानिवृत्तिः इति श्रुतिरपि
162436 तत्तज्जीवोपाधिकृत्स्नबीजनिवृत्तिपरा। अन्यथा एकमुक्त्यैव ज्ञानशून्यानामपि
162437 सर्वजीवानां मुक्त्यापत्तेः। तद्यो यो देवानां प्रत्यबुध्यत स एव
162438 तदभवत्तथर्षीणां तथा मनुष्याणाम् बहवो ज्ञानतपसा पूता
162439 मद्भावमागताः इत्याद्यनेकश्रुतिस्मृतिवैयर्थ्यापत्तेश्च। न
162440 चेदानींतनमन्दाधिकारिणो भाविबहुतरजन्मलभ्यमोक्षप्रत्याशया
162441 साधनानुष्ठानं न स्यान्ममैकस्यानेकजीवभावे क्वचिन्मोक्षेऽपि
162442 क्वचिद्बन्धानुवृत्त्यनिवृत्तिः स्यादिति शङ्कया अनिर्मोक्षशङ्कानपनयादिति
162443 वाच्यम्। मोक्षसाधनानुष्ठानप्रवृत्तेः स्वल्पमप्यस्य धर्मस्य त्रायते महतो
162444 भयात् न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति अनेकजन्मसंसिद्धस्ततो याति
162445 परां गतिम् इति स्मृतिप्रामाण्यानुरोधेनोत्तरजन्मसु नानाजीवात्मना अविभागस्य
162446 विभागे वा सहैव साधनसंस्कारैर्विभागात्सर्वत्र क्रमेणावश्यं ज्ञानोदयस्य
162447 वानुमानेन साधनानुष्ठाने प्रवृत्त्युपपत्तेः। वर्णिता हि तथैव
162448 भिक्षुजीवटोपाख्याने भिक्षोः साधनानुष्ठानवतः

162449 प्रामादिकसंकल्पप्राप्तनानाजीवभावस्यान्ते शतरुद्रभावे सर्वेषां
162450 तद्विभागजीवानां ज्ञानावाप्तिर्मुक्तिश्चेति। न चैवं
162451 सर्वजीवमुक्त्यनापत्तिरिष्टापत्तेः। मायादृष्ट्या मायानन्त्यस्य न रूपमस्येह
162452 तथोपलभ्यते नान्तो न चादिर्न च संप्रतिष्ठा नित्यैव सा जगन्मूर्तिस्तया सर्वमिदं
162453 ततम् इत्यादिस्मृतिसिद्धत्वात्। तत्त्वदृष्ट्यातु जीव एव नास्तिकस्य मुक्त्यनापत्तिः। न च
162454 अतोऽन्यदार्तम् इति श्रुतिविरोधः। तस्याः श्रुतेर्व्यक्त्यार्तिमात्रेणाप्युपपत्तेः
162455 प्रवाहानन्त्येऽप्यविरोधात्। चरमव्यक्तिनाशस्यैव प्रवाहनाशतया
162456 सर्वजीवसंसारचरमव्यक्त्यप्रसिद्धौ तन्नाशस्याप्रसिद्धेः। प्रकृते तु
162457 पश्चिमविपश्चित एकस्यैव भगवद्भक्तिपरिपाकोदितात्तदनुग्रहाज्ज्ञानलाभो
162458 नान्येषामिति तस्यैकस्यैव मुक्त्युपपत्तिरिति॥ १८॥
162459
162460 दक्षिणः शाल्मलिद्वीपे राज्यमुत्सन्नशात्रवः।
162461 करोत्यद्यापि न सतो विस्मृतान्यविनिश्चयः॥ १९॥
162462
162463 अथ दक्षिणो विपश्चित्किमकरोत्तत्राह - दक्षिण इति। उत्सन्नाः शात्रवा येन
162464 तथाविधः सन्। सतः पारमार्थिकतत्त्वस्य लाभाद्विस्मृतः अन्यविनिश्चयो
162465 बाह्यार्थनिश्चयो येन तथाविधस्तु न॥ १९॥
162466
162467 उत्तरस्तरलास्फालकल्लोले सप्तमाम्बुधौ।
162468 सहस्रमेकं वर्षाणामुवास मकरोदरे॥ २०॥
162469
162470 सप्तमाम्बुधौ स्वादूदे मकरेण निगीर्णः सन् मकरोदरे वर्षाणां
162471 सहस्रमेकमुवास॥ २०॥
162472
162473 मकरोदरमांसाशी मृते मकरनायके।
162474 मकरोदरतोऽब्धेश्च निर्गतो मकरो यथा॥ २१॥
162475
162476 तत्र किमाहारोऽभूत्तत्राह - मकरोदरेति॥ २१॥
162477
162478 ततोऽशीतिसहस्राणि योजनानां घनावनिम्।
162479 हिमकल्पजलाम्भोधेरुल्लङ्घ्य सुघनोदरीम्॥ २२॥
162480
162481 ततः हिमकल्पजलस्य स्वादूदाम्भोधेरवशिष्टान्यशीतिसहस्राणि योजनान्युल्लङ्घ्य
162482 सुघनं विशालमुद्रं यस्यास्तथाविधां सौवर्णीं महामहीं प्राप्त
162483 इत्युत्तरेणान्वयः॥ २२॥
162484
162485 प्राप्तो दशसहस्राणि योजनानां महामहीम्।
162486 सौवर्णीं सुरसंचारसरणिं मृतवानसौ॥ २३॥
162487
162488 तस्यां भूमौ च मध्ये च विपश्चिन्नाकितामगात्।
162489 उत्तमामग्निमध्यस्थं क्षणात्काष्ठमिवाग्निताम्॥ २४॥
162490
162491 अथ तस्यां भूमौ स विपश्चिन्मृतः सन्नुत्तमां नाकितां देवभावमगात्।
162492 यथाग्निमध्यस्थं काष्ठं क्षणादग्नितां गच्छति तद्वत्॥ २४॥
162493
162494 प्रधानदेवो भूत्वासौ लोकालोकगिरिं गतः।
162495 अस्य भूमण्डलतरोरालवालमिव स्थितम्॥ २५॥
162496
162497 असौ विपश्चित्प्रधानदेवो देवश्रेष्ठो भूत्वा प्राक्तनदिगन्तोपसर्पणवासनया ततो
162498 लोकालोकगिरिं गतः। कीदृशं लोकालोकगिरिम्। उत्तरे
162499 आमेरुशृङ्गमुन्नतत्वात्तरुप्रायस्यास्य भूमण्डलस्य मूले आलवालं सेतुमिव
162500 स्थितम्॥ २५॥

162501
162502 स पञ्चाशत्सहस्राणि योजनानां समुन्नतः।
162503 आलोकलोकाचाराढ्यो भाग एकोऽस्य नेतरः॥ २६॥
162504
162505 अस्य लोकालोकगिरेः एकः प्रथमो भागः सूर्यालोकेन लोकानां जनानामाचारेण
162506 व्यवहारेण चाढ्यः इतरस्तु न॥ २६॥
162507
162508 लोकालोकशिरः प्राप्तं तारकामार्गसंस्थितम्।
162509 अधःस्थिता अपश्यंस्तमुच्चनक्षत्रशङ्कया॥ २७॥
162510
162511 लोकालोकगिरेरारोहणेन तच्छिरःप्राप्तं तं देवविपश्चितं अधःस्था
162512 जनानक्षत्रशङ्कया अपश्यन्॥ २७॥
162513
162514 तस्मात्प्रदेशात्तत्पारे तमस्तस्य महागिरेः।
162515 चतुर्दिक्कं महाखातं नभः शून्यमनन्तकम्॥ २८॥
162516
162517 तस्य महागिरेः पारे परभागे तमः। चतुर्दिक्कं परितः महत् खातं परिखाकारो
162518 गर्तः। नभ इव सर्वप्राणिशून्यमनन्तकमनेकयोजनविस्तृतम्॥ २८॥
162519
162520 ततो भूगोलकोऽयं हि समाप्तो वर्तुलाकृतिः।
162521 नभःशून्यं महाखातं ततस्तिमिरपूरितम्॥ २९॥
162522
162523 तत्रालिकज्जलतमालनभोन्तरालनीलं तमो न च मही न च जंगमादि।
162524 नालम्बनं न च मनागपि वस्तुजातं किंचित्कदाचिदपि संभवतीति विद्धि॥ ३०॥
162525
162526 हे राम तत्र तस्मिन् खाते अलिरिव कज्जलमिव तमाल इव नभोन्तराले नीलं तम एवास्ति। न
162527 च मही न च जंगमादि प्राणिजातमस्ति। आलम्बनमाश्रयश्च नास्ति। न च
162528 किंचिद्वस्तुजातं कदाचिदपि संभवतीति त्वं विद्धीत्यर्थः॥ ३०॥
162529
162530 इत्यार्षे श्रीवा० वा० दे० मो० निर्वा० उ० अवि० विप० विपश्चिज्जन्मान्तराचरणं नाम
162531 षड्विंशाधिकशततमः सर्गः॥ १२६॥
162532
162533 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
162534 विपश्चिज्जन्मान्तराचरणं नाम षड्विंशाधिकशततमः सर्गः॥ १२६॥
162535
162536 सप्तविंशाधिकशततमः सर्गः १२७
162537
162538 श्रीराम उवाच।
162539
162540 भगवन्कथयैतन्मे कथं भूगोलकं स्थितम्।
162541 कथमृक्षगणो याति लोकालोकः कथं गिरिः॥ १॥
162542
162543 भूमिनक्षत्रचक्रादेः स्थितिस्तत्परतो नभः।
162544 ब्रह्माण्डखर्परद्वन्द्वस्थितिश्चात्रोपवर्ण्यते॥
162545
162546 प्रासङ्गिको रामप्रश्नः। निराधारं भूगोलकं कथं स्थितम्। ऋक्षगणो
162547 नक्षत्रचक्रं च निराधारं कथं याति भ्रमति। त्वदुक्तो गिरिश्च कथं लोकालोकः।
162548 तत्संज्ञानिमित्तं किमित्यर्थः॥ १॥
162549
162550 श्रीवसिष्ठ उवाच।
162551
162552 यथा संकल्परचिता शिशोर्व्योमनि तिष्ठति।

162553 वीटा चिन्मात्रबालेन कल्पिता भूस्तथाम्बरे ॥ २ ॥
162554
162555 तत्राद्यप्रश्नस्य वसिष्ठः प्रथममुत्तरमाह - यथेति। वीटा कन्दुकः।
162556 चिन्मात्रबालेन हिरण्यगर्भेण कल्पिता भूरपि तथा अम्बरे आकाशे तिष्ठति न
162557 पततीत्यर्थः ॥ २ ॥
162558
162559 यथा तिमिरिकाक्षाणां केशचन्द्रादिदर्शनम्।
162560 चिदाकाशस्य सर्गादौ तथा पृथ्व्यादिदर्शनम् ॥ ३ ॥
162561
162562 मिथ्यात्वाद्वा पतनसंभावना वारणीयेत्याह - यथेति। तिमिरमस्यास्तीति तिमिरिकम्
162563 । मत्वर्थीयष्ठन् ॥ ३ ॥
162564
162565 यथा संकल्पनगरं धार्यमाणं न दृश्यते।
162566 धार्यते धार्यते मा च तथोर्व्यनुभवश्चितेः ॥ ४ ॥
162567
162568 धार्यमाणं केनचिदाधारेणाध्रियमाणं न दृश्यते नानुभूयते।
162569 सांकल्पिकैरेव स्तम्भकुड्यादिभिर्धार्यते यद्यपि तथापि
162570 सांकल्पिकस्तम्भादेरवस्तुत्वान्मा धार्यते न धार्यते च तथोर्व्यपीत्यर्थः ॥ ४ ॥
162571
162572 यद्यथा यावदाभाति चिति चित्त्वात्स्वभावतः।
162573 तत्तथा तावदाभाति तत्र तत्र तदात्मकम् ॥ ५ ॥
162574
162575 सर्ववस्तुस्वभावानां चिदधीनसिद्धिकत्वादधृतगोलकाकारेण चिता सिद्धाया
162576 भूमेस्तादृश एव स्वभावो वाऽनुमीयतामित्याशयेनाह - यद्यथेति।
162577 तदात्मकमिति वस्तुस्वभावस्तथेति तत्प्रकारस्वभावस्तावदिति तदायुर्नियतिस्वभावः
162578 परिगृह्यते ॥ ५ ॥
162579
162580 तिमिराक्रान्तनेत्रस्य केशोण्ड्रकमिवाम्बरे।
162581 चिन्मात्रस्य महीगोलो यो भातः स तथा स्थितः ॥ ६ ॥
162582
162583 केशचन्द्रादिदर्शनमित्यत्र केशदर्शनं स्पष्टयति - तिमिरेति। तथा भ्रान्त्यैव
162584 स्थितः ॥ ६ ॥
162585
162586 ऊर्ध्वं वहन्त्यः सरितस्तदधस्ताद्धुताशनः।
162587 चिति चेत्स्वप्नवद्भाति तत्तथा तत्स्थितं भवेत् ॥ ७ ॥
162588
162589 नद्यादीनां निम्नवाहित्वस्वभावादिविपरीतस्वभावोऽपि चेत् क्वचिच्चिता भास्येत
162590 तर्ह्यस्तीत्येव प्रतिपत्तिः स्यान्न नास्तीति यथा स्वप्ने इत्याह - ऊर्ध्वमिति।
162591 तासामधस्तादधोमुखज्वालो हुताशनश्चिति चेत्सर्गादौ भाति तत्प्रतीतं
162592 वैपरीत्यमिदानीमपि स्थितमेव भवेन्नास्थितम् ॥ ७ ॥
162593
162594 तस्मात्पतन्ती भूर्भाता पतत्येवानिशं जगत्।
162595 उत्पतन्ती तु चिद्भाता तथा नानात्मिका भवेत् ॥ ८ ॥
162596
162597 अत एव वादिनां भूमेरजस्रपतनोर्ध्वगमनभ्रमणप्लवनादिकल्पनादि
162598 तत्तद्बुद्ध्यवच्छिन्नचित्सत्तया सत्यैवेत्याशयेनोपसंहरति - तस्मादिति। तथाहि
162599 - वादिनः केचिद्गुरुत्वादजस्रं महाकाशे पतत्येव भूः
162600 आकाशस्याधोदेशावध्यभावाच्च न क्वचिदस्याः पतनं विश्राम्यति
162601 विपुलतरत्वाच्च तत्पतनमस्माभिर्न विभाव्यते। ज्योतिश्चक्रं चोभयतो मेरुसंलग्ने
162602 ध्रुवद्वये बद्धं सहैव पतति। तच्च
162603 लघुतरत्वात्पतनवशादेवानादिकालाद्भ्रमतीति मन्यन्ते। अन्ये तु योऽप्सु नावं
162604 प्रतिष्ठितां वेद प्रत्येव तिष्ठति इति श्रुतेर्भूम्याधारोऽर्णवोऽस्ति तत्रानिबद्धा नौरिव

भ्रमन्त्येवास्ते भूः प्रलये च तत्रैव निमज्जति सर्गकाले च
जलतुम्बिकान्यायेनोर्ध्वमायातीति। अन्ये तुमन्यन्ते। उपर्यधस्तात्परितश्च
भूमेरपरिच्छिन्नं जलमेवास्ति। तत्रान्तश्छिद्रेषु भूमेः सप्तलोकाः
पवनपूर्णान्तरालाः सन्ति। तत्रान्तरस्य
वायोर्लाघवातिशयबलाज्जलमग्नतुम्बीफलमिव सततमूर्ध्वं गच्छतीति। अपरे तु
मन्यन्ते भूगोलात्परित आकाश एव। तस्य चानन्त्याद्गुरुत्वान्मेरुसंलग्नदेवदृशा
दक्षिणभागस्यैवाधोभागत्वाद्दक्षिणत एव सदा पततीति। अन्ये त्वासुरा वादिनः
पातालमेवोर्ध्वदेशं मन्यमाना देवाभिमतामूर्ध्वदिशमध इति कल्पयन्त
उत्तरत एव गुरुत्वाद्भूः पततीति मन्यन्ते। अनयैव रीत्या प्राच्यपाश्चात्या अपि
स्वस्वदेशमेवोर्ध्वं मन्यमानाः प्राचीप्रतीच्योरपि तपनं मन्यन्ते। अन्ये तु
ज्योतिश्चक्रं न भ्रमति किंतु भूरेव स्वस्थाने भ्रमति तद्द्वयमविभावयन्तो
नौस्थास्तरुचलनमिव ज्योतिश्चक्रं भ्रमत्पश्याम इति। अपरे तु भूमिरेव
सर्वतोऽधस्तस्याः परितः स्थितानां जनानां दृष्ट्या तत्तच्छिरोदेशोपलक्षिताः
सर्वा एवोर्ध्वदिशः। तत्र गुरुत्वाद्यस्यामधोदिशि पृथिव्याः पतनं संभाव्येत
सैव निर्धारितरूपा नास्तीति विनिगमनाविरहात्क्वापि न पततीति स्वस्थाने स्थिरैवास्ते इति।
तेषां तेषां वादिनां स्वस्वबुद्ध्यवच्छिन्नचित्सत्तया सर्वं सत्यं स्वतस्तु न
किंचिदपि सत्यमिति भावः। तथा तत्तद्वानानुसारेण विरुद्धनानात्मिकैव भवेत्॥ ८॥

स्तब्धभाता स्थिता स्तब्धा सालोका तु प्रकाशिनी।
निरालोका निरालोकलोकानामात्मनि स्थिता॥ ९॥

स्तब्धा निश्चलेति भाता स्तब्धैव। दिवारात्रं ये प्राणिनोऽप्रतिहतचक्षुषस्तद्दृष्ट्या
सदैव सालोका प्रकाशवती। एवं निरालोकलोकानां जात्यन्धानां दृशा सदैव
निरालोका। आत्मनि बुद्ध्यवच्छिन्नचिति॥ ९॥

चिद्वानैकानुसारेण ताराचक्रं तथा मही।
असदेव सदैवेदं भातीदमविखण्डितम्॥ १०॥

एवं सदसद्वादिनां चिद्वानानुसारेण तथापि ताराचक्रं मही च तथैव
भवतीत्याह - चिद्वानेति॥ १०॥

आलोकालोकमेवाथ नभःखातं ततो महत्।
तम एकार्णवाकारं स्थितं तत्र क्वचित्क्वचित्॥ ११॥

प्रश्नद्वयोत्तरे समाप्ते तृतीयप्रश्नोत्तरमारभते - आलोकालोकमिति। इयं भूः
आलोकालोकं लोकालोकमभिव्याप्य स्थिता तावत्येव। अथ तदनन्तरं नभोरूपं
खातं गर्तो वलयाकारस्तत्र च महत्तमस्तत्रैकार्णवाकारम्। क्वचित्क्वचिदित्युक्त्या
तच्छृङ्गद्वयान्तराल ईषत्सौरालोकप्रवेशोऽप्यस्तीति गम्यते॥ ११॥

दूरत्वादृक्षचक्रस्य करालत्वान्महागिरेः।
क्वचित्तमः क्वचित्तेजस्तत्रैवाचत्वरेऽपि च॥ १२॥

तस्य लोकालोकनामप्रवृत्तौ निमित्तमाह - दूरत्वादिति। ऋक्षचक्रस्य
नक्षत्रचक्रस्य खातात्परतः परिवर्तिनः अतिदूरत्वात् गिरेश्च करालत्वात्क्वचिदेकभागे
तमः।चत्वरशब्देनाधित्यका गौण्या वृत्त्योच्यते। आचत्वरेऽधित्यकापर्यन्ते
क्वचिद्भागे तेजोपि चेति स लोकालोकाख्य इत्यर्थः॥ १२॥

लोकालोकगिरेः पारे स्थितादाकाशमण्डलात्।
दशदिक्कं सुदूरेण ऋक्षचक्रं विवर्तते॥ १३॥

दूरत्वमेव दर्शयति - लोकालोकेति। विवर्तते परिभ्रमति॥ १३॥

162657 आपातालदिवो नद्धमृक्षचक्रं तदम्बरे |
162658 दशदिक्कं प्रसरति पतदूर्ध्वाद्दतेऽभितः || १४ ||
162659
162660 अध ऊर्ध्व च कियद्विस्तृतं तत्राह - आपातालदिव इति | सर्वोर्ध्वाद्ध्रुवाद्दते
162661 अन्यत्सर्व पतद्भ्रमत् || १४ ||
162662
162663 भूलोकमेव पातालयुतं नक्षत्रमण्डलम् |
162664 पर्येति लोकालोकान्ते नान्यच्चित्कल्पनाच्च तत् || १५ ||
162665
162666 इदं नक्षत्रमण्डलं पातालसहितं कृत्स्नं भूलोकं पर्येति प्रदक्षिणीकरोति |
162667 तच्च चित्कल्पनादन्यन्न || १५ ||
162668
162669 सलोकालोकभूलोकद्विगुणात्खादनन्तरम् |
162670 पकवाक्षोटस्य भिस्सेव स्थितं नक्षत्रमण्डलम् || १६ ||
162671
162672 पक्कस्याक्षोटफलस्य भिस्सा बीजसारावरणभागैव || १६ ||
162673
162674 द्विगुणा नभसस्तस्माद्दक्षचक्रस्य पुष्टता |
162675 दशदिक्कं विसरतो बिल्वत्वक्सद्दशस्थितेः || १७ ||
162676
162677 तस्माद्भूलोकद्विगुणान्नभसः ऋक्षचक्रस्य द्विगुणा पुष्टता अन्तर्दलविस्तारः || १७
162678 | |
162679
162680 संविद्घनस्य कचनं याद्दशं कल्पनात्मकम् |
162681 यदित्थं संनिवेशेन न्वियं जागती स्थितिः || १८ ||
162682
162683 संविद्घनस्य शबलब्रह्मणः सत्यसंकल्पात्मकं याद्दशं कचनं
162684 तदेवेत्थं सन्निवेशेन ब्रह्माण्डतदवयवरूपेण जागती स्थितिरित्यर्थः || १८ ||
162685
162686 नक्षत्रचक्राद्द्विगुणं ततोऽन्यद्विद्यते नभः |
162687 तच्च क्वचित्प्रकाशाढ्यं क्वचित्सान्द्रतमोमयम् || १९ ||
162688
162689 ततः परतः पूर्वोक्तनभसोऽन्यन्नभो विद्यते || १९ ||
162690
162691 पर्यन्ते तस्य नभसः स्थितं ब्रह्माण्डखर्परम् |
162692 एकमूर्ध्वे परमधो गगनं मध्यमेतयोः || २० ||
162693
162694 योजनानां कोटिशतं पुष्टं वज्रद्दढं च तत् |
162695 स्थितं संवेदमयं व्योम्नि व्योममयात्मकम् || २१ ||
162696
162697 तदन्तर्दलपरिमाणमाह - योजनानामिति | संवेदनमयं कल्पनामात्ररूपं
162698 परमार्थतो व्योमविकारपञ्चीकृतभूतकार्यभूतं व्योम चिदाकाशमेव || २१ ||
162699
162700 सर्वदिक्कं महागोले नभसि स्वर्कतारकम् [स्वर्गतारकं इति मूले
162701 व्याख्यायां च पाठः |] |
162702 किमत्रोर्ध्वमधः किं स्यात्सर्वमूर्ध्वमधश्च वा || २२ ||
162703
162704 महागोलाकारे नभसि स्वर्कतारकं ज्योतिश्चक्रं सर्वदिक्कं तिष्ठति | एवं सति
162705 किमत्र अस्मिन् ज्योतिश्चक्रे किमूर्ध्वं किमधः स्यात् यदि स्यात्तर्हि सर्वमूर्ध्व सर्व
162706 चाधः | चशब्दात्सर्वं दक्षिणोत्तरपूर्वपश्चात्तोऽपि वा स्याच्दित्यर्थः || २२ ||
162707
162708 पतनमुत्पतनं गमनं स्थितं चित इति स्फुरितं न तु वस्तु तत् |

162709 पतनमस्ति न चोत्पतनं न वा गमनमागमनं स्थितमित्यपि ॥ २३ ॥
162710
162711 सर्ववस्तूनां पतनं उत्पतनं तिर्यग्गमनं स्थितम् । एकत्रावस्थानं यद्भाति
162712 तच्चितः प्रत्यगात्मनः स्फुरितं प्रतिभानमात्रमेव । वस्तुतस्तु न पतनमस्ति न
162713 चोत्पतनमस्ति न वा गमनमागमनं स्थितमवस्थितं किंचिदित्यप्यस्ति ।
162714 अद्वयत्वविरोधादित्यर्थः ॥ २३ ॥
162715
162716 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० नि० उ० अ० वि० भूगोलनिर्णयो नाम
162717 सप्तविंशाधिकशततमः सर्गः ॥ १२७ ॥
162718
162719 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
162720 भूगोलनिर्णयो नाम सप्तविंशाधिकशततमः सर्गः ॥ १२७ ॥
162721
162722 अष्टाविंशाधिकशततमः सर्गः १२८
162723
162724 श्रीवसिष्ठ उवाच ।
162725
162726 अस्मादादेर्जनस्यैतत्प्रत्यक्षं नानुमानिकम् ।
162727 शुद्धबोधशरीरेण नाधिभौतिकरूपिणा ॥ १ ॥
162728
162729 तमः श्वभ्रं समुत्तीर्य ब्रह्माण्डावरणानि च ।
162730 विपश्चितोऽत्र भ्रमणमविद्यायामुदीर्यते ॥
162731
162732 इदं ज्योतिश्चक्रतत्परिमाणादिकं त्वया केन प्रमाणेनावगतं तत्राह -
162733 अस्मदादेरिति । जनस्य योगिजनस्य योगज्ञानाभ्यासशोधितत्वाच्छुद्धो यस्तत्त्वबोधः
162734 सर्वजगत्तत्त्वसाक्षात्कारस्तत्प्रधानेनातिवाहिकशरीरेण न
162735 त्वाधिभौतिकस्थूलरूपेणेत्यर्थः ॥ १ ॥
162736
162737 एतदस्मज्जगत्स्वप्ने नान्येषु कथितं मया ।
162738 अन्येष्वस्ति जगत्स्वप्नेष्वेवमन्यापि च स्थितिः ॥ २ ॥
162739
162740 एतद्यन्मया लोकालोकज्योतिश्चक्रादिसंस्थानं कथितं तदस्मद्दृष्टे जगत्स्वप्ने
162741 प्रसिद्धं कथितमन्येषु तु न कथितम् । अन्येषु ब्रह्माण्डान्तरलक्षणेषु
162742 जगत्स्वप्नेष्वप्येवमेवोत्सर्गतः स्थितिः क्वचिदन्यादृश्यपीत्यर्थः ॥ २ ॥
162743
162744 जगत्स्वप्नेषु चान्येषु संस्थानकथनेन किम् ।
162745 न ह्यौपयोगिकादन्या कथा भवति धीमताम् ॥ ३ ॥
162746
162747 तर्हि तदपि वद तत्राह - जगदिति ॥ ३ ॥
162748
162749 सर्वेषामुत्तरे मेरुर्लोकालोकश्च दक्षिणे ।
162750 येषामित्यनुमाऽशेषभूथौघे तेन पण्डिताः ॥ ४ ॥
162751
162752 हे पण्डिताः तेन उत्सर्गेण तु सर्वेषां ब्रह्माण्डानां मध्ये
162753 सर्वद्वीपसमुद्राणामुत्तरे मेरुर्लोकालोकस्तु दक्षिणे इति अशेषभूथौघे येषां
162754 जिज्ञासा तेषामनुमानमनुमा प्रवर्ततामित्यर्थः ॥ ४ ॥
162755
162756 प्रत्यक्षमेतदन्येषां यत्र तेऽन्ये जगद्भ्रमाः ।
162757 नास्माकं विषये ते हि तथा संस्थानशोभिनः ॥ ५ ॥
162758
162759 ये त्ववान्तरविशेषास्ते तत्रत्यानामेव प्रत्यक्षा नात्रत्यानामित्याह - प्रत्यक्षमिति
162760 ॥ ५ ॥

162761
162762 सर्वेषामुत्तरे मेरुर्लोकालोकश्च दक्षिणे ।
162763 सप्तद्वीपनिवासानां नान्येषामिति निश्चयः ॥ ६ ॥
162764
162765 अन्येषां ब्रह्माण्डाद्बहिर्गतानाम् ॥ ६ ॥
162766
162767 प्रकृतं शृणु हे राम तद्ब्रह्माण्डकवाटकम् ।
162768 यत्प्रमाणं ततो वारि बाह्ये दशगुणं स्थितम् ॥ ७ ॥
162769
162770 ब्रह्माण्डस्य कवाटकं प्रागुक्तखर्परद्वयं यत्प्रमाणं
162771 प्रागुक्तशतकोटियोजनप्रमाणं ततः परं बाह्ये दशगुणं वारि जलावरणं
162772 स्थितम् ॥ ७ ॥
162773
162774 तद्ब्रह्माण्डकवाटं तु तृणं तृणमणिर्यथा ।
162775 धत्ते वारि स्वभावेन नित्यं कल्पकरत्नवत् ॥ ८ ॥
162776
162777 ननु तस्य क आधारस्तत्राह - तदिति । तद्ब्रह्माण्डकवाटमेव पार्थिवभागतया
162778 आकर्षणशक्त्या तद्वारि धत्ते । यथा
162779 तृणमणिस्तृणचुम्बकमणिविशेषस्तृणमाकर्षणशक्तिरूपस्वभावेन धत्ते ।
162780 यथा वा कल्पवृक्षोऽर्थिवाञ्छितानि रत्नानि धत्ते तद्वदित्यर्थः ॥ ८ ॥
162781
162782 सर्वेषामेव भावानां स्थितः कल्पकरत्नवत् ।
162783 सर्वदा पार्थिवो भागस्तेनात्रैते पतन्त्यलम् ॥ ९ ॥
162784
162785 तर्हि मेघनिर्मुक्तजलकरकादयः समुद्रनद्यादिषु न पतेयुर्जले
162786 आकर्षणशक्त्यभावात्किंतु दूरादपि तीरभूमिमेवोपसृत्य तत्र पतेयुस्तत्राह -
162787 सर्वेषाम्ती । एते वृष्टिजलादयः ॥ ९ ॥
162788
162789 जलाद्दशगुणं बाह्ये स्थितं तेजो निरिन्धनम् ।
162790 आकाशविशदं शान्तस्तब्धज्वालोदरोपमम् ॥ १० ॥
162791
162792 प्रागुक्ताद्ब्रह्माण्डावरणजलाद्बाह्ये ॥ १० ॥
162793
162794 तस्माद्दशगुणो बाह्ये संस्थितो वायुरायतः ।
162795 वायोर्दशगुणं बाह्ये व्योम तिष्ठति निर्मलम् ॥ ११ ॥
162796
162797 ततः परतरं शान्तं ब्रह्माकाशमनन्तकम् ।
162798 न प्रकाशं न च तमो महाचिद्घनमव्ययम् ॥ १२ ॥
162799
162800 ब्रह्माकाशमविद्याशबलब्रह्माकाशम् । चिद्घनं प्रज्ञानघनं सुषुप्तिकल्पम् ॥
162801 १२ ॥
162802
162803 अनादिमध्यपर्यन्ते तस्मिन्ब्रह्ममहाम्बरे ।
162804 महाचिन्नाम्नि सर्वात्मन्ययोनिर्वाणरूपिणि ॥ १३ ॥
162805
162806 अयोघनवदच्छिद्रनिर्वाणरूपिणि ॥ १३ ॥
162807
162808 ब्रह्माण्डानां तादृशानां दूरे दूरे पुनः पुनः ।
162809 मिथोलक्षाणि लक्षाणि कचन्त्युपरमन्ति च ॥ १४ ॥
162810
162811 कचन्त्युद्भवन्ति । उपरमन्ति प्रलीयन्ते ॥ १४ ॥
162812

162813 न किंचित्कचयत्यत्र समे कचनरूपिणि।
162814 तादृङ्मयं तथारूपं तदात्मन्येव संस्थितम्॥ १५॥
162815
162816 किं तत्कारणं यद्ब्रह्माण्डलक्षाणि कचयति तत्राह - न किंचिदिति। किंतु
162817 तद्ब्रह्मैवात्मनि अविद्यया तादृङ्मयमेवावस्थितम्॥ १५॥
162818
162819 एष ते कथितः सर्वो दृश्यानुभवनक्रमः।
162820 अधुना शृणु किंवृत्तं लोकालोके विपश्चितः॥ १६॥
162821
162822 प्रश्नोत्तरमुपसंहृत्य प्रकृतं श्रावयति - एष इति॥ १६॥
162823
162824 स्वभ्यस्तपूर्वसंस्कारो विलसन्निश्चयेरितः।
162825 लोकालोकगिरेर्मूर्ध्नस्तमःश्वभ्रं पपात सः॥ १७॥
162826
162827 सुष्ठु अभ्यस्तः पूर्वो दिगन्तदर्शनोद्योगसंस्कारो येन तथाविधनिश्चयेनेरितो
162828 विपश्चित्तस्य लोकालोकगिरेर्मूर्ध्नः शिखरात्परतः प्रागुक्तं तमःश्वभ्रं पपात
162829 विवेश॥ १७॥
162830
162831 ददर्श तत्र शिखरप्रतिमैर्विहगैर्वपुः।
162832 विकर्तितं मनोदेहं प्रसृतं च स्वचिन्तिते॥ १८॥
162833
162834 तत्र च निजं स्वं देववपुः
162835 पर्वतशिखरप्रतिमैर्महत्तरैर्विहगैर्गृध्रादिभिर्विकर्तितं विच्छिद्य भक्षितं
162836 ददर्श। तदनन्तरं च खचिन्तिते दिगन्तदर्शने मनोदेहमेव प्रवृत्तं ददर्श॥
162837 १८॥
162838
162839 देशस्य तस्य पुण्यत्वाद्देहं तच्चातिवाहिकम्।
162840 आधिभौतिकताबोधं नानयन्निर्मलाशयः॥ १९॥
162841
162842 तस्य मरणप्रदेशस्य
162843 पुण्यत्वात्स्थूलदेहभावगोचरसंस्कारोद्बोधकचतुर्विधभूतग्रामादि##-
162844 अनयत्। आतिवाहिकभावं न विसस्मारेति यावत्॥ १९॥
162845
162846 तावन्मात्रप्रबोधोऽसौ नाधिकं बोधमागतः।
162847 चिन्तयित्वाऽसितं कार्यन् बभूव प्रकृतेर्हितः॥ २०॥
162848
162849 तावन्मात्रः स्थूलदेहातिरिक्तात्ममात्रगोचरः प्रबोधो यस्य तथाविधोऽसौ विपश्चित्
162850 ततोऽधिकं देहत्रयातिरिक्तशुद्धचिन्मात्रात्ममात्रगोचरं बोधं नागतः। ततो
162851 दिगन्तदर्शनलक्षणं कार्यमसितमपर्यवसितं चिन्तयित्वा
162852 प्रकृतेरुपसर्पणस्वभावस्य हितः अनुकूलो बभूव नोपरत इत्यर्थः॥ २०॥
162853
162854 श्रीराम उवाच।
162855
162856 अदेहं प्रसरत्येतच्चित्तं कार्ये कथं मुने।
162857 आतिवाहिकसंवित्तेर्बोधः स्यात्कीदृशोऽधिकः॥ २१॥
162858
162859 नन्वदेहं चित्तं बहिः कथं प्रसरति गच्छति। तदभ्युपगमेपि पूर्व
162860 देवशरीरेणापि नभोवर्त्मन्यप्रतिहतगतिः स आसीत्ततस्तन्नाशेऽपि मनोदेहेन
162861 नभोमार्गे गच्छतस्तस्य पूर्वदेहान्मनोमात्रमयदेहस्य को विशेषोऽभूदिति रामः
162862 पृच्छति - अदेहमिति॥ २१॥
162863
162864 श्रीवसिष्ठ उवाच।

162865
162866 संकल्पपथिकत्वेन यथान्तःपुरवासिनः।
162867 इदं मनः प्रसरति तथास्य प्रसृतं मनः॥ २२॥
162868
162869 तत्राद्यप्रश्नस्योत्तरमाह - संकल्पेत्यादिना। न हि संकल्पस्य पथि प्रसरो
162870 देहप्रसरमपेक्षते इत्यर्थः॥ २२॥
162871
162872 भ्रमे स्वप्ने मनोराज्ये मिथ्याज्ञाने कथाश्रुतौ।
162873 यथा मनः प्रसरति तथा तत्प्रसृतं मनः॥ २३॥
162874
162875 पतन्ति तु शरीरं तदातिवाहिकमुच्यते।
162876 आधिभौतिकधीर्भाति विस्मृत्यात्रैव कालतः॥ २४॥
162877
162878 द्वितीयस्योत्तरमाह - पतन्तीति। तु शब्द आधिभौतिकापेक्षया विशेषद्योतनार्थः।
162879 यस्मिंस्तु देहे ते भ्रमस्वप्नमनोराज्यादयः पतन्ति प्रसरन्ति
162880 तच्छरीरमातिवाहिकमित्यर्थः। अत्रातिवाहिके देह एव तद्भावविस्मृत्या
162881 आधिभौतिकताबुद्धिरुदेतीति प्रागुक्तस्यानुवादो विशेषप्रदर्शनार्थः॥ २४॥
162882
162883 अते तदान्तर्धिमायाते सर्परज्जुभ्रमोपमे।
162884 आधिभौतिकदेहेऽस्मिञ्छिष्यते त्वातिवाहिकः॥ २५॥
162885
162886 कदा तर्हि आधिभौतिकभावनिवृत्त्या आतिवाहिकपरिशेषस्तत्राह - ते तदेति। ते इति
162887 पदं पूर्वश्लोकान्वयि। विचारेण आधिभौतिकविभ्रमे अन्तर्धिमायाते सति तदा
162888 आतिवाहिकः शिष्यते॥ २५॥
162889
162890 आतिवाहिक एषोऽङ्ग निपुणं प्रविचार्यताम्।
162891 चिन्मात्रव्यतिरेकेण यावदत्रान्यदस्ति नो॥ २६॥
162892
162893 आतिवाहिकदेहनिवृत्त्या चिन्मात्रपरिशेषेऽपि विचार एवोपाय इत्याशयेनाह -
162894 आतिवाहिक इति। निपुणं तेजसा सोम्य शुंगेन सन्मूलमन्विच्छ इति
162895 श्रुतिदर्शिततत्त्वदर्शनोपायेन॥ २६॥
162896
162897 देशाद्देशान्तरप्राप्तौ यन्मध्ये संविदो वपुः।
162898 चिन्मात्रस्यास्य तद्रूपमनन्तस्यैकरूपिणः॥ २७॥
162899
162900 निर्विषयचिन्मात्रा प्रसिद्धिस्तु प्राग्बहुशो वारितैवेत्याशयेन प्राग्बहुशः
162901 पठितमेव श्लोकार्धं पुनः पठति - देशादिति। तद्रूपं प्रसिद्धमेवेति शेषः॥
162902 २७॥
162903
162904 क्व द्वैतं क्व च वा द्वेषः क्व रागादि तु कथ्यताम्।
162905 सर्वं शिवमनाद्यन्तं परो बोध इति स्मृतः॥ २८॥
162906
162907 तत्र च द्वैतरूपस्य विषयस्य तत्प्रयुक्तरागद्वेषादेश्च प्रसक्तिरेव नास्तीत्याह -
162908 क्वेति॥ २८॥
162909
162910 निर्मनोमननं शान्तमासितं बोध उत्तमः।
162911 आतिवाहिकदेहस्थो न तं बोधमुपागतः॥ २९॥
162912
162913 यन्निर्गतमनोमननमासितमवस्थानं स एवोत्तमो बोधः। आतिवाहिकदेहस्थो
162914 विपश्चित्तु तं बोधं नोपागतः किंतु तद्विबोधः आतिवाहिकदेहमात्रात्मबोधवान्।
162915 अत एवाग्रे विसरन्मनो ददर्शेति परेणान्वयः॥ २९॥
162916

विपश्चित्तद्विबोधोऽसौ ददर्श विसरन्मनः ।
आतिवाहिकबोधेन गर्भवासोपमं तमः ॥ ३० ॥

गर्भवासोपमं तमश्च ददर्श ॥ ३० ॥

तमसोऽन्ते विरिञ्चाण्डकवाटच्छेदभूतलम् ।
वज्रसारं हेममयं कोटियोजनविस्तृतम् ॥ ३१ ॥

विरिञ्चाण्डस्य कपाटप्रायो यश्छेदः खण्डस्तद्रूपं भूतलं
संपुटविभागसंधिभूतमिति यावत् ॥ ३१ ॥

तदन्ते प्राप सलिलं तस्मादष्टगुणं ततः ।
कपाटभूम्यैव समं स्थितमर्णवपृष्ठवत् ॥ ३२ ॥

तदुत्तरं तदावरणप्राप्तिमाह - तदन्ते इति । कवाटभूम्यैव समं तुल्यतया
द्वीपान्ते अर्णवपृष्ठवत्स्थितम् । जलस्य
निराधारावस्थानायोगादण्डकपालखण्डमाश्रित्य तद्वदेव विभज्य स्थितमिति
भावः ॥ ३२ ॥

तमतीत्य ततः प्राप तेजोऽर्कगणभीषणम् ।
प्रलयाग्निघनज्वालापिण्डकोटरभास्वरम् ॥ ३३ ॥

तैजसाद्यावरणस्य तु न जलवदाधारापेक्षेति संधिविभागाभावात्पिण्डकोटरमिव
भास्वरमित्युक्तिः ॥ ३३ ॥

दाहशोकादिमुक्तेन वपुषा मानसेन तत् ।
तत्र गच्छन्स बुबुधे वहनं पूर्ववासितम् ॥ ३४ ॥

तत्र तैजसावरणे गच्छन् स विपश्चित्तदुत्तरं वाय्वावरणे वहनं बुबुधे ॥ ३४ ॥

उह्यमानो विवेदासावात्मानं त्वातिवाहिकम् ।
चित्तमात्रात्मनः स्वस्य किमिवोह्यत इत्यपि ॥ ३५ ॥

तच्च तस्य स्वप्नकल्पनाप्रायं न वास्तवमिति बुबुधे इति पदस्य तात्पर्यमित्याह -
उह्यमान इति ॥ ३५ ॥

इति बोधेन धीरात्मा तं तताराऽनिलार्णवम् ।
प्राप तद्विततं व्योम तस्माद्दशगुणं स्थितम् ॥ ३६ ॥

तादृशवेदनबलादेव वाय्वावरणतरणं तस्येत्याह - इतीति ॥ ३६ ॥

तदतिक्रम्य स प्राप ब्रह्माकाशमनन्तकम् ।
यत्र सर्वं यतः सर्वं यन्न किंचिच्च किंचन ॥ ३७ ॥

ब्रह्माकाशमविद्याशबलब्रह्माकाशम् ॥ ३७ ॥

मनसा प्रभ्रमंस्तत्र दूराद्दूरतरं ययौ ।
तेन दृष्टं च पृथ्व्यापस्तेजो वायुस्तथा जगत् ॥ ३८ ॥

दृष्टं संस्कारवशादिति भावः ॥ ३८ ॥

पुनः संसाररचनाः पुनः सर्गाः पुनर्दिशः ।

पुनर्महीधरा व्योम पुनर्देवाः पुनर्नराः ॥ ३९ ॥

पुनर्नरा दृष्टा इति विपरिणामेनानुषज्जते ॥ ३९ ॥

पुनः पञ्चमहाभूतपर्यन्ते ब्रह्म निर्घनम् ।
पुनस्तत्र जगन्त्युच्चैः पुनः सर्गाः पुनर्दिशः ॥ ४० ॥

निष्ठितं घनं निर्घनम् ॥ ४० ॥

ब्रह्माकाशस्ततः सर्गाः पुनरन्ये त्वनिष्ठिताः ।
इत्यसौ विहरन्दीर्घकालमद्यापि संस्थितः ॥ ४१ ॥

अनिष्ठिता अव्यवस्थिताः ॥ ४१ ॥

स्वनिश्चयाच्चिराभ्यस्तान्नासौ विरतिमेति हि ।
अन्तो नैवास्त्यविद्यायाः सा हि ब्रह्मैव सत्यता ॥ ४२ ॥

निश्चयाज्जगत्सत्यतानिश्चयात् । सत्यता सत्यस्वभावः पर्यालोचितश्चेत्सा ब्रह्मैव ॥ ४२
॥

वस्तुतो नास्त्यविद्येह ब्रह्मण्यविकलात्मनि ।
इदं दृश्यमविद्येयमित्यात्मैष विकासितः ॥ ४३ ॥

तत्कुतस्तत्राह - वस्तुत इति ॥ ४३ ॥

यद्यथा जाग्रति स्वप्ने दृष्टं द्रक्ष्यसि पश्यसि ।
तत्तथा ब्रह्म सच्छान्तमासीदस्ति भविष्यति ॥ ४४ ॥

यद्ब्रह्म जाग्रति स्वप्ने च यथा यादृशवासनोद्भवेन प्राग्दृष्टं सांप्रतं
पश्यस्यग्रेऽपि द्रक्ष्यसि तद्ब्रह्म तथैवासीदस्ति भविष्यति च ॥ ४४ ॥

वनतमःप्रविलोकनचक्रकं क्रमजगत्प्रतिभानमिदं महत् ।
परतया प्रतिभात्मतयानया न च सदङ्ग न वाप्यसदाकृति ॥ ४५ ॥

अत एवेदं जगत्सदसद्विलक्षणमनिर्वचनीयमेवेत्याह - घनतप्त इति । इदं
आसीदस्ति भविष्यतीति क्रमयुक्तं जगत्प्रतिभानं घनं तमः अविद्यामात्रमेव
प्रमीलितयोर्विलोचनयोस्तैमिरिकं चक्रकमिव महद्भाति । तच्च परश्चिन्मात्रात्मा
तत्तया न सत् प्रतिभात्मतया अनया अज्ञदृष्टिप्रसिद्धया तु न असदाकृति । अत
उभयदृष्टिप्रामाण्ये अनिर्वचनीयमेवेत्यर्थः ॥ ४५ ॥

तेष्वेव तेष्विव च तेषु तनूतरेषु ब्रह्मोदरेषु चिरदूरतरं जगत्सु ।
सोऽद्याप्यसंविदिततत्त्वतया तयोच्चैः खण्डेषु रङ्कुरिव राघव बंभ्रमीति ॥
४६ ॥

हे राघव स विपश्चित् अद्यापि असंविदिततत्त्वतया तेषु पूर्वदृष्टेष्वेव तेष्विव
तत्सदृशेष्वन्येषु च वासनामात्रत्वात्तनूतरेषु ब्रह्मणां विराजामुदरेषु
प्रसिद्धेषु जगत्सु वनखण्डेषु रङ्कुर्मृगविशेष इव उच्चैः स्ववासनौन्नत्येन
बंभ्रमीति पुनःपुनर्भ्रमति । भ्रमेर्यङ्लुकि अभ्यासस्य नुक् ॥ ४६ ॥

इ० श्रीवा० वा० दे० मो० नि० उ० अ० वि० ब्रह्मगीतासु
ब्रह्माकाशविपश्चिज्जगच्चन्द्रदर्शनं नामाष्टाविंशत्युत्तरशततमः सर्गः ॥
१२८ ॥

163021
163022 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
163023 ब्रह्माकाशविपश्चिज्जगच्चन्द्रदर्शनं नामाष्टाविंशत्युत्तरशततमः सर्गः ||
163024 १२८ ||
163025
163026 एकोनत्रिंशदधिकशततमः सर्गः १२९
163027
163028 श्रीराम उवाच |
163029
163030 तयोर्द्वयोर्मुनिश्रेष्ठ संपन्नं किमतः परम् |
163031 पश्चाद्विपश्चितोस्तस्य रुद्धयोर्वै विपश्चितोः || १ ||
163032
163033 विपश्चितोरुदन्तोऽत्र वर्ण्यते ह्यवशिष्टयोः |
163034 तत्रैकस्य मृगत्वेऽन्ते तथा रामसमागमः ||
163035
163036 एको विपश्चिद्विष्णुप्रसादाज्ज्ञानं प्राप्य मुक्तो द्वितीयस्त्वद्याप्यविद्यायां
163037 बंभ्रमीतीति श्रुत्वा अवशिष्टयोर्द्वयोः समाचारं रामः पृच्छति - तयोरिति |
163038 चन्द्रलोके शाल्मलिद्वीपराज्ये च
163039 भोगैर्निरुद्धयोर्विपश्चितोर्भोगासारत्वाभिज्ञयोस्तयोर्द्वयोः
163040 पूर्वदक्षिणविपश्चितोः पश्चादनन्तरं अतः प्रागुक्तात्परमन्यत्तस्य
163041 दिगन्तदर्शनवरस्य संबन्धि किं चरित्रं संपन्नमिति प्रश्नः || १ ||
163042
163043 श्रीवसिष्ठ उवाच |
163044
163045 तयोरेकश्चिराभ्यस्तवासनाविवशीकृतः |
163046 भ्रमन्द्वीपेषु देहौघैस्तामेव पदवीं गतः || २ ||
163047
163048 तामुत्तरविपश्चितः पदवीं ब्रह्माण्डावरणलङ्घनेन शबले ब्रह्मणि
163049 संसारलक्षकोटिषु भ्रमणलक्षणामेव पदवीं दक्षिणो विपश्चिद्गत इत्यर्थः || २ ||
163050
163051 तथैवावरणांस्त्यक्त्वा परमाकाशकोटरे |
163052 पश्यन्संसारलक्षाणि तथैवाद्यापि संस्थितः || ३ ||
163053
163054 तथैवेत्यादिरुक्तस्यैव प्रपञ्चः || ३ ||
163055
163056 तयोर्द्वितीयः स्वाभ्यस्तादादावासंगतेर्वशात् |
163057 त्यक्तवान्प्रभ्रमद्देहैरद्य शैले मृगः स्थितः || ४ ||
163058
163059 द्वितीयः पूर्वो विपश्चित् स्वेन
163060 चन्द्रसंनिधावभ्यस्ताच्चन्द्रमृगस्नेहातिशयलक्षणात् आसंगतेरासङ्गस्य
163061 वशात् चन्द्रेण सह प्रतिमासमुद्भूतैः प्रभ्रमद्देहैरुपलक्षितस्तानि त्यक्तवान्सन्
163062 अद्य शैले मृगो भूत्वा स्थितः || ४ ||
163063
163064 श्रीराम उवाच |
163065
163066 एकैव वासना ब्रह्मन्या चतुर्णां सदोदिता |
163067 नानातां सा कथं प्राप्ता हीनोत्तमफलप्रदाम् || ५ ||
163068
163069 एकरूपाया वासनाया अन्तःकरणस्य देहस्य च चतुर्धाभावेऽपि वासनाविभागस्य
163070 हीनोत्तमफलभेदस्य वाऽसंभवं रामः शङ्कते - एकैवेति || ५ ||
163071
163072 श्रीवसिष्ठ उवाच |

163073
163074 स्वभ्यस्ता वासना जन्तोर्देशकालक्रियावशात् ।
163075 तनुदार्ढ्यान्यतामेति घनदार्ढ्यैति नान्यताम् ॥ ६ ॥
163076
163077 तत्राद्यप्रश्नस्योत्तरमाह - स्वभ्यस्तेति । तनुदार्ढ्या कोमला । घनदार्ढ्या
163078 अतिपरिपाकदृढीभूता । अन्यतां विभागम् ॥ ६ ॥
163079
163080 देशकालक्रियाद्येतदेकता वासनैकता ।
163081 तयोर्यदेव बलवत्तदेव जयति क्षणात् ॥ ७ ॥
163082
163083 वासनानामेकीभावे विभागे वा को हेतुस्तत्राह - देशेति । यदा
163084 भोग्यफलानुकूलानां देशकालकर्मप्रयत्नसामग्रीणामेकता तदा
163085 तदनुकूलसमानविषयवासनानामप्येकता संपद्यते । यदा तु भेदस्तदा विभागः ।
163086 यदा तु समानदेशकालक्रियाफला काचिद्वासना तद्भिन्नदेशकालक्रियाफला चापरा
163087 वासना द्वे उद्भूते तदा तयोर्मध्ये यदेव बलवत्तदेव जयति । बलवत्ता च
163088 फलानुमेयेति भावः ॥ ७ ॥
163089
163090 एवं विभागेनैतेऽत्र चत्वारः समवस्थिताः ।
163091 कृष्यन्ते द्वावविद्यार्थमन्यो मुक्तो मृगोऽपरः ॥ ८ ॥
163092
163093 एवमनया रीत्या एते विपश्चितो
163094 युगपदुद्भूतविरुद्धदेशादिभोग्यवासनाविभागप्रयुक्तेनाश्रयविभागेन
163095 चत्वारः सन्तः समवस्थिताः । तत्राद्यावविद्यार्थमपरो मृग इति त्रयोऽपि कृष्यन्ते
163096 वासनाभिः । अन्य एकस्तु मुक्तः ॥ ८ ॥
163097
163098 नाद्यापि तैरविद्याया लब्धोऽन्तो भ्रान्तिबुद्धिभिः ।
163099 अनन्तेयमविद्येयमज्ञानपरिबृंहिता ॥ ९ ॥
163100
163101 तैस्त्रिभिः । अज्ञानैर्भ्रान्तिसहस्रैः परितो बृंहिता वर्धिता ॥ ९ ॥
163102
163103 क्षिप्रेण शान्ता भवति विज्ञानालोक आगते ।
163104 अमूलमेव [समूलमेव इति पाठः ।] गलति तिमिरश्रीरिवोदये ॥ १० ॥
163105
163106 अमूलं निःशेषमेव गलति ॥ १० ॥
163107
163108 कालेनान्यजगज्जातं शृणु वृत्तं विपश्चितः ।
163109 तस्मिन्दूरतरे देशे कस्मिंश्चित्संसृतिभ्रमे ॥ ११ ॥
163110
163111 क्षिप्रेण कालेनेति पूर्वश्लोकान्वयि । इदानीं पश्चिमविपश्चितो येन वृत्तेन मुक्तिर्जाता
163112 तत्पुनः श्रावयति - अन्येति । अन्यस्मिन्स्ववासनाकल्पिते जगति ब्रह्माण्डे जातम् ।
163113 तस्मिन् ब्रह्माण्डे । दूरतरे स्वादूदधिपरभागस्थवर्णभूदेशे ॥ ११ ॥
163114
163115 क्वचिद्ब्रह्ममहाव्योम्नि कस्मिंश्चिद्दृश्यमण्डले ।
163116 तस्य दृश्यात्मना प्राप्ते वस्तुतो ब्रह्मरूपिणि ॥ १२ ॥
163117
163118 ब्रह्ममहाव्योम्नि क्वचिदध्यस्ते कस्मिंश्चिद्दृश्यमण्डले । किं वास्तवेनेत्याह ##-
163119
163120 स एकः शुभसंगत्या विदुषां मध्यमागतः ।
163121 दृश्यं यथावद्विज्ञाय ब्रह्मतामलमागतः ॥ १३ ॥
163122
163123 शुभस्य शान्तिदान्तिभगवद्भक्त्यादिगुणौघस्य संगत्या स पश्चिमो विपश्चिदेको
163124 विदुषां जीवन्मुक्तानाम् ॥ १३ ॥

तत्रैवाशु परिज्ञानात्साऽविद्या स च देहकः।
मृगतृष्णाम्ब्विवाशान्तिमागतौ रागतन्त्रितौ ॥ १४ ॥

तस्य सा जगदाकारा अविद्या स देहश्च मोक्षोत्तरं क्व गतौ तत्राह - तत्रैवेति।
आशान्तिं बाधमागतौ यतस्तौ रागः कामस्तत्तन्त्रितौ तदधीनस्थितिकौ। तथा च
श्रुतिः यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः। अथ मर्त्योऽमृतो भवत्यत्र
ब्रह्म समश्नुते इति ॥ १४ ॥

इति ते सर्वमाख्यातं विपश्चिच्चेष्टितं स्फुटम्।
अनन्तैवमविद्येयं ब्रह्मवत्तन्मयी यतः ॥ १५ ॥

प्रकृतकथामुपसंहरति - इतीति। इयमविद्या कार्याविद्या सर्वदिक्ष्वद्यापि
तैरन्तादर्शनादनन्ता कारणब्रह्मवत् ॥ १५ ॥

येन यत्रैव वर्षाणां लक्षलक्षाणि गम्यते।
तत्र तत्र स्वभावेन चिता किमपि लक्ष्यते ॥ १६ ॥

तत्कल्पकाज्ञातचित आनन्त्यादेव तदानन्त्यमिति ब्रह्मवदिति
दृष्टान्तोक्तेस्तात्पर्यमित्याह - येनेति ॥ १६ ॥

तदेवाश्वपरिज्ञातं मिथ्या विद्येति कथ्यते।
परिज्ञातं तु तच्छान्तं तथा ब्रह्मेति कथ्यते ॥ १७ ॥

तन्मयीत्युक्तेरपि तात्पर्यमाह - तदेवेति। तद्ब्रह्मैव ॥ १७ ॥

भेदो न भेदस्तत्रायं भेदोऽयं यन्मयः किल।
तद्ब्रह्मैव चिदाभासं चिद्रूपैव हि भिन्नता ॥ १८ ॥

नन्वविद्येति ब्रह्मेति च भेदे सति कथं तदेव तत्राह - भेद इति। अयं भेदो न
भेदो यतोऽयंन् तन्मयः अविद्यामय एव सा च ब्रह्मैवेति। चिद्भास्यत्वादपि भेदो न
चितोऽन्य इत्याह - तदिति ॥ १८ ॥

ब्रह्माण्डमण्डपस्यास्य भ्रमतेत्यविपश्चिता।
लब्धो युगशतैरन्तो नाविद्याया विपश्चिता ॥ १९ ॥

ज्ञानशून्येनोत्तरविपश्चिता तु युगशतेनाप्यविद्याया अन्तो न लब्ध इत्याह -
ब्रह्माण्डेति। इति उक्तरीत्या भ्रमता अविपश्चिता अविदुषा विपश्चिता तु अविद्याया अन्तो
युगशतैरपि न लब्धः ॥ १९ ॥

श्रीराम उवाच।

स ब्रह्माण्डकपाटः किं न संप्राप्तो विपश्चिता।
त्वयैतत्कथितं ब्रह्मन्न कथं वदतां वर ॥ २० ॥

उत्तरविपश्चितो ब्रह्माण्डकवाटसंध्याकाशमार्गेण निर्गमनं कथं
ब्रह्माण्डभङ्गे अकारणानुक्त्या संध्याकाशस्यैवासंभावनादित्याशयेन
रामः शङ्कते - स इति। ब्रह्माण्डकपाट एव किं न संप्राप्तः तथा च तं
भित्त्वा यथा स बहिर्गतः एतत् त्वया कथं न कथितम् ॥ २० ॥

श्रीवसिष्ठ उवाच।

163177 जातेनैव विरिञ्चेन पुरा ब्रह्माण्डमण्डलम् ।
163178 द्वाभ्यामधस्तादूर्ध्वात्स्वभुजाभ्यां प्रविदारितम् ॥ २१ ॥
163179
163180 वसिष्ठो ब्रह्माण्डकपाटद्वयविभागे कारणं प्राक् पाषाणाख्याने उक्तमेव
163181 स्मारयति - जातेनेति ॥ २१ ॥
163182
163183 भागस्तेनोर्ध्वतस्तस्मादतिदूरतरं गतः ।
163184 अतो [अन्य इति पाठः ।] भागो गतोऽधस्तादतिदूरतरान्तरम् । २२ ॥
163185
163186 अन्यदतिदूरतरं अतिदूरतरान्तरम् । अतिदूरतरमन्तरमवधिं गत इति वा ॥ २२ ॥
163187
163188 ताविवाश्रित्य तिष्ठन्ति जलाद्यावरणास्ततः ।
163189 त एव च तदाधारा लम्बन्ते संस्थितास्तयोः ॥ २३ ॥
163190
163191 जलाद्यावरणास्तौ भागाविव विभक्तास्तावेवाश्रित्य तिष्ठन्ति । आश्रित्य स्थितिः
163192 साधारणी विभक्तता तु जलावरणमात्रस्येति प्रागुपपादितमेव ॥ २३ ॥
163193
163194 एतयोर्मध्यमाकाशं विदुरण्डकपाटयोः ।
163195 अपारावारमानीलमिदमालक्ष्यते तु यत् ॥ २४ ॥
163196
163197 जलाद्यावरणास्तत्र न लगन्ति न सन्ति च ।
163198 तद्धि निर्मलमाशून्यमालानं कल्पकॢप्तिभिः ॥ २५ ॥
163199
163200 तत्र आकाशे अपारत्वोक्तिरितरभूतापेक्षया वैपुल्यख्यापनाय । अन्यथा
163201 बाह्याकाशावरणस्य पूर्वावरणदशगुणपरिमाणत्वानुपपत्तेः । तदग्रे
163202 ब्रह्माकाशवर्णनायोगाच्च । आलानमितरभूतानामाधारः । यावत्प्रलयं
163203 कल्पकालकल्पनैः ॥ २५ ॥
163204
163205 तेन मार्गेण यातोऽसौ विपश्चिद्दक्षचक्रवत् ।
163206 अविद्यायाः परीक्षार्थमामोक्षमतिदीक्षितः ॥ २६ ॥
163207
163208 अविद्यायाः परित ईक्षार्थमतिशयेन दीक्षितो गृहीतदीक्ष इव ॥ २६ ॥
163209
163210 ब्रह्मैवानन्तरूपेयमविद्या तन्मयी यतः ।
163211 अतोऽस्ति साऽपरिज्ञाता परिज्ञाता न विद्यते ॥ २७ ॥
163212
163213 तर्हि स दृढतरपुरुषप्रयत्नाविच्छेदादविद्यान्तं कुतो न ददर्शेति
163214 चेत्तस्यावस्तुतोऽनन्तब्रह्मात्मकत्वादेवेत्याह - ब्रह्मैवेति । तर्हि तत्त्वज्ञैस्तदन्तः
163215 कथं दृश्यते तत्राह - परिज्ञातेति ॥ २७ ॥
163216
163217 विपश्चित इति प्राप्य दूराद्दूरं परेऽम्बरे ।
163218 जगद्रूपेष्वविद्याया भ्रमन्त्यन्येषु केषुचित् ॥ २८ ॥
163219
163220 अविद्याया जगल्लक्षणेषु रूपेषु केषुचित् ॥ २८ ॥
163221
163222 कश्चिन्मुक्तो मृगः कश्चित्कौचिदद्यापि तौ क्वचित् ।
163223 भ्रमतः प्राक्तनानल्पसंस्कारविवशीकृतौ ॥ २९ ॥
163224
163225 श्रीराम उवाच ।
163226
163227 कीदृशेषु क्व दूरेषु ते जगत्सु विपश्चितः ।
163228 भ्रमन्तीति मुने ब्रूहि मयि चेज्जायते कृपा ॥ ३० ॥

रामप्रश्नाः स्पष्टाः ॥ ३० ॥

कियत्यध्वनि संसारास्ते जाता येषु ते मुने ।
महदेतदिहाश्चर्यमस्माकं कथितं त्वया ॥ ३१ ॥

श्रीवसिष्ठ उवाच ।

स्थितौ विपश्चितौ राम तावुभौ जगतोर्ययोः ।
तेऽस्माकं गोचरं याते जगती यत्नतोऽपि नो ॥ ३२ ॥

स्वप्नदृष्टोऽपूर्वो ग्राम इतः कियद्दूरेऽस्तीति प्रश्नवद्रामप्रश्नोऽयं
योजनसंख्योक्त्या न समाधातुं योग्य इति मत्वा वसिष्ठस्तदपरिज्ञानोक्तिच्छलेन
स्वाशयं सूचयन्नुत्तरमाह - स्थिताविति । यत्नतः पर्यालोचनेऽप्यस्माकं ते जगती
गोचरं बुद्धिविषयतां नो याते ॥ ३२ ॥

तृतीयो मृगतां यातो विपश्चिद्यत्र तिष्ठति ।
स कदाचित्ससंसारो गोचरे नोऽवतिष्ठते ॥ ३३ ॥

स ब्रह्माण्डस्तदन्तर्गतसंसारैः सहितः ससंसारो नो गोचरे
बुद्धिविषयभावेऽवतिष्ठते ॥ ३३ ॥

श्रीराम उवाच ।

विपश्चिन्मृगतां यातो यस्मिञ्जगति संस्थितः ।
तज्जगत्क महाबुद्धे यथावत्कथयेति मे ॥ ३४ ॥

श्रीवसिष्ठ उवाच ।

दूराद्दूरतरं गत्वा परब्रह्ममहाम्बरे ।
मृगो विपश्चिज्जगति स यस्मिंस्तज्जगच्छृणु ॥ ३५ ॥

तदिदं विद्धि त्रिजगदिहासौ संस्थितो मृगः ।
इदं तत्परमाकाशं दूराद्दूरे जगत्स्थितम् ॥ ३६ ॥

पूर्वतनविपश्चिज्जन्मदेशाद्दूराद्दूरे व्यवस्थितम् ॥ ३६ ॥

श्रीराम उवाच ।

विपश्चिदस्मादेवासौ जगतस्तां गतिं गतः ।
इहैवाद्य मृगो जातः कथमेतत्समञ्जसम् ॥ ३७ ॥

तां दिगन्तदर्शनगतिं गतः सन् इहैव मृगो जात इति कथं समञ्जसम् ।
परावृत्त्या गमनं विना इह मृगजन्मासंभवादित्यर्थः ॥ ३७ ॥

श्रीवसिष्ठ उवाच ।

अवयवानवयवी नित्यं वेत्ति यथाखिलान् ।
तथा सर्वानहं वेद्मि ब्रह्मण्यात्मन्यवस्थितान् ॥ ३८ ॥

दूरं दूरतरं चेत्यादिसर्व परिच्छिन्नात्मदर्शिनामेव भवति ।
अपरिच्छिन्नात्मदर्शिनां त्ववयविनामवयवा इव सर्वं संनिहिततरमेवेति

163281 स्वानुभवेनेयमुक्तिरित्याशयेनोत्तरमाह - अवयवानिति। सर्वान्ब्रह्माण्डानिति
163282 शेषः॥ ३८॥
163283
163284 अनिष्ठितान्ससंहारान्नानाकारांस्तु तान्बहून्।
163285 मिथः प्रोतान्मिथोदृश्यान्स्वरूपानिव पार्थिवान्॥ ३९॥
163286
163287 अन्यदृशा अतीततराणामपि ब्रह्मदृशा सांप्रतं सन्निहिततरत्वमेवेति कालतोऽपि न
163288 कस्यचिद्दूरतास्तीत्याशयेन तान्विशिनष्टि - अनिष्ठितानिति।
163289 चिरकालोत्तरभावित्वात्सांप्रतमनिष्ठितान् असंजातान् तथा ससंहारान्
163290 पूर्वकालनिष्पन्नसंहारसहितान् नानाकारान्विचित्रान् मिथः परस्परमदृश्यानपि
163291 एकत्र चित्यध्यासात्परस्परप्रोतान् पार्थिवान्
163292 पृथ्वीविकारभूतपटतन्त्वादिस्वरूपानिव स्थितान्॥ ३९॥
163293
163294 तत्र कस्मिंश्चिदन्यस्मिन्मार्गेऽस्मिन्निव तिष्ठति।
163295 यद्वृत्तं कथितं राम तदेतद्भवते मया॥ ४०॥
163296
163297 तत्र ब्रह्माण्डेषु कस्मिंश्चिदन्यस्मिन्माग्रे अस्मिन्नेतद्ब्रह्माण्डस्थे मार्गे इव
163298 तिष्ठति सति यद्वृत्तं तन्मया भवत एतद्ब्रह्माण्ड इव कृत्वा अत्रैव
163299 विपश्चिज्जन्मराज्यादीति कथितं तत्त्वतः प्रकारतश्च भेदाभावादित्यर्थः॥ ४०॥
163300
163301 विपश्चितोऽन्यसंसारे देहैर्भ्रान्ता दिगन्तरान्।
163302 ताननन्ताम्बरे व्योम्नि तावत्कालमखिन्नधीः॥ ४१॥
163303
163304 तान् पूर्वोक्तान् दिगन्तरान् स्वस्ववासनाकल्पिते अन्यान्यसंसारे तादृशैरेव
163305 देहैर्वस्तुतो भ्रान्ताः नैकस्मिंस्तत्र पूर्वो विपश्चिदिहैव हरिणो जात
163306 इत्युत्तरत्रान्वयः॥ ४१॥
163307
163308 इहैव हरिणो जातः कस्मिंश्चिद्गिरिकन्दरे।
163309 काकतालीययोगेन भ्रान्त्वा भूरिजगद्भ्रमम्॥ ४२॥
163310
163311 स जगन्ति भ्रमन्दूरे यस्मिन्सर्गे मृगः स्थितः।
163312 ससर्गोऽयमिति व्योम्नि काकतालीयवस्थितम्॥ ४३॥
163313
163314 व्योम्नि ब्रह्माकाशे॥ ४३॥
163315
163316 श्रीराम उवाच।
163317
163318 एवं चेत्तद्वद ब्रह्मन्कस्यां ककुभि मण्डले।
163319 कस्मिन्कस्मिंश्च शैलेऽसौ वने कस्मिन्मृगः स्थितः॥ ४४॥
163320
163321 ककुभि दिशि॥ ४४॥
163322
163323 किं करोति कथं दूर्वाश्चर्वयत्युर्वरास्पदः।
163324 जातिं तां जरठज्ञानी कदोदारां स्मरिष्यति॥ ४५॥
163325
163326 उर्वरा सस्याढ्या भूमिस्तदास्पदः जरठं जरयेव शिथिलं ज्ञानमस्यास्तीति
163327 जरठज्ञानी स मृगस्तां प्राक्तनीं जातिं विपश्चिज्जन्म कदा संस्मरिष्यति॥ ४५॥
163328
163329 श्रीवसिष्ठ उवाच।
163330
163331 योऽसौ त्रिगर्तनाथेन दत्तः क्रीडामृगस्तव।
163332 स्थितः क्रीडामृगागारे विद्धि तं त्वं विपश्चितम्॥ ४६॥

163333
163334 त्रिगर्ता देशविशेषास्तेषां नाथेन राज्ञा तव उपायनत्वेन यः क्रीडामृगो दत्तः
163335 स इदानीं क्रीडामृगबन्धनागारे स्थितोऽस्ति तं मृगं त्वं विपश्चितं विद्धि ॥ ४६
163336 | |
163337
163338 श्रीवाल्मीकिरुवाच |
163339
163340 श्रुत्वेति राघवस्तस्यां सभायां विस्मयान्वितः |
163341 बालकान्मृगमानेतु प्रेषयामास भूरिशः ॥ ४७ ॥
163342
163343 अथानीतो मृगो मुग्धः सभां स्फारां विवेश सः |
163344 सर्वैः सभ्यगणैर्दृष्टः पुष्टिमांस्तुष्टिमानपि ॥ ४८ ॥
163345
163346 ताराबिन्दुयुतं देहबिन्दुभिः खं विडम्बयन् |
163347 दृष्टिपातोत्पलासारैः सुन्दरीः परितर्जयन् ॥ ४९ ॥
163348
163349 देहगतैर्बिन्दुभिः पृषद्भिस्ताराबिन्दुयुतं खं विडम्बयन्ननुकुर्वन् ॥ ४९ ॥
163350
163351 आदृतानादृतसभैर्नीला मरकतत्विषः |
163352 धावंस्तृणेच्छया लोलं मुग्धैश्चकितवीक्षितैः ॥ ५० ॥
163353
163354 आदृता दर्शनादरवत्यपि अनादृता सभा यैस्तथाविधैश्चकितवीक्षणैः
163355 सभयकटाक्षैर्नीलवर्णाः सभास्तम्भादिखचितमरकतत्विषो
163356 हरिततृणभ्रान्तिप्रयुक्तया इच्छया आदातुं धावन् ॥ ५० ॥
163357
163358 उत्कर्णोन्नयनोद्ग्रीवं क्षणभङ्गावलस्थितैः |
163359 उत्कर्णनयनोद्ग्रीवैः सभ्यानाकुलयञ्जवैः ॥ ५१ ॥
163360
163361 ऊर्ध्वीकृतकर्णनयनग्रीवं यथा स्यात्तथा क्षणभङ्गैरस्थिरैरवलैरनिवार्यैः
163362 स्थितैरवस्थानैस्तथाविधैर्जवैश्च सभ्यान्सभागतान् जनान् दर्शनोत्कण्ठया
163363 आस्कन्दनशङ्कया च आकुलयन् ॥ ५१ ॥
163364
163365 मृगमालोक्य तं लोकाः सराजमुनिमन्त्रिणः |
163366 अनन्ता बत मायेति चिरमासन्स्मयाकुलाः ॥ ५२ ॥
163367
163368 स्मयो विस्मयस्तदाकुला आसन् ॥ ५२ ॥
163369
163370 आश्चर्यचर्वणसुविस्मितसर्वलोका सर्वावलोकनघनोत्पलवर्षकृष्णम् |
163371 रत्नांशुजालकचितं मृगमीक्षमाणा सासीत्सभा कमलिनी लिपिनिर्मितेव ॥ ५३ ॥
163372
163373 सर्वेषां सभासदामवलोकनलक्षणैर्घनैर्निबिडैरुत्पलवर्षैः कृष्णं
163374 नीलवर्णीकृतमिव स्थितं नानाविधरत्नानामंशुजालैः कान्तिसमूहै रचितं
163375 परिष्कृतं तं मृगमीक्षमाणा सभा आश्चर्यस्याद्भुतरसस्य यच्चर्वणं
163376 विगलितवेद्यान्तरतया अन्तरास्वादनं तेन सुविस्मिता विस्मयजडीकृताः सर्वे लोका
163377 यस्यां तथाविधा सती लिपिनिर्मिता चित्रलिखिता कमलिनी पद्मवनीव आसीत् ॥ ५३ ॥
163378
163379 इत्यार्षे श्रीवा० वा० दे० मो० निर्वा० उ० अवि० विप० विपश्चिन्मृगलाभो
163380 नामैकोनत्रिंशदधिकशततमः सर्गः ॥ १२९ ॥
163381
163382 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
163383 विपश्चिन्मृगलाभो नामैकोनत्रिंशदधिकशततमः सर्गः ॥ १२९ ॥
163384

163385 त्रिंशदधिकशततमः सर्गः १३०
163386
163387 श्रीवाल्मीकिरुवाच ।
163388
163389 अथ राम उवाचास्य मुने केन विपश्चितः ।
163390 स्यादुपायेन दुःखान्तः प्राक्तनात्मोदयादिति ॥ १ ॥
163391
163392 वसिष्ठध्यानजे वह्नौ मृगस्यात्र प्रवेशनम् ।
163393 विपश्चिद्देहलाभेन प्राक्स्मृतिश्चात्र वर्ण्यते ॥
163394
163395 प्राक्तन आत्मा विपश्चिद्देहस्तस्योदयात्पुनराविर्भावाज्ज्ञानेन
163396 वास्तवात्माविर्भावाच्च इति राम उवाचेत्यन्वयः ॥ १ ॥
163397
163398 श्रीवसिष्ठ उवाच ।
163399
163400 येनैवाभ्युदिता यस्य तस्य तेन विना गतिः ।
163401 न शोभते न सुखदा न हिताय न सत्फला ॥ २ ॥
163402
163403 यस्य पुरुषस्य येनैव चिरोपासितेन दैवतेन गतिः पुनःपुनरभिलषितसिद्धिः
163404 प्रागभ्युदिता तस्य पुरुषस्य तेन दैवतेन विनाऽपि अग्रे गतिरभिलषितसिद्धिर्न जायते
163405 जातापि न शोभते शोभितापि परिणामे न सुखदा कथंचित्सुखप्राप्तावपि परलोकहिता
163406 कदाचन न भवति । तथा च श्रुतिः यः स्वां देवतामतियजति प्रस्वायै देवतायै
163407 च्यवते न परां प्राप्नोति पापीयान्भवतीति । अभियुक्ताश्चाहुः त्वामतियजेत
163408 भगवन्यः कुलदैवं द्विजातिकुलजातः । उभयभ्रष्टो
163409 नश्येदभ्युदयोपांशुयाजवत्स जडः ॥ इति ॥ २ ॥
163410
163411 विपश्चितोऽग्निः शरणं तत्प्रवेशादयं मृगः ।
163412 पूर्वरूपमवाप्नोति निर्मलं कनकं यथा ॥ ३ ॥
163413
163414 शरणं इष्टार्थप्रदानेन रक्षिता । पूर्वरूपं प्राक्तनविपश्चिद्देहम् ॥ ३ ॥
163415
163416 करोम्येतदहं सर्वं दृश्यतां दर्शयामि वः ।
163417 अग्निप्रवेशं हरिणः करोत्येषोऽधुना पुरः ॥ ४ ॥
163418
163419 श्रीवाल्मीकिरुवाच ।
163420
163421 इत्युक्त्वा स मुनिस्तत्र वसिष्ठः श्रेष्ठचेष्टितः ।
163422 उपस्पृश्य यथान्यायं स्वकमण्डलुवारिणा ॥ ५ ॥
163423
163424 उपस्पृश्य आचम्य । यथान्यायं शिरश्चक्षुषी नासिके श्रोत्रे हृदयमालभ्य इति
163425 श्रुत्युक्तन्यायमनतिक्रम्य ॥ ५ ॥
163426
163427 दध्यावनिन्धनं वह्निं ज्वालापुञ्जमयात्मकम् ।
163428 तद्ध्यानेन सभामध्याज्ज्वालाजालं समुद्ययौ ॥ ६ ॥
163429
163430 दशरथसभामध्यप्रदेशात् ॥ ६ ॥
163431
163432 अङ्गाररहिताकारमिन्धनेन विवर्जितम् ।
163433 स्वच्छं धमधमायन्तमधूममपकज्जलम् ॥ ७ ॥
163434
163435 धमधमायन्तमित्यव्यक्तानुकरणाड्डाचि डाचि बहुलं द्वे भवतः इति द्वित्वे
163436 लोहितादिडाज्भ्यः क्यष् इति क्यषन्ताल्लटः शत्रादेशः । अपकज्जलमकज्जलमिति यावत् ॥ ७ ॥

मुग्धमुग्धकचत्कान्ति हेममन्दिरसुन्दरम् ।
उत्फुल्लकिंशुकाकारं संध्याम्बुदवदुत्थितम् ॥ ८ ॥

मुग्धमुग्धं कचन्ती कान्तिर्यस्य तथाविधं हेममन्दिरमिव सुन्दरम् ॥ ८ ॥

दूरापसृतसभ्यंन् तज्ज्वालाजालं विलोकयन् ।
मृगः प्राग्भक्तिभावेन प्रोल्ललास विलोकितैः ॥ ९ ॥

दूरादपगताः सभ्या यस्मात्तथाविधं तज्ज्वालाजालं विलोकयन्सन् स मृगः
प्राक्तनेन भक्तिभावेन विलोकितैः सादरदर्शनैः प्रोल्ललास जहर्ष ॥ ९ ॥

तं समालोकयन्वह्निं विविक्षुः क्षीणदुष्कृतः ।
पश्चादुपससाराशु दूरं सिंह इवोत्पतन् ॥ १० ॥

एतस्मिन्नन्तरे ध्याने विचार्य मुनिपुङ्गवः ।
मृगं विलोकितैः क्षीणपापं कुर्वन्नुवाच ह ॥ ११ ॥

उवाच । वह्निं प्रतीति शेषः ॥ ११ ॥

संस्मृत्य प्राक्तनीं भक्तिं भगवन्हव्यवाहन ।
कुरु कारुण्यतः कान्तं मृगमेनं विपश्चितम् ॥ १२ ॥

वदत्येवं मुनौ दूराद्धावित्वा नृपसंसदि ।
मृगोऽग्निं वेगनिर्मुक्तः शरो लक्ष्यमिवाविशत् ॥ १३ ॥

ज्वालाजालं प्रविष्टोऽसावादर्श इव बिम्बितः ।
संध्याभ्र इव विश्रान्तो दृष्टः स्पष्टशरीरकः ॥ १४ ॥

दृष्टो जनैरिति शेषः ॥ १४ ॥

स पश्यत्स्वेव सभ्येषु मृगोऽथ नरतामगात् ।
ज्वालोदरे नभस्यभ्रलवो रूपान्तरं यथा ॥ १५ ॥

नरतां मनुष्याकारम् । नभसि मृगरूपोऽभ्रलवः । रूपान्तरं मनुष्यरूपं
यथा तथा ॥ १५ ॥

अदृश्यताथ ज्वालायामन्तःकनककान्तिमान् ।
पुरुषः पावनाकारः कान्तावयवसुन्दरः ॥ १६ ॥

कान्तैः कान्तिमद्भिरवयवैः सुन्दरः ॥ १६ ॥

अर्कबिम्ब इवादित्यश्चन्द्रबिम्ब इवोडुपः ।
महाम्भसीव वरुणः संध्याभ्र इव वा शशी ॥ १७ ॥

अर्कबिम्ब इवेत्याद्युपमामाला ॥ १७ ॥

चक्षुःकनीनिकाकोशे मुकुरे सलिले मणौ ।
प्रतिबिम्ब इवार्काभो भक्तिनाधारपावकः ॥ १८ ॥

चक्षुरित्यादिमालितोपमा । चक्षुःकनीनिकाकोशादौ प्रतिबिम्ब इव आधारः पावको यस्य
तथाविधो भक्तिरेव ना पुरुषभूतेव स्थितः । अर्काभः पुरुषः अदृश्यतेति

163489 पूर्वत्रान्वयः ॥ १८ ॥
163490
163491 अनन्तरं सभामध्याद्वातैर्दीप इवाहतः ।
163492 ज्वालाजालं ययौ क्वापि संध्याम्बुद इवाम्बरात् ॥ १९ ॥
163493
163494 अनन्तरं तज्ज्वालाजालं वातैराहतो दीप इव क्वापि ययौ । उपशशामेति यावत् ॥ १९ ॥
163495
163496 कुटीकुड्येषु भग्नेषु प्रतिबिम्ब इवामरः ।
163497 अतिष्ठत्पुरुषस्तत्र पटान्नट इवोद्गतः ॥ २० ॥
163498
163499 देवालयकुट्याः कुड्येषु भग्नेषु सत्सु तदन्तर्गत आमरः विष्ण्वाद्यमराकारः
163500 प्रतिबिम्बः प्रतिमेव । पटात्तिरस्करणीवस्त्रादुद्गतो नट इव ॥ २० ॥
163501
163502 अक्षमालाधरः शान्तो हेमयज्ञोपवीतवान् ।
163503 अग्निशौचाम्बरच्छन्नः सद्यश्चन्द्र इवोदितः ॥ २१ ॥
163504
163505 अग्निदाहेनैव शौचं नैर्मल्यं यस्य तथाविधैरम्बरैश्छन्नः ॥ २१ ॥
163506
163507 अहो भा इति सभ्योक्त्या तस्य वेषस्य भासनात् ।
163508 भास्वानिव विशालाभो भास इत्येष शब्दितः ॥ २२ ॥
163509
163510 एष भास इति नाम्ना शब्दितो जनैरुक्तः ॥ २२ ॥
163511
163512 असौ मूर्त इवाभासो भासनाम्ना भविष्यति ।
163513 सभास्थैः कैश्चिदित्युक्तं तेन भासः स उच्यते ॥ २३ ॥
163514
163515 अथोपविश्य तत्रैव स भासो ध्यानसंस्थितः ।
163516 आत्मोदन्तमशेषेण सस्मार प्राक्तनं तनौ ॥ २४ ॥
163517
163518 आत्मनः स्वस्य प्राक्तनमुदन्तं वृत्तान्तम् ॥ २४ ॥
163519
163520 सभालोके गतस्पन्दे स्मयेनात्मनि तिष्ठति ।
163521 भासो मुहूर्तमात्रेण दृष्ट्वा स्वोदन्तमक्षतम् ॥ २५ ॥
163522
163523 स्मयेन विस्मयेन [स्मितेन इति मुद्रितपुस्तके पाठः ।] । दृष्ट्वा स्मृत्वा ॥ २५
163524 ॥
163525
163526 आययौ पूर्वजन्मभ्यो ध्यानालोकाद्व्यबुध्यत ।
163527 सभामालोकयामास समुत्थाय यथाक्रमम् ॥ २६ ॥
163528
163529 आययौ इत्यस्य ध्यानालोकाद्व्यबुध्यतेति विवरणम् । यथाक्रमं
163530 मुनिराजसामन्तादिक्रमेण ॥ २६ ॥
163531
163532 स चागत्य वसिष्ठाय प्रणाममकरोन्मुदा ।
163533 ज्ञानार्कप्राणद ब्रह्मन्नमस्तेऽस्त्वित्युदाहरत् ॥ २७ ॥
163534
163535 स भासाख्यो विपश्चित् । उदाहरदुक्तवान् ॥ २७ ॥
163536
163537 तमुवाच वसिष्ठोऽपि हस्तेन शिरसि स्पृशन् ।
163538 अद्य ते सुचिराद्राजन्नविद्यायाः क्षयोऽस्त्विति ॥ २८ ॥
163539
163540 सुचिराद्दृश्यमानायास्ते अविद्याया अद्य क्षयोऽस्त्विति ॥ २८ ॥

163541
163542 रामं जयेति जल्पन्तं नतं दशरथोऽथ तम् |
163543 आसनात्किंचिदुत्तिष्ठन्समुवाच हसन्निव || २९ ||
163544
163545 रामं प्रति जयेति जल्पन्तं व्यक्तं वदन्तम् | नतं नमस्कुर्वाणं तं भासम् || २९ ||
163546
163547 दशरथ उवाच |
163548
163549 स्वागतं तेऽस्तु भो राजन्निदमासनमास्यताम् |
163550 अनेकभवसंभारभ्रान्त विश्रम्यतामिह || ३० ||
163551
163552 श्रीवाल्मीकिरुवाच |
163553
163554 वदत्येवं दशरथे विपश्चिद्भासनामभृत् |
163555 विवेश विष्टरे विश्वामित्रादीन्प्रणमन्मुनीन् || ३१ ||
163556
163557 विष्टरे आसने | वृक्षासनयोर्विष्टरः इति षत्वम् || ३१ ||
163558
163559 दशरथ उवाच |
163560
163561 अहो बत चिरं कालमालानेनेव दन्तिना |
163562 अन्येनाविद्यया दुःखमनुभूतं विपश्चिता || ३२ ||
163563
163564 आलानेन बन्धनस्तम्भेनेव || ३२ ||
163565
163566 असम्यग्बोधदुर्दृष्टेरहो नु विषमा गतिः |
163567 व्योम्न्येव दर्शयत्येषा सर्गाडम्बरसंभ्रमम् || ३३ ||
163568
163569 कियन्त्याश्चर्यमेतानि जगन्ति विततात्मनि |
163570 संततानि चिरं तानि विभ्रान्तानि विपश्चिता || ३४ ||
163571
163572 विपश्चिता विततात्मनि कियन्ति विभ्रान्तानि | इदमाश्चर्यम् || ३४ ||
163573
163574 व्योमात्मनोऽपि महिमायमहो नु कीदृगस्य स्वभावविभवस्य चिदात्मवृत्तेः |
163575 यः शून्य एव परमात्मघनेऽम्बरेऽन्तरेवंविधानि विविधानि जगन्ति भान्ति || ३५
163576 ||
163577
163578 चिदात्मवृत्तेर्मायास्वभावरूपस्यास्य विभवस्य वस्तुतो व्योमात्मनः
163579 शून्यस्याप्ययं महिमा कीदृक् | अहो इत्याश्चर्ये | नु इति वितर्के | यो महिमा शून्य एव
163580 सन्नम्बरवदसङ्गे शून्ये एव परमात्मघने अन्तः एवंविधानि प्रागुक्तप्रकाराणि
163581 विविधानि विचित्राणि जगन्ति भूत्वा भान्ति | इदमत्याश्चर्यमित्यर्थः || ३५ ||
163582
163583 इत्यार्षे श्रीवासिष्ठमहा० वाल्मीकीये दे० मो० निर्वाण० उ० अ० वि० मृगवह्निप्रवेशो
163584 नाम त्रिंशदधिकशततमः सर्गः || १३० ||
163585
163586 इति श्रीवासिष्ठम० तात्पर्यप्रकाशे नि० उ० मृगवह्निप्रवेशो नाम
163587 त्रिंशदधिकशततमः सर्गः || १३० ||
163588
163589 एकत्रिंशदधिकशततमः सर्गः १३१
163590
163591 दशरथ उवाच |
163592

163593 क्लिष्टोऽयं यदविद्यार्थं विपश्चिदविपश्चितः।
163594 तदहं चेष्टितं मन्ये कष्टोऽवस्तुनि किंग्रहः॥ १॥
163595
163596 वटधानाराजपुत्रकथामुक्त्वा प्रचोदितः।
163597 कौशिकेन विपश्चित्स्वां भ्रान्तिं विस्तरतोऽब्रवीत्॥
163598
163599 अयं विपश्चिदविद्यार्थं दिगन्तदर्शनलक्षणामपुरुषार्थरूपामविद्यामुद्दिश्य
163600 यत्क्लिष्टः क्लेशाननुभूतवांस्तत्सर्वमहमविपश्चितः अज्ञस्य
163601 आत्मज्ञानशून्यस्यास्य भ्रान्तिरूपं वृथा चेष्टितं मन्ये। यतः अवस्तुनि
163602 मिथ्याभूते दिगन्तदर्शनादिकौतुके कुत्सितो ग्रहः किंग्रहोऽवश्यं साधयामीति
163603 दुराग्रहः कष्टः क्लेशफल इत्यर्थः॥ १॥
163604
163605 श्रीवाल्मीकिरुवाच।
163606
163607 अस्मिन्नवसरे तत्र राज्ञः पार्श्वे व्यवस्थितः।
163608 प्रसङ्गपतितं वाक्यं विश्वामित्रोऽभ्युवाच ह॥ २॥
163609
163610 राजवाक्यश्रवणादद्बुद्धवटधाना राजपुत्रकथासंस्कारो विश्वामित्रः
163611 प्रस्तुतविपश्चिद्वृत्तान्तवर्णनप्रयोजनदार्ढ्यहेतुत्वादुपेक्षानर्हां तां
163612 कथामाहेति वाल्मीकिराह - अस्मिन्निति॥ २॥
163613
163614 अप्राप्तोत्तमबोधानां बोधवेद्या विलक्षणाः।
163615 भवन्त्येवंविधा राजन्बहूनां बहवो भृशम्॥ ३॥
163616
163617 हे राजन् त्वया सम्यगेवोक्तं यतो न प्राप्त उत्तमबोधस्तत्त्वज्ञानं
163618 यैस्तथाविधानां बहूनामेवंविधा विलक्षणा विचित्रा बहवो भ्रान्तिरूपा
163619 बोधास्तद्वेद्या वासनामया अनन्तकोटिजगद्रूपा अर्थाश्च भृशं भवन्तीति
163620 वक्ष्यमाणकथापीठिकारचनम्॥ ३॥
163621
163622 अद्य सप्तदशं वर्षलक्षमक्षीणनिश्चयाः।
163623 एवमेव भ्रमन्तोऽस्यां वटधाना भुवि स्थिताः॥ ४॥
163624
163625 तत्र कथां प्रस्तौति - अद्येत्यादिना। वक्ष्यमाणायां भुवि वटधानाख्या
163626 राजपुत्रा अपि एवं विपश्चिद्वदेवाद्यपर्यन्तं सप्तदशं वर्षलक्षं भ्रमन्तः
163627 स्थिता वर्तन्ते॥ ४॥
163628
163629 भूमेरन्तावलोकार्थमद्याप्युद्वेगवर्जितम्।
163630 प्रवृत्ता न निवर्तन्ते वहनात्सरितो यथा॥ ५॥
163631
163632 अयं खलु महालोको वर्तुलो व्योम्नि संस्थितः।
163633 बालसंकल्पतरुवद्ब्राह्मसंकल्पनिश्चयः॥ ६॥
163634
163635 तामेव भुवं वर्णयितुं प्रस्तौति - अयमिति। अयं प्रसिद्धः
163636 पातालभूम्यादिचतुर्दशलोकघटितत्वान्महान् लोको भुवनसमष्टिः भूवदेव
163637 वर्तुलैरन्तरिक्षलोकैर्वर्तुलः सन् भूमेः परितो व्योम्नि संस्थितः। स च ब्राह्मो
163638 हैरण्यगर्भः संकल्पनिश्चय एव नान्यो निरूपयितुं शक्यः। अयं भूगोललक्षणो
163639 महान्तो लोकाश्चतुर्दशभुवनाश्रिता जना यस्मिन् यदाधारास्तथाविधः खलु
163640 ज्योतिःशास्त्रप्रसिद्धो व्योम्नि आकाशे बालसंकल्पतरुवत्संस्थितो यतोऽयमपि ब्राह्मः
163641 संकल्पनिश्चय एवेत्यर्थः॥ ६॥
163642
163643 कन्दुके व्योम्नि संरुद्धे दशदिक्कं पिपीलिकाः।
163644 इत्थं भ्रमन्ति भूतानि तदाधाराणि नित्यदा॥ ७॥

163645
163646 तस्य निराधारस्य कथं जनाधारत्वं तत्राह - कन्दुके इति। यथा मध्वक्ते
163647 कन्दुके दशदिक्कं पिपीलिका भ्रमन्ति इत्थमेवं तस्मिन्परितस्तदुपजीवीनि भूतानि
163648 दशदिक्कं भ्रमन्तीत्यर्थः॥ ७॥
163649
163650 भूगोलकाधोभागानि तदङ्गान्यूर्ध्ववन्ति च।
163651 तदा भूतानि तिष्ठन्ति तान्याविश्य भ्रमन्ति च॥ ८॥
163652
163653 यानि भूगोलकस्याधोभागगतानि यानि च ऊर्ध्ववन्त्युपरितनानि तदङ्गानि
163654 तान्याविश्य यदा यत्र यानि भूतानि तिष्ठन्ति तदा तानि तत्र भ्रमन्ति च॥ ८॥
163655
163656 तमेवाविश्य दूरेण सरितश्चर्क्षमण्डलम्।
163657 असंस्पर्शा भ्रमन्त्युच्चैः सचन्द्रार्कादि संततम्॥ ९॥
163658
163659 अन्तरिक्षवहा मन्दाकिन्यादिसरितो ज्योतिश्चक्ररूपमृक्षमण्डलं च तं
163660 भूगोलमेव दूरेण वायुबन्धनवशादाश्रित्य असंस्पर्शा उच्चैर्भ्रमन्ति।
163661 स्त्रीशेषश्छान्दसः॥ ९॥
163662
163663 इहैव सर्वदिक्कं द्यौस्तामावेष्ट्य व्यवस्थिता।
163664 सर्वदिक्कं खमत्यूर्ध्वं तस्याधस्तान्महीतलम्॥ १०॥
163665
163666 तां सज्योतिश्चक्रां भुवमावेष्ट्य द्यौरिह अस्यामेव भुवि व्यवस्थिता। तत्र च खं
163667 सर्वासु दिक्षु ऊर्ध्वमेव महीतलं च सर्वाधस्तादेवेत्यर्थः॥ १०॥
163668
163669 भावाः पतन्तो धावन्ति तस्याधः सर्वतोङ्गकम्।
163670 यत्रोत्पतन्तो गच्छन्ति तदूर्ध्वमिति शब्दितम्॥ ११॥
163671
163672 ननु भूगोलाधस्तनस्य खस्य कथमूर्ध्वत्वं तदपेक्षया महीतलस्य
163673 कथमधस्तात्त्वं तत्राह - भावा इति। तस्य महीतलस्याधो ये भावाः पदार्थाः
163674 संचरन्ति ते तस्य सर्वतोङ्गकमवयवं तत्तत्प्रदेशे पतन्तः प्राप्नुवन्त एव
163675 गच्छन्ति संचरन्ति। यत्र यस्मिन्नभसि पक्ष्यादय उत्पतन्तो गच्छन्ति तत्तत्र
163676 ऊर्ध्वमित्येव शब्दितं न त्वध इति तिर्यगिति वेत्यर्थः॥ ११॥
163677
163678 तत्रैकदेशे विद्यन्ते वटधानाभिधानकाः।
163679 जातास्तेषां त्रयो राजन् राजपुत्राः पुराभवन्॥ १२॥
163680
163681 तत्र तस्मिन्भूगोलके एकदेशे क्वचिद्वटधानाभिधानका देशा वा तदधीश्वराः
163682 क्षत्रियाश्च विद्यन्ते। तेषां कुले त्रयो राजपुत्राः पुरा जाता अभवन्॥ १२॥
163683
163684 ते ह्येवमेकसंकल्पा भूम्यादेर्दृश्यवर्त्मनः।
163685 कोऽन्तः स्यादिति निर्याता विहर्तुं दृढनिश्चयाः॥ १३॥
163686
163687 ते राजपुत्रा एवं विपश्चिद्वदेव दृश्यवर्त्मनो भूम्यादेर्जगतः कोऽन्तः स्यात्तं
163688 द्रक्ष्याम इत्येकसंकल्पा दृढनिश्चयाश्च सन्तस्तद्दर्शनाय निर्याताः॥ १३॥
163689
163690 पुनर्वारि पुनर्भूमिस्तेषामाक्रमतां चिरम्।
163691 नवलब्धशरीराणां दीर्घकालो व्यवर्तत॥ १४॥
163692
163693 द्वीपसमुद्रभेदेषु पुनःपुनर्वारि पुनर्भूमिरिति क्रमेण आक्रमतां मध्ये मध्ये
163694 मरणेन नवानि लब्धानि शरीराणि यैस्तथाविधानां तेषां दीर्घकालो
163695 व्यवर्ततेत्यर्थः॥ १४॥
163696

163697 स्वच्छकन्दुकवम्रीकन्यायेनानिशमत्र ते।
163698 भ्रमन्तो नाप्नुवन्त्यन्तमन्यत्वं संविदन्ति च॥ १५॥
163699
163700 स्वच्छे कन्दुके संलग्ना ये वम्रीकीटास्तन्न्यायेन भ्रमन्तस्ते। वल्मीकन्यायेन इति
163701 पाठे वल्मीकपदेन तन्निर्मातारो वम्रीकीटा एव लक्ष्यन्ते। अन्यत्वं देशान्तरत्वम्॥
163702 १५॥
163703
163704 व्योमस्थकन्दुकभ्रान्तपिपीलिकवदाकुलम्।
163705 अद्यापि संस्थिता राजन्न च खेदं व्रजन्ति ते॥ १६॥
163706
163707 देशं भूगोलकस्यास्य यं यमासादयन्ति च।
163708 इहेव तत्र तत्रोच्चैरधश्चोर्ध्वं तथा दिशः॥ १७॥
163709
163710 यं यमधस्तनं पार्श्वगतं वा आसादयन्ति। दिशः पश्यन्तीति शेषः॥ १७॥
163711
163712 ते वदन्ति महाराज यद्यस्माभिरितोद्यतैः।
163713 न तावदन्तः संप्राप्तः संचराम इतः परम्॥ १८॥
163714
163715 इतोद्यतैः प्राप्तोद्योगैः॥ १८॥
163716
163717 इत्थं न किंचिदेवेदं ब्रह्मसंकल्पडम्बरम्।
163718 किंचित्संकल्पमज्ञानमनन्तं स्वप्नदृश्यवत्॥ १९॥
163719
163720 कथामुपसंहृत्य प्रकृते योजयति - इत्थमिति॥ १९॥
163721
163722 कल्पनं तत्परं ब्रह्म परं ब्रह्मैव कल्पनम्।
163723 चिद्रूपं नान्योर्भेदः शून्यत्वाकाशयोरिव॥ २०॥
163724
163725 संकल्पकल्पनस्य चिदधिष्ठानकत्वाच्चिन्मात्रं तत्त्वमिति व्यतिहारेण द्रढयति ##-
163726
163727 चिन्मात्रं यद्यदाभातं जलवाहविवर्तवत्।
163728 तत्तादृक्कथमन्याभमन्यस्यासंभवाद्भवेत्॥ २१॥
163729
163730 जलस्य वाहः प्रवाहस्तत्रत्यावर्ततरङ्गबुद्बुदादिविवर्तवत्। आवर्तादौ
163731 नाभीकुहरादिसादृश्यात्कथंचिदन्याभतापि भवेत् इह तु सदृशस्य विसदृशस्य
163732 चान्यस्यात्यन्तासंभवादन्याभमपि कथं भवेदित्यर्थः॥ २१॥
163733
163734 अभावः खे च खमिदं सर्गादौ परमाम्बरम्।
163735 स्वयं जगदिवाभाति नान्यत्प्रलयसर्गकौ॥ २२॥
163736
163737 इदं जगत्सर्गस्यादौ अभावः अतः खं शून्यमेवेति तदा परमाम्बरं
163738 ब्रह्माकाश एवेति तावदविवादम्। तथा च तदेव स्वयमिदानीमपि जगदिवाभातीति
163739 दृष्टौ प्रलयसर्गकौ अन्यन्न॥ २२॥
163740
163741 यथा कषति चिद्रूपं तथैव रतिमेत्य तत्।
163742 दृष्टादृष्टैः स्वसंसारैश्चिरमास्ते यथा चिरम्॥ २३॥
163743
163744 तच्च चिद्रूपं कामकर्मवासनानुसारेण यथा यथा कषति कल्पनामालिङ्गति तथैव
163745 तत्र रतिमासक्तिमेत्य
163746 दृष्टादृष्टैर्वेद्यावेद्यैर्जडचिद्रूपैरन्योन्यतादात्म्याध्यस्तैः
163747 स्वसंसारैर्यथा प्राक्चिरमासीत्तथाग्रेऽपि चिरमास्ते॥ २३॥
163748

163749 दृश्यात्मकं रूपमेकमेकमस्यैवमक्षयम् ।
163750 स्वयमेवमजं भाति यन्न भातीव किंचन ॥ २४ ॥
163751
163752 दृष्टादृष्टरूपते तयोर्विवृण्वन् द्वितीयस्याक्षयत्वं दर्शयति -
163753 दृश्यात्मकमिति ॥ २४ ॥
163754
163755 चिदणोरुदरे सन्ति समस्तानुभवाणवः [अनुभवार्णवाः इति पाठश्चिन्त्यः
163756 । ] ।
163757 शिलाः शैलोदर इव स्वच्छाः खात्मनि खात्मिकाः ॥ २५ ॥
163758
163759 चिदणोरुदरे तत्तदाकारवासनावच्छिन्ना जगदनुभवाणवस्तिष्ठन्तीत्याह -
163760 चिदणोरिति ॥ २५ ॥
163761
163762 स्वभावनिष्ठास्तिष्ठन्ति [अत्र स्वभावभूता इति पाठो व्याख्यानुकूलः स्यात्
163763 ।] ते यदव्याकृतात्मनि ।
163764 मा तिष्ठन्ति तु वै ते यदव्यावृत्ताः परे पदे ॥ २६ ॥
163765
163766 किं शुद्धचिदणोरुदरे नेत्याह - स्वभावेति । स्वभाव आवृतात्मस्वरूपं
163767 तद्भूताः । परे पदे निरविद्ये चैतन्ये तु मा तिष्ठन्ति न सन्त्येव । यतस्तत्र
163768 व्यावर्त्यरूपान्तरा प्रसिद्धेरव्यावृत्ता अत्यन्ताभिन्ना एव स्युरित्यर्थः ॥ २६ ॥
163769
163770 तदेव जगदित्युक्तं ब्रह्म भारूपमाततम् ।
163771 पूर्वापरपरामर्शान्निपुणं निपुणाशयाः ॥ २७ ॥
163772
163773 यतस्तत्राव्यावृत्तास्ततस्तदेव जगन्नेतरदिति निपुणं पूर्वापरपरामर्शान्मयोक्तम्
163774 । हे निपुणाशयाः ॥ २७ ॥
163775
163776 अत्याश्चर्यमनष्टोऽयं परमात्सदनात्स्वयम् ।
163777 नानात्वबुद्ध्या नानैव जीवोऽहमिति ताम्यति ॥ २८ ॥
163778
163779 एवं शुद्धचिदैक्ये परमात्सदनान्न नष्टः अप्रच्युतोऽप्ययं जीवो नानात्वबुद्ध्या
163780 जीवोऽहमिति यत्ताम्यति ग्लायते तदत्याश्चर्यमित्यन्वयः ॥ २८ ॥
163781
163782 उच्यतां भास भो राजन्विपश्चिदपराख्य हे ।
163783 कियद्दृष्टं कियद्भ्रान्तं दृश्यं स्मरसि किं च वा ॥ २९ ॥
163784
163785 इत्थं वसिष्ठोक्तं विपश्चिच्चरितं स्वोक्त्या संवाद्य भासमुखोक्त्यापि
163786 संवादयितुं विश्वामित्र उवाच - उच्यतामिति । हे विपश्चिदपराख्य हे भास त्वया
163787 कियद्दृश्यं दृष्टं कियच्च भ्रान्तं तत्र किं च वा स्मरसि तत्किंचित्संक्षिप्य
163788 उच्यताम् ॥ २९ ॥
163789
163790 भास उवाच ।
163791
163792 बहु दृष्टं मया दृश्यं बहु भ्रान्तमखेदिना ।
163793 बह्वेव बहुधा नूनमनुभूतं स्मराम्यहम् ॥ ३० ॥
163794
163795 मयाअनुभूतानि महान्ति राजंश्चिरं सुदूरे विविधैः शरीरैः ।
163796 सुखानि दुःखानि जगन्त्यनन्तान्यनन्तमासाद्य महाम्बरं तत् ॥ ३१ ॥
163797
163798 तन्महाम्बरमव्याकृताकाशमासाद्य ॥ ३१ ॥
163799
163800 विचित्रदेहैर्वरशापयोगाद्दृश्यान्यनन्तानि मया महात्मन् ।

163801 जन्मान्तरावर्तविवर्तनानि दृढैकचित्तेन वरात्कृशानोः ॥ ३२ ॥
163802
163803 मया कृशानोर्वराद्दिगन्तदर्शनविषये दृढैकचित्तेन जन्मान्तरावर्तेषु
163804 विवर्तनानि तत्रानन्तानि दृश्यान्यनुभूतानीत्यनुषज्जते ॥ ३२ ॥
163805
163806 दृश्यात्मकोर्वीवपुषस्त्वविद्यादृशो जवेनान्तपरीक्षणाय ।
163807 देहेन देहेन जगत्प्रति प्राक् स्मृतेः सदाहं घनयत्नमासम् ॥ ३३ ॥
163808
163809 अहं प्रतिब्रह्माण्डं देहेन देहेन अनानादेहभेदेन भ्रमन्नपि
163810 प्राक्तनदृढनिश्चयस्मृतेर्हेतोर्दृश्यात्मकोर्व्यादिस्वरूपाया अविद्यादृशः
163811 अन्तपरीक्षणाय जवेन घनयत्नं् यथा स्यात्तथा आसं अभवमित्यर्थः ॥ ३३ ॥
163812
163813 समाः सहस्रं विटपोऽहमासमन्तर्मनाश्चेतनभुक्तदुःखः ।
163814 चित्तं विना पुष्पफलप्रताने वा कन्दवत्तत्तरसाङ्गरागः ॥ ३४ ॥
163815
163816 ततः अहं तस्य चित्तस्य तरसा मृतिकाले तरुदर्शनप्रयुक्तसंस्कारवेगेन अङ्गे
163817 देहग्रहणे रागो यस्य तथाविधः सन् सहस्रं समाः विटपः । अकारो मत्वर्थीयः ।
163818 विटपी आसम् । स कीदृशः । बहिःप्रवृत्तिनिमित्तप्राणचेष्टानाविष्करणादन्तरेव
163819 मनो यस्य । चेतनेन वृक्षदेहाभिमानिजीवेन भुक्तं दुःखं यत्र । तथा
163820 पूर्वापरपरामर्शहेतुं चित्तं विना पुष्पफलादीनां प्रताने जननविस्तारे वा
163821 कन्दःकन्दविशेषस्तद्वद्भौमरसकालादितन्त्र इत्यर्थः ॥ ३४ ॥
163822
163823 समाः शतं मेरुमृगोऽहमासं सुवर्णवर्णस्तरुपर्णकर्णः ।
163824 दूर्वाङ्कुरास्वादनगीतिनिष्ठ अहन्कनिष्ठो वनवासिमध्ये ॥ ३५ ॥
163825
163826 दूर्वाङ्कुराणामास्वादने गीतिषु च निष्ठा दृढासक्तिर्यस्य । वनजातानां
163827 मृगाणां मध्ये कनिष्ठः अल्पदेहोऽल्पबलश्च । अत एव कमपि अहन् अहिंसन् ॥ ३५ ॥
163828
163829 पादाष्टकैरावलितात्मपृष्ठो मृतेऽम्भसः क्लेशकृतात्ममृत्युः ।
163830 समाः शतार्धं शरभोऽहमासं क्रौञ्चाचले काञ्चनकन्दरासु ॥ ३६ ॥
163831
163832 शरभजातेः पृष्ठतोऽपि पादचतुष्टयेन संचारादिसामर्थ्ये उदरप्रदेशस्यापि
163833 पृष्ठत्वसंभवात्पादाष्टकैरावलिते आत्मनः पृष्ठे यस्य । मृते मरणे
163834 प्रसक्ते तु गर्जन्मेघनिर्गतात्करकाम्भसो निमित्तान्मेघेन सह योद्धुं
163835 गिरिशिखरादुत्पतनपतनादिक्लेशेनैव कृत आत्ममृत्युर्यस्य ॥ ३६ ॥
163836
163837 कालागुरुद्रुमलतावलितानिलेन विद्याधरीसुरतधर्मकलामृतानि ।
163838 पीतानि मे मलयसानुनि मन्दरे च मन्दारचन्दनकदम्बलतागृहेषु ॥ ३७ ॥
163839
163840 ततो मे इति कर्तुः शेषत्वे षष्ठी । विद्याधरजन्म प्राप्तेन मया मलयसानुनि मन्दरे
163841 च कालागुरुद्रुमाणां लताभिर्वलितेनालिङ्गितेन अत एव शीतमन्दसुरभिणा अनिलेन
163842 सह विद्याधरीणां सुरतधर्मेषु तदीयकलालक्षणान्यमृतानि पीतान्यनुभूतानि ॥
163843 ३७ ॥
163844
163845 हेमारविन्दमकरन्दपिशङ्गितानि पीतानि पञ्चदशवर्षशतानि मेरौ ।
163846 वैरिञ्चहंसतनयेन मया पयांसि तीरान्तरेषु रमतोपरि निर्झरिण्याः ॥ ३८ ॥
163847
163848 विरिञ्चहंसस्य तनयेन पुत्रजन्मप्राप्तेन मया मेरोरुपरि निर्झरिण्या
163849 मन्दाकिन्यास्तीरान्तरेषु रमता हेमारविन्दानां मकरन्दैः पिशङ्गितानि
163850 पि"गलवर्णीकृतानि पयांसि पीतानि ॥ ३८ ॥
163851
163852 क्षीरोदवेलावनगन्धवाहविलोलनीलालकवल्लरीणाम् ।

163853 समाः शतं शोकजरापहारि गीतं श्रुतं माधवसुन्दरीणाम् ॥ ३९ ॥
163854
163855 कालञ्जरे मञ्जरिते करञ्जगुञ्जावने जम्बुकतां गतोऽहम् ।
163856 गजेन पिष्टे हरिणा हतोऽसौ हस्ती मयात्रार्थमृतेन दृष्टः ॥ ४० ॥
163857
163858 ततोऽहं कालञ्जरे गिरौ करञ्जगुञ्जाप्रचुरे वने जम्बुकतां सृगालजन्म गतः
163859 प्राप्तः । तत्रापि गजेन पिष्टे संचूर्णिते स्वदेहे सत्यर्धमृतेन मया असौ मत्पेष्टा
163860 हस्ती हरिणा सिंहेन हतो दृष्टः ॥ ४० ॥
163861
163862 संतानकप्रकरहासिनि सह्यसानौ कस्मिंश्चिदन्यजगतीन्दुमुखी सुरस्त्री ।
163863 एकाकिनी कृतयुगार्धमथाहमासं कल्पद्रुमस्तबकसद्मनि सिद्धशापात् ॥
163864 ४१ ॥
163865
163866 अथ संतानकानां कल्पवृक्षभेदानां प्रकरैर्हासिनि हासवतीव शोभमाने
163867 सह्यगिरेः सानौ अहमिन्दुमुखी सुरस्त्री कृतयुगस्यार्थं सिद्धशापादासम् ॥ ४१ ॥
163868
163869 अद्रीन्द्रकच्छकरवीरलतालयेषु नीतं समाशतमशङ्कधिया मयान्यत् ।
163870 अन्यत्र दूरजगतीन्द्रगिरौ विराविवाल्मीकपक्षिवपुषाऽनिशमेककेन ॥ ४२ ॥
163871
163872 ततो मया अद्रीन्द्रस्य संनिधानात्सह्यस्य कच्छे जलप्राये प्ररूढानां
163873 करवीराणां लताः शाखास्तदन्तरप्रदेशेषु विरावी सदैवरवणशीलो वाल्मीकनामा
163874 पक्षिजातिभेदस्तद्वपुषा समानां शतं नीतम् । ततः करवीरवने
163875 सहभार्यापुत्रादिभिरुच्छिन्ने सति अन्यत्र दूरस्थे जगति इन्द्रगिरौ महेन्द्रपर्वते
163876 भृशं वियोगार्तेनैककेन शेषं वयो नीतम् ॥ ४२ ॥
163877
163878 अन्यत्र सानुनि मया परिलम्बमानाः सच्छायचन्दनवनावलिते लतानाम् ।
163879 दृष्टाः स्त्रियः फलमिवावलिता विलासैर्भुक्ताश्च ता अपहृता अपि
163880 सिद्धपान्थैः ॥ ४३ ॥
163881
163882 एवं जन्मद्वयेन सिद्धशापमोक्षानन्तरं सिद्धानुग्रहादेव सिद्धभूतेन मया
163883 महेन्द्रगिरेरेव सच्छायचन्दनवनावलिते अन्यत्र सानुनि लतानां दोलासु तत्फलमिव
163884 परिलम्बनाविलासैरावलिताः स्त्रियो दृष्टाः सिद्धपान्थैरपहृता अपि ता भुक्ताश्च ॥
163885 ४३ ॥
163886
163887 अन्यत्र पर्वतनितम्बकदम्बकच्छे नीतानि तापसतयोत्तमया दिनानि ।
163888 प्राप्यैकवस्त्वभिनिवेशविषूचिकात्तचित्तेन तान्तमतिनाऽमतिना मयान्तः ॥ ४४ ॥
163889
163890 तदनन्तरममतिना अविवेकेन एकवस्तुनि अविद्यान्तदर्शनलक्षणे
163891 योऽभिनिवेशस्तल्लक्षणया विषूचिकया आत्तं वशीकृतं चित्तं यस्य तथाविधेन अत
163892 एव तान्ता ग्लाना मतिर्यस्य तथाविधेन मया अन्तर्निर्वेदं प्राप्य अन्यत्र
163893 पर्वतनितम्बकदम्बकच्छे तापसतया दिनानि नीतानि ॥ ४४ ॥
163894
163895 ब्रह्माण्डसंपूरितमन्यदस्ति जलेचराशेषदिगन्तभूतम् ।
163896 संदिग्धतेजोम्बरवातसत्तं जलस्थभूताकृतिमात्रभूमि ॥ ४५ ॥
163897
163898 इत्थं स्वजन्मपरम्परावर्णनान्तराले बलात्स्मृतान्यत्याश्चर्याणि
163899 कानिचिदुत्कण्ठया वक्तुमारभते - ब्रह्माण्डेत्यादिना । हे मुने
163900 अन्यदेकमत्याश्चर्यमस्ति तच्छृणु । कीदृशं तत् । ब्रह्माण्डैरनन्तैः संपूरितम्
163901 । जलेचरा इवाशेषदिगन्तस्थितानि भूतानि यत्र तथाविधम् । जलेचरा इवेति
163902 दृष्टान्ततात्पर्यं विवृण्वन्विशिनष्टि - संदिग्धेति । संदिग्धा
163903 तेजोम्बरवाताख्यानां त्रयाणां महाभूतानां सत्ता यस्मिन् । जलस्थं जले
163904 प्रतिबिम्बितं भूतमिवाकृतिर्यस्यास्तथाविधाकृतिमात्रा भूमिर्यस्मिन् ।

163905 तदिदमीषद्व्याकृतनामरूपावस्थं ब्रह्मैवात्याश्चर्यमस्तीत्यर्थः ॥ ४५ ॥
163906
163907 एकत्र दृष्टा वनिता मयैका तस्याः शरीरे त्रिजगन्ति भान्ति ।
163908 प्रतिबिम्बितानीव सुदर्पणेऽन्तराकाशशैलादिदिगादिमन्ति ॥ ४६ ॥
163909
163910 तच्चाश्चर्य कलधौतशिलान्यायेन वनिताशरीरादिसर्वपदार्थेष्वपि सर्वजगद्गर्भं
163911 प्रत्येकं पर्याप्तमस्तीत्येतत्तत्राश्चर्यान्तरं मया दृष्टमिति वक्तुं
163912 कांचिद्वनितामुदाहरति - एकत्रेति । तस्या वनितायाः शरीरे सुदर्पणे अन्तः
163913 प्रतिबिम्बितानीव आकाशशैलादिसहितदिक्कालप्राण्यादिमन्ति त्रिजगन्ति भान्ति
163914 तदत्यन्तमाश्चर्यमित्यर्थः ॥ ४६ ॥
163915
163916 पृष्टा मयासौ वरगात्रि कासि शरीरमेतच्च किमीदृशं ते ।
163917 तयोक्तमङ्गेह चिदस्मि शुद्धा ममाङ्गमेतानि महाजगन्ति ॥ ४७ ॥
163918
163919 अथ सा वनिता मया पृष्टा । हे वरगात्रि त्वं कासि । ते एतच्छरीरमीदृशं
163920 त्रिजगद्घटितं किमिति । ततस्तया मां प्रत्युक्तम् । हे अङ्ग इहास्मिन्वस्तुजाते या शुद्धा
163921 चित् सर्वावभासिका साहमस्मि । इमानि च महाजगन्ति मम अङ्गं मूर्तामूर्तात्मकं
163922 शरीरम् । द्वे वाव ब्रह्मणो रूपे मूर्त चैवामूर्त च यस्य सर्वाणि भूतानि शरीरम्
163923 इत्यादिश्रुतेरिति भावः ॥ ४७ ॥
163924
163925 यथाहमेवं स्मयदेहिकेयं सर्वं तथैवाङ्ग न चित्रमेतत् ।
163926 अन्यैः स्वभावो विदितो न शुद्धो यदा न पश्यन्ति तदेत्थमङ्ग ॥ ४८ ॥
163927
163928 हे अङ्ग इयं त्वद्दृष्टा अहं यथा जगद्घटितत्वात्स्मयो विस्मय आश्चर्य
163929 तद्योग्यदेहवती तथा इदं सर्वमेतत्स्तम्भकुम्भादिवस्तुजातमपि
163930 सर्वजगद्घटितत्वाद्विचित्रमत्याश्च्र्यभूतमेव । तर्हि अन्यैः पृथग्जनैरपि सर्व
163931 वस्तु इत्थं कुतो न दृश्यते तत्राह - अन्यैरिति । यदा इत्थं स्वभावः प्रतिवस्तु न
163932 विदितस्तदा इत्थं न पश्यति । यदा त्वातिवाहिकमात्रभावदृढीकारे विदितो भविष्यति
163933 तदा द्रक्ष्यन्त्येव तेऽपीति भावः ॥ ४८ ॥
163934
163935 अवेदशास्त्रेण जगत्यशेषैर्भूतैः स्वदेहालयभित्तिभागात् ।
163936 एतद्विधेयं न विधेयमेतद्ध्वनिः स्वतः श्रूयत एव नित्यम् ॥ ४९ ॥
163937
163938 नन्विदमसमञ्जसम् । मया स्वदेहस्य
163939 सर्वजगद्घटितत्वेनाननुभवाद्देहान्तश्चक्षुराद्यप्रवेशेन यदि तत्र
163940 जगददर्शनं ब्रूषे तर्हि तत्रत्यवेदशास्त्रादेः श्रोत्रेण श्रवणं न स्यादेवेति
163941 ममासंभावनां लिङ्गैरुपलक्ष्य तत्संभावनार्थ सा मामाह - अवेदेति
163942 द्वाभ्याम् । त्वदादिभिरशेषैरपि भूतैः प्राणिभिः अवेदशास्त्रत्वेनाभिमतेऽपि
163943 बाह्यादन्यस्मिन् देहान्तर्गते जगति स्वदेहालयभित्तेर्भागात्
163944 एकदेशभूतात्स्वस्वकर्णशष्कुलीप्रदेशान्नित्यमनाहतध्वनिः
163945 सर्ववेदशास्त्रादिशब्दसामान्यरूपनादात्मकः स्वतः श्रूयत एव । स एव हि
163946 एतन्नित्यनैमित्तिकं कर्म शमदमादिज्ञानसाधनं च
163947 विधेयमवश्यमनुष्ठेयमिति सर्वविधिगर्भः । एतत्कलञ्जभक्षणादि न विधेयमिति
163948 सर्वनिषेधवेदशास्त्रगर्भश्चेति तच्छ्रवणेनैव तदन्तर्गतं
163949 विधिनिषेधशास्त्रमिव तदर्थभूतं जगदपि देहेऽस्तीति संभावयेति भावः ॥ ४९ ॥
163950
163951 ईदृक्स्वभावैव पदार्थसत्ता सा तेऽत्र यद्भित्त्यचलादयोऽपि ।
163952 स्वप्नादिमायास्विव मे वदन्ति वाचं न युष्मास्वसमञ्जसं तत् ॥ ५० ॥
163953
163954 उक्तन्यायेन स्तम्भकुम्भादिष्वपि सर्वजगत्सद्भावः संभावनीय इत्याशयेनाह ##-
163955 शब्दसामान्यस्वभावोऽनाहतध्वनिः ईदृक्स्वभावैव
163956 सर्वजगद्घटितसामान्यस्वभावैव । यद्यस्मात्कारणादत्र जगति प्रसिद्धा

163957 भित्त्यचलादयोऽपि सा ब्रह्मसत्तैव। न च भित्त्यादयो वाचं न वदन्तीत्यचेतना एवेति
163958 भ्रमितव्यम्। यतस्ते स्वप्नादिप्रसिद्धमायास्विव इदानीमपि मे पुरतः वाचं वदन्ति।
163959 यदा अत्यन्तजडत्वेन प्रसिद्धेष्वपि कुड्यादिषु सर्वजगद्घटितचेतनत्वं
163960 नासमञ्जसं तदा चेतनप्रायेषु युष्मासु युष्मदादिदेहेषु सुतरां
163961 तन्नासमञ्जसमित्यर्थः॥ ५०॥
163962
163963 अस्त्रीकसंसारगतेन दृष्टं मया क्वचिद्यावदनन्यकामम्।
163964 भूतानि निर्यान्ति बहूनि भूताद्विशन्ति भूतानि बहूनि भूतम्॥ ५१॥
163965
163966 वनितासंवादलक्षणमाश्चर्यं स्वदृष्टमुपवर्ण्याश्चर्यान्तरं तादृशं
163967 वर्णयति - अस्त्रीकेति। क्वचिद्देशे काले च न विद्यन्ते स्त्रियो यत्र तथाविधो यः
163968 संसारो जगत्तद्गतेन मया यावत्सकलं प्राणिजातं न विद्यते अन्यस्याह् कामो
163969 व्यतिकराभिलाषो यस्य तथाविधं दृष्टम्। तर्हि तत्र कथं पुत्रपौत्रादिसंगतिः
163970 पूर्वेषां मरणं वा तत्राह - भूतानीति॥ ५१॥
163971
163972 आएकानि दृष्टानि मयाञ्जसानि खेऽभ्राण्यदभ्राङ्ग झणज्झणानि।
163973 वृष्ट्या समन्तान्निपतन्ति खण्डैर्भवन्ति तीक्ष्णानि जनायुधानि॥ ५२॥
163974
163975 आश्चर्यान्तरमाह - एकानीति। आञ्जसानि उत्पातादिनिमित्तनिरपेक्षाणि। एकानि अन्यानि
163976 अभ्राणि खे दृष्टानि। तानि च गर्जनैः शस्त्रसंघट्टनध्वनिसाम्येन
163977 संजातझणज्झणानि। तेभ्यो वृष्ट्या यानि विद्युदादीनि जलवन्निपतन्ति तानि खण्डैः
163978 स्वशकलैर्जनानामायुधानि भवन्ति॥ ५२॥
163979
163980 अन्यत्र दृष्टं गगनेन यावदिहान्धया ग्रामगृहाणि यान्ति।
163981 विशन्त्यमुत्रान्त इहाभवद्वो ग्रामः स एवान्यत एव लब्धः॥ ५३॥
163982
163983 अन्यत्र आश्चर्यान्तरं दृष्टम्। किं तत्। इहास्मिञ्जगति यावत् यावन्ति ग्रामगृहाणि
163984 सन्ति तावन्ति अन्धया तिमिराद्युपहतदृष्ट्यैव गगनेन आकाशमार्गेण यान्ति अमुत्र
163985 दूरे दिगन्ते विशन्ति स च वो ग्रामः इह अभवत्। स एव मया अन्यतोऽन्यत्रैव लब्ध
163986 इत्याश्चर्यमित्यर्थः॥ ५३॥
163987
163988 नरामराऽहिप्रविभागमुक्तान्यन्यत्र भूतानि समानि सन्ति।
163989 खादेव सर्वाणि समुद्भवन्ति तत्रैव काले न लयं प्रयान्ति॥ ५४॥
163990
163991 अन्यत्र दृष्टमाश्चर्यान्तरमाह - नरेति। एते नरा एते अमरा एते अहय इति
163992 लोकत्रयवासिनां ये अवान्तरप्रविभागास्तैर्मुक्तानि अत एव समानि॥ ५४॥
163993
163994 अचन्द्रतारार्कमनन्धकारं स्वयंप्रकाशाखिलभूतजातम्।
163995 स्मरामि किंचिज्जगदेककान्तं ज्वालोदराभं दिनरात्रिमुक्तम्॥ ५५॥
163996
163997 अन्यत्राश्चर्यान्तरमाह - अचन्द्रेति। अनन्धकारत्वे हेतुः - स्वयंप्रकाशेति॥
163998 ५५॥
163999
164000 अपूर्वदैत्याहिनरामरादिभूतान्यपूर्वद्रुमपत्तनानि।
164001 अपूर्वलोकान्तरकार्यवन्ति स्मराम्यनन्तानि महाजगन्ति॥ ५६॥
164002
164003 आश्चर्यान्तरमाह - अपूर्वेति। प्रसिद्धसंस्थानव्यवहारवैलक्षण्यमपूर्वता॥
164004 ५६॥
164005
164006 दिगस्ति सा नो विहृतं न यस्यां न सोऽस्ति देशः खलु यो न दृष्टः।
164007 यन्नानुभूतं न तदस्ति कार्यमन्याश्रयं नापरमस्ति मर्शात्॥ ५७॥
164008

164009 किं बहुना। मया यस्यां दिशि न विहृतं सा दिङ्नास्ति। यो देशो न दृष्टः सोऽपि
164010 नास्ति। यत्कार्य कौतुकं नानुभूतं तदपि नास्ति।
164011 मदीयान्मर्शाद्विमर्शादनुभवरूपात्सर्वसाक्षिणः
164012 सकाशादन्याश्रयमन्याधिष्ठानकमपरं तद्यतिरिक्तं च यत्स्यात्तदपि नास्ति॥ ५७
164013 ॥
164014
164015 क्षीरोदकभ्रमितमन्दररत्नशृङ्गधाराग्रनिर्दलनजातझणज्झणानाम्।
164016 एकत्र संयुतमुपेन्द्रभुजाङ्गदानां शब्दं स्मरामि
164017 घनगर्जितशङ्कितेन॥ ५८॥
164018
164019 क्षीरोदके समुद्रे मथनार्थ भ्रमितो यो मन्दरगिरिस्तदीयरत्नमयशृङ्गाणां
164020 तीक्ष्णैः शाणप्रायैर्धाराग्रैर्निर्दलने निशातने जातझणज्झणानां
164021 सिञ्जितानामुपेन्द्रस्य भगवतो भुजाङ्गदानां घनगर्जितशङ्कितेन
164022 मेघगर्जनशङ्कया जनैः श्रुतमत्याश्चर्यभूतं शब्दं
164023 स्मरामीत्याश्चर्योक्तीनामुपसंहारः॥ ५८॥
164024
164025 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० नि० उ० अ० वि०
164026 भाससंसारवर्णनं नामैकत्रिंशाधिकशततमः सर्गः॥ १३१॥
164027
164028 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
164029 भाससंसारवर्णनं नामैकत्रिंशदुत्तरशततमः सर्गः॥ १३१॥
164030
164031 द्वात्रिंशाधिकशततमः सर्गः १३२
164032
164033 भास उवाच।
164034
164035 मन्दरे मृदुमन्दारमन्दिरे मन्दराभिधाम्।
164036 आलिङ्ग्याप्सरसं सुप्तं सरित्तृणमिवानयत्॥ १॥
164037
164038 वर्ण्यन्तेऽत्रापि भासेन भूयो जन्मपरिभ्रमाः।
164039 आश्चर्याणि च भूरीणि निःसारत्वं च संसृतेः॥
164040
164041 आश्चर्योपवर्णनैरन्तरितां ज्वजन्मपरम्परावर्णनकथां पुनरनुसंधत्ते -
164042 मन्दरे इत्यादिना। पर्वतनितम्बकदम्बकच्छे तापसभावानुभवेन
164043 बहुदिनयापनेन प्राप्तसिद्धिं अत एव मन्दरपर्वते मृदुनि मन्दारकुञ्जमन्दिरे
164044 मन्दराभिधामप्सरसमालिङ्ग्य सुप्तं मां वक्ष्यमाणा सरित् स्वप्रवाहपतितं
164045 तृणमिवानयत्। प्रवाहितवतीत्यर्थः॥ १॥
164046
164047 मामथासौ मया पृष्टा समाश्वास्य जलाकुला।
164048 बाले किमिदमित्युक्तं तया चपलनेत्रया॥ २॥
164049
164050 मामिति पूर्वान्वयि। अथानन्तरं जलेन आकुला व्याकुला असौ अप्सराः मया समाश्वास्य
164051 पृष्टा। हे बाले इदमाकस्मिकं नद्यामावयोः प्रवहणं किंनिमित्तमिति। ततो
164052 भयाच्चपलनेत्रया तया उक्तम्॥ २॥
164053
164054 इह चन्द्रोदयेष्वेताश्चन्द्रकान्तकटप्रजाः।
164055 नद्यो माद्यन्ति वनिताः सेष्टा इव निशागमे॥ ३॥
164056
164057 किमुक्तं तदाह - इहेति। हे कान्त इहास्मिन्प्रदेशे चन्द्रोदये सति
164058 चन्द्रकान्तशिलामयानां कटानामद्रिकटकानां प्रजाः संतानभूता एता नद्यो
164059 माद्यन्ति प्रस्रवजलैर्वर्धन्ते। यथा निशागमे सेष्टाः इष्टेन प्रियतमागमनेन
164060 सहिता वनिताः कामेन माद्यन्ति तद्वत्॥ ३॥

164061
164062 त्वत्संगमरसावेशवशात्तन्नु विस्मृतम् ।
164063 इत्युक्त्वा मामुपादाय सोड्डीना विहगीव खम् ॥ ४ ॥
164064
164065 तर्हि निद्रागमात्प्रागेवायमर्थस्त्वया मह्यं कुतो न निवेदितस्तत्राह -
164066 त्वत्सङ्गमेति । ननु इति कोमलामन्त्रणे । विस्मृतं मयेति शेषः । यथा
164067 गङ्गाकनकपङ्कजे स्थिता विहगी सहचरं भृङ्गमुपादाय खमुड्डीना तथा
164068 सा मामुपादाय खमुड्डीनेति परेण सहान्वयः ॥ ४ ॥
164069
164070 भृङ्गं शृङ्गवतः शृङ्गे गङ्गाकनकपङ्कजे ।
164071 अहमासं समाः सप्त तत्क्लिन्नोऽकर्दमाप्लुते ॥ ५ ॥
164072
164073 तेन जलेन क्लिन्नोऽहं तदनन्तरमकर्दमाप्लुते निर्मले मन्दरशृङ्गे सप्त
164074 समास्तया सह आसम् ॥ ५ ॥
164075
164076 अन्यन्मया जगद्दृष्टमृक्षचक्रविवर्जितम् ।
164077 गर्भगर्भस्थैकजातिस्वप्रकाशजनावृतम् ॥ ६ ॥
164078
164079 ततो जन्मान्तरे साश्चर्यजगदन्तरदर्शनमाह - अन्यदिति । ऋक्षचक्रेण
164080 ज्योतिश्चक्रेण विवर्जितम् । कदलीत्वच इव गर्भस्य गर्भे स्थिता एकजातयः
164081 स्वप्रकाशाश्च ये जनास्तैरावृतम् ॥ ६ ॥
164082
164083 न दिग्विभागो न दिनानि यत्र न चैव शास्त्राणि न वेदवादाः ।
164084 न चैव दैत्यादिसुरादिभेदो जगन्मया तादृगथात्मदीप्तम् ॥ ७ ॥
164085
164086 तर्हि तत्र कथं लौकिकवैदिकव्यवहारप्रवृत्तिस्तत्राह - नेति । आअत्मनैव दीप्तं
164087 प्रकाशमानम् ॥ ७ ॥
164088
164089 विद्याधरामरविहारविमानभूमावभ्रंलिहाचलनितम्बकदम्बकच्छे ।
164090 आसं समाः समरसोऽमरसोमनामा सप्तान्यसप्त ससमुद्रतटे तपस्वी ॥ ८ ॥
164091
164092 ततो जन्मान्तरमाह - विद्याधरेति । ससमुद्रतटे समुद्रतटसंनिहिते
164093 अभ्रंलिहानामत्युन्नतानामचलानां नितम्बकदम्बकच्छे अहं अमरसोमनामा
164094 विद्याधरः सप्त अन्यत् सप्त चतुर्दशसमास्तपस्वी आसम् ॥ ८ ॥
164095
164096 पवनवहनसंनिवेशनानासुहयपयोधरदेहकैरनेकैः ।
164097 गजहरिणमृगेन्द्रवृक्षवल्लीमृगनगपन्नगपक्षिभिः परीतम् ॥ ९ ॥
164098
164099 ततोऽहं वह्नेर्वरविभवेन जगति अभितः अविद्यां दिदृक्षुः सन् क्वचित्
164100 पवनवद्वहनं प्रवाहरूपेण गमनं तद्युक्तक्रमसंनिवेशैर्नानाविधा ये
164101 सुहया जात्यश्वाः पयोधरामेघा इव च देहा येषां
164102 तथाविधैर्जनैर्गजैर्हरिणैर्मृगेन्द्रैर्वृक्षैर्वल्लीभिरन्यैश्च मृगैर्नगैः
164103 पर्वतैः पन्नगैः पक्षिभिश्च परीतमनन्तकोशं गगनमवनितः समेत्य
164104 उरगाशनो गरुडस्तद्वद्बलात् वेगेनाग्रे सृतः प्रसृत इति द्वयोरन्वयः ॥ ९ ॥
164105
164106 गगनमवनितः समेत्य वह्नेर्वरविभवेन जगत्यनन्तकोशम् ।
164107 क्वचिदहमभितो दिदृक्षुरग्रे सृत उरगाशनवद्बलादविद्याम् ॥ १० ॥
164108
164109 क्वचिदहं जगतः परिनिर्गतः पतित एकमहार्णवविस्तृते ।
164110 नभसि तत्र निवासिनिभे सितः समयमन्वभवं पतनं तथा ॥ ११ ॥
164111
164112 तस्माज्जगतः परिनिर्गतोऽहं क्वचिदेकमहार्णववद्विस्तृते नभसि पतितः । तत्र

निवासिनिभे नक्षत्रगणे सितो बद्धः सन् दिनरात्रिमासर्त्वादिसमयमन्वभवम् | तथा
दिक्षु पतनं गमनं चान्वभवम् || ११ ||

आकाशकोशपतनानुभवैकवृत्तेः श्रान्तस्य मे पदमकार्यथ निद्रयान्तः
|
तादृक्सुषुप्तवपुषाथ मयोपलब्धं स्वप्नात्मजाग्रति तदात्मनि तत्र विश्वम्
|| १२ ||

वर्णितेन प्रकारेण आकाशकोशे पतनस्य गमनस्यानुभवनमेवैका मुख्या
वृत्तिर्यस्य तथा चिरपतनेन श्रान्तस्य मे अथानन्तरं निद्रया अन्तर्हृदि पदं
स्थानमकारि | तादृशा सर्वजनप्रसिद्धेन सुषुप्तवपुषा स्थितेन मया अथ
अनन्तरं प्रवृत्ते स्वप्नात्मके जाग्रति तदा तत्र अन्तरेव आत्मनि
स्वस्मिन्विश्वमुपलब्धं दृष्टम् || १२ ||

भूयो दिगन्तभुवनामरमन्दराद्रिसंसारचञ्चलतया लतयेव पक्षी |
अक्षीणवातबलया परिचाल्यमानस्तन्मासु तासु पतितो हि जगद्गुहासु || १३ ||

तत्रापि भूयो दिगन्तभुवनादिसंसारेण चञ्चलतया अक्षीणवातबलया लतया पक्षीव
परिचाल्यमानोऽहं तासु पूर्वसंकल्पितासु तेषां दृश्यानां मानानि माः इयत्तया
परिच्छेदास्तल्लक्षणासु जगद्गुहासु पतितः || १३ ||

विषयाशा दृशो यावत्तावद्यातः क्षणादहम् |
पुनस्तथैव पश्यंस्तु दृश्यं यातः पुनः पुनः || १४ ||

दृशश्चक्षुषो यावत्पर्यन्तं विषयाशा प्रसृता अहं तावत्प्रदेशपर्यन्तं
क्षणाद्यातः पुनरपि तथैव पश्यन् सन् तद्दर्शनकौतुकेन पुनःपुनर्दृश्यं
यातोऽस्मीत्यर्थः || १४ ||

इति दृश्यमदृश्यं च गम्यं चागम्यमेव च |
वेगाल्लङ्घयतो देशं मम वर्षगणा गताः || १५ ||

इति एवंरीत्या जागरेषु स्वप्नेषु च द्रष्टुं शक्यं दृश्यं तद्भिन्नमदृश्यं च
विषयमुद्दिश्य गम्यमगम्यं च देशं वेगाल्लङ्घयतो मम वर्षगणा बहवो
गताः || १५ ||

दृश्याख्याया अविद्याया न त्वन्तं प्राप्तवानहम् |
मिथ्यैव हृदि रूढायाः पिशाच्या इव बालकः || १६ ||

नेदं नेदं सदित्येव विचारानुभवे स्थितम् |
तथापीदमिदं चेति दुर्दृष्टिर्न निवर्तते || १७ ||

यद्यपि मया नेदं सत् नेदं सदिति विचारानुभवे स्थितं तथापि इदं सत्यमिदं च
सत्यमिति प्रतिविषयं दुर्दृष्टिर्न निवर्तते चिराभ्यस्तद्वैतसत्यतासंस्कारस्य
प्रबलत्वादिति भावः || १७ ||

प्रतिक्षणं सुखैर्दुःखैर्देशकालैः समागमैः |
सरिद्वारिवदालोला नवमायान्ति यान्ति च || १८ ||

विचारेण निरस्ता अपि दुर्दृष्टयः प्रतिक्षणं प्रसक्तैः
सुखैर्दुःखैर्देशकालभेदैरिष्टानिष्टजनसमागमैश्च सरिद्वारिवत् नवं
नवमायान्ति || १८ ||

164165 तालीतमालबकुलातुलतुङ्गशृङ्गमुन्नादवातजवमेकमहं स्मरामि।
164166 सूर्यादिभिर्विरहितं प्रकटं स्वकान्त्या सस्थावराद्रितटजङ्गममेव विश्वम्
164167 ॥ १९ ॥
164168
164169 तत्रैकमाश्चर्यं स्मृतमाह - तालीति। तच्च शृङ्गं सूर्यादिभिर्विरहितमपि
164170 स्वकान्त्या प्रकटं भासमानम्। विश्वं तु तस्य शृङ्गस्य
164171 स्थावरैरद्रितटैर्जङ्गमैश्च सहितं यत्सानु तत्स्थानीयमिति सर्वाधिष्ठानं
164172 ब्रह्मैवात्राश्चर्य शृङ्गं निर्दिष्टम्॥ १९ ॥
164173
164174 यदेतदेकान्तविहारहारि स्वच्छन्दमेकामितमस्तशङ्कम्।
164175 क्वचिन्मया चारुजगत्सु दृष्टं तुल्या न तस्यामरराजलक्ष्मीः॥ २० ॥
164176
164177 यदेतच्छृङ्गमेकान्ते विहारो येषां तत्त्वविदां तेषां हारि मनोहरं
164178 स्वच्छन्दमेकममितमस्तविकारशङ्कं चेति त्रिविधपरिच्छेदशून्यं तच्च
164179 क्वचिच्चारुजगत्सु ब्रह्मविन्मण्डलीषु दृष्टम्। अमरराजस्येन्द्रस्य हिरण्यगर्भस्य
164180 च लक्ष्मीस्तस्य तुलया संमिता तुल्या न। हैरण्यगर्भान्तानन्दानां परिमितत्वादिति
164181 भावः॥ २० ॥
164182
164183 इत्यार्षे श्रीवासिष्ठमहा० वा० दे० मो० नि० उ० अवि० वि० भासवर्णितस्वजन्मपरम्परा
164184 नाम द्वात्रिंशाधिकशततमः सर्गः॥ १३२ ॥
164185
164186 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
164187 भासवर्णितखजन्मपरम्परा नाम द्वात्रिंशाधिकशततमः सर्गः॥ १३२ ॥
164188
164189 त्रयस्त्रिंशाधिकशततमः सर्गः १३३
164190
164191 विपश्चिदुवाच।
164192
164193 कस्मिंश्चिदन्यत्र जगत्यपूर्वे दृष्टं मयेदं शृणु किं विचित्रम्।
164194 महाघवृत्तान्तदशासमानमविद्ययान्धेन वलात्कृतं यत्॥ १ ॥
164195
164196 अत्याश्चर्य क्वचिद्दृष्टं भासेनात्रोपवर्ण्यते।
164197 सप्तद्वीपप्रमाणस्य शवस्य पतनं दिवः॥
164198
164199 अविद्याख्यानेऽस्मिन्नत्याश्चर्यवर्णनप्रसङ्गेन शवोपाख्यानं भासमुखेन
164200 वर्णयितुं प्रस्तौति - कस्मिंश्चिदिति। हेमुने अस्माज्जगतोऽन्यत्र कस्मिंश्चिदपूर्वे
164201 जगति मया इदं वक्ष्यमाणं विचित्रमत्याश्च्र्यं दृष्टं तच्छृणु।
164202 यन्महाघानां ब्रह्महत्यादीनां
164203 फलभूतरौरवादिनरकवृत्तान्तदशासमानमतिबीइभत्समप्यविद्यया अन्धेन
164204 मया वह्निवरप्रार्थनाबलात् कृतं संपादितम्। अनुभूतमिति यावत्॥ १ ॥
164205
164206 अस्ति क्वचित्खे भवतामगम्ये जगज्ज्वलद्दीप्तिविचित्रसर्गः।
164207 एतादृगप्यम्बरतस्तदन्यत् स्वाप्नं पुरं जाग्रति चेतसीव॥ २ ॥
164208
164209 भवतामगम्ये गन्तुमशक्ये क्विद्व्योम्नि जगत् तत्र च ज्वलन्त्या चन्द्रसूर्यादिदीप्त्या
164210 विचित्रः सर्गोऽस्ति। तच्च सन्निवेशत एतादृगेतद्ब्रह्माण्डसदृशमप्यम्बरत
164211 एतद्दृष्ट्या शून्यत्वतोहेतोरस्मादन्यदेव। तत्र दृष्टान्तः - यथा स्वाप्नं
164212 स्वप्नदृष्टं पुरं जाग्रद्दृष्टपुरसदृशमपि जाग्रद्दृष्ट्या
164213 शून्यत्वादन्यदेव चेतसि भातं तद्वदित्यर्थः॥ २ ॥
164214
164215 तस्मिन्मया विहरता हृदयस्थमर्थमन्वेष्टुमक्षि निहितं ककुभां
164216 मुखेषु।

164217 पश्यामि यावदचलप्रतिमा धरायां छायालिजालमलिना परिबंभ्रमीति ॥ ३ ॥
164218
164219 तस्मिन् जगति निवसता मया हृदयस्थं स्वाभिलषितमर्थ दिगन्तेष्वन्वेष्टुं
164220 ककुभां मुखेषुअक्षि निहितम् । प्रेरितमिति यावत् । तेषु यावत्कौतुकं पश्यामि
164221 तावद्धरायां अलिजालमलिना अचलप्रतिमा महती छाया बंभ्रमीति भृशं
164222 भ्रमति ॥ ३ ॥
164223
164224 आश्चर्यमात्रमुचितं किमिदं निमेषादित्यक्षि वै जगति यावदहं त्यजामि ।
164225 खात्तावदद्रिमतुलं पुरुषाकृतिं द्रागावर्तवृत्तिभिरपश्यमहं
164226 पतन्तम् ॥ ४ ॥
164227
164228 ततः अतिमहत्त्वादाश्चर्यमात्रमिदं छायाकारं किमुचितमिति विमृशन् याव्दक्षि
164229 जगति ऊर्ध्वभागे त्यजामि प्रेरयामि तावदद्रीणां मानं परिमाणं अद्रिमा सा तुला
164230 यस्य तथाविधं खादावर्तवृत्तिभिः पतन्तं पुरुषाकृतिमहं द्रागपश्यम् ॥ ४
164231 । ।
164232
164233 कः स्यादयं गिरिगुरुः पुरुषो विराड्वा पर्यस्तपर्वतवदाशु पतच्छरीरः ।
164234 आकाशपूरकवपुः परमाम्बरोऽपि यो नैव भाति पिहिताखिलवासरश्रीः ॥ ५ ॥
164235
164236 गिरिरिव गुरुः आकाशपूरकवपुः पतच्छरीरोऽयं पुरुषः को ब्रह्मा वा स्याद्विराट्
164237 ब्रह्माण्डशरीरो वा स्यादिति वितर्के । येन परमाम्बरोऽपि यः प्रसिद्धः सूर्यः
164238 पिहिताखिलवासरश्रीः सन् नैव भाति ॥ ५ ॥
164239
164240 एवंविधां हृदि मनाक्कलयामि यावत्तावत्पपात सहसा नभसो विवस्वान् ।
164241 कल्पान्तवातपरिवृत्तपितामहाण्डपृष्ठावपातघनघोषजुषा जवेन ॥ ६ ॥
164242
164243 अहमेवंविधां चिन्तां यावन्मनाक्कलयामि तावत् सहसा नभसो विवस्वान् सूर्यः
164244 कल्पान्तवातैः परिवृत्तस्य परावर्तितस्य पितामहाण्डपृष्ठस्य
164245 ब्रह्माण्डोर्ध्वकपालस्य अवपात इव घनघोषवता जवेन वेगेन पपात ॥ ६ ॥
164246
164247 तस्मिन्पतति भीमात्मन्यपारावारदेहिनि ।
164248 सप्तद्वीपां वसुमतीं परिपूरयति क्षणात् ॥ ७ ॥
164249
164250 तदा त्वं किमकार्षीस्तत्राह - तस्मिन्निति द्वाभ्याम् । भीमात्मनि भयानकस्वरूपे
164251 पुरुषाकारे वस्तुनि पतति सति अहं स्वात्मनः शरीरस्य
164252 तदुपमर्दादवश्यभाविनाशमाशङ्क्याथ पार्श्वस्थमग्निमविशमिति
164253 द्वयोरन्वयः ॥ ७ ॥
164254
164255 स्वात्मनो नाशमाशङ्क्य सद्वीपभुवनैः सह ।
164256 अवश्यभाविपार्श्वस्थमहमग्निमथाविशम् ॥ ८ ॥
164257
164258 स जातवेदा भगवाञ्जन्मान्तरशतार्चितः ।
164259 मा भैषीरिति देहेन मामुवाचेन्दुशीतलः ॥ ९ ॥
164260
164261 स भगवान् जन्मान्तरशतार्चितो जातवेदा इन्दुशीतलः सन् मां मा भैषीरित्याह ॥ ९ ॥
164262
164263 जय देव त्वमस्माकं प्रतिजन्म परायणम् ।
164264 अकाल एव कल्पान्तो जातोऽतः पाहि मां प्रभो ॥ १० ॥
164265
164266 तदानीं स्वकृतामग्निप्रार्थनामाह - जयेति । जातः प्रसक्तः ॥ १० ॥
164267
164268 इत्युक्तेनाग्निना प्रोक्तं मा भैषीरिति तत्पुनः ।

164269 उत्तिष्ठागच्छ गच्छावो मल्लोकमिति चानघ ॥ ११ ॥
164270
164271 हे अनघ मल्लोकमग्निलोकं गच्छावस्त्वमागच्छ इति च प्रोक्तम् ॥ ११ ॥
164272
164273 इत्युक्त्वा शुकपृष्ठेऽसावारोप्य भगवांस्ततः ।
164274 देहैकदेशे तत्पाति भूतं दग्ध्वा नभः प्लुतः ॥ १२ ॥
164275
164276 स्ववाहनशुकपृष्ठे मामारोप्य तत् प्रागुक्तं पातोऽस्यास्तीति पाति भूतं शवं
164277 देहैकदेशे दग्ध्वा छिद्रीकृत्य नभः प्लुतः ॥ १२ ॥
164278
164279 अनन्तरं नभः प्राप्य दृष्टः कष्टाकृतिर्मया ।
164280 स तादृग्भूतसंपातमहोत्पातो भयप्रदः ॥ १३ ॥
164281
164282 तस्मिन्जवेन पतिते वसुधा चचाल साम्भोधिशैलवनपत्तनजङ्गलौघा ।
164283 चक्रे भृगुद्वयमयानजलस्रवन्ती भीमाकृतीन्व्यधुरदेहविभेदगर्तान् ॥
164284 १४ ॥
164285
164286 तस्मिन्महाशवे जवेन पतिते सति अम्भोध्यादिसहिता वसुधा चचाल । अयानजलाः
164287 निरुद्धोदकप्रवाहाः स्रवन्त्यो नद्यो यस्यां तथाविधा सती गिरिनदीनां कूलद्वये
164288 मार्गान्तरेण जलस्रवणात् भृगुद्वयं जलप्रपातद्वयं चक्रे । पतन्ति जलानि
164289 भीमाकृतीन् भयंकराकारान् अदेहविभेदान्
164290 मनुष्यादिदेहकृतभूविदारणजन्यवापीकूपादिविलक्षणान्गर्तान्व्यधुश्चक्रुः ।
164291 विधुरदेहविभेदकर्तान् इति पाठ वसुधाविधुरेण विसंष्ठुलेन स्वदेहविभेदेन
164292 कर्तान् वप्रादिकर्तनानि चक्रे इत्यर्थः ॥ १४ ॥
164293
164294 उर्वी रुरास ककुबुत्तरतो रुरास विरुरास च दक्षिणा दिक् ।
164295 द्यौरारुरास विरुरास सशैलभूतं सर्वं जगत्प्रलयसंभ्रमभीतमुच्चैअः
164296 ॥ १५ ॥
164297
164298 पुनः किमासीत्तदाह - उर्वीति । उर्वी भूः उत्तरतः ककुप् उत्तरा दिक् तथा पूर्वा
164299 दक्षिणा चकारात्पश्चिमा च ककुप् द्यौः शैलैर्भूतैश्च सहितं सर्व जगच्च
164300 प्रलयसंभ्रमेण भीतं सत् उच्चैः रुरास दध्वान रुरोद च ।
164301 धात्वावृत्तिस्तत्तच्छब्दवैलक्षण्यद्योतनाय ॥ १५ ॥
164302
164303 उर्वी रुरास धरणे सविरावरंहःसंरम्भतर्जितसमस्तदिगन्तरासा [रासो
164304 ध्वनिः |] ।
164305 व्योमापि घुंघुममलङ्घ्यमलं चकार
164306 नागारिवृन्दभयविद्रवणप्रचण्डम् ॥ १६ ॥
164307
164308 उक्तमेव स्पष्टं पुनराह - उर्वीति । धरणे पतितस्य शवस्य धारणे ।
164309 तारत्वाधिक्येन शब्दान्तरैरलङ्घ्यं घुंघुमं ध्वनिमलमत्यर्थ चकार ।
164310 नागारीणां गरुडानां भयेन विद्रवण इव प्रचण्डं दुःसहम् ॥ १६ ॥
164311
164312 निर्घातशब्द उदभूदभितो भयाय भीमाय भूधरदरीदृढदारणोत्थः
164313 ।
164314 उत्पातभीमजवजालयुगान्तवातसंरब्धकल्पघनघोषवितीर्णतर्जः ॥ १७ ॥
164315
164316 भूधरदरीणां दृढदारणादुत्थ उत्थितो निर्घात आस्फालनं तन्निमित्तः शब्दो
164317 भयाय भीमाय भयहेतवे श्रोत्रहृदयादिभेदनाय च उदभूत् । स कीदृक् ।
164318 उत्पातैर्भीमजवत्वाज्जालवदाकर्षिणो ये युगान्तवातास्तैः संरब्धा ये कल्पघनाः
164319 प्रलयाम्बुदास्तद्घोषेभ्यो वितीर्णा विश्राणिता तर्जा भर्त्सना येन तथाविधः ॥१७ ॥
164320

164321 तस्मिन्नवेन पतिते वसुधा ररास सारावदिङ्मुखतया शतवेधमागात् ।
164322 तत्रास्फुटन्कुलगिरीन्द्रमहातटानि पातालदेशमविशन्हिमवच्छिरांसि ॥ १८ ॥
164323
164324 तस्मिन्शवे । शतगुणं वेधममिधातमागात्प्राप । तत्र तस्मिन्वेधे ॥ १८ ॥
164325
164326 आसीत्तत्पतनं तस्य मेरुशैलशिलाकृतेः ।
164327 दलनं शैलशृङ्गाणां विदारणकरं भुवः ॥ १९ ॥
164328
164329 तस्य शवस्य तत्तादृशं पतनमासीत् । कीदृशं तदाह - दलनमित्यादि ॥ १९ ॥
164330
164331 क्षोभणं जलराशीनामद्रीणां भूतलार्पणम् ।
164332 पीडनं सर्वभूतानां क्रीडनं प्रलयार्थिनाम् ॥ २० ॥
164333
164334 भूतले अर्पणं समीकरणसाधनमिति यावत् । प्रलयार्थिनां । रुद्रगणानाम् ॥ २० ॥
164335
164336 पातनं भूतले भानोः स्थगनं द्वीपपद्धतेः ।
164337 चूर्णीकरणमद्रीणां दलनंन् मण्डलावनेः ॥ २१ ॥
164338
164339 स्थगनमाच्छादनम् ॥ २१ ॥
164340
164341 द्वितीयमिव भूपीठं ब्रह्माण्डार्धमिवापरम् ।
164342 पतितं खमिवाकृत्या तदपश्यन्नभश्चराः ॥ २२ ॥
164343
164344 आकृत्या मूर्ताकारेण ॥ २२ ॥
164345
164346 अथ पश्याम्यहं यावदसौ मांसमयोऽचलः ।
164347 न माति सप्तद्वीपायां भुवि तस्याङ्गमेककम् ॥ २३ ॥
164348
164349 तमालोक्य मया देवः प्रसादे समवस्थितः ।
164350 संपृष्टो भगवान्वह्निः प्रभो किमिदमित्यथ ॥ २४ ॥
164351
164352 कथं मांसमयः सार्धं स चार्कः पतितो दिवः ।
164353 स न माति हि भूपीठे सपर्वतवनाम्बुधौ ॥ २५ ॥
164354
164355 मांसमयो देहः कथं पतितः । तेन सार्ध स प्रसिद्धोऽर्कश्च कथं पतित
164356 इत्यावृत्त्या योज्यम् ॥ २५ ॥
164357
164358 अग्निरुवाच ।
164359
164360 प्रतिपालय पुत्र त्वं क्षणमेकं गतत्वरः ।
164361 यावच्छाम्यतु [शाम्यति इत्युभयत्रापि पाटः ।] दोषोऽयं कथयिष्यामि
164362 ते ततः ॥ २६ ॥
164363
164364 प्रतिपालय प्रतीक्षस्व । अयमेतत्पतनदोषो यावत्साकल्येन शाम्यति [शाम्यति
164365 इत्युभ्यत्रापि पाठः ।] ॥ २६ ॥
164366
164367 अथ तस्मिन्वदत्येवं समाजग्मुर्नभश्चराः ।
164368 तज्जगज्जालजातीया दिग्भ्यो गगनजाखिलाः ॥ २७ ॥
164369
164370 गगनजगखिलं वस्त्रभूषणमाल्यादि येषाम् ॥ २७ ॥
164371
164372 सिद्धसाध्याप्सरोदैत्यगन्धर्वोरगकिन्नराः ।

164373 ऋषयो मुनयो यक्षाः पितरो मातरोऽमराः ॥ २८ ॥
164374
164375 ते नभश्चाः के के तानाह - सिद्धेति ॥ २८ ॥
164376
164377 अथ सर्वेश्वरीं देवीं शरण्यां ते नभश्चराः ।
164378 भक्तिनम्रशिरःकायाः कालरात्रिं प्रतुष्टुवुः ॥ २९ ॥
164379
164380 नभश्चरा ऊचुः ।
164381
164382 बद्ध्वा खट्वाङ्गशृङ्गे कपिलमुरुजटामण्डलं पद्मयोनेः कृत्वा
164383 दैत्योत्तमाङ्गैः स्रजमुरसि शिरःशेखरं तार्क्ष्यपक्षैः ।
164384 या देवी भुक्तविश्वा पिबति जगदिदं साद्रिभूपीठभूतं सा देवी निष्कलङ्का
164385 कलिततनुलता पातु नः पालनीयान् ॥ ३० ॥
164386
164387 या देवी महाकल्पान्ते संहृतस्य पद्मयोनेः कपिलमुरुजटामण्डलं
164388 खट्वाङ्गशृङ्गे बद्ध्वा तथा दैत्यानामुत्तमाङ्गैः शिरोभिः उरसि स्रजं
164389 कृत्वा संहृतस्य तार्क्ष्यस्य गरुडस्य पक्षैः शिरःशेखरमवतंसं च
164390 कृत्वा भुक्तं विश्वं प्राणिजातं यया तथाविधा सती साद्रिभूपीठभूतमिदं
164391 जगत्पिबति । एवं सर्वजगत्संहारेऽपि दोषलेशेनाप्यलिप्तत्वान्निष्कलङ्का
164392 शुद्धचिन्मात्रस्वभावाप्यस्मदनुग्रहाय कलिततनुलता स्वीकृतशरीरा सती
164393 अवश्यपालनीयान्नः अस्मान्पातु रक्षतु ॥ ३० ॥
164394
164395 इत्यार्षे श्रीवासिष्ठमहारामा० वा० दे० मो० नि० उ० अ० वि० शवोपाख्याने
164396 महाशववर्णनं नाम त्रयस्त्रिंशाधिकशततमः सर्गः ॥ १३३ ॥
164397
164398 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
164399 महाशववर्णनं नाम त्रयस्त्रिंशाधिकशततमः सर्गः ॥ १३३ ॥
164400
164401
164402
164403 चतुस्त्रिंशाधिकशततमः सर्गः १३४
164404
164405 विपश्चिदुवाच ।
164406
164407 एतस्मिन्नन्तरे व्योम्नः स पतन्पुरुषो मया ।
164408 स्थगिताखिलभूपीठ शवरूपो विलोकितः ॥ १ ॥
164409
164410 देव्यास्तदाविर्भूतायाः शरीरमिह वर्ण्यते ।
164411 तत्पीतरक्तकुणपखादनं च गणैरथ ॥
164412
164413 एतस्मिन्नन्तरे देवारब्धदेवीस्तुतिकाले स प्राग्वर्णितः पतन्पुरुषो मया
164414 स्थगितमाच्छादितमखिलं भूपीठं येन तथाविधः शवरूपो निर्जीवो विलोकितः
164415 परिज्ञातः ॥ १ ॥
164416
164417 स यावदुदराभिख्यो देहभागोऽस्य येन भूः ।
164418 सप्तद्वीपापि पिहिताऽमातुः शैलोपमो महान् ॥ २ ॥
164419
164420 येन शवभागेन सप्तद्वीपापि भूः पिहिता सोऽस्य संपूर्णभूमौ यावत् साकल्येन
164421 अगातुर्मानमप्राप्तवतः शवस्य शैलोपमो महानुदराभिख्यः कुक्षिसंज्ञको
164422 भागः स एव मया दृष्ट इत्यर्थः ॥ २ ॥
164423
164424 वह्निनोक्तमनन्तं तत्तद्भुजोरुशिरश्च मे ।

164425 लोकालोकात्परं पारं प्राप्तं ह्यविषये नृणाम् ॥ ३ ॥
164426
164427 तर्हि तद्भुजोरुशिरस्त्वया दूरस्थं कथं ज्ञातं तत्राह - वह्निनेति । तत्तर्हि क्व
164428 पतितं तत्राह - लोकालोकादिति ॥ ३ ॥
164429
164430 व्योमवासिचये देवीमथ स्तुवति सादरम् ।
164431 व्योम्नः प्रकटतामागाच्छुष्का नु भवति स्वयम् ॥ ४ ॥
164432
164433 सा स्वयं शुष्का नीरक्तैव भवति । नु इति वितर्के ॥ ४ ॥
164434
164435 प्रेतवृन्दैरनुगता मातृमण्डललालिता ।
164436 कुम्भाण्डयक्षवेतालजालतारकिताम्बरा ॥ ५ ॥
164437
164438 कीदृशी सा तदाह - प्रेतवृन्दैरित्यादिना । तारकितं संजाततारकमिव
164439 कृतमम्बरं यया ॥ ५ ॥
164440
164441 शिरालदीर्घदोर्दण्डवनीकृतनभस्तला ।
164442 किरन्ती कीर्णदिग्दाहैर्दृष्टिपातैर्दिवाकरान् ॥ ६ ॥
164443
164444 शिरालैः शिरावद्भिर्दीर्घैर्दोर्दण्डैर्वनमिव संपद्यमानं कृतं नभस्तलं
164445 यया । दृष्टिपातैर्दिवाकरान्किरन्ती विक्षिपन्ती ॥ ६ ॥
164446
164447 स्फुरन्नानायुधाकारकचज्झणझणध्वनि ।
164448 शतखण्डं खगानीकं कुर्वाणा व्योमकोटरे ॥ ७ ॥
164449
164450 स्फुरतां नानायुधानामाकारैः कचज्झणझणध्वनि यथा स्यात्तथा व्योमकोटरे
164451 खगानीकं पक्षिसमूहं शतखण्डं कुर्वाणा ॥ ७ ॥
164452
164453 देहज्वालेक्षणोष्माढ्यैः शरीरावयवैस्त्विषः ।
164454 दीर्घवेणुवनाकाराः किरन्ती कोटियोजनाः ॥ ८ ॥
164455
164456 देहज्वालाभिरीक्षणोष्मभिर्नेत्राग्न्यौष्ण्यैश्चाढ्यैः संपन्नैः
164457 शरीरावयवैर्दीर्घवेणुवनाकाराः कोटियोजनपरिमितास्त्विषः किरन्ती विक्षिपन्ती ॥ ८ ॥
164458
164459 दन्तकान्तीन्दुविद्योतदुग्धस्नपितदिङ्मुखा ।
164460 कृशातिदीर्घविस्तीर्णशरीरापूरिताम्बरा ॥ ९ ॥
164461
164462 निरालम्बास्पदा सांध्या विततेवाभ्रमालिका ।
164463 प्रेतासनसमारूढा सुरूढा परमे पदे ॥ १० ॥
164464
164465 निर्गते आलम्बास्पदे यस्याः । अभ्रमालिकापक्षे निरालम्बमम्बरमास्पदं यस्याः ।
164466 परमे पदे ब्रह्मणि सुष्ठु रूढा प्रादुर्भूता ॥ १० ॥
164467
164468 स्फुरन्ती प्रज्वलद्रूपा संध्या जलधरारुणा ।
164469 दधाना गगनाम्भोधौ वाडवज्वलनश्रियम् ॥ ११ ॥
164470
164471 वाडवज्वलनो वडवानलस्तच्छ्रियं दधाना ॥ ११ ॥
164472
164473 शवैः शवाङ्गैर्मुसलैः प्रासतोमरमुद्गरैः ।
164474 वृसिकोलूखलहलैः किरन्ती चञ्चला स्रजः ॥ १२ ॥
164475
164476 बृसिकाः आसनानि ॥ १२ ॥

प्रजां कटकटाटोपैर्वहन्ती गगनाङ्गणे ।
द्दषदां घर्घरारावैः प्रावृड्गिरिरिवाचले ॥ १३ ॥

कटकटेति दन्तध्वन्यनुकरणं तदाटोपैस्तदाडम्बरैः प्रजां जनशरीरमालां
गगनाङ्गणे वहन्ती । यथा प्रावृङ्गिरिर्दृषदां मालां
घर्घरारावैर्निर्झरैरचले स्वदेहे वहति तद्वत् ॥ १३ ॥

देवा ऊचुरयं देवि उपहारीकृतोऽम्बिके ।
सार्धं स्वपरिवारेण शीघ्रमाह्रियतामिति ॥ १४ ॥

देवास्तां देवीमूचुः । किमूचुः । हे अम्बिके अयं शवस्ते उपहारीकृतोऽस्मीभिः
स्वपरिवारेण सार्ध शीघ्रमाह्रियतां भुज्यतामित्यूचुः ॥ १४ ॥

वदत्येवं सुरानीके तं शवं प्राणवायुना ।
देवी प्रववृते रक्तसारमाक्रष्टुमञ्जसा ॥ १५ ॥

देवी स्वयं सर्वप्राणशक्तित्वात्प्राणानां रक्ताधारत्वात्प्राणवायुनैव
तद्रक्तसारमाक्रष्टुं प्रववृते ॥ १५ ॥

प्राणेनाकृष्यमाणं तद्रक्तं भगवतीमुखे ।
अविशत्सांध्यमेघौघ इव मेरोर्गुहान्तरम् ॥ १६ ॥

तावद्रक्तं तया पीतं प्राणाकृष्टं नभःस्थया ।
यावच्छुष्का सती तृप्ता पीना सा चंडिका स्थिता ॥ १७ ॥

प्राक् शुष्का सती तृप्ता भूत्वा पश्चात्पीना पुष्टा भूत्वा स्थिता ॥ १७ ॥

ततो बभूव सा रक्तपरिपीनशरीरिणी ।
रक्ता वर्षाभ्रमालेव तडित्तरललोचना ॥ १८ ॥

यथा वर्षाकाले तडित्तरललोचना रक्तवर्णा अभ्रमाला स्थिता तद्वत् ॥ १८ ॥

लम्बोदरा भगवती विषमाहिविभूषणा ।
रक्तासवमदक्षीबा समस्तायुधधारिणी ॥ १९ ॥

व्योम्नि नर्तनमारेभे स्वशरीरार्धपूरिते ।
पर्यन्तगिरिमालाग्रस्थितामरनिरीक्षिता ॥ २० ॥

स्वशरीरेणार्धपूरिते व्योम्नि नर्तनमारेभे उपचक्रमे ।
पर्यन्तगिरिर्लोकालोकपर्वतस्तदीयशिखरमालाग्रेषु स्थितैरमरैर्निरीक्षिता ॥ २० ॥

ततः पिशाचकुम्भाण्डरूपिकादिमहागणाः ।
शवमावारयांचक्रुर्महाचलमिवाम्बुदाः ॥ २१ ॥

शवशैलो गृहीतोऽसौ कुम्भाण्डैः कटिभागतः ।
उदराद्रूपिकावृन्दैर्यक्षैः कुञ्जरविक्षतैः ॥ २२ ॥

उदरात् उदरमारभ्य । यक्षैस्तु स्वीयकुञ्जरदन्तविक्षतैः परिशिष्टैः
पार्श्वपृष्ठभागैर्गृहीतैः ॥ २२ ॥

भुजोरुकन्धराद्यास्ते तस्यान्येऽवयवा यतः ।

164529 ब्रह्माण्डस्य परं पारं प्राप्ताः परमविस्तृताः ॥ २३ ॥
164530
164531 ननु भुजोरुकन्धरादिभागे कुतो न गृहीतस्तत्राह - भुजोर्विति। यतस्ते
164532 ब्रह्माण्डखर्परस्य परं पारं जलाद्यावरणदेशं प्राप्तास्ततो
164533 हेतोस्तैर्भूतसंघातैर्दूरे दिगन्तरे स्थितास्तेन प्राप्ताः किंतु तत्रैव कालेन
164534 स्वयमेव कलिता इति द्वयोरन्वयः ॥ २३ ॥
164535
164536 ततस्तैर्भूतसंघातैः स्थिता दूरे दिगन्तरे।
164537 न प्राप्ता वै हि तत्रैव कालेन कलिताः स्वयम् ॥ २४ ॥
164538
164539 नृत्यन्त्यां चण्डिकायां खे भूतवृन्दे शवाकुले।
164540 देवेष्वद्रिषु तिष्ठत्सु बभूव भुवनं तदा ॥ २५ ॥
164541
164542 पिण्डाहार्यामदुर्गन्धिगुण्ठीकृतककुब्गणम्।
164543 रक्तगर्भाभ्रनिर्व्यूहैः खादिरज्वलनोज्ज्वलम् ॥ २६ ॥
164544
164545 कीदृशं बभूव तदाह - पिण्डेत्यादिना। पिण्डश
164546 आहार्यैर्भक्ष्यमाणैर्नीयमानैश्च आमदुर्गन्धिभिर्मासवसादिभिर्गुण्ठीकृता
164547 अवगुण्ठिता व्याप्ताः ककुब्गणा यत्र तथाविधम् ॥ २६ ॥
164548
164549 मांसचर्वणसंरम्भप्रोद्यच्छवशवस्वनम्।
164550 लतास्थिखण्डनोड्डीनबृहत्कटकटारवम् ॥ २७ ॥
164551
164552 शवशवेति चर्वणध्वन्यनुकरणम्। बीभत्सो रसः। लतानामिव शिराणामस्थीनां च
164553 खण्डनादुड्डीन आकाशे प्रसृतो बृहत्कटकटारवो यत्र ॥ २७ ॥
164554
164555 भूतसंघट्टविश्लेषवशाद्भीषणनिःस्वनम्।
164556 हिमवद्विन्ध्यशैलाद्रिप्रमाणास्थ्यचलावृतम् ॥ २८ ॥
164557
164558 देवीमुखानलज्वालापक्वमांसाक्तभूतलम्।
164559 रक्तसीकरनीहारसिन्दूरितककुब्गणम् ॥ २९ ॥
164560
164561 सर्वतः प्रेक्षकैर्देवैः सप्राकारदिगन्तरम्।
164562 रुधिरैकार्णवीभूतसप्तद्वीपवसुन्धरम् ॥ ३० ॥
164563
164564 सप्राकारं वरणवेष्टितमिव दिगन्तरं यत्र ॥ ३० ॥
164565
164566 अत्यन्तान्तर्हिताशेषसमस्ताचलमण्डलम्।
164567 रक्तप्रभाभ्रसंभारवस्त्रावृतदिगङ्गनम् ॥ ३१ ॥
164568
164569 अत्यन्तमन्तर्हितं भूतप्रवेशादस्थ्याद्याच्छादनाच्च तिरोधानं प्राप्तमशेषं
164570 समस्तं शिखरसहितमचलमण्डलं यत्र। रक्तप्रभारञ्जितैरभ्रसंभारैः
164571 रक्तवस्त्रावृता इव दिगङ्गना यत्र ॥ ३१ ॥
164572
164573 वृत्तालोलभुजभ्रान्तहेतिच्छन्ननभस्तलम्।
164574 दूरस्मृतिपथप्राप्तपुरपत्तनमण्डलम् ॥ ३२ ॥
164575
164576 हेतिभिर्देवीतद्गणायुधैश्छन्नं नभस्तलं यत्र ॥ ३२ ॥
164577
164578 अत्यन्तासंभवद्रूपसर्वस्थावरजंगमम्।
164579 संपन्नानन्तकुम्भाण्डरूपिकाद्येकसंगमम् ॥ ३३ ॥
164580

164581 संपन्नः अनन्तानां कुम्भाण्डरूपिकादीनामेवैकः संगमः समाजो यत्र ॥ ३३ ॥
164582
164583 नृत्तलोककराकारखगावलनजालकैः ।
164584 मानसूत्रैरिव विधेरन्यद्रचयतो जगत् ॥ ३४ ॥
164585
164586 नृत्ते प्रसक्ता ये लोका भूतगणास्तेषां ये अभिनयकराकारास्तल्लक्षणानां
164587 खगानामावलनाय बन्धनाय प्रसारितैर्जालकैरिव नभसि अन्यज्जगद्रचयतो
164588 विधेर्मानसूत्रैरिव च स्थितैर्भूमेरारभ्य आ अर्कगतं
164589 सूर्यमार्गपर्यन्तमूर्ध्वमधश्च दशदिग्लक्षणैः कुञ्जैस्तिर्यक् च
164590 पिशाचैरातानवितानाभ्यां नीतैरान्त्रलक्षणैस्तन्तुभिर्जगद्ब्रह्माण्डोदरं
164591 मिमानमिव तदा भुवनं त्रैलोक्यं बभूवेति द्वयोरन्वयेनोपक्रमेण संबन्धः
164592 ॥ ३४ ॥
164593
164594 भूमेरार्कगतं नीतैः पिशाचैरान्त्रतन्तुभिः ।
164595 मिमानमिव दिक्कुञ्जैस्तिर्यगूर्ध्वमधो जगत् ॥ ३५ ॥
164596
164597 जगदालोक्य तत्तादृगुदक्तोपप्लवाप्लुतम् ।
164598 भूतपूर्वमहीपीठस्थितिरक्तार्णवीकृतम् ॥ ३६ ॥
164599
164600 पूर्वं भूते भूतपूर्वे महीपीठे स्थितिर्येषां तथाविधै रक्तैरर्णवीकृतम् । अत एव
164601 उदक्तेन उद्गतेनोपप्लवेनाप्लुतमास्कन्दितं जगदालोक्य द्वीपसप्तकपर्यन्ते तस्य
164602 शवस्याङ्गकैः कुत्सितैरङ्गैरनाक्रान्ते लोकालोकाद्रेर्मूर्धनि स्थिताः सुराः
164603 खिन्नतरा आसन्निति द्वयोरन्वयः ॥ ३६ ॥
164604
164605 द्वीपसप्तकपर्यन्ते लोकालोकाद्रिमूर्धनि ।
164606 तदङ्गकैरनाक्रान्ते स्थिताः खिन्नतराः सुराः ॥ ३७ ॥
164607
164608 श्रीराम उवाच ।
164609
164610 ब्रह्माण्डादपि निर्गत्य यस्य तेऽवयवा गताः ।
164611 लोकालोकाचलस्तेन ब्रह्मन्न स्थगितः कथम् ॥ ३८ ॥
164612
164613 यस्य शवस्य ते अतीदिर्घा हस्तपादाद्यवयवा ब्रह्माण्डादपि बहिर्निर्गत्य गतास्तेन
164614 तादृशेन महाशवेन लोकालोकाचलः कथं न स्थगितो नाच्छादित इति रामेण
164615 सर्वज्ञो वसिष्ठ एव पृष्टो न भासः । तस्य लोकालोकपर्यन्तं दृष्ट्यप्रसरेण
164616 तदनभिज्ञत्वनिश्चयादिति भावः ॥ ३८ ॥
164617
164618 श्रीवसिष्ठ उवाच ।
164619
164620 द्वीपसप्तकमध्येऽस्मिन्राम तस्योदरं स्थितम् ।
164621 शिरःखुरभुजाद्यङ्गं ब्रह्माण्डात्परतः स्थितम् ॥ ३९ ॥
164622
164623 अत एव वसिष्ठ एव तदुत्तरमाह - द्वीपेत्यादिन । हे राम तस्य उदरं
164624 उदरोपलक्षितं मध्यशरीरं द्वीपसप्तकमध्ये स्थितम् । शिरःखुरोपलक्षितौ पादौ
164625 भुजाद्यङ्गं च ब्रह्माण्डात्परतः स्थितमिति भासोक्तं सत्यमेव ॥ ३९ ॥
164626
164627 पार्श्वाभ्यामूरुमध्याच्च कटिपार्श्वद्वयात्तथा ।
164628 शिरोंसद्वयमध्याभ्यां लोकालोकः स लक्ष्यते ॥ ४० ॥
164629
164630 तथापि शवस्य पार्श्वाभ्यां ऊर्वोर्मध्यात्कटिपार्श्वद्वयात् तथा
164631 शिरोंसद्वयमध्याभ्यां च शृङ्गाणामनाच्छादनात्स लोकालोकपर्वत
164632 ऊर्ध्वं लक्ष्यते दृश्यत एवेत्यर्थः ॥ ४० ॥

164633
164634 तत्रोपविष्टास्ते देवा लक्ष्यन्ते शृङ्गमूर्धसु |
164635 सुशुद्धकान्तयस्तापादजला जलदा इव || ४१ ||
164636
164637 एवं प्रश्नोत्तरमुक्त्वा कथाशेषमपि भासेनापरिज्ञातं वसिष्ठ एवाह -
164638 तत्रेत्यादिना | तापादन्तःसंतापाच्छरदर्कातपाच्च || ४१ ||
164639
164640 प्रसारिताङ्गकमधो वक्त्रं तत्पतितं शवम् |
164641 संअभक्षयति भूतौघे प्रनृत्यन्तीषु मातृषु || ४२ ||
164642
164643 अधोवक्त्रं तच्छवं भूतौघे संभक्षयति सति || ४२ ||
164644
164645 वहत्स्वसृक्प्रवाहेषु मेदोगन्धे विजृम्भिते |
164646 दुःखिताश्चिन्तयामासुः प्रत्येकममरा इदम् || ४३ ||
164647
164648 इदं वक्ष्यमाणं चिन्तयामासः || ४३ ||
164649
164650 हा कष्टं क्व गता पृथ्वी क्व गता जलराशयः |
164651 क्व गता जनसंघाताः क्व गता धरणीधराः || ४४ ||
164652
164653 तदेवाह - हा कष्टमित्यादिना || ४४ ||
164654
164655 तादृक्चन्दनमन्दारकदम्बवनमण्डितः |
164656 मण्डपः पुष्पराशीनां कष्टं क्व मलयो गतः || ४५ ||
164657
164658 पुष्पराशीनां मण्डप इव स्थितो मलयः || ४५ ||
164659
164660 उच्चावदाता विपुला हिमवद्भूमयोऽपि ताः |
164661 नीताः शौक्ल्यरुषेवाशु रुधिरेणात्मपङ्कताम् || ४६ ||
164662
164663 रुधिरेण कर्त्रा हिमकृते शौक्ल्ये विषये रुषा क्रोधेनेव तदभिभवाय
164664 आत्मपङ्कतां स्वीयकर्दमभावम् || ४६ ||
164665
164666 क्रौञ्चद्वीपतले क्रौञ्चे योऽभूत्कल्पद्रुमो महान् |
164667 ब्रह्मलोकलसच्छाखः सोऽपि चूर्णत्वमागतः || ४७ ||
164668
164669 क्रौञ्चनाम्नो द्वीपस्य तले क्रौञ्चे गिरौ यः कल्पद्रुमोऽभूत् || ४७ ||
164670
164671 हा क्षीरार्णव पारिजातकमलाचन्द्रामृतानां पते हा दध्यर्णव
164672 नावनीतशिखरिप्रोद्भूतवेलावन |
164673 हा मध्वर्णव नालिकेरगिरिके योगेश्वरीसेवित क्वेदानीं समुपैष्यथ क्व वनिता
164674 दिग्दर्पणत्वं गताः || ४८ ||
164675
164676 पारिजातानां कमलायाश्चन्द्रस्यामृतस्य चोत्पादकत्वात्पते स्वामिन् हे क्षीरार्णव |
164677 नावनीता नवनीतभरिता ये शिखरिणस्तेषु प्रोद्भूतं वेलावनं यस्य तथाविध हे
164678 दध्यर्णव वेलास्थे नालिकेरप्रधाने अनुकम्प्ये गिरौ गिरिके योगेश्वर्या सेवित हे
164679 मध्वर्णव हा भवतां प्रत्येकं शोच्यता इत्यर्थः | इदानीं क्व समुपैष्यथ
164680 स्फटिकादिरत्नशिलाभिर्वनितानां देवस्त्रीणां दिशां च दर्पणत्वं क्व वा गताः ||
164681 ४८ ||
164682
164683 हा कल्पद्रुमकाञ्चनामललतानिःसंधिबन्धाचल
164684 क्रौञ्चद्वीपविरिञ्चहंसनलिनीनीरन्ध्रदिग्जालक |

164685 यातः क्वेह कदम्बकाननदरीविश्रान्तविद्याधरी
164686 क्रीडाकोविदनागरामरगृह त्वं पुष्करद्वीपक ॥ ४९ ॥
164687
164688 कल्पद्रुमेण काञ्चनीभिरमलाभिर्लताभिश्च निःसंधिर्निरुपाधिर्बन्धः संबन्धो
164689 यस्य तथाविधः क्रौञ्चाचलो यस्मिंस्तथाविध हे क्रौञ्चद्वीप त्वम् । तथा
164690 विरिञ्चिहंसैर्नलिनीभिश्च नीरन्ध्रं निबिडितं दिग्जालं यस्य तथाविध । तथा
164691 कदम्बकाननदरीषु विश्रान्तानां विद्याधरीणां रतिक्रीडासु कोविदानां
164692 नागराणाममराणां च गृहभूत हे पुष्करद्वीपक त्वं चेति युवां इह क्व यातः
164693 क्व गतौ ॥ ४९ ॥
164694
164695 स्वादूदोदग्रतापावलकुसुममहीपावनानां वनानां
164696 गोमेधद्वीपकल्पद्रुमकनकलतासुन्दरीणां दरीणाम् ।
164697 शाकद्वीपाचलानाममरतरुवनैर्दंशितानां सितानां स्मृत्यैवोदेति पुण्यं
164698 सुरपदसुखदं मानवानां नवानां ॥ ५० ॥
164699
164700 स्वादूदस्य समुद्रस्य तदीयानां उदग्रतापं आवलयन्ति निरुन्धन्ति तथाविधानां
164701 कुसुमच्छन्नमहीपावनानां वनानाम् । तथा गोमेधद्वीपस्य
164702 तदीयकल्पद्रुमाणां तत्रत्यकनकलतानां ताभिः सुन्दरीणां दरीणां । तथा
164703 अमरतरूणां कल्पवृक्षाणां वनैर्दंशितानां कञ्चुकितानां तत्पुष्पैः सितानां
164704 क्रौञ्चद्वीपसहितानां तदचलानां चेति नवानां पदार्थानां स्मृत्यैव
164705 मानवानां सुरपदं स्वर्गस्तत्सुखदं पुण्यमुदेति ॥ ५० ॥
164706
164707 मन्दानिलावलितपल्लवबालवल्लीसंतानभासितसमस्तदिगन्तराणि ।
164708 ध्वस्तानि तानि सकलानि वनानि कष्टमाश्वासमेष्यति कथं जनता न जाने ॥ ५१ ॥
164709
164710 मन्दानिलैरावलितपल्लवा या बालवल्ल्यस्तद्युक्तैः संतानैः
164711 कल्पवृक्षभेदैर्भासितानि समस्तदिगन्तराणि येषां तानि तादृशानि सकलानि
164712 वनानि ध्वस्तानि भग्नानि । कष्टमिति खेदे । अतः परमस्मदादिजनता आश्वासं
164713 विश्रामं चित्तसमाधानं च कथमेष्यति न जाने इति तत्र कस्यचिदुक्तिः ॥ ५१ ॥
164714
164715 कदा नु तानीक्षुरसाब्धितीरे वनानि खण्डाचलभूमिकासु ।
164716 द्रक्ष्येम भूयो गुडमोदकानि तथा कुमाराण्यपि शर्करायाः ॥ ५२ ॥
164717
164718 इक्षुरसाब्धेस्तीरे खण्डः शिलीभूतशर्करा तन्मयैरचलैर्भूषितासु महीषु तानि
164719 प्रसिद्धमाधुर्याणि गुडमोदकानि कदा नु द्रक्ष्येम पश्येम द्रक्ष्याम इति वा ।
164720 छान्दसो विकरणव्यत्ययः । तथा शर्करायाः कुमाराणि क्रीडार्थाः पुत्रिका अपि कदा
164721 द्रक्ष्यामः ॥ ५२ ॥
164722
164723 कदम्बकल्पद्रुमशीतलेषु तालीतमालीसवनाचलस्य ।
164724 कदा नु तच्चन्दनसुन्दरीणां पश्येम नृत्तं कनकालयेषु ॥ ५३ ॥
164725
164726 तालीतमालीभिः सवनस्य तदचलस्य कदम्बैः कल्पद्रुमैश्च शीतलेषु
164727 कनकालयेषूपविष्टाः सन्तस्तत्प्राग्बहुशोऽनुभूतं चन्दनलिप्तानां
164728 सुन्दरीणामप्सरसां नृत्तं चन्दनलतालक्षणानां सुन्दरीणां नृत्तं वा कदा
164729 नु पश्येम । आशंसायां लिङ् ॥ ५३ ॥
164730
164731 गतानि कष्टं स्मरणीयरूपतां जम्बूद्रुमस्याग्रफलानि तान्यपि ।
164732 येषां नदीं द्वीपसमुद्रमेखला वहत्यसौ जम्बुमती रसाम्बुभिः ॥ ५४ ॥
164733
164734 जम्बूद्रुमस्य तानि गजप्रमाणत्वेनामृतरसत्वेन जाम्बूनदस्वर्णहेतुत्वेन च
164735 प्रसिद्धान्यग्रफलानि स्मरणीयरूपतां गतानि । कष्टमिति खेदे । येषां फलानां
164736 रसाम्बुभिः प्रभवां नदीं द्वीपाः समुद्राश्च मेखला यस्यास्तथाविधा असौ

164737 जम्बुमती जम्बूद्वीपरूपा मही वहति ॥ ५४ ॥
164738
164739 शिलीन्ध्रनीरन्ध्रमहीध्रन्ध्रक्षीबामरस्त्रीकृतगीतनृत्यम् ।
164740 संस्मृत्य संस्मृत्य सुरोदतीरं प्रागब्जमुर्वीव हृदावदीर्ये ॥ ५५ ॥
164741
164742 तथा शिलीन्ध्रैर्नीरन्ध्राणां निरवकाशीकृतानां महीध्राणां रन्ध्रेषु गुहासु
164743 क्षीबाभिर्मधुमत्ताभिरमरस्त्रीभिः कृतं गीतसहितं नृत्यं
164744 यस्मिंस्तथाविधं सुरोदस्य समुद्रस्य तीरं पुनः पुनः संस्मृत्य प्राक्
164745 प्रातःकाले अब्जं पद्ममिव संप्रति उर्वीव च अहं हृदा अवदीर्ये । विदारणं
164746 प्राप्नोमीत्यर्थः ॥ ५५ ॥
164747
164748 पश्यासृगम्भसि नवार्णवमूर्ध्नि भासा सौवर्णपर्वतशताग्रशिखाः
164749 कचन्ति ।
164750 संध्यारुणा उदयनास्तमयावनीनां स्तोकोदितेन्दुकलिका इव दिङ्मुखेषु ॥ ५६ ॥
164751
164752 हे मित्र असृग्रक्तमम्भो यस्य तथाविधे नवस्य अभिनवस्यार्णवस्य मूर्ध्नि
164753 उपरिभागे सौवर्णानां मेर्वादीनां पर्वतशतानामग्रशिखाः शृङ्गाणि
164754 उत्तरादिदिङ्मुखेषु उदयास्तमयावनीनां सूर्योदयास्तमयसंनिहितभूमीनां
164755 संध्याभ्यामरुणाः स्तोकोदिता इन्दुकलिका इव भासा कचन्ति दीप्यन्ते त्वं पश्य ॥ ५६ ॥
164756
164757 तादृक्सागरवारिराशिवलया द्वीपान्तरालंकृता
164758 प्रोच्चाद्रीन्द्रनिविष्टवारिदघटानीलोत्पलानां स्थली ।
164759 स्रोतोजङ्गलकाननोग्रनगरग्रामाग्रहाराम्बरा नो जाने तरुपल्लवाङ्कुरवती
164760 कष्टं क्व याता मही ॥ ५७ ॥
164761
164762 तादृशा वर्णितप्रकाराः सागररूपा ये वारिराशयो जलसमूहास्ते वलया इव यस्याः
164763 । द्वीपान्तरैर्द्वीपभेदैरलंकृता । प्रोच्चेष्वद्रीन्द्रेषु अर्थात्स्तनप्रायेषु
164764 निविष्टानामम्बुदघटालक्षणानां नीलोत्पलमालानां स्थली आधारभूता
164765 तद्भूषितेति यावत् । स्रोतांसि नद्यो जङ्गलानि काननानि भटैरुग्राणि नगराणि ग्रामा
164766 अग्रहारा ब्राह्मणग्रामाश्चाम्बराणि यस्याः । तरुपल्लवाङ्कुरादिभूषणवती मही
164767 संप्रति क्व याता नो जाने । कष्टमिति खेदे ॥ ५७ ॥
164768
164769 इत्यार्षे श्रीवा० वाल्मी० दे० मो० नि० उ० अवि० वि० शवोपाख्याने देवपरिदेवनवर्णनं
164770 नाम चतुस्त्रिंशदधिकशततमः सर्गः ॥ १३४ ॥
164771
164772 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
164773 देवपरिदेवनवर्णनं नाम चतुस्त्रिंशदधिकशततमः सर्गः ॥ १३४ ॥
164774
164775
164776 पञ्चत्रिंशदधिकशततमः सर्गः १३५
164777
164778 श्रीवसिष्ठ [भास उवाच इत्युभयत्र पाठः ।] उवाच ।
164779
164780 मत्तेन भूतवृन्देन किंचिच्छेषीकृते शवे ।
164781 इदमूचुः पुनर्दिक्षु गिरौ देवाः सवासवाः ॥ १ ॥
164782
164783 भुक्ते मांसेऽत्र भूतौघैः पीते रक्ते च भूः कृता ।
164784 मेदसा मेदिनी रक्तशेषेण मदिरार्णवः ॥
164785
164786 दिक्षु स्थिते लोकालोकगिरौ स्थिता देवा इदं वक्ष्यमाणमूचुः ॥ १ ॥
164787
164788 विद्याधरामरविहारविमानभूमावप्यास्तृतान्यशिशिरीकरणाय भूतैः ।

164789 मेदोमयानि पवनप्रसृतामलाभ्रखण्डाञ्चिताम्बरसमान्युरुजालकानि ॥ २ ॥
164790

164791 विद्याधराणाममराणां च विहारार्थानां विमानानां संचारभूमौ
164792 नभस्यप्यशिशिरीकरणाय भूतैर्देवीगणैर्भेदः प्रचुराणि
164793 पवनप्रसृतैरमलैरभ्रखण्डैरञ्चितेनाम्बरेण समानि उरूणि आन्त्रजालकानि
164794 आस्तृतानि ॥ २ ॥
164795

164796 द्वीपेषु सप्तस्वपि पश्य मेदोजलानि भूतैः प्रविसारितानि ।
164797 भुक्तं च मांसं रुधिरं च पीतं किंचिद्द्रुता संप्रति दृश्यतां भूः ॥ ३
164798 । ।
164799

164800 दृश्यतां दर्शनयोग्यताम् ॥ ३ ॥
164801

164802 मेदःपटैरावलिताखिलाङ्गीकष्टं स्थिता संप्रति मोदना भूः ।
164803 मेदोमयैः शारदमेघजालैः सकम्बलानीव वनानि भान्ति ॥ ४ ॥
164804

164805 मोदना सर्वप्राणिप्रमोदप्रदा भूः संप्रति मेदःपटैरावलिताखिलाङ्गी सती स्थिता
164806 कष्टम् । वनानि च मेदोमयैः शारदमेघजालैः सकम्बलानि
164807 धूसरकम्बलसंवीतानीव भान्ति ॥ ४ ॥
164808

164809 पश्यैतानि तदस्थीनि संपन्नानि महाद्रयः ।
164810 हिमाद्रिशिखराणीव स्थितान्यावार्य दिक्तटम् ॥ ५ ॥
164811

164812 तस्य शवस्यास्थीनि ॥ ५ ॥
164813

164814 श्रीवसिष्ठ [भास उवाच इत्युभयत्र पाठः ।] उवाच ।
164815

164816 देवेषु कथयत्स्वेवं कृत्वेमां मेदिनीं धराम् ।
164817 मेदोजालैः स भूतौघो मत्तो व्योम्नि ननर्त ह ॥ ६ ॥
164818

164819 स भूतौघो देवीगणस्तृप्तः सन् इमां पीतशिष्टमेदोजालैर्मेदिनीं मेदोलिप्तां
164820 कृत्वा मतः सन् व्योम्नि ननर्त । हेति प्रसिद्धौ ॥ ६ ॥
164821

164822 नृत्यत्सु भूतवृन्देषु शिष्टं रक्तं सुरैर्भुवः ।
164823 एकप्रवाहेणैकस्मिन्निक्षिप्तं मकरालये ॥ ७ ॥
164824

164825 एकप्रवाहेण संकल्पकृतेन सप्तानां मध्ये एकस्मिन्मकरालये समुद्रे निक्षिप्तम् ॥
164826 ७ ॥
164827

164828 सुरार्णवं तमेवैनं संकल्पं विदधुः सुराः ।
164829 ततःप्रभृति सोऽद्यापि संपन्नो मदिरार्णवः ॥ ८ ॥
164830

164831 तमेवैनं समुद्रं संकल्पं विधाय सुरार्णवं विदधुः ॥ ८ ॥
164832

164833 भूतानि नृत्तमाकाशे तानि कृत्वा पिबन्ति ताम् ।
164834 मदिरां पुनराकाशे नृत्यन्त्यानन्दमन्दिरे ॥ ९ ॥
164835

164836 तां तत्रत्यां मदिरां पिबन्ति ॥ ९ ॥
164837

164838 पिबन्त्यद्यापि तानीव मदिरां मदिरार्णवात् ।
164839 खे नृत्यन्ति च भूतानि सह योगेश्वरीगणैः ॥ १० ॥
164840

तानि भूतानिव अद्यापि इदानींतनान्यपि भूतानि तस्मान्मदिरार्णवान्मदिरां पिबन्ति
खे नृत्यन्ति च ॥ १० ॥

तेषां तान्यथ भूतानां मेदोजालानि भूतले ।
विस्तृतान्यवशुष्काणि स्थितातो मेदिनी मही ॥ ११ ॥

तेषां भूतानां तानि पीतशिष्टानि मेदोजालानि भूतले शुष्काणि अतोहेतोर्मही
मेदिनीनाम्ना स्थिता ॥ ११ ॥

इति क्रमाच्छान्तिमुपागते शिवे पुनः प्रवृत्ते दिनयामिनीक्रमे ।
प्रजाः ससर्जाथ नवाः प्रजापतिः पुनः स सर्गोऽभवदत्र पूर्ववत् ॥ १२ ॥

एवमादित्योऽपि देवैः पूर्ववत्स्वपदमारोपितः पर्वतादयश्च पूर्ववत्क्लृप्ता इति
सूचयन्नाह - इतीति । इति उक्तात्क्रमाच्छवे शान्तिं क्षयमुपागते सति सूर्यस्य
स्वस्थानारोपणान्मेर्वादीनां चोद्धरणाद्दिनयामिनीक्रमे पुनः प्रवृत्ते सति अथ
प्रजापतिर्नवाः प्रजाः ससर्ज । अत्र भूतले सः सर्गः पूर्ववदभवत् ॥ १२ ॥

इत्यार्षे श्रीवासि० वाल्मीकीये दे० मो० निर्वा० उ० अ० विप० शवो० शवोपशमो नाम
पञ्चत्रिंशदधिकशततमः सर्गः ॥ १३५ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
शवोपशमो नाम पञ्चत्रिंशदधिकशततमः सर्गः ॥ १३५ ॥

षट्त्रिंशदधिकशततमः सर्गः १३६

भास उवाच ।

अथाहं तं महादेवं पावकं पृष्टवानिदम् ।
शुकपक्षतिकोणस्थः श्रूयतामवनीश्वर ॥ १ ॥

अग्निर्भासेन पृष्टोऽत्र शववृत्तान्तमादितः ।
असुरो मशकश्चैणो व्याधश्चेत्याद्यवर्णयत् ॥

अग्निवाहनस्य शुकस्य पक्षतिः पक्षमूलं तत्कोणस्थः । हे अवनीश्वर दशरथ ॥ १ ॥

भगवन्सर्वयज्ञेश स्वाहाधिप हुताशन ।
किमिदं नाम संपन्नं कथ्यतां किमिदं शवम् ॥ २ ॥

यदिदमिदानीं शवं नाम संपन्नं तत्पूर्वं किं किंनिमित्तं च तथा संपन्नमिति
द्वौ प्रश्नौ ॥ २ ॥

वह्निरुवाच ।

श्रूयतामखिलं राजन्यथावद्वर्णयामि ते ।
त्रैलोक्यभासुरानन्तशववृत्तान्तमक्षतम् ॥ ३ ॥

तत्राद्यप्रश्नस्योत्तरं वह्निः श्रावयति - श्रूयतामित्यादिना ॥ ३ ॥

अस्त्यनन्तमनाकारं परमं व्योम चिन्मयम् ।
यत्रेमान्यपसंख्यानि जगन्ति परमाणवः ॥ ४ ॥

164893 तत्रादौ वक्ष्यमाणसंवेदनभावाद्यध्यासानां परममूलं ब्रह्मैवेति
164894 दर्शयति - अस्तीति | अपसंख्यान्यपगतसंख्यानि || ४ ||
164895
164896 शुद्धचिन्मात्रनभसि तस्मिन्सर्वगते क्वचित् |
164897 सर्वात्मन्युदभूत्संवित्संवेदनमयी स्वयम् || ५ ||
164898
164899 संवेदनं विषयाकारं ज्ञानं तन्मयी || ५ ||
164900
164901 सा तेजःपरमाणुत्वमपश्यद्वेदनावशात् |
164902 भावितार्थात्मकतया स्वप्ने त्वमिव पान्थताम् || ६ ||
164903
164904 सा च स्वविषयतया तेजः परमाणुभावं स्वस्य वेदनास्वभाववशादेवापश्यत् |
164905 यथा त्वं पान्थं भावयन्सुप्तः स्वस्यैव पान्थतां पश्यसि तद्वत् || ६ ||
164906
164907 परमाणुरसंवित्त्वादपश्यदणुतां स्वयम् |
164908 भास्वतीं पद्मजरजस्तुल्यां संकल्पनात्मिकाम् || ७ ||
164909
164910 असंवित्त्वादज्ञानावृत्तचित्त्वात्परमाणुः पद्मोत्पन्नरजस्तुल्यां भास्वतीं
164911 स्फुटं भासमानाम् || ७ ||
164912
164913 सोच्छूनतां भावयन्ती पुनरप्यभवत्स्वयम् |
164914 चक्षुरादीनीन्द्रियाणि वपुष्यन्वभवत्स्वतः || ८ ||
164915
164916 सा च भास्वत्यणुता वृद्ध्या खोच्छूनतां भावयन्ती सती
164917 अन्यच्चक्षुरादीनीन्द्रियाणि अन्वभवदनुभूतवती | ततस्तानि वपुषि
164918 संलग्नानीत्यन्वभवत् || ८ ||
164919
164920 अपश्यदग्रे च जगच्चक्षुरादि स्वभावतः |
164921 आधाराधेयवद्भूतमयंन् स्वप्नपुरं यथा || ९ ||
164922
164923 चक्षुरादि च अग्रे शब्दस्पर्शादिगुणाधाराधेयवद्भूतमयंन् जगदपश्यत् || ९ ||
164924
164925 असुरो नाम तत्रासीत्प्राणी मानी बभूव ह |
164926 असत्यप्रतिभासात्म पितृमातृपितामहः || १० ||
164927
164928 द्वितीयप्रश्नविषयंन् निमित्तपरम्परां वर्णयितुमुपक्रमते - असुर इति | तत्र
164929 वेदनादिविषयान्ताध्यारोपरूपकार्यकरणसंघातानां मध्ये असुरो नाम
164930 जातिविशेषवान् कश्चित्प्राणी आसीत् | स च असुरस्वभावादेव मानी अभिमानवान् बभूव
164931 ह किल | तस्य पितृमातृपितामहाः किं नासन् | आसन्नेव किंतु ते
164932 विदूरथपित्रादिवदसत्यप्रतिभासात्मानो यस्य तथाविध इत्यर्थः || १० ||
164933
164934 दर्पोत्सिक्तया तत्र कस्यचित्स महामुनेः |
164935 यदा मृदितवानासीदाश्रमं शर्मभाजनम् || ११ ||
164936
164937 असुरत्वादेव दर्पेणोत्सिक्ततया आर्द्रीकृतचणकवदुच्छूनतया || ११ ||
164938
164939 मुनिः शापमदात्तस्य महाकारतयाश्रमः |
164940 त्वया यन्नाशितो मृत्वा भव त्वं मशकोऽधमः || १२ ||
164941
164942 महाकारतया अतिस्थूलशरीरतया | अधमः अतिक्षुद्रः || १२ ||
164943
164944 स तच्छापहुताशोऽथ तस्मिन्नेव तदा क्षणे |

असुरं भस्मसाच्चक्रे जलमौर्व इवानलः ‖ १३ ‖

निराकारं निराधारमाकाशबलयोपमम् ।
चित्तं किंचिदिवाचेत्यमासीच्चेतनमासुरम् ‖ १४ ‖

तदा तदासुरं चेतनं किमासीत्तत्राह - निराकारमिति । अचेत्यं चित्तं
सुषुप्तमूर्च्छितमिवासीत् ‖ १४ ‖

तदेकत्वं ययौ साम्याद्भूताकाशेन चेतनम् ।
तदास्पदेन तत्राथ वायुना चैकतां ययौ ‖ १५ ‖

तदव्याकृतरूपं चेतनं भूताकाशेनैकत्वं ययौ । तद्भूताकाशं च
स्वास्पदेन वायुनैकतां ययौ ‖ १५ ‖

आसीच्चेतनवातात्माऽभविष्यत्प्राणिनामकः [चेतनवान् इत्यपि पाठः ।] ।
रजसा पयसा व्याप्तस्तेजसा नभसाणुना ‖ १६ ‖

चेतनवातः प्राणस्तदात्मा स एव देहलाभे प्राणिनामकोऽभविष्यत् । रजः पार्थिवो
भागस्तदादिभूतचतुष्टयव्याप्तः । अणुना अपञ्चीकृतेन ‖ १६ ‖

स पञ्चतन्मात्रमयश्चिन्मात्रलवकोऽणुकः ।
स्पन्दमाप स्वभावेन व्योम्नि वातलवो यथा ‖ १७ ‖

तत्र क्रियाशक्त्याविर्भावमाह - स इति ‖ १७ ‖

अथ तस्यानिलान्तस्थं चेतनं तद्व्यबुध्यत ।
कालानिलजलैर्भूमौ बिजमङ्कुरकृद्यथा ‖ १८ ‖

स्पन्देन लिङ्गदेहे ज्ञानशक्त्याविर्भावमाह - अथेति । वर्षादिकालः प्राच्योऽनिलो
वर्षादिजलं चेत्येतैरङ्कुरकृद्बीजं यथा उच्छूनभावेन व्यबुध्यत तद्वत् ‖ १८ ‖

शुद्धशापविदन्तस्था मशकत्वविदास्य चित् ।
वेधिता मशकाङ्गानि विदित्वा मशकोऽभवत् ‖ १९ ‖

शुद्धस्य मुनेः शापं वेत्तीति शुद्धशापवित् प्राणान्तं स्थिता
स्वमशकत्वविदारूपा अस्यासुरस्य चित् तत्संस्कारवेधिता सती मशकाङ्गानि
पक्षपादादीनि विदित्वा स्वयमेव मशकोऽभवत् ‖ १९ ‖

स्वेदजस्याल्पदेहस्य निःश्वासनिपतत्तनोः ।
द्वे तस्य मशकस्येह दिने भवति जीवितम् ‖ २० ‖

किंयोनिः क्रियत्कालं तस्य जीवनं तदाह - स्वेदजस्येति । निःश्वासमात्रेणापि
निपतत्युड्डीयते तनुर्यस्य । द्वे दिने जीवितं परमायुरभवदित्यनुषङ्गः ‖ २० ‖

श्रीराम उवाच ।

प्राणिनामिह सर्वेषां योन्यन्तरज एव किम् ।
समुद्भवः संभवति किमुतान्योऽपि वा प्रभो ‖ २१ ‖

स्वप्नवदेव जाग्रदित्यसकृद्भगवतोक्तम् । स्वप्नदेहस्य च न योनित उद्भवो
दृश्यते जाग्रद्देहस्य तु दृश्यते तद्दृष्टान्तेन जाग्रद्देहवदेव सर्वत्र योनित
एवोद्भवोऽस्तु उतान्यथापीति संदिहानो रामः प्रसङ्गाद्वसिष्ठं पृच्छति -

164997 प्राणिनामिति। विवर्तोपादानांशे ब्रह्ममयः। परिणाम्युपादानांशे योनिजः॥ २१॥
164998
164999 श्रीवसिष्ठ उवाच।
165000
165001 ब्रह्मादीनां तृणान्तानां द्विधा भवति संभवः।
165002 एको ब्रह्ममयोऽन्यस्तु भ्रान्तिजस्ताविमौ शृणु॥ २२॥
165003
165004 पूर्वरूढजगद्भ्रान्तिभूततन्मात्ररञ्जनात्।
165005 भूतानां संभवः प्रोक्तो भ्रान्तिजो दृश्यसङ्गतः॥ २३॥
165006
165007 तत्र द्वितीयं लक्षयति - पूर्वेति। पूर्वं तद्योन्यनुभवरूढया
165008 तद्देहतादात्म्यदृढभ्रान्त्या तत्तद्भूततन्मात्राणां रञ्जनात्तदाकारेण
165009 भूतानां प्राणिनां यः संभवः स भ्रान्तिजः। एतेभ्यो भूतेभ्यः समुत्थाय
165010 तान्येवानुविनश्यति। यद्यद्भवन्ति तदाभवन्ति इत्यादिश्रुतेरिति भावः॥ २३॥
165011
165012 अभातायां जगद्भ्रान्तौ भूतभावः स्वयं भवन्।
165013 यः स ब्रह्ममयः प्रोक्तः संभवो न स योनिजः॥ २४॥
165014
165015 नित्यमुक्तब्रह्मणः कदाप्यभातायामेव जगद्भ्रान्तौ स्वयमेव विवर्ततया
165016 सर्गादौ जीवभावेन भवन् यश्चतुर्विधभूतभावः स ब्रह्ममय इत्यर्थः॥ २४॥
165017
165018 एवं स्थिते स मशको जगद्भ्रान्तिवशोत्थितः।
165019 न तु ब्रह्मोत्थितस्तस्य राम चेष्टाक्रमं शृणु॥ २५॥
165020
165021 स च आजानसिद्धैः कपिलसनकादिभिरेवानुभूयते नाज्ञैर्मशकादिभिरिति भ्रान्तिज
165022 एव प्रकृतो मशकसंभव इत्याशयेनाह - एवमिति। भासोपक्रान्तकथाशेषं
165023 वसिष्ठः स्वयमेवोत्साहाच्छ्रावयति - तस्येति। २५॥
165024
165025 क्षमेक्षुशष्पकक्षादिपुञ्जगुञ्जेषु गुञ्जता।
165026 स्वायुषोऽर्धं दिनं तेन सर्वं भुक्तं विवल्गता॥ २६॥
165027
165028 क्षमायां भूमौ इक्षुगुल्मेषु शष्पेषु बालतृणेषु काशमुञ्जादिकक्षादिपुञ्जेषु
165029 च गुञ्जन्ति अव्यक्तध्वनिं कुर्वन्ति ये मशकास्तेषु स्वयमपि गुञ्जता तथा ध्वनता
165030 विवल्गता क्रीडता तेन मशकेन दिनद्वयात्मकस्य स्वायुषोऽर्धमेकं दिनं सर्वं
165031 भुक्तम्॥ २६॥
165032
165033 शाद्वलोदरदोलायां दोलनं बाललीलया।
165034 चिरमारब्धमेतेन सार्धं मशिकया स्वयम्॥ २७॥
165035
165036 ततो द्वितीयदिनचेष्टामाह - शाद्वलेति। मशिकया भार्यया सार्धम्॥ २७॥
165037
165038 दोलाश्रमार्तस्तत्रासौ यावद्विश्राम्यति क्वचित्।
165039 तावद्धरिणपादाग्रगिरिपातेन चूर्णितः॥ २८॥
165040
165041 हरिणपादाग्रमेव मशकदृष्ट्या गिरिस्तत्पातेन॥ २८॥
165042
165043 हरिणाननसंदर्शत्यक्तप्राणतया तया।
165044 पूर्वक्रमगृहीताक्षः स जातो हरिणस्ततः॥ २९॥
165045
165046 आननग्रहणेन संपूर्णो हरिणाकारो लक्ष्यते। तस्य यः संदर्शः
165047 सम्यङ्मरणकाले भावनं तेन त्यक्तः प्राणो येन तत्तया। पूर्वं
165048 मशकदेहग्रहणे उक्तो यः क्रमस्तेनैव क्रमेण गृहीतान्यक्षाणि

165049 बाह्यान्तःकरणानि येन ॥ २९ ॥
165050
165051 विहरन्हरिणोऽरण्ये व्याधेन धनुषा हतः ।
165052 व्याधाननगदृष्टित्वात्संजातो व्याध एव सः ॥ ३० ॥
165053
165054 व्याधो वनेषु विहरन्संयातो मुनिकाननम् ।
165055 तत्र विश्रान्तवान्सङ्गान्मुनिना प्रतिबोधितः ॥ ३१ ॥
165056
165057 सङ्गात् सत्सङ्गलाभभाग्यात् ॥ ३१ ॥
165058
165059 भ्रान्तः किमिदमादीर्घदुःखाय धनुषा मृगान् ।
165060 हंसि पासि न कस्मात्त्वं तन्त्वं जगति भङ्गुरे ॥ ३२ ॥
165061
165062 किं प्रतिबोधितस्तदाह - भ्रान्त इत्यादिना । तन्त्वं
165063 महाफलामहिंसाभयदानादिशास्त्रमर्यादां कस्मान्न पासि ॥ ३२ ॥
165064
165065 आयुर्वायुविघट्टिताभ्रपटलीलम्बाम्बुवद्भङ्गुरं भोगा
165066 मेघवितानमध्यविलसत्सौदामनीचञ्चलाः ।
165067 लोला यौवनलालना जलरयः कायः क्षणापायवान्पुत्र त्रासमुपेत्य
165068 संसृतिवशान्निर्वाणमन्विष्यतां ॥ ३३ ॥
165069
165070 व्याधकुलाचारप्राप्ता जीविका मृगवधस्तत्त्यागे कथं जीविनं कथं वा
165071 भोगसिद्धिस्तत्राह - आयुरिति । न जीवनं भोगा वा पुरुषार्थः । हिंसादिना
165072 तत्संपादने अनन्तकालभोग्यस्य पारलौकिकानर्थस्यावश्यंभावात् । आयुषो न
165073 ह्यभङ्गुरत्वमस्ति येन तदप्रसक्तिः । यत आयुर्वायुविघट्टितास्वभ्रपटलीषु लोलं
165074 यदम्बु तद्वद्भङ्गुरम् । तत्र भोगास्तु मेघवितानस्य मध्ये विलसन्ती या सौदामनी
165075 विद्युत्तद्वच्चञ्चलाः । तद्योग्या यौवनलालना यौवनविलासास्तु जलस्य रयो वेग इव
165076 लोलाः । कायो भोगायतनं च क्षणे अपायवान् संभावितापायः । हे पुत्र अतो हेतोः
165077 पारलौकिकभाव्यनर्थपरम्परालक्षणसंसृतिवशात् त्रासमुपेत्य
165078 अभयदानाहिंसाद्युपायैरात्यन्तिकानर्थनिवृत्त्युपलक्षितनित्यनिरतिशयानन्द##-
165079
165080 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० निर्वा० उ० अ० वि० श०
165081 मशकव्याधबोधनं नाम षट्त्रिंशदधिकशततमः सर्गः ॥ १३६ ॥
165082
165083 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
165084 मशकव्याधबोधनं नाम षट्त्रिंशदधिकशततमः सर्गः ॥ १३६ ॥
165085
165086
165087 सप्तत्रिंशदधिकशततमः सर्गः १३७
165088
165089 व्याध उवाच ।
165090
165091 एवं चेत्तन्मुने ब्रूहि कीदृग्दुःखपरिक्षये ।
165092 न कर्कशो न च मृदुर्व्यवहारक्रमो भवेत् ॥ १ ॥
165093
165094 व्याधेन पृष्टोऽत्र मुनिर्धारणाभ्यासतः स्वयम् ।
165095 परकायप्रवेशेन तत्स्वप्नं दृष्टमब्रवीत् ॥
165096
165097 एवं हिंसादिव्यवहारो दुःखहेतुश्चेत्तर्हि दुःखपरिक्षये हेतुभूतो
165098 व्यवहारक्रमः कीदृग्भवेत्तद्ब्रूहि ॥ १ ॥
165099
165100 मुनिरुवाच ।

165101
165102 इदानीमेव संत्यज्य धनुषा सह सायकान्।
165103 मौनमाचारमाश्रित्य शान्तदुःखमिहोष्यताम्॥ २॥
165104
165105 मुनीनामाचारक्रम एव दुःखक्षयहेतुस्तत्सहवासेन शिक्षणीय इत्याशयेनोत्तरं
165106 मुनिराह - इदानीमेवेति। मौनं मुनिषु प्रसिद्धं
165107 यमनियमविचाराद्याचारमाश्रित्य॥ २॥
165108
165109 श्रीवसिष्ठ उवाच।
165110
165111 इति संबोधितस्तेन परित्यज्य धनुःशरान्।
165112 आसीन्मुनिसमाचारस्तत्रैवायाचिताशनः॥ ३॥
165113
165114 तत्र तस्मिन्नाश्रम एव॥ ३॥
165115
165116 विवेश मनसा मौनी ततः शास्त्रविवेकिताम्।
165117 दिनैरेव यथा पुष्पमामोदेन नराशयम्॥ ४॥
165118
165119 ततः सत्सङ्गाच्छास्त्रप्रसिद्धां सारासारविवेकशीलतां विवेश। यथा पुष्पं
165120 मुकुलपरिपाकविकासादिक्रमोद्भवेनामोदेन नराणामाशयं हृदयं
165121 ह्लादयद्विशति तद्वत्॥ ४॥
165122
165123 अपृच्छन्मुनिशार्दूलं कदाचित्तमरिन्दम।
165124 भगवन्दृश्यते स्वप्नः कथमन्तर्बहिः स्थितः॥ ५॥
165125
165126 एवं संजातविवेकः स व्याधः कदाचित्तं मुनिशार्दूलमपृच्छत्। हे अरिन्दमेति
165127 दशरथसंबोधनम्। किमपृच्छत्तदाह - भगवन्निति। हे भगवन्
165128 प्राणिनामन्तःस्थितः स्वप्नो जाग्रदिव बहिः कथं दृश्यते। बहिः स्थितश्च
165129 प्रपञ्चः स्वप्नः सन् कथमन्तर्दृश्यते। प्राण्यन्तर्गतः स्वप्नः कथं
165130 केनोपायेन दृश्यते। एवमन्तर्बहिश्च स्थितः प्रपञ्चः स्वप्नः कथं दृश्यते।
165131 स्वप्न एव चेत्प्रपञ्चस्तर्हि अन्तर्बहिरिति द्विधा स्थितः कथं दृश्यते।
165132 इत्यनेकसंदेहसंपिण्डिताः पञ्च तन्त्रेण प्रश्नाः॥ ५॥
165133
165134 मुनिरुवाच।
165135
165136 ममापि साधो प्रथममेष एव विवेकिनः।
165137 पुरा चित्ते वितर्कोऽभूत्कुतोऽप्यभ्रमिवाम्बरे॥ ६॥
165138
165139 बहुतरवितर्कगर्भितं प्रश्नं श्रुत्वा मुनिः स्वस्याप्येतादृशो वितर्कः
165140 कोमलविवेकदशायामभूत्स च मया धारणाभ्यासेन स्वयमेव परकायप्रवेशेन
165141 तदीयस्वप्नादि पुनःपुनरवलोक्यान्वयव्यतिरेकाभ्यां चिरं परीक्षणेन
165142 तत्त्वमवगम्य समाहित इति कथां विस्तरेण तृतीयप्रश्नोत्तरमुखेन वक्तुं
165143 मुनिरुपक्रमते - ममापीत्यादिना॥ ६॥
165144
165145 तत एतद्दिदृक्षार्थमहमभ्यस्तधारणः।
165146 बद्धपद्मासनस्तस्यां संविद्येवाभवं स्थिरः॥ ७॥
165147
165148 अभ्यस्ता परकायप्रवेशानुकूला बहिःकुम्भकधारणा येन। तस्यां
165149 सर्वजनानामात्मत्वेन प्रसिद्धायां संविद्येव स्थिरोऽभवम्॥ ७॥
165150
165151 तत्रस्थो दूरविक्षिप्तं तयैवाहृतवानहम्।
165152 चेतः स्वहृदयं सायं रुचेव रविरातपम्॥ ८॥

165153
165154 तत्र तस्यां संविदि स्थितोऽहं दूरविक्षिप्तं चेतस्तयैव संविदा प्रत्याहृतवान्।
165155 यथा सायं रविः स्वरुचा मण्डलकान्त्यैवातपं प्रत्याहरति तद्वत्॥ ८॥
165156
165157 वेदनेरणया प्राणस्ततश्चित्तान्वितो मया।
165158 शरीराद्रेचितो बाह्ये सौरभं कुसुमादिव॥ ९॥
165159
165160 वेदनं प्राणान्तर्गता चित्तदीरणया जीवस्य प्राणेन सह बहिर्निर्गमनानुकूलेन
165161 योगशास्त्रप्रसिद्धप्रयत्नेन चित्तं जीवोपाधिस्तदन्वितः प्राणः शरीराद्बाह्ये देशे
165162 रेचितो रेचकेन निःसारितः॥ ९॥
165163
165164 व्योमस्थचित्तवलितः स प्राणपवनो मया।
165165 अग्रस्थस्य मुखाग्रस्थे जन्तोः प्राणे नियोजितः॥ १०॥
165166
165167 ततः परकायप्रवेशोपायं स्वकृतमाह - व्योमस्थेति। बाह्यव्योमस्थेन चित्तेन
165168 जीवोपाधिना संवलितः स प्राणपवनो मया अग्रे पुरोभागे स्थितस्य
165169 कस्यचिज्जन्तोश्छात्रस्य प्राणे नियोजितो मेलितः॥ १०॥
165170
165171 यः प्राणवलितः प्राणस्तेन नीतो हृदन्तरम्।
165172 स्वेहया स्वं स्वकः सर्पः करभेणेव हिंसितः॥ ११॥
165173
165174 मदीयप्राणवलितो यस्तस्य जन्तोः प्राणस्तेन तदीयं हृदन्तरमहं नीतं। यथा
165175 करभेण भल्लूकेन बिले मुखं निवेश्य बलान्मुखवायुना आकर्षणलक्षणया
165176 स्वेहया स्वचेष्टया स्वकः स्वाहारभूतः सर्पः स्वमुखं प्रवेश्य हिंसितः सन्
165177 स्वहृदयंन् नीतस्तद्वत्॥ ११॥
165178
165179 ततोऽहं हृदयं तस्य प्रविष्टः प्राणवाजिना।
165180 संकटस्थः स्वया बुद्ध्या तावेवानुसरोन्तरम्॥ १२॥
165181
165182 तदीयप्राणलक्षणेन वाजिना अश्वेन तौ परस्परसंवलितौ
165183 प्राणावेवानुसरतीत्यनुसरोऽहमन्तरं तद्देहमध्यं प्रविश्य स्वया बुद्ध्या
165184 वक्ष्यमाणसंकटस्थः अभवमिति शेषः॥ १२॥
165185
165186 चरद्रसाभिर्बह्वीभिर्नाडीभिरभितो वृतम्।
165187 कुल्याभिः स्थूलतन्वीभिर्बाह्यदेऽसमिवाखिलम्॥ १३॥
165188
165189 पर्शुकापञ्जरप्लीहयकृद्रक्तादिडिम्बकैः।
165190 संकटं जीवसदनं भाण्डोपस्करणैरिव॥ १४॥
165191
165192 संकटतां प्रपञ्चयति - पर्शुकेत्यादिना। पर्शुकाः पार्श्वास्थीनि तल्लक्षणे
165193 पञ्जरे प्लीहयकृती मांसविशेषौ। डिम्बकैः पिण्डकैः। जीवस्य सदनं
165194 गृहभूतं तच्छरीरम्॥ १४॥
165195
165196 सर्वैः शलशलायद्भिरुष्णैरवयवैर्वृतम्।
165197 निदाघतापसंतप्तैरूर्मिजालैरिवार्णवम्॥ १५॥
165198
165199 शलशलेति जाठरानलक्वथनध्वन्यनुकरणम्॥ १५॥
165200
165201 नवं नवं बहिःशैत्यं नासाग्राच्चेतनात्मकम्।
165202 जीवनायानिशं चेतो वातोन्नीतमनारतम्॥ १६॥
165203
165204 पुनः कीदृशं तज्जीवसदनम्। अजीवनाय चेतसा प्राणादिवातैश्चानारतमुन्नीतम्।

165205 तत्र बहिष्ठस्य सोमात्मकस्यापानस्य नासाग्रादन्तःप्रवेशे नवं
165206 नवमन्तःप्रविशद्बहिःशैत्यं यस्य। अत एव चेतनात्मकम्॥ १६॥
165207
165208 रक्तकुट्टरसश्लेष्मवसानिःस्रावपिच्छिलम्।
165209 घनान्धकारमुष्णम् च संकटं नरकोपमम्॥ १७॥
165210
165211 रक्तं कुट्टन्ति नाडीमार्गेभ्यो विच्छिन्दन्ति तथाविधा येऽन्नरसाः श्लेष्मादयश्च
165212 तेषां निःस्रावैः पिच्छिलम्॥ १७॥
165213
165214 उदयावयवाश्लेषस्पष्टास्पष्टमरुद्रतैः।
165215 स्थित्यन्तानां तु वैषम्यादागामिगदसूचकम्॥ १८॥
165216
165217 रक्तरसश्लेष्मपित्तानां द्वासप्ततिसहस्रनाडीभेदेषु क्वचिदुदयैः क्वचिदवयवेषु
165218 आश्लेषैश्च क्वचित्संचारसौकर्यात्स्पष्टानां क्वचिन्मार्गनिरोधादस्पष्टानां च
165219 प्राणादिमरुतां रतैः क्रीडितैः सप्तधातुस्थितानामन्तानां तन्नाशानां च
165220 वैषम्यादागामिनां गदानां रोगाणां स्वप्नादिषु सूचकम्॥ १८॥
165221
165222 दरत्सरभसच्छिद्रावातवातेन शब्दितम्।
165223 पद्मनालप्रणालान्तर्ज्वलदर्णववाडवम्॥ १९॥
165224
165225 दरन्ति सरभसानि यान्यपानादिच्छिद्राणि तेष्वावातेन निर्गतेन वातेन शब्दितं
165226 संजातशब्दं हृदयपद्मनालस्य प्रणालं छिद्रं तदन्तर्ज्वलन् अर्णववाडव
165227 इव जाठराग्निर्यस्मिन्। तथा चोक्तं महोपनिषदि - पद्मकोशप्रतीकाशं
165228 हृदयं चाप्यधोमुखम् इत्युपक्रम्य तस्यान्ते सुषिरं सूक्ष्मं तस्मिन् सर्व
165229 प्रतिष्ठितम्। तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थिता इति॥ १९॥
165230
165231 मिलत्पदार्थनीरन्ध्रं सितमच्छं सवायुभिः।
165232 क्वचित्सौम्यंन् क्वचित्क्षुब्धंन् चौरैरिव पुरं निशि॥ २०॥
165233
165234 मिलद्भिर्वासनामयैः पदार्थैर्नीरन्ध्रं निबिडितम्। सवायुभिरिन्द्रियैः सितं
165235 बद्धम्। साक्ष्यात्मस्वभावेन तु अच्छम्। चित्तवृत्तिभेदैः प्रदेशभेदैश्च
165236 क्वचित्सौम्यं क्वचित्क्षुब्धम्॥ २०॥
165237
165238 रसनदपरैर्नाडीमार्गविद्याधराध्वगैः।
165239 संचरद्भिर्वृतं वातैराकारार्धार्धगीतिभिः। २१॥
165240
165241 कोष्ठगतानामन्नरसानां नादे ध्वनने तत्परैरत एव नाडीमार्गेषु
165242 गायद्विद्याधराध्वगप्रायैः संचरद्भिर्वातैर्वृतम्।
165243 द्विमात्राअकारस्तदर्धमेकमात्रस्तदर्धोर्धमात्रश्च गीतिषु येषाम्। गीतिमात्रस्य
165244 वातसाध्यत्वादित् भावः॥ २१॥
165245
165246 तदहं हृदयं जन्तोराविशं विषमान्तरम्।
165247 नरोऽवयवसंबाधं नरवृन्दमिवाधिकः॥ २२॥
165248
165249 यथा अधिकः श्रेष्ठो नरो नरावयवैः संबाधं निरवकाशं नरवृन्दं
165250 विशति तद्वत्॥ २२॥
165251
165252 अनन्तरमहं प्राप्तस्तेजोधातुं हृदन्तरे।
165253 दूरस्थमिव यत्नेन रात्राविन्दुमिवार्करुक्॥ २३॥
165254
165255 तेजोधातुं जठराग्निलक्षणस्य तेजसः सारं तेजोरूपोऽहं यत्नेन प्राप्तः। यतः
165256 समीपस्थमपि बहुतरनाडीमार्गप्राप्यत्वाद्दूरस्थमिव। यथेन्दुं रात्रौ अर्करुक्

165257 प्राप्नोति तद्वत् | तथा च श्रुतिः - एतद्धि ब्रह्म दीप्यते यदादित्यो दृश्यते |
165258 अथैतन्म्रियते यन्न दृश्यते | तस्य चन्द्रमसमेव तेजो गच्छति इति || २३ ||
165259
165260 यस्मात्त्रिभुवनादर्शो दीपस्त्रैलोक्यवस्तुषु |
165261 सत्ता सर्वपदार्थानां जीवस्तत्रावतिष्ठते || २४ ||
165262
165263 तस्य तेजःसारत्वं कुतस्तत्राह - यस्मादिति |
165264 यस्माद्धेतोस्त्रिभुवनस्याप्यन्तर्भानादादर्शभूतस्त्रैलोक्यवस्तुषु
165265 दीपवत्प्रकाशको जीवस्तद्वेषः परमात्मा तत्र तस्मिंस्तेजस्यवतिष्ठते | तथा च
165266 श्रुतिः तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थिता | तस्याः शिखाया मध्ये
165267 परमात्मा व्यवस्थितः | स ब्रह्म स शिवः सोऽजः सोऽक्षरः परमः स्वराट् इति || २४ ||
165268
165269 काये सर्वगतो जीवः स्वामोदः कुसुमे यथा |
165270 तथाप्योजसि किञ्जल्कैर्मुखे शैत्यं विवस्वता || २५ ||
165271
165272 ननु स एष इह प्रविष्ट आनखाग्रेभ्य इत्यादिश्रुतिषु सर्वदेहगतो जीवः श्रूयते
165273 तत्कथं तेजोधातावेव सोऽवतिष्ठते तत्राह - काये इति | यद्यपि सर्वगत आत्मा जीवः
165274 सन्काये आनखाग्रं प्रविष्टस्तथापि ओजसि तेजोधातौ विशेषतोऽवतिष्ठते | यथा
165275 विवस्वता विकासिते कुसुमे सर्वगतोऽपि स्वामोदः शैत्यं च किंजल्कैरुपलक्षिते तन्मुखे
165276 विशेषतोऽवतिष्ठते तद्वदित्यर्थः || २५ ||
165277
165278 तज्जीवाधारमोजस्तु प्रविष्टोऽहमलक्षितम् |
165279 रक्षितं परितः प्राणैर्वर्तिः प्रच्छादनं यथा || २६ ||
165280
165281 परितः प्राणैः करणाभिमानिभिर्देवैः परितश्चतुर्ष्वपि द्वार्षु रक्षितम् | यथा
165282 घटादिप्रच्छादनं दीपज्योतिः सूक्ष्मघटच्छिद्रप्रविष्टैर्वातै रक्ष्यते तद्वत् |
165283 आत्यन्तिकच्छिद्रपिधाने दीपनाशदर्शनादिति भावः || २६ ||
165284
165285 ततोऽङ्गः संप्रविष्टोऽहमामोद इव मारुतम् |
165286 उष्णांशुरिव शीतांशुं मृत्पात्रमिव वा पयः || २७ ||
165287
165288 ततोऽहं अङ्गः साक्षात्तज्जीवोपाधिभूतं
165289 मनोमयविज्ञानमयकोशसंवलितमानन्दमयकोशं संप्रविष्टः |
165290 तद्दृष्टान्तानाह - आमोद इवेत्यादिना || २७ ||
165291
165292 द्वितीयेन्द्वंशुसंकाशे शुक्लाभ्रलवपेलवे |
165293 नवनीतगुडप्रख्ये क्षीरबुद्बुदसुन्दरे || २८ ||
165294
165295 तत्र स्वत एव स्नेहानन्दयोर्दर्शनान्नवनीतगुडप्रख्ये [गुडो गोलः |] || २८ ||
165296
165297 तत्र पश्याम्यहं तिष्ठन्प्रवेशव्यग्रयोज्झितः |
165298 स्वौजसीव वसन्स्वप्न इव विश्वमखण्डितम् || २९ ||
165299
165300 पूर्वस्थानेष्विव प्रवेशप्रयुक्तया व्यग्रया श्रान्त्या उज्झितः सन् स्वस्य हृदि स्थिते
165301 ओजसीव स्वस्थो वसन् स्वीयस्वप्न इव तदीयस्वप्नरूपमखण्डितं विश्वं पश्यामि || २९
165302 | |
165303
165304 सार्कं सपर्वतं साब्धि ससुरासुरमानवम् |
165305 सपत्तनवनाभोगं सलोकान्तरदिङ्मुखम् || ३० ||
165306
165307 तद्विश्वमेव विशिनष्टि - सार्कमित्यादिना || ३० ||
165308

165309 सद्वीपसागराम्भोधि सकालकरणक्रमम् |
165310 सकल्पक्षणसर्वर्तु सहस्थावरजंगमम् || ३१ ||
165311
165312 तत्स्वप्नदर्शनं तत्र स्थिरमेव समं स्थितम् |
165313 वसाम्यत्येव निद्रान्ते निद्राऽन्ते नागता यतः || ३२ ||
165314
165315 स्थिरमनादिप्रवाहस्थितमेव प्रसिद्धजगत्समं स्थितम् | अहं निद्रान्ते जागरे
165316 अतिशयेन वसाम्येव | यतो निद्रा अन्ते जाग्रदवसाने नागतैव || ३२ ||
165317
165318 अनिद्र एव किं स्वप्नं पश्यामीति मया ततः |
165319 परिचिन्तयता ज्ञातमिदं व्याध विबोधिना || ३३ ||
165320
165321 तथापि स्वप्नं किं पश्यामि इति परिचिन्तयता हे व्याध ततस्तदनन्तरं विबोधिना
165322 प्रबोधवता मया इदं वक्ष्यमाणं ज्ञातम् || ३३ ||
165323
165324 ननु नामास्य चिद्घातोः स्वरूपमिदमैश्वरम् |
165325 स्वं यद्यपदिशत्येष जगन्नाम्नाम्बरात्मकम् || ३४ ||
165326
165327 किं ज्ञातं तदाह - नन्विति | नामेति विवेकिप्रसिद्धौ | अस्य चिद्धातोः प्रत्यगात्मन
165328 इदमैश्वरं रूपम् | कीदृशम् | एष ईश्वरः अम्बरात्मकं स्वं घट इति वा पट इति
165329 वा जगदिति वा अजीव इति वा यद्यादृशनामरूपं व्यपदिशति स्वयं तत्तज्जगन्नाम्ना
165330 भवति || ३४ ||
165331
165332 चिद्धातुर्यत्र यत्रास्ते तत्र तत्र निजं वपुः |
165333 पश्यत्येष जगद्रूपं व्योमतामेव चात्यजत् || ३५ ||
165334
165335 किं तात्त्विकं रूपं विहाय नेत्याह - व्योमतामिति | अत्यजदेव || ३५ ||
165336
165337 अहो त्वद्येदमाज्ञातं यदित्थं दृश्यते जगत् |
165338 तत्कथ्यते स्वप्न इति स्वचित्कचनमात्रकम् || ३६ ||
165339
165340 इदमेव स्वप्न इति जनैः कथ्यत इति अद्य आ ज्ञातं अहो | आ इति स्मरणे अङित् || ३६ ||
165341
165342 चिद्धातोर्यत्खकचनं तत्किंचित्स्वप्न उच्यते |
165343 किंचिच्च जाग्रदित्युक्तं जाग्रत्स्वप्नौ तु न द्विधा || ३७ ||
165344
165345 जाग्रदपि तत्त्वतो विमृष्टमिदमेव पर्यवस्यतीत्याह - चिद्धातोरिति || ३७ ||
165346
165347 स्वप्नः स्वप्नो जागरायामेष स्वप्ने तु जागरा |
165348 स्वप्नस्तु जागरैवेति जागरैव स्थिता द्विधा || ३८ ||
165349
165350 अनयोः परस्परदृशा स्वप्नत्वमेव स्वस्वदृशा तु जागरत्वमेवेत्याह -
165351 स्वप्न इति | स्वप्ने तु जागरा एषः स्वप्न एव | स्वप्नस्तु स्वदृष्ट्या जागरैवेति यदा
165352 स्वदृष्ट्या दृश्यते तदा जागरैव द्विधा स्थितेति पर्यवसन्नमित्यर्थः || ३८ ||
165353
165354 चेतनं नाम पुरुषः स मृतेषु शतेष्वपि |
165355 शरीरेषु महाबुद्धे कथं कस्य कदा मृतः || ३९ ||
165356
165357 ननु मरणं तर्हि स्वप्नजागराभ्यामतिरिक्तं किं स्यात्तत्राह - चेतनमिति |
165358 नास्त्येव मरणं नाम किंचित् | यतः पुरुषश्चेतनम् | भावे ल्युट् | चिन्मात्रमेव | स
165359 चानेकशतेषु शरीरेषु मृतेष्वपि कदा मृतः कस्य मृतः कथं मृतस्त्रेधापि
165360 तदप्रसिद्धेरित्यर्थः || ३९ ||

165361
165362 तच्चेतनं खमेवास्ति स्थितं तद्देहवत्कचत् |
165363 अनन्तमविभागात्म प्रतिघाप्रतिघात्मकम् || ४० ||
165364
165365 अभ्युपेत्य शरीरं तन्मरणं चेदमुक्तम् | वस्तुतस्तु तदुभयमपि नास्तीत्याह -
165366 तदिति | प्रतिहन्यत इति प्रतिघा मूर्ताकारस्तद्विलक्षणस्त्वप्रतिघा तदात्मकं च
165367 भ्रान्त्यैवेत्यर्थः || ४० ||
165368
165369 स्वभावस्याप्रतिघस्य नित्यानन्तोदितात्मनः |
165370 परमाणोश्चिदाख्यस्य मज्जा जगदिति स्मृतः || ४१ ||
165371
165372 तत्र अप्रतिघात्मता स्वभावस्तादृगात्मनश्चिदाख्यस्य परमाणोर्मज्जा सार एव
165373 भ्रान्त्या देहवज्जगदित्यपि स्मृतः || ४१ ||
165374
165375 चिद्व्योम्न उदरे भान्ति समस्तानुभवाणवः |
165376 तथा यथावयविनो विचित्रावयवाणवः || ४२ ||
165377
165378 मज्जात्वमेवोपपादयति - चिद्व्योम्न इति | जगद्भ्रान्त्यनुभवलक्षणा अणवः || ४२ ||
165379
165380 निवृत्तो बाह्यतो जीवो जीवाधारे हृदि स्थितः |
165381 रूपं स्वं स्वप्नसर्गोऽयमिति वेत्ति चिदाकचान् || ४३ ||
165382
165383 प्रथमतृतीयप्रश्नौ समाहितौ द्वितीयं प्रश्नं समाधत्ते - निवृत्त इति |
165384 बाह्यतो जागरतो जाग्रद्भोगप्रदकर्मोपरमे निवृत्तः सन् स्वं रूपमेव
165385 बाह्यसंस्कारानुरोधेन बाह्यः स्वप्नस्वर्गोऽयमिति चिदाकचान् चिद्विवर्तानिव वेत्ति || ४३
165386 | |
165387
165388 बाह्योन्मुखं बहिर्जाग्रच्छब्दितं कचितं स्वकम् |
165389 रूपं पश्यति जीवोऽयमन्तस्थं स्वप्न इत्यपि || ४४ ||
165390
165391 यदा चित्तं बाह्योन्मुखं तदा स्वकं रूपं जाग्रच्छब्दितं कचितम् | यदा
165392 अन्तस्थं चित्तं तदा अयं जीवः स्वकं रूपं स्वप्न इत्यपि पश्यति || ४४ ||
165393
165394 द्यौः क्ष्मा वायुराकाशं पर्वताः सरितो दिशः |
165395 प्रसृतो जीव इत्यन्तर्बहिश्चैकात्मकः स्थितः || ४५ ||
165396
165397 चतुर्थपञ्चमप्रश्नयोरुत्तरमाह - द्यौरिति | एकात्मक एव जीवो बहिरन्तश्च
165398 द्यौः क्ष्मेत्याद्यात्मकः प्रसृतः || ४५ ||
165399
165400 अर्कोऽर्कबिम्बसंस्थोऽपि यथेहापि स्थितस्त्विषा |
165401 तथा जीवो जगद्रूपो बहिरन्तश्च संस्थितः || ४६ ||
165402
165403 अन्तःस्वप्नो बहिर्जाग्रदहमेवेति वेत्ति चेत् |
165404 चिदात्मको यथाभूतं मुच्यते तदवासनः || ४७ ||
165405
165406 अत एव सर्वात्मताया एव तात्त्विकत्वात्तथा परिज्ञानादेव मुच्यत इत्याह - अन्तरिति |
165407 यथाभूतं यथार्थम् | भूमिकाभेदपरिपाकक्रमेणावासनः सन् मुच्यते || ४७ ||
165408
165409 अच्छेद्योऽयमदाह्योऽयमपि जीवोऽन्यथा वदन् |
165410 द्वैतसंकल्पयक्षेण मुह्यत्येव शिशुर्यथा || ४८ ||
165411
165412 अन्तर्मुखोऽन्तरात्मानं बहिः पश्यबहिर्मुखः |

165413 आस्ते जीवो जगद्रूपं यत्स्वन्ते स्वप्नजाग्रती ॥ ४९ ॥
165414

165415 अन्तरात्मानं स्वमन्तर्जगद्रूपं पश्यन् स्वप्न एवं बहिर्जगद्रूपं पश्यन्
165416 जाग्रच्च स्वयमेवास्ते ते एवास्य स्वप्नजाग्रती ॥ ४९ ॥
165417

165418 इति चिन्तयतः किं स्यात्सुषुप्तमिति मे मतिः ।
165419 जाता तेन सुषुप्तांशमन्वेष्टुमहमुद्यतः ॥ ५० ॥
165420

165421 प्रसङ्गात्सुषुप्तितुरीयतत्त्वमपृष्टमप्याह - इतीति । इति जाग्रत्स्वप्ने
165422 तत्त्वतश्चिन्तयतो मे सुषुप्तं किं स्यादिति चिन्तालक्षणा मतिर्जाता ॥ ५० ॥
165423

165424 यावत्किं दृश्यदृष्ट्यान्तस्तूष्णीं तिष्ठाम्यहं चिरम् ।
165425 निश्चित्त इति संवित्तिः शमा नान्यत्सुषुप्तकम् ॥ ५१ ॥
165426

165427 दृश्यदृष्ट्या मम किं अहं चिरं तूष्णीं निश्चित्तस्तिष्ठामि । इति
165428 अन्तर्यावत्संवित्तिः शमाशमरूपा तावत्सुषुप्तकं तदन्यत्रेत्यर्थः ॥ ५१ ॥
165429

165430 नखकेशादि देहेऽस्मिन्विदिताविदितं यथा ।
165431 न जडं च जडं चैव सुषुप्तं चेतनात्मनि ॥ ५२ ॥
165432

165433 चित्तव्याप्त्यभावे चिदनभिव्यक्तौ घटादिवज्जडत्वमाशङ्क्य विशेषतोऽहन्तया
165434 अविदितत्वेऽपि नखकेशादिवत्सामान्यतो विदितत्वाद्विदिताविदितात्मकम् । तत्सुषुप्तं न
165435 जडं जडं चैव चेतनात्मनि तत्साक्षिणि स्फुरतीत्याह - नखेति ॥ ५२ ॥
165436

165437 संवित्त्या किं श्रमार्तोऽस्मि शान्तमासेवि मानसम् ।
165438 इत्येकपरिणामत्वान्नान्यदस्ति सुषुप्तकम् ॥ ५३ ॥
165439

165440 जाग्रत्स्वप्नभ्रमणेन श्रमार्तोस्मि । मम विशेषसंवित्त्या किं कंचित्कालं
165441 शान्तमासे इति संकल्पेऽवगाढनिद्राकारैकपरिणामत्वमेव सुषुप्तकं
165442 नान्यदस्तीत्यर्थः ॥ ५३ ॥
165443

165444 एतन्निद्राघनं जाग्रत्यपि संभवति स्वतः ।
165445 न किंचिच्चिन्तयाभ्यासे शान्त इत्येकरूपकम् ॥ ५४ ॥
165446

165447 जाग्रत्यपि पुरुषे एतत्सुषुप्तकं चिन्तापरित्यागदशायां संभवतीत्याह - एतदिति ॥
165448 ५४ ॥
165449

165450 एषावस्था यदा याति घनता मुच्यते तदा ।
165451 निद्राशब्देन तन्वी तु स्वप्नशब्देन कथ्यते ॥ ५५ ॥
165452

165453 नितरां दृढा निद्रेति व्युत्पत्त्या सुषुप्तिरेव निद्राशब्देनोच्यते । तन्वी
165454 ईषद्विक्षेपाकारेण शिथिला तु स्वप्नशब्देनेत्यर्थः ॥ ५५ ॥
165455

165456 सुषुप्तमिति निश्चित्य तुरीयान्वेषणामहम् ।
165457 प्रवृत्तः कर्तुमुद्युक्तो युक्तः परमया धिया ॥ ५६ ॥
165458

165459 यावद्रूपं तुरीयस्य किंचनापि न लभ्यते ।
165460 सम्यग्बोधादृते शुद्धात्प्रकाशस्तमसो यथा ॥ ५७ ॥
165461

165462 तुरीयस्य यावत्पूर्ण रूपं तु सम्यग्बोधादृते न लभ्यते ॥ ५७ ॥
165463

165464 यथास्थितमिदं विश्वं सम्यग्बोधाद्विलीयते ।

165465 यथास्थितं च भवति न च किंचिद्विलीयते ॥ ५८ ॥
165466
165467 अतः सम्यग्बोध एव तुरीयम् । तत्र हि विलीनस्य विश्वस्य आत्यन्तिकमविलीनत्वं यथा
165468 स्थितं भवतीत्याह - यथास्थितमिति ॥ ५८ ॥
165469
165470 अतः स्वप्नो जागरा च सुषुप्तं च तुरीयके ।
165471 सयथास्थितमस्तीदं नूनं नास्ति च किंचन ॥ ५९ ॥
165472
165473 अत एवावस्थात्रयं तत्रान्तर्भूतमित्याह - अत इति । यथास्थितेन जगता सहितं
165474 सयथास्थितम् ॥ ५९ ॥
165475
165476 कारणाज्जगदुत्पन्नं न ब्रह्मेत्थमवस्थितम् ।
165477 जगत्तया शान्तमजं बोध इत्येव तुर्यता ॥ ६० ॥
165478
165479 जगत्कारणान्नोत्पन्नं किंतु ब्रह्मैवेत्थं जगत्तयावस्थितमिति बोध एव सदा
165480 तुर्यतेत्यर्थः ॥ ६० ॥
165481
165482 असंभवात्संभवकारणानां न जायते किंचन नाम सर्गः ।
165483 चिच्चेतनेनैव हि सर्गसंवित् स्वयं गृहीता द्रवताम्बुनेव ॥ ६१ ॥
165484
165485 तदेव पुनर्वर्णयन्नुपसंहरति - असंभवादिति । संभवो जन्म
165486 तत्कारणानामद्वये ब्रह्मण्यसंभवात्सर्गः किंचन द्वितीयं न जायते किंतु चितो
165487 जगदाकारचेतनेनैव सर्गसंवित्स्वयमेव गृहीता । यथा अम्बुना द्रवता गृहीता
165488 तद्वदित्यर्थः ॥ ६१ ॥
165489
165490 इत्यार्षे श्रीवा० वा० दे० मो० निर्वा० उ० अवि० वि० जाग्रत्स्वप्नसुषुप्ततुरीयवर्णनं नाम
165491 सप्तत्रिंशदधिकशततमः सर्गः ॥ १३७ ॥
165492
165493 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
165494 जाग्रत्स्वप्नसुषुप्ततुरीयवर्णनं नाम सप्तत्रिंशाधिकशततमः सर्गः ॥ १३७ ॥
165495
165496
165497 अष्टत्रिंशदधिकशततमः सर्गः १३८
165498
165499 तापस उवाच ।
165500
165501 गन्तुमेवं विचार्याहं ततस्तत्संविदैकताम् ।
165502 प्रवृत्तश्चौत्तमाब्जेन सौरभेणेव सौरभम् ॥ १ ॥
165503
165504 मेलने द्विगुणंन् विश्वं प्राणिजीवस्वजीवयोः ।
165505 ऐक्ये त्वेकं मया दृष्टमित्यादि मुनिनोच्यते ॥
165506
165507 एवं जाग्रदादितुर्यान्तावस्थातत्त्वं विचार्य ततस्तदनन्तरमहं तस्य प्राणिनः
165508 संविदा चिदाभासलक्षणजीवेन सहैकतामेकीभावं गन्तुं प्रवृत्तः यथा चौतं
165509 पुष्पितसहकारसंबन्धि सौरभं वायुना पद्माकरे नीतं आब्जेन अब्जोद्भवेन
165510 वायुस्थसौरभेणैकतां गन्तुं प्रवर्तते तद्वदित्यर्थः ॥ १ ॥
165511
165512 यावत्तच्चेतनं तस्य तमोजोधातुमत्यजम् ।
165513 प्रवृत्तं बाह्यसंवित्तौ समस्तेन्द्रियसंविदा ॥ २ ॥
165514
165515 अहं तस्य प्राणिनश्चेतनं चिदाभासं प्रवेष्टुं तं प्रागुक्तमोजोधातुं
165516 यावदत्यजं तावन्मध्ये मदीयया समस्तेन्द्रियलक्षणया संविदा बाह्यसंवित्तौ

165517 बहिर्मुखव्यापारे बलात्प्रवृत्तमित्यर्थः ॥ २ ॥
165518
165519 संविदं संविदा गृह्णंस्तान्बाह्येऽन्तरपि क्षणात् ।
165520 अहं प्रसृतवांस्तत्र तैलबिन्दुरिवाम्भसि ॥ ३ ॥
165521
165522 ततोऽहं ताः बाह्ये प्रवृता इन्द्रियसंविदः अन्तःप्रवणया प्रयत्नसंविदा
165523 बलान्निगृह्णन्सन् क्षणादन्तरपि प्रसृतवान् । कथं प्रसृतवांस्तत्र
165524 दृष्टान्तमाह - तैलबिन्दुरिति ॥ ३ ॥
165525
165526 तत्संविदि तथैवाथ यावत्परिणमाम्यहम् ।
165527 भुवनं दृष्टवांस्तावत्सर्वं द्विगुणितं स्थितम् ॥ ४ ॥
165528
165529 एवमुपाधिव्याप्तिद्वारा अहं यावत्तस्य प्राणिनश्चिदाभाससंविदि मेलनेन
165530 परिणमामि तावत्कालमध्ये सर्व भुवनं तद्वासनामद्वासनोभयान्तःप्रतिभासा
165531 द्विगुणितं स्थितं दृष्टवान् ॥ ४ ॥
165532
165533 दिशो द्विगुणतां यातास्तपतस्तपनावुभौ ।
165534 भूमण्डले द्वे संपन्ने द्वे वै द्यावै समुत्थिते ॥ ५ ॥
165535
165536 द्विगुणितत्वमेव प्रपञ्चयति - दिशा इत्यादिना ॥ ५ ॥
165537
165538 वदनप्रतिबिम्बे द्वे दर्पणप्रतिबिम्बिते ।
165539 यथा भातस्तथा भाते मिश्रिते ते जगच्चितम् ॥ ६ ॥
165540
165541 ते च मिश्रिते तेन जगत् चितं द्वैगुण्येनोपचितम् ॥ ६ ॥
165542
165543 तैलवद्भाति कोशस्थं यच्चेतनतिलद्वये ।
165544 तस्मिञ्जगद्द्वयंन् तत्तत्तथा भाति विमिश्रितम् ॥ ७ ॥
165545
165546 यच्चेतनतिलद्वये तैलवद्बुद्धिकोशस्थं भाति
165547 तस्मिन्संवलितोपाधिस्थचिदाभासद्वये द्विगुणीभूतं तत्तज्जगत्तथा विमिश्रितं भाति
165548 ॥ ७ ॥
165549
165550 संविद्द्वितयकोशस्ते मिश्रिते अप्यमिश्रिते ।
165551 ते उभे जगती भाते समे क्षीरजले यथा ॥ ८ ॥
165552
165553 वासनानाममिश्रणादमिश्रिते ॥ ८ ॥
165554
165555 निमेषाद्दृष्टमात्रेण सा तत्संविन्मया ततः ।
165556 सकलैवात्मतां नीता परिमित्येव संविदा ॥ ९ ॥
165557
165558 सा तत्प्राणिचिदाभाससंवित् स्वसंविदा परिमित्य परिच्छिद्येव आत्मतामेकात्मतां
165559 नीता उपाधिद्वयैक्यापादनेनेत्यर्थः ॥ ९ ॥
165560
165561 ऋतुर्ऋत्वन्तरेणेव सरितेवाल्पिका सरित् ।
165562 वातेनामोदलेखेव धूमलेखेव वार्मुचा ॥ १० ॥
165563
165564 आत्मतानयने दृष्टान्तानाह - ऋतुरिति ॥ १० ॥
165565
165566 एकत्वेनाशु संवित्तेर्ययौ मे जगदेकताम् ।
165567 दुर्दृष्टेर्द्विवपुश्चन्द्रः सुदृष्टेरेकतामिव ॥ ११ ॥
165568

165569 तत्र वासनानामप्येकीकारेण संवित्तेरात्यन्तिकैकत्वेन प्राग् द्विगुणीभूतं
165570 जगदप्येकतां ययौ ॥ ११ ॥
165571
165572 ततो मे तच्चितिस्थस्य स्वं विवेकमनुज्झतः ।
165573 अल्पीभूतः स्वसंकल्पस्तत्संकल्पस्थितिं गतः ॥ १२ ॥
165574
165575 स्वं विवेकं पूर्वापरविमर्शम् । तस्य प्राणिनः संकल्पानुसारिणीं स्थितिं गतः
165576 प्राप्तः ॥ १२ ॥
165577
165578 तच्चित्तवृत्त्यैव ततो बाह्यमालोकयंस्ततः ।
165579 अभुञ्जि तद्दिनाचारं तत्तद्धृदयमत्यजन् ॥ १३ ॥
165580
165581 अहं तत्र तच्चित्तवृत्त्यैव तद्भोग्यं बाह्यं
165582 शब्दादिविषयमालोकयंस्तद्धृदयमत्यजन्नेव तस्य जाग्रद्व्यवहारलक्षणं
165583 दिनाचारं अभुञ्जि अभुनजम् । अन्वभवमिति यावत् । कर्तरि चिण् छान्दसः ॥ १३ ॥
165584
165585 ततो यदृच्छयैवासो शनैर्निद्राकुलोऽभवत् ।
165586 पद्मः सायमिवापीय पयो भुक्त्वान्नमुच्छ्रमः ॥ १४ ॥
165587
165588 ततः असौ प्राणी अन्नं भुक्त्वा पय आपीय उद्भूतश्रमः सन् यदृच्छयैव
165589 निद्राकुलोऽभवत् ॥ १४ ॥
165590
165591 प्रसृतं दिग्निकुञ्जेषु रूपालोकक्रियाकरम् ।
165592 संजहार बहिश्चित्तं सायमर्को रुचिं यथा ॥ १५ ॥
165593
165594 निद्रारम्भे तत्प्राणः किमकरोत्तत्राह - प्रसृतमिति ॥ १५ ॥
165595
165596 सह चित्तेन तास्तस्य समस्तेन्द्रियवृत्तयः ।
165597 हृत्कोशमविशञ्छन्नाः कूर्मस्येवाङ्गसंधयः ॥ १६ ॥
165598
165599 ततः किमासीत्तदाह - सहेति ॥ १६ ॥
165600
165601 मुद्रिता हृदयाकारास्त आसंश्चक्षुरादयः ।
165602 लोष्टरूपा मृतावेव लिपिकर्मार्पिता इव ॥ १७ ॥
165603
165604 चक्षुरादयो मुद्रिताः सन्तो हृदयपद्माकारा आसन् । मृतौ मरणे आ ईषदिव
165605 लोष्टरूपा लिपिकर्मार्पिता इव च निर्व्यापारा आसन् ॥ १७ ॥
165606
165607 अहं तच्चित्तवृत्त्यैव सहसोन्नम्य तत्स्थितः ।
165608 तच्चित्तानुविधायित्वात्तत्तद्धृदयमाविशम् ॥ १८ ॥
165609
165610 अहमपि तच्चित्तानुविधायित्वात्तच्चित्तवृत्त्यैव सह तदिन्द्रियगोलकानि त्यक्त्वा
165611 तत्तन्नाडीमार्गेण तद्धृदयमाविशम् ॥ १८ ॥
165612
165613 संहृत्य बाह्यानुभवमन्तरेव तदोजसि ।
165614 क्षणमन्वभवं शून्यं सुषुप्तं तल्पकोमले ॥ १९ ॥
165615
165616 तल्पवत्कोमले ओजसि प्रागुक्ततेजोन्तस्थे आनन्दमयकोशे ॥ १९ ॥
165617
165618 क्लमान्नपानबहुलैर्निबिडास्वपि नाडिषु ।
165619 सुषिरास्वेव वा वायुर्न निर्यात्येव याति च ॥ २० ॥
165620

165621 तदानीं यदा समानाख्यो वायुः सुषिरासु सच्छिद्रास्वपि नाडिषु
165622 क्लमेनान्नपानरसविकारैर्बहुलैस्तत्र तत्र निरुध्यमानो बहिर्न निर्यात्येव तथापि
165623 सूक्ष्मतरया गत्या याति संचरति च ॥ २० ॥
165624
165625 यदा तदात्मकात्मैकपरो हृदि सहस्थितम् ।
165626 अप्रधानीकरोत्येतच्चित्तं स्वार्थस्वभावतः ॥ २१ ॥
165627
165628 यदैवं सुषुप्तिर्भवति तदायं प्राणः सेन्द्रियं चित्तं किं करोति तदाह - यदेति ।
165629 यदैवं भवति तदा प्राणस्तदात्मको य एकः अद्वैतः संप्रसन्न आत्मा
165630 तन्मात्रपरः सन् हृदि पुरीतति प्रविश्य सहस्थितमेतच्चित्तं ग्रसित्वा अप्रधानीकरोति
165631 स्वाधीनीकरोति । तत्कुतः । स्वार्थस्वभावतः स्वः प्रत्यगात्मा स एवार्थः परमार्थः
165632 पुरुषार्थश्च तत्स्वभावतः । तत्स्वभावमात्रेण परिशेषलक्षणसुखविश्रान्तौ
165633 प्रसक्तात्वादित्यर्थः ॥ २१ ॥
165634
165635 स्वार्थमात्रोऽद्य तस्यान्तः परकृत्यं न कस्यचित् ।
165636 कचति स्वार्थसत्तायामेतदेव वपुर्यतः ॥ २२ ॥
165637
165638 अस्तु स्वार्थप्रसक्तस्तथापि मन-इन्द्रियादिपरकार्यमपि कुतो न करोति तत्राह -
165639 स्वार्थेति । यतो निरतिशयानन्दरूपस्वार्थसत्तारूपायां सुषुप्तौ एतदेव
165640 निरतिशयानन्दवपुः कचति न विक्षेपदुःखलेशोऽपीत्यर्थः ॥ २२ ॥
165641
165642 श्रीराम उवाच ।
165643
165644 मनः प्राणवशादेव मनुते किं महामुने ।
165645 स्वरूपं मनसो नास्ति तस्मात्तत्केवलं च किम् ॥ २३ ॥
165646
165647 प्राणश्चित्तं ग्रसित्वा अप्रधानीकरोतीति यदुक्तं तत्र रामः शङ्कते - मन इति ।
165648 मनश्चित्तमित्येकमेव । हे महामुने मन इदानीमपि प्राणवशादेव
165649 मननादिव्यापारान्करोति । तथा च तद्यदि प्राणेनाप्रधानीकृतं न मनुते तर्हि
165650 इदानीमपि किं मनुते । यस्मात्प्राणात्पृथक्कृतं मनसः स्वरूपं नास्ति
165651 तस्मात्केवलं प्राणविनिर्मुक्तं किम् । न किंचिदित्यर्थः । चकारः
165652 पूर्वप्रश्नसमुच्चयार्थः ॥ २३ ॥
165653
165654 श्रीवसिष्ठ उवाच ।
165655
165656 देह एवेह नास्त्येव स्वानुभूतोऽप्ययं निजः ।
165657 मनसः कल्पनात्मेदं वपुः स्वप्ने गिरिर्यथा ॥ २४ ॥
165658
165659 अधिष्ठानसन्मात्रात्पृथक्करणे देहप्राणादिजगद्रूपं किमपि नास्ति ।
165660 तदपृथक्करणे तु तत्सत्तया सर्वमस्त्येव । तत्र प्राणपृथक्कृतं मन एकं
165661 नास्तीत्यल्पमिदं त्वया शङ्कितमित्याशयेन वसिष्ठ उत्तरमाह - देह इत्यादिना ।
165662 यतोमनसः कल्पनात्मेदं वपुः अतो मनःपृथक्कृतं वपुर्नास्तीत्यर्थः ॥ २४ ॥
165663
165664 तच्चित्तमपि नास्त्येव चेत्यार्थाभावयोगतः ।
165665 सर्गादौ कारणाभावादृश्यानुत्पत्तिहेतुतः ॥ २५ ॥
165666
165667 एवं चित्तस्यापि चेत्यार्थनिरूप्यत्वाच्चेत्यार्थाभावे तत्पृथक्कृतं स्वरूपं
165668 नास्तीत्यपि सुवचमित्याह - तदिति । पूर्वपूर्वचेत्यं तन्निरूपकमिति चेत्तत्राप्याह ##-
165669
165670 अतः सर्वमिदं ब्रह्म तच्च सर्वात्मकं यदा ।
165671 तदा विश्वमिदं विष्वगस्त्येव च यथास्थितम् ॥ २६ ॥
165672

165673 ब्रह्मणः सर्वात्मकत्वात्तत्सत्तया सत्त्वोक्तौ तु मन-आदिसर्ववस्तु अस्त्येवेत्याह ##-
165674
165675 अस्ति चित्तादि देहादि तद्ब्रह्मैव च तद्विदाम् ।
165676 यादृक्तत्तद्विदामेतदस्माकं विषये न तत् ॥ २७ ॥
165677
165678 चित्तदेहादि सर्वमस्ति यतस्तत्तद्विदां तद्ब्रह्मैव । अब्रह्मविदां तु एतचित्तदेहादि
165679 यादृक् तदस्माकं तत्त्वविदां विषये न ॥ २७ ॥
165680
165681 यथेदं त्रिजगद्ब्रह्म यथेति विविधात्मकम् ।
165682 अत्रेमं राजपुत्र त्वं वर्ण्यमानं क्रमं शृणु ॥ २८ ॥
165683
165684 हे राजपुत्र राम यथा इदं त्रिजगद्ब्रह्मैव तथा वर्ण्यमानमध्यारोपादिक्रमं
165685 शृण्वित्यर्थः ॥ २८ ॥
165686
165687 अस्ति चिन्मात्रममलमनन्ताकाशरूपि यत् ।
165688 सर्वदा सर्वरूपात्म न जगन्न च दृश्यता ॥ २९ ॥
165689
165690 तत्राधिष्ठानमादौ निर्दिशति - अस्तीति ॥ २९ ॥
165691
165692 सर्ववित्त्वात्तु तेनेदं मनस्त्वं चेतितं स्वतः ।
165693 रूपमत्यजता शुद्धं बुद्धमाधिविवर्जितम् ॥ ३० ॥
165694
165695 तेनेदं मनस्त्वं प्रथमं चेतितमध्यारोपितम् । तेन चाधिष्ठानस्य
165696 नान्यभाभाव इत्याह - रूपमिति ॥ ३० ॥
165697
165698 मनसा कल्पितं तेन यद्वै सरणमात्मनः ।
165699 तदेतत्प्राणपवनं विद्धि वेद्यविदां धर ॥ ३१ ॥
165700
165701 सरणं संचरणम् ॥ ३१ ॥
165702
165703 प्राणतैषा यथा तेन कल्पितेवानुभूयते ।
165704 तथैवेन्द्रियदेहादि दिक्कालकलनादि च ॥ ३२ ॥
165705
165706 इति विश्वमिदं विष्वक् चित्तमात्रमखण्डितम् ।
165707 चित्तं तु चित्परं ब्रह्म तस्माद्ब्रह्मेदमाततम् ॥ ३३ ॥
165708
165709 अनाकारमनाद्यन्तमनाभासमनामयम् ।
165710 शान्तं चिन्मात्रसन्मात्रं ब्रह्मैवेदं जगद्वपुः ॥ ३४ ॥
165711
165712 सर्वशक्ति परं ब्रह्म मनःशक्त्या यथा स्थितम् ।
165713 यत्र तत्र तथा रूपं स्वमेवानुभवत्यलम् ॥ ३५ ॥
165714
165715 यतः सर्वशक्ति अतः प्राथमिक्या मनःशक्त्या यथा स्थितं पूर्वसिद्धमेवेति यत्र
165716 तत्र जागरे स्वप्ने वा स्वमेव तथा स्वरूपं जगद्भूतमनुभवति ॥ ३५ ॥
165717
165718 संकल्पात्म मनो ब्रह्म संकल्पयति यद्यथा ।
165719 तत्तथैवानुभवति सिद्धमाबालमीदृशम् ॥ ३६ ॥
165720
165721 संकल्पात्मकं मन एव कार्यब्रह्म तद्यथा भूरादिलोकानन्यच्च संकल्पयति
165722 तथैवानुभवति । इदं चाबालं बालानभिव्याप्य ईदृशं सिद्धम् ॥ ३६ ॥
165723
165724 प्राणीकृतः स्वयमयं ननु चेतसात्मा देहीकृतस्त्रिभुवनीकृत एव नाद्यः

165725 ।
165726 देहीकृतः खवपुरेव गिरीकृतश्च स्वप्नेषु कल्पितपुरीष्वनुभूतमेतत् ॥ ३७ ॥
165727
165728 ननु हे राम खवपुरेव चेतनात्मा आद्यो ना पुरुषः प्रथमं प्राणी प्राणवान्
165729 चेतसैव कृतस्तथा देहीकृतस्तथा त्रिभुवनीकृत एव । एतत्सर्वं कल्पितपुरीषु
165730 स्वस्वदेहेषु सर्वैरपि स्वप्नेष्वनुभूतं तदेव निदर्शनीकार्यमित्यर्थः ॥ ३७ ॥
165731
165732 इत्यार्षे श्रीवा० वा० दे० मो० नि० उ० अवि० वि० चित्तसर्वात्मकताप्रतिपादनं
165733 नामाष्टत्रिंशदधिकशततमः सर्गः ॥ १३८ ॥
165734
165735 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
165736 चित्तसर्वात्मकताप्रतिपादनं नामाष्टत्रिंशदधिकशततमः सर्गः ॥ १३८ ॥
165737
165738
165739 एकोनचत्वारिंशदधिकशततमः सर्गः १३९
165740
165741 श्रीवसिष्ठ उवाच ।
165742
165743 चित्तमेव जगत्कर्तृ संकल्पयति यद्यथा ।
165744 असत्सत्सदसच्चैव तत्तथा तस्य तिष्ठति ॥ १ ॥
165745
165746 प्राणादपि हि चित्तस्य प्राधान्यमिह वर्ण्यते ।
165747 मुनेः सुषुप्तात्स्वप्नाप्तौ प्रलयेक्षा च विस्तरात् ॥
165748
165749 चित्तस्य सदैव प्राणाधीनत्वमभ्युपेत्याध्यारोपक्रमे प्राथम्यमात्रेण
165750 जाग्रत्स्वप्नयोरुभयप्राधान्यं सुषुप्तौ तु प्राणस्यैवेत्याशयेन रामप्रश्नः
165751 समाहितः इदानीं प्राणादिसर्वजगन्निर्माणे चित्तस्यैव स्वातन्त्र्यात्प्राधान्यं
165752 सुषुप्त्यारम्भकाले तु श्रान्तत्वाद्व्यापारितुमसमर्थमिति स्वविश्रान्त्यर्थमेव चित्तं
165753 प्राणप्राधान्यमङ्गीकरोतीत्याशयेन तत्समाधानमुपक्रमते -
165754 चित्तमेवेत्यादिना । असत् अलीकम् । सत् व्यावहारिकम् । सदसत् प्रातिभासिकम् । तस्य
165755 चित्तात्मनः ॥ १ ॥
165756
165757 तेन संकल्पितः प्राणः प्राणो मे गतिरित्यपि ।
165758 न भवामि विनानेन तेन तत्तत्परायणम् ॥ २ ॥
165759
165760 गतिर्मदीयसर्वव्यवहारनिर्वाहकः । तेन प्राणेन विना न भवामि न तिष्ठामि इत्यापि
165761 कल्पितं तेन हेतुना तच्चित्तं तत्परायणं प्राणाधीनमुच्यते ॥ २ ॥
165762
165763 अहं कतिपयं कालं ननु प्राणविनाकृतः ।
165764 न भवामि पुनर्नूनं भवाम्येवेति कल्पितम् ॥ ३ ॥
165765
165766 स्वप्नमनोराज्यादिप्रसिद्धदेहे प्राणाभावेऽपि मनोव्यापारदर्शनाद्विना तेन न
165767 भवामीति संकल्पस्य व्यभिचारमाशङ्क्याह - अहमिति ॥ ३ ॥
165768
165769 यत्र तेनाङ्ग तत्रैतत्प्राणेनाशु क्षणाद्वपुः ।
165770 उदितं पश्यति मनो मायापुरमिवाततम् ॥ ४ ॥
165771
165772 यत्र यत्र तेन मन्सा प्राणेन सह वपुः कल्पितं तत्रैतत् क्षणादुदितं पश्यति ॥ ४ ॥
165773
165774 न भवाम्येव भूयोऽहं प्राणदेहविनाकृतः ।
165775 दृढनिश्चयभागित्थं चितो भवति नो पुनः ॥ ५ ॥
165776

165777 प्राणदेहकल्पनानन्तरमहं भूयः कदापि प्राणदेहाभ्यां विनाकृतो न
165778 भवाम्येवेत्यत्यन्तदृढनिश्चयवान् जीवो भवति। चितश्चिन्मात्रस्वभावस्य तु
165779 दृढनिश्चयवान्नो भवति॥ ५॥
165780
165781 दोलायितं तु संदेहाद्दुःखमास्ते कुनिश्चयम्।
165782 विकल्पेनैवमस्यैतज्ज्ञानान्नाल्पेन यास्यति॥ ६॥
165783
165784 अत एवाल्पविचारजात्सदेहप्रायाज्ज्ञानान्न निस्तारः। विपरीतदृढनिश्चयस्य
165785 यथार्थदृढनिश्चयं विना अनिवृत्तेरित्याह - दोलायितमिति। एवं
165786 दृढतरमेतद्भ्रान्तिज्ञानं तत्त्वज्ञानादल्पेन विकल्पेन न यास्यति॥ ६॥
165787
165788 यस्यायमहमित्यस्ति तस्य तन्नोपशाम्यति।
165789 वर्जयित्वात्मविज्ञानंन् केनचिन्नाम हेतुना॥ ७॥
165790
165791 नान्यत्र प्रथते ज्ञानंन् मोक्षोपायविचारणात्।
165792 ऋते तस्मात्प्रयतेनन् मोक्षोपायो विचार्यताम्॥ ८॥
165793
165794 दृढतरतत्त्वज्ञाने त्वयं ग्रन्थ एवोपाय इत्याह - नान्यत्रेति॥ ८॥
165795
165796 किलाहमिदमित्येव नाविद्या विद्यते क्वचित्।
165797 मोक्षोपायादृते नैतत्कुतश्चिदयतेऽन्यतः॥ ९॥
165798
165799 अहमिदमिति द्विधैवाविद्या विद्यते। अन्येति शेषः। अयते अपगच्छति॥ ९॥
165800
165801 एवं यन्मनसाभ्यस्तमुपलब्धं तथैव तत्।
165802 तेन मे जीवितं प्राणा इति प्राणे मनः स्थितम्॥ १०॥
165803
165804 मे मम प्राणा एव जीवितं परमप्रेमविषयं रूपमित्येवं यन्मनसा
165805 दृढमभ्यस्तमित्येतस्माद्धेतोः प्राणे प्राणाधीनतया मनः स्थितम्॥ १०॥
165806
165807 देहे सौम्ये स्थिते प्राणे मनो मननवद्भवेत्।
165808 क्षुब्धे प्राणगतं क्षोभं पश्यन्नान्यत्प्रपश्यति॥ ११॥
165809
165810 एवं देहाधीनता मनसोऽस्तीत्याह - देहे इति। देहे क्षुब्धे तु तत् क्षोभं प्राणगतं
165811 प्रपश्यन्मनः अन्यदात्मतत्त्वविवेकं वा न प्रपश्यति॥ ११॥
165812
165813 यदा स्वकर्मणि स्पन्दे व्यग्रः प्राणो भृशं भवेत्।
165814 तदा तदीहितव्यग्रः प्राणो नात्मोद्यमी भवेत्॥ १२॥
165815
165816 अत एव प्राणो निरोधाभ्यासं विना नात्मज्ञानोन्मुखीभवतीत्याह - यदेति। तस्य
165817 मनस ईहितेषु व्यग्रः॥ १२॥
165818
165819 एते हि प्राणमनसी त्वन्योन्यं रथसारथी।
165820 के नाम नानुवर्तन्ते रथसारथिनौ मिथः॥ १३॥
165821
165822 तत्कुतस्तत्राह - एते इति॥ १३॥
165823
165824 इत्यादिसर्गे स्वात्मैव चेतितः परमात्मना।
165825 तेनैषाद्यापि नियतिर्नाबुधानां निवर्तते॥ १४॥
165826
165827 तदपि कुतस्तत्राह - इतीति। इति एवं परस्परानुवृत्तिस्वभावे प्राणमनोरूपेण
165828 परमात्मना आदिसर्गे आत्मा चेतितः संकल्पितः॥ १४॥

165829
165830 देशकालक्रियाद्रव्यैर्मनःप्राणशरीरिणाम् ।
165831 प्रयान्त्यधिगता देहेष्वरूढानां परे पदे ॥ १५ ॥
165832
165833 परे पदे अरूढानामव्युत्पन्नानां मनःप्राणशरीरिणां देहेषु
165834 देशकालक्रियाद्रव्यैरधिगता व्यवहाराः प्रयान्ति प्रवर्तन्ते ॥ १५ ॥
165835
165836 स्वं प्राणमनसी साम्यात्कुर्वती कर्म तिष्ठतः ।
165837 वैषम्याद्विषमं चैकं शान्ते शान्ता सुषुप्तता ॥ १६ ॥
165838
165839 तत्र प्राणमनसी यावत्कालं साम्यात्स्वं कर्म कुर्वती तिष्ठतस्तावत्समो व्यवहारो
165840 जाग्रदाख्यः प्रवर्तए । यदा प्राण इन्द्रियप्रवर्तनादुपरतो वैषम्यं भजते तदा
165841 विषमं स्वप्नाख्यमेकं केवलमानसं व्यवहरणं प्रवर्तते । शान्ते च मनसि
165842 सर्वविक्षेपशान्त्युपलक्षिता सुषुप्तता प्रवर्तत इत्यर्थः ॥ १६ ॥
165843
165844 यदाहारादिरुद्धासु नाडीषु क्वापि पिण्डितः ।
165845 शान्तमास्ते जडः प्राणस्तदोदेति सुषुप्तता ॥ १७ ॥
165846
165847 कदा पुनर्मनः शान्तं भवति तदाह - यदेति ।
165848 आहारैरन्नरसैरादिपदात्पित्तादिभिश्च नाडीषु रुद्धासु सतीषु पिण्डितः प्राणो यदा
165849 जडो मन्दसंचारो भूत्वा क्वाप्यास्ते तदा मनःशान्त्या सुषुप्ततोदेति ॥ १७ ॥
165850
165851 नाडीष्वन्नावपूर्णासु तथा क्षीणासु वा क्लमात् ।
165852 निःस्पन्दस्तिष्ठति प्राणस्तदोदेति सुषुप्तता ॥ १८ ॥
165853
165854 क्षुधितादीनामपि श्रमात्सुषुप्तौ निमित्तमाह - क्षीणासु वेति ॥ १८ ॥
165855
165856 नाडीनां मृदुरूपत्वात्पूर्णत्वाद्वा व्रणोदरे ।
165857 क्वापि प्राणे स्थिते लीने निःस्पन्दास्ते सुषुप्तता ॥ १९ ॥
165858
165859 मर्दनादिना नाडीमार्दवमपि सुषुप्तिनिमित्तमित्याह - नाद्डीनामिति । एवं
165860 शरक्षतव्रणरुधिरादिपुर्णतापि तन्निमित्तमित्याह - पूर्णत्वादिति ॥ १९ ॥
165861
165862 तापस उवाच ।
165863
165864 अथ यस्य प्रविष्टोऽहं हृदये सोऽभवन्निशि ।
165865 सुषुप्तघननिद्रालुराहारपरितृप्तिमान् ॥ २० ॥
165866
165867 एवं रामप्रश्नोत्तरप्रासङ्गिकं समाप्य वसिष्ठः प्रस्तुततापसोक्तिमेवावलम्बते
165868 - अथेत्यादिना । स प्राणी आहारपरितृप्तिमान्सन् सुषुप्तघननिद्रालुरभवदिति
165869 प्रागुक्तानुवादः ॥ २० ॥
165870
165871 तेन सार्धमहं तत्र तच्चित्तेनैकतां गतः ।
165872 सुषुप्तनिद्रां सुघनां गुणीभूतोऽनुभूतवान् ॥ २१ ॥
165873
165874 गुणीभूतस्त्यक्तस्वातन्त्र्यः ॥ २१ ॥
165875
165876 ततोऽन्धस्यस्य जीर्णेऽन्तर्नाडीमार्गे स्फुटे स्थिते ।
165877 प्राकृते स्पन्दिते प्राणे सुषुप्तं तनुतां ययौ ॥ २२ ॥
165878
165879 ततः अस्य प्राणिन उदरस्थे अन्धसि अन्ने जीर्णे जाते सति प्राकृते नैसर्गिके नाडीमार्गे
165880 प्राणे स्पन्दिते स्पन्दमाने सति । गत्यर्थाकर्मक - इति कर्तरि क्तः । तनुतामल्पताम् ॥

165881 २२ ॥
165882
165883 सुषुप्ते तनुतां याते हृदयादिव निर्गतम् ।
165884 अपश्यमहमत्रैव भुवनं भास्करादिमत् ॥ २३ ॥
165885
165886 ततस्तदीयस्वप्नप्रपञ्चोमया दृष्ट इत्याह - सुषुप्ते इति ॥ २३ ॥
165887
165888 तच्च क्षुब्धार्णवोत्थेन पूर्यमाणं महाम्भसा ।
165889 विमुक्तेनेव कल्पाभ्रैरभ्रंकषतरंगिणा ॥ २४ ॥
165890
165891 तच्च भुवनं प्रलयकालक्षुब्धार्णवेभ्य उदितेन महाम्भसा
165892 पूर्यमाणमपश्यम् । तदम्भ एव विशिनष्टि - विमुक्तेनेवेति ।
165893 कल्पाभ्रैर्मुसलप्रमाणधारावृष्ट्या विमुक्तेन अधस्त्यक्तेन । इवशब्दो
165894 मिथ्यात्वद्योती सर्वत्रानुवर्तनीयः ॥ २४ ॥
165895
165896 प्रोह्यत्पर्वतपूरेण महावर्तविराविणा ।
165897 वहद्वनालीतृण्याढ्यैर्व्याप्तेनोन्मूलितागया ॥ २५ ॥
165898
165899 वहन्ती या वनाली तल्लक्षणा या तृण्या तृणसमूहस्तदाढ्यैः पर्वतैर्व्याप्तेन ।
165900 तृणाद्यैर्व्याप्तेन इति पाठे स्पष्टम् । उन्मूलिता अगा वृक्षाः पर्वताश्च यया
165901 तथाविधया वात्यया वह्निज्वालया पूर्वमेवावदग्धायास्त्रिलोक्याः
165902 खण्डखण्डकैः पूर्णेनेत्युत्तरत्रान्वयः ॥ २५ ॥
165903
165904 पूर्वमेवावदग्धायास्त्रिलोक्याः खण्डखण्डकैः ।
165905 पूर्णेन परितः प्रौढैः खपुराद्रिमहीमयैः ॥ २६ ॥
165906
165907 खे प्रसिद्धानि देवासुरादिपुराणि तदादिमयैः ॥ २६ ॥
165908
165909 अहं तत्रैव पश्यामि यावत्कस्मिंश्चिदास्पदे ।
165910 कस्यांचित्पुरि कस्मिंश्चिद्गृहे वध्वा पुरे स्थितः ॥ २७ ॥
165911
165912 तदा च अहं कस्मिंश्चिदास्पदे देशे तत्र कस्यांचित्पुरि तत्रापि कस्मिंश्चिद्गृहे
165913 वध्वा भार्यया सह स्थितोऽस्मीति स्वं पश्यामीत्यर्थः ॥ २७ ॥
165914
165915 सदारः सहभृत्योऽहं सपुत्रः सहबान्धवः ।
165916 सहभाण्डोपस्करणः सगृहोऽपहृतोऽम्भसा ॥ २८ ॥
165917
165918 ईदृशश्चाहं तेन प्रलयाम्भसापहृतः प्रवाहितः ॥ २८ ॥
165919
165920 उह्यमानं क्षयाम्भोभिस्तद्गृहं तच्च पत्तनम् ।
165921 लङ्घ्यमानं द्रुमाकारैः पूर्यमाणं च वारिभिः ॥ २९ ॥
165922
165923 तदवस्थं तद्गृहं तन्नगरं च वर्णयति - उह्यमानमिति । क्षयाम्भोभिः
165924 प्रलयजलैः । द्रुमाकारैस्तरङ्गैः ॥ २९ ॥
165925
165926 बृहत्कलकलारावं जेतुमब्धिमिवोद्यतम् ।
165927 अतिक्षुभितवास्तव्यमनपेक्षितपुत्रकम् ॥ ३० ॥
165928
165929 वास्तुनि वेश्मभूमौ भवा वास्तव्या जनाः ॥ ३० ॥
165930
165931 आवर्ततरलाढ्याभिर्वृत्तिभिर्व्यूढमाकुलम् ।
165932 साक्रन्दोरस्ताडनोत्कजनजम्बालभीषणम् ॥ ३१ ॥

165933
165934 वृत्तिभिर्जलप्रवृत्तिभिर्व्यूढं प्रवाहितम् | जम्बालैः पङ्कैश्च भीषणम् || ३१ ||
165935
165936 स्फुटत्कुड्यत्रुटत्काष्ठरटच्छङ्कुकृतोद्रटम् |
165937 प्रपतच्छादनच्छत्रगवाक्षस्थाङ्गनामुखम् || ३२ ||
165938
165939 त्रुटद्भिः शङ्कुभिः कृत उत्कृष्टो रटो ध्वनिर्यत्र || ३२ ||
165940
165941 इति यावत्क्षणं पश्यन्नहं तद्भावमागतः |
165942 परिरोदिमि दीनात्मा तावत्तत्सकलं गृहम् || ३३ ||
165943
165944 चतुर्धा भित्तिभेदेन वृद्धबालाङ्गनान्वितम् |
165945 जगाम शतधा वीच्यां शिलायामिव निर्झरः || ३४ ||
165946
165947 भित्तीनां भेदेन विदारणेन || ३४ ||
165948
165949 उह्यमानोऽहमभवं ततः प्रलयवारिणि |
165950 त्यक्तसर्वकलत्रादिचित्तः प्राणपरायणः || ३५ ||
165951
165952 क्षिप्तस्तरङ्गजालेन योजनाद्योजनव्रजे |
165953 उह्यमानद्रुमशिखाज्वालान्तरितजर्जरः || ३६ ||
165954
165955 उह्यमाना ये द्रुमास्तत्रत्यप्रलयवह्निशिखा ज्वाला तदन्तः इतैर्गमनैर्जर्जरः |
165956 अन्तरितैरन्तरायैरिति वा || ३६ ||
165957
165958 काष्ठकुड्यतटीपीठकटुसंघट्टघट्टितः |
165959 आवर्तनृत्यपातालतले गत्वोत्थितश्चिरात् || ३७ ||
165960
165961 काष्ठादीनां कटुभिर्दुःसहैः संघट्टैर्घट्टित आस्फालितः | आवर्तनृत्येषु
165962 भ्रमणेषु पातालतले गत्वा चिरादुत्थितः || ३७ ||
165963
165964 चलाचलागमापायवलद्गुलुगुलारवे |
165965 जले बहुलकल्लोले मग्नोन्मग्नः पुनः पुनः || ३८ ||
165966
165967 संघट्टभग्नशैलेन्द्रपङ्किले सलिले क्षणम् |
165968 पल्वले वारण इव मग्नः सत्पयसोद्धृतः || ३९ ||
165969
165970 मग्नोऽभूवम् | तत्र दैवादागतेन सत्पयसा पुनरुद्धृतः || ३९ ||
165971
165972 यावदाश्वसिमि क्षिप्रं डिण्डीरे चाद्रिखण्डके |
165973 तावदेत्य हतो वेगाद्वैरिणेवातिवारिणा || ४० ||
165974
165975 डिण्डीरे फेनपुञ्जे अद्रिखण्डके च यावदाश्वसिमि विश्रान्ति लभे तावदतिवारिणा
165976 महातरङ्गेण हतः || ४० ||
165977
165978 नानावलनकल्लोलजलजालजुषा तदा |
165979 न तदस्ति न यद्दृष्टं दुःखं दुःखात्मना मया || ४१ ||
165980
165981 किं बहुना तदा सर्व दुःखं मयानुभूतमित्याह - नानेति || ४१ ||
165982
165983 एतस्मिन्नन्तरे तत्र तदा तत्तामसेक्षण [तापसस्य व्याधं प्रति
165984 संबोधनम् ||] |

165985 यावज्जीवचिराभ्यासाद्विषादित्वात्सचेतसः ॥ ४२ ॥
165986
165987 एतस्मिन्नन्तरे मया तत्प्राक्तनंन् स्वं समाधिमयं रूपं संस्मृतमिति परेण
165988 संबन्धः । तामरसेक्षण इति पाठे मुनिवाक्यमनुवदतो वसिष्ठस्य
165989 रामसंबोधनम् ॥ ४२ ॥
165990
165991 प्राक्तनं संस्मृतं रूपं स्वं समाधिमयं मया ।
165992 आ अहो नु जगत्यन्यरूपेऽहं तापसः स्थितः ॥ ४३ ॥
165993
165994 स्मृतिमेव विडम्बयन्नाह - आ अहो इत्यादिना । स्मृतावनाङ्त्वात् निपात
165995 एकाजनाङ् इति प्रगृह्यता ॥ ४३ ॥
165996
165997 अहं कस्यचिदन्यस्य स्वप्नदृष्टिदिदृक्षया ।
165998 प्रविष्टोऽहमयं स्वप्ने पश्यामीमं भ्रमं त्विति ॥ ४४ ॥
165999
166000 अयमहमिति प्रत्यभिज्ञायाम् ॥ ४४ ॥
166001
166002 वर्तमानदृढाभ्यासमिथ्याज्ञानमयात्मनि ।
166003 कल्लोलैरुह्यमानोऽपि ततोऽहं सुखितः स्थितः ॥ ४५ ॥
166004
166005 वर्तमानो यः स्वप्रपञ्चदृढाभ्यासस्तत्प्रयुक्तमिथ्याज्ञानमये आत्मनि देहे
166006 कल्लोलैरुह्यमानोऽप्यहं ततस्तत्स्मरणानन्तरम् ॥ ४५ ॥
166007
166008 इदं वारितयापश्यं प्रलयाब्धिविवर्तनाः ।
166009 उह्यमानाद्रिनगरग्रामोर्वीखण्डपादपाः ॥ ४६ ॥
166010
166011 वक्ष्यमाणविशेषणाः प्रलयाब्धिविवर्तना इदं प्रसिद्धं यन्मरुमरीचिवारि तत्तया
166012 । मिथ्यात्वेनेति यावत् ॥ ४६ ॥
166013
166014 उह्यमानामराहीन्द्रनारीनरनभश्चराः ।
166015 उह्यमानमहारम्भलोकपालपुरालयाः ॥ ४७ ॥
166016
166017 अथाहमद्रिमिश्राम्बुकल्लोलाद्रिविघट्टनाः ।
166018 मुहुः पश्यञ्जगन्नाशमनन्तरमचिन्तयम् ॥ ४८ ॥
166019
166020 चित्रमेष त्रिनेत्रोऽपि जीर्णं तृणमिवार्णवे ।
166021 उह्यते हा हतविधेर्नाऽकार्यं नाम विद्यते ॥ ४९ ॥
166022
166023 किमचिन्तयं तदाह - चित्रमिति । अत्र मायामहार्णवे त्रीण्यवस्थात्रयलक्षणानि
166024 नेत्राणि यस्य तथाविध ईश्वरोऽपि जीवो भूत्वा जीर्णतृणमिवोह्यते । चित्रमाश्चर्यम् ।
166025 हतस्य विधेर्दैवस्य ॥ ४९ ॥
166026
166027 चतुर्धा भित्तिभेदेन प्रकटाशयतामहम् ।
166028 पद्मानीव गृहाण्यप्सु दर्शयन्ति रवेः प्रभाः ॥ ५० ॥
166029
166030 यथा प्रातरप्सुरवेः प्रभाः विकसन्ति पद्मानि दर्शयन्ति तथा गृहाण्यपि चतुर्धा
166031 भित्तिविदारणेन प्रकटाशयताशोभं [मूलस्थस्य महं इति महशब्दस्यायं
166032 फलितार्थः ।] यथा स्यात्तथा दर्शयन्ति ॥ ५० ॥
166033
166034 चित्रं तरङ्गवलनासु समुल्लसन्ति गन्धर्वकिंनरनरामरनागनार्यः ।
166035 भूरिभ्रमैर्भ्रमरहारमिव ह्रदिन्यः पद्मिन्य एव
166036 सकलामलजङ्गमाख्याः ॥ ५१ ॥

166037
166038 एताश्च भूरिभिर्भ्रमैरावर्तैर्विभ्रमैश्चोपलक्षिताः
166039 परागधवलभ्रमरपङ्क्तिलक्षणं हारं वहन्त्यः पद्मिन्यः
166040 मुखकरपादादिपद्मवत्यो ह्रदिन्यो नद्य एव प्रसिद्धा ह्रदिन्यो न सकला अमला नापि
166041 जङ्गमाख्याः । एतास्तु तद्विपरीताः । अत एव तरङ्गवलनासु चित्रं
166042 समुल्लसन्तीवेत्यन्वयः ॥ ५१ ॥
166043
166044 विद्याधरीभुजलतावलितेन्दुकान्तकक्ष्याविभागमणिजालगवाक्षलक्ष्म्यः ।
166045 देवासुरोरगमहागृहभित्तिभागाः सौवर्णनौगणवदम्बुभरे भ्रमन्ति ॥
166046 ५२ ॥
166047
166048 विद्याधरीणां भुजलतावलितेषु इन्दुकान्तेषु कक्ष्याविभागा इव भासमाना
166049 मणिजालगवाक्षलक्ष्म्यो येषु तथाविधा देवासुरोरगमहागृहाणां भित्तिभागाः
166050 प्रलयाम्बुभरे सौवर्णनौकागणवद्भ्रमन्ति ॥ ५२ ॥
166051
166052 मत्तेभकुम्भपरिणाहिनि कुङ्कुमाङ्के शच्याः पयोधरभरे
166053 रतिखेदखिन्नः ।
166054 लग्नः सुखादिव करोति तरङ्गदोलाः संशीर्यमाणमणिगेहगतोऽत्र शक्रः ॥
166055 ५३ ॥
166056
166057 संशीर्यमाणमणिगेहगतः शक्रः अत्रास्मिन्प्रलयाम्बुभरे लग्नः सन्
166058 कुङ्कुमाङ्के मत्तेभकुम्भवत्परिणाहिनि विशाले शच्याः पौलोम्याः पयोधरभरे
166059 रतिप्रयुक्तेन खेदेन खिन्नः श्रान्तः संस्तदपनयनाय जलक्रीडासुखात् । ल्यब्लोपे
166060 पञ्चमी । जलक्रीडासुखमुद्दिश्येव तरङ्गदोलाः करोति ॥ ५३ ॥
166061
166062 हा वान्ति वारिवलनावलितान्तरिक्षमृक्षावधूतकुसुमप्रकरान्किरन्तः ।
166063 वाताः पतद्विबुधमन्दिररत्नसानावुद्यानकोटरगता इव साक्षतेन ॥ ५४ ॥
166064
166065 वारीणां वलनैर्वेष्टनैरावलितमन्तरिक्षं यस्मिन्कर्मणि तथा । तथा ऋक्षाणि
166066 नक्षत्राणि तल्लक्षणानवधूतान्कुसुमप्रकरान्किरन्तो विक्षिपन्तो वाताः । पतन्ति
166067 विबुधमन्दिराणि विमानानि यत्र तथाविधे रत्नसानौ मेरावुद्यानस्य कोटरे गताः
166068 प्रविष्टा मङ्गलार्थं साक्षतेन कुसुमवर्षेण किरन्तो जना इव वान्ति । हा इति खेदे ॥ ५४ ॥
166069
166070 यन्त्रोत्थहेमदृषदा सदृशाम्बुरूपं क्षुब्धाद्रिभीमजलवीचिशिखेरितं
166071 खे ।
166072 व्यावर्तते दिवि दलावृतकर्णिकास्थध्यानैकनिष्ठपरमेष्ठिसरोजमेतत् ॥ ५५ ॥
166073
166074 खे आकाशे क्षुब्धानामद्रिवद्भीमानां भयानकानां जलवीचीनां
166075 शिखाभिरीरितमुत्क्षिप्तमेतत् । यन्त्रोत्क्षिप्तेन हेमदृषदा सदृशमम्बुनो रूपं
166076 दिवि ब्रह्मलोके दलैः पत्रैरावृतं कर्णिकास्थस्य ध्यानैकनिष्ठस्य परमेष्ठिन
166077 आसनभूतं सरोजं प्राप्य व्यावर्तते परावर्तते नान्तराले इत्यर्थः ॥ ५५ ॥
166078
166079 मेघा इवातिघनघुंघुमघोषभीमा वीचीचयाः कनकपत्तनविद्युतोऽमी ।
166080 व्योम्नि भ्रमन्ति गजवाजिमृगेन्द्रनागवृक्षाद्रिकाननमहीतलतुल्यदेहाः ॥
166081 ५६ ॥
166082
166083 गजवाज्यादितुल्यदेहाः । अतिघनघुंघुमघोषैर्भीमाः
166084 कनकमयदेवासुरपत्तनान्येव विद्युतो येषु तथाविधा अमी वीचीचया मेघा इव व्योम्नि
166085 भ्रमन्ति ॥ ५६ ॥
166086
166087 उह्यमानोदभूवीच्यामतसीकुसुमश्रियाम् ।
166088 यमोऽप्ययं यमेनेव वारिपूरेण नीयते ॥ ५७ ॥

अतसीकुसुमसदृशश्रियां उह्यमानोदे प्रलयार्णवे
भवतीत्युह्यमानोदभूस्तथाविधायां वीच्यां वारिपूरेणायं यमोऽपि यमान्तरेण
नीयत इव लक्ष्यत इत्यर्थः ॥ ५७ ॥

एते ब्रुडन्ति सलिलेऽखिललोकपाला नागा नगैश्च नगरैः सह लक्षसंख्याः।
लक्ष्म्याकरोदरगुहागतवारिपूरव्यावर्तनागुडगुडैरभिलक्ष्यपूराः ॥ ५८ ॥

अखिला लोकपाला नागाश्च स्वाश्रयैर्मेर्वादिनगैर्नगरैश्च सह ब्रुडन्ति मज्जन्ति।
तत्र निधानादिलक्ष्म्याकरेषु पर्वतोदरगुहासु गतस्य प्रविष्टस्य वारिपूरस्य
व्यावर्तनार्थं निर्गच्छतो वायोर्गुडगुडशब्दैरभिलक्ष्यः पूरः पूरणं येषां
तथाविधाः सन्तः ॥ ५८ ॥

दुर्वारवारिवलनापरिपूरितेषु पातालभूतलनभस्तलदिक्तटेषु।
मत्स्या इवेन्द्रयमयक्षसुरासुरौघाः सग्रामपत्तनविमाननगा भ्रमन्ति ॥ ५९
॥

स्पष्टम् ॥ ५९ ॥

उह्यमानस्य कृष्णस्य तनुरेवाम्बुरूपिणी।
मातृजङ्घेव वत्सस्य कष्टं बन्धनतां गता ॥ ६० ॥

दोहनकाले वत्सानामाभीरैर्मातृजङ्घायां बन्धनादिति भावः ॥ ६० ॥

अन्योन्यमावलयतामहो बुडबुडारवः।
श्रूयते देवदैत्यानां स्वस्त्रीहलहलाकुलः ॥ ६१ ॥

स्वार्थ इव स्त्र्यर्थ इव वा हलहलाध्वनिभिराकुलः ॥ ६१ ॥

कोलाहलाकुलपुरोत्तमवेगपातविक्षुब्धवारिपटलीवलिताम्बरासु।
दिक्षु भ्रमज्जलदजालघनास्विवैष संलक्ष्यते जलामयः स्फुटकुड्यबन्धः
॥ ६२ ॥

कोलाहलैराकुलानां देवदानवपुरोत्तमानां वेगेन
पातैर्विक्षुब्धाभिर्वारिपटलीभिर्वलितान्तरासु दिक्षु भ्रमद्भिर्जलदजालैर्घनास्विव
जलमयः स्फुटकुड्यबन्धः संलक्ष्यते ॥ ६२ ॥

हा कष्टमेष तरसा पयसापनीत आवर्तवृत्तिपरिवर्तनया स्वधस्तात्।
एते कुबेरयमनारदवासवाद्याः प्राणान्पयोभ्रपटलैर्विधुरास्त्यजन्ति ॥ ६३ ॥

एष सर्वजनप्रसिद्धः सूर्य आवर्तवृत्तिपरिवर्तनया सुष्ठु अधस्तादपनीतः।
विधुरा जीवनासमर्थाः ॥ ६३ ॥

प्राज्ञाः प्रशान्तजडदेहमिहोह्यमानं मानोज्झिताः शवतयैव च तद्वहन्ति
।
ब्रह्मेन्द्रविष्णुपुरखण्डकसंकटाम्बुसंघट्टनेन कटुकुट्टनदृक्षु
तेन ॥ ६४ ॥

तेन तादृशेन ब्रह्मेन्द्रादिपुराणां खण्डकैः संकटस्याम्बुनः
संघट्टनेन कठुकुट्टनं पश्यन्तीति कटुकुट्टनदृशस्तेषु मध्ये ये
प्राज्ञास्तत्त्वविदस्ते प्रशान्तं मृतं अत एव जडं स्वदेहमिह जले उह्यमानं
मानस्तदहंभावस्तदुज्झिताः सन्तः शवतयैव वहन्ति। अतो न ते

166141 छेदभेदाभिघातादिदुःखैर्लिप्यन्त इति भावः ॥ ६४ ॥
166142
166143 स्त्रीणां गणोऽर्धपरिपिष्ट इहैति कष्टं कस्त्रातुमेनमपरः कुजडं
166144 समर्थः ।
166145 न ह्यन्तकस्य दशनैरभिचर्व्यमाणा त्रातुं परस्परमियं जनता समर्था ॥
166146 ६५ ॥
166147
166148 कुजडं कौ पृथ्व्यां जडमतिमूर्खत्वेन प्रसिद्धमेनं स्त्रीगणं त्रातुं कः
166149 समर्थः । जनता जनसमूहः ॥ ६५ ॥
166150
166151 पर्वतप्रतिघसर्पसर्पणाः संसरन्ति विपुला जलोच्चयाः ।
166152 तेषु नाव इव देवपत्तनान्युन्नमय्य वपुराशु यान्त्यधः ॥ ६६ ॥
166153
166154 पर्वतान् प्रतिघ्नन्ति विदारयन्तीति पर्वतप्रतिघाः सर्पवत्सर्पणं गमनं येषां
166155 तथाविधा विपुला जलोच्चयाः कल्लोलाः संसरन्ति । तेषु कल्लोलेषु देवपत्तनानि प्रथमं
166156 स्ववपुर्नाव इव उन्नमय्य तदनन्तरमाशु अधो यान्ति । मज्जन्तीति यावत् ॥ ६६ ॥
166157
166158 द्व्व्याद्रीन्द्रसुरासुरोरगनरैर्नागाप्सरश्चारणैर्व्याप्तं वारिविलोलितैः
166159 सरसिजैरालूनमूलैरिव ।
166160 एकाम्भोधिसरः स्थितं त्रिभुवनं कालेन निर्मूलितं कष्टं ते क्व गता
166161 महर्द्धिविभवा देवा जगन्नायकाः ॥ ६७ ॥
166162
166163 त्रिभुवनं कालेन निर्मूलितं सद्वारिविलोडितैर्द्वीपैरद्रीन्द्रैः
166164 सुरैरसुरैरुरगैर्नरैर्नागैर्गजैरप्सरोभिश्चारणैश्च आलूनमूलैः सरसिजैरिव
166165 व्याप्तमेकाम्भोधिलक्षणं सरो भूत्वा स्थितम् । कष्टमिति खेदे । महान्तः
166166 ऋद्धिविभवा येषां ते जगन्नायका इन्द्रादिदेवाः क्व गताः ॥ ६७ ॥
166167
166168 इत्यार्षे श्रीवा० वा० दे० मो० निर्वा० उ० अवि० वि० श० जगन्नाशवर्णनं
166169 नामैकोनचत्वारिंशदधिकशततमः सर्गः ॥ १३९ ॥
166170
166171 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
166172 जगन्नाशवर्णनं नामैकोनचत्वारिंशदुत्तरशततमः सर्गः ॥ १३९ ॥
166173
166174
166175 चत्वारिंशदधिकशततमः सर्गः १४०
166176
166177 व्याध उवाच ।
166178
166179 भगवंस्त्वादृशस्तां तामवस्थां च कथं गतः ।
166180 कथं ध्यानप्रयोगेण तदा नोपशमं गतः ॥ १ ॥
166181
166182 प्रलयाब्धेरपगमो ग्रामे द्विजतया स्थितिः ।
166183 मुनेः प्राणितनोर्बाह्यनिर्गमाद्यत्र वर्ण्यते ॥
166184
166185 पयर्थे चकारः । त्वादृशो ज्ञानयोगसिद्धोऽपि तां तां प्राग्वर्णितबहुप्रकारां
166186 प्रलयजलप्लवनादिनानाभ्रान्त्यवस्थां कथं गतः ।
166187 ध्यानलक्षणयोगाङ्गप्रयोगेणातीतानागतसर्वदर्शनोपायेन तदा
166188 सर्वभ्रान्त्युपशमं कथं न गतो न प्राप्तः ॥ १ ॥
166189
166190 मुनिरुवाच ।
166191
166192 कल्पान्तेषु विनश्यन्ति नाशैर्नानाविधात्मभिः ।

166193 जगन्ति भ्रान्तिरूपाणि नभस्याभासरूपिभिः ॥ २ ॥
166194
166195 कदाचित्क्रमशो नाशः कल्पान्ते संप्रवर्तते ।
166196 अशङ्कितं कदाचिद्द्रागेकधादिविकारतः ॥ ३ ॥
166197
166198 क्रमिके प्रलये योगेन भूतभाव्यर्थपर्यालोचनावकाशः स्यात् । आकस्मिके तु न
166199 तदवकाशो मया लब्ध इत्युत्तरमभिप्रेत्य प्रलयद्वैविध्यं दर्शयति -
166200 कदाचिदिति । सप्तानां समुद्राणां युगपदेकधाभावादिलक्षणाद्विकारतः ॥ ३ ॥
166201
166202 तदा द्रागित्येव यदा विकृतं वारि तत्तथा ।
166203 तेन यावत्सरन्त्याद्यं तावन्नीता जलैः सुराः ॥ ४ ॥
166204
166205 आद्यं हिरण्यगर्भं प्रति निवेदयितुं सुरा यावत्सरन्ति जिगमिषन्ति तावज्जलैर्नीताः ।
166206 तथा च सुराणामपि यत्र प्रमादस्तत्र मम का कथेत्यर्थः ॥ ४ ॥
166207
166208 अन्यच्च विपिनाधीश कालः सर्वंकषो ह्ययम् ।
166209 यत्र काले ततस्तस्मिंस्त्ववश्यंभावि तत्तथा ॥ ५ ॥
166210
166211 कालप्राबल्याद्वा तदा मम ध्यानधारणा न स्फूर्तेत्याह - अन्यच्चेति ।
166212 विपिनाधीश हे व्याध सर्वं कषति नाशयतीति सर्वंकषः । यत्र काले यदवश्यंभावि
166213 तत्तथा भवतीत्यर्थः ॥ ५ ॥
166214
166215 बलं बुद्धिश्च तेजश्च क्षयकाल उपस्थिते ।
166216 विपर्यस्यति सर्वत्र सर्वथा महतामपि ॥ ६ ॥
166217
166218 तदेव प्रपञ्चयति - बलमिति ॥ ६ ॥
166219
166220 अन्यच्च विपिनाधीश मयैतत्तव वर्णितम् ।
166221 स्वप्नदृष्टं किल स्वप्ने किं न संभवतीह कम् ॥ ७ ॥
166222
166223 किंचेदं स्वप्ने परचित्तानुवर्तिना मया दृष्टम् तत्र च विवेकाप्रसरो महतामपि
166224 प्रसिद्ध इति परिहारान्तरमाह - अन्यच्चेति । इह सर्वजने किमप्रसिद्धमिदमित्यर्थः
166225 ॥ ७ ॥
166226
166227 व्याध उवाच ।
166228
166229 असदेतद्यदि विभो स्वप्नसंभ्रममात्रकम् ।
166230 कथितेन तदैतेन कोऽर्थः कल्याणकोविद ॥ ८ ॥
166231
166232 स्वप्नसंभ्रमो मात्रा उपमानं यस्य तत्स्वप्नसंभ्रममात्रकम् । तत्तर्हि एतेन
166233 मां प्रति कथितेन किं प्रयोजनम् । हे कल्याणकोविदेति निरर्थकवाक्यवक्तृता त्वयि न
166234 संभाव्येति द्योतनाय संबोधनम् ॥ ८ ॥
166235
166236 मुनिरुवाच ।
166237
166238 त्वद्बोधनात्मकं कार्यं महदस्त्यत्र बुद्धिमन् ।
166239 एतद्भ्रमात्मकं वेत्ति भवान्सत्यं तु मे शृणु ॥ ९ ॥
166240
166241 कल्याणकोविदत्वं प्रकटयन्मुनिरुत्तरमाह - त्वद्बोधनात्मकमिति ।
166242 मोक्षपर्यवसायित्वान्महत् । यतो भवान्
166243 वर्णितप्रपञ्चसाम्यावगमादेतत्परिदृश्यमानमपि भ्रमात्मक वेत्ति ।
166244 दृश्यमात्रस्य भ्रमात्मकत्वे सत्यं तु दृग्रूपो भवानेव परिशिष्यते । अत

166245 एममन्वयव्यतिरेकाभ्यामन्यशोधनोपायं कथाशेषं मे मत्तः
166246 शृण्वित्यर्थः ॥ ९ ॥
166247
166248 अनन्तरमहं तस्मिन्मत्तैकार्णवरंहसि ।
166249 जन्तोरोजः स्थितः स्वप्ने भ्रान्तं भ्रान्तो व्यलोकयं ॥ १० ॥
166250
166251 यावत्ससकलं वारि क्वापि निर्गन्तुमुद्यतम् ।
166252 विक्षुब्धवज्रवित्रस्तसपक्षाद्रीन्द्रवृन्दवत् ॥ ११ ॥
166253
166254 कियत्कालं भ्रान्तिं त्वं व्यलोकयस्तत्राह - यावदिति । सकलैरावर्तकल्लोलादिभिः
166255 सह वर्तमानं ससकलम् ॥ ११ ॥
166256
166257 लब्धवानुह्यमानोऽहं कंचिद्दैववशात्तटम् ।
166258 अवसं तमवष्टभ्य शिखरप्रान्तसंनिभम् ॥ १२ ॥
166259
166260 तं तटमवष्टभ्य आश्रित्य अवसम् ॥ १२ ॥
166261
166262 अथ क्षणेन सलिलं तदशेषेण निर्ययौ ।
166263 वीच्यग्रस्फुटिताकारैर्दैवैस्तारकिताम्बरम् ॥ १३ ॥
166264
166265 तत्सलिलं वर्णयति - वीच्यग्रेत्यादिना ।
166266 वीच्यग्रस्फुटितजलकणाकारैर्ग्रहनक्षत्रादिदेवैस्तारकितं संजाततारकमम्बरं
166267 येन ॥ १३ ॥
166268
166269 तारागणैश्च पातालगतैर्मणिमयोदरम् ।
166270 आवर्तेषु परावृत्तैः स्फारमद्रिजरत्तृणैः ॥ १४ ॥
166271
166272 कैश्चित्तारागणैः पातालगतैर्मणिमयोदरमिव ॥ १४ ॥
166273
166274 हेमद्वीपोपमैर्व्याप्तं गीर्वाणपुरमन्दिरैः ।
166275 भ्रमत्सुराङ्गनालीननलिनीजालमालितम् ॥ १५ ॥
166276
166277 सुराङ्गनालक्षणैर्लीनैर्नलिनीजालैर्मालितम् ॥ १५ ॥
166278
166279 मध्योह्यमानकल्पाभ्रनीलशैवालजालकम् ।
166280 विद्युद्गोरोचनाम्भोदनीलनीरजनिर्भरम् ॥ १६ ॥
166281
166282 कल्पाभ्रवन्नीलं शैवालजालकं यत्र विद्युत एव गोरोचनातुल्याः परागा यत्र
166283 तथाविधैरम्भोदलक्षणैर्नीलनीरजैर्निर्भरमतिशयितम् ॥ १६ ॥
166284
166285 स्फुरत्सीकरनीहारमेघाद्रिकृतदिक्तटम् ।
166286 उल्लोलद्वीचिसंदिग्धवहत्कल्पद्रुमव्रजम् ॥ १७ ॥
166287
166288 स्फुरत्सीकरैर्नीहारैर्मेघैरद्रिभिश्च कृतं दिक्षु तटं यस्य ॥ १७ ॥
166289
166290 अथैकार्णवखातोऽसावभवच्छुष्ककोटरः ।
166291 क्वचिद्गलितसह्याद्रि क्वचित्संशीकमन्दरः ॥ १८ ॥
166292
166293 एकार्णवखातमपि वर्णयति - शुष्केत्यादिना । संशीकः शीर्णत्वादयं
166294 मन्दरोऽन्यो वेति संशययोग्यो मन्दरो यत्र ॥ १८ ॥
166295
166296 क्वचित्कङ्कनिमग्नेन्दुयमवासवतक्षकः ।

166297 क्वचित्पङ्कनिमग्नाधःशाखकल्पद्रुमोत्करः ॥ १९ ॥
166298
166299 क्वचित्कमलवत्कीर्णलोकपालशिरःकरः ।
166300 क्वचित्पङ्कजविश्रान्तरुधिरह्रदपाटलः ॥ २० ॥
166301
166302 पङ्कजैरिव विश्रान्तै रुधिरह्रदैः पाटलः ॥ २० ॥
166303
166304 क्वचिदाकण्ठनिर्मग्नक्वणद्विद्याधरीगणः ।
166305 क्वचित्स्वप्नमृतेभाभयाम्योग्रमहिषावृतः ॥ २१ ॥
166306
166307 स्वप्न इव मृतैरिभाभैर्याम्यैर्यमवाहनैरुग्रमहिषैरावृतः ॥ २१ ॥
166308
166309 क्वचित्सन्नमहाकायगरुडामरपर्वतः ।
166310 क्वचिन्मत्तमहासेतुर्यमदण्डेन भूजुषा ॥ २२ ॥
166311
166312 सन्नो महाकायगरुडलक्षणोऽमरपर्वतो यत्र । भूजुषा भूमौ पतितेन यमदण्डेन
166313 मत्त इव जलनिरोधाक्षमो महासेतुर्यत्र ॥ २२ ॥
166314
166315 क्वचित्प्रमृतवैरिञ्चहंससस्मितपङ्कभूः ।
166316 क्वचित्पङ्कविनिर्मग्नदेहार्धामरवारणः ॥ २३ ॥
166317
166318 एतस्मिन्नन्तरे तत्र सानुं प्राप्याश्रमे श्रमात् ।
166319 विश्रान्तोस्मि यदा तेन भृशं निद्राजगाम माम् ॥ २४ ॥
166320
166321 सानुं तटगिरेः प्रस्थदेशम् । कस्यचिन्मुनेराश्रमे यदा विश्रान्तोऽस्मि तदा मां
166322 भृशं निद्रा आजगाम ॥ २४ ॥
166323
166324 ततः सुषुप्तनिद्रान्तस्तया वासनयान्वितः ।
166325 तं तादृगेव कल्पान्तमपश्यं स्वौजसि स्थितः ॥ २५ ॥
166326
166327 सुषुप्तोत्तरकालप्रवृत्तनिद्रान्तस्तादृक्प्राण्योजोन्तर्दृष्टसदृशमेव स्वौजसि
166328 स्थितोऽहमपश्यम् ॥ २५ ॥
166329
166330 दृष्ट्वा तद्द्विगुणं दुःखं चिरेणात्राहमाकुलः ।
166331 प्रबुद्धो दृष्टवान्सानुं तमेवास्य हृदि स्थितम् ॥ २६ ॥
166332
166333 अस्य प्राणिनो हृदि स्थितं सानुमहं दृष्टवान् ॥ २६ ॥
166334
166335 अथ तत्र द्वितीयेऽह्नि भास्करोदयसुन्दरम् ।
166336 सलोकाकाशभूशैलं भुवनं दृष्टवानहम् ॥ २७ ॥
166337
166338 द्यौः क्ष्मा वायुराकाशं पर्वताः सरितो दिशः ।
166339 इति मे चेतसो जातं पत्रादि विटपादिव ॥ २८ ॥
166340
166341 चेतसो मनसः सकाशादेव विटपाच्छाखातः पत्रादीव जातमुत्पन्नम् ॥ २८ ॥
166342
166343 ततस्तस्मिंस्तथा दृष्टे भूतले तैः पदार्थकैः ।
166344 व्यवहारं प्रवृत्तोऽहं किंचिद्विस्मृतधीरितः ॥ २९ ॥
166345
166346 प्रवृत्तः कर्तुमिति शेषः । इतः पूर्वानुभूतविषये किंचिद्विस्मृतधीः
166347 विस्मृतधिया ईरित इति वा ॥ २९ ॥
166348

166349 जातस्य मेऽद्य वर्षाणि षोडशैष पिता मम |
166350 इयं मातास्पदं चेदमिति मे प्रतिमोदभूत् || ३० ||
166351
166352 तत्र चापूर्वा काचित्सिद्धवत्कारेण व्यवहारप्रतिभा स्वस्योदभूदित्याह - जातस्येति
166353 | आस्पदं गृहम् || ३० ||
166354
166355 अपश्यं ग्रामकं कंचित्कंचिच्च ब्राह्मणाश्रमम् |
166356 किंचिद्देहं तथा कश्चिद्बन्धुः कस्मिंश्चिदाश्रमे || ३१ ||
166357
166358 तत्र कश्चिद्बन्धुरभूदिति शेषः || ३१ ||
166359
166360 अथ मे तिष्ठतः सार्धं बन्धुभिर्ग्राममन्दिरे |
166361 अहोरात्रेषु गच्छत्सु जाग्रदादींस्तदेव सत् || ३२ ||
166362
166363 जाग्रदादीनवस्थाभेदाननुभवत इति शेषः | तदेव ग्रामादि | सत् यथार्थमिवाभवत्
166364 || ३२ ||
166365
166366 ततः कालवशात्तत्र प्राक्तनी बोधधीर्मम |
166367 विस्मृता तादृशाभ्यासादहो तस्येव मत्स्यता || ३३ ||
166368
166369 तस्य प्राग्दामव्यालकटाख्याने उक्तस्य निर्वासनस्यापि कटस्य
166370 मत्स्यसहवासाभ्यासात्पूर्वबोधविस्मरणेन मत्स्यतेव ग्रामवास्तव्यता मम
166371 संपन्नेत्यर्थः || ३३ ||
166372
166373 इत्यहं ग्रामवास्तव्यः संपन्नो ब्राह्मणस्तदा |
166374 देहमात्रकबद्धास्थो दूरीकृतविवेकभूः || ३४ ||
166375
166376 तामेव प्रपञ्चयति - इतीत्यादिना || ३४ ||
166377
166378 शरीरमात्रात्मवपुर्दारमात्रानुरञ्जितः |
166379 वासनामात्रसारात्मा धनमात्रैकतत्परः || ३५ ||
166380
166381 वासनामात्रसारः आत्मा स्वभावो देहो वा यस्य || ३५ ||
166382
166383 जीर्णगोमात्रकधनः संरोपितलतावृतिः |
166384 संचिताग्न्यवनिप्राणिरुपार्जितकमण्डलुः || ३६ ||
166385
166386 गृहाङ्गणे संरोपिता निष्पावादिलतावृतिर्येन | संचिताः अग्निश्च अवनिः
166387 क्षेत्रादिभूश्च पश्वादिप्राणिनश्च येन | नलोपश्छान्दसः || ३६ ||
166388
166389 चलवृक्षकबद्धास्थो लोकाचाररतः सदा |
166390 गृहपार्श्वगतानीलशाद्वलस्थलिकास्थितिः || ३७ ||
166391
166392 चलेष्वल्पकालजीविषु तुलस्यादिवृक्षकेषु बद्धास्थः | लोकानामाचारेषु
166393 जनपदग्रामधर्मेषु रतः | गृहपार्श्वगतासु आनीलशाद्वलासु स्थलिकासु
166394 स्थितिर्यस्य || ३७ ||
166395
166396 शाकशाकायतारामरचनानीतवासरः |
166397 सरिद्ध्रदनदीतीर्थसरसि स्नानतत्परः || ३८ ||
166398
166399 शाकानां शाकैरायतानामारामाणां च रचना परिष्कारस्तया नीता वासरा येन |
166400 सरोन्तानां द्वन्द्वैकवद्भावः || ३८ ||

गोमयान्नजलाम्ब्वग्निकाष्ठेष्टा कष्टसंचयी ।
इदं कार्यमिदं नेति पाशाभ्यां विवशीकृतः ॥ ३९ ॥

इष्टा इष्टकाः । गोमयादीनां कष्टेन संचयनशीलः ॥ ३९ ॥

इति मे जीवतस्तत्र संवत्सरशतं गतम् ।
एकदाभ्यागतो दूरात्तापसोऽतिथिरात्मवान् ॥ ४० ॥

आत्मवानात्मज्ञः ॥ ४० ॥

पूजितोऽसौ विशश्राम मद्गृहे स्नानपूर्वकम् ।
भुक्तवाञ्छयने स्थित्वा रात्रौ वर्णितवान्कथाम् ॥ ४१ ॥

नानादिग्देशशैलोर्वीव्यवहारमनोहरे ।
कथाप्रसङ्गे कस्मिंश्चिन्नानाविधरसाश्रये ॥ ४२ ॥

कस्मिंश्चित्कथाप्रसंगे तेनाहं इति बोधित इति व्यवहितेन संबन्धः ॥ ४२ ॥

सर्वं चिन्मात्रमेवेदमनन्तमविकारि च ।
जगत्तयेव कचति यथास्थितमपि स्थितम् ॥ ४३ ॥

इत्यहं बोधितस्तेन बोधैकघनतां गतः ।
स्मृतवांस्तमशेषेण वृत्तान्तं धारणावशात् ॥ ४४ ॥

तं प्राक्तनप्राणिशरीरप्रवेशादिस्ववृत्तान्तम् ॥ ४४ ॥

स्मृतवानात्मवृत्तान्तं यस्याहमुदरे स्थितः ।
तं विराड्रूपमाशङ्क्य तस्मान्निर्गन्तुमुद्यतः ॥ ४५ ॥

तं प्राणिनं सर्वजगज्जठरत्वाद्विराड्रूपमाशङ्क्य तस्मात्त दुदरात् ॥ ४५ ॥

तदास्यं निर्गमद्वारमथ जानामि नो यदा ।
विस्तीर्णे भुवने यस्मिन्भूम्यब्ध्यद्रिसरिद्वृते ॥ ४६ ॥

यस्मिन् प्राण्युदरे विस्तीर्णे भुवने भ्रमन्नहं यदा निर्गमद्वारं तदास्यं न
जानामि तदा तं देशमत्यजन्नेव तस्य प्राणं पवनं बहिर्निर्गन्तुं प्रविष्ट इति
परेण सहान्वयः ॥ ४६ ॥

तदा तमत्यजन्नेव देशं बन्धुजनावृतम् ।
तस्य प्राणं प्रविष्टोऽहं निर्गन्तुं पवनं बहिः ॥ ४७ ॥

इहस्थस्य विराजोऽस्य बाह्यमाभ्यन्तरं तथा ।
अन्यजं सर्वमीक्षेऽहमिति निर्णीय तादृशम् ॥ ४८ ॥

इहस्थस्य विराजोऽस्य प्राणिनो बाह्यमन्यजं विराडन्तरोत्पन्नमाभ्यन्तरं चेति
सर्वमीक्षे इति बुद्ध्या तादृशं तदनुकूलां तत्प्राणाहंभावधारणां बद्ध्वा
तं प्रदेशमत्यजमिति परेणान्वयः ॥ ४८ ॥

धारणां संविदा बद्ध्वा प्रदेशं स्वं तमत्यजम् ।
तत्प्राणैः सह निर्यात आमोदः कुसुमादिव ॥ ४९ ॥

166453 पवनस्कन्धमासाद्य प्राप्य तन्मुखकोटरम् ।
166454 बहिर्वातरथेनाहं निर्गतो दृष्टवान्पुरः ॥ ५० ॥
166455
166456 वातलक्षणेन रथेन बहिर्निर्गतः सन् पुरो वक्ष्यमाणं दृष्टवान् ॥ ५० ॥
166457
166458 यावत्तथैव मद्देहो बद्धपद्मासनः स्थितः ।
166459 क्वापि मुन्याश्रमः शिष्यैः पालितो गिरिकन्दरे ॥ ५१ ॥
166460
166461 बाह्ये क्वापि गिरिकन्दरे मुन्याश्रमोऽस्ति तत्र मद्देहो यावत्सकलस्तथा
166462 प्रागनुभूतवदेव बद्धपद्मासनः स्थितः ॥ ५१ ॥
166463
166464 पुरो मे तिष्ठतां तेषां मत्संरक्षणकर्मणाम् ।
166465 मुहूर्तमात्रं च गतः कालश्चान्ते निवासिनाम् ॥ ५२ ॥
166466
166467 हृदयं संप्रविष्टोऽसौ यस्याहं स पुमानपि ।
166468 पृष्ठेनोत्सवलब्धेन शेते तृप्तोऽन्धसा सुखम् ॥ ५३ ॥
166469
166470 स प्राणी अन्तेवासी पुमान् ग्रामे क्वचिदुत्सवे लब्धेन अन्धसा मृष्टान्नेन तृप्तः
166471 सन् उत्तानः पृष्टेन सुखं शेते ॥ ५३ ॥
166472
166473 तदाश्चर्यं मया दृष्ट्वा नोक्तं किं च न कस्यचित् ।
166474 पुनस्तस्यैव हृदयं प्रविष्टः कौतुकादहम् ॥ ५४ ॥
166475
166476 प्राप्तोऽस्म्योजःप्रदेशं तं तस्य तस्मिन्हृदन्तरे ।
166477 अवेक्षितुं स्वबन्धूंस्तान्व्याप्तो वासनया तया ॥ ५५ ॥
166478
166479 तं प्रागनुभूतमोजःप्रदेशमानन्दमयादिकोशत्रयप्रदेशं यावत्प्राप्तोऽस्मि
166480 तावत्तत्र युगस्यान्तः संप्रवृत्त इति परेणान्वयः ॥ ५५ ॥
166481
166482 यावत्तत्र युगस्यान्तः संप्रवृत्तोऽतिदारुणः ।
166483 भुवनं तद्विपर्यासमागतं सह संस्थया ॥ ५६ ॥
166484
166485 संस्थया धर्माधर्मव्यवस्थया सह विपर्यासमागतं प्राप्तम् ॥ ५६ ॥
166486
166487 अन्य एवाचलास्तत्र वसुधान्या च संस्थिता ।
166488 अन्य एव ककुब्भेदस्तथान्या भुवनस्थितिः ॥ ५७ ॥
166489
166490 भुवनविपर्यासमेव प्रपञ्चयति - अन्य इति ॥ ५७ ॥
166491
166492 ते बन्धवः स च ग्रामः स भूभागः स दिक्तटः ।
166493 न जाने क्व गतं सर्वं व्यूह्य नीतमिवानिलैः ॥ ५८ ॥
166494
166495 व्यूह्य संकाल्य ॥ ५८ ॥
166496
166497 तदा पश्यामि भुवनं यावदन्यदवस्थितम् ।
166498 अपूर्वसंनिवेशं तज्जगदन्यदिवोदितम् ॥ ५९ ॥
166499
166500 यावत्कृतम् ॥ ५९ ॥
166501
166502 तपन्ति द्वादशादित्याः प्रज्वलन्ति दिशो दश ।
166503 शीताश्यानाम्बुवच्छैलाः प्रवृत्ता गलितुं बलात् ॥ ६० ॥
166504

166505 शीतेन आश्यानं घनीभूतं यदम्बु तद्वत् गलितुं प्रवृत्ताः ॥ ६० ॥
166506
166507 अद्रावद्रौ दिशिदिशि ज्वलन्ति वनपङ्क्तयः।
166508 दग्धाः स्मृतिपदं याताः समस्ता रत्नभूतयः ॥ ६१ ॥
166509
166510 सर्व एवाब्धयः शुष्का महावाताः पुरःस्थिताः।
166511 अङ्गारराशितां यातं भूमण्डलमशेषतः ॥ ६२ ॥
166512
166513 पुरोदिशि स्थिता उत्थिताः ॥ ६२ ॥
166514
166515 पातालतो भूतलतोऽथ दिग्भ्यो ज्वाला विनिर्गन्तुमनुप्रवृत्ताः।
166516 संध्याभ्रवच्चाशु बभूव विश्वं ज्वालामयं मण्डलमेकमेव ॥ ६३ ॥
166517
166518 प्रथमं पातालस्ततो भूतलतोऽथानन्तरं दिग्भ्यो ज्वाला विनिर्गन्तुं प्रवृत्ताः।
166519 विश्वमाशु एकमेव ज्वालामयं मण्डलं सत् संध्याभ्रवदारक्तं बभूव ॥ ६३ ॥
166520
166521 ज्वालामये सद्मनि हेमपद्मकोशे भ्रमद्भृङ्ग इव प्रविष्टः।
166522 ततोऽहमाराच्छलभक्रमेण न चाप्तवान्दाहविकारदुःखम् ॥ ६४ ॥
166523
166524 तस्मिन् ज्वालामये सद्मनि हेमपद्मकोशे भ्रमद्भृङ्ग इव प्रविष्टोऽहं
166525 शलभक्रमेण प्रसक्तमपि दाहविकारदुःखं नैवाप्तवान्।
166526 आतिवाहिकदेहमात्रनिश्चयादिति भावः ॥ ६४ ॥
166527
166528 ज्वालामये साधु महाम्बुवाहे भ्रमाम्यहं विद्युदिवानिलात्मा।
166529 ज्वालापरिस्पन्दविलोलवर्ष्मा स्थलाब्जखण्डभ्रमरोपमश्रीः ॥ ६५ ॥
166530
166531 अनिलधारणया अनिलात्मा वायुप्रायोऽहं तस्मिन् ज्वालामये महाम्बुवाहे विद्युदिव
166532 साधु भ्रमामि। ज्वालापरिस्पन्देषु विलोलं वर्ष्म यस्य तथाविधः सन्
166533 स्थलाब्जखण्डेषु भ्रमन्तो ये भ्रमरास्तदुपमश्रीः संवृत्त इत्यर्थः ॥ ६५ ॥
166534
166535 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० नि० उ० अ० वि० हृदयकल्पनावर्णनं
166536 नाम चत्वारिंशदधिकशततमः सर्गः ॥ १४० ॥
166537
166538 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
166539 हृदयकल्पनावर्णनं नाम चत्वारिंशदधिकशततमः सर्गः ॥ १४० ॥
166540
166541
166542 एकचत्वारिंशदधिकशततमः सर्गः १४१
166543
166544 मुनिरुवाच।
166545
166546 तत्र दंदह्यमानोऽपि नाभवं दुःखभागहम्।
166547 स्वप्ने स्वप्नोऽयमित्येष जानन्नग्नावपि च्युतः ॥ १ ॥
166548
166549 वह्निज्वालाकुले लोके वायोश्चण्डस्य निर्गमः।
166550 विक्षिप्ताङ्गारवर्षाढ्यज्वालामेघोऽत्र वर्ण्यते ॥
166551
166552 दन्दह्यमानः सर्वतो दहनव्याप्तोऽपि ॥ १ ॥
166553
166554 ज्वालाजालनवोड्डीतिमण्डलैरखिलैर्नभः।
166555 अलातचक्रवच्चारु केवलं भ्रान्तवानहम् ॥ २ ॥
166556

166557 ज्वालाजालानां नवैः उड्डितीनामुड्डुयनानां मण्डलैरहमखिलं नभः
166558 अलातचक्रवद्भ्रान्तवान् ॥ २ ॥
166559
166560 तं दवाग्निमहं यावत्तत्त्ववित्यादखिन्नधीः ।
166561 विचारयाम्यखिन्नात्मा मारुतस्तावदाययौ ॥ ३ ॥
166562
166563 भ्रमणैराखिन्नात्मा ईषच्छ्रान्तमनाः ॥ ३ ॥
166564
166565 सीत्कारमतिगम्भीरं दधन्मेघरवोपमम् ।
166566 जगत्पदार्थैरावृत्तैरुह्यमानैः परावृतः ॥ ४ ॥
166567
166568 तमेव मारुतं वर्णयति - सीत्कारेत्यादिना । सीत्कारमग्निफूत्कारोपमं
166569 ध्वनिविशेषम् । उह्यमानैः शिलोल्मुकरजोभस्मादिभिर्जगत्पदार्थैः परावृतो
166570 व्याप्तः ॥ ४ ॥
166571
166572 बृहद्भिर्घुंघुमावेगैर्वने द्विगुणिताम्बुदः ।
166573 सूर्यैरावृत्तिभिर्व्यूढैर्विमिश्रालातचक्रकः ॥ ५ ॥
166574
166575 व्यूढैः प्रवाहितैरावृत्तिभिः परिवर्तमानैः सूर्यैर्द्वादशादित्यैः सह
166576 विमिश्राणि अलातचक्राणि येन ॥ ५ ॥
166577
166578 ज्वालासंध्याभ्रनिवहैर्बृहदग्निनदीशतः ।
166579 शैलद्विगुणभूखण्डदानवामरपत्तनः ॥ ६ ॥
166580
166581 ज्वालालक्षणैः संध्याभ्रनिवहैः प्रवर्तितानि बृहन्त्यग्निनदीशतानि येन ।
166582 शैलेभ्योऽपि द्विगुणानि भूखण्डा लोष्टानि दानवामराणां पत्तनानि च यस्मिन् ॥ ६ ॥
166583
166584 भूतैर्द्विगुणपात्रौघो भ्रान्तैरम्बरकुक्षिषु ।
166585 दग्धादग्धाभिरप्यर्धदग्धाभिरितरेतरम् ॥ ७ ॥
166586
166587 अम्बरकुक्षिषु भ्रान्तैर्भूतैर्द्विगुणिताः प्रागुक्तनदीशतपात्रौघा येन ॥ ७ ॥
166588
166589 पतन्तीभिः सुरस्त्रीभिर्द्विगुणाग्निशिखालवः ।
166590 पतदङ्गारधारौघकणसीकरदन्तुरः ॥ ८ ॥
166591
166592 द्विगुणा अग्निशिखा एव ज्वाला संध्याभ्रजललवा यस्मिन् ।
166593 पतदङ्गारलक्षणैस्तदीयैर्जलधारौघैरग्निकणलक्षणसीकरैश्च दन्तुर
166594 उन्नतदन्त इव स्थितः ॥ ८ ॥
166595
166596 अलातविद्युतो धुन्वन्पूताङ्गारोग्रमण्डलीः ।
166597 धूमान्धकारैः स्थगयन्म्लानमूर्ध्वदिशोमुखम् ॥ ९ ॥
166598
166599 पूतानां निरस्तभस्मनामङ्गाराणामुग्रा मण्डल्यो यासु तथाविधास्तदीया
166600 अलातविद्युतो धुन्वन् कम्पयन् । स्थगयन्नाच्छादयन् ॥ ९ ॥
166601
166602 भूमेर्व्योम्नो दिङ्मुखेभ्यः समन्ताज्ज्वालासंध्यावारिदा निर्गतास्ते ।
166603 यैस्तैर्ज्वालाशैलसंपिण्डमात्रं सव्योमौकाः संस्थिता सप्तलोकी ॥ १० ॥
166604
166605 भूमेः सकाशात्तथा व्योम्नो दिङ्मुखेभ्यश्च ते वर्णितप्रकारा ज्वालालक्षणाः
166606 संध्यावारिदा निर्गताः । यैर्वारिदैर्व्योमौकोभिर्देवादिभिः सहिता सव्योमौकाः
166607 सप्तानां लोकानां समाहारः सप्तलोकी ज्वालाशैलसंपिण्डमात्रं भूत्वा संस्थिता
166608 ॥ १० ॥

166609
166610 क्वापि प्रोत्फालकीर्णानलकणकपिलप्रोल्लसन्मूर्धजालिः क्वापि
166611 प्रोड्डीनकुड्यःकटुरटनपटुर्भस्मसंपिण्डपाण्डुः।
166612 क्वापि ज्वालापटालीं परिदधदभितः सम्पतन्तीं गृहीतां रौद्रः कर्तुं
166613 प्रवृत्तो हर इव स तदा मारुतो नृत्यलीलाः॥ ११॥
166614
166615 स प्राग्वर्णितश्चण्डमारुतस्तदा हरः कालाग्निरुद्रवन्नृत्यलीलाःकर्तुं प्रवृत्तः
166616 । कीदृशः सन्। क्वापि ऊर्ध्वदेशे प्रोत्फालैरुच्छलनैः कीर्णानलकणा एव कपिलाः
166617 प्रोल्लसन्त्यो मूर्धजानामालयो यस्य। क्वाप्यधोभागे पादाघातेनेव प्रोड्डीनानि
166618 कुड्यानि येन। कटु दुःसहं यद्रटनं तत्र पटुः। भस्मभिः
166619 संपिण्डितान्यवगुण्ठितान्यङ्गानि यस्य। क्वापि मध्यभागे अभितः संपतन्तीं
166620 ज्वालापटालीमुपसंगृहीतां परिदधत् वसान इत्येवंविधः सन्नित्यर्थः।
166621 विशेषणान्युभयत्र योज्यानि॥ ११॥
166622
166623 इत्यार्षे श्रीवासि० वाल्मी० दे० मो० नि० उ० अ० वि० श० कल्पान्तवर्णनं
166624 नामैकचत्वारिंशदधिकशततमः सर्गः॥ १४१॥
166625
166626 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
166627 कल्पान्तवर्णनं नामैकचत्वारिंशदधिकशततमः सर्गः॥ १४१॥
166628
166629
166630 द्विचत्वारिंशदधिकशततमः सर्गः १४२
166631
166632 मुनिरुवाच।
166633
166634 वर्तमाने तदा तस्मिन्कष्टे संभ्रान्तसंभ्रमे।
166635 उह्यमानोऽहमत्यन्तं खेदमभ्यागतोऽभवम्॥ १॥
166636
166637 इह स्वप्नादिजगतस्तत्त्वं ब्रह्मेति कीर्त्यते।
166638 तत्त्वदृष्ट्या जगद्बीजकर्माभावश्च साध्यते॥
166639
166640 खेदं श्रमप्रयुक्तं दैन्यम्॥ १॥
166641
166642 अचिन्तयं तत्स्वप्नोऽयं परस्य हृदये मम।
166643 तदतः परिनिर्वामि दुःखं पश्यामि किं मुधा॥ २॥
166644
166645 तत्ततः खेदादचिन्तयम्। मुधा दुःस्वप्नदुःखं किं पश्यामि। अतः
166646 परित्यज्यैतद्दर्शनं जागरणेन निर्वामि निर्वृतिं लभेयेत्यर्थः॥ २॥
166647
166648 व्याध उवाच।
166649
166650 किंस्वित्स्यात्स्वप्न इत्येव किल संदेहशान्तये।
166651 प्रविष्टो हृदयं तस्य किं तं निर्णीतवानसि॥ ३॥
166652
166653 स्वप्नस्य तत्त्वं किं स्यादिति निर्णयाय परस्वप्नं द्रष्टुं परकाये प्रविष्टस्त्वं
166654 किं निर्णीय तद्दर्शनान्निवृत्तोऽभूरिति व्याधः पृच्छति - किंस्विदिति। तं
166655 स्वप्नंन् तत्त्वतः किं निर्णीतवानसि॥ ३॥
166656
166657 किमेतद्भवतां दृष्टं हृदये क्व महार्णवः।
166658 जठरे कल्पवातः किं हृदि कल्पानलः कथम्॥ ४॥
166659
166660 परहृदये दृष्टा महार्णवादयः किम्॥ ४॥

166661
166662 द्यौः क्षमा वायुराकाशं पर्वताः सरितो दिशः।
166663 कथं हृदि जगन्नाम कथयेति यथास्थितम्॥ ५॥
166664
166665 हृदि जगन्नाम कथं संभवतीत्येतस्य यथास्थितं तत्त्वं स्वनिर्णीतं
166666 कथयेत्यर्थः॥ ५॥
166667
166668 मुनिरुवाच।
166669
166670 अकारणत्वात्सर्गादावेवानुत्पादतः स्फुटात्।
166671 अज्ञातौ सर्गशब्दार्थाविव न स्तो मनागपि॥ ६॥
166672
166673 एवं स्वपरस्वप्नादिदर्शनेनान्वयव्यतिरेकाभ्यां परीक्षितस्य शब्दार्थरूपस्य
166674 जगतो बाधदृशा त्रैकालिकासत्त्वमेव तत्त्वम्। परिशिष्टाधिष्टानब्रह्मदृशा तु
166675 तदेव तत्त्वमित्याशयेन मुनिरुत्तरमाह - अकारणत्वादित्यादिना।
166676 अकारणत्वादसंभवत्कारणकत्वात्। तथा हि। कूटस्थं वा कारणं विकारि वा। न
166677 तावत्कूटस्थम्। अकुर्वतः कारकत्वायोगेन कार्यसङ्गानर्हत्वेन
166678 उदासीनव्यावृत्तरूपानिरूपणेन स्वभावान्तरानुपजनेन च कारणत्वासंभवात्।
166679 विकारिणश्चानिर्णीतनानांशघटितस्य कोंऽशः कारणं स्यात्। मृत्पिण्डे हि
166680 घटादिविकारिणि किमपयन्पिण्डाकारः कारणमुतोपयन् घटाकार उतोभयानुगतो
166681 मृदाद्याकारः। नाद्यः। स्वत्राणेऽप्यसमर्थस्य कार्यकालास्थायिनः
166682 कार्यार्थव्यापारानाधारस्य च तस्य कारणत्वसंभावनाऽयोगात्। न द्वितीयः।
166683 कार्यस्यान्यस्यानिरूपणात्। न तृतीयः। तस्याकुर्वद्रूपत्वे कौटस्थ्यात्कुर्वद्रूपत्वे
166684 घटानन्त्यप्रसङ्गात्समर्थस्य क्षेपायोगेन
166685 युगपत्सर्वकार्यप्रसङ्गात्पिण्डघटकपालचूर्णादियौगपद्यापत्तेः।
166686 सहकार्यन्तरसंबन्धव्यवस्थया व्यवस्थेति चेन्न। तत्संबन्धस्य मृत्कार्यत्वे
166687 तदानीमेवापाद्यमानत्वादन्यकार्यत्वे तत्रापि सर्वतत्कार्ययौगपद्यापादने
166688 संबन्धस्यापि तदा आपादनात्तृतीयसहकार्ययुक्तौ
166689 तत्राप्येतद्दोषानिर्मोक्षाद्विनिगमनाविरहेण युगपत्सर्वोत्पादस्य
166690 परस्परप्रतिबन्धेन कस्याप्यनुत्पादस्य वा प्रसङ्गात्। तस्मात्
166691 सर्गादिरकारणपक्षस्यैव परिशेषात्सर्गशब्दार्थौ मनागपि न स्त एवेति तत्त्वं
166692 निर्णीतमित्यर्थः॥ ६॥
166693
166694 तच्चैतौ सर्वशब्दार्थौ त्वज्ञातौ परमात्मनि।
166695 यतस्तत्पदमज्ञानज्ञानात्मकमनामयम्॥ ७॥
166696
166697 कथं तर्हि लोके सर्गशब्दार्थौ प्रसिद्धौ तत्राह - तच्चैताविति। एतौ
166698 सर्गशब्दार्थौ परमात्मनि तत्त्वतो ज्ञातावेव प्रसिद्धौ। तदज्ञातं
166699 परमात्मरूपं ह्येतौ। नन्वज्ञातौ चेदप्रसिद्धावेवेति स्यान्न तु प्रसिद्धाविति तत्राह
166700 - यत इति। भवेदेतदेवं यद्यज्ञानमात्रं जगत्स्यात्। यतस्तु
166701 तदज्ञातमात्मपदं शबलत्वादज्ञानज्ञानात्मकम्।
166702 तत्राज्ञानांशमादायाज्ञातौ ज्ञानांशमादाय प्रसिद्धौ च सुवचावित्यर्थः॥ ७
166703 ।।
166704
166705 अतः सुभग सिद्धान्ते त्वत्पक्षे बोधमागते।
166706 मौर्ख्यशान्तावनाद्यन्ते पदे परमपावने॥ ८॥
166707
166708 यदि प्रसिद्धौ तर्हि सर्गशब्दार्थाविव न स्त इति कथं वक्षि तत्राह - अत इति। हे
166709 सुभग त्वत्पक्षे त्वदभिप्रेते स्वप्नादिजगत्तत्त्वे बोधमागते सति
166710 मौर्ख्यस्याज्ञानस्य शान्तौ सत्यां परमसिद्धान्तेपरमपावने पदे स्थित्वा। इदं
166711 सर्गशब्दार्थाविव न स्त इति वाक्यं वच्मि। मूढानां संवित्तौ यदिदं
166712 शब्दार्थसत्त्वं तदहमत्यन्तासंभवान्न वेद्मीत्युत्तरत्रान्वयः॥ ८॥

166713
166714 वच्मीदं मूढसंवित्तौ यदिदं तन्न वेद्म्यहम् ।
166715 वस्त्ववस्तुजमाभातं बोधमात्रमिदं ततम् ॥ ९ ॥
166716
166717 क्व शरीरं क्व हृदयं क्व स्वप्नः क्व जलादि च ।
166718 क्व बोधो बोधविच्छित्तिः क्व जन्ममरणादि च ॥ १० ॥
166719
166720 सिद्धान्ते तु शरीरादिप्रसिद्धिरेव नास्तीत्याह - क्वेति ॥ १० ॥
166721
166722 स्वच्छं चिन्मात्रमस्तीह तन्नाम यदपेक्षया ।
166723 स्थूलमेव खमप्यद्रिरणूनां निकटे यथा ॥ ११ ॥
166724
166725 किं तर्ह्यस्ति तदाह - स्वच्छमिति ॥ ११ ॥
166726
166727 स्वभावात्स चिदाकाशः किंचिच्चेतति चिन्तया [चिन्तय इति पाठः ।] ।
166728 खमेव वपुराकाशं यत्तद्वेत्ति जगत्तया ॥ १२ ॥
166729
166730 ईश्वरस्य तत्त्वविदां च जगद्दर्शनं कीदृशं तत्राह - स्वभावादिति ॥ १२ ॥
166731
166732 यथा स्वप्ने पुरतया चिदेवाभाति केवला ।
166733 न तु किंचित्पुराद्येवं जगच्चिन्मात्रमेव खे ॥ १३ ॥
166734
166735 इदं शान्तमनाभातमनन्यन्नैतदात्मनि ।
166736 चिति दृशौ तमसि खे चक्रकादीव भाति ते ॥ १४ ॥
166737
166738 व्याधदृशा तर्हि कथं भाति तदाह - चितीति । चिति चिद्रूपायां दृशौ चक्षुषि
166739 तमसि अज्ञानलक्षणतिमिररोगे सति खे चक्रकादि यथा भासते तद्वत्ते भातीत्यर्थः ॥
166740 १४ ॥
166741
166742 अस्माकं तु न चाभानं न चासन्न च सन्न खम् ।
166743 अनाकारमनाद्यन्तमेकं चिद्व्योम केवलम् ॥ १५ ॥
166744
166745 स्वदृशा त्वाह - अस्माकमिति । असत् प्रातिभासिकं सत् व्यावहारिकं खं शून्यं
166746 केवलं चिद्व्योम भातीत्यनुवर्तते ॥ १५ ॥
166747
166748 भात्यकारणकं स्वप्ने शुद्धो द्रष्टैव केवलः ।
166749 तेनात्र कारणाभावो न द्रष्टास्ति न दर्शनम् ॥ १६ ॥
166750
166751 येन हेतुना अकारणकवद्भाति तत्केवलस्त्रिपुटीशून्यः शुद्धो द्रष्टैवेति स्वप्ने
166752 निर्णीतं तेन कारणेन अत्र जाग्रत्यपि कारणाभावः प्रागुपपादित इति द्रष्टृादित्रिपुटी
166753 नास्त्येवेत्यर्थः ॥ १६ ॥
166754
166755 शुद्धं किमपि तद्भाति स्वानुभूतमपि स्फुटम् ।
166756 यदवाच्यमनाद्यन्तमेकं द्वैतैक्यवर्जितम् ॥ १७ ॥
166757
166758 स्वेनानुभूतमपि कुमारीसुखवदवाच्यं वक्तुमशक्यम् ॥ १७ ॥
166759
166760 एकः कालो यथा कल्पः प्रकाशश्चोभयात्मकः ।
166761 बीजं वा फलपुष्पान्तं ब्रह्म सर्वात्मकं तथा ॥ १८ ॥
166762
166763 द्वैतैक्यवर्जितस्य द्वैतैक्यात्मना स्थितिः क्व दृष्टा तत्राह - एक इति । कल्पः
166764 प्रलयः प्रकाशः सर्गश्चेत्युभयात्मकोयथा । यथा वा

166765 बीजमङ्कुरकाण्डवृक्षशाखापल्लवफलपुष्पान्तं स्वयमेवावतिष्ठते तथा
166766 ब्रह्म सर्वात्मकमित्यर्थः ॥ १८ ॥
166767
166768 यदन्यस्य महत्कुड्यं तदन्यस्यामलं नभः ।
166769 दृष्टमेतत्स्थिरस्वप्नसंकल्पभ्रमभूमिषु ॥ १९ ॥
166770
166771 तर्हि ब्रह्म द्वैतैक्यवदेव न तु तद्वर्जितं तत्राह - यदिति । यदि परमार्थतो
166772 द्वैतैक्यवत्स्यात्तर्हि सर्वान्प्रति तथास्यान्न तु तथा सर्वैर्दृश्यत इत् भावः ॥ १९ ॥
166773
166774 स्वच्छं तदा तदात्मैकं भाति चिन्मात्रखं यथा ।
166775 स्वप्ने जागृतिवत्तद्वज्जाग्रत्स्वप्नेऽप् नान्यथा ॥ २० ॥
166776
166777 यथा आत्मा चिन्मात्रखमेव सन् स्वप्ने जाग्रदिव भाति तथा जाग्रन्मये स्वप्नेऽपि भाति
166778 न त्वणुमात्रमपि स्वप्नाज्जाग्रत्यन्यथा भातीति तदेवेदानीमपि
166779 तस्याद्वयत्वमेवेत्यर्थः ॥ २० ॥
166780
166781 अदृश्ये पवने यद्वददृश्यं सौरभं स्थितम् ।
166782 चिन्मात्रेऽप्रतिघे तद्वज्जगदप्रतिघं स्थितम् ॥ २१ ॥
166783
166784 ननु प्रलयसुषुप्त्योरस्य जगन्न स्थितमिति कथं सदैकस्वभावोऽयमित्याशङ्क्य
166785 नादर्शनमात्रेण जगत्तदा न स्थितमिति निर्णेतुं शक्यमित्याशयेनाह -
166786 अदृश्ये इति । चक्षुरदृश्येऽपि पवने तादृशं सौरभं स्थितमिति यथा
166787 घ्राणजानुभवेन निर्णीयते तथा सुषुप्तप्रलयानुभविपुरुषादृश्यमपि
166788 जगत्पुरुषान्तरदृशा स्थितमेवेत्यर्थः ॥ २१ ॥
166789
166790 समस्तमननत्यागे योऽसि सोऽसि निरामयः ।
166791 बहिरन्तरनन्तात्मा सुस्थितोऽपि निरन्तरम् ॥ २२ ॥
166792
166793 मनोमननत्यागेन दर्शने तु कदापि क्वापि जगन्नासीदस्ति भविष्यतीति निरन्तरमेवात्मा
166794 अद्वयः सुस्थिर इत्याह - समस्तेति ॥ २२ ॥
166795
166796 व्याध उवाच ।
166797
166798 भगवन्प्राक्तनं कर्म केषामिह हि विद्यते ।
166799 केषां न विद्यते तद्वद्विनापि भवतः कथम् ॥ २३ ॥
166800
166801 तर्हि प्राक्तनकर्मानुसारेणैव मनो मनुते नान्यथेति कर्मैव संसृतिबन्धबीजं
166802 पर्यवसन्नं तद्येषां निःशेषं नष्टं तेषां समस्तमननत्यागः सिध्यतीति
166803 मन्यमानो व्याधस्तत्केषामस्ति केषां नास्तीति पृच्छति - भगवन्निति । येषां
166804 नास्ति तेषां तत्कर्म विनापि मननतत्यागे कथं भवतः ॥ २३ ॥
166805
166806 मुनिरुवाच ।
166807
166808 सर्गादिषु स्वयं भान्ति ब्रह्माद्या ये स्वयंभुवः ।
166809 विज्ञप्तिमात्रदेहास्ते न तेषां जन्मकर्मणी ॥ २४ ॥
166810
166811 येषामधिकारप्रापकोपासनाफलान्तर्भाविणैव सह सिद्धं चतुष्टयमिति
166812 न्यायेनौत्पत्तिकं तत्त्वज्ञानं तेषां कर्म नास्तीति मुनिरुत्तरमाह - सर्गादिष्विति ।
166813 आदिपदात्सनककपिलादयः । जन्मग्रहणं दग्धपटन्यायेन
166814 देहस्थितिप्रदर्शनार्थम् ॥ २४ ॥
166815
166816 तेषामस्ति न संसारो न द्वैतं न च कल्पनाः ।

166817 विशुद्धज्ञानदेहास्ते सर्वात्मानः सदा स्थिताः ॥ २५ ॥
166818
166819 आत्मत्वादेव सर्वात्मानः ॥ २५ ॥
166820
166821 सर्गादौ प्राक्तनं कर्म विद्यते नेह कस्यचित् ।
166822 सर्गादौ सर्गरूपेण ब्रह्मैवेत्थं विजृम्भते ॥ २६ ॥
166823
166824 कर्मशून्यास्ते कथं कर्मवतामात्मान इत्याशङ्क्य तद्दृशा कर्म कस्यापि
166825 नास्तीत्याह - सर्गादाविति ॥ २६ ॥
166826
166827 यथा ब्रह्मादयो भान्ति सर्गादौ ब्रह्मरूपिणः ।
166828 भान्ति जीवास्तथान्येऽपि शतशोऽथ सहस्रशः ॥ २७ ॥
166829
166830 किंतु ये ब्रह्मणोऽन्यत्वं बुध्यन्ते सात्त्विकोद्भवाः ।
166831 अबोधा ये त्वचिदाख्यं बुद्ध्वा द्वैतमिदं स्वयम् ॥ २८ ॥
166832
166833 केषां दृशा तर्हि कर्म विद्यते तानाह - किंत्विति । ये तु अबोधा अज्ञानावृताः
166834 सन्तः स्वस्य ब्रह्मत्वं न बुध्यन्ते किंतु नाहं ब्रह्मेति ब्रह्मणोऽन्यत्वं
166835 बुध्यन्ते
166836 असात्त्विकात्केवलसत्त्वपरिणामविलक्षणरजस्तमोमिश्रसत्त्वपरिणामादुद्भवो येषां
166837 तथाविधा जीवास्ते अचिदाख्यमिदं द्वैतं सत्यमिति बुद्ध्वा तद्वासनावासिता एव
166838 पाङ्मृतास्तेषां कर्मभिः सहितं जन्म उत्तरकालं दृश्यत इति परेणान्वयः ॥
166839 २८ ॥
166840
166841 तेषामुत्तरकालं तत्कर्मभिर्जन्म दृश्यते ।
166842 स्वयमेव तथा भूतैस्तैरवस्तुत्वमाश्रितम् ॥ २९ ॥
166843
166844 यतस्तैः स्वयमेव तथा अचिद्देहाद्यात्मभूतैः परमाथवस्तु विस्मृत्य
166845 आवस्तुत्वमाश्रितमित्यर्थः ॥ २९ ॥
166846
166847 यैस्तु न ब्रह्मणोऽन्यत्वं बुद्धं बोधमहात्मनि ।
166848 निरवद्यास्त एतेऽत्र ब्रह्मविष्णुहरादयः ॥ ३० ॥
166849
166850 यैस्तु कदापि न बुद्धं ते निरवद्याः कर्मबन्धलक्षणावद्यरहिताः ॥ ३० ॥
166851
166852 सर्वात्म संविदोऽच्छत्वं ब्रह्मात्मन्येव संस्थितम् ।
166853 तत्क्वचिज्जीववद्भानं स्वयमात्मनि पश्यति ॥ ३१ ॥
166854
166855 अच्छत्वं स्वाभाविकमिति शेषः । यतो ब्रह्म आत्मनि स्वस्वभावे एव संस्थितम् ।
166856 क्वचिन्मलिनोपाधौ ॥ ३१ ॥
166857
166858 यत्र वेत्ति तु जीवत्वं तत्राविद्येति तिष्ठति ।
166859 तत्र संसृतिनाम्नात्मा धत्ते रूपं तथास्थितम् ॥ ३२ ॥
166860
166861 अविद्यापि जीवोपाध्यवच्छेदेनैवास्ते न शुद्ध इत्याह - यत्रेति ॥ ३२ ॥
166862
166863 स्वयमेव हि कालेन बुद्ध्वा स्वं रूपमात्मनः ।
166864 स्वयमेव स्वरूपस्थं ब्रह्मैव भवति स्वयम् ॥ ३३ ॥
166865
166866 स्वयमेवेति । ब्रह्म वा इदमग्र आसीत्तदात्मानमेवाऽवेदनं ब्रह्मास्मीति
166867 तस्मात्तत्सर्वमभवत् ब्रह्म वेद ब्रह्मैव भवति इत्यादिश्रुतेरिति भावः ॥ ३३ ॥
166868

166869 यथा द्रवत्वादम्ब्वन्तरेति चावर्ततामिव।
166870 ब्रह्म चित्त्वात्तथैतीव सर्गतामस्य सर्गकम्॥ ३४॥
166871
166872 अज्ञातब्रह्मणः सर्गताभ्रान्तिः स्वभाव एवेत्याह - यथेति। अस्य सर्गकं
166873 स्वभाव इति शेषः॥ ३४॥
166874
166875 ब्रह्मभानमयं सर्गो न स्वप्नो न च जागरः।
166876 कस्य कान्यत्र कर्माणि कीदृशानि कियन्ति वा॥ ३५॥
166877
166878 का अस्य सर्गतेति शेषः॥ ३५॥
166879
166880 वस्तुतः कर्म नास्त्येव नाविद्यास्ति न सर्गधीः।
166881 स्वसंवेदनतः सर्वमसदेव प्रवर्तते॥ ३६॥
166882
166883 प्रवर्तते प्रथते॥ ३६॥
166884
166885 ब्रह्मैव सर्गो भूतात्मा कर्म जन्मेति कल्पनाः।
166886 स्वयं कुर्वदिदं भाति विभुत्वात्कल्पितार्थभाक्॥ ३७॥
166887
166888 विभुत्वात्सर्वशक्तिमत्त्वात्सत्यसंकल्पत्वात्॥ ३७॥
166889
166890 न संभवति जीवस्य सर्गादौ कर्म कस्यचित्।
166891 पश्चात्स्वकर्म निर्माय बुङ्क्ते कल्पनया स चित्॥ ३८॥
166892
166893 पश्चात् अविद्यान्तःस्थितिकल्पनोत्तरम्। निर्माय देहादिना निष्पाद्य॥ ३८॥
166894
166895 जलावर्तस्य को देहः कानि कर्माणि चोच्यताम्।
166896 यथाम्बुमात्रमावर्तो ब्रह्ममात्रं तथा जगत्॥ ३९॥
166897
166898 ब्रह्मभावदर्शने तु न कर्मसंभावनापीत्याह - जलेति॥ ३९॥
166899
166900 यथा स्वप्नेषु दृष्टानां न प्राक्कर्म नृणां भवेत्।
166901 आदिसर्गेषु जीवानां तथा चिन्मात्ररूपिणाम्॥ ४०॥
166902
166903 आदिसर्गेषु शुद्धसात्त्विकदेहेषु॥ ४०॥
166904
166905 सर्गे सर्गतया रूढे भवेत्प्राक्कर्मकल्पना।
166906 पश्चाज्जीवा भ्रमन्तीमे कर्मपाशवशीकृताः॥ ४१॥
166907
166908 कुतो न तत्राह - सर्गे इति। तेषां सर्गतया रूढ्यभावादेवेति भावतः॥ ४१॥
166909
166910 सर्ग एव न सर्गोऽयं ब्रह्मेत्थं किल तिष्ठति।
166911 यत्र तत्र क्व कर्माणि कानि वा कस्य तानि वा॥ ४२॥
166912
166913 अपरिज्ञाममात्रं यत्स्वयं वै परमात्मनः।
166914 तदेतत्कर्म बन्धाय तत्तज्ज्ञस्योपशाम्यति॥ ४३॥
166915
166916 तथा च न कर्मप्रयुक्तो बन्धः किंत्वज्ञानप्रयुक्त एवेति तदेव कर्मबीजमिति कामं
166917 व्यपदिश्यतां नान्यदित्याह - अपरिज्ञानमात्रमिति॥ ४३॥
166918
166919 यावद्यावत्परिज्ञानं पण्डितस्य प्रवर्तते।
166920 तावत्तावत्तदैवास्य कर्म शाम्यति बन्धनम्॥ ४४॥

166921
166922 अत एव कर्माप्यविद्यात्वादेव यथा यथा ज्ञानप्रकर्षस्तथा तथा अपक्षीयत इत्याह
166923 - यावदिति ॥ ४४ ॥
166924
166925 यन्नाम किल नास्त्येव तच्छान्तौ का कदर्थना ।
166926 परमार्थाद्दते बन्धः किंचिन्नाम न विद्यते ॥ ४५ ॥
166927
166928 ननु ज्ञानमात्रात्कथं वस्तुनाश इत्याशङ्क्य वस्तुत्वमेव कर्मणो नास्तीत्याह ##-
166929
166930 तावन्माया भवभयकरी पण्डितत्वं न यावत्तत्पाण्डित्यं पतसि न पुनर्येन
166931 संसारचक्रे ।
166932 यत्नं कुर्यादविरतमतः पण्डितत्वेऽमलात्मज्ञानोदारे भयमितरथा नैव
166933 वः शान्तिमेति ॥ ४६ ॥
166934
166935 अत एव पाण्डित्यार्थमेव यत्नः कार्यस्तद्विना भयाशान्तेरित्युपसंहरति -
166936 तावदिति । यावत्पण्डितत्वं नास्ति ताव्कालमेव माया भवभयकरी । मेघर्त्रिभयेषु
166937 कृञः इति खशो विषयोऽयं न । ग्रहणवता प्रातिपदिकेन तदन्तविधिप्रतिषेधात् ।
166938 तदेव पाण्डित्यं येन पुनः संसारचक्रे न पतसि । न तु
166939 शुष्कतर्कादिपाण्डित्यमत्रोपयुज्यत इत्यर्थः । अतः कारणादविरतममलज्ञानोदारे
166940 पण्डितत्वे श्रवणादियत्नं कुर्यात् । इतरथा उपायान्तरेण वो भयं शान्तिं नैति । स
166941 एनमविदितो न भुनक्ति उदरमन्तरं कुरुते अथ तस्य भयं भवति इत्यादिश्रुतेरिति
166942 भावः ॥ ४६ ॥
166943
166944 इत्यार्षे श्रीवासिष्ठमहा० वा० दे० मो० नि० उ० अ० वि० शवो० कर्मनिर्णयो नाम
166945 द्विचत्वारिंशदधिकशततमः सर्गः ॥ १४२ ॥
166946
166947 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
166948 कर्मनिर्णयो नाम द्विचत्वारिंशदधिकशततमः सर्गः ॥ १४२ ॥
166949
166950
166951 त्रिचत्वारिंशदधिकशततमः सर्गः १४३
166952
166953 मुनिरुवाच ।
166954
166955 सर्वेषामेव धर्माणां कर्मणां शर्मणामपि ।
166956 पण्डितः पुण्डरीकाणां मार्तण्ड इव मण्डनम् ॥ १ ॥
166957
166958 पाण्डित्यस्य प्रशंसात्र तच्च चिन्मात्रदर्शनम् ।
166959 चिदेव जगदित्येतद्भूयो युक्त्या समर्थ्यते ॥
166960
166961 सर्वेषामेव धर्माणां निर्णये धर्माविरुद्धलौकिककर्मणां निर्णये
166962 तदुभयफलैहिकामुष्मिकशर्मणां तारतम्यनिर्णये च संदेहग्रन्थिभेदनेन
166963 श्रोतॄणां बुद्धिविकासनः पण्डित एव सभामण्डनम् । यथा पुण्डरीकाणां
166964 विकासे मार्तण्डो नभोमण्डनंन् तद्वदित्यर्थः ॥ १ ॥
166965
166966 आत्मज्ञानविदो यान्ति यां गतिं गतिकोविदाः ।
166967 पण्डितास्तत्र शक्रश्रीर्जरत्तृणलवायते ॥ २ ॥
166968
166969 आमुष्मिकसुखमपि सर्वं पण्डितप्राप्यात्मसुखवारिधौ सीकरादपि लघुतरमित्याह
166970 - आत्मज्ञानेति ॥ २ ॥
166971
166972 पाताले भूतले स्वर्गे सुखमैश्वर्यमेव वा ।

166973 न तत्पश्यामि यन्नाम पाण्डित्यादतिरिच्यते ॥ ३ ॥
166974
166975 पाण्डित्यात्पाण्डित्यफलादानन्दात् । एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति
166976 इति श्रुतेरिति भावः ॥ ३ ॥
166977
166978 पण्डितस्य यथाभूता वस्तुदृष्टिः प्रसीदति ।
166979 दृगिवेन्दौ निरम्भोदे सकलामलमण्डले ॥ ४ ॥
166980
166981 पण्डितस्य सच्छास्त्रविचारजन्यज्ञानवतः परमार्थवस्तुरूपा दृष्टिः
166982 स्वात्मन्येव प्रसीदति आह्लादते । सकलामलमण्डले शरत्पूर्णेन्दौ दृक् चक्षुरिव ॥ ४ ॥
166983
166984 इदं दृश्यमविद्यात्म ब्रह्म संपद्यते क्षणात् ।
166985 बुधस्य बोधात्स्रग्दाम सर्पत्वमिव शाम्यति ॥ ५ ॥
166986
166987 बुधस्य पण्डितस्य स्रग्दामनि कल्पितं सर्पत्वमिव देहसर्गादिदृश्यजातं
166988 बोधाच्छाम्यति ॥ ५ ॥
166989
166990 यत्स्थितं ब्रह्मणि ब्रह्म कृतास्तेनैव सत्यता ।
166991 स्वभावैकात्मिकाः संज्ञा देहसर्गक्षयादिकाः ॥ ६ ॥
166992
166993 तर्हि देहसर्गादि शान्तिर्ब्रह्मस्वभावादन्या उत्पद्यते नेत्याह - यदिति । ब्रह्म
166994 स्वतत्त्वज्ञानेन ब्रह्मणि स्वस्वभावे यत्स्थितं तस्यैव तेनैव स्वभावैकात्मिका
166995 देहसर्गक्षयादिकाः संज्ञाः कृता इति सत्यता परमार्थ इत्यर्थः ॥ ६ ॥
166996
166997 सर्गो विद्यत एवायं न यत्र किल किंचन ।
166998 तस्य धर्माणि कर्माणि न चैवाक्षरमालिका ॥ ७ ॥
166999
167000 कुत एवमिति चेत्परिशिष्टब्रह्मणो दृश्यक्षयाख्यधर्मकर्मशून्यत्वादित्याह ##-
167001
167002 पृथ्व्यादि संभवति चेत्तत्सकारणमस्तु तत् ।
167003 तदेव यत्र नास्त्येव तत्र किं तस्य कारणम् ॥ ८ ॥
167004
167005 त्रैकालिकासत्त्वादेव दृश्यस्य सकारणकत्वं निरस्तमित्याह - पृथ्व्यादीति ॥ ८ ॥
167006
167007 ब्रह्मणः प्रतिभातं यत्तदिदं जगदुच्यते ।
167008 तेनैव कुत एतानि पृथ्व्यादीनि क्व कारणम् ॥ ९ ॥
167009
167010 प्रतिभानं प्रतिभासः । न हि प्रातिभासिके घटे दण्डचक्रादिकारणापेक्षास्तीति
167011 भावः ॥ ९ ॥
167012
167013 स्वप्नद्रष्टुर्दृश्यनृणामस्ति काल्पनिकं यथा ।
167014 न वास्तवं पूर्वकामं जाग्रत्स्वप्ने तथा नृणाम् ॥ १० ॥
167015
167016 पूर्व कामयते इति पूर्वकामं पित्रादिकारणं काल्पनिकमस्ति न वास्तवं यथा तथा
167017 जाग्रद्रूपे स्वप्नेऽपीत्यर्थः ॥ १० ॥
167018
167019 यथा प्राक्कर्म पुंस्त्वे च स्वप्ने पुंसां न विद्यते ।
167020 इह जाग्रत्स्वप्ननृणां भातानामपि नो तथा ॥ ११ ॥
167021
167022 पित्रादिवत्कर्माप्यवास्तवमेवेत्याह - यथेति । पुंस्त्वे पुरुषादिभावे ॥ ११ ॥
167023
167024 जीवः सर्वेषु सर्गेषु स्वप्नार्थान्निखिलान्मिथः ।

167025 प्राक्कर्मसत्वं मिथ्यात्म यथावासनमेषु च ॥ १२ ॥
167026

167027 मिथः पश्यतीति शेषः । एषु च सर्गेषु यथावासनं मिथ्याभूतसर्वव्यवहारे
167028 प्राक्कर्मसत्त्वमपि यथावासनं मिथ्यात्मैवेत्यर्थः ॥ १२ ॥
167029

167030 सर्गादावथ देहान्ते भान्ति स्वप्नार्थवन्मिथः ।
167031 यथासंवेदनं जीवाः सन्तोऽसन्तश्च तेन ते ॥ १३ ॥
167032

167033 जीवाः सर्गो भूतभुवनादिसर्गस्तत्प्रभृतिके देहसिद्ध्यन्ते संसारे स्वप्नार्थवदेव
167034 यथासंवेदनं स्वस्वसंवेदनान्यनतिक्रम्य भान्ति तेन स्वप्नार्था इव
167035 संवेदनांशे सन्तो विद्यमाना इतरांशे असन्तश्चेत्यर्थः ॥ १३ ॥
167036

167037 यथासंवेदनं सर्वे भान्ति भावयतस्ततः ।
167038 ते सन्त्यात्मन्यपि स्वप्ने जाग्रतीवार्थदा मिथः ॥ १४ ॥
167039

167040 यतो यथाभावनं भान्ति अतः स्वप्नेऽपि सन्ति । मिथः परस्परमर्थदा
167041 अर्थक्रियासमर्थाः ॥ १४ ॥
167042

167043 संकल्पसंविदग्रस्थवस्तुनिष्ठतयाऽस्फुटम् ।
167044 फलं चाप्नोति ते स्वप्ने लोकनिष्ठतयाऽस्फुटः ॥ १५ ॥
167045

167046 ते तव स्वप्ने यथा विनापि बाह्यार्थं भोजनादिसंकल्पसंविदेव
167047 पाकादिसंवित्क्रमेणाग्रस्थग्रासादिवस्तुनिष्ठा यस्यास्तथाविधात्वेन
167048 तृप्त्यादिफलं प्राप्नोति तथा जाग्रत्संकल्पसंविदपि । अस्फुटः स्वप्नः स्फुटा
167049 जाग्रदित्येतावानेव विशेष इत्यर्थः ॥ १५ ॥
167050

167051 शुद्धा संवित्स्वभावस्था यत्स्वयं भाति भास्वरा ।
167052 तस्या भानस्य तस्यास्य जाग्रत्स्वप्नाभिधाः कृताः ॥ १६ ॥
167053

167054 स्फुटमस्फुटं वा यदेव भूत्वा स्वयं भाति तस्यास्तस्यास्य भानस्य जाग्रत्स्वप्नौ
167055 इत्यभिधा लोके कृताः ॥ १६ ॥
167056

167057 सर्गादावथ देहान्ते भातं यद्वेदनं यथा ।
167058 तत्तथाऽऽमोक्षमेवास्ते तदिदं सर्ग उच्यते ॥ १७ ॥
167059

167060 आमोक्षं मोक्षपर्यन्तं तत्तथैवास्ते प्रवाहरूपेणेत्यर्थः ॥ १७ ॥
167061

167062 जाग्रत्स्वप्नार्थसार्थस्य संविदश्च न भिन्नता ।
167063 अस्त्यप्रतिघरूपायाः प्रकाशालोकयोरिव ॥ १८ ॥
167064

167065 जाग्रत्स्वप्नयोर्ये अर्थाः प्रसिद्धास्तेषामप्रतितरूपायास्तत्संविदश्चातो न
167066 भिन्नतेत्यर्थः ॥ १८ ॥
167067

167068 अग्न्यौष्ण्ययोरिव तथा वातस्पन्दनयोरिव ।
167069 द्रवाम्भसोरिवाऽऽवीचि वा शैत्यानिलयोरिव ॥ १९ ॥
167070

167071 आवीचि वीचीनभिव्याप्य स्थितयोर्द्रवाम्भसोरिव वा ॥ १९ ॥
167072

167073 सर्वमप्रतिघं शान्तं जगज्जातमसन्मयम् ।
167074 इत्थं सन्मयमेवास्ति नास्त्यर्थेन च संयुतम् ॥ २० ॥
167075

167076 अप्रतिघममूर्तचिद्रूपत्वात्प्रतिघातासहम् । इत्थमधिष्ठानचित्स्वभावत्वप्रकारेण

167077 तु सन्मयमेवास्ति। इत्थमधिष्ठानचित्स्वभावत्वप्रकारेण तु सन्मयमेवास्ति।
167078 नेतिनेतीतिश्रुत्या निषिध्यमानत्वान्नास्त्यर्थेन नञा तदर्थेन वा प्रतियोगिभावेन
167079 संयुतं च॥ २०॥
167080
167081 ब्रह्म प्रोद्भूय मृत्वा च दृश्यानुभवरूपि च।
167082 चिन्मात्रमज्रं शान्तमेकमेवामलं स्थितम्॥ २१॥
167083
167084 ब्रह्म जगदात्मना प्रोद्भूय प्रलयात्मना मृत्वा च
167085 दृश्यानुभवरूपित्वात्तदननुभवरूपं च सार्वात्म्यव्यवहारे। परमार्थे तु
167086 एकमेवाचलं स्थितम्॥ २१॥
167087
167088 कार्यकारणतार्थानां या यथा हृदि कल्पिता।
167089 ब्रह्मणा पुरुषेणेव नगर्यन्तस्तथैव सा॥ २२॥
167090
167091 नगर्यन्तर्मृत्कुड्यादीनामर्थानां पुरुषेणेव गगनपवनादीनां कार्यकारणता
167092 ब्रह्मणा या कथा कल्पिता सा तथैवास्ते। न नियतिभङ्गायेदं शास्त्रं किंतु
167093 तत्सत्यताभेदादिभङ्गायेत्यर्थः॥ २२॥
167094
167095 ब्रह्मणो हृदि सर्गोऽयं हृदि ते स्वप्नपूर्यथा।
167096 कार्यकारणता तत्र तथास्तेऽभिहिता यथा॥ २३॥
167097
167098 तत्सत्यताभङ्गे स्वाप्नवस्तुनियतिवच्चिन्मात्रमेव पर्यवस्यतीत्याह - ब्रह्मण इति।
167099 अभिहिता स्वाप्नी यथा तथा॥ २३॥
167100
167101 संविद्घनोदरे सर्गे कार्यकारणता स्थिता।
167102 तथा यथोहिता तेन त्वया वा कल्पनापुरम्॥ २४॥
167103
167104 यथा ऊहिता सर्गादौ संकल्पिता॥ २४॥
167105
167106 चिता संकल्परूपिण्या सर्गे संकल्पपत्तने।
167107 त्वयैव स्थापिता संस्था कार्यकारणरूपिणी॥ २५॥
167108
167109 त्वयापि स्वकीयसंकल्पपत्तने स्वेच्छानुसारिकार्यकारणरूपिणी व्यवस्था सुस्थापेति
167110 सिद्धवत्कृत्याह - चितेति॥ २५॥
167111
167112 आकाश एव कचनं यच्चित्ते स्वात्मरूपिणी।
167113 नियतं संनिवेशत्वात्तदन्तः सर्ग उच्यते॥ २६॥
167114
167115 संकल्पनगरतदन्तर्गतव्यवस्थयोश्च चिदाकाशमात्रकचनत्वं
167116 स्वानुभवसिद्धम्। अयं दृश्यमानसर्गोऽपि
167117 हिरण्यगर्भसंकल्पजत्वात्संकल्पसर्गान्तर्गत एवोच्यते श्रुतिपुराणादौ न
167118 तद्बहिर्भूत इत्यर्थः॥ २६॥
167119
167120 या संविद्व्यवस्थास्ते हृदि संकल्पपत्तने।
167121 सैषा स्वभावसंसिद्धिः कार्यकारणतार्थजा॥ २७॥
167122
167123 ते हृदि संकल्पपत्तने या संविद्रवेश्चिदादित्यस्य स्वप्रकाशतालक्षणा अवस्था
167124 सदैव आस्ते सैषैव कार्यकारणतार्थजा स्वभावसंसिद्धेति न
167125 ततोऽणुमात्रमप्यन्येत्यर्थः॥ २७॥
167126
167127 प्रथमं यद्यथा भाति चित्त्वमस्ति तथेह तत्।
167128 तस्यैव नियतिः कालो देशादीत्यभिधा कृता॥ २८॥

167129
167130 तदेवोपपादयति - प्रथममिति। स भूरिति व्याहरत्स भुवमसृजत
167131 इत्यादिश्रुतेर्हिरण्यगर्भहार्दचिति सर्गारम्भे यत्पृथिव्यादिपथा
167132 गन्धकाठिन्यादिप्रकारेण चित्त्वं भाति स्फुरति तदिदानीमपि तथैवास्ति। तस्यैव तथा
167133 स्थितस्य पृथिव्या गन्धकाठिन्यनियतिरपां द्रवत्वनियतिस्तेजस
167134 उष्णप्रकाशनियतिर्वायोः स्पन्दसौक्ष्म्यनियतिरित्यादिरूपेण अतीतानागतादिकालरूपेण
167135 प्राचीप्रतीच्यादिदेशादिरूपेण च स्थितस्य तथा तथा अभिधा कृतेत्यर्थः॥ २८॥
167136
167137 या नामाशु यथा भाति चेतनाकाशशून्यता।
167138 तया तथा वस्तुतया कार्यकारणताश्रिता॥ २९॥
167139
167140 एवं गोघटादिषु सर्वत्र बोध्यमित्याह - या नामेति। यथा गौः पयसः
167141 कारणं घटस्तद्धारणस्य॥ २९॥
167142
167143 चिच्चमत्कारमात्रेऽस्मिन्सर्गाभे भावरूपिणि।
167144 पूर्वं भावाः प्रवर्तन्ते पश्चात्सर्गाभिधा विदः॥ ३०॥
167145
167146 यद्धि मनसा ध्यायति तद्वाचा वदति इति श्रुतेर्मनसि प्रथमं रूपकल्पना
167147 पश्चान्नामकल्पनेत्याह - चिच्चमत्कारेति। भावो भावना संकल्पस्तद्रूपिणि॥ ३०
167148 ।।
167149
167150 शून्यतास्त्रिजगद्रूपास्तथा चिद्व्योमनि स्थिताः।
167151 अनन्याः पवने सौम्ये स्पन्दसता यथा निजाः॥ ३१॥
167152
167153 यत्र या कल्पना सा शून्यापि तन्मात्ररूपेति दृष्टान्तेन दर्शयति - शून्यता इति।
167154 यथा पवनस्य स्पन्दसत्ता तद्व्यतिरिक्तस्वरूपशून्या तदनन्या तथा चिद्व्योमनि
167155 त्रिजगद्रूपाः शून्यता अपीत्यर्थः॥ ३१॥
167156
167157 व्योम्नि सौषिर्यनैबिड्यं यथा नीलमिति स्थितम्।
167158 चिति चेतननैबिड्यं तथा सर्ग उपस्थितम्॥ ३२॥
167159
167160 तथा च चिद्घनतैव भ्रान्तदृशां जगदात्मना स्फुरतीत्याह - व्योम्नीति।
167161 सौषिर्यनैबिड्यमिति। धूमधूल्यादिव्याप्ते नभसि नैल्यादर्शनादिति भावः॥ ३२॥
167162
167163 आभात एव भातेऽस्मिन्कृच्छ्रात्सर्गे विसर्गता।
167164 बुध्यते रज्जुभुजगे रज्जुरूपं यथा पुनः॥ ३३॥
167165
167166 कदा पुनर्ब्रह्मणि विसर्गता बुध्यते तदाह - आभात इति सर्गे आभाते
167167 त्रिविधपरिच्छेदशून्यचिन्मात्रस्वभावतो भाते सतीत्यर्थः।
167168 कृच्छ्रात्साधनाभ्यासक्लेशात्॥ ३३॥
167169
167170 मृतः स स्वप्नवत्सर्वः संपश्यति पृथग्जगत्।
167171 तच्चान्यदिदमन्यच्च नित्याप्रतिघमम्बरम्॥ ३४॥
167172
167173 ऐहलौकिक इव पारलौकिकः सर्गोऽप्येतादृगेवेत्याह - मृत इति। तच्च
167174 तदन्यत्तदुत्तरपारलौकिकं च इदं च एतदन्यदैहिकं च सर्वमप्रतिघममूर्तं
167175 चिदम्बरमेव॥ ३४॥
167176
167177 व्याध उवाच।
167178
167179 परतः सुखदुःखार्थं देहः संपद्यते कथम्।
167180 किमस्य हेतुः के वास्य हेतवः सहकारिणः॥ ३५॥

167181
167182 एतद्देहपातात्परतः अन्यो देहः कथं संपदय्ते। हेतुरुपादानम्। हेतवो निमित्तानि॥
167183 ३५॥
167184
167185 कुर्वन्ति धर्माधर्माश्चेत्तेन प्रतिघरूपिणा।
167186 तदस्याप्रतिघं रूपं कुर्वन्तीत्यसमञ्जसम्॥ ३६॥
167187
167188 ये धर्माधर्मा एव स्वभोगार्थं सर्वं कुर्वन्तीति मन्यन्ते तेषां कर्मनिर्मितस्य
167189 ज्ञानेन निवृत्त्यदर्शनादनिर्मोक्षप्रसङ्ग इत्याह - कुर्वन्तीति। प्रतिघरूपिणा
167190 तेन देहादिभावेन स्थितस्यास्याप्रतिघं नित्यं तन्मोक्षाख्यं रूपं कर्माणि
167191 कुर्वन्तीत्यसमञ्जसम्। कृतकस्यानित्यत्वावर्जनादिति भावः॥ ३६॥
167192
167193 मुनिरुवाच।
167194
167195 धर्माधर्मौ वासना च कर्मात्मा जीव इत्यपि।
167196 पर्यायशब्दभारोऽत्र कल्प्यते न तु वास्तवः॥ ३७॥
167197
167198 विहितनिषिद्धाचरणे संस्काररूपेण स्थिते धर्माधर्मावित्युच्येते
167199 तादृशसंस्कारपुञ्जात्मकमेव मनस्तदेव चिदाभासव्याप्तं जीवः स च
167200 प्राणादिचेष्टाप्रधानत्वात्कर्मात्मा स एव स्ववासनानुसारिदेहादि
167201 संकल्पयंस्तदात्मा संपद्यत इवेति चित एवैते सर्वे प्रतिभासविशेषास्तत्र कामं
167202 यथेच्छं कल्पयन्तु फलतो न भेद इत्याशयेन द्वितीयप्रश्नस्य प्रथमं
167203 मुनिरुत्तरमाह - धर्माधर्मावित्यादिना। शब्दभारः शब्दराशिः।
167204 वास्तवोऽर्थभेदस्तु न त्वस्तीत्यर्थः॥ ३७॥
167205
167206 चित्त्वात्कल्पितचित्त्वेन स्वयं चिन्नभसात्मनि।
167207 कृतानि नामान्येतानि कश्चिदस्तीति चेतसा॥ ३८॥
167208
167209 कश्चिद्दृश्यदेहादिप्रपञ्चोऽयप्स्तीति चेतसा कल्पितेन चित्त्वेन चिदाभासरूपेण
167210 चिन्नभः स्वरूपे आत्मनि स्वयं खेनैव एतानि धर्माधर्मादीनि
167211 तत्फलसुखदुःखादीनि च नामानि कृतानि। सर्वाणि रूपाणि विचित्य धीरो नामानि
167212 कृत्वाऽभिवदन्यदास्ते इत्यादिश्रुतेरिति भावः॥ ३८॥
167213
167214 संविदात्मा स्वयं चित्त्वाद्देहं वेत्ति खमेव खे।
167215 मृत्वा सन्तं सन्तमिव संकल्पस्वप्नयोरिव॥ ३९॥
167216
167217 प्रथमप्रश्नं समाधत्ते - संविदात्मेति॥ ३९॥
167218
167219 स्वयं स्वप्न इवाभाति मृतस्य परलोकधीः।
167220 तमेव पश्यति चिरं न तत्राप्यस्ति सत्यता॥ ४०॥
167221
167222 मरणोत्तरकालं देहादिकल्पनमपि स्वप्नवदेवेत्याह - स्वयमिति॥ ४०॥
167223
167224 मृतं निर्माति चेदन्यः कथं वास्य स्मृतिर्भवेत्।
167225 कथं वा स्यात्स एवासौ चेतनत्वं तमेव खम्॥ ४१॥
167226
167227 पित्रादिरीश्वरो वा मृतं पुनर्निर्मातीति भ्रमं वारयति - मृतमिति।
167228 अन्यश्चेन्निर्माति तदा स एवासौ कथं स्यात्। तत्सृष्ट्वा तदेवानुप्राविशत् इति
167229 निर्मातुरेव प्रवेशश्रवणात्। तस्य च स्वात्मत्वात्। इष्टापत्तावस्य
167230 स्तन्यपानादिप्रवृत्त्यनुकूला स्मृतिः कथं वा भवेत्। तमेव
167231 पूर्वसिद्धमात्मानमाश्रित्य जातस्य चेतनत्वं यन्निरूढं तदपि खं शून्यमेव
167232 स्यादित्यर्थः॥ ४१॥

167233
167234 मृतौ न जायते तस्माच्चेतसैव स केवलम् ।
167235 इहायमित्थमित्येव वेत्ति खे वासनात्मकम् ॥ ४२ ॥
167236
167237 प्रथमप्रश्नोत्तरमुक्तमनुवदन्नुपसंहरति - मृताविति । न जायते जन्म न
167238 लभते किंतु चेतसैव केवलमिहायमित्थं जातोऽस्मीति मृषैव खे
167239 जन्मादिविक्रियाशून्ये आत्मनि कल्पनया वेत्ति ॥ ४२ ॥
167240
167241 स्वमेव भावमभ्यस्तमास्ते सोऽनुभवंश्चिरम् ।
167242 स्फुटप्रत्ययवांस्त्वत्र सत्यमित्येव वेत्त्यलम् ॥ ४३ ॥
167243
167244 तस्यैव भावस्याभासात्स्फुटप्रत्ययतया जन्मादिव्यवहारो लोकवेदयोर्न वस्तुत
167245 इत्याह - स्वमेवेति ॥ ४३ ॥
167246
167247 खात्मा खमेव तत्रैव स्वप्नाभं दृश्यमाहरन् ।
167248 पुनः स्वमरणं वेत्ति पुनर्जन्म पुनर्जगत् ॥ ४४ ॥
167249
167250 आहरन्नध्यस्यन् ॥ ४४ ॥
167251
167252 अलीकजालमेवं खे पश्यन्प्रत्येकमास्थितः ।
167253 पश्यत्याचारयत्यत्ति किंचित्कश्चिन्न कस्यचित् ॥ ४५ ॥
167254
167255 प्रत्येकं व्यष्टिभावमास्थितः सन् पश्यति स्वसंनिधिमात्रेण
167256 स्वाध्यस्तकार्यकारणानि विषयेष्वाचारयति प्रवर्तयति । जाग्रत्स्वप्नयोः
167257 सुषुप्तिप्रलयमोक्षेष्वत्ति च । परमार्थतस्तु न किंचित्कस्यचिददनीयं नापि
167258 कश्चिदत्तीत्यर्थः ॥ ४५ ॥
167259
167260 इत्येवं जगतां सन्ति कोटीनां कोटिकोटयः ।
167261 परिज्ञातास्तु ता ब्रह्म केवलं दृश्यमन्यथा ॥ ४६ ॥
167262
167263 अन्यथा अपरिज्ञातास्तु केवलं दृश्यमेव स एनमविदितो न भुनक्तीति श्रुतेरिति
167264 भावः ॥ ४६ ॥
167265
167266 ताभिर्न कस्यचित्किंचिदावृतं न च सन्ति ताः ।
167267 तासां च वेत्ति प्रत्येकमिदमेव जगत्त्विति ॥ ४७ ॥
167268
167269 ताभिर्जगत्कोटिकोटिभिः । कि त्वयमात्मा तासां मध्ये प्रत्येकमेकैको जीव एकं
167270 जगदिदमेव जगन्नान्यदिति वेत्ति ॥ ४७ ॥
167271
167272 भूतानि तासां प्रत्येकं तथैवान्योन्यमास्थिते ।
167273 सत्यान्येवासत्यदृष्ट्या सत्यदृष्ट्या त्वजं पदम् ॥ ४८ ॥
167274
167275 तासां जगत्कोटीनां पृथिव्यादिपञ्चभूतानि चतुर्विधभूतग्रामाश्च
167276 प्रत्येकमास्थिते तत्तज्जीवाभिमते जगति तथैव न विसदृशानीत्यर्थः । तानि चाऽसत्यया
167277 व्यवहारदृष्ट्या सत्यानि । सत्यया परमार्थदृष्ट्या त्वजं
167278 ब्रह्मपदमेवेत्यर्थः ॥ ४८ ॥
167279
167280 सद्यद्विदितवेद्यस्य तदज्ञस्यासदक्षयम् ।
167281 असद्यत्संप्रबुद्धस्य तत्सदज्ञस्य सुस्फुटम् ॥ ४९ ॥
167282
167283 अत एव ज्ञाज्ञयोः सत्यासत्ये परस्परविपरीते इत्याह - सद्यदिति ॥ ४९ ॥
167284

167285 चितेर्यद्यथा भानं तत्तत्सत्यं यथा यतः।
167286 सद्रूपाणि समग्राणि भूतानीमान्यतो मिथः॥ ५० ॥
167287
167288 अथवा परमार्थसत्यचिति भानरूपत्वात्सर्व सत्यमेवेत्यवैपरीत्यमेवेत्याह -
167289 चितेरिति॥ ५०॥
167290
167291 नित्यमन्योन्यसत्यानि तानि तान्येव वाप्यतः।
167292 किल संविद्विनिर्णेयं रूपमप्रतिघं यतः॥ ५१॥
167293
167294 अथवा यं प्रति यदा यज्जगद्भाति तं प्रति तदा तत्सत्यमिति व्यवस्थितं
167295 सत्यत्वमित्याह - नित्यमिति। यतो जगद्रूपं सत्यमसत्यमिति वा सत्यसंविदैव
167296 विनिर्णेयंन् सा चेद्भगवती संवित्सत्यमेवेति निर्णयति कस्तद्वैपरीत्यं तदन्यः
167297 साधयेदिति भावः। अप्रतिघं केनापि प्रतिहन्तुमशक्यम्॥ ५१॥
167298
167299 संविन्मात्रविनिर्णेयं कान्यता नान्यता कथा।
167300 यथास।वेदनं भाते वस्त्वौघे क्व द्वितैकते॥ ५२॥
167301
167302 अन्यतानान्यते अतथात्वतथात्वे तयोः कथ का। अयं न्यायो
167303 वस्तुभेदाभेदद्वित्वैकत्वादौ योज्य इत्याह - यथासंवेदनमिति॥ ५२॥
167304
167305 तदेवेदमिदं ज्ञप्तेस्तदेवेदं भवत्यलम्।
167306 तदेवैतत्तदेवेति भवेज्ज्ञप्तेरसत्यतः॥ ५३॥
167307
167308 अस्त्वेवं किं ततो भवति तत्राह - तदेवेति। इदं ज्ञेयं तत् ज्ञानमेवेति
167309 ज्ञानज्ञेयाभेदज्ञप्तेर्वशादिदं दृश्यजातं तज्ज्ञानमेव भवति। तावतैव
167310 सर्वदृश्यग्रासाच्चिदद्वैतं सिद्धमिति भावः। ननु ज्ञानापलापेनेत्थं
167311 ज्ञेयमात्रपरिशेष एव किं न स्यात्तत्राह - तदेवैतदिति। तज्ज्ञानमेतज्ज्ञेयमेव
167312 । तथा च तद्दृश्यमेव परिशिष्टमित्येतत्तु ज्ञप्तेरसत्यत्वाद्भवेत्संभाव्येत।
167313 तथा सति निर्ज्ञप्तिका ज्ञेयसिद्धिरेव न स्यादिति भावः॥ ५३॥
167314
167315 तच्चेदर्थस्ततो ज्ञप्तेर्नायं तस्याः पृथक् स्थितः।
167316 स्थिते ज्ञप्त्यात्मनि त्वर्थे त्वज्ञप्त्यायं ततो व्रजेत्॥ ५४॥
167317
167318 अतः परिशेषाज्ज्ञानमेवार्थश्चेदयंन् प्रपञ्चस्तस्या ज्ञप्तेः पृथक् न स्थितः।
167319 एवं सर्वस्मिन्नर्थे ज्ञप्त्यात्मनि स्थिते सति अयं द्रष्टा अज्ञप्त्या तदज्ञानेनैव ततो
167320 ज्ञप्तिस्वभावाद्व्रजेत्प्रच्यवेत न वस्तुत इत्यर्थः॥ ५४॥
167321
167322 ज्ञानं यदेव तज्ज्ञेयं ज्ञेयस्यासंभवात्पृथक्।
167323 यथा ज्ञानमतो ज्ञेयं तनोत्यात्मानमात्मना॥ ५५॥
167324
167325 तथा चाज्ञानज्ञानमेव ज्ञेयजगदात्मतामात्मनैव तनोतीति फलितमित्याह -
167326 ज्ञानमिति॥ ५५॥
167327
167328 पश्यन्तोऽपि मिलन्तोऽपि पृथक्सर्गा न किंचन।
167329 सत एवासतो ज्ञस्य मूर्खज्ञातांस्तु वेद्मि नो॥ ५६॥
167330
167331 तथा च पृथगसतो ज्ञप्त्यात्मना सत एव सर्गान्पश्यतो ज्ञस्य तत्त्वविदः पश्यन्तो
167332 गृह्णन्तश्चक्षुरादिसर्गास्तैर्मिलन्तो रूपादिसर्गा अपि ज्ञप्तिव्यतिरिक्ता न किंचनेति
167333 तत्त्वम्। मूर्खज्ञातांस्तु सर्गानहं नो वेद्मि॥ ५६॥
167334
167335 एकं प्रबोधतः सर्वं चिन्मात्रं तावदात्मखम्।
167336 तदेवानेकसंवित्त्या सहस्रं चिज्जडात्मनाम्॥ ५७॥

167337
167338 चिज्जडात्मनामज्ञजीवानाम् ॥ ५७ ॥
167339
167340 एकं तथा च चिन्मात्रं स्वप्ने लक्षात्म तिष्ठति ।
167341 पुनर्लक्षात्म तत्स्वप्नादेकमास्ते सुषुप्तके ॥ ५८ ॥
167342
167343 एकस्यैव चिदात्मनः स्वप्ने लक्षकोट्यात्मत्वं सुषुप्तावेकात्मत्वं च
167344 प्रसिद्धमित्याह - एकमिति ॥ ५८ ॥
167345
167346 चिद्व्योम्नि स्वप्नसंवित्तिर्या सैव जगदुच्यते ।
167347 सुषुप्तं प्रलयः प्रोक्तस्तस्मान्न्यायोऽयमेव सन् ॥ ५९ ॥
167348
167349 स्वप्नसुषुप्त्योरुक्तो न्यायः सर्गप्रलययोरपि समानस्तयोस्तदभेदादित्याह -
167350 चिद्व्योम्नीति ॥ ५९ ॥
167351
167352 एकैव संविन्नानात्वं नृलक्षत्वं च गच्छति ।
167353 शून्यत्वं च तथार्थत्वं स्वप्नसंकल्पयोरिव ॥ ६० ॥
167354
167355 भोग्यात्मना नानात्वं भोक्त्रात्मना नृलक्षत्वं च ॥ ६० ॥
167356
167357 इदमप्रतिघं सर्वं किल वेदनमात्रकम् ।
167358 शुद्धं तद्वद्यथा यत्र भाति तत्र तथा भवेत् ॥ ६१ ॥
167359
167360 एकैव संवित्सर्गादौ भवत्यग्न्यम्बुखादिकम् ।
167361 पृथ्व्यादि तावत्सर्गार्थं स्वप्नसंकल्पयोरिव ॥ ६२ ॥
167362
167363 सर्गार्थं सर्गसिद्ध्यर्थं पृथ्व्यादि तावद्भवति । वत्करणमविकारिताद्योतनार्थम्
167364 ॥ ६२ ॥
167365
167366 संविदाकाशरूपैव भाति पृथ्व्यादिनामिका ।
167367 यत्तदेव खमेवेदं जगदित्येव भासते ॥ ६३ ॥
167368
167369 तदेव स्पष्टमाह - संविदिति ॥ ६३ ॥
167370
167371 संवित्सप्रतिघं भाति भाति चाप्रतिघं तथा ।
167372 न वस्तुतस्तु प्रतिघा संवित्सान्ते निवर्तते ॥ ६४ ॥
167373
167374 सप्रतिघं नश्वरं मूर्तमिव अप्रतिघं नित्यममूर्तमिव च । वस्तुतस्तु प्रतिघा
167375 नाश एव नास्ति । यतः सा प्रतिघाप्यन्ते निवर्तते निवृत्ता च संविदेव परिशिष्यते ॥ ६४
167376 । ।
167377
167378 यासि पूर्वां पश्चिमां च दिशं वेत्सि चिरं विदन् ।
167379 प्रतिघं नाम ते नास्ति न च सप्रतिघा क्वचित् ॥ ६५ ॥
167380
167381 अप्रतिघत्वमेव संविदः समर्थयति - यासीति । त्वं मनसा पूर्वां पश्चिमां च
167382 दिशं चिरं यासि तत्र तत्र च दृष्टश्रुतानुमितादीनर्थान्विदन्स्वं वेत्सि । तत्र
167383 संविद्रूपस्य ते प्रतिघं नाम नास्त्येवाऽतः क्वचिदपि संवित्सप्रतिघानेति
167384 सिद्धमित्यर्थः ॥ ६५ ॥
167385
167386 दृष्टं संकल्पितं चार्थं सहाभ्यस्यति यश्चिरम् ।
167387 सोऽवश्यं तदवाप्नोति न चेच्छान्तो निवर्तते ॥ ६६ ॥
167388

167389 ननु जीवचित्संकल्पानां बहूनां मोघता दृश्यते सैव तस्याः प्रतिघात इति
167390 सप्रतिघत्वमिति चेत्तत्राह - दृष्टमिति। दृष्टं प्रमाणसिद्धं
167391 संकल्पितमर्थं यः पुरुषः सह नैरन्तर्येण चिरमभ्यसति सोऽवश्यं तदवाप्नोति।
167392 तथा च संकल्पस्यादार्ढ्यादेव मोघता। न ह्यदृढः कार्याक्षम इत्येतावता
167393 चितः सप्रतिघत्वम्। सर्वत्र तत्प्रसङ्गादिति भावः॥ ६६॥
167394
167395 यासि पूर्वां पश्चिमां च दिशं वेति चिरं विदन्।
167396 य आस्ते यात्यसौ तत्तामन्यस्त्यक्त्वा तु नेतराम्॥ ६७॥
167397
167398 अथवा अदृढः संकल्पः अदृढमेव मानोरथिकं दिगन्तरगमनं
167399 तत्रत्यपदार्थदर्शनादि करोति। दृढस्तु दृढमिति न तस्यापि
167400 मोघत्वमित्याशयेनाह - यासीति। त्वं मनसा पूर्वां पश्चिमां च दिशं यासि।
167401 तत्र तांस्तान्पदार्थांश्चिरं विदन् यः संकल्पयिता आस्ते स तत्तां
167402 स्वसंकल्पितदिगन्तगमनतत्रत्यपदार्थाद्यात्मतां स्वसंकल्पानुसारेण याति। यतः
167403 अन्यः पुरुषस्तु संकल्पं त्यक्त्वा इतरां दिशं मनसापि न याति। अनेनैव विशेषेण
167404 तत्र चिदप्रतिघेत्यर्थः॥ ६७॥
167405
167406 दृष्टः संकल्पितश्चार्थः स्यामित्यचलसंविदः।
167407 द्वयं भवेद्द्वयं नश्यत्यन्यस्याचलसंविदः॥ ६८॥
167408
167409 ऐन्दवादेः संकल्पितार्थोऽहं स्यामिति संकल्पादचलसंविदो द्वयं प्रथमं
167410 प्रातिभासिकः संकल्पदार्ढ्ये व्यावहारिकश्चेति द्वयं भवेदित्ययमर्थो दृष्टः।
167411 अन्यस्यासंकल्पयितुं पुरुषान्तरस्य स्वात्मनि विषयान्तरे वा अचलसंविदोऽपि
167412 तद्द्वयमपि नश्यति न दृश्यत इत्यर्थः॥ ६८॥
167413
167414 दक्षिणादुत्तरां वाशां यामीत्यचलसंविदः।
167415 द्वयं भवेद्द्वयं नश्यत्यन्यस्याचलसंविदः॥ ६९॥
167416
167417 एवं दक्षिणाद्देशादुत्तरामन्यां वा आशां यामीत्यचलसंविदो मानसं शारीरं
167418 चेति द्वयं भवेत्। पूर्वपश्चिमगमनद्वयं च नश्यति॥ ६९॥
167419
167420 खे पुरं स्यां भुवि मृगः स्यामित्यचलसंविदः।
167421 द्वयं भवेद्द्वयं नश्यत्यन्यदन्यत्तु तज्जगत्॥ ७०॥
167422
167423 एकं प्रबोधतः सर्वं चिन्मात्रं तावदात्मखम्।
167424 तदेवानेकसंवित्त्या सहस्रं चिज्जडात्मनाम्॥ ७१॥
167425
167426 तत्त्वप्रबोधतः सर्वमेकमेव चिन्मात्रं तदेवाप्रबोधतोऽनेकसंवित्त्या सहस्रं
167427 चिज्जडात्मनां जीवानां भवतीत्यर्थः॥ ७१॥
167428
167429 शरीरमस्त्वप्रतिघमथ सप्रतिघं च वा।
167430 स्वप्नात्मकोऽयं संसारो जीवस्येह परत्र च॥ ७२॥
167431
167432 ननु चिदेव चेच्छरीराद्याकारेणास्ते तर्हि तस्य सप्रतिघत्वाच्चितोऽपि सप्रतिघता प्रसक्ता
167433 तत्राह - शरीरमिति। चिद्रूपेण शरीरमप्रतिघमेवास्तु अथवा अन्यरूपेण
167434 सप्रतिघं वास्तु नैतावता कश्चिद्दोषो
167435 मिथ्यार्थगतगुणदोषैरधिष्ठानादूषणादिति भावः॥ ७२॥
167436
167437 एतन्म्लेच्छादिदेशेषु मृतानां दर्शनात्पुनः।
167438 स्मृतिपूर्वं च कथनात्प्रत्यक्षमनुभूयते॥ ७३॥
167439
167440 शरीरनाशे तेन सह जीवो न नष्ट इत्येतत्कथं ज्ञायत इति

167441 चेत्प्रत्यक्षाच्छब्दाच्चेत्याह - एतदिति। म्लेच्छादिदेशेषु मृतानां
167442 पिशाचदेहेनेहागतानां भूतविद्याज्ञैः प्रत्यक्षं
167443 दर्शनात्पूर्वतनस्वीयगृहव्यापारादीनां तैः स्मृतिपूर्वकं कथनाच्च
167444 जीवचित्सत्त्वं प्रत्यक्षमनुभूयते॥ ७३॥
167445
167446 ये मृता भस्मसाज्जाता म्लेच्छदेशेषु ते पुनः।
167447 आगत्य कथयित्वार्थं गच्छन्त्यप्रतिघात्मकाः॥ ७४॥
167448
167449 एष चेज्जीवतो धर्मस्तद्देशान्तरगे जने।
167450 मृत इत्येव बुद्धेऽर्थे कस्मान्नैव प्रवर्तते॥ ७५॥
167451
167452 जीवतो भूतवैद्यादेरेवैष पिशाचदर्शनसंभाषणादिभ्रमो धर्मो न
167453 मृतस्यागमनं संभाषणं वेति चार्वाककल्पनां प्रत्याचष्टे - एष इति।
167454 वस्तुतोऽमृते मृत इति भ्रान्त्या बुद्धेऽर्थेऽपि एवं दर्शनसंभाषणादिव्यवहारः
167455 कस्मान्न प्रवर्तत॥ ७५॥
167456
167457 जीवधर्मः सोऽपि संश्चेन्मृतधर्मोऽपि किं न सन्।
167458 यादृगनुभवस्त्वस्मिन्समे न्यायद्वये स्थिते॥ ७६॥
167459
167460 किं च जीवधर्मः सोऽपि भ्रमः संश्चेन्मृतस्य संभाषणादिः किं न सन्।
167461 अर्थसिद्धावनुभवशरणानामस्मिन्जीवति यादृगनुभवः स मृतेऽपि समः। एवं
167462 न्यायद्वये समे सति को विशेष इत्यर्थः॥ ७६॥
167463
167464 स्वप्नवज्जगदाभानमित्येवं सत्यखण्डितम्।
167465 आर्यानुभवशास्त्राणामनेनास्त्येकवाक्यता॥ ७७॥
167466
167467 एवमनुभवस्यार्थसाधकत्वे जाग्रत्स्वप्नानुभवयोरपि यावद्बाधं
167468 तुल्यमर्थसाधकत्वं प्रबोधेनानुभवमात्रपरिशेषश्चेति स्वप्नवदेव
167469 जगदाभानमिति यत्प्रतिज्ञातमेतदखण्डितं दृढीभूतम्। अनेन च
167470 विद्वदनुभवानाम्। तस्य त्रय आवसथास्त्रयः स्वप्नाः वाचारम्भणं विकारो
167471 नामधेयम् नेह नानास्ति किंचन इत्यादिशास्त्राणां चानेनैकवाक्यता
167472 परस्परसंवादेनैकार्थनिष्ठता अस्ति। उपपन्नेति यावत्॥ ७७॥
167473
167474 दृष्टिजालं जनौघानां पश्यतामिन्दुमन्दिरे।
167475 यादृगप्रतिघं तादृग्जगत्सदसदात्मकम्॥ ७८॥
167476
167477 इन्दुमन्दिरे चन्द्रबिम्बे पश्यतां जनौघानां दृष्टिजालं यादृगप्रतिघं
167478 परस्परप्रतिघातशून्यं सदसदात्मकं कस्यचित्सत्कस्य चिदसदित्येवमात्मकं
167479 जगदपि तादृगप्रतिघमित्यर्थः॥ ७८॥
167480
167481 सन्मात्रमात्रानुविधमच्छानुभवमात्रकम्।
167482 चिन्मात्रं भानमात्रात्म सर्वार्थात्मार्थवर्जितम्॥ ७९॥
167483
167484 ग्राह्यं सर्वं सत्त्वेन गृह्यमाणं सन्मात्रस्यैव मात्राः
167485 अंशभेदाननुविधत्ते। ग्राहकं च अच्छानुभवमात्रकम्। न च
167486 सन्मात्रमाभासमानं सिध्यतीति तत्सदेव। तदेव चार्थवर्जितमपि सर्वार्थात्मकं
167487 स्फुरतीति सर्वमप्रतिघं शान्तं चेत्यर्थः॥ ७९॥
167488
167489 सर्वमप्रतिघं शान्तं जगदेकं चिदम्बरे।
167490 अनिङ्गनमनाभासमात्मन्येवात्मनास्यताम्॥ ८०॥
167491
167492 उक्तमर्थमनुभावयितुमुपायमुपदिशति - अनिङ्गनमिति॥ ८०॥

167493
167494 अचला सम्विदेवास्ते स्थिरं कृत्वा यथा यथा ।
167495 तथा तथा भवत्याशु किमसत्किं च वापि सत् ॥ ८१ ॥
167496
167497 यथा यथा मनः स्थिरं कृत्वा आस्ते तथा तथा आशु भवतीति परेणान्वयः
167498 [परेणेत्यधिकं वा पूर्वत्रैकमर्धं पतितमिति वा मन्तव्यम् ।] ॥ ८१ ॥
167499
167500 शरीराण्यथ कर्माणि दुःखानि च सुखानि च ।
167501 यथा स्थितान्युपायान्तु यान्तु वा कस्य किं ग्रहः ॥ ८२ ॥
167502
167503 कस्य किंविषयो ग्रह उपादानम् ॥ ८२ ॥
167504
167505 इत्थमस्तु सदथान्यथास्तु वा मैव भूद्भवतु कोऽत्र संभ्रमः ।
167506 मुञ्च फल्गुनि फले फलावहंन् बुद्धवानसि कृतं परिभ्रमैः ॥ ८३ ॥
167507
167508 फलावहमवश्यफलदं यत्नं मुञ्च ॥ ८३ ॥
167509
167510 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० नि० उ० अ० वि० निर्वाणबोधोपदेशो
167511 नाम त्रिचत्वारिंशदधिकशततमः सर्गः ॥ १४३ ॥
167512
167513 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
167514 निर्वाणबोधोपदेशो नाम त्रिचत्वारिंशदधिकशततमः सर्गः ॥ १४३ ॥
167515
167516
167517 चतुश्चत्वारिंशदधिकशततमः सर्गः १४४
167518
167519 मुनिरुवाच ।
167520
167521 सर्वथाभावभावेषु स्वप्रसंवेदनात्मसु ।
167522 नित्याप्रतिघरूपेषु किं बद्धं किं विमुच्यते ॥ १ ॥
167523
167524 चिदेव जगदाभाति जगदेव च चिद्यथा ।
167525 युक्तयोऽत्र तथा ब्रह्म सर्वशक्ति समर्थ्यते ॥
167526
167527 दृश्यस्य चिन्मात्रत्वे बन्धमोक्षचिन्ताप्यपगतैवेत्याह - सर्वथेति ॥ १ ॥
167528
167529 खे दृष्टिभासां स्फुरणं यादृशं तादृशं जगत् ।
167530 विपर्यस्यत्यविरतमबोधाल्लक्ष्यते स्थिरम् ॥ २ ॥
167531
167532 दृष्टिभासां दृक्किरणानांन् खे यादृशं
167533 संपतद्घटकरकमुक्ताकेशोंड्रकाद्यात्मना स्फुरं तादृशं जगदविरतं
167534 परिणामेन विपर्यस्यति अधिष्ठानविवेकाबोधात्तत्स्थैर्येण स्थिरं लक्ष्यते ॥ २ ॥
167535
167536 यद्यथा पुरसंस्थानं चिरैरेति तदन्यताम् ।
167537 जगदप्येवमनिशं वार्यावर्तविवर्तवत् ॥ ३ ॥
167538
167539 विपर्यासमेवानुभावयति - यदिति । यत् प्रसिद्धं पुरसंस्थानं यथा
167540 चिरैरन्यतां संस्थानान्तरताम् ॥ ३ ॥
167541
167542 भूम्यम्ब्वम्बरशैलादि भवत्यसदिदं क्षणात् ।
167543 तस्मिन्नेव क्षणोदन्तैर्युगकल्पाभिधाः कृताः ॥ ४ ॥
167544

167545 यस्मिन्नेव काले भवति तस्मिन्नेव क्षणलवत्रुट्याद्यवयवोदन्तैर्युगकल्पाद्यभिधा
167546 विद्वद्भिः कृताः ॥ ४ ॥
167547
167548 जगत्स्वप्न इवाशेषमसदप्यनुभूयते ।
167549 यन्नास्ति चेत्तन्निःशेषं चिदेवेत्थं कचत्यलम् ॥ ५ ॥
167550
167551 यज्जगन्नास्तीत्यपलप्यते चेदशेषं चिदेव कचति ॥ ५ ॥
167552
167553 यथेदं नो जगत्तद्वच्छतानां खे शतानि हि ।
167554 नृणां पश्यन्तु तेषां तु नान्योन्यमनुभूतयः ॥ ६ ॥
167555
167556 नः अस्माकं प्रसिद्धमिदं जगद्यद्यथास्ति तद्वत्खे जगतां शतानां
167557 शतान्ययुतानि अन्येषां नृणां सन्तीति पश्यन्तु संभावयन्तु । तेषां
167558 प्रत्यक्षमन्योन्यमनुभूतयस्तु न । अयोग्यत्वादित्यर्थः ॥ ६ ॥
167559
167560 सरोब्धिकूपभेकानां दृष्टाः प्रत्येकमास्पदे ।
167561 न तेऽन्योन्यं विदन्त्यन्यां दृश्यादिनियतिं क्वचित् ॥ ७ ॥
167562
167563 सर-आदिशब्दैस्तद्गता जन्तवो गृह्यन्ते । अन्यां स्वस्वास्पदातिरिक्ताम् ॥ ७ ॥
167564
167565 यथा जनशतस्वप्नगराण्येकमन्दिरे ।
167566 तथा जगन्ति खे भान्ति खानि नो सन्त्यसन्ति नो ॥ ८ ॥
167567
167568 एकेनानुभूयमानत्वादसन्ति नो । अन्यैरननुभूयमानत्वात्सन्ति नो ॥ ८ ॥
167569
167570 कचन्ति नृशतस्वाप्नपुराण्येकगृहे यथा ।
167571 न च नाम कचन्त्येवं सन्त्यसन्ति जगन्ति खे ॥ ९ ॥
167572
167573 तदेव स्फुटमाह - कचन्तीति ॥ ९ ॥
167574
167575 चिच्चमत्कारमात्रं स्वं स्वात्माङ्गं दृश्यमद्वयम् ।
167576 सरूपमेव नीरूपं सकारणमकारणम् ॥ १० ॥
167577
167578 स्वात्मनः अङ्गमवयवभूतमिव । एकस्य सरूपमेवापरस्य नीरूपम् ।
167579 एकस्याप्येकदा सरूपमेवान्यदा नीरूपम् । तत्त्वदृशा तु सर्वदैव नीरूपमित्यर्थः ।
167580 एवं सकारणमप्यकारणम् ॥ १० ॥
167581
167582 दधत्याश्चित्स्वभावायाः संस्काराद्यभिधाः कृताः ।
167583 प्रतिमायाः प्रभाविन्या न संस्कारादयः पृथक् ॥ ११ ॥
167584
167585 तत्रैते जीवानां जगत्संस्काराः किं देहे सन्ति उत चिति । यदि चिति तर्हि सर्वेषां
167586 दृश्याः स्युः । यदि देहे तर्हि देहापगमे उच्छिद्येरन्नित्याशङ्क्याह - दधत्या
167587 इति । न केवलचितो नापि देहप्रतिमायाः किंतु तत्तद्दृश्याकारपरिणामं
167588 दधत्याश्चिदाभासव्याप्त्या चित्स्वभावाया बुद्धेरेव संस्काराद्यभिधाः कृताः ।
167589 प्रभाविन्या बुद्धिप्रभावेणैव प्रभाववत्याः ॥ ११ ॥
167590
167591 अपूर्वत्वात्स्मृतिः स्वप्नः संकल्पार्थानुभूतिषु ।
167592 स्वमृत्यनुभवाद्यास्तु दृष्टार्थसदृशीषु च ॥ १२ ॥
167593
167594 यदि जगत्संस्कारधारिण्या बुद्धेरेव परिणामो जगत्तर्हि संकल्पार्थानुभूतिषु
167595 स्मृतित्वमेव स्यात्तत्राह - अपूर्वत्वादिति । पूर्वदृष्टार्थसदृशीष्वपि
167596 संकल्पार्थानुभूतिषु स्मृतिरेव अपूर्वत्वात्पूर्वानुभूततत्तांशप्रमोषात्स्वप्नो

167597 भवति। तत्र स्वमृत्यनुभवाद्यास्तुइह जन्मन्यननुभूता अपि जन्मान्तरे अनुभूता
167598 एवेति तत्संस्कारवत्येवाध्यस्यन्ते इति विशेष इत्यर्थः ॥ १२ ॥
167599
167600 इदं सर्गात्म सर्गादौ प्रतिमेव विजृम्भते।
167601 चिद्धामात्रात्मिका स्वच्छा नान्यन्नामोपपद्यते ॥ १३ ॥
167602
167603 इदं जाग्रत्सर्गात्म जगदपि स्वप्नप्रतिमेव सर्गादौ विजृम्भते ॥ १३ ॥
167604
167605 ब्रह्मैव भाति जगदित्युक्तमुक्त्यानया भवेत्।
167606 न च भातं नवं तच्च ब्रह्मैवेदमतः स्थितम् ॥ १४ ॥
167607
167608 सर्वथाभावभावेषु इत्याद्युक्तिभङ्गीभेदानां पर्यवसितं तात्पर्यं
167609 पिण्डीकृत्याह - ब्रह्मैवेति। तच्च नवं भातं न प्राग्भातमिति न
167610 किंत्वनादिभारूपं तदैक्यापन्नं चेदं जगदनादि ब्रह्मैवेति तात्पर्यं स्थितं
167611 पर्यवसन्नमित्यर्थः ॥ १४ ॥
167612
167613 कारणं कार्यमित्युक्तः स पूर्वः स विशिष्यते।
167614 संस्कार इति तेनैष संस्कारः कृतिरुच्यते ॥ १५ ॥
167615
167616 स परमात्मैव कारणं कार्यमिति चोक्तं। यतः स एव पूर्वः पूर्वं च कारणं
167617 सामान्यरूपम्। स एव विशिष्यते विशेषरूपं च कार्यम्। कार्यसंस्काराधारो हि
167618 बीजं कारणं सम्यक् करोति कार्यमिति व्युत्पत्तेस्तेनैष आत्मैव संस्कार इत्युक्तः। तत्र
167619 कृतिः कार्यानुकूलो यत्नः कृधात्वर्थः। सम्यक् कारणं संस्कार इति व्युत्पत्त्या
167620 कृतिलक्षणः संस्कारोऽप्येष आत्मैवोच्यते ॥ १५ ॥
167621
167622 तत्स्वप्नादावपूर्वोऽर्थो दृष्टान्त इति भाति यः।
167623 स संस्कारादिनामोक्तो न बाह्योऽर्थोऽस्ति चेतसि ॥ १६ ॥
167624
167625 तत्तत्र स्वप्नादौ अपूर्वो जाग्रदर्थविलक्षणो योऽर्थो जाग्रदर्थदृष्टान्त इति भाति स
167626 एव सूक्ष्मार्थत्वात्संस्कारो वासना रागो द्वेष इच्छेत्यादिनाम्ना उक्तो न
167627 कश्चिद्बाह्योऽर्थोऽन्यश्चेतसि संस्कारनामा निविष्टोऽस्तीत्यर्थः ॥ १६ ॥
167628
167629 वस्तु दृष्टं न दृष्टं च सच्चास्ते चेतनेव खे।
167630 स्वभावाद्भाति खात्मापि दृष्टवच्चातिजृम्भते ॥ १७ ॥
167631
167632 तच्च संस्काराख्यं वस्तु स्वप्ने दृष्टं जागरे अदृष्टम्। न चादर्शनमात्रेण
167633 नास्तीति मन्तव्यम्। यतश्चित्ताकाशे चेतनेव सदैवास्ते। तच्च खात्मापि
167634 साक्षिस्वभावात्स्वप्ने भाति जाग्रद्दृष्टपदार्थवच्चातितरां जृम्भते विस्तीर्यते ॥
167635 १७ ॥
167636
167637 वेदान्तार्थात्मकं पूर्वसर्गाभावं प्रवर्तते।
167638 ततो वेद्यव्यवस्था ज्ञैः क्रियते स्वार्थसिद्धये ॥ १८ ॥
167639
167640 तदेव साधनसंपत्तिसहितश्रवणावधारिताद्वितीयप्रत्यग्ब्रह्मलक्षण##-
167641 प्रवर्तते एतादृशं तत्स्वभावं निश्चित्य ज्ञैः पण्डितैः स्वार्थस्य
167642 परमपुरुषार्थस्य शिष्येष्वपि सिद्धये प्रागज्ञात आत्मैव जगत्संसारः।
167643 सम्यग्विचार्य ज्ञातस्तु अद्वयं‌न् ब्रह्मैव मोक्षश्चेति व्यवस्था शास्त्रेषु क्रियत
167644 इत्यर्थः ॥ १८ ॥
167645
167646 स्वप्ने तु जाग्रत्संस्कारो यस्तज्जाग्रत्कृतं नवम्।
167647 अजाग्रज्जाग्रदाभासं कृतमित्येव तद्विदः ॥ १९ ॥
167648

167649 इदानीमन्यकृतं स्वप्नदर्शनप्रकारमनूद्य दूषयति - स्वप्ने त्वित्यादिना ।
167650 स्वप्ने यो जाग्रत्संस्कारस्तज्जाग्रत्कृतं नवमपूर्वं रूपं तच्च अजाग्रदेव
167651 जाग्रदाभासं जाग्रदनुभवेन कृतमिति तद्विदः केचिन्मन्यन्त इत्यर्थः ॥ १९ ॥
167652
167653 ततो वायाविवास्पन्दाश्चित्ते भावाः स्थिताः स्वतः ।
167654 ते स्वतः संप्रवर्तन्ते कात्र संस्कारकर्तृता ॥ २० ॥
167655
167656 तन्न । यतो वायावास्पन्दा इव स्वप्नाद्यात्मताभावाः स्वत एव स्थिताः । ते च स्वत एव
167657 स्वप्नाकारेण प्रवर्तन्ते तत्र जाग्रतः संस्कारकर्तृता केत्यर्थः ॥ २० ॥
167658
167659 एकं तथा च चिन्मात्रं स्वप्ने लक्षात्म तिष्ठति ।
167660 पुनर्लक्षाद्यतः स्वप्न एकमास्ते सुषुप्तकम् ॥ २१ ॥
167661
167662 चिद्व्योम्नि स्वप्नसंवित्तिर्या सैव जगदुच्यते ।
167663 सुषुप्तं प्रलयः प्रोक्तस्तस्मान्न्यायोऽयमेव सन् ॥ २२ ॥
167664
167665 एकमेव चिदाकाशं साकारत्वमनेककम् ।
167666 स्वरूपमजहद्धत्ते यत्स्वप्न इव तज्जगत् ॥ २३ ॥
167667
167668 चित्ते सर्वे भावाः स्थिता इति कुतो ज्ञायते तत्राह - एकमिति ॥ २१ ॥ २२ ॥ २३ ॥
167669
167670 एवं चित्परमाण्वन्तर्जगद्भावमिदं स्थितम् ।
167671 तदनन्यात्म चाभोगि स्वप्नादर्शतलेष्विव ॥ २४ ॥
167672
167673 एवमुक्तयोपपत्त्या तच्च चितः अनन्यात्म यथा स्वप्नेषु यथा वा आदर्शतलेषु
167674 दृष्टं मुखवनपर्वतादि अनन्यात्म तद्वदित्यर्थः ॥ २४ ॥
167675
167676 चिद्व्योम संविन्मात्रं यत्परमाणुवदाततम् ।
167677 अनादिमध्यपर्यन्तं तदेव जगदुच्यते ॥ २५ ॥
167678
167679 परमाणुवत्परमसूक्ष्ममाततं विस्तीर्णं च कालतोऽप्यनादिमध्यपर्यन्तम् ॥ २५ ॥
167680
167681 तस्माद्यत्र चिदाकाशमनन्तं सततं स्थितम् ।
167682 तत्रास्तीति जगद्भानं तदङ्गानन्यरूपि यत् ॥ २६ ॥
167683
167684 तस्याङ्गमिव अनन्यरूपि । अङ्गेति संबोधनं वा ॥ २६ ॥
167685
167686 चिन्मात्र एव भुवनं त्वमहं चिन्मयं जगत् ।
167687 इति न्यायाज्जगद्याति परमाणूदरेऽप्यजम् ॥ २७ ॥
167688
167689 न्यायाद्गुरुशास्त्रोक्तयुक्तिकलापात्परिज्ञानात् जगत्पराणूदरेऽपि याति । स्थूलतां
167690 परित्यज्य परमसूक्ष्मचिन्मात्रतामापद्यत इति यावत् ॥ २७ ॥
167691
167692 तस्मादहं पराण्वात्मा समस्तजगदाकृतिः ।
167693 सर्वत्रैव च तिष्ठामि परमाणूदरेऽपि च ॥ २८ ॥
167694
167695 कीदृशं तद्गुरुशास्त्रोक्तन्यायैः परिज्ञानं तत्स्वानुभवाभिलापेन दर्शयति ##-
167696
167697 चिन्मात्रपरमाणुः सञ्जगदात्माप्ययं नभः ।
167698 यत्र तिष्ठाम्यहं तत्र पश्यामि भुवनत्रयम् ॥ २९ ॥
167699
167700 अहं चित्परमाण्वात्मा तेन चित्परमाणुना ।

167701 एकतामागतो वारि वारिणेव तदीक्षणात् ॥ ३० ॥
167702
167703 चित्परमाण्वात्मा शोधितत्वंपदार्थरूपोऽहं तेन चित्परमाणुना
167704 शोधिततत्पदार्थेन ब्रह्मणा सह तदीक्षणादेकतामागतः। तथा च श्रुतिः -
167705 यथा जलं जले क्षिप्तं क्षीरे क्षीरं घृते घृतम्। अविशेषो भवेत्तद्वज्जीवात्मा
167706 परमात्मनि ॥ इति ॥ ३० ॥
167707
167708 तदोजः संप्रविश्याहं स्थितस्तदनुभूतिवत्।
167709 अन्तस्थत्रिजगद्रूपो यथाब्जे बीजमङ्कुरे ॥ ३१ ॥
167710
167711 एवं प्रश्नोत्तरप्रसङ्गेनात्मज्ञानरहस्यमुक्त्वा प्रस्तुतकथामवलम्ब्याप्याह
167712 - तदोज इत्यादिना। तदनुभूतिस्तत्प्राण्योजोन्तर्गतवासनामयजगदनुभवस्तद्वदिति
167713 प्राक्तनकथाशेषानुसंधानोक्तिः। यथा आब्जे अङ्कुरे सूक्ष्मरूपेण स्थितं भावि
167714 बीजमन्तस्थभाविवैचित्र्यसहस्रगर्भं तद्वदित्यर्थः ॥ ३१ ॥
167715
167716 तत्र मे त्रिजगद्रूपमन्तः कचितमात्मनि।
167717 तथा तन्न तु तद्बाह्ये विद्यते केनचित्क्वचित् ॥ ३२ ॥
167718
167719 तत्र मे अन्तरेवात्मनि तदीयं मदीयमन्यदीयं च सर्वं वासनामयं
167720 त्रिजगद्रूपमात्मनि प्रत्यक्चैतन्ये कचितम्। तज्जगद्रूपं किंचिदपि बाह्ये न विद्यते।
167721 तद्बहिर्देशस्यैवात्यन्ताप्रसिद्धेरिति भावः ॥ ३२ ॥
167722
167723 यत्र यत्र यदा भाति स्वप्ने जाग्रदितीह वा।
167724 सबाह्याभ्यन्तरं दृश्यं निजं चिद्भानमेव तत् ॥ ३३ ॥
167725
167726 भाति स्वप्ने यदा जन्तोर्जगदानन्दमाततम्।
167727 चिदणोरेव तद्भानमात्मनस्तत्पदात्मना ॥ ३४ ॥
167728
167729 तत्पदात्मना स्वप्नस्थानात्मना ॥ ३४ ॥
167730
167731 व्याध उवाच।
167732
167733 अकारणं चेद्दृश्यं तत्कथमेतत्प्रसिध्यति।
167734 सकारणं चेद्दृश्यं तत्स्वप्ने सर्गादिधीः कुतः ॥ ३५ ॥
167735
167736 कथं प्रसिध्यति। अकारणकस्य शशशृङ्गादेः स्वरूपसिद्ध्यदर्शनात्। यदि
167737 सकारणं तर्हि स्वप्ने घटादिसर्गकारणदण्डचक्रादीनामभावात्सर्गादिधीः कुतः
167738 कारणादिति संदिहानस्य प्रश्नः ॥ ३५ ॥
167739
167740 मुनिरुवाच।
167741
167742 अकारणक एवायं सर्ग आदौ प्रवर्तते।
167743 समस्तकारणाभावाद्यतः सर्गात्मचिन्नभः ॥ ३६ ॥
167744
167745 अकारणकपक्षमेव ब्रह्माद्वैतपर्यवसानेन समर्थयन्मुनिरुत्तरमाह -
167746 अकारणक एवेति ॥ ३६ ॥
167747
167748 अकारणानां भावानामत्यन्तासंभवादिह।
167749 क्वचित्सप्रतिघः सर्गो न संभवति कश्चन ॥ ३७ ॥
167750
167751 अकारणकः सप्रतिघः स्थूलसर्गो न संभवति। प्रातिभासिके तु मिथ्याभूते न
167752 सकारणकत्वनियम इति भावः ॥ ३७ ॥

167753
167754 ब्रह्मेदमित्थमाभाति भास्वरं चित्स्वभावतः।
167755 सर्गादिशब्दपर्यायमाद्यन्तपरिवर्जितम्॥ ३८॥
167756
167757 इत्यकारणके सर्गे कचति ब्रह्मरूपिणि।
167758 परस्यावयवाभासे नित्यात्मावयवात्मना॥ ३९॥
167759
167760 इति उक्तरीत्या सर्गे अकारणके अत्यन्तमसंभाविते सति ब्रह्मरूपिणि परस्य अवयवाभासे
167761 मायाप्रतिबिम्बचैतन्ये नित्यस्यात्मन औपाधिकावयवात्मना अनानात्वेऽपि नानात्वे
167762 अत्यन्तमयुक्ते ब्रह्मण्यब्रह्मरूपिणि अनाकारेऽपि साकारे अप्रतिघंन् प्रति कचति
167763 प्रतिभाते सति निराकारं तद्ब्रह्मैव चिद्रूपत्वात्स्फुरद्वपुः साकारमिव भातात्म
167764 भूत्वा देवर्षिमुनिभारूपं स्थावरं जंगमं क्रमात्सर्वां नियतिं
167765 विधिप्रतिषेधादींश्च करोतीति फलितमिति चतुर्णामन्वयः॥ ३९॥
167766
167767 अनानात्वेऽपि नानात्वे ब्रह्मण्यब्रह्मरूपिणि।
167768 अनाकारेऽपि साकारे कचत्यप्रतिघंन् प्रति॥ ४०॥
167769
167770 तद्ब्रह्मैव निराकारं चिद्रूपत्वात्स्फुरद्वपुः।
167771 साकारमिव भातात्म भूत्वा स्थावरजंगमम्॥ ४१॥
167772
167773 देवर्षिमुनिभारूपं करोति नियतिं क्रमात्।
167774 विधींश्च प्रतिषेधांश्च देशकालक्रियादिकान्॥ ४२॥
167775
167776 भावाभावग्रहोत्सर्गस्थूलसूक्ष्मचराचराः।
167777 अर्था व्यभिचरन्त्येते नियतिर्नाखिलास्ततः॥ ४३॥
167778
167779 ब्रह्मकृतत्वादेव भावाभावाद्यर्थव्यभिचारेऽपि न तन्नियतेर्व्यभिचार इत्याह ##-
167780
167781 ततः प्रभृति भावानां सकारणकतां विना।
167782 सैकतादिव तैलानां न संभवति संभवः॥ ४४॥
167783
167784 ततो नियतिकल्पनातः प्रभृति नियतिविशेषरूपां कार्यकारणतां विना भावानां
167785 संभवो नास्ति॥ ४४॥
167786
167787 नियतिर्नायकश्चैव ब्रह्मतश्चाङ्गमात्मना।
167788 स्वाङ्गेन संयमयति करेणेव निजं करम्॥ ४५॥
167789
167790 तस्य ब्रह्मणो नियतिस्तत्कल्पको नायको भोक्ता जीवश्चेति करद्वयसदृशभङ्गं
167791 ब्रह्मत आत्मना स्वेनैव प्रवृत्तम्। तद्ब्रह्म तेनैकेन स्वाङ्गेनापरं
167792 करेणापरं करमिव संयमयति नियच्छति॥ ४५॥
167793
167794 अबुद्धिपूर्वं चानिच्छमेवमेव प्रवर्तते।
167795 काकतालीयवत्स्पन्दादावर्ता इव वारिणि॥ ४६॥
167796
167797 अत एव जीवस्यैवमेव जाग्रत्स्वप्नलक्षणः सर्गः अबुद्धिपूर्वमनिच्छं च
167798 काकतालीयवत्प्रवर्तते॥ ४६॥
167799
167800 संनिवेशो हि नियतिस्तां विना प्रतिघोदयम्।
167801 ब्रह्म स्थातुं न शक्नोति तच्च सर्वात्मताक्षयम्॥ ४७॥
167802
167803 कारणप्रयुक्तः कार्ये संनिवेशविशेषनियम एव नियतिस्तां संनिवेशनियतिं विना
167804 क्षणमप्यज्ञातं ब्रह्म स्थातुं न शक्नोति। यथा

167805 मृच्चूर्णपिण्डघटकपालाद्यन्यतमसंनिवेशं विना न तिष्ठति तद्वदिति भावः।
167806 तच्च संनिवेशधारणं ज्ञानेन सर्वात्मनैवात्यन्तिकः क्षयो यस्य
167807 तथाविधमामोक्षमनुवर्तत इत्यर्थः॥ ४७॥
167808
167809 एवं सकारणं सर्वं सर्वदा दृश्यमण्डलम्।
167810 यस्य सर्गे यतः कालात्ततः प्रभृति तं प्रति॥ ४८॥
167811
167812 एवं नियतिकल्पनातः सर्वं सकारणं यं प्रति यतः कालात्प्रभृति नियतिर्यस्य
167813 सर्गे प्रवृत्ता तं प्रत्येव न पुरुषान्तरं कालान्तरभाविपदार्थं च प्रतीत्यर्थं॥
167814 ४८॥
167815
167816 भात्यकारणकं ब्रह्म सर्गात्माप्यबुधं प्रति।
167817 तं प्रत्येव च भात्येष कार्यकारणदृग्भ्रमः॥ ४९॥
167818
167819 अकारणकं ब्रह्म अबुधमज्ञं प्रति सर्गात्मपि भाति॥ ४९॥
167820
167821 काकतालीयवत्सर्गे स्थिते त्वावृत्तिवृत्तिवत्।
167822 इदमित्थमिदं नेत्थमितीयं नियतिः स्थिता॥ ५०॥
167823
167824 विवेकिदृशा काकतालीयवत्सर्गे स्थिते सति पूर्वापरीभावनियममात्रदर्शनादिदं
167825 घटादि इत्थं दण्डचक्रमृदादिसामग्रीतो जातं इदं पटादि तुरीवेमादित
167826 इत्थंविधं जातमिति पर्यालोचनेन नित्यवेदस्य पदवाक्यव्याकरणनियतिरिव
167827 स्थितेत्यर्थः॥ ५०॥
167828
167829 सकारणत्वं भावानामवश्यंभाविनि क्रमे।
167830 जाग्रत्स्वप्नदृशो नेह संभवन्त्यपकारणाः॥ ५१॥
167831
167832 जन्यभावानामवश्यंभाविनि पौर्वापर्यक्रमे सकारणकत्वमेवेति यो मन्यते तस्य
167833 जाग्रत्स्वप्नदृशः अकारणा न संभवन्ति। न हि स्वप्नसुषुप्त्यन्यतरानन्तरं
167834 जाग्रत्प्रपञ्चोत्पत्तौ कारणानि सन्ति। एवं जाग्रत्सुषुप्त्यन्यतरानन्तरं
167835 स्वप्नप्रपञ्चोत्पत्तावपि कारणानि निरूपयितुं न शक्यन्ते इति सोऽपि न संभवति। न च
167836 जाग्रदन्तरितः स्वप्नप्रपञ्चस्तथैवास्ते येन सृष्टिं नापेक्षेत। एवं
167837 स्वप्नसुषुप्त्यन्तरितो जाग्रत्प्रपञ्चोऽपीत्यर्थः॥ ५१॥
167838
167839 यथा स्वप्नेऽखिलामम्बुसंक्षोभात्प्रलयभ्रमाः।
167840 दृश्यते कारणं तत्र श्रूयतामनुभूयताम्॥ ५२॥
167841
167842 यथा मयैव प्राण्योजसि स्वप्ने दृष्टाः अखिलां
167843 भुवमभिव्याप्याम्बुसंक्षोभात्प्रलयभ्रमास्तत्र किं कारणं त्वया दृश्यते
167844 किं वा तत्र श्रुतितोऽपि श्रूयतां प्रमाणान्तरेण वानुभूयताम्। संभावनायां
167845 लोट्। न किंचित्संभावितमित्यर्थः॥ ५२॥
167846
167847 सर्ववस्तुषु कचन्ति सर्वदा युक्तयः स्फटिकशुक्तयो यथा।
167848 भावनानुभव एव स स्वयं शक्तिमाञ्जयति जीवितात्मकः॥ ५३॥
167849
167850 उक्तप्रकारा ब्रह्मप्रपञ्चैक्यप्रतिपादिका युक्तयोऽनुयुक्तेष्वपि सर्ववस्तुषु
167851 बुद्धिमतां स्वत एव कचन्ति स्फुरन्ति। यथा स्फटिकमणयः शुक्तयो वा सति
167852 प्रकाशे स्वचाकचक्येन स्वत एव कचन्ति तद्वत्। तत्तस्मात्सर्वत्र निर्णये
167853 शास्त्रानुसारियुक्तिभावनानुभव एव स प्रसिद्धः स्वयं
167854 सर्वतत्त्वनिर्णयशक्तिमान्सर्वप्रमाणजीवितात्मको जयति। सर्वोत्कर्षेण वर्तत इत्यर्थः
167855 ॥ ५३॥
167856

167857 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० नि० उ० अवि० श० पदार्थविचारो नाम
167858 चतिउश्चत्वारिंशदधिकशततमः सर्गः ॥ १४४ ॥
167859
167860 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
167861 पदार्थविचारो नाम चतुश्चत्वारिंशदधिकशततमः सर्गः ॥ १४४ ॥
167862
167863
167864 पञ्चचत्वारिंशदधिकशततमः सर्गः १४५
167865
167866 मुनिरुवाच ।
167867 बहिष्ठैर्बाह्यमेवान्तरन्तस्थैःस्वप्नमिन्द्रियैः ।
167868 जीवो वेत्ति द्वयस्थातितीव्रसंवेगिभिर्द्वयम् ॥ १ ॥
167869
167870 श्लेष्मपित्तानिलापूर्णजीवस्यैजसि कल्पिताः ।
167871 स्वप्नभेदा इहोच्यन्ते तथाक्षैर्बाह्यविभ्रमाः ॥
167872
167873 अयं जीवो बहिष्ठैरिन्द्रियैर्बाह्यमेव स्वप्नं वेत्ति । अन्तस्थैरिन्द्रियैरन्तः स्वप्नं
167874 वेत्ति । बाह्यान्तरद्वयस्थैरुभयत्र व्यापारसिद्ध्यर्थमतितीव्रसंवेगितैरिन्द्रियैस्तु
167875 द्वयमपि वेत्ति ॥ १ ॥
167876
167877 यदेन्द्रियाणि तिष्ठन्ति बाह्यतश्च समाकुलम् ।
167878 तदा म्लानानुभवनः संकल्पार्थोऽनुभूयते ॥ २ ॥
167879
167880 तर्हि बहिष्ठैरिन्द्रियैर्यदा बहिर्व्यवहरति तदा किमान्तरव्यवहारो नास्त्येव नेत्याह
167881 - यदेति । अस्त्येव किंतु मनोराज्यकल्पः ससंकल्पार्थो म्लानमनुभवनं यस्य
167882 तथाविधोऽनुभूयते न स्वप्नवत्स्फुटानुभवन इत्यर्थः ॥ २ ॥
167883
167884 यदा त्वन्तर्मुखान्येव सन्त्यक्षाणि तदा जगत् ।
167885 अणुमात्रं स्ववपुषि जीवस्तेनातिवेत्ति तत् ॥ ३ ॥
167886
167887 अणुमात्रं वासनामात्रत्वादतिसूक्ष्ममपि स्वाप्नं जगदतिवेत्ति स्थूलमिव पश्यति स
167888 एव तस्य अम्लानानुभव इत्यर्थः ॥ ३ ॥
167889
167890 जगत्सप्रतिघं नास्ति किंचिदेव कदाचन ।
167891 जीवेक्षणानामक्षाणां दृष्टिरप्रतिघा जगत् ॥ ४ ॥
167892
167893 बाह्यमान्तरं वा जगत्सप्रतिघं स्थूलं वस्तुतो नास्ति । जीवस्य ईक्षणानां
167894 दर्शनकरणभूतानामक्षाणामिन्द्रियाणां स्थौल्यकल्पने अप्रतिघानिष्प्रतिघाता
167895 या दृष्टिः सैव स्थूलं जगदित्यर्थः ॥ ४ ॥
167896
167897 जीवनेत्राणीन्द्रियाणि यदा बाह्यमयान्यलम् ।
167898 तदा बाह्यात्मकं वेत्ति चिति जीवो जगद्वपुः ॥ ५ ॥
167899
167900 अत एव बहिरन्तर्वा यत्रैवेन्द्रियप्रसरस्तत्रैव स्थूलवज्जगद्दर्शनमित्याह - जीवेति
167901 ॥ ५ ॥
167902
167903 श्रोतं त्वगीक्षणं घ्राणं जिह्वा चेतीहितात्मकः ।
167904 संघातः प्रोच्यते जीवश्चिद्रूपोऽनिलमूर्तिमान् ॥ ६ ॥
167905
167906 श्रोत्रादिग्रहणं वागादीनामप्युपलक्षणम् । अनिलमूर्तिमान् पञ्चप्राणघटितः ।
167907 ईहितमिच्छाप्रधानमन्तःकरणचतुष्टयं तदात्मकः संघात आतिवाहिकदेहः स
167908 एव कूटस्थचिदाभाससंवलनाच्चिद्रूपो जीवः प्रोच्यत इत्यर्थः ॥ ६ ॥

167909
167910 सर्वत्र सर्वदा जीवः सर्वेन्द्रियमयः स्थितः।
167911 चिच्चिद्व्योमाव्ययस्तेन सर्वं सर्वत्र पश्यति॥ ७॥
167912
167913 तादृशो जीवः स्ववासनामयं जगदन्तः पश्यतु नाम। बहिस्तु
167914 वासनाभावात्कथं तन्मयं जगत्पश्यति तत्राह - सर्वत्रेति। तत्र कूटस्थचिदेव
167915 चिदाभासः समष्टिव्योममयः सन् सर्वत्र सर्वदा सर्वेन्द्रियमयः
167916 स्थितस्तस्मिन्सर्ववासनाधिष्ठाने बाह्यजगदध्यास उपपन्न एवेति भावः॥ ७॥
167917
167918 श्लेष्मात्मना रसेनान्तर्जीव आपूर्यते यदा।
167919 तेऽक्षाणुकेऽणुरूपात्मा तदा तत्रैव विन्दति॥ ८॥
167920
167921 तत्रान्तः स्वप्नविशेषवैचित्र्यदर्शने ओजसि प्रविष्टस्य जीवस्य
167922 श्लेष्माद्यन्नरसविशेषपूर्णनाडीप्रवेश एव निमित्तमित्येतत्प्रपञ्चयति -
167923 श्लेष्मात्मनेत्यादिना। यदा उपसंहृतकरणविस्तारः सन्नणुरूपः सहस्रधा
167924 विदीर्णकेशभागप्रमाणसूक्ष्मनाड्यन्तःसंचारयोग्यस्ते तव जीवो नाड्यन्तर्गतेन
167925 श्लेष्मात्मना अन्नरसेन आपूर्यते तदा तत्तदक्षाणुके तत्रैव
167926 नाड्यन्तर्वक्ष्यमाणप्रकारान्स्वाप्नभ्रमान्विन्दतीत्यर्थः॥ ८॥
167927
167928 क्षीरार्णव इवोड्डीनो नभश्चन्द्रोदयान्वितम्।
167929 सरांसि फुल्लपद्मानि कह्लारवलितानि च॥ ९॥
167930
167931 स्वयं क्षीरार्णवे उड्डीन इव भूत्वा चन्द्रोदयान्वितं नभो विन्दतीति
167932 सर्वत्रानुषङ्गः॥ ९॥
167933
167934 पुष्पाभ्रप्रतिधानानि परिगीतानि षट्पदैः।
167935 वसन्तान्तःपुराण्यन्तरुद्यानान्युदितानि खे॥ १०॥
167936
167937 पुष्पमयानां दिव्याभ्राणां प्रतिधानानि प्रतिनिधिभूतानि सरांसि
167938 वसन्तराजस्यान्तःपुरभूतान्युद्यानानि खे जीवाकाशे उदितानि॥ १०॥
167939
167940 उत्सवान्मङ्गलाकीर्णांल्लीलालोलाङ्गनागणान्।
167941 भक्ष्यभोज्यान्नपानश्रीपरिपूर्णगृहाजिरान्॥ ११॥
167942
167943 सपुष्पाः फेनहसनास्तरलातरलेक्षणाः।
167944 विलासेनाम्बुधिं यान्ति सरितो मत्तयौवनाः॥ १२॥
167945
167946 तरलाः शफर्यस्तल्लक्षणतरलेक्षणाः॥ १२॥
167947
167948 हिमवच्छुभ्रशृङ्गाणि सौधानि शिशिराण्यलम्।
167949 सुधावधौतभित्तीनि कृतानीन्दुतलैरिव॥ १३॥
167950
167951 इन्दुमयैस्तलैः कुट्टिमैः कृतानीव सौधानि॥ १३॥
167952
167953 शिशिरासारहेमन्तप्रावृण्मेघवृतानि च।
167954 स्थलानि नीलनलिनीलताशाद्वलवन्ति च॥ १४॥
167955
167956 पुष्पप्रकरसंछन्ना विश्रान्तहरिणाध्वगाः।
167957 स्निग्धपत्रतरुच्छायाः पुरोपवनभूमिकाः॥ १५॥
167958
167959 विश्रान्ता हरिणा अध्वगाश्च यत्र॥ १५॥
167960

167961 कदम्बकुन्दमन्दारमकरन्देन्दुकान्तिभिः।
167962 भासमानासनस्थानसंस्थानाः कुसुमस्थलीः॥ १६॥
167963
167964 भासमानमासनस्थानस्येव संस्थानं यासां ताः॥ १६॥
167965
167966 नलिनीजालिनीर्नीलाः पुष्पकस्थलधारिणीः।
167967 वनावलीर्विलीनाभ्रनिर्मलाकाशकोमलाः॥ १७॥
167968
167969 विलीनाभ्रो निर्मलः शरदाकाश इव कोमलाः स्निग्धाः॥ १७॥
167970
167971 कदलीकन्दलीकुन्दकदम्बकृतशेखराः।
167972 गिरिमालाश्चलच्चारुलीलापल्लवपेलवाः॥ १८॥
167973
167974 कदली कन्दली च मृगभेदास्तरुगुल्मभेदाश्च। गिरिमालाः पर्वतपङ्क्तीः॥ १८॥
167975
167976 हेलावलितधम्मिल्लमुक्तमालतिकालताः।
167977 इव बालाङ्गना नृत्यं तन्वानास्तनुगात्रिकाः॥ १९॥
167978
167979 हेलावलितैर्धम्मिल्लैर्मुक्ताः प्रसृतसंवलितशाखा मालतिकालता इव स्थिता नृत्यं
167980 तन्वाना बालाङ्गनाः विन्दति॥ १९॥
167981
167982 उत्फुल्लश्वेतनलिनीनिभा नरपतेः सभाः।
167983 चारुचामरभृङ्गारवितानकशतावृताः॥ २०॥
167984
167985 वल्लीवलयविन्यासविलासवलिताङ्गिकाः।
167986 वनमाला विलोलाम्बुप्रणालीकाकलीकलाः॥ २१॥
167987
167988 वनमाला वनपङ्क्तीः। विलोलाम्बूनां प्रणालीषु कुल्यासु पक्षिकाकलीभिः कला
167989 गम्भीराः॥ २१॥
167990
167991 धराभरकरालाङ्गधाराधरधराधराः।
167992 दिशः सीकरनीहारहारोदरधरा दश॥ २२॥
167993
167994 धराया भरे भरणे वर्षैः पूरणविषये करालाङ्गा ये धाराधरास्तद्युक्ता
167995 धराधराः पर्वता यासु तथाविधा दश दिशः॥ २२॥
167996
167997 पित्तात्मना रसेनान्तर्जीव आपूर्यते यदा।
167998 ओजोन्तरणुमात्रात्मा तदा तत्रैव विन्दति॥ २३॥
167999
168000 श्लेष्मपूर्णनाडीदृश्यान्स्वप्नविशेषान्प्रपञ्च्य
168001 पित्तरसपूर्णनाडीदृश्यांस्तानाह - पित्तात्मनेत्यादिना॥ २३॥
168002
168003 पवनस्पन्दसंशुष्ककिंशुकद्रुमशोभनाः।
168004 ज्वालालीरुज्ज्वलाम्भोजदलपल्लवपेलवाः॥ २४॥
168005
168006 ज्वालालीर्विन्दति पश्यतीति यावत्॥ २४॥
168007
168008 संतप्तसिकतासेकसनीहारसरिच्छिराः।
168009 दावानलशिखाश्यामधूमश्यामलदिङ्मुखाः॥ २५॥
168010
168011 ज्वालालीरेव विशिनष्टि - संतप्तेति। संतप्तसिकतानां सेकैः सनीहाराः सवाष्पाः
168012 सरिल्लक्षणाः शिरा याभ्यः॥ २५॥

168013
168014 कृशानुकर्कशानर्कांश्चक्रधाराशितत्विषः।
168015 दावदाहविषावेशविपरीतरसाकरान्॥ २६॥
168016
168017 चक्रधारा इव शिता निशितास्त्विषो येषाम्। विपरीता विशेषतो व्याप्ता रसाकारा जलाशया
168018 येभ्यः॥ २६॥
168019
168020 स्वेदमुष्णीकृताब्धिं वा स्विन्नं त्रैलोक्यमण्डलम्।
168021 क्षरत्क्षाराण्यरण्यानि प्रतर्दगहनान्यपि॥ २७॥
168022
168023 स्वेदं सार्द्रोष्माणम्। स्विन्नं स्वेदनार्द्रम्। प्रतर्दो
168024 वृक्षगुल्मतृणादीनामतिनैबिड्यं तद्युक्तानि गहनान्यरण्यान्यपि॥ २७॥
168025
168026 प्रतरन्मृगतृष्णाम्बुसरत्सारसरूपि च।
168027 स्थलान्यदृष्टपूर्वाणि भूतपूर्वतरूणि च॥ २८॥
168028
168029 प्रतरत्सु प्रवहत्सु मृगतृष्णाम्बुषु सरत्सारसै रूपि शोभमानम्॥ २८॥
168030
168031 अध्वगं संभ्रमवशात्तप्तधूलिविधूसरम्।
168032 दूरादमृतवद्दृष्टं स्निग्धच्छायाध्वपादपम्॥ २९॥
168033
168034 संभ्रमो भयं तद्वशादध्वगमध्वसु धावन्तं स्वं पश्यति।
168035 अमृतवद्दृष्टं दर्शनात्संभावितम्॥ २९॥
168036
168037 ज्वरज्वालितमाकारं भुवनं तप्तमग्निवत्।
168038 पांसूपहतदेशानि दिङ्मुखानि च खानि च॥ ३०॥
168039
168040 ग्रहग्रामार्णवाद्यब्धिवनव्योमाग्निका दिशः।
168041 तुहिनाहारहानन्तासंख्याम्बुदघटोद्भटान्॥ ३१॥
168042
168043 गृहादिव्योमान्तेषु अग्निकाः ज्वलदग्निमत्यो दिशः पश्यति। तुहिनं शीतं आहरति
168044 भक्षयतीति तुहिनाहारोऽग्निस्तं जहति मुञ्चन्ति वर्षन्ति तथाविधा अनन्तसंख्या ये
168045 अम्बुदास्तद्घटोद्भटान्शरद्ग्रीष्मवसन्तानिति परेणान्वयः॥ ३१॥
168046
168047 शरद्ग्रीष्मवसन्तांश्च तापानातपदायिनः।
168048 तृणपत्रलतौघाभ्रराश्यूष्मपिहितावनीः॥ ३२॥
168049
168050 तृणैः पत्रैर्लतौघैरभ्रराशिभिरूष्मभिश्च पिहिता आच्छादिता
168051 अवनीर्भूप्रदेशान्॥ ३२॥
168052
168053 सौवर्णमम्बरतलं भूतलं दिक्तटानि च।
168054 तप्तान्यदभ्रसरसीहिमशैलस्थलानि च॥ ३३॥
168055
168056 अदभ्रा बहुलाः सरसीः हिमशैलस्य स्थलानि प्रदेशभेदांश्च तप्तान् पश्यति॥ ३३॥
168057
168058 रसानुरिक्ते वातेन जीव आपूर्यते यदा।
168059 ओजोन्तरणुमात्रात्मा तदा तत्रैव विन्दते॥ ३४॥
168060
168061 रसैरन्नरसैः श्लेष्मपित्तादिभिरनुसृत्य रिक्ते केवलवायुनैव पूर्णे नाडीप्रदेशे
168062 प्रविष्टोऽणुमात्रात्मा जीवो यदा वातेन आपूर्यते तदा तत्र प्रागुक्ते ओजोन्तरे
168063 वक्ष्यमाणं स्वप्नं विन्दते॥ ३४॥
168064

168065 वातविक्षुब्धसम्वित्त्वादपूर्वं वसुधातलम् ।
168066 अपूर्वा नगरग्रामशैलाब्धिवनमण्डलीः ॥ ३५ ॥
168067
168068 अपूर्वं पूर्वदृष्टविलक्षणम् ॥ ३५ ॥
168069
168070 उड्डीयमानमात्मानं शिलाः शैलस्थलानिव ।
168071 घनघुंघुमसारावानचक्रभ्रमणादि च ॥ ३६ ॥
168072
168073 घनानां घुंघुमैर्गर्जनैः सारावान्सशब्दान् देशान् । विनैव कुलालचक्रं
168074 घटीनां भ्रमणादि च ॥ ३६ ॥
168075
168076 हयोष्ट्रगरुडाम्भोदहंसयानावरोहणम् ।
168077 यक्षविद्याधरादीनां गत्यागमनसंचरम् ॥ ३७ ॥
168078
168079 हंसान्तैर्यानं गमनं तदवरोहणं च । गतयश्च आगमनानि च दूरतः
168080 स्वस्थाने संचरणं च । गत्येति पृथक्पदं वा ॥ ३७ ॥
168081
168082 साद्रिद्यूर्वीनदीशानां वनभूग्रामपूर्दिशाम् ।
168083 कम्पं भयोन्मुखाङ्गानां बुद्बुदानामिवार्णवे ॥ ३८ ॥
168084
168085 अद्रिभिर्दिवा उर्व्या नदीशैलैश्च सहितानां वने भवन्तीति वनभुवो
168086 वृक्षादयस्तेषां ग्रामाणां पुरां देशां च भयोन्मुखाङ्गानां
168087 मनुष्यादीनां च कम्पम् ॥ ३८ ॥
168088
168089 अन्धकूपे निपतितं विपुले संकटेऽथवा ।
168090 अथवा रूढमात्मानं खमाभं पादपं गिरिम् ॥ ३९ ॥
168091
168092 खं मिनोति परिच्छिनत्त्याभा संस्थानशोभा यस्य तथाविधं पादपं गिरिं च ॥
168093 ३९ ॥
168094
168095 वातपित्तश्लेष्मयुक्तो जीव आपूर्यते यदा ।
168096 भागैर्वातवशं प्राप्तैरार्तोऽसौ विन्दते तदा ॥ ४० ॥
168097
168098 द्येकैकपूरितनाडीभागदृश्यान्स्वप्नानुक्त्वा तत्त्रितयपूरितनाडीदृश्यांस्तानाह
168099 - वातेत्यादिना ॥ ४० ॥
168100
168101 पतन्तीं पार्वतीं वृष्टिं सुशिलावृष्टिसंकटम् ।
168102 स्फुटाट्टकटकारावभ्रमत्पादपमण्डलम् ॥ ४१ ॥
168103
168104 स्फुटतामट्टानां सौधानां गिरिकटकानां चारावैः सह
168105 भ्रमत्पादपमण्डलम् ॥ ४१ ॥
168106
168107 भ्रमद्भिर्वनविन्यासैः संदिग्धाम्भोधरोत्कटम् ।
168108 सिंहवारणवर्षाभ्रनिरन्तरदिगन्तरम् ॥ ४२ ॥
168109
168110 सिंहैर्वारणैर्वर्षाभ्रैश्च निरन्तरं दिङ्मध्यम् ॥ ४२ ॥
168111
168112 तालीतमालहिंतालमालाज्वलनसंकुलम् ।
168113 गुहाघुंघुमनिर्ह्रादभांकारघनघर्घरम् ॥ ४३ ॥
168114
168115 तदेव दिगन्तरं विशिनष्टि - तालीति ॥ ४३ ॥
168116

168117 मन्द्रमन्दरमन्थानशब्दसंदर्भसुन्दरीम् |
168118 दरीं दलनदुर्वारमिथःसंघट्टघट्टिताम् || ४४ ||
168119
168120 दलने दुर्वारो यो मिथः संघट्टस्तेन घट्टितां दरीं पश्यति || ४४ ||
168121
168122 शृङ्गसंघट्टसदृशाः क्रेंकारोत्करकर्कशाः |
168123 नदीर्मुक्तालतापातसस्रग्दामनभस्तलाः || ४५ ||
168124
168125 गिरिशृङ्गद्वयमध्ये प्रवाहध्वनिभिः शृङ्गद्वयसंघट्टनसदृशाः |
168126 चक्रवाकादिक्रेंकारोत्करैः कर्कशाः | मुक्तालतावदापतनैः स्रग्दामसहितमिव
168127 नभस्तलं याभिस्ता नदीः पश्यति || ४५ ||
168128
168129 शिलाशकलपूर्णार्णपूर्णाम्बरमहार्णवम् |
168130 वहद्वनघनोद्घातघट्टितब्रह्ममण्डलम् || ४६ ||
168131
168132 स्वदृष्टह् प्रलयार्णवादिदर्शनस्वप्नोऽप्येतस्मादेव निमित्तादिति सूचयन्नाह -
168133 शिलाशकलेति | शिलाशकलपूर्णैरर्णोभिर्जलैः पूर्णाम्बरं महार्णवं पश्यति |
168134 तमेव वर्णयति - वहदित्यादिना | वहतां वनानां घनानां
168135 चोद्घातैर्घट्टितमास्फालितं ब्रह्ममण्डलं सप्तर्षिलोको येन || ४६ ||
168136
168137 परस्परविनिर्मृष्टदशदर्शनदन्तुरम् |
168138 चटत्कटकटारावस्फुटत्कटकटङ्कितम् || ४७ ||
168139
168140 परस्परं तरङ्गसेकैर्विनिर्मृष्टानां धौतानां दशानां दिशां दर्शनेन
168141 दन्तुरंन् हसन्तमिव स्थितम् | चटन् दिश आवृण्वन् यः कटकटारावस्तेन
168142 स्फुटद्भिरद्रिकटकैष्टङ्कितं संजातटङ्काघातध्वनिमिव स्थितम् || ४७ ||
168143
168144 खपातपवनाधूतवनवातलतोदयम् |
168145 रणदात्मदृषच्चूर्णकर्बुराम्बुजधारिणम् || ४८ ||
168146
168147 खं पततीति खपातो यः पवनस्तेनाधूतं कम्पितं यद्वनं तत्र
168148 वातानुसारिलतोदयो लतालास्यं यस्मिन् | रणद्भिरात्मकृतैर्दृषच्चूर्णैः
168149 कर्बुरवर्णानि यान्यम्बुजातानि शैवालादीनि धारयति तच्छीलम् || ४८ ||
168150
168151 प्राग्भटोद्भटभेदोत्थैर्मन्द्रैर्मरमरारवैः |
168152 क्रूराक्रन्दैरिवाभाति विराजितजगत्त्रयम् || ४९ ||
168153
168154 समुद्राक्रमणात्प्राग्युगान्ते प्रवृत्तैर्भटोद्भटानां शूराणां भेदेषु
168155 परस्परविदारणेष्विवोत्थितैर्मन्द्रैस्तालीवनादिमरमरारवैः क्रूराणां
168156 प्राणिनामाक्रन्दैरिव विराजितं जगत्त्रयं तदाभातीत्यर्थः || ४९ ||
168157
168158 इति तैः काष्ठपाषाणमृद्युग्वातभटैर्वृतः |
168159 परिपीडित एवास्ते यदा जीवो जडीकृतः || ५० ||
168160
168161 त्रिधातुपूर्णनाडीषु इति वर्णितप्रकारैस्तैः सर्वजनप्रसिद्धैः काष्ठैः
168162 पाषाणैर्मृद्युतैर्वातैर्भटैर्वा वृतः सन् स्वप्ने जडीकृतो जीवः परिपीडित
168163 एवास्ते || ५० ||
168164
168165 मृदन्तःकीटकणवच्छिलान्तर्गतभेकवत् |
168166 गर्भस्थापक्वशिशुवत्फलान्तर्गतबीजवत् || ५१ ||
168167
168168 मृदन्तर्गतकीटादिवत्तादृशपाषाणादिकवच्चानुभवतीति तृतीये

168169 [एतदग्रिमत्रिकस्थत्तृतीये इत्यर्थः |] सर्वेषां संबन्धः || ५१ ||
168170
168171 बीजोदरस्थाङ्कुरवद्द्रव्यपिण्डोदराणुवत् |
168172 अश्रान्तस्तम्बकोशस्थदारुपुत्रकदेहवत् || ५२ ||
168173
168174 सौषिर्यासंभवात्प्राणपवनस्पन्दवर्जितः |
168175 प्रोन्नमत्पर्शुपूरेण शिलापूरेण तर्जितः || ५३ ||
168176
168177 सुषुप्तं तर्हि कदा केन निमित्तेनानुभवति तदाह - सौषिर्येति | यदायं जीवः
168178 पुरीतति नाडीपञ्जरे सर्वपार्श्वास्थ्यग्रघटितहृदयास्थिग्रन्थ्युपलक्षिते प्रविष्टो
168179 भवति तदा अग्रे संचारार्थं सौषिर्यासंभवाद्यस्मिन्प्रदेशे
168180 प्राणपवनप्रयुक्तेन स्पन्देन वर्जितः सन्प्रोन्नमतां पर्शूनां पार्श्वास्थीनां
168181 पूरेण ग्रन्थिना शिलापूरेण बिले निरुद्ध इव तर्जितो व्यापारासमर्थः कुतो भवति तदा
168182 प्रागुक्तनिबिडतरौजःशब्दिततेजोन्तरेव शैलकोशः शिलाजठरं
168183 तदाभमज्ञानगाढत्वादन्धकूपोदरोपमं सुषुप्तमनुभवतीति द्वयोरन्वयः ||
168184 ५३ ||
168185
168186 तदा निबिडतेजोन्तरेवानुभवति स्वयम् |
168187 सुषुप्तं शैलकोशाभमन्धकूपोदरोपमम् || ५४ ||
168188
168189 यदा परिणतं यत्नं पुनः सौषिर्यमागतम् |
168190 पुनर्वेत्ति तदा जीवः स्वप्नं प्राणावबोधितः || ५५ ||
168191
168192 ततः पुनः स्वप्ने कथमायाति तत्राह - यदेति | भुक्तमन्नं यदा पाकेन
168193 परिणतं यदा चान्नरसकृतप्रवेशमार्गनिरोधापगमात्पुनः सौषिर्यमागतं
168194 तदा ततो निर्गमनयत्नं प्राणसंचारेण प्राप्य पुनर्जीवः प्राणेनावबोधितः
168195 सन्स्वप्नं वेत्ति || ५५ ||
168196
168197 यदा तस्मिन्प्रदेशेऽन्तर्भागभागान्पतन्ति ते |
168198 देहे परिणमन्तोऽन्तस्तदेवात्यद्रिवर्षणम् || ५६ ||
168199
168200 यदा देहे परिणमन्तस्तेऽन्नरसा यस्मिन्प्रदेशे जीवेन सह नाडीभागेभ्यो
168201 भागान्तराणि पतन्ति तदा ओजोन्तरद्रिवर्षणं वेत्ति || ५६ ||
168202
168203 बह्वेव वह्निबहुना स्वल्पेनाल्पं प्रपश्यति |
168204 वातपित्तादियोगेन बहिरन्तश्च संभ्रमम् || ५७ ||
168205
168206 वह्निबहुना बहुतरजाठराग्निव्याप्तेन वातपित्तादियोगेन बहिरन्तश्च बह्वेव
168207 संभ्रमं पश्यतीति बहिरपि भ्रान्तिदर्शनं वर्णयितुं पीठिकारचनम् || ५७ ||
168208
168209 पश्यत्येतद्यथैवान्तरेष जीवो वशीकृतः |
168210 वातपित्तादिवलितो बहिर्वेत्त्येवमेति वा || ५८ ||
168211
168212 तदेव वर्णयितुमुपक्रमते - पश्यतीत् | ज्ञानेन्द्रियैर्वेत्ति कर्मेन्द्रियैरेति वा || ५८ ||
168213
168214 क्षुब्धैरन्तर्बहिश्चैव स्वल्पः स्वल्पं प्रपश्यति |
168215 समैः सममिदं दृश्यं वातपित्तकफादिना || ५९ ||
168216
168217 वातपित्तकफादिना क्षुब्धैः स्वल्पैरन्नरसैरन्तर्बहिश्चैव स्वल्पम् दृश्यं
168218 भ्रान्त्या प्रपश्यति समैः समं दृश्यं प्रपश्यति |
168219 अतिक्षुब्धैस्त्वतिशयितभ्रान्तिदृश्यानि प्रपश्यतीत्यर्थाद्गम्यते || ५९ ||
168220

168221 बहिः पश्यत्ययं जीवः कुपितैरेभिरावृतः |
168222 स्पन्दं भूम्यद्रिनभसां ज्वलनं वानलोच्चयैः || ६० ||
168223
168224 कुपितैरेभिः संनिपातमदमणिमन्त्रौषधादिनिमित्तेषु || ६० ||
168225
168226 आकाशगमनं चैव चन्द्रोदयहिमाचलान् |
168227 गहनं वृक्षशैलानां नभःप्लवनमर्णसाम् || ६१ ||
168228
168229 बहिर्भ्रान्तिदृश्यानि प्रपञ्चयति - आकाशगमनमित्यादिना || ६१ ||
168230
168231 मज्जनोन्मज्जनं वाब्धौ सुरतं सुरसद्मसु |
168232 शैलोपवनशुभ्राभ्रपीठविश्रमणोच्चयम् || ६२ ||
168233
168234 शुभ्राभ्राणां पीठेषु विश्रमणमुपवेशनं शुभ्राभ्रोच्चयं च || ६२ ||
168235
168236 बृहत्क्रकचनिष्पेषं नरकानुभवभ्रमम् |
168237 तालीतमालहिंतालमालावलनमम्बरे || ६३ ||
168238
168239 चक्रवृत्तैश्च पतनं झगित्युत्पतनं दिवि |
168240 शून्येऽपि जनतावृन्दं स्थलेऽप्यब्धिनिमज्जनम् || ६४ ||
168241
168242 विचित्रं विपरीतं च व्यवहारं महानिशि |
168243 अह्नीव भास्करालोकं दुर्भेद्यं चाह्नि वा तमः || ६५ ||
168244
168245 निशि अह्नीव भास्करालोकम् || ६५ ||
168246
168247 साद्रिभूतलमाकाशे कुड्यबन्धे घने स्थलम् |
168248 कुड्यबन्धांश्च गगने मित्रभावं च विद्विषि || ६६ ||
168249
168250 घने कुड्यबन्धे विकुड्यं विशालं स्थलम् || ६६ ||
168251
168252 स्वजने परताबुद्धिं सुजनत्वं च दुर्जने |
168253 सुसमस्थलतां श्वभ्रे श्वभ्रत्वं सुसमे स्थले || ६७ ||
168254
168255 उद्गीतालापमसृणान्सुधाधौतान्सुचित्रितान् |
168256 उद्गीञ्छ्वेतमयान्वापि नवनीतमयांश्च वा || ६८ ||
168257
168258 श्वेतस्फटिकरजतादिमयान् || ६८ ||
168259
168260 कदम्बनीपजम्बीरपत्रस्तबकसद्मसु |
168261 सुखविश्रमणं स्त्रीभिः नाकं पद्मेष्विवालिनः || ६९ ||
168262
168263 अन्तर्निमीलिता ह्येताः पश्यन्त्युन्मीलिता बहिः |
168264 धातूनामिति वैषम्याद्भ्रान्तिमिन्द्रियवृत्तयः || ७० ||
168265
168266 एता भ्रान्तीरन्तर्निद्रानिमीलिता इन्द्रियवृत्तयः पश्यन्ति | जागरोन्मीलितास्तु
168267 बहिरिन्द्रजालादौ पश्यन्ति || ७० ||
168268
168269 एवंविधान्यनेकानि पश्यन्त्यनुभवन्ति च |
168270 बहिरेव यथा स्वप्ने वस्तुन्यसमधातवः || ७१ ||
168271
168272 असमा वातादिधातवो येषां पुरुषाणां ते || ७१ ||

बहिश्चान्तश्च दृश्यन्ते विपरीतान्यनेकशः ।
कार्याण्यतिकरालानि जीवैरसमधातुभिः ॥ ७२ ॥

समेषु धातुष्वेषोऽन्तर्जीवोऽनुभवति स्वयम् ।
तेजोन्तर्गत एवेमां व्यवहारस्थितिं समाम् ॥ ७३ ॥

इमां प्रसिद्धां लौकिकशास्त्रीयव्यवहारस्थितिम् ॥ ७३ ॥

यथास्थितां पुरग्रामपत्तनारण्यसंततिम् ।
सौम्यवारितरुच्छायादेशाध्वगगमागमम् ॥ ७४ ॥

सुखातपमयेन्द्वर्कताराहोरात्रमण्डितम् ।
एवमेतदसद्भूतं सद्भूतमिव भासते ॥ ७५ ॥

दृश्योपलम्भं चित्तत्वे स्पन्दनंन् पवने यथा ।
असदेव सदाभासमभिन्नं भिन्नवत्स्थितम् ॥ ७६ ॥

शान्तादुदेति सकलं जगदम्बरात्म शान्तं न किंचन न नाम सदित्युदेति ।
तद्व्योमनीदृशमनन्तचितेः शरीरे भामात्रमाततमनन्तवपुर्विभाति ॥ ७७ ॥

शान्तान्निप्रपञ्चादेव ब्रह्मणः सकाशात्सकलं जगदुदेति शान्तं च न
किंचनान्यद्भवति । यतः सदिति परिदृश्यमानजन्यरूपेण नोदेति नाम न हि
समुत्पद्यते । तत्तस्माद्धेतोर्व्योमन्याकाशकल्पे अनन्तायाश्चितेः शरीरे भामात्रं
प्रतिभासमात्रं जगदित्यनन्तवपुर्विभाति न वस्त्वन्यदित्यर्थः ॥ ७७ ॥

इ० वा० महारामा० वा० दे० मो० नि० उ० अ० वि० श० जाग्रत्स्वप्नसुषुप्तिवर्णनं नाम
पञ्चचत्वारिंशदधिकशततमः सर्गः ॥ १४५ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
जाग्रत्स्वप्नसुषुप्तिवर्णनं नाम पञ्चचत्वारिंशदधिकशततमः सर्गः ॥ १४५ ॥

## षट्चत्वारिंशदधिकशततमः सर्गः १४६

व्याध उवाच ।

अनन्तरं मुनिश्रेष्ठ तस्मिन्हृदि तदोजसि ।
स्थितस्य तव किं वृत्तं नामतो भ्रान्तिरूपिणि ॥ १ ॥

प्रस्तुतस्वप्नवीक्षान्ते सुषुप्तिः स्वस्य वर्ण्यते ।
पुनः स्वप्नप्रसङ्गेन ब्रह्माद्वैतं च विस्तरात् ॥

प्रासङ्गिकं श्रुत्वा पुनः पूर्वकथाशेषमेव व्याधः पृच्छति -
अनन्तरमिति । भ्रान्तिरूपिणि नामतस्तस्य प्राणिन ओजसि स्थितस्य तवाग्रे किं कीदृशं
स्वप्नदर्शनादिवृत्तं संपन्नम् ॥ १ ॥

मुनिरुवाच ।

अनन्तरं तदा तत्र शृणु किंवृत्तमङ्ग मे ।
तेजोधातुनिषण्णस्य तज्जीवावलिताकृतेः ॥ २ ॥

168325 तज्जीवेन आवलिता मिश्रिता आकृतिर्लिङ्गदेहो यस्य मे ॥ २ ॥
168326
168327 तस्मिंस्तदा वर्तमाने घोरे कल्पान्तसंभ्रमे ।
168328 तृणवत्प्रौढशैलेन्द्रे वहति प्रलयानिले ॥ ३ ॥
168329
168330 गिरिवृष्टिर्झटित्येव कुतोऽपि समुपाययौ ।
168331 उह्यमानवनाभोगशिखरग्रामपत्तना ॥ ४॥
168332
168333 तस्यान्तस्तत्र संप्राप्तं तदा परिणतं यदा ।
168334 तदा तदेव सूक्ष्मोऽहमपश्यं शैलवर्षणम् ॥ ५ ॥
168335
168336 यदा मया तस्य प्राण्योजसोन्तस्तज्जीवात्मना परिणतं तदा तत्र संप्राप्तं तदेव
168337 शैलवर्षणमहमपश्यम् ॥ ५ ॥
168338
168339 तेनान्नलवशैलोच्चपूरेण प्रतिपिण्डितः ।
168340 सुषुप्तमधतामिश्रमहयन्वभवं घनम् ॥ ६ ॥
168341
168342 तेन तत्प्राणिनाड्यन्तर्गतेनान्नरसान्तर्गतान्नलवलक्षणेन शैलोच्चपूरेण
168343 प्रतिपिण्डितः पिण्डीकृताकृतिर्निश्चेष्टः संपन्नः सन्नहमज्ञानलक्षणया
168344 अन्धतया मिश्रं संवलितं सुषुप्तमन्वभवम् ॥ ६ ॥
168345
168346 अथ कंचित्तदा कालमनुभूय सुषुप्तताम् ।
168347 तदा पद्माकर इव शनैर्बोधोन्मुखोऽभवम् ॥ ७ ॥
168348
168349 यदा निर्गमनमार्गनिरोधकोऽन्नरसो जीर्णस्तदा उषसि पद्माकर इव
168350 बोधोन्मुखोऽभवम् ॥ ७ ॥
168351
168352 यथा दृष्टिश्चिराद्ध्वान्ते भाति चक्रकरुपिणी ।
168353 सुषुप्तमेव तत्रासीत्तथा स्वप्नत्वमागतम् ॥ ८ ॥
168354
168355 ध्वान्ते निमीलिता दृष्टिर्यथा चिरात्तेजश्चक्राभासरूपिणी भाति तथा
168356 सुषुप्तमेवात्मरूपं स्वप्नत्वमागतमासीदित्यर्थः ॥ ८ ॥
168357
168358 तथा सुषुप्तविश्रान्तेः स्वप्ने निद्रामहं विशम् ।
168359 अपश्यं दृश्यमोजोऽन्तः स्वमूर्मित्वमिवार्णवः [स्वमूर्तित्वं इति
168360 पाठः ।] ॥ ९ ॥
168361
168362 सुषुप्तिविश्रान्तेः सकाशादहं स्वप्ननिद्रामविशम् । अडभावश्छान्दसः । यथा
168363 अर्णवः स्वमूर्मित्वं तरङ्गादिसहस्रविक्षेपसंकुलां स्वमूर्ति पश्यति तथाहमपि
168364 तदोजोन्तर्विक्षेपसहस्रमपश्यमित्यर्थः ॥ ९ ॥
168365
168366 संवित्कोशात्मकं दृश्यं तत्तथा मामुपागतम् ।
168367 अस्पन्दस्यानिलस्यान्तरनन्यत्स्पन्दनं यथा ॥ १० ॥
168368
168369 अग्न्यादौ च यथोष्णत्वं जलादौ द्रवता यथा ।
168370 मरीचादौ यथा तैक्ष्ण्यं चिद्व्योम्नश्च जगत्तथा ॥ ११ ॥
168371
168372 चित्स्वभावैकरूपत्वाज्जगद्दृश्यं तदाततम् ।
168373 तत्सुषुप्तात्मनो दृश्यात्प्रसूतं बालपुत्रवत् ॥ १२ ॥
168374
168375 तत्स्वाप्नं जगत् तत्सुषुप्तात्मनो दृश्यान्मातुरुदराद्बालपुत्रवत्प्रसूतम् ॥ १२ ॥
168376

168377 व्याध उवाच।
168378
168379 तत्सुषुप्तात्मनो दृश्यादिति तद्व्यपदेशतः।
168380 सुषुप्तदृश्यं किं वक्षि वद मे वदतां वर॥ १३॥
168381
168382 सर्वदृश्यविलये हि सुषुप्तिः प्रसिद्धा तत्र तत्सुषुप्तात्मनो दृश्यादिति सुषुप्तावपि
168383 दृश्यसद्भावमुक्तं श्रुत्वा तदसंभावयन्व्याधः पृच्छति - तदिति।
168384 तत्सुटुप्तात्मन इति तच्छब्देन दृश्यपदेन च व्यपदेशात्सुषुप्तदृश्यं
168385 किंचिदस्तीत्यभिप्रेत्य त्वं वक्षि तन्मे वदेत्यर्थः॥ १३॥
168386
168387 तत्सुषुप्तात्मनो दृश्यात्त्वत्सुषुप्तात्मनोऽपि च।
168388 किमन्यज्जायते जन्यमथवान्यसुषुप्तता॥ १४॥
168389
168390 किं च तस्य प्राणिनः सुषुप्तात्मनः त्वत्सुषुप्तात्मनश्चापि सकाशाज्जन्यं
168391 जगद्रूपं दृश्यमन्यत्किं जायते। अन्यताप्रयोजकं जन्म किं अथ
168392 सर्वदृश्यलये अन्यसुषुप्तता वा किम्॥ १४॥
168393
168394 मुनिरुवाच।
168395
168396 जायते भाति कचति घटादि जगदादि च।
168397 इति द्वैतोपतप्तानां प्रलापः कल्पनात्मकः॥ १५॥
168398
168399 किं दृश्यतज्जन्मादि परमार्थतः किमिति पृच्छसि उत व्यवहारतः। आद्ये
168400 अवस्तुरूपत्वान्न किंचिदित्युत्तरं मुनिराह - जायत इत्यादिना। द्वैतोपतप्तानां
168401 मूर्खाणां कल्पनात्मकः प्रलापो मयानूदितो न तत्त्ववादोऽयमित्यर्थः॥ १५॥
168402
168403 जातशब्दो हि सन्मात्रपर्यायः श्रूयतां कथम्।
168404 प्रादुर्भावे जनिस्तूक्तः प्रादुर्भावस्य भूर्वपुः॥ १६॥
168405
168406 पण्डितविचारे तु जातादिशब्दानां सन्मात्रमेवार्थो नाय इत्याह - जातशब्द इति।
168407 कथं सन्मात्रपर्यायस्तच्छ्रूयतामुपपादयामीत्यर्थः। जनिर्धातुः जनी
168408 प्रादुर्भावे इति पाणिन्यादिभिः प्रादुर्भावार्थे उक्तः। तत्र प्रादुरित्यव्ययं
168409 प्रकटतां धात्वर्थस्य द्योतयन्नप्रधानं भूधातुरेव तु तस्य वपुः प्रधानं
168410 शरीरमित्यर्थः॥ १६॥
168411
168412 सत्तार्थ एव भूः प्रोक्तस्तस्मात्संजातमुच्यते।
168413 सर्गतो जात इत्युक्ते सन्सर्ग इति शब्दितम्॥ १७॥
168414
168415 अस्त्वेवं किं ततस्तत्राह - सत्तार्थ इति। भूर्धातुस्तु भू सत्तायाम् इति
168416 पाणिन्यादिभिः प्रोक्तस्तस्मात्प्रादुरुपसर्गसहिताद्भावशब्दात्संजातः
168417 [उपसर्गसादृश्यादुपसर्गत्वमस्येति ज्ञेयम्।] प्रकटः सन्नर्थ उच्यते। स
168418 च नित्यसिद्धस्वप्रकाशचिदात्मैवेत्यर्थः। यदि प्रादुःशब्दस्य सर्गत इत्यर्थस्तदापि
168419 न काचित्क्षतिः। यतः सर्गशब्दस्यापि सृजधातोर्भावे घञि घञर्थे सत्तारूपे
168420 भावे सृज्यर्थस्याभेदेनान्वये सन्नेव सर्ग इति शब्दितं नान्यदित्यर्थः॥ १७॥
168421
168422 बुधानामस्मदादीनां न किंचिन्नाम जायते।
168423 न च नश्यति वा किंचित्सर्वं शान्तमजं च सत्॥ १८॥
168424
168425 एवं सति पण्डितदृशा नाज्ञजनप्रसिद्धजन्मादि कस्यचित्प्रसिद्ध्यतीत्याह -
168426 बुधानामिति॥ १८॥
168427
168428 सर्वसत्तात्मकं ब्रह्म सर्वसत्तात्मकं जगत्।

168429 विधयः प्रतिषेधाश्च वद तत्र लगन्ति के ॥ १९ ॥
168430
168431 एवं सर्वसत्तात्मके ब्रह्मणि अस्तिनास्तीति वा वस्तूनां विधिप्रतिषेधयोरप्यनवकाश
168432 इत्याह - सर्वेति ॥ १९ ॥
168433
168434 या नाम शक्तिः काचित्सा तत्रैवास्ति च नास्ति च ।
168435 यस्मात्तदात्म तद्ब्रह्म तथैवात्म तदात्मकम् ॥ २० ॥
168436
168437 तर्ह्यस्तिनास्तीति लोकप्रसिद्धव्यवहारस्य को विषयस्तं दर्शयन् द्वितीये प्राह - या
168438 नामेति । या मायाशक्तिः । यस्मात्तद्ब्रह्म तच्छबलत्वादज्ञानां तदात्म । तदात्मेति
168439 पदं व्याचष्टे - तथैवेति । यथा यथा मायाशक्तिर्विजृम्भते तथैवात्मा
168440 सर्वशक्तिघटितं स्वरूपं यस्य तत्तदात्मकं तदात्मशब्दार्थ इत्यर्थः ॥ २० ॥
168441
168442 जाग्रत्स्वप्नसुषुप्तादिपरमार्थविदां विदाम् ।
168443 न विद्यते किंचिदपि यथास्थितमवस्थितम् ॥ २१ ॥
168444
168445 तत्त्वविदां तु सदा तुरीयपदे प्रतिष्ठितानां जाग्रदाद्यवस्था एव न सन्ति दूरे
168446 विधिप्रतिषेधा इत्याह - जाग्रदिति । विदां पण्डितानाम् ॥ २१ ॥
168447
168448 स्वप्नसंकल्पपुरयोर्नास्त्यप्यनुभवस्थयोः ।
168449 मनागपि यथा रूपं सर्गादौ जगतस्तथा ॥ २२ ॥
168450
168451 प्रत्यक्षमनुभवस्थानामपलापो दुर्घट इति शङ्कां दृष्टान्ताभ्यां वारयति
168452 - स्वप्नेति ॥ २२ ॥
168453
168454 द्रष्टास्याः स्वप्नदृष्टेस्तु जीवः संभवतीह हि ।
168455 चिदचेत्या तु सर्गादौ भात्यच्छा गगनादपि ॥ २३ ॥
168456
168457 तर्हि स्वप्नमनोरथयोर्द्रष्टा प्राणादिमान् जीव इव सर्गादावपि प्राणादिमदेव ब्रह्म
168458 सिद्ध्येन्न निर्विशेषं तत्राह - द्रष्टेति । जीवोपाधिसर्गोत्तरकालत्वात्तयोः
168459 प्राणादिमान् जीवस्तद्द्रष्टा प्राणाद्युत्पत्तेः प्राक् तु शुद्ध एव तत्सर्गादिद्रष्टा स्थित
168460 इति संभावयेत्यर्थः ॥ २३ ॥
168461
168462 नेह द्रष्टास्ति नो भोक्ता सर्वमस्तीह तादृशम् ।
168463 यन्न किंचिच्च किंचिच्च मौनमेवातिवागपि ॥ २४ ॥
168464
168465 अभ्युपेत्य सर्गं तद्द्रष्टुः शुद्धत्वमुक्तम् । वस्तुतस्तु त्रिपुटी सर्वापीहैव शुद्धे
168466 निवर्तत इत्याह - नेहेति । तादृशं चिदेकरसम् ॥ २४ ॥
168467
168468 सर्गादौ कारणाभावाद्यद्यथा कचितं चितौ ।
168469 तत्तथास्ते चिरं रूपं स्वप्नसंकल्पपूर्यथा ॥ २५ ॥
168470
168471 सर्गादावपि चिदेव सर्गात्मना कचिता यावत्प्रलयं तथैवास्त इवेत्याह -
168472 सर्गादाविति ॥ २५ ॥
168473
168474 तथास्माच्चेतनाद्द्वैताद्बिभेति न बिभेति वा ।
168475 अङ्गसंस्थाद्यथा चित्रात्स्वरूपात्पुरुषः स्वयम् ॥ २६ ॥
168476
168477 तथा उक्तप्रकारेण चेतनादात्मभूतादेव द्वैतादज्ञतायामन्यताभ्रान्त्या बिभेति ।
168478 तत्त्वबोधेन बिभेति । वाशब्दो व्यवस्थितविकल्पार्थः । यथा बालः स्वाङ्गे
168479 लिखिताद्व्याघ्रसर्पादिचित्राद्बिभेति प्रौढस्तु न बिभेति तद्वदित्यर्थः ॥ २६ ॥
168480

168481 अनादिमध्यान्तमनन्तमेकमत्यच्छमेवातिविकारि नाना।
168482 यथास्थितं भास्वरमप्यशान्तमिदं समस्तं परिशान्तमेव॥ २७॥
168483
168484 तत्त्वतोऽनादिमध्यान्तमत्यच्छं ब्रह्मैव भ्रान्त्या अतिविकारि नाना च भूत्वा भाति
168485 यथास्थितम्। अशान्तमपीदं जगत्तत्त्वतः परिशान्तमेव प्रबोधेनेत्यर्थः॥ २७॥
168486
168487 इत्यार्षे श्रीवासिष्ठमहारा० वा० दे० मो० निर्वा० उ० अ० वि० श० सुषुप्तविचारो नाम
168488 षट्चत्वारिंशदधिकशततमः सर्गः॥ १४६॥
168489
168490 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
168491 सुषुप्तविचारो नाम षट्चत्वारिंशदधिकशततमः सर्गः॥ १४६॥
168492
168493 सप्तचत्वारिंशदधिकशततमः सर्गः १४७
168494
168495 मुनिरुवाच।
168496
168497 अनन्तरं महाबाहो सुषुप्तान्निर्गतस्य मे।
168498 स्वप्ने जगद्दृश्यमिदं सागरादिव निर्गतम्॥ १॥
168499
168500 सुषुप्तादत्र दृष्टान्तैः स्वप्ननिर्गमनक्रमः।
168501 तत्र पूर्वकुटुम्बादिवीक्षातत्त्वं च वर्ण्यते॥
168502
168503 सागरात्तरङ्गमणिमुक्तादिकमिव निर्गतम्। अत्र सर्वत्र संभवे उपमा असंभवे
168504 उत्प्रेक्षा बोध्याः॥ १॥
168505
168506 आकाशाङ्गादिवोत्कीर्णमुत्कीर्णमवनेरिव।
168507 उत्कीर्णमिव वा चित्तादुत्कीर्णमिव वा दृशः॥ २॥
168508
168509 उत्कीर्णं टङ्कच्छेदादिना शिलाप्रतिमावत्प्रकटितम्॥ २॥
168510
168511 प्रफुल्लमिव वृक्षेभ्यः सर्गः पूर्वमिवोत्थितः।
168512 तरङ्गजालं रोधोऽब्धेरिव वा कचनं दृशाम्॥ ३॥
168513
168514 पूर्वमुत्थितः पूर्वसिद्ध एव न तदानीमुत्पन्न इति भात इत्यर्थः। रोधः कूलं
168515 तत्संनिहितादब्धेस्तरङ्गजालमिव। दृशां नेत्राणां
168516 केशोण्ड्रकद्विचन्द्रादिभावेन कचनमिव वा॥ ३॥
168517
168518 नभस्तलादिवायां ककुब्भ्य इव चागतम्।
168519 पर्वतेभ्य इवोत्कीर्णं भूमेरिव समुत्थितम्॥ ४॥
168520
168521 बूउमेः समुत्थितं कुड्यवल्मीकादीव॥ ४॥
168522
168523 हृदयादिव निष्क्रान्तं संप्रविष्टमिवाम्बुदैः।
168524 प्रसूतमिव वृक्षेभ्यो जातं वा सस्यवद्बुवः॥ ५॥
168525
168526 अम्बुदैर्नभसि संप्रविष्टमिव सस्यवद्विरूपपरिणामेन॥ ५॥
168527
168528 अङ्गेभ्य इव निर्यातं समुत्कीर्णमिवेन्द्रियैः।
168529 पटादिव प्रकटितं मन्दिरादिव निर्गतम्॥ ६॥
168530
168531 टङ्कस्थानीयैरिन्द्रियैर्दिक्षु समुत्कीर्णं उल्लेखनेन निष्पादितमिव प्रसारितमिव वा।
168532 पटात्प्रकटितं चित्रमिव॥ ६॥

168533
168534 कुतोऽप्यागत्य पतितमुड्डीय गगनादिव ।
168535 उपायनं परे लोके गृहीतमिव वा भवः ॥ ७ ॥
168536
168537 राज्ञां प्रजाभिराहृतमुपायनमिव । इह लोके संचितं पुण्यं परे लोके
168538 फलभावेनोपस्थितमिव । भुवः खननाद्युपायैर्गृहीतं निधानमिव वा ॥ ७ ॥
168539
168540 प्रसूनं ब्रह्मवृक्षस्य तरङ्गमिव वाम्बुधेः ।
168541 अनुत्कीर्णप्रकटनाच्चित्स्तम्भे चारुपुत्रिका ॥ ८ ॥
168542
168543 ब्रह्मलक्षणस्य वृक्षस्य प्रसूनमिव कालेनोपनीतम् । उत्किरणं विनैव प्रकटनंन्
168544 यस्यास्तथाविधा शालभञ्जिका ॥ ८ ॥
168545
168546 आकाशमृन्मयानन्तकुड्यमाकाशपत्तनम् ।
168547 मनो मत्तो गजमयो मिथ्या जीवस्य जीवितम् ॥ ९ ॥
168548
168549 आकाशलक्षणमृद्विकारभूतमनन्तमसंख्यातं कुड्यम् । मनसो
168550 मतंगजमयो विलासः । जीवितं सर्वस्वम् ॥ ९ ॥
168551
168552 अभित्तिकमरङ्गं च विचित्रं चित्रमम्बरे ।
168553 शम्बरेशस्य सर्वस्वमविद्याख्यस्य कस्यचित् ॥ १० ॥
168554
168555 शम्बरं माया तत्र ईशस्य समर्थस्य अविद्याख्यस्य कस्यचिदैन्द्रजालिकस्य
168556 मायासर्वस्वम् ॥ १० ॥
168557
168558 महारम्भं स्थिरमपि देशकालविवर्जितम् ।
168559 नानाढ्यमपि चाद्वैतं नानात्मापि न किंचन ॥ ११ ॥
168560
168561 देशकालसौक्ष्म्येऽपि विस्तारचिरत्वदर्शनाद्देशकालविवर्जितम् ॥ ११ ॥
168562
168563 गन्धर्वपुरदृष्टान्तस्याप्यवस्तुतया समम् ।
168564 जागरायां हि किल तद्भ्रान्तमप्युपलभ्यते ॥ १२ ॥
168565
168566 यद्भ्रान्तमपि जागरायामुपलभ्यते रज्जुसर्पमृगतृष्णोदकादि तेनापि
168567 सममित्यनुषज्यते ॥ १२ ॥
168568
168569 चिद्धामात्रमनारब्धमप्यारब्धमिव स्थितम् ।
168570 देशकालक्रियाद्रव्यसर्गसंहारसंयुतम् ॥ १३ ॥
168571
168572 सुरासुरनराधारगर्भगर्भमनोहरम् ।
168573 पृथक्कोष्ठस्थबीजौघसंपूर्णमिव दाडिमम् ॥ १४ ॥
168574
168575 सुरासुराद्युपलक्षितत्रैलोक्याधारैर्गर्भैस्तद्गर्भैश्च कदलीस्तम्भवन्मनोहरम् ।
168576 तत्राप्यवान्तरगर्भेष्वनन्तब्रह्माण्डकल्पनसत्त्वात्पृथक्कोष्टस्थबीजौघैः
168577 संपूर्णं दाडिमफलमिव स्थितम् ॥ १४ ॥
168578
168579 नदीशैलवनादिस्थव्योमताराभ्रसंकुलम् ।
168580 गीताब्धिरणपाठाढ्यपवनारावघर्घरम् ॥ १५ ॥
168581
168582 तदेव प्रपञ्चयति - नदीति । कलधौतशिलान्यायेनेति भावः ॥ १५ ॥
168583
168584 ततो विलोकितं तत्र तन्मया दृश्यमण्डलम् ।

168585 यावत्तमेव पश्यामि ग्रामं प्राक्तनमास्पदम् ‖ १६ ‖
168586
168587 तं पूर्वप्रवेशस्वप्नदृष्टं ग्रामं तत्र प्राक्तनमास्पदं गृहं च
168588 पश्यामि अपश्यम् | यावत्पुरानिपातयोर्लट् ‖ १६ ‖
168589
168590 तानेव सकलान्बन्धूंस्तथासंस्थानसंस्थितान् |
168591 तान्पुत्रांस्तां महेलां च तदेव च तदा गृहम् ‖ १७ ‖
168592
168593 तथासंस्थानं प्रागनुभूतवयोवस्थासंनिवेशस्तेन संस्थिताम् | महेलां
168594 भार्याम् ‖ १७ ‖
168595
168596 तां दृष्ट्वा प्राक्तनीं ग्राम्यामाहरद्वासनां बलात् |
168597 तटस्थं मुह्यमानाङ्गमिव वीचिर्महार्णवे ‖ १८ ‖
168598
168599 महार्णवे वीचिः प्राक्तनं तटस्थं मुह्यमानं व्याकुलं स्वाङ्गमिव स्थितां
168600 प्राक्तनीं ग्राम्यां गृहक्षेत्रपुत्रबन्ध्वाद्यभिमानवासनां बलादाहरत्
168601 आनयदिति बन्धुपुत्रमहेलागृहविशेषणम् | तत्र नपुंसकमनपुंसकेन - इति
168602 नपुंसकशेषे एकवद्भावः ‖ १८ ‖
168603
168604 अथाहमभवं तत्र तदालिङ्गननिर्वृतः |
168605 गृहीतवासनो नूनं विस्मृतप्राक्तनस्मृतिः ‖ १९ ‖
168606
168607 तेषां बन्धुपुत्रमेहलानामालिङ्गनेन निर्वृतः सुखितः ‖ १९ ‖
168608
168609 बिम्बं तत्तदुपादत्ते यद्यदग्रेऽवतिष्ठति |
168610 यथादर्शश्चिदादर्शस्तथैवायं स्वभावतः ‖ २० ‖
168611
168612 प्रसङ्गादविमृष्टविमृष्टचितोः स्वभावान्प्रपञ्चयति - बिम्बमित्यादिना |
168613 यथा प्रसिद्ध आदर्शो यद्यदग्रेऽवतिष्ठते तत्तत्प्रतिबिम्बं स्वयमप्युपादत्ते तथा
168614 चिदादर्शो वासनोपस्थापितं यद्यत्पूर्वमवतिष्ठते तत्तदाकाराभासमुत्तरत्र
168615 गृह्णातीत्यर्थः ‖ २० ‖
168616
168617 यस्तु चिन्मात्रगगनं सर्वमित्येव बोधवान् |
168618 द्वैतेन बोध्यते नेह सोऽङ्गः तिष्ठति केवलः ‖ २१ ‖
168619
168620 विमृष्टचितस्तु नायं स्वभाव इत्याह - यस्त्विति | सः वासनामयेन द्वैतेन
168621 प्रतिबिम्बग्रहणादिना नैव बोध्यते | यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः |
168622 इति भगवदुक्तन्यायादिति भावः | बाध्यते इति वा पाठः ‖ २१ ‖
168623
168624 न नश्यति स्मृतिर्यस्य विमला बोधशालिनी |
168625 अयं द्वैतपिशाचस्तं मनागपि न बाधते ‖ २२ ‖
168626
168627 तदेवाह - नेति ‖ २२ ‖
168628
168629 येषामभ्यासयोगेन साधुसच्छास्त्रसंगमैः |
168630 उदेति बोधधीर्भूयो या विस्मरति नोदयम् ‖ २३ ‖
168631
168632 या बोधधीरुदिता चेत्पुनः स्वोदयं न विस्मरत्येव | सदैव ब्रह्मानुसंधानात्मना
168633 आस्ते इत्यर्थः ‖ २३ ‖
168634
168635 अप्रौढा मे तदा सासीद्बोधधीर्या तया हता |
168636 अद्य शक्नोति मे बुद्धिं हन्तुं क इव दुर्ग्रहः ‖ २४ ‖

168637
168638 तर्हि तत्त्ववित्त्वं कथं तदा व्यामूढस्तत्राह - अप्रौढेति। या अप्रौढा
168639 धीस्तया बन्ध्वादिवासनया हता तर्हीदानीमपि ते बोधधीरप्रौढैव नेत्याह -
168640 अद्येति। दुर्ग्रहो दुर्वासनाप्रचयः॥ २४॥
168641
168642 तवापि व्याध विद्धीदं बुद्धिः सत्सङ्गवर्जिता।
168643 द्वैतबोधेन कष्टेन कृच्छ्राच्छान्तिमुपैष्यति॥ २५॥
168644
168645 हे व्याध तव बुद्धिरपि सत्सङ्गवर्जितेति हेतोर्नेदानीमेव शान्तिमेति किंतु
168646 वक्ष्यमाणतपःकायवृद्धिमरणजन्मान्तरराज्यादिना कष्टेन द्वैतबोधेन
168647 कृच्छ्रात्साधनाभ्यासपरिश्रमाज्ज्ञानमासाद्य शान्तिमुपैष्यति॥ २५॥
168648
168649 व्याध उवाच।
168650
168651 एवमेतन्मुने सत्यं पावनैस्त्वद्विबोधनैः।
168652 ईदृशैरपि मे बुद्धिर्न विश्राम्यति सत्पदे॥ २६॥
168653
168654 मुन्युक्तमनुमोदमानो व्याध उवाच - एवमेतदिति॥ २६॥
168655
168656 स्यादीदृशमथो न स्यादिति संदेहजालिका।
168657 नैतस्मिन्स्वानुभूतेऽपि वस्तुन्यद्यापि शाम्यति॥ २७॥
168658
168659 अहो बत दुरन्तेयमभ्याससुदृढीकृता।
168660 अविद्या विद्यमानैव या शान्तैव न शाम्यति॥ २८॥
168661
168662 अविद्यमानैवेति सदा शान्तैव न शाम्यति॥ २८॥
168663
168664 सत्सङ्गतैः पदपदार्थविबुद्धबुद्धेः
168665 सच्छास्त्रसत्क्रमविचारमनोहराङ्गैः।
168666 अभ्यासतः प्रशममेति जगद्भ्रमोऽयं नान्येन केनचिदपीति विनिश्चितिर्मे॥ २९॥
168667
168668 सत्सङ्गवर्जितेति यदुक्तं तदप्यनुमोदमान आह - सत्सङ्गतैरिति। सच्छास्त्रं
168669 सन् क्रमो गुरुसंप्रदायो विचारश्चेत्यादिना मनोहराङ्गैः सत्सङ्गमैः प्रसूता या
168670 पदपदार्थविवेकबुद्धिस्तदभ्यासतश्चोत्पन्नात्तत्त्वबोधाद्भूमिकाक्रमेणायं
168671 जगद्भ्रमः प्रशममेति। अन्येन केनचिदपि न प्रशममेतीति मे विनिश्चितिर्निश्चय
168672 इत्यर्थः॥ २९॥
168673
168674 इत्यार्षे श्रीवा० वाल्मी० दे० मो० नि० उ० अ० वि० शवोपाख्याने स्वप्नोपलम्भनं नाम
168675 सप्तचत्वारिंशदधिकशततमः सर्गः॥ १४७॥
168676
168677 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
168678 स्वप्नोपलम्भनं नाम सप्तचत्वारिंशदधिक"अततमः सर्गः॥ १४७॥
168679
168680
168681 प्द्फ़् ३३६, प्। १४२२
168682
168683 अष्टचत्वारिंशदधिकशततमः सर्गः १४८
168684
168685 व्याध उवाच।
168686
168687 एवं चेत्तन्मुनिश्रेष्ठ सत्यतासत्यता कथम्।
168688 स्थितः स्वप्नदृशा चैष सुमहान्संशयो मम॥ १॥

168689
168690 स्वप्नासत्यत्वसत्यत्वहेतुरत्र निरूप्यते।
168691 जाग्रत्स्वप्नसुषुप्त्यैक्यं चित्सार्वात्म्यैक्यशुद्धियुक्॥
168692
168693 यदि वासनानुसारि चिद्वेदनमेव स्वप्नो जाग्रच्च स्वप्नविशेष एवेत्येवं
168694 चेत्सिद्धान्तस्तर्हि कश्चित्स्वप्न उषसि दृष्टगजारोहणादिर्लाभादिफलसूचकत्वात्सत्यः
168695 । अन्यस्तु अरण्यगमनभ्रमणादिः फलादर्शनादसत्य इति स्वप्नदृशौ
168696 सत्यतासत्यते कथमुपपद्येते। एवं हैरण्यगर्भमानोरहितः
168697 सर्गोऽर्थक्रियासमर्थत्वात्सत्यः अस्मदीयस्त्वसत्य इति जाग्रज्जगत्यपि एष संशयः
168698 सुमहान्मम स्थितः। अधिष्ठानचित्सत्यतयाध्यस्ते सत्यता स्वतस्त्वसत्यता
168699 चोभयत्रापि तुल्यैव चेद्वैषम्ये कोहेतुरिति भावः॥ १॥
168700
168701 मुनिरुवाच।
168702
168703 देशकालक्रियाद्रव्यैर्या संविन्निश्चितोदिता।
168704 काकतालीयवद्भाति सा सत्यस्वप्ननामिका॥ २॥
168705
168706 या स्वप्नसंवित् स्वप्नेश्वरीसान्निध्यादिदेशे प्रत्यूषादिकाले
168707 देवताराधनतपोव्रतादिक्रियाभिर्हविष्यकुशास्तरणादिद्रव्यैश्च
168708 शास्त्रादिप्रमाणैरवश्यमीदृशस्वप्नस्येदृशं फलं भवत्येवेति निश्चिता
168709 उदेति सा संवित् काकतालीयफलकशकुनादिवदवश्यमुत्तरकाले
168710 फललाभात्सत्यस्वप्ननामिका भवति॥ २॥
168711
168712 मणिमन्त्रौषधिद्रव्यैः क्वचिदव्यभिचारिणी।
168713 क्वचित्सव्यभिचारा चित्सत्यस्वप्नाभिधा स्मृता॥ ३॥
168714
168715 मणिमन्त्रादिनिमित्तैर्जायमाना तु तद्योग्ये पुरुषे अव्यभिचारिणी अयोग्ये तु
168716 सव्यभिचारापि शास्त्रमर्यादानतिलङ्घनादुभयत्रापि सत्यस्वप्नाभिधैव
168717 स्मृतेत्यर्थः॥ ३॥
168718
168719 सत्यस्वप्नस्थितिर्लोकिष्वीदृग्रूपा यदा स्थिता।
168720 तदैषा काकतालीयन्यायादन्या न लभ्यते॥ ४॥
168721
168722 तत्रोभयत्रापि काकतालियन्याय एव शरणं न दृष्टं नियामकं
168723 किंचिन्निरूपयितुं शक्यमित्याशयेनाह - सत्येति॥ ४॥
168724
168725 यं यं निश्चयमादत्ते संवित्स्वदृढनिश्चया।
168726 तथा तथा भवत्येषा फलयुक्तस्वभावतः॥ ५॥
168727
168728 हिरण्यगर्भादिसंवित्तु
168729 प्राक्तनोपासनापरिपाकजत्वात्सत्यसंकल्परूपदृढनिश्चया सती यं यं
168730 निश्चयमादत्ते तथा तथा भवत्येवेत्याह - यं यमिति।
168731 प्राक्तनोपासनफलप्रयुक्तस्वभावतः॥ ५॥
168732
168733 तमेव निश्चयं त्वस्या अन्यः प्रतिनिहन्ति चेत्।
168734 तत्रासौ निश्चयः प्रौढः स कथं लक्ष्यभाग्भवेत्॥ ६॥
168735
168736 सापि अन्यदीयतद्विरुद्धसत्यसंकल्पेन कुतो न प्रतिहन्यते तत्राह - तमेवेति।
168737 तस्यास्तं सर्गादिनिश्चयमन्यः प्रतिनिहन्ति चेत्तत्र प्राक्तनोपासनाकाले प्रौढो
168738 जगत्स्रष्टाहमिति निश्चयः प्रयाणकाल उद्भूतः तद्वैतल्लोकजिदेव
168739 इत्यादिश्रुतिसिद्धस्वलक्ष्यफलभाक् कथं भवेत्। अतस्तदविरोधेनैवान्येषां
168740 सिद्धानां संकल्प उदेति न तद्विरुद्ध इति भावः॥ ६॥

न बहिर्नान्तरे सन्ति पदार्थाः केचन क्वचित् ।
संविदेका जगद्रूपैर्यथेच्छति तथा स्थिता ॥ ७ ॥

तथा च संवित्स्वातन्त्र्यमप्रतिहतमेवेत्याह - नेति ॥ ७ ॥

स्वप्नोऽयं सत्य इत्यन्तर्निश्चयेन तथोदिता ।
तथैवाशु भवत्येषा संशयात्संशयं व्रजेत् ॥ ८ ॥

शास्त्रादिप्रमाणकृतनिश्चयेन । शास्त्रादिप्रमाणसंशयात्तु फलसंशयं
प्राप्नुयात् ॥ ८ ॥

अन्यतोऽपि फलं प्राप्तं अस्वप्नसत्यत्वकल्पनात् ।
स्वप्नेन सूचितमिदं फलमित्येव वेत्त्ययम् ॥ ९ ॥

काकतालीयवदिति यदुक्तं तदुपपादयति - अन्यत इति ॥ ९ ॥

सर्व एव निजया जगल्लये संविदातिशयिता दृढा अपि ।
कालतो व्यभिचरन्ति देशतो यत्नतश्च चिरतोऽचिरेण वा ॥ १० ॥

एवं जाग्रत्प्रसिद्धघटादिसंविदोऽपि काकतालीया एव तद्विषयेष्वपि
देशकालभेदेनान्यथाभावदर्शनादित्याह - सर्व एवेति । निजया
तत्तत्पुरुषसंविदा अतिशयिताश्चिरपरिशीलिता अर्थक्रियादिना
दृढीकृतघटादिस्वभावा अपि सर्व एव भावा देशतः कालतश्च
मुद्गरप्रहारादियत्नतश्चान्यथाभावमापद्यमानाः पूर्वनिश्चितं स्वभावं
व्यभिचरन्ति ॥ १० ॥

सर्गादावेव चिद्व्योम भानमप्रतिघं जगत् ।
वस्तुसत्तां चिदेवातो यथेष्टं तनुते तनुः ॥ ११ ॥

चित्तु स्वस्वभावं न व्यभिचरतीत्यव्यभिचार्यप्रतिघस्वभावा सैव सत्या
असत्यसप्रतिघजगद्वेषं धत्त इति राद्धान्त इत्याह - सर्गादाविति ॥ ११ ॥

चिन्मात्रं वर्जयित्वैकं ब्रह्मान्यत्सर्वदाखिलम् ।
विद्धि सत्यमसत्यं च नियतानियतं स्थितम् ॥ १२ ॥

अत एव चिन्मात्रं सत्यैकनियतमन्यत्त्वनियतसत्त्वमित्याह - चिन्मात्रमिति ॥ १२ ॥

यस्माद्ब्रह्मैव सर्वात्म सदेकमेव नेतरत् ।
तस्मात्किं नाम तत्सत्यं किमसत्यं च वा भवेत् ॥ १३ ॥

यस्मात्सद्ब्रह्मैकमेव सर्वात्मकं तस्मात्तदतिरिक्तं सत्यमसत्यं वा किं भावयेत्
। न किंचिदित्यर्थः ॥ १३ ॥

अतः स्वप्नः क्वचित्सत्यः क्वचिच्चासत्य एव वा ।
अबुद्धानां प्रबुद्धानां नासद्रूपो न सन्मयः ॥ १४ ॥

एवं विचारे स्वप्नोऽपि क्वचित्कदाचित्सत्यः क्वचित्कदाचिदसत्योऽपि संविदात्मना
सत्यस्तदन्यरूपेणासत्यश्चेत्याह - अत इति ॥ १४ ॥

संविद्भ्रान्तिरियं भाति जगन्नाम्नी स्वरूपिणी ।
स्वयं च भ्रान्तिरस्मीति वादिनी कात्र निश्चिता ॥ १५ ॥

168793
168794 स्वरूपिणी आकारवती | निश्चिता यथार्था || १५ ||
168795
168796 चितिरेव चिरायेदं चित्तं चिमचिमायते |
168797 यदात्मन्येव सलिलं द्रववत्तदिदं जगत् || १६ ||
168798
168799 चित्तं भूत्वेति शेषः | यच्चिमचिमायते साभासं स्पन्दते तदेवेदं जगत् || १६ ||
168800
168801 यथा स्वप्नं समालोक्य सुषुप्तमनुभूयते |
168802 तथा जाग्रत्समालोक्य निद्रा समनुभूयते || १७ ||
168803
168804 जाग्रत्स्वप्नसुषुप्तयो घनेषद्द्रुतघृतवदभिन्ना एवेत्युपपादयितुं भूमिकां
168805 रचयति - यथेति | निद्रा स्वप्नः || १७ ||
168806
168807 अतस्त्वं जाग्रदेवेदं स्वप्नं विद्धि महामते |
168808 स्वप्नं च विद्धि जाग्रत्त्वमेकमेतदजं द्वयम् || १८ ||
168809
168810 अस्त्वेवं किं ततस्तत्राह - अत इति | यथा घनं
168811 घृतमेवेषद्विलीनमीषद्विलीनमेव पुनर्धनतामापद्यत इति घृताभेदः
168812 प्रत्यभिज्ञानात्तद्वदित्यर्थः || १८ ||
168813
168814 व्योमैवाचेत्यचिन्मात्रभानमेकमिदं ततम् |
168815 जाग्रत्स्वप्नसुषुप्त्याख्याः पर्यायरचना इह || १९ ||
168816
168817 एवं चाविद्यावृतचिन्मात्ररूपा सुषुप्तिरेवैका घृतवत्सर्वदा द्रष्टव्या | तस्या एव
168818 सर्वे नामरूपभेदाः पर्यायरचना इतिफलितमित्याह - व्योमैवेति || १९ ||
168819
168820 नेह नामास्ति नियतिर्न चानियतिरस्ति च |
168821 नियत्यनियती ब्रूहि कीदृशे स्वप्नसंविदि || २० ||
168822
168823 स्वप्नादेः फलनियत्यनियती अपि न ततः पृथक् स्त इत्याह - नेहेति | मिथ्यात्वादपि ते
168824 पृथङ् न स्त इत्याह - नियत्यनियती इति || २० ||
168825
168826 यावद्भानं किल स्वप्ने तावत्सैव नियन्त्रणा |
168827 स एव संविद्भानस्य कुर्यान्नियमनं मुनिः || २१ ||
168828
168829 अज्ञानावृता चिदनियन्त्रिता जाग्रत्स्वप्नौ | श्रमादिनिमित्तनियन्त्रिता सुषुप्तिः |
168830 प्रयत्ननियन्त्रिता तु समाधिः | अज्ञाननाशे सैव मुक्तिः | एवं सति जाग्रन्निरोधेन
168831 मनोव्यापारमात्ररूपे स्वप्ने यावत्कालं भानं तावत्सैव चितो
168832 बाह्यप्रवृत्तिनियन्त्रणाशोकान्तरम् | यावच्च संविद्भानस्य नियन्त्रणा
168833 तावत्सुषुप्तौ स आत्मैव सर्वशोकान्तरम् | एवं ज्ञात्वा
168834 मुनिर्विशोकसमाधिसुखविश्रान्त्यर्थी नियमनमेव कुर्यादित्यर्थः || २१ ||
168835
168836 स्वच्छन्दं वातलेखायाः स्फुरन्त्याः संविदस्तथा |
168837 अकारणकमेवाङ्ग नियतिः केव कीदृशी || २२ ||
168838
168839 ननु न संविन्नियन्तुं शक्या तस्य वातलेखाया इव
168840 स्वप्नाद्याकारस्फुरणनियतेरित्याशङ्क्याह - स्वच्छन्दमिति | न
168841 तावद्विषयाकारस्फुरणं संविदः स्वभावः | सुषुप्तावदर्शनात् | न च स्वप्ने
168842 तथा स्फुरणे कारणान्तरं निरूपयितुं शक्यम् यन्निबन्धना नियतिः स्यादिति का
168843 नियतिः कीदृशी वेत्यर्थः || २२ ||
168844

168845 अथाकारादि यन्नाम कल्प्यते कारणं विदः।
168846 तदकारणकं सर्गः स्यादनन्यन्न वै चितेः॥ २३॥
168847
168848 ननु बाह्यघटपटाद्याकार एव स्वसंबन्धे संविदः स्वाकारतायां कारणं
168849 कल्प्यते तत्राह - अथेति। भवेदेवं यदि सर्गे किंचिदन्यत्कारणं निरूपयितुं
168850 शक्येत। यदा तु प्रागुक्तयुक्तेः सर्गः अकारणकस्तदा चितेरनन्यदाकारादि चितेः
168851 कारणं न स्यादेवेत्यर्थः॥ २३॥
168852
168853 एतावत्येव नियतिरत्र यन्नाम यद्यथा।
168854 यावत्प्रस्फुरितं भानं तत्तथा न तदन्यथा॥ २४॥
168855
168856 तर्हि किं सर्वापि नियतिर्भग्ना नेत्याह - एतावत्येवेति। या चितिर्यदा यथा स्फुरति
168857 तद्वस्तु तदा तथा पारमार्थिकं व्यावहारिकं प्रातिभासिकं वेति
168858 नियतिर्यावद्व्यवहारमस्त्येवेत्यर्थः॥ २४॥
168859
168860 कदाचित्सत्यता स्वप्ने कदाचिच्चाप्यसत्यता।
168861 अभावान्नियतेरेव काकतालीयमेव तत्॥ २५॥
168862
168863 स्वप्नसत्यतानियतिस्तु यथाशास्त्रत्वेन सर्वत्रेति काकतालीयवदित्युक्तमेवेत्याह -
168864 कदाचिदिति॥ २५॥
168865
168866 यत्स्वेनैवात्मना भाति मणिमन्त्रौषधात्मना।
168867 यन्नाम नियतं तत्तु जाग्रत्यपि हि दृश्यते॥ २६॥
168868
168869 मणिमन्त्रौषधात्मना प्रयुक्तसत्यतानियतिस्तु जाग्रत्प्रत्ययेऽपि समेत्याह - यदिति॥
168870 २६॥
168871
168872 जाग्रत्स्वप्नश्च चिद्भानमात्रमेवान्यतात्र का।
168873 जाग्रति स्वप्ननगरे वेदनात्सदृशात्मकम्॥ २७॥
168874
168875 अत एव जाग्रत्स्वप्नयोश्चिन्मात्रत्वादभेद उक्त इत्याह - जाग्रदिति।
168876 तयोर्वेद्यस्वरूपंन् वेदनस्वरूपं वानुभवतस्तुल्यमेवेत्याह - जाग्रतीति॥ २७॥
168877
168878 जाग्रन्न संभवत्येव यज्जाग्रदिति शब्दितम्।
168879 स्वप्न एव जगद्रूपं निर्निद्रस्यैव चात्मनः॥ २८॥
168880
168881 अत एव निर्निद्र आत्मनि द्वयोरपि व्यभिचारादसत्त्वमेवेत्याह - जाग्रदिति द्वाभ्याम्॥
168882 २८॥
168883
168884 स्वप्नो वा नाम नास्त्येव यः स्वप्न इव शब्दितः।
168885 सुप्तासुप्तैकरूपस्य ब्रह्मणो बोधरूपता॥ २९॥
168886
168887 जाग्रत्स्वप्नादयो वैते न केचन कदाचन।
168888 दृश्यं पश्यति सत्ताशु मृतिभ्रान्तेरनन्तरम्॥ ३०॥
168889
168890 एवं सति निर्निद्रस्य सुषुप्तिरपि नास्त्येवेत्याशयेनाह - जाग्रदिति।
168891 एवमात्यन्तिकदृश्यादर्शनरूपा आत्मोच्छेदादिरूपा वा मृतिरपि नास्त्येवेत्याह ##-
168892
168893 यथानवरतं कालमनन्तं सीकरोर्मयः।
168894 त एवान्यवदभ्राशावदनन्याः स्फुरन्त्यलम्॥ ३१॥
168895
168896 अभ्रवत् दिग्भ्रमे आशा दिशस्तद्वच्च अनन्यास्त एव अन्यवत्स्फुरन्ति। अनन्या इति

बहुव्रीहिः ॥ ३१ ॥

तथानन्ये परे सर्गाः स्फुरन्त्यस्फुरिता अपि ।
शिलाकोशान्तलेखावज्जाग्रत्स्वापादि तत्र किम् ॥ ३२ ॥

जाग्रत्स्वप्नसुषुप्ततुर्यकवपुः साकारतावर्जितं सर्वाकारमपि व्यतीतकलनं
सर्गं शरीरं दधत् ।
व्याप्तं चिद्वपुषा तथापि सुषिरं शून्येन दृश्यात्मना चिन्मात्रं खमिदं
मनागपि नभोमात्रान्न भिन्नं पुनः ॥ ३३ ॥

इदमात्मस्वरूपं जाग्रत्स्वप्नसुषुप्तवपुस्तद्विरुद्धतुर्यकवपुश्च तथा
साकारतावर्जितं सर्वाकारमपि व्यतीतकालकलनं सर्गात्मककालपरिच्छिन्नशरीरं
दधदपि शून्येनैवानेन चिद्वपुषा शून्येनैव दृश्यात्मना खात्मकमेव
सुषिरं शून्यं व्याप्तं तथापि पुनरिदं चिन्मात्रं खमाकाशात्मकं
नभोमात्राद्रूपान्मनागपि भिन्नं नेत्यर्थः ॥ ३३ ॥

साकाशानिलवह्निवारिधरणीलोकान्तराम्भोधरं सर्गादावपि
कारणाननुभवाच्चित्तात्मकं केवलम् ।
नाम्ना वर्जितमेव बोधवपुषा संयुक्तमेवान्ततः शुद्धं वेदनमात्रमेव
सकलं दृश्यं न वस्त्वन्तरम् ॥ ३४ ॥

किं च सकलमाकाशादिभूतभौतिकसहितं दृश्यं जगत्सर्गादावपि
कारणस्यान्यस्य प्रमाणैरननुभवात्केवलं हैरण्यगर्भचित्तात्मकम् । तथा च
चित्तात्मकस्य मनोराज्यगतस्य नामरूपाभावान्नाम्ना वर्जितमेव । बोधवपुषा
मनःसाक्षिणा संयुक्तमेव । अन्ततो मनोविलये शुद्धं वेदनमात्रमेव न
वस्त्वन्तरमित्यर्थः ॥ ३४ ॥

इत्यार्षे श्रीवा० वाल्मी० दे० मो० निर्वा० उ० अवि० वि० श० स्वप्ननिर्णयो
नामाष्टचत्वारिंशदधिकशततमः सर्गः ॥ १४८ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
स्वप्ननिर्णयो नामाष्टचत्वारिंशदधिकशततमः सर्गः ॥ १४८ ॥

## एकोनपञ्चाशदधिकशततमः सर्गः १४९

व्याध उवाच ।

अनन्तरं मुने ब्रूहि तत्तत्त्वं जागतस्य ते ।
किं वृत्तमुरुवृत्तान्तशतनिर्वाणसंसृतेः ॥ १ ॥

इह तत्स्वप्नवृत्तान्ते गृहागतमुनेर्मुखात् ।
बहूनां तुल्यदुःखादिनिमित्तं श्रुतमीर्यते ॥

हे मुने प्राणिदेहे प्रलयादिभिरुरुवृत्तान्तशतैः सह निर्वाणाः संसृतयोयस्य
तथाविधस्य ते गृहे भार्याबन्ध्वादिसहवासानन्तरं तत्रानुभूयमानस्य
जागतस्य वृत्तान्तस्य संबन्धि किं वृत्तं तत्तत्त्वं ब्रूहीत्यन्वयः ॥ १ ॥

मुनिरुवाच ।

ततः शृणु तदा साधो तस्मिंस्तद्धृदयौजसि ।
अपूर्व एव वृत्तान्तः को वृत्तो वृत्तसस्पृह ॥ २ ॥

168949
168950 हे वृत्तसस्पृह हे साधो ततः परं तस्य प्राणिनो हृदयौजसि अपूर्व एव यो
168951 वृत्तान्तो वृत्तस्तं शृणु। य इत्यर्थे क इति प्रयोगः प्रश्नानुवादार्थः॥ २॥
168952
168953 तथा मम च तत्रस्थविस्मृतात्मचमत्कृतेः।
168954 अभ्यवर्तत वै कालो ऋतुसंवत्सरात्मकः॥ ३॥
168955
168956 कलत्ररञ्जितमतेर्मम वर्षाणि षोडश।
168957 तत्र तानि व्यतीतानि गृहस्थाश्रमतोऽमतेः॥ ४॥
168958
168959 अमतेः आत्ममननशून्यस्य॥ ४॥
168960
168961 कदाचिच्चाजगामाथ गृहमुग्रतपा मम।
168962 मुनिर्मान्यो महाबोधो बुधोऽतिथितया तथा॥ ५॥
168963
168964 कदाचिद्बुधो मुनिरतिथितया मम गृहमाजगाम। तथेत्युत्तरान्वयि॥ ५॥
168965
168966 सोऽत्र संपूजितस्तुष्टः सुप्तवान्भुक्तवांस्ततः।
168967 इदमङ्ग मया पृष्टो विमृश्य जनताक्रमम्॥ ६॥
168968
168969 आर्थात् क्रमात्पूर्वं भुक्तवांस्ततः सुप्तवान्। जनता जनसमूहस्तस्याः
168970 समानसुखदुःखागमक्रमं विमृश्य विचिन्त्य॥ ६॥
168971
168972 भगवन्भूरिबोधोऽसि जानासि जगतो गतीः।
168973 यस्माददृष्टक्रोधोऽसि सुखे गृह्णासि नो रतिम्॥ ७॥
168974
168975 सुखे विषयसुखलवे रतिमासक्तिम्॥ ७॥
168976
168977 सुखदुःखान्युपायान्ति कर्मभिः कर्मशालिनाम्।
168978 शुभाशुभैः शरत्काले सस्यानीव फलार्थिनाम्॥ ८॥
168979
168980 सममेवाशुभं कर्म किमिमाः सकलाः प्रजाः।
168981 कुर्वन्त्यासां यदा यान्ति दोषाः सर्वादयः समम्॥ ९॥
168982
168983 आसां जनतानां सर्वान्भक्ष्याभक्ष्यान् आदयन्ति भोजयन्तीति सर्वादयो
168984 दुर्भिक्षादिदोषाः सममेव यदा यान्ति तत्र निमित्तभूतमशुभं कर्म किं
168985 सममेव कुर्वन्ति॥ ९॥
168986
168987 दुर्भिक्षावग्रहोत्पातं सर्वादि सममेव किम्।
168988 जनजालस्य फलति समाना कस्य दुष्क्रिया॥ १०॥
168989
168990 यत्सममेव प्रवर्तते तत्किं कस्य दुष्क्रिया समाना। सर्वेषां
168991 युगपत्तदनुकूलदुष्कर्माचरणाप्रसिद्धेरित्यर्थः॥ १०॥
168992
168993 इत्याकर्ण्य समालोक्य स्मयमान इवोन्मनाः।
168994 स उवाच वचो वन्द्यममृतस्यन्दसुन्दरम्॥ ११॥
168995
168996 स्मयमानो विस्मयवानिवोन्मना ईषद्धसन्निति वा॥ ११॥
168997
168998 अन्यमुनिरुवाच।
168999
169000 साधो साधु विविक्तान्तःकरणे यत्तु कारणम्।

169001 सद्वासद्वास्य दृश्यस्य कस्माज्जानासि कथ्यताम् ॥ १२ ॥
169002

169003 नास्य संशयः सर्वसंशयबीजमज्ञानमनिरस्य समाधातुं शक्य इत्यभिप्रेत्य
169004 तदर्थमात्मतत्त्वं दृश्यमिथ्यात्वं च व्युत्पादयितुं स मुनिर्मां पप्रच्छ ##-
169005 यत्कारणं सद्वा असद्वा साधु जानासि तत्कस्माज्जानासि कथ्यताम् । त्वया जानासीति
169006 निर्दिष्टात्प्रमातुः पृथक्कृत्य साक्षिणः शुद्धस्य प्रश्नविषयत्वद्योतनार्थं
169007 कस्मादिति हेतुपञ्चम्या निर्देशः ॥ १२ ॥
169008

169009 संस्मरात्मानमखिलं कस्त्वं क्वेह स्थितोऽसि च ।
169010 क्वाहं वा किमिदं दृश्यं किं सारं किंचिदेव च ॥ १३ ॥
169011

169012 तत्र विवेकासामर्थ्यात्तूष्णींभूतं मां निरीक्ष्य सः प्राक्तनसर्ववृत्तान्तैः सह
169013 तत्साक्षिणमात्मानं स्मरेत्याह - संस्मरेति । किंचित्तुच्छमसारमेव च किम् ॥ १३
169014 । ।
169015

169016 स्वप्नमात्रमिदं भाति किल कस्मान्न वेत्सि भो ।
169017 अहं स्वप्ननरो यत्ते त्वं स्वप्नपुरुषोपमः [ममेति पाठः ।] ॥ १४ ॥
169018

169019 असारतामेव प्रकटयति - स्वप्नमात्रमिति । यद्यस्माद्धेतोः ॥ १४ ॥
169020

169021 अनाकारमनाख्येयमनाद्यमपकल्पनम् ।
169022 इदं चिन्मात्रकाचस्य काचकच्यं जगत्स्थितम् ॥ १५ ॥
169023

169024 काचकच्यं कान्तिविशेषः ॥ १५ ॥
169025

169026 रूपमीदृशमेवास्य चिन्मात्रस्यास्त्यकृत्रिमम् ।
169027 सर्वगस्य यदेतद्यद्यत्र वेत्यस्ति तत्र तत् ॥ १६ ॥
169028

169029 तत्राकृत्रिमं चिन्मात्ररूपं स्वाध्यस्ते यथावेदनं सत्त्वादि निर्वाहयतीत्याह -
169030 रूपमिति ॥ १६ ॥
169031

169032 सकारणत्वकलनात्सर्वमस्य सकारणम् ।
169033 अकारणत्वकलनादस्य सर्वमकारणम् ॥ १७ ॥
169034

169035 अत एव सर्ववस्तूनां सकारणकत्वादिवादा अपि तत्कल्पनानुसारेण व्यवस्थिता इत्याह
169036 - सकारणत्वेति ॥ १७ ॥
169037

169038 आसां प्रजानां त्वस्माकं विराडात्मा स आततः ।
169039 वयं हृदि स्थिता यस्य स चास्मच्चिद्वशादितः ॥ १८ ॥
169040

169041 समष्टिव्यष्टिभावकल्पनाप्यस्माकमस्मच्चिदधीनैवेत्याह - आसामिति । यस्य
169042 प्राणिनो हृदि ओजसि वयं स्थिताः सोऽस्माकं विराडात्मा । स च
169043 अस्मच्चित्कल्पनावशादेव विराड्भावमितः । स्वकल्पनया त्वन्यसाधारणो
169044 व्यष्टिरेवेत्यर्थः ॥ १८ ॥
169045

169046 भविष्यत्यपरोऽन्यासां विराडात्मा स एव च ।
169047 कारणं सुखदुःखानां भावाभावात्मकर्मणाम् ॥ १९ ॥
169048

169049 एतत्प्राणिवदपरोऽपि प्राणी अन्यासां प्रजानां विराडात्मा भविष्यतीति संभाव्यते ।
169050 तस्मिंस्तु देहे स एव सुखदुःखादीनां भोक्तृतया कारणं नान्योन्यत्रेति
169051 व्यवस्थितमित्यर्थः । भावाः संपदः । अभावा विपदः । कर्माणि
169052 सुकृतदुष्कृतानि तेषाम् ॥ १९ ॥

169053
169054 विराड्धातुविकारेण विषमस्पन्दनादिना।
169055 तदङ्गावयवस्यास्य जनजालस्य वै समम्॥ २०॥
169056
169057 जनानां दुर्भिक्षावग्रहादिसाधारणदुःखे तु यो यस्य स्थूलसमष्टिरूपो विराट्
169058 तदीयधातुविकारभेद एव निमित्तमित्याह - विराडिति द्वाभ्याम्॥ २०॥
169059
169060 दुर्भिक्षावग्रहातीतमायाति शममेति वा।
169061 यस्माद्विराजो या सत्ता सा सर्गस्यास्य सर्गता॥ २१॥
169062
169063 दुर्भिक्षं च अवग्रहश्च अतीतमत्ययः प्रलयश्च एतेषां समाहारो
169064 यथायोगमायाति शममेति वा। तत्कुतस्तत्राह - यस्मादिति॥ २१॥
169065
169066 काकतालीयवत्साधो केषुचिद्दुष्टकर्मसु।
169067 समं पतति दुःखादि पादपेष्वशनिर्यथा॥ २२॥
169068
169069 तेषां प्राणिनां समानकालपरिपक्वदुष्टकर्मापि तत्रास्त्येवेत्याह - काकतालीयेति
169070 ॥ २२॥
169071
169072 कर्मकल्पनया संवित् स्वकर्मफलभागिनी।
169073 कर्मकल्पनयोन्मुक्ता न कर्मफलभागिनी॥ २३॥
169074
169075 तादृशं कर्मापि चितैव प्राक्कल्पितं चेत्सा तत्फलभागिनी नान्यथेत्याह -
169076 कर्मेति॥ २३॥
169077
169078 या या यत्र यथोदेति कल्पनाल्पाथवाधिका।
169079 सा सा तत्र तथैवास्ते सहेतुकमहेतुकम्॥ २४॥
169080
169081 सहेतुककल्पना सहेतुकमेवास्ते। अहेतुककल्पना त्वहेतुकमेवास्ते॥ २४॥
169082
169083 नास्त्येव स्वप्नमये कारणसहकारि कारणादिपुरे।
169084 तस्मात्तदनादि शिवं चेतनमजरं परं ब्रह्म॥ २५॥
169085
169086 न च स हेतुकत्वकल्पनामात्रेण स्वप्ने सहेतुकता घटादेरस्तीति
169087 निर्हेतुकजगदसिद्धेश्चिन्मात्रमेव ब्रह्म परमार्थतोऽस्तीत्याह - नास्त्येवेति॥ २५॥
169088
169089 एष स्वप्नभ्रमो नाम भाति कश्चिदकारणम्।
169090 कश्चित्सकारणो भाति शून्यः सदसदात्मकः॥ २६॥
169091
169092 यतः सदसदात्मकः अत एव शून्यो मिथ्याभूतः॥ २६॥
169093
169094 काकतालीयवद्भान्ति स्वप्नाः सकलसंविदः।
169095 ताभ्यस्तुल्योपलम्भत्वान्नान्यज्जगदिदं ततम्॥ २७॥
169096
169097 स्वप्नोक्तो न्यायो जाग्रज्जगत्यापि तुल्योपलम्भत्वादेव बोध्य इत्याह - काकातालीयेति।
169098 चितः स्वप्नाद्वा अन्यन्न॥ २७॥
169099
169100 सकारणतया रूढमिह यत्तत्सकारणम्।
169101 अकारणतया रूढमिह यत्तदकारणम्॥ २८॥
169102
169103 सकारणत्वाकारणत्वप्रसिद्धिरप्यत्र स्वप्नवदेव व्यवस्थितेत्याह -
169104 सकारणतयेति॥ २८॥

कार्यकारणमयक्रमोदितं स्वप्न एष चितिभानमात्रकम् ।
जाग्रदाख्यमहतः स्वभावकं तेन शान्तमखिलं परं विदुः ॥ २९ ॥

स्वप्ने कार्यकारणमयक्रमोदितं यत्स्वभावकं चितिभानमात्रकमेवेति एष निर्णयो
जाग्रदाख्यस्य महतः स्थूलप्रपञ्चस्यापि तुल्य इति शेषह् । तेन हेतुना अखिलं
शान्तं परमेवेति विदुर्ब्रह्मविद इत्यर्थः ॥ २९ ॥

सत्यकारणका भावाः के ते शृणु महामते ।
कारणं किं स्वभावानां किमिहाकाशकारणम् ॥ ३० ॥

ननु सर्वभावानां सत्यं ब्रह्मैव कारणमस्तु । सत्यकारणकत्वाच्च तेऽपि सत्याः
सन्तु । तथा च कथं सर्व ब्रह्मैव कथं वा सत्याद्वैतं तत्राह -
सत्यकारणका इति । हे महामते अस्यां शङ्कायामुत्तरं तेऽहं वदामि । त्वं
शृणु । के ते भावा आयुष्मतः सत्यकारणका अभिमताः । किं स्वभावानां सत्यं
कारणम् । किं सत्यस्वभावानां सत्यं कारणमुत मिथ्यास्वभावानाम् । किं
सजातीयानामुत विजातीयानाम् । आद्ययोर्ब्रह्मणो ब्रह्मैवोत्पद्येत न जगत् । द्वितीययोर्न
ब्रह्मजस्य सत्यतासिद्धिरित्यकारणत्वमेव फलत इति किं त्वया साधितं स्यात् । किं च
सर्वेषु कल्पेषु पृच्छामः । किमिहाकाशस्य कारणम् ।
आद्यकल्पयोराकाशपदवाच्यतावच्छेदकवैलक्षण्यासिद्धिर्द्वितीययोस्तत्सत्यत्वा##-

पृथ्व्यादेर्घनपिण्डत्वसर्गादिः किं च कारणम् ।
किं कारणमविद्यायाः कारणं किं स्वयंभुवः ॥ ३१ ॥

अयं न्यायः पृथ्व्यादावपि योज्य इत्याह - पृथ्व्यादेरिति ॥ ३१ ॥

सर्गादौ कारणं किं स्याद्वायूनां तेजसां च किम् ।
किमपां वेदनामात्ररूपाणां गगनात्मकम् ॥ ३२ ॥

वेदनातिरेकेण तत्स्वरूपानिरूपणाद्वेदनामात्ररूपाणां
साधकाभावादेवासिद्धेर्गगनात्मकं शून्यम् ॥ ३२ ॥

पिण्डग्रहे देहलाभे मृतानां किं च कारणम् ।
एवमेव प्रवर्तन्ते सर्गाः प्रथमतोऽखिलाः ॥ ३३ ॥

एवमेव प्रवर्तन्ते जगत्यावलयन्ति च ।
चक्रकाणीव नभसि चिरसंप्रेक्षणादृशा ॥ ३४ ॥

तस्मात्परिशेषादकारणका भ्रान्तिमात्ररूपा इति सिद्धमित्याह - एवमेवेति ।
चिरसंप्रेक्षणा चिरकालमनुभवस्तत्प्रयुक्तभ्रान्तिदृशा ॥ ३४ ॥

एवमेव प्रवृत्तेन सर्गेण ब्रह्मरूपिणा ।
पश्चात्यस्वस्यैव रूपस्य संज्ञाः पृथ्व्यादिकाः कृताः ॥ ३५ ॥

ब्रह्मरूपिणा हिरण्यगर्भाकृतिना पृथ्व्यादिरूपस्य स्वस्यैव
पृथ्व्यादिसंज्ञाः कृताः ॥ ३५ ॥

वातस्पन्दवदाभान्ति सर्गाः पूर्वं चिदम्बरे ।
स्वयमेव च कुर्वन्ति देहकारणकल्पनाः ॥ ३६ ॥

अत एव प्रथमं मनोराज्यवदतिसूक्ष्माश्चिराभ्यासेन स्थूलीभूता
देहकर्मादिकारणकल्पनाः कुर्वन्ति ॥ ३६ ॥

169157
169158 यद्यथा कल्प्यते धत्ते तत्तथा नियतिर्वपुः।
169159 कल्पितायाश्चितेर्यस्मादेवमेतन्निजं वपुः ॥ ३७ ॥
169160
169161 तत्राद्यकल्पने यद्यथा कल्प्यते तत्तथा वपुर्नियतिः संपद्यते। इदं च स्वेन
169162 संकल्पितपदार्थेषु स्वानुभवसिद्धमित्याह - कल्पिताया इति ॥ ३७ ॥
169163
169164 यद्यद्भानात्मकं रूपं प्रथमं चेतितं चिता।
169165 स्वतोऽहमेव चित्येव तदद्यापि तथा स्थितम् ॥ ३८ ॥
169166
169167 चिता सर्गानुकूलहैरण्यगर्भचिता ॥ ३८ ॥
169168
169169 पुनरन्येन यत्नेन तदुत्कृष्टेन सैव चित्।
169170 शक्ता तदन्यथाकर्तुं यत्नेन महता पुनः ॥ ३९ ॥
169171
169172 आद्यकल्पनाया अन्यथाभावस्तु महतामपि महद्भिर्यत्नैः कदाचिदेव भवतीत्याह
169173 - पुनरिति। यथा नन्दिनहुषादेः सुरसर्पादिभावमिति भावः ॥ ३९ ॥
169174
169175 कल्प्यते कारणं यत्र तत्र कारणसारता।
169176 न कल्प्यते विदा यत्र कारणं तदकारणम् ॥ ४० ॥
169177
169178 क्वचिद्दुग्धादौ दध्यादिभावायातञ्चनकालोष्मादिकारणं कल्प्यते।
169179 वाय्वादेर्घनद्रवादिभावाय तत्कल्पनमप्यशक्यमित्याह - कल्प्यत इति ॥ ४० ॥
169180
169181 वात्यावर्तवदाभातमिदं प्रथममाततम्।
169182 असदेव यथा भातं तथैवाद्यापि संस्थितम् ॥ ४१ ॥
169183
169184 तत्र चितः अचित्प्रतिभासो न कार्यं किंतु ज्ञेयं प्राथमिकत्वात्तु इदानीमप्यनुवर्तत
169185 इत्याह - वात्यावर्तवदिति ॥ ४१ ॥
169186
169187 संभूय केचन शुभाशुभमात्मकर्म कुर्वन्ति तस्य सदृशं
169188 फलमाप्नुवन्ति।
169189 संप्राप्नुवन्ति च शिलाशनिवच्च केचिद्दुःखं त्वकारणकमेव
169190 सहस्रसंख्याः ॥ ४२ ॥
169191
169192 यत्तु मया पृष्टं सममेवाशुभं कर्म किमिमाः सकलाः प्रजाः। कुर्वन्ति किम् इति
169193 तस्योत्तरं वदन्नुपसंहरति - संभूयेति। केचन जीवाः संभूयापि
169194 शुभाशुभं कर्म कुर्वन्ति तस्य फलमपि संभूयैव प्राप्नुवन्ति। केचित्तु
169195 कर्तृत्वाभिमानरहितत्वादकर्तारोऽपि सहस्रसंख्या अकारणकमेव दुःखं
169196 संप्राप्नुवन्ति जीवन्मुक्ताः। यथा गिरिशिखरशिला
169197 दुष्कृतमकुर्वाणाप्यशनिपातमनुभवति तद्वदित्यर्थः ॥ ४२ ॥
169198
169199 इत्यार्षे श्रीवा०वा० दे० मो० नि० उ० अवि० वि० श० कारणविचारो
169200 नामैकोनपञ्चाशदधिकशततमः सर्गः ॥ १४९ ॥
169201
169202 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
169203 कारणविचारो नामैकोनपञ्चाशदधिकशततमः सर्गः ॥ १४९ ॥
169204
169205 पञ्चाशदधिकशततमः सर्गः १५०
169206
169207 मुनिरुवाच।
169208

169209 एवंप्रकारया युक्त्या तेनायं मुनिना तदा।
169210 तथाहं बोधितो येन गतो विदितवेद्यताम् ॥ १ ॥
169211
169212 तद्वाक्यैः स्वात्मबोधोऽत्र तत्सहस्थितिरात्मनः।
169213 प्राग्देहगमनाशक्तेः प्रश्ने दाहादि चोच्यते ॥
169214
169215 अयमहं तेन मुनिना एवं प्रागुक्तप्रकारया युक्त्या तथा बोधितो यथा तेन
169216 बोधनेन तदैव विदितवेद्यतां तत्त्वज्ञतां गतः ॥ १ ॥
169217
169218 ततोऽसौ न मया त्यक्तश्चिरप्रार्थनया तया।
169219 अवसत्तेन तत्रासौ मृतस्यापि तथैव च ॥ २ ॥
169220
169221 चिरप्रार्थनया तया भक्त्या अनुवृत्त्या सेवया तेन विनयादिगुणकदम्बेन च
169222 वशीकृतोऽसौ मृतस्य आत्मविचारशून्यत्वात्प्राङ्मृतप्रायस्यापि मम तत्र
169223 गृहे तथैव अवसत्। तथा चोक्तं वृद्धैः - गच्छतस्तिष्ठतो वापि जाग्रतः
169224 स्वपतोऽपि वा। न विचारपरं चेतो यस्यासौ मृत उच्यते ॥ इति ॥ २ ॥
169225
169226 येनैतन्मुनिना प्रोक्तमिन्दूदयशुभं वचः।
169227 सोऽयं पश्य मुनिश्रेष्ठस्तव पार्श्वे व्यवस्थितः ॥ ३ ॥
169228
169229 तथाविधो दयालुर्मदुपदेष्टा मुनिरिदानीं त्वत्पार्श्वत एवास्तीति तं दर्शयति -
169230 येनेति ॥ ३ ॥
169231
169232 अनेनोक्तमनुक्तेन ममैतन्मोहघातिना।
169233 दृश्यपूर्वापरज्ञेन यज्ञेनेवात्तमूर्तिना ॥ ४ ॥
169234
169235 आत्तमूर्तिना धृतशरीरेण यज्ञेन मदीययज्ञादिसुकृतेनेव स्थितेन ॥ ४ ॥
169236
169237 अग्निरुवाच।
169238
169239 तदाकर्ण्य वचस्तस्य मुनेर्व्याधोऽभवत्तदा।
169240 प्रत्यक्षः स्वप्नसर्गः किमिति खिन्न इव स्मयात् ॥ ५ ॥
169241
169242 तन्मुनेर्वच आकर्ण्य व्याधः स्वप्नसर्गस्तदुपदेष्टा मुनिरिदानीं मत्प्रत्यक्षः किं
169243 संभावित इति असंभावनया विस्मयात्खिन्न इव अभवत् ॥ ५ ॥
169244
169245 व्याध उवाच।
169246
169247 अहो महच्चित्रमिदं मुने मनसि दुःसहम्।
169248 कथितं मेऽद्य भवता भवतापापहारिणा ॥ ६ ॥
169249
169250 असंभावनामेव सस्पष्टमाह - अहो इति ॥ ६ ॥
169251
169252 यत्स्वप्नकथितस्येयं जाग्रत्प्रत्यक्षतोच्यते।
169253 लभ्यतेऽपि च तन्नाम वेद चित्रमिदं मुने ॥ ७ ॥
169254
169255 किं तच्चित्रं मया कथितं तदाह - यदिति। स्वप्ने स्वोपदेष्टृत्वेन कथितस्य
169256 मुनेरिदानीं जाग्रत्प्रत्यक्षता यदुच्यते मया च प्रत्यक्षमुपलभ्यते तदहं चित्रं
169257 वेदेत्यर्थः ॥ ७ ॥
169258
169259 कथमेष महान्स्वप्नपुरुषः स मुनीश्वर।
169260 जाग्रत्यपि स्थिरीभूतो भूतो बालमतेरिव ॥ ८ ॥

169261
169262 भूतो वेतालः ॥ ८ ॥
169263
169264 एवमाश्चर्यमाख्यानमुच्यतां मे यथाक्रमम् ।
169265 कुतः कस्य किमेतद्वा परमो हि स विस्मयः ॥ ९ ॥
169266
169267 एवंविधमाश्चर्यमिदमाख्यानं मे यथाक्रमं संपूर्णमुच्यताम् । इदं
169268 स्वाप्नपुरुषस्येदानीं दर्शनं कुतो निमित्तात्कस्य वेदं दर्शनं किं वा स्वप्नो
169269 जाग्रद्वा ॥ ९ ॥
169270
169271 मुनिरुवाच ।
169272
169273 ततः शृणु महाभाग वृत्तं चित्रं किमत्र मे ।
169274 कथयामि समासेन सहसा मां कुरु त्वराम् ॥ १० ॥
169275
169276 अनेनैतत्तदा तत्र वर्णितं बोधनाय मे ।
169277 बुधोऽहमभवं चाशु महतोऽस्य तया गिरा ॥ ११ ॥
169278
169279 अनेन त्वत्पार्श्वस्थेन मुनिना ॥ ११ ॥
169280
169281 तत एतद्गिरा पूर्वं स्वस्वभावः स्मृतो मया ।
169282 अवदातोऽवदातेन नभसेव तपात्यये ॥ १२ ॥
169283
169284 पूर्वः अनादिसिद्धसन्मात्रस्वभावः । तपात्यये माघमासात्यये । हिमात्यय इति यावत्
169285 ॥ १२ ॥
169286
169287 अहो नु सोऽहमभवं मुनिरित्युदिताशयम् ।
169288 अहमासं हृदा स्फीतात्स्नातोऽवस्थितविस्मयात् ॥ १३ ॥
169289
169290 ततोमे पूर्वमुनिभावोऽपि स्मृतिभागत इत्याह - अहो इति ।
169291 अवस्थिताद्विस्मयाद्धृदा स्नात इवार्द्रीकृत आसम् ॥ १३ ॥
169292
169293 इमां भोगास्थयावस्थां प्राप्तोऽस्म्यज्ञ इवाध्वगः ।
169294 धावञ्छ्रमार्तिरम्ब्वर्थी व्यर्थया मृगतृष्णया ॥ १४ ॥
169295
169296 तामवस्थामनुशोचति - इमामित्यादिना । श्रमप्रयुक्ता आर्तिर्यस्य
169297 तथाविधोऽध्वगः पुरुषोऽम्ब्वर्थी सन् व्यर्थया मृगतृष्णयेव भोगास्थया
169298 अहमिमामवस्थां प्राप्तोऽस्मि ॥ १४ ॥
169299
169300 कष्टं दृश्योपलम्भेन भ्रान्तिमात्रात्मना सता ।
169301 बालो वेतालकेनेव प्राज्ञोऽपि च्छलितो ह्यहो ॥ १५ ॥
169302
169303 अहो नु चित्रमेतेन मिथ्या~जानेन वल्गता ।
169304 नीतः सर्वार्थशून्येन पदवीं काममिमामहम् ॥ १६ ॥
169305
169306 अथवा यः सोऽहमपि भ्रान्तिमात्रं न सन्मयः ।
169307 तथापि चित्रशतता यन्नामासद्विडम्ब्यते ॥ १७ ॥
169308
169309 अथवा यः सोऽहमिति प्रत्यभिज्ञाविषयस्तत्ताहंतादिः सोपि भ्रान्तिमात्रम् । तथा च
169310 कस्य चित्रमिति नो वाच्यम् । तथापि यत्साक्षिणा असद्रूपं विडम्ब्यते तत्र चित्रशतता
169311 अस्त्येवेत्यर्थः ॥ १७ ॥
169312

169313 नाहमस्मि [नायमस्मीत्यपि पाठः |] न चैवेयमिदं नायमपि भ्रमः
169314 |
169315 चित्रं सर्वमिदं मिथ्या सर्वं च सदिव स्थितम् || १८ ||
169316
169317 किमिदानीं मया कार्यमिह बन्धभिदान्तरः |
169318 विद्यते मेऽङ्कुरश्छेद्यं तत्तावत्संत्यजाम्यहम् || १९ ||
169319
169320 बन्धंन् भिनत्तीति बन्धभित् आन्तरो यो ब्रह्माकारवृत्तिविशेषः सोऽङ्कुरो विद्यते
169321 तदपि छेद्यमेवेति तत्तावत्संत्यजामि || १९ ||
169322
169323 आस्तामेतदविद्यैषा व्यर्थरूपा किमेतया |
169324 भ्रान्त्या भ्रान्तिरसद्रूपा त्यक्तैवैषा मयाधुना || २० ||
169325
169326 जगद्भ्रान्तिस्तु अविद्यात्वाद्विद्यावृत्त्यैवोच्छिन्नैवेति न सेदानीं त्याज्येत्याह -
169327 आस्तामिति || २० ||
169328
169329 उपदेष्टा मुनिरयमेषोऽत्र भ्रान्तिमात्रकम् |
169330 ब्रह्मैवाहमिवाभाति रूपमेतद्दिवाभ्रवत् || २१ ||
169331
169332 अयमुपदेष्टा मुनिरपि अहं शिष्य इव ब्रह्मैव तथा आभातीति न
169333 त्यक्तव्यान्तरमस्तीत्यर्थः | दिवा वा दृष्टाभ्रपुरुषवत् || २१ ||
169334
169335 तदेवं तावदुदितज्ञानं वक्ष्ये महामुनिम् |
169336 इति संचिन्त्य स मुनिस्तत्र प्रोक्त इदं मया || २२ ||
169337
169338 उदितं ज्ञानंन् यस्मात्तं गुरुं महामुनिं एवं वक्ष्यमाणं स्वाभिप्रायं
169339 ज्ञानं वक्ष्ये || २२ ||
169340
169341 मुनिनायक गच्छामि गच्छरीरमिदं निजम् |
169342 द्रष्टुं यच्च प्रवृत्तोऽस्मि शरीरं तदपीक्षितुम् || २३ ||
169343
169344 तत् आश्रमस्थं निजं मुनिशरीरं यच्चेदं प्राणिशरीरं द्रष्टुं प्रवृत्तोऽस्मि
169345 तदपि ईक्षितुं बहिर्गच्छामीत्यर्थः || २३ ||
169346
169347 इत्याकर्ण्य स मामाह हसन्मुनिवरस्तदा |
169348 कुतस्तौ भवतो देहौ तौ सुदूरतरं गतौ || २४ ||
169349
169350 तौ देहौ कुतो भवतः स्तः | यतस्तौ दाहेन भस्मीभावात्सुदूरतरं गताविति भावः ||
169351 २४ ||
169352
169353 गच्छात्मनैव वा पश्य वृत्तान्तं वृत्तकोविद |
169354 पश्य तावद्यथावृत्तं दृष्टान्तं ज्ञास्यसि स्वयम् || २५ ||
169355
169356 आत्मना स्वयमेव गत्वा तद्वृत्तान्तं पश्य वा || २५ ||
169357
169358 इति संचिन्त्य तं देहं विदं भूसत्तयाश्मिकम् |
169359 त्यक्त्वा चिदात्मा तत्प्राणात्पवने योजितो मया || २६ ||
169360
169361 इति तेनोक्ते सतीति शेषः | अहं तं प्राक्तनं देहं संचिन्त्य तत्र गन्तुकामेन मया
169362 स्वसंविदं स्वाप्नभूसत्तया आस्मिकं पार्थिवशरीरमेवाहमस्मीति कल्पितं रूपं
169363 त्यक्त्वा प्राणोपहितचिदात्मा स्वजीवस्तत्प्राणात् द्वारभूतात्पवनस्कन्धे योजितः || २६ ||
169364

169365 प्राक्तनं देहमालोक्य यावदायाम्यहं मुने ।
169366 इहैव तावत्स्थातव्यमित्युक्त्वाहं गतोऽनिलम् ॥ २७ ॥
169367
169368 मुनिं प्रति किमुक्त्वा त्वमनिलं प्रविष्टस्तदाह - प्राक्तनमिति । गतः प्रविष्टः ॥
169369 २७ ॥
169370
169371 अथ वातरथारूढो गगनं भ्रान्तवानहम् ।
169372 पुष्पामोद इवानन्तं गत्वा च त्वरया चिरम् ॥ २८ ॥
169373
169374 ततश्चिरमपि भ्रान्त्वा यदा गलबिलं चलन् ।
169375 अहं न प्राप्तवांस्तस्य किंचिदस्याशयस्थितः ॥ २९ ॥
169376
169377 ततोऽहं चिरमपि भ्रान्त्वा बहिर्निर्गमनद्वारं तस्य प्राणिनो गलबिलं किंचिदन्यदपि
169378 द्वारं न प्राप्तवांस्तदा वाताशयस्थितोऽहं खेदमुपायात इति परेणान्वयः ॥ २९ ॥
169379
169380 तदा खेदमुपायातः परमं पुनरागतः ।
169381 इदमेव जगज्जालमहमालानमात्मनः ॥ ३० ॥
169382
169383 ततः परममिदमेवात्मन आलानं बन्धनस्तम्भभूतं स्वगृहं पुनरागतः
169384 सन्निह इममनुत्तमं मुनिं स्वगुरुमग्रे उपलब्धवानिति प्रेणान्वयः ॥ ३० ॥
169385
169386 इहेमं लब्धवानग्रे ततो मुनिमनुत्तमम् ।
169387 पृष्टवानहमेकाग्रस्तत एवमिदं गृहे ॥ ३१ ॥
169388
169389 इदं वक्ष्यमाणम् ॥ ३१ ॥
169390
169391 किमेतद्भगवन्ब्रूहि पूर्वापरविदांवर ।
169392 त्वं पश्यसि यथावृत्तमुत्तमज्ञानचक्षुषा ॥ ३२ ॥
169393
169394 यस्य देहं प्रविष्टोऽहं स च मद्वपुरेव च ।
169395 क्व तावुभौ गतौ देहौ न लब्धौ केन हेतुना ॥ ३३ ॥
169396
169397 स च प्राणी ॥ ३३ ॥
169398
169399 मयातिचिरमाभोगि भ्रान्तं संसारमन्डलम् ।
169400 स्थावरादाऽऽत्मनः कस्मात्प्राप्तं गलबिलं न तत् ॥ ३४ ॥
169401
169402 आ आत्मन इति च्छेदः । आ स्थावरादात्मन आभोगि विशालं संसारमण्डलं
169403 भ्रान्तमित्यन्वयः ॥ ३४ ॥
169404
169405 गत्वेति पृष्टः स मुनिः समुवाच महाशयः ।
169406 जानासि तत्स्वयं कस्मादिति तामरसेक्षण ॥ ३५ ॥
169407
169408 कुमिवाच तदाह - जानासीति । तत्पूर्वस्वशरीरादिवृत्तं मदुक्तोपायं विना
169409 स्वयं स्वबुद्ध्यैव कस्माज्जानासि । तामरसेक्षणेति
169410 संबोधनान्नाक्षिसौन्दर्यमात्रेण तद्द्रष्टुं शक्यमिति सूच्यते ॥ ३५ ॥
169411
169412 एतदालोकयसि चेत्स्वयं योगैकसंविदा ।
169413 तत्पश्यस्येव निःशेषं यथा करतलाम्बुजम् ॥ ३६ ॥
169414
169415 तर्हि तद्दर्शने क उपायस्तत्राह - एतदिति । योगैकाग्र्या संविदा आलोकयसि चेत्तत्तर्हि
169416 ज्ञानचक्षुषा एतन्निःशेषं समग्रं पश्यस्येव ॥ ३६ ॥

169417
169418 तथापि यदि शुश्रूषा तवास्ति वचसा मम |
169419 तदिदं शृणु वक्ष्यामि यथावृत्तमखण्डितम् || ३७ ||
169420
169421 यदि मद्वचनेनैव श्रोतुमिच्छा न द्रष्टुमिच्छा तर्हि यथावृत्तं वक्ष्यामि
169422 शृणु || ३७ ||
169423
169424 तपस्तामरसोष्णांशुः कल्याणकमलाकरः |
169425 ज्ञानाब्जस्य हरेर्नाभिर्नास्ति तावदयं भवान् || ३८ ||
169426
169427 तत्र स्वजीवतत्त्वं प्रथमं बुध्यस्व ततस्ते पूर्वदेहवृत्तान्तं कथयिष्यामीति
169428 मन्यमानो व्यष्टिजीवभावमिथ्यात्वं समष्टिभावस्यैव सत्यत्वं त्रीणि
169429 रूपाणीत्येव सत्यम् इति श्रुतिदर्शितन्यायमाश्रित्याह - तप इति | भवान् अयं
169430 त्वयानुभूयमानव्यष्टिजीवविशेषरूपो नास्ति | किंतु सर्वप्राणितपस्तामरसानां
169431 सुकृताब्जानां फलदानेन विकासनेनोष्णांशुः सूर्यभूतः सर्वकल्याणानां
169432 मानुषानन्दादिप्राजापत्यानन्दान्तानां सुखानां कमलाकर इव समष्टिभूतो
169433 हरेर्ज्ञानस्वरूपस्य नाभ्यब्जस्य नाभिः कर्णिका तदधिरूढसर्वजीवसमष्ट्यात्मा
169434 हिरण्यगर्भ एवासि || ३८ ||
169435
169436 स त्वं कदाचित्तपसि स्थितः स्वप्नदिदृक्षया |
169437 कस्यचिद्धृदयं जन्तोः प्रविष्टः पुष्टसंविदा || ३९ ||
169438
169439 तर्हि मम कथं व्यष्टिभावस्तत्रैते भ्रान्तिविशेषाश्चागतास्तत्राह - स त्वमिति |
169440 व्यष्टिभावस्वप्नदिदृक्षया तपसि मनोराज्यरूपे आलोचने स्थित आश्रमे तापसोऽभूः
169441 | तत्र पुष्ट्या व्यष्टिभावसंविदा परशरीरान्तःस्वप्नादिकौतुकदिदृक्षया
169442 कस्यचिज्जन्तोर्हृदयं प्रविष्टः || ३९ ||
169443
169444 यत्त्वं प्रविष्टो हृदयं तत्रेदं भुवनत्रयम् |
169445 दृष्टवानसि विस्तीर्णं रोदसी विपुलोदरम् || ४० ||
169446
169447 इति त्वयि चिरं व्यग्रे देहस्तस्य तथापि च |
169448 स संसुप्ताकृतिर्यत्र स्थितस्तत्र महावने || ४१ ||
169449
169450 इत्यनया रीत्या त्वयि चिरं परशरीरान्तर्गतस्वप्नदर्शनव्यग्रे सति तव देहस्तथा तत्र
169451 महावने सुप्ताकृतिस्त्वत्प्रविष्टः स प्राणी स्थितस्तस्य देहोऽपि च स युष्मदाश्रमो
169452 युष्मदाश्रमकुटीसहितस्तेनाग्निना दग्ध इति दशमश्लोकेनान्वयः || ४१ ||
169453
169454 लग्नोऽग्निर्धूमधूम्राभ्रसाम्बराम्बरडम्बरः |
169455 वलद्वलचलालातचक्रसूर्येन्दुमण्डलः [स्फुरद्वल इति पाठो
169456 व्याख्यानुकूलः |] || ४२ ||
169457
169458 तत्र महावने अग्निर्लग्नः | तमेवाग्निं वर्णयति - धूमधूम्राभ्रेत्यादिना |
169459 स्फुरद्भिर्बलाच्चलद्भिरलातचक्रैः संपादितानि सूर्यमण्डलानीन्दुमण्डलानि च
169460 येन || ४२ ||
169461
169462 दग्धाभ्रभस्मसंपूर्णधूमाभ्रासितकम्बलैः |
169463 आनीलाकाशदलपैरिव संछादिताम्बरः || ४३ ||
169464
169465 दग्धाभ्रेषु भस्मसंपूर्णैर्धूमाभ्रलक्षणैरसितकम्बलैरानीलान्याकाशदलानि
169466 दिश आवरणेन पान्ति तथाविधैः संछादिताम्बरः || ४३ ||
169467
169468 दरीगृहविनिष्क्रान्तसिंहनिर्ह्रादतर्जितैः |

169469 स्फुटैश्चटचटास्फोटैर्जडीकृतदिगन्तरः ॥ ४४ ॥
169470
169471 जडीकृतदिगन्तरो बधिरीकृतदिगन्तरालजः ॥ ४४ ॥
169472
169473 तालीतमालमालानां गतानामग्निवृक्षताम् ।
169474 पातैरुत्पातवह्न्यभ्रकवत्करकरैर्घनः ॥ ४५ ॥
169475
169476 सर्वतोऽग्निव्याप्त्या अग्निवृक्षतां गतानां तालीतमालमालानां पातैः
169477 स्फुटतामुत्पातवह्निवदुत्पाताभ्रवच्च कवतां ध्वनतां करकरैः कलकलैर्वनो
169478 निबिडितः ॥ ४५ ॥
169479
169480 दूरदेशगतैर्दृष्टस्थिरसौदामनीधिया ।
169481 द्रवत्कनकनिष्पन्दकुट्टिमं व्योम दर्शयन् ॥ ४६ ॥
169482
169483 व्योमद्रवत्कनकनिष्पन्दलिप्तं कुट्टिममिव कृत्वा प्रदर्शयन् ॥ ४६ ॥
169484
169485 कणैस्तारागणं कान्तैर्व्योम्नि द्विगुणतां नयन् ।
169486 वक्षःस्थबालवनितानयनानन्दनन्दनः ॥ ४७ ॥
169487
169488 कणैर्विस्फुलिङ्गैस्तारागणं द्विगुणतां नयंस्तैरेव कणैर्व्योम्नि वक्षस्थाया
169489 ज्वालालक्षणाया बालवनिताया नयनानन्दनैः कटाक्षैर्नन्दन आनन्दयन् ॥ ४७ ॥
169490
169491 ज्वालाधमधमाशब्दप्रध्मातगगनोदरः ।
169492 दरीगृहविनिष्क्रान्तभ्रान्तोन्निद्रवनेचरः ॥ ४८ ॥
169493
169494 अर्धदग्धद्रवत्सिंहमृगव्याधविहंगमः ।
169495 क्वथत्सरःसरित्स्रोतोरन्धितोग्रवनेचरः ॥ ४९ ॥
169496
169497 रन्धिताः पाचिता उग्रा वनेचरा व्याधव्याघ्रादयो जलचराश्च येन ॥ ४९ ॥
169498
169499 वलज्ज्वालाज्वलद्बालचमरीचारुचञ्चुरः ।
169500 दह्यमानवनप्राणिमेदोगन्धावृताम्बुदः ॥ ५० ॥
169501
169502 एन कल्पाग्निकल्पेन वल्गता वनवह्निना ।
169503 सयुष्मदाश्रमो दग्धः सर्पेणेव प्रसर्पता ॥ ५१ ॥
169504
169505 तेन वर्णितप्रकारेण वनवह्निना सयुष्मदाश्रमो युष्मदाश्रमसहितः स ते
169506 देहस्तस्य प्राणिनो देहश्च दग्धः ॥ ५१ ॥
169507
169508 व्याध उवाच ।
169509
169510 तत्र तस्याग्निदाहस्य हेतुः कः प्राकृतो मुने ।
169511 तद्वनं ते बटुवराः सर्वं नष्टं कथं सह ॥ ५२ ॥
169512
169513 को हेतुः प्राकृतः प्रसक्तः । ते बटुवरास्त्वत्प्रविष्टब्रह्मचार्यादिदेहाः । सह
169514 युगपत् सर्वं कथं नष्टम् ॥ ५२ ॥
169515
169516 मुनिरुवाच ।
169517
169518 संकल्पकमनस्पन्दः संकल्पादिक्षयोदये ।
169519 यथा हेतुर्निरास्पन्दोऽचिराद्धि त्रिजगत्तथा ॥ ५३ ॥
169520

169521 संकल्पादिक्षयोदये यथा संकल्पकपुरुषमनःस्पन्दो हेतुस्तथा
169522 त्रिजगत्संकल्पकस्य विधातुरचिरात्प्रवृत्तो मनःस्पन्द एव त्रिजगदिति तत्क्षयोदयेऽपि
169523 तथा तन्मनःस्पन्द एष हेतुरित्यर्थः ‖ ५३ ‖
169524
169525 हृदये च वनान्ते च क्षोभाक्षोभेषु कारणम् ।
169526 यथा स्पन्दोऽचिरात्स्पन्दस्तथा त्रिजगतामिह ‖ ५४ ‖
169527
169528 यथा हृदये भयादिना क्षोभाक्षोमेषु अचिरात्स्पन्दो हेतुस्तथा त्रिजगतां वनान्ते च
169529 क्षोभाक्षोभेषु स एव हेतुरित्यर्थः ‖ ५४ ‖
169530
169531 धातुः संकल्पनगरं जगत्तत्स्पन्दनं त्विह ।
169532 प्रजोदयक्षयक्षोभवर्षावर्षादिकारणम् ‖ ५५ ‖
169533
169534 ब्रह्मादिमानसोऽप्यस्य सोऽप्यन्यत्र चिदम्बरे ।
169535 इत्यपर्यवसानेयं शान्तैका चिन्नभोगतिः ‖ ५६ ‖
169536
169537 अस्य जगतो ब्रह्मादिमानसो मनःसमष्टिहेतुः सोऽप्यन्यत्रान्यमानसे चिदम्बरे
169538 कल्पितः सोऽप्यन्यत्र सोऽप्यन्यत्रेत्येषा मायाशबलस्य चिन्नभसो गतिः
169539 कल्पनापरम्परा अपर्यवसाना । अनवस्थितैवेत्यर्थः ‖ ५६ ‖
169540
169541 चितिनभसि चिन्नभःश्रीः कचतीति निरामया विदुषाम् ।
169542 मूर्खाणां तु यथैषा यादृग्वा तन्मयीह न सत् ‖ ५७ ‖
169543
169544 निष्कृष्टदर्शने तु चितिनभसि चिन्नभःश्रीरेव कचतीति निरामया विदुषां दृष्टिः ।
169545 मूर्खाणां त्वापातदर्शनरूपा एषा दृष्टिर्यादृग्वा भासते तन्मय्येव इह
169546 परमार्थे तु न सत् । अलीकैव सेत्यर्थः ‖ ५७ ‖
169547
169548 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मी० दे० मो० नि० उ० अ० वि० श० परमोपदेशो
169549 नाम पञ्चाशदधिकशततमः सर्गः ‖ १५० ‖
169550
169551 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
169552 परमोपदेशो नाम पञ्चाशदधिकशततमः सर्गः ‖ १५० ‖
169553
169554
169555 एकपञ्चाशदधिकशततमः सर्गः १५१
169556
169557 अन्यमुनिरुवाच ।
169558
169559 तत्र ते नगरं तानि गृहाणि तरवश्च ते ।
169560 क्षिप्रेण शुष्कतृणवत्सर्वं भस्मत्वमागतम् ‖ १ ‖
169561
169562 दग्धाश्रमतनोर्वह्नेः प्रशमो भस्मनोऽनिलैः ।
169563 वर्ण्यतेऽयं नयस्तस्मात्स्वप्ने जागरितस्थितिः ‖ १ ‖
169564
169565 न केवलमाश्रमादिकमेव किंतु नगरादि सर्वं भस्मत्वमागतम् ‖ १ ‖
169566
169567 तत्रैवं भस्मतां प्राप्ते सुप्ते ते भवतस्तव ।
169568 तनू तथातिसंतापविदारितमहाशिले ‖ २ ‖
169569
169570 तथा अतिसंतापविदारितमहाशिवे तत्राश्रमे भवतो वर्तमानस्य तव सुप्ते ते द्वे तनू
169571 शरीरे एवमुक्तप्रकारेण भस्मतां प्राप्ते इत्यन्वयः ‖ २ ‖
169572

169573 स शशाम शनैर्वह्निर्निःशेषीकृतकाननः ।
169574 परिपीतार्णवोऽगस्त्य इवास्तं समुपाययौ ॥ ३ ॥
169575
169576 परिपीतार्णवोऽगस्त्य इव आदावङ्गारमात्रशेषेण शशाम । ततोऽस्तमदर्शनं
169577 समाययौ ॥ ३ ॥
169578
169579 तस्मिन्नस्तं गते वह्नौ तद्भस्मेद्धं सुशीतलम् ।
169580 दुधाव कणशो वायुरशेषं पुष्पराशिवत् ॥ ४ ॥
169581
169582 आदौ इद्धं पश्चात्सुशीतलम् । वायुर्दुधाव व्यधूनयत् ॥ ४ ॥
169583
169584 ततो न ज्ञायते नासीत्क्वाश्रमः क्व तनू तथा ।
169585 क्व पेटकं बहूनां तत्स्वप्नपूर्जाग्रतो यथा ॥ ५ ॥
169586
169587 बहूनां जनानां पेटकं करण्डभूतं तन्नगरम् ॥ ५ ॥
169588
169589 अभावमुपयाते ते यदैवं भवतस्तनू ।
169590 स्वपतस्ते भ्रमवतः संविदेव विजृम्भते ॥ ६ ॥
169591
169592 तस्मात्क्व तद्गलबिलं विराडात्मा स च क्व ते ।
169593 दग्धो दग्धस्य सौजस्कः सौजस्कस्यैव देहकः ॥ ७ ॥
169594
169595 देहदाहेऽपि तदोजः परिशेषमाशङ्क्याह - सौजस्क इति । ओजःसहितस्यैव तस्य
169596 सुप्तस्य सौजस्क एव देहको दग्धः ॥ ७ ॥
169597
169598 लब्धवानसि नो तस्माद्धेतोर्देहद्वयं मुने ।
169599 अनन्ते स्वप्नसंसारजाग्रतीहावतिष्ठसे ॥ ८ ॥
169600
169601 स्वप्नसंसारात्मके जाग्रत्यवतिष्ठसे ॥ ८ ॥
169602
169603 तदेवं स्वप्न एवायं जाग्रद्भावमुपागतः ।
169604 सर्वे वयमिह स्वप्नपुरुषास्तव सुव्रत ॥ ९ ॥
169605
169606 तथा च जाग्रत्स्वप्नयोर्भेदो नास्तीति यत्प्रागुक्तं तदिदं दर्शितमित्याशयेनाह -
169607 तदेवमिति ॥ ९ ॥
169608
169609 अस्माकं त्वं स्वप्नरस्तव स्वप्ननरा वयम् ।
169610 अयमेव चिदाकाशः सर्वदात्मात्मनि स्थितः ॥ १० ॥
169611
169612 सर्वदा अवस्थात्रयेऽप्यात्मनि अद्वयस्वस्वभावे ॥ १० ॥
169613
169614 ततः प्रभृति संपन्नो भवान्स्वप्ननरो भवन् ।
169615 जाग्रत्प्रत्ययवाञ्जाग्रन्नरो गार्हस्थ्यसुस्थितः ॥ ११ ॥
169616
169617 प्राक् स्वप्ननरो भवन्नपि भवांस्ततः प्रभृति जाग्रन्नरः संपन्नो गार्हस्थ्ये
169618 सुसंस्थितः ॥ ११ ॥
169619
169620 एतत्ते कथितं सर्वं यथावृत्तमशेषः ।
169621 अनुभूतं सुदृश्यं च ध्यानेनैतच्च पश्यसि ॥ १२ ॥
169622
169623 संदेहे त्वमपि ध्यानेन एतन्मदुक्तं सर्वं पश्यसि द्रक्ष्यसि । वर्तमानसामीप्ये
169624 वर्तमानवत् ॥ १२ ॥

इत्यादिमध्यरहितोऽयमनन्तरूपः संविद्घनः कचति काञ्चनतापवत्खे।
तत्काललोलवपुरात्मनि चिन्मयात्मा सर्गात्मभिर्विकसितैरसितैः सितैश्च॥ १३॥

खे काञ्चनमयस्ताप आतपस्तद्वत् यः कचति तत्कालः स्वकचनशक्त्युत्कालस्तेन
लोलवपुः संश्चिन्मयात्मा आत्मनि दुष्कर्मफलभूतैरसितैः सत्कर्मफलभूतैः
सितैश्चान्मिश्रकर्मफलभूतैर्मिश्रैश्च विकसितैः सर्गात्मभिर्भावैः संविद्घन
एव कचति नान्य इत्यर्थः॥ १३॥

इत्यार्षे श्रीवासिष्ठ० वाल्मी० दे० मो० नि० उ० अवि० वि० श० अभावदर्शनं
नामैकपञ्चाशदधिकशततमः सर्गः॥ १५१॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे
उत्तरार्धेऽभावदर्शनं नामैकपञ्चाशदधिकशततमः सर्गः॥ १५१॥

द्विपञ्चाशदधिकशततमः सर्गः १५२

मुनिरुवाच।

इत्युक्त्वा स मुनिस्तत्र तूष्णीं स्वशयने निशि।
आसीद्विस्मयतश्चाहमथाशं प्रोह्यमानवत्॥ १॥

स्वप्नार्थसत्यताशङ्कां निवार्यान्यमुनिर्मुनेः।
इह व्याधगुरुत्वस्य हेतूक्तिमुपचक्रमे॥

अथ अहं वात्ययाप्रोह्यमानवदासम्॥ १॥

ततश्चिरेण कालेन मयोक्तं तस्य सन्मुने।
एवं स्वप्नो विभो सर्वः सद्रूप इति मे मतिः॥ २॥

सद्रूपो यथार्थः मे मतिरित्युक्त्या असंभावनया विस्मयो द्योतितः॥ २॥

अन्यमुनिरुवाच।

सत्संभवति यत्रान्यत्तत्रेदं सदिति स्मयः।
युक्तो यत्र त्वेतदेव सत्ताल्पं तत्र का प्रमा॥ ३॥

यत्र यदि अन्यज्जाग्रद्वस्तु सत् संभवति संभवेत् तत्र तर्हि इदं स्वप्नादि सदिति स्मयो
विस्मयो युक्तः स्यात्। यत्र तु एतज्जाग्रद्दृश्यमेव सत्तया अल्पं सत्ताल्पं
मिथ्याभूतं तत्र स्वप्ने सत्यतायाः का प्रमा। सुतरां मिथ्यात्वमेवेत्यर्थः॥ ३॥

यथा स्वप्नस्तथैवायमादौ सर्गोऽवभासते।
पृथ्व्यादिरहितोऽप्येष पृथ्व्यादिभिरवस्थितः॥ ४॥

इत्थमद्यतनात्स्वप्नात्सर्गस्वप्नोऽमलात्मकः।
शृणु पुष्करपत्रक्ष मुने व्याध महागुरो॥ ५॥

इत्थं परिदृश्यमानादद्यतनादस्मदीयस्वप्नादपि जाग्रत्त्वेन प्रसिद्धः
सर्गस्वप्नः अमलचैतन्यमात्रात्मकः। इयत्यपि सत्ता तस्य दुर्लभेत्यर्थः। हे व्याध
महागुरो हे पुष्करपत्राक्ष मुने अत्रोपपत्तिं शृणु। त्वदपेक्षयापि
मन्दमतेर्व्याधस्य बोधनकाले त्वया उपपादनश्रमो ज्ञास्यते इति द्योतनाय तथा
संबोधनम्। पुष्करपत्राक्षेति संबोधनतात्पर्यं प्रागुक्तमेव॥ ५॥

169677
169678 अद्य दृष्टपदार्थाभ्यां स्वप्नं स्वप्नवतोऽभवत् |
169679 सर्गस्वप्नस्तु दृष्टार्थ एवादौ खे विराजते || ६ ||
169680
169681 वक्तुं प्रतिज्ञातामुपपत्तिमाह - अद्येति | अय जाग्रति दृष्टाभ्यां
169682 पदतदर्थाभ्यां बुद्धौ स्वसंस्काराधानात्स्वप्नवतस्तव रात्रौ स्वप्ने
169683 शब्दोऽर्थश्चाभवदिति संस्कारादिसामग्रीसत्त्वात्सत्यः संभाव्येतापि |
169684 सृष्ट्यादिकाले प्रसिद्धः सर्गस्वप्नस्तु प्राग्दृष्टः अर्थो यस्य तथाविध एव खे
169685 चिदाकाशे विराजते | तत्र च चिरप्रलयकालेन व्यवधाने
169686 पूर्वानुभवसंस्कारादेरुच्छिन्नत्वादद्यतनस्वप्नापेक्षयापि तुच्छ एव
169687 संभाव्यते न समसत्ताकोऽपीत्युपपत्तिरित्यर्थः || ६ ||
169688
169689 एवं सत्स्वप्न इत्येव संदिग्धमिव वक्षि किम् |
169690 स्फुटमप्यनुभूतं सत्स्वप्नध्यानोद्यमः कथम् || ७ ||
169691
169692 एवं जाग्रत्प्रपञ्चस्याधिकमिथ्यात्वे सति स्वप्नो विभो सर्वः सद्रूप इति मे मतिः इति
169693 मतिपदेन संदिग्धमिव सूचयन् किं वक्षि | स्फुटमप्यनुभूतं सदिदं
169694 स्वगृहं मदुपदेशाद्यनुभूय पुनः स्वप्नध्याने तवोद्यमः कथं जातः | न
169695 हि स्वप्नदर्शी कश्चित्स्वप्नोऽयं मिथ्येति तदानीं पश्यतीति भावः || ७ ||
169696
169697 इदमित्थं यदाभोगि स्फुटं स्वप्नजगन्मुने |
169698 सदेवानुभवत्येव तत्र संदिग्धता कथम् || ८ ||
169699
169700 किं च सदेव जगदनुभवतस्ते असत्त्वसंदेहे बीजमपि नास्तीत्याह - इदमिति || ८ ||
169701
169702 अथैवंवादिनस्तस्य वाक्यमाक्षिप्तवानहम् |
169703 पृष्टवान्व्याधगुरुता कासौ मे कथ्यतामिति || ९ ||
169704
169705 आक्षिप्तवान् प्रश्नान्तरकरणेन निरुद्धवान् || ९ ||
169706
169707 अन्यमुनिरुवाच |
169708
169709 श्रूयतामिदमाख्यानमपरं कथयामि ते |
169710 संक्षेपेण महाप्राज्ञ नास्त्यन्तो विस्तरस्य मे || १० ||
169711
169712 अस्म्यहं तावदादीर्घतपास्त्वमतिधार्मिकः |
169713 श्रुत्वेदं मद्वचः सत्यमिहैव रतिमेष्यसि || ११ ||
169714
169715 अहं यावत्त्वं व्याधगुरुर्भविता तावदिहैवास्मि | हे मुनिनायक त्वमपि इदं
169716 मद्वचः श्रुत्वा इहैव त्वद्गृहे रतिमेष्यसि || ११ ||
169717
169718 इहस्थं मामिमं त्वं च न त्यक्ष्यसि सपर्यया |
169719 अहं भवद्भिः सहितो निवत्स्यामीति निश्चयः || १२ ||
169720
169721 इहस्थं मां च त्वं न त्यक्ष्यसि || १२१ ||
169722
169723 साधो यातेषु वर्षेषु ततः कतिपयेष्विह |
169724 सर्वबन्धुविनाशस्ते दुर्भिक्षेण भविष्यति || १३ ||
169725
169726 मत्तसीमान्तसामन्तविग्रहेण तदैव च |
169727 सर्वो गृहात्तनुप्राणिर्ग्रामकोऽयं विनङ्क्ष्यति || १४ ||
169728

169729 वैरवलादिना मत्तानां सीमान्तस्थानां सामन्तानां क्षुद्रभूपानां विग्रहेण
169730 परस्परयुद्धप्रसङ्गेन तनवोऽल्पीभूताः प्राणिनो यत्र तथाविधः सन्नयं
169731 ग्रामको गृहाद्विनङ्क्ष्यति पलायिष्यति ॥ १४ ॥
169732
169733 ततो दुःखमजानन्तौ चिरमाश्वसितौ मिथः ।
169734 शान्तौ विदितवेद्यत्वात्समौ सर्वार्थनिस्पृहौ ॥ १५ ॥
169735
169736 तदा आवां किं करिष्यावस्तदाह - तत इति द्वाभ्याम् ॥ १५ ॥
169737
169738 इहैवैकत्र कस्मिंश्चित्तरुखण्डकजालके ।
169739 समाचारौ निवत्स्यावः शून्ये चन्द्ररवी यथा ॥ १६ ॥
169740
169741 उत्पत्स्यते त्वरण्येऽस्मिन्काले‍न वनमुत्तमम् ।
169742 शालताललताजालवलिताखिलभूतलम् ॥ १७ ॥
169743
169744 अस्मन्निवासादरण्ये उत्तमं वनं वृक्षनिकुरम्बमुत्पत्स्यते । उत्तमत्वमेव
169745 प्रपञ्चयति - शालेत्यादिसार्धेन ॥ १७ ॥
169746
169747 तालीतमालदलताण्डवमण्डिताशं व्याकोशपद्मवनवन्द्यविकासिवृक्षम् ।
169748 कूजच्चकोरचयचारुलतानिकुञ्जमुद्भासि नन्दनमिवागतमन्तरिक्षात् ॥ १८ ॥
169749
169750 व्याकोशैः पद्मवनैरधश्चरणाश्रयणाद्वन्द्या वन्द्यमाना इव पुष्पैर्विकासिनो
169751 वृक्षा यत्र । अन्तरिक्षात्स्वर्गादागतं नन्दनमिव स्थास्नु वनमुत्पत्स्यत इति
169752 पूर्वत्रान्वयः ॥ १८ ॥
169753
169754 इत्यार्षे श्रीवासिष्ठमहा० वा० दे० मो० नि० उ० अ० वि० श० मुनिरात्रिसंकथावर्णनं
169755 नाम द्विपञ्चाशदधिकशततमः सर्गः ॥ १५२ ॥
169756
169757 इति मुनिरात्रिस।कथावर्णनं नाम द्विपञ्चाशदधिकशततमः सर्गः ॥ १५२ ॥
169758
169759
169760 त्रिपञ्चाशदधिकशततमः सर्गः १५३
169761
169762 अन्यमुनिरुवाच ।
169763
169764 आवयोश्चरतोस्तस्मिन्वने चिरतरं तपः ।
169765 मृगानुसरणश्रान्तो मृगव्याध उपैष्यति ॥ १ ॥
169766
169767 इह व्याधागमादयुक्त्या तद्गुरुत्वसमर्थनम् ।
169768 काले विवेकाद्विज्ञानं सर्वैकात्म्यं च वर्ण्यते ॥
169769
169770 तस्मिन् वर्णितगुणे वने ॥ १ ॥
169771
169772 तं त्वं स्वभावपुण्याभिः कथाभिर्बोधयिष्यसि ।
169773 तपस्तत्रैव विपिने स विरक्तश्चरिष्यति ॥ २ ॥
169774
169775 ततस्तपस्विचर्याणामात्मज्ञानबुभुत्सया ।
169776 मध्ये स स्वप्नजिज्ञासुः प्रक्ष्यति स्वप्नसंकथाम् ॥ ३ ॥
169777
169778 तपस्विचर्याणामभ्यासाच्छान्तिदान्त्यादिसाधनसंपत्त्यनन्तरं स व्याध
169779 आत्मज्ञानबुभुत्सया मध्ये तदुपोद्घाततया स्वप्नजिज्ञासुः सन् स्वप्नसंकथां
169780 प्रक्ष्यति ॥ ३ ॥

169781
169782 कथयिष्यसि तस्मै त्वमात्मज्ञानमखण्डितम् |
169783 स्वप्नाख्येन प्रसङ्गेन सोऽतो योग्यो भविष्यति || ४ ||
169784
169785 ततस्त्वं स्वप्नाख्येन प्रसङ्गेन आत्मज्ञानं कथयिष्यसि || ४ ||
169786
169787 इत्यनेन प्रकारेण गुरुस्तस्य भविष्यसि |
169788 तेन तात मयोक्तोऽसि गिरा व्याधगुरो इति || ५ ||
169789
169790 तेन हेतुना || ५ ||
169791
169792 इति ते सर्वमाख्यातं यथायं संसृतिभ्रमः |
169793 यथाहं यादृशश्च त्वमिह यत्ते भविष्यति || ६ ||
169794
169795 पृष्टस्योत्तरं समाप्य प्राक्तनमुपसंहरति - इतीति || ६ ||
169796
169797 इति तेनाहमुक्तः सन्विस्मयाकुलया धिया |
169798 तेन सार्धं विमृश्यैतत्परं विस्मयमागतः || ७ ||
169799
169800 एतत् दृश्यजातम् || ७ ||
169801
169802 अथ रात्र्यां व्यतीतायां स प्रभाते महामुनिः |
169803 तथा संपूजितो येन तत्रैव रतिमाप्तवान् || ८ ||
169804
169805 रतिं प्रीतिम् || ८ ||
169806
169807 अनन्तरं गृहे तस्मिंस्तस्मिन्ग्रामगृहे तथा |
169808 स्थितावावां स्थिरमती कृतभावौ परस्परम् || ९ ||
169809
169810 तस्मिन्वनस्थे गृहे तथा तस्मिन्प्राक्तने ग्रामगृहे च | कृतभावौ बद्धप्रीती || ९ ||
169811
169812 ततो वहति कालोऽयमृतुसंवत्सरात्मकः |
169813 स्थितोऽहमागतान्भावांस्त्यजन्गृह्णन्गिरिर्यथा || १० ||
169814
169815 भावान् अनिष्टेष्टमिश्रान् | गिरिपक्षे दवाग्निवृष्ट्यादीन् || १० ||
169816
169817 नाभिवाञ्छामि मरणं नाभिवाञ्छामि जीवितम् |
169818 यथा स्थितोऽस्मि तिष्ठामि तथैव विगतज्वरम् || ११ ||
169819
169820 ततो विचारितं तत्र तन्मया दृश्यमण्डलम् |
169821 किं कारणमिदं तु स्यात्किमयं वेत्ति चेतसा || १२ ||
169822
169823 कोऽयं पदार्थसंघातः किं नामैतस्य कारणम् |
169824 अस्त्यस्मिन्स्वप्नसंदर्शे चिद्व्योमैकस्वरूपिणि || १३ ||
169825
169826 एतस्य कारणं निमित्तं किमस्ति || १३ ||
169827
169828 द्यौः क्षमा वायुराकाशं पर्वताः सरितो दिशः |
169829 चिन्मात्रनभ एवैते कचन्त्यात्मन्यवस्थितम् || १४ ||
169830
169831 आत्मनी चिदेकघनस्वभावे अवस्थितं चिन्मातनभ एव ||१४ ||
169832

169833 चिच्चन्द्रिकाचतुर्दिक्कमवभासं तनोति यत्।
169834 तदिदं जगदाभाति चित्रमप्रतिघात्म खे॥ १५॥
169835
169836 खे चिदाकाशे अप्रतिघात्म स्थौल्याभावात्प्रतिघाताऽयोग्यस्वभावम्॥ १५॥
169837
169838 नेमेऽद्रयो न चेयं भूर्नेदं खं नायमप्यहम्।
169839 चिन्मात्रव्योमकचनमिदमाभाति केवलम्॥ १६॥
169840
169841 नन्वद्र्यादयः सप्रतिघाः कथमप्रतिघाः स्युस्तत्राह - नेम इति॥ १६॥
169842
169843 पदार्थजातस्यास्य स्यात्किं नाम बत कारणम्।
169844 पिण्डग्रहे हेतुना तु विना कोऽप्यर्थसंभवः॥ १७॥
169845
169846 यदा चिन्मात्रकचनं तर्हि कारणमेव नास्ति पिण्डग्रहतद्धेत्वोरप्रसिद्धेरित्याह ##-
169847
169848 भ्रान्तिमात्रमिदं चेत्स्यादभ्रान्तेः किं नाम कारणम्।
169849 द्रष्टा मन्ता च को भ्रान्तेः कारणं वा क्व कीदृशम्॥ १८॥
169850
169851 तर्हि भ्रान्तिरेवेयमस्त्वित्याशङ्क्य तत्रापि निमित्तद्रष्ट्रादि दुर्वचमित्याह -
169852 भ्रान्तीति॥ १८॥
169853
169854 यस्याहमवसं संविन्मात्रकं हृदयौजसि।
169855 असौ मया सह गतः किलाशेषेण भस्मसात्॥ १९॥
169856
169857 संविन्मात्रकमहं यस्य देहे प्रविष्टः सन् हृदयौजस्यवसम् असौ प्राणी मया
169858 मद्देहेन सह भस्मसाद्गतः॥ १९॥
169859
169860 तस्मादिदमनाद्यन्तं चिदाभामात्रमम्बरम्।
169861 अकर्तृकर्मकरणं रूपं चिद्घनमक्रमम्॥ २०॥
169862
169863 तस्मात्तद्देहमद्देहादीनामसत्त्वादिदं सर्वं चिदाभामात्रमम्बरमेव॥ २०॥
169864
169865 इदं चिद्व्योमकचनं घटावटपटादिकम्।
169866 स्फुटं कुत इवाकारि घटावटपटाद्यतः॥ २१॥
169867
169868 घटावटपटाद्यत आकारतो भवितुं स्फुटं रूपं कुत इव अकारि। न
169869 कुतश्चिदित्यर्थः॥ २१॥
169870
169871 नापि चिन्मात्रकचनं चिन्मात्रं व्योम केवलम्।
169872 तस्य किं कचनं कीदृक् कथं कचति किं नभः॥ २२॥
169873
169874 चिन्मात्रकचनमिति बुद्धिरपि राहोः शिर इतिवद्विकल्पमात्रम्।
169875 षष्ठीतत्पुरुषप्रयोजकयोर्भेदसंबन्धयोरप्रसिद्धेरित्याशयेनाह - नापीति॥ २२
169876 ।।
169877
169878 अयं फेनश्चिदम्भोधेः किमस्य कचनं नवम्।
169879 कचत्स्वभाव एवायमनन्तश्चिद्घनः स्थितः॥ २३॥
169880
169881 फेन इव फेनः॥ २३॥
169882
169883 चिन्मात्रकचनं शुद्धं ब्रह्म बृंहितचिद्घनम्।
169884 इदं जगदिवाभाति क्व दृश्यं द्रष्टृता कुतः॥ २४॥

169885
169886 सदैव बृंहितचिद्घनं ब्रह्म ॥ २४ ॥
169887
169888 आद्यन्तवर्जितममेयमनादिमध्यमेकं विभुं [विभुमिति पुंस्त्वमार्षम्
169889 ॥] विगतकारणकार्यसत्त्वम् ।
169890 सत्तामयं भुवनशैलदिगन्तनानाऽनानात्मकं किमपि चेतनमेव सर्वम् ॥ २५ ॥
169891
169892 कालत आद्यन्तवर्जितं देशतोऽप्यनादिमध्यं वस्तुत एकमत एव विगतकारणं
169893 विगतकार्यं विगततदधीनसत्त्वकं च स्वतःसत्ताप्रधानं स्वसत्तयैव
169894 भुवनादिसत्तानिर्वाहकत्वान्नानाऽनानात्मकमिव किमपि वाङ्मनसागोचरं
169895 यच्चेतनं तदेव सर्वं न तद्व्यतिरिक्तमणुमात्रमप्यस्तीत्यर्थः ॥ २५ ॥
169896
169897 इति श्रीवासिष्ठ० वा० दे० मो० निर्वा० उ० अवि० श० सर्वैकात्म्यप्रतिपादनं नाम
169898 त्रिपञ्चाशदधिकशततमः सर्गः ॥ १५३ ॥
169899
169900 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
169901 सर्वैकात्म्यप्रतिपादनं नाम त्रिपञ्चाशदधिकशततमः सर्गः ॥ १५३ ॥
169902
169903
169904 चतुःपञ्चाशदधिकशततमः सर्गः १५४
169905
169906 मुनिरुवाच ।
169907
169908 इति निर्णीय दृश्येऽस्मिन्स्थितोऽस्मि विगतज्वरः ।
169909 अवीतरागो निराशङ्को निर्वाणो निरहंकृतिः ॥ १ ॥
169910
169911 विचारजा निजा जीवन्मुक्तस्थितिरिहोदिता ।
169912 मुनिनाभ्यासहीनस्य व्याधस्य त्वनवस्थितिः ॥
169913
169914 स्वकृतविचारफलं स्वजीवन्मुक्तिस्थितिं मुनिः प्रपञ्चयति - इतीत्यादिना ॥ १ ॥
169915
169916 निराधारो निराधेयो निर्मानो निरुपाश्रयः ।
169917 स्वभावस्थः स्वयं शान्तः सर्गात्मा सर्वथोदितः ॥ २ ॥
169918
169919 निर्मानो विगताभिमानः ॥ २ ॥
169920
169921 यथाप्राप्तस्य कर्तास्मि न कर्तास्मि कदाचन ।
169922 स्वयमेव हि यो व्योम कर्तृता तस्य कीदृशी ॥ ३ ॥
169923
169924 यः स्वयमेव व्योम निष्क्रियं तस्य ॥ ३ ॥
169925
169926 द्यौः क्षमा वायुराकाशं पर्वताः सरितो दिशः ।
169927 इत्येकात्म नभः सर्वं भूतजालैकचिद्वपुः ॥ ४ ॥
169928
169929 एकात्म सत् नभश्चिदाकाशमेव ॥ ४ ॥
169930
169931 शाम्यामि परिनिर्वामि सुखमासे च केवलम् ।
169932 न विधिप्रतिषेधौ मे न मे बाह्यं न मेऽन्तरम् ॥ ५ ॥
169933
169934 इति मे तिष्ठत इह यथासंस्थानसंस्थितेः ।
169935 अद्यायं त्वमनुप्राप्तः काकतालीयवत्पुरः ॥ ६ ॥
169936

169937 हे व्याध अयं त्वमद्यानुप्राप्तः ॥ ६ ॥
169938
169939 ईत् ते सर्वमाख्यातं यथा स्वप्नो यथा वयम् ।
169940 यथा जगद्यथा च त्वं यथा दृश्यमिदं तथा ॥ ७ ॥
169941
169942 एवमनुप्राप्ताय पृच्छते ते इति यथावर्णितप्रकारं सर्वम् । तदेव प्रपञ्चयति ##-
169943
169944 त्वं च यादृग्दृश्यमिदं यथा दृश्यमिदं पुरः ।
169945 यथा भावा यथा ब्रह्म यथेमा जनताः पुरः ॥ ८ ॥
169946
169947 त्वं द्रष्टा च यादृक् । इदं देहेन्द्रियाद्याध्यात्मिकमान्तरं दृश्यं यथा ।
169948 इदं पुरोदृश्यमाधिभौतिकं च दृश्यं यथा । तेषु च
169949 रागद्वेषहानोपादानादिभावा यथा ॥ ८ ॥
169950
169951 एतद्बुद्ध्वा भवाञ्छान्तो मिथ्या लुब्धक लुब्धक ।
169952 शान्तैवैवमियं सत्ता चिन्मात्रव्योमरूपिणी ॥ ९ ॥
169953
169954 हे लुब्धक लुब्धकेत्यादराद्द्विर्वचनम् । भवानेतत्सर्वं मिथ्या इति बुद्ध्वा शान्तो
169955 भवतु । यत इयमात्मसत्ता शान्तैव स्वयं न्निर्वाणा आभाति नाशान्ता ॥ ९ ॥
169956
169957 स्वयमाभाति निर्वाणा नैव वाभाति किंचन ।
169958
169959 लुब्धक उवाच ।
169960
169961 एवं चेत्तदहं त्वं च सर्वे वा विबुधादयः ॥ १० ॥
169962
169963 शान्तिस्वरूपमेव दर्शयति - नैवेति । आत्यन्तिकदृश्याभानमेव
169964 तच्छान्तिरित्यर्थः । स्फुटतरस्य नरदेवतिर्यक्स्थावरादेः
169965 स्वप्नप्रायत्वमसंभावितमिति काक्वा ध्वनयंल्लुब्धक आह - एवं चेदिति ॥ १० ॥
169966
169967 सर्व एव मिथः स्वप्नपुरुषाः सदसन्मयाः ।
169968
169969 मुनिरुवाच ।
169970
169971 एवमेतदिदं सर्वमन्योन्यं स्वप्नवत्स्थितम् ॥ ११ ॥
169972
169973 सन्त एवासन्मयाः स्युरिति शेषः । इष्टापत्त्या मुनिरुत्तरमाह - एवमेतदिति ॥ ११ ॥
169974
169975 अन्योन्यमात्मनि तथा सदसच्चानुभूयते ।
169976 दृश्यं येन यथा बुद्धं तथा तेनानुभूयते ॥ १२ ॥
169977
169978 आत्मनि सत् अन्येष्वसच्च । तथैव सर्वानुभवादित्यर्थः । बोधानुसारिव्यवस्थत्वादपि
169979 तत्तथेत्याह - दृश्यमिति ॥ १२ ॥
169980
169981 नानैकं वस्त्वतोऽनेकं न सन्नासन्न मध्यगम् ।
169982 जाग्रति स्वप्ननगरमिव वेदनमात्रकम् ॥ १३ ॥
169983
169984 यतो नानैकं वस्तु । यथैको घटो
169985 नानाकपालकपालिकातदवयवपरम्परापरमाण्वन्तनानावस्त्वात्मक
169986 एकत्वप्रतीतेरेकवस्त्वात्मकश्च । तत्र नानात्वदर्शिनामेकमसत् । एकत्वदर्शिनां
169987 नानात्वमसत् । उभयदर्शिनामुभयं सदसच्च पाक्षिकम् । तत्त्वविदां तु
169988 वेदनमात्रकमिति नैकमपीत्यनुभवसिद्धमिति भावः । मध्यगं सदसत् ॥ १३ ॥

अदृष्टपूर्वदूरस्थदृश्यमानपुरोपमम् ।
इति ते सर्वमाख्यातं बोधितोऽसि निरन्तरम् ॥ १४ ॥

स्वयं प्राज्ञोऽसि जानासि यथेच्छसि तथा कुरु ।
एवं प्रबोधितस्यापि तव व्याध मते मतिः ॥ १५ ॥

मते स्वामिमते जगत्सत्यत्वभ्रमे एव मतिर्विश्रान्ता परे पदे तु न विश्रान्तेति
परेणान्वयः ॥ १५ ॥

क्षणं प्रबोधविश्रान्ता न विश्रान्ता परे पदे ।
नाभ्यासेन विना बोध एष याति मनोहृदि ॥ १६ ॥

तत्कुतस्तत्राह - नेति । एष बोधोऽभ्यासेन परां परिणतिं विना मनोहृदिं
मनोन्तर्न याति न प्रविशति । यथा अम्बुधारणे कार्ये दारुणि परां
कमण्डल्वाद्याकारां कर्तनादिनिर्मितां परिणतिं विना तदन्तरम्बु न प्रविशति
तद्वदिति परेणान्वयः ॥ १६ ॥

परां परिणतिं प्राज्ञ दारुणीवाम्बुधारणे ।
अभ्यासाद्बोधविश्रान्तौ गुरुशास्त्रैकसेवनात् ।
द्वैताद्वैतदृशोः शान्त्या निर्वाणं चित्तमुच्यते ॥ १७ ॥

अभ्यासेन बोधस्यान्तर्विश्रान्तौ सिद्धायां तच्चित्तमेव निर्वाणमिति
तदनुभविमिरुच्यत इत्याह - अभ्यासादिति ॥ १७ ॥

निर्मानमोहा जितसङ्गदोषा अध्यात्मनित्या विनिवृत्तकामाः ।
द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञैर्गच्छन्त्यमूढाः पदमव्ययं तत् ॥
१८ ॥

उक्तेऽर्थे भगवद्वचनसंमतिं दर्शयति - निर्मनिति । अन्तर्निर्मानमोहाः ।
बहिर्जितसङ्गदोषाः । अन्तर्निर्मानमोहाः । बहिर्जितसङ्गदोषाः ।
अन्तर्बहिश्चाध्यात्मनित्याः । सर्वतः पूर्णानन्दात्मलाभाद्विनिवृत्तकामाः ।
सुखदुःखयोः सम्यग्ज्ञानं संज्ञा येभ्यस्तथाविधैः प्रियादिद्वन्द्वैर्विमुक्ता
अमूढास्तत्त्वविदस्तद्विष्णोः परमं पदं निर्वाणाख्यं गच्छन्ति ।
अनुभवन्तीत्यर्थः ॥ १८ ॥

इत्यार्षे श्रीवा० वा० दे० मो० निर्वा० उ० अवि० वि० श० यथाभूतार्थवर्णनं नाम
चतुःपञ्चाशदधिकशततमः सर्गः ॥ १५४ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
यथाभूतार्थवर्णनं नाम चतुःपञ्चाशदधिकशततमः सर्गः ॥ १५४ ॥

पञ्चपञ्चाशदधिकशततमः सर्गः १५५

अग्निरुवाच ।

इत्याकर्ण्याथ स व्याधस्तदा तस्मिन्वनान्तरे ।
आसीच्चित्रकृताकार इव विस्मयमन्थरः ॥ १ ॥

व्याधस्य मूढतपसा चिरक्लेशाद्विधेर्वरात् ।
नभोगतिः कार्यवृद्धिर्मृतिश्च मुनिनोच्यते ॥

170041
170042 चित्रकृत आकारः प्रतिमेव विस्मयेन मन्थरो जडीकृतः ॥ १ ॥
170043
170044 न विशश्राम चेतोऽस्य स्वाभ्यासेन विना पदे ।
170045 आसीदुद्भ्रान्त इव स प्रोह्यमान इवार्णवे ॥ २ ॥
170046
170047 न विशश्राम विश्रान्तिं न लेभे ॥ २ ॥
170048
170049 आरूढ इव वा चक्रे चक्रेण तपसा हृतः ।
170050 नक्रेणेव समाक्रान्तः पराक्रम विवर्जितः ॥ ३ ॥
170051
170052 केनचित्सिद्धेन तपसा स्वीयतपोबलेन चक्रेण चक्रवातेन हृत इव ॥ ३ ॥
170053
170054 किमेतत्स्यादुतान्यत्स्यान्निर्वाणमिति संशयात् ।
170055 नाध्यगच्छदसौ शान्तिं मूर्खो यौवनवानिव ॥ ४ ॥
170056
170057 अविद्याकृतमेवेदं दृश्यमित्येव चिन्तयन् ।
170058 अविद्या जगदित्येषा नायाति निपुणं हृदि ॥ ५ ॥
170059
170060 यत इदं जगदविद्यैवेत्यर्थो हृदि नायाति अत इदं जगदविद्याख्यया ब्रह्मशक्त्या
170061 कृतमुत्पादितं सत्यमेवेति चिन्तयन्सन् ॥ ५ ॥
170062
170063 कियदन्तमिदं दृश्यं स्यात्पश्याम्येतदादितः ।
170064 दूरतोर्ध्वप्रमाणेन तपोलब्धशरीरकः ॥ ६ ॥
170065
170066 इदं दृश्यं कियदन्तं कियद्दूरावधिकं स्यादेतत्तपोलब्धशरीरकः सन्नादितः
170067 पृथिवीमारभ्य दूरतया ऊर्ध्वप्रमाणेन देहेन गत्वा पश्यामि द्रक्ष्यामि ॥ ६ ॥
170068
170069 भावाभावात्मनो नित्यमस्यान्ते स्थीयते सुखम् ।
170070 तस्मादाकाशमप्यस्ति यत्र नो तत्र याम्यहम् ॥ ७ ॥
170071
170072 भावाभावात्मनोऽस्य दृश्यस्यान्ते असंसारप्रदेशे नित्यं सुखं स्थीयते स्थास्यते
170073 मया ॥ ७ ॥
170074
170075 इति निर्णीय हृदये मूर्ख एव बभूव सः ।
170076 गतं तादृशमप्युक्तं विनाभ्यासेन भस्मनि ॥ ८ ॥
170077
170078 तादृशमतिविस्तीर्णं सदृष्टान्तोपपत्तिकमपि मुन्युक्तमभ्यासेन विना भस्मनि
170079 हुतमिव वृथा गतमित्यर्थः ॥ ८ ॥
170080
170081 ततस्ततः प्रभृत्येव तेनैव मुनिभिः सह ।
170082 लुब्धकत्वं परित्यज्य तपश्चरितुमुद्यतः ॥ ९ ॥
170083
170084 तेनैव निर्णयेन ॥ ९ ॥
170085
170086 तस्मिञ्जगति तैर्भाविस्तैः समं निवसन्सदा ।
170087 बहून्यब्दसहस्राणि चकार सुमहत्तपः ॥ १० ॥
170088
170089 तैस्तपस्विषु प्रसिद्धैर्भाविर्लक्षणैः ॥ १० ॥
170090
170091 तपः कुर्वन्कदाचित्स पुनः पप्रच्छ तं मुनिम् ।
170092 कदा स्यादात्मविश्रान्तिर्ममेत्याह मुनिस्ततः ॥ ११ ॥

170093
170094 मम निरुपप्लवे आत्मनि विश्रान्तिः कदा स्यादिति पप्रच्छ। ततो मुनिस्तं प्रत्याह॥ ११॥
170095
170096 मुनिरुवाच।
170097
170098 ज्ञानं तदुपदिष्टं ते जीर्णदार्वल्पकाग्निवत्।
170099 संस्थितं हृदये किंतु दाह्यमाक्रम्य नोचितम्॥ १२॥
170100
170101 जीर्णदार्वल्पकाग्निवत् संस्थितमित्युक्त्या जन्मान्तरे उद्बोधमेष्यतीति सूचितम्।
170102 सांप्रतं दग्धुमुचितं दाह्यं दग्धुं शक्यमपि दृश्यानर्थमाक्रम्य न
170103 संस्थितम्॥ १२॥
170104
170105 नाभ्यासेन विना ज्ञाने शिवे विश्रान्तवानसि।
170106 अभ्यासेन तु कालेन भृशं विश्रान्तिमेष्यसि॥ १३॥
170107
170108 कालेन चिरेण॥ १३॥
170109
170110 भविष्यदिदमात्मीयमथाकर्णय निर्णयम्।
170111 मम वर्णयतः कर्णभूषणं भूतलाद्भुतम्॥ १४॥
170112
170113 भूतले केनापि मनसाप्यसंभावनादत्यद्भुतम्॥ १४॥
170114
170115 संस्तुतानवबुद्धात्मा ज्ञानसारतयानया।
170116 दोलायमानसंवित्त्वं न मूर्खो न च पण्डितः॥ १५॥
170117
170118 संस्तुतो ज्ञातुं प्रस्तुतः तया विद्वत्प्रसिद्धया ज्ञानसारतया अनवबुद्धश्चात्मा
170119 येन तथाविधोऽत एव दोलायमानसंवित्त्वम्। असमर्थसमासश्छान्दसः॥ १५॥
170120
170121 अविद्यारूपमाभोगि किंप्रमाणमिदं जगत्।
170122 स्यादित्यात्मविकल्पेन तपस्त्वं कर्तुमुद्यतः॥ १६॥
170123
170124 आत्मविकल्पेन स्वमनोरथकल्पनामात्रेण॥ १६॥
170125
170126 इत्थं तपस्त्वया घोरं कार्यं युगशतं पृथु।
170127 परमेष्ठी ततस्तुष्टस्त्वामुपैष्यति सामरः॥ १७॥
170128
170129 इत्थमनेनैव सांप्रतं क्रियमाणप्रकारेण। युगशतं व्याधस्य
170130 जीवनासंभवादर्थादनेकजन्मभिः॥ १७॥
170131
170132 मार्गयिष्यसि तस्य त्वं वरदस्य वरं वर [स्वजातिसिद्धहिंसादिपरित्यागेन
170133 तपःप्रवृत्तत्वाल्लुब्धकस्यैव वरेति संबोधनं।]।
170134 इदमुद्दामदौरात्म्यान्निजं [नपुंसकत्वमार्षं इदमिति वा पाठः।]
170135 संदेहसंशयम् [संदेहस्य अविद्यारूपमित्यादिनानुपदोक्तस्य सम्यक्
170136 शयः शयनं निवृत्तिरिति यावत्। स यस्मिन्निति संदेहसंशयस्तथाविधमिति
170137 वरविशेषणम्।]॥ १८॥
170138
170139 वरदस्य तस्य विधेः सन्निधौ उद्दामदौरात्म्यान्निजं मनोरथकल्पितं वरं
170140 मार्गयिष्यसि। प्रार्थयिष्यसीति यावत्॥ १८॥
170141
170142 देवायं दृश्यरूपेऽस्मिन्दृष्टेऽविद्याभ्रमे सति।
170143 क्वचिदादर्शवन्नास्ति प्रतिबिम्बमलोज्झितः॥ १९॥
170144

यत्प्रार्थयिष्यसि तच्छृण्वित्याह - देवेति। हे देव विधे अस्मिन् दृश्यरूपे
दृष्टे अविद्याभ्रमे सति आदर्शवत्स्थिते ब्रह्मणि प्रतिबिम्बमलेनोज्झितः प्रदेशो
नास्ति यत्र गतस्य मे निर्विक्षेपस्थितिः स्यादित्यर्थः ॥ १९ ॥

चिद्व्योमदर्पणस्यास्य परमाण्वाकृतेरपि।
अन्तस्थस्यैव वा यत्र तत्रेदं प्रतिबिम्बति ॥ २० ॥

कुतो नास्ति तत्राह - चिद्व्योमदर्पणस्येति। यतः
परमाण्वाकृतेरप्यन्तःस्थितस्यास्य चिद्व्योमदर्पणस्य यत्र तत्र इदं जगद्रूपं
प्रतिबिम्बति ॥ २० ॥

तस्मात्कियदनन्तं स्यादिदं दृश्यमनर्थकृत्।
तस्य पारे कियद्वा स्यादाकाशं दृश्यमेव तत् ॥ २१ ॥

हे विधे यस्मात्साविद्यचितेरियं स्थितिस्तस्मादिदमविद्याप्रयुक्तं दृश्यं
कियद्दूरमिदमनर्थकृद्दृश्यं स्यात्। तस्य दृश्यस्य पारे अनन्तं निरविद्यं
ब्रह्म कियद्दूरं वा स्यादाकाशवत् संसारशून्यं ब्रह्म तन्मया
दृश्यमवश्यं गत्वा द्रष्टव्यमेव। आवश्यके कृत्यः ॥ २१ ॥

एवमर्थमहं ज्ञातुमिमं संप्रार्थये वरम्।
शृणु देवेश्वराविघ्नं तच्चैवाशु प्रयच्छ मे ॥ २२ ॥

एवंरूपमर्थं ज्ञातुं प्रत्यक्षमनुभवितुमिमं वक्ष्यमाणं वरं
संप्रार्थये ॥ २२ ॥

इयं स्वच्छन्दमृत्युर्मे नीरोगाऽस्तु तनुश्चिरम्।
गारुडेन च वेगेन संयुता व्योमगामिनी ॥ २३ ॥

इयं मे तनुः स्वच्छन्दमृत्युर्नीरोगा गारुडेन गरुडवेगसदृशेन वेगेन
संयुता व्योमगामिनी चास्तु ॥ २३ ॥

प्रतिनाडीकमेषा तु वृद्धिं गच्छतु योजनम्।
क्रमेण जगतो बाह्ये भवत्वाकाशरूपिणी ॥ २४ ॥

तु पुनः प्रतिनाडीकं प्रतिक्षणं प्रत्यवयवं च योजनमेषा मे तनुर्वृद्धिं
गच्छतु। कालक्रमेण जगतो लोकत्रयाद्बाह्ये भवतु बहिर्गच्छतु।
आकाशवद्विशालरूपिणी ॥ २४ ॥

साकाशस्यास्य दृश्यस्य लभेय परमेश्वर।
अन्तमित्थमनन्तस्य परमोऽस्त्विति मे वरः ॥ २५ ॥

अहं साकाशस्यास्य दृश्यवर्गस्यान्तं लभेय ॥ २५ ॥

इति साधो त्वया प्रोक्ते देवदेवो वरं प्रभुः।
एवमस्तु तवेत्युक्त्वा यास्यत्यन्तर्धिमीश्वरः ॥ २६ ॥

गते तस्मिन्महादेवे देवैः सह दिवस्पतौ।
तपसा ते कृशो देहश्चन्द्रकान्तिर्भविष्यति ॥ २७ ॥

महति देवे वेधसि। त्रिमूर्तीनामभेदाद्वा महादेवे। चन्द्रस्य कान्तिरिव कान्तिर्यस्य
तथाविधो भविष्यति ॥ २७ ॥

170197 मामापृच्छन्नमस्कृत्य तस्मिन्नेव क्षणे ततः ।
170198 प्लुतिमेष्यति स व्योम्नि चित्तस्थार्थदिदृक्षया ॥ २८ ॥
170199
170200 स भवान्व्योम्नि तस्मिन्वरप्राप्त्युत्तरक्षण एव ततो
170201 मदाश्रमात्प्लुतिमूर्ध्वमुड्डयनमेष्यति ॥ २८ ॥
170202
170203 द्वितीय इव शीतांशुर्द्वितीय इव भास्करः ।
170204 द्वितीय इव वौर्वाग्निश्चन्द्रार्कस्पर्धयोत्थितः ॥ २९ ॥
170205
170206 ततो गरुडवेगेन दृश्यस्य नभसस्तथा ।
170207 अन्तं प्राप्तुं वहन्वेगाज्जगतः सरितामिव ॥ ३० ॥
170208
170209 वहन्गच्छन्सन् सरितामन्त इव जगतस्त्रैलोक्यस्यान्ते ते वपुर्वर्धिष्यते इति
170210 परेणान्वयः ॥ ३० ॥
170211
170212 जगतोन्ते ततोऽजस्रं ततो वर्धिष्यते वपुः ।
170213 कल्पान्तमत्तार्णववन्निष्पाराम्बरपूरणम् ॥ ३१ ॥
170214
170215 निष्पारस्याप्यम्बरस्य पूरणं निरवकाशतासंपादकम् ॥ ३१ ॥
170216
170217 द्रक्ष्यस्यथ महाव्योम्नि वर्धमानो बृहद्वपुः ।
170218 सर्गान्निरर्गलाधारनिरन्तगगनक्रमात् ॥ ३२ ॥
170219
170220 निरर्गलमप्रतिबन्धमेवाधारभूतं यदनन्तं गगनं तस्य क्रमादाक्रमणात् ॥
170221 ३२ ॥
170222
170223 परमार्थमहाकाशशून्यतावातचक्रकान् ।
170224 स्वभावद्रवतोद्देशाच्चिदर्णवतरङ्गकान् ॥ ३३ ॥
170225
170226 सर्गानेव विशिनष्टि - परमार्थेत्यादिना । परमार्थमहाकाशस्य
170227 शून्यताप्रयुक्तान्वातचक्रकान्वात्या इव स्थितान् । स्वभावः
170228 अज्ञाततास्वभावस्तल्लक्षणद्रवताया
170229 उद्देशादुत्सेकादाविर्भूतांश्चिदर्णवतरङ्गकान् ॥ ३३ ॥
170230
170231 संविद्घने यथा स्वप्ने पुराद्या भान्ति खात्मकाः ।
170232 तथा तदा तवैष्यन्ति सर्गवर्गा निरर्गलाः ॥ ३४ ॥
170233
170234 एष्यन्ति दृष्टिपथमिति शेषः ॥ ३४ ॥
170235
170236 विस्फुरन्ति महाव्योम्नि पर्णौघाः क्षुभितानिलैः ।
170237 तथा सर्गाननन्तांस्त्वं द्रक्ष्यस्यक्षीणनिश्चयः ॥ ३५ ॥
170238
170239 यथा विस्फुरन्ति तथा विस्फुरितानिति शेषः ॥ ३५ ॥
170240
170241 सभासत्येक्षणरुचां यथा जालं सदप्यसत् ।
170242 जगदात्म तथाकाशसंविदां खे सदप्यसत् ॥ ३६ ॥
170243
170244 यथा सौधस्थस्त्रीजनानां विचित्रवातायनजालेन बहिष्ठनृत्यसभासत्येक्षणं
170245 रोचते नान्यद्येषां तथाविधानां विचित्रं वातायनजालं सदप्यसत्प्रायं तथा
170246 चिदाकाशसंविदां तत्त्वविदां जगदात्मकं वैचित्र्यं तत्र
170247 सदप्यसत्प्रायमेवेत्यर्थः ॥ ३६ ॥
170248

170249 सर्वोर्वीजनदृष्टानां लग्नानामिन्दुमण्डले |
170250 यादृग्जालं जगत्तादृक्स्थितेऽनन्यत्वमात्मनः || ३७ ||
170251
170252 सर्वैरुर्वीस्थैर्जनैरिन्दुमण्डलसंलग्नतया दृष्टानां धूमनीहारधूल्यादीनां
170253 जालमिन्दुमण्डलस्थजनदृशा यादृगत्यन्तासत् जगदपि आत्मनः अनन्यत्वं
170254 प्राप्य स्थिते तत्त्वविदि तादृक् अत्यन्तासदेवेत्यर्थः || ३७ ||
170255
170256 पुनः सर्गः पुनर्व्योम पुनः सर्गः पुनर्नभः |
170257 इत्येवं पश्यतस्तेऽत्र दीर्घकालः प्रयास्यति || ३८ ||
170258
170259 अथ दीर्घेण कालेन प्रस्फुरन्सर्गपर्णके |
170260 उद्वेगमेष्यसि व्योम्नि महामहिमनि स्वयम् || ३९ ||
170261
170262 प्रस्फुरन् संचरन् | व्योम्न्यव्यक्ताकाशे || ३९ ||
170263
170264 उद्वेगमेष्यसि ततस्तपसोऽनुभवत्फलम् |
170265 निर्देक्ष्यसि तदा देहमनन्ताम्बरपूरकम् || ४० ||
170266
170267 निर्देक्ष्यसि द्रक्ष्यसि वक्ष्यसि च || ४० ||
170268
170269 किमिदं कुशरीरं मे भारभूतमिव स्थितम् |
170270 मेर्वादिभूभृतां लक्षमपि यस्मिंस्तृणायते || ४१ ||
170271
170272 तदेवाह - किमिदमित्यादिना || ४१ ||
170273
170274 देहो ममाप्रमाणोऽयं व्याप्तं व्योम मयाखिलम् |
170275 पूरयामि खमद्यापि भावि नैवोपगम्यते || ४२ ||
170276
170277 अप्रमाणः अपरिमितः | यद्भावि तन्नैव उपगम्यते ज्ञायते || ४२ ||
170278
170279 अविद्या बत घोरेयमनन्ता च प्रमीयते |
170280 मीयते न च केनापि ब्रह्मज्ञानं समं विना || ४३ ||
170281
170282 इयं दृश्यरूपा | प्रमीयते अनुभूयते | मीयते इयत्तया परिच्छिद्यते हिंस्यते वा || ४३
170283 | |
170284
170285 तमिमं संत्यजाम्येव देहमाविवृतान्तरम् |
170286 नानेन किंचिदाप्नोमि साधुसच्छास्त्रसंगमम् || ४४ ||
170287
170288 अनेनाति प्रवृद्धदेहेन साधुसच्छास्त्रसंगममन्यद्वा मोक्षसाधनं
170289 किंचिन्नाप्नोमि || ४४ ||
170290
170291 अनन्तापारपर्यन्तं निरालम्बाम्बरास्पदम् |
170292 किं नामेदं शरीरं मे सुदुष्प्रापार्थसंगमम् || ४५ ||
170293
170294 सुदुष्प्रापः आर्याणां तत्त्वविदां संगमो येन || ४५ ||
170295
170296 इति संचिन्त्य तं देहं धारणां प्राणरेचनीम् |
170297 कृत्वा त्यक्ष्यसि संभुक्तात्फलाच्छुष्कं यथा खगः || ४६ ||
170298
170299 प्राणं रेचयति शरीराद्बहिर्नयति तच्छीलां धारणां कृत्वा | यथा खगः पक्षी
170300 संभुक्तात्फलाद्दाडिमादेः शुष्कं नीरसं बीजत्वगादिभागं त्यजति तद्वत् अ|| ४६ ||

170301
170302 कृत्वा देहपरित्यागं जीवः प्राणसमन्वितः |
170303 व्योम्नि स्थास्यति ते तस्मिन्वातात्सूक्ष्मोऽपि वातवत् || ४७ ||
170304
170305 छिन्नपक्षो महामेरुरिव देहः पतिष्यति |
170306 तत्र भूलोकशैलादि सर्वं चूर्णीकरिष्यति || ४८ ||
170307
170308 तत्र तस्मिन् जगति || ४८ ||
170309
170310 शुष्का भगवती देहं तत्तदा भक्षयिष्यति |
170311 समातृमण्डला तेन निर्दोषा भूर्भविष्यति || ४९ ||
170312
170313 शुष्का नीरक्ता प्राग्वर्णिता समातृमण्डला भगवती काली तद्देहं
170314 प्राग्वर्णितप्रकारेण गणैः सह भक्षयिष्यति || ४९ ||
170315
170316 इत्यात्मोदन्तमखिलं श्रुतवानसि सुव्रत |
170317 तपस्तालीवने कृत्वा यथेच्छसि तथा कुरु || ५० ||
170318
170319 व्याध उवाच |
170320
170321 अहो नु भगवन्दुःखं परिभोक्तव्यमक्षयम् |
170322 मया व्यर्थमनर्थाय यदर्थेन दुरर्थितम् || ५१ ||
170323
170324 इदं भाविस्वदृढसंकल्पफलं श्रुत्वा ततो निर्विण्णो व्याधस्तत्परिहारोपायोऽस्ति
170325 वा न वेति पृच्छति - अहो इत्यादिना | यद्यस्माद्धेतोः अर्थेन पुरुषार्थभ्रमेण
170326 दुःखमेवार्थितं संकल्पेन समर्थितम् || ५१ ||
170327
170328 विद्यते किं विभो काचिद्युक्तिः सैषा स्थितिर्वर |
170329 अन्यथा भवितव्योऽर्थो यदि नास्ति तदुच्यताम् || ५२ ||
170330
170331 हे वर श्रेष्ठ भगवन् सैषा भाव्यर्थस्थितिस्त्वयोक्ता | अयं भवितव्योऽर्थो यया
170332 युक्त्यान्यथा स्यात्तथाविधा काचिद्युक्तिर्विद्यते यदि वा नास्ति तत्त्वया उच्यताम् || ५२ ||
170333
170334 मुनिरुवाच |
170335
170336 अवश्यंभवितव्योऽर्थो न कदाचन केनचित् |
170337 विधातुमन्यथा शक्यस्तन्न क्षरति यत्नतः || ५३ ||
170338
170339 यतस्तत् इदानिंतनयत्नतो न क्षरति न नश्यति || ५३ ||
170340
170341 वामावामशिरःपादविपर्ययविधौ यथा |
170342 पुंसो न विद्यते शक्तिस्तथा भाव्यन्यथास्थितौ || ५४ ||
170343
170344 यथा पुंसः स्वदेहेऽपि वामावामभागयोः शिरःपादयोर्वा विपर्ययविधौ
170345 व्यत्यासकरणे शक्तिर्न विद्यते तथा भाव्यर्थानामप्यन्यथास्थितौ स्थापने || ५४ ||
170346
170347 ज्योतिःशास्त्रार्थविज्ञानैरिह भाव्यर्थवेदनम् |
170348 भवत्यन्यदपूर्वं तु न किंचन कदाचन || ५५ ||
170349
170350 तस्य परिज्ञानमात्रं तु शास्त्रीयोपायैर्भवति नान्यथात्वमित्याह -
170351 ज्योतिःशास्त्रेति || ५५ ||
170352

170353 जयन्ति कर्माणि हि वेदनानि यैः प्राकृतैरद्यतनान्युपेत्य |
170354 शरीरदाहैरपि निर्विकारसंविन्नयैर्ब्रह्मतयैव सुप्तम् || ५६ ||
170355
170356 तर्हि प्राक्तनदृढसंकल्पकर्मणामानन्त्यादनिर्मोक्षप्रसङ्ग इत्याशङ्क्याह
170357 - जयन्तीति | यैः पुरुषधौरेयैः प्राकृतैः सुकृतैरद्यतनानि
170358 शमदमादिसाधनान्युपेत्य संविन्नयैर्ब्रह्मसंवित्प्रापकैः
170359 श्रवणाद्युपायैस्तत्त्वज्ञानं प्राप्य ब्रह्मतयैव सुप्तं न जगद्दर्शनेन
170360 जागरितं ते पुरुषश्रेष्ठाः प्राक्तनानि सर्वकर्माणि दुःसंकल्पवेदनानि
170361 चात्यन्तदृढतराण्यपि मूलोच्छेदेन जयन्ति नान्ये इत्यर्थः || ५६ ||
170362
170363 इत्यार्षे श्रीवासिष्ठमहा० वा० दे० मो० नि० उ० अ० वि० श० भाविसंपत्तिवर्णनं नाम
170364 पञ्चपञ्चाशदधिकशततमः सर्गः || १५५ ||
170365
170366 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
170367 भाविसंपत्तिवर्णनं नाम पञ्चपञ्चाशदधिकशततमः सर्गः || १५५ ||
170368
170369
170370 षट्पञ्चाशदधिकशततमः सर्गः १५६
170371
170372 व्याध उवाच |
170373
170374 अनन्तरं हे भगवन्वितताकाशवासिनः |
170375 किं भविष्यति मे तत्र देहेऽधःपातिनि क्षितौ || १ ||
170376
170377 वायौ स्थितो व्याधजीवः संधुर्भूत्वा विदूरथम् |
170378 हत्वा मन्त्रिमुखाच्छ्रोता स्वतत्त्वमिह वर्ण्यते ||
170379
170380 कृत्वा देहपरित्यागं जीवः प्राणसमन्वितः | व्योम्नि स्थास्यति ते
170381 तस्मिन्वातात्सूक्ष्मोपि वातवत् इति यदुक्तं तत् श्रुत्वा व्याधस्तदुत्तरं स्वभविष्यं
170382 पृच्छति - अनन्तरमिति || १ ||
170383
170384 मुनिरुवाच |
170385
170386 शृणुष्वावहितस्तस्मिन्देहे तव परिक्षते |
170387 किं भविष्यति भव्यात्मंस्तस्मिन्परमकाम्बरे || २ ||
170388
170389 परिक्षते नष्टे सति | परमकाम्बरे अव्याकृताकाशे || २ ||
170390
170391 देहे तस्मिन्परिभ्रष्टे जीवस्तु प्राणसंयुतः |
170392 भविष्यत्यम्बरे वातलवो व्याततरूपिणि || ३ ||
170393
170394 तस्मिन्वातलवे चेतो दृश्यं हृत्स्थं स्थितं पुरः |
170395 अस्फारं द्रक्ष्यति भूपीठं भवान्स्वप्ने जगद्यथा || ४ ||
170396
170397 तस्मिन्नेव वातलवे ते चेतो हृत्संस्थितं स्वान्तस्थं वासनामयं भूपीठं
170398 तदुपलक्षितं स्फारं जगत् द्रक्ष्यति || ४ ||
170399
170400 महत्त्वाच्चित्तवृत्तेस्तु जीवो द्रक्ष्यति ते ततः |
170401 राजाहमस्मि भूपीठ इति संकल्पितार्थभाक् || ५ ||
170402
170403 चित्तवृत्तेरेव जगदाकारेण महत्त्वात्ते जीवस्तत्र राजाहमस्मीति द्रक्ष्यति || ५ ||
170404

170405 तत्रास्य सहसैवाशु प्रतिभोदेष्यति स्वयम् |
170406 अहमस्मि नृपः श्रीमान्सिन्धुर्नाम्नातिमानितः || ६ ||
170407
170408 अतिशयेन सामन्तैर्मानितः पूजितः || ६ ||
170409
170410 अष्टवर्षाय मे राज्यं गते पितरि काननम् |
170411 भुवश्चतुःसमुद्रायाः पित्रा दत्तमुपागतम् || ७ ||
170412
170413 चतुःसमुद्रान्ताया भुवो राज्यं मे पित्रा दत्तमुपागतम् || ७ ||
170414
170415 सीमान्ते भूपतिः शत्रुर्विदूरथ इति श्रुतः |
170416 विद्यते यः प्रयत्नेन विना नाम न जीयते || ८ ||
170417
170418 यः शत्रुर्विद्यते स प्रयत्नेन विना न जीयते || ८ ||
170419
170420 इदं मे कुर्वतो राज्यं संवत्सरशतं गतम् |
170421 अहो भृत्यकलत्रौघैः सह भुक्तं मया सुखम् || ९ ||
170422
170423 कष्टमेष प्रवृद्धो मे सीमान्तवसुधाधिपः |
170424 अनेन सह संग्रामो दारुणः समुपस्थितः || १० ||
170425
170426 इति चिन्तयतस्तत्र विदूरथमहीभुजा |
170427 भविष्यति महद्युद्धं चतुरङ्गबलक्षयि || ११ ||
170428
170429 विदूरथमहीभुजा सह युद्धं भविष्यति || ११ ||
170430
170431 महता तेन युद्धेन हनिष्यसि विदूरथम् |
170432 करवाललतालूनजङ्गं त्वं विरथोऽपि सन् || १२ ||
170433
170434 त्वं विदूरथं हनिष्यसि || १२ ||
170435
170436 चतुःसागरपर्यन्ते भूतले भूपतिस्ततः |
170437 भविष्यसि भयाक्रान्तदिक्पालाहृतशासनः || १३ ||
170438
170439 भयाक्रान्तैर्दिक्पालैरप्याहृतं शासनं यस्य || १३ ||
170440
170441 स त्वं सिन्धुर्भवन्प्राप्तसकलावनिमण्डलः |
170442 पण्डितैर्मन्त्रिभिः सार्धं करिष्यसि कथा इमाः || १४ ||
170443
170444 पण्डितैः शास्त्रतत्त्वविद्भिः | इमा वक्ष्यमाणाः || १४ ||
170445
170446 मन्त्री वदिष्यति |
170447
170448 अत्याश्चर्यमिदं देव यदेवं स विदूरथः |
170449 देवेन विजितो युद्धे नीतश्च यमसादनम् || १५ ||
170450
170451 तत्र तत्त्ववित्कश्चिन्मन्त्री वदिष्यति - अत्याश्चर्यमिति || १५ ||
170452
170453 त्वं वक्ष्यसि |
170454
170455 भोः साधो सधनस्यास्य कल्पान्तार्णवरंहसः |
170456 वैरी विदूरथो राजा किमर्थं वद दुःसहः || १६ ||

170457
170458 सधनत्वादेव सेनया स्वबाहुबलेन च कल्पान्तार्णवरंहसो मम विदूरथो राजा
170459 किमर्थ केन बलेन दुःसहो जातस्तद्वदेत्यर्थः ॥ १६ ॥
170460
170461 मन्त्री वदिष्यति।
170462
170463 लीला नामास्य भार्यास्ति तयातितपसार्जिता।
170464 माता सरस्वतीदेवी जगद्धात्री निरञ्जना ॥ १७ ॥
170465
170466 माता अर्जिता मातृभावेन स्वाधीनीकृतेत्यर्थः ॥ १७ ॥
170467
170468 गृहीतायाः सुतात्वेन सास्या भुवनभाविनी।
170469 संसाधयति कार्याणि मोक्षादीन्यपि हेलया ॥ १८ ॥
170470
170471 तदेवाह - गृहीताया इति। सा सरस्वती सुतात्वेन गृहीताया अस्या लीलाया
170472 मोक्षादीन्यपि कार्याणि संसाधयति ॥ १८ ॥
170473
170474 वरेण शब्दमात्रेण जगदप्यजगत्क्षणात्।
170475 करोति सा भवन्नाशे तस्याः कैव कदर्थना ॥ १९ ॥
170476
170477 तस्या भवतां नाशे परिभ्रवे कदर्थना क्लेशरूपा अशक्तिः कैव ॥ १९ ॥
170478
170479 सिन्धुर्वदिष्यति।
170480
170481 त्वया वै युक्तं कथितं यद्येवं तद्विदूरथः।
170482 अशक्यो जेतुमाश्चर्य एतस्य समरे वधः ॥ २० ॥
170483
170484 युक्तमुपपन्नं कथितम्। यद्येवं तर्हि स विदूरथो जेतुमशक्य एवात एतस्य समरे
170485 वधो यो जातः स आश्च्र्यः असंभाव्य इत्यर्थः ॥ २० ॥
170486
170487 तदेवं संप्रसादेन भगवत्या समन्वितः।
170488 किमित्यस्मिन्रणे [तस्मिन्नस्मिन् रणे इति संबन्धः।] तस्मिञ्जयं राजा न
170489 लब्धवान् ॥ २१ ॥
170490
170491 मन्त्री वदिष्यति।
170492
170493 तेन संप्रार्थिता देवी सर्वकालमखेदिना।
170494 मोक्षोऽस्तु मम संसारादिति तामरसेक्षण ॥ २२ ॥
170495
170496 तया तेन [हेतुना।] विभो तस्य स एवावन्ध्यसंविदा।
170497 संपादितस्तेन [राज्ञा विदूरथेन।] तदाश्रित आजौ पराजयः ॥ २३ ॥
170498
170499 आवन्ध्यसंविदा सत्यसंकल्पया तया देव्या स मोक्ष एव संपादितः। तेन स्वत एव
170500 पराजय आश्रितः ॥ २३ ॥
170501
170502 सिन्धुर्वदिष्यति।
170503
170504 यद्येवं तन्मया देवी सदैवैषा प्रपूज्यते।
170505 मोक्षं किमिति मे नैषा ददाति परमेश्वरी ॥ २४ ॥
170506
170507 मन्त्री वदिष्यति।
170508

170509 एषा हि ज्ञप्तिरास्तेऽन्तः सर्वस्य हृदये सदा |
170510 संविद्रूपा भगवती सैव प्रोक्ता सरस्वती || २५ ||
170511
170512 ज्ञप्तिः पराख्या वैखर्यन्तसर्वशब्दबीजभूता || २५ ||
170513
170514 येन येन यथात्मीया प्रार्थ्यते स्वयमेव सा |
170515 प्रयच्छति तथैवाशु तस्माच्चिदनुभूयते || २६ ||
170516
170517 आत्मीया स्वात्महिता | तस्मात्प्रदानात्तदीयसत्यसंकल्पचिदेव वरफलात्मना
170518 अनुभूयते || २६ ||
170519
170520 न प्रार्थितैषा भवता मोक्षार्थमरिमर्दन |
170521 प्रार्थितैव त्वया संविदात्मीया शत्रुशान्तये || २७ ||
170522
170523 सिन्धुर्वदिष्यति |
170524
170525 न प्रार्थिता मया कस्मादनेनैषा सरस्वती |
170526 संविच्छुद्धा मया कस्मात्प्रार्थिता नेह मुक्तये || २८ ||
170527
170528 मयेव अनेन विदूरथेन राज्यार्थं कस्मान्न संप्रार्थिता | मया वा अनेनेव मुक्तये
170529 कस्मान्न प्रार्थितेति इवशब्दाध्याहारेण योज्यम् || २८ ||
170530
170531 मदाशयगताप्येषा ज्ञप्तिं दत्त्वा सरस्वती |
170532 मन्मोक्षाय किमित्यङ्ग सद्रूपापि न चेष्टते || २९ ||
170533
170534 तव स्वेच्छानुसारिप्रवृत्तौ मां प्रति प्रश्नोऽयमयुक्त इत्याशङ्क्य तत्तात्पर्यं
170535 प्रकाशयति - मदाशयेति | आशयश्चित्तं तद्गता मदात्मभूताप्येषा मम
170536 मोक्षेच्छालक्षणां ज्ञप्तिं दत्त्वा साधनसंपत्तिद्वारेण मन्मोक्षाय कुतो न
170537 चेष्टत इत्याशय इत्यर्थः || २९ ||
170538
170539 मन्त्री वदिष्यति |
170540
170541 अशुभः प्राक्तमोऽभ्यासस्तवास्ति रिपुघातिनः |
170542 तेनैषा मुक्तये नत्वा त्वया न प्रार्थिता विभो || ३० ||
170543
170544 नत्वा नमस्कृत्य || ३० ||
170545
170546 यच्चित्तस्तन्मयो जन्तुर्भवतीत्याजगत्स्थितेः |
170547 आबालमेव संसिद्धं कर्तुं शक्नोति कोऽन्यथा || ३१ ||
170548
170549 न स्वतन्त्र्येण देवा अनुगृह्णन्ति किंतु भक्तचित्तानुसारेणैवेत्यर्थे यच्चित्तस्तन्मयो
170550 भवति गुह्यमेतत्सनातनम् इति श्रुतिः प्रमाणमित्याशयेनाह - यच्चित्त इति | न
170551 चैताल्लोकेऽप्यप्रसिद्धमित्याह - आबालमिति || ३१ ||
170552
170553 यदेव येनामलयामलात्म संवेद्यतेऽभ्यासमयं विदान्तः |
170554 सर्वोपमर्देन तदेव सोऽङ्ग सदस्त्वसद्वास्तु भवत्यविघ्नम् || ३२ ||
170555
170556 येन पुरुषेण अमलया विदा ज्ञप्त्या अन्तः स्वचित्ते अमलात्मरूपं यदेव राज्यं
170557 मोक्षोऽन्यद्वा अभ्यासमयं दृढाभ्यासप्रचुरं यदेव कृत्वा संवेद्यते तत्
170558 सत्तदानीं विद्यमानमसत्तद्विलक्षणं वास्तु तदेव सर्वेतरवासनोपमर्देन स
170559 पुरुषः अविघ्नं स्वयमेवावश्यं भवति नान्यः कश्चित्तत्फलभूतोऽस्तीत्यर्थः || ३२
170560 ||

170561
170562 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० नि० उ० अ० श० सिन्धुसंबोधनं
170563 नाम षट्पञ्चाशदधिकशततमः सर्गः ॥ १५६ ॥
170564
170565 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
170566 सिन्धुसंबोधनं नाम षट्पञ्चाशदधिकशततमः सर्गः ॥ १५६ ॥
170567
170568 सप्तपञ्चाशदधिकशततमः सर्गः १५७
170569
170570 अथ सिन्धुर्वदिष्यति ।
170571
170572 आर्यानार्यवपुः कोऽहमभवं विमतिः पुरा ।
170573 यद्वशान्मे कुसंस्कारः प्राक्तनोऽस्ति भवप्रदः ॥ १ ॥
170574
170575 वर्ण्यते सिन्धुजीवस्य जातिस्तामसतामसी ।
170576 सिन्धोश्च त्यजतो राज्यं विवेकान्मुक्तिरन्ततः ॥
170577
170578 हे आर्येति मन्त्रिसंबोधनम् ॥ १ ॥
170579
170580 मन्त्री वदिष्यति ।
170581
170582 रहस्यं शृणु भो राजन्सावधानपरः क्षणम् ।
170583 चोदितः संदधासीदमद्य मान्द्यविनाशनम् ॥ २ ॥
170584
170585 अवधानपरेण चित्तेन सहितः सावधानपरः । अद्य मया त्वं चोदितः प्रेरितः सन्
170586 मान्द्यस्य अज्ञानस्य विनाशनमिदं मद्वचनं हृदि दधासि धारयिष्यसि ॥ २ ॥
170587
170588 किमप्याद्यन्तरहितमस्तीह सदनामयम् ।
170589 स्थितं त्वमहमित्यादिरूपेण ब्रह्मशब्दितम् ॥ ३ ॥
170590
170591 पृष्टां सिन्धुजीवप्राक्तनस्थितिं वक्तुं ब्रह्मण
170592 एवोपाधिसंबन्धाज्जीवभावविवक्षया आद्यां ब्रह्मस्वरूपस्थितिं दर्शयति -
170593 किमपीति । तस्यैव सार्वात्म्यमाह - स्थितमिति ॥ ३ ॥
170594
170595 तद्ब्रह्म स्वयमेवाहं चिच्चेतामीति संविदम् ।
170596 जीवतामिव गत्वास्ते चित्तीभूयात्यजद्वपुः ॥ ४ ॥
170597
170598 अहं चित् अतश्चेतामीति संकल्पसंविदं प्राप्य समष्टिव्यष्टिचित्तीभूय तदुपाधौ
170599 जीवतामिव गत्वा आस्ते । वपुरुपाधिमत्यजत् ॥ ४ ॥
170600
170601 चित्तं तु गगनाच्छात्म वपुर्विद्ध्यातिवाहिकम् ।
170602 तदेव वास्ति नेहान्यदाधिभौतिकतादिकम् ॥ ५ ॥
170603
170604 किं तद्वपुर्यदत्यजज्जीवतां गतं तदेवाह - अचित्तं त्विति । स्थूलमिदं वपुस्तर्हि
170605 किं तत्राह - तदेवेति ॥ ५ ॥
170606
170607 चित्तमेतदनाकारमपि साकारवत्स्थितम् ।
170608 संकल्पैः परलोकाद्यैः स्वप्नाद्यैरेतदेव सत् ॥ ६ ॥
170609
170610 तच्चित्तमेव परलोकेहलोकाद्यैः स्वप्नजाग्रज्जीवमरणभोगमोक्षाद्यैः
170611 संकल्पैरनाकारमपि साकारजगद्वत्स्थितम् ॥ ६ ॥
170612

170613 अनाकारमपि स्फारं चित्तं जगदिदं विदुः।
170614 य एव पवनो नाम स एव स्पन्दनं यथा॥ ७॥
170615
170616 इदं रहस्यं तत्त्वविदो विदुर्नान्ये इत्याह - अनाकारमिति॥ ७॥
170617
170618 यथा गगनशून्यत्वे जगच्चित्ते तथैककम्।
170619 अत्राप्रतिघरूपेऽस्ति न मनागपि भिन्नता॥ ८॥
170620
170621 अप्रतिघरूपे जगदाकारकल्पने निरङ्कुशसामर्थ्ये। अत्र चित्ते॥ ८॥
170622
170623 हृदयस्थं जगज्जालं न किंचित्किंचिदास्थितम्।
170624 जगद्विद्धि निराकारं चित्तमेव न वास्तवम्॥ ९॥
170625
170626 मिथ्यात्वान्न किंचिद्धृदयस्थं वासनारूपमेव जगज्जालं बहिरिव
170627 किंचिदिवास्थितम्॥ ९॥
170628
170629 सत्त्वमेव वपुः पूर्वमुदितं ब्रह्मणः पदात्।
170630 अयमेव स संपन्नो योऽद्यत तामसतामसः॥ १०॥
170631
170632 पूर्वं प्राथमिकसर्गे सात्त्विकदेवताघटितरूपत्वात्सत्त्वमेव हैरण्यगर्भाख्यं
170633 समष्टिवपुर्ब्रह्मणः पदादुदितम्। अयं समष्टिरेव व्यष्टिभावे
170634 तामसविषयासङ्गेनोत्पत्तिप्रकरणोक्तरीत्या
170635 राजससात्त्विकादित्रयोदशधाविभागक्रमेण स ते जीवोऽद्य तामसतामसः संपन्नः॥
170636 १०॥
170637
170638 सिन्धुर्वक्ष्यति।
170639
170640 किमुच्यते महाभाग वद तामसतामसः।
170641 क्रियन्ते पूर्वमेवैताः केन संज्ञाः परे पदे॥ ११॥
170642
170643 प्रश्नः स्पष्टः॥ ११॥
170644
170645 मन्त्री वदिष्यति।
170646
170647 जन्तोः सावयवस्येह हस्ताद्यवयवा यथा।
170648 तथानवयवस्यैवमातिवाहिकतात्मनः॥ १२॥
170649
170650 अपरिच्छिन्नस्यैवात्मनो हिरण्यगर्भभावेन परिच्छिन्नत्वे मायया कृते
170651 हिरण्यगर्भ एव सर्वाः संज्ञाः करोतीत्याशयेनोत्तरमाह - जन्तोरिति। एवं तथा
170652 ॥ १२॥
170653
170654 पश्चादात्मनि सैवात्मा नानासंज्ञाः करिष्यति।
170655 आधिभौतिकतानाम्नि पृथ्व्याद्या आतिवाहिके॥ १३॥
170656
170657 आत्मनि स्वव्यष्टिजीवेषु स समष्ट्यात्मैव संज्ञाः करिष्यति। सैवात्मेति सोचि लोपे
170658 चेत्पादपूरणम् इति सलोपः। तथा आतिवाहिके समष्टिस्वदेहे पञ्चीकरणेन
170659 आधिभौतिकतानाम्नि कृते तदवयवेषु पृथ्व्याद्याः संज्ञाः करिष्यति॥ १३॥
170660
170661 स्वप्नाभेऽस्मिञ्जगद्भाने संकल्पेनात्मरूपिणा।
170662 संज्ञात्मनात्मरूपेण स्वयं व्यवहरिष्यति॥ १४॥
170663
170664 एवं नामरूपे कल्पयित्वा व्यष्टिभावेन स्वयमेव व्यवहरिष्यति॥ १४॥

170665
170666 त्वामातिवाहिकाकारा यत्तत्स्फुरितवान्नवम् ।
170667 जातिर्महातमस्कोऽयमिति तत्राभिधा कृता ॥ १५ ॥
170668
170669 तत्र नवं व्यष्टिभावकल्पने त्वामुद्दिश्य यत् सृष्टिसंकल्पेन यद्व्यष्टिभावेन
170670 हिरण्यगर्भो यत् महातमस्कोऽयमिति स्फुरितवान् । तत्तस्माद्धेतोस्तवातिवाहिकाकारा
170671 जातिस्तामसतामसी महातमस्केत्यभिधा कृतेत्यर्थः ॥ १५ ॥
170672
170673 ब्रह्मणे निर्विकारस्य विकारिण इव प्रभो ।
170674 जातयो जीवतापत्तौ कलिता विविधाभिधाः ॥ १६ ॥
170675
170676 नेयमेकैवाभिधा किंतु ब्रह्मणो जीवभावे तत्तदुपाधिगुणानुसारेण
170677 राजससात्त्विकादयस्त्रयोदशाभिधाः कृता इत्याह - ब्रह्मण इति ॥ १६ ॥
170678
170679 प्राथम्येनैव यद्ब्रह्म जीवतामिव गच्छति ।
170680 तदैव बुद्ध्या भोक्ता तज्जातिः सात्त्विकसात्त्विकी ॥ १७ ॥
170681
170682 तत्र मोक्षशैघ्र्यविलम्बप्रयोजकचित्तगुणदोषैरेव जीवानां जातिभेदकल्पनेति
170683 दर्शयंस्तासु पञ्चजातीर्विभज्य लक्षयति - प्राथम्येनेत्यादिना । यद्यदि कल्पादौ
170684 प्राथम्येनैव जीवतामिव गच्छति ब्रह्मणि तदा तस्मिन्नेव जन्मनि
170685 औत्पत्तिकज्ञानैश्वर्ययुक्तया बुद्ध्या विषयभोक्ता तस्मिन्नेव जन्मनि मुच्यत इति
170686 यावत्तज्जातिः सात्त्विकसात्त्विकी यथा सनकादीनाम् ॥ १७ ॥
170687
170688 वर्तमाने भवे भव्यगुणैर्युक्ता तु मानद ।
170689 केवला सात्त्विकी प्रोक्ता जातिर्जातिविदां वरैः ॥ १८ ॥
170690
170691 कंचित्कालं भवे भवहेतावज्ञाने वर्तमाने सति तस्मिन्नेव जन्मनि
170692 ज्ञानैश्वर्यादिभिर्भव्यगुणैर्युक्ता चेद्भूत्वा मुच्यते तदा केवलसात्त्विकी
170693 प्रोक्तेत्यर्थः ॥ १८ ॥
170694
170695 नवा भवैश्चेद्बहुभिर्भोगमोक्षैकभागिनी ।
170696 जातिस्तत्प्रोच्यते तज्ज्ञैः सद्भी राजसराजसी ॥ १९ ॥
170697
170698 या जातिः कल्पादौ नवा अभिनवतयाभिव्यक्तापि बहुभिर्जन्मभिर्भोगेषु भुक्तेषु
170699 क्रमेण मोक्षैकभागिनी चेद्भवति तदा राजसराजसीत्यर्थः ॥ १९ ॥
170700
170701 वर्तमाने भवे भव्यगुणैर्मुक्ता तु मानद ।
170702 केवला राजसी प्रोक्ता जातिः स्वल्पभवे भवेत् ॥ २० ॥
170703
170704 स्वल्पभवे दशपञ्च जन्मोत्तरकालमपि तस्मिन्कल्पे भव्यैर्विवेकादिगुणैर्मुक्ता
170705 रहिता बहुतरजन्मपर।परोत्तरं भव्यगुणान् लभते चेत्केवलराजसीत्यर्थः ॥ २० ॥
170706
170707 प्रथमात्यन्तबहुभिर्भवैश्चेन्मोक्षगामिनी ।
170708 जातिस्तत्प्रोच्यते तज्ज्ञैः सद्भिस्तामसतामसी ॥ २१ ॥
170709
170710 प्रथमा कल्पादिमारभ्य अत्यन्तबहुभिः स्थावरकीटकिरातादिभिरन्ते मोक्षभागिनी
170711 चेत्तामसतामसीत्यर्थः ॥ २१ ॥
170712
170713 सामान्येनैव बहुभिर्जन्मभिर्मोक्षभागिनी ।
170714 केवला तामसी प्रोक्ता जातिर्जातिविशारदैः ॥ २२ ॥
170715
170716 सामान्येनानुत्कृष्टेन रक्षःपिशाचशूद्रादिजन्मभिर्बहुभिर्मोक्षभागिनी

170717 चेत्केवलतामसी ॥ २२ ॥
170718

170719 क्रमेणानेन जातीनां विविधा भेदकल्पना।
170720 तासां तामसतामस्यां जातौ जातोऽसि मानद ॥ २३ ॥
170721

170722 तासां जातीनां मध्ये त्वं तामसतामस्यां जातौ जातोऽसि ॥ २३ ॥
170723

170724 बहूनि तव जन्मानि समतीतानि तान्यहम्।
170725 विविधानि विचित्राणि वीर जानामि नो भवान् ॥ २४ ॥
170726

170727 भवान् नो जानाति ॥ २४ ॥
170728

170729 विशेषेण त्वनेनैष व्यर्थं कालोऽतिवाहितः।
170730 महाशवशरीरेण त्वयानन्तखगामिना ॥ २५ ॥
170731

170732 एवं तामसतामस्या जात्यासि जनितो यदा।
170733 तदा दुर्लभमोक्षस्त्वं संसारकुहरादिति ॥ २६ ॥
170734

170735 इतिशब्दः प्रश्नोत्तरसमाप्तौ ॥ २६ ॥
170736

170737 सिन्धुर्वदिष्यति।
170738

170739 आर्योदाहर केनैषा प्राग्जातिर्जीयतेऽधमा।
170740 यावत्तथैव तिष्ठामि स्याच्चेत्तद्वद पावनम् ॥ २७ ॥
170741

170742 प्राक्तनी अधमा तामसतामसी जीवजातिः केनोपायेन जीयते अभिभूयते। हे आर्य
170743 तमुपायमुदाहर। तत्तादृशं पावनं शोधनं स्याच्चेद्यावद्देहं तथैव
170744 तेनैव त्वदुक्तप्रकारेण तिष्ठामि स्थास्यामि तद्वद ॥ २७ ॥
170745

170746 मन्त्री वदिष्यति।
170747

170748 न किंचन महाबुद्धे तदस्तीह जगत्त्रये।
170749 यदनुद्वेगिना नाम पौरुषेण न लभ्यते ॥ २८ ॥
170750

170751 पौरुषेण पुरुषप्रयत्नेन ॥ २८ ॥
170752

170753 ह्यस्तनी दुष्क्रियाभ्येति शोभां सत्क्रियया यथा।
170754 अद्यैव प्राक्तनीं तस्माद्यत्नात्सत्कार्यवान् भव ॥ २९ ॥
170755

170756 अद्यैव सत्क्रियया ह्यस्तनी दुष्क्रिया यथा शोभां शोभनतामभ्येति तथा तस्मादेव
170757 यत्नात्प्राक्तनीं जित्वा सत्कार्यवान् भव ॥ २९ ॥
170758

170759 यो यमर्थं प्रार्थयते तदर्थं यतते तथा।
170760 सोऽवश्यं तदवाप्नोति न चेच्छ्रान्तो निवर्तते ॥ ३० ॥
170761

170762 ना यथा यतते नित्यं यद्भावयति यन्मयः।
170763 यादृगिच्छेच्च भवितुं तादृग्भवति नान्यथा ॥ ३१ ॥
170764

170765 ना पुरुषः ॥ ३१ ॥
170766

170767 मुनिरुवाच।
170768

170769 एवमुक्तः स तेनाथ सिन्धुरुद्धुरया धिया |
170770 तदा तत्र तथा नाम राष्ट्रं त्यक्ष्यत्यशेषतः || ३२ ||
170771
170772 तेन मन्त्रिणा एवमुक्तः सन् | उद्धुरया उत्सृष्टराज्यभारया || ३२ ||
170773
170774 गमिष्यति वनं दूरं प्रार्थितोऽपि हि मन्त्रिभिः |
170775 नाश्रयिष्यति तद्भूयो राज्यमुच्छिन्नशात्रवम् || ३३ ||
170776
170777 नाश्रयिष्यति न स्वीकरिष्यति || ३३ ||
170778
170779 तिष्ठतः साधुमध्येऽस्य तद्विवेककथावशात् |
170780 पुष्पासङ्गादिवामोदो विवेकः समुदेष्यति || ३४ ||
170781
170782 पुष्पसङ्गात्तैलादिष्वामोद इव विवेकः समुदेष्यति || ३४ ||
170783
170784 ततः कथमिदं जन्म कुतः संसार आगतः |
170785 इत्थं विचारसांतत्यात्स यास्यति विमुक्तताम् || ३५ ||
170786
170787 विमुक्ततां जीवन्मुक्तताम् || ३५ ||
170788
170789 नित्यं विचारणपरोऽथ भवन्स सिन्धुः सत्सङ्गमेन पदमाप्स्यति पावनं
170790 सः |
170791 तद्यत्र पत्रमिव वातविधूयमानं नो वस्तुतां व्रजति काचन नाम लक्ष्मीः ||
170792 ३६ ||
170793
170794 स सिन्धुः राजा सत्संगमेन नित्यं विचारणपरः सन् अथ पावनं तत्तादृशं
170795 मोक्षाख्यं पदमेष्यति | यत्र मोक्षपदे काचन हिरण्यगर्भैश्वर्यपर्यन्तापि
170796 लक्ष्मीर्वातविधूयमानं शुष्कपत्रमिव वस्तुतामुपादेयतां नो व्रजति किंतु
170797 तुच्छैव भवतीत्यर्थः || ३६ ||
170798
170799 इत्यार्षे श्रीवासिष्ठमहा० वा० दे० मो० नि० उ० अ० वि० शवोपाख्याने सिन्धुनिर्वाणं
170800 नाम सप्तपञ्चाशदधिकशततमः सर्गः || १५७ ||
170801
170802 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
170803 सिन्धुनिर्वाणं नाम सप्तपञ्चाशदधिकशततमः सर्गः || १५७ ||
170804
170805
170806 अष्टपञ्चाशदधिकशततमः सर्गः १५८
170807
170808 मुनिरुवाच |
170809
170810 एतत्ते कथितं सर्वं भविष्यद्भूतवत्तव |
170811 यथेच्छसि तथेदानीं व्याध साधु विधीयताम् || १ ||
170812
170813 श्रुत्वा मुनिवचो व्याधस्तपः कृत्वा वराद्विधेः |
170814 अखमाप्लुतः शवीभूतः पपातेत्यादि वर्ण्यते ||
170815
170816 भूतवत् अतीतकथावत् || १ ||
170817
170818 अग्निरुवाच |
170819
170820 इति तस्य वचः श्रुत्वा विस्मयाकुलचेतनः |

170821 क्षीणं स्थित्वा जगामाशु स्नातुं व्याधस्तथा मुनिः ॥ २ ॥
170822
170823 क्षणं स्थित्वा विमृश्येति यावत् ॥ २ ॥
170824
170825 इति तौ चेरतुस्तत्र तपः शास्त्रविचारणैः ।
170826 अकारणसुहृद्भूतावुभौ व्याधमहामुनी ॥ ३ ॥
170827
170828 अथाल्पेनैव कालेन मुनिर्निर्वाणमाययौ ।
170829 देहं त्यक्त्वाऽपदेशान्ते परे परिणतिं गतः ॥ ४ ॥
170830
170831 अल्पेनैव कालेनेति मुनेः समाधौ बहुतरस्यापि कालस्याल्पताप्रतीतेरित्याशयः ।
170832 यद्यप्यत्र यथाश्रुतग्रन्थात्पूर्वं मुनेर्देहत्यागः पश्चाच्चिरकालोत्तरं
170833 व्याधस्य कामनां दातुं पद्मजागमनं प्रतीयते तथापि पूर्वं
170834 मुनेर्भविष्यत्कथनग्रन्थे व्याधस्यवरलाभानन्तरं
170835 मामापृच्छन्नमस्कृत्य तस्मिन्नेव क्षणे ततः । प्लुतिमेष्यसि सव्योम्नि
170836 चित्तस्थार्थदिदृक्षया ॥ इति मुनिनोक्तत्वाद्व्याधस्योर्ध्वगमनकालेमुनेर्जीवनं
170837 स्थितमेवेति पश्चादेव देहत्याग इति बोध्यम् । अपदेशस्य निर्दिष्टस्य आयुषोऽन्ते ॥ ४ ॥
170838
170839 कालेन बहुनान्येन ततो युगशतात्मना ।
170840 व्याधस्य कामनां दातुं पद्मजन्मा समाययौ ॥ ५ ॥
170841
170842 व्याधः स्ववासनावेशं निवारयितुमक्षमः ।
170843 जानन्नपि वरं पूर्वं वर्णितं समयाचत ॥ ६ ॥
170844
170845 पूर्वं मुनिना व्यर्थत्वेन वर्णितं वरं जानन्नपि समयाचत ॥ ६ ॥
170846
170847 ब्रह्मैवमस्त्विति प्रोच्य ययावभिमतां दिशम् ।
170848 व्याधस्तपःफलं भोक्तुं खगवद्व्योम पुप्लुवे ॥ ७ ॥
170849
170850 वर्धमानेन देहेन जगत्पारे महानभः ।
170851 वेगादगणितं कालं पूरयामास शैलवत् ॥ ८ ॥
170852
170853 जगत्पारे त्रैलोक्यादूर्ध्वम् । महानभः अव्याकृताकाशम् ॥ ८ ॥
170854
170855 महागरुडवेगेन तिर्यगूर्ध्वमधस्तथा ।
170856 व्योम पूरयतस्तस्य कालो बहुतरो ययौ ॥ ९ ॥
170857
170858 अथ दीर्घेण कालेन यदा विद्याभ्रमस्य सः ।
170859 अन्तं न समवाप्नोति तत्रोद्वेगमुपाययौ ॥ १० ॥
170860
170861 उद्वेगं तत्प्रयुक्तनिर्वेदम् ॥ १० ॥
170862
170863 उद्वेगादथ बद्ध्वासौ प्राणरेचनधारणाम् ।
170864 प्राणांस्तत्याज नभसि शवीभूतमधोवपुः [अधोभुवीति पाठे
170865 वपुरित्यध्याहार्यम् ।] ॥ ११ ॥
170866
170867 चित्तं प्राणान्वितं व्योम्नि ययौ तत्रैव सिन्धुताम् ।
170868 विदूरथारिरूपां तामखिलावनिपालिनीम् ॥ १२ ॥
170869
170870 सिन्धुतां सिन्धुदेशराजताम् । विदूरथस्य अरिः शत्रुस्तद्रुपाम् ॥ १२ ॥
170871
170872 अदेहो मेरुशताकारमहाशव इवाभवत् ।

170873 द्वितीयोर्वीनिभो व्योम्नः पपाताशनिवज्रवत् ॥ १३ ॥
170874
170875 त्यक्तदेहस्तु व्योममार्गे पपात ॥ १३ ॥
170876
170877 पिधानमिव कस्योर्वीवीथी कस्मिंश्चिदम्बरे ।
170878 केशोण्ड्रकवदाभाते कस्मिंश्चिज्जागते भ्रमे ॥ १४ ॥
170879
170880 कस्य ब्रह्मणः कस्मिंश्चिज्जागते भ्रमे केशोण्ड्रकवदाभाते तत्र
170881 कस्मिंश्चिदम्बरे उर्वीवीथी विशालं पिधानमिव स्थितः ॥ १४ ॥
170882
170883 आकारपूरिताशेषवसुधाचलमण्डलः ।
170884 विपश्चिच्छ्रेष्ठ कथितमेतत्ते तन्महाशवम् ॥ १५ ॥
170885
170886 हे श्रेष्ठ हे विपश्चित् ते एतन्महाशवं सवृत्तान्तं यथावन्मया कथितम् ॥ १५ ॥
170887
170888 यस्मिञ्छवं संपतितं जगत्यवनिमण्डले ।
170889 तदिदं जगदाभातमस्माकं स्वप्नपूर्यथा ॥ १६ ॥
170890
170891 अस्माकं चित्ते आभातं प्रत्यक्षं स्फुरितम् ॥ १६ ॥
170892
170893 तदेतच्छवमास्वाद्य शुष्का पूर्णा महोदरी ।
170894 संपन्ना चण्डिका देवी रक्ता रक्तान्त्रपूरिता ॥ १७ ॥
170895
170896 रक्तेन आन्त्रैश्च पूरिता सती रक्ता रक्तवर्णा संपन्ना ॥ १७ ॥
170897
170898 मेदिनी मेदिनी जाता शवस्यैतस्य मेदसा ।
170899 पूरिताऽपूर्वरूपेण हिमवद्गिरिरूपिणा ॥ १८ ॥
170900
170901 अपूर्वरूपेण आश्चर्यभूतेन ॥ १८ ॥
170902
170903 तदैवैतन्महामेदो मृद्धातुत्वमुपागतम् ।
170904 कालेन वसुधा भूयो भूत्वा मृन्मयतां गता ॥ १९ ॥
170905
170906 भूयः प्रजातानि वनानि भूमौ ग्रामाः कृताः पत्तनसंयुताश्च ।
170907 पातालतः साधुसमुत्थितास्ते शैलाः प्रवृत्ता व्यवहारलक्ष्मीः ॥ २० ॥
170908
170909 पूर्वं वनादीनां शवेन नाशनाद्भूयो वनानि प्रजातानि । ग्रामाश्च भूयः
170910 कृताः । ते चूर्णिताः शैलाश्च भूयः पातालतः साधु यथापूर्वं समुत्थिताः ।
170911 ततो जनानां व्यवहारलक्ष्मीः प्रवृत्तेत्यर्थः ॥ २० ॥
170912
170913 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० नि० उ० अवि० विय० श० शवनिर्णयो
170914 नामाष्टपञ्चाशदधिकशततमः सर्गः ॥ १५८ ॥
170915
170916 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
170917 शवनिर्णयो नामाष्टपञ्चाशदधिकशततमः सर्गः ॥ १५८ ॥
170918
170919
170920 एकोनाषष्ट्यधिकशततमः सर्गः १५९
170921
170922 अग्निरुवाच ।
170923
170924 विपश्चिच्छ्रेष्ठ भो साधो त्वं गच्छाभिमतां दिशम् ।

170925 स्थिरं भूमण्डलं भूयः प्रकृतव्यवहारवत् ॥ १ ॥
170926
170927 इहाग्नेरिन्द्रगमनमुपदिश्य विपश्चिते ।
170928 आश्चर्याणि बहून्यन्ते ब्रह्मतत्त्वं च वर्ण्यते ॥
170929
170930 श्रेष्ठ भो विपश्चित् त्वं स्थिरं भूयः प्रकृतव्यवहारवद्भूमण्डलं प्राप्य
170931 अभिमतां दिशं गच्छ ॥ १ ॥
170932
170933 यज्ञं यष्टुं प्रजौघस्य शक्रः शततमं दिवि ।
170934 तत्राहूतोऽस्मि मन्त्रेण गच्छामि गतिकोविद ॥ २ ॥
170935
170936 शक्रो दिवि यज्ञं यष्टुं प्रवृत्तः । अहं तत्राहूतोऽस्मि गच्छामि ॥ २ ॥
170937
170938 भास उवाच ।
170939
170940 इत्युक्त्वा भगवानग्निस्तत्रैवान्तरधीयत ।
170941 गगने निर्मले याति अनलो वैद्युतो यथा ॥ ३ ॥
170942
170943 मूर्त्याकारेणान्तरधीयत । अग्न्याकारेण तु वैद्युताग्निवद्गगने याति ॥ ३ ॥
170944
170945 तथाहमपि चित्तेन प्राक्तनांश्च स्वयं वहन् ।
170946 पुनः स्वकर्म निर्णेतुं भ्रमन्व्योमनि संस्थितः ॥ ४ ॥
170947
170948 प्राक्तनानविद्यान्तदर्शनविषयकसंस्कारान्वहन्सन् स्वं दिगन्तोपसर्पणकर्म
170949 निर्णेतुं निष्पादयितुम् ॥ ४ ॥
170950
170951 भूयोऽपि दृष्टवानस्मि जगन्त्यगणितानि खे ।
170952 नानाचारविचाराणि नानासंस्थानवन्ति च ॥ ५ ॥
170953
170954 क्वचिच्छत्रमयाङ्गानि एकीभूतानि भूपते ।
170955 भान्ति चेतन्ति चोपन्ति हृदयानि हरन्ति च ॥ ६ ॥
170956
170957 तान्येव स्वदृष्टानि जगन्ति वर्णयति - क्वचिदित्यादिना । एकीभूतानि
170958 परस्परसंलग्नानि । भूपते इति दशरथसंबोधनम् । चोपन्ति मन्दं गच्छन्ति
170959 द्रष्टृणां हृदयानि मनांसि हरन्ति च ॥ ६ ॥
170960
170961 क्वचिन्मृन्मयदेहानि सर्वभूतानि राघव ।
170962 भान्ति चेतन्ति चोपन्ति पर्वतप्रतिमानि च ॥ ७ ॥
170963
170964 क्वचिद्दारुमयाङ्गानि भान्ति भूतानि कुत्रचित् ।
170965 क्वचित्पाषाणदेहानि सन्ति भूतानि भूरिशः ॥ ८ ॥
170966
170967 कुत्रचिज्जगति ॥ ८ ॥
170968
170969 क्वचिदाजीवमेकत्र स्थितान्युपलदेहवत् ।
170970 वाङ्गात्रव्यवहाराणि भूतान्यालोकितानि खे ॥ ९ ॥
170971
170972 आजीवं यावज्जीवम् । उपलदेहवत् प्रतिमावत् । परस्परं संभाषणादिना
170973 वाङ्गात्रव्यवहाराणि न गमनादानादिव्यवहारवन्ति । खे स्वचित्ताकाशे ॥ ९ ॥
170974
170975 इत्यहं सुचिरं कालं पश्यन्नश्यन्मनस्तया ।
170976 अविद्यान्तमपश्यंश्च तत्रोद्विग्नोऽभवं दृशाम् ॥ १० ॥

170977
170978 मनस्तया स्वप्न इव मनोमात्रदेहतया। तत्र अविद्यायां दृशां
170979 दृश्यवर्गाणां विषये उद्विग्नः अभवम्॥ १०॥
170980
170981 तपः कर्तुं समुद्युक्तः कस्मिंश्चिन्मोक्षसिद्धये।
170982 प्राहेन्द्रो मम चैवेदं मृगयोन्यन्तरं हि खे॥ ११॥
170983
170984 एवं समुद्विग्नोऽहं कस्मिंश्चिद्रहसि उपविश्य मोक्षसिद्धये तप आत्मतत्त्वालोचनं
170985 कर्तुं समुद्युक्तोऽभवम्। ततो मामिन्द्रः प्राह। किं प्राह। हे विपश्चित् खे चित्ताकाशे
170986 मम च तव च इदं मृगयोन्यन्तरमुपस्थितमस्ति ततो नायमात्मतत्त्वालोचनकाल
170987 इत्यर्थः॥ ११॥
170988
170989 प्रवृत्तः स्वर्गसंमोहे पूर्वाभ्यासवशीकृतः।
170990 मन्दारकानने तत्र भ्रमतो वै ममाम्बरे॥ १२॥
170991
170992 ननु ममाल्पपुण्यस्य कदाचिन्मृगयोनिप्रापकं दुष्कृतादि संभाव्येत तव तु
170993 महापुण्यस्य कुतस्तत्संभावना तत्राह - प्रवृत्त इति। अहमपि स्वर्गभोगयुक्ते
170994 संमोहे दुर्वासोपराधे प्रवृत्तः। क्व ते तत्प्रवृत्तिस्तत्राह - मन्दारेति॥ १२॥
170995
170996 तेनेत्युक्ते मया प्रोक्तं देव खिन्नोऽस्मि संसृतेः।
170997 मुच्येयं शीघ्रमित्युक्तं श्रुत्वोवाच ततो मम॥ १३॥
170998
170999 तेन इन्द्रेण इत्युक्ते सति॥ १३॥
171000
171001 विशुद्धात्मा त्वरूपोऽहमिति चैव हुताशनात्।
171002 वरं गृहाणेत्युक्ते स ततोऽन्यं याचितो मया॥ १४॥
171003
171004 किमुवाच तदाह - विशुद्धेति। शीघ्रं मुक्तिस्तु अरूपः अवस्थात्रयरूपेण
171005 मूर्तामूर्तरूपेण च रहितो विशुद्ध आत्मैवाहमिति तत्त्वज्ञानादेव भवति। तत्तु
171006 त्वया प्राग्व्याधमुनिसंवादवर्णनप्रसङ्गेन हुताशनाच्छ्रुतमेवेति शेषः।
171007 ततस्त्वमन्यं वरं गृहाणेतीन्द्रेणोक्ते सति मया सः अन्यं मृगत्वे स्वस्य
171008 किमग्रे भविष्यतीत्येतत्परिज्ञानरूपं वरं याचितः॥ १४॥
171009
171010 इन्द्र उवाच।
171011
171012 तवेयं मृगयोन्यन्तश्चिरं संसरते चितिः।
171013 अवश्यं भवितव्योऽर्थ इति दृष्टो मया तव॥ १५॥
171014
171015 संसरते संसर्तुमिच्छति॥ १५॥
171016
171017 मृगो भूत्वा महापुण्यां तां सभां समवाप्तवान्।
171018 यस्यां तदहतं ज्ञानं मदुक्तं बोधमेष्यति॥ १६॥
171019
171020 तां दाशरथीं सभाम्। मदुक्तं विशुद्धात्मा त्वरूपोऽहमित्येवंरूपम्॥ १६॥
171021
171022 तदेवं तत्र हरिणो भवार्तस्त्वं भवावनौ।
171023 आत्मोदन्तमिदं वन्ध्यं सकलं संस्मरिष्यसि॥ १७॥
171024
171025 हरिणः संस्तदेवं क्रमेण सभां प्राप्य वसिष्ठप्रसादात्सकलमात्मोदन्तं
171026 स्ववृत्तान्तम्॥ १७॥
171027
171028 स्वप्नभ्रममिवाशेषसंकल्परचितोपमम्।

171029 प्रलोकानुभूतार्थकथायातार्थसंनिभम् ‖ १८ ‖
171030
171031 वन्ध्यत्वमेव दृष्टान्तैर्विवृणोति - स्वप्नेति ‖ १८ ‖
171032
171033 यदा तु मृगतोन्मुक्तः पुरुषस्त्वं भविष्यसि ।
171034 ज्ञानाग्निदग्धदेहान्ते तदा हृत्स्थं स्फुरिष्यति ‖ १९ ‖
171035
171036 किं मृगदेहेनैव संस्मरिष्यामि नेत्याह - यदेति ‖ १९ ‖
171037
171038 तेन तां त्वमविद्याख्यां भ्रान्तिं त्यक्त्वा चिरं स्थिताम् ।
171039 भविष्यसि विनिर्वाणो गतस्पन्द इवानिलः ‖ २० ‖
171040
171041 तेन आत्मतत्त्वस्फुरणेन । विनिर्वाणो मुक्तः ‖ २० ‖
171042
171043 इत्युक्ते तेन देवेन तदैव प्रतिभोदभूत् ।
171044 ममायं हरिणोऽस्मीति वनेऽस्मिन्निति निश्चिता ‖ २१ ‖
171045
171046 इति तेन देवेनेन्द्रेणोक्ते सति सा पूर्वा मानसी हरिणोऽस्मीति प्रतिभा निश्चिता
171047 व्यवहारार्थक्रियासमर्था उदभूत् ‖ २१ ‖
171048
171049 ततः प्रभृति संपन्नस्तत्रैवान्तरकोणके ।
171050 हरिणोऽहं गिरिवरे तृणदूर्वाङ्कुराशनः ‖ २२ ‖
171051
171052 तत्रैव मन्दारवनान्तरकोणके ‖ २२ ‖
171053
171054 ततः सीमान्तसामन्तमागतं मृगयार्थिनम् ।
171055 दृष्ट्वाहमेकदा भीतः पलायनपरोऽभवम् ‖ २३ ‖
171056
171057 ततस्तेन समाक्रम्य गृहं नीत्वा दिनत्रयम् ।
171058 संस्थाप्य तव लीलार्थमिहानीतो रघूद्वह ‖ २४ ‖
171059
171060 एष ते कथितः सर्व आत्मोदन्तो मयानघ ।
171061 संसारमायाप्रतिमो नानाश्चर्यरसान्वितः ‖ २५ ‖
171062
171063 संसारप्रसिद्धैन्द्रजालिकमायाप्रतिमः ‖ २५ ‖
171064
171065 अविद्यैवमनन्तेयं शाखाप्रसरशालिनी ।
171066 आत्मज्ञानादृते नैव केनचिन्नाम शाम्यति ‖ २६ ‖
171067
171068 श्रीवाल्मीकिरुवाच ।
171069
171070 यदा विपश्चिदित्युक्त्वा तत्र तूष्णीं स्थितः क्षणात् ।
171071 समवोचत्तदा रामस्तमनिन्द्यमतिस्त्विदम् ‖ २७ ‖
171072
171073 इदं वक्ष्यमाणम् ‖ २७ ‖
171074
171075 श्रीराम उवाच ।
171076
171077 एवं पश्यत्यसंकल्पो योऽन्यसंकल्प आत्मनि ।
171078 मृगश्चेद्दृश्यतां यातः कथं सर्गे वद प्रभो ‖ २८ ‖
171079
171080 अन्यसंकल्परूपोऽयं मृगश्चेदस्माकं दृश्यतां यातः । एवं सति असंकल्पोपि

171081 पुरुषोऽन्यसंकल्पसर्गे स्थितं वस्तुजातं पश्यतीति फलितम्। इदं तु कथमुपपद्यते
171082 वदेत्यर्थः॥ २८॥
171083
171084 विपश्चिदुवाच।
171085
171086 महाशवं यत्पतितं यस्मिञ्जगति भूतले।
171087 तां भुवं पूर्वमिन्द्रेण यज्ञगर्वेण गच्छता॥ २९॥
171088
171089 महामुनिदेवतादिवरशापादिना अन्यसंकल्पकल्पितोप्यर्थोऽन्येषामसंकल्पानामपि
171090 दर्शनादिव्यवहारयोग्यो भवतीत्युत्तरं वक्तुं प्रागुक्तशवपतनमेव
171091 निमित्तान्तरेण वर्णयितुं विपश्चित्प्रस्तौति - महाशवमित्यादिना। पूर्वं
171092 शवपतनात्पूर्वकाले तां भुवं प्रति मन्दारवने
171093 स्वकृतयज्ञप्रयुक्तयजमानतागर्वेणान्धवद्गच्छताइन्द्रेण
171094 मुनिरयमित्यविज्ञानाद्गतासुरयमित्यवज्ञया च दुर्वासाः पादेनाभिहतः॥ २९॥॥
171095
171096 पादेनाभिहतो व्योम्नि दुर्वासा ध्यानसंस्थितः।
171097 गतासुरित्यविज्ञानात्तेनासौ कुपितोऽशपत्॥ ३०॥
171098
171099 शक्र शक्रावनितलं ब्रह्माण्डप्रतिमं शवम्।
171100 अचिरेण महाघोरं तव चूर्णीकरिष्यति॥ ३१॥
171101
171102 शक्र शक्रेति वाक्यादेरामन्त्रितस्यासूयासंमतिकोपकुत्सनभर्त्सेषु इति कोपादिषु
171103 द्विर्वचनम्। तव गन्तुमिष्टमवनितलं चूर्णीकरिष्यति॥ ३१॥
171104
171105 मामिमं शवबुद्ध्या त्वं यदतिक्रान्तवानतः।
171106 शापेन ममतां पृथ्वीं शीघ्रमासादयिष्यसि॥ ३२॥
171107
171108 मृगार्थं तेन मुनिना तथा देवेति सद्यथा।
171109 तत्तया कथयाऽऽयातं सदैव विषयं दृशाम्॥ ३३॥
171110
171111 तेन मुनिना दुर्वाससा विपश्चिता सह शक्रस्य मृगभावार्थमपि तथा
171112 देवमृगश्च त्वं तुल्यकालं विपश्चितेति वाक्येन यथा विपश्चितो
171113 मनःसंकल्पितमपि मृगत्वं सत् अन्यदर्शनाद्यर्थक्रियासमर्थं भवति तथा स
171114 शप्त इति शेषः। तत्तस्मात्तया इन्द्रशापकथयैव मुनिवाक्यबलात्सांकल्पिकमपि
171115 विपश्चितो मृगत्वं भवदादिदृशां सदैव विषयं विषयत्वमायातम्॥ ३३॥
171116
171117 वस्तुतस्तु न चैकं सन्न द्वितीयं न चाप्यसत्।
171118 सा तथा प्रतिभोदेति किं सत्किमथवाप्यसत्॥ ३४॥
171119
171120 एवं जगत्प्रसिद्धदृशा रामप्रश्नं समाधायतत्त्वदृशा समाधत्ते -
171121 वस्तुतस्त्विति। वस्तुतोविचारे एकं व्यावहारिकं जगत् सत् इत्यपि न। द्वितीयं सांकल्पिकं
171122 वा असदित्यपि न। द्वयोरपि तुल्यत्वादित्याह - सेति॥ ३४॥
171123
171124 अन्यच्च राघवे मां तां युक्तिं त्वमपरां शृणु।
171125 एतस्मिन्नयसंदर्भे सुस्फुटप्रतिपत्तये॥ ३५॥
171126
171127 ब्रह्मणः सर्वशक्तिसर्वात्मकत्वादपि न कोऽपि विरोध इत्याह - अन्यच्चेत्यादिना।
171128 नया युक्तयस्तासां संदर्भे॥ ३५॥
171129
171130 यस्मिन्सर्वं यतः सर्वं यत्सर्वं सर्वतश्च यत्।
171131 ब्रह्म तस्मिन्महाभाग किं न संभवतीह हि॥ ३६॥
171132

171133 संकल्पजातं नान्योन्यं मिलतीत्युपपद्यते ।
171134 संकल्पजातमन्योन्यं मिलतीत्युपपद्यते ॥ ३७ ॥
171135
171136 संकल्पजातं परस्परं न मिलति मिलतीति च द्वयमपि सर्वशक्तावुपपद्यते इत्यर्थः
171137 ॥ ३७ ॥
171138
171139 संकल्पजातमन्योन्यं मिलतीत्यवगम्यते ।
171140 सर्वात्मनि हि यत्रैव च्छाया तत्रैव चातपः ॥ ३८ ॥
171141
171142 आवगम्यते प्रत्यक्षं मृगदर्शनादौ । उपपत्तिश्चात्रास्तीत्याह - सर्वात्मनीति ॥
171143 ३८ ॥
171144
171145 न संभवति चेत्तत्कथं सर्वात्मतामियात् ।
171146 कस्मात्संकल्पनगरं न मिथः श्लिष्यतीति सत् ॥ ३९ ॥
171147
171148 यदि विरुद्धमेकत्र न संभवति तदा सर्वात्मत्वमेवब्रह्मणो व्याहन्येतेत्याह -
171149 नेति । इदं च सर्वं प्राग्बहुशो व्याख्यातप्रायम् ॥ ३९ ॥
171150
171151 मिथश्च श्लिष्यतीत्येवमपि सत्सर्वरूपिणि ।
171152 न तदस्ति न यत्सत्यं न तदस्ति न यन्मृषा ॥ ४० ॥
171153
171154 सर्वत्र सर्वथा सर्वं सर्वदा सर्वरूपिणि ।
171155 अहो नु विषमा माया मनोमोहविधायिनी ॥ ४१ ॥
171156
171157 मायायाअघटितघटनासमर्थत्वेनात्याश्चर्यरूपत्वादपि सर्वं घटत इत्याह ##-
171158
171159 विधयः प्रतिषेधाश्च यदेकत्र स्थितिं गताः ।
171160 ईदृशी ब्रह्मसत्तैषा यदेवात्मानमात्मना ॥ ४२ ॥
171161
171162 न मायायाएव ब्रह्मसत्ताया अप्येवं माहात्म्यमित्याह - ईदृशीति ॥ ४२ ॥
171163
171164 तया अनादिः सादिश्चेत्यविद्येत्यनुभूयते ।
171165 न ज्ञप्तिमात्रकचनं यदि स्याद्भुवनत्रयम् ॥ ४३ ॥
171166
171167 तया ब्रह्मसत्तया ॥ ४३ ॥
171168
171169 तन्महाकल्पनष्टानां सृष्टिः स्यात्कथमञ्जसा ।
171170 कथमग्नेः कथं वायोः सत्ता भूमेः कथं भवेत् ॥ ४४ ॥
171171
171172 तस्मात्स्वभावकचनमात्रान्नान्यदृते जगत् ।
171173 शास्त्राण्यनुभवो लोका आमहाकल्पवादिनाम् ॥ ४५ ॥
171174
171175 स्वभावकचनमात्रादृते जगन्नान्यत् । वेदान्तादिशास्त्राणि विद्वदनुभवो
171176 लोकप्रसिद्धदृष्टान्ताश्च येषां मूर्खाणां प्रमाणं न तैः सतां अलं
171177 संभाषणेनेत्यर्थः ॥ ४५ ॥
171178
171179 येषां प्रमाणं नो सर्वं प्रशस्तैस्तैरलं सताम् ।
171180 ज्ञप्तिदृष्ट्यानया सर्वं प्रमाणीभवति क्षणात् ॥ ४६ ॥
171181
171182 प्रशस्तैर्विरोधिलक्षणया निन्द्यैः । ज्ञप्तिदृष्ट्या चिद्विलासदृष्ट्या ॥ ४६ ॥
171183
171184 नान्यया तनु तेनैवमेव सारं विदुर्बुधाः ।

171185 शुद्धा ज्ञप्तिर्ब्रह्मसत्ता त्वविद्यास्मीति चेतनात् || ४७ ||
171186
171187 अन्यया दृष्ट्या तुन प्रमाणीभवति किंतु तनु फल्गु भवति | तेन हेतुना बुधा
171188 एवमेव ज्ञानदृष्टिसिद्धमेव सारं विदुः | कथं विदुस्तदाह - शुद्धेति || ४७
171189 | |
171190
171191 स्फुरतीयं जगद्रूपा वातश्रीः स्पन्दनादिव |
171192 न कश्चनेह म्रियते जायते न च कश्चन || ४८ ||
171193
171194 मृतोऽहमिदमस्तीतिप्रतिमैव चिदात्मिका |
171195 मृतिरत्यन्तनाशश्चेत्तत्सा निद्रा सुखोपमा || ४९ ||
171196
171197 अत्यन्तं नाशो दृश्यादर्शनं चेत् सा निद्रा सुटुप्तिस्तत्सुखोपमा || ४९ ||
171198
171199 पुनर्दृश्योपलम्भश्चेन्ननु जीवितमेव तत् |
171200 तस्मान्नेहास्ति मरणं तन्नैवेहास्ति जीवितम् || ५० ||
171201
171202 कस्मिंश्चिन्मात्रकचने द्वयं वाप्यस्ति नैव वा |
171203 चेतितं द्वयमप्यस्ति नास्ति द्वयमचेतितम् || ५१ ||
171204
171205 कस्मिन् एकस्मिन् | एकारलोपश्छान्दसः | नैव वेत्यत्रोपपत्तिमाह - चेतितमिति || ५१ ||
171206
171207 चेतितं चैकमेवास्ति स्वस्त्यनन्तमतश्चितः |
171208 चिन्मात्रव्यतिरेकेण किं नाम वद जीवनम् || ५२ ||
171209
171210 अतश्चितो द्वैतसत्त्वासत्त्वसाक्षिण्याः स्वस्तिक्षेमः सदैवेत्यर्थः | अदुःखं जीवनं हि
171211 सर्वाभिलषितं सुखं तच्च चिन्मात्रमेवेति तदेव परपुरुषार्थ इत्याह - चिन्मात्रेति
171212 || ५२ ||
171213
171214 अदुःखमक्षयत्वात्तदतो दुःखं क्व कस्यचित् |
171215 वाच्यं सवाचकं सर्वं यत्र चिद्व्योममात्रकम् || ५३ ||
171216
171217 वाच्यं रूपं वाचकनामसहितं सर्वं यत्र यस्यां तत्त्वदृष्टौ || ५३ ||
171218
171219 तदन्यत्तदनन्यच्च के ते तत्रैकताद्विते |
171220 आवर्तादि यथा तोये शरीरादि तथा परे || ५४ ||
171221
171222 ननु शरीराद्येव दुःखमस्तीत्याशङ्क्याह - आवर्तादीति || ५४ ||
171223
171224 तत्सत्तासंनिवेशात्म कारणानन्यखात्म च |
171225 चिद्भानमात्रमव्यग्रं खमेवाप्रतिघं जगत् || ५५ ||
171226
171227 कारणानन्यत्वात्सर्वकारणखात्मकमेव | अप्रतिघमनघम् || ५५ ||
171228
171229 आश्चर्यं सुघनं व्यग्रं द्रव्यं सप्रतिघं स्थितम् |
171230 तथेते भूतिभूर्नास्ति वर्तमानानुभूतिभूः || ५६ ||
171231
171232 यत्सुघनं व्यग्रं द्रव्यं सप्रतिघं च स्थितं तदेवाश्चर्यम् | यथा इते अतीते
171233 भूतेः प्रतीतेः भूः विषयो नास्ति तथा वर्तमानेऽपि अनुभूतौ
171234 भवतीत्यनुभूतिभूर्विषयो नास्ति || ५६ ||
171235
171236 तत्र भ्रान्त्या पिशाचोऽयं भाति खात्मेति बुध्यताम् |

171237 यथैतत्खं तथैतत्खमेतत्खमिति खं स्थितम् ॥ ५७ ॥
171238
171239 तत्र वर्तमानानुभूतौ अयं खात्मा शून्यात्मैव दृश्यपिशाचो भूत्वा भातीति
171240 बुध्यताम् । यथा एतत्परिदृश्यमानं खं तथा एतच्चिदाकाशरूपं खम् । यत
171241 एतच्चिदाकाशमेव खमिति प्रतीतं खं शून्यं भूत्वा स्थितम् ॥ ५७ ॥
171242
171243 तथेतो भूरितो भूतमितोऽन्यदिति खं परम् ।
171244 यैव चिद्भा जगत्सैव नैकतात्र न च द्विता ॥ ५८ ॥
171245
171246 तथा इतः अधःप्रदेशे भूः इतः प्रदेशान्तरे वाय्वाकाशादिभूतं इतः दिक्षु
171247 विदिक्षु चान्यदित्यनेकाकारः परं खमेव भाति नान्यदित्यर्थः ॥ ५८ ॥
171248
171249 न च प्रतिघता काचिन्न चाप्रतिघरूपता ।
171250 सर्वमप्रतिघं दृश्यं यथा भूतार्थदर्शिनः ॥ ५९ ॥
171251
171252 तज्ज्ञतातज्ज्ञते चेहन सती नाप्यसत्स्थिती ।
171253 सत्ये सदसती चैकं काष्ठमौनमतोऽखिलम् ॥ ६० ॥
171254
171255 पूर्णदृष्टौ ज्ञताज्ञताभेदोप्यपैतीत्याह - तज्ज्ञतेति ॥ ६० ॥
171256
171257 यद्दृश्यं ब्रह्मतानन्तं तदेव परमं पदम् ।
171258 इदं सर्वं परं ब्रह्ममात्रमित्येव संस्थितम् ॥ ६१ ॥
171259
171260 एवं च दृश्यं सर्व ब्रह्मतयैव संपन्नमित्याह - यदिति ॥ ६१ ॥
171261
171262 एवं नामैष चिद्धातुः कचत्येवं यदात्मनि ।
171263 यस्येदं कचनं व्योम्नो रूपमप्रतिघंन् जगत् ॥ ६२ ॥
171264
171265 सर्गाद्या मृतजीवानां सर्वत्रैवाङ्गुलेङ्गुले ।
171266 असंख्याः सन्त्यसंख्यानामदृश्याप्रतिघामिथः ॥ ६३ ॥
171267
171268 सर्वत्र सर्गाः सनतीत्याह - सर्गाद्या इति । इदं च प्राग्वसिष्ठेन
171269 विस्तरेणोपपादितम् ॥ ६३ ॥
171270
171271 अन्योन्यं सिद्धलोकास्ते स्वं यत्र प्राप्य संगताः ।
171272 परस्परं न पश्यन्ति मिथः प्रोता अपि स्थिताः ॥ ६४ ॥
171273
171274 उत्तरोत्तरं सूक्ष्मतराः सिद्धलोकाः स्वं स्वरूपं प्राप्य यत्र ब्रह्मणि संगताः ।
171275 एतच्च बृहदारण्यके गार्गीप्रश्ने वर्णितम् यदिदं सर्वमप्स्वोतं च प्रोतं चेति
171276 कस्मिन् खल्वाप ओताश्च प्रोताश्चेति वायौ गार्गीति कस्मिन् खलु वायुरोतश्च
171277 प्रोतस्चेत्यन्तरिक्षलोकेषु गार्गीति इत्यादिना ॥ ६४ ॥
171278
171279 भवत्याकाश एवैषा दृश्यश्रीर्गगनात्मिका ।
171280 अनन्यदृष्टा चिद्रूपा स्वप्नवत्स्वात्मद्रष्टृका ॥ ६५ ॥
171281
171282 वस्तुतस्तु आत्मातिरिक्तद्रष्टृकत्वमेवाप्रसिद्धमित्याशयेनाह - भवतीति । यत
171283 इयं दृश्यश्रीरात्माकाश एव भवति ततः अनन्यदृष्टा ॥ ६५ ॥
171284
171285 एषा हि संपरिज्ञाता तिष्ठत्यपि यथास्थितम् ।
171286 भामात्ररूपनिर्वाणा निशान्ताऽप्रतिभाकृतिः ॥ ६६ ॥
171287
171288 चिद्गगनात्मकत्वादेव परिज्ञातमात्रा तदाकृतिः संपद्यत इत्याह - एषा हीति ।

निशाया अन्ते प्रभाते अप्रतिभाया अन्धकारस्याकृतिरिवाकृतिर्यस्याः || ६६ ||

शान्ताशेषविशेषात्म यथास्थितमवस्थितम् |
सदसद्वा जगज्जालं परिज्ञानेन शाम्यति || ६७ ||

यथास्थितं चेच्छान्ताशेषविशेषात्मकमवस्थितं तदाज्ञानबाध्यं जगत्
सदसद्वाऽस्तु न काचित्क्षतिरित्याह - शान्तेति || ६७ ||

यथाब्धिजलबिन्दूनां क्षणविश्लेषसंगमम् [समाहारद्वन्द्वः |] |
चिदणूनां तथा ब्रह्म वारिधौ स्फुरतां मिथः || ६८ ||

अस्त्वित्थं जगज्जालं तन्निबद्धजीवानां ब्रह्मणि कीदृशी स्थितिस्तामाह - यथेति |
यावदज्ञानमंशांशिभावेनेत्यर्थः || ६८ ||

स्वप्नवद्भाति सर्गश्रीः सर्गादौ चिन्नभोमयी |
अतः सर्वमिदं ब्रह्म शान्तमित्युपपद्यते || ६९ ||

तेषां सर्गादौ सर्गश्रीः कथं भाति तदाह - स्वप्नवदिति || ६९ ||

दृष्टान्यनन्तविभवानि मया जगन्ति भुक्तानि कार्यपरिणामविजृम्भितानि |
भ्रान्ता दिशो दश बहूनि युगानि यावज्ज्ञानादृते क्षयमुपैति न
दृश्यदोषः || ७० ||

मया अनन्तविभवानि जगन्ति दृष्टानि | कार्याणां स्वकर्मणां
परिणामविजृम्भितानि सुखदुःखफलानि भुक्तानि | बहूनि युगानि दिशो भ्रान्ताः |
यावत् साकल्येन | ज्ञानादृते दृश्यदोषः क्षयं नौपैतीत्यर्थः || ७० ||

इ० वा० महारामायणे वा० दे० मो० नि० उ० अवि० वि० श० विपश्चित्संसारभ्रमवर्णनं
नामैकोनषष्ट्यधिकशततमः सर्गः || १५९ ||

इति श्रीवासि० ता० प्रकाशे निर्वाणप्रकरणे उत्तरार्धे विपश्चित्संसारभ्रमवर्णनं
नामैकोनषष्ट्यधिकशततमः सर्गः || १५९ ||

षष्ट्यधिकशततमः सर्गः १६०

श्रीवाल्मीकिरुवाच |

विपश्चिति वदत्येवं तद्वृत्तान्तमवेक्षितुम् |
इव लोकान्तरं भानुः पादैर्दूरायतैर्ययौ || १ ||

इह सायं सभोत्थानं परेद्युः पुनरागमः |
भासस्य जीवन्मुक्तत्वमविद्या चोपवर्ण्यते ||

श्रुतं तस्य भासस्य पूर्ववृत्तान्तं प्रत्यक्षमवेक्षितुमिव पादैः किरणचरणैः
|| १ ||

उदभूत्पूरयन्नाशा दिनपर्यन्तदुन्दुभिः |
तुष्टाभिरिव निर्मुक्तो दिग्भिर्जयजयारवः || २ ||

आशा दिशः | दिनपर्यन्तः सायंकालस्तत्सूचको दुन्दुभिः | तुष्टाभिरिति तत्रोत्प्रेक्षा || २
||

विपश्चिते दशरथो गृहदारधनादिकम् ।
राज्यानुरूपं विभवं प्रोत्तस्थौ कल्पयन्क्रमात् ॥ ३ ॥

कल्पयन् समर्थयन् ॥ ३ ॥

राजरामवसिष्ठाद्या मिथः कृत्वा विसर्जनं ।
यथाक्रमं पूजनं च प्रययुः स्वास्पदानि ते ॥ ४ ॥

स्वास्पदानि स्वस्वगृहाणि ॥ ४ ॥

स्नात्वा भुक्त्वा निशां नीत्वा प्रभाते पुनरराययुः ।
तेनैव संनिवेशेन सा सभा संस्थिताऽभवत् ॥ ५ ॥

तेन प्राक्तनेनैव संनिवेशेन क्रमेण ॥ ५ ॥

क्रमान्मुनिरुवाचाथ तां यथाप्रस्तुतां कथाम् ।
शशीवामृतमाह्लादमुद्गिरन्मुखदीप्तिभिः ॥ ६ ॥

शशी अमृतमिव मुखदीप्तिभिराह्लादयतीत्याह्लादं वचनमुद्गिरन् ॥ ६ ॥

राजन्नेयमविद्येयमसत्येव सती स्थिता ।
नेदृशेनापि यत्नेन निर्णीतैषा विपश्चिता ॥ ७ ॥

एवं विपश्चिदुपवर्णनप्रकारैर्दृश्यभ्रान्तिरूपा अविद्या न निर्णीता
अन्तवत्तयेत्यर्थः ॥ ७ ॥

अविद्यैवमविज्ञाता चिरानन्तावभासते ।
परिज्ञाता तु नास्त्येव मृगतृष्णानदी यथा ॥ ८ ॥

अधिष्ठानब्रह्ममात्रतया अविज्ञाता सती कालतश्चिराद्देशतो वस्तुतश्चानन्ता ॥ ८ ॥

मन्त्रिणस्ते महाबुद्धे भासस्यास्य विपश्चितः ।
इतिवृत्तं त्वमित्यस्य स्वयमेव हि दृष्टवान् ॥ ९ ॥

ते मन्त्रिणो दृष्टवन्त इति विपरिणामेनापकृष्यते ॥ ९ ॥

सदृशोऽयमितस्त्वाभिः कथाभिर्ज्ञाततत्पदः ।
अविद्यायां प्रशान्तायां जीवन्मुक्तो भविष्यति ॥ १० ॥

इतः परमाभिः कथाभिर्ज्ञाततत्त्वोऽयमविद्यायां प्रशान्तायां सत्यां
युष्माभिः सदृशो जीवन्मुक्तो भविष्यति ॥ १० ॥

अविद्येति धृता संविद्ब्रह्मणात्मनि सत्तया ।
तद्भ्रमेणासदप्यस्याः सद्रूपमिव लक्ष्यते ॥ ११ ॥

ब्रह्मणा यद्यस्मादविद्येति संविद्धृता तत्तस्माद्भ्रमेणैवास्या असदपि रूपं
सद्रूपमिव लक्ष्यते ॥ ११ ॥

यदा ब्रह्मात्मिकैवेयमविद्या नेतरात्मिका ।
तदास्त्येषाऽपरिज्ञाता परिज्ञाता न भिद्यते ॥ १२ ॥

171393 इत्थं चास्या ब्रह्मातिरिक्तस्वरूपाभावाद्यावदपरिज्ञातं सत्ता परिज्ञानमात्रेण
171394 निवृत्तिश्चोपपद्यत इत्याह - यदेति ॥ १२ ॥
171395
171396 अविद्यैवमनन्तेयं नानाप्रसवशालिनी ।
171397 जडा हृद्या रसमयी मोहमाधवमञ्जरी ॥ १३ ॥
171398
171399 तामेवाविद्यां वर्णयति - अविद्येत्यादिना । सर्वत्र विशेषणान्युभयत्र योज्यानि ।
171400 रसमयी आसक्तिकरी । मोहलक्षणे माधवे वसन्ते प्रफुल्ला मञ्जरी ॥ १३ ॥
171401
171402 अन्तशून्या ग्रन्थिमती श्लक्ष्णा स्वङ्कुरकण्टका ।
171403 जडा रसमयी दीर्घा लतेव वनवैणवी ॥ १४ ॥
171404
171405 आपातदृष्ट्या श्लक्ष्णा अनुभवकाले तु स्वङ्कुराः सर्वे कण्टका यस्याः ।
171406 वनवेणौ जाता वनवैणवी लता शाखेव ॥ १४ ॥
171407
171408 फलाशङ्का मुधैवातिनिष्फला चित्तहारिणी ।
171409 अकालपुष्पमालेव श्रेयसा नाभिनन्दिता ॥ १५ ॥
171410
171411 मुधैव फलमस्तीत्याशङ्का यस्याम् । श्रेयसा प्रशस्यतरेणाभिज्ञजनेन
171412 नाभिनन्दिता औत्पातिकी अकालपुष्पमालेव ॥ १५ ॥
171413
171414 न किंचिद्रूपिणी पीना नानाभुवनपूरिणी ।
171415 भूताकुला निरालोका सुदीर्घेव तमोमयी ॥ १६ ॥
171416
171417 भूतैः प्राणिभिः पिशाचैश्चाकुला । तमोमयी रात्रिरिव ॥ १६ ॥
171418
171419 केशोण्ड्रकभ्रान्तिरिव विचित्रग्रन्थिवेष्टना ।
171420 मिथ्यैव दृश्यमाना खेऽदृश्यमाना न किंचन ॥ १७ ॥
171421
171422 अविचित्रवर्णा विगुणा शून्ये च वितताकृतिः ।
171423 जडस्पन्दोत्पातमयी शक्रचापलतेव खे ॥ १८ ॥
171424
171425 विगुणा गुणहीना ज्याहीना च । चक्रचापलतापक्षे जडस्पन्दो जलस्पन्दो
171426 वृष्टिस्तस्योत्पाताः सूचका विकृताः सूर्यकिरणास्तन्मयी ॥ १८ ॥
171427
171428 जडकल्लोलबहुला कलुषोल्लासफेनिला ।
171429 चक्रावर्ताक्षयमयी प्रावृषीव तरङ्गिणी ॥ १९ ॥
171430
171431 अनारतवहच्छून्यजगन्मृगनदीशता ।
171432 रजोराशिमयी रूक्षा शवभूरिव दुर्भगा ॥ २० ॥
171433
171434 शवभूः श्मशानभूमिरिव ॥ २० ॥
171435
171436 अन्तं प्राप्नोति न यथा चिरं स्वप्नपुरे चरन् ।
171437 जाग्रदाख्ये स्वप्नपुरे तथैवास्मिंश्चिरं चरन् ॥ २१ ॥
171438
171439 चरन् भ्रमन् ॥ २१ ॥
171440
171441 यानि संकल्पजालानि प्रतिष्ठामागतान्यलम् ।
171442 त्यक्तैकदृश्यजालस्थदेहानां दृढचेतसाम् ॥ २२ ॥
171443
171444 त्यक्ता एकत्र दृश्यजाले प्रपञ्चे स्थिता देहा यैस्तथाविधानां जीवानां मरणकाले

171445 एतज्जगदाकारदृढचेतसां दृढीभूतानि यानि संकल्पजालानि
171446 तान्येवैतज्जगद्देहाद्याकारेण प्रतिष्ठां स्थितिमागतानि || २२ ||
171447
171448 स्थितानि तानि चिद्व्योम कोशरत्नान्यसंकटम् |
171449 विमानपुरभूम्यादिरूपेणेत्थं स्थितात्मना [स्थिरात्मनेति क्वचित्पाठः |
171450 ] || २३ ||
171451
171452 तान्येव सिद्धसद्मानि व्योम्नि भान्ति परस्परम् |
171453 अदृष्टान्यप्यसंख्यानि सूपलब्धान्यसन्त्यपि || २४ ||
171454
171455 अदृष्टान्यपि सन्ति | सूपलब्धानि सम्यग्दृष्टाभ्यपि असन्ति | सिद्धसद्मानि
171456 सिद्धलोकाः || २४ ||
171457
171458 सुवर्णमणिमाणिक्यमुक्तावनिमयानि च |
171459 भक्ष्यभोज्यान्नपानाढ्यरसायनसरांसि च || २५ ||
171460
171461 तानि सिद्धसद्मान्येव वर्णयति - सुवर्णेत्यादिना || २५ ||
171462
171463 मधुमद्यदधिक्षीरघृतकुल्याकुलानि च |
171464 रसायनमयाकारवनितावलितानि च || २६ ||
171465
171466 रसायनं चन्द्रस्तन्मयाकारवनिताभिर्वलितानि || २६ ||
171467
171468 सर्वर्तुपुष्पफलपल्लवपूरवन्ति लीलाविलोलललनाकुलितालयानि |
171469 संकल्पमात्ररचनेन च सर्वकालं संपन्नसर्वविभवोत्करसंकुलानि || २७ ||
171470
171471 सर्वर्तुषु प्रसिद्धपुष्पफलपल्लवनदीप्रवाहादिमन्ति | संकल्पेति | स यदि
171472 पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ते तेन पितृलोकेन
171473 संपन्नो महीयते इत्यादिश्रुतेरिति भावः || २७ ||
171474
171475 सहस्रचन्द्रबिम्बानि शतसूर्याणि कानिचित् |
171476 सुवर्णामृतवेषाम्बुमयभूतानि कानिचित् || २८ ||
171477
171478 सुवर्णमिवामृतमिव वेषा येषां तथाविधान्यम्बुमयानि च भूतानि येषु || २८ ||
171479
171480 स्वेच्छातमःप्रकाशानि नित्यानन्दमयानि च |
171481 कानिचिन्नीयमानानि तनुतूललघूनि च || २९ ||
171482
171483 वायुना यथाभिलषितदेशं नीयमानानि || २९ ||
171484
171485 क्षणोत्पत्तिविनाशानि कानिचित्कलनावशात् |
171486 अनन्तस्वन्नपानानि निर्जरामरणानि च || ३० ||
171487
171488 उत्पत्तिविनाशाविच्छया दर्शनादर्शने || ३० ||
171489
171490 विचित्रसंनिवेशानि विचित्रविभवानि च |
171491 सर्वर्तुगुणरम्याणि सर्वकाममयानि च || ३१ ||
171492
171493 तानि संकल्पजालानि किल कल्याणकारतः |
171494 स्थिराणां मनसां भित्तिः कथमेवं भवेत्तु सा || ३२ ||
171495
171496 कल्याणकारतः शास्त्रीयसत्कर्मोपासनातस्तत्फलाकाराणां तत्तल्लोकतद्भोग्याकारेण

171497 स्थिराणां तन्मनसां परिणतिः। सा तु एवंविधा स्थूला भित्तिः कथं भवेत्॥ ३२॥
171498
171499 नान्यत्किंचन नामेह ब्रह्ममात्रमयात्मनि।
171500 संभवत्यङ्ग तेनैतदुच्यतामस्तु किंमयम्॥ ३३॥
171501
171502 मनःपरिणामास्तु मनोरथादौ चिन्मात्रसत्ताका एव दृष्टा इति
171503 ब्रह्ममात्रमयात्मनि जगति सति एतन्मदुक्तं सर्वं सोपपत्तिकं संभवति। हे अङ्ग
171504 प्रकारान्तरमस्ति चेदिदं जगत्किंमयं तदुच्यतां वादिभिरित्यर्थः॥ ३३॥
171505
171506 सर्गादावेव सर्गादि किंचनापीदमस्ति नो।
171507 कारणाभावतस्तेन जगत्किंमयमस्त्विदम्॥ ३४॥
171508
171509 यद्यपीदानीं भूतमयं भौतिकमित्युत्प्रेक्षितुं शक्यं तथापि सर्गादिकाले सदेव
171510 सोम्येदमग्र आसीदेकमेवाद्वितीयम् इत्यादिश्रुतेर्नान्यत्कारणं संभावयितुं
171511 शक्यमित्यकारणं जगदब्रह्मत्वे अत्यन्तासदेवेत्याह - सर्गादावेवेति॥ ३४॥
171512
171513 संकल्प्यन्ते निरन्तानि किल तानि यथा यथा।
171514 चितौ तथा तथा भान्ति केवात्र वद चित्रता॥ ३५॥
171515
171516 यद्यत्यन्तासन्ति तर्हि कथं जगन्ति भान्ति तत्राह - संकल्प्यन्त इति। अत्यन्तासतामपि
171517 शशशृङ्गखपुष्पादीनां संकल्पने भानदर्शनादिति भावः॥ ३५॥
171518
171519 इदानीमपि हे साधो त्वमप्यन्येऽपि केऽपि वा।
171520 तीव्रसंवेगसंकल्पनगराण्येवमेव खे॥ ३६॥
171521
171522 तर्ह्यस्मत्संकल्पादेर्वन्ध्यत्वं कुत इति चेत्तीव्रसंवेगत्वाभावादेव। तीव्रसंवेगेन
171523 तु त्वं वा अन्येऽपि केऽपि वा खेऽपि नगराणि कुर्वन्त्येव। तानि
171524 चैकरसाभ्यासादैन्दवन्यायेन प्राप्नुवन्ति चेत्याह - इदानीमिति द्वाभ्याम्॥ ३६॥
171525
171526 कुर्वन्त्येकरसाभ्यासाद्यदि नाम यदृच्छया।
171527 तत्तानीदं वपुस्त्यक्त्वा प्राप्नुवन्त्यचिरेण खे॥ ३७॥
171528
171529 यस्त्विदं कल्पितं च द्वे वस्तुनी अनुवर्तते।
171530 स्वर्गादिवदवाप्नोति प्राप्नोत्येवैकमेकधीः॥ ३८॥
171531
171532 इदं पूर्वसिद्धमुपासनादिना स्वकल्पितं चेति द्वे प्रपञ्चे
171533 दृढसंकल्पेनावश्यमस्त्येवेति बुद्ध्या योऽनुवर्तते स पुरुषो यथा यज्ञादिकारी
171534 स्वर्गाद्यवश्यमाप्नोति तथा क्रमेण द्वे अप्यवाप्नोति। यस्त्वनयोरेकं सत्यमिति
171535 दृढधीः स एकमेवाप्नोतीत्यर्थः॥ ३८॥
171536
171537 सिद्धाः सदा विभान्त्येवं यथान्तःकल्पनावशात्।
171538 नरकादीनि दुःखानि तथैवाभान्ति कल्पनात्॥ ३९॥
171539
171540 सिद्धलोकेषूक्तो न्यायो नरकादिपापफलकल्पनास्वपि समान इत्याह - सिद्धा इति।
171541 एतावांस्तु विशेषः - उपासनाफलं यत्नेन तत्सत्यतादृढाभ्यासे सत्येव
171542 भवति। पुण्यफलं त्वास्तिक्यानुष्ठानयोः सतोर्विनापि तदभ्यासं सत्यमित्येव
171543 दृढं भवति पापफलं तु आस्तिक्याभ्यासयोरभावेऽपि पापाचरणमात्रेण
171544 सत्यमित्येव दृढकपनं भवतीति भावः॥ ३९॥
171545
171546 यद्यत्संवेद्यते किंचित्तत्तथाप्यनुभूयते।
171547 सति वाऽसति देहेऽस्मिन्देह एव मनोमयः॥ ४०॥
171548

171549 संवेदनानुसारित्वं तु सर्वत्र समानमित्याह - यद्यदिति। देह एव। कात्स्न्ये
171550 एवकारः। सर्वोऽपि देह इत्यर्थः॥ ४०॥
171551
171552 जीवस्त्यजति यद्भावे एकां देहमयीं धियम्।
171553 तद्भावैकमयीमन्यामाशु तत्रैव पश्यति॥ ४१॥
171554
171555 अत एव मनोनुसारेणैवैकं देहं त्यक्त्वा अपरं देहं जीवो गृह्णातीत्याह - जीव
171556 इति। तत्रैवाकाशे॥ ४१॥
171557
171558 शुभा संविच्छुभा&ल्लोकान्संपश्यत्यशुभाऽशुभान्।
171559 खात्मिका खात्मकानेव चिरं वानुभवत्यपि॥ ४२॥
171560
171561 शुभा कृतपुण्या। अशुभा कृतपापा जीवसंवित्॥ ४२॥
171562
171563 शुद्धा सिद्धपुराण्येव पश्यत्यनुभवत्यपि।
171564 चिदशुद्धानि रूपाणि दुःखानि नरकेष्वति॥ ४३॥
171565
171566 या तु कर्मोपासनशुद्धा सा सूक्ष्मतमानि सिद्धपुराण्येव परेषां पश्यति
171567 स्वान्यनुभवत्यपि। अति दुःखानि पश्यत्यनुभवत्यपि॥ ४३॥
171568
171569 घूर्णत्पाषाणयमलगिरिचक्रकपेषणम्।
171570 तत्रान्धकूपपतनं पुनरुद्धारवर्जितम्॥ ४४॥
171571
171572 नारके यानि पश्यत्यनुभवति च तानि प्रपञ्चयति - घूर्णदित्यादिना।
171573 घूर्णत्पाषाणे ये यमलगिरिचक्रके गिरिद्वयचक्रके गोधूमपेषणपाषाणयन्त्राकारे
171574 ताभ्यां पेषणम्। तत्र नरके॥ ४४॥
171575
171576 दारुणेनातिशीतेन देहं पाषाणतां गतम्।
171577 भूताङ्गारमयानन्तमरुमार्गास्पदं वपुः॥ ४५॥
171578
171579 भूतैः पिशाचैरङ्गारैश्च प्रचुरः अनन्तो यो मरुर्निर्जलो मार्गस्तदास्पदं तत्र
171580 पान्थभूतं स्वं परं वपुः॥ ४५॥
171581
171582 पूताङ्गारमयाम्भोदसरदङ्गारवर्षणम्।
171583 तप्तनाराचनिकरपरुषासारदारुणम्॥ ४६॥
171584
171585 पूता निरस्तभस्मानो येऽङ्गारास्तन्मयाम्भोदेभ्यः सरतां पततामङ्गाराणां
171586 वर्षणम्॥ ४६॥
171587
171588 अवहत्पाषाणचक्रासिसरिदाकाशसंचरम्।
171589 वक्षोमुक्ताम्बुदाकारकुठाराघातभेदनम्॥ ४७॥
171590
171591 वहन्त्यः पाषाणादिसरितो यत्र तथाविधे आकाशे संचरं संचारम्। वक्षःसु
171592 मुक्तानां पातितानामम्बुदाकारकुठाराणामाघातेन वक्षोभेदनम्। वृष्ट्या
171593 आमुक्तानामिति पाठान्तरे विग्रहः॥ ४७॥
171594
171595 तप्तायःपरुषाश्लेषच्छमिच्छमितिमज्जनम्।
171596 बृहत्कटकटाशब्दशस्त्रयन्त्रनिपीडनम्॥ ४८॥
171597
171598 तप्तायःसूर्भिशूलादीनामाश्लेषं सशब्दं मज्जनं च॥ ४८॥
171599
171600 चक्रवज्रगदाप्रासशूलासिशरवर्षणम्।

171601 शाल्मलीग्रहणं पाशं [पाशबन्धनम् |] कुशक्तिशततोदनम् || ४९ ||
171602
171603 शाल्मल्याः सकण्टकाया ग्रहणमाश्लेषणम् || ४९ ||
171604
171605 तप्तसैकतसंभारपातपातालमज्जनम् |
171606 दीपच्छन्नानलभयण्म् बृहद्वायसचर्वणम् || ५० ||
171607
171608 दीपवेषेण प्रच्छन्नो य उल्कानलस्तस्माद्भयम् | बृहद्भिर्वायसैश्चर्वणं
171609 तोदनम् || ५० ||
171610
171611 निर्निर्गमाकृशाङ्गारमहाङ्गारप्रवेशनम् |
171612 शरशक्तिगदाप्रासभुशुण्डीचक्रवेधनम् || ५१ ||
171613
171614 क्षुत्क्षोभपरुषप्रेतव्रातान्योन्याङ्गचर्वणम् |
171615 तालोत्तालातिपरुषशिलातलनिपातनम् || ५२ ||
171616
171617 तालादप्युत्तालादुन्नतप्रदेशादतिपुरुषशिलातलेषु निपातनम् || ५२ ||
171618
171619 रुधिरामेध्यपङ्काङ्कपूयनद्यादिसंकटम् |
171620 शिलाशस्त्रमयाश्वेभपादपाषाणपेषणम् || ५३ ||
171621
171622 श्वभ्राभोलूकलिखितं जनौघमुसलाहतम् |
171623 शिरःकरखुरस्कन्धखण्डोत्कगृध्रमण्डलम् || ५४ ||
171624
171625 श्वभ्राभेषु देशेषूलूकैर्लिखितं देहविदारणम् | शिरःकरपादादीनां खण्डनं
171626 खण्डस्तत्रोत्कमुत्कण्ठितं गृध्रमण्डलं यत्र || ५४ ||
171627
171628 एतस्मात्कुकृतादेतत्फलमित्येव भावनात् |
171629 पश्यत्येवंदेशदृढादविसंवादिविस्तृतः || ५५ ||
171630
171631 भावनाच्छास्त्रतो निर्णयात्प्राग्बहुश एवंविधदेशेष्वनुभवेन दृढात् |
171632 स्वात्मैव तत्तन्नरकात्मना विस्तृतः सन्नित्यर्थः || ५५ ||
171633
171634 यन्नाम किंचन कदाचन चेतनं खे भातं न भातमथवा यदपूर्वमेव |
171635 तत्कल्पनाद्भवति तन्मयमेव तद्धि तस्माच्चिरं च चलतीति यदृच्छयैव || ५६ ||
171636
171637 उक्तं संगृह्योपसंहरति - यन्नामेति | यन्नाम किंचन चेतनदेहादि कदाचन
171638 खे चित्ताकाशे भातम् अथवा भाविनोऽपि स्वप्ने दर्शनान्न भातम् वा अपूर्वमेव यत्
171639 तदपि संकल्पभ्रान्तिरूपात्कल्पनाद्भाति | तत्सर्वं तन्मयं मनोमयमेव |
171640 तस्माद्भावाच्च चिरमनुभूताद्यदृच्छयैव चलति न प्रयत्नशतैरपीति
171641 सिद्धमित्यर्थः || ५६ ||
171642
171643 इत्यार्षे श्रीवासिष्ठ० वा० दे० मो० नि० उ० अ० वि० श० स्वर्गनरकोपलम्भवर्णनं
171644 नाम षष्ठ्यधिकशततमः सर्गः || १६० ||
171645
171646 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
171647 स्वर्गनरकोपलम्भवर्णनं नाम षष्ट्यधिकशततमः सर्गः || १६० ||
171648
171649
171650 एकषष्ट्यधिकशततमः सर्गः १६१
171651
171652 श्रीराम उवाच |

171653
171654 यन्मुनिव्याधयोरेतद्वृत्तं नानादशाशतम् ।
171655 अन्यकारणकं किं स्यादेतत्किं वा स्वभावजम् ॥ १ ॥
171656
171657 अनन्यकारणं चित्रं चिन्मात्रप्रतिभात्मकम् ।
171658 अबोधाज्जगदाभाति बोधे ब्रह्मेति वर्ण्यते ॥
171659
171660 मुनिव्याधयोरेतद्वासवर्णितं सुखदुःखादिदशाशतं यद्वृत्तं तत्किं
171661 प्रत्यहं दृश्यमानस्वप्नादिवदनन्यकारणकं किं वा
171662 लवणगाधिप्रभृतीनां चण्डालभावादिकमैन्द्रजालिकभगवद्वरादिनिमित्तादिव
171663 निमित्तान्तरस्वभावजमिति रामप्रश्नार्थः ॥ १ ॥
171664
171665 श्रीवसिष्ठ उवाच ।
171666
171667 ईदृशाः प्रतिभावर्ताः परमात्ममहाम्बुधौ ।
171668 अनारतं प्रवर्तन्ते स्वतः स्वात्मनि खात्मकाः ॥ २ ॥
171669
171670 तत्र निमित्तान्तरमस्तु मा वा । अज्ञातात्मनि यावन्मोक्षमीदृशा भ्रमाः सदैव
171671 प्रवर्तन्त इति वसिष्ठ उत्तरमाह - ईदृशा इत्यादिना ॥ २ ॥
171672
171673 यथा स्पन्दात्मनो वायोरजस्रं स्पन्दलेखिकाः ।
171674 उद्यन्त्येव सतश्चित्त्वाच्चिद्व्योम्नि प्रतिभायुताः ॥ ३ ॥
171675
171676 यथा व्यजनादिनिमित्तान्तरे सत्यसति च वायावल्पाल्पतराः स्पन्दलेखिकाः स्पन्दलवाः
171677 सदैवोद्यन्ति तद्वदित्यर्थः । प्रतिभा अर्थाकारप्रथा ॥ ३ ॥
171678
171679 या यथा स्वाङ्गभूतास्मादुदिता प्रतिभा प्रभा ।
171680 तावत्सेह तथैवास्ते न हता यावदन्यया ॥ ४ ॥
171681
171682 अन्यया आकारान्तरप्रतिभया यावन्न हता न विनाशिता । यथा मृदः पिण्डाद्याकारो
171683 घटाद्याकारान्तरपरिणतिविनाश्यस्तद्वदिति भावः ॥ ४ ॥
171684
171685 नानावयववानेक एवेहावयवी यथा ।
171686 चिद्ब्रह्मैकमिदं व्योम तथैवं प्रतिभात्मकम् ॥ ५ ॥
171687
171688 तेषु चानन्तेषु प्रतिभासेष्वधिष्ठानसन्मात्रात्मकं ब्रह्म शाखादिषु वृक्ष
171689 इवानुगतं तिष्ठतीत्याह - नानेति ॥ ५ ॥
171690
171691 ब्रह्म काश्चित्स्थिराः काश्चिदस्थिराः प्रतिभार्थवत् ।
171692 देहावस्था इवात्मस्थाः स्थितमात्मनि खात्मनि ॥ ६ ॥
171693
171694 तत्र काश्चिद्भूम्यन्तरिक्षदिगाद्यवस्थाश्चिरकालावस्थानात्स्थिराः । अन्या अस्थिराः
171695 अल्पकालस्थायिन्यः । यथा देहस्य पिण्डहस्तपादाद्याकारावस्था
171696 निमेषोन्मेषाद्यवस्थाश्चेत्यर्थः ॥ ६ ॥
171697
171698 स्वात्मनि स्वप्नपुरवद्भानं चिति चमत्कृतिः ।
171699 किं सारं किमसारं वा किं सत्किं वाप्यसद्भवेत् ॥ ७ ॥
171700
171701 तासु सारासारत्वादिग्रहो वृथैव मूढानामित्याह - स्वात्मनीति ॥ ७ ॥
171702
171703 परिज्ञातमिदं यावत्सर्वं चिद्व्योममात्रकम् ।
171704 दृश्यं जगद्द्रवद्बुद्धं न सन्नासत्किमुच्यते ॥ ८ ॥

171705
171706 यावद्यदा भवद्भिरज्ञैर्बुद्धं तु ॥ ८ ॥
171707
171708 चिद्व्योममात्रकचनं संसारे सर्वतः शिवे ।
171709 आस्थानास्थादि किं तज्ज्ञा यथासंस्थानमास्थित ॥ ९ ॥
171710
171711 यथासंस्थानं यथास्थितं स्वरूपमालम्ब्य आस्थित तिष्ठत ।
171712 छान्दसस्तिङ्व्यत्ययः ॥ ९ ॥
171713
171714 समुद्यन्ति स्वतोऽम्भोधेर्वीचिवत्प्रतिभाकृताः ।
171715 स्वात्मिकाः स्वात्मनो देवात्कार्यकारणदृक्तया [द्योतमानात् ।] ॥ १० ॥
171716
171717 स्वतः स्वात्मनः सकाशात् कार्यकारणदृक्तया प्रतिभाकृताः प्रतिभाकाराः
171718 समुद्यन्ति ॥ १० ॥
171719
171720 स्फारं यत्परमं व्योम्नः स्वसंकल्पस्वसर्गवत् ।
171721 तत्तेनैव जगद्बुद्धं कुतः पृथ्व्यादयोऽत्र के ॥ ११ ॥
171722
171723 यत्स्वसंकल्पवत्स्वसर्गवच्च स्फारं प्रतिभानं तदेव तेन जगदिति बुद्धम् ॥ ११ ॥
171724
171725 भात्येवमयमाभासो नैव भाति च किंचन ।
171726 ब्रह्मण्येव स्थितं ब्रह्म तदविद्याभिधं स्वतः ॥ १२ ॥
171727
171728 तज्जगत् । स्वतः न कारणान्तरतः ॥ १२ ॥
171729
171730 घनता चिद्घनेनेह चिद्व्योमैवाखिलं जगत् ।
171731 इत्येव परमो बोध एतत्प्रौढिस्तु मुक्तता ॥ १३ ॥
171732
171733 इह चिद्घनेनैव घनता नान्येन पृथ्व्यादिरूपेण । प्रौढिर्भूमिकाभ्यासेन
171734 दृढीभावः ॥ १३ ॥
171735
171736 चिद्व्योमशून्यतारूपमात्रमाभास आततः ।
171737 ऐदमप्रतिघं शान्तं जगदित्येव भासते ॥ १४ ॥
171738
171739 शून्यताया आकाशताया रूपं नैल्यमिव स्थितमज्ञानमालम्ब्येति शेषः । आभासो
171740 भ्रमः ॥ १४ ॥
171741
171742 ध्यायिनः क्षीणदेहस्य ध्याने दृक्त्वे क्षणं स्थिते ।
171743 चिन्मात्रव्यतिरेकेण शक्तत्वं स्यात्किमुच्यताम् । १५ ॥
171744
171745 एतच्च ध्यायिनामनुभवसिद्धमित्याह - ध्यायिन इति ।
171746 निर्विकल्पसमाधिप्रतिष्ठया क्षीणदेहस्य उच्छिन्नदेहभावस्य । दृक्त्वे
171747 साक्षिचिन्मात्ररूपत्वे । शक्तत्वं जगद्दर्शनसामर्थ्यं किं स्यात् ।
171748 तस्मादज्ञानदृशैव तत्सामर्थ्यं परिशेषादिति भावः ॥ १५ ॥
171749
171750 चिद्धातुव्योमभागो यो भाति यत्र यथा यथा ।
171751 तथा तथा स तत्रास्ते यावदित्थं स्वभावतः ॥ १६ ॥
171752
171753 तथा च ब्रह्मैवाज्ञचित्तोपाधौ जगदात्मना भात्यन्यत्र चिन्मात्रस्वभावेनेति
171754 व्यवस्थेत्याह - चिद्धात्विति । बोधाबोधस्वभावतः ॥ १६ ॥
171755
171756 अविचारवतो दृश्यभ्रान्तिर्गगनमय्यपि ।

171757 जातितैमिरिकद्वीन्दुदोषवन्नोपशाम्यति ॥ १७ ॥
171758
171759 जातितैमिरिकस्य जन्मप्रभृति तिमिररोगदुष्टचक्षुषः पुरुषस्य ॥ १७ ॥
171760
171761 यदिदं दृश्यते किंचित्तद्ब्रह्मैव निरामयम् ।
171762 चिदाकाशमनाद्यन्तं तत्कथं किं प्रशाम्यति ॥ १८ ॥
171763
171764 ब्रह्मभावापन्नं तु जगन्न नश्यतीत्याह - यदिदमिति ॥ १८ ॥
171765
171766 स्वमसन्त्यजतो रूपं स्वच्छसंवेदनात्मकम् ।
171767 स्वप्नवत्कचनं स्वस्य यन्नाम तदिदं जगत् ॥ १९ ॥
171768
171769 तथा चाज्ञदशायामपि स्वप्नचिद्विवर्तमात्रं जगदित्याह - स्वमिति ।
171770 अविकृतस्यान्यथा प्रतिभासो विवर्त इति तल्लक्षणयोगादिति भावः ॥ १९ ॥
171771
171772 शास्त्रार्थैस्तीक्ष्णया बुद्ध्या मिथो यन्न विकल्पनैः ।
171773 कृत्वा सुप्तमिवात्मानं किंचिद्बुद्धेन बोध्यते ॥ २० ॥
171774
171775 रूढा येयमविद्येति संविदव्यभिचारिणी ।
171776 भवतां ननु नास्त्येव सा सरित्स्विव पांसुभूः ॥ २१ ॥
171777
171778 या भवतां जगदाकारेण रूढा सास्माकं नास्त्येव ॥ २१ ॥
171779
171780 यथा स्वप्नेऽवनिर्नास्ति स्वानुभूतापि कुत्रचित् ।
171781 तथेयं दृश्यता नास्ति स्वानुभूताप्यसन्मयी ॥ २२ ॥
171782
171783 नन्वनुभवः कथमुपलभ्यते तत्राह - यथेति ॥ २२ ॥
171784
171785 चिद्व्योममात्रमेवार्थाऽनलवद्भासते यथा ।
171786 स्वप्ने तथैव जाग्रत्त्वेऽनलं स्वस्यैव लक्ष्यते ॥ २३ ॥
171787
171788 रूपाद्यर्थवत्तत्प्रकाशकानलवच्च यथा स्वप्ने चिद्व्योमैव भासते । स्वस्य
171789 जाग्रत्साक्षिणः अनलमपूर्णं स्वप्रकाशरूपमेव तथा लक्ष्यत इत्यर्थः ॥ २३ ॥
171790
171791 इदं जाग्रदयं स्वप्न इति नास्त्येव भिन्नता ।
171792 सत्ये वस्तुनि निःशेषसमयोर्यानुभूतितः ॥ २४ ॥
171793
171794 या भिन्नता भासते अनुभूतितः समयोस्तयोः सा नास्त्येवेत्यर्थः ॥ २४ ॥
171795
171796 नैतदेवमिति स्वप्नप्रबोधात्प्रत्ययो यथा ।
171797 मृत्वामुत्र प्रबुद्धस्य जाग्रति प्रत्ययस्तथा ॥ २५ ॥
171798
171799 अमुत्र शरीरान्तरे प्रबुद्धस्य गर्भस्थस्य जातिस्मरस्य जाग्रति प्रसिद्धः प्रत्ययोऽपि
171800 तथा नैतदेवमिति बाधितो भवतीत्यर्थः ॥ २५ ॥
171801
171802 कालमल्पमनल्पं च स्वप्नजाग्रदितीह धीः ।
171803 वर्तमानानुभवनसाम्यात्तुल्ये तयोर्द्वयोः ॥ २६ ॥
171804
171805 कथं तर्ह्यसाम्यप्रत्ययो जनानामिति चेत्कालाल्पत्वमहत्त्वाभ्यां नानुभवत इत्याह
171806 - कालेति ॥ २६ ॥
171807
171808 बाह्ये तदेवमित्यादिगुणसाम्यादशेषतः ।

171809 न जाग्रत्स्वप्नयोर्ज्यायानेकोऽपि यमयोरिव ॥ २७ ॥
171810
171811 न च बाह्ये जाग्रदन्तः स्वप्न इति भेदः। स्वप्नोऽपि बाह्ये। तत्स्वाप्नमेव जाग्रद्वदेव
171812 सर्वमिति सर्ववस्तुषूभयत्र गुणसाम्यानुभवेन नैकतरज्यायस्त्वमित्यर्थः ॥ २७ ॥
171813
171814 यदेव जाग्रत्स्वप्नोऽयं यः स्वप्नो जाग्रदेव तत्।
171815 नैतदेवं किलेत्यस्ति धीः कालेनोभयोरपि ॥ २८ ॥
171816
171817 धीर्बाधधीः ॥ २८ ॥
171818
171819 आजीवितान्तं स्वप्नानां शतान्यनियतं यथा।
171820 अनिर्वाणमहाबोधे तथा जाग्रच्छतान्यपि ॥ २९ ॥
171821
171822 अनिर्वाणस्य जीवस्य महत्यबोधे स्वापे ॥ २९ ॥
171823
171824 उत्पन्नध्वंसिनः स्वप्नाः स्मर्यन्ते बहवो यथा।
171825 तथैव बुद्धैः स्मर्यन्ते सिद्धैर्जन्मशतान्यपि ॥ ३० ॥
171826
171827 बुद्धैः प्रबुद्धैः सिद्धैर्जातिस्मरणानुकूलयोगसिद्धिमद्भिः ॥ ३० ॥
171828
171829 एवं समस्तसाधर्म्ये समस्तानुभवात्मनि।
171830 कचति स्वप्नवज्जाग्रज्जाग्रद्वत्स्वप्नवेदनम् ॥ ३१ ॥
171831
171832 यथा दृश्यं जगच्चेति नित्यमेकार्थतां गतौ।
171833 उभौ शब्दौ तथैवैतज्जाग्रत्स्वप्नात्मकौ स्मृतौ ॥ ३२ ॥
171834
171835 कथं तर्हि नामभेदस्तत्राह - यथेति ॥ ३२ ॥
171836
171837 एवं स्वप्नपुरं स्फारं यथा व्योमैव चिन्मयम्।
171838 तथैवेदं जगदतः क्वाविद्या दृश्यते कुतः ॥ ३३ ॥
171839
171840 स्वप्नसाम्यप्रतिपादनस्य प्रयोजनं दर्शयति - एवमिति ॥ ३३ ॥
171841
171842 तदेवाकाशमात्रात्म यद्यविद्येति कथ्यते।
171843 तद्यदास्ते तदेवाहं बन्धः स्वकलनात्मकः ॥ ३४ ॥
171844
171845 स हि स्वप्नो इत्यादिश्रुतौ स्वप्नशब्देनेवाविद्याशब्देनापि तद्ब्रह्मैव यदि कथ्यते
171846 तर्हि न शब्दे वयं विवदामहे किंतु सर्वभ्नमशान्तौ यदेवास्ते तदेवाहम्। प्राक्
171847 स्वकल्पनात्मक एव बन्ध इत्येतावदस्मदभिमतं तच्च सिद्धमेवेति भावः ॥ ३४ ॥
171848
171849 तन्मैवं क्रियतामेतदबन्धस्यैव बन्धनम्।
171850 कान्यता अमलव्योम्नश्चिन्मयस्य निराकृतेः ॥ ३५ ॥
171851
171852 यदैवं तदा नित्यमुक्तस्यात्मनो बन्धनभ्रान्तिरेव न कार्येत्याह - तदिति।
171853 अमलस्य व्योम्नो निराकृतेश्चिन्मयस्य च का अन्यता किं वैलक्षण्यं येन व्योम न
171854 बध्यते चिदात्मा तु बध्यत इति वाचो युक्तिः प्रसरेत्।
171855 द्वयोरप्यमूर्तत्वालेपकत्वसूक्ष्मतमत्वादिना अत्यन्तसाम्यादिति भावः ॥ ३५ ॥
171856
171857 चिन्मयाकाशकचने क्वास्मिन्किल निराकृतेः।
171858 दृश्यनामन्यविद्याख्ये बन्धो मोक्षोऽथवा कुतः ॥ ३६ ॥
171859
171860 अस्मिन्दृश्यनामन्यविद्याख्ये चिन्मयाकाशकचने सति बन्धो वा मोक्षो वा कुतो

हेतोः स्यादित्यर्थः ॥ ३६ ॥

नाविद्या विद्यते नाम बन्धो बन्धो न कस्यचित् ।
मोक्षो न कस्यचिन्मोक्षश्चास्तिनास्तीति नास्त्यलम् ॥ ३७ ॥

यथा अविद्या नाम न विद्यते तदा बन्धो बन्धो न । तथा मोक्षोपि मोक्षो न । यतो
ब्रह्मातिरिक्तं अस्तिनास्तीति अव्यवहारयोग्यमेव दुर्लभमित्यर्थः ॥ ३७ ॥

नास्त्येव विद्याऽविद्या वा चिदेवेयं कचत्यजा ।
ख एव खाकृतिः स्वप्न इव सर्गस्वदेहिनी ॥ ३८ ॥

स्वप्न इव चिदेव सर्गाकारस्वदेहिनी भूत्वा कचति ॥ ३८ ॥

देशाद्देशान्तरप्राप्तौ यन्मध्ये संविदो वपुः ।
तज्जाग्रत्स्वप्नदृश्यस्य रूपमित्येव निश्चयः ॥ ३९ ॥

मध्ये यन्निर्विषयं संविदः स्वरूपं प्रसिद्धं तदेव
जाग्रत्स्वप्नप्रसिद्धदृश्यस्य पारमार्थिकं रूपमित्येव निश्चयः कार्यः ॥ ३९ ॥

सबाह्याभ्यन्तरे दृश्ये शान्तनिद्रस्य यद्वपुः ।
एकस्य निशि तद्रूपं जाग्रत्स्वप्नदृशामिह ॥ ४० ॥

बाह्ये दृश्ये आभ्यन्तरे च दृश्ये इन्द्रियमनस्तद्विकारादौ प्रकाशनाय सदा
जागरूकस्य स्वयंज्योतिरात्मनो यद्वपुः स्वरूपम् । असुप्तः सुप्तानबिचाकशीति इति
श्रुतेः । तदेव जाग्रत्स्वप्नदृशां तात्त्विकं रूपमित्यर्थः ॥ ४० ॥

विद्धि तद्रूपमेवेदं भेदवेदनमित्यपि ।
चित्यन्तमागतः कोऽन्यो नाम स्याद्भेदवेदने ॥ ४१ ॥

अत एव जाग्रत्स्वप्नभेदवेदनमित्यपि कल्पनं तद्रूपं तदुभयसाक्षिरूपमेव
विद्धि न चिद्भेदवेदनम् । यतः अवस्थात्रयानुगतायाः साक्षिचितेरन्तमन्यः क आगतो
दृष्टवान् यश्चिति भेदं पश्येदित्यर्थः ॥ ४१ ॥

चिद्व्योमैवाभेदबुद्धिश्चिद्व्योमैव च भेदधीः ।
द्वैताद्वैते चैकमेव तथा शान्तमखण्डितम् ॥ ४२ ॥

तथा सतीति शेषः ॥ ४२ ॥

सदंशो बोधतद्ग्राह्यमय एव यथा तथा ।
दृष्टा य एव दृश्यं तद्द्वैतवेदनमेककम् ॥ ४३ ॥

यथा ब्रह्मणः सच्चिदानन्दांशेषु सदंशो बोधमयो
बोधग्राह्यमयश्चेत्युभयत्राभिन्नस्तथा द्वैतं तद्वेदनं चैककमिति
चिदंशोऽप्यभिन्नः । यतो य एव दृष्टा दृशां विषयीकृतास्त एव
दृश्यमित्युच्यन्ते । न च विषयविषयिभावश्चित्तादात्म्यातिरिक्तः केनचिन्निरूपयितुं
शक्यस्तत्तस्माद्धेतोरित्यर्थः ॥ ४३ ॥

तद्ब्रह्म खं विदुर्द्वैतमद्वैताद्वैतमेव च ।
सर्ग एव परं ब्रह्म द्वैतमद्वैतमेव सत् ॥ ४४ ॥

एकस्य सद्वस्तुन एव सर्वद्वैतात्मना यदा प्रतिभासस्तदा ब्रह्मैव
द्वैताद्वैतमद्वैताभिन्नं च । न तद्व्यतिरिक्तं किंचित्प्रसिद्ध्यतीत्यर्थः ॥ ४४ ॥

नेति नेति विनिर्णीय सर्वतोऽभिभवत्यपि ।
पश्चात्त्यक्त्वा चिदाकाशे शिलां कृत्वास्यतामिह ॥ ४५ ॥

तर्हि किं द्वैताद्वैतसमुच्चयात्मकमेव ब्रह्म बोद्धव्यं नेत्याह - नेतीति ।
पूर्वं सर्ग एव परं ब्रह्म द्वैतमद्वैतमेव [अत्र सत् इति पाठः साधुः
तथैव ४४ तमश्लोके पठितत्वात् च इति तत्पूर्वार्धान्तेन भ्रान्तिः सुसंभाव्या ।]
इति मूर्तामूर्तप्रपञ्चस्य ब्रह्मरूपतां विनिर्णीय पश्चात् नेति नेति इति
सर्वद्वैतनिषेधेन सर्वतः कृत्स्नं द्वैतं त्यक्त्वा अभितो भवत्याविर्भूतेऽपि इह
प्रत्यगात्मनि चिदाकाशे उत्तरोत्तरभूमिकाभ्यासेन
सैन्धवघनवदानन्दैकरसघनां शिलां कृत्वा आस्यताम् ॥ ४५ ॥

यथाक्रमं सुभग यथास्थितस्थिति यथोदयं व्रज पिब भुंक्ष्व भोजय ।
अभीप्सितं गतमननो निरिङ्गनः सुचिन्मये परमपदोपलो भवान् ॥ ४६ ॥

हे सुभग एवं सुचिन्मये ब्रह्मणि परमपदोपलभूतो भवान् यथाक्रमं
स्ववर्णाश्रमोचितक्रममनतिक्रम्य यथास्थितं लोकस्थितिं चानतिक्रम्य यथोदयं
स्वविभवानुसारेणाभीप्सितं देशं विषयं च व्रज विहर पिब भुंक्ष्व
द्विजसुहृद्वर्गान्भोजय च । अनीप्सितम् इति पाठे निरिच्छं यथा स्यात्तथा ॥ ४६ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० निर्वा० उ० अ० वि० श०
निर्वाणवर्णनं नामैकषष्ट्यधिकशततमः सर्गः ॥ १६१ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
निर्वाणवर्णनं नामैकषष्ट्यधिकशततमः सर्गः ॥ १६१ ॥

द्विषष्ट्यधिकशततमः सर्गः १६२

श्रीवसिष्ठ उवाच ।

चिद्व्योमार्थतयार्थानां यथास्थितमिदं जगत् ।
सरूपालोकमननमपि चिद्व्योम केवलम् ॥ १ ॥

इह द्वैतस्य कृत्स्नस्य ब्रह्ममात्रत्ववर्णनैः ।
हितोक्तिभिरविद्याया निरास उपपाद्यते ॥

सर्वस्य दृश्यस्य चिद्व्योमार्थमेव स्फुरणादपि तन्मात्रतापरिशेष इत्याह -
चिद्व्योमेति । अर्थानां विषयाणां बाह्यरूपालोकनेन आन्तरमननेन च सहितं
बाह्यमाभ्यन्तरं च दृश्यजातं गवाद्यर्थतृणादि गवात्द्यात्मने
चिद्व्योमोपभोग्यं चिद्व्योमैव केवलं परिशिष्यत इत्यर्थः ॥ १ ॥

स्वप्नचित्पुररूपत्वादन्यद्यस्मान्न विद्यते ।
जगत्तस्मान्नभः शान्तं नेह नानास्ति किंचन ॥ २ ॥

चिद्भोग्यस्य चिन्मात्रपरिशेषत्वं केन दृष्टान्तेन साध्यते तत्राह - स्वप्नेति ।
यस्माद्धेतोः स्वप्ने पुरभोक्त्र्याश्रित एव पुररूपत्वादन्यन्न विद्यते
तस्माज्जाग्रज्जगदपि नभ इव शान्तम् । उक्तानुमाने श्रुतिसंमतिं दर्शयति - नेह
नानास्ति किंचनेति ॥ २ ॥

चिदाभानमनानैव नानेव परिलक्ष्यते ।
अनात्मैवात्मनात्मानं स्वप्नाकाशपुरेष्विव ॥ ३ ॥

171965 यदि नाना नास्ति तर्हि किं तद्यन्नानेव परिलक्ष्यते तत्राह - चिदाभानमिति। यन्नाना
171966 तदनात्मैव निःस्वरूपमेव स्वसाक्षिणा आत्मनात्मानं स्वं दर्शयति। यथा
171967 स्वप्नपुरेष्वाकाशपुरेषु गन्धर्वनगरेषु च पदार्थस्तद्वदित्यर्थः॥ ३॥
171968
171969 सर्गादाविव चिद्व्योम स्वप्नाकाशपुरं जगत्।
171970 आभातमेवासत्यं च नूनं सत्यमिव स्थितम्॥ ४॥
171971
171972 तत्साम्यमेव स्फुटयति - सर्गादाविति। सर्गस्य आदौ प्रलयकाल इवेदानीमपि जगत्
171973 स्वप्नाकाशपुरवत् आभातमेवासत्यं चेति साम्यमित्यर्थः॥ ४॥
171974
171975 तज्ज्ञाज्ञातो न मूर्खाणामज्ञाज्ञातो न तद्विदाम्।
171976 विद्यते सर्गशब्दार्थः सत्यासत्यमयात्मकः॥ ५॥
171977
171978 चन्द्रप्रादेशिकत्ववत्तज्ज्ञानानुभवविसंवादादपि जगत्तथेत्याह - तज्ज्ञेति।
171979 उभयत्र अज्ञात इति च्छेदः। अथवा न मूर्खाणां तद्विदां वा अनुभवमनुसृत्य
171980 प्रपञ्चो व्यवस्थापयितुं शक्यः
171981 परस्परविसंवादादुभाभ्यामप्यज्ञातत्वादित्यर्थः॥ ५॥
171982
171983 तज्ज्ञाज्ञयोस्तयोरन्तःप्रतिपत्तौ तु यत्स्थितम्।
171984 न बोद्‌धुं न च वक्तुं ते जानीतस्तौ परस्परम्॥ ६॥
171985
171986 तत्कुतस्तत्राह - तज्ज्ञाज्ञयोरिति। यतः केवलान्तर्दृष्टयस्तज्ज्ञाः
171987 केवलबाह्यदृष्टयोऽज्ञाः प्रपञ्चरूपं त्वन्तःप्रतिपत्तौ बुद्धिवृत्तौ अन्तराले
171988 स्थितमुभावपि बोद्‌धुं ते तुभ्यं परस्परं वा वक्तुं च न जानीतो न शक्नुतः॥ ६॥
171989
171990 स्वबुद्धौ स्वर्गशब्दार्थो मिथोन्तस्तत्किलानयोः।
171991 स्थैर्यास्थैर्ये जाग्रतो द्वे अक्षीबक्षीबयोरिव॥ ७॥
171992
171993 उक्तमेवोपपादयति - स्वबुद्धाविति। सर्गशब्दार्थस्तावत्स्वस्वबुद्धौ स्थित एव
171994 स्फुरति नान्य इत्यविवादं तत्राक्षीबक्षीबयोरिवाभ्रान्तभ्रान्तयोरनयोर्मिथः
171995 परस्परं तत्तत्प्रपञ्चरूपमान्तरबुद्धिस्थत्वादन्तःस्थम्। किलेति यौक्तिकप्रसिद्धौ
171996 । तत्र विदुषो बुद्धिः सदैव स्थैर्ये जागर्तीति स स्थिरमात्मतत्त्वमेव पश्यति।
171997 अविद्वद्बुद्धिरस्थैर्ये जागर्तीति सोऽस्थिरं बाह्यमेव पश्यति। बुद्धिगतं तु
171998 प्रपञ्चस्वरूपं नात्यन्तमान्तरं नात्यन्तं बाह्यमिति नोभयोरपि
171999 तत्परिज्ञानमस्तीत्यर्थः॥ ७॥
172000
172001 द्रवस्थितिमिता यद्वत्सरिद्वारिणि वीचयः।
172002 चितौ स्थितिमितास्तद्वच्चेतनात्सर्गवीचयः॥ ८॥
172003
172004 यद्युभाभ्यामपि द्रष्टुमशक्यः प्रपञ्चस्तर्हि कथं स्थितिं प्राप्तस्तत्राह -
172005 द्रवेति। अज्ञातचित्स्वभावमेवावलम्ब्य जलद्रवतया तरङ्गा इवात्मसत्तयैवान्तराले
172006 स्थितिं प्राप्ता इत्यर्थः॥ ८॥
172007
172008 चिद्रूपं यन्न किंचित्तदिदं किंचिदवस्थितम्।
172009 भाति दृश्यमिवादृश्यमपि स्वप्नपुरेष्विव॥ ९॥
172010
172011 अत एव चिच्चमत्कारमात्रं जगदित्याह - चिद्रूपमिति॥ ९॥
172012
172013 चिच्छायेयं प्रकचति जगदित्यभिशब्दिता।
172014 नन्वमूर्तैव मूर्तेव द्रव्यच्छायेव वै तता॥ १०॥
172015
172016 अथवा मायायां यश्चित्प्रतिबिम्बः स एव जगदाकारेण [जीवजगदाकारेण इत्यपि

172017 पाठः ‌।] स्फुरतीत्याह - चिछायेति। दर्पणे घटपटादिद्रव्यच्छायेव॥ १०॥
172018
172019 कायमात्रकमेवेदं भ्रान्तिमात्रमसन्मयम्।
172020 पिशाचविभ्रमालोकप्रायमायासनं दृढम्॥ ११॥
172021
172022 तत्र देहात्मताभ्रान्तिरेव सर्वायासमूलमित्याह - कायेति॥ ११॥
172023
172024 मनोराज्यमिवासत्यं लोलं लम्बाम्बुबिन्दुवत्।
172025 द्वाभ्यामित्यनुभूतिभ्यां यदसत्तत्र कात्मता॥ १२॥
172026
172027 देह एवात्मास्त्विति भ्रमं वारयति - द्वाभ्यामिति। प्राग्वर्णिताभ्यां द्वाभ्यां
172028 विद्वदविद्वदनुभूतिभ्यामपि विमृश्यमानं यदसत् तत्र का
172029 आत्मताप्रसक्तिरित्यर्थः॥ १२॥
172030
172031 विदार्यदारुरववत्तरङ्गानिलशब्दवत्।
172032 खे शब्दाः पवनस्फोटा भान्त्यर्था वासनोदयाः॥ १३॥
172033
172034 कथं तर्हि रामोऽहं वसिष्ठस्त्वमित्यादिदेहात्मव्यवहारशब्दार्थास्तत्राह -
172035 विदार्येति। यथा पृथिव्यां स्थूलवंशदारुविदारणे तदन्तःस्थितः शब्दो
172036 बहिर्निःसरतीव प्रतिभाति न च तदन्तःशब्दः स्थितो निःसृतो वा तथा जले
172037 तरङ्गेभ्यः अग्नौ ज्वालादिभ्यः खे प्रतिध्वनिशब्दाः पवनाच्च
172038 कण्ठताल्वादिप्रदेशे वर्णपदवाक्यस्फोटा निर्गता इव भान्ति न च ते प्राक् तदन्तः
172039 सन्ति तद्वद्वासनामया अप्यर्था अग्निविस्फुलिङ्गवज्जाग्रत्स्वप्रयोरात्मनो निर्गता इव
172040 भान्ति न च तत्र सन्तीत्यर्थः॥ १३॥
172041
172042 सर्गादितः स्वपरिभा कचति स्वप्नशैलवत्।
172043 वस्तुतस्तु न शब्दोस्ति नार्थोऽस्ति न च दृश्यता॥ १४॥
172044
172045 स्वपरिभा स्वात्मचित्॥ १४॥
172046
172047 यदिहं चास्ति चाभाति तत्सर्वं परमार्थसत्।
172048 अन्यादृक्कारणाभावात्सर्गादावेव नोदितम्॥ १५॥
172049
172050 अन्यादृक् सद्व्यतिरिक्तं रूपं तु सर्गादावेव कारणाभावान्नोदितं नोत्पन्नमेव॥
172051 १५॥
172052
172053 निरस्तशब्दभेदार्थमनिरस्ताखिलार्थकम्।
172054 शाम्यामि परिनिर्वामि व्योमैवास्मीति बुद्ध्यताम्॥ १६॥
172055
172056 अतः सदैवैकरूपं सद्व्योमैवाहमिति परमशान्तनिर्वृत्तिरूपं बुध्यतामित्याह
172057 - न्निरस्तेति॥ १६॥
172058
172059 त्यज्यतामात्मविश्रान्त्या शुद्धबोधैकरूपया।
172060 जीवेऽजवं जवीभावस्त्वसदुत्थित आत्मना॥ १७॥
172061
172062 जीवे प्रसिद्धोऽजवं जवीभावो मनोविक्षेपः॥ १७॥
172063
172064 आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः।
172065 आत्मात्मना न चेत्त्रातस्तदुपायोऽस्ति नेतरः॥ १८॥
172066
172067 अत एव स्वविवेकेनैवात्मानमुद्धरेत्याह - आत्मैवेति॥ १८॥
172068

172069 तर तारुण्यमस्तीदं यावत्ते तावदम्बुधेः।
172070 ननु संसारनाम्नोऽस्माद्बुद्ध्या नावा विशुद्धया॥ १९॥
172071
172072 यावत्तारुण्यमस्ति तावदेव बुद्ध्या नावा संसारनाम्नोऽम्बुधेस्तर परतीरं व्रज॥
172073 १९॥
172074
172075 अद्यैव कुरु यच्छ्रेयो वृद्धः सन्किं करिष्यसि।
172076 स्वगात्राण्यपि भाराय भवन्ति हि विपर्यये॥ २०॥
172077
172078 वयसो विपर्यये वृद्धत्वे॥ २०॥
172079
172080 शैशवं वार्धकं ज्ञेयं तिर्यक्त्वं मृतिरेव च।
172081 तारुण्यमेव जीवस्य जीवितं तद्विवेकि चेत्॥ २१॥
172082
172083 शैशवं वार्धकं च तिर्यक्त्ववज्ज्ञानासाधकं ज्ञेयम्। विवेकि चेदिति। अविवेकित्वे तु
172084 तत्तिर्यक्त्वादप्यधममिति भावः॥ २१॥
172085
172086 संसारमिममासाद्य विद्युत्संपातचञ्चलम्।
172087 सच्छास्त्रसाधुसंपर्कैः कर्दमात्सारमुद्धरेत्॥ २२॥
172088
172089 कर्दमात् मोहकर्दमात्। सारमात्मानम्॥ २२॥
172090
172091 अहो बत नराः क्रूरा गतिः कैषां भविष्यति।
172092 कुर्वन्ति कर्दमोन्मग्ने नात्मन्यपि निजोदयम्॥ २३॥
172093
172094 ये कर्दमोन्मग्नेऽप्यात्मनि शास्त्रोपायैर्निजोदयमुद्धारोपायं न कुर्वन्ति एषां का
172095 गतिर्भविष्यतीत्यनुशोचति वसिष्ठः॥ २३॥
172096
172097 यथा मृन्मयवेतालसभा ग्राम्यस्य भङ्गदा।
172098 यथा भूतार्थविज्ञानान्मृन्मय्येव न भङ्गदा॥ २४॥
172099
172100 ग्राम्यस्य मृन्मयत्वानभिज्ञस्य सत्यवेताला सभा मया दृष्टेति भ्रान्तिमत इति
172101 यावत्। भङ्गदा भयज्वरादिदुःखदा॥ २४॥
172102
172103 तथा ब्रह्ममयी दृश्यलक्ष्मीरज्ञस्य भङ्गदा।
172104 यथा भूतार्थविज्ञाने ब्रह्मैवास्ते न भङ्गदा॥ २५॥
172105
172106 शाम्यत्यशान्तमेवेदं स्थितमेव विलीयते।
172107 दृश्यं तत्त्वपरिज्ञानाद्दृश्यमानं न दृश्यते॥ २६॥
172108
172109 कुतो न भङ्गदतत्राह - शाम्यतीति॥ २६॥
172110
172111 स्फुटानुभवनस्यापि स्वप्नकाले निजे यथा।
172112 परिज्ञानादसत्यत्वमेव सत्यपदं गता॥ २७॥
172113
172114 ननु स्फुटानुभवनत्वात्सत्यपदं गतस्य जगतः कथं
172115 ज्ञानमात्रादसत्त्वापत्तिस्तत्राह - स्फुटेति। यथा स्वप्नकाले
172116 स्फुटानुभवनस्यापि स्वाप्नजगतः परिज्ञानात्प्रबोधात्। तथा अनुभूयमाना अत
172117 एव सत्यपदं गतापि सर्गसंवेदनेति परेणान्वयः॥ २७॥
172118
172119 तथानुभूयमानापि सर्गसंवेदनाम्बरे।
172120 चिन्मये तत्त्वविज्ञानाच्छून्यतैवावशिष्यते॥ २८॥

172121
172122 जातिज्वरज्वलितजीवितजङ्गलेषु जीर्णानि वातहरिणाहरणक्रमेण।
172123 माद्यन्मनःपवनपातयुतान्यमूनि जित्वेन्द्रियाणि जयमेहि जहीहि जन्म॥ २९॥
172124
172125 तत्तु ज्ञानं समनस्केन्द्रियजयं विना न लभ्यत इति दर्शयन्नुपसंहरति - जातीति
172126 । जातिज्वरैर्जन्मज्वरभूतैः कामक्रोधादिदवाग्निभिर्ज्वलितेषु दीप्तेषु जीवितजङ्गलेषु
172127 वातहरिणानां वातमृगाणां यस्तृणपर्णाद्याहरणक्रमः कदाचिल्लभ्यते
172128 कदाचिन्नेत्येवंरूपस्तेन जीर्णानि शिथिलीभूतानि माद्यतो मनसः प्राणपवनस्य च
172129 यः पातो बहिः संचारस्तेन युतान्यमूनीन्द्रियाणि जित्वा ज्ञानेनाविद्याजयमेहि
172130 प्राप्नुहि। तेन च मुक्तः सन् पुनर्जन्म जहीहि त्यज। निवारयेति यावत्॥ २९॥
172131
172132 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये वा० दे० मो० नि० उ० अ० वि० अविद्यानिरसनो
172133 नाम द्विषष्ट्यधिकशततमः सर्गः॥ १६२॥
172134
172135 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
172136 अविद्यानिरसनो नाम द्विषष्ट्यधिकशततमः सर्गः॥ १६२॥
172137
172138
172139 त्रिषष्ट्यधिकशततमः सर्गः १६३
172140
172141 श्रीराम उवाच।
172142
172143 विनेन्द्रियजयेनेदं नाज्ञत्वमुपशाम्यति।
172144 तदिन्द्रियाणि जीयन्ते कथं कथय मे मुने॥ १॥
172145
172146 इहेन्द्रियजयोपायश्चित्तरोधश्चिदद्वये।
172147 अभ्यासश्चास्य शास्त्रस्य कीर्तिता बोधहेतवः॥
172148
172149 जित्वेन्द्रियाणि जयमेहि जहीहि जन्म इति यदिन्द्रियजयस्यावश्यकत्वं वसिष्ठेनोक्तं
172150 तत्रोपायं रामः पृच्छति - विनेति॥ १॥
172151
172152 श्रीवसिष्ठ उवाच।
172153
172154 न च प्रभूतभोगेषु न पुंस्त्वे न च जीविते।
172155 न चेन्द्रियजयोन्मुक्तौ दीपस्तनुदृशो यथा॥ २॥
172156
172157 स्थाने त्वया प्रश्नः कृत इत्यनुमोदमानो वसिष्ठः प्रश्नं पुष्णाति - न चेति।
172158 यथा तनुदृशो मन्दचक्षुषः पुरुषस्य प्रज्वलन्नपि दीपो न सूक्ष्मार्थदर्शने
172159 उपयुज्यते तथा न प्रभूतभोगेष्वासक्तस्य नापि पुंस्त्वे स्वोत्कर्षसंपादने
172160 आसक्तस्य नापि जीविते जीवनोपाये धनार्जनादावासक्तस्य शास्त्रादिसाधनं
172161 ब्रह्मदर्शन उपयुज्यते। तथा इन्द्रियजयोन्मुक्तावपि तन्नोपयुज्यत इत्यर्थः॥ २॥
172162
172163 तदिन्द्रियजये युक्तिमिमामविकलां शृणु।
172164 सिद्धिमेति स्वयत्नेन सुखेन तनुरेतया॥ ३॥
172165
172166 तत्तस्मादिन्द्रियजयस्यावश्यकत्वादेतया मदुक्तयुक्त्या तनुरल्पापि साधनसंपत्
172167 स्वयत्नेन सिद्धिं मोक्षफलसिद्धिमेति प्राप्नोति॥ ३॥
172168
172169 चिन्मात्रं पुरुषं विद्धि चेतनाज्जीवनामकम्।
172170 यच्चेतति स जीवोऽन्तस्तन्मयो भवति क्षणात्॥ ४॥
172171
172172 चेतनाच्चित्तोपनीतार्थप्रकाशकत्वात्। चित्ताधीनत्वादिति यावत्। यच्चेतति चित्तवृत्त्या

172173 व्याप्य प्रथयति तन्मयो भवति तत्रासज्जते। स्त्रीमयो जाल्म इतिवत्॥ ४॥
172174
172175 संवित्प्रयत्नसंबोधनिशिताङ्कुशकर्षणैः।
172176 मनोमतङ्गजं मत्तं जित्वा जयति नान्यथा॥ ५॥
172177
172178 एवं सति चित्तस्य प्रत्याहारप्रयत्नेनान्तराकर्षणेन बाह्याकारतां निरुध्य
172179 ब्रह्माकारताप्रबोधनाभ्यासे स्वतः पङ्गूनीन्द्रियाण्यर्थादिव जितानि भवन्तीति
172180 युक्तिमाह - संविदिति॥ ५॥
172181
172182 चित्तमिन्द्रियसेनाया नायकं तज्जयाज्जयः।
172183 उपानद्गूढपादस्य ननु चर्मावृतैव भूः॥ ६॥
172184
172185 तत्कुतस्तत्राह - चित्तमिति। नायकं स्वामिभावेन प्रवर्तकं निरोधकं च।
172186 पादमात्रावरणेन सर्वकण्टकजय एव चित्तमात्रावरणेन सर्वेन्द्रियजय
172187 इत्याशयेनाह - उपानदिति॥ ६॥
172188
172189 संविदं संविदाकाशे संरोप्य हृदि तिष्ठतः।
172190 स्वयमेव मनः शाम्येन्नीहार इव शारदः॥ ७॥
172191
172192 मनःशान्तौ तर्हि क उपायस्तमाह - संविदमिति। संविदं
172193 चित्तावच्छिन्नसंविदं जीवं संविदाकाशे ब्रह्मणि संरोप्य एकीकृत्य॥ ७॥
172194
172195 स्वसंविद्यत्नसंरोधाद्यथा चेतः प्रशाम्यति।
172196 न तथाङ्ग तपस्तीर्थविद्यायज्ञक्रियागणैः॥ ८॥
172197
172198 स्वसंविदो जीवसंविदो यत्नेन ब्रह्मणि संरोधादुक्तरूपात्॥ ८॥
172199
172200 यच्च संवेद्यते किंचित्तत्संविदि संविदा।
172201 नूनं विस्मार्यते यत्नाद्भोगानामिति तज्जयः॥ ९॥
172202
172203 संवेद्यते बलात्स्मर्यते तत्तत्तदधिष्ठानब्रह्मसंविदि प्रविलापनसंविदा नूनं
172204 निश्चयेन विस्मार्यते तत्संस्कारोच्छेदेन पुनः स्मरणायोग्यं क्रियते। तत्तेनोपायेन
172205 भोगानां भोगहेतूनां विषयाणां इति एवं जयः॥ ९॥
172206
172207 स्वसंवेदनयत्नेन विषयामिषतोऽनिशम्।
172208 किंचित्संरोधिता संवित्तत्प्राप्तं वैबुधं पदम्॥ १०॥
172209
172210 संरोधिता संविच्चेत्तेनोपायेन वैबुधं विबुधानां तत्त्वविदामनुभवसिद्धं
172211 स्वाराज्यपदं प्राप्तम्॥ १०॥
172212
172213 स्वधर्मव्यवहारेण यदायाति तदेव मे।
172214 रोचते नान्यदित्येव पदे वज्रदृढीभव॥ ११॥
172215
172216 एवं स्वधर्मैकनिष्ठतादार्ढ्यमपि वैतृष्ण्यसिद्धिद्वारा इन्द्रियजयहेतुरित्याह
172217 - स्वधर्मेति॥ ११॥
172218
172219 संवित्प्रवृत्तिमर्थेषु विरुद्धेषु विवर्जयन्।
172220 अर्जयञ्छमसंतोषौ यः स्थितः स जितेन्द्रियः॥ १२॥
172221
172222 विरुद्धेषु स्वधर्मविरुद्धेष्वर्थेषु देहायात्राहेतुष्वन्नादिषु
172223 संवित्प्रवृत्तिमिच्छाम्॥ १२॥
172224

172225 संविद्रसिकतास्वन्तस्तथा नीरसतासु च |
172226 यस्य नोद्वेगमायाति मनस्तस्योपशाम्यति || १३ ||
172227
172228 यस्य मनः अन्तः संविद्रसिकतासु बहिर्नीरसतासु चाभ्यस्यमानासु निर्वेदमरतिं
172229 नायाति तस्य तदुपशाम्यति || १३ ||
172230
172231 संवित्प्रयत्नसंरोधान्मनः स्वायनमुज्झति |
172232 चेतश्चपलतोन्मुक्तं विवेकमनुधावति || १४ ||
172233
172234 अयनं विषयानुधावनदुर्व्यसनम् | सैवास्य चपलता तदुन्मुक्तं सत् || १४ ||
172235
172236 विवेकवानुदारात्मा विजितेन्द्रिय उच्यते |
172237 वासनावीचिवेगेन भवाब्धौ न स मुह्यते || १५ ||
172238
172239 साधुसंपर्कसच्छास्त्रसमालोकनतोऽनिशम् |
172240 जितेन्द्रियो यथावस्तु जगत्सत्यं प्रपश्यति || १६ ||
172241
172242 एवं जितेन्द्रियः सन् जगद्यथावस्तु सत्यं ब्रह्ममात्रं प्रपश्यति || १६ ||
172243
172244 सत्यावलोकनाच्छान्तिमेति संसारसंभ्रमः |
172245 मराविव जलज्ञानं मिथ्यापतनदुःखदम् || १७ ||
172246
172247 मिथ्यावस्तुषु पतनेन धावनेन दुःखदम् || १७ ||
172248
172249 अचेत्यमेव चिन्मात्रमिदं जगदिति स्थितम् |
172250 इत्येव सत्यबोधस्य बन्धमोक्षदृशौ कुतः || १८ ||
172251
172252 अनाकारं यथा वारि क्षीणं वहति नो पुनः |
172253 अकारणं तथा दृश्यं ज्ञानच्छिन्नं न रोहति || १९ ||
172254
172255 अनाकारं शोषणेनोच्छिन्नमूर्ताकारम् || १९ ||
172256
172257 वेदनं व्योममात्रं त्वमहमित्यादिरूपधृक् |
172258 वर्जयित्वैतदन्यत्स्यादहमित्यादिकं जगत् || २० ||
172259
172260 यतो व्योममात्ररूपं वेदनमेव स्वाविद्यया त्वमहमित्यादिरूपधृगतः
172261 स्वाध्यस्तमहमित्यादिकमेतज्जगज्ज्ञानेन वर्जयित्वा विमृज्य
172262 अध्यस्तादन्यदधिष्ठानमात्रं स्यात् || २० ||
172263
172264 अविद्यामात्रमेवेदमहमित्यादिकं जगत् |
172265 चिद्व्योम्न्येव स्थितं शान्तं शून्यमात्रशरीरकम् || २१ ||
172266
172267 शान्तं मिथ्यात्वात्स्वत एव शान्तमिति चिद्व्योम्न्येव तात्त्विके रूपे स्थितम् || २१ ||
172268
172269 इदं चिद्व्योम्नि चिच्छाया जगदित्येव भासते |
172270 शून्यशून्यैव चिच्चासौ शून्या चेत्येव निश्चयः || २२ ||
172271
172272 असौ चिच्च जगच्छून्याशून्येनापि शून्येत्येव निश्चयः सिद्धान्तः || २२ ||
172273
172274 स्वप्नदर्शनदृष्टान्तः केन नामात्र खण्ड्यते |
172275 असन्मयोऽनुभूतश्च स्वानुभूतोऽप्यसन्मयः || २३ ||
172276

172277 उभयशून्यता क्व प्रसिद्धेति चेत्स्वप्नदर्शने इत्याह - स्वप्नेति | असन्मय इति
172278 शून्यता अनुभूत इति शून्यशून्यता च | अनुभूतस्यासन्मयत्वेऽपि स एव दृष्टान्त
172279 इत्याह - स्वानुभूतोऽपीति || २३ ||
172280
172281 सोऽङ्ग संवित्तिमात्रात्मा यद्यद्राज्यं महीयते |
172282 नकर्तृकर्मकरणं रूपं तद्वज्जगच्चितेः || २४ ||
172283
172284 हे अङ्ग स्वस्वप्नसंवित्तिमात्रमात्मा स्वरूपं यस्य तथाविधो यद्यद्राज्यं
172285 वैभवं भूत्वा महीयते तत्तच्चितेरेव रूपम् |
172286 यतस्तत्कर्तृकर्मकरणादिकारकनिरपेक्षं रूपम् | तद्वज्जाग्रज्जगदपि
172287 बोध्यमित्यर्थः || २४ ||
172288
172289 अकर्तृकर्मकरणमहं चिद्घनमात्रकम् |
172290 जगच्चेदमनिर्देश्यं स्वसंवेदनलक्षणम् || २५ ||
172291
172292 यद्यत्कर्तृकर्मकरणादिनिरपेक्षं तत्तचिद्घनमात्रकमहमेव | इदं जगच्च
172293 सर्गादौ कर्त्रादिमत्तया निर्देष्टुमशक्यमिति प्रागुपपादितम् | अतो
172294 मदीयस्वप्रकाशात्मस्वरूपमेवेत्यर्थः || २५ ||
172295
172296 यथा स्वप्नेषु मरणमनुभूतं न विद्यते |
172297 मरौ जलेच्छाऽविद्येयं विद्यमाना न विद्यते || २६ ||
172298
172299 तथा च स्वाप्नस्वमरणमरुजलवत्प्रतीतितो विद्यमानापि अविद्या ज्ञानबाधितत्वान्न
172300 विद्यत इत्याह - यथेति | जलेच्छापदेन जलभ्रान्तिर्लक्ष्यते || २६ ||
172301
172302 चिद्व्योम्ना काचकच्यं स्वं सर्गादौ व्योम्नि चेतितम् |
172303 जगदित्येव निर्मूलं काकतालीयवत्स्वयम् || २७ ||
172304
172305 व्योम्नि स्वात्मनि चेतितं संकल्पितम् || २७ ||
172306
172307 निर्मूलमेव भातीदमभातमपि भातवत् |
172308 तस्माद्यद्भासुरमिदं तत्तदेव पदं विदुः || २८ ||
172309
172310 इदं जगद्यस्माच्चित्प्रकाशान्निमित्ताद्भासुरमपरोक्षं प्रथमानमास्ते तदेव
172311 नित्यापरोक्षं परमं पदं विदुरित्यर्थः || २८ ||
172312
172313 जीवादिकचनं त्वत्र यद्भातीदं तदेव तत् |
172314 शून्यतैव भवेद्व्योम वार्येवावर्तवृत्तयः || २९ ||
172315
172316 यथावयविनो रूपमेकं सावयवं भवेत् |
172317 एकं जीवाद्यवयवं ब्रह्मानवयवं तथा || ३० ||
172318
172319 अवयवावयविभावकल्पनद्वारा वा जीवादेर्ब्रह्मैक्यं प्रतिपत्तव्यमित्याह -
172320 यथेति || ३० ||
172321
172322 आभासमात्रं दृश्यात्म चिन्मात्रं शान्तमव्ययम् |
172323 स्थितमास्थाः [स्थितमच्छमिति पाठो युक्तः |] किमेतस्मिन्स्वभावे स्वे
172324 विचार्यते || ३१ ||
172325
172326 स्फटिकशिलान्तर्वनगिरिनद्याद्याभासवद्वा ब्रह्मणि जगद्बोध्यमित्याह -
172327 आभासमात्रमिति | तथा च तत्स्वच्छतास्वभाव एव जगदात्मना भासत इत्याशयेनाह
172328 - स्वभावे इति | किं विचार्यत इत्यन्वयः || ३१ ||

172329
172330 नाद्यन्तमन्तःकलनाः काश्चित्सन्ति परे पदे |
172331 तद्रूपमेवाविद्येयं नाविद्या त्विह विद्यते || ३२ ||
172332
172333 न आदिरन्तं च नाप्यन्तः मध्यप्रदेशानां कलनाः काश्चित्सन्ति || ३२ ||
172334
172335 जीवः स्वप्नाद्विशञ्जाग्रज्जाग्रतः स्वप्नमाविशन् |
172336 प्रबुद्धो वास्त्वबुद्धो वाप्येकरूपतया स्थितः || ३३ ||
172337
172338 स्वप्नजागरान्वयव्यतिरेकेण परिशोधनेन वा शुद्धं जीवजगत्तत्त्वं ज्ञेयमित्याह
172339 - जीव इति | प्रबोधाप्रबोधयोर्भनैकरूपतया || ३३ ||
172340
172341 स्थिते सुषुप्ततुर्ये द्वे सदा स्वप्नेऽथ जाग्रति |
172342 जाग्रत्स्वप्नावेकमेव तुर्यं वेत्ति तु बुद्धधीः || ३४ ||
172343
172344 सुषुप्तमज्ञानावृत आत्मा तुर्यः शुद्धात्मा च भ्रान्तिकृतसर्पान्तः
172345 अज्ञानरज्जुकेवलरज्जू इव स्वप्नजाग्रतोरन्तः स्थिते || ३४ ||
172346
172347 जाग्रत्स्वप्नः सुषुप्तं च सर्वं तुर्यं प्रबोधिनः |
172348 नाविद्या विद्यते तस्य द्वयस्थोऽप्येव सोऽद्वयः || ३५ ||
172349
172350 प्रबोधिनस्तत्त्वबोधवतः | एवकारो भिन्नक्रमः | स द्वयस्थोऽप्यद्वय एवेति || ३५ ||
172351
172352 द्वैतमद्वैतमित्येतदहंत्वमिदमित्यपि |
172353 निरविद्यस्य कलना कुतः काप्यम्बरं कुतः || ३६ ||
172354
172355 इत्यपि कापि कलना निरविद्यस्य कुतः कथा अम्बरं शून्यं च कुतः || ३६ ||
172356
172357 द्वैताद्वैतसमुद्भेदैर्वाक्यसंदर्भविभ्रमैः |
172358 क्रीडन्त्यबुद्धाः शिशवो बोधवृद्धा हसन्ति तान् || ३७ ||
172359
172360 अबुद्धा अप्रबुद्धाः शिशवो बालाः क्रीडन्ति || ३७ ||
172361
172362 द्वैताद्वैतविवादेहा हृदयाकाशमञ्जरी |
172363 विनैतयेह नोदेति प्रबोधाकाशमार्जनम् || ३८ ||
172364
172365 प्रबुद्धा अपि शास्त्रेषु कथं द्वैतविवादानिच्छन्ति तत्राह - द्वैतेति |
172366 हृदयाकाशे अध्यारोपिता शिष्यप्रबोधफला मञ्जरी || ३८ ||
172367
172368 सुहृद्भूत्वा विवादेन द्वैताद्वैतविचारणा |
172369 कृता हृदयगेहेऽन्तरविद्याभस्ममार्जनी || ३९ ||
172370
172371 अत एव मयापि सुहृद्भावेनाभ्युपगम्य द्वैताद्वैतविचारणा कृता कृतकार्या
172372 गेहमार्जनीव निरसिष्यत इत्याह - सुहृदिति || ३९ ||
172373
172374 तच्चित्तास्तद्गतप्राणा बोधयन्तः परस्परम् |
172375 कथयन्तश्च तन्नित्यं तुष्यन्ति च रमन्ति च || ४० ||
172376
172377 अविद्याभस्मनि मार्जिते सति अधिकारिणस्तच्चित्ता ब्रह्मचित्ता ब्रह्मगतप्राणाः
172378 परस्परं बोधयन्तस्तुष्यन्ति रमन्ति च || ४० ||
172379
172380 तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् |

172381 जायते बुद्धियोगोऽसौ येन [येनासौ याति तत्पदं इति
172382 पाठोऽपेक्षितष्टीकानुरोधेन |] ते यान्ति तत्पदम् || ४१ ||
172383
172384 एवं भजतां सततं विचारयुक्तानामसौ मदुपदिष्टो बुद्धोयोगः कालेन दृढो
172385 जाय्ते येनासौ तदात्मा तत्पदं मोक्षाख्यं याति || ४१ ||
172386
172387 किलोपकुरुते यत्नात्तृणमात्रावगोपने |
172388 कथं सिध्यत्ययत्नेन त्रैलोक्यगणगोपनम् || ४२ ||
172389
172390 सततयुक्तानामिति प्रयत्नातिशयापेक्षोक्तेस्तात्पर्यमुद्घाटयति - किलेति |
172391 तृणमात्रस्यापि जलवह्निपश्वादिभ्योऽवगोपने रक्षणे यत्नात्साधित एवोपाय
172392 उपकुरुते न हेलया साधितः | त्रैलोक्यगणस्य ब्रह्मीभावापादनेन
172393 गोपनमात्यन्तिकपरिरक्षणरूपं तत्त्वज्ञानमयत्नेन कथं सिध्यति || ४२ ||
172394
172395 अध्यात्मव्यसनोन्मुक्तं ततं हृत्स्थाऽधमाऽप्रभु |
172396 उपहासास्पदं यस्या जगदप्युत्तमस्थितेः || ४३ ||
172397
172398 यस्या निरतिशयानन्दलक्षणाया उत्तमस्थितेर्मानुषानन्दमारभ्य
172399 हैरण्यगर्भानन्दपर्यन्तमुत्तरोत्तरं शतशतगुणोत्कृष्टसुखोपभोगाय
172400 चतुर्दशभुवनभेदेषु ततं विस्तृतं हृत्स्थस्य अधमस्य कामस्य जये अप्रभु
172401 असमर्थम् | कामोपहतमिति यावत् | जगदपि कार्त्स्न्ये अपिशब्दः | कृत्स्नं
172402 जगज्जीवजातं तुच्छभोगासक्तत्वादुपहासास्पदं सा तादृशी सर्वोत्तमा स्थितिः
172403 कथं न यत्नमर्हतीत्यर्थः || ४३ ||
172404
172405 किं नामेदं किल सुखं यद्राज्यादिमनोङ्कुरम् |
172406 तत्त्वज्ञानैकविश्रान्तौ देवराजपदं तृणम् || ४४ ||
172407
172408 भोगानां तुच्छतामवयुत्योदाहरणेन दर्शयति - किं नामेति || ४४ ||
172409
172410 सुप्ताः प्रबुद्धाः पश्यन्ति दृश्यं दृश्ये रता यथा |
172411 तथा दृश्येऽरताः शान्ताः सन्तः पश्यन्ति तत्पदम् || ४५ ||
172412
172413 अज्ञाननिद्रा सुप्ता दृश्ये विषयभोगे रता जना यथा दृश्यमत्यासक्त्या पश्यन्ति
172414 तथा शान्ताः सन्तस्तत्त्वविदो दृश्ये अरताः प्रसुप्तप्रायास्तन्निरतिशयानन्दं
172415 पदं प्रबुद्धाः पश्यन्तीत्यर्थः | तथा चोक्तं भगवता - या निशा
172416 सर्वभूतानां तस्यां जागर्ति संयमी | यस्यां जाग्रति भूतानि सा निशा पश्यतो
172417 मुनेः || इति || ४५ ||
172418
172419 विना यत्नभरेणेदं न कदाचन सिद्ध्यति |
172420 महतोऽभ्यासवृक्षस्य फलं विद्धि परं पदम् || ४६ ||
172421
172422 ईदृशं नित्यापरोक्षनिरतिशयानन्दरूपं मोक्षपदं यत्नभरेण विना कथं
172423 सिद्ध्येदित्यभ्यासावश्यकतामाह - विनेति || ४६ ||
172424
172425 इदं बहूक्तमेतेन किमेतेनेति दुर्मतिः |
172426 न ग्राह्यैतावताप्युक्ते नादत्ते नेदमज्ञधीः || ४७ ||
172427
172428 अत एव मया भवतामभ्यासदार्ढ्यं भवत्विति पुनह्।पुनर्भङ्ग्यन्तरेण
172429 युक्त्यन्तरेण कथाख्यानादिविस्तरेण चेदमेव बहुवारमुक्तम् | भवद्भिश्च
172430 पुनःपुनस्तदेव भगवतोच्यते बहूक्तेन पुनरुक्तसहस्रविस्तारितेनैतेन ग्रन्थेन
172431 एतेनाभ्यासश्रमेण च किं प्रयोजनमित्यश्रद्धालक्षणा दुमतिर्न ग्राह्या |
172432 सुज्ञस्याति कुशलबुद्धेः कस्यचिदेव नाभ्यासापेक्षा | अज्ञधीस्तु एतावता

172433 विस्तृतेनाप्युक्तेनोपदेशवाक्येन इदमतिदुरूहमात्मतत्त्वं हृदि नादत्ते |
172434 अतस्तस्यावृत्त्यादिलक्षणोऽभ्यास आवश्यक इत्यर्थः | तथा च भगवतो
172435 बादरायणस्य सूत्रम् - आवृत्तिरसकृदुपदेशात् इति || ४७ ||
172436
172437 भूयोभूयः परावृत्त्या चिरमास्वाद्यते यदि |
172438 श्रूयते कथ्यते चेदं तज्ज्ञेनाज्ञेन भूयते || ४८ ||
172439
172440 अत एवायं ग्रन्थो मन्दमध्यमाधिकारिभिर्यावज्ज्ञानोदयं पुनः पुनः
172441 श्रवणाद्यावर्तनेनास्वादनीय इत्याह - भूयोभूय इति | इदं मदुक्तं शास्त्रं |
172442 अज्ञेनापि एतदावर्तनोपायेनावश्यं तज्ज्ञेन भूयते नात्र संदेह इत्यर्थः || ४८ ||
172443
172444 यस्त्वेकवारमालोक्य दृष्टमित्येव संत्यजेत् |
172445 इदं स नाम शास्त्रेभ्यो भस्माप्याप्नोति नाधमः || ४९ ||
172446
172447 अनभ्यासपरस्य तु नैतत्फलावाप्तिरिति तं निन्दति - यस्त्विति | शास्त्रेभ्यः
172448 अनध्यात्मशास्त्रेभ्यः || ४९ ||
172449
172450 इदमुत्तममाख्यानमध्येयं वेदवत्सदा |
172451 व्याख्येयं पूजनीयं च पुरुषार्थफलप्रदम् || ५० ||
172452
172453 यदस्मात्प्राप्यते शास्त्रात्तत्तद्वेदादवाप्यते |
172454 अस्मिन्ज्ञाते क्रिया ज्ञानं द्वयं याति पवित्रताम् || ५१ ||
172455
172456 प्रत्यक्षवेदोपबृंहणत्वादस्य
172457 काण्डद्वयफलसर्वस्वसाधनत्वादतिप्रशस्ततरत्वं दर्शयति - यदिति | क्रिया
172458 पूर्वकाण्डार्थः | ज्ञानमुत्तरकाण्डार्थः | द्वयमपि
172459 पवित्रतामात्यन्तिकाशुद्धिनिरासफलताम् || ५१ ||
172460
172461 वेदान्ततर्कसिद्धान्तस्त्वस्मिन्ज्ञाते च बुध्यते |
172462 इदमुत्तममाख्यानं व्याख्यातं शास्त्रदृष्टिषु || ५२ ||
172463
172464 चकारो भिन्नक्रमः | वेदान्तेषु ये
172465 बादरायणादिभिर्दर्शितास्तात्पर्यनिर्णयानुकूलोपक्रमादि##-
172466 विशेषद्योतनार्थस्तुशब्दः | शास्त्रदृष्टिषु मध्ये विशिष्टत्वेनाख्यातं
172467 व्याख्यातं श्रेष्ठतया ख्यातमित्यर्थः || ५२ ||
172468
172469 कारुण्याद्भवतामेतदहं वच्मि न मायया |
172470 भवन्तस्त्ववगच्छन्ति मायामेतद्विचार्यताम् || ५३ ||
172471
172472 मायया कैतवैन न वच्मि किंतु कारुण्यात् |
172473 भवन्तस्त्वस्माच्छास्त्रवराद्विचारितादतद्दृश्यजातं मायां
172474 मिथ्येत्यवगच्छन्त्यत एतच्छास्त्रं विचार्यताम् || ५३ ||
172475
172476 अस्माच्छास्त्रवराद्बोधा जायन्ते ये विचारितात् |
172477 लवणैर्व्यञ्जनानीव भान्ति शास्त्रान्तराणि तैः || ५४ ||
172478
172479 अस्माच्छास्त्रवराद्विचारिताद्ये बोधा जायन्ते तैर्बोधैः शास्त्रान्तराणि
172480 लवणैर्व्यञ्जनानीव रुचिराणि भान्तीतीदं सर्वशास्त्रोपजीव्यमित्यर्थः || ५४ ||
172481
172482 अनार्यमिदमाख्यानमित्यनादृत्य दृश्यधीः |
172483 मा भवंत्वात्महन्तारो ब्भवन्तो भवभागिनः || ५५ ||
172484

172485 अनार्यं काव्यत्वादपूज्यम् । दृश्येषु भोगेष्वासक्ता धीर्येषाम् । सुपां सुलुक् इति
172486 छान्दसः पूर्वसवर्णदीर्घः सुब्व्यत्ययो वा । आत्मनः [मूलस्थात्महन्तार
172487 इत्यस्यायमर्थः ।] पुनःपुनर्मृत्युपरम्पराप्राप्तिहेतुमोहगर्तपातिनः ।
172488 ततश्च पुनःपुनर्भवभागिनो जन्मभाजो मा भवन्ति ॥ ५५ ॥
172489
172490 तातस्य कूपोऽयमिति ब्रुवाणाः क्षारं जलं कापुरुषाः पिबन्ति ।
172491 यथा भवन्तो विविचारवन्तस्तथानिशं मा भवताज्ञताप्त्यै ॥ ५६ ॥
172492
172493 नन्वस्मत्कुले पूर्वजैस्तपःकर्मादिनिष्ठैवाश्रिता न ब्रह्मनिष्ठा । अस्मदीयाः
172494 पूर्वजाः कर्ममीमांसका अस्मदीयाः पूर्वजास्तार्किका अस्मदीयाः पूर्वजाः
172495 सांख्या अस्मदीयाः पूर्वजास्तान्त्रिका मन्त्रसिद्धा योगसिद्धा
172496 औषधरसायनादिसिद्धा वा अभूवन्नतो वयमपि तद्वंश्यास्तत्तदनुसृतमेव
172497 मार्गमाश्रयिष्यामो नाध्यात्मशास्त्रमिति ब्रुवाणान् जनानुपहसन्मुमुक्षूणां
172498 तन्मार्गप्रवृत्तिं वारयति - तातस्येति । काकपुरुषाः दुरभिमानेन संनिहितमपि
172499 जाह्नवीजलमनादृत्य यथा क्षारं जलं पिबन्ति तथा भवन्तोऽप्यज्ञताप्त्यै
172500 पुनःपुनर्जन्मपरम्परासु मौर्ख्याप्त्यै मौर्ख्यस्यैव लाभाय अनिशं
172501 विरुद्धविविधविचारवन्तो मा भवतेत्यर्थः ॥ ५६ ॥
172502
172503 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मी० दे० मो० निर्वा० उ०
172504 इन्द्रियजयोपायशास्त्रवर्णनं नाम त्रिषष्ट्यधिकशततमः सर्गः ॥ १६३ ॥
172505
172506 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
172507 इन्द्रियजयोपायशास्त्रवर्णनं नाम त्रिषष्ट्यधिकशततमः सर्गः ॥ १६३ ॥
172508
172509
172510 चतुःषष्ट्यधिकशततमः सर्गः १६४
172511
172512 श्रीवसिष्ठ उवाच ।
172513
172514 जीवाणवो जगत्यन्तश्चिदादित्यांशुमण्डले ।
172515 यत्र तेऽवयवास्तुल्यास्तेनानवयवात्मता ॥ १ ॥
172516
172517 ब्रह्मभावोद्भवाज्जीवजगद्भावविमार्जनैः ।
172518 इह जीवजगद्ब्रह्मसामरस्यं प्रसाध्यते ॥
172519
172520 तत्रादौ जीवभावं विमार्ष्टुमारभते - जीवाणव इत्यादिना । इत्यादिना । सर्वतः
172521 परिपूर्णस्य चिदादित्यस्य मण्डले अन्तःस्फुरति यत्र जगति ते प्रसिद्धा जीवाणवस्तेन
172522 चिदादित्येन तुल्या अग्निविस्फुलिङ्गवत्समानप्रकाशस्वभावास्तेन हेतुना
172523 अनवयवात्मता चिदादित्यस्य सिद्धा । हस्तपादाद्यवयवानां
172524 परस्परविलक्षणाकारादिस्वभावत्वदर्शनादवयविनश्च तेभ्यो
172525 भिन्नाकारसंस्थानादिदर्शनात्तत्र भेदोऽवयवावयविभावश्च लोके प्रसिद्धो न
172526 चात्यन्ततुल्यत्वे इति भावः ॥ १ ॥
172527
172528 सर्वं प्राप्य परं बोधं वस्तु स्वं रूपमुज्झति ।
172529 पुनस्तदेकवाक्यत्वान्न किंचिद्वापरं भवेत् ॥ २ ॥
172530
172531 नन्वेवं नक्षत्राणामपि नभसि समानप्रकाशस्वभावदर्शनात्परस्पराभेदो
172532 निरवयवत्वं च तेजसः किं न स्याद्भिन्नदेशत्वेन प्रकाशतारतम्येन च परिहारस्तु
172533 जीवेष्वपि तुल्य इत्याशङ्क्याह - सर्वमिति । न नक्षत्रभेदवज्जीवानां भेदः किंतु
172534 घटकरकाद्याकाशभेदवदौपाधिकः । तच्च भेदकमन्तःकरणाद्युपाधिवस्तु
172535 सर्वं परमखण्डाकारमपरोक्षमहं ब्रह्मास्मीति बोधं प्राप्य
172536 स्वमुपाधिरूपं स्वकृतं भेदरूपं चोज्झति उत्सृजति । अपगते चोपाधिभेदे

172537 प्रतिज्ञासिद्धिरित्यर्थः। अथवा पूर्वं जीवानामविद्यया परस्परविरुद्धधर्मतां
172538 प्रदर्श्य ब्रह्मैकवाक्यताविच्छेदाद्भेद इव बन्ध इवानर्थ इवाभूत्। इदानीं
172539 विद्यया अविद्यां निरस्य विरुद्धधर्मनिरासेन
172540 पुनर्ब्रह्मैकवाक्यतासंपादनादवयवावयविभावादिना भेदकमपरं किं
172541 भवेदित्यर्थः॥ २॥
172542
172543 सर्वास्वेवास्ववस्थासु तत्त्वज्ञविषयं तु तत्।
172544 परमेवामलं ब्रह्म नान्यत्किंचित्कदाचन॥ ३॥
172545
172546 तर्हि किमविद्यान्तःकरणदेहभेदाद्यवस्थासु पूर्वं जीवा भिन्ना एव इदानीं विद्यया
172547 ब्रह्मैक्यं प्रापिताः नेत्याह - सर्वास्वेवेति। तत्त्वज्ञविषयं तु यद्ब्रह्म तत् आसु
172548 सर्वास्वेवावस्थासु भेदादिमलशून्यमेकरसमेव। न कदाचिदपि किंचिद्द्वैतमलं
172549 तत्रास्तीत्यर्थः॥ ३॥
172550
172551 यच्चातत्त्वज्ञविषयं तज्जानाति स एव तत्।
172552 वयं तु विद्मो नाहं त्वं नातत्त्वज्ञं न वस्तु तत्॥ ४॥
172553
172554 कथं तर्हि पूर्वमहंत्वादिमलदर्शनं तत्राह - यच्चेति। तन्मलिनं वस्तु च न
172555 विद्मः॥ ४॥
172556
172557 अयं सोहमयं चाज्ञः सत्योऽयमिति बुद्धयः।
172558 संभवन्ति न तत्त्वज्ञे क्व मेरौ मृगतृष्णिका॥ ५॥
172559
172560 कुतो विद्मस्तत्राह - अयमिति। पिपासितश्रान्तदृशा हि मृगतृष्णाप्रसिद्धिः। न
172561 च स्वर्गभूते मेरौ पिपासाश्रमादयः कस्यचित्सन्तीति तदप्रसिद्धिरिति भावः॥ ५॥
172562
172563 यथैकद्रव्यनिष्ठे हि चित्तेऽन्यद्रव्यसंविदः।
172564 न भवन्ति परे तद्वन्नान्यास्तिष्ठन्ति संविदः॥ ६॥
172565
172566 यथा स्थाणुरेव शुक्तिरेवेत्येकद्रव्यनिष्ठे एकरूपद्रव्यतत्त्वनिश्चयवति पुरुषे
172567 अन्यास्तद्विरुद्धाः स्थाणुर्वा पुरुषो वेति संशयसंविद इदं रजतमिति
172568 भ्रान्तिसंविदश्च न भवन्ति तद्वत् परे तत्त्वे निश्चिते अन्या भेदभ्रमसंविदो न
172569 तिष्ठन्ति॥ ६॥
172570
172571 इदं नासीन्न चोत्पन्नं न चास्ति न भविष्यति।
172572 जगद्ब्रह्मैव सद्रूपमिदमित्थमवस्थितम्॥ ७॥
172573
172574 इत्थं जीवभावं विमृज्य तथैव जगद्भावमपि विमार्ष्टुमारभते - इदमिति।
172575 इत्थं मार्जने जगद्ब्रह्मैव भूत्वावस्थितम्॥ ७॥
172576
172577 चिन्नभः काचकच्यं च स्वात्मन्येवावतिष्ठते।
172578 जगदित्येव तत्तत्र तज्ज्ञानेनैव चेत्यते॥ ८॥
172579
172580 एवं मार्जने जगत्त्वेन गृहीतं चिन्नभः काचकच्यं स्वात्मन्येव
172581 शुद्धब्रह्मभावेऽवतिष्ठते। तत्र तस्यां दशायां जीवन्मुक्तैस्तदेव जगदिति
172582 तज्ज्ञानेनैव चेत्यते न जडं किंचिदित्यर्थः॥ ८॥
172583
172584 स्वप्नेषु कल्पनपुरेषु यथान्यदस्ति चिन्मात्रमच्छगगनं ननु वर्जयित्वा।
172585 नो किंचनापि न च रूपमरूपकेषु रूपं तथा जगति संप्रति जाग्रदाख्ये॥ ९॥
172586
172587 यथा स्वप्नेषु मनोराज्यकल्पितपुरेषु च अमलं चिन्मात्रमेकं वर्जयित्वा अन्यन्नास्ति
172588 तथा संप्रति जाग्रदाख्येऽपि जगति चिन्मात्रं विना न किंचनाप्युपाधिस्वरूपमस्ति।

172589 एवमुपाधिमार्जनेनारूपकेषु जीवेषु न च रूपान्तरमस्तीति चिदैकरस्यं
172590 सिद्धमित्यर्थः ॥ ९ ॥
172591
172592 पूर्वं किलोद्भवति किंचन नाम नेदं तच्चावभाति तदनादि खमेव चित्त्वात् ।
172593 नो कारणं न सहकारि किलास्ति यत्र तस्मात्स्वयं भवति वस्त्विति केयमुक्तिः ॥ १० ॥
172594
172595 सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् इति श्रुतेर्यत्र सर्गात्पूर्वं नो कारणं
172596 परिणाम्युपादानं नापि सहकारि निमित्तकारणं च किलास्ति
172597 तस्माज्जगद्भवतीतीयमुक्तिः का । अतः किंचनेदं नोद्भ्भवति यच्चेद्भूतमिवावभाति
172598 तदनादि ब्रह्म खमेव चित्स्वभावात्स्वयमेव तथावभातीति सिद्धमित्यर्थः ॥ १० ॥
172599
172600 तस्मात्स्वयं भवति नेह हि कश्चिदादौ ब्रह्मादयोऽज्ञविदिता न च नाम सन्ति ।
172601 व्योमेदमाततमयं स इतः स्वयंभूरित्यादि चिद्गगनमेव चिता विभाति ॥ ११ ॥
172602
172603 अमुमेवार्थं दृढीकुर्वन्पुनः स्पष्टमाह - तस्मादिति । अज्ञैर्विदिता
172604 ब्रह्मादयो व्यष्टिसमष्टिजीवतदुपाधयो नैव सन्ति । किंतु स स्वयंभूरयं
172605 प्रपञ्चश्च इति ब्रह्मणः सकाशाद्व्योम शून्यमेवेदमाततं चिद्गगनमेव
172606 स्वचिता तथा विभातीति सिद्धमित्यर्थः ॥ ११ ॥
172607
172608 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० नि० उ०
172609 जगत्परमात्मनोरैक्यभोगोपदेशो नाम चतुःषष्ट्यधिकशततमः सर्गः ॥ १६४ ॥
172610
172611 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
172612 जगत्परमात्मनोरक्यभोगोपदेशो नाम चतुःषष्ट्यधिकशततमः सर्गः ॥ १६४ ॥
172613
172614 प्द्फ़् ३५२, प्। १४५५
172615
172616 पञ्चषष्ट्यधिकशततमः सर्गः १६५
172617
172618 श्रीवसिष्ठ उवाच ।
172619
172620 जाग्रत्स्वप्ने स्वप्न एव जाग्रत्त्वमनुगच्छति ।
172621 स्वप्नजाग्रति जाग्रत्तु स्वप्नतामुपगच्छति ॥ १ ॥
172622
172623 परस्परानुप्रवेशात्परस्परसमुद्भवात् ।
172624 चिन्मात्रत्वं दृढीकर्तुं जाग्रत्स्वप्नैक्यमीर्यते ॥
172625
172626 जाग्रत्स्वप्नसुषुप्तयः परस्परानुप्रवेशेन प्रत्येकं त्रिविधाः । जाग्रज्जाग्रत्
172627 जाग्रत्स्वप्नः जाग्रत्सुषुप्तिः स्वप्नजाग्रत् स्वप्नस्वप्नः स्वप्नसुषुप्तिः सुषुप्तिजाग्रत्
172628 सुषुप्तिस्वप्नः सुषुप्तिसुषुप्तिरिति । एते हि सुरेश्वरवार्तिके प्रागुत्पत्तिप्रकरणे
172629 चोदाहरणभेदैरुपपादिता इह सिद्धवदुपादीयन्ते । तत्र जाग्रत्स्वप्ने मनोराज्ये
172630 इन्द्रियव्यापारनिरपेक्षत्वात्केवलमनोमयत्वाच्चार्थाना। स्वप्नसाम्येन स्वप्न एव
172631 जाग्रत्त्वमुपगच्छति । एवं स्वप्नेऽपि एतावत्कालमहं सुप्त इदानीं जागर्मीति
172632 प्रतीतिदर्शनात्प्रसिद्धे स्वप्नजाग्रति तु स्वानुभवसिद्धा जाग्रदेव
172633 स्वप्नत्वमुपगच्छतीत्यर्थः ॥ १ ॥
172634
172635 स्वप्नो जाग्रत्प्रविशति जाग्रत्स्वप्नात्प्रबुध्यते ।
172636 जाग्रत्स्वप्नं प्रविशति प्रबुद्धः स्वप्नजाग्रतः ॥ २ ॥
172637
172638 परस्परानुप्रवेशवदनयोः परस्परनिमित्तता वास्तीत्याह - स्वप्न इति ।
172639 स्वप्नरूपादेव जाग्रतः प्रबुद्धः सन् जाग्रद्रूपमेव स्वप्नः प्रविशत्यात्मेति
172640 परस्परनिमित्ततापि दृश्यत इत्यर्थः ॥ २ ॥

जाग्रत्स्वप्नवता स्वप्नः स्वप्न इत्यभिधीयते।
स्वप्नजाग्रद्वता जाग्रज्जाग्रदित्यभिधीयते॥ ३॥

अनयोर्व्यपदेशसांकर्यमपि दृश्यत इत्याह - जाग्रदिति। स्वप्नस्वप्नो
जाग्रज्जाग्रदित्युभ्यत्र वीप्सया द्विर्वचनम्॥ ३॥

तज्जाग्रज्जाग्रतीवेह न तु स्वप्नः कदाचन।
स्वप्ने स्वप्नो जाग्रदेव न तु जाग्रत्कदाचन॥ ४॥

तत्र स्वप्नेऽपि जाग्रत् इह जाग्रतीव अनुभवतो जाग्रदेव न तु स्वप्नः। एवं जाग्रत्स्वप्ने
मनोराज्ये जाग्रत्स्वप्न एवानुभवतो न तु जाग्रदित्यर्थः॥ ४॥

लघुकालात्मकः स्वप्नः सर्वदैव हि जाग्रति।
लघुकालात्मकं जाग्रत्स्वप्नकाले सदैव च॥ ५॥

स्वप्नस्याल्पकालता जाग्रतो दीर्घकालता च परस्परानुप्रवेशे विपरीतेत्याह -
लघुकालात्मक इति॥ ५॥

न जाग्रत्स्वप्नयोर्भेदः कश्चनास्ति कदाचन।
एकस्यावसरोऽन्यत्र द्वयोरपि न सन्मयः॥ ६॥

एवं परस्परसांकर्ये यत्सिद्धं तदाह - नेति। द्वयोरप्यन्यत्र एकस्यावसरः
परस्परानुप्रवेशो युक्त्या सन्मयो न॥ ६॥

मृतिप्रबोधसमये जाग्रत्स्वप्नः प्रशाम्यति।
स्वप्नानुभवबोधे च शून्य एवातिभास्वरः॥ ७॥

ननु स्वप्नः प्रबोधे प्रशाम्यति स्वाप्नार्थाश्च जागरे शून्य एवावतिष्ठन्ते नैवं
जाग्रत्प्रशाम्यति नाप्यर्था असन्तो दृश्यन्त इति स्वप्नवैधर्म्यशङ्कां निरस्यति
- मृतीति। अयं जाग्रल्लक्षणोऽपि स्वप्नो मृतिकाले यः परलोकप्रबोध
आत्यन्तिकद्वैतमृतिलक्षणस्तत्त्वप्रबोधश्च तत्समये प्रशाम्यत्येव। प्रत्यहं
स्वप्नानुभवलक्षणे स्वाप्नार्थबोधकाले चकारात्सुषुप्तिकाले च शून्य एवावतिष्ठत
इति साधर्म्यमेव न वैधर्म्यमित्यर्थः॥ ७॥

जीवतः स्वप्नसमये मृतिबोधोदयं विना।
परलोकात्मकं जाग्रत्किंचनापि न दृश्यते॥ ८॥

नन्वद्यतनस्वाप्नार्थः श्वस्तनस्वप्ने असन्त एव अद्यतनजाग्रदर्थास्तु
श्वस्तनजाग्रत्यनुवर्तन्त इति वैधर्म्यमित्याशङ्कां
जन्मभेदेष्वननुवृत्तिप्रदर्शनेन परिहरति - जीवत इति। मृतिबोधोदयं विना
मरणोत्तरप्रबोधदृश्यानामभावात्परलोकात्मकं जाग्रत्किंचनापि न दृश्यते
॥ ८॥

स्थिते जीवितबोधेऽस्मिञ्छून्ये नानामयात्मनि।
परलोकात्मकः स्वप्नः कश्चनापि न दृश्यते॥ ९॥

एवं स्थिते अस्मिन्नद्यतनस्वप्ने जीवनादिसर्वस्वाप्नपदार्थशून्ये भ्रान्त्यैव
नानामयात्मनि जीवामीति जीवितबोधे सति श्वस्तनः पूर्वेद्युस्तनश्च स्वप्नः
परलोकात्मकप्राय इति कश्चनापि तत्रत्यपदार्थोऽत्रानुवर्तमानो न दृश्यत इत्यर्थः
॥ ९॥

172693 चिच्चमत्कृतिमात्रात्म यथा स्वप्ने जगल्लयम् ।
172694 हृदि सर्गात्प्रभृत्येव तथैवाभाति जाग्रति ॥ १० ॥
172695
172696 चिच्चमत्कारमात्रात्मत्वं च द्वयोरपि तुल्यमित्याह - चिदिति । हृदि अन्तःकरणे ॥ १०
172697 ॥
172698
172699 सन्त्येवासत्यभूतानि स्फारापि परमार्थतः ।
172700 नास्त्येवाकारवत्तेयं स्वप्नोर्व्यामिव जाग्रति ॥ ११ ॥
172701
172702 स्वप्नैक्ये जाग्रतस्तत्रत्योर्व्यादीनां स्वाप्नार्थवन्निराकारत्वमसत्यत्वं च
172703 स्फुटमित्याह - सन्त्येवेति ॥ ११ ॥
172704
172705 नानात्मभासुरमपि स्वप्ने शून्यं यथा जगत् ।
172706 तथैव जाग्रत्यखिलं व्योमैवेदं चिदात्मकम् ॥ १२ ॥
172707
172708 ततश्चिन्मात्रपरिशेषोऽपि सिद्ध इत्याह - नानात्मेति ॥ १२ ॥
172709
172710 चिद्व्योम्नो हि स्वभावोऽयं यदिदं जगदम्बरे ।
172711 कचतीत्थमिह स्फारमालोक इव तेजसः ॥ १३ ॥
172712
172713 तेजसः सूर्यादेरालोकः प्रभेव ॥ १३ ॥
172714
172715 चितेश्चमत्कृतिरियं जगन्नाम्नी चकास्त्यलम् ।
172716 सहजा गगने कुड्ये परमाणौ स्थले जले ॥ १४ ॥
172717
172718 सहजा स्वाभाविकी ॥ १४ ॥
172719
172720 भ्रान्तावसत्यरूपायां स्थितायां सत्यवस्तुवत् ।
172721 आकाशमात्रदेहायां क इवैनां प्रति ग्रहः ॥ १५ ॥
172722
172723 एनां जगद्भ्रान्तिं प्रति ग्रह आग्रहः कः । अनुचित एवेत्यर्थः ॥ १५ ॥
172724
172725 ग्रहीतृग्रहणग्राह्यरूपमाशून्यमेव च ।
172726 सदस्त्वेवासदेवास्तु जगदत्राङ्ग किं ग्रहः ॥ १६ ॥
172727
172728 ग्रहीत्रादित्रिपुटीजगद्रूपमाशून्यमसदेव । ह्यर्ते चः । अधिष्ठानसत्तया सदस्तु
172729 अथवा असदेवास्तु अत्रास्मिन्विषये ग्रह एकतरपक्षव्यवस्थापनदुराग्रहः
172730 किंप्रयोजन इत्यर्थः ॥ १६ ॥
172731
172732 इत्थमस्त्विदमथान्यथास्तु वा मैव भून्द्भवतु कोऽत्र संभ्रमः ।
172733 कोऽत्र फल्गुनि फले फलग्रहो बुद्धमेव तदलं विकल्पनैः ॥ १७ ॥
172734
172735 अबोधादेकतरपक्षाभिमानसंभ्रमः स्यात् । इदानीं भवद्भिस्तत्त्वतो बुद्धमेवेति
172736 अत्रैतदन्तर्गतभोगलक्षणे एतत्सत्यताप्रतिष्ठापनेनेतरजलक्षणे च फल्गुनि फले
172737 कः फलत्वग्रहः । अनुचित एवेत्यर्थः ॥ १७ ॥
172738
172739 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मृ० नि० उ० जाग्रत्स्वप्नैक्योपदेशो नाम
172740 पञ्चषष्ट्यधिकशततमः सर्गः ॥ १६५ ॥
172741
172742 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
172743 जाग्रत्स्वप्नैक्योपदेशो नाम पञ्चषष्ट्यधिकशततमः सर्गः ॥ १६५ ॥
172744

172745 षट्षष्ट्यधिकशततमः सर्गः १६६
172746
172747 श्रीवसिष्ठ उवाच।
172748
172749 सार्थकेनात्मशब्देन ख्यातिशब्देन चोज्झिताम्।
172750 आत्मख्यातिमिमां विद्धि शिलाजठरनिर्घनाम्॥ १॥
172751
172752 आत्मख्यातिविशेषोऽत्र तथा ख्यात्यन्तरस्थितिः।
172753 ब्रह्मनीलशिलाख्यानं चोक्तं प्रश्नोत्तरान्वितम्॥
172754
172755 चितेश्चमत्कृतिरियं जगन्नाम्नी चकास्त्यलम् इति यदुक्तं तत्र
172756 अख्यात्यसत्ख्यात्यन्यथाख्यात्यात्मख्यात्याख्यासु चतसृषु वादिभेदसंमतासु
172757 ख्यातिषु कया ख्यात्या स विदुषां चकास्तीति रामस्य जिज्ञासां मुनिर्लिङ्गैरुपलक्ष्य
172758 तत्र विद्वद्दृशा वादिभेदकल्पितानां चतसृणामपि शशशृङ्गप्रायतेति
172759 निरसिष्यन्विद्वत्संमतां पञ्चमीमलौकिकीमात्मख्यातिं व्युत्पादयितुमारभते ##-
172760 चाखण्डार्थकपदद्वयलक्ष्यामित्यर्थः। वक्ष्यमाणशिलाजठरमिव निरन्तरं
172761 घनाम्॥ १॥
172762
172763 आदिसर्गात्प्रभृत्येव चिद्व्योमैवेत्थमाततम्।
172764 कचत्यात्मनि यत्तस्य बुद्धा तेनैव सर्गता॥ २॥
172765
172766 आत्मैव ख्यातिरिति पदद्वयस्य सामानाधिकरण्येनान्वये क आत्मा सा च किं विषयिणी
172767 ख्यातिरिति जिज्ञासायामाह - आदिसर्गादिति। यद्यस्मात्तेनात्मना आत्मन्येव सर्गता
172768 बुद्धा स्वचैतन्यबलेन ख्यापिता तत्तस्मादयमात्मैव सर्गताविषयिणी
172769 ख्यातिरित्यर्थः॥ २॥
172770
172771 न वहन्तीह सरितो नेहोन्मज्जनमज्जने।
172772 व्योम व्योम्न्येव चिद्रूपं कचत्येवमनिङ्गितम्॥ ३॥
172773
172774 तरात्मशब्दव्याख्यानपरे चिद्व्योमशब्दे। व्योमशब्दस्य
172775 प्रपञ्चशून्यतैवार्थः। अतः प्रपञ्चस्तत्ख्यातिश्चात्मैवेत्येवकारार्थ इति
172776 दर्शयति - न वहन्तीत्यादिना। कचति ख्यायते। अनिङ्गितं निष्क्रियम्॥ ३॥
172777
172778 कचनोक्त्या तु रहितां समग्रेणास्तकल्पनाम्।
172779 विनोत्तरपदार्थेन त्वात्मख्यातिमिमां विदुः॥ ४॥
172780
172781 कचनोक्त्या कचनवाचकेन ख्यातिशब्देन। उत्तरपदं ख्यातिशब्दस्तेन तदर्थेन च
172782 विना स्वप्रकाशमात्मानमेव स्वात्मकसर्गप्रख्यानात्मकत्वादात्मख्यातिं
172783 विदुर्विद्वांस इत्यर्थः॥ ४॥
172784
172785 आत्मैवेदं जगत्सर्वं ख्यातिर्यत्र न किंचन।
172786 अख्यातो नाम न ख्यात्या कदाचित्ख्यापितः क्वचित्॥ ५॥
172787
172788 एवं चिन्मात्ररूपे सर्गे वाद्यभिमतार्थनामख्यात्यादिशब्दानामसंगतिरित्याह
172789 - आत्मैवेति। यदा इदं जगत्सर्वमात्मैव स च स्वप्रकाशात्मैव स कदापि
172790 स्वातिरिक्तया ख्यात्या न ख्यापित इति अख्यात इति वाचोयुक्तिस्तत्र स्यात्। न त्वख्यातिरिति
172791 भावार्थकक्तिन्नन्तपदं तत्र घटयितुं शक्यमित्यर्थः॥ ५॥
172792
172793 ख्यातिरख्यातिरित्यत्र वाचोयुक्तिरवास्तवी।
172794 किं तत्र ख्यापनं नाम स्याद्वाप्यख्यापनं च किम्॥ ६॥
172795
172796 कुतो न शक्यं तत्राह - ख्यातिरिति। ख्याधातोर्हि प्रथा अर्थः। प्रत्ययस्य भावः

172797 स च सत्ता। तथा च ख्यानात्मिका सत्ता ख्यातिशब्दार्थः।
172798 तथाविधश्चायमात्माख्यातिरेवेति न नञर्थेन संबध्यत इत्यख्यातिरिति
172799 पराभिमता वाचोयुक्तिस्तत्रावास्तवीत्यर्थः। अस्तु तर्हि हेतुमण्ण्यन्तादत्र क्तिन्। तत्रापि
172800 णेरनिटि इति णिलोपे ख्यातिरिति रूपसिद्धेस्तथा च न विद्यते ख्यातिः ख्यापनं यत्र सा
172801 अख्यातिरिति व्युत्पत्त्या पराभिमतोऽर्थस्तत्र सेत्स्यतीत्याशङ्क्याह - किं तत्रेति। जडे
172802 हि सर्गेऽभ्युपगते तत्रान्यकृतं ख्यापनमख्यापनं चोपयुज्यते। यदा तु
172803 स्वप्रकाश आत्मैव सर्गस्तदा दीपे दीपान्तरेणेव तत्रख्यापनमख्यापनं च किम् न
172804 किंचिदिति सर्वथा पराभिमतं न घटत इत्यर्थः। एतेनासत्ख्यात्यन्यथाख्याती अपि
172805 वाद्यन्तराभिमते प्रत्याख्याते। नञर्थवदसदन्यथाशब्दार्थयोरपि
172806 ख्यातिपदार्थेन सह अन्वयायोग्यत्वादिति भावः॥ ६॥
172807
172808 अख्यातिरन्यथाख्यातिरसत्ख्यातिरितीतरा।
172809 दृश्याश्चिन्मात्ररूपस्य भासश्चित्त्वचमत्कृताः॥ ७॥
172810
172811 यदि तु स्वप्नमनोराज्यादिदृश्यान्तरतुल्याः कल्पनामात्ररूपा
172812 अख्यात्यादयश्चिच्चमत्कारा एवेत्यभ्युपगच्छथ तर्हि तथास्तु न काचिन्नः
172813 क्षतिरित्याह - अख्यातिरिति॥ ७॥
172814
172815 यथा यथा यदा ये ये चिन्मात्रव्योमभास्वतः।
172816 चिदंशवः कचन्त्यच्छास्तदा ते ते तथा तथा॥ ८॥
172817
172818 चिदंशवः अग्निविस्फुलिङ्गवत्कल्पितचिद्भागाः॥ ८॥
172819
172820 आत्मख्यातिरसत्ख्यातिरख्यातिः ख्यातिरन्यथा।
172821 इत्येताश्चिच्चमत्कृत्या आत्मख्यातेर्विभूतयः॥ ९॥
172822
172823 तथा सति भवदभिमतास्ते मदीयात्मख्यातेर्विभूतय एवेत्याह - आत्मख्यातिरिति॥
172824 ९॥
172825
172826 आत्मख्यातिपदस्यार्थ आत्मख्यातिपदोज्झितः।
172827 अनाद्यन्तो निरुल्लेखः सोऽयमेकघनः स्थितः॥ १०॥
172828
172829 वर्णितामात्मख्यातिमुपसंहरन् शिलाजठरनिर्घनामिति पदं शिलोपाख्यानेन
172830 व्याख्यातुमुपक्रमते - आत्मख्यातिपदस्येति॥ १०॥
172831
172832 तत्रेदं महदाख्यानं शृणु श्रवणभूषणम्।
172833 दूषणं द्वैतदृष्टीनां द्योतनं बोधभास्वतः॥ ११॥
172834
172835 तत्र एकघनः स्थित इति पदसूचिते शिलाजठरनिर्घनपदव्याख्याने विषये॥ ११॥
172836
172837 अस्ति योजनकोटीनां सहस्राणि प्रमाणतः।
172838 आनीलकुड्यकठिना विमला विपुला शिला॥ १२॥
172839
172840 आसमन्तान्नीलमाकाशमेव यदि कुड्यं स्यात्तदिव कठिना विमला विपुला च॥ १२॥
172841
172842 न संधिबन्धा निबिडा वज्रसारा विसारिणी।
172843 अत्यन्तपुष्टकठिनजठराकाशनिर्मला॥ १३॥
172844
172845 न विद्यन्ते सन्धिबन्धा अवयवसंश्लेषघटना यस्याम्। न शब्दोऽयं न तु नञ्।
172846 विसारिणी विस्तारवती॥ १३॥
172847
172848 असंख्यकल्पनिचयमविनाशा घनाङ्गिका।

172849 कान्ताङ्गी निर्मलत्वेन व्योमरूपैव लक्ष्यते ॥ १४ ॥
172850
172851 कल्पनिचयमिति कालाध्वनोरत्यन्तसंयोगे इति द्वितीया क्रोशं गिरिरितिवत् ॥ १४ ॥
172852
172853 जातिस्तु ज्ञायते तस्या विशिष्टा नैव केनचित् ।
172854 कथं कुत्र कदा चेति न विज्ञाता सदैव सा ॥ १५ ॥
172855
172856 सजातीयवस्त्वन्तराप्रसिद्धेस्तस्या विशिष्टा विजातीयाद्व्यावृत्ता जातिः केनचिन्नैव
172857 ज्ञायते । एवं तस्या देशकालप्रकारा अप्यत्यन्ताप्रसिद्धा इत्याह - कथमिति ॥ १५ ॥
172858
172859 अन्तस्तस्यास्तु हृदये भूतधातुविवर्जिते ।
172860 निबिडानन्तकठिना वज्रसाराऽविनाशिनी ॥ १६ ॥
172861
172862 भूतधातुभिर्महाभूतैश्चतुर्विधभूतग्रामैश्च विवर्जिते तस्या अन्तर्जठरे
172863 लेखामयानि स्फटिकशिलान्तर्लेखाप्रायाणि पद्मजालादीनि विद्यन्त इति परेणान्वयः ॥
172864 १६ ॥
172865
172866 लेखामयानि विद्यन्ते स्वाङ्गभूतानि भूरिशः ।
172867 पद्मजालानि शङ्खाश्च गदाश्चक्रादयस्तथा ॥ १७ ॥
172868
172869 आदिपदात्खड्गखट्वाङ्गादिपरिग्रहः ॥ १७ ॥
172870
172871 खं वायुः सलिलं तेजो वसुधेत्यभिधा कृता ।
172872 नासीत्तत्र स्वलेखानां जीव इत्येव वै तत्या ॥ १८ ॥
172873
172874 तत्र शिलाजठरे खं वायुरित्यादि जगन्नासीदेव किंतु तथा लक्ष्यमाणानां
172875 स्वलेखानामेव खं वायुरित्याद्यभिधा तया शिलया कृता । स्वस्याश्च तया जीव
172876 इत्येवाभिधा देहलेखासु कृतेत्यर्थः ॥ १८ ॥
172877
172878 श्रीराम उवाच ।
172879
172880 शिलासौ चेतनं तस्याः कुत इत्युच्यतां मम ।
172881 अचेतना शिला नाम कथं नाम करोति च ॥ १९ ॥
172882
172883 नन्वसौ शिला शिलात्वादेव अचेतना । नामेति लोकप्रसिद्धौ । तस्याश्च चेतनं
172884 संज्ञानं कुतः । यद्यचेतनैव सा तर्हि सा स्वलेखानां खं वायुरित्यादि नाम
172885 कथं करोति । नामकरणस्य चेतनकर्तृकत्वप्रसिद्धेरिति रामः शङ्कते - शिलेति
172886 ॥ १९ ॥
172887
172888 श्रीवसिष्ठ उवाच ।
172889
172890 न चेतना न च जडा सा शिला विपुलोज्ज्वला ।
172891 जातिं जानाति कस्तस्याः कस्तत्रान्यश्च विद्यते ॥ २० ॥
172892
172893 जातिस्तु ज्ञायते तस्या विशिष्टा नैव केनचित् इति प्राक्तनोक्त्यैवायं प्रश्नो दत्तोत्तर इति
172894 वसिष्ठः समाधत्ते - नेत्यादिना । अन्यश्च को विद्यते यस्तज्जातिं जानीयादित्यर्थः ॥
172895 २० ॥
172896
172897 श्रीराम उवाच ।
172898
172899 तस्याः पश्यति ता लेखाः कः कथं जठरस्थिताः ।
172900 कथं वा केन सा भग्ना कदा नामेति मे वद ॥ २१ ॥

172901
172902 यदि तत्रान्यो न विद्यते तर्हि ताः खं
172903 वायुरित्याद्याकारास्त्वदुक्तास्तज्जठरस्थितालेखाःकः पश्यति। केन
172904 वासान्तर्विचित्ररेखाकारेण भग्ना टङ्कैर्लिखिता।
172905 अन्तष्टङ्कप्रवेशाद्ययोगात्कथं वा भग्ना। कदा नाम भग्नेति वदेति
172906 रामप्रश्नः स्पष्टः॥ २१॥
172907
172908 श्रीवसिष्ठ उवाच।
172909
172910 न भेत्तुं युज्यते सोग्रा न च भेत्ता च विद्यते।
172911 तथैवापारपर्यन्तदेहिन्या सर्वमावृतम्॥ २२॥
172912
172913 पृष्टानामपह्नवेनैवोत्तरमाह - येत्यादिना। उग्रा अतिदृढा। आवृतं
172914 व्याप्तम्। नैनेन किंचनानावृतंनैनेन किंचनासंवृतम् इति श्रुतेरिति भावः॥
172915 २२॥
172916
172917 लेखामयानि विद्यन्ते तत्रानन्तानि कोटरे।
172918 वृक्षपर्वतजालानि नगराणि पुराणि च॥ २३॥
172919
172920 तत्र लेखामयाः सन्ति देवदानवनामकाः।
172921 सूक्ष्मासूक्ष्मा निराकाराः साकारा इव पुत्रिकाः॥ २४॥
172922
172923 सूक्ष्मा असूक्ष्माश्च पुत्रिकाः प्रतिमाः॥ २४॥
172924
172925 आकाशनाम्नी तत्रास्ति लेखा वैपुल्यशालिनी।
172926 उपलेखाश्च सन्त्यस्या मध्ये चन्द्रार्कनामिकाः॥ २५॥
172927
172928 श्रीराम उवाच।
172929
172930 केन दृष्टा वद ब्रह्म&ल्लेखास्तास्तत्र किंविधाः।
172931 कथं वा वद दृश्यन्ते निपिण्डोपलकोशगाः॥ २६॥
172932
172933 नितरां पिण्डो निपिण्डः अतिघनो य उपलकोशस्तद्गताः॥ २६॥
172934
172935 श्रीवसिष्ठ उवाच।
172936
172937 मया राघव ता दृष्टास्तादृश्यस्तत्र लेखिकाः।
172938 तवापीच्छा यदि भवेत्तत्तास्त्वमपि पश्यसि॥ २७॥
172939
172940 पश्यसि समाधिना द्रक्ष्यसि॥ २७॥
172941
172942 श्रीराम उवाच।
172943
172944 तादृशी वज्रसारा सा शिला भङ्क्तुं न युज्यते।
172945 तथापि भवता दृष्टा लेखास्तत्कोशगाः कथम्॥ २८॥
172946
172947 श्रीवसिष्ठ उवाच।
172948
172949 एतस्या जठरे राम लेखाहं जठरे स्थितः।
172950 तेन पश्यामि तत्रस्थो लेखाजालं तदक्षतम्॥ २९॥
172951
172952 अहं वसिष्ठदेहोपि एतस्या जठरे स्थितो रेखैव तेन हेतुना॥ २९॥

172953
172954 कोऽसौ शक्तोऽन्यथा भङ्क्तुं तां शिलामहमन्तरे।
172955 तत्सर्वं दृष्टवांस्तस्या अहं तत्रान्तरस्थितः॥ ३०॥
172956
172957 तस्या अन्तरवस्थितोऽहमन्तरे विद्यमानं तत्सर्वं लेखावृन्दं दृष्टवान्॥ ३०॥
172958
172959 श्रीराम उवाच।
172960
172961 कासौ शिलाथ कश्च त्वं वद मे क्वासि संस्थितः।
172962 किमेतद्वदसि ब्रूहि किमेतद्दृष्टवानसि॥ ३१॥
172963
172964 इदानीं तत्त्वतस्तां शिलां वसिष्ठं च रामो जिज्ञासुः पृच्छति - कासाविति। एतत्
172965 शिलाख्यं किं वदसि॥ ३१॥
172966
172967 श्रीवसिष्ठ उवाच।
172968
172969 परमात्ममहासत्ता कथितैषा मया तव।
172970 अनयैव वचोभङ्ग्या न त्वेषा विपुला शिला॥ ३२॥
172971
172972 अनया शिलाख्यानवचोभङ्ग्या॥ ३२॥
172973
172974 परमात्ममहासत्ताशिलाया जठरे वयम्।
172975 तच्छिलामांसमेवेमे सौषिर्यपरिवर्जिते॥ ३३॥
172976
172977 तच्छिलाया मांसमिव मांसं स्वरूपभूता एवेति यावत्। इमे वयम्॥ ३३॥
172978
172979 तच्छिलाङ्गं नभो विद्धि तच्छिलाङ्गं सदागतिः।
172980 तच्छिलाङ्गं क्रियाशब्दा वासना कालकल्पना॥ ३४॥
172981
172982 सर्वं जगत्तच्छिलाङ्गमेवेति प्रपञ्चयति - तच्छिलाङ्गमिति। सदागतिर्वायुः।
172983 पञ्चभूतोपलक्षणमेतत्। एवं क्रियाशब्दग्रहणमपि
172984 वाय्वाकाशादिसर्वभूतभौतिकधर्मोपलक्षणम्। वासना मनोधर्मोपलक्षणम्॥
172985 ३४॥
172986
172987 भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च।
172988 अहंकार इतीदं तत्तच्छिलाङ्गमुदाहृतम्॥ ३५॥
172989
172990 उक्तमेव पुनः स्पष्टमाह - भूमिरिति॥ ३५॥
172991
172992 परमात्ममहासत्ता शिला मांसमिमे वयम्।
172993 सर्व एव ततोऽनन्येऽप्यन्ये त्विति च विद्महे॥ ३६॥
172994
172995 अन्ये इति तु भ्रान्त्या विद्महे॥ ३६॥
172996
172997 चिन्मात्रैकात्मिका येयं किलातिमहती शिला।
172998 एतस्या व्यतिरेकेण क्व तदस्ति किमुच्यताम्॥ ३७॥
172999
173000 एतस्या व्यतिरेकेण किंचिदस्ति चेत्तत्क्वास्ति तच्च किमस्ति तदुभयमुच्यताम्॥ ३७॥
173001
173002 शुद्धं वेदनमेवेदं घटावटपटादिकम्।
173003 यथा स्वप्ने तथा भाति जलमूर्मितया यथा॥ ३८॥
173004

173005 ननु भूतलघटावटपटादिकमेव तद्व्यतिरिक्तं प्रसिद्धं नेत्याह - शुद्धमिति
173006 | नैतत्किमपि तद्व्यतिरेकेणास्तीत्यर्थः || ३८ ||
173007
173008 इदं ब्रह्म घनं सर्वं चिन्मात्रघनमाततम् |
173009 परमार्थघनं शान्तं सर्वमेकघनं विदुः || ३९ ||
173010
173011 एकं महाचिति शिलोदरमेव सर्वं सौषिर्यवर्जितमपारमनादिमध्यम् |
173012 तेनात्मनैव कलिता कलनात्मनेयं सर्गो जगद्भुवनमित्यपि दृश्यनाम्नी || ४०
173013 | |
173014
173015 सर्वं जगदेकं ब्रह्मशिलोदरमेव | तच्च सौषिर्येण च्छिद्रभावेन
173016 वर्जितमपारमनन्तं तथा अनादिमध्यं च | तेन तथाविधेन ब्रह्मात्मना आत्मना
173017 स्वेनैव सर्गो जगद्भुवनमित्यपि पर्यायनामभिः प्रसिद्धा दृश्यनाम्नी कलना
173018 कलिता स्वीकृतेत्यर्थः || ४० ||
173019
173020 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० नि० उ० शिलोपाख्यानं नाम
173021 षट्षष्ट्यधिकशततमः सर्गः || १६६ ||
173022
173023 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
173024 शिलोपाख्यानं नाम षट्षष्ट्यधिकशततमः सर्गः || १६६ ||
173025
173026 सप्तषष्ट्यधिकशततमः सर्गः १६७
173027
173028 श्रीवसिष्ठ उवाच |
173029
173030 आत्मख्यातिरसत्ख्यातिः ख्यातिरख्यातिरन्यथा |
173031 शब्दार्थदृष्टयस्तज्ज्ञं प्रत्येताः शशशृङ्गवत् || १ ||
173032
173033 इह तज्ज्ञदृशोदस्य वादिख्यातिचतुष्टयम् |
173034 अवस्थात्रयनिर्मुक्तमात्मतत्त्वं निरूप्यते ||
173035
173036 अन्यथा ख्यातिरिति व्यवहितपूर्वपदेन संबन्धः || १ ||
173037
173038 कदाचनापि नामाङ्ग संभवन्ति न काश्चन |
173039 शान्तमव्यपदेश्यात्मा ज्ञ आस्तेऽस्तङ्गतेङ्गनः || २ ||
173040
173041 जगत्ख्यातिसत्त्वे हि सा किमात्मख्यातिरुतासत्ख्यातिरित्यादिविकल्पानामवसरः स्यात् सैव
173042 नास्ति चेत्कस्याश्चातुर्विध्यमित्याशयेनाह - कदाचनेति | अस्तङ्गतेङ्गनः
173043 ख्यात्यादिकल्पनामूलचित्तचेष्टाशून्यः || २ ||
173044
173045 एता उद्यन्ति चिन्मात्रादात्मख्यात्यादिका दृशः |
173046 तच्च शुद्धतरं व्योम तन्मय्येव च दृश्यते || ३ ||
173047
173048 दृशो भ्रान्तिदृष्टयः | तच्च चिन्मात्रं परमार्थतः शुद्धतरं
173049 सर्वकल्पनाशून्यं व्योम | सर्वापि कल्पना तन्मय्येव दृश्यते मया |
173050 तद्यदिदंमयोऽदोमयः सर्वमयः इति श्रुतेरित्यर्थः || ३ ||
173051
173052 अयमात्मा त्वियं ख्यातिरित्यन्तःकलनाभ्रमः |
173053 न संभवत्यतश्चैनं शब्दं त्यक्त्वा भवार्थभाक् || ४ ||
173054
173055 शब्दं त्यक्त्वेति | अत एवास्माभिः सार्थकेनात्मशब्देन ख्यातिशब्देन
173056 चोज्झितामित्युक्तमिति भावः | अर्थबाक् परमार्थभाक् || ४ ||

173057
173058 गच्छंस्तिष्ठन्नददपि सर्वं शान्तमतो जगत् ।
173059 आकाशमौनमेवाच्छमच्छिन्नं वाऽप्रवृत्तिमत् ॥ ५ ॥
173060
173061 गच्छंस्तिष्ठन्निति च्छान्दसो लिङ्गव्यत्ययः । अतोऽस्मादर्थदर्शनाद्गच्छत् तिष्ठत्
173062 अदद्भक्षयदपि जगदप्रवृत्तिमत् सर्वप्रवृत्तिशून्यं भातीत्यर्थः ॥ ५ ॥
173063
173064 नानामहाशब्दमपि शिलामौनमवस्थितम् ।
173065 अनारतं गच्छदपि व्योमवच्छैलवत्स्थितम् ॥ ६ ॥
173066
173067 इदमेव विशदयति - नानेत्यादिना ॥ ६ ॥
173068
173069 नानाविधारम्भमपि महाशून्यमनङ्कितम् ।
173070 पञ्चभूतात्मकमपि खमिवालब्धपञ्चकम् ॥ ७ ॥
173071
173072 पदार्थसंकुलमपि शून्यं संवित्तिमात्रकम् ।
173073 स्वप्ने महापुरमिव दृष्टमप्यच्छचिन्मयम् ॥ ८ ॥
173074
173075 सारम्भमप्यनारम्भं संकल्पनगरं यथा ।
173076 आकाशमात्रं भ्रान्त्यात्म स्वप्नस्त्रीसंगमोपमम् ॥ ९ ॥
173077
173078 आकाशमात्रमतिशून्यम् ॥ ९ ॥
173079
173080 अनुभूतमपि व्यर्थं प्रतिबिम्बाङ्गनासमम् ।
173081 नानानुभवनिर्माणं वस्तु शून्यं तु वस्तुतः ॥ १० ॥
173082
173083 श्रीराम उवाच ।
173084
173085 जाग्रत्स्वप्नात्मकमिदं मन्ये स्मृत्यैव दृश्यते ।
173086 सद्रूपबाह्यार्थकृता स्मृतिरेवेह कारणम् ॥ ११ ॥
173087
173088 यद्यविद्यमानमेव जाग्रत्स्वप्नात्मकं जगद्वासनामात्राद्दृश्यते तर्हि
173089 स्मृत्यैव दृश्यते इति मन्ये । इह जगत्प्रतिभाने स्मृतिरेव कारणं न भ्रान्तिः ।
173090 यतः सा अधिष्ठानदोषसादृश्यसंप्रयोगादिनिमित्तशून्या सद्रूपबाह्या
173091 अविद्यमाना ये अर्थास्तत्कृता तन्मात्रगोचरेति रामप्रश्नार्थः ॥ ११ ॥
173092
173093 श्रीवसिष्ठ उवाच ।
173094
173095 यत्तच्चित्काचकच्येन काकतालीयवद्वपुः ।
173096 व्योमात्माऽऽभाति भावानां सत्तामात्रमभित्तिमत् ॥ १२ ॥
173097
173098 अविद्यानिद्रादिदोषजत्वात्स्वप्रकाशचिति संप्रयोगानुपयोगाच्च तदधिष्ठाना
173099 भ्रान्तिरेवेयं न स्मृतिः । पूर्वपूर्वानुभवेष्वपि सांप्रतिकतुल्यतया
173100 स्मृतित्वापत्त्या तन्मूलानुभवाप्रसिद्धिप्रसङ्गादित्याशयेन वसिष्ठः समाधत्ते
173101 - यत्तदित्यादिना । तत्राधिष्ठानसद्भावं दर्शयति - यत्तदिति ।
173102 यत्तद्व्योमात्म सत्तामात्रं काचकच्येनाभाति तदेवेदं जगदित्यर्थः ॥ १२ ॥
173103
173104 तदेतदविनाशात्म सर्वत्र परमात्मनि ।
173105 सर्वदा विद्यते शान्ते पयसीव तरङ्गकाः ॥ १३ ॥
173106
173107 निर्निमित्तं स्वरूपात्म तदेतत्परमात्मनि ।
173108 सर्वात्मन्यपि निर्वाणे व्योमात्मनि निरात्मनि ॥ १४ ॥

173109
173110 यदा यदावभात्यन्तर्येन तेन यथा तथा।
173111 सर्वदा न कदाचिद्वा यत्र तत्र न किंचन॥ १५॥
173112
173113 आविद्यके नियतदोषाद्यपेक्षा नास्ति। अनियतदोषास्तु संभवन्त्येवेत्याशयेन येन
173114 तेनेत्याद्युक्तिः॥ १५॥
173115
173116 तस्यैव ब्रह्मभानस्य तेनैवं ब्रह्मणात्मना।
173117 स्वच्छस्यैव स्वभावस्य स्वस्वभावमनुज्झता॥ १६॥
173118
173119 तर्हि अस्येयं भ्रान्तिः केन जगदादिनामानि कृतानि तत्राह - तस्यैवेति द्वाभ्याम्॥
173120 १६॥
173121
173122 इदं जाग्रदयं स्वप्नः सुषुप्तं तुर्यमित्यपि।
173123 कृतं नाम स्वयं चित्त्वाद्ब्रह्म वात्मेति चात्मनि॥ १७॥
173124
173125 वस्तुतस्त्वस्तिन स्वप्नो न जाग्रन्न सुषुप्तता।
173126 न तुर्यं न ततोऽतीतंसर्वं शान्तं परं नभः॥ १८॥
173127
173128 ततः अतीतमतिरिक्तम्॥ १८॥
173129
173130 अथवा सर्वमेवेदं जाग्रद्रूपं सदैव च।
173131 सर्वदैव च वा स्वप्नः सुषुप्तं सर्वदैव च॥ १९॥
173132
173133 चितः कदापि स्वापाभावात्सर्वदैव जाग्रद्रूपम्। भ्रान्तिमात्रत्वात्सर्वदैव स्वप्नो वा
173134 । अविद्यावरणमात्रत्वात्सर्वदैव सुषुप्तम्॥ १९॥
173135
173136 सर्वदैव च वा तुर्यं तदन्तः सर्वदैव वा।
173137 तदिदं वा न यद्विद्मो वयमाशान्तरूपिणः॥ २०॥
173138
173139 स्वेनैव सदैव वावस्थात्रयातिक्रमणात्सदैव तुर्यमित्येव वा वक्तुं
173140 शक्यमित्यर्थः। त्रयाप्रसिद्धेस्तस्य तुर्यस्यान्तः असत्त्वं वा निर्विकल्पे तदिदं
173141 वेत्यादिविकल्पं च न विद्मः॥ २०॥
173142
173143 इदं फेनो न किंचिद्वा बद्बुदो वा न कश्चन।
173144 शून्यताम्भसि चिद्व्योम महार्णवमहोदरे॥ २१॥
173145
173146 यथा संवेद्यते यद्यत्तथा तदनुभूयते।
173147 सद्वासद्वा भवत्स्वप्ने व्योम्नीव सदसच्च तत्॥ २२॥
173148
173149 कल्पनावेदनदृशा तु येन यथा यदा संवेद्यते तस्य तदा तथेत्येव
173150 संतोष्टव्यमित्याह - यथेति॥ २२॥
173151
173152 संवित्कचनमेवेदं यथा भानं विभासते।
173153 व्योम व्योमनि चिद्रूपं चिद्रूपे वितताात्मनि॥ २३॥
173154
173155 संविच्च चिन्नभोमज्जा सैवंरूपैव सर्वदा।
173156 नास्तमेति न चोदेति तस्याः स्वाङ्गमिदं जगत्॥ २४॥
173157
173158 यतः संविदेव जगदतो नास्तमेति नोदेति च॥ २४॥
173159
173160 महाप्रलयसर्गाद्या महाप्रलयरात्रयः।

173161 तस्या एवावयवतां याताः केशनखादिवत् ॥ २५ ॥
173162
173163 महाप्रलयसर्गाद्याः कालविभागास्तर महाप्रलयलक्षणा रात्रयः
173164 सर्गलक्षणदिनानि चेत्युपलक्षणीयम् ॥ २५ ॥
173165
173166 तस्या भानमभानं तद्भास्वरं जिह्ममेव वा ।
173167 नान्यत्स्वभाववत्स्पन्द इव वायोर्महाचितेः ॥ २६ ॥
173168
173169 भास्वरं चिद्रूपं जिह्मं मायारूपं वा ॥ २६ ॥
173170
173171 तस्मात्किं नाम जाग्रत्स्यात्कः स्वप्नः का सुषुप्तता ।
173172 किं तुर्यं का स्मृतिः केच्छा तुच्छा एताः कुदृष्टयः ॥ २७ ॥
173173
173174 उपसंहरति - तस्मादिति ॥ २७ ॥
173175
173176 अन्तःसंवेदनं भाति स्वं बाह्यार्थतया यतः ।
173177 क्व द्वैतं क्व च वार्थश्रीः स्मृतिरेवमतः कुतः ॥ २८ ॥
173178
173179 एवं सति स्मृतिश्च कुतः ॥ २८ ॥
173180
173181 तदिदं भाति निर्भित्ति तत्स्वभानं यदात्मना ।
173182 भानोर्नभसि भारूपमेव भूतविवर्जितम् ॥ २९ ॥
173183
173184 निर्भित्तं निर्भेदं यदात्मना भाति तत्स्वभानं स्वात्मकमेव भानं न
173185 स्वभिन्नम् । यथा भानोर्नभसि निराश्रये भारूपमेव भानं न भास्यसापेक्षं
173186 तद्वदित्यर्थः ॥ २९ ॥
173187
173188 सद्रूपो यदि बाह्योऽर्थो विद्यते तत्तदुत्थिता ।
173189 स्मृतिः कारणतामेतु नामाद्यजगतः स्थितेः ॥ ३० ॥
173190
173191 तदुत्थिता तदनुभवहेतुका एतु नाम । आद्यायाः सर्गादिकालिक्या जगतः स्थितेः ॥ ३० ॥
173192
173193 किंतु नास्त्येष बाह्योऽर्थो भूतानामत्यसंभवात् ।
173194 पञ्चानामादिसर्गादौ कारणानामभावतः ॥ ३१ ॥
173195
173196 शशशृङ्गं यथा नास्ति यथा नास्ति खपादपः ।
173197 यथा वन्ध्यासुतो नास्ति यथा नास्त्यसितः शशी ॥ ३२ ॥
173198
173199 तथाऽज्ञप्रतिभातोऽर्थो जगदाद्यहमादिकः ।
173200 अप्रेक्षितोऽस्ति नास्त्येव प्रेक्षितः सन्न कश्चन ॥ ३३ ॥
173201
173202 जगदादौ सर्गादिकाले अज्ञान्प्रति भातोऽहमादिकोऽर्थस्तत्त्वतोऽप्रेक्षितश्चेदस्ति प्रेक्षितस्तु
173203 नास्ति ॥ ३३ ॥
173204
173205 यथास्तीदं महाकारं न किंचिद्रूपमेव वा ।
173206 तत्त्वज्ञविषयं राम तथास्तीदमखण्डितम् ॥ ३४ ॥
173207
173208 तत्त्वज्ञविषयं न किंचिद्रूपं मूर्तामूर्तरूपरहितं चिन्मात्रैकघनं
173209 त्वखण्डितमस्त्येवेत्यर्थः ॥ ३४ ॥
173210
173211 संविद्घननभोमज्जा यथोदेति यदा यदा ।
173212 नित्योदितोपचारेण कल्पितास्तमयोदया ॥ ३५ ॥

नित्योदितापि व्यवहारे उपचारेण कल्पितास्तमयोदया ॥ ३५ ॥

मुधा व्योम्न्येव पृथ्व्यादितया वेत्ति तदा तदा ।
स्वस्यैव तस्य भानस्य धत्ते पृथ्व्यादिकल्पनाम् ॥ ३६ ॥

व्योम्न्येवाज्ञो मुधा पृथ्व्यादितया यदा यदा वेत्ति तदा तदा पृथ्व्यादिकल्पनां
धत्ते ॥ ३६ ॥

स्वमेव भानमाकाशमात्रमेव महाचितिः ।
पृथ्व्यादिव्यपदेशेन पश्चाद्व्यपदिशत्यजा ॥ ३७ ॥

महाचितिः स्वभानमेव पृथ्व्यादिव्यपदेशेन पृथ्व्यादिनाम्ना
पश्चाद्व्यपदिशति व्यवहरति ॥ ३७ ॥

आकाश एव पृथ्वीयमिति धत्ते स्वसंविदम् ।
मनोराज्यपुरं बाल इव चिन्मात्रमव्ययम् ॥ ३८ ॥

अव्ययं चिन्मात्रमाकाशकल्पे स्वात्मन्येव पृथ्वीयमिति स्वसंविदं धत्ते ॥ ३८ ॥

किं भानं किमभानं स्यात्तस्येति न विकल्प्यते ।
स्पन्दास्पन्दस्वभावं तद्विद्धि वातमिवाम्बरे ॥ ३९ ॥

चिन्मात्रमेव चेत्तस्य जगदाकारं भानं किं अभानं च किं स्यादिति तु तन्न
विकल्प्यते न विकल्पनीयम् । यतस्तत्प्राणशक्त्या स्पन्दस्वभावं चिच्छक्त्या
अस्पन्दस्वभावमिति विद्धि ॥ ३९ ॥

यथा भाति चिदाकाशं तथेदमवभासते ।
व्योम व्योम्न्येव नीरूपं नेदं पृथ्व्यादि सत्क्वचित् ॥ ४० ॥

यथा यथा वासनोद्भवेन भाति स्फुरति तथा तथा इदं जगदित्यवभासते ॥ ४० ॥

यथा भाति चिदाकाशरूपत्वाद्भातमप्यलम् ।
न सन्नासदिति किंचित्तन्न किंचिन्न किंचन ॥ ४१ ॥

तद्यथा भाति तथा तद्भातु नाम । भातमपि तच्चिदाकाशरूपत्वादलं न सत्
नाप्यसदिति । तत्प्रपञ्चरूपं किंचिदपि न किंतु किंचनानिर्वचनीयमेवेत्यर्थः ॥ ४१ ॥

इदमित्थमनित्थं च सद्वाऽसद्वा यथास्थितम् ।
लोकपर्यायवृत्तान्तं प्राज्ञो जानाति नेतरः ॥ ४२ ॥

स एव हृदयाकाशे कचन्त्या दृश्यसंविदा ।
बाह्यं ब्रह्माण्डमित्थं च सद्वाऽसद्वा यथास्थितम् ॥ ४३ ॥

यतः स प्राज्ञ एव सर्वेषां हृदयाकाशे आत्मतया आस्ते अतस्तद्रूपयैव कचन्त्या
दृश्यसंविदा इदमान्तरं शरीरमिदं बाह्यं ब्रह्माण्डमित्यादिभेदकल्पनया
नाम कृतमित्यर्थः ॥ ४३ ॥

किमत्र बाह्यं किं वान्तः किं दृश्यं कास्य दृश्यता ।
शिवं शान्तमशान्तं च सर्वमोमिति शाम्यताम् ॥ ४४ ॥

सर्वं ओमिति प्रणवमात्राऽभेदकल्पनया प्रविलाप्य शाम्यताम् । मा मा इति पाठे मा

173265 मा इति निषेधवीप्सया निरस्येत्यर्थः ॥ ४४ ॥
173266
173267 नो वाच्यवाचकदृशा रहितो विचारः संपद्यते स च विकल्पमयेन सिद्ध्यै ।
173268 सिद्धिश्च संभवति तेन विना न काचिद्दीपं विना निशि यथा नयनोपलम्भः ॥
173269 ४५ ॥
173270
173271 यावद्विचारं त्वसदपि वाच्यवाचकविकल्पं यथालोकमभ्युपगम्यैव
173272 श्रवणादिविधयः प्रवर्तन्त इत्याशयेनाह - नो इति । वाच्यवाचकदृशा रहितः
173273 शास्त्रार्थविचारो नो संपद्यते । स च विचारो विकल्पमयेन विषयो विशयश्चैव
173274 पूर्वपक्षस्तथोत्तरम् । प्रयोजनं च पञ्चाङ्गं शास्त्रेऽधिकरणं विदुः ॥ इति
173275 प्रसिद्धेन पञ्चाङ्गेन कृतः सिद्ध्यै भवति । तेन विचारेण विना सिद्धिर्न
173276 संभवत्येव । यथा दीपं विना चाक्षुषप्रत्यक्षं निशि न भवति तद्वदित्यर्थः ॥ ४५
173277 ॥
173278
173279 तस्मादपास्य परयाऽमलया धियान्तःसंकल्पकल्पनमनल्पविकल्पजालम् ।
173280 कृत्वा मनः सकलशास्त्रमहार्थनिष्ठमुड्डीय गच्छ
173281 पदमुत्तममेकनिष्ठः ॥ ४६ ॥
173282
173283 तस्मात्सम्यग्विचारामलया धिया अन्तःसंकल्पनलक्षणमनल्पविकल्पजालमपास्य
173284 मनः सकलशास्त्रनिष्कर्षसिद्धमहार्थः सच्चिदानन्दाद्वयात्मा तन्निष्ठं
173285 कृत्वा तदेकनिष्ठः सन्नस्मात्संसारादुड्डीयोत्तमं मोक्षाख्यं पदं
173286 गच्छेत्यर्थः ॥ ४६ ॥
173287
173288 इत्यार्षे श्रीवासिष्ठम० वा० दे० मो० नि० उ० जाग्रत्स्वप्नसुषुप्त्यभावप्रतिपादनं
173289 नाम सप्तषष्ट्यधिकशततमः सर्गः ॥ १६७ ॥
173290
173291 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
173292 जाग्रत्स्वप्नसुषुप्त्यभावप्रतिपादनं नाम सप्तषष्ट्यधिकशततमः सर्गः ॥ १६७ ॥
173293
173294 अष्टषष्ट्यधिकशततमः सर्गः १६८
173295
173296 श्रीवसिष्ठ उवाच ।
173297
173298 अबुद्धिपूर्वमेवागो यथा शाखाविचित्रताम् ।
173299 करोत्येवमजश्चित्राः सर्गाभासः ख एव खम् ॥ १ ॥
173300
173301 अबुद्धिपूर्वकः सर्गस्याध्यारोपोऽत्र वर्ण्यते ।
173302 चिन्मात्रात्मा च स चितोऽविकारित्वादपोद्यते ॥
173303
173304 मिथ्यात्वसिद्धये सर्गस्याबुद्धिपूर्वकत्वं दृष्टान्तैः समर्थयति -
173305 अबुद्धिपूर्वमित्यादिना । अगो वृक्षो यथा अबुद्धिपूर्वं अहं शाखावैचित्र्यं
173306 करोमीति बुद्धिपूर्वकतां विना । अजो जन्मादिविक्रियाशून्यः परमात्मा खे
173307 आकाशकल्पे स्वात्मनि खं शून्यात्मिकाश्चित्रा विचित्राः सर्गाभासः
173308 प्रपञ्चाध्यासान्करोति । ननु स ऐक्षत लोकान्नु सृजा इति सोऽकामयत बहु स्यां
173309 प्रजायेयेति स तपोऽतप्यत सतपस्तप्त्वा इदं सर्वमसृजत तपसा चीयते ब्रह्म
173310 ततोऽन्नमुपजायते इत्यादिश्रुतिषु बुद्धिपूर्वक एव सर्ग उद्घोष्यते
173311 तत्कथमत्राबुद्धिपूर्वकः सर्ग इति प्रत्यक्षश्रुतिविरुद्धमुच्यत इति चेत् शृणु ।
173312 भवेदेतदेवं यदि श्रुतेः सर्गादिप्रतिपादने तात्पर्यं स्यात् । न तु तदस्ति ।
173313 प्रयोजनाभावात् । न हि सर्गादिज्ञानेन किंचित्प्रयोजनं श्रुतम् ।
173314 अद्वितीयब्रह्मात्मताज्ञानं हि प्रयोजनवदुपक्रान्तं सर्वश्रुतिषु । तस्य फलवतः
173315 संनिधौ श्रुतमफलं सर्गादिकैमर्थक्याकाङ्क्षायां तदङ्गतां प्रतिपद्यते ।
173316 सा चास्य शाण्डिल्यविद्याङ्गशमविधिपरे सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त

173317 उपासीत इति वाक्ये यत इदं सर्वं जगत्तस्माज्जायत इति तज्जम्। तस्मिन् लीयत इति तल्लम्।
173318 तेनानिति प्राणिति जीवतीति तदन् उत्पत्तिस्थितिप्रलयेषु तदधीनसत्ताकमतः सर्वं खल्विदं
173319 तद्ब्रह्मैवेति ब्रह्माद्वैतव्युत्पादनोपायतया सर्गादिर्शनाङ्गभावस्य श्रुत्यैव
173320 सिद्धवत्कीर्तनात्प्रकारान्तरेण तद्घटनायोगात्
173321 तदनन्यत्वमारम्भणशब्दादिभ्यः इत्यादिसूत्रभाष्यादिव्युत्पादितयुक्तिसहस्रेभ्यः
173322 स्मृतिपुराणाद्युपबृंहणसहस्रेभ्यश्चाध्यारोपापवादाभ्यां
173323 निष्प्रपञ्चब्रह्मात्मतत्त्वव्युत्पादने सर्गश्रुतीनां तात्पर्ये निश्चिते
173324 रज्जुसर्पशुक्तिरजतमरुमरीचिकास्वप्नाद्यध्यारोपेष्वबुद्धिपूर्वकत्वमेव दृष्टं
173325 न क्वचिदारोपे बुद्धिपूर्वकता लोके दृश्यत इति भगवता
173326 वसिष्ठेनात्रानारोपितत्वशङ्का कस्यचित्सर्गे मा भूदित्यबुद्धिपूर्वकता प्रसाध्यते
173327 । श्रुतिषु ईक्षणादिपूर्वकत्वकीर्तनं तु ब्रह्मणः सर्वज्ञत्वचिदेकरसत्वादिलाभेन
173328 सांख्याद्यभिमता चेतनप्रधानाद्युपादानकत्वनिरासे पर्यवस्यति।
173329 ईक्षतेर्नाशब्दम् इत्यादिसूत्रैस्तथैव श्रुतितात्पर्यवर्णात्। तस्य त्रय आवसथास्त्रयः
173330 स्वप्नाह् यथा सतः पुरुषात्केशलोमानि तथाक्षरात्संभवतीह विश्वम्
173331 इत्यादिश्रुतिदृष्टान्तानुगुण्यात्। भगवदीक्षणकामसंकल्पादीनां
173332 बुद्धितत्त्वोत्पत्तेः पूर्वभाविनां मायावृत्तिमात्रत्वेन तत्पूर्वकत्वेऽपि
173333 कामसंकल्पादिधर्मिबुद्धिपूर्वकत्वाभावोपपत्तेः। अध्यारोपस्य
173334 त्वंपदार्थनिष्ठस्यैव चापवादेन निरासस्य तन्मुक्तिफलत्वोपपत्तेस्तत्पदार्थे
173335 जगदध्यारोपप्रतिपादने प्रयोजनाभावात्प्रपञ्चस्य स्वनिष्ठाविद्याकार्यत्वे
173336 स्वविद्यया निरासोपपत्तेः
173337 स्वस्मिंश्चाबुद्धिपूर्वकस्यैवावस्थात्रयाध्यारोपस्यानु##-
173338
173339 यथा करोत्यबुद्ध्यादिरावर्तादि पयोनिधिः।
173340 तथा करोति खे खात्मा सर्वेशः सर्ववेदनाः॥ २॥
173341
173342 अबुद्ध्यादिः अबुद्धिपूर्वः सन्। सर्ववेदनाः जगत्प्रतिभासान्॥ २॥
173343
173344 तासां स्वसंविदामेव ततः स कुरुते स्वयम्।
173345 मनो बुद्धिरहंकार इत्याद्या विविधाभिधाः॥ ३॥
173346
173347 तासां जगदाकाराणां स्वसंविदां स्वयमेव मनो बुद्धिरित्याद्यभिधा नामानि
173348 सर्गादौ यथाश्रुति कुरुते इत्यर्थः॥ ३॥
173349
173350 अबुद्धिपूर्वमारम्भो दृश्यरूपः स्वतश्चितेः।
173351 संकल्प्यमानो बुद्ध्यादिस्तरङ्गादिर्यथाम्बुधेः॥ ४॥
173352
173353 चितेर्बुद्ध्यादिसिद्धिपर्यन्तमबुद्धिपूर्वं स्वत एवारम्भः। यस्तु
173354 बुद्धिसिद्ध्यनन्तरं संकल्प्यमान आरम्भः स बुद्ध्यादिर्बुद्धिपूर्वः।
173355 तरङ्गादिरित्युभयत्र दृष्टान्तः॥ ४॥
173356
173357 चिन्मात्रात्संप्रवर्तन्ते मनोबुद्ध्यादयस्तथा।
173358 आवर्तकणकल्लोलवीचयो वारिधेर्यथा॥ ५॥
173359
173360 भित्तिमात्रं यथा चित्रजगदालोकमात्रकम्।
173361 चिति चिद्व्योममात्रात्म तथैवाभासमात्रकम्॥ ६॥
173362
173363 आलोक्यत इत्यालोकस्तन्मात्रकं चित्रलिखितं जगद्यथा भित्तिमात्रं तथा चिति आभास्यत
173364 इत्याभासस्तन्मात्रकमिदं जगच्चिद्व्योममात्रात्मैव॥ ६॥
173365
173366 अबुद्धिपूर्वमारम्बो नियत्या संनिवेशवान्।
173367 यथा संपद्यते वृत्ते तथा सर्गात्मकश्चिति॥ ७॥
173368

173369 वृत्ते प्रागुक्तवृक्षपयोनिध्यादिचरित्रे यथा अबुद्धिपूर्वं प्रवृत्तोऽपि
173370 शाखावर्ताद्यारम्भो नियत्या तुल्यसंनिवेशवान्संपद्यते तथा चिति
173371 सर्गाकारोऽप्यारम्भस्तुल्यसंनिवेशवान्भविष्यतीति न तदर्थमपि
173372 बुद्धिपूर्वकत्वापेक्षेत्यर्थः ॥ ७ ॥
173373
173374 तरौ गुलुच्छकादीनां यथान्यः कुरुतेऽभिधाः ।
173375 तथा चिद्वृक्षपुष्पादिपृथ्व्यादिविहिताभिधम् ॥ ८ ॥
173376
173377 समष्टिबुद्ध्याद्युत्तरकालिकं चिद्वृक्षपुष्पादिप्रायपृथ्व्यादि तु
173378 चिदन्यबुद्धिसमष्ट्यात्महिरण्यगर्भादिना विहिताभिधं कृतनामधेयं
173379 बोध्यम् ॥ ८ ॥
173380
173381 अनन्यत्पुष्पपत्रादि यथा नाम महातरोः ।
173382 तथैवानन्यदेवेदं चिद्व्योम्नः परमात्मनः ॥ ९ ॥
173383
173384 अनन्यत् अभिन्नम् ॥ ९ ॥
173385
173386 तराववयवेष्वन्यः करोति विविधाभिधाः ।
173387 चिद्व्योमात्मनि सर्वेषु भूत्वान्य इव खात्मसु ॥ १० ॥
173388
173389 अन्यो व्यष्टिजीव इव भूत्वा स्वपुत्रादिषु कार्यान्तरेषु च सर्वेषु विविधा अभिधा नामानि
173390 करोति ॥ १० ॥
173391
173392 चित्तरोः पल्लवाः सर्गाश्चित्त्वादेव न सन्त्यलम् ।
173393 कार्यकारणवद्भाति स एव स्वप्नवत्स्वयम् ॥ ११ ॥
173394
173395 एवं नामरूपाध्यारोपं प्रपञ्च्येदानीमपवादमारभते - चित्तरोरित्यादिना । स
173396 चित्तरुरेव ॥ ११ ॥
173397
173398 वक्षि चेत्कथमेतस्माद्व्यर्थं तदनुभूयते ।
173399 सर्गाद्यमुत्र स्वप्नादिष्वेषु कोऽपह्नवं भजेत् ॥ १२ ॥
173400
173401 यदि सर्गादि नास्त्येव तर्हि चिता अमुत्र परलोके व्यर्थं तदनुभूयत इत्यापतति । तत्तु न
173402 युक्तम् । विहितनिषिद्धकर्मफलत्वायोगप्रसङ्गादिति हेतोरेतत्कथं स्यादिति त्वं वक्षि
173403 आक्षिपसि चेत्तर्हि स्वप्नादिष्वेषु प्रसिद्धरज्जुसर्पमृगतृष्णिकाद्यनुभवेषु मध्ये
173404 को वैयर्थ्यापह्नवं भजेत् । तस्यापि स्वाप्नभोगप्रदकर्मफलत्वाविशेषात् । यदि च
173405 भोगाभासमात्रविभावनेन तत्र कर्मसाफल्यं ब्रूषे तर्हि प्रकृतेऽपि सममिति
173406 भावः ॥ १२ ॥
173407
173408 तरावाकारवत्येषा कल्पना रचिता यथा ।
173409 चितेराकाशमात्रायास्तथैषा कल्पना कृता ॥ १३ ॥
173410
173411 एतावांस्तु साकाराध्यासेषु सर्वादिभ्यश्चितेर्विशेषो यत्साकारे साकाराध्यासास्ते चिति तु
173412 निराकारे जगदध्यास इत्याशयेनाह - तराविति ॥ १३ ॥
173413
173414 यथा गन्धादयः पुष्पे गगने शून्यतादयः ।
173415 यथा स्पन्दादयो वायौ तथा बुद्ध्यादयः परे ॥ १४ ॥
173416
173417 यथा गन्धादयः पुष्पे गगने शून्यतादयः ।
173418 यथा स्पन्दादयो वायौ तथेमाः सृष्टयश्चिति ॥ १५ ॥
173419
173420 सृष्टयः पृथ्व्यादयोऽपि ॥ १५ ॥

173421
173422 यथा खानिलपुष्पाणां शून्यतास्पन्दगन्धदृक् |
173423 शून्यरूपानुभूता च तथा सर्गस्थितिश्चिति || १६ ||
173424
173425 खस्य शून्यतादृक् अनिलस्य स्पन्ददृक् पुष्पाणां गन्धदृक् च यथा अनुभूतापि
173426 तद्व्यतिरेकशून्यरूपा तथा चिति सर्गस्थितिरपीत्यर्थः || १६ ||
173427
173428 न पृथक् शून्यता व्योम्नो न पृथग्द्रवताम्भसः |
173429 न पृथक् कुसुमाद्गन्धो नानिलात्स्पन्दनं पृथक् || १७ ||
173430
173431 तदेव स्पष्टमाह - नेत्यादिना || १७ ||
173432
173433 अग्नेर्न पृथगुष्णत्वं पृथक् शैत्यं च नो हिमात् |
173434 चिद्व्योमैकात्मनः स्वच्छान्न जगत्पृथगीश्वरात् || १८ ||
173435
173436 सर्गादावेव यद्व्योम्नि स्वप्नाद्धृदि च दृश्यते |
173437 अकारणं तच्चिद्व्योम्नः कथमन्यद्भवेत्किल || १९ ||
173438
173439 कुतो न पृथक् तत्राह - सर्गादावेवेति | यतः अकारणं ततो न पृथगित्यर्थः |
173440 विनाकारणं कूटस्था चित्कथमन्या भवेत् | वदन्त्वित्यर्थः | किलेति प्रश्ने || १९ ||
173441
173442 स्वप्न एवात्र दृष्टान्तो नित्यदृष्टो विचार्यताम् |
173443 चिन्मात्रव्यतिरेकेण सारं किं तत्र कथ्यताम् || २० ||
173444
173445 तदिदं बुद्धिसंस्कारदृ"ष्यमित्यादिका स्मृतिः |
173446 न संभवति यत्तत्त्वं कथयेदं कथं भवेत् || २१ ||
173447
173448 ननु स्वप्नः स्मृतिरेव | इतरस्मृतिषु संस्कारजासु विषयशून्यासु तत्ता भासते | इह
173449 तु निद्रादोषवशादिदंतागोचरत्वांशेऽपि संस्कारोद्बोधात्तत्तांशप्रमोषादिदन्ता
173450 भासत इति तदिदं बुद्धिजन्यसंस्कारदृश्यमुभयत्राप्येकं वस्त्वित्यादिका
173451 शङ्का तु न संभवति | यद्यस्मात्तत्त्वं तत्ता इदं इदन्ता कथं भवेत् | अपरोक्षे
173452 हीदन्ता प्रसिद्धा स्मृतौ त्वसन्निकृष्टं वस्तु परोक्षमेव | अतः कथमिदं
173453 घटते कथयेत्यर्थः || २१ ||
173454
173455 यत्तत्र दृष्टं तदिह स्मृतिकाले भवेद्यदि |
173456 नानुभूयेत तत्तत्र कैवैकस्य द्विधा स्थितिः || २२ ||
173457
173458 ननु स्वाप्नस्मृतिकाले तत्रारण्यादौ दृष्टं व्याघ्रादि इह स्वप्नप्रदेशे निद्रया
173459 संनिधाप्यते इति यदि इदन्ता तत्र भवेत्तर्हि तत्रारण्ये तद्व्याघ्राद्यन्यैस्तदा
173460 नानुभूयेत | निद्रया एक एव व्याघ्रो द्विधा स्थाप्यत इति चेत्तत्राह - कैवेति || २२ ||
173461
173462 तस्मादावर्तवृत्त्येदं काकतालीयवज्जगत् |
173463 चिति यद्भाति तत्रैषा पश्चात्स्वप्नादिकल्पना || २३ ||
173464
173465 तस्मात्स्वाप्नबोधस्यानुभवत्वानपह्नवाद्दृष्टान्तोऽस्त्येवेति स्वोक्तं
173466 सिद्धमित्युपसंहरति - तस्मादिति | पश्चाज्जाग्रत्स्वप्नानुभवसिद्ध्यनन्तरम् || २३
173467 ||
173468
173469 अबुद्धिपूर्वं संपन्ने सर्गे वीच्यादयो यथा |
173470 संनिवेशः स्थितिः पश्चात्स्वयं संपद्यते तथा || २४ ||
173471
173472 जातमेव न तज्जातं जातं यत्कारणं विना |

173473 यतोऽजातं तदेवाद्यं तत्समं संस्थितं तथा ॥ २५ ॥
173474
173475 यतः अजातमिति च्छेदः ॥ २५ ॥
173476
173477 अबुद्धिपूर्वं संजाता रत्नादीनां यथार्चिषः ।
173478 सत्तैव संनिवेशेन तथैवासां जगद्दृशाम् ॥ २६ ॥
173479
173480 ब्रह्मसत्तैव जगद्दृशां संनिवेशेन वेषेण स्फुरतीति शेषः ॥ २६ ॥
173481
173482 यथाकथंचिदेवेदमांदौ संपद्यते जगत् ।
173483 पश्चाद्गृह्णाति नियतिमावर्तोऽब्धाविवात्मनि ॥ २७ ॥
173484
173485 यथाकथंचित् अनिर्वचनीयमायाकारणबलादेव । नियतिमर्थक्रियानियतिलक्षणां
173486 सत्यताम् ॥ २७ ॥
173487
173488 चिद्व्योम्नि स्वप्नजालानि चिज्जगन्त्यपकारणम् ।
173489 प्रवर्तन्ते निवर्तन्ते शून्यशून्यात्मकान्यपि ॥ २८ ॥
173490
173491 यावत्सर्वमथान्योन्यं याति कारणतां चिरम् ।
173492 तेषां शून्यात्मका एव पदार्था ईश्वरादयः ॥ २९ ॥
173493
173494 ईश्वरादय इति । ईश्वरत्वस्यापि मायासापेक्षरूपत्वादिति भावः ॥ २९ ॥
173495
173496 जायते शून्यमेवेदं शून्यमेव च वर्धते ।
173497 ननु शून्यतयात्यन्तं शून्यमेव विनश्यति ॥ ३० ॥
173498
173499 शून्यमविद्यमानम् ॥ ३० ॥
173500
173501 शून्यं कचत्यशून्याभं दृष्टान्तं स्वप्नमत्र यः ।
173502 अपह्नुतेऽनुभूतं स पशुभर्तृकुकं कुधीः ॥ ३१ ॥
173503
173504 अत्र असतोऽपि कचने दृष्टान्तभूतस्वप्नं स्वानुभूतं योऽपह्नुते अपलपति स
173505 कुधीर्मेषपालः सन् पशुभर्तुर्महामेषस्य साक्षात्स्वयं दृष्टं कुकं कोकनं
173506 कुकः । कुक आदाने इत्यस्माद्घञर्थे कः । वृककर्तृकमादानां
173507 तमप्यपह्नुयादित्यर्थः ॥ ३१ ॥
173508
173509 असदेवेदमाभाति भ्रान्तिमात्रं सुकृत्रिमम् ।
173510 चिच्चमत्कारमात्रात्म ज्ञे सन्मात्रमकृत्रिमम् ॥ ३२ ॥
173511
173512 चितो मायाविन्याश्चमत्कार एवात्मा स्वरूपं यस्य तदेव ज्ञे अकृत्रिमं सन्मात्रं
173513 न जगदित्यर्थः ॥ ३२ ॥
173514
173515 अयं चिरस्थसंकल्पः सर्गप्रलयविभ्रमः ।
173516 ज्ञानं स्वभावकचनमज्ञानं भ्रान्तिजृम्भणम् ॥ ३३ ॥
173517
173518 अयं प्रपञ्चधातुश्चिरस्थसंकल्पात्मक एव सर्गप्रलयविभ्रमो नान्यः । तस्य
173519 तात्त्विकस्वभावकचनं तत्त्वज्ञानं भ्रान्त्याकारेण जृम्भणं त्वज्ञानमिति
173520 बोध्यमित्यर्थः ॥ ३३ ॥
173521
173522 झटित्युदेति ब्रह्मात्म दृश्यं दृष्टमकारणम् ।
173523 खे सुषुप्तादिव स्वप्नः पश्चान्नियतिमृच्छति ॥ ३४ ॥
173524

173525 मायोपहितब्रह्मात्म झटित्येव दृश्यं भूत्वा अकारणमेवोदेतीति दृष्टम्। यथा
173526 दृश्यशून्ये आत्मनि सुषुप्तादनन्तरं स्वप्नो
173527 दृष्टस्तद्वत्पश्चादर्थक्रियाव्यवस्थया कार्यकारणभावादिनियतिं ऋच्छति
173528 गच्छति॥ ३४॥
173529
173530 काकतालीयवच्चित्त्वाच्चिति दृश्यं प्रकाशते।
173531 स्वयमेव स्वभावस्थमावर्तादि यथाम्बुधौ॥ ३५॥
173532
173533 अकस्माद्दृश्यस्फुरणे निमित्तापेक्षा नास्तीत्याह - काकतालीयवदिति।
173534 स्वभावस्थं चित्स्वभावमात्रनिबन्धनं॥ ३५॥
173535
173536 ईदृशो नाम चिद्धातुरयमाकाशमात्रकः।
173537 यदित्थं नाम कचति जगद्रूपेण चिद्वपुः॥ ३६॥
173538
173539 स्वभावमेव विशदयति - ईदृश इति॥ ३६॥
173540
173541 तेन चिद्रूपिणा पश्चाद्दृश्येनात्मनि कल्पिताः।
173542 संज्ञाः स्मृत्यादिपृथ्व्यादिबुद्ध्यादिकलनात्मिकाः॥ ३७॥
173543
173544 प्रथममबुद्धिपूर्वदृश्याकारप्रतिभासाद्दृश्यभूतेन तेन चिदात्मना
173545 पश्चादात्मनि अतीतमिति भाते स्मृत्यादिकलनात्मिकाः वर्तमानमिति भाते च
173546 पृथ्व्यादितद्बुद्ध्यादिकलनात्मिकाः संज्ञाः कल्पितास्तथा च सर्वोऽप्ययं
173547 तात्कालिकप्रतिभासे अविभक्ते बुद्ध्यादिविभागः कल्पनामात्रमित्यर्थः॥ ३७॥
173548
173549 श्रीराम उवाच।
173550
173551 एवं स्थिते हे भगवन्बुद्धिसंस्कारतः स्मृतिः।
173552 इति किं प्राप्यते ब्रूहि संबुद्धा यदि न स्मृतिः॥ ३८॥
173553
173554 यदि तात्कालिकप्रतिभासेष्वेव विभागसंज्ञाभेदकल्पनामात्रं जगत्तर्हि
173555 प्रतिभासक्षणमात्रस्थायि जगदप्रतिभासकाले नास्त्येवेति फलितम्। तथा च
173556 प्रतिभासस्योत्तरक्षणे नाशे जगतोऽपि नाशात्क्षणभङ्गवादप्रसङ्गः। अस्तु नाम
173557 तथा मायामये जगति स्थायित्वव्यवस्थापनस्यापि ब्रह्मविदः प्रयोजनाभावादिति
173558 चेन्न। लोके स्मृतिप्रत्यभिज्ञादेः
173559 पूर्वानुभूतगोचरत्वनियमाधीनवेदशास्त्रादिप्रामाण्यभङ्गापत्त्या
173560 ब्रह्मवादस्य मूलशैथिल्यापत्तेरित्याशयेन रामः शङ्कते - एवं स्थिते इति।
173561 एवं त्वदुक्तरीत्या तात्कालिककल्पनामात्रत्वे जगतः स्थिते पूर्वोत्पन्नबुद्धेः
173562 प्रामाणिकादनुभवाज्जातात्संस्कारतः स्मृतिः प्रत्यभिज्ञा चेति
173563 सर्वशिष्टानुभवसिद्धो नियमः किं प्राप्यते कथं लभ्यते। यदि स्मृतिः
173564 प्रत्यभिज्ञा संबुद्धा प्रागनुभूतविषयिणी नाभ्युपगम्यते। अत्रोत्तरं
173565 ब्रूहीत्यर्थः॥ ३८॥
173566
173567 श्रीवसिष्ठ उवाच।
173568
173569 शृणु राम भिनद्म्येनं प्रश्नं सिंह इवेभकम्।
173570 अभेदं स्थापयाम्येकमालोकमिव भास्करः॥ ३९॥
173571
173572 तत्र भगवान्वसिष्ठ आक्षेपं बहु मन्यमानः समाधानं प्रतिजानीते -
173573 शृण्विति। प्रश्नमाक्षेपं भिनद्मि युक्त्या विदारयामि। अभेदमद्वैतमात्मतत्त्वम्
173574 ॥ ३९॥
173575
173576 विद्यते जगदात्मेदं दृश्यं चिन्मात्रकोटरे।

173577 अनुत्कीर्णा यथा वृक्षे वनस्था शालभञ्जिका || ४० ||
173578
173579 भवेदयं दोषो यदि प्रागसदेव जगत्क्षणिकप्रतिभासेन सहोत्पद्यत इति
173580 बौद्धराद्धान्ताभ्युपगमे | न तु तथा वयमभ्युपगच्छामः किंतु
173581 नित्यब्रह्मसत्तात्मकमेव जगन्नित्यचिदात्मकेनैव प्रतिभासेन सदाभिव्यक्तियोग्यमपि
173582 अविद्यावरणविक्षेपशक्तिवैचित्र्यचमत्कारेण कदाचिदाविर्भूतमिव तिरोभूतमिव
173583 घटपटाद्याकारविशेष इव च्छिन्नमिव भिन्नमिव
173584 कारणैरुत्पादितमिवापरोक्षमिवैकमिव नानेव भिन्नाभिन्नमिव क्षणिकमिव
173585 स्थायीवातीतं वर्तमानं भविष्यदिवेत्यादिनानाचमत्कारैर्नियतैश्चानियतैः
173586 सदृशैर्विसदृशैश्चावभासत इति | तत्र च स्मृतिप्रत्यभिज्ञादिकं
173587 सर्वमुपपद्यत एवेत्याशयेन समाधातुमारभते - विद्यते इत्यादिना |
173588 वनस्थेत्यानन्त्यद्योतनाय || ४० ||
173589
173590 उद्धरेद्वृक्षतस्तक्षा कदाचिच्छालभञ्जिकाम् |
173591 अद्वितीयाच्चितिस्तम्भादुत्कीर्णां कः करोति ताम् || ४१ ||
173592
173593 उद्धरेत्तदावरककाष्ठावयवनिरसनेन यथा प्रकटयेत्तथा
173594 अद्वितीयात्कर्त्रादिकारकशून्याच्चितिस्तम्भात्तां जगच्छालभञ्जिकां सम्यगुत्कीर्णां
173595 कः तदन्यः करोतीत्यकारकतन्त्रत्वाद्दारुप्रतिमावत्तदभिव्यक्तिर्न भवतीत्यर्थः || ४१
173596 ||
173597
173598 स्तम्भे जडेन सा व्यक्तिमनुत्कीर्णेह गच्छति |
173599 चिति त्वन्तर्गता चित्त्वादेवात्मन्येव भात्यलम् || ४२ ||
173600
173601 तर्हि सा कथं व्यक्तिं गच्छति तत्राह - चिति त्विति |
173602 तदधिष्ठानचित्यावरणन्निवृत्तौ तादृशचिद्बलादेव चन्द्रान्तर्गतो राहुरिव
173603 आत्मनि चिदात्मन्येव अलं भाति व्यक्तिं गच्छतीत्यर्थः || ४२ ||
173604
173605 भासमाना त्वनुत्कीर्णदेहैवापि च खात्मिका |
173606 स्वरूपादच्युता चैव चिन्मात्रादात्मनि स्थिता || ४३ ||
173607
173608 तर्हि सा प्रलयसुषुप्त्योरपि किं न भातीति चेत्सत्तासामान्यात्मना भात्येवेत्याह -
173609 भासमाना त्विति | तु शब्दः सर्गकालाद्विशेषद्योतनार्थः || ४३ ||
173610
173611 सर्गादौ सर्गकलनाः करोति कलनावती |
173612 सा चित्स्वभावतः स्वप्ने खात्मन्यद्योदितामिव || ४४ ||
173613
173614 सर्गादावपि सा चित् प्रथमं प्रागुक्तनिर्विकल्पकलनावती सती
173615 पश्चाद्बीजकादृष्टानुसारेणोद्भूतैर्मनोविकल्पैर्विचित्राः सर्गकलनाः करोति |
173616 यथा स्वप्ने अद्योदितां कलनामिव हृदये संकल्पयतीति परेण संबन्धः || ४४ ||
173617
173618 आकाश एव हृदये परमाकाशरूपिणी |
173619 संकल्पयति चिच्छालभञ्जिकाः स्वात्मनात्मनि || ४५ ||
173620
173621 इयं ब्रह्मकला सेह चिन्मात्रकलना त्वियम् |
173622 इयं चितिरियं जीवस्त्वहंकारस्त्वसाविति || ४६ ||
173623
173624 कथं कथं विशेषविभागान्सर्गादौ संकल्पयति तत्प्रपञ्चयति - इयमित्यादिना
173625 | इयं ब्रह्मकला सत्तासामान्यरूपा जगद्बीजभूता | इहास्यां ब्रह्मकलायामेव
173626 सेयं चिन्मात्रकलना सदा अनावृतस्वभावा तत्प्रतिबिम्बचितिरियम् | इयमेव
173627 प्राणादिसंवलिता जीवः | असावभिमानवृत्तिप्रधानस्तु अहंकारः |
173628 अध्यवसानप्रधाना बुद्धिरित्याद्यूह्यम् || ४६ ||

इयं बुद्धिरियं चित्तमयं काल इदं नभः |
अयं सोऽहं क्रिया चेयमिदं तन्मात्रपञ्चकम् || ४७ ||

इन्द्रियाणामिदं वृन्दं पुर्यष्टकमिदं स्मृतम् |
इहातिवाहिको देहस्तथायं चाधिभौतिकः || ४८ ||

इह एतत्संघाते | अयं पञ्चीकृतभूतमयः || ४८ ||

ब्रह्माहं शंकरश्चाहमुपेन्द्रोऽहमहं रविः |
इदं बाह्यमिदं चान्तरयं सर्ग इदं जगत् || ४९ ||

इत्यादिकलनाजालं चिद्व्योमैवातिनिर्मलम् |
तस्मात्क्वैते पदार्थौघाः क्व स्मृतिः क्व द्वयैकते || ५० ||

इत्यादि सर्वं कलनाजालमतिनिर्मलं चिद्व्योमैव न ततोऽन्यदणुमात्रमपीत्यर्थः |
तस्मादज्ञकल्पिता जडपदार्थौघा एते क्व तिष्ठन्तीत्यर्थः || ५० ||

अकारणकमेवेति जगदाभोगिखण्डकः |
सर्गादौ स्वप्नवद्भाति खे खात्मैव विकारिवत् || ५१ ||

इति अनया रीत्या || ५१ ||

व्योम्न्येव कचति व्योम चिन्मये चिन्मयं हि यत् |
बुद्धं तदेव तेनैव जगद्बोधात्क्व तज्जगत् || ५२ ||

क्व स्मृतिः क्व च वा स्वप्नः क्व कालाः कलनाश्च काः |
चिदाभानमिदं भाति शान्तं शून्यमिवाम्बरे || ५३ ||

यदैकमेव चिद्व्योम तदा प्रपञ्चितविभागा न सन्त्येवेति फलितमित्याह - क्वेति ||
५३ ||

यदन्तश्चिद्घनस्यास्ति तद्बहिर्भूततां गतम् |
वस्तुतस्तु न तद्बाह्यं नान्तः सन्मात्रकादृते || ५४ ||

अन्तर्यदस्ति अन्तर्गता या सत्तेत्यर्थः || ५४ ||

निरस्तावयवाच्छान्तादनाख्याद्यत्प्रवर्तते |
अकारणं भवेद्भूतं तदन्धाः कथमन्यथा || ५५ ||

हे अन्धाः वादिनः अकारणं तद्भूतमुत्पन्नं कथं भवेत् | तत्कूटस्थं च
अन्यथा सविकारं कथम् || ५५ ||

तस्माद्यादृक्परं ब्रह्म तादृग्दृश्यमिदं परम् |
यदेव चिन्नभः स्वप्ने तदेव स्वप्नपत्तनम् || ५६ ||

तस्मात्स्वभ्रान्तिगृहीतं जगतो जाड्यादिस्वभावं परित्यज्य
शुद्धचिन्मात्रस्वभावोऽङ्गीक्रियतामित्याह - तस्मादिति || ५६ ||

न किंचित्किंचनापीदं दृश्यमस्ति मनागपि |
क्व रजः पूर्णजलधौ क्व दृश्यं परमाम्बरे || ५७ ||

173681 रजश्चिज्जलानार्द्रमणुमात्रम् ॥ ५७ ॥
173682

173683 तच्चेदं भाति वा किंचित्तच्चिन्मात्रमचेत्यकम् ।
173684 अकचत्त्वेव संशान्तमात्मनीत्थमवस्थितम् ॥ ५८ ॥
173685

173686 यतः अचेत्यकमतोऽकचत् अप्रकाशयदेव स्वमात्रप्रकाशं सद्व्यवस्थितम् ॥ ५८ ॥
173687

173688 पूर्णाद्वै ब्रह्मणः पूर्णमप्यनुद्धृतमुद्धृतम् ।
173689 इवेदं भाति भारूपमाभानं परमात्मकम् ॥ ५९ ॥
173690

173691 उक्तेऽर्थे पूर्णमदः पूर्णमिदम् इति श्रुतिं स्मारयति - पूर्णादिति । परमात्मैव
173692 परमात्मकम् ॥ ५९ ॥
173693

173694 इत्थं मयि प्रकथयत्यनुभूयमानमप्युच्चकैर्बत जनस्य विमूढतान्तः ।
173695 स्वप्ने जगद्वपुषि जाग्रदिति प्रतीतिं नाद्यापि यत्त्यजति नाम विदन्नपि द्राक् ॥ ६० ॥
173696

173697 एतावद्विस्तृतेनान्वहमावर्तितेनाप्युपदेशेन
173698 कांश्चिन्मन्दाधिकारिजनानप्रबुद्धान् लिङ्गैरुपलक्ष्य भगवांस्ताननुशोचन्नाह
173699 - इत्थमिति । मयि स्वयमनुभूयमानमात्मतत्त्वमित्थं विशदतरं
173700 पुनःपुनरत्युच्चकैः प्रकथयति सत्यपि मन्दाधिकारिजनस्यान्तर्गता विमूढता
173701 स्वप्नप्राये जगद्वपुषि इयं जाग्रत्सत्यमेवेति प्रतीतिमद्यापि न संत्यजति । वतेति खेदे ।
173702 विदन्नप्यधिकारी द्राक् झटिति तां न त्यजति । नामेति मोहप्राबल्यप्रसिद्धौ ॥ ६० ॥
173703

173704 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० नि० उ० शालभञ्जिकोपदेशो
173705 नामाष्टषष्ट्यधिकशततमः सर्गः ॥ १६८ ॥
173706

173707 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
173708 शालभञ्जिकोपदेशो नामाष्टषष्ट्यधिकशततमः सर्गः ॥ १६८ ॥
173709

173710

173711 एकोनसप्तत्यधिकशततमः सर्गः १६९
173712

173713 श्रीवसिष्ठ उवाच ।
173714

173715 न सुखाय सुखं यस्य दुःखं दुःखाय यस्य नो ।
173716 अन्तर्मुखमतेर्नित्यं स मुक्त इति कथ्यते ॥ १ ॥
173717

173718 भूयो विश्रान्तचित्तस्य जीवन्मुक्तस्य भूरिशः ।
173719 लक्षणान्यभिधीयन्ते सुप्तिश्चात्मवतः सदा ॥
173720

173721 यद्यबोधो मन्दाधिकारिणां त्वया लिङ्गैरुपलक्षितस्तर्हिबोधापगमः
173722 कैर्लिङ्गैर्ज्ञायते इति मुक्तलक्षणजिज्ञासून्रामादीन्प्रति तानि भगवान्वसिष्ठ आह
173723 - न सुखायेत्यादिना । सुखं सुखसाधनविषयजातम् । अन्तर्मुखी
173724 प्रत्यगात्मासक्ता मतिर्यस्य ॥ १ ॥
173725

173726 यस्य न स्फुरति प्रज्ञा चिद्व्योमन्यचलस्थितेः ।
173727 प्रसृतेष्विव भोगेषु स मुक्त इति कथ्यते ॥ २ ॥
173728

173729 न स्फुरति न संचलति । प्रज्ञा बुद्धिः । यथा अज्ञानां बुद्धिः प्रसृतेषु
173730 भोगेष्वासक्ता ततो न चलति तद्वदित्यर्थः ॥ २ ॥
173731

173732 चिन्मात्रात्मनि विश्रान्तं यस्य चित्तमचञ्चलम् ।

173733 तत्रैव रतिमायातं स जीवन्मुक्त उच्यते ॥ ३ ॥
173734
173735 श्लोकद्वयार्थं स्फुटमाह - चिन्मात्रात्मनीति ॥ ३ ॥
173736
173737 परमात्मनि विश्रान्तं यस्य व्यावृत्य नो मनः ।
173738 रमतेऽस्मिन्पुनर्दृश्ये स जीवन्मुक्त उच्यते ॥ ४ ॥
173739
173740 तत्रैवेत्येवकारार्थं विवृणोति - परमात्मनीति ॥ ४ ॥
173741
173742 श्रीराम उवाच ।
173743
173744 न सुखाय सुखं यस्य दुःखं दुःखाय यस्य नो ।
173745 जडमेव मुने मन्ये मानवं तमचेतनम् ॥ ५ ॥
173746
173747 आद्यश्लोकोक्तलक्षणस्य जडोन्मत्तमूर्च्छितेषु रामो व्यभिचारं शङ्कते - न
173748 सुखायेति ॥ ५ ॥
173749
173750 श्रीवसिष्ठ उवाच ।
173751
173752 चिद्व्योमैकान्तनिष्ठत्वात्प्रयत्नेन विना सुखम् ।
173753 न वेत्ति शुद्धबोधात्मा यः स विश्रान्त उच्यते ॥ ६ ॥
173754
173755 अन्तर्मुखमतेरिति तत्र विशेषणेनैव व्यभिचारस्य निवारितत्वान्न कश्चिद्दोष
173756 इत्याशयेन वसिष्ठस्तत्तात्पर्यं विशदयन्नुत्तरमाह - चिद्व्योमेति । न
173757 सुखायेत्यत्र वा प्रयत्नेन विनेति विशेषणीयमित्याशयेनाह - प्रयत्नेनेति ॥ ६ ॥
173758
173759 सर्व एव परिक्षीणाः संदेहा यस्य वस्तुतः ।
173760 सर्वार्थेषु विवेकेन स विश्रान्तः परे पदे ॥ ७ ॥
173761
173762 लक्षणान्तराण्याह - सर्व एवेत्यादिना । सर्वार्थेष्विति ।
173763 सर्वसंदेहानामज्ञानमूलत्वान्मूलाज्ञानक्षयेण सर्वसंदेहक्षयोपपत्तेरिति
173764 भावः । तथा च श्रुतिः भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते
173765 चास्य कर्माणि तस्मिन्दृष्टे परावरे इति ॥ ७ ॥
173766
173767 यस्य कस्मिंश्चिदप्यर्थे क्वचिद्रसिकतास्ति नो ।
173768 व्यवहारवतोऽप्यन्तः स विश्रान्त उदाहृतः ॥ ८ ॥
173769
173770 रसिकता रागवत्ता ॥ ८ ॥
173771
173772 यस्य सर्वे समारम्भाः कामसंकल्पवर्जिताः ।
173773 यथाप्राप्तं विहरतः स विश्रान्त इति स्मृतः ॥ ९ ॥
173774
173775 अविश्रामे निरालम्बे दीर्घे संसारवर्त्मनि ।
173776 चित्त्वादात्मनि विश्रान्तिः प्राप्ता येन जयत्यसौ ॥१० ॥
173777
173778 चित्त्वाच्चिन्मात्रत्वदर्शनात् ॥ १० ॥
173779
173780 धावित्वा ये चिरं कालं प्राप्तविश्रान्तयः स्थिताः ।
173781 ते सुप्ता इव लक्ष्यन्ते व्यवहारपरा अपि ॥ ११ ॥
173782
173783 धावित्वा चिरं भ्रमित्वा धावनश्रमनिवारणाय सुप्ता इव लक्ष्यन्ते । तथा च
173784 विषयेष्वधावनमेव स्पष्टं तल्लक्षणमिति भावः ॥ ११ ॥

173785
173786 ते हि चेत्यचिदाभासनभस्याभान्ति भामयाः |
173787 भास्करा उदिता नित्यं नेह तिष्ठन्ति ते क्वचित् || १२ ||
173788
173789 चेत्यचिदाभासौ दृश्यद्रष्टारौ तदुभयशून्ये नभसि स्वचित्ताकाशे भामयाः
173790 शुद्धचिद्रूपा भास्करा उदिता भान्ति | इह संसारे || १२ ||
173791
173792 सदेहा व्यवहारस्था अपि सुप्ता इवोत्तमाः |
173793 प्रक्षीणा इव लक्ष्यन्ते जडाभा न तु ते जडाः || १३ ||
173794
173795 प्रक्षीणा विदेहा इव लक्ष्यन्ते | जडाभा मुग्धसदृशाः || १३ ||
173796
173797 सुप्ता इवेह शय्यासु ये स्वप्ननगरे स्थिताः |
173798 सुप्ता इति त उच्यन्ते न तु ते जडतां गताः || १४ ||
173799
173800 सुप्ता इति पदतात्पर्यं विवृणोति - सुप्ता इवेत्यादिना आसर्गसमाप्तेः | जडतां
173801 निद्रापरवशताम् || १४ ||
173802
173803 दीर्घाध्वपरिविश्रान्तो विश्रान्तो न ददाति यः |
173804 वाक्यं स सुखमौनस्थः प्रोच्यते न जडाकृतिः || १५ ||
173805
173806 केनांशेन तर्हि सुप्तसाम्यमिति चेद्विश्रान्तिमौनाभ्यामित्याह - दीर्घेति |
173807 परिभ्रमणाद्विश्रान्तो निवृत्तः | विश्रान्तो गतश्रमः सन् यो न ददाति नोच्चारयति
173808 बहिर्मुखेभ्यः || १५ ||
173809
173810 या निशा सर्वभूतानामविद्यास्तमयात्मिका |
173811 परो बोधः परा शान्तिस्तत्रासौ सममास्थितः || १६ ||
173812
173813 उलूकप्रायाणामविद्यान्धकारे व्यवहरतां सर्वभूतानां या तदस्तमयात्मिका
173814 निशा स परो बोधः | समं एकरसम् || १६ ||
173815
173816 यस्मिञ्जाग्रति भूतानि दृश्येऽस्मिन्दुःखदायिनि |
173817 तत्रासौ सततं सुप्तस्तन्न पश्यत्यसौ सुखी || १७ ||
173818
173819 सुप्त इत्यस्य विवरणं तन्न पश्यतीति | तथा च भगवता गीतासु या निशा इति श्लोके
173820 लक्षणद्वयं दर्शितमिति भावः || १७ ||
173821
173822 यः कर्मौघमनादृत्य स्वात्मन्येवावतिष्ठते |
173823 स आत्माराम इत्युक्तो न जडोऽसौ रघूद्वह || १८ ||
173824
173825 सर्वकर्मसंन्यासोऽपि तल्लक्षणमित्याह - य इति || १८ ||
173826
173827 दुःखादतिगतः सोऽस्मात्प्राप्तः पारं भवाम्बुधेः |
173828 तिष्ठत्यनुभवन्भव्यो विश्रान्तिसुखमात्मनि || १९ ||
173829
173830 दीर्घाध्वनि परिश्रान्तो विषयैश्चतुरैश्चिरम् |
173831 भोगभावातुरः क्रूरैः प्रोत्थितः पथि डामरैः || २० ||
173832
173833 धावित्वा ये चिरं कालं इति श्लोकार्थं प्रपञ्चयति - दीर्घाध्वनीत्यादिना |
173834 वञ्चनचतुरैर्विषयैश्चिरं डामरैर्देशोपप्लवैर्भोगसामग्रीलुण्ठनैरिव
173835 प्रोत्थितः प्रस्थितः || २० ||
173836

जरातुषाराशनिभिर्भूयोभूयो जडीकृतः।
जन्मजङ्गलसारङ्गो व्यर्थव्यग्रविहारवान्॥ २१॥

जरालक्षणहिमाशनिभिर्जडीकृतो व्यवहाराक्षमः कृतः॥ २१॥

परमात्मपरिक्रान्तो दुःखकण्टकसंकटे।
सुदुष्प्रापसुखच्छाये पान्थः संसारवर्त्मनि॥ २२॥

परं आत्मना स्वेनैवासहायेन परिक्रान्तश्चलितः॥ २२॥

दुष्कृतैः कृतपाथेयो लुठन्क्षीणः पदे पदे।
अर्थानर्थमयैर्मार्गैः संकटैर्विवशीकृतः॥ २३॥

दुष्कृतैः पापार्जितधनैः। पदे पदे क्षीणः पतितः सन् लुठन्॥ २३॥

संसारजलधेः पारं प्राप्य भूतविवर्जितम्।
अशय्योऽतिप्रमाबुद्धः स शेते सुखमात्मवान्॥ २४॥

एवं श्रान्तोऽयं दैवात्साधनसंपत्त्या सच्छास्त्रसद्गुरुप्रसादादतिप्रमया
तत्त्वसाक्षात्कारेण प्रबुद्धः सन् संसारजलधेः पारं प्राप्य स आत्मवानशय्यः
शय्यारहितोऽपि सुखं शेते इति सर्वेषामन्वयः॥ २४॥

अपसर्पं निरस्तेहमस्वप्नमसुषुप्तकम्।
प्रबुद्धमबहिर्निद्रं हा शेते सुखमात्मवान्॥ २५॥

शयनार्थिभिः सर्प्यन्ते अपसृप्यन्ते इति सर्पाणि गृहापवरकप्रासादपर्यङ्कादीनि
तद्रहितं यथा स्यात्तथा निरस्तेहं प्राणादिचेष्टारहितं यथा स्यात्तथा
प्रबुद्धमात्मस्वरूपे जागरूकता यथा स्यात्तथा
स्वरूपबहिर्भूतनिद्राख्यवस्त्वन्तररहितं च यथा स्यात्तथा शेते। हा इत्याश्चर्ये॥
२५॥

जात्यश्ववदिहाजातिरश्नन्गच्छन्श्वसन्वदन्।
लोकमध्ये महारण्ये हा शेते सुखमात्मवान्॥ २६॥

जात्यश्वो ह्यश्नन् गच्छंस्तिष्ठंश्च निद्राति समरे एव केवलं जागर्तीति
लोकप्रसिद्धेर्जात्यश्ववदित्युक्तिः॥ २६॥

अपूर्वैव घना निद्रा कापि सा तत्त्वदर्शिनाम्।
या न शाम्यति कल्पाभ्रवैर्नाङ्गविकर्तनैः॥ २७॥

अपूर्वा अलौकिकी। तत्रोपपत्तिर्येति॥ २७॥

अपूर्वैव घना निद्रा कापि सा तत्त्वदर्शिनाम्।
प्रबुद्धानामपि हि या निमीलयति दृग्दृशौ॥ २८॥

दृग्दृशौ चिन्मात्रदर्शने प्रबुद्धानामपि या प्रमीलयति बाह्येन्द्रियाणीत्यर्थः।
अथवा व्यवहारे प्रबुद्धानामपि या दृशां बाह्येन्द्रियाणां दृशिः
रूपादिदर्शनं तद्विषये प्रमीलयति संवृणोति॥ २८॥

अनिमीलितनेत्रस्य यस्य विश्वं प्रलीयते।
स क्षीवः परमार्थेन हा शेते सुखमात्मवान्॥ २९॥

परमार्थेन स क्षीबो न तु मदेन क्षीबः ॥ २९ ॥

विनिगीर्य जगत्सर्वं परमां पूर्णतां गतः ।
आतृप्तेरमृतं पीत्वा हा शेते सुखमात्मवान् ॥ ३० ॥

अमृतमपरिच्छिन्नानन्दरसम् ॥ ३० ॥

निरानन्दमहानन्दी सुखमद्वैतमक्षयम् ।
निरालोकमहालोको हा शेते सुखमात्मवान् ॥ ३१ ॥

निरालोके आलोकान्तराभास्ये स्वात्मनि महानालोकः प्रकाशो यस्य ॥ ३१ ॥

लोभान्धकारोपरमो लोकलम्पटतां गतः ।
अघनत्वघनाभोगो हा शेते सुखमात्मवान् ॥ ३२ ॥

अघनत्वे अमूर्तानन्दरसे घन आभोग आस्वादो यस्य ॥ ३२ ॥

अनन्तदुःखमाशान्तमशान्तं जनतास्थितौ ।
अबहिर्मुखमाभोगि हा शेते सुखमात्मवान् ॥ ३३ ॥

दुःखमा दुःखानुभवस्तद्विषये शान्तमुपरतम् । जनतास्थितौ
वर्णाश्रमोचितव्यवहारे लोकसंग्रहार्थमशान्तमनुपरतम् । अबहिर्मुखं
बाह्यार्थानासक्तम् । आन्तरसुखाभोगि । क्रियाविशेषणानि सर्वाणि ॥ ३३ ॥

अणीयसामणीयांसं स्थविष्ठं च स्थवीयसाम् ।
कृत्वात्मानं नभःशय्यं हा शेते सुखमात्मवान् ॥ ३४ ॥

नभश्चिदाकाश एव शय्या यस्य तथाविधं कृत्वा ॥ ३४ ॥

परमाणौ परमाणौ जगत्कोटिशतान्यपि ।
अणौ स्थूले दधद्देहे हा शेते सुखमात्मवान् ॥ ३५ ॥

सौक्ष्म्यादणौ विभुतया स्थूले च चिद्देहे । प्रतिपरमाणु जगत्कोटि"षतान्यनन्तानि
जगन्ति दधद्धारयन् ॥ ३५ ॥

कुर्वन्संहारसर्गौघानकुर्वंश्च कथंचन ।
परमालोकशय्यायां हा शेते सुखमात्मवान् ॥ ३६ ॥

संसारनिचयस्वप्नं परिज्ञाय सुषुप्तताम् ।
नयन्प्रकटदिग्दीर्घां हा शेते सुखमात्मवान् ॥ ३७ ॥

पूर्णप्रकाशेन प्रकटा दिश इव दीर्घामपरिच्छिन्नामिति यावत् ॥ ३७ ॥

सर्वेषां जगदर्थानां सत्तासामान्यतां गतः ।
आकाशादधिको व्यापी हा शेते सुखमात्मवान् ॥ ३८ ॥

सद्रूपेण सर्वत्रानुगमात्सत्तासामान्यताम् । आकाशादिति । ज्यायानाकाशात् इति श्रुतेरिति
भावः ॥ ३८ ॥

अच्छाच्छमम्बरं कृत्वा जगदप्यम्बरीकृतम् ।
शान्तशब्दपरश्वासं हा शेते सुखमात्मवान् ॥ ३९ ॥

173941 आदौ प्रविलापनेनाम्बरीकृतमाकाशतां नीतं जगत्
173942 अच्छादव्याकृताकाशादप्यच्छं चिदम्बरं कृत्वा शान्तौ शब्दश्च
173943 परश्वासः प्रश्वासश्च यस्मिन्कर्मणि तथा। अम्बरमास्तरणवस्त्रमच्छादच्छं
173944 कृत्वा अम्बरीकृतं प्रावारीकृतं जगदप्याच्छाद्य
173945 शान्तघुर्घुराशब्दप्रश्वासं शेते इत्युत्तानार्थः॥ ३९॥
173946
173947 इदमस्मज्जगत्पश्यन्स्वयमाकाशकोणके।
173948 विशदाकाशकोशात्मा हा शेते सुखमात्मवान्॥ ४०॥
173949
173950 स्वयं प्रत्यगात्मभूतो यश्चिदाकाशस्तत्कोणके स्वप्नमिव इदं जगत्
173951 स्वप्नाभासमिव पश्यन्॥ ४०॥
173952
173953 यथा प्रवाहसंप्राप्तव्यवहारमनोरमे।
173954 तृण्यास्तरणविश्रान्तो हा शेते सुखमात्मवान्॥ ४१॥
173955
173956 व्यवहारलक्षणे मनोरमे तृणानां समूहस्तृण्या कटस्तदास्तरणे विश्रान्त
173957 इत्येतत्पर्यन्तं समस्तमेकं पदम्॥ ४१॥
173958
173959 परमेण स्वयत्नेन परिज्ञानात्स्वरूपिणा।
173960 स्वप्नसंदर्शनेनैव जीवम् खमिव खेन खे॥ ४२॥
173961
173962 यथा जागरूकस्य निद्रानुभूतस्वप्नस्य परमेण
173963 प्रयत्नेनानुसंधानात्स्मृतियोग्यस्वरूपता तथा कथंचित्परमेण प्रयत्नेन
173964 स्वपरप्रयत्नेन चित्तमीषद्बहिर्मुखीकृत्य बाह्यव्यवहारपरिज्ञानादापाततः
173965 स्वरूपवता देहादिना जीवन्। यथा निरवकाशे स्थातुमशक्तं खं खात्मकेनैव
173966 द्वितीयमिव कल्पितेन लब्धावकाशं खे आकाशस्वरूपे जीवति सत्तां लभते
173967 तद्वदित्यर्थः॥ ४२॥
173968
173969 ज्ञानेनाकाशकल्पेन धर्मान् गगनसंनिभान्।
173970 ज्ञेन यत्नेन संबुद्धः परमाम्बरतां गतः॥ ४३॥
173971
173972 आकाशकल्पेन स्वरूपज्ञानेन अत्यन्तासत्त्वाद्गगनसंनिभान्
173973 जीवजगल्लक्षणान्धर्मान्यत्नेन ज्ञेन प्रयत्नापादितज्ञातृभावेन स्वस्यैव यः
173974 संबुद्धः सम्यग्बुद्धवान्। मतिबुद्धि इति कर्तरि क्तः॥ ४३॥
173975
173976 प्रबुद्धः सुप्तः सुप्तोऽपि प्रबुद्धो रमतेऽनिशम्।
173977 सुषुप्तोभूत्ततो जाग्रत्स्वप्नार्थसुहृदा सह॥ ४४॥
173978
173979 एवं जीवन्मुक्तस्याज्ञविषये स्वापमुपवर्ण्य परमार्थे सदा प्रबुद्धतामाह -
173980 प्रबुद्धः सुप्त इति। प्रबुद्धस्तत्त्ववित् एवंरीत्या सदा सुप्तोऽपि लोकप्रसिद्धयोः
173981 प्रबोधस्वापयोर्लोकवदेव प्रबुद्धः सुप्तश्च सन् जाग्रत्स्वप्नार्थभोगे
173982 सहायभूतेन वक्ष्यमाणेन सुहृदा सह अनिशं रमते। ततः सुषुप्तस्तु संस्तेन
173983 सहैव सुषुप्तोऽभूदित्यर्थः॥ ४४॥
173984
173985 जन्मान्तरैकसहवाससमाशयेन चित्रानुवृत्तिमधुरेण चिरंतनेन।
173986 मित्रेण सार्धमखिलानि दिनानि नीत्वा विश्रान्तिमेष्यति पदे परमे चिरं सः॥ ४५॥
173987
173988 यावत्प्रारब्धभोगं तेन सुहृदा सह क्रीडित्वा [] तस्य तदन्ते
173989 विदेहमुक्तिमाह - जन्मान्तरेति। स जीवन्मुक्तो जन्मान्तरेषु एकतया
173990 चिरसहवासप्रयुक्तस्नेहातिशयादिव सर्वं स्ववैषम्यं परित्यज्य समाशयेन
173991 समचित्तेन अत एव चित्राभिः
173992 शमदमतितिक्षाज्ञानवैराग्यसंतोषाद्यनुवृत्तिभिर्मधुरेण उत्तरत्र

173993 वक्ष्यमाणेन चिरंतनेन मित्रेण सार्धमखिलान्यायुःशेषदिनानि
173994 वक्ष्यमाणरमणेन नीत्वा परमे निरतिशयानन्दे विदेहकैवल्यपदे विश्रान्तिमेष्यति
173995 प्राप्स्यति ॥ ४५ ॥
173996
173997 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मी० दे० मो० नि० उ० अवि० श०
173998 विश्रान्तचित्तवर्णनं नामैकोनसप्तत्यधिकशततमः सर्गः ॥ १६९ ॥
173999
174000 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
174001 विश्रान्तचित्तवर्णनं नामैकोनसप्तत्यधिकशततमः सर्गः ॥ १६९ ॥
174002
174003 सप्तत्यधिकशततमः सर्गः १७०
174004
174005 श्रीराम उवाच ।
174006
174007 ब्रह्मन्कोऽस्य सुहृद्ब्रूहि येनासौ रमते सह ।
174008 रमणं किंस्वभावं स्यादुत रत्यात्म वास्य तत् ॥ १ ॥
174009
174010 सुहृत्स्वकर्मनामात्र पुत्रस्त्रीभृत्यसंयुतः ।
174011 तद्गुणाश्चोपवर्ण्यन्ते रमणं च सुखोदयम् ॥
174012
174013 अस्य जीवन्मुक्तस्य तेन सुहृदा सह यद्रमणं तत्किं स्वभावः
174014 स्वात्मस्वरूपावस्थितिरेव वा स्यादुत रतिः रम्येषु भोगस्थानेषु विहारप्रयुक्ता
174015 प्रीतिस्तदात्मकमित्यर्थः ॥ १ ॥
174016
174017 श्रीवसिष्ठ उवाच ।
174018
174019 स्वप्रवाहेहितं नाम स्वप्रायेहितनाम च ।
174020 स्वकर्म नाम चास्यास्ते मित्रमेकमकृत्रिमम् ॥ २ ॥
174021
174022 प्रवाहेहितं सहजं कर्म प्रायेहितं लोकसंग्रहार्थं शास्त्रीयं कर्म
174023 स्वप्रयत्नाभ्यस्तं
174024 सच्छास्त्राभ्यासविचारसत्संगशमदमतितिक्षोपरमशौचसंतोषेश्वर##-
174025 त्रिभिर्नामभिरुपाधिभेदाद्व्यपदिश्यते । अत एवैकं मित्रमित्युक्तिः ॥ २ ॥
174026
174027 पितृवद्विहिताश्वासं दारा इव नियन्त्रणम् ।
174028 संकटेषु दुरन्तेषु नित्यमव्यभिचारि च ॥ ३ ॥
174029
174030 तस्य सुहृदो गुणानाह - पितृवदित्यादिना । अकार्यविषये
174031 लज्जानियन्त्रणमव्यभिचारि च ॥ ३ ॥
174032
174033 अशङ्कितोपचरणं सुसंपादितनिर्वृति ।
174034 कोपेष्वकोपनतया वितीर्णावर्जनामृतम् ॥ ४ ॥
174035
174036 वितीर्णमावर्जनं साम्ना समाधानं तल्लक्षणममृतं येन ॥ ४ ॥
174037
174038 दुर्गदुर्गमदुर्वारदोषोद्धरणतत्परम् ।
174039 सर्वविश्वासरत्नानां कोश आशैशवोषितम् ॥ ५ ॥
174040
174041 एवं दुर्गेषु दुर्गमेषु मार्गेषु दुर्वारवैरकलहादिदोषेषु च मज्जने प्रसक्ते
174042 उद्धरणतत्परम् । अनेकजन्माभ्यासानुवृत्तत्वादाशैशवोषितम् ॥ ५ ॥
174043
174044 सहपांसुकृताक्रीडमाबाल्यादेव संगतम् ।

174045 विनिवारितदुश्चेष्टं पितृवद्रक्षणोन्मुखम् ॥ ६ ॥
174046
174047 तदेवाभिप्रेत्याह - सहेत्यादिना ॥ ६ ॥
174048
174049 वह्नेरिवौष्ण्यं सौगन्ध्यं कुसुमस्येव सर्वदा ।
174050 अविनाभावि विमलं रवेरिव च वासरम् ॥ ७ ॥
174051
174052 लालनैकरतं नित्यं पालनैकपरायणम् ।
174053 सर्वसंकटसंघट्टरक्षणैकसमुद्यतम् ॥ ८ ॥
174054
174055 हेम्नोऽग्निरिव देहस्य सर्वावस्थस्य शुद्धिदम् ।
174056 इदं हेयमुपादेयमिति दर्शनतत्परम् ॥ ९ ॥
174057
174058 सर्वावस्थस्य अशुचिस्पर्शभक्षणादिना अशुद्ध्याद्यवस्थस्यापि । दर्शने विविच्य
174059 प्रदर्शने तत्परम् ॥ ९ ॥
174060
174061 आह्लादकमनिन्द्याभिः कथाभिरिव नागरम् ।
174062 सच्चेष्टामणिमाणिक्यभाण्डसंभारमन्दिरम् ॥ १० ॥
174063
174064 नागरं नगराभिजनं चतुरमिवेति यावत् । सच्चेष्टाः शुभा
174065 वाङ्मनःकायचेष्टास्तल्लक्षणानां मणिमाणिक्यानां भाण्डसंभारमन्दिरं
174066 कोशगृहम् ॥ १० ॥
174067
174068 सूर्यस्तम इवाजस्रमप्रदर्शयदप्रियम् ।
174069 अनुरक्ता महेलेव प्रियमेवाप्रदर्शयत् ॥ ११ ॥
174070
174071 अप्रदर्शयत् दूरतो निरस्यदित्यर्थः । महेला महिलेव ॥ ११ ॥
174072
174073 जनं प्रियंवदं कुर्वत्प्रियमेव समाचरत् ।
174074 पेशलं मधुरं स्निग्धमक्षुब्धमुदिताशयम् ॥ १२ ॥
174075
174076 उदिताशयमप्रमादि ॥ १२ ॥
174077
174078 लोकोपचारकं पूज्यं स्मितपूर्वाभिभाषणम् ।
174079 कामोपशान्तं सद्रूपं परमार्थैककारणम् ॥ १३ ॥
174080
174081 लोकानां संगतसज्जनानामुपचारकं शुश्रूषकम् । कामेभ्य उपशान्तमत एव
174082 सतां रूपमिव रूपं यस्य सद्रूपम् ॥ १३ ॥
174083
174084 रणेऽज्ञानसमुद्भूते पूर्वं प्रहरणोद्यतम् ।
174085 अपूर्वनर्मनिर्माणलीलाललनलालकम् ॥ १४ ॥
174086
174087 अज्ञानेभ्यो जनेभ्यो दैवात्समुद्भूते रणे संप्रहारे पूर्वं प्रहरणे
174088 उद्यतमतिशूरमिति यावत् । अपूर्वैर्लोकोत्तरैर्नर्मन्निर्माणैः
174089 क्रीडाहास्यादिकौतूहलनिर्माणैर्लीलया ललनैश्च लालकं विलासयितृ ॥ १४ ॥
174090
174091 पालकं शीलसाराणां दाराणां च कुलस्य च ।
174092 आधिव्याधिपरीतस्य चेतसोऽमृतमौषधम् ॥ १५ ॥
174093
174094 अमृतवदुज्जीवनमौषधमिव रोगहरं च ॥ १५ ॥
174095
174096 विशेषविद्यावैदग्ध्यवादवन्द्यविनोदनम् ।

174097 समानकुलशीलत्वाद्द्विधाभाव इव स्थितम् ॥ १६ ॥
174098
174099 विशेषतो विद्यावैदग्ध्येन पाण्डित्येन वादैश्च वन्द्यानामुत्कृष्टानां
174100 प्रभुगुरुमान्यादीनां विनोदनं कौतुकावहम् । क्वचित्समानकुलशीलत्वाद्विभागेन
174101 द्विधाभावे स्थितमिव ॥ १६ ॥
174102
174103 अनुरक्तान्नृपान्साधून्वदान्यान्कारयत्सदा ।
174104 यज्ञदानतपस्तीर्थन्यायार्थप्रेरणोन्मुखम् ॥ १७ ॥
174105
174106 नृपादीननुरक्तान्कृत्वा वदान्यान्दानशौण्डान् कारयत् । सदेति
174107 देहलीदीपकन्यायेनोभयत्र संबध्यते ॥ १७ ॥
174108
174109 पुत्रदारद्विजातिस्त्रीभृत्यबन्धुजनैः सह ।
174110 शुभभोजनपानार्हमुत्तमश्लाघ्यसंगति ॥ १८ ॥
174111
174112 उत्तमैः श्लाघ्यैर्महद्भिः सह संगतिर्येन ॥ १८ ॥
174113
174114 भोगादिबद्धतृष्णत्वं दुःखदं विनिवारयत् ।
174115 सुस्निग्धसंकथोदारं समाश्वासोत्तमास्पदम् ॥ १९ ॥
174116
174117 ईदृशेनात्ममित्रेण स कलत्रेण संयुतः ।
174118 स्वकर्मनाम्ना रमते स्वभावेनैव नेरितः ॥ २० ॥
174119
174120 स्वभावेन सहजवृत्त्यैव न तु केनचिदीरितः प्रेरितः सन्नित्यर्थः ॥ २० ॥
174121
174122 श्रीराम उवाच ।
174123
174124 कलत्रमस्य मित्रस्य तदीयस्य मुनीश्वर ।
174125 किं तत्किंरूपमेव स्यात्समासेनैव मे वद ॥ २१ ॥
174126
174127 कलत्रं स्त्रीपुत्रादिपोष्यवर्गः । तत्सहितस्य तदीयस्य मित्रस्य तत्कलत्रं किं तच्च किं
174128 रूपं कीदृशगुणवदित्यर्थः ॥ २१ ॥
174129
174130 श्रीवसिष्ठ उवाच ।
174131
174132 स्नानदानतपोध्याननामानोऽस्य महामते ।
174133 सन्ति पुत्रा महात्मानः स्वनुरक्ताखिलप्रजाः ॥ २२ ॥
174134
174135 तत्रादौ पुत्रानाह - स्नानेति । गुणैः स्वनुरक्ता अखिलाः प्रजा येषाम् ॥ २२ ॥
174136
174137 चन्द्रलेखेव लोकस्य दृष्ट्यैवाह्लाददायिनी ।
174138 अविनाभाविनी भार्या मुदितास्यानुरागिणी ॥ २३ ॥
174139
174140 तस्य भार्यां गुणैः सह वर्णयति - चन्द्रलेखेवेति । मुदिता नित्यसंतुष्टा ॥ २३ ॥
174141
174142 करुणाकारणाकीर्णधना हृदयहारिणी ।
174143 आनन्दजननी चास्य वयस्याऽव्यभिचारिणी ॥ २४ ॥
174144
174145 करुणा दया तत्कारणात् आसमन्तात्कीर्णं विक्षिप्तं विकीर्णं धनं यया ॥ २४ ॥
174146
174147 समतास्य मता नित्यमास्ते हृदयवल्लभा ।
174148 प्रतीहारी पुरः प्रह्वा संमुखं सुखदायिनी ॥ २५ ॥

174149
174150 समतानाम्नी हृदयवल्लभा प्रिया भार्या। प्रतीहारी द्वारपालिका॥ २५॥
174151
174152 धैर्ये धर्मे च धीः साधो नित्यमाधीयते च या।
174153 सास्य धीरस्य धुर्यस्य पुरो धन्यस्य धावति॥ २६॥
174154
174155 धैर्ये धर्मे च विषये या धीः सा॥ २६॥
174156
174157 अस्य सन्ना समं स्कन्धे सर्वदैव महौजसः।
174158 विषयारिजये राज्ञो मैत्री मन्त्रप्रदायिनी॥ २७॥
174159
174160 अस्य राज्ञः सुहृदो विषयारिजये विषये मन्त्रप्रदायिनी मैत्री नामापरा भार्या
174161 समतया समं सर्वदैव स्कन्धे सन्ना सक्ता॥ २७॥
174162
174163 कार्याणामार्यमर्यादाचार्या चातुर्यशालिनी।
174164 सर्वेषामस्य मान्यस्य सत्यता स्वार्थदायिनी॥ २८॥
174165
174166 आर्यमर्यादाकार्याणां विषये अस्य आचार्या उपदेष्ट्री। अस्य सत्यता स्वार्थदायिनी
174167 धनाध्यक्षा॥ २८॥
174168
174169 इत्येवंपरिवारेण मित्रेण सह मन्त्रिणा।
174170 स्वकर्मणा व्यवहरन्न हृष्यति न कुप्यति॥ २९॥
174171
174172 एवंविधः परिवारः पोष्यवर्गो यस्य तथाविधेन मन्त्रिणा सुहृदा स्वकर्मणा
174173 सर्वत्र व्यवहरन् जीवन्मुक्तो लाभालाभयोर्न हृष्यति न कुप्यति॥ २९॥
174174
174175 स यथास्थितमेवास्ते विनिर्वाणमना मुनिः।
174176 चित्रार्पित इवाजस्रं लोके व्यवहरन्नपि॥ ३०॥
174177
174178 चित्रार्पितो योद्धेव युद्धादिना व्यवहरन्नपि यथास्थितमेवास्ते॥ ३०॥
174179
174180 वस्तुशून्येषु वादेषु मूकः शैलमयो यथा।
174181 निष्प्रयोजनशब्देषु परं बाधिर्यमागतः॥ ३१॥
174182
174183 शैलमयः शिलाप्रतिमारूप इव॥ ३१॥
174184
174185 लोकाचारविरुद्धेषु शवं सकलकर्मसु।
174186 आर्याचारविचारेषु वासुकिर्वा बृहस्पतिः॥ ३२॥
174187
174188 शवं मृतकल्पः॥ ३२॥
174189
174190 प्रवृत्तवाक्पुण्यकथो जिह्मानां प्रतिभानवान्।
174191 निमेषेणैव निर्णेता वक्ताशु बहु वस्तुनः॥ ३३॥
174192
174193 जिह्मानां स्वपरकौटिल्यादिदोषाणां प्रतिभानवान्। वस्तुनो दुरूहस्यापि
174194 संदेहपदस्य निर्णीय वक्ता॥ ३३॥
174195
174196 समदृष्टिरुदारात्मा वदान्यः संविभागवान्।
174197 पेशलस्निग्धमधुरः सुन्दरः पुण्यकीर्तनः॥ ३४॥
174198
174199 स्वभाव एषैव भवेत्प्रबुद्धधियां प्रयत्नेन तु नेदृशास्ते।
174200 भवन्ति नेन्द्वर्कहुताशनाद्याः क्वचित्परप्रेरणया प्रकाशाः॥ ३५॥

174201
174202 एष वर्णितो गुणगणः प्रबुद्धधियां स्वभाव एव भवेत्। ते प्रयत्नेन ईदृशा
174203 ईदृग्गुणा न भवन्ति। इन्द्वर्कहुताशनाद्याः परप्रेरणया प्रकाशन्त इति प्रकाशा
174204 न भवन्ति किंतु स्वभावत एव तद्वदित्यर्थः॥ ३३५॥
174205
174206 इत्यार्षे श्रीवाष्ठमहारामायणे वा० दे० मो० नि० उ० अवि० वि०
174207 तत्त्वज्ञव्यवहारवर्णनं नाम सप्तत्यधिकशततमः सर्गः॥ १७०॥
174208
174209 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
174210 तत्त्वज्ञव्यवहारवर्णनं नाम सप्तत्यधिकशततमः सर्गः॥ १७०॥
174211
174212
174213 एकसप्तत्यधिकशततमः सर्गः १७१
174214
174215 श्रीवसिष्ठ उवाच।
174216
174217 संविदाकाशकचनमिदं भाति जगत्तया।
174218 वस्तुतो न जगन्नाभा न शून्यं न च संविदः॥ १॥
174219
174220 जीवन्मुक्तिप्रतिष्ठार्थं सर्वसंदेहशान्तये।
174221 भूयस्तत्त्वोपदेशेन क्रियते दृश्यमार्जनम्॥
174222
174223 वस्तुतस्तु न जगत् नापि जगत आभानमाभा नापि शून्यं नापि वृत्तिसंविदः॥ १॥
174224
174225 यदिदं भाति चिद्व्योम जगदाख्यं न तत्ततः।
174226 आकाशादिव शून्यत्वमन्यदन्यदपि स्थितम्॥ २॥
174227
174228 अज्ञदृष्ट्या अन्यत् स्थितमपि ततश्चिद्व्योम्नोऽन्यन्न। यथा
174229 शून्यत्वमाकाशादन्यन्न तद्वत्॥ २॥
174230
174231 देशाद्देशान्तरप्राप्तौ मध्ये यत्संविदो वपुः।
174232 तद्दृश्यमिति भातीदं दृश्यमन्यन्न विद्यते॥ ३॥
174233
174234 तथा च निर्विषयमेव चैतन्यं यदेकविषयादपरविषयप्राप्तावन्तराले प्रसिद्धं
174235 तदेव दृश्यमिति भातीत्यर्थः॥ ३॥
174236
174237 महाप्रलयसंपत्तावादिसर्गः पुनः किल।
174238 परस्मात्कारणाभावे कुतो दृश्यस्य संभवः॥ ४॥
174239
174240 सदेव सोम्येदमग्र आसीत्। यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासन् शिव एव केवलः
174241 इत्यादिश्रुतिषु सन्मात्रपरिशेषलक्षणमहाप्रलयसंपत्तौ प्राक्सत्यां तदुत्तरं
174242 पुनरादिसर्गः किल भवतीति श्रुतम्। तत्र सदेवेत्यवधारणादविकारात्परस्मादन्यस्य
174243 कारणस्याभावे कुतोऽस्य दृश्यस्य संभवः॥ ४॥
174244
174245 तदाणुमात्रमपि हि दृश्यबीजं न विद्यते।
174246 किल यस्मादिदं चक्रं पुनर्मूर्तं प्रवर्तते॥ ५॥
174247
174248 तत्र श्रुतिविरोधात्परमाण्वादिकारनान्तरकल्पनाया अनवकाश इत्याह - तदेति।
174249 प्रवर्तते प्रवर्तेत॥ ५॥
174250
174251 उत्पन्नमेव नैवातो मूर्तं दृश्यमिदं जगत्।
174252 वन्ध्यापुत्र इवात्यन्तमतोऽस्त्येव न दृश्यधीः॥ ६॥

174253
174254 किं ततस्तत्राह - उत्पन्नमेवेति। अनुत्पत्तिप्रतिपादने एव सृष्टिश्रुतीनां
174255 तात्पर्यमित्यर्थः॥ ६॥
174256
174257 यच्चेदं किंचिदाभाति दृश्यमित्यभितः स्थितम्।
174258 तच्चिन्मात्रं खमेवाच्छं परमेव पदं विदुः॥ ७॥
174259
174260 प्रत्यक्षं दृश्यभानस्य का गतिस्तत्राह - यच्चेदमिति। विदुः श्रुतितात्पर्यविद
174261 इत्यर्थः॥ ७॥
174262
174263 यथा सुषुप्तात्स्वप्नत्वं गच्छद्यात्यनवस्थितिम्।
174264 चिन्मात्रमजहत्स्वच्छं निजं रूपमनामयम्॥ ८॥
174265
174266 चिन्मात्रस्य दृश्याकारेण भानं सुषुप्तात्स्वप्नगमने प्रसिद्धमित्याह -
174267 यथेति॥ ८॥
174268
174269 सर्गस्यादौ तथैवेदमात्मैव स्वात्मनात्मनि।
174270 व्योमात्मैव चिदाभासं दृश्यमित्यवभासते॥ ९॥
174271
174272 सुषुप्तात्स्वप्नगमनवत्प्रलयात्सर्गगमनमपि तथा बोध्यमित्याह - सर्गस्येति॥ ९
174273 ।।
174274
174275 यथा पुरतया भाति मनः संकल्पमन्थरम्।
174276 तथा दृश्यमिवाभाति सर्गादौ चिन्नभः परम्॥ १०॥
174277
174278 यथात्मन्यनिलः स्पन्दश्चक्रावर्तवदीहते।
174279 सर्गादौ चिन्नभः स्थित्वा दृश्यमित्येव तिष्ठति॥ ११॥
174280
174281 यथा निलः स्पन्दः सन्नात्मनि स्वस्मिन्नेव चक्रावर्तवद्वात्यावदीहते तथा
174282 चिन्नभोऽप्यज्ञातमात्मन्येव दृश्यमित्येव तिष्ठति॥ ११॥
174283
174284 अतो ज्ञातमनाभातमेव दृश्यं जगत्त्रयम्।
174285 ब्रह्मैवेदं परं भाति स्वात्मनीत्थमवस्थितम्॥ १२॥
174286
174287 अत एव ज्ञातं चेद्दृश्यं जगत्त्रयमनाभातमेव परं ब्रह्मैव भाति॥ १२॥
174288
174289 नास्त्येव मूर्तं पृथ्व्यादि किंचनापि कदाचन।
174290 अस्तु मूर्तममूर्तं वा ब्रह्मैवेदं विराजते॥ १३॥
174291
174292 अज्ञदृशा ज्ञदृशा वा मूर्तममूर्तं वा अस्तु ब्रह्मैव तथा विराजत इति तु
174293 निष्कर्ष इत्यर्थः॥ १३॥
174294
174295 प्रबोधकाले स्वप्नाद्रिर्यथा व्योमैव निर्वपुः।
174296 तथेदं शान्तचिन्मात्रं खं प्रबोधे जगत्त्रयम्॥ १४॥
174297
174298 प्रबोधो जागरणं तत्काले। प्रबोधे आत्मप्रबोधे॥ १४॥
174299
174300 प्रबुद्धानां परं ब्रह्म निर्विभागमिदं जगत्।
174301 धीमन्तोऽपि न तद्विद्मो यदिदं त्वप्रबोधनम्॥ १५॥
174302
174303 धीमन्तश्चिन्तयन्तोपि अप्रबोधनं कीदृशमिति न विद्मः॥ १५॥
174304

174305 देशाद्देशान्तरप्राप्तौ यन्मध्ये संविदो वपुः |
174306 स्वस्वभावो हि भूतानां तत्पदं परमात्मकम् || १६ ||
174307
174308 सर्वभूतानां निर्विषयचिन्मात्रमेव स्वस्वभाव इत्याह - देशादिति || १६ ||
174309
174310 देशाद्देशान्तरप्राप्तौ यन्मध्ये संविदो वपुः |
174311 एतत्तत्परमाकाशमत्र सर्वं प्रतिष्ठितम् || १७ ||
174312
174313 अत्रेति | सर्वाधिष्ठानमपि निर्विषयचिदेवेत्यर्थः || १७ ||
174314
174315 यादृगेतत्पदं तादृगिदं सदसदात्मकम् |
174316 येनार्थपञ्चकादन्यत्किंचनापि न विद्यते || १८ ||
174317
174318 अधिष्ठानानुरूपोऽयमध्यास इत्याह - यादृगिति | केनांशेन सादृश्यं
174319 तदाह - येनेति | येन हेतुना अर्थपञ्चकात्पञ्चभूतेभ्योऽन्यत्किंचिन्न विद्यते |
174320 तथा च स्वातिरिक्तस्वकार्यशून्यत्वमेवास्य ब्रह्मसादृश्यमित्यर्थः || १८ ||
174321
174322 रूपालोकमनस्कारा एतदेव पदं विदुः |
174323 एते ते द्रवतावर्ताः पदस्यास्य महाम्भसः || १९ ||
174324
174325 बाह्येन्द्रियजन्यविषयाभासा रूपालोका आभ्यन्तरमनोधीनास्तु मनस्कारा एते
174326 सर्वेप्येतत्पदमेव || १९ ||
174327
174328 देशाद्देशान्तरप्राप्तौ यन्मध्ये संविदो वपुः |
174329 एतस्याव्यतिरेकेण जगत्ता नास्ति काचन || २० ||
174330
174331 तथा च निर्विषयचिन्मात्रव्यतिरेकेण जगत्ता नास्तीति प्रसिद्धमित्याह - देशादिति |
174332 जगत्ता जगद्भावः || २० ||
174333
174334 रागद्वेषादयो भावा भावाभावदृशस्तथा |
174335 एतद्रूपममुञ्चन्त एतस्यावयवाः स्थिताः || २१ ||
174336
174337 एतद्रूपं सद्रूपं भानरूपं च || २१ ||
174338
174339 त्यक्त्वा पूर्वापरे कोट्यौ मध्ये यत्संविदो वपुः |
174340 स स्वभावः परो ज्ञेयो जगत्पयसि संज्ञितः || २२ ||
174341
174342 शाखाचन्द्रदर्शने पूर्वा कोटिः शाखा अपरा कोटिश्चन्द्रस्तौ त्यक्त्वा मध्ये
174343 यत्संविदो निर्विषयं वपुः प्रसिद्धं स तस्याः स्वभावः स एव
174344 जगल्लक्षणमरुमरीचिकापयस्यधिष्ठानसंज्ञित इत्यर्थः || २२ ||
174345
174346 देशाद्देशान्तरप्राप्तौ विद्धि मध्यमसंविदः |
174347 जगदित्यपरं नाम स्वरूपादच्युतात्मनः || २३ ||
174348
174349 एतदेवाभिप्रेत्य मया पुनःपुनर्निर्विषयविस्तृतापरोक्षचैतन्यस्य
174350 सकलजनसाधारणप्रसिद्धिप्रद्रशको देशाद्देशान्तरम् इति श्लोके उद्‌धुष्यत
174351 इत्याशयेनाह - देशादिति | कूटस्थत्वादेव स्वरूपादप्रच्युतात्मनः |
174352 जाग्रद्देशात्स्वप्नदेशप्राप्तौ मध्ये सुषुप्तिदशायां यत्संविदो वपुः
174353 पूर्वसर्गदिशात्पुनःसर्गप्राप्तौ मध्ये प्रलये यत्संविदो वपुः
174354 इहलोकदेशात्परलोकदेशप्राप्तौ मध्ये मूर्च्छावस्थायां यत्संविदो वपुस्तदेव
174355 तथैव सर्वदा आस्ते तस्यैव जगदित्यपरं नामाज्ञैः कल्पितमित्यर्थः || २३ ||
174356

174357 आदिसर्गात्प्रभृत्येव दृश्यमुत्पन्नमेव नो।
174358 यन्नाम तदिहास्तीति मायाशम्बरडम्बरः॥ २४॥
174359
174360 तथा सति यत्फलितं तदाह - आदिसर्गादिति। जगन्मायालक्षणस्य
174361 शम्बरस्यैन्द्रजालिकस्याडम्बरमात्रमिति फलितमिति भावः॥ २४॥
174362
174363 कष्टं नास्त्येव यद्दृश्यं तदप्यस्तीति संस्थितम्।
174364 यदप्यस्ति परं ब्रह्म कष्टं नास्तीति तत्स्थितम्॥ २५॥
174365
174366 तथा च मूढानामभाग्यवशादेव मणिर्नास्ति काचोऽस्तीति भ्रान्तिवद्वैपरीत्यभ्रमः
174367 संपन्नोऽयमित्याह - कष्टमिति। खेदे कष्टशब्दौ॥ २५॥
174368
174369 अब्रह्मण्यं क्व गच्छामि विपरीतमतो जगत्।
174370 असद्दृश्यं सदित्युक्तं ब्रह्मैवं नावगम्यते॥ २६॥
174371
174372 अहं तु अब्रह्मण्यं ब्रह्मभावशून्यमतो विपरीतं जगत् क्व गच्छामि क्व लभेय।
174373 मूढैस्तु असद्दृश्यं सदित्युक्तं तैरपि ब्रह्मैवैवं नाम गम्यते न दृश्यम्।
174374 असतो गन्तुमशक्यत्वादित्यर्थः॥ २६॥
174375
174376 न चोत्पन्नं न चाभाति दृश्यं किंचन कुत्रचित्।
174377 यदिदं भाति तद्ब्रह्म व्योमैव कचति स्वयम्॥ २७॥
174378
174379 यथा मणिः प्रकचति स्वभासाऽव्यतिरिक्तया।
174380 आत्मनोऽनन्यया [स्वात्मनः इति टीकानुगुणः पाठः।] सृष्ट्या
174381 चिद्व्योम कचितं तथा॥ २८॥
174382
174383 अव्यतिरिक्तयेत्यस्य दार्ष्टान्तिके विवरणं स्वात्मनोऽनन्ययेति॥ २८॥
174384
174385 तस्मिन्नेव पदे शान्ते तपत्येष दिवाकरः।
174386 तस्यैवावयवश्चैव न नामान्योऽस्ति भास्करः॥ २९॥
174387
174388 कथमिदं प्रत्येयमिति चेद्दिवाकरादिजगतः सद्रूपेणैव
174389 सत्सामान्यैकदेशप्रायतया अनुभूयमानत्वादित्याह - तस्मिन्नेवेत्यादिना॥ २९॥
174390
174391 स्थितोऽपि तत्र न तपत्यर्को न च निशाकरः।
174392 प्रकाशयति देवोऽसावर्कं नार्कस्तमीश्वरम्॥ ३०॥
174393
174394 यथा अर्कादयस्तदधीनप्रकाशा न तथा ब्रह्म अर्काद्यधीनप्रकाशमित्याह -
174395 स्थितोऽपीति। तपति प्रकाशयति। तथा च श्रुतिः न तत्र सूर्यो भाति न चन्द्रतारकं नेमा
174396 विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं
174397 विभाति इति॥ ३०॥
174398
174399 तस्य भासा विभातीदं तदहो दृश्यमण्डलम्।
174400 सर्वचन्द्रार्कवह्नीनां पदार्थानां स दीपकः॥ ३१॥
174401
174402 स साकारो निराकार इति शब्दार्थकल्पना।
174403 खपुष्पवदसद्रूपा न संभवति तद्विदाम्॥ ३२॥
174404
174405 विषयासत्त्वादेवासद्रूपा॥ ३२॥
174406
174407 साङ्गभूतो यथैकोऽणुर्भाति जीवार्कतेजसि।
174408 न भान्ति भान्ति वा तत्र तथा सूर्यादयोऽणवः॥ ३३॥

जीवभूतस्य जगत्पश्यतोऽस्यार्कस्य तेजसि जालान्तरे यथा एकोऽणुर्भाति तथा
अपरिच्छिन्नचित्प्रकाशे ब्रह्मणि एते अर्कादयो भान्ति न भान्ति वेत्यनादरोक्तिः ॥ ३३ ॥

चिन्मात्राकाशरत्नस्य सृष्टयोऽर्कादिसंयुताः ।
या भासस्ताः कथं तस्माद्व्यतिरिक्ताः स्युरुच्यताम् ॥ ३४ ॥

न हि रत्नात्तद्भासोऽतिरिक्ताः ॥ ३४ ॥

चिन्मात्रेणापि रहितं शून्यत्वेनापि वर्जितम् ।
पदं सर्वात्मरिक्तं तत्सर्वार्थैश्च समन्वितम् ॥ ३५ ॥

अचिदप्रसिद्धौ व्यावर्त्याभावाच्चिन्मात्रेणापि रहितम् ॥ ३५ ॥

पृथ्व्यादीन्यपि सन्त्येव तत्र सन्ति न कानिचित् ।
जीवन्तोऽपि न विद्यन्ते जीवास्तत्र च केचन ॥ ३६ ॥

अत्यजन्तो द्वयस्थौल्यं तत्रैते परमाणवः ।
स्वरूपमत्यजद्द्वैतमैक्यं वात्र न किंचन ॥ ३७ ॥

अवयवद्वयघटनप्रयुक्तं स्थौल्यमत्यजन्त एव तत्र चित्प्रकाशे एते सूर्यादयः
परमा निरवयवा अणवः । स्रूपं सत्ताम् ॥ ३७ ॥

किंचिदत्र न किंचिद्वै न किंचिच्च न किंचन ।
किंचिन्न किंचिदित्येषा कलनात्रातिदूरगा ॥ ३८ ॥

किंचिदिति । व्यवहारमात्रस्य निरासे विरोधाविरोधयोरपि तत्र निरासादिति भावः ॥ ३८ ॥

एका निरन्तरानन्ता नित्यमत्याततात्मना ।
चिन्मात्रव्योमसत्तैव जगन्नाम्नात्मनि स्थिता ॥ ३९ ॥

एकं चेत्यं त्यक्तवत्या अप्राप्तायाश्चितोऽपरम् ।
यद्रूपं जगतो रूपमस्य नानात्मनोऽपि तत् ॥ ४० ॥

देशाद्देशान्तरम् इति श्लोकस्य तात्पर्यं तत्र साधकत्वेन वर्णयति - एकमिति ॥ ४० ॥

नानेवेदमनानैव चिद्व्योमैवेदमाततम् ।
भूतपञ्चकरूपेण स्वप्ने चितिरिव स्थितम् ॥ ४१ ॥

चितिर्जीवचैतन्यमिव । तथा च बादरायणस्य भगवतः सूत्रम् आत्मनि चैवं
विचित्राश्च हि इति ॥ ४१ ॥

सुषुप्ताद्विशतः स्वप्नं सुषुप्तस्यैव चिद्यथा ।
यथा स्थितैव स्वप्नत्वमेत्येवं सर्गतामिमाम् ॥ ४२ ॥

तथा च सुषुप्तात्स्वप्न इव प्रलयात्सर्गात्मना चिदेव भातीत्याह - सुषुप्तादिति ॥ ४२ ॥

यादृक्सुषुप्तं स्वप्नतु तादृगेव तथैव च ।
जाग्रत्तुर्यं तथैवेदमतो व्योमसमं जगत् ॥ ४३ ॥

तदेव स्पष्टयति - यादृगिति ॥ ४३ ॥

174461 जाग्रत्स्वप्नः सुषुप्तं च तुर्यमेवाखिलं स्थितम् |
174462 तत्त्वविद्गोत्रमूढस्तु यद्वै वेत्ति न वेद्मि तत् || ४४ ||
174463
174464 तत्त्वविदां गोत्रं ब्रह्मविद्यासंप्रदायस्तद्विषये मूढस्तु पामरो यद्वेत्ति तदहं
174465 न वेद्मि || ४४ ||
174466
174467 जडानामजडानां यः सर्वार्थानामनारतम् |
174468 दुर्लक्ष्यपरिणामोऽन्तर्मनोबुद्ध्यादिवर्जितः || ४५ ||
174469
174470 जडानां जगतामजडानां जीवानां चान्तः स्थित्वा योऽन्तर्यामितया दुर्लक्ष्यमेव
174471 यथा स्यात्तथा जगत्परिणामयतीति दुर्लक्ष्यपरिणाम ईश्वरः स एव शोधिताया
174472 जीवचितेः पारमार्थिकं रूपम् | जगत्पदार्थाश्च तन्मया एवेति तदेव जगदाकारेण
174473 स्थितमिति निष्कर्ष इति द्वयोरर्थः || ४५ ||
174474
174475 सुशुद्धायाश्चितो रूपं पदार्थास्तन्मयाश्च ते |
174476 ते वसन्ति न सद्रूपास्तदेव हि तथा स्थितम् || ४६ ||
174477
174478 परिणामादिशब्दार्थदृशामत इहानघ |
174479 उपदेशार्थमुक्तीनां गन्धोऽप्येवं न विद्यते || ४७ ||
174480
174481 ननु यदि पृथिव्यादिपदार्थाश्चिद्रूपा एव न चिद्रूपात्पृथक् सन्ति
174482 तर्ह्यन्तर्यामितया तत्परिणामयितृत्वं कथं तत्राह - परिणामादीति |
174483 उपदेशार्थं परिणामं लौकिकमङ्गीकृत्य प्रवृत्तानामुक्तीनां न
174484 परमार्थतः परिणामपरतेत्यर्थः || ४७ ||
174485
174486 आदिसर्गात्प्रभृत्येव महासत्तात्मनात्मनि |
174487 चिन्मात्रपरमाकाशं स्थितमेकं महात्मनः || ४८ ||
174488
174489 कुत्र तर्हि तात्पर्यं तदाह - आदिसर्गादिति | महात्मनस्तत्त्वविदः प्रपूर्णैकात्मनि
174490 प्रख्या अनुभूतिरत्र प्रमाणमित्युत्तरान्वयि || ४८ ||
174491
174492 प्रपूर्णैकात्मनि प्रख्या सा सर्वव्यापिनी चितिः |
174493 स्थिता तयात्मन्येवान्तर्जगदित्यभिधाः कृताः || ४९ ||
174494
174495 अभिधाः अज्ञान्प्रति कृताः || ४९ ||
174496
174497 परिज्ञाते यथा स्वप्ने स्वाङ्गीकारात्सुखं सुखम् |
174498 अनङ्गीकारतो दुःखं सदुःखं भवति क्षणात् || ५० ||
174499
174500 तथा च प्रबोधे यादृश आत्मा परिशिष्यते
174501 तदङ्गीकाराद्यद्यज्जगत्कौतुकमनुभूतं तत्सर्वं सुखं सुखमेव भवि |
174502 अप्रबोधे तदनङ्गीकारे तु सदुःखं यद्यदनुभूयते जन्ममरणजरामयादि
174503 तत्सर्वं दुःखमेव भवति स्वप्नप्रबोधाप्रबोधवदित्याह - परिज्ञाते इति || ५० ||
174504
174505 गच्छतस्तिष्ठतश्चैव जाग्रतः स्वपतस्तथा |
174506 नित्यमेकं समाधानं स्थितं शान्तस्य तद्विदः || ५१ ||
174507
174508 अत एव तद्विदो दुःखविक्षेपाभावान्नित्यं समाधानसुखमेवेत्याह - गच्छत
174509 इति || ५१ ||
174510
174511 भेदेऽप्यभेदनिष्ठस्य दुःखेऽपि हि सुखस्थितेः |
174512 सतोऽप्येवासतो ज्ञस्य किमन्यदवशिष्यते || ५२ ||

बहिःसंसारे सतोऽप्यन्तर्मुक्तत्वात्तत्रासत एव। अन्यत्किं साध्यं परिहरणीयं वा
अवशिष्यते ॥ ५२ ॥

न संत्यजति नादत्ते किंचिद्व्यवहरन्नपि।
हृदयेन बहिःकार्येऽकार्य एवावतिष्ठते ॥ ५३ ॥

बहिःकार्ये व्यवहरन्नपि हृदयेन किंचिन्न सन्त्यजति नादत्ते च किंत्वकार्ये
ब्रह्मण्येवावतिष्ठते ॥ ५३ ॥

यथा हिमस्य शीतत्वं वह्नेरौष्ण्यं तथेदृशः।
स्वभावोऽस्य भवेन्नित्यं न त्वाहार्यो गुणोऽस्य सः ॥ ५४ ॥

एवंस्थितिश्चास्य स्वभाव एव न तु यत्नेन आहार्यः संपाद्यो गुणः ॥ ५४ ॥

यस्य त्वेष स्वभावः स्यान्न नाम न स तत्त्ववित्।
एतदेवाज्ञताचिह्नं यदिच्छा प्रकृतेतरा ॥ ५५ ॥

प्रकृतेतरा आत्मातिरिक्तविषयिणी ॥ ५५ ॥

आश्वस्तान्तःकरणः क्षीणविकल्पः स्वरूपसारमयः।
परमशमामृततृप्तस्तिष्ठति विद्वान्निरावरणः ॥ ५६ ॥

यो निरावणो विद्वान् स आश्वस्तान्तःकरणः सदा समाहितचित्तः
प्रक्षीणशत्रुमित्रादिविकल्पः स्वात्मसुखसारप्रचुरः परमेण शमामृतेन सदैव
तृप्तस्तिष्ठति ॥ ५६ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० निर्वा० उ०
द्वैतैक्यनिरामययोगोपदेशो नामैकसप्तत्यधिकशततमः सर्गः ॥ १७१ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
द्वैतैक्यनिरामययोगोपदेशो नामैकसप्तत्यधिकशततमः सर्गः ॥ १७१ ॥

द्विसप्तत्यधिकशततमः सर्गः १७२

श्रीवसिष्ठ उवाच।

एवं पृथ्व्यादिरहितः खमेवाद्यः प्रजापतिः।
मनोमात्रमहं मन्ये संकल्पविटपी यथा ॥ १ ॥

मनोमात्रं विधातात्र तत्संकल्पो जगद्भ्रमः।
न देहोऽस्य स्मृतिर्वेति स्मृतितत्त्वं च कीर्त्यते ॥

ननु विधातृसृष्टं जगच्छ्रूयते सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्।
दिवं च पृथिवीं चान्तरिक्षमथो स्वः इति तत्कथं चिन्मात्रकचनं स्वप्नवदिति
वर्णितमित्याशङ्कां वारयितुं तत्संकल्पानां तन्मयजगतश्च चिन्मात्रत्वमेवेति
वर्णयितुमुपक्रमते - एवमिति। एवमनादिजीवन्मुक्तत्वादेव प्रजापतिर्विराडपि
पृथ्व्यादिरहितो निरावरणं खं चिदाकाशमेव। तं च
मनःसमष्टिहिरण्यगर्भमात्रमहं मन्ये। मनश्च संकल्पविटपीव
चित्कचनमात्रं प्रसिद्धमिति चिन्मात्रत्वसिद्धिस्तस्येति भावः ॥ १ ॥

174565 मन इत्यभिधानेन पश्चादास्था प्रकल्पिता।
174566 वार्यावर्तविवर्तेन प्रोत्थायावर्तता यथा॥ २॥
174567
174568 कथं प्रसिद्धं तत्राह - मन इति। मननाकारकल्पनात्प्राक्तच्चिन्मात्रमेव
174569 पश्चान्मननाकारकल्पनानन्तरं मन इत्यभिधानेन तस्यास्था
174570 चित्तादात्म्याध्यासः प्रकल्पिता। यथा वारिण्येव आवर्तविवर्ताकारेण स्वयं प्रोत्थाय
174571 आवर्तता तेन कल्पिता तद्वत्॥ २॥
174572
174573 सत्तामात्रात्मनस्तस्य कुतो बुद्ध्यादयः किल।
174574 अविद्यमाने पृथ्व्यादौ खस्यानन्तस्य किं रजः॥ ३॥
174575
174576 अत एव तस्य बुद्ध्यादयोऽपि चिद्व्यतिरेकेण न सन्तीत्याह - सत्तेति॥ ३॥
174577
174578 न तस्य देहचित्तादि नेन्द्रियाणि न वासनाः।
174579 सदप्येतत्सदा तस्य न किंचिदपि विद्यते॥ ४॥
174580
174581 एवं देहादयोऽपि न सन्तीत्याह - न तस्येति। व्यवहाराभासन्निर्वाहार्थमापाततः
174582 सदपि परमार्थतो न किंचिदपि विद्यते॥ ४॥
174583
174584 प्राक्तनस्य प्रजेशस्य मुक्तत्वात्कथमेव च।
174585 भूयः संभवति प्राज्ञ न स्मृतिर्न च संभवः॥ ५॥
174586
174587 कुतो न विद्यत इति चेदादिसर्गादौ कारणाभावात्। न च प्राक्तनः प्रजापतिरेवोत्तरस्य
174588 कारणम्। तस्य प्राक्तनद्विपरार्धावसाने मुक्तत्वादित्याह - प्राक्तनस्येति।
174589 कारणाभावाद्भूयो [कारणाभावादित्यादिव्याख्याभागः केनचित्प्रक्षिप्तः इति
174590 प्रतिभाति मूलव्याख्याविसंवादात्।] देहबुद्ध्यादिग्रहणे कारणाभावात्।
174591 तस्मादभिनवस्य प्रजापतेर्जगद्रचनानुकूला स्मृतिस्तस्य संभव उत्पत्तिश्च यतो न
174592 संभवतीत्यर्थः॥ ५॥
174593
174594 न भवत्येव मुक्तानां स्मृतिर्देहोदयः पुनः।
174595
174596 संसारे सतामावर्तानां परिवृत्तिपराणां जीवानामिव मुक्तानां विदेहमुक्तानां
174597 संसारस्मृतिः पुनर्देहोदयश्च न भवत्येव। देशान्तरे कालान्तरे वा
174598 पुनरावर्तत्वं यतो नास्ति। इमं मानवमावर्तं नावर्तन्ते न स पुनरावर्तते
174599 इत्यादिश्रुतेरिति भावः॥ ६॥
174600
174601 यदि वापि भवेत्किंचित्स्मृत्या देहादि तस्य तत्।
174602 तदपृथ्व्यादिभिः शान्तं संकल्पनगरं तनु॥ ७॥
174603
174604 यदि वापि तस्य प्रजापतेः पूर्वकल्पकृतो
174605 वासनाजन्यहिरण्यगर्भाहंभावगोचरसंस्कारबलात्तथैव स्मृत्या तद्देहादि
174606 किंचित्संभवेत् तत्केवलोपासनात्मकमनःकल्पनासंस्कारजत्वात्
174607 केवलमानसमपृथ्व्यादिभिरुत्पन्नं तनु अतितुच्छं संकल्पनगरप्रायं
174608 मिथ्याभूतमेव भवेत्तत्तु सत्यमित्यस्मत्सिद्धान्तसिद्धिरित्यर्थः॥ ७॥
174609
174610 यथा संकल्पशैलस्य दृश्यमानमपि स्फुटम्।
174611 पृथ्व्यादिरहितं रूपं तद्विराड्वपुषस्तथा॥ ८॥
174612
174613 ननु पृथ्व्यादिघटितत्वेन दृश्यमानस्य ब्रह्माण्डात्मकस्यास्य विराट्शरीरस्य
174614 कथं तद्रहितता तत्राह - यथेति॥ ८॥
174615
174616 स्मृतिश्च संभवत्येव न कदाचन काचन।

174617 एषा लौकिकबुद्ध्या या सा सद्बुद्ध्या न विद्यते ॥ ९ ॥
174618
174619 ननु प्रागुदाहृतश्रुतौ दिवं च पृथिवीं चान्तरिक्षमथो स्वः इति
174620 पृथ्व्यादिघटितमेव तद्रूपं श्रुतम् तच्च धाता यथापूर्वमकल्पयत् इति
174621 पूर्वतनस्मृतिपूर्वकमेव निर्मितं गम्यते तत्राह - स्मृतिश्चेति । अस्य
174622 प्रजापतेरादि सर्गे पूर्वानुभवाभावात्स्मृतिर्न संभवत्येव । या चेयं
174623 श्रुतिबलाद्गम्यते एषा लौकिकानां जगत्सत्यतादर्शिनामज्ञानां बुद्ध्या
174624 अनादिसिद्धकर्ममार्गप्रवाहप्रवर्तनार्थं श्रुत्या परबुद्ध्यनुसारेणैव
174625 बोधनात् । तस्य तत्त्वविदः प्रजापतेः बुद्ध्या तु सा स्मृतिर्न विद्यते ॥ ९ ॥
174626
174627 श्रीराम उवाच ।
174628
174629 कथं न संभवत्येषां स्मृतिः स्मृतिमतां वर ।
174630 स्मृतेश्चासंभवे कस्माद्गुणो गुणगणाकर ॥ १० ॥
174631
174632 नन्वस्य प्रजापतेः पूर्वकल्पे उपासकतादशायां पृथ्व्याद्यनुभवोऽस्त्येव
174633 तदभावे पृथ्व्यादिघटितविराट्शरीरोऽहमिति कथमुपासीत । ततश्चासौ
174634 तद्बलादेतत्कल्पादौ पृथ्व्यादिस्मृतेस्तद्घटितविराट्शरीरमुपासनबललब्ध##-
174635 यथापूर्वमकल्पयत् इति श्रुतिबोधितः पूर्वकल्पीयब्रह्माण्डगुणः
174636 सर्वोऽस्मिन्ब्रह्माण्डे कथं सिद्ध्येदिति रामः शङ्कते - कथमिति । हे
174637 गुणगणाकरेति वसिष्ठसंबोधनम् ॥ १० ॥
174638
174639 श्रीवसिष्ठ उवाच ।
174640
174641 दृश्ये हि संभवत्येषा कार्यकारणतात्मनि ।
174642 तद्भावाभावसंपन्ना न तु संभवति स्मृतिः ॥ ११ ॥
174643
174644 न वयं कल्पनाभ्रान्तिसंस्कारजामर्थशून्यां स्मृतिं प्रत्याचक्ष्महे किंतु
174645 सत्यार्थानुभवजन्यसंस्कारजाम् । तस्यां हि सत्यां
174646 पूर्वानुभवगोचरसत्यार्थजातस्य स्वगोचरानुभवसंस्कारस्मृतिद्वारा
174647 एतत्कल्पीयार्थान्प्रत्यन्वयव्यतिरेककल्पनात्कार्यकारणभावसिद्धौ
174648 स्वकारकसत्तालब्धसत्ताकस्यास्य जगतः सत्यत्वे ब्रह्माद्वैतसिद्धान्तोपरोधः
174649 स्यादिति पूर्वकल्पीये पृथ्व्यादिदृश्ये परमार्थतः सति तद्भावाभावौ
174650 तदन्वयव्यतिरेकौ तद्वशात्संपन्ना स्मृतिद्वारिका एषा लौकिकन्यायप्रसिद्धा
174651 कार्यकारणता संभवति सा द्वारभूता स्मृतिरेव तु न संभवति ॥ ११ ॥
174652
174653 आब्रह्मस्तम्बपर्यन्तं दृश्यं किंचिन्न विद्यते ।
174654 यत्र तत्र कथं कीदृक् कुतः स्यात्संभवः स्मृतेः ॥ १२ ॥
174655
174656 कुतो न संभवति तत्राह - आब्रह्मेति । नेह नानास्ति किंचन एकमेवाद्वितीयम् अथात
174657 आदेशो नेति नेति यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा
174658 तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूः
174659 वाचारम्भणं विकारो नामधेयम् इत्यादिश्रुतिभिः सर्वदृश्यप्रतिषेधात्तथैव
174660 विदुषामनुभवाच्च । तथा च सह सिद्धं चतुष्टयम् इति स्मृतिदर्शितदिशा
174661 सहजतस्तत्त्वविदुषो विराजस्तत्त्वज्ञानबाधितः प्राक्तनः प्रपञ्चो मिथ्यैव संपन्नो
174662 न तस्य यथार्थस्मृतिमाधातुं तद्द्वारा सत्यसर्गं प्रति कारणीभवितुं च
174663 समर्थ इति भावः ॥ १२ ॥
174664
174665 भूत्वा भावे हि दृश्यस्य स्मरणं स्मृतिरुच्यते ।
174666 दृश्यमेव न यत्रास्ति तत्रैताः कलनाः कुतः ॥ १३ ॥
174667
174668 भूत्वा परमार्थत उत्पद्य भावे विद्यमानत्वे सति प्रमाणैस्तदनुभूय कालान्तरे

174669 स्मरणं हि स्मृतिः शास्त्रज्ञैरुच्यते। न त्वसतो भ्रान्तिकल्पितस्य
174670 तत्त्वबोधबाधितस्य च स्मृतिरस्तीत्यर्थः ॥ १३ ॥
174671
174672 अत्यन्ताभाव एवास्य दृश्यस्य किल सर्वदा।
174673 सर्वं ब्रह्मेति सत्यार्थास्तत्स्मृतेः कलनाः कुतः ॥ १४ ॥
174674
174675 स्मृतिर्न संभवत्येव तस्मादाद्या प्रजापतेः।
174676 आकारवत्त्वमेवास्य शुद्धज्ञानात्मनः कुतः ॥ १५ ॥
174677
174678 उक्तमेवाभिप्रायं सूचयन्समाधानमुपसंहरति - स्मृतिरिति ॥ १५ ॥
174679
174680 स्मर्तव्यं भाववशतः स्मृतिर्नास्त्येव लौकिकी।
174681 स्मृत्यर्थस्त्वन्यदीयोऽस्ति सत्यात्मा त्वमिमं शृणु ॥ १६ ॥
174682
174683 पूर्वजन्मन्युपासनात्मिका या स्वस्य जगच्छरीरत्वभावना तद्वशतस्तु
174684 उपासनाफलसिद्धये जगच्छरीरोऽहमिति तेनावश्यं स्मर्तव्यम्। या तु लोके विदिता सा
174685 मे माता सा मे दुहितेत्यादिस्मृतिरिवार्थप्रमाजन्या सा तस्य नास्त्येव। अन्यदीयो
174686 लौकिकः स्मृत्यर्थस्तु मातृदुहितादिर्गृहेऽस्ति। उपासनाविषयस्तु मनोराज्यकल्पो
174687 नास्तीति वैषम्यमित्यर्थः। कथं नास्ति इममर्थं त्वं शृणु ॥ १६ ॥
174688
174689 भूतस्यान्तः पदार्थस्य स्मरणं स्मृतिरुच्यते।
174690 पदार्थस्तु न चैवास्ति न भूतो न भविष्यति ॥ १७ ॥
174691
174692 भूतस्यातीतस्यापि पदार्थस्य संस्कारवशादन्तः स्मरणं स्मृतिरिति लोके उच्यते।
174693 प्रजापतेस्तु कल्पादौ वर्तमानोपि पदार्थो नास्ति न भूतोऽस्ति नापि कश्चिद्भविष्यति
174694 यत्स्मृतिः स्यादित्यर्थः। तथा चोक्तं सुरेश्वरवार्तिके
174695 तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः। अविद्यासहकारेयण नासीदस्ति
174696 भविष्यति इति। तदेतद्ब्रह्मापूर्वमनपरमनतरमबाह्यम् इति च श्रुतिः ॥ १७ ॥
174697
174698 एवं हि खल्विदं ब्रह्म परमेवाचलं यतः।
174699 अनादिमध्यपर्यन्तं कुतः स्मृत्यादयस्ततः ॥ १८ ॥
174700
174701 अचलं कूटस्थम् ॥ १८ ॥
174702
174703 सर्वात्मत्वात्पदार्थात्म चिद्व्योमक्चनं तु यत्।
174704 व्यवहारेऽप्यलं शान्तं स्मृत्या तच्छब्दितं मया ॥ १९ ॥
174705
174706 यदि सर्वात्मत्वात्स्मृत्यात्मापि ब्रह्म भव्तीति सर्वात्मदृशा उच्येत तर्ह्यस्तु
174707 नामेत्याह - सर्वात्मत्वादिति। एतदेवाभिप्रेत्य मयापि यदि वा भवेत्किंचित्स्मृत्या
174708 देहादि तस्य तत् इत्युक्तमित्याह - व्यवहारेऽपीति ॥ १९ ॥
174709
174710 तदेतत्स्मरणं नाम स्वभावकचनं हि तत् [सदित्यत्र तदिति पाठ
174711 आवश्यकः।]।
174712 तेनाभ्यस्तोऽथ बाह्यार्थः सादृश्यादवभासते ॥ २० ॥
174713
174714 अज्ञातब्रह्मस्वभावस्य परोक्षतयैव कचनं तेनोपासनात्मना
174715 पुनःपुनरभ्यस्तः सन् ब्रह्मात्मैवोपासनाफलीभूतबाह्यार्थ
174716 इवोपासनाकल्पिताकारसादृश्यादवभासते ॥ २० ॥
174717
174718 यद्यत्संवेद्यते किंचित्तत्स्वभावं स्वभावयत्।
174719 तेनावभासते योऽर्थस्तस्य स्मृत्यभिधा कृता ॥ २१ ॥
174720

174721 अज्ञानोपहितं ब्रह्म जीवेन यद्यत्संवेद्यते भ्रान्त्या स्मृतिपरंपरया वा
174722 तत्स्वभावमेवावलम्ब्य स्वं स्वभावं यत्सत् तेनाकारेण कालान्तरेण
174723 यस्तत्तालिङ्गित इवार्थोऽवभासते तस्य स्मृतिरित्यभिधा स्वस्मिन्नेव तेन कृतेत्यर्थः
174724 ॥ २१ ॥
174725
174726 अविद्यमानं भातीव यथा दृश्यं तथा स्थितिः ।
174727 भातैवाविद्यमानैव मृगतृष्णा यथोद्यता ॥ २२ ॥
174728
174729 यथा भ्रान्तानुभवे अविद्यमानं दृश्यं भातीव तथा स्मृतावपि स्थितिर्बोध्या ॥
174730 २२ ॥
174731
174732 सर्वात्मनि स्थिताः सत्ये याः कचन्ति सुसंविदः ।
174733 ता एवाभ्यासरूढार्थाः सादृश्यात्स्मृतयः स्मृताः ॥ २३ ॥
174734
174735 भ्रान्ताभ्यासेन सत्यत एव रूढार्था भ्रान्त्यनुभवेन
174736 समानविषयत्वलक्षणात्सादृश्यात्स्मृतयः स्मृताः ॥ २३ ॥
174737
174738 काकतालीयवद्भान्ति सर्वात्मनि सुसंविदः ।
174739 स्वाङ्गभूताः स्वतः स्वस्थास्ता एव स्मृतयः कृताः ॥ २४ ॥
174740
174741 काकतालीयवदाकस्मिकोद्बोधकवशेन याः संविदो भान्ति ।
174742 स्वाङ्गभूताश्चिदवयवभूता इव विषयतः पारोक्ष्यादस्वस्था अपि स्वत
174743 आपरोक्ष्यात्स्वस्था अविकृताः ॥ २४ ॥
174744
174745 यद्यत्कचति सद्रूपं [चिद्रूपमिति पाठः ।] स्वाङ्गं सर्वात्मनः
174746 स्वतः ।
174747 तदभ्यस्तार्थसादृश्यात्स्मृतिरित्युच्यते बुधैः ॥ २५ ॥
174748
174749 अनुभवे यद्यत्कचति तेनाभ्यस्तार्थेन समानाकारतया सादृश्यात् ॥ २५ ॥
174750
174751 हेतौ लब्धेऽप्यलब्धे वा पवनस्पन्दवद्विदः ।
174752 ता एवाभ्यासरूढार्थाः सादृश्यात्स्मृतयः कृताः ॥ २६ ॥
174753
174754 हेतौ उद्बोधके लब्धे अलब्धेऽपि वा । यथा पवनास्पन्दो व्यजनादिहेतौ
174755 लब्धेऽप्यलब्धेऽपि भवति तद्वत् । ता अनुभववृत्त्युपलक्षिता एव विदः कालान्तरे
174756 स्मृतयः कृताः ॥ २६ ॥
174757
174758 काकतालीयवद्भान्ति यास्ताः स्मृत्यभिधाः कृताः ।
174759 यथा तवैतेऽवयवाः कचन्ति न कचन्ति च ॥ २७ ॥
174760
174761 यदि संविदोऽवयवभूतास्तर्हि तद्वत्सदैव कुतो न कचन्ति तत्राह - काकतालीयवदिति
174762 । उद्बोधकसमवधानस्य कादाच्Xइत्कत्वेनेति भावः । अवयवा हस्तपादादयो यथा
174763 मनसस्तत्प्रवणत्वे कचन्त्यन्यप्रवणत्वे न कचन्ति तद्वदित्यर्थः ॥ २७ ॥
174764
174765 स्थिता एवात्मनि तथा सर्वाः सर्वात्मिका विदः ।
174766 मिथ्याज्ञानमया यद्वदर्था घटपटादयः ॥ २८ ॥
174767
174768 स्वप्नेन्द्रजालादौ यथा घटपटादयो मिथ्याज्ञानमयास्तादृशभ्रमस्य
174769 स्मृतिपदार्थस्य किं मूलं विचार्यत इत्यन्वयः ॥ २८ ॥
174770
174771 तद्वत्स्मृतिपदार्थस्य किं भ्रमस्य विचार्यते ।
174772 दृश्यस्यासंभवाज्ज्ञस्य स्मृतिर्नास्त्येव तत्त्वतः ॥ २९ ॥

अत एवाभ्रान्तस्य ज्ञस्य प्रजापतेः स्मृतिर्नास्त्येव ॥ २९ ॥

स तथैकघनत्वाच्च चिद्व्योमत्वाज्जगत्स्थितेः ।
यथास्थितमिदं दृश्यमस्त्येवाज्ञस्य संप्रति ॥ ३० ॥

स तत्त्ववित्तथैव यथापूर्वं निर्विकार एवास्ते । जगत्स्थितेस्तद्दृशा
चिद्व्योममात्रत्वादित्यर्थः । अज्ञस्य तु तद्वैपरीत्यमित्याह - यथास्थितमिति ॥ ३० ॥

न मोक्षोपायकथनं च न जानामि तत्स्थितिम् ।
संदेहादिव जिज्ञासुस्तावन्मोक्षकथोच्यते ॥ ३१ ॥

तत्कुतस्तत्राह - नेति । तस्य तत्त्वविदः स्थितिम् । अत एव स दैवात्साधनचतुष्टयं
प्राप्य संदेहाद्यावज्जिज्ञासुरिव भवति तावन्मोक्षकथा तस्मै गुरुणोच्यते ॥ ३१ ॥

यावद्दृश्यं स्मृतिश्चैव संस्मृतिश्चास्य शाम्यति ।
अविद्यायास्तु मौर्ख्यस्य विमोहस्यात्यसंभवात् ॥ ३२ ॥

यथा अज्ञास्तत्त्वज्ञस्थितिं न जानन्ति तथा वयं तत्त्वज्ञा अपि अज्ञनिश्चयं न
जानीम इत्याह - अविद्याया इति ॥ ३२ ॥

अज्ञस्थो निश्चयोऽस्माकं न कदाचन गोचरः ।
यच्च यद्विषये नास्ति तन्नैवानुभवत्यसौ ॥ ३३ ॥

रजन्यनुभवो भानोर्भवत्यङ्ग कथं वद ।
भातं वस्तुस्वरूपात्म चिन्मात्रे किंचिदेव यत् ॥ ३४ ॥

इदानीं स्मृतिहेतुसंस्कारं प्रमार्ष्टुं तत्स्वरूपमाह - भातमिति ।
अन्तःकरणोपहितचिन्मात्रे बाह्यवस्तुस्वरूपात्म यत्किंचिदेव् भातं
तच्चेत्पुनःपुनर्व्यवहारेणाभ्यस्तं तादृशार्थसादृश्याद्वासितं चित्तं
तत्संस्कार इति स्मृतमित्यर्थः ॥ ३४ ॥

तदभ्यस्तार्थसादृश्यात्तत्संस्कार इति स्मृतम् ।
आत्मस्वभावभूतानामपि चिद्व्योमरूपिणाम् ॥ ३५ ॥

तत्र परिकल्प्यानां सर्वेषां बाह्यार्थानां तत्त्वज्ञानेनात्मस्वभावभूतानां
बाधितानुवृत्त्या दग्धपटन्यायेनाभासेऽपि वस्तुतोऽनवस्थितेस्तत्सादृश्यस्य चित्ते
मार्जनान्न संस्कारस्तत्त्वविदां संभवतीति शेषः ॥ ३५ ॥

सर्वेषां परिकल्प्यानामाभासेऽप्यनवस्थितेः ।
एवं न संभवत्येव जगत्किंचित्कदाचन ॥ ३६ ॥

तथा च यत्फलितं तदाह - एवमिति ॥ ३६ ॥

दृष्टं मृगतृषेवाम्बु न तु तत्परमार्थतः ।
यदा त्वयं तदा स्वप्ने सर्गादौ चावभासते ॥ ३७ ॥

तथा च प्रतिज्ञातं सिद्धमित्याह - यदा त्विति । अयमर्थः सिद्ध इति शेषः ॥ ३७ ॥

चिद्व्योमैव परं सर्गपर्यायं स्वात्मनि स्थितम् ।
चिद्व्योमैवेत्थमाभातं न च्युतं सत्स्वरूपतः ॥ ३८ ॥

174825 आत्मनात्मनि रूपं वा सद्रूपमिव संस्थितम् |
174826 सर्गादावेव कचिते मिथ्या कचदपि स्थितम् || ३९ ||
174827
174828 आत्मना आत्मनि इत्थमाभातमिति पूर्वत्रान्वयः | अथवा मिथ्या कचदिव स्थितं
174829 जगद्रूपं चासद्रूपं ब्रह्म भूत्वा स्थितम् || ३९ ||
174830
174831 अतः कुतः क्वचिन्नाम हेयादेयादिभासनम् |
174832 नेदमाकारवत्किंचिन्नापि स्मृत्यात्मकं क्वचित् || ४० ||
174833
174834 कारणाभावतो भाति स्वरूपं परमात्मनः |
174835 आकारवत्त्वे यद्दुःखं भवेत्स्मृत्यां तदेव च || ४१ ||
174836
174837 न तु स्मृत्यात्मकताप्यस्य किमर्थं प्रत्याख्यायते तत्राह - आकारवत्त्वे इति |
174838 स्मृतेनापि भार्यापुत्रादिमरणेन दुःखदर्शनादिति भावः || ४१ ||
174839
174840 द्वयमेतदसत्तस्माद्बन्धो नाम न विद्यते |
174841 चिद्व्योम्नि भूतव्योमाभे शून्य एव यथास्थितम् || ४२ ||
174842
174843 यथास्थितं जीवन्मुक्तानां यावज्जीवं व्यवहारक्षमं स्थितमित्युत्तरत्रान्वयः || ४२
174844 | |
174845
174846 स्थितं स्वरूपमजहद्भुवनार्काचलादिकम् |
174847 यथास्थितोग्रदिक्कालं जगत्स्वं रूपमत्यजत् || ४३ ||
174848
174849 स्वमेवात्यजतो रूपं चिद्व्योम्न उदरे स्थितम् |
174850 स्वानुभूत्येकमात्रात्म प्रमातृस्वाप्नपत्तनम् || ४४ ||
174851
174852 स्वप्नप्रपञ्चदृष्टान्तोऽप्यत्र सुसदृश इत्याह - स्वमेवेति || ४४ ||
174853
174854 अपृथ्व्यादि कुतस्तत्र किल पृथ्व्यादयो वद |
174855 तद्भाति केवलं शान्तं चिदाकाशं तथात्मनि || ४५ ||
174856
174857 साम्यमेवोपपादयति - अपृथ्व्यादीति || ४५ ||
174858
174859 सर्वादौ स्वप्नकाले च पृथ्व्यादेः संभवः कुतः |
174860 उद्भूयेव जगद्रूपाद्ब्रह्मसत्तात्मनात्मनि || ४६ ||
174861
174862 करोति पृथ्व्याद्यभिधाः पश्चात्सत्यार्थदा इव |
174863 न स्मृत्यात्म न साकारं पृथ्व्यादीनामसंभवात् |
174864 न भ्रान्तिर्न विवर्तादि जगद्ब्रह्मात्म केवलम् || ४७ ||
174865
174866 ब्रह्मेदमाकचति चारुजगत्स्वरूपं तच्चैकमेव कचनाकचनात्मनिष्ठम् |
174867 दृश्याभमप्यमलमेव नभः प्रशान्तं नित्योदितं
174868 प्रलयसर्गमयोदयात्म || ४८ ||
174869
174870 इदं ब्रह्मैव चारुजगत्स्वरूपमाकचति तच्च कचनाकचनयोः
174871 सर्गप्रलययोरात्मन्यविकृतस्वभावनिष्ठं तदेकरूपमेव दृश्याभं
174872 भातमप्यमलं नभ एव नित्यमनादिकालतः
174873 प्रलयसर्गमयोदयात्मकमुदितमज्ञानामित्यर्थः || ४८ ||
174874
174875 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० नि० उ० जगतो ब्रह्मत्वप्रतिपादनं
174876 नाम द्विसप्तत्यधिकशततमः सर्गः || १७२ ||

174877
174878 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
174879 ब्रह्मत्वप्रतिपादनं नाम द्विसप्तत्यधिकशततमः सर्गः ॥ १७२ ॥
174880
174881 त्रिसप्तत्यधिकशततमः सर्गः १७३
174882
174883 श्रीराम उवाच ।
174884
174885 सर्वानुभवरूपस्य तथा सर्वात्मनोऽप्ययम् ।
174886 अनन्तस्यात्मतत्त्वस्य देहेऽपि किमहंग्रहः ॥ १ ॥
174887
174888 यथा चितोऽपि देहादि जडभावक्रियाग्रहः ।
174889 यथा सर्वात्मकत्वं च तथेह प्रतिपाद्यते ॥
174890
174891 यदि स्वप्रकाशचिच्चमत्कार एव जगत्तर्हि चितः सर्वत्र तुल्यतया अहंभावग्रहो
174892 युक्तः । ग्रह आग्रहोऽभिनिवेशः । देहे एवातिशयेनाहंभावाग्रहोऽन्यत्र नेति नियमः
174893 कुत इत्येकः प्रश्नः ॥ १ ॥
174894
174895 चितः पाषाणकाष्ठत्वं स्वप्नादिषु कथं भवेत् ।
174896 इदं पाषाणकाष्ठादि कथं नास्त्यस्ति वा कथम् ॥ २ ॥
174897
174898 एवं चितः अचिद्रूपपाषाणकाष्ठादिभावाग्रहश्च कुतः । चिद्भावस्य
174899 हातुमशक्यत्वात् । अचिद्रूपस्य स्वीकर्तुमशक्यत्वाच्चेति द्वितीयः । एवं चित एव
174900 सार्वात्म्ये इदं पाषाणकाष्ठादि नास्तित्वं कथमापद्यते । चितोऽपह्नवासंभवात् ।
174901 एवं सर्वात्मकचिद्विरुद्धमचिद्रूपं पाषाणकाष्ठाद्यस्ति वा कथम् । येन
174902 सार्वात्म्यं स्यादिति द्वौ प्रश्नौ ॥ २ ॥
174903
174904 श्रीवसिष्ठ उवाच ।
174905
174906 शरीरिणो यथा हस्ते हस्ततायां यथाग्रहः ।
174907 सर्वात्मनस्तथा देहे देहतायां तथाग्रहः ॥ ३ ॥
174908
174909 सर्वशरीरस्याहंतया प्रथायां तुल्यायां हस्ते एव हस्तत्वं पादे एव पादत्वं
174910 नैतरत्रेति जातिकर्म संस्थानादीनां यथा व्यवस्थाग्रहः
174911 अनादितत्तदाकारसंस्कारव्यवस्थयैव नान्येन हेतुना तथा देहे
174912 देहतायामहंतादौ चाग्रहो बोध्य इत्याशयेन दृष्टान्तप्रपञ्चनेनाद्यौ
174913 प्रश्नौ समाधत्ते - शरारिण इत्यादिना ।
174914 देहतावृक्षतादिशब्दास्तत्तदहंतापराः । अत्र सर्वत्र विषयाध्यासे विषयाध्यासो
174915 ज्ञानाध्यासे ज्ञानाध्यासो दृष्टान्त इति द्वौ द्वौ यथातथाशब्दौ प्रयुक्ताविति
174916 बोध्यम् ॥ ३ ॥
174917
174918 पादपस्य यथा पत्रे पत्रतायां यथाग्रहः ।
174919 सर्वात्मनस्तथा वृक्षे वृक्षतायां तथाग्रहः ॥ ४ ॥
174920
174921 वृक्षाकाशादावप्यभिमानिजीवसत्त्वात्तत्तद्दशाध्यासा उदाहृताः ॥ ४ ॥
174922
174923 आकाशस्य यथा शून्ये शून्यतायां यथाग्रहः ।
174924 सर्वात्मनस्तथा द्रव्ये द्रव्यतायां तथाग्रहः ॥ ५ ॥
174925
174926 द्रव्ये मणिमुक्तास्वर्णादिधने । द्रव्यतायां प्रयत्नोपार्ज्यतालक्षणभव्यतायाम् ॥ ५
174927 ।।
174928

174929 स्वप्नोचितः स्वप्नपुरे रूपतायां यथाग्रहः ।
174930 सर्वात्मनस्तथा स्वप्नजाग्रदादौ तथाग्रहः ॥ ६ ॥
174931
174932 अरूपचित्तोपादानकत्वादरूपत्वेन भवितुमुचिते स्वप्नपुरे रूपतायां साकारतायां
174933 यथा आग्रहः स्वप्नभुजः । स्वप्नजागरादौ अवस्थात्रये ॥ ६ ॥
174934
174935 यथागेन्द्रे दृषद्वृक्षवार्यादौ स तथाग्रहः ।
174936 तथा सर्वात्मनोऽगेन्द्रपुरतायां तथाग्रहः ॥ ७ ॥
174937
174938 अगेन्द्रे पुरे च विद्यमाने दृषदादौ स तथा प्रसिद्ध आग्रहो यथेत्यर्थः ।
174939 अद्रितायां पुरतायां च तदभिमानिन आग्रहः ॥ ७ ॥
174940
174941 शरीरस्य यथा केशनखादिषु यथाग्रहः ।
174942 सर्वात्मनस्तथा काष्ठदृषदादौ तथाग्रहः ॥ ८ ॥
174943
174944 अन्त्यौ प्रश्नावपि समाधत्ते - शरीरस्येत्यादिना । यथा चेतनत्वेनाभिमतस्यापि
174945 शरीरस्य केशनखादिषु यथा अचेतनत्वाग्रहस्तथा चिद्रूपस्यापि सर्वात्मनः
174946 काष्ठदृषदादौ तथाग्रहः अचेतनत्वाग्रहः । चिता चित्त्वस्य
174947 हातुमशक्यत्वमचित्त्वस्य स्वीकर्तुमशक्यत्वं च
174948 मायागतावरणविक्षेपशक्तिभ्यामघटितस्यापि घटनात्परिहर्तव्यमिति भावः ॥ ८ ॥
174949
174950 चित एव यथा स्वप्ने भवेत्काष्ठोपलादिता ।
174951 चिदाकाशस्य सर्गादौ तथैवावयवादिता ॥ ९ ॥
174952
174953 चितस्तद्विरुद्धमचित्त्वमिव निरवयवायाः सावयवत्वमपि स्वप्नानुभवबलादेव
174954 भवतीति स्वीकार्यमित्याह - चित एवेति । चितः सकाशादेव ॥ ९ ॥
174955
174956 चेतनाचेतनात्मैकं पुरुषस्य यथा वपुः ।
174957 नखकेशजलाकाशधर्ममाकारभासुरम् ॥ १० ॥
174958
174959 किं च मायाशबलस्य
174960 चेतनाचेतनोभयात्मकैकवस्तुत्वाद्प्युभयव्यवहारप्रवर्तकता न
174961 विरुद्धेत्याशयेनाह - चेतनेति । न च विरोधः ॥ १० ॥
174962
174963 चेतनाचेतनात्मैकं तथा सर्वात्मनो वपुः ।
174964 जङ्गमं स्थावरमयं किंतु नित्यमनाकृति ॥ ११ ॥
174965
174966 यथास्थितं शाम्यतीदं सम्यग्ज्ञानवतो जगत् ।
174967 स्वप्ने स्वप्नपरिज्ञातुर्यथा दृष्टार्थसंभ्रमः ॥ १२ ॥
174968
174969 अत एव तत्त्वतस्तज्ज्ञानात्सर्वे विरुद्धधर्माः शाम्यन्तीत्याह - यथास्थितमिति ॥ १२
174970 ||
174971
174972 चिन्मात्राकाशमेवेदं न द्रष्टास्ति न दृश्यता ।
174973 इति मौनमलं स्वप्नद्रष्टुर्यत्सा प्रबुद्धता ॥ १३ ॥
174974
174975 स्वप्नद्रष्टुर्या सा प्रातः प्रसिद्धा प्रबुद्धता सैव न द्रष्टास्ति न दृश्यता
174976 किंत्विदं सर्वं चिन्मात्राकाशमेवेति निश्चये अलं समर्थेत्यर्थः ॥ १३ ॥
174977
174978 कल्पकोटिसहस्राणि सर्गा आयान्ति यान्ति च ।
174979 त एवान्ये च चिद्व्योम्नि जलावर्ता इवार्णवे ॥ १४ ॥
174980

174981 सहस्रकोटिशोऽप्यागतैरीदृशाध्यासैर्नाधिष्ठानैकरूप्यक्षतिरित्याह -
174982 कल्पकोटीति ॥ १४ ॥
174983
174984 करोत्यब्धौ यथोर्म्यादौ नाना कचकचं वपुः ।
174985 चित्करोति तथा संज्ञाः सर्गाद्याश्चेतने निजे ॥ १५ ॥
174986
174987 करोति सलिलमिति शेषः । निजे चेतने मायाशबलचिति ॥ १५ ॥
174988
174989 यथास्थितमिदं विश्वं ब्रह्मैवानामयं सदा ।
174990 तत्त्वज्ञं प्रत्यतत्त्वज्ञजनतानिश्चयादृते ॥ १६ ॥
174991
174992 नाहं तरङ्गः सलिलमहमित्येव युक्तितः ।
174993 बुद्धं येन तरङ्गेन कुतस्तस्य तरङ्गता ॥ १७ ॥
174994
174995 तरङ्गेन । प्रातिपदिकान्तनुम्विभक्तिषु [अत्रापि
174996 पूर्वपदादित्यनुवृत्तेरत्रोदाहरणे अस्य कथं प्रवृत्तिरिति विचारणीयम् ।] च
174997 इत्यत्रापि पूर्वपदात्संज्ञायाम् इति सूत्रादग इत्यनुवृत्तेर्न णत्वम् । अचेतनस्यापि
174998 चेतनत्वारोपादियमुक्तिः ॥ १७ ॥
174999
175000 ब्रह्मणोऽस्य तरङ्गत्वमिवाभानं यतस्ततः ।
175001 तरङ्गत्वातरङ्गत्वे ब्राह्म्यौ शक्ती स्थितिं गते ॥ १८ ॥
175002
175003 तरङ्गशब्दास्तत्सदृश्जगत्पराः ॥ १८ ॥
175004
175005 चिद्व्योम्नोऽत्यजतो रूपं स्वप्नवद्व्यस्तवेदनम् ।
175006 तदिदं हि मनो राम ब्रह्मेत्युक्तः पितामहः ॥ १९ ॥
175007
175008 व्यस्तवेदनमन्योन्यधर्मविनिमयेन व्यत्यस्तचेतनभावं मनःसमष्ट्युपहितं
175009 यद्रूपं तदिदं मनो ब्रह्मेति शब्दैः पितामह उक्तः ॥ १९ ॥
175010
175011 एवमाद्यः प्रजानाथो निराकारो निरामयः ।
175012 चिन्मात्ररूपसंकल्पपुरव्कारणोज्झितः ॥ २० ॥
175013
175014 येनाङ्गदत्वं नास्तीति बुद्धं हेमाङ्गदेन वै ।
175015 अङ्गदत्वं कुतस्तस्य तस्य शुद्धैव हेमता ॥ २१ ॥
175016
175017 अजे संकल्पमात्रात्म चिन्मात्रव्योमदेहिनि ।
175018 अहं त्वं जगदित्यादि यद्विभातं तदेव तत् ॥ २२ ॥
175019
175020 समष्टेश्चिन्मात्रत्वे तद्व्यष्टीनामस्मदादीनां तदनुक्तमपि सिद्धमित्याह - अजे
175021 इति ॥ २२ ॥
175022
175023 चिच्चमत्कृअयो भान्ति याश्चिद्व्योमनि शून्यताः ।
175024 एतास्ताः सर्गसंहारस्थितिसंरम्भसंविदः ॥ २३ ॥
175025
175026 अच्छं चिन्मात्रनभसः कचनं स्वयमेव तत् ।
175027 स्वप्नाभं चित्ततामात्रं स एष प्रतिपामहः ॥ २४ ॥
175028
175029 प्रपितामहो हिरण्यगर्भः ॥ २४ ॥
175030
175031 यथा तरङ्गस्तेनैव रूपेणान्येन वाऽनिशम् ।
175032 स्फुरत्येवमनाद्यन्तः सर्गप्रलयविभ्रमः ॥ २५ ॥

175033
175034 चिद्व्योम्नः कचनं कान्तं यद्विराडिति शब्दितम् ।
175035 भवेत्संकल्पपुरवत्तस्य कुर्यान्मनोऽपि वै ॥ २६ ॥
175036
175037 विराडपि तादृगेवेत्याह - चिद्व्योम्न इति । तस्य विराजो मन्नोह्हिरण्यगर्भोपि
175038 यत्कुर्याद्भुवनभूतग्रामादि तदपि संकल्पपुरवदित्यर्थः ॥ २६ ॥
175039
175040 सर्गः स्वप्नः स्वप्न एव् जाग्रद्देहः स एव च ।
175041 घनं सुषुप्तं तैमिर्याद्यथा संवेदनं भवेत् ॥ २७ ॥
175042
175043 तथा च स विराडेव सर्गः स एव स्वप्नः स्वप्न एव जाग्रद्व्यष्टिसमष्टिदेहः
175044 संपन्नः । यथा घनं सुषुप्तं निद्रातिशयलक्षणतैमिर्यात्स्वप्नसंवेदनं
175045 भवेत्तथा प्रलये अविद्यातिमिरावृत आत्मैव जगत्संवेदनं भवेदित्यर्थः ॥ २७ ॥
175046
175047 तस्य कल्पान्तरजनी शिरोरुहतयोदिता ।
175048 प्रकाशतमसी कालक्रियाख्याः स्वाङ्गसंधयः ॥ २८ ॥
175049
175050 जगत्सर्वं विराजोऽङ्गतया वर्णयति - तस्येत्यादिना । तस्य विराड्वेषस्य
175051 परमात्मनः कल्पान्ता अवान्तरप्रलयास्तद्रूपा चतुर्मुखस्य रजनी शिरोरुहतया
175052 केशतया उदिता प्राथमिकत्वात् । प्रकाशतमसी दिनरात्री अङ्गसंधयः ॥ २८ ॥
175053
175054 तस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः ।
175055 चन्द्रार्कौ दृगू दिशौ श्रोत्रे कल्पनेति विजृम्भिता ॥ २९ ॥
175056
175057 दिशौ प्राचीप्रतीच्यौ श्रोत्रे इत्यनया रीत्या मनःकल्पनैव विराडाकारेण विजृम्भिता ॥
175058 २९ ॥
175059
175060 एवं सम्यग्दृश्यमानो व्योमात्मा वितताकृतिः ।
175061 अस्मत्संकल्पशैलाभो विराड् स्वप्नाकृतिस्थितः ॥ ३० ॥
175062
175063 तथा चास्मत्स्वप्नतुल्यता तस्य सिद्धेति निष्प्रपञ्चतैव परमार्थ इत्याह - एवमिति
175064 ॥ ३० ॥
175065
175066 यच्च चेतच्चिदाकाशे स्वयं कचकचायते ।
175067 तदेतज्जगदित्येवं तेनात्मैवानुभूयते ॥ ३१ ॥
175068
175069 यच्चेतत् चेतनात्मकजीवभावापन्नं सत् स्वयं कचकचायते अतिशयेन दीप्यते ।
175070 दीप्त्यर्थात्कचेः पचाद्यचि डाचि द्वित्वे डाजन्तस्यापि भृशादित्वकल्पनात्क्यङ् ॥ ३१ ॥
175071
175072 विराडात्मैवमाकाशं भाति चिन्मयमाततम् ।
175073 स्वभावस्वप्ननगरं नगनागमयात्मकम् ॥ ३२ ॥
175074
175075 चिन्मयमाततमाकाशमेव एवंरीत्या विराडात्मा भाति । एवंरीत्या दर्शने
175076 विराडात्म चिन्मयमाकाशमेव भातीति वा ॥ ३२ ॥
175077
175078 अनुभवितैवानुभवं सत्यं स्वात्मानमप्यसन्तमिव ।
175079 अनुभवतीयत्त्वेन स्वप्ननटः स्वप्नदेशमिव ॥ ३३ ॥
175080
175081 अनुभविता चिदात्मैव स्वस्वरूपमनुभवैकरसं सत्यं स्वात्मानमपि
175082 मायावरणादसन्तमिव कृत्वा इयत्त्वेन परिच्छिन्नप्रपञ्चभावेनानुभवति यथा
175083 स्वप्नप्राप्तो नटः स्वात्मानमेव स्वातिरिक्तनाट्यद्रष्ट्टसमाजपूर्णं स्वप्नदेशं
175084 कल्पयित्वा तत्र स्वनाट्यं स्वयमेवानुभवति तद्वदित्यर्थः ॥ ३३ ॥

175085
175086 वेदान्तार्हतसांख्यसौगतगुरुत्र्यक्षादिसूक्ता दृशो ब्रह्मैव स्फुरितं
175087 तथात्मकलया स्तादात्मनित्यं यतः।
175088 तेषां चात्मविदोऽनुरूपमखिलं स्वर्गं फलं तद्भवत्यस्य ब्रह्मण
175089 ईदृगेव महिमा सर्वात्म यत्तद्वपुः॥ ३४॥
175090
175091 अस्मिन्नर्थे सर्ववादिसिद्धान्ताविरोधः सर्वाभिलक्षितफलसिद्धिश्चेत एवेत्याह -
175092 वेदान्तेति। वेदान्ताः शुद्धब्रह्मपराः सर्वज्ञेश्वरपरा उपासनापराश्च। आर्हता
175093 दिगम्बराः। सांख्याः कापिला योगिनश्च। सौगताः
175094 सौत्रान्तिकवैभाषिकयोगाचारमाध्यमिकाः। एतेषां ये गुरवो
175095 व्यासार्हत्कपिलपतञ्जलिबुद्धाः। त्र्यक्षः पशुपतिर्भैरवो वा
175096 आगमशास्त्रभेदनिर्माता। आदिपदाद्वैष्णवहिरण्यगर्भाद्या आगमनिर्मातारो
175097 विष्ण्वादयो गृह्यन्ते। तैः सुष्ठु उक्ता स्वस्वागमेषु प्रतिपादिता या यादृशस्ताः
175098 सर्वा भूत्वा अस्मदभिमतं ब्रह्मैव तत्तद्वासनालक्षणतदात्मकतया स्फुरितम्।
175099 तेषां च वादिनामात्मविदः स्वस्वनिश्चयस्यानुरूपं स्वर्गं
175100 पारलौकिकसुखरूपमखिलमैहलौकिकं च सर्वं फलं तद्ब्रह्मैव भवति
175101 यतस्तदात्मरूपमेव तैस्तैस्तथा तथा फलं स्तादित्याशास्यते इत्यर्थः। अस्य
175102 ब्रह्मण ईदृगेव महिमा प्रसिद्धो यद्यस्माद्ब्रह्म
175103 एवंवपुर्मायाशबलस्वरूपं सर्वात्मकमित्यर्थः॥ ३४॥
175104
175105 इत्यार्षे श्रीवासिष्ठ वा० दे० मो० नि० उ० ब्रह्मगीतासु परमार्थोपदेशो नाम
175106 त्रिसप्तत्यधिकशततमः सर्गः॥ १७३॥
175107
175108 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
175109 परमार्थोपदेशो नाम त्रिसप्तत्यधिकशततमः सर्गः॥ १७३॥
175110
175111
175112 चतुःसप्तत्यधिकशततमः सर्गः १७४
175113
175114 श्रीवसिष्ठ उवाच।
175115
175116 सर्गादौ स्वप्नसंवित्त्या चिदेवाभाति केवला।
175117 जगदित्यवभासेव ब्रह्मैवातो जगत्त्रयम्॥ १॥
175118
175119 स्वप्नस्येव प्रबोधेन कृते दृश्यस्य मार्जने।
175120 परिशिष्टश्चिदात्मैको वर्ण्यतेऽत्र परं पदम्॥
175121
175122 यतः सर्गादौ केवला चिदेव स्वप्नवित्संवित्त्या जगदित्यवभासेऽवभातीति प्रसाधितमतो
175123 जगत्त्रयं ब्रह्मैवेति प्रबोधे कैवल्यं सिद्धमित्यर्थः॥ १॥
175124
175125 सर्गास्तरङ्गा ब्रह्माब्धेस्तेषु संवेदनं द्रवः।
175126 सर्गान्तरं सुखाद्यात्म द्वैतैक्यादीतरत्कुतः॥ २॥
175127
175128 अज्ञप्रसिद्धो दुःखात्मकः सर्गो बोधेन प्रमार्जितः। यत्तु तदनन्तरमपि
175129 जीवमुक्तानां व्यवहाराय जगत्प्रसिद्धं तदानन्दसच्चिदेकरसत्वात्सर्गान्तरमेव
175130 तत्तत्र द्वैतैक्यादीतरत् असुखरूपं कुतो निमित्तात्स्यादित्यर्थः॥ २॥
175131
175132 यथा स्वप्नसुषुप्तात्म निद्रारूपकमेव खम्।
175133 दृश्यादृश्यांशमेकात्मरूपं चिन्नभसस्तथा॥ ३॥
175134
175135 तेषां तादृशसर्गैणैकरस्याविघाते अज्ञदृशा प्रसिद्धतरं दृष्टान्तमाह
175136 - यथेति। यथा स्वप्ने सुषुप्तिस्वप्नभेदाभासेऽपि निद्रैकरस्यं न विहन्यते

तद्वद्विदेहमुक्तिजीवन्मुक्तिभेदप्रतिभासेऽपि सुखैकरस्यं न विहन्यत इत्यर्थः ॥ ३ ॥

जाग्रति स्वप्ननगरं यादृक्तादृगिदं जगत् ।
परिज्ञातं भवेदत्र कथमास्था विवेकिनः ॥ ४ ॥

कुतो न दुःखमिति चेद्बाधिते विषये विदुष आस्थाभावादित्याह - जाग्रतीति ॥ ४ ॥

सर्गादौ सर्गसंवित्तेर्यथाभूतार्थवेदनात् ।
जाग्रति स्वाप्ननगरं यादृशं तादृशं जगत् ॥ ५ ॥

यादृशं यथा बाधितम् ॥ ५ ॥

जाग्रति स्वप्ननगरवासना विदिधा यथा ।
सत्या अपि न सत्यास्ता जाग्रत्यो वासनास्तथा ॥ ६ ॥

दग्धपटवद्वासनामात्रेण स्थितिस्तु न दुःखसमर्थेत्याशयेनाह - जाग्रतीति ।
जाग्रत्यो जाग्रतो भोगाभासार्थमाविर्भूताः ॥ ६ ॥

अन्यथोपप्रपद्येह कल्प्यते यदि कारणम् ।
तत्किं नेदीयसी नात्र भ्रान्तता कल्प्यते तथा ॥ ७ ॥

ननु जगतो भ्रान्तिमात्रत्वे तत्त्वबोधेन तन्मूलाज्ञानोच्छेदाद्बाधः स्यात् ।
प्रधानपरमाण्वादिकारणान्तरैरन्यथोपपत्त्या भ्रान्तित्वाकल्पने तु न
बाधप्रसक्तिरिति ततो दुःखं स्यादेवेत्याशङ्क्याह - अन्यथेति । उपप्रपद्य
उपपाद्य । स्वाप्ने जगति प्रसिद्धतरत्वाल्लाघवात् वाचारम्भणं विकारो नामधेयम्
तस्य तत्र आवसथास्त्रयः स्वप्नाः मायां तु प्रकृतिं विन्द्यात् भूयश्चान्ते
विश्वमायानिवृत्तिः इत्यादिश्रुतिबोधितत्वाच्च कल्पनान्तरेभ्यो नेदीयसी
शीघ्रोपस्थितिकत्वेन संनिहिततरा भ्रान्तिमात्रतैव जगतः किं न कल्प्यत इत्यर्थः ॥ ७
।।

स्वानुभूयत एवेयं भ्रान्तिः स्वप्नजगत्स्विव ।
कारणं त्वनुमासाध्यं क्वानुमाऽनुभवाधिका ॥ ८ ॥

किं च वाचारम्भणश्रुतिदर्शितन्यायेन पर्यालोचने
मृत्तन्त्वादिव्यतिरिक्तघटपटाद्यदर्शनात्तद्विषये स्वा स्वीया इयं भ्रान्तिरिति
प्रत्यक्षमनुभूयत एव प्रत्यक्षानुभवापेक्षया अधिका बलवत्तरा अनुमा क्व
दृष्टा यद्बलात्प्रधानपरमाण्वादयः सिद्ध्येरन्नित्यर्थः ॥ ८ ॥

दृष्टमप्यस्ति यन्नेशे न चात्मनि विचारितम् ।
अन्यथानुपपत्त्यान्तर्भ्रान्त्यात्म स्वप्नशैलवत् ॥ ९ ॥

किं च जगत्स्वप्नशैलवदन्तर्भ्रान्त्यात्पेत्यत्र दृष्टं प्रत्यक्षं लिङ्गमप्यस्ति ।
यद्यस्मात्कारणादयं जन आत्मनि इष्टमेव स्रष्टुमनिष्टं सर्गं निवारयितुं च न
ईशे नेष्टे । छान्दसः पुरुषव्यत्ययः । अहं न ईशे इत्यनुभवतीति वा अध्याहार्यम् ।
न च तेन प्राग्विचारितं निश्चितमेव दृश्यते अकस्मादेव यत्किंचिदर्थदर्शनात् ।
सर्गस्य कारणान्तराधीनत्वे हि तादृशकारणसंपत्तिसाध्यं जना इष्टमेव
सृजेयुरनिष्टं च वारयेयुराकस्मिकं च दृश्यं न पश्येयुः ।
तल्लिङ्गत्रयान्यथानुपपत्त्या स्वप्नशैलवद्भ्रान्तिरित्येव सिद्धमित्यर्थः ॥ ९ ॥

निर्विकल्पं परं जाड्यं सविकल्पं तु संसृतिः ।
ध्यानं तेन समाधानं न संभवति किंचन ॥ १० ॥

175189 अत एव ध्यानमात्रेण निर्विकल्पसमाधिपर्यन्तेन जगद्बाधं विनैव निस्तारं
175190 मन्यमाना योगिनोऽपि निरस्ता इत्याह - निर्विकल्पमिति। योगिनां ह्यात्मा
175191 अनानन्दचिद्रूपः साक्षादनुभूतोऽप्यपुरुषार्थ इति तत्साक्षात्कारकल्पने
175192 प्रयोजनाभावान्नित्यानुमेये तस्मिन् भाट्टज्ञानकल्पे नित्यापरोक्षे जडतैव
175193 परिशिष्यते। तत्र चित्तस्य निर्विकल्पं समाधानं संपन्नमपि परं जाड्यमेव।
175194 सविकल्पं तु संपन्नं संसृतिः संसार एव। तेन हेतुना तद्ध्यानं तेन
175195 समाधानं च संपन्नमपि किंचन पुरुषार्थरूपं न संभवतीत्यर्थः॥ १०॥
175196
175197 सचेत्यं संसृतिर्ध्यानमचेत्यं तूपलस्थिति।
175198 मोक्षो नोपलवद्ध्यानं न विकल्पात्मकं ततः॥ ११॥
175199
175200 तदेव स्पष्टयति - सचेत्यमिति। पराभिमतमनानन्दरूपं मोक्षे
175201 परिशिष्यमाणं यत् ज्ञानं तन्मोक्षः पुरुषार्थविशेषो न। एतेनात्मनो
175202 ज्ञानस्वभावतामनभ्युपगच्छतां वैशेषिकादीनामभिमतोऽपि मोक्षो नितरां
175203 निरस्तः। विकल्पात्मकं सचेत्यं तु ततोऽपि मोक्षो न बन्धाविशेषादित्यर्थः॥ ११॥
175204
175205 न च नामोपलाभेन निर्विकल्पसमाधिना।
175206 अन्यदासाद्यते किंचिल्लभ्यते किं स्वनिद्रया॥ १२॥
175207
175208 योगिसंमतसमाध्यभ्यासेन भवदभिमतमोक्ष एव किं न लभ्यते तत्राह - न
175209 च नामेति। अन्यत्सांख्याभिमतान्यदस्मदभिमतं यदि लभ्येत तर्हि स्वनिद्रयापि
175210 लभ्येत। चित्तचाञ्चल्यनिवृत्तेरज्ञानावरणानिवृत्तेश्चोभयत्रापि साम्यादिति
175211 भावः॥ १२॥
175212
175213 तस्मात्सम्यक्परिज्ञानाद्भ्रान्तिमात्रं विवेकिनः।
175214 सर्गात्यन्तासंभवतो यो जीवन्मुक्ततोदयः॥ १३॥
175215
175216 तस्मात्परोक्तपक्षेष्वनिर्मोक्षदोषानिर्मोक्षाद्भ्रान्तिमात्रं जगत्।
175217 न्निरतिशयानन्दसच्चिदेकरस एवात्मा। तत्त्वज्ञानेन भ्रान्तिहेत्वज्ञानावरणक्षयेण
175218 भ्रान्तिक्षये परिशिष्यमाणः परमपुरुषार्थ इत्यस्मत्पक्ष एव सर्वेषां
175219 शरणमित्युपसंहरति - तस्मादित्यादिना। यो जीवन्मुक्ततोदयः स एव
175220 निर्विकल्पसमाधानं तदेव वानन्तं निर्वाणमित्युत्तरेणान्वयः॥ १३॥
175221
175222 निर्विकल्पं समाधानं तदनन्तमिहोच्यते।
175223 यथास्थितमविक्षुब्धमासनं सर्वभासनम्॥ १४॥
175224
175225 तदनन्तसुषुप्ताख्यं तत्तुरीयमिति स्मृतम्।
175226 तन्निर्वाणमिति प्रोक्तं तन्मोक्ष इति शब्दितम्॥ १५॥
175227
175228 सम्यग्बोधैकघनता यासौ ध्यानमिति स्मृतम्।
175229 दृश्यात्यन्तासंभवात्म बोधमाहुः परं पदम्॥ १६॥
175230
175231 आहुः यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा
175232 इत्यादिश्रुतयस्तत्त्वविदश्चेत्यर्थः॥ १६॥
175233
175234 तच्च नोपलवज्जाड्यं न सुषुप्तोपमं भवेत्।
175235 न निर्विकल्पं न च वा सविकल्पं न वाऽप्यसत्॥ १७॥
175236
175237 तच्च गौतमकणादाभ्युपगतमुक्तिरिवोपलवज्जाड्यं न।
175238 हैरण्यगर्भोपगतप्रकृतिप्रलयवत्सुषुप्तोपमं न।
175239 पातञ्जलोपगतमुक्तिवन्निर्विकल्पतामात्रं न।
175240 पाशुपतपाञ्चरात्राद्यभिमतमुक्तिवत्सविकल्पं न।

175241 बौद्धाभिमतमुक्तिवदसन्नैरात्म्यलक्षणं शून्यमपि न ॥ १७ ॥
175242

175243 दृश्यात्यन्तासंभवात्म तदेवाद्यं [तदेवाच्छमिति पाठः ।] हि
175244 वेदनम् ।
175245 तत्सर्वं तन्न किंचिच्च तद्वदेवाङ्ग वेत्ति तत् ॥ १८ ॥
175246

175247 किं तर्हि तदाह - दृश्येति । तदेव सर्वम् । ब्रह्म वा इदमग्र
175248 आसीत्तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवत् इति श्रुतेरिति भावः ।
175249 यत्र नान्यत्पश्यति नान्यच्छृणोति इत्यादिश्रुतेर्न किंचिच्च ॥ १८ ॥
175250

175251 सम्यक्प्रबोधान्निर्वाणं परं तत्समुदाहृतम् ।
175252 यथास्थितमिदं विश्वं तत्रालं प्रलयं गतम् ॥ १९ ॥
175253

175254 सर्वत्वे न किंचित्त्वे चोपपत्तिमाह - यथास्थितमिति ॥ १९ ॥
175255

175256 न तत्र नानाऽनाना न न च किंचिन्न किंचन ।
175257 समस्तसदसद्भावसीमान्तः स उदाहृतः ॥ २० ॥
175258

175259 सीमान्त इति । यथा पटः सन्नसन्निति च कल्पनायाः सीमा तन्तुः । तन्तुः सन्नसन्निति
175260 कल्पनायाः सीमा कार्पासम् । कार्पासं सदसदिति कल्पनायाः सीमान्तस्तद्बीजम् । बीजं
175261 सदसद्वेति कल्पनायाः सीमा मृदात्मिका पृथिवी । सा सती असती वेति कल्पनायाः सीमा
175262 आपस्तासां तेजस्तस्य वायुस्तस्याकाशं तस्याव्याकृतं तस्य
175263 सदसद्भावकल्पनायाः सीमा केवलश्चिदात्मैवेति स सीमान्त इत्यर्थः ॥ २० ॥
175264

175265 अत्यन्तासंभवं दृश्यं यद्वै निर्वाणमासितम् ।
175266 शुद्धबोधोदयं शान्तं तद्विद्धि परमं पदम् ॥ २१ ॥
175267

175268 यन्निर्वाणं सर्वविक्षेपरहितं निरतिशयानन्दात्मना आसितमवस्थानं तदेव
175269 परमं पदं परमपुरुषार्थं विद्धि ॥ २१ ॥
175270

175271 स च संप्राप्यते शुद्धो बोधो ध्यानमनुत्तमम् ।
175272 शास्त्रात्पदपदार्थज्ञबोधिनोत्पन्नबुद्धिना [बोधे न इति
175273 पाठष्टीकानुकूलः स्यात् ।] ॥ २२ ॥
175274

175275 तत्प्राप्तौ चायं मोक्षोपायाख्यो ग्रन्थ उपाय इत्याह - स चेति ॥ २२ ॥
175276

175277 मोक्षोपायाभिधं शास्त्रमिदं वाचयतानिशम् ।
175278 बुद्ध्युपायेन शुद्धेन पुंसा नान्येन केनचित् ॥ २३ ॥
175279

175280 बुद्धिरध्यात्मशास्त्रजन्यज्ञानं तल्लक्षणेनोपायेन । अन्येनोपायान्तरेण केनचिदपि
175281 न प्राप्यते - ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तये इत्यादिश्रुतेरिति
175282 भावः ॥ २३ ॥
175283

175284 न तीर्थेन न दानेन न स्नानेन न विद्यया ।
175285 न ध्यानेन न योगेन न तपोभिर्न चाध्वरैः ॥ २४ ॥
175286

175287 तदेव प्रपञ्चयति - नेत्यादिना । विद्यया ब्रह्मविद्यातिरिक्तविद्यया ॥ २४ ॥
175288

175289 भ्रान्तिमात्रं किलेदं सदसत्सदिव लक्ष्यते ।
175290 व्योमैव जगदाकारं स्वप्नोऽनिद्रे चिदम्बरे ॥ २५ ॥
175291

175292 कुतो न तत्राह - भ्रान्तिमात्रमित्यादिना । यतो भ्रान्तिमात्रमतस्तपस्तीर्थैर्न

175293 शाम्यतीति परेणान्वयः ॥ २५ ॥
175294
175295 न शाम्यति तपस्तीर्थैर्भ्रान्तिर्नाम कदाचन ।
175296 तपस्तीर्थादिना स्वर्गाः प्राप्यन्ते न तु मुक्तता ॥ २६ ॥
175297
175298 भ्रांतिः शाम्यति शास्त्रार्थात्सम्यग्बुद्ध्यावलोकितात् ।
175299 आत्मज्ञानमयान्मोक्षोपायादेवेह नान्यतः ॥ २७ ॥
175300
175301 आलोककारिणात्यर्थं शास्त्रार्थेनैव शाम्यति ।
175302 अमलेनाखिला भ्रान्तिः प्रकाशेनैव तामसी ॥ २८ ॥
175303
175304 प्रकाशेन सूर्योदयेन । तामसी कृष्णरात्रिरिव ॥ २८ ॥
175305
175306 सर्गसंहारसंस्थानां भासो भान्ति चिदम्बरे ।
175307 स्पन्दनानीव मरुति द्रवत्वानीव वारिणि ॥ २९ ॥
175308
175309 संस्था स्थितिः । भासः प्रतिभासाः ॥ २९ ॥
175310
175311 द्रव्यस्य हृद्येव् चमत्कृतिर्निजा नभस्वतः स्पन्द इवानिशं यथा ।
175312 यथा स्थिता सृष्टिरियं तथास्तिता लयं नभस्यन्तरनन्यरूपिणी ॥ ३० ॥
175313
175314 यथा वटबीजादिद्रव्यस्य हृदि वटाकारधारणचमत्कृतिर्नभस्वतो वायोः
175315 स्पन्दचमत्कृतिरिव स्थिता तथा मायाशबलचिन्नभस्यन्तः इयं यथा स्थिता जगतः
175316 सृष्टिस्तस्या अस्तिता स्थितिश्च अनन्यरूपिणी आस्ते लयं च गमिष्यतीति शेषः ॥ ३० ॥
175317
175318 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० नि० उ० ब्रह्मणीतासु निर्वाणोपदेशो
175319 नाम चतुःसप्तत्यधिकशततमः सर्गः ॥ १७४ ॥
175320
175321 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
175322 निर्वाणोपदेशो नाम चतुःसप्तत्यधिकशततमः सर्गः ॥ १७४ ॥
175323
175324
175325 पञ्चसप्तत्यधिकशततमः सर्गः १७५
175326
175327 श्रीवसिष्ठ उवाच ।
175328
175329 स्वप्राभमाद्यं चिद्व्योम कारणं देहसंविदाम् ।
175330 दृश्यान्यताऽसंभवतश्चिद्व्योम्नस्तत्कुतो वपुः ॥ १ ॥
175331
175332 यावन्मौर्ख्यं चिदेवाभात्यकारणम् ।
175333 शास्त्रेण मौर्ख्येऽपहृते सा मुक्तेतीह वर्ण्यते ॥
175334
175335 इयं सृष्टिस्तदस्तिता चानन्यरूपिणीत्युक्ते चितः सर्गः शरीरमेवेत्याशङ्कां
175336 प्रसक्तां निराकरोति - स्वप्राभमिति । आद्यं हि चिद्व्योम स्वाविद्यया स्वप्राभं
175337 भूत्वा जीवभावेन संसरद्देवोऽहं मनुष्योऽहमित्यादि
175338 तत्तद्देहतादात्म्याध्यासानां कामकर्मवासनादिद्वारा कारणं जीवोपाधिसिद्धेः
175339 पूर्वं महाप्रलये स्वप्राभ्भत्वप्राप्तौ तु दृश्यान्यताऽसंभवतो
175340 निमित्तादिसिद्धेस्तत्सर्गरूपं दृश्यं तस्य चिद्व्योम्नो वपुः शरीरं कुतो
175341 निमित्ताद्भवेदित्यर्थः ॥ १ ॥
175342
175343 सर्गादौ स्वप्रसंवित्तिरूपं सर्वं विनानघ ।
175344 न सर्गो न परो लोको दृश्यमानोऽपि सिद्ध्यति ॥ २ ॥

175345
175346 स्वप्नसंवित्तिरूपेणैव जीवभावसमकाला सर्गादिसिद्धिर्न निमित्तान्तरादित्याह -
175347 सर्गादाविति ॥ २ ॥
175348
175349 असदेवानुभूरित्थमेवेदं भासते जगत् ।
175350 स्वप्नाङ्गनासङ्ग इव शान्तं चिद्व्योम केवलम् ॥ ३ ॥
175351
175352 नापि चिद्व्योम्नो वास्तवो जीवभावो जगद्भावो वास्ति येन जगत्तस्य शरीरं भवेदित्याह
175353 - असदेवेति । अनुभवतीत्यनुभूरनुभवैकरसश्चिदात्मा इत्थमसदेव जगद्भूत्वा
175354 स्वाविद्यया भासते ॥ ३ ॥
175355
175356 एवंनामास्ति चिद्धातुरनादिनिधनोऽमलः ।
175357 शून्यात्मैवाच्छरूपोऽपि जगदित्यवभाति यः ॥ ४ ॥
175358
175359 तर्हि किमनुभूतिरप्यसती नेत्याह - एवंनामेति । यो जगदित्यवभाति स
175360 जगच्छून्यात्मैवाच्छरूपश्चिद्धातुरस्ति ॥ ४ ॥
175361
175362 मलस्त्वेषोऽपरिज्ञातः परिज्ञातः परं भवेत् ।
175363 कुतः किल परे व्योमन्यनादिनिधने मलः ॥ ५ ॥
175364
175365 एष परमात्मैव यावदपरिज्ञातस्तावन्मलः अविद्यैव । तत्र संसरन् जीव इव
175366 पृथगिव भवति । परिज्ञातस्तु परं निर्मलं ब्रह्मैव भवेत् । स यो ह वै
175367 तत्परमं ब्रह्म वेद ब्रह्मैव भवति इत्यादिश्रुतेरिति भावः । ब्रह्मभावे त्वस्य
175368 मलप्रसक्तिरेव नास्तीत्याह - कुत इति । प्रबोधेन स्वप्नस्येव बाधादिति भावः ॥ ५ ॥
175369
175370 यदेतद्वेदनं शुद्धं तदेव स्वप्नपत्तनम् ।
175371 जगत्तदेव सर्गादौ पृथ्व्यादेः संभवः कुतः ॥ ६ ॥
175372
175373 स्वप्नसाम्यं तु कारणासंभवाद्बहुशः प्रसधितमेव
175374 पुनर्दृढीकारायानुवदति - यदित्यादिना ॥ ६ ॥
175375
175376 चिद्व्योमात्मावभासस्य नभसः सर्गरूपिणी ।
175377 कृता पृथ्व्यादिकलना मनोबुद्ध्यादिता तथा ॥ ७ ॥
175378
175379 वार्यावर्त इवाभाति पवनस्पन्दवच्च यत् ।
175380 अबुद्धिपूर्वं चिद्व्योम्नि जगद्भानमभित्तिमत् ॥ ८ ॥
175381
175382 पश्चात्तस्यैव तेनैव स्वयमैश्वर्यशंसिना ।
175383 कृतं बुद्ध्यादिपृथ्व्यादिकल्पनं सदसन्मयम् ॥ ९ ॥
175384
175385 पश्चाज्जगद्भानानन्तरं जीवभावेन तदनुप्रविश्य हिरण्यगर्भोऽहं
175386 भुवनस्रष्टेत्यैश्वर्यशंसिना बुद्ध्यादिपृथ्व्यादिनामरूपव्याकरणलक्षणं
175387 कल्पनं कृतम् । सदसन्मयं मूर्तामूर्तप्रचुरम् सत्यानृतमिथुनीकरणरूपं
175388 वा ॥ ९ ॥
175389
175390 स्वयमेव कचत्यच्छाच्छा येयं स्वा महाचितिः ।
175391 सर्गाभिधानमस्यैव नभ एवेह नेतरत् ॥ १० ॥
175392
175393 अच्छादप्यच्छा येयं महाचितिः सा स्वयमेव जगद्रूपेण कचतीति जगच्चिन्नभ एव
175394 नेतरत् ॥ १० ॥
175395
175396 न च किंचन नामाङ्ग कचत्यच्छैव सा स्मृता ।

175397 चिन्मात्रैकैककलनं ततमेवात्मनात्मनि ॥ ११ ॥
175398
175399 अनया पर्यालोचनया हे अङ्ग न किंचन कचति । चिन्मात्रलक्षणं यदेकमेवैकं
175400 तत्कलनमेव वा इत्थमात्मनि ततम् ॥ ११ ॥
175401
175402 चिदाकाशश्चिदाकाशे तदिदं स्वमलं वपुः ।
175403 चित्तं दृश्यमिवाभाति यथा स्वप्ने तथा स्थितम् ॥ १२ ॥
175404
175405 स्वं अलं पूर्णं वपुः स्वरूपम् । अज्ञातं तदेव स्वमलं वपुरिति वा । चित्तमिव
175406 तद्दृश्यमिव च ॥ १२ ॥
175407
175408 अन्यथानुपपत्त्यार्थकारणाभावतः [अर्थस्य सत्यस्य
175409 कारणान्तरस्याभावतश्चेत्यर्थः ।] स्वतः ।
175410 सर्गादावेव स्वात्मैव दृश्यं चिद्व्योम पश्यति ॥ १३ ॥
175411
175412 अन्यथानुपपत्त्या प्रकारान्तरेण वादिसहस्रैरपि सर्गोपपादनासंभवात्परिशेषात् ॥
175413 १३ ॥
175414
175415 स्वप्नवत्तच्च निर्धर्म मनागपि न भिद्यते ।
175416 तस्माच्चिद्व्योम चिद्व्योम शून्यत्वं गगनादिवत् ॥ १४ ॥
175417
175418 उपपादितं जगद्वपुष्ट्वनिरासमुपसंहृत्य शिष्टमवधारयति - तस्मादिति ।
175419 चिद्व्योम चिद्व्योमेति अवधारणार्थं वीप्सा ॥ १४ ॥
175420
175421 यदेव तत्परं ब्रह्म सर्वरूपविवर्जितम् ।
175422 तदेवैकं तथारूपमेवं सर्वतया स्थितम् ॥ १५ ॥
175423
175424 स्वप्नेऽनुभूयते चैतत्स्वप्नो ह्यात्मैव भासते ।
175425 नानाबोधमनानैव ब्रह्मैवामलमेव तत् ॥ १६ ॥
175426
175427 उक्तमेव निष्कृष्य पुनरनूद्य दृष्ट्यन्तरमाह - स्वप्ने इत्यादिना ॥ १६ ॥
175428
175429 ब्रह्मैवात्मनि चिद्भावाज्जीवत्वमिव कल्पयत् ।
175430 रूपमत्यजदेवाच्छं मनस्तामिव गच्छति ॥ १७ ॥
175431
175432 इदं सर्वं तनोतीव तच्च खात्मकमेव खम् ।
175433 भवतीव जगद्रूपं विकारीवाविकार्यपि ॥ १८ ॥
175434
175435 तच्च मनःसमष्टिरूपेण इदं सर्वं तनोतीव ॥ १८ ॥
175436
175437 मन एव स्वयं ब्रह्मा स सर्गस्य हृदि स्थितः ।
175438 करोत्यविरतं सर्वमजस्रं संहरत्यपि ॥ १९ ॥
175439
175440 ब्रह्मा हिरण्यगर्भः ॥ १९ ॥
175441
175442 पृथ्व्यादिरहितो यस्मिन्मनोहृद्यङ्गवर्जिते ।
175443 अन्यद्वा त्रिजगद्भाति यथा स्वप्ने निराकृति ॥ २० ॥
175444
175445 पृथ्व्यादिरहितः स मनोरूपो ब्रह्मा अङ्गवर्जिते स्वहृद्येव यस्य जगतो हृदि
175446 स्वयं स्थितस्तस्मादन्यद्वा त्रिजगद्भूत्वा स्वयं भाति ॥ २० ॥
175447
175448 देहरूपजगद्रूपैरहमेकमनाकृति ।

175449 मनस्तिष्ठाम्यनन्तात्म बोधाबोधं पराभवम् ॥ २१ ॥
175450
175451 स्वाविद्यया पूर्णभावपराभवं प्राप्य तन्मन एवाहमाकारेण
175452 देहजगद्रूपैरनन्तात्म भूत्वा बोधाबोधरूपं तिष्ठतीत्याह - देहेति ॥ २१ ॥
175453
175454 नेह पृथ्व्यादि नो देहो न चैवान्यास्ति दृश्यता।
175455 जगत्तया केवलं खं मनः कचकचायते ॥ २२ ॥
175456
175457 विचार्यदृष्ट्यैतदपि न किंचिदपि विद्यते।
175458 केवलं भाति चिन्मात्रमात्मनात्मनि निर्घनम् ॥ २३ ॥
175459
175460 वर्णितदृष्ट्यन्तरमुपसंहरन्प्रकृते योजयति - विचार्येति। नितरां घनं
175461 निर्घनम् ॥ २३ ॥
175462
175463 यतो वाचो निवर्तन्ते तूष्णींभावोऽवशिष्यते।
175464 व्यवहार्यपि खात्मैव तद्वत्तिष्ठति मूकवत् ॥ २४ ॥
175465
175466 वाङ्मनसागोचरनिरतिशयानन्दलाभेन तूष्णींभावो मिश्चलता। सा निश्चलता
175467 व्यवहारकालेऽपि नापैतीत्याह - व्यवहार्यपीति ॥ २४ ॥
175468
175469 अनन्तापारपर्यन्ता चिन्मात्रपरमेष्टका।
175470 तूष्णींभूत्वा भव्येष प्रबुद्धः पुरुषोत्तमः ॥ २५ ॥
175471
175472 चिन्मात्रलक्षणा परमा इष्टैवेष्टका परमप्रेमास्पदीभूतनिरतिशयानन्दघनता
175473 स्वयं भवतीत्यर्थः। ज्ञानाग्निपरिपाकेन दृढीभावाद्ब्रह्मभूत एवेष्टकेति वा
175474 ॥ २५ ॥
175475
175476 अबुद्धिपूर्वं द्रवतो यथाव्रतादयोऽम्भसि।
175477 क्रियन्ते ब्रह्मणा तद्वच्चित्तबुद्ध्यादयो जडाः ॥ २६ ॥
175478
175479 एवं मुक्तस्य पुनः कालान्तरे सर्गादिना बन्धप्रसक्तिं वारयितुं
175480 सर्गस्याज्ञानपूर्वकत्वं दर्शयति - अबुद्धिपूर्वमिति।
175481 अबुद्धिर्बोधनाश्यमज्ञानं तत्पूर्वम्। अविद्यावृतब्रह्मचैतन्यस्यैव
175482 जलादिभावेनावर्तादिविकल्पभाक्त्वाज्जलादेर्दृष्टान्तता ॥ २६ ॥
175483
175484 अबुद्धिपूर्वं वातेन क्रियते स्पन्दनं यथा।
175485 अनन्यदेवं बुद्ध्यादि क्रियते परमात्मना ॥ २७ ॥
175486
175487 अनन्यदात्मनो वायोर्यथा स्पन्दनमव्ययम्।
175488 अनन्यदात्मनस्तद्वच्चिन्मात्रं परमात्मनः ॥ २८ ॥
175489
175490 चिन्मात्रं सर्वे चिदाभासलक्षणा जीवा आत्मनः प्रत्यग्रूपात्परमात्मनोऽनन्यत् ॥२८ ॥
175491
175492 चिद्व्योम ब्रह्मचिन्मात्रमात्मा चिति महानिति।
175493 परमात्मेति पर्याया ज्ञेया ज्ञानवतां वर ॥ २९ ॥
175494
175495 अत एव जीवानामपि ब्रह्मपर्यायात्मता मतेत्याशयेनाह - चिद्व्योमेति ॥ २९ ॥
175496
175497 ब्रह्मोन्मेषनिमेषात्म स्पन्दास्पन्दात्म वातवत्।
175498 निमेषो यादृगेवास्य समुन्मेषस्तथा जगत् ॥ ३० ॥
175499
175500 अविद्यावृतं हि ब्रह्म चक्षुरिव उन्मेषनिमेषात्म वातवत् स्पन्दास्पन्दात्म वा। अस्य

175501 यादृगेव प्रलयात्मको निमेषस्तादृगेव सर्गात्मक उन्मेषो जगदित्यर्थः ॥ ३० ॥
175502
175503 दृश्यस्य समुन्मेषो दृश्याभावो निमेषणम् ।
175504 एकमेतन्निराकारं तद्द्व्योरप्युपक्षयात् ॥ ३१ ॥
175505
175506 यथा उन्मेषनिमेषयोः साधारणं चक्षुर्गोलकमेकं
175507 तत्रैवोन्मेषनिमेषयोरुपक्षयात्तथा ब्रह्मापीत्याह - एकमेतदिति ॥ ३१ ॥
175508
175509 निमेषोन्मेषयोरेकरूपमेव परं मतम् ।
175510 अतोऽस्ति दृश्यं नास्तीति सदसच्च सदा चितिः ॥ ३२ ॥
175511
175512 अतश्चितेः सकाशादेव दृश्यस्यास्ति नास्तीति स्फुरणाद्दृश्यं सदसच्च चितिस्तु सदा
175513 सत्तैकरूपैवेत्यर्थः ॥ ३२ ॥
175514
175515 निमेषो नान्य उन्मेषान्नोन्मेषोऽपि निमेषतः ।
175516 ब्रह्मणः सर्गवपुषो निमेषोन्मेषरूपिणः ॥ ३३ ॥
175517
175518 उन्मेषनिमेषावपि तद्धेतुपक्ष्मसहितचक्षुःस्थानीयशबलब्रह्मात्मना
175519 परस्पराभिन्नावेवेत्याह - निमेष इति ॥ ३३ ॥
175520
175521 तद्यथास्थितमेवेदं विद्धि शान्तमशेषतः ।
175522 अजातमजरं व्योम सौम्यं समसमं जगत् ॥ ३४ ॥
175523
175524 अनया दृष्ट्या यत्सिद्धं तदाह - तदिति । समेन
175525 निमेषोन्मेषसाधारणब्रह्मरूपेण सममेकरसम् ॥ ३४ ॥
175526
175527 चिदचित्यात्मकं व्योम रूपं कचकचायते ।
175528 चिन्नाम तदिदं भाति जगदित्येव तद्वपुः ॥ ३५ ॥
175529
175530 यथा व्योम स्वाध्यस्तनैल्यरूपं कचकचायते तथा चिदपि अचित्यात्मकमिव
175531 कचकचायते ॥ ३५ ॥
175532
175533 न नश्यति न चोत्पन्नं दृश्यं नाप्यनुभूयते ।
175534 स्वय चमत्करोत्यन्तः केवलं केवलैव चित् ॥ ३६ ॥
175535
175536 महाचिद्व्योममणिभा दृश्यनाम्नी निजाकरात् ।
175537 अनन्यान्येव भातापि भानुभास इवोष्णता ॥ ३७ ॥
175538
175539 महाचिद्व्योममणेर्भा प्रभा निजाकरान्मणेः सकाशादनन्या ॥ ३७ ॥
175540
175541 सुषुप्तं स्वप्नवद्भाति भाति ब्रह्मैव् सर्गवत् ।
175542 सर्वमेकं शिवं शान्तं नानेवापि स्थितं स्फुरत् ॥ ३८ ॥
175543
175544 यद्यत्संवेद्यते यादृक्सद्वाऽसद्वा यथा यदा ।
175545 तथानुभूयते तादृक्तत्सदस्त्वसदस्तु वा ॥ ३९ ॥
175546
175547 सत् भावरूपं वा यद्यच्चिता यथा संवेद्यते प्रकाश्यते तथा
175548 चिदाभासेनानुभूयते ॥ ३९ ॥
175549
175550 अन्यथानुपपत्त्या चेत्कारणं परिकल्प्यते ।
175551 तत्स्वप्नाभो जगद्भावादन्यथा नोपपद्यते ॥ ४० ॥
175552

175553 जगतो जडत्वान्यथानुपपत्त्या तदनुरूपं प्रधानपरमाण्वादिकारणं परिकल्प्यते
175554 चेत्तर्हि स्वप्ने आभातीति स्वप्नाभः प्रपञ्चः
175555 प्रधानपरमाण्वादिभिर्निर्वोढुमशक्यत्वादात्मन एव जगद्भावं विहाय
175556 नोपपद्यत इत्यर्थः। तत्रात्मन एव जगद्भावाभ्युपगमे तन्न्यायेन सर्गादावपि
175557 ब्रह्मैव जगद्वेषं करिष्यतीति तेन प्रधानपरमाण्वादिकल्पनं विरुद्धमिति
175558 भावः॥ ४०॥
175559
175560 प्रमातीतात्पराद्विश्वमनन्यदुदितं यतः।
175561 प्रमातीतमिदं चैव किंचिन्नाभ्युदितं ततः॥ ४१॥
175562
175563 एवं च सति जगतः प्रमाणाविषये ब्रह्मण्यध्यासात्स्वप्नवदनिर्वचनीयतालक्षणा
175564 प्रमाणानिर्धार्यरूपतापि सेत्स्यतीत्यद्वैताविरोधादपरमनुकूलमित्याह -
175565 प्रमातीतादिति॥ ४१॥
175566
175567 यस्य यद्रसिकं चित्तं तत्तथा तस्य गच्छति।
175568 ब्रह्मैकरसिकं तेन मनस्तत्तां समश्नुते॥ ४२॥
175569
175570 अत एव ब्रह्मरसिकानां चित्तं जगद्ब्रह्मैव पश्यतीति तदनुभवानुसारोऽपि जात इत्याह
175571 - यस्येति॥ ४२॥
175572
175573 यच्चित्तो यद्गतप्राणो जनो भवित सर्वदा।
175574 तत्तेन वस्त्विति ज्ञातं जानाति तदसौ स्फुटम्॥ ४३॥
175575
175576 ब्रह्मैकरसिकं यत्स्यान्मनस्तत्तद्भवेत्क्षणात्।
175577 यस्य यद्रसिकं चेतो बुद्धं तेन तदेव सत्॥ ४४॥
175578
175579 विश्रान्तं यस्य वै चित्तं जन्तोस्तत्परमार्थसत्।
175580 व्यवहृत्यै करोत्यन्यत्सदाचारादतद्रसम्॥ ४५॥
175581
175582 यस्य जन्तोश्चित्तं दृढनिश्चयेन यत्र विश्रान्तं तस्य तदेव परमार्थसत्। अत एव
175583 ब्रह्मविन्नास्तिकश्च स्वनिश्चितान्यद्यागदानादि करोति तत्केवलं
175584 लोकसंग्रहार्थव्यवहृत्यै अतद्रसमनिच्छमेव बलादिव करोतीत्यर्थः॥ ४५॥
175585
175586 द्वित्वैकत्वादिकलना नेह काचन विद्यते।
175587 सत्तामात्रं च दृगियमितश्चेदलमीक्ष्यते॥ ४६॥
175588
175589 इत एतस्मान्मदुक्तोपायतश्चेज्जगदवलोक्यते तदा इदं सर्वं सत्तामात्रं इयं
175590 दृगेव। द्वित्वैकत्वकलना इह काचन न विद्यते॥ ४६॥
175591
175592 अदृश्यदृश्यसदसन्मूर्तामूर्तदृशामिह।
175593 नैवास्ति न च नास्त्येव कर्ता भोक्ताऽथवा क्वचित्॥ ४७॥
175594
175595 अदृश्यं ब्रह्मैव दृश्यं सदसन्मूर्तममूर्तं चेति दृग्येषां तेषां इह
175596 कर्ता भोक्ता वा जीवो नैवास्ति नापि नास्त्येव। तस्यैव ब्रह्मतया परिशेषादित्यर्थः॥ ४७
175597 । ।
175598
175599 इदमित्थमनाद्यन्तं जगत्पर्यायमात्मनि।
175600 ब्रह्मैकघनमाशान्तं स्थितं स्थाणुरिवाध्वनि॥ ४८॥
175601
175602 अज्ञानां पान्थानां चोरसंदेहभ्रान्त्यादियोग्ये कान्ताराध्वनि स्थाणुरिव स्थितम्॥
175603 ४८॥
175604

175605 यदेव ब्रह्म बुद्ध्यादि तदेवैतन्निरञ्जनम् ।
175606 यदेव गगनं शान्तं शून्यं विद्धि तदेव तत् ॥ ४९ ॥
175607
175608 बुद्ध्यादि बुद्धिसमष्टिहिरण्यगर्भादि जगत् ॥ ४९ ॥
175609
175610 केशोण्ड्रकादयो व्योम्नि यथा सदसदात्मकाः ।
175611 द्वितामिवागता भान्ति परे बुद्ध्यादयस्तथा ॥ ५० ॥
175612
175613 तथा बुद्ध्यादि देहादि वेदनादि परापरे ।
175614 अनेकान्यप्यनन्यानि शून्यत्वानि यथाम्बरे ॥ ५१ ॥
175615
175616 परापरे सर्वसामान्यात्मके ब्रह्मणि शून्यत्वानि घटपटाद्यभावाः सर्वे ॥ ५१ ॥
175617
175618 सुषुप्ताद्विशतः स्वप्नमेकनिद्रात्मनो यथा ।
175619 सर्गस्थस्यापि न द्वित्वं नैकत्वं ब्रह्मणस्तथा ॥ ५२ ॥
175620
175621 सर्गस्थस्य स्वाप्नसर्गस्थस्यापि स्वस्य न द्वित्वं नाप्येकत्वं व्यावर्त्याप्रसिद्धेः ॥
175622 ५२ ॥
175623
175624 एवमेव कचत्यच्छा छायेयं स्वा महाचितेः ।
175625 न च किंचन नामाङ्ग कचत्यच्छैवमास्थिता ॥ ५३ ॥
175626
175627 छाया कान्तिरविद्या वा ॥ ५३ ॥
175628
175629 चिद्व्योम्नि हि चिदाकाशमेव स्वममलं वपुः ।
175630 चेत्यं दृश्यमिवाभाति स्वप्नेष्विव यथस्थितम् ॥ ५४ ॥
175631
175632 अन्यथानुपपत्त्यार्थकारणाभावतः स्वतः ।
175633 चिद्व्योमात्मानमेवादौ दृश्यमित्येव पश्यति ॥ ५५ ॥
175634
175635 अन्यथानुपपत्त्या वादिसहस्रैरपि सद्वस्त्वतिरिक्तस्योपपादयितुमशक्या अर्थस्य
175636 सत्यस्य कारणान्तरस्याभावतश्च चिद्व्योम स्वतः आत्मानमेव सर्गादौ दृश्यमिति
175637 पश्यतीत्येव पक्षो निरूढ इत्यर्थः ॥ ५५ ॥
175638
175639 सर्गादावेव खात्मैव दृश्यं भाति निराकृति ।
175640 संभ्रमः स्वप्नसंकल्पमिथ्याज्ञानेष्विवाभितः ॥ ५६ ॥
175641
175642 निराकृति मूर्ताकारतद्विशेषशून्यम् । तच्च भानमभितः सम्यग्भ्रमः
175643 संभ्रमः ॥ ५६ ॥
175644
175645 स्वप्नवत्तच्च निर्धर्म मनागपि न भिद्यते ।
175646 विकार्यपि सधर्मापि चिद्व्योम्नो वस्तुनो मलात् ॥ ५७ ॥
175647
175648 तच्च दृश्यं स्वप्नवन्निर्धर्म सर्वधर्मशून्यं चिद्व्योमैव । यतस्तत्र
175649 मनागपि धर्मो न विद्यते । वस्तुनः परमार्थभूतस्य चिद्व्योम्नो विकारी
175650 सधर्माप्याकारोऽविद्यामलात्प्रतीयत इत्यर्थः ॥ ५७ ॥
175651
175652 तत्स्वप्ननगराकारं सधर्माप्यसध्मकम् ।
175653 शिवादनन्यमेवेत्थं स्थितमेव निरन्तरम् ॥ ५८ ॥
175654
175655 प्रतीतितः सधर्मापि असधर्मकम् । शिवादधिष्ठानसन्मात्रादनन्यमेव
175656 अज्ञदृशा इत्थं जगदाकारेण निरन्तरमेव स्थितम् ॥ ५८ ॥

175657
175658 दृश्यं स्वप्नाद्रिवत्स्वच्छं मनागपि न भिद्यते।
175659 तस्माच्चिद्व्योमचिद्व्योम्नः शून्यत्वं गगनादिव॥ ५९॥
175660
175661 न भिद्यते स्वाधिष्ठानात्। तस्माच्चिद्व्योममात्रत्वेन परिशिष्टस्य चिद्व्योम्नो
175662 गगनादपि शून्यत्वमतिसूक्ष्मत्वं सिद्धमित्यर्थः॥ ५९॥
175663
175664 यदेव तत्परं ब्रह्म सर्वरूपविवर्जितम्।
175665 तदेवेदं तथाभूतमेव सर्गतया स्थितम्॥ ६०॥
175666
175667 स्वप्नेऽनुभूयते चैतत्स्वप्ने ह्यात्मैव भासते।
175668 पुरादित्वेन न तु सत्पुरादिरचितं तदा॥ ६१॥
175669
175670 ननु स्वप्नकाले सत्सत्यं पुरादिजीवेन रचितमस्तु। अथ रथान् रथयोगान्पथः सृजते
175671 स हि कर्ता इति श्रुतेरित्याशङ्क्याह - न त्विति। न तत्र रथा रथयोगाः पन्थानो
175672 भवन्ति मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् इत्यादिश्रुतिसूत्रैः स्वप्ने
175673 सृष्टिप्रतिषेधान्मायामात्रत्वप्रतिपादनाच्चेति भावः॥ ६१॥
175674
175675 स्वप्ने च प्रत्यभिज्ञायाः संस्कारस्य स्मृतेस्तथा।
175676 न सत्ता तदिदं दृष्टमित्यर्थस्यात्यसंभवात्॥ ६२॥
175677
175678 ननु स एवायं देवदत्तस्तदिदं पूर्वदृष्टमेव
175679 मद्गृहमित्याद्यबाधितप्रत्यभिज्ञादिना स्वप्नेऽपि पदार्थाः सत्याः सन्तु तत्राह
175680 - स्वप्ने चेति। तदिदमिति प्रत्यभिज्ञायमानस्य गृहाद्यर्थस्य
175681 हृदयकण्ठनाडीच्छिद्रादिदेशे अत्यन्तमसंभवेन प्रत्यभिज्ञाया असंभवात्।
175682 अर्थासंभवे तद्गोचरसंस्कारस्मृत्योरप्यसंभवः स्पष्ट एवेति भावः॥ ६२॥
175683
175684 तस्मादेतत्त्रयं त्यक्त्वा यद्भानं ब्रह्मसंविदः।
175685 तस्य दृष्टार्थसादृश्यान्मूढैः स्मृत्यादितोहिता॥ ६३॥
175686
175687 तस्मादसंभवादेव प्रसिद्धस्मृत्यादिकं त्यक्त्वा ब्रह्मसंविद एव
175688 निद्रादोषाद्यदन्यथाभानं तस्यैव जाग्रद्दृष्टार्थसादृश्यं कल्पयित्वा
175689 अनुभवव्यवहाराभास इव स्मृत्यादिसादृश्यमपि कल्पयित्वा स्मृत्यादितापि
175690 मूढैरूहितेत्यभ्युपेयमिति शेषः॥ ६३॥
175691
175692 यथा यत्रैव लहरी वारिण्येति पुनः पुनः।
175693 तत्रैवैति तथा तद्वदनन्या खे परे जगत्॥ ६४॥
175694
175695 सादृश्यादपि सैवेयं लहरी सैवेयं दीपज्वालेत्यादिप्रत्यभिज्ञाभ्रमालोके
175696 प्रसिद्धाः सन्तीत्याह - यथेति। कल्पनाधिष्ठाने खे चिदाकाशविषये अनन्या न तु
175697 कल्पनाविषयेऽपि तथा स्वप्नेऽपि। तद्वत् सर्गादौ जगदपि बोध्यमित्यर्थः॥ ६४॥
175698
175699 विधयः प्रतिषेधाश्च सर्व एव सदैव च।
175700 विभक्ताश्च विमिश्राश्च परे सन्ति न सन्ति च॥ ६५॥
175701
175702 कल्पनामात्रत्वादेव ब्रह्मणि स दाधार पृथिवीं द्यामुतेमाम् यस्मिन् द्यौः
175703 पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैस्तमेवैकं जानथ आत्मानम्
175704 इत्यादिजगद्विधयो नेह नानास्ति किंचन इत्यादिजगत्प्रतिषेधाश्चाविरोधेन समावेशं
175705 लभन्त इत्याह - विधय इति॥ ६५॥
175706
175707 तस्मात्सद्ब्रह्म सर्वात्म किमिवात्र न विद्यते।
175708 सैव सत्तैव सर्वात्म चैतदप्येतदात्मकम्॥ ६६॥

सैव सत्ता ब्रह्मसत्तैव सर्वात्मेत्येतत्सर्वमप्येतदात्मकं सदात्मकं सर्वात्मकं च ॥ ६६ ॥

भ्रान्तस्य भ्रमणं भूमेर्न भूर्भ्रान्तैव वा गणैः ।
न शाम्यति ज्ञातुरपि तथाभ्यासं विनात्र दृक् ॥ ६७ ॥

अत एव तत्र सर्वेषां वादिनां सर्वकल्पनानामप्यविरोधेन समावेशस्त्यक्तकल्पनस्य मोक्षश्चोपपद्यत इत्याशयेनाह - भ्रान्तस्येति । क्रीडार्थं भ्रान्तस्य भ्रमतो बालस्य वृक्षगिरिनद्यादिगणैः सह भूमेर्भ्रमणमन्येषां तु भूर्न भ्रान्तैवेत्युभयमपि सदात्मकम् । भ्रमत्वे बालस्य भूर्न भ्रमतीति ज्ञातुरपि स्थैर्याभ्यासं विना उपात्ता भ्रमणदृक् न शाम्यति तद्वज्जगद्भ्रान्तिदृगपीति भावः ॥ ६७ ॥

शास्त्रस्यास्य तु यन्नाम वादनं तद्विनापरः ।
अभ्यासो दृश्यसंशान्त्यैन भूतो न भविष्यति ॥ ६८ ॥

दृश्यभ्रान्तिशान्त्युपयुक्तः प्रकृते कस्य को वाऽभ्यासः कार्यस्तमाह - शास्त्रस्येति । अस्य मोक्षोपायस्य शास्त्रस्य यत्तत्त्वज्ञं गुरुं सेवादिना वशीकृत्य वादनं व्याख्यापनं तत्पूर्वकश्रवणाभ्यासं विना अपरः अन्यः ॥ ६८ ॥

न जीवन्न मृतं चित्तं रोधमायाति संसृतेः ।
अविनाभाविदेहत्वाद्बोधात्त्वेतन्न पश्यति ॥ ६९ ॥

ननु किमेतच्छास्त्राभ्यासेन योगशास्त्रप्रसिद्धचित्तनिरोधादेव दृश्यादर्शनलक्षणेष्टसिद्धिरित्याशङ्क्याह - नेति । भवेदेतदेवं यदि चित्तनिरोधः सिद्ध्येत् तत्तु चित्तं संसृत्यविनाभाविस्वरूपत्वाज्जाग्रत्स्वप्नाभ्यां जीवत्सुषुप्तौ विलयान्मृतं वा यत्नेनापि निरुध्यमानं रोधं नायाति किंत्वेतच्छास्त्राभ्यासाधीनाद्बोधादेव बाधितमेतत्संसृतिं न पश्यतीत्येतदभ्यास एवोपाय इत्यर्थः ॥ ६९ ॥

सर्वदैवाविनाभावि चित्तं दृश्यशरीरयोः ।
इह चामुत्र चैतस्य बोधान्ते [बोधात्ते इति टीकानुगुणः पाठः ।]
शाम्यतः स्वयम् ॥ ७० ॥

यथा चित्तं संसृत्यविनाभावि एवं दृश्यरूपा संसृतिरपि चित्तशरीरोभयाविनाभाविनी । ते च दृश्यशरीरे एतच्छास्त्राभ्यासादसति प्रतिबन्धे इहजन्मन्येव तत्त्वबोधाच्छाम्यतः । सति तु प्रतिबन्धे अमुत्र जन्मान्तरे वा प्रतिबन्धक्षये बोधोदयाच्छाम्यतः । तथा च भगवतो वादरायणस्य सूत्रम् ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् इति ॥ ७० ॥

चित्तदृश्यशरीराणि त्रीणि शाम्यन्ति बोधतः ।
पवनस्पन्दसैन्यानि कारणाभावतो यथा ॥ ७१ ॥

पवनस्पन्दौ तत्प्रयुक्तमेघसैन्यानि च यथा तत्प्रयोजकशुक्रास्तोदयादिकारणापायाच्छाम्यन्ति तद्वदित्यर्थः ॥ ७१ ॥

कारणं मौर्ख्यमेवास्य तच्चास्मादेव शास्त्रतः किंचित्संस्कृतबुद्धीनां वाचितादेव शाम्यति ॥ ७२ ॥

किं तर्ह्यत्र चित्तादित्रिकस्य कारणं तदाह - कारणमिति । मौर्ख्यं ब्रह्मात्मभावावरिका अविद्या ॥ ७२ ॥

अबुद्धमुत्तरग्रन्थात्पूर्वं पूर्वं हि बुध्यते।
ग्रन्थं पदपदार्थज्ञः खेदवान्न निवर्तते॥ ७३॥

ननु वाचनमात्रेण कथमस्यार्थः सर्वो बुध्यते तत्राह - अबुद्धमिति। न
निवर्तते यदीति शेषः॥ ७३॥

उपायमिदमेवातो विद्धि शास्त्रं भ्रमक्षये।
अनन्यसाधारणतां गतमित्यनुभूयते॥ ७४॥

तस्मादस्मान्महाशास्त्राद्यथाशक्ति विचारयेत्।
भागौ द्वौ भागमेकं वा तेन दुःखक्षयो भवेत्॥ ७५॥

भागमेकमर्धग्रन्थं वा॥ ७५॥

आरुषेयमिदमिति [बहुपुस्तकेषु आऋषेयमिति पाठ उपलभ्यते।
उभयत्राप्यार्षत्वं समानम्।] प्रमादाच्चेन्न रोचते।
तदन्यदात्मविज्ञानशास्त्रं किंचिद्विचारयेत्॥ ७६॥

ऋषिणा कृतमिदं शास्त्रं स्मृतिरूपं स्मृतेश्चश्रुतिर्मूलमिति श्रुतिमेव
विचारयिष्याम इति बुद्ध्या प्रमादवशादिदं शास्त्रं न रोचते तत्तर्हि
अन्यच्छ्रुतिरूपमुपनिषद्भाष्यादिरूपमात्मज्ञानशास्त्रमेव विचारयेन्न
त्वात्मशास्त्रविमुखो भवेदित्यत्र नस्तात्पर्यं न त्वत्रैवाग्रह इत्यर्थः॥ ७६॥

अनर्थेनाविचारेण वयः कुर्यान्न भस्मसात्।
बोधेन ज्ञानसारेण दृश्यं कर्तव्यमात्मसात्॥ ७७॥

ज्ञानसारेण श्रवणाद्युपायेन यथाकथंचित्तत्त्वबोधेन सर्वं दृश्यमात्मने
देयमात्मसात्कर्तव्यम्। बाधमुखेनात्मना ग्रसनार्हं कर्तव्यमिति यावत्। देये त्रा
च इति सातिप्रत्ययः। ब्राह्मणसादिदमन्नं कर्तव्यमितिवत्॥ ७७॥

आयुषः क्षण एकोऽपि सर्वरत्नैर्न लभ्यते।
नीयते तद्वृथा येन प्रमादः सुमहानहो॥ ७८॥

तत्रालसानुद्योजयति - आयुष इति। स्वर्णादिराशिसहितैः सर्वरत्नैरपि प्रमादस्तस्येति
शेषः॥ ७८॥

अनुभूतमपि च नो सद्दृश्यमिदं द्रष्टृसहितमपि।
स्वप्ननिजमरणबान्धवरोदनमिव सदिव कचितमपि॥ ७९॥

इदं दृश्यं प्रत्यक्षमनुभूतमपि द्रष्ट्रा अन्तःकरणोपहितेन जीवेन सहितमपि
स्वप्ने दैवाद्दृष्टे निजमरणे परितो बान्धवैः कृतं रोदनमिव सदिव कचितमपि
नो सत् मिथ्यैवेति ब्रह्माद्वैतदिग्विजयडिण्डिम इत्यर्थः॥ ७९॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० नि० उ० अवि० वि०
परमार्थगीतास्वद्वैतयुक्तिर्नाम पञ्चसप्तत्यधिकशततमः सर्गः॥ १७५॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
अद्वैतयुक्तिर्नाम पञ्चसप्तत्यधिकशततमः सर्गः॥ १७५॥

## षट्सप्तत्यधिकशततमः सर्गः १७६

175813
175814 श्रीराम उवाच।
175815
175816 जगन्ति सन्त्यसंख्यानि भविष्यन्ति गतानि च।
175817 तत्कथाभिः कथं ब्रह्मन्प्रबोधयसि मामिमम् ॥ १ ॥
175818
175819 स्वप्नवद्भान्ति सर्गादौ ब्रह्माण्डाश्चिदणाविति।
175820 अत्रार्थे ब्रह्मणा प्रोक्तं ब्रह्माण्डाख्यानमीर्यते ॥
175821
175822 यदि दृश्यमसदिति दृश्यबाधेन चिन्मात्रपरिशेष एव पुरुषार्थस्तर्हि समूलस्य
175823 वर्तमानस्यैव दृश्यस्य जगतो बन्धतया तन्मार्जनमेवोपयुज्यते न
175824 त्वतीतानागतानामप्रतीयमानानामवर्तमान जगतामपि। तेषामप्रतीत्यैव
175825 बन्धत्वाप्रस्क्तेस्तथा च तदुपन्यासः शास्त्रे व्यर्थ एवेत्याशयेन रामः शङ्कते
175826 - जगन्तीति ॥ १ ॥
175827
175828 श्रीवसिष्ठ उवाच।
175829
175830 जगत्स्वप्नेषु शब्दार्थसंबन्धोऽवगतस्त्वया।
175831 न नाम न च लोकेन व्यर्थं तत्कथनं ततः ॥ २ ॥
175832
175833 वर्तमानदृश्यमात्रमेवोपन्यासार्हं नातीतं भविष्यद्वा किंचिदपीति त्वदाक्षेपो
175834 निष्कर्षे फलति। तत्तु न युक्तम् पदपदार्थसंबन्धस्य व्याप्तिग्रहस्य च
175835 दृष्टान्तसिद्ध्यादीनां चातीतव्यवहाराधीनत्वेन तदुपन्यासं विना
175836 विचारात्मकशास्त्रप्रवृत्त्ययोगात्। तस्मादतीतानागतब्रह्माण्डा
175837 वर्तमानब्रह्माण्डान्तराणि च
175838 शब्दार्थसंबन्धग्रहादावनुपयोगान्नोपन्यसनीया इत्येतावानाक्षेपः कर्तुं
175839 युक्तश्चेदस्तु नामेत्यनास्थया अभ्युपगच्छन्निव भगवान्वसिष्ठ उत्तरमाह -
175840 जगत्स्वप्नेष्वित्यादिना। लोकेन एतच्छास्त्रार्थश्रवणाधिकृतजनेन ॥ २ ॥
175841
175842 या कथावगतात्मभ्यां शब्दार्थाभ्यां निगद्यते।
175843 बुध्यते सेतरा नान्तः सैवेह व्यवहारिणी ॥ ३ ॥
175844
175845 अवगतात्मभ्यां निश्चितवाच्यवाचकभावाभ्यां व्यवहारिणी व्यवहारोपयुक्ता
175846 नान्येति केवललौकिकबुद्ध्यनुसारेण पर्यालोचने त्वया सम्यगाक्षिप्तमित्यर्थः ॥ ३ ॥
175847
175848 यदा विदितवेद्यः संस्त्रिकालामलदर्शनः।
175849 भविष्यसि तदा तानि प्रत्यक्षेणैव भोत्स्यसे ॥ ४ ॥
175850
175851 तत्त्वज्ञेषु प्रसिद्धं त्रिकालमलदर्शनं यदि पर्यालोचयिष्यसि तदा सर्वत्र स्वस्यैव
175852 द्रष्टृत्वादतीतानागतव्यवहितविप्रकृष्टानन्तब्रह्माण्डानां वर्तमानस्यास्य
175853 ब्रह्माण्डस्य च विशेषलेशस्याप्यभावान्नायं तवाक्षेप
175854 उत्थातुमर्हतीत्याशयेनाह - यदेति। वर्तमानाया अपि तत्त्वदृष्टेरपर्यालोचनेन
175855 वृथात्वापादनात्परिहासेन भविष्यसि भोत्स्यसे इति च भविष्यत्त्वारोपेणोक्तिः ॥ ४ ॥
175856
175857 स्वप्ने चिन्मात्रमेवाद्यं स्वयं भाति जगत्तया।
175858 यथा तथैव सर्गादौ नात्रान्यदुपपद्यते ॥ ५ ॥
175859
175860 तत्त्वविदो वर्तमानब्रह्माण्डान्तरेषु भविष्यद्ब्रह्माण्डेषु च
175861 पुनरावृत्तिशङ्कावारणाय तेषामपि स्वप्नप्रपञ्चसाम्येन मूलाज्ञानबोधेन
175862 बाधप्रतिपादनाय तेऽपि शास्त्रे अवश्यमुदाहरणीया एवेत्याशयेनाह - स्वप्ने इति।
175863 सर्गादौ अतीतानागतादिसर्वसर्गादौ इत्येतावानंशस्तत्राप्युपयुज्यते
175864 नान्यत्तद्वैचित्र्यं प्रकृतोपयुक्तमत्रोपपद्यत इत्यर्थः ॥ ५ ॥

अणावणावसंख्यानि तेन सन्ति जगन्ति खे।
तेषां तान्व्यवहारौघान्संख्यातुं क इव क्षमः॥ ६॥

तत्कुत इति चेदसंख्यत्वेन तद्वैचित्र्येयत्तायाः शास्त्रे
वर्णयितुमशक्यत्वादित्याशयेनाह - अणावणाविति॥ ६॥

अत्रैव मे पुरा प्रोक्तं मत्पित्रा पद्मजन्मना।
पद्मरेणुमताख्यानं शृणु तत्कथयामि ते॥ ७॥

अत्र अणावणावसंख्यानि इत्युक्तेऽर्थे पद्मरेणुमता पद्मपरागकीर्णदेहेन
मत्पित्राऽऽख्यानं मे प्रोक्तं तच्छृणु॥ ७॥

पुरा पृष्टो मया ब्रह्मा जगज्जालमिदं कियत्।
क्व वा भातीति वद मे ब्रह्मोवाच ततः स माम्॥ ८॥

श्रीब्रह्मोवाच।

ब्रह्मैवेदं मुने सर्वं जगदित्यवभासते।
सतामनन्तं सत्त्वेन जगत्त्वेनासतामपि॥ ९॥

शुभं ममेदमाख्यानं शृणु श्रवणभूषणम्।
ब्रह्माण्डपिण्ड इत्युक्तं ब्रह्माण्डाख्यानमेव च॥ १०॥

तस्य आख्यानस्य द्वे नामनी आह - ब्रह्माण्डपिण्ड इति। अन्वर्थनाम्ना उक्तं
प्रसिद्धम्॥ १०॥

अस्ति खे खादनन्यात्मा चिद्व्योमपरमाणुकः।
शून्यरूपमिवाकाशे शुद्धः स्पन्द इवानिले॥ ११॥

तदेव वक्तुमारभते - अस्तीत्यादिना। अनिले शुद्धः स्पन्द इव स्वसत्तामात्रेण
जगच्चेष्टाहेतुः॥ ११॥

सोऽपश्यदात्मना स्वप्न इव जीवत्वमात्मनि।
शून्यरूपमिवाकाशं पवनः स्पन्दनं यथा॥ १२॥

स चिद्व्योमपरमाणुकः स्वतत्त्वादर्शननिद्रावशात्स्वप्न इवात्मनो जीवत्वं
समष्टिजीवत्वमपश्यत्। यथा वस्तुभूतमेवाकाशं स्वमसदेव शून्यत्वं
पश्येत्तद्वत्। यथा वा पवनः स्वं स्पन्दनं पश्येत्तद्वच्च॥ १२॥

आकाशरूपमजहदेव जीवस्ततः स्वयम्।
अपश्यदहमित्येव रूपमाकाशरूपकम्॥ १३॥

तर्हि स किं परिणामी नेत्याह - आकाशरूपमिति।
आकाशरूपमविकारितामसङ्गतां पूर्णतां सूक्ष्मतां च।
आकाशरूपकमाकाशप्रतिममहमित्येव जीवः स्वं रूपमपश्यत्॥ १३॥

अहंकारस्त्वहंबुद्धिरित्येवापश्यदात्मनि।
एकनिश्चयनिर्माणमयी मायानुरूपिणी॥ १४॥

सः अहंकाररूपस्त्वहमात्मनि बुद्धिरित्येव रूपमपश्यत्। सा च
बुद्धिरेकनिश्चयनिर्माणमयी मायायाश्चानुरूपिणी असदर्थभ्रमदायित्वादित्यर्थः

175917 ॥ १४ ॥
175918
175919 बुद्धिर्मनोहमित्येवं स्वप्ने पश्यदसन्मयम् ।
175920 नमयन्त्यात्मनात्मानमविकल्पं विकल्पनैः ॥ १५ ॥
175921
175922 विकल्पनैर्विकल्पाभासारोपणैरात्मना आत्मानं नमयन्ती न्यग्भावयन्ती ॥ १५ ॥
175923
175924 अपश्यत्तन्मनः स्वप्ने देहे पञ्चेन्द्रियं ततः ।
175925 अनाकारं घनाकारं स्वप्नाद्रित्वमिवाज्ञधीः ॥ १६ ॥
175926
175927 ददर्श स मनोदेहो वपुस्त्रिभुवनात्मकम् ।
175928 खात्मा खात्मैव निर्भित्ति भित्तिभासुरमाततम् ॥ १७ ॥
175929
175930 स चिद्व्योमपरमाणुक इत्थं मनोदेहसमष्ट्यात्मा संस्त्रिभुवनात्मकं
175931 विराड्वपुर्ददर्श ॥ १७ ॥
175932
175933 अनेकभूतकलितं नानास्थावरजङ्गमम् ।
175934 कलनाकालकलितं कल्पितान्योन्यसंगमम् ॥ १८ ॥
175935
175936 विराड्वपुर्वर्णयति - अनेकेति ॥ १८ ॥
175937
175938 स्वप्ने प्रत्येकमेवात्र पश्यत्यादर्शबिम्बितम् ।
175939 इव त्रैलोक्यनगरं नवरङ्गमनोहरम् ॥ १९ ॥
175940
175941 व्यष्टिजीवभेदकल्पनेन प्रत्येकं त्रैलोक्यद्रष्टृतायां दृष्टान्तमाह -
175942 स्वप्ने इति । नवरङ्गाः द्रष्टा दृश्यं दृष्टिः भोक्ता भोग्यं भोगः कर्ता
175943 कार्यं क्रियेति तिस्रस्त्रिपुट्यस्तैर्मनोहरम् ॥ १९ ॥
175944
175945 अथ प्रत्येकमत्रापि नवरङ्गमनोहरम् ।
175946 त्रिजगद्वेत्ति हृदये स्वादर्श इव बिम्बितम् ॥ २० ॥
175947
175948 तद्दार्ष्टान्तिकमाह - अथेति । प्रत्येकं प्रतिजीवम् ॥ २० ॥
175949
175950 परमाणोः परमाणोरिति सन्ति तनूदरे ।
175951 अतनूनि जगन्त्युच्चैर्घनानीव च तान्यपि ॥ २१ ॥
175952
175953 एवं जीवभेदेन विविक्तस्य चित्परमाणोः सर्वस्यापि तनुनि अतिसूक्ष्मेऽप्युदरे इति
175954 वर्णितरीत्या कल्पितानि अतनूनि महान्ति जगन्ति सन्ति । तान्यपि उच्चैर्जीवघनैः
175955 पृथ्व्यादिघनैश्च घनानीव ॥ २१ ॥
175956
175957 अविद्येयमनन्तेयमविद्यात्वेन चेतिता ।
175958 ब्रह्मत्वेन परिज्ञाता भवति ब्रह्म निर्मलम् ॥ २२ ॥
175959
175960 इयं च सर्वा स्वतत्त्वाज्ञानलक्षणा अविद्यैव । सा ज्ञानेन निवारिता चेद्ब्रह्म
175961 निर्मलम् ॥ २२ ॥
175962
175963 एवं द्रष्टापि यः स्वप्नजालं दृष्टे न किंचन ।
175964 कोऽत्र द्रष्टा कुतो दृश्यं क्व द्वैतं क्व च कारणम् ॥ २३ ॥
175965
175966 ब्रह्मत्वेन दृष्टे सति योजगत्स्वप्नजालं द्रष्टा सोऽपि न किंचन ॥ २३ ॥
175967
175968 सर्वं निःशान्तमाभातं खात्म निर्भित्ति केवलम् ।

175969 ब्रह्मात्मनि स्थितं स्वच्छमाद्यन्तपरिवर्जितम् ॥ २४ ॥
175970
175971 निर्भित्ति निर्भेदं ब्रह्म आत्मनि स्वस्वरूपे स्थितम् ॥ २४ ॥
175972
175973 ब्रह्माण्डलक्षनिचयाः परमात्मनीति नित्यं स्थिता निपुणमन्यवदप्यनन्ये ।
175974 वारिण्यवारितविसारितरङ्गवेगाल्लोलं स्थिताम्बुपरमाणुचया यथैते ॥ २५ ॥
175975
175976 तथा च परमात्मनि यावदज्ञाननिद्रास्ति तावत्परमात्मनि ब्रह्माण्डलक्षनिचया इति
175977 वर्णितप्रकारेण नित्यमनन्ये अपि अन्यवत्स्थिताः । यथा वारिणि समुद्रे एते
175978 अवारितविसारितरङ्गवेगान्निमित्ताल्लोलं स्थितस्याम्बुनः परमाणुचया असंख्याताः
175979 स्थितास्तद्वदित्यर्थः ॥ २५ ॥
175980
175981 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० निर्वा० उ० ब्रह्मगीतासु
175982 ब्रह्माण्डोपाख्यानं नाम षट्सप्तत्यधिकशततमः सर्गः ॥ १७६ ॥
175983
175984 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
175985 ब्रह्माण्डोपाख्यानं नाम षट्सप्तत्यधिकशततमः सर्गः ॥ १७६ ॥
175986
175987
175988 सप्तसप्तत्यधिकशततमः सर्गः १७७
175989
175990 श्रीराम उवाच ।
175991
175992 अकारणकमेवेदं जगद्ब्रह्म परात्पदात् ।
175993 यदि प्रवर्तते नाम स्वप्नसंकल्पनादिवत् ॥ १ ॥
175994
175995 सकारणं कल्पनया वस्तुवृत्त्या त्वकारणम् ।
175996 जगत्स्वप्नसमं मोहाद्बोधाद्ब्रह्मेति वर्ण्यते ॥
175997
175998 अकारणक एव स्वप्नसमोऽयं सर्ग इति बहुशो यद्वर्णितं तत्र रामः
175999 सस्यधान्यादिकार्यस्यापि [सतुषातुषत्वाभ्यां सस्यधान्ययोर्भेदः ।] तर्हि
176000 कृषिवृष्ट्यादिकारणं विनैवोत्पत्तिः स्यादित्युत्पत्तिप्रसङ्गं शङ्कते -
176001 अकारणकमिति द्वाभ्याम् ॥ १ ॥
176002
176003 तदकारणतः सिद्धेः संभवेऽन्यदकारणम् ।
176004 कथं न जायते वस्तु क्वचित्किंचित्कदाचन ॥ २ ॥
176005
176006 तत्तर्हि अकारणत एव सर्वाभिलषितसिद्धेः संभवे अन्यत्सस्यधान्यादिकमपि वस्तु
176007 कृषीबलानामकारणकं कृषिवृष्टिबीजवापादिकारणं विनैव कथं न जायते
176008 इत्यर्थः ॥ २ ॥
176009
176010 श्रीवसिष्ठ उवाच ।
176011
176012 यद्यथा कल्पितं येन स संपश्यति तत्तथा ।
176013 कल्पनैवान्यथा न स्यात्तादृक्कारणविच्युतेः ॥ ३ ॥
176014
176015 न वयं व्यवहारव्यवस्थापकं काल्पनिकं कार्यकारणभावं
176016 बीजाङ्कुरादेर्वारयामः किंतु जगत्सत्यत्वप्रसञ्जनेन
176017 तत्त्वज्ञानवैयर्थ्यापादकं ब्रह्मातिरिक्तं प्रधानपरमाण्वाद्यश्रौतं
176018 वादिभिः कल्पितं कारणं निराचक्ष्महे । जगतो ब्रह्मविवर्तमात्रत्वप्रसिद्ध्या
176019 तत्त्वज्ञानेन बाधे कैवल्यसिद्धिर्यथा स्यादितीत्याशयेन वसिष्ठः समाधत्ते -
176020 यद्यथेति । अनादि व्यवहारे येन यद्यद्यथा दृढाध्यासेन कल्पितं स तत्तथा

176021 कार्यं कारणं वा सर्वं पश्यति | अन्यथा व्यवहारेऽपि व्यावहारिकनियमापलापे
176022 कापि कल्पना न स्यादित्यनभ्यासेनैव सर्वमुक्तिप्रसङ्ग इत्यर्थः || ३ ||
176023
176024 यथेदं कल्पितं दृश्यं मनसा येन तत्तथा |
176025 वेत्त्यसौ यादृगन्येन कल्पितं वेत्त्यसौ तथा || ४ ||
176026
176027 अत एव कल्पकबुद्ध्यनुसारेण व्यवस्थितमेव वस्तु अनुभूयत इत्याह - यथेदमिति
176028 | तथा च निरालम्बनवादनिष्कर्षे भट्टवार्तिके उदाहृतम् -
176029 परिव्राट्कामुकशुनामेकस्यां प्रमदातनौ | कुणपः कामिनी भक्ष्यमिति तिस्रो
176030 विकल्पनाः इति || ४ ||
176031
176032 कल्पनाकल्पनात्मैकं तच्च ब्रह्म स्वभावतः |
176033 कल्पनात्मेदृशं जन्तुर्यथा केशनखादिमान् || ५ ||
176034
176035 तर्हि किं निरालम्बनैव कल्पना नेत्याह - कल्पनाकल्पनात्मेति | तत्राचिदंशः
176036 कल्पनात्मा चिदंशस्त्वकल्पनात्मा उभयघटितमिदं जगत् | यथा जन्तुश्चेतनः
176037 पुरुषः केशनखाद्यचेतनघटितः प्रतीयते तद्वदित्यर्थः || ५ ||
176038
176039 अकारणपदार्थत्वं सकारणपदार्थता |
176040 ब्रह्मणि द्वयमप्यस्ति सर्वशक्त्यात्म तद्यतः || ६ ||
176041
176042 अत एव वस्तुतत्त्वदृशा अकारणपदार्थत्वम् कल्पनादृशा सकारणपदार्थतेति
176043 ब्रह्मणि द्वयमप्यविरोधेनास्ति || ६ ||
176044
176045 यतः स्याद्ब्रह्मणस्त्वन्यत्क्वचित्किंचित्कदाचन |
176046 तत्कारणविकल्पेन संयोगस्तस्य युज्यते || ७ ||
176047
176048 यद्युभयात्मकं ब्रह्म तर्हि कथमकारणकत्वपक्ष एव त्वया प्रतिष्ठापितस्तत्राह
176049 - यत इति | तत्त्वज्ञानस्यैव सप्रयोजनत्वात्तत्त्वदृष्टिमात्रपक्षपातेन स
176050 प्रतिष्ठापित इति भावः || ७ ||
176051
176052 यत्र सर्वमनाद्यन्तं नानानानात्म भासते |
176053 ब्रह्मैव शान्तमेकात्म तत्र किं कस्य कारणम् || ८ ||
176054
176055 नेह प्रवर्तते किंचिन्न च नाम निवर्तते |
176056 स्थितमेकमनाद्यन्तं ब्रह्मैव ब्रह्म खात्मकम् || ९ ||
176057
176058 किं कस्य कारणं केन किमर्थं भवतु क्व वा |
176059 किं कस्य कारणं केन किमर्थं मास्तु वा क्वचित् || १० ||
176060
176061 वास्तवमकारणकत्वं कल्पितकार्यानुत्पत्तितदुत्पत्त्योर्द्वयोरप्यविरोधीत्याह - किं
176062 कस्येति || १० ||
176063
176064 नेह शून्यं न वा शून्यं न सन्नासन्न मध्यता |
176065 विद्यते न महाशून्ये न नेति न न नेति च || ११ ||
176066
176067 शून्याशून्याद्युभयविधमात्रशून्यत्वान्महाशून्ये | न नेति न नेति चेति
176068 तदुल्लेखः || ११ ||
176069
176070 इदं न किंचित्किंचिद्वा यन्नामास्त्यथ नास्ति वा |
176071 सर्वं ब्रह्मैव तद्विद्धि यत्तथैवातथैव तत् || १२ ||
176072

176073 सर्वस्यापि ब्रह्मैकरस्यादेव शून्यता न शून्यैकरस्यादित्याह - इदमिति।
176074 यद्यस्माद्धेतोस्तद्ब्रह्म अध्यारोपे सर्वानुगतत्वात्तथैव अपवादे सर्वतो
176075 व्यावृत्तत्वादतथैव च ॥ १२ ॥
176076
176077 श्रीराम उवाच।
176078
176079 अतज्ज्ञविषये ब्रह्मन्कार्ये कारणसंभवे।
176080 किमकारणतात्म स्यात्कथं वेति वद प्रभो ॥ १३ ॥
176081
176082 नन्वतत्त्वज्ञविषयौ यथा अध्यारोपापवादौ तत्त्वज्ञैस्तद्बोधनायाभ्युपगम्येते
176083 तथा प्रधानपरमाण्वादिप्रयुक्तकार्यकारणसंभवोऽपि कुतो नाभ्युपगम्यत इति
176084 रामः शङ्कते - अतज्ज्ञेति। पृथिव्यप्तेजोवायुलक्षणे कार्ये
176085 तदवयवपरम्परासौक्ष्म्यावधीनां परमाणूनां सत्त्वादिगुणानां कारणानां
176086 वा संभवे किं जन्यद्रव्यमकारणवत्स्यात् कथं वा अद्वितीयब्रह्मपरिशेष
176087 इत्यर्थः ॥ १३ ॥
176088
176089 श्रीवसिष्ठ उवाच।
176090
176091 अतज्ज्ञो नाम नास्त्येव तावत्तज्ज्ञजनं प्रति।
176092 असतो व्योमवृक्षस्य विचारः कीदृशस्ततः ॥ १४ ॥
176093
176094 भवेदेवं यदि ब्रह्मातिरिक्तः प्रधानपरमाण्वादिकल्पकोऽतज्ज्ञः प्रसिद्ध्येत्। यदा
176095 तु ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवत्
176096 इति श्रुतिदर्शितदिशा ब्रह्मैव स्वाज्ञानादतज्ज्ञं तस्यैव तत्त्वज्ञानोपयुक्तं
176097 शास्त्रं तदा तदध्यारोपापवादन्यायेनैव तत्त्वज्ञाने उपयुज्यते न
176098 प्रधानपरमाण्वादिकल्पनयेति वैषम्यमित्याशयेन वसिष्ठः समाधत्ते -
176099 अतज्ज्ञ इति ॥ १४ ॥
176100
176101 एकबोधमयाः शान्तविज्ञानघनरूपिणः।
176102 तज्ज्ञास्तेषामसद्रूपे कथमर्थे विचारणा ॥ १५ ॥
176103
176104 कुतो नास्ति तत्राह - एकबोधमया इति। तद्यथा सैन्धवघनोऽनन्तरोऽबाह्यः
176105 कृत्स्नो रसघन एवं वा अरे अयमात्मा विज्ञानघन एव प्रज्ञानघन एव इति
176106 श्रुतेरिति भावः ॥ १५ ॥
176107
176108 अतज्ज्ञत्वं च बोधेऽन्तरवभाति तदङ्गता।
176109 गते स्वप्नसुषुप्तेऽन्तरिवनिद्रात्म केवलम् ॥ १६ ॥
176110
176111 ननु ब्रह्मातिरिक्तः अतज्ज्ञो नास्तीति कथं संभाव्यते। तार्किकैः पामरैश्च नाहं
176112 ब्रह्म नाहं ब्रह्मज्ञश्चेति स्वात्मन्यतत्त्वज्ञत्वाब्रह्मत्वयोः
176113 प्रत्यक्षमनुभवादित्याशङ्क्य तादृशानुभवबलेनैव तदात्मनामपि
176114 ब्रह्मत्वं समर्थयति - अतज्ज्ञत्वमिति।
176115 अज्ञानादिसर्वजगदारोपाधिष्ठानचिन्मात्रत्वं हि ब्रह्मत्वम्। तच्चाहमज्ञ
176116 इत्यनुभवितरि तार्किकात्मनि दुर्वारम्। यतः अज्ञत्वं प्रबोधरूपे
176117 आत्मन्यन्तरवभाति। यदि च वैशेषिककल्पितो जडोऽयमात्मा स्यात्
176118 कथमात्मन्यज्ञानमनुभवेत्। अतः
176119 अज्ञानाधिष्ठानचिद्रूपत्वमस्मादेवानुभवात्सिद्धम्। जगच्च
176120 केवलमज्ञानात्मैव यतस्तदङ्गतां गतम्। यथा स्वप्नसुषुप्ते
176121 निद्रान्तर्निद्राङ्गतां गते केवलं निद्रैव न निद्राव्यतिरिक्तं तयोः स्वरूपमस्ति
176122 तद्वत्। न च ज्ञानस्वभावे आत्मनि स्वभावविरुद्धमज्ञानमारोपमन्तरेण
176123 भवितुमर्हतीत्यज्ञानादिजगदारोपाधिष्ठानत्वस्यास्मादेवानुभवात्##-
176124

176125 तथाप्यभ्युपगम्यापि मूर्खनिश्चय उच्यते।
176126 मयेदमणु सर्वात्म यस्माद्ब्रह्म निरामयम्॥ १७॥
176127
176128 नन्वज्ञानादिजगदधिष्ठानत्वरूपं सर्वात्मत्वं ब्रह्मलक्षणं चेज्ज्ञानेन
176129 तदपाये तदब्रह्मैव स्यादित्याशङ्क्याह - तथापीति। मूर्खप्रतिबोधनार्थं
176130 मूर्खबुद्धिमनुसृत्य शुद्धब्रह्मव्युत्पादनार्थं मयेदं
176131 ब्रह्मणस्तटस्थलक्षणमुच्यते। स्वरूपलक्षणं तु तस्य
176132 शुद्धनिरामयानन्दैकरसत्वं नाज्ञानुभवपथमवतरतीत्यर्थः॥ १७॥
176133
176134 सन्त्यकारणका एव सन्ति कारणजास्तथा।
176135 भावाः संविद्यथा यस्मात्कल्प्यते लभ्यते तथा॥ १८॥
176136
176137 तथा चाज्ञबुद्ध्यनुसारेण जगदन्यदिव कृत्वा ब्रह्मकल्पादौ कारणमिति
176138 स्वीकारेऽपि यक्षानुरूपो बलिरिति न्यायेन मिथ्याभूतस्य प्रपञ्चस्य तादृशी मायैव
176139 कारणं तथापि न वास्तवाद्वैतक्षतिरित्याशयेनाह - सन्तीति। अकारणकाः
176140 शुक्तिरजतमरुनदीरज्जुसर्पादयः। तत्र संविदा कारणजत्वेन कल्पिताः सकारणका
176141 अन्यथाकल्पितास्त्वकारणका इति
176142 मृन्मयगौरीगणपत्योर्मातृपुत्रतावत्कल्पनानुसारेणैव तद्व्यवस्थेत्याह -
176143 संविदिति॥ १८॥
176144
176145 सर्वकारणसंशान्तौ सर्वानुभवशालिनाम्।
176146 सर्गस्य कारणं नास्ति तेन सर्गस्त्वकारणः॥ १९॥
176147
176148 तत्त्वदृशा त्वखण्डाद्वयचिन्मात्रमेव सदा नाणुमात्रमपि कदाचिद्विपर्यास इति न
176149 सर्गकारणं केनचिदपि निरूपयितुं शक्यमित्याह - सर्वेति।
176150 सर्वेषामनुभवशालिनां तत्त्वविदाम्॥ १९॥
176151
176152 हृदयंगमतात्यक्तमीश्वरादि प्रकल्प्यते।
176153 यदत्र किंचिद्दुःस्वादु व्यर्थं वाग्जालमेव तत्॥ २०॥
176154
176155 अत्र ईदृशे स्वप्नगन्धर्वनगरमरुमरीचिकाप्राये जगति सत्यत्वसाधनाभिनिवेशेन
176156 यद्वैशेषिकादिभिः मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्
176157 इत्यादिश्रुतिप्रसिद्धमायोपहितब्रह्मातिरिक्ततटस्थेश्वरप्रधानपरमाण्वादि
176158 किंचित्कारणं प्रकल्प्यते
176159 तत्प्रत्यक्षश्रुतिविद्वदनुभवविरोधाद्वेदान्तशास्त्रप्रसिद्धयुक्तिपराहतत्वाच्च
176160 दुःस्वादु तिक्तं स्रष्टुरीश्वरस्य भोक्तुर्जीवस्य वा पुरुषार्थापर्यवसायित्वाद्व्यर्थम्
176161 । अत एवाभिज्ञानां हृदयंगमतया त्यक्तमहृदयंगममिति वृथा
176162 कण्ठशोषं वाग्जालमेव तदित्यर्थः॥ २०॥
176163
176164 अन्यथानुपपत्त्यैव स्वप्नाभाकलनादृते।
176165 स्थूलाकारात्मिका काचिन्नास्ति दृश्यस्य दृश्यता॥ २१॥
176166
176167 प्रबोधबाध्यत्वान्यथानुपपत्त्यापि जगत्स्वप्नाभमेवेति तदर्थं न
176168 कारणकल्पनावकाश इत्याह - अन्यथानुपपत्त्येति॥ २१॥
176169
176170 स्वप्नपृथ्व्याद्यनुभवे किमबुद्धस्य कारणम्।
176171 चित्स्वभावादृते ब्रूह स्वप्नार्थो नाम कीदृशः॥ २२॥
176172
176173 तदेव विशदयति - स्वप्नेति। अबुद्धस्य अप्रबुद्धस्य॥ २२॥
176174
176175 स्वप्नार्थो ह्यपरिज्ञातो महामोहभरप्रदः।
176176 परिज्ञातो न मोहाय यथा सर्गास्तथैव च॥ २३॥

शुष्कतर्कहठावेशाद्यद्वाप्यनुभवोज्झितम् ।
कल्प्यते कारणं किंचित्सा मौर्ख्याभिनिवेशिता ॥ २४ ॥

अग्नेरौष्ण्यमपां शैत्यं प्राकाश्यं सर्वतेजसाम् ।
स्वभावो वाखिलार्थानां किमबुद्धस्य कारणम् ॥ २५ ॥

यद्यवश्यं कारणमपेक्षितं तर्ह्यज्ञातब्रह्मस्वभाव एव तथास्त्वित्याशयेनाह
- अग्नेरिति । अबुद्धस्याज्ञानोपहितस्यात्मनः स्वभावो वा कारणमिति शेषः ॥ २५ ॥

किं ध्यातृशतलब्धस्य ध्येयस्यैकस्य कारणम् ।
किं च गन्धर्वनगरे पुरे भित्तिषु कारणम् ॥ २६ ॥

मनोरथकल्पितनगरवद्ध्यातृभेदेन व्यवस्थिताकारत्वादपि न
सर्वसाधारणमेकं कारणं सुवचमित्याशयेनाह - किमिति ॥ २६ ॥

धर्माद्यमुत्रामूर्तत्वान्मूर्ते देहे न कारणम् ।
देहस्य कारणं किं स्यात्तत्र सर्गादिभोगिनः ॥ २७ ॥

धर्माधर्मयोस्तु अमूर्तत्वादेव मूर्तदेहाद्युपादानकारणता न संभवतीति
कर्ममीमांसककल्पनमपि निराचष्टे - धर्मादीति । अमुत्र परलोके ॥ २७ ॥

भित्त्यभित्त्यादिरूपाणां ज्ञानस्य ज्ञानवादिनः ।
किं कारणमनन्तानामुत्पन्नध्वंसिनां मुहुः ॥ २८ ॥

विज्ञानवादिमतेऽप्यमूर्तस्य क्षणिकस्य च विज्ञानस्य मूर्ता क्षणिकोपादानता
दुर्वचेत्याह - भित्तीति । भित्तयः स्थूलकुड्यादयः अभित्तयस्तद्विलक्षणाः
परमाणवः । उत्पन्नध्वंसिनामित्युक्त्या कार्यानुकूलव्यापारस्य कार्यसंबन्धस्य
च क्षणिकेष्वसंभवः सूचितः ॥ २८ ॥

स्वभावस्य स्वभावोऽसौ किल कारणमित्यपि ।
यदुच्यते स्वभावस्य सा पर्यायोक्तिकल्पना ॥ २९ ॥

स्वभाववादिनश्चार्वाकस्य मतं निरस्यति - स्वभावस्येति । अङ्कुरादिस्वभावस्य
कालक्षेत्रजलादिसहितबीजादिस्वभावोऽसौ कारणमिति चार्वाकैर्यदुच्यते सा उक्तिरपि
बीजस्वभावपदयोरर्थभेदानिरूपणादङ्कुरस्वभावस्येत्यत्रत्यस्वभावपदे
षष्ठ्यर्थसंबन्धस्यापि दौर्लभ्यान्नानार्थत्वे उभयत्रापि पर्यायतया
सहप्रयोगानापत्तेः सकलसाधारणस्वभावत्वसामान्याप्रसिद्धेः
प्रातिस्विकरूपापरामर्शप्रसङ्गाच्चैकार्थ्याघटनाच्च निरर्थिकोक्तिः सेत्यर्थः ॥ २९
॥

तस्मादकारणा भ्रान्तिर्भावा भान्ति च कारणम् ।
अज्ञे ज्ञे त्वखिलं कार्यं कारणाद्भवति स्थितम् ॥ ३० ॥

अतः परिशेषात्स्वाभिमतं सिद्धं दर्शयति - तस्मादिति । तस्मात् सर्वे
भावास्तत्कारणं चेत्यखिलमज्ञे अकारणा भ्रान्तिरेव ज्ञे तु सन्मात्रात्मना
स्थितमेव कार्यं कारणात्तस्मादेव चिच्चमत्काररूपेणाविर्भवति तिरोभवति चन
तद्व्यतिरिक्तमणुमात्रमप्यस्तीत्यर्थः ॥ ३० ॥

यद्वत्स्वप्नपरिज्ञानात्स्वप्ने द्रव्यापहारिभिः ।
न दुःखाकरणं तद्वज्जीवितं तत्त्वदर्शनात् ॥ ३१ ॥

176229 अत एव ज्ञस्याज्ञकृतैरपराधकोटिभिरप्यन्तर्दुःखं न जायत इत्याह -
176230 यद्वदिति। स्वप्ने द्रव्यापहारिभिश्चौरैः कृतं ताडनबन्धनादिकं प्रबुद्धस्य
176231 स्वप्नमिथ्यात्वपरिज्ञानाद्यद्वद्दुःखाकरणं पीडासंपादकं न
176232 तद्वत्तत्त्वदर्शनोत्तरं जीवनमपि दुःखाकरणं नेत्यर्थः। सुख दुःख
176233 तत्क्रियायाम् इति डाच्॥ ३१॥
176234
176235 सर्गादावेव नोत्पन्नं दृश्यं चिद्गगनं त्विदम्।
176236 स्वरूपं स्वप्नवद्भाति नान्यदत्रोपपद्यते॥ ३२॥
176237
176238 अन्यद्दुःखं तन्निमित्तं च॥ ३२॥
176239
176240 अन्या न काचित्कलना दृश्यते सोपपत्तिका।
176241 अस्मान्न्यायादृते कस्माद्ब्रह्मैवैषानुभूतिभूः॥ ३३॥
176242
176243 अस्मान्न्यायादृते अन्या कलना अन्यादृशी वादिनां कल्पना अत एषा जगत्कलना
176244 ब्रह्मानुभूतिभूरेवेत्यर्थः॥ ३३॥
176245
176246 ऊर्म्यावर्तद्रवत्वादि शुद्धे जलघने यथा।
176247 तथेदं सर्गपर्यायं ब्रह्मणि ब्रह्म भासते॥ ३४॥
176248
176249 स्पन्दावर्तविवर्तादि निर्मले पवने यथा।
176250 तथायं ब्रह्मपवने सर्गस्पन्दोऽवभासते॥ ३५॥
176251
176252 यथानन्तत्वसौषिर्यशून्यत्वादि महाम्बरे।
176253 स सन्नासन्नबोधात्म तथा सर्गः प्रापरः॥ ३६॥
176254
176255 आसन्नो बोधात्मा येन तथाविधं सत् स प्रसिद्धः सन् आकाश एव तथेत्यर्थः। न सन्
176256 इति पाठे स्पष्टम्॥ ३६॥
176257
176258 एषु निद्रादिकेष्वेते सूपलब्धा अपि स्फुटम्।
176259 भावा असन्मया एवमेतेऽनन्यात्मका यतः॥ ३७॥
176260
176261 कुतः सन्नेव तत्राह - एष्विति। यतः सदनन्यात्मका इत्यर्थः॥ ३७॥
176262
176263 सर्गप्रलयसंस्थानान्येवमात्मनि चिद्घने।
176264 सौम्ये स्वप्नसुषुप्ताभा शुद्धे निद्राघने यथा॥ ३८॥
176265
176266 स्वप्नात्स्वप्नान्तराण्यास्ते निद्रायां मानवो यथा।
176267 सर्गात्सर्गान्तरात्मास्ते [अन्तराण्यास्ते इति पाठः।] स्वसत्तायामजस्तथा॥
176268 ३९॥
176269
176270 अजः जन्मादिशून्यः परमात्मा स्वयमेव सर्गात्सर्गान्तरात्मना आस्ते॥ ३९॥
176271
176272 पृथ्व्यादिरहितोऽप्येष ब्रह्माकाशो निरामयः।
176273 अतद्वांस्तद्वदाभाति यथा स्वप्नानुभूतिषु॥ ४०॥
176274
176275 स्थिता यथास्यां पश्यन्त्यां शब्दा घटपटादयः।
176276 जाताजाताः स्थिताः सर्गास्तथानन्ये महाचिति॥ ४१॥
176277
176278 पश्यन्त्यां सांप्रतिकसर्वदर्शनात्मनि। जाताः पूर्वतना अजाता भविष्यन्तः॥ ४१॥
176279
176280 पश्यन्त्यामेव पश्यन्ती यथा भाति तथैव च।

यथा शब्दास्तथा सर्गाश्चितैव चिति चिन्मयाः ॥ ४२ ॥

यदा अनन्ये तदा शब्दास्तदर्थभूतसर्गाश्च ब्रह्मणि सन्तीत्युक्तिः पश्यन्त्यामेव
पश्यन्ती तिष्ठतीत्यभिन्नायामेव भेदोपचारेणौपचारिके आधाराधेयभावे
पर्यवस्यतीत्याह - पश्यन्त्यामेवेति ॥ ४२ ॥

किं शास्त्रकं तत्रकथाविचारैर्निर्वासनं जीवितमेव मोक्षः ।
सर्गे त्वसत्येवमकारणत्वात्सत्येव नास्त्येव न नाम काचित् ॥ ४३ ॥

यदा शब्दाः सर्गाश्च चिन्मया एव तदा तत्र कृतकार्यं शास्त्रमपि
शास्याभावान्मोक्षफलस्य पृघगसत्त्वान्निरसनीयप्रपञ्चबन्धाभावाच्च
निवर्तत इत्याह - किमिति । शास्त्रमेव शास्त्रकं तत्र किम् । तत्रत्यकथाविचारैश्च
किम् । यतः शास्त्रफलं निर्वासनं जीवितमेव मोक्षः सिद्धः । एवं वर्णितरीत्या
अकारणत्वात्सर्गे असति नानाप्रपञ्चरचना प्रत्यक्षं सत्येव काचिन्न च नास्त्येवेति
निःशेषं मार्जितेत्यर्थः ॥ ४३ ॥

एषा च सिद्धेह हि वासनेति सा बोधसत्तैव निरन्तरैका ।
नानात्वनानारहितैव भाति स्वप्ने चिदेवेह पुरादिरूपा ॥ ४४ ॥

या चैषा वासनेतीह प्रपञ्चबीजतया भाति सा नानात्वेन नानात्वरहिता बोधसत्तैव
भाति । यथा इह प्रत्यक्षे स्वप्ने चिदेव पुरादिरूपा भाति तद्वदित्यर्थः ॥ ४४ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० नि० उ० ब्रह्मगीतासु सत्यवर्णनं
नाम सप्तसप्तत्यधिकशततमः सर्गः ॥ १७७ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
सत्यवर्णनं नाम सप्तसप्तत्यधिकशततमः सर्गः ॥ १७७ ॥

## अष्टसप्तत्यधिकशततमः सर्गः १७८

श्रीराम उवाच ।

पदार्था द्विविधाः सन्ति मूर्तामूर्ता जगत्त्रये ।
यत्र सप्रतिघाः केचित्केचिदप्रतिघा अपि ॥ १ ॥

इहाऽमूर्तचिता मूर्तचालने युक्तिरुच्यते ।
जगच्चामूर्तचिन्मात्रमैन्दवाख्यानतः स्फुटम् ॥

धर्माद्यमुत्रामूर्तत्वान्मूर्ते देहे न कारणम् इत्युक्तिं श्रुत्वा अमूर्तेन चिदात्मना
मूर्तस्य देहादेश्चालने उपपत्तिं जिज्ञासमानो रामस्तदनुपपत्तिं दर्शयितुं
भूमिकां रचयति - पदार्था इत्यादिना । मूर्तामूर्तब्रह्मणा दर्शितो विभाग इह
नाभिप्रेतः किं तु प्रतिघातयोग्यतातदयोग्यतोपाधिभेदकृत इत्याशयेन विशिनष्टि
- यत्रेति ॥ १ ॥

तानिहाप्रतिघानाहुर्नान्योन्यं वेल्लयन्ति ये ।
तांश्च सप्रतिघानाहुरन्योन्यं वेल्लयन्ति ये ॥ २ ॥

कुसुमकार्पासनवनीतादिमृदुतरपदार्थानां
कठिनशिलादिवत्प्रतिघायोग्यत्वादमूर्तत्वमुक्तं मा भूदिति विशेषणतात्पर्यं
लक्षणाभ्यामुद्घाटयति - तानीति । वेल्लयन्ति संश्लिष्यन्ति ॥ २ ॥

176333 इह सप्रतिघानां तु दृष्टमन्योन्यवेल्लनम् ।
176334 न त्वप्रतिघरूपाणां केषांचिदपि किंचन ॥ ३ ॥
176335
176336 तदेवं लोकप्रसिद्ध्या विशदयति - इहेति ॥ ३ ॥
176337
176338 तत्र संवेदनं नाम यदिदं चन्द्रमण्डले ।
176339 इतः पतत्यप्रतिघं तत्सर्वेणानुभूयते ॥ ४ ॥
176340
176341 अस्त्वेवं प्रस्तुते किं तत्राह - तत्रेति । तत्र संवेदनं नामेदं यत्प्रसिद्धं
176342 तदप्रतिघमेव । यद्यस्माद्धेतोश्चन्द्रं पश्यतः पुरुषस्य इतः
176343 अस्मात्प्रदेशान्नयनरश्म्यनुसारिचित्तेन सह तदवच्छिन्नसंवेदनानि
176344 चन्द्रमण्डले अप्रतिघं निःसंश्लेषमेव पतन्ति । अतोऽमूर्तानीति सर्वेणापि
176345 चन्द्रदर्शिना स्वयमनुभूयत इत्यर्थः ॥ ४ ॥
176346
176347 अर्धप्रबुद्धसंकल्पविकल्पाद्वैतकल्पितम् ।
176348 वदाम्यभ्युपगम्येदं न तु बोधदशास्थितम् ॥ ५ ॥
176349
176350 नन्वयमाक्षेपस्ते प्रबुद्धदृशा अप्रबुद्धदृशा वा । आद्ये
176351 मूर्तमेवाप्रसिद्धम् । द्वितीये अमूर्ता चिद्देहादि प्रवर्तयतीत्यप्रसिद्धम् ।
176352 देहाद्यहंकारान्तानां संपिण्डितानामेव लौकिकैरात्मत्वानुभवादित्याशङ्क्याह
176353 - अर्धेति । अर्धप्रबुद्धानां तृतीयचतुर्थभूमिकान्तरालस्थानां
176354 संकल्पविकल्पद्वैतेन कल्पितमिदं जगदभ्युपगम्य वदाम्याक्षिपामि ।
176355 बोधदृशा स्थितं परिशिष्टं चिन्मात्रमभ्युपगम्य तु नाक्षिपामीत्यर्थः ॥ ५ ॥
176356
176357 कः प्राणमारुतः क्षोभं जनयत्याशयस्थितः ।
176358 प्रवेशनिर्गममयं कथं वा वद मे प्रभो ॥ ६ ॥
176359
176360 यद्यपि मूर्तः प्राणमारुत एव प्रवेशनिर्गमवृत्तिभेदेन क्षुब्धो देहं
176361 प्रवर्तयतीति सुवचं तथापि तस्य प्राणमारुतस्य क्षोभं को जनयति ॥ ६ ॥
176362
176363 कथमप्रतिघं नाम वेदनं प्रतिघात्मकम् ।
176364 इमं देहं चालयति भारं भारहरो यथा ॥ ७ ॥
176365
176366 ननु जीवात्मकश्चिदाभास एव तं जनयिष्यति तत्राह - कथमिति । देहं
176367 प्राणादिदेहान्तम् ॥ ७ ॥
176368
176369 यदि सप्रतिघं वस्तु वेल्लत्यप्रतिघात्मकम् ।
176370 कथं संवित्तिमात्रेण पुंसः शैलो न वल्गति ॥ ८ ॥
176371
176372 यदि अप्रतिघात्मकमपि संवित्तिमात्रं प्राणादिदेहान्तं सप्रतिघं वेल्लति विष्टभ्य
176373 चालयति तर्हि शैलश्चलत्विति पुंसः संकल्पसंवित्तिमात्रेण शैलः कुतो न चाल्यते ।
176374 बाह्यशैलादेर्देहादेश्च कोविशेष इत्यर्थः ॥ ८ ॥
176375
176376 श्रीवसिष्ठ उवाच ।
176377
176378 विकासमथ संकोचमत्र नाली हृदि स्थिता ।
176379 यदा याति तदा प्राणश्छेदैरायाति याति च ॥ ९ ॥
176380
176381 यथा बाह्यस्य वायोरयस्कारभस्त्रायां प्रवेशनिर्गमाभ्यां तच्चालकत्वं तथा
176382 प्राणवायोरपि कण्ठादिनालीविलाकाशसंकोचविकासानुमितप्रवेशनिर्गमाभ्यां
176383 देहादिचालकत्वं प्रत्यक्षमेव हृदयादिप्रवेशेष्वप्येवमेव बोध्यमित्युत्तानोक्त्या
176384 गूढाशयेन वसिष्ठः समाधत्ते - विकासमिति द्वाभ्याम् । छेदैश्छिद्रैः ॥ ९ ॥

बाह्योपस्करभस्त्रायां यथाकाशास्पदात्मकः ।
वायुर्यात्यपि चायाति तथात्र स्पन्दनं हृदि ॥ १० ॥

आकाशश्छिद्रं तदास्पदः तदाश्रयसर्वद्रव्यान्तःसंचारस्वभावो वायुर्यथा
बाह्यायामयस्कारोपस्करभस्त्रायां याति प्रविशति आयाति निर्गच्छति ॥ १० ॥

श्रीराम उवाच ।

बहिर्भस्त्रामयस्कारः संकोचनविकासनैः ।
योजयत्यान्तरं नाडीं कश्चालयति चालकः ॥ ११ ॥

सत्यं वायुश्चालयति तथाप्ययस्कारादिचेतनाधिष्ठितभस्त्रायामेव तथा चालयति
नान्यत्रेति चेतनमेवाचेतनस्य नियतव्यवहारचेष्टानिमित्तमवश्यं वाच्यम् । तत्र
नाडीं आनतरं प्रविश्य कश्चेतनश्चालयतीत्यर्थः ॥ ११ ॥

शतं कथं भवेदेकं कथमेकं शतं भवेत् ।
कथं स चेतना एते काष्ठलोष्टोपलादयः ॥ १२ ॥

ननु शतं चैका च हृदयस्य नाड्यः इति श्रुतौ विष्वक्प्रसृताः शतं नाड्यः
श्रूयन्ते । तत्रैकशतं नाडीनां तासां द्वासप्ततिर्द्वासप्ततिः प्रतिशाखं
नाडीसहस्राणि भवन्त्यासु व्यानः संचरतीति च । तत्र सर्वनाडीषु व्यानसंचारस्य
देहादिचलननिमित्तत्वे सदैव सर्वाङ्गचलनं स्यान्नककहस्तपादाद्युद्यमनं
नियतम् । यद्युच्येत एकैकाङ्गोद्यमने उपस्थिते नाडीनां शतमपि तदङ्गे एकं
भवति सर्वाङ्गचलने उपस्थिते त्वेकमपि सर्वाङ्गव्यापि नाडीशतं भवतीति
तत्राप्याह - शतमिति । किंचामूर्तचैतन्यस्य संश्लेषो देहेऽपि नास्ति ।
आध्यासिकसंबन्धस्तु काष्ठलोष्टादिष्वपि तुल्य इति तेऽपि सचेतना वाच्यास्तच्च
कथमित्यर्थः ॥ १२ ॥

कस्मान्न स्थावरं वस्तु प्रस्पन्द्यपि चमत्कृतम् ।
वस्तु जङ्गममेवेह स्पन्दि मात्रेव किं वद ॥ १३ ॥

तथा स्थावरं वृक्षलताकाष्ठपाषाणादि वस्तु चेतनं चेत्प्रस्पन्दि कस्मान्न ।
देहवद्भोगोपयोगेन चमत्कृतमपि कस्मान्न मात्रा नियन्त्रणा कुलालादिना
अधिष्ठितं चक्रादीव नियतकालस्पन्दि किम् ॥ १३ ॥

श्रीवसिष्ठ उवाच ।

अन्तःसंवेदनं नाम चालयत्यान्त्रवेष्टनम् ।
बहिर्भस्त्रामयस्कार इव लोकेऽनुचेष्टनम् ॥ १४ ॥

कार्यकारणस्वामिन्या भोक्तृजीवसंविदो
यत्रानादिप्रवाहोपनीतकामकर्मवासनाप्रयुक्तस्तादात्म्याध्यासस्तच्चालने
आध्यासिकस्वतादात्म्यशालिप्राणसंश्लेषद्वारा स्वातन्त्र्यमन्यत्र पारतन्त्र्यमिति
व्यवस्थेति गूढाभिसंधिनैव वसिष्ठ उत्तरमाह - अन्तरिति । आन्त्रवेष्टनं
[अन्त्रस्येदमान्त्रमन्त्रसंबन्धि ।] नाडीसमूहम् । तदनुसारेणैव लोके
सर्वोऽपि बहिश्चेष्टनं करोतीति शेषः ॥ १४ ॥

श्रीराम उवाच ।

वाय्वन्त्रादिशरीरस्थं सर्वं सप्रतिघं मुने ।
कथमप्रतिघा संविच्चालयेदिति मे वद ॥ १५ ॥

176437
176438 उत्तानार्थेन गूढाभिसंहितेन च स्वशङ्काबीजेन परिहृतमिति गूढाभिसंधिरेव
176439 रामः पुनः स्वशङ्कामनुवदति - वाय्विति ॥ १५ ॥
176440
176441 संविदप्रतिघाकारा यदि सप्रतिघात्मकम् ।
176442 चालयेदचलिष्यत्तद्दूरमम्भो यदिच्छया ॥ १६ ॥
176443
176444 विपर्यये दोषमाह - संविदिति । तर्त्तिह दूरं दूरस्थमप्यम्भः यातीति यन्
176445 तृषितः पान्थस्तदिच्छया अचलिष्यत् स्वयमेवागमिष्यत् ॥ १६ ॥
176446
176447 सप्रतिघाप्रतिघयोर्मिथो यदि पदार्थयोः ।
176448 वेल्लनं स्यात्तदिच्छैव कर्तृकर्मेन्द्रियैः क्व किम् ॥ १७ ॥
176449
176450 तथा च बाह्यव्यवहारे सर्वप्राणिनामिच्छयैव सर्वकार्यसिद्धेः
176451 कर्मेन्द्रियघटाद्युपकरणवैयर्थ्यं च स्यादित्याह - सप्रतिघेति । तर्त्तिह
176452 इच्छैव बहिर्वचनादानविहरणोत्सर्गादिकं करिष्यतीति शेषः ॥ १७ ॥
176453
176454 सप्रतिघाप्रतिघयोः श्लेषो नास्ति बहिर्यथा ।
176455 तथैवान्तरहं मन्ये शेषं कथय मे मुने ॥ १८ ॥
176456
176457 बहिः श्लेषाभावेऽप्यन्तः श्लेषोऽस्तु तत्राह - सप्रतिघेति । एवं
176458 त्वत्समाधानयुक्तिषु निरस्तासु शेषं युक्त्यन्तरं कथय न तु निरस्तमेव पुनः
176459 पुनः कथयेत्यर्थः ॥ १८ ॥
176460
176461 अन्तः स्वयं योगिना वा यथैतदनुभूयते ।
176462 अमूर्तस्यैव मूर्तेन वेल्लनं तद्वदाशु मे ॥ १९ ॥
176463
176464 अथवा योगिना त्वया स्वयं यथा एतत् अमूर्तस्यैव मूर्तेन वेल्लनं लोके
176465 अत्यन्ताप्रसिद्धमपि योगबलेनान्तर्यथा येनोपायेनानुभूयते तद्वदेत्यर्थः ॥ १९ ॥
176466
176467 श्रीवसिष्ठ उवाच ।
176468
176469 सर्वसंदेहवृक्षाणां मूलकाषमिदं वचः ।
176470 सर्वैकतानुभूत्यर्थं शृणु श्रवणभूषणम् ॥ २० ॥
176471
176472 एवमाक्षिप्तो वसिष्ठः प्रागुक्तगूढाभिसंध्युत्तरमपि वासनानां
176473 बाह्याध्यात्मिकपरिच्छेदभ्रान्तिमात्रमूलत्वादनवस्थाग्रस्तं निष्कर्षासहं
176474 रामेण ज्ञातमुद्घाटितमपि रामः खण्डयिष्यत्येवेति मन्यमानस्तदुपेक्ष्य
176475 सिद्धान्तावलम्बनेनैवैकोक्त्या सर्वं समाधत्ते - सर्वेति । सर्वेषां
176476 संदेहानां तत्त्वाज्ञानमूलकत्वात्सर्वैकतानुभवलक्षण##-
176477
176478 नेह किंचिन्न नामास्ति वस्तु सप्रतिघं क्वचित् ।
176479 सर्वदा सर्वमेवेदं शान्तमप्रतिघं ततम् ॥ २१ ॥
176480
176481 भवेदयं त्वदाक्षेपनिवहः सर्वोऽपि सप्रतिघयथार्थप्रपञ्चाभ्युपगमे । यदा
176482 त्वप्रतिघा चिदेव बाह्याध्यात्मिकवस्तुभेदभ्रान्त्यात्मनां अविद्यावशाद्विवर्तते
176483 तदा यथादर्शनमेव प्राणादिदेहान्तसंघाते
176484 आन्तरचैतन्यमात्राधीनश्चलनाद्यध्यासो बाह्ये घटादौ तु करावष्टम्भाद्यधीन
176485 इति व्यवस्थित एवाभ्युपगम्यते न संकीर्ण इति समुदिताभिप्रायः ॥ २१ ॥
176486
176487 शुद्धं संविन्मयं सर्वं शान्तमप्रतिघात्मकम् ।
176488 पदार्थजातं पृथ्व्यादि स्वप्नसंकल्पयोरिव ॥ २२ ॥

176489
176490 आदावन्ते च नास्तीदं कारणाभावतोऽखिलम् ।
176491 भ्रान्त्यात्मा वर्तमानापि भाति चित्स्वप्नगा यथा ॥ २३ ॥
176492
176493 द्यौः क्षमा वायुराकाशं पर्वताः सरितो दिशः ।
176494 महता कारणौघेन बोधमप्रतिघं विदुः ॥ २४ ॥
176495
176496 अत एव तत्त्वविदो महता
176497 विवेकवैराग्यत्यागश्रवणमनननिदिध्यासनादिप्रयत्नसाध्यकारणौघेन
176498 मूर्ताकारं सवासनं निर्मृज्य द्यौः क्षमा वायुरित्यादि सर्वं जगदप्रतिघं
176499 बोधमात्रमिति विदुरित्यर्थः ॥ २४ ॥
176500
176501 अन्तःकरणभूतादि मृत्काष्ठदृषदादि वा ।
176502 सर्वं शून्यमशून्यं च चेतनं विद्धि नेतरत् ॥ २५ ॥
176503
176504 चेतनमिति भावे ल्युट् ॥ २५ ॥
176505
176506 तत्रैवमैन्दवाख्यानं शृणु श्रवणभूषणम् ।
176507 मया च पूर्वमुक्तं तत्किंचान्यदभिवर्ण्यते ॥ २६ ॥
176508
176509 चिन्मात्रमेव सर्वजगन्न मूर्तं किंचिदस्तीत्यर्थे प्रागुक्तमैन्दवाख्यानं पुनः
176510 श्रावयितुं प्रतिजानीते - तत्रेति । पूर्वं मनोमात्रं
176511 जगदित्युत्पत्तिप्रदर्शनायोक्तमिह त्वन्यच्चिन्मात्रमेव जगदिति
176512 निर्वाणनिष्कर्षार्थमभिवर्ण्यत इत्यर्थः ॥ २६ ॥
176513
176514 तथापि वर्तमानोक्तप्रश्नबोधाय तच्छृणु ।
176515 यथेदं सर्वमद्यादि चिदित्येव तु भोत्स्यते ॥ २७ ॥
176516
176517 प्रस्तुतप्रश्नसमाधानप्रयोजनभेदादपि पौनरुक्त्यमदोषायेत्याह - तथापीति ।
176518 अमूर्ता चिदित्येव प्रश्नसमाधानं त्वया भोत्स्यते । कर्मणि लृटि स्ये भष्भावः ॥
176519 २७ ॥
176520
176521 कस्मिंश्चित्प्राक्तनेनैव जगज्जालेऽभवद्द्विजः ।
176522 तपोवेदक्रियाधारो ब्रह्मन्निन्दुरिति स्मृतः ॥ २८ ॥
176523
176524 प्राक्तनेनोत्पत्तिप्रकरणव्र्णितप्रकारेण विशिष्टे जगज्जाले ॥ २८ ॥
176525
176526 दश तस्याभवन्पुत्रा जगतो दिक्तटा इव ।
176527 महाशया महात्मानो महतामास्पदं सताम् ॥ २९ ॥
176528
176529 जगतो ब्रह्माण्डोदराकाशस्य दश दिक्तटा इव । आस्पदं प्रतिष्ठा ॥ २९ ॥
176530
176531 स तेषां कालवशतः पिताऽन्तर्धिमुपाययौ ।
176532 दशानां भगवान् रुद्र एकादश इव क्षये ॥ ३० ॥
176533
176534 क्षये महाप्रलये ॥ ३० ॥
176535
176536 तस्यानुगमनं चक्रे भार्या वैधव्यभीतिभिः ।
176537 अनुरक्ता दिनस्येव संध्या ताराविलोचना ॥ ३१ ॥
176538
176539 तयोस्ते तनया दुःखकलिता विपिनं गताः ।
176540 कृतौर्ध्वदेहिकास्त्यक्त्वा व्यवहारं समाधये ॥ ३२ ॥

176541
176542 दुःखेन वियोगदुःखेन कल्पिता व्याप्ताः ॥ ३२ ॥
176543
176544 धारणानां समस्तानां का स्यादुत्तमसिद्धिदा ।
176545 धारणा यन्मयाः सन्तः स्याम सर्वेश्वरा वयम् ॥ ३३ ॥
176546
176547 धारणानां विषयविशेषाकारितमनःस्थैर्यलक्षणानां मध्ये का किंविषयिणी
176548 उत्तमधारणा स्यादित्यर्थः । सर्वेश्वरा हिरण्यगर्भभूताः ॥ ३३ ॥
176549
176550 इति ते तत्र संचिन्त्य बद्धपद्मासना दश ।
176551 इदं संचिन्तयामासुर्निर्विघ्ने कन्दरोदरे ॥ ३४ ॥
176552
176553 निर्विघ्ने श्वापदाद्युपघातरहिते ॥ ३४ ॥
176554
176555 पद्मजाधिष्ठिताशेषजगद्धारणया स्थिताः ।
176556 भवामः पद्मजोपेतं जगद्रूपमविघ्नतः ॥ ३५ ॥
176557
176558 पद्मजेन चतुर्मुखेनाधिष्ठितं यदशेषं जगद्ब्रह्माण्डं तदेवाहमिति स्थिता
176559 निश्चलाः सन्तः ॥ ३५ ॥
176560
176561 इति संचिन्त्य सब्रह्मजगद्धारणया चिरम् ।
176562 निमीलितदृशस्तस्थुस्ते चित्ररचिता इव ॥ ३६ ॥
176563
176564 अथैतद्धारणाबद्धचित्तास्ते तावदच्युताः ।
176565 आसन्मासान्दशाष्टौ च यावत्ते तत्र देहकाः ॥ ३७ ॥
176566
176567 अच्युताः मनसो वृत्त्यन्तरधारणेन प्रच्युतिमप्राप्ताः ॥ ३७ ॥
176568
176569 शुष्काः कंकालतां याताः क्रव्यादैश्चर्विताङ्गकाः ।
176570 नाशमभ्याययुस्तत्र च्छायाभागा इवातपैः ॥ ३८ ॥
176571
176572 कंकालतां शवताम् ॥ ३८ ॥
176573
176574 अहं ब्रह्मा जगच्चेदं सर्गोऽयं भुवनान्वितः ।
176575 इति संपश्यतां तेषां दीर्घकालोऽभ्यवर्तत ॥ ३९ ॥
176576
176577 जगच्चेदमहम् । संपश्यतां ध्यायताम् ॥ ३९ ॥
176578
176579 तानि चित्तान्यदेहानि दशैकध्यानतस्ततः ।
176580 संपन्नानि जगन्त्येव दश देहानि वै पृथक् ॥ ४० ॥
176581
176582 दश चित्तानि दश देहानि दश ब्रह्माण्डरूपाणि जगन्त्येव ध्यानपरिपाकेन
176583 संपन्नानि तत्क्रतुन्यायेनेत्यर्थः ॥ ४० ॥
176584
176585 इति तेषां चिदिच्छा सा संपन्ना सकलं जगत् ।
176586 अत्यन्तस्वच्छरूपैव स्थिता चाकारवर्जिता ॥ ४१ ॥
176587
176588 चिदेवेच्छा भूत्वा जगत्संपन्ना । किंचित्स्वभावहानेन नेत्याह - अत्यन्तेति ॥ ४१ ॥
176589
176590 संविन्मयत्वाज्जगतां तेषां भूम्यचलादि तत् ।
176591 सर्वं चिदात्मकं विद्धि नो चेदन्यत्किमुच्यताम् ॥ ४२ ॥
176592

176593 तथा च प्रतिज्ञातं सिद्धमित्याह - संविन्मयत्वादिति ॥ ४२ ॥
176594
176595 किल यत्त्रिजगज्जालं तेषां किमात्म तत्तथा ।
176596 संविदाकाशशून्यत्वमात्रमेवेतरन्न तत् ॥ ४३ ॥
176597
176598 नो चेत्तेषां किल दशविधं त्रिजगज्जालं तत्किमात्म वा तत्त्वया उच्यतामिति
176599 पूर्वत्रान्वयः । त्वया किमुच्यते तदाह - संविदिति ॥ ४३ ॥
176600
176601 विद्यते न यथा किंचित्तरङ्ग सलिलादृते ।
176602 संवित्तत्त्वादृते तद्वद्विद्यते चलनादिकम् ॥ ४४ ॥
176603
176604 चलनादिकं न विद्यत इत्यनुकृष्यान्वयः ॥ ४४ ॥
176605
176606 ऐन्दवानि तथैतानि चिन्मयानि जगन्ति खे ।
176607 तथा चिन्मयमेतेषु काष्ठलोष्टोपलाद्यपि ॥ ४५ ॥
176608
176609 ऐन्दवजगत्साम्यं प्रस्तुतेऽपि जगति बोध्यमित्याह - ऐन्दवानीति ॥ ४५ ॥
176610
176611 यथैवैन्दवसंकल्पास्ते जगत्त्वमुपागताः ।
176612 तथैवाब्जजसंकल्पो जगत्त्वमयमागतः ॥ ४६ ॥
176613
176614 तुल्यत्वमेव दर्शयति - यथेति ॥ ४६ ॥
176615
176616 तस्मादिहेमे गिरयो वसुधा पादपा घनाः ।
176617 महाभूतानि सर्वं च चिन्मात्रमयमाततम् ॥ ४७ ॥
176618
176619 चिद्वृक्षाश्चिन्मही चिद्द्यौश्चिदाकाशं चिदद्रयः ।
176620 नाचित्क्वचित्संभवति तेष्वैन्दवजगत्स्विव ॥ ४८ ॥
176621
176622 चिन्मात्रखकुलालेन स्वदेहचलचक्रके ।
176623 स्वशरीरमृदा सर्गः कुतोयं क्रियतेऽनिशम् ॥ ४९ ॥
176624
176625 कुत इत्यसंभावनोक्तिर्मिथ्यात्वद्योतनाय ॥ ४९ ॥
176626
176627 संकल्पनिर्मिते सर्गे दृषदश्चेन्न चेतनाः ।
176628 तदत्र लोष्टशैलादि किमेतदिति कथ्यताम् ॥ ५० ॥
176629
176630 एतेन कथं सचेतना एते काष्ठलोष्टोपलादयः इति प्रश्नोऽपि समाहित इत्याशयेनाह ##-
176631
176632 कलनस्मृतिसंस्कारा दधत्यर्थं च नोदरे ।
176633 प्राङ्मृष्टं कल्पनादीनामन्यैवार्थकलावताम् ॥ ५१ ॥
176634
176635 कलनमनुभवः स्मृतिस्तज्जनकसंस्काराः चकारादिच्छाकृतय इत्येते हि
176636 संविद्विशेषा अर्थगोचराः एतेषां ह्यन्तरर्थाः प्रथन्ते । एते च स्वोदरे
176637 अभिव्यक्तचिन्मात्रमेव दधति न जडमर्थमतोऽप्यर्थाश्चिद्रूपा एवेत्याह -
176638 कलनेति । तत्कुतस्तत्राह - प्रागिति । यत इदं प्रागेवास्माभिर्विमृष्टं
176639 यत्कल्पनादीनामर्थशून्यानामन्यैव स्थितिः । अर्थकलावतां
176640 तत्त्वावगाहनचमत्कारशालिनामन्यैव चमत्कृतिरिति । अथवा । ननु
176641 लोष्टादिकलनस्मृतिसंस्कारैकरूप्येण लोष्टाद्यचिद्रूपमेव निश्चितं कथं
176642 तत्सचेतनमित्युपवर्ण्यते तत्राह - कलनेति । कलनादयो लोष्टशैलादितत्त्वं
176643 चिन्मात्रमुदरेण दधति नावगाहितुं शक्नुवन्ति यतस्तदर्थकलावतां
176644 कल्पनादीनामुत्थानात्प्रागेवास्तीति मृष्टं परामृष्टम् । अज्ञातविषये हि

176645 चक्षुरादिना कलनं ज्ञातविषये हि स्मृतिसंस्कारौ ज्ञानसमानविषयौ।
176646 अतस्तेभ्यः पूर्वमज्ञातविषयसिद्धिरवश्यं वाच्येति भावः। न चाचिद्रूपं
176647 तृणकाष्ठशैलाद्यज्ञातं वक्तुं शक्यम्। जडेष्वज्ञानावरणप्रयोजनाभावात्
176648 । अतो जडेभ्योऽन्यैव ब्रह्मसत्ता तृणादीनां तत्त्वं
176649 सैवान्यथाकलनस्मृतिसंस्कारैर्जडत्वेन भ्रान्त्या विमृश्यत इत्यर्थः॥ ५१॥
176650
176651 तद्धाम संविदो धाम्नि मणिराशौ मणिर्यथा।
176652 सर्वात्मनि तथा चित्ते कश्चिदर्थ उदेत्यलम्॥ ५२॥
176653
176654 इतश्च काष्ठलोष्टादयश्चेतना इत्याह - तदिति। यतस्तत्परमं चिद्धामैव
176655 सर्वात्मनि संविदो धाम्नि समष्टिव्यष्टिचित्ते मणिराशौ मणिरिव देदीप्यमानमन्तः
176656 स्थित्वा कश्चित्तृणकाष्ठशैलाद्यर्थ इव उदेति। तदनुप्रविश्य सच्च त्यच्चाभवत् इति
176657 श्रुतेरिति भावः॥ ५२॥
176658
176659 अकार्यकरणस्यार्थो न भिन्नो ब्रह्मणः क्वचित्।
176660 स्वभाव इति तेनेदं सर्वं ब्रह्मेति निश्चयः॥ ५३॥
176661
176662 इतश्च तृणकाष्ठादिश्चेतनो यतोऽयमकार्यकरणस्य तस्य सृष्टिः। यथा सूर्यस्य
176663 प्रभा तत्स्वभाव एव नाप्रकाशरूपा तद्वदिदं सर्व चेतनं ब्रह्मैवेत्यर्थः॥ ५३
176664 ।।
176665
176666 यथा प्रवृत्तं चिद्वारि वहत्यावर्ततेऽवनौ।
176667 स्वयत्नेनातितीव्रेण परात्मीयात्मना विना॥ ५४॥
176668
176669 यथा निम्नावनौ प्रवृत्तं वारि परात्मीयात्मना कारणान्तरेण विना स्वयत्नेन स्वत
176670 एव आवर्तप्रवाहतरङ्गादिवैचित्र्येणावर्तते तथा चिदपीत्यन्वयः॥ ५४॥
176671
176672 पद्मलीला जगदिव प्रकचन्ति जगन्ति यत्।
176673 चिन्मात्राद्ब्रह्मणः स्वस्मादन्यानि न मनागपि॥ ५५॥
176674
176675 यथा पाद्मे कल्पे भगवन्नाभिपद्मलीला एव जगदिव कचन्ति
176676 तद्वच्चिन्मात्राद्ब्रह्मणः सकाशाज्जगन्ति प्रकचन्ति यत्ततोऽपि मनागपि ततो नान्यानि॥
176677 ५५॥
176678
176679 अजातमनिरुद्धं च सन्मात्रं ब्रह्म खात्मकम्।
176680 शान्तं सदसतोर्मध्यं चिद्धामात्रमिदं जगत्॥ ५६॥
176681
176682 अनन्यत्वे यत्फलितं तदाह - अजातमिति। सदसतोर्भावाभावयोर्द्वयोरपि
176683 मार्जनान्मध्यम्॥ ५६॥
176684
176685 यत्संविन्मयमद्यादि संकल्पजगति स्थितम्।
176686 तदसंविन्मयमिति वक्ताऽज्ञो ज्ञैर्विहस्यते॥ ५७॥
176687
176688 अत एव तृणशैलकाष्ठादयः अचेतना इति द्रष्टारो मूढा विद्वद्भिरुपहस्यन्त
176689 इत्याह - यदिति। वक्ता अज्ञ इति च्छेदः॥ ५७॥
176690
176691 जगन्त्यात्मेव संकल्पमयान्येतानि वेत्ति खे।
176692 खात्मकानि तथेदं च ब्रह्म संकल्पजं जगत्॥ ५८॥
176693
176694 ब्रह्मा चतुर्मुखस्तत्संकल्पजत्वादपि स्वमनोराज्यवच्चिन्मात्रत्वमनुमेयमित्याह
176695 - जगन्तीति। आत्मा स्वयमिव॥ ५८॥
176696

यावद्यावदियं दृष्टिः शीघ्रं शीघ्रं विलोक्यते ।
तावत्तावदिदं दुःखं शीघ्रं शीघ्रं विलीयते ॥ ५९ ॥

किमर्थमियमेव दृष्टिर्भङ्ग्यन्तरैः पुनः पुनः समर्थ्यते तत्राह -
यावदिति । इयं प्रपञ्चदृष्टिर्दृढीकृतया चिद्दृष्ट्या यावद्यावद्विलोक्यते
तावत्तावदिदं दुःखं विलीयते ॥ ५९ ॥

यावद्यावदियं दृष्टिः प्रेक्ष्यते न चिराच्चिता ।
तावत्तावदिदं दुःखं भवेत्प्रतिघनं घनम् ॥ ६० ॥

दीर्घदुष्कृतमूढानामिमां दृष्टिमपश्यताम् ।
संसृतिर्वज्रसारेयं न कदाचित्प्रशाम्यति ॥ ६१ ॥

नेहाकृतिर्न च भवाभवजन्मनाशाः सत्ता न चैव न च नाम तथास्त्यसत्ता ।
शान्तं परं कचति केवलमात्मनीत्थं ब्रह्माथवा कचनमप्यलमत्र नास्ति
॥ ६२ ॥

अतो महाफलत्वादियमेव दृष्टिर्दृढीकार्येत्युपसंहरति - नेहेति । इह
जगत्याकृत्यादयो विकल्पा न सन्ति । सत्ता द्वितीयो भावविकारः । असत्ता तदभावः ।
आत्मनि परमार्थचित्स्वभावे इत्थं कचति । अथवा ब्रह्मातिरिक्तं
कचनमप्यलमत्यन्तं नास्ति । कचधातुप्रवृत्तिनिमित्ताभावादित्यर्थः ॥ ६२ ॥

आद्यन्तवर्जितमलभ्यलताग्रमूलनिर्माणमूलपरिवेशमशेषमच्छम् ।
अन्तस्थनिर्गगनसर्गकपुत्रकौघं नित्यं स्थितं ननु घनं
गतजन्मनाशम् ॥ ६३ ॥

कचनस्याप्यभावे ब्रह्म कीदृक् स्थितं तदाह - आद्यन्तेति । तद्ब्रह्म
स्फटिकस्तम्भवदन्तस्थनिर्गगनसर्गकपुत्रिकौघमपि अलभ्या जगल्लतास्तदग्राणि
तन्मूलानि तन्निर्माणानि तन्मूलानां मूले भूमौ परिवेशाः प्रवेशाश्च
यस्मिंस्तथाविधमाद्यन्तवर्जितं कालतोऽप्यजन्मनाशमशेषमच्छमतिस्वच्छं
चिदानन्दैकघनं नित्यं स्थितं कैवल्यमित्यर्थः ॥ ६३ ॥

सन्मात्रमन्तरहिताखिलहस्तजातं पर्यन्तहीनगणनाङ्गममुक्तरूपम् ।
आत्माम्बरात्मकमहं त्विदमेव सर्वं सुस्तम्भरूपमजमौनमलं
विकल्पैः ॥ ६४ ॥

इदमेवामुक्तरूपं यदा तदा अन्तरहितमसंख्यमखिलं विश्वतोव्याप्तं
हस्तजातं पर्यन्तेष्वपि हीनगणनान्यसंख्यानि
चक्षुःश्रोत्रशिरःकण्ठोदरपादाद्यङ्गानि च यस्य तथाविधमिदमेव सर्वमासीत् ।
मुक्तरूपं त्वात्माम्बरात्मकं सुस्तम्भरूपं सन्मात्रं अजमौनं
वर्णितस्फाटिकसुस्तम्भरूपमिदमहमेव संपन्नमिति पुनर्विकल्पैरलं प्रयोजनं
नास्तीत्यर्थः ॥ ६४ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० नि० उ० ब्रह्मगीतास्वैन्दवोपाख्यानं
नामाष्टसप्तत्यधिकशततमः सर्गः ॥ १७८ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
ऐन्दवोपाख्यानं नामाष्टसप्तत्यधिकशततमः सर्गः ॥ १७८ ॥

## एकोनाशीत्यधिकशततमः सर्गः १७९

176749 श्रीवसिष्ठ उवाच ।
176750
176751 एवं चिन्मात्रमेवैकं शुद्धं सत्त्वं जगत्त्रयम् ।
176752 संभवन्तीह भूतानि नाज्ञबुद्धानि कानिचित् ॥ १ ॥
176753
176754 चिन्मात्रमखिलं विश्वं स्थितमप्रतिघं यतः ।
176755 ततः प्रागुक्तशङ्कायाः कः प्रसङ्गः इतीर्यते ॥
176756
176757 अज्ञैः सप्रतिघत्वेन मूर्तत्वेन च बुद्धानि भूतानि नेह संभवन्ति ॥ १ ॥
176758
176759 तस्मात्कुतः शरीरादि वस्तु सप्रतिघं कुतः ।
176760 यदिदं दृश्यते किंचित्तदप्रतिघमाततम् ॥ २ ॥
176761
176762 अप्रतिघं ब्रह्मैवाततम् ॥ २ ॥
176763
176764 स्थितं चिद्व्योम चिद्व्योम्नि शान्ते शान्तं समं स्थितम् ।
176765 स्थितमाकाशमाकाशे ज्ञप्तिर्ज्ञप्तौ विजृम्भते ॥ ३ ॥
176766
176767 समं सर्ववैषम्यनिर्मुक्तम् ॥ ३ ॥
176768
176769 सर्वं संविन्मयं शान्तं सत्स्वप्न इव जाग्रति ।
176770 स्थितमप्रतिघाकारं क्वासौ सप्रतिघा स्थितिः ॥ ४ ॥
176771
176772 सप्रतिघा असौ त्वदुक्ता स्थितिः क्वास्ति यत्र ते शङ्का प्रसरेदित्यर्थः ॥ ४ ॥
176773
176774 क्व देहावयवाः क्वान्त्रवेष्टनी क्वास्थिपञ्जरम् ।
176775 व्योमेवाप्रतिघं विद्धि देहं सप्रतिघोपमम् ॥ ५ ॥
176776
176777 देहतदवयवादिकं तु स्वप्नदेहवच्चिन्मात्रमेव प्रबुद्धदृशेति
176778 तत्राज्ञदृशैव शङ्का न तत्त्वदृशेत्याह - क्वेति ।
176779 सप्रतिघस्वप्नदेहोपममिति कथंचिद्व्याख्येयं सप्रतिघाप्रसिद्धेः ॥ ५ ॥
176780
176781 संवित्करौ शिरः संवित्संविदिन्द्रियवृन्दकम् ।
176782 शान्तमप्रतिघं सर्वं न सप्रतिघमस्ति हि ॥ ६ ॥
176783
176784 ब्रह्मव्योम्नः स्वप्नरूपस्वभावत्वाज्जगत्स्थितेः ।
176785 इदं सर्वं संभवति सहेतुकमहेतुकम् ॥ ७ ॥
176786
176787 प्रत्यक्षादिसिद्धस्य मूर्तस्य देहादेरपलापः साहसमिति तु न मन्तव्यमित्याह -
176788 ब्रह्मव्योम्न इति । सहेतुकं प्रत्यक्षादिप्रमाणसिद्धमप्यहेतुकमप्रमाणकं
176789 सकारणकमप्यकारणकं च । तस्य त्रय आवसथास्त्रयः स्वप्नाः नेह नानास्ति
176790 किंचन यत्र नान्यत्पश्यति नान्यच्छृणोति अथात आदेशो नेति नेति इत्यादिश्रुत्यैव
176791 जगदपलापादिति भावः ॥ ७ ॥
176792
176793 न कारणं विना कार्यं भवतीत्युपपद्यते ।
176794 यद्यथा येन निर्णीतं तत्तथा तेन लक्ष्यते ॥ ८ ॥
176795
176796 ब्रह्मणो निर्विकाराद्वयत्वाज्जगतः कारणान्तरस्याभावादनुत्पत्तिरेवेत्यपलाप
176797 उपपद्यते तत्त्वदृशा । भ्रान्तिदृशा
176798 त्वनादित्वात्कारणपरम्परासंभवाद्ब्रह्मा##-
176799 ॥ ८ ॥
176800

176801 कारणेन विना कार्यं सद्वदित्युपपद्यते |
176802 यथाभावितमेवार्थं संविदाप्नोत्यसंशयम् || ९ ||
176803
176804 यौक्तिकदृशा तु कारणेन विनोत्पन्नं संविदात्मत्वेन लब्धं चेदं
176805 जगन्नात्यन्तमसन्नाप्यत्यन्तं सत् किंतु सद्वदित्युपपद्यते इत्याह -
176806 कारणेनेत्यादिना || ९ ||
176807
176808 यथा संभवति स्वप्ने सर्वं सर्वत्र सर्वथा |
176809 चिन्मयत्वात्तथा जाग्रत्यस्ति सर्वात्मरूपता || १० ||
176810
176811 सर्वात्मनि ब्रह्मपदे नानानानात्मनि स्थिता |
176812 अस्त्यकारणकार्याणां सत्ता कारणजापि च || ११ ||
176813
176814 मायावादे तु सर्वमविरुद्धमित्याह - सर्वात्मनीति || ११ ||
176815
176816 एकः सहस्रं भवति यथा ह्येते किलैन्दवाः |
176817 प्रयाता भूतलक्षत्वं संकल्पजगतां गणैः || १२ ||
176818
176819 सहस्रमेकं भवति संविदां च तथा हि यत् |
176820 सायुज्ये चक्रपाण्यादेः सर्गैरेकं भवेद्वपुः || १३ ||
176821
176822 चक्रपाणेरादिपदाद्ब्रह्मरुद्रेन्द्रचन्द्रसूर्यदिः सायुज्ये
176823 विपश्चिदुपाख्याननिष्कर्षोक्तदिशा उपाधिमेलनद्वारैक्यापत्तौ | इन्द्रस्यैव सायुज्यं
176824 सलोकतामाप्नोति इत्यादिश्रुतेरिति भावः || १३ ||
176825
176826 एक एव भवत्यब्धिः स्रवन्तीनां शतैरपि |
176827 एक एव भवेत्काल ऋतुसंवत्सरोत्करैः || १४ ||
176828
176829 भिन्नसत्तयोः सत्तैक्यप्राप्तिस्तु लोकेऽपि प्रसिद्धेत्याह - एक एवेति |
176830 ऋतुसंवत्सरोत्करैर्भिन्नोऽपि || १४ ||
176831
176832 संविदाकाश एवायं देहः स्वप्न इवोदितः |
176833 स्वप्नाद्रिवन्निराकारः स्वानुभूतिस्फुटोऽपि च || १५ ||
176834
176835 तथा एक एवात्मा भ्रान्त्या देहादिनानात्वं प्राप्त इव भातीत्याह - संविदाकाश
176836 इति || १५ ||
176837
176838 संवित्तिरेवानुभवात्सैवाननुभवात्मिका |
176839 द्रष्टृदृश्यदृशा भाति चिद्व्योमैकमतो जगत् || १६ ||
176840
176841 द्रष्टृदृश्यदृशा भ्रान्तविभागदृशा || १६ ||
176842
176843 वेदनावेदनात्मैकं निद्रास्वप्नसुषुप्तवत् |
176844 वातस्पन्दाविवाभिन्नौ चिद्व्योमैकमतो जगत् || १७ ||
176845
176846 यथा एकैव निद्रा स्वप्ने वेदनात्मा सुषुप्तौ अवेदनात्मेति द्वैविध्येऽप्येका तद्वत् || १७ ||
176847
176848 द्रष्टा दृश्यं दर्शनं च चिद्भानं परमार्थखम् |
176849 शून्यस्वप्न इवाभाति चिद्व्योमैकमतो जगत् || १८ ||
176850
176851 जगत्त्वमसदेवेशे भ्रान्त्या प्रथमसर्गतः |
176852 स्वप्ने भयमिवाशेषं परिज्ञातं प्रशाम्यति || १९ ||

यतो जगत्त्वमसदेवातः स्वप्ने प्रसक्तं व्याघ्रादिभयमिव परिज्ञातमात्रं
प्रशाम्यति ‖ १९ ‖

एकस्याः संविदः स्वप्ने यथा भानमनेकधा ।
नानापदार्थरूपेण सर्गादौ गगने तथा ‖ २० ‖

गगने ब्रह्मणि ‖ २० ‖

बहुदीपे गृहे च्छाया बह्व्यो भान्त्येकवद्यथा ।
सर्वशक्तेस्तथैवैका भाति शक्तिरनेकधा ‖ २१ ‖

अनेकदीपप्रभाणामेकवद्भानमिव एकस्या अपि मायाशक्तेरनेकधाभानं
संभावनीयमित्याह - बहुदीपे इति । छायाः कान्तयः ‖ २१ ‖

यत्सीकरस्फुरणमम्बुनिधौ शिवाख्ये व्योम्नीव वृक्षनिकरस्फुरणं स
सर्गः ।
व्योम्न्येष वृक्षनिकरो व्यतिरिक्तरूपो ब्रह्माम्बुधौ न तु मनागपि
सर्गबिन्दुः ‖ २२ ‖

व्योम्नि भ्रान्त्या वृक्षनिकरस्फुरणमिव शिवाख्ये अम्बुधौ यत्सीकरस्फुरणं स
एवायं सर्गः । एतावांस्तु विशेषः - यद्व्योम्नि वृक्षनिकरो
व्योमधर्मशून्यतानुविद्धत्वेनास्फुरणादत्यन्तव्यतिरिक्तरूपः । ब्रह्माम्बुधौ
स्फुरन्सर्गबिन्दुस्तु मनागपि व्यतिरिक्तरूपो नेत्यर्थः ‖ २२ ‖

इत्यार्षे श्रीवासिष्ठम० वा० दे० मो० नि० उ० ब्रह्म० ब्रह्ममयत्वप्रतिपादनं
नामैकोनाशीत्यधिकशततमः सर्गः ‖ १७९ ‖

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
ब्रह्ममयत्वप्रतिपादनं नामैकोनाशीत्यधिकशततमः सर्गः ‖ १७९ ‖

अशीत्यधिकशततमः सर्गः १८०

श्रीराम उवाच ।

इमं मे संशयं छिन्धि भगवन्भास्करं तमः ।
भुवनस्येव भावानां सम्यग्रूपानुभूतये ‖ १ ‖

इह रामोदिते कुन्ददन्ताख्याने गिरौ तरौ ।
प्रलम्बिनस्तापसस्य वरलाभान्तमीर्यते ‖

स्वयं प्रबुद्धो रामश्चिरं तत्त्वजिज्ञासया स्वमाश्रितस्य कुन्ददन्ताख्यद्विजस्य
प्रस्तुतोपदेश श्रवणात्तत्वप्रबोधोऽभून्न वेति स्वसंदेहं गुरुमुखेन तं
पृष्ट्वा विमार्ष्टुकामो वसिष्ठं प्रत्यत्याश्चर्यभूतं तदाख्यानं वक्तुं
भूमिकां रचयंस्तं गुरुं प्रार्थयते - इममिति । इममाख्यानान्ते
वक्ष्यमाणम् । यथा भास्करं ज्योतिर्भुवनस्य जगतः सर्वभावानां
सम्यग्रूपानुभूतये तमश्छिनत्ति तद्वदित्यर्थः ‖ १ ‖

कदाचिदहमेकाग्रो विद्यागेहे विपश्चिताम् ।
संसदि स्थितवान्यावत्तापसः कश्चिदागतः ‖ २ ‖

संशयबीजं दर्शयितुमाख्यानमारभते - कदाचिदित्यादिना ।

यावत्स्थितस्तावत्तस्मिन्काले इति यावत् ॥ २ ॥

विद्वान्द्विजवरः श्रीमान्विदेहजनमण्डलात् ।
महातपाः कान्तियुतो दुर्वासा इव दुःसहः ॥ ३ ॥

स प्रविश्याभिवाद्याशु सभामाभास्वरद्युतिम् ।
उपविश्यासने तिष्ठन्नस्माभिरभिवादितः ॥ ४ ॥

सभां द्विजसभाम् ॥ ४ ॥

वेदान्तसांख्यसिद्धान्तवादान्संहृत्य सत्तमम् ।
सुखोपविष्टं विश्रान्तं तमहं पृष्टवानिदम् ॥ ५ ॥

तत्र अहं स्वाधीयमानान्वेदान्तसांख्यसिद्धान्तवादानुपसंहृत्य तं
तापसमिदं वक्ष्यमाणं पृष्टवान् ॥ ५ ॥

दीर्घाध्वना परिश्रान्तः सयत्न इव लक्ष्यसे ।
वदाद्य वदतां श्रेष्ठ कुत आगमनं कृतम् ॥ ६ ॥

सयत्नः कंचिदर्थं लब्धुं बोद्धुं वा यत्नवानिव लक्ष्यसे ॥ ६ ॥

ब्राह्मण उवाच

एवमेतन्महाभाग सुमहायत्नवानहम् ।
यदर्थमागतोऽस्मीह तस्याकर्णय निर्णयम् ॥ ७ ॥

निर्णयं त्वत्संदेहनिवारणं मद्वाक्यमित्यर्थः ॥ ७ ॥

वैदेहो नाम देशोऽस्ति सर्वसौभाग्यसंयुतः ।
स्वर्गस्याम्बरसंस्थस्य प्रतिबिम्बमिवावनौ ॥ ८ ॥

अवनौ स्फटिकावनौ ॥ ८ ॥

तत्राहं ब्राह्मणो जातः प्राप्तविद्यश्च संस्थितः ।
कुन्दावदातदन्तत्वात्कुन्ददन्त इति श्रुतः ॥ ९ ॥

तत्र विदेहेषु ॥ ९ ॥

अथाहं जातवैराग्यः प्रविहर्तुं प्रवृत्तवान् ।
देवद्विजमुनीन्द्राणां संभ्रमाच्छ्रमशान्तये ॥ १० ॥

देवद्विजमुनीन्द्राणां स्थानानीति शेषः ॥ १० ॥

श्रीपर्वतमखण्डेहं कदाचित्प्राप्तवानहम् ।
तत्रावसं चिरं कालं मृदु दीर्घं तपश्चरन् ॥ ११ ॥

अखण्डेहममिति पूर्वान्वयि । अखण्डेहं तत्रावसमिति वा । मृदु अनुग्रं
दीर्घकालत्वाद्दीर्घम् ॥ ११ ॥

तत्रास्त्यरण्यं विदितं मुक्तं तृणवनादिभिः ।
त्यक्ततेजस्तमोभ्रादिभूमाविव नभस्तलम् ॥ १२ ॥

176957 शून्यत्वांशे नभस्तलदृष्टान्तः ॥ १२ ॥
176958
176959 तत्रास्ति मध्ये विटपी लघुः पेलवपल्लवः ।
176960 स्थित एषोऽम्बरे शून्ये मन्दरश्मिरिवांशुमान् ॥ १३ ॥
176961
176962 विटपी बहुशाखो वृक्षः ॥ १३ ॥
176963
176964 लम्बते तस्य शाखायां पुरुषः प्रावनाकृतिः ।
176965 भानुर्भानाविव रश्मिगृहीतो ग्रथिताकृतिः ॥ १४ ॥
176966
176967 भानुः सूर्यः भानौ स्वरश्माविव रश्मिगृहीतो रज्जुबद्धपादः ।
176968 पादबन्धनरज्ज्वाधार इति यावत् ॥ १४ ॥
176969
176970 मौञ्जदामनिबद्धोर्ध्वपादो नित्यमवाक्शिराः ।
176971 अष्ठीलत्वं दधदिव महाष्ठीलस्य शाल्मलेः ॥ १५ ॥
176972
176973 तदेव स्पष्टमाह - मौञ्जेति । अष्ठीलत्वं प्रलम्बपर्वग्रन्थिभावं दधदिव ॥
176974 १५ ॥
176975
176976 दृष्टः प्राप्तेन तं देशं स कदाचिन्मया पुमान् ।
176977 विचारितो निकटतो वक्षःस्थाञ्जलिसंपुटः ॥ १६ ॥
176978
176979 विचारितो मनसा विमृष्टः ॥ १६ ॥
176980
176981 यावज्जीवत्यसौ विप्रो निःश्वसित्यहताकृतिः ।
176982 शीतवातातपस्पर्शान्सर्वान्वेत्ति च कालजान् ॥ १७ ॥
176983
176984 तं विचारमेव स्फुटमाह - यावदिति । वितर्के यावच्छब्दः । नूनं जीवति यतो
176985 निःश्वसितीत्यर्थः ॥ १७ ॥
176986
176987 अनन्तरमसावेको नोपचर्य मया बहून् ।
176988 दिवसातपखेदेन विश्रम्भे पातितः शनैः ॥ १८ ॥
176989
176990 एकोऽसौ लम्बमानो ना पुरुषो मया बहून् दिवसान् दिवसातपखेदसहनेनोपचर्य
176991 शनैर्विस्रम्भे विश्वासे पातितः ॥ १८ ॥
176992
176993 पृष्टश्च कोऽसि भगवन्किमर्थं दारुणं तपः ।
176994 करोषीदं विशालाक्ष लक्ष्यालक्ष्यात्मजीवितः ॥ १९ ॥
176995
176996 चिरेणोच्छ्वसनाल्लक्ष्यालक्ष्यात्मजीवितः ॥ १९ ॥
176997
176998 अथ तेनोक्तमर्थस्ते क इवानेन तापस ।
176999 अर्थे नातिविचित्रा हि भवन्तीच्छाः शरीरिणाम् ॥ २० ॥
177000
177001 अनेन मत्कुलदेशतपःप्रयोजनादिपरिज्ञानेन ते कोऽर्थः किं प्रयोजनम् । न हि
177002 निष्प्रयोजनेऽर्थे जिज्ञासा संभवतीत्यर्थः ॥ २० ॥
177003
177004 इत्युक्तवान्प्रयत्नेन सोऽनुबन्धेन वै मया ।
177005 यदा पृष्टस्तदा तेन ममोक्तमिदमुत्तरम् ॥ २१ ॥
177006
177007 इत्युक्तवान् स तापसो मया यदा प्रयत्नेन प्रणयानुबन्धेन च पृष्टस्तदा तेन
177008 ममेदं वक्ष्यमाणमुक्तम् ॥ २१ ॥

177009
177010 मथुरायामहं जातो वृद्धिं यातः पितुर्गृहे।
177011 बाल्ययौवनयोर्मध्ये स्थितः पदपदार्थवित्॥ २२॥
177012
177013 पदानि शब्दशास्त्रं पदार्था अर्थशास्त्राणि च वेत्तीति पदपदार्थवित्॥ २२॥
177014
177015 समग्रसुखसंभारकोशो भवति भूमिपः।
177016 इत्यहं श्रुतवांस्तत्र भोगार्थी नवयौवनः॥ २३॥
177017
177018 भूमिपो राजा समग्राणां सुखसंभाराणां भोगसामग्रीणां कोश इवाश्रयो
177019 भवतीति अहं तत्र श्रुतवान्॥ २३॥
177020
177021 अथ सप्तमहाद्वीपविस्तीर्णाया भुवः पतिः।
177022 स्यामित्यहमुदारात्मा परिबिम्बितवांश्चिरम्॥ २४॥
177023
177024 अथ तच्छ्रवणानन्तरमहं सप्तमहाद्वीपविस्तीर्णाया भुवः पतिस्तथा उदारात्मा
177025 अर्थिनामभिलक्षितपूरणसमर्थः स्यामिति चिरं परिबिम्बितवान्। इच्छां कृतवानिति
177026 यावत्॥ २४॥
177027
177028 इत्यर्थेन समागत्य देशमित्थमहं स्थितः।
177029 अत्र द्वादश वर्षाणि समतीतानि मानद॥ २५॥
177030
177031 इति एवंरूपेण अर्थेन प्रयोजनेन इमं श्रीशैलदेशमागत्य स्थितः॥ २५॥
177032
177033 तदकारणमित्र त्वं गच्छेष्टं देशमाशुगः।
177034 अहं चाभिमतप्राप्तेरित्थमेव दृढस्थितिः॥ २६॥
177035
177036 हे अकारणमित्र तत्तस्मात्पृष्टार्थस्य मयोक्तत्वात्त्वमिष्टं देशमाशुगः
177037 शीघ्रगामी भूत्वा गच्छ। मन्दगमने दूरस्थग्रामनगराद्यप्राप्त्या अरण्ये
177038 निशाप्रसक्तेरिति भावः। आ अभिमतप्राप्तेरहं तु इत्थमेव तपसि दृढस्थितिः॥ २६॥
177039
177040 इति तेनाऽहमुक्तः संस्तमित्थं प्रोक्तवाञ्छृणु।
177041 आश्चर्यश्रवणे चेतः खेदमेति न धीमतः॥ २७॥
177042
177043 साधो यावत्त्वया प्राप्तो न नामाभिमतो वरः।
177044 त्वद्रक्षापरिचर्यार्थमिह तावदहं स्थितः॥ २८॥
177045
177046 तावत्कालमहमपि तव रक्षार्थं परिचर्या सेवा तदर्थं च स्थितो भविष्यामीत्यर्थः॥ २८
177047 ॥
177048
177049 मयेत्युक्ते स पाषाणमौनवानभवच्छमी।
177050 निमीलितेक्षणः क्षीणरूपस्त्वकलनो बहिः॥ २९॥
177051
177052 क्षीणस्य मृतस्य रूपमिव रूपं यस्य। यतो बहिरकलनः॥ २९॥
177053
177054 तथाहं पुरतस्तस्य काष्ठमौनवतोऽवसम्।
177055 षण्मासान्विगतोद्वेगं वेगान्कालकृतान्सहन्॥ ३०॥
177056
177057 कालकृतान् शीतोष्णादिवेगान् सहन्सन्॥ ३०॥
177058
177059 अर्कबिम्बाद्विनिष्क्रम्य तत्प्रदेशान्तरे स्थितम्।
177060 एकदा दृष्टवानस्मि पुरुषं भानुभास्वरम्॥ ३१॥

177061
177062 तस्मिन्प्रदेशान्तरे तस्य तापसस्य पुरोदेशे आगत्य स्थितं भानुभास्वरं पुरुषम् ‖
177063 ३१ ‖
177064
177065 स तेन पूज्यते यावन्मनसा कर्मणा मया ।
177066 उवाच तावद्ववनममृतस्यन्दसुन्दरम् ‖ ३२ ‖
177067
177068 स पुरुषस्तेन तापसेन मया सह यावत्पूज्यते तावदुवाच ‖ ३२ ‖
177069
177070 शाखाप्रलम्बनपर हे ब्रह्मन्दीर्घतापस ।
177071 तपः संहर संहारि गृहाणाभिमतं वरम् ‖ ३३ ‖
177072
177073 त्वं तपः उपसंहर । सम्यक् हारि मनोहरमभिमतं वरं गृहाण ‖ ३३ ‖
177074
177075 सप्ताब्धिद्वीपवलयां पालयिष्यसि मेदिनीम् ।
177076 सप्तवर्षसहस्राणि देहेनानेन धर्मतः ‖ ३४ ‖
177077
177078 अनेन देहेन कृतात्तपोधर्मतोन त्वनेन देहेन पालयिष्यसीति । उत्तरग्रन्थविरोधात् ‖ ३४
177079 । ।
177080
177081 एवं समीहितं दत्त्वा स द्वितीयो दिवाकरः ।
177082 गन्तुमस्तमथार्काब्धिमविशत्प्रोदितो यतः ‖ ३५ ‖
177083
177084 यतः स्वयं प्रोदितो निर्गतस्तमेवार्करूपमब्धिमस्तमदर्शनं गन्तुमविशत् ‖ ३५ ‖
177085
177086 तस्मिन्याते मया प्रोक्तं तस्य शाखातपस्विनः ।
177087 श्रुतदृष्टानुभूताग्र्यवरदस्य विवेकिनः ‖ ३६ ‖
177088
177089 शास्त्रे यः श्रुतः स एव प्रत्यक्षं दृष्टो वरदानव्यवहारेणानुभूतश्चाग्र्यः
177090 श्रेष्ठो वरद आदित्यपुरुषो येन तस्य शाखातपस्विनः ‖ ३६ ‖
177091
177092 संप्राप्ताभिमतं ब्रह्मंस्तरुशाखावलम्बनम् ।
177093 तपस्त्यक्त्वा यथाप्राप्तं व्यवहारं समाचर ‖ ३७ ‖
177094
177095 हे ब्रह्मन् तव तरुशाखावलम्बनरूपं यत्तपस्तत्संप्रति संप्राप्तमभिमतं
177096 यस्मात्तथाविधं संपन्नम् अत इदानीं त्वं तपस्त्यक्त्वा यथाप्राप्तं
177097 स्वगृहगमनादिव्यवहारं समाचर ‖ ३७ ‖
177098
177099 एवमङ्गीकृतवतः पादौ तस्य मया ततः ।
177100 मुक्तौ विटपिनस्तस्मादालानात्कालभाविव ‖ ३८ ‖
177101
177102 कालभौ कलभसंबन्धिनौ । आलानात्तद्वन्धनस्तम्भादिव ‖ ३८ ‖
177103
177104 स्नातः पवित्रहस्तोऽसौ चक्रे जप्त्वाघमर्षणम् ।
177105 फलेन पुण्यलब्धेन विटपाद्व्रतपारणम् ‖ ३९ ‖
177106
177107 पुण्येन तपःसिद्धिबलेन तस्मादेव विटपाल्लब्धेन फलेन मया सह व्रतपारणं
177108 चक्रे ‖ ३९ ‖
177109
177110 तत्पुण्यवशतः प्राप्तैः स्वादुभिस्तैस्तरोः फलैः ।
177111 समाश्वस्तावसंक्षुब्धावावां तत्र दिनत्रयम् ‖ ४० ‖
177112

177113 सप्तद्वीपसमुद्रमुद्रितदिशं भोक्तुं समग्रां महीं विप्रः
177114 पादपलम्बितेन वपुषा तप्त्वोर्ध्वपादस्तपः।
177115 संप्राप्याभिमतं वरं दिनकृतो विश्वस्य चाह्नां त्रयं सार्धं
177116 मत्सुहृदा स्वमेव सदनं गन्तुं प्रवृत्तोऽभवत्॥ ४१॥
177117
177118 उक्तामेव कथां संक्षेपोक्त्योपसंहरति - सप्तद्वीपेति। दिनकृतः
177119 सूर्यपुरुषात्सकाशादभिमतं वरं संप्राप्य तदनन्तरं तरुतले अह्नां त्रयं
177120 विश्वस्य विश्रम्य पादपीडानिवृत्त्यनन्तरं मया सुहृदा सार्धं स्वयमेव
177121 मथुरास्थं भवनं गन्तुं प्रवृत्तोऽभवत्॥ ४१॥
177122
177123 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० नि० उ० ब्रह्मगीतासु तापतोपाख्यानं
177124 नामाशीत्यधिकशततमः सर्गः॥ १८०॥
177125
177126 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
177127 तापसोपाख्यानं नामाशीत्यधिकशततमः सर्गः॥ १८०॥
177128
177129 एकाशीत्यधिकशततमः सर्गः १८१
177130
177131 कुन्ददन्त उवाच।
177132
177133 आवासमन्तरे गन्तुं प्रवृत्तौ मुदिताकृती।
177134 मथुरानगरीं चन्द्रसूर्याविन्द्रपुरीमिव॥ १॥
177135
177136 गच्छतोर्मधुरां मार्गभ्रंशाद्गौरीवनागमः।
177137 तत्र तापसवृद्धेन संवादश्चात्र वर्ण्यते॥
177138
177139 यथा चन्द्रसूर्याविन्द्रपुरीं प्राच्यां प्रसिद्धामावासं गन्तुं सायंकाले
177140 प्रवृत्तौ तद्वदावामपि आसायं चलित्वा अन्तरे आवासं गन्तुं प्रवृत्तौ॥ १॥
177141
177142 प्राप्य रोधाभिधं ग्रामं विश्रम्याम्रवणाचले।
177143 उषितौ द्वे दिने तस्मिन्सालीसे नगरे सुखम्॥ २॥
177144
177145 आवासस्थानान्येव क्रमेणाह - प्राप्येत्यादिना। आम्रवणप्रचुरे अचले॥ २॥
177146
177147 अध्वानन्दितचित्ताभ्यामावाभ्यामतिवाहितः।
177148 द्वितीयेऽहनि शीताम्बुस्निग्धच्छायावनद्रुमाः॥ ३॥
177149
177150 द्वितीये अहनि आवां शीतान्यम्बूनि स्निग्धच्छायावनद्रुमाश्च यासु तथाविधाः
177151 श्वभ्रानूपस्थलावनीः समुल्लङ्घ्येति चतुर्थे संबन्धः॥ ३॥
177152
177153 नदीतीरलतोन्मुक्तपुष्पप्रकरपाण्डुराः।
177154 तरत्तरङ्गझांकारगायनानन्दिताध्वगाः॥ ४॥
177155
177156 ता एवावनीर्विशिनष्टि - नदीतीरेत्यादिना। गायनमिति अशित्यात्वाकरणं छान्दसम्॥
177157 ४॥
177158
177159 स्निग्धद्रुमवनच्छायरणन्मृगविहंगमाः।
177160 स्थूलशाद्वलशाखाग्रप्रोतावश्यायमौक्तिकाः॥ ५॥
177161
177162 जङ्गलाद्रिपुरग्रामश्वभ्रानूपस्थलावनीः।
177163 समुल्लङ्घ्य दिने तस्मिन्सरित्स्रोतःसरांसि च॥ ६॥
177164

177165 क्वचिज्जङ्गलभूताः क्वचिदद्रिपायाः क्वचित्पुरग्रामभूताः क्वचिच्छ्वभ्रभूताः
177166 क्वचिदनूपभूतस्थलाश्चावनीः ॥ ६ ॥
177167
177168 नीतवन्तौ निशामावां कदलीकानने घने ।
177169 तुषारशिशिरे श्रान्तौ कदलीदलतल्पके ॥ ७ ॥
177170
177171 प्राप्तावावां तृतीयेऽह्नि षण्डषण्डकमण्डितम् [अब्जषण्डक इति
177172 पाठश्चिन्त्यः ।] ।
177173 जङ्गलं जनविच्छेदविभक्तं खमिवाकृतम् ॥ ८ ॥
177174
177175 अब्जषण्डैर्गुल्मषण्डकैश्च मण्डितम् ।
177176 तृणकाष्ठादिहारिजनकृतैर्विच्छेदैर्विभक्तम् । मेघविच्छेदैर्विभक्तं खमिव
177177 आसमन्तात्कृतम् ॥ ८ ॥
177178
177179 तत्र स प्रकृतं मार्गं परित्यज्य वनान्तरम् ।
177180 प्रविशन्समुवाचेदमकार्यकरणं वचः ॥ ९ ॥
177181
177182 इदानीं दिदृक्षितानां भ्रातृमुनिप्रभृतीनां गौर्याश्रमे अभावात् न भ्राता
177183 गच्छेदन्वेषणपरः क्वचित् इति निषिद्धत्वाच्च वृथाकालविलम्बेन
177184 प्रकृतस्वगृहगमनकार्यविच्छेदित्वादकार्यकरणं वचः ॥ ९ ॥
177185
177186 गच्छावोऽत्राश्रमे गौर्या मुनिमण्डलमण्डिते ।
177187 भ्रातरो मे स्थिताः सप्त वनेष्वेवमिवार्थिनः ॥ १० ॥
177188
177189 भ्रातरोऽष्टौ वयमिमे जातानेकतया तया ।
177190 एकसंविन्मया जाता एकसंकल्पनिश्चयाः ॥ ११ ॥
177191
177192 एवमिवार्थिनः इत्युक्तिं विशदयति - भ्रातर इत्यादिना । तया प्राग्वर्णितया
177193 सप्तद्वीपराज्यभोगेच्छया जाता अनेके मनोरथा येषां तद्भावेन वयमष्टावपि
177194 भ्रातरस्तपसे एकसंविन्मया एकरूपदृढनिश्चयप्रधाना जाताः ॥ ११ ॥
177195
177196 तेन तेऽप्यत्र तपसे स्वनिश्चयसमाश्रयाः ।
177197 स्थिता आगत्य विविधैस्तपोभिः क्षपितैनसः ॥ १२ ॥
177198
177199 तैः सार्धं भ्रातृभिः पूर्वमागत्याहमिहावसम् ।
177200 षण्मासानाश्रमे गौर्यास्तेन दृष्टो मयैष सः ॥ १३ ॥
177201
177202 इह गौर्याश्रमे । तेन हेतुना यः प्राग्दृष्टः स एवैष पुरो दृश्यते इति
177203 प्रत्यभिज्ञाभिलापः ॥ १३ ॥
177204
177205 पुष्पखण्डतरुच्छायासुप्तमुग्धमृगार्भकः ।
177206 पर्णोटजाग्रविश्रान्तशुकोद्ग्राहितशास्त्रदृक् ॥ १४ ॥
177207
177208 तमेवाश्रमं वर्णयति - पुष्पेति । उटजाग्रेषु विश्रान्तैः शुकैरपि उद्ग्राहिता
177209 उपन्यस्ता नानाशास्त्रदृशो यत्र ॥ १४ ॥
177210
177211 तद्ब्रह्मलोकसंकाशमेहि मुन्याश्रमं श्रिये ।
177212 गच्छावोऽच्छतरं तत्र चेतः पुण्यैर्भविष्यति ॥ १५ ॥
177213
177214 तत्र आवयोश्चेतः सर्वदोषक्षयादच्छतरं भविष्यति ॥ १५ ॥
177215
177216 विदुषामपि धीराणामपि तत्त्वविदामपि ।

177217 त्वरते हि मनः पुंसामलंबुद्धिविलोकने ॥ १६ ॥
177218
177219 अलंबुद्धयस्तत्त्वदर्शनेन पूर्णमनसो ये मुनयस्तेषां विलोकने विदुषामपि
177220 पुंसां मनस्त्वरते किं पुनरावयोरित्यर्थः ॥ १६ ॥
177221
177222 तेनेत्युक्ते च तावावां प्राप्तौ मुन्याश्रमं च तम् ।
177223 यावत्तत्र महारण्ये पश्याश्वश्वान्तरूपिणम् ॥ १७ ॥
177224
177225 अन्तः संहारस्तस्य रूपेणैव रूपिणमाश्रमं शून्यमिति यावत् ॥ १७ ॥
177226
177227 न वृक्षं नोटजं किंचिन्न गुल्मं न च मानवम् ।
177228 न मुनिं नार्भकं नान्यन्न वेदिं न च वा द्विजम् ॥ १८ ॥
177229
177230 तदेवाह - न वृक्षमित्यादिना ॥ १८ ॥
177231
177232 केवलं शून्यमेवाति तदरण्यमनन्तकम् ।
177233 तापोपतप्तमभितो भूमौ स्थितमिवाम्बरम् ॥ १९ ॥
177234
177235 हा कष्टं किमिदं जातमिति तस्मिन्वदत्यथ ।
177236 आवाभ्यां सुचिरं भ्रान्त्वा दृष्ट एकत्र वृक्षकः ॥ २० ॥
177237
177238 तस्मिन्मत्सहाये तापसे ॥ २० ॥
177239
177240 स्निग्धच्छविर्घनच्छायः शीतलोऽम्बुधरोपमः ।
177241 तले तस्य समाधाने संस्थितो वृद्धतापसः ॥ २१ ॥
177242
177243 आवामग्रे मुनेस्तस्य च्छायायां शाद्वलस्थले ।
177244 उपविष्टौ चिरं यावन्नासौ ध्यानान्निवर्तते ॥ २२ ॥
177245
177246 ततश्चिरेण कालेन मयोद्वेगेन चापलात् ।
177247 उक्तं मुने प्रबुध्यस्व ध्यानादित्युच्चकैर्वचः ॥ २३ ॥
177248
177249 चापलात् चपलस्वभावात् ॥ २३ ॥
177250
177251 शब्देनोच्चैर्मदीयेन संप्रबुद्धोऽभवन्मुनिः ।
177252 सिंहोऽम्बुदरवेणेव जृम्भां कृत्वाभ्युवाच च ॥ २४ ॥
177253
177254 कौ भवन्ताविमौ साधू क्वासौ गौर्याश्रमो गतः ।
177255 केन वाहमिहानीतः कालोऽयं कश्च वर्तते ॥ २५ ॥
177256
177257 इह शून्यारण्ये ॥ २५ ॥
177258
177259 तेनेत्युक्ते मयाप्युक्तं भगवन्विद्धि ईदृशम् ।
177260 न किंचिदावां बुद्धोऽपि कस्माज्जानासि न स्वयम् ॥ २६ ॥
177261
177262 हे भगवन् ईदृशं त्वत्पृष्टमावां न किंचिज्जानीव इति शेषः । अतस्त्वमेव विद्धि ।
177263 बुद्धः सर्वज्ञोऽपि त्वं योगबलात्कस्मात्स्वयं न जानासि ॥ २६ ॥
177264
177265 इति श्रुत्वा स भगवान्पुनर्ध्यानमयोऽभवत् ।
177266 ददर्शोदन्तमखिलमस्माकं स्वात्मनस्तथा ॥ २७ ॥
177267
177268 मुहूर्तमात्रेणोवाच प्रबुध्य ध्यानतो मुनिः ।

177269 श्रूयतामिदमाश्चर्यमार्यौ हि कार्यविदिनौ ॥ २८ ॥
177270
177271 यमिमं पश्यथः साधू कदम्बतरुपुत्रकम् ।
177272 मदास्पदमरण्यान्या धम्मिल्लमिव पुष्पितम् ॥ २९ ॥
177273
177274 इमं मदास्पदं स्वावासभूतम् । अत एवानुकम्प्यत्वात्पुत्रकमित्युक्तिः ॥ २९ ॥
177275
177276 केनापि कारणेनास्मिन्सती वागीश्वरी सती ।
177277 अवसद्दशवर्षाणि समस्तर्तुनिषेविता ॥ ३० ॥
177278
177279 सती गौरी वागीश्वरी सती सरस्वती भूत्वा अत्र अवसत् ॥ ३० ॥
177280
177281 तदा तेनेह विस्तीर्णमभवद्घनकाननम् ।
177282 गौरीवनमिति ख्यातं भूषितं कुसुमर्तुभिः ॥ ३१ ॥
177283
177284 कुसुमप्रधानैः सर्वर्तुभिर्भूषितमलंकृतम् । तदा तस्मिन्काले । तेन कारणेन ॥ ३१
177285 । ।
177286
177287 भृङ्गाङ्गनाजनमनोहरहारिगीतलीलाविलोलकलकण्ठविहंगमङ्ग
177288 [विलोक इत्यपि पाठः ।] ।
177289 पुष्पाम्बुवाहशतचन्द्रनभोवितानं राजीवरेणुकणकीर्णदिगन्तरालम् ॥ ३२ ॥
177290
177291 कीदृशमभवत्तदेव वर्णयति - भृङ्गाङ्गनेत्यादिना । हे अङ्गेत्युभयोः
177292 संबोधनम् । भृङ्गाङ्गनाजनानां मनोहरगीतलीलाभिर्विलोलाः
177293 कलकण्ठविहंगाः कोकिला यत्र । तथा पुष्पवर्षिभिरम्बुवाहप्रायैस्तरुभिः
177294 शतचन्द्रं नभोवितानं यत्र ॥ ३२ ॥
177295
177296 मन्दारकुन्दमकरन्दसुगन्धिताशं
177297 संसूच्छ्वसत्कुसुमराशिशशाङ्कनिष्ठम् ।
177298 संतानकस्तवकहासविकासकान्तमामोदिमारुतसमस्तलताङ्गनौघम् ॥ ३३ ॥
177299
177300 मन्दाराणां कुन्दानां च मकरन्दैः सुगन्धिता आशा दिशो येन । समन्तात्सुष्ठु
177301 उच्छ्वसत्सु विकसत्सु कुसुमराशिलक्षणेषु शशाङ्कबिम्बेषु निष्ठा शोभा
177302 पर्याप्तिर्यत्र ॥ ३३ ॥
177303
177304 पुष्पाकरस्य नगरं नवगीतभृङ्गं
177305 भृङ्गाङ्गनाकुसुमखण्डकमण्डपाढ्यम् ।
177306 चन्द्रांशुजालपरिकोमलपुष्पदोलादोलायमानसुरसिद्धवधूसमूहम् ॥ ३४ ॥
177307
177308 पुष्पाकरस्य वसन्तस्य नगरमिव स्थितम् । भृङ्गाङ्गनायुक्तैः
177309 कुसुमखण्डकमण्डपैराढ्यम् । चन्द्रांशुजालवत्परितः कोमलासु पुष्पदोलासु
177310 दोलायमानाः सुरसिद्धवधूसमूहा यत्र ॥ ३४ ॥
177311
177312 हारीतहंसशुककोकिलकोककाकचक्राह्वभासकलविङ्ककुलाकुलाङ्गम् ।
177313 भेरुण्डकुक्कुटकपिञ्जलहेमचूडराढामयूरबककल्पितकेलिरम्यम् ॥ ३५ ॥
177314
177315 हारीतादिपक्षिकुलैराकुलान्यङ्गानि यस्य । हेमचूडास्तित्तिरयः । राढाः पक्षिभेदाः ॥
177316 ३५ ॥
177317
177318 गन्धर्वयक्षसुरसिद्धकिरीटघृष्टपादाब्जकर्णिककदम्बसरस्वतीकम् ।
177319 वातायनं कनककोमलचम्पकौघताराम्बराम्बुधरपूर गृहीतगन्धम् ॥
177320 ३६ ॥

गन्धर्वयक्षादीनां किरीटैर्घृष्टे पादाब्जकर्णिके यस्यास्तथाविधा
कदम्बसरस्वती यस्मिन् | सुरभिवातानामयनमत एव कनकमिव
कोमलेभ्यश्चम्पकौघेभ्यस्ताराम्बुधराभ्यां गृहीतो गन्धो यस्य || ३६ ||

मन्दानिलस्खलितपल्लवबालवल्लीविन्यासगुप्तदिवसाधिपरश्मिशीतम् |
पीतं कदम्बकरवीरकनालिकेरतालीतमालकुलपुष्पपरागपूरैः || ३७ ||

मन्दानिलात्स्खलितपल्लवानां बालवल्लीनां विन्यासैः प्रसारैर्गुप्तेषु कुञ्जेषु
निरुद्धैर्दिवसाधिपरश्मिभिरन्तःशीतम् | तथा कदम्बादीनां कुलस्य
पुष्पपरागपूरैः पीतं पीतवर्णम् || ३७ ||

कह्लारकीर्णकुमुदोत्पलपद्मखण्डवल्गच्चकोरबककोककदम्बहंसम् |
तालीसगुग्गुलकचन्दनपारिभद्रभद्रद्रुमोदरविहारिविचित्रशक्ति || ३८ ||

कह्लारैः पद्मैः कीर्णानि मिश्राणि कुमुदोत्पलानि येषु तथाविधेषु पद्मखण्डेषु
पद्माकरेषु वल्गन्तश्चकोरादिकदम्बसहिता हषा यत्र | तालीप्रभृतिद्रुमोदरेषु
विहारिणी विचित्रा सर्वाभिलषितार्थपूरणशक्तिर्यस्मिन् || ३८ ||

तस्मिन्वने चिरमुवास हरार्धदेहा केनापि कारणवशेन चिराय गौरी |
भूत्वा प्रसन्नशशिबिम्बमुखी कदम्बवागीश्वरी शशिकलेव शिवस्य मूर्ध्नि
|| ३९ ||

सकलवनसंपत्तिषु यत्कारणं तदाह - तस्मिन्निति | तस्मिन्वने हरार्धदेहा गौरी
केनापि कारणवशेन कदम्बवागीश्वरी भूत्वा चिरमुवास | तदेव वनसंपदां
कारणमित्यर्थः || ३९ ||

इत्यारेषे श्रीवासिष्ठमहारामायणे वा० दे० मो० नि० उ० ब्रह्मगीतासु तापसोपा०
गौर्याश्रमवर्णनं नामैकाशीत्यधिकशततमः सर्गः || ८१ ||

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
गौर्याश्रमवर्णनं नामैकाशीत्यधिकशततमः सर्गः || १८१ ||

द्व्यशीत्यधिकशततमः सर्गः १८२

वृद्धतापस उवाच |

तस्मिन्नेव कदम्बेऽस्मिन्वर्षाणि स्वेच्छया दश |
स्थित्वा गौरी जगामाथ हरवामार्धमन्दिरम् || १ ||

कदम्बतापसेनात्र तद्भ्रातृणां समागमः |
गृहेषु वरशापानां हेतुसिद्धिश्च वर्ण्यते ||

तस्मिन्वर्णितगुणे अस्मिन्नेव मदास्पदे कदम्बे || १ ||

तत्स्पर्शामृतसिक्तोऽयं कदम्बतरुपुत्रकः |
उत्सङ्ग इव चासीनो न यात्येव पुराणताम् || २ ||

उत्सङ्गे आसीनो बाल इव पुराणतां जरां न यात्येव || २ ||

ततो गौर्यां प्रयातायां तद्वनं तादृशं महत् |
सामान्यवनतां यातं जनवृन्दोपजीवितम् || ३ ||

177373
177374 जनवृन्दैस्तृणकाष्ठफलपुष्पाद्युपहारेणोपजीवितं सत् इतरवन साधारणतां
177375 यातम् ॥ ३ ॥
177376
177377 मालवो नाम देशोऽस्ति तत्राहं पृथिवीपतिः ।
177378 कदाचित्त्यक्तराज्यश्रीर्मुनीनामाश्रमान्भ्रमन् ॥ ४ ॥
177379
177380 इदानीं मुनिः स्ववृत्तान्तमाह - मालव इत्यादिना ॥ ४ ॥
177381
177382 इमं देशमनुप्राप्त इह चाश्रमवासिभिः ।
177383 पूजितोऽस्य कदम्बस्य ध्याननिष्ठस्तले स्थितः ॥ ५ ॥
177384
177385 केनचित्त्वथ कालेन भ्रातृभिः सप्तभिः सह ।
177386 भवानभ्यागतः पूर्वं तपोर्थमिममाश्रमम् ॥ ६ ॥
177387
177388 तपस्विनोऽष्टाविह ते तथा नाम तदाऽवसन् ।
177389 यथा तपस्विनोऽन्ये ते तेषां मान्यास्तपस्विनः ॥ ७ ॥
177390
177391 अष्टौ ते तपस्विनस्तदा तथा तेन प्रकारेण तपस्विनो भूत्वा अवसन् । यथा अन्ये ये
177392 तपस्विनः तेषामपि मान्याः पूज्यास्तेऽभवन्नित्यर्थः ॥ ७ ॥
177393
177394 कालेनानन्तरमसावेकः श्रीपर्वतं गतः ।
177395 स्वामिनं कार्तिकेयं च द्वितीयस्तपसे गतः ॥ ८ ॥
177396
177397 अनन्तरं केनचित्कालेन तेषां मध्ये असौ त्वमेकः श्रीपर्वतं गतः । एवं
177398 त्रयोऽन्येपि ॥ ८ ॥
177399
177400 वाराणसीं तृतीयस्तु चतुर्थोऽगाद्धिमाचलम् ।
177401 इहैव ते परे धीराश्चत्वारोऽन्ये परं [परमत्यन्तमतपन्
177402 तपश्चक्रुरित्यर्थः । अडभाव आर्षः ।] तपन् ॥ ९ ॥
177403
177404 सर्वेषामेव चैतेषां प्रत्येकं त्वेतदीप्सितम् ।
177405 यथा समस्तद्वीपाया भुवोऽस्याः स्यां महीपतिः ॥ १० ॥
177406
177407 अथ संपादितं तेषां सर्वेषामेतदीप्सितम् ।
177408 तपस्तुष्टाभिरिष्टाभिर्देवताभिर्वरैर्वरैः ॥ ११ ॥
177409
177410 वरैः श्रेष्ठैर्वरैः ॥ ११ ॥
177411
177412 तपतस्ते ततो याता भ्रातरः सदनं निजम् ।
177413 भूमौ धर्मयुगं भुक्त्वा वेधा ब्रह्मपुरीमिव ॥ १२ ॥
177414
177415 ते तपतस्तपस्येव तिष्ठतः । षष्ठी चानादरे इति भावलक्षणे षष्ठी ।
177416 धर्मप्रधानं कृतयुगं भूमौ भुक्त्वा अनुभूय तदन्ते वेधाश्चतुर्मुखो
177417 ब्रह्मपुरीं ब्रह्मलोकमिव ॥ १२ ॥
177418
177419 तैर्भवद्भ्रातृभिर्भव्य वरदानविधौ तदा ।
177420 इदं वरोद्यता यत्नात्प्रार्थिताः स्वेष्टदेवताः ॥ १३ ॥
177421
177422 हे भव्य इदं वक्ष्यमाणं वरं प्रार्थिताः ॥ १३ ॥
177423
177424 देव्यस्माकमिमे सर्वे सप्तद्वीपेश्वरस्थितौ ।

177425 सत्याः प्रकृतयः सन्तु सर्व आश्रमवासिनः ॥ १४ ॥
177426
177427 सप्तद्वीपेश्वरेति भावप्रधानो निर्देशः। प्रकृतयः प्रजाभूताः सर्वे जनाः
177428 सत्याः परित्यक्तानृताः सन्तु। तथा सर्वेऽपि सप्तद्वीपवासिनः स्वस्वाश्रमधर्मेण
177429 सन्तु। इदं च वर्णधर्मप्रार्थनाया अप्युपलक्षणम् ॥ १४ ॥
177430
177431 तमिष्टदेवतासार्थमुररीकृत्य सादरम्।
177432 तेषामस्त्वेवमित्युक्त्वा जगामान्तर्द्धिमीश्वरी ॥ १५ ॥
177433
177434 सा इष्टदेवता तं तत्तत्प्रार्थितमर्थमुररीकृत्य अङ्गीकृत्य ॥ १५ ॥
177435
177436 ते ततः सदनं यातास्तेषामाश्रमवासिनः।
177437 सर्व एव गताः पश्चादेक एवास्मि नो गतः ॥ १६ ॥
177438
177439 एक एवाहं नो गतः ॥ १६ ॥
177440
177441 अहं केवलमेकान्ते ध्यानैकगतमानसः।
177442 वागीश्वरीकदम्बस्य तले तिष्ठामि शैलवत् ॥ १७ ॥
177443
177444 तत्कुतस्तत्राह - अहमिति ॥ १७ ॥
177445
177446 अथ काले वहत्यस्मिन्नृतुसंवत्सरात्मनि।
177447 इदं सर्वं वनं छिन्नं जनैः पर्यन्तवासिभिः ॥ १८ ॥
177448
177449 इदं [अयं चासौ कदम्बश्चेति विग्रहः ।] कदम्बमम्लानं जनताः
177450 पूजयन्त्यलम्।
177451 वागीश्वरीगृहमिति मां चैवैकसमाधिगम् ॥ १९ ॥
177452
177453 मां चैव पूजयन्ति ॥ १९ ॥
177454
177455 अथैनं देशमायातौ भवन्तौ दीर्घतापसौ।
177456 एतत्तत्कथितं सर्वं ध्यानदृष्टं मयाखिलम् ॥ २० ॥
177457
177458 तस्मादुत्थाय हे साधू गच्छतं गृहमागतौ।
177459 तत्र ते भ्रातरः सर्वे संगता दारबन्धुभिः ॥ २१ ॥
177460
177461 इहागतौ युवां गृहं गच्छतम्। ते भ्रातरः पूर्वमेव दारबन्धुभिः संगताः
177462 ॥ २१ ॥
177463
177464 अष्टानां भवतां भव्यं सदने स्वे भविष्यति।
177465 महात्मनां ब्रह्मलोके वसूनामिव संगमः ॥ २२ ॥
177466
177467 भवतामष्टानामपि संगमो भविष्यति। वसूनामष्टानाम्। ब्रह्मलोके देवलोके ॥ २२
177468 ।।
177469
177470 इत्युक्ते तेन स मया पृष्टः परमतापसः।
177471 संदेहादिदमाश्चर्यमार्यास्तद्वर्णयाम्यहम् ॥ २३ ॥
177472
177473 हे आर्या इति रामसभासंबोधनम् ॥ २३ ॥
177474
177475 एकैव सप्तद्वीपास्ति भगवन्भूरियं किल।
177476 तुल्यकालं भवन्त्यष्टौ सप्तद्वीपेश्वराः कथम् ॥ २४ ॥

177477
177478 कदम्बतापस उवाच।
177479
177480 असमञ्जसमेतावदेव नो यावदुच्यते।
177481 इदमन्यदसंबद्धतरं संश्रूयतां मम॥ २५॥
177482
177483 एतावदेवासमञ्जसमस।बद्धमिति नो यावद्यत
177484 इदमन्यदप्यसंबद्धतरमत्यन्तमसमञ्जसं मयोच्यते उदाह्रियते तन्मम
177485 मत्तः श्रूयतामित्यर्थः॥ २५॥
177486
177487 एतेऽष्टौ भ्रातरस्तत्र तापसा देहसंक्षये।
177488 सप्तद्वीपेश्वराः सर्वे भविष्यन्ति गृहोदरे॥ २६॥
177489
177490 श्लोकद्वयमुत्तरविवक्षया पूर्वोक्तानुवादः॥ २६॥
177491
177492 अष्टौ ह्येते महीपीठेष्वेतेष्वेतेषु सद्मसु।
177493 सप्तद्वीपेश्वरा भूपा भविष्यन्तीह मे शृणु॥ २७॥
177494
177495 अस्त्येतेषां किलाष्टानां भार्याष्टकमनिन्दितम्।
177496 दिगन्तराणां नियतं ताराष्टकमिवोज्ज्वलम्॥ २८॥
177497
177498 दिगन्तराणां प्राच्यादीनां ताराष्टकमिवेत्यौत्प्रेक्षिकी उपमा॥ २८॥
177499
177500 तद्भार्याष्टकमेतेषु यातेषु तपसे चिरम्।
177501 बभूव दुःखितं स्त्रीणां यद्वियोगोऽहिदुःसहः॥ २९॥
177502
177503 यद्यस्माद्धेतोः पतिवियोगः अहिरिव दुःसहः॥ २९॥
177504
177505 दुःखिताः प्रत्यये तेषां चक्रुस्ता दारुणं तपः।
177506 शतचान्द्रायणं तासां तुष्टाभूत्तेन पार्वती॥ ३०॥
177507
177508 तेषां पतीनां प्रत्यये पुनः पुनः स्मरणे सति ता दुःखिताः सत्यो दारुणं
177509 तपश्चक्रुः। किनामकं तत्तपस्तदाह - शतचान्द्रायणमिति॥ ३०॥
177510
177511 अदृश्योवाच सा तासां वचोऽन्तःपुरमन्दिरे।
177512 देवी सपर्यावसरे प्रत्येकं पृथगीश्वरी॥ ३१॥
177513
177514 देव्युवाच।
177515
177516 भर्त्रर्थमथ चात्मार्थं गृह्यतां बालिके वरः।
177517 चिरं क्लिष्टासि तपसा निदाघेनेव मञ्जरी॥ ३२॥
177518
177519 निदाघेन ग्रीष्मेण॥ ३२॥
177520
177521 इत्याकर्ण्य वचो देव्या दत्तपुष्पा चिरंटिका।
177522 स्ववासनानुसारेण कुर्वाणैवेश्वरीस्तवम्॥ ३३॥
177523
177524 दत्तपुष्पा गौरी पादयोः समर्पितपुष्पाञ्जलिश्चिरंटिका सुवासिनी॥ ३३॥
177525
177526 आनन्दमन्थरोवाच वचनं मृदुभाषिणी।
177527 आकाशसंस्थितां देवीं मयूरीवाभ्रमालिकाम्॥ ३४॥
177528

177529 आनन्दमन्थरा गद्गदस्वरा। ज्येष्ठाया नामधेयं वा॥ ३४॥
177530
177531 चिरंटिकोवाच।
177532
177533 देवि देवाधिदेवेन यथा ते प्रेम शंभुना।
177534 भर्त्रा मम तथा प्रेम स भर्तास्तु ममामरः॥ ३५॥
177535
177536 अमरो मृत्युरहितोऽस्तु॥ ३५॥
177537
177538 देव्युवाच।
177539
177540 आसृष्टेर्नियतेर्दार्ढ्यादमरत्वं न लभ्यते।
177541 तपोदानैरतोऽन्यं त्वं वरं वरय सुव्रते॥ ३६॥
177542
177543 आसृष्टेरादिसर्गमारभ्य प्रवृत्ताया नियतेरीश्वराज्ञायाः दाढ्यात्
177544 भंक्तुमशक्यत्वात्॥ ३६॥
177545
177546 चिरंटिकोवाच।
177547
177548 अलभ्यमेतन्मे देवि तन्मद्भर्तुर्गृहान्तरात्।
177549 मृतस्य मा विनिर्यातु जीवो बाह्यमपि क्षणात्॥ ३७॥
177550
177551 क्षणादपिशब्दाच्चिरादपि॥ ३७॥
177552
177553 देहपातश्च मे भर्तुर्यदा स्यादात्ममन्दिरे।
177554 तदेतदस्त्विति वरो दीयतामम्बिके मम॥ ३८॥
177555
177556 देव्युवाच।
177557
177558 एवमस्तु सुते त्वं च पत्यौ लोकान्तरास्थिते।
177559 भविष्यसि प्रिया भार्या देहान्ते नात्र संशयः॥ ३९॥
177560
177561 मूर्खायास्तस्याः समीचीनवरयाचनाकुशलतां बुद्ध्वा देवी स्वयमेव वरान्तरं
177562 ददाति - त्वं चेति। लोकान्तरे सप्तद्वीपाधिपत्ये॥ ३९॥
177563
177564 इत्युक्त्वा विररामासौ गौर्या गीर्गगनोदरे।
177565 मेघमालाध्वनिरिव निरवद्यसमुद्यता॥ ४०॥
177566
177567 निरवद्यं निर्दोषं जगदानन्दाय समुद्यता॥ ४०॥
177568
177569 देव्यां गतायां भर्तारस्तासां कालेन केनचित्।
177570 ते ककुब्भ्यः समाजग्मुः सर्वे प्राप्तमहावराः॥ ४१॥
177571
177572 ककुब्भ्यो दिग्भ्यः॥ ४१॥
177573
177574 अद्यायमपि संयातु भार्याया निकटं पतिः।
177575 भ्रातॄणां बान्धवानां च भवत्वन्योन्यसंगमः॥ ४२॥
177576
177577 इदमन्यदथैतेषामसमञ्जसमाकुलम्।
177578 शृणु किंवृत्तमाश्चर्यमार्यकार्योपरोधकम्॥ ४३॥
177579
177580 असमञ्जसान्तरमप्युदाहरति - इदमिति। आर्यकार्याणां

177581 सत्कर्मफलानामुपरोधकम् ॥ ४३ ॥
177582
177583 तप्यतां तप एतेषां पितरौ तौ वधूयुतौ ।
177584 तीर्थमुन्याश्रमश्रेणीं द्रष्टुं दुःखान्वितौ गतौ ॥ ४४ ॥
177585
177586 वधूभिः स्नुषाभिर्युतौ सहितौ ॥ ४४ ॥
177587
177588 शरीरनैरपेक्ष्येण पुत्राणां हितकाम्यया ।
177589 गन्तुं कलापग्रामं तं यत्नवन्तौ बभूवतुः ॥ ४५ ॥
177590
177591 शरीरपदेन तद्भोग्यसुखं लक्ष्यते तन्नैरपेक्ष्येण । तं प्रसिद्धं
177592 कलापग्रामाख्यं तीर्थम् ॥ ४५ ॥
177593
177594 तौ प्रयातौ मुनिग्राम मार्गे ददृशतुः सितम् ।
177595 पुरुषं कपिलं ह्रस्वं भस्माङ्गं चोर्ध्वमूर्धजम् ॥ ४६ ॥
177596
177597 वर्णतः कपिलं ह्रस्वं पुरुषं मार्गे ददृशतुः ॥ ४६ ॥
177598
177599 धूलीलवमनादृत्य तं जरत्पान्थशङ्कया ।
177600 यदा तौ जग्मतुस्तेन स उवाचान्वितः क्रुधा ॥ ४७ ॥
177601
177602 तावष्टानां मातापितरौ जरत्पान्थः कश्चिदसाविति शङ्कया तं मुनिमनादृत्य
177603 नमस्कारपूजास्तवनाद्यादरमकृत्वा प्रत्युत गमनत्वरया तदुपरि
177604 धूलीलवमुद्धूनयन्तौ सन्तौ यदा जग्मतुस्तदा तेनापराधेन क्रुधाऽन्वितः स
177605 मुनिरुवाच ॥ ४७ ॥
177606
177607 सवधूक महामूर्ख तीर्थार्थी दारसंयुतः ।
177608 मां दुर्वाससमुल्लङ्घ्य गच्छस्यविहितानतिः ॥ ४८ ॥
177609
177610 किमुवाच तदाह - सवधूकेति । अविहितानतिः अकृतनमस्कारः ॥ ४८ ॥
177611
177612 वधूनां ते सुतानां च गच्छतस्तपसार्जिताः ।
177613 विपरीता भविष्यन्ति लब्धा अपि महावराः ॥ ४९ ॥
177614
177615 तपसार्जिता वरा विपरीता दुःखफला भविष्यन्ति ॥ ४९ ॥
177616
177617 इत्युक्तवन्तं तं यावत्सदारोऽथ वधूयुतः ।
177618 सन्मानं कुरुते तावन्मुनिरन्तर्धिमाययौ ॥ ५० ॥
177619
177620 अथ तौ पितरौ तेषां सवधूकौ सुदुःखितौ ।
177621 कृशीभूतौ दीनमुखौ निराशौ गृहमागतौ ॥ ५१ ॥
177622
177623 निराशौ सन्तौ परावृत्य स्वगृहमेवागतौ ॥ ५१ ॥
177624
177625 अतो वदाम्यहं तेषां नैकं नामासमञ्जसम् ।
177626 असमञ्जसलक्षाणि गण्डे स्फोटाः स्फुटा इव ॥ ५२ ॥
177627
177628 अतोऽहं वदामि तेषां नैकमेवासमञ्जसं किंतु असमञ्जसलक्षाणि गृहमध्ये
177629 सप्तद्वीपराज्यकल्पने तदन्तर्गतगिरिपर्वताद्यसमञ्जसलक्षाणां कल्पनाया
177630 नान्तरीयकतया प्रसक्तेरिति भावः । यथा गले गण्डस्तत्र स्फोटास्ते च स्फुटाः
177631 स्फुटिताश्चेदनिष्टोपर्यनिष्टं तत्राप्यनिष्टान्तरं तद्वदित्यर्थः ॥ ५२ ॥
177632

177633 चिद्व्योमसंकल्पमहापुरेऽस्मिन्नित्थं विचित्राण्यसमञ्जसानि ।
177634 निःशून्यरूपेऽपि हि संभवन्ति दृश्ये यथा व्योमनि दृश्यजृम्भाः ॥ ५३ ॥
177635
177636 एवमन्यत्राप्यस्मिन्मायामये जगत्यसमञ्जसलक्षाणि संभवन्तीत्याह -
177637 चिद्व्योमेति । अस्मिञ्जगद्रूपे चिद्व्योमसंकल्परचिते महापुरे इत्थं
177638 विचित्राण्यसमञ्जसानि कोटिशः संभवन्ति । यथा व्योमनि
177639 उत्पातवशाद्गन्धर्वनगरधूमकेतुकबन्धोल्कादिदृश्यजृम्भाः संभवन्ति
177640 तद्वदित्यर्थः ॥ ५३ ॥
177641
177642 इ० श्री० वा० दे० मो० नि० उ० ब्र० तापसोपाख्यानान्तर्गतसप्तद्वीपेश्वरोपा०
177643 सप्तद्वीपेश्वरवर्णनं नाम द्व्यशीत्यधिकशततमः सर्गः ॥ १८२ ॥
177644
177645 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
177646 सप्तद्वीपेश्वरवर्णनं नाम द्व्यशीत्यधिकशततमः सर्गः ॥ १८२ ॥
177647
177648
177649 त्र्यशीत्यधिकशततमः सर्गः १८३
177650
177651 कुन्ददन्त उवाच ।
177652
177653 ततः पृष्टो मया तत्र स गौर्याश्रमतापसः ।
177654 तापसंशुष्कदर्भाग्रजराजर्जरमूर्धजः ॥ १ ॥
177655
177656 विरुद्धवरशापानां चतुराननवाक्यतः ।
177657 मिथोऽजयोन्तःसाराणामिह सम्यङ्निरूप्यते ॥
177658
177659 तापेन ग्रीष्मे संशुष्कं परस्परग्रथितं च दर्भाग्रमिव जराजर्जरा मूर्धजा
177660 यस्य ॥ १ ॥
177661
177662 एकैव सप्तद्वीपास्ति वसुधा यत्र तत्र ते ।
177663 सप्तद्वीपेश्वरा अष्टौ भवन्ति कथमुत्तमाः ॥ २ ॥
177664
177665 किं पृष्टस्तदाह - एकैवेति ॥ २ ॥
177666
177667 यस्य जीवस्य सदनान्नास्ति निर्गमनं बहिः ।
177668 स करोति कथं सप्तद्वीपेशत्वेन दिग्जयम् ॥ ३ ॥
177669
177670 द्वितीयं पृष्टमाह - यस्येति ॥ ३ ॥
177671
177672 यैर्वरा वरदैर्दत्ताः शापैस्ते तद्विरुद्धताम् ।
177673 कथं गच्छन्ति गच्छन्ति कथं छाया हि तापताम् ॥ ४ ॥
177674
177675 तृतीयं पृष्टमाह - यैरिति । शीतलच्छायास्तापतां ग्रीष्मातपतां कथं
177676 गछन्ति ॥ ४ ॥
177677
177678 मिथोऽशक्यां कथं धर्मौ स्थितिमेकत्र गच्छतः ।
177679 आधार एवाधेयत्वं करोति कथमात्मनि ॥ ५ ॥
177680
177681 एकस्यैव फलस्य वरशापोभयफलत्वमशक्यत्वाद्दुष्करमित्याह - मिथ इति ।
177682 विरुद्धौ वरशापफलतावच्छेदकौ शुभत्वाशुभत्वधर्मावेकत्रैव
177683 धर्मिण्यशक्यां स्थितिं कथं गच्छतः । एकधर्म्याश्रितत्वासंभवेऽपि
177684 तयोर्धर्मयोः परस्पराश्रितत्वमस्तु तत्राह - आधार एवेति ॥ ५ ॥

गौर्याश्रमतापस उवाच।

संपश्यसि किमेतेषां भो साधो शृण्वनन्तरम्।
अष्टमेऽस्मिन्सुसंप्राप्ते तं प्रदेशं सबान्धवम्॥ ६॥

सर्वेषां प्रश्नानां कथाशेषवर्णनमुखेनैवोत्तरं कदम्बतापस उवाच -
संपश्यसीति। हे साधो एतेषां किं विरुद्धमसमञ्जसं पश्यसि। अनन्तरं
यद्वृत्तं तच्छृणु। तेनैव ते समाधानं भविष्यतीति भावः।
अद्यतनवासरादष्टमे अस्मिन्नेव वासरे संप्राप्ते सति भवन्तौ तं मथुराप्रदेशं
स्वबान्धवसहितं प्राप्स्यत इति शेषः॥ ६॥

इतो भवन्तौ तं देशमासाद्य सुखसंस्थितौ।
स्वबन्धुसुखसंस्थानौ कंचित्कालं भविष्यतः॥ ७॥

ततस्तेऽष्टौ मरिष्यन्ति भ्रातरः क्रमशो गृहे।
बन्धवोऽथ करिष्यन्ति तेषां देहांस्तदग्निसात्॥ ८॥

तदग्निसात्तैस्तैराहिता येऽग्नयस्तदधीनान्। अन्त्येष्टिभिस्तत्तदग्निषु दाहेन
संस्करिष्यन्तीति यावत्॥ ८॥

तेषां ते संविदाकाशाः पृथक्पृथगवस्थिताः।
मुहूर्तमात्रं स्थास्यन्ति सुषुप्तस्था जडा इव॥ ९॥

संविदाकाशा जीवाः॥ ९॥

एतस्मिन्नन्तरे तेषां तानि कर्माणि धर्मतः।
एकत्र संघटिष्यन्ति वरशापात्मकानि खे॥ १०॥

कर्मणां विरोधपरिहारं वक्तुमुपक्रमते - एतस्मिन्निति। धर्मतः
बलावश्यंभावस्वभावतः। एकत्र खे तत्तच्चित्तावच्छिन्नाकाशे॥ १०॥

कर्माणि तान्यधिष्ठातृदेवरूपाणि पेटकम्।
वरशापशरीराणि करिष्यन्ति पृथक् पृथक्॥ ११॥

तानि कर्माणि अधिष्ठातारस्तत्तत्फलप्रदा देवास्तद्रूपाणि भूत्वा पेटकं
स्वस्वानुकूलसमूहघटितं संपुटं पृथक् पृथक् करिष्यन्ति। एवं
संपुटीभूता वराः शापाश्च पृथक् पृथक् शरीरा।इ करिष्यन्ति॥ ११॥

वरास्तेऽत्र गमिष्यन्ति सुभगाः पद्मपाणयः।
ब्रह्मदण्डायुधाश्चन्द्रधवलाङ्गाश्चतुर्भुजाः॥ १२॥

तेषां वेषभेदमाह - वरा इति। गमिष्यन्ति प्राप्स्यन्ति॥ १२॥

शापास्तत्र भविष्यन्ति त्रिनेत्राः शूलपाणयः।
भीषणाः कृष्णमेधाभा द्विभुजा भ्रुकुटीमुखाः॥ १३॥

दुर्वाससो रुद्रांशत्वेन तदीयत्वाद्दुष्कर्मफलदानोन्मुखत्वेन घोररूपत्वाच्च
त्रिनेत्राः शूलपाणयः॥ १३॥

वरा वदिष्यन्ति।

177737 सुदूरं गम्यतां शापाः कालोऽस्माकमुपागतः।
177738 ऋतूनामिव तन्नाम कः समर्थोऽतिवर्तितुम्॥ १४॥
177739
177740 ऋतूनां वसन्तादीनामिव॥ १४॥
177741
177742 शापा वदिष्यन्ति।
177743
177744 गम्यतां हे वरा दूरं कालोऽस्माकमुपागतः।
177745 ऋतूनामिव तन्नाम कः समर्थोऽतिवर्तितुम्॥ १५॥
177746
177747 वरा वदिष्यन्ति।
177748
177749 कृता भवन्तो मुनिना वयं दिनकृता कृताः।
177750 मुनीनां चाधिको देवो भगवन्तं पुरा यतः॥ १६॥
177751
177752 तत्र वरा मूलाधिक्यात्स्वाधिक्यं दर्शयन्ति - भवन्त इति। यतो भगवन्तं
177753 सूर्यं मुनिभ्यः पुरा धाता असृजदिति शेषः॥ १६॥
177754
177755 प्रवदत्सु वरेष्वेवं शापाः क्रुद्धधियो वरान्।
177756 विवस्वता कृता यूयं वयं रुद्रांशतः कृताः॥ १७॥
177757
177758 देवानामधिको रुद्रो रुद्रांशप्रभवो मुनिः।
177759 इत्युक्त्वा प्रोद्यता तेषां चक्रुः शृङ्गाण्यगा इव॥ १८॥
177760
177761 इत्युक्त्वा प्रोद्यता प्रोद्यतानि। सुपां सुलुगिति च्छान्दसोऽडादेशः ता ता पिण्डानामितिवत्
177762 । शृङ्गाणि त्रिशूलाग्राणि॥ १८॥
177763
177764 शापेषूद्यतशृङ्गेषु वरा इदमरातिषु।
177765 विहसन्तः प्रवक्ष्यन्ति प्रमेयीकृतनिश्चयम्॥ १९॥
177766
177767 अन्तःप्रमाणपूर्वकं सम्यग्विचारेण प्रमेयीकृतस्याध्यवसितस्वार्थस्य निश्चयम्
177768 ॥ १९॥
177769
177770 हे शापाः पापतां त्यक्त्वा कार्यस्यान्तो विचार्यताम्।
177771 यत्कार्यं कलहस्यान्ते तदेवादौ विचार्यताम्॥ २०॥
177772
177773 पापतामनुचितकारिताम्। तदेवादौ कर्तव्यमिति शेषः॥ २०॥
177774
177775 पितामहपुरीं गत्वा कलहान्ते विनिर्णयः।
177776 कर्तव्योऽस्माभिरेतत्किमादौ नेह विधीयते॥ २१॥
177777
177778 शापैर्वरोक्तमाकर्ण्य बाढमित्युररीकृतम्।
177779 को न गृह्णाति मूढोऽपि वाक्यं युक्तिसमन्वितम्॥ २२॥
177780
177781 ततः शापा वरैः सार्धं यास्यन्ति ब्रह्मणः परम्।
177782 महानुभावा हि गतिः सदा संदेहनाशने॥ २३॥
177783
177784 गतिः शरणम्॥ २३॥
177785
177786 प्रणामपूर्वं तत्सर्वं यथावृत्तं परस्परम्।
177787 ब्रह्मणे कथयिष्यन्ति श्रुत्वा तेषां स वक्ष्यति॥ २४॥
177788

177789 ब्रह्मोवाच [पूर्वप्रक्रमानुरोधेनोत्तरत्र च ब्रह्मा
177790 वदिष्यतीत्यपेक्षितमिति भाति |] |
177791
177792 वरशापाधिपा भो भो येऽन्तःसारा जयन्ति ते |
177793 केऽन्तःसारा इति मिथो नूनमन्विष्यतां स्वयम् || २५ ||
177794
177795 शास्त्रानुसारदृढाभ्यासोभयकृतं यदाकारसंविद्दार्ढ्यं
177796 [येषामाकारदार्ढ्यम् |] ये अन्तःसारास्ते जयन्ति | अन्विष्यतां पर्यालोच्यताम् ||
177797 २५ ||
177798
177799 इति श्रुत्वा प्रविष्टास्ते सारतां समवेक्षितुम् |
177800 वराणां हृदयं शापाः शापानां हृदयं वराः || २६ ||
177801
177802 उदरं प्रविष्टा इति कल्पनोक्तिः | परस्परान्तः पर्यालोचितवन्त इति यावत् || २६ ||
177803
177804 ते परस्परमन्विष्य स्वयं हृदयसारताम् |
177805 ज्ञात्वा च समवायेन प्रवक्ष्यन्ति पितामहम् || २७ ||
177806
177807 समवायेन परस्परैकमत्यलक्षणेन मिलनेन || २७ ||
177808
177809 शापा वक्ष्यन्ति |
177810
177811 जिताः प्रजानाथ वयं नान्तःसारा वयं यतः |
177812 अन्तःसारा वरा एव वज्रस्तम्भा इवाचलाः || २८ ||
177813
177814 वयं किलेमे भगवन्वराः शापाश्च सर्वदा |
177815 ननु संविन्मया एव देहोऽन्योऽस्माकमस्ति नो || २९ ||
177816
177817 तत्र संविदो दृढाभ्यासेन यदाकारदार्ढ्यं तेषां प्राबल्यमिति वक्तुं
177818 मूलसंविदं दर्शयन्ति - वयं किलेति | देहः स्वरूपम् || २९ ||
177819
177820 वरदस्य हि या संविद्वरो दत्त इति स्थिता |
177821 सैवार्थिनि मया लब्धो वरोऽयमिति तिष्ठति || ३० ||
177822
177823 तदेवोपपादयन्ति - वरदस्येत्यादिना || ३० ||
177824
177825 विज्ञप्तिमात्रकचनं देहं सैव फलं ततः |
177826 पश्यत्यनुभवत्यत्ति देशकालशतभ्रमैः || ३१ ||
177827
177828 वरस्य हि फलं सुखभोगायतनं देहं तच्च विज्ञप्तिमात्रस्य कलनात्मकं
177829 कचनम् | ततः सैव विज्ञप्तिर्देहाकारा भूत्वा
177830 देशकालादिकल्पनाशतभ्रमैस्तत्तद्भोग्यार्थान्पश्यति अनुभवति तत्रादनीयमत्ति ||
177831 ३१ ||
177832
177833 वरदात्मा गृहीतत्वाच्चित्कालान्तरसंभृता |
177834 यदा तदान्तःसारासौ दुर्जया न तु शापजा || ३२ ||
177835
177836 तत्र शास्त्रीयतपःकालिकदृढसंकल्पवशीकृताद्वरदात्संविदात्मनो
177837 गृहीतत्वाद्वरकल्पना चित् कालान्तरे फलावस्थायां सम्यक् भृता पुष्टा यदा तदा
177838 सैवान्तःसारा || ३२ ||
177839
177840 वरप्रदानं वरदैर्वरदानां वरार्थिभिः |

यदा सुचिरमभ्यस्तं वराणां सारता तदा ॥ ३३ ॥

यदेव सुचिरं संविदभ्यस्यति तदेव सा ।
सारमेवाशु भवति भवत्याशु च तन्मयी ॥ ३४ ॥

तत्कुतस्तत्राह - यदेवेति ॥ ३४ ॥

शुद्धानामतिशुद्धैव संविज्जयति संविदाम् ।
अशुद्धानां त्वशुद्धैव कालात्साम्यं न विद्यते ॥ ३५ ॥

तत्रापि शास्त्रीयत्वेन शुद्धत्वे प्राबल्याधिक्यमित्याहुः - शुद्धानामिति ।
संविदामिति निर्धारणे षष्ठी । अतः फलेऽपि साम्यं न विद्यते ॥ ३५ ॥

क्षणांशेनापि यो ज्येष्ठो न्यायस्तेनावपूर्यते ।
नार्थे न्यायान्तरं किंचित्कर्तुमुत्सहते मदम् ॥ ३६ ॥

ज्येष्ठत्वादपि वरसंविदः प्राबल्यमस्तीत्याहुः - क्षणांशेनापीति ।
ज्येष्ठस्यासंजातविरोधित्वेन सम्यङ्निरूढत्वादिति भावः । अप्रमाणजस्य हि
ज्येष्ठत्वं बाध्यत्वे तन्त्रम् । यथा रजतभ्रमस्य प्रमाणदृढीकृते त्वर्थे
अनपेक्षितस्य ज्ञानस्य ज्येष्ठत्वं बाध्यत्वे तन्त्रमिति प्रसिद्धम् । न्यायान्तरं न
किंचिन्मदं शापप्राबल्यं कर्तुमुत्सहते इत्यर्थः ॥ ३६ ॥

समेनोभयकोटिस्थं मिश्रं वस्तु भवेत्समम् ।
वरशापविलासेन क्षीरमिश्रं यथा पयः ॥ ३७ ॥

अत एव यत्र विरुद्धकर्मणोर्वरशापयोर्वा प्रमाणाभ्यासादिसाम्यं
तत्रोभयमिश्रमेव फलं भवतीत्याह - समेनेति । शुभाशुभोभयकोटिस्थम् ।
यथा मनुष्यदेहः ॥ ३७ ॥

समाभ्यां वरशापाभ्यामथवा चिद्द्विरूपताम् ।
स्वयमेवानुभवति स्वप्नेष्विव पुरात्मिका ॥ ३८ ॥

यथैककाले भिन्नदेशभोग्यौ समौ वरशापौ तत्र
विपश्चिदुपाख्यानोक्तन्यायेनोपाधेर्विभागेनैकैव जीवचिद्युगपद्देहभेदेन
द्विरूपतामापद्यत इत्याह - समाभ्यामिति । यथा स्वप्नेषु पुरात्मिका चित्
पुरवासिजनदेहभेदेन विभागमिवापद्यते तद्वत् ॥ ३८ ॥

शिक्षितं त्वत्त एवेति यत्तदेव तव प्रभो ।
पुनः प्रतीपं पठितं शीघ्रं यामो नमोऽस्तु ते ॥ ३९ ॥

धातुः पुरतः स्वेषां तत्त्वोद्गारधार्ष्ट्यमनुचितमनुचिन्त्याहुः - शिक्षितमिति ।
यत्त्वत्त एव शिक्षितं तत्तवैव पुरः पुनः पठितं धार्ष्ट्यावहत्वात्प्रतीपं
प्रतिकूलमिति नो धार्ष्ट्यापराधं क्षमस्व । अतस्ते नमोऽस्तु वयं शीघ्रं
स्वस्थानं यामः ॥ ३९ ॥

इत्युक्त्वा स स्वयंशापः क्वापि शापगणो ययौ ।
प्रशान्ते तिमिरे दृष्टे व्योम्नि केशोण्ड्रकं यथा ॥ ४० ॥

स्वयमेव स्वं वृथा प्रयासकारिणं स्वमौर्ख्यख्यापकं लज्जया शपतीति
स्वयंशापस्तथाविधः सन् क्वापि ययौ । यथा दृष्टेस्तिमिररोगे प्रशान्ते सति
व्योम्नि भ्रान्तिकृतं केशोण्ड्रकं क्वापि याति तद्वत् ॥ ४० ॥

177893 अथान्यो वरपूगोऽत्र गृहनिर्गमरोधकः ।
177894 स्थानिस्थानमिवादेशः समानार्थोऽभ्यपूरयत् ॥ ४१ ॥
177895
177896 एवं दुर्वासःशापेषु गतेषु अथ अन्यः सप्तद्वीपाधिपत्यविरुद्धस्तेषां
177897 गृहान्निर्गमस्य रोधकः अन्यस्तद्भार्याभ्यो दत्तो गौरीवरपूगो
177898 वैयाकरणप्रक्रियायामादेशः स्थानिस्थानमिव सूर्यवरैः सह विवादार्थं
177899 शापस्थानमभ्यपूरयत् । यतः सोऽपि समानः अर्थस्तुल्यकालं विरुद्धं फलं
177900 यस्य तथाविधः ॥ ४१ ॥
177901
177902 शापस्थानका वदिष्यन्ति ।
177903
177904 सप्तद्वीपेशजीवानां निर्याणं शवसद्मनः ।
177905 देवेश विद्मो न वयमन्धकूपादिवाम्भसाम् ॥ ४२ ॥
177906
177907 शापस्थाने निविष्टाः शापस्थानकाः पत्नीवरा ब्रह्माणं प्रति वदिष्यन्ति । किं
177908 तदाह - सप्तद्वीपेशेति । हे देवेश भाविसप्तद्वीपेशत्वेनाभिमतानामेतेषां
177909 जीवानां शवसद्मनो बहिर्निर्याणं वयं न विद्मः । अस्माभिस्तन्निरोधादित्यर्थः ।
177910 अन्धकूपाच्छून्यकूपात् ॥ ४२ ॥
177911
177912 सप्तद्वीपेश्वरानेतानिमे द्वीपेषु सद्मसु ।
177913 कारयन्ति वरा वर्या वीरा दिग्विजयं रणे ॥ ४३ ॥
177914
177915 तदेवमनिवार्येऽस्मिन्विरोधे विबुधेश्वर ।
177916 यदनुष्ठेयमस्माभिस्तदादिश शिवाय नः ॥ ४४ ॥
177917
177918 नः शिवाय सफलत्वाय यदादेश्यं तदादिश । आज्ञापयेत्यर्थः ॥ ४४ ॥
177919
177920 ब्रह्मोवाच ।
177921
177922 सप्तद्वीपेश्वरवरा गृहरोधवराश्च हे ।
177923 कामः संपन्न एवेह भवतां भवतामपि ॥ ४५ ॥
177924
177925 भवतां सर्वेषां कामः संपन्न एव ॥ ४५ ॥
177926
177927 व्रजतैतदपेक्षत्वं यावन्नेष्टावपि क्षणात् ।
177928 चिरं चिराय सदने सप्तद्वीपेश्वराः स्थिताः ॥ ४६ ॥
177929
177930 कथं संपन्नस्तत्राह - व्रजतेति । यूयमेतत्परस्परापेक्षत्वं व्रजत । यावत् यतो
177931 भवतां चिरं नेष्टौ परस्परेच्छाविरहेपि तेऽष्टौ भ्रातरो मरणोत्तरक्षणादेव
177932 चिराय स्वसदन एव सप्तद्वीपेश्वरा भूत्वा स्थिताः ॥ ४६ ॥
177933
177934 समनन्तरमेवैते देहपातात्स्वसद्मसु ।
177935 सप्तद्वीपेश्वराः सर्वे संपन्नाः परमं वराः ॥ ४७ ॥
177936
177937 तदेव स्पष्टमाह - समनन्तरमिति ॥ ४७ ॥
177938
177939 सर्वे वरा वदिष्यन्ति ।
177940
177941 कुतो भूमण्डलान्यष्टौ सप्तद्वीपानि भूतयः ।
177942 एकमेवेह भूपीठं श्रुतं दृष्टं च नेतरत् ॥ ४८ ॥
177943
177944 भूतयस्तत्तदैश्वर्याणि च कुतः । श्रुतं श्रुतिषु प्रसिद्धम् । दृष्टं लोकेपि

प्रसिद्धम् ॥ ४८ ॥

कथं चैतानि तिष्ठन्ति कस्मिंश्चिद्गृहकोशके ।
पद्माक्षकोशके सूक्ष्मे कथं भान्ति मतंगजाः ॥ ४९ ॥

ब्रह्मोवाच ।

युक्तं युष्माभिरस्माभिः सर्वं व्योमात्मकं जगत् ।
स्थितं चित्परमाण्वन्तरन्तःस्वप्नोऽनुभूयते ॥ ५० ॥

स्वप्नवदेवाविरुद्धमेतदित्युत्तरमाह - युक्तमिति । यतो युष्माभिरस्माभिश्च
व्यष्टिसमष्टिभिर्युक्तं सर्वं जगद्व्योमात्मकं सच्चित्परमाण्वन्तः
स्थितमन्तःस्वप्न एवानुभूयते अतस्तत् परमाणोरप्यन्तस्थे स्वगृहोदरे भातीति
परेणान्वयः ॥ ५० ॥

भाति यत्परमस्याणोरन्तस्थस्वगृहोदरे ।
स्फुरितं तत्किमाश्चर्यं कः स्मयः प्रकृतेः क्रमे ॥ ५१ ॥

तत्किमाश्चर्यमपूर्वम् । कः स्मयो विस्मयः ॥ ५१ ॥

मृतेरनन्तरं भाति यथास्थितमिदं जगत् ।
शून्यात्मैव घनाकारं तस्मिन्नेव क्षणे चितः ॥ ५२ ॥

स्वप्नसाम्यमेव दर्शयन्नुक्तं स्फुटयति - मृतेरित्यादिना ॥ ५२ ॥

अणावपि जगन्माति यत्र तत्र गृहोदरे ।
सप्तद्वीपा वसुमती कचतीति किमद्भुतम् ॥ ५३ ॥

यद्भातीदं च चित्तत्त्वं जगत्त्वं न जगत्क्वचित् ।
चिन्मात्रमेव तद्भाति शून्यत्वेन यथाम्बरम् ॥ ५४ ॥

यदिदं जगत्त्वं भाति तत् त्वं चिदेव । यतश्चिन्मात्रमेव तद्भाति अतो न
क्वचिज्जगन्मूर्तमस्ति यद्गृहे न भायादित्यर्थः ॥ ५४ ॥

इति ते ब्रह्मणा प्रोक्ता वरदेन वरास्ततः ।
तानाधिभौतिकभ्रान्तिमयान्संत्यज्य देहकान् ॥ ५५ ॥

तान्प्राक्कल्पितानाधिभौतिकभ्रान्तिमयान् देहकांस्तत्त्वविचारेण संत्यज्य
आतिवाहिकदेहिनः सन्तः अजं प्रणम्य अविरोधात्समं साकं तत्तन्मनःकल्पिते
सप्तद्वीपे तत्तद्देवानां गृहकोशान् जग्मुरिति परेणान्वयः ॥ ५५ ॥

प्रणम्याजं समं जग्मुरातिवाहिकदेहिनः ।
सप्तद्वीपे च देवानां गृहकोशान्कचज्जनान् ॥ ५६ ॥

यावत्ते तत्र संपन्नाः सप्तद्वीपाधिनायकाः ।
अष्टावपीष्टापुष्टानां दिनाष्टकमहीभुजाम् ॥ ५७ ॥

यावदिति साकल्ये । तेऽष्टौ भ्रातरस्तत्र गृहे
इष्टैर्यज्ञादिकसत्कर्मभिर्बन्धुजनैश्च आपुष्टानां जगदष्टकभेदेन
ब्रह्मदिनाष्टके आदिमहीभुजां स्वायंभुवमनूनां कुले इति शेषः ।
सप्तद्वीपाधिनायकाः संपन्ना इत्यर्थः ॥ ५७ ॥

177997 ते परस्परमज्ञाता अज्ञाश्चान्योन्यबन्धवः |
177998 अन्योन्यभूमण्डलगा अन्योन्याभिमते हिताः || ५८ ||
177999
178000 प्रत्येकं भ्रातृसहितत्वकल्पनादन्योन्यबन्धवः | राज्यभेदेन
178001 सर्वेषामाधिपत्यांशे त्वज्ञाः | अत एवान्योन्याभिमते हिता न तु विरुद्धचेष्टाः || ५८
178002 | |
178003
178004 तेषां कश्चिद्गृहस्यान्तरेव तारुण्यसुन्दरः |
178005 उज्जयिन्यां महापुर्यां राजधान्यां सुखे स्थितः || ५९ ||
178006
178007 तेषां प्रत्येकं चरित्रभेदकल्पनामाह - तेषामित्यादिना || ५९ ||
178008
178009 शाकद्वीपास्पदः कश्चिन्नागलोकजिगीषया |
178010 विचरत्यब्धिजठरे सर्वदिग्विजयोद्यतः || ६० ||
178011
178012 कुशद्वीपराजधान्यां निराधिः सकलप्रजाः |
178013 कृतदिग्विजयः कश्चित्सुप्तः कान्तावलम्बितः || ६१ ||
178014
178015 शाल्मलिद्वीपशैलेन्द्रशिरःपुर्याः सरोवरे |
178016 जललीलारतः कश्चित्सहविद्याधरीगणैः || ६२ ||
178017
178018 शैलेन्द्रस्य शिरः शिखरं तद्गतायाः पुर्याः क्रीडासरोवरे || ६२ ||
178019
178020 क्रौञ्चद्वीपे हेमपुरे सप्तद्वीपविवर्धिते |
178021 प्रवृत्तो वाजिमेधेन कश्चिद्यष्टुं दिनाष्टकम् || ६३ ||
178022
178023 सप्तद्वीपाहृतमहर्धिभिर्विवर्धिते || ६२ ||
178024
178025 उद्यतः शाल्मलिद्वीपे कश्चिद्द्वीपान्तचारिणा |
178026 योद्धुमुद्धृतदिग्दन्तिदन्ताकृष्टकुलाचलः || ६४ ||
178027
178028 द्वीपान्तचारिणा राज्ञा सह योद्धुमुद्यतः |
178029 उद्धृतैरुत्पाटितैर्दिग्दन्तिदन्तैराकृष्टाः कुलाचला वर्षपर्वता येन तथाविधः
178030 सन् || ६४ ||
178031
178032 गोमेदद्वीपकः कश्चित्पुष्करद्वीपराट् सुताम् |
178033 समानेतुं वशाद्याति कषत्सेनोऽष्टमोऽभवत् || ६५ ||
178034
178035 गोमेदद्वीपकस्तद्वसतिः | समानेतुं जित्वा परिणेतुम् | वशात्कामवशात् | कषन्ती
178036 शत्रुदेशान्बाधमाना सेना यस्य | यः प्राग् भ्रातृणामष्टमोऽभवत् सः || ६५ ||
178037
178038 पुष्करद्वीपकः कश्चिल्लोकालोकाद्रिभूभुजः |
178039 दूतेन सह निर्यातो धनभूमिदिदृक्षया || ६६ ||
178040
178041 धनभूमिर्निधानस्थानं तद्दिदृक्षया || ६६ ||
178042
178043 प्रत्येकमित्थमेतेषां द्वीपद्वीपाधिनाथताम् |
178044 कुर्वतां स्वगृहाकाशे दृष्ट्वा स्वप्रतिभोचिताम् || ६७ ||
178045
178046 त्यक्ताभिमानिकाकारा द्विविधास्ते वरास्ततः |
178047 तत्संविद्भिर्गृहेष्वन्तरेकतां खानि खैरिव || ६८ ||
178048

178049 त्यक्तः आभिमानिकाकार आतिवाहिकदेहाकारेऽपि यैस्तथाविधाः सन्तस्तेषामष्टानां
178050 जीवसंविद्भिरेकतां यास्यन्तीति परेणान्वयः ॥ ६८ ॥
178051
178052 यास्यन्ति ते भविष्यन्ति संप्राप्ताभिमताश्चिरम् ।
178053 सप्तद्वीपेश्वरास्तुष्टा नन्वष्टावपि तुष्टिमत् ॥ ६९ ॥
178054
178055 तुष्टिमत् राज्यं प्राप्येत्यर्थः ॥ ६९ ॥
178056
178057 इत्येते प्रविकसितोदितक्रियार्थाः प्राप्स्यन्ति प्रविततबुद्धयस्तपोभिः ।
178058 अन्तर्यत्स्फुरति विदस्तदेव बाह्ये नाप्तं कैस्तदुचितकर्मभिः किलेति ॥ ७० ॥
178059
178060 उक्तं संगृह्योपसंहरति - इतीति । इति उक्तप्रकारं सप्तद्वीपाधिपत्यं तपोभिः
178061 प्रविकसितः पूर्वोदितवरः क्रियार्थो येषां तथाविधा एतेऽष्टौ भ्रातरः प्राप्स्यन्ति ।
178062 विदः प्रत्यक्चैतन्यस्य अन्तर्दृढनिश्चयात्मना यत्स्फुरति तदेव बाह्ये
178063 तदुचिततपोजपादिकर्मभिः कैर्नाप्तम् । किलेति प्रसिद्धौ ॥ ७० ॥
178064
178065 इत्यार्षे श्रीवासिष्ठ० वा० दे० मो० नि० उ० ब्रह्म० ताप० द्वीपसप्तकाष्टकवर्णनं
178066 नाम त्र्यशीत्यधिकशततमः सर्गः ॥ १८३ ॥
178067
178068 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
178069 द्वीपसप्तकाष्टकवर्णनं नाम त्र्यशीत्यधिकशततमः सर्गः ॥ १८३ ॥
178070
178071 चतुरशीत्यधिकशततमः सर्गः १८४
178072
178073 कुन्ददन्त उवाच ।
178074
178075 इत्युक्तवानसौ पृष्टः कदम्बतलतापसः ।
178076 सप्तद्वीपा भुवोऽष्टौ ताः कथं भाता गृहेष्विति ॥ १ ॥
178077
178078 गृहस्यान्तर्जगन्त्यष्टौ संभवन्त्यपि कोटिशः ।
178079 यतोऽप्रबुद्धचिन्मात्रं तथा भातीति वर्ण्यते ॥
178080
178081 गृहेषु अल्पावकाशे ताः प्रत्येकं पञ्चाशत्कोटियोजनविस्तीणा भुवः कथं भाता
178082 इति मया पृष्टोऽसौ कदम्बतलतापस इति वक्ष्यमाणमुत्तरमुक्तवान् ॥ १ ॥
178083
178084 कदम्बतापस उवाच ।
178085
178086 चिद्धातुरीदृगेवायं यदेष व्योमरूप्यपि ।
178087 सर्वगो यत्र यत्रास्ते तत्र तत्रात्मनि स्वयम् ॥ २ ॥
178088
178089 व्योमरूपी प्रपञ्चशून्योऽपि आत्मानं त्रैलोक्यरूपेण अन्येन सुषुप्ततुर्यरूपेण वा
178090 स्वं रूपमत्यजदेव परिपश्यतीति द्वयोरन्वयः ॥ २ ॥
178091
178092 आत्मानमित्थं त्रैलोक्यरूपेणान्येन वा निजम् ।
178093 परिपश्यति रूपं स्वमत्यजन्नेव खात्मकम् ॥ ३ ॥
178094
178095 कुन्ददन्त उवाच ।
178096
178097 एकस्मिन्विमले शान्ते शिवे परमकारणे ।
178098 कथं स्वभावसंसिद्धा नानाता वास्तवी स्थिता ॥ ४ ॥
178099
178100 एकत्र नानाता विरुद्धेति शङ्कार्थः ॥ ४ ॥

178101
178102 कदम्बतापस उवाच।
178103
178104 सर्वं शान्तं चिदाकाशं नानास्तीह न किंचन।
178105 दृश्यमानमपि स्फारमावर्तात्मा यथाम्भसि॥ ५॥
178106
178107 न वास्तवीयं नानाता किंतु भ्रान्तिकृता। सा चैकस्मिन्नपि चन्द्रे
178108 द्वित्ववदविरुद्धेत्याशयेनोत्तरमाह - सर्वमिति॥ ५॥
178109
178110 असत्स्वेषु पदार्थेषु पदार्था इति भान्ति यत्।
178111 चित्खं स्वप्नसुषुप्तात्म तत्तस्याच्छं निजं वपुः॥ ६॥
178112
178113 स्वप्नसुषुप्तवद्विस्मृतयथार्थस्वभावात्म निजमज्ञातं वपुः स्वरूपमेव॥ ६॥
178114
178115 सस्पन्दोऽपि हि निःस्पन्दः पर्वतोऽपि न पर्वतः।
178116 यथा स्वप्नेषु चिद्भावः स्वभावोऽर्थगतस्तथा॥ ७॥
178117
178118 अतो न विरोध इति दर्शयति - सस्पन्द इति। स्वभावः सन्मात्रात्मा कल्पितार्थगतोऽपि
178119 तथैव बोध्य इत्यर्थः॥ ७॥
178120
178121 न स्वभावा न चैवार्थाः सन्ति सर्वात्मकोचिते।
178122 सर्गादौ कचितं रूपं यद्यथा तत्तथा स्थितम्॥ ८॥
178123
178124 सर्वात्मकस्य उचिते वास्तवे रूपे न सर्गादिस्वभावा नापि तत्कृता अर्थाः॥ ८॥
178125
178126 न च नाम परं रूपं कचनाकचनात्मकम्।
178127 द्रव्यात्मा चिच्च चिद्व्योम स्थितमित्थं हि केवलम्॥ ९॥
178128
178129 न च द्रव्यात्मनाप्यचिच्च॥ ९॥
178130
178131 एकैव चिद्यथा स्वप्ने सेनायां जनलक्षताम्।
178132 गतेवाच्छैव कचति तथैवास्याः पदार्थता॥ १०॥
178133
178134 यत्स्वतः स्वात्मनि स्वच्छे चित्खं कचकचायते।
178135 तत्तेनैव तदाकारं जगदित्यनुभूयते॥ ११॥
178136
178137 असत्यपि यथा वह्नावुष्णसंविद्धि भासते।
178138 संविन्मात्रात्मके व्योम्नि तथार्थः स्वस्वभासकः॥ १२॥
178139
178140 स्वप्ने असत्यपि वह्नौ स्वप्नचिदेव यथा उष्णत्वं भासते॥ १२॥
178141
178142 असत्यपि यथा स्तम्भे स्वप्ने खे स्तम्भता विदः।
178143 तथेदमस्या नानात्वमनन्यदपि चान्यवत्॥ १३॥
178144
178145 आदिसर्गे पदार्थत्वं तत्स्वभावाच्छमेव च।
178146 चिद्व्योम्ना यद्यथा बुद्धं तत्तथाद्यापि विन्दते॥ १४॥
178147
178148 कथं तर्ह्यर्थक्रियानियतिस्तत्राह - आदिसर्गे इति॥ १४॥
178149
178150 पुष्पे पत्रे फले स्तम्भे तरुरेव यथा ततः।
178151 सर्वं सर्वत्र सर्वात्म परमेव तथाऽपरम्॥ १५॥
178152

तथा अपरं जगत् ॥ १५ ॥

परमार्थाम्बराम्भोधावापः सर्गपरंपरा ।
परमार्थमहाकाशे शून्यता सर्गसंविदः ॥ १६ ॥

सर्गसंविदः सर्गप्रतिभासाः ॥ १६ ॥

परमार्थश्च सर्गश्च पर्यायौ तरुवृक्षवत् ।
बोधादेतदबोधात्तु द्वैतं दुःखाय केवलम् ॥ १७ ॥

परमार्थो जगच्चेदमेकमित्येव निश्चयः ।
अध्यात्मशास्त्रबोधेन भवेत्सैषा हि मुक्तता ॥ १८ ॥

संकल्पस्य वपुर्ब्रह्म संकल्पकचिदाकृतेः ।
तदेव जगतो रूपं तस्माद्ब्रह्मात्मकं जगत् ॥ १९ ॥

कथमेकं तत्राह - संकल्पस्येति ॥ १९ ॥

यतो वाचो निवर्तन्ते न निवर्तन्त एव वा ।
विधयः प्रतिषेधाश्च भावाभावदृशस्तथा ॥ २० ॥

सर्वशब्दानां तन्मात्रनिष्ठत्वान्न निवर्तन्त एव वा ॥ २० ॥

अमौनमौनं जीवात्म यत्पाषाणवदासनम् ।
यत्सदेवासदाभासं तद्ब्रह्माभिधमुच्यते ॥ २१ ॥

सदेवासदाभासम् । तदेजति तन्नैजति इत्यादिश्रुतेरिति भावः ॥ २१ ॥

सर्वस्मिन्नेकसुघने ब्रह्मण्येव निरामये ।
का प्रवृत्तिर्निवृत्तिः का भावाभावादिवस्तुनः ॥ २२ ॥

प्रवृत्तिः सर्गः । निवृत्तिः प्रलयः ॥ २२ ॥

एकस्यामेव निद्रायां सुषुप्तस्वप्नविभ्रमाः ।
यदा भान्त्यविचित्रायां चित्रा इव निरन्तराः ॥ २३ ॥

एतस्यां चित्खसत्तायां तथा मूलकसर्गकाः ।
बहवो भान्त्यचित्रायां चित्रा इव निरन्तराः ॥ २४ ॥

मूलका बीजभूताः प्रलयाः सर्गकाश्च ॥ २४ ॥

द्रव्ये द्रव्यान्तरं श्लिष्टं यत्कार्यान्तरमाक्षिपेत् ।
तद्वदन्तस्तथाभूतचित्सारं स्फुरणं मिथः ॥ २५ ॥

कथं भाति तदाह - द्रव्ये इति । यद्यथा दध्यादिद्रव्ये शर्करादिद्रव्यान्तरं
श्लिष्टं मिलितं सत् प्रत्येककार्यापेक्षया कार्यान्तरं
रुचिपुष्टिपित्तोपशमादिकार्यान्तरमाक्षिपेत्तथा भूतानां प्राणिनामन्तःकरणे
अभिव्यक्तं प्रमातृचित्सारं बाह्ये चक्षुरादिद्वारा निर्गत्य
घटाद्याकारवृत्तिश्लेषाच्छिलष्टं घटपटादि
तत्तद्विषयान्तरधिष्ठानचिदावरणभङ्गेन मिथस्त्रिपुटीस्फुरणमाक्षिपेदित्यर्थः
॥ २५ ॥

178205 सर्वे पदार्थाश्चित्सारमात्रमप्रतिघाः सदा |
178206 यथा भान्ति तथा भान्ति चिन्मात्रैकात्मतावशात् || २६ ||
178207
178208 अत एव घटाद्यर्था अपि स्वाधिष्ठानचिदधीनसत्तास्फूर्तिकत्वात्तत्सारमात्रमित्याह
178209 - सर्वे इति | यथा सर्गादौ भान्ति तथा इदानीमपि भान्ति || २६ ||
178210
178211 चिन्मात्रैकात्मसारत्वाद्यथासंवेदनं स्थिताः |
178212 निःस्पन्दा निर्मनस्काराः स्फुरन्ति द्रव्यशक्तयः || २७ ||
178213
178214 स्थितिरपि तेषां यथासंवेदनमेव | निःस्पन्दचिदधिष्ठानकत्वादेव सर्वा
178215 द्रव्यशक्तयोऽपि स्वाश्रयान्न चलन्ति न ह्रसन्ति चेत्याह - निःस्पन्दा इति | मनस्कारो
178216 मानसो द्वैताकारग्रहस्तद्रहिताः || २७ ||
178217
178218 अविद्यमानमेवेदं दृश्यतेऽथानुभूयते |
178219 जगत्स्वप्न इवाशेषं सरुद्रोपेन्द्रपद्मजम् || २८ ||
178220
178221 इत्थं च जगत्प्रातिभासिकमेव प्रतिभासमात्राधीनसर्वस्वत्वादित्याशयेनाह -
178222 अविद्यमानमेवेति || २८ ||
178223
178224 विचित्राः खलु दृश्यन्ते चिज्जले स्पन्दरीतयः |
178225 हर्षामर्षविषादोत्थजङ्गमस्थावरात्मनि || २९ ||
178226
178227 खलु यतः स्वप्नवदेव हर्षामर्षविषादोत्था विचित्राः स्पन्दरीतयो दृश्यन्ते || २९ ||
178228
178229 स्वभाववाताधूतस्य जगज्जालचमत्कृतेः |
178230 हा चिन्मरीचिषांश्वभ्रनीहारस्य विसारिता || ३० ||
178231
178232 स्वभावः अज्ञातस्वरूपनिष्ठा विक्षेपशक्तिस्तन्मात्रेण वायुना आधूतस्य |
178233 जगज्जालाकारा चमत्कृतिर्यस्य तथाविधस्य चिल्लक्षणसत्त्वगुणात्मना प्रकाशेन
178234 मरीचेः रजोगुणात्मना पांसुपटलस्य तमोगुणात्मना आवरणजाड्यप्राधान्येन
178235 अभ्रनीहारस्वरूपनभसि विसारिता विस्तारशालिता | हा इति खेदे |
178236 कीदृशजननमरणाद्यनर्थसहस्रकोट्यात्मना संपन्नेत्यर्थः | पांसुरेव
178237 पांशुः | तालव्या अपि दन्त्याश्च शम्बशूकरपांशवः इति कोशप्रसिद्धेः || ३० ||
178238
178239 यथा केशोण्ड्रकं व्योम्नि भाति व्यामलचक्षुषः |
178240 तथैवेयं जगद्भ्रान्तिर्भात्यनात्मविदोऽम्बरे || ३१ ||
178241
178242 अनात्मविदः अज्ञानावृतचिद्दृष्टेः | अम्बरे स्वात्माकाशे || ३१ ||
178243
178244 यावत्संकल्पितं तावद्यथा संकल्पितं तथा |
178245 यथा संकल्पनगरं कचतीदं जगत्तथा || ३२ ||
178246
178247 तस्याश्च कालप्रकारव्यवस्था [प्रसरेति पाठः |] संकल्पानुसारेणैवेत्याह
178248 - यावदिति | यथा येन येन प्रकारेण || ३२ ||
178249
178250 संकल्पनगरे यावत्संकल्पसकला स्थितिः |
178251 भवत्येवाप्यसद्रूपा सतीवानुभवे स्थिता || ३३ ||
178252
178253 दृष्टान्ते तां प्रकटयति - संकल्पनगरे इति | असद्रूपापि सतीव स्थिता || ३३ ||
178254
178255 प्रवहत्येव नियतिर्नियतार्थप्रदायिनी |
178256 स्थावरं जङ्गमं चैव तिष्ठत्येव यथाक्रमम् || ३४ ||

178257
178258 सैव धातुः संकल्परूपा नियतिरद्यापि प्रवहत्यग्रेऽपि प्रवहत्येव तयैव
178259 स्थावरादिप्राणिजातं यथाक्रमं नियतमेव तिष्ठति ॥ ३४ ॥
178260
178261 जायते जङ्गमं जीवात्स्थावरं स्थावरादपि ।
178262 नियत्याधो वहत्यम्बु गच्छत्यूर्ध्वमथानलः ॥ ३५ ॥
178263
178264 तेषां जन्मकर्मस्वभावादिव्यवस्थापि तयैवेत्याह - जायते इति ।
178265 जीवात्स्फुटजीवनाज्जङ्गमात् ॥ ३५ ॥
178266
178267 वहन्ति देहयन्त्राणि ज्योतींषि प्रतपन्ति च ।
178268 वायवो नित्यगतयः स्थिताः शैलादयः स्थिराः ॥ ३६ ॥
178269
178270 ज्योतिर्मयं विवृत्तं तु धारासाराम्बरीकृतम् ।
178271 युगसंवत्सराद्यात्म कालचक्रं प्रवर्तते ॥ ३७ ॥
178272
178273 ज्योतिर्मयं कालचक्रं दक्षिणायनात्मना विवृत्तं वर्षर्तौ
178274 धारासारव्याप्ताम्बरीकृतम् । तयैव नियत्या ॥ ३७ ॥
178275
178276 भूतलैकान्तराब्ध्यद्रिसंनिवेशः स्थितायते ।
178277 भावाभावग्रहोत्सर्गद्रव्यशक्तिश्च तिष्ठति ॥ ३८ ॥
178278
178279 भूतले च द्वीपभेदैरेकान्तराणामब्धीनाद्रीणां च संनिवेशः स्थितवदाचरति
178280 स्थितायते ॥ ३८ ॥
178281
178282 कुन्ददन्त उवाच ।
178283
178284 प्राग्दृष्टं स्मृतिमायाति तत्स्वसंकल्पनान्यतः ।
178285 भाति प्रथमसर्गे तु कस्य प्राग्दृष्टभासनम् ॥ ३९ ॥
178286
178287 नन्वस्मदादिसर्वजनव्यवहारो धातृसंकल्परूपनियत्या व्यवस्थितोऽस्तु । धातुः
178288 संकल्पव्यवस्थैव तु पूर्वानुभवजन्यसंस्कारातिरिक्तहेत्वसंभवादादिसर्गे च
178289 पूर्वानुभवाप्रसिद्धेः कथं सिध्यतीति कुन्ददन्तः शङ्कते - प्राग्दृष्टमिति ।
178290 तत्ततस्तदनुसारिस्वसंकल्पनानि भवन्ति । अत एभ्यः स्वसंकल्पनेभ्यो नियतः सर्गो
178291 भाति । इदं तु द्वितीयादिकल्पसर्गे उपपद्यते । प्रथमसर्गे तु कस्य प्राक्सर्गभासनं
178292 प्रसिद्धम् । यं पृच्छेत्स्वयं वा स्मरेदित्यर्थः ॥ ३९ ॥
178293
178294 तापस उवाच ।
178295
178296 अपूर्वं दृश्यते सर्वं स्वप्ने स्वमरणम् यथा ।
178297 प्राग्दृष्टं दृष्टमित्येव तत्रैवाभ्यासतः स्मृतिः ॥ ४० ॥
178298
178299 न स्मरणाधीनो धातुः संकल्पः किंतु
178300 दिव्यज्ञानेनातीतानागतसर्ववस्तुदर्शनाधीनः । स ऐक्षत लोकान्नु सृजा इति स
178301 इमाꣳल्लोकानसृजत इत्यादि श्रुतेः । तस्मिंश्च क्षणे सर्वमतीतानागतं
178302 जगदपूर्वमेव दृश्यते दृष्टानुसारिणी च चिद्विवर्तरूपा सांकल्पिकी सृष्टिः
178303 प्रवर्तते । तत्रैवेदं मया प्राग्दृष्टमित्यप्यध्यस्यते क्वचिदिति तापसः समाधत्ते
178304 - अपूर्वमित्यादिना ॥ ४० ॥
178305
178306 चित्त्वाच्चिद्व्योम्नि कचति जगत्संकल्पपत्तनम् ।
178307 न सन्नासदिदं तस्माद्धाताभातं यतः स्वतः ॥ ४१ ॥
178308

यतः कदाचिद्भातं कदाचिदभातम् ॥ ४१ ॥

चित्प्रसादेन संकल्पस्वनाद्यद्यानुभूयते ।
शुद्धं चिद्व्योम संकल्पपुरं मा स्मर्यतां कथम् ॥ ४२ ॥

दर्शनासामर्थ्ये हि स्मृतिः कल्प्येत । स्वप्ने कल्पनामात्रेण
दर्शनसमर्थायाश्चितः स्मृतिकल्पनादर्शनादित्याह - चित्प्रसादेनेति ॥ ४२ ॥

हर्षामर्षविनिर्मुक्तैर्दुःखेन च सुखेन च ।
प्रकृतेनैव मार्गेण ज्ञैश्चक्रैरिव गम्यते ॥ ४३ ॥

अत एव गुणदोषाद्यस्मरणाद्धर्षामर्षरहितैस्तत्त्वज्ञैः
कुलालचक्रवत्प्रारब्धवेगेनैव भ्रम्यत इत्याह - हर्षेति ॥ ४३ ॥

निद्राव्यपगमे स्वप्ननगरे यादृशं स्मृतौ ।
चिद्व्योमात्म परं विद्धि तादृशं त्रिजगद्भ्रमम् ॥ ४४ ॥

बाधितस्मृतिश्च न स्मृतिः किंत्वधिष्ठानमात्रपरिशेषदर्शनमित्याह -
निद्रेति ॥ ४४ ॥

संविदाभासमात्रं यज्जगदित्यभिशब्दितम् ।
तत्संविद्व्योम संशान्तं केवलं विद्धि नेतरत् ॥ ४५ ॥

तत् संशान्तं व्योमैव तादृशं त्वं विद्धि ॥ ४५ ॥

यस्मिन्सर्वं यतः सर्वं यत्सर्वं सर्वतश्च यत् ।
सर्वं सर्वतया सर्वं तत्सर्वं सर्वदा स्थितम् ॥ ४६ ॥

यतश्चिदेव संशान्ता सर्वमित्याह - यस्मिन्निति ॥ ४६ ॥

यथेयं संसृतिर्ब्राह्मी भवतो यद्भविष्यति ।
यथा भानं च दृश्यस्य तदेतत्कथितं मया ॥ ४७ ॥

तदेतत्सर्वं मया भवतः कथितमित्युपसंहारः ॥ ४७ ॥

उत्तिष्ठतं व्रजतमास्पदमह्नि पद्मं भृङ्गाविवाभिमतमाशु
विधीयतां स्वम् ।
तिष्ठामि दुःखमलमस्तसमाधिसंस्थं भूयः समाधिमहमङ्ग चिरं
विशामि ॥ ४८ ॥

अङ्ग हे द्विजौ युवां उत्तिष्ठतम् । अह्नि प्रातः पद्मं भृङ्गाविव आस्पदं
गृहं व्रजतम् । तत्राभिमतं सत्कर्म विधीयताम् ।
अहमिदानीमस्तसमाधिसंस्थमलमत्यन्तं दुःखं यथा स्यात्तथा तिष्ठामि ।
अतस्तत्परिहाराय भूयः अलं समाधि विशामीत्यर्थः ॥ ४८ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० नि० उ० ब्रह्म० ता० कुन्ददन्तोपदेशो
नाम चतुरशीत्यधिकशततमः सर्गः ॥ १८४ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
कुन्ददन्तोपदेशो नाम चतुरशीत्यधिकशततमः सर्गः ॥ १८४ ॥

178361 पञ्चाशीत्यधिकशततमः सर्गः १८५
178362
178363 कुन्ददन्त उवाच।
178364
178365 जरन्मुनिरपीत्युक्त्वा ध्यानमीलितलोचनः।
178366 आसीदस्पन्दितप्राणमनाश्चित्र इवार्पितः॥ १॥
178367
178368 तयोर्गृहागमस्तत्र भ्रातृणां क्रमशः क्षयः।
178369 कुन्ददन्तस्य रामाप्त्या मोहोच्छित्तिश्च वर्ण्यते॥
178370
178371 अस्पन्दिते प्राणमनसी यस्य॥ १॥
178372
178373 आवाभ्यां प्रणयोदारैः प्रार्थितोऽपि पुनः पुनः।
178374 वाक्यैः संसारमविदन्न वचो दत्तवान्पुनः॥ २॥
178375
178376 प्रणयोदारैर्वाक्यैरावाभ्यां प्रार्थितोऽपि वचो न दत्तवान्। यतो
178377 बाह्यवृत्त्युपरमात्संसारमविदन्ननुसंदधान इत्यर्थः॥ २॥
178378
178379 आवां प्रदेशतस्तस्माच्चलित्वा मन्दमुत्सुकौ।
178380 दिनैः कतिपयैः प्राप्तौ गृहं मुदितबान्धवम्॥ ३॥
178381
178382 मुनिवियोगादुत्सुकौ॥ ३॥
178383
178384 अथ तत्रोत्सवं कृत्वा कथाः प्रोच्य चिरंतनी।
178385 स्थितास्तावद्वयं यावत्सप्तापि भ्रातरोऽथ ते॥ ४॥
178386
178387 तत्र गृहे कुलदेवताराधनसुवासिनीब्राह्मणभोजनाद्युत्सवं कृत्वा॥ ४॥
178388
178389 क्रमेण विलयं प्राप्ताः प्रलयेष्वर्णवा इव।
178390 मुक्तोऽसौ मे सखैवैक एकार्णव इवाष्टकः॥ ५॥
178391
178392 प्रलयेषु प्रलयारम्भे द्वादशादित्यतापात्सप्तार्णवा इव॥ ५॥
178393
178394 ततः कालेन सोऽप्यस्तं दिनान्तेऽर्क इवागतः।
178395 अहं दुःखपरीतात्मा परं वैधुर्यमागतः॥ ६॥
178396
178397 स मत्सखः अष्टमोऽपि। वैधुर्यं सखिजनवियोगम्॥ ६॥
178398
178399 ततोऽहं दुःखितो भूयः कदम्बतरुतापसम्।
178400 गतो दुःखोपघाताय तज्ज्ञानं प्रष्टुमादृतः॥ ७॥
178401
178402 तत् प्रोक्तेनोक्तमात्मज्ञानम्॥ ७॥
178403
178404 तत्र मासत्रयेणासौ समाधिविरतोऽभवत्।
178405 प्रणतेन मया पृष्टः सन्निदं प्रोक्तवानथ॥ ८॥
178406
178407 कदम्बतापस उवाच।
178408
178409 अहं समाधिविरतः स्थातुं शक्नोमि न क्षणम्।
178410 समाधिमेव प्रविशाम्यहमाशु कृतत्वरः॥ ९॥
178411
178412 परमार्थोपदेशस्ते नाभ्यासेन विनानघ।

178413 लगत्यत्र परां युक्तिमिमां शृणु ततः कुरु ॥ १० ॥
178414
178415 इदानीं मया कृतोऽपि ते न लगति। परामन्यां युक्तिं ज्ञानप्राप्त्युपायम् ॥ १० ॥
178416
178417 अयोध्यानाम पूरस्ति तत्रास्ति वसुधाधिपः।
178418 नाम्ना दशरथस्तस्य पुत्रो राम इति श्रुतः ॥ ११ ॥
178419
178420 सकाशं तत्र गच्छ त्वं तस्मै कुलगुरुः किल।
178421 वसिष्ठाख्यो मुनिश्रेष्ठः कथयिष्यति संसदि ॥ १२ ॥
178422
178423 मोक्षोपायकथां कथयिष्यति ॥ १२ ॥
178424
178425 मोक्षोपायकथां दिव्यां तां श्रुत्वा सुचिरं द्विज।
178426 विश्रान्तिमेष्यसि परे पदेऽहमिव पावने ॥ १३ ॥
178427
178428 इत्युक्त्वा स समाधानरसायनमहार्णवम्।
178429 विवेशाहमिमं देशं त्वत्सकाशमुपागतः ॥ १४ ॥
178430
178431 त्वत्सकाशमिति रामं प्रत्युक्तिः ॥ १४ ॥
178432
178433 एषोऽहमेतद्वृत्तं मे सर्वं कथितवानहम्।
178434 यथावृत्तं यथादृष्टं यथाश्रुतमखण्डितम् ॥ १५ ॥
178435
178436 अखण्डितमखिलम् ॥ १५ ॥
178437
178438 श्रीराम उवाच।
178439
178440 स कुन्ददन्त इत्यादिकथाकथनकोविदः।
178441 स्थितस्ततःप्रभृत्येव मत्समीपगतः सदा ॥ १६ ॥
178442
178443 स एष कुन्ददन्ताख्यो द्विजः पार्श्वे समास्थितः।
178444 श्रुतवान्संहितामेतां मोक्षोपायाभिधामिह ॥ १७ ॥
178445
178446 इह अस्यां सभायाम् ॥ १७ ॥
178447
178448 स एष कुन्ददन्ताख्यो मम पार्श्वगतो द्विजः।
178449 अद्य निःसंशयो जातो न वेति परिपृच्छ्यताम् ॥ १८ ॥
178450
178451 एवं प्रश्नोपोद्घातमुपवर्ण्य प्रष्टव्यांशमाह - स इति ॥ १८ ॥
178452
178453 श्रीवाल्मीकिरुवाच।
178454
178455 इत्युक्ते राघवेणाथ प्रोवाच वदतांवरः।
178456 स वसिष्ठो मुनिश्रेष्ठः कुन्ददन्तं विलोकयन् ॥ १९ ॥
178457
178458 श्रीवसिष्ठ उवाच।
178459
178460 कुन्ददन्त द्विजवर कथ्यतां किं त्वयानघ।
178461 बुद्धं श्रुतवता ज्ञेयं मदुक्तं मोक्षदं परम् ॥ २० ॥
178462
178463 कुन्ददन्त उवाच।
178464

सर्वसंशयविच्छेदि चेत एव जयाय मे |
सर्वसंशयविच्छेदो ज्ञातं ज्ञेयमखण्डितम् || २१ ||

सर्वसंदेहविच्छेदो जात इति शेषः | यतोऽवश्यज्ञेयमखण्डितं
प्रत्यग्भेदलक्षणखण्डितशून्यं ब्रह्मतत्त्वं ज्ञातम् || २१ ||

ज्ञातं ज्ञातव्यममलं दृष्टं द्रष्टव्यमक्षतम् |
प्राप्तं प्राप्तव्यमखिलं विश्रान्तोऽस्मि परे पदे || २२ ||

ज्ञानमात्रेण मोहनिवृत्त्या ज्ञातव्यान्तरस्य द्रष्टव्यान्तरस्य लब्धव्यान्तरस्य
चापरिशेषात्कृतकृत्यतामाह - ज्ञातमिति || २२ ||

बुद्धेयं त्वदिदं सर्वं परमार्थघनं घनम् |
अनन्येनात्मनो व्योम्नि जगद्रूपेण जृम्भितम् || २३ ||

त्वत् त्वत्त इयमात्मचित् मया बुद्धा | कथं बुद्धा तदाह - इदं सर्वमित्याह || २३
| |

सर्वात्मकतया सर्वरूपिणः सर्वगात्मनः |
असर्वं सर्वेण सर्वत्र सर्वदा संभवत्यलम् || २४ ||

संभवन्ति जगन्त्यन्तः सिद्धार्थकणकोटरे |
न संभवन्ति च यथा ज्ञातमेतदशेषतः || २५ ||

सिद्धार्थः श्वेतसर्षपस्तदीयकणकोटरेऽपि अधिष्ठानचितः
सर्वकल्पनाशक्तिसंभृतायाः सत्त्वात्तदन्तर्मायादृशा जगन्ति संभवन्ति |
परमार्थदृशा तु क्वापि न संभवन्ति च || २५ ||

गृहेऽन्तः संभवत्येव सप्तद्वीपा वसुंधरा |
गेहं च शून्यमेवास्ते सत्यमेतदसंशयम् || २६ ||

यद्यद्यदा वस्तु यथोदितात्म भातीह भूतैरनुभूयते च |
तत्तत्तदा सर्वघनस्तथास्ते ब्रह्मेत्थमाद्यन्तविमुक्तमस्ति || २७ ||

तत्र समायं ब्रह्मतत्त्वं निष्कृष्योपसंहरति - यद्यदिति | सर्वघन आत्मैव
सर्वजनसार्वकालिकबोधविषयसर्वभावेनास्ते नाणुमात्रमपि
ततोऽन्यत्केनचित्कदाचिदप्यनुभूयत इति निष्कर्ष इति भावः || २७ ||

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० नि० उ० ब्रह्म० ता० कुन्ददन्तप्रबोधो
नाम पञ्चाशीत्यधिकशततमः सर्गः || १८५ ||

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
कुन्ददन्तप्रबोधो नाम पञ्चाशीत्यधिकशततमः सर्गः || १८५ ||

षडशीत्यधिकशततमः सर्गः १८६

श्रीवाल्मीकिरुवाच |

कुन्ददन्ते वदत्येवं वसिष्ठो भगवान्मुनिः |
उवाचेदमनिन्द्यात्मा परमार्थोचितं वचः || १ ||

178517 सर्वं ब्रह्मेति सिद्धान्तो युक्तिभिः क्रियतेऽचलः।
178518 वरशापार्थसिद्धिश्च धातुः संकल्पतश्चितः॥
178519
178520 कुन्ददन्तवर्णितं मायाशबलब्रह्मतत्त्वं प्रथमतो दृढीकृत्य निर्मायं
178521 शुद्धं तद्वर्णयितुं श्रीवसिष्ठः प्रवृत्त इत्याह - कुन्ददन्ते इति॥ १॥
178522
178523 श्रीवसिष्ठ उवाच।
178524
178525 वत विज्ञानविश्रान्तिरस्य जाता महात्मनः।
178526 करामलकवद्विश्वं ब्रह्मेति परिपश्यति॥ २॥
178527
178528 बतेत्यनुकम्पायाम्। ज्ञात इति पाठे ज्ञातेन साक्षात्कारज्ञानफलेन विज्ञानस्य
178529 शास्त्रश्रवणजन्यज्ञानस्य विश्रान्तिः पूर्णता। करामलकवदिति तस्यैव
178530 स्फुटमभिनयः॥ २॥
178531
178532 किलेदं भ्रान्तिमात्रात्म विश्वं ब्रह्मेति भात्यजम्।
178533 भ्रान्तिर्ब्रह्मैव च ब्रह्म शान्तमेकमनामयम्॥ ३॥
178534
178535 भ्रान्तिरन्यथाग्रहस्तन्मात्रात्मकं विश्वं ब्रह्मेत्यस्य भाति यतो भ्रान्तिरपि
178536 ब्रह्मैवेत्यस्य भाति॥ ३॥
178537
178538 यद्यथा येन यत्रास्ति यादृग्यावद्यदा यतः।
178539 तत्तथा तेन तत्रास्ति तादृक्तावत्तदा ततः॥ ४॥
178540
178541 शबलब्रह्मनिष्कर्षदृशानेन यद्वर्णितं तदपि सम्यगेवेत्याह - यदिति॥ ४॥
178542
178543 शिवं शान्तमजं मौनममौनमजरं ततम्।
178544 सुशून्याशून्यमभवमनादिनिधनं ध्रुवम्॥ ५॥
178545
178546 तच्च शुद्धाविरुद्धम्। मायाया विकारं विनैव वैचित्र्यप्रकटनादित्याशयेनाह ##-
178547
178548 यस्या यस्यास्त्ववस्थायाः क्रियते संविदा भरः।
178549 सा सा सहस्रशाखत्वमेति सेकैर्यथा लता॥ ६॥
178550
178551 संविदा मायाशबलचिता। भरः संकल्पातिशयः॥ ६॥
178552
178553 परो ब्रह्माण्डमेवाणुश्चिद्व्योम्नोन्तःस्थितो यतः।
178554 परमाणुरेव ब्रह्माण्डमन्तःस्थितजगद्यतः॥ ७॥
178555
178556 ब्रह्माण्डमेव परोऽणुः परमाणुः। एवं परमाणुरेव ब्रह्माण्डं
178557 यतोन्तःस्थितं जगत्॥ ७॥
178558
178559 तस्माच्चिदाकाशमनादिमध्यमखण्डितं सौम्यमिदं समस्तम्।
178560 निर्वाणमस्तंगतजातिबन्धो यथास्थितं तिष्ठ निरामयात्मा॥ ८॥
178561
178562 जगद्ब्रह्मैव चेद्यत्फलितं तदाह - तस्मादिति। अस्तंगतो जातिः शरीरादिवैचित्र्यं
178563 तद्रूपो बन्धो यस्य तथाविधः सन् यथास्थितं ब्रह्मैव भूत्वा तिष्ठ॥ ८॥
178564
178565 स्वयं दृश्यं स्वयं द्रष्टृ स्वयं चित्त्वं स्वयं जडम्।
178566 स्वयं किंचिन्न किंचिच्च ब्रह्मात्मन्येव संस्थितम्॥ ९॥
178567
178568 व्यवहारे तु ब्रह्म स्वयमेव दृश्यादिवेशेण संस्थितम्। परमार्थतस्तु तत्

178569 आत्मन्यद्वितीयस्वप्रकाशानन्दैकरसात्मन्येव संस्थितम् ॥ ९ ॥
178570

178571 यथा यत्र जगत्येतत्स्वयं ब्रह्म खमात्मनि ।
178572 स्वरूपमजहच्छान्तं यत्र संपद्यते तथा । १० ॥
178573

178574 यत्र यद्वासनया यथा संपद्यते तत्र तथा स्थितमित्यनुकर्षः ॥ १० ॥
178575

178576 ब्रह्म दृश्यमिति द्वैतं न कदाचिद्यथास्थितम् ।
178577 एकत्वमेतयोर्विद्धि शून्यत्वाकाशयोरिव ॥ ११ ॥
178578

178579 ब्रह्म मायया दृश्यं जगत्संपन्नमित्येतावता द्वैतं न कदाचिन्मन्तव्यं यतो
178580 यथास्थितमविकृतमेवास्ते ॥ ११ ॥
178581

178582 दृश्यमेव परं ब्रह्म परं ब्रह्मैव दृश्यता ।
178583 एतन्न शान्तं नाऽशान्तं नानाकारं न चाकृतिः ॥ १२ ॥
178584

178585 यादृग्प्रबोधे स्वप्नादिस्तादृग्देहो निराकृतिः ।
178586 संविन्मात्रात्मा प्रतिघः स्वानुभूतोऽप्यसन्मयः ॥ १३ ॥
178587

178588 प्रतीयमाना देहाद्याकृतिः कथमपलप्यते तत्राह - यादृगिति ॥ १३ ॥
178589

178590 संविन्मयो यथा जन्तुर्निद्रात्मास्ते जडोभवत् ।
178591 जडीभूता तथैषास्ते संवित्स्थावरनामिका ॥ १४ ॥
178592

178593 संविदोऽपि जडस्थावरभावे दृष्टान्तमाह - संविन्मय इति ॥ १४ ॥
178594

178595 स्थावरत्वाज्जडाच्चित्त्वं जङ्गमात्म प्रयाति चित् ।
178596 जीवः सुषुप्तात्मा स्वप्नं जाग्रच्चैव जगच्छतैः ॥ १५ ॥
178597

178598 तस्याः स्थावरभावोत्तरं जङ्गमभावे चिदभिव्यक्तो दृष्टान्तमाह -
178599 स्थावरत्वादिति । यथा सुषुप्तात्मा जीवः स्वप्नं जाग्रच्चैव जगच्छतकल्पनैर्गच्छति
178600 तद्वदित्यर्थः ॥ १५ ॥
178601

178602 आमोक्षमेषा जीवस्य भुव्यम्भस्यनिलेऽनले ।
178603 खे खात्मभिर्जगल्लक्षैः स्वप्नाभैर्भासते स्थितिः ॥ १६ ॥
178604

178605 कियत्कालं स्थावरजङ्गमादिभावस्थितिस्तत्राह - आमोक्षमिति ॥ १६ ॥
178606

178607 चिच्चिनोति तथा जाड्यं नरो निद्रास्थितिर्यथा ।
178608 चिनोति जडतां चित्त्वं न नाम जडतावशात् ॥ १७ ॥
178609

178610 चिनोति अध्यस्यति । तथाप्यस्याश्चित्त्वमव्याहतमित्याह - चिनोतीति ।
178611 अध्यस्तजडतावशाज्जडतां न चिनोति वस्तुतो जडतां न नाम भजते ॥ १७ ॥
178612

178613 चिता वेदनवेत्तारं स्थावरं क्रियते वपुः ।
178614 चिता वेदनवेत्तारं जङ्गमं क्रियते वपुः ॥ १८ ॥
178615

178616 जाड्यवेदनवेत्तारं जीवं प्रति स्थावरं वपुः क्रियते तथा जङ्गममपि ॥ १८ ॥
178617

178618 यथा पुंसो नखाः पादावेकमेव शरीरकम् ।
178619 तथैकमेवाप्रतिघं चितः स्थावरजङ्गमम् ॥ १९ ॥
178620

178621 तथा कृतेऽपि न चिद्भेदः किंतु महाचितः स्वाध्यस्तं सर्वमचेतनं चेतनं च
178622 नखपादादिवदवयवभूतमेवेत्याह - यथेति ॥ १९ ॥
178623
178624 आदिसर्गे स्वप्न इव यत्प्रथामागतं स्थितम् ।
178625 चितो रूपं जगदिति तत्तथैवान्त उच्यते ॥ २० ॥
178626
178627 आदिसर्गे हिरण्यगर्भस्य प्राथमिकसर्गहेतौ संकल्पे यथा यद्रूपं प्रथामागतं
178628 तत्तथैवाधुनापि स्थितम् । एवं चिराज्जडरूपेण स्थितमपि चिन्मयत्वादप्रतिघं
178629 शान्तमित्यादि तदपवादेन सर्गस्यान्त उच्यते इति परेणान्वयः ॥ २० ॥
178630
178631 तच्चैवाप्रतिघं शान्तं यथास्थितमवस्थितम् ।
178632 न प्रथामागतं किंचिन्नासीदप्रथितं हितम् ॥ २१ ॥
178633
178634 यतो नासीदतः अप्रथितं कदापीत्येव हितम् ॥ २१ ॥
178635
178636 अयमादिरयं चान्तः सर्गस्येत्यवभासते ।
178637 चितः सुघननिद्रायाः सुषुप्तस्वप्नकोष्ठतः ॥ २२ ॥
178638
178639 एवं सर्गमात्रस्य त्रैकालिकासत्त्वे आद्यन्तकल्पनापि मिथ्यैवेत्याह - अयमिति । यथा
178640 स्वाप्नप्रपञ्चस्य सुषुप्तत्तादिप्रबोधान्ततापि निद्रा कोष्ठान्तरेव कल्प्यते न
178641 प्रबोधकोष्ठान्तस्तद्वदित्यर्थः ॥ २२ ॥
178642
178643 स्थित एको ह्यनाद्यन्तः परमार्थघनो यतः ।
178644 प्रलयस्थितिसर्गाणां न नामाप्यस्ति मां प्रति ॥ २३ ॥
178645
178646 तत्कुतस्तत्राह - स्थित इति । मां प्रबुद्धं प्रति नामापि नास्ति दूरे रूपमित्यर्थः ॥
178647 २३ ॥
178648
178649 प्रलयस्थितिसर्गादि दृश्यमानं न विद्यते ।
178650 एतन्न चात्मनश्चान्यच्चित्रे चित्रवधूर्यथा ॥ २४ ॥
178651
178652 कर्तव्यचित्रसेनास्माद्यथा चित्रान्न भिद्यते ।
178653 नानाऽनानैव प्रतिघा चित्तत्त्वे सर्गता तथा ॥ २५ ॥
178654
178655 यथा चित्रकृता कर्तव्या चित्रसेना अस्मात्तद्बुद्धिस्थाच्चित्रान्न भिद्यते तथा प्रतिघा
178656 मूर्ता सर्गतापि स्रष्टुश्चित्तत्त्वे नानाप्यनानैव ॥ २५ ॥
178657
178658 विभागहीनयाप्येष भागश्चिद्घननिद्रया ।
178659 सुषुप्तान्मुष्यते मोक्ष इति स्वप्नस्तु चित्तकम् ॥ २६ ॥
178660
178661 विभागहीनयापि चिद्घननिद्रया अविद्यया सुषुप्तादेवावरणाद्वास्तवस्वरूपभूतोऽपि
178662 मोक्ष इति प्रसिद्धो भागो मुष्यते चोर्यते अपलप्यते । तु प्रत्युत चित्तकं भूत्वा एष
178663 जाग्रद्भागः स्वप्नश्च प्रदर्श्यते इति शेषः । सुषुप्तात्सोद्यते मोक्षः इति पाठे तु
178664 सोद्यते श्रवणमननाद्युद्योगसहिते पुरुषे मोक्ष इति विभागः प्रदर्श्यते ।
178665 अन्यस्मिंस्तु चित्तकं भूत्वा द्विविधः स्वप्नः प्रदर्श्यत इति व्याख्येयम् ॥ २६ ॥
178666
178667 प्रलयोऽयमियं सृष्टिरयं स्वप्नो घनस्त्वयम् ।
178668 भासोऽप्रतिघरूपस्य चित्सहस्ररुचेरिति ॥ २७ ॥
178669
178670 घनो जागरः प्रज्ञानघनतारूपसुषुप्तिकस्य चित्सहस्ररुचेरात्मसूर्यस्य इति
178671 एवंरूपा भासः प्रकाशभेदाः ॥ २७ ॥
178672

178673 चिन्निद्रायाः स्वप्नमयो भागश्चित्तमुदाहृतम् |
178674 तदेव मुच्यते भूतं जीवो देवासुरादिदृक् || २८ ||
178675
178676 तत्र य उद्भूतवासनात्मा स्वप्नभागः स एव उपाध्यंशप्राधान्येन चित्तं
178677 चिदंशप्राधान्येन जीवः स एव देवासुरमनुष्याद्यधिकारिशरीरदृक्
178678 संस्तत्त्वज्ञानेन निद्रां विधूय मुच्यते || २८ ||
178679
178680 एष एव परिज्ञातः सुषुप्तिर्भवति स्वयम् |
178681 यदा तदा मोक्ष इति प्रोच्यते मोक्षकाङ्क्षिभिः || २९ ||
178682
178683 तदेवाह - एष एवेति | चतुर्थपञ्चमभूमिकयोः परिज्ञातः षष्ठभूमिकायां
178684 सुषुप्तिर्भवति | सप्तमभूमिकायां मोक्ष इति प्रोच्यते || २९ ||
178685
178686 श्रीराम उवाच |
178687
178688 चित्तं देवासुराद्यात्म चिन्निद्रा स्वात्मदर्शनम् |
178689 कियत्प्रमाणं भगवन्कथमस्योदरे जगत् || ३० ||
178690
178691 चित्तं देवासुरादिभेदेन कियत्प्रमाणं कियत्संस्थानं च भवति चिन्निद्रा तस्योदरे
178692 जगच्च कियत्प्रमाणं कियत्कालं भवतीति प्रश्नार्थः || ३० ||
178693
178694 श्रीवसिष्ठ उवाच |
178695
178696 विद्धि चित्तं नरं देवमसुरं स्थावरं स्त्रियम् |
178697 नागं नगं पिशाचादि खगकीटादिराक्षसम् || ३१ ||
178698
178699 तत्राद्यस्योत्तरमाह - विद्धीत्यादिना || ३१ ||
178700
178701 प्रमाणं तस्य चानन्तं विद्धि तद्यत्र रेणुताम् |
178702 आब्रह्मस्तम्बपर्यन्तं जगद्याति सहस्रशः || ३२ ||
178703
178704 रेणुतां परमाणुतामवधीकृत्य || ३२ ||
178705
178706 यदेतदादित्यपथादूर्ध्वं संयाति वेदनम् |
178707 एतच्चित्तं भूतमेतदपर्यन्तामलाकृति || ३३ ||
178708
178709 वैपुल्योत्कर्षमप्यनुभवमारोहयति - यदेतदिति | ऊर्ध्वं चक्षुःप्रेरणे
178710 यदेतदादित्यपथादूर्ध्वदेशे ध्वान्धकारादिप्रदेशेऽपि चाक्षुषं वेदनं
178711 संयाति तदेतावत्प्रमाणं भूतं चित्तमपर्यन्तममलाकृति च
178712 सर्वानुभवसिद्धमित्यर्थः || ३३ ||
178713
178714 एतदुग्रं चितो रूपमस्यान्तर्भुवनर्द्धयः |
178715 यदायान्ति तदा सर्गश्चित्तादागत उच्यते || ३४ ||
178716
178717 दुःसहसंसारदुःखबहुलत्वादुग्रम् | अस्यैव समष्ट्यात्मनोऽन्तर्भुवनर्द्धयो
178718 यदा ब्रह्माण्डादिकल्पनया आयान्ति तदा सर्गः स चास्माभिश्चित्तादागत इत्युच्यते || ३४
178719 ||
178720
178721 चित्तमेव विदुर्जीवं तदाद्यन्तविवर्जितम् |
178722 खं घटेष्विव देहेषु चास्ते नास्ते तदिच्छया || ३५ ||
178723
178724 आद्यन्तविवर्जितं विभु | अत एव सर्वदेहेषु आस्ते व्यष्टिरूपेण देहादुत्क्रमणान्नास्ते च

धातुरिच्छयेत्यर्थः ॥ ३५ ॥

निम्नोन्नतान्भुवो भागान् गृह्णाति च जहाति च ।
सरित्प्रवाहोऽङ्ग यथा शरीराणि तथा मनः ॥ ३६ ॥

तत्र शरीरग्रहणत्यागयोर्दृष्टान्तमाह - निम्नेति । हे अङ्ग ॥ ३६ ॥

अस्य त्वात्मपरिज्ञानादेष देहादिसंभ्रमः ।
शाम्यत्याश्ववबोधेन मरुवाःप्रत्ययो यथा ॥ ३७ ॥

जगत्यन्तरणुर्यत्र तत्प्रमाणं हि चेतसः ।
सदेव च पुमांस्तस्मात्पुंसामन्तःस्थितं जगत् ॥ ३८ ॥

एवं सर्वजगद्गर्भितस्य मनसः परमाणुरूपतैवेत्याह -जगतीति । यत्र
जालसूर्यमरीच्यादौ सर्वतः सूक्ष्मोऽणुर्यत्प्रमाणः प्रसिद्धस्तच्चेतसः प्रमाणं
परिमाणम् । तदेव च पुमान् जीवः । वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो
जीवः स विज्ञेयः स चानन्त्याय कल्पते इति श्रुतेरिति भावः ॥ ३८ ॥

यावत्किंचिदिदं दृश्यं तच्चित्तं स्वप्नभूष्विव ।
तदेव च पुमांस्तस्मात्को भेदो जगदात्मनोः ॥ ३९ ॥

एवं च जीवजगद्भेदोऽप्यपमृष्ट इत्याह - यावदिति ॥ ३९ ॥

चिदेवायं पदार्थौघो नास्त्यन्यस्मिन्पदार्थता ।
व्यतिरिक्ता स्वप्न इव हेम्नीव कटकादिता ॥ ४० ॥

जीवजगदभेदे चिन्मात्रतापि जगतः सिद्धेत्याह - चिदेवेति ।
अन्यस्मिंश्चिद्भिन्नेऽभ्युपगम्यमाने सत्तास्फुरणयोरलाभादलीकतापत्त्या व्यतिरिक्ता
पदार्थतैव नास्ति न सिध्यतीत्यर्थः ॥ ४० ॥

यथैकदेशे सर्वत्र स्फुरन्त्यापोऽम्बुधौ पृथक् ।
ब्रह्मण्यनन्या नित्यस्थाश्चितो दृश्यात्मिकास्तथा ॥ ४१ ॥

यथा अम्बुधिलक्षणे एकदेशे एकीभूय स्थिता एवापः पृथक् स्फुरन्ति
तद्वद्ब्रह्मण्यपि दृश्यात्मिकास्ता इत्यर्थः ॥ ४१ ॥

यथा द्रवत्वमम्भोधावापो जठरकोशगाः ।
स्फुरन्त्येवं विदोऽनन्याः पदार्थौघास्तथापरे ॥ ४२ ॥

अनन्यत्वे तद्द्रवत्वदृष्टान्तमाह - यथेति ॥ ४२ ॥

यथास्थितजगच्छालभञ्जिकाकाशरूपधृक् ।
चित्स्तम्भोयमपस्पन्दः स्थित आद्यन्तवर्जितः ॥ ४३ ॥

एवं च यथास्थितजगल्लक्षणः शालभञ्जिकानां
यदाकाशरूपमात्यन्तिकशून्यता तद्रूपधृक् चित्स्तम्भ एव निस्पन्दोऽचलः स्थितः ॥
४३ ॥

यथास्थितमिदं विश्वं संविद्व्योम्नि व्यवस्थितम् ।
स्वरूपमत्यजच्छान्तं स्वप्नभूमाविवाखिलम् ॥ ४४ ॥

समता सत्यता सत्ता चैकता निर्विकारिता ।

178777 आधाराधेयतान्योन्यं चैतयोर्विश्वसंविदोः ॥ ४५ ॥
178778
178779 कथं शान्तं कथं च स्वरूपमत्यजत्तदाह - समतेति। पञ्चभिः
178780 प्रकारैर्भेदाविभावनाच्छान्तमाधाराधेयभावेन
178781 स्तम्भशालभञ्जिकावद्व्यवहारे ईषद्भेदप्रतिभासात्स्वरूपमत्यजदित्यर्थः ॥ ४५ ॥
178782
178783 स्वप्नसंकल्पसंसारवरशापदृशामिह।
178784 सरोब्धिसरिदम्बूनामिवान्यत्वं न वाथवा ॥ ४६ ॥
178785
178786 तत्र प्रातिभासिको भेदो वस्तुतस्तु तदभाव इत्याह - स्वप्नेति। वरशापाभ्यां
178787 नन्दिनहुषयोर्देवसर्पभावप्रतिभासदृशामिव व्यवहारसमर्थमन्यत्वं
178788 परमार्थतस्तु न वा ॥ ४६ ॥
178789
178790 श्रीराम उवाच।
178791
178792 वरशापार्थसंवित्तौ कार्यकारणता कथम्।
178793 उपादानं विना कार्यं नास्त्येव किल कथ्यताम् ॥ ४७ ॥
178794
178795 नन्दिनो मनुष्यशरीरे देवशरीरोपादानं चन्द्रामृतभागो नास्ति एवं
178796 चन्द्रामृतपरिणामे नहुषस्य देवशरीरे सर्पशरीरोपादानं तदण्डादि नास्ति।
178797 उपादानं विना लोके कार्य च क्वापि नास्ति तत्रोभयत्र कथं देवसर्पशरीरसिद्धिरिति
178798 रामप्रश्नार्थः ॥ ४७ ॥
178799
178800 श्रीवसिष्ठ उवाच।
178801
178802 स्ववदातचिदाकाशकचनं जगदुच्यते।
178803 स्फुरणे पयसामब्धावावर्तचलनं यथा ॥ ४८ ॥
178804
178805 निरावरणविज्ञानस्य भगवतो रुद्रस्यागस्त्यादीनां च सत्यसंकल्पावच्छिन्ना चिदेव
178806 सुरसर्पशरीरात्मना तत्र विवर्तत इति विवर्तवादेनास्याक्षेपस्य प्रसर इत्युत्तरं
178807 वसिष्ठो वक्तुं भूमिकां रचयति - स्ववदातेत्यादिना।
178808 स्ववदातस्तत्त्वज्ञानविमृष्टत्वादतिनिर्मलो यश्चिदाकाशस्तस्य सत्यसंकल्पानुसारि
178809 कचनं तदित्यसकृन्मयोच्यते ॥ ४८ ॥
178810
178811 ध्वनन्तोऽब्धिजलानीव भान्ति भावाश्चिदात्मकाः।
178812 संकल्पादीनि नामानि तेषामाहुर्मनीषिणः ॥ ४९ ॥
178813
178814 विधातुः स्वात्मचितिजगद्भावाश्चिदात्मका एवाकस्माद्भान्ति तेषां भानानां
178815 सोऽकामयत तदैक्षत समकूपतां द्यावापृथिवी इत्यादिश्रुतयो मनीषिणः
178816 ऋषयश्च संकल्पादीनि नामान्याहुः ॥ ४९ ॥
178817
178818 कालेनाभ्यासयोगेन विचारेण समेन च।
178819 जातेर्वा सात्त्विकत्वेन सात्त्विकेनामलात्मना ॥ ५० ॥
178820
178821 तत्र निरावरणविज्ञानानां यद्भावार्थस्फुरणं स एव सत्यसंकल्प इति
178822 दर्शयितुं तादृशविज्ञानकारणान्याह - कालेनेत्यादिना। कालेन कर्कट्यादेः।
178823 समेन शत्रुमित्रादिषु समदर्शनेन। देवानां तु जातेः सात्त्विकत्वेन ॥ ५० ॥
178824
178825 सम्यग्ज्ञानवतो ज्ञस्य यथा भूतार्थदर्शिनः।
178826 बुद्धिर्भवति चिन्मात्ररूपा द्वैतैक्यवर्जिता ॥ ५१ ॥
178827
178828 निरावरणविज्ञानमयी चिद्ब्रह्मरूपिणी।

178829 संवित्प्रकाशमात्रैकदेहादेहविवर्जिता || ५२ ||
178830
178831 सोऽयं पश्यत्यशेषेण यावत्संकल्पमात्रकम् |
178832 स्वमात्मकचनं शान्तमनन्यत्परमार्थतः || ५३ ||
178833
178834 सोऽयं निरावरणविज्ञानः पुरुषो यावत्संकल्पमात्रं पश्यति तत्सर्वं
178835 परमार्थतः अनन्यत्पश्यतीति तत्संकल्पस्य सत्यतायामुपपत्तिः || ५३ ||
178836
178837 अस्या इदं हि संकल्पमात्रमेवाखिलं जगत् |
178838 यथा संकल्पनगरं यथा स्वप्नमहापुरम् || ५४ ||
178839
178840 अस्य आ इदमिति च्छेदः | अस्यैवंविधस्य हिरण्यगर्भस्य
178841 आसमन्ताद्दृश्यमानमिदं जगत् संकल्पमात्रमेवेत्यर्थः || ५४ ||
178842
178843 आत्मा स्वसंकल्पवरः स्ववदातो यथा यथा |
178844 यद्यथा संकल्पयति तथा भवति तस्य तत् || ५५ ||
178845
178846 एवमन्योऽपि स्वसंकल्पवरो निरावरणात्मैवेति यथा यथा यत्संकल्पमात्रं
178847 [संकल्पयति इति पाठः |] पश्यति तत्तथा तथा भवति || ५५ ||
178848
178849 संकल्पनगरे बालः शिलाप्रोड्डयनं यथा |
178850 सत्यं वेत्त्यनुभूयाशु स्वविधेयनियन्त्रणम् || ५६ ||
178851
178852 स्वविधेयं स्वाधीनं नियन्त्रणं नियमनं यत्र || ५६ ||
178853
178854 स्वसंकल्पात्मभूतेऽस्मिन्परमात्मा जगल्लये |
178855 वरशापादिकं सत्यं वेत्त्यनन्यत्तथात्मनः || ५७ ||
178856
178857 तत्र वरशापात्मकं यत्फलं तत् हिरण्यगर्भाद्यनावरणविज्ञानात्मा
178858 आत्मनोऽनन्यत्सत्यं वेत्ति || ५७ ||
178859
178860 स्वसंकल्पपुरे तैलं यथा सिद्ध्यति सैकतात् |
178861 कल्पनात्सर्गसंकल्पैर्वरादीह तथात्मनः || ५८ ||
178862
178863 जगतश्च तदीयसंकल्पात्मकत्वात्स्वसंकल्पपुरे बालस्य सिकताभ्यस्तैलमिव
178864 हिरण्यगर्भाद्यात्मनोऽपि वरशापाद्यर्थो निरुपादानोऽपि सिद्ध्यति || ५८ ||
178865
178866 अनिरावरणज्ञप्तेर्यतः शान्ता न भेदधीः |
178867 ततः संकल्पनाद्वैताद्वराद्यस्य न सिद्ध्यति || ५९ ||
178868
178869 निरावरणेति विशेषणस्य प्रयोजनं दर्शयति - अनिरावरणेति | अस्य अज्ञपुरुषस्य
178870 वरादि न सिद्ध्यति || ५९ ||
178871
178872 या यथा कलना रूढा तावत्साद्यापि संस्थिता |
178873 न परावर्तिता यावद्यत्नात्कल्पनयान्यया || ६० ||
178874
178875 निरावरणज्ञानानां कल्पना तादृशकल्पनान्तरोदयपर्यन्तं न निवर्तत इत्याह
178876 - येति || ६० ||
178877
178878 ब्रह्मण्यवयवोन्मुक्ते द्वितैकत्वे तथा स्थिरे |
178879 यथा सावयवे तत्त्वे विचित्रावयवक्रमः || ६१ ||
178880

178881 निरवयवे निरावरणज्ञानात्मनि तद्विरुद्धवरशापादिकल्पना कथं तिष्ठति तत्राह
178882 - ब्रह्मणीति || ६१ ||
178883
178884 श्रीराम उवाच |
178885
178886 अनिरावरणाज्ज्ञानात्केवलं धर्मचारिणः |
178887 शापादीन्संप्रयच्छन्ति यथा ब्रह्मंस्तथा वद || ६२ ||
178888
178889 तर्ह्यनिरावरणज्ञानानां केवलोग्रतापसानां वरशापादि मोघं स्यादित्याशयेन
178890 रामः पृच्छति - अनिरावरणेति || ६२ ||
178891
178892 श्रीवसिष्ठ उवाच |
178893
178894 संकल्पयति यन्नाम सर्गादौ ब्रह्म ब्रह्मणि |
178895 तत्तदेवानुभवति यस्मात्तन्नास्ति नेतरत् || ६३ ||
178896
178897 तदीयवरशापादेरपि सत्यतास्त्विति सर्गादौ धातुः संकल्पादेव न तन्मोघतेत्युत्तरं
178898 वक्तुं भूमिकां वसिष्ठो रचयति - संकल्पेत्यादिना | इतरत् तत्प्रतिबन्धकं नास्ति
178899 || ६३ ||
178900
178901 ब्रह्म वेत्ति यदात्मानं स ब्रह्मायं प्रजापतिः |
178902 स च नो ब्रह्मणो भिन्नं द्रवत्वमिव वारिणः || ६४ ||
178903
178904 धातुस्तु सत्यसंकल्पता सत्यब्रह्मात्मवेदितृत्वादेव सिद्धेत्याशयेनाह -
178905 ब्रह्मेति | स प्रजापतिर्धाता यद्यस्मात्कारणाद्ब्रह्म वेत्ति तस्माद्धेतोरयं ब्रह्मैव
178906 | तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत् इत्यादिश्रुतेरिति भावः || ६४ ||
178907
178908 संकल्पयति यन्नाम प्रथमोऽसौ प्रजापतिः |
178909 तत्तदेवाशु भवति तस्येदं कल्पनं जगत् || ६५ ||
178910
178911 निराधारं निरालम्बं व्योमात्म व्योम्नि भासते |
178912 दुर्दृष्टेरिव केशोण्ड्रं दृष्टमुक्तावलीव च || ६६ ||
178913
178914 कीदृशं तत्कल्पनं तदाह - निराधारमिति || ६६ ||
178915
178916 संकल्पिताः प्रजास्तेन धर्मो दानं तपो गुणाः |
178917 वेदाः शास्त्राणि भूतानि पञ्च ज्ञानोपदेशनाः || ६७ ||
178918
178919 तेन प्रजापतिना | चत्वारो वेदाः स्मृतयश्चेति पञ्च | त्रयी सांख्यं योगः
178920 पशुपतिमतं वैष्णवम् इति वा पञ्च | ज्ञानोपदेशनाः | ण्यन्ताद्युच् || ६७ ||
178921
178922 तपस्विनोऽथ वादैश्च यद्ब्रूयुरविलम्बितम् |
178923 यद्यद्वेदविदस्तत्स्यादिति तेनाथ कल्पितम् || ६८ ||
178924
178925 अथ तेन प्रजापतिना इति कल्पितं संकल्पितम् | किमिति | वेदविदस्तपस्विनो
178926 वादैश्चकारात्सहजवृत्त्या वा यद्यद्ब्रूयुस्तत्तदवश्यं स्यादिति || ६८ ||
178927
178928 इदं चिद्ब्रह्मच्छिद्रं खं वायुश्चेष्टाग्निरुष्णता |
178929 द्रवोऽम्भः कठिनं भूमिरिति तेनाथ कल्पिताः || ६९ ||
178930
178931 एवं सर्ववस्तुस्वभावभेदा अपि तेनैव कल्पिता इत्याह - इदमिति | इदं ब्रह्म
178932 चिज्जडव्यावृत्तस्वभावम् | खं छिद्रस्वभावम् | वायुश्चेष्टास्वभावः |

178933 अग्निरुष्णतास्वभाव इत्यादि ॥ ६९ ॥
178934
178935 चिद्धातुरीदृशो वासौ यद्यत्खात्मापि चेतति ।
178936 तत्तथानुभवत्याशु त्वमहं स इवाखिलम् ॥ ७० ॥
178937
178938 एवमियं सर्वा कल्पना प्रजापतिवेषस्य चिद्घातोरेव कल्पनेत्याह - चिद्धातुरिति ।
178939 अनुभवति सत्यसंकल्पत्वादिति भावः ॥ ७० ॥
178940
178941 यद्यथा वेत्ति चिद्व्योम तत्तथा तद्भवत्यलम् ।
178942 स्वप्ने त्वमहमादीव सदात्माप्यसदात्मकम् ॥ ७१ ॥
178943
178944 शिलानृतं यथा सत्यं संकल्पनगरे तथा ।
178945 जगत्संकल्पनगरे सत्यं ब्रह्मण ईप्सितम् ॥ ७२ ॥
178946
178947 तत्र सदात्मतां दृष्टान्तेन स्फुटयति - शिलेति । ब्रह्मणः
178948 प्रजापतेरधिकारप्रारब्धभोगायेप्सितम् ॥ ७२ ॥
178949
178950 चित्स्वभावेन शुद्धेन यद्बुद्धं यच्च यादृशम् ।
178951 तदशुद्धोऽन्यथा कर्तुं न शक्तः कीटको यथा ॥ ७३ ॥
178952
178953 वरसंकल्पजं वरशापादिसंकल्पेन तद्विरुद्धेन जनैः कुतो नान्यथा क्रियते
178954 तत्राह - चित्स्वभावेनेति ॥ ७३ ॥
178955
178956 अभ्यस्तं बहुलं संवित्पश्यतीतरदल्पकम् ।
178957 स्वप्ने जाग्रत्स्वरूपे च वर्तमानेऽखिलं च सत् ॥ ७४ ॥
178958
178959 अशुद्धानामस्वतन्त्रकल्पनाभ्यासदार्ढ्यादपि न
178960 तद्विरुद्धकल्पनस्वातन्त्र्यमित्याशयेनाह - अभ्यस्तमिति ।
178961 शृङ्खलाबद्धोऽहमिति दृढतरजाग्रत्संस्कारवतः स्वप्नेऽपि
178962 शृङ्खलाबन्धपारतन्त्र्यस्यैवानुभवादिति भावः ॥ ७४ ॥
178963
178964 सदा चिद्व्योम चिद्व्योम्नि कचदेकमिदं निजम् ।
178965 द्रष्टृदृश्यात्मकं रूपं पश्यदाभाति नेतरत् ॥ ७५ ॥
178966
178967 एवं कल्पितत्रिपुटीवेषेण कचनेऽपि चित उदासीनसाक्षिस्वभावेनापि सदैव
178968 कचनमस्त्येवेत्याह - सदेति । द्रष्टृदृश्यग्रहणं त्रिपुट्युपलक्षणम् ॥ ७५ ॥
178969
178970 एकं द्रष्टा च दृश्यं च चिन्नभः सर्वगं यतः ।
178971 तस्माद्यथेष्टं यद्यत्र दृष्टं तत्तत्र सत्सदा ॥ ७६ ॥
178972
178973 साक्षिचितस्त्रिपुटीव्याप्तिबलादेव तत्सत्तासंपादकत्वमित्याह - एकमिति ।
178974 एकचित्सत्तोपजीवित्वादेकम् ॥ ७६ ॥
178975
178976 वाय्वङ्गगस्पन्दनवज्जलाङ्गद्रवभाववत् ।
178977 यथा ब्रह्मणि ब्रह्मत्वं तथाजस्याङ्गगं जगत् ॥ ७७ ॥
178978
178979 धातृसाक्ष्यधीनसत्तास्फूर्तिकत्वात्तदङ्गगतमेवेदं जगदिति सदृष्टान्तमाह
178980 - वाय्विति । ब्रह्मत्वं जगदाकारबृंहणहेतुमायाशक्तिमत्त्वं च यथा
178981 तथेत्यर्थः ॥ अजस्य विराजः ॥ ७७ ॥
178982
178983 ब्रह्मैवाहं विराडात्मा विराडात्मवपुर्जगत् ।
178984 भेदो न ब्रह्मजगतोः शून्यत्वाम्बरयोरिव ॥ ७८ ॥

पूर्वं ब्रह्मण्यध्यस्तं जगदित्यसकृदुक्तमिदानीं कथमजस्याङ्गमित्युच्यते
तत्राह - ब्रह्मैवेति ॥ ७८ ॥

यथा प्रपाते पयसो विचित्राः कणपङ्क्तयः ।
विचित्रदेशकालान्ता निपतन्त्युत्पतन्ति च ॥ ७९ ॥

प्रपाते पर्वताग्राद्गङ्गादीनामधः पतनस्थाने ॥ ७९ ॥

निपत्यैवैकयाऽऽकल्पं मनोबुद्ध्यादिवर्जिताः ।
आत्मन्येवात्मनो भान्ति तथा य ब्रह्मसंविदः ॥ ८० ॥

एकयैव धारया आकल्पं न्निपत्य कणसहस्रकोटिभेदविभक्ताः पुनरेकतामापद्य
आत्मनः स्वस्यैकप्रवाहात्मन्येव भान्ति तथा या विचित्रा ब्रह्मसंविदो जगद्भेदा अपि
बोध्या इत्यर्थः ॥ ८० ॥

ताभिः स्वयं स्वदेहेषु बुद्ध्यादिपरिकल्पनाः ।
कृत्वोररीकृता सर्गश्रीरद्भिर्द्रवता यथा ॥ ८१ ॥

एतावांस्तु विशेषः - यत्कणपङ्क्तयो मनोबुद्ध्यादिवर्जिताः
ताभिर्ब्रह्मसंविद्भिस्तु स्वदेहेषु स्वयं मनोबुद्ध्यादिकल्पनाः कृत्वा
सर्गश्रीर्भोग्यत्वेनोररीकृतेति ॥ ८१ ॥

तदेवं जगदित्यस्ति दुर्बोधेन मम त्विदम् ।
अकारणकमद्वैतमजातं कर्म केवलम् ॥ ८२ ॥

मनोबुद्ध्यादिकल्पनात्यागे तु अज्ञानमात्रं जगत्पर्यवस्यतीत्याशयेनाह -
तदेवमिति । मनोबुद्ध्यादिविक्षिप्ताज्ञानलक्षणेन दुर्बोधेन । मम दुर्बोधरहितस्य
दृशा त्विदं मनोबुद्ध्यादि सर्वं जगत्कर्म कालत्रयेऽप्यजातमेव ॥ ८२ ॥

अस्तस्थितिः शरीरेऽस्मिन्यादृग्रूपानुभूयते ।
उपलादौ जडा सत्ता तादृशी परमात्मनः ॥ ८३ ॥

अस्मिन् शरीरे अस्तस्थितिर्मृतावस्था यादृग्रूपा मनोबुद्ध्यादिरहितानुभूयते ।
उपलादौ जडा सत्ता च यादृग्रूपा तादृशी परमात्मनोपि मनोबुद्ध्यादिरहितैव
निर्विक्षेपसत्ता बोध्येत्यर्थः ॥ ८३ ॥

यथैकस्यां सुनिद्रायां सुषुप्तस्वप्नकौ स्थितौ ।
तथैते सर्गसंहारभासौ ब्रह्मणि संस्थिते ॥ ८४ ॥

एवं च सृष्टिप्रलयौ द्वावप्यज्ञाननिद्रावान्तरविशेषावेवेत्याह - यथेति ॥ ८४
। ।

सुषुप्तस्वप्नयोर्भातः प्रकाशतमसी यथा ।
एकस्यामेव निद्रायां सर्गासर्गौ तथा परे ॥ ८५ ॥

ननु सर्गे सूर्यादिप्रकाशास्तर्हि तमोरूपप्रलयविलक्षणाः कथं तत्राह -
सुषुप्तेति ॥ ८५ ॥

यथा नरोऽनुभवति निद्रायां दृषदः स्थितिम् ।
परमात्मानुभवति तथैतज्जडसंस्थितिम् ॥ ८६ ॥

179037 चित्येव जडाजडभेदकल्पनेऽपि स्वप्न एव दृष्टान्त इत्याह - यथेति ॥ ८६ ॥
179038
179039 अङ्गुष्ठस्याथवाङ्गुल्या वाताद्यस्पर्शने सति।
179040 योऽन्यचित्तस्यानुभवो दृषदादौ स आत्मनः ॥ ८७ ॥
179041
179042 चेतने जाड्यानुभवाप्रसिद्धिं वारयति - अङ्गुष्ठस्येति। अन्यत्र विषयान्तरे
179043 व्यासक्तचित्तस्य पुरुषस्याङ्गुष्ठस्याङ्गुल्यन्तरस्य वा वातातपधूल्यादिस्पर्शने
179044 जाते सति यो जातोऽप्यजातप्रायोऽनुभवः प्रसिद्धः स तादृश एव दृषदादौ
179045 विद्यमानोऽप्यविद्यमानप्रायो जाड्यमित्यर्थः ॥ ८७ ॥
179046
179047 व्योमोपलजलादीनां यथा देहानुभूतयः।
179048 तथास्माकमचित्तानामद्य नानानुभूतयः ॥ ८८ ॥
179049
179050 एवं जडस्यापि चेतनभावानुभवप्रसिद्धिमाह - व्योमेति। देहे विराड्देहभावे
179051 तत्तदधिष्ठातृदेवतादेहभावे वा यथा अनुभूतयस्तथा प्रलये
179052 अचित्तानामस्माकमद्य सर्गकाले सचित्तत्वलाभेनानुभूतयः। तवास्माकम् इति पाठे
179053 त्यदादीनि सर्वैर्नित्यं त्यदादीनां मिथं सहोक्तौ यत्परं तच्छिष्यत
179054 इत्येकशेषाभावश्छान्दसः ॥ ८८ ॥
179055
179056 काले कल्पेषु भान्त्येता यथाहोरात्रसंविदः।
179057 तथाऽसंख्याः परे भान्ति सर्गसंहारसंविदः ॥ ८९ ॥
179058
179059 अखण्डकाले ब्रह्मदिनभेदरूपेषु कल्पेषु यथास्माकमहोरात्रसंविदो भान्ति तथा
179060 असंख्याः परमात्मनि सर्गसंहारसंविदो भान्ति ॥ ८९ ॥
179061
179062 आलोकरूपमननानुभवैषणेच्छामुक्तात्मनि स्फुरति वारिघने स्वभावात्।
179063 आवर्तवीचिवलयादि यथा तथायं शान्ते परे स्फुरति संहृतिसर्गपूगः ॥ ९० ॥
179064
179065 यथा वारिघने उदकैकस्वभावे समुद्रे स्वभावादेव आवर्तवीचिवलयादि स्फुरति तथा
179066 आलोकनमालोकस्तद्विषयरूपं तन्मननं तस्य भोगलक्षणोऽनुभवस्तदेषणा
179067 रागस्ततः पुनस्तत्प्राप्तीच्छेत्यादिविक्षेपविनिर्मुक्तात्मनि अत एव शान्ते परे पदे अयं
179068 संहृतिसर्गपूगः स्वभावत एव स्फुरति न प्रमाणतस्तत्त्वदर्शने सतीत्यर्थः ॥ ९०
179069 ॥
179070
179071 इत्यार्षे श्रीवा० वा० दे० मो० नि० उ० ब्रह्मगी० सर्वं खल्विदं ब्रह्मेति
179072 प्रतिपादनयोगोपदेशो नाम षडशीत्यधिकशततमः सर्गः ॥ १८६ ॥
179073
179074 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे सर्वं
179075 खल्विदं ब्रह्मेति प्रतिपादनयोगोपदेशो नाम षडशीत्यधिकशततमः सर्गः ॥ १८६
179076 ॥
179077
179078 सप्ताशीत्यधिकशततमः सर्गः १८७
179079
179080 श्रीराम उवाच।
179081
179082 विचित्राणामसंख्यानां भावानां नियतिः कुतः।
179083 कथं स्वभावो भावानामेकरूपः स्थितोऽचलः ॥ १ ॥
179084
179085 सर्वभावस्वभावोऽत्र नियतिश्चोपवर्ण्यते।
179086 उत्पत्तिर्जीवताप्राप्तिहेतूनां ब्रह्मशुद्धता ॥
179087
179088 नियतिः कार्यकारणभावादिनियमः अग्निजलादेरौष्ण्यद्रवत्वादिः स्वभावश्च अचलः

179089 अव्यभिचरितः कथं केन हेतुना जगति स्थितः।
179090 स्वाप्नमानोरथिकादिमिथ्यार्थान्तरेष्वदर्शनादिति भावः॥ १॥
179091
179092 सत्स्वसंख्येषु देवेषु सूर्य एवोग्रभाः कथम्।
179093 दीर्घत्वमथ ह्रस्वत्वं दिवसानां तु किंकृतम्॥ २॥
179094
179095 केन कृतं किंकृतम्॥ २॥
179096
179097 श्रीवसिष्ठ उवाच।
179098
179099 काकतालीयवद्भानं यत्परे नियतं स्वतः।
179100 यथास्थितं यथारूपं स्थिते तज्जगदुच्यते॥ ३॥
179101
179102 आदिसर्गे यद्यत्काकतालीयन्यायेन धातुर्यथा यथा भातं तत्तथैवार्थक्रियादिना
179103 नियतं स्थितं तत्र धातुरिच्छैव तदव्यभिचारे हेतुरेवं वस्तुस्वभावेऽपि
179104 बोध्यमित्याशयेनाद्यप्रश्नयोर्वसिष्ठ उत्तरमाह - काकतालीयेत्यादिना। परे
179105 विधातरि यत्काकतालीयवन्नियतं सर्गादौ भानं तद्यथारूपं यथा च
179106 कार्यकारणभावेन स्थितं तथैवाद्यापि जगदुच्यत इत्यर्थः॥ ३॥
179107
179108 सर्वशक्तेर्यथा यद्यद्भाति तत्तत्तथैव सत्।
179109 संवित्सारतया यायात्कथं भातमभातताम्॥ ४॥
179110
179111 नियताया ईश्वरशक्तेरन्यथाभावायोगाद्वा नियतिरव्यभिचरितेत्याशयेनाह -
179112 सर्वशक्तेरिति। संवित्सारतया सत्यसंकल्पसंविदः
179113 अस्मदादिस्वप्नमनोरथसंविद्वदसारत्वाभावादित्यर्थः॥ ४॥
179114
179115 यथा स्थितं यथा भाति चित्त्वाद्ब्रह्म चिराय यत्।
179116 तस्य भानमभानाभं नियत्यभिधमेव तत्॥ ५॥
179117
179118 मायोदरे स्थितस्यैव सर्गकाले भानं प्रलयकाले सौक्ष्म्यापत्त्या तदेवाभानाभं
179119 भवतीत्यनादिरेव सर्ववस्तूनामर्थक्रियाशक्तिरिति तदेव नियतिनामकमिति वा
179120 बोध्यमित्याह - यथास्थितमिति॥ ५॥
179121
179122 इदमित्थमिदं चेत्थं स्वयं ब्रह्मेति भाति यत्।
179123 तन्नियत्यभिधं प्रोक्तं सर्गसंहाररूपधृक्॥ ६॥
179124
179125 ब्रह्मैव नियतसर्वार्थक्रियासमर्थं जगदाकारतां धत्ते इति वा
179126 नियतिप्रतिष्ठासिद्धिरित्याह - इदमिति॥ ६॥
179127
179128 जाग्रत्स्वप्नसुषुप्ताख्यं यत्स्वतः कचनं चिति।
179129 तत्ततोऽनन्यदेकाच्छं द्रवत्वमिव वारिणि॥ ७॥
179130
179131 अवस्थात्रयस्याज्ञातात्मस्वभावत्वाद्वा यथादृष्टनियत्यव्यभिचारसिद्धिरित्याह
179132 - जाग्रदिति॥ ७॥
179133
179134 यथा शून्यत्वमाकाशे कर्पूरे सौरभं यथा।
179135 यथौष्ण्यमातपे नान्यज्जाग्रदादि तथा चिति॥ ८॥
179136
179137 तस्य तत्स्वभावतां दृष्टान्तैः समर्थयति - यथेति॥ ८॥
179138
179139 सर्गप्रलयनाम्न्येकप्रवाहानन्यसत्तया।
179140 चिन्मात्रगगनात्मैकब्रह्मात्मन्येव संस्थितम्॥ ९॥

179141
179142 एकप्रवाहानन्यसत्तया बीजाङ्कुरन्यायेन सर्गप्रलयप्रवाहानादितया
179143 चिन्मात्रगगनात्मके एकब्रह्मात्मन्येव यतस्तिष्ठति ततोऽपि
179144 नियतार्थक्रियासिद्धिरित्यर्थः ॥ ९ ॥
179145
179146 सर्गोऽयमिति तद्बुद्धं क्षणं यत्कचनं चितः ।
179147 कल्पोऽयमिति तद्बुद्धं क्षणं तत्कचनं चितः ॥ १० ॥
179148
179149 अत एव चित्कचनानुसारेणैव सर्वनियमव्यवस्था । क्षणस्यापि कल्पोऽयमिति चित्कचने
179150 अकल्पत्वसाधकान्तराभावादित्याशयेनाह - सर्गोऽयमिति ॥ १० ॥
179151
179152 तत्कालस्तत्क्रिया तत्खं देशद्रव्योदयादि तत् ।
179153 यत्स्वप्न इव चिन्मात्रकचनं स्वस्वभावतः ॥ ११ ॥
179154
179155 अत एव कालक्रियादेशद्रव्यादिवस्तुभेदात्मना चित्कचनमेव सर्ववस्तुस्वभावो
179156 नियतिश्चेत्याह - तदित्यादिना ॥ ११ ॥
179157
179158 रूपालोकमनस्कारदेशकालक्रियादि तत् ।
179159 चित्त्वं कचति चिद्व्योम्नि यन्नामानाकृति स्वतः ॥ १२ ॥
179160
179161 यद्यथा कचितं कालं यत्किंचित्कल्पितं तथा ।
179162 तेनैवेयं हि नियतिरित्यष्याकाशरूपकम् ॥ १३ ॥
179163
179164 इत्येवं कचितमप्याकाशरूपकमेव न सत्यमित्यर्थः ॥ १३ ॥
179165
179166 आकल्पाख्यं निमेषं यत्कचनं चैकरूपकम् ।
179167 स्वाभाविकाः स्वभावं तं प्राहुः प्रसृतबुद्धयः ॥ १४ ॥
179168
179169 इदानीं कथं स्वभावो भावानां इति प्रश्नं समाधत्ते - आकल्पाख्यमिति ।
179170 कल्पाख्यं ब्रह्मनिमेषमभिव्याप्य भावानां यदेकरूपं कचनं तमेव
179171 प्रतिवस्तु नियतस्वभावं प्राहुः स्वभाविकाः स्वभावतत्त्वविदः ॥ १४ ॥
179172
179173 एकस्य संविन्मात्रस्य पदार्थशतता तहा ।
179174 यथेदं संविदंशस्य रूपं स्वं स्वमनुज्झतः ॥ १५ ॥
179175
179176 एकस्यैव वह्न्यादिवस्तुनो देशकालभेदेनानेकधाभूतस्यापि स्वरूपमनुज्झतो
179177 यदेकमनुगतमौष्ण्यप्रकाशरूपं स एव तद्भेदेष्वनुगतस्वभावः । यथा
179178 संविदंशस्य जीवस्य सर्वानुगतं चित्स्वरूपमेव स्वभावस्तद्वदित्यर्थः ॥ १५ ॥
179179
179180 संविन्मये संविदो याः कचन्तीव परे तथा ।
179181 ताभिस्तेषां स्वदेहानां यासां सा कलना कृता ॥ १६ ॥
179182
179183 संवित्प्रचुरे वृत्तिभेदेऽपि याश्चिदाभाससंविदः कचन्तीव ताः स्वभावः । परे
179184 तद्विषये उर्वीसलिलतेजोवाय्वादौ ताभिर्वृत्त्याभाससंविद्भिः स्वदेहप्रायाणां
179185 तेषां वृत्तिभेदानां मध्ये यासां यासां वृत्तीनां यद्यदाकारकलना या या
179186 कृता स आकारः स्वभाव इत्यर्थः ॥ १६ ॥
179187
179188 चिदुर्वी सलिलं तेजः स्पन्दः शून्यत्वमेव च ।
179189 प्रत्येकमाकरस्त्वेषां तानि स्वप्न इवाम्बरम् ॥ १७ ॥
179190
179191 नानाकारभेदानेवोदाहृत्य तेषामधिष्ठानचिदाकाश एव पारमार्थिकः स्वभाव
179192 इति दर्शयति - चिदिति । तान्युर्व्यादीनि प्रत्येकं स्वकार्याणामाकरः खनिः । उर्वी

179193 पार्थिवानां सर्ववस्तूनामनुगतः स्वभाव एवं सलिलादयोऽपि। तेषां च चिदम्बरं
179194 मायाशबलं ब्रह्मैवाकर इत्यर्थः॥ १७॥
179195
179196 तत्र सप्रतिघस्यास्य कठिनस्याकरो महान्।
179197 भूपीठं जनताधारो राजन्नाजेन राजते॥ १८॥
179198
179199 उक्तमेव प्रपञ्चयति - तत्रेत्यादिना। राजेव जीवनप्रदः॥ १८॥
179200
179201 अपामब्धिः प्रधानानां तेजसामेष भास्करः।
179202 स्पन्दस्य पवनो व्योम शून्यताया जगद्गतम्॥ १९॥
179203
179204 प्रधानानां गङ्गादीनामग्न्यादीनां च जगद्गतं सर्वं स्वस्वविशेषेष्वनुगतम्
179205 । नपुंसकैकशेषे एकवद्भावः॥ १९॥
179206
179207 पञ्चानामिति भूतानामाकरत्वेन संविदः।
179208 पञ्च तान्युचिता ब्राह्म्यः प्रश्नः किं भास्करं प्रति॥ २०॥
179209
179210 तेषामम्बरमित्यंशं विशदयति - पञ्चेति। तानि पञ्चमहाभूतानि ब्राह्म्यः
179211 संवित्तय एव तथोदिता इति ब्रह्मैव तदनुगतः सत्स्वभाव इत्यर्थः। एतेन
179212 सत्स्वसंख्येषु देवेषु सूर्य एवोग्रभाः कथम् इति प्रश्नोऽपि समाहित इत्याशयेनाह
179213 - प्रश्न इति। स्वभावप्रश्नोत्तरेणैव समाहितत्वात्पृथक्प्रश्नो न
179214 भवतीत्यर्थः॥ २०॥
179215
179216 बुधा संविच्चिदित्युक्ता सर्वगा सर्वरूपिणी।
179217 सर्वत्र स्वमहिम्नैषा सर्वेणैवानुभूयते॥ २१॥
179218
179219 बुधा सर्वावभासकत्वात्सर्वज्ञा सैव सर्वरूपिणीति
179220 स्वप्रकाशतालक्षणस्यमहिम्नैव सर्वत्र परमः स्वभावपरमाकारः परमा
179221 नियतिरिति च सर्वैरेवाभिज्ञैरवगम्यते॥ २१॥
179222
179223 ब्रह्मात्मा ब्रह्मबालोऽयं स्वसंवित्स्फुरणामिमाम्।
179224 व्योमात्मक्षौमभूनाम्नीं स्फारयत्यम्बराकृतिः॥ २२॥
179225
179226 अयं चतुर्मुखाख्यो ब्रह्मबालः स्वात्मभूतसंवित्स्फुरणं व्योमात्मकं
179227 क्षौमं प्रावरणं यस्यास्तथाविधां भूनाम्नीं स्वयं
179228 ब्रह्मात्मत्वाद्ब्रह्माम्बराकृतिरेव सन् स्वस्मिन्स्फारां करोति स्फारयति विस्तारयति।
179229 नामधातुः स्फुरतेर्वा चिस्फुरोर्णौ इत्यात्वम्॥ २२॥
179230
179231 सा यदैतत्तथैतच्च निरमत्यजसंविदा [विरमति इति पाठः]।
179232 तदा तदङ्गस्याकर्दिर्नाऽतो नोत्पादि चञ्चलम्॥ २३॥
179233
179234 यदा सा माया शबला सर्वज्ञसंविदजस्य च्तुर्मुखस्य संविदा सह
179235 तत्स्थूलमेतत्सूक्ष्मं च प्रपञ्चमत्ति स्वात्मन्युपसंहरति तदा तदङ्गस्य
179236 चतुर्मुखसंविदङ्गस्याकर्दिश्चञ्चलं भ्रमणस्वभावं रूपं नोत्पादि।
179237 यतस्तत् अतः अस्मादुपसंहारादत्ता ना पुरुष एव संपद्यत इत्यर्थः। तथा च श्रुतिः
179238 अथ तत ऊर्ध्व उदेत्य नैवोदेता नास्तमेता एकल एव मध्ये स्थाता इति॥ २३॥
179239
179240 संकल्पपूर्वमशकजालवद्धिष्ण्यचक्रकम्।
179241 आवर्तव्रतिना भाति चिद्व्योमेदं च दृश्यवत्॥ २४॥
179242
179243 दीर्घत्वमथ ह्रस्वत्वं दिवसानां तु किंकृतम् इति प्रश्नस्तु ज्योतिश्चक्रे सूर्यस्य
179244 दक्षिणोत्तरमार्गगतिभेदप्रसिद्ध्यैव दत्तोत्तर इति सूचयन् ज्योतिश्चक्रं दर्शयति ##-

179245 विरचितमशकबन्धनजालवद्धात्रा संकल्पजालमात्रनिर्मितं
179246 ग्रहनक्षत्रादिधिष्ण्यभूतं शिशुमारचक्रकं ज्योतिःशास्त्रादौ प्रसिद्धमेव।
179247 तदेव दक्षिणोत्तरायणमार्गावर्तवर्तिना सूर्येण निमित्तेनेदं त्वत्पृष्टं
179248 दिवसानां ह्रस्वदीर्घत्वं तत्तदावर्तवद्दृश्यवन्नियतं भातीत्यर्थः॥ २४॥
179249
179250 तत्र प्रभास्वराः केचित्केचिदप्यल्पभास्वराः।
179251 केचिच्चाभास्वरा भाताः पदार्थाश्चित्ररूपिणः॥ २५॥
179252
179253 सत्त्वसंख्येषु देवेषु सूर्य एवोग्रभाः कथम् इति प्रश्ने ये अनेके देवा उक्तास्तान्
179254 ज्योतिश्चक्रे नक्षत्रादिरूपेण स्थितान्दर्शयति - तत्रेति। अभास्वरा राह्वादयः
179255 प्रागुक्ततामसनक्षत्राणि च॥ २५॥
179256
179257 पदार्थजातं त्वेतावन्न जातं न च दृश्यते।
179258 ज्ञस्याजातमिदं भाति खमात्मा स्वप्नदृश्यवत्॥ २६॥
179259
179260 एवं प्रश्नान्समाधाय प्रकृतमेवालम्ब्याह - पदार्थजातमिति॥ २६॥
179261
179262 चिन्मात्रमात्मा सर्वेशः सर्व एवातिदृश्यवत्।
179263 नश्यतीव विदेहे स्वे न च भाति न नश्यति॥ २७॥
179264
179265 त्वमहं सर्व एव अतिदृश्यवत्प्रसिद्धो भाति। विदेहे मृते पुरुषे नश्यतीव॥ २७॥
179266
179267 स्वप्नदर्शनवद्भाति यच्चिद्व्योम चिदम्बरे।
179268 चिद्व्योमत्वादृते रूपं तदस्य जगतः कुतः॥ २८॥
179269
179270 रूपं पारमार्थिकस्वरूपम्॥ २८॥
179271
179272 यद्यथा स्फुरितं तस्य यावत्सत्तं स्फुरद्वपुः।
179273 तत्स्वभावनियत्याख्यैः शब्दैरिह निगद्यते॥ २९॥
179274
179275 तत्पारमार्थिकसद्रूपमेवाध्यस्ते यावत्कालं घटादेर्विद्यमानता
179276 तावत्तत्तादात्म्येन स्फुरद्वपुरास्ते तदेव स्वभावनियत्यादिशब्दैर्निगद्यते॥ २९॥
179277
179278 गगनाङ्गस्य सत्तान्तः शब्दतन्मात्रकल्पया।
179279 कुसूलबीजाङ्कुरवत्तिष्ठत्याशान्तरूपिणी॥ ३०॥
179280
179281 तत्र सा ब्रह्मसत्ता गगनरूपस्य प्रथमजस्य स्वाङ्गस्यान्तः शब्दतन्मात्रकल्पया
179282 स्थित्या कुसूलान्तर्गतेषु बीजेष्वनाविर्भूताङ्कुरशक्तिवद्वाय्वादिजगद्बीजशक्तितया
179283 आशान्तरूपिणी अनाविर्भूता तिष्ठति॥ ३०॥
179284
179285 संपद्यते तत इदमितीयं रचनेहया।
179286 कृता [कृता संमुग्ध इति टीकानुगुणः पाठः।] सा मुग्धबोधाय
179287 मूर्खैर्विरचिता मुधा॥ ३१॥
179288
179289 ततस्तस्याः सकाशादिदं वायुतेजोम्बुधरालक्षणभूतभौतिकात्मकं जगत् क्रमेण
179290 संपद्यते इति इयं कल्पना संमुग्धानामज्ञानां तत्त्वबोधाय
179291 जगद्विरचनप्रतिपादनेच्छया श्रुतिभिर्मुनिभिश्च कृता न सृष्टिरेव तात्त्विकीति
179292 प्रतिपादनाय। तथात्वे मूर्खैरेवेयं सृष्टिकथा विरचिता मुधैव स्यात्। न हि
179293 वास्तवी सृष्टिरिति परिज्ञाने कस्यचित्किंचित्प्रयोजनं दृष्टं श्रुतं वास्तीति भावः
179294 ॥ ३१॥
179295
179296 नास्तमेतीह नोदेति तत्कदाचन किंचन।

179297 शिलाजठरवच्छान्तमिदं नित्यं सदप्यसत् ॥ ३२ ॥
179298
179299 यतस्तत्तात्त्विकं ब्रह्मरूपं नास्तमेति नोदेति च। तत इदं प्रपञ्चरूपं परसत्तया
179300 सदप् स्वतः असदित्यर्थः ॥ ३२ ॥
179301
179302 यथावयविनो नान्तः सदैवावयवाणवः।
179303 नास्तं यान्ति न चोद्यन्ति जगन्त्यात्मपदे तथा ॥ ३३ ॥
179304
179305 अपृथक्सत्ताकत्वे ब्रह्मान्तर्जगदवयवप्रायमुदयास्तमयरहितमेव
179306 पर्यवरयतीत्याह - यथेति। आद्यो नकारः पृथक्सत्तानिरासार्थः ॥ ३३ ॥
179307
179308 ब्रह्म व्योम्नि जगद्व्योम व्योम व्योम्नीव विद्यते।
179309 तत्कथं किल संशुद्धमस्तमायात्युदेति वा ॥ ३४ ॥
179310
179311 ब्रह्मसत्तातिरिक्तजगत्सत्तापलापे जगच्छुद्धं ब्रह्मैव
179312 पर्यवस्यतीत्यस्तोदयादिवैचित्र्यमस्य गतमित्याह - ब्रह्म व्योम्नीति ॥ ३४ ॥
179313
179314 तस्यानन्तप्रकाशात्मरूपस्याततचिन्मणेः।
179315 सत्तामात्रात्मकचनं यदजस्रं स्वभावतः ॥ ३५ ॥
179316
179317 एवं जगतस्तत्त्वपर्यालोचने ब्रह्ममात्रतां प्रतिपाद्य ब्रह्मण एव
179318 स्वतात्त्विकरूपविस्मरणे जगद्रूपापत्तिं वक्तुमुपक्रमते - तस्येत्यादिना ॥ ३५ ॥
179319
179320 तदात्मना स्वयं किंचिच्चेत्यतामिव गच्छति।
179321 अगृहीतात्मकं संविदूहामर्श्शसूचकम् ॥ ३६ ॥
179322
179323 अगृहीतात्मकमज्ञातमत एव प्रथममन्यथाभावादूहामर्शनसूचकम् ॥ ३६ ॥
179324
179325 भाविनामार्थकलनैः किंचिदूहितरूपकम्।
179326 आकाशादणु शुद्धं च सर्वस्मिन्भाविबोधनम् ॥ ३७ ॥
179327
179328 तव ऊहितरूपकं भाविप्रपञ्चपर्यालोचनात्तस्योद्बोधनम् ॥ ३७ ॥
179329
179330 ततः सा परमा सत्ता सती तच्चेतनोन्मुखी।
179331 चिन्नामयोग्या भवति किंचिल्लभ्यतया तया ॥ ३८ ॥
179332
179333 तस्य पर्यालोचितार्थस्य सम्यक्चेतनोन्मुखी सती चेतयतीति चिदिति
179334 व्युत्पत्त्यवसरलाभाच्चिन्नामयोग्या भवति ॥ ३८ ॥
179335
179336 घनसंवेदनात्पश्चाद्भाविजीवादिनामिका।
179337 सा भवत्यात्मकलना यद्द्रवन्ती परं पदम् ॥ ३९ ॥
179338
179339 तदुत्तरं यद्भवति तदाह - घनेति। यद्द्रवन्ती सती अधिकारिजन्मलाभे पुनः
179340 परं पदं भवति ॥ ३९ ॥
179341
179342 गर्भीकृत्य स्थिताऽनाख्या चिदाकाशापिधानताम्।
179343 संप्रति त्वतिशुद्धस्य पदस्यानन्यरूपिणी ॥ ४० ॥
179344
179345 ननु सा सदैव परं पदम्। वचनेन तस्या अधिकारिदेहज्ञानलाभेन
179346 कोऽतिशयस्तत्राह - गर्भीकृत्येति। यतः सा जीवत्वे चिदाकाशाच्छादिकामविद्यां
179347 गर्भीकृत्य स्थिता अतः अनाख्या अप्रख्यायमानपरपदस्वभावा ज्ञानलाभे
179348 संप्रति शुद्धस्य पदस्यानन्यरूपिणी लब्धाखण्डैक्यैव संपद्यत इत्यर्थः ॥ ४० ॥

स्वतैकभावनामात्रसारसंसरणोन्मुखी।
तदा विनाभावकृता अनुतिष्ठन्ति तामिमाः॥ ४१॥

तदा आवृततादशायां स्वता आत्मतादात्म्याध्यासस्तदेकभावनामात्रसारेण
देहेन्द्रियादिना संसरणोन्मुखी सती विनाभावः स्वरूपवियोगस्तत्कृतास्तामिगाः।
तमु ग्लानौ तमनं तामस्तन्निमित्तकर्माणि तामिमा अनुतिष्ठति। ताभिमाः इति पाठे
ताः प्रसिद्धाः अभिमानान्यभिमाः। संधिरार्षः॥ ४१॥

शून्यरूपा स्वसत्तैका शब्दादिगुणगर्भिणी।
चिद्भावनाभिसंपन्ना भविष्यदभिधार्थता॥ ४२॥

सा स्वसत्ता एकैव वस्त्वन्तरशून्यरूपैव शब्दादिगुणगर्भिणी
सविकल्पचिद्भावनाभ्रान्त्या अभिसंपन्ना।
भविष्यन्तीनामाकाशादिपञ्चभूताभिधानामर्थता प्रवृत्तिनिमित्तभूता
सूक्ष्मभूतात्मिकेति यावत्॥ ४२॥

अहंतोदेति तदनु सह वै कालसत्तया।
भविष्यदभिधार्थे ते बीजं मुख्यं जगत्स्थितेः॥ ४३॥

तया अहंकारप्रधानलिङ्गदेहकल्पनामाह - अहंतेति।
लिङ्गदेहघटकप्राणक्रियाप्रयुक्तकालसत्तया। ते अहन्ताकालसत्ते॥ ४३॥

चितिशक्तेः परायास्तु स्वसंवेदनमात्रकम्।
जगज्जालमसद्रूपं चेतनात्सदिव स्थितम्॥ ४४॥

तत्र जीवचिदभिव्यक्त्या तत्र जगद्भ्रान्तिरित्याह - चितिशक्तेरिति॥ ४४॥

एवंप्रायात्मिका सा चिद्बीजं संकल्पशाखिनः।
अहटां भावयत्यन्तः सैवेह भवति क्षणात्॥ ४५॥

जीवाभिधाना सैषाद्य भावाभावप्लवभ्रमैः।
भ्रमत्यात्मपदे वीचिरूपैर्वारीव वारिणि॥ ४६॥

आत्मपदे मायाशबलब्रह्मणि॥ ४६॥

चिदेवंभावनवती व्योमतन्मात्रभावनाम्।
स्वतो घनीभूय शनैः खतन्मात्रं प्रचेतति॥ ४७॥

तस्याः समष्टिहिरण्यगर्भरूपेण स्थूलपञ्चभूतकल्पनामाह - चिदिति।
सूक्ष्मां व्योमतन्मात्रभावनां घनीभूय घनीभाव्य। खतन्मात्रं
स्थूलाकाशम्॥ ४७॥

भाविनामार्थरूपं तद्बीजं शब्दौघशाखिनः।
पदवाक्यप्रमाणाढ्यवेदार्थादिविकारि च॥ ४८॥

तस्मादुदेष्यत्यखिला जगच्छ्रीः शब्दतत्त्वतः।
शब्दौघनिर्मितार्थौघपरिणामविसारिणी॥ ४९॥

तस्मादिति। स भूरिति व्यावहरत् भुवमसृजत। एत इति वै प्रजापतिर्देवानसृजत।
असृग्रमिति मनुष्यान्। इन्दव इति पितृन् इत्यादिश्रुतेरिति भावः॥ ४९॥

179401 चिदेवंव्यवसाया सा जीवशब्देन कथ्यते।
179402 भाविशब्दार्थजालेन बीजं भूतौघशाखिनः॥ ५०॥
179403
179404 एवंव्यवसाया ईदृशविचित्रसंकल्पवती ब्रह्मचिदेव जीवशब्देन कथ्यते
179405 नान्येत्यर्थः॥ ५०॥
179406
179407 चतुर्दशविधं भूतजातमावलिताम्बरम्।
179408 जगज्जठरकर्णौघं तस्मात्संप्रसरिष्यति॥ ५१॥
179409
179410 असंप्राप्ताभिधाचारा जीवत्वाच्चेतनेन चित्।
179411 काकतालीयवत्स्पन्दचिन्मात्रं चेतति स्वयम्॥ ५२॥
179412
179413 तस्याः स्वसृष्टभूतभौतिकभोगाय समष्टित्वगादीन्द्रियकल्पनाप्रकारमाह -
179414 असंप्राप्तेत्यादिना। न संप्राप्तौ अभिधा शाब्दो व्यवहारः आचारः शरीरादिना
179415 व्यवहारश्च यया तथाविधा सती तदर्थं वक्ष्यमाणं चेतति कल्पयति॥ ५२॥
179416
179417 पवनस्कन्धरूपस्य बीजं त्वक्स्पर्शशाखिनः।
179418 सर्वभूतक्रियास्पन्दस्तस्मात्संप्रसरिष्यति॥ ५३॥
179419
179420 तत्र यच्चिद्विलासस्य प्रकाशानुभवो भवेत्।
179421 रूपतन्मात्रकं तद्वद्भविष्यदभिधार्थदम्॥ ५४॥
179422
179423 प्रकाशचेतनं तेजो न तेजोऽन्यकृतं भवेत्।
179424 स्पर्शसंवेदनं स्पर्शो नेतरस्पर्शसंभवः॥ ५५॥
179425
179426 प्रकाशानुभवस्यैव रूपतन्मात्रत्वमुक्तमुपपादयति - प्रकाशचेतनमिति।
179427 एवं स्पर्शाद्यपि बोध्यमित्याह - स्पर्शेत्यादिना॥ ५५॥
179428
179429 शब्दसंवेदनं शब्दः स्वत एवानुभूयते।
179430 खं खेनेव स्वयं कोशे नान्यच्छब्दकृदस्ति हि॥ ५६॥
179431
179432 यथा खं खेन स्वेनैव स्वात्मके कोशे अवकाशं प्राप्य तिष्ठति नान्येन तथा
179433 संवेदनमपि स्वात्मकेनैव शब्देन शब्दकृत् शब्दग्राहकं नान्यदस्तीत्यर्थः॥
179434 ५६॥
179435
179436 किल तस्यामवस्थायां कोऽपरः शब्दकृद्भवेत्।
179437 यथा तथा तदाद्यापि द्वैतैक्यस्यात्यसंभवात्॥ ५७॥
179438
179439 सर्गादौ समष्टाविवेदानीं व्यष्टावपि तत्तत्संविदेव स्वस्यां
179440 तत्तदर्थाकारमध्यस्य जगद्वेषेण भासते नान्यदिति बोध्यमित्याह - किलेति। तदा
179441 यथा तथा अद्यापि। अवश्यं चेदं सर्वैर्वादिभिरभ्युपगन्तव्यम्। अन्यथा
179442 संविदां विषयव्यवस्थासिद्धेः। संवित्तादात्म्यमेव हि विषयाणां विषयता न
179443 त्वन्या वादिकोटिसहस्रैरप्युपपादयितुं शक्या। न च शब्दादीनामसंविद्रूपे
179444 संविदैक्यलक्षणं तादात्म्यं घटत इत्याशयेनाह - द्वैतैक्यस्येति॥ ५७॥
179445
179446 एवं हि रसतन्मात्रं गन्धतन्मात्रमेव च।
179447 असत्यमेव सदिव स्वप्नाभमिव चेत्यते॥ ५८॥
179448
179449 शब्दे दर्शितो न्यायो रसादिष्वपि बोध्य इत्याह - एवं हीति॥ ५८॥
179450
179451 तेजः सूर्यादिजृम्भाभिर्बीजमालोकशाखिनः।
179452 तस्माद्रूपविभेदेन संसारः प्रसरिष्यति॥ ५९॥

179453
179454 प्रासङ्गिकं परिसमाप्य प्रस्तुतमेवाह - तेज इति। अक्षिणी निरभिद्येतां
179455 अक्षिभ्यां चक्षुश्चक्षुष आदित्यः इत्यादिश्रुतेः ॥ ५९ ॥
179456
179457 भविष्यदभिधस्याथ खतः स्वत इवासतः।
179458 स्वदनं तस्य संघस्य रसतन्मात्रमुच्यते ॥ ६० ॥
179459
179460 असतः विकारशून्यात्खत आकाशत इव। स्वदनं माधुर्यसंवित्। तस्य सङ्घस्य
179461 पञ्चीकृतस्यान्नपानादेः ॥ ६० ॥
179462
179463 भविष्यद्रूपसंकल्पनामासौ सकलो गणः।
179464 संकल्पात्माथ तन्मात्रं गन्धाद्यमनुचेतति ॥ ६१ ॥
179465
179466 अयं सकलो गणः कार्यकारणसमुदायात्मा जीवः ॥ ६१ ॥
179467
179468 भाविभूगोलकत्वेन बीजमाकृतिशाखिनः।
179469 सर्वाधारात्मनस्तस्मात्संसारः प्रसरिष्यति ॥ ६२ ॥
179470
179471 अजात एव संजातस्तन्मात्राणां गणस्त्विति।
179472 अनाकारोऽपि साकारः संपन्नः कल्पनावशात् ॥ ६३ ॥
179473
179474 एष तन्मात्रकगणः काकतालीयवत्स्वयम्।
179475 रूपं येन प्रदेशेन वेत्त्यक्षीति तदुच्यते ॥ ६४ ॥
179476
179477 चक्षुरादिगोलकस्थानकल्पनामाह - एष इत्यादिना ॥ ६४ ॥
179478
179479 शब्दं येन प्रदेशेन वेत्ति श्रोतं तदुच्यते।
179480 स्पर्शं येन प्रदेशेन वेत्ति तत्तु त्वगिन्द्रियम् ॥ ६५ ॥
179481
179482 रसं येन प्रदेशेन वेत्ति तद्रसनेन्द्रियम्।
179483 गन्धं येन प्रदेशेन वेत्ति घ्राणेन्द्रियं तु तत् ॥ ६६ ॥
179484
179485 दिक्कालभेदाज्जीवोऽयं [दिक्कालकलनां जीवो नियतामिति पाठो
179486 व्याख्यानुगुणः स्यात्।] नियतामाकृतिं गतः।
179487 सर्वेणाङ्गेन नो सर्वं वेत्त्यसर्वात्मतावशात् ॥ ६७ ॥
179488
179489 द्विविधपरिच्छेदवत्पिण्डाहंभावप्रयुक्तामस्य दिक्कालभेदकल्पनामाह -
179490 दिगिति। दिक्कालकलनां करोतीति शेषः। किं च सर्वेणाङ्गेन चक्षुःश्रोत्रादिना
179491 रसगन्धादि सर्व न वेत्ति एवं व्यष्टिभूतः सर्वशरीरेण सर्वं भोग्यं न वेत्ति।
179492 असर्वात्मतादोषादित्यर्थः ॥ ६७ ॥
179493
179494 इति कलनमनन्तमात्मनोन्तर्गतमनुमेयमनन्यदात्मभूतम्।
179495 न तदुदयमुपैति नास्तमेति स्थितमुपलोदरवद्घनं सुमौनम् ॥ ६८ ॥
179496
179497 इति अनया रीत्या अनुक्तमप्यनन्तं सांसारिकं कलनं प्रति
179498 जीवमात्मनोन्तर्गतमनुमेयमानन्त्यादेव प्रातिस्विकरूपेण वक्तुमशक्यम्।
179499 तच्चानन्तं कलनमात्मनोऽनन्यदात्मभूतमेव। अतस्तत्परमार्थतो नोदयमुपैति
179500 नाप्यस्तं नाशमेति किंतूपलोदरवत्सच्चिदानन्दैकघनं निर्व्यापारमेव
179501 स्थितमित्यर्थः ॥ ६८ ॥
179502
179503 इत्यार्षे श्रीवासि० वाल्मी० दे० मो० नि० उ० जीवत्वसंसृतिप्रतिपादनं नाम
179504 सप्ताशीत्यधिकशततमः सर्गः ॥ १८७ ॥

179505
179506 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
179507 जीवत्वसंसृतिप्रतिपादनं नाम सप्ताशीत्युत्तरशततमः सर्गः ॥ १८७ ॥
179508
179509
179510 अष्टाशीत्यधिकशततमः सर्गः १८८
179511
179512 श्रीवसिष्ठ उवाच ।
179513
179514 आदिमत्त्वमिदं प्रोक्तमेतस्य कलनस्य यत् ।
179515 परस्मादद्वितीयं तत्त्वद्बोधाय न वास्तवम् ॥ १ ॥
179516
179517 जीवो ब्रह्मैव तस्येयमुत्पत्तिरुपचारतः ।
179518 लिङ्गदेहस्य विभ्रान्त्येत्यत्र स्पष्टं निरूप्यते ॥
179519
179520 घनसंवेदनात्पश्चाद्भावी जीवादिनामिका इत्यादिना जीवोत्पत्तिरुपपादिता । सा च न
179521 युक्ता । अभिनवोत्पन्नजीवस्य संसारहेतुकामकर्मवासनाद्यभावेन
179522 संसारासिद्धेर्घटपटादिवन्मिथ्यात्वापत्त्या
179523 ब्रह्मात्मभावायोगान्मोक्षासिद्धेश्चेत्याशङ्का रामस्य मा भूदिति तत्तात्पर्यं
179524 भगवान्स्वयमेवाह - आदिमत्त्वमिति । कलनस्य चिदाभासात्मकजीवस्य । तत्कलनं
179525 परस्माद्ब्रह्मणः अद्वितीयमभिन्नमिति त्वद्बोधाय न तु वास्तवमुत्पत्त्यादि
179526 जीवस्यास्तीत्याशयेनेत्यर्थः ॥ १ ॥
179527
179528 एवंविधं तत्कलनमात्मनोऽङ्गमकृत्रिमम् ।
179529 चेत्योन्मुखचिदाभासं जीवशब्देन कथ्यते ॥ २ ॥
179530
179531 कया रीत्या परस्मादद्वितीयमिति बोधनाय तदाह - एवंविधमिति ।
179532 तत्कलनमात्मनो ब्रह्मण एवंविधमौपाधिकमङ्गमवयवः अत एवाकृत्रिमम् ।
179533 चेत्योन्मुखेति प्रागुक्तस्यानुवादः । तथा चौपाधिक एव
179534 पृथग्भावस्तत्प्रयुक्तजीवादिनामभेदश्च परस्यैव
179535 घटाकाशमठाकाशादिरूपनामभेद आकाशस्यैवेति तदाशय इति भावः ॥ २ ॥
179536
179537 कलनस्यास्य नामानि बहूनि रघुनन्दन ।
179538 शृणु तानि विचित्राणि चेत्योन्मुखचिदात्मनः ॥ ३ ॥
179539
179540 औपाधिकप्रवृत्तिनिमित्ततद्भेदनिमित्तान्नामभेदान् जीवस्य श्रावयति -
179541 कलनस्येत्यादिना ॥ ३ ॥
179542
179543 जीवनाच्चेतनाज्जीवो जीव इत्येव कथ्यते ।
179544 चेत्योन्मुखतया चित्तं चिदित्येव निगद्यते ॥ ४ ॥
179545
179546 जीवनान्मुख्यप्राणस्य कर्मेन्द्रियाणां च धारणात् । चेतनाज्ज्ञानेन्द्रियाणां
179547 धारणाच्च जीवः । पूर्वानुभूतातीतानागतचेत्योन्मुखतया हेतुना चित्तमिति
179548 संनिकृष्टचेत्योन्मुखतया चिदिति च निगद्यते ॥ ४ ॥
179549
179550 इदमित्थमिति स्पष्टबोधाद्बुद्धिरिहोच्यते ।
179551 कल्पनान्मननज्ञत्वान्मन इत्यभिधीयते ॥ ५ ॥
179552
179553 कल्पनात्संकल्पनात् । मननमूहापोहादि तज्ज्ञत्वाच्च मन इत्यभिधीयते ॥ ५ ॥
179554
179555 अस्मीति प्रत्ययादन्तरहंकारश्च कथ्यते ।
179556 चेतनाढ्यमृतं चित्तमिति शास्त्रविचारिभिः ॥ ६ ॥

अस्मीत्यभिमानोल्लेखः। पामरसाधारणव्युत्पत्त्या प्राक्चित्तनाम व्याख्यातम्।
पण्डितप्रसिद्ध्या तु चिती संज्ञाने इति धातुव्युत्पत्तेः स्वतत्त्वचेतनाढ्यं ऋतं
परमार्थवस्तु आत्मैव चित्तपदवाच्यं मुख्यमिति शास्त्रविचारिभिरुक्तमित्यर्थः॥ ६॥

प्रौढसंकल्पजालात्स पुर्यष्टकमिति स्मृतम्।
संसृतेः प्रकृतत्वेन प्राथम्यात्प्रकृतिः स्मृता॥ ७॥

स जीवः संकल्पादिभिः पूर्यन्त इति पुर्यस्तासामष्टकमिति व्युत्पत्तेरिति भावः।
प्रकृतत्वेन सर्गादिकाले प्रस्तुतत्वेन ततः प्राथम्यात्॥ ७॥

बोधादविद्यमानत्वादविद्येत्युच्यते बुधैः।
इत्यादिकलनस्यास्य नामानि कथितानि ते॥ ८॥

बोधात्तत्त्वदर्शनादौपाधिकरूपेणाविद्यमानत्वात्॥ ८॥

एतत्कलनमाद्यन्तमनाकारमनामयम्।
आतिवाहिकदेहोक्त्या समुदाह्रियते बुधैः॥ ९॥

इत्येवं स्वप्नसंकल्पपुरवल्लिजगद्भ्रमः।
भात्यर्थकार्यप्यवपुः शून्यमप्रतिघात्मकम्॥ १०॥

अर्थौ भोगमोक्षौ तत्कार्यपि अवपुर्निःस्वरूपम्॥ १०॥

इत्यातिवाहिकः प्रोक्तो देहो देहभृतां वर।
चिन्नभश्चित्तदेहोऽसौ शून्य आकाशतोपि च॥ ११॥

नास्तमेति न चोदेति जगत्यामोक्षसंविदः।
चतुर्दशविधस्यैका भूतसर्गस्य चित्तभूः॥ १२॥

कियत्कालं स तिष्ठति तत्राह - आमोक्षसंविद इति। भूतसर्गस्य चित्तरूपा भूः
प्ररोहस्थानम्॥ १२॥

अत्र संसारलक्षाणि भविष्यन्ति भवन्ति च।
भूतानि च फलानीव यथा कालव्यवस्थया॥ १३॥

एष चित्तमयो देहो जगन्त्यन्तर्बहिस्त्वपि।
प्रतिबिम्बमिवादर्शः शून्य एव नभो यथा॥ १४॥

अन्तर्बहिरपि जगन्ति आदर्शः प्रतिबिम्बमिव धत्ते तथापि खं शून्यं एवेत्यर्थः॥ १४
॥

महाकल्पस्य पर्यन्ते सर्वनाशे स्थिरे स्थिते।
महाशून्यपदे प्रौढे ब्रह्मात्मनि निरामये॥ १५॥

कदाप्रभृत्ययं जगन्ति धत्ते इत्यत्राह - महाकल्पस्येति। प्राकृतप्रलयस्य
पर्यन्ते चरमक्षणे॥ १५॥

स्वतश्चितिघनोऽचित्त्वाच्चिद्भानमिदमात्मनः।
आतिवाहिकदेहाभं क्रमेणानेन चेतति॥ १६॥

अचित्त्वाच्चिदावरकाज्ञानान्निमित्तात्। अनेन प्रागुक्तेन क्रमेण॥ १६॥

179609
179610 स आतिवाहिको देहस्तदालोकप्रवर्तितः।
179611 कैश्चिद्ब्रह्मेति कथितः स्मृतः कैश्चिद्विराडिति॥ १७॥
179612
179613 स जीव एवातिवाहिको देहस्तस्य यो जगदालोकनात्मक आलोकस्तेन प्रवर्तितः कश्चिद्भागो
179614 ब्रह्मा चतुर्मुखोऽहमिति कथितः शास्त्रेषु॥ १७॥
179615
179616 कश्चित्सनातनाभिख्यः कश्चिन्नारायणाभिधः।
179617 कश्चिदीश इति ख्यातः कश्चिदुक्तः प्रजापतिः॥ १८॥
179618
179619 सनातनग्रहणं सनकादीनां ब्रह्मपुत्राणामुपलक्षणम्॥ १८॥
179620
179621 काकतालीयवद्भाताः पञ्च स्वेन्द्रियसंविदः।
179622 यत्र यत्र यथा तेषां स्थितास्तत्र तथा स्थिताः॥ १९॥
179623
179624 यत्र भागे पञ्च स्वेन्द्रियसंविदो भातास्तत्र तत्र तथार्थाः स्थिताः॥ १९॥
179625
179626 एवमत्यन्तवितते संपन्ने दृश्यविभ्रमे।
179627 न किंचिदपि संपन्नं सर्वशून्यं ततं यतः॥ २०॥
179628
179629 ततं विस्तीर्णमात्मतत्त्वं यतः सर्वदृश्यशून्यम्॥ २०॥
179630
179631 अनादिमत्परं ब्रह्म न सद्यन्नासदुच्यते।
179632 तदेवेदमनाद्यन्तं तथास्थितमवेदनम्॥ २१॥
179633
179634 सत् आविर्भूतम्। असत् तिरोभूतम्। यतस्तदेव अवेदनं स्वरूपसाक्षात्कारहीनं सतथा
179635 सदसदाकारेण स्थितम्॥ २१॥
179636
179637 आतिवाहिकदेहस्य तस्यानुभवतः स्वयम्।
179638 याति व्यसनिनः स्वप्नः कान्तेव परिपुष्टताम्॥ २२॥
179639
179640 अयं प्रपञ्चः कान्तानुसंधानव्यसनिनो विधुरस्य स्वप्नकान्तेव परिपुष्टतां
179641 याति॥ २२॥
179642
179643 शून्योऽप्यनाकृतिरपि घटाकारोऽनुभूयते।
179644 स्वप्नसंकल्पयोः स्वस्य देहस्य जगतो यथा॥ २३॥
179645
179646 जगच्छून्यस्यैव जगदात्मना भाने दृष्टान्तान्तरमाह - शून्योऽपीति। स्वत एव
179647 स्वदेहस्य जगतश्चास्तो भाने यथा दृष्टान्त इत्यर्थः॥ २३॥
179648
179649 भवत्यर्थकरोऽत्युच्चैस्तच्चित्खस्वप्नवस्तुवत्।
179650 आकाशात्मक एवोग्रः पदार्थ इव भासते॥ २४॥
179651
179652 तादृशस्याप्यर्थक्रियासामर्थ्यं तत्रैव प्रसिद्धमित्याह - भवतीति। उग्रः
179653 कठिनः॥ २४॥
179654
179655 आतिवाहिकदेहोऽसौ स्वतोऽनुभवति क्रमात्।
179656 अनाकारोपि शून्योपि स्वप्नाभोऽसन्नपि स्थितः॥ २५॥
179657
179658 चेतत्यस्थिगणः स्थूलं कराद्यवयवावलिम्।
179659 त्रिकलोमशिरास्नायुसंनिवेशतया स्थितम्॥ २६॥
179660

179661 स चातिवाहिकदेहरूपो जीवः अस्थिगणैः स्थूलं त्रिकस्युअ पृष्ठवंशस्य लोम्नां
179662 आतानवितानत्वभेदान्मांसास्थिवेष्टनत्वोपाधिभेदाद्वा शिरास्नाव्वोर्भेदस्तासां
179663 संनिवेशात्मतया स्थितं स्थूलशरीरं देशकालक्रमासनशब्दादिविषये
179664 भोगार्थाय चेततीत्यन्वयः ॥ २६ ॥
179665
179666 जन्मकर्मेहितस्थानं परिणामवयःस्थितम् ।
179667 देशकालक्रमाभोगभावार्थायोद्भवभ्रमम् ॥ २७ ॥
179668
179669 तस्मिंश्च देहे उद्भवो जन्म तद्भ्रमं चेतति ॥ २७ ॥
179670
179671 जरामरणमाधानदशदिङ्मण्डलक्रमम् ।
179672 ज्ञानज्ञेयज्ञातृभावमादिमध्यान्तवेदनम् ॥ २८ ॥
179673
179674 तथा जरामरणं गुणदोषाद्याधानं दशदिङ्मण्डलेषु क्रमणं क्रमो
179675 भ्रमणं ज्ञानादित्रिपुटीं सर्वभावानामादिमध्यान्तवेदनं च चेतति ॥ २८ ॥
179676
179677 क्षितिजलगगनदिवाकरजनताव्यवहारनगरशिखरात्मा ।
179678 स्वाधाराधेयमयं पश्यति वपुषः पुरातनः पुरुषः ॥ २९ ॥
179679
179680 एवमातिवाहिकदेहभूतः पुरातनः पुरुषः स्वकल्पितादेव व्यष्टिसमष्टिस्थूलवपुषो
179681 निमित्तात्स्वयमेव क्षित्यादिशिखरान्तात्मा सन् स्वस्य पृथ्व्यादय आधाराः स्वयं तु
179682 तदाधेय इति भ्रान्तिमयं संसारस्वप्नं पश्यतीत्यर्थः ॥ २९ ॥
179683
179684 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० नि० उ० जीवरूपवर्णनं
179685 नामाष्टाशीत्यधिकशततमः सर्गः ॥ १८८ ॥
179686
179687 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
179688 जीवरूपवर्णनं नामाष्टाशीत्यधिकशततमः सर्गः ॥ १८८ ॥
179689
179690 एकोननवत्यधिकशततमः सर्गः १८९
179691
179692 श्रीवसिष्ठ उवाच ।
179693
179694 आतिवाहिकदेहोऽसौ तस्याद्यस्य प्रजापतेः ।
179695 काकतालीयवच्चित्त्वाद्यद्यथेत्यादि चेतति ॥ १ ॥
179696
179697 आतिवाहिकदेहात्मप्रजापतिमनोरथे ।
179698 आधिभौतिकताभ्रान्तिर्जगत्यत्रोपवर्ण्यते ॥
179699
179700 कश्चिद्ब्रह्मेति कथितः स्मृतः कश्चिद्विराडिति इत्यादिप्रपञ्चितप्रकारेण यद्यद्यथा
179701 चेतति तत्तत्तथा स्थितिमायातीति परेणान्वयः ॥ १ ॥
179702
179703 तत्तथा स्थितिमायाति चिरं संवित्स्वभावतः ।
179704 बत विश्वमिदं भातमत्रासत्ये कुतः स्मयः ॥ २ ॥
179705
179706 संवित् सत्यसंकल्पसंवित् तत्स्वभावत इदं विश्वं भातम् । बतेति खेदे ॥ २ ॥
179707
179708 द्रष्टाऽसत्यमसत्यं दृगसत्यं दर्शनं ततम् ।
179709 सत्यमेवाथवा सर्वं ब्रह्मैवात्मतया तया ॥ ३ ॥
179710
179711 अतो भ्रान्तिमात्रत्वाद्द्रष्ट्रादित्रिपुटी असत्या दृश्यत इति दृक् दृश्यम् । दर्शनं
179712 वृत्तिः ॥ ३ ॥

179713
179714 श्रीराम उवाच।
179715
179716 इत्यातिवाहिकालोकः स तस्याद्यप्रजापतेः।
179717 कठिनत्वं कथं यातः कथं स्वप्नस्य सत्यता ॥ ४ ॥
179718
179719 इति अनया रीत्या आतिवाहिक आलोकनमालोको भ्रान्तिदर्शनमात्रं चेत्स कठिनत्वं
179720 शिलादिभावम्। सत्यता पारलौकिकफलाद्यर्थक्रियासमर्थता ॥ ४ ॥
179721
179722 श्रीवसिष्ठ उवाच।
179723
179724 आतिवाहिक आलोकः स्वत एवानुभूयते।
179725 सदानवरतं तेन स एवाभाति पुष्टवत् ॥ ५ ॥
179726
179727 सदा नैरन्तर्येण। तथा चिराभ्यासात्पुष्टवत् घनीभूत इवाभाति ॥ ५ ॥
179728
179729 यथा स्वप्नस्य पुष्टत्वं चिरानुभवनोचितम्।
179730 अतिसत्यमिवाभाति स्वातिवाहिकता तथा ॥ ६ ॥
179731
179732 यथा हरिश्चन्द्रादेः स्वप्नस्य चिरानुभवनोचितं पुष्टत्वं तथेत्यर्थः ॥ ६ ॥
179733
179734 आतिवाहिकदेहस्य चिरस्वानुभवोदये।
179735 आधिभौतिकताबुद्धिरुदेति मृगवारिवत् ॥ ७ ॥
179736
179737 जगत्स्वप्नभ्रमाभासं मृगतृष्णाम्बुवत्स्थितम्।
179738 असदेवेदमाभाति सत्यप्रत्ययकार्यपि ॥ ८ ॥
179739
179740 आतिवाहिकरूपाणामाधिभौतिकता स्वयम्।
179741 असती सत्यवद्दूरमर्वाग्दर्शिभिरर्थिता ॥ ९ ॥
179742
179743 अर्वाग्दर्शिभिरविवेकिभिः। अर्थिता आसक्त्या स्वीकृता ॥ ९ ॥
179744
179745 अयं सोहमिदं तन्म इमा गिरिनभोदिशः।
179746 इति मिथ्याभ्रमो भाति भास्वरस्वप्नशैलवत् ॥ १० ॥
179747
179748 आतिवाहिकदेहोऽसौ स्रष्टुराद्यस्य भावितः।
179749 आधिभौतिकतां चैतत्पिण्डाकारं प्रपश्यति ॥ ११ ॥
179750
179751 एतत् पृथिवीशरीरादिरूपे पिण्डाकारम् ॥ ११ ॥
179752
179753 चिन्नभश्चेतनं त्यक्त्वा ब्रह्माहमिति पश्यति।
179754 अयं देहोऽयमाधार इति बध्नाति भावनाम् ॥ १२ ॥
179755
179756 ब्रह्माहमिति यथार्थचेतनं त्यक्त्वा अयं देहो मनुष्यादिरहं अयं
179757 पृथ्व्यादिर्ममाधार इति पश्यति तत्र च भावनामास्थां वध्नाति ॥ १२ ॥
179758
179759 असत्ये सत्यबुद्ध्यैव बद्धो भवति भावनात्।
179760 बहुशो भावयत्यन्तर्नानात्वमनुधावति ॥ १३ ॥
179761
179762 अनुधावति अनुसरसि ॥ १३ ॥
179763
179764 शब्दान्करोति संकेतं संज्ञाश्च स्पन्दनानि च।

179765 ओमित्युक्ते ततो वेदाञ्छब्दराशीन्प्रगायति ॥ १४ ॥
179766
179767 प्रथमं वैदिकलौकिकशब्दान्करोति सृजति । तेषां च तत्तदुपाधिमति अर्थे संकेतं
179768 करोति संकेतेन संज्ञाः करोति । शब्दकरणप्रकारमाह - ओमित्युक्ते इति ॥ १४ ॥
179769
179770 तैरेव कल्पयत्याशु व्यवहारमितस्ततः ।
179771 मनो ह्यसौ कल्पयति यच्चेतति तदेव हि ॥ १५ ॥
179772
179773 यो हि यन्मय एवासौ स न पश्यति तत्कथम् ।
179774 असत्यैव जगद्भ्रान्तिरेवं प्रौढिमुपागता ॥ १६ ॥
179775
179776 यन्मयो यदासक्तः । स्त्रीमयो जाल्म इतिवत् ॥ १६ ॥
179777
179778 आब्रह्मणो मुधा भाति चिरस्वप्नेन्द्रजालवत् ।
179779 इत्यातिवाहिकस्येयमाधिभौतिकतोचिता ॥ १७ ॥
179780
179781 आब्रह्मण आमशकात् इत्यनया रीत्या आधिभौतिकता काठिन्यादिस्वभावता उचितैव
179782 नानुचिता ॥ १७ ॥
179783
179784 आधिभौतिकता नास्ति काचित्किंचिदपि क्वचित् ।
179785 आतिवाहिकतैवैनामभ्यासाद्याति भावनाम् ॥ १८ ॥
179786
179787 एतामाधिभौतिकभावनाम् ॥ १८ ॥
179788
179789 मूलादेवैवमायातो मिथ्यानुभवनात्मकः ।
179790 मोहो ब्रह्मण एवायमित्यस्त्येष महात्मनाम् ॥ १९ ॥
179791
179792 मूलभूताद्ब्रह्मणः स्रष्टुः सकाशादेव एवंरूपो मोहोऽयमायात इति हेतोरेष
179793 जगद्दर्शनरूपो भ्रमो महात्मनां तत्त्वविदामपि यावत्प्रारब्धक्षयमस्तीत्यर्थः
179794 ॥ १९ ॥
179795
179796 एवमित्थं दशा राम पिण्डबन्धः क्व विद्यते ।
179797 भ्रान्तिरेवेदमखिलं ब्रह्मैवाभातमेव वा ॥ २० ॥
179798
179799 चिदेकरसस्य ब्रह्मण एवंरूपा इत्थं दुर्दशा क्व विद्यते किंत्विदमखिलं
179800 संसारदुर्दशादिभ्रान्तिरेव । अथवा ब्रह्मैव
179801 कौतुकवशाज्जगज्जीवाद्याकारेणाभातम् । न हि स्वाकारः स्वस्य दुर्दशेत्यर्थः । अन्ते
179802 बन्धमोक्षविभागनिष्कर्षप्रदर्शनं चैतत् ॥ २० ॥
179803
179804 न शाश्वतादन्यदिहास्ति कारणान्न कारणं तत्खलु कार्यतां विना ।
179805 न कार्यताकारणतादिसंभवोऽस्त्यनामये तत्किमपीदमाततम् ॥ २१ ॥
179806
179807 शाश्वताद्ब्रह्मणोऽन्यत्कारणं जगतो नास्ति । तच्च कार्यतां विना कारणं न ।
179808 अनामये कूटस्थचिदानन्दाद्वये ब्रह्मणि कार्यताकारणतादिसंभव एव नास्ति ।
179809 तत्तस्माद्धेतोरिदं जगदाकारं किमपि भ्रान्तिमात्रमाततं विस्तृतं न वस्तु सदिति
179810 निष्कर्ष इत्यर्थः ॥ २१ ॥
179811
179812 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० निर्वा० उ० ब्रह्मैकताप्रतिपादनं
179813 नामैकोननवत्यधिकशततमः सर्गः ॥ १८९ ॥
179814
179815 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
179816 ब्रह्मैकताप्रतिपादनं नामैकोननवत्यधिकशततमः सर्गः ॥ १८९ ॥

179817
179818
179819 नवत्यधिकशततमः सर्गः १९०
179820
179821 श्रीवसिष्ठ उवाच।
179822
179823 ज्ञानस्य ज्ञेयतापत्तिर्बन्ध इत्यबिधीयते।
179824 तस्यैव ज्ञेयताशान्तिर्मोक्ष इत्यभिधीयते॥ १॥
179825
179826 अतीतानागताः शङ्काः सर्वाः संमृज्य युक्तिभिः।
179827 ज्ञानस्य ज्ञेयताशान्तिर्मुक्तिरत्रोपपाद्यते॥
179828
179829 भ्रान्तिरेवेदमखिलं ब्रह्मैवाभातमेव वा इति बन्धमोक्षनिष्कर्षप्रदर्शनमन्ते
179830 यत्कृतं तत्परिष्कृत्याह - ज्ञानस्येति॥ १॥
179831
179832 श्रीराम उवाच।
179833
179834 ज्ञानस्य ज्ञेयताशान्तिः कथं ब्रह्मन्प्रवर्तते।
179835 सा रूढा बन्धताबुद्धिः कथं वात्र निवर्तते॥ २॥
179836
179837 अत्र रामः सर्वेषामुपकाराय प्राक्समाहिता अपि शङ्काः
179838 प्रश्नोत्तरमालिकाक्रमेनोद्घाट्य समाधानक्रमप्रख्यापनकामस्तदुपायं
179839 प्रथमं पृच्छति - ज्ञानस्येति। रूढा दृढाभ्यस्ता। कथं केनोपायेन॥ २
179840 ।।
179841
179842 श्रीवसिष्ठ उवाच।
179843
179844 सम्यग्ज्ञानेन [सम्यज्ज्ञानप्रबोधेन इति टीकाकृदभिमतः पाठः।
179845 ] बोधेन मन्दबुद्धिर्निवर्तते।
179846 निराकारा निजा शान्ता मुक्तिरेवं प्रवर्तते॥ ३॥
179847
179848 शमदमादिसाधनसहितदृढाभ्यस्तसम्यग्ज्ञानलक्षणेन प्रबोधेन
179849 मन्दबुद्धिर्भ्रान्तिर्निवर्तते। अपगते च भ्रान्तिस्वप्ने एवंविधा ज्ञेयता शान्तिरूपा
179850 मुक्तिर्भूमिकापरिपाकक्रमेण प्रवर्तते॥ ३॥
179851
179852 श्रीराम उवाच।
179853
179854 बोधः केवलतारूपः सम्यग्ज्ञानं किमुच्यते।
179855 येन बन्धादयं जन्तुरशेषेण विमुच्यते॥ ४॥
179856
179857 अनेकविशेषवतो रत्नादेः कतिपयविशेषेषु ज्ञातेष्वपि विशेषान्तरज्ञानाय पुनः
179858 पुनः पर्यालोचनजन्यं सम्यग्ज्ञानमन्यत्स्यात्। निर्विशेषे तु
179859 वस्तुन्यापातज्ञानापेक्षया सम्यग्ज्ञानमन्यत्किं स्याद्येनास्य बन्धो निवर्तेत इति
179860 शङ्कार्थः॥ ४॥
179861
179862 श्रीवसिष्ठ उवाच।
179863
179864 ज्ञानस्य ज्ञेयता नास्ति केवलं ज्ञानमव्ययम्।
179865 अवाच्यमिति बोधोन्तः सम्यग्ज्ञानमिति स्मृतम्॥ ५॥
179866
179867 अधिष्ठानचिन्मात्ररूपस्य ज्ञेयता कालत्रयेऽपि नास्तीति सर्वदृश्यबाधपर्यवसित
179868 एव तत्त्वसाक्षात्कारः। आपाततो ज्ञानं तु न तथेत्युत्तरार्थः॥ ५॥

श्रीराम उवाच ।

ज्ञानस्य ज्ञेयता भिन्ना त्वन्तः केति मुने वद ।
उत्पाद्यो ज्ञानशब्दश्च भावे वा करणेऽथ किम् ॥ ६ ॥

चिदेकरसस्यात्मनोऽन्तस्तद्भिन्ना ज्ञेयता का । तथायं ज्ञानशब्दः किं भावे
उत्पाद्यो व्युत्पादनीयः अथ किं करणे व्युत्पादनीय इति प्रश्नार्थः ॥ ६ ॥

श्रीवसिष्ठ उवाच ।

बोधमात्रं भवेज्ज्ञानं भावसाधनमात्रकम् ।
न ज्ञानज्ञेययोर्भेदः पवनस्पन्दयोरिव ॥ ७ ॥

भावे एव ज्ञानशब्दो व्युत्पाद्यः । ज्ञेयजगद्रूपता च ज्ञानस्यैव गायिको विकल्पो
नैकरस्यविघातक इत्युत्तरार्थः ॥ ७ ॥

श्रीराम उवाच ।

एवं चेत्तत्कथमयं ज्ञानज्ञेयादिविभ्रमः ।
सिद्धः शशविषाणाभो भविष्यद्भूतभव्यशः ॥ ८ ॥

एवं चेत्तर्हि स विकल्पः शशविषाणकल्पः कथं
प्रत्यक्षादिभिर्भूतभव्यभविष्यद्विभागैर्व्यवहारक्षमो भासते इति प्रश्नार्थः ॥
८ ॥

श्रीवसिष्ठ उवाच ।

बाह्यार्थभ्रान्तितो ज्ञेया भ्रमबुद्धिरिहोदिता ।
बाह्यश्चाभ्यन्तरश्चार्यो न संभवति कश्चन ॥ ९ ॥

नासत्त्वमभाने अर्थक्रियासामर्थ्ये वा प्रयोजकम् । स्वप्नभ्रान्तिज्ञाने
असत्सहस्रस्यापि तद्दर्शनात् । किंतु बाधस्तत्प्रयोजकः । स चात्र विचारवतां
यौक्तिकस्तत्त्वविदामपरोक्षश्चास्त्येवेत्युत्तरार्थः ॥ ९ ॥

श्रीराम उवाच ।

योऽयं प्रत्यक्षदृश्योऽर्थो मुने त्वमहमादिकः ।
भूतादिरनुभूतात्मा स कथं नास्ति मे वद ॥ १० ॥

लौकिकप्रत्यक्षादिमानसिद्धस्य कथमपलाप इति प्रश्नार्थः ॥ १० ॥

श्रीवसिष्ठ उवाच ।

आदिसर्गविधावेव विराडात्मादिकोऽनघ ।
जातो न कश्चिदेवार्थो ज्ञेयस्यातो न संभवः ॥ ११ ॥

आदिसर्गे जगतो मायातिरिक्तसामग्र्या दुर्वचत्वाद्भ्रान्तिमात्रत्वे अवश्यं वक्तव्ये
संप्रत्यपि तथैव वाच्यमिति व्यवहारमात्राविसंवादेव चरितार्थानि
लौकिकप्रत्यक्षादीनि तत्त्वगोचरयुक्तिभिः श्रुतिभिश्च बाध्यन्त इत्युत्तराशयः । तथा
च श्रुतिः न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः । न मुमुक्षुर्न वै मुक्तिरित्येषा
परमार्थता इति ॥ ११ ॥

179921
179922 श्रीराम उवाच।
179923
179924 भविष्यद्भूतभव्यस्था जगद्दृष्टिरियं मुने।
179925 नित्यानुभूयमानापि न जातेति किमुच्यते॥ १२॥
179926
179927 भूतभविष्यदाद्यनन्तवस्तुगोचराणामनन्तानां सर्वजनीनानां
179928 प्रत्यक्षादीनामेकेन तत्त्वज्ञानेन कथं बाध इति शङ्कार्थः॥ १२॥
179929
179930 श्रीवसिष्ठ उवाच।
179931
179932 स्वप्नार्थमृगतृष्णाम्बुद्वीन्दुसंकल्पितार्थवत्।
179933 मिथ्या जगदहंत्वं च भाति केशोण्ड्रकं यथा॥ १३॥
179934
179935 तादृशानामपि स्वाप्नज्ञानानामेकेन जागरेण बाधदर्शनादित्युत्तरार्थः॥ १३॥
179936
179937 श्रीराम उवाच।
179938
179939 अहं त्वमयमित्यादिजगज्जठरमप्यलम्।
179940 कथं न जातं भगवन्सर्गादावनुभूतिमत्॥ १४॥
179941
179942 कया युक्त्या बाध इति प्रश्नार्थः॥ १४॥
179943
179944 श्रीवसिष्ठ उवाच।
179945
179946 कारणाज्जायते कार्यं नान्यथेत्येव निश्चयः।
179947 सर्वोपशान्तौ जगतामुत्पत्तौ नास्ति कारणम्॥ १५॥
179948
179949 कारणाभावयुक्त्येत्युत्तरार्थः॥ १५॥
179950
179951 श्रीराम उवाच।
179952
179953 महाप्रलयसंपत्तौ शिष्टं यदजमव्ययम्।
179954 तत्कथं नाम सर्गस्य न भवेत्कारणं मुने॥ १६॥
179955
179956 ब्रह्मैव कारणं किं न स्यादिति प्रश्नार्थः॥ १६॥
179957
179958 श्रीवसिष्ठ उवाच।
179959
179960 यदस्ति कारणे कार्यं तत्तस्मात्संप्रवर्तते।
179961 न त्वसज्जायते राम न घटाज्जायते पटः॥ १७॥
179962
179963 ब्रह्मणश्चिदेकरसत्वेन तत्र जगद्बीजशक्त्ययोगादित्युत्तरार्थः॥ १७॥
179964
179965 श्रीराम उवाच।
179966
179967 जगत्सूक्ष्मेण रूपेण महाप्रलय आगते।
179968 आस्ते ब्रह्मणि तत्तस्मात्पुनरेव प्रवर्तते॥ १८॥
179969
179970 तर्हि सांख्याभिमतगुणेष्विव ब्रह्मणि सूक्ष्मरूपेण तदा जगदस्तु इति प्रश्नार्थः॥
179971 १८॥
179972

179973 श्रीवसिष्ठ उवाच।
179974
179975 महाप्रलयपर्यन्ते केन सर्गास्तितानघ।
179976 अनुभूता महाबुद्धे तत्रस्था सा च कीदृशी॥ १९॥
179977
179978 तत्सत्तायाः साधकाभावादैकरस्यश्रुतिबाधितत्वाच्च
179979 अभ्युपगन्तुमशक्यत्वादित्युत्तराशयः॥ १९॥
179980
179981 श्रीराम उवाच।
179982
179983 ज्ञप्त्यात्मिका श्रीस्तत्रस्था तादृशेरनुभूयते।
179984 व्योमात्मिका तु न भवेन्न सत्तामसदेति हि॥ २०॥
179985
179986 तर्हि ज्ञप्त्येकरसतयैव तदा स्वप्रकाशातत्सत्तास्तु न मायाकाशात्मिका। तस्याः
179987 शून्यतापर्यवसानेन असतः सदात्मना सर्गे आगमनायोगादिति प्रश्नार्थः। हि
179988 यस्मादसत् सत्तां नेइति॥ २०॥
179989
179990 श्रीवसिष्ठ उवाच।
179991
179992 एवं चेत्तन्महाबाहो ज्ञप्तिरेव जगल्लयम्।
179993 विशुद्धज्ञानदेहस्य कुतो मरणजन्मनी॥ २१॥
179994
179995 एवं चेच्चिदेकरसमेव ततो जगत्स्यात् तथा च भेदकाभावे को जगच्छब्दार्थ
179996 इत्युत्तराशयः॥ २१॥
179997
179998 श्रीराम उवाच।
179999
180000 तदेवमादितो नास्ति सर्गस्तदियमागता।
180001 कुतः कथमिव भ्रान्तिरिति मे भगवन्वद॥ २२॥
180002
180003 तर्हि जगद्भ्रान्तेः किं कारणमिति प्रश्नार्थः॥ २२॥
180004
180005 श्रीवसिष्ठ उवाच।
180006
180007 कार्यकारणताभावाद्भावाभावौ स्त एव नो।
180008 इदं च चेत्यते यद्यत्स्वात्मा चेतति चेतितम्॥ २३॥
180009
180010 न वास्तवं कारणं तत्कार्य भावात्मकं जगद्वा अस्ति मायया तु ब्रह्मैव
180011 तत्तत्त्रिपुटीवेषं धत्ते इत्युत्तरार्थः। यद्यच्चेत्यते यच्चेतितं यच्च चेतति तत्त्रयमपि
180012 स्वात्मैवेत्यर्थः॥ २३॥
180013
180014 श्रीराम उवाच।
180015
180016 चेतिता चेतति यन्त्वं द्रष्टा दृश्यत्वमीश्वरः।
180017 कथमेति कथं वह्निं दहेत्काष्ठं कदा किल॥ २४॥
180018
180019 नन्विदं विपरीतम्। यन्त्वसदृशः कार्यकारणसंघातः अचिद्रूपश्चेतति
180020 तादृग्रूपत्वात्सर्वद्रष्टा चेश्वरो जडरूपं दृश्यत्वमेतीति काष्ठं दग्धृ
180021 भूत्वा वह्निं दाह्यं कृत्वा कदा किल दहेदिति शङ्कार्थः॥ २४॥
180022
180023 श्रीवसिष्ठ उवाच।
180024

180025 द्रष्टा न याति दृश्यत्वं दृश्यस्यासंभवादतः।
180026 द्रष्टैव केवलो भाति सर्वात्मैकघनाकृतिः॥ २५॥
180027
180028 न द्रष्टा दृश्यत्वं यातीति वयं प्रतिपादयामः किंतु दृश्यादित्रिपुटी
180029 द्रष्टृकैवल्यरूपदृङ्मात्रमेवैकघनाकृतिः स्वयं भातीति न किंचिद्विपरीतं
180030 किंतु सर्ववैपरीत्यनिवृत्तिरेवेत्युत्तराशयः॥ २५॥
180031
180032 श्रीराम उवाच।
180033
180034 चिन्मात्रं तदनाद्यन्तं चेत्यं चेतयते तदा।
180035 तदिदं जगदाभानं कुतः स्याच्चेत्यसंभवः॥ २६॥
180036
180037 सर्गादावचेतितजगत्प्रतिभासासिद्धेः शुद्धचिन्मात्रमेव तदा चेत्यं चेतयते
180038 इत्यवश्यं वाच्यम्। तत्र चेत्यस्य कुतः संभवस्तद्वदेति प्रश्नार्थः॥ २६॥
180039
180040 श्रीवसिष्ठ उवाच।
180041
180042 चेत्यं हि कारणाभावान्न संभवति किंचन।
180043 चेत्याभावाच्चेतनस्य मुक्तताऽवाच्यता सदा॥ २७॥
180044
180045 चेत्यं चेत्सर्गादौ संभूतं स्यात्तदा तत्कुतः संभूतमिति प्रश्नावसरः स्यात्।
180046 अत्यन्तासंभूतस्य वन्ध्यापुत्रकल्पस्य किमुपपत्तिजिज्ञासयेति नित्यमुक्त एवात्मा
180047 प्रतिपत्तव्य इत्युत्तरार्थः। अवाच्यता वक्तुमनर्हता॥ २७॥
180048
180049 श्रीराम उवाच।
180050
180051 एवं चेत्तदहन्तादि चेत्यं कथमिदं कुतः।
180052 कथं जगद्वेदनं च कथं स्पन्दादिवेदनम्॥ २८॥
180053
180054 नित्यमुक्तत्वं चेदहंतादिप्रतिभास एव कदापि न स्यादिति गुरुशास्त्रादिवैफल्यमिति
180055 शङ्काशयः॥ २८॥
180056
180057 श्रीवसिष्ठ उवाच।
180058
180059 कारणासंभवादादावेवोत्पन्नं न किंचन।
180060 कुतश्चेत्यमतः शान्तं सर्वं सर्गस्तु विभ्रमः॥ २९॥
180061
180062 नोत्पन्नमेव किंचिदिति नित्यमुक्तताप्रतिबोधनेन जगद्बन्धविभ्रमशान्तिरेव
180063 शास्त्रादिफलमित्युत्तराशयः॥ २९॥
180064
180065 श्रीराम उवाच।
180066
180067 अत्र मे विगतोल्लेखे निश्चेत्यचलनादिके।
180068 सकृद्विभाते विमले विभ्रमः कस्य कीदृशः॥ ३०॥
180069
180070 अत्र मे ब्रूहयुत्तरमिति शेषः। विगतोल्लेखे वागगम्ये सकृद्विभाते सदा स्वप्रकाशे
180071 नित्यमुक्ते ब्रह्मणि विभ्रम एव कस्य कुतो वा निमित्तात्कीदृशः किंप्रकारश्च।
180072 अद्वयेन द्वैतलेशस्याप्यसहनादिति प्रश्नार्थः॥ ३०॥
180073
180074 श्रीवसिष्ठ उवाच।
180075
180076 कारणाभावतो राम नास्त्येव खलु विभ्रमः।

180077 सर्वं त्वमहमित्यादि शान्तमेकमनामयम् ॥ ३१ ॥
180078
180079 अस्तु शास्त्राधिगताद्वितीयब्रह्मतत्त्वदृशा विभ्रमोऽप्यनुपपन्नः । नैतावता
180080 कृतकार्य शास्त्रं विफलमित्युत्तराशयः ॥ ३१ ॥
180081
180082 श्रीराम उवाच ।
180083
180084 ब्रह्मन्भ्रममिवापन्नः प्रष्टुं जानामि नाधिकम् ।
180085 नात्यन्तं च प्रबुद्धोऽस्मि पृच्छामि किमिहाधुना ॥ ३२ ॥
180086
180087 एवं निरुत्तरीकृतो रामः प्रबोधदार्ढ्याभावादनिवृत्तसंशयः
180088 प्रश्नाशक्तिमेव स्वस्य दर्शयति - ब्रह्मन्निति ॥ ३२ ॥
180089
180090 श्रीवसिष्ठ उवाच ।
180091
180092 कारणस्यैव निकषं पृच्छ माऽऽकारणक्षयात् ।
180093 परे स्वभावेऽनिर्वाच्यै स्वयं विश्रान्तिमैष्यसि ॥ ३३ ॥
180094
180095 हे राम न निरुत्तरीकरणादप्रतिभामात्रेण प्रश्नादुपरमस्व किंतु
180096 प्रश्नकारणस्य संशयबीजस्य निकषोपलवत्सारासारतापरीक्षास्थानं मा मां
180097 आकारणक्षयाद्यावदाशङ्कं पृच्छ । ततः क्रमेण प्रश्नकारणसंशयानां
180098 तत्कारणस्याज्ञानस्य च निःशेषं क्षयात्परे स्वभावे विश्रान्तिमेष्यसि ॥ ३३ ॥
180099
180100 श्रीराम उवाच ।
180101
180102 मन्येऽहं कारणाभावात्पूर्वमेव न सर्गता ।
180103 उदिता तेन कस्यायं चेत्यचेतनविभ्रमः ॥ ३४ ॥
180104
180105 कारणाभावात्पूर्वं सर्गादावेव सर्गता नोदितेति त्वदुक्तं सिद्धान्तमहं मन्ये
180106 अवगच्छाम्येव तथापि ममायं चेत्यचेतनविभ्रमः कस्येति संशयो नापगच्छति
180107 तत्र को हेतुरिति प्रश्नाशयः ॥ ३४ ॥
180108
180109 श्रीवसिष्ठ उवाच ।
180110
180111 अकारणत्वात्सर्वत्र शान्तत्वाद्भ्रान्तिरस्ति नो ।
180112 अनभ्यासवशादेव न विश्राम्यति केवलम् ॥ ३५ ॥
180113
180114 यदि मदुक्तं सिद्धान्तं जानासि तर्हि
180115 अनभ्यासवशात्तज्ज्ञानादार्ढ्यादविश्रान्तिरेव ते वृथां
180116 नानासंशयहेतुरित्युत्तराशयः ॥ ३५ ॥
180117
180118 श्रीराम उवाच ।
180119
180120 कुतो भवेदनभ्यासो भवेदभ्यसनं कुतः ।
180121 कुतोऽभ्यासात्मिका भ्रान्तिरेषा पुनरुपस्थिता ॥ ३६ ॥
180122
180123 यत्र जगद्भ्रान्तेरपि कारणं नास्ति तत्राभ्यासात्मिका भ्रान्तिः कुतो हेतोरुपस्थिता
180124 स्यादिति प्रश्नार्थः ॥ ३६ ॥
180125
180126 श्रीवसिष्ठ उवाच ।
180127
180128 अनन्तत्वादनन्तस्य भ्रान्तिर्नास्ति च संप्रति ।

अभ्यासभ्रान्तिरखिलं महाचिद्घनमक्षतम् ॥ ३७ ॥

मास्तु कापि भ्रान्तिस्तथापि जीवन्मुक्तानां चिद्घनात्मकसर्ववस्तुभिर्व्यवहार##-

श्रीराम उवाच ।

उपदेश्योपदेशादावनया शब्दसंपदा ।
किमन्यद्वद मे ब्रह्मन्सर्वस्मिञ्छान्ततां गते ॥ ३८ ॥

जीवन्मुक्तानां भवदादीनां सर्वस्मिञ्जगद्भ्रमे शान्ततां गते सति
अनयाऽध्यात्मशास्त्ररूपया शब्दसंपदा
उपदेशार्हाणामस्मदादीनामुपदेशकायप्रवेशशक्तिपातादिना
प्रबोधनव्यवहारे किमन्यत्कारणं स्यादिति प्रश्नः ॥ ३८ ॥

श्रीवसिष्ठ उवाच ।

उपदेश्योपदेशात्म ब्रह्म ब्रह्मणि संस्थितम् ।
बोधात्मनि न मोक्षोऽस्ति न बन्धोऽस्तीति निश्चयः ॥ ३९ ॥

तेषामुपदेशादिसर्वव्यवहारात्मना ब्रह्मैव ब्रह्मणि संस्थितम् ।
अन्यादृशानां बन्धमोक्षतदुपायानां तत्त्वदृशा
अत्यन्ताप्रसिद्धेरित्युत्तराशयः ॥ ३९ ॥

श्रीराम उवाच ।

देशकालक्रियाद्रव्यभेदवेदनचेतसाम् ।
सर्वस्यासंभवे सर्वसत्ता कथमुपस्थिता ॥ ४० ॥

अज्ञदृष्टिप्रसिद्धा जगत्सत्ता तर्हि केन हेतुनोपस्थितेति प्रश्नः ॥ ४० ॥

श्रीवसिष्ठ उवाच ।

देशकालक्रियाद्रव्यभेदवेदनचेतसाम् ।
अज्ञानमात्रादितरा सत्ता नान्यास्ति नो पुरा ॥ ४१ ॥

अज्ञानहेतुनैवेत्युत्तरम् । यतो जीवन्मुक्तेः पुरा अन्या तदनुभवसिद्धा जगत्सत्ता नो ॥
४१ ॥

श्रीराम उवाच ।

बोध्यबोधकतापत्तेरभावाद्बोधता कथम् ।
द्वैतैक्यासंभवे ब्रह्मन्कारणासंभवे सति ॥ ४२ ॥

तत्त्वदृशा द्वैतैक्यासंभवे सति
बोध्यबोधकभावापत्तेरप्यभावात्तत्त्वबोधस्य बोधता वा कथम् न ह्यकर्मको
बोधशब्दो लोके प्रसिद्धोऽस्तीति प्रश्नार्थः ॥ ४२ ॥

श्रीवसिष्ठ उवाच ।

बोधेन बोधतामेति बोधशब्दस्तु बोध्यताम् ।
भवद्विषयमेवायमुचितो नास्मदादिषु ॥ ४३ ॥

अबुद्धं हि ब्रह्मबोधेन स्वाज्ञानक्षयफलाश्रयत्वेन बोध्यतां
बोधकर्मतामेति। तेनैव तु बोधशब्दोऽपि बोध्यतां
बोधफलवत्तालक्षणसकर्मकतामेति। इदं सर्वमज्ञानवद्धद्विषयमेव।
जीवन्मुक्तेष्वस्मदादिषु त्वज्ञानाभावान्न बोधस्य सकर्मकता निरूपयितुं
शक्येत्यर्थः॥ ४३॥

श्रीराम उवाच।

बोध एव यदाहंत्वमेति बोधान्यता तदा।
कुत एषा परेऽनन्ते नासावतिजलेऽमले॥ ४४॥

नास्मदादिष्विति वदता भवता जीवन्मुक्तेष्वप्यस्मच्छब्दप्रवृत्तिनिमित्तभूता
अहंता दर्शिता। सा च् नाबोधकार्यम्। तेष्वबोधाप्रसिद्धेः। अतः परिशेषाद्बोध एव
अहंतालक्षणं परिणाममेतीति वाच्यम्। तदा च बोधान्यता तस्य दुर्वारा असावहंता
हि ना जीवाख्यः पुरुषः। एषा च परे अनन्ते त्रिविधपरिच्छेदशून्ये अत एव
जलमतिक्रान्ते अतिजले जलादप्यतिशयिते अमले चिन्मात्रे त्वयि कुतः॥ ४४॥

श्रीवसिष्ठ उवाच।

यत्तद्बोधस्य बोधत्वं तदेवाहंत्वमुच्यते।
द्वित्वमत्रानिलस्पन्दद्दशोरिव निगद्यते॥ ४५॥

बोधैकरसस्यास्मदादेर्यद्बोधत्वं स्वरूपभूतं
तदेवानिलस्पन्दवद्वैकल्पिकव्यपदेशेनाहंत्वमस्माभिरुच्यते
नाज्ञवदभिमानप्रधानेन जीवपुरुषेणेत्युत्तरार्थः॥ ४५॥

श्रीराम उवाच।

सौम्याब्ध्यन्तस्तरङ्गादिर्यथादत्ते यथास्थितम्।
तथा स्वरूपमात्रात्म बोध्यं बोधोऽवबुद्धवान्॥ ४६॥

एवं चेत्समुद्रतरङ्गन्यायेन जीवन्मुक्तानां चिन्मयमेवाहंतादिजगत्
बोध्यबोधादित्रिपुटी चेति पर्यवसन्नमिति प्रश्नाशयः॥ ४६॥

श्रीवसिष्ठ उवाच।

एवं चेत्तत्कथं कः स्याद्दोषो द्वित्वादिदोषतः।
अनन्ते स्थित एकस्मिञ्छान्ते पूर्णे परे पदे॥ ४७॥

यद्येवं स्थितिरेव तत्त्वं तर्हि तया द्वैतैक्यासंभवे ब्रह्मन्कारणासंभवे सति इति
त्वदुद्भावितो द्वित्वादिप्रसक्तितो यः अद्वैतहानिलक्षणो दोषः स कथं स्यात् कश्च स्यात्
तस्मान्नैवं मन्तव्यमिति शुद्धाद्वैतमेवावलम्बस्वेत्यर्थः॥ ४७॥

श्रीराम उवाच।

कोऽत्र कल्पयिताहंत्वं भुङ्क्ते भोक्ता च कश्च वा।
यन्मूलं यज्जगद्भ्रान्तिरनन्ता प्रविजृम्भते॥ ४८॥

तर्हि शुद्धाद्वैतपक्षे अनिलस्पन्दवदहंत्वविकल्पं कल्पयिता को व्यवहारं
भुङ्क्ते। जगद्भ्रान्तिविकल्पस्यापि तथैवावर्जने पुनर्बन्धमोक्षकल्पनापि स्यादिति
प्रश्नार्थः॥ ४८॥

180233 श्रीवसिष्ठ उवाच।
180234
180235 ज्ञेयसत्तावबोधे हि बन्धनं सच्च नास्त्यलम्।
180236 ज्ञप्तेः सर्वार्थरूपत्वाद्बन्धमोक्षावतः कुतः॥ ४९॥
180237
180238 ज्ञेयार्थसत्यत्वाभिनिवेशे हि पुनर्बन्धनं प्रसज्जेत। तत्त्वविदां तु सत् ज्ञेयं
180239 अलं अत्यन्तं नास्ति। तत्त्वज्ञानेन बाधात्। ज्ञप्तिरेव हि तेषां प्रारब्धशेषभोगाय
180240 सर्वार्थाकारेव भासते नातः पुनर्बन्धादिकल्पनाप्रसक्तिरित्युत्तरार्थः॥ ४९॥
180241
180242 श्रीराम उवाच।
180243
180244 ज्ञप्तेर्बाह्यार्थता दीपान्नीलादीव प्रवर्तते।
180245 बाह्यस्त्वर्थोऽस्ति सद्रूपो ननु दृष्टोपलम्भनः॥ ५०॥
180246
180247 ननु न ज्ञप्तिः सर्वार्थरूपा। यतो दीपात्प्रकाशकान्नीलपीतादिरूपस्थितिरिव
180248 ज्ञप्तेर्वशाद्बाह्यघटपटाद्यर्थस्थितिः प्रवर्तते प्रथां लभते। तथा च
180249 दृष्टोपलम्भनं प्रत्यक्षादिसिद्धो बाह्योऽर्थः सद्रूपो ज्ञप्तिबलादेव सिद्धः
180250 कथं तयैवापलपितुं शक्य इति शङ्कार्थः॥ ५०॥
180251
180252 श्रीवसिष्ठ उवाच।
180253
180254 अकारणस्य कार्यस्य बाह्यस्यार्थस्य सत्यता।
180255 येयं सा भ्रान्तिमात्रात्मरूपिणी नेतराङ्गिका॥ ५१॥
180256
180257 यदा बाह्यार्थस्याकारणकत्वाद्वन्ध्यापुत्रसदृशत्वं प्राक्साधितं तदा तस्य
180258 येयमापातदर्शनप्रसिद्धा सत्यता सा शुक्तिरजतसत्यतेव भ्रान्तिमात्रात्मरूपिणी न
180259 तु इतरद्यथार्थबुद्धिरङ्गं साधकं यस्यास्तथाविधा। तत्त्वविदां तु
180260 भ्रान्तिमूलाज्ञाननाशात्तत्प्रसक्तिरेव नास्तीत्युत्तरार्थः॥ ५१॥
180261
180262 श्रीराम उवाच।
180263
180264 स्वप्नः सत्योऽस्त्वसत्यो वा दुःखं तावत्प्रयच्छति।
180265 तथैवेयं जगद्भ्रान्तिः क उपायोऽत्र कथ्यताम्॥ ५२॥
180266
180267 तात्कालिकार्थक्रियासामर्थ्यात्सत्योऽस्तु। प्रबोधबाध्यत्वादसत्यो वाऽस्तु। अत्र
180268 तच्चिकित्सायां क उपाय इति प्रश्नः स्पष्टः॥ ५२॥
180269
180270 श्रीवसिष्ठ उवाच।
180271
180272 एवं तावद्यथा स्वप्नस्तथेयं चेज्जगत्स्थितिः।
180273 तत्पिण्डग्रहतार्थानां सर्वैव भ्रान्तितोदिता॥ ५३॥
180274
180275 स्वप्नसाम्ये सिद्धे तत्त्वबोधेन तत्पिण्डग्रहताबाध एव सर्वदुःखशान्त्युपाय
180276 इत्युत्तराशयः। तत्तर्हि सर्वैव अर्थानां पिण्डग्रहताभ्रान्तितैवेति अर्थादुदितैव॥ ५३॥
180277
180278 श्रीराम उवाच।
180279
180280 किमेतावति संपन्ने संपन्नं भवति प्रियम्।
180281 कथं च शाम्यत्यर्थानां स्वप्नादौ पिण्डरूपता॥ ५४॥
180282
180283 आशयमप्रतिपद्य प्रश्नः स्पष्टः॥ ५४॥
180284

180285 श्रीवसिष्ठ उवाच ।
180286
180287 पूर्वापरपरामर्शात्पिण्डतार्थेषु शाम्यति ।
180288 स्वप्नेऽप्येवं स्थिते स्थूला भावना विनिवर्तते ॥ ५५ ॥
180289
180290 एवं पूर्वापरपरामर्शेन स्थिते अवश्यं प्रबोधोदये स्थूला स्वप्नभावना
180291 विनिवर्तते ॥ ५५ ॥
180292
180293 श्रीराम उवाच ।
180294
180295 भावना तनुतां याता यस्यासौ किं प्रपश्यति ।
180296 कथं शाम्यति तस्यायं संसारकुहरभ्रमः ॥ ५६ ॥
180297
180298 यस्य पूर्वापरविमर्शेन जगत्स्थौल्यभावना तनुतां याता स जीवन्मुक्तो जगत्किं
180299 कीदृशं प्रपश्यतीति प्रश्नः ॥ ५६ ॥
180300
180301 श्रीवसिष्ठ उवाच ।
180302
180303 उद्ध्वस्तमसदाभासमुत्पन्ननगरोपमम् ।
180304 वर्षप्रोन्मृष्टचित्राभं जगत्पश्यत्यवासनः ॥ ५७ ॥
180305
180306 उत्तरं स्पष्टम् ॥ ५७ ॥
180307
180308 श्रीराम उवाच ।
180309
180310 ततः किं तस्य भवति वासनातानवे स्थिते ।
180311 पिण्डग्रहे गतेऽर्थानां स्वप्नोपमजगत्स्थितेः ॥ ५८ ॥
180312
180313 ततस्तदनन्तरम् ॥ ५८ ॥
180314
180315 श्रीवसिष्ठ उवाच ।
180316
180317 संकल्परूपजगतः क्रमात्सापि विलीयते ।
180318 वासना तस्य तेनाशु स निर्वाति विवासनः ॥ ५९ ॥
180319
180320 उत्तरोत्तरभूमिकापरिपाकक्रमात् ॥ ५९ ॥
180321
180322 श्रीराम उवाच ।
180323
180324 अनेकजन्मसंरूढा शाखा प्रसवशालिनी ।
180325 भवबन्धकरी घोरा कथं शाम्यति वासना ॥ ६० ॥
180326
180327 श्रीवसिष्ठ उवाच ।
180328
180329 यथाभूतार्थविज्ञानाद्भ्रान्तिमात्रात्मनि स्थिते ।
180330 पिण्डग्रहवियुक्तेऽस्मिन्दृश्यचक्रे क्रमात्क्षयः ॥ ६१ ॥
180331
180332 भ्रान्तिमात्रात्मनि अस्मिन्दृश्यचक्रे यथाभूतार्थविज्ञानात्पिण्डग्रहविमुक्ते
180333 दग्धपटन्यायेन स्थिते सति प्रारब्धशेषभोगक्रमात्तस्यापि क्षय इत्यर्थः ॥ ६१ ॥
180334
180335 श्रीराम उवाच ।
180336

180337 पिण्डग्रहविमुक्तेऽस्मिन्दृश्यचक्रे क्रमान्मुने।
180338 संपद्यते किमपरं कथं शान्तिः प्रजायते॥ ६२॥
180339
180340 अपरं किं निर्विक्षेपतासाधकं संपद्यते इति प्रश्नः॥ ६२॥
180341
180342 श्रीवसिष्ठ उवाच।
180343
180344 पिण्डग्रहभ्रमे शान्ते चित्तमात्रात्मतां गते।
180345 निरोधगौरवोन्मुक्ते जगत्यास्थोपशाम्यति॥ ६३॥
180346
180347 भोगास्थाशान्तिः परवैराग्याख्या संपद्यत इत्युत्तरम्॥ ६३॥
180348
180349 श्रीराम उवाच।
180350
180351 बालसंकल्परूपेऽस्मिन्स्थिते जगति भासुरे।
180352 कथमास्थोपशमनं तादृग्दुःखाय किं नरः॥ ६४॥
180353
180354 बालसंकल्परूपे अतिपेलवतया स्थितेऽपि जगति दुःखहेत्वास्थोपशमनं कथम्। तर्हि
180355 तादृगत्यन्तपेलवसंकल्पः शिशुरपि नरो दुःखाय किम्। दुःखमनुभवन् कथं
180356 दृश्यते इत्यर्थः॥ ६४॥
180357
180358 श्रीवसिष्ठ उवाच।
180359
180360 संकल्पमात्रसंपन्ने नष्टे दुःखं कथं भवेत्।
180361 संकल्पचित्तमात्रं यत्तत्तावत्प्रविचार्यताम्॥ ६५॥
180362
180363 अविचारेण पेलवत्वापरिज्ञानादेव शिशोरपि दुःखम्। विचारेण तत्परिज्ञाने तु न
180364 तन्नाशादिना दुःखमिति त्वमपि विचारयेत्युत्तरमाह - संकल्पेति॥ ६५॥
180365
180366 श्रीराम उवाच।
180367
180368 कीदृशं भगवंश्चित्तं कथं तत्प्रविचार्यते।
180369 किं च संपद्यते ब्रूहि तस्मिन्सम्यग्विचारिते॥ ६६॥
180370
180371 प्रश्नः स्पष्टः॥ ६६॥
180372
180373 श्रीवसिष्ठ उवाच।
180374
180375 चितश्चेत्योन्मुखत्वं यत्तच्चित्तमिति कथ्यते।
180376 विचार एष एवास्य वासनानेन शाम्यति॥ ६७॥
180377
180378 एषः सांप्रतं त्वया मां पुरस्कृत्य क्रियामाणो महारामायणश्रवणरूप एव॥
180379 ६७॥
180380
180381 श्रीराम उवाच।
180382
180383 कियन्नाम भवेद्ब्रह्मन्न चेत्योन्मुखता चितेः।
180384 चित्तस्याचित्ततोदेति कथं निर्वाणकारिणी॥ ६८॥
180385
180386 चित्ते जीवति सति तन्निरोधसाध्या चितेरचेत्योन्मुखता कियत्कालं स्थास्यति।
180387 अतश्चित्तनाशोपायमेव वदेति प्रश्नार्थः॥ ६८॥
180388

180389 श्रीवसिष्ठ उवाच।
180390
180391 चेत्यं न संभवत्येव चित्किं चेतयते कुतः।
180392 चेत्यासंभवतश्चित्तसत्ता नास्ति ततश्चिरम्॥ ६९॥
180393
180394 चेत्यस्यासंभवदर्शनेन मार्जनमेव चित्तनाशोपाय इत्युत्तरार्थः॥ ६९॥
180395
180396 श्रीराम उवाच।
180397
180398 कथं न संभवत्येतच्चेत्यं यदनुभूयते।
180399 अपह्नवश्चानुभवे क्रियते कथमीदृशः॥ ७०॥
180400
180401 चेत्यं सर्वथा न संभवति चेत्तदनुभवस्य को विषय इति प्रश्नतात्पर्यार्थः॥ ७०॥
180402
180403 श्रीवसिष्ठ उवाच।
180404
180405 यादृक्स्यादज्ञविषयं जगत्तस्य न सत्यता।
180406 यादृक्च तज्ज्ञविषयं तदनाख्यं यदद्वयम्॥ ७१॥
180407
180408 अज्ञपरिज्ञातस्यापह्नवे अर्थात्तस्य तत्त्ववित्परिज्ञातनामरूपातीतवस्त्वेव विषय
180409 इत्युत्तरार्थः॥ ७१॥
180410
180411 श्रीराम उवाच।
180412
180413 त्रिजगत्कीदृगज्ञानां कथं तस्य न सत्यता।
180414 तज्ज्ञानां तु जगद्यादृक्तद्वक्तुं किं न युज्यते॥ ७२॥
180415
180416 प्रश्नः स्पष्टः॥ ७२॥
180417
180418 श्रीवसिष्ठ उवाच।
180419
180420 आद्यन्तद्वैतमज्ञानां तज्ज्ञानां तन्न विद्यते।
180421 जगच्च नो संभवति नित्यानुत्पन्नमादितः॥ ७३॥
180422
180423 आद्यन्तौ देशकालकृतपरिच्छेदौ द्वैतं वस्तुकृतपरिच्छेदश्च
180424 यस्मिंस्तथाविधं तत्तादृशं जगत्तज्ज्ञानां सांप्रतं न विद्यते आदितश्च न
180425 संभवतीति नित्यानुत्पन्नं शशविषाणवन्ध्यापुत्रप्रायमित्यर्थः॥ ७३॥
180426
180427 श्रीराम उवाच।
180428
180429 आदितो यदनुत्पन्नं न संभवति कर्हिचित्।
180430 असद्रूपमनाभासं कथं तदनुभूयते॥ ७४॥
180431
180432 अत्यन्ताऽसच्चेत्कथमर्थक्रियासमर्थमनुभूयत इति प्रश्नः॥ ७४॥
180433
180434 श्रीवसिष्ठ उवाच।
180435
180436 असदेव सदाभासमनुत्पन्नमकारणम्।
180437 जाग्रत्स्वप्नवदुद्भूतमर्थकृच्चानुभूयते॥ ७५॥
180438
180439 एवंविधापि जाग्रत्स्वप्नवदनुभूयत इत्युत्तरम्॥ ७५॥
180440

180441 श्रीराम उवाच।
180442
180443 स्वप्नादौ कल्पनादौ च यद्दृश्यमनुभूयते।
180444 तज्जाग्रद्रूपसंस्कारादनुष्ठानानुभूतितः॥ ७६॥
180445
180446 कल्पनादौ मनोराज्यवितर्कादौ। अनुष्ठानं जाग्रद्व्यवहारस्तदनुभवतः
180447 प्रसूतात्तद्रूपसंस्कारादित्यर्थः॥ ७६॥
180448
180449 श्रीवसिष्ठ उवाच।
180450
180451 किं जाग्रद्रूपमाहोस्विदन्यत्स्वप्नेऽनुभूयते।
180452 संकल्पे च मनोराज्ये इति मे वद राघव॥ ७७॥
180453
180454 संस्कारात्स्वप्ने किं जाग्रत्प्रसिद्ध एवार्थोऽनुभूयते उतान्य इति मे वदेति प्रश्नार्थः
180455 ॥ ७७॥
180456
180457 श्रीराम उवाच।
180458
180459 स्वप्नेषु कल्पनाद्येषु जाग्रदेवावभासते।
180460 संस्कारात्मतया नित्यं मनोराज्यभ्रमेषु च॥ ७८॥
180461
180462 तत्राद्यकल्पं रामः परिगृह्योत्तरमाह - स्वप्नेष्विति। जाग्रत् जाग्रत्प्रसिद्धोऽर्थ
180463 एव॥ ७८॥
180464
180465 श्रीवसिष्ठ उवाच।
180466
180467 तदेव जाग्रत्संस्कारात्स्वप्नश्चेदवभासते।
180468 तत्स्वप्ने लुठितं गेहं कथं प्रातरवाप्यते॥ ७९॥
180469
180470 लुठितं पातितं गेहं गृहम्। अर्थाभेदे स्वाप्नपातनस्य जाग्रत्पातनरूपत्वादिति
180471 भावः॥ ७९॥
180472
180473 श्रीराम उवाच।
180474
180475 न जाग्रदाजते स्वप्ने तद्ब्रह्मान्यत्तदेव हि।
180476 बुद्धमेतत्कथं त्वन्यदपूर्वमिव भासते॥ ८०॥
180477
180478 आद्यकल्पपरिग्रहे दूषिते रामो द्वितीयकल्पमवलम्बते - नेति। जाग्रदर्थः स्वप्ने
180479 न राजते न भासते किंत्वन्यत्। तच्च ब्रह्मैवेत्येतत्त्वदभिप्रेतं मया बुद्धम्।
180480 एतावांस्तु संदेहः परिशिष्टः - तदन्यद्ब्रह्म अपूर्वं जगदिव भासते इति॥ ८०॥
180481
180482 श्रीवसिष्ठ उवाच।
180483
180484 नानुभूतोऽनुभूतश्च चेतस्यर्थोऽवभासते।
180485 सर्गाद्यन्तादिमध्येषु स्वभ्यस्तस्त्विति भासते॥ ८१॥
180486
180487 नापूर्वमिव भासत इत्येव नियमः किंतु कश्चिदर्थो नानुभूतोऽपूर्व इति कश्चित्त
180488 प्रागनुभूतो नापूर्व इति चावभास्तेऽसौ च येन येनाकारेण
180489 सर्गाद्यन्तादिमध्येष्वनुभवोऽभ्यस्तः स इति तेन तेनाकारेण भासते। तत्र
180490 ब्रह्माकारताभ्यासे स्वभ्यस्ते तथैव भासिष्यत इति भावः॥ ८१॥
180491
180492 श्रीराम उवाच।

180493
180494 एवं स्वप्नात्मकं भाति जगदित्येव बुद्धवान्।
180495 ग्रहवत्स्वप्नयक्षोऽयं कथं ब्रह्मंश्चिकित्स्यते॥ ८२॥
180496
180497 एवं त्वया बोधितोऽहं जाग्रज्जगदपि स्वप्नात्मकमेव भातीत्येव बुद्धवान्।
180498 तथाविधोऽप्ययं जगद्यक्षो ग्रहवद्बाधते अतः कथं चिकित्स्यते॥ ८२॥
180499
180500 श्रीवसिष्ठ उवाच।
180501
180502 योऽयं संसरणस्वप्नः स किंकारणको भवेत्।
180503 कार्यान्न कारणं भिन्नमिति दृष्टं विचारय॥ ८३॥
180504
180505 कारणपरीक्षणेन स चिकित्सनीय इत्याशयेन वसिष्ठस्तत्कारणं पृच्छति -
180506 योऽयमिति॥ ८३॥
180507
180508 श्रीराम उवाच।
180509
180510 चित्तं स्वप्नोपलम्भानां हेतुस्तस्मात्तदेव ते।
180511 विश्वं चाद्यन्तरहितमनासारमनामयम्॥ ८४॥
180512
180513 उत्तरं स्पष्टम्॥ ८४॥
180514
180515 श्रीवसिष्ठ उवाच।
180516
180517 एवं चित्तं महाबुद्धे महाचिद्घनमेव तत्।
180518 तथास्थितं न स्वप्नादि किंचनास्तीतरात्मकम्॥ ८५॥
180519
180520 चित्तं च चेत्योन्मुखी चिदेवेत्यसकृदुक्तमेवेति तच्चितं महाचिद्घनमेव। तथा च
180521 तदेव जगदाकारमिव स्थितमिति सिद्धमित्यर्थः॥ ८५॥
180522
180523 श्रीराम उवाच।
180524
180525 अवयवावयविनोर्यथा भिन्नस्तथा स हि।
180526 तत्रानवयवे ब्रह्मण्येकता जगदादिना॥ ८६॥
180527
180528 तर्हि वृक्षशाखान्यायेन भेदाभेदेन ब्रह्मणि जगत्स्थितमित्येव कुतो नोच्यते न
180529 स्वप्नादि किंचन अस्तीति कुतो निषिध्यते इति रामः शङ्कते - अवयवेति। यथा
180530 अवयवानां शाखादीनामवयविनो वृक्षस्य च तादात्म्यलक्षण एकीभावो भिन्नो
180531 भेदसहिष्णुस्तथा चित्तजगतोरप्यस्तु। तत्र जगदादिना समष्टिचित्तेन अनवयवे
180532 ब्रह्मण्येकतास्त्वित्यर्थः॥ ८६॥
180533
180534 श्रीवसिष्ठ उवाच।
180535
180536 एवं न संभवत्येव नित्यानुत्पन्नमादितः।
180537 जगत्तेनाजरं शान्तमजं सर्वमवेधितम्॥ ८७॥
180538
180539 परिहरति - एवमिति। एवं् कल्पना न संभवत्येव। यत आदितो विमर्शे ब्रह्मणि
180540 कारणाभावाज्जगन्नित्यानुत्पन्नम्। न हि मायिककल्पनामात्रेणावयवावयविभावो
180541 भेदाभेदो वा भवति। मरुनदीगन्धर्वनगरादेरपि
180542 मरीचिनभःप्रभृत्यवयवताप्रसङ्गादिति भावः।
180543 अवेधितमच्छिद्रितमखण्डितमिति यावत्॥ ८७॥
180544

180545 श्रीराम उवाच।
180546
180547 काकतालीयवन्मन्ये सर्गाद्यान्तादयो भ्रमाः।
180548 भ्रान्तिद्रष्टृत्वभोक्तृत्वसहिताः परमे पदे॥ ८८॥
180549
180550 एवं समाहितो रामः परिशिष्टां सैद्धान्तिकीं स्थितिमेवावलम्ब्याह -
180551 काकतालीयवदिति॥ ८८॥
180552
180553 श्रीवसिष्ठ उवाच।
180554
180555 या व्यापारवती रसाद्रसविदां काचित्कवीनां नवा दृष्टिर्या
180556 परिनिष्ठितार्थविषयोन्मेषा च वैपश्चिती।
180557 ते द्वे अप्यवलम्ब्य विश्वमखिलं निर्वर्णितं निर्वृतं यावद्दृष्टिदृशो
180558 न सन्ति कलिता नो शून्यता नो भ्रमः॥ ८९॥
180559
180560 एवं जगद्भ्रान्तिमात्रमेवेति निश्चितवन्तं रामं प्रति सापि
180561 भ्रान्तिर्दृष्टिद्वयमूलकेन शास्त्रीयविचारेण मया निराकृतेति वसिष्ठ उपसंहरति
180562 - येति। त्रिविधा हि प्रसिद्धा दृष्टिः।
180563 पामरदृष्टिर्यौक्तिकदृष्टिस्तत्त्वदृष्टिश्चेति। तत्रादौ प्रथमा उत्तराभ्यां
180564 द्वाभ्यां निराकार्या द्वितीया त्वन्ते तृतीययेत्याशयेन उत्तरे द्वे दृष्टी अवलम्ब्य
180565 मयेदमखिलं विश्वं तत्त्वतो निर्वर्णितम्। के ते द्वे। रसाद्रसविदां सारादपि सारं
180566 निर्मथ्य बोद्धुं समर्थानां कवीनां प्रमाणप्रमेयतत्त्वपरीक्षाकुशलानां
180567 पटुतरविचारव्यापारवती अतिनिष्कर्षरूपत्वादभिनवा या काचिद्दृष्टिः सैका। या
180568 चापरा सर्वविचारशास्त्रश्रवणमनननिदिध्यासनपरिपाकपरिनिष्ठितो यः
180569 परमतत्त्वरूपोऽर्थस्तन्मात्ररूपस्य विषयस्य उन्मेषः अपरोक्षतया स्फुरणं
180570 यस्यां चरमसाक्षात्कारवृत्तौ तादृशी वैपश्चिती विपश्चित्सु जीवन्मुक्तेषु
180571 प्रसिद्धा सा च। ते द्वे दृष्टी अवलम्ब्यास्मिन् शास्त्रे कियत्पर्यन्तं विश्वं
180572 निर्वर्णितं तदाह - यावदिति। यावद्दृष्टयश्च तद्दृशो जीवाश्च कालत्रयेऽपि
180573 न सन्ति। जगतः शून्यतापि न कलिता भ्रमश्च न
180574 कलितस्तावन्नित्यापरोक्षपरमानन्दब्रह्मात्मैकवस्तुस्थितिपर्यन्तमिति यावत्॥ ८९॥
180575
180576 इत्यार्षे श्रीवासिष्ठमहरामायणे वा० दे० मो० नि० उ० रामविश्रान्तिर्नाम
180577 नवत्यधिकशततमः सर्गः॥ १९०॥
180578
180579 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
180580 रामविश्रान्तिर्नाम नवत्यधिकशततमः सर्गः॥ १९०॥
180581
180582
180583 एकनवत्यधिकशततमः सर्गः १९१
180584
180585 श्रीराम उवाच।
180586
180587 एवं चेत्तन्मुनिश्रेष्ठ परमार्थमयं जगत्।
180588 सर्वदा सर्वभावात्मा नोदेति न च शाम्यति॥ १॥
180589
180590 ब्रह्मैव जगदाकारं यथा भात्यप्रबोधतः।
180591 प्रबुद्धमात्रनिर्वाणं तत्सम्यगिह वर्ण्यते॥
180592
180593 एवं प्रतिबोधितो रामः सैद्धान्तिकं पक्षं प्रतिपद्याभिलपति - एवं
180594 चेदित्यादिना। परमार्थमयं परतत्त्वविवर्तः॥ १॥
180595
180596 भ्रान्तिरेवेयमाभाति जगदाभासरूपिणी।

180597 भ्रान्तिरेवापि वा नैव ब्रह्मसत्तैव केवला ॥ २ ॥
180598
180599 भ्रान्तिर्विक्षेपशक्तिप्रधाना अविद्या यौक्तिकदृशा तत्त्वदृशा तु सापि नैव ॥ २ ॥
180600
180601 श्रीवसिष्ठ उवाच ।
180602
180603 काकतालीयवद्ब्रह्म यद्भातीवात्मनात्मनि ।
180604 स तेनैवात्मनात्मैव जगदित्यवबुध्यते ॥ ३ ॥
180605
180606 श्रीरामोक्तमनुमोदमानो वसिष्ठस्तदेवाह - काकतालीयवदिति ।
180607 काकतालीयवदतर्क्यया अविद्यया आत्मना जीवभूतेन तेनैव ब्रह्मणा ॥ ३ ॥
180608
180609 श्रीराम उवाच ।
180610
180611 कथं तपत्यहोऽदिक्कं सर्गस्यादौ परत्र च ।
180612 कथं भित्त्या विना भाति वद दीपप्रभा मुने ॥ ४ ॥
180613
180614 महाप्रलयकाले
180615 स्वालम्बनदिग्विभागादिशून्यंअपरिच्छिन्नचित्प्रकाशमसंभावयन्निव सविस्मयं
180616 रामः पृच्छति - कथमिति । अदिक्कं दिग्भागं विना सर्गस्यादौ प्रलयकाले
180617 परत्र मोक्षे च कथं तपति प्रकाशते । अहो इत्याश्चर्ये । भित्त्या आलम्बनेन । तथा च
180618 विनालम्बनं प्रभाया इव चिदात्मनोपि तथा असंभाव्येत्यर्थः ॥ ४ ॥
180619
180620 श्रीवसिष्ठ उवाच ।
180621
180622 इत्थंरूपमिदं भाति चितिरूपप्रभाप्रभा ।
180623 पश्य सैवात्मनाश्ते यत्प्रकाशादिभिरेव च ॥ ५ ॥
180624
180625 अन्यत्रादृष्टमत्याश्चर्यमप्येतत्प्रमाणानुभवबलादेव संभावनीयमिति
180626 समाधत्ते - इत्थंरूपमिति । इदमित्थंरूपमत्याश्चर्यमेव । विभुं
180627 चिदानन्दमरूपमद्भुतम् इति श्रुतेः । आश्चर्यवत्पश्यति कश्चिदेनम् इति
180628 भगवद्वचनाच्च । तथापि नासंभावना कार्या । अन्वयव्यतिरेकाभ्यां परीक्ष्य त्वं
180629 पश्य । यद्यस्मात्सैव चितिरूपा सूर्यादिप्रभाया अपि प्रभा अन्धकारकाले आत्मनैव
180630 प्रथमाना आस्ते । सूर्योदयाद्यनन्तरं प्रकाशादिभिः सहाप्यास्ते ॥ ५ ॥
180631
180632 भित्तौ प्रकाशो भातीव तत्कुड्यं भासनं च तत् ।
180633 दृश्यस्यासंभवादादौ वक्ता द्रष्टा प्रदृश्यताम् ॥ ६ ॥
180634
180635 सूर्यादिप्रकाशोऽपि भित्त्यादिनिरपेक्षप्रकाशस्वभाव एव सन् भित्तौ भातीव  न हि तस्य
180636 प्रकाशता भित्तिप्रयुक्ता । प्रत्युत कुड्यं तद्भासनं च तत्स्वप्रकाशताबलादेव
180637 संपद्यते । प्रकाशैकरस्येनैव कुड्यप्रथनात् । तत्र
180638 यथाकुड्यादिसंबन्धात्प्राङ्नभसि प्रकाशो दृश्यते तथा सर्गस्यादौ प्रलयेऽपि
180639 वक्ता श्रोता चायमात्मा निर्विषयो दृश्यतामित्यर्थः ॥ ६ ॥
180640
180641 तस्माद्द्रष्टास्ति नो दृश्यं नैवास्तीदमनामयम् ।
180642 चित्प्रभैवात्मना भित्तिर्भवत्याभासनं तथा ॥ ७ ॥
180643
180644 एवंनिरालम्बनचित्संभावनसिद्धेः सैव सर्गादौ जगदाकारेण संपन्नेति
180645 संभावयेत्याह - तस्मादिति । भित्तिर्मूर्तमालम्बनमाभासनं सूर्यादिप्रभा
180646 यथा तथैव ॥ ७ ॥
180647
180648 द्रष्टृदृश्यात्मिकैकैव स्वात्मनैव विराजते ।

180649 स्वप्नादिषु यथेहाद्य द्रष्टृदृश्यात्मिका सती ॥ ८ ॥
180650
180651 एकस्या एव चितस्त्रिपुटीभावः स्वप्नादिष्वपि प्रसिद्ध एवेत्याह - द्रष्टृिति ॥ ८ ॥
180652
180653 चिद्भात्येव हि सर्गादौ कचन्ती भाति सर्गवत् ।
180654 भासनीयं च भानं च रूपं यत्र स्वयंप्रभा ॥ ९ ॥
180655
180656 यत्र यस्मिन्सर्गादिकाले ॥ ९ ॥
180657
180658 एकैव चित्त्रयं भूत्वा सर्गादौ भाति सर्गवत् ।
180659 एष एव स्वभावोऽस्या यदेवं भाति भासुरा ॥ १० ॥
180660
180661 स्वभावो मायाश्क्तिः ॥ १० ॥
180662
180663 एतत्तु स्वप्नसंकल्पनगरेष्वनुभूयते ।
180664 इत्थं नाम तपत्येषा चिद्दीप्तिः प्रथमोदिता ॥ ११ ॥
180665
180666 तपति प्रकाशते ॥ ११ ॥
180667
180668 नभस्येव नभोरूपा यदिदं भासते जगत् ।
180669 अनाद्यन्तमिदं तस्याः सर्गाः सर्गात्मभासनम् ॥ १२ ॥
180670
180671 तस्याः सर्गात्मना भासनं भानमेव सर्गाः ॥ १२ ॥
180672
180673 स्वभावभूतमस्माकं त्विदं भाति महात्मनाम् ।
180674 भास्यभासकसंवित्तिर्नश्यति प्रतिभामिता ॥ १३ ॥
180675
180676 अज्ञानामेवेदमाश्चर्यवद्भाति नास्माकमित्याह - स्वभावभूतमिति ।
180677 अकस्मात्प्रतिभामितापि झटित्येव तत्त्वानुसंधानेन नश्यति ॥ १३ ॥
180678
180679 तदा तु नाम सर्गादौ नासीद्भास्यो न भासकः ।
180680 मिथ्याज्ञानवशादेव स्थाणौ पुंस्प्रत्ययो यथा ॥ १४ ॥
180681
180682 कथं तत्त्वानुसंधानं तदाह - तदा त्विति ॥ १४ ॥
180683
180684 तथात्मनि द्वित्ाभानाच्चित्ते द्वैतविभासनम् ।
180685 सर्गादौ न च भास्योस्ति न च वा नास्ति भासकः ॥ १५ ॥
180686
180687 भासकश्चिदात्मा तु न नास्ति अवश्यमस्त्येव । वाशब्दः समुच्चये [पक्षान्तरे इति
180688 पाठः ।] ॥ १५ ॥
180689
180690 कारणाभावतोद्वैतं चिद्व्योमाभाति केवलम् ।
180691 किं नाम कारणं ब्रूहि सर्गादौ चिति वस्तुतः ॥ १६ ॥
180692
180693 अभावादर्थदृष्टीनां चिदेवेत्थं प्रकाशते ।
180694 जगद्भानमिदं यत्तन्न जाग्रन्न सुषुप्तकम् ॥ ११७ ॥
180695
180696 सर्गादौ जगद्भानस्य जाग्रदाद्यवस्थात्रयानन्तर्भावादपि तुर्यचिदेवेत्थं
180697 प्रकाशत इत्याह - अभावादिति ॥ १७ ॥
180698
180699 न स्वप्नोऽसंभवाद्दृश्यं केवलं ब्रह्म भासते ।
180700 चिन्मात्रव्योमसर्गादावित्थं कचकचायते ॥ १८ ॥

180701
180702 यत्स्वमेव वपुर्वेत्ति जगदित्यजगन्मयम् ।
180703 चिन्मात्रव्योमसर्गादावित्थं भाति विकासनम् ॥ १९ ॥
180704
180705 विकासनमित्युत्तरान्वयि ॥ १९ ॥
180706
180707 यदिदं जगदित्येव शून्यत्वाम्बरयोरिव ॥ २० ॥
180708
180709 शून्यत्वाम्बरयोर्भेदविकल्पविकासनम् ॥ २० ॥
180710
180711 बुद्ध्वा च यावत्स्वनुभूतियुक्तं स्थातव्यमेतेन विकल्पमुक्तम् ।
180712 पाषाणमौनं कुजनेन तूक्तं न ग्राह्यमज्ञेन हि भुक्तमुक्तम् ॥ २१ ॥
180713
180714 वर्णितं तत्त्वानुसंधानप्रकारमुपसंहरति - बुद्ध्वेति । एतेन
180715 मदुक्ततत्त्वानुसंधानोपायेन तत्त्वं बुद्ध्वा यावद्भूमिकापरिपाकक्रमेणेदं
180716 स्वनुभूतियुक्तं दृढं भवति तावद्विकल्पमुक्तं यथा स्यात्तथा
180717 पाषाणमौनं निरुद्धवागादिव्यापारं निर्विकल्पसमाधौ स्थातव्यम् । अज्ञेन स्वेन
180718 परेण च अनादौ संसारे पुनःपुनर्भुक्तं वैराग्यातिशयेन सांप्रतं मुक्तं
180719 त्यक्तं बाह्यविषयजातं तु कुजनेन भुंक्ष्वेत्युक्तमपि न ग्राह्यम् । विषयग्रहणस्य
180720 भोगलाम्पट्यहेतुतया समाधिसुखविघातकत्वादिति भावः ॥ २१ ॥
180721
180722 इत्यार्षे श्रीवासिष्ठम० वा० दे० मो० नि० उ० महावादबोधनं
180723 (तत्त्वानुसंधानं) नामैकनवत्यधिकशततमः सर्गः ॥ १९१ ॥
180724
180725 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
180726 महावादबोधनं नामैकनवत्यधिकशततमः सर्गः ॥ १९१ ॥
180727
180728
180729 द्विनवत्यधिकशततमः सर्गः १९२
180730
180731 श्रीराम उवाच ।
180732
180733 अहो नु सुचिरं कालं संभ्रान्ता वयमन्तरे ।
180734 अपरिज्ञातमात्रेण संसारपरमाम्बरे ॥ १ ॥
180735
180736 इह प्रबुद्धो रामः स्वं प्रबोधं गुरुसन्निधौ ।
180737 यथा चिन्मात्रमेवेदं तथा विस्तरतोऽब्रवीत् ॥
180738
180739 सर्वसंदेहनिवृत्त्या सम्यक्प्रबुद्धो रामः सुप्तोत्थितः स्वप्नभ्रान्तिमिव
180740 संसारभ्रान्तिमाश्चर्यतया स्मरन्नाह - अहो इत्यादिना । संसारलक्षणे परमे
180741 निरवधौ अम्बरे तत्राप्यन्तरे एतद्ब्रह्माण्डैकदेशे सुचिरं कालं
180742 वयमपरिज्ञातमात्रेणात्मतत्त्वेन संभ्रान्ताः ॥ १ ॥
180743
180744 बुद्धे यावदियं नाम जगद्भ्रान्तिर्न किंचन ।
180745 न चाभून्न च वास्तीयं न च नाम भविष्यति ॥ २ ॥
180746
180747 बुद्धे आत्मतत्त्वे तु यावदिति साकल्ये । तथा चोक्तं सुरेश्वरवार्तिके
180748 तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः । अविद्या सह कार्येण नासीदस्ति
180749 भविष्यति इति ॥ २ ॥
180750
180751 सर्वं शान्तं निरालम्बं विज्ञानं केवलं स्थितम् ।
180752 अनन्तं चिद्घनं व्योम नीरागमपकल्पनम् ॥ ३ ॥

यतः अपकल्पनमत एव तद्रञ्जनाभावान्नीरागम् ॥ ३ ॥

परमाकाशमेवेदमपरिज्ञातमात्रकम् ।
संसारतामिवास्माकं गतं चित्रमहो नु भोः ॥ ४ ॥

इत्थं द्वैतमिदं भातमिमे लोका इमेऽद्रयः ।
परमाकाशमित्यच्छमेवानच्छमिव स्थितम् ॥ ५ ॥

सर्गादौ परलोकादौ स्वप्नादौ कल्पनादिके ।
चिदेव चेत्यवद्भाति कुतोऽन्या किल दृश्यधीः ॥ ६ ॥

कल्पना काव्यरचना । आदिपदान्मनोराज्य परिग्रहः ॥ ६ ॥

स्वर्गे वा नरके वापि स्थितोऽस्मीति मतिर्यदि ।
तत्तस्या नरकस्यान्तो दृश्यं संविन्मयात्मकम् ॥ ७ ॥

मतिर्भ्रान्तिः । तत्तस्या भ्रान्तेर्वशात्तस्य पुंसां नरकस्य अन्तोबन्धः । अति बन्धने
घञ् ॥ ७ ॥

नेदं दृश्यं न च द्रष्टा न सर्गो न जगन्न चित् ।
न जाग्रत्स्वप्नसिद्धादि किमपीदं तदप्यसत् ॥ ८ ॥

चित् चिदाभासः ॥ ८ ॥

कुतोऽस्याः संभवो भ्रान्तेरिति चेद्दृश्यते मुने ।
तदेतदपि नो युक्तं भ्रान्त्यभावानुभूतितः ॥ ९ ॥

भ्रान्तेरसद्रूपत्वात्तत्कारणचिन्ताप्ययुक्तैवेत्याह - कुत इति । दृश्यते आलोच्यते ॥ ९
। ।

भ्रान्तिर्न संभवत्येव निर्विकारे ज्ञतापदे ।
यत्त्विदं भ्रान्तिताज्ञानं तत्तदेवेतरन्न तत् ॥ १० ॥

ज्ञता तत्त्वज्ञानं तत्पदे ॥ १० ॥

निरन्तरे निराद्यन्ते व्योम्नि शैलोदरेऽथवा ।
कुतोऽन्यताकल्पकं स्याज्ज्ञपदे चाविकारिणि ॥ ११ ॥

निरन्तरे अन्तरालशून्ये शैलोदरे स्फटिकशिलागर्भे वा ॥ ११ ॥

मिथ्यैवानुभवो भ्रान्तेः स्वप्ने स्वमरणोपमः ।
यदनालोकनं नाम शाम्यतीदं विलोकनात् ॥ १२ ॥

मृगतृष्णाम्बुगन्धर्वनगरद्वीन्दुविभ्रमः ।
तथाऽविद्याभ्रमश्चायं विचारान्नोपलभ्यते ॥ १३ ॥

द्वीन्दुविभ्रमो यथेति शेषः ॥ १३ ॥

बालवेतालवद्भ्रान्तिर्न विद्या जाग्रगापि हि ।
अविचारेण संरूढा विचारेणोपशाम्यति ॥ १४ ॥

180805 जागरणं जाग्रः घञर्थे कः। जागरे प्रत्यक्षदृष्टापि न विद्या न यथार्था॥ १४
180806 ।।
180807
180808 कुत आसीदितिमुने नात्र प्रश्नो विराजते।
180809 सत एव विचारेण लाभो भवति नासतः॥ १५॥
180810
180811 इयं भ्रान्तिः कुतो निमित्तादासीदिति प्रश्नोऽप्यत्र न विराजते। विचारार्थं हि प्रश्नः स
180812 चात्र निष्फलः। तन्मूलस्याज्ञानस्यासतो निर्णेयत्वायोगादित्यर्थः॥ १५॥
180813
180814 प्रामाणिकविचारेण प्रेक्षितं यन्न लभ्यते।
180815 तदेतदसदेवादि तत्तर्ह्यनुभवो भ्रमः॥ १६॥
180816
180817 अज्ञानस्यासत्त्वं प्रमाणपूर्वकविचारालभ्यत्वादेवेत्याह - प्रामाणिकेति।
180818 आदिजगन्मूलमज्ञानम्। तत्तस्मात्कारणादेव हि तदनुभवाद्भ्रमः॥ १६॥
180819
180820 यन्नास्तीति परिच्छिन्नं प्रमाणैः सुविचारितम्।
180821 खपुष्पशशशृङ्गाभं तत्कथं लभ्यते सतः॥ १७॥
180822
180823 अज्ञानं तत्कार्य च सन्मूलकमेव किं न स्यात्तत्राह - यदिति।
180824 प्रमाणैर्वाचारम्भणेत्यादिश्रुतिभिः [वाचारम्भणश्रुत्यादिभिः इति पाठः।
180825 ]॥ १७॥
180826
180827 सर्वतः प्रेक्ष्यमाणोऽपि यः कुतश्चिन्न लभ्यते।
180828 तस्य स्यात्कीदृशी सत्ता वन्ध्यातनयरूपिणः॥ १८॥
180829
180830 तर्हि जगदपि सदेव किं न स्यात्तत्राह - सर्वत इति। कुतश्चित्कारणात् प्रमाणाच्च॥
180831 १८॥
180832
180833 भ्रान्तिर्न संभवत्येव तस्मात्काचित्कदाचन।
180834 निरावरणविज्ञानघनमेवेदमाततम्॥ १९॥
180835
180836 यत्किंचिज्जगदद्यात्र भातीदं परमेव तत्।
180837 परं परे परापूर्णे पूर्णमेवावतिष्ठते॥ २०॥
180838
180839 परेण निरतिशयानन्देन आपूर्णे परे ब्रह्मस्वरूपे परं तदेव स्वे
180840 महिम्न्यवतिष्ठते॥ २०॥
180841
180842 न भातं न च नाभातमिह किंचित्कदाचन।
180843 इदमित्थं स्थितं स्वच्छं शान्तमेव जगद्वपुः॥ २१॥
180844
180845 अजममरमहार्यमार्यजुष्टं परमविकारि निरामयं समन्तात्।
180846 पदमहमुदितं ततं हि शुद्धं निरहमनेकमथाद्वयं विकासि॥ २३॥
180847
180848 कीदृशं तत्पदमवतिष्ठते तदाह - अजमिति। अहार्य परैरपहर्तुमशक्यम्।
180849 आर्यैर्विद्वद्भिर्जुष्टं समन्तात्पूर्णमहमेव निरहं सत् बोधादुदितम्।
180850 आवरणपरिच्छेदभङ्गात्सर्वतोविकासि॥ २२॥
180851
180852 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० नि० उ०
180853 विश्रान्त्युपगमवर्णनंनाम द्विनवत्यधिकशततमः सर्गः॥ १९२॥
180854
180855 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
180856 विश्रान्त्युपगमवर्णनं नाम द्विनवत्यधिकशततमः सर्गः॥ १९२॥

180857
180858 त्रिनवत्यधिकशततमः सर्गः १९३
180859
180860 श्रीराम उवाच।
180861
180862 अनादिमध्यपर्यन्तं न देवा नर्षयो विदुः।
180863 यत्पदं तदिदं भाति क्व जगत्क्व च दृश्यता॥ १॥
180864
180865 इह रामः प्रबोधेनाऽज्ञाननिद्राक्षये क्षणात्।
180866 निर्मृष्टनिखिलद्वैतनित्यात्मस्थितिमब्रवीत्॥
180867
180868 देवाः कर्मोपासनसिद्धाः। ऋषयस्तपोयोगसिद्धाः। अथवा
180869 चक्षुरादिबाह्यान्तःकरणान्येवात्र देवा ऋषयश्च। ते ह देवा उद्गीथमाजहुः।
180870 इमावेव गौतमभरद्वाजौ इत्यादिश्रुतेः॥ १॥
180871
180872 द्वैताद्वैतसमुद्भेदवाक्यसंदेहविभ्रमैः।
180873 अलमस्माकमाशान्तमाद्यं रूपमनामयम्॥ २॥
180874
180875 द्वैताद्वैतयोरनुसंधाने यो मनसि समुद्भेदस्तत्प्रयुक्तैर्वाक्यव्यवहारैः
180876 संदेहैर्विभ्रमैश्चास्माकं अलम्। प्रयोजनं नास्तीत्यर्थः। आद्यं सर्वादौ सदेव
180877 सोम्येदमग्र आसीदेकमेवाद्वितीयम् इति श्रुतिसिद्धं यद्रूपं तदिदं सर्व
180878 भातीत्यनुकृष्यते॥ २॥
180879
180880 व्योमनि व्योमभावानां प्रशान्तं यादृगासितम्।
180881 तादृक्चिद्व्योमनि स्फारत्रिजगद्व्योमभासनम्॥ ३॥
180882
180883 संप्रति जगद्भानं कीदृक्संपन्नं तदाह - व्योमनीति। व्योमभावानां
180884 केशोण्ड्रकमुक्तावलीगन्धर्वनगरादीनाम्॥ ३॥
180885
180886 यथा व्योमनि व्योमत्वं दृषत्त्वं दृषदि स्थितम्।
180887 जलत्वं च जलस्यान्तर्जगत्त्वं चिद्घने तथा॥ ४॥
180888
180889 व्योमादौ व्योमत्वादियथा अभेदेन सामान्यरूपेण तद्भावेन च स्थितं तथेत्यर्थः
180890 ॥ ४॥
180891
180892 साहंतादिजगद्दृश्यमाशाकाशविसार्यपि।
180893 महाचिदुदरं विद्धि खं शान्तं शून्यतोदितम्॥ ५॥
180894
180895 आशासु दिक्षु आकाशे च विसारि असंख्येयतया विस्तृतमपि शून्यतया उचितं
180896 शून्यतोदितम्॥ ५॥
180897
180898 जीवस्यास्मिन्विमूढस्य परेऽपरिमितोदये।
180899 प्रस्फुरंश्चापि संसारपिशाच उपशाम्यति॥ ६॥
180900
180901 अपरिमितोदये अस्मिन्परे ब्रह्मणि दृष्टमात्रे जीवस्य संसारपिशाच उपशाम्यति॥ ६॥
180902
180903 भेदोपलब्धिर्गलति व्यवहारवतोऽप्यलम्।
180904 जडस्येवाजडस्यैव वीचेरिव जलोदरे॥ ७॥
180905
180906 कथमुपशाम्यति तदाह - भेदोपलब्धिरिति। लडयोरभेदाज्जलस्यापीत्यपि वीचिपक्षे
180907 ॥ ७॥
180908

180909 क्वाप्यज्ञानरवौ याते प्रतापाद्याकरे भृशम् ।
180910 संसारसत्तादिवसो यात्यस्तं स निशागमः ॥ ८ ॥
180911
180912 प्रताप आध्यात्मिकादित्रिविधसंताप आदिपदाद्विषयतृष्णा तदाकारे ।
180913 अस्तमदर्शनं याति स मोक्षसुखविश्रान्तिहेतुर्निशागमः ॥ ८ ॥
180914
180915 भावाभावेषु कार्येषु जरामरणजन्मसु ।
180916 ज्ञ आजवं जवीभावे तिष्ठन्नपि न तिष्ठति ॥ ९ ॥
180917
180918 आजवं जवीभावे व्यवहारविक्षेपे च ॥ ९ ॥
180919
180920 नाविद्यास्ति ह न भ्रान्तिर्न दुःखं न सुखोदयः ।
180921 विद्याऽविद्या सुखं दुःखमिति ब्रह्मैव निर्मलम् ॥ १० ॥
180922
180923 परिज्ञातं सदेतत्तु यावद्ब्रह्मैव निर्मलम् ।
180924 अपरिज्ञातमस्माकमब्रह्मात्म न विद्यते ॥ ११ ॥
180925
180926 अस्माकं तत्त्वविदाम् ॥ ११ ॥
180927
180928 प्रबुद्धोऽस्मि प्रशान्ता मे सर्वा एव कुदृष्टयः ।
180929 शान्तं समं सोहमिदं खं पश्यामि जगत्त्रयम् ॥ १२ ॥
180930
180931 समं सर्वद्वैतवैषम्यरहितम् ॥ १२ ॥
180932
180933 सम्यग्ज्ञातं यावदिदं जगद्ब्रह्मैव केवलम् ।
180934 अज्ञातात्माभवद्ब्रह्म ज्ञातात्मन्यधुना स्थितम् ॥ १३ ॥
180935
180936 नाहं कश्चित्प्रागधुनाप्यन्यः किंतु ब्रह्मैव प्रागज्ञात आत्मा येन
180937 तथाविधमभवत् । अधुना तु ज्ञाते आत्मनि स्वस्वभावे स्थितम् ॥ १३ ॥
180938
180939 ज्ञाताज्ञातमनिर्भासं ब्रह्मैकमजरं तथा ।
180940 शून्यत्वैकत्वनीलत्वरूपमेकं नभो यथा ॥ १४ ॥
180941
180942 अनिर्भासं स्वातिरिक्तज्ञानाज्ञाननिर्भासशून्यम् । यथा नीलत्वशून्यत्वे नीलत्वे च
180943 नभ एकं तद्वदित्यर्थः ॥ १४ ॥
180944
180945 निर्वाणभासे गतशङ्कमासे निरीहमासे सुसुखेऽहमासे ।
180946 यथास्थितं नित्यमनन्तमासे तदेवमासे न कथं समासे ॥ १५ ॥
180947
180948 तत्तस्मात्प्रबोधान्निर्वाणमेव सन्नहमासे । अज्ञाननिवृत्त्यैव
180949 सर्वशङ्कानिवृत्तेर्गतशङ्कमासे । सुसुखं निर्विक्षेपात्मसुखं तत्रैवेह
180950 धारावाहिकचित्तवृत्तिर्यथा स्यात्तथा आसे । एवं प्रबुद्धोऽहं समासे समस्तात्मनि
180951 ब्रह्मणि न कथमासे । तद्भावप्रच्युतिहेतूनां बाधादित्यर्थः ॥ १५ ॥
180952
180953 सर्वं सदैवाहमनन्तमेकं न किंचिदेवाप्यथवातिशान्तः ।
180954 सर्वं न किंचिच्च सदेकमस्मि न चास्मि चेतीयमहो नु शान्तिः ॥ १६ ॥
180955
180956 सदैव सर्वमहं अथवा अतिशान्तः सर्वोपप्लवरहितो न किंचिच्च एकं सदहमेवास्मि
180957 । अथवा देशकालाधाराप्रसिद्धेः क्वापि नास्मि च । इति इयं निर्वाणाख्या इयं
180958 सर्वशान्तिरहो अत्याश्चर्यरूपेत्यर्थः ॥ १६ ॥
180959
180960 अधिगतमधिगम्यं प्राप्तमप्राप्तमन्यैर्गतमिदमलमस्तं वस्तुजातं

समस्तम्।
उदितमुदितबोधं तादृशं यत्र भूषोऽस्तमयसमुदयानां नाम नामापि
नास्ति॥ १७॥

अधिगन्तुं ज्ञातुं योग्यमधिगम्यं परमपुरुषार्थरूपमधिगतं ज्ञातम्।
अन्यैरज्ञैरगम्यं दुष्प्रापं मोक्षसुखं प्राप्तम्। इदं संसारानर्थरूपं
वस्तुजातं समस्तमस्तं गतम्। चरमसाक्षात्कारोदितप्रबोधं तादृशं
निजस्वरूपं मम उदितम्। यत्र स्वरूपे भूयः अस्तमयसमुदयानां
मरणतिरोधानदुःखाद्यनर्थानां नामापि नास्ति। नामेति विद्वत्प्रसिद्धौ॥ १७॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० नि० उ० विश्रान्तिकथनं नाम
त्रिनवत्यधिकशततमः सर्गः॥ १९३॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
विश्रान्तिकश्चनं नाम त्रिनवत्यधिकशततमः सर्गः॥ १९३॥

चतुर्नवत्यधिकशततमः सर्गः १९४

श्रीराम उवाच।

सर्वात्मसर्वभावेषु येन येन यदा यदा।
यथा भाति स्वयंबोधस्तथानुभवति स्वयम्॥ १॥

आत्मतत्त्वं जगत्तत्त्वं यथा निर्वाणसाधनम्।
इह रामः स्वयं बुद्धं गुरवे प्रह्ववेदयत्॥

तत्राज्ञातपरमात्मस्वभावमाह - सर्वात्मेति। सर्वेषामात्मनां जीवानां
सर्वेषु भावेषु मनोवृत्तिभेदेषु यदा यदा येन येन भोगनिमित्तेन यथा
स्वयंबोधः स्वप्रकाशचिदात्मा भाति विवर्तते तथा स्वयमेव
भोक्तृनानाजीवभावेन अनुभवति। स्वयमेव त्रिपुटीभावेन स्वमायया विवर्तत
इत्यर्थः॥ १॥

स्वभाव एव तिष्ठन्ति सर्गाः संमिलिता अपि।
अत्रापि स्वीकृता एव नानारत्नांशवो यथा॥ २॥

एकस्मिन्नेव निरवयवे परमसूक्ष्मे ब्रह्मणि सर्वैर्जीवैर्युगपदध्यासात्संमिलिता
अपि अनन्ताः सर्गाः प्रत्येकं ब्रह्माण्डभुवनादिभेदविस्तीर्णे स्वभावे एव
परस्परमसंलग्नास्तिष्ठन्ति। यतस्ते अत्र ईदृशे निरवयवेऽपि ब्रह्मणि
तादात्म्याध्यासेन स्वीकृता आत्मीकृताः परमसूक्ष्मीकृताः। न स्वात्मनि
कस्यचिदनवकाशता अवरोधो वास्तीत्यर्थः। यथा सूक्ष्मा नानारत्नानामंशवः
किरणा एकस्मिन्गृहे मिलिता अप्यसंबन्धा असंकीर्णास्तिष्ठन्ति तद्वदित्यर्थः॥ २॥

अत्र दृष्टमदृष्टं च मिथो विशति गच्छति।
जगद्रश्मिघनं रत्नं नानारत्नघनं यथा॥ ३॥

तदेव विशदयति - अत्रेति। दृष्टं संनिहितं प्रत्यक्षमदृष्टं
देशकालव्यवधानात्परोक्षं च जगद्रश्मिघनमत्रास्मिन्परमात्मनि
मिथोऽन्योन्यमसंबाधं समाविशति गच्छति संचरति च। नानारत्नानां घनं
रश्मिजालं यथा तथा॥ ३॥

दीपानामिव सर्गाणां बहूनां ज्वलतां परम्।

181013 केषांचिदस्त्यनुभवो मिथः केषांचिदेव नो ॥ ४ ॥
181014
181015 तत्र येषां जीवानां समानकर्मवासनानिमित्तोऽध्यासस्तेषां परस्परमनुभवोऽस्ति
181016 तद्भिन्नानां तु नास्तीत्याशयेनाह - केषांचिदिति । दीपपक्षे
181017 चक्षुष्मतामन्धानां च ॥ ४ ॥
181018
181019 अप्स्वप्स्विव रसोऽम्भोधावावर्तरमणावनौ ।
181020 सर्गोऽस्ति प्रत्यणुं तस्मिन्नापि सर्गास्तथा क्रमः ॥ ५ ॥
181021
181022 आवर्तानां रमणावनौ क्रीडास्थाने अम्भोधौ अप्स्वप्सु प्रतिजलावयवं रसो
181023 लवणादिरस इव । परमार्थतस्तु न सर्गास्तत्क्रमोऽपि ॥ ५ ॥
181024
181025 सर्वत्र सर्वतो नित्यं चिद्घनस्याम्बुवेदनम् ।
181026 संख्यातुं केन शक्यन्ते सर्गाधारपरम्पराः ॥ ६ ॥
181027
181028 अम्बुवेदनं जलपरमाणुरस इव ॥ ६ ॥
181029
181030 यथावयविता भिन्ना नैवावयविनः क्वचित् ।
181031 शब्दभेदादृते भिन्ना न तथा सर्गता परे ॥ ७ ॥
181032
181033 एकस्यानन्तरूपस्य कारणाभावतः स्वयम् ।
181034 नोदेति न च यात्यस्तं जगदादिः स्वभावतः ॥ ८ ॥
181035
181036 एकस्यात्मन एव माययानन्तरूपस्य जगत आदिरधिष्ठानं तत्स्वभावत्वान्नोदेति
181037 नाप्यस्तमायाति ॥ ८ ॥
181038
181039 तपन्ती ज्ञप्तिरेवेयमखण्डज्ञेयतामिमाम् ।
181040 करोत्यकर्तृरूपैव समालोकमिवार्कभाः ॥ ९ ॥
181041
181042 तपन्ती स्फुरन्ती । समालोकं घटपटादिप्रकाशम् ॥ ९ ॥
181043
181044 वैतृष्ण्यात्सर्वभावानां समाप्त्यैवाक्षयं स्वयम् ।
181045 संपद्यते समाधानं यत्तन्निर्वाणमुच्यते ॥ १० ॥
181046
181047 कदा तर्हि सा अध्यासव्यसनं जहाति केनोपायेन च तत्राह - वैतृष्ण्यादिति ।
181048 सर्वेषां भावानां तत्त्वज्ञानेन बाधात्समाप्त्यैव स्वयमक्षयं क्षयिष्णु
181049 देहादितादात्म्याध्यासोन्मुक्तं संपद्यते । यत्तत्तादृशं स्वरूपं तदेव
181050 सर्वविक्षेपहेतुक्षयात्समाधानं निर्वृतित्वान्निर्वाणमुच्यत इत्यर्थः ॥ १० ॥
181051
181052 न बुद्ध्या बुद्ध्यते बोधो बोधाबुद्धेर्न बोध्यते ।
181053 न बुद्ध्यते वा तेनापि बोध्यो बोधः कथं भवेत् ॥ ११ ॥
181054
181055 अध्यासपरम्परासमाप्त्यैव स्वयं स्वस्य परमपुरुषार्थः परिशिष्यते इति कुतः
181056 बुद्ध्यानुभूयमानस्यैव पुरुषार्थत्वादननुभूयमानस्य तस्य
181057 पुरुषार्थत्वादर्शनात् । तस्मात्पुरुषार्थताप्रयोजिका
181058 चरमसाक्षात्कारबुद्धिर्मुक्तावावश्यकीति न सर्वभावानां समाप्तिरभ्युपगन्तुं
181059 युक्तेत्याशङ्क्याह - नेति । परमपुरुषार्थरूपो बोधः परमात्मबुद्ध्या
181060 चरमसाक्षात्कारवृत्त्या न बुध्यते । जडायास्तस्या बोधशक्त्यभावात् बोधस्य
181061 बुद्धिविषयत्वायोगाच्च । तर्हि बोधशक्तिमान्परमात्मा सुप्तो राजा बन्दिभिरिव
181062 प्रबोध्यतां तत्राह - बोधाबुद्धेरिति । न बोध्यतेऽपि । कुतः बोधाबुद्धेः ।
181063 सुप्तं राजानं बुद्ध्वा तद्बोधनाय बन्दिनः प्रवर्तन्ते । बुद्ध्या तु सुप्तो बोधो न
181064 बुद्ध इति कथं तद्बोधने सा प्रवर्तेतेत्यर्थः । तर्हि बोधेनैव बोधो बुद्ध्यतां

तत्राह - नेति। तेन बोधेनापि बोधो न बुध्यते। कुतस्तत्राह - बोध्य इति। बोधः
स्वयंबोध्यो बोधकर्म कथं भवेत्। क्रियाजन्यातिशयाधारो हि कर्म। न हि बोधे
क्रिया तज्जन्यातिशयस्तदाधारता वा संभवति। निष्क्रियत्वान्निर्विकारत्वात्स्वात्मनि
क्रियाविरोधाच्चेति भावः॥ ११॥

प्रबुद्ध एव सुप्ताभः स्वयंबोधो विबुध्यते।
देशकालाद्यभावेऽपि मध्याह्नेऽर्कातपो यथा॥ १२॥

तस्मादध्यासपरम्पराचरमसाक्षात्कारबुद्ध्यन्तपरिणामपरम्परया स्वयमेव
समाप्यते। तस्यां च समाप्तायां स्वप्रकाशत्वात्प्रबुद्ध एवात्मा
नीहारागमात्सुप्तप्रायतां प्राप्तो मध्याह्ने निःशेषनीहारापगमेन सवितेव
तदातप इव च प्रबुध्यत इव। स एवास्य नित्यप्राप्तनिरतिशयानन्दाभिव्यक्तिलक्षणः
परमपुरुषार्थ इत्याशयेनाह - प्रबुद्ध एवेति॥ १२॥

सर्वकर्मवितृष्णानां शान्तेच्छानां प्रबोधतः।
सतामनिच्छतामेव निर्वाणं संप्रवर्तते॥ १३॥

कर्मपदेन ऐहिकामुष्मिकफलं लक्ष्यते॥ १३॥

प्रबुद्धबोधो ध्यानस्थः स्वभावे केवले स्थितः।
न किंचिदपि गृह्णाति न किंचिदपि चोज्झति॥ १४॥

मोहनिद्रातः प्रबुद्धो बोधश्चिदात्मा यस्य। ध्यानस्थो निरुद्धबाह्यवृत्तिः॥ १४॥

यो यथास्थित एवास्ते पश्यन्दीप इवाक्रियः।
अमनोमानमननो मनोमननवानपि॥ १५॥

व्युत्थानकाले स तर्हि कथमास्ते तदाह - य इति। मनोमननवानपि
विषयेष्वासङ्गाभावादमनोमानमननः अत एव दीपवत्प्रकाशयन्नपि अक्रियः॥ १५
।।

व्युत्थाने विश्वरूपाख्यमन्यत्र ब्रह्मसंज्ञितम्।
सर्गासर्गात्म चिन्मात्रं सत्यं सर्वत्र भासते॥ १६॥

अभिन्नबोधसद्रूपस्वरूपानुभवे स्थितः।
व्युत्थितः सन्निरुद्धश्च यः पश्यति स शाम्यति॥ १७॥

यो व्युत्थितो निरुद्धः समाध्यारूढश्चाभिन्नबोधो यः
सद्रूपस्वरूपानुभवस्तत्रैव स्थितः सन् निरोधव्युत्थाने उदासीनवृत्त्या पश्यति स
एव संसारविक्षेपाच्छाम्यति नान्यः॥ १७॥

जगत्पदार्थसार्थानां बोधमात्रैकनिष्ठताम्।
विना नास्त्यपरा सत्ता व्योम्नः शून्येतरा यथा॥ १८॥

कीदृशी सा तादृशसद्रूपानुभवे स्थितिस्तामाह - जगदिति। बोधमात्रमेव एका
निष्ठा यथार्थरूपं येषां तद्भावं विना अपरा सत्ता वस्तुस्थितिर्नास्तीत्येवंरूपा
सेत्यर्थः॥ १८॥

शिष्यते स्फीतबोधानां केवलानन्तबोधता।
सापि स्वपरिणामेन परेणायात्यवाच्यताम्॥ १९॥

अपरा सत्ता कुतो नास्तीति चेत्तत्त्वसाक्षात्कारेण जगद्रूपबाधे तत्साक्षिचिन्मात्रसत्ताया

181117 एव परिशेषादित्याशयेनाह - शिष्यत इति |
181118 स्फीतबोधानामपरिच्छिन्नब्रह्मावगाहनानुस्फारताशालिप्रबोधवताम् | सा
181119 तादृशप्रत्यगात्मरूपा बोधतापि स्वस्याः
181120 ब्रह्मसन्मात्रपरिशेषलक्षणाखण्डाकारवाक्यार्थलक्षणेन परेण परिणामेन
181121 अवाच्यतामखण्डार्थकवाक्यलक्ष्यताम् || १९ ||
181122
181123 तद्विश्रान्तौ परा सत्ता शिष्यते वा न शिष्यते |
181124 या काप्यत्यन्तशान्तां न वाग्गोचरमेति सा || २० ||
181125
181126 तद्विश्रान्तौ तद्भावेन स्थितौ सत्यां शिष्यते न शिष्यते वेत्युभयविधा वाचामपि
181127 गोचरतां सा दशा नैति || २० ||
181128
181129 या समस्य पराकाष्ठा सैव बोधस्य सन्मयी |
181130 सर्गस्तन्मय एवातः सकलं शान्तमव्ययम् || २१ ||
181131
181132 समस्य सत्तासामान्यस्य पराकाष्ठा परमावधिः शोधिततत्पदार्थरूपा सैव
181133 बोधस्यापि शोधितत्वंपदार्थरूपा पराकाष्ठा | वियदादिलक्षणः
181134 अवस्थात्रयलक्षणश्च सर्गः अस्ति भातीति सर्वानुभवात्सत्ताबोधमय एव | एवं सति
181135 यत्फलितं तदाह - सकलमिति || २१ ||
181136
181137 निर्वाणाय वितृष्णाय स्वच्छशीतलसंविदे |
181138 स्पृहयन्ति सदा सत्तां ब्रह्मविष्णुहरा अपि || २२ ||
181139
181140 तदेव ब्रह्मादीनामपि प्रेयस्तमत्वान्निरतिशयानन्दरूपं निर्वाणमित्याह -
181141 निर्वाणायेति | सदैवाहं स्यां मा कदाचिन्माभूवमिति सदैव तत्सत्तां स्पृहयन्ति |
181142 अपिशब्दात्सर्वप्राणिनोऽपि || २२ ||
181143
181144 सर्वार्थात्मैव सर्वत्र सर्वदा सर्वथोदितम् |
181145 चेतनं शुद्धमेवास्ति नाशो नास्योपपद्यते || २३ ||
181146
181147 सर्वेषां सार्वकालिकस्पृहास्पदमेव वस्तु सर्वदेशे सर्वकाले सर्ववस्त्वात्मना
181148 उदितं चेतनं स्वतः स्फुरद्रूपं शुद्धं तदेवेति तस्य नाशः अदर्शनं
181149 क्षणमपि नोपपद्यते || २३ ||
181150
181151 अत्यन्ततप्तः संसारो निर्वाणमतिशीतलम् |
181152 अतिशीतलमेवास्ति तप्तस्त्वेव न विद्यते || २४ ||
181153
181154 तप्तो निरतिशयदुःखरूपः | अतिशीतलमात्यन्तिकदुःखोपशमः || २४ ||
181155
181156 संचेतन्ति शिलान्तस्था यथालं शालभञ्जिकाः |
181157 अनुत्कीर्णास्तथा ब्रह्म चेततीदमखण्डितम् || २५ ||
181158
181159 यथा शिल्पिबुद्धावनुत्कीर्णाः शिलान्तस्थाः शालभञ्जिका यथेच्छं संचेतन्ति
181160 संस्फुरन्ति तथा भावोपहितमखण्डितमविच्छिन्नमेव ब्रह्म इदं जगद्वेषं
181161 चेतति स्फुरतीत्यर्थः || २५ ||
181162
181163 यथा चेतति सौम्याम्बुकोशस्थं वीचिमण्डलम् |
181164 तथा चेतति कोशस्थं महाचिच्चेत्यमव्ययम् || २६ ||
181165
181166 सौम्याम्बुकोशो जलाशयस्तत्स्थम् | कोशोऽन्नमयादिस्तत्स्थं ब्रह्माण्डकोशस्थं च
181167 चेत्यं स्वयमेव भूत्वा चेतति स्फुरति || २६ ||
181168

181169 अविभक्तो विभागस्थैरिव शान्तैरनन्तकैः।
181170 परमार्थाम्बराभोगैस्त्वबोधात्मत्वमन्थरैः॥ २७॥
181171
181172 अबोधः अज्ञानावृतो य आत्मा तद्भावेन मन्थरैर्जडप्रायैः परमार्थाम्बरस्य
181173 सन्मात्रस्य आभोगैः कृत्रिमवेषैः। इत्थंभावे तृतीया। यैर्यैर्जीवैर्यथा यथा
181174 भावितस्तथा चेतित इति परेणान्वयः॥ २७॥
181175
181176 यैर्यैर्यथास्व आत्मान्तर्भावितश्चेतितश्चिरम्।
181177 भोगमोक्षप्रभेदेषु तेषां तेषां तथोदितः॥ २८॥
181178
181179 मृते वाप्यमृते बन्धौ स्वप्ने स्वप्नविबोधिनः।
181180 न यथोदेति सत्याख्या तथा दृश्येषु तद्विदः॥ २९॥
181181
181182 स्वप्नाद्विबोधिनः प्रबुद्धस्य पुरुषस्य स्वप्ने स्वबन्धौ मृते अमृते जीवत्यपि वा
181183 यथा सत्याख्या सत्यताबुद्धिर्नोदेति तथा तत्त्वविदः सर्वेषु दृश्येष्विति न
181184 हर्षशोकप्रसक्तिरित्यर्थः॥ २९॥
181185
181186 यदिदं किल दृश्यादि तच्छान्तमखिलं शिवम्।
181187 भावितेऽवगतेऽप्यन्तरिति भ्रान्तेः क उद्भवः॥ ३०॥
181188
181189 यद्दृश्यादि त्रिपुटीरूपं तदखिलं शान्तं शिवमित्यन्तर्भाविते सम्यगवगतेऽपि
181190 सति भ्रान्तेः पश्चात्क उद्भव इत्यन्वयः॥ ३०॥
181191
181192 सर्वथा देहसंख्येषु वैतृष्ण्यमुपजायते।
181193 सम्यग्बोधे सति स्वप्न इवापि स्वार्थकादिषु॥ ३१॥
181194
181195 अवगमे सति केन क्रमेण भ्रान्तेरनुद्भवस्तमाह - सर्वथेत्यादिना। देहे सम्यक्
181196 ख्यायन्त इति देहसंख्यास्तथाविधेषु स्वार्थकादिषु भोगतदुपायेषु॥ ३१॥
181197
181198 वैतृष्ण्याद्वर्धते बोधो बोधाद्वैतृष्ण्यवर्धनम्।
181199 परस्परेण प्रकटे एते कुड्यप्रकाशवत्॥ ३२॥
181200
181201 अस्त्वेवं ततः किं तत्राह - वैतृष्ण्यादिति॥ ३२॥
181202
181203 येन बोधेन वैतृष्ण्यं धनदारसुतादि वा।
181204 स्वनूनमपि संपन्नं जाड्यं तत्संस्थितं तथा॥ ३३॥
181205
181206 तत्कुतस्तत्राह - येनेति। येन हेतुना वैतृष्ण्यं वा धनदारादि वा
181207 तत्त्वाभिनिवेशलक्षणेन बोधेनैव सुष्ठु अनूनं स्वनूनमुपचितं संपन्नं
181208 तद्विरोधि तदनुकूलं वा जाड्यमपि तथा तत्तदभिनिवेशानुसारेणैव
181209 संस्थितमित्यर्थः॥ ३३॥
181210
181211 एतावदेव बोधस्य बोधत्वं यद्वितृष्णता।
181212 पाण्डित्यं नाम तन्मौर्ख्यं यत्र नास्ति वितृष्णता॥ ३४॥
181213
181214 न तु वैतृष्ण्यबोधाढ्यौ न परस्परवर्धितौ।
181215 असत्यावेव तौ नान नष्टौ चित्रहुताशवत्॥ ३५॥
181216
181217 परस्परवर्धितावपि तावसत्यावेवेति चित्रहुताशवत्कार्याक्षमावेव नष्टाविति न तु
181218 मन्तव्यमित्यर्थः॥ ३५॥
181219
181220 परमा बोधवैतृष्ण्यसंपत्तिर्मोक्ष उच्यते।

तत्रानन्ते पदे शान्ते वसता च न शोच्यते ॥ ३६ ॥

कुतो न मन्तव्यं तत्राह - परमेति । यतो बोधवैतृष्ण्ययओः प्रमा निरतिशया
संपत्तिरेव निरतिशयानन्दरूपत्वादात्यन्तिकदुःखहेतुक्षयरूपत्वाच्च मोक्ष उच्यते ।
अबोध एव हि बन्धमूलं तृष्णैव च बन्धस्तदुभयरूपो हि मोक्ष
इत्युपपत्तेरित्यर्थः ॥ ३६ ॥

गतं गम्यं कृतं कार्यं दृष्टं दृश्यमशेषतः ।
यावत्सर्वं शिवं शान्तमेकमाद्यमनामयम् ॥ ३७ ॥

अतस्ताभ्यामेव वर्धिताभ्यां कृतकृत्योऽहं वृत्त इत्याह - गतमित्यादिना ।
गम्यं निरसनीयं गतं निरस्तम् ॥ ३७ ॥

आत्मारामस्य शान्तस्य वैतृष्ण्यस्यानहंकृतेः [वैतृष्ण्यस्येति स्वार्थे
ष्यञि वितृष्णस्येत्यथः । तथैव पाठः कल्पनीयो वा ।] ।
असंकल्पैव भवति स्थितिः खस्येव निर्मला ॥ ३८ ॥

सहस्रेभ्यः सहस्रेभ्यः कश्चिदुत्थाय वीर्यवान् ।
भिनत्ति वासनाजालं पञ्जरं केसरी यथा ॥ ३९ ॥

तृष्णामोहबन्धमेत्तारः शूला विरला इत्याह - सहस्रेभ्य इति । यतमानानां
मध्ये इत्यर्थः ॥ ३९ ॥

प्राप्तज्योतिर्बोधशुद्धिः परमन्तःप्रकाशवान् ।
नीहारः शरदीवाशु स्वयमेवोपशाम्यति ॥ ४० ॥

प्राप्तः ज्योतिष आत्मनः सूर्यादीनां च बोधो ज्ञानं प्रकाशातिशयश्च येन ।
नीहारो जाड्यवासनाभागः प्रसिद्धश्च ॥ ४० ॥

ज्ञातज्ञेयस्त्वसंकल्पः संकल्पातिशयाशयः ।
अवासनो व्यवहृतौ वातवत्स्पन्दते न वा ॥ ४१ ॥

संकल्पानतिशेते अतिक्रामत्याशयो यस्य । अवासनो जीवन्मुक्तः स्पन्दते व्यवहरति न
वा व्यवहरति । समाधावेव विश्राम्यतीत्यर्थः ॥ ४१ ॥

आसीद्धीरान्मनस्कारैर्भ्रान्तिमात्रैकनिश्चयात् ।
यः सर्वत्र खवद्भावस्तदवासनमासितम् ॥ ४२ ॥

सर्वत्र सर्ववस्तुषु
मनस्कारैस्तत्त्वमननैर्धीरात्स्थिरीभूताद्भ्रान्तिमात्रैकनिश्चयाद्यः खवद्भाव
आसीत्तदेव अवासनमासितमवस्थानमित्यर्थः ॥ ४२ ॥

निर्वासने भाव उदारसत्त्वे ब्रह्मखिलं दृश्यमिति प्रबुद्धे ।
स्थिरैकनिर्वाणमतावनन्तो मोक्षाभिधानः प्रशमोऽभ्युदेति ॥ ४३ ॥

उदारसत्त्वे शुद्धान्तःकरणे पुंसि वर्णितरूपे निर्वासने भावे उदिते सति अखिलं
दृश्यं ब्रह्मैवेति प्रबुद्धे सति स्थिरैकनिर्वाणमतौ तस्मिन् पुंसि अनन्तो मोक्ष
इत्यभिधानं यस्य तथाविधः सर्वसंसारप्रशमः अभ्युदेति । स्वयमेव
प्रकटीभवतीत्यर्थः ॥ ४३ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मी० दे० म्० निर्वा० उ० रामविश्रान्त्युपगमो
नाम चतुर्नवत्यधिकशततमः सर्गः ॥ १९४ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
रामविश्रान्त्युपगमो नाम चतुनवत्युत्तरशततमः सर्गः ॥ १९४ ॥

## पञ्चनवत्यधिकशततमः सर्गः १९५

श्रीवसिष्ठ उवाच ।

अहो नु संप्रबुद्धोऽसि राघवाघविघातिनी ।
वागियं तव संपन्ना प्रबुद्धेष्ववहासिनी ॥ १ ॥

शुभाः प्रबुद्धरामोक्तीः प्रशस्य गुरुणा स्वयम् ।
परीक्षार्थं कृताः प्रश्ना रामेणात्र समाहिताः ॥

तत्रादौ यथोपवर्णिताः प्रबुद्धरामोक्तीरनुमोदमानो वसिष्ठः प्रशंसति -
अहो इत्यादिना । हे राम इयं तव वाक् अप्रबुद्धानामघविघातिनी । प्रबुद्धेषु
त्वनुभवसिद्धार्थानुवादत्वाद्युक्तियुक्तत्वाच्च अवहासिनी प्रहर्षस्मेरवदनताकारिणी
संपन्ना ॥ १ ॥

विभातीवासदेवेदमसंकल्पेन शाम्यति ।
एतच्छान्तिस्ति निर्वाणमित्येव परमार्थता ॥ २ ॥

असदेवेदं जगत् बोधप्रयुक्तसंकल्पे विभातीवेति बन्धनिष्कर्षः ।
असंकल्पदार्ढ्यपर्यवसितेन तत्त्वज्ञानेन शाम्यतीति मुतिसाधननिष्कर्षः ।
एतच्छान्तिरेव निर्वाणमिति मोक्षनिष्कर्षः । सैव परमार्थतेत्यर्थः ॥ २ ॥

कल्पनाकल्पने रूपं परस्यैवेतरस्य नो ।
स्पन्दनास्पन्दनं वायोर्यथा नात्रैकताद्विते ॥ ३ ॥

तथा च कल्पनाकल्पनरूपबन्धमोक्षौ अप्रबुद्धस्य प्रबुद्धस्य च ब्रह्मण एव्
रूपमिति निष्कर्षोपि फलित इत्याह - कल्पनाकल्पने इति ॥ ३ ॥

प्रबुद्धस्यैव या पुंसः शिलाजठरवत्स्थितिः ।
शान्तौ व्यवहृतौ वापि सामला मुक्ततोच्यते ॥ ४ ॥

शान्तौ समाधौ ॥ ४ ॥

वयमस्मिन्पदे स्थित्वा राघवाघविघातिनि ।
शान्तत्वे व्यवहारे च सममित्थमवस्थिताः ॥ ५ ॥

एतत्पदस्थितिरेवास्मदादिजीवन्मुक्तानां समाधिव्युत्थानयोस्तुल्यरूपस्थितिरित्याह -
वयमिति ॥ ५ ॥

अस्मिन्नेव पदे नित्यं ब्रह्मविष्णुहरादयः ।
तिष्ठन्ति व्यवहारस्था अपि शान्ता ज्ञरूपिणः ॥ ६ ॥

ज्ञरूपिणः प्रबुद्धाः ॥ ६ ॥

शैलोदरस्थितिमतां प्रबुद्धानामनामयम् ।
अस्माकं पदमेवं तदालभ्यैतदिहोष्यताम् ॥ ७ ॥

181325 शैलोदरमिव निर्विक्षेपस्थितिमतामस्माकमेतपदं त्वयाप्येवमस्मदादिवदेव
181326 तदालभ्य इह जीवन्मुक्तौ उष्यताम्। अद्यप्रभृतीत्यर्थः॥ ७॥
181327
181328 श्रीराम उवाच।
181329
181330 ब्रह्मण्येवमसद्रूपमनुत्पन्नमभासुरम्।
181331 अनारम्भमनाकारमेवेदं भासते जगत्॥ ८॥
181332
181333 एवं वसिष्ठोक्त्या जीवन्मुक्तिपदे प्रतिष्ठितो रामो जीवन्मुक्तानां यादृशं
181334 जगद्भासते तदभिलपति - व्रत्प्रणीति द्वाभ्याम्। अनुत्पन्नत्वादेवाभासुरं
181335 पृथगप्रथमानम्॥ ८॥
181336
181337 मृगतृष्णाम्बुसदृशं तरङ्गावर्तिवारिवत्।
181338 रुचकादीव कनके स्वप्नसंकल्पशैलवत्॥ ९॥
181339
181340 श्रीवसिष्ठ उवाच।
181341
181342 बुद्धवानसि चेद्राम तत्स्वबोधविवृद्धये।
181343 कुरु संशयविच्छेदं पृच्छतः प्रच्छकस्य मे॥ १०॥
181344
181345 इदानीं वसिष्ठो रामं जीवन्मुक्तिप्रतिष्ठाख्यापनाय योगपट्टन्यायेन वक्तृपदे
181346 स्थापयित्वा स्वयं शिष्यवत्पृच्छामि स्वसंशयविच्छेदं कुर्वित्याह -
181347 बुद्धवानसीति॥ १०॥
181348
181349 इत्थं नित्यानुभूतोऽपि शिरस्थोऽप्यतिभासुरः।
181350 जगदाख्योऽयमाभासः कथं नाम न विद्यते॥ ११॥
181351
181352 प्रत्यक्षादिप्रमाणदृढीकृतत्वादर्थक्रियाऽविसंवादाच्च सत्यतया
181353 शिरःस्थितप्रायोऽपि॥ ११॥
181354
181355 श्रीराम उवाच।
181356
181357 पूर्वमेवेदमुत्पन्नं न किंचन कदाचन।
181358 तेन वन्ध्यासुतस्यास्य न सत्ता कल्पनादृते॥ १२॥
181359
181360 तत्र प्राग्गुरुणोक्ताभिरेव युक्तिभिः श्रीरामः समाधत्ते - पूर्वमेवेत्यादिना।
181361 नोत्पन्नं कारणाभावादित्यर्थः। कल्पनात् भ्रमादृते विना॥ १२॥
181362
181363 किमिवास्या जगद्भ्रान्तेः कारणं प्रोत्थिता यतः।
181364 न कारणं विना कार्यं किंचित्संभवति क्वचित्॥ १३॥
181365
181366 कारणाभावमेव दर्शयति - किमिवेत्यादिना। यतः प्रोत्थिता स्यात्॥ १३॥
181367
181368 न चाविकारमजरं सविकारं क्षयादृते।
181369 कारणं क्वचिदेवेह किंचिद्भवितुमर्हति॥ १४॥
181370
181371 ब्रह्मणः कारणताप्रसक्तिरेव नास्तीत्याह - न चेति। पूर्वावस्थाक्षयादृते
181372 सविकारं न च किंचित्प्रसिद्धमित्यर्थः॥ १४॥
181373
181374 ब्रह्मैवेदमनाख्यात्म कारणं प्रविजृम्भते।
181375 तत्क कस्य कथं नाम जगच्छब्दार्थसंविदः॥ १५॥
181376

181377 यदि निर्विकारमेव विवर्तोपादानकारणं सन्मायया जगदाकारेण विजृम्भत
181378 इत्युच्येत तर्हि जगच्छब्दार्थः सत्यो न लभ्यत इत्याह - कारणमिति। संविदो
181379 यथार्थप्रत्ययाः ॥ १५ ॥
181380
181381 तदनाख्ये पदे शान्ते चिरात्प्रथमचेतनम्।
181382 कंचित्काललवं तिष्ठत्यातिवाहिकदेहभृत् ॥ १६ ॥
181383
181384 प्रथमं चेतनं हिरण्यगर्भाख्यं द्विपरार्धपरिमितं कंचित्काललवं
181385 विवर्तरूपमातिवाहिकदेहभूत् तिष्ठतीवेति जगद्भ्रान्तेः स विषयः पर्यवस्यतीत्यर्थः
181386 ॥ १६ ॥
181387
181388 क्षणे वत्सरसंवित्तिं स्वप्ने त्वमिव चेतति।
181389 काकतालीयवत्तत्र चन्द्रार्कादींश्च पश्यति ॥ १७ ॥
181390
181391 तत्प्रथमचेतनमेव क्षणे वत्सरादिकालविस्तारभ्रमं पश्यति। यथा त्वं स्वप्ने
181392 तथा पश्यसि ॥ १७ ॥
181393
181394 संकल्पैकात्मनस्तस्य देशकालक्रियान्वितम्।
181395 अत्यन्तमेव व्योम्न्येव भुवनं भासते स्वयम् ॥ १८ ॥
181396
181397 तस्मिन्मिथ्योपसंपन्ने स मिथ्यापुरुषस्ततः।
181398 मिथ्यैव तत्समाचारं कुर्वन्विपरिवर्तते ॥ १९ ॥
181399
181400 तद्भूतभुवनादिसर्गसमाचारम् ॥ १९ ॥
181401
181402 अधस्तादूर्ध्वमायाति पुनरूर्ध्वाद्व्रजत्यधः।
181403 कल्पितानन्तसंभारपदार्थानर्थसंभ्रमः ॥ २० ॥
181404
181405 स एव स्वकल्पिते भुवनभेदे व्यष्टिजीवात्मना दुष्कृतादिफलधोगायादस्ताअदूर्ध्व
181406 च जायाति भ्रमतीव ॥ २० ॥
181407
181408 काकतालीयवत्तस्य संकल्पस्य भवेद्यदि।
181409 यद्यथा तत्तथाद्यापि सुस्थिरामात्तवान्स्थितिम् ॥ २१ ॥
181410
181411 यदि तस्य संकल्पस्य काकतालीयवद्यथा पूर्वस्थितिस्तथैवाद्यापि स्थितिरभूत्तर्हि तत
181412 एव प्रत्यभिज्ञाय जगति सुस्थिरां स्थितिं आत्तवान् भ्रान्त्या गृहीतवान् ॥ २१ ॥
181413
181414 शिला वन्ध्यासुतमुखे व्योमचूर्णेन रञ्जनम्।
181415 करोतीत्यादिवदिदं मिथ्या जगदुपस्थितम् ॥ २२ ॥
181416
181417 एवं भ्रान्त्या इत्थमुपस्थितमिदं मिथ्या जगत् शिला कामिनी भूत्वा वन्ध्यासुतस्य
181418 कान्तस्य मुखे ललाटे व्योमचूर्णेन तिलकं विरच्य रञ्जनं शोभातिशयं
181419 करोतीत्यादिवाक्यार्थवद्विकल्पमात्रमित्यर्थः ॥ २२ ॥
181420
181421 सत्यमेवेदमथवा मिथ्यात्वं तु कुतः किल।
181422 न मिथ्यात्वं न सत्यत्वं किमपीदमजं ततम् ॥ २३ ॥
181423
181424 यदि त्वत्यन्तासति मिथ्यात्वाख्यधर्मस्याप्यप्रसिद्धिः पर्यालोच्येत
181425 तर्ह्यधिष्ठानमात्रत्वात्सत्यमेवेत्याह - सत्यमेवेति। यदि तु
181426 व्यावर्तनीयमिथ्यात्वाप्रसिद्ध्या व्यावर्तकसत्यत्वकल्पनमपि तत्र न घटते इति
181427 विचार्यते तदा निर्वचनवागप्रसरात्किमपीदम् ॥ २३ ॥
181428

181429 आकाशकोशवत्स्वच्छं शिलाजठरवद्घनम् |
181430 पाषाणमौनवच्चेदं शान्तमेवाक्षयं जगत् || २४ ||
181431
181432 चिन्मात्रसर्वसंकल्पे विराडात्मातिवाहिके |
181433 देहे संवेदनं व्योम जगदित्यवभासते || २५ ||
181434
181435 चिदात्मनो मायिको यः सर्वाकारसंकल्पस्तद्रूपे विराडात्मन्यातिवाहिके देहे
181436 संवेदनरूपं यद्व्योम तदेव जगदिति भासत इत्यर्थः || २५ ||
181437
181438 एवं ब्रह्म महाकाशमेवेदं क्व जगत्कथा |
181439 शान्तं समसमाभोगमेकमाद्यन्तवर्जितम् || २६ ||
181440
181441 एवं सति यत्फलितं तदाह - एवमिति | समेभ्योऽपि सम आत्यन्तिकवैषम्यशून्य
181442 आभोगो यस्य || २६ ||
181443
181444 यथा पयसि वीचीनामुन्मज्जननिमज्जनैः |
181445 न जलान्यत्वमेवं हि भावाभावैः परैः परे || २७ ||
181446
181447 परे ब्रह्मणि || २७ ||
181448
181449 परावरविदः केचिदेतस्मिन्परमे पदे |
181450 शुद्धे परिणमन्त्यन्तर्वारिबिन्दुरिवाम्भसि || २८ ||
181451
181452 परावरविदः सारासारविवेकिनः परिणमन्त्यैकरस्यं गच्छन्ति || २८ ||
181453
181454 परेऽपरमिदं भाति परस्येव परात्मकम् |
181455 संभवन्त्यमले शान्ते न जगन्ति न तत्क्रियाः || २९ ||
181456
181457 परस्य ब्रह्मणो वेष इव कार्यमिव अवयव इव वा अपरमिदं जगत् जीवरूपं भाति |
181458 तच्च तत्त्वतो विचारे परमेव संभवति | जगन्ति तत्क्रियाः व्यवहाराश्च न संभवन्ति ||
181459 २९ ||
181460
181461 स्वप्ने स्वप्न इति ज्ञाते दृश्ये ब्रह्मतयापि च |
181462 मृगाम्बुनि परत्वेन को भावयति भावनाम् || ३० ||
181463
181464 मृगाम्बुनि परत्वेन अन्यत्वेन ऊषरभूमात्रत्वेन परिज्ञाते सति भावनां
181465 पुनस्तत्सत्यताबुद्धिं को भावयति || ३० ||
181466
181467 परमार्थचमत्कारमन्तःस्थानुभवं विना |
181468 अन्यस्यान्यं न जानाति सीधुस्वादुमिव द्विजः || ३१ ||
181469
181470 अन्यस्याशुचिप्रपञ्चस्यान्यं भोगरसं न जानाति प्रबुद्धः | यथा द्विजो
181471 ब्राह्मणः सीधुस्वादुं मद्यमाधुर्यं न जानाति तद्वदित्यर्थः || ३१ ||
181472
181473 निर्वाय निज आत्मायं परिवृत्यावलोकितः |
181474 चेत्योन्मुखत्वमुत्सृज्य संतिष्ठेच्छान्त आत्मनि || ३२ ||
181475
181476 अयं निज आत्मा बाह्यदृष्टेः परावृत्य चेत्योन्मुखत्वमुत्सृज्य समाधौ निर्वाय
181477 चरमसाक्षात्कारवृत्या विलोकितः सन् शान्ते शिवे नित्यमुक्ते आत्मनि तिष्ठेत् |
181478 कश्चिद्धीरं प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन् इति श्रुतेः || ३२ ||
181479
181480 श्रीवसिष्ठ उवाच |

दृश्यं बीजाङ्कुर इव स्थितं ब्रह्मणि कारणे।
इति सर्गादिसद्भावः कस्मान्नेहोपपद्यते॥ ३३॥

एवं समाहितो वसिष्ठः पुनर्बीजाङ्कुरन्यायेन ब्रह्मणि जगत्सत्यतां शङ्कते ##-

श्रीराम उवाच।

बीजेऽङ्कुरोऽङ्कुरतया संश्रितो नोपलभ्यते।
बीजोदरे तु या सत्ता बीजमेव हि सा भवेत्॥ ३४॥

समाधत्ते - बीज इति। यद्यङ्कुरः सत्यस्तर्हि बीजोदरे संस्थित एव बहिर्बीजपुटं
भित्त्वा निर्गच्छतीति स्यात् तत्तु न। यतो बीजभेदने तदुदरे अङ्कुरतया संश्रितोऽङ्कुरो
नोपलभ्यते। या तु बीजोदरे सूक्ष्मभागानां सत्ता सा बीजमेव भवेन्नाङ्कुर
इत्यर्थः॥ ३४॥

ब्रह्मणोऽन्तर्जगत्तैवं जगत्तैवोपलभ्यते।
अस्ति चेत्तद्भवेन्नित्यं सा ब्रह्मैवाविकारि तत्॥ ३५॥

ब्रह्मणोऽन्तर्जगत्सत्ता न तथा किंतु जगत्तैवोपलभ्यत इति वैषम्यं प्रलयकाले
तथैवास्तीति चेत्तर्हि सा ब्रह्मैव भवेद्यतस्तद्ब्रह्म अविकारीति न
बीजाङ्कुरन्यायस्यात्रोपपत्तिरित्यर्थः॥ ३५॥

अविकारादनाकाराद्विकार्याकृतिभासुरम्।
उदेतीति किलास्माभिर्नैव दृष्टं न च श्रुतम्॥ ३६॥

अस्तु ब्रह्म अविकारं किं ततस्तत्राह - अविकारादिति। अविकाराद्विकार्यमुदेति
अनाकारादाकृतिभासुरमुदेतीति च न दृष्टं न श्रुतं च क्वापीत्यन्वयः॥ ३६॥

अनाकृतावाकृतिमन्न चैतत्स्थातुमर्हति।
परमाणौ न चैवान्तरिव संभान्ति मेरवः॥ ३७॥

एवमनाकारे निरवयवे च साकारस्य सावयवस्य च स्थूलस्यावस्थानमपि
सर्वप्रमाणविरुद्धमित्याह - अनाकृतादिति॥ ३७॥

समुद्गके रत्नमिव जगद्ब्रह्मणि तिष्ठति।
महाकारं निराकार इत्युन्मत्तवचो भवेत्॥ ३८॥

समुद्गके संपुटे॥ ३८॥

शान्तं परं च साकारस्याधार इति राजते।
न वक्तुं राजते क्वेव साकारस्याविनाशिता॥ ३९॥

शान्तं सर्वोपरमरूपं परं ब्रह्म साकारस्य तादात्म्येनाधार इति वक्तुं न
राजते॥ ३९॥

बोध एवायमाकार इति कल्पनयापि धीः।
अपूर्वैः स्वप्नवद्रूढैः संसारैर्नोपलभ्यते [व्याख्यानानुरोधेन
आकारैरिति पाठोऽपेक्षित इति।]॥ ४०॥

एवं सति अपूर्वैः स्वप्नवद्रूढैराकारैर्बोध एव क्षणिकः साकार उत्पद्यत इति
बौद्धकल्पनाप्यनुपपन्नेत्याह - बोध एवेति॥ ४०॥

181533

181534 अपूर्व एव स्वप्नोऽयं यद्वै सर्गोऽनुभूयते।
181535 स्वप्नः किलानुभूतार्थः स्वभ्यस्त एव दृश्यते॥ ४१॥

181536

181537 कुतो नोपपद्यत इति तत्राह - अपूर्व इति। यतोऽयं सर्गः स्वप्नः अपूर्वः
181538 प्रागननुभूतार्थ एव चक्षुरादिप्रमाणैरनुभूयते। स्वप्नस्तु जाग्रदनुभूतार्थः
181539 संस्कारमात्रेण भासमानार्थो जाग्रति स्वभ्यस्त एवार्थः स्वप्ने दृश्यते। किलेति
181540 सर्वजनप्रसिद्धौ॥ ४१॥

181541

181542 यदेव जाग्रत्तत्स्वप्न इति नात्रोपपद्यते।
181543 स्वप्ने प्रदग्धः पुरुषः कथं प्रातर्विलोक्यते॥ ४२॥

181544

181545 अत एव बौद्धानां जाग्रत्स्वप्नभेदाभावोक्तिरपि तेषामसंगतेत्याह - यदेवेति।
181546 स्वप्ने मृतः श्मशानं नीत्वा प्रदग्धः पुरुषः। तस्मान्न चितः
181547 साकारत्वक्षणिकत्वादिकल्पनया प्रपञ्चस्य स्वप्नसाम्यं सर्वप्रमाणविरुद्धं
181548 सिध्यतीति कूटस्थे ब्रह्मण्यध्यस्तत्वादेव बाध्यत्वेन स्वप्नसाम्यं सिद्धमिति
181549 भावः॥ ४२॥

181550

181551 अशरीरस्य न स्वप्न इत्येतदपि नोचितम्।
181552 संभवन्ति पिशाचाद्यास्तेषां च स्वप्नवत्स्थितिः॥ ४३॥

181553

181554 तत्र चार्वाककृतमाक्षेपं समाधत्ते - अशरीरस्येति। स्थूलशरीरशून्यस्य
181555 स्वप्नो न दृष्ट इत्यशरीरे प्रतीच्यवस्थात्रयस्वप्नारोप इत्युक्तिर्न
181556 युक्तेत्याक्षेपांशार्थः। शिष्टं स्पष्टम्॥ ४३॥

181557

181558 तस्मात्स्वप्नवदाभासः संविदात्मनि संस्थितः।
181559 सर्गादिनानाकृतिना [नानाकृतिभिः इति पाठः साधुः।] परमात्मा
181560 निराकृतिः॥ ४४॥

181561

181562 अतः परिशेषान्निर्दोषः स्वपक्ष एव स्थित इत्याह - तस्मादिति सार्धेन।
181563 निराकृतिर्निराकारः परमात्मैव विवर्तरूपाभिः सर्गादिनानाकृतिभिः स्थित इति
181564 सिद्धान्तः प्रतिष्ठित इत्यर्थः॥ ४४॥

181565

181566 स्वप्ने चिदेव शैलादिरूपेणात्मनि तिष्ठति।
181567 ब्रह्मात्माखिलमुक्तोऽसावन्येनासौ कृतौ यदि॥ ४५॥

181568

181569 प्रपञ्चस्य ब्रह्मात्मैकत्वप्रबोधे स्वप्नवदेव बाधात्सत्त्वासत्त्वाभ्यां
181570 वक्तुमयोग्या तुच्छतैव परिशिष्यत इत्याह - ब्रह्मात्मेति। असौ प्रत्यगात्मा
181571 अखिलबन्धमुक्तो ब्रह्मैव। असौ च प्रपञ्चः अन्येनाज्ञानेनैव स्वप्नवत् कृत इति
181572 सिद्धान्ते तथाविधे ब्रह्मात्मन्युपलब्धे सति इह प्रपञ्चे अस्तित्वनास्तित्वादिकं
181573 नैवानुभूयत इति तुच्छतैव परिशिष्यत इति परेणान्वयः॥ ४५॥

181574

181575 नेहास्तित्वं न नास्तित्वमुपलब्धेऽनुभूयते।
181576 नैवानुभवितृत्वं च न चानुभवनक्रमः॥ ४६॥

181577

181578 किमपीदमनाख्येयं बुद्धेनैवानुभूयते।
181579 स्वसंवेदनसंवेद्यं सत्तासत्ताविजृम्भितम्॥ ४७॥

181580

181581 बुद्धे सति नैवानुभूयते। अबुद्धतादशायामप्यनिर्वचनीयमेव जगदित्याह -
181582 स्वसंवेदनेत्यादिना॥ ४७॥

181583

181584 अभावरूपिणो भावा अभावा भावरूपिणः।

181585 सर्वदा सर्वथा सर्वे भान्ति भासुरतां गताः ॥ ४८ ॥
181586
181587 बृंहति ब्रह्मणि ब्रह्म व्योम व्योमनि वर्धते ।
181588 न चोपपद्यते किंचिद्ब्रह्म व्योम्नि विबृंहणम् ॥ ४९ ॥
181589
181590 विबृंहणं जगदाकारेण वर्धनं ब्रह्म व्योम्नि नोपपद्यते ॥ ४९ ॥
181591
181592 द्रष्टृदृश्यदृगात्मायमहं सर्गादिविभ्रमः ।
181593 शान्तचिद्व्योमविस्तारो न कुड्याद्युपपद्यते ॥ ५० ॥
181594
181595 यथा न सन्न कुड्यादि स्वसंकल्पनपत्तनम् ।
181596 तथैवायं जगदिति शान्तमेकमनामयम् ॥ ५१ ॥
181597
181598 यथा स्वसंकल्पनपत्तनं न सत् तत्र च कुड्यादि सुतरां न सत् ॥ ५१ ॥
181599
181600 पूर्णं हि परमं शान्तमिदं सर्वमखण्डितम् ।
181601 अनिङ्गनमनाभासमनाद्यन्तमचेतितम् ॥ ५२ ॥
181602
181603 अजन्ममरणं शान्तमनादिनिधनं महत् ।
181604 अनुपाधि निराकारं स्वपदं बुद्धवानहम् ॥ ५३ ॥
181605
181606 या संविदन्तः स्फुरति सैवोपायाति वाक्यताम् ।
181607 यद्बीजं लीनमवनौ तद्यात्यङ्कुरतां किल ॥ ५४ ॥
181608
181609 ममेदं वाक्यं सत्यमेव नास्त्यमनुभवमूलकत्वादिति सयुक्तिकमाह - येति ॥ ५४
181610 । ।
181611
181612 शुद्धज्ञानामयैकात्मा द्वैतैक्यपरिवर्जितः ।
181613 मनागपि न जानामि द्वैतैक्यकलनाकलाम् ॥ ५५ ॥
181614
181615 द्वैतैक्यकलनायाः कलां लेशमपि मनागपि न जानामि ॥ ५५ ॥
181616
181617 सर्वे तूष्णींमया एव जीवन्मुक्ता इमे जनाः ।
181618 संशान्तसर्वसंरम्भाः खे स्वभाव इव स्थिताः ॥ ५६ ॥
181619
181620 सर्वे इमे जनाः स्वाज्ञानेन जीवन्तोपि मद्दृशा ब्रह्ममात्रत्वान्नित्यमुक्ताः खे
181621 स्वभावः शून्यतेव स्थिताः ॥ ५६ ॥
181622
181623 जगत्स्पर्शमहारम्भमपि तूष्णीमिदं स्थितम् ।
181624 चित्रं भित्ताविव कृतं मनोराज्य इवोदितम् ॥ ५७ ॥
181625
181626 तथा तद्व्योग्यं जगदपि स्पर्शमहारम्भत्वात्त्वगादीन्द्रियवेद्यत्वाच्चित्रं
181627 विलक्षणमपि भित्तौ चित्रमिवाभासमात्रं स्थितम् ॥ ५७ ॥
181628
181629 शैलादिवोत्कीर्णसमं कथायामिव वर्णितम् ।
181630 शम्बरेणेव रचितं व्योम्नि स्वप्न इवोदितम् ॥ ५८ ॥
181631
181632 उत्कीर्णप्रतिमादिसमम् ॥ ५८ ॥
181633
181634 किल स्वप्नवदेवेदं सर्गादावेव भाति यत् ।
181635 अभित्तिकं निष्प्रतिघं जगत्केवास्य सत्यता ॥ ५९ ॥
181636

181637 यत्किल सर्गादावे अभित्तिकं निरालम्बनं भाति अस्य केव सत्यता ॥ ५९ ॥
181638
181639 जगद्बुद्धाविदं सत्यं परिज्ञानवतो मृषा ।
181640 ब्रह्मात्मक इदं ब्रह्म शान्ते शान्तं पराम्बरम् ॥ ६० ॥
181641
181642 तथा च दृष्टिभेदेन च्तुर्धा जगत्संपन्नमित्याह - जगदिति । इदं
181643 जगज्जगद्बुद्धावज्ञदृष्टौ सत्यम् । परिज्ञानवतो विवेकिनो दृष्टौ मृषा ।
181644 ब्रह्मात्मकं पश्यतो ब्रह्म । भूमिकाभेदारोहणक्रमेण शान्ते पुरुषे
181645 त्वन्धकारवत् क्रमेण शान्तं सत्परमम्बरं शून्यमेव पर्यवस्यतीत्यर्थः ॥ ६० ॥
181646
181647 सर्व एव इमे भावाः सह स्थावरजङ्गमाः ।
181648 अस्मदादय आकाशं जगज्ज्ञविषयं तथा ॥ ६१ ॥
181649
181650 तत्र च्तुर्थरूपं तत्त्वज्ञविषयमित्याह - सर्व एवेति ॥ ६१ ॥
181651
181652 खमहं खं भवांश्चित्खं जगत्खं खं खमेव च ।
181653 चिदाकाशैकतामेत्य भजैकाकाशरूपताम् ॥ ६२ ॥
181654
181655 हे गुरो त्वं मदुक्तपरीक्षार्थमेकाकाशरूपतां भज ॥ ६२ ॥
181656
181657 ज्ञानेनाकाशकल्पेन सर्वात्म गगनोपमम् ।
181658 ज्ञेयाभिन्नेन संबोधात्तं वन्दे द्विपदां वरम् ॥ ६३ ॥
181659
181660 तं तादृशं ब्रह्माकाशभावे स्थितं द्विपदां वरं त्वामहमाकाशकल्पेन
181661 स्वरूपज्ञानेन सर्वात्म गगनोपमं ज्ञेयपूर्णानन्दैकब्रह्माभेदेन
181662 संबोधाद्वन्द्वे नमस्करोमि ॥ ६३ ॥
181663
181664 चिद्रूपत्वादुदेतीदं जगत्तत्रैव लीयते ।
181665 अकारणकमेवान्तः परं व्योमैव निर्मलम् ॥ ६४ ॥
181666
181667 सर्वात्म गगनोपमं चेत्येतद्विप्रतिषिद्धमिति शङ्कां वारयन्नाह -
181668 चिद्रूपत्वादिति ॥ ६४ ॥
181669
181670 एतत्सर्वपदातीतं सर्वशास्त्रकलातिगम् ।
181671 पदमासाद्य निर्द्वन्द्वं त्वमाकाशात्मकोऽभवः ॥ ६५ ॥
181672
181673 सर्वाः शास्त्रकलाः शास्त्रयुक्तीरतिक्रम्य गच्छतीति सर्वशास्त्रकलातिगं
181674 तत्पदमासाद्य त्वमप्याकाशो ब्रह्माकाशस्तदात्मकः अभवः सदैवासीः ।
181675 भवशून्य इति वा ॥ ६५ ॥
181676
181677 अहं जगच्च नो पादपाण्यादि न घटादि च ।
181678 सर्वमाकाशमाकाशमेवाच्छं सूक्ष्मचिद्भवेत् ॥ ६६ ॥
181679
181680 अहं रामस्तदवयवपादपाण्यादि तद्बाह्यघटादि चेति प्रसिद्धं जगच्च नो नास्त्येव
181681 । यतः सर्वमाकाशमेव ॥ ६६ ॥
181682
181683 सर्वापह्नव एवायं मया यो दर्शितस्तव ।
181684 स निन्द्यो वादिनां वादेष्वात्मज्ञानेषु राजते ॥ ६७ ॥
181685
181686 अयं च सर्वापह्नवो यद्यपि मम माता वन्ध्या मम मुखे जिह्वा नास्तीति
181687 वाक्यवद्व्याघातवैतण्डिकत्वादिदोषापादकत्वाद्वादिनां तार्किकादीनां वादेषु
181688 निन्द्य इति तत्सभायां न राजते तथाप्यात्मज्ञानेषु बहिमिर्वादिमिर्बहुधोपन्यस्तेषु

मध्ये परमपुरुषार्थपर्यवसितं किं ज्ञानं स्यादिति परीक्षकाणां सभायां
राजते। न हि
सर्वापह्नवमन्तरेणात्यन्तिकानर्थनिवृत्त्युपलक्षितनिरतिशयानन्दप्रतिष्ठा
सिध्यतीति भावः॥ ६७॥

काष्ठमौनात्मको वादे न सर्वापह्नवो यदा।
क्रियते तेन वादेषु नात्मज्ञानं प्रसीदति॥ ६८॥

यत इत्यर्थे यदाशब्दः। यतः काष्ठमौनपर्यवसितत्वात्काष्ठमौनात्मकः
सर्वापह्नवो वादे न संभवत्येवेति न क्रियते। तेन तदकरणेन निर्विशेषात्मा
परिचयाद्वादेषु आत्मज्ञानं न प्रसीदति नोदेतीत्यर्थः॥ ६८॥

प्रत्यक्षादिप्रमाणानां यदगम्यमचिह्नितम्।
स्वानुभूतिभवं ब्रह्म वादैस्तल्लभ्यते कथम्॥ ६९॥

कुतो नोदेति तत्राह - प्रत्यक्षेति॥ ६९॥

सर्वागमार्थसमतीतमचिह्नमच्छमाकाशमेकमजमाद्यमनामरूपम्।
शुद्धं चिदात्मकमिहास्त्यनुभूतिमात्रं शान्ताभिधानकलनं
मलशङ्कयालम्॥ ७०॥

उक्तं सारतः संक्षिप्योपसंहरति - सर्वेति। सर्वे ये आगमाः
शास्त्रभेदास्तदर्थेभ्यः समतीम् अनुभूतिर्मात्रा प्रमाणं यत्र
तथाविधमचिह्नमत एव शान्ताभिधानकलनं शुद्धं चिदात्मकमेकं
ब्रह्माकाशमेवास्ति नान्यदणुमात्रमपीति तत्र मलशङ्कया अलं पर्याप्तम्।
प्रयोजनं नास्तीत्यर्थः॥ ७०॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० नि० उ०
बोधप्रकाशीकरणयोगोपदेशो नाम पञ्चनवत्यधिकशततमः सर्गः॥ १९५॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
बोधप्रकाशीकरणयोगोपदेशो नाम पञ्चनवत्यधिकशततमः सर्गः॥ १९५॥

षण्णवत्यधिकशततमः सर्गः १९६

श्रीवाल्मीकिरुवाच।

एवमुक्त्वा महाबुद्धे रामो राजीवलोचनः।
मुहूर्तमात्रं विश्रम्य तूष्णीं स्थित्वा परे पदे॥ १॥

गुरुशास्त्राद्युपायेन यथा ब्रह्मेह लभ्यते।
दारुवैवधिकाख्यानं तथा संक्षिप्य वर्ण्यते॥

हे महाबुद्धे इति भरद्वाजस्यारिष्टनेमेर्वा संबोधनम्॥ १॥

परमां तृप्तिमापन्नो विश्रान्तः परमात्मनि।
मुनिं पुनरपृच्छत्तं जानन्नपि हि लीलया॥ २॥

लीलया गुरुमुखेन श्रवणकौतूहलेन॥ २॥

श्रीराम उवाच।

भगवन्संशयाम्भोदशरत्काल मुनीश्वर।
इदानीं संशयोऽयं मे जातो मनसि पेलवः॥ ३॥

एवमेतन्महाज्ञानं संसारार्णवतारणम्।
समस्तमेव वाग्जालं समतीत्यावतिष्ठते॥ ४॥

करिष्यमाणं प्रश्नं पूर्वेण संगमयितुं पूर्वोक्तमनुवदति - एवमिति॥ ४॥

यदिदं किल सद्ब्रह्म स्वसंविन्मात्रनिश्चयम्।
तदवाच्यं किल गिरां महतामपि मानद॥ ५॥

अवाच्यम् यतो वाचो निवर्तन्ते अप्राप्य मनसा सह इति श्रुतेः
शब्दप्रवृत्तिनिमित्तधर्मशून्यत्वाच्चेत्यर्थः॥ ५॥

एवं स्थिते परं ज्ञेयं सर्वसंकल्पनोज्झितम्।
स्वसंवित्तुर्यतन्मात्रलभ्यं दुर्गमतां गतम्॥ ६॥

स्वसंविद्रूपं यत्तुर्यमवस्थात्रयातीतं स्वप्रकाशवस्तु तन्मात्रलभ्यमत एव
जाग्रदवस्थान्तर्गतगुरुशास्त्राद्यगम्यत्वाद्दुर्गमतां गतम्॥ ६॥

प्रतियोगिव्यवच्छेदसंख्याभेदैषिणां किल।
कथं शास्त्रपदैस्तुच्छैः सविकल्पैरवाप्यते॥ ७॥

तुच्छैः क्षुद्रतरप्रतियोगिव्यवच्छेदादिसापेक्षत्वात्तद्बोधनासमर्थैः॥ ७॥

विकल्पसारशब्दाद्यैर्ज्ञानं शास्त्रैर्न लभ्यते।
तत्किमर्थमनर्थाय गुरुशास्त्रादि कल्पितम्॥ ८॥

विकल्पसहस्रानुसंधानभ्रान्तिपरम्परानर्थाय॥ ८॥

गुरुशास्त्रादिविज्ञाने कारणं वास्त्यकारणम्।
तदत्र निश्चयं ब्रह्मन्ब्रूहि मे वदतां वर॥ ९॥

तत्तस्मात्तत्त्वविज्ञाने गुरुशास्त्रादिकं कारणमस्ति भवति अकारणं वा। अत्रास्मिन्
संशये निश्चयं ब्रूहीत्यर्थः॥ ९॥

श्रीवसिष्ठ उवाच।

एवमेतन्महाबाहो न शास्त्रं ज्ञानकारणम्।
नानाशब्दमयं शास्त्रमनाम च परं पदम्॥ १०॥

रामशङ्कामनुमोदमानो वसिष्ठः समाधत्ते - एवमेतदित्यादिना। अनामेति।
शब्दप्रवृत्तिनिमित्तधर्मशून्यत्वादसंसृष्टत्वाच्च परं पदं न पदार्थो न
वाक्यार्थश्चेत्यर्थः॥ १०॥

तथापि राघवश्रेष्ठ यथैतद्धेतुतां गतम्।
शास्त्राद्युत्तमबोधस्य तत्समासेन मे शृणु॥ ११॥

यद्यप्येवं तथाप्येतच्छास्त्रादि उत्तमबोधस्य तत्फलस्य मोक्षस्य च यथा येन
प्रकारेण हेतुतां गतं तच्छृणु
वक्ष्यमाणकाष्ठवैवधिकाख्यानदृष्टान्तेनेत्यर्थः॥ ११॥

सन्ति क्वचिद्वैवधिकाः कीरकाश्चिरदुर्भगाः |
दुःखेनाभ्यागताः शोषं ग्रीष्मेणेव जरद्द्रुमाः || १२ ||

तदेवाह-सन्तीत्यादिना | विवधवीवधशब्दावुभयतो बद्धशिक्ये स्कन्धवाह्ये
काष्ठविशेषे वर्तेते तद्वहन्तीति वैवधिकाः कीरकाः शूद्रजातिभेदा देशविशेषजा
वा | शोषं कार्श्यम् || १२ ||

दारिद्र्येण दुरन्तेन कन्थासंस्थानकारिणा |
दीनाननाशयाः पद्मा निर्गतेनेव वारिणा || १३ ||

कन्था पटच्चरग्रथिता तयैव प्रावरणसंस्थानकारिणा | कथासंस्थान इति पाठे
पूर्वानुभूतान्नवस्त्रादिकथामात्रावस्थानकारिणेत्यर्थः | तटाकभङ्गान्निर्गतेन
वारिणा पद्मा इव दीनाननाशयाः || १३ ||

दौर्गत्यपरितप्तास्ते जीवितार्थमचिन्तयन् |
जठरस्य कया युक्त्या वयं कुर्मः प्रपूरणम् || १४ ||

दौर्गत्येन दारिद्र्येणाभितप्ताः || १४ ||

इति संचिन्त्य विधिना दिनान्तेन दिनं प्रति |
दारुभारेण जीवामो विक्रीतेनेति संस्थिताः || १५ ||

दिनं प्रति प्रतिदिनम् | दिनान्तेन दिनावसानान्तश्रमसाध्येनेति यावत् | इति संस्थिता
निश्चिताः || १५ ||

इति संचिन्त्य ते जग्मुर्दार्वर्थं विपिनान्तरम् |
ययैवाजीव्यते युक्त्या सैवापदि विराजते || १६ ||

इति ते प्रत्यहं गत्वा काननं भवचारिणः |
दारूण्यानीय विक्रीय चक्रुर्देहस्य धारणम् || १७ ||

भवचारिणः तत्तद्दिनप्राप्ताजभक्षणशीलाः || १७ ||

यत्प्रयान्ति वनान्तं ते तस्मिन्सन्त्यखिलानि हि |
गुप्तागुप्तानि रत्नानि दारूणि कनकानि च || १८ ||

गुप्ताम्यगुप्तानि प्रकटानि च रत्नादीनि || १८ ||

तेषां भारभृतां मध्यात्केचित्कतिपयैर्वनात् |
जातरूपाणि रत्नानि तानि संप्राप्नुवन्ति हि || १९ ||

केचित् भाग्यवन्तः || १९ ||

केचिच्चन्दनदारूणि केचित्पुष्पाणि मानद |
केचित्फलानि विक्रीय जीवन्ति चिरकीरकाः || २० ||

पुष्पाणि केतकीचम्पकादीनि | चिर्कीरकाः चिराभ्यासदृढीभूतकीरकवृत्तयः || २० ||

केचित्सर्वमनासाद्य दुर्दारुण्येव दुर्धियः |
नीत्वा विक्रीय जीवन्ति वनवीथ्युपजीविनः || २१ ||

181845 केचिद्भाग्यहीना दुर्धियः सारान्वेषणाकुशलबुद्धयो दुर्दारूण्येव नीत्वा ॥ २१ ॥
181846
181847 दार्वर्थमुद्यताः सर्वे ते संप्राप्य महावनम् ।
181848 केचित्प्राप्य स्थिताः सर्वे झटित्येवं गतज्वरम् ॥ २२ ॥
181849
181850 केचिद्रत्नादीनि प्राप्य गतदारिद्र्यज्वरं यथा स्यात्तथा स्थिताः ॥ २२ ॥
181851
181852 इति यावदजस्रं ते सेवन्ते तन्महावनम् ।
181853 प्रदेशात्तावदेकस्मात्प्राप्तश्चिन्तामणिर्मणिः ॥ २३ ॥
181854
181855 चिन्तामण्याख्यो मणिर्दैवात्प्राप्तः ॥ २३ ॥
181856
181857 तस्माच्चिन्तामणेः प्राप्ताः समग्रा विभवश्रियाः ।
181858 परमं सुखमायातास्तत्र ते संस्थिताः सुखम् ॥ २४ ॥
181859
181860 दार्वर्थमुद्यताः सन्तः प्राप्य सर्वार्थदं मणिम् ।
181861 सुखं तिष्ठन्ति निर्द्वन्द्वा दिवि देववरा इव ॥ २५ ॥
181862
181863 निर्द्वन्द्वा निरस्तशीतोष्णक्षुत्तृषादिदुःखाः ॥ २५ ॥
181864
181865 सर्वार्थसारपरिपूर्णतया तया ते काष्ठोद्यमाधिगतसन्मणयो महान्तः ।
181866 तिष्ठन्ति शान्तभयमोहविषाददुःखमानन्दमन्थरधियः समतामुपेताः
181867 ॥ २६ ॥
181868
181869 आख्यानमुपसंहरति - सर्वार्थेति । ते कीरकाः काष्ठोद्यमेनैव अधिगतः
181870 प्राप्तः सन्मणिश्चिन्तामणिर्यैस्तहाविधाः सन्तस्तया उक्तया
181871 सर्वैरर्थसारैरुत्तमधनैः परिपूर्णतया शान्तभयमोहविषाददुःखं यथा
181872 स्यात्तथा आनन्दमन्थरधियो भूत्वा इतरलाभालाभादिषु समतामुपेताः
181873 सन्तस्तिष्ठन्ति ॥ २६ ॥
181874
181875 इत्यार्षे श्रीवासि० वा० दे० मो० नि० उ० काष्ठवैवधिकोपाख्याने चिन्तामणिलाभो नाम
181876 षण्णवत्यधिकशततमः सर्गः ॥ १९६ ॥
181877
181878 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
181879 चिन्तामणिलाभो नाम षण्णवत्यधिकशततमः सर्गः ॥ १९६ ॥
181880
181881
181882 सप्तनवत्यधिकशततमः सर्गः १९७
181883
181884 श्रीराम उवाच ।
181885
181886 तथा कुरु मुनिश्रेष्ठ यथा वैवधिकक्रमम् ।
181887 असंदेहमिमं सम्यगवगच्छामि मानद ॥ १ ॥
181888
181889 स्फुटं वैवधिकाख्याणतात्पर्यविवृतिक्रमात् ।
181890 हेतुत्वं गुरुशास्त्रादेरात्मज्ञानेऽत्र वर्ण्यते ॥
181891
181892 यथा अहमवगच्छामि तात्पर्यतस्तथा कुरु विवरणनिति प्रोषः ॥ १ ॥
181893
181894 श्रीवसिष्ठ उवाच ।
181895
181896 ये ते वैवधिका राम त एते मानवा भुवि ।

181897 तेषां दारिद्र्यदुःखं यत्तदज्ञानं महातपः ॥ २ ॥
181898
181899 ये वैवधिका मयोक्तास्ते सादृश्यादेते मानवा बोध्याः । एवमग्रेऽपि सर्वत्र ।
181900 यद्दारिद्र्यदुःखं मयोक्तं तत्तेषामज्ञानं तत्प्रयुक्तश्च महान्
181901 आतपस्त्रिविधसंतापः । तत्तु दानं महातपः इति पाठे दानतपःप्रयोजिका
181902 ऐहिकामुष्मिकभोगाशा लक्षणयोच्यते । भोगार्थिनः सन्तस्तदुपायेषूद्यता इत्यत्र
181903 तात्पर्यमित्यर्थः ॥ २ ॥
181904
181905 यत्तन्महावनं प्रोक्तं गुरुशास्त्रक्रमादि तत् ।
181906 यदुद्यतास्ते ग्रासार्थं जना भोगार्थिनो हि ते ॥ ३ ॥
181907
181908 भोगौघाः सिद्धिमायान्तु मम निष्कृपणो जनः ।
181909 अनपेक्षितकार्यार्थः शास्त्रादौ संप्रवर्तते ॥ ४ ॥
181910
181911 मम भोगौघाः सिद्धिमायान्त्विति नितरां कृपणः कार्पण्यवान् जनो मानवः
181912 अनपेक्षिता इतरकार्यार्था येन तथाविधः सन् । शास्त्रादौ शास्त्रमूलके तदुपाये ॥ ४ ॥
181913
181914 भोगार्थं संप्रवृत्तोऽपि प्राप्नोत्यभ्यासतः क्रमात् ।
181915 जन्तुश्चिन्तितमेवाद्यपदं परवशोऽपि सन् ॥ ५ ॥
181916
181917 यद्यप्ययं भोगेच्छयैव शास्त्रे प्रवृत्तस्तथापि तच्छास्त्रं
181918 गुडजिह्विकान्यायेनैनं प्रथमं फलास्वादनैः प्रलोभ्यान्ते स्वतात्पर्यविषये
181919 परमे पदे नयत्येवेत्याह - भोगार्थमिति । शास्त्रतः प्रथमं भोगफललाभेन
181920 तद्विश्वासदार्ढ्यक्रमात्तदुक्तसाधनाभ्यासतो भूमिकाभेदारोहणक्रमाच्चिन्तितं
181921 शास्त्रपरमं तात्पर्यविषयमाद्यपदं मोक्षाख्यं ब्रह्म ॥ ५ ॥
181922
181923 दार्वर्थमुद्यतो भावी यथा संप्राप्तवान्मणिम् ।
181924 भोगार्थमात्तशास्त्रोऽयं तथाप्नोति जनः पदम् ॥ ६ ॥
181925
181926 भावः सारासारविचारान्वेषणादिः सोऽस्यास्तीति भावी वैवधिकः ॥ ६ ॥
181927
181928 किं स्याच्छास्त्रविचाराभ्यामिति संदेहलीलया ।
181929 कश्चित्प्रवर्तते पश्चादाप्नोति पदमुत्तमम् ॥ ७ ॥
181930
181931 संदेहप्रयुक्तया लीलया कौतूहलेन ॥ ७ ॥
181932
181933 अदृष्टोत्तमतत्त्वार्थः शास्त्रादौ संप्रवर्तते ।
181934 संदेहेनार्थभोगार्थं जनः प्राप्नोति तत्पदम् ॥ ८ ॥
181935
181936 अर्थ्यत इत्यर्थो विषयस्तद्भोगार्थम् ॥ ८ ॥
181937
181938 अन्यथा संप्रवर्तन्ते शास्त्रैर्वासनया जनाः ।
181939 अन्यदासादयन्त्याद्यं मणिं वैवधिका इव ॥ ९ ॥
181940
181941 स्वस्ववासनानुसारेणान्यादृशं शास्त्रफलं संभावयन्तो जनास्तत्र प्रवर्तन्ते ।
181942 अन्यद्वाङ्मनसागोचरं निर्विषयनिरतिशयसुखमासादयन्तीत्यंशे
181943 वैवधिकाख्यानदृष्टान्तोपन्यास इत्यर्थः ॥ ९ ॥
181944
181945 परोपकारेऽविरतं स्वभावेन प्रवर्तते ।
181946 यः स साधुरिति प्रोक्तः प्रमाणं त्वस्य चेष्टितम् ॥ १० ॥
181947
181948 सर्वजनानामुत्सर्गतः सन्मार्गप्रवृत्तौ साध्वाचारदर्शनमेव मूलमिति

181949 साधुलक्षणप्रदर्शनपूर्वकमाह - परोपकारे इति। प्रमाणं सर्वलोकस्येति
181950 शेषः॥ १०॥
181951
181952 साध्वाचारवशाल्लोको भोगसंप्राप्तिशङ्कया।
181953 संदेहश्चाप्यतत्त्वज्ञः शास्त्रादौ संप्रवर्तते॥ ११॥
181954
181955 अस्तु प्रमाणं किं ततस्तत्राह - साध्विति। अतत्त्वज्ञो लोकः शास्त्रफले संदिग्धे
181956 इति संदेहः संदिहानोऽपि भोगसंप्राप्तिसंभावनया संप्रवर्तते॥ ११॥
181957
181958 भोगार्थं संप्रवृत्तोऽसौ भोगमोक्षावुभावपि।
181959 तस्मात्प्राप्नोति दार्वर्थी वनाच्चिन्तामणिं यथा॥ १२॥
181960
181961 केचिच्चन्दनदारूणि केचिच्चिन्तामणिं मणिम्।
181962 केचित्सामान्यरत्नानि प्राप्नुवन्ति यथा वनात्॥ १३॥
181963
181964 गुप्तागुप्तानि इत्याद्युक्तेस्तात्पर्यमाह - केचिदित्यादिना॥ १३॥
181965
181966 केचित्कामं केचिदर्थं केचिद्धर्मत्रयं तु वा।
181967 केचिन्मोक्षमशेषं च लभन्ते शास्त्रतस्तथा॥ १४॥
181968
181969 वर्गत्रयोपदेशो हि शास्त्रादिष्वस्ति राघव।
181970 ब्रह्मप्राप्तिस्त्ववाच्यत्वान्नास्ति तच्छासनेष्वपि॥ १५॥
181971
181972 वर्गत्रयं धर्मकामार्थास्तस्योपदेशो मुख्यवृत्त्यैवास्ति। तच्छासनेषु
181973 ब्रह्मतत्परेषु शास्त्रेष्वपि पदवाक्यमुख्यवृत्त्या ब्रह्मप्राप्तिर्ब्रह्मबोधः॥ १५॥
181974
181975 केवलं सर्ववाक्यार्थैर्ध्वन्यमानावगम्यते।
181976 कालश्रीः प्रसवेनेव स्वयं स्वानुभवेन सा॥ १६॥
181977
181978 वसन्तादिकालश्रीः प्रसवेन तत्तदार्तवफलपुष्पादिजन्मनेव ध्वन्यमाना
181979 सूच्यमाना। आलंकारिकसमये व्यञ्जनाख्यवृत्त्यन्तरेण इतरसमये लक्षणयेति
181980 यावत्॥ १६॥
181981
181982 सर्वार्थातिगतं शास्त्रे विद्यते ब्रह्मवेदनम्।
181983 सर्वगातिगतं स्वच्छं लावण्यमिव योषिति॥ १७॥
181984
181985 मुख्यवृत्त्या बोधने असामर्थ्येऽपि शास्त्रस्य लक्षणाद्युपायैर्बोधने
181986 सामर्थ्यमस्त्येवेति तेन अधिकारिणां ब्रह्मवेदनमस्त्येवेति न वैयर्थ्यमित्याह -
181987 सर्वार्थेति। सर्वान् अर्थान् दृश्यवर्गास्त्रिवर्गान्वा अतिक्रम्य उत्कर्षकाष्ठां गतम्।
181988 मणिदर्पणचन्द्रादिसर्वगतसौन्दर्याण्यतिगतं लावण्यं योषिति स्त्रीरत्नेऽस्ति
181989 तद्वदित्यर्थः॥ १७॥
181990
181991 न शास्त्रान्न गुरोर्वाक्यान्न दानान्नेश्वरार्चनात्।
181992 एष सर्वपदातीतो बोधः संप्राप्यते परः॥ १८॥
181993
181994 साक्षान्न संप्राप्यत इत्यर्थः॥ १८॥
181995
181996 एतान्यकरणान्येव कारणत्वं गतान्यलम्।
181997 परमात्मैकविश्रान्तौ यथा राघव तच्छृणु॥ १९॥
181998
181999 चित्तशुद्ध्यादिसाधनपरम्परोपचयद्वारा कारणत्वं गतानि॥ १९॥
182000

182001 शास्त्रादभ्यासयोगेन चित्तं यातं विशुद्धताम् ।
182002 अनिच्छदेवमेवाशु पदं पश्यति पावनम् ॥ २० ॥
182003
182004 अनिच्छत् सर्वभोगेच्छानिर्मुक्तं एवमेव प्रतिदिनमन्तर्मुखतया प्रत्यक्प्रवणं
182005 चित्तं तत्पदं ब्रह्म पश्यति ॥ २० ॥
182006
182007 एतच्छास्त्रादविद्यायाः सात्त्विको भाग उच्यते ।
182008 तामसः सात्त्विकेनास्याभागेनायाति संक्षयम् ॥ २१ ॥
182009
182010 उच्यते उत्कर्षं नीयते । उच्चशब्दात्तत्करोतीति णिचि कर्मणि लटि यकि णिलोपः ॥ २१ ॥
182011
182012 नूनं मलं प्रधानेन क्षालयच्छास्त्ररूपिणा ।
182013 पुरुषः शुद्धतामेति परमां वस्तुशक्तितः ॥ २२ ॥
182014
182015 शास्त्ररूपिणा प्रधानेन जलेन क्षालयन् सन् । वस्तुशक्तितः
182016 अचिन्त्याच्छास्त्रादिप्रभावात्तद्बोध्यनित्यशुद्धात्मवस्तुसामर्थ्याच्च ॥ २२ ॥
182017
182018 अनिच्छयोरेव यथा सप्तसप्तिसमुद्रयोः ।
182019 प्रागदृश्यं तृतीयत्वं [तृतीयं तु स्वभाववशत इति
182020 पाठष्टीकानुगुणः ।] स्वभाववशतः स्वतः ॥ २३ ॥
182021
182022 यथा सप्तसप्तेः सूर्यस्य समुद्रस्य च संनिधाने प्रागदृश्यमपि प्रतिबिम्बं
182023 स्वच्छप्रकाशस्वभाववशतस्तृतीयं संप्रवर्तते । एवं मुमुक्षुशास्त्रयोरपि
182024 मिथः संबन्धमात्रत आत्मज्ञानं प्रवर्तत इति त्रयाणामन्वयः ॥ २३ ॥
182025
182026 स्वसंनिधानमात्रेण विदितप्रतिभासनम् ।
182027 सदसन्मयमाभोगि प्रतिबिम्बं प्रवर्तते ॥ २४ ॥
182028
182029 विदितमनुभवसिद्धं प्रतिभासनं सम्यक्स्फुरणं यस्य तथाविधम् ॥ २४ ॥
182030
182031 मुमुक्षुशास्त्रयोरेवं मिथः संबन्धमात्रतः ।
182032 सर्वसंवित्पदातीतमात्मज्ञानं प्रवर्तते ॥ २५ ॥
182033
182034 अनयोः प्रेक्षणद्देहे विवेको जायते यथा ।
182035 तथा स्वभावतः शास्त्रविवेकाज्ज्ञेयवेदनम् ॥ २६ ॥
182036
182037 अनयोः सवितृसमुद्रयोः प्रेक्षणाद्यथा अत्यन्तवैधर्म्यादिबोधलक्षणो विवेको
182038 जायते तथा शास्त्रकृताद्विवेकादपि देहे
182039 सर्वोपाध्यसंसृष्टाद्द्वितीयज्ञेयवेदनं जायते ॥ २६ ॥
182040
182041 लोष्टेन लोष्टं सलिले क्षालयन्बालको यथा ।
182042 क्षयेण लोष्टयोर्हस्तनैर्मल्यं लभते परम् ॥ २७ ॥
182043
182044 शास्त्रकृतैर्विचारविकल्पैर्भ्रान्तिकृतविकल्पानां क्षालनेनात्मनैर्मल्यप्राप्तावपि
182045 दृष्टान्तमाह - लोष्टेनेति ॥ २७ ॥
182046
182047 तथा शास्त्रविकल्पौघैर्विकल्पांश्चेतनाद्बुधः ।
182048 क्षालयन्स्वविचारेण परमां याति शुद्धताम् ॥ २८ ॥
182049
182050 चेतनात् पुनःपुनरात्मतत्त्वपरीक्षणात्क्षालयन्सन् ॥ २८ ॥
182051
182052 महावाक्यार्थनिष्यन्दं स्वात्मज्ञानमवाप्यते ।

182053 शास्त्रादेरिक्षुरसतः स्वाद्विव स्वानुभूतितः ॥ २९ ॥
182054

182055 केन प्रमाणेन कथं परीक्षणात्तत्राह - महावाक्येति । शास्त्रादेः
182056 सूत्रभाष्यतद्व्याख्यामहारामायणादिशास्त्राद्##-
182057 तत्त्वंपदवाच्यार्थद्वयपरिशोधनलब्धरसभूतमखण्डवाक्यार्था##-
182058 यन्त्रादिनिपीडनोपायान्निःसारितेक्षुरसतः स्वादु माधुर्यास्वादनं स्वानुभूतितः
182059 अवाप्यते तद्वदित्यर्थः ॥ २९ ॥
182060

182061 प्रभाभित्त्योः समासङ्गाद्यथाऽऽलोकोऽनुभूयते ।
182062 श्रुतश्रुतवतोः सङ्गादात्मज्ञानं तथा भवेत् ॥ ३० ॥
182063

182064 यथा नभसि प्रसृतोऽप्यालोकः प्रभाभित्त्योः समासङ्गादभिव्यक्तः
182065 स्फुटमनुभूयते तथा नित्यस्वप्रकाशरूपमप्यात्मज्ञानं
182066 श्रवणतदधिकारिणोर्मेलनात्स्फुटमनुभूयत इत्यर्थः ॥ ३० ॥
182067

182068 त्रिवर्गमात्रसिद्ध्यै यन्न मोक्षाय च तच्छ्रुतम् ।
182069 विपुलश्रुतचर्चासु तुच्छमश्रुतमेव तत् ॥ ३१ ॥
182070

182071 तत्र शास्त्रान्तरश्रवणं तत्पाण्डित्यं वा नोपयुज्यत एवेत्याह - त्रिवर्गेति ।
182072 विपुलश्रुता बहुश्रुतास्तत्त्वविदस्तेषां तत्त्वबोधोपायचर्चासु तच्छ्रुतमश्रुतं
182073 मौर्ख्यमेव यतो मिथ्याविषयफलत्वात्तुच्छं तदित्यर्थः ॥ ३१ ॥
182074

182075 तच्छ्रुतं यत्किल ज्ञप्त्यै सा ज्ञप्तिः समता यया ।
182076 तत्साम्यं यत्र सौषुप्ती स्थितिर्जाग्रति जायते ॥ ३२ ॥
182077

182078 अतो निर्विकल्पस्वरूपस्थितिपर्यवसितमेव श्रुतमुपादेयमित्याशयेन प्रशंसति -
182079 तदिति । यत्र जाग्रत्यपि सौषुप्ती निर्विकल्पा स्वरूपस्थितिर्जायते ॥ ३२ ॥
182080

182081 एवं हि सर्वमेतत्तच्छास्त्रादेः समवाप्यते ।
182082 तस्मात्सर्वप्रयत्नेन शास्त्राद्यभ्यासमाहरेत् ॥ ३३ ॥
182083

182084 इदं सर्वं शास्त्राधीनमिति तदावश्यकमित्याह - एवमिति ॥ ३३ ॥
182085

182086 शास्त्रार्थभावनवशेन गिरा गुरूणां सत्सङ्गमेन नियमेन शमेन राम ।
182087 तत्प्राप्यते सकलविश्वपदादतीतं सर्वेश्वरं परममाद्यमनादिशर्म ॥ ३४
182088 ॥
182089

182090 हे राम तत्सकलविश्वपदाद्ब्रह्मलोकान्तैश्वर्यसुखादप्यतीतमतिशयितं पावनं
182091 सर्वेश्वरं मोक्षाख्यमनादिसुखं गुरूणां गिरा शास्त्रार्थबोधनवशेनैव
182092 प्राप्यते तच्च सत्संगमादिनेत्यर्थः ॥ ३४ ॥
182093

182094 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० नि० उ० शास्त्रमाहात्म्यं नाम
182095 सप्तनवत्यधिकशततमः सर्गः ॥ १९७ ॥
182096

182097 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
182098 शास्त्रमाहात्म्यं नाम सप्तनवत्यधिकशततमः सर्गः ॥ १९७ ॥
182099

182100

182101 अष्टनवत्यधिकशततमः सर्गः १९८
182102

182103 श्रीवसिष्ठ उवाच ।
182104

182105 भूयो निपुणबोधाय शृणु किंचिद्रघूद्वह ।
182106 पुनःपुनर्यत्कथितं तदज्ञेऽप्यवतिष्ठते ॥ १ ॥
182107
182108 वर्ण्यतेऽत्र प्रबुद्धानां निर्विक्षेपसुखस्थितौ ।
182109 हेतुः सेतुरिवाम्बूनां सर्वत्र समदर्शनम् ॥
182110
182111 निपुणबोधाय बोधदार्ढ्यहेतुनिर्विक्षेपतासिद्धये किंचिद्वर्ण्यमानं
182112 रहस्यमुपशमप्रकरणादौ कथितमेव पुनः किमर्थमुच्यते
182113 इत्यनास्थावारणायाह - पुनःपुनरिति ॥ १ ॥
182114
182115 राघव प्रथमं प्रोक्तं स्थितिप्रकरणं मया ।
182116 येनेदमित्थमुत्पन्नमिति विज्ञायते जगत् ॥ २ ॥
182117
182118 उत्पत्तिस्थितिप्रकरणाभ्यामुत्पन्नं जगदित्थं भ्रान्तिमात्रमिति विज्ञाते सति
182119 समदर्शनप्रतिष्ठया उपशमप्रकरणे समदर्शनं वर्णितं तदेवात्र
182120 जीवन्निर्वाणसुखप्रतिष्ठार्थं पुनर्वर्ण्यत इत्याह - राघवेत्यादिना ॥ २ ॥
182121
182122 ततो जगति जातेन परोपशमशालिना ।
182123 भवितव्यमिति प्रोक्तं मयोपश्मयुक्तिभिः ॥ ३ ॥
182124
182125 उपशान्तिप्रकरणे प्रोक्तैरुपशमक्रमैः ।
182126 परमोपशमं गत्वा वस्तव्यमिह विज्वरम् ॥ ४ ॥
182127
182128 इह एतत्प्रकरणप्रतिपाद्ये निर्वाणसुखे ॥ ४ ॥
182129
182130 प्राप्तप्राप्येन तज्ज्ञेन यथा संसारदृष्टिषु ।
182131 विहर्तव्यं हि नः किंचित्स्वल्पं श्रोतव्यमस्ति ते ॥ ५ ॥
182132
182133 संसारदृष्टिषु व्यवहारेषु यथा येन प्रकारेण विहर्तव्यं तत्किंचिद्रहस्यं नः
182134 अस्मन्मुखात्ते श्रोतव्यमस्ति तदुच्यत इत्यर्थः ॥ ५ ॥
182135
182136 जन्म संप्राप्य जगति बाल्य एव जगत्स्थितिम् ।
182137 यथाभूतामिमां बुद्ध्वा वस्तव्यमिह विज्वरम् ॥ ६ ॥
182138
182139 बाल्ये त्वद्वयस्येव जगत्स्थितिं बुद्ध्वा वक्ष्यमाणरीत्या निर्विक्षेपं वस्तव्यम् ॥ ६ ॥
182140
182141 सर्वसौहार्दजननीं सर्वस्याश्वासकारिणीम् ।
182142 समतामलमाश्रित्य विहर्तव्यमिहानघ ॥ ७ ॥
182143
182144 समतां वक्ष्यमाणां
182145 सर्वभूतेष्वैकात्म्यदर्शनाद्गुणदोषदर्शनलक्षणवैषम्यशून्यतां
182146 स्वदेहसमानसुखदुःखदृष्टितां सर्ववैषम्यरहितब्रह्मदृष्टिं च । अलं
182147 दृढम् ॥ ७ ॥
182148
182149 सर्वसंपत्तिसुभगं सर्वसौभाग्यवर्धनम् ।
182150 समतासुलतायास्तु फलं भवति पावनम् ॥ ८ ॥
182151
182152 फलं सर्वभूतमैत्रीरूपम् । संपदो बाह्याः सौभाग्यानि सुभगभावाः
182153 कल्याणगुणा इति भेदः ॥ ८ ॥
182154
182155 समतासुभगेहानां कुर्वतां प्रकृतं क्रमम् ।
182156 सर्वैवेयं जगल्लक्ष्मीर्भृत्यतामेति राघव ॥ ९ ॥

182157
182158 तदेव द्विविधं फलं प्रकटयति - समतेति द्वाभ्याम् | समतया सुभगा
182159 सर्वभूतहिता ईहा चेष्टा येषाम् || ९ ||
182160
182161 न तदासाद्यते राज्यान्न कान्ताजनसंगमात् |
182162 अनपायि सुखं सारं समत्वाद्यदवाप्यते || १० ||
182163
182164 द्वन्द्वोपशमसीमान्तं संरम्भज्वरनाशनम् |
182165 सर्वदुःखातपाम्भोदं समत्वं विद्धि राघव || ११ ||
182166
182167 सर्वदुःखतद्धेतुप्रशमोऽपि तया सिद्ध्यतीत्याह - द्वन्द्वेति || ११ ||
182168
182169 मित्रीभूताखिलरिपुर्यथाभूतार्थदर्शनः |
182170 दुर्लभो जगतां मध्ये साम्यामृतमयो जनः || १२ ||
182171
182172 प्रबुद्धस्य स्वचित्तेन्दोर्निष्यन्दममृताधिकम् |
182173 साम्यमास्वाद्य जीवन्ति सर्वे वै जनकादयः || १३ ||
182174
182175 साम्यामृतमयः इति पदतात्पर्यं वर्णयंस्तादृशजनानुदाहरति | प्रबुद्धस्येति
182176 | आस्वाद्य जीवन्ति उपजीवन्ति || १३ ||
182177
182178 साम्यमभ्यस्यतो जन्तोः स्वदोषोऽपि गुणायते |
182179 दुःखं सुखायते नित्यं मरणं जीवितायते || १४ ||
182180
182181 स्वदोषः क्रोधलोभादिः क्रमेण शान्त्यौदार्यादिभावेन परिणम्य गुणवदाचरति
182182 गुणायते || १४ ||
182183
182184 साम्यसौन्दर्यसुभगं वनिता मुदितादिकाः |
182185 आलिङ्गन्ति महात्मानं नित्यं व्यसनिता इव || १५ ||
182186
182187 मुदिताद्या मैत्रीकरुणोपेक्षादयो योगशास्त्रे प्रसिद्धाः | व्यसनिताः
182188 कामुकीत्वाद्भर्तृसमागमव्यसनवत्य इव || १५ ||
182189
182190 समः समुदितो नित्यं समोऽनुदितधीः सदा |
182191 न काश्चिदिह ताः सन्ति याः समस्य हि नर्धयः || १६ ||
182192
182193 समुदितः कल्याणगुणैः सर्वसंपद्भिश्च सम्यगभ्युदयं प्राप्तः समुदायतां
182194 प्राप्तश्च | न उदिता धीश्चिन्ता यस्य | ऋद्धयः संपदः || १६ ||
182195
182196 सर्वकार्यसमं साधुं प्रकृतव्यवहारिणम् |
182197 चिन्तामणिमिवोदारं प्रवाञ्छन्ति नरामराः || १७ ||
182198
182199 सर्वकार्ये स्वकार्ये परकार्ये च समं पुरुषम् | साधुमपराधिषु क्षमावन्तम् |
182200 उदारं त्यागिनम् | नरा अमराश्च प्रवाञ्छन्ति || १७ ||
182201
182202 सम्यक्कारिणमुद्दाममुदितं समचेतसम् |
182203 न दहन्त्यग्नयो राम नापः सिञ्चन्ति मानवम् || १८ ||
182204
182205 सम्यक्कारिणं सदाचारसर्वजनहितकर्तारम् | सिञ्चन्ति क्लेददुःखं कुर्वन्ति || १८ ||
182206
182207 यद्यथा तत्तथा येन क्रियते दृश्यते तथा |
182208 आनन्दोद्वेगमुक्तेन कस्तं तोलयितुं क्षमः || १९ ||

182209
182210 यद्यथा कर्तुमुचितं तत्तथा येन क्रियते आनन्दोद्वेगौ हर्षामर्षौ तन्मुक्तेन सर्वं
182211 कृतं समतया येन दृश्यते ॥ १९ ॥
182212
182213 मित्राणि बन्धुरिपवो राजानो व्यवहारिणः ।
182214 सम्यक्कारिणि तत्त्वज्ञे विश्वसन्ति महाधियः ॥ २० ॥
182215
182216 नानिष्टात्प्रपलायन्ते नेष्टादायान्ति तुष्टताम् ।
182217 प्रकृतक्रमसंप्राप्तास्तत्त्वज्ञाः समदर्शिनः ॥ २१ ॥
182218
182219 त्यक्त्वा सर्वानुपादेयात्राम भावाननिन्दितान् ।
182220 समतायामदुःखायां दधाना वृत्तिमुत्तमाम् ॥ २२ ॥
182221
182222 कीदृशास्तत्त्वज्ञाः । अनिन्दितानपि सर्वानुपादेयान् परैरुपादातुमिष्टान्
182223 गृहक्षेत्रादिभावांस्त्यक्त्वा उत्तमां निर्लोभसंतोषलक्षणां वृत्तिं दधानां
182224 ॥ २२ ॥
182225
182226 विहसन्ति जगज्जालं जीवयन्ति निरामयाः ।
182227 पूज्यन्ते विबुधैः सर्वैः समतामुदिताशयाः ॥ २३ ॥
182228
182229 जीवयन्ति विवेकोपदेशादिना उज्जीवयन्ति ॥ २३ ॥
182230
182231 प्रकृतक्रमसंप्राप्तं मुखेन्दौ कोपमेव यः ।
182232 समाशयो धारयति स्यात्सौम्याममृतवज्जनः ॥ २४ ॥
182233
182234 समाशयो जनः परहितार्थं प्रकृतक्रमसंप्राप्तं मुखेन्दौ कोपं धारयति
182235 चेत्तदप्यमृतवदेव स्यान्नोद्वेगकरं कस्यचिदित्यर्थः ॥ २४ ॥
182236
182237 यत्करोति यदश्नाति यदाक्रामति निन्दति ।
182238 समदृष्टिस्तदस्येयं स्तौति नित्यं जनावलिः ॥ २५ ॥
182239
182240 यत्कर्म अनुचितमिति निन्दति जनस्तत्परिहरंस्तदस्य सच्चरित्रं सर्वं स्तौति ॥ २५ ॥
182241
182242 यच्छुभं वाशुभं यच्च यच्चिरेण यदद्य वा ।
182243 समदृष्टिकृतं सम्यगभिनन्दति तज्जनः ॥ २६ ॥
182244
182245 अशुभं प्रमादकृतमपराधमपि चिरेण कृतमद्य कृतं वा तदप्यभिनन्दति
182246 ॥ २६ ॥
182247
182248 सुखदुःखेषु भीमेषु संततेषु महत्स्वपि ।
182249 मनागपि न वैरस्यं प्रयान्ति समदृष्टयः ॥ २७ ॥
182250
182251 सुखदुःखेषु भीमेषु घोरेषु संततेषु चिरानुवृत्तेषु वैरस्यं चित्तोद्वेगम् ॥ २७ ॥
182252
182253 शिभिर्भूपः कपोताय मांसमङ्गविकर्तनम् ।
182254 ददौ मुदितया बुद्ध्या समदृष्टितयानया ॥ २८ ॥
182255
182256 इदानीं महत्स्वपि दुःखेषु समदृष्टिधीरानुदाहरति - शिबिरित्यादिना । कपोताय
182257 शरणागतकपोतप्राणरक्षणाय तन्मांसप्रतिनिधितया अङ्गविकर्तनं स्वमांसं
182258 ददौ । तच्च महाभारतादौ प्रसिद्धम् । एवमग्रेऽप्यूह्यम् ॥ २८ ॥
182259
182260 प्राणेभ्योऽपि प्रियतमां कान्तामग्रे विकालिताम् ।

182261 दृष्ट्वाप्यङ्ग महीपालो न मुमोह समाशयः ॥ २९ ॥
182262
182263 अग्रे स्वपुरोभागे विकालितां शत्रुभिः क्लेशिताम् ॥ २९ ॥
182264
182265 मनोरथशतप्राप्तं तनयं समया धिया ।
182266 राक्षसाय त्रिगर्तेशो ददौ स्वपणहारितम् ॥ ३० ॥
182267
182268 स्वस्य पणे वाग्द्यूते हारितं राक्षसेन जितम् ॥ ३० ॥
182269
182270 नगर्यां दह्यमानायां भूषितायां तथोत्सवे ।
182271 सम एव महीपालो जनको भूभृतां वरः ॥ ३१ ॥
182272
182273 न्यायतः परिविक्रीतं साल्वराट् समदर्शनः ।
182274 स्वमेव विचकर्ताशु शिरः पद्मदलं यथा ॥ ३२ ॥
182275
182276 परिविक्रीतं ऐच्छिकीं दक्षिणां ते दास्यामीति प्रतिज्ञया ब्राह्मणाय विक्रीतप्रायम् ।
182277 विचकर्त छित्त्वा ददौ ॥ ३२ ॥
182278
182279 कुन्दप्रकरनिर्भासं यज्ञे पाण्डुमिवाचलम् ।
182280 जहौ जरत्तृणमिव सौवीरः समया धिया ॥ ३३ ॥
182281
182282 पाण्डुमचलं कैलासमिव स्थितमैरावतमिन्द्रजयेन लब्धं पुनर्यज्ञे ऋत्विजां
182283 वचनादिन्द्राय जहौ ददौ ॥ ३३ ॥
182284
182285 समयैव धिया नित्यं निजमभ्याहरन् क्रमम् ।
182286 मातङ्गः कुण्डपो नाम प्राप वैमानिकस्थितिम् ॥ ३४ ॥
182287
182288 निजं देहयात्रानिमित्तं क्रमं व्यवहारं समयैव धिया आहरन् आचरन् कुण्डपो
182289 नाम मातङ्ग एकां गां वेतनीकृत्य ब्राह्मणस्य पञ्च पङ्कमग्ना गाः
182290 समुद्धृत्य स्ववेतनीकृतां गां पुष्करे समया धिया तस्मै ब्राह्मणाय दत्त्वा
182291 सद्यः समागतं विमानमारुह्य वैमानिकस्थितिं देवत्वं प्राप ॥ ३४ ॥
182292
182293 सर्वभूतक्षयकरीं साम्याभ्यासेन भूरिणा ।
182294 तत्याज राक्षसीं वृत्तिं कदम्बवनराक्षसः ॥ ३५ ॥
182295
182296 बालचन्द्राभिजातोऽपि समबुद्धितया जडः ।
182297 गुडमोदकवन्न्यायप्राप्तमग्निमभक्षयत् ॥ ३६ ॥
182298
182299 जडो जडभरतः । न्यायप्राप्तं भिक्षापात्रे भैक्ष्यन्यायेन प्राप्तम् ॥ ३६ ॥
182300
182301 समबुद्धितया क्रूरव्यवहारपरोऽपि सन् ।
182302 धर्मव्याधस्तनुं त्यक्त्वा जगाम परमं पदम् ॥ ३७ ॥
182303
182304 नन्दनोद्यानसंस्थोऽपि पुरुषोऽपि कपर्दनः ।
182305 लुलुभे न सुरस्त्रीषु नूनं प्रणयिनीष्वपि ॥ ३८ ॥
182306
182307 कपर्दननामा राजर्षिः पुरुषः पुंस्त्वात्सुरस्त्रीभोगसमर्थोऽपि प्रणयिनीषु
182308 स्वस्मिन्सानुरागास्वपि न लुलुभे । कामवशो नाभूदित्यर्थः ॥ ३८ ॥
182309
182310 समचित्ततयाऽस्पन्दः करञ्जगहनेष्वपि ।
182311 विन्ध्यकान्तारकच्छेषु राज्यं त्यक्त्वावसच्चिरम् ॥ ३९ ॥
182312

182313 स एव राज्यं त्यक्त्वा विन्ध्यकान्तारकच्छेषु करञ्जगहनेष्वपि अस्पन्दः
182314 संश्चिरमवसत् ॥ ३९ ॥
182315
182316 ऋषयो मुनयश्चैव ये सिद्धाः सुरपूजिताः ।
182317 समदृष्टितयोद्विग्ना न ते तासु व्रतर्द्धिषु ॥ ४० ॥
182318
182319 व्रतेषु तपःक्लेशेषु ऋद्धिषु भोगेषु च समदृष्टितया नोद्विग्नाः ॥ ४० ॥
182320
182321 राजानः प्राकृताश्चैव धर्मव्याधादयोऽपरे ।
182322 समदृष्टिपदाभ्यासान्महतां पूज्यतां गताः ॥ ४१ ॥
182323
182324 इहामुत्र च सिद्ध्यर्थं पुरुषार्थप्रवृत्तये ।
182325 समदृष्टितया नित्यं विचरन्ति सुबुद्धयः ॥ ४२ ॥
182326
182327 अभिवाञ्छेन्न मरणमभिवाञ्छेन्न जीवितम् ।
182328 यथाप्राप्तसमाचारो विचरेदविहिंसकः ॥ ४३ ॥
182329
182330 समकलितगुणागुणैकभावः समसुखदुःखपरावरो विलासी ।
182331 प्रविचरति समावमानमानः प्रकृतवरव्यवहारपूतमूर्तिः ॥ ४४ ॥
182332
182333 समतया कलिता गुणा अगुणा दोषाश्च एकभावा एकीभूता इव यस्य । परोपतापचिन्तः इति
182334 पाठे परैः कृता उपतापास्तत्प्रयुक्तचिन्ताश्च समतया कलिता येन । तथा समे
182335 सुखदुःखे परा उत्कृष्टयोनयोऽवरा निकृष्टयोनयश्च यस्य । तथा समाः
182336 अवमाना मानाश्च यस्य तथाविधो जीवन्मुक्तः
182337 प्रकृतव्यवहारेष्वप्यासक्त्यभावात्पूतमूर्तिरत एव विलासी विलसनशीलः सन्
182338 लोकानुग्रहाय देशाअन् प्रविचरति संचरतीत्यर्थः ॥ ४४ ॥
182339
182340 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० नि० उ० समदृष्टिप्रशंसा
182341 नामाष्टनवत्यधिकशततमः सर्गः ॥ १९८ ॥
182342
182343 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
182344 समदृष्टिप्रशंसा नामाष्टनवत्युत्तरशततमः सर्गः ॥१९८ ॥
182345
182346
182347 नवनवत्यधिकशततमः सर्गः १९९
182348
182349 श्रीराम उवाच ।
182350
182351 नित्यं ज्ञानैकनिष्ठत्वादात्मारामतया तथा ।
182352 मुक्तैः कर्मपरित्यागः कस्मान्न क्रियते मुने ॥ १ ॥
182353
182354 मुक्तानां न कृतैरर्थो नाकृतैः कर्मभिः क्षतिः ।
182355 तथापि तेऽनुवर्तन्ते सत्कर्माणीति वर्ण्यते ॥
182356
182357 मुक्तैर्जीवन्मुक्तैः ॥ १ ॥
182358
182359 श्रीवसिष्ठ उवाच ।
182360
182361 हेयोपादेयदृष्टी द्वे यस्य क्षीणे हि तस्य वै ।
182362 क्रियात्यागेन कोऽर्थः स्यात्क्रियासंश्रयणेन वा ॥ २ ॥
182363
182364 स्वभ्यस्तस्य करणे श्रमाभावात्त्यागे प्रयोजनाभावाल्लोकानुग्रहवशाच्च तैः

182365 कर्मत्यागो न क्रियत इत्युत्सर्ग इत्याशयेनोत्तरमाह - हेयेत्यादिना ॥ २ ॥
182366
182367 न तदस्तीह यत्त्याज्यं ज्ञस्योद्वेगकरं भवेत् ।
182368 न वास्ति यदुपादेयं तज्ज्ञसंश्रेयतां गतम् ॥ ३ ॥
182369
182370 संश्रेयतामवश्यानुष्ठेयताम् ॥ ३ ॥
182371
182372 ज्ञस्य नार्थः कर्मत्यागैर्नार्थः कर्मसमाश्रयैः ।
182373 तेन स्थितं यथा यद्यत्तत्तथैव करोत्यसौ ॥ ४ ॥
182374
182375 यद्यद्वर्णाश्रमोचितत्वेन यथास्थितं तत्तत् तथैव करोति ॥ ४ ॥
182376
182377 यावदायुरियं राम निश्चितं स्पन्दते तनुः ।
182378 तद्यथाप्राप्तमव्यग्रं स्पन्दतामपरेण किम् ॥ ५ ॥
182379
182380 जीवद्देहस्य स्पन्दनावश्यंभावे स्वभ्यस्तसदाचाररूपमेव स्पन्दनं तद्देहे
182381 प्रवर्तत इत्याह - यावदायुरिति । अपरेण स्पन्दत्यागेनान्यथा स्पन्दनेन च ॥ ५ ॥
182382
182383 अन्यथान्यत्र चेत्कार्या क्रिया त्यक्त्वा निजं क्रमम् ।
182384 समाने हि क्रियास्पन्दे को दोषः सत्क्रमे किल ॥ ६ ॥
182385
182386 शास्त्रीयाशास्त्रीयक्रिययोः क्रमे समानेऽपि शास्त्रीये सत्क्रमे सदाचारे को दोषो येन
182387 निजं क्रमं त्यक्त्वा अन्यथाचरणं स्यादित्यर्थः । अन्यत्रेति दृष्टान्तार्थम् । यथा
182388 स्वगृहे निर्दोषे अन्यत्रावस्थाने प्रयोजनं नास्ति तद्वदिति ॥ ६ ॥
182389
182390 समया स्वच्छया बुद्ध्या सततं निर्विकारया ।
182391 यथा यत्क्रियते राम तददोषाय सर्वदा ॥ ७ ॥
182392
182393 समया सिद्ध्यसिद्ध्योस्तुल्यया ॥ ७ ॥
182394
182395 इह मह्यां महाबाहो बहवो बहुदृष्टयः ।
182396 बहुधा बहुदोषेषु विहरन्ति विचक्षणाः ॥ ८ ॥
182397
182398 यद्यपि कर्मसु प्रवृत्तानां द्रव्यार्जनऋत्विगावर्जनादिषु अनुष्ठेयार्थनिर्णयेषु
182399 च श्रमसाध्यत्वाद्बहुदोषप्रसक्तिरस्ति तथापि सा तैः समदर्शनता विचक्षणता
182400 बलादेव सुपरिहरेत्याशयेनाह - इहेति । बहुदृष्टयः
182401 सर्वशास्त्रलोकरहस्यदर्शिनः प्रपञ्चयिष्यमाणबहुदृष्टयश्च
182402 समदर्शनबलाल्लोकसंग्रहेऽपि विचक्षणाः ॥ ८ ॥
182403
182404 गतसङ्गतया बुद्ध्या विहरन्ति यथास्थितेः ।
182405 गृहस्थारम्भिणः केचिज्जीवन्मुक्ताः स्थिता भुवि ॥ ९ ॥
182406
182407 बहुधेत्युक्तिं प्रपञ्चयति - गतसंगतयेत्यादिना । यथास्थितेः
182408 यथाप्राप्तानुवृत्तेः ॥ ९ ॥
182409
182410 तज्ज्ञा राजर्षयश्चान्ये वीतरागा भवादृशाः ।
182411 असंसक्तधियो राज्यं कुर्वन्ति विगतज्वराः ॥ १० ॥
182412
182413 भवादृशा इति भाविनीं वृत्तिमाश्रित्य रामं प्रत्युक्तिः ॥ १० ॥
182414
182415 केचित्प्रकृतवेदार्थव्यवहारानुसारिणः ।
182416 यज्ञशिष्टाशिनो नित्यमग्निहोत्रे व्यवस्थिताः ॥ ११ ॥

182417
182418 केचिच्चतुर्षु वर्णेषु ध्यानदेवार्चनादिकाम्।
182419 स्वक्रियामनुतिष्ठन्तः स्थिता विविधयेहया॥ १२॥
182420
182421 स्वक्रियां स्वस्ववर्णाश्रमोचितं कर्म तत्र ध्यानं चतुर्थाश्रगोचितम्। ईहया
182422 चेष्टया॥ १२॥
182423
182424 केचित्सर्वपरित्यागमन्तः कृत्वा महाशयाः।
182425 सर्वकर्मपरा नित्यं तज्ज्ञा एवाज्ञवत्स्थिताः॥ १३॥
182426
182427 सर्वपरित्यागं फलासङ्गत्यागम्॥ १३॥
182428
182429 स्वप्नेऽप्यदृष्टलोकासु मुग्धमुग्धमृगासु च।
182430 वनावनीषु शून्यासु केचिद्ध्यानपरायणाः॥ १४॥
182431
182432 स्वप्नेऽपि न दृष्टा लोका जना यत्रेत्यतिशयोक्तिः॥ १४॥
182433
182434 पुण्यवद्भिः सदा जुष्टे पुण्योपचयकारिणि।
182435 शमशालिसमाचारे केचिदायतने स्थिताः॥ १५॥
182436
182437 आयतने पुण्यतीर्थमुन्याश्रमादौ॥ १५॥
182438
182439 रागद्वेषप्रहाणार्थं त्यक्त्वा देशं समाशयाः।
182440 केचिदन्यत्र देशे च पदमालम्ब्य संस्थिताः॥ १६॥
182441
182442 बन्धुजनसमागमे रागद्वेषादिविक्षेपसहस्रावर्जनात्तत्प्रहाणार्थम्। पदं
182443 स्थानम्॥ १६॥
182444
182445 वनाद्वनं पुराद्ग्रामं स्थानात्स्थानं गिरेर्गिरिम्।
182446 भ्रमन्तः संस्थिताः केचित्संसारोच्छित्तये बुधाः॥ १७॥
182447
182448 संसारोच्छित्तये संग्रहदोषपरिहारार्थम्॥ १७॥
182449
182450 वाराणस्यां महापुर्यां प्रयागे चैव पावने।
182451 श्रीपर्वते सिद्धपुरे बदर्याश्रमके तथा॥ १८॥
182452
182453 पूर्वोक्तानि पुण्यायतनानि प्रपञ्चयति - वाराणस्यामित्यादिना।
182454 महापुर्यामित्यनेन तस्याः सर्वपुण्यायतनोत्कृष्टता सूचिता॥ १८॥
182455
182456 शालग्रामे महापुण्ये कलापग्रामकोटरे।
182457 मथुरायां च पुण्यायां तथा कालञ्जरे गिरौ॥ १९॥
182458
182459 महेन्द्रवनगुल्मेषु गन्धमादनसानुषु।
182460 दर्दुराचलवप्रेषु सह्यकाचलभूमिषु॥ २०॥
182461
182462 विन्ध्यशैलस्य कच्छेषु मलयस्योदरेषु च।
182463 कैलासवनजालेषु ऋक्षवत्कुहरेषु च॥ २१॥
182464
182465 कच्छेषु जलप्रायदेशेषु। ऋक्षवतः कुहरेषु दरीषु॥ २१॥
182466
182467 एतेष्वन्येषु चान्येषु वनेष्वायतनेषु च।
182468 तपस्विनस्तथा राम बहवो बहुदृष्टयः॥ २२॥

182469
182470 बहुदृष्टयो बहुविधप्रारब्धभोगानुकूलदृष्टयः ॥ २२ ॥
182471
182472 केचित्त्यक्तनिजाचाराः केचिच्च क्रमसंस्थिताः ।
182473 केचित्प्रबुद्धमतयो नित्यमुन्मत्तचेष्टिताः ॥ २३ ॥
182474
182475 संन्यासविधिना त्यक्तनिजाचाराः । क्रमा ब्रह्मचर्याद्याश्रमधर्मास्तत्संस्थिताः ॥
182476 २३ ॥
182477
182478 केचित्स्वदेशरहिताः केचित्त्यक्तनिजास्पदाः ।
182479 एकस्थानरताः केचिद्भ्रमन्तः केचिदास्थिताः ॥ २४ ॥
182480
182481 एकस्थाने स्वगृह एव रताः प्रीतिमन्तः सर्वजनानुकूल्येन विक्षेपशून्या इति यावत् ॥
182482 २४ ॥
182483
182484 एतेषां महतां मध्ये नभस्तलनिवासिनाम् ।
182485 पातालनिरतानां च दैत्यादीनां महामते ॥ २५ ॥
182486
182487 ऊर्ध्वाधोलोकेष्वपि देवदैत्यादयो जीवन्मुक्ता बहवः सन्तीत्याशयेनाह -
182488 एतेषामिति । एतेषां मध्ये केचित्प्रबुद्धमतय इत्याद्युत्तरत्रान्वयः ॥ २५ ॥
182489
182490 विज्ञातलोकपर्यायाः सम्यग्दर्शननिर्मलाः ।
182491 केचित्प्रबुद्धमतयो दृष्टदृश्यपरावराः ॥ २६ ॥
182492
182493 अप्रबुद्धधियः केचिद्दोलान्दोलितचेतसः ।
182494 निवृत्ताः पापकाचारात्सुजनानुगताः स्थिताः ॥ २७ ॥
182495
182496 अप्रबुद्धधियोऽल्पप्रबुद्धधियः । अत एव दोलान्दोलितचेतसः ॥ २७ ॥
182497
182498 अर्धप्रबुद्धमतयः केचिज्ज्ञानावलेपतः ।
182499 परित्यक्तक्रियाचारा उभयभ्रष्टता गताः ॥ २८ ॥
182500
182501 ज्ञानावलेपस्तत्त्वज्ञोऽहं मम किं निषिद्धाचरणं करिष्यतीति गर्वतः ॥ २८ ॥
182502
182503 इत्थमस्मिञ्जनानीके जन्मसंतरणार्थिनः ।
182504 बहवः संस्थिता राम बहुधा बहुदृष्टयः ॥ २९ ॥
182505
182506 जनानीके जनसमूहे ॥ २९ ॥
182507
182508 संसारोत्तरणे तत्र न हेतुर्वनवासिता ।
182509 नापि स्वदेशवासित्वं न च कष्टतपःक्रियाः ॥ ३० ॥
182510
182511 तर्हि किं तत्कृता वनवासादयोपि संसारोत्तरणहेतवो नेत्याह - संसारेति ॥ ३० ॥
182512
182513 न क्रियायाः परित्यागो न क्रियायाः समाश्रयः ।
182514 नाचारेषु समारम्भविचित्रफलपालयः ॥ ३१ ॥
182515
182516 आचारेषु सत्कर्माचरणेषु समारभ्यन्त इति समारम्भा अनुनिष्पादिनः
182517 ख्यातिलाभैश्वर्यवरशापसामर्थ्यादिरूपा विचित्रफलसमूहाः ॥ ३१ ॥
182518
182519 स्वभावः कारणं नाम संसारोत्तरणं प्रति ।
182520 असंसक्तं मनो यस्य स तीर्णो भवसागरात् ॥ ३२ ॥

स्वभावो यथार्थस्वरूपेणाभिनिष्पत्तिस्तत्त्वज्ञानरूपा कारणं स च मनसा
आत्यन्तिकसक्तिपरिहारलभ्य इत्याह - असंसक्तमिति ॥ ३२ ॥

शुभाशुभाः क्रिया नित्यं कुर्वन्परिहरन्नपि ।
पुनरेति न संसारमसंसक्तमना मुनिः ॥ ३३ ॥

अत एव जीवन्मुक्तानां शुभाशुभकर्माचरणेऽप्यसंसक्तिवशादेव तदलेप इत्याह
- शुभेति ॥ ३३ ॥

शुभाशुभाः क्रिया नित्यमकुर्वन्नपि दुर्मतिः ।
निमज्जत्येव संसारे परित्यक्तमनाः शठः ॥ ३४ ॥

परित्यक्तं विषयेषु विसृष्टं मनो येन । शठः स्वात्मवञ्चकः ॥ ३४ ॥

मक्षिकेवान्तःसारज्ञा दुःखादुःखप्रदायिनी ।
न निवारयितुं शक्या न च मारयितुं मतिः ॥ ३५ ॥

तर्हि मन एव विषयेभ्यो निवार्यतां मार्यतां च किं तत्त्वज्ञानेन तत्राह -
मक्षिकेवेति । अन्तःसारज्ञा आस्वादितविषयरसा मतिर्मधुकुम्भप्रसक्ता मक्षिकेव न
निवारयितुं मारयितुं वा शक्या ॥ ३५ ॥

काकतालीययोगेन कदाचित्स्वस्य चेतसः ।
प्रवृत्तिर्जायते सिद्ध्यै स्वयमात्मावलोकने ॥ ३६ ॥

कदाचिद्भाग्यवशात्साधनचतुष्टयप्राप्तौ श्रवणाद्युपायैरात्मावलोकने
स्वयमेव प्रवृत्तिर्जायते ॥ ३६ ॥

अवलोकनतो लब्ध्वा तत्त्वं नैर्मल्यमागतम् ।
चेतो भवति निर्द्वन्द्वमसंसक्तमनामयम् ॥ ३७ ॥

तत्र नैमल्यमागतः चित्तमवलोकनतस्तत्त्वं लब्ध्वा निर्द्वन्द्वमत
एवानासक्तमनामयं च ब्रह्मैव भवति ॥ ३७ ॥

अचित्तत्वं प्रयातेन सत्त्वरूपेण चेतसा ।
समो भूत्वा सुखं तिष्ठ पराकाशांशरूपभृत् ॥ ३८ ॥

पराकाशरूपो यश्चित्तादिसर्वप्रपञ्चाधिष्ठानांशस्तद्रूपभृत् सन् तिष्ठ ॥ ३८ ॥

अधिगतपरमार्थस्त्यक्तरागादिदोषः सममतिरुदितात्मा त्वं महात्मा
महात्मन् ।
रघुतनय विशोकस्तिष्ठ निःशङ्कमेको जननमरणमुक्तं पावनं
तत्पदं त्वम् ॥ ३९ ॥

हे महात्मन् रघुतनय त्वं अधिगतः परमार्थो येन तथाविधस्त्यक्ता रागादिदोषा
येन उदित आत्मा यस्य तथाविधः सममतिः सन्नेको विशोको महानात्मा भूत्वा
निःशङ्कं तिष्ठ । यतो जननमरणमुक्तं पावनं तद्ब्रह्मपदं
त्वमेवेत्यर्थः ॥ ३९ ॥

प्रकृतिमलविकारोपाधिबोधादिरूपं जगति विमलरूपे नास्ति किंचित्क्वचिच्च ।
स्फुटमकृतकमस्ति ब्रह्म चिद्धाम तच्च स्वयमहमिति मत्वा तिष्ठ
निःशङ्कमेकः ॥ ४० ॥

182573
182574 किं च विमलब्रह्मरूपे जगति प्रकृतिरूपं मलरूपं विकाररूपमुपाधिरूपं
182575 तद्बोधरूपं तदिच्छाप्रयत्नहानोपादानभोगादिरूपं च किंचिदपि क्वचिच्च नास्ति
182576 किंतु अकृतकं चिद्धाम ब्रह्मास्ति। तच्च स्वयं स्वानुभवेनैव अहमिति मत्वा एको
182577 निःशङ्कस्तिष्ठेत्यर्थः॥ ४०॥
182578
182579 अधिकवचनगम्यं नान्यदस्त्यङ्ग किंचित्तव शुभमुपदेश्यं
182580 ज्ञानसंबोधनाय।
182581 उदितमखिलमाद्यं ज्ञानसारं समग्रं विदितसकलवेद्यो राघव त्वं हि
182582 जातः॥ ४१॥
182583
182584 अङ्ग हे सुभग तव ज्ञानसंबोधनाय अन्यदितो व्यतिरिक्तं अधिकवचनगम्यं
182585 शुभमुपदेश्यं नास्ति। यतस्तव आद्यं ज्ञानसारमखिलमक्षतं समग्रमुदितम्
182586 । हि यस्मात्त्वं सांप्रतं विदितसकलवेद्यो जात इत्यर्थः॥ ४१॥
182587
182588 श्रीवाल्मीकिरुवाच।
182589
182590 इत्युक्त्वा मुनिनायको व्यपगताशेषैषणे राघवे सर्वस्मिंश्च सभाजने
182591 स्थितवति ध्यानैकतानोपमे।
182592 प्राप्ते ब्रह्मपदं धिया धवलया तूष्णीमभूत्षट्पदः कृत्वेवारणितं
182593 सरोजपटले पातुं प्रवृत्तो रसम्॥ ४२॥
182594
182595 मुनिनायको वसिष्ठः इति एवमन्ते उक्त्वा राघवे धवलया धिया ब्रह्मपदं प्राप्ते
182596 अत एव व्यपगताशेषैषणे जाते सति तथा सर्वस्मिन्सभाजने च ध्यानैकतानोपमे
182597 स्थितवति सति तस्यां सभायां स्वयं ब्रह्मरसायनास्वादपरस्तूष्णीमभूत्। यथा
182598 षट्पदः सरोजपटले आरणितं गुञ्जाध्वनिं कृत्वा रसं मकरन्दं पातुं
182599 प्रवृत्तः संस्तूष्णीं भवति तद्वदित्यर्थः॥ ४२॥
182600
182601 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० नि० उ० मुक्तपुरुषस्थितिवर्णनं
182602 नाम नवनवत्यधिकशततमः सर्गः॥ १९९॥
182603
182604 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
182605 मुक्तपुरुषस्थितिवर्णनं नाम नवनवत्यधिकशततमः सर्गः॥ १९९॥
182606
182607 द्विशततमः सर्गः २००
182608
182609 श्रीवाल्मीकिरुवाच।
182610
182611 निर्वाणवाक्यसंदर्भसमाप्तौ मुनिनायके।
182612 पाश्चात्यवाक्यविरतिं कुर्वति क्रमपालिताम्॥ १॥
182613
182614 सिद्धानां साधुवादोऽत्र पुष्पवृष्टिः सदुन्दुभिः।
182615 वर्ण्यते प्रकृतः सर्वैर्गुरुपूजामहोत्सवः॥
182616
182617 निर्वाणप्रकरणान्तमात्मोपदेशं श्रुत्वा कृतार्थानां सिद्धर्षिमानवानां
182618 तस्यां सभायां वसिष्ठपूजामहोत्सवं वर्णयिष्यन् श्रीवाल्मीकिरुवाच -
182619 निर्वाणेति। सर्वेषां सप्तम्यन्तानां षष्ठश्लोके कोलाहलः समुदभूदित्यत्रान्वयः
182620 । एतत्प्रकरणरूपस्य निर्वाणवाक्यसंदर्भस्य समाप्तौ सत्यां मुनिनायके वसिष्ठे
182621 क्रमपालितां क्रमप्राप्तां पाश्चात्यवाक्यविरतिं कुर्वति सति॥ १॥
182622
182623 निर्विकल्पसमाधानसमतां समुपागते।
182624 शान्तस्वच्छमनोवृत्तौ सर्वस्मिंश्च सभाजने॥ २॥

182625
182626 सर्वस्मिन्सभागते जने चान्नभोगतदेवादिजने च
182627 मुनिवाक्यश्रवणान्निर्विकल्पसमाधानेन समतां ब्रह्मैकरसतां समागते सति ॥ २
182628 ॥
182629
182630 सत्त्वकोटिमुपारूढे परां पावनतां गते।
182631 संवित्तत्त्वे समग्रस्य जनस्य श्रुतशालिनः ॥ ३ ॥
182632
182633 निर्विकल्पसमाधिक्रमेण संवित्तत्त्वे प्रतीचि सत्त्वकोटिं सन्मात्रकाष्ठां समारूढे
182634 अत एव परां पावनतां गते सति ॥ ३ ॥
182635
182636 झटित्येवाम्बरहृता पूर्वमुक्तधियां मुखात्।
182637 सिद्धानां साधुवादेन व्योमकोटरवासिनाम् ॥ ४ ॥
182638
182639 व्योमकोटरवासिनां पूर्वमुक्तधियां सनकादीनां अम्बरं हरति
182640 व्याप्नोतीत्यम्बरहृत् तथाविधेन साधुवादेन प्रशंसावाक्येन ॥ ४ ॥
182641
182642 तथा सभास्थितानां च मुनीनां भावितात्मनाम्।
182643 गाधेयप्रमुखानां च साधुवादगिरोच्चया ॥ ५ ॥
182644
182645 तथा सभायां स्थितानां गाधेयो विश्वामित्रस्तत्प्रमुखानां मुनीनामुच्चया
182646 साधुवादगिरा च झटित्येव भूरिपूरितदिङ्मुखो मधुराः कोलाहलः समुदभूदिति
182647 परेण संबन्धः ॥ ५ ॥
182648
182649 कोलाहलः समुदभूद्भूरिपूरितदिङ्मुखः।
182650 मधुरः पवनात्तानां कीचकानामिवारवः ॥ ६ ॥
182651
182652 पवने आत्तानां व्याप्तानां पूर्णरन्ध्राणां कीचकानां वेणुभेदानामारव इव ॥ ६
182653 ॥
182654
182655 सिद्धानां साधुवादेन सह वै सहसा ततः।
182656 देवदुन्दुभयो नेदुः प्रतिश्रुत्पूरिताचलाः ॥ ७ ॥
182657
182658 प्रतिश्रुद्भिः प्रतिध्वनिभिः पूरिता अचला भूरचलाः पर्वताश्च यैः ॥ ७ ॥
182659
182660 देवदुन्दुभिभिः सार्धं तुषारासारसुन्दरी।
182661 दिग्भ्यः स्थगितदिक्चक्रा पुष्पवृष्टिः पपात ह ॥ ८ ॥
182662
182663 तुषाराणामासार इव सुन्दरी शुभ्रा। स्थगितान्याच्छादितानि दिक्चक्राणि यया ॥ ८ ॥
182664
182665 पुष्पौघपूरितस्थानः शब्दापूरितकन्दरः।
182666 रजःसंरञ्जिताकाशो गन्धरञ्जितमारुतः ॥ ९ ॥
182667
182668 पुष्पौघादिभिश्चतुर्भिः पूरितं सभास्थानादिचतुष्टयं यत्र तथाविधः
182669 साधुवाद"अब्दादित्रयस्य स समवायः समूहो रराजेति द्वयोरर्थः ॥ ९ ॥
182670
182671 स साधुवादशब्दस्य देवतूर्यरवस्य च।
182672 कुसुमासारघोषस्य समवायो रराज ह ॥ १० ॥
182673
182674 उन्मुखाखिलसभ्याक्षिरश्मिश्यामलितान्तरः।
182675 उत्कर्णमृगमातङ्गहयपक्षिपशुश्रुतः ॥ ११ ॥
182676

182677 तमेव समवायं वर्णयति - उन्मुखेत्यादिद्वाभ्याम् ॥ ११ ॥
182678
182679 सविस्मयभयोन्नेत्रबालकान्ताजनेक्षितः ।
182680 विस्मयस्मेरवदनराजलोकावलोकितः ॥ १२ ॥
182681
182682 सविस्मयैः सभयैश्च अत एव उन्नेत्रैर्बालैः कान्ताजनैश्च ईक्षितः ॥ १२ ॥
182683
182684 कुसुमासारसारेण शब्दशोभातिशायिना ।
182685 संरम्भेण जगामाशु रोदोरन्ध्रमपूर्वताम् ॥ १३ ॥
182686
182687 रोदोरन्ध्रं द्यावाभूम्यन्तरालम् । अपूर्वतामलौकिकचमत्कारिताम् ॥ १३ ॥
182688
182689 पुष्पवर्षसुधाधौतं रटद्भूतसुघुंघुमम् ।
182690 समतां सदनेनागात् ध्मातशङ्खशतेन खम् ॥ १४ ॥
182691
182692 पुष्पवर्षेण सुधाभिर्मकरन्दैर्धौतं क्षालितम् । रटद्भिर्भूतैः प्राणिभिः
182693 सुघुंघुमं पुण्यशब्दम् । ध्माताः शङ्का यस्मिंस्तथाविधं खमाकाशं
182694 सदनेन दशरथगृहेण समतामगात् ॥ १४ ॥
182695
182696 भुवनं भूरिभांकारभासुरं सुरचारणैः ।
182697 वृतं मत्तोत्सवं रेजे समं कुसुममण्डितम् ॥ १५ ॥
182698
182699 भुवनं जगदपि मत्त उपचित उत्सवो यत्र तथाविधं सत् अर्थाद्दशरथगृहेण
182700 समं तुल्यरूपं रेजे ॥ १५ ॥
182701
182702 शनैर्दुन्दुभिसिद्धौघवाक्यपुष्पभरः समम् ।
182703 प्रययौ रोदसीरन्ध्रे वेलाचलमिवाम्बुधौ ॥ १६ ॥
182704
182705 दुन्दुभिपदेन तच्छब्दा लक्ष्यन्ते । तेषां सिद्धौघवाक्यानां पुष्पाणां च भरः
182706 समं तुल्यकालं रोदस्योः रन्ध्रे दिगन्ते शनैः प्रययौ यथा अम्बुधौ कल्लोलो
182707 वेलाचलं याति तद्वत् ॥ १६ ॥
182708
182709 तस्मिन्विबुधसंरम्भे क्षणेन समये गते ।
182710 वाक्यानीमानि सिद्धानामभिव्यक्तिमुपाययुः ॥ १७ ॥
182711
182712 विबुधानां संरम्भे पुष्पव्र्षोद्योगकोलाहले । इमानि वक्ष्यमाणानि ॥ १७ ॥
182713
182714 सिद्धा ऊचुः ।
182715
182716 आकल्पं सिद्धसङ्घेषु मोक्षोपायाः सहस्रशः ।
182717 व्याख्याताश्च श्रुताश्चालमीदृशास्तु न केचन ॥ १८ ॥
182718
182719 अस्माभिर्व्याख्याता अन्येभ्यश्च श्रुताः ईदृशा एतद्ग्रन्थसदृशाः ॥ १८ ॥
182720
182721 तिर्यञ्चो वनिता बाला व्यालाश्चानेन निर्वृतिम् ।
182722 मुनेर्वाक्यविलासेन यान्ति नास्त्यत्र संशयः ॥ १९ ॥
182723
182724 अत्र यो गुणातिशयस्तमाहुः - तिर्यञ्च इति । मुनेर्वसिष्ठस्यैतद्ग्रन्थरूपेण
182725 वाक्यविलासेन श्रुतेन ॥ १९ ॥
182726
182727 दृष्टान्तैर्हेतुभिर्युक्त्या यथा रामोऽवबोधितः ।
182728 तथा चारुन्धती साक्षात्संबोधयति वा न वा ॥ २० ॥

182729
182730 भगवतो वसिष्ठस्य श्रीरामे मुख्याधिकारिणि स्नेहातिशयं प्रशंसन्ति -
182731 दृष्टान्तैरिति ‖ २० ‖
182732
182733 अनेन मोक्षोपायेन तिर्यञ्चोऽपि गतामयाः ।
182734 स्थिता मुक्ता भविष्यन्ति के नाम भुवि नो नराः ‖ २१ ‖
182735
182736 तिर्यञ्चः पशुपक्ष्यादयोऽपि । भुवि नराः के नाम मुक्ता नो भविष्यन्ति यदि
182737 शृण्वन्तीत्यर्थः ‖ २१ ‖
182738
182739 श्रवणाञ्जलिभिः पीत्वा ज्ञानामृतमिदं वयम् ।
182740 परां पूर्णनवीभूतसिद्धयः श्रियमागताः ‖ २२ ‖
182741
182742 इति शृण्वन्सभां लोको विस्मयोत्फुल्ललोचनः ।
182743 कुसुमासारसंपूर्णां राजीवानां ददर्श ताम् ‖ २३ ‖
182744
182745 लोकः अयोध्याजनः इति एवंविधानि सिद्धवाक्यानि शृण्वन् सन् तां सभां
182746 राजीवानां पद्मादीनां कुसुमासारैः संपूर्णां ददर्श ‖ २३ ‖
182747
182748 मन्दारादिमहापुष्पच्छन्नच्छादनसंचयाम् [घनच्छादनेति पाठः ।
182749 ] ।
182750 पारिभद्रलतागुच्छनीरन्ध्राजिरभूमिकाम् ‖ २४ ‖
182751
182752 पारिभद्रलता कल्पलताभेदः । मन्दारादीनि पञ्चदेवतरुभेदपुष्पाणि ‖ २४ ‖
182753
182754 पारिजातप्रसूनाढ्यमहीतलविराजिताम् ।
182755 संतानकमहाम्भोदव्याप्तसभ्यशिरःकराम् ‖ २५ ‖
182756
182757 मौलिरत्नविटंकाग्रविश्रान्तहरिचन्दनाम् ।
182758 वारिपूरप्रलम्बाभ्रवदालम्बिवितानकाम् ‖ २६ ‖
182759
182760 वारिपूरैः प्रलम्बैरभ्रैस्तुल्यं प्रलम्बाभ्रवत्पुष्पभारालम्बिनो वितानका यस्याम्
182761 ‖ २६ ‖
182762
182763 इति पश्यन्सभां लोकः साधुवादेन भूरिणा ।
182764 तत्कालोचितवाक्येन तेन तेन तथोद्यतः ‖ २७ ‖
182765
182766 तेन तेन तत्कालोचितप्रशंसावाक्येन तथा । उद्यत उद्युक्तः सन् वसिष्ठं
182767 पूजयामासेति संबन्धः ‖ २७ ‖
182768
182769 वसिष्ठं पूजयामास सर्वेन्द्रियगणानतः ।
182770 कुसुमाञ्जलिमिश्रेण प्रणामसहितेन च ‖ २८ ‖
182771
182772 सर्वैरिन्द्रियगणैरानतः प्रह्वीभूतः ‖ २८ ‖
182773
182774 नृपप्रणाममालासु किंचिच्छान्तासु तास्वथ ।
182775 मुनिमापूजयन्नाह सार्घ्यपात्रकरो नृपः ‖ २९ ‖
182776
182777 अर्घ्यपात्रेण सहितः सार्घ्यपात्रः करो यस्य । नृपो दशरथः ‖ २९ ‖
182778
182779 दशरथ उवाच ।
182780

182781 क्षयातिशयमुक्तेन परमेणात्मवस्तुना |
182782 परान्तः पूर्णतोत्पन्ना बोधेनारुन्धतीपते || ३० ||
182783
182784 हे अरुन्धतीपते त्वदुपदेशलब्धेन बोधेन परमेण
182785 निरतिशयानन्दरूपेणात्मवस्तुना अन्तः परा सर्वोत्कृष्टा पूर्णता उत्पन्ना || ३० ||
182786
182787 न तदस्ति महीपीठे दिवि देवेषु वापि च |
182788 महत्किंचिद्यदप्राप्तं तव पूज्यस्य पूजनम् || ३१ ||
182789
182790 एवमीदृशपरमपुरुषार्थदातुस्तव पूजनं योग्यं यत्स्यात्तत्तादृशं वस्तु
182791 महीपीठे मनुष्येषु दिवि देवेषु अपि च पाताले वा नास्ति || ३१ ||
182792
182793 तथाप्यात्मक्रमं ब्रह्मन्निमं नेतुमवन्ध्यताम् |
182794 अहं वच्मि यथाप्राप्तं न कोपं कर्तुमर्हसि || ३२ ||
182795
182796 तथाप्यहमात्मनः स्वस्य अवश्यकर्तव्यमिमं शास्त्रलोकप्रसिद्धं यथाप्राप्तं
182797 गुरुपूजनक्रममवन्ध्यतां सफलतां नेतुं किंचिद्वच्मि प्रार्थयामि || ३२ ||
182798
182799 आत्मना सकलत्रेण लोकद्वयशुभेन च |
182800 राज्येनाखिलभृत्येन भवन्तं पूजयाम्यहम् || ३३ ||
182801
182802 लोकद्वये भुवि स्वर्गे च भोगार्थं यन्मया संचितं शुभं सुकृतं तेन |
182803 अखिलाः सामन्ता भृत्या यस्मिंस्तथाविधेन राज्येन | अखिलभृत्यवर्गेणेति
182804 पृथग्वा | भवते समर्पितेनेति शेषः || ३३ ||
182805
182806 एतत्सर्वं तव विभो स्वायत्तं स्व इवाश्रमः |
182807 नियोजय यथादेशं यथाभिमतयेच्छया || ३४ ||
182808
182809 मया तुभ्यं दत्तमेतत्सर्वं तव स्वायत्तम् | त्वं नियोजय स्वामी भूत्वा आज्ञापय ||
182810 ३४ ||
182811
182812 श्रीवसिष्ठ उवाच |
182813
182814 प्रणाममात्रसंतुष्टा ब्राह्मणा भूपते वयम् |
182815 प्रणामेनैव तुष्यामः स एव भवता कृतः || ३५ ||
182816
182817 स प्रणामो भवता कुत एवेत्यन्वयः || ३५ ||
182818
182819 पातुं त्वमेव जानासि राज्यं भाति तवैव च |
182820 भवत्वेतत्तवैवेह ब्राह्मणाः क्व महीभृतः || ३६ ||
182821
182822 पातुं रक्षयितुम् || ३६ ||
182823
182824 दशरथ उवाच |
182825
182826 कियन्मात्रं तु राज्यं स्यादिति लज्जामहे मुने |
182827 प्रकर्षेणात्र तेनेश यथा जानासि तत्कुरु || ३७ ||
182828
182829 अत्र अस्मिन्परमपुरुषार्थस्वरूपमोक्षदानोपकारे प्रत्युपकारतया राज्यं
182830 प्रकर्षेण कियन्मात्रं स्यात् | मानुषानन्दपरमावधिर्हि
182831 निष्कण्टकवित्तपूर्णनिरामयसप्तद्वीपाधिपत्यम् | तदपेक्षया शतगुणो
182832 मनुष्यगन्धर्वाणामानन्दस्तदपेक्षयापि देवगन्धर्वाणां स शतगुण इत्येवं

182833 क्रमेणोत्कृष्यमाणविषयानन्दानां हैरण्यगर्भानन्दः परमावधिः सोपि
182834 यस्मिन् मोक्षानन्दसमुद्रे सीकरप्रायस्तत्रेदं कियन्मात्रं क्व गणनार्हं
182835 स्यादित्यर्थः ॥ ३७ ॥
182836
182837 श्रीवाल्मीकिरुवाच ।
182838
182839 इत्युक्तवति भूपाले रामः पुष्पाञ्जलिं ददत् ।
182840 उवाच प्रणतो वाक्यं पुरस्तस्य महागुरोः ॥ ३८ ॥
182841
182842 तस्य महागुरोः पादयोः पुष्पाञ्जलिं ददत्सन् ॥ ३८ ॥
182843
182844 निरुत्तरीकृतमहाराज ब्रह्मन्प्रणौमि ते ।
182845 प्रणाममात्रसारोऽहं रामः पादाविमौ प्रभो ॥ ३९ ॥
182846
182847 प्रणामेनैव तुष्याम इति त्वद्वचनात्प्रणाममात्रं सारः सर्वोत्कृष्टतया
182848 आवश्यको यस्य ॥ ३९ ॥
182849
182850 इत्युक्त्वा पादयोस्तस्य शिरोवन्दनपूर्वकम् ।
182851 तत्याजाञ्जलिपुष्पाणि हिमानीव वनं गिरेः ॥ ४० ॥
182852
182853 यथा वनं गिरेः पादयोर्हिमानि पल्लवसक्तान्यवश्यायजलानि त्यजति तद्वत् ॥ ४० ॥
182854
182855 आनन्दबाष्पसंपूर्णनयनो नयकोविदः ।
182856 गुरुं परमया भक्त्या प्रणनाम पुनःपुनः ॥ ४१ ॥
182857
182858 शत्रुघ्नो लक्ष्मणश्चैव तथान्ये तत्समाश्च ये ।
182859 निकटस्थास्तथैवाशु ते प्रणेमुर्मुनीश्वरम् ॥ ४२ ॥
182860
182861 तत्समाः शत्रुघ्नलक्ष्मणसदृशा रामसखाः ॥ ४२ ॥
182862
182863 दूरप्रणामैर्दूरस्थाः पुष्पाञ्जलिसमीरणैः ।
182864 राजानो राजपुत्राश्च प्रणेमुर्मुनयश्च तम् ॥ ४३ ॥
182865
182866 दूरस्थयोग्यैः प्रणामैः ॥ ४३ ॥
182867
182868 अस्मिन्नवसरे तत्र कुसुमाञ्जलिवर्षणैः ।
182869 हिमैरिव हिमाद्रीन्द्रो मुनिरन्तर्धिमाययौ ॥ ४४ ॥
182870
182871 अन्तर्धिमाच्छादनम् ॥ ४४ ॥
182872
182873 अथ शान्ते सभाक्षोमे प्रणामनिवहे तथा ।
182874 संस्मरञ्छासनं किंचित्सत्ये कृष्णसिताशयम् ॥ ४५ ॥
182875
182876 मुनीनां मान्यानां पुरतः स्वकृतं शासनमुपदेशात्मकं शास्त्रं सत्ये
182877 वस्तुनि विषये कृष्णाशयं बुद्धिमालिन्यप्रयुक्तं सदोषं सिताशयं
182878 स्वच्छबुद्धिप्रयुक्तनिर्दोषं वा स्यादिति संदिहान इव स्वचरित्रेण जनस्य विनयं
182879 शिक्षयितुं किंचिन्मुनिषु वक्ष्यमाणप्रकारेण प्रष्टव्यं संस्मरन्सन् मुखं
182880 संदर्शयामासेति संबन्धः ॥ ४५ ॥
182881
182882 मुनिः कुसुमराशिं तं बाहुभ्यां प्रविचाल्य सः ।
182883 मुखं संदर्शयामास सिताभ्रादिव चन्द्रमाः ॥ ४६ ॥
182884

182885 सिताभ्रात् सिताभ्राणि निरस्य। ल्यब्लोपे पञ्चमी। चन्द्रमा इव॥ ४६॥
182886
182887 शान्ते सिद्धवचोराशौ तथा दुन्दुभिनिःस्वने।
182888 नभःकुसुमवर्षे च सभाकलकले तथा॥ ४७॥
182889
182890 प्रणामानन्तरं तस्मिन्रामाद्यैः स्वसभाजने।
182891 शान्तवात इवाम्भोदे जने सौम्यत्वमागते॥ ४८॥
182892
182893 स्वं सभाजयति पूजयतीति स्वसभाजने जने सौम्यत्वमव्यग्रतामागते सति॥ ४८॥
182894
182895 आकर्णयन्साधुवादं विश्वामित्रं मृदुस्वनम्।
182896 उवाचेदमनिन्द्यात्मा वसिष्ठो मुनिनायकः॥ ४९॥
182897
182898 मुने गाधिकुलाम्भोज वामदेव निमे क्रतो।
182899 भरद्वाज पुलस्त्यात्रे घृष्टे नारद शाण्डिले॥ ५०॥
182900
182901 गाधिकुलस्य यशःसौरभजनकत्वाद्गाधिकुलाम्भोज हे विश्वामित्र॥ ५०॥
182902
182903 हे भासभृगुभारण्डवत्सवात्स्यायनादयः।
182904 मुनयस्तुच्छमेतन्नु भवद्भिर्मद्वचः श्रुतम्॥ ५१॥
182905
182906 भासो विपश्चिदन्यो वा। हे मुनयः भवद्भिर्मान्यैरेतन्मद्वचनं तुच्छं
182907 सदोषत्वात्क्षुद्रमनुपादेयम्। नु इति वितर्के। एवं संभावयामीत्यर्थः॥ ५१॥
182908
182909 यदत्रानुचितं किंचित्तदनुग्रहतोऽधुना।
182910 दुरर्थं विगतार्थं वा भवन्तः कथयन्तु मे॥ ५२॥
182911
182912 अतोऽत्र यत्किंचिदनुचितं दुरर्थं विगतार्थं निरर्थकं वा संभावितं तदधुना
182913 सशिष्ये मय्यनुग्रहतो मे कथयन्त्विति भगवतो विनयोक्तिर्लोके विनयशिक्षणार्थं
182914 महर्षिवचनेन ग्रन्थस्य निर्दोषताख्यापनार्थं च॥ ५२॥
182915
182916 सभ्या ऊचुः।
182917
182918 वसिष्ठवचने ब्रह्मन्परमार्थैकशालिनि।
182919 दुरर्थो भवतीत्यद्य नवैव खलु गीः श्रुता॥ ५३॥
182920
182921 सभ्याः संबोधिता गाधिसुताद्याः मुनय ऊचुः। जगति क्वाप्यप्रसिद्धत्वान्नवैव
182922 गीर्वाणी श्रुता॥ ५३॥
182923
182924 यत्संभृतमनन्तेन जन्मदोषेण नो मलम्।
182925 तत्प्रमृष्टं त्वयेहाद्य हेम्नामिव हविर्भुजा॥ ५४॥
182926
182927 ब्रह्मबृंहितया वाचा विभो विकसिता वयम्।
182928 कुमुदानीन्दुदीप्त्येव परमामृतशीतया॥ ५५॥
182929
182930 ब्रह्मणि बृंहितया विस्तारितया। इन्दुदीप्तिपक्षे ब्रह्मसदृशे आकाशे विस्तारितया॥
182931 ५५॥
182932
182933 सर्वसत्त्वमहाबोधदायिनं मुनिनायकम्।
182934 भवन्तमेकान्तगुरुं प्रणमाम इमे वयम्॥ ५६॥
182935
182936 एकान्तो नियमः। गुरुमेव न तु कुतश्चिदगुरुमिति अपरविद्यागुरुभ्योऽस्योत्कर्षकाष्ठा

182937 सूचिता ॥ ५६ ॥
182938
182939 श्रीवाल्मीकिरुवाच ।
182940
182941 इत्युक्त्वा मुनिनाथाय नमस्त इति ते पुनः ।
182942 वदन्त एकशब्देन तारेणाब्दरवौजसा ॥ ५७ ॥
182943
182944 ते पुनर्नमस्ते इति वदन्तः सन्तः खात् आकाशात्सिद्धैः समं
182945 स्वयमप्युज्झितैरर्वाक्पुष्पाञ्जलिव्रातैर्वसिष्ठं पुनः पूरयामासुः अचलं
182946 हिमवन्तमिव ॥ ५७ ॥
182947
182948 अर्वाक्यपुष्पाञ्जलिव्रातैः खात्सिद्धैः सममुज्झितैः ।
182949 वसिष्ठं पूरयामासुर्हिमैरब्दा इवाचलम् ॥ ५८ ॥
182950
182951 इत्थं दशरथं भूपं शशंसुश्चाथ राघवम् ।
182952 माधवं चतुरात्मानं राघवोदन्तकोविदाः ॥ ५९ ॥
182953
182954 अथ दशरथप्रशंसानन्तरं चतुरात्मानं माधवं राघवं प्रशशंसुः ।
182955 यतस्ते राघवस्य विष्ण्ववतारत्ववृत्तान्तकोविदा इत्यर्थः ॥ ५९ ॥
182956
182957 सिद्धा ऊचुः ।
182958
182959 नमाम चतुरात्मानं नारायणमिवापरम् ।
182960 रामं सभ्रातरं जीवन्मुक्तं राजकुमारकम् ॥ ६० ॥
182961
182962 चतुरब्धिनिखातान्तधरावलयपालकम् ।
182963 त्रिकालस्थमहीपालचिह्नं दशरथं नृपम् ॥ ६१ ॥
182964
182965 त्रिकालस्थानि कदाप्यनपायीनि महीपालचिह्नानि राजलक्षणानि यस्मिंस्तथाविधं
182966 दशरथं नृपं श्रीरामजनकत्वात्त्वं धन्यतमोऽसीति पुनः प्रशशंसुः ॥ ६१ ॥
182967
182968 मुनिसेनाधिपं भूपं भास्करं भूरितेजसम् ।
182969 वसिष्ठं सुप्रवादाढ्यं विश्वामित्रं तपोनिधिम् ॥ ६२ ॥
182970
182971 मुनिसेनायाः अधिपं स्वामिनं भूरितेजसं भास्करमिव स्थितं वसिष्ठं
182972 तत्संनिहितं विश्वामित्रं च प्रशशंसुः ॥ ६२ ॥
182973
182974 एषामेव प्रभावेन ज्ञानयुक्तिं परामिमाम् ।
182975 श्रुतवन्तो वयं सर्वे भ्रान्तिसंरम्भनाशिनीम् ॥ ६३ ॥
182976
182977 एतेषां प्रशंसायां को हेतुस्तमाहुः - एषामेवेति । भ्रान्तिसंरम्भनाशिनीं
182978 वसिष्ठवाणीमिति शेषः ॥ ६३ ॥
182979
182980 श्रीवाल्मीकिरुवाच ।
182981
182982 इत्युक्त्वा गगनात्सिद्धा भूयः पुष्पाणि चिक्षिपुः ।
182983 सभायामथ तूष्णीं च तस्थुर्मुदितचेतसः ॥ ६४ ॥
182984
182985 तथैव व्योमगाः सिद्धाः शशंसुस्तं जनं पुनः ।
182986 तथैव सभ्यास्तांस्तत्र समानर्चुर्घनस्तवम् ॥ ६५ ॥
182987
182988 तान्सिद्धान्घनस्तवं बहुस्तवसहितं यथा स्यात्तथा समानर्चुः ॥ ६५ ॥

182989
182990 नभश्चरा धरणिचरा मुनीश्वरा महर्षयो विबुधगणा द्विजा नृपाः ।
182991 अपूजयन्निति जनमोजसैव ते गिरोच्चया सह कुसुमार्घ्यदानया ॥ ६६ ॥
182992
182993 नभश्चरा महर्षयो विबुधगणा धरणिचरा द्विजा नृपा उभयचरा
182994 मुनीश्वराश्च ते इति वर्णितप्रकारेण ओजसा स्वस्वसामर्थ्यानुसारेण प्रतिजनं सह
182995 कुसुमार्घ्यदानया उच्चया गिरा अपूजयन् ॥ ६६ ॥
182996
182997 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० निर्वा० उ०
182998 साधुवादसपर्यादिवर्णनं नाम द्विशततमः सर्गः ॥ २०० ॥
182999
183000 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
183001 साधुवादसपर्यादिवर्णनं नाम द्विशततमः सर्गः ॥ २०० ॥
183002
183003 एकाधिकद्विशततमः सर्गः २०१
183004
183005 श्रीवाल्मीकिरुवाच ।
183006
183007 अथार्वाक्साधुवादेषु प्रशान्तेषु शनैःशनैः ।
183008 ज्ञानोपदेशमासाद्य प्रोल्लसत्स्विव राजसु ॥ १ ॥
183009
183010 अत्र रामेण भूयोऽपि पृष्टेन गुरुणादरात् ।
183011 पूर्णानन्दपदे स्वस्य विश्रान्तिः प्रकटीकृता ॥
183012
183013 अर्वाक् अधःसभाप्रदेशे ॥ १ ॥
183014
183015 प्रशान्तसंसृतिभ्रान्तौ जने चरितमात्मनः ।
183016 स्वयं हसति चित्तेन सत्यं समनुधावता ॥ २ ॥
183017
183018 आत्मनः स्वस्य चरितमज्ञदशाचरित्रं स्वयमेव सत्यं तत्त्वं समनुधावता
183019 सम्यक्पश्यता चित्तेन हसति सति ॥ २ ॥
183020
183021 वलच्चित्तकलं ज्ञानसमास्वादनतत्परे ।
183022 विवेकिनि सभालोके शान्ते ध्यानमिवास्थिते ॥ ३ ॥
183023
183024 सभागते लोके जने वलन्ती परावृत्ता प्रत्यक्प्रवणा चित्तकला चित्तवृत्तिर्यस्मिन्कर्मणि
183025 तद्यथा स्यात्तथा ज्ञानस्य चिदेकरसानन्दस्य सम्यगास्वादनतत्परे जाते सति ॥ ३ ॥
183026
183027 बद्धपद्मासने रामे सभ्रातरि गुरोः पुरः ।
183028 स्थिते कृताञ्जलौ दीप्तगुरुवक्त्रगतेक्षणे ॥ ४ ॥
183029
183030 दीप्तं शोभमानं यद्गुरुवक्त्रं तद्गतेक्षणे ॥ ४ ॥
183031
183032 पार्थिवे किमपि ध्यानमिवास्वादयति स्थितिम् ।
183033 जीवन्मुक्तात्मिकामन्तरादिमध्यान्तपावनीम् ॥ ५ ॥
183034
183035 पार्थिवे दशरथे ध्यानमिवालम्ब्य जीवन्मुक्तात्मिकां स्थितिमास्वादयति सति ॥ ५ ॥
183036
183037 ग्रहीतुमर्चां भक्तानां मानितार्थजनो मुनिः ।
183038 तूष्णीं क्षणमिव स्थित्वा प्रोवाचानाकुलाक्षरम् ॥ ६ ॥
183039
183040 मुनिर्वसिष्ठो भक्तानां राजादीनामर्चां पूजां ग्रहीतुं पूर्वोक्तरीत्या क्षणं

183041 तूष्णीमिव स्थित्वा तदनन्तरं प्रोवाच ॥ ६ ॥
183042
183043 स्वकुलाकाशशीतांशो राम राजीवलोचन।
183044 किमन्यदिच्छसि श्रोतुं कथयाभिमतेच्छया ॥ ७ ॥
183045
183046 स्थितिं च कीदृशीमेनामद्यानुभवसि स्वयम्।
183047 किंरूपमिदमाभासं जागतं वद पश्यसि ॥ ८ ॥
183048
183049 इत्युक्ते मुनिना तेन प्राह राजकुमारकः।
183050 अविह्वलं मृदु स्पष्टं गुरोरालोकयन्मुखम् ॥ ९ ॥
183051
183052 श्रीराम उवाच।
183053
183054 त्वत्प्रसादेन यातोऽस्मि परां निर्मलतां प्रभो।
183055 शान्ताशेषकलङ्काङ्कं नभस्तलम् ॥ १० ॥
183056
183057 शान्ताशेषकलङ्कः पूर्णचन्द्रः अङ्कश्चिह्नं यस्मिंस्तथाविधं नभस्तलमिव
183058 ॥ १० ॥
183059
183060 सर्वा एवोपशान्ता मे भ्रान्तयो भवभङ्गदाः।
183061 स्वरूपेणावदातेन तिष्ठाम्यच्छमिवाम्बरम् ॥ ११ ॥
183062
183063 स्थितोऽहं गलितग्रन्थिः शान्ताशेषविशेषणः।
183064 स्फटिकालयमध्यस्थस्फटिकामलधीरहम् ॥ १२ ॥
183065
183066 स्फटिकालयमध्यस्थस्फटिक इव ब्रह्मभावविशुद्धे जगति तथाविधा
183067 [ब्रह्मभावविशुद्धेत्यर्थः ।] धीर्यस्य ॥ १२ ॥
183068
183069 अन्यच्छ्रोतुमथाहर्तुं शान्तं नेच्छति मे मनः।
183070 परां तृप्तिमुपायान्तं सुषुप्तमिव संस्थितम् ॥ १३ ॥
183071
183072 आहर्तुं संपादयितुं चेत्यर्थः ॥ १३ ॥
183073
183074 शान्ताशेषपरामर्शं विगताशेषकौतुकम्।
183075 संत्यक्ताशेषसंकल्पं शान्तं मम मुने मनः ॥ १४ ॥
183076
183077 परामर्शो विषयस्मरणं तद्भोगे कौतुकं तदर्थाः संकल्पा इति भेदः ॥ १४ ॥
183078
183079 परिनिर्वामि शाम्यामि जाग्रदेव जगत्स्थितौ।
183080 अस्वप्नमपुनर्बोधं स्वपिमीव निरामयम् ॥ १५ ॥
183081
183082 अस्वप्नं मानसविषयालोचनरहितं अपुनर्बोधं जाग्रदैन्द्रियकविषयालोचनरहितं
183083 च स्वपिमीव। इवशब्दः सुषुप्तभानस्यापि मिथ्यात्वात्तुरीयावस्थितिद्योतनार्थः ॥ १५ ॥
183084
183085 आशाविधुरितामात्मसंस्थितिं प्राक्तनीं तनौ।
183086 प्रविहस्य स्फुरत्सूक्तैः स्वस्थस्तिष्ठाम्यसंशयम् ॥ १६ ॥
183087
183088 आशाभिर्विधुरितां विह्वलितां प्राक्तनीं तनौ देहे आत्मबुद्ध्या स्थितिं प्रविहस्य
183089 स्फुरद्भिर्भवत्सूक्तैरुपदेशवाक्यैः सांप्रतं स्वस्थस्तिष्ठामि ॥ १६ ॥
183090
183091 नोपदेशेन नार्थेन न शास्त्रैर्न च बन्धुभिः।
183092 त्यागेन च न चैतेषामधुना मम कारणम् ॥ १७ ॥

183093
183094 अधुना मम उपदेशेन अर्थेन तत्प्रयुक्तप्रयोजनान्तरेण। एतेषां सर्वेषां त्यागेन
183095 च कारणं प्रयोजनं नास्ति॥ १७॥
183096
183097 साम्राज्यस्याथवा व्योम्नि या स्थितिः क्षोभवर्जिता।
183098 तामेवानुभवाम्यत्र मच्चित्तामनपायिनीम्॥ १८॥
183099
183100 मच्चित्तां प्रत्यगात्ममात्रप्रतिष्ठितचित्तामनपायिनीं नित्यां जीवन्मुक्तस्थितिं
183101 व्योम्नि स्वर्गे साम्रज्यस्य असुरादिक्षोभवर्जिता या स्थितिस्तामेवानुभवागीति
183102 लोकदृश्लित्तः॥ १८॥
183103
183104 खादप्यतितरामच्छं चिदाकाशांशमात्रकम्।
183105 जगदित्येव पश्यामि लोचनाद्यङ्गतां [यथाकामं यथारम्भं
183106 यथाप्राप्तं यथास्थितम् इत्येवंरूपे] गतः॥ १९॥
183107
183108 अहं बहिर्दृशालोचनाद्यङ्गकादङ्गतां गतोऽपि जगत् खादप्यतितरामच्छं
183109 चिन्मात्रमित्येव पश्यामि नाज्ञवज्जडमित्यर्थः॥ १९॥
183110
183111 आकाशमात्रमेवेदं जगदित्येकनिश्चयः।
183112 दृश्यनाम्नि नभस्यस्मिन्क्षये जागर्मि चाक्षयः॥ २०॥
183113
183114 अस्मिन् जगति क्षये मोहनिद्रया सह बाधिते सति अक्षयोऽहं सदैव जागर्मि॥ २०॥
183115
183116 यथाकामं यथाप्राप्तं यथास्थितमिव स्थितम्।
183117 यद्वक्ति तदविघ्नेन करोम्यपगतैषणम्॥ २१॥
183118
183119 भाविकार्यं यथाकामं वर्तमानकार्यं यथाप्राप्तं प्रागवस्थितं कार्यं तु
183120 यथास्थितं यद्भवान्वक्ति तदहमपगतैषणं फलाभिसंधिरहितं
183121 गुरुशास्त्रानुसारेण करोमि। पाठान्तरे [यथाकामं यथारम्भं यथास्थितम्
183122 इत्येवंरूपे।] खकार्यविषये यथाकामं यथारम्भम्। परकार्यविषये
183123 यथाप्राप्तं यथास्थितम्॥ २१॥
183124
183125 न तुष्यामि न हृष्यामि न पुष्यामि न रोदिमि।
183126 कार्यं कार्यं करोम्येको भ्रान्तिर्दूरं गता मम॥ २२॥
183127
183128 न तुष्याम्यन्तर्मनसि न हृष्सामि। न पुष्यामि बहिर्देहे इष्टप्राप्त्या।
183129 एवमनिष्टप्राप्त्या न रोदिमि। कार्यमवश्यकर्तव्यं लौकिकं वैदिकं च कार्यं
183130 करोमि॥ २२॥
183131
183132 अन्यतामेतु सर्गोऽयं वातु वा प्रलयानिलः।
183133 सौम्यो भवतु वा देशः स्वस्थोऽहं स्वात्मनि स्थितः॥ २३॥
183134
183135 एवंस्थितस्य ममाज्ञाभिमतैर्बन्धुधनराज्यादिनाशैर्दशाविनिमयैर्वा
183136 नानर्थप्राप्तिशङ्कास्तीत्याशयेनाह - अन्यतामिति। सौम्यः सोममार्गवच्छून्यो
183137 वा भवतु। स्वस्थो निर्विक्षेपः॥ २३॥
183138
183139 विश्रान्तोस्मि विलक्ष्योस्मि दुर्लक्ष्योस्मि निरामयः।
183140 नाशाभिर्बन्धमाप्नोमि मुने खमिव मुष्टिभिः॥ २४॥
183141
183142 विलक्ष्यो बाह्येन्द्रियैरलक्ष्यः। मनसापि दुर्लक्ष्यः। आशाभिस्तृष्णाभिः॥ २४॥
183143
183144 यथा तरुगतात्पुष्पाद्गन्धः प्राप्य नभःपदम्।

183145 तिष्ठत्येवमहं देहादतीतः संस्थितः समः ॥ २५ ॥
183146
183147 देहे अभिव्यक्तस्य देहमतीत्यावस्थाने दृष्टान्तमाह - यथेति । समः अस्य
183148 पुष्पस्य देहस्य वायमिति विशेषयितुमशक्यत्वात्साधारणः ॥ २५ ॥
183149
183150 यथैव सर्वे राजानो विहरन्ति यथासुखम् ।
183151 अप्रबुद्धाः प्रबुद्धाश्च राज्येषु बहुकर्मसु ॥ २६ ॥
183152
183153 तर्हि त्वमग्रे कथं क इव व्यवहरिष्यसि तत्राह - यथैवेति ॥ २६ ॥
183154
183155 शान्तहर्षविषादाशः स्थिरैकसमदर्शनः ।
183156 स्थित आत्मनि निःशङ्कं तथैव विहराम्यहम् ॥ २७ ॥
183157
183158 अप्रबुद्धेभ्यो विशेषमाह - शान्तेति ॥ २७ ॥
183159
183160 सर्वस्योपर्यपि सुखी सुखं नेहामि मे प्रभो ।
183161 जनसाम्येन तिष्ठामि यथेच्छं मां नियोजय ॥ २८ ॥
183162
183163 सर्वस्य विषयैश्वर्यानन्दस्योपरि ब्रह्मानन्देनाहं सुखी । अत एव मे देहे
183164 विषयसुखं नेहामि नेच्छामि । नियोजयस्व सेवादिविषये आज्ञापय ॥ २८ ॥
183165
183166 बालो लीलामिव त्यक्तशङ्कं संसारसंस्थितिम् ।
183167 यावद्देहमिमां साधो पालयाम्यमलैकदृक् ॥ २९ ॥
183168
183169 अहं यावद्देहं बालः स्ववयोनुरूपां लीलां क्रीडामिव यथाप्राप्तां
183170 संसारसंस्थितिं पालयामि ॥ २९ ॥
183171
183172 भुञ्जे पिबामि तिष्ठामि पालयामि निजक्रियाम् ।
183173 जातोऽहं विगताशङ्कस्त्वत्प्रसादान्मुनीश्वर ॥ ३० ॥
183174
183175 श्रीराम उवाच ।
183176
183177 अहो बत महापुण्यं पदमासादितं त्वया ।
183178 अनादिमध्यपर्यन्तमिदं यत्र न शोच्यते ॥ ३१ ॥
183179
183180 यत्र पदे स्थितैर्न शोच्यते । भावे लः ॥ ३१ ॥
183181
183182 सम्यक्समसमाभोगे शीतले स्वात्मनि स्वयम् ।
183183 नभसीव नभः शान्ते विश्रान्तिमसि लब्धवान् ॥ ३२ ॥
183184
183185 दिष्ट्या जातो विशोकस्त्वं दिष्ट्या सम्यगवस्थितः ।
183186 दिष्ट्या लोकद्वयेऽनर्थशङ्का ते शममागता ॥ ३३ ॥
183187
183188 लोकद्वये इहलोके परलोके च दृष्टादृष्टश्रुतानर्थशङ्का ॥ ३३ ॥
183189
183190 दिष्ट्या रघूणां तनय संज्ञः पावितवानसि ।
183191 भूतभव्यभविष्यस्थां बोधेन कुलसंततिम् ॥ ३४ ॥
183192
183193 तनयेति प्रीत्यतिशयेन संबोधनम् । सम्यग्जानातीति संज्ञ आत्मतत्त्ववित्सन् रघूणां
183194 भूतभव्यभविष्यस्थां कुलसंततिं बोधेन पावितवानसि ॥ ३४ ॥
183195
183196 अधुना मुनिनाथस्य विश्वामित्रस्य राघव ।

183197 पूरयित्वार्थितां भुक्त्वा [तिष्ठेति शेषः |] पित्रा सह महीमिमाम् || ३५ ||
183198
183199 अर्थितां यज्ञविघ्नपरिहारार्थिताम् | पित्रा सहेति जीवत्येव पितरि तदाज्ञया
183200 राक्षसवधेन महीं पालयित्वेत्याशयः || ३५ ||
183201
183202 त्वयान्विताः सतनयभृत्यबाधवाः पदातयः सरथगजाश्वमण्डलाः |
183203 निरामया विगतभयाः स्थिरश्रियः सदोदयाः सुभग भवन्तु राघवाः
183204 [रघुकुलसंबन्धिनो भृत्यादयः |] || ३६ ||
183205
183206 हे सुभग त्वया अन्विताः संगताः सतनयाः पुत्रपौत्रसहिता भृत्यबान्धवाश्च
183207 सरथगजा"ष्वमण्डलाः पदातयश्चेति द्विविधा अपि जना निरामयाः शरीरे
183208 विगतभयाश्चित्ते सदोदया गृहेषु भवन्त्वित्याशीः प्रार्थना वा || ३६ ||
183209
183210 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० निर्वाणप्रकरणे उत्तरार्धे
183211 विश्रान्तिप्रकटीकरणं नामैकाधिकद्विशततमः सर्गः || २०१ ||
183212
183213 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
183214 विश्रान्तिप्रकटीकरणं नामैकाधिकद्विशततमः सर्गः || २०१ ||
183215
183216 द्व्यधिकद्विशततमः सर्गः २०२
183217
183218 श्रीवाल्मीकिरुवाच |
183219
183220 एतच्छ्रुत्वा वसिष्ठस्य वचः संसदि पार्थिवाः |
183221 सिक्ता इवामृतापूरैरन्तःशीतलतां ययुः || १ ||
183222
183223 प्रबोधहृष्टा राजानो रामश्चात्रोपवर्णिताः |
183224 रामेण च स्थितिः स्वीया निर्मृष्टा ज्ञाननिर्मला ||
183225
183226 पार्थिवग्रहणं सर्वजनोपलक्षणम् || १ ||
183227
183228 रामः कमलपत्राक्षो रराज वदनेन्दुना |
183229 क्षीरोद इव संपूर्णः सुधापूरेण चारुणा || २ ||
183230
183231 सुधाभिः पूर्यत इति सुधापूरः पूर्णचन्द्रस्तेनोदितेन क्षीरोद इव || २ ||
183232
183233 वामदेवादयः सर्वे तत्त्वज्ञानविशारदाः |
183234 अहो भगवता ज्ञानमुक्तमित्यूचुरादरात् || ३ ||
183235
183236 अहो आश्चर्यभूतमुक्तम् || ३ ||
183237
183238 शान्तान्तःकरणो राजा मुदा दशरथो बभौ |
183239 तुष्ट्यैव संप्रहृष्टाङ्गो नवां द्युतिमुपागतः || ४ ||
183240
183241 तुष्ट्या संतोषातिशयेन संप्रहृष्टाङ्गो रोमाञ्चितगात्रः || ४ ||
183242
183243 ज्ञातज्ञेयेषु बहुषु साधुवादकथास्वथ |
183244 उवाच गलिताज्ञानो रामो वाक्यमिदं पुनः || ५ ||
183245
183246 बहुषु साधुवादकथासु प्रवृत्तासु सतीषु || ५ ||
183247
183248 श्रीराम उवाच |

183249
183250 भगवन्भूतभव्येश त्वयास्माकमलं मलम् ।
183251 संप्रमृष्टमिदं हेम्नः श्यामत्वमिव वह्निना ॥ ६ ॥
183252
183253 मलमज्ञानम् ॥ ६ ॥
183254
183255 अभूम वयमात्मीयकायमात्रदृशः पुरा ।
183256 प्रभो संप्रति संपन्ना विष्वग्विश्वावलोकिनः ॥ ७ ॥
183257
183258 कायमात्रदृशो देहपरिच्छिन्नात्मदृष्टयः । विश्वावलोकिनः सर्वात्मदर्शिनः ॥
183259 ७ ॥
183260
183261 स्थितोऽस्मि सर्वसंपूर्णः संपन्नोऽस्मि निरामयः ।
183262 जातोऽस्मि विगताशङ्को बुधो जागर्मि संप्रति ॥ ८ ॥
183263
183264 सर्वः सन् संपूर्णः ॥ ८ ॥
183265
183266 आनन्दितोऽस्म्यखेदाय सुखितोस्मि चिराय च ।
183267 स्थितोऽनस्तमयायैव शाश्वतार्थोदयो मम ॥ ९ ॥
183268
183269 मम शाश्वतस्यार्थस्य परमपुरुषार्थस्य उदय आविर्भावोऽभूदिति शेषः ॥ ९ ॥
183270
183271 अहो बत पवित्रेण शीतेन ज्ञानवारिणा ।
183272 त्वया सिक्तोस्मि हृष्यामि पद्मवद्धृदये स्वयम् ॥ १० ॥
183273
183274 पद्मवच्छारदाब्जवत् ॥ १० ॥
183275
183276 इयमद्य मया लब्धा पदवी त्वत्प्रसादतः ।
183277 यस्यां स्थितस्य मे सर्वममृतत्वं गतं जगत् ॥ ११ ॥
183278
183279 पदवी साम्राज्यपदवी ॥ ११ ॥
183280
183281 अन्तःप्रसन्नमतिरस्तसमस्तशोकः शोभां गतोऽहममलाशय एव शान्त्या ।
183282 आनन्दमात्मनि गतः स्वयमात्मनैव नैर्मल्यमभ्युपगतोऽस्मि नमोस्तु
183283 मह्यम् ॥ १२ ॥
183284
183285 अन्तः प्रसन्ना मतिर्यस्य । अत एवास्तसमस्तशोकः । यतोऽहं शान्त्या
183286 सकार्यमूलाज्ञाननाशेनामलाशय एवात्मनि आनन्दं गतः । आत्मनैव
183287 सम्यक्परीक्ष्य दृष्टेन स्वतःसिद्धनैर्मल्यमभ्युपगतोऽस्मि । अतो मह्यमेव
183288 नमोऽस्त्वित्यर्थः ॥ १२ ॥
183289
183290 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० नि० उत्तरार्धे
183291 आत्मविश्रामाङ्गीकरणं नाम द्व्यधिकद्विशततमः सर्गः ॥ २०२ ॥
183292
183293 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
183294 आत्मविश्रामाङ्गीकरणं नाम द्व्यधिकद्विशततमः सर्गः ॥ २०२ ॥
183295
183296 त्र्यधिकद्विशततमः सर्गः २०३
183297
183298 श्रीवाल्मीकिरुवाच ।
183299
183300 इत्थं विचारपरयोर्मुनिराघवयोस्तयोः ।

183301 भास्करः श्रवणायेव व्योममध्यमुपाययौ ‖ १ ‖
183302
183303 मध्याह्नतूर्यघोषोऽत्र दिनकृत्यं निशाक्रमः |
183304 प्रातः सभायां रामस्य निःसंदेहश्च वर्ण्यते ‖
183305
183306 इत्थं विचारपरयोः सतोः | भावलक्षणे सप्तमीद्विवचनम् |
183307 अर्थात्तदुभयविचारश्रवणायेवेत्युत्प्रेक्षा ‖ १ ‖
183308
183309 तीक्ष्णतामाजगामाशु सर्वदिक्कमथातपः |
183310 पदार्थौघविकासार्थं रामस्येव महामतिः ‖ २ ‖
183311
183312 सर्वासु दिक्ष्विति सर्वदिक्कम् | पदार्थौघस्य विकासः स्फुटदर्शनम् ‖ २ ‖
183313
183314 उत्फुल्लहृदयाम्भोजस्फाराकारतया तदा |
183315 लीलापद्माकरा रेजुस्तत्रस्थाः पार्थिवा इव ‖ ३ ‖
183316
183317 लीलापद्माकारा उद्यानतटाकाः | तत्रस्थास्तत्सभास्थाः | पार्थिवग्रहणं
183318 सर्वजनोपलक्षणम् ‖ ३ ‖
183319
183320 जालं मुक्ताकलापानन्तरमाक्रान्तभास्करम् |
183321 ननर्तेव तरद्व्योम विज्ञानश्रवणादिव ‖ ४ ‖
183322
183323 मुक्ताकलापा अनन्तरा अव्यवधानखचिता यस्मिंस्तथाविधं
183324 स्फटिकवातायनजालकं प्रतिबिम्बभावेनाक्रान्तः संक्रान्तो भास्करो
183325 यस्मिंस्तथाविधं सद्दीप्त्यतिशयेन व्योम तरत् प्लवमानमिव सत् ननर्तेव |
183326 वसिष्ठोपदिष्टविज्ञानश्रवणाद्व्योम ब्रह्माकाशं तरदिवेत्यनुभवचमत्कारिणी
183327 उत्प्रेक्षा ‖ ४ ‖
183328
183329 पुस्फुरुः पद्मरागेषु लग्नार्कतरुणत्विषः |
183330 भासो व्योमतलोड्डीना धियो ज्ञानकला इव ‖ ५ ‖
183331
183332 पद्मरागेषु लग्नस्यार्कस्य तरुणत्विषो भासः प्रतिबिम्बकान्तयः | यथा स्वच्छाया
183333 धिय उपदेशज्ञानकलाः स्फुरन्ति तद्वत् ‖ ५ ‖
183334
183335 एवं निर्वृतिमायाते रामे स्वकुलकैरवे |
183336 मुनीन्द्रवदनालोकात्सविकासमिव स्थिते ‖ ६ ‖
183337
183338 मुनीन्द्रवदनस्य आलोकयोगात्कैरवविकासकत्वाच्चानुक्तापि चन्द्रता गम्यते ‖ ६ ‖
183339
183340 रवावौर्वोपमे व्योम महाब्धेर्नाभितां गते |
183341 तेजःपुञ्जलसज्ज्वाले समग्ररसपायिनि ‖ ७ ‖
183342
183343 और्वोपमे वडवाग्निसदृशे | तत्साम्यमेव विशेषणैरुपपाद्यते ‖ ७ ‖
183344
183345 नभोनीलोत्पले नीले गलद्रजसि राजति |
183346 घर्मांशुकर्णिकाकान्ते स्फुरत्किरणकेसरे ‖ ८ ‖
183347
183348 एवं नभसो नीलोत्पलत्वमपि विशेषणैरुपपाद्यते - नभ इत्यादिना |
183349 धर्मांशुः सूर्यस्तल्लक्षणया कर्णिकया कान्ते ‖ ८ ‖
183350
183351 अवतंसे जगल्लक्ष्म्यास्त्रिलोकीकर्णकुण्डले |
183352 अन्तर्लीनस्फुरत्तारारत्नराजिविराजिते ‖ ९ ‖

अवतंसे इत्यन्तमुत्पलोत्प्रेक्षा। त्रिलोकीकर्णकुण्डले इत्युत्प्रेक्षान्तरम्। अन्तर्लीनेति
तदुपपादकम्॥ ९॥

दिग्वधूभिर्बृहच्छृङ्गपाणिभिर्मुकुरेष्विव।
धृतेषु तापभिन्नेषु महाभ्रेषु निरम्बुषु॥ १०॥

दिग्वधूभिर्बृहद्गिरिशृङ्गलक्षणैः पाणिभिर्महाभ्रेषु मुकुरेष्विव धृतेषु
सत्सु तापैरातपैर्भिन्नेषु संभिन्नेषु विभक्तेषु वा॥ १०॥

सूर्यकान्तवरोत्थेन वह्निनेव समेधिते।
द्विगुणं प्रज्वलत्यर्कशून्ये गगनधामनि॥ ११॥

अर्कशून्येऽपि गगनधामनि सूर्यकान्तश्रेष्ठेभ्यः उत्थितेन वह्निना समेधिते
अर्कापेक्षया द्विगुणमिव प्रज्वलति सति॥ ११॥

विनेदुर्मेदुरोद्दाममुखमारुतपूरिताः।
मध्याह्नशङ्खाः कल्पान्तवातपूर्णा इवार्णवाः॥ १२॥

प्रालेयश्रीरिवाब्जेषु घर्मश्रीर्वदनेष्विव।
चकार पदमाकीर्णशुद्धमुक्ताफलोपमा॥ १३॥

घर्मश्रीः स्वेदबिन्दुशोभा जनानां वदनेषु पदं चक्रा॥ १३॥

गृहभित्तिपरावृत्ता सत्त्वसंरम्भमांसला।
शब्दश्रीः पूरयामास कर्णमर्ण इवार्णवम्॥ १४॥

गृहभित्तिष्वभिघातात्प्रतिध्वन्यात्मना परावृत्ता। सत्त्वानां प्राणिनां
कार्यत्वराशब्दसंरम्भैर्मांसला पुष्टा। अर्णो वृष्टिनदीजलमर्णवमिव
कर्णं पूरयामास॥ १४॥

पुरन्ध्रीभिर्निदाघौघशान्तये समुदीरिता।
उल्ललास नवा पाण्डुकर्पूरजलदावलिः॥ १५॥

सकर्पूरजलसेकलक्षणा जलदावलिः॥ १५॥

स राजा सहसामन्तः सभूपः सपरिच्छदः।
सवसिष्ठः समुत्तस्थौ सहरामः स संसदः॥ १६॥

मण्डलदेशाधिपत्यभेदात्सामन्तभूपयोर्भेदः। संसदः सभायाः॥ १६॥

राजानो राजपुत्राश्च मन्त्रिणो मुनयस्तथा।
अन्योन्यं पूजिता जग्मुर्मुदिताः स्वं निवेशनम्॥ १७॥

अन्तःपुरगृहाग्रेषु तालवृन्तानिलाहृतैः।
कर्पूरधूलिभिरभून्नवैवाम्बुदमालिका॥ १८॥

गृहाग्रेषु गृहमुखेषु॥ १८॥

अथ मध्याह्नतूर्याणां रवे स्फूर्जति भित्तिषु।
उवाच वचनं वाक्यकोविदो मुनिनायकः॥ १९॥

स्फूर्जति अभिघातेन वर्धमाने ॥ १९ ॥

सर्वमेव श्रुतं श्राव्यं ज्ञेयं ज्ञातमशेषतः ।
त्वया राघव भो नास्ति ज्ञातव्यमपरं वरम् ॥ २० ॥

यथा मयोपदिष्टोऽसि यथा पश्यसि शास्त्रतः ।
यथानुभवसि श्रेष्ठमेकवाक्यं तथा कुरु ॥ २१ ॥

गुरूपदेशवेदान्तादिशास्त्रस्वानुभवानामविसंवादाय एकार्थनिष्ठतालक्षणा
एकवाक्यता कार्येत्याह - यथेति ॥ २१ ॥

उत्तिष्ठ तावत्कार्याय वयं स्नातुं महामते ।
मध्याह्नसमयोऽस्माकमयमङ्गातिवर्तते ॥ २२ ॥

अपरं यत्त्वया भद्र स्वाकाङ्क्षाविनिवृत्तये ।
प्रष्टव्यं तच्छुभं प्रातः प्रष्टव्यं भवता पुनः ॥ २३ ॥

प्रष्टव्यं प्रश्नार्हमस्ति चेत्तत्प्रातरवश्यं प्रष्टव्यं नोपेक्षितव्यमित्यर्थः ॥
२३ ॥

श्रीवाल्मीकिरुवाच ।

इत्युक्ते मुनिनाथेन राजा दशरथः स्वयम् ।
पूजयामास तान्सभ्यान्सर्वान्साधून्सपर्यया ॥ २४ ॥

सह रामेण धर्मात्मा मुनिविप्रान्नृपांश्च सः ।
वसिष्ठाद्युपदिष्टेन क्रमेण व्योमगांस्तथा ॥ २५ ॥

मणिमुक्तागणार्थेन दिव्येन कुसुमेन च ।
मणिरत्नप्रदानेन मुक्ताहारार्पणेन च ॥ २६ ॥

कांश्चिन्मणिमुक्तागणनिष्क्रियभूतेनार्थेन धनेन । कांश्चित्तु
प्रत्यक्षमणिमुक्ताप्रदानेन ॥ २६ ॥

प्रणयेन प्रणामेन प्रदानेनार्थशालिना ।
वस्त्रासनान्नपानेन कनकेन तथा भुवा ॥ २७ ॥

कन्यादिप्रदानेन ॥ २७ ॥

धूपेन गन्धमाल्याभ्यां यथोदितमनिन्दितः ।
पूर्वान्संपूजयामास सर्वानेव महीपतिः ॥ २८ ॥

अथोत्तस्थौ सभामध्यात्सभया सह मानदः ।
सवसिष्ठादिदेवर्षिः सायमिन्दुरिवाम्बरात् ॥ २९ ॥

सभया सभास्थेन जनेन सह ॥ २९ ॥

ससभोत्थानसमयः ससंरम्भो व्यराजत ।
जानुदघ्नसुरोन्मुक्तपुष्पसंजातकर्दमः ॥ ३० ॥

ससंरम्भः सत्वरः ससभाया उत्थानसमयः सभोत्थानसमयसहितः स
संरम्भ इति वा ॥ ३० ॥

संघट्टाघट्टकेयूररत्नचूर्णारुणावनिः |
छिन्नहारस्फुरन्मुक्ताताराजितनिशाम्बरः || ३१ ||

तमेव वर्णयति - संघट्टेत्यादिना | संघट्टो घर्षणं आघट्टः
परस्परमाघातस्ताभ्यां केयूररत्नचूर्णैः अरुणावनिः | छिन्नहारेभ्यः
स्फुरन्तीभिर्मुक्ताताराभिर्जितं निशाकालप्रसिद्धं सनक्षत्रमम्बरं येन || ३१ ||

देवर्षिमुनिविप्रेन्द्रपार्थिवस्पन्दसंकुलः |
व्यग्रभृत्याङ्गनाहस्तकेशचञ्चलचामरः || ३२ ||

ज्ञानप्रमेयीकरणस्पन्दमानो न दारुणः |
शिरःकरत्रिनयनजिह्वेष्वेव विराजितः || ३३ ||

तर्हि किं सर्वजनानां स्वार्थप्रवृत्तित्वरया दुर्बलपरोपमर्दाद्दारुणो नेत्याह ##-
प्रमेयीकरणार्थमेव स्पन्दमानो नान्यस्वार्थत्वरयेति हेतोर्न दारुणः | किं च
कदाचिदीषदङ्गघट्टनेपि परस्परक्षमापणार्थं शिरःकराः शिरसि
बद्धाञ्जलयो ये पुरतः पार्श्वयोश्चेति त्रिषु भागेषु अवलोकनाय क्षमापणाय च
प्रवृत्तं नयनजिह्वं येषां तथाविधास्तेष्वेव सर्वजनेषु विराजितो न
प्रमत्तनिष्ठुरजनविसंष्ठुल इति न तत्र परपीडादिदोषलेशस्यापि प्रसक्तिरित्यर्थः ||
३३ ||

परस्परमथापृच्छ्य पूजिताः पेशलोक्तयः |
राजानो मुनयश्चैव सर्वे दशरथादयः || ३४ ||

पेशला मृदुमधुरा उक्तयो येषाम् || ३४ ||

स्वाश्रमान्साधवो जग्मुस्तुष्टस्निग्धाशया मिथः |
लोकसप्तकवास्तव्या देवाः शक्रपुरादिव || ३५ ||

मिथः परस्परं गुणस्पृहया तुष्टः स्निग्धः स्नेहयुक्तश्च आशयो येषाम् |
शक्रपुराद्देवा इवायोध्यातो लोकसप्तकवास्तव्या जग्मुः || ३५ ||

अन्योन्यं प्रणयात्सर्वे पूजयित्वा यथाक्रमम् |
तद्विसृष्टाः स्वमागत्य गृहं चक्रुर्दिनक्रियाम् || ३६ ||

दिनक्रियामाह्निकम् || ३६ ||

अथ सर्वे वसिष्ठाद्यास्तथा दशरथादयः |
चक्रुर्दिवसकार्याणि राजानो मुनयस्तथा || ३७ ||

यथाप्राप्तं क्रियां तेषु कृतवत्स्वथ दैवसीम् |
क्रमेणाकाशपथिको भास्करोऽस्तमुपाययौ || ३८ ||

दैवसीं दिवससंबन्धिनीम् || ३८ ||

तयैव कथया तेषां रामस्य च महामतेः |
प्रबोधवशतः शीघ्रं सा व्यतीयाय शर्वरी || ३९ ||

प्रबोधो जागरणं तद्वशतः || ३९ ||

उत्सारिततमःपांसुताराकुसुमनिर्भरम् |

183509 भुवनं भवनीकुर्वन्नाजगाम दिवाकरः ॥ ४० ॥
183510
183511 प्रातर्गृहसंमार्जनेनेव उत्सारितास्तमःपांसवस्ताराकुसुमनिर्भराश्च
183512 यस्मिंस्तथाविधं भुवनं जगद्भवनं गृहमिव परिष्कुर्वन् ॥ ४० ॥
183513
183514 करवीरकुसुम्भाभैः करैररुणयन् दिशः ।
183515 विवेश गगनाम्भोधिमथ बालदिवाकरः ॥ ४१ ॥
183516
183517 राजानो राजपुत्राश्च मन्त्रिणो मुनयस्तथा ।
183518 वसिष्ठाद्याः समाजग्मुः पुनर्दाशरथीं सभाम् ॥ ४२ ॥
183519
183520 यथाक्रमं यथासंस्थं यथादेशं यथासनम् ।
183521 सा विवेश सभा तत्र धिष्ण्यश्रीरम्बरे यथा ॥ ४३ ॥
183522
183523 धिष्ण्यश्रीर्देवधिष्ण्यभूतनक्षत्रशोभा ॥ ४३ ॥
183524
183525 ततो दशरथाद्येषु सुमन्त्रादिषु वाप्यलम् ।
183526 वसिष्ठं संप्रशंसत्सु मुनिमासनसंस्थितम् ॥ ४४ ॥
183527
183528 वसिष्ठं संप्रशंसत्सु स्तुवत्सु ॥ ४४ ॥
183529
183530 वसिष्ठस्य पितुश्चाग्रे राजीवदललोचनः ।
183531 उवाच राघवो धीमान्मृदुवर्णमिदं वचः ॥ ४५ ॥
183532
183533 श्रीराम उवाच ।
183534
183535 भगवन्सर्वधर्मज्ञ सर्वज्ञानमहार्णव ।
183536 सर्वसंदेहपरशो परशोकभयापह ॥ ४६ ॥
183537
183538 परेषां शत्रूणामपि शोकभयापह ॥ ४६ ॥
183539
183540 श्रोतव्यमपरं किं मे विद्यते वेद्यमेव वा ।
183541 श्रोतव्यं विद्यते यद्वा तत्सर्वं वक्तुमर्हसि ॥ ४७ ॥
183542
183543 यदि विद्यते तर्हि तद्वक्तुमर्हसि ॥ ४७ ॥
183544
183545 श्रीवसिष्ठ उवाच ।
183546
183547 राम संप्राप्तबुद्धिस्त्वं श्रोतव्यं ते न विद्यते ।
183548 कृतकृत्या तवैषा धीः प्राप्तप्राप्या स्थितात्मनि ॥ ४८ ॥
183549
183550 त्वमेव तावत्कथय प्रविचार्य धियात्मना ।
183551 कीदृशोऽद्य भवानन्तः किं शेषं श्राव्यमस्ति ते ॥ ४९ ॥
183552
183553 अद्य भवान् स्वानुभवेन कीदृशः । ते शिष्यत इति शेषं श्राव्यमवश्यश्रोतव्यं
183554 किमस्तीति त्वमेव वदेत्यर्थः ॥ ४९ ॥
183555
183556 श्रीराम उवाच ।
183557
183558 ब्रह्मन्नेवमहं मन्ये यथाहं कृतकृत्यधीः ।
183559 निर्वाणोस्मि प्रशान्तोस्मि नाकाङ्क्षा मम विद्यते ॥ ५० ॥
183560

183561 वक्तव्यमुक्तं भवता ज्ञातं ज्ञेयं मयाखिलम् ।
183562 तव विश्रान्तिमायातु कृतकृत्या सरस्वती ॥ ५१ ॥
183563
183564 विश्रान्तिमुपरमम् । सरस्वती वाणी ॥ ५१ ॥
183565
183566 अधिगतमधिगम्यं ज्ञेयमाप्तुं मयेदं विगतमखिलमैक्यं द्वैतमस्तं
183567 प्रयातम् ।
183568 परिगलितमशेषं दृश्यभेदावभानं ननु
183569 निपुणमपास्ताशेषसंसारितास्था ॥ ५२ ॥
183570
183571 अखिलं जगदैक्यं ब्रह्मैकरस्यं विशेषेण गतं विगतम् । द्वैतं
183572 जीवब्रह्मभेदः । यतस्तदुपाधिभूतं दृश्यभेदावभानं परिगलितम् । तदपि
183573 कुतस्तत्राह - नन्विति । यतो मया संसारितास्था निपुणं विचार्य अपास्ता
183574 त्यक्तेत्यर्थः ॥ ५२ ॥
183575
183576 इत्यार्षे वासिष्ठमहारामायणे वा० दे० मो० निर्वा० उ० निर्वाणवर्णनं नाम
183577 त्र्यधिकद्विशततमः सर्गः ॥ २०३ ॥
183578
183579 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
183580 निर्वाणवर्णनं नाम त्र्यधिकद्विशततमः सर्गः ॥ २०३ ॥
183581
183582 चतुरधिकद्विशततमः सर्गः २०४
183583
183584 श्रीवसिष्ठ उवाच ।
183585
183586 भूय एव महाबाहो शृणु मे परमं वचः ।
183587 आदर्शो राजतेऽत्यर्थं पौनःपुन्येन मार्जितः ॥ १ ॥
183588
183589 निष्कृष्टयुक्त्या भूयोऽत्र दृश्यं चिति विमार्ज्यते ।
183590 वसिष्ठेन च रामेण चिदात्मपरिशुद्धये ॥
183591
183592 परमं युक्तिसंक्षेपेण स्फुटं दृश्यमार्जनोपायोपदेशित्वादुत्कृष्टम् ॥ १ ॥
183593
183594 अर्थो वेदनसंकेतः शब्दो जलरवोपमः ।
183595 दृश्यमेतच्चिदाभानं स्वप्नवत्काभवज्जगत् ॥ २ ॥
183596
183597 रूपं नाम चेति हि द्विविधं दृश्यं तत्राद्यमार्जनोपायमाह - अर्थ इति ।
183598 जातिगुणक्रियासंस्थानानि हि चतुर्विधानां शब्दानामर्थः । यथा गौर्नीला चपला
183599 भद्राख्येति । ते चैकस्मिन्नेवार्थे व्यावर्त्यभेदाधीनभेदकल्पनरूपाः
183600 शब्दभेदप्रवृत्तिनिमित्ततया कल्पिता भ्रान्तिवेदनसंकेता एव न वास्तवाः । न हि
183601 तत्र वस्तुचतुष्टयमस्तीत्यर्थमार्जनमित्यर्थः । द्वितीयमार्जनोपायमाह - शब्द
183602 इति । अर्थे मार्जिते निरर्थकः । शब्दो जलध्वनिसदृशः सन्नामतां
183603 त्यजन्नर्थतामेवापन्नस्तन्मार्जनेनैव मार्जित इत्येतद्द्विविधमपि दृश्यं
183604 चिदाभानमात्रं स्वप्नवदिति सिद्धमित्यर्थः ॥ २ ॥
183605
183606 जागद्वै स्वप्नसंदृष्टः स्मरणात्म स्थितं पुरः ।
183607 संविद्वेदनमात्रं सत्तदन्याकारवत्ततम् ॥ ३ ॥
183608
183609 यदा जाग्रदेव मिथ्या तदा सैव स्वप्नसंदृष्टार्थः संस्कारमुखेन संपद्यते
183610 तच्च स्मरणमिव आत्मार्थशून्यरूपं पुरः स्थितमिति संविद्वेदनमात्रमेव
183611 सत्तदन्याकारवत्ततं न तत्रापि संविद्व्यतिरिक्तं किंचिदस्तीत्यर्थः ॥ ३ ॥
183612

183613 यथाच्छं संविदाकाशं मयि स्वप्नपुरात्मकम् ।
183614 सरूपमपि नीरूपं तथेदं भुवनत्रयम् ॥ ४ ॥
183615
183616 तथा चोभयोस्तुल्यतया चिदाकाशमात्रत्वमित्याह - यथेति । मयि प्रत्यक्चिति ॥ ४ ॥
183617
183618 श्रीराम उवाच ।
183619
183620 संपन्नेयं कथं भूमिः संपन्ना गिरयः कथम् ।
183621 कथं संपन्नमम्भश्च संपन्ना उपलाः कथम् ॥ ५ ॥
183622
183623 चिति जाड्यं तत्र भूम्यादिवैचित्र्यं च कथं संपन्नमिति प्रश्नः ॥ ५ ॥
183624
183625 कथंच तेजः संपन्नं संपन्ना च कथं क्रिया ।
183626 कथं च कालः संपन्नः संपन्नः पवनः कथम् ॥ ६ ॥
183627
183628 कथं च शून्यं संपन्नं संपन्नं चिन्नभः कथम् ।
183629 इति ज्ञातं मया भूयो बोधाय वद मे प्रभो ॥ ७ ॥
183630
183631 इत्येतत्सर्वं प्राक् त्वद्वचनांज्ज्ञातमपि पुनरसंभावनाशान्त्या
183632 बोधाभिवृद्धये वद ॥ ७ ॥
183633
183634 श्रीवसिष्ठ उवाच ।
183635
183636 ब्रूहि राघव तत्त्वेन स्वप्नदृष्टमहापुरे ।
183637 संपन्ना भूः कथमिव संपन्नं कथमम्बरम् ॥ ८ ॥
183638
183639 स्वप्नवदेव सर्वं संभावनीयमित्याशयेन प्रतिबन्द्येव स्वयं प्रश्नव्याजेन
183640 वसिष्ठ उत्तरमाह - ब्रूहीत्यादिना ॥ ८ ॥
183641
183642 कथं वारि च संपन्नं संपन्ना उपलाः कथम् ।
183643 कथं च तेजः संपन्नं संपन्नाश्च कथं दिशः ॥ ९ ॥
183644
183645 संपन्नश्च कथं कालः संपन्ना च कथं क्रिया ।
183646 कथमेतन्निमित्तादि [नियत्यादीति पाठः ।] सर्वं संपन्नमुच्यताम् ॥ १०
183647 ।।
183648
183649 केनेदं निर्मितं दग्धमानीतं रचितं चितम् ।
183650 उत्पादितं प्रकटितं किमाचारं किमात्मकम् ॥ ११ ॥
183651
183652 श्रीराम उवाच ।
183653
183654 आत्मास्य केवलं व्योम न सद्भूम्यचलादिकम् ।
183655 जगतः स्वप्नरूपस्य निराकारो निरास्पदः ॥ १२ ॥
183656
183657 दृष्टान्तवदेव दार्ष्टान्तिकेऽपि पृथ्व्यादिसंपत्तिं संभावयन् रामः स्वयमपि
183658 जगतो मिथ्यात्वं प्रपञ्चयति - आत्मास्येत्यादिन । अस्य जगत आत्मा स्वरूपं
183659 केवलं व्योमैव ॥ १२ ॥
183660
183661 आत्मैव व्योमरूपोऽस्य निराधारो निराकृतिः ।
183662 विनाकृतेर्वा व्योम्नोऽस्य किमाधारेण कारणम् ॥ १३ ॥
183663
183664 तर्हि किं शून्यरूपमेव नेत्याह - आत्मैवेति । कारणं प्रयोजनम् ॥ १३ ॥

न किंचिदेतत्संपन्नं सद्यथैतन्न संविदः |
एतच्चित्कचनं नाम मन एव तथा स्थितम् || १४ ||

अभ्युपेत्य पृथ्व्याद्याकारसंपत्तिमिदमुक्तं वस्तुतस्तु तत्संपत्तिरपि नास्त्येवेत्याह
- न किंचिदिति | एतज्जगदाकारं चित्कचनं स्वप्नवन्मन एव तथा स्थितं नान्यत् ||
१४ ||

दिक्कालाद्यत्र चिद्भानं चिद्भानमचलादिकम् |
चिज्जलादि तथा बोधाच्चित्खं वाय्वादि तद्विदह् || १५ ||

मनसश्च चित्स्फुरणमात्रत्वात्तदेव सर्वमित्याह - दिक्कालेत्यादिना | तद्विदः
सर्वतत्त्वविदः || १५ ||

संविदेव किल व्योम तिष्ठति व्योमतामिता |
दृषत्तयास्ते काठिन्याद्द्रवाज्जलमिव स्थिता || १६ ||

वस्तुतस्तु न भूम्यादि किंचित्तन्न च दृश्यता |
चिदाकाशमनन्तं तत्सर्वमेकं तदात्मकम् || १७ ||

द्रव्त्वादम्बु ह्रद्याब्धेर्नानावृत्तितया यथा |
अनानैव भवेन्नाना चिद्व्योमात्मनि वै तथा || १८ ||

ह्रद्यस्य प्रसन्नस्याब्धेरम्बु द्रवत्वादेव यथा
तरङ्गफेनावर्तादिनानावृत्यात्मना अनानैव नाना संभवेत्तथा
चिद्व्योमापीत्यर्थः || १८ ||

काठिन्यवेदनादुर्वी गिरितामागतेव चित् |
शून्यतावेदनाच्छून्यं वेत्ति व्योमेव चिद्वपुः || १९ ||

द्रवत्ववेदनाद्वेत्ति वारि स्पन्दतयानिलम् |
औष्ण्यसंवित्ततो वह्निमत्यजन्ती निजं वपुः || २० ||

चित् आत्मनि द्रवत्ववेदनाद्वारि वेत्ति | एवं स्पन्दतया वेदनादनिलं वेत्ति | निजं
वपुरधिष्ठानचिद्रूपमत्यजन्तीति विवर्तता दर्शिता || २० ||

एवंस्वभाव एवायं चिद्धातुर्गगनात्मकः |
यदेवं नाम कचति निष्कारणगुणक्रमम् || २१ ||

निष्कारणगुणक्रममिति दृष्टसृष्टिसिद्धान्तः प्रकटितः || २१ ||

न चैतद्व्यतिरेकेण किंचिन्नापीह विद्यते |
अन्यच्छून्यत्ववारिभ्यामृते खार्णवयोरिव || २२ ||

यथा अर्णवस्य वारित्वादृते अन्यत्तत्त्वं नास्ति | खस्य च शून्यत्वादृते तथा
एतस्माच्चिदात्मनो व्यतिरेकेण किंचिज्जगतस्तत्त्वं न विद्यते || २२ ||

न तु चिद्गगनादन्यन्न संभवति किंचन |
इदं त्वमहमित्यादि तस्मादाशान्तमास्यताम् || २३ ||

इदं त्वमहमित्यादि जगत् चिद्गगनादन्यन्न तु | यतः किंचन तद्विना न संभवति ||
२३ ||

त्वं यथास्मिन् गृहे कुर्वन्नग्निशैलादिकां विदम् |
तदेव पश्यस्यवपुरेवं चिद्गगनं तथा || २४ ||

कुर्वन् स्वप्नमनोरथादिना रचयन् || २४ ||

चिद्व्योम भाति देहाभं सर्गादौ न तु देहकः |
अकारणत्वादसतश्चिदुदेतीति चिन्त्यताम् || २५ ||

यदा देहको नास्ति तदा अकारणत्वादसतोऽज्ञानाद्देहाकारा चिदुदेति | न तत्त्वत इति
चिन्त्यतां विचार्यतामभिज्ञैरित्यर्थः ||| २५ ||

मनोबुद्धिरहंकारो भूतानि गिरयो दिशः |
शिलाजठरवन्मौनमयं सर्वं यथास्थितम् || २६ ||

मौनमयमनिर्वाच्यमेवेत्यर्थः || २६ ||

एवं न किंचिदुत्पन्नं नष्टं न च न किंचन |
यथास्थितं जगद्रूपं चिद्ब्रह्मात्मनि तिष्ठति || २७ ||

चितौ यत्कचनं नाम स्वरूपप्रविजृम्भणम् |
तदेतज्जगदित्युक्तं द्रव एव यथा जलम् || २८ ||

स्वरूपस्य प्रकर्षेण विजृम्भणं बृंहणम् || २८ ||

इदं जगद्भानमभानमेव चिद्व्योम शून्यं परमार्थ एव |
यथार्थसंदर्शनबुद्धबुद्धेरबुद्धबुद्धेस्तु यथा तथास्तु || २९ ||

यथार्थसंदर्शनेन प्रबुद्धदृष्ट्या इदं जगद्भावेन भानमप्यभानमेव
चिद्व्योमैव परमार्थः | अबुद्धबुद्धेर्मूर्खस्य तु यथा तथास्तु किं
तद्विचारेणेत्यर्थः || २९ ||

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० नि० उ० चिदाकाशैकताप्रतिपादनं
नाम चतुरधिकद्विशततमः सर्गः || २०४ ||

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
चिदाकाशैकताप्रतिपादनं नाम चतुरधिकद्विशततमः सर्गः || २०४ ||

पञ्चाधिकद्विशततमः सर्गः २०५

श्रीराम उवाच |

एवं यथैतद्भगवन्स्वप्ने दृश्यं परं नभः |
तथैव जाग्रतीत्यत्र न चेत्संदेहजालिका || १ ||

विवर्तमात्ररूपेयं स्वप्नतुल्या जगत्स्थितिः |
नोद्भूता न स्थिता नास्ता चिन्मात्रमिति वर्ण्यते ||

एवं जगताः स्वप्नवद्विवर्तमात्रत्वं यथोक्तमभ्युपगम्य कूटस्थाद्वयचिन्मात्रे
विवर्तोऽप्यसंभावित एव हेत्वभावादिति रामः पृच्छति - एवमिति द्वाभ्याम् || १ ||

इदं मे भगवन्ब्रूहि महाप्रश्नमनुत्तमम् |

183769 कथं भवत्यदेहा चिज्जाग्रत्स्वप्ने स्वदेहवत् ॥ २ ॥
183770
183771 श्रीवसिष्ठ उवाच ।
183772
183773 दृश्यं जाग्रत्यथ स्वप्ने खाधारं खात्मकं खजम् ।
183774 खं च नान्यत्परं जातु संदेहोऽस्त्युपपत्तितः ॥ ३ ॥
183775
183776 हेत्वभावाद्धि त्वया विवर्तस्यानुत्पत्तिरनुत्पन्नस्य न स्थितिः स्यादिति शून्यतैव
183777 स्यादित्यापादनीयं तच्चेष्टमेव तस्येति निरुपपत्तिकस्ते प्रश्नहेतुः संदेह इति
183778 भगवानुत्तरमाह - दृश्यमित्यादिना । यतः खजं हेतुशून्यादुत्पन्नमतः
183779 शून्याधारं शून्यात्मकमेव स्यादित्यापादनीयम् । खं शून्यं च परं
183780 ब्रह्मैव नान्यत् । अत उत्पत्त्यादिशून्ये ब्रह्माद्वैताविरोधिनि विवर्ते अनुपपत्तिसंदेहो
183781 नोपपद्यत इत्यर्थः ॥ ३ ॥
183782
183783 समस्तकारणाकारप्रत्यस्तमयरूपिणि ।
183784 सर्गादावेव भूतानि संभवन्ति न कानिचित् ॥ ४ ॥
183785
183786 अनुत्पत्तिमेवोपपादयति - समस्तेत्यादिना ॥ ४ ॥
183787
183788 पृथ्व्यादिनियतस्तेन देहोऽयं नास्ति किंचन ।
183789 भूतान्येव किलैतानि देहस्तानि न सन्त्यलम् ॥ ५ ॥
183790
183791 कथं भवत्यदेहा चिज्जाग्रत्स्वप्ने सदेहवत् इति प्रश्नोऽप्यनुपपन्नः ।
183792 पृथ्व्याद्यभावे चतुर्विधभूतग्रामरूपदेहानामप्यसत्त्वादित्याह -
183793 पृथ्व्यादीति ॥ ५ ॥
183794
183795 तेन स्वप्नवदाभासमिदं पश्यति चिन्नभः ।
183796 स्वरूपमात्रकचनमाकारवदिवाकुलम् ॥ ६ ॥
183797
183798 अतो विवर्तपक्षो निर्दोष इत्याह - तेनेति । आकुलं मायागुणविक्षुब्धम् ॥ ६ ॥
183799
183800 भानमाभानमात्रत्वमिदं यत्तच्चिदात्मना ।
183801 नभसा स्वप्नशब्देन कथ्यते जगदाकृतिः ॥ ७ ॥
183802
183803 यत्तदाभानमात्रत्वं तदेव स्वप्नभानं सैव जगदाकृतिर्नभसा
183804 चिदाकाशरूपेणैव स्वप्नविवर्तजगदादिशब्देन कथ्यते ॥ ७ ॥
183805
183806 यदेतद्वेदनं नाम चिद्व्योम्नो व्योमनिर्मलम् ।
183807 एतदन्तश्चितो रूपं स्वप्नो जगदिति स्थितम् ॥ ८ ॥
183808
183809 तथा च वेदनान्तर्भासमानं जगद्रूपं सौक्ष्म्ये स्वप्न इति स्थौल्ये जगदिति
183810 वेदनमेव तथा स्थितमित्यर्थः ॥ ८ ॥
183811
183812 एतस्मिन्नेव तेनाथ स्वभावकचने तते ।
183813 चिद्रूपेण कृताः संज्ञाः पृथक्पृथ्व्यादिका इमाः ॥ ९ ॥
183814
183815 एवंरूपप्रपञ्चस्य वेदनमात्रत्वे नामप्रपञ्चोपि वेदनस्यैव नामभेद इति
183816 पर्यवस्यतीत्याह - एतस्मिन्नेवेति । तेन रूपभेदकल्पकेन चिद्रूपेण चिदात्मना । अथ
183817 अनन्तरम् ॥ ९ ॥
183818
183819 चिद्भानमेव तत्स्वप्नजगच्छब्दैः प्रकथ्यते ।
183820 भानं चास्याः स्वभावः खं तत्कदाचिन्न शाम्यति ॥ १० ॥

183821
183822 अत एव स्वप्नादिशान्तावपि तत्तत्त्वं भानं कदापि न शाम्यतीत्याह -
183823 चिद्भानमेवेति। स्वभावस्तत्त्वम्॥ १०॥
183824
183825 बह्व्यः सर्गदृशो भिन्ना ब्रह्मैव ब्रह्मखे च ताः।
183826 शून्यतानभसी वातस्तिष्ठन्ति च विशन्ति च॥ ११॥
183827
183828 तत्सद्भावादेव तत्र बहवो विवर्ताः प्रवृत्ता इत्याह - बाह्य इति॥ ११॥
183829
183830 श्रीराम उवाच।
183831
183832 सर्गाणां कोटयः प्रोक्ता भगवन्भवता किल।
183833 काश्चिद्ब्रह्माण्डकोशस्थाः काश्चिदण्डविवर्जिताः॥ १२॥
183834
183835 कौतुकादेतद्ब्रह्माण्डस्वरूपं श्रोतुकामो रामः प्रश्नपीठिकां रचयति -
183836 सर्गाणामित्यादिना। प्रोक्ताः लीलोपाख्यानभुशुण्डाख्यानादौ ता उक्ता एवानुवदति
183837 - काश्चिदित्यादिना। एते श्लोकाः प्राग्व्याख्याताः॥ १२॥
183838
183839 काश्चिन्महीकोशगताः काश्चिदाकाशसंस्थिता।
183840 तेजःकोशगताः काश्चित्काश्चित्पवनकोशगाः॥ १३॥
183841
183842 काश्चिद्व्योमस्थभूपीठा ऊर्ध्वाधस्थविनिश्चयाः।
183843 बुध्नाकाशादूर्ध्वखुरा लम्बमानवनाचलाः॥ १४॥
183844
183845 व्योमस्थगोलकाकारभूपीठाः। ऊर्ध्वाधस्थानां पिपीलिकावद्भूगोलसंलग्नानां
183846 देवासुरादीनां वयमेवोर्ध्वं वयमेवोर्ध्वमिति विविधा निश्चया यत्र। तदेव
183847 स्पष्टमाह - बुध्नाकाशादिति। यतः सर्वेषां दृशा भूमेरधोदेशे प्रजाः
183848 बुध्नाकाशाद्भूमिमूलाकाशादूर्ध्वखुरा ऊर्ध्वपादाः अधःशीर्षाः।
183849 एवमूर्ध्वमूलाधःशाखशिखरत्वाल्लम्बमानानीव वनान्यचलाश्च येषु॥ १४॥
183850
183851 काश्चिद्वातात्मभूतौघाः काश्चिन्नित्यं तमोधराः।
183852 व्योमसंस्थानकाः काश्चित्काश्चित्क्रिमिकुलाकुलाः॥ १५॥
183853
183854 वातात्मानो वायुशरीरा भूतौघाः प्राणिसमूहा यासु तमोधराः सान्धकाराः।
183855 व्योमेव प्राणिदेहसंस्थानं यासु॥ १५॥
183856
183857 काश्चिदाकाशकोशस्थाः काश्चिच्चोपलकोशगाः।
183858 काश्चित्सकुण्डकोशस्थाः काश्चित्खे खगवत्स्थिताः॥ १६॥
183859
183860 सकुण्डाः सभाण्डा ये गृहमण्डपादिकोशास्तत्स्थाः यथा। मण्डपोपाख्याने
183861 दर्शिताः॥ १६॥
183862
183863 तासां मध्ये यथा हीदं ब्रह्माण्डं यादृशं स्थितम्।
183864 अस्माकं भगवंस्तन्मे ब्रूहि तत्त्वविदां वर॥ १७॥
183865
183866 इदमस्माकमाश्रयभूतमिव ब्रह्माण्डं यादृशं स्थितं तन्मे ब्रूहीति
183867 प्रश्नः॥ १७॥
183868
183869 श्रीवसिष्ठ उवाच।
183870
183871 यदपूर्वमदृष्टं वा नानुभूतं न वा श्रुतम्।
183872 तद्वर्ण्यते सुदृष्टान्तैर्गृह्यते च तदूह्यते॥ १८॥

183873
183874 नायं तत्त्वविषयस्तत्त्वज्ञानोपयोगी वा प्रश्नो नापि प्रयोजनवान्
183875 प्रकृतोपयुक्तोऽपूर्वो वा नापि नियतार्थः। मुनिभिर्ज्योतिषसिद्धान्तभेदेषु
183876 भूमिभुवनादिस्थितेरन्यथान्यथावर्णनात्। तच्चोपदर्शितमेव पुरस्तादतो
183877 मायामये स्वप्नोपमेऽस्मिन्नैकतरपक्षपातेन सिद्धान्तकथने किंचित्प्रयोजनं
183878 प्रमाणं वास्तीति मन्यमानो वसिष्ठः शास्त्रान्तरस्य विषयोऽयं ततस्त्वया ज्ञात
183879 एवेति न प्रश्नार्ह इत्येवोक्त्या समाधत्ते - यदिति। अपूर्वं मानान्तराविषयः।
183880 तस्यैव प्रपञ्चो न दृष्टं नानुभूतं न वा श्रुतमिति
183881 प्रत्यक्षानुमानागमार्थत्वपरम्। तदेव गुरुणा सुदृष्टान्तैर्वर्ण्यते शिष्येण च
183882 श्रवणेन गृह्यते मननेनोह्यते नेतरदित्यर्थः॥ १८॥
183883
183884 इदं तु राम ब्रह्माण्डमागमैर्मुनिभिः सुरैः।
183885 शतशो वर्णितं तच्च ज्ञातमेतत्त्वयाऽखिलम्॥ १९॥
183886
183887 शतशः अनेकधा अनेकप्रकारेण च॥ १९॥
183888
183889 यथेदं भवता ज्ञातमागमैर्वर्णितं यथा।
183890 स्थितं तदेतदखिलं किमन्यदिह वर्ण्यते॥ २०॥
183891
183892 त्वज्ज्ञातप्रकारस्यैव त्वां प्रति वर्णनं नापूर्वमिति न युक्तमित्याह - यथेति॥
183893 २०॥
183894
183895 श्रीराम उवाच।
183896
183897 कथमेतद्वद ब्रह्मन्संपन्नं चिन्महानभः।
183898 कियत्प्रमाणमेतद्वा कियत्कालं च वा स्थितम्॥ २१॥
183899
183900 तर्हि ब्रह्म कथं ब्रह्माण्डाकारं संपन्नं कियत्कालं वा एवं स्थास्यति
183901 तद्वदेति रामः पृच्छति - कथमिति॥ २१॥
183902
183903 श्रीवसिष्ठ उवाच।
183904
183905 अनादिनिधनं ब्रह्म नित्यमस्त्येतदव्ययम्।
183906 आदिमध्यान्तता नास्ति नाकाराः परमाम्बरे॥ २२॥
183907
183908 न ब्रह्म कदापि साकारं संपन्नम् नापि तस्य कालिकपरिच्छेदोऽस्ति किंतु
183909 यावदप्रबोधं सुप्त इव स्वात्मानमेव जगदाकारमिव पश्यतीत्याशयेनोत्तरमाह
183910 - अनादीत्यादिना॥ २२॥
183911
183912 ब्रह्माकाशमनाद्यन्तमेतदव्ययमाततम्।
183913 एतन्मयमिदं विश्वं विष्वगाद्यन्तवर्जितम्॥ २३॥
183914
183915 परमस्यास्य चिद्व्योम्नः स्वयं यद्भानमात्मनि।
183916 तदेतद्विश्वमित्युक्तं स्वयं तेनैव तन्मृषा॥ २४॥
183917
183918 तेन स्वयमेव विश्वमिति उक्तं तच्च मृषा॥ २४॥
183919
183920 पुरुषस्य यथा स्वप्नपुरसंदर्शनं तथा।
183921 तत्तस्य भानं पुरवत्तदिदं विश्वमुच्यते॥ २५॥
183922
183923 कठिना नेह गिरयो न द्रवाणि जलानि च।
183924 न शून्यमेतदाकाशं कालोन कलनात्मकः॥ २६॥

चिदेकस्वभावे ब्रह्मणि तद्विरुद्धा गिरिकाठिन्यादिस्वभावाः कथं सत्याः
स्युरित्याह - कठिना इति ॥ २६ ॥

यद्यथा [यद्यथात्मघनं यत्र इत्यपि पाठः ।] चाव्ययं यत्र स्वतः
संचेतितं चिता ।
तत्तथा तत्र चित्तत्त्वे अलं शैलादिवत्स्थितम् ॥ २७ ॥

तथा च चिदेव भ्रान्तिचेतनेन तता तथा स्थितेव न वस्तुत इत्याह - यदिति ॥ २७ ॥

अशिलैव शिला स्वप्ने नभ एवानभो यथा ।
भवेत्तथेह सर्गादि स्वप्ने दृश्यस्थितिश्चितौ ॥ २८ ॥

एवकारो भिन्नक्रमः । अनभ एव यथा नभ इति ॥ २८ ॥

अनाकारैव चिच्छान्ता स्वप्नवद्यत्स्वचेतनम् ।
वेत्ति तज्जगदित्युक्तं तच्चानाकारमेव सत् ॥ २९ ॥

उक्तं शतशो मयेत्यर्थः ॥ २९ ॥

वायोः स्पन्दो यथान्तस्थो वात एव निरन्तरः ।
तथेदं ब्रह्मणि ब्रह्म न चोदेति न शाम्यति ॥ ३० ॥

द्रवत्वमम्भसि यथा शून्यत्वं नभसो यथा ।
यथा वस्तुनि वस्तुत्वं ब्रह्मणीदं जगत्तथा ॥ ३१ ॥

न प्रयातं न वाऽऽयातमकारणमकारणात् ।
न च नास्ति न वास्तीदं भिन्नं ब्रह्मपदे जगत् ॥ ३२ ॥

प्रयातं प्रलयेन तिरोभूतम् । आयातमाविर्भूतम् ॥ ३२ ॥

न चानादि निराभासं निराकारं चिदम्बरम् ।
दृशः कारणमन्यस्याः क्वचिद्भवितुमर्हति ॥ ३३ ॥

ब्रह्म तु कारणत्वादियोग्यं न भवत्येवेत्याह - न चेति । अन्यस्याः सर्गदृशः ॥
३३ ॥

तस्माद्यथावयविनोऽवयवाः स्वात्ममात्रकाः ।
तथानवयवे ब्रह्मव्योम्नि व्योम जगत्स्थितम् ॥ ३४ ॥

स्वात्ममात्रकाः पृथगसन्तः ॥ ३४ ॥

सर्वं शान्तं निरालम्बं ज्ञप्तिमात्रमनामयम् ।
नेह सत्ता न वासत्ता न च नानास्ति किंचन ॥ ३५ ॥

सर्वापलापे नेह नाना इति श्रुतिः प्रमाणमिति भावः ॥ ३५ ॥

संकल्पस्वप्नगरनृत्तवत्सर्वमाततम् ।
स्थितमेव समं शान्तमाकाशमजमव्ययम् ॥ ३६ ॥

तथाविधस्यापि प्रतिभासे दृष्टान्तमाह - संकल्पेति ॥ ३६ ॥

183977 परमचिदम्बरहृदयं चित्त्वाद्यत्कचति कान्तमममलमलम् |
183978 तदिदं जगदिति कलितं तेनैव तदात्मरूपमाकल्पम् || ३७ ||
183979
183980 अमलं स्वच्छं कान्तं स्फुरद्रूपं परमस्य चिदम्बरस्य हृदयं सारभूतं
183981 स्वरूपमेव चित्स्वभावाद्यदाकारं भ्रान्त्या अलं समर्थं कचति तदेव
183982 स्वकल्पितमात्मरूपमाकल्पमाप्रलयं तेनैव जगदिति कलितं बुद्धं
183983 नान्यदित्यर्थः || ३७ ||
183984
183985 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मु० नि० उ० सर्गकारणनिरासो नाम
183986 पञ्चाधिकद्विशततमः सर्गः || २०५ ||
183987
183988 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
183989 सर्गकारणनिरासो नाम पञ्चाधिकद्विशततमः सर्गः || २०५ ||
183990
183991 षडधिकद्विशततमः सर्गह् २०६
183992
183993 श्रीवसिष्ठ उवाच |
183994
183995 यदकारणकं भाति भानं तन्नैव किंचन |
183996 तत्तथा परमार्थेन परमार्थः स्थितोऽनघ || १ ||
183997
183998 ब्रह्मैव सज्जगन्नास्तीत्येतन्निर्णयहेतवः |
183999 कुशद्वीपेश्वरप्रोक्ताः प्रश्ना इह निरूपिताः ||
184000
184001 परमार्थो ब्रह्मैव परमार्थेन स्थितः | अकारणकं यज्जगद्भानं भाति
184002 तत्किंचनापि नैवास्ति इति पूर्वग्रन्थफलितार्थ उत्तरग्रन्थावतारायोपन्यस्तः || १ ||
184003
184004 अत्रेमं केनचित्पृष्टोऽयमहं तं महामते |
184005 सम्यग्बोधस्य पुष्ट्यर्थं  महाप्रश्नं परं शृणु || २ ||
184006
184007 अत्रास्मिन्नर्थे सम्यग्बोधस्य पुष्ट्यर्थमिमं वक्ष्यमाणं महाप्रश्नं
184008 परमन्यं शृणु || २ ||
184009
184010 अस्त्यब्धिभ्यामुभयतो व्याप्तं ख्यातं जगत्त्रये |
184011 कुशद्वीपमिति द्वीपं भूमौ वलयवत्स्थितम् || ३ ||
184012
184013 अब्धिभ्यां सुरोदघृतोदाभ्यामुभयतो वलयवद्व्याप्तम् || ३ ||
184014
184015 तत्रास्तीलावती नाम हैमी पूर्वोत्तरे पुरी |
184016 दीप्तिज्वालामयस्तम्भप्रोतावनिनभस्तला || ४ ||
184017
184018 पूर्वोत्तरयोरन्तराले दिग्भागे | दिङ्नामान्यन्तराले इति बहुव्रीहिः |
184019 दीप्तिलक्षणज्वालावलिस्तम्भैः प्रोते अवनिनभस्तले यत्र || ४ ||
184020
184021 पूर्वे तस्यामभूद्राजा प्रज्ञप्तिरिति विश्रुतः |
184022 अनुरक्तजगद्भूतः शक्रः स्वर्ग [सर्ग इति पाठः |] इवापरः || ५ ||
184023
184024 तस्यां पुरि पूर्वे भागे || ५ ||
184025
184026 केनचित्कारणेनाहं कदाचित्तस्य भूपतेः |
184027 प्राप्तः समीपं नभसः प्रलयार्क इव च्युतः || ६ ||
184028

184029 ज्योतिश्चक्राच्च्युतः प्रलयकालेऽर्क इव ॥ ६ ॥
184030
184031 पुष्पार्घ्याचमनीयैर्मां पूजयित्वोपविश्य सः ।
184032 मध्ये कथायां कस्यांचिदपृच्छत्प्रणयादिदम् ॥ ७ ॥
184033
184034 भगवन्सर्वसंहारे जाते शून्यतते स्थिते ।
184035 अवाच्ये परमे व्योम्नि सर्वकारणसंक्षये ॥ ८ ॥
184036
184037 शून्यतया तते विस्तीर्णे नामप्रवृत्तिनिमित्तजात्यादिरूपचतुष्टयाभावादवाच्ये
184038 सर्वकारणानां बीजादीनां पृथ्व्यादीनां च संक्षये जाते सति ॥ ८ ॥
184039
184040 सर्गारम्भस्य भूयः स्याद्वद किं मूलकारणम् ।
184041 कानि वा सहकारीणि कारणानि कुतः कथम् ॥ ९ ॥
184042
184043 मूलकारणमुपादानम् । सहकारीणि निमित्तकारणानि । तानि यदि सन्ति तर्हि कुत
184044 उपादानादेः कथं केनोपायेन जातानि ॥ ९ ॥
184045
184046 किं जगत्किं च सर्गादि काश्चिन्नित्यं तमोधराः ।
184047 व्योमसंस्थार्णवाः काश्चित्काश्चित्कृमिकुलाकुलाः ॥ १० ॥
184048
184049 उत्पन्नं जगच्च तत्त्वतः किम् । तस्य सर्गादिप्रलयान्ता विकाराश्च किम् । तत्रापि
184050 काश्चिद्भूमयो नित्यं तमोधराः । काश्चिद्ब्रह्मलोकादयो व्योमसंस्थार्णवाः ।
184051 अरश्च ण्यश्चार्णवौ इति श्रुतेः । काश्चिन्नरकादिभूमयः कृमिकुलैराकुला
184052 इत्यादिवैचित्र्यं च किम् ॥ १० ॥
184053
184054 काश्चिदाकाशकोशस्थाः काश्चिच्चोपलकोशगाः ।
184055 किं च वा भूतभूतादि कुतो बुद्ध्यादयः कथम् ॥ ११ ॥
184056
184057 आकाशकोशस्था अन्तरिक्षादिलोकाः । उपलकोशगाः शिलोदरगता
184058 दैत्यदानवादिनगर्यः । भूतानि पृथिव्यादीनि तद्गतचतुर्विधभूतग्रामादि च
184059 तत्त्वतः किम् । तेषामाध्यात्मिका बुद्ध्यादयश्च किं कथं वा ॥ ११ ॥
184060
184061 कः कर्ता कोऽथ वा द्रष्टा काधाराधेयता कथम् ।
184062 न कदाचिन्महानाशो जगतामिति निश्चयः ॥ १२ ॥
184063
184064 एतेषां सर्वेषां कर्ता निर्माता कः । अथ को वा द्रष्टा । यदि तु
184065 कर्मब्रह्मोभयकाण्डात्मकसमस्तवेदशास्त्रार्थाविरोधाय जगतां कदाचिदपि
184066 महानाशः प्रलयो नास्ति किंतु तत्तत्प्राणिकर्मानुसारेण सदैव व्यवहाराः
184067 प्रवर्तन्ते न कदाचिदनीदृशं जगदिति निश्चयः समर्थितस्तर्हि यथा संवेदनं
184068 तथैवानुभूतय इति प्रसिद्धेः संवेदनं देहादिहेतुरित्युच्येत उतान्यत् । तत्राद्ये पक्षे
184069 तत्संवेदनं किमनाशं शाश्वतं किं वा असन्मयं नश्वरमिति । यद्यनाशं
184070 तर्हि कूटस्थमेवेति न देहादिविकारं स्यात् । यदि नश्वरं तर्हि तदुत्पत्तौ कारणं
184071 वाच्यम् तच्च दुर्वचम् विना संवेदनं तस्यासिद्धेरिति विरोधादित्युत्तरश्लोकाभ्यां
184072 सहान्वयः ॥ १२ ॥
184073
184074 समस्तवेदशास्त्रार्थाविरोधाय समर्थितः ।
184075 यथा संवेदनं नाम तथा नामानुभूतयः ॥ १३ ॥
184076
184077 यतस्ततो वेदनं स्यात्किमनाशमसन्मयम् ।
184078 अन्यच्च जम्बूद्वीपादौ देशेऽद्य मुनिनायक ॥ १४ ॥
184079
184080 द्वितीयेऽपि शङ्कते - अन्यच्चेत्यादिना ॥ १४ ॥

184081
184082 मृतानामग्निदग्धानामिह वा देहनाशिनाम् ।
184083 नरकस्वर्गभोगाय विदेहे देहकारणम् ॥ १५ ॥
184084
184085 इह कुशद्वीपादौ वा देहनाशवताम् । विदेहे देहोत्पादकमातापित्रादिशून्यप्रदेशे
184086 देहं प्रति उपादानकारणं सहकारीणि निमित्तकारणानि वा कानि ॥ १५ ॥
184087
184088 किं तस्यात्सहकारीणि कारणान्यथ कानि वा ।
184089 धर्माधर्मावमूर्तौ द्वौ तस्यामूर्तस्य मूर्तता ॥ १६ ॥
184090
184091 ननु धर्माधर्मविव देहाद्याकारेण परिणंस्येते तत्राह - धर्माधर्माविति ।
184092 तस्य अमूर्तस्य द्रव्यस्य मूर्तता असमञ्जसेत्यपकृष्य संबन्धः ॥ १६ ॥
184093
184094 निर्द्रव्यं कुरुते द्रव्यैर्युक्तिरित्यसमञ्जसा ।
184095 मातापित्राद्यभावो हि बीजं किं तत्र कारणम् ॥ १७ ॥
184096
184097 किं च निर्द्रव्यं अद्रव्यं द्रव्यभिन्नं तदुभयं द्रव्यैः
184098 पार्थिवादिभागैर्देहादिनिर्माणं कुरुते इति युक्तिरप्यसमञ्जसा ।
184099 निर्बीजत्वादप्यसमञ्जसमित्याह - मातापित्रादीति ॥ १७ ॥
184100
184101 अन्ये वा हेतवः के स्युः कथं द्रव्यादिसंभवः ।
184102 परलोकोऽस्य नास्तीति यथासंवेदनं स्थितेः ॥ १८ ॥
184103
184104 तर्ह्यस्तु नास्तिकपक्षस्तत्राह - परलोक इति । अस्य धर्माधर्मादिकर्तुः परलोको
184105 नास्तीति च असमञ्जसम् । अस्यैव जन्मनः पूर्वजन्मापेक्षया परलोकत्वात् । अस्य च
184106 यथासंवेदनं स्थितेः ॥ १८ ॥
184107
184108 समस्तलोकवेदादिविरोधाच्चासमञ्जसम् ।
184109 अनिच्छितेहितैर्दूरदेशान्तरगतैः फलम् ॥ १९ ॥
184110
184111 समस्तलोकवेदादिविरोधप्रसङ्गाच्च नास्तिकपक्षो न ग्राह्य इत्याह - समस्तेति ।
184112 किंचेयं प्रजा स्वेच्छाचेष्टाद्यविषयैरपि देशान्तरगतैरत
184113 एवासंबन्धैरमूर्तैरपि राजाज्ञादिभिर्वधवन्धदण्डादिफलं प्राप्नोति तत्र च
184114 कः क्रमः का उपपत्तिः ॥ १९ ॥
184115
184116 प्रजा प्राप्नोत्यसंबन्धैरमूर्तैरत्र कः क्रमः ।
184117 स्तम्भो वरेण सौवर्णो विना हेमगमागमैः ॥ २० ॥
184118
184119 क्षणात्संपद्यते तत्र संपत्तिः कथमुच्यताम् ।
184120 विधीनां प्रतिषेधानां निर्निमित्तं विवल्गताम् ॥ २१ ॥
184121
184122 किं च शिलादिमयः स्तम्भो देवमुन्यादिवरेण हेम्नः अर्जनार्थं
184123 गमनागमनैर्विनापि यत्र सौवर्णः स्तम्भः क्षणात्संपद्यते तत्रापि सा संपत्तिः
184124 कथं कया उपपत्त्या । निर्निमित्तं अचेतनत्वात्प्रयोजनसिद्धिरूपं निमित्तं विनैव
184125 प्रवल्गतां प्रवर्तमानानांन् विधिप्रतिषेधशास्त्राणां लोके प्रचारेण
184126 निरूढानां कैरप्यननुष्ठानादरूढानामपि किं प्रयोजनम् ॥ २१ ॥
184127
184128 रूढानामप्यरूढानां किं प्रयोजनमुच्यताम् ।
184129 असदासीज्जगत्पूर्वं सत्संपन्नमनन्तरम् ॥ २२ ॥
184130
184131 तथा असद्वा इदमग्र आसीत्ततो वै सदजायत असदेवेदमग्र आसीत् सदेव सोम्येदमग्र
184132 आसीदेकमेवाद्वितीयम् नासदासीन्नो सदासीत्तदानीम् इत्यादिश्रुतेः कथं परस्परं

184133 संगतार्थता ॥ २२ ॥
184134
184135 इति श्रुतेः कथं ब्रह्मन्कथ्यतां संगतार्थता ।
184136 अयं भवेत्कथं ब्रह्मा भवेच्चेत्तन्महामुने ॥ २३ ॥
184137
184138 किं च सर्गादौ शून्यान्नभसः सकाशादयं ब्रह्मा हिरण्यगर्भः कथं भवेत् ।
184139 यदि नभस एवंप्रभावता अस्तीत्युच्येत
184140 तर्ह्येवंप्रभावात्सर्वस्मात्सर्वप्रदेशभिन्नात्सर्वत्र ब्रह्मा कुतोऽन्यो न जायते ॥ २३
184141 ॥
184142
184143 एवंप्रभावान्नभसः किं सर्वस्मान्न जायते ।
184144 ओषधीनामथार्थानां सर्वेषां वा स्थितिं गताः ॥ २४ ॥
184145
184146 औषधीनां स्वस्वपूर्वबीजादिजननस्वभावा अथान्येषां
184147 वह्न्यादीनामैष्ण्यादिस्वभावाश्च कथं तत्कथय ॥ २४ ॥
184148
184149 कथं स्वभावाः कथय यथाबोधं मुनीश्वर ।
184150 एकस्य जीवितं पुंसः सुहृदा मरणं द्विषा ॥ २५ ॥
184151
184152 किंचैकस्यैव पुंसः सुहृदा द्विषा च युगपज्जीवितं मरणं च प्रयागादौ
184153 कामप्रदे क्षेत्रे मृत्वा यदा अर्थितमर्थयित्वा मृतम् । मरणकाले तदुत्तरकालं
184154 च कामवासनानुवृत्तेर्मुखं व्यादाय स्वपितीतिवदौत्तरकालिकांशापेक्षया
184155 कथंचिन्मरणस्य पूर्वभावं प्रकल्प्य क्त्वाप्रयोगः । तत्कथं संपद्यते ॥ २५ ॥
184156
184157 मृत्वार्थितं प्रयागादौ क्षेत्रे तत्कथमुच्यताम् ।
184158 खे स्यामक्षयपूर्णेन्दुरिति ध्यायिचितैः फलैः ॥ २६ ॥
184159
184160 किं च अहं खे नभसि पूर्णेन्दुः स्यामिति कामनया
184161 चन्द्रभावप्रापकोपासनविध्यनुसारेण
184162 ध्यायिभिर्बहुभिरुपासकैश्चितैरवश्यभावित्वेन
184163 संचितैस्तुल्यकालमनुप्राप्तैश्चन्द्रभावफलैर्नभो युगपत्सहस्रेन्दु
184164 अनेकचन्द्रसहितं किं न जायते ॥ २६ ॥
184165
184166 तुल्यकालमनुप्राप्तैः सहस्रेन्दु न किं नभः ।
184167 अन्यच्च ध्यायिनां लक्षैर्ध्यातैका स्त्री यथाक्रमम् ॥ २७ ॥
184168
184169 जायात्वेन समं कालं लब्धं ध्यानफलं च तैः ।
184170 साध्व्यसाध्वी गृहे भर्तुः संस्थिता तपसा परा ॥ २८ ॥
184171
184172 तेषां सर्वेषां च जाया कथं संपन्ना । सा च तेषां भिन्नदेशे गृहे एका कथं
184173 स्थिता । सा च स्वतपसा परा ब्रह्मचारिणी तेषां प्रत्येकं तपसा साध्वी
184174 बहुभोग्यत्वादसाध्वी च कथं संपन्ना ॥ २८ ॥
184175
184176 तेषां च जाया संपन्ना कथमेतन्महामुने ।
184177 गृहानिर्गच्छमाकल्पं नृपः स द्वीपसप्तके ॥ २९ ॥
184178
184179 अहं गृहादनिर्गच्छं निर्गमनं विनैव आकल्पं द्वीपसप्तके नृपः सन् गृहे
184180 तिष्ठेयमिति च विरुद्धम् । यत्र वराच्छापाद्वा संपादितं तत्र गृहान्तर्भोग्यं
184181 वरस्य वरत्वं क्व तिष्ठति । कथमुपपद्यत इत्यर्थः ॥ २९ ॥
184182
184183 वरत्वं वरशापाभ्यामिति अन्तः क्व तिष्ठति ।
184184 दानधर्मादितपसामौर्ध्वदेहिककर्मणाम् ॥ ३० ॥

किं च दानधर्मादितपसामौर्ध्वदेहिकश्राद्धादिकर्मणां चादृष्टं
क्रियोत्पत्तिप्रदेशे यद्युत्पद्यते तर्हि इहस्थानां परलोके तच्छून्यदेशे कथं फलम्
। किंचादृष्टं मूर्तदेहादौ प्रीतिजननेन सत्फलं वाच्यम् । न च तत्रत्ये मूर्ते देहे
तत्सत्त्वमस्तीत्यर्थः ॥ ३० ॥

इहस्थानाममूर्तानां मूर्तं प्रीत्यास्ति सत्फलम् ।
व्यवहर्ता न मूर्तोऽत्र विद्यते लोकयोर्द्वयोः ॥ ३१ ॥

यदि ब्रूया व्यवहर्ता जीवस्तत्समवेतं तददृष्टं यत्र तस्य भोगस्तत्रास्तीति । तन्न ।
यतो द्वोरपि इहलोकपरलोकयोर्व्यवहर्ता जीवो मूर्तो न विद्यते । न चात्रत्या देहादिमूर्ता
देशान्तरे कालान्तरे च विद्यन्ते । यदाश्रयेणास्य भृशं फलं संभवतीत्यर्थः
॥ ३१ ॥

देशान्तरे भृशं जीवो भृशं कालान्तरेऽपि वा ।
फलं संभवतीयत्तद्विनानुभवनं मुने ॥ ३२ ॥

असमञ्जसमेवाति कथं स्यात्सुसमञ्जसम् ।
इत्यादिसंशयगणं गिरा शीतावदातया ।
छिन्धि मेऽभ्युदितं भासा सान्ध्यमान्ध्यमिवोडुपह् ॥ ३३ ॥

इत्याद्यसमञ्जसं सर्वं कथं समञ्जसं स्यात् । इत्यादिसंशयगणं
शीतावदातया गिरा उडुपश्चन्द्रः संध्यायां भवं सांध्यमान्ध्यं तव इव
छिन्धि ॥ ३३ ॥

परमवस्तुनि संशयनाशनादुभयलोकहितं भवति स्फुटम् ।
तदिह मे कुरु साधुसमागमस्तनुफलो भवतीह न कस्यचित् ॥ ३४ ॥

हे भगवन् परमवस्तुनि परमात्मनि विषये उपदेशेन
सर्वसंशयनाशनादुभयलोकहितं विरुद्धसहस्रफलमप्यविरुद्धं स्फुटं
भवति । अतस्तत्परमवस्तुबोधनं मे कुरु । ननु महाफलमिदं कथं सहसैव
मया कार्यं तत्राह - साध्विति ।
भवत्सदृशमहत्समागमस्तनुफलस्तुच्छफलः कस्यचिन्मादृशस्यापि न
भवतीत्यर्थः ॥ ३४ ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० नि० उ० महाप्रश्नो नाम
षडधिकद्विशततमः सर्गः ॥ २०६ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
महाप्रश्नो नाम षडधिकद्विशततमः सर्गः ॥ २०६ ॥

सप्ताधिकद्विशततमः सर्गः २०७

श्रीवसिष्ठ उवाच ।

शृणु राजन्यथा स्पष्टमेतत्ते कथयाम्यहम् ।
येन ते सर्वसंदेहा यास्यन्त्यलममूलताम् ॥ १ ॥

क्रमव्युत्क्रमतः प्रश्नाः केचिदत्र समाहिताः ।
समाधास्यत्यथान्यांश्च सर्गैस्त्रिभिरुदारधीः ॥

तत्रैकविज्ञानेनैव सर्वविज्ञानात्सर्वसंशयानां मूलोच्छेदेन

184237 परिहारात्सामान्यतः सर्वप्रश्नसमाधानं करिष्यामीति प्रतिजानीते - शृण्विति।
184238 स्पष्टं करतलामलकवत्स्फुटमेतदात्मतत्त्वं कथयामि॥ १॥
184239
184240 सर्वे तावज्जगद्भावा असद्रूपाः सदैव हि।
184241 सद्रूपाश्च सदैवेमे यथासंवेदनं स्थिताः॥ २॥
184242
184243 तत्रादौ स्वतःप्रमाणस्वसंवेदनानुसारिणामर्थतत्त्वव्यवस्थायां कोऽपि क्वापि
184244 संशयोऽनुपपन्न इत्याह - सर्वे इति। यत्र यदस्तीति प्रत्ययो यत्र च नास्तीति
184245 तत्रोभयत्रापि संविदैव भगवत्या तदुभयरूपसमर्थनादिति भावः॥ २॥
184246
184247 इदमित्थमिति प्रोता यत्र संवित्तदेव तत्।
184248 भवत्यवश्यं तत्त्वङ्ग सदेवास्त्वसदेव वा॥ ३॥
184249
184250 यत्र विषये इदं वस्तु नीलं पीतं घटः पटः अस्ति नास्तीति वा इत्थमेवेति अवधारणेन
184251 संवित्तिः प्रोता व्याप्ता हे अङ्ग तस्य विषयस्य तद्रूपमवश्यं भवत्येव तत्तु सद्वा
184252 असदेव वास्तु न तत्राग्रह इत्यर्थः॥ ३॥
184253
184254 ईदृक्स्वभावा संवित्तिस्तया देहो विभाव्यते।
184255 एक एव स्वरूपेण तस्यास्ते न च तद्विदा॥ ४॥
184256
184257 तत्कुत इति चेत्संवित्तेर्यथाप्रतिभासमर्थसाधकस्वभावादित्याह - ईदृगिति। तथा
184258 च नरकस्वर्गभोगाय विदेहे देहकारणं किं तत्स्यादिति प्रश्नः समाहित इत्याह ##-
184259 तेन देहेन तस्याः संविदो विदा अभिव्यक्तिश्च विभाव्यते देहस्यात्मता संविदो
184260 देहधर्मता चेति वैपरीत्यमध्यस्यत इति यावत्॥ ४॥
184261
184262 विदमेव विदुर्देहं स्वप्नादावितरेतरा।
184263 संवित्काचित्संभवति न चान्यास्ति शरीरता॥ ५॥
184264
184265 अत एव हि जनाः स्वप्नजाग्रतोर्देहं वेत्तीति वित् तथाविधं चेतयितारमेव
184266 विदुरनुभवन्ति। इतरा संवित्तु इतरा चेतयितुर्धर्मो न स्वयं चेतयित्रीति विदुः। अतः
184267 काचिद्भ्रान्तिरूपा संविदेव शरीरता संभवति तदन्या शरीरता नास्तीत्यर्थः॥ ५॥
184268
184269 आश्रितस्वप्नसंदर्शस्तथेदं भासते जगत्।
184270 समस्तकारणाभावात्सर्गादावन्यतात्र का॥ ६॥
184271
184272 आद्यप्रश्नत्रयमप्यनयैव दिशा समाधेयं जगतोऽपि संवेदनबलादेव
184273 सिद्धेरित्याशयेनाह - आश्रितेति। सर्गादौ जगदपि
184274 समस्तकारणाभावादवश्याश्रयणीयः स्वप्नं संपश्यतीति स्वप्नसंदर्शः
184275 संविदात्मैवेत्थं भासते। अत्र जगति अन्यता स्वप्नवैधर्म्यरूपा का। न काचिदपि।
184276 अथवा अस्ति भातीति प्रत्यगात्मस्वभावेनैव जगदनुभवात्तदन्यता का। न
184277 काचिदपीत्यर्थः॥ ६॥
184278
184279 एवं यदेव विमलं वेदनं ब्रह्मसंज्ञितम्।
184280 तदेवेदं जगद्भाति तत्केव जगतोऽन्यता॥ ७॥
184281
184282 तदेवाह - एवमिति॥ ७॥
184283
184284 एवं पूर्वापरं शुद्धमविकार्यजगत्स्थितेः।
184285 लोकवेदमहाशास्त्रैरनुभूतमुदाहृतम्॥ ८॥
184286
184287 एवमविकार्यस्य ब्रह्मण एव जगद्रूपेण स्थितेर्विद्वल्लोकैर्वेदैरध्यात्मशास्त्रैश्च
184288 प्रमाणैरेवमेवास्माभिरनुभूतं तदेवोदाहृतं नान्यदित्यर्थः॥ ८॥

अपलाप्यैव ये मूढा अन्धकूपकमेकवत् |
समस्तभूतसंवित्तौ रूढपूर्णं महात्मभिः || ९ ||

समस्तानां भूतानां प्राणिनां संवित्तौ रूढं दृढानुभवसिद्धं
सत्तात्मना सर्वत्र पूर्णं च महात्मभिरुक्तं जगतो
नित्यसंविन्मात्रत्वमपलाप्यैव ये मूढा
आपातवर्तमाननामरूपमात्रानुभवनमात्रप्रमाणकाः सन्तः संविन्न नित्यास्ति
किंतु शरीरमेव कारणं यस्यास्तथाविधा जडोपादानिका जडात्मनो गुण इति
मोहमुपागतास्ते अज्ञा नैयायिकचार्वाकादय उन्मत्ता एवेति त्रयाणामन्वयः || ९ ||

वर्तमानानुभवनमात्रमोहप्रमाणकाः |
शरीरकारणा संविदिति मोहमुपागताः || १० ||

उन्मत्ता एव तेऽज्ञास्ते योग्या नास्मत्कथासु ते |
अक्षीबक्षीबयोर्मूढबुद्धयोः कैव संकथा || ११ ||

कुतो न योग्यास्तत्राह - अक्षीबेति || १ ||

यया विपश्चित्कथया सर्वसंशयसंक्षयः |
न भवेत्त्रिषु लोकेषु ज्ञेया मूर्खकथैव सा || १२ ||

यस्तु मूढा आस्था बुद्धिर्यस्य तथाविधश्चार्वाकः असौ प्रपञ्चः
प्रत्यक्षमात्रं निष्ठा प्रमाणं यस्य तथाविधो नाप्रत्यक्षप्रमाणमस्तीति
श्रुत्यादिसिद्धं न ग्राह्यमिति वक्ति स तेन निर्युक्तिनोक्तेन सर्वविरुद्धेन
अभिज्ञजनकर्णकठोरत्वाच्छिलासदृशवृत्तिना स्वोक्तेनैव निमित्तेन
सर्वैर्विद्वद्भिरज्ञः कूपान्धदर्दुर इति प्रोक्तः | यतोऽसौ पूर्वापरविचारधियं
त्यक्त्वा वर्तमानमात्रगोचरे प्रत्यक्षे स्वमत्या पशुवत्स्थित इति द्वयोरन्वयः || १२ ||

प्रत्यक्षमात्रनिष्ठोऽसौ मूढास्य इति वक्ति यत् |
तेन निर्युक्तिनोक्तेन शिलासदृशवृत्तिना || १३ ||

प्रोक्तः सर्वविरुद्धेन सोऽज्ञः कूपान्धदर्दुरः |
पूर्वापरधियं त्यक्त्वा वर्तमाने मतिस्थितः || १४ ||

वेदा लोकादयश्चैते पृष्टाः स्वानुभवान्विताम् |
वदन्तीमां दृशं सर्वे यथा नश्यन्ति संशयाः || १५ ||

न च चार्वाकाद्युक्त्या संशया नश्यन्ति अनुमानादिप्रमाणानभ्युपगमेन
तदुक्तेर्निर्युक्तित्वात् | वेदादयस्तु गुरुमुखेन पृष्टाः सर्वसंशयोच्छेदेन
पुरुषार्थसिद्धिक्षमाः | यतस्ते स्वानुभवान्वितां इमां मदुक्तां दृशं
वदन्तीत्याह - वेदा इति | लोकास्तत्त्वज्ञजनाः || १५ ||

संविदेव शरीरं चेच्छवं कस्मान्न चेतति |
इति यस्य मतिस्तस्मै मूढायेदमिहोच्यते || १६ ||

यदि प्रत्यगात्मसंविदेव देहादि जगत्तर्हि शवं मृतशरीरमपि संवित्त्वात्कुतो न
चेततीति मतिः शङ्का यस्य तस्मै मूढाय शुश्रूषवे इदमुच्यते शृणु || १६ ||

ब्रह्मणो ब्रह्मरूपस्य संकल्पनगरं ततम् |
इदं तावज्जगद्भानं तव स्वप्नपुरं यथा || १७ ||

ब्रह्मरूपस्य हिरण्यगर्भविषस्य ब्रह्मण इदं जगद्रूपं भानं
संकल्पनगरं ततं विस्तृतम् ॥ १७ ॥

तत्समस्तं सदैवेदं चिन्मात्रात्म निरन्तरम् ।
भव्यत्र न ते भ्रान्तिः स्वे स्वप्ननगरे यथा ॥ १८ ॥

तद्वस्तुतो निरन्तरं चिन्मात्रात्मैव तथापि अत्र ते स्वे स्वप्ननगरे चेतनभ्रान्तिर्यथा न
तथा शवादिजडेऽपि नेति बोध्यमित्यर्थः ॥ १८ ॥

तत्र तावद्दिशः शैलाः पृथ्व्यादि नगरादि च ।
सर्वं चिन्मयमाकाशमिति ते स्वानुभूतिमत् ॥ १९ ॥

तत्र स्वस्वप्ने स्वानुभूतिमत् विचारे स्वानुभवसिद्धम् ॥ १९ ॥

संविद्व्योम घनं ब्रह्म तत्संकल्पपुरं विराट् ।
शुद्धसंविन्मयो ब्रह्मा तदिदं जगदुच्यते ॥ २० ॥

तद्वज्जगत्यपि चिन्मयत्वं संभावनीयमित्याह - संविदिति । ब्रह्मा
हिरण्यगर्भः । विराट् ब्रह्माण्डशरीरम् । तत्तादृशमेवेदं
जगच्छुद्धसंविन्मयमित्यर्थः ॥ २० ॥

ब्राह्मे संकल्पनगरे यद्यत्संकल्पितं यथा ।
तथानुभूयते तत्तत्त्वत्संकल्पपुरे यथा ॥ २१ ॥

संकल्पनगरे यद्यद्यथा संकल्प्यते तथा ।
तत्तथास्त्येव च तदा त्वत्संकल्पपुरे यथा ॥ २२ ॥

तस्माद्देहस्य नियतौ यथेतौ ब्रह्मणा चिता ।
स्पन्दास्पन्दौ कल्पितौ द्वौ स तथैवानुभूतवान् ॥ २३ ॥

देहस्य जीवत एव स्पन्दो मृतस्य त्वस्पन्द इति नियतौ स्पन्दास्पन्दौ ब्रह्मणा
हिरण्यगर्भरूपया चिता यथा कल्पितौ तथैव सत्त्वमनुभूतवान्न वैपरीत्येनेति शवे
न चेतनताव्यञ्जकस्पन्दप्रसक्तिरित्यर्थः ॥ २३ ॥

महाप्रलयपर्यन्ते पुनः सर्गः प्रवर्तते ।
समस्तकारणाभावाद्द्रव्यं तावन्न विद्यते ॥ २४ ॥

निर्द्रव्यं कुरुते द्रव्यैर्युक्तिरित्यसमञ्जसा इति प्रश्नं समाधातुं तदाशयं
परिष्करोति - महाप्रलयेति सार्धेन ॥ २४ ॥

विमुक्तत्वात्प्रजेशस्य न च संभवति स्मृतिः ।
ब्रह्मैवेयमतो दीप्तिर्जगदित्येव भासते ॥ २५ ॥

ननु पूर्वप्रजापतिनिर्मितं द्रव्यमत्रोपयोक्ष्यते तत्राह - विमुक्तत्वादिति ।
पूर्वप्रलयात्पूर्वमेव पूर्वप्रजेशस्य विमुक्तत्वात्तत्कृतजगतो निःशेषं
प्रलयादित्यर्थः । अतस्तत्प्रकारस्मृत्यादिनिमित्तकारणान्यपि न सन्तीति त्वदाशय इति
भावः । अयं च त्वदाशयोऽस्मत्सिद्धान्तसिद्धावनुकूल एवेति समाधत्ते -
ब्रह्मैवेति । दीप्तिः स्वयंज्योतिर्ब्रह्मैव जगदिति भासते न द्रव्यरूपं
जगदन्यदस्तीत्यर्थः ॥ २५ ॥

तस्मादाद्यात्मना भातं स्वमेव ब्रह्मणा स्वतः ।
जगत्संकल्पनगरमिति बुद्धं च खेन खम् ॥ २६ ॥

184393
184394 तदेव स्पष्टयन्नुपसंहरति - तस्मादिति। ब्रह्मणा प्रथमं आद्यो
184395 हिरण्यगर्भस्तदात्मना भातम्। भावे क्तः। ततस्तेन स्वयमेव संकल्पनगरं
184396 जगद्बुद्धं च॥ २६॥
184397
184398 यथा संकल्पनगरं चिन्मात्रं भाति केवलम्।
184399 तथैवाकारणं भाति चिन्मात्रोन्मेषणं जगत्॥ २७॥
184400
184401 शरीरमस्तु वा मास्तु यत्र यत्रास्ति चिन्नभः।
184402 वेत्त्यात्मानं तत्र तत्र द्वैताद्वैतमयं जगत्॥ २८॥
184403
184404 एतेन मातापित्राद्यभावेऽपि इति प्रश्नोऽपि समाहित इत्याह - शरीरमिति॥ २८॥
184405
184406 तस्माद्यथा स्वप्नपुरं यथा संकल्पपत्तनम्।
184407 तथा पश्यति चिद्व्योम मरणानन्तरं जगत्॥ २९॥
184408
184409 मरणानन्तरं जगद्दर्शनेऽप्ययमेव न्यायो बोध्य इत्याह - तस्मादिति॥ २९॥
184410
184411 अपृथ्व्यादिमयं भाति पृथ्व्यादिमयवज्जगत्।
184412 यथेदमाऽऽप्रथमतो मृतस्याप्यखिलं तथा॥ ३०॥
184413
184414 आप्रथमतः आदिसर्गे॥ ३०॥
184415
184416 देशकालौ न सर्गेण प्रबुद्धस्येव तौ यथा।
184417 अणुमात्रमपि व्याप्तौ तथैव परलोकिनः॥ ३१॥
184418
184419 यथा प्रबुद्धस्य तत्त्वविदः स्वप्नात्प्रबुद्धस्य वा स्वाप्नदेशकालौ जाग्रत्सर्गेण
184420 अणुमात्रमपि न व्याप्तौ तथा परलोकप्राप्तस्यापि नैहिकदेशकालौ तत्र व्याप्नुत
184421 इत्यर्थः॥ ३१॥
184422
184423 इदं प्रबुद्धविषये स्वानुभूतमपि स्फुटम्।
184424 जगन्न विद्यते किंचित्कारणं गगने यथा॥ ३२॥
184425
184426 एवं तत्त्वविद्विषये जगदपि न व्याप्नोतीत्याह - इदमिति॥ ३२॥
184427
184428 अप्रबुद्धस्यासदेव यथेदं भाति भासुरम्।
184429 तथैव सर्गवद्भाति व्योमैव परलोकिनः॥ ३३॥
184430
184431 अप्रबुद्धस्य निद्राणस्य। व्योम चिद्व्योमैव॥ ३३॥
184432
184433 द्युधराद्रियमाद्याढ्यं खमेव परलोकिनः।
184434 अभूतपूर्वमाभाति भूतपूर्ववदाततम्॥ ३४॥
184435
184436 भूतपूर्ववत्पूर्वसिद्धवत्॥ ३४॥
184437
184438 मृतोऽयं पुनरुत्पन्नो यमलोके शुभाशुभम्।
184439 भुञ्जेऽहमित्यतिघनं मृतो भ्रान्तिं प्रपश्यति॥ ३५॥
184440
184441 अयमहं मृतः पुनर्नारकिभावेनोत्पन्नो यमलोके आगतस्तत्र शुभाशुभं
184442 भुञ्जे इत्यादिभ्रान्तिम्॥ ३५॥
184443
184444 मोक्षोपायानादरिणामेष मोहो न शाम्यति।

184445 बोधादवासनत्वेन मोह एष प्रशाम्यति ॥ ३६ ॥
184446
184447 सा भ्रान्तिर्निःशेषं मोक्षोपायसेवनादेव नश्यति नान्यथेत्याह - मोक्षेति ॥ ३६ ॥
184448
184449 अप्रबुद्धस्य या संवित्सा धर्माधर्मवासना ।
184450 ख एव खात्मिका भाति यत्तदेव जगत्स्थितम् ॥ ३७ ॥
184451
184452 एतेन धर्माधर्मविव जगदाकारेण परिणमेते इत्यास्तिकपक्षोऽप्यनुगृहीत
184453 इत्याशयेनाह - अप्रबुद्धस्येति । संविद्विहितनिषिद्धाचरणानुभवरूपा ॥ ३७ ॥
184454
184455 न शून्यरूपं न च सत्स्वरूपं ब्रह्माभिधं भाति जगत्स्वरूपम् ।
184456 तच्चापरिज्ञानवशादनर्थभूतं परिज्ञातवतः शिवात्म ॥ ३८ ॥
184457
184458 जगत्स्वरूपं स्वतः शून्यरूपमपि न सत्स्वरूपं च न किंतु ब्रह्माभिधं
184459 चैतन्यमेव जगत्स्वरूपं भाति । तच्च अज्ञानवशादेवानर्थभूतं परिज्ञातवतस्तु
184460 शिवात्म परमकल्याणनिरतिशयानन्दात्मकमेवेत्यर्थः ॥ ३८ ॥
184461
184462 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० नि० उ० महाप्रश्नोत्तरं नाम
184463 सप्ताधिकद्विशततमः सर्गः ॥ २०७ ॥
184464
184465 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
184466 महाप्रश्नोत्तरं नाम सप्ताधिकद्विशततमः सर्गः ॥ २०७ ॥
184467
184468 अष्टाधिकद्विशततमः सर्गः २०८
184469
184470 श्रीवसिष्ठ उवाच ।
184471
184472 शुभाशुभं यथोदेति प्रजानां गृहसंगमे ।
184473 असंबद्धैरप्रतिघैर्दूरस्थैस्तदिदं शृणु ॥ १ ॥
184474
184475 दूरदेशगतैर्यत्नैरन्यत्रापि प्रजाफलम् ।
184476 यथा प्राप्नोति तादृक्षा धातुरिच्छात्र वर्ण्यते ॥
184477
184478 अनिच्छतेहितैर्दूरदेशन्तरगतैः फलम् । प्रजा प्राप्नोत्यसंबद्धैरमूर्तैरत्र कः
184479 क्रमः इति प्रश्नस्योत्तरं श्रावयितुं प्रतिजानीते - शुभाशुभमिति ।
184480 अप्रतिघैरमूर्तैः ॥ १ ॥
184481
184482 ब्रह्मसंकल्पनगरं जगत्तावदिदं स्थितम् ।
184483 यद्दृश्यं दृश्यबोधेन ब्रह्मैव ब्रह्मबोधतः ॥ २ ॥
184484
184485 यद्यस्माद्धेतोर्ब्रह्मैवाज्ञानाद्दृश्यबोधेन दृश्यं ब्रह्मबोधतश्च
184486 ब्रह्मैव भवति तस्मादिदं जगत् ब्रह्मसंकल्पनगरमिति तावत्स्थितम् ॥ २ ॥
184487
184488 यद्यत्संकल्पनगरे यदा संकल्प्यते यथा ।
184489 तथानुभूयते तत्तत्तादृग्विरञ्चं तदा ॥ ३ ॥
184490
184491 किं ततस्तत्राह - यद्यदिति ॥ ३ ॥
184492
184493 एवमस्मिनगृहे याते संपन्नैवमियं प्रजा ।
184494 एवं संकल्पसंपन्ने जगत्येवं भवत्यलम् ॥ ४ ॥
184495
184496 ततोऽपि किं तत्राह - एवमिति । यथा ते तव अस्मिन्संकल्पमये गृहे येयं प्रजा

184497 एवं त्वत्संकल्पानुसारिणी संपन्ना तथैव ब्रह्मसंकल्पसंपन्ने जगत्यपि इयं
184498 प्रजा ब्रह्मसंकल्पानुसारिण्येव भवतीत्यर्थः ॥ ४ ॥
184499
184500 एतत्स्वसंकल्पपुरे यादृशं ते तथा स्थितम् ।
184501 यथा संकल्पयसि यत्तत्तथा किल पश्यसि ॥ ५ ॥
184502
184503 तदेव स्पष्टमाह - एतदिति ॥ ५ ॥
184504
184505 यथैव वरशापाभ्यां शुद्धसंविदवाप्यते ।
184506 संवित्तथैव भवति ब्राह्ममेवेति कल्पनम् ॥ ६ ॥
184507
184508 यत्तु जगत्यस्मत्संकल्पनगरवैलक्षण्यमनुभूयते तत्र
184509 वरशापसंकल्पसिद्धवद्बोध्यमित्याशयेनाह - यथैवेति । मुनीनां
184510 यमनियमादिनिषेवणशुद्धा संविद्वरशापाभ्यां यथा व्यवहारक्षमा अवाप्यते
184511 ब्रह्मसंविदपि तथैव भवतीत्यर्थः । यद्वरशापाभ्यां भवति तदपि ब्रह्मणैव
184512 तपस्विनां वरशापाः सिद्ध्यन्त्विति कल्पनाद्ब्राह्ममेव सत्यसंकल्पनं
184513 बोध्यमित्यर्थः ॥ ६ ॥
184514
184515 प्रजाविधिनिषेधाभ्यामेकयाश्थाव्यवस्थया ।
184516 तथैव फलमाप्नोति ब्राह्ममेवेति कल्पनम् ॥ ७ ॥
184517
184518 प्रकृते प्रजाविधिनिषेधशास्त्राभ्यां बोधितयोर्धर्माधर्मयोर्मध्ये एकया
184519 आस्थाव्यवस्थया तत्फलं यदाप्नोति तदपि ब्राह्ममेवेत्येवंविधं
184520 संकल्पनमित्यर्थः ॥ ७ ॥
184521
184522 देहिनो ये जगत्यस्मिंस्तान्प्रत्यनुपलम्भतः ।
184523 असदासीज्जगत्पूर्वं सत्यमित्युपलभ्यते ॥ ८ ॥
184524
184525 चिद्रूपब्रह्मसंकल्पवशादेवैतदङ्ग सत् ।
184526 चिदुन्मेषनिमेषौ यौ तावेतौ प्रलयोदयौ ॥ ९ ॥
184527
184528 असतो जगतः किंचित्कालं सत्त्वेन भानमपि ब्रह्मसंकल्पवशादेवेत्याह -
184529 चिद्रूपेति । हे अङ्ग एतज्जगत् ॥ ९ ॥
184530
184531 राजोवाच ।
184532
184533 किं नोपलभ्यते पूर्वं किं पश्चादुपलभ्यते ।
184534 जगच्चलद्वपुरिदं सुस्थिरारम्भभास्वरम् ॥ १० ॥
184535
184536 यदि जगत् ब्रह्मसंकल्पवशात्तर्हि पूर्वं सुषुप्तिप्रलययोः किं कुतो नोपलभ्यते ।
184537 पश्चाज्जाग्रत्सर्गकालयोः किमर्थमुपलभ्यते चलद्वपुः सदा विक्रियमाणमिदं
184538 जगत्सुस्थिरारम्भवद्भास्वरं भासमानं किं कथमित्यर्थः ॥ १० ॥
184539
184540 श्रीवसिष्ठ उवाच ।
184541
184542 अस्मिंश्चिद्व्योमसंकल्पपुरस्थे भाव ईदृशः ।
184543 यद्भूत्वा न भवत्येव पुनर्भवति च क्षणात् ॥ ११ ॥
184544
184545 मायिकस्यास्य स्वभावे एवेदृश इत्युत्तरमाह - अस्मिन्निति । सर्गे
184546 स्वप्नजाग्रतोर्भूत्वा प्रलयसुषुप्तिमोक्षेषु न भवत्येवेति यद सावीदृशो भावः
184547 स्वभाव एव ॥ ११ ॥
184548

184549 बालसंकल्पपुरवद्व्योमकेशोण्ड्रकादिवत् ।
184550 किलैते सदसद्रूपा भान्ति सर्गाश्चिदात्मनि ॥ १२ ॥
184551
184552 बालसंकल्पपुरादौ यावत्संकल्पभ्रान्तिकालमात्रावस्थाननियमदर्शनेन
184553 सदसद्रूपत्वावधारणाद्वा तस्य तथात्वमित्याह - बालेति ॥ १२ ॥
184554
184555 त्वं संकल्पपुरं कृत्वा विनाश्यसि तत्क्षणात् ।
184556 स्वतोऽन्यसंविद्वशतः स्वस्वभावः स ते यथा ॥ १३ ॥
184557
184558 जगत्संकल्पयित्रैव तत्प्रलयस्यापि संकल्पनाद्वा तथात्वमित्याह - त्वमिति ।
184559 अन्यसंविद्वशतस्तत्प्रलयसंकल्पवशत आकारान्तरसंकल्पवशतश्च यथायं ते
184560 स्वः स्वभावस्तथा चिद्व्योमसंकल्पपुरे तस्य ब्रह्मणो विमलं स्वभावकचनमिति
184561 परेणान्वयः ॥ १३ ॥
184562
184563 चिद्व्योमकल्पनपुरे यदुन्मज्जनमज्जनम् ।
184564 स्वभावकचनं तस्य तद्विद्धि विमलं तथा ॥ १४ ॥
184565
184566 संविद्घनस्त्वनाद्यन्तव्योमैव त्रिजगन्नभः ।
184567 तेनासावद्य यन्नाम करोत्यपि च चेतति ॥ १५ ॥
184568
184569 अतस्त्रिजगन्नभः संविद्घनमात्रं सदनाद्यन्तं व्योम ब्रह्माकाशमेव यतः
184570 स्वयमेव जगत्तेन हेतुना असौ परमेश्वरो यद्यच्चेतति करोत्यपि च
184571 तत्सर्वमनावरणस्यास्य सत्यसंकल्पबलाद्योजनानां शतेष्वपि बहुभिर्युगैरपि
184572 व्यवहितं पुण्यपापादिकर्म परलोकादिषु समीपे
184573 वर्तमानव्स्वर्गनरकभोगैश्वर्यादिकार्यकृद्भवतीत्यर्थः ॥ १५ ॥
184574
184575 तदनावरणस्यास्य योजनानां शतेष्वपि ।
184576 युगैरपि स्वप्न इव कार्यकृद्वर्तमानवत् ॥ १६ ॥
184577
184578 किल देशान्तरे नित्यमथ लोकान्तरेऽपि च ।
184579 निरावृतो य एकात्मा स किं नाम न चेतति ॥ १७ ॥
184580
184581 बहिर्देशकालव्यवधाने कर्मतत्फलोभयाध्यासाधिष्ठानभूतो निरावरणो य
184582 एकात्मा तत्रोभयोः सदैव सन्निधानात्किं नाम कर्मफलं स जीवो न चेतति । सर्व
184583 चेतत्येवेत्यर्थः ॥ १७ ॥
184584
184585 यथा मणौ प्रकचति प्रोन्मज्जननिमज्जने ।
184586 परावर्तः स्वभासास्य चिन्मणौ जगतां तथा ॥ १८ ॥
184587
184588 यथा प्रकचति मणौ स्वभासैव कान्तिविशेषस्य प्रोन्मज्जननिमज्जने अनुभूयेते तथा
184589 चिन्मणौ जगतां सृष्टिप्रलयात्मको नानाकर्मफलवैचित्र्यभोगात्मकश्च
184590 स्वभासास्य परावर्तनं परावर्तोऽनुभूयत इत्यर्थः ॥ १८ ॥
184591
184592 विधीनां प्रतिषेधानां लोकसंस्थाप्रयोजनम् ।
184593 सैव संविदि रूढत्वात्प्रेत्यापि फलदा स्थिता ॥ १९ ॥
184594
184595 विधिप्रतिषेधशास्त्रसाफल्यप्रयोजिका लोकसंस्थैव वा ब्रह्मणि
184596 निरूढत्वाद्दूरस्थकर्मणामपि फलं कल्पयतीत्याह - विधीनामिति ।
184597 प्रेत्यमृत्वा परलोकं गत्वा स्थितस्येति शेषः ॥ १९ ॥
184598
184599 न कदाचन यात्यस्तमुदेति न कदाचन ।
184600 ब्रह्म ब्रह्मचिदाभानं सर्वदात्मन्यवस्थितम् ॥ २० ॥

वस्तुतस्तु जन्ममरणे एवात्मनो न स्तः किंत्वस्य स्वात्मनिव भ्रान्त्या
तत्कल्पनमित्याह - न कदाचनेति ॥ २० ॥

यथा तु द्रष्टृदृश्यत्वात्कल्पना कल्पनापुरम् ।
स्वयं जगदिवाभाति जातमित्युच्यते तथा ॥ २१ ॥

तथा जातं जन्मापि उच्यते वाचा व्यपदिश्यते न तु वस्तुत इत्यर्थः ॥ २१ ॥

यदा स्वभावात्कचनं संहृत्यात्मनि तिष्ठति ।
ब्रह्मचिद्गगनैकात्मा शान्त इत्युच्यते तथा ॥ २२ ॥

तथा मरणमपि पूर्वदेहादिभ्रान्तिकचनोपसंहार एव नान्य इत्याह - यदेति ।
शान्तो मृत इत्युच्यते जीव इत्यर्थः ॥ २२ ॥

कचनाकचने यस्य स्वभावो निर्मलोऽक्षयः ।
यथैतावात्मनो नान्यौ स्पन्दास्पन्दौ नभस्वतः ॥ २३ ॥

दृश्याकारकचनाकचने चाज्ञानोपहितचितः स्वभाव एवेत्याह - कचनेति ॥ २३ ॥

जरामरणहन्तृणि क्षणान्यत्र पृथक्पृथक् ।
भवन्त्विति यथैतानि सन्ति त्वत्कल्पनापुरे ॥ २४ ॥

मणिमन्त्रौषधीनां प्रभावविशेषा अपि ब्रह्मणः सत्यसंकल्पस्वभावा एव
तथोदिता इति सदृष्टान्तमाह - जरेति द्वाभ्याम् ॥ २४ ॥

ब्रह्मसंकल्पनगरे स्वभावा उदितास्तथा ।
ओषधीनां पदार्थानां सर्वेषां च जगल्लये ॥ २५ ॥

न संकल्पयिता राजन्संकल्पनगरे स्वयम् ।
तृणं तृणं कल्पयति बालः क्रीडनकानिव ॥ २६ ॥

तर्हि किमीश्वरः प्रतिक्षणं प्रतिवस्तु शक्तिकार्यादिभेदान्संकल्पयिता कल्प्यते
नेत्याह - न संकल्पयितेति । प्रतिवस्तु प्रतिक्षणमीश्वरो न संकल्पयिता कल्प्यते
किंतु बालः क्रीडनकान्यन्त्रविशेषानिव सकृदेव
संकल्पयत्येतज्जातीयमेतज्जातीयकार्यकृद्भवतु तच्च तज्जातीयमित्थमुत्पद्यतामिति ।
तदेवशादेव बीजाङ्कुरादिक्रमेण पूर्वपूर्वतृणमुत्तरोत्तरतृणं कल्पयति ॥ २६
॥

स्वयं स्वभाव एवैष चिद्घनस्यास्य सुस्फुटम् ।
यद्यत्संकल्पयत्याशु तत्र तेऽवयवा अपि ॥ २७ ॥

आशु क्षणेनैव यद्यत्संकल्पयति तत्र ते ते पदार्थाः सदवयवाः
शक्तिकार्यादिभेदा अपिशब्दात्कार्यपरंपराश्च सकृत्संकल्पादेव सिद्ध्यन्तीत्येष
चिद्घनस्य स्वभावः ॥ २७ ॥

चिदात्मकतया भान्ति नानात्मकतयात्मना ।
अप्येकसारास्तिष्ठन्ति नानाकारस्वभावगाः ॥ २८ ॥

ते संकल्पकल्पितपदार्था आत्मना स्वभावेन नानात्मकतया स्थिता अपि
प्रथमानस्वभावे चिदेकात्मतया भान्ति एवं स्वतो नानाकारस्वभावा अपि सद्रूपेण
एकसारास्तिष्ठन्ति ॥ २८ ॥

प्रत्येकं किल तत्रास्ति ब्रह्मचिन्मात्रतात्मनि ।
सर्वात्मिका सा यत्रास्ते यथान्तर्भाति तत्तथा ॥ २९ ॥

तत्र तेषु पदार्थेषु प्रत्येकमात्मनि ब्रह्मचिन्मात्रता अस्ति । यतः सैव चित्सर्वात्मिका
यन्न यथा आस्ते तत्र तथा भातीत्यर्थः ॥ २९ ॥

अनादिमध्यान्तमनन्तवीर्यं किंचिन्न किंचिच्च सदप्यसत्यम् ।
स्थितं यथा यत्र तदात्म तत्र सर्वात्मभूर्भूततृणादिजातौ ॥ ३० ॥

एवमनादिमध्यान्तमनन्तवीर्यमपरिच्छेद्यशक्तिकं ब्रह्म किंचिन्न किंचिच्च
स्थितमसत्यं सदपि स्थितम् । सत्यं चानृतं च सत्यमभवत् इति श्रुतेः ।
यतस्तत्सर्वात्म भवतीति सर्वात्मभूः अतो भूतेषु प्राणिषु तृणादिजातौ च यत्र
यद्वस्तु यदात्म यत्स्वभावं प्रसिद्धं तत्र स्वयमेव तत्स्वभावं भूत्वा
स्थितमित्यर्थः ॥ ३० ॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० नि० उ० महाप्रश्नमोक्षणो
नामाष्टोत्तरद्विशततमः सर्गः ॥ २०८ ॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
महाप्रश्नमोक्षणो नामाष्टाधिकद्विशततमः सर्गः ॥ २०८ ॥

## नवाधिकद्विशततमः सर्गः २०९

श्रीवसिष्ठ उवाच ।

एकस्य जीवितं पुंसः सुहृदा मरणं द्विषा ।
मृत्वार्थितं प्रयागादौ क्षेत्रे यत्तदिदं शृणु ॥ १ ॥

युगपद्योगसंप्राप्तौ विरुद्धफलकर्मणाम् ।
अविरोधेन साफल्यमिह युक्त्या प्रसाध्यते ॥

प्रश्नश्लोकमेव प्रश्नानुवादार्थमुचार्य तेषामक्षराणां विनिमयेन
तत्समाधिं श्रावयति - एकस्येति ॥ १ ॥

क्षेत्राणामर्थधर्माणां सर्वेषां प्रति तं फलम् ।
ब्रह्मणा कल्पितं सर्गे स्वके संकल्पपत्तने ॥ २ ॥

तं वक्ष्यमाणमधिकारिणं प्रति क्षेत्रादीनां सर्वेषां फलं ब्रह्मणा कल्पितं
संकल्पेन समर्थितमादिसर्गे ॥ २ ॥

यत्र पुण्यं यदर्थं च क्षेत्रं ताभ्यां तथा कृतम् ।
यदि तद्विनियोज्यस्य तस्योन्नमति निष्कृतात् ॥ ३ ॥

यत्र संकल्पपत्तने यदर्थं यस्याधिकारिणो वाञ्छितार्थसिद्ध्यर्थं कामप्रदं
प्रयागादिक्षेत्रं तत्रानुष्ठितं स्नानदानतपोयज्ञादिपुण्यं तथा ताभ्यां
कृतं संस्कृतं शरीरं च यदि शास्त्रविनियोज्यस्य पुरुषस्यास्ति तदा तस्य
पुरुषस्य निष्कृतादवश्यमत्र मदिष्टं फलं भविष्यतीति निश्चित्य
कृतात्प्रयागमरणादेः सकाशात्तत्कामितं फलमुन्नमत्याविर्भवत्येवेत्यर्थः ॥
३ ॥

तत्तस्मान्महतः पापाद्वागमेनोखिलं च वा ।

184705 चितिशक्त्यात्म तत्पुण्यं परिभ्राम्योपशाम्यति ॥ ४ ॥
184706
184707 अस्तु कृतपुण्यस्यैवं पातकिनस्तु श्रद्धावतः प्रयागमरणादिपुण्यं किं करोति
184708 तत्राह - तदिति। तस्मात्प्रयागादिमरणादुत्पन्नं ततो महतो ब्रह्महत्यादेः
184709 पापादेकभागमखिलं संपूर्णमेनः पापं वा
184710 क्षेत्रमाहात्म्यतारतम्यानुसारेण परिभ्राम्य निरस्य स्वयमप्युपशाम्यति।
184711 धर्मेण पापमपनुदति इत्यादिश्रुतेरिति भावः ॥ ४ ॥
184712
184713 विनेयपापमल्पं चेत्क्षेत्रधर्मोऽधिकस्ततः।
184714 तत्पापं नाशयित्वा तच्छब्द एव विवल्गति ॥ ५ ॥
184715
184716 विनेयस्य शास्यस्य पुंसः पापमल्पं चेत्ततः क्षेत्रार्जितो
184717 धर्मोऽधिकश्चेन्निःशेषं तत्पापं नाशयित्वा तच्छब्दे श्रुत्यादिप्रतिपादिते फले
184718 संशेन विवल्गति। काम्यफलमपि किंचित्साधयत्येवेत्यर्थः। यत्र तु विनेयस्य
184719 शास्यस्य पुंसः क्षेत्रार्जितेन धर्मेण समबलं पापमस्ति तत्र तुल्यबलत्वादेव तेन
184720 धर्मेण अपनेतुमशक्यस्यास्य पापस्य पुण्यस्य च भोगाय द्वे शरीरे तयोश्च द्वे
184721 विदौ चिदाभासौ भ्रान्तिप्रतिभात्मिके कचतः ॥ ५ ॥
184722
184723 क्षेत्रधर्मेण तेनास्य विनेयस्य महीपते।
184724 द्वे शरीरे विदौ सम्यक्कचतः प्रतिभात्मिके ॥ ६ ॥
184725
184726 इत्येवमादिपापानां पुण्यानां च फलं महत्।
184727 ब्रह्मसंकल्पकचितं यथा यद्यत्तथैव तत् ॥ ७ ॥
184728
184729 यद्यद्यथा ब्रह्म संकल्पकचितं तत्तत्तथैव व्यवस्थितमित्यर्थः ॥ ७ ॥
184730
184731 ब्रह्मोच्यतेऽसौ चिद्धातुः सोऽब्जजाद्यहमादि च।
184732 स यथास्ते तथा तत्तत्तस्य संकल्पनं जगत् ॥ ८ ॥
184733
184734 ब्रह्मसंकल्पकचितमित्यत्र किं तद्ब्रह्म कथं वा तत्संकल्पकचितं जगत्तदाह ##-
184735 व्यष्टिसमष्ट्युपाधौ तस्य संकल्पनं जगदपि तत्तथास्ते इत्यर्थः ॥ ८ ॥
184736
184737 प्रतिभैव विनेयस्य क्षेत्रपुण्येन तादृशी।
184738 तथैवोदेति सा धातुर्विपरीतवतो यथा ॥ ९ ॥
184739
184740 धातुः संकल्पानुसारेणैव विनेयस्य क्षेत्रार्जितपुण्यानुसारेण तत्फलभोगात्मिका
184741 प्रतिभैव स्वप्नवदुदेति। यथा पुण्यविपरीतपापवतो नरकादिप्रतिभोदेति तद्वत् ॥ ९ ॥
184742
184743 एकात्मनाहमद्यैष मृतोऽमी मम बन्धवः।
184744 रुदन्तीमे परं लोकं प्राप्तोऽयमहमेककः ॥ १० ॥
184745
184746 कीदृशी कीदृशी प्रतिभोदेति तामुल्लिख्य दर्शयति - एकात्मनेति। अहमद्य एक
184747 एवात्मना मृतः अमी मम बन्धवः सर्वे जीवन्ति मदर्थे रुदन्तीमे ॥ १० ॥
184748
184749 बन्धूनामपि तत्रैव तदैवास्य तथैव च।
184750 प्रतिभा तादृशैवेति धातुक्षोभवतामिव ॥ ११ ॥
184751
184752 एतदीयं मरणमिव बन्धूनामपि अस्य तत्र प्रसिद्धं
184753 रोदनशवनिर्हरणश्मशानगमनदाहादिकं सर्वमपि धातुक्षोभवतां
184754 सन्निपातक्षुब्धवातपित्तादिधातुमतां पुंसामिव तादृशी प्रतिभैवेति बोध्यम्।
184755 तादृशा इति कजन्तादाप्छान्दसः ॥ ११ ॥
184756

184757 अत्युग्रैः पुण्यपापैः स्वैर्वा महात्मभिरीक्षिते |
184758 लक्ष्याण्यप्यन्यथा सन्ति नृणां चित्कल्पनावशात् || १२ ||
184759
184760 यदा त्वत्युत्कटानि पुण्यानि पापानि वास्य सन्ति तदा तैः स्वैरेव
184761 क्षुब्धैर्महात्मभिर्निग्रहानुग्रहदृष्ट्या ईक्षिते सति वा क्षुब्धैः परैर्लक्ष्याणि
184762 अन्यथा परैरलक्ष्याण्यपि वा तत्फलानि शरीरादीनि चित्कलनावशात्सन्ति भवन्तीत्यर्थः
184763 || १२ ||
184764
184765 अचेतनं शवीभूतं तेऽपि पश्यन्ति तं मृतम् |
184766 रुदन्ति तं च दहने क्षिपन्ति सह बान्धवैः || १३ ||
184767
184768 ते जना अपि क्वचिदत्युत्कटैः पुण्यपापैस्तं विनेयं मृतं पश्यन्ति || १३ ||
184769
184770 विनेयः स यथान्येन संविद्रूपेण देहिना- |
184771 ऽजरामरणमात्मानं वेत्ति स्थितमदुःखितम् || १४ ||
184772
184773 एकस्य जीवितं पुंसः सुहृदा मरणं द्विषा | मृत्वार्थितं प्रयागादौ क्षेत्रे
184774 तत्कथमुच्यताम् इत् प्रश्नं समाधत्ते - विनेय इत्यादिना | देहिना अजरामरणमिति
184775 च्छेदः | सः सुहृद्विषोः कर्मभ्यां विनेय एकः पुरुषः अन्येन
184776 स्नेहसंविद्रूपेण देहिना सुहृदा यथा प्रार्थितं तथा
184777 स्थितमजरामरणमात्मानमदुःखितं वेत्ति || १४ ||
184778
184779 यथास्थितेन देहेन वेत्त्यसौ जीवितस्थितम् |
184780 मृतिं त्वदृश्येनान्येन क्षेत्रपुण्यविदेरितः || १५ ||
184781
184782 किं देहान्तरेण नेत्याह - यथास्थितेनेति | तर्हि कथं तद्द्विषो
184783 मनोरथसिद्धिस्तत्राह - मृतिमिति | सुहृत्स्वजनैरदृश्येनान्येन देहेन
184784 मृतिं वेत्ति | क्षेत्रे प्रयागादौ शत्रुमरणानुकूलपुण्यकृता द्विषा ईरितः |
184785 बलान्मरणाय प्रेरितः सन्नित्यर्थः || १५ ||
184786
184787 आविला संविदा संविच्छून्यया वेद्यते क्षणात् |
184788 न हि सन्नद्धगात्रस्य क्लेशोऽसन्नद्धभेदने || १६ ||
184789
184790 तत्र द्विषत्कृताभिचारादिप्रतीकारशून्यया विनेयविदा क्षणात्तत्कालमेव
184791 मरणादिकं वेद्यते अनुभूयते | संन्नद्धगात्रस्य द्विषो वर्मायुधादिना
184792 असन्नद्धगात्रस्य विश्वस्तस्य शरखड्गादिना भेदनेन हि क्लेशः || १६ ||
184793
184794 पश्यन्ति बन्धवोऽप्येनं तथैवामरतां गतम् |
184795 द्वयमित्येष लभते जीवितं मरणं समम् || १७ ||
184796
184797 इदमप्रतिघारम्भं भ्रान्तिमात्रं जगत्त्रयम् |
184798 न संभवति को नाम भ्रान्तौ भ्रान्तिविपर्ययः || १८ ||
184799
184800 अनेनैव न्यायेन सर्वे विरुद्धप्रश्नाः समाहिता बोध्या इत्याशयेनाह - इदमिति |
184801 भ्रान्तौ को वा भ्रान्तिविपर्ययः | एकभ्रमविरुद्धोऽपरो भ्रमः को वा न संभवति |
184802 स्वप्नसन्निपातादौ विरुद्धसहस्रस्यापि सहभावदर्शनादित्यर्थः || १८ ||
184803
184804 संकल्पस्वप्नपुरयोर्या भ्रान्तिरनुभूयते |
184805 ततोऽधिकोऽयं [ततोऽधिकेयं न न्यूना जाग्रदिति पाठोऽत्रापेक्षितः |] न
184806 न्यूनाज्जाग्रत्स्वप्नेऽनुभूयते || १९ ||
184807
184808 तदेवाह - संकल्पेति || १९ ||

राजोवाच।

धर्माधर्मौ कथं ब्रह्मन्कारणं देहसंविदः।
तस्यामूर्तौ कथं चैको द्विशरीरत्वमृच्छति॥ २०॥

धर्माधर्मावमूर्तौ द्वाविति प्रश्नमेव प्रकृतकथाक्षेपानुगुण्येन परिष्कृत्य
राजा पुनः पृच्छति - धर्माधर्माविति। तस्य धर्मस्य अधर्मस्य चामूर्तौ
मूर्तत्वाभावे द्विशरीरत्वं द्वितीयशरीरभावं ऋच्छति प्राप्नोति॥ २०॥

श्रीवसिष्ठ उवाच।

संकल्पनगरे ब्राह्मे जगत्यस्मिन्महामते।
किं नाम नो संभवति सत्यं वाप्यसमञ्जसम्॥ २१॥

धातुः सत्यसंकल्पः अमूर्तस्यापि मूर्ततां घटयितुं समर्थ
इत्याशयेनोत्तरमाह - संकल्पनगरे इति॥ २१॥

यथैव संकल्पपुरे यन्न संभवतीह हि।
तन्नास्त्येव तदेतस्मिन्किं वाऽस्तु ब्रह्मकल्पने॥ २२॥

स्वप्नसंकल्पपुरयोरेको गच्छति लक्षताम्।
तद्दा चैकैव चित्स्वप्ने सेनात्वमुपगच्छति॥ २३॥

सहस्राण्येकतां यान्ति तथा सैव सुषुप्तकम्।
अन्यथा स्वप्नसंकल्पसेनानुभवसंस्मृतौ॥ २४॥

सा स्वप्नसेनैवेकं सुषुप्तकं भवति स्वप्नसंकल्पानुभूतसेनायाः स्मृतौ
समूहरूपतया एकाकारे इदमिति स्थाने तदिति कल्पनेन चान्यथानुभवं भवतीति
सर्वानुभवसिद्धमित्यर्थः॥ २४॥

संकल्पस्वप्नपुरयोरिति को नानुभूतवान्।
संविदाकाशमात्रेऽस्मिञ्जगत्यनुभवात्मनि॥ २५॥

तस्मादस्मिंश्चिदाकाशसंकल्पे जगदात्मनि।
न संभवति किं नाम तत्संभवति वापि किम्॥ २६॥

उपसंहरति - तस्मादिति॥ २६॥

एवमेवमियं भ्रान्तिर्भाति भास्वन्नभोमयम्।
नेह किंचन सन्नासन्न वाशदिह किंचन॥ २७॥

न वा आ सत् ईषत्सत् सदसदित्यर्थः॥ २७॥

यथानुभूयते यद्यत्तत्तथा तत्त्वदर्शिनः।
प्रबुद्धस्यात्र किं नाम तत्स एवाङ्गतेत्यलम्॥ २८॥

प्रबुद्धस्य अत्र किं नाम असमञ्जसमिति शेषः॥ २८॥

इह चेद्विहितो धर्मस्तत्स्वर्गेऽमृतपर्वताः।
स्थिता इतीह संकल्पे कस्मान्न प्राप्तवान्गिरीन्॥ २९॥

184861 धर्माधर्मानुष्ठायिनोऽपि जनाः शास्त्रकृतस्वस्वनिश्चयानुसारिस्वर्गानेव
184862 प्राप्नुवन्तीत्याह - इह चेदिति। अमृता देवास्तदुपभोग्याः
184863 अमृतरसनिर्झरह्रदफलपुष्पादिपूर्णाश्च पर्वताः स्वर्गे स्थिताः सन्तीति
184864 शास्त्रतोऽवगम्य तदनुसारिसंकल्पे सति तत्र गत्वा तादृशगिरीन्प्राप्तवान् स्वात्मानं
184865 कस्मान्नानुभवतीत्यर्थः॥ २९॥
184866
184867 इह यत्क्रियते कर्म तत्परत्रोपभुज्यते।
184868 इतीह संकल्पपुरे सर्वमेवासमञ्जसम्॥ ३०॥
184869
184870 यदि तु मिथ्यात्वादसमञ्जसमिति ते बुद्धिस्तर्ह्ययं लोकस्तत्र धर्माद्यनुष्ठानं
184871 तेन परलोकस्तत्र भोगश्चेत्येतत्स्वमेव जगदसमञ्जसमेवेत्याह - इहेति। इह
184872 जगति॥ ३०॥
184873
184874 यदि स्यात्सुस्थिरं किंचिद्वस्तु तद्दृश्यको भवेत्।
184875 न्याय एषोऽखिलः किंतु संवित्त्वात्स्वस्वकं स्थितः॥ ३१॥
184876
184877 यदि जगति किंचिद्भूतभुवनादिवस्तु सुस्थिरं सत्यं स्यात् तत्रायं विरोधो दृश्यको
184878 भवेत् तदा एष इदं समञ्जसमिदमसमञ्जसमित्येष न्यायोऽखिलः अकुण्ठितः स्यात्
184879 किंतु सर्वोपि द्रष्टा संवित्त्वात्स्वस्वकं संकल्पनमेव दृश्यकः स्थितो न
184880 वास्तवमित्यर्थः॥ ३१॥
184881
184882 इत्येष कथितो न्यायः सिद्धास्वनुभवस्ततः।
184883 यतो जगन्ति संकल्पश्चितो ब्रह्मस्वरूपतः॥ ३२॥
184884
184885 इत्येषोऽस्माभ्रासमञ्जस्यपरिहारन्यायोऽपि स्वप्नसंकल्पसिद्धासु कल्पनासु
184886 अनुभवः सर्वानुभवानुसारी स्थितो जगत्स्वपि योज्यः। यतो जगन्त्यपि ब्रह्मस्वरूपतः
184887 स्थितायाश्चितः संकल्प एव॥ ३२॥
184888
184889 तव संकल्पनगरे नास्त्येवासंभवो यथा।
184890 सर्वार्थानां तथा ब्राह्मे संकल्पे नास्त्यसंभवः॥ ३३॥
184891
184892 तदेवाह - तवेति॥ ३३॥
184893
184894 यद्यथा कल्पितं तत्र यावत्संकल्पमेव् तत्।
184895 स्वभावेन तथैवास्ति यतस्तत्संनिवेशवत्॥ ४४॥
184896
184897 यद्यद्यथा तत्र ब्राह्मसंकल्पे कल्पितं तत् तादृशसंनिवेशवत्तथा
184898 स्वभावेनास्ति॥ ३४॥
184899
184900 ततः संप्रेक्षणमिह संकरो न प्रवर्तते।
184901 विनान्यच्चित्प्रयत्नेन भवत्यर्थस्तु नान्यथा॥ ३५॥
184902
184903 ततस्तादृशसंनिवेशस्वभावनियमादेव ज्ञानेन्द्रियैः सर्ववस्तूनां
184904 सम्यगविसंवादितया प्रेक्षणं प्रवर्तते। कर्मेन्द्रियव्यवहारे संकरश्च न
184905 प्रवर्तते। पूर्वचित्प्रयत्नेन कृतनियतसंनिवेशोऽर्थः अन्यचित्प्रयत्नेन विना अन्यथा
184906 च न भवति। चार्थे तुः॥ ३५॥
184907
184908 आकल्पमजसंकल्पे यथा भातं जगत्स्थितम्।
184909 पुनरन्येन संकल्परूपेणान्यदुपैष्यति॥ ३६॥
184910
184911 आकल्पमाप्रलयं यथा अजसंकल्पे भातं तथैव स्थितं पुनः प्रलयानन्तरमन्यत्
184912 ब्रह्माण्डान्तरम्॥ ३६॥

संकल्पात्म स्वयं भाति कल्पे कल्पे जगत्तथा।
प्रतिजीवं चितिस्वप्ने स्वप्ने स्वाप्नपुरं यथा॥ ३७॥

संकल्पपत्तनतनोर्न तदस्ति किंचिद्यद्यन्न संभवति तच्च चिदात्मनोऽस्मात्।
नान्यत्प्रकम्पयितुराद्यपरस्वरूपाद्ब्रह्मैव तेन सकलं जगदङ्ग विद्धि॥
३८॥

संकल्पपत्तनतनोरस्य जगतो यन्न संभवतीति मन्यसे तन्नास्ति सर्वं संभवत्येव
तच्च प्रकल्पयितुरस्माच्चिदात्मनो नान्यत् तेन हेतुना जगद्ब्रह्मैव विद्धीत्यर्थः॥ ३८॥

इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० निर्वा० उ० महा०
सर्वास्तित्वानुभूतिदर्शनं नाम नवाधिकद्विशततमः सर्गः॥ २०९॥

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
सर्वास्तित्वानुभूतिदर्शनं नाम नवाधिकद्विशततमः सर्गः॥ २०९॥

दशाधिकद्विशततमः सर्गः २१०

श्रीवसिष्ठ उवाच।

फले क्षयेन्दुभारूपे प्राप्ते ध्यातृशतैर्नभः।
यथा न शतपूर्णेन्दु तथेदं कथनं शृणु॥ १॥

इह वसिष्ठप्रश्नानां समाधानं निरूप्यते।
तथा देहादिजगतः सुदृष्ट्या ब्रह्ममात्रता॥

खेऽस्यामक्षयपूर्णेन्दुरिति ध्यायिचितैः फलैः। तुल्यकालमनुप्राप्तैः सहस्रेन्दु न
किं नभः इति प्रश्नस्योत्तरं तत्र प्रथमं श्रावयति - फले इत्यादिना॥ १॥

चन्द्रबिम्बस्य ध्यातारः प्राप्ताः प्राप्तव्यसुस्थिताः।
नेदं नभस्तलं प्राप्ता न चेमं शशिनं श्रिताः॥ २॥

सत्यचन्द्रबिम्बस्याहंभावेन ध्यातारः प्राप्तव्ये चन्द्रभावे
चिरध्यानेनान्यभावविस्मरणादैन्दवन्यायेन सुस्थिताः सन्तश्चन्द्रभावं प्राप्ता
एव तथापि नेदं नभस्तलं प्राप्ता नाप्येनं शशिनं श्रिताः। प्रविष्टा इत्यर्थः॥
२॥

क्वेवान्यसंकल्पपुरमन्यः प्राप्नोति कथ्यताम्।
संकल्पपुर्यामर्थाप्तिस्तज्जन्तावेव नापरे॥ ३॥

कुतो न प्राप्तास्तत्राह - क्वेवेति। अन्यसंकल्पपुरमन्यः प्राप्नोतीत्येतत्क्वेव कुत्र
दृष्टं दृष्टान्तीकृत्य प्रकृते शङ्क्यते। तज्जन्तौ तस्मिन् संकल्पयितृजीवे एव
न परे जीवान्तरे दृष्टा॥ ३॥

पृथक्पृथक्स्वसंकल्पसर्गेखेष्वेव ते स्थिताः।
चन्द्रास्तपन्ति तत्रैव कलाक्षयविवर्जिताः॥ ४॥

क्व तर्हि ते स्थितास्तत्राह - पृथगिति॥ ४॥

विशेयमस्मिन्नेवेन्दाविति ध्यात्वा निशाकरे।
अस्मिन्नेव विशत्यन्तरात्मबुद्धिसुखोज्झितः॥ ५॥

अहमिन्दुं प्रविष्टः स्यामिन्दुबिम्बसुखान्वितः ।
ध्यातेति तादृक्सुखभाग्भवतीति विनिश्चयः ॥ ६ ॥

अस्मिन्नेव चन्द्रे ते सर्वे लाघवात्कुतो न प्रविष्टास्तत्राह - अहमिति । तैस्तु न तथा
ध्यातं किंतु त्वत्प्रश्नानुसारात्खे स्यामक्षयपूर्णेन्दुरिति कामनया ध्यातमिति
भावः ॥ ६ ॥

यथायमनुसंधत्ते स्वभावं संविदव्यया ।
तं तथैवानुभवति भवेच्चेद्दृढनिश्चयः ॥ ७ ॥

अन्यथाध्यानेऽन्यथाफलं कुतो न भवति तत्राह - यथेति । यथायं
स्वभावमयमनुसंधत्ते दृढसंकल्पेन ध्यायति तं स्वभावमव्यया
साक्षिसंवित्तथैवानुभवति न वैपरीत्येनेत्यर्थः ॥ ७ ॥

यथेन्दुत्वं स्वसंकल्पात्सर्वध्यातुः पृथक्पृथक् ।
भात्येवमेव वनितालाभः काल्पनिकः स्वतः ॥ ८ ॥

अन्यच्च ध्यायिनां लक्षैर्ध्यातैका स्त्री यथाक्रमम् । जायात्वेन समं कालम् इति
प्रश्नोऽप्यनेनैव युक्त्या समाधेय इत्यतिदिशति - यथेति । स्वतः स्वस्य काल्पनिकः
कल्पनासिद्धः ॥ ८ ॥

या ध्याने ध्यातृलक्षाणां साध्वी भार्यात्वमागता ।
तत्कल्पनानुभवनं तेषां सत्त्वात्मनि स्थितम् ॥ ९ ॥

साध्व्यसाध्वी गृहे भर्तुः संस्थिता तपसा परा इति प्रश्नांशेऽप्ययमेव
समाधिरित्याह - येति । सत्त्वात्मनि अन्तःकरणोपहिते साक्षिणि ॥ ९ ॥

गृहादनिर्गतो जीवः सप्तद्वीपपरः स्थितः ।
तस्यापि तत्काल्पनिकं राज्यं व्योम्नि स्वमन्दिरे ॥ १० ॥

गृहानिर्गच्छमाकल्पं नृपः स द्वीपसप्तके इति प्रश्नोऽप्यनेन समाहित इत्याह ##-

समस्तं कल्पनामात्रमिदमाद्यज्ञजन्मनः ।
शून्यमप्रतिघं शान्तं तेष्वपि स्यात्किमन्यथा ॥ ११ ॥

यदा इदमस्मदादिदृश्यं जगदपि समस्तमाद्यस्य ज्ञजन्मन
औत्पत्तिकसार्वज्ञ्यवतो हिरण्यगर्भस्य कल्पनामात्रं तदा तेषु उपासककल्पितजगत्सु
किमन्यथा अन्यादृशं सत्यं स्याद्येनासमञ्जसता स्यादित्यर्थः ॥ ११ ॥

दानौर्ध्वदेहिकतपोजपादीनां परत्र यत् ।
अमूर्तानां फलं मूर्तं तदिदं कथ्यते शृणु ॥ १२ ॥

दानधर्मादितपसामौर्ध्वदेहिककर्मणाम् । इहस्थानाममूर्तानां मूर्तं
प्रेत्यास्ति किं फलम् इति प्रश्नमनूद्य तत्समाधानं वक्तुं प्रतिजानीते - दानेति ॥
१२ ॥

दानादिचिह्नितधियः परत्र स्वप्नवत्फलम् ।
पश्यन्त्यमूर्तामूर्तभमजं चिन्मूर्तिकल्पनात् ॥ १३ ॥

चितैव मूर्त्याकारकल्पनात् ॥ १३ ॥

185017 वेदनावेदनाकारा स्पन्दास्पन्दात्म वै पुनः ।
185018 चिन्मात्रस्यास्य तद्भ्रान्तिशान्तौ शान्तात्म निर्मलम् ॥ १४ ॥
185019
185020 मनोज्ञानेन्द्रियैर्वेदनावेदनाकारा भ्रान्तिस्तया भ्रान्त्या विषयप्राप्तये
185021 तच्चिन्मात्रं समनस्कैः कर्मेन्द्रियैः स्पन्दास्पन्दात्म संपद्यते । तद्भ्रान्तिशान्तौ
185022 तु निर्मलं शान्तात्मैवावतिष्ठते ॥ १४ ॥
185023
185024 चिन्मात्राभमितो दानादमुत्रात्तमवाप्नुयात् ।
185025 संकल्पात्मेति कवयः कथं तन्नोपलभ्यते ॥ १५ ॥
185026
185027 इत इहानुष्ठिताद्दानादमुत्र परलोके चिन्मात्राभं चित्प्रतिभासात्मकं
185028 तत्तत्फलमात्तमुपनीतं तत्संकल्पात्मा जीवः अवाप्नुयादिति कवयो वदन्तीति शेषः ॥
185029 १५ ॥
185030
185031 कल्पनात्मनि संसारे संकल्पोऽकृत्रिमं फलम् ।
185032 चिन्मात्रमभितोऽदानाद्दानाद्वाऽस्तु यथोदितः ॥ १६ ॥
185033
185034 इतो दानाददानाद्वा अकृत्रिमः संकल्प एव दानफलं भोगैश्वर्यादि अदानफलं
185035 दारिद्र्यादि वा परलोकेऽस्तु न कश्चिद्विरोध इति सर्वासमञ्जसपरिहार इत्यर्थः ॥ १६ ॥
185036
185037 एतत्ते कथितं सर्वं यथापृष्टं महीपते ।
185038 जगदप्रतिघं सर्वमिदं चिन्मात्रकल्पनम् ॥ १७ ॥
185039
185040 सर्वान्प्रश्नान्कण्ठतोऽर्थाच्च समाधाय जगतो ब्रह्मैव तत्त्वमित्युपसंहरति -
185041 एतदिति ॥ १७ ॥
185042
185043 राजोवाच ।
185044
185045 सर्गादौ भगवन्देहमिदं चिन्मात्रकल्पनम् ।
185046 कथं भाति कथं कुड्यं विना दीपः प्रकाशते ॥ १८ ॥
185047
185048 देहे एव चिदभिव्यक्तिदर्शनादनभिव्यक्तचिति भ्रान्त्याद्यदर्शनात्सर्गादौ
185049 भ्रान्तिसिद्धौ देहसिद्धिस्तत्सिद्ध्या च भ्रान्तिसिद्धिरित्यन्योन्याश्रयं मन्यमानो राजा
185050 पृच्छति - सर्गादाविति । चिन्मात्रं देहशून्यं चैतन्यं तत्कृतं
185051 देहकल्पनं कथं भाति । देहं विना चित्प्रथाया
185052 एवादर्शनात्कुड्याद्यनाश्रितदीपप्रभाप्रायत्वात्तदा चैतन्यस्येत्यर्थः ॥ १८ ॥
185053
185054 श्रीवसिष्ठ उवाच ।
185055
185056 त्वयार्थो देहशब्दस्य यो बुद्धः स महामते ।
185057 तत्त्वज्ञं प्रति नास्त्येव शिलानृत्तमिवाम्बरे ॥ १९ ॥
185058
185059 न जडो देहश्चिदभिव्यञ्जक इति तत्त्वज्ञपक्षः । तद्दृष्टौ जडस्यैवाप्रसिद्धेः ।
185060 ब्रह्म तु सर्वज्ञत्वात्सदैवाभिव्यक्तचैतन्यं देहादि सर्वं
185061 कल्पयतीत्यशयेनोत्तरमाह - त्वयेत्यादिना ॥ १९ ॥
185062
185063 य एव ब्रह्मशब्दार्थो देहशब्दार्थ एव सः ।
185064 नार्थयोरनयोर्भेदो विद्यतेऽम्ब्वम्भसोरिव ॥ २० ॥
185065
185066 अम्ब्वम्भसोरिवेति शब्दद्वयानुकरणत्वान्न विरूपाणामपि समानार्थनाम्
185067 इत्येकशेषोऽसहप्रयोगोऽद्वन्द्वो वा ॥ २० ॥
185068

185069 यदेव ब्रह्मदेहोऽसौ स्वप्नाभः स्वप्न एष तु |
185070 त्वद्बोधायोच्यते युक्तिर्न तु तत्स्वप्न एव तु || २१ ||
185071
185072 स्वप्नाभोऽसौ देहो यद्ब्रह्म तदेव | ननु स्वप्नेऽप्यस्य न्यायस्य साम्याद्ब्रह्मत्वे
185073 स्वप्नाभ इति भेदं सिद्धवत्कृत्य दृष्टान्तोक्तिः कथं तत्राह - त्वद्बोधायेति
185074 || २१ ||
185075
185076 स्वप्नस्तवानुभूतार्थस्तेनातस्त्वं प्रबोध्यसे |
185077 न तु सर्गे चिदाभाते सादृश्यं स्वप्नभस्मना || २२ ||
185078
185079 कथमस्य मद्बोधोपयोगस्तत्राह - स्वप्न इति | स्वप्नलक्षणेन भस्मना
185080 बाधितार्थेन सह चिदात्मा आभाते सर्गे सादृश्यं न त्वस्तीत्यर्थः || २२ ||
185081
185082 कस्तत्र नाम देहोऽयं कस्यैते स्वप्नधीः क्व वा |
185083 स्वप्नेन ज्ञावबुद्धेन भ्रमेणाज्ञोऽवबोध्यते || २३ ||
185084
185085 कस्यैते स्वाप्नार्थाः || २३ ||
185086
185087 तत्र जाग्रन्न च स्वप्नो न सुषुप्तं न चेतरत् |
185088 किमपीत्थमिदं भानं खमात्रं मौनमोमलम् || २४ ||
185089
185090 ओमिति विराडादिपादत्रयप्रतिलयावशिष्टतुरीयोपदेशः | अलमिति तत्र
185091 सर्वसाधनपुरुषार्थपर्याप्तिदर्शनम् || २४ ||
185092
185093 अभातमेव भातीव यदद्येत्थमिदं तु तत् |
185094 प्राग्विभातं तथात्यच्छं जाग्रत्स्वप्नादि नो यथा || २५ ||
185095
185096 यदद्येत्थं भातीव तदभातमेव प्राग्विभातमपि तथा | तथा च कदापि
185097 जाग्रत्स्वप्नादि यथा नो नास्त्येव तथा अत्यच्छं ब्रह्मास्ति || २५ ||
185098
185099 देशाद्देशान्तरप्राप्तौ यन्मध्ये संविदो वपुः |
185100 तन्मयं सर्वमेवेदं द्वैतमद्वैतमेव च || २६ ||
185101
185102 देशादिति व्याख्यातम् | निर्विषयचिन्मात्रमयमित्यर्थः || २६ ||
185103
185104 अन्यत्र चिन्मयं स्वप्नं द्वैताद्वैतं शुभाशुभम् |
185105 निरावरणचिन्मात्रनभसैवोपमीयते || २७ ||
185106
185107 अज्ञदृष्टेरन्यत्र ज्ञदृष्टौ स्वप्नादि सर्वं चिन्मात्रनभसैवोपमीयते || २७ ||
185108
185109 शून्यमर्थोपलम्भश्च भानं चाभानमेव |
185110 द्वैतमैक्यमसत्सच्च सर्वं चिद्गगनं परम् || २८ ||
185111
185112 पूर्णात्पूर्णं प्रसरति पूर्णमेव स्थितं जगत् |
185113 न च भातं न चाभातं शिलाबद्धोदरोपमम् || २९ ||
185114
185115 स्फटिकशिलाया आबद्धं घनं यदुदरं मध्यं तदुपमम् || २९ ||
185116
185117 यतो जगच्चिदुन्मेषो व्योमात्माप्रतिघं ततः |
185118 चिन्मात्रं यत्र यत्रास्ति तत्र तत्रोचितं जगत् || ३० ||
185119
185120 उचितं स्थातुमिति शेषः || ३० ||

चिद्व्योम चास्ति सर्वत्र सर्वं चैतज्जगन्मयम् |
सर्वं ब्रह्ममयं शान्तं जगदित्यपि शब्दितम् || ३१ ||

ब्रह्मैव ब्रह्ममयम् || ३१ ||

यथास्थितमिदं विश्वं तथासंस्थमनामयम् |
ब्रह्मैव विरवद्यात्म चित्संकल्पपुराकृति || ३२ ||

असंभवादन्ययुक्तेर्युक्तिरेषैव शोभना |
अयुक्त्यनुभवं तूक्तं नार्थिनामिह शोभते || ३३ ||

अर्थिनां पुरुषार्थेच्छूनां श्रोतृणां पुरत इति शेषः || ३३ ||

लोके शास्त्रेऽथ वेदादौ यत्सिद्धं सिद्धमेव तत् |
सदस्त्वसद्वात्मनि तद्धातुं शक्यं न वा क्वचित् || ३४ ||

मत्प्रमाणयुक्त्यनुभवसिद्धं तत्सिद्धमेव न हातुं शक्यम् | तथा च सदिति
वेदादिसिद्धं ब्रह्म तथैवाभ्युपगन्तव्यम् असदिति सिद्धं द्वैतं
तथैवाभ्युपगन्तव्यमित्यर्थः || ३४ ||

तदेवेत्थं परिज्ञातं ब्रह्मतामुपगच्छति |
यदा तेन समं विश्वं स्थितमेव विलीयते || ३५ ||

तत्पूर्वमब्रह्मेति गृहीतं विश्वमित्थं परिज्ञातं ब्रह्मतामुपगच्छति | कदा |
यदा तेन चरमसाक्षात्कारवृत्तिरूपेण ज्ञानेन समं स्थितमेव विलीयते तदा || ३५ ||

न्यायेनैतदिहोक्तेन लोकवेदादि सिध्यति |
सर्वं स जीवन्मुक्तत्वमेष एवोचितस्ततः || ३६ ||

त्वयार्थो देहशब्दस्येत्यादिना एतदन्तेन मदुक्तेन न्यायेन सजीवन्मुक्तत्वं
जीवन्मुक्तिसहितं लोकवेदादि सर्वं जगदेतद्ब्रह्मैव सिध्यति तस्मादेष एव मदुक्तो
न्यायः परमपुरुषार्थोपायत्वादुपादातुमुचित इत्यर्थः || ३६ ||

परिज्ञातं चिदाकाशमपरिज्ञातपादपे |
सोऽहं त्रिजगदित्येव बन्धमोक्षविनिर्णयः || ३७ ||

अस्मिन् अपरिज्ञातात्ममात्ररूपसंसारलक्षणे पादपेऽश्वत्थवृक्षे परिज्ञातं
चिदाकाशमेव न ततोऽन्यदणुमात्रमप्यस्ति सः अपरिज्ञातः परिज्ञातश्च
चिदाकाशोऽहमेव त्रिजगत् बन्धो मोक्षश्च पर्यायेणेति विनिर्णय इत्यर्थः || ३७ ||

यथास्थितमिदं दृश्यं परिज्ञानाद्विलीयते |
तज्ज्ञस्यास्तंगतस्यैव शिलामौनं तु शिष्यते || ३८ ||

परिज्ञातमात्रत्वं कथं मोक्षस्तत्राह - यथास्थितमिति | तज्ज्ञस्य स्वरूपमिति
शेषः | दृश्यात्मना अस्तंगतस्य दृङ्मात्रं वागाद्यगम्यमवशिष्यत
इत्यर्थः || ३८ ||

लोके शास्त्रे च वेदे च यत्सिद्धं सिद्धमेव तत् |
संवेद्यते तदेवातस्तदेवं फलति स्फुटम् || ३९ ||

लोके जीवन्मुक्तजने यत्सिद्धं विचारशतैः परिनिष्ठितं तदेव स्वानुभवेनापि

185173 संवेद्यते। अतस्तदेवं परमपुरुषार्थभावेन फलति॥ ३९॥
185174
185175 सकलार्थनिरासेन यद्यत्संवेद्यते चिरम्।
185176 तदेव प्राप्यतेऽवश्यं सर्वत्रैवान्यभावितम्॥ ४०॥
185177
185178 तत्प्राप्तावितरार्थमात्रत्यागेन तदेकनिष्ठतैवोपायस्तेन वावश्यं तत्प्राप्यत
185179 इत्याह - सकलार्थेति। सर्वत्र लौकिकेऽपि कार्ये अन्यदपि भावितं तथैवेत्यर्थः॥ ४०॥
185180
185181 यथानुभूतं यत्तत्तथा नामानुभूयते।
185182 तत्सत्यमस्त्वसत्यं वा यावल्लाभं तथा नु तत्॥ ४१॥
185183
185184 तत्र लौकिककार्यमसत्यं मोक्षाख्यं तु सत्यमित्यवान्तरवैलक्षण्यमस्तु नाम
185185 साधनोद्योगतत्फलानुभवे च न विशेष इत्याशयेनाह - यथेति॥ ४१॥
185186
185187 इत्थं महाप्रश्नविचारणं ते मयेदमुक्तं मतिमन्महात्मन्।
185188 अनेन गच्छाशु पथा निराधिर्निरामयो निर्व्यसनो भवोच्चैः॥ ४२॥
185189
185190 हे मतिमन् हे महात्मन् इत्थं मया ते महाप्रश्नानां विचारणं
185191 विचारफलनिर्णयरूपं समाधानमुक्तम्। त्वमनेन पथा गच्छ। तेन आशु मनसि
185192 निराधिर्देहे निरामय इन्द्रियेषु निर्व्यसनो भूत्वा उच्चैः सर्वोत्कृष्टो भवेत्यर्थः॥
185193 ४२॥
185194
185195 इत्यार्षे श्रीवा० वा० दे० मो० नि० उ० द्वैतैक्योपलम्भनिरासेन
185196 महाप्रश्नोत्तरवाक्यसमाप्तिर्नाम दशाधिकद्विशततमः सर्गः॥ २१०॥
185197
185198 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
185199 महाप्रश्नोत्तरवाक्यसमाप्तिर्नाम दशाधिकद्विशततमः सर्गः॥ २१०॥
185200
185201
185202 एकादशाधिकद्विशततमः सर्गः २११
185203
185204 श्रीवसिष्ठ उवाच।
185205
185206 इति तत्रोपविश्याहं पूजितस्तेन भूभुजा।
185207 प्रयोजनं स्वं संपाद्य स्वर्गन्तुं गगनं प्लुतः॥ १॥
185208
185209 सिद्धसाध्यादिलोकौघदर्शनोपायसंयुतम्।
185210 वर्ण्यतेऽत्र पुनः स्पष्टं ब्रह्मैव सकलं जगत्॥
185211
185212 तत्र कुशद्वीपे इलावप्त्याख्यायां पुरि। तेन प्रज्ञप्त्याख्येन भूभुजा। स्वं
185213 प्रयोजनं तदनुग्रहलक्षणम्॥ १॥
185214
185215 अद्यैतद्भवता प्रोक्तं मया मतिमतां वर।
185216 अनया सुदृशा शान्तमनाः स्वात्मा भविष्यसि॥ २॥
185217
185218 अय्द एतस्यामयोध्यायां भवता विद्यमानेन मया॥ २॥
185219
185220 ब्रह्मैव तदिदं सर्वं निर्नामैवामलं नभः।
185221 किमप्येवाजमाशान्तमादिमध्यान्तवर्जितम्॥ ३॥
185222
185223 निर्नाम निःशब्दं नभ एव॥ ३॥
185224

185225 चिद्धानमात्रमित्युक्तं ब्रह्मेति कलिताभिधम् ।
185226 परात्परमिति प्रोक्तं तत्तु निर्नामकं पदम् ॥ ४ ॥
185227
185228 ब्रह्मेत्यपि कल्पनया कलिताभिधं न वस्तुतः कूटस्थे
185229 बृहधात्वर्थवृद्ध्यादेरयोगादित्यर्थः ॥ ४ ॥
185230
185231 श्रीराम उवाच ।
185232
185233 सिद्धसाध्ययमब्रह्मविद्याधरदिवौकसाम् ।
185234 ब्रह्मन्कथय दृश्यन्ते लोका लोकधराः कथम् ॥ ५ ॥
185235
185236 लोकास्तत्रत्या जनास्तेषां धरा आधारभूताः कथं केनोपायेन दृश्यन्ते ॥ ५ ॥
185237
185238 श्रीवसिष्ठ उवाच ।
185239
185240 सिद्धसाध्ययमब्रह्मविद्याधरदिवौकसाम् ।
185241 अन्येषामपि भूतानामपूर्वाणां महात्मनाम् ॥ ६ ॥
185242
185243 प्रतिरात्रं प्रतिदिनं पुरः पश्चादुपर्यधः ।
185244 पश्यस्यालोकय&ल्लोकानपश्यंश्च न पश्यसि ॥ ७ ॥
185245
185246 आलोकयन् चूडालोपाख्यानोक्तधारणाविशेषैः पश्यन्सन् पश्यसि द्रक्ष्यसि ॥ ७ ॥
185247
185248 एते लोकाः किलैतेषां नाभ्यासः स्थानदूरगाः ।
185249 एते संकल्पलोकाख्या व्याप्तमेभिः किलाखिलम् ॥ ८ ॥
185250
185251 द्विविधा हि सिद्धलोका य एते महर्जनस्तपःसत्याख्यास्ते स्थानतो दूरगाः । ये त्वेते
185252 सर्वत्र संचरतां सिद्धानाम् स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः
185253 समुत्तिष्ठन्ति तेन पितृलोकेन संपन्नो महीयते इत्यादिश्रुतिसिद्धाः
185254 संकल्पलोकाख्याः एभिरखिलं विश्वं व्याप्तं सर्वत्र सन्ति । द्विविधानामपि
185255 दर्शने धारणाभ्यासः कारणं स च ते नास्तीत्यर्थः ॥ ८ ॥
185256
185257 यथैते कल्पनालोका अयं लोकस्तथैव नः ।
185258 यथा काल्पनिको वातो लोकालोकास्तथैव ते ॥ ९ ॥
185259
185260 तर्हि किं मया तद्दर्शनाय धारणाभ्यासः कार्यः न कार्यस्तेषामसारत्वादिति
185261 दर्शयति - यथेत्यादिना । यथैव तेषां ते कल्पनात्मका लोकास्तथैवायं
185262 नोऽस्माकमयं लोकः कल्पनामात्रसिद्धः । यथा काल्पनिकोऽपि वातः सर्वत्र भ्रमति
185263 तथा ते भ्रमन्ति अयं तु न तथेत्येतावानेव विशेष इत्यर्थः ॥ ९ ॥
185264
185265 संकल्पस्वप्नलोका ये तव भान्ति दिवानिशम् ।
185266 त एव तादृशाश्चान्ये संकल्पेन स्थिरीकृताः ॥ १० ॥
185267
185268 तव संकल्पस्वप्नलोका ये भान्ति त एव ते सिद्धलोकाः प्रसिद्धास्तादृशा अन्ये च
185269 लोकास्तैर्निर्माय संकल्पेनैव स्थिरीकृताः ॥ १० ॥
185270
185271 ध्यानेन त्वमपीतांश्चेत्स्थिरतां सुस्थिरात्मना ।
185272 नयस्याशु तदेवैते स्थिरतां यान्त्यविघ्नतः ॥ ११ ॥
185273
185274 एवं च त्वमपि यदि योगधारणास्थिरीकृतेन ध्यानेन इतान् स्वसंकल्पप्राप्तान् लोकान्
185275 स्थिरतां नयसि तदा एतेऽपि स्थिरतां यान्ति ॥ ११ ॥
185276

185277 यथाभिमतविस्तारा यथाभिमतसंपदः।
185278 संकल्पभाववलितो जनह्। पश्यति सिद्धवत्॥ १२॥
185279

185280 एवमन्योपि दृढतरध्यातृसंकल्पभावेन वलितश्चेत्सोऽपि सिद्धवदेव
185281 तान्स्थिरान्पश्यति॥ १२॥
185282

185283 किंतु ते स्थिरतां नीताः सिद्धैः स्वर्यानसंपदा।
185284 अस्थिरैर्ध्यानविश्रान्तौ तैर्दुःखैस्तदमी कृताः॥ १३॥
185285

185286 किंत्वेतावान्विशेषह् - तैः सिद्धैः स्वः स्वर्गान् सिद्धलोकान् यान्ति यथा
185287 तथाविधया प्राक्तनधर्मसंपदा ते लोकाः स्थिरतां नीता इत्यनायाससिद्धास्तेषाम्।
185288 यैस्त्वन्यैरनित्यैरिदानींतनधारणाभ्यासैर्ध्यानविश्रान्तौ यत्यते तैर्दुःखैः
185289 श्रमैरमी लोकाः स्थिरीकृताः स्युरिति॥ १३॥
185290

185291 जगदप्रतिघं सर्वं शान्तचिद्योम सर्वदा।
185292 यथा दृढं संविदितं तथैवाभाति नान्यथा॥ १४॥
185293

185294 संविदितं निश्चितम्॥ १४॥
185295

185296 न भात्येवासंविदितमस्ति नास्ति न चोद्यता।
185297 शून्यं ह्यप्रतिघं चैतत्पराकाशमरोधकम्॥ १५॥
185298

185299 यतस्तत्रासंविदिते अस्ति नास्तीति वा चोद्यता तर्कविषयता नास्ति॥ १५॥
185300

185301 चित्स्वभावतया भातं भारूपमिव दृश्यते।
185302 अस्मिंश्चिदभिमानश्च विद्यते न स्वभावतः॥ १६॥
185303

185304 कुतः शून्यमप्रतिघं च तत्तत्राह - चित्स्वभावतयेति। यदृदृढसंवेदनेन
185305 भातं तच्चित्स्वभावतया भारूपमिव भासमानं दृश्यते। अस्मिंस्त्वसंविदिते
185306 स्वभावतश्चिदभिमानश्चित्सत्तास्फूर्तिव्याप्तिर्यतो न विद्यते इत्यर्थः॥ १६॥
185307

185308 कार्यकारणभावाच्चेत्कथैवात्र न विद्यते।
185309 व्योम्नोऽनन्तस्य सिद्धस्य किं कथं किल जायते॥ १७॥
185310

185311 कारणसत्ताबलादेव तत्सत्तान्या भविष्यतीति तु न शङ्क्यमेव निरस्तत्वादित्याह -
185312 कार्येति। सर्गादौ प्रलयत्वाद्योम्नः॥ १७॥
185313

185314 यच्च जातमिवाभाति व्योम्नि व्योमैव तत्तथा।
185315 तत्रैकद्वित्वकलना कीदृशी स्यादरूपिणी॥ १८॥
185316

185317 यच्च जातमिवाभाति भूतभुवनादि तत्तु व्योम्नि व्योमैव जातमिवाभातीति
185318 तत्रैकत्वद्वित्वकलनापि दुर्लभा दूरे कार्यकारणभाव इत्यर्थः॥ १८॥
185319

185320 तद्धि यादृशमेवासीत्तादृगेवावतिष्ठते।
185321 निर्विकारं यथा स्वप्ने व्योमैवाचलवद्भवेत्॥ १९॥
185322

185323 तर्हि ब्रह्मैव कारणमस्तु तत्राह - तद्धीति। विवर्ताधिष्ठानमेव न विकारीति न
185324 कारणमित्यर्थः॥ १९॥
185325

185326 संकल्पे चित्तमाकारं यथोदेत्यद्रिलीलया।
185327 न च सोऽद्रिर्न तद्योम तथा ब्रह्म जगत्स्थितिः॥ २०॥
185328

185329 आकारं कल्पयित्वेति शेषः ॥ २० ॥
185330
185331 काष्ठवन्मौनमास्थाय रटन्तोऽपि महाधियः ।
185332 इह व्यवहरन्त्येते बुधा दारुनरा इव ॥ २१ ॥
185333
185334 अत एव स्वदृष्ट्या निर्व्यापारा एव जीवन्मुक्ता व्यवहरन्त इव भान्ति न वस्तुत इत्याह
185335 - काष्ठवदिति ॥ २१ ॥
185336
185337 यथा वारिणि वर्तन्ते तरङ्गावर्तवृत्तयः ।
185338 अनन्याः परिवर्तन्ते तथा ब्रह्मणि सृष्टयः ॥ २२ ॥
185339
185340 यथा वायौ परिस्पन्दा यथा व्योमनि शून्यता ।
185341 अनन्याश्चाप्यमूर्ताश्च तथा ब्रह्मणि सृष्टयः ॥ २३ ॥
185342
185343 यथा संकल्पनगरं शून्यमेव पुरं स्थितम् ।
185344 साकारमप्यनाकारं ब्रह्मणीदं तथा जगत् ॥ २४ ॥
185345
185346 चिरानुभूतमप्यर्थकार्यपीदं जगत्त्रयम् ।
185347 शून्यमेव निराकारं संकल्पनगरं यथा ॥ २५ ॥
185348
185349 अर्थकारि लौकिकवैदिककार्यसमर्थमपि ॥ २५ ॥
185350
185351 यदेव चित्तसंकल्पस्तदेव नगरं यथा ।
185352 तदा तथायं ब्रह्माच्छं तदेव जगदुच्यते ॥ २६ ॥
185353
185354 तदा संकल्पनगरव्यवहारकाले । तथा अयं परिदृश्यमानः संसारोऽपि ॥ २६ ॥
185355
185356 चिरं नित्यानुभूतोऽपि जगदर्थो न किंचन ।
185357 विद्यते पुरुषस्येन स्वप्ने स्वमरणं यथा ॥ २७ ॥
185358
185359 स्वप्ने पुंसा मृतेनापि स्वदाहो दृश्यते यथा ।
185360 असदेव सदाभासं जगद्दृष्टं परे तथा ॥ २८ ॥
185361
185362 जगत्ता चाजगत्ता च परस्यैवामलं वपुः ।
185363 पराभिधानं च परं न च सत्परमार्थतः ॥ २९ ॥
185364
185365 यत्परमन्यद्रज्ज्वादि पराभिधानं सर्पाद्यभिधानगोचरो भवति तत्परमार्थतः
185366 सन्न ॥ २९ ॥
185367
185368 इत्थमस्तु यदि वान्यथास्तु वा मैव भूद्भवतु कोऽत्र संभ्रमः ।
185369 मुञ्च फल्गुनि फले फलग्रहं बुद्धवानसि कृतं परिश्रमैः ॥ ३० ॥
185370
185371 हे राम सिद्धलोकभोगादिफलमित्थं मद्वर्णितप्रकारेणैव कल्पनामात्रमस्तु । यदि
185372 वा अन्यथा अन्यैर्मुनिभिर्वर्णितप्रकारेणान्यादृशमेव वास्तु । मैवाभूत्तथापि ते
185373 जीवन्मुक्तस्य अत्र कः संभ्रम आदरः । फल्गुनि सिद्ध्यदिफले फलग्रहं
185374 पुरुषार्थताबुद्धिं मुञ्च । यतस्त्वं ब्रह्मतत्त्वं बुद्धवानसि अतस्ते
185375 मायामात्ररूपसिद्धलोकवैभवप्रिज्ञानश्रमैः कृतं अलम् । साध्यं
185376 नास्तीत्यर्थः ॥ ३० ॥
185377
185378 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० नि० उ० परमार्थोपदेशो
185379 नामैकादशाधिकद्विशततमः सर्गः ॥ २११ ॥
185380

इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
परमार्थोपदेशो नामैकादशाधिकद्विशततमः सर्गः ॥ २११ ॥

द्वादशाधिकद्विशततमः सर्गः २१२

श्रीवसिष्ठ उवाच ।

चित्त्वाद्ब्रह्मखमेवाहमिति वेत्तीव यत्स्वयम् ।
तदेव परमेष्ठित्वं तस्योदरमिदं जगत् ॥ १ ॥

ब्रह्माहंभावकलना परमेष्ठी जगल्लयम् ।
तत्संकल्पमयं तस्माद्ब्रह्मैवेत्यत्र वर्ण्यते ॥

ब्रह्मणि प्रथमं समष्ट्यहंकारात्मा हिरण्यगर्भ इव कल्पनात्तदुदरे च
व्यष्टिजीवजगत्कल्पनेति सर्वं ब्रह्मविवर्तमात्रमापातदर्शनसिद्धं
परमार्थदृष्टौ न हिरण्यगर्भो जीवो जगद्वा किंचिदस्ति ब्रह्मैव केवलं
नित्यनिर्मलसच्चिदानन्दैकरसं पूर्णमवतिष्ठत इति सर्ववेदान्तनिष्कृष्टार्थमन्ते
वर्णयितुमुपक्रमते - चित्त्वादिति । ब्रह्मखं स्वयमेव
प्रथममहमित्यहंकारसमष्ट्।यात्मानं वेत्तीव तत्तादृशवेदनमेवास्य
परमेष्ठित्वं हिरण्यगर्भता ॥ १ ॥

एवं स्थिते न च ब्रह्मा न च जातं जगत्स्थितम् ।
स्थितं यथास्थितमजं परं ब्रह्मैव पूर्ववत् ॥ २ ॥

न च मायिकेन तावन्मात्रापराधेन ब्रह्म अब्रह्म भवतीति हिरण्यगर्भादि
किंचिदन्यन्नासीदेवेत्याह - एवं स्थिते इति ॥ २ ॥

संवित्तौ तु जगद्रूपं भासतेऽप्येवमेव तत् ।
मृगतृष्णेव मिथ्यैव दृश्यमानमपि त्वसत् ॥ ३ ॥

यदि नासीदेव तर्हि संवित्तौ कथं भासते तत्राह - संवित्ताविति । एवमेव
प्रातिभासिकमेव् सत् न परमार्थसत् ॥ ३ ॥

अतः प्रभृति शून्येयं भ्रान्तिरभ्युदिता नवा ।
कुतः केव किल भ्रान्तिर्ब्रह्मैव तदनामयम् ॥ ४ ॥

अतः सर्गकालात्प्रभृति भ्रान्तिरभ्युदिता अथवा सापि नाभ्युदितैव ॥ ४ ॥

जगद्ब्रह्मजलावर्तौ द्वित्वैकत्वे किलात्र के ।
क्वावर्तपयसोर्द्वित्वं द्वित्वाभावात्क्व चैकता ॥ ५ ॥

अस्तु नाम जगदनिर्वचनीयो ब्रह्मधर्मस्तथापि न क्षतिरित्याह - जगदिति ॥ ५ ॥

तद्ब्रह्म घनमाशान्तं चित्त्वाच्चेतत्यहं विदत् ।
निजं शून्यत्वमन्तस्थं व्योमेव विततान्तरम् ॥ ६ ॥

चित्त्वात्परप्रथास्वभावात् । अहमित्यहंकारसमष्ट्यात्मतां विदत् ॥ ६ ॥

पवनः स्पन्दनमिव हुताशन इवोष्णताम् ।
स्वशैत्यमिव पूर्णेन्दुः सत्तामर्थ इवात्मनः ॥ ७ ॥

185433 ब्रह्मैवात्मना अर्थ इव सत्तां चेतति ॥ ७ ॥
185434
185435 श्रीराम उवाच ।
185436
185437 एतद्ब्रह्मन्कदा नाम तन्न चेतितवन्मुने ।
185438 निरावृतमनाद्यन्तं किमिदानीं प्रचेतति ॥ ८ ॥
185439
185440 यदि स्वरूपचैतन्यमेवाभिप्रेत्य अर्थ इव चेततीत्युच्यते तर्हि तत्सदैवास्तीतीदानीं
185441 प्रचेततीति किमुच्यते इति रामः पृच्छति - एतदिति । एतदहमादि कदा च चेतितवत् ।
185442 यतः सदैव निरावृतं निरावरणमनाद्यन्तं नित्यं च तदिदानीं
185443 सर्गादिकालमारभ्य प्रचेततीति किमुच्यत इत्यर्थः ॥ ८ ॥
185444
185445 श्रीवसिष्ठ उवाच ।
185446
185447 एवमेतत्सदैवैतदहमाद्यपि चेतति ।
185448 न ह्यनादेरजस्यास्य काप्यपेक्षा स्वसंविदा ॥ ९ ॥
185449
185450 सत्यम् यौक्तिकदृशा सदैव वाहमादिस्वतत्त्वं च प्रचेतति तथा च
185451 सर्गासर्गोभयरूपं ब्रह्मदृष्टिद्वयप्रामाण्ये पर्यवस्यति तथापि दृष्टिद्वये
185452 विषयसत्त्वासत्त्वकृतमन्तरमस्तीति प्रामाण्येन
185453 तुल्यमित्याशयेनाभ्युपगम्येवोत्तरमाह - एवमेतदित्यादिना । स्वसंविदा
185454 स्वरूपचैतन्येन विद्यया स्वरूपस्फूर्ताविविद्यया अहमादिस्फूर्तौ चान्यापेक्षा यतो
185455 नास्तीत्यर्थः ॥ ९ ॥
185456
185457 सर्गासर्गनभोरूपं ब्रह्म सर्वत्र सर्वदा ।
185458 न कदाचिदिदं नेदं ज्ञातं नेदं न किंचन ॥ १० ॥
185459
185460 यतः कदाचिदपि अविद्यादृष्टौ नेदं ज्ञातं विद्यादृष्टौ नेदं च किंचन ॥ १० ॥
185461
185462 पवनस्पन्दनं चन्द्रशैत्यं शून्यत्वमम्बरम् ।
185463 ब्रह्माहंत्वमनन्यात्म न कदाचिन्न चेतति ॥ ११ ॥
185464
185465 मिश्रदृष्टौ तर्हि कीदृशं चेतति तदाह - पवनेति ॥ ११ ॥
185466
185467 सर्वदैवेदृशी सत्ता न कदाचिदनीदृशी ।
185468 जगद्यस्मादनाद्यन्तं ब्रह्मात्मैव निरामयम् ॥ १२ ॥
185469
185470 सर्वदैवेति । विपश्चिदुपाख्यानोक्तन्यायेन सर्वजीवसंसारोच्छेदकालाप्रसिद्धेरिति
185471 भावः ॥ १२ ॥
185472
185473 केवलं त्वमबुद्धत्वाच्छब्दश्रवणवेधितः ।
185474 अद्वये ब्रह्मबोधेऽस्मिन्द्वितामभ्युपगच्छसि ॥ १३ ॥
185475
185476 इमां मिश्रदृष्टिमपि तव बोधानुवृत्तिपर्यन्तमेव
185477 शब्दश्रवणादिव्यवहारसिद्धये त्वमभ्युपैषि चेदभ्युपगच्छ न परमार्थत
185478 इत्याह - केवलमिति । त्वमद्वये ब्रह्मबोधे जातेऽप्यबुद्धत्वादबोधमभ्युपेत्य ।
185479 ल्यब्लोपे पञ्चमी । मदुपदेशशब्दश्रवणे वेधित आसक्तचित्तः सन्
185480 मिश्रदृष्टिलब्धां द्वितां सप्रपञ्चनिष्प्रपञ्चोभयरूपतामभ्युपगच्छसि न
185481 तत्त्वदृशेत्यर्थः ॥ १३ ॥
185482
185483 न कश्चित्किंचिदेवेह न कदाचिन्न चेतति ।
185484 न कश्चिच्च तदन्यात्मा न कदाचिच्च चेतति ॥ १४ ॥

मिश्रदृष्टौ हि सर्वात्मकं ब्रह्म तत्र सर्वान्तर्गतः कश्चिज्जीवः किंचिच्चेतत्येव
चेत्तद्ब्रह्मैव तदात्मना चेततीति तदात्मना सर्वः सर्वं चेतति।
निर्विशेषब्रह्मात्मना च कश्चित्किंचिदपि न कदाचन चेतति॥ १४॥

इदं त्रिभुवनाभासमीदृशं भाती सर्वदा।
शान्तं राम समं ब्रह्म नेह नानास्ति किंचन॥ १५॥

तथा च बद्धदृष्ट्या त्रिभुवनाभासमेव सर्वदा ब्रह्म भाति मुक्तदृष्ट्या नेह
नानास्ति किंचनेति न किंचिद्भातीत्यर्थः॥ १५॥

न कदाचन जायन्ते नभसः पादपाद्रयः।
ब्रह्मणश्च जगन्तीति मत्वा शान्तिं परां व्रज॥ १६॥

तत्र बद्धदृष्टेर्बाधितार्थत्वान्मुक्तदृष्टिरेव त्वया आश्रयणीयेत्याह - न
कदाचनेति॥ १६॥

उपदेश्योपदेशार्थं संदेहावसरेऽल्पधीः।
यावन्न बुद्धस्तावत्त्वं भेदमभ्युपगच्छसि॥ १७॥

यावदुपदेशप्रवृत्तिमिश्रदृष्टिरभ्यनुज्ञाता मयेत्याह - उपदेश्येति।
अभ्युपगच्छसि अभ्युपगच्छ॥ १७॥

बोधस्य तु विदुद्धस्य न शास्त्रादि न शब्दधीः।
न भेदबुद्धिर्नो भेदः किमप्येष प्रजापतेः॥ १८॥

तदुत्तरकालं त्वहंकारतत्संकल्पजगदात्मनः
प्रजापतेर्भेदबुद्धिस्तद्भावबुद्धिश्च तव न भविष्यत्येवेत्यर्थः॥ १८॥

श्रीराम उवाच।

बुद्धमेतन्मया ब्रह्मन्प्रकृतं तदुदाहर।
वचो मदवबोधार्थं यदुदाहृतवानसि॥ १९॥

एतद्ब्रह्मन्कदा नाम इत्यादि यन्मया पृष्टं एतन्मया त्वदुक्तया बुद्धम्।
प्रकृतं समष्ट्यहंकाराद्यध्यासं निरूपयितुं प्रस्तुतं
यन्मदवबोधार्थं वचस्तदुदाहर निरूपयेत्यर्थः॥ १९॥

किं तस्मिंश्चेतितेऽहंत्वे पदे संपद्यते परे।
बुद्धवानसि शुश्रूषुर्नाहं तृप्तिमुपैमि हि॥ २०॥

तदेव स्मारयन्पृच्छति - किमिति। तस्मिन्परे पदे अहंत्वे चेतिते सति अग्रे किं
संपद्यते। त्वं सर्वज्ञत्वात्सर्वं बुद्धवानसि। अहं च त्वद्वचनशुश्रूषुर्न
तृप्तिमुपैमि अतो वदेत्यर्थः॥ २०॥

श्रीवसिष्ठ उवाच।

अहंत्वे सत्यथैतस्मिन्व्योमसत्ता प्रवर्तते।
दिक्सत्ता कालसत्ता च भेदसत्ताभ्युदेति च॥ २१॥

व्योमसत्ता आकाशाध्यासः। भेदसत्ता त्रिविधपरिच्छेदाध्यासः॥ २१॥

185537 यदा किलेहाहमिति तदा नात्राहमित्यपि |
185538 भातीत्युदेति नाना खे स्वात्मैव द्वैतमक्रमम् || २२ ||
185539
185540 अहंकाराध्यासस्य परिच्छेदाध्यासहेतुतामुपपादयति - यदेति | यदा अस्य इह
185541 देहादौ अहमिति भाति तदा देहशून्यस्थले अत्र नाहमित्यप्यवश्यं भाति स
185542 देशकृतपरिच्छेदः | इत्यनया रीत्या नानाविधः कालकृतपरिच्छेदो
185543 वस्तुकृतपरिच्छेदश्चेति स्वात्मैव अक्रमं द्वैतं भूत्वा उदेति || २२ ||
185544
185545 व्योमात्मिकानामेतासां सत्तानामभिधानधीः |
185546 भविष्यत्युत्तरं कालं तदा त्वाकाशमेव तत् || २३ ||
185547
185548 ततः परस्परव्यावर्तकजातिगुणक्रियादिप्रवृत्तिनिमित्तभेदकल्पनाप्रयुक्तो
185549 नामभेदाध्यासो भविष्यतीत्याह - व्योमात्मिकानामिति | एतासामुक्तानां
185550 पदार्थभेदसत्तानामभिधानधीर्वाचकशब्दाध्यासः || २३ ||
185551
185552 एतस्मिन्परिसंपन्ने दिक्कालकलनात्मनि |
185553 अहंभावे निराकारे व्योम तन्मात्रवेदिनि || २४ ||
185554
185555 तत्राहंकारावच्छेदेन जीवसाक्षिभेदेष्वावरणाभावात्स्वाभाविकचिदभिव्यक्तौ
185556 तत्राध्यस्तजगदाकारेण ब्रह्मैव अब्रह्मैव भास्यतीत्याह -
185557 एतस्मिन्नित्यादिद्वाभ्याम् || २४ ||
185558
185559 इदमाभाति भारूपं वेदनं दृश्यनाम यत् |
185560 भूत्वा ब्रह्मैव निर्बाधमब्रह्मेव विराजते || २५ ||
185561
185562 ब्रह्मैव शान्तमजमेकमनादिमध्यं व्योमैव जीवकलनामिव भावयित्वा |
185563 व्योम्न्येव पश्यति निरावरणे विसारि दृश्यं स्वरूपमपि चान्यदिवाऽऽत्मवित्त्वात्
185564 || २६ ||
185565
185566 तदेव स्पष्टमाह - ब्रह्मैवेति | व्योम जीवजगद्भावशून्यं ब्रह्मैव
185567 जीवकलनामिव भावयित्वा अध्यस्य निरावरणे जीवसाक्ष्याकाशे एव विसारि विस्तृततरं
185568 दृश्यं पश्यति स्वरूपमपि ब्रह्म अन्यदिव पश्यति आ आत्मवित्त्वात्तत्त्वज्ञानोदयं
185569 मर्यादीकृत्येत्यर्थः || २६ ||
185570
185571 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० नि० उ० परमार्थनिरूपणं नाम
185572 द्वादशाधिकद्विशततमः सर्गः || २१२ ||
185573
185574 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
185575 परमार्थनिरूपणं नाम द्वादशाधिकद्विशततमः सर्गः || २१२ ||
185576
185577
185578 त्रयोदशाधिकद्विशततमः सर्गः २१३
185579
185580 श्रीवसिष्ठ उवाच |
185581
185582 यथा यत्पृष्टवानद्य त्वं मामरिनिषूदन |
185583 शिष्येणैव सता पूर्वमहं पृष्टो गुरुस्त्वया || १ ||
185584
185585 वर्ण्यते पूर्वसंवाद इह रामवसिष्ठयोः |
185586 गुरुशिष्याख्यायिकया सर्वं ब्रह्मेति निश्चितः ||
185587
185588 विस्तरेणोपदेशात्करतलामलकवत्साक्षात्कारितमप्यात्मतत्त्वं रामस्य

185589 जन्मान्तरीयस्वोपदिष्टार्थ एव ते पुनरुपदिष्ट इति स्मारणेन स्थूणानिखननन्यायेन
185590 दृढीचिकीर्षुर्भगवान्वसिष्ठः सर्वजगदुपकाराय सर्वशास्त्रार्थसंग्रहरूपां
185591 गुरुशिष्याख्यायिकां शास्त्रान्ते परममङ्गलरूपामुपदेष्टुमारभते -
185592 यथेत्यादिना। हे राम त्वमद्य मां प्रति यज्जगत्तत्त्वमात्मतत्त्वं च यथा
185593 पृष्टवांस्तथा पूर्वमन्यस्मिन् रामजन्मन्यपि अहं गुरुः शिष्येणैव सता त्वया
185594 पृष्टः॥ १॥
185595
185596 पुराकल्पे हि कस्मिंश्चित्तत्त्वमात्मादिकात्मिका।
185597 आसीदित्यं चित्प्रतिभा गुरुशिष्यात्मना वने॥ २॥
185598
185599 संक्षिप्योक्तं विस्तरेणाह - पुरेति। तज्जगत्तत्र त्वं रामः आत्मा अहं वसिष्ठः
185600 आदिपदात्तव निर्वेदो मदभिगमनं प्रश्नश्चेत्येवमादिका इयं चित्प्रतिभा
185601 कस्मिंश्चिद्वने गुरुशिष्यात्मना इदानीमिव आसीदित्यर्थः॥ २॥
185602
185603 गुरुस्तत्राहमभवं शिष्यस्त्वमभवस्तदा।
185604 पृष्टवान्मां त्वमग्रस्थ इदमुद्दामधीरधीः॥ ३॥
185605
185606 इदं वक्ष्यमाणं पृष्टवानसि॥ ३॥
185607
185608 शिष्य उवाच।
185609
185610 सर्वस्य भगवञ्छिन्दि ममेममतिसंशयम्।
185611 किं नश्यति महाकल्पे किं वस्तु न विनश्यति॥ ४॥
185612
185613 सर्वस्य जगतो विषये ममेममुच्यमानमतिशयितं संशयमतिसंशयम्॥ ४॥
185614
185615 गुरुरुवाच।
185616
185617 पुत्र शेषमशेषेण दृश्यमाशु विनश्यति।
185618 यथा तथा स्वप्नपुरं सौषुप्तीं स्थितिमीयुषः॥ ५॥
185619
185620 हे पुत्र यथा स्वप्नपुरं सौषुप्तीं स्थितिमीयुष आत्मनस्तन्मात्रशेषमशेषेण
185621 विनश्यति तथा जगद्दृश्यमपि प्रलये विनश्यतीत्यर्थः॥ ५॥
185622
185623 निर्विशेषेण नश्यन्ति भुवः शैला दिशो दश।
185624 क्रिया कालः क्रमश्चैव न किंचिदवशिष्यते॥ ६॥
185625
185626 नश्यन्ति सर्वभूतानि व्योमापि परिणश्यति।
185627 स सर्वजगदाभासमुपलब्धुरसंभवात्॥ ७॥
185628
185629 सर्वजगदाभाससहितं व्योमाप्यव्याकृते लयात्परिणश्यति उपलभ्यस्य भोग्यस्य
185630 भोक्त्रधीनस्थितिकत्वात्प्रलयकाले उपलब्धुर्भोक्तुरसंभवात्॥ ७॥
185631
185632 ब्रह्मविष्ण्विन्द्ररुद्राद्या ये हि कारणकारणम्।
185633 तेषामप्यतिकल्पान्ते नामापीह न विद्यते॥ ८॥
185634
185635 ब्रह्मादय एव तदा तद्बोद्धारः स्थास्यन्तीत्याशङ्कावारणायाह - ब्रह्मेति।
185636 अतिशयिते कल्पान्ते प्राकृते वैज्ञानिके च प्रलये॥ ८॥
185637
185638 शिष्यते हि चिदाकाशमव्ययस्यानुमीयते।
185639 तत्कालशेषतानेन सर्गानुभवहेतुना॥ ९॥
185640

185641 आत्मशेषं विनश्यतीति यदुक्तं तदुपपादयति - शिष्यते हीति। अव्ययस्य चिद्वस्तुनो
185642 विवर्ते नष्टे चिदाकाशं शिष्यते इत्यनुमीयते। हि
185643 यस्मात्कारणात्स्वाध्यस्तसर्गानुभवहेतुना अनेन चिदात्मनैव
185644 सर्वप्रपञ्चशून्यतत्कालशेषता सिद्ध्यति। तस्यापि नाशे निःसाक्षिकः प्रलय एव न
185645 सिद्ध्येदित्यर्थः॥ ९॥
185646
185647 शिष्य उवाच।
185648
185649 नासतो विद्यते भावो नाभावो विद्यते सतः।
185650 इदं तत्कथमाभोगि विद्यमानं क्व गच्छति॥ १०॥
185651
185652 सतो जगतः असत्तालक्षणो नाश एव न सिद्ध्यतीति शिष्यः शङ्कते - नासत इति॥ १०॥
185653
185654 गुरुरुवाच।
185655
185656 न विनश्यत एवेदं ततः पुत्र न विद्यते।
185657 नासतो विद्यते भावो नाभावो विद्यते सतः॥ ११॥
185658
185659 श्रुतिप्रत्यक्षानुमानस्मृत्यादिसिद्धो जगतो नाशो नापह्नोतुं शक्य इति तद्बलेन
185660 सत्यमेवापातदर्शनप्रसक्तमपहूनूयत इति न दोष इत्याशयेन गुरुः समाधत्ते ##-
185661 नाशप्रसिद्धेः अतो न विद्यत एवेत्यसतोऽस्य भावो नास्तीत्यनुकूलमेतत्त्वयोक्तमित्यर्थः
185662 ॥ ११॥
185663
185664 यत्तु वस्तुत एवास्ति न कदाचन किंचन।
185665 तदभावात्म तद्राम कथं नाम विनश्यति॥ १२॥
185666
185667 यद्वस्तुतोऽस्त्येव तत्किंचन अभावात्म असत् न। तद्भावः सद्भावः कथं नाम
185668 विनश्यत्यसत्त्वमापद्यते॥ १२॥
185669
185670 क्व स्थितं मृगतृष्णाम्बु क्व स्थिरो द्वीन्दुविभ्रमः।
185671 क्व स्थिरा केशदृग्व्योम्नि क्व भ्रान्त्यनुभवः स्थिरः॥ १३॥
185672
185673 आपातदर्शनमात्रेण जगतः सत्ता नावधारयितुं शक्या। बहूनां तथा
185674 दृष्टानां सत्त्वादर्शनादित्याह - क्वेति। स्थिरः अर्थप्रतिष्ठः॥ १३॥
185675
185676 सर्वं दृश्यमिदं पुत्र भ्रान्तिमात्रमसन्मयम्।
185677 स्वप्ने पुरमिवाभाति कथमेतन्न शाम्यति॥ १४॥
185678
185679 शाम्यतीदमशेषेण तथा सर्वत्र सर्वदा।
185680 यथा जाग्रद्विधौ स्वप्नः स्वप्ने वा जागरो यथा॥ १५॥
185681
185682 बाध्यत्वसाधने जाग्रत्स्वप्नयोः परस्परं दृष्टान्तभावः प्रसिद्ध इत्याह -
185683 शाम्यतीति॥ १५॥
185684
185685 यथा स्वप्नपुरं शान्तं न जाने क्वाशु गच्छति।
185686 शान्तं तथा जगद्दृश्यं न जाने क्वाशु गच्छति॥ १६॥
185687
185688 बाधितुं तु क्व गच्छति क्व तिष्ठतिति योगिभिरप्यदर्शनादसत्त्वमेव तस्य
185689 शरणमित्याशयेनाह - यथेति॥ १६॥
185690
185691 शिष्य उवाच।
185692

185693 किमिदं भाति भगवन्न विभाति च किं पुनः।
185694 कस्येदं वस्तुनो रूपं चिद्व्योम्नो वितताकृतेः॥ ७॥
185695
185696 यदि नास्त्येव दृश्यं तर्हि दृश्यवेषेण कंचित्कालं परमार्थतः किं वस्तु
185697 भाति तदेव बोधोत्तरं पुनस्तथा न विभाति च किमर्थमित्यर्थः॥ १७॥
185698
185699 गुरुरुवाच।
185700
185701 चिदाकाशमिदं पुत्र स्वच्छं कचकचायते।
185702 यन्नाम तज्जगद्भाति जगदन्यन्न विद्यते॥ १८॥
185703
185704 कचकचायते शुक्तिरिव स्वचाकचक्येन रजतमिव स्फुरति॥ १८॥
185705
185706 अस्यैतद्वस्तुनो रूपं चिद्व्योम्नो वितताकृतेः।
185707 रूपमत्यजदेवाच्छं यदित्थमवभासते॥ १९॥
185708
185709 अस्यैतदिति। द्वे वाव ब्रह्मणो रूपे मूर्त चैवामूर्तं च इत्यादिश्रुतेरिति भावः॥ १९॥
185710
185711 कचनाकचनं सर्गक्षयात्मास्य निजं वपुः।
185712 व्योमात्म शुक्लकृष्णं स्याद्यथावयविनो वपुह्॥ २०॥
185713
185714 यथा अवयविनो वपुः स्वरूपमवयवभेदभिन्नमिव तद्वच्चेत्यर्थः॥ २०॥
185715
185716 यथायं त्वं सितोदान्तरेक एवादितः कचैः।
185717 तथा ब्रह्मैवमच्छात्म सर्गे सर्गक्षयेऽक्षयम्॥ २१॥
185718
185719 यथा अयं प्रसिद्धस्त्वं सितोदस्य स्वच्छोदकस्य ह्रदस्यान्तः प्रविष्टो
185720 बिम्बप्रतिब्बिम्बभेदक्षयादेक एव। आदितो ह्रदप्रवेशात्पूर्वमपि
185721 बिम्बप्रतिबिम्बभावादिभेदकचनैरप्येक एवाक्षयोदयस्तथा ब्रह्मापि सर्गे
185722 सर्गक्षये चाक्षयोदयमेकमेवेत्यर्थः॥ २१॥
185723
185724 यथा स्वप्ने सुषुप्ते च निद्रैकैवाक्षयानिशम्।
185725 सर्गेऽस्मिन्प्रलये चैव ब्रह्मैकं चितिरव्ययम्॥ २२॥
185726
185727 चितिः चित्स्वभावमव्ययमविकारि॥ २२॥
185728
185729 यथा स्वप्ने जगद्द्रष्टुः शान्तं शाम्यत्यशेषतः।
185730 तद्वदस्मज्जगदिदं शान्तं शाम्यत्यशेषतः॥ २३॥
185731
185732 यथा स्वप्ने प्रसिद्धं जगज्जाग्रत्सुषुप्त्योः शान्तमेव शाम्यति॥ २३॥
185733
185734 तदन्यत्रास्ति खे खाख्यं तथेत्यङ्ग न विद्महे।
185735 अशङ्क्यं परखे त्वेतदस्मच्चिद्व्योम्नि संभवात्॥ २४॥
185736
185737 बाधितमत एव खाख्यं शून्याख्यं तत्स्वाप्नं जगदन्यत्र देशान्तरे तथैव
185738 विद्यते इति तु बोधदृष्ट्या न विद्महे। परेषां पुरुषान्तराणां खे जीवाकाशे
185739 स्यास्यतीति तु अशङ्क्यं शङ्कानर्हम्। कुतः अस्मच्चिद्व्योम्न्येवास्मद्वासनामयस्य
185740 संभवादबाधितदशायामपि परचिद्व्योम्नि प्रसक्त्यभावादित्यर्थः॥ २४॥
185741
185742 यथेहास्मच्चिदाकाशकचनं सर्गसंक्षये।
185743 तथान्यत्संविदाकाशं नैवमित्यत्र का प्रमा॥ २५॥
185744

185745 यद्यस्मदनुभवसिद्धसर्गः प्रबोधबाधितः परसंविदाकाशं विशेत्तदा परस्य
185746 प्रबोधेन शुद्धचिदाकाशकचनं नास्तीत्येव कल्प्यं स्यात् तत्र च कल्पकं
185747 प्रमाणं नास्तीत्याह - यथेति ॥ २५ ॥
185748
185749 शिष्य उवाच ।
185750
185751 एवं चित्तद्यथा स्वप्ने द्रष्टुरन्यः स दृश्यधीः ।
185752 विद्यते तद्वदन्यत्र मन्येऽस्ति जगदादिधीः ॥ २६ ॥
185753
185754 एवमुक्तरीत्यास्मत्संविद्विषयः परसंविदि न भाति चेत् स्वप्नद्रष्टुरन्यो जाग्रत्पुरुषो
185755 यथा स दृश्यधीर्विद्यते तद्वदन्यत्र प्रलयकालेऽपि अन्यत्र पुरुषान्तरे
185756 जगदादिधीरस्तीति मन्ये संभावये ॥ २६ ॥
185757
185758 गुरुरुवाच ।
185759
185760 एवमेतन्महाप्राज्ञ स्वरूपं तु न तज्जगत् ।
185761 चिति भाति स्वरूपं तत्तद्वदेव न भाति च ॥ २७ ॥
185762
185763 अभ्युपगमेन गुरुरुत्तरमाह - एवमेतदिति । अत एव
185764 प्रलयेऽप्यैन्दवजगत्सद्भावदर्शनं धातुः प्राग्वर्णितमिति भावः । यदि जगच्चितः
185765 स्वरूपं स्यात्तदा सर्वसाधारणं स्यात्तत्तु न किंतु चित्यध्यस्तं भाति
185766 तद्द्रष्टॄणामन्येषां तद्वदेव न भाति चेति तत्तदनुसारेण व्यवस्थित।
185767 तत्स्वरूपमित्यथः ॥ २७ ॥
185768
185769 न भाति न च तत्किंचिन्न च तत्किंचिदेव सत् ।
185770 तच्चिदाकाशकचनं के तत्र सदसद्दृशौ ॥ २८ ॥
185771
185772 साधारणं न भातीत्यत एव तन्न किंचित् तुच्छं न तु किंचिदेवं सत् किंतु
185773 तत्तज्जीवचिदाकाशकचनमात्रं तत्र सदसद्दृशौ के ॥ २८ ॥
185774
185775 विद्यते तद्धि सर्वत्र सर्वं सर्वेण सर्वदा ।
185776 न विद्यते च तत्किंचित्सर्वं सर्वत्र सर्वदा ॥ २९ ॥
185777
185778 यदि तु चिदाकाशरूपेण विद्यते इत्युच्येत तदा तज्जगत्सर्वेण प्रकारेण स्वत्र सर्वदा
185779 विद्यते । स्वरूपेण तु न किंचित्कुत्रचित्कदाचिदपि विद्यत इत्यर्थः ॥ २९ ॥
185780
185781 तत्सत्तत्सर्वदा सर्वमसच्चासद्धि वाखिलम् ।
185782 तन्मयं तच्चिदाकाशं न नाशि न च नाशि तत् ॥ ३० ॥
185783
185784 यतस्तद्ब्रह्मैव सदसच्च अतो जगदपि सदसच्च भाति । यतश्चिदाकाशं न नाशि
185785 अतस्तन्मयं जगच्च न नाशि ॥ ३० ॥
185786
185787 यन्नाम सच्चिदाकाशं सर्गप्रलयरूपि तत् ।
185788 तद्दुःखायापरिज्ञातं परिज्ञातं परः शमः ॥ ३१ ॥
185789
185790 यद्यस्मात्तच्चिदाकाशमेव सर्गप्रलयरूपि । तदेवापरिज्ञातं दुःखाय परिज्ञातं
185791 तु परः शमः । सर्वदुःखक्षय इत्यर्थः ॥ ३१ ॥
185792
185793 विद्यते सर्वथैवेदं सर्वं सर्वत्र सर्वदा ।
185794 न विद्यते सर्वथा च सर्वं सर्वत्र सर्वदा ॥ ३२ ॥
185795
185796 तच्च यथा परिज्ञानं ज्ञाज्ञयोः सर्वत्र सर्वदा विद्यते न विद्यते च ॥ ३२ ॥

एष देवो घटः शैलः पटः स्फोटस्तटो वटः।
तृणमग्निः स्थावरं च जंगमं सर्वमेव च॥ ३३॥

तस्यैव सर्वरूपेण सर्वत्र विद्यमानतां प्रपञ्चयति - एष देव इत्यादिना॥ ३३॥

अस्ति नास्ति च शून्यं च क्रिया कालो नभो मही।
भावाभावौ भवो भूतिर्नाशाः पाशाः शुभाशुभाः॥ ३४॥

भवो जन्म॥ ३४॥

तन्नास्त्येव न यन्नाम नित्यमेकस्तथा बहिः।
आदिमध्यमथान्तं तु कालत्रितयमेव च॥ ३५॥

सर्वं सर्वेण सर्वत्र सर्वदैवात्र विद्यते।
सर्वं सर्वेण सर्वत्र सर्वदात्र न विद्यते॥ ३६॥

यदैव। राम सर्वात्म सर्वमेवास्ति सर्वदा।
ब्रह्मात्मत्वात्स्वप्रसंवित्पुरन्यायेन वै तदा॥ ३७॥

ब्रह्मभावेन दर्शने तृष्णादयः सर्वे पदार्थाः प्रत्येकं सर्वकर्तारः
सर्वभोक्तारः सर्वेश्वराश्चेत्येतदपि प्रपञ्चयति - ब्रह्मात्मत्वादित्यादिना॥ ३७
॥

तृणं कर्तृ तृणंन् भोक्तृ ब्रह्मात्मत्वात्तृणं विभुः।
घटः कर्ता घटो भोक्ता घटः सर्वेश्वरेश्वरः॥ ३८॥

सर्वेषामीश्वराणामिन्द्रादीनामीश्वरः॥ ३८॥

पटः कर्ता पटो भोक्ता पटः सर्वेश्वरेश्वरः।
दृशिः कर्ता दृशिर्भोक्ता दृशिः सर्वेश्वरेश्वरः॥ ३९॥

गिरिः कर्ता गिरिर्भोक्ता गिरिः सर्वेश्वरेश्वरः।
नरः कर्ता नरो भोक्ता नरः सर्वेश्वरेश्वरः॥ ४०॥

प्रत्येकं सर्ववस्तूनां कर्ता भोक्ता परात्परः।
अनादिनिधनो धाता सर्वं ब्रह्मात्मकं यतः॥ ४१॥

सर्ववस्तूनां प्रत्येकमेकं वस्तु कर्ता भोक्ता परात्परः श्रेष्ठादपि श्रेष्ठः॥
४१॥

तृणकुम्भादयस्त्वेते स्वया विभुतया विभुः।
एवंरूपा स्थिता रूपं यद्विभातः क्षयोदयौ॥ ४२॥

स्वया प्रत्यगात्मरूपया। यद्यस्मिन् रूपे क्षयोदयौ विभातस्तादृशं सर्वं
रूपमेवंरूपा विभुतैव स्थिता॥ ४२॥

बाह्योऽर्थोस्ति स एवेह कर्ता भोक्ता तथाविधः।
विज्ञानमात्रमेवास्ति कर्तृ भोक्तृ तथाविदाम्॥ ४३॥

उक्तेऽर्थे वादिनामनुभवं संवादयति - बाह्योऽर्थ इति। येषां बाह्यो
विज्ञानातिरिक्तोऽर्थोस्ति तेषां स एव कर्ता भोक्ता च। यथा वैशेषिकसौत्रान्तिकादीनाम्।

185849 येषां तु वादिनां विज्ञानमात्रमेवास्ति तथाविदां तेषां तदेव कर्तृ भोक्तृ च ||
185850 ४३ ||
185851
185852 न कश्चिच्चैव कर्तेह न च भोक्ता तथाविदाम् |
185853 कश्चिदीश्वर एवेह कर्ता भोक्ता तथाविदाम् || ४४ ||
185854
185855 शून्यवादिनां तु तदेवेत्याह - न कश्चिदिति | पाशुपतादीनां
185856 कश्चित्तत्प्रक्रियाप्रसिद्ध ईश्वर एव कर्ता भोक्ता च || ४४ ||
185857
185858 सर्वमेव पदे तस्मिन्संभवत्युत्तमोत्तमे |
185859 विधयः प्रतिषेधाश्च के ते सन्ति न सन्ति के || ४५ ||
185860
185861 एवं मतभेदेपि न वादिनां मध्ये कस्यचिदप्यसंभवदर्थवादित्वं
185862 यतस्तस्मिन्नुत्तमोत्तमे सर्वत्र सर्वशक्तिमति सर्वात्मके पदे सर्वमपि संभवति |
185863 तस्मिन्पदे सर्वतत्तद्वाद्यभिमताः परस्परविलक्षणाः
185864 पदार्थप्रक्रियासाधनानुष्ठानफलादिविधयः परस्परकृतास्तत्प्रतिषेधाश्च
185865 सर्वेऽप्यविरोधेनासंकीर्णाः संभवन्ति | तत्तद्बुद्ध्यवच्छिन्नचैतन्ये
185866 वरशापन्यायेन यथास्वसंकल्पनं व्यवस्थितविवर्तसंभवात् || ४५ ||
185867
185868 शुद्धे द्रष्टेव चिद्व्योम दृश्यतामिव भावयत् |
185869 स्वमात्मानं जगदिति पश्येत्तिष्ठेदनामयम् || ४६ ||
185870
185871 तत्र तत्र चिद्व्योम शुद्धे स्वात्मनि तत्तद्वासनानुसारिदृश्यतामिव भावयत्सत्
185872 द्रष्टेव भूत्वा स्वमात्मानं तादृशं जगदिति पश्यत्तत्र तत्र वस्तुतोऽनामयमेव
185873 तिष्ठेत् स्थातुं शक्तमित्यर्थः || ४६ ||
185874
185875 सर्वा दृशो विधिनिषेधदृशश्च सर्वाः
185876 संकल्पवेदनविशेषसशेषपूर्वाः |
185877 सत्यात्मिकाः सततमेव न चैव सत्या रूपं यथानुभवमत्र यतः स्वरूपम् ||
185878 ४७ ||
185879
185880 हे राम सर्वेषां जीवानां सर्वाः स्वस्वानुभवसिद्धाः पदार्थादिदृशः सर्वाः
185881 परस्परविलक्षणविधिनिषेधदृशश्च
185882 यस्मात्तत्तत्संकल्पतत्तद्वेदनविशेषतत्तदनुभवशेषवासनासहिततत्तत्काम##-
185883 तत्तदर्थक्रियासमर्थत्वात्सत्यात्मिकाः परदृशा तु प्रतीतेरेवाभावान्न चैव सत्याः
185884 शश"षृङ्गकल्पाः | यतः प्रत्यगात्मरूपं यथानुभवमेव जगद्रूपं धत्ते
185885 इति शेषः || ४७ ||
185886
185887 इति त्वया शिष्यतया मदन्तिकाच्छ्रुतं पुरा तेन न चासि बुद्धवान् |
185888 ततोऽनुभूयान्यजगद्भवाद्भवानिहाद्य जातोऽसि तदेव पृच्छसि || ४८ ||
185889
185890 हे राम पुरा पूर्वयुगे त्वया शिष्यतया स्थित्वा गुरोर्मम अन्तिकात् इति
185891 एवंवर्णितरूपमुपदेशनं श्रुतं तेनोपदेशेन त्वं तदा न चासि बुद्धवान् |
185892 ततस्तदनन्तरमबोधदोषादेव पुनर्भवान् पुनर्भवादन्यजगदनुभूय
185893 अद्यास्मिंस्त्रेतायुगे इह दशरथगृहे जातोऽसि | तदेव प्राङ्मां प्रति पृष्टमद्यापि
185894 मां पृच्छसि || ४८ ||
185895
185896 ज्ञानं सदेतदखिलं श्रुतमुत्तमं चित्संसारदीर्घरजनीसितरश्मिबिम्बम् |
185897 जातस्त्वमभ्युदयवानमलैकबोध उत्सार्य मोहमनुतिष्ठ यथागतं त्वम् ||
185898 ४९ ||
185899
185900 अत्रापि त्वया मदुपदिष्टमुत्तमं सत् परमार्थवस्तुगोचरमत एव संसारलक्षणाया

185901 दीर्घरजन्यास्तापतमोनिवर्तकत्वात्सितरश्मेः पूर्णचन्द्रस्य बिम्बमिव स्थितं
185902 ज्ञानमखिलं समग्रं श्रुतं तेन त्वं मोहमज्ञानमुत्सार्य
185903 निरतिशयानन्दरूपपरमपुरुषार्थलाभाभ्युदयवान् अमलैकबोधरूपो जातः एवं
185904 कृतकृत्यस्त्वमतःपरं यथागतं व्यवहारपरंपराप्राप्तं
185905 स्वराज्यपरिपालनादिकमनुतिष्ठ ॥ ४९ ॥
185906
185907 तिष्ठंस्तदात्मनि परे विमलस्वभावे सर्वात्मके तपति सर्वपदार्थमुक्तः ।
185908 निर्वाणशन्तमतिरम्बरकोशकान्तो धर्मेण राज्यमनुपालय तीर्णतृष्णः ॥
185909 ५० ॥
185910
185911 हे राम त्वं विमलस्वभावे तपति सर्वतः प्रकाशमाने सर्वात्मके आत्मनि
185912 सर्वदृश्यपदार्थमुक्तस्तिष्ठन्सन् निर्वाणो निरतिशयानन्दमग्नोऽत्र एव शान्ता
185913 मतिर्यस्य तहाविधः सन्नम्बरकोशमिव कान्तो मनोहरस्तीर्णस्तृष्णः सन् धर्मेण
185914 राज्यमनुपालयेत्यन्ते मङ्गलार्थमाशीः ॥ ५० ॥
185915
185916 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० नि० उ०
185917 प्राक्तनरामशिष्यत्वोपाख्यानं नाम त्रयोदशाधिकद्विशततमः सर्गः ॥ २१३ ॥
185918
185919 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
185920 प्राक्तनरामशिष्यत्वोपाख्यानं नाम त्रयोदशाधिकद्विशततमः सर्गः ॥ २१३ ॥
185921
185922 चतुर्दशाधिकद्विशततमः सर्गः २१४
185923
185924 श्रीवाल्मीकिरुवाच ।
185925
185926 इत्युक्तवत्यथ मुनौ नभसो ननाद वर्षामृताभ्रमिव दुन्दुभिरामरो द्राक् ।
185927 शुक्लिकृताखिलककुब्वदना तुषारवृषोपमा भुवि पपात च पुष्पवृष्टिः ॥ १॥
185928
185929 उपदेशप्रशंसात्र श्रोतृणां कृतकृत्यता ।
185930 दिव्यश्च मानुषश्चान्ते वर्ण्यते सुमहोत्सवः ॥
185931
185932 महतः शास्त्रस्यान्ते देवैर्मनुष्यैश्च कृतं
185933 गुरुद्विजसुरपितृसज्जनपूजनमहोत्स्वलक्षणं मङ्गलं वर्णयिष्यन्वाल्मीकिरुवाच
185934 - इतीत्यादिना । मुनौ वसिष्ठे इति वाक्यमुक्तवति सति अथ आमरः अमरसंबन्धी
185935 दुन्दुभिर्वर्षार्थममृतेन पूर्णमभ्रमिव ननाद । द्राक् सद्यः
185936 शुक्लीकृतान्यखिलानि ककुब्वदनानि दिङ्मुखानि यया अत एव तुषारवर्षोपमा
185937 पुष्पवृष्टिश्च भुवि पपात ॥ १ ॥
185938
185939 किंजल्कजालदिवसान्तघनाङ्गरागा वातावधूतसितकेसरगौरहारा ।
185940 पुष्पोदरोत्थमृदुसीकरशीतलाङ्गा प्राप्ता स्वयं सुरपुरादिव पुण्यलक्ष्मीः
185941 ॥ २ ॥
185942
185943 सा च पुष्पवृष्टिः किंजल्कजालान्येव दिवसान्तघना इव शोणः अङ्गरागो यस्याः ।
185944 तथा पुष्पोदरोत्था मृदवः सीकरा एव शीतलान्यङ्गानि यस्याः । वातावधृताः
185945 सिताः केसरा एव गौरा हाराः यस्यास्तथाविधा । सुरपुरात्स्वयमेवोत्सवदर्शनाय
185946 भुवं प्राप्ता पुण्यलक्ष्मीरिव स्थितेत्युत्प्रेक्षा ॥ २ ॥
185947
185948 कल्पान्तकालकपिकम्पितशुष्कशाखात्स्वर्गद्रुमात्पतितमाशु विडम्बयन्ती ।
185949 तारागणं प्रथितभासमनल्पहासमाशामुखप्रसृतभैरवमम्बरस्था ॥
185950 ३ ॥
185951
185952 पुनः कीदृशी सा पुष्पवृष्टिः । कल्पान्तकाललक्षणो यः कपिर्मर्कटस्तेन

185953 कम्पिताः शुष्काः कल्पद्रुमशाखा दिक्पालपुरलोकभेदरूपशाखाश्च यस्य
185954 तथाविधात्स्रग्गरूपाद्द्रुमादाशु पतितं आशामुखेषु झटिति पातनाय प्रसृतो
185955 भैरवः संहाररुद्रो यस्य तथाविधं प्रथितभासं तारागणमंबरस्था
185956 सतीत्यनल्पहासं यथा स्यात्तथा विडम्बयन्ती तारागणप्रथितहासं भैरवं च
185957 विडम्बयन्तीति वा उत्प्रेक्षा ॥ ३ ॥
185958
185959 सा पुष्पवृष्टिरथ दुन्दुभिनादगर्जत्किंजल्कपुञ्जजलदा शममाजगाम ।
185960 आपूरिताखिलसभा हिमहारिपुष्पपूरेण कौतुकविकासकरीक्षणेन ॥ ४ ॥
185961
185962 दुन्दुभिनादैर्गर्जन् किंजल्कपुञ्जलक्षणो जलदो मेघो यस्यास्तथाविधा हिमवत्
185963 हारिणा मनोहरणपुष्पपूरेण पुष्पप्रवाहेण आपूरिता अखिला सभा यया तथाविधा
185964 अत एव ईक्षणेन दर्शनेन कौतुकविकासस्य आनन्दविस्तारस्य करी सा पुष्पवृष्टिः अथ
185965 शममाजगाम । ईक्षणेन द्रष्टृजननेत्रेण सह कौतुकविकासकरीति वा क्षणेन
185966 शममाजगामेति वा योज्यम् ॥ ४ ॥
185967
185968 तानि दिव्यानि पुष्पाणि यथास्थानमधःस्थिताः ।
185969 वसिष्ठाय नमस्कृत्वा सभ्याः संशोकितां जहुः ॥ ५ ॥
185970
185971 यथास्थानमिति । सर्वोन्नतस्थाने वसिष्ठस्तत्संनिहिते मुनयस्तत्संनिहिते
185972 दशरथरामादयस्तत्सन्निहिते मन्त्रिसामन्तास्तदर्वाङ् नैगमाः प्रजाश्चेत्येवं
185973 क्रमेणाधःस्थिताः सभ्यास्तानि दिव्यानि पुष्पाण्युपादाय वसिष्ठचरणे
185974 पुष्पाञ्जलिं दत्वा वसिष्ठाय नमस्कृत्य
185975 पुष्पसौरभशैत्यादिसंपर्कात्स्वेददौर्गन्ध्यादिसंशोकितां
185976 रोगक्षुत्तृषाश्रमादिप्रयुक्तशोकवत्तां जन्ममरणादिसर्वशोकवत्तां च
185977 जहुस्तत्यजुः ॥ ५ ॥
185978
185979 दशरथ उवाच ।
185980
185981 अहोऽनुसुविशात्मानः संसारवितताकृतेः ।
185982 विश्रान्ताः स्मश्चिरं श्रान्ताः शुद्धा मेघा इवाचले ॥ ६ ॥
185983
185984 संसारलक्षणाद्विततकृतेरतिदीर्घात्कान्ताराच्चिरं श्रान्ता वयं
185985 त्वदनुग्रहोपदेशात् सुविशः सुखेन प्रवेष्टुं शक्य आत्मा येषां तथाविधाः
185986 सन्तस्तस्मिन्नेवात्मनि चिरं विश्रान्ताः स्मः । अहो इत्याश्चर्ये । यथा शुद्धा
185987 जाड्यकाष्र्यनिर्मुक्ताः शरन्मेघा अचले हिमवदादौ विश्राम्यन्ति तद्वत् ॥ ६ ॥
185988
185989 कर्मणामवधिः पूर्णो दृष्टः सीमान्त आपदाम् ।
185990 ज्ञातं ज्ञेयमशेषेण विश्रान्ताः स्मः परे पदे ॥ ७ ॥
185991
185992 किंचास्माकं कर्मणां पुरुषार्थसिद्धये अवश्यकर्तव्यानामवधिः पूर्णः ।
185993 कृतकृत्यतासंपन्न इत्यर्थः । आपदां च सीमान्तः परमावधिर्दृष्टः ।
185994 तत्कुतस्तत्राह - ज्ञातमिति ॥ ७ ॥
185995
185996 ध्यानलब्धपरव्योमचिरानुभवनभ्रमैः ।
185997 धारणाधारविश्रान्त्या देहसंत्यजनक्रमैः ॥ ८ ॥
185998
185999 सर्वेषां तृतीयान्तपदानां षष्ठश्लोके एवमादिभिरन्यैश्च
186000 दृष्टान्तैर्दृश्यदृष्टिर्मार्जितेत्यत्रान्वयः । ध्यानेन लब्धं कल्पितं
186001 परमन्यद्व्योम तत्र चिरं विहाराद्यनुभवनभ्रमैर्लीलोपाख्यानादौ प्रदर्शितैः
186002 धारणया सर्वाधारे ब्रह्मणि विश्रान्त्या देहसंत्यजनक्रमोऽपि लीलाया वर्णित एव ॥ ८
186003 ॥
186004

186005 संकल्पनवनिर्माणैः स्वप्नदृष्टिजगज्ज्वरैः।
186006 शुक्तिरूप्यानुभवनैः स्वप्नात्ममृतिदर्शनैः॥ ९॥
186007
186008 स्वप्ने आत्मनः स्वस्य मृतिदर्शनैर्हरिश्चन्द्रादौ प्रसिद्धैः॥ ९॥
186009
186010 अनन्यैः पवनस्पन्दैरनन्यैः सलिलद्रवैः।
186011 इन्द्रजालपुरापूरैर्गन्धर्वनगरोत्करैः॥ १०॥
186012
186013 मायापूर्णपुराभोगैर्मृगतृष्णानदीरयैः [मूलपाठे
186014 ह्रस्वत्वमार्षं पुराबोगैरिति वा पाठः साधुः।]।
186015 आयतौ पवनस्पर्शैर्द्विचन्द्रानुभवोदयैः॥ ११॥
186016
186017 मायया प्रदर्शितजलपूर्णपूराभोगैः। आयतौ सर्वोत्तरकाले प्रलये
186018 वर्णितैश्चण्डपवनस्पर्शैः॥ ११॥
186019
186020 मदभ्रंशपुरस्पन्दैर्मुधा त्ववनिकम्पनैः।
186021 बालयक्षाद्यनुभवैः खकेशोण्ड्रकदर्शनैः॥ १२॥
186022
186023 मदाद्विवेकभ्रंशे प्रतीयमानैः पुरस्पन्दैः। मुधा उत्पातादिना
186024 शुभाशुभसूचनं विनैव भ्रान्त्या प्रतीतैरवनिकम्पनैः। खे
186025 केशोण्ड्रकदर्शनैः॥ १२॥
186026
186027 एवमादिभिरन्यैश्च दृष्टान्तैः स्वानुभूतिदैः।
186028 अहो नु मार्जिता दृश्यदृष्टिर्भगवता मम॥ १३॥
186029
186030 श्रीराम उवाच।
186031
186032 नष्टो मोहः पदं प्राप्तं त्वत्प्रसादान्मुनीश्वर।
186033 संपन्नोऽहमहं सत्यमत्यन्तमवदातधीः॥ १४॥
186034
186035 सत्यं ब्रह्मैव संपन्नः॥ १४॥
186036
186037 स्थितोऽस्मि गतसंदेहः स्वभावे ब्रह्मरूपिणि।
186038 निरावरणविज्ञानः करिष्ये वचनं तव॥ १५॥
186039
186040 स्मृत्वा स्मृत्वाऽमृतासेकसौख्यदं वचनं तव।
186041 अर्हितोऽपि च शान्तोपि हृष्यामीव मुहुर्मुहुः॥ १६॥
186042
186043 अर्हितः पूजितः। अपि चेत्यनेनापमानितश्च समदर्शनेन
186044 हर्षविषादानुदयाच्छान्तोऽप्यहं हृष्यामीव॥ १६॥
186045
186046 नैव मेऽद्य कृतेनार्थो नाकृतेनेह कश्चन।
186047 यथा स्थितोऽस्मि तिष्ठामि तथैव विगतज्वरः॥ १७॥
186048
186049 यथा पूर्वं व्यवहारे स्थितोऽस्मि तथैव सांप्रतं तिष्ठामि। विगतज्वरो
186050 व्यवहारप्रसक्तसंतापशून्यः॥ १७॥
186051
186052 उपायस्तु तथा तेन दृष्टिर्वास्तीह कीदृशी।
186053 अहो नु वितता भूमिः कष्टमेतादृशी दशा॥ १८॥
186054
186055 तेन त्वद्वचनेन यादृशो विश्रान्त्युपायो लब्धस्तथा उपायस्तु कोऽन्यः
186056 स्याद्दृष्टिर्वा अन्या कीदृशी स्यात्। अहो नु वितता अपरिच्छिन्ना

186057 विश्रान्तिसुखभूमिर्मया आसादिता एतादृशी
186058 जन्ममरणाद्यन्तानर्थसंकुलसंसारदशा अहो नु कष्टं प्राणिनामित्यर्थः ॥ १८ ॥
186059
186060 न शत्रुर्न च मित्रं मे न क्षेत्रं दुर्जनो जनः ।
186061 दुर्बोधैषा जगत्क्षुब्धा शान्ता सर्वार्थसुन्दरी ॥ १९ ॥
186062
186063 मम् तु दुःखनिमित्तानि कान्यपि न सन्तीत्याह - न शत्रुरिति । क्षेत्रं शरीरं
186064 बाह्यं च । जनः सुजनः । एषा स्वात्मचिदेव यावद्दुर्बोधा तावत्क्षुब्धा दुःखदा
186065 जगदभूत् इदानीं तु बाधात् शान्ता सर्वार्थसुन्दरी संपन्नेत्यर्थः ॥ १९ ॥
186066
186067 कथमेतां जनो वेत्ति विना भवदनुग्रहम् ।
186068 विनैव सेतुं पोतं वा बालोऽब्धिं लङ्घयेत्कथम् ॥ २० ॥
186069
186070 हे भगवन् त्वदनुग्रहं विना एतां दृष्टिं जनः कथं वेत्ति ॥ २० ॥
186071
186072 लक्ष्मण उवाच ।
186073
186074 जन्मान्तरोपचितसंशयनाशनेन जन्मान्तरोपचितपुण्यशतोदितेन ।
186075 जातोऽद्य मे मुनिवचःपरिबोधनेन जातोऽद्य मे मनसि चन्द्र इव प्रकाशः ॥ २१ ॥
186076
186077 जन्मान्तरेष्वनन्तजन्मसूपचितदुर्वासनाप्रयुक्तसंशयानां नाशनेन तथा
186078 जन्मान्तरोपचितानां पुण्यशतानामुदयो बोधफलोन्मुखता येन
186079 तथाविधेनमुनिवचःकृतेन प्रतिबोधनेन जातो विचारोद्यमो यस्मिंस्तथाविधे मे
186080 मनसि अद्य चन्द्र इव परमाह्लादकारी परमात्मप्रकाशो जात इत्यर्थः ॥ २१ ॥
186081
186082 ईदृश्यां दृश्यमानायां दृशि दोषदशाशतैः ।
186083 काष्ठवद्दह्यते लोकः स्वदुर्भगतया तया ॥ २२ ॥
186084
186085 ईदृश्यां निरतिशयानन्दप्रकाशरूपायामात्मदृशि
186086 भवादृशमहानुभावोपदेशान्नित्यापरोक्षतया दृश्यमानायामप्ययं लोको
186087 जनस्तया प्रसिद्धया स्वदुर्भगतया दौर्भाग्यवशेन महत्सेवाशुश्रूषादिहीनः
186088 सन् रागद्वेषाहंकारजन्ममरणादिदोषदशाशतैः काष्ठवद्दिवानिशं दह्यते
186089 तदाश्चर्यमित्यर्थः ॥ २२ ॥
186090
186091 विश्वामित्र उवाच ।
186092
186093 अहो बत महत्पुण्यं श्रुतं ज्ञानं मुनेर्मुखात् ।
186094 येन गङ्गासहस्रेण स्नाता इव वयं स्थिताः ॥ २३ ॥
186095
186096 बतेति हर्षे । साम नो बतेतिवत् ॥ २३ ॥
186097
186098 श्रीराम उवाच ।
186099
186100 संपदामथ दृष्टीनां शास्त्राणामापदां गिराम् ।
186101 देशानामथ दृष्टानां दृष्टः सीमान्त उत्तमः ॥ २४ ॥
186102
186103 संपदामुत्कर्षे सीमान्त आत्मा निरतिशयानन्दरूपत्वात् । दृष्टीनां सीमान्त
186104 आत्मदृष्टिः एकविज्ञानेन सर्वविज्ञानात् । शास्त्राणां सीमान्तोऽध्यात्मशास्त्रं
186105 चरमप्रमाणत्वात् । पशुपुत्रधनादिनाशलक्षणानामापदां सर्वसंसारनाशः
186106 सीमान्तो यदुत्तरमन्यो नाशो नास्ति । काव्यरसालंकारादिशादिनीनां गिरां
186107 वसिष्ठोक्तिः सीमान्तः । दृष्टानां सुखविश्रान्तिहेतूनां
186108 प्रासादारामगिरिनदीपुलिनादिदेशानां परमात्मदेशः

186109 परमविश्रान्तिहेतुत्वात्सीमान्तो दृष्ट इत्यर्थः। सर्वत्र परमात्मैव वा
186110 परमसीमान्त इत्यर्थः॥ २४॥
186111
186112 नारद उवाच।
186113
186114 यन्न श्रुतं ब्रह्मलोके स्वर्गे भूमितले तथा।
186115 कर्णौ तज्ज्ञानमाकर्ण्य यातौ मेऽद्य पवित्रताम्॥ २५॥
186116
186117 लक्ष्मण उवाच।
186118
186119 हार्दं बाह्यं च तिमिरमपमृष्टवता त्वया।
186120 मुने परमभानुत्वं नूनं नः संप्रदर्शितम्॥ २६॥
186121
186122 परमं प्रसिद्धभान्वपेक्षया उत्कृष्टं भानुत्वम्॥ २६॥
186123
186124 शत्रुघ्न उवाच।
186125
186126 निर्वृतोऽस्मि प्रशान्तोऽस्मि प्राप्तोस्मि परमं पदम्।
186127 चिराय परिपूर्णोऽस्मि सुखमासे च केवलम्॥ २७॥
186128
186129 दशरथ उवाच।
186130
186131 बहुजन्मोपलब्धेन पुण्येनायं मुनीश्वरः।
186132 धीरः कथितवान्नस्तद्येन पावनतां गताः॥ २८॥
186133
186134 नः अस्मभ्यं तत्परमपावनं वस्तु शास्त्रं वा कथितवान्। येन पावनतां गता
186135 वयमिति शेषः॥ २८॥
186136
186137 श्रीवाल्मीकिरुवाच।
186138
186139 इति तेषु वदत्स्वत्र सभ्येषु सह भूभृता।
186140 वसिष्ठः स उवाचेदं ज्ञानपावनया गिरा॥ २९॥
186141
186142 राजन् रघुकुलैकेन्दो यदहं वच्मि तत्कुरु।
186143 इतिहासकथान्ते हि पूजनीया द्विजातयः॥ ३०॥
186144
186145 इदानीं श्रीवसिष्ठो मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि
186146 प्रथन्ते वीरपुरुषकाण्यायुष्मत्पुरुषकाणि च भवन्ति अध्येतारश्च मङ्गलयुक्ता
186147 यथा स्युः इति महाभाष्ये भगवत्पतञ्जलिनोदाहृतां श्रुतिमनुसृत्य निर्विघ्नं
186148 समाप्तस्य महतः शास्त्रोक्तफलसिद्धये
186149 ब्राह्मणदेवपितृसुजनपूजोत्सवादिमङ्गलमौचित्यज्ञापनमुखेनाज्ञापयति ##-
186150
186151 तदद्य ब्राह्मणौघांस्त्वं सर्वकामैः प्रपूरय।
186152 वेदार्थसमनुष्ठानफलं प्राप्स्यसि शाश्वतम्॥ ३१॥
186153
186154 वेदार्थः प्रकृते श्रवणविध्यर्थस्तस्य सम्यगनुष्ठानं साङ्गतया
186155 निष्पादनम्। श्रवणविधेः काम्यविधितया साङ्गानुष्ठानादेव फलसिद्धेरिति
186156 भावः॥ ३१॥
186157
186158 मोक्षोपायकथावस्तुसमाप्तौ द्विजपूजनम्।
186159 शक्तितः कीटकेनापि कार्यं किमु महीभृता॥ ३२॥
186160

186161 कीटकेन कीटकवदनादरार्हेण दरिद्रेणापि कार्यमित्यर्थः ॥ ३२ ॥
186162
186163 इति मौनं वचः श्रुत्वा सहस्राणि नृपो दश ।
186164 दूतैराकारयामास द्विजानां वेदवादिनाम् ॥ ३३ ॥
186165
186166 मुनिना प्रोक्तं मौनं वचः । गुर्वाज्ञायाः शिरसा धारणीयत्वान्मौनं निरुत्तरं
186167 यथा स्यात्तथा श्रुत्वेति वा ॥ ३३ ॥
186168
186169 मथुरायां सुराष्ट्रेषु गौडेषु च वसन्ति ये ।
186170 तेभ्यः कुलेभ्यः सोऽभ्यर्च्य समानीय द्विजन्मनाम् ॥ ३४ ॥
186171
186172 कुलेभ्यः कुलश्रेष्ठेभ्यः पृथक्पृथक्समुदितेभ्यश्च ॥ ३४ ॥
186173
186174 अधिकात्यधिकज्ञानप्रकृतद्विजभोजनः ।
186175 तदा दशसहस्राणि भोजयामास भूपतिः ॥ ३५ ॥
186176
186177 अधिकेभ्योऽप्यत्यधिकं ज्ञानं येषां तत्प्रकृतं तानुप्रक्रम्य प्रवृत्तं
186178 द्विजभोजनं येन ॥ ३५ ॥
186179
186180 यथाभिमतभोज्यान्नदानदक्षिणया तया ।
186181 एवं संपूज्य तान्विप्रान्पितृन्देवान्नृपांस्तथा ॥ ३६ ॥
186182
186183 पितृन् श्राद्धादिना । देवान्माल्यमोदकोपहारादिना इष्ट्यादिना च ।
186184 नृपान्यानरत्नादिना ॥ ३६ ॥
186185
186186 पौरामात्यांस्तथा भृत्यान्दीनान्धकृपणांश्च तान् ।
186187 तस्मिन्दशरथो राजा दिने सह सुहृज्जनैः ॥ ३७ ॥
186188
186189 सुहृज्जनैः सह उत्सवं चकारेत्युत्तरत्रान्वयः ॥ ३७ ॥
186190
186191 लब्धसंसृतिसीमान्तश्चकारोत्सवमुत्तमम् ।
186192 तथा नृपगृहे तस्मिन्कौशेयमणिकाञ्चने ॥ ३८ ॥
186193
186194 लब्धः संसृतिसीमान्तो येन । अत्रापि सह सुहृज्जनैरिति योजनीयम् ॥ ३८ ॥
186195
186196 भूषिते नगरे चैव गीर्वाणनगसुन्दरे ।
186197 ननृतुर्मत्तकामिन्यो विलासिन्यो गृहे गृहे ॥ ३९ ॥
186198
186199 गीर्वाणनगो मेरुः कल्पद्रुमश्च तद्वत्सुन्दरे ॥ ३९ ॥
186200
186201 लसद्वंशलताकांस्यवीणामुरजमर्दलम् ।
186202 ताण्डवेनोद्धतारावमन्योन्येतरशेखराः ॥ ४० ॥
186203
186204 वंशलतात्र मुरली । क्रियाविशेषणे द्वे । ता नर्तकीर्वर्णयति - अन्योन्येत्यादिना ।
186205 अन्योन्येतरं परस्परविलक्षणं यथा स्यात्तथा चिकुरबन्धनालंकारभेदादिना
186206 रचिताः शेखरा यासाम् ॥ ४० ॥
186207
186208 क्षुब्धीकृतापणकरभ्रान्तिपल्लविताम्बराः ।
186209 मुग्धाट्टहासविक्षिप्तदन्तेन्दुकिरणच्छटाः ॥ ४१ ॥
186210
186211 क्षुब्धीकृतानामितस्ततश्चालितानामापणानां विविधाभिनयव्यवहारवतां
186212 कराणां भ्रान्तिभिः परितः पल्लवितमिवाम्बरमाकाशं वस्त्रं च यासाम् ।

186213 हास्यरसाभिनये मुग्धैरट्टहासैर्विक्षिप्ताः परितः प्रक्षिप्ता दन्तेन्दुकिरणच्छटा
186214 याभिः ॥ ४१ ॥
186215
186216 मदाकुलितहुंकारा लीलासु तरलस्वराः ।
186217 एकपादतलाघातहेलाहतधरातलाः ॥ ४२ ॥
186218
186219 वीररसाभिनये मदाकलितहुंकाराः । करुणाद्भुतादिरसाभिनयलीलासु तरलस्वराः ।
186220 शृङ्गारमानाद्यभिनये एकपादतलाघातेन हेलया हतं ताडितं धरातलं
186221 याभिस्ताः ॥ ४२ ॥
186222
186223 स्रग्दामतारविगलत्कुसुमासारपाण्डुराः ।
186224 धारापातितविच्छिन्नहारमुक्तास्खलत्पदाः ॥ ४३ ॥
186225
186226 शृङ्गारकोपाद्यभिनये स्रग्दामविधूननेन तारैर्नक्षत्रैरिव विगलद्भिः
186227 कुसुमासारैः पाण्डुरा जलधारा इव पातिता ये विच्छन्ना हारास्तेषु दैवात्पदन्यासैः
186228 स्खलत्पदाः ॥ ४३ ॥
186229
186230 लोलाभरणसाकारं कामं ननृतुरङ्गनाः ।
186231 पेठुः स्फुटपदं विप्रा बन्दिनोऽप्यङ्गनाश्च ताः ॥ ४४ ॥
186232
186233 लोलैराभरणैः साकारं कामं दर्शयन्त्य इवेति शेषः । साकारं
186234 कृत्रिमाकारसहितं यथा स्यात्तथा कामं यथेच्छं ननृतुरिति वा ।
186235 पेठुर्यथाक्रमं वेदस्तवगीतानि ॥ ४४ ॥
186236
186237 पपुरुत्ताण्डवं पानं पानपा मदशालिनः ।
186238 भोज्यं बुभुजिरे चित्रं भूषिता भोजनार्थिनः ॥ ४५ ॥
186239
186240 तेषु पानपा अविप्राः पानं मध्वासवं पपुः । विप्रादयस्तु भोजनार्थिनो भोज्यं
186241 भोजनार्हं चित्रं नानाभक्ष्यादिवैचित्र्ययुक्तं चतुर्विधमन्नं बुभुजिरे ॥ ४५ ॥
186242
186243 सुधादिपरिलेपेन रञ्जिता गृहभित्तयः ।
186244 रेजू रामेन्दुभानेन पुष्पधूपविलेपनैः ॥ ४६ ॥
186245
186246 रामलक्षणस्येन्दोर्भानेन देहप्रभाचन्द्रिकया पुष्पधूपविलेपनैश्च रेजुः ॥ ४६ ॥
186247
186248 वासांसि वसिंताश्चित्राण्युत्तमस्रग्विभूषणाः ।
186249 चेरुः परिचराश्चेट्यश्चारुगन्धा नृपाध्वरे ॥ ४७ ॥
186250
186251 नृपस्य अध्वरे उत्सवयज्ञे ॥ ४७ ॥
186252
186253 देहयष्टिषु संयोज्य वनिता यक्षकर्दमम् ।
186254 जग्मुस्ताण्डवनर्तक्यः शृङ्गारात्माङ्गणान्तरम् ॥ ४८ ॥
186255
186256 कर्पूराकुरुकस्तूरीकङ्कोलैः समं घृष्टं चन्दनं यक्षकर्दमस्तं
186257 देहयष्टिषु संयोज्य विलिप्य ताण्डवनर्तक्यो वनिताः शृङ्गारात्म
186258 अलंकृतमङ्गणान्तरं राजसभाङ्गणमध्यं जग्मुः ॥ ४८ ॥
186259
186260 भवबहुलनिशावसानहर्षादिति घनमुत्सवमेव सप्तरात्रम् ।
186261 दशरथनृपतिः सदानभोगश्रियमकरोत्पदमक्षयं समेतः ॥ ४९ ॥
186262
186263 दशरथनृपतिः अक्षयं ब्रह्मपदं प्रपन्नः सन् भवः संसारस्तल्लक्षणा या
186264 बहुलनिशा कृष्णपक्षरात्रिस्तस्य अवसानं बोधसूर्योदयेन नाशस्तत्प्रयुक्तात्

186265 हर्षात् सप्तरात्रं इति वर्णितप्रकारं सदानभोगश्रियं दानभोगशोभासहितं
186266 घनमुपचितमुत्सवमेवाकरोत् ॥ ४९ ॥
186267
186268 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये दे० मो० नि० उ० महोत्सववर्णनं नाम
186269 चतुर्दशाधिकद्विशततमः सर्गः ॥ २१४ ॥
186270
186271 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
186272 महोत्सववर्णनं नाम चतुर्दशाधिकद्विशततमः सर्गः ॥ २१४ ॥
186273
186274 पञ्चदशाधिकद्विशततमः सर्गः २१५
186275
186276 श्रीवाल्मीकिरुवाच ।
186277
186278 भरद्वाज महाबुद्धे मम शिष्याधिनायक ।
186279 इति रामादयो ज्ञातज्ञेया निःशोकतां गताः ॥ १ ॥
186280
186281 रामादिवत्प्रबुद्धस्त्वं जीवन्मुक्तः सुखी वस ।
186282 इति वाल्मीकिना शिष्यो भरद्वाजोऽत्र शिष्यते ॥
186283
186284 इति अनया वर्णितया रीत्या रामादयो निःशोकतां गताः प्राप्ताः ॥ १ ॥
186285
186286 एतामेव दृशं कान्तामवष्टभ्य यथासुखम् ।
186287 नीरागस्तिष्ठ निःशङ्को जीवन्मुक्तः प्रशान्तधीः ॥ २ ॥
186288
186289 त्वमपि एतामेव पूर्णब्रह्मात्मदृशमवष्टभ्य दृढमाश्रित्य तिष्ठ ॥ २ ॥
186290
186291 धीरनभ्यस्तसङ्गा हि रामादीनामिवानघ ।
186292 घनमोहनिमग्नापि विमूढापि न मुह्यति ॥ ३ ॥
186293
186294 इदं च मदुपदिष्टं ज्ञानं दुःसङ्गेन भोगासङ्गाभ्यासेन च यथा न नश्यति
186295 तहा रक्षेत्याशयेनाह - धीरिति ॥ ३ ॥
186296
186297 एवमेते महासत्त्वा जीवन्मुक्तपदं गताः ।
186298 राजपुत्रा राघवाद्या राजा दशरथादयः ॥ ४ ॥
186299
186300 दशरथादयो राजानः । सुपां सुलुगिति जसश्छान्दसो डादेशः ॥ ४ ॥
186301
186302 त्वं च पुत्र भरद्वाज स्वयमेवासि मुक्तधीः ।
186303 सत्यं मुक्ततरोऽस्यद्य श्रुत्वेमां मोक्षसंहिताम् ॥ ५ ॥
186304
186305 स्वयं स्वविचारेणैव रामवत्पूर्वं मुक्तधीरसि । अद्य तु इमां मोक्षसंहितां
186306 श्रुत्वा मुक्ततरोऽसि । संभावितस्वशङ्कापङ्कक्षालनादिति भावः ॥ ५ ॥
186307
186308 मोक्षोपायानिमान्पुण्यान्प्रत्यक्षानुभवार्थदान् ।
186309 बालोप्याकर्ण्य तज्ज्ञत्वं याति का त्वादृशे कथा ॥ ६ ॥
186310
186311 दृष्टपरमपुरुषार्थफलत्वादस्य शास्त्रस्य सर्वशास्त्रेभ्योऽभ्यर्हिततमत्वं
186312 मन्दाधिकारिष्वप्यभ्यासे फलोपधानसमर्थत्वं च दर्शयति - मोक्षोपायानिति
186313 । त्वादृशे मुख्याधिकारिणि फलोपधाने का कथा ॥ ६ ॥
186314
186315 यथा पदं पुण्यमनुप्रयाता महानुभावा राघवो विशोकाः ।
186316 वसिष्ठवाक्यप्रसरेण साधोगन्तव्यमाद्यं पदमेवमेव ॥ ७ ॥

हे साधो यथा वसिष्ठवाक्यानां हृदि प्रसरेण
सर्वसंशयसहिताज्ञाननाशान्महानुभावा रघवो रामादयः पुण्य।
जीवन्मुक्तपदमनुप्रयाताः सन्तो विशोकाः संपन्ना एवमेव त्वयाप्याद्यं
नित्यसिद्धब्रह्मभावलक्षणं जीवन्मुक्तपदं गन्तव्यं विशोकेन च
भाव्यमित्यर्थः ॥ ७ ॥

सतां नयेनोत्तमसेवया च प्रश्नेन चोदारकथागतेन ।
विन्दन्ति वेद्यं सुधियोऽप्रमत्ता वसिष्ठसङ्गादिव राघवाद्याः ॥ ८ ॥

तत्प्राप्तावन्येषामपि सत्सङ्गसेवाप्रश्नादिरेवोपायैत्याह - सतामिति । नयेन
शिक्षणेन उत्तमया लोभालस्यनिद्रादित्यागसहितया सप्रेमनिरन्तरसेवया ।
उदाराभिर्बोधोपायभूताभिः कथाभिराख्यायिकाभिः संगतेन तदुपदेशेन
सुधियोऽधिकारिणो वेद्यमात्मतत्त्वं विन्दन्ति लभन्ते । अप्रमत्तास्तदेकासक्ताश्चेत् ।
यथा वसिष्ठसङ्गाद्राघवाद्या अविदंस्तद्वदित्यर्थः ॥ ८ ॥

तृष्णावरत्राद्दृढबन्धबद्धा ये ग्रन्थयोऽज्ञस्य हृदि प्ररूढाः ।
सर्वे हि ते मोक्षकथाविचाराद्वाला ह्यबाला इव यान्त्यभेदम् ॥ ९ ॥

तृष्णालक्षणाया वरत्रायाश्चर्मरज्ज्वा दृढबन्धैर्बद्धा अज्ञस्य हृदि
प्ररूढा ये देहेन्द्रियादितादात्म्यसंसर्गाध्यासरूपा ग्रन्थयोये च
गृहपुत्रदारादिषु ममताभिनिवेशलक्षणाः
सर्वभूतेष्वैकात्म्यानुभवैकरस्याभावाद्रागद्वेषादिहेतवो ग्रन्थयस्ते सर्वे हि
अस्मान्मोक्षकथाविचारात् यथा बालाः स्त्रियः पूर्वं
बाल्यात्क्रीडाद्यभिनिवेशाद्रसानभिज्ञत्वाच्च भर्तृषु वैरस्ययुक्ता अपि कालेन
अबालाः प्रौढाः सत्यो भर्तृभिरभेदमैकरस्यं यान्ति
तद्वत्सर्वभूतेष्वभेदमैकरस्यं यान्तीत्यर्थः ॥ ९ ॥

मोक्षाभ्युपायान्सुमहानुभावान् ज्ञास्यन्ति ये तत्त्वविदां वरिष्ठाः ।
पुनः समेष्यन्ति न संसृतिं ते कोऽर्थः सुताऽन्येन बहूदितेन ॥ १० ॥

हे सुत पुत्रवदनुकम्प्य भरद्वाज मन्दाधिकारिणामपि श्रवणाभ्यासे
अज्ञाननिबर्हणसमर्थत्वात्सुमहानुभावानिमान्मोक्षाभ्युपायान्
गुरुपूर्वश्रवणेन ये ज्ञास्यन्ति ते तत्त्वविदां वरिष्ठाः सन्तः पुनः संसृतिं न
समेष्यन्ति । इयं मम संक्षिप्तपरमरहस्योक्तिः । अन्येन बहुना उदितेन कोऽर्थः किं
प्रयोजनमित्यर्थः ॥ १० ॥

बहुश्रुता ये प्रविचार्य सम्यक्प्रबोधितार्थे कथया जनाय ।
सन्तो वदिष्यन्ति पुनः शिशुत्वं न ते प्रयास्यन्ति किमन्यवाक्यैः ॥ ११ ॥

इदानीं वक्तृणास्वपि गुरुमुखाद्विचार्यैव संप्रदायतोऽर्थं
सम्यग्ज्ञात्वाअन्येभ्यः श्रावयतामेव बोधफलावाप्तिर्नान्येषामिति नियमं
सूचयन्नाह - बहुश्रुता ये इति । अमुं ग्रन्थं ये सन्तो बहुश्रुतानां
गुरूणामग्रे स्वयं सम्यक्प्रविचार्य तत्संवादकथया ग्रन्थे सम्यक्प्रबोधितार्थे
सति पुनः पश्चात्स्वयमपि शुश्रूषवे जनाय संप्रदायतो वदिष्यन्ति ते शिशुत्वं
मौर्ख्यं पुनर्जन्म वा न प्रयास्यन्ति । अवश्यं तत्त्वज्ञानफलं
प्राप्स्यन्तीत्यर्थः । अन्यैः संप्रदायतोऽनधिगतैर्वाक्यैः श्रुतैः श्रावितैर्वा किम् ।
किं प्रयोजनमित्यर्थः ॥ ११ ॥

ये वाचयिष्यन्त्यनपेक्षितार्था ये लेखयिष्यन्ति च पुस्तकं वा ।
ये कारयिष्यन्त्यपि वाचकं वा व्याख्यातृयुक्तं शुभमार्यदेशे ॥ १२ ॥

186369 इदानीमर्थावगमं विनापि ग्रन्थपारायणस्य पुस्तकलेखनस्य
186370 वाचकवृत्तिकल्पनेन व्याख्यापनस्य च फलमाह - ये वाचयिष्यन्तीति द्वाभ्याम्|
186371 अनपेक्षितार्थाः व्युत्पत्त्यभावादर्थापेक्षारहिता अपि
186372 पारायणदक्षिणाद्रव्यानपेक्षा निर्लोभाश्च ये पुस्तकं वा लेखयिष्यन्ति | ये
186373 वृत्तिकल्पनेन व्याख्यातृपुरुषयुक्तं केवलं वाचकं वा कारयिष्यन्ति ते
186374 सकामाश्चेद्राजसूयस्य यज्ञस्य फलेन युक्ताः सन्तो मुहुर्मुहुः स्वर्गं
186375 प्रयास्यन्ति | उदारसत्त्वा निष्कामास्तूत्तमजन्म सद्गुरुसच्छास्त्रश्रवणादिकं प्राप्य
186376 तृतीयजन्मलाभेन मोक्षं प्रयास्यन्ति | लक्ष्मीमिवेत्युभयत्र दृष्टान्तः || १२ ||
186377
186378 ते राजसूयस्य फलेन युक्ता मुहुर्मुहुः स्वर्गमुदारसत्त्वाः |
186379 मोक्षं प्रयास्यन्ति तृतीयजन्मलाभेन लक्ष्मीमिव पुण्यवन्तः || १३ ||
186380
186381 इमां पुरा मोक्षमयीं विचार्य सुसंहितां सद्वचनाद्विरिञ्चः |
186382 प्रयुक्तवानेतदचिन्त्यरूपो भवन्त्यसत्याश्च न तस्य [सत्यवाच इति
186383 पाठष्टीकानुगुणः स एव साधुः |] वाचः || १४ ||
186384
186385 ईदृशमहाफलत्वमस्य ग्रन्थस्य कुतस्तत्राह - इमामिति | मया कृतामिमां
186386 मोक्षमयीं सुसंहितां पुरा पूर्वकाले अचिन्त्यरूपो विरिञ्चः सतां मुनीनां समाजे
186387 आमूलाग्रं स्वयं विचार्य एतद्वाक्यं सर्वान्प्रयुक्तवान् | किमेतत् | सत्यवाचो
186388 वाल्मीकेर्वसिष्ठस्य स्वस्य च वरदानं न ते वागनृता काव्ये काचिदत्र भविष्यति इति
186389 सूचनार्थश्चकारः || १४ ||
186390
186391 मोक्षाभ्युपायाख्यकथाप्रबन्धे याते समाप्तिं सुधिया प्रयत्नात् |
186392 सुवेश्म दत्त्वाभिमतान्नपानदानेन विप्राः परिपूजनीयाः || १५ ||
186393
186394 एतच्छास्त्रसमाप्तौ गृहान्नधनादिदानं विप्रादिभ्योऽवश्यं कर्तव्यमित्याह ##-
186395 || १५ ||
186396
186397 देयं च तेभ्यः खलु दक्षिणादि चित्तेप्सितं स्वस्य धनस्य शक्त्या |
186398 मत्वानुरूपं कृतमेव सङ्गपुण्यं यथाशास्त्रमुपैत्यसौ तत् || १६ ||
186399
186400 स्वधनस्य मध्ये तेषां चित्तेप्सिता दक्षिणा यथाशक्त्या देया | असौ कर्ता
186401 तत्स्वकृतमेव् अवश्यं सज्जत इति सङ्गं पुण्यं फलात्मना
186402 यथाशास्त्रमुपैत्येवेति मत्वा विचिन्त्येत्यर्थः || १६ ||
186403
186404 एतत्ते कथितं कथाक्रमशतैर्बोधाय बुद्धैर्बृहच्छास्त्रं
186405 बृंहितब्रह्मतत्त्वममलं दृष्टान्तयुक्त्याञ्चितम् |
186406 श्रुत्वैतच्चिरनिर्वृतिं भज भृशं जीवद्विमुक्ताशयो लक्ष्मीं
186407 ज्ञानतपःक्रियाक्रमयुतां भुक्त्वाऽक्षयामक्षयः || १७ ||
186408
186409 हे भरद्वाज ते तव बुद्धेर्बोधाय कथाक्रमशतैर्बृहितं ब्रह्मतत्त्वं
186410 दृष्टान्तयुक्त्या अञ्चितमेतच्छास्त्रं मया कथितम् | एतच्छ्रुत्वा जीवन्नेव
186411 विमुक्ताशयः सन् लोकानुग्रहाय ज्ञानतपःक्रियाफलयुतां
186412 प्रारब्धभोगसत्कर्मफलभूतां योगज्ञानसिद्ध्यैश्वर्यलक्ष्मीमक्षयां
186413 चिरस्थायिनीं भुक्त्वा सदेहो विदेहश्च चिरनिर्वृतिं नित्यनिरतिशयानन्दरूपां
186414 मुक्तिं भृशं भजेत्याशीरन्ते मङ्गलार्था || १७ ||
186415
186416 इत्यार्षे श्रीवासिष्ठमहारामायणे वा० दे० मो० नि० उ०
186417 ग्रन्थप्रशंसातद्वाचनादिविधिर्नाम पञ्चदशाधिकद्विशततमः सर्गः || २१५ ||
186418
186419 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
186420 ग्रन्थप्रशंसातद्वाचनादिविधिर्नाम पञ्चदशाधिकद्विशततमः सर्गः || २१५ ||

षोडशाधिकद्विशततमः सर्गः ॥ २१६ ॥

श्रीवाल्मीकिरुवाच ।

एतत्ते कथितं राजन्कुम्भयोनेः सुभाषितम् ।
अमुना तत्त्वमार्गेण तत्पदं प्राप्स्यसि ध्रुवम् ॥ १ ॥

अरिष्टनेमिसुरुचिकारुण्यादिकृतार्थता ।
वर्ण्यतेऽत्र गुरुभ्यश्च शिष्यैरात्मनिवेदनम् ॥

कुम्भयोनेर्वसिष्ठस्यागस्त्यस्य च रामादीन्सुतीक्ष्णं प्रति च सुभाषितम् । अमुना
एतद्ग्रन्थरूपेण ॥ १ ॥

राजोवाच ।

भगवन्भवतो दृष्टिर्भवबन्धविनाशनी ।
आलोकितो यया चाहमुत्तीर्णोऽस्मि भवाम्बुधेः ॥ २ ॥

राजा अरिष्टनेमिरुवाच वाल्मीकिं प्रति । दृष्टिः कृपाकटाक्षः ॥ २ ॥

देवदूत उवाच ।

इत्युक्त्वासौ ततो राजा विस्मयोत्फुल्ललोचनः ।
उवाच वचनं मां तु मधुरं श्लक्ष्णया गिरा ॥ ३ ॥

राजोवाच ।

देवदूत नमस्तुभ्यं कुशलं चास्तु ते विभो ।
सतां साप्तपदं मैत्रमित्युक्तं तत्त्वया कृतम् ॥ ४ ॥

मैत्रं मित्रभावः सप्तभिः पदैरनुगतैर्लभ्यत इति साप्तपदम् । शैषिकोऽण् । इति
यत्सद्भिरुक्तं तत्त्वया सत्यं कृतमित्यर्थः ॥ ४ ॥

इदानीं गच्छ भद्रं ते देवराजनिवेशनम् ।
अनेन श्रवणेनाहं निर्वृतो मुदितोऽपि च ॥ ५ ॥

सर्वतापोपशमेन निर्वृतो निरतिशयानन्दलाभेन मुदितः ॥ ५ ॥

श्रुतार्थं चिन्तयन्नत्र स्थास्यामि विगतज्वरः ।
इत्युक्तोऽहं ततो भद्रे परं विस्मयमागतः ॥ ६ ॥

इति राज्ञा अहमुक्तः संस्तद्विनयादिगुणसंपदा परं विस्मयमागतः ॥ ६ ॥

न श्रुतं पूर्वमेवैतज्ज्ञानसारं श्रुतं मया ।
तेनैव मुदितश्चान्तः पीतामृत इवाधुना ॥ ७ ॥

स्वस्यापि सत्सङ्गवशेन श्रवणलाभात्कृतार्थता जातेत्याह - न श्रुतमिति ।
पूर्वं कदापि न श्रुतमपूर्वमेवैतज्ज्ञानसारं सत्सङ्गान्मया श्रुतम् ॥ ७ ॥

ततो वाल्मीकिमापृच्छ्य आगतोऽस्मि त्वदन्तिके ।
एतत्ते सर्वमाख्यातं त्वया पृष्टं ममानघे ।

186473 इतः परं गमिष्यामि शक्रस्य सदनं प्रति ॥ ८ ॥
186474
186475 त्वदन्तिके त्वामुपदेष्टुमित्यर्थः। अनघे इति संबोधनेन
186476 निष्पापत्वादधिकारसंपत्तिं त्वयिदृष्ट्वा एतत्सर्वं ते तुभ्यमाख्यातमिति सूचितम्
186477 ॥ ८ ॥
186478
186479 अप्सरा उवाच।
186480
186481 नमोऽस्तु ते महाभाग देवदूत त्वया मम।
186482 श्रावितादर्थविज्ञानात्परां निर्वृतिमागता ॥ ९ ॥
186483
186484 परां निर्वृतिं सुखविश्रान्तिमागता अहमिति शेषः ॥ ९ ॥
186485
186486 कृतार्था वीतशोकास्मि स्थास्यामि विगतज्वरा।
186487 इदानीं गच्छ भद्रं ते यथेच्छं शक्रसंनिधौ ॥ १० ॥
186488
186489 अग्निवेश्य उवाच।
186490
186491 ततः सा सुरुचिः श्रेष्ठा तमेवार्थमचिन्तयत्।
186492 स्थिता सा हिमवत्पृष्ठे समीपे गन्धमादने ॥ ११ ॥
186493
186494 तमुपदिष्टं ब्रह्मात्मैक्यलक्षणमेवार्थम् ॥ ११ ॥
186495
186496 कच्चिदेतच्छ्रुतं पुत्र वसिष्ठस्योपदेशनम्।
186497 तत्सर्म्वधार्याथ यथेच्छसि तथा कुरु ॥ १२ ॥
186498
186499 तत्सर्वमिति। मोक्षस्य कारणं कर्म ज्ञानं वा मोक्षसाधनम् इति त्वदीयसंदेहस्य
186500 तदवधारणे मूलापगमादेवोच्छेदसिद्धेरिति भावः ॥ १२ ॥
186501
186502 कारुण्य उवाच।
186503
186504 स्मृतिर्वाग्दृष्टिसत्ता च स्वप्ने वन्ध्यासुतेऽजले।
186505 मरीचिका यथा तद्वज्ज्ञानात्सांसारिकी स्थितिः ॥ १३ ॥
186506
186507 अत एव स्वस्य समूलसर्वसंशयविषयबाधाद्बाधितानुवृत्तिमात्रेण
186508 यथाप्राप्तानुवर्तनमेव जीवन्मुक्तस्य परिशिष्यत इति कारुण्य उवाच -
186509 स्मृतिरित्यादिना। अतीतानागते असन्निकृष्टे च विषये स्मृतिः
186510 परोक्षधीर्वाग्व्यवहारश्च व्रतमानविषये दृष्टिसत्ताप्रत्यक्षं च मम सांप्रतं
186511 तत्त्वज्ञानात्स्वप्ने प्रतीते वन्ध्यासुतविषये यथा निर्विषयास्तथा निर्विषयाः
186512 संपन्नाः। सर्वापि च सांसारिकी स्थितिः अजले मरुदेशे मरीचिका तथा तद्वत्संपश्चेति
186513 क्वापि विषये न कश्चिदपि संदेहः परिशिष्ट इत्यर्थः ॥ १३ ॥
186514
186515 मम नास्ति कृतेनार्थो नाकृतेनेह कश्चन।
186516 यथाप्राप्तेन तिष्ठामि ह्यकर्मणि क आग्रहः ॥ १४ ॥
186517
186518 रामादिवदेव यथाप्राप्तेन वर्णाश्रमोचितव्यवहारेण तिष्ठामि स्थास्यामि।
186519 अकर्मणि बलात्कर्मत्यागे ॥ १४ ॥
186520
186521 अगस्तिरुवाच।
186522
186523 इत्युक्त्वा नाम कारुण्य अग्निवेश्यसुतः कृती।
186524 प्राप्तकर्मा यथान्यायं काले काले ह्युपाहरत् ॥ १५ ॥

186525
186526 प्राप्तकर्मा विवाहेन प्राप्तकर्माधिकारः सन् काले काले यथोचितकाले
186527 स्नानदानाग्निहोत्रातिथिसपर्यादिकर्म उपाहरत् अनुष्ठितवानित्यर्थः। नामेति किलार्थे॥
186528 १५॥
186529
186530 संदेहोऽत्र न कर्तव्यः सुतीक्ष्ण ज्ञानकर्मणि।
186531 संशयाद्भ्रश्यते स्वार्थात्संशयात्मा विनश्यति॥ १६॥
186532
186533 हे सुतीक्ष्ण ज्ञानकर्मणि ज्ञानोत्तरं कर्मानुष्ठानविषये कर्म बन्धाय
186534 भविष्यतीति संदेहो न कर्तव्यः॥ १६॥
186535
186536 एतच्छ्रुत्वा मुनेर्वाक्यमनेकार्थैक्यबोधनम्।
186537 नमस्कृत्य गुरुं प्राह अन्तिके विनयान्वितः॥ १७॥
186538
186539 अनेकेषां संदेहविषयविरुद्धानेककोट्यात्मकानां सांसारिकार्थानां
186540 पारमार्थिकब्रह्मतत्त्वात्मना सर्वविरोधत्यागेनैक्यबोधनं
186541 मुनेरगस्त्यस्यैतद्वाक्यं श्रुत्वा। अन्तिके समीपे॥ १७॥
186542
186543 सुतीक्ष्ण उवाच।
186544
186545 नष्टमज्ञानतत्कार्यं प्राप्तं ज्ञानमनुत्तमम्।
186546 साक्षिणि स्फुरिताभासे ध्रुवे दीप इव क्रियाः॥ १८॥
186547
186548 यस्मिन् सर्वसाक्षिणि परमात्मनि स्वयंज्योतिष्ट्वादेव नित्यस्फुरिताभासे ध्रुवे निष्क्रिये
186549 स्थिते सति नाट्यशालायां दीपे स्थिते सति तत्प्रकाशमुपजीव्य नटनर्तकादीनां क्रिया
186550 इव सर्वाः स्पन्दमूर्तयश्चित्तेहा लौकिकवैदिकक्रियाः प्रवर्तन्ते। यस्माच्च
186551 कटकादिभेदैः काञ्चनमिव पयसि तरङ्गालीव दृश्यभूः स्फुरति। इदं
186552 जगत्सर्वं तदेव नाणुमात्रमपि तदन्यक्रियाकारकफलादिपृथङ्निरूपयितुं
186553 शक्यत इति निश्चित्य यथा यस्मिन्नाश्रमे प्राप्तस्तद्व्यवहारमनुव्रताम्यनुवर्ते।
186554 छान्दसः पदव्यत्ययः॥ १८॥
186555
186556 सति यस्मिन्प्रवर्तन्ते चित्तेहाः स्पन्दपूर्विकाः।
186557 कटकाङ्गदकेयूरनूपुरैरिव काञ्चनम्॥ १९॥
186558
186559 पयसीव तरङ्गाली यस्मात्स्फुरति दृश्यभूः।
186560 तदेवेदं जगत्सर्वं पूर्णे पूर्णं व्यवस्थितम्॥ २०॥
186561
186562 यथाप्राप्तोऽनुवर्तामि को लङ्घयति सद्वचः।
186563 भगवंस्त्वत्प्रसादेन ज्ञातज्ञेयोऽस्मि संस्थितः॥ २१॥
186564
186565 कृतार्थोऽहं नमस्तेऽस्तु दण्डवत्पतितो भुवि।
186566 गुरोरुत्तीर्णता केन शिष्याणामस्ति कर्मणा॥ २२॥
186567
186568 इदानीं श्रीगुरुकृतस्य परमपुरुषार्थप्रापकज्ञानदानोपकारस्य जगति
186569 प्रत्युपकारोपायमपश्यंस्तच्चरणयोर्नमस्कृत्यात्मानं यावज्जीवं दास्याय
186570 निवेदयति - कृतार्थोऽहमित्यादिना॥ २२॥
186571
186572 कायवाङ्मनसा तस्माच्छिष्यैरात्मनिवेदनम्।
186573 गुरोरुत्तीर्णता सैव नान्या केनापि कर्मणा॥ २३॥
186574
186575 अन्येन केनापि कर्मणा गुरोरुपकारादुत्तीर्णता न॥ २३॥
186576

186577 स्वामिंस्तव प्रसादेन उत्तीर्णोऽहं भवाम्बुधेः ।
186578 आपूरितजगज्जालं स्थितोस्मि गतसंशयः ॥ २४ ॥
186579

186580 हे स्वामिन् अहं तव प्रसादेन भवाम्बुधेरुत्तीर्णः सन् पूर्णानन्दभावेन
186581 आपूरितजगज्जालं यथा स्यात्तथा स्थितोऽस्मि नात्र संशय इत्यर्थः ॥ २४ ॥
186582

186583 यत्सर्वं खल्विदं ब्रह्म तज्जलानिति च स्फुटम् ।
186584 श्रुत्वा ह्युदीर्यते साम्नि तस्मै ब्रह्मात्मने नमः ॥ २५ ॥
186585

186586 अस्य ग्रन्थस्य सर्वोपनिषत्सारार्थोपबृंहणत्वान्मुमुक्षुभिरादरणीयतमत्वं
186587 सूचयन् सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत इति
186588 छान्दोग्योपनिषत्प्रदर्शितस्फुटतरोपायसहितज्ञानाधिगतसर्वात्मकसच्चिदानन्दाद्
186589 वयब्रह्मतत्त्वमनुसंधायान्ते मङ्गलार्थं नमस्यति - यत्सर्वमिति । यद्ब्रह्म
186590 साम्नि सामवेदे सर्व खल्विदं ब्रह्म तज्जलानिति श्रुत्या स्फुटमधिकारिणां
186591 करतलामलकवदपरोक्षं यथा भवति तथा परमतात्पर्येणोदीर्यते तस्मै
186592 तद्भावेन परिशिष्टायात्मने प्रत्यक्चिदानन्दघनाय नम इत्यर्थः ॥ २५ ॥
186593

186594 ब्रह्मानन्दं परमसुखदं केवलं ज्ञानमूर्तिं द्वन्द्वातीतं
186595 गगनसदृशं तत्त्वमस्यादिलक्ष्यम् ।
186596 एकं नित्यं विमलमचलं सर्वधीसाक्षिभूतं भावातीतं त्रिगुणरहितं
186597 श्रीवसिष्ठं नताः स्मः ॥ २६ ॥
186598

186599 गजवदनं शुभरदनं सज्जनभरणं समस्तगुणसदनम् ।
186600 सच्चित्सुखसारघनं सदयं हृदये सदा वन्दे ॥ १ ॥
186601

186602 निमज्ज्यान्तर्भक्त्यामृतरसवसिष्ठोक्तिजलधौ सद्र्था उन्नीता इह
186603 गुरुकटाक्षात्कतिपये ।
186604 विचिन्वानो ह्यन्तर्जलधिजठरं को नु कलयेदियत्तां रत्नानां प्रचुरतरयत्नैरपि
186605 कृती ॥ २ ॥
186606

186607 निरुपमनिजविस्तारं निःसंसारं नितान्तगम्भीरम् ।
186608 नित्यसुखामृतपूरं पारावारं परं स्वमेव भजे ॥ ३ ॥
186609

186610 ऋतुरसतुरगमही १७६६ शकविकारिशुभवत्सरस्य शिशिरर्तोः ।
186611 फाल्गुनसितसप्तम्यां भृगुरौहिणवृषभलग्नके सिद्धम् ॥ ४ ॥
186612

186613 वाक्यपुष्पाञ्जलिः सोऽयं मया भक्त्या समर्पितः ।
186614 धियः प्रेरकयोः श्रीमच्छिवयोः श्रीपदाब्जयोः ॥ ५ ॥
186615

186616 इत्यार्षे श्रीवासिष्ठमहारामायणे वाल्मीकीये देवदूतोक्ते मोक्षोपायेषु
186617 निर्वाणप्रकरणे उत्तरार्धे बालकाण्डे द्वात्रिंशच्छतसाहस्र्यां संहितायां
186618 षोडशाधिकद्विशततमः सर्गः ॥ २१६ ॥
186619

186620 इति श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशे निर्वाणप्रकरणे उत्तरार्धे
186621 षोडशाधिकद्विशततमः सर्गः ॥ २१६ ॥
186622

186623 इति श्रीमत्परमहंसपरिव्राजकाचार्यवर्यश्रीमत्सर्वज्ञसरस्वतीपूज्यपादशिष्य##-
186624 शिष्येण श्रीमदानन्दबोधेन्द्रसरस्वत्याख्यभिक्षुणा विरचितः
186625 श्रीवासिष्ठमहारामायणतात्पर्यप्रकाशः संपूर्णः ॥
186626

186627 समाप्तमिदं निर्वाणप्रकरणम् ।
186628

186629 || समाप्तोऽयं ग्रन्थः ||
186630
186631
186632 Hindi meaning
186633
186634
186635 ॥
186636 श्री गणेशाय नमः॥
186637 आदिकवि श्रीमद्वाल्मीकिमहामुनिप्रणीत
186638 परमहंस श्रीमद् आनंद बोधेन्द्र सरस्वती प्रणीत 'वासिष्ठ महारामायण' (तात्पर्यप्रकाशाख्यव्याख्यासहित) का हिन्दी अनुवाद
186639 वैराग्य प्रकरण
186640 पहला सर्ग सम्प्रदाय की विशुद्धि के लिए ऋषि-देव संवाद और उपोद्घात के लिए
186641 श्रीरामचन्द्रजी के अज्ञान के निमित्त का वर्णन। अनादि महामोहरूपी निशा में सोये हुए इस जगत् को बारबार दुःखरूपी भ्रमों से रचित; जन्म, जरा, व्याधि, मृत्यु, हर्ष, शोक, क्रोध आदि अनर्थों से व्याप्त; आध्यात्मिक, आधिदैविक और आधिभौतिक तीन तापरूपी दावानल से (वन की अग्नि से) चारों ओर घिरे हुए संसाररूपी महारण्य में मोहित, विवेकरहित और प्रबोध के उपाय के न मिलने के कारण दुःखी देखकर शास्त्ररूपी सूर्य के उदय से उसे (जगत् को) प्रबोधित करने के लिए भगवान श्रीब्रह्मदेव के आदेश से तथा अपने आप भी प्रवृत्त परमदयालु महर्षि श्रीवाल्मीकिजी रचे जानेवाले विशाल शास्त्र की, योगवासिष्ठ ग्रन्थ की निर्विघ्न समाप्ति एवं विशेषरूप से प्रचार के लिये श्रुति, स्मृति और सदाचार से प्राप्त तथा सम्पूर्ण विघ्नों के निर्मूलन में समर्थ सत्, चित् एवं आनन्दस्वरूप अद्वितीय परब्रह्म परमात्मा का प्रणामरूप मंगलाचरण करते हुए शास्त्र के विषय और प्रयोजन को तटस्थलक्षण और स्वरूपलक्षण द्वारा संक्षेप से दिखलाने के लिए पहले 'यतो वा' इस श्रुति से प्रतिपादित तटस्थलक्षणसिद्ध तत्पदार्थ परब्रह्म को नमस्कार करते हैं।
186642 सृष्टि के आरम्भ में आकाश आदि महाभूत एवं घट, पट आदि भौतिक पदार्थ जिस अद्वितीय वस्तु की सत्ता से अस्तित्व को प्राप्त कर आविर्भूत होते हैं, स्थितिकाल में जिसकी सत्ता से ही स्थित रहते हैं और प्रलयकाल में जिसमें लीन होते हैं उस सत्यस्वरूप (अपने में आरोपित सम्पूर्ण पदार्थों के पारमार्थिक स्वरूप एवं सब प्राणियों के हृदय में स्थित आत्मरूप) परमात्मा को नमस्कार है ॥१॥
186643 __सत्यस्वरूप के चिदेकत्वरस अनुभव द्वारा उपपादन करते हुए त्वम्पदार्थ जीव के तत्त्वभूत उसी स्वरूप को पुनः नमस्कार करते हैं।
186644 जिस चिदेकरस परमात्मा से ज्ञाता, ज्ञान, ज्ञेय, द्दष्टा, दर्शन, द्दश्य, कर्ता, हेतु और क्रिया - ये सब व्यावहारिक पदार्थ आविर्भूत होते हैं। उस ज्ञाता आदि के साक्षी और परमार्थतः ज्ञानरूप से अवस्थित प्रत्यगात्मा को नमस्कार है (LI) ॥२॥
186645
186646 (m) अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' इस जीवरूप आत्मा से प्रवेशकर जगत् की रचना करता हूँ। इस श्रुति के अनुसार बिम्बभूत कूटस्थ चैतन्य ही प्रतिबिम्बरूप से अन्तःकरणरूप
186647
186648 इस प्रकार 'तत्' और 'त्वम्' पदार्थ का शोधन करके तटस्थ लक्षण में पर्यवसित होनेवाले 'आनन्दो ब्रह्मेति व्यजानात्' इत्यादि श्रुति से निर्दिष्ट निरतिशय आनन्दरूप परमपुरुषार्थभूत अखण्ड वाक्यार्थ
186649 को नमस्कार करते हैं।
186650 जिस प्रत्यागात्मस्वरूप परिपूर्ण निरतिशयानन्द-महासमुद्र से स्वर्ग आदि लोकों में अर्थात् देवताओं में और भूमि में अर्थात् चेतन-अचेतन सम्पूर्ण पदार्थों में न्यूनाधिकभाव से आनन्दलेश का अनुभव होता है और वास्तव में जिसका आनन्दलेशजीवों का जीवन (आत्मा) है, उस परमपुरुषार्थभूत ब्रह्मानन्द
186651 को नमस्कार है॥३॥
186652
186653 यों मंगलाचरण के साथ-साथ विषय आदि का प्रदर्शन करते हुए संक्षेपतः शास्त्रार्थ का प्रदर्शन किया। अब उसी शास्त्रार्थ का उत्पत्ति आदि से विस्तारपूर्वक निरूपण करने के लिए श्रोताओं के विश्वास की द्दढ़ता के लिए ग्रन्थकार महामुनि वसिष्ठ और भगवान् रामचन्द्रजी के संवाद के आरम्भ के
186654 पहले उपोद्घातरूप आख्यायिका कहते हैं।
186655 सुतीक्ष्ण नाम का कोई ब्राह्मण था। उसका हृदय अनेक प्रकार के सन्देहों से भरा था, अतएव उसने महामुनि अगस्त्य के आश्रम में जाकर उनसे सादर प्रश्न किया ॥४॥
186656
186657 सुतीक्ष्ण ने कहा : भगवन्, आप धर्म के तत्त्व को जानते हैं, सम्पूर्ण शास्त्रों का आपने भली भाँति मंथन किया है, मुझे एक बड़ा भारी संशय है, कृपा कर आप इसे दूर कीजिए।५॥
186658 क्या मोक्ष का (a) उत्पादक कर्म है ? अथवा ज्ञान ही मोक्ष का व्यंजक है ? या कर्म और ज्ञान दोनों मिलकर मोक्ष के साधन हैं? इन तीनों पक्षों में से निश्चय करके किसी एक कारण को कहिए॥६॥
186659
186660 'यत्र दुःखेन सम्भिन्नम्' इत्यादि श्रुति से स्वर्ग में नित्यत्व आदिका परिज्ञान होता है, वास्तव में अनेक श्रुतियों के साथ विरोध होने से स्वर्ग में नित्यत्व आदिका श्रवण आपेक्षिक है अर्थात् जितने
186661 उपाधि में प्रविष्ट होकर तप्त लोहपिण्ड में अग्नि के समान तादात्म्य के अध्यास से अन्तःकरण की जड़ता को दूरकर उसे प्रकाशन-सामर्थ्य देता हुआ ज्ञाता कहलाता है । वही चिनगारियों के समान अन्तःकरण की वृत्तियों को प्रकाशन-सामर्थ्य देने से ज्ञान कहलाता है। वृत्ति के विषयाकार होने पर स्वयं भी वृत्ति द्वारा विषयाकार हुआ-सा ज्ञेय कहलाता है। वही ज्ञानेन्द्रियों के द्वारा द्रष्टा कहलाता है। और इन्द्रिय सम्प्रयोग से उत्पन्न इन्द्रियवृत्ति के द्वारा दर्शन कहलाता है । वृत्ति के फलरूप से विषयों को व्याप्त कर तद्रूप से स्वयं भी द्दश्य-सा हो जाता है, अतः द्दश्य कहलाता है। कर्मेन्द्रिय, प्राण और शरीर के द्वारा कर्ता कहलाता है। फल का भोक्ता होने से क्रिया की उत्पत्ति में निमित्त होने के कारण हेतु कहलाता है। क्रिया की न्यूनता और अधिकता में 'मैं ही न्यून या अधिक हूँ' ऐसा क्रिया के विषय में अभिमान करने से क्रिया कहलाता है। उक्त अर्थ में 'एष हि द्रष्टा श्रोता मन्ता कर्ता बोद्धा विज्ञानात्मा पुरुषः प्राणन्नेव प्राणो नाम भवति' इत्यादि श्रुति प्रमाण है।
186662 परमपुरुषार्थभूत ब्रह्मानन्दही यहाँ मोक्षशब्द का अर्थ है। उसका पर्यवसान स्वर्ग में ही होता है, क्योकिं 'यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपनीतंच तत्सुखं स्वःपदास्पदम्॥' जो किसी प्रकार के दुःख से सम्बन्धन रखनेवाला, निरतिशय, अविनाशी एवं अभिलाषा करते ही प्राप्त होनेवाला सुख है, उसी को स्वर्ग कहते हैं। इस श्रुति से तथा 'स स्वर्गः सर्वान्प्रत्यविशिष्टत्वात्' उस स्वर्ग को सभी लोग चाहते हैं।
186663 अनित्य या दुःखमिश्रित पदार्थ हैं, उनसे स्वर्ग अधिक स्थायी है और उसमें दुःख का मिश्रण भी कम है, अतः असम्भव होने से प्रथम प्रश्न निरर्थक है। रह गई द्वितीय और तृतीय प्रश्न की बात, उसमें चित्तशुद्धि के द्वारा कर्म के ज्ञानांग होने पर भी श्रुति-तात्पर्य के साथ विरोध न होने के कारण ज्ञान और कर्म को अभिन्न मान कर अगस्त्य मुनि सुतीक्ष्ण ब्राह्मण के प्रश्न का उत्तर देते हैं। __अगस्त्य मुनि ने कहा : जैसे आकाश में दोनों ही पंखों से पक्षी उड़ते हैं, एक से नहीं, वैसे ही ज्ञान और कर्म दोनों से परमपद की प्राप्ति होती है । तात्पर्य यह है कि जैसे आकाश-मार्ग से जानेवाले पक्षी अपने अभीष्ट देश में जाने के लिए दो पंखों के द्वारा ही उड़ कर जा सकते हैं, एक से नहीं; वैसे ही 'तद्विष्णोः परमं पदम्' इत्यादि श्रुति से जिस परमपदरूप कैवल्य का वर्णन किया गया है, उसको अधिकारी लोग अपने आत्मा में ही ज्ञान और कर्म दोनों से प्राप्त कर लेते हैं, अतः ज्ञान और (8) कर्म दोनों मोक्ष के कारण हैं ।।७॥
186664
186665 पूर्वोक्त अर्थ को द्दढ़ करने के लिए फिर कहते हैं।
186666 केवल कर्मों से या केवल ज्ञान से मोक्ष नहीं होता, किन्तु ज्ञान और कर्म दोनों से मोक्ष होता है, अतः ब्रह्मज्ञ बड़े बड़े मुनि कर्म और ज्ञान दोनों को मोक्ष के साधन मानते हैं। इसलिए अनुभव सिद्ध विषय में किसी प्रकार का सन्देह नहीं करना चाहिए ।।८॥
186667 इस विषय में एक प्राचीन इतिहास कहता हूँ : प्राचीन काल में सम्पूर्ण वेदों का ज्ञाता कारुण्य नाम का एक ब्राह्मण था, उसके पिता का नाम अग्निवेश्य था। गुरुजी से वेद और सभी वेदांग, शास्त्र आदि का पूर्णरूप से अध्ययन कर वह कारुण्य अपने घर आया ॥९-१०॥

